**॥ अथ श्रीस्कान्दे महापुराणे प्रथमं माहेश्वरखण्डं प्रारभ्यते॥**

**॥श्रीगणेशाय नमः॥**

**ॐनमो भगवते वासुदेवाय॥**

ॐनारायणं नमस्कृत्य नरं चैव नरोत्तमम्॥
देवीं सरस्वती चैव ततो जयमुदीरयेत्॥ १.१ ॥

**॥व्यास उवाच॥**

यस्याज्ञया जगत्स्रष्टाविरिंचिः पालको हरिः॥
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने। १.१ ॥

तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम्॥
तत्रैव नैमिषारण्ये सौनकाद्यास्तपोधनाः॥
दीर्घसत्रं प्रकुर्वंतः सत्रिणः कर्मचेतसः॥ १.२ ॥

तेषां सदर्शनौत्सुक्यादागतो हि महातपाः॥
व्यासशिष्यो महाप्राज्ञो लोमशोनाम नामतः॥ १.३ ॥

तत्रागतं ते ददृशुर्मुनयो दीर्घसत्रिणः॥
उत्तस्थुर्युगपत्सर्वे सार्घ्यहस्ताः समुत्सुकाः॥ १.४ ॥

दत्त्वार्घ्यपाद्यं सत्कृत्य मुनयो वीतकल्मषाः॥
तं पप्रच्छुर्महाभागाः शिवधर्मं सविस्तरम्॥ १.५ ॥

**॥ऋषय ऊचुः॥**

कथयस्व महाप्राज्ञ देवदेवस्य शूलिनः॥
महिमानं महाभाग ध्यानार्चनसमन्वितम्॥ १.६ ॥

संमार्जने किं फलं स्यात्तथा रंगावलीषु च॥
प्रदाने दर्पणस्याथ तथा वै चामरस्य च॥ १.७ ॥

प्रदाने च वितानस्य तथा धारागृहस्य च॥
दीपदाने किं फलं स्यात्पूजायां किं फलं भवेत्॥ १.८ ॥

कानिकानि च पुण्यानि कथ्यतां शिवपूजने॥
इतिहासपुराणानि वेदाध्ययनमेव च॥ १.९ ॥

शिवस्याग्रे प्रकुर्वंति कारयन्त्यथ वा नराः॥
किं फलं च नृणां तेषां कथ्यतां विस्तरेण हि॥ १.१० ॥

शिवाख्यानपरोलोके त्वत्तो नान्योऽस्ति वै मुने॥ १.११ ॥

इति श्रुत्वा वचस्तेषां मुनीनां भावितात्मनाम्॥

उवाच व्यासशिष्योऽसौ शिवमाहात्म्यमुत्तमम्॥ १.१२ ॥

**॥लोमश उवाच॥**
अष्टादशपुराणेषु गीयते वै परः शिवः॥
तस्माच्छिवस्य माहात्म्यं वक्तुं कोऽपि न पार्यते॥ १.१३ ॥

शिवेति द्व्यक्षरं नाम व्याहरिष्यंति ये जनाः॥
तेषां स्वर्गश्च मोक्षश्च भविष्यति न चान्यथा॥ १.१४ ॥

उदारो हि महादेवो देवानां पतिरिश्वरः॥
येन सर्वं प्रदत्तं हि तस्मात्सर्व इति स्मृतः॥ १.१५ ॥

ते धन्यास्ते महात्मानो ये भजंति सदा शिवम्॥ १.१६ ॥

विना सदाशिवं योहि संसारं तर्तुमिच्छति॥
स मूढो हि महापापः शिवद्वेषी न संशयः॥ १.१७ ॥

भक्षितं हि गरं येन दक्षयज्ञो विनाशितः॥
कालस्य दहनं येन कृतं राज्ञः प्रमोचनम्॥ १.१८ ॥

**॥ऋषय ऊचुः॥**
यथा गरं भक्षितं च यथा यज्ञो विनाशितः॥
दक्षस्य च तथा ब्रूहि परं कौतूहलं हि नः॥ १.१९ ॥

**॥सूत उवाच॥**
दाक्षायणी पुरा दत्ता शंकराय महात्मने॥
वचनाद्ब्रह्मणो विप्रा दक्षेण परमेष्ठिनः॥ १.२० ॥

एकदा हि स दक्षो वै नैमिषारण्यमागतः॥
यदृच्छावशमापन्न ऋषिभिः परिपूजितः॥ १.२१ ॥

स्तुतिभिः प्रणिपातैश्च तथा सर्वैः सुरासुरैः॥
तत्र स्थितो महादेवो नाभ्युत्थानाभिवादने॥
चकारास्य ततः क्रुद्धो दक्षो वचनब्रवीत्॥ १.२२ ॥

सर्वत्र सर्वे हि सुरासुरा भृशं नमंति मां विप्रवराः समुत्सुकाः॥
कथं ह्यसौ दुर्जनवन्महात्मा भूतादिभिः प्रेतपिशाचयुक्तः॥
श्मशानवासी निरपत्रपो ह्ययं कथं प्रणामं न करोति मेऽधुना॥ १.२३ ॥

पाखंडिनो दुर्जनाः पापशीला विप्रं दृष्ट्वा चोद्धता उन्मदाश्च॥
वध्यास्त्याज्याः सद्भिरेवंविधा हि तस्मादेनं शापितुं चोद्यतोऽस्मि॥ १.२४ ॥

इत्येवमुक्त्वा स महातपास्तदा रुषान्वितो रुद्रमिदं बभाषे॥ १.२५ ॥

श्रृण्वंत्वमी विप्रतमा इदानीं वचो हि मे कर्तुमिहार्हथैतत्॥
रुद्रो ह्ययं यज्ञबाह्यो वृतो मे वर्णातीतो वर्णपरो यतश्च॥ १.२६ ॥

नंदी निशम्य तद्वाक्यं शैलादो हि रुषान्वितः॥
अब्रवीत्त्वरितो दक्षं शापदं तं महाप्रभम्॥ १.२७ ॥

**॥नन्द्युवाच॥**
यज्ञबाह्यो हि मे स्वामी महेशोऽयं कृतः कथम्॥
यस्य स्मरणमात्रेण यज्ञाश्च सफला ह्यमी॥ १.२८ ॥

यज्ञो दानं तपश्चैव तीर्थानि विविधानि च॥
यस्य नाम्ना पवित्राणि सोयं शप्तोऽधुना कथम्॥ १.२९ ॥

वृथा ते ब्रह्मचापल्याच्छप्तोऽयं दक्ष दुर्मते॥
येनेदं पालितं विश्वं सर्वेण च महात्मना॥
शप्तोऽयं स कथं पाप रुद्रोऽयं ब्राह्मणाधम॥ १.३० ॥

एवं निर्भार्त्सितस्तेन नंदिना हि प्रजापतिः॥
नंदिनं च शशापाथ दक्षो रोषसमन्वितः॥ १.३१ ॥

यूयं सर्वे रुद्रवरा वेदबाह्याश्च वै भृशम्॥
शप्ताहि वेदमार्गैश्च तथा त्यक्ता महर्षिभिः॥ १.३२ ॥

पाषंडवादसंयुक्ताः शिष्टऽऽचारबहिष्कृताः॥
कपालिनः पानरतास्तथा कालमुखा ह्यमी॥ १.३३ ॥

इति शप्तास्तदा तेन दक्षेण शिवकिंकराः॥
तदा प्रकुपितो नंदी दक्षं शप्तुं प्रचक्रमे॥ १.३४ ॥

शप्ता वयं त्वया विप्र साधवः शिवकिंकराः॥
वृथैव ब्रह्मचापल्यादहं शापं ददामि ते॥ १.३५ ॥

वेदवादरता यूयं नान्यदस्तीतिवादिनः॥
कामात्मानः स्वर्गपरा लोभमोहसमन्विताः॥ १.३६ ॥

वैदिकं च पुरस्कृत्य ब्राह्मणाः शूद्रयाजकाः॥
दरिद्रिणो भविष्यंति प्रतिग्रहरताः सदा॥ १.३७ ॥

दक्ष केचिद्भविष्यन्ति ब्राह्मणा ब्रह्मराक्षसाः॥
**॥लोमश उवाच॥**

विप्रास्ते शपितास्तेन नंदिना कोपिना भृशम्॥ १.३८ ॥

अथाकर्ण्येश्वरो वाक्यं नंदिनः प्रहसन्निव॥
उवाच वाक्यं मधुरं बोधययुक्तं सदाशिवः॥ १.३९ ॥

**॥महादेव उवाच॥**
कोपं नार्हसि वै कर्तुं ब्राह्मणान्प्रति वै सदा॥
ब्राह्मणागुरवो ह्येते वेदवादरताः सदा॥ १.४० ॥

वेदो मंत्रमयः साक्षात्तथा सूक्तमयो भृशम्॥
सूक्ते प्रतिष्ठितो ह्यात्मा सर्वेषामपि देहिनाम्॥ १.४१ ॥

तस्मान्नात्मविदो निन्द्या आत्मैवाहं न चेतरः॥
कोऽयं कस्त्वं क्व चाहं वै कस्माच्छप्ता हि वै द्विजाः॥ १.४२ ॥

प्रपंचरचनां हित्वा बुद्धो भव महामते॥
तत्त्वज्ञानेन निर्वर्त्य स्वस्थः क्रोधादिवर्जितः॥ १.४३ ॥

एवं प्रबोधितस्तेन शंभुना परमेष्ठिना॥
विवेकपरमो भूत्वा शैलादो हि महातपाः॥
शिवेन सह संगम्य परमानंदसंप्लुतः॥ १.४४ ॥

दक्षोपि हि रुषाऽऽविष्टऋषिभिः परिवारितः॥
ययौ स्थानं स्वकं तत्र प्रविवेश रुषाऽन्वितः॥ १.४५ ॥

श्रद्धां विहाय परमां शिवपूजकानां निंदापरः स हि बभूव नराधमश्च॥
सर्वैर्महर्षिभिरुपेत्य स तत्र शर्वं देवं निनिन्द न बभूव कदापि शान्तः॥ १.४६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे
पुराणप्रस्तावदक्षवृत्तान्तवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥ छ ॥

**॥लोमश उवाच॥**

एकदा तु तदा तेन यज्ञः प्रारंभितो महान्॥
तत्राहूतास्तदा सर्वे दीक्षितेन तपस्विना॥ २.१ ॥

ऋषयो विविधास्तत्र वशिष्ठाद्याः समागताः॥
अगस्त्यः कश्यपोऽत्रिश्च वामदेवस्तथा भृगुः॥ २.२ ॥

दधीचो भगवान्व्यासो भरद्वाजोऽथ गौतमः॥
एते चान्ये च बहवः समाजग्मुर्महर्षयः॥ २.३ ॥

तथा सर्वे सुरगणा लोकपालस्तथाऽपरे विद्याधराश्च गंधर्वाः किंनराप्सरसां गणाः॥ २.४ ॥

सप्तलोकात्समानीतो ब्रह्मा लोकपितामहः॥
वैकुंठाच्च तथा विष्णुः समानीतो मरवं प्रति॥ २.५ ॥

देवेन्द्रो हि समानीत इंद्राण्या सह सुप्रभः॥
तथा चंद्रो हि रोहिण्या वरुणः प्रिययया सह॥ २.६ ॥

कुबेरः पुष्पकारूढो मृगाऽऽरूढोऽथ मारुतः॥
बस्ताऽऽरूढः पावकश्च प्रेताऽऽरूढोऽथ निर्ऋति॥ २.७ ॥

एते सर्वे समायाता यज्ञवाटे द्विजन्मनः॥
ते सर्वे सत्कृतास्तेन दक्षेण च दुरात्मना॥ २.८ ॥

भवनानि महार्हाणि सुप्रभाणि महांति च॥
त्वष्ट्रा कृतानि दिव्यानि कौशल्येन महात्मना॥ २.९ ॥

तेषु सर्वेषु धिष्ण्येषु यथाजोषं समास्थिताः॥ २.१० ॥

वर्त्तमाने महायज्ञे तीर्थे कनखले तथा॥
ऋत्विजश्च कृतास्तेन भृग्वाद्याश्च तपोधनाः॥ २.११ ॥

दीक्षायुक्तस्तदा दक्षः कृतकौतुकमंगलः॥
भार्यया सहितो विप्रैः कृतस्वत्ययनो भृशम्॥ २.१२ ॥

रेजे महत्त्वेन तदा सुहृद्भिः परितः सदा॥
एतस्मिन्नंतरे तत्र दधीचिर्वाक्यमब्रवीत्॥ २.१३ ॥

**॥दधीचिरुवाच॥**

एते सुरेशा ऋषयो महत्तराः सलोकपालाश्च समागतास्तव॥
तथाऽपि यज्ञस्तु न शोभते भृशंपिनाकिना तेन महात्मना विना॥ २.१४ ॥

येनैव सर्वाण्यपि मंगलानि जातानि शंसंति महाविपश्चितः॥
सोऽसौ न दृष्टोऽत्र पुमान्पुराणो वृषध्वजो नीलकण्ठः कपर्दी॥ २.१५ ॥

अमंगलान्येव च मंगलानि भवंति येनाधिकृतानि दक्ष॥
त्रियंबकेनाथ सुमंगलानि भवंति सद्योह्यपमंगलानि॥ २.१६ ॥

तस्मात्त्वयैव कर्तव्यमाह्वानं परमेष्ठिना॥
त्वरितं चैव शक्रेण विष्णुना प्रभविष्णुना॥ २.१७ ॥

सर्वैरेव हि गंतव्यं यत्र देवो महेश्वरः॥ २.१८ ॥

दाक्षायण्या समेतं तमानयध्वं त्वरान्विताः॥
तेन सर्वं पवित्रं स्याच्छंभुना योगिना भृशम्॥ २.१९ ॥

यस्य स्मृत्या च नामोक्त्या समग्रं सुकृतं भवेत्॥
तस्मात्सर्वप्रयत्नेन समानेयो वृषध्वजः॥ २.२० ॥

तस्य तद्वचनं श्रुत्वा प्रहसन्नाह दुष्टधीः॥
मूलं विष्णुर्हि देवानां यत्र धर्मः सनातनः॥ २.२१ ॥

यस्मिन्वेदाश्च यज्ञाश्च कर्माणिविविधानि च॥
प्रतिष्ठितानि सर्वाणि सोऽसौ विष्णुरिहागतः॥ २.२२ ॥

सत्यलोकात्समायातो ब्रह्मा लोकपितामहः॥
वेदैश्चोपनिषद्भिश्च आगमैर्विविधैः सह॥ २.२३ ॥

तथा सुरगणैः साकमागतः सुरराट् स्वयम्॥
तथा यूयं समायाता ऋषयो वीतकल्मषाः॥ २.२४ ॥

येये यज्ञोचिताः शांतास्तेते सर्वे समागताः॥
वेदवेदार्थतत्त्वज्ञाः सर्वे यूयं दृढव्रताः॥ २.२५ ॥

अत्रैव च किमस्माकं रुद्रेणापि प्रयोजनम्.॥
कन्या दत्ता मया विप्रा ब्रह्मणा नोदितेन हि॥ २.२६ ॥

अकुलीनो ह्यसौ विप्रा नष्टो नष्टप्रियः सदा॥
भूतप्रेतपिशाचानां पतिरेको दुरत्ययः॥ २.२७ ॥

आत्मसंभावितो मूढःस्तब्धो मौनी समत्सरः॥
कर्मण्यस्मिन्नयोग्योऽसौ नानीतो हि मयाऽधुना॥ २.२८ ॥

तस्मात्त्वया न वक्तव्यं पुनरेवं वचोद्विज॥

सर्वैर्भवद्भिः कर्तव्यो यज्ञो मे सफलो महान्॥ २.२९ ॥

एतच्छ्रुत्वा वचस्तस्य दधीचिर्वाक्यमब्रवीत्॥ २.३० ॥

**॥दधीचिरुवाच॥**
सर्वेषामृषिवर्याणां सुराणां भावितात्मनाम्॥
अनयोऽयं महाञ्जातो विना तेन महात्मना॥ २.३१ ॥

विनाशोऽपि महान्सद्योह्यत्रत्यानां भविष्यति॥
एवमुक्त्वा दधीचोऽसावेक एव विनिर्गतः॥ २.३२ ॥

यज्ञवाटाच्च दक्षस्य त्वरितः स्वाश्रमं ययौ॥
मुनौ विनिर्गते दक्षः प्रहसन्निदमब्रवीत्॥ २.३३ ॥

गतः शिवप्रियो वीरो दधीचिर्नाम नामतः॥
आविष्टचित्ता मंदाश्च मिथ्यावादरताः खलाः॥ २.३४ ॥
वेदबाह्य दुराचारास्त्याज्यास्ते ह्यत्र कर्मणि॥
वेदवादरता यूयं सर्वे विष्णुपुरोगमाः॥ २.३५ ॥

यज्ञं मे सफलं विप्राः कुर्वंतु ह्यचिरादिव॥
तदा ते देवयजनं चक्रुः सर्वे सहर्षयः॥ २.३६ ॥

एतस्मिन्नंतरे तत्र पर्वते गंधमादने॥
धारागृहे विमानेन सखीभिः परिवारिता॥ २.३७ ॥

दाक्षायणी महादेवी चकार विविधास्तदा॥
क्रीडा विमानमध्यस्ता कन्दुकाद्याः सहस्रशः॥ २.३८ ॥

क्रीडासक्ता तदा देवी ददर्शाथ महासती॥
यज्ञं प्रयांतं सोमं च रोहिण्या सहितं प्रभुम्॥ २.३९ ॥

क्व गमिष्यति चंद्रोऽयं विजये पृच्छ सत्वरम्॥
तयोक्ता विजया देवी तं पप्रच्छ यथोचितम्॥ २.४० ॥

कथितं तेन तत्सर्वं दक्षस्यैव मखादिकम्॥
तच्छ्रुत्वा त्वरिता देवी विजया जातसंभ्रमा॥
कथयामास तत्सर्वं यदुक्तं शशिना भृशम्॥ २.४१ ॥

विमृश्य कारणं देवी किमाह्वानं करोति न॥
दक्षः पिता मे माता च विस्मृता मां कुतोऽधुना॥ २.४२ ॥

पृच्छामि शंकरं चाद्य कारणं कृतनिश्चया॥

स्थापयित्वा सखीस्तत्र आगता शंकरं प्रति॥ २.४३ ॥

ददर्शतं सभामध्ये त्रिलोचनमवस्थितम्॥
गणैः परिवृतं सर्वैश्चंडमुंडादिभिस्तदा॥ २.४४ ॥

बाणो भृंगिस्तथा नंदी शैलादो हि महातपाः॥
महाकालो महाचंडो महामुंडो महाशिराः॥ २.४५ ॥

धूम्राक्षो धूम्रकेतुश्च धूम्रपादस्तथैव च॥
एते चान्ये च बहवो गणा रुद्रानुवर्तिनः॥ २.४६ ॥

केचिद्भयानका रौद्राः कबंधाश्च तथा परे॥
विलोचनाश्च केचिच्च वक्षोहीनास्तथा परे॥ २.४७ ॥

एवंभूताश्च शतशः सर्वे ते कृत्तिवाससः॥
जटाकलापसंभूषाः सर्वे रुद्राक्षभूषणाः॥ २.४८ ॥

जितेंद्रिया वीतरागाः सर्वे विषयवैरिणः॥
एभिः सर्वैः परिवृतः शंकरो लोकशंकरः॥
दृष्टस्तया उपाविष्ट आसने परामाद्भुते॥ २.४९ ॥

आक्षिप्तचित्ता सहसा जगाम शिवसंनिधिम्॥
शिवेन स्थापिता स्वांके प्रीतियुक्तेन वल्लभा॥ २.५० ॥

प्रेम्णोदिता वचोभिः सा बहुमानपुरःसरम्॥
किमागमनकार्यंमे वद शीघ्रं सुमध्यमे॥ २.५१ ॥

एवमुक्ता तदा तेन उवाचासितलोचना॥ २.५२ ॥

**॥सत्युवाच॥**
पितुर्मम महायज्ञे कस्मात्तव न रोचते॥
गमनं देवदेवश तत्सर्वं कथय प्रभो॥ २.५३ ॥

सुहृदामेष वै धर्मः सुहृद्भिः सह संगतिम्॥
कुर्वंति यन्महादेव सुहृदां प्रीतिवर्धिनीम्॥ २.५४ ॥

तसमात्सर्वप्रयत्नेन अनाहूतोऽपि गच्छ भोः॥
यज्ञवाटं पितुर्मेऽद्य वचनान्मे सदाशिव॥ २.५५ ॥

तस्यास्तद्वचनं श्रुत्वा ब भाषे सूनृतं वचः॥
त्वया भद्रे न गंतव्यं दक्षस्य यजनं प्रति॥ २.५६ ॥

तस्य ये मानिनः सर्वे ससुरासुकिंनराः॥
ते स्रेव यजनं प्राप्ताः पितुस्तव न संशयः॥ २.५७ ॥

अनाहूताश्च ये सुभ्रु गच्छंति परमन्दिरम्॥
अपमानं प्राप्नुवन्ति मरणादधिकं ततः॥ २.५८ ॥

परेषां मंदिरं प्राप्त इंद्रोपि लघुतां व्रजेत्॥
तस्मात्त्वाया न गंतव्यं दक्षस्य यजनं शुभे॥ २.५९ ॥

एवमुक्ता सती तेन महेशेन महात्मना॥
उवाच रोषसंयुक्तं वाक्यं वाक्यविदां वरा॥ २.६० ॥

यज्ञो हि सत्यं लोके त्वं स त्वं देववरेश्वर॥
अनाहूतोऽसि तेनाद्य पित्रा मे दृष्टचारिणा॥
तत्सर्वं ज्ञातुमिच्छामि तस्य भावं दुरात्मनः॥ २.६१ ॥

तस्माच्चाद्यैव गच्छामि यज्ञवाडं पितुर्म्मम॥
अनुज्ञां देहि मे नाथ देवदेव जगत्पते॥ २.६२ ॥

इत्युक्तो भगवान्रुद्रस्तया देव्या शिवः स्वयम्॥
विज्ञाताखिलदृग्द्रष्टा भगवान्भूतभावनः॥ २.६३ ॥

स तामुवाच देवेशो महेशः सर्वसिद्धिदः॥
गच्छ देवि त्वरायुक्ता वचनान्मम सुव्रते॥ २.६४ ॥

एतं नंदिनमारुह्य नानाविधगणान्विता॥
गणाः षष्टिसहस्राणि जग्मूरौद्राः शिवज्ञया॥ २.६५ ॥

तैर्गणैः संवृता देवी जगाम पितृमंदिरम्॥
निरीक्ष्य तद्बलं सर्वं महादेवोतिविस्मितः॥ २.६६ ॥

भूषणानि महार्हाणि तेभ्यो देव्यै परंतपः॥
प्रेषयामास चाव्यग्रो महादेवोऽनु पृष्ठतः॥ २.६७ ॥

देव्या गतं वै स्वपितुर्गृहं तदा विमृश्य सर्वं भगवान्महेशः॥
दाक्षायणी पित्रवमानिता सती न यास्यतीति स्वपुरं पुनर्जगौ॥ २.६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे दक्षयज्ञं प्रति
सतीदेव्यागमनवर्णनंनाम द्वितीयोऽध्यायः॥ २ ॥

**॥लोमश उवाच॥**

दाक्षायणी गता तत्र यत्र यज्ञो महानभूत्॥
तत्पितुः सदनं गत्वा ना नाश्चर्यसमन्वितम्॥ ३.१ ॥

द्वारि स्थिता तदा देवा अवतीर्य निजासनात्॥
नंदिनो हि महाभागा देवलोकं निरीक्ष्य च॥ ३.२ ॥

मातरं पितरं दृष्ट्वा सुहृत्संबंधि वांधवान्॥
अभिवाद्यैव पिरतं मातरं च मुदान्विता॥ ३.३ ॥

बभाषे वचनं देवी प्रस्तापसदृशं तदा॥
अनाहूतस्त्वया कस्माच्छंभुः परमशोभनः॥ ३.४ ॥

येन पूतमिदं सर्वं समग्रं सचराचरम्॥
यज्ञो यज्ञविदां श्रेष्ठो यज्ञांगो यज्ञदक्षिणः॥ ३.५ ॥

द्रव्यं मंत्रादिकं सर्वं हव्यं कव्यं च यन्मयम्॥
विना तेन कृतं सर्वमपवित्रं भविष्यति॥ ३.६ ॥

शंभुना हि विना तात कथं यज्ञः प्रवर्तते॥
एते कथं समायाता ब्रह्मणा सहिताः पितः॥ ३.७ ॥

हे भृगो त्वं न जानासि हे कश्यप महामते॥
अत्रे विशिष्ठ एकस्त्वं शक्र किं कृतमद्यते॥ ३.८ ॥

हे विष्णो त्वं महादेवं जानासि परमेश्वरम्॥
ब्रह्मन्किं त्वं न जानासि महादेवस्य विक्रमम्॥ ३.९ ॥

पुरा पंचमुखो भूत्वा गर्वितोसि सदाशिवम्॥
कृतश्चतुर्मुखस्तेन विस्मृतोऽसि तदद्भुतम्॥ ३.१० ॥

भिक्षाटनं कृतं येन पुरा दारुवने विभुः॥
शप्तोयं भिक्षुको रुद्रो भवद्भिः सखिभिस्तदा॥ ३.११ ॥

शप्तेनापि च रुद्रेण भवद्भिर्विस्मृतं कथम्॥
यस्यावयवमात्रेण पूरितं सचराचरम्॥ ३.१२ ॥

लिंगभूतं जगत्सर्वं जातं तत्क्षणमेव हि॥
लयानाल्लिंगमित्याहुः सर्वे देवाः सवासवाः॥ ३.१३ ॥

सर्वे देवाश्च संभूता यतो देवस्य शूलिनः॥
सोऽसौ वेदांतगो देवस्त्वया ज्ञातुं न पार्यते॥ ३.१४ ॥

तस्या वचनमाकर्ण्य दक्षः क्रुद्धोऽब्रवीद्वचः॥
किं त्वया बहुनोक्तेन कार्यं नास्तीह सांप्रतम्॥ ३.१५ ॥

गच्छ वा तिष्ठवा भद्रे कस्मात्त्वं हि समागता॥
अमंगलो हि भर्ता ते अशिवोसौ सुमध्यमे॥ ३.१६ ॥

अकुलीनो वेदबाह्यो भूतप्रेतपिशाचराट्॥
तस्मान्नाकारितो भद्रे यज्ञार्थं चारुभाषिणि॥ ३.१७ ॥

मया दत्तासि सुश्रोणि पापिना मंदबुद्धिना॥
रुद्रायाविदितार्थाय उद्धताय दुरात्मने॥ ३.१८ ॥

तस्मात्कायं परित्यज्य स्वस्था भव शुचिस्मिते॥
दक्षेणोक्ता तदा पुत्री सा सती लोकपूजिता॥ ३.१९ ॥

निंदायुक्तं स्वपितरं विलोक्य रुषिता भृशम्॥
चिंतयंती तदा देवी कथं यास्यामि मंदिरे॥ ३.२० ॥

शंकरं द्रष्टुकामांह किं वक्ष्ये तेन पृच्छिता॥
यो निंदति महादेवं निंद्यमानं श्रृणोति यः॥
तावुभौ नरके यातो यावच्चन्द्रदिवाकरौ॥ ३.२१ ॥

तस्मात्तयक्ष्याम्यहं देहं प्रवेक्ष्यामि हुताशनम्॥ ३.२२ ॥

एवं मीमांसमाना सा शिवरुद्रेतिभाषिणी॥
अपमानाभिभूता सा प्रविवेश हुताशनम्॥ ३.२३ ॥

हाहाकारेण महता व्याप्तमासीद्दिगंतरम्॥
सर्वे ते मंचमारूढाः शस्त्रैर्व्याप्ता निरंतराः॥ ३.२४ ॥

शस्त्रैः स्वैर्जध्नुरात्मानं स्वानि देहानि चिच्छिदुः॥
केचित्करतले गृह्य शिरांसि स्वानि चोत्सुकाः॥ ३.२५ ॥

नीराजयंतस्त्वरिता भस्मीभूताश्च जज्ञिरे॥
एवमूचुस्तदा सर्वे जगर्ज्जुरतिभीषणम्॥ ३.२६ ॥

शस्त्रप्राहारैः स्वांगानि चिच्छिदुश्चातिभीषणाः॥
ते तथा विलयं प्राप्ता दाक्षायण्या समं तदा॥ ३.२७ ॥

गणास्तत्रायूते द्वे च तदद्भुतमिवाभवत्॥
ते सर्व ऋषयो देवा इंद्राद्याः समरुद्गणाः॥ ३.२८ ॥

विश्वेऽश्वनौ लोकपालास्तूष्णींबूतास्तदाभवन्॥
विष्णुं वरेण्यं केचिच्च प्रार्थयंतः समंततः॥ ३.२९ ॥

एवं भूतस्तदा यज्ञो जातस्तस्य दुरात्मनः॥
दक्षस्य ब्रह्मबंधोश्च ऋषयो भयमागताः॥ ३.३० ॥

एतस्मिन्नंतरे विप्रा नारदेन महात्मना॥
कथितं सर्वमेवैतद्दक्षस्य च विचेष्टितम्॥ ३.३१ ॥

तदाकर्ण्येश्वरो वाक्यं नारदस्य मुखोद्गतम्॥
चुकोप परमं क्रुद्ध आसनादुत्पतन्निव॥ ३.३२ ॥

उद्धृत्य च जटां रुद्रो लोकसंहारकारकः॥
आस्फोटयामास रुषा पर्वतस्य शिरोपरि॥ ३.३३ ॥

ताडनाच्च समुद्भूतो वीरभद्रो महायशाः॥
तथा काली समुत्पन्ना भूतकोटिभिरावृता॥ ३.३४ ॥

कोपान्निःश्वसितेनैव रुद्रस्य च महात्मनः॥
जातं ज्वराणां च शतं सन्निपातास्त्रयोदश॥ ३.३५ ॥

विज्ञप्तो वीरभद्रेण रुद्रो रौद्रपराक्रमः॥
किं कार्यं भवतः कार्यं शीघ्रमेव वद प्रभो॥ ३.३६ ॥

इत्युक्तो भगवान्रुद्रः प्रेषयामास सत्वरम्॥
गच्छ वीर महा बाहो दक्षयज्ञं विनाशय॥ ३.३७ ॥

शासनं शिरसा धृत्वा देवदेवस्य शूलिनः॥
कालिकाऽऽलिहितो वीरः सर्वभूतैः समावृतः॥
वीरभद्रो महातेजा ययौ दक्षमखं प्रति॥ ३.३८ ॥

तदानीमेव सहसा दुर्निमित्तानि चाभवन्॥
रूक्षो ववौ तदा वायुः शर्कराभिः समावृतः॥ ३.३९ ॥

असृग्वर्षति देवश्च तिमिरेणाऽऽवृता दिवशः॥
उल्कापाताश्च बहवः पेतुरुर्व्यां सहस्रशः॥ ३.४० ॥

एवंविधान्यरिष्टानि ददृशुर्विबुधादयः॥
दक्षोऽपि भयमापन्नो विष्णुं शरणमाययौ॥ ३.४१ ॥

रक्षरक्ष महाविष्णो त्वं हि नः परमो गुरुः॥
यज्ञोऽसि त्वं सुरश्रेष्ठ भयान्मां परिमोचय॥ ३.४२ ॥

दक्षेण प्रार्थ्य मानो हि जगाद मधुसूदनः॥
मया रक्षा विदातव्या भवतो नात्र संशयः॥ ३.४३ ॥

अपूज्या यत्र पूज्यंते पूजनीयो न पूज्यते॥
त्रीणी तत्र प्रवर्तंते दुर्भिक्षं त्वया धर्ममजानताः॥
ईश्वरावज्ञया सर्वं विफलं च भविष्यति॥ ३.४४ ॥

अपूज्या यत्र पूज्यं ते पूजनीयो न पूज्यते॥
त्रीणी तत्र प्रवर्तंते दुर्भिक्षं मरणं भयम्॥ ३.४५ ॥

तस्मात्सर्वप्रयत्नेन माननीयो वृषध्वजः॥
अमानितान्महेशात्त्वां महद्भयमुपस्थितम्॥ ३.४६ ॥

अधुनैव वयं सर्वे प्रभवो न भवामहे॥
भवतो दुर्न्नयेनेव नात्र कार्या विचारणा॥ ३.४७ ॥

विष्णोस्तद्वचनं श्रुत्वा दक्षश्चिंतापरोऽभवत्॥
विविर्णवदनो भूत्वा तूष्णीमासीद्भुवि स्थितः॥ ३.४८ ॥

वीरभद्रो महाबाहू रुद्रेणैव प्रचोदितः॥
काली कात्यायनीशाना चामुंडा मुंडमर्द्दिनी॥ ३.४९ ॥

भद्रकाली तथा भद्रा त्वरिता वैष्णवी तथा॥
नवदुर्गादिसहितो भूतानां च गणो महान्॥ ३.५० ॥

शाकिनी डाकिनी चैव भूतप्रमथगुह्यकाः॥
तथैव योगिनीचक्रं चतुः षष्ट्या समन्वितम्॥ ३.५१ ॥

निजन्मुः सहसा तत्र यज्ञवाटं महाप्रभम्॥
वीरभद्रसमेता सर्वे हरपराक्रमाः॥
दशबाहवस्त्रिनेत्रा जटिला रुद्रभूषणाः॥ ३.५२ ॥

पार्षदाः शंकरस्यैते सर्वे रुद्रस्वरूपिणः॥
पंचवक्त्रा नीलकंठाः सर्वे ते शस्त्रपाणयः॥ ३.५३ ॥

छत्रचामरसंवीताः सर्वे हरपराक्रमाः॥
दशबाहवस्त्रिनेत्रा जटिला रुद्रभूषणाः॥ ३.५४ ॥

अर्धचंद्रधराः सर्वे सर्वे चैव महौजसः॥
सर्वे ते वृषभारूढाः सर्वे ते वेषभूषणाः॥ ३.५५ ॥

सहस्रबाहुर्भुजगाधिपैर्वृतस्त्रिलोचनो भीमबलो भयावहः॥
एभिः समेतश्च तदा महात्मा स वीरभद्रोऽभिजगाम यज्ञम्॥ ३.५६ ॥

युग्यानां च सहस्रेण द्विप्रमाणेन स्यंदनम्॥
सिंहानां प्रयुतेनैव वाह्यमानं च तस्य तत्॥ ३.५७ ॥

तथैव दंशिताः सिंहा बहवः पार्श्वरक्षकाः॥
शार्दूला मकरा मत्स्या गजाश्चैव सहस्रशः॥
छत्राणि विविधान्येव चामराणि तथैव च॥ ३.५८ ॥

मूर्द्धनिध्रियमाणानि सर्वतोग्राणि सर्वशः॥
ततो भेरीमहानादाः शंखाश्च विविधस्वनाः॥
पटहा गोमुखाश्चैव श्रृंगाणि विविधानि च॥ ३.५९ ॥

ततोऽवाद्यंत तान्येव घनानि सुषिराणि च॥
कलगानपराः सर्वे सर्वे मृदंगवादिनः॥ ३.६० ॥

अनेकलास्यसंयुक्ता वीरभद्राग्रतोभवन्॥
रणवादित्रनिर्घोषैर्जगर्जुरमितौजसः॥ ३.६१ ॥

तेन नादेन महता नादितं भुवनत्रयम्॥
एवं सर्वे समायाता गणा रुद्रप्रणोदिताः॥ ३.६२ ॥

यज्ञवाटं च दक्षस्य विनाशार्थं प्रहारिणः॥
रजसा चाऽऽवृतं व्योम तमसा च वृता दिशः॥ ३.६३ ॥

सप्तद्वीपवती पृथ्वी चचाल साद्रिकानना॥
ते दृष्ट्वा महदाश्चर्य्यं लोकक्षयकरं तदा॥ ३.६४ ॥

उत्तस्थुर्युगपत्सर्वे देवदैत्यनिशाचराः॥
ते वै ददृशुरायांतीं रुद्रसेना भयावहाम्॥ ३.६५ ॥

पृथ्वीं केचित्समायाता गगने केचिदागताः॥
दिशश्च प्रदिशश्चैव समावृत्य तथापरे॥ ३.६६ ॥

अनंता ह्यक्षयाः सर्वे शूरा रुद्रसमा युधि॥
एवंभूतं च तत्सैन्यं रुद्रैश्च परिवारितम्॥
दृष्ट्वो चुर्विस्मिताः सर्वे यामोऽद्य शस्त्रपाणयः॥ ३.६७ ॥

इंद्रो हि गजमारूढो मृगारूढः सदागतिः॥
यमो महिषमारूढो यमदंडसमन्वितः॥ ३.६८ ॥

कुबेरः पुष्पकारूढः पाशी मकरमेव च॥
अग्निर्बस्तमारूढो निर्ऋतिः प्रेतमेव च॥ ३.६९ ॥

तथान्ये सुरसंघाश्च यक्षचारणगुह्यकाः॥
आरुह्य वाहनान्येव स्वानिस्वानि प्रतिपिनः॥ ३.७० ॥

स्वेषामुद्योगमालोक्य दक्षश्चाश्रुमुखस्ततः॥
दंडवत्पतितो भूमौ सर्वानेवाभ्यभाषत॥ ३.७१ ॥

युष्मद्बलेनैव मया यज्ञः प्रारंभितो महान्॥
सत्कर्मसिद्धये यूयं प्रमाणं सुमहाप्रभाः॥ ३.७२ ॥

विष्णो त्वं कर्मणः साक्षाद्यज्ञानां परिपालकः॥
धर्मस्य वेदगर्भस्य ब्रह्मण्यस्त्वं च माधव॥ ३.७३ ॥

तस्माद्रक्षा विधातव्या यज्ञस्याऽस्य महाप्रभो॥
दक्षस्य वचनं श्रुत्वा उवाच मधुसूदनः॥ ३.७४ ॥

मया रक्षा विधातव्या धर्मस्य परिपालने॥
तत्सत्यं तु त्वयोक्तं हि किं तु तस्य व्यतिक्रमः॥ ३.७५ ॥

यातस्त्वद्यैव यज्ञस्य यत्त्वयोक्तं सदाशिवम्॥
नैमिषेऽनिमिषक्षेत्रे तदा किं न स्मृतं त्वया॥ ३.७६ ॥

योऽयं रुद्रो महातेजा यज्ञरूपः सदाशिवः॥
यज्ञबाह्यः कृतो मूढ तच्च दुर्म्मंत्रितं तव॥ ३.७७ ॥

रुद्रकोपाच्च को ह्यत्र समर्थो रक्षणे तव॥
न पश्यामि च तं विप्र त्वां वै रक्षति दुर्म्मतिम्॥ ३.७८ ॥

किं कर्म्म किमकर्म्मेति तन्न पश्यसि दुर्म्मते॥
समर्थं केवलं कर्मन भविष्यति सर्वदा॥ ३.७९ ॥

सेश्वरं कर्म विद्ध्योतत्समर्थत्वेन जायते॥
न ह्यन्यः कर्म्मणो दाता ईश्वरेण विना भवेत्॥ ३.८० ॥

ईश्वरस्य च ये भक्ताः शांतास्तद्गतमानसाः॥
कर्म्मणो हि फलं तेषां प्रयच्छति सदाशिवः॥ ३.८१ ॥

केवलं कर्म चाश्रित्य निरीश्वरपरा जनाः॥
निरयं ते च गच्छंति कोटियज्ञशतैरपि॥ ३.८२ ॥

पुनः कर्ममयैः पाशैर्बद्धा जन्मनिजन्मनि॥
निरयेषु प्रपच्यंते केवलं कर्म्मरूपिणः॥ ३.८३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे वीरभद्रप्रादुर्भाववर्णनंनाम तृतीयोऽध्यायः॥ ३ ॥

**॥लोमश उवाच॥**

विष्णुनोक्तं वचः श्रुत्वा दक्षो वचनमब्रवीत्॥
वेदानामप्रमाणं च कृतं ते मधुसूदन॥ ४.१ ॥

वैदिकं कर्म चोत्सृज्य कथं सेश्वरतां व्रजेत्॥
तदुच्यतां महाविष्णो येन धर्मः प्रतिष्ठितः॥ ४.२ ॥

दक्षेणोक्तो महाविष्णुरुवाच परिसांत्वयन्॥
त्रैगण्यविषया वेदाः संभवंति न चान्यथा॥ ४.३ ॥

वेदोदितानि कर्माणि ईश्वरेण विना कथम्॥
सफलानि भविष्यंति विफलान्येव तानि च॥ ४.४ ॥

तस्मात्सर्वप्रयत्नेन ईश्वरं शरणं व्रऐजा॥
एवं ब्रुवति गोविन्द आगतः सैन्यसागरः॥
वीरभद्रेण सदृशो ददृशुस्तं तदा सुराः॥ ४.५ ॥

इंद्रोपि प्रहसन्विष्णुमात्मवादरतं तदा॥
वज्रपाणिः सुरैः सार्द्धं योद्धुकामोऽभवत्तदा॥ ४.६ ॥

भृगुणाचारितः शीघ्रमुच्चाटनपरेण हि॥
तदा गणाः सुरैः सार्धं युयुधुस्ते गणान्विताः॥ ४.७ ॥

शरतोमरनागचैर्जघ्नुस्ते च परस्परम्॥
नेदुःशंखाश्च बहुशस्तस्मिन्रणमहोत्सवे॥ ४.८ ॥

तथा दुन्दुभयो नेदुः पटहा डिंडिमादयः॥
तेन शब्देन महताश्लाघ्यमानास्तदा सुराः॥
लोकपालैश्च सहिता जघ्नुस्ताञ्छिवकिंकरान्॥ ४.९ ॥

खड्गैश्चापि हताः केचिद्गदाभिश्च विपोथिताः॥
देवैः पराजिताः सर्वे गणाः शतसहस्रशः॥ ४.१० ॥

इंद्राद्यौर्लोकपालैश्च गणास्ते च पराङ्गमुखाः॥
कृताश्च तत्क्षणादेव भृगोर्मंत्रबलेन हि॥ ४.११ ॥

उच्चाटनं कृतं तेषां भृगुणा यज्विना तदा॥
यजनार्थं च देवानां तुष्ट्यर्थं दीक्षितस्य च॥ ४.१२ ॥

तेनैव देवा जयिनो जातास्तत्क्षणमेव हि॥
स्वानां पराजयं दृष्ट्वा वीरभद्रो रुपान्वितः॥ ४.१३ ॥

भूतान्प्रेतान्पिशाचांश्च कृत्वा तानेव पृष्ठतः॥
वृषभस्थान्पुरस्कृत्य स्वयं चैव महाबलः॥
तीक्ष्णं त्रिशूलमादाय पातयामास तान्रणे॥ ४.१४ ॥

देवान्यक्षान्पिशाचांश्च गुह्यकान्राक्षसां स्तथा॥
शूलघातैश्च ते सर्वे गणा देवान्प्रजघ्निरे॥ ४.१५ ॥

केचिद्द्विधाकृताः खड्गैर्मुद्गरैश्चापि पोथिताः॥
परश्वधैः खंडशश्च कृताः केचिद्रणाजिरे॥ ४.१६ ॥

शूलैर्भिन्नाश्च शतशः केचिच्च शकलीकृताः॥
एवं पराजिताः सर्वे पलायनपरायणाः॥ ४.१७ ॥

परस्परं परिष्वज्य गतास्तेपि त्रिविष्टपम्॥
केवलं लोकपालाश्च इंद्राद्यास्तस्थुरुत्सुकाः॥
बृहस्पतिं पृच्छमानाः कुतोस्माकं जयो भवेत्॥ ४.१८ ॥

बृहस्पतिरुवाचेदं सुरेंद्रं त्वरितस्तदा॥
**॥बृहस्पतिरुवाच॥**
यदुक्तं विष्णुना पूर्वं तत्सत्यं जातमद्य वै॥ ४.१९ ॥

अस्ति चेदीश्वरः कश्चित्फलरूप्यस्य कर्म्मणः॥
कर्तारं भजते सोपि न ह्यकर्तुः प्रभुर्हिसः॥ ४.२० ॥

न मंत्रौषधयः सर्वे नाभिचारा न लौकिकाः॥
न कर्माणि न वेदाश्च न मीमांसाद्वयं तथा॥ ४.२१ ॥

ज्ञातुमीशाः संभवंति भक्त्याज्ञेयस्त्वनन्यया॥
शांत्या च परया तृष्ट्या ज्ञातव्यो हि सदाशिवः॥ ४.२२ ॥

तेन सर्वं संभवंति सुखदुःझखात्मकं जगत्॥
परंतु संवदिष्यामि कार्याकार्यविवक्षया॥ ४.२३ ॥

त्वमिंद्र बालिशो भूत्वा लोकपालैः सहाद्य वै॥
आगतो बालिशो भूत्वा इदानीं किं करिष्यसि॥ ४.२४ ॥

एते रुद्रसहायाश्च गणाः परमशोभनाः॥
कुपिताश्च महाभागा न तु शेषं प्रकुर्वते॥ ४.२५ ॥

एवं बृहस्पतेर्वाक्यं श्रुत्वा तेऽपि दिवौकसः॥
चिंतामापेदिरे सर्वे लोकपाला महेश्वराः॥ ४.२६ ॥

ततोऽब्रवीद्वीरभद्रो गणैः परिवृतो भृशम्॥
सर्वे यूयं बालिशत्वादवदानार्थमागताः॥ ४.२७ ॥

अवदानानि दास्यामि तृप्त्यर्थं भवतां त्वरन्॥
एवमुक्त्वा शितैर्बाणैर्जघानाथ रुषान्वितः॥ ४.२८ ॥

तैर्बाणैर्निहताः सर्वे जग्मुस्ते च दिशो दश॥ ४.२९ ॥

गतेषु लोकपालेषु विद्रुतेषु सुरेषु च॥
यज्ञवाटे समायातो वीरभद्रो गणान्वतः॥ ४.३० ॥

तदा त ऋषयः सर्वे सर्वमेवेश्वरेश्वरम्॥
विज्ञप्तुकामाः सहसा ऊचुरेवं जनार्दनम्॥ ४.३१ ॥

रक्ष यज्ञं हि दक्षस्य यज्ञोसि त्वं न संशयः॥
एतच्छ्रुत्वा तु वचनमृषीणां वै जनार्दनः॥ ४.३२ ॥

योद्धुकामः स्थितो युद्धे विष्णुरध्यात्मदीपकः॥
वीरभद्रो महाबाहुः केशवं वाक्यमब्रवीत्॥ ४.३३ ॥

अत्र त्वयागतं कस्माद्विष्णो वेत्त्रा महाबलम्॥
दक्षस्य पक्षमाश्रित्य कथं जेष्यसि तद्वद॥ ४.३४ ॥

दाक्षायण्या कृतं यच्च न दृष्टं किं त्वयानघ॥
त्वं चापि यज्ञे दक्षस्य अवदानार्थमागतः॥
अवदानं प्रयच्छामि तव चापि महाभूज॥ ४.३५ ॥

एवमुक्त्वा प्रणम्यादौ विष्णुं सदृशरूपिणम्॥
वीरभद्रोऽग्रतो भूत्वा विष्णुं वाक्यमथाब्रवीत्॥ ४.३६ ॥

यथा शंभुस्तथा त्वं हि मम नास्त्यत्र संशयः॥
तथापि त्वं महाबाहो योद्धुकामोऽग्रतः स्तितः॥
नेष्याम्यपुनरावृत्तिं यदि तिष्ठेस्त्वमात्मना॥ ४.३७ ॥

तस्य तद्वचनं श्रुत्वा वीरभद्रस्य धीमतः॥
उवाच प्रहसन्देवो विष्णुः सर्वेश्वरेश्वरः॥ ४.३८ ॥

**॥विष्णुरुवाच॥**
रुद्रतेजःप्रसूतोसि पवित्रोऽसि महामते॥
अनेन प्रार्थितः पूर्वं यज्ञार्थं च पुनः पुनः॥ ४.३९ ॥

अहं भक्तपराधीनस्तथा सोऽपि महेश्वरः॥

तेनैव कारणेनात्र दक्षस्य यजनं प्रति॥ ४.४० ॥

आगतोऽहं वीरभद्र रुद्रकोपसमुद्भव॥
अहं निवारयामि त्वां त्वं वा मां विनिवारय॥ ४.४१ ॥

इत्युक्तवति गोविंदे प्रहस्य स महाभुजः॥
प्रश्रयावनतो भूत्वा इदमाह जनार्दनम्॥ ४.४२ ॥

यथा शिवस्तथा त्वं हि यथा त्वं च तथा शिवः॥
सेवकाश्च वयं सर्वे तव वा शंकरस्य च॥ ४.४३ ॥

तच्छ्रुत्वा वचनं तस्य सोऽच्युतः संप्रहस्य च॥
इदं विष्णुर्महावाक्यं जगाद परमेश्वरः॥ ४.४४ ॥

योधयस्व महाबाहो मया सार्धमशंकितः॥
तवास्त्रैः पूर्यमाणोऽहं गच्छामि भवनं स्वकम्॥ ४.४५ ॥

तथेत्युक्त्वा तु वीरोऽसौ वीरभद्रो महाबलः॥
गृहीत्वा परमास्त्राणि सिंहनादैर्जगर्ज ह॥ ४.४६ ॥

विष्णुश्चापि महाघोषं शंखनादं चकार सः॥
तच्छ्रुत्वा ये गता देवा रणं हित्वाऽऽययुः पुनः॥ ४.४७ ॥

व्यूहं चक्रुस्तदा सर्वे लोकपालाः सवासवाः॥
तदेन्द्रेण हतो नंदीवज्रेण शतपर्वणा॥ ४.४८ ॥

नंदीना च हतः शक्रस्त्रिशूलेन स्तनांतरे॥
वायुना च हतो भृंगी भृंगिणा वायुराहतः॥ ४.४९ ॥

शूलेन सितधारेण संनद्धो दण्डधारिणा॥
यमेन सह संग्रामं महाकालो बलान्वितः॥ ४.५० ॥

कुबेरेण च संगम्य कूष्मांडानां पतिः स्वयम्॥
वरुणेन समं युद्धं मुंडश्चैव महाबलः॥ ४.५१ ॥

युयुधे परयाशक्त्या त्रैलोक्यं विस्मयन्निव॥
नैर्ऋतेन समागम्य चंडश्चबलवत्तरः॥ ४.५२ ॥

युयुधे परमास्त्रेण नैर्ऋत्यं च विडंबयन्॥
योगिनीचक्रसंयुक्तो भैरवो नायको महान्॥ ४.५३ ॥

विदार्य देवानखिलान्पपौ शोणितमद्बुतम्॥

क्षेत्रपालास्तथा चान्ये भूतप्रमथगुह्यकाः॥ ४.५४ ॥

साकिनी डाकिनी रौद्रा नवदुर्गास्तथैव च॥
योगिन्यो यातुदान्यश्च तथा कूष्मांडकादयः॥
नेदुः पपुः शोणितं च बुभुजुः पिशितं बहु॥ ४.५५ ॥

भक्ष्यमाणं तदा सैन्यं विलोक्य सुरराट्स्वयम्॥
विहाय नंदिनं पश्चाद्वीरभद्रं समाक्षिपत्॥ ४.५६ ॥

वीरभद्रो विहायैव विष्णुं देवेन्द्रमास्थितः॥
तयोर्युद्धमभूद्घोरं बुधांगारकयोरिव॥ ४.५७ ॥

वीरभद्रं यदा शक्रो हंतुकामस्त्वरान्वितः॥
तावच्छंक्रं गजस्थं हि पुरयामास मार्गणैः॥ ४.५८ ॥

वीरभद्रो रुषाविष्टो दुर्निवार्यो महाबलः॥
तदेद्रेंणाहतः शीघ्रं वज्रेण शतपर्वणा॥ ४.५९ ॥

सगजं च सवज्रं च वासवं ग्रस्तुमुद्युतः॥
हाहाकारो महा नासीद्भूतानां तत्र पश्यताम्॥ ४.६० ॥

वीरभद्रं तताभूतं तथाभूतं हंतुकामं पुरंदरम्॥
तव्रमाणस्तदा विष्णुर्वीरभद्राग्रतः स्थितः॥ ४.६१ ॥

शक्रं च पृष्ठतः कृत्वा योधयामास वै तदा॥
वीरभद्रस्य विष्णोश्च युद्धं परमभूत्तदा॥ ४.६२ ॥

शस्त्रास्त्रैर्विविधाकारैर्योधयामासतुस्तदा॥
पुनर्नंदिनमालोक्य शक्रो युद्ध विशारदः॥ ४.६३ ॥

द्वंद्वयुद्धं सुतुमुलं देवानां प्रमथैः सह॥
प्रमथा मथिता देवैः सर्वे ते प्राद्रवन्रणात्॥ ४.६४ ॥

गणान्पराङ्मुखान्दृष्ट्वा सर्वे ते व्याधयो भृशम्॥
रुद्रकोपात्समुद्भूता देवाश्चापि प्रदुद्रुवुः॥ ४.६५ ॥

ज्वरैस्तु पीडितान्देवान्दृष्ट्वा विष्णुर्हसन्निव॥
जीवग्राहेण जग्राह देवांस्तांश्च पृथक्पृथक्॥ ४.६६ ॥

देवाश्चिनौ तदाहूय व्याधीन्हंतुं तदा भृतिम्॥
ददौ ताभ्यां प्रयत्नेन गणयित्वा सुबुद्धिमान्॥ ४.६७ ॥

ज्वरांश्च सन्निपातांश्च अन्ये भूतद्रुहस्तदा॥
तान्सर्वान्निगृहीत्वाथ अश्विनौ तौ मुदान्वितौ॥
विज्वरानथ देवांश्च कृत्वा मुमुदतुश्चिरम्॥ ४.६८ ॥

तैर्जितं योगिनीचक्रं भैरवं व्याकुलीकृतम्॥
तीक्ष्णाग्रैः पातयामासुः शरैर्भूतगणानपि॥ ४.६९ ॥

सुरैर्विद्रावितं सैन्यं विलोक्य पतितं भुवि॥
वीरभद्रो रुपाविष्टो विष्णुं वचनमब्रवीत्॥ ४.७० ॥

त्वं शूरोसि महाबाहो देवानां पालको ह्यसि॥
युध्यस्व मां प्रयत्नेन यदि ते मतिरीदृशी॥ ४.७१ ॥

इत्युक्त्वा तं समासाद्य विष्णुं सर्वेश्वरेश्वरम्॥
ववर्ष निशितैर्बाणैर्वीरभद्रो महाबलः॥ ४.७२ ॥

तदा चक्रेण भगवान्वीरभद्रं जघान सः॥
आयांतं चक्रमालोक्य ग्रसितं तत्क्षणाच्च तत्॥ ४.७३ ॥

ग्रसितं चक्रमालोक्य विष्णुः परपुरंजयः॥
मुखं तस्य परामृज्य विष्णुनोद्गिलितं पुनः॥ ४.७४ ॥

स्वचक्रमादाय महानुभावो दिवं गतोऽथो भुवनैकभर्ता॥
ज्ञात्वा च तत्सर्वमिदं च विष्णुः कृती कृतं दुष्प्रसहं परेषाम्॥ ४.७५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे वीरभद्रादीनां विष्ण्वादिभिः सह युद्धवर्णनंनाम चतुर्थोऽध्यायः॥ ४ ॥ छ ॥

**॥लोमश उवाच॥**

विष्णौ गते तदा सर्वे देवाश्च ऋषिभिः सह॥

विनिर्जिता गणैः सर्वे ये च यज्ञोपजीविनः॥ ५.१ ॥

भृगुं च पातयामास स्मश्रूणां लुंचनं कृतम्॥

द्विजांश्चोत्पाटयामास पूष्णो विकृतविक्रियान्॥ ५.२ ॥

विडंबिता स्वधा तत्र ऋषयश्च विडंबिताः॥

ववृषुस्ते पुरीषेण वितानाग्नौ रुपान्विताः॥ ५.३ ॥

अनिर्वाच्यं तदा चक्रुर्गणाः क्रोधसमन्विताः॥

अंतर्वेद्यंतरगतो दक्षो वै महतो भयात्॥ ५.४ ॥

तं निलीनं समाज्ञाय आनिनायरुषान्वितः॥

कपोलेषु गृहीत्वा तं खड्गेनोपहतं शिरः॥ ५.५ ॥

अभेद्यं तच्छिरो मत्वा वीरभद्रः प्रतापवान्॥

स्कंधं पद्भ्यां समाक्रम्य कधरेऽपीडयत्तदा॥ ५.६ ॥

गंधरात्पाट्यमानाच्च शिरश्छिन्नं दुरात्मनः॥

दक्षस्य च तदा तेन वीरभद्रेण धीमता॥

तच्छिरः सुहुतं कुंडे ज्वलिxxxxxxx॥ ५.७ ॥

ये चान्य ऋषयो देवाः पितरो यक्षराक्षसाः॥

गणैरुपद्रुताः सर्वे पलायनपरा ययुः॥ ५.८ ॥

चंद्रादित्यगणाः सर्वे ग्रहनक्षत्रतारकाः॥

सर्वे विचलिता ह्यासन्गणैस्तेपि ह्युपद्रुताः॥ ५.९ ॥

सत्यलोकं गतो ब्रह्मा पुत्रशोकेन पीडितः॥

चिंतयामास चाव्यग्रः किं कार्यं कार्यमद्य वै॥ ५.१० ॥

मनसा दूयमानेन शंन लेभे पितामहः॥

ज्ञात्वा सर्वं प्रयत्नेन दुष्कृतं तस्य पापिनः॥ ५.११ ॥

गमनाय मतिं चक्रे कैलासं पर्वतं प्रति॥

हंसारूढो महातेजाः सर्वदेवैः समन्वितः॥ ५.१२ ॥

प्रविष्टः पर्वतश्रेष्ठं स ददर्श सदाशिवम्॥

एकांतवासिनं रुद्रं शैलादेन समन्वितम्॥ ५.१३ ॥

कपर्द्दिनं श्रिया युक्तं वेदांगानां च दुर्गमम्॥

तथाविधं समालोक्य ब्रह्म क्षोभपरोऽभवत्॥ ५.१४ ॥

दंडवत्पतितो भूमौक्षमापयितुमुद्यतः॥

संस्पृशं स्तत्पदाब्जं च चतुर्मुकुटकोटिभिः॥

स्तुतिं कर्तुं समारेभे शिवस्य परमात्मनः॥ ५.१५ ॥

**॥ब्रह्मोवाच॥**

नमो रुद्राय शांताय ब्रह्मणे परमात्मने॥

त्वं हि विश्वसृजां स्रष्टा धाता त्वं प्रपितामहः॥ ५.१६ ॥

नमो रुद्राय महते नीलकंठाय वेधसे॥

विश्वाय विश्वबीजाय जगदानंदहेतवे॥ ५.१७ ॥

ओंकारस्त्वं वषट्कारः सर्वारंभप्रवर्तकः॥

यज्ञोसि यज्ञकर्मासि यज्ञानां च प्रवर्तकः॥ ५.१८ ॥

सर्वेषां यज्ञकर्तॄणां त्वमेव प्रतिपालकः॥

शरण्योसि महादेव सर्वेषां प्राणिनां प्रभो॥

रक्ष रक्ष महादेव पुत्रशोकेन पीडितम्॥ ५.१९ ॥

**॥महादेव उवाच॥**

श्रृणुष्वावहितो भूत्वा मम वाक्यं पितामह॥

दक्षस्य यज्ञभंगोयं न कृतश्च मया क्वचित्॥ ५.२० ॥

स्वीयेन कर्मणा दक्षो हतो ब्रह्मन्न संशयः॥ ५.२१ ॥

परेषां क्लेशदं कर्म न कार्यं तत्कदाचन॥

परमेष्ठिन्परेषां यदात्मनस्तद्भविष्यति॥ ५.२२ ॥

एवमुक्त्वा तदा रुद्रो ब्रह्मणा सहितः सुरैः॥

ययौ कनखलं तीर्थं यज्ञवाटं प्रजापतेः॥ ५.२३ ॥

रुद्रस्तदा ददर्शाय वीरभद्रेण यत्कृतम्॥

स्वाहा स्वधा तथा पूषा भृगुर्मतिमतां वरः॥ ५.२४ ॥

तदान्य ऋषयः सर्वे पितरश्च तथाविधाः॥

येऽन्ये च बहवस्तत्र यक्षगंधर्वकिन्नराः॥ ५.२५ ॥

त्रोटिता लुंचिताश्चैव मृताः केचिद्रणाजिरे॥ ५.२६ ॥

शंभुं समागतं दृष्ट्वा वीरभद्रो गणैः सह॥

दंडप्रणामसंयुक्तस्तस्थावग्रे सदाशिवम्॥ ५.२७ ॥

दृष्ट्वा पुरः स्थितं रुद्रो वीरभद्रं महाबलम्॥

उपाच प्रहसन्वाक्यं किं कृतं वीर नन्विदम्॥ ५.२८ ॥

दक्षमानय शीघ्रं भो येनेदं कृतमीदृशम्॥

यज्ञे विलक्षणं तात यस्येदं फलमीदृशम्॥ ५.२९ ॥

एवमुक्तः शंकरेण वीरभद्रस्त्वरान्वितः॥

कबंधमानयित्वाथ शंभोरग्रे तदाक्षिपत्॥ ५.३० ॥

तदोक्तः शंकरेणैव वीरभद्रो महामनाः॥

शिरः केना पनीतं च दक्षस्यास्य दुरात्मनः॥ ५.३१ ॥

दास्यामि जीवनं वीर कुटिलस्यापि चाधुना॥
एवमुक्तः शंकरेण वीरभद्रोऽब्रवीत्पुनः॥ ५.३२ ॥
मया शिरो हुतं चाग्नौ तदानीमेव शंकर॥
अवशिष्टं शिरःशंभो पशोश्च विकृताननम्॥ ५.३३ ॥
इति ज्ञात्वा ततो रुद्रः कबंधोपरि चाक्षिपत्॥
शिरः पशोश्च विकृतं कूर्चयुक्तं भयावहम्॥ ५.३४ ॥
स दक्षो जीवितं लेभे प्रसादाच्छंकरस्य च॥
स दृष्ट्वाग्रे तदा रुद्रं दक्षो लज्जासमन्वितः॥
तुष्टाव प्रणतो भूत्वा शंकरं लोकशंकरम्॥ ५.३५ ॥
**॥दक्ष उवाच॥**
नमामि देवं वरदं वरेण्यं नमामि देवेश्वरं सनातनम्॥
नमामि देवाधिपमीश्वरं हरं नमामि शंभुं जगदेकबंधुम्॥ ५.३६ ॥
नमामि विश्वेश्वरविश्वरूपं सनातनं ब्रह्म निजात्मरूपम्॥
नमामि सर्वं निजभावभावं वरं वरेण्यं नतोऽस्मि॥ ५.३७ ॥
**॥लोमश उवाच॥**
दक्षेण संस्तुतो रुद्रो बभाषे प्रहसन्नहः॥ ५.३८ ॥
**॥हर उवाच॥**
चतुर्विधा भजंते मां जनाः सुकृतिनः सदा॥
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च द्विजसत्तम॥ ५.३९ ॥
तस्मान्मे ज्ञानिनः सर्वे प्रियाः स्युर्नात्र संशयः॥
विना ज्ञानेन मां प्राप्तुं यतंते ते हि बालिशः॥ ५.४० ॥
केवलं कर्मणा त्वं हि संसारात्तर्तुमिच्छसि॥ ५.४१ ॥
न वेदैश्च न दानैश्च न यज्ञैस्तपसा क्वचित्॥
न शक्नुवंति मां प्राप्तुं मूढाः कर्म्मवशानराः॥ ५.४२ ॥
तस्माज्ज्ञानपरो भूत्वा कुरु कर्म्म समाहितः॥
सुखदुःखसमो भूत्वा सुखी भव निरंतरम्॥ ५.४३ ॥
**॥लोमश उवाच॥**
उपदिष्टस्तदा तेन शंभुना परमेष्ठिना॥
दक्षं तत्रैव संस्थापाय ययो रुद्रः स्वपर्वतम्॥ ५.४४ ॥
ब्रह्मणापि तथा सर्वे भृग्वाद्याश्च महर्षयः॥
आश्वासिता बोधिताश्च ज्ञानिनश्चाभवन्क्षणात्॥ ५.४५ ॥
गतः पितामहो ब्रह्मा ततश्च सदनं स्वकम्॥ ५.४६ ॥
दक्षोपि च स्वयं वाक्यात्परं बोधमुपागतः।

शिवध्यानपरो भूत्वा तपस्तेपे महामनाः॥ ५.४७ ॥
तस्मात्सर्वप्रयत्नेन संक्षेव्यो भगवाञ्छिवः॥ ५.४८ ॥
संमार्जनं च कुर्वंति नरा ये च शिवांगणे॥
ते वै शिवपुरं प्राप्य जगद्वंद्या भग्सि च॥ ५.४९ ॥
ये शिवस्य प्रयच्छति दर्प्पणं सुमहाप्रभम्॥
भविष्यंति शिवस्याग्रे पार्षदत्वेन ते नराः॥ ५.५० ॥
चामराणि प्रयच्छंति देवदेवस्य शूलिनः॥
चामरैर्वीज्यपानास्ते भविष्यंति जगत्त्रय॥ ५.५१ ॥
दीपदानं प्रयच्छंति महादेवालये नराः॥
तेजस्विनो भविष्यंति ते त्रैलोक्यप्रदीपका॥ ५.५२ ॥
धूपं ये वै प्रयच्छन्ति शिवाय परमात्मने॥
यशस्विनो भविष्यंति उद्धरन्ति कुलद्वयम्॥ ५.५३ ॥
नैवेद्यं ये प्रयच्छंति भकया हरिहराग्रतः॥
सिक्थेसिक्थे क्रतुफलं प्राप्नुवंति हि ते नराः॥ ५.५४ ॥
भग्नं शिवालयं ये च प्रकुर्वंति नरोत्तमाः॥
प्राप्नुवति फल ते वै द्विगुणं नात्र संशयः॥ ५.५५ ॥
नूतनं ये प्रकृर्वंति इष्टकैरश्मनापि वा॥
स्वर्गे हि ते प्रमोदंते यावत्तिष्ठति निर्मलम्॥
यशो भूमौ द्विजश्रेष्ठा कार्या विचारणा॥ ५.५६ ॥
कारयंति च ये विप्राः प्रासादं बहुभूमिकम्॥
शिवस्याथ महाप्राज्ञाः प्राप्नुवंति परां गतिम्॥ ५.५७ ॥
शुद्धं धवलितं ये च कुर्वन्ति हरमंदिरम्॥
स्वीयं परकृतं चापि तेऽपि यांति परां गतिम्॥ ५.५८ ॥
वितानं ये प्रयच्छति नराः सुकृतिनोपि हि॥
तारयति कुलं कृत्स्नं शिवलोकं गताः पुनः॥ ५.५९ ॥
ये च नादमयीं घंटां निबध्नंति शिवालये॥
तेजस्विनः कीर्तिमंतो भविष्यंति जगत्त्रये॥ ५.६० ॥
एककालं द्विकालं वा त्रिकालं चानुपश्यति॥
आढ्यो वापि दरिद्रो वा सुखं दुःखात्प्रचुच्यते॥ ५.६१ ॥
श्रद्धावान्भजते यो वा शिवाय परमात्मने॥
कुलकोटिं समुद्धृत्य शिवेन सह मोदते॥ ५.६२ ॥
अत्रैवोदाहरंतीम मितिहासं पुरातनम्॥
ऐंद्रद्युम्नेश्च संवादं यमस्य च महात्मनः॥ ५.६३ ॥

पुरा कृतयुगे ह्यसीदिन्द्रसेनो नराधिपः॥
प्रतिष्ठानाधिपो वीरो मृगयारसिकः सदा॥ ५.६४ ॥
अब्रह्मण्यः सदा क्रूरः केवलासुतृपः सदा॥
परप्राणौर्निजप्राणान्पुष्णाति स खलः सदा॥ ५.६५ ॥
परस्त्रीलं पटोऽत्यंतं परद्रव्येषु लोलुपः॥
ब्राह्मणा घातितास्तेन सुरापश्च निरंतरम्॥ ५.६६ ॥
गुरुलत्पगतोत्यर्थं सदा सौवर्णतस्करः॥
तथाभूतानुगाः सर्वे राज्ञस्तस्य दुरात्मनः॥ ५.६७ ॥
एवं बहुविधं राज्यं चकार स दुरात्मवान्॥
ततः कालेन महता पंचत्वं प्राप दुर्मतिः॥ ५.६८ ॥
तदा याम्यैश्च नीतोऽसाविंद्रसेनो दुरात्मवान्॥
यमान्तिकमनुप्राप्तस्तदा राजा सकल्मषः॥ ५.६९ ॥
यमेन दृष्टस्तत्रासाविंद्रसेनोग्रतः स्थितः॥
अभ्युत्थानपरो भूत्वा ननाम शिरसा शिवम्॥ ५.७० ॥
दूतान्संभर्त्सयामास यमो धर्मभृतां वरः॥
पाशैर्बद्धं चंद्रसेनं मुक्त्वा प्रोवाच धर्मराट्॥ ५.७१ ॥
गच्छ पुण्यतमाँल्लोकान्भुंक्ष्व राजन्यसत्तम॥
यावदिंद्रश्च नाकेऽस्ति यावत्सूर्यो नभस्तले॥ ५.७२ ॥
पंचभूतानि यावच्च तावत्त्वं च सुखी भव॥
सुकृती त्वं महाराज शिवभक्तोऽसि नित्यदा॥ ५.७३ ॥
यमस्य वचनं श्रुत्वा इंद्रसेनोभ्यभाषत॥
अहं शिवं न जानामि मृगयारसिको ह्यहम्॥ ५.७४ ॥
तच्छ्रुत्वा वचनं तस्य यमो भाष्यमभाषत॥
आहर प्रहरस्वेति उक्तं चेदं सदा त्वया॥ ५.७५ ॥
तेन कर्मविपाकेन सदा पूतोसि मानद॥
तस्मात्त्वं गच्छ कैलासं पर्वतं शंकरं प्रति॥ ५.७६ ॥
एवं संभाषमाणस्य यमस्य च महात्मनः॥
आगताः शिवद्वतास्ते वृषारूढा महाप्रभाः॥ ५.७७ ॥
नीलकंठा दशभुजाः पंचवक्त्रास्त्रिलोचनाः॥
कपर्द्दिनः कुंडलिनः शशंकांकितमौलयः॥ ५.७८ ॥
तान्दृष्ट्वा सहसोत्थाय यमो धर्मभृतां वरः॥
पूजयामास तान्सर्वान्महेंद्रप्रतिमांस्तदा॥ ५.७९ ॥
त्वरीरेनैव ते सर्वे ऊचुर्वैवस्वतं यमम्॥

अत्रागतो महाभाग इंद्रसेनोऽमितद्युतिः॥
नाम्नाः प्रवर्त्तको नित्यं रुद्रस्य च महात्मनः॥ ५.८० ॥
श्रुत्वा च वचनं तेषां यमेन च पुरस्कृतः॥
इंद्रसेनो विमानस्थः प्रेषितो हि शिवालयम्॥ ५.८१ ॥
आनीतोयं तदा तैश्च पार्षदप्रवरोत्तमैः॥
शंभुना हि तदा दृष्ट इंद्रसेनोऽमितद्युतिः॥ ५.८२ ॥
अभ्युत्थायागतो रुद्रः परिष्वज्य तदा नृपम्॥
अर्द्धासनगतं कृत्वा इंद्रसेनं ततोऽब्रवीत्॥ ५.८३ ॥
किं दातव्यं नृपश्रेष्ठ प्रयच्छामि तवेप्सितम्॥
इति श्रुत्वा वचस्तस्य महेशस्य तदा नृपः॥
आनंदाश्रुकणान्मुंचन्प्रेम्णा नोवाच किंचन॥ ५.८४ ॥
तदा कृतो महेशेन पार्षदो हि महात्मना॥
चंडो नाम्नाच विख्यातोमुण्डस्य च सखा प्रियः॥ ५.८५ ॥
नामोच्चारणमात्रेण रुद्रस्य परमात्मनः॥
सिद्धिं प्राप्तो हि पापिष्ठ इद्रसेनो नराधिपः॥ ५.८६ ॥
रहेहरेति वै नाम्ना शंभोश्चक्रधरस्य च॥
रक्षिता बहवो मर्त्याः शिवेन परमात्मना॥ ५.८७ ॥
महेशान्नापरो देवो दृश्यतेभुवनत्रये॥
तस्मात्सर्वप्रयत्नेन पूजनीयः सदाशिवः॥ ५.८८ ॥
पत्रैःपुष्पैः फलैर्वापि जलैर्वा विमलैः सदा॥
करवीरैः पूज्यमानः शंकरो वरदो भवेत्॥ ५.८९ ॥
करवीराद्दशगुणमर्कपुष्पं विशिष्यते॥
विभूत्यादिकृतं सर्वं जगदेतच्चराचरम्॥ ५.९० ॥
शिवस्यांगणलग्ना या तस्मात्तां धारयेत्सदा॥
ततस्त्रिपुंड्रे यत्पुम्यं तच्छृणुध्वं द्विजोत्तमाः॥ ५.९१ ॥
सर्वपापहरं पुण्यं तच्छृणुध्वं द्विजोत्तमाः॥
स्तेनः कोऽपि महापापो घातितो राजदूतकैः॥ ५.९२ ॥
तं खादितुं समायातः श्वाशिरस्युपरिस्थितः॥
नखांतरालसंलग्ना रक्षा तस्यैव पापिनः॥ ५.९३ ॥
ललाटे पतिता तस्य त्रिपुंड्रांकितमुद्रया॥
चैतन्येन विना तस्य देहमात्रैकलग्नया॥ ५.९४ ॥
कैलासं तस्करो नीतो रुद्रदूतैस्ततस्तदा॥
विभूतेर्महिमानं तु को विशेषितुर्महति॥ ५.९५ ॥

विभूत्वा मंडितांगानां नराणां पुण्यकर्मणाम्॥
मुखे पंचाक्षरो येषां रुद्रास्ते नात्र शंशयः॥ ५.९६ ॥
जटाकलापिनो ये च ये रुद्राक्षविभूषणाः॥
ते वै मनुष्यरूपेण रुद्रा नास्त्यत्र संशयः॥ ५.९७ ॥
तस्मात्सदाशिवः पुंभिः पूजनीयो हि नित्यशः॥
प्रातर्मध्याह्नकाले च सायं संध्या विशिष्यते॥ ५.९८ ॥
प्रातस्तु दर्शनाच्छंभोर्नैशमेनो व्यपोहति॥
मध्याह्ने दर्शनाच्छंभोः सप्तजन्मार्जितं नृणाम्॥
पापं प्रणाशमायाति निशायां नैव गण्यते॥ ५.९९ ॥
शिवेति द्व्यक्षरं नाम महा पापप्रणाशनम्॥
येषां मुखोद्गतं नृणां तैरिदं धार्यते जगत्॥ ५.१०० ॥
शिवांगणे तु या भेरी स्थापिता पुण्यकर्मभिः॥
तस्या नादेन पूता वै ये च पापरता जनाः॥
पाषंडिनोऽप्यसद्वादास्तेऽपि यांति परां गतिम्॥ ५.१०१ ॥
पशोर्यस्य च संबद्धा चर्मणा च शिवालये॥
नृभिर्या स्थापिता भेरी मृदंगमुरजादि च॥
स पशुः शिवसान्निध्यमाप्नोत्यत्र न संशयः॥ ५.१०२ ॥
तस्मात्ततं च विततं घनं सुषिरमेव च॥
चामराणि महार्हाणि मंचकाः शयनानि च॥ ५.१०३ ॥
गाथाश्च इतिहासाश्च गायनं च यथाविधि॥
बहुरूपादिकं शंभोः प्रियान्येतानि कल्पयेत्॥ ५.१०४ ॥
कल्पयित्वा च गच्छंति शिवलोकं हि पापिनः॥
सुधर्माणो महात्मानः शिवपूजाविशारदाः॥ ५.१०५ ॥
गुरोर्मुखाच्च संप्राप्तशिवपूजारताश्च ये॥
शिवरूपेण ये विश्वं पश्यंति कृतनिश्चयाः॥ ५.१०६ ॥
सम्यग्बुद्ध्या समाचारा वर्णाश्रमयुता नराः॥
ब्राह्मणाः क्षत्रिया वैश्वयाः शूद्राश्चान्ये तथा नराः॥ ५.१०७ ॥
श्वपचोऽपि वरिष्ठः स शंभोः प्रियतरो भवेत्॥
शंभुनाधिष्ठितं सर्वं जगदेतच्चराचरम्॥ ५.१०८ ॥
तस्मात्सर्वं शिवमयं ज्ञातव्यं सुविशेषतः॥
वेदैः पुराणैः शास्त्रैश्च तथौपनिपदैरपि॥ ५.१०९ ॥
आगमैर्विविधैः शंभुर्ज्ञातव्यो नात्र संशयः॥
निष्कामैश्च सकामैश्च पूजनीयः सदा शिवः॥ ५.११० ॥

**॥लोमश उवाच॥**

कथयामि पुरावृत्तमितिहासं पुरातनम्॥
नंदी नाम पुरा वैश्यो ह्यवंतीपुरमावसत्॥ ५.१११ ॥
शिवध्यानपरो भूत्वा शिवपूजां चकार सः॥
नित्यं तपोवनस्थं हि लिंगमेकं समर्चयत्॥ ५.११२ ॥
उषस्युषसि चोत्थाय प्रत्यहं शिववल्लभः॥
नंदीलिंगार्च्चनरतो बभूवातिशयेन हि॥ ५.११३ ॥
लिंगं पंचामृतेनैव यथोक्तेनाभ्यषेचयत्॥
विप्रैः समावृतो नित्यं वेदवेदांगपारगैः॥ ५.११४ ॥
यथाशास्त्रेण विधिना लिंगार्चनपरोऽभवत्॥
स्नापयित्वा ततः पुष्पैर्नानश्चर्यसमन्वितैः॥ ५.११५ ॥
मुक्ताफलैरिंद्रनीलैर्गोमेदैश्च निरंतरम्॥
वैडूर्यैश्चैव नीलैश्च माणिक्यैश्च तथार्चयत्॥ ५.११६ ॥
एवं नंदी महाभागो बहून्यब्दानि चार्च्चयत्॥
विजनस्थं तदा लिंगं नानाभोगसमन्वितम्॥ ५.११७ ॥
एकदा मृगयासक्तः किरातो भूतहिंसकः॥
अविवेकपरो भूत्वा मृगयारसिकः सदा॥ ५.११८ ॥
पापी पापसमाचारो विचरन्गिरिकंदरे॥
अनेकश्वापदाकीर्णे हन्यमान इतस्ततः॥ ५.११९ ॥
एवं विचरमाणोऽसौ किरातो भूतहिंसकः॥
यदृच्छयागतस्तत्र यत्र लिंगं सुपूजितम्॥ ५.१२० ॥
उदकं वीक्ष्माणोऽसौ तृषया पीडितो भृशम्॥
ततो वने सरः शीघ्रं दृष्ट्वा तोये समाविशत्॥ ५.१२१ ॥
तीरे संस्थाप्य दुष्टात्मा तत्सर्वं मृगयादिकम्॥
गंडूषोत्सर्जनं कृत्वा पीत्वा तोयं च निर्गतः॥ ५.१२२ ॥
शिवालयं ददर्शाग्रे अनेकाश्चर्यमंडितम्॥
दृष्टं सुपूजितं लिंगं नानारत्नैः पृथक्पृथक्॥ ५.१२३ ॥
तथा लिंगं समालक्ष्य यदा पूजां समाहरत्॥
रत्नानि सर्वभूतानि विधूतानि इतस्ततः॥ ५.१२४ ॥
स्नपनं तस्य लिंगस्य कृतं गंडूषवारीणा॥
करेणैकेन पूजार्थं बिल्वपत्राणि सोऽर्पयत्॥ ५.१२५ ॥
द्वितीयेन करेँणैव मृगमांसं समर्पयत्॥
दण्डप्रणामसंयुक्तः संकल्पं मनसाऽकरोत्॥ ५.१२६ ॥

अद्यप्रभृति पूजां वै करिष्यामि प्रयत्नतः॥
त्वं मे स्वामी च भक्तोहमद्यप्रभृति शंकर॥ ५.१२७ ॥
एवं नैयमिको भूत्वा किरातो गृहमागतः॥
नन्दी ददर्श तत्सर्वं किरातेन इतस्ततः॥ ५.१२८ ॥
चिंतायुक्तोऽभवन्नंदी जातं किं छिद्रमद्य मे॥
कथितानि च विघ्नानि शिवपूजारतस्य च॥
उपस्थितानि तान्येव मम भाग्यविपर्ययात्॥ ५.१२९ ॥
एवं विमृश्य सुचिरं प्रक्षाल्य शिवमंदिरम्॥
यथागतेन मार्गेण नंदी स्वगृहमागतः॥ ५.१३० ॥
ततो नंदिनमागत्य पुरोधा गतमानसम्॥
अब्रवोद्वचनं तं तु कस्मात्त्वं गतमानसः॥ ५.१३१ ॥
पुरोहितं प्रति तदा नन्दी वचनमब्रवीत्॥ ५.१३२ ॥
अद्य दृष्टं मया विप्र अमेध्यं शिवसंनिधौ॥
केनेदं कारितं तत्र न जानामि कथंचन॥ ५.१३३ ॥
ततः पुरोधा वचनं नन्दिनं चाब्रवीत्तदा॥
येन विस्खलितं तत्र रत्नादीनां प्रपूजनम्॥
सोऽपि मूढो न संदेहः कार्याकार्येषु मंदधीः॥ ५.१३४ ॥
तस्माच्चिंता न कर्तव्या त्वया अमुरपि प्रभो॥
प्रभाते च मया सार्द्धं गम्यतां तच्छिवालयम्॥ ५.१३५ ॥
निरीक्षणार्थं दुष्टस्य तत्कार्यं विदधाम्यहम्॥
एतच्छ्रुत्वा तु वचनं नन्दी तस्य पुरोधसः॥ ५.१३६ ॥
आस्थितः स्वगृहे नक्तं दूयमानेन चेतसा॥
तस्यां रात्र्यां व्यतीतायामाहूय च पुरोधसम्॥ ५.१३७ ॥
गतः शिवालयं नन्दी समं तेन महात्मना॥
ततो दृष्टं पूर्वदिने कृतंतेन दुरात्मना॥ ५.१३८ ॥
सम्यक्प्रपूजनं कृत्वा नानारत्नपरिच्छदम्॥
पञ्चोपचारसंयुक्तं चैकादस्यन्वितं तथा॥ ५.१३९ ॥
अनेकस्तुतिभिः स्तुत्वा गिरीशं ब्राह्मणैः सह॥
तदा यामद्वयं जातं स्तूयमानस्य नंदिनः॥ ५.१४० ॥
आयातो हि महाकालस्थारूपो महाबलः॥
कालरूपो महारौद्रो धनुष्पाणिः प्रतापवान्॥ ५.१४१ ॥
तं दृष्ट्वा भयवित्रस्तो नन्दी स विललाप ह॥
पुरोधाश्चैव सहसा भयभीतस्तदाभवत्॥ ५.१४२ ॥

किरातेन कृतं तत्र यथापूर्वमविस्खलम्॥
तां पूजां प्रपदाहत्य बिल्वपत्रं समर्पयत्॥ ५.१४३ ॥
स्नपनं तस्य कृत्वा च ततो गंडूषवारिणा॥
नैवेद्यं तत्पलं चैव किरातः शिवमर्पयत्॥ ५.१४४ ॥
दण्डवत्पतितो भूमावुत्थाय स्वगृहं गतः॥
तद्दृष्ट्वा महदाश्चर्यं चिंतयामास वै चिरम्॥ ५.१४५ ॥
पुरोधसा सह तदा नंदीव्याकुलचेतसा॥
तेन चाकारिता विप्रा बहवो वेदवादिनः॥ ५.१४६ ॥
निवेद्य तेषु तत्सर्वं किरातेन च यत्कृतम्॥
किं कार्यमथ भो विप्राः कथ्यतां च यथातथम्॥ ५.१४७ ॥
संप्रधार्य ततः सर्वे मिलित्वा धर्मशास्त्रतः॥
ऊचुः सर्वे तदा विप्रा नंदिनं चातिशंकिनम्॥ ५.१४८ ॥
इदं विघ्नं समुत्पन्नं दुर्निवार्यं सुरैरपि॥
तस्मादानय लिंगं त्वं स्वगृहं वैश्यसत्त्॥ ५.१४९ ॥
तथेति मत्वासौ नंदी शिवस्योत्पाटनं तदा॥
कृत्वा स्वगृह मानीय प्रतिष्ठाप्य यताविधि॥ ५.१५० ॥
सुवर्णपीठिकां कृत्वा नवरत्नसुशोभिताम्॥
उपचारैरनेकैश्च पूजयामास वै तदा॥ ५.१५१ ॥
अथापरे द्युरायातः कितरातः शिवमंदिरम्॥
यावद्विलोक्यामास लिंगमैशं न दृष्टवान्॥ ५.१५२ ॥
मौनं विहाय सहसा ह्याक्रोशन्निदमब्रवीत्॥
हे शंभो क्व गतोसि त्वं दर्शयात्मानमद्य वै॥ ५.१५३ ॥
न दृष्टोसि मया त्वं हि त्यजाम्यद्य कलेवरम्॥
हे शंभो हे जगन्नाथ त्रिपुरांतकर प्रभो॥ ५.१५४ ॥
हे रुद्र हे महादेवदर्शयात्मानमात्मना॥ ५.१५५ ॥
एवं साक्षेपमधुरैर्वाक्यैः क्षिप्तः सदाशिवः॥
किरातेन ततो रंगैर्वीरोसौ जठरं स्वकम्॥ ५.१५६ ॥
विभेदाशु ततो बाहूनास्फोट्यैव रुषाब्रवीत्॥
हे शंभो दर्शयात्मानं कुतो मां त्यज्य यास्यसि॥ ५.१५७ ॥
इति क्षित्वा ततोंत्राणि मांसमुकृत्त्य सर्वतः॥
तस्मिन्गर्ते करेणैव किरातः सहसाक्षिपत्॥ ५.१५८ ॥
स्वस्थं च हृदयं कृत्वा सस्नौ तत्सरसि ध्रुवम्॥
तथैव जलमानीय बिल्वपत्रं त्वरान्वितः॥ ५.१५९ ॥

पूजयित्वा यथान्यायं दंडवत्पतितो भुवि॥ ५.१६० ॥
ध्यानस्थितस्ततस्तत्र किरातः शिवसंनिधौ॥
प्रादुर्भूतस्तदा रुद्रः प्रमथैः परिवारितः॥ ५.१६१ ॥
कर्पूरगौरोद्युतिमान्कपर्दी चंद्रशेखरः॥
तं गृहीत्वा करे रुद्र उवाच परिसांत्वयन्॥ ५.१६२ ॥
भोभो वीर महाप्राज्ञ मद्भक्तोसि महामते॥
वरं वृणीष्वात्महितं यत्तेऽभिलषितं महत्॥ ५.१६३ ॥
एवमुक्तः स रुद्रेण महाकालो मुदान्वितः॥
पपात दंडवद्भूमौ भक्त्या परमया युतः॥ ५.१६४ ॥
ततो रुद्रं बभापे स वरं सम्प्रार्थयाम्यहम्॥
अहं दासोस्मि ते रुद्र त्वं मे स्वामी न संशयः॥ ५.१६५ ॥
एतद्बुद्धात्मनो भक्तिं देहि जन्मनिजन्मनि॥
त्वं माता च पिता त्वं च त्वं बंधुश्च सखा हि मे॥ ५.१६६ ॥
त्वं गुहुस्त्वं महामंत्रो मंत्रवेद्योऽसि सर्वदा॥
तस्मात्त्वदपरं नान्यत्त्रिषु लोकेषु किंचन॥ ५.१६७ ॥
निष्कामं वाक्यमाकर्ण्य किरातस्य तदा भवः॥
ददौ पार्षदमुख्यत्वं द्वारपालत्वमेव च॥ ५.१६८ ॥
तदा डमरुनादेन नादितं भुवनत्रयम्॥
भेरीभांकारशब्देन शंखानां निनदेन च॥ ५.१६९ ॥
तदा दुंदुबयो नेदुः पटहाश्चसहस्रशः॥
नंदी तं नादमाकर्ण्य विस्मयात्तवरीतो ययौ॥ ५.१७० ॥
तपोवनं यत्र शिवः स्थितः प्रमथसंवृतः॥
किरातो हि तथा दृष्टो नंदिना च तदा भृशम्॥ ५.१७१ ॥
उवाच प्रश्रितो वाक्यं स नंदी विस्मयान्वितः॥
किरातं स्तोतुकामऽसौ परमेण समाधिना॥ ५.१७२ ॥
इहानीतस्त्वया शंभुस्त्वं भक्तोसि परंतप॥
त्वं भक्तोऽहमिह प्राप्तो मां निवेदय शंकरे॥ ५.१७३ ॥
तच्छ्रुत्वा वचनं तस्य किरातस्त्वरयान्वितः॥
नंदिनं च करे गृह्य शंकरं समुपागतः॥ ५.१७४ ॥
प्रहस्य भगवान्रुद्रः किरातं वाक्यमब्रवीत्॥
कोऽयं त्वया समानीतो गणानामिह सन्निधौ॥ ५.१७५ ॥
**॥किरात उवाच॥**
विज्ञप्तोऽसौ किरातेन शंकरो लोकशंकरः॥

तव भक्तः सदा देव तव पूजारतो ह्यसौ॥ ५.१७६ ॥
प्रत्यहं रत्नमाणिक्यैः पुष्पैश्चोच्चावचैरपि॥
जीवितेन धनेनापि पूजितोऽसि न संशयः॥ ५.१७७ ॥
तस्माज्जानीहि मन्मित्रं नंदिनं भक्तवत्सल॥ ५.१७८ ॥
**॥महादेव उवाच॥**
न जानामि महाभाग नंदिनं वैश्यचर्चितम्॥
त्वं मे भक्तः सखा चेति महाकाल महामते॥ ५.१७९ ॥
उपाधिरहिता च येऽपि चैव मनस्विनः॥
तेऽतीव मे प्रिया भक्तास्ते विशिष्टा नरोत्तमाः॥ ५.१८० ॥
तव भक्तो ह्यहं तात स च मे प्रियकृत्तरः॥
तावुभौ स्वीकृतौ तेन पार्षदत्वेन शंभुना॥ ५.१८१ ॥
ततो विमानानि बहूनि तत्र समागतान्येव महाप्रभाणि॥
किरातवर्येण स वैश्यवर्य उद्धारितस्तेन महाप्रभेण॥ ५.१८२ ॥
कैलासं पर्वतं प्राप्तौ विमानैर्वेगवत्तरैः॥
सारूप्यमेव संप्राप्तावीश्वरेण महात्मना॥ ५.१८३ ॥
नीराजितौ गिरिजया शिवेन सहितौ तदा॥
उवाचेदं ततो देवी प्रहस्य गजगामिनी॥ ५.१८४ ॥
यथा त्वं हि महादेव तथा चैतौ न संशयः॥
स्वरूपेण च गत्या च हास्यभावैः सुपूजितौ॥ ५.१८५ ॥
मया त्वमेक एवासीः सेवितो वै न संशयः॥
देव्यास्तद्वचनं श्रुत्वा किरातो वैश्य एव च॥ ५.१८६ ॥
सद्यः पराङ्मुखौ भूत्वा शंकरस्य च पश्यतः॥
भवावस्त्वनुकंप्यौ च भवता हि त्रिलोचन॥ ५.१८७ ॥
तव द्वारि स्थितौ नित्यं भाववस्ते नमोनमः॥ ५.१८८ ॥
तयोर्भावं स भगवान्विदित्वा प्रहसन्भवः॥
उवाच परया भक्त्या भवतोरस्तु वांछितम्॥ ५.१८९ ॥
तदा प्रभृति तावेतौ द्वारपालौ बभूवतुः॥
शिवद्वारि स्थितौ विप्रा मध्याह्ने शिवदर्शिनौ॥ ५.१९० ॥
एको नंदी महाकालो द्वावेतौ शिववल्लभौ॥
ऊचतुस्तौ मुदायुक्तावेक एव सदाशिवः॥ ५.१९१ ॥
एकांगुलिं समुद्धृत्य महादेवोभ्यभाषत॥
तथा नंदी उवाचेदमुद्धृत्य स्वांगुलिद्वयम्॥ ५.१९२ ॥
एवं संज्ञान्वितौ द्वारि तिष्ठतस्तौ महात्मनः॥

शंकरस्य महाभागाः श्रृण्वंतु ॠषयो ह्यमी॥ ५.१९३ ॥
शैलादेन पुरा प्रोक्तं शिवधर्ममनंतकम्॥
प्राणिनां कृपया विप्राः सर्वेषां दुष्कृतात्मनाम्॥ ५.१९४ ॥
ये पापिनोऽप्यधर्मिष्ठा अंधा मूकाश्च पंगवः॥
कुलहीना दुरात्मानः श्वपचा अपि मानवाः॥ ५.१९५ ॥
यादृशास्तादृशाश्चान्ये शिवभक्तिपुरस्कृताः॥
तेऽपि गच्छंति सांनिध्यं देवदेवस्य शूलिनः॥ ५.१९६ ॥
लिंगं सिकतामयं ये पूजयंति विपश्चितः॥
ते रुद्रलोकं गच्छंति नात्र कार्या विचारणा॥ ५.१९७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवभक्तिमाहात्म्यवर्णनंनाम पंचमोऽध्यायः॥ ५ ॥ छ ॥

**॥ऋषय ऊचुः॥**
लिंगे प्रतिष्ठा च कथं शिवं हित्वा प्रवर्तिता॥
तत्कथ्यतां महाभाग परं शुश्रुषतां हि नः॥ ६.१ ॥

**॥लोमश उवाच॥**
यदा दारुवने शंभुर्भिक्षार्थं प्राचरत्प्रभुः॥ ६.२ ॥

दिगंबरो मुक्तजटाकलापो वेदांतवेद्यो भुवनैकभर्ता॥
स ईश्वरो ब्रह्मकलापधारो योगीश्वराणां परमः परश्च॥ ६.३ ॥

अणोरणीयान्महतो मही यान्महानुभावो भुवनाधिपो महान्॥
स ईश्वरो भिक्षुरूपी महात्मा भिक्षाटनं दारुवने चकार॥ ६.४ ॥

मध्याह्न ऋषयो विप्रास्तीर्थं जग्मुः स्वकाश्रमात्॥
तदानीमेव सर्वास्ता ऋषीभार्याः समागताः॥ ६.५ ॥

विलोकयंत्यः शंभुं तमाचख्युश्च परस्परम्॥
कोऽसौ भिक्षुकरूपोयमागतोऽपूर्वदर्शनः॥ ६.६ ॥

अस्मै भिक्षां प्रयच्छामो वयं च सखिभिः सह॥
तथेति गत्वा सर्वास्ता गृहेभ्य आनयन्मुदा॥ ६.७ ॥

भिक्षान्नं विविधं श्लक्ष्णं सोपचारं च शक्तितः॥
प्रदत्तं भिक्षितं तेन देवदेवेन शूलिना॥ ६.८ ॥

काचित्प्रियतमं शंभुं बभाषे विस्मयान्विता॥
कोसि त्वं भिक्षुको भूत्वा आगतोत्र महामते॥ ६.९ ॥

ऋषीणामाश्रमं शुद्धं किमर्थं नो निषीदसि॥
तयोक्तोऽपि तदा शंभुर्बभाषे प्रहसन्निव॥ ६.१० ॥

ईश्वरोहं सुकेशांते पावनं प्राप्तवानिमम्॥
ईश्वरस्य वचः श्रुत्वा ऋषिभार्या उवाच तम्॥ ६.११ ॥

ईश्वरोऽसि महाभाग कैलासपतिरेव च॥
एकाकिनः कथं देव भिक्षार्थमटनं तव॥ ६.१२ ॥

एवमुक्तस्तया शंभुः पुनस्तामब्रवीद्वचः॥
दाक्षायण्या विरहितो विचरामि दिगंबरः॥ ६.१३ ॥

भिक्षाटनार्थं सुश्रोणि संकल्परहितः सदा॥
तया सत्या विना किंचित्स्त्रीमात्रं मम भामिनि॥

न रोचते विशालाक्षि सत्यं प्रतिवदामि ते॥ ६.१४ ॥

तस्योक्तं वचनं श्रुत्वा उवाच कमलेक्षणा॥
स्त्रियो हि सुखसंस्पर्शाः पुरुषस्य न संशयः॥ ६.१५ ॥

तास्स्त्रियो वर्जिताः शंभो त्वादृशेन विपश्चिता॥ ६.१६ ॥

इति च प्रमदाः सर्वा मिलिता यत्र शंकरः॥
भिक्षापात्रं च तच्छंभोः पूरितं च महागुणैः॥ ६.१७ ॥

अन्नैश्चतुर्विधैः षड्भी रसैश्च परिपूरितम्॥
यदा संभुर्गंतुकामः कैलासं पर्वतं प्रति॥
तदा सर्वा विप्रपत्न्यो ह्यन्गच्छन्मुदान्विताः॥ ६.१८ ॥

गृहकार्यं परित्यज्य चेरुस्तद्गतमानसाः॥
गतासु तासु सर्वासु पत्नीषु ऋषिसत्तमाः॥ ६.१९ ॥

यावदाश्रममभ्येत्य तावच्छून्यं व्यलोकयन्॥
परस्परमथोचुस्ते पत्न्यः सर्वाः कुतो गताः॥ ६.२० ॥

न विदामोऽथ वै सर्वाः केन नष्टेन चाहृताः॥
एवं विमृश्यमानास्ते विचिन्वंतस्ततस्ततः॥ ६.२१ ॥

समपश्यंस्ततः सर्वे शिवस्यानुगताश्च ताः॥
शिवं दृष्ट्वा तु संप्राप्ता ऋषयस्ते रुषान्विताः॥ ६.२२ ॥

शिवस्याथाग्रतो भूत्वा ऊचुः सर्वे त्वरान्विताः॥
किं कृतं हि त्वया शंभो विरक्तेन महात्मना॥
परदारापहर्त्तासि त्वमृषीणां न संशयः॥ ६.२३ ॥

एवं क्षिप्तः शिवो मौनी गच्छमानोऽपि पर्वतम्॥
तदा स ऋषिभिः प्राप्तो महादेवोऽव्ययस्तथा॥
यस्मात्कलत्रहर्ता त्वं तस्मात्षंढो भव त्वरम्॥ ६.२४ ॥

एवं शप्तः स मुनिभिर्लिंगं तस्यापतद्भुवि॥
भूमिप्राप्तं च तल्लिंगं ववृधे तरसा महत्॥ ६.२५ ॥

आवृत्य सप्त पातालान्क्षणाल्लिंगमदोर्ध्वतः॥
व्याप्य पृथ्वीं समग्रां च अंतरिक्षं समावृणोत्॥ ६.२६ ॥

स्वर्गाः समावृताः सर्वे स्वर्गातीतमथाभवत्॥
न मही न च दिक्चक्रं न तोयं न च पावकः॥ ६.२७ ॥

न च वायुर्न वाकाशं नाहंकारो न वा महत्॥
न चाव्यक्तं न कालश्च न महाप्रकृतिस्तथा॥ ६.२८ ॥

नासीद्द्ववैतविभागं च सर्वं लीनं च तत्क्षणात्॥
यस्माल्लीनं जगत्सर्वं तस्मिँल्लिगे महात्मनः॥ ६.२९ ॥

लयनाल्लिंगमित्येवं प्रवदंति मनीषिणः॥
तथाभूतं वर्द्धमानं दृष्ट्वा तेऽपि सुरर्षयः॥ ६.३० ॥

ब्रह्मेंद्रविष्णुवाय्यग्निलोकपालाः सपन्नगाः॥
विस्मयाविष्टमनसः परस्परमथाब्रुवन्॥ ६.३१ ॥

किमायामं च विस्तारं क्व चांतः क्व च पीठिका॥
इति चिंतान्विता विष्णुमूचुः सर्वे सुरास्तदा॥ ६.३२ ॥

**॥देवा ऊचुः॥**
अस्य मूलं त्वया विष्णो पद्मोद्भव च मस्तकम्॥
युवाभ्यां च विलोक्यं स्यात्स्थाने स्यात्परिपालकौ॥ ६.३३ ॥

श्रुत्वा तु तौ महाभागौ वैकुंठकमलोद्भवौ॥
विष्णुर्गतो हि पातालं ब्रह्मा सर्वगं जगाम ह॥ ६.३४ ॥

स्वर्गं गतस्तदा ब्रह्मा अवलोकनतत्परः॥
नापस्यत्तत्र लिंगस्य मस्तकं च विचक्षमः॥ ६.३५ ॥

तथा गतेन मार्गेण प्रत्यावृत्त्याब्जसंभवः॥
मेरुपृष्ठमनुप्राप्तः सुरभ्या लक्षितस्ततः॥ ६.३६ ॥

स्थिता या केतकीच्छायामुवाच मधुरं वचः॥
तस्या वचनमाकर्ण्य सर्वलोकपितामहः॥
उवाच प्रहसन्वाक्यं छलोक्त्या सुरभिं प्रति॥ ६.३७ ॥

लिंगं महाद्भुतं दृष्टं येनव्याप्तं जगत्त्रयम्॥
दर्शनार्थं च तस्यांतं देवैः संप्रेषितोस्मयहम्॥ ६.३८ ॥

न दृष्टं मस्तकं तस्य व्यापकस्य महात्मनः॥
किं वक्ष्येऽहं च देवाग्रे चिंता मे चाति वर्तते॥ ६.३९ ॥

लिंगस्य मस्तकं दृष्टं देवानां च मृषा वदेः॥
ते सर्वे यदि वक्ष्यंति इंद्रादया देवतागणाः॥ ६.४० ॥

ते संति साक्षिमो देवा अस्मिन्नर्थे वदत्वरम्॥
अर्थेऽस्मिन्भव साक्षी त्वं केतक्या सह सुव्रते॥ ६.४१ ॥

तद्वचः शिरसा गृह्य ब्रह्मणः परमेष्ठिनः॥
केतकीसहिता तत्र सुरभी तदमानयत्॥ ६.४२ ॥

एवं समागतो ब्रह्म देवाग्रे समुवाच ह॥ ६.४३ ॥

**॥ब्रह्मोवाच॥**
लिंगस्य मस्तकं देवा दृष्टवानहमद्भुतम्॥
समीचीनं चार्तितं च केतकीदल संयुतम्॥ ६.४४ ॥

विशालं विमलं श्लक्ष्णं प्रसन्नतरमद्भुतम्॥
रम्यं च रमणीयं च दर्शनीयं महाप्रभम्॥ ६.४५ ॥

एतादृशं मया दृष्टं न दृष्टं तद्विनाक्वचित्॥
ब्रह्मणो हि वचः श्रुत्वा सुरा विस्मयमाययुः॥ ६.४६ ॥

एवं विस्मयपूर्णास्ते इंद्राद्या देवतागणाः॥
तिष्ठंति तावत्सर्वेशो विष्णुरध्यात्मदीपकः॥ ६.४७ ॥

पातालादागतः सद्यः सर्वेषामवदत्त्वरम्॥
तस्याप्यंतो न दृष्टो मे ह्यवलोकनतत्परः॥ ६.४८ ॥

विस्मयो मे महाञ्जातः पातालात्परतश्चरन्॥
अतलं सुतलं चापि नितलं च रसातलम्॥ ६.४९ ॥

तथा गतस्तलं चैव पातालं च तथातलम्॥
तलातलानि तान्येनं शून्यवद्यद्विभाव्यते॥ ६.५० ॥

शून्यादपि च शून्यं च तत्सर्वं सुनिरीक्षितम्॥
न मूलं च न मध्यं च न चांतो ह्यस्य विद्यते॥ ६.५१ ॥

लिंगरूपी महादेवो येनेदं धार्यते जगत्॥
यस्य प्रसादादुत्पन्ना यूयं च ऋषयस्तथा॥ ६.५२ ॥

श्रुत्वा सुराश्च ऋषयस्तस्य वाक्यमपूजयन्॥
तदा विष्णुरुवाचेदं ब्रह्माणं प्रहसन्निव॥ ६.५३ ॥

दृष्टं हि चेत्त्वया ब्रह्मन्मस्तकं परमार्थतः॥
साक्षिणः के त्वया तत्र अस्मिन्नर्थे प्रकल्पिताः॥ ६.५४ ॥

आकर्ण्य वचनं विष्णोर्ब्रह्मा लोकपितामहः॥
उवाच त्वरितेनैव केतकी सुरभीति च॥ ६.५५ ॥

ते देवा मम साक्षित्वे जानीहि परमार्थतः॥
ब्रह्मणो हि वचः श्रुत्वा सर्वे देवास्त्वरान्विताः॥ ६.५६ ॥

आह्वानं चक्रिरे तस्याः सुरभ्याश्च तया सह॥
आगते तत्क्षमादेव कार्यार्थं ब्रह्मणस्तदा॥ ६.५७ ॥

इंद्राद्यैश्च तदा देवैरुक्ता च सुरभी ततः॥
उवाच केतकीसार्द्धं दृष्टो वै ब्रह्मणा सुराः॥ ६.५८ ॥

लिंगस्य मस्तको देवाः केतकीदलपूजितः॥
तदा नभोगता वाणी सर्वेषां श्रृण्वतामभूत्॥ ६.५९ ॥

सुरभ्या चैव यत्प्रोक्तं केतक्या च तथा सुराः॥
तन्मृषोक्तं च जानीध्वं न दृष्टो ह्यस्य मस्तकः॥ ६.६० ॥

तदा सर्वेऽथ विबुधाः सेंद्रा वै विष्णुना सह॥
शेपुश्च सुरभीं रोषान्मृषावादनतत्पराम्॥ ६.६१ ॥

मुखेनोक्तं त्वयाद्यैवमनृतं च तथा शुभे॥
अपवित्रं मुखं तेऽस्तु सर्वधर्मबहिष्कृतम्॥ ६.६२ ॥

सुगंधकेतकी चापि अयोग्या त्वं शिवार्चने॥
भविष्यसि न संदेहो अनृता चैव भामिनि॥ ६.६३ ॥

तदा नभो गता वाणी ब्रह्मणं च शशाप वै॥
मृषोक्तं च त्वया मंद किमर्थं बालिशेन हि॥ ६.६४ ॥

भृगुणा ऋषिभिः साकं तथैव च पुरोधसा॥
तस्माद्युयं न पूज्याश्च भवेयुः क्लेशभागिनः॥ ६.६५ ॥

ऋषयोऽपि च धर्मिष्ठास्तत्त्ववाक्यबहिष्कृताः॥
विवादनिरता मूढा अतत्त्वज्ञाः समत्सराः॥ ६.६६ ॥

याचकाश्चावदान्याश्च नित्यं स्वज्ञानघातकाः॥
आत्मसंभाविताः स्तब्धाः परस्परविनिंदकाः॥ ६.६७ ॥

एवं शप्ताश्च मुनयो ब्रह्माद्या देवतास्तथा॥
शिवेन शप्तास्ते सर्वे लिंगं शरणमाययुः॥ ६.६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे श्रीशिवलिङ्गमाहात्म्ये ब्रह्मादिशापवृत्तान्तवर्णनं नाम षष्ठोऽध्यायः॥ ६ ॥छ ॥

**॥लोमश उवाच॥**

तदा च ते सुराः सर्व ऋषयोपि भयान्विताः॥
ईडिरे लिंगमैशं च ब्रह्माद्या ज्ञानविह्वलाः॥ ७.१ ॥

**॥ब्रह्मोवाच॥**

त्वं लिंगरूपी तु महाप्रभावो वेदांतवेद्योसि महात्मरूपि॥
येनैव सर्वे जगदात्ममूलं कृतं सदानंदपरेण नित्यम्॥ ७.२ ॥
त्वं साक्षी सर्वलोकानां हर्ता त्वं च विचक्षणः॥
रक्षणोसि महादेव भैरवोसि जगत्पते॥ ७.३ ॥
त्वया लिंगस्वरूपेण व्याप्तमेतज्जगत्त्रयम्॥
क्षुद्राश्चैव वयं नाथ मायामोहितचेतसः॥ ७.४ ॥
अहं सुराऽसुराः सर्वे यक्षगंधर्वराक्षसाः॥
पन्नगाश्च पिशाचाश्च तथा विद्याधरा ह्यमी॥ ७.५ ॥
त्वंहि विश्वसृजां स्रष्टा त्वं हि देवो जगत्पतिः॥
कर्ता त्वं भुवनस्यास्य त्वं हर्ता पुरुषः परः॥ ७.६ ॥
त्राह्यस्माकं महादेव देवदेव नमोऽस्तु ते॥
एवं स्तुतो हि वै धात्रा लिंगरूपी महेश्वरः॥ ७.७ ॥
ऋषयः स्तोतुकामास्ते महेश्वरमकल्मषम्॥
अस्तुवन्गीर्भिरग्र्याभिः श्रुतिगीताभिरादृताः॥ ७.८ ॥

**॥ऋषय ऊचुः॥**

अज्ञानिनो वयं कामान्न विंदामोऽस्य संस्थितिम्॥
त्वं ह्यात्मा परमात्मा च प्रकृतिस्त्वं विभाविनी॥ ७.९ ॥
त्वमेव माता च पिता त्वमेव त्वमेव बंधुश्च सखा त्वमे॥
त्वमीश्वरो वेदविदेकरूपो महानुभावैः परिचिंत्यमानः॥ ७.१० ॥
त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम्॥
सर्वं भवति यस्मात्त्वत्तस्मात्सर्वोऽसि नित्यदा॥ ७.११ ॥
यस्माच्च संभवत्येतत्तस्माच्छंभुरिति प्रभुः॥ ७.१२ ॥
त्वत्पादपंकजं प्राप्ता वयं सर्वे सुरादयः॥
ऋषयो देवगंधर्वा विद्याधरमहोरगाः॥ ७.१३ ॥
तस्माच्च कृपया शंभो पाह्यस्माञ्जगतः पते॥ ७.१४ ॥

**॥महादेव उवाच॥**

श्रृणुध्वं तु वचो मेऽद्य क्रियतां च त्वरान्वितैः॥
विष्णुं सर्वे प्रार्थयंतु त्वरितेन तपोधनाः॥ ७.१५ ॥
तस्य तद्वचनं श्रुत्वा शंकरस्य महात्मनः॥

विष्णुं सर्वे नमस्कृत्य ईडिरे च तदा सुराः॥ ७.१६ ॥

**॥देव ऊचुः॥**

विद्याधराः सुरगणा ऋषयश्च सर्वे त्रातास्त्वयाद्य सकलाजगदेकबंधो॥

तद्वत्कृपाकरजनान्परिपालयाद्य त्रैलोक्यनाथ जगदीश जगन्निवास॥ ७.१७ ॥

प्रहस्य भगवन्विष्णुरुवाचेदं वचस्तदा॥

दैत्यैः प्रपीडिता यूयं रक्षिताश्च पुरा मया॥ ७.१८ ॥

अद्यैव भयमुत्पन्नं लिंगादस्माच्चिरंतनम्॥

न शक्यते मया त्रातुमस्माल्लिंगभयात्सुराः॥ ७.१९ ॥

अच्युतेनैवमुक्तास्ते देवा श्चिंतान्विताभवन्॥

तदा नभोगता वाणी उवाचाश्वास्य वै सुरान्॥ ७.२० ॥

एतल्लिंगं संवृणुष्व पूजनाय जनार्दन॥

पिंडिभूत्वा महाबाहो रक्षस्व सचराचरम्॥

तथेति मत्वा बगवान्वीरभद्रोऽभ्यपूजयत्॥ ७.२१ ॥

ब्रह्मादिभिः सुरगणैः सहितैस्तदानीं संपूजितः शिवविधानरतो महात्मा॥

स्रवीरभद्रः शशिशेखरोऽसौ शिवप्रियो रुद्रसमस्त्रिलोक्याम्॥ ७.२२ ॥

लिंगस्यार्चनयुक्तोऽसौ वीरभद्रोऽभवत्तदा॥

तद्रूपस्यैव लिंगस्य येन सर्वमिदं जगत्॥ ७.२३ ॥

उद्भाति स्थितिमाप्नोति तथा विलयमेति च॥

तल्लिंगं लिंगमित्याहुर्लयनात्तत्त्ववित्तमाः॥ ७.२४ ॥

ब्रह्माण्डागोलकैर्व्याप्तं तथा रुद्राक्षभूषितम्॥

तथा लिंगं महज्जातं सर्वेषां दुरतिक्रमम्॥ ७.२५ ॥

तदा सर्वेऽथ विबुधा ऋषो वै महाप्रभाः॥

तुष्टुवुश्च महालिंगं वेदावादैः पृथक्पृथक्॥ ७.२६ ॥

अणोरणीयांस्त्वं देव तथा त्वं महतो महान्॥

तस्मात्त्वया विधातव्यं सर्वैषां लिंगपूजनम्॥ ७.२७ ॥

तदानीमेव सर्वेण लिंगं च बहुशः कृतम्॥

सत्ये ब्रह्मेश्वरं लिंगं वैकुण्ठे च सदाशिवः॥ ७.२८ ॥

अमरावत्यां सुप्रतिष्ठममरेश्वरसंज्ञकम्॥

वरुणेश्वरं च वारुण्यां याम्यां कालेश्वरं प्रभुम्॥ ७.२९ ॥

नैर्ऋतेश्वरं च नैर्ऋत्यां वायव्यां पावनेश्वरम्॥

केदारं मृत्युलोके च तथैव अमरेस्वरम्॥ ७.३० ॥

ओंकारं नर्मदायां च महाकालं तथैव च॥

काश्यां विश्वेश्वरं देवं प्रयागे ललितेश्वरम्॥ ७.३१ ॥

त्रियम्बकं ब्रह्मगिरौ कलौ भद्रेश्वरं तथा॥
द्राक्षारामेश्वरं लिंगं गंगासागरसंगमे॥ ७.३२ ॥
सौराष्ट्रे च तथा लिंगं सोमेश्वरमिति स्मृतम्॥
तथा सर्वेश्वरं विन्ध्ये श्रीशैले शिखरेश्वरम्॥
कान्त्यामल्लालनाथं च सिंहनाथं च सिंगले॥ ७.३३ ॥
विरूपाक्षं तथा लिंगं कोटिशङ्करमेव च॥
त्रिपुरान्तकं भीमेशममरेश्वरमेव च॥ ७.३४ ॥
भोगेश्वरं च पाताले हाटकेश्वरमेव च॥
एवमादीन्यनेकानि लिंगानि भुवनत्रये॥
स्थापितानि तदा देवैर्विश्वोपकृतिहेतवे॥ ७.३५ ॥
लिंगेशैश्च तथा सर्वैः पूर्णमासीज्जगत्त्रयम्॥
तथा च वीरभद्रांशाः पूजार्थममरैः कृताः॥ ७.३६
तत्र विंशतिसंस्कारास्तेषामष्टाधिकाभवन्॥
कथिताः शंकरेणैव लिंगस्याचनसूचकाः॥ ७.३७ ॥
संति रुद्रेण कथिताः शिवधर्मा सनातनाः॥
वीरभद्रो यथा रुद्रस्तथान्ये गुरवः स्मृताः॥ ७.३८ ॥
गुरोर्जाताश्च गुरवो विख्याता भुवनत्रये॥
लिंगस्य महिमान तु नन्दी जानाति तत्त्वतः॥ ७.३९ ॥
तथा स्कन्दो हि भगवान्न्ये ते नामधारकाः॥
यथोक्ताः शिवधरमा हि नन्दिना परिकीर्त्तिताः॥ ७.४० ॥
शैलादेन महाभागा विचित्रा लिंगधारकाः॥
शवस्योपरि लिंगं च ध्रियते च पुरातनैः॥ ७.४१ ॥
लिंगेन सह पञ्चत्वं लिंगेन सह जीवितम्॥
एते धर्माः सुप्रतिष्ठाः शैलादेन प्रतिष्ठिताः॥ ७.४२ ॥
धर्मः पाशुपतः श्रेष्ठः स्कन्देन प्रतिपालितः॥ ७.४३ ॥
शुद्धा पञ्चाक्षरी विद्या प्रासादी(१) तदनन्तरम्॥
षडक्षरी तथा विद्या प्रासादस्य च दीपिका॥ ७.४४ ॥
स्कन्दात्तत्समनुप्राप्तमगस्त्येन महात्मना॥
पश्चादाचार्यभेदेन ह्यागमा बहवोऽभवन्॥ ७.४५ ॥
किं तु वै बहुनोक्तेन शिव इत्यक्षरद्वयम्॥
उच्चारयंति स नित्यं ते रुद्रा नात्र संशयः॥ ७.४६ ॥
सतां मार्गं पुरस्कृत्य ये सर्वे ते पुरांतकाः॥
वीरा माहेश्वराज्ञेयाः पापक्षयकरा नृणाम्॥ ७.४७ ॥

प्रसंगेनानुपंक्षेण श्रद्वया च यदृच्छया॥
शिवभक्तिं प्रकुर्वन्ति ये वै ते यांति सद्गतिम्॥ ७.४८ ॥
श्रृणुध्वं कथयामीह इतिहासं पुरातनम्॥
कृतं शिवालयं यच्च पतंग्या मार्जनं पुरा॥ ७.४९ ॥
आगता भक्षणार्थं हि नैवेद्यं केन चार्पितम्॥
मार्जनं रजस्तस्याः पक्षाभ्यामभवत्पुरा॥ ७.५० ॥
तेन कर्मविपाकेन उत्तमं स्वर्गमागता॥
भुक्त्वा स्वर्गसुखं चोग्रं पुनः संसारमागता॥ ७.५१ ॥
काशिराजसुता जाता सुन्दरीनाम विश्रुता॥
पूर्वाभ्यासाच्च कल्याणी बभूव परमा सती॥ ७.५२ ॥
उषस्युषसि तन्वंगी शिवद्वाररता सदा॥
संमार्जनं च कुरुते भक्त्या परमया युता॥ ७.५३ ॥
स्वयमेव तदा देवी सुन्दरी राजकन्यका॥
तथाभूतां च तां दृष्ट्वा ऋषिरुद्दालकोऽब्रवीत्॥ ७.५४ ॥
सुकुमारी सती बाले स्वयमेव कथं शुभे॥
संमार्जनं च कुरुषे कन्यके त्वं शुचिस्मिते॥ ७.५५ ॥
दासी दास्यश्च बहवः संति देवि तवाग्रतः॥
तवाज्ञया करिष्यंति सर्वं संमार्जनादिकम्॥ ७.५६ ॥
ऋषेस्तद्वचनं श्रुत्वा प्रहस्येदमुवाच ह॥ ७.५७ ॥
शिवसेवां प्रकुर्वाणाः शिवभक्तिपुरस्कृताः॥
ये नराश्चैव नार्य्यश्च शिवलोकं व्रजंति वै॥ ७.५८ ॥
संमार्जनं च पाणिभ्यां पद्भ्यां यानं शिवालये॥
तस्मान्मया च क्रियते संमार्जनमतंद्रितम्॥ ७.५९ ॥
अन्यत्किञ्चिन्न जानामि एकं संमार्जनं विना॥
ऋषिस्तद्वचनं श्रुत्वा मनसा च विमृश्य हि॥ ७.६० ॥
अनया किं कृतं पूर्वं केयं कस्य प्रसादतः॥
तदा ज्ञानं च ऋषिणा तत्सर्वं ज्ञानचक्षुषा॥
विस्मयेन समाविष्टस्तूष्णींभूतोऽभवत्तदा॥ ७.६१ ॥
सविस्मयोऽभूदथ तद्विदित्वा उद्दालको ज्ञानवतां वरिष्ठः॥
शिवप्रभावं मनसा विचिंत्य ज्ञानात्परं बोधमवाप शांतः॥ ७.६२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे सप्तमोऽध्यायः॥ ७ ॥ छ ॥

**॥लोमश उवाच॥**

तस्करोऽपि पुरा ब्रह्मन्सर्वधर्मबाहिष्कृतः॥
ब्रह्मघ्नोऽसौ सुरापश्च सुवर्णस्य च तस्करः॥ ८.१ ॥
लंपटोहि महापाप उत्तमस्त्रीषु सर्वदा॥
द्यूतकारी सदा मंदः कितवैः सह संगतः॥ ८.२ ॥
एकदा क्रीडता तेन हारितं द्यूतमद्भुतम्॥
कितवैर्मर्द्यमानो हि तदा नोवाच किञ्चन॥ ८.३ ॥
पीडितोऽप्यभवत्तूष्णीं तैरुक्तः पापकृत्तमः॥
द्यूते त्वया च तद्द्रव्यं हारितं किं प्रयच्छसि॥ ८.४ ॥
नो वा तत्कथ्यतां शीघ्रं याथातथ्येन दुर्मते॥
यद्धारितं प्रयच्छामि रात्रावित्यब्रवीच्च सः॥ ८.५ ॥
तैर्मुक्तस्तेन वाक्येन गतास्ते कितवादयः॥
तदा निशीथसमये गतोऽसौ शिवमंदिरम्॥ ८.६ ॥
शिरोधिरुह्य शम्भोश्च घण्टामादातुमुद्यतः॥
तावत्कैलासशिखरे शंभुः प्रोवाच किंकरान्॥ ८.७ ॥
अनेन यत्कृतं चाद्य सर्वेषामधिकं भुवि॥
सर्वेषामेव भक्तानां वरिष्ठोऽयं च मत्प्रियः॥ ८.८ ॥
इति प्रोक्त्वान यामास वीरभद्रादिभिर्गणैः॥
ते सर्वे त्वरिता जग्मुः कैलासाच्छिववल्लभात्॥ ८.९ ॥
सर्वैर्डमरुनादेन नादितं भुवनत्रयम्॥
तान्दृष्ट्वा सहसोत्तीर्य तस्करोसौ दुरात्मवान्॥
लिंगस्य मस्तकात्सद्यः पलायनपरोऽभवत्॥ ८.१० ॥
पलायमानं तं दृष्ट्वा वीरभद्रः समाह्वयत्॥ ८.११ ॥
कस्माद्विभेपि रे मन्द देवदेवो महेस्वरः॥
प्रसन्नस्तव जातोद्य उदारचरितो ह्यसौ॥ ८.१२ ॥
इत्युक्त्वा तं विमाने च कृत्वा कैलासमाययौ॥
पार्षदो हि कृतस्तेन तस्करो हि महात्मना॥ ८.१३ ॥
तस्माद्भाव्या शिवे भक्तिः सर्वेषामपि देहिनाम्॥
पशवोऽपि हि पूज्याः स्युः किं पुनर्मानवाभुवि॥ ८.१४ ॥
ये तार्किकास्तर्कपरास्तथ मीमांसकाश्च ये॥
अन्योन्यवादिनश्चान्ये चान्ये वात्मवितर्ककाः॥ ८.१५ ॥
एकवाक्यं न कुर्वंति शिवार्चनबहिष्कृताः॥
तर्को हि क्रियते यैश्च तेसर्वे किं शिवं विना॥ ८.१६ ॥

तथा किं बहुनोक्तेन सर्वेऽपि स्थिरजंगमाः॥
प्राणिनोऽपि हि जायंते केवलं लिंगधारिणः॥ ८.१७ ॥
पिण्डीयुक्तं यता लिंगं स्थापितं च यथाऽभवत्॥
तथा नरा लिंगयुक्ताः पिण्डीभूतास्तता स्त्रियः॥ ८.१८ ॥
शिवशक्तियुतं सर्वं जगदेतच्चराचरम्॥
तं शिवं मौढ्यतस्त्यक्त्वा मूढाश्चान्यं भजंति ये॥ ८.१९ ॥
धर्ममात्यंतिकं तुच्छं नश्वरं क्षणभंगुरम्॥
यो विष्णुः स शिवो ज्ञेयो यः शिवो विष्णुरेव सः॥ ८.२० ॥
पीठिका विष्णुरूपं स्याल्लिंगरूपी महेश्वरः॥
तस्माल्लिंगार्चनं श्रेष्ठं सर्वेषामपि वै द्विजाः॥ ८.२१ ॥
ब्रह्मा मणिमयं लिंगं पूजयत्यनिशं शुभम्॥
इन्द्रो रत्नमयं लिंगं चन्द्रो मुक्तामयं तथा॥ ८.२२ ॥
भानुस्ताम्रमयं लिंगं पूजयत्यनिशं शुभम्॥
रौक्मं लिंगं कुबेरश्च पाशी चारक्तमेव च॥ ८.२३ ॥
यमो नीलमयं लिंगं राजतं नैर्ऋतस्तथा॥
काश्मीरं पवनो लिंगमर्चयत्यनिशं विभोः॥ ८.२४ ॥
एवं ते लिंगिताः सर्वे लोकपालाः सवासवाः॥
तथा सर्वेऽपि पाताले गंधर्वाः किंनरैः सह॥ ८.२५ ॥
दैत्यानां वैष्णवाः केचित्प्रह्लादप्रमुखा द्विजाः॥
तथाहि राक्षसानां च विभीषणपुरोगमाः॥ ८.२६ ॥
बलिश्च नमुचिश्चैव हिरण्यकशिपुस्तथा॥
वृषपर्वा वृषश्चैव संह्रादो बाण एव च॥ ८.२७ ॥
एते चान्ये च बहवः शिष्याः शुक्रस्य धीमतः॥
एवं शिवार्चनरताः सर्वे ते दैत्यदानवाः॥ ८.२८ ॥
राक्षसा एव ते सर्वे शिवपूजान्विताः सदा॥
हेतिः प्रहेतिः संयातिर्विघसः प्रघसस्तथा॥ ८.२९ ॥
विद्युज्जिह्वस्तीक्ष्णदंष्ट्रो धूम्राक्षो भीमविक्रमः॥
माली चैव सुमाली च माल्यवानतिभीषमः॥ ८.३० ॥
विद्युत्कैशस्तडिज्जिह्वो रावणश्च महाबलः॥
कुंभकर्णो दुराधर्षो वेगदर्शी प्रतापवान्॥ ८.३१ ॥
एते हि राक्षसाः श्रेष्ठा शिवार्चनरताः सदा॥
लिंगमभ्यर्च्य च सदा सिद्धिं प्राप्ताः पुरा तु ते॥ ८.३२ ॥
रावणेन तपस्तप्तं सर्वेषामपि दुःखहम्॥

तपोधिपो महादेवस्तुतोष च तदा भृशम्॥ ८.३३ ॥
वरान्प्रायच्छत तदा सर्वेषामपि दुर्लभान्॥
ज्ञानं विज्ञानसहितं लब्धं तेन सदाशिवात्॥ ८.३४ ॥
अजेयत्वं च संग्रामे द्वैगुण्यं शिरसामपि॥
पंचवक्त्रो महा देवो दशवक्त्रोऽथ रावणः॥ ८.३५ ॥
देवानृषीन्पितृंश्चैव निर्जित्य तपसा विभुः॥
महेशस्य प्रसादाच्च सर्वेषामधिकोऽभवत्॥ ८.३६ ॥
राजा त्रिकूटाधिपतिर्महेशेन कृतो महान्॥
सर्वेषां राक्षसानां च परमासनमास्तितः॥ ८.३७ ॥
तपस्विनां परीक्षायै यदृषीणां विहिंसनम्॥
कृतं तेन तदा विप्रा रावणेन तपस्विना॥ ८.३८ ॥
अजेयो हि महाञ्जातो रावणो लोकरावणः॥
सृष्ट्यंतरं कृतं येन प्रसादाच्छंकरस्य च॥ ८.३९ ॥
लोकपाला जितास्तेन प्रतापेन तपस्विना॥
ब्रह्मापि विजितो येन तपसा परमेण हि॥ ८.४० ॥
अमृतांशुकरो भूत्वा जितो येन शशी द्विजाः॥
दाहकत्वाज्जितो वह्निरीशः कैलासतोलनात्॥ ८.४१ ॥
ऐश्वर्येण जितश्चेन्द्रो विष्णुः सर्वगतस्तथा॥
लिंगार्चनप्रसादेन त्रैलोक्यं च वशीकृतम्॥ ८.४२ ॥
तदा सर्वे सुरगणा ब्रह्मविष्णुपुरोगमाः॥
मेरुपृष्ठं समासाद्य सुमंत्रं चक्रिरे तदा॥ ८.४३ ॥
पीडिताः स्मो रावणेन तपसा दुष्करेण वै॥
गोकर्णाख्ये गिरौ देवाः श्रूयतां परमाद्भुतम्॥ ८.४४ ॥
साक्षाल्लिंगार्चनं येन कृतमस्ति महात्मना॥
ज्ञानज्ञेयं ज्ञानगम्यं यद्यत्परममद्भुतम्॥
तत्कृतं रावणेनैव सर्वेषां दुरतिक्रमम्॥ ८.४५ ॥
वैराग्यं परमास्थाय औदार्यं च ततोऽधिकम्॥
तेनैव ममता त्यक्ता रावणेन महात्मना॥ ८.४६ ॥
संवत्सरसहस्राच्च स्वशिरो हि महाभुजः॥
कृत्वा करेण लिंगस्य पूजनार्थं समर्पयत्॥ ८.४७ ॥
रावणस्य कबंधं च तदग्रे च समीपतः॥
योगधारणया युक्तं परमेण समाधिना॥ ८.४८ ॥
लिंगे लयं समाधाय कयापि कलया स्थितम्॥

अन्यच्छिरोविवृश्च्यैवं तेनापि शिवपूजनम्॥
कृतं नैवान्यमुनिना तथा चैवापरेणहि॥ ८.४९ ॥
एवं शिरांस्येव बहूनि तेन समर्पितान्येव शिवार्चनार्थे॥
भूत्वा कबंधो हि पुनः पुनश्च शिवोऽसौ वरदो बभूव॥ ८.५० ॥
मया विनासुरस्तत्र पिंडीभूतेन वै पुरा॥
वरान्वरय पौलस्त्य यथेष्टं तान्ददाम्यहम्॥ ८.५१ ॥
रावणेन तदा चोक्तः शिवः परममंगलः॥
यदि प्रसन्नो भगवन्देयो मे वर उत्तमः॥ ८.५२ ॥
न कामयेऽन्यं च वरमाश्रये त्वत्पदांबुजम्॥
यथा तथा प्रदातव्यं यद्यस्ति च कृपा मयि॥ ८.५३ ॥
तदा सदाशिवेनोक्तो रावणो लोकरावणः॥
मत्प्रसादाच्च सर्वं त्वं प्राप्स्यसे मनसेप्सितम्॥ ८.५४ ॥
एवं प्राप्तं शिवात्सर्वं रावणेन सुरेश्वराः॥
तस्मात्सर्वैर्भवद्भिश्च तपसा परमेण हि॥ ८.५५ ॥
विजेतव्यो रावणोयमिति मे मनसि स्थितम्॥
ऽच्युतस्य वचः श्रुत्वा ब्रह्माद्या देवतागणाः॥ ८.५६ ॥
चिंतामापेदिरे सर्वे चिरं ते विषयान्विताः॥
ब्रह्मापि चेंद्रियग्रस्तः सुता रमितुमुद्यतः॥ ८.५७ ॥
इंद्रो हि जारभावाच्च चंद्रो हि गुरुतल्पगः॥
यमः कदर्यभावाच्च चंचलत्वात्सदागतिः॥ ८.५८ ॥
पावकः सर्वभक्षित्वात्तथान्ये देवतागणाः॥
अशक्ता रावणं जेतुं तपसा च विजृंभितम्॥ ८.५९ ॥
शैलादो हि महातेजा गणश्रेष्ठः पुरातनः॥
बुद्धि मान्नीतिनिपुणो महाबलपराक्रमी॥ ८.६० ॥
शिवप्रियो रुद्ररूपी महात्मा ह्युवाच सर्वानथ चेंद्रमुख्यान्॥
कस्माद्यूयं संभ्रमादागताश्च एतत्सर्वं कथ्यतां विस्तरेण॥ ८.६१ ॥
नंदिना च तदा सर्वे पृष्टाः प्रोचुस्त्वरान्विताः॥ ८.६२ ॥
**॥ देवा ऊचुः॥**
रावणेन वयं सर्वे निर्जिता मुनिभिः सह॥
प्रसादयितुमायाताः शिवं लोकेश्वरेश्वरम्॥ ८.६३ ॥
प्रहस्य भगवान्नंदी ब्रह्माणं वै ह्युवाच ह॥
क्व यूयं क्व शिवः शंभुस्तपसा परमेण हि॥
द्रष्टव्यो हृदि मध्यस्थः सोऽद्य द्रष्टुं न पार्यते॥ ८.६४ ॥

यावद्भावा ह्यनेकाश्च इंद्रियार्थास्तथैव च॥
यावच्च ममताभावस्तावदीशो हि दुर्लभः॥ ८.६५ ॥
जितेंद्रियाणां शांतानां तन्निष्ठानां महात्मनाम्॥
सुलभो लिंगरूपी स्याद्भवतां हि सुदुर्लभः॥ ८.६६ ॥
तदा ब्रह्मादयो देवा ऋषयश्च विपश्चितः॥
प्रणम्य नंदिनं प्राहुः कस्मात्त्वं वानराननः॥
तत्सर्वं कथयान्यं च रावणस्य तपोबलम्॥ ८.६७ ॥
**॥नंदीश्वर उवाच॥**
कुबेरोऽधिकृतस्तेन शंकरेण महात्मना॥
धनानामादिपत्ये च तं द्रष्टुं रावणोऽत्र वै॥ ८.६८ ॥
आगच्छत्त्वरया युक्तः समारुह्य स्ववाहनम्॥
मां दृष्ट्वा चाब्रवीत्क्रुद्धः कुबेरो ह्यत्र आगतः॥ ८.६९ ॥
त्वया दृष्टोऽथ वात्रासौ कथ्यतामविलंबितम्॥
किं कार्यं धनदेनाद्य इति पृष्टो मया हि सः॥ ८.७० ॥
तदोवाच महातेजा रावणो लोकरावणः॥
मय्यश्रद्धान्वितो भूत्वा विषयात्मा सुदुर्मदः॥ ८.७१ ॥
शिक्षापयितुमारब्धो मैवं कार्यमिति प्रभो॥
यथाहं च श्रिया युक्त आढ्योऽहं बलवानहम्॥
तथा त्वं भव रे मूढ मा मूढत्वमुपार्जय॥ ८.७२ ॥
अहं मूढः कृतस्तेन कुबेरेण महात्मना॥
मया निराकृतो रोषात्तपस्तेपे स गुह्यकः॥ ८.७३ ॥
कुबेरः स हि नंदिन्किमागतस्तव मंदिरम्॥
दीयतां च कुबेरोद्य नात्र कार्या विचारणा॥ ८.७४ ॥
रावणस्य वचः श्रुत्वा ह्यवोचं त्वरितोऽप्यहम्॥
लिंगकोसि महाभाग त्वमहं च तथाविधः॥ ८.७५ ॥
उभयोः समनां ज्ञात्वा वृथा जल्पसि दुर्मते॥
यथोक्तः स त्ववादीन्मां वदनार्थे बलोद्धतः॥ ८.७६ ॥
यथा भवद्भिः पृष्टोऽहं वदनार्थे महात्मभिः॥
पुरावृत्तं मया प्रोक्तं शिवार्चनविधेः फलम्॥
शिवेन दत्तं सालूप्यं न गृहीतं मया तदा॥ ८.७७ ॥
याचितं च मया शंभोर्वदनं वानरस्य च॥
शिवेन कृपया दत्तं मम कारुण्यशालिना॥ ८.७८ ॥
निराभिमानिनो ये च निर्दभा निष्परिग्रहाः॥

शंभोः प्रियास्ते विज्ञेया ह्यन्ये शिववबहिष्कृताः॥ ८.७९ ॥
तथावदन्मया सार्द्धं रावणस्तपसो बलात्॥
मया च याचितान्येव दश वक्त्राणि धीमता॥ ८.८० ॥
उपहासकरं वाक्यं पौलस्त्यस्य तदा सुराः॥
मया तदा हि शप्तोऽसौ रावणो लोकरावणः॥ ८.८१ ॥
ईदृशान्येव वक्त्राणि येषां वै संभवंति हि॥
तैः समेतो यदा कोऽपि नरवर्यो महातपाः॥
मां पुरस्कृत्य सहसा हनिष्यति न संशयः॥ ८.८२ ॥
एवं शप्तो मया ब्रह्मन्रावणो लोकरावणः॥
अर्चितं केवलं लिंगं विना तेन महात्मना॥ ८.८३ ॥
पीठिकारूपसंस्थेन विना तेन सुरोत्तमाः॥
विष्णुना हि महाभागास्तस्मात्सर्वं विधास्यति॥ ८.८४ ॥
देवदेवो महादेवो विष्णुरूपी महेश्वरः॥
सर्वे यूयं प्रार्थयंतु विष्णुं सर्वगुहाशयम्॥ ८.८५ ॥
अहं हि सर्वदेवानां पुरोवर्ती भवाम्यतः॥
ते सर्वे नंदिनो वाक्यं श्रुत्वा मुदितमानसाः॥
वैकुंठमागता गीर्भिर्विष्णुं स्तोतुं प्रचक्रिरे॥ ८.८६ ॥
**॥ देवा ऊचुः॥**
नमो भगवते तुभ्यं देवदेव जगत्पते॥
त्वदाधारमिदं सर्वं जगदेतच्चराचरम्॥ ८.८७ ॥
एतल्लिंगं त्वया विष्णो धृतं वै पिण्डिरूपिणा॥
महाविष्णुस्वरूपेण घातितौ मधुकैटभौ॥ ८.८८ ॥
तथा कमठरूपेण धृतो वै मंदराचलः॥
वराहरूपमास्थाय हिरण्याक्षो हतस्त्वया॥ ८.८९ ॥
हिरण्यकशिपुर्दैत्यो हतो नृहरिरूपिणा॥
त्वया चैव बलिर्बद्धो दैत्यो वामनरूपिणा॥ ८.९० ॥
भृगूणामन्वये भूत्वा कृतवीर्यात्मजो हतः॥
इतोप्यस्मान्महाविष्णो तथैव परिपालय॥ ८.९१ ॥
रावमस्य भयादस्मात्त्रातुं भूयोर्हसि त्वरम्॥ ८.९२ ॥
एवं संप्रार्थितो देवैर्भगवान्भूतभावनः॥
उवाच च सुरान्सर्वान्वासुदेवो जगन्मयः॥ ८.९३ ॥
हे देवाः श्रूयतां वाक्यं प्रस्तावसदृशं महत्॥
शैलादिं च पुरस्कृत्य सर्वे यूयं त्वरान्विताः॥

अवतारान्प्रकुर्वन्तु वानरीं तनुमाश्रिताः॥ ८.९४ ॥
अहं हि मानुषो भूत्वा ह्यज्ञानेन समावृतः॥
संभविष्याम्ययोध्यायं गृहे दशरथस्य च॥
ब्रह्मविद्यासहायोस्मि भवतां कार्यसिद्धये॥ ८.९५ ॥
जनकस्य गृहे साक्षाद्ब्रह्मविद्या जनिष्यति॥
भक्तो हि रावणः साक्षाच्छिवध्यानपरायणः॥ ८.९६ ॥
तपसा महता युक्तो ब्रह्मविद्यां यदेच्छति॥
तदा सुसाध्यो भवति पुरुषो धर्मनिर्जितः॥ ८.९७ ॥
एवं संभाष्य भगवान्विष्णुः परममङ्गलः॥
वाली चेन्द्रांशसंभूतः सुग्रीवों शुमतः सुतः॥ ८.९८ ॥
तथा ब्रह्मांशसंभूतो जाम्बवान्नृक्षकुञ्जरः॥
शिलादतनयो नंदी शिवस्यानुचरः प्रियः॥ ८.९९ ॥
यो वै चैकादशो रुद्रो हनूमान्स महाकपिः॥
अवतीर्णः सहायार्थं विष्णोरमिततेजसः॥ ८.१०० ॥
मैंदादयोऽथ कपयस्ते सर्वे सुरसत्तमाः॥
एवं सर्वे सुरगणा अवतेरुर्यथा तथम्॥ ८.१०१ ॥
तथैव विष्णुरुत्पन्नः कौशल्यानंदवर्द्धनः॥
विश्वस्य रमणाच्चैव राम इत्युच्यते बुधैः॥ ८.१०२ ॥
शेषोपि भक्त्या विष्णोश्च तपसाऽवातरद्भुवि॥ ८.१०३ ॥
दोर्दण्डावपि विष्णोश्च अवतीर्णौ प्रतापिनौ॥
शत्रुघ्नभरताख्यौ च विख्यातौ भुवनत्रये॥ ८.१०४ ॥
मिथिलाधिपतेः कन्या या उक्ता ब्रह्मवादिभिः॥
सा ब्रह्मविद्यावतरत्सुराणां कार्य्यसिद्धये॥
सीता जाता लांगलस्य इयं भूमिविकर्षणात्॥ ८.१०५ ॥
तस्मात्सीतेति विख्याता विद्या सान्वीक्षिकी तदा॥
मिथिलायां समुत्पन्ना मैथितीत्यभिधीयते॥ ८.१०६ ॥
जनकस्य कुले जाता विश्रुता जनकात्मजा॥
ख्याता वेदवती पूर्वं ब्रह्मविद्याघनाशिनी॥ ८.१०७ ॥
सा दत्ता जनकेनैव विष्णवे परमात्मने॥ ८.१०८ ॥
तयाथ विद्यया सार्द्धं देवदेवो जगत्पतिः॥
उग्रे तपसि लीनोऽसौ विष्णुः परमदुष्करम्॥ ८.१०९ ॥
रावणं जेतुकामो वै रामो राजीवलोचनः॥
अरण्यवासमकरोद्देवानां कार्यसिद्धये॥ ८.११० ॥

शेषावतारोऽपि महांस्तपः परमदुष्करम्॥
ततापं परया शक्त्या देवानां कार्यसिद्धये॥ ८.१११ ॥
शत्रुघ्नो भरतश्चैव तेपतुः परमं तपः॥ ८.११२ ॥
ततोऽसौ तपसा युक्तः सार्द्धं तैर्देवतागणैः॥
सगणं रावणं रामः षड्भिर्मासैरजीहनत्॥
विष्णुना घातितः शस्त्रैः शिवसारूप्यमाप्तवान्॥ ८.११३ ॥
सगमः स पुनः सद्यो बंधुभिः सह सुव्रताः॥ ८.११४ ॥
शिवप्रसादात्सकलं द्वैताद्वैतमवाप ह॥
द्वैताद्वैतविवेकार्थमृपयोप्यत्र मोहिताः॥
तत्सर्वं प्राप्नुवंतीह शिवार्चनरता नराः॥ ८.११५ ॥
येऽर्चयंति शिवं नित्यं लिंगरूपिणमेव च॥
स्त्रियो वाप्यथ वा शूद्राः श्वपचा ह्यंत्यवासिनः॥
तं शिवं प्राप्नुवंत्येव सर्वदुःखोपनाशनम्॥ ८.११६ ॥
पशवोऽपि परं याताः किं पुनर्मानुषादयः॥ ८.११७ ॥
ये द्विजा ब्रह्मचर्येण तपः परममास्थिताः॥
वर्षैरनेकैर्यज्ञानां तेऽपि स्वर्गपरा भवन्॥ ८.११८ ॥
ज्योतिष्टोमो वाजपेयो ह्यतिरात्रादयो ह्यमी॥
यज्ञाः स्वर्गं प्रयच्छंति सत्त्रीणां नात्र संशयः॥ ८.११९ ॥
तत्र स्वर्गसुखं भुक्त्वा पुण्यक्षयकरं महत्॥
पुण्यक्षयेऽपि यज्वानो मर्त्यलोकं पतंति वै॥ ८.१२० ॥
पतितानां च संसारे दैवाद्बुद्धिः प्रजायते॥
गुणत्रयमयी विप्रास्तासुतास्त्विह योनिषु॥ ८.१२१ ॥
यथा सत्त्वं संभवति सत्त्वयुक्तभवं नराः॥
राजसाश्च तथा ज्ञेयास्ता मसाश्चैव ते द्विजाः॥ ८.१२२ ॥
एवं संसारचक्रेऽस्मिन्भ्रमिता बहवो जनाः॥
यदृच्छया दैवगत्या शिवं संसेवते नरः॥ ८.१२३ ॥
शिवध्यानपराणां च नराणां यतचेतसाम्॥
मायानिरसनं सद्यो भविष्यति न चान्यथा॥ ८.१२४ ॥
मायानिरसनात्सद्यो नश्यत्येव गुणत्रयम्॥
यदा गुणत्रयातीतो भवतीति स मुक्तिभाक्॥ ८.१२५ ॥
तस्माल्लिङ्गार्चनं भाव्यं सर्वेषामपि देहिनाम्॥
लिङ्गरूपी शिवो भूत्वा त्रायते संचराचरम्॥ ८.१२६ ॥
पुरा भवद्भिः पृष्टोऽहं लिङ्गरूपी कथं शिवः॥

तत्सर्वं कथितं विप्रा याथातथ्येन संप्रति॥ ८.१२७ ॥
कथं गरं भक्षितवाञ्छिवो लोकमहेश्वरः॥
तत्सर्वं श्रूयतां विप्रा यतावत्कथयामि वः॥ ८.१२८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहास्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवलिङ्गार्चनमाहात्म्यकथने श्रीरामावतारकथावर्णनंनामाष्टमोऽध्यायः॥ ८ ॥ छ ॥

**॥लोमश उवाच॥**

एकदा तु सभामध्य आस्थितो देवराट् स्वयम्॥
लोकपालैः परिवृतो देवैश्च ॠषिभिस्तथा॥ ९.१ ॥

अप्सरोगणसंवीतो गंधर्वैश्च पुरस्कृतः॥
उपगीयमानविजयः सिद्धविद्याधरैरपि॥ ९.२ ॥

तदा शिष्यैः परिवृतो देवराजगुरुः सुधीः॥
आगतोऽसौ महाभागो बृहस्पति रुदारधीः॥ ९.३ ॥

तं दृष्ट्वा सहसा देवाः प्रणेमुः समुपस्थिताः॥
इंद्रोपि ददृशे तत्र प्राप्तं वाचस्पतिं तदा॥ ९.४ ॥

नोवाच किंचिद्दुर्मेधावचो मानुपुरःसरम्॥
नाह्वानं नासनं तस्य न विसर्जनमेव च॥ ९.५ ॥

शक्रं प्रमत्तं ज्ञात्वाथ मदाद्राज्यस्य दुर्मतिम्॥
तिरोधानमनुप्राप्तो बृहस्पती रुषान्वितः॥ ९.६ ॥

गते देवगुरौ तस्मिन्विमनस्काऽभवन्सुराः॥
यक्षा नागाः सगंधर्वा ॠषयोऽपि तथा द्विजाः॥ ९.७ ॥

गांधर्वस्या वसाने तु लब्धसंज्ञो हरिः सुरान्॥
पप्रच्छ त्वरितेनवै क्व गतो हि महातपाः॥ ९.८ ॥

तदैव नारदेनोक्तः शक्रो देवाधिपस्तथा॥
त्वया कृता ह्यवज्ञा च गुरोर्नस्त्यत्र संशयः॥ ९.९ ॥

गुरोरवज्ञया राज्यं गतं ते बलसूदन॥
तस्मात्क्षमापनीयोऽसौ सर्वभावेन हि त्वया॥ ९.१० ॥

एतच्छ्रुत्वा वचस्तस्य नारदस्य महात्मनः॥
आसनात्सहसोत्थाय तैः सर्वैः परिवारितः॥
आगच्छत्त्वरया शक्रो गुरोर्गेहमतंद्रितः॥ ९.११ ॥

पृष्ट्वा तारां प्रणम्यादौ क्व गतो हि महातपाः॥
न जानामीत्युवाचेदं तारा शक्रं निरीक्षती॥ ९.१२ ॥

तदा चिंतान्वितो भूत्वा शक्रः स्वगृहमाव्रजत्॥
एतस्मिन्नंतरे स्वर्गे ह्यनिष्टान्द्भुतानि च॥ ९.१३ ॥

अभवन्सर्वदुःखार्थे शक्रस्य च महात्मनः॥

पातालस्थेन बलिना ज्ञातं शक्रस्य चेष्टितम्॥ ९.१४ ॥

ययौ दैत्यैः परिवृतः पातालादमरावतीम्॥
तदा युद्धमतीवासीद्देवानां दानवैः सह॥ ९.१५ ॥

देवाः पराजिता दैत्यै राज्यं शक्रस्य तत्क्षणात्॥
संप्राप्तं सकलं तस्य मूढस्य च दुरात्मनः॥ ९.१६ ॥

नीतं सर्वप्रयत्नेन पातालं त्वरितं गताः॥
शुक्रप्रसादात्ते सर्वे तथा विजयिनोऽभवन्॥ ९.१७ ॥

शक्रोऽपि निःश्रिको जातो देवैस्त्यक्तस्ततो भृशम्॥
देवी तिरोधानगता बभूव कमलेक्षणा॥ ९.१८ ॥

ऐरावतो महानागस्तथैवोच्चैःश्रवा हयः॥
एवमादीनि रत्नानि अनेकानि बहून्यपि॥
नीतानि सहसा दैत्यैर्लोभादसाधुवृत्तिभिः॥ ९.१९ ॥

पुण्यभांजि च तान्येव पतितानि च सागरे॥
तदा स विस्मयाविष्टो बलिराह गुरुं प्रति॥ ९.२० ॥

देवान्निर्जित्य चास्माभिरानीतानि बहूनि च॥
रत्नानि तु समुद्रेऽथ पतितानि तदद्भुतम्॥ ९.२१ ॥

बलेस्तद्वचनं श्रुत्वा उशना प्रत्युवाच तम्॥
अश्वमेधशतेनैव सुरराज्यं भविष्यति॥
दीक्षितस्य न संदेहस्तस्माद्भोक्त स एव च॥ ९.२२ ॥

अश्वमेधं विना किंचित्स्वर्गं भोक्तं न पार्यते॥ ९.२३ ॥

गुरोर्वचनमाज्ञाय तूष्णींभूतो बलिस्ततः॥
बभूव देवैः सार्द्धं च यथोचितमकारयत्॥ ९.२४ ॥

इन्द्रोपि शोच्यतां प्राप्तो जगाम परमेष्ठिनम्.॥
विज्ञापयामास तथा सर्वं राज्यभयादिकम्॥ ९.२५ ॥

शक्रस्य वचनं श्रुत्वा परमेष्ठी उवाच ह॥ ९.२६ ॥

संमिलित्वा सुरान्सर्वांस्त्वया साकं त्वरान्विताः॥
आराधनार्थं गच्छामो विष्णुं सर्वेश्वरेश्वरम्॥ ९.२७ ॥

तथेति गत्वा ते सर्वे शक्राद्या लोकपालकाः॥

ब्रह्माणं च पुरस्कृत्य तटं क्षीरार्णवस्य च॥
प्राप्योपविश्य ते सर्वे हरिं स्तोतुं प्रचक्रमुः॥ ९.२८ ॥

**॥ब्रह्मोवाच॥**
देवदेव जगान्नाथ सुरासुरनमस्कृत॥
पुण्यश्लोकाव्ययानंत परमात्मन्नमोऽस्तु ते॥ ९.२९ ॥

यज्ञोऽसि यज्ञरूपोऽसि यज्ञांगोऽसि रमापते॥
ततोऽद्य कृपया विष्णो देवानां वरदो भव॥ ९.३० ॥

गुरोरवज्ञया चाद्य भ्रष्टराज्यः शतक्रतुः॥
जातः सुरर्षिभिः साकं तस्मादेनं समुद्धर॥ ९.३१ ॥

**॥श्रीभगवानुवाच॥**
दुकोकलज्ञया सर्वं नस्यतीति किमद्भुतम्॥
ये पापिनो ह्यधर्मिष्ठाः केवलं विषयात्मकाः॥
पितरौ निंदितौ यैश्च निर्दैवात्वेन संशयः॥ ९.३२ ॥

अनेन यत्कृतं ब्रह्मन्सद्यस्तत्फलमागतम्॥
कर्मणा चास्य शक्रस्य सर्वेषां संकटागमः॥ ९.३३ ॥

विपरीतो यदा कालः पुरुषस्य भवेत्तदा॥
भूतमैत्रीं प्रकुर्वंति सर्वकार्यार्थसिद्धये॥ ९.३४ ॥

तेन वै कारणेनेंद्र मदीयं वचनं कुरु॥
कार्यहेतोस्त्वया कार्यो दैत्यैः सह समागमः॥ ९.३५ ॥

एवं भगवतादिष्टः शक्रः परमबुद्धिमान्॥
अमरावतीं ययौ हित्वा सुतलं दैवतैः सह॥ ९.३६ ॥

इन्द्रं समागतं श्रुत्वा इंद्रसेनो रुषान्वितः॥
बभूव सह सैन्येन हंतुकामः पुरंदरम्॥ ९.३७ ॥

नारदेन तदा दैत्या बलिश्च बलिनां वरः॥
निवारितस्तद्वधाच्च वाक्यैरुच्चावचैस्तथा॥ ९.३८ ॥

ऋषेस्तस्यैव वचनात्त्यक्तमन्युर्बलिस्तदा॥
बभूव सह सैन्येन आगतो हि शतक्रतुः॥ ९.३९ ॥

इन्द्रसेनेन दृष्टोऽसौ लोकपालैः समावृतः॥
उवाच त्वरया युक्तः प्रहसन्निव दैत्यराट्॥ ९.४० ॥

कस्मादिहागतः शक्र सुतलं प्रति कथ्यताम्॥
तस्यैतद्वचनं श्रुत्वा स्मयमान उवाचतम्.। ९.४१ ॥

वयं कश्यपदायादा यूयं सर्वे तथैव च॥
यथा वयं तथा यूयं विग्रहो हि निरर्थकः॥ ९.४२ ॥

मम राज्यं क्षणेनैव नीतं दैववशात्तवया॥
तथा ह्येतानि तान्येन रत्नानि सुबहून्यपि॥
गतानि तत्क्षणादेव यत्नानीतानि वै त्वया॥ ९.४३ ॥

तस्माद्विमर्शः कर्तव्यः पुरुषेण विपश्चिता॥
विमर्शज्जायते ज्ञानं ज्ञानान्मोक्षो भविष्यति॥ ९.४४ ॥

किं तु मे बत उक्तेन जाने न च तवाग्रतः॥
शरणार्थी ह्यहं प्राप्तः सुरैः सह तवांतिकम्॥ ९.४५ ॥

एतच्छ्रुत्वा तु शक्रस्य वाक्यं वाक्यविदां वरः॥
प्रहस्योवाच मतिमाञ्छक्रं प्रति विदां वरः॥ ९.४६ ॥

त्वमागतोसि देवेंद्र किमर्थं तन्न वेद्म्यहम्॥ ९.४७ ॥

शक्रस्तद्वचनं श्रुत्वा ह्यश्रुपूर्णाकुलेक्षणः॥
किंचिन्नोवाच तत्रैनं नारदो वाक्यमब्रवीत्॥ ९.४८ ॥

बले त्वं किं न जानासि कार्याकार्यविचारणाम्॥
धर्मो हि महतामेष शरणागतपालनम्॥ ९.४९ ॥

शरणागतं च विप्रं च रोगिणं वृद्धमेव च॥
यएतान्न च रक्षंति ते वै ब्रह्महणो नराः॥ ९.५० ॥

शरणागतशब्देन आगतस्तव सन्निधौ॥
संरक्षणाय योग्यश्च त्वया नास्त्यत्र संशयः॥
एवमुक्तो नारदेन तदा दैत्यपतिः स्वयम्॥ ९.५१ ॥

विमृश्य परया बुद्ध्या कार्याकार्यविचारणाम्॥
शक्रं प्रपूजयामास बहुमानपुरःसरम्॥
लोकपालैः समेतं च तथा सुरगणैः सह॥ ९.५२ ॥

प्रत्ययार्थं च सत्त्वानि ह्यनेकानि व्रतानि वै॥
बलिप्रत्ययभूतानि स चकारः पुरंदरः॥ ९.५३ ॥

एवं स समयं कृत्वा शक्रः स्वार्थपरायणः॥

बलिना सह चावासीदर्थशास्त्रपरो महान्॥ ९.५४ ॥

एवं निवसतस्तस्य सुतलेऽपि शतक्रतोः॥
वत्सरा बहवो ह्यासंस्तदा बुद्धिमकल्पयत्॥
संस्मृत्य वचनं विष्णोर्विमृश्य च पुनःपुनः॥ ९.५५ ॥

एकदा तु सभामध्य आसीनो देवराट्स्वयम्॥
उवाच प्रहसन्वाक्यं बलिमुद्दिश्य नीतिमान्॥ ९.५६ ॥

प्राप्तव्यानि त्वया वीर अस्माकं च त्वया बले॥
गजादीनि बहून्येव रत्नानि विविधानि च॥ ९.५७ ॥

गतानि तत्क्षणादेव सागरे पतितानि वै॥
प्रयत्नो हि प्रकर्तव्यो ह्यस्माभिस्त्वयान्वितैः॥ ९.५८ ॥

तेषां चोद्धरणे दैत्य रत्नानामिह सागरात्॥
तर्हि निर्मथनं कार्यं भवता कार्यसिद्धये॥ ९.५९ ॥

बलिः प्रवर्तितस्तेन शक्रेण सुरसूदनः॥
उवाच शक्रं त्वरितः केनेदं मथनं भवेत्॥ ९.६० ॥

तदा नभोगता वाणी मेघगंभीरनिःस्वना॥
उवाच देवा दैत्याश्च मंथध्वं क्षीरसागरम्॥ ९.६१ ॥

भवतां बलवृद्धिश्च भविष्यति न संशयः॥ ९.६२ ॥

मंदरं चैव मंथानं रज्जुं कुरुत वासुकिम्॥
पश्चाद्देवाश्च दैत्याश्च मेलयित्वा विमथ्यताम्॥ ९.६३ ॥

नभोगतां च तां वाणीं निशम्याथ तदाःसुराः॥
दैत्यैः सार्द्धं ततः सर्व उद्यमं चक्रुरुद्यताः॥ ९.६४ ॥

पातालान्निर्गताः सर्वे तदा तेऽथ सुरासुराः॥
आजग्मुरतुलं सर्वे मंदरं पर्वतोत्तमम्॥ ९.६५ ॥

दैत्याश्च कोटिसंख्याकास्तथा देवा न संशयः॥
उद्युक्ताः सहसा प्राऽयुर्मंदरं कनकप्रभम्॥ ९.६६ ॥

सरत्नं वर्तुलाकारं स्थूलं चैव महाप्रभम्॥
अनेकरत्नसंवीतं नानाद्रुमनिषेवितम्॥ ९.६७ ॥

चंदनैः पारिजातैश्च नागपुन्नागचंपकैः॥

नानामृगगणाकीर्णं सिंहशार्दूलसेवितम्॥ ९.६८ ॥

महाशैलं दृष्ट्वा ते सुरसत्तमाः॥
ऊचुः प्रांजलयः सर्वे तदा ते सुरसत्तमाः॥ ९.६९ ॥

**॥देवा ऊचुः॥**
अद्रे सुरा वयं सर्वे विज्ञप्तुमिह चागताः॥
तच्छृणुष्व महाशैल परेषामुपकारकः॥ ९.७० ॥

एवमुक्तस्तदा शैलो दवैर्दैत्यैः स मंदरः॥
उवाच निःसृतो भूत्वा परं विग्रहवान्वचः॥ ९.७१ ॥

तेन रूपेण रूपी स पर्वतो मंदराचलः॥
किमर्थमागताः सर्वे मत्समीपं तदुच्यताम्॥ ९.७२ ॥

तदा बलिरुवाचेदं प्रस्तावसदृशं वचः॥
इंद्रोपि त्वरया युक्तो बभाषे सूनृतं वचः॥ ९.७३ ॥

अस्माभिः सह कार्यार्थे भव त्वं मंदराचल॥
अमृतोत्पादनार्थे त्वं मंथानं भव सुव्रत॥ ९.७४ ॥

तथेति मत्वा तद्वाक्यं देवानां कार्यसिद्धये॥
ऊचे देवासुरांश्चेदमिन्द्रं प्रति विशेषतः॥ ९.७५ ॥

छेदितौ च त्वया पक्षौ वज्रेण शतपर्वणा॥
गंतुं कथं समर्थोऽहं भवतां कार्यसिद्धये॥ ९.७६ ॥

तदा देवासुराः सर्वे स्तूयमाना महाचलम्॥
उत्पाटयेयुरतुलं मंदरं च ततोद्भुतम्॥ ९.७७ ॥

क्षीरार्णवं नेतुकामा ह्यशक्तास्ते ततोऽभवन्॥
पर्वतः पतितः सद्यो देवदैत्योपरि ध्रुवम्॥ ९.७८ ॥

केचिद्भग्ना मृताः केचित्केचिन्मूर्छापरा भवन्॥
परीवादरताः केचित्केचित्क्लेशत्वमागताः॥ ९.७९ ॥

ेवं भग्नोद्यमा जाता असुराःसुरदानवाः॥
चेतनां परमां प्राप्तास्तुष्टुवुर्जगदीश्वरम्॥ ९.८० ॥

रक्षरक्ष महाविष्णो शरणागतवत्सल॥
त्वया ततमिदं सर्वं जंगमाजंगमं च यत्॥ ९.८१ ॥

देवानां कार्यसिद्ध्यर्थं प्रादुर्भूतो हरिस्तदा॥
तान्दृष्ट्वा सहसा विष्णुर्गरुडोपरि संस्थितः॥ ९.८२ ॥

लीलया पर्वतश्रेष्ठमुत्तभ्यारोपयत्क्षणात्॥
गरुत्मति तदा देवः सर्वेषामभयं ददौ॥ ९.८३ ॥

तत उत्थाय तान्देवान्क्षीरोस्योत्तरं तटम्॥
नीत्वा तं पर्वतं वृद्धं निक्षिप्याप्सु ततो ययौ॥ ९.८४ ॥

तदा सर्वे सुरगणाः स्वागत्य असुरैः सह॥
वासुकिं च समादाय चक्रिरे समयंच तम्॥ ९.८५ ॥

मंथानं मंदरं चैव वासुकिं रज्जुमेव च॥
कृत्वा सुराऽसुराः सर्वे ममंथुः श्रीरसागरम्॥ ९.८६ ॥

क्षीराब्धेर्मथ्यमानस्य पर्वतो हि रसातलम्॥
गतः स तत्क्षणादेव कूर्मो भूत्वा रमापतिः॥
उद्धृतस्तत्क्षणादेव तदद्भुतमिवाभवत्॥ ९.८७ ॥

भ्राम्यमाणस्ततः शैलो नोदितः सुरदानवैः॥
भ्रममाणो निराधारो बोधश्चेव गुरुं विना॥ ९.८८ ॥

परमात्मा तदा विष्णुराधारो मंदरस्य च॥
दोर्भिश्चतुर्भिः संगृह्य ममंथाब्धिं सुखावहम्॥ ९.८९ ॥

तदा सुरासुराः सर्वे ममंथुः क्षीरसागरम्॥
एकीभूत्वा बलेनैवमतिमात्रं बलोत्कटाः॥ ९.९० ॥

पृष्ठकंठोरुजान्वंतः कमठस्य महात्मनः॥
तथासौ पर्वतश्रेष्ठो वज्रसारमयो दृढः॥
उभयोर्घर्षणादेव वडवाग्निः समुत्थितः॥ ९.९१ ॥

हलाहलं च संजातं तदृष्ट्वा नारदेन हि॥
ततो देवानुवाचेदं देवर्षिरमितद्युतिः॥ ९.९२ ॥

न कार्यं मथनं चाब्धेर्भवद्भिरधुनाऽखिलैः॥
प्रार्थयध्वं शिवं देवाः सर्वे दक्षस्य याजनम्॥
तद्विस्मृतिं च वोयातं वीरभद्रेण यत्कृतम्॥ ९.९३ ॥

तस्माच्छिवः स्मर्यतां चाशु देवाः परः पराणामपि वा परश्च॥
परात्परः परमानंदरूपो योगिध्येयो निष्प्रपंचो ह्यरूपः॥ ९.९४ ॥

ते मथ्यमानास्त्वरिता देवाः स्वात्मार्थसाधकाः॥
अभिलाषपराः सर्वे न श्रृण्वंति यतो जडाः॥ ९.९५ ॥

उपदेशैश्च बहुभिर्नोपदेश्याः कदाचन॥
ते रागद्वेषसंघाताः सर्वे शिवपराङ्मुखाः॥ ९.९६ ॥

केवलोद्यमसंवीता ममंथुः क्षीरसागरम्॥
अतिनिर्मथनाज्जातं क्षीराब्धेश्चहलाहलम्॥ ९.९७ ॥

त्रैलोक्यदहने प्रौढं प्राप्तं हंतुं दिवौकसः॥
अत ऊर्ध्वं दिशः सर्वा व्याप्तं कृत्स्नं नभस्तलम्॥
ग्रसितुं सर्वभूतानां कालकूटं समभ्ययात्॥ ९.९८ ॥

दृष्ट्वा बृहंतं स्वकरस्थमोजसा तं सर्पराजं सह पर्वतेन॥
तत्रैव हित्वापययुस्तदानीं पलायमाना ह्यसुरैः समेताः॥ ९.९९ ॥

तथैव सर्व ऋषयो भृग्वाद्याः शतशाम्यति॥
दक्षस्य यजनं तेन यथा जातं तथाभवत्॥ ९.१०० ॥

सत्यलोकं गताः सर्वे भुगुणा नोदिता भृशम्॥
वेदवाक्यैश्च विविधैः कालकूटं शतशस्ततः॥
देवा नास्त्यत्र संदेहः सत्यं सत्यं वदामि वः॥ ९.१०१ ॥

भृगुणोक्तं वचः श्रुत्वा कालकूटविषार्द्दिताः॥
सत्यलोकं समासाद्य ब्रह्माणं शरणं ययुः॥ ९.१०२ ॥

तदा जाज्वल्यमानं वै कालकूटं प्रभोज्जवलम्॥
दृष्ट्वा ब्रह्माथ तान्दृष्ट्वा ह्यकर्मज्ञानसुरासुरान्॥
तेषां शपितुमारेभे नारदेन निवारितः॥ ९.१०३ ॥

**॥ब्रह्मोवाच॥**
अकार्यं किं कृतं देवाः कस्मात्क्षोभोयमुद्यतः॥
ईश्वरस्य च जातोऽद्य नान्यथा मम भाषितम्॥ ९.१०४ ॥

ततो देवैः परिवृतो वेदोपनिषदैस्तथा॥
नानागमैः परिवृतः कालकूटभयाद्ययौ॥ ९.१०५ ॥

ततश्चिंतान्विता देवा इदमूचुः परस्परम्॥
अविद्याकामसंवीताः कुर्यामः शंकरं च कम्॥ ९.१०६ ॥

ब्रह्माणं च पुरस्कृत्य तदा देवास्त्वरान्विताः॥
वैकुण्ठमाव्रजन्सर्वे कालकूट भयार्द्दिताः॥ ९.१०७ ॥

ब्रह्मादयश्चर्षिगणाश्च तदा परेशं विष्णुं पुराणपुरुषं प्रभविष्णुमीशम्॥
वैकुण्ठमाश्रितमधोक्षजमाधवं ते सर्वे सुरासुरगणाः शरणं प्रयाताः॥ ९.१०८ ॥

तावत्प्रवृद्धं सुमहत्कालकूटं समभ्ययात्॥
दग्ध्वादो ब्रह्मणो लोकं वैकुण्ठं च ददाह वै॥ ९.१०९ ॥

कालकूटाग्निना दग्धो विष्णुः सर्वगुहाशयः॥
पार्षदैः सहितः सद्यस्तमालसदृशच्छविः॥ ९.११० ॥

वैकुण्ठं च सुनीलं च सर्वलोकैः समावृतम्॥
जलकल्मषसंवीताः सर्वे लोकास्तदाभवन्॥ ९.१११ ॥

अष्टावरणसंवीतं ब्रह्मांडं ब्रह्मणा सह॥
भस्मीभूतं चकाराशु जलकल्मषमद्भुतम्॥ ९.११२ ॥

नोभूमिर्न जलं चाग्निर्न वायुर्न नभस्तदा॥
नाहंकारो न च महान्मूलाविद्या तथैव च॥
शिवस्य कोपात्संजातं तदा भस्माकुलं जगत्॥ ९.११३ ॥

इति श्रीस्कांदे महापुराणं एकाशीतिसाहस्र्यां संहितायां प्रथममाहेश्वरखण्डान्तर्गते केदारखण्डे नवमोऽध्यायः॥ ९ ॥ छ ॥

**॥मुनय ऊचुः॥**

यत्त्वया कथितं ब्रह्मन्ब्रह्मांडं सचराचरम्॥
भस्मीभूतं रुद्रकोपात्कालकूटाग्निनाऽखिलम्॥ १०.१ ॥

ब्रह्मांडांतरतः किं तु रुद्रं मन्यामहे वयम्॥
तदा चराचरं नष्टं ब्रह्मविष्णुपुरोगमम्॥ १०.२ ॥

भस्मीभूतं रुद्रकोपात्कथं सृष्टिः प्रवर्तिता॥
कुतो ब्रह्मा च विष्णुश्च कुतश्चंद्रपुरोगमाः॥ १०.३ ॥

अन्ये सुरा सुराः कुत्र भस्मीभूता लयं गताः॥
अत ऊर्ध्वं किमभवत्तत्सर्वं वक्तुमर्हसि॥ १०.४ ॥

व्यासप्रसादात्सकलं वेत्थ त्वं नापरो हि तत्॥
तस्माज्ज्ञानमयं शास्त्रं तज्जानासि न चापरः॥ १०.५ ॥

इति पृष्टस्तदा सर्वैर्मुनिभिर्भावितात्मभिः॥
सूतो व्यासं नमस्कृत्य वाक्यं चेदमथाब्रवीत्॥ १०.६ ॥

**॥ लोमश उवाच॥**

यदा ब्रह्मांडमध्यस्था व्याप्ता देवा विषाग्निना॥
हरिब्रह्मादयो ह्येते लोकपालाः सवासवाः॥
तदा विज्ञापितः शंभुर्हेरंबेन महात्मना॥ १०.७ ॥

**॥हेरंब उवाच॥**

हे रुद्र हे महादेव हे स्थाणो ह जगत्पते॥
मया विघ्नं विनोदेन कृतं तेषां सुदुर्जयम्॥ १०.८ ॥

भयेन मति मोहात्त्वां नार्च्चयंति च मामपि॥
उद्योगं ये प्रकुर्वन्ति तेषां क्लेशोऽधिको भवेत्॥ १०.९ ॥

एवमभ्यर्थितस्तेन पिनाकी वृषभध्वजः॥
विघ्नांधकारसूर्येण गणाधिपतिना तदा॥ १०.१० ॥

लिंगरूपोऽब्रवीच्छंभुर्निराकारो निरामयः॥
निरंजनो व्योमकेशः कपर्द्दी नीललोहितः॥ १०.११ ॥

**॥महेश्वर उवाच॥**

हेरंब श्रृणु मे वाक्यं श्रद्धया परया युतः॥
अहंकारात्मकं चैव जगदेतच्चराचरम्॥ १०.१२ ॥

स्थितिं करोत्यहंकारः प्रलयोत्पत्तिमेव च॥

जगदादौगणपते तदा विज्ञप्तिमात्रतः॥ १०.१३ ॥

मायाविरहितं शांतं द्वैताद्वैतपरं सदा॥
ज्ञप्तिमात्रस्वरूपं तत्सदानंदैकलक्षणम्॥ १०.१४ ॥

**॥गणपतिरुवाच॥**
यदि त्वं केवलो ह्यात्मा परमानन्दलक्षणः॥
तस्मात्त्वदपरं किंचिन्नान्यदस्ति परंतप॥ १०.१५ ॥

नानारूपं कथं जातं सुरासुरविलक्षणम्॥
विचित्रं मोहजननं त्रिभिर्द्वैवैश्च लक्षितम्॥ १०.१६ ॥

भूतग्रामैश्चतुर्भिश्च नानाभेदैः समन्वितैः॥
जातं संसारचक्रं च नित्यानित्यविलक्षणम्॥ १०.१७ ॥

परस्परविरोधेन ज्ञानवादेन मोहिताः॥
कर्मवादरताः केचित्केचित्स्वगुणमाश्रिताः॥ १०.१८ ॥

ज्ञाननिष्ठाश्च ये केचित्परस्परविरोधिनः॥
एवं संशयमापन्नं त्राहि मां वृषभध्वज॥ १०.१९ ॥

अहं गणश्च कुत्रत्याः क्व चायं वृषभः प्रभो॥
एते चान्ये च बहवः कुतो जाताश्च कुत्र वै॥ १०.२० ॥

कृताः सर्वे महाभागाः सात्त्विका राजसाश्च वै॥
प्रहस्य भगवाञ्छंभुर्गणेशं वक्तुमुद्यतः॥ १०.२१ ॥

**॥महेश्वर उवाच॥**
कालशक्त्या च जातानि रजःसत्त्वतमांसि च॥
तैरावृतं जगत्सर्वं सदेवासुमानुषम्॥ १०.२२ ॥

परिदृश्यमानमेतच्चानश्वरं परमार्थतः॥
विद्ध्येतत्सर्वसिद्ध्यैव कृतकत्वाच्च नश्वरम्॥ १०.२३ ॥

**॥ लोमश उवाच॥**
यावद्गणेशसंयुक्तो भाषमाणः सदाशिवः॥
लिंगरूपी विश्वरूपः प्रादुर्भूता सदाशिवात्॥ १०.२४ ॥

शिवरूपा जगद्योनिः कार्यकारणरूपिणी॥
लिंगरूपी स भगवान्निमग्नस्तत्क्षणादभूत्॥ १०.२५ ॥

एका स्थिता परा शक्तिर्ब्रह्मविद्यात्मलक्षणा॥

गणेशो विस्मयाविष्टो ह्यवलोकनतत्परः॥ १०.२६ ॥

**॥ऋषय ऊचुः॥**

प्रकृत्यन्तर्गतं सर्वं जगदेतच्चराचरम्॥
गणेशस्य पृथक्त्वं च कथं जातं तदुच्यताम्॥ १०.२७ ॥

**॥लोमश उवाच॥**

साक्षात्प्रकृत्याः संभूतो गणेशो भगवानभूत्॥
यथारूपः शिवः साक्षात्तद्रूपो हि गणेश्वरः॥ १०.२८ ॥

शिवेन सह संग्रामो ह्यभूत्तस्य महात्मनः॥
अज्ञानात्प्रकृतो भूत्वा बहुकालं निरन्तरम्॥ १०.२९ ॥

तस्य दृष्ट्वा ह्यजेयत्वं गजारूढस्य तत्तदा॥
त्रिशूलेनाहनच्छंभुः सगजं तमपातयत्॥ १०.३० ॥

तदा स्तुतो महादेवः परशक्त्या परंतपः॥
परशक्तिमुवाचेदं वरं वरय शोभने॥ १०.३१ ॥

तदा वृतो महादेवो वरेण परमेण हि॥
योऽयं त्वया हतो देव मम पुत्रो न संशयः॥ १०.३२ ॥

त्वां न जानात्ययं मूढः प्रकृत्यंशसमुद्भवः॥
तस्मात्पुत्रं जीवयेमं मम तृष्ट्यर्थमेव च॥ १०.३३ ॥

प्रहस्य भगवान्रुद्रो मायापुत्रमजीवयत्॥
सिंधुरवदनेनैव मुखे स समयोजयत्॥ १०.३४ ॥

तदा गजाननो जातः प्रसादाच्छंकरस्य च॥
मायापुत्रोपि निर्मायो ज्ञानवान्संबभूव ह॥ १०.३५ ॥

आत्मज्ञानामृतेनैव नित्यतृप्तो निरामयः॥
समाधिसंस्थितो रौद्रः कालकालांतकोऽभवत्॥ १०.३६ ॥

योगदंडार्थमुत्पाट्य स्वकीयं दशनं महत्॥
करे गृह्य गणाध्यक्षः शब्धब्रह्मातिवर्त्तते॥
ऋद्धिसिद्धिद्वयेनैव एकत्वेन विराजितः॥ १०.३७ ॥

ये ते गणाश्च विघ्नाश्च ये चान्येऽभ्यधिका भुवि॥
तेषामपि पतिर्जातः कृतोऽसौ शंभुना तदा॥ १०.३८ ॥

तस्माद्वि लोकयामास प्रकृतिं विश्वरूपिणीम्॥

पृथक्स्थित्वाग्रतो जानाल्लिंगं प्रकृतिमेव च॥
ददर्श विमलं लिंगं प्रकृतिस्थं स्वभावतः॥ १०.३९ ॥

आत्मानं च गणैः साद्धं तथैव च जगत्त्रयम्॥
लीनं लिंगे समस्तं तद्धेरम्बो ज्ञानवानपि॥ १०.४० ॥

मुमोह च पुनः संज्ञां प्रतिलभ्य प्रयत्नतः॥
ननाम शिरसा ताभ्यामीशाभ्यां स गणेश्वरः॥ १०.४१ ॥

तदा ददर्श तत्रैव लोकसंहारकारकम्॥
ब्रह्माणं चैव रुद्रं च विष्णुं चैव सदाशिवम्॥ १०.४२ ॥

ददर्श प्रेततुल्यानि लिंगशक्त्यात्मकानि च॥
ब्रह्माण्डगोलकान्येव कोटिशः परमाणुवत्॥ १०.४३ ॥

लीयंते च विलीयंते महेशे लिंगरूपिणि॥
प्रकृत्यंतर्गतं लिंगं लिंगस्यांतर्गता च सा॥ १०.४४ ॥

शक्त्या लिंगं च संछन्नं तदा सर्वमदृश्यत॥
लिंगेन शक्तिः संछन्ना परस्परमवर्तत॥ १०.४५ ॥

शिवाभ्यां संश्रितं लोकं जगदेतच्चराचरम्॥
गणेशो वापि तज्ज्ञानं न परेऽपि तथाविदन्॥ १०.४६ ॥

तदोवाच महातेजा गणाध्यक्षो गणैः सह॥
सशक्तिकं स्तूयमानः शक्त्या च परया तदा॥ १०.४७ ॥

**॥गणेश उवाच॥**

नमामि देवं शक्त्यान्वितं ज्ञानरूपं प्रसन्नं ज्ञानात्परं परमंज्योतिरूपम्॥
रूपात्परं परमं तत्त्वरूपं तत्त्वात्परं परमं मंगलं च आनंदाख्यं निष्कलं निर्विषादम्॥ १०.४८ ॥

धूमात्परमयोवह्निर्धूमवत्प्रतिभासते॥
प्रकृत्यंतर्गस्त्वं हि लक्ष्यसे ज्ञानिसंभवः॥
प्रकृत्यंतर्गतस्त्वं हि मायाव्यक्तिरितीयसे॥ १०.४९ ॥

एवंविधस्त्वं भगवन्स्वमायया सृजस्यथोलुंपसि पासि विश्वम्॥
अस्माद्गरात्सर्वमिदं प्रनष्टं सब्रह्मविप्रेंद्रयुतं चराचरम्॥ १०.५० ॥

यथा पुरासीर्भगवान्महेशस्त्रैलोक्यनाथोऽसि चराचरात्मा॥
कुरुष्य शीघ्रं सहजीवकोशं चराचरं तत्सकलं प्रदग्धम्॥ १०.५१ ॥

**॥ लोमश उवाच॥**

एवं स्तुतो गणेशेन भगवान्भूतभावनः॥
यदुत्थितं कालकूटं लोकसंहारकारकम्॥ १०.५२ ॥

लिंगरूपेण तद्ग्रस्तं विमलं चाकरोत्तदा॥
सदेवासुरमर्त्याश्च सर्वाणि त्रिजगन्ति च॥
तत्क्षणाद्रक्षितान्येव कृपया परया युतः॥ १०.५३ ॥

ब्रह्मा विष्णुः सुरेंद्रश्च लोकपालाः सहर्षयः॥
यक्षा विद्याधराः सिद्धा गंधर्वाप्सरसां गणाः॥
उत्थिताश्चैव ते सर्वे निद्रापरिगता इव॥ १०.५४ ॥

विस्मयेन समाविष्टा बभूवुर्जातसाध्वसाः॥
सर्वे देवासुराश्चैव ऊचुराश्चर्यवत्ततः॥ १०.५५ ॥

क्व कालकूटं सुमहद्येन विद्राविता वयम्॥
मृतप्रायाः कृताः सद्यः सलोकपालका ह्यमी॥ १०.५६ ॥

इत्यब्रुवंस्तदा दैत्यास्तूष्णींभूतास्तदा स्थिताः॥
शक्रादयो लोकपाला विष्णुं सर्वेश्वरेश्वरम्॥
ब्रह्माणं च पुरस्कृत्य इदमूचुः समेधिता॥ १०.५७ ॥

केनेदं कारितं विष्णो न विदामोऽल्पमेधसः॥
तदा प्रहस्य भगवान्ब्रह्मणा सह तैः सुरैः॥ १०.५८ ॥

समाधिमगमन्सर्वेऽप्येकाग्रमनसस्तदा॥
तत्त्वज्ञानेन निर्हृत्य कामक्रोदादिकान्द्विजाः॥ १०.५९ ॥

तदात्मनि स्थितं लिंगमपश्यन्वि बुधादयः॥
विष्णुं पुरस्कृत्य तदा तुष्टुवुः परमार्थतः॥ १०.६० ॥

आत्मना परमात्मानं योगिनः पर्युपासते॥ १०.६१ ॥

लिंगमेव परं ज्ञानं लिंगमेव परं तपः॥
लिंगमेव परो धर्मो लिंगमेव परा गतिः॥
तस्माल्लिंगात्परतरं यच्च किंचिन्न विद्यते॥ १०.६२ ॥

एवं ब्रुवंतो हि तदा सुरासुराः सलोकपाला ऋषिभिश्च साकम्॥
विष्णुं पुरस्कृत्य तमालवर्णं शंभुं शरण्यं शरणं प्रपन्नाः॥ १०.६३ ॥

त्राहित्राहि महादेव कृपालो परमेश्वर॥
पुरा त्राता यथा सर्वे तथात्वं त्रातुमर्हसि॥ १०.६४ ॥

तद्देवदेव भवतश्चरणारविंदं सेवानुबंधमहिमानमनंतरूपम्॥
त्वदाश्रितं यत्परमानुकंपया नमोऽस्तु ते देववर प्रसीद॥ १०.६५ ॥

लिंगस्वरूपमध्यस्थो भगवान्भूतभावनः॥
सर्वैः सुरगणैः साकं बभाषेदं रमापतिः॥ १०.६६ ॥

त्वं लिंगरूपी भगवाञ्जगतामभयप्रदः॥
विष्णुना संस्तुतो देवो लिंगरूपी महेश्वरः॥ १०.६७ ॥

मृतास्त्राता गरात्सर्वे तस्मान्मृत्युंजय प्रभो॥
रक्षरक्ष महाकाल त्रिपुरांत नमोस्तु ते॥ १०.६८ ॥

विष्णुना संस्तुतो देवो लिंगरूपी महेश्वरः॥
प्रादुर्बभूव सांबोऽथ बोधयन्निव तान्सुरान्॥ १०.६९ ॥

हे विष्णो हे सुराः सर्व ऋषयः श्रूयतामिदम्॥
मन्यतेऽपि हि संसारे अनित्ये नित्यताकुलम्॥ १०.७० ॥

अविलोकयताऽऽत्मात्मना विबुधादयः॥
किं यज्ञैः किं तपोभिश्च किमुद्योगेन कर्मणाम्॥ १०.७१ ॥

एकत्वेन पृथक्त्वेन किंचिन्नैव प्रयोजनम्॥
यस्माद्भवद्भिर्मिलितैः कृतं यत्कर्म दुष्करम्॥ १०.७२ ॥

क्षीराब्धेर्मथनं तत्तु अमृतार्थं कथं कृतम्॥
मृत्युं जयं निराकृत्य अवज्ञाय च मां सदा॥ १०.७३ ॥

तस्मात्सर्वे मृत्युमुखं पतिता वै न संशयः॥
अस्माभिर्निर्मितो देवो गणेशः कार्यसिद्धये॥ १०.७४ ॥

न नमंति गणेशं च दुर्गां चैव तथाविधाम्॥
क्लेशभाजो भविष्यति नात्र कार्या विचारणा॥ १०.७५ ॥

यूयं सर्वे त्वधर्मिष्ठाः स्तब्धाः पंडितमानिनः॥
कार्याकार्यमविज्ञाय केवलं मानमोहिताः॥ १०.७६ ॥

तस्मात्कालमुखे सर्वे पतिता नात्र संशयः॥
सर्वे श्रुतिपरा यूयमिंद्राद्या देवतागणाः॥ १०.७७ ॥

प्रोचनपराः सर्वे क्षुद्राश्चेंद्रादयो वृथा॥
नात्मानं च प्रपंचेन वेत्सि त्वं हि शचीपते॥ १०.७८ ॥

कृतः प्रयत्नो हि महानमृतार्थं त्वया शठ॥
अश्वमेधशतेनैव यद्राज्यं प्राप्तवानसि॥
अपि तच्च पराधीन तन्न जानासि दुर्मते॥ १०.७९ ॥

यैर्वेदवाक्यैस्त्वं मूढ संस्तुतोऽसि तपस्विभिः॥
ते मूढास्तो षयंति त्वां तत्तद्रागपरायणाः॥ १०.८० ॥

विष्णो त्वं च पक्षपातान्न जानासि हिताहितम्॥
केचिदधतास्त्वया विष्णो रक्षिताश्चैव केचन॥ १०.८१ ॥

इच्छायुक्तस्त्वमत्रैव सदा बालकचेष्टितः॥
येऽन्ये च लोकपाः सर्वे तेषां वार्ता कुतस्त्विह॥ १०.८२ ॥

अन्यथा हि कृते ह्यर्थे अन्यथात्वं भविष्यति॥
कार्यसिद्धिर्भवेद्येन भवद्भिर्विस्मृतं च तत्॥ १०.८३ ॥

येनाद्य रक्षिताः सर्वे कालकूटमहाभयात्॥
येन नीलीकृतो विष्णुर्येन सर्वे पराजिताः॥ १०.८४ ॥

लोका भस्मीकृता येन तस्माद्येनापि रक्षिताः॥
तस्यार्च्चनाविधिः कार्यो गणेशस्य महात्मनः॥ १०.८५ ॥

कर्मारंभे तु विघ्नेशं ये नार्चंति गणाधिपम्॥
कार्यसिद्धिर्न तेषां वै भवेत्तु भवतां यथा॥ १०.८६ ॥

एतन्महेशस्य वचो निशम्य सुरासुराः किंनरचारणाश्च॥
पूजाविधानं परमार्थतोऽपि पप्रच्छुरेनं च तदा गिरीशम्॥ १०.८७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे समुद्रमंथनाख्याने शिवकृतविषभक्षणवृत्तान्तवर्णनंनाम दशमोऽध्यायः॥ १० ॥ छ ॥

**॥महेश्वर उवाच॥**

प्रतिपक्षे चतुर्थ्यां तु पूजनीयो गणाधिपः॥
स्नात्वा शुक्लतिलैः शुद्धैः शुक्लपक्षे सदा नृभिः॥ ११.१ ॥

कृत्वा चावस्यकं सर्वं गणेशस्यार्चनक्रियाम्॥
प्रयत्नेनैव कुर्वीत गंधमाल्याक्षतादिभिः॥ ११.२ ॥

ध्यानमादौ प्रकर्तव्यं गणेशस्य यथाविधि॥
आगमा बहवो जाता गणेशस्य यथा मम॥ ११.३ ॥

बहुधोपासका यस्मात्तमः सत्त्वरजोन्विताः॥
गणभेदेन तान्येव नामानि बहुधाऽभवत्॥ ११.४ ॥

पंचवक्त्रो गणाध्यक्षो दशबाहुस्त्रिलोचनः॥
कांतस्फटिकसंकाशो नीलकंठो गजाननः॥ ११.५ ॥

मुखानि तस्य पंचैव कथयामि यतातथम्॥ ११.६ ॥

मध्यमं तु मुखं गौरं चतुर्दन्तं त्रिलोचनम्॥
शुंडादंडमनोज्ञं च पुष्करे मोदकान्वितम्॥ ११.७ ॥

तथान्यत्पीतवर्णं च नीलं च शुभलक्षणम्॥
पिंगलं च तथा शुभ्रं गणेशस्य शुभाननम्॥ ११.८ ॥

तथा दशभुजेष्वेव ह्यायुधानि ब्रवीमि वः॥
पाशं पस्शुपद्मे च अंकुशं दंतमेव च॥ ११.९ ॥

अक्षमालां लांगलं च मुसलं वरदं तथा॥
पूर्णं च मोदकैः पात्रं पाणिना च विचिंतयेत्॥ ११.१० ॥

लंबोदर विरूपाक्षं निवीतं मेखलान्वितम्॥
योगासने चोपविष्टं चंद्रलेखां कशेखरम्॥ ११.११ ॥

ध्यानं च सात्त्विकं ज्ञेयं राजसं हि नृणामिव॥
शुद्धचामीकराभासं गजाननमलौकिकम्॥ ११.१२ ॥

चतुर्भुजं त्रिनयनमेकदंतं महोदरम्॥
पाशांकुशधरं देवं दंतमोदकपात्रकम्॥ ११.१३ ॥

नीलं च तामसं ध्यानमेवं त्रिविधमुच्यते॥
ततः पूजा प्रकर्तव्या भवद्भिः शीघ्रमेव च॥ ११.१४ ॥

एकविंशतिदूर्वाभिर्द्वाभ्यां नाम्ना पृथक्पृथक्॥
सर्वनामभिरेकैव दीयते गणनायके॥ ११.१५ ॥

तथैव नामभिर्देया एकविंशतिमोदकाः॥
दशनामान्यहं वक्ष्ये पूजनार्थं पृथक्पृथक्॥ ११.१६ ॥

गणाधिप नमस्तेस्तु उमापुत्राघनाशन॥
विनायकेशपुत्रोति सर्वसिद्धिप्रदायक॥ ११.१७ ॥

एकदंतेभवक्त्रेति तथा मूषकवाहन॥
कुमारगुरवे तुभ्यं पूजनीयः प्रयत्नतः॥ ११.१८ ॥

एवमुक्त्वा सुरान्सद्यः परिष्वज्य च सादरम्॥
विष्णुं गुहाशयं सद्यो ब्रह्माणं च सदाशिवः॥ ११.१९ ॥

तिरोधान गतः सद्यः शंभुः परमशोभनः॥
प्रणम्य शंभुं ते सर्वे गणाध्यक्षार्च्चने रताः॥ ११.२० ॥

ततः संपूज्य विधिवद्गणाध्यक्षार्च्चने रताः॥
उपचारैरनेकैश्च दूर्वाभिश्च पृथक्पृथक्॥ ११.२१ ॥

संतुष्टो हि गणाध्यक्षो देवानां वरदोऽभवत्॥
प्रदक्षिणं नमस्कृत्य तैः सर्वैरभितोषितः॥ ११.२२ ॥

तमोगुणान्विताः सर्वे ह्यसुरा नाभ्यपूजयन्॥
उपहासपरास्ते वै देवान्प्रत्यसुरोत्तमाः॥ ११.२३ ॥

पूजयित्वा शांकरिं ते पुनः क्षीरार्णवं ययुः॥
ब्रह्मा विष्णुश्च ऋषयो देवदैत्याः सुरोत्तमाः॥ ११.२४ ॥

मंथानं मंदरं कृत्वा रज्जुं कृत्वाथ वासुकिम्॥
ममंथुश्च तदा देवा विष्णुं कृत्वाथ सन्निधौ॥ ११.२५ ॥

मथ्यमाने तदाब्धौ च निर्गतश्चंद्र अग्रतः॥
पीयूषपूर्णः सर्वेषां देवानां कार्यसिद्धये॥ ११.२६ ॥

**॥ शौनक उवाच॥**
अर्णवे किं पुरा चंद्रो निक्षिप्तः केन सुव्रत॥
गजादिकानि रत्नानि कथितानि त्वया पुरा॥ ११.२७ ॥

एतत्सर्वं समासेन आदौ कथय मे प्रभो॥
ज्ञात्वा सर्वे वयं सूत पश्चादावर्णयामहे॥ ११.२८ ॥

तेषां तद्वचनं श्रुत्वा सूतो वाक्यमुपाददे॥ ११.२९ ॥

चंद्र आपोमयो विप्रा अत्रिपुत्रो गुणान्वितः॥
उत्पन्नो ह्यनसूयायां ब्रह्मणोंऽशात्समुद्भवः॥
रुद्रस्यांशाद्धि दुर्वासा विष्णोरंशात्तु दत्तकः॥ ११.३० ॥

क्षीराब्धिं मथ्यमानं तु दृष्ट्वा चंद्रो मुदान्वितः॥
क्षीराब्धिरपि चंद्रं च दृष्ट्वा सोऽप्युत्सुकोऽभवत्॥ ११.३१ ॥

प्रविष्टश्चोभयप्रीत्या श्रृण्वतां भो द्विजोत्तमाः॥
चंद्रो ह्यमृत पूर्णोभूदग्रतो देवसन्निधौ॥ ११.३२ ॥

दृष्ट्वा च कांतिं त्वरितोऽथ चंद्रो नीराजितो देवगणैस्तदानीम्॥
वादित्रगोषैस्तुमुलैरनेकैर्मृदंगशंखैः पटहैरनेकैः॥ ११.३३ ॥

नमश्चक्रुश्च ते सर्वे ससुरासुरदानवाः॥
तदा गर्गं पृच्छमाना बलं चंद्रस्य तत्त्वतः॥ ११.३४ ॥

गर्गेणोक्तास्तदा सर्वेषां बलमद्य वै॥
केंद्रस्थानगताः सर्वे भवतामुत्तमा ग्रहाः॥ ११.३५ ॥

चंद्रं मुरुः समायातो बुधश्चैव समागतः॥
आदित्यश्च तथा शुक्रः शनिरंगारको महान्॥ ११.३६ ॥

तस्माच्चंद्रबलं श्रेष्ठं भवतां कार्यसिद्धये॥
गोमंतसंज्ञकोनाम मुहूर्तोऽयं जयप्रदः॥ ११.३७ ॥

एवमाश्वासिता देवा गर्गेणैव महात्मना॥
ममंथुरब्धिं त्वरिता गर्जमाना महाबलाः॥ ११.३८ ॥

द्विगुणं बलमापन्ना महात्मानो दृढव्रताः॥
महेशं स्मरमाणास्ते गणेशं च पुनः पुनः॥ ११.३९ ॥

निर्मथ्यमानादुदधेर्गर्जमानाच्च सर्वशः॥
निर्गता सुरभिः साक्षाद्देवानां कार्यसिद्धये॥ ११.४० ॥

तुष्टा कपिलवर्णा सा ऊधोभारेण भूयसा॥
तरंगोपरि गच्छंती शनकैः शनकैस्ततः॥ ११.४१ ॥

कामधेनुं समायांतीं दृष्ट्वा सर्वे सुरासुराः॥
पुष्पवर्षेण महता ववर्षुरमितप्रभाम्॥ ११.४२ ॥

तदा तूर्याण्यनेकानि नेदुर्वाद्यान्यनेकशः॥
आनीता जलमध्याच्च संवृता गोशतैरपि॥ ११.४३ ॥

तासु नीलाश्च कृष्णश्च कपिलाश्च कपिंजलाः॥
बभ्रवः श्यामका रक्ता जंबूवर्णाश्च पिंगलाः॥
आभिर्युक्ता तदा गोभिः सुरभिः प्रत्यदृश्यत॥ ११.४४ ॥

असुरासुरसंवीतां कामधेनुं ययाचिरे॥
ऋषयो हर्षसंयुक्ता देवान्दैत्यांश्च तत्क्षणात्॥ ११.४५ ॥

सर्वेभ्यश्चैव विप्रेभ्यो नानागोत्रेभ्य एव च॥
सुरभीसहिता गावो दातव्या नात्र संशयः॥ ११.४६ ॥

तैर्याचितास्तेऽत्र सुरासुराश्च ददुश्च ता गाः शिवतोषणाय॥
तैः स्वीकृतास्ता ऋषिभिः सुमंगलैर्महात्मभिः पुण्यतमैः सुरभ्यः॥ ११.४७ ॥

पुण्याहं मुनिभिः सर्वैः कारितास्ते तदा सुराः॥
देवानां कार्यसिद्ध्यर्थमसुराणां क्षयाय च॥ ११.४८ ॥

पुनः सर्वे सुसंरब्धा ममंथुः क्षीरसागरम्॥
मथ्यमानात्तदा तस्मादुदधेश्च तथाऽभवत्॥ ११.४९ ॥

कल्पवृक्षः पारिजातश्चूतः संतानकस्तथा॥
तान्द्रुमानेकतः कृत्वा गन्धर्वनगरोपमान्॥
ममंथुरुग्रं त्वरिताः पुनः क्षीरार्णवं बुधा॥ ११.५० ॥

निर्मथ्यमानादुदधेरभवत्सूर्यवर्चसम्॥
रत्नानामुत्तमं रत्नं कौस्तुभाख्यं महाप्रभम्॥ ११.५१ ॥

स्वकीयेन प्रकाशेन भासयंतं जगत्त्रयम्॥
चिंतामणिं पुरस्कृत्य कौस्तुभं ददृशुर्हि ते॥ ११.५२ ॥

सर्वे सुरा ददुस्तं वै कौस्तुभं विष्णवे तदा॥
चिंतामणि ततः कृत्वा मध्ये चैव सुरासुराः॥
ममंथुः पुनरेवाब्धिं गर्जंतस्ते बलोत्कटाः॥ ११.५३ ॥

मथ्यमानात्ततस्तस्मादुच्चैःश्रवाः समद्भुतम्॥
बभूव अश्वो रत्नानां पुनश्चैरावतो गजः॥ ११.५४ ॥

तथैव गजरत्नं च चतुःषष्ट्या समन्वितम्॥
गजानां पांडुराणां च चतुर्दन्तं मदान्वितम्॥ ११.५५ ॥

तान्सर्वान्मध्यतः कृत्वा पुनश्चैव ममंथिरे॥
निर्मथ्यमानादुदधेर्निर्गतानि बहून्यथ॥ ११.५६ ॥

मदिरा विजया भृंगी तथा लशुनगृंजनाः॥
अतीव उन्मादकरो धत्तूरः पुष्करस्तथा॥ ११.५७ ॥

स्थापिता नैकपद्येन तीरे नदनदीपतेः॥
पुनश्च ते तत्र महासुरेन्द्रा ममंथुरब्धिं सुरसत्तमैः सह॥ ११.५८ ॥

निर्मथ्यमानादुदधेस्तदासीत्सा दिव्य लक्ष्मीर्भुवनैकनाथा॥
आन्वीक्षिकीं ब्रह्मविदो वदंति तथआ चान्ये मूलविद्यां गृणंति॥ ११.५९ ॥

ब्रह्मविद्यां केचिदाहुः समर्थाः केचित्सिद्धिमृद्धिमाज्ञा मथाशाम्॥
यां वैष्णवीं योगिनः केचिदाहुस्तथा च मायां मायिनो नित्ययुक्ताः॥ ११.६० ॥

वदंति सर्वे केनसिद्धांतयुक्तां यां योगमायां ज्ञानशक्त्यान्विता ये॥ ११.६१ ॥

ददृशुस्तां महालक्ष्मीमायांती शनकैस्तदा॥
गौरां च युवतीं स्निग्धां पद्मकिंजल्कभूषणाम्॥ ११.६२ ॥

सुस्मितां सुद्विजां श्यामां नवयौवनभूषणाम्॥
विचित्रवस्त्राभरणरत्नानेकोद्यतप्रभाम्॥ ११.६३ ॥

बिंबोष्ठीं सुनसां तन्वीं सुग्रीवां चारुलोचनाम्॥
सुमध्यां चारुजघनां बृहत्कटितटां तथा॥ ११.६४ ॥

नानारत्नप्रदीपैश्च नीराजितमुखांबुजाम्॥
चारुप्रसन्नवदनां हारनूपूरशोभिताम्॥ ११.६५ ॥

मूर्द्धनि ध्रियमाणेन च्छत्रेणापि विराजिताम्॥
चामरैर्वीज्यमानां तां गंगाकल्लोललोहितैः॥ ११.६६ ॥

पांडुरं गजमारूढां स्तूयमानां महर्षिभिः॥
सुरद्रुमपुष्पमालां बिभ्रतीं मल्लिकायुताम्॥ ११.६७ ॥

कराग्रे ध्रियमाणां तां दृष्ट्वा देवाः समुत्सुकाः॥
आलोकनपरा यावत्तावत्तान्ददृशे ह्यसौ॥ ११.६८ ॥

देवांश्च दानवांश्चैव सिद्धचारणपन्नगान्॥
यथा माता स्वपुत्रांश्च महालक्ष्मीस्तथा सती॥ ११.६९ ॥

आलोकितास्तथा देवास्तया लक्ष्म्या श्रियान्विताः॥

सञ्जातास्तत्क्षणादेव राज्य लक्षणलक्षिताः॥
दैत्यास्ते निःश्रिका जाता ये श्रियाऽनवलोकिताः॥ ११.७० ॥

निरीक्ष्यमाणा च तदा मुकुन्दं तमालनीलं सुकपोलनासम्॥
विभ्राजमानं वपुषा परेण श्रीवत्सलक्ष्मं सदयावलोकम्॥ ११.७१ ॥

दृष्ट्वा तदैव सहसा वनमालयान्विता लक्ष्मीर्गजादवततार सुविस्मयंती॥
कंठे ससर्ज पुरुषस्य परस्य विष्णोर्मालां श्रिया विरचितां भ्रमरैरुपेताम्॥ ११.७२ ॥

वामांगमाश्रित्य तदा महात्मनः सोपाविशत्तत्र समीक्ष्य ता उभौ॥
सुराः सदैत्या मुदमापुरद्भुतां सिद्धाप्सरः किंनरचारणाश्च॥ ११.७३ ॥

सर्वेषामेव लोकानामैकपद्येन सर्वशः॥
हर्षो महानभूत्तत्र लक्ष्मीनारायणागमे॥ ११.७४ ॥

लक्ष्म्या वृतो महाविष्णुर्लक्ष्मीस्तेनैव संवृता॥
एवं परस्परं प्रीत्या ह्यवलोकनतत्परौ॥ ११.७५ ॥

शंखाश्च पटहाश्चैव मृदंगानकगोमुखाः॥
भेर्यश्च झर्झरीणां च स शब्दस्तुमुलोऽभवत्॥ ११.७६ ॥

बभूव गायकानां च गायनं सुमहत्तदा॥
ततानि विततान्येन घानानि सुषिराणि च॥ ११.७७ ॥

एवं वाद्यप्रभेदैश्च विष्णुं सर्वात्मना हरिम्॥
अतोषयन्सुगीतज्ञा गंधर्वाप्सरसां गणाः॥ ११.७८ ॥

तथा जगुर्नारदतुंबुरादयो गंधर्वयक्षाः सुरसिद्ध संघाः॥
संसेवमानाः परमात्मरूपं नारायणं देवमगाधबोधम्॥ ११.७९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे समुद्रमन्थनाख्याने लक्ष्मीप्रादुर्भाववर्णनंनामैकादशोऽध्यायः॥ ११ ॥

**॥लोमश उवाच॥**

प्रणम्य परमात्मानं रमायुक्तं जनार्द्दनम्॥
अमृतार्थं ममंथुस्ते सुरासुरगणाः पुनः॥ १२.१ ॥

उदधेर्मथ्यमानाच्च निर्गतः सुमहायशाः॥
धन्वंतरिरिति ख्यातो युवा मृत्युञ्जयः परः॥ १२.२ ॥

पाणिभ्यां पूर्णकलशं सुधायाः परिगृह्य वै॥
यावत्सर्वे सुराः सर्वे निरीक्षंते मनोहरम्॥ १२.३ ॥

तदा दैत्याः समं गत्वा हर्तुकामा बलादिव॥
सुधया पूर्णकलशं धन्वंतरिकरे स्थितम्॥ १२.४ ॥

यावत्तरंगमालाभिरावृतोऽभूद्विषक्तमः॥
शनैः शनैः समायातो दृष्टोऽसौ वृषपर्वणा॥ १२.५ ॥

करस्थः कलशस्तस्य हृतस्तेन बलादिव॥
असुराश्च ततः सर्वे जगर्जुरतिभीषणम्॥ १२.६ ॥

कलशं सुधया पूर्णं गृहीत्वा ते समुत्सुकाः॥
दैत्याः पातालमाजग्मुस्तदा देवा भ्रमान्विताः॥ १२.७ ॥

अनुजग्मुः सुसंनद्धा योद्धुकामाश्च तैः सह॥
तदा देवान्समालोक्य बलिरेवमभाषत॥ १२.८ ॥

**॥ बलिरुवाच॥**

वयं तु केवलं देवाः सुधया परितोषिताः॥
शीघ्रमेव प्रगंतव्यं भवद्भिश्च सुरोत्तमैः॥ १२.९ ॥

त्रिविष्टपं मुदा युक्तैः किमस्माभिः प्रयोजनम्॥
पुरास्माभिः कृतं मैत्रं भवद्भिः स्वार्थतत्परैः॥
अधुना विदितं तत्तु नात्र कार्या विचारणा॥ १२.१० ॥

एवं निर्भार्त्सितास्तेन बलिना सुरसत्तमाः॥
यथागतेन मार्गेण जग्मुर्नारायणं प्रभुम्॥ १२.११ ॥

तं दृष्ट्वा विष्णुना सर्वे सुरा भग्नमनोरथा॥
आश्वासिता वचोभिश्च नानानुनयको विदैः॥ १२.१२ ॥

मा त्रासं कुरुतात्रार्थे आनयिष्यामि तां सुधाम्॥
एवमाभाष्य भगवान्मुकुन्दोऽनाथसंश्रयः॥ १२.१३ ॥

स्थापयित्वा सुरान्सर्वांस्तत्रैव मधुसूदनः॥
मोहनीरूपमास्थाय दैत्यनामग्रतोऽभवत्॥ १२.१४ ॥

तावद्दैत्याः सुसंरब्धाः परस्परमथाब्रुवन्॥
विवादः सर्वदैत्यानाममृतार्थे तदाऽभवत्॥ १२.१५ ॥

एवं प्रवर्तमाने तु मोहिनीरूपमाश्रिताम्॥
दृष्ट्वा योषां तदा दैवात्सर्वभूतमनोरमाम्॥ १२.१६ ॥

विस्मयेन समाविष्टा बभूवुस्तृषितेक्षणाः॥
तां संमान्य तदा दैत्यराजो बलिरुवाच ह॥ १२.१७ ॥

**॥बलिरुवाच॥**
सुधा त्वया विभक्तव्या सर्वेषां गतिहेतवे॥
शीघ्रत्वेन महाभागे कुरुष्व वचनं मम॥ १२.१८ ॥

एवमुक्ता ह्युवाचेदं स्मयमाना बलिं प्रति॥
स्त्रीणां नैव च विश्वासः कर्तव्यो हि विपश्चिता॥ १२.१९ ॥

अनृतं साहसं माया मूर्खत्वमति लोभता॥
अशौचं निर्घृणत्वं च स्त्रीणां दोषाः स्वभावजाः॥ १२.२० ॥

निःस्नेहत्वं च विज्ञेयं धूर्तत्वं चैव तत्त्वतः॥
स्वस्त्रीणां चैव विज्ञेया दोषा नास्त्यत्र संशयः॥ १२.२१ ॥

यथैव श्वापदानां च वृका हिंसापरायणाः॥
काका यतांडजानां च श्वापदानां च जंबुकाः॥
धूर्ता तथा मनुष्याणां स्त्रीज्ञेया सततं बुधैः॥ १२.२२ ॥

मया सह भवद्भिश्च कथं सख्यं प्रवर्तते॥
सर्वथात्र न विज्ञेयाः के यूयं चैव क ह्यहम्॥ १२.२३ ॥

तस्माद्भवद्भिः संचिंत्यकार्याकार्यविचक्षणैः॥
कर्तव्यं परया बुद्ध्या प्रयातासुरसत्तमाः॥ १२.२४ ॥

**॥बलिरुवाच॥**
अद्यामृतं च सर्वेषां विभजस्व यथातथम्॥
त्वया दत्तं च गृहणीमः सत्यंसत्यं वदामि ते॥ १२.२८ ॥

एवमुक्ता तदा देवी मोहिनी सर्वमंगला॥
उवाचाथासुरान्सर्वान्नोचयँल्लौकिकीं स्थितिम्॥ १२.२९ ॥

**॥ भगवानुवाच॥**

यूयं सर्वे कृतार्थाश्च जाता दैवेन केनचित्॥
अद्योपावाससंयुक्ता अमृतस्याधिवासनम्॥ १२.३० ॥

क्रियतामसुराः श्रेष्ठाः शुभेच्छा किंचिदस्ति वः॥
श्वेभूते पारणं कुर्याद्व्रतार्चनरतिश्च वः॥ १२.३१ ॥

न्यायोपार्जितवित्तेन दशमांशेन धीमता॥
कर्तव्यो विनियोगश्च ईशप्रीत्यर्थहेतवे॥ १२.३२ ॥

तथेति मत्वा ते सर्वे यथोक्तं देवमायया॥
चक्रुस्तथैव दैतेया मोहिता नातिकोविदाः॥ १२.३३ ॥

मयासुरेण च तदा भवनानि कृतानि वै॥
मनोज्ञानि महार्हाणि सुप्रभाणि महांति च॥ १२.३४ ॥

तेषुपविष्टास्ते सर्वे सुस्नाताः समलंकृताः॥
स्थापयित्वा सुसंरब्धाः पूर्णं कलशमग्रतः॥ १२.३५ ॥

रात्रौ जागरणं सर्वैः कृतं परमया मुदा॥
अथोषसि प्रवृत्ते च प्रातःस्नानयुता भवन्॥ १२.३६ ॥

असुरा बलिमुख्याश्च पंक्तिभूता यताक्रमम्॥
सर्वमावश्यकं कृत्वा तदा पानरता भवन्॥ १२.३७ ॥

बलिश्च वृषपर्वा च नमुचिः शंख एव च॥
सुदंष्ट्रश्चैव संह्लादी कालनेमिर्विभीषणः॥ १२.३८ ॥

वातापिरिल्वलः कुम्भो निकुम्भः प्रच्छदस्तथा॥
तथा सुन्दोपसुन्दौ च निशुम्भः शुम्भ एव च॥ १२.३९ ॥

महिषो महिषाक्षश्च बिडालाक्षः प्रतापवान्॥
चिक्षुराख्यो महाबाहुर्जृभणोऽथ वृषासुरः॥ १२.४० ॥

विबाहुर्बाहुको घोरस्तथा वै घोरदर्शनः॥
एते चान्ये च बहवो दैत्यदानवराक्षसाः॥
यथाक्रमं चोपविष्टा राहुः केतुस्तथैव च॥ १२.४१ ॥

तेषां तु कोटिसंख्यानां दैत्यानां पंक्तिरास्थिता॥ १२.४२ ॥

ततस्तया तदा देव्या अमृतार्थं हि वै द्विजाः॥
यज्जातं तच्छृणउध्वं हि तया देव्या कृतं महत्॥ १२.४३ ॥

सर्वे विज्ञापिताः सद्यो गृहीतकलशा तदा॥
शोभया परया युक्ता साक्षात्सा विष्णुमोहिनी॥ १२.४४ ॥

करस्थेन तदा देवी कलशेन विराजिता॥
शुशुभे परया कांत्या जगन्मंगलमंगला॥ १२.४५ ॥

परिवेषधराः सर्वे सुरास्ते ह्यसुरांतिकम्॥
आगतास्तत्क्षणादेव यत्र ते ह्यसुरोत्तमाः॥ १२.४६ ॥

तान्दृष्ट्वा मोहिनी सद्य उवाच प्रमदोत्तमा॥ १२.४७ ॥

**॥मोहिन्युवाच॥**
एते ह्यतिथयो ज्ञेया धर्म्मसर्वस्वसाधनाः॥
एभ्यो देयं यताशक्त्या यदि सत्यं वचो मम॥
प्रमाणं भवतां चाद्य कुरुध्वं मा विलंबथ॥ १२.४८ ॥

परेषामुपकारं च ये कुर्वंति स्वशक्तितः॥
धन्यास्ते चैव विज्ञेयाः पवित्राः लोकपालकाः॥ १२.४९ ॥

केवलात्मोदरार्थाय उद्योगं ये प्रकुर्वते॥
ते क्लेशभागिनो ज्ञेया नात्र कार्या विचारणा॥ १२.५० ॥

तस्माद्विभजनं कार्यं मयैतस्य शुभव्रताः॥
देवेभ्यश्च प्रयच्छध्वं यद्धि चात्मप्रियाप्रियम्॥ १२.५१ ॥

इत्युक्ते वचने देव्या तथा चक्रुरतं द्रिताः॥
आह्वयामासुरसुराः सर्वान्देवान्सवासवान्॥ १२.५२ ॥

उपविष्टाश्च ते सर्वे अमृतार्थं च भो द्विजाः॥
तेषूपविश्यमानेषु ह्युवाच परमं वचः॥
मोहिनी सर्वधर्म्मज्ञा असुराणां स्मयन्निव॥ १२.५३ ॥

**॥मोहिन्युवाच॥**
आदौ ह्यभ्यागताः पूज्या इति वै वैदिकी श्रुतिः॥ १२.५४ ॥

तस्माद्यूयं वेदपराः सर्वे देवपरायणाः॥
ब्रुवंतु त्वरितेनैव आदौ केषां ददाम्यहम्॥
अमृतं हि महाभागा बलिमुख्या वदंतु भोः॥ १२.५५ ॥

बलिनोक्ता तदा देवी यत्ते मनसि रोचते॥
स्वामिनी त्वं न संदेहो ह्यस्माकं सुंदरानने॥ १२.५६ ॥

एवं संमानिता तेन बलिना भावितात्मना॥
परिवेषणकार्यार्थं कलशं गृह्य सत्वरा॥ १२.५७ ॥

तस्मान्नरेन्द्रकरभोरुलसद्दुकूला श्रोणीतटालसगतिर्मविह्वलांगी॥
सा कूजती कनकनूपुरसिंजितेन कुंभस्तनी कलशपाणिरथाविवेश॥ १२.५८ ॥

तदा तु देवी परिवेषयंती सा मोहिनी देवगणाय साक्षात्॥
ववर्ष देवेषु सुधारसं पुनः पुनः सुधाहाररसामृतं यथा॥ १२.५९ ॥

पुनश्च ते देवगणाः सुधारसं दत्तं तया परया विश्वमूर्त्या॥
बलिमुख्याः सह लोकपाला गंधर्वयक्षाप्सरसां गणाश्च॥ १२.६० ॥

सर्वे दैत्या आसनस्था पुनश्च ते देवगणाः सुधारसं दत्तं पीडिताश्च॥
तूष्णींभूता बलिमुख्या द्विजेंद्रा मनस्विनो ध्यानपरा बभूवुः॥ १२.६१ ॥

ततस्तथाविधान्दृष्ट्वा दैत्यांस्तान्मोहमाश्रितान्॥
तदा राहुश्च केतुश्च द्वावेतौ दैत्यपुंगवौ॥ १२.६२ ॥

देवानां रूपमास्थाय अमृतार्थं त्वरान्वितौ॥
उपविष्टौ तदा पङ्क्त्यां देवानाममृतार्थिनौ॥ १२.६३ ॥

यदामृतं पातुकामो राहुः परमदुर्जयः॥
चन्द्रार्काभ्यां प्रकथितो विष्णोरमिततेजसः॥ १२.६४ ॥

तदा तस्य शिरश्छिन्नं राहोर्दुर्विग्रहस्य च॥
शिवरो गगनमापेदे कबंधं च महीतले॥
भ्रममाणं तदा ह्यद्रींश्चूर्णयामास वै तदा॥ १२.६५ ॥

साद्रिश्च सर्वभूलोकश्चूर्णितश्च तदाऽभवत्॥
तया तेन च देहेन चूर्णितं सचराचरम्॥ १२.६६ ॥

दृष्ट्वा तदा महादेवस्तस्योपरि तु संस्थितः॥
निवासः सर्वदेवानां तस्याः पादतलेऽभवत्॥ १२.६७ ॥

पीडनं तत्समीपेथ निवास इति नाम वै॥ १२.६८ ॥

महतामालयं यस्माद्यस्यास्तच्चरणांबुजम्॥
महालयेति विख्याता जगत्त्रयविमोहिनी॥ १२.६९ ॥

केतुश्च धूमरूपोऽसावाकाशे विलयं गतः॥
सुधां समर्प्य चंद्राय तिरोधानगतोऽभवत्॥ १२.७० ॥

वासुदेवो जगद्योनिर्जगतां कारणं परम्॥
विष्णोः प्रसादात्तज्जातं सुराणां कार्यसिद्धिदम्॥ १२.७१ ॥

असुराणां विनाशाय जातं दैवविपर्ययात्॥
विना दैवेन जानीध्वमुद्यमो हि निरर्थकः॥ १२.७२ ॥

यौगपद्येन तैः सर्वैः क्षीराब्धेर्मंथनं कृतम्॥
सिद्धिर्जाता हि देवानामसिद्धिरसुरान्प्रति॥ १२.७३ ॥

ततश्च ते देववरान्प्रकोपिता दैत्याश्च मायाप्रवि मोहिताः पुनः॥
अनेकशस्त्रास्त्रयुतास्तदाऽभवन्विष्णौ गते गर्जमानास्तदानीम्॥ १२.७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे समुद्रमंथनाख्याने देवानाममृतप्राशनवर्णनंनाम द्वादशोऽध्यायः॥ १२ ॥ ।
छ ॥

**॥लोमश उवाच॥**

ततस्ते गर्ज्जमानाश्च आक्षिपंतः सुरान्रणे॥
शतक्रतुप्रमुख्यांस्तन्महाबलपराक्रमान्॥ १३.१ ॥

विमानमारुह्य तदा महात्मा वैरोचनिः सर्वबलेन सार्द्धम्॥
दैत्यैः समेतो विविधैर्महाबलैः सुरान्प्रदुद्राव महाभयावहम्॥ १३.२ ॥

स्वानि रूपाणि बिभ्रंतः समापेतुः स हस्रशः॥
केचिद्व्याघ्रान्समारूढा महिषांश्च तथा परे॥ १३.३ ॥

अश्वान्केचित्समारूढा द्विपान्केचित्तथा परे॥
सिंहांस्तथा परे रूढाः शार्दूलाञ्छरभांस्तथा॥ १३.४ ॥

मयूरान्राजहंसांश्च कुक्कुटांश्च तथा परे॥
केचिद्धयान्समारूढा उष्ट्रानश्वतरानपि॥ १३.५ ॥

गजान्खरान्परे चैव शकटांश्च तथा परे॥
पादाता बहवो दैत्याः खड्गशक्त्यृष्टिपाणयः॥ १३.६ ॥

परिघायुधिनः पाशशूलमुद्गरपाणयः॥
असिलोमान्विताः केचिद्भुशुंडीपरिघायुधाः॥ १३.७ ॥

हयनागरथाश्चान्ये समारूढाः प्रहारिणः॥
विमानानि समारूढा बलिमुख्याः सहस्रशः॥ १३.८ ॥

स्पर्द्धमानास्तातान्योन्यं गर्जंतश्च मुहुर्मुहुः॥
वृषपर्वा ह्युवा चेदं बलिनं दैत्यपुंगवम्॥ १३.९ ॥

त्वया कृतं महाबाहो इंद्रेण सह संगमम्॥
विश्वासो नैव कर्तव्यो दुर्हृदा च कथंचन॥ १३.१० ॥

ऊनेनापि हि तुच्छेन वैरिणापि कथंचन॥
मैत्री बुद्धिमता कार्या आपद्यपि निवर्तते॥ १३.११ ॥

न विश्वसेत्पूर्वविरोधिना क्वचित्पराजिताः स्मोऽथ बले त्वयाधुना॥
पुराणदुष्टाः कथमद्य वै पुनर्मंत्रं विकर्तुं न च ते यतेरन्॥ १३.१२ ॥

इत्यूचुस्ते दुराधर्षा योद्धुकामा व्यवस्थिताः॥
ध्वजैश्छत्रैः पताकैश्च रणभूमिममंडयन्॥ १३.१३ ॥

चामरैश्च दिशः सर्वा लोपितं च रणस्थलम्॥
तथा सर्वे सुरास्तत्र दैत्यान्प्रति समुत्सुकाः॥ १३.१४ ॥

पीत्वामृतं महाभागा वाहान्यारुह्य दंशिताः॥
गजारूढो महेंद्रोपि वज्रपाणिः प्रतापवान्॥
सूर्यश्चोच्चैः श्रवारूढो मृगा रूढश्च चन्द्रमाः॥ १३.१५ ॥

छत्रचामरसंवीताः शोभिता विजयश्रिया॥
प्रणम्य विष्णुं ते सर्व इंद्राद्या जयकांक्षिणः॥ १३.१६ ॥

ते विष्णुना ह्यनुज्ञाता असुरान्प्रति वै रुषा॥
असुराश्च महाकाया भीमाक्षा भीमविक्रमाः॥ १३.१७ ॥

तेषां बोरमभूद्युद्धं देवानां दानवैः सह॥
तुमुलं च महाघोरं सर्वभूतभयावहम्॥ १३.१८ ॥

शरधारान्वितं सर्वं बभूव परमाद्भुतम्॥
ततश्च टचटाशब्दा बभूवुश्च दिशोदश॥ १३.१९ ॥

ततो निमिषमात्रेण शरघातयुता भवन्॥
शरतोमरनाराचैराहताश्चापतन्भुवि॥ १३.२० ॥

विध्यमानास्तथा केचिद्विविधुश्चापरान्रणे॥
भल्लैर्भग्नाश्च पतिता नाराचैः शकलीकृताः॥ १३.२१ ॥

क्षुरप्रहारिताः केचिद्दैत्या दानवराक्षसाः॥
शिलीमुखैर्मारिताश्च भग्नाः केचिच्च दानवाः॥ १३.२२ ॥

एवं भग्नं दानवानां च सैन्यं दृष्ट्वा देवा गर्जमानाः समंतात्॥
हृष्टाः सर्वे संमिलित्वा तदानीं लब्ध्वा युद्धे ते जयं श्लाघयन्ते॥ १३.२३ ॥

शंखवादित्रघोषेण पूरितं च जगत्त्रयम्॥
देवान्प्रति कृतामर्षा दानवास्ते महाबलाः॥ १३.२४ ॥

बलिप्रभृतयः सर्वे संभ्रमेणोत्थिताः पुनः॥
विमानैः सूर्यसंकासैरनेकैश्च समन्विताः॥ १३.२५ ॥

द्वंद्वयुद्धं सुतुमुलं देवानां दानवैः सह॥
संप्रवृत्तं पुनश्चैव परस्परजिगीषया॥ १३.२६ ॥

बलिना दानवेंद्रेण महेंद्रो युयुधे तदा॥
तथा यमो महाबाहुर्नमुच्या सह संगतः॥ १३.२७ ॥

नैर्ऋतः प्रघसेनैव पाशी कुंभेन संगतः॥

निकुंभेनैव सुमहद्युद्धं चक्रे सदारयः॥ १३.२८ ॥

सोमेन सह राहुश्च युद्धं चक्रे सुदारुणम्॥
राहुणा चन्द्रदेहोत्थममृतं भक्षितं तदा॥
संपर्कादमृस्यैव यथा राहुस्तथाऽभवत्॥ १३.२९ ॥

तानि सर्वाणि दृष्टानि शंभुना परमेष्ठिना॥
आश्रयोऽहं च सर्वेषां भूतानां नात्र संशयः॥
असुराणां सुराणां च सर्वेषामपि वल्लभः॥ १३.३० ॥

एवमुक्तस्तदा राहुः प्रणम्य शिरसा शिवम्॥
मौलौ स्थितस्तदा चंद्रो अमृतं व्यसृजद्भयात्॥ १३.३१ ॥

तेन तस्य हि जातानि शिरांसि सुबहून्यपि॥
एकपद्येन तेषां च स्रजं कृत्वा मनोहराम्॥
बबंध शंभुः शिरसि शिरोभूषणवत्कृतम्॥ १३.३२ ॥

अशनात्कालकूटस्य नीलकंठोऽभवत्तदा॥
देवानां कार्यसिद्ध्यर्थं मुंडमाला तथा कृता॥ १३.३३ ॥

दधार शिरसा तां च मुण्डमालां महेश्वरः॥ १३.३४ ॥

तया स्रजाऽसौ शुशुभे महात्मा देवादिदेवस्त्रिपुरांतको हरः॥
गजासुरो येन निपातितो महानथांधको येन कृतश्च चूर्णः॥ १३.३५ ॥

गंगा धृता येन शिरस्सुमध्ये चंद्रं च चूडे कृतवान्भयापहः॥
वेदाः पुराणानि तथागमाश्च तथैव नानाश्रुतयोऽथ शास्त्रम्॥ १३.३६ ॥

जल्पंति नानागमभेदैर्मीमांसमानाश्च भवंति मूकाः॥
नानागमार्चायमतप्रभेदैर्निरूप्यमाणो जगदेकबंधुः॥ १३.३७ ॥

शिवं हि नित्यं परमात्मदैवं वेदैकवेद्यं परमात्मदिव्यम्॥
विहाय तं मूढजनाः प्रमत्ताः शिवं न जानंति परात्मरूपम्॥ १३.३८ ॥

येनैव सृष्टं विधृतं च येन येन श्रितं येन कृतं समग्रम्॥
यस्यांशभूतं हि जगत्कदाचिद्वेदांतवेद्यः परमात्मा शिवश्च॥ १३.३९ ॥

आढ्यो वापि दरिद्रो वा उत्तमो ह्यधमोऽपि वा॥
शिवभक्तिरतो नित्यं शिव एव न संशयः॥ १३.४० ॥

यो वा परकृतां पूजां शिवस्योपरि शोभिताम्॥
दृष्ट्वा संतोषमायाति दायं प्राप्नोति तत्समम्॥ १३.४१ ॥

ये दीपमालां कुर्वंति कार्तिक्यां श्रद्धयान्विताः॥
यावत्कालं प्रज्वलंति दीपास्ते लिंगमग्रतः॥
तावद्युगसहस्राणि दाता स्वर्गे महीयते॥ १३.४२ ॥

कौसुंभतैलसंयुक्ता दीपा दत्ताः शिवालये॥
दातारस्तेऽपि कैलासे मोदन्ते शिवसंनिधौ॥ १३.४३ ॥

अतसीतैलसंयुक्ता दीपा दत्ताः शिवालये॥
ते शिवं यांति संयुक्ताः कुलानां च शतेन वै॥ १३.४४ ॥

ज्ञानिनोऽपि हि जायंते दीपदानफलेन हि॥ १३.४५ ॥

तिलतैलेन संयुक्ता दीपा दत्ताः शिवालये॥
ते शिवं यांति संयुक्ताः कुलानां च शतेन वै॥ १३.४६ ॥

घृताक्ता यैः कृता दीपा दीपिताश्च शिवालये॥
ते यांति परमं स्थानं कुललक्षसमन्विताः॥ १३.४७ ॥

कर्पूरागुरुधूपैश्च ये यजंति सदा शिवम्॥
आरार्तिकां सकर्प्पूरां ये कुर्वंति दिनेदिने॥
ते प्राप्नुवंति सायुज्यं नात्र कार्या विचारणा॥ १३.४८ ॥

एककालं द्विकालं वा त्रिकालं ये ह्यतंद्रिताः॥
लिंगार्चनं प्रकुर्वंति ते रुद्रा नात्र संशयः॥ १३.४९ ॥

रुद्राक्षधारणं ये च कुर्वंति शिवपूजने॥
दाने तपसि तीर्थे च पर्वकाले ह्यतंद्रिताः॥
तेषां यत्सुकृतं सर्वमनंतं भवति द्विजाः॥ १३.५० ॥

रुद्राक्षा ये शिवेनोक्तास्ताच्छृणुध्वं द्विजोत्तमाः॥
आरम्भैकमुखं तावद्याबद्वक्त्राणि षोडश॥
एतेषां द्वौ च विज्ञेयौ श्रेष्ठौ तारयितुं द्विजाः॥ १३.५१ ॥

रुद्राक्षाणां पंचमुखखस्तथा चैकमुखः स्मृतः॥
ये धारयंत्येकमुखं रुद्राक्षमनिशं नराः॥
रुद्रलोकं च गच्छंति मोदन्ते रुद्रसंनिधौ॥ १३.५२ ॥

जपस्तपः क्रिया योगः स्नानं दानार्चनादिकम्॥
क्रियते यच्छुभं कर्म्म ह्यनंतं चाक्षधारणात्॥ १३.५३ ॥

शुनः कंठनिबद्धोऽपि रुद्राक्षो यदि वर्तते॥

सोऽपि संतारितस्तेन नात्र कार्या विचारणा॥ १३.५४ ॥

तथा रुद्राक्षसंबंधात्पापमपिक्षयं व्रजेत्॥
एवं ज्ञात्वा शुभं कर्म कार्यं रुद्राक्षबंधनात्॥ १३.५५ ॥

त्रिपुण्ड्रधारणं येषां विभूत्वा मन्त्रपूतया॥
ते रुद्रलोके रुद्राश्च भविष्यंति न संशयः॥ १३.५६ ॥

कपिलायाश्च संगृह्य गोमयं चांतरिक्षगम्॥
शुष्कं कृत्वाथ संदाह्यं विभूत्यर्थं शिवप्रियैः॥ १३.५७ ॥

विभूतीति समाख्याता सर्वपापप्रणाशिनी॥
ललाटेंऽगुष्ठरेखा च आदौ भाव्या प्रयत्नतः॥ १३.५८ ॥

मध्यमां वर्जयित्वा तु अंगुलीक्द्वयेन च॥
एवं त्रिरेखासंयुक्तो ललाटे यस्य दृश्यते॥
स शैवः शिववज्ज्ञेयो दर्शनात्पापनाशनः॥ १३.५९ ॥

जटाधराश्च ये शैवाः सप्त पंच तथा नव॥
जटा ये स्थापियिष्यंति शैवेन विधिना युताः॥ १३.६० ॥

ते शिवं प्राप्नुवं तीह नात्र कार्या विचारणा॥
रुद्राक्षधारणं कार्यं शिवभक्तैर्विशेषतः॥ १३.६१ ॥

अल्पेन वा महत्त्वेन पूजितो वा सदाशिवः॥
कुलकोटिं समुद्धृत्य शिवेन सह मोदते॥ १३.६२ ॥

तस्माच्छिवात्परतरं नास्ति किंचिद्द्विजोत्तमाः॥
यदैवमुच्यते शास्त्रे तत्सर्वं शिवकारणम्॥ १३.६३ ॥

शिवो दाता हि लोकानां कर्ता चैवानुमोदिता॥
शिवशक्त्यात्मकं विश्वं जानीध्वं हि द्विजोत्तमाः॥ १३.६४ ॥

शिवेति द्व्यक्षरं नाम त्रायते महतो भयात्॥
तस्माच्छिवश्चिंत्यतां वै स्मर्यतां च द्विजोत्तमाः॥ १३.६५ ॥

**॥ऋषय ऊचुः॥**
सोमनाथस्य माहात्म्यं ज्ञातं तस्य प्रसादतः॥
राहोः शिरोभयात्सर्वे रक्षिताः परमेष्ठिना॥ १३.६६ ॥

सुराश्चेंद्रादयश्चान्ये तस्मिन्युद्धे सुदारुणे॥
अत ऊर्ध्वं सुराः सर्वे किमकुर्वत उच्यताम्॥ १३.६७ ॥

शिवस्य महिमा सर्वः श्रुतस्तव मुखोद्गतः॥
अथ युद्धस्य वृत्तान्तः कथ्यतां परमार्थतः॥ १३.६८ ॥

**॥लोमश उवाच॥**
यदा हि दैत्यैश्च पराजिताः सुराः शम्भुं च सर्वे शरणं प्रपन्नाः॥
शिवं प्रणेमुः सहसा सुरोत्तमा युद्धाय सर्वे च मनो दधुस्तदा॥ १३.६९ ॥

तथैव दैत्या अपि युध्यमाना उत्साहयुक्तातिबलाश्च सर्वे॥
देवैः समेताश्च पुनः पुनश्च युद्धं प्रचक्रुः परमास्त्रयुक्ताः॥ १३.७० ॥

एवं च सर्वे ह्यसुराः सुराश्च शक्त्यृष्टिशूलैः परिघैः परश्वधैः॥
जयार्थिनोमर्षयुताः परस्परं सिंहा यथा हैमवतीं दुरात्ययाः॥
निहन्यमाना ह्यसुराः सुरैस्तदा नानास्त्रयोगैः परमैर्निपेतुः॥ १३.७१ ॥

चक्रुस्ते सकलामुर्वी मांसशोणितकर्दमाम्॥
महीं वृक्षाद्रिसंयुक्तां ससागरवनाकराम्॥ १३.७२ ॥

शिरांसि च कबन्धानि कवचानि महांति च॥
ध्वजारथाः पताकाश्च गजवाजिशिरांसि च॥ १३.७३ ॥

बहन्त्यश्चापगा ह्यासन्नद्यो भीरुभयावहाः॥
अगाधाः शोणितोदाश्च तरंतो ब्रह्मराक्षसाः॥
तयंति परान्भूतप्रतप्रमथराक्षसान्॥ १३.७४ ॥

शाकिनीडाकिनीसंघा यक्षिण्योऽथ सहस्रशः॥
नानाकेलिषु संयुक्ताः परस्परमुदान्विताः॥ १३.७५ ॥

एवं संक्रीडमानास्ते भूतप्रमथराक्षसाः॥
रणे तस्मिन्महारौद्रे देवासुरसमागमे॥ १३.७६ ॥

बलिना सह देवेन्द्रो युयुधेऽद्भुतविक्रमः॥
शक्त्या जघान देवेंद्रं वैरोचनिरमर्षणः॥ १३.७७ ॥

तां शक्तिं वञ्चयामास महेन्द्रो लघुविक्रमः॥
जघान स बलिं यत्नाद्दैत्येंद्रं परमेण हि॥ १३.७८ ॥

वज्रेण शितधारेण बाहुं चिच्छेद विक्रमी॥
गातासुरपतद्भूमौ विमानात्सूर्यसंन्निभात्॥ १३.७९ ॥

पतितं च बलिं दृष्ट्वा वृषपर्वा रूपान्वितः॥
ववर्ष शरधाराभिः पयोद इव पर्वतम्॥ १३.८० ॥

महेंद्रं सगजं चैव सहमानं शिताञ्छरान्॥
तदा युद्धमभूद्घोरं महेन्द्रवृषपर्वणोः॥ १३.८१ ॥

निपात्य वृषपर्वाणमिंद्रः परबलार्दनः॥ १३.८२ ॥

ततो वज्रेण महता दानवानवधीद्रणे॥
शिरसि च्छेदिताः केचित्केचित्कंधरतो हताः॥ १३.८३ ॥

विह्वलाश्च कृताः केचिदिंद्रेण कुपितेन च॥
तथा यमेन निहता वायुना वरुणेन च॥ १३.८४ ॥

कुबेरेण हताश्चान्ये नैर्ऋतेन तथा परे॥
अग्निना निहताः केचिदीशेनैव विदारिताः॥ १३.८५ ॥

एवं तदा तैर्निहता बलीयसो महासुरा विक्रमशानिनश्च॥
सुरैस्तु सर्वैः सह लोकपालैः शिवप्रसादा भिहतास्तदानीम्॥ १३.८६ ॥

ततो महादैत्यवरो दुरात्मा स कलानेमिः परमास्त्रयुक्तः॥
ययौ तदानीं सुरसत्तमांस्तान्हंतुं सदा क्रूरमतिः स एकः॥ १३.८७ ॥

सिंहारूढो दंशितश्च त्रिशुलेन हि संयुतः॥
दैत्यानामर्बुदेनैव सिंहारूढेन संवृतः॥ १३.८८ ॥

ते सिंहा दंशिताः सर्वे महाबलपराक्रमाः॥
तेषु सिंहेषु चारूढा महादैत्याश्च तत्समाः॥ १३.८९ ॥

आयांतीं दैत्यसेनां तां सर्वां सिंहविभूषिताम्॥
कालनेमियुतां दृष्ट्वा देवा इंद्रपुरोगमाः॥
भयमाजग्मुरतुलं तदा ध्यानपरा भवन्॥ १३.९० ॥

किं कुर्मोऽद्य वयं सर्वे कथं जेष्याम चाद्भुतम्॥
एतादृशमसंख्याकमनीकं सिंहसंवृतम्॥ १३.९१ ॥

एवं विचिंत्यमानास्ते ह्यागतस्तत्र नारदः॥
नारदेन च तत्सर्वं पुरावृत्तं महत्तरम्॥ १३.९२ ॥

कथितं च महेंद्राय कालनेमेस्तपोबलम्॥
अजेयत्वं च संग्रामे वरदानबलेन तु॥ १३.९३ ॥

विष्णुं विना वयं देवा अशक्ता रणमंडले॥
जेतुं च स ततो विष्णुः स्मर्यतां परमेश्वरः॥

तमालनीलो वरदः सर्वैर्विजयकांक्षिभिः॥ १३.९४ ॥

नारदस्य वचः श्रुत्वा तदा देवास्त्वरान्विताः॥
ध्यानेन च महाविष्णुं ततः परबलार्द्दनम्॥
स्मरंतः परमात्मानमिदमूचुश्च तं विभुम्॥ १३.९५ ॥

**॥ देवा ऊचुः॥**
नमस्तुभ्यं भगवते नमस्ते विश्वमंगलम्॥
श्रीनिवास नमस्तुभ्यं श्रीपते ते नमोनमः॥ १३.९६ ॥

अद्यास्मान्भयभीतांस्त्वं कालनेमिभयार्दितान्॥
त्रातुमर्हसि दैत्याच्च देवानामभयप्रद॥ १३.९७ ॥

एवं ध्यातः संस्मृतश्च प्रादुर्भूतो हरिस्तदा॥
नीलो गरुडमारुह्य जगतामभयप्रदः॥ १३.९८ ॥

चक्रपाणिस्तदायातो देवानां विजयाय च॥
गगनस्थं महाविष्णुं गरुडोपरि संस्थितम्॥
श्रीवासमेनं दुर्द्धर्षं योद्धुकामं ददर्शिरे॥ १३.९९ ॥

तथा दृष्ट्वा कालनेमिस्तदानीं प्रहस्यमानोऽतिरुषा बलान्वितः॥
कस्त्वं महाभाग वरेण्यरूपः श्यामो युवा वारणमत्तविक्रमः॥
करे गृहीतं निशितं महाप्रभं चक्रं च कस्मात्कथयस्व मे प्रभो॥ १३.१०० ॥

**॥श्रीभगवानुवाच॥**
युद्धार्थमिह चायातो देवानां कार्यसिद्धये॥
त्वं स्थिरो भव रे मंद दहाम्यद्य न संशयः॥ १३.१०१ ॥

श्रुत्वा भगवतो वाक्यं कालनेमिः प्रतापवान्॥
उवाच रुषितो भूत्वा भगवंतमधोक्षजम्॥ १३.१०२ ॥

मूलभूतो हि देवानां भगवान्युद्धदुर्मदः॥
युद्धं कुरु मया सार्द्धं यदि शूरोऽसि संप्रति॥ १३.१०३ ॥

प्रहस्य भगवान्विष्णुरुवाचेदं महाप्रभः॥
गगनस्थो भव त्वं हि महीस्थोऽहं भवामि वै॥ १३.१०४ ॥

अप्रशस्तं च विषमं युद्धं चैव यथा भवेत्॥
तथा कुरु महाबाहो गगनो वा महीतले॥ १३.१०५ ॥

तथेति मत्वा हि महानुभावो दैत्यैः समेतोऽर्बुदसंख्यकैश्च॥
सिंहोपरिस्थैश्च महानुभावैर्महाबलैः क्रूरतरैस्तदानीम्॥ १३.१०६ ॥

गगनमथ जगाहे मंदमंदं महात्मा हयसुरगणसमेतो विश्वरूपं जिघांसुः॥
त्रिशिखमपरमुग्रं गृह्य संदेशचेष्टादशनविकृतवक्त्रो योद्धुकामो हरिं सः॥ १३.१०७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे समुद्रमंथनाख्याने देवासुरसंग्रामवर्णनंनाम त्रयोदशोऽध्यायः॥ १३ ॥

**॥लोमश उवाच॥**

ततो युद्धमतीवासीदसुरैर्विष्णुना सह॥
ततः सिंहाः सपक्षास्ते दंशिताः परमाद्भुताः॥ १४.१ ॥

असुरैरुह्यमानास्ते रहुत्मंतं व्यदारयन्॥
सिंहास्ते दारितास्तेन खंडशश्च विदारिताः॥ १४.२ ॥

विष्णुना च तदा दैत्याश्चक्रेण शकलीकृताः॥
हतांस्तानसुरान्दृष्ट्वा कालनेमिः प्रतापवान्॥ १४.३ ॥

त्रिशूलेनाहनद्विष्णुं रोषपर्याकुलेक्षणः॥
तमायांतं च जगृहे मुकुंदोऽनाथसंश्रयः॥ १४.४ ॥

करेण वामेन जघान लीलया तं कालनेमिं ह्यसुरं महाबलम्॥
तेनैव शूलेन समाहतोऽसौ मूर्च्छान्वितोऽसौ सहसा पपात॥ १४.५ ॥

पतितः पुनरुत्थाय शनैरुन्मील्य लोचने॥
पुरतः स्थितमालोक्य विष्णुं सर्वगुहाशयम्॥ १४.६ ॥

लब्धसंज्ञोऽब्रवीद्वाक्यं कालनेमिर्महाबलः॥
तव युद्धं न दास्यामि नास्ति लोके स्पृहा मम॥ १४.७ ॥

ये येऽसुरा हता युद्धे अक्षयं लोकमाप्नुयुः॥
ब्रह्मणो वचनात्सद्य इंद्रेण सह संगताः॥ १४.८ ॥

भुंजतो विविधान्भोगान्देववद्विचरंति ते॥
इंद्रेण सहिताः सर्वे संसारे च पतंत्यथ॥ १४.९ ॥

तस्माद्युद्धेन मरणं न कांक्षे क्षणभंगुरम्॥
अन्यजन्मनि मे वीर वैरभावान्न संशयः॥
दातुमर्हसि मे नाथ कैवल्यं केवलं परम्॥ १४.१० ॥

तथेति दैत्यप्रवरो निपातितः परेण पुंसा परमार्थदेन॥
दत्त्वाऽभयं देवतानां तदानीं तथा सुधां देवताभ्यः प्रदत्त्वा॥ १४.११ ॥

कालनेमिर्हतो दैत्यो देवा जाता ह्यकटकाः॥
शल्यरूपो महान्सद्यो विष्णुना प्रभविष्णुना॥ १४.१२ ॥

तिरोधानं गतः सद्यो भगवान्कमलेक्षणः॥
इंद्रोऽपि कदनं कृत्वा दैत्यानां परमाद्भुतम्॥ १४.१३ ॥

पतितानां क्लीबरूपाणां भग्नानां भीतचेतसाम्॥

मुक्तकच्छशिखानां च चक्रे स कदनक्रियाम्॥ १४.१४ ॥

अर्थशास्त्रपरो भूत्वा महेंद्रो दुरातिक्रमः॥
दैत्यानां कालरूपोऽसौ शचीपतिरुदारधीः॥ १४.१५ ॥

एवं निहन्य्मानानामसुराणां शचीपतेः॥
निवारणार्थं भगवानागतो नारदस्तदा॥ १४.१६ ॥

**॥ नारद उवाच॥**
युद्धहताश्च ये वीरा ह्यसुरा रणमण्डले॥
तेषामनु कथं कर्ता भीतानां च विहिंसनम्॥ १४.१७ ॥

ये भीतांश्च प्रपन्नांश्चघातयंति मदोद्धताः॥
ब्रह्मघ्नास्तेऽपि विज्ञेया महापातकसंयुताः॥ १४.१८ ॥

तस्मात्त्वया न कर्त्तव्यं मनसापि विहिंसनम्॥
एवमुक्तस्तदा शक्रो नारदेन महात्मना॥ १४.१९ ॥

सुरसेनान्वितः सद्य आगतो हि त्रिविष्टपम्॥
तदा सर्वे सुरगणाः सुहृद्भ्यश्च परस्परम्॥
बभूवुर्मुदिताः सर्वे यक्षगंधर्वकिंनराः॥ १४.२० ॥

तदा इंद्रोऽमरावत्यां हस शच्याऽभिषेचितः॥ १४.२१ ॥

देवर्षिप्रमुखैश्चैव ब्रह्मर्षिप्रमुखैस्तथा॥
शक्रोऽपि विजयं प्राप्तः प्रसादाच्छंकरस्य च॥ १४.२२ ॥

तदा महोत्सवो विप्रा देवलोके महानभूत्॥
शंखाश्च पटहाश्चैव मृदंगा मुरजा अपि॥
तथानकाश्च भेर्यश्च नेदुर्दुंदुभयः समम्॥ १४.२३ ॥

गायकाश्चैव गंधर्वाः किन्नराश्चाप्सपोगणाः॥
ननृतुर्जगुस्तुष्टुवुश्च सिद्धचारणगुह्यकाः॥ १४.२४ ॥

एवं विजयमापन्नः शक्रो देवेस्वरस्तदा॥
देवैर्हतास्तदा दैत्याः पतितास्ते महीतले॥ १४.२५ ॥

गतासवो महात्मानो बलिप्रमुखतो ह्यमी॥
तपस्तप्तुं पुरा विप्रो भार्गवो मानसोत्तरम्॥ १४.२६ ॥

गतः शिष्यैः परिवृतस्तस्माद्युद्धं न वेद तत्॥
अवशेषाश्च ये दैत्यास्ते गता भार्गवं प्रति ॥ १४.२७ ॥

कथितं वै महद्धृत्तमसुराणां क्षयावहम्॥
निशम्य मन्युमाविष्टो ह्यागतो भृगुनंदनः॥ १४.२८ ॥

शिष्यैः परिवृतो भूत्वा मृतांस्तानसुरानपि॥
विद्यया मृतजीविन्या पतितान्समजीवयत्॥ १४.२९ ॥

निद्रापायगता यद्वदुत्थितास्ते तदाऽसुराः॥
उत्थितः स बलिः प्राह भार्गवं ह्यमितद्युतिम्॥ १४.३० ॥

जीवितेन किमद्यैव मम नास्ति प्रयोजनम्॥
पातितस्त्रिदशेंद्रेण यथा कापुरुषस्तथा॥ १४.३१ ॥

बलिनोक्तं वचः श्रुत्वा शुक्रो वचनमब्रवीत्॥
मनस्विनो हि ये शूराः पतंति समरे बुधा॥ १४.३२ ॥

ये शस्त्रेण हताः सद्यो म्रियमाणा व्रजंति वै॥
त्रिविष्टपं न संदेह इति वेदानुशासनम्॥ १४.३३ ॥

एवमाश्वासयामास बलिनं भृगुनंदनः॥
तपस्तताप विविधं दैत्यानां सिद्धिदायकम्॥ १४.३४ ॥

तथा दैत्य गताः सर्वे भृगुणा च प्रचोदिताः॥
पातालमवसन्सर्वे बलिमुख्याः सुखेन वै॥ १४.३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे देवासुरसंग्रामे भार्गवेण मृतदैत्यसंजीवनवर्णनंनाम चतुर्दशोऽध्यायः॥ १४ ॥ छ ॥

**॥ ऋषय ऊचुः॥**

राज्यं प्राप्तो हि देवेंद्रः कथितस्ते गुरुं विना॥

गुरोरवज्ञया जातो राज्यभ्रंशो हि तस्य तु॥ १५.१ ॥

केन प्रणोदितश्चेंद्रो बभूव चिरमासने॥

तत्सर्वं कथयाशु त्वं परं कौतूहलं हि नः॥ १५.२ ॥

**॥लोमश उवाच॥**

गुरुणापि विना राज्यं कृतवान्स शचीपतिः॥

विश्वरूपोक्तविधिना इंद्रो राज्ये स्थितो महान्॥ १५.३ ॥

विश्वकर्मसुतो विप्रा विश्वरूपो महानृपः॥

पुरोहितोऽथ शक्रस्य याजकश्चाभवत्तदा॥ १५.४ ॥

तस्मिन्यज्ञेऽवदानैश्च यजने असुरान्सुरान्॥

मनुष्यांश्चैव त्रिशिरा अपरोक्षं शचीपतेः॥ १५.५ ॥

देवान्ददाति साक्रोशं दैत्यांस्तूष्णीमथाददात्॥

मनुष्यान्मध्यपातेन प्रत्यहं स ग्रहान्द्विजः॥ १५.६ ॥

एकदा तु महेंद्रेण सूचितो गुरुलाघवात्॥

अलक्ष्यमाणेन तदा ज्ञातं तस्य चिकीर्षितम्॥ १५.७ ॥

दैत्यानां कार्यसिद्ध्यर्थमवदानं प्रयच्छति॥

असौ पुरोहितोऽस्माकं परेषां च फलप्रदः॥ १५.८ ॥

इति मत्वा तदा शक्रो वज्रेण शतपर्वणा॥

चिच्छेद तच्छिरांस्येव तत्क्षणादभवद्वधः॥ १५.९ ॥

येनाकरोत्सोमपानमजायंत कपिंजलाः॥

ततोन्येन सुरापानात्कलविंका भवन्मुखात्॥ १५.१० ॥

अन्याननादजायंत तित्तिरा विश्वरूपिणः॥

एवं हतो विश्वरूपः शक्रेण मंदभागिना॥ १५.११ ॥

ब्रह्महत्या तदोद्भूता दुर्धर्षा च भयावहा॥

दुर्धर्षा दुर्मुखा दुष्टा चण्डालरजसान्विता॥ १५.१२ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः॥

इत्येषामप्यघवतामिदमेव च निष्कृतिः॥ १५.१३ ॥

नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः॥

त्रिशिरा धूम्रहस्ता सा शक्रं ग्रस्तुमुपाययौ॥ १५.१४ ॥

ततो भयेन महता पलायनपरोऽभवत्॥

पलायमानं तं दृष्ट्वा ह्यनुयाता भयावहा॥ १५.१५ ॥

यतो धावति साऽधावत्तिष्ठंतमनुतिष्ठति॥

अंगकृता यथा छाया शक्रस्यपरिवेष्टितुम्॥
आयाति तावत्सहसा इंद्रोऽप्यप्सु न्यमज्जत॥ १५.१६ ॥
शीघ्रत्वेन यथा विप्राश्चिरंतनजलेचरः॥ १५.१७ ॥
एवं दिव्यशतं पूर्णं वर्षाणां च शचीपतेः॥
वसतस्तस्य दुःखेन तथा चैव शतद्वयम्॥
अराजकं तदा जातं नाकपृष्ठे भयावहम्॥ १५.१८ ॥
तदा चिंतान्विता देवा ऋषयोऽपि तपस्विनः॥
त्रैलोक्यं चाऽऽपदा ग्रस्तं बभूव च तदा द्विजाः॥ १५.१९ ॥
एकोऽपि ब्रह्महा यत्र राष्ट्रे वसति निर्भयः॥
अकालमरणं तत्र साधूनामुपजायते॥ १५.२० ॥
राजा पापयुतो यस्मिन्राष्ट्रे वसति तत्र वै॥
दुर्भिक्षं चैव मरणं तथैवोपद्रवा द्विजाः॥ १५.२१ ॥
भवंति बहवोऽनर्थाः प्रजानां नाशहेतवे॥
तस्माद्राज्ञा तु कर्तव्यो धर्म्मः श्रद्धापरेण हि॥ १५.२२ ॥
तथा प्रकृतयो राज्ञः शुचजित्वेन प्रतिष्ठिताः॥
इन्द्रेण च कृतं पापं तेन पापेन वै द्विजाः॥
नानाविधैर्महातापैः सोपद्रवमभूज्जगत्॥ १५.२३ ॥
**॥शौनक उवाच॥**
अश्वमेधशतेनैव प्राप्तं राज्यं महत्तरम्॥
देवानामखिलं सूत कस्माद्विघ्नमजायत॥
शक्रस्य च महाभाग यथावत्कथयस्व न॥ १५.२४ ॥
**॥सूत उवाच॥**
देवानां दानवानां च मनुष्याणां विशेषतः॥
कर्म्मैव सुखदुःखानां हेतुभूतं न संशयः॥ १५.२५ ॥
इन्द्रेण च कृतं विप्रा महद्भूतं जुगुप्सितम्॥
गुरोरवज्ञा च कृता विश्वरूपवधः कृतः॥ १५.२६ ॥
गौतमस्य गुरोः पत्नी सेविता तस्य तत्फलम्॥
प्राप्तं महेंद्रेण चिरं यस्य नास्ति प्रतिक्रिया॥ १५.२७ ॥
ये हि दृष्कटतकर्म्माणो न कुर्वंति च निष्कृतिम्॥
दुर्दशां प्रप्नुवन्त्येते यथैवेन्द्रः शतक्रतुः॥ १५.२८ ॥
दुष्कृतोपार्जितस्या तः प्रायाश्चित्तं हि तत्क्षणात्॥
कर्तव्यं विधिवद्विप्राः सर्वपापोपशांतये॥ १५.२९ ॥
उपपातकमध्यस्तं महापातकतां व्रजेत्॥ १५.३० ॥

ततः स्वधर्मनिष्ठां च ये कुर्वंति सदा नराः॥
प्रातर्मध्याह्नसायाह्ने तेषां पापं विनश्यति॥ १५.३१ ॥
प्राप्नुवंत्युत्तमं लोकं नात्र कार्या विचारणा॥
तस्मादसौ दुराचारः प्राप्ते वै कर्मणः फलम्॥ १५.३२ ॥
स प्रधार्य तदा सर्वे लोकपालास्त्वरान्विताः॥
बृहस्पतिमुपागम्य सर्वमात्मनि धिष्ठितम्॥
कथयामासुरव्यग्रा इंद्रस्य च गुरुं प्रति॥ १५.३३ ॥
देवैरुक्तं वचो विप्रा निशम्य च बृहस्पतिः॥
अराजकं च संप्राप्तं चिंतयामास बुद्धिमान्॥ १५.३४ ॥
किं कार्यं चाद्य कर्तव्यं कथं श्रेयो भविष्यति॥
देवानां चाद्य लोकानामृषीणां भावितात्मनाम्॥ १५.३५ ॥
मनसैव च तत्सर्वं कार्याकार्यं विचार्य च॥
जगाम शक्रं त्वरितो देवैः सह महायशाः॥ १५.३६ ॥
प्राप्तो जलाशयं तं च यत्रास्ते हि पुरंदरः॥
यस्य तीरे स्थिता हत्या चंडालीव भयावहा॥ १५.३७ ॥
तत्रोविष्टास्ते सर्वे देवा ऋषिगणान्विताः॥
आह्वानं च कृतं तस्य शक्रस्य गुरुणा स्वयम्॥ १५.३८ ॥
समुत्थितस्ततः शक्रो ददर्श स्वगुरुं तदा॥
बाष्पपूरितवक्त्रो हि बृहस्पतिमभाषत॥ १५.३९ ॥
प्रणिपत्य च तत्रत्यान्कृताञ्जलिरभाषत॥
तदा दीनमुखो भूत्वा मनसा संविमृश्य च॥ १५.४० ॥
स्वयमेव कृतं पूर्वमज्ञानलक्षणं महत्॥
अधुनैव मया कार्यं किं कर्तव्यं वद प्रभो॥ १५.४१ ॥
प्रहस्योवाच भगवान्बृहस्पति रुदारधीः॥
पुरा त्वया कृतं यच्च तस्येदं कर्मणः फलम्॥ १५.४२ ॥
मां च उद्दिश्य भो इंद्र तद्योगादेव संक्षयः॥
प्रायश्चितं हि हत्याया न दृष्टं स्मृतिकारिभिः॥ १५.४३ ॥
अज्ञानतो हि यज्जातं पापं तस्य प्रतिक्रिया॥
कथिता धर्म्मशास्त्रज्ञैः सकामस्य न विद्यते॥ १५.४४ ॥
सकामेन कृतं पापमकामं नैव जायते॥
ताभ्यां विषयभेदेन प्रायश्चित्तं विधीयते॥ १५.४५ ॥
मरणांतो विधिः कार्यो कामेन हि कृतेन हि॥
अज्ञानजनिते पापे प्रायश्चित्तं विधीयते॥ १५.४६ ॥

तस्मात्त्वया कृतं यच्च स्वयमेव हतो द्विजः॥
पुरोहितश्च विद्वांश्च तस्मान्नास्ति प्रतिक्रिया॥ १५.४७ ॥
यावन्मरणमप्येति तावदप्सु स्थिरो भव॥ १५.४८ ॥
शताश्वमेधसंज्ञं च यत्फलं तव दुर्मते॥
तन्नष्टं तत्क्षणादेव घातितो हि द्विजो यदा॥ १५.४९ ॥
सच्छिद्रे च यथा तोयं न तिष्ठति घटेऽण्वपि॥
तथैव सुकृतं पापे हीयते च प्रदक्षिणम्॥ १५.५० ॥
तस्माच्च दैवसंयोगात्प्राप्तं स्वर्गादिकं च यैः॥
यथोक्तं तद्भवेत्तेषां धर्मिष्ठानां न संशयः॥ १५.५१ ॥
एतच्छ्रुत्वा वचस्तस्य शक्रो वचनमब्रवीत्॥
कुकर्मणा मदीयेन प्राप्तमेतन्न संशयः॥ १५.५२ ॥
अमरावती माशु त्वं गच्छ देवर्षिबिः सह॥
लोकानां कार्यसिद्ध्यर्थे देवानां च बृहस्पते॥
इंद्रं कुरु महाभाग यस्ते मनसि रोचते॥ १५.५३ ॥
यथा मृतस्तथा हं वै ब्रह्महत्यावृतो महान्॥
रागद्वेषसमुत्थेन पापेनास्मि परिप्लुतः॥ १५.५४ ॥
तस्मात्त्वरान्विता यूयं देवराजानमाशुः वै॥
कुर्वंतु मदनुज्ञाताः सत्यं प्रतिवदामि वः॥ १५.५५ ॥
एवमुक्तास्तदा सर्वे बृहस्पतिपुरोगमाः॥
एत्यामरावतीं तूर्णं पुरंदरविचेष्टितम्॥
कथयामासुरव्यग्रा शचीं प्रति यथा तथा॥ १५.५६ ॥
राज्यस्य हेतोः किं कार्यं विमृशंतः परस्परम्॥ १५.५७ ॥
एवं विमृश्यमानानां देवानां तत्र नारदः॥
यदृच्छयागतस्तत्र देवर्षिरमितद्युतिः॥ १५.५८ ॥
उवाच पूजितो देवान्कस्माद्यूयं विचेतसः॥
तेनोक्ताः कथयामासुः सर्वं शक्रस्य चेष्टितम्॥ १५.५९ ॥
गतमिंद्रस्य चेंद्रत्वमेनसा परमेण तु॥
ततः प्रोवाच तान्देवान्देवर्षिर्नारदो वचः॥ १५.६० ॥
यूयं देवाश्च सर्वज्ञास्तपसा विक्रमेण च॥
तस्मादिंद्रो हि कर्तव्यो नहुषः सोमवंशजः॥ १५.६१ ॥
सोऽस्मिन्राष्ट्रे प्रतिष्ठाप्यस्त्वरितेनैव निर्जराः॥
एकोनमश्वमेधानां शतं तेन महात्मना॥
कृतमस्ति महाभागा नहुषेण च यज्वना॥ १५.६२ ॥

शच्या श्रुतं च तद्वाक्यं नारदस्य मुखोद्गतम्॥
गतांतःपुरमव्यग्रा बाष्पपूरितलोचना॥ १५.६३ ॥
नारदस्य वचः श्रुत्वा सर्वे देवान्वमोदयन्॥ १५.६४ ॥
नहुषं राज्यमारोढुमैकपद्येन ते यदा॥
आनीतो हि तदा राजा नहुषो ह्यमरावतीम्॥ १५.६५ ॥
राज्यं दत्तं महेंद्रस्य सुरैः सर्वैर्महर्षिभिः॥
तदागस्त्यादयः सर्वे नहुषं पर्युपासत॥ १५.६६ ॥
गंधर्वाप्सरसो यक्षा विद्याधरमहोरगाः॥
यक्षाः सुपर्णाः पतगा ये चान्ये स्वर्गवासिनः॥ १५.६७ ॥
तदा महोत्सवो जातो देवपुर्यां निरंतरः॥
शंखतूर्यमृदंगानि नेदुर्दुंदुभयः समम्॥ १५.६८ ॥
गायकाश्च जगुस्तत्र तथा वाद्यानि वादकाः॥
नर्तका ननृतुस्तत्र तथा राज्यमहोत्सवे॥ १५.६९ ॥
अभिषिक्तस्तदा तत्र बृहस्पतिपुरोगमैः॥ १५.७० ॥
अर्चितो देवसूक्तैश्च यथा वद्ग्रहपूजनम्॥
कृतवांश्चैव ऋषिभिर्विद्वद्भिर्भावितात्मभिः॥ १५.७१ ॥
तथा च सर्वैः परिपूजितो महान्राजा सुराणां नहुषस्तदानीम्॥
इंद्रासने चेंद् समानरूपः संस्तूयमानः परमेण वर्चसा॥ १५.७२ ॥
सुगंधदीपैश्च सुवाससा युतोऽलंकारभोगैः सुविराजितांगः॥
बभौ तदानीं नहुषो मुनीद्रैः संस्तूयमानो हि तथाऽमरेंद्रैः॥ १५.७३ ॥
इति परमकलान्वितोऽसौ सुरमुनिवरगणैश्च पूज्यमानः॥
नहुषनृपवरोऽभवत्तदानीं हृदि महता हृच्छयेनतप्तः॥ १५.७४ ॥
**॥नहुष उवाच॥**
इंद्राणी कथमद्यैव नायाति मम सन्निधौ॥
तां चाह्वयत शीघ्रं भो मा विलंबितुमर्हथ॥ १५.७५ ॥
नहुपस्य वचः श्रुत्वा बृहस्पतिरुदारधीः॥
शचीभवनमासाद्य उवाच च सविस्तरम्॥ १५.७६ ॥
शक्रस्य दुर्निमित्तेन ह्यनीतो नहुषोऽत्र वै॥
राज्यार्ते भामिनि त्वं च अर्द्धासनगता भव॥ १५.७७ ॥
शची प्रहस्य चोवाच बृहस्पतिमकल्मषम्॥
असौ न परिपूर्णो हि यज्ञैः शक्रासने स्थितः॥
एकोनमश्वमेधानां शतं कृतमनेन वै॥ १५.७८ ॥
तस्मान्न योग्यो प्रहस्य चोवाच बृहस्पतिमकल्पणषम्॥

असौ न परिपूर्णो हि यज्ञैः शक्रासने स्थितः॥
अवाह्यवाहनेनैव अत्रागत्य लभेत माम्॥ १५.७९ ॥
तथेति गत्वा त्वरितो बृहस्पतिरुवाच तम्॥
नहुषं कामसंतप्तं शच्योक्तं च यथातथम्॥ १५.८० ॥
तथेति मत्वा राजासौ नहुषः काममोहितः॥
विमृश्य परया बुद्ध्या अवाह्यं किं प्रशस्यते॥ १५.८१ ॥
स बुद्ध्या च चिरं स्मृत्वा ब्राह्मणाश्चतपस्विनः॥
अवाह्याश्च भवंत्यस्मादात्मानं वाहयाम्यहम्॥ १५.८२ ॥
द्वाभ्यां च तस्याः प्राप्त्यर्थमिति मे हृदि वर्तते॥
शिबिकां च ददौ ताभ्यां द्विजाभ्यां काममोहितः॥ १५.८३ ॥
उपविश्य तदा तस्यां शिवबिकायां समाहितः॥
सर्पसर्पेति वचनान्नोदयामास तौ तदा॥ १५.८४ ॥
अगस्त्यः शिबिकावाही ततः क्रुद्धोऽशपन्नृपम्॥
विप्राणामवमंता त्वमुन्मत्तोऽजगरो भव॥ १५.८५ ॥
शापोक्तिमात्रतो राजा पतितो ब्राह्मणस्य हि॥
तत्रैवाजगरो भूत्वा विप्रशापो दुरत्ययः॥ १५.८६ ॥
यथा हि नहुषो जातस्तथा सर्वेऽपि तादृशाः॥
विप्राणामवमानेन पतिन्ति निरयेऽशुचौ॥ १५.८७ ॥
तस्मासर्वप्रयत्नेन पदं प्राप्य विचक्षणैः॥
अप्रमत्तैर्नरैर्भाव्यमिहामुत्र च लब्धये॥ १५.८८ ॥
तथैव नहुषः सर्प्पो जातोरण्ये महाभये॥
एवं चैवाभवत्तत्र देवलोके ह्यराजकम्॥ १५.८९ ॥
तथैव ते सुराः सर्वे विस्मयाविष्टचेतसः॥
अहो बत महत्कष्टं प्राप्तं राज्ञा ह्यनेन वै॥ १५.९० ॥
न मर्त्य लोको न स्वर्गो जातो ह्यस्य दुरात्मनः॥
सतामवज्ञया सद्यः सुकृतं दग्धमेव हि॥ १५.९१ ॥
याज्ञिको ह्यपरो लोके कथ्यतां च महामुने॥
तदोवाच महातेजा नारदो मुनिसत्तमः॥ १५.९२ ॥
ययातिं च महाभागा आनयध्वं त्वरान्विताः॥
देवदूतास्तु वै तूर्णं ययातिं द्रुतमानयन्॥ १५.९३ ॥
विमानमारुह्य तदा महात्मा ययौ दिवं देवदूतैः समेतः॥
पुरस्कृतो देववरैस्तदानीं तथोरगैर्यक्षगंधर्वसिद्धैः॥ १५.९४ ॥
आयातः सोऽमरावत्यां त्रिदशैरभितोषितः॥

इंद्रासने चोपविष्टो बभाषे च स सत्वरम्॥ १५.९५ ॥
नारदेनैवमुक्तस्तु त्वं राजा याज्ञिको ह्यसि॥
सतामवज्ञया प्राप्तो नहुषो दंदशूकताम्॥ १५.९६ ॥
ये प्राप्नुवंति धर्मिष्ठा दैवेन परमं पदम्॥
प्राक्तनेनैव मूढास्ते न पश्यंति शुभाशुभम्॥ १५.९७ ॥
पतंति नरके घोरे स्तब्धा वै नात्र संशयः॥ १५.९८ ॥
**॥ययातिरुवाच॥**
यैः कृतं पुण्यं तेषां विघ्नः प्रजायते॥
अल्पकत्वेन देवर्षे विद्धि सर्वं परं मम॥ १५.९९ ॥
महादानानि दत्तानि अन्नदानयुतानि च॥
गोदानानि बहून्येव भूमिदानयुतानि च॥ १५.१०० ॥
तथैव सर्वाण्यपि चोत्तमानि दानानि चोक्तानि मनीषिभिर्यदा॥
एतानि सर्वाणि मया तदैव दत्तानि काले च महाविधानतः॥ १५.१०१ ॥
यज्ञैरिष्टं वाजपेयातिरात्रैर्ज्योतिष्टोमै राजसूयादिभिश्च॥
शास्त्रप्रोक्तैरश्वमेधादिभिश्च यूपैरेषालंकृता भूः समंतात्॥ १५.१०२ ॥
देवदेवो जगन्नाथ इष्टो यज्ञैरनेकशः॥
गालवाय पुरे दत्ता कन्या त्वेषा च माधवी॥ १५.१०३ ॥
पत्नीत्वेन चतुर्भ्यश्च दत्ताः कन्या मुने तदा॥
गालवस्य गुरोरर्थे विश्वामित्रस्य धीमतः॥ १५.१०४ ॥
एवं भूतान्यनेकानि सुकृतानि मया पुरा॥
महांति च बहून्येव तानि वक्तुं न पार्यते॥ १५.१०५ ॥
भूयः पृष्टः सर्वदेवैः स राजा कृतं सर्वं गुप्तमेव यथार्थम्॥
विज्ञातुमिच्छाम यथार्थतोपि सर्वे वयं श्रोतुकामा ययाते॥ १५.१०६ ॥
वचो निशम्य देवानां ययातिरमितद्युतिः॥
कथयामास तत्सर्वं पुण्यशेषं यथार्थतः॥ १५.१०७ ॥
कथितं सर्वमेतच्च निःशेषं व्यासवत्तदा॥
स्वपुण्यकथनेनैव ययातिरपतद्भुवि॥ १५.१०८ ॥
तत्क्षणादेव सर्वेषां सुराणां तत्र पश्यताम्॥
एवमेव तथा जातमराजकमतंद्रितम्॥ १५.१०९ ॥
अन्यो न दृश्यते लोके याज्ञिको यो हि तत्र वै॥
शक्रासनेऽभिषे कार्यं श्रूयतां हि द्विजोत्तमाः॥ १५.११० ॥
सर्वे सुराश्च ऋषयोऽथ महाफणींद्रा गन्धर्वयक्षखगचारणकिंनराश्च॥
विद्याधराः सुरगणाप्सरसां गणाश्च चिंतापराः समभवन्मनुजास्तथैव॥ १५.१११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे देवेन्द्रस्वाराज्याभिषेकवृत्तान्ते देवेन्द्रस्य ब्रह्महत्ययोपद्रुतौ नहुषशापययातिभूषण्यवृत्तान्तवर्णनंनाम पंचदशोऽध्यायः॥ १५ ॥ छ ॥

**॥लोमश उवाच॥**

ततः शची तान्प्रोवाच वाचं धर्मार्थसंयुताम्॥
मा चिंता क्रियतां देवा बृहस्पतिपुरोगमः॥ १६.१ ॥
गच्छत त्वरिताः सर्वे शक्रं द्रष्टुं विचक्षणाः॥
ब्रह्महत्याभिभूतोऽसौ यत्रास्ते सुरसत्तमः॥ १६.२ ॥
बहूनां कारणेनैव विश्वरूपे हि मंदधीः॥
हतस्तेन महेंद्रेण सर्वैः सोऽपि निराकृतः॥ १६.३ ॥
तस्मात्सर्वैर्भवद्भिश्च गंतव्यं यत्र स प्रभुः॥
अवज्ञा हि कृता पूर्वं महेंद्रेण तवानघ॥ १६.४ ॥
अवज्ञामात्रक्षुबंधेन त्वया शप्तः पुरंदरः॥
तथैव शापितश्चासि मया त्वं हि बृहस्पते॥ १६.५ ॥
निरस्तोऽपि हि तस्मात्त्वमवसानपरो भव॥ १६.६ ॥
यथा मदर्थमानीतौ शक्रे जीवति तावुभौ॥
त्वयि जीवति भो ब्रह्मन्कार्यं तव करिष्यति॥ १६.७ ॥
कोऽपि सौभाग्यवाँल्लोके तव क्षेत्रे जनिष्यति॥
पुत्रं विख्यातनामानमत्रनैवास्ति संशयः॥ १६.८ ॥
गच्छ शीघ्रं सुरैःसार्द्धं शक्रमानय म चिरम्॥
प्रयासि त्वरितो नो चेत्पुनः शापं ददामि ते॥ १६.९ ॥
शच्योक्तं वचनं श्रुत्वा सुरैः सार्द्धं जगाम सः॥
पुरंदरं गताः सर्वे ब्रह्महत्याभिपीडितम्॥ १६.१० ॥
सरसस्तीरमासाद्य ते शक्रं चाभ्यवादयन्॥
दृष्टाः शक्रेम ते सर्वे तदा ह्यप्सु स्थितेन वै॥ १६.११ ॥
उवाच देवानेदेवेशः कस्माद्यूयमिहागताः॥
अहं हि पातकग्रस्तो ब्रह्महत्यापरिप्सुतः॥
अप्सु तिष्ठामि भो देवा एकाकी तपसान्वितः॥ १६.१२ ॥
तच्छ्रुत्वा वचनं तस्य सर्वे देवाः शतक्रतोः॥
ऊचुर्विह्वलिता एनं देवराजानमद्भुतम्॥ १६.१३ ॥
एतादृशं न वाच्यं ते परेषामुपकारतः॥
कृतं त्वयैव यत्कर्म विश्वरूपवधादिकम्॥ १६.१४ ॥
विश्वकर्मसुतेनैव कृतं याजनमद्भुतम्॥
येन देवाः क्षयं यांति ऋषयोऽपि महाप्रभाः॥ १६.१५ ॥
तस्माद्वतस्त्वया देव परेषामुपकारतः॥
ततः सर्वे वयं प्राप्तास्त्वां नेतुममरावतीम्॥ १६.१६ ॥

एवं विवदमानेषु देवेषु च तदाऽब्रवीत्॥
ब्रह्महत्या त्वरायुक्ता देवेंद्रं वरयाम्यहम्॥ १६.१७ ॥
तदा बृहस्पतिर्वाक्यमुवाच सहसैव तु॥ १६.१८ ॥
**॥बृहस्पतिरुवाच॥**
वासार्थं च करिष्यामः स्थानानि तव सांप्रतम्॥
प्रसांत्विता तदा हत्या देवैस्तत्कार्यगौरवात्॥ १६.१९ ॥
विमृश्य सर्वे विभजुश्चतुर्द्धा हत्यां सुरास्ते ऋषयो मनीषिणः॥
यक्षाः पिशाचा उरगाः पतंगास्तथा च सर्वे सुरसिद्धचारणाः॥ १६.२० ॥
आदौ क्षमां प्रति तदा ऊचुः सर्वे दिवौकसः॥
हे क्षमेंऽशस्त्वया ग्राह्यो हत्यायाः कार्यसिद्धये॥ १६.२१ ॥
सुराणां तद्वचः श्रुत्वा धरित्री कंपिताऽवदत्॥
कथं ग्राह्ये मया ह्यंशो हत्यायास्तद्विमृश्यताम्॥ १६.२२ ॥
अहं हि सर्वभूतानां धात्री विश्वं धराम्यहम्॥
अपवित्रा भविष्यामि एनसा संवृता भृशम्॥ १६.२३ ॥
पृथ्वयास्तद्वचनं श्रुत्वा बृहस्पतिरुवाच ताम्॥
मा भौषीश्चारुसर्वांगि निष्पापासि न चान्यथा॥ १६.२४ ॥
यदा यदुकुले श्रीमान्वासुदेवो भविष्यति॥
तदा तत्पदविन्यासान्निष्पापा त्वं भविष्यसि॥ १६.२५ ॥
कुरु वाक्यं त्वमस्माकं नात्र कार्या विचारणा॥ १६.२६ ॥
इत्युक्ता पृथिवी तेषां निष्पापा साकरोद्वचः॥
ततो वृक्षान्समाहूय सर्वे देवाऽब्रुवन्वचः॥ १६.२७ ॥
हत्यांशो हि ग्रहीतव्यो भवद्भिः कार्यसिद्धये॥
एवमुक्ताऽब्रुवन्वबृक्षा देवान्सर्वे समागताः॥ १६.२८ ॥
वयं सर्वे तथा भूतास्तापसानां फलप्रदाः॥
तदा हत्यान्विताः सर्वे भविष्यंति तपस्विनः॥ १६.२९ ॥
पापिनो हि महाभागास्तस्मात्सर्वं विमृश्यताम्॥
तदा पुरोधसा चोक्ताः सर्वे वृक्षाः समागताः॥ १६.३० ॥
मा चिंता क्रियतां सर्वैः प्रसादाच्च शतक्रतोः॥
छेदिताश्चैव सर्वे वै ह्यनेकांशत्वमागताः॥ १६.३१ ॥
ततो विटपिनो नित्यं यूयं सर्वे भविष्यथ॥
इत्युक्तास्ते तदा सर्वेगृह्णन्हत्यां विभागशः॥ १६.३२ ॥
ततो ह्यपः समाहूय ऊचुः सर्वे दिवौकसः॥
अद्भिश्च गृह्यतामद्य हत्यांशः कार्यसिद्धये॥ १६.३३ ॥

तदा ह्यापो मिलित्वाथ ऊचुः सर्वाः पुरोधसम्॥
यानि कानि च पापानि तथा दुश्चरितानि च॥ १६.३४ ॥
अस्मत्संपर्कसंबंधात्स्नानशौचाशनादिभिः॥
पुनंति प्राणिनः सर्वे पापेन परिवेष्टिताः॥ १६.३५ ॥
तासां वचनमाकर्ण्य बृहस्पतिरुवाच ह॥
मा भयं क्रियतामाप एनसा दुस्तरेण हि॥ १६.३६ ॥
आपः पुनंतु सर्वेषां चराचरनिवासिनाम्॥
तदा स्त्रियः समाहूय बृहस्पतिरुवाच ह॥ १६.३७ ॥
अद्यैव ग्राह्ये हत्यांशः सर्वकार्यार्थसिद्धये॥
निशम्य तद्गुरोर्वाक्यमूचुः सर्वाश्चयोपितः॥ १६.३८ ॥
पापमाचरते योषा तेन पापेन नान्यथा॥
लिप्यंते बहवः पक्षा इति वेदानुशासनम्॥ १६.३९ ॥
श्रुतमस्ति न ते किंचिद्धेपुरोधो विमृश्यताम्॥
योषिद्भिः प्रोच्यमानोऽपि उवाचाथ बृहस्पतिः॥ १६.४० ॥
मा भयं क्रियतां सर्वाः पापादस्मात्सुलोचनाः॥
भविष्याणां तथान्येषां भविष्यति फलप्रदः॥
हत्यांशो यो हि सर्वासां यथाकामित्वमेव च॥ १६.४१ ॥
एवमंशाश्च त्यायाश्चत्वारः कल्पिताः सुरैः॥
निवासमकरोत्सद्यस्तेषुतेषु द्विजोत्तमाः॥ १६.४२ ॥
निष्पापो हि तदा जातो महेंद्रो ह्यभिषेचितः॥
देवपुर्यां सुरगणैस्तथैव ऋषभिः सह॥ १६.४३ ॥
शच्या समेतो हि तदा पुरंदरो बभूव विश्वाधिपतिर्महात्मा॥
देवैः समेतो हि महानुभावैर्मुनीश्वरैः सिद्धगणैस्तदानीम्॥ १६.४४ ॥
तदाग्नयः शोभना वायवश्च सर्वे ग्रहाः सुप्रभाः शांतियुक्ताः॥
जाताः सद्यः पृथिवी शोभमाना तथाद्रयो मणिप्रभवा बभूवुः॥ १६.४५ ॥
प्रसन्नानि तथा ह्यासन्मनांसि च मनस्विनाम्॥ १६.४६ ॥
नद्यश्चामृतवाहिन्यो वृक्षा ह्यासन्सदाफलाः॥
अकृष्टपच्यौषधयो बभूवुश्चमृतोपमाः॥ १६.४७ ॥
ऐकपद्येन सर्वेषामिंद्रलोकनिवासिनाम्॥
बभूव परमोत्साहो महामोदकरस्तथा॥ १६.४८ ॥
**॥लोमश उवाच॥**
एतस्मिन्नंतरे त्वष्टा दृष्ट्वा चेंद्रमहोत्सवम्॥
बभूव रुषि तोऽतीव पुत्रशोकप्रपीडितः॥ १६.४९ ॥

जगाम निर्वेदपरस्तपस्तप्तुं सुदारुणम्॥
तपसा तेन संतुष्टो ब्रह्मा लोकपितामहः॥ १६.५० ॥
त्वष्टारमब्रवीत्तुष्टो वरं वरय सुव्रत॥
तदा वव्रे वरं त्वष्टा सर्वलोकभयावहम्॥
वरं पुत्रो हि दात्वोय देवानां हि भयावहः॥ १६.५१ ॥
तथेति च वरो दत्तो ब्रह्मणा परमेष्ठिना॥
वरदानात्सद्य एव बभूव पुरुषस्तदा॥ १६.५२ ॥
वृत्रनामांकितस्तत्र दैत्यो हि परमाद्भुतः॥
धनुषां शतमात्रं हि प्रत्यहं ववृधेऽसुरः॥ १६.५३ ॥
पातालान्निर्गता दैत्या ये पुराऽमृतमंथने॥
घातिताः सुरसंघैश्च भृगुणा जीवितास्त्वरात्॥ १६.५४ ॥
सर्वं महीतलं व्याप्तं तेनैकेन महात्मना॥ १६.५५ ॥
तदा सर्वेऽपि ऋषयो वध्यमानास्तपस्विनः॥
ब्रह्माणं त्वरिताः सर्वे ऊचुर्व्यसनमागतम्॥ १६.५६ ॥
तथा चेंद्रादयो देवा गंधर्वाः समरुद्गणाः॥
ब्रह्मणा कथितं सर्वं त्वष्टुश्चैतच्चिकीर्षितम्॥ १६.५७ ॥
भवद्वधार्थं जनितस्तपसा परमेण तु॥
वृत्रोनाम महातेजाः सर्वदैत्यापिधो महान्॥ १६.५८ ॥
तथापि यत्नः क्रियतां यथा वध्यो भवेदसौ॥
निशम्य ब्रह्मणो वाक्यमूचुर्देवाः सवासवाः॥ १६.५९ ॥
**॥ देवा ऊचुः॥**
यदा इंद्रो हि हत्याया विमुक्तः स्थापितो दिवि॥
तदास्माभिरकार्यं वै कृतमस्ति दुरासदम्॥ १६.६० ॥
शस्त्राण्यस्त्राण्यनेकानि संक्षिप्तानि ह्यबुद्धितः॥
दधीच स्याश्रमे ब्रह्मन्किं कार्यं करवामहे॥ १६.६१ ॥
तच्छ्रुत्वा प्रहसन्वाक्यं देवान्ब्रह्मा तदाऽब्रवीत्॥
चिरं स्थितानि विज्ञायागच्छध्वं तानि वै सुराः॥ १६.६२ ॥
गत्वा देवास्तदा सर्वे नापश्यन्स्वं स्वमायुधम्॥
पप्रच्छुश्च दधीचिं ते सोऽवादीन्नैव वेद्म्यहम्॥ १६.६३ ॥
पुनर्ब्रह्माणमागात्य ऊचुः सर्वे मुनेर्वचः॥ १६.६४ ॥
ब्रह्मोवाच तदा देवान्सर्वेषां कार्यसिद्धये॥
तस्यास्थीन्येव याचध्वं प्रदास्यति न संशयः॥ १६.६५ ॥
तच्छ्रुत्वा ब्राह्मणो वाक्यं शक्रो वचनमब्रवीत्॥ १६.६६ ॥

विश्वरूपो हतो देव देवानां कार्यसिद्धये॥
एक एव तदा ब्रह्मन्पापिष्ठोऽहं कृतः सुरैः॥ १६.६७ ॥
तथा पुरोधसा चैव निःश्रीकस्तत्क्षणात्कृतः॥
दिष्ट्या परमया चाहं प्रविष्टो निजमंदिरम्॥ १६.६८ ॥
दधीचं घातयित्वा वै तस्यास्थीनि बहून्यपि॥
अस्त्राणि तानि भगवन्कृतानि ह्यशुभानि वै॥ १६.६९ ॥
त्वष्ट्रा हि जनितो यो वै वृत्रो नामैष दैत्यराट्॥
कथं तं घातयाम्येवं सततं पापभीरुणा॥
शक्रेणोक्तं निशम्याथ ब्रह्मा वाक्यमुवाच ह॥ १६.७० ॥
अर्थशास्त्रपरेणैव विधिना तमबोधयत्॥
आततायिनमायांतं ब्राह्मणं वा तपस्विनम्॥
हंतुकामं जिघांसीयान्न तेन ब्रह्महा भवेत्॥ १६.७१ ॥
**॥इन्द्र उवाच॥**
दधीचस्य वधाद्ब्रह्मन्नहं भीतो न संशयः॥
तस्माद्ब्रह्मवधात्सत्यं महदेनो भविष्यति॥ १६.७२ ॥
अतो न कार्यमस्माभिर्ब्राह्मणानां तु हेलनम्॥
हेलनाद्बहवो दोषा भविष्यंति न चान्यथा॥ १६.७३ ॥
अदृष्टं परमं धर्म्यं विधिना परमेण हि॥
कर्तव्यं मनसा चैवं पुरुषेण विजानता॥ १६.७४ ॥
निःस्पृहं तस्य तद्वाक्यं श्रुत्वा ब्रह्मा ह्युवाच तम्॥
शक्रस्वबुद्ध्यावर्तस्व दधीचिं गच्छ सत्वरम्॥ १६.७५ ॥
याचस्व तस्य चास्थीनि दधीचेः कार्यगौरवात्॥
गुरुणा सहितः शक्रो देवैः सह समन्वितः॥ १६.७६ ॥
तथेति गत्वा ते सर्वे दधीचस्याश्रमं शुभम्॥
नानासत्त्वसमायुक्तं वैरबावविवर्जितम्॥ १६.७७ ॥
मार्जारमूषकाश्चैव परस्परमुदान्विताः॥
ऐकपद्येन सिंहाश्च गजिन्यः कलभैः सह॥ १६.७८ ॥
तथा जात्यश्च विविधाः क्रीडायुक्ताः परस्परम्॥
नकुलैः सह सर्पाश्च क्रीडायुक्ताः परस्परम्॥ १६.७९ ॥
एवंविधान्यनेकानि ह्यश्चर्याणि तदाश्रमे॥
पश्यंतो विबुधाः सर्वे विस्मयं परमं ययुः॥ १६.८० ॥
अथासने मुनिश्रेष्ठं ददृशुः परमास्थितम्॥
तेजसा परमेणैव भ्राजमानं यथा रविम्॥ १६.८१ ॥

विभावसुं द्वितीयं वा सुवर्चसहितं तदा॥
यथा ब्रह्मा हि सावित्र्या तथासौ मुनिसत्तमः॥ १६.८२ ॥
तं प्रणम्य ततो देवा वचनं चेदमब्रुवन्॥
त्वं दाता त्रिषु लोकेषु त्वत्सकाशमिहगताः॥ १६.८३ ॥
निशम्य वचनं तेषां देवानां भुनिरब्रवीत्॥
किमर्थ मागताः सर्वे वदध्वं तत्सुरोत्तमाः॥ १६.८४ ॥
प्रयच्छामि न संदेहो नान्यथा मम भाषितम्॥
तदोचुः सहिताः सर्वे दधीचिं स्वार्थकामुकाः॥ १६.८५ ॥
भयभीता वयं विप्र भवद्दर्शनकांक्षिणः॥
त्रातारं त्वां समाकर्ण्य ब्रह्मणा नोदिता वयम्॥ १६.८६ ॥
सम्प्राप्ता विद्धि तत्सर्वं दातुमर्होऽथ सुव्रत॥ १६.८७ ॥
निशम्य वचनं तेषां किं दातव्यं तदुच्यताम्॥ १६.८८ ॥
ततो देवाब्रुवन्विप्र दैत्यानां निधनायनः॥
शस्त्रनिर्माणकार्यार्थं तवास्थीनि प्रयच्छ वै॥ १६.८९ ॥
प्रहस्योवाच विप्रर्षिस्तिष्ठध्वं क्षणमेव हि॥
स्वयमेव त्वहं देवास्त्यक्ष्याम्यद्य कलेवरम्॥ १६.९० ॥
इत्युक्त्वा तानथो पत्नीं समाहूय सुवर्चसम्॥
प्रोवाच स महातेजाः श्रृणु देवी शुचिस्मिते॥ १६.९१ ॥
अस्थ्यर्थं याचितो देवैस्त्यजाम्येतत्कलेवरम्॥
ब्रह्मलोकं व्रजाम्यद्य परमेण समाधिना॥ १६.९२ ॥
मयि याते ब्रह्मलोकं त्वं स्वधर्मेण तत्र माम्॥
प्राप्स्यस्येव न संदेहो वृथा चिन्तां च मा कृथाः॥ १६.९३ ॥
इत्युक्त्वा तां स्वपत्नीं स प्रेषयामास चाश्रमम्॥
ततो देवाग्रतो विप्रः समाधिमगमत्तदा॥ १६.९४ ॥
समाधिना परेणैव विसृज्य स्वं कलेवरम्॥
ब्रह्मलोकं गतः सद्यः पुनर्नावर्तते यतः॥ १६.९५ ॥
दधीचिनामा मुनिवृंदवर्यः शिवप्रियः शिवदीक्षाभियुक्तः॥
परोपकारार्थमिदं कलेवरं शीघ्रं स विप्रोऽत्यजदात्मना तदा॥ १६.९६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे
देवैरस्थिकृताऽभ्यर्थितस्य दधीचेर्योगेन स्वदेहविसर्जननाम षोडशोऽध्यायः॥ १६ ॥ छ ॥

**॥लोमश उवाच॥**

ततः सर्वे सुरगणा दृष्ट्वा तं विलयं गतम्॥
चिंतयंतः सुरगणाः कथं च विदधामहे॥ १७.१ ॥
सुरभिं चाह्वयित्वाथ तदोवाच शचीपतिः॥
कलेवरं दधीचस्य लिह्यास्त्वं वचनान्मम॥ १७.२ ॥
तथेति च वचोमत्वा तत्क्षणादेव लिह्य तत्॥
निर्मांसं च कृतं सद्यस्तया धेन्वा कलेवरम्॥ १७.३ ॥
जगृहुस्तानि चास्थीनि चक्रुः शस्त्राणि वै सुराः॥
तस्य वंशोद्भवं वज्रं शिरो ब्रह्मशिरस्तथा॥ १७.४ ॥
अन्यानि चास्थीनि बहूनि तस्य ऋषेस्तदानीं जगृहुः सुराश्च॥
तथा शिराजालमयांश्च पाशांश्चक्रुः सुरा वैरयुताश्च दैत्यान्॥ १७.५ ॥
शस्त्राणि कृत्वा ते सर्वे महाबलपराक्रमाः॥
ययुर्देवातस्त्वरायुक्ता वृत्रघातनतत्पराः॥ १७.६ ॥
ततः सुवर्च्चाश्च दधीचिपत्नी या प्रेषिता सा सुरकार्यसिद्धये॥
व्यलोकयत्तत्र समेत्य सर्वं मृतं पतिं देहमथो ददर्शतम्॥ १७.७ ॥
ज्ञात्वा च तत्सर्वमिदं सुराणां कृत्यं तदानीं च चुकोप साध्वी॥
ददौ सती शापमतीव रुष्टा तदा सुवर्चा ऋषिवर्यपत्नी॥ १७.८ ॥
अहो सुरा दुष्टतराश्च सर्वे सर्वे ह्यशक्ताश्च तथैव लुब्धाः॥
तस्माच्च सर्वेऽप्रजसो भवंतु दिवौकसोऽद्यप्रभृतित्युवाच सा॥ १७.९ ॥
एव शापं ददौ तेषां सुराणां सा तपस्विनी॥
प्रवीश्याश्वत्थमूले सा स्वोदरं दारयत्तदा॥ १७.१० ॥
निर्गतो जठराद्गर्भो दधीचस्य महात्मनः॥
साक्षाद्रुद्रावतारोऽसौ पिप्लादो महाप्रभः॥ १७.११ ॥
प्रहस्य जननी गर्भमुवाच रुषितेक्षणा॥
सुवर्चा तं पिप्पलादं चिरं तिष्ठास्य सन्निधौ॥ १७.१२ ॥
अश्वत्थस्य महाभाग सर्वेषां सफलो भवेः॥
तथैव भाषमाणा सा सुवर्चा तनयं प्रति॥
पतिमन्वगमत्साध्वी परमेण समाधिना॥ १७.१३ ॥
एवं दधीचपत्नी सा पतिना स्वर्गमाव्रजत्॥ १७.१४ ॥
ते देवाः कृतशस्त्रास्त्रा दैत्यान्प्रति समुत्सुकाः॥
आजग्मुश्चेंद्रमुख्यास्ते महाबलपराक्रमाः॥ १७.१५ ॥
गुरुं पुरस्कृत्य तदाज्ञया ते गणाः सुराणां बहवस्तदानीम्॥
भुवं समागत्य च मध्यदेशमूचुश्च सर्वे परमास्त्रयुक्ताः॥ १७.१६ ॥

समागतानुपसृत्य देवांश्चेंद्रपुरोगमान्॥
ययौ वृत्रो महादैत्यो दैत्यवृन्दसमावृतः॥ १७.१७ ॥
यथा मेरोश्च शिखरं परिपूर्णं प्रदृश्यते॥
तथा सोऽपि महातेजा विश्वकर्म्मसुतो महान्॥ १७.१८ ॥
तेन दृष्टो महेन्द्रश्च महेंद्रेण महासुरः॥
देवानां दानवानां च दर्शनं च महाद्भुतम्॥ १७.१९ ॥
तदा ते बद्धवैराश्च देवदैत्याः परस्परम्॥
अन्योन्यमभिसंरब्धा जगर्जुः परमाद्भुतम्॥ १७.२० ॥
वादित्राणि च भीमानि वाद्यमानानि सर्वशः॥
श्रूयंतेऽत्र गभीराणि सुरा सुरसमागमे॥ १७.२१ ॥
वाद्यमानेषु तूर्येषु ते सर्वे त्वरयान्विताः॥
अनेकैः शस्त्रसंघातैर्जघ्नुरन्योन्यमोजसा॥ १७.२२ ॥
तदा देवासुरे युद्धे त्रैलोक्यं सचराचरम्॥
भयेन महता युक्तं बभूव गतचेतनम्॥ १७.२३ ॥
छेदिताः स्फोटिताश्चैव केचिच्छस्त्रैर्द्विधा कृताः॥
नाराचैश्च तथा केचिच्छस्त्रास्त्रैः शकलीकृताः॥ १७.२४ ॥
भल्लैश्चेरुर्हताः केचिद्व्यंगभूता दिवौकसः॥
रश्मयो मेघसंभूताः प्रकाशंते नभस्स्विव॥ १७.२५ ॥
शिरांसि पतितान्येव बहूनिच नभस्तलात्॥
नक्षत्राणीव च यथा महाप्रलयसंकुलम्॥ १७.२६ ॥
प्रवर्तितं मध्यदेशे सर्वबूतक्षयावहम्॥
शक्रेण सह संग्रामं चकार नमुचिस्तदा॥ १७.२७ ॥
वज्रेण जघ्ने तरसा नमुचिं देवराट् स्वयम्॥
न रोमैकं च त्रुचितं तमुचेरसुरस्य च॥ १७.२८ ॥
वज्रेणापि तदा सर्वे विस्मयं परमं गताः॥
असुराश्च सुराश्चैव महेंद्रो व्रीडितस्तदा॥ १७.२९ ॥
गदया नमुचिं जघ्ने गदा सापि विचूर्णिता॥
नमुचेरंगलग्नापि पपात वसुधातले॥ १७.३० ॥
तथा शूलेन महता तं जघान पुरंदरः॥
तच्छूलं शतधा चूर्णं नमुचेरंगमाश्रितम्॥ १७.३१ ॥
एवं तं वविधैः शस्त्रैराजघान सुरारिहा॥
प्रहस्य मानो नमुचिर्न जघान पुरंदरम्॥ १७.३२ ॥
तूष्णींभूतस्तदा चेंद्रश्चिंतया परया युतः॥

किं कार्यं किमकार्यं वा इतींद्रो नाविदत्तदा॥ १७.३३ ॥
एतस्मिन्नंतरे तत्र महायुद्धे महाभये॥
जाता नभोगता वाणी इंद्रसुद्दिश्य सत्वरम्॥ १७.३४ ॥
जह्येनमद्याशु महेंद्र दैत्यं दिवौकसां घोरतरं भयावहम्॥
फेनेन चैवाशु महासुरेन्द्रमपां समीपेन दुरासदेन॥ १७.३५ ॥
अन्येन शस्त्रेण च आहतोऽसौ वध्यः कदाचिन्न भवत्ययं तु॥
तस्माच्च देवेश वधार्थमस्य कुरु प्रयत्नं नमुचेर्दुरात्मनः॥ १७.३६ ॥
निशम्य वाचं परमार्थयुक्तां दैवीं सदानंदकरीं शुभावहाम्॥
चक्रे परं यत्नवतां वरिष्ठो गत्वोदधेः पारमनंतवीर्यः॥ १७.३७ ॥
तत्रागतं समीक्ष्याथ नमुचिः क्रोधमूर्छितः॥
हत्वा शूलेन देवेंद्रं प्रहसन्निदमब्रवीत्॥ १७.३८ ॥
समुद्रस्य तटः कस्मात्सेवितः सुरसत्तम॥
विहाय रणभूमिं च त्यक्तशस्त्रोऽभवद्भवान्॥ १७.३९ ॥
त्वदीयेनैव वज्रेण किं कृतं मम दुर्मते॥ १७.४० ॥
तथान्यानि च शस्त्राणि अस्त्राणि सुबहूनि च॥
गृहीतानि पुरा मंद हंतुं मामेव चाधुना॥ १७.४१ ॥
किं करिष्यसि मां हंतुं युद्धाय समुपस्थितः॥
केन शस्त्रेण रे मंद योद्धुमिच्छसि संयुगे॥ १७.४२ ॥
त्वां गातयामि चाद्यैव यदि तिष्ठसि संयुगे॥
नो चेद्गच्छ मया मुक्तश्चिरं जीव सुखी भव॥ १७.४३ ॥
एवं स गर्वितं तस्य वाक्यमाहवशोभिनः॥
श्रुत्वा महेंद्रोऽपि रुषा जगृहे फेनमद्भुतम्॥ १७.४४ ॥
फेनं करस्थं दृष्ट्वा तु असुरा जहसुस्तदा॥ १७.४५ ॥
क्षयं गतानि चास्त्राणि पेनेनैव पुरंदरः॥
हंतुमिच्छति मामद्य शतक्रतुरुदारधीः॥ १७.४६ ॥
एवं प्रहस्य नमुचिरज्ञाय पुरंदरम्॥
सावज्ञं पुरतस्तस्थौ नमुचिर्दैत्यपुंगवः॥ १७.४७ ॥
तदैव तं स फेनेन शीघ्रमिंद्रो जघान ह॥ १७.४८ ॥
हते तु नमुचौ देवाः सर्वे चैव मुदान्विताः॥
साधुसाध्विति शब्देन ऋषयश्चाभ्यपूजयन्॥ १७.४९ ॥
तदा सर्वे जयं प्राप्ता हत्वा नमुचिमाहवे॥
दैत्यास्ते कोपसंरब्धा योद्धुकामा मुदान्विताः॥ १७.५० ॥
पुनः प्रववृते युद्धं देवानां दानवैः सह॥

शस्त्रास्त्रैर्बहुधा मुक्तैः परस्परवधैषिबिः॥ १७.५१ ॥
यदा ते ह्यसुरा देवैः पातिताश्च पुनःपुनः॥
तदा वृत्रो महातेजाः शतक्रतुमुपाव्रजत्॥ १७.५२ ॥
वृत्रं दृष्ट्वा तदा सर्वे ससुरासुरमानवाः॥
भयेन महताविष्टाः पतिता भुवि शेरते॥ १७.५३ ॥
एवं भीतेषु सर्वेषु सुरसिद्धेषु वै तदा॥
इंद्रश्चैरावणारूढो वज्रपाणिः प्रतापवान्॥ १७.५४ ॥
छत्रेण ध्रियमाणेन चामरेण विराजितः॥
तदा सर्वैः समेतो हि लोकपालैः प्रतापितः॥ १७.५५ ॥
वृत्रं विलोक्य ते सर्वे लोकपाला महेश्वराः॥
भयभीताश्च ते सर्वे शिवं शरणमन्वयुः॥ १७.५६ ॥
मनसाचिंतयन्सर्वे शंकरं लोकशंकरम्॥
लिंगं संपूज्य विधिवन्महेंद्रो जयकामुकः॥ १७.५७ ॥
गुरुणा विदितः सद्यो विश्वासेन परेण हि॥
उवाच च तदा शक्रं बृहस्पतिरुदारधीः॥ १७.५८ ॥
**॥बृहस्पतिरुवाच॥**
कार्तिके शुक्लपक्षे तु मंदवारे त्रयोदशी॥
समग्रा यदि लभ्येत सर्वप्राप्तयै न संशयः॥ १७.५९ ॥
तस्यां प्रदोषसमये लिंगरूपी सदाशिवः॥
पूजनीयो हि देवेंद्र सर्वकामार्थसिद्धये॥ १७.६० ॥
स्नात्वा मध्याह्नसमये तिलामलकसंयुतम्॥
शिवस्य कुर्याद्गंधपुष्पफलादिभिः॥ १७.६१ ॥
पश्चात्प्रदोषवेलायां स्थावरं लिंगमर्च्चयेत्॥
स्वयंभु स्थापितं चापि पौरुषेयमपौरुषम्॥ १७.६२ ॥
जने वा विजने वापि अरण्ये वा तपोवने॥
तल्लिंगमर्च्चयेद्भक्त्या प्रदोषे तु विशेषतः॥ १७.६३ ॥
ग्रामद्बहिः स्थितं लिंगं ग्रामाच्छतगुणं फलम्॥
ब्राह्मच्छतगुणं पुण्यमरण्ये लिंगमद्भुतम्॥ १७.६४ ॥
आरण्याच्छतगुणं पुण्यमर्चितं पार्वतं यथा॥
पार्वताच्चैव लिंगाच्च फलं चायुतसंज्ञितम्॥
तपोवनाश्रितं लिंगं पूजितं वा महाफलम्॥ १७.६५ ॥
तस्मादेतद्विभागेन शिवपूजनार्चनं बुधैः॥
कर्त्वयं निपुणत्वेन तीर्थस्नानादिकं तथा॥ १७.६६ ॥

पंचपिंडान्समुद्धृत्य स्नानमात्रेण शोभनम्॥
कूपे स्नानं प्रकुर्वीत उद्धृतेन विसेषतः॥ १७.६७ ॥
तडागे दश पिंडांश्च उद्धृत्य स्नानमाचरेत्॥
नदीस्नानं विश्ष्टं च महानद्यां विशेषतः॥ १७.६८ ॥
सर्वेषामपि तीर्थानां गंगास्नानं विशिष्यते॥
देवखाते च तत्तुल्यं प्रशस्तं स्नानमाचरेत्॥ १७.६९ ॥
प्रदीपानां सहस्रेण दीपनीयः सदाशिवः॥
तथा दीपशतेनापि द्वात्रिंशद्दीपमालया॥ १७.७० ॥
घृतेन दीपयेद्दीपाञ्छिवस्य परितुष्टये॥
तथा फलैश्च दीपैश्च नैवेद्यैर्गंधधूपकैः॥ १७.७१ ॥
उपचारैः षोडशभिर्लिंगरूपी सदा शिवः॥
पूज्यः प्रदोषवेलायां नृभिः सर्वार्थसिद्धये॥ १७.७२ ॥
प्रदक्षिणं प्रकुर्वीत शतमष्टोत्तरं तथा॥
नमस्कारान्प्रकुर्वीत तावत्संख्यान्प्रयत्नतः॥ १७.७३ ॥
प्रदक्षिणनमस्कारैः पूजनीयः सदाशिवः॥
नाम्नां शतेन रुद्रोऽसौ स्तवनीयो यताविधि॥ १७.७४ ॥
नमो रुद्राय भीमाय नीलकण्ठाय वेधसे॥
कपर्द्दिने सुरेशाय व्योमकेशाय वै नमः॥ १७.७५ ॥
वृषध्वजाय सोमाय नीलकण्ठाय वै नमः॥
दिगंबराय भर्गाय उमाकांतकपर्द्दिने॥ १७.७६ ॥
तपोमयाय व्याप्ताय शिपिविष्टाय वै नमः॥
व्यालप्रियाय व्यालाय व्यालानां पतये नमः॥ १७.७७ ॥
महीधराय व्याघ्राय पशूनां पतये नमः॥
त्रिपुरांतकसिंहाय शार्दूलोग्ररवाय च॥ १७.७८ ॥
मीनाय मीननाथाय सिद्धाय परमेष्ठिने॥
कामांतकाय बुद्धाय बुद्धीनां पतये नमः॥ १७.७९ ॥
कपोताय विशिष्टाय शिष्टाय परमात्मने॥
वेदाय वेदबीजाय देवगुह्याय वै नमः॥ १७.८० ॥
दीर्घाय दीर्घदीर्घाय दीर्घार्घाय महाय च॥
नमो जगत्प्रतिष्ठाय व्योमरूपाय वै नमः॥ १७.८१ ॥
गजासुरविनाशाय ह्यंधकासुरभेदिने॥
नीललोहितशुक्लाय चण्डमुण्डप्रियाय च॥ १७.८२ ॥
भक्तिप्रियाय देवाय ज्ञानज्ञानाव्ययाय च॥

महेशाय नमस्तुभ्यं महादेवहराय च॥ १७.८३ ॥
त्रिनेत्राय त्रिवेदाय वेदांगाय नमोनमः॥
अर्थाय अर्थरूपाय परमार्थाय वै नमः॥ १७.८४ ॥
विश्वरूपाय विश्वाय विश्वनाताय वै नमः॥
शंकराय च कालाय कालावयवरूपिणे॥ १७.८५ ॥
अरूपाय च सूक्ष्माय सूक्ष्मसूक्ष्माय वै नमः॥
श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे॥ १७.८६ ॥
शशांकशेखरायैव रुद्रविश्वाश्रयाय च॥
दुर्गाय दुर्गसाराय दुर्गावयवसाक्षिणे॥ १७.८७ ॥
लिंगरूपाय लिंगाय लिंगानां पतये नमः॥
प्रणवरूपाय प्रणवार्थाय वै नमः॥ १७.८८ ॥
नमोनमः कारणकारणाय ते मृत्युंजयायात्मभवस्वरूपिणे॥
त्रियंबकायासितकंठ भर्ग गौरिपते सकलमंगलहेतवे नमः॥ १७.८९ ॥
**॥बृहस्पतिरुवाच॥**
नाम्नां शतं महेशस्य उच्चार्यं व्रतिना तदा॥
प्रदक्षिणनमस्कारैरेतत्संख्यैः प्रयत्नतः॥
कार्यं प्रदोषसमये तुष्ट्यर्थं संकरस्य च॥ १७.९० ॥
एवं व्रतं समुद्दिष्टं तव शक्र महामते॥
शीघ्रं कुरु महाभाग पश्चाद्युद्धं कुरु प्रभो॥ १७.९१ ॥
शंभोः प्रसादात्सर्वं ते भविष्यति जयादिकम्॥ १७.९२ ॥
वृत्रो ह्ययं महातेजा दैतेयस्तपसा पुरा॥
शिवं प्रसादयामास पर्वते गंधमादने॥ १७.९३ ॥
नाम्ना चित्ररथो राजा वनं चित्ररथस्य तत्॥
एतज्जानीहि भो इन्द्र शिवपुर्याः समीपतः॥ १७.९४ ॥
यस्मिन्वने महाभाग न संति च षडूर्मयः॥
तस्माच्चैत्ररथं नाम वनं परममंगलम्॥
तस्य राज्ञः शिवेनैव दत्तं यानं महाद्भुतम्॥ १७.९५ ॥
कामगं किंकिणीयुक्तं सिद्धचारणसेवितम्॥
गंधर्वैरप्सरोयक्षैः किंनरैरुपशोभितम्॥ १७.९६ ॥
ततस्तेनैव यानेन पृथिवीं पर्यटन्पुरा॥
तथा गिरीशमुख्यांश्च द्वीपांश्च विविधांस्तथा॥ १७.९७ ॥
एकदा पर्यटन्राजा नाम्ना चित्ररथो महान्॥
कैलासमागतस्तत्र स ददर्श पराद्भुतम्॥ १७.९८ ॥

सभातलं महेशस्य गणैश्चैव विराजितम्॥
अर्द्धांगलग्नया देव्या शोभितं च महेश्वरम्॥ १७.९९ ॥
निरीक्ष्य देव्या सहितं सदाशिवं देव्यान्वितं वाक्यमिदं बभाषे॥ १७.१०० ॥
वयं च शंभो विषयान्विताश्च मंत्र्यादयः स्त्रीजिताश्चापि चान्ये॥
न लोकमध्ये वयमेव चाज्ञाः स्त्रीसेवनं लज्जया नैव कुर्मः॥ १७.१०१ ॥
एतद्वाक्यं निशम्याथ महेशः प्रहसन्निव॥
उवाच न्यायसंयुक्तं सर्वेषामपि श्रृण्वताम्॥ १७.१०२ ॥
भयं लोकापवादाच्च सर्वेषामपि नान्यथा॥
ग्रासितं कालकूटं च सर्वेषामपि दुर्जरम्॥ १७.१०३ ॥
तथापि उपहासो मे कृतो राज्ञा हि दुर्जरः॥
तं चित्ररथमाहूय गिरिजा वाक्यमब्रवीत्॥ १७.१०४ ॥
**॥गीरिजोवाच॥**
रे दुरात्मन्कथं त्वज्ञ शंकरश्चोपहासितः॥
मया सहैव मंदात्मन्द्रक्ष्यसे कर्मणः फलम्॥ १७.१०५ ॥
साधूनां समचित्तानामुपहासं करोति यः॥
देवो वाप्यथ वा मर्त्यः स विज्ञेयोऽधमाधमः॥ १७.१०६ ॥
एते मुनींद्राश्च महानुभावास्तथा ह्यमी ऋषयो वेदगर्भाः॥
तथैव सर्वे सनकादयो ह्यमी अज्ञाश्च सर्वे शिवमर्चयंते?॥ १७.१०७ ॥
रे मूढ सर्वेषु जनेष्वभिज्ञस्त्वमेव एवाद्य न चापरे जनाः॥
तस्मादभिज्ञं हि करोमि दैत्यं देवैर्द्विजैश्चापि बहिष्कृतं त्वाम्॥ १७.१०८ ॥
एवं शप्तस्तया देव्या भवान्या राजसत्तमः॥
राजा चित्ररथः सद्यः पपात सहसा दिवः॥ १७.१०९ ॥
आसुरीं योनिमासाद्य वृत्रोनाम्नाऽभवत्तदा॥
तपसा परमेणैव त्वष्ट्रा संयोजितः क्रमात्॥ १७.११० ॥
तपसा तेन महता अजेयो वृत्र उच्यत॥
तस्माच्छंभुं समभ्यर्च्य प्रदोषे विधिनाऽधुना॥ १७.१११ ॥
जहि वृत्रं महादैत्यं देवानां कार्यसिद्धये॥
गुरोस्तद्वचनं श्रुत्वा उवाचाथ शतक्रतुः॥
सोद्यापनविधिं ब्रूहि प्रदोषस्य च मेऽधुना॥ १७.११२ ॥
**॥बृहस्पतिरुवाच॥**
कार्तिके मासि संप्राप्ते मंदवारे त्रयोदशी॥
संपूर्तिस्तु भवेत्तत्र संपूर्णव्रतसिद्धये॥ १७.११३ ॥
वृषभो राजतः कार्यः पृष्ठे तस्य सुपीठकम्॥

तस्योपरिन्यसेद्देवमुमाकांतं त्रिलोचनम्॥ १७.११४ ॥
पंचवक्त्रं दशभुजमर्द्धांगे गिरिजां सतीम्॥
एवं चोमामहेशं च सौवर्णं कारयेद्बुधः॥ १७.११५ ॥
सवृषं ताम्रपत्रे च वस्त्रेण परिगुंठिते॥
स्थापयित्वोमया सार्द्धं नानाबोगसमन्वितम्॥ १७.११६ ॥
विधिना जागरं कुर्याद्रात्रौ श्रद्धासमन्वितः॥
पंचामृतेन स्नपनं कार्यमादौ प्रयत्नतः॥ १७.११७ ॥
गोक्षीरस्नानं देवेश गोक्षीरेण मया कृतम्॥
स्नपनं देवदेवेश गृहाण परमेश्वर॥ १७.११८ ॥
दध्ना चैव मया देव स्नपनं क्रियतेऽधुना॥
गृहाम च मया दत्तं सुप्रसन्नो भवाद्य वै॥ १७.११९ ॥
सर्पिषा च मया देव स्नपनं क्रियतेऽधुना॥
गृहाण श्रद्धया दत्तं तव प्रीत्यर्थमेव च॥ १७.१२० ॥
इदं मधु मया दत्तं तव प्रीत्यर्थमेव च॥
गृहाम त्वं हि देवेश मम शांतिप्रदो भव॥ १७.१२१ ॥
सितया देवदेवेश स्नपनं क्रियतेऽधुना॥
गृहाण श्रद्धया दत्तां सुप्रसन्नो भव प्रभो॥ १७.१२२ ॥
एवं पंचामृतेनैव स्नपनीयो वृषध्वजः॥
पश्चादर्घ्यं प्रदातव्यं ताम्रपात्रेण धीमता॥
अनेनैव च मंत्रेण उमाकांतस्य तृष्टये॥ १७.१२३ ॥
अर्घ्योऽसि त्वमुमाकांत अर्घेणानेन वै प्रभो॥
गृहाण त्वं मया दत्तं प्रसन्नो भव शंकर॥ १७.१२४ ॥
मया दत्तं च ते पाद्यं पुष्पगंधसमन्वितम्॥
गृहाण देवदेवेश प्रसन्नो वरदो भव॥ १७.१२५ ॥
विष्टरं विष्टरेणैव मया दत्तं च वै प्रभो॥
शांत्यरथं तव देवेश वरदो भव मे सदा॥ १७.१२६ ॥
आचमनीयं मया दत्तं तव विश्वेश्वर प्रभो॥
गृहाण परमेशान तुष्टो भव ममाद्य वै॥ १७.१२७ ॥
ब्रह्मग्रन्थिसमायुक्तं ब्रह्मकर्मप्रवर्तकम्॥
यज्ञोपवीतं सौवर्णं मया दत्तं तव प्रभो॥ १७.१२८ ॥
सुगंधं चंदनं देव मया दत्तं च वै प्रभो॥
भक्त्या पर मया शंभो सुगंधं कुरु मां भव॥ १७.१२९ ॥
दीपं हि परमं शंभो घृतप्रज्वलितं मया॥

दत्तं गृहाण देवेश मम ज्ञानप्रदो भव॥ १७.१३० ॥
दीपं विशिष्टं परमं सर्वौषधिविजृंभितम्॥
गृहाण परमेशान मम शांत्यर्थमेव च॥ १७.१३१ ॥
दीपावलिं मया दत्तां कृहाण परमेश्वर॥
आरार्तिकप्रदानेन मम तेजः प्रदो भव॥ १७.१३२ ॥
फलदीपादिनैवेद्यतांबूलादिक्रमेण च॥
पूजनीयो विधानज्ञैस्तस्यां रात्रौ प्रयत्नतः॥ १७.१३३ ॥
पश्चाज्जागरणं कार्यं गृहे वा देवतालये॥
वितानमंडपं कृत्वा नानाश्चर्यसमन्वितम्॥
गीतवादित्रनृत्येन अर्चनीयः सदाशिवः॥ १७.१३४ ॥
अनेनैव विधानेन प्रदोषोद्यापने विधिः॥
कार्ये विधिमता शक्र सर्वकार्यार्थसिद्धये॥ १७.१३५ ॥
गुरुणा कथितं सर्वं तच्चकार शतक्रतुः॥
तेनैव च सहायेन इंद्रो युद्धपरायणः॥ १७.१३६ ॥
वृत्रं प्रति सुरैः सार्द्धं युयुधे च शतक्रतुः॥
तुमुलं युद्धमभवद्देवानां दानावैः सह॥ १७.१३७ ॥
तस्मिन्सुतुमुले गाढे देवदैत्यक्षयावहे॥
द्वंद्वयुद्धं सुतुमुलमतिवेलं भयावहम्॥ १७.१३८ ॥
व्योमो यमेन युयुधे ह्यग्निना तीक्ष्णकोपनः॥
वरुणेन महादंष्ट्रो वायुना च महाबलः॥ १७.१३९ ॥
द्वन्द्वयुद्ध रताः सर्वे अन्योन्यबलकांक्षिणः॥ १७.१४० ॥
तथैव ते देववरा महाभुजाः संग्रामशूरा जयिनस्तदाऽभवन्॥
पराजयं दैत्यवाराश्च सर्वे प्राप्तास्तदानीं परमं समंतात्॥ १७.१४१ ॥
दृष्ट्वा सुरैर्दैत्यवरान्पराजितान्पलायमानानथ कान्दिशीकान्॥
तदैव वृत्रः परमेण मन्युना महाबलो वाक्य मिदं बभाषे॥ १७.१४२ ॥
**॥वृत्र उवाच॥**
हे दैत्याः परमार्ताश्च कस्माद्यूयं भयातुराः॥
पलायनपराः सर्वे विसृज्य रणमद्भुतम्॥ १७.१४३ ॥
स्वंस्वं पराक्रमं वीरा युद्धाय कृतनिश्चयाः॥
दर्शयध्वं सुरगणास्सूदयध्वं महाबलाः॥ १७.१४४ ॥
गदाभिः पट्टिशैः खड्गैः शक्तितोमरमुद्गरैः॥
असिभिर्भि दिपालैश्च पाशतोमरमुष्टिभिः॥ १७.१४५ ॥
तदा देवाश्च युयुधुर्दधीचास्थिसमुद्भवैः॥

शस्त्रैरस्त्रैश्च परमैरसुरान्समदारयन्॥ १७.१४६ ॥
पुनर्दैत्या हता देवैः प्राप्तास्तेपि पराजयम्॥
पुनश्च तेन वृत्रेण नोद्यमानाः सुरान्प्रति॥ १७.१४७ ॥
यदा हि ते दैत्यवराः सुरेशैर्निहन्यमानाश्च विदुद्रुवुर्दिशः॥
केचिद्दृष्ट्वा दानवास्ते तदानीं भीतित्रस्ताः क्लीबरूपाः क्रमेणा॥ १७.१४८ ॥
वृत्रेण कोपिना चैवं धिक्कृता दैत्यपुंगवाः॥
हे पुलोमन्महाभाग वृषपर्वन्नमोस्तु ते॥ १७.१४९ ॥
हे धूम्राक्ष महाकाल महादैत्य वृकासुर॥
स्थूलाक्ष हे महादैत्य स्थूलदंष्ट्र नमोस्तु ते॥ १७.१५० ॥
स्वर्गद्वारं विहायैव क्षत्रियाणां मनस्विनाम्॥
पलायध्वे किमर्थं वा संग्रामाङ्गणमुत्तमम्॥ १७.१५१ ॥
संगरे मरणं येषां ते यांति परमं पदम्॥
यत्र तत्र च लिप्सेत संग्रामे मरणं बुधः॥ १७.१५२ ॥
त्यजन्ति संगरं ये वै ते यांति निरयं ध्रुवम्॥ १७.१५३ ॥
ये ब्राह्मणार्थे भृत्यार्थे स्वार्थे वै शस्त्रपाणयः॥
संग्रामं ये प्रकुर्वंति महापातकिनो नराः॥ १७.१५४ ॥
शस्त्रघातहता ये वै मृता वा संगरे तथा॥
ते यांति परमं स्थानं नात्र कार्या विचारणा॥ १७.१५५ ॥
शस्त्रैर्विच्छिन्नदेहा ये गवार्थे स्वामिकारणात्॥
रणे मृताः क्षता ये वै ते यांति परमां गतिम्॥ १७.१५६ ॥
तस्माद्रणेऽपि ये शूराः पापिनो निहताः पुरः॥
प्राप्नुवंति परं स्थानं दुर्लभं ज्ञानिनामपि॥ १७.१५७ ॥
अथवा तीर्थगमनं वेदाध्ययनमेव च॥
देवतार्चनयज्ञादिश्रेयांसि विविधानि च॥ १७.१५८ ॥
ऐकपद्येन तान्येव कलां नार्हंति षोडशीम्॥
संग्रामे पतितानां च सर्वशास्त्रेष्वयं विधिः॥ १७.१५९ ॥
तस्माद्युद्धावदानं च कर्तव्यमविशंकितैः॥
भवद्भिर्नान्यथा कार्यं देववाक्यप्रमाणतः॥ १७.१६० ॥
यूयं सर्वे शौरवृत्त्या समेताः कुलेन शीलेन महानुभावाः॥
पदानि तान्येव पलायमाना गच्छंत्यशूरा रणमंडलाच्च॥ १७.१६१ ॥
त एव सर्वे खलु पापलोकान्गच्छंति नूनं वचनात्स्मृतेश्च॥ १७.१६२ ॥
ये पापिष्ठास्त्वधर्म्मस्था ब्रह्मघ्ना गुरुतल्पगाः॥
नरकं यांति ते पापं तथैव रणविच्युताः॥ १७.१६३ ॥

तस्माद्भवद्भिर्योद्धव्यं स्वामिकार्यभरक्षमैः॥
एवमुक्तास्तदा तेन वृत्रेणापि महात्मना॥ १७.१६४ ॥
चक्रुस्ते वचनं तस्य असुराश्च सुरान्प्रति॥
चक्रुः सुतुमुलं युद्धं सर्वलोकभयंकरम्॥ १७.१६५ ॥
तस्मिन्प्रवृत्ते तुमुले विगाढे वृत्रो महादैत्यपतिः स एकः॥
उवाच रोषेण महाद्भुतेन शतक्रतुं देववरैः समेतम्॥ १७.१६६ ॥
**॥वृत्र उवाच॥**
श्रृणु वाक्यं मया चोक्तं धर्म्मार्थसहितं हितम्॥
त्वं देवानां पतिर्भूत्वा न जानासि हिताहितम्॥ १७.१६७ ॥
किंबलार्थपरो भूत्वा विश्वरूपो हतस्त्वया॥
प्राप्तमद्यैव भो इंद्र तस्येदं कर्म्मणः फलम्॥ १७.१६८ ॥
ये दीर्घदर्शिनो मंदा मूढा धर्मबहिष्कृताः॥
अकल्पाः कार्यसिद्ध्यर्थं यत्कुर्वंति च निष्फलम्॥
तत्सर्वं विद्धि देवेंद्र मनसा संप्रधार्यताम्॥ १७.१६९ ॥
तस्माद्धर्म्मपरो भूत्वा युध्यस्व गतकल्मषः॥
भ्रातृहा त्वं ममैवेंद्र तस्मात्त्वा घातयाम्यहम्॥ १७.१७० ॥
मा प्रयाहि स्थिरो भूत्वा देवैश्च परिवारितः॥
एव मुक्तस्तु वृत्रेण शक्रोऽतीव रुषान्वितः॥
ऐरावतं समारुह्य ययौ वृत्रजिघांसया॥ १७.१७१ ॥
इंद्रमायांतमालोक्य वृत्रो बलवतां वरः॥
उवाच प्रहसन्वाक्यं सर्वेषां श्रृण्वतामपि॥ १७.१७२ ॥
आदौ मां प्रहरस्वेति तस्मात्त्वां घातयाम्यहम्॥ १७.१७३ ॥
इत्येवमुक्तो देवेंद्रो जघान गदया भृशम्॥
वृत्रं बलवतां श्रेष्ठं जानुदेशे महाबलम्॥ १७.१७४ ॥
तामापतंतिं जग्राह करेणैकेन लीलया॥
तयैवैनं जघानाशु गदया त्रिदिवेश्वरम्॥ १७.१७५ ॥
सा गदा पातयामास सवज्रं च पुरंदरम्॥
पतितं शक्रमालोक्य वृत्र ऊचे सुरान्प्रति॥ १७.१७६ ॥
नयध्वं स्वामिनं देवाः स्वपुरीममरावतीम्॥ १७.१७७ ॥
एतच्छ्रुत्वा वचः सत्यं वृत्रस्य च महात्नः॥
तथा चक्रुः सुराः सर्वे रणाच्चेंद्रं समुत्सुकाः॥ १७.१७८ ॥
अपोवाह्य गजस्थं हि परिवार्य भयातुराः॥
सुराः सर्वे रणं हित्वा जग्मुस्ते त्रिदिवं प्रति॥ १७.१७९ ॥

ततो गतेषु देवेषु ननर्त च महासुरः॥
वृत्रो जहास च परं तेना पूर्यत दिक्तटम्॥ १७.१८० ॥
चचाल च मही सर्वा सशैलवनकानना॥
चुक्षुभे च तदा सर्वं जंगमं स्थावरं तथा॥ १७.१८१ ॥
श्रुत्वा प्रयातं देवेंद्रं ब्रह्मा लोकपितामहः॥
उपयातोऽथ देवेंद्र स्वकमण्डलुवारिणा॥
अस्पृशल्लब्धसंज्ञोऽभूत्तत्क्षणाच्च पुरंदरः॥ १७.१८२ ॥
दृष्ट्वा पितामहं चाग्रे व्रीडायुक्तोऽभवत्तदा॥
महेंद्रं त्रपया युक्तं ब्रह्मोवाच पितामहः॥ १७.१८३ ॥
**॥ब्रह्मोवाच॥**
वृत्रो हि तपसा युक्तो ब्रह्मचर्यव्रते स्थितः॥
त्वष्टुश्च तपसा युक्तो वृत्रश्चायं महायशाः॥
अजेयस्तपसोग्रेण तस्मात्त्वं तपसा जय॥ १७.१८४ ॥
वृत्रासुरो दैत्यपतिश्च शक्र ते समाधिना परमेणैव जय्यः॥
निशम्य वाक्यं परमेष्ठिनो हरिः सस्मार देवं वृषभध्वजं तदा॥ १७.१८५ ॥
स्तुत्या तदातं स्तवमानो महात्मा पुरंदरो गुरुणा नोदितो हि॥ १७.१८६ ॥
**॥इंद्र उवाच॥**
नमो भर्गाय देवाय देवानामतिदुर्गम॥
वरदो भव देवेश देवानां कार्यसिद्धये॥ १७.१८७ ॥
एवं स्तितिपरो भूत्वा शचीपतिरुदारधीः॥
स्वकार्यदक्षो मंदात्मा प्रपंचाभिरतः खलु॥ १७.१८८ ॥
प्रपंचाभिरता मूढाः शिवभक्तिपरा ह्यपि॥
न प्राप्नुवंति ते स्थानं परमीशस्यरागिणः॥ १७.१८९ ॥
निर्मला निरहंकारा ये जनाः पर्युपासते॥
मृडं ज्ञानप्रदं चेशं परेशं शंभुमेव च॥ १७.१९० ॥
तेषां परेषां वरद इहामुत्र च शंकरः॥
महेंद्रेण स्तुतः शर्वो रागिणा परमेण हि॥ १७.१९१ ॥
रागिणां हि सदा शंभुर्दुर्लभो नात्र संशयः॥
तस्माद्विरागिणां नित्यं सन्मुखो हि सदाशिवः॥ १७.१९२ ॥
राजा सुराणां हि महानुरागी स्वकर्मसंसिद्धिमहाप्रवीणः॥
तस्मात्सदा क्लेशपरः शचीपतिः स्वकामभावात्मपरो हि नित्यम्॥ १७.१९३ ॥
स्तवमानं तदा चेंद्रमब्रवीत्कार्यगौरवात्॥
विज्ञायाखिलदृग्द्रष्टा महेशो लिंगरूपवान्॥ १७.१९४ ॥

इंद्र गच्छ सुरैः सार्द्धं वृत्रं वै दानवं प्रति॥
तपसैव च साध्योऽयं रणे जेतुं शतक्रतो॥ १७.१९५ ॥
**॥इंद्र उवाच॥**
केनोपायेन साध्योऽयं वृत्रो दैत्यवरो महान्॥
त्वच्छीघ्रं कथ्यतां शंभो येन मे विजयो भवेत्॥ १७.१९६ ॥
**॥रुद्र उवाच॥**
रणे न शक्यते हंतुमपि देववरैरपि॥
तस्मात्त्वया हि कर्तव्यं कुत्सितं कर्म चाद्य वै॥ १७.१९७ ॥
अस्य शापः पुरा दत्तः पार्वत्या मम सन्निधौ॥
असौ चित्ररथो नाम्ना विख्यातो भुवनत्रये॥ १७.१९८ ॥
पर्यटन्सु विमानेन मया दत्तेन भास्वता॥
उपहासादिमां योनिं संप्राप्तो दत्यपुंगवः॥ १७.१९९ ॥
तस्मादजेयं जानीहि रणे रणविदां वर॥
एवमुक्तो महेंद्रोऽयं शंभुना योगिना भृशम्॥ १७.२०० ॥
तथेति मत्वा शक्रोऽसौ नियमं तमुपाददे॥ १७.२०१ ॥
रंध्रं प्रतीक्ष्य वृत्रस्य तत्समीपे सहस्रकम्॥
वत्सराणां महाभागा वसन्हंतुं मनो दधे॥ १७.२०२ ॥
अंतर्वेद्यां बहिः स्थित्वा वज्रपाणिरनुज्ञया॥
गुरोः पुरोधसश्चैव स्वकार्यमकरोद्भृशम्॥ १७.२०३ ॥
एकदा नर्म्मदायां वै वृत्रो दानवपुंगवः॥
दैत्यैः परिवृतः सर्वैः समायातो यदृच्छया॥ १७.२०४ ॥
इंद्रः पराभवं प्राप्तो नीतो देवैर्द्दिवं प्रति॥
अहमेव हतारिश्च नान्योस्ति सदृशो मम॥ १७.२०५ ॥
मन्यमानः सदा वृत्रः पौरुषेण समन्वितः॥
प्रदोषसमये विप्रा नर्मदायामुपस्थितः॥ १७.२०६ ॥
दृष्टश्चेंद्रेण सुमहानसुरैः परिवारितः॥
वृत्रो बलवतां श्रेष्ठः प्रदोषसमये तदा॥ १७.२०७ ॥
तस्मिन्प्रदेषे संयुक्ता मंदवारे त्रयोदशी॥
नोदितो गुरुणा चेंद्रः करे गृह्य बृहस्पतिः॥ १७.२०८ ॥
प्रदक्षिणानमस्कारैर्यथोक्तविधिना तदा॥
पूजितो लिंगरूपी च ओंकारो नर्मदातटे॥ १७.२०९ ॥
प्रदोषव्रतमाहात्म्याद्वज्रपाणिः प्रतापवान्॥
संजातस्तत्क्षणादेव प्रसादाच्छंकरस्गयच॥ १७.२१० ॥

वृत्रोपि तपसा युक्तः प्रदोषसमये महान्॥
निद्रासक्तोऽभवत्तत्र शुंडेन प्रति बोधितः॥ १७.२११ ॥
स्वापात्प्रदोषवेलायां तपसा चार्जितं फलम्॥
प्रनष्टं तत्क्षणादेव निःश्रीकत्वमुपागतः॥ १७.२१२ ॥
देव्याः शापाच्च संजातो वृत्रो भग्नमनोरथः॥ १७.२१३ ॥
संध्यापादो गतो यावद्वृत्र स्तीर्थमुपाविशत्॥
परीतो विविधैर्दैत्यैत्यैर्नानायुधसमन्वितैः॥ १७.२१४ ॥
तस्य तत्कर्मणश्छिद्रं छिद्रान्वेषी शचीपतिः॥
ज्ञात्वा गतः शनैर्हंतुमात्मशत्रुं शतक्रतुः॥ १७.२१५ ॥
तावद्दैत्याः सुसंरब्धा भीमा भीमपराक्रमाः॥
उत्तस्थुर्युगपत्सर्वे दुःसहाश्च शतक्रतुम्॥ १७.२१६ ॥
ततस्तैरभवद्युद्धमतिप्रबलदंडिभिः॥
सर्वे देवाः सहायार्थं तदाऽऽजग्मुः शतक्रतोः॥ १७.२१७ ॥
तदा दैत्याश्च देवाश्च युयुधुस्ते तरस्विनः॥
रात्रौ युद्धं समाभवत्सुरासुरविमर्दनम्॥ १७.२१८ ॥
अनेकशस्त्रसंवीतं महारौद्रमवर्तत॥
एवं प्रवर्तमाने तु संग्रमे रौद्रदारुणे॥
तदा वृत्रोऽथ सन्नद्धो गृहीत्वा शूलमुल्बणम्॥ १७.२१९ ॥
इंद्र प्रमुखतो भूत्वा जगर्जातिविभीषणम्॥
तस्य नादप्रणादेन त्रासितं भुवनत्रयम्॥ १७.२२० ॥
ऐरावणं समारुह्य महेंद्रः शुशुभे तदा॥
ध्रियमाणेनच्छत्रेण चंद्रमंडलशोभिना॥ १७.२२१ ॥
चामरैर्वीज्यमानोऽथ बभाषे दैत्यपुंगवम्॥ १७.२२२ ॥
**॥इंद्र उवाच॥**
संग्रामं कुरु मे वृत्र बलेन महता वृतः॥
शूरस्त्वमसि शूराणां तपसा परमेण हि॥ १७.२२३ ॥
एवमुक्तस्तदा तेन वृत्रो वाक्यमुवाच ह॥
आदौ प्रहर मामिंद्रपश्चात्त्वां घातयाम्यहम्॥ १७.२२४ ॥
तथेति मत्वा तदतीव दुःसहं वज्रं तदानीं शतधारमेव॥
स मोक्तुकामो हि तदा पुरंदरो निवारितस्तेन महाप्रभेण॥
पुरोधसा बुद्धिमतां वरेण तथेति मत्वा स चकार चेंद्रः॥ १७.२२५ ॥
गदां प्रगृह्य देवेंद्रो वृत्रं विव्याध तां गदाम्॥
वारयामास वृत्रोसा वतिथिं कृपणो यथा॥ १७.२२६ ॥

व्यार्थां च स्वगदां दृष्ट्वा इंद्रश्चिंतामवाप ह॥ १७.२२७ ॥
तं चिंत्यमानं स तदा पुरंदरं वृत्रो बभाषे परिभर्त्समानः॥
पुराकृतं शक्र महाद्भुतं त्वया जुगुप्सितं कर्म्म च विस्मृतं किम्॥
येनैव जातोऽसि सहस्रनेत्रः शापान्महर्षेरथ गौतमस्य॥ १७.२२८ ॥
ये शूराश्चैंद्रियग्रामं वर्तंते हि नियम्य तु॥
ते जयं प्राप्नुवंतीह नेतरे हि भवादृशाः॥ १७.२२९ ॥
रणाजिरं महाघोरं पापिनां नात्र संशयः॥ १७.२३० ॥
एवं निर्भर्त्सयामास देवेंद्रं दैत्यपुंगवः॥
त्रिशूलं धूनयामास देवेंद्रो हि तडित्समम्॥ १७.२३१ ॥
तेन शूलेन महता वृत्रोऽद्भुतपराक्रमः॥
बभौ तीव्रेण तपसा यथा रुद्रो युगांतकृत्॥ १७.२३२ ॥
तथाभूतं समालक्ष्य देवराजः शतक्रतुः॥
अभ्युद्ययौ हंतुकामो वृत्रे दानवपुंगवम्॥ १७.२३३ ॥
तमायांतमभिप्रेक्ष्य हंतुकामं पुरंदरम्॥
जहास परमं तत्र शक्रस्य च भयावहम्॥
मुखं प्रसार्य सुमहदागतो हि पुरंदरम्॥ १७.२३४ ॥
ग्रस्तुकामो महातेजा दैत्यानामधिपस्तदा॥
आगत्य सहसा शक्रं ग्रासयित्वा सकुंजरम्॥ १७.२३५ ॥
सवज्रं सकिरीटं च ननर्त च जगर्ज्ज च॥
निमिषांतरमात्रेण ग्रसितोऽसौ पुरंदरः॥ १७.२३६ ॥
हाहाकारो महानासीद्देवानां तत्र पश्यताम्॥
भूकम्पो हि तदा ह्यसीदुल्कापातः सहस्रशः॥ १७.२३७ ॥
तिमिरेणावृतं सर्वं जगत्स्थावरजंगमम्॥
नर्तमानस्तदा वृत्रो बभूव परमद्युतिः॥ १७.२३८ ॥
विध्यमानास्तदा सर्वे देवा ब्रह्माण मागताः॥
शशंसुः सर्वमेवैतद्वृत्रासुरविचेष्टितम्॥ १७.२३९ ॥
तच्छ्रुत्वा भगवान्ब्रह्मा व्यथितोऽतीव विस्मितः॥
कथं जातं महेंद्रस्य व्यसनं परमाद्भुतम्॥ १७.२४० ॥
देवैः सह तदा ब्रह्मा सर्वलोकपितामहः॥
तुष्टाव गिरिशं देवं परमेण समाधिना॥ १७.२४१ ॥
**॥ब्रह्मोवाच॥**
ॐनमो लिंगरूपाय महादेवाय वै नमः॥
विश्वरूपाय देवाय विरुपाक्षाय वै नमः॥ १७.२४२ ॥

त्राहित्राहि त्रिलोकेश वृत्रग्रस्तं पुरंदरम्॥
तदा नभोगतावाणी सर्वेषामेव श्रृण्वताम्॥ १७.२४३ ॥
उवाच हितकामाय विधिं लिंगार्चने सती॥
प्रदोषव्रतयुक्तेन इंद्रेण विकृतं कृतम्॥ १७.२४४ ॥
निर्माल्यं पीठिकां चैव च्छायाप्रासादमेव च॥
प्रदक्षिणां कृतवता पीठिकालंघनं कृतम्॥ १७.२४५ ॥
लंघयंति च ये मूढास्ते वै दंड्या न संशयः॥
चंडस्य गणमुख्यस्य तस्मात्कुर्यात्प्रयत्नतः॥
प्रदक्षिणानमस्कारौ लिंगार्च्चनसमन्वितः॥ १७.२४६ ॥
श्रेयःप्राप्तयेकबुद्ध्या वै प्रयत्नाल्लिंगपूजनम्॥
कार्यं दीक्षा परैर्नित्यं सर्वपापोपशांतये॥ १७.२४७ ॥
आशरीरं च तद्वाक्यं श्रुत्वा ब्रह्मादयः सुराः॥
पप्रच्छुस्ते प्रांजलयो नभोवाणीं शुभावहाम्॥ १७.२४८ ॥
कथमर्चामहे लिंगं केनैव विधिना ततः॥
प्रातर्मध्याह्नसमये सायंकाले तथैव च॥ १७.२४९ ॥
कानि पुष्पाणि सायाह्ने मध्याह्ने च तथैव हि॥
प्रातः काले तु तान्येन कथयस्व यथातथम्॥ १७.२५० ॥
तदा नभोगता वाणी कथयामास विस्तरम्॥ १७.२५१ ॥
करवीरं चार्कपुष्पं बृहतीपुष्पमेवच॥
धत्तूरकुसुमं चैव शतपत्रं तथैव च॥ १७.२५२ ॥
आरग्वधं च पुन्नागं बकुलं नागकेशरम्॥
ब्रध्नोत्पलं कदम्बं च मंदारकुसुमं तथा॥ १७.२५३ ॥
बहूनि वरपुष्पाणि बहूनि कमलान्यपि॥
त्रिकाले च पवित्राणि ज्ञेयानि सततं बुधैः॥ १७.२५४ ॥
जातीपुष्पं मल्लिकायाश्च पुष्पं पुष्पं मोगरकं नीलपुष्पं तथैव॥
तथा पुष्पं कुटजं कर्णिकारं कौसुम्भाख्यं वारिजं रक्तवर्णनम्॥ १७.२५५ ॥
एतान्येव य पुष्पाणि मध्याह्ने लिंगपूजने॥
विशिष्टानि मयोक्तानि सायाह्ने कथयाम्यहम्॥ १७.२५६ ॥
चं पकानि त्रिकाले च पवित्राणि न संशयः॥
रात्रौ मोगरकाण्येव पवित्राणि न संशयः॥ १७.२५७ ॥
एवमर्च्चनभेदांश्च ज्ञात्वा तल्लिंगपूजने॥
कार्यो विधिर्विधिज्ञैश्च सततं च शिवालये॥ १७.२५८ ॥
वृषभांतरितो भूत्वा पीठिकांतरमेव च॥

प्रदक्षिणां न कुर्वीत कुर्वन्किल्बिषमश्नुते॥ १७.२५९ ॥
तथा ह्यनेन शक्रेण कृतं चैव प्रदक्षिणम्॥
राजसं भावमाश्रित्य तस्माज्जातंच निष्फलम्॥ १७.२६० ॥
ग्रसितोऽद्यैव वृत्रेण सगजो हि पुरंदरः॥
भवद्भिरेव तत्कार्यं येन इन्द्रः प्रमुच्यते॥ १७.२६१ ॥
महारुद्रविधानेन मुक्तो भवति तत्क्षणात्॥
पुरंदरो ह्ययं देवा नात्र कार्या विचारणा॥ १७.२६२ ॥
तेनैव वचसा देवा रुद्रमभ्यर्च्य यत्नतः॥
यथोक्तेन विधानेन रुद्रसूक्तेन यत्नतः॥ १७.२६३ ॥
तथा चैकादशीरुद्र्या रुद्रमभ्यर्च्य वै सुराः॥
हवनं प्रत्यहं चक्रुर्द्दशांशेन द्विजोत्तमाः॥ १७.२६४ ॥
जपं च पूजां हवनं च चक्रुर्विमोक्तुकामाः सहसा पुरंदरम्॥
शंभोः प्रसादात्सहसा विनिर्गतः कुक्षिं भित्त्वा देवराजस्तदानीम्॥ १७.२६५ ॥
तं निर्गतं समीक्ष्याथ देवदेवेंद्रमोजसा॥
सगजं च स वज्रं च सकिरीटं सकुण्डलम्॥
श्रिया परमया युक्तं पुरंदरं महौजसम्॥ १७.२६६ ॥
देवदुंदुभयो नेदुस्तथा शंखा ह्यनेकशः॥
गंधर्वाप्सरसो यक्षा ऋषयश्च मुदान्विताः॥ १७.२६७ ॥
एकपद्येन सर्वेषां महाहर्षो दिवौकसाम्॥
संजातस्तत्क्षणादेव यदा मुक्तः पुरंदरः॥
तदा शची समायाता यत्र मुक्तः पुरंदरः॥ १७.२६८ ॥
तत्र शच्या समेतोऽसावभिषिक्तो महर्षिभिः॥
पुण्याहवाचनं तस्य कृतं सर्वैः प्रयत्नतः॥ १७.२६९ ॥
एवं तदाभिषिक्तोऽसौ महेंद्र ऋषिभिः पुनः॥
मही मंगलभूयिष्ठा तदा जाता द्विजोत्तमाः॥ १७.२७० ॥
दिशः प्रसन्नतां याता निर्मलं चाभवन्नभः॥
शांतास्तदाग्नयो ह्यासन्मनांसि च महात्मनाम्॥ १७.२७१ ॥
एवमादीन्यनेकानि मंगलानि ततोऽभवन्॥
मुक्ते शतक्रतौ तस्मिन्बभूव परमाद्भुतम्॥ १७.२७२ ॥
एवं प्रवर्तमाने तु महतां च महोत्सवे॥
तावद्वृत्रस्य पतितं शरीरं च भयानकम्॥ १७.२७३ ॥
तत्रैव ब्रह्महत्या च पापिष्ठा पतिता भुवि॥
गंगायमुनयोर्मध्ये अंतर्वेदीति कथ्यते॥ १७.२७४ ॥

पुण्यभूमिरिति ख्याता प्रसिद्धा लोकपावनी॥
वृत्रहत्याप्रतिष्ठा सा यस्मिदेशे स पापवान्॥ १७.२७५ ॥
मलस्य बहुसंभूत्या मालावेति प्रकीर्तिता॥
तस्यां तु मलभूम्यां वै वृत्रस्य च महच्छिरः॥ १७.२७६ ॥
षण्मासेष्वपतत्सर्वैः कृत्तं देवैः सवासवैः॥
एवं वृत्रवधं कृत्वा शक्रो जयमवाप ह॥ १७.२७७ ॥
इंद्रासने चोपविष्टो निरातंकः शचीपतिः॥
एतस्मिन्नंतरे दैत्याः पातालवासिनं बलिम्॥
शशंसुः सर्वमागत्य शक्रस्य च विचेष्टितम्॥ १७.२७८ ॥
तेषां तद्वचनं श्रुत्वा वैरोचनी रुषान्वितः॥
शुक्रं पप्रच्छ स तदा सथमिंद्रो वशी भवेत्॥ १७.२७९ ॥
तेनोक्तं बलये राजञ्जयस्यन्दनलब्धये॥
महायज्ञं कुरुष्वाद्य तेन ते विजयो भवेत्॥ १७.२८० ॥
तेनोक्तो भृगुणा चैवं बलिर्यज्ञार्थमुद्यतः॥
दधौ यानीह द्रव्याणि यज्ञयोग्यानि तानि वै॥
मेलयित्वा त्वरेणैव वैरोचनिरुदारधीः॥ १७.२८१ ॥
प्रवर्तितो महायज्ञो भार्गवेण महात्मना॥
दीक्षायुक्तो बलिरभूज्जुहुवे हघ्यवाहनम्॥ १७.२८२ ॥
हूयमाने तदाग्नौ तु कर्मणा विधिहेतुना॥
तस्माद्बलेः समुत्पन्नः स्यंदनः परमाद्भुतः॥ १७.२८३ ॥
हयैश्चतुर्भिः संयुक्तो ध्वजेसिंहो महाप्रभः॥
शस्त्रास्त्रैः संयुतः श्रीमान्हयैः श्वेतैरलंकृतः॥ १७.२८४ ॥
ततश्चावभृथस्नानं चक्रे शुक्रप्रणोदितः॥
स्यंदनं पूजयित्वाथ आरुरोह बलिस्तदा॥ १७.२८५ ॥
दैत्यैः परिवृतः सद्यो योद्धुकामः पुरंदरम्॥
सद्य एव दिवं प्राप्तो बलिर्वैरोचनो महान्॥ १७.२८६ ॥
आगत्य सेनया सार्द्धमारुरो हामरावतीम्॥
संरुद्धां तां पुरीं दृष्ट्वा तदा ते सुरसत्तमाः॥
विर्शयित्वा सुचिरमूचुः सर्वे बृहस्पतिम्॥ १७.२८७ ॥
किं कुर्मोऽद्य महाभाग आगता दैत्यपुंगवाः॥
योद्धुकामा महाघोराः सर्वे युद्धविशारदाः॥ १७.२८८ ॥
तेषां तद्वचनं श्रुत्वा बृहस्पतिरभाषत॥ १७.२८९ ॥
एते घृतमुखा घोरा भृगुणानोदिताः सुराः॥

अजेयाश्चैव ते सर्वे तपसा विक्रमेण च॥ १७.२९० ॥

एतन्निशम्य वचनं च गुणाभियुक्तं सर्वे सुराः समभवंस्त्रपयाभियुक्ताः॥

इंद्रोऽपि बुद्धिविकलः परिचिंतया च व्रीडायुतः समभवत्परिभत्स्र्यमानः॥ १७.२९१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे बलिदैत्यस्य संग्रामोद्योगवर्णनंनाम सप्तदशोऽध्यायः॥ १७ ॥ छ ॥

**॥लोमश उवाच॥**

कर्मणा परिभूतो हि महेंद्रो गुरुमब्रवीत्॥

विना यत्नेन संक्लेसात्ततुं कर्म्म किमुच्यताम्॥ १८.१ ॥

बृहस्पतिरुवाचेदं त्यक्त्वा चैवामरावतीम्॥

यास्यामोऽन्यत्र सर्वे वै सकुटुंबा जिगीपवः॥ १८.२ ॥

तथा चक्रुः सुराः सर्वे हित्वा चैवामरावतीम्॥

बर्हिणो रुपमास्थाय गतः सद्यः पुरंदरः॥ १८.३ ॥

काको भूत्वा यमः साक्षात्कृकलासो धनाधिपः॥

अग्निः कपोतको भूत्वा भेको भूत्वा महेश्वरः॥ १८.४ ॥

नैर्ॠतस्तत्क्षणादेव कपोतोऽभूत्ततो गतः॥

पाशी कपिंजलो भूत्वा वायुः पारावतोऽभवत्॥ १८.५ ॥

एवं नानातनुभृतो हित्वा ते त्रिदिवं गताः॥

कश्यपस्याश्रमं पुण्यं संप्राप्तास्ते भयातुराः॥ १८.६ ॥

अदितिं मातरं सर्वे शशंसुर्दैत्यचेष्टितम्॥ १८.७ ॥

अप्रियं तदुपाकर्ण्य ह्यदितिः पुत्रलालसा॥

उवाच कश्यपं सा तु सुराणां व्यसनं महत्॥

महर्षे श्रयतां वाक्यं श्रुत्वा तत्कर्तुमर्हसि॥ १८.८ ॥

दैत्यैः पराजिता देवा हित्वा चैवामरावतीम्॥

त्वदीयमाश्रमं प्राप्तास्तान्रक्षस्व प्रजापते॥ १८.९ ॥

तस्यास्तद्वचनं श्रुत्वा कश्यपो वाक्यमब्रवीत्॥

तपसा महता तन्वि जानीहि त्वं च भामिनि॥

अजेया ह्यसुराः साध्वि भृगुणा ह्यनुमोदिताः॥ १८.१० ॥

तेषां जयो हि तपसा उग्रेणाऽऽद्येन भामिनि॥

कुरु शीघ्रतरेणैव सुराणां कार्यसिद्धये॥ १८.११ ॥

व्रतमेतन्महाभागे कथयाम्यर्थसिद्धये॥

तत्कुरुष्व प्रयत्नेन यथोक्तविधिना शुभे॥ १८.१२ ॥

मासि भाद्रपदे देवि दशम्यां नियता शुचिः॥

एकभक्तं प्रकुर्वीत विष्णोः प्रीत्यर्थमेव च॥ १८.१३ ॥

प्रर्थनीयो हरिः साक्षात्सर्वकामवरेश्वरः॥

मंत्रेणानेन सुभगे तद्भक्तैर्वरवर्णिनि॥ १८.१४ ॥

तव भक्तोस्म्यहं नाथ दशम्यादिदिनत्रयम्॥

व्रतं चराम्यहं विष्णो अनुज्ञां दातुमर्हसि॥ १८.१५ ॥

अनेनैव च मंत्रेण प्रार्थनीयो जगत्पतिः॥

एकभक्तं प्रकुर्वीत तच्च भक्तं च केवलम्॥ १८.१६ ॥
रंभापत्रे च भोक्तव्यं वर्जितं लवणेन हि॥
एकादश्यां चोपवासं प्रकुर्वीत प्रयत्नतः॥ १८.१७ ॥
रात्रौ जागरणं कुर्यात्प्रयत्नेन सुमध्यमे॥
द्वादश्यां निपुणत्वेन पारणा तु विधानतः॥
कर्तव्या ज्ञातिभिः सार्द्धं भोजयित्वा द्विजोत्तमान्॥ १८.१८ ॥
एवं द्वादशमासांस्तु कुर्याद्व्रतमतंद्रितः॥
मासि भाद्रपदे प्राप्ते एकादश्यां प्रयत्नतः॥
विष्णुमभ्यर्च्य यत्नेन कलशोपरि संस्थितम्॥ १८.१९ ॥
सौवर्णं राजतं वापि यताशक्त्या प्रकल्पयेत्॥
श्रवणेन तु संयुक्तां द्वादशीं पापनाशिनीम्॥
व्रती उपवसेद्यत्नात्सर्वदोषप्रशांतये॥ १८.२० ॥
एवं हि कश्यपेनोक्तं श्रुत्वाऽदितिरथाचरत्॥
व्रतं सांवत्सरं यावन्नियमेन समन्वितता॥ १८.२१ ॥
वर्षांतेन व्रतेनैव परितुष्टो जनार्दनः॥
प्रादुर्बभूव द्वादश्यां श्रवणेन तदा द्विजाः॥ १८.२२ ॥
बटुरूपधरः श्रीशो द्विभुजः कमलेक्षमः॥
अतसीपुष्पसंकाशो वनमालाविभूषितः॥ १८.२३ ॥
तं दृष्ट्वा विस्मयाविष्टा पूजामध्येऽदितिस्तदा॥
कश्यपेन समायुक्ता साऽस्तौषीत्कमलेक्षणा॥ १८.२४ ॥
**॥अदितिरुवाच॥**
नमोनमः कारणकारणाय ते विश्वात्मने विश्वसृजे चिदात्मने॥
वरेण्यरूपाय परावरात्मने ह्यकुंठबोधाय नमोनमस्ते॥ १८.२५ ॥
इति स्मृतस्तदाऽदित्या देवानां परिरच्युतः॥
प्रहस्य भगवानाह अदितिं देवमातरम्॥ १८.२६ ॥
**॥श्रीभगवानुवाच॥**
तपसा परमेणैव प्रसन्नोहं तवानघे॥
अमुना वपुषा चैव देवानां कार्यसिद्धये॥ १८.२७ ॥
श्रुत्वा भगवतो वाक्यमदितिस्तमुवाचह॥
भगवन्पराजिता देवा असुरैर्बलवत्तरैः॥
तान्रक्ष शरणापन्नासुरान्सर्वाञ्जनार्दन॥ १८.२८ ॥
निशम्य वाक्यं किल तच्च तस्या विष्णुर्विकुंठाधिपतिः स एकः॥
ज्ञात्वा च सर्वं सुरचेष्टितं तदा बलेश्च सर्वं च चिकीर्षितं च॥ १८.२९ ॥

किं कार्यमद्यैव मया हि कार्यं येनैव देवा जयमाप्नुवंति॥
पराजयं दैत्यवराश्च सर्वे विष्णुः परात्मैव विचिंत्य सर्वम्॥ १८.३० ॥
गदमुवाच भगवान्गच्छस्वाद्य वधं प्रति॥
वैरोचनिं महाभागे घात यस्व त्वरान्विता॥ १८.३१ ॥
गदोवाच हृषीकेशं प्रहसन्तीव भामिनी॥
मया ह्यशक्यो वधितुं ब्रह्मण्यो हि बलिर्महान्॥ १८.३२ ॥
चक्रं प्रति तदा विष्मुरुवाच परिसांत्वयन्॥
त्वं गच्छ बलिनं हंतुं शीघ्रमेव सुदर्शन॥ १८.३३ ॥
तदोवाच त्वरेणैव चक्रपाणिं सुदर्शनम्॥
न शक्यते मया हंतुं बलिनं तं महाप्रभो॥ १८.३४ ॥
ब्रह्मण्योऽसि यथा विष्णो तथासौ दैत्यपुंगवः॥
धनुषा च तथैवोक्तः शार्ङ्गपाणिश्च विस्मितः॥
चिंतयामास बहुधा विमृश्य सुचिरं बहु॥ १८.३५ ॥
**॥अत्रिरुवाच॥**
तदा ते ह्यसुराः सर्वे किमकुर्वस्तदुच्यताम्॥ १८.३६ ॥
**॥लोमश उवाच॥**
तदा ते ह्यसुराः सर्वे बलिप्रभृतयो दिवि॥
रुरुधुर्नगरीं रम्यां योद्धुकामाः पुरंदरम्॥ १८.३७ ॥
न विदुर्ह्यसुराः सर्वे गतान्देवांस्त्रिविष्टपात्॥
नानारूपधरां स्तस्मात्कश्यपस्याश्रयं प्रति॥ १८.३८ ॥
प्राकारमारुह्य तदा हि संभ्रमाद्दैत्याः सुरेशं प्रति हंतुकामाः॥
यावत्प्रविष्टा ह्यमरावतीं तां शून्यामपश्यन्परितुष्टमानसाः॥ १८.३९ ॥
इंद्रासने च शुक्रेण ह्यभिषिक्तो बलिस्तदा॥
सहाभिषेकविधिना ह्यसुरैः परिवारितः॥ १८.४० ॥
तथैवाधिष्ठितो राज्ये बलिर्वैरोचनो महान्॥
शुशुभे परया भूत्या महेंद्राधिकृतस्तदा॥ १८.४१ ॥
नागैश्चासुरसंघैश्च सेव्यमानो महेंद्रवत्॥
सुरद्रुमो जितस्तेन कामधे नुर्मणिस्तथा॥ १८.४२ ॥
दानैर्दाता च सर्वेषां येऽन्ये दानित्वमागताः॥
सर्वेषामेव भूतानां दानैर्दाता बलिर्महान्॥ १८.४३ ॥
यान्यान्कामयते कामां स्तान्सर्वान्वितरत्यसौ॥
सर्वेभ्योऽपि स चार्थिभ्यो दानवानामधीश्वरः॥ १८.४४ ॥
**॥शौनक उवाच॥**

देवेंद्रो हि महाभाग न ददाति कदाचन॥
कथं बलिरसौ दाता कथयस्व यथातथम्॥ १८.४५ ॥
**॥ लोमश उवाच॥**
यत्नतो येन यत्किंचित्क्रियते सुकृतं नरैः॥
शुभं वाप्यशुभं वापि ज्ञातव्यं हि विपश्चिता॥ १८.४६ ॥
शक्रो हि याज्ञिको विप्रा अश्वमेधशतेन वै॥
प्राप्तराज्योऽमरावत्यां केवलं भोगलोलुपः॥ १८.४७ ॥
अर्थितं तत्फलं विद्धि पुनः कार्पण्यमाविशत्॥
पुनर्मरणमाविश्य क्षीणपुण्यो भविष्यति॥ १८.४८ ॥
य इंद्र कृमिरेव स्यात्कृमिरंद्रो हि जायते॥
तस्माद्दानात्परतरं नान्यदस्तीह मोचनम्॥ १८.४९ ॥
दानाद्धि प्राप्यते ज्ञानं ज्ञानान्मोक्षो न संशयः॥
मोक्षात्परतरा भक्तिः शूलपाणौ हि वै द्वजाः॥ १८.५० ॥
ददाति सर्वं सर्वेशः प्रसन्नात्मा सदाशिवः॥
किंचिदल्पेन तोयेन परितुष्यति शंकरः॥ १८.५१ ॥
अत्रैवोदाहरंतीममितिहासं पुरातनम्॥
विरोचनसुतेनेदं कृतमस्ति न संशयः॥ १८.५२ ॥
कितवो हि महापापो देवब्राह्मणनिंदकः॥
निकृत्या परयोपेतः परदाररतो महान्॥ १८.५३ ॥
एकदा तु महापापात्कैतावाच्च जितं धनम्॥
गणिकार्थे च पुष्पाणि तांबूलं चंदनं तथा॥ १८.५४ ॥
कौपीनमात्रं तस्यैव कितवस्य प्रदृश्यते॥
कराभ्यां स्वस्तिकं कृत्वा गंधमाल्यादिकं च यत्॥ १८.५५ ॥
गणिकार्थमुपादाय धावमानो गृहं प्रति॥
तदा प्रस्खलितो भूमौ निपपात च तत्क्षणात्॥ १८.५६ ॥
पतनान्मूर्छया युक्तः क्षणमात्रं तदाऽभवत्॥
ततो मूर्छागतस्यास्य पापिनोऽनिष्टकारिणः॥ १८.५७ ॥
बुद्धिः सद्यः समुत्पन्ना कर्मणा प्राक्तनेन हि॥
निर्वेदं परमापन्नः कितवो दुःखसंयुतः॥ १८.५८ ॥
भूम्यां निपतितं यच्च गंधपुष्पादिकं महत्॥
समर्पितं शिवायेति कितवेनाप्यबुद्धिना॥ १८.५९ ॥
चित्रगुप्तेन चाख्यातं दत्तमस्ति त्वया पुनः॥
पतितं चैव देहांते शिवाय परमात्मने॥ १८.६० ॥

पचनीयोसि मे मंद नरकेषु महत्सु च॥
इत्युक्तो धर्मराजेन कितवो वाक्यमब्रवीत्॥ १८.६१ ॥
पापाचारो हि भगवन्कश्चिन्नैव मया कृतः॥
विमृश्यतां मे सुकृतं याथातथ्येन भो यम॥ १८.६२ ॥
चित्रगुप्तेन चाख्यातं द्त्तमस्ति त्वया पुनः॥
पतितं चैव देहांते शिवाय परमात्मने॥ १८.६३ ॥
तेन कर्मविपाकेन घटिकात्रयमेव च ॥
शचीपतेः पदं विद्धि प्राप्स्यसि त्वं न संशयः॥ १८.६४ ॥
आगतस्तत्क्षणाद्देवः सुर्वैः समन्वितः॥
ऐरावतं समारूढो नीतोऽसौ शक्रमंदिरम्॥
शक्रः प्रबोधितस्तेन गुरुणा भावितात्मना॥ १८.६५ ॥
घटिकात्रितयं यावत्तावत्कालं पुरंदर॥
निजासनेऽपि संस्थाप्यः कितवोऽपि ममाज्ञया॥ १८.६६ ॥
गुरोर्वचनमार्कर्ण्य कृत्वा शिरसि तत्क्षणात्॥
गतोऽन्वत्रैव शक्रोऽसौ कितवो हि प्रवेशितः॥
भवनं देवराजस्य नानाश्चर्यसमन्वितम्॥ १८.६७ ॥
शक्रासनेऽभिषिक्तोऽसौ राज्यं प्राप्तः शतक्रतोः॥
शंभोर्गंधप्रदानाच्च पुष्पतांबूलसंयुतम्॥ १८.६८ ॥
किं पुनः श्रद्धया युक्ताः शिवाय परमात्मने॥
अर्पयंति सदा भक्त्या गंधपूष्पादिकं महत्॥ १८.६९ ॥
शिवसायुज्यमायाताः शिवसेनासमन्विताः॥
प्राप्नुवंति महामोदं शक्रो ह्येषां च किंकरः॥ १८.७० ॥
शिवपूजारतानां च यत्सुखं शांतचेतसाम्॥
ब्रह्मशक्रादिकानां च तत्सुखं दुर्लभं महत्॥ १८.७१ ॥
वराकास्ते न जानंति मूढा विषयलोलुपाः॥
वंदनीयो महादेवो ह्यर्चनीयः सदाशिवः॥ १८.७२ ॥
पूजनीयो महादेवः प्राणिभिस्तत्त्ववेदिभिः॥
तस्मादिंद्रत्वमगमत्कितवो घटिकात्रयम्॥ १८.७३ ॥
पुरोधसाभिषिक्तोऽसौ पुरंदरपदे स्थितः॥
तदानीं नारदेनोक्तः कितवोऽसौ महायशाः॥ १८.७४ ॥
इन्द्राणीमानयस्त्वेति यथा राज्यं सुशोभितम्॥
ततः प्रहस्य चोवाच कितवः शिववल्लभः॥ १८.७५ ॥
इन्द्राण्या नास्ति मे कार्यं न वाच्यं ते महामते॥

एवमुक्त्वाथ कितवः प्रदातुमुपचक्रमे॥ १८.७६ ॥
ऐरावतमगस्त्याय प्रददौ शिववल्लभः॥
विश्वामित्राय कितवो ददौ हयमुदारधीः॥ १८.७७ ॥
उच्चैःश्रवससंज्ञं च कामधेनुं महायशाः॥
ददौ वशिष्ठाय तदा चिंतामणिं महाप्रभम्॥ १८.७८ ॥
गालवाय महातेजास्तदा कल्पतरुं च सः॥
कौंडिन्याय महाभागः कितवोपि गृहं तदा॥ १८.७९
एवमादीन्यनेकानि रत्नानि विविधानि च॥
ददावृषिभ्यो मुदितः शिवप्रीत्यर्थमेव च॥ १८.८० ॥
घटितकात्रितयं यावत्तावत्कालं ददौ प्रभुः॥
घटिकात्रितयादूध्व पूर्वस्वामी समागतः॥ १८.८१ ॥
पुरंदरोऽमरावत्यामुपविश्य निजासने॥
ऋषिभिः संस्तुतश्चैव शच्या सह तदाऽभवत्॥ १८.८२ ॥
शचीमुवाच दुर्मेधाः कितवेनासि भामिनि॥
भुक्ता ह्यस्यैव कथय याथातथ्येन शोभने॥ १८.८३ ॥
तदा प्रहस्य चोवाच पुरंदरमकल्मषा॥
आत्मौपम्येन सर्वत्र पश्यति त्वं पुरंदर॥ १८.८४ ॥
असौ महात्मा कितवस्वरूपी शिवप्रसादात्परमार्थविज्ञः॥
वै राग्ययुक्तो हि महानुभावो येनापि सर्वं परमं प्रपन्नम्॥ १८.८५ ॥
राज्यादिकं मोहमयं च पाशं त्यक्ता परेभ्यो विजयी स जातः॥ १८.८६ ॥
वचो निशम्य देवेश इंद्राण्याः स पुरंदरः॥
व्रीडायुक्तोऽभवत्तूष्णीमिंद्रासनगतस्तदा॥ १८.८७ ॥
बृहस्पतिमुवाचेदं वाक्यं वाक्यविदां वरः॥
ऐरावतो न दृश्येत तथैवोच्चैःश्रवा हयः॥ १८.८८ ॥
पारिजातादयः सर्वे पदार्थाः केन वा हृताः॥
गुरुरुवाचेदं कितवेन कृतं महत्॥ १८.८९ ॥
ऋषिभ्यो दत्त मद्यैव यावत्सत्ता हि तस्य वै॥
स्वसत्तायां महत्यां च स्वसत्ता ये भवंति च॥ १८.९० ॥
अप्रमात्ताश्च ये नित्यं शिवध्यानपरायणाः॥
ते प्रियाः शंकरस्यैव हित्वा कर्मफलानि वै॥
केवलं ज्ञानमाश्रित्य ते यांति परमं पदम्॥ १८.९१ ॥
एतच्छ्रुत्वा वचनं तस्य चेंद्रो बृहस्पतेर्वाक्यमिदं वभाषे॥
प्रायो यमो वक्ष्यति सर्वमेतत्समृद्धये ह्यात्मनश्चैव शक्रः॥ १८.९२ ॥

तथेति मत्वा गुरुणा सहैव राजा सुराणां सहसा जगाम॥
स्वकार्यकामो हि तथा पुरंदरो ययौ पुरीं संयमिनीं तदानीम्॥ १८.९३ ॥
यमेन पूज्यमानो हि शक्रो वाक्यमुवाच ह॥
त्वया दत्तं मम पदं कितवाय दुरात्मने॥ १८.९४ ॥
अनेनैतत्कृतं कर्म्म जुगुप्सितं महत्तरम्॥
मदीयानि च रत्नानि यानि सर्वाण्यनेन वै॥
एभ्य एभ्यः प्रदत्तानि धर्म्म जानीहि तत्त्वतः॥ १८.९५ ॥
त्वं धर्मनामासि कथं कितवाय प्रदत्तवान्॥
मम राज्यविनाशाय कृतमस्ति त्वयाऽधुना॥ १८.९६ ॥
आनयस्व महाभाग गजादीनि च सत्वरम्॥
अन्यानि चैव रत्नानि दत्तानि च यतस्ततः॥ १८.९७ ॥
निशम्य वाक्यं शक्रस्य यमो वचनमब्रवीत्॥
कितवं च रुषाविष्टः किं त्वया पापिना कृतम्॥ १८.९८ ॥
भोगार्थं चैव यद्दत्तं शक्रराज्यं त्वयाऽधुन्॥
प्रदत्तं च द्विजातिभ्यो ह्यन्यथा वै कृतं महत्॥ १८.९९ ॥
अकार्यं वै त्वया मूढ परद्रव्यापहारणम्॥
तेन पापेन महता निरयं प्रतिगच्छसि॥ १८.१०० ॥
यमस्य वचनं श्रुत्वा कितवो वाक्यमब्रवीत्॥
अहं निरयगामी च नात्र कार्या विचारणा॥ १८.१०१ ॥
यावत्स्वता मम विभो जाता शक्रासने तथा॥
तावद्दत्तं हि यत्किंचिद्द्विजेभ्यो हि यथातथम्॥ १८.१०२ ॥
**॥ यम उवाच॥**
दानं प्रशस्तं भूम्यां च दृश्यते कर्म्मणः फलम्॥
स्वर्गे दानं न दातव्यं केनचित्कस्यचित्क्वचित्॥
तस्माद्दंड्योऽसि रे मूढ अशास्त्रीयं कृतं त्वया॥ १८.१०३ ॥
गुरुरात्मवतां शास्ता राजा शास्ताः दुरात्मनाम्॥
सर्वेषां पापशीलानां शास्तऽहं नात्र संशयः॥ १८.१०४ ॥
एवं निर्भर्त्सयित्वा तं कितवं धर्मराट्स्वयम्॥
उवाच चित्रगुप्तं च नरके पच्यतामयम्॥
तदा प्रहस्य चोवाच चित्रगुप्तो यमं प्रति॥ १८.१०५ ।
कथं निरयगामित्वं कितवस्य भविष्यति॥
येन दत्तो ह्यगस्त्याय गज ऐरावतो महान्॥ १८.१०६ ॥
तथाश्वो ह्यब्धिसंभूतो गालवाय महात्मने॥

विश्वामित्राय भद्रं ते चिंतामणिर्महाप्रभः॥ १८.१०७ ॥
एवमादीनि रत्नानि दत्तानि कितेवन हि॥
तेन कर्मविपाकेन पूजनीयो जगत्त्रये॥ १८.१०८ ॥
शिवमुद्दिश्य यदत्तं स्वर्गे मर्त्ये च यैर्नरैः॥
तत्सर्वं त्वक्षयं विद्यान्निश्छिद्रं कर्म चोच्यते॥
तस्मान्नरकगामित्वं कितवस्य न विद्यते॥ १८.१०९ ॥
यानियानि च पापानि कितवस्य महात्मनः॥
भस्मीभूतानि सर्वाणि जातानि स्मरणाच्च वै॥ १८.११० ॥
शंभोः प्रसादात्सर्वाणि सुकृतानि च तत्क्षणात्॥
तद्वचश्चित्रगुप्तस्य निशम्य प्रेतराट् स्वयम्॥ १८.१११ ॥
प्रहस्यावाङ्मुखो भूत्वा इद माह शतक्रतुम्॥
त्वं हि राजा सुरेंद्राणां स्थविरो राज्यलंपटः॥ १८.११२ ॥
अश्वमेधशतेनैव एकं जन्मार्जितं कृतम्॥
त्वया नास्त्यत्र संदेहो ह्यर्ज्जितं तेन वै महत्॥ १८.११३ ॥
प्रार्थयित्वा ह्यगस्त्यादीन्मुनीन्सर्वान्विशेषतः॥
अर्थेन प्रणिपातेन त्वया लभ्यानि तानि च॥
गजादिकानि रत्नानि येन त्वं च सुखी त्वरन्॥ १८.११४ ॥
तथेति मत्वा वचनं पुरंदरो गतः पुरीं स्वामविवेकदृष्टिः॥
अभ्यर्थयामास विनम्रकंधरश्चर्षीस्ततो लब्धवान्पारिजातम्॥ १८.११५ ॥
अनेनैव प्रकारेण लब्धराज्यः पुरंदरः॥
जातस्तदामरावत्यां राजा सह महात्मभिः॥ १८.११६ ॥
कितवस्य पुनर्जन्म दत्तं वैवस्वतेन हि॥
किंचितकर्मविपाकेन विरोचनसुतोऽभवत्॥ १८.११७ ॥
सुरुचिर्जननी तस्य कितवस्याभवत्तदा॥
विरोचनस्य महिषी दुहिता वृषपर्वणः॥
तस्थौ जठरमास्थाय तस्याः सोऽपि महात्मनः॥ १८.११८ ॥
तदाप्रभृति तस्यैव प्रह्लादस्यात्मजात्स वै॥
सुरुचेश्च तथाप्यासीद्धर्मेदाने महामतिः॥ १८.११९ ॥
तेनैव जठरस्थेन कृता मतिरनुत्तमा॥
कितवेन कृता विप्रा दुर्लभा या मनीषिणाम्॥ १८.१२० ॥
एकदा वै तदा शक्रो ययौ वैरोचनं प्रति॥
हंतुकामो हि दैत्येंद्रं विप्रो भूत्वाऽथ याचकः॥ १८.१२१ ॥
विरोचनगृहं प्राप्त इंद्रो वाक्यमुवाच ह॥

स्थविरो ब्राह्मणो भूत्वा देहीति मम सुव्रत॥
मनस्वी त्वं च दैत्येंद्र दाता च भुवनत्रये॥ १८.१२२ ॥
तव विप्रा महाभाग चरितं परमाद्भुतम्॥
वर्णयन्ति समा जेषु स्थित्वा कीर्तिं च निर्मलाम्॥
याचकोऽहं च दैत्येंद्र दातुरर्महसि सुव्रत॥ १८.१२३ ॥
तस्य तद्वचनं श्रुत्वा दैत्येंद्रो वाक्यमब्रवीत्॥
किं दातव्यं तव विभो वद शीघ्रं ममाधुना॥ १८.१२४ ॥
इंद्रो हि विप्ररूपेण विरोचनमुवाच ह॥
याचयामि च दैत्येंद्र यदहं परिभावितः॥ १८.१२५ ॥
आत्मप्रीत्या च दातव्यं मम नास्त्यत्र संशयः॥
उवाच प्रहसन्वाक्यं प्रह्लादस्यात्मजोऽसुरः॥ १८.१२६ ॥
ददाम्यात्मशिरो विप्र यदि कामयसेऽधुना॥
इदं राज्यमनायासमियं श्रीर्नान्यगामिनी॥
अहं समर्पयिष्यामि तव नास्त्यत्र सशयः॥ १८.१२७ ॥
इत्युक्तस्तेन दैत्येन विमृश्य च तदा हरिः॥
उवाच देहि मे स्वीयं शिरो मुकुटसेवितम्॥ १८.१२८ ॥
एवमुक्ते तु वचने शक्रेण द्विजरूपिणा॥
त्वरन्महेंद्राय तदा शिवर उत्कृत्त्य वै मुदा॥
स्वकरेण ददौ तस्मै प्रह्लादस्यात्मजोऽसुरः॥ १८.१२९ ॥
प्रह्लादेन पुरा यस्तु कृतो धर्म्मः सुदुष्करः॥
केवलां भक्तिमाश्रित्य विष्णोस्तत्परचेतसा॥ १८.१३० ॥
दानात्परतरं चान्यत्क्वचिद्वस्तु न विद्यते॥
तद्दानं च महापुण्यमार्तेभ्यो यत्प्रदीयते॥ १८.१३१ ॥
स्वशक्त्या यच्च किंचिच्च तदानंत्याय कल्पते॥
दानात्परतरं नान्यत्त्रिषु लोकेषु विद्यते॥ १८.१३२ ॥
सात्त्विकं राजसं चैव तामसं च प्रकीर्तितम्॥
तथा कृतमनेनैव दानं सात्त्विकलक्षणम्॥ १८.१३३ ॥
शिर उत्कृत्त्य चेंद्राय प्रदत्तं विप्ररूपिणे॥
किरीटः पतितस्तत्र मणयो हि महाप्रभाः॥ १८.१३४ ॥
ऐकपद्येन पतितास्ते जाता मंडलाय वै॥
दैत्यानां च नरेंद्राणां पन्नगानां तथैव च॥ १८.१३५ ॥
विरोचनस्य तद्दानं त्रिषु लोकेषु विश्रुतम्॥
गायंत्यद्यापि कवयो दैत्येंद्रस्य महात्मनः॥ १८.१३६ ॥

विरोचनस्य पुत्रोऽभूत्कितवोऽसौ महाप्रभः॥
मृते पितरि जातोऽसौ माता तस्य पतिव्रता॥ १८.१३७ ॥
कलेवरं च तत्याज पतिलोकं गता ततः॥
भार्गवेणाभिषिक्तोऽसौ जनकस्य निजासने॥ १८.१३८ ॥
नाम्ना बलिरिति ख्यातो बभूव च महायशाः॥
तेन सर्वे सुरगणास्त्रासिताः सुमहाबलाः॥ १८.१३९ ॥
गतस्ते कथिताः पूर्वं कश्यपस्याश्रमं शुभम्॥
तदा बलिरभूदिन्द्रो देवपुर्यां महायशाः॥ १८.१४० ॥
स्वयं तताप तपसा सूर्यो भूत्वा तदाऽसुरः॥
ईशो भूत्वा स्वयं चास्ते ऐशान्यां दिशि पालयन्॥ १८.१४१ ॥
तथा च नैर्ऋतो भूत्वा तथा त्वंबुपतिः स्वयम्॥
धनाध्यक्ष उदीच्यां वै स्वयमास्ते बलिस्तदा॥
एवमास्ते बलिः साक्षात्स्वयमेव त्रिलोकभुक्॥ १८.१४२ ॥
शिवार्चनरतेनैव कितवेन बलिर्द्विजाः॥
पूर्वाभ्यासेन तेनैव महादानरतोऽभवत्॥ १८.१४३ ॥
एकदा तु सभामध्ये आस्थितो भृगुणा सह॥
दैत्येंद्रैः संवृतः श्रीमाञ्छंडामर्कौ वचोऽब्रवीत्॥ १८.१४४ ॥
आवासः क्रियतामत्र क्रियतामत्र असुरैर्म्मम सन्निधौ॥
हित्वा पातालमद्यैव मा विलंबितुमर्हथ॥ १८.१४५ ॥
भार्गवस्तदुपश्रुत्य प्रहस्येदमुवाच ह॥
यज्ञैश्च विविधैश्चैव स्वर्गलोके महीयते॥ १८.१४६ ॥
याज्ञिकैश्च महाराज नान्यथा स्वर्गमेव हि॥
भोक्तुं हि पार्यते राजन्नान्यता मम भाषितम्॥ १८.१४७ ॥
गुरोर्वचनमाज्ञाय दैत्येंद्रो वाक्यमब्रवीत्॥
मया कॉतं च यत्कर्म तेन सर्वे महासुराः॥
स्वर्गे वसंतु सुचिरं नात्र कार्या विचारणा॥ १८.१४८ ॥
प्रहस्यो वाच भगवान्भार्गवाणां महातपाः॥
बलिनं बालिशं मत्वा शुक्रो बुद्धिमतां वरः॥ १८.१४९ ॥
यत्त्वयोक्तं च वचनं बले मम न रोचते॥
इहैव त्वं समा गत्य वस्तुं चेच्छसि सुव्रत॥ १८.१५० ॥
अश्वमेधशतेनैव यज त्वं जातवेदसम्॥
कर्म्मभूमिं गतो भूत्वा मा विलंबितुमर्हसि॥ १८.१५१ ॥
तथेति मत्वा स बलिर्महात्मा हित्वा तदानीं त्रिदिवं मनस्वी॥

दैत्यैः समेतो गुरुणा च संगतो ययौ भुवं सोनुचरैः समेतः॥ १८.१५२ ॥
तन्नर्मदाया गुरुकुल्यसंज्ञकं तीरे महातीर्थमुदारशोभम्॥
गत्वा तदा दैत्यपतिर्महात्मा जित्वा समग्रं वसुधावलं च॥ १८.१५३ ॥
ततोऽश्वमेधैर्बहुभिर्विचक्षणो गुरुप्रयुक्तः स महायशाबलिः॥
ईजे च दीक्षां परमामुपेतो वैरोचनिं सत्यवतां वरिष्ठः॥ १८.१५४ ॥
कृत्वा ब्राह्मणमाचार्यमृत्विजः षोडशाऽभवन्॥
सुपरीक्षितेन तेनैव भार्गवेण महात्मना॥ १८.१५५ ॥
यज्ञानामूनमेकेन शतं दीक्षापरेण हि॥
बलिना चाश्वमेधानां पूर्णं कर्तुं समादधे॥ १८.१५६ ॥
यावद्यज्ञशतं पूर्णं तस्य राज्ञो भविष्यति॥
पुरा प्रोक्तं मया चात्र ह्यदित्या व्रतमुत्तमम्॥ १८.१५७ ॥
व्रतेन तेन संतुष्टो भगवान्हरिरीश्वरः॥
बटुरूपेम महता पुत्रभूतो बभूव ह॥ १८.१५८ ॥
अदित्याः कश्यपेनैव उपनीतस्तदा प्रभुः॥
उपनीतेऽथ संप्राप्तो ब्रह्मा लोकपितामहः॥ १८.१५९ ॥
दत्तं यज्ञोपवीतं च ब्रह्मणा परमेष्ठिना॥
दंडकाष्ठं प्रदत्तं हि सोमेन च महात्मना॥ १८.१६० ॥
मेखला च समानीता अजिनं च महाद्भुतम्॥
तथा च पादुके चैव मह्या दत्ते महात्मनः॥ १८.१६१ ॥
तत्र भिक्षा समानीता भवान्या चार्थसिद्धये॥
एवं भगवते दत्तं विष्णवे बटुरूपिणे॥ १८.१६२ ॥
अभिवंद्य श्रीशो वामनो ह्दितिं तथा॥
कश्यपंच महातेजा यज्ञवाटं जगाम च॥
याज्ञिकस्य बलेराह च्छलनार्थं स्वयं प्रभुः॥ १८.१६३ ॥
तदा महेशः स जगाम स्वर्गं प्रकंपयन्गां प्रपदा भरेण॥
स वामनो बटुरूपी च साक्षाद्विष्णुः परात्मा सुरकार्यहेतोः॥ १८.१६४ ॥
गीर्भिर्यथार्थाभिरभिष्टुतो जनैर्मुनीश्वरैर्देवगणैर्महात्मा॥
त्वरेण गच्छन्स च यज्ञवाटं प्राप्तस्तदानीं जगदेकबंधुः॥ १८.१६५ ॥
उद्गापयन्साम यतो हि साक्षाच्चकार देवो बटुरूपवेषः॥
उद्गीयमानो भगवान्स ईश्वरो वेदांत वेद्यो हरिरीश्वरः प्रभुः॥ १८.१६६ ॥
ददर्श तं महायज्ञमश्वमेधं बलेस्तदा॥
द्वारि स्थितो महातेजा वामनो बटुरूपधृक्॥ १८.१६७ ॥
ब्रह्मरूपेण महता व्याप्तमासीद्दिगंतरम्॥

पवमानस्य च बटोर्वामनस्य महात्मनः॥ १८.१६८ ॥
तच्छ्रुत्वा च बलिः प्राह शंडामर्क्कौ च बुद्धिमान्॥
ब्राह्मणाः कतिसंख्याश्च आगताः संति ईक्ष्यताम्॥ १८.१६९ ॥
तथेति मत्वा त्वरितावुत्थितौ तौ तदा द्विजाः॥
शंडामर्कौ समागम्य मंडपद्वारि संस्थितौ॥ १८.१७० ॥
ददृशाते महात्मानं श्रीहरिं बटुरूपिणम्॥
त्वरितौ पुनरायातौ बलेः शंसयितुं तदा॥ १८.१७१ ॥
ब्रह्मचारी समायात एक एव न चापरः॥
पठनादौ महाराज चागतस्तव सन्निधौ॥
किमर्थं तन्न जानीमो जानीहि त्वं महामते॥ १८.१७२ ॥
एवमुक्ते तु वचने ताभ्यां स च महामनाः॥
उत्थितस्तत्क्षणादेव दर्शनार्थे बटुं प्रति॥ १८.१७३ ॥
स ददर्श महातेजा विरोचनसुतो महान्॥
दंडवत्पतितो भूमौ ननाम शिरसा बटुम्॥ १८.१७४ ॥
आनयित्वा बटुं सद्यः संनिवेश्यः निजासने॥
अर्घ्यपाद्येन महताभ्यर्चयामास तं बटुम्॥ १८.१७५ ॥
विनम्रकंधरो भूत्वा उवाच श्लक्ष्णया गिरा॥
कुतः कस्माच्च कस्यासि तच्छिघ्रं कथ्यतां प्रभो॥ १८.१७६ ॥
तच्छ्रुत्वा वचनं तस्य विरोचनसुतस्य वै॥
मनसा हृषितश्चासौ वामनो वक्तुमारभत्॥ १८.१७७ ॥
**॥भगवानुवाच॥**
त्वं हि राजा त्रिलोकेशो नान्यो भवितुमर्हसि॥
स्वकुलं न्यूनतां गच्छेद्यो वै कापुरुषः स्मृतः॥ १८.१७८ ॥
समं वा चाधिको वापि यो गच्छेत्पुरुषः स्मृतः॥
त्वया कृतं च यत्कर्म्म न कृतं पूर्वजैस्तव॥ १८.१७९ ॥
दैत्यानां च वरिष्ठा ये हिरण्यकसिपादयः॥
कृतं महत्तपो येन दिव्यं वर्षसहस्रकम्॥ १८.१८० ॥
शरीरं भक्षितं यस्य जुषाणस्य तपो महत्॥
पिपीलिकाभिर्बहुभिर्दंशैश्चैव समावृतम्॥ १८.१८१ ॥
अभवत्तस्य तज्ज्ञात्वा सुरेंद्रो ह्यगमत्पुरा॥
नगरं तस्य च तदा सैन्येन महता वृतः॥ १८.१८२ ॥
तत्सन्निधौ हताः सर्वे असुरा दैत्यशत्रुणा॥
विंध्या तु महिषी तस्य नीयमाना निवारिता॥ १८.१८३ ॥

नारदेन पुरा राजन्किंचित्कार्यं चिकीर्षुणा॥
शंभोः प्रसादादखिलं मनसा यत्समीक्षितम्॥
दैत्यैंद्रेण च तत्सर्वं तपसैव वशीकृतम्॥ १८.१८४ ॥
तस्याः पुत्रो महातेजा येन नीतोऽभवत्सभाम्॥
तस्य पुत्रो महाभाग पिता ते पितृवत्सलः॥
नाम्ना विरोचनो विद्वानिंद्रो येन महात्मना॥ १८.१८५ ॥
दानेन तोषितो राजन्स्वेनैव शिरसा तदा॥
तस्यात्मजोसि भो राजन्कृतं ते परमं यशः॥ १८.१८६ ॥
यशोदीपेन महता दग्धाः शलभवत्सुराः॥
इंद्रोपि निर्जितो येन त्वया नास्त्यत्र संशयः॥ १८.१८७ ॥
श्रुतमस्ति मया सर्वं चरितं तव सुव्रत॥
अल्पकोऽहमिहायातो ब्रह्मचर्यव्रते स्थितः॥ १८.१८८ ॥
उटजार्थे च मे देहि भूमीं भूमिभृतांवर॥
बटोस्तस्यैव तद्वाक्यं श्रुत्वा बलिरभाषत॥ १८.१८९ ॥
हे बटो पंडितो भूत्वा यदुक्तं वचनं पुरा॥
शिशुत्वात्तन्न जानासि श्रुत्वा मन्ये यथार्थतः॥ १८.१९० ॥
वद शीघ्रं महाभाग कियन्मात्रां महीं तव॥
दास्यामि त्वरितेनैव मनसा तद्विमृश्यताम्॥ १८.१९१ ॥
तदाह वामनो वाक्यं स्मयन्मधुरया गिरा॥
असंतोषपरा ये च विप्रा नष्टा न संशयः॥ १८.१९२ ॥
संतुष्टा ये हि विप्रास्ते नान्ये वेषधरा ह्यमी॥
स्वधर्मनिरता राजन्निर्दंभा निरवग्रहाः॥ १८.१९३ ॥
निर्मत्सरा जितकोधावदान्या हि महामते॥
विप्रास्ते हि महाभाग तैरियं धार्यते मही॥ १८.१९४ ॥
मनस्वी त्वं बहुत्वाच्च दातासि भुवनत्रये॥
तथापि मे प्रदातव्या मही त्रिपदसंमिता॥ १८.१९५ ॥
बहुत्वे नास्ति मे कार्यं मह्या वै सुरसूदन॥
प्रवेशमात्रमुटजं तथा मम भविष्यति॥ १८.१९६ ॥
त्रिपदं पूर्यतेऽस्माकं वस्तुं नास्त्यत्र संशयः॥
देहि मे क्रमतो राजन्यावद्भूमिभविष्यति॥
तावत्संख्या प्रदातव्या यदि दातासि भो बले॥ १८.१९७ ॥
प्रहस्य तमुवाचेदं बलिर्वैरोचनात्मजः॥
दास्यामि ते महीं कृत्सां सशैलवनकाननाम्॥ १८.१९८ ॥

मदीयां वै महाभाग मया दत्तां गृहाम वै॥
याचकोऽसि बटो पश्य दानं दैत्याप्रयाचसे॥ १८.१९९ ॥
याचको ह्यल्पको वास्तु दाता सर्वं विमृश्य वै॥
तथा विलोक्य चात्मानं ह्यर्थिभ्यश्च ददाति वै॥ १८.२०० ॥
आत्मौपम्येन सर्वत्र यो ददाति ह्युदारधीः॥
तस्मान्न याचितव्यं हि अर्थिना मंदभागिना॥ १८.२०१ ॥
बटो ददाम्यहं तेऽद्य ससैलवनकाननाम्॥
पृथ्वीं सपर्वतां साब्धिं नान्यथा मम भाषितम्॥ १८.२०२ ॥
पुनः प्रोवाच स बटुर्विरोचनसुतं प्रति॥
पूर्यते मम दैत्येंद्र क्रमतो हि पदैस्त्रिभिः॥ १८.२०३ ॥
बटोस्तद्वचनं श्रुत्वा असुरेन्द्रो बलिस्तदा॥
उवाच प्रहसन्वाक्यं मन्यमानो बलिर्भृशम्॥
गृह्यतां च मया दत्तां पदैस्त्रिभिरलंकृताम्॥ १८.२०४ ॥
इत्युक्तो वामनः प्राह प्रहसन्नसुरं प्रति॥
संकल्प्य सकलां पृथ्वीं दातुमर्हसि सुव्रत॥ १८.२०५ ॥
तथेति मत्वा बलिना सुपूजितः स वामनः कश्यपनंदनो महान्॥
बलिस्तदानीं सहसा नितांतं संस्तूयमानस्त्वृषिभिर्मुनींद्रैः॥ १८.२०६ ॥
तं पूजयित्वा स बलिर्यावद्दातुं समुद्यतः॥
गुरुणा वारित स्तावद्विरोचनसुतो महान्॥ १८.२०७ ॥
न दातव्यं त्वया दानं विष्णवे बटुरूपिणे॥
इंद्रार्थमागतः सद्यो यज्ञविघ्नं करोति ते॥
तस्मात्त्वया न पूज्यो हि विष्णुरध्यात्मदीपकः॥ १८.२०८ ॥
पुरा कृतमनेनैव मोहिनीरूपधारिणा॥
देवेभ्यश्चामृतं दत्तं राहुर्येन हतो महान्॥ १८.२०९ ॥
येन विद्राविता दैत्याः कालनेमिर्हतो बली॥ १८.२१० ॥
एवंविधोऽयं पुरुषो महात्मा स ईश्वरो विश्वपतिः स एव॥
विमृश्य सर्वं मनसा महामते हिताहितं कर्तुमि हार्हसि त्वम्॥ १८.२११ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे बलियज्ञे वामनगमनवर्णनं नामाष्टादशोऽध्यायः॥ १८ ॥ छ ॥

**॥लोमश उवाच॥**

एवं संबोधितो दैत्यो गुरुणा भार्गवेण हि॥
उवाच प्रहसन्वाक्यं मेघगंभीरया गिरा॥ १९.१ ॥

त्वयोक्तोहं हितार्थाय यैर्वाक्यैश्चालितोऽस्म्यहम्॥
तव वाक्यं मम प्रीत्यै हितमप्यहितं भवेत्॥ १९.२ ॥

दास्यामि भिक्षितं चास्मै विष्मवे बटुरूपिणे॥
पात्रीभूतो ह्ययं विष्णुः सर्वकर्मफलेश्वरः॥ १९.३ ॥

येषां हृदि स्थितो विष्णुस्ते वै पात्रतमा ध्रुवम्॥
यस्य नाम्ना सर्वमिदं पवित्रमिव चोच्यते॥ १९.४ ॥

येन वेदाश्च यज्ञाश्च मंत्रतंत्रादयो ह्यमी॥
सर्वे संपूर्णतां यांति सोऽयं विश्वेश्वरो हरिः॥ १९.५ ॥

आगतः कृपया मेद्य सर्वात्मा हरिरीश्वरः॥
उद्धर्तुं मां न संदेह एतज्जानीहि तत्त्वतः॥ १९.६ ॥

तस्य तद्वचनं श्रुत्वा चुकोप च रुषान्वितः॥
भार्गवः शप्तुमारेभे दैत्येंद्रं धर्म्मवत्सलम्॥ १९.७ ॥

मम वाक्यमतिक्रम्य दातुमिच्छस्यरिंदम॥
विगुणो भव रे मंद तस्मात्त्वं निःश्रिको भव॥ १९.८ ॥

एवं शशाप च तदा परमार्थविज्ञं शिष्यं महात्मानमगाधबोधम्॥
स वै जगामाथ महाकविस्त्वरात्स्वमाश्रमं धर्म्मविदां वरिष्ठः॥ १९.९ ॥

गते तु भार्गवे तस्मिन्बलिर्विरोचनात्मजः॥
वामनं चार्चयित्वा स महीं दातुं प्रचक्रमे॥ १९.१० ॥

विंध्यावलिः समागत्य बलेरर्द्धांगशोभिता॥
अवनिज्य बटोः पादौ प्रददौ विष्णवे महीम्॥ १९.११ ॥

संकल्पपूर्वेण तदा विधिना विधिकोविदः॥
संकल्पेनैव महता ववृधे भगवानजः॥ १९.१२ ॥

यदैकेन मही व्याप्ता विष्णुना प्रभविष्णुना॥
सर्वे स्वर्गा द्वितीयेन व्याप्तास्तेन महात्मना॥ १९.१३ ॥

सत्यलोकगतो विष्णोश्चरणः परमेष्ठिना॥
कमण्डलुगतेनैव अंभसा चावनेनिजे॥ १९.१४ ॥

तत्पादसंपर्कजलाच्च जाता भागीरथी सर्वसुमंगला च॥
यया त्रिलोकी च कृता पवित्रा यया च सर्वे सगराः समुद्धृताः॥
यया कपर्दः परिपूरितो वै शंभोस्तदानीं च भगीरथेन॥ १९.१५ ॥

तीर्थानां तीर्थमाद्यं च गंगाख्यमवतारितम्॥
तद्विष्णोश्चरणेनैव समेतं ब्रह्मणा कृतम्॥ १९.१६ ॥

त्रिविक्रमात्परो ह्यात्मा नाम्ना त्रिविक्रमोऽभवत्॥
त्रिविक्रमक्रमाक्रांतं त्रैलोक्यं च तदाऽभवत्॥ १९.१७ ॥

पदद्वयेन वा पूर्णं जगदेतच्चराचरम्॥
विहाय तत्स्वरूपं च देवदेवो जनार्द्दनः॥
पुनश्च बटुरूपोऽसावुपविश्य निजासने॥ १९.१८ ॥

तदा देवाः सगंधर्वा मुनयः सिद्धचारणाः॥
आगताश्च बलेर्यज्ञं द्रष्टुं यज्ञपतिं प्रभुम्॥ १९.१९ ॥

तत्र ब्रह्मा समागत्य स्तुतिं चक्रे परात्मनः॥
बलेस्तत्रैव चान्येन च दैत्येंद्राश्चागतास्त्वरम्॥ १९.२० ॥

एभिः सर्वैः परिवृतो वामनो बलिसद्मनि॥
उपविश्यासने सोऽथ उवाच गरुडं प्रति॥ १९.२१ ॥

दैत्योऽसौ बालिशो भूत्वा दत्तानेन मही मम॥
त्रिपदक्रमणेनैव गृहीतं च पदद्वयम्॥ १९.२२ ॥

पदमेकं प्रतिश्रुत्य न ददाति हि दुर्मतिः॥
तस्मात्त्वया गृहीतव्यं तृतीयं पदमेव च॥ १९.२३ ॥

इत्युक्तो गरुडस्तेन वामनेन महात्मना॥
वैरोचनिं विनिर्भर्त्स्य वाक्यं चेदमुवाच ह॥ १९.२४ ॥

रे बले किं त्वया मूढ कृतमस्ति जुगुप्सितम्॥
अविद्यमाने ह्यर्थे हि किं ददासि परमात्मने॥
औदार्येण हि किं कार्यमल्पकेन त्वयाधुना॥ १९.२५ ॥

इत्युक्तो बलिराविष्टः स्यमानः खगेश्वरम्॥
वक्ष्यमाणमिदं वाक्यं गरुत्मन्तं तदाऽब्रवीत्॥ १९.२६ ॥

समर्थोस्मि महापक्ष गृपणो न भवाम्यहम्॥
येनेदं कारितं सर्वं तस्मै किं प्रददाम्यहम्॥ १९.२७ ॥

असमर्थो ह्यहं तात कृतोऽनेन महात्मना॥
तदोवाच बलिं सोऽपि तार्क्ष्यपुत्रो महामनाः॥ १९.२८ ॥

जानन्नपि च दैत्येंद्र गुरुणापि निवारितः॥
विष्णवेऽपि महीं प्रादास्त्वया किं विस्मृतं महत्॥ १९.२९ ॥

दातव्यं तत्पदं विष्णोस्तृतीयं यत्प्रतिश्रुतम्॥
न ददासि कथं वीर निरयेच पतिष्यसि॥ १९.३० ॥

न ददासि तृतीयं च पदं मे स्वामिनः कथम्॥
बलाद्गृह्णामि रे मूढ इत्युक्त्वा तं महासुरम्॥
बबंध वारुणैः पाशैर्विरोचन सुतं तदा॥ १९.३१ ॥

नितरां निष्ठुरो भूत्वा गरुडो जयतां वरः॥
बद्धं स्वपतिमालोक्य विंध्यावलिः समभ्ययात्॥ १९.३२ ॥

बाणमेकं समारोप्य वामनस्याग्रतः स्थिता॥
वामनेन तदा पृष्टा केयं चात्राग्रतः स्थिता॥ १९.३३ ॥

तदोवाच महातेजाः प्रह्लादो ह्यसुराधिपः॥
बलेः पत्नीति त्वां प्राप्ता इयं विंध्यावली सती॥ १९.३४ ॥

प्रह्लादस्य वचः श्रुत्वा वामनो वाक्यमब्रवीत्॥
ब्रूहि विंध्यावले वाक्यं किं कार्यं ते करोम्यहम्॥
एवमुक्ता भगवता विंध्यावलिरभाषत॥ १९.३५ ॥

**॥विन्ध्यावलिरुवाच॥**
कस्माद्बद्धो मम पतिर्गरुडेन महात्मना॥
तत्कथ्यतां महाभाग त्वरन्नेव जनार्द्दन॥
तदोवाच महातेजा बटुवेषधरो हिः॥ १९.३६ ॥

**॥श्रीभगवानुवाच॥**
अनेनैव प्रदत्ता मे मही त्रिपदलक्षणा॥
पदद्वयेन च मयाक्रांतं त्रैलोक्यमद्य वै॥ १९.३७ ॥

अनेन मम दातव्यं तृतीयं पदमेव च॥
तस्माद्बद्धो मया साध्वि गरुडेनैव ते पतिः॥ १९.३८ ॥

श्रुत्वा भगवतो वाक्यमुवाच परमं वचः॥
प्रतिश्रुतमनेनैव न दत्तं हि तव प्रभो॥ १९.३९ ॥

क्रांतं त्रिभुवनं चाद्य त्वया विक्रमरूपिणा॥
तदस्माकं विजघ्नीथाः स्वर्गे वाप्यथवा भुवि॥ १९.४० ॥

किंचिन्न दत्ता हि विभो देवदेव जगत्पते॥
प्रहस्य भगवानाह तदा विंध्यावलिं प्रभुः॥ १९.४१ ॥

पदानि त्रीणि मे चाद्य दातव्यानि कुतोऽधुना॥
शीघ्रं वद विशालाक्षि यत्ते मनसि वर्त्तते॥
तदोवाच च सा साध्वी ह्युरुक्रममवस्थिता॥ १९.४२ ॥

त्वया कुतो वेयमुरुक्रमेण क्रांता त्रिलोकी भुवनैकनाथ॥
तथैव सर्वं जगदेकबंधो देयं किस्माभिरतुल्यरूपिणे॥ १९.४३ ॥

तस्माद्विहाय तद्विष्णो त्वमेवं कुरु संप्रति॥
प्रति श्रुतानि मे भर्त्रा पदानि त्रीणि चाधुना॥
ददाति मे पतिस्तेद्य नात्र कार्या विचारणा॥ १९.४४ ॥

निधेहि मे पदं त्वं हि शीर्ष्णि देववर प्रभो॥
द्वितीयं मे शिशोस्त्वं हि कुरु मूर्ध्नि जगत्पते॥ १९.४५ ॥

तृतीयं च जगन्नाथ कुरु शीर्ष्णि पतेर्मम॥
एवं त्रीणि पदानीश तव दास्यामि केशव॥ १९.४६ ॥

तस्यास्तद्वचनं श्रुत्वा परितुष्टो जनार्दनः॥
उवाच श्लक्ष्णया वाचा विरोचनसुतं प्रति॥ १९.४७ ॥

**॥भगवानुवाच॥**
सुतलंगच्छ दैत्येन्द्र मा विलंबितुमर्हसि॥
सर्वैश्चासुरसंघैश्च चिरं जीव सुखी भव॥ १९.४८ ॥

परितुष्टोऽस्म्यहं तात किं कार्यं करवाणि ते॥
सर्वेषामपि दातॄणां वरिष्ठोऽसि महामते॥ १९.४९ ॥

वरं वरय भद्रं ते सर्वान्कामान्ददामि ते॥
त्रिविक्रमेणैवमुक्तो विरोचनसुतस्तदा॥ १९.५० ॥

विमुक्तो हि परिष्वक्तो देवदेवेन चक्रिणा॥
तदा बलिरुवाचेदं वाक्यं वाक्यविशारदः॥ १९.५१ ॥

त्वया कृतमिदं सर्वं जगदेतच्चराचरम्॥
तस्मान्न कामये किंचित्त्वत्पदाब्जं विना प्रभो॥ १९.५२ ॥

भक्तिरस्तु पदांभोजे तव देव जनार्दन॥
भूयोभूयश्च देवेश भक्तिर्भवतु शाश्वती॥ १९.५३ ॥

एवमभ्यर्थितस्तेन भगवान्भूतभावनः॥
उवाच परमप्रीतो विरोचनसुतं तदा॥ १९.५४ ॥

**॥भगवानुवाच॥**
बले त्वं सुतलं याहि ज्ञातिसंबंधिभिर्वृतः॥
एवमुक्तस्तदा तेन असुरो वाक्यब्रवीत्॥ १९.५५ ॥

सुतले किं नु मे कार्यं देवदेव वदस्व मे॥
तिष्ठामि तव सांनिध्ये नान्यथा वक्तुमर्हसि॥ १९.५६ ॥

तदोवाच हृषीकेशो बलिं तं कृपयाऽन्विततः॥
अहं तव समीपस्थो भवामि सततं नृप॥ १९.५७ ॥

द्वारि स्थितस्तव विभो निवासामि नित्यं मा खिद्यतामसुरवर्य बले श्रृणुष्व॥
वाक्यं तु मे वर महो वरदस्तवाद्य वैकुंठवासिभिपलं च भजामि गेहम्॥ १९.५८ ॥

तच्छ्रुत्वा वचनं तस्य विष्मोरतुलतेजसः॥
जगाम सुतलं दैत्यौ ह्यसुरैः परिवारितः॥ १९.५९ ॥

तदा पुत्रशतेनैव बाणमुख्येन सत्वरम्॥
वसमानो महाबाहुर्दातृणां च परा गतिः॥ १९.६० ॥

त्रैलोक्ये याचका ये च सर्वे यांति बलिं प्रति॥
द्वारि स्थितस्तस्य विष्णुः प्रयच्छति यथेप्सितम्॥ १९.६१ ॥

भुक्तिकामाश्च ये केचिन्मुक्तिकामास्तथा परे॥
येषां यज्ञे च ते विप्रास्तत्तेभ्यः संप्रयच्छति॥ १९.६२ ॥

एवंविधो बलिर्जातः प्रसादाच्छंकरस्य च॥
पुरा हि कितवत्वेन यद्दत्तं परमात्मने॥ १९.६३ ॥

अशुचिं भूमिमासाद्य गंधपुष्पादिकं महत्॥
पतितं चार्प्पितं तेन शिवाय परमात्मने॥ १९.६४ ॥

किं पुनः परया भक्त्या चार्चयंति महेश्वरम्॥
पुष्पं फलं तोयं ते यांति शिवसन्निधिम्॥ १९.६५ ॥

शिवात्परतरो नास्ति पूजनीयो हि भो द्विजाः॥
ये हि मूकास्तथांधाश्च पंगवो ये जडास्तथा॥ १९.६६ ॥

जातिहीनाश्च चंडालाः श्वपचा ह्यंत्यजा ह्यमी॥
शिवभक्तिपरा नित्यं ते यांति परमां गतिम्॥ १९.६७ ॥

तस्मात्सदाशिवः पूज्यः सर्वैरेवमनीषिभिः॥
पूजनीयो हि संपूज्यो ह्यर्चनीयः सदाशिवः॥ १९.६८ ॥

महेशं परमारथज्ञाश्चिंतयंति हृदि स्थितम्॥
यत्र जीवो भवत्येव शिवस्तत्रैव तिष्ठति॥ १९.६९ ॥

विना शिवेन यत्किंचिदशिवं भवति क्षणात्॥
ब्रह्मा विष्णुश्च रुद्रश्च गुणकार्यकरा ह्यमी॥ १९.७० ॥

रजोगुणान्वितो ब्रह्मा विष्णुः सत्त्वगुणान्वितः॥
तमोगुणाश्रितो रुद्रो गुणातीतो महेश्वरः॥ १९.७१ ॥

लिंगरूपो महादेवो ह्यर्चनीयो मुमुक्षुभिः॥
शिवात्परतरो नास्ति भुक्तिमुक्तिप्रदायकः॥ १९.७२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे बलये
वरप्रदानवर्णनंनामैकोविंशोऽध्यायः॥ १९ ॥ छ ॥

**॥ऋषय ऊचुः॥**
ब्रह्मा विष्णुश्च रुद्रश्च सगुणाः कीर्तितास्त्वया॥
लिंगरूपी तथैवेशो निर्गुणोऽसौ कथं वद॥ २०.१ ॥

त्रिभिर्गुणैर्व्याप्तमिदं चराचरं जगन्महद्व्याप्यथ वाल्पकं वा॥
मायामयं सर्वमिदं विभाति लिंगं विना केन कुतोविभाति॥ २०.२ ॥

यद्दृश्यमानं महदल्पकं च तन्नश्वरं कृतकत्वाच्च सूत॥ २०.३ ॥

तस्माद्विमृश्य भोः सूत संशयं छेत्तुमर्हसि॥
व्यासप्रसादात्सकलं जानासि त्वं न चापरः॥ २०.४ ॥

**॥सुत उवाच॥**
व्यासेन कथितं सर्वमस्मिन्नर्थे शुकं प्रति॥
शुक उवाच॥
लिंगरूपी कथं शंभुर्निर्गुणः कथते त्वया॥
एतन्मे संशयं तात च्छेत्तुमर्हस्यशेषतः॥ २०.५ ॥

**॥व्यास उवाच॥**
श्रुणु वत्स ब्रवीम्येतत्पुरा प्रोक्तं च नंदिना॥
अगस्त्यं पृच्छमानं च येन सर्वं श्रुतं शुक॥ २०.६ ॥

निर्गुणं परमात्मानं विद्धि लिंगस्वरूपिणम्॥
परा शक्तिस्तथा ज्ञेया निर्गुणा शाश्वती सती ॥ २०.७ ॥

यया कृतिमिदं सर्वं गुणत्रयविभावितम्॥
एतच्चराचरं विश्वं नश्वरं परमार्थतः॥ २०.८ ॥

एक एव परो ह्यात्मा लिंगरूपी निरंजनः॥
प्रकृत्या सह ते सर्वे त्रिगुणा विलयं गताः॥ २०.९ ॥

यस्मिन्नेव ततो लिंगं लयनात्कथितं पुरा॥
तस्माल्लिंगे लयं प्राप्ता परा शक्तिः कुतोऽपरे॥ २०.१० ॥

लीना गुणाश्च रुद्रोक्त्या यैरिदं बद्धमेव च॥
चराचरं महाभाग तस्माल्लिंगं प्रपूजयेत्॥ २०.११ ॥

लिंगं च निर्गुणं साक्षाज्जानीध्वं भो द्रिजोतमाः॥
लयाल्लिंगस्य माहात्म्यं गुणानां परिकीर्त्यते॥ २०.१२ ॥

शंकरः सुखदाता हि उच्यमानो मनीषिभिः॥
सर्वो हि कथ्यते विप्राः सर्वेषामाश्रयो हि स॥ २०.१३ ॥

शंभुर्हि कथ्यते विप्रा यस्माच्च शुभसंभवः॥ २०.१४ ॥

एवं सर्वाणि नामानि सार्थकानि महात्मनः॥
तेनावृतं जगत्सर्वं शंभुना परमेष्ठिना॥ २०.१५ ॥

**॥ऋषय ऊचुः॥**
यदा दाक्षायणी चाग्नौ पतिता यज्ञकर्मणि॥
दक्षस्य च महाभागा तिरोधानगता सती॥ २०.१६ ॥

प्रादुर्भूता कदा सूत कथ्यतां तत्त्वयाऽधुना॥
परा शक्तिर्महेशस्य मिलिता च कथं पुनः॥ २०.१७ ॥

एतत्सर्वं महाभाग पूर्ववृत्तं च तत्त्वतः॥
कथनीयं च अस्माकं नान्यो वक्तास्ति कश्चन॥ २०.१८ ॥

**॥सूत उवाच॥**
जज्ञे दाक्षायणी ब्रह्मन्विदग्धावयवा यदा॥
विना शक्त्या महेशोऽपि तताप परमं तपः॥ २०.१९ ॥

लीलागृहीतवपुषा पर्वते हिमवद्गिरौ॥
भृंगिणा सह विश्वेन नंदिना च तथैव च॥ २०.२० ॥

तथा चंडेन मुंडेन तथान्यैर्बहुभिर्वृतः॥
दशभिः कोटिगुणितैर्गणैश्च परिवारितः॥ २०.२१ ॥

गणानां चैव कोट्या च तथा षष्टिसहस्रकैः॥
एवं तत्र गणैर्देव आवृतो वृषभध्वजः॥ २०.२२ ॥

तपो जुषाणः सहसा महात्मा हिमालयस्याग्रगतस्तथैव॥
गणैर्वृतो वीरभद्रप्रधानैः स केवलो मूलविद्याविहीनः॥ २०.२३ ॥

एतस्मिन्नंतरे दैत्याः प्रादुर्भूता ह्यविद्यया॥
विष्णुना हि बलिर्बद्धस्तथा ते वै महाबलाः॥ २०.२४ ॥

जाता दैत्यास्ततो विप्रा इंद्रोपद्रवकारकाः॥
कालखंजा महारौद्राः कालकायास्तथापरे॥ २०.२५ ॥

निवातकवचाः सर्वे रवरावकसंज्ञकाः॥
अन्ये च बहवो दैत्याः प्रजासंहारकारकाः॥ २०.२६ ॥

तारको नमुचेः पुत्रस्तपसा परमेण हि॥

ब्रह्माणं तोषयामास ब्रह्मा तस्य तुतोष वै॥ २०.२७ ॥

वरान्ददौ यथेष्टांश्च तारकाय दुरात्मने॥
वरं वृणीष्व भद्रं ते सर्वान्कामान्ददामि ते॥ २०.२८ ॥

तच्छ्रुत्वा वचनं तस्य ब्रह्मणः परमेष्ठिनः॥
वरयामास च तदा वरं लोकभयावहम्॥ २०.२९ ॥

यदि मे त्वं प्रसन्नऽसि अजरामरतां प्रभो॥
देहि मे यद्विजानासि अजेयत्वं तथैव च॥ २०.३० ॥

एवमुक्तस्तदा तेन तारकेण दुरात्मना॥
उवाच प्रहसन्वाक्यममरत्वं कुतस्तव॥ २०.३१ ॥

जातस्य हि ध्रुवो मृत्युरेतज्जानीहि तत्त्वतः॥
प्रहस्य तारकः प्राह अजेयत्वं च देहि मे॥ २०.३२ ॥

ब्रह्मोवाच तदा दैत्यजेयत्वं तवानघ॥
विनार्भकेण दत्तं वै ह्यर्भकस्त्वां विजेष्यते॥ २०.३३ ॥

तदा स तारकः प्राह ब्रह्माणं प्रणतः प्रभो॥
कृतार्थोऽहं हि देवेश प्रसादात्तव संप्रति॥ २०.३४ ॥

एवं लब्धवरो भूत्वा तारको हि महाबलः॥
देवान्युद्धार्थमाहूय युयुधे तैः सहासुरः॥ २०.३५ ॥

मुचुकुन्दं समाश्रित्य देवास्ते जयिनोऽभवन्॥
पुनः पुनर्विकुर्वाणा देवास्ते तारकेण हि॥ २०.३६ ॥

मुचुकुन्दबलेनैव जयमापुःसुरास्तदा॥
किं कर्तव्यं हि चास्माकं युध्यमानैर्निरंतरम्॥ २०.३७ ॥

भवितव्यमिति स्मृत्वा गतास्ते ब्रह्मणः पदम्॥
ब्रह्मणश्चाग्रतो भूत्वा ह्यब्रुवंस्ते सवासवाः॥ २०.३८ ॥

**॥ देवा ऊचुः॥**
बलिना सह पातालमास्तेऽसौ मधुसूदनः॥
विष्णुं विना हि ते सर्वे वृषाद्याः पतिताः परैः॥ २०.३९ ॥

दैत्येंद्रैश्च महाभाग त्रातुमर्हसि नः प्रभो॥
तदा नभोगता वाणी ह्युवाच परिसांत्व्य वै॥ २०.४० ॥

हे देवाः क्रियतामाशु मम वाक्यं हि तत्त्वतः॥
शिवात्मजो यदा देवा भविष्यति महाबलः॥ २०.४१ ॥

युद्धे पुनस्तारकं च वधिष्यति न संशयः॥
येनोपायेन भगवाञ्छंभुः सर्वगुहाशयः॥ २०.४२ ॥

दारापरिग्रही देवास्तथा नीतिर्विधीयताम्॥
क्रियतां च परो यत्नो भवद्भिर्नान्यथा वचः॥ २०.४३ ॥

यूयं देवा विजानीध्वमित्युवाचाशरीरवाक्॥
परं विस्मयमापन्ना ऊचुर्देवाः परस्परम्॥ २०.४४ ॥

श्रुत्वा नभोगतां वाणीमाजग्मुस्ते हिमालयम्॥
बृहस्पतिं पुरस्कृत्य सर्वे देवा वचोऽब्रुवन्॥२०.४५ ॥

हिमालयं महाभागाः सर्वे कार्यार्थगौरवात्॥
हिमालय महाभाग श्रूयतां नोऽधुना वचः॥ २०.४६ ॥

तारकस्त्रासयत्यस्मान्साहाय्यं तद्वधे कुरु॥
त्वं शरण्यो भवास्माकं सर्वेषां च तपस्विनाम्॥
तस्मात्सर्वे वयं याता महेंद्रसहिता विभो॥ २०.४७ ॥

**॥ लोमश उवाच॥**
एवमभ्यर्थितो देवैर्हिमवान्गिरिसत्तमः॥
उवाच देवान्प्रहसन्वाक्यं वाक्यविदां वरः॥ २०.४८ ॥

महेन्द्र मुद्दिश्य तदा ह्युपहाससमन्वितः॥
अक्षमाश्च वयं सर्वे महेन्द्रेण कृताः सुराः॥ २०.४९ ॥

किं कुर्मः सुरकार्यं च तारकस्य वधं प्रति॥
पक्षयुक्ता वयं सर्वे यदि स्याम सुरोत्तमाः॥ २०.५० ॥

तदा वयं घातयामस्तारकं सह बांधवैः॥
अचलोहं विपक्षश्च किं कार्यं करवाणि व॥ २०.५१ ॥

तस्य तद्वचनं श्रुत्वा सर्वे देवास्तमब्रुवन्॥
सर्वे यूयं वयं चैव असमर्था वधं प्रति॥
तारकस्य महाभाग एतत्कार्यं विचंत्यताम्॥ २०.५२ ॥

येन साध्यो भवेच्छत्रुस्तारको हि महाबलः॥
तदोवाच महातेजा हिमवान्स सुरान्प्रति॥ २०.५३ ॥

केनोपायेन भो देवास्तारकं हंतुमिच्छथ॥
कथयंतुत्वरेणैव कार्यं वेत्तुं ममैव हि॥ २०.५४ ॥

तदा सुरैः कथितं सर्वमेतद्वाण्या चोक्तं यत्पुरा कार्यहेतोः॥
श्रुतं तदा गिरिणा वाक्यमेत xxxxxxx हिमवान्पर्वतो हि॥ २०.५५ ॥

शिवस्य पुत्रेण च धीमता यदा वध्यो दैत्यस्तारको वै महात्मा॥
तदा सर्वं सुरगकार्यं शुभंस्याद्वाण्या चोक्तं सत्यमेतद्भवेच्च॥ २०.५६ ॥

तस्मात्तदेनत्क्रियतां भवद्भिर्यथा महेशः कुरुते परिग्रहम्॥
कन्या यथा तस्य शिवस्य योग्या निरीक्ष्यतामाशु सुरैरिदानीम्॥ २०.५७ ॥

तस्य तद्वचनं श्रुत्वा प्रहस्योचुः सुरास्तदा॥
जनितव्या त्वया कन्या शिवार्थं कार्यसिद्धये॥ २०.५८ ॥

सुराणां च गिरे वाक्यं कुरु शीघ्रं महामते॥
आधारस्त्वं तु देवानां भविष्यसि न संशयः॥ २०.५९ ॥

इत्युक्तो गिरिराजोऽथ देवैः स्वगृहमामाविशत्॥
पत्नीं मेनां च पप्रच्छ सुकार्यं समागतम्॥ २०.६० ॥

जनितव्या सुकन्यैका सुरकार्यार्थसिद्धये॥
देवानां च ऋषीणां च तथैव च तपस्विनाम्॥ २०.६१ ॥

प्रियं न भवति स्त्रीणां कन्याजननसेव च॥
तथापि जनितव्या च कन्यैका च वरानने॥ २०.६२ ॥

प्रहस्य मेना प्रोवाच स्वपतिं च हिमालयम्॥
यदुक्तं भवता वाक्यं श्रूयतां मे त्वयाऽधुना॥ २०.६३ ॥

कन्या सदा दुःखकरी नृणां पते स्त्रीणां तथा शोककरी महामते॥
तस्माद्विमृश्य सुचिरं स्वयमेव बुद्ध्या यथा हितं शैलपते तदुच्यताम्॥ २०.६४ ॥

हिमवांस्तदुपश्रुत्या प्रियाया वचनं तदा॥
उवाच वाक्यं मेधावी परोपकरणान्वितम्॥ २०.६५ ॥

येनयेन प्रकारेण परेषामुपजीवनम्॥
भविष्यति च तत्कार्यं धीमता पुरुषेण हि॥ २०.६६ ॥

स्त्रियापि चैव तत्कार्यं परोपकरणान्वितम्॥
एवं प्रवर्तिता तेन गिरिणा महिषी तदा॥
दधार जठरे कन्यां मेना भाग्यवती तदा॥ २०.६७ ॥

महाविद्या महामाया महामेधास्वरूपिणी॥
रुद्रकाली च अंबा च सती दाक्षायणी परा॥ २०.६८ ॥

तां विभूतिं विशालाक्षी जठरे परमां सती॥
बभार सा महाभागा मेना चारुविलोचना॥ २०.६९ ॥

स्तुतिं चक्रुस्तदा देवा ऋषयो यक्षकिन्नराः॥
मेनाया भूरिभाग्यायास्तथा हिमवतो गिरेः॥ २०.७० ॥

एतस्मिन्नंतरे जाता गिरिजा नाम नामतः॥
प्रादुर्भूता यदा देवी सर्वेषां च सुखप्रदा॥ २०.७१ ॥

देवदुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः॥
जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः॥ २०.७२ ॥

पुष्पवर्षेण महता ववृषुर्विबुधास्तथा॥
तदा प्रसन्नमभवत्सर्वं त्रैलोक्यमेव च॥ २०.७३ ॥

यदावतीर्णा गिरिजा महासती तदैव दैत्या भयमाविशंस्ते॥
प्राप्ता मुदं देवगणा महर्षयः सचारणाः सिद्धगणास्तथैव॥ २०.७४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे श्रीभवान्युत्पत्तिवर्णनंनाम विंशोऽध्यायः॥ २० ॥ छ ॥

**॥लोमश उवाच॥**

वर्द्धमाना तदा साध्वी रराज प्रतिवासरम्॥
अष्टवर्षा यदा जाता हिमालयगृहे सती॥ २१.१ ॥

महेशो हिमवद्द्रोण्यां तताप परमं तपः॥
सर्वैर्गणैः परिवृतो वीरभद्रादिभिस्तदा॥ २१.२ ॥

एतत्तपो जुषाणं तं महेशं हिमवान्ययौ॥
तत्पादपल्लवं द्रष्टुं पार्वत्या सह बुद्धिमान्॥ २१.३ ॥

यावत्समागतो द्रष्टं नंदिनासौ निवारितः॥
द्वारि स्थिते च तदा क्षणमेकं स्थिरोऽभवत्॥ २१.४ ॥

पुनर्विज्ञापयामास नंदिना हिमवान्गिरिः॥
विज्ञप्तो नंदिना शंभुरचलो द्रष्टुमागतः॥ २१.५ ॥

तदाकर्ण्य वचस्तस्य नंदिनः परमेश्वरः॥
आनयस्व गिरिं चात्र नंदिनं वाक्यमब्रवीत्॥ २१.६ ॥

तथेति मत्वा नंदी तं पर्वतं च हिमाचलम्॥
आनयामास स तथा शंकरं लोकशंकरम्॥ २१.७ ॥

दृष्ट्वा तदानीं सकलेश्वरं प्रभुं तपो जुषाणं विनिमीलितेक्षणम्॥ २१.८ ॥

कपर्द्दिनं चंद्रकलाविभूषणं वेदांतवेद्यं परमात्मनि स्थितम्॥
ववंद शीर्ष्णा च तदा हिमाचलः परां मुदं प्रापदहीनसत्त्वः॥ २१.९ ॥

उवाच वाक्यं जगदेकमंगलं हिमालयो वाक्यविदां वरिष्ठः॥ २१.१० ॥

सभाग्योऽहं महादेव प्रसादात्तव शंकर॥
प्रत्यहं चागमिष्यामि दर्शनार्थं तव प्रभो॥ २१.११ ॥

अनया सह देवेश अनुज्ञां दातुर्महसि॥
श्रुत्वा तु वचनं तस्य देवदेवो महेश्वरः॥ २१.१२ ॥

आगंतव्यं त्वया नित्यं दर्शनार्थं ममाचल॥
कुमारीं च गृहे स्थाप्य नान्यथा मम दर्शनम्॥ २१.१३ ॥

अचलः प्रत्युवाचेदं गिरिशं नतकंधरः॥
कस्मान्मयानया सार्द्धं नागंतव्यं तदुच्यताम्॥
अचलं च व्रीत शंभुः प्रहसन्वाक्यमब्रवीत्॥ २१.१४ ॥

इयं कुमारी सुश्रोणी तन्वी चारुप्रभाषिणी॥
नानेतव्या मत्समीपे वारयामि पुनः पुनः॥ २१.१५ ॥

एतच्छ्रुत्वा वचनं तस्य शंभोर्निरामयं निःस्पृहनिष्ठुरं वा॥
तपस्विनोक्तं वचनं निशम्य उवाच गौरी च विहस्य शंभुम्॥ २१.१६ ॥

**॥गौर्युवाच॥**
तपःशक्त्यान्वितः शंभो करोषि विपुलं तपः॥
तव बुद्धिरियं जाता तपस्तप्तुं महात्मनः॥ २१.१७ ॥

कस्त्वं का प्रकृतिः सूक्ष्मा भगवंस्तद्विमृश्यताम्॥
पार्वत्यास्तद्वचः श्रुत्वा महेशो वाक्यमब्रवीत्॥ २१.१८ ॥

तपसा परमेणैव प्रकृतिं नाशयाम्यहम्॥
प्रकृत्या रहितः सुभ्रु अहं तिष्ठमि तत्त्वतः॥
तस्माच्च प्रकृते सिद्धैर् कार्यः संग्रहः क्वचित्॥ २१.१९ ॥

**॥पार्वत्युवाच॥**
यदुक्तं परया वाचा वचननं शंकर त्वया॥
सा किं प्रकृति र्नैव स्यादतीतस्तां भवान्कथम्॥ २१.२० ॥

यच्छृणोपि यदश्नासि यच्च पश्यसि शंकर॥
वाग्वादेन च किं कार्यमस्माके चाधुना प्रभो॥ २१.२१ ॥

तत्सर्वं प्रकृतेः कार्यं मिथ्यावादो निर्र्थकः॥
प्रकृतेः परतो भूत्वा किमर्थं तप्यते तपः॥ २१.२२ ॥

त्वया शंभोऽधुना ह्यस्मिन्गिरौ हिमवति प्रभो॥
प्रकृत्या मिलितोऽसि त्वं न जानासि हि शंकर॥ २१.२३ ॥

वाग्वादेन च किं कार्यमस्माकं चाधुना प्रभो॥
प्रकृतेः परतस्त्वं च यदि सत्यं वचस्तव॥
तर्हि त्वया न भेतव्यं मम शंकर संप्रति॥ २१.२४ ॥

प्रहस्य भगवान्देवो गिरिजां प्रत्युवाच ह॥ २१.२५ ॥

**॥महादेव उवाच॥**
प्रत्यहं कुरु मे सेवां गिरिजे साधुभाषिणि॥ २१.२७ ॥

इत्येवमुक्त्वा गिरिजां महेशो हिमालयं वाक्यमथो बभाषे॥
अत्रैव सोऽहं तपसा परेण चरामि भूम्यां परमार्थभावः॥ २१.२७ ॥

तपस्तप्तुमनुज्ञा मे दातव्या पर्वताधिप॥
अनुज्ञया विना किंचित्तपः कर्तुं न पार्यते॥ २१.२८ ॥

एतच्छ्रुत्वा वचस्तस्य देवदेवस्य शूलिनः॥
प्रहस्य हिमवाञ्छंभुमिदं वचनमब्रवीत्॥ २१.२९ ॥

त्वदीयं हि जगत्सर्वं सदेवासुरमानुषम्॥
किमहं तु महादेव तुच्छो भूत्वा ददामि ते॥ २१.३० ॥

एवमुक्तो हिमवता शंकरो लोकशंकरः॥
प्रहस्य गिरिराजं तं याहीति प्राह सादरम्॥ २१.३१ ॥

शंकरेणाब्यनुज्ञातः स्वगृहं हिमवान्ययौ॥
सार्द्धं गिरिजया सोऽपि प्रत्यहं दर्शने स्थितः॥ २१.३२ ॥

एवं कतिपयः कालो गतश्चोपासनात्तयोः॥ २१.३३ ॥

सुतापित्रोश्च तत्रैव शंकरो दुरतिक्रमः॥
पार्वतीं प्रति तत्रैव चिंतामापेदिरे सुराः॥ २१.३४ ॥

ते चिंत्यमानाश्च सुरास्तदानीं कथं महेशो गिरिजां समेष्यति॥
किं कार्यमद्यैव वयं च कुर्मो बृहस्पते तत्कथयस्व मा चिरम्॥ २१.३५ ॥

बृहस्पतिरुवाचेदं महेंद्रं प्रति सद्वचः॥
एवमेतत्त्वया कार्यं महेंद्र श्रूयतां तदा॥ २१.३६ ॥

एतत्कार्यं मदनेनैव राजन्नान्यः समर्थो भविता त्रिलोके॥
विप्लावितं तापसानां तपो हि तस्मात्त्वरात्प्रार्थनीयो हि मारः॥ २१.३७ ॥

गुरोर्वचनमाकर्ण्य आह्वयन्मदनं हरिः॥
आह्वानादाजगामाथ मदनः कार्यसाधकः॥ २१.३८ ॥

रत्या समेतः सह माधवेन स पुष्पधन्वा पुरतः सभायाम्॥
महेंद्रमागम्य उवाच वाक्यं सगर्वितं लोकमनोहरं च॥ २१.३९ ॥

अहमाकारितः कस्माद्ब्रूहि मेऽद्य शचीपते॥
किं कार्यं करवाण्यद्य कथ्यतां मा विलंबितम्॥ २१.४० ॥

मम स्मरणमात्रेण विभ्रष्टा हि तपस्विनः॥
त्वमेव जानासि हरे मम वीर्यपराक्रमौ॥ २१.४१ ॥

मम वीर्यं च जानाति शक्तेः पुत्रः पराशरः॥

एवं चानये च बहवो भृग्वाद्य ऋषयो ह्यमी॥ २१.४२ ॥

गुरुरप्यभिजानाति भार्योतथ्यस्य चैव हि॥
तस्यां जातो भरद्वाजो गुरुणा संकरो हि सः॥ २१.४३ ॥

भरद्वाजो महाभाग इत्युवाच गुरुस्तदा॥
जानाति मम वीर्यं च शौर्यं चैव प्रजापतिः॥ २१.४४ ॥

क्रोधो हि मम बंधुश्च महाबलपरक्रमः॥
उभाभ्यां द्रावितं विश्वं जंगमाजंगमं महत्॥
ब्रह्मादिस्तंबपर्यंतं प्लावितं सचराचरम्॥ २१.४५ ॥

**॥देवा ऊचुः॥**
मदनद्वं समर्थोसि अस्माञ्जेतुं सदैव हि॥
महेशं प्रति गच्छाशु सुरकार्यार्थसिद्धये॥
पार्वत्या सहितं शंभुं कुरुष्वाद्य महामते॥ २१.४६ ॥

एवमभ्यर्थितो देवैर्मदनो विश्वमोहनः॥
जगाम त्वरितो भूत्वा अप्सरोभिः समन्वितः॥ २१.४७ ॥

ततो जगामाशु महाधनुर्द्धरो विस्फार्य चापं कुसुमान्वितं महत्॥
तथैव बाणांश्च मनोरमांश्च प्रगृह्य वीरो भुवनैकजेता॥
तस्मिन्हिमाद्रौ परिदृश्यमानोऽवनौ स्मरो योधयतां वरिष्ठः॥ २१.४८ ॥

तत्रागता तदा रंभा उर्वशी पुंजिकस्थली॥
सुम्लोचा मिश्रकेशी च सुभगा च तिलोत्तमा॥ २१.४९ ॥

अन्याश्च विविधाः जाताः साहाय्ये मदनस्य च॥
अप्सरसो गणैर्दृष्टा मदनेन सहैव ताः॥ २१.५० ॥

सर्वे गणाश्च सहसा मदनेन विमोहिताः॥
भृंगिणा च तदा रंभा चण्डेन सह चोर्वशी॥ २१.५१ ॥

मेनका वीरभद्रेण चण्डेन पुंजिकस्थली॥
तिलोत्तमादयस्तत्र संवृताश्च गणैस्तदा॥ २१.५२ ॥

अमत्तभूतैर्बहुभिस्त्रपां त्यक्त्वा मनीषिभिः॥
अकाले कोकिला भिश्च व्याप्तामासीन्महीतलम्॥ २१.५३ ॥

अशोकाश्चंपकाश्चूता यूथ्यश्चैव कदंबकाः॥
नीषाः प्रियालाः पनसा राजवृक्षाश्चरायणाः॥ २१.५४ ॥

द्राक्षावल्लयः प्रदृश्यंते बहुला नागकेशराः॥
तथा कदल्यः केतक्यो भ्रमरैरुपशोभिताः॥ २१.५५ ॥

मत्ता मदनसंगेन हंसीभिः कलहंसकाः॥
करेणुभिर्गजाह्यासञ्छिखंडीभिः शिखंडिनः॥ २१.५६ ॥

निष्कामा ह्यतुरा ह्यासञ्छिवसंपर्कजैर्गुणैः॥
अकस्माच्च तथाभूतं कथं जातं विमृश्य च॥ २१.५७ ॥

शैलादो हि महातेजा नंदी ह्यमितविक्रमः॥
रक्षसं विबुधानां वा कृत्यमस्तीत्यचिंतयत्॥ २१.५८ ॥

एतस्मिन्नंतरे तत्र मदनो हि धनुर्द्धरः॥
पंचबाणान्समारोप्य स्वकीये धनुषि द्विजाः॥
तरोश्छायां समाश्रित्य देवदारुगतां तदा॥ २१.५९ ॥

निरीक्ष्य शंभुं परमासने स्तितं तपो जुषाणं परमेष्ठिनां पतिम्॥
गंगाधरं नीलतमालकंठं कपर्दिनं चन्द्रकलासमेतम्॥ २१.६० ॥

भुजंगभोगांकितसर्वगात्रं पंचाननं सिंहविशालविक्रमम्॥
कर्पूरगौरे परयान्वितं च स वेद्धुकामो मदनस्तपस्विनम्॥ २१.६१ ॥

दुरासदं दीप्तिमतां वरिष्ठं महेशमुग्रं सह माधवेन॥
यावच्छिवं वेद्धुकामः शरेण तावद्याता गिरिजा विश्वमाता॥
सखीजनैः संवृता पूजनार्थं सदाशिवं मंगलं मंगलानाम्॥ २१.६२ ॥

कनककुसुममालां संदधे नीलकंठे सितकिरणमनोज्ञादुर्ल्लभा सा तदानीम्॥
स्मितविकसितनेत्रा चारुवक्त्रं शिवस्य सकलजननित्री वीक्षमाणा बभूव॥ २१.६३ ॥

तावद्विद्धः शरेणैव मोहनाख्येन चत्वरात्॥
विध्यमानस्तदा शंभुः शनैरुन्मील्य लोचने॥
ददर्श गिरिजां देवोब्धिर्यथा शशिनः कलाम्॥ २१.६४ ॥

चारुप्रसन्नवदनां बिंबोष्ठीं सस्मितेक्षणाम्॥
सुद्विजामग्निजां तन्वीं विशालवदनोत्सवाम्॥ २१.६५ ॥

गौरीं प्रसन्नमुद्रां च विश्वमोहनमोहनाम्॥
यया त्रिलोकरचना कृता ब्रह्मादिभिः सह॥ २१.६६ ॥

उत्पत्तिपालनविनाशकरी च या वै कृत्वाग्रतः सत्त्वरजस्तमांसि॥
सा चेतनेन ददृशे पुरतो हरेण संमोहनी सकलमंगलमंगलैका॥ २१.६७ ॥

तां निरीक्ष्य भवो देवो गिरिजां लोकपावनीम्॥
मुमोह दर्शनात्तस्या मदनेनातुरीकृतः॥
विस्मयोत्फुल्लनयनो बभूव सहसा शिवः॥ २१.६८ ॥

एवं विलोकमानोऽसौ देवदेवो जगत्पतिः॥
मनसा दूयमानेन इदमाह सदाशिवः॥ २१.६९ ॥

अनया मोहितः कस्मात्तपःस्थोऽहं निरामयः॥
कुतः कस्माच्च केनेदं कृतमस्ति ममाप्रियम्॥ २१.७० ॥

ततो व्यलोकयच्छंभुर्द्दिक्षु सर्वासु सादरम्॥
तावद्दृष्टो दक्षिणस्यां दिशि ह्यात्तशरासनः॥ २१.७१ ॥

चक्रीकृतधनुः सज्जं चक्रे बेद्धुं सदाशिवम्॥
यावत्पुनः संधयति मदनो मदनांतकम्॥
तावद्दृष्टो महेशेन सरोषेण तदा द्विजाः॥ २१.७२ ॥

निरीक्षितस्तृतीयेन चक्षुषा परमेण हि॥
मदनस्तत्क्षणादेव ज्वालामालावृतोऽभवत्॥
हाहाकारो महानासीद्देवानां तत्र पश्यताम्॥ २१.७३ ॥

**॥देवा ऊचुः॥**
देवदेव महादेव देवानां वरदो भव॥
गिरिजायाः सहायार्थं प्रेषितो मदनोऽधुना॥ २१.७४ ॥

वृथा त्वयाथ दग्धोऽसौ मदनो हि महाप्रभः॥ २१.७५ ॥

त्वया हि कार्यं जगदेकबंधो कार्यं सुराणां परमेण वर्चसा॥
अस्यां समुत्पत्स्यति देव शंभो तेनैव सर्वं भवतीह कार्यम्॥ २१.७६ ॥

तारकेण महादेव देवाः संपीडिता भृशम्॥
तदर्थं जीवितं चास्य दत्त्वा च गिरिजां प्रभो॥ २१.७७ ॥

वरयस्व महाभाग देवाकार्ये भव क्षमः॥
गजासुरात्तवया त्राता वयं सर्वे दिवौकसः॥ २१.७८ ॥

कालकूटाच्च नूनं हि रक्षिताः स्मो न चान्यथा॥
भस्मासुराच्च सर्वेश त्वया त्राता न संशयः॥ २१.७९ ॥

मदनोयं समायातः सुराणां कार्यसिद्धये॥
तस्मात्त्वया रक्षणीय उपकारः परो हि नः॥ २१.८० ॥

विना तेन जगत्सर्वं नाशमेष्यति शंकर॥
निष्कामस्त्वं कथं शंभो स्वबुद्ध्या च विमृस्यताम्॥ २१.८१ ॥

तदोवाच रुषाविष्टो देवान्प्रति महेश्वरः॥
विना कामेन भो देवा भवितव्यं न चान्यथा॥ २१.८२ ॥

यदाःकामं पुरस्कृत्य सर्वे देवाः सवासवाः॥
पदभ्रष्टाश्च दुःखेन व्याप्ता दैन्यं समाश्रिताः॥ २१.८३ ॥

कामो हि नरकायैव सर्वेषां प्राणिनां ध्रुवम्॥
दुःखरूपी ह्यनंगोऽयं जानीध्वं मम भाषितम्॥ २१.८४ ॥

तारकोऽपि दुराचारो निष्कामोऽद्य भविष्यति॥
विनाकामेन च कथं पापमाचरते नरः॥ २१.८५ ॥

तस्मात्कामो मया दग्धः सर्वेषां शांतिहेतवे॥
युष्माभिश्च सुरैः सर्वैरसुरैश्च महर्षिभिः॥ २१.८६ ॥

अन्यैः प्राणिभिरेवात्र तपसे धीयतां मनः॥
कामक्रोधविहीनं च जगत्सर्वं मया कृतम्॥ २१.८७ ॥

तस्मादेनं पापिनं दुःखमूलं न जीवयिष्यामि सुराः प्रतीक्ष्यताम्॥
निरन्तरं चात्मसुखप्रबोधमानंदलक्षणमागाधमनन्यरूपम्॥ २१.८८ ॥

एवमुक्तास्तदा तेन शंभुना परमेष्ठिना॥
ऊचुर्महर्षयः सर्वे शकर लोकशंकरम्॥ २१.८९ ॥

यदुक्तं भवता शंभो परं श्रेयस्करं हि नः॥
किं तु वक्ष्याम देवेश श्रूयतां चावधार्यताम्॥ २१.९० ॥

यथा सृष्टमिदं विश्वं कामक्रोधसमन्वितम्॥
तत्सर्वं कामरूपं हि स कामो न तु हन्यते॥ २१.९१ ॥

धर्मार्थकामामोक्षाश्च चत्वारो ह्येकरूपताम्॥
नीतायेन महादेव स कामोऽयं न हन्यते॥ २१.९२ ॥

कथं त्वया हि संदग्धः कामो हि दुरतिक्रमः॥
येन संघटितं विश्वमाब्रह्मस्थावरात्मकम्॥ २१.९३ ॥

कामेन हीयते विश्वं कामेन पाल्यते॥
कामेनोत्पद्यते विश्वं तस्मात्कामो महाबलः॥ २१.९४ ॥

यस्मात्क्रोधो भवत्युग्रो येन त्वं च वशीकृतः॥
तस्मात्कामं महादेव संबोधयितुमर्हसि॥ २१.९५ ॥

त्वया संपादितो देव मदनो हि महाबलः॥
समर्थो हि समर्थत्वात्तत्सामर्थ्यं करिष्यति॥ २१.९६ ॥

ऋषिभिश्चैवमुक्तोऽपि द्विगुणं रूपमास्थितः॥
चक्षुषा हि तृतीयेन दग्धुकामो हरस्तदा॥ २१.९७ ॥

मुनिभिश्चारणैः सिद्धैर्गणैश्चापि सदाशिवः॥
स्तुतश्च वंदितो रुद्रः पिनाकी वृषवाहनः॥ २१.९८ ॥

मदनं च तथा दग्ध्वा त्यक्त्वा तं पर्वतं रुषा॥
हिमवंताभिधं सद्यस्तिरोधानगतोऽभवत्॥ २१.९९ ॥

तिरोधानगतं देवी वीक्ष्य दग्धं च मन्मथम्॥
सकोकिलं सचूतं च सभृंगं सहचंपकम्॥ २१.१०० ॥

तथैव दग्धं मदनं विलोक्य रत्या विलापं च तदा मनस्विनी॥
सबाष्पदीर्घं विमना विमृस्य कथं स रुद्रो वशगो भवेन्मम॥ २१.१०१ ॥

एवं विमृश्य सुचिरं गिरिजा तदानीं संमोहमाप च सती हि तथा बभाषे॥
संमुह्यमाना रुदतीं निरीश्यरतिर्महारूपवतीं मनस्विनीम्॥ २१.१०२ ॥

मा विषादं कुरु सखि मदनं जीवयाम्यहम्॥
त्वदर्थं भो विशालाक्षि तपसाऽऽराधयाम्यहम्॥ २१.१०३ ॥

हरं रुद्रं विरुपाक्षं देवदेवं जगद्गुरुम्॥
मा चिंतां कुरु सुश्रोमि मदनं जीवयाम्यहम्॥ २१.१०४ ॥

एवम श्वास्य तां साध्वी गिरिजां रतिरंजसा॥
तपस्तेपे च सुमहत्पतिं प्राप्तुं सुमध्यमा॥ २१.१०५ ॥

मदनो यत्र दग्धश्च रुद्रेण परमात्मना॥
तप्यमानां तपस्तत्र नारदो ददृशे तदा॥ २१.१०६ ॥

उवाच गत्वा सहसा भामिनीं रतिमंतिके॥
कस्यासि त्वं विशालाक्षि केन वा तप्यते तपः॥ २१.१०७ ॥
तरुणी रूपसंपन्ना सौभाग्येन परेण हि॥
नारदस्य वचः श्रुत्वा रोषेण महता तदा॥
उवाच वाक्यं मधुरं किंचिन्निष्ठुरमेव च॥ २१.१०८ ॥

**॥रतिरुवाच॥**

नारदोऽसि मया ज्ञातः कुमारस्त्वं न संशयः॥
स्वस्वरूपादर्शनं च कर्तुमर्हसि सुव्रत॥ २१.१०९ ॥

यथागतेन मार्गेण गच्छ त्वं मा विलंबितम्॥
बटो न किंचिज्जानासि केवलं कलिकृन्महान्॥ २१.११० ॥

परस्त्रीकामुकाः क्षुद्रा विटा व्यसनिनश्च ये॥
तथा ह्यकर्मिणः स्तब्धास्तेषां मध्ये त्वमग्रणीः॥ २१.१११ ॥

एवं निर्भर्त्सितो रत्या नारदो मुनिसत्तमः॥
स्वयं जगाम त्वरीतं शंबरं दैत्यपुंगवम्॥ २१.११२ ॥

शशंस दैत्यराजाय दग्धं मदनमेव च॥
रुद्रेण क्रोधयुक्तेन तस्य भार्या मनस्विनी॥ २१.११३ ॥

तामानय महाभाग भार्यां कुरु महाबल॥
अतीव रूपसंपन्ना या आनीतास्त्वयानघ॥
तासां मध्ये रूपवती रतिः सा मदनप्रिया॥ २१.११४ ॥

एवमाकर्ण्य वचनं देवर्षेर्भावितात्मनः॥
जगाम सहसा तत्र यत्रास्ते सा सुशोभना॥ २१.११५ ॥

तां दृष्ट्वा सु विशालाक्षीं रतिं मदनमोहिनीम्॥
उवाच प्रहसन्वाक्यं शंबरो देवसंकटः॥ २१.११६ ॥

एहि तन्वि मया सार्द्धं राज्यं भोगान्यथेष्टतः॥
भुंक्ष्व देवि प्रसादान्मे तपसा किं प्रयोजनम्॥ २१.११७ ॥
एवमुक्ता तदा तेन शंबरेण महात्मना॥
उवाच तन्वी मधुरं महिषी मदनस्य सा॥ २१.११८ ॥

विधवाहं महाबाहो नैवं भाषितुमर्हसि॥
राजा त्वं सर्वदैत्यानां लक्ष्णैः परिवारितः॥ २१.११९ ॥

एतत्तद्वचनं श्रुत्वा शंबरः काममोहितः॥
करे ग्रहीतु कामोऽसौ तदा रत्या निवारितः॥ २१.१२० ॥

विमृश्य मनसा सर्वमजेयत्वं च तस्य वै॥
मा स्पृश त्वं च रे मूढ मम संस्पर्शजेन वै॥ २१.१२१ ॥

संपर्केण च दग्धोऽसि नान्यथा मम भाषितम्॥
तदोवाच महातेजाः शंबरः प्रहसन्निव॥ २१.१२२ ॥

विभीषिकाभिर्बह्वीभिर्मां भीषयसि मानिनि॥
गच्छ शीघ्रं मम गृहं बहूक्त्या किं प्रयोजनम्॥ २१.१२३ ॥

इत्युच्यमानेन तदा नीता सा प्रसभं तथा॥
स्वपुरं परमं तन्वी शंबरेण मनस्विनी॥ २१.१२४ ॥

कृता महानसेऽध्यक्षा नाम्ना मायावतीति च॥ २१.१२५ ॥

**॥ऋषय ऊचुः॥**
पार्वत्याधिकृतं सर्वं मदनानयनं प्रति॥
संबरेण हृतातन्वी मदनस्य प्रिया सती॥
अत ऊर्ध्वं तदा सूत किं जातं तत्र वर्ण्यताम्॥ २१.१२६ ॥

**॥सूत उवाच॥**
गतं तदा शिवं दृष्ट्वा दग्ध्वा मदनमोजसा॥
पार्वती तपसा युक्ता स्थिता तत्रैव भामिनी॥ २१.१२७ ॥

पित्रा तेन तदा तन्वी मात्रा चैव विचारिता॥
बाले एहि गृहे शीघ्रं मा श्रमं कर्तुमर्हसि॥ २१.१२८ ॥

उक्ता ताभ्यां तदा साध्वी गिरिजा वाक्यमब्रवीत्॥ २१.१२९ ॥

**॥पार्वत्युवाच॥**
नागच्छामि गृहं मातस्तात मे श्रृणु तत्त्वतः॥
वाक्यं धर्मार्थयुक्तं च येन त्वं तोषमेष्यसि॥ २१.१३० ॥

शंभुः परेषां परमो दग्धो येन महाबलः॥
मदनो मम सान्निध्यमानयेऽत्रैव तं शिवम्॥ २१.१३१ ॥

दुर्लभोहि तदा शंभुः प्राणिनां गृहमिच्छताम्॥
नागच्छामि गृहं मातस्तस्मात्सर्वं विमृश्यताम्॥ २१.१३२ ॥

तदोवाच महातेजा हिमवान्स्वसुतां प्रति॥
दुराराध्यः शिवः साक्षात्सर्वदेवनमस्कृतः॥
त्वया प्राप्तुमशक्यो हि तस्मात्त्वं स्वगृहं व्रज॥ २१.१३३ ॥

सा बाष्पपूरितेनैव कंठेन स्वसुतां प्रति॥
उवाच मेना तन्वंगियाहि शीघ्रं गृहं प्रति॥ २१.१३४ ॥

तदा प्रहस्य चोवाच मातरं प्रति पार्वती॥
प्रतिज्ञां श्रृणु मे मातस्तपसा परमेण हि॥ २१.१३५ ॥

अत्रैव तं समानीय वरयामि विचक्षणम्॥
नाशयामि रुद्रस्य रुद्रत्वं वारवर्णिनि॥ २१.१३६ ॥

सुखरूपं परित्यज्य गिरिजा च मनस्विनी॥
शंभोरारधनं चक्रे परमेण समाधिना॥ २१.१३७ ॥

जया च विजया चैव माधवी च सुलोचना॥
सुश्रुता च श्रुता चैव तथैव च शुकी परा॥ २१.१३८ ॥

प्रम्लोचा सुभगा श्यामा चित्रांगी चारुणी स्वधा॥
एताश्चान्याश्च बहवः सख्यस्ता गिरिजां प्रति॥
उपासांचक्रिरे सा च देवगर्भा च भामिनी॥ २१.१३९ ॥

तपसा परमोग्रेण चरंती चारुहासिनी॥
मदनो यत्र दग्धश्च रुद्रेण च महात्मना॥
तत्रैव वेदिं कृत्वा च तस्योपरि सुसंस्थिता॥ २१.१४० ॥

त्यक्त्वा जलाशनं बाला पर्णादा ह्यभवच्च सा॥
ततः साऽर्द्राणि पर्णानि त्यक्त्वा शुष्काणि चाददे॥ २१.१४१ ॥

शुष्काणि चैव पर्णानि नाशितानि तया यदा॥
अपर्णेति च विख्याता बभुव तनुमध्यमा॥ २१.१४२ ॥

वायुपानरता जाता अंबुपानादनंतरम्॥
कालक्रमेण महता बभूव गिरिजा सती॥
एकांगुष्ठेन च तदा दधार च निजं वपुः॥ २१.१४३ ॥

एवमुग्रेण तपसा शंकराराधनं सती॥
चकार परया तुष्ट्या शंभोः प्रीत्यर्थमेव च॥ २१.१४४ ॥

परं भावं समाश्रित्य जगन्मंगलमंगला॥
तुष्ट्यर्थं च महेशस्य तताप परमं तपः॥ २१.१४५ ॥

एवं दिव्यसहस्राणि वर्षाणि च तताप वै॥
हिमा लयस्तदागत्य पार्वतीं कृतनिश्चयाम्॥ २१.१४६ ॥

सभार्यः स सुतामाप्त उवाच च महासतीम्॥
मा खिद्यतां महादेवि तपसानेन भामिनि॥ २१.१४७ ॥

क्व रुद्रो दृश्यते बाले विरक्तो नात्र संशयः॥
त्वं तन्वी तरुणी बाला तपसा च विमोहिता॥ २१.१४८ ॥

भविष्यति न संदेहः सत्यं प्रतिवदामि ते॥
तस्मादुत्तिष्ठ याह्याशु स्वगृहं वरवर्णिनि॥ २१.१४९ ॥

किं तेन तव रुद्रेण ये दग्धः पुराऽनघे॥
मदनो निर्विकारित्वात्तं कथं प्रार्थयिष्यसि॥ २१.१५० ॥

गगनस्थो यथा चंद्रो ग्रहीतुं न हि शक्यते॥
तथैव दुर्गमः शर्भुर्जानीहि त्वं शुचिस्मिते॥ २१.१५१ ॥

तथैव मेनया चोक्ता तथा सह्याद्रिणा सती॥
मेरुणा मंदरेणैव मैनाकेन तथैव च॥ २१.१५२ ॥

एभिरुक्ता तदा तन्वी पार्वती तपसि स्थिता॥
उवाच प्रहसन्त्तेव हिमवंतं शुचिस्मिता॥ २१.१५३ ॥

पुरा प्रोक्तं त्वया तात अंब किं विस्मृतं त्वया॥
अधुनैव प्रतिज्ञां च श्रृणुध्वं मम बांधवाः॥ २१.१५४ ॥

विरक्तोऽसौ महादेवो मदनो येन वै हतः॥
तं तोषयामि तपसा शंकरं लोकशंकरम्॥ २१.१५५ ॥

सर्वे यूयं च गच्छंतु नात्र कार्या विचारणा॥
दग्धो हि मदनो येन येन दग्धं गिरेर्वनम्॥ २१.१५६ ॥

तमानयामि चात्रैव तपसा केवलेन हि॥
तपोबलेन महता सुसेव्यो हि सदाशिवः॥ २१.१५७ ॥

तं जानीध्वं महाभागाः सत्यंसत्यं वदाम्यहम्॥ २१.१५८ ॥

संभाषमाणा जननीं तदानीं हिमालयं चैव तथा च मेनाम्॥
तथैव मेरुं मितभाषिणी तदा सा मंदरं पर्वतराजकन्या॥
जग्मुस्तदा तेन पथा च पर्वता यथागतेनापि विचक्षमाणाः॥ २१.१५९ ॥

गतेषु तेषु सर्वेषु सखीभिः परिवारिता॥
तत्रैव च तपस्तेपे परमार्था सती तदा॥ २१.१६० ॥

तपसा तेन महता तप्तमासीच्चराचरम्॥
तदा सुरासुराः सर्वे ब्रह्माणं शरणं गताः॥ २१-१६१ ॥

**॥देवा ऊचुः॥**
त्वया सृष्टमिदं सर्वं जगद्देव चराचरम्॥

त्रातुमर्हसि देवान्नस्त्वदन्यो नोपपद्यते॥ २१.१६२ ॥

अस्माकं रक्षणे शक्त इत्याकर्ण्य वचस्तदा॥
विमृश्य च तदा ब्रह्मा मनसा परमेण हि॥ २१.१६३ ॥

गिरिजातपसोद्भूतं दावाग्निं परमं महत्॥
ज्ञात्वा ब्रह्मा जगा माशु क्षीराब्धिं परमाद्भुतम्॥ २१.१६४ ॥

तत्र सुप्तं सुप्लयंके शेषाख्ये चातिशोभने॥
लक्ष्म्या पादोपयुगलं सेव्यमानं निरंतरम्॥ २१.१६५ ॥

दूरस्थेनापि तार्क्ष्येण नतकंधरधारिणा॥
सेव्यमानं श्रिया कांत्या क्षांत्या वृत्त्या दयादिभिः॥ २१.१६६ ॥

नवशक्तियुतं विष्णुं पार्षदैः परिवारितम्॥
कुमुदोथ कुमुद्वांश्च सनकश्च सनंदनः॥ २१.१६७ ॥

सनातनो महाभागः प्रसुप्तो विजयोऽरिजित्॥
जयंतश्च जयत्सेनो जयश्चैव महाप्रभः॥ २१.१६८ ॥

सनत्कुमारः सुतपा नारदश्चैव तुंबुरुः॥
पांचजन्यो महाशंखो गदा कौमोदकी तथा॥ २१.१६९ ॥

सुदर्शनं तथा चापं शार्ङ्गं च परमाद्भुतम्॥
एतानि वै रूपवंति दृष्टानि परमेष्ठिना॥ २१.१७० ॥

विष्णोः समीपे परमामनो भृशं समेत्य सर्वे सुरदानवास्तदा॥
विष्णुं चाहुः परमेष्ठिनां पतिं तीरे तदानीमुदधेर्महात्मनः॥ २१.१७१ ॥

त्राहित्राहि महाविष्णो तप्तान्नः शरणागतान्॥
तपसोग्रेण महता पार्वत्याः परमेण हि॥
शेषासने चोपविष्ट उवाच परमेश्वरः॥ २१.१७२ ॥

युष्माभिः सहितश्चापि व्रजामि परमेश्वरम्॥
महादेवं प्रार्थयामो गिरिजां प्रति वै सुराः॥ २१.१७३ ॥

पाणिग्रहार्थमधुना देवदेवः पिनाकधृक्॥
यथा नेष्यति तत्रैव करिष्यामोऽधुना वयम्॥ २१.१७४ ॥

तस्माद्वयं गमिष्यामो यत्र रुद्रो महाप्रभुः॥
तपसोग्रेण संयुक्तो ह्यास्ते परममंगलः॥ २१.१७५ ॥

विष्णोस्तद्वचनं श्रुत्वा ऊचुः सर्वे सुरासुराः॥
न यास्यामो वयं सर्वे विरूपाक्षं महाप्रभम्॥ २१.१७६ ॥

यदा दग्धः पुरा तेन मदनो दुरतिक्रमः॥
तथैव धक्ष्यत्यस्माकं नात्र कार्या विचारणा॥ २१.१७७ ॥

प्रहस्य भगवान्विष्णुरुवाच परमेश्वरः॥
मा भयं क्रियतां सर्वैः शिवरूपी सदाशिवः॥ २१.१७८ ॥

स न धक्ष्यति सर्वेषां देवानां भयनाशनः॥
तस्माद्भवद्भिर्गतव्यं मया सार्द्धं विचक्षणाः॥ २१.१७९ ॥

शंभुं पुराणं पुरुषं ह्यधीशं वरेण्यरूपं च परं पराणाम्॥
तपो जुषाणं परमार्थरूपं परात्परं तं शरणं व्रजामि॥ २१.१८० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे पार्वतीपश्चर्यावर्णनंनामैकविंशतितमोऽध्यायः॥ २१ ॥ छ ॥

**॥सूत उवाच॥**

एवमुक्तास्तदा देवा विष्णुना परमेष्ठिना॥
जग्मुः सर्वे महेशं च द्रष्टुकामाः पिनाकिनम्॥ २२.१ ॥

परे पारे परमेण समाधिना॥
योगपीठे स्तितं शंभुं गणैश्च परिवारितम्॥ २२.२ ॥

यज्ञोपवितविधिना उरसा बिभ्रंत वृतम्॥
वासुकिं सर्पराजं च कंबलाश्वतरौ तथा॥ २२.३ ॥

कर्णद्वये धारयंतं तथा कर्कोटकेन हि॥
पुलहेन च बाहुभ्यां धारयंतं च कंकणे॥ २२.४ ॥

सन्नूपुरे शङ्खकपद्मकाभ्यां संधारयंतं च विराजमानम्॥
कर्पूरगौरं शितिकंठमद्भुतं वृपान्वितं देववरं ददर्शुः॥ २२.५ ॥

तदा ब्रह्मा च विष्णुश्च ऋषयो देवदानवाः॥
तुष्टुवुर्विविधैः सूक्तैर्वेदोपनिपदन्वितैः॥ २२.६ ॥

**॥ब्रह्मोवाच॥**

नमो रुद्राय देवाय मदनांतकराय च॥
भर्गाय भूरिभाग्याय त्रिनेत्राय त्रिविष्टपे॥ २२.७ ॥

शिपिविष्टाय भीमाय शेषशायिन्नमोनमः॥
त्र्यंबकाय जगद्धात्रे विश्वरूपाय वै नमः॥ २२.८ ॥

त्वं धाता सर्वलोकानां पिता माता त्वमीश्वरः॥
कृपया परया युक्तः पाह्यस्मांस्त्वं महेश्वर॥ २२.९ ॥

इत्थं स्तुवत्सु देवेषु नन्दी प्रोवाच तान्प्रति॥
किमर्थमागता यूयं किं वा मनसि वर्तते॥ २२.१० ॥ (२२.११)
ते प्रोचुर्देवकार्यार्थं विज्ञप्तुं शंभुमागता॥
विज्ञप्तो नंदिना तेन शैलादेन महात्मना॥
ध्यानस्थितो महादेवः सुरकार्यार्थसिद्धये॥ २२.११ ॥

ब्रह्मादयः सुग्गणाः सुरसिद्धसंघास्त्वां द्रष्टुमेव सुरवर्य विसेषयंति॥
कार्य्यार्थिनोऽसुरवरैः परिभत्स्र्यमाना अभ्यागताः सपदि शत्रुभिरर्दिताश्च॥ २२.१२ ॥

तस्मात्त्वया हि देवेश त्रातव्याश्चाधुना सुराः॥
एवं तेन तदा शंभुर्विज्ञप्तो नंदिना द्विजाः॥ २२.१३ ॥

शनैःशनैरुपरमच्छंभुः परमकोपनः॥

समाधेः परमात्माऽसावुवाच परमेश्वरः॥ २२.१४ ॥

**॥महादेव उवाच॥**

कस्माद्युयं महाभागा ह्यागता मत्समीपगाः॥
ब्रह्मादयो ह्यमी देवा ब्रूत कारणमद्य वै॥ २२.१५ ॥

तदा ब्रह्मा ह्युवाचेदं सुरकार्यं महत्तरम्॥
तारकेण कृतं शंभो देवानां परमाद्भुतम्॥ २२.१६ ॥

कष्टात्कष्टतरं देव तद्विज्ञप्तुमिहागताः॥
हे शंभो तव पुत्रेण औरसेन हतो भवेत्॥
तारको देवशत्रुश्च नान्यथा मम भाषितम्॥ २२.१७ ॥

तस्मात्त्वया गिरिजा देव शंभो गृहीतव्या पाणिना दक्षिणेन॥
पाणिग्रहेणैव महानुभाव दत्ता गिरीन्द्रेण च तां कुरुष्व॥ २२.१८ ॥

ब्रह्मणो हि वचः श्रुत्वा प्रहसन्नब्रवीच्छिवः॥
यदा मया कृता देवी गिरिजा सर्वसुन्दरी॥ २२.१९ ॥

तदा सर्वे सुरेन्द्राश्च ऋषयो मुनयस्तथा॥
सकामाश्च भविष्यंति अक्षमाश्च परे पथि॥ २२.२० ॥

मदनो हि मया दग्धः सर्वेषां कार्यसिद्धये॥
मया ह्यधि कृता तन्वी गिरिजा च सुमध्यमा॥ २२.२१ ॥

तदानीमेव भो देवाः पार्वती मदनं च सा॥
जीवयिष्यति भो ब्रह्मन्नात्र कार्या विचारणा॥ २२.२२ ॥

एवं विमृश्य भो देंवाः कार्या कार्यविचारणा॥
मदनेनैव दग्धेन सुरकार्यं महत्कृतम्॥ २२.२३ ॥

यूयं सर्वे च निष्कामा मया नास्त्यत्र संशयः॥
यथाहं च सुराः सर्वे तथा यूयं प्रयत्नतः॥ २२.२४ ॥

तपः परमसंयुक्ताः पारयामः सुदुष्करम्॥
परमानन्दसंयुक्ताः सुखिनः सर्व एव हि॥ २२.२५ ॥

यूयं समाधिना तेन मदनेन च विस्मृतम्॥
कामो हि नरकायैव तस्मात्क्रोधोऽभिजायते॥ २२.२६ ॥

क्रोधाद्भवति संमोहः संमोहाद्भ्रमते मनः॥
कामक्रोधौ परित्यज्य भवद्भिः सुरसत्तमैः॥

सर्वैरेव च मंतव्यं मद्वाक्यं नान्यथा क्वचित्॥ २२.२७ ॥

एवं विश्राव्य भगवान्स हि देवो वृषध्वजः॥
सुरान्प्रबोधयामास तथा ऋषिगणान्मुनीन्॥ २२.२८ ॥

तूष्णींभूतोऽभवच्छंभुर्ध्यानमाश्रित्य वै पुनः॥
आस्ते पुरा यथावच्च गणैश्च परिवारितः॥ २२.२९ ॥

ध्यानास्थितं च तं दृष्ट्वा नन्दौ सर्वान्विसृज्य तान्॥
सब्रह्मसेन्द्रान्विबुधानुवाच प्रहसन्निव॥ २२.३० ॥

यतागतेन मार्गेण गच्छध्वं मा विलंबितम्॥
तथेति मत्वा ते सर्वे स्वंस्वं स्थानमथाऽव्रजन्॥ २२.३१ ॥

गतेषु तेषु सर्वेषु समाधिस्थोऽभवद्भवः॥
आत्मानमात्मना कृत्वा आत्मन्येन विचंतयन्॥ २२.३२ ॥

परात्परतरं स्वच्छं निर्मलं निरवग्रहम्॥
निरञ्जनं निराभासं यस्मिन्मुह्यंति सूरयः॥ २२.३३ ॥

भानुर्नभात्यग्निरथो शशी वा न ज्योतिरेवं न च मारुतो न हि॥
यं केवलं वस्तुविचारतोऽपि सूक्ष्मात्परं सूक्ष्मतरात्परं च॥ २२.३४ ॥

अनिर्द्देश्य मचिन्त्यं च निर्विकारं निरामयम्॥
ज्ञप्तिमात्रस्वरूपं च न्यासिनो यांति तत्र वै॥ २२.३५ ॥

शब्दातीनं निर्गुणं निर्विकारं सत्तामात्रं ज्ञानगम्यं त्वगम्यम्॥
यत्तद्वस्तु सर्वदा कथ्यते वै वेदातीतैश्चागमैर्मन्त्रभूतैः॥ २२.३६ ॥

तद्वस्तुभूतो भगवान्स ईश्वरः पिनाकपाणिर्भगवान्वृध्वजः॥
येनैव साक्षान्मकरध्वजो हतस्तपो जुषाणः परमेश्वरः सः॥ २२.३७ ॥

**॥लोमश उवाच॥**
गिरिजा हि तदा देवी तताप परमं तपः॥
तपसा तेन रुद्रोऽपि उत्तमं भयमागतः॥ २२.३८ ॥

विजित्य तपसा देवी पार्वती परमेण हि॥
शम्भुं सर्वार्थदं स्थाणुं केवलं स्वस्वरूपिणम्॥ २२.३९ ॥

यदा जितस्तया देव्या तपसा वृषभध्वजः॥
समाधेश्चलितो भूत्वा यत्र सा पार्वती स्थिता॥ २२.४० ॥

जगाम त्वरितेनैव देवदेवः पिनाकधृक्॥
तत्रापश्यत्स्थितां देवीं सखीभिः परिवारिताम्॥ २२.४१ ॥

वेदिकोपरि विन्यस्तां यथैव शशिनः कलाम्॥
स देवस्तां निरीक्ष्याथ बटुर्भूत्वाथ तत्क्षणात्॥ २२.४२ ॥

ब्रह्मचारिस्वरूपेण महेशो भगवान्भवः॥
सखीनां मध्यमाश्रित्य ह्युवाच बटुरूपवान्॥
किमर्थमालिमध्यस्था तन्वी सर्वांगसुन्दरी॥ २२.४३ ॥

केयं कस्य कुतो याता किमर्थं तप्यते तपः॥
सर्वं मे कथ्यतां सख्यो याथा तथ्येन संप्रति॥ २२.४४ ॥

तदोवाच जया रुद्रं तपसः कारणं परम्॥ २२.४५ ॥

हिमाद्रेर्दुहितेयं वै तपसा रुद्रमीश्वरम्॥
प्राप्तुकामा पतित्वन सेय मत्रोपविश्य च॥ २२.४६ ॥

तपस्तताप सुमहत्सर्वेषां दुरतिक्रमम्॥
बटो जानीहि मे वाक्यं नान्यथा मम भाषितम्॥ २२.४७ ॥

तच्छ्त्वा वचनं तस्याः प्रहस्येदमुवाच ह॥
श्रृण्वतीनां सखीनां वै महेशो बटुरूपवान्॥ २२.४८ ॥

मूढेयं पार्वती सख्यो न जानाति हिताहितम्॥
किमर्थं च तपः कार्यं रुद्रपाप्त्यर्थमेव च॥ २२.४९ ॥

सोऽमंगलः कपाली च श्मशानालय एव च॥
अशिवः शिवशब्देन भण्यते च वृथाथ वै॥ २२.५० ॥

अनया हि वृतो रुद्रो यदा सख्यः समेष्यति॥
तदेयमशुभा तन्वी भविष्यति न संशयः॥ २२.५१ ॥
यो दक्षशापाद्विकृतो यज्ञबाह्योऽभवद्विटा॥
ये ह्यंगभूताः शर्वस्य सर्पा ह्यासन्महाविषाः॥ २२.५२ ॥

शवभस्मान्वितो रुद्रः कृत्तिवासा ह्यमंगलः॥
पिशाचैः प्रमथैर्भूतैरावृतो हि निरंतरम्॥ २२.५३ ॥

तेन रुद्रेण किं कार्यमनया सुकुमारया॥
निवार्यतां सखीभिश्च मर्तुकामा पिशाचवत्॥ २२.५४ ॥

इंद्रं हित्वा मनोज्ञं च यमं चैव महाप्रभम्॥

नैर्ऋतं च विशालाक्षं वरुणं च अपां पतिम्॥ २२.५५ ॥

कुबेरं पवनं चैव तथैव च विभावसुम्॥
एवमादीनि वाक्यानि उवाच परमेश्वरः॥
सखीनां श्रृण्वतीनां च यत्र सा तपसि स्थिता॥ २२.५६ ॥

इत्याकर्ण्य वचस्तस्य रुद्रस्य बटुरूपिणः॥
चुकोप च शिवा साध्वी महेशं बटुरूपिणम्॥ २२.५७ ॥

जये त्वं विजये साध्वि प्रम्लोचेऽप्यथ सुन्दरि॥
सुलोचने महाभागे समीचीनं कृतं हि मे॥ २२.५८ ॥

किमेतस्य बटोः कार्यं भवतीनामिहाधुना॥
बटुस्वरूपमास्थाय आगतो देवनिंदकः॥ २२.५९ ॥

अयं विसृज्यतां सख्यः किमनेन प्रयोजनम्॥
बटुस्वरूपिणं रुद्रं कुपिता सा ततोऽब्रवीत्॥ २२.६० ॥

बटो गच्छाशु त्वरितो न स्थेयं च त्वयाऽधुना॥
किमनेन प्रलापेन तव नास्ति प्रयोजनम्॥ २२.६१ ॥

बटुर्निर्भर्त्सितस्तत्र तया चैवं तदा पुनः॥
प्रहस्य वै स्थिरो भूत्वा पुनर्वाक्यमथाब्रवीत्॥ २२.६२ ॥

शनैः शनैरवितथं विजयां प्रति सत्वरम्॥
कस्मात्कोपस्तयातन्वि कृतः केनैव हेतुना॥ २२.६३ ॥

सर्वेषामपि तद्वाच्यं वचनं सूक्तमेव यत्॥
यथोक्तेन च वाक्येन कस्मात्तन्वी प्रकोपिता॥ २२.६४ ॥

यः शंभुरुच्यते लोके भिक्षुको भिक्षुकप्रियः॥
यदि मे ह्यनृतं प्रोक्तं तदा कोप इहोचितः॥ २२.६५ ॥

इयं तावत्सुरूपा च विरूपोऽसौ सदाशिवः॥
विशालाक्षी त्वियं बाला विरूपाक्षो भवस्तथा॥ २२.६६ ॥

एवंभूतेन रुद्रेण मोहितेयं कथं भवेत्॥
सभाग्यो हि पतिः स्त्रीणां सदा भाव्यो रतिप्रियः॥ २२.६७ ॥

इयं कथं मोहितास्ति निर्गुणेन युगात्मिका॥
न श्रुतो न च विज्ञातो न दृष्टः केन वा शिवः॥ २२.६८ ॥

सकामानां च भूतानां दुर्लभो हि सदाशिवः॥
तपसा परमेणैव गर्वितेयं सुमध्यमा॥ २२.६९ ॥

निःस्तंभो हि सदा स्थाणुः कथं प्राप्स्यति तं पतिम्॥
मयोक्तं किं विशालाक्षि कस्मान्मे रुषिताऽधुना॥ २२.७० ॥

यावद्रोषो भवेन्नृणां नारीणां च विशेषतः॥
तेन रोषेण तत्सर्वं भस्मीभूतं भविष्यति॥ २२.७१ ॥

सुकृतं चोर्जितं तन्वि सत्यमेवोदितं सति॥
कामः क्रोधश्च लोभश्च दंभो मात्सर्यमेव च॥ २२.७२ ॥

च प्रपंचश्चतेन सर्वं विनश्यति॥
तस्मात्तपस्विभिर्युक्तं कामक्रोधादिवर्जनम्॥ २२.७३ ॥

यदीश्वरो हृदि मध्ये विभाव्यो मनीषिभिः सर्वदा ज्ञप्तिमात्रः॥
तदा सर्वैर्मुनिवृत्त्या विभाव्यस्तपस्विभिर्नान्यथा चिंतनीयः॥ २२.७४ ॥

एतच्छ्रुत्वा वचनं तस्य शंभोस्तदाब्रवीद्विजया तं च सर्वम्॥
गच्छात्र किंचित्तव नास्ति कार्यं न वक्तव्यं वचनं बालिशान्यत्॥ २२.७५ ॥

एवं विवदमानं तं बटुरूपं सदाशिवम्॥
विसर्जयामास तदा विजया वाक्यकोविदा॥ २२.७६ ॥

तिरोधानं गतः सद्यो महेशो गिरिजां प्रति॥
अलक्ष्यमाणः सर्वासां सखीनां परमेश्वरः॥ २२.७७ ॥

प्रादुर्बभूव सहसा निजरूपधरस्तदा॥
यदा ध्यानस्थिता देवी निजध्यानपरा सती॥ २२.७८ ॥

तदा हृदिस्थो देवेशो बहिर्दृष्टिचरोभवत्॥
नेत्रे उन्मील्य सा साध्वी गिरिजायतलोचना॥
अपश्यद्देवदेवेशं सर्वलोकमहेश्वरम्॥ २२.७९ ॥

द्विभुजं चैकवक्त्रं कृत्तिवाससमद्भुतम्॥
कपर्दं चंद्ररेखांकं निवीतं गजचर्मणा॥ २२.८० ॥

कर्णस्थौ हि महानागौ कंबलाश्वतरौ तदा॥
वासुकिः सर्पराजश्च कृताहारो महाद्युति॥ २२.८१ ॥

वलयानि महार्हाणि तदा सर्पमयानि च॥
कृतानि तेन रुद्रेण तथा शोभाकराणि च॥ २२.८२ ॥

एवंभूतस्तदा शंभुः पार्वतीं प्रति चाग्रतः॥
उवाच त्वरया युक्तो वरं वरय भामिनि॥ २२.८३ ॥

व्रीडया परया युक्ता साध्वी प्रोवाच शंकरम्॥
त्वं नाथो मम देवेश त्वया किं विस्मृतं पुरा॥ २२.८४ ॥

दक्षयज्ञविनाशं च यदर्थं कृतवान्प्रभो॥
स त्वं साहं समुत्पन्ना मेनायां कार्यसिद्धये॥ २२.८५ ॥

देवानां देवदेवेश तारकस्य वधं प्रति॥
भवतो हि मया देव भविष्यति कुमारकः॥ २२.८६ ॥

तस्मात्त्वया हि कर्तव्यं मम वाक्यं महेश्वर॥
गंतव्यं हिमवत्पार्श्वं नात्र कार्या विचारणा॥ २२.८७ ॥

याचस्व मां महादेव ऋषिभिः परिवारितः॥
करिष्यति न संदेहस्तव वाक्यं च मे पिता॥ २२.८८ ॥

दक्षकन्या पुराहं वै पित्रा दत्ता यदा तव॥
यथोक्तविधिना तत्र विवाहो न कृतस्त्वया॥७२२.८९ ॥

न ग्रहाः पूजितास्तेन दक्षेण च महात्मना॥
ग्रहाणां विषयत्वेन सच्छिद्रोऽयं महानभूत्॥ २२.९० ॥

तस्माद्यथोक्तविधिना कर्तुमर्हसि सुव्रत॥
विवाहं स्वं महाभाग देवानां कार्यसिद्धये॥ २२.९१ ॥

तदोवाच महाबाहो गिरिजां प्रहसन्निव॥
स्वभावेनैव तत्सर्वं जंगमाजंगमं महत्॥
जातं त्वया मोहितं च त्रिगुणैः परिवेष्टितम्॥ २२.९२ ॥

अहंकारात्समुत्पन्नं महत्तत्त्वं च पार्वति॥
महत्तत्त्वात्तमो जातं तमसा वेष्टितं नभः॥ २२.९३ ॥

भसो वायुरुत्पन्नो वायोरग्निरजायत॥
अग्नेरापः समुत्पन्ना अद्भ्यो जाता मही तदा॥ २२.९४ ॥

महयादिकानि स्थास्नूनि चराणि च वरानने॥
दृश्यंयत्सर्वमेवैतन्नश्वरं विद्धि मानिनि॥ २२.९५ ॥

एकोऽनेकत्वमापन्नो निर्गुणो हि गुणावृतः॥

स्वज्योतिर्भाति यो नित्यं परज्योत्स्नान्वितोऽभवत्॥
स्वतंत्रः परतंत्रश्च त्वया देवि महत्कृतम्॥ २२.९६ ॥

मायामयं कृतमिदं च जगत्समग्रं सर्वात्मना अवधृतं परया च बुद्ध्या॥
सर्वात्मभिः सुकृतिभिः परमार्थभावैः संसक्तिरिंद्रियगणैः परिवेष्टितं च॥ २२.९७ ॥

के ग्रहाः के उडुगणाः के बाध्यंते त्वया कृताः॥
विमुक्तं चाधुना देवि शर्वार्थं वरवर्णिनि॥ २२.९८ ॥

गुणकार्यप्रसंगेन आवां प्रादुर्भवः कृतः॥
त्वं हि वै प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी॥ २२.९९ ॥

व्यापारदक्षा सततमहं चैव सुमध्यमे॥
हिमालयं न गच्छामि न याचामि कथंचन॥ २२.१०० ॥

देहीति वचनात्सद्यः पुरुषो याति लाघवम्॥
इत्थं ज्ञात्वा च भो देवि किमस्माकं वदस्व वै॥ २२.१०१ ॥

कार्यं त्वदाज्ञया भद्रे तत्सर्वं वक्तुमर्हसि॥
तेनोक्तात्र तदा साध्वी उवाच कमलेक्षणा॥ २२.१०२ ॥

त्वमात्मा प्रकृतिश्चाहं नात्र कार्या विचारणा॥
तथापि शंभो कर्तव्यं मम चोद्वहनं महत्॥ २२.१०३ ॥

देहो ह्यविद्ययाक्षिप्तो विदेहो हि भवान्परः॥
तथाप्येवं महादेव शरीरावरणं कुरु॥ २२.१०४ ॥

प्रपंचरचनां शंभो कुरु वाक्यान्मम प्रभो॥
याचस्व मां महादेव सौभाग्यं चैव देहि मे॥ २२.१०५ ॥

इत्येवमुक्तः स तया महात्मा महेश्वरो लोकविडंबनाय॥
तथेति मत्वा प्रहसञ्जगाम स्वमालयं देववरैः सुपूजितः॥ २२.१०६ ॥

एतस्मिन्नंतरे तत्र हिमवान्गिरिभिः सह॥
मेनया भार्यया सार्द्धमाजगाम त्वरान्वितः॥ २२.१०७ ॥

पार्वतीदर्शनार्थं च सुतैश्च परिवारितः॥
तेन दृष्टा महादेवी सखीभिः परिवारिता॥ २२.१०८ ॥

पार्वत्या च तदा दृष्टो हिमवान्गिरिभिः सह॥
अभ्युत्थानपरा साध्वी प्रणम्य शिरसा तदा॥
पितरौ च तदा भ्रातॄन्बंधूंश्चैव च सर्वशः॥ २२.१०९ ॥

स्वमंकमारोप्य महायशास्तदा सुतां परिष्वज्य च बाष्पपूरितः॥
उवाच वाक्यं मधुरं हिमालयः किं वै कृतं साध्वि यथा तथेन॥ २२.११० ॥

तत्कथ्यतां महाभागे सर्वं शुश्रूषतां हि नः॥
तच्छ्रुत्वा मधुरं वाक्यमुवाच पितरं प्रति॥ २२.१११ ॥

तपसा परमेणैव प्रार्थितो मदनांतकः॥
शांतं च मे महात्कार्यं सर्वेषामपि दुर्ल्लभम्॥ २२.११२ ॥

तत्र तुष्टो महादेवो वरणार्थं समागतः॥
स मयोक्तस्तदा शंभुर्ममषाणिग्रहः कथम्॥ २२.११३ ॥

क्रियते च तदा शंभो मम पित्रा विनाधुना॥
यतागतेन मार्गेण गतोऽसौ त्रिपुरांतकः॥ २२.११४ ॥

तस्यास्तद्वचनं श्रुत्वा अवाप परमां मुदम्॥
बंधुभिः सह धर्मात्मा उवाच स्वसुतां पुनः॥ २२.११५ ॥

स्वगृहं चाद्य गच्छामो वयं सर्वे च भूधराः॥
अनया राधितो देवः पिनाकी वृषभध्वजः॥ २२.११६ ॥

इत्यूचुस्ते सुराः सर्वे हिमालयपुरोगमाः॥
पार्वतीसहिताः सर्वे तुष्टुर्वाग्भिराद्दताः॥ २२.११७ ॥

तां स्तूयमानां च तदा हिमालयो ह्यारोप्य चांसं वरवर्णिनीं च॥
सर्वेथ शैलाः परिवार्य चोत्सुकाः समानयामासुरथ स्वमालयम्॥ २२.११८ ॥

देवदुंदुभयो नेदुः शंखतूर्याण्यनेकशः॥
वादित्राणि बहून्येव वाद्यमानानि सर्वशः॥ २२.११९ ॥

पुष्पर्षेण महता तेनानीता गृहं प्रति॥ २२.१२० ॥

सा पूज्यमाना बहुभिस्तदानीं महाविभूत्युल्लसिता तपस्विनी॥
तथैव देवैः सह चारणैश्च महर्षिभिः सिद्धगणैश्च सर्वशः॥ २२.१२१ ॥

पूज्यमाना तदा देवी उवाच कमलासनम्॥
देवानृषीन्पितॄन्यक्षानन्यान्सर्वान्समागतान्॥ २२.१२२ ॥

गच्छध्वं सर्व एवैते येन्ये ह्यत्र समागताः॥
स्वंस्वं स्थानं यताजोषं सेव्यतां परमेश्वरः॥ २२.१२३ ॥

एवं तदानीं स्वपितुर्गृहं गता संशोभमाना परमेण वर्चसा॥

सा पार्वती देववरैः सुपूजिता संचिंतयंती मनसा सदाशिवम्॥ २२.१२४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे पार्वत्यै शंकरेण स्वरूपदर्शनंनामद्वाविंशोऽध्यायः॥ २२ ॥

**॥लोमश उवाच॥**

एतस्मिन्नंतरे तत्र महेशेन प्रणोदिताः॥
आजग्मुः सहसा सद्य ऋषयोऽपि हिमालयम्॥ २३.१ ॥
तान्दृष्ट्वा सहसोत्थाय हिमाद्रिः प्रतिमानसः॥
पूजयामास तान्सर्वानुवाच नतकंधरः॥ २३.२ ॥
किमर्थमागता यूयं ब्रूतागमनकारणम्॥
तदोचुः सप्त ऋषयो महेशप्रेरिता वयम्॥ २३.३ ॥
समागतास्त्वत्सकाशं कन्यायाश्च विलोकने॥
तानस्मान्विद्धि भोः शैल स्वां कन्यां दर्शयाशु वै॥ २३.४ ॥
तथेत्युक्त्वा ऋषिगणानानीता तत्र पार्वती॥
स्वोत्संगे परिगृह्याशु गिरीन्द्रः पुत्रवत्सलः॥
हिमवान्गिरिराजोऽथ उवाच प्रहसन्निव॥ २३.५ ॥
इयं सुता मदीया हि वाक्यं श्रुणुत मे पुनः॥
तपस्विनां वरिष्ठऽसौ विरक्तो मदनांतकः॥ २३.६ ॥
कथमुद्वहनार्थी च येनानंगः कृत स्मरः॥
अत्यासन्नेचातिदूरे आढ्ये धनविवर्जिते॥
वृत्तिहीने च मूर्खे च कन्यादानं न शस्यते॥ २३.७ ॥
मूढाय च विरक्ताय आत्मसंभाविताय च॥
आतुराय प्रमत्ताय कन्यादानं न कारयेत्॥ २३.८ ॥
तस्मान्मया विचार्यैव भवद्भिर्ऋषिसत्तमाः॥
प्रदातव्या महेशाय एतन्मे व्रतमुत्तमम्॥ २३.९ ॥
तच्छ्रुत्वा गिरिराजस्य वचनं ते महर्षयः॥
एकपद्येन ऊचुस्ते प्रहस्य च हिमालयम्॥ २३.१० ॥
यया कृतं तपस्तीव्रं यया चाराधितः शिवः॥
तपसा तेन संतुष्टः प्रसन्नोद्य सदाशिवः॥ २३.११ ॥
अस्यास्तस्य च भोः शैल न जानासि च किंचन॥
महिमानं परं चैव तस्मादेनां प्रयच्छ वै॥ २३.१२ ॥
शिवाय गिरिजामेनां कुरुष्य वचनं हि नः॥
तच्छ्रुत्वा वचनं तेषामृषीणां भावितात्मनाम्॥ २३.१३ ॥
उवाच त्वरया युक्तः पर्वतान्पर्वतेश्वरः॥
हे मेरो हे निषधकिं गन्धमादन मन्दर॥
मैनाक क्रियतामद्य शंसध्वं च यथातथम्॥ २३.१४ ॥
मेना तदा उवाचेदं वाक्यं वाक्यविशारदा॥

अधुना किं विमशन कृतं कार्यं तदैव हि॥ २३.१५ ॥
उत्पन्नेयं महाभागा देवकार्यार्थमेव च॥
प्रदातव्या शिवायेति शिवस्यार्थेऽवतारिता॥ २३.१६ ॥
अनयाराधितो रुद्रो रुद्रेण परिभाविता॥
इयं महाभागा शिवाय प्रतिदीयताम्॥ २३.१७ ॥
निमित्तमात्रं च कृतं तया वै शिवपूजने॥
एतच्छ्रुत्वा वचस्तस्यामेनायाः परिभाषितम्॥ २३.१८ ॥
परितुष्टो हिमाद्रिश्च वाक्यं चेदमुवाच ह॥
ऋषीन्प्रति निरीक्षंस्तां कन्येयं मम संप्रति॥ २३.१९ ॥
ततः समानीय सुलोचनां तां श्यामां नितंबार्षितमेखलां शुभाम्॥
वैडूर्यमुक्तावलयान्दधानां भास्वत्प्रभां चांद्रमसीं व रेखम्॥ २३.२० ॥
लावण्यामृतवापिकां सुवदनां गौरीं सुवासां शुभां दृष्ट्वा ते ह्यृषयोऽपि मोहमगन्भ्रांतास्तदा संभ्रमात्॥
नोचुः किंचना वाक्यमेव सुधियो ह्यासन्प्रमत्ता इव स्तब्धाः कान्तिमतीमतीव रुचिरां
त्रैलोक्यनाथप्रियाम्॥ २३.२१ ॥
एवं तदा ते ह्यृषयोऽपि मोहिता रूपेण तस्याः किमुताथ देवताः॥
तथैव सर्वे च निरीक्ष्य तन्वीं सतीं गिरिन्द्रस्य सुतां शिवप्रियाम्॥ २३.२२ ॥
ततः पुनश्चैत्य शिवं शिवप्रियाः शशंसुरस्मा ऋषयस्तदानीम्॥ २३.२३ ॥
**॥ऋषय ऊचुः॥**
भूषिता हि गिरीन्द्रेण स्वसुता नास्ति संशयः॥
उद्वोढुं गच्छ देवेश देवैश्च परिवारितः॥ २३.२४ ॥
गच्छ शीघ्रं महादेव पार्वतीमात्मजन्मने॥
तच्छ्रुत्वा वचनं तेषां प्रहस्येदमुवाच ह॥ २३.२५ ॥
विवाहो हि महाभागा न दृष्टो न श्रुतोऽपि वा॥
मया पुरा च ऋषयः कथ्यतां च विशेषतः॥ २३.२६ ॥
तदोचुर्ऋषयः सर्वे प्रहसंतः सदाशिवम्॥
विष्णुमाह्वय वै देव ब्रह्मणं च शतक्रतुम्॥ २३.२७ ॥
तथा ऋषिगणांश्चैव यक्षगन्धर्वपन्नगान्॥
सिद्धविद्याधरांश्चैव किंनरांश्चाप्सरोगणान्॥ २३.२८ ॥
एतांश्चान्यांश्च सुबहूनानयस्वेति सत्वरम्॥
तदाकर्ण्य ऋषिप्रोक्तं वाक्यं वाक्यविशारदः॥ २३.२९ ॥
उवाच नारदं देवो विष्णुमानय सत्वरम्॥
ब्रह्माणं च महेन्द्रं च अन्यांश्चैव समानय॥ २३.३० ॥
शंभोर्वचनमादाय शिरसा लोकपावनः॥

जगाम त्वरितो भूत्वा वैकुण्ठं विष्णुवल्लभः॥ २३.३१ ॥
ददर्श देवं परमासने स्थितं श्रिया च देव्या परिसेव्यमानम्॥
चतुर्भुजं देववरं महाप्रभं नीलोत्पलश्यामतनुं वरेण्यम्॥ २३.३२ ॥
महार्हरत्नावृतचारुकुण्डलं महाकिरीटोत्तमरत्नभास्वतम्॥
सुवैजयंत्या वनमालया वृतं स नारदस्तं भुवनैकसुन्दरम्॥ २३.३३ ॥
उवाच नारदोऽभ्येत्य शंभोर्वाक्यमथादरात्॥
ब्रह्मवीणां वाद्यवीणां वाद्यमानः सर्वज्ञ ऋषिसत्तमः॥ २३.३४ ॥
एह्येहि त्वं महाविष्णो महादेवं त्वरान्वितः॥
उद्वाहनार्थं शंभोश्च त्वमेकः कार्यसाधकः॥ २३.३५ ॥
प्रहस्य भगवान्प्राह नारदं प्रति वै तदा॥
कथमुद्वहने बुद्धिरुत्पन्ना तस्य शूलिनः॥
विज्ञातार्थोऽपि भगवान्नारदं परिपृष्टवान्॥ २३.३६ ॥
**॥नारद उवाच॥**
तपसा महता रुद्रः पार्वत्या परितोषितः॥
स्वयमेवागतस्तत्र यत्रास्ते गिरिजा सती॥ २३.३७ ॥
दासोऽहमवदच्छंभुः पार्वत्या परितोषितः॥
पार्वतीं च समभ्यर्थ्य वरयस्व च भामिनि॥ २३.३८ ॥
त्वरितेनावदच्छंभुस्त्वामाह्वयति संप्रति॥
तस्य तद्वचनं श्रुत्वा देवदेवो जनार्दनः॥
नारदेन समायुक्तः पार्षदैः परिवारितः॥ २३.३९ ॥
सुपर्णमारुह्य तदा महात्मा योगीश्वराणां प्रभुरच्युतो महान्॥
ययौ तदाऽऽकाशपथा हरिः स्वयं सनारदो देववरैः समेतः॥ २३.४० ॥
तं दृष्ट्वा त्वरितं देवो योगिध्येयांघ्रिपंकजः॥
अभ्युत्थाय मुदा युक्तः परिष्वज्य च शार्ङ्गिणम्॥ २३.४१ ॥
तदा हरिहरौ देवावैकपद्येन तिष्ठतः॥
ऊचुतुः स्म तदान्योन्यं क्षेमं कुशलमेव च॥ २३.४२ ॥
**॥ईश्वर उवाच॥**
गिरिजातपसा विष्णो जितोऽहं नात्र संशयः॥
पाणिग्रहार्थमेवाद्य गंतुकामो हिमालयम्॥ २३.४३ ॥
यथार्थेन च भो विष्णो कथयामि तवाग्रतः॥
यदा दक्षेण भो विष्णो प्रदत्ता च पुरा सती॥ २३.४४ ॥
न च संकल्पविधिना मया पाणिग्रहः कृतः॥
अधुनैव मया कार्यं कर्मविस्तारणं बहु॥ २३.४५ ॥

यत्कार्यं तन्न जानामि सर्वं पाणिग्रहोचितम्॥
शंभोस्तद्वचनं श्रुत्वा प्रहस्य मधुसूदनः॥ २३.४६ ॥
यावद्वक्तुं समारेभे तावद्ब्रह्मा समागतः॥
इंद्रेण सह सर्वैश्च लोकपालैस्त्वरान्वितः॥ २३.४७ ॥
तथैव देवासुरयक्षदानवा नागाः पतंगाप्सरसो महर्षयः॥
समेत्य सर्वे परिवक्तुमीशमूचुस्तदानीं शिरसा प्रणम्य॥ २३.४८ ॥
गच्छगच्छ महादेव अस्माभिः सहितः प्रभो॥
ततो विष्णुरुवाचेदं प्रस्तावसदृशंवचः॥ २३.४९ ॥
गृह्योक्तविधिना शंभो कर्म कर्तुमिहार्हसि॥ २३.५० ॥
नांदीमुखं मण्डपस्थापनं च तथा चैतत्कुरु धर्मेण युक्तम्॥
महानदीसंगमं वर्जयित्वा कुर्वंति केचिद्वेदमनीषिणश्च॥ २३.५१ ॥
मण्डपस्थापनं चैव क्रियतां ह्यधुना विभो॥
तथोक्तो विष्णुना शंभुश्चकारात्महिताय वै॥ २३.५२ ॥
ब्रह्मादिभिः कृतं तेन सर्वमभ्युदयोचितम्॥
ग्रहाणां पूजनं चक्रे कश्यपो ब्रह्मणा युतः॥ २३.५३ ॥
तथात्रिश्च वशिष्ठश्च गौतमोथ गुरुर्भृगुः॥
कण्वो बृहस्पतिः शक्तिर्जमदग्निः पराशरः॥ २३.५४ ॥
मार्कंडेयः शिलावाकः शून्यपालोऽक्षतश्रमः॥
अगस्त्यश्च्यवनो गर्गः शिलादोऽथ महामुनिः॥ २३.५५ ॥
एते चान्ये च बहवो ह्यागताः शिवसन्निधौ॥
ब्रह्मणा नोदितास्तत्र चक्रुस्ते विधिवत्क्रियाम्॥ २३.५६ ॥
वेदोक्तविधिना सर्वे वेदवेदांगपारगाः॥
चक्रू रक्षां महेशस्य कृतकौतुकमंगलाम्॥ २३.५७ ॥
ऋग्यजुःसामसहितैः सूक्तैर्नानाविधैस्तथा॥
मंगलानि च भूरीणि ऋषयस्तत्त्ववेदिनः॥ २३.५८ ॥
अभ्यंजनादिकं सर्वं चक्रुस्तस्य परात्मनः॥
ख्यातः कपर्द्दस्तस्यैव शिवस्य परमात्मनः॥ २३.५९ ॥
अनेकैर्मौक्तिकैर्युक्ता मुण्डमालाऽभवत्तदा॥
ये सर्पा ह्यंगभूताश्च ते सर्वे तत्क्षणादिव॥
बभूवुर्मंडनान्येव जातरूपमयानि च॥ २३.६० ॥
सर्वभूषणसंपन्नो देवदेवो महेश्वरः॥
ययौ देवैः परिवृतः शैलराजपुरं प्रति॥ २३.६१ ॥
चंडिका वरभगिनी तदा जाता भयावहा॥

प्रेतासना गता चण्डी सर्पाभरणभूषिता॥ २३.६२ ॥
हैमं कलशमादाय पूर्णं मूर्ध्ना महाप्रभा॥
परिवारैर्महाचंडी दीप्तास्या ह्युग्रलोचना॥ २३.६३ ॥
तत्र भूतान्यनेकानि विरूपाणि सहस्रशः॥
तैः समेताग्रतश्चंडी जगाम विकृतानना॥ २३.६४ ॥
तस्याः सर्वे पृष्ठतश्च गणाः परमदारुणाः॥
कोट्येकादशसंख्याका रौद्रा रुद्र प्रियाश्च ये॥ २३.६५ ॥
तदा डमरुनिर्घोषव्याप्तमासीज्जगत्त्रयम्॥
भेरीभांकारशब्देन शंखानां निनदेन च॥ २३.६६ ॥
तथा दुंदुभिनिर्घोषैः शब्दः कोलाहलोऽभवत्॥
गणानां पृष्ठतो भूत्वा सर्वे देवाः समुत्सुकाः॥
अन्वयुः सर्वसिद्धाश्च लोकपालैः समन्विताः॥ २३.६७ ॥
मध्ये व्रजन्महेंद्रोऽथ ऐरावतमुपास्थितः॥
शुभ्रेणो च्छ्रियमाणेन छत्रेण परमेण हि॥ २३.६८ ॥
चामरैर्वीज्यमानोऽसौ सुरैर्बहुभिरावृतः॥
तदा तु व्रजमानास्त ऋषयो बहवो ह्यमी॥ २३.६९ ॥
भरद्वाजादयो विप्राः शिवस्योद्वहनं प्रति॥
शाकिन्यो यातुधानाश्च वेताला ब्रह्मराक्षसाः॥ २३.७० ॥
भूतप्रेतपिशाचाश्च तथान्ये प्रमथादयः॥
पृच्छमानास्तदा चंडीं पृष्ठतोऽन्वगमंस्तदा॥ २३.७१ ॥
क्व गता साऽधुना चंडी धावमानास्तदा भृशम्॥
प्राप्ता गता व्रजंतीं तां प्रणिपत्य महाप्रभाम्॥ २३.७२ ॥
अथ प्रोचुस्तदा सर्वे चंडीं भैरवसंयुताम्॥
विनास्माभिः कुतो यासि वद चंडि यथा तथा॥ २३.७३ ॥
प्रहस्योवाच सा चंडी भूतानां तत्र शृण्वताम्॥
शंभोरुद्वहनार्थाय प्रेतारूढा व्रजाम्यहम्॥ २३.७४ ॥
हैमं कलशमादाय शिरसा बिभ्रती स्वयम्॥
करवालीस्वरूपेण चंडी जाता ततः स्वयम्॥ २३.७५ ॥
भूतैः परिवृता सर्वैः सर्वेषामग्रतोऽव्रजत्॥
गणास्तामनुजग्मुस्ते गणानां पृष्ठतः सुराः॥ २३.७६ ॥
इंद्रादयो लोकपाला ऋषयस्तेऽग्रपृष्ठतः॥
ऋषीणां पृष्ठतो भूत्वा पार्षदाश्च महाप्रभाः॥ २३.७७ ॥
विष्णोरमितभावज्ञा मुकुंदाच्च मनोरमाः॥

सर्वे पयोदसंकाशाः स्रग्विणो वनमालिनः॥
श्रीवत्सांकधराः सर्वे पीतवासोन्विताश्च ते॥ २३.७८ ॥
चतुर्भुजाः कुंडलिनः किरीटकटकांगदैः॥
हारनूपुरसूत्रैश्च कटिसूत्राङ्गुलीयकैः॥
शोभिताः सर्व एवैते महापुरुषलक्षणाः॥ २३.७९ ॥
तेषां मध्ये गतो विष्णुः श्रियोपेतः सुरारिहा॥ २३.८० ॥
बभौ त्रिलोकीकृतविश्वमंगलो महानुभावैर्हृदि कृत्य धिष्ठितः॥
शिवेन साकं परमार्थदस्तदा हरिः परात्मा जगदेकबंधुः॥ २३.८१ ॥
स ताक्ष्र्यपुत्रोपरि संस्थितो महाँल्लक्ष्म्या समेतो भुवनैकभर्ता॥
स चामरैर्वीज्यमानो मुनींद्रैः सर्वैः समेतो हरिरीश्वरो महान्॥ २३.८२ ॥
तथा विरिंचिर्निजवाहनस्थो वेदैः समेतः सह षड्भिरंगैः॥
तथागमैः सेतिहासैः पुराणैः स संवृतो हेमगर्भो बभूव॥ २३.८३ ॥
वेधोहरिभ्यां च तदा सुरेद्रैः समावृतश्चर्षिभिः संपरीतः॥
वृषारूढो वृषकेतुर्दुरापोयोगीश्वरैरपि सर्वैरगम्यः॥ २३.८४ ॥
शुद्धस्फटिकसंकाशं वृषभं धर्मवत्सलम्॥
समेतो मातृभिश्चैव गोभिश्च कृतलक्षणम्॥ २३.८५ ॥
एभिस्समेतोऽसुरदानवैः सह ययौ महेशो विबुदैरलंकृतः॥
हिमालयं गिरिवर्यं तदानीं पाणिग्रहार्थं प्रमदोत्तमायाः॥ २३.८६ ॥
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे श्रीशिवस्य विवाहवर्णनंनाम त्रयोविंशोऽध्यायः॥ २३ ॥

**॥लोमश उवाच॥**

तथैव सर्वं परया मुदान्वितश्चक्रे गिरींद्रः स्वसुतार्थमेव॥
गर्गं पुरस्कृत्य महानुभावो मंगल्यभूमिं परया विभूत्या॥ २४.१ ॥

आहूय विश्वकर्माणं कारयामास सादरम्॥
मंडपं च सुविस्तीर्णं वेदिकाभिर्मनोरमम्॥ २४.२ ॥

अयुतेनैव विस्तारं योजनानां द्विजोत्तमाः॥
मंडपं च गुणोपेतं नानाश्चर्यसमन्विततम्॥ २४.३ ॥

स्थावरं जंगमं चैव सदृशं च मनोहरम्॥
जंगमं च जितं तत्र स्थावरेण तथैव च॥ २४.४ ॥

जंगमेन च तत्रैव जितं स्थावरमेव च॥
पयसा च जिता तत्र स्थलभूमिरभूत्तदा॥ २४.५ ॥

जलं किं नु स्थलं तत्र न विदुस्तत्त्वतो जनाः॥
क्वचित्सिंहाः क्वचिद्धंसाः सारसाश्च महाप्रभाः॥ २४.६ ॥

क्वचिच्छिखंडिनस्तत्र कृत्रिमाः सुमनोहराः॥
तथा नागाः कृत्रिमाश्च हयाश्चैव तथा मृगाः॥ २४.७ ॥

के सत्याः के असत्याश्च संस्कृता विश्वकर्मणा॥
तथैव चैवं विधिना द्वारपाः अद्भुताः कृताः॥ २४.८ ॥

पुंसो धनूंषि चोत्कृष्य स्थावरा जंगमोपमाः॥
तथाश्वाः सादिभिश्चैव गजाश्च गजसादिभिः॥ २४.९ ॥

चामरैर्वीज्यमानाश्च केचित्पुष्पांकुरान्विताः॥
केचिच्च पुरुषास्तत्र विरेजुः स्रग्विणस्तथा॥ २४.१० ॥

कृत्रिमाश्च तथा बह्व्यः पताकाः कल्पितास्तथा॥
द्वारि स्थिता महालक्ष्मीः क्षीरोदधिसमुद्भवा॥ २४.११ ॥

गजाः स्वलंकृता ह्यासन्कृत्रिमा ह्यकृतोपमाः॥
तथाश्वाः सादिभिश्चैव गजाश्च गजसादिभिः॥ २४.१२ ॥

रथा रथियुता ह्यासन्कृत्रिमा ह्यकृतोपमाः॥
सर्वेषां मोहनार्थाय तथा च संसदः कृताः॥ २४.१३ ॥

महाद्वारि स्थितो नंदी कृतस्तेन हि मंडपे॥
शुद्धस्फटिकसंकाशो यथा नंदी तथैव सः॥ २४.१४ ॥

तस्योपरि महद्दिव्यं पुष्पकं रत्नभूषितम्॥
राजितं पल्लवाच्छत्रैश्चामरैश्च सुशोभितम्॥ २४.१५ ॥

वामपार्श्वे गजौ द्वौ च शुद्धकाश्मीरसन्निभौ॥
चतुर्दतौ षष्टिवर्षौ महात्मानौ महाप्रभौ॥ २४.१६ ॥

तथैव दक्षिणे पार्श्वे द्वावश्वौ दंशितौ कृतौ॥
रत्नालंकारसंयुक्ताँल्लोकपालांस्तथैव च॥ २४.१७ ॥

षोडशप्रकृतीस्तेन याथातथ्येन धीमता॥
सर्वे देवा यथार्थेन कृता वै विश्वकर्मणा॥ २४.१८ ॥

तथैव ऋषयः सर्वे भृग्वाद्यश्च तपोधनाः॥
विश्वे च पार्षदैः साकमिंद्रो हि परमार्थतः॥ २४.१९ ॥

कृताः सर्वे महात्मानो याथातथ्येन धीमता॥
एवंभूतः कृतस्तेन मंडपो दिव्यरूपवान्॥ २४.२० ॥

अनेकाश्चर्यसंभूतो दिव्यो दिव्यविमोहनः॥
एतस्मिन्नंतरे तत्र आगतो नारदोग्रतः॥ २४.२१ ॥

ब्रह्मणा नोदितस्तत्र हिमालयगृहं प्रति॥
नारदोथ ददर्शाग्रे आत्मानं विनयान्वितम्॥ २४.२२ ॥

भ्रांतो हि नारदस्तेन कृत्रिमेण महायशाः॥
अवलोकपरस्तत्र चरितं विश्वकर्मणः॥ २४.२३ ॥

प्रविष्टो मंडपं तस्य हिमाद्रे रत्नचित्रितम्॥
सुवर्णकलशैर्जुष्टं रंभाद्यैरुपशोभितम्॥ २४.२४ ॥

सहस३स्तम्भसंयुक्तं ततोऽद्रिः स्वगणैर्वृतः॥
तमृषिं पूजयामास किं कार्यमिति पृष्टवान्॥ २४.२५ ॥

**॥नारद उवाच॥**
आगतास्ते महात्मानो देवा इन्द्रपुरोगमाः॥
तथा महर्षयः सर्वे गणैश्च परिवारिताः॥
महादेवो वृषारूढो ह्यागतोद्वहनं प्रति॥ २४.२६ ॥

ततस्तद्वचनं श्रुत्वा हिमवान्गिरिसत्तमः॥
उवाच नारदं वाक्यं प्रशस्तमधुरं महत्॥ २४.२७ ॥

पूजयित्वा यथान्यायं गच्छ त्वं शंकरं प्रति॥ २४.२८ ॥

ततस्तद्वचनं श्रुत्वा मुनिर्हिमवतो गिरेः॥
तथैव मत्वा वचनं शैलराजानब्रवीत्॥
मेनाकेन च सह्येन मेरुणा गिरिणा सह॥ २४.२९ ॥

एभिः समेतो ह्यधुनामहामते यतस्व शीघ्रं शिवमत्र चानय॥
देवैः समेतं च महर्षिवर्यैः सुरासुरैर्चितपादपंकजम्॥ २४.३० ॥

तथेति मत्वा स जगाम तूर्णं सहै व तैः पर्वतराजभिश्च॥
त्वरागतश्चैकपदेन शंभुं प्राप्नोदृषीणां प्रवरो महात्मा॥ २४.३१ ॥

तावद्दृष्टो महादेवो देवैश्च परिवारितः॥
तदा ब्रह्मा च विष्णुश्च रुद्रश्चैव सुरैः सह॥ २४.३२ ॥

पप्रचछुर्नारदं सर्वे येऽन्ये रुद्रचरा भृशम्॥
कथ्यतां पृच्छमानानामस्माकं कथ्यते न हि॥ २४.३३ ॥

एकैकस्यात्मजाः स्वाः स्वाः सह्यमैनाकमेरवः॥
कन्यां दास्यंति वा शंभोः किं त्विदानीं प्रवर्तते॥ २४.३४ ॥

ततोऽवोचन्महातेजा नारदश्चर्षिसत्तमः॥
ब्रह्माणं पुरतः कृत्वा विष्णुं प्रति सहेतुकम्॥ २४.३५ ॥

एकांतमाश्रित्य तदा सुरेन्द्रं स नारदो वाक्यमिदं बभाषे॥
त्वष्ट्रा कृतं वै भवनं महत्तरं येनैव सर्वे च विमोहिता वयम्॥ २४.३६ ॥

पुरा कृतं तस्य महात्मनस्त्वया किं विस्मृतं तत्सकलं शचीपते॥
तस्मादसौ त्वां विजिगीषुकामो गृहे वसंस्तस्यगिरेर्महात्मनः॥ २४.३७ ॥

अहो विमोहितस्तेन प्रतिरूपेण भास्वता॥
तथा विष्णुः कृतस्तेन शंखचक्रगदादिभृत्॥ २४.३८ ॥

ब्रह्मा चैव तथाभूतस्तं चैव कृतवानसौ॥ २४.३९ ॥

मायामयो वृषभस्तेन वेषात्कृतो हि नागोश्वतरस्तथैव॥
तथा चान्यान्याप्यनेनामरेन्द्र सर्वाण्येवोल्लिखितान्यत्र विद्धि॥ २४.४० ॥

तच्छ्रुत्वा वचनं तस्य देवेंद्रो वाक्यमब्रवीत्॥ २४.४१ ॥

विष्णुं प्रति तदा शीघ्रं दृष्ट्वा यामि वसात्र भोः॥
पुत्रशोकेन तप्तोऽसौ व्याजेनान्येन वाऽकरोत्॥ २४.४२ ॥

तस्य तद्वचनं श्रुत्वा देवदेवो जनार्द्दनः॥
उवाच प्रहसन्वाक्यं शक्रमाप्तभयं तदा॥ २४.४३ ॥

निवातकवचैः पूर्वं मोहितोऽसि शचीपते॥
विद्याऽमृता तत्र मया समानीतोपसत्तये॥ २४.४४ ॥

महाविद्याबलेनैव प्रविश्य मण्डपेऽधुना॥
पर्वतो हिमवानेष तथान्ये पर्वतोत्तमाः॥ २४.४५ ॥

विपक्षा हि कृताः सर्वे मम वाक्याच्च वासव॥
हेतुं स्मृत्वाथ वै त्वष्टा मायया ह्यकरोदिदम्॥ २४.४६ ॥

जयमिच्छंति वै मूढा न च भेतव्यमण्वपि॥ २४.४७ ॥

एवं विवदमानांस्तान्देवाञ्छक्रपुरोगमान्॥
सांत्वयामास वै विष्णुर्नारदं ते ततोऽब्रुवन्॥ २४.४८ ॥

ददाति वा न ददाति कन्यां गिरीन्द्रः स्वां वै कथ्यतां शीघ्रमेव॥
किं तेन दृष्टां किं कृतं चाद्य शंस तत्सर्वं भो नारद ते नमोऽस्तु॥ २४.४९ ॥

तच्छ्रुत्वा प्रहसञ्छंभुरुवाच वचनं तदा॥
कन्यां दास्यति चेन्मह्यं पर्वतो हि हिमालयः॥
मायया मम किं कार्यं वद विष्णो यथातथम्॥ २४.५० ॥

केनाप्युपायेन फलं हि साध्यमित्युच्यते पंडितैर्न्यायविद्भिः॥
तस्मात्सर्वैर्गम्यतां शीघ्रमेव कार्यार्थोभिश्चेन्द्रपुरोगमैश्च॥ २४.५१ ॥

तदा शिवोऽपि विश्वात्मा पंचबाणेन मोहितः॥
महाभूतेन भूतेशस्त्वन्येषां चैव का कथा॥ २४.५२ ॥

एवं च विद्यमानेऽसौ शंभुः परमशोभनः॥
कृतो ह्यनंगेन वशे यथान्यः प्राकृतो जनः॥ २४.५३ ॥

मदनो हि बली लोके येन सर्वमिदं जगत्॥
जितमस्ति निजप्रौढ्या सदेवर्षिसमन्वितम्॥ २४.५४ ॥
सर्वेषामेव भूतानां देवानां च विशेषतः॥
राजा ह्यनंगो बलवान्यस्य चाज्ञा बलीयसी॥ २४.५५ ॥

पार्वतीस्त्रीस्वरूपेण अजेयो भुवनत्रये॥
तां दृष्ट्वा हि स्त्रियं सर्वे ऋषयोऽपि विचक्षणाः॥ २४.५६ ॥

देवा मनुष्या गन्धर्वाः पिशाचोरगराक्षसाः॥

आज्ञानुल्लंघिनः सर्वे मदनस्य महात्मनः॥ २४.५७ ॥

तपोबलेन महता तथा दानबलेन च॥
वेत्तुं न शक्यो मदनो विनयेन विना द्विजाः॥ २४.५८ ॥

तस्मादनंगस्य महान्क्रोधो हि बलवत्तरः॥
ईश्वरं मदनेनैवं मोहितं वीक्ष्य माधवः॥ २४.५९ ॥

उवाच वाक्यं वाक्यज्ञो मा चिंतां कुरु वै प्रभो॥
यदुक्तं नारदेनैव मंडपं प्रति सर्वशः॥ २४.६० ॥

त्वष्ट्रा कृतं विचित्रं च तत्सर्वं मदनात्प्रभोः॥
तदानीं शंकरो वाक्यमुवाच मधुसूदनम्॥ २४.६१ ॥

अविद्यया वृतं तेन कृतं त्वष्ट्रा हि मण्डपम्॥
किं तु वक्ष्यामहे विष्णो मण्डपः केवलेन हि॥ २४.६२ ॥

विवाहो हि महाभाग अविद्यामूल एव च॥
तस्मात्सर्वे वयं याम उद्वाहार्थं च संप्रति॥ २४.६३ ॥

नारदं च पुरस्कृत्य सर्वे देवाः सवासवाः॥
हिमाद्रिसहिता जग्मुर्मन्दिरं परमाद्भुतम्॥
अनेकाश्चर्यसंयुक्तं विचित्रं विश्वकर्मणा॥ २४.६४ ॥

कृतं च तेनाद्य पवित्रमुत्तमं तं यज्ञवाटं बहुभिः पुरस्कृतम्॥
विचित्रचित्रं मनसो हरं च तं यज्ञवाटं स चकार बुद्धिमान्॥ २४.६५ ॥

प्रवेक्ष्यमाणास्ते सर्वे सुरेन्द्रा ऋषिभिः सह॥
दृष्टा हिमाद्रिणा तत्र अभ्युत्थानगतोऽभवत्॥ २४.६६ ॥

तथैव तेषां च मनोहराणि हर्म्याणि तेन प्रतिकल्पितानि॥
गन्धर्वयक्षाः प्रमथाश्च सिद्धा देवाश्च नागाप्सरसां गणाश्च॥
वसंति यत्रैव सुखेन तेभ्यः स तत्रतत्रोपवनं चकार॥ २४.६७ ॥

तेषामर्थे महार्हाणि धाराजिरगृहाणि च॥
अत्यद्भुतानि शोभंते कृतान्येव महात्मना॥ २४.६८ ॥

निवासार्थे कल्पितानि सावकाशानि तत्र वै॥
देवानां चैव सर्वेषामृषीणां भावितात्मनाम्॥ २४.६९ ॥

एवं विस्तारयामास विश्वकर्मा बहून्यपि॥
मन्दिराणि यथायोग्यं यत्र तत्रैव तिष्ठताम्॥ २४.७० ॥

भैरवाः क्षेत्रपालाश्च येऽन्ये च क्षेत्रवासिनः॥
श्मशानवासिनश्चान्ये येऽन्ये न्यग्रोधवासिनः॥ २४.७१ ॥

अश्वत्थसेविनश्चान्ये खेचराश्च तथा परे॥
येये यत्रोपविष्टाश्च तत्रतत्रैव तेन वै॥ २४.७२ ॥

कृतानि च मनोज्ञानि भवनानि महांतिवै॥
तेषामेवानुकूलानि भूतानां विश्वकर्मणा॥ २४.७३ ॥

तत्रैव ते सर्वगणैः समेता निवासितास्तेन हिमाद्रिणा स्वयम्॥
सेंद्राः सुरा यक्षपिशाचरक्षसां गन्धर्वविद्याप्सरसां समूहाः॥ २४.७४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे पार्वतीपरिणयने हिमाद्रिणा देवानां निवासस्थानकरणवर्णनंनाम चतुर्विंशोऽध्यायः॥ २४ ॥ छ ॥

**॥लोमश उवाच॥**

तत्रोपविविशुः सर्वे सत्कृताश्च हिमाद्रिणा॥
ते देवाः सपरिवाराः सहर्षाश्च सवाहनाः॥ २५.१ ॥

तत्रैव च महामात्रं निर्मितं विश्वकर्मणा॥
दीप्त्या परमया युक्तं निवासार्थं स्वयम्भुवः॥ २५.२ ॥

तथैव विष्णोस्त्वपरं भवनं स्वयमेव हि॥
भास्वरं सुविचित्र च कृतं त्वष्ट्रा मनोरमम्॥
वण्डीगृहं मनोज्ञं च तथैव कृतवान्स्वयम्॥ २५.३ ॥

तथैव श्वेतं परमं मनोज्ञं महाप्रभं देववरैः सुपूजितम्॥
कैलासलक्ष्मीप्रभया महत्या सुशोभितं तद्भवनं चकार॥ २५.४ ॥

तत्रैव शंभुः परया विभूत्या स स्थापितस्तेन हिमाद्रिणा वै॥ २५.५ ॥

एतस्मिन्नंतरे मेना समायाता सखीगणैः॥
नीराजनार्थं शंभुं च ऋषिभिः परिवारिता॥ २५.६ ॥

तदा वादित्रदिर्घोपैर्नादितं भुवनत्रयम्॥
नीराजनं कृतं तस्य मेनया च तपस्विनः॥ २५.७ ॥

अवलोक्य परा साध्वी मेनाऽजानाद्धरं तदा॥
गिरिजोक्तमनुस्मृत्य मेना विस्मयमागता॥ २५.८ ॥

यद्वै पुरोक्तं च तया पार्वत्या मम सन्निधौ॥
ततोऽधिकं प्रपश्यामि सौंदर्यं परमेष्ठिनः॥
महेशस्य मया दृष्टमनिर्वाच्यं च संप्रति॥ २५.९ ॥

एवं विस्मयमापन्ना विप्रपत्नीभिरावृता॥
अहतां बरयुग्मेन शोभिता वरवर्णिनी॥ २५.१० ॥

कंचुकी परमा दिव्या नानारत्नैश्च शोभिता॥
अंगीकृता तदा देव्या रराज परया श्रिया॥ २५.११ ॥

बिभ्रती च तदा हारं दिव्यरत्नविभूषितम्॥
वलयानि महार्हाणि शुद्धचामीकराणि च॥ २५.१२ ॥

तत्रोपविष्टा सुभगा ध्यायंती परमेश्वरम्॥
सखीभिः सेव्यमाना सा विप्रपत्नीभिरेव च॥ २५.१३ ॥

एतस्मिन्नंतरे तत्र गर्गो वाक्यमभाषत॥

पाणिग्रहार्थं शंभुं च आनयध्वं स्वमंदिरम्॥
त्वरितेनैव वेलायामस्यामेव विचक्षणाः॥ २५.१४ ॥

तच्छ्रुत्वा वचनं तस्य गर्गस्य च महात्मनः॥
अभ्युत्थानपराः सर्वे पर्वताः सकलत्रकाः॥ २५.१५ ॥

महाविभूत्या संयुक्ताः सर्वे मंगलपाणयः॥
सालंकृतास्तदा तेषां पत्न्योलंकारमंडिताः॥ २५.१६ ॥

उपायनान्यनेकानि जगृहुः स्निग्धलोचनाः॥
तदा वादित्रघोषेण ब्रह्मघोषेण भूयसा॥ २५.१७ ॥

आजग्मुः सकलात्रास्ते यत्र देवो महेश्वरः॥
प्रमथैरावृतस्तत्र चंड्या चैवाभिसेवितः॥ २५.१८ ॥

तथा महर्षिभिस्तत्र तथा देवगणैः सह॥
एभिः परिवृतः श्रीमाञ्छंकरो लोकशंकरः॥ २५.१९ ॥

श्रुत्वा वादित्रनिर्घोषं सर्वे शंकरसेवकाः॥
उत्थिता ऐकापद्येन देवैर्ऋषिभिरावृताः॥ २५.२० ॥

तथोद्यतो योगिनाचक्रयुक्ता गणा गणानां गणानां पतिरेकवर्चसाम्॥
शिवंपुरस्कृत्य तदानुभावास्तथैव सर्वे गणनायकाश्च॥ २५.२१ ॥

तद्योगिनी चक्रमतिप्रचंडं टंकारभेरीरवनिस्वनेन॥
चंडीं पुरस्कृत्य भयानकां तदा महाविभूत्या समलंकृतां तदा॥ २५.२२ ॥

कंठे कर्कोटकं नागं हारभूतं च कार सा॥
पदकं वृश्चिकानां च दंदशूकांश्च बिभ्रती॥ २५.२३ ॥

कर्णावतंसान्सा दध्रे पाणिपादमयांस्तथा॥
रणे हतानां वीराणां शिरांस्युरसिचापरान्॥ २५.२४ ॥

द्वीपिचर्मपरीधाना योगिनीचक्रसंयुता॥
क्षेत्रपालावृता तद्वद्भैरवैः परिवारिता॥ २५.२५ ॥

तथा प्रेतैश्च भूतैश्च कपटैः परिवारिता॥
वीरभद्रादयश्चैव गणाः परमदारुणाः॥
ये दक्षयज्ञनाशार्थे शिवेनाज्ञापितास्तदा॥ २५.२६ ॥

तथा काली भैरवी च माया चैव भयावहा॥
त्रिपुरा च जया चैव तथा क्षेमकरी शुभा॥ २५.२७ ॥

अन्याश्चैव तथा सर्वाः पुरस्कृत्य सदाशिवम्॥
गंतुकामाश्चोग्रतरा भूतैः प्रेतैः समावृताः॥ २५.२८ ॥

एताः सर्वा विलोक्याथ शिवभक्तो जनार्द्दनः॥
महर्षीश्च पुरस्कृत्य ह्यमरांश्च तथैव च॥
अनसूयां पुरस्कृत्य तथैव च ह्यरुंधतीम्॥ २५.२९ ॥

**॥विष्णुरुवाच॥**
चण्डीं कुरु समीपस्थां लोकपालनतां प्रभो॥ २५.३० ॥

तदुक्तं विष्णुना वाक्यं निशम्य जगदीश्वरः॥
उवाच प्रहसन्नेव चंडीं प्रति सदाशिवः॥ २५.३१ ॥

अत्रैव स्थीयतां चंडीं यावदुद्वहनं भवेत्॥
मम भावान्विजानासि कार्याकार्ये सुशोभने॥ २५.३२ ॥

एवमाकर्ण्य वचनं शंभोरमिततेजसः॥
उवाच कुपिता चंडी विष्णुमुद्दिश्य सादरम्॥ २५.३३ ॥

तथान्ये प्रमथाः सर्वे विष्णुमूचुः प्रकोपिताः॥
यत्रयत्र शिवो भाति तत्रतत्र वयं प्रभो॥ २५.३४ ॥

त्वया निवारिताः कस्माद्वयमाभ्युदये परे॥
तेषां तद्वचनं श्रुत्वा केशवोवाक्यमब्रवीत्॥ २५.३५ ॥

चण्डीमुद्दिश्य प्रमथानन्यांश्चैव तथाविधान्॥
यूयं चैव मया प्रोक्ता मा कोपं कर्त्तुमर्हथ॥ २५.३६ ॥

एवमुक्तास्तदा तेन चंडीमुख्या गणास्तदा॥
एकांतमाश्रिताः सर्वे विष्णुवाक्याज्ज्वलद्धृदः॥ २५.३७ ॥

तावत्सर्वे समायाताः पर्वतेंद्रस्य मंत्रिणः॥
सकलत्राः संभ्रमेण महेशं प्रति सत्वरम्॥ २५.३८ ॥

पंचवाद्यप्रघोषेण ब्रह्मघोषेण भूयसा॥
योषिद्भिः संवृतास्तत्र गीतशब्देन भूयसा॥ २५.३९ ॥

एवं प्राप्ता यत्र शंभुः सकलैः परिवारितः॥
आगत्य कलशैः साकं स्नापितो हि सदाशिवः॥
स्त्रीभिर्मंगलगीतेन सर्वाभरणभूषितः॥ २५.४० ॥

ऋषयो देवगंधर्वास्तथान्ये पर्वतोत्तमाः॥
शंभ्यग्रगास्तदा जग्मुः स्त्रियश्चैव सुपूजिताः॥
बभौ छत्रेण महता ध्रियमाणेन मूर्द्धनि॥ २५.४१ ॥

चामरै वीज्यमानोऽसौ मुकुटेन विराजितः॥
ब्रह्मा विष्णुस्तथा चंद्रो लोकपालस्तथैव च॥ २५.४२ ॥

अग्रगा ह्यपि शोभंतः श्रिया परमया युताः॥
तथा शंखाश्च भेर्यश्च पटहानकगोमुखाः॥ २५.४३ ॥

तथैव गायकाः सर्वे परममंगलम्॥
पुनः पुनरवाद्यंत वादित्राणि महोत्सवे॥ २५.४४ ॥

अरुंधती महाभागा अनसूया तथैव च॥
सावित्री च तथा लक्ष्मीर्मातृभिः परिवारिताः॥ २५.४५ ॥

एभिः समेतो जगदेकबंधुर्बभौ तदानीं परमेण वर्चसा॥
सचंद्रसूर्यानिलवायुना वृतः सलोकपालप्रवरैर्महर्षिभिः॥ २५.४६ ॥

स वीज्यमानः पवनेनः साक्षाच्छत्रं च तस्मै शशिना ह्यधिष्ठितम्॥
सूर्यः पुरस्तादभवत्प्रकाशकः श्रियान्वितो विष्णुरभूच्च सन्निधौ॥ २५.४७ ॥

पुष्पैर्ववर्षुर्ह्यवकीर्यमाणा देवास्तदानीं मुनिभिः समेताः॥
ययौ गृहं कांचनकुट्टिमं महन्महावि भूत्यापरिशोभितं तदा॥
विवेश शंभुः परया सपर्यया संपूज्यमानो नरदेवदानवैः॥ २५.४८ ॥

एवं समागतः शंभुः प्रविष्टो यज्ञमण्डपम्॥
संस्तूयमानो विबुधैः स्तुतिभिः परमेश्वरः॥ २५.४९ ॥

गजादुत्तारयामास महेशं पर्वतोत्तमः॥
उपविश्य ततः पीठे कृत्वा नीराजनं महत्॥ २५.५० ॥

मेनया सखिभिः साकं तथैव च पुरोधसा॥
मधुपर्कादिकं सर्वं यत्कृतं चैव तत्र वै॥ २५.५१ ॥

ब्रह्मणा नोदितः सद्यः पुरोधाः कृतवान्प्रभुः॥
मंगलं शुभकल्याणं प्रस्तावसदृशं बहु॥ २५.५२ ॥

अंतर्वेद्यां संप्रवेश्य यत्र सा पार्वती स्थिता॥
वेदिकोपरि तन्वंगी सर्वाभरणभूषिता॥ २५.५३ ॥

तत्रानीतो हरः साक्षाद्विष्णुना ब्रह्मणा सह॥

लग्नं निरीक्षमाणास्ते वाचस्पतिपुरोगमाः॥ २५.५४ ॥

गर्गो मुनिश्चोपविष्टस्तत्रैव घटिकालये॥
यावत्पूर्णा घटी जाता तावत्प्रणवभाषणम्॥ २५.५५ ॥

ॐपुण्येति प्रणिगदन्गर्गो वध्वंजलिं दधे॥
पार्वत्यक्षतपूर्णं च शिवोपरि ववर्ष वै॥ २५.५६ ॥

तया संपूजितो रुद्रो दध्यक्षतकुशादिभिः॥
मुदा परमया युक्ता पार्वती रुचिरानना॥ २५.५७ ॥

विलोकयंती शंभुं तं यदर्थे परमं तपः॥
कृतं पुरा महादेव्या परेषां परमं महत्॥ २५.५८ ॥

तपसा तेन संप्राप्तो जगज्जीवनजीवनः॥
नारदेन ततः प्रोक्तो महादेवो वृषध्वजः॥ २५.५९ ॥

तथा गंगादिभिश्चन्यैर्मुनिभिः सनकादिभिः॥
प्रति पूजां कुरु क्षिप्रं पार्वत्याश्च त्रिलोचन॥
तदा शिवेन सा तन्वी पूजिताघ्याक्षतादिभिः॥ २५.६० ॥

एवं परस्परं तौ च पार्वतीपरमेश्वरौ॥
अर्च्यमानौ तदानीं च शुशुभाते जगन्मयौ॥ २५.६१ ॥

त्रैलोक्यलक्ष्म्या संवीतौ निरीक्षंतौ परस्परम्॥
तदा नीराजितौ लक्ष्म्या सावित्र्या च विशेषतः॥
अरुंधत्या तदा तौ च दंपती परमेश्वरौ॥ २५.६२ ॥

अनसूया तथा शंभुं पार्वतीं च यशस्विनीम्॥
दृष्ट्वा नीराजयामास प्रीत्युत्कलितलोचना॥ २५.६३ ॥

तथैव सर्वा द्विजयोषितश्च नीराजयामासुरहो पुनः पुनः॥
सतीं च शंभुं च विलोकयंत्यस्तथैव सर्वा मुदिता हसंत्यः॥ २५.६४ ॥

**॥लोमश उवाच॥**
एतस्मिन्नंतरे तत्र गर्गाचार्यप्रणोदितः॥
हिमवान्मेनया सार्द्धं कन्यां दातुं प्रचक्रमे॥ २५.६५ ॥

हैमं कलशमादाय मेना चार्द्धां गामाश्रिता॥
हिमाद्रेश्च महाभागा सर्वाभरणभूषिता॥ २५.६६ ॥

तदा हिमाद्रिणा प्रोक्तो विश्वनाथो वरप्रदः॥

ब्रह्मणा सह संगत्य विष्णुना च तथैव च॥ २५.६७ ॥

सार्द्धं पुरोधसा चैव गर्गेण सुमहात्मना॥
कन्यादानं करोम्यद्य देवदेवस्य शूलिनः॥ २५.६८ ॥

प्रयोगो भण्यतां ब्रह्मन्नस्मिन्समय आगते॥
तथेति मत्वा ते सर्वे कालज्ञा द्विजसत्तमाः॥ २५.६९ ॥

कथ्यतां तात गोत्रं स्वं कुलं चैव विशेषतः॥
कथयस्व महाभाग इत्याकर्ण्य वचस्तथा॥
सुमुखेन विमुखः सद्यो ह्यशोच्यः शोच्यतां गतः॥ २५.७० ॥

एवंविधः सुरवरैर्ऋषिभिस्तदानीं गंधर्वयक्षमुनिसिद्धगणैस्तथैव॥
दृष्टो निरुत्तरमुखो भगवान्महेशो हास्यं चकार सुभृशं त्वथ नारदश्च॥ २५.७१ ॥

वीणां प्रकटयामास ब्रह्मपुत्रोऽथ नारदः॥
तदानीं वारितो धीमान्वीणां मा वादय प्रभो॥ २५.७२ ॥

इत्युक्तः पर्वतेनैव नारदो वाक्यमब्रवीत्॥
त्वया पृष्टो भवः साक्षात्स्वगोत्रकथनं प्रति॥ २५.७३ ॥

अस्य गोत्रं कुलं चैव नाद एव परं गिरे॥
नादे प्रतिष्ठितः शंभुर्नादो ह्यस्मिन्प्रतिष्ठितः॥ २५.७४ ॥

तस्मान्नादमयः शंभुर्नादाच्च प्रतिलभ्यते॥
तस्माद्वीणा मया चाद्य वादिता हि परंतप॥ २५.७५ ॥

अस्य गोत्रं कुलं नाम न जानंति हि पर्वत॥
ब्रह्मादयो हि विबुधा अन्येषां चैव का कथा॥ २५.७६ ॥

त्वं हि मूढत्वमापन्नो न जानासि हि किंचन॥
वाच्यावाच्यं महेशस्य विषया हि बहिर्मुखाः॥ २५.७७ ॥

येये आगमिकाश्चाद्रे नष्टास्ते नात्र संशयः॥
अरूपोयं विरूपाक्षो ह्यकुलीनोऽयमुच्यते॥ २५.७८ ॥

अगोत्रोऽयं गिरिश्रेष्ठ जामाता ते न संशयः॥
न कर्त्तव्यो विमर्शोऽत्र भवता विबुधेन हि॥ २५.७९ ॥

न जानंति हरं सर्वे किं बहूक्त्या मम प्रभो॥
यस्याज्ञानान्महाभाग मोहिता ऋषयो ह्यमी॥ २५.८० ॥

ब्रह्मापि तं न जानाति मस्तकं परमेष्ठिनः॥
विष्णुर्गतो हि पातालं न दृष्टो हि तथैव च॥ २५.८१ ॥

तेन लिंगेन महता ह्यगाधेन जगत्त्रयम्॥
व्याप्तमस्तीति तद्विद्धि किमनेन प्रयोजनम्॥ २५.८२ ॥

अनयाराधितं नूनं तव पुत्र्या हिमालय॥
तत्त्वतो हि न जानासि कथं चैव महागिरे॥ २५.८३ ॥

आभ्यामुत्पाद्यते विश्वमाभ्यां चैव प्रतिष्ठितम्॥
एतच्छ्रुत्वा वचस्तस्य नारदस्य महात्मनः॥ २५.८४ ॥

हिमाद्रिप्रमुखाः सर्वे तथा चेंद्रपुरोगमाः॥
साधुसाध्विति ते सर्वे ऊचुर्विस्मितमानसाः॥ २५.८५ ॥

ईश्वरस्य तु गांभीर्यं ज्ञात्वा सर्वे विचक्षणाः॥
विस्मयेन समाश्लिष्टा ऊचुः सर्वे परस्परम्॥ २५.८६ ॥

**॥ऋषय ऊचुः॥**
यस्याज्ञया जगदिदं च विशालमेव जातं परात्परमिदं निजबोधरूपम्॥
सर्वं स्वतंत्रपरमेश्वरभागम्यं सोऽसौ त्रिलोकनिजरूपयुतो महात्मा॥ २५.८७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवपार्वतीविवाहवर्णनंनाम पंचविंशोऽध्यायः॥ २५ ॥ छ

**॥लोमश उवाच॥**

अथ ते पर्वतश्रेष्ठा मेर्वाद्या जातसंभ्रमाः॥
ऊचुस्ते चैकपद्येन हिमवंतं महागिरिम्॥ २६.१ ॥

**॥पर्वता ऊचुः॥**

कन्यादानं क्रियतां चाद्य शैल श्रीमाञ्छम्भुर्भाग्यतस्तेऽद्य लब्धः॥
हृन्मध्ये वै नात्र कार्यो विमर्शस्तस्मादेषा दीयतामीश्वराय॥ २६.२ ॥

तच्छ्रुत्वा वचनं तेषां सुहृदां वै हिमालयः॥
सम्यक्संकल्पमकरोद्ब्रह्ममा नोदितस्तदा॥
इमां कन्यां तुभ्यमहं ददामि परमेश्वर॥ २६.३ ॥

भार्यार्थं प्रतिगृह्णीष्वमंत्रेणानेन दत्तवान्॥
अस्मै रुद्राय महते देवदवाय शंभव॥
कन्या दत्ता महेशाय गिरींद्रेण महात्मना॥ २६.४ ॥

वेद्यां च बहिरानीतौ दंपतीव कमलेक्षणौ॥
उपवेशितौ बहिर्वेद्यां पार्वतीपरमेश्वरौ॥ २६.५ ॥

आचार्येणाथ तत्रैव कश्यपेन महात्मना॥
आह्वानं हवनार्थाय कृतमग्नेस्तदा द्विजाः॥ २६.६ ॥

ब्रह्मा ब्रह्मासनगतो बभूव शिवसन्निधौ॥
प्रवर्तमाने हवन ऋषयश्च विचक्षणाः॥ २६.७ ॥

ऊचुः परस्परं तत्र नानादर्शनवेदिनः॥
वेदवादरताः केचिदवदन्संमतेन वै॥ २६.८ ॥

एवमेव न चाप्येवमेवमेव न चान्यथा॥
कार्यमेव न वा कार्यं कार्याकार्यं तथा परे॥ २६.९ ॥

इत्येवं ब्रुवतां शब्दः श्रूयते शिवसन्निधौ॥
स्वकीयं मतमास्थाय ह्यब्रुवंस्ते परस्परम्॥
तत्त्वज्ञानविहीनास्ते केवलं वेदबुद्धयः॥ २६.१० ॥

तेषां तद्वचनं श्रुत्वा परस्परजयैषिणाम्॥
प्रहस्य नारदो वाक्यमुवाच शिवसन्निधौ॥ २६.११ ॥

यूयं सर्वे वादिनश्च वेदवादरतास्तथा॥
मौनमास्थाय भोविप्रा हृदि कृत्य सदाशिवम्॥ २६.१२ ॥

आत्मानं परमात्मानं पराणां परमं च तत्॥

येनेदं कारितं विश्वं यतः सर्वं प्रवर्त्तते॥
यस्मिन्निलीयते विश्वं तस्मै सर्वात्मने नमः॥ २६.१३ ॥

सोऽयमास्तेऽधुना गेहे पर्वतेंद्रस्य भो द्विजाः॥
मुखादस्यैव संजाताः सर्वे यूयं विचक्षणाः॥ २६.१४ ॥

एवमुक्तास्तदा तेन नारदेन द्विजोत्तमाः॥
उपदेशकरैर्वाक्यैर्बोधितास्ते द्विजोत्तमाः॥ २६.१५ ॥

वर्त्तमाने च यज्ञे च ब्रह्मा लोकपितामहः॥
ददर्श चरणौ देव्या नखेंदुं च मनोहरम्॥ २६.१६ ॥

दर्शनात्स्खलितः सद्यो बभूवांबुजसंभवः॥
मदनेन समाविष्टो वीर्यं च प्राच्यवद्भुवि॥ २६.१७ ॥

रेतसा क्षरमाणेन लज्जितोऽभूत्पितामहः॥
चरणाभ्यां ममर्द्दाथ महद्गोप्यं दुरत्ययम्॥ २६.१८ ॥

बहवश्चर्षयो जाता वालखिल्याः सहस्रशः॥
उपतस्थुस्तदा सर्वेताततातेति चाब्रुवन्॥ २६.१९ ॥

नारदेन तदोक्तास्ते वालखिल्याः प्रकोपिना॥
गच्छंतु बटवो यूयं पर्वतं गंधमादनम्॥ २६.२० ॥

न स्थातव्यं भवद्भिश्च भवतां न प्रयोजनम्॥
इत्येवमुक्तास्ते सर्वे वालखिल्याश्च पर्वतम्॥
नारदेन समादिष्टा ययुः सर्वे त्वरान्विताः॥ २६.२१ ॥

नारदेन ततो ब्रह्माऽऽश्वासितो वचनैः शुभैः॥
तावच्च हवनं पूर्णं जातं तस्य महात्मनः॥ २६.२२ ॥

महेशस्य तथा विप्राः शांतिपाठपरा बभुः॥
ब्रह्मघोषेण महता व्याप्त मासीद्दिगंतरम्॥ २६.२३ ॥

ततो नीराजितो देवो देवपत्नीभिरुत्तमः॥
तथैव ऋषिपत्नीभिरर्चितः पूजितस्तथा॥ २६.२४ ॥

तथा गिरीन्द्रस्य मनोरमाः शुभा नीराजयामासुरथैव योषितः॥
गीतैः सुगीतज्ञविशारदाश्च तथैव चान्ये स्तुतिभिर्महर्षयः॥ २६.२५ ॥

रत्नानि च महार्हाणि ददौ तेभ्यो महामनाः॥
हिमालयो महाशैलः संहृष्टः परितोषयन्॥ २६.२६ ॥

बभौ तदानीं सुरसिद्धसंघैर्वेद्यां स्थितोऽसौ सकलत्रको विभुः॥
सर्वैरुपेती निजपार्षदैर्गणैः प्रहृष्टचेता जगदेकसुन्दराः॥ २६.२७ ॥

एतस्मिन्नंतरे तत्र ब्रह्मविष्णुपुरोगमाः॥
ऋषिगंधर्वयक्षाश्च येन्ये तत्र समागताः॥ २६.२८ ॥

सर्वान्समभ्यर्च्य तदा महात्मा महान्गिरीशः परमेण वर्चसा॥
सद्रत्नवस्त्राभरणानि सम्यग्ददौ च ताम्बूलसुगन्धवार्यपि॥ २६.२९ ॥

तदा शिवं पुरस्कृत्याभ्यव जह्रुः सुरेश्वराः॥
तथा सर्वे मिलित्वा तु ऐकपद्येन मोदिताः॥ २६.३० ॥

पंक्तीभूताश्च बुभुर्लिंगिना श्रृंगिणा सह॥
केचिद्गणाः पृथग्भूता नानाहास्यरसैर्विभुम्॥ २६.३१ ॥

अतोषयन्नारदाद्या अनेकालीकसंयुताः॥
तथा चण्डीगणाः सर्वे बभुजुः कृतभाजनाः॥ २६.३२ ॥

वैतालाः क्षेत्रपालाश्च बुभुजुः कृतभाजनाः॥
शाकिनी डाकिनी चैव यक्षिण्यो मातृकादयः॥ २६.३३ ॥

योगिन्योऽथ चतुः षष्टिर्योगिनो हि तथा परे॥
दश कोट्यो गणानां च कोट्येका च महात्मनाम्॥ २६.३४ ॥

एवं तु ऋषयः सर्वे तथानये विबुधादयः॥
योगिनो हि मया चान्ये कथिताः पूर्वमेव हि॥ २६.३५ ॥

योगिन्यश्चैव कथितास्तासां भक्ष्यं वदामि वः॥
खड्गानां केचिदानीय क्रव्यं पवित्रमेव च॥ २६.३६ ॥

भुंजंति चास्थिसंयुक्तं तथांत्राणि बुभुक्षिताः॥
आनीय केचिच्छीर्षाणि महिषाणां गुरूणि च॥ २६.३७ ॥

तथा केचिन्नृत्यमानास्तदानीं रोरूय्यमाणाः प्रमथाश्चैव चान्ये॥
केचित्तूष्णीमास्थिता रुद्ररूपाः परेचान्याँल्लोकमानास्तथैव॥ २६.३८ ॥

योगिनीचक्रमध्यस्थो भैरवो हि ननर्त च॥
तथान्ये भूतवेताला मामेत्येवं प्रलापिनः॥ २६.३९ ॥

एवं तेषामुद्भवं हि निरिक्ष्य मधुसूदनः॥
उवाच प्रहसन्वाक्यं शंकरं लोकशंकरम्॥ २६.४० ॥

एतान्गणान्वारय भो अत्र मत्तांश्च संप्रति॥
अस्मिन्काले च यत्कार्यं सर्वैस्तत्कार्यमे व च॥ २६.४१ ॥

पांडित्येन महादेव तस्मादेतान्निवारय॥
तच्छ्रुत्वा भगवान्रुद्रो वीरभद्रमुवाच ह॥ २६.४२ ॥

**॥रुद्र उवाच॥**
वारयस्व प्रमत्तांश्च क्षीबांश्चैव विशेषतः॥
तेनोक्तो वीरभद्रश्च शंभुना परमेष्ठिना॥ २६.४३ ॥

आज्ञापिताः प्रमत्ताश्च वीरभद्रेण धीमता॥
प्रमथा वारितास्तेन तूष्णीमाश्रित्य ते स्थिताः॥ २६.४४ ॥

निश्चला योगिनीमध्ये भूतप्रमथगुह्यकाः॥
शाकिन्यो यातुधानाश्च कूष्मांडाः कोपिकर्पटाः॥ २६.४५ ॥

तथान्ये भूतवेतालाः क्षेत्रपालाश्च भैरवाः॥
सर्वे शांताः प्रमत्ताश्च बभूवुः प्रमथादयः॥ २६.४६ ॥

एवं विस्तारसंयुक्तं कृतमुद्वहनं तदा॥
हिमाद्रिणा परं विप्राः सुमंगल्यं सुशोभनम्॥ २६.४७ ॥

चत्वारो दिवसा जाताः परिपूर्णेन चेतसा॥
हिमाद्रिणा कृता पूजा देवदेवस्य शूलिनः॥ २६.४८ ॥

वस्त्रालंकाराभरणै रत्नैरुच्चावचैस्ततः॥
पूजयित्वा महादेवं विष्णोर्वचनपरोऽभवत्॥ २६.४९ ॥

लक्ष्मीसमेतं विष्णुं च वस्त्रालंकरणैः शुभैः॥
पूजयामास हिमवांस्तथा ब्रह्माणमेव च॥ २६.५० ॥

इंद्रं पुरोधसा सार्द्धमिंद्राण्या सहितं विभुम्॥
तथैव लोकपालांश्च पूजयित्वा पृथक्पृथक्॥ २६.५१ ॥

तथैव पूजिता चंडी भूतप्रमथगुह्यकैः॥
वस्त्रालंकरणैश्चैव रत्नैर्नानाविधैरपि॥
ये चान्य आगतास्तत्र ते च सर्वे प्रपूजिताः॥ २६.५२ ॥

एवं तदानीं प्रतिपूजिताश्च देवाश्च सर्वे ऋषयश्च यक्षाः॥
गंधर्वविद्याधरसिद्धचारणास्तथैव मर्त्याप्सरसां गणाश्च॥ २६.५३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवपार्वतिविवाहमंगलोत्सववर्णनं नाम षड्विशोऽध्यायः॥ २६ ॥ छ ॥

**॥लोमश उवाच॥**

तथैव विष्णुना सर्वे पर्वताश्च प्रपूजिताः॥
सह्याचलश्च विंध्यश्च मैनाको गंधमादनः॥ २७.१ ॥

माल्यवान्मलयश्चैव महेंद्रो मंदरस्तथा॥
मेरुश्चैव प्रयत्नेन पूजितो विष्णुना तदा॥ २७.२ ॥

श्वेतः कृतः श्वेतगिरिर्निलाद्रिश्च तथैव च॥
उदयाद्रिश्च श्रृंगश्च अस्ताचलवरो महान्॥ २७.३ ॥

मानसाद्रिस्तथा शैलः कैलासः पर्वतोत्तमः॥
लोकालोकस्तथा शैलः पूजितः परमेष्ठिना॥ २७.४ ॥

एवं ते पर्वतश्रेष्ठाः पूजिताः सर्व एव हि॥
तथान्ये पूजितास्तेन सर्वे पर्वतवासिनः॥ २७.५ ॥

विष्णुना ब्रह्मणा सार्द्धं कृतं सर्वं यथोचितम्॥
अन्येहनि च संप्राप्ते वरयात्रा कृता तथा॥ २७.६ ॥

हिमाद्रिणा बंधुभिश्च पर्वतं गंधमादनम्॥
ययुः सर्वे सुरगणा गणाश्च बहवस्तथा॥ २७.७ ॥

प्रमथाश्च तथा सर्वे तथा चंडीगणाः परे॥
ये चान्ये बहवस्तत्र समायाता हिमालया॥ २७.८ ॥

शिवस्योद्वहनं विप्राः शिवेन परिभाविताः॥
परं हर्षं समापन्ना दृष्ट्वा तौ दंपती तदा॥ २७.९ ॥

पार्वतीसहितः शंभुः शंभुना सह पार्वती॥
पुष्पगन्धौ यथा स्यातां वागर्थाविव तत्त्वतः॥ २७.१० ॥

तथा प्रकृतिपुंसौ च ऐकपद्येन नान्यथा॥
दंपती तौ गजारूढौ शुशुभाते महाप्रभौ॥ २७.११ ॥

विमास्थस्तदा ब्रह्मा विष्णुश्च गरुडोपरि॥
ऐरावतगतश्चेंद्रः कुबेरः पुष्पकोपरि॥ २७.१२ ॥

पाशी च मकरा रूढो यमो महिषमेव च॥
प्रेतारूढो नैर्ऋतः स्यादग्निर्बस्तगतो महान्॥ २७.१३ ॥

मृगारूढोऽथ पवन ईशो वृषभमेव च॥
इत्येवं लोकपालाश्च सग्रहाः परमेष्ठिनः॥ २७.१४ ॥

स्वैः स्वैर्बलैः परिक्रांतास्तथान्ये प्रमथादयः॥
हिमाद्रिश्च महाशैल ऋषभो गंधमादनः॥ २७.१५ ॥

सह्याचलो नीलगिरिर्मंदरो मलयाचलः॥
कैलासो हि महातेजा मैनाकश्च महाप्रभः॥ २७.१६ ॥

एते चान्ये च गिरयः क्षीमंतो हि महाप्रभाः॥
सकलत्राश्च ते सर्वे ससुताश्च मनोरमाः॥ २७.१७ ॥

बलिनो रूपिणः सर्वे मेर्वाद्यास्तत्र पर्वताः॥
वरयात्राप्रसंगेन शिवार्चनपराभवन्॥ २७.१८ ॥

नंदिना ह्युपविष्टास्ते मेर्वाद्यास्तत्र पर्वताः॥
वरयात्रा कृता ते यथोक्ता च हिमाद्रिणा॥
सर्वैस्तैर्बंधुभिः सार्द्धं पुनरागमनं कृतम्॥ २७.१९ ॥

स्वकालयस्थो हिमवान्स रेजे हि महा यशा॥
शिवसंपर्कजेनैव महसा परमेम च॥
विख्यातो हि महाशैलस्त्रिषु लोकेषु विश्रुतः॥ २७.२० ॥

कन्यादानेन महता तुष्टो यस्य च शंकरः॥
ते धन्यास्ते महात्मानः कृतकृतत्यास्तथैव च॥ २७.२१ ॥

द्व्यक्षरं नाम येषां च जिह्वाग्रे संस्थितं सदा॥
शिवेति द्व्यक्षरं नाम यैर्ह्रदीरितमद्य वै॥
ते वै मनुष्यरूपेण रुद्रा एव न संशयः॥ २७.२२ ॥

किंचिद्दानेन संतुष्टः पत्रेणापि तथैव च॥
तोयेनापि हि संतुष्टो महादेवो निरन्तरम्॥ २७.२३ ॥

पत्रेण पुष्पेण तथा जलेन प्रीतो भवत्येष सदाशिवो हि॥
तस्माच्च सर्वैः प्रतिपूजनीयः शिवो मद्दाभाग्यकरो नृणामिह॥ २७.२४ ॥

एको महाञ्ज्योतिरजः परेशः परापराणां परमो महात्मा॥
निरंतरो निर्विकारो निरीशो निराबाधो निर्विकल्पो निरीहः॥ २७.२५ ॥

निरंजनो नित्यरूपो निरोधो नित्यानन्दो नित्यमुक्ताः सदेव॥
एवंभूतो देवदेवोऽर्च्चितश्च तैर्देवाद्यर्विश्ववेद्यो भवश्च॥
स्तुतो ध्यातः पूजितश्चिंतितश्च सर्वज्ञोऽसौ सर्वदा सर्वदश्च॥ २७.२६ ॥

यथा वरिष्ठो हिमवान्प्रसिद्धः सर्वैर्गुणैः सर्वगुणो महात्मा॥

विश्वेशवंद्यो हि तदा हिमालयो जातो गिरीणां प्रवरस्तदानीम्॥ २७.२७ ॥

मेनया सह धर्मात्मा यथास्थानगतस्ततः॥
सर्वान्विसर्जयामास पर्वतान्पर्वतेश्वरः॥ २७.२८ ॥

गतेषु तेषु हिमवान्पुत्रैः पौत्रैः प्रपौत्रकैः॥
राजा गिरीणां प्रवरो महादेवप्रसादतः॥ २७.२९ ॥

अथो गिरिजया सार्द्धं महेशो गन्धमादने॥
एकांते च मतिं चक्रे रमणार्थं स्वरूपवान्॥ २७.३० ॥

सुरतेनैव महता तपसा हि समागमे॥
द्वयोः सुरतमारब्धं तद्द्वयोश्च तदाऽभवत्॥ २७.३१ ॥

अनिष्टं महदाश्चर्यं प्रलयोपममेव च॥
तस्मिन्महारते प्राप्ते नाविंदंत सुखं परम्॥ २७.३२ ॥

सर्वे ब्रह्मादयो देवाः कार्याकार्यव्यवस्थितौ॥
रेतसा च जगत्सर्वं नष्टं स्थावरजंगमम्॥ २७.३३ ॥

सस्मार चाग्निं ब्रह्मा च विष्णुश्चाध्यात्मदायकः॥
मनसा संस्मृतः सद्यो जगामाग्निस्त्वरान्वितः॥ २७.३४ ॥

ताभ्यां संप्रेषितोऽपश्यद्रुचिरं शिवमांदिरम्॥
द्वारि स्थितं नंदिनं च ददर्शाग्रे महाप्रभम्॥ २७.३५ ॥

अग्निर्ह्रस्वस्तदा भूत्वा काश्मीरसदृशच्छविः॥
प्रविष्टौंतः पुरं शंभोर्नानाश्चर्यसमन्वितम्॥ २७.३६ ॥

अनेकरत्नसंवीतं प्रासादैश्च स्वलं कृतम्॥
तदंगणमनुप्राप्य उपविश्याह हव्यवाट्॥ २७.३७ ॥

पाणिपात्रस्य मे ह्यम्ब भिक्षां देह्यवरोधतः॥
तच्छ्रुत्वा वचनं तस्य पाणिपात्रस्य बालिका॥ २७.३८ ॥

यावद्दातुं च सारेभे भिक्षां तस्मै ततः स्वयम्॥
उत्थाय सुरतात्तस्माच्छिवो हि कुपितो भृशम्॥ २७.३९ ॥

रुद्रस्त्रिशूलमुद्यम्य भैरवो ह्यऽभवत्तदा॥
निवारितो गिरिजया वधात्तस्माच्छिवः स्वयम्॥
भिक्षां तस्मै ददौ वाचा अग्नये जातवेदसे॥ २७.४० ॥

पाणौ भिक्षां गृहीत्वाथ प्रत्यक्षं तेन चाग्निना॥
भिक्षिता कुपिता तं वै शशाप गिरिजा ततः॥ २७.४१ ॥

रे भिक्षो भविता शापात्सर्वभक्षो ममाशु वै॥
अनेन रेतसा सद्यः पीडां प्राप्स्यसि सर्वतः॥ २७.४२ ॥

इत्युक्तो भक्षयित्वाग्नी रेत ईशस्य हव्यवाट्॥
यत्र देवाः स्थिताः सर्वे ब्रह्माद्याश्चैव सर्वशः॥ २७.४३ ॥

आगत्याकथयत्सर्वं तद्रेतोभक्षणादिकम्॥
सर्वे सगर्भा ह्यभवन्निन्द्राद्या देवतागणाः॥ २७.४४ ॥

अग्नेर्यथा हविश्चैव सर्वेषामुपतिष्ठति॥
अग्नेर्मुखोद्भवेनैव रेतसा ते सुरेश्वराः॥ २७.४५ ॥

सगर्भाह्यभवन्सर्वे चिंतया चप्रपीडिताः॥
विष्णुं शरणमाजग्मुर्द्देवदेवेश्वरं प्रभुम्॥ २७.४६ ॥

॥देवा ऊचुः॥
त्वं त्राता सर्वदेवानां लोकानां प्रभुरेव च॥
तस्माद्रक्षा विधातव्या शरणागतवत्सल॥ २७.४७ ॥

वयं सर्वे मर्तुकामा रेतसानेन पीडिताः॥
असुरेभ्यः परित्रस्ता वयं सर्वे दिवौकसः॥ २७.४८ ॥

शरणं शंकरं याताः परित्रातुं कृतोद्वहाः॥
यदा पुत्रो हि रुद्रस्य भविष्यति तदा वयम्॥
सुखिनः स्याम सर्वे निर्भयाश्च त्रिविष्टपे॥ २७.४९ ॥

एवं विष्टभ्यमानानां सर्वेषां भयमागतम्॥
अनेन रेतसा विष्णो जीवितुं शक्यते कथम्॥ २७.५० ॥

त्रिवर्गो हि यथा पुंसां कृतो हि सुपरिष्कृतः॥
विपरीतो भवत्येव विना देवेन नान्यथा॥ २७.५१ ॥

तस्मात्तद्वै बलं मत्वा सर्वेषामपि देहिनाम्॥
कार्याकार्यव्यवस्थायां सर्वे मन्यामहे वयम्॥ २७.५२ ॥

तथा निशम्य देवानां परेशः परिदेवनम्॥
उवाच प्रहसन्वाक्यं देवानां देवतारिहा॥ २७.५३ ॥

स्तूयतां वै महादेवो महेशः कार्यगौरवात्॥ २७.५४ ॥

तथेति गत्वा ते सर्वे देवा विष्णुपुरोगमाः॥
तथा ब्रह्मादयः सर्व ईडिरे ऋषयो हरम्॥ २७.५५ ॥

ॐनमो भर्गाय देवाय नीलकंठाय मीढुषे॥
त्रिनेत्राय त्रिवेदाय लोकत्रितयधारिणे॥ २७.५६ ॥

त्रिस्वराय त्रिमात्राय त्रिवेदाय त्रिमूर्त्तये॥
त्रिवर्गाय त्रिधामाय त्रिपदाय त्रिशूलिने॥ २७.५७ ॥

त्राहित्राहि महादेव रेतसो जगतः पते॥ २७.५८ ॥

ब्रह्मणा तु स्तुतो यावत्तावद्देवो वृषध्वजः॥
प्रादुर्बभूव तत्रैव सुराणां कार्यसिद्धये॥ २७.५९ ॥

दृष्टस्तदानीं जगदेकबंधुर्महात्मभिर्देववरैः सुपूजितः॥
संस्तूयमानो विविधैर्वचोभिः प्रत्यग्रूपैः श्रुतिसंमतैश्च॥ २७.६० ॥

स्तुवतां चैव देवानामुवाच परमेश्वरः॥
त्रासं कुर्वंतु मा सर्वे रेतसानेन पीडिताः॥ २७.६१ ॥

वमनं वै भवद्भिश्च कार्यमद्यैव भोःसुराः॥
तथेति मत्वा ते सर्व इंद्राद्या देवतागणाः॥
वेमुः सर्वे तदा विप्रास्तद्रेतः शंकरस्य च॥ २७.६२ ॥

ऐकपद्येन तद्रेतो महापर्वतसन्निभम्॥
तप्तचामीकरप्रख्यं बभूव परमाद्भुतम्॥ २७.६३ ॥

सर्वे च सुखिनो जाता इंद्राद्या देवतागणाः॥
विना हयग्निं च ते सर्वे परितुष्टास्तदाऽभवन्॥ २७.६४ ॥

तेनाग्निनापि चोक्तस्तु शंकरो लोकशंकरः॥
किं मयाद्य महा देव कर्तव्यं देवतावर॥ २७.६५ ॥

तद्ब्रूहि मे प्रभोऽद्य त्वं येनाहं सर्वदा सुखी॥
भविष्यामि च येनाहं देवानां हव्यवाहकः॥ २७.६६ ॥

तदोवाच शिवः साक्षाद्देवानामिह श्रृण्वताम्॥
रेतो विसृज्यतां योनौ तदाग्निः प्रहसन्नवि॥ २७.६७ ॥

उवाच शंकरं देवं भवत्तेजो दुरासदम्॥
इदमुल्बणवत्तेजो धार्यते प्राकृतैः कथम्॥ २७.६८ ॥

ततः प्रोवाच भगवानग्निं प्रति महेश्वरः॥
मासिमासि प्रतप्तानां देहे तेजो विसृज्यताम्॥ २७.६९ ॥

तथेति मत्वा वचनं महाप्रभः स जातवेदाः परमेण वर्चसा॥
समुज्ज्वलंस्तत्र महाप्रभावो ब्राह्मे मुहूर्त्ते हि सचोपविष्टः॥ २७.७० ॥

तदा प्रातः समुत्थाय प्रातः स्नानपराः स्त्रियः॥
ययुः सदा ऋषीणां च सत्यस्ता जातवेदसम्॥ २७.७१ ॥

दृष्ट्वा प्रज्वलितं तत्र सर्वास्ताः शीतकर्षिताः॥
तप्तुकामास्तदा सर्व्वा ह्यरुधत्या निवारिताः॥ २७.७२ ॥

तया निवारिताश्चापि तास्तेपुः कृत्तिकाः स्वयम्॥
यावत्तेपुश्च ताः सर्व्वा रेतसः परमाणवः॥
विविशू रोमकूपेषु तासां तत्रैव सत्वरम्॥ २७.७३ ॥

नीरेतोग्निस्तदा जातो विश्रांतः स्वयमेव हि॥ २७.७४ ॥

ततस्ता ऋषिभार्या हि ययुः स्वभवनं प्रति॥
ऋषिभिस्तु तदा शप्ताः कृत्तिकाः खेचराभवन्॥ २७.७५ ॥

तदानीमेव ताः सर्वा व्यभिचारेण दुःखिताः॥
तत्ससर्जुस्तदा रेतः पृष्ठे हिमवतो गिरेः॥ २७.७६ ॥

एकपद्येन तद्रेतस्तप्तचामीकरप्रभम्॥
गंगायां च तदा क्षिप्रं कीचकैः परिवेष्टितम्॥ २७.७७ ॥

षण्मुखं बालकं ज्ञात्वा सर्वे देवा मुदान्विताः॥
गर्गेणोक्तास्तदंते वै सुखेन ह्रियतामिति॥ २७.७८ ॥

शंभोः पुत्रः प्रसादेन सर्वो भवति शाश्वतः॥
गंगायाः पुलिने जातः कार्त्तिकेयो महाबलः॥ २७.७९ ॥

उपविष्टोथ गांगेयो ह्यहोरात्रोषितस्तदा॥
शाखो विशाखोऽतिबलः षण्मुखोऽसौ महाबलः॥ २७.८० ॥

जातो यदाथ गंगायां षण्मुखः शंकरात्मजः॥
तदानीमेव गिरिजा संजाता प्रस्नुतस्तनी॥ २७.८१ ॥

शिवं निरीक्ष्य सा प्राह हे शंभो प्रस्नवो महान्॥
संजातो मे महादेव किमर्थस्तन्निरीक्ष्यताम्॥
सर्वज्ञोऽपि महादेवो ह्यब्रवीत्तामथाज्ञवत्॥ २७.८२ ॥

नारदस्तत्र चागत्य प्रोक्तवाञ्जन्म तस्य तत्॥
शिवाय च शिवायै च पुत्रो जातो हि सुंदरः॥ २७.८३ ॥

तदाकर्ण्य वचो विप्रा हर्षनिर्भरमानसाः॥
बभूवुः प्रमथाः सर्वे गंधर्वा गीततत्पराः॥ २७.८४ ॥

अनेकाभिः पताकाभिश्चैलपल्लवतोरणैः॥
तथा विमानैर्बहुभिर्बभौ प्रज्वलितो महान्॥
पर्वतः पुत्रजननाच्छंकरस्य महात्मनः॥ २७.८५ ॥

तदा सर्वे सुरगणा ऋषयः सिद्धचारणाः रक्षोगंधर्वयक्षाश्च अप्सरोगणसेविताः॥ २७.८६ ॥

एकपद्येन ते सर्वे सहिताः शंकरेण तु॥
द्रष्टुं गांगेयमधिकं जग्मुः पुलिनसंस्थितम्॥ २७.८७ ॥

ततो वृषभमारुह्य ययौ गिरिजया सह॥
अन्यैः समेतो भगवान्सुरैरिंद्रादिभिस्तथा॥ २७.८८ ॥

तदा शंखाश्च भेर्यश्च नेदुस्तूर्यीण्यनेकशः॥ २७.८९ ॥

तदानीमेव सर्वेशं वीरभद्रादयो गणाः॥
अन्वयुः केलिसंरब्धा नानावादित्रवादकाः॥
वादयन्तश्च वाद्यानि ततानि विततानि च॥ २७.९० ॥

केचिन्नृत्यपरास्तत्र गायकाश्च तथा परे॥
स्तावकाः स्तूयमानाश्च चक्रुस्ते गुणकीर्तनम्॥ २७.९१ ॥

एवंविधास्ते सुरसिद्धयक्षा गंधर्वविद्याधरपन्नगा ह्यमी॥
शिवेन सार्द्धं परिहृष्टचित्ता द्रष्टुं ययुस्तं वरदं च शांकरिम्॥ २७.९२ ॥

यावत्समीक्षयामासुर्गांगेयं शंकरोपमम्॥
ददृशुस्ते महत्तेजो व्याप्तमासीज्जगत्त्रयम्॥ २७.९३ ॥

तत्तोजसावृतं बालं तप्तचामीकरप्रभम्॥
सुमुखं सुश्रिया युक्तं सुनसं सुस्मितेक्षणम्॥ २७.९४ ॥

चारुप्रसन्न वदनं तथा सर्वांगसुंदरम्॥
तं दृष्ट्वा महदाश्चर्यं गांगेयं प्रथितात्मकम्॥ २७.९५ ॥

ववंदिरे तदा बालं कुमारं सूर्यवर्चसम्॥
प्रमथाश्च गणाः सर्वे वीरभद्रादयस्तथा॥ २७.९६ ॥

परिवार्योपतस्थुस्ते वामदक्षिणभागतः॥
तथा ब्रह्मा च विष्णुश्च इंद्रश्चापि सुरैर्वृतः॥ २७.९७ ॥

ऋषयो यक्षगंधर्वाः परिवार्य कुमारकम्॥
दंडवत्पितिता भूमौ केचिच्च नतकंधराः॥ २७.९८ ॥

प्रणेमुः शिरसा चान्ये मत्वा स्वामिनमव्ययम्॥
अवाद्यंत विचित्राणि वादित्राणि महोत्सवे॥
एवमभ्युदये तस्मिन्नृषयः शांतिमापठम्।. २७.९९ ॥

एतस्मिन्नंतरे यातः शंकरो गिरिजापतिः॥
अवतीर्य वृषाच्छीघ्रं पार्वत्या सहसुव्रताः॥ २७.१०० ॥

पुत्रं निरैक्षत तदा जगदेकबंधुः प्रीत्या युतः परमया सह वै भवान्या॥
स्नेहान्वितो भुजगभोगयुतो हि साक्षात्सर्वेश्वरः परिवृतः प्रमथैः प्रहृष्टः॥ २७.१०१ ॥

उपगुह्य गुहं तत्र पार्वती जातसंभ्रमा॥
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता॥ २७.१०२ ॥

तदा नीराजितो देवैः सकलत्रैर्मुदान्वितैः॥
जयशब्देन महता व्याप्तमासीन्नभस्तलम्॥ २७.१०३ ॥

ऋषयो ब्रह्मगोषेण गीतेनैव च गायकाः॥
वाद्यैश्च वादकाश्चैव उपतस्थुः कुमारकम्॥ २७.१०४ ॥

स्वमंकमारेप्य तदा गिरीशः कुमारकं तं प्रभया महाप्रभम्॥
बभौ भवानीपतिरेव साक्षाच्छ्रिया युतः पुत्रवतां वरिष्ठः॥ २७.१०५ ॥

दंपती तौ तदा तत्र ऐकपद्येन नंदतुः॥
अभिषिच्यमान ऋषिभिरावृतः सुरसत्तमैः॥ २७.१०६ ॥

कुमारः क्रीडयामास उत्संगे शंकरस्य च॥
कंठे स्थितं वासुकिं च पाणिभ्यां समपीडयत्॥ २७.१०७ ॥

मुखं प्रपीडयित्वाऽसौ पाणीनगणयत्तदा॥
एकं त्रीणिदशाष्टौ च विपरीतक्रमेण च॥ २७.१०८ ॥

प्रहस्य भगवाञ्छंभुरुवाच गिरिजां तदा॥ २७.१०९ ॥

मंदस्मितेन च तदा भगवान्महेशः प्राप्तो मुदंच परमां गिरिजासमेतः॥
प्रेम्णा सगद्गदगिरा जगदेकबंधुर्नोवाच किंचन तदा भुवनैकभर्ता॥ २७.११० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कार्त्तिकेयस्वामिकुमारोत्पत्तिवर्णनंनाम सप्तविंशोऽध्यायः॥ २७ ॥ छ ॥

**॥लोमश उवाच॥**

कुमारं स्वांकमारोप्य उवाच जगदीश्वरः॥
देवान्प्रति तदा रुद्रः सेंद्रान्भर्गः प्रतापवान्॥ २८.१ ॥

किं कार्यं कथ्यतां देवाः कुमारेणाधुना मम॥
तदोचुः सहिताः सर्वे देवं पशुपतिं प्रति॥ २८.२ ॥

तारकाद्भयमुत्पन्नं सर्वेषां जगतां विभो॥
त्राता त्वं जगतां स्वामी तस्मात्त्राणं विधीयताम्॥ २८.३ ॥

कुमारेण हतोऽद्यैव तारको भविता प्रभो॥
तस्माददद्यैव यास्यामस्तारकं हंतुमुद्यताः॥ २८.४ ॥

तथेति मत्वा सहसा निर्जग्मुस्ते तदा सुराः॥
कार्त्तिकेयं पुरस्कृत्य शंकरातमजमेव हि॥ २८.५ ॥

सर्वे मिलित्वा सहसा ब्रह्मविष्णुपुरोगमाः॥
देवानामुद्यमं श्रुत्वा तारकोऽपि महाबलः॥ २८.६ ॥

सैन्येन महता चैव ययौ योद्धुं सुरान्प्रति॥
देवैर्दृष्टं समायातं तारकस्य महद्बलम्॥ २८.७ ॥

तदा नभोगता वाणी ह्युवाच परिसांत्व्य तान्॥
शांकरिं च पुरस्कृत्य सर्वे यूय प्रतिष्ठिताः॥ २८.८ ॥

दैत्यान्विजित्य संग्रामे जयिनो हि भविष्यथ॥ २८.९ ॥

वाचं तु खेचरीं श्रुत्वा देवाः सर्वे समुत्सुकाः॥
कुमारं च पुरस्कृत्य सर्वे ते गतसाध्वसाः॥ २८.१० ॥

युद्धकामाः सुरा यावत्तावत्सर्वे समागताः॥
वरणार्थं कुमारस्य सुता मृत्योर्दुरत्यया॥ २८.११ ॥

ब्रह्मणा नोदिता पूर्वं तपः परममाश्रिता॥
तपसा तेन महता कुमारं प्रति वै तदा॥
आगता दुहिता मृत्योः सेना नामैकसुंदरी॥ २८.१२ ॥

तां दृष्ट्वा तेऽब्रुवन्सर्वे देवं पशुपतिं प्रति॥
एनं कुमारमुद्दिश्य आगता ह्यतिसुंदरी॥ २८.१३ ॥

ब्रह्मणो वचनाच्चैव कुमारेण तदा वृता॥
अथ सेनापतिर्जातः कुमारः शांकरिस्तदा॥ २८.१४ ॥

तदा शंखाश्च भेर्यश्च पटहानकगोमुखाः॥
तथा दुंदुभयो नेदुर्मृदंगाश्च महास्वनाः॥ २८.१५ ॥

तेन नादेन महता पूरितं च नभस्तलम्॥
तदा गौरी च गंगा च कृत्तिका मातरस्तथा॥
परस्परमथोचुस्ताः सुतो मम ममेति च॥ २८.१६ ॥

एवं विवादमापन्नाः सर्वास्ता मातृकादयः॥
निवारिता नारदेन मौढ्यं मा कुरुतेति च॥ २८.१७ ॥

पार्वत्यां शंकराज्जातो देवकार्यार्थसिद्धये॥
तूष्णींभूतास्तदा सर्वाः कृत्तिका मातृभिः सह॥ २८.१८ ॥

गुहेनोक्तास्तदा सर्वा ऋषिपत्न्यश्च कृत्तिकाः॥
नक्षत्राणि समाश्रित्य भवद्भिः स्थीयतां चिरम्॥ २८.१९ ॥

तथा मातृगणस्तेन स्वामिना स्थापितो दिवि॥
मृत्योः कन्यां च संगृह्य कार्त्तिकेयस्त्वरान्वितः॥ २८.२० ॥

इंद्रं प्रोवाच भगवान्कुमारः शंकरात्मजः॥
दिवं याहि सुरैः सार्द्धं राज्यं कुरु निरन्तरम्॥ २८.२१ ॥

इंद्रेणोक्तः कुमारो हि तारकेण प्रपीडिताः॥
स्वर्गाद्विद्राविताः सर्वे वयं याता दिशो दश॥ २८.२२ ॥

किं पृच्छसि महाभाग अस्मान्पदपरिच्युतान्॥
एवमुक्तस्तदा तेन वज्रिणाशंकरात्मजः॥
प्रहस्येंद्रं प्रति तदा मा भैषीत्यभयं ददौ॥ २८.२३ ॥

यावत्कथयतस्तस्य शांकरेश्च महात्नः॥
कैलासं तु गते रुद्रे पार्वत्या प्रमथैः सह॥ २८.२४ ॥

आजगाम महादैत्यो दैत्यसेनाभिरावृतः॥
रणदुंदुभयो नेदुस्तता प्रलयभीषणाः॥ २८.२५ ॥

रणकर्कशतूर्याणि डिंडिमान्यद्भुतानि च॥
गोमुखाः खरश्रृंगाणि काहलान्येव भूरिशः॥ २८.२६ ॥

वाद्यभेदा आवाद्यंत तस्मिन्दैत्यसमागमे॥
गर्जमानास्तदा वीरस्तारकेण सहैव तु॥ २८.२७ ॥

उवाच नारदो वाक्यं तारकं देवकण्टकम्॥ २८.२८ ॥

**॥नारद उवाच॥**

पुरा देवैः कृतो यत्नो वधार्थं नात्र संशयः॥
तवैव चासुरश्रेष्ठ मयोक्तं नान्यथा भवेत्॥ २८.२९ ॥

कुमारोऽयं च शर्वस्य तवार्थं चोपपादितः॥
एवं ज्ञात्वा महाबाहो कुरु यत्नं समाहितः॥ २८.३० ॥

नारदोक्तं निशम्याथ तारकः प्रहसन्निव॥
उवाच वाक्यं मेधावी गच्छ त्वं च पुरंदरम्॥ २८.३१ ॥

मम वाक्यं महर्षे त्वं वद शीघ्रं यथातथम्॥
कुमारं च पुरस्कृत्य मया योद्धुं त्वमिच्छसि॥ २८.३२ ॥

मूढभावं समाश्रित्य कर्तुमिच्छसि नान्यथा॥
मनुष्यमेकमाश्रित्य मुचुकुन्दाख्यमेव च॥ २८.३३ ॥

तत्प्रभावेऽमरावत्यां स्थितोऽसि त्वं न चान्यथा॥
कौमारं बलमाश्रित्य तिष्ठसे त्वं ममाग्रतः॥ २८.३४ ॥

त्वां हनिष्याम्यहं मन्दलोकपालैः सहैव हि॥
एवं कथय देवेन्द्रं देवर्षे नान्यथा वद॥ २८.३५ ॥

तथेति मत्वा भगवान्स नारदो ययौ सुराञ्छक्रपुरोगमांश्च॥
आचष्ट सर्वं ह्यसुरेन्द्रभाषितं सहोपहासं मतिमांस्तथैव॥ २८.३६ ॥

**॥नारद उवाच॥**

भवद्भिः श्रूयतां देवा वचनं मम नान्यथा॥
तारकेण यदुक्तं च सानुगे नावधार्यताम्॥ २८.३७ ॥

**॥तारक उवाच॥**

त्वां हनिष्यामि रे मूढ नान्यथा मम भाषितम्॥ २८.३८ ॥

मुचुकुन्दं समासाद्य लोकपालैश्च पूजितः॥
न त्वया भीरुणा योत्स्ये देवो भूत्वा नराश्रितः॥ २८.३९ ॥

तस्य वाक्यं निशम्योचुः सर्वे देवाः सवासवाः॥
कुमारं च पुरस्कृत्य नारदं चर्षिसत्तमम्॥ २८.४० ॥

जानासि त्वं हि देवर्षे कुमारस्य बलाबलम्॥
अज्ञो भूत्वा कथं वाक्यमुक्तं तस्य ममाग्रतः॥ २८.४१ ॥

प्रहस्य नारदो वाक्यमुवाच तस्य सन्निधौ॥
अहमप्युपहासं च वाक्यं तारकमुक्तवान्॥ २८.४२ ॥

जानीध्वममराः सर्वे कुमारं जयिनं सुराः॥
भविष्यत्यत्र मे वाक्यं नात्र कार्याविचारणा॥ २८.४३ ॥

नारदस्य वचः श्रुत्वा सर्वे देवा मुदान्विताः॥
ऐकपद्येन चोत्तस्थुर्योद्धुकामाश्च तारकम्॥ २८.४४ ॥

कुमारं गजमारोप्य देवेन्द्रो ह्यग्रगोऽभवत्॥
सुरसैन्येन महता लोकपालैः समावृतः॥ २८.४५ ॥

तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः॥
वीणावेणुमृदंगानि तथा गन्धर्वनि स्वनाः॥ २८.४६ ॥

गजं दत्त्वा महेंद्राय कुमारो यानमारुहत्॥
अनेकरत्नसंवीतं नानाश्चर्यसमन्वितम्॥
विचित्रचित्रं सुमहत्तथाश्चर्यसमन्वितम्॥ २८.४७ ॥

विमानमारुह्य तदा महायशाः स शांकरिः सर्वगणैरुपेतः॥
श्रिया समेतः परया बभौ महान्स वीज्यमानश्चमरैर्महाप्रभैः॥ २८.४८ ॥

प्राचे तसं छत्र महामणिप्रभं रत्नैरुपेतं बहुभिर्विराजितम्॥
धृतं तदा तेन कुमारमूर्द्धनि चन्द्रैः किरणैः सुशोभितम्॥ २८.४९ ॥

संमीलितास्तदा सव देवा इन्द्रपुरोगमाः॥
बलैः स्वैः स्वैः परिक्रांता योद्धुकामा महाबलाः॥ २८.५० ॥

यमेऽपि स्वगणैः सार्द्धं मरुद्भिश्च सदागतिः॥
पाथोभिर्वरुणस्तत्र कुबेरो गुह्यकैः सह॥
ईशोऽपि प्रमथैः सार्द्धं नैर्ऋतो व्याधिभिः सह॥ २८.५१ ॥

एवं तेऽष्टौ लोकपा योद्धुकामाः सर्वे मिलित्वा तारकं हंतुमेव॥
पुरस्कृत्वा शांकरिं विश्ववंद्यं सेनापतिं चात्मविदां वरिष्ठम्॥ २८.५२ ॥

एवं ते योद्धुकामा हि अवतेरुश्च भूतलम्॥
अंतर्वेद्यां स्थिताः सर्वे गंगा यमुनमध्यगाः॥ २८.५३ ॥

पातालाच्च समायातास्तारकस्योपजीविनः॥
चेरुरंगबलोपेता हन्तुकामाः सुरान्रणे॥ २८.५४ ॥

तारको हि समायातो विमानेन विराजितः॥
छत्रेण च महातेजा ध्रियमाणेन मूर्द्धनि॥ २८.५५ ॥

चामरैर्विज्यमानो हि शुशुभे दैत्यराट् स्वयम्॥ २८.५६ ॥

एवं देवाश्च दैत्याश्च अंतर्वेद्यां स्थितास्तदा॥
सैन्येन महता तत्र व्यूहान्कृत्वा पृथक्पृथक्॥ २८.५७ ॥

गजान्कृत्वा हयेकतश्च हयांश्च विविधांस्तथा॥
स्यंदनानिविचित्राणि नानारत्नयुतानि च॥ २८.५८ ॥

पदाता बहवस्तत्र शक्तिशूलपरश्वधैः॥
खड्गतोमरनाराचैः पाशमुद्गरशोभिताः॥ २८.५९ ॥

ते सेने सुरदैत्यानां शुशुभाते परस्परम्॥
हंतुकामास्तदा ते वै स्तूयमानाश्च बन्धुभिः॥ २८.६० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे देवैः सह तारकासुरस्य संग्रामे देवदैत्यसेनाहवर्णनंनामाष्टाविंशोऽध्यायः॥ २८ ॥ छ ॥

**॥लोमश उवाच॥**

उभे सेने तदा तेषां सुराणां चामरद्विषाम्॥
अनेकाश्चर्यसंवीते चतुरंगबलान्विते॥
विरेजतुस्तदान्योऽन्यं गर्जतो वांबुदागमे॥ २९.१ ॥

एतस्मिन्नन्तरे तत्र वल्गमानाः परस्परम्॥
देवासुरास्तदा सर्वे युयुधुश्च महाबलाः॥ २९.२ ॥

युद्धं सुतुमुलं ह्यासीद्देवदैत्यसमाकुलम्॥
रुण्डमुण्डांकितं सर्वं क्षणेन समपद्यत॥ २९.३ ॥

भूमौ निपतितास्तत्र शतशोऽथ सहस्रशः॥
केषांचिद्बाहविश्छिन्नाः खड्गपातैः सुदारुणैः॥ २९.४ ॥

मुचुकुंदो हि बलवांस्त्रैलोक्येऽमितविक्रमः॥ २९.५ ॥

तारको हि तदा तेन मुचुकुंदेन धीमता॥
खड्गेन चाहतास्तत्र सर्वप्राणेन वक्षसि॥
प्रसह्य तत्प्रहारं च प्रहसन्वाक्यमब्रवीत्॥ २९.६ ॥

किं रे मूढ त्वया चाद्य कृतमस्ति बलादिदम्॥
न त्वया योद्धुमिच्छामि मानुषेणैव लज्जया॥ २९.७ ॥

तारकस्य वचः श्रुत्वा मुचुकुंदोऽभ्यभाषत॥
मया हतोऽसि दैत्येंद्र नान्यो भवितुमर्हसि॥ २९.८ ॥

दृष्ट्वा मे खड्गसंपातं न त्वं तिष्ठसि चाग्रतः॥
त्वां हन्मि पश्य मे शौर्यं दैत्यराज स्थिरो भव॥ २९.९ ॥

एवमुक्त्वा तदा वीरो मुचुकुंदो महाबलः॥
यावज्जघान खड्गेन तावच्छक्त्या समाहतः॥
मांधातुस्तनयस्तत्र पपात रणमंडले॥ २९.१० ॥

पतितस्तत्क्षणादेव चोत्थितः परवीरहा॥ २९.११ ॥

स सज्जमानोतिमहाबलो वै हंतुं तदा दैत्यपतिं च तारकम्॥
ब्रह्मास्त्रमुद्यम्य धनुर्गृहीत्वा मांधातृपुत्रो भुवनैकजेता॥ २९.१२ ॥

स तारकं योद्धकामस्तरस्वी रुषान्वितोत्फुल्लविलोचनो महान्॥
स नारदो ब्रह्मसुतो बभाषे तदा नृवीरं मुचुकुंदमेवम्॥ २९.१३ ॥

न तारको हन्यते मानुषेण तस्मादेतन्मा विमोचीर्महास्त्रम्॥ २९.१४ ॥

निशम्य वचनं तस्य देवर्षेर्नारदस्य च॥
मुचुकुंद उवाचेदं भविता कोऽस्य मारकः॥ २९.१५ ॥

तदोवाच महातेजा नारदो दिव्यदर्शनः॥
एनं हंता कुमारश्च कुमारोऽयं शिवात्मजः॥ २९.१६ ॥

तस्माद्भवद्भिः स्थातव्यमैकपद्येन युध्यताम्॥
तिष्ठ त्वं चायतो भूत्वा मुचुकुंद महामते॥ २९.१७ ॥

निशम्य वाक्यं च मनोहरं शुभं ह्युदीरितं तेन महाप्रभेण॥
सर्वे सुराः शांतिपरा बभूवुस्तेनैव साकं नृवरेणयत्नात्॥ २९.१८ ॥

ततो दुंदुभयो नेदुः शंखाश्च कृतनिश्चयाः॥
ताडिता विविधैर्वाद्यैः सुरासुरसमन्वितैः॥ २९.१९ ॥

जगर्जुरसुरास्तत्र देवान्प्रति कृतोद्यमाः॥
शिवकोपोद्भवो वीरो वीरभद्रो रुषान्वितः॥ २९.२० ॥

गणैर्बहुभिरासाद्य तारकं च महाबलम्॥
मुचुकुंदं पृष्ठतः कृत्वा तथैव च सुरानपि॥ २९.२१ ॥

तदा ते प्रमथाः सर्वे पुरस्कृत्य कुमारकम्॥
युयुधुः संयुगे तत्र वीरभद्रादयो गणाः॥ २९.२२ ॥

त्रिशूलैर्ऋष्टिभिः पाशैः खड्गैः परशुपाट्टिशैः॥
निजघ्नुः समरेन्योन्यं सुरासुरविमर्द्दने॥ २९.२३ ॥

तारको वीरभद्रेण त्रिशूलेन हतो भृशम्॥
पपात सहसा तत्र क्षण मूर्छापरिप्लुतः॥ २९.२४ ॥

उत्थाय च मुहूर्त्ताच्च तारको दैत्यपुंगवः॥
लब्धसंज्ञो बलाविष्टो वीरभद्रं जघान च॥ २९.२५ ॥

स शक्तिं च महातेजा वीरभद्रो हि तारकम्॥
त्रिशूलेन च घोरेण शिवस्यानुचरो बली॥ २९.२६ ॥

एवं संयुध्यमानौ तौ जघ्नतुश्चेतरेतरम्॥
द्वंद्वयुद्धं सुतुमुलं तयोर्जातं महात्मनोः॥ २९.२७ ॥

सुरास्तत्रैव समरे प्रेक्षकाह्यभवंस्तदा॥
तयोर्भेरीमृदंगाश्च पटहानकगोमुखाः॥ २९.२८ ॥

तथा डमरूनादेन व्याप्तमासीज्जगत्त्रयम्॥
तेन घोषेण महता युद्यमानौ महाबलौ॥ २९.२९ ॥

शुशुभातेऽतिसंरब्धौ प्रहारैर्जरीकृतौ॥
अन्योन्यमभिसंरब्धौ तौ बुधांगारकाविव॥ २९.३० ॥

नारदेन तदा ख्यातो वीरभद्रस्य तद्वधः॥
न रोचते च तद्वाक्यं वीरभद्रस्य वै तदा॥ २९.३१ ॥

नारदेन यदुक्तं हि तारकस्य वधं प्रति॥
यथा रुद्रस्तथा सोऽपि वीरभद्रो महाबलः॥ २९.३२ ॥

एवं प्रयुध्यमानौ तौ जघ्नतुश्चेतरेतरम्॥
अन्योन्यं स्वर्द्धमानौ तौ गर्जंतौ सिंहयोरिव॥ २९.३३ ॥

एवं तदा तौ भुवि युध्यमानौ महात्मना ज्ञानवतां वरेण॥
स वीरभद्रो हि तदा निवारितो वाक्यैरनेकैरथ नारदेन॥ २९.३४ ॥

तथा निशम्य तद्वाक्यं नारदस्य मुखोद्गतम्॥
वीरभद्रो रुषाविष्टो नारदं प्रत्युवाच ह॥ २९.३५ ॥

तारकं च वधिष्यामि पश्य मेऽद्य पराक्रमम्॥
आनयंति च ये वीराः स्वामिनं रणसंसदि॥
ते पापिनो ह्यधर्मिष्ठा विमृशंतिरणं गताः॥ २९.३६ ॥

भीरवस्ते तु विज्ञेया न वाच्यास्ते कदाचन॥
त्वं न जानासि देवर्षे योधानां च प्रतिक्रियाम्॥ २९.३७ ॥

मृत्युं च पृष्ठतः कृत्वा रणभूमौ गतव्यथाः॥
शस्त्राशस्त्रैर्भिन्नगात्राः प्रशस्ता नात्र संशयः॥ २९.३८ ॥

इत्युक्त्वा चावदद्देवान्वीरभद्रो महाबलः॥
श्रुण्वंतु मम वाक्यानि देवा इन्द्रपुरोगमाः॥ २९.३९ ॥

अतारकां महीं चाद्य करिष्ये नात्र संशयः॥ २९.४० ॥

अथ त्रिशूलमादाय तारकेण युयोध सः॥
वृषारूढैरनेकैश्च त्रिशूलवरधारिभिः॥ २९.४१ ॥

कपर्द्दिनो वृषांकाश्च गणास्तेतिप्रहारिणः॥
वीरभद्रं पुरस्कृत्य वीरभद्रपराक्रमाः॥ २९.४२ ॥

त्रिशूलधारिणः सर्वे सर्वे सर्पांगभूषणाः॥
सचंद्रशेखराः सर्वे जटाजूटविभूषिताः॥ २९.४३ ॥

निलकण्ठा दशभुजाः पञ्चवक्त्रास्त्रिलोचनाः॥
छत्रचामरसंवीताः सर्वे तेऽत्युग्रबाहवः॥ २९.४४ ॥

वीरभद्रं पुरस्कृत्य सर्वे हरपराक्रमाः॥
युयुधुस्ते तदा दैत्यास्ताकासुरजीविनः॥ २९.४५ ॥

पुनः पुनस्तैश्च तदा बभूवुर्गणैर्जितास्ते ह्यसुराः पराङ्मुखाः॥
बभूव तेषां च तदातिसंगरो महाभयो दैत्यवरैस्तदानीम्॥ २९.४६ ॥

अमृष्यमाणाः परमास्त्रकोविदैस्ततो गणास्ते जयिनो बभूवुः॥
गणैर्जितास्ते ह्यसुराः पराभवं तं तारकं ते व्यथिताः शशंसुः॥ २९.४७ ॥

विनाम्य चापं हि तथा च तारकः स योद्धुकामः प्रविवेश सेनाम्॥
यथा झषो वै प्रविवेश सागरं तथा ह्यसौ दैत्यवरो महात्मा॥ २९.४८ ॥

गणैः समेतो युयुधे तदानीं स वीरभद्रो हि महाबलश्च॥
सर्वान्सुरांश्चेंद्रमुखान्महाबलस्तथा गणान्यक्षपिशाचगुह्यकान्॥
स दैत्यवर्योऽतिरुषं प्रविष्टः संमर्दयामास महाबलो हि॥ २९.४९ ॥

ततः समभवद्युद्धं देवदानवसंकुलम्॥
देवदानवयक्षाणां सन्निपातकरं महत्॥ २९.५० ॥

तथा वृषा गर्जमाना अश्वाञ्जघ्नुश्च सादिभिः॥
रथिभिश्च रथाञ्जघ्नुः कुंजरान्सादिभिः सह॥ २९.५१ ॥

वृषारूढौः सरथैस्ते च सर्वे निष्पाटिता ह्यसुराः पोथिताश्च॥ २९.५२ ॥

क्षयं प्रणीता बहवस्तदानीं पेतुः पृथिव्यां निहताश्च केचित्॥
केचित्प्रविष्टा हि रसातलं च पलायमाना बहवस्तथैव॥ २९.५३ ॥

केचिच्च शरणं प्राप्ता रुद्रानुचरकिंकरान्॥
एवं नष्टं तदा सैन्यं विलोक्यासुरपालकः॥
तारको हि रुषाविष्टो हंतुं देवगणान्ययौ॥ २९.५४ ॥

भुजानामयुतं कृत्वा दैत्यराजो हि तारकः॥
आरुह्य सिंहं सहसा घातयामास तान्रणे॥ २९.५५ ॥

दंशितेन च सिंहेन वृषाः केचिद्विदारिताः॥
तथैव तारकेणैव घातिता बहवो गणाः॥ २९.५६ ॥

एवं कृतं तदा तेन तारकेण महात्मना॥
सर्वेषामेव देवानामशक्यस्तारको महान्॥ २९.५७ ॥

जातस्तदा महाबाहुस्त्रैलोक्यक्षयकारकः॥
तारकस्यानुगा दैत्या अजेया बलवत्तराः॥ २९.५८ ॥

महारूढा दंशिताश्च करालास्ते प्रहारिणः॥
तै राहृता गणाः सर्वे सिंहैश्च वृषभा हताः॥ २९.५९ ॥

एवं निहन्यमाना वै गणास्ते रणमण्डले॥
प्रहस्य विष्णुः प्रोवाच कुमारं शिववल्लभम्॥ २९.६० ॥

**॥विष्णुरुवाच॥**
नान्यो हंतास्य पापस्य त्वद्विना कृत्तिकासुत॥
तस्मात्त्वया हि कर्त्तव्यं वचनं च महाभुज॥ २९.६१ ॥

तारकस्य वधार्थाय उत्पन्नोऽसि शिवात्मज॥
तस्मात्त्वयैव कर्त्तव्य निधनं तारकस्य च॥ २९.६२ ॥

तच्छ्रुत्वा भगवान्क्रुद्धः पार्वतीनन्दनो महान्॥
उवाच प्रहसन्वाक्यं विष्णुं प्रति यथोचितम्॥ २९.६३ ॥

मया निरीक्ष्यते सम्यक्चित्रयुद्धं महात्मनाम्॥
अनिभिज्ञोऽस्म्यहं विष्णो कार्याकार्यविचारणे॥ २९.६४ ॥

केऽस्मदीयाः परे चैव न जानामि कथंचन॥
किमर्थं युध्यमाना वै परस्परवधे स्थिताः॥ २९.६५ ॥

कुमारस्य वचः श्रुत्वा नारदो वाक्यमब्रवीत्॥ २९.६६ ॥

**॥नारद उवाच॥**
कुमारोऽसि महाबाहो शंकरस्यांशसंभवः॥
त्वं त्राता जगतां स्वामी देवानां च परा गतिः॥ २९.६७ ॥

तारकेण पुरा वीर तपस्तप्तं सुदारुणम्॥
येनैव विजिता देवा येन स्वर्गस्तथा जितः॥ २९.६८ ॥

तपसा तेन चोग्रेण अजेयत्वमवाप्तवान्॥
अनेनापि जितश्चेंद्रो लोकपालास्तथैव च॥ २९.६९ ॥

त्रैलोक्यं च जितं सर्वं ह्यनेनैव रदुरात्मना॥

तस्मात्त्वया निहंतव्यस्तारकः पापपूरुषः॥ २९.७० ॥

सर्वेषां शं विधातव्यं त्वया नाथेन चाद्य वै॥
नारदस्य वचः श्रुत्वा कुमारः प्रहसन्महान्॥
विमाना दवतीर्याथ पदातिः परमोऽभवत्॥ २९.७१ ॥

पद्भ्यां तदासौ परिधावमानः शिवात्मजोयं च कुमाररूपी॥
करे समादाय महाप्रभावां शक्तिं महोल्कामिव दीप्तियुक्ताम्॥ २९.७२ ॥

दृष्ट्वा तमायांतमतीव चंडमव्यक्तरूपं बलिनां वरिष्ठम्॥
दैत्यो बभाषे सुरसत्तमानमसौ कुमारो द्विषतां निहंता॥ २९.७३ ॥

अनेन सार्द्धं ह्यहमेव वीरो योत्स्यामि सर्वानहमेव वीरान्॥
गणांश्च सर्वानपि घातयामि महेश्वराँल्लोकपालांश्च सद्यः॥ २९.७४ ॥

इत्येवमुक्त्वा सततं महाबलः कुमारमुद्दिश्य ययौ च योद्धम्॥
जग्राह शक्तिं परमाद्भुतां च स तारको वाक्यमिदं बभाषे॥ २९.७५ ॥

**॥तारक उवाच॥**
कुमारो मेग्रतश्चाद्य भवद्भिश्च कथं कृतः॥
यूयं गतत्रपा देवा येषां राजा पुरंदरः॥ २९.७६ ॥

पुरा येन कृतं कर्म विदितं सर्वमेव तत्॥
प्रसुप्ताश्चार्द्दिता गर्भे जठरस्था निपातिताः॥ २९.७७ ॥

कश्यपस्यात्मजेनैव बहुरूपो हतोऽसुरः॥
नमुचिश्च हतो वीरो वृत्रश्चैव तथा हतः॥ २९.७८ ॥

कुमारं हंतुमोसौ देवेंद्रो बलघातकः॥
कुमारोऽयं मया देवा घातितोद्य न संशयः॥ २९.७९ ॥

पुरा हतास्त्वया विप्रा दक्षयज्ञे ह्यनेकशः॥
तत्कर्मणः फलं चाद्य वीरभद्र महामते॥
दर्शयिष्यामि ते वीर रणे रणविशारद॥ २९.८० ॥

इत्येवमुक्त्वा स तदा महात्मा दैत्याधिपो वीरवरः स एकः॥
जग्राह शक्तिं परमाद्भुतां च स तारको युद्धविदां वरिष्ठः॥ २९.८१ ॥

इति परमरुषभिभूतो दितितनयः परीवृतोऽसुरेंद्रैः॥
युधि मतिमकरोत्तदा निहंतुं समरविजयी स तारको बलीयान्॥ २९.८२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे सुरतारकासुरसंग्रामवर्णनंनामैकोनत्रिंशोऽध्यायः॥ २९ ॥ छ ॥

**॥लोमश उवाच॥**

वल्गमानं तमायांतं तारका सुरमोजसा॥
आजघान च वज्रेण इंद्रो मतिमतां वरः॥ ३०.१ ॥

तेन वज्रप्रहारेण तारको विह्वलीकृतः
पतितोऽपि समुत्थाय शक्त्या तं प्राहरद्द्विपम्॥ ३०.२ ॥

पुरंदरं गजस्थं हि अपातया भूतले॥
हाहाकारो महानासीत्पतिते च पुरंदरे॥ ३०.३ ॥

तारकेणापि तत्रैव यत्कृतं तच्छृणु प्रभो॥
पतितं च पदाक्रम्य हस्ताद्वज्रं प्रगृह्य च॥ ३०.४ ॥

हतं देवेंद्रमालोक्य तारको रिपुसूदनः॥
वज्रघातेन महताऽताडयत्तु पुरंदरम्॥ ३०.५ ॥

त्रिशूलमुद्यम्य महाबलस्तदा स वीरभद्रो रुषितः पुरंदरम्॥
संरक्षमाणो हि जघान तारकं शूलेन दैत्यं च महाप्रभेण॥ ३०.६ ॥

शूलप्रहाराभिहतो निपपात महीतले॥
पतितोऽपि महातेजास्तारकः पुनरुत्थितः॥ ३०.७ ॥

जघान परया शक्त्या वीरभद्रं तदोरसि॥
वीरभद्रोपि पतितः शक्तिघातेन तस्य वै॥ ३०.८ ॥

सगणाश्चैव देवाश्च गंधर्वोरगराक्षसाः॥
हाहाकारेण महता चुक्रुशुश्च पुनःपुनः॥ ३०.९ ॥

तदोत्थितः सहसा महाबलः स वीरभद्रो द्विषतां निहंता॥
त्रिशूलमुद्यम्य तडित्प्रकाशं जाज्वल्यमानं प्रभया निरंतरम्॥
स्वरोचिषा भासितदिग्वितानं सूयदुबिंबाग्न्युडुमण्डलाभम्॥ ३०.१० ॥

त्रिशूलेन तदा यावद्धंतुकामो महाबलः॥
निवारितः कुमारेण मावधीस्त्वं महामते॥ ३०.११ ॥

जगर्ज च महातेजाः कार्त्तिकेयो महाबलः॥ ३०.१२ ॥

तदा जयेत्यभिहितो भूतैराकाशसंस्थितैः॥
शक्त्या परमया वीरस्तारकं हंतुमुद्यतः॥ ३०.१३ ॥

तारकस्य कुमारस्य संग्रामस्तत्र दुःसहः॥
जातस्ततो महाघोरः सर्वभूतभयंकरः॥ ३०.१४ ॥

शक्तिहस्तौ च तौ वीरौ युयुधाते परस्परम्॥
शक्तिभ्यां भिन्नहस्तौ तौ महासाहससंयुतौ॥ ३०.१५ ॥

परस्परं वंचयंतौ सिंहाविव महाबलौ॥
वैतालिकीं समाश्रित्य तथा वै खेचरीं गतिम्॥ ३०.१६ ॥

पार्वतं मतमाश्रित्य शक्त्या शक्तिं निजघ्नतुः॥
एभिर्मतैर्महावीरौ चक्रतुर्युद्धमुत्तमम्॥ ३०.१७ ॥

अन्योन्यसाधकौ भूत्वा महाबलपराक्रमौ॥
जघ्नतुः शक्तिधाराभी रणे रणविशारदौ॥ ३०.१८ ॥

मूर्ध्नि कण्ठे तथा बाह्वोर्जान्वोश्चैव कटीतटे॥
वक्षस्युरसि पृष्ठे च चिच्छिदतुः परस्परम्॥ ३०.१९ ॥

तदा तौ युध्यमानौ च हन्तुकामौ महाबलौ॥
प्रेक्षका ह्यभवन्सर्वे देवगन्धर्वगुह्यकाः॥ ३०.२० ॥

ऊचुः परस्परं सर्वे कोऽस्मिन्युद्धे विजेष्यते॥
तदा नभोगता वाणी उवाच परिसांत्व्य वै॥ ३०.२१ ॥

तारकं हि सुराश्चाद्य कुमारोऽयं हनिष्यति॥
मा शोच्यतां सुराः सर्वैः सुखेन स्थीयतां दिवि॥ ३०.२२ ॥

श्रुत्वा तदा तां गगने समीरितां तदैव वाचं प्रमथैः परीतः॥
कुमारकस्तं प्रति हंतुकामो दैत्याधिपं तारकमुग्ररूपम्॥ ३०.२३ ॥

शक्त्या तया महाबाहुराजघान स्तनांतरे॥
तारकं ह्यसुरश्रेष्ठं कुमारो बलवत्तरः॥ ३०.२४ ॥

तं प्रहारमना दृत्य तारको दैत्यपुंगवः॥
कुमारं चाऽपि संक्रुद्धः स्वशक्त्या चाजघान वै॥ ३०.२५ ॥

तेन शक्तिप्रहारेण शांकरिर्मूर्च्छितोऽभवत्॥
मुहूर्ताच्चेतनां प्राप्तः स्तूयमानो महर्षिभिः॥ ३०.२६ ॥

यथा सिंहो मदोन्मत्तो हंतुकामस्तथैव च॥
कुमारस्तारकं दैत्यमाजघान प्रतापवान्॥ ३०.२७ ॥

एवं परस्परेणैव कुमारश्चैव तारकः॥
युयुधातेऽतिसंरब्धौ शक्तियुद्धपरायणौ॥ ३०.२८ ॥

अभ्यासपरमावास्तामन्योन्यविजिगीषया॥
तथा तौ युध्यमानौ च चित्ररूपौ तपस्विनौ॥ ३०.२९ ॥

धाराभिश्च अणीभीश्च सुप्रयुक्तौ च जघ्नतुः॥
अवलोकपराः सर्वे देवगन्धर्वकिन्नराः॥ ३०.३० ॥

विस्मयं परमं प्राप्ता नोचुः किंचन तस्य वै॥
न ववौ च तदावायुर्निष्प्रभोऽभूद्दिवाकरः॥ ३०.३१ ॥

हिमालयोऽथ मेरुश्च श्वेतकूटश्च दर्दुरः॥
मलयोऽथ महाशैलो मैनाको विंध्यपर्वतः॥ ३०.३२ ॥

लोकालोकौ महाशैलौ मानसोत्तरपर्वतः॥
कैलासो मन्दरो माल्यो गन्धमादन एव च॥ ३०.३३ ॥

उदयाद्रिर्महेंद्रश्च तथैवास्तगिरिर्महान्॥ ३०.३४ ॥

एते चान्ये च बहवः पर्वताश्च महाप्रभाः॥
स्नेहार्द्दितास्तदाजग्मुः कुमारं च परीप्सवः॥ ३०.३५ ॥

ततः स दृष्ट्वा तान्सर्वान्भयभीतांश्च शांकरिः॥
पर्वतान्गिरिजापुत्रो बभाषे प्रतिबोधयन्॥ ३०.३६ ॥

**॥कुमार उवाच॥**
मा खिद्यत महाभागा मा चिंता क्रियतां नगाः॥
घातयाम्यद्य पापिष्ठं सर्वेषामिह पश्यताम्॥ ३०.३७ ॥

एवं समाश्वास्य तदा मनस्वी तान्पर्वतान्देवगणैः समेतान्॥
प्रणम्य शंभुं मनसा हरिप्रियः स्वां मातरं चैव नतः कुमारः॥ ३०.३८ ॥

कार्त्तिकेयस्ततः शक्त्या निचकर्त रिपोः शिरः॥
तच्छिरो निपपातोर्व्यां तारकस्य च तत्क्षणात्॥
एवं स जयमापेदे कार्त्तिकेयो महाप्रभुः॥ ३०.३९ ॥

ददृशुस्तं सुरगणा ऋषयो गुह्यकाः खगाः॥
किंनराश्चारणाः सर्पास्तथा चैवाप्सरो गणाः॥ ३०.४० ॥

हर्षेण महताविष्टास्तुष्टुवुस्तं कुमारकम्॥
विद्याधर्यश्च ननृतुर्गायकाश्च जगुस्तदा॥ ३०.४१ ॥

एवं विजयमापन्नं दृष्ट्वा सर्वे मुदा युताः॥
ततो हर्षात्समागम्य स्वांकमारोप्य चात्मजम्॥ ३०.४२ ॥

परिष्वज्य तु गाढेन गिरिजापि तुतोष वै॥
स्वोत्संगे च समारोप्य कुमारं सूर्यवर्चसम्॥ ३०.४३ ॥

लालयामास तन्वंगी पार्वती रुचिरेक्षणा॥
ऋषीभिः सत्कृतः शंभुः पार्वत्या सहितस्तदा॥ ३०.४४ ॥

आर्यासनगता साध्वी शुशुभे मितभाषिणी॥
संस्तूयमाना मुनिभिः सिद्धचारणपन्नगैः॥ ३०.४५ ॥

नीराजिता तदा देवैः पार्वती शंभुना सह॥
कुमारेण सहैवाथ शोममाना तदा सती॥ ३०.४६ ॥

हिमालयस्तदागत्य पुत्रैश्च परिवारितः॥
मेर्वाद्यैः पर्वतैश्चैव स्तूयमानः परोऽभवत्॥ ३०.४७ ॥

तदा देवगणाः सर्व इन्द्राद्य ऋषिभिः सह॥
पुष्पवर्षेण महात ववर्षुरमितद्युतिम्॥
कुमारमग्रतः कृत्वा नीराजनपरा बभुः॥ ३०.४८ ॥

गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा॥
संस्तूयमानो विविधैः सूक्तैर्वेदविदां वरैः॥ ३०.४९ ॥

कुमारविजयंनाम चरित्रं परमाद्भुतम्॥
सर्वपापहरं दिव्यं सर्वकामप्रदं नृणाम्॥ ३०.५० ॥

ये कीर्त्तयंति शुचयोऽमितभाग्ययुक्ताश्चानंत्यरूपमजरामरमादधानाः॥
कौमारविक्रममहात्म्यमुदारमेतदानंददायकमनोर्थकरं नृणां हि॥ ३०.५१ ॥

यः पठेच्छृणुयाद्वापि कुमारस्य महात्मनः॥
चरितं तारकाख्यं च सर्वपापैः समुच्यते॥ ३०.५२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे तारकासुरवधपूर्वकं स्वामिकार्त्तिकेयविजयोत्सववर्णनं नाम त्रिंशोऽध्यायः॥ ३० ॥

**॥शोनक उवाच॥**

हत्वा तं तारकं संख्ये कुमारेण महात्मना॥
किं कृतं सुमहद्विप्र तत्सर्वं वक्तुमर्हसि॥ ३१.१ ॥

कुमारो ह्यपरः शंभुर्येन सर्वमिदं ततम्॥
तपसा तोषितः शंभुर्ददाति परमं पदम्॥ ३१.२ ॥

कुमारो दर्शनात्सद्यः सफलो हि नृणां सदा॥
ये पापिनो ह्यधर्म्मिष्ठाः श्वपचा अपि लोमश॥
दर्शनाद्धूतपापास्ते भवंत्येव न संशयः॥ ३१.३ ॥

शौनकस्य वचः श्रुत्वा उवाच चरितं तदा॥
व्यास शिष्यो महाप्रज्ञः कुमारस्य महात्मनः॥ ३१.४ ॥

**॥लोमश उवाच॥**

हताव तं तारकं संख्ये देवानामजयं ततः॥
अवध्यं च द्विजश्रेष्ठाः कुमारो जयमाप्तवान्॥ ३१.५ ॥

महिमा हि कुमारस्य सर्वशास्त्रेषु कथ्यते॥
वेदैश्च स्वागमैश्चापि पुराणैश्च तथैव च॥ ३१.६ ॥

तथोपनिषदैश्चैव मीमांसाद्वितयेन तु॥
एवंभूतः कुमारोयमशक्यो वर्णितुं द्विजाः॥ ३१.७ ॥

यो हि दर्शनमात्रेण पुनाति सकलं जगत्॥
त्रातारं भुवनस्यास्य निशम्य पितृराट्स्वयम्॥ ३१.८ ॥

ब्रह्माणं च पुरस्कृत्य विष्णुं चैव सवासवम्॥
स ययौ त्वरितेनैव शंकरं लोकशंकरम्॥
तृष्टाव प्रयतो भूत्वा दक्षिणाशापतिः स्वयम्॥ ३१.९ ॥

नमो भर्गाय देवाय देवानां पतये नमः॥
मृत्युंजयाय रुद्राय ईशानाय कपर्द्दिने॥ ३१.१० ॥

नीलकंठाय शर्वाय व्योमावयवरूपिणे॥
कालाय कालनाथाय कालरूपाय वै नमः॥ ३१.११ ॥

यमेन स्तूयमानो हि उवाच प्रभुरीश्वरः॥
किमर्थमागतोऽसि त्वं तत्सर्वं कथयस्व नः॥ ३१.१२ ॥

**॥यम उवाच॥**

श्रूयतां देवदेवेश वाक्य वाक्यविशारद॥

तपसा परमेणैव तुष्टिं प्राप्तोसि शंकर॥ ३१.१३ ॥

कर्मणा परमेणैव ब्रह्मा लोकपितामहः॥
तुष्टिमेति न संदेहो वराणां हि सदा प्रभुः॥ ३१.१४ ॥

तथा विष्णुर्हि भगवान्वेदवेद्यः सनातनः॥
यज्ञैरनेकैः संतुष्ट उपवासव्रतैस्तथा॥ ३१.१५ ॥

ददाति केवलं भावं येन कैवल्यमाप्नुयुः॥
नराः सर्वे मम मतं नान्यता हि वचो मम॥ ३१.१६ ॥

ददाति तुष्टो वै भोगं तथा स्वर्गादिसंपदः॥
सूर्यो नमस्ययाऽरोग्यं ददातीह न चान्यथा॥ ३१.१७ ॥

गणेशो हि महादेव अर्घ्यपाद्यादिचंदनैः॥
मंत्रावृत्त्या तथा शंभो निर्विघ्नं च करिष्यति॥ ३१.१८ ॥

तथान्ये लोकपाः सर्वे यथाशक्त्या फलप्रदाः॥
यज्ञाध्ययनदानाद्यैः परितुष्टाश्च शंकर॥ ३१.१९ ॥

महदाश्चर्य संभूतं सर्वेषां प्राणिनामिह॥
कृतं च तव पुत्रेण स्वर्गद्वारमपावृताम्॥ ३१.२० ॥

दर्शनाच्च कुमारस्य सर्वे स्वर्गौकसो नराः॥
पापिनोऽपि महादेव जाता नास्त्यत्र संशयः॥ ३१.२१ ॥

मया किं क्रियतां देव कार्याकार्यव्यवस्थितौ॥
ये सत्यशीलाः शांताश्च वदान्या निरवग्रहाः॥ ३१.२२ ॥

जितेंद्रिया अलुब्धाश्च कामरागविवर्जिताः॥
याज्ञिका धर्मनिष्ठाश्च वेदवेदांगपारगाः॥ ३१.२३ ॥

यां गतिं यांति वै शंभो सर्वे सुकृतिनोपि हि॥
तां गतिं दर्शनात्सर्वे श्वपचा अधमा अपि॥ ३१.२४ ॥

कुमारस्य च देवेश महदाश्चर्यकर्मणः॥
कार्त्तिक्यां कृत्तिकायोगसहितायां शिवस्य च॥ ३१.२५ ॥

शिवस्य तनयं दृष्ट्वा ते यांति स्वकुलैः सह॥
कोटिभिर्बहुभिश्चैव मत्स्थानं परिमुच्य वै॥ ३१.२६ ॥

कुमारदर्शनात्सर्वे श्वपचा अपि यांति वै॥

सद्गतिं त्वरितेनैव किं क्रियेत मयाधुना॥ ३१.२७ ॥

यमस्य वचनं श्रुत्वा शंकरो वाक्यमब्रवीत्॥ ३१.२८ ॥

**॥शंकर उवाच॥**
येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम्॥
विशुद्धभावो भो धर्म्म तेषां मनसि वर्त्तते॥ ३१.२९ ॥

सत्तीर्थगमनायैव दर्शनार्थं सतामिह॥
वांछा च महती तेषां जायते पूर्वकारिता॥ ३१.३० ॥

बहूनां जन्मनामंते मयि भावोऽनुवर्त्तते॥
प्राणिनां सर्वभावेन जन्माभ्यासेनभो यम॥ ३१.३१ ॥

तस्मात्सुकृतिनः सर्वे येषां भावोऽनुवर्त्ते॥
जन्मजन्मानुवृत्तानां विस्मयं नैव कारयेत्॥ ३१.३२ ॥

स्त्रीबालशूद्राः श्वपचाधमाश्च प्राग्जन्मसंस्कारवशाद्धि धर्म्म॥
योनिं पापिषु वर्त्तमानास्तथापि शुद्धा मनुजा भवंति॥ ३१.३३ ॥

तथा सितेन मनसा च भवंति सर्वे सर्वेषु चैव विषयेषु भवंति तज्ज्ञाः॥
दैवेन पूर्वचरितेन भवंति सर्वे सुराश्चेंद्रादयो लोकपालाः प्राक्तनेन॥ ३१.३४ ॥

जाता ह्यमी भूतगणाश्च सर्वे ह्यमी ऋषयो ह्यमी देवताश्च॥ ३१.३५ ॥

विस्मयो नैव कर्त्तव्यस्त्वया वापि कुमारके॥
कुमारदर्शने चैव धर्मराज निबोध मे॥ ३१.३६ ॥

वचनं कर्मसंयुक्तं सर्वेषां फलदायकम्॥
सर्वतीर्थानि यज्ञाश्च दानानि विविधानि च॥
कार्याणि मनःशुद्ध्यर्थं नात्र कार्या विचारणा॥ ३१.३७ ॥

मनसा भावितो ह्यात्मा आत्मनात्मानमेव च॥
आत्मा अहं च सर्वेषआं प्राणिनां हि व्यवस्थितः॥ ३१.३८ ॥

अहं सदा भावयुक्त आत्मसंस्थो निरंतरः॥
जंगमाजंगमानां च सत्यं प्रति वदामि ते॥ ३१.३९ ॥

द्वंद्वातीतो निर्विकल्पो हि साक्षात्स्वस्थो नित्यो नित्ययुक्तो निरीहः॥
कूटस्थो वै कल्पभेदप्रवादैर्बहिष्कृतो बोधबोध्यो ह्यनन्तः॥ ३१.४० ॥

विस्मृत्य चैनं स्वात्मानं केवलं बोधलक्षणम्॥

संसारिणो हि दृश्यंते समस्ता जीवराशयः॥ ३१.४१ ॥

अहं ब्रह्मा च विष्णुश्च त्रयोऽमी गुणकारिणः॥
सृष्टिपालनसंहारकारका नान्यथा भवेत्॥ ३१.४२ ॥

अहंकारवृतेनैव कर्मणा कारितावयम्॥
यूयं च सर्वे विबुधा मनुष्याश्च खगादयः॥ ३१.४३ ॥

पश्वादयः पृथग्भूतास्तथान्ये बहवो ह्यमी॥
पृथक्पृथक्समीचीना गुणवतश्च संसृतौ॥ ३१.४४ ॥

पतिता मृगतृष्णायां मायया च वशीकृताः॥
वयं सर्वे च विबुधाः प्राज्ञाः पंडितमानिनः॥ ३१.४५ ॥

परस्परं दूषयंतो मिथ्यावादरताः खलाः॥ ३१.४६ ॥

त्रैगुणा भवसंपन्ना अतत्तवज्ञाश्च रागिणः॥
कामक्रोधभयद्वेषमदमात्सर्यसंयुताः॥ ३१.४७ ॥

परस्परं दूषयंतो ह्यतत्त्वज्ञा बहिर्मुखाः॥
तस्मादेवं विदित्वाथ असत्यं गुणभेदतः॥ ३१.४८ ॥

गुणातीते च वस्त्वर्थे परमार्थैकदर्शनम्॥ ३१.४९ ॥

यस्मिन्भेदो ह्यभेदं च यस्मिन्रागो विरागताम्॥
क्रोधो ह्यक्रोधतां याति तद्वाम परमं शृणु॥ ३१.५० ॥

न तद्भासयते शब्दः कृतकत्वाद्यथा घटः॥
शब्दो हि जायते धर्म्मः प्रवृत्तिपरमो यतः॥ ३१.५१ ॥

प्रवृत्तिश्च निवृत्तिश्च तथा द्वंद्वानि सर्वशः॥
विलयं यांति यत्रैव तत्स्थानं शाश्वतं मतम्॥ ३१.५२ ॥

निरंतरं निर्गुणं ज्ञप्तिमात्रं निरंजनं निर्विकाशं निरीहम्॥
सत्तामात्रं ज्ञानगम्यं स्वसिद्धं स्वयंप्रभं सुप्रभं बोधगम्यम्॥ ३१.५३ ॥

एतज्ज्ञानं ज्ञानविदो वदंति सर्वात्मभावेन निरीक्षयंति॥
सर्वातीतं ज्ञानगम्यं विदित्वा येन स्वस्थाः समबुद्ध्या चरंति॥ ३१.५४ ॥

अतीत्य संसारमनादिमूलं मायामयं मायया दुर्विचार्यम्॥
मायां त्यक्त्वा निर्ममा वीतरागा गच्छंति ते प्रेतराणिनर्विकल्पम्॥ ३१.५५ ॥

संसृतिः कल्पनामूलं कल्पना ह्यमृतोपमा॥

यैः कल्पना परित्यक्ता ते यांति परमां गतिम्॥ ३१.५६ ॥

शुक्त्यां रजतबुद्धिश्च रज्जुबुद्धिर्यर्थोरणे॥
मरीचौ जलबुद्धिश्च मिथ्या मिथ्यैव नान्यथा॥ ३१.५७ ॥

सिद्धिः स्वच्छंदवर्त्तित्वं पारतंत्र्यं हि वै मृषा॥
बद्धो हि परतंत्राख्यो मुक्तः स्वातंत्र्यभावनः॥ ३१.५८ ॥

एको ह्यात्मा विदित्वाथ निर्ममो निरवग्रहः॥
कुतस्तेषां बंधनं च यथाखे पुष्पमेव च॥ ३१.५९ ॥

शशविषाणमेवैतज्ज्ञानं संसार एव च॥
किं कार्यं बहुनोक्तेन वचसा निष्फलेन हि॥ ३१.६० ॥

ममतां च निराकृत्य प्राप्तुकामाः परं पदम्॥
ज्ञानिनस्ते हि विद्वांसो वीतरागा जितेंद्रियाः॥ ३१.६१ ॥

यैस्त्यक्तो ममताभावो लोभकोपौ निराकृतौ॥
ते यांति परमं स्थानं कामक्रोधविवर्जिताः॥ ३१.६२ ॥

यावत्कामश्च लोभश्च रागद्वेषौ व्यवस्थितौ॥
नाप्नुवंति च तां सिद्धिं शब्दमात्रैकबोधकाः॥ ३१.६३ ॥

**॥यम उवाच॥**
शब्दाच्छब्दः प्रवर्त्तेत निःशब्दं ज्ञानमेव च॥
अनित्यत्वं हि शब्दस्य कथं प्रोक्तं त्वया प्रभो॥ ३१.६४ ॥

अक्षरं ब्रह्मपरमं शब्दो वै ह्यरात्मकः॥
तस्माच्छब्दस्त्वया प्रोक्तो निरीक्षक इति श्रुतम्॥ ३१.६५ ॥

प्रतिपाद्यं हि यत्किंचिच्छब्देनैव विना कथम्॥
तत्सर्वं कथ्यतां शंभो कार्याकार्यव्यवस्थितौ॥ ३१.६६ ॥

**॥शंकर उवाच॥**
श्रृणुष्वावहितो भूत्वा परमार्थयुतं वचः॥
यस्य श्रवणमात्रेण ज्ञातव्यं नावशिष्यते॥ ३१.६७ ॥

ज्ञानप्रवादिनः सर्व ऋषयो वीतकल्मषाः॥
ज्ञानाभ्यासेन वर्त्तंते ज्ञानं ज्ञानविदो विदुः॥ ३१.६८ ॥

ज्ञानं ज्ञेयं ज्ञानगम्यं ज्ञात्वा च परिगीयते॥
कथं केन च ज्ञातव्यं किं तद्वक्तुं विवक्षितम्॥ ३१.६९ ॥

एतत्सर्वं समासेन कथयामि निबोध मे॥
एको ह्यनेकधा चैव दृश्यते भेदभावनः॥ ३१.७० ॥

यथा भ्रमरिकादृष्टा भ्रम्यते च मही यम॥
तथात्मा भेदबुद्ध्या च प्रतिभाति ह्यनेकधा॥ ३१.७१ ॥

तस्माद्विमृश्य तेनैव ज्ञातव्यः श्रवणेन च॥
मंतव्यः सुप्रयोगेण मननेन विशेषतः॥ ३१.७२ ॥

निर्द्धार्य चात्मनात्मानं सुखं बंधात्प्रमुच्यते॥
मायाजालमिदं सर्वं जगदेतच्चाराचरम्॥ ३१.७३ ॥

मायामयोऽयं संसारो ममतालक्षणो महान्॥
ममतां च बहिः कृत्वा सुखं बंधात्प्रमुच्यते॥ ३१.७४ ॥

कोऽहं कस्त्वं कुतश्चान्ये महामायावलंबिनः॥
अजागलस्तनस्येव प्रपंचोऽयं निरर्थकः॥ ३१.७५ ॥

निष्फलोऽयं निराभासो निःसारो धूमडंबरः॥
तस्मात्सर्वप्रयत्नेन आत्मानं स्मर वै यम॥ ३१.७६ ॥

**॥लोमश उवाच॥**
एवं प्रचोदितस्तेन शंभुना प्रेतराट्स्वयम्॥
बुद्धो भूत्वा यमः साक्षादात्मभूतोऽभवत्तदा॥ ३१.७७ ॥

कर्म्मणां हि च सर्वेषां शास्ता कर्मानुसारतः॥
बभूव डंबरो नृणां भूतानां च समाहितः॥ ३१.७८ ॥

**॥ऋषय ऊचुः॥**
हत्वा तु तारकं युद्धे कुमारेण महात्मना॥
अत ऊर्ध्वं कथ्यतां भोः किं कृतं महदद्भुतम्॥ ३१.७९ ॥

**॥सूत उवाच॥**
हते तु तारके दैत्ये हिमवन्प्रमुखाद्रयः॥
कार्त्तिकेयं समागत्य गीर्भी रम्याभिरैडयन्॥ ३१.८० ॥

**॥गिरय ऊचुः॥**
नमः कल्याणरूपाय नमस्ते विश्वमंगल॥
विश्वबंधो नमस्तेऽस्तु नमस्ते विश्वभावन॥ ३१.८१ ॥

वरीष्ठाः श्वपचा येन कृता वै दर्शनात्त्वया॥

त्वां नमामो जगद्बंधुं त्वां वयं शरणागताः॥ ३१.८२ ॥

नमस्ते पार्वतीपुत्र शंकरात्मज ते नमः॥
नमस्ते कृत्तिकासूनो अग्निभूत नमोस्तु ते॥ ३१.८३ ॥

नमोस्तु ते देववरैः सुपूज्य नमोऽस्तु ते ज्ञानविदां वरिष्ठ॥
नमोऽस्तु ते देववर प्रसीद शरण्य सर्वार्तिविनाशदक्ष॥ ३१.८४ ॥

एवं स्तुतो गिरिभिः कार्त्तिकेयो ह्युमासुतः॥
तान्गिरीन्सुप्रसन्नात्मा वरं दातुं समुत्सुकः॥ ३१.८५ ॥

**॥कार्त्तिकेय उवाच॥**
भोभो गिरिवरा यूयं श्रृणुध्वं मद्वचोऽधुना॥
कर्मिभिर्ज्ञानिभिश्चैव सेव्यमाना भविष्यथ॥ ३१.८६ ॥

भवत्स्वेव हि वर्त्तते दृषदो यत्नसेविताः॥
पुनंतु विश्चं वचनान्मम ता नात्र संशयः॥ ३१.८७ ॥

पर्वतीयानि तीर्थानि भविष्यंति न चान्यथा॥
शिवालयानि दिव्यानि दिव्यान्यायतनानि च॥ ३१.८८ ॥

अयनानि विचित्राणि शोभनानि महांति च॥
भविष्यंति न संदेहः पर्वता वचनान्मम॥ ३१.८९ ॥

योऽयं मातामहो मेऽद्य हिमवान्पर्वतोत्तमः॥
तपस्विनां महाभागः फलदो हि भविष्यति॥ ३१.९० ॥

मेरुश्च गिरिराजोऽयमाश्रयो हि भविष्यति॥
लोकालोको गिरिवर उदयाद्रिर्महायशः॥ ३१.९१ ॥

लिंगरूपो हि भगवान्भविष्यति न चान्यथा॥
श्रीशैलो हि महेंद्रश्च तथा सह्याचलोगिरिः॥ ३१.९२ ॥

माल्यवान्मलयो विन्ध्यस्तथासौ गंधमादनः॥
श्वेतकूटस्त्रिकूटो हि तथा दर्दुरपर्वतः॥ ३१.९३ ॥

एते चान्ये च बहवः पर्वता लिंगरूपिणः॥
मम वाक्याद्भविष्यंति पापक्षयकरा ह्यमी॥ ३१.९४ ॥

एवं वरं ददौ तेभ्यः पर्वतेभ्यश्च शांकरिः॥
ततो नंदीह्युवाचाथ सर्वागमपुरस्कृतम्॥ ३१.९५ ॥

**॥नंद्युवाच॥**
त्वया कृता हि गिरयो लिंगरूपिण एव ते॥
शिवालयाः कथं नाथ पूज्याः स्युःसर्वदैवतैः॥ ३१.९६ ॥

**॥कुमार उवाच॥**
लिंगं शिवालयं ज्ञेयं देवदेवस्य शूलिनः॥
सर्वैर्नृभिर्दैवतैश्च ब्रह्मादिभिरतांद्रितैः॥ ३१.९७ ॥

नीलं मुक्ता प्रवालं च वैडूर्यं चंद्रमेव च॥
गोमेदं पद्मरागं च मारतं कांचनं तथा॥ ३१.९८ ॥

राजतं ताम्रमारं च तथा नागमयं परम्॥
रत्नधातुमयान्येव लिंगानि कथितानि ते॥ ३१.९९ ॥

पवित्राण्येव पूज्यानि सर्वकामप्रदानि च॥
एतेषामपि सर्वेषां काश्मीरं हि विशिष्यते॥ ३१.१०० ॥

ऐहिकामुष्मिकं सर्वं पूजाकर्तुः प्रयच्छति॥ ३१.१०१ ॥

**॥नंद्युवाच॥**
लिंगानामपि पूज्यं स्याद्बाणलिंगं त्वया कथम्॥
कथितं चोत्तमत्वेन तत्सर्वं वदसुव्रत॥ ३१.१०२ ॥

**॥कुमार उवाच॥**
रेवायां तोयमध्ये च दृश्यंते दृषदो हि याः॥
शिवप्रसादात्तास्तु स्युर्लिंगरूपा न चान्यथा॥ ३१.१०३ ॥

श्लक्ष्णमूलाश्च कर्तव्याः पिंडिकोपरि संस्थिताः॥
पूजनीयाः प्रयत्नेन शिवदीक्षायुतेन हि॥ ३१.१०४ ॥

पिंडीयुक्तं च शास्त्रेण विधिना च यजेच्छिवम्॥
वरदो हि जगन्नाथः पूजकस्य न चान्यथा॥ ३१.१०५ ॥

पंचाक्षरी यस्य मुखे स्थिता सदा चेतोनिवृत्तिः शिवचिंतने च॥
भूतेषुः साम्यं परिवादमूकता षंढत्वमेव परयोषितासु॥ ३१.१०६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे कार्त्तिकेयप्रोक्तशिवलिंगमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः॥ ३१ ॥

**॥लोमश उवाच॥**
एवं ते शिवधर्माश्च कथितास्तेन वै द्विजाः॥
सविशेषाः पाशुपताः प्रसादाच्चैव विस्तरात्॥ ३२.१ ॥

अनेकागमसंवीता यथातत्त्वमुदाहृताः॥
कापालिकानां भेदाश्च प्रोक्ता व्याससमासतः॥ ३२.२ ॥

धर्मा नानाविधाः प्रोक्ता नंदिनं प्रति वै तदा॥ ३२.३ ॥

**॥ऋषय ऊचुः॥**
श्रुतं कुमारचरितमविशेषं सुमंगलम्॥
अस्माभिश्च महाभागकिंचित्पृच्छामहे वयम्॥ ३२.४ ॥

श्वेतस्य राजसिंहस्य चरितं परमाद्भुतम्॥
येन संतोषितो रुद्रः शिवो भक्त्याऽप्रमेयया॥ ३२.५ ॥

ते भक्तास्ते महात्मानो ज्ञानिनस्ते च कर्मिणः॥
येऽर्चयंति महाशंभुं देवं भक्त्या समावृताः॥ ३२.६ ॥

तस्मात्पृच्छामहे सर्वे चरितं शंकरस्य च॥
व्यासप्रसादात्सर्वं यज्जानासि त्वं न चापरः॥ ३२.७ ॥

निशम्य वचनं तेषां मुनीनां लोमशोऽब्रवीत्॥ ३२.८ ॥

**॥लोमश उवाच॥**
आकर्ण्यतां महाभागाश्चरितं परमाद्भुतम्॥
तस्य राज्ञो हि भजतो राजभोगांश्च सर्वशः॥
मतिर्द्धिर्मे समुत्पन्ना श्वेतस्य च महात्मनः॥ ३२.९ ॥

पृथिवीं पालयामास प्रजा धर्मेण पालयन्॥
ब्रह्मण्यः सत्यवाक्छूरः शिवभक्तो निरंतरम्॥ ३२.१० ॥

राज्यं शशासाथ स शक्तितो नृपो भक्त्या तदा चैव समर्चयत्सदा॥
शंभुं परेशं परमं परात्परं शांतं पुराणं परमात्मरूपम्॥ ३२.११ ॥

आयुस्तस्य परिक्षीणमर्चतः परमेश्वरम्॥
अथैतच्च महाभाग चरितं श्रूयतां मम॥ ३२.१२ ॥

वाणी शिवकथायुक्ता परमाश्चर्यसंयुता॥
न वाऽऽधयो हि तस्यैव व्याधयो हि महीपतेः॥ ३२.१३ ॥

तस्य राज्ञो न बाधंते तथा चोपद्रवास्त्वमी॥
निरीतिको जनो ह्यासीन्निरुपद्रव एव च॥ ३२.१४ ॥

अकृष्टपच्यौषधयस्तस्य राज्ञोऽभवन्भुवि॥
तपस्विनो ब्राह्मणाश्च वर्णाश्रमयुता जनाः॥ ३२.१५ ॥

न पुत्रमरणे दुःखं नापमानं न मारकाः॥
न दारिद्र्यं च ते सर्वे प्राप्नुवन्ति कदाचन॥ ३२.१६ ॥

एवं बहुतरः कालस्तस्य राज्ञो महात्मनः॥
गतो हि सफलो विप्राः शिवपूजारतस्य वै॥ ३२.१७ ॥

एकदा पूजमानं तं शंकरं परमार्थदम्॥
यमो हि प्रेषयामास यमदूतान्नृपं प्रति॥ ३२.१८ ॥

वचनाच्चित्रगुप्तस्य श्वेत आनीयतामिति॥
तथेति मत्वा ते दूता आगताः शिवमंदिरम्॥ ३२.१९ ॥

राजानं नेतुकामास्ते पाशहस्ता महाभयाः॥
यावत्समागता याम्या राजानं ददृशुस्त्वरात्॥ ३२.२० ॥

न चक्रिरे तदा दूता आज्ञां धर्मस्य चैव हि॥
ज्ञात्वा सर्वं यमश्चैव आगतः स्वयमेव हि॥ ३२.२१ ॥

उद्धृत्य दंडं सहसा नेतुकामस्तदा नृपम्॥
ददर्श च महाबाहुः शिवध्यानपरायणम्॥ ३२.२२ ॥

शिवभक्तियुतं शांतं केवलं ज्ञानसंयुतम्॥
यमोऽपि दृष्ट्वा राजानं परं क्षोभमुपागमत्॥ ३२.२३ ॥

चित्रस्थो ह्यभवत्स्द्यः प्रेतराजोऽतिविह्वलः॥
कालरूपश्च यो नित्यं प्रजानां क्षयकारकः॥ ३२.२४ ॥

आगतस्तत्क्षणादेव नृपं प्रति रुषान्वितः॥
खड्गेन सितधारेण चर्मणा परमेम हि॥ ३२.२५ ॥

तावत्तं ददृशे सोऽपि स्थितं द्वारि भयावृतम्॥
उवाच कालो हि तदा यमं वैवस्वतं प्रति॥ ३२.२६ ॥

कस्मात्त्वया धरमराज नो नीतोऽयं नृपो महान्॥
यम दूतसहायश्च भीतवत्प्रतिभासि मे॥ ३२.२७ ॥

कालात्ययो न कर्त्तव्यो वचनान्मम सुव्रत॥
कालेनोक्तस्तदा धर्म उवाच प्रस्तुतं वचः॥ ३२.२८ ॥

तवाज्ञां च करिष्यामि नात्र कार्या विचारणा॥
असौ हुरत्ययोऽस्माकं शिवभक्तो निरंतरम्॥ ३२.२९ ॥

चित्रस्था इव तिष्ठाम भयाद्देवस्य शूलिनः॥
यमस्य वचनं श्रुत्वा कालः क्रोधसमन्वितः॥
राजानं हंतुमारेभे त्वरितः खड्गमाददे॥ ३२.३० ॥

त्रिगुणाष्टाक्रसंकाशं प्रविवेश शिवालयम्॥
यावत्कोपेन महता तावद्दृष्टः पिनाकिना॥
स्वभक्तं हंतुकामोसौ श्वेतराजानमुत्तमम्॥ ३२.३१ ॥

ध्यानस्थितं चात्मनि तं विशुद्धज्ञानप्रदीपेन विशुद्धचित्तम्॥
आत्मानमात्मात्मतया निरंतरं स्वयंप्रकाशं परमं पुरस्तात्॥ ३२.३२ ॥

एवंविधं तं प्रसमीक्ष्य कालं संचिंत्यमानं मनसाऽचलेन॥
शैवं पदं यत्परमार्थरूपं कैवल्यसायुज्यकरं स्वरूपतः॥ ३२.३३ ॥

सदाशिवेन दृष्टोऽसौ कालः कालांतकेन च॥
उच्छृंखलः खलो दर्पाद्विशमानो निजांतिके॥ ३२.३४ ॥

नंदिकेश्वरमध्यस्थो यावद्दृष्टो निजांतिके॥
शिवेन जगदीशेन भक्तवत्सलबंधुना॥ ३२.३५ ॥

निरीक्षितस्तृतीयेन चक्षुषा परमेष्ठिना॥
स्वभक्तं रक्षमाणेन भस्मसादभवत्क्षणात्॥ ३२.३६ ॥

ददाह तं कालमनेकवर्णं व्यात्ताननं भीमबहूग्ररूपम्॥
ज्वालावलीभिः परिदह्यमानमतिप्रचंडं भुवनैकभक्षणम्॥ ३२.३७ ॥

ददर्शिरे देवगणाः समेताः सयक्षगंधर्वपिशाचगुह्यकाः॥
सिद्धाप्सरःसर्वखगाश्च पन्नगाः पतत्रिणो लोकपालास्तथैव॥ ३२.३८ ॥

ज्वालामालावृतं कालमीश्वरस्याग्रतः स्थितम्॥
लब्धसंज्ञस्तदा राजा कालं स्वं हंतुमागतम्॥ ३२.३९ ॥

पुनः पुनर्द्ददर्शाथ दह्यमानं कृशानुना॥
प्रार्थयामास स व्यग्रो रुद्रं कालाग्निसन्निभम्॥ ३२.४० ॥

**॥राजोवाच॥**
नमो रुद्राय शांताय स्वज्योत्स्नायात्मवेधसे॥
निरंतराय सूक्ष्माय ज्योतिषां पतये नमः॥ ३२.४१ ॥

त्राता त्वं हि जगन्नाथ पिता माता सुहृत्सखा॥
त्वमेव बंधुः स्वजनो लोकानां प्रभुरीश्वरः॥ ३२.४२ ॥

किं कृतं हि त्वया शंभो कोऽसौ दग्धो ममाग्रतः॥
न जानामि च किं जातं कृतं केन महत्तरम्॥ ३२.४३ ॥

एवं प्रार्थयतस्तस्य श्रुत्वा च परिदेवनम्॥
उवाच शंकरो वाक्यं बोधयन्निव तं नृपम्॥ ३२.४४ ॥

**॥रुद्र उवाच॥**
मया दग्धो ह्ययं कालस्तवार्थे च तवाग्रतः॥
दह्यमानो हि दृष्टस्ते ज्वाला मालाकुलो महान्॥ ३२.४५ ॥

एवमुक्तस्तदा तेन शंभुना राजसत्तमः॥
उवाच प्रश्रितो भूत्वा वचनं शिवमग्रतः॥ ३२.४६ ॥

किमनेन कृतं शंभो अकृत्यं वद तत्त्वतः॥
य इमां प्राप्तितोऽवस्थां प्राणात्ययकरीं भव॥ ३२.४७ ॥

एवं विज्ञापितस्तेन ह्युवाच परमेश्वरः॥
भक्षकोऽयं महाराज सर्वेषां प्राणिनामिह॥ ३२.४८ ॥

भक्षणार्थं तव विभो सोऽयं क्रूरोऽधुनाऽऽगतः॥
ममांतिकं महाराज तस्माद्दग्धो मया विभो॥ ३२.४९ ॥

बहूनां क्षेममन्विच्छंस्तवार्थेऽन्हं विशेषतः॥ ३२.५० ॥

ये पापिनो ह्यधर्मिष्ठा लोकसंहारकारकाः॥
पाषंडवादसंयुक्ता वध्यास्ते मम चैव हि॥
वाक्यं निशम्य रुद्रस्य श्वेतो वचनमब्रवीत्॥ ३२.५१ ॥

कालेनैव हि लोकोऽयं पुण्यमाचरते सदा॥
धर्मनिष्ठाश्च केचित्तु भक्त्या परमया युताः॥ ३२.५२ ॥

उपासनारताः केचिज्ज्ञानिनो हि तथा परे॥
केचिदध्यात्मसंयुक्ताश्चान्ये मुक्ताश्च केचन॥ ३२.५३ ॥

कालो हि हर्ता च चराचराणां तथा ह्यसौ पालकोऽप्यद्वितीयः॥
स स्रष्टा वै प्राणिनां प्राणभूतस्तस्मादेनं जीवयस्वाशु भूयः॥ ३२.५४ ॥

यदि सृष्टिपरोऽसि त्वं कालं जीवय सत्वरम्॥
यदि संहारभूतोऽसि सर्वेषां प्राणिनामिह॥ ३२.५५ ॥

तर्ह्येवं कुरु शंभो त्वं कालस्य च महात्मनः॥
विना कालेन यत्किंचिद्भविष्यति न शंकर॥ ३२.५६ ॥

इति विज्ञापितस्तेन राज्ञा शंभुः प्रतापिना॥
चकार वचनं तस्य भक्तस्य च चिकीर्षितम्॥ ३२.५७ ॥

शंभुः प्रहस्याथ तदा महेशः संजीवयामास पिनाकपाणिः॥
चकार रूपं च यथा पुरासीदालिंगतोसौ यमदूतमध्ये॥ ३२.५८ ॥

उपस्थितोऽसौ त्वथ लज्जमानस्तुष्टाव देवं वृषभध्वजं तम्॥
नत्वा पुरःस्थाग्निमयं हि कालः सविस्मयो वाक्यमिदं बभाषे॥ ३२.५९ ॥

**॥काल उवाच॥**
कालांतक त्रिपुरेश त्रिपुरांतकर प्रभो॥
मदनो हि त्वया देव कृतोऽनंगो जगत्पते॥ ३२.६० ॥

दक्षयज्ञविनाशश्च कृतो हि परमाद्भुतः॥
कालकूटं दुःप्रसहं सर्वेषां क्षयकृन्महत्॥ ३२.६१ ॥

ग्रसितं तत्त्वया शंभो अन्येषामपि दुर्द्धरम्॥
लिंगरूपेण महता व्याप्तमासीज्जगत्त्रयम्॥ ३२.६२ ॥

लयनाल्लिंगमित्युक्तं सर्वैरपि सुरा सुरैः॥
यस्यांतं न विदुर्द्देवा ब्रह्मविष्णुपुरोगमाः॥ ३२.६३ ॥

लिंगस्य देवदेवस्य महिमानं परस्य च॥
नमस्ते परमेशाय नमस्ते विश्वमंगल॥
नमस्ते शितिकण्ठाय नमस्तस्मै कपर्दिने॥ ३२.६४ ॥

नमोनमः कारणकारणाय ते नमोनमो मंगलमंगलात्मने॥
ज्ञानात्मने ज्ञानविदां मनीषिणां त्वमादिदेवोऽसि पुमान्पुराणः॥ ३२.६५ ॥

त्वमेव सर्वं जगदेवबंधो वेदांतवेद्योऽसि महानुभावः॥
महानुभावैः परिकीर्त्तनीयस्त्वमेव विश्वेश्वर विश्वमान्यः॥ ३२.६६ ॥

त्वं पासि लुंपसि जगत्त्रितयं महेश स्रष्टासि भूतपतिरेव न कश्चिदन्यः॥ ३२.६७ ॥

इति स्तुतस्तदा तेन कालेन जगदीश्वरः॥
उवाच कालो राजानं श्वेतं संबोधयन्निव॥ ३२.६८ ॥

**॥काल उवाच॥**
मनुष्यलोके सकले नान्यस्त्वत्तो हि विद्यते॥
येन त्वया जितो देवो ह्यजेयो भुवनत्रये॥ ३२.६९ ॥

मया हतमिदं विश्वं जगदेतच्चराचरम्॥
जेताहं सर्वदेवानां सर्वेषां दुरतिक्रमः॥ ३२.७० ॥

स हि ते चानुगो जातो महाराज प्रयच्छ मे॥
अभयं देवदेवाच्च शूलिनः परमेष्ठिनः॥ ३२.७१ ॥

एवमुक्तस्तदा तेन श्वेतः कालेन चैव हि॥
उवाच प्रहसन्वाचा मेघनादगभीरया॥ ३२.७२ ॥

**॥राजोवाच॥**
शिवस्य परमं रूपं त्वमेको नास्ति संशयः॥
कालस्त्वमसि भूतानां स्थितिसंहाररूपवान्॥ ३२.७३ ॥

तस्मात्पूज्यतमोऽसि त्वं सर्वेषां च नियामकः॥
त्वद्भयात्कृतिनः सर्वे शरणं परमेश्वरम्॥
व्रजंति विविधैर्भावैरात्मलक्षणतत्पराः॥ ३२.७४ ॥

**॥सुत उवाच॥**
तेनैवं रक्षिततः कालो राज्ञा परमधर्मिणा॥
शिवप्रसादमात्रेण लब्धसंज्ञो बभूवह॥ ३२.७५ ॥

तदा यमेन स्तवितो मृत्युना यमदूतकैः॥
शिवं प्रणम्य संस्तुत्य श्वेतं राजानमेव च॥
ययौ स्वमालयं विप्रा मेने स्वं जनितं पुनः॥ ३२.७६ ॥

मायया सह पत्न्या च शिवस्य चरितं महत्॥
अनुसंस्मृत्य संस्मृत्य विस्मयं परमं ययौ॥ ३२.७७ ॥

कथयामास सर्वेषां दूतानां स्वयमेव हि॥
आकर्ण्यतां मम वचो हे दूतास्त्वरितेन हि॥ ३२.७८ ॥

कर्त्तव्यं च प्रयत्नेन नान्यथा मम भाषितम्॥ ३२.७९ ॥

**॥काल उवाच॥**
ये त्रिपुण्ड्रंधारयंति तथा ये वै जटाधराः॥
ये रुद्राक्षधराश्चैव तथा ये शिवनामिनः॥ ३२.८० ॥

उपजीवनहेतोश्च भिया ये ह्यपि मानवाः॥
पापिनोऽपि दुराचाराः शिववेषधरा ह्यमी॥ ३२.८१ ॥

नानेतव्या भवद्भिश्च मम लोकं कदाचन॥
वर्ज्यास्ते हि प्रयत्नेन पापिनोऽपि सदैव हि॥ ३२.८२ ॥

अन्येषां का कथा दूता येऽर्चयंति सदाशिवम्॥
भक्त्या परमया शंभुं रुद्रास्ते नात्र संशयः॥ ३२.८३ ॥

रुद्राक्षमेकं शिरसा बिभर्ति यस्तथा त्रिपुंड्रं च ललाटमध्यके॥
पंचाक्षरीं ये प्रजपंति साधवः पूज्य भवद्भिश्च न चान्यथा क्वचित्॥ ३२.८४ ॥

यस्मिन्राष्ट्रोऽथ वा देशे ग्रामे चापि विचक्षणः॥
शिवभक्तो न दृश्येत स्मशानात्तु विशिष्यते॥

तद्राष्ट्रं देशमित्याहुः सत्यं प्रतिवदामि वः॥ ३२.८५ ॥

यस्मिन्न संति नित्यं हि शिवभक्तिसमन्विताः॥
तद्ग्रमस्था जनाः सर्वे शासनीया न संशयः॥ ३२.८६ ॥

एवमाज्ञापयामास यमोऽपि निजकिंकरान्॥
तथेति मत्वा ते सर्वे तूष्णी मासन्सुविस्मिताः॥ ३२.८७ ॥

एवंविधोऽयं भुवनैकभर्ता सदाशिवो लोकगुरुः स एकः॥
दाता प्रहर्ता निजभावयुक्तः सनातनोऽयं जगदेकबंधुः॥ ३२.८८ ॥

दग्ध्वा कालं महादेवो निर्भयं च ददौ विभुः॥
श्वेतस्य राजराजस्य महीपालवरस्य च॥ ३२.८९ ॥

तदा निर्भयमापन्नः श्वेतराजो महामनाः॥
भक्त्या च परया मुक्तो बभूव कृतनिश्चयः॥ ३२.९० ॥

तदा देवैः पूज्यमान ऋषिभिः पन्नगैस्तथा॥
श्वतो राजन्यवर्योऽसौ शिवसायुज्यमाप्तवान्॥ ३२.९१ ॥

एवं भक्तिपराणां च महेशे च जगद्गुरौ॥
सिद्धिः करतले तेषां सत्यं प्रतिवदामि वः॥ ३२.९२ ॥

श्वपचोऽपि वरिष्ठः स्यात्प्रसादाच्छं करस्य च॥
तस्मात्सर्वप्रयत्नेन पूजनीयो हि शंकरः॥ ३२.९३ ॥

बहूनां जनमनामंते शिवभक्तिः प्रजायते॥ ३२.९४ ॥

ज्ञानिनां कृतबुद्धीनां जन्मजन्मनिशंकरः॥
किं मया बहुनोक्तेन पूजनीयः सदाशिवः॥ ३२.९५ ॥

अत्रैवोदाहरंतीममितिहासं पुरातनम्॥
किरातेन कृतं व्रतं च परमाद्भुतम्॥
येनैव तारितं विश्वं जगदेतच्चराचरम्॥ ३२.९६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे श्वेतराजचरिते शिवभक्तिप्रभावेण कालदहनवृत्तान्तवर्णनंनाम द्वात्रिंशोऽध्यायः॥ ३२ ॥ छ ॥

**॥ऋषय ऊचुः॥**
किन्नामा च किरातोऽभूत्किं तेन व्रतमाहितम्॥
तत्त्वं कथय विप्रेंद्र परं कौतूहलं हि नः॥ ३३.१ ॥

तत्सर्वं श्रोतुमिच्छामो याथातथ्येन कथ्यताम्॥
न ह्यन्यो विद्यते लोके त्वद्विना वदतां वरः॥
तस्मात्कथ भो विप्र सर्वं शुश्रूषतां हि नः॥ ३३.२ ॥

एवमुक्तस्तदा तेन शौनकेन महात्मना॥
कथयामास तत्सर्वं पुष्कसेन कृतं यत्॥ ३३.३ ॥

**॥लोमश उवाच॥**
आसीत्पुरा महारौद्रश्चडोनाम दुरात्मवान्॥
क्रूरसंगो निष्कृतिको भूतानां भयवाहकः॥ ३३.४ ॥

जालेन मत्स्यान्दुष्टात्मा घातयत्यनिशं खलु॥
भल्लैर्मृगाञ्छापदांश्च कृष्णसारांश्च शल्लकान्॥ ३३.५ ॥

खड्गांश्चैव च दुष्टात्मा दृष्ट्वा कांश्चिच्च पापवान्॥
पक्षिणोऽघातयत्क्रुद्धो ब्राह्मणांश्च विशेषतः॥ ३३.६ ॥

लुब्धको हि महापापो दुष्टो दुष्टजनप्रियः॥
भार्या तथाविधआ तस्य पुष्कसस्य महाभया॥ ३३.७ ॥

एवं विहरतस्तस्य बहुकालोत्यवर्तत॥
गते बहुतिथेकाले पापौघनिरतस्य च॥ ३३.८ ॥

निषंगे जलमादाय क्षुत्पिपासार्द्दितो भृशम्॥
एकदा निशि पापीयाच्छ्रीवृक्षोपरि संस्थितः॥
कोलं हंतुं धनुष्पाणिर्जाग्रच्चानिमिषेण हि॥ ३३.९ ॥

माघमासेऽसितायां वै चतुर्दश्यामथाग्रतः॥
मृगमार्गविलोकार्थी बिल्वपत्राण्यपातयत्॥ ३३.१० ॥

श्रीवृक्षपर्णानि बहूनि तत्र स च्छेदयामास रुषान्वितोपि॥
श्रीवृक्षमूले परिवर्तमाने लिंगं तस्योपरिदृष्टभावः॥ ३३.११ ॥

ववर्ष गंडूषजलं दुरात्मा यदृच्छया तानि शिवे पतंति॥
श्रीवृक्षपर्णानि च दैवयोगाज्जातं च सर्वं शिवपूजनं तत्॥ ३३.१२ ॥

गंडूषवारिणा तेन स्नपनं च कृतं महत्॥
बिल्वपत्रैरसंख्यातैरर्चनं महत्कृतम्॥ ३३.१३ ॥

अज्ञानेनापि भो विप्राः पुष्कसेन दुरात्मना॥
माघमासेऽसिते पक्षे चतुर्दश्यां विधूदये॥ ३३.१४ ॥

पुष्कसोऽथ दुराचारो वॉक्षादवततार सः॥
आगत्य जलसंकाशं मत्स्यान्हंतुं प्रचक्रमे॥ ३३.१५ ॥

लुब्ध कस्यापि भार्याभून्नाम्ना चैव घनोदरी॥
दुष्टा सा पापनिरता परद्रव्यापहारिणी॥ ३३.१६ ॥

गृहान्निर्गत्य सायाह्ने पुरद्वारबहिः स्थिता॥
वनमार्गं प्रपश्यंती पत्युरागमनेच्छया॥ ३३.१७ ॥

चिराद्भर्तरी नायाते चिन्तयामास लुब्धकी॥
अद्य सायाह्नवेलायामागताः सर्वलुब्धकाः॥ ३३.१८ ॥

तमः स्तोमेन संछन्नाश्चतस्रो विदिशो दिशः॥
रात्रौ यामद्वयं यातं किं मतंगः समागतः॥ ३३.१९ ॥

किं वा केसरलोभेन सिंहेनैव विदारितः॥
किं भुजंगफणारत्नहारी सर्पविषार्दितः॥ ३३.२० ॥

किं वा वराहदंष्ट्राग्रघातैः पंचत्वमागतः॥
मधुलोभेन वृक्षाग्रात्स वै प्रपतितो भुवि॥ ३३.२१ ॥

क्वान्वेषयामि पृच्छामि क्व गच्छामि च कं प्रति॥
एवं विलप्य बहुधा निवृत्ता स्वं गृहं प्रति॥ ३३.२२ ॥

नैवान्नं नो जलं किंचिन्न भुक्तं तद्दिने तया॥
चिंतयंती पतिं चापि लुब्धकी त्वयन्निशाम्॥ ३३.२३ ॥

अथ प्रभाते विमले पुष्कसी वनमाययौ॥
अशनार्थं च तस्यान्नमादाय त्वरिता सती॥ ३३.२४ ॥

भ्रममाणावने तस्मिन्ददर्श महतीं नदीम्॥
तस्यास्तीरे समासीनं स्वपतिं प्रेक्ष्य हर्षिता॥ ३३.२५ ॥

तदन्नं कूलनः स्थाप्य नदीं तर्तुं प्रचक्रमे॥
निरीक्ष्य चाथ मत्स्यान्स जालप्रोतान्समानयत्॥ ३३.२६ ॥

तावत्तयोक्तश्चण्डोऽसावेहि शीघ्रं च भक्षय॥
अन्नं त्वदर्थमानीतमुपोष्य दिवसं मया॥ ३३.२७ ॥

कृतं किमद्य रे मंद गतेऽहनि च किं कृतम्॥
नाऽशितं च त्वया मूढ लंघितेनाद्य पापिना॥ ३३.२८ ॥

नद्यां स्नातौ तथा तौ च दम्पती च शुचि व्रतौ॥
यावद्गतश्च भोक्तुं स तावच्छ्वा स्वयमागतः॥ ३३.२९ ॥

तेन सर्वं भक्षितं च तदन्नं स्वयमेव हि॥
चंडी प्रकुपिता चैव श्वानं हंतुमुपस्थिता॥ ३३.३० ॥

आवयोर्भक्षितं चान्नमनेनैव च पापिना॥
किं च भक्षयसे मूढ भविताद्य वुभुक्षितः॥ ३३.३१ ॥

एवं तयोक्तश्चण्डोऽसौ बभाषे तां शिवप्रियः॥
यच्छुना भक्षितं चान्नं तेनाहं परितोषितः॥ ३३.३२ ॥

किमनेन शरीरेण नश्वरेण गतायुषा॥
शरीरं दुर्लभं लोके पूज्यते क्षणभंगुरम्॥ ३३.३३ ॥

ये पुष्णंति निजं देहं सर्वभावेन चाहताः॥
मूढास्ते पापिनो ज्ञेया लोकद्वयबहिष्कृताः॥ ३३.३४ ॥

तस्मान्मानं परित्यज्य क्रोधं च दुरवग्रहम्॥
स्वस्था भव विमर्शेन तत्त्वबुद्ध्या स्थिरा भव॥ ३३.३५ ॥

बोधिता तेन चंडी सा पुष्कसेन तदा भृशम्॥
जागरादि च संप्राप्तः पुष्कसोऽपि चतुर्दशीम्॥ ३३.३६ ॥

शिवरात्रिप्रसंगाच्च जायते यद्ध्यसंशयम्॥
तज्ज्ञानं परमं प्राप्तः शिवरात्रिप्रसंगतः॥ ३३.३७ ॥

यामद्वयं च संजातममावास्यां तु तत्र वै॥
आगताश्च गणास्तत्र बहवः शिवनोदिताः॥ ३३.३८ ॥

विमानानि बहून्यत्र आगतानि तदंतिकम्॥
दृष्टानि तेन तान्येव विमानानि गणास्तथा॥ ३३.३९ ॥

उवाच परया भक्त्या पुष्कसोऽपि च तान्प्रति॥
कस्मात्समागता यूयं सर्वे रुद्राक्षधारिणः॥ ३३.४० ॥

विमानस्थाश्च केचिच्च वृषारूढाश्च केचन॥
सर्वे स्फटिकसंकाशाः सर्वे चंद्रार्द्धशेखराः॥ ३३.४१ ॥

कपर्द्दिनश्चर्मपरीतवाससो भुजंगभोगैः कृतहारभूषणाः॥
श्रियान्विता रुद्रसमानवीर्या यथातथं भो वदतात्मनोचितम्॥ ३३.४२ ॥

पुष्कसेन तदा पृष्टा ऊचुः सर्वे च पार्षदाः॥
रुद्रस्य देवदेवस्य संनम्राः कमलेक्षणाः॥ ३३.४३ ॥

**॥गणा ऊचुः॥**
प्रेषिताः स्मो वयं चंड शिवेन परमेष्ठिना॥
आगच्छ त्वरितो भुत्वा सस्त्रीको या नमारुह॥ ३३.४४ ॥

लिंगार्च्चनं कृतं यच्च त्वया रात्रौ शिवस्य च॥
तेन कर्मविपाकेन प्राप्तोऽसि शिवसन्निधिम्॥ ३३.४५ ॥

तथोक्तो वीरभद्रेण उवाच प्रहसन्निव॥
पुष्कसोऽपि स्वया बुद्ध्या प्रस्तावसदृशं वचः॥ ३३.४६ ॥

**॥पुष्कस उवाच॥**
किं मया कृतमद्यैव पापिना हिंसकेन च॥
मृगयारसिकेनैव पुष्कसेन दुरात्मना॥ ३३.४७ ॥

पापाचारो ह्यहं नित्यं कथं स्वर्गं व्रजाम्यहम्॥
कथं लिंगार्चनमिदं कृतमस्ति तदुच्यताम्॥ ३३.४८ ॥

परं कौतुकमापन्नः पृच्छामि त्वां यथातथम्॥
कथयस्व महाभाग सर्वं चैव यथाविधि॥ ३३.४९ ॥

इत्येवं पृच्छतस्तस्य पुष्कसस्य यथाविधि॥
कथयामास तत्सर्वं शिवधर्मं मुदान्वितः॥ ३३.५० ॥

**॥वीरभद्र उवाच॥**
देवदेवो महादेवो देवानां पतिरीश्वरः॥
परितुष्टोऽद्य हे चंड स महेश उमापतिः॥ ३३.५१ ॥
प्रासंगिकतया माघे कृतं लिंगार्चनं त्वया॥
शिवतुष्टिकरं चाद्य पूतोऽसि त्वं न संशयः॥
शिवरात्र्यां प्रसंगेन कृतमर्चनमेव च॥ ३३.५२ ॥

कोलं निरीक्षमाणेन बिल्वपत्राणि चैव हि॥
च्छेदितानि त्वया चंड पतितानि तदैव हि॥
लिंगस्य मस्तके तानि तेन त्वं सुकृती प्रभो॥ ३३.५३ ॥

ततश्च जागरो जातो महान्वृक्षोपरि ध्रुवम्॥
तेनैव जागरेणैव तुतोष जगदीश्वरः॥ ३३.५४ ॥

छलेनैव महाभाग कोलसंदर्शनेन हि॥
शिवरात्रिदिने चात्र स्वप्नस्ते न च योषितः॥ ३३.५५ ॥

तेनोपवासेन च जागरेण तुष्टो ह्यसौ देववरो महात्मा॥
तव प्रसादाय महानुभावो ददाति सर्वान्वरदो महांश्च॥ ३३.५६ ॥

एवमुक्तस्तदा तेन वीरभद्रेण धीमता॥
पुष्कसोऽपि विमानाग्र्यमारुरोह च पश्यताम्॥ ३३.५७ ॥

गणानां देवतानां च सर्वेषां प्राणिनामपि॥
तदा दुंदुभयो नेदुर्भेर्यस्तूर्याण्यनेकशः॥ ३३.५८ ॥

वीणावेणुमृदंगानि तस्य चाग्रे गतानि च॥
जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः॥ ३३.५९ ॥

विद्याधरगणाः सर्वे तुष्टुवुः सिद्धचारणाः॥
चामरैर्वीज्यमानो हि च्छत्रैश्च विविधैरपि॥
महोत्सवेन महता आनीतो गंधमादनम्॥ ३३.६० ॥

शिवसान्निध्यमागच्चंडोसौ तेन कर्मणा॥
शिवरात्र्युपवासेन परं स्थानं समागमत्॥ ३३.६१ ॥

पुष्कसोऽपि तथा प्राप्तः प्रसंगेन सदाशिवम्॥
किं पुनः श्रद्धया युक्ताः शिवाय परमात्मने॥ ३३.६२ ॥

पुष्पादिकं फलं गंधं तांबूलं भक्ष्यमृद्धिमत्॥
ये प्रयच्छंति लोकेऽस्मिन्रुद्रास्ते नात्र संशयः॥ ३३.६३ ॥

चंडेन वै पुष्कसेन सफलं तस्य चाभवत्॥
प्रसंगेनापि तेनैव कृतं तच्चाल्पबुद्धिना॥ ३३.६४ ॥

**॥ऋषय ऊचुः॥**
किं फलं तस्य चोद्देशः केन चैव पुना कृतम्॥
कस्माद्व्रतमिदं जातं कृतं केन पुरा विभो॥ ३३.६५ ॥

**॥लोमश उवाच॥**
यदा सृष्टं जगत्सर्वं ब्रह्मणा परमेष्ठिना॥
कालचक्रं तदा जातं पुरा राशिमन्विताम्॥ ३३.६६ ॥

द्वादश राशयस्तत्र नक्षत्राणि तथैव च॥
सप्तविंशतिसंख्यानि मुख्यानि xxxxxx सिद्धये॥ ३३.६७ ॥

एभिः सर्वं प्रचंडं च राशिभिरुडुभिस्तथा॥
कालचक्रान्वितः कालः क्रीडयन्सृजते जगत्॥ ३३.६८ ॥

आब्रह्मस्तंबपर्यंतं सृजत्य वति हंति च॥
निबद्धमस्ति तेनैव कालेनैकेन भो द्विजाः॥ ३३.६९ ॥

कालो हि बलवाँल्लोके एक एव न चापरः॥
तस्मात्कालात्मकं सर्वमिदं नास्त्यत्र संशयः॥ ३३.७० ॥

आदौ कालः कालनाच्च लोकनायकनायकः॥
ततो लोका हि संजाताः सृष्टिश्च तदनंतरम्॥ ३३.७१ ॥

सृष्टेर्लवो हि संजातो लवाच्च क्षणमेव च॥
क्षणाच्च निमिषं जातं प्राणिनां हि निरंतरम्॥ ३३.७२ ॥

निमिषाणां च षष्ट्या वै फल इत्यभिधीयते॥
पंचदश्या अहोरात्रैः पक्षइत्यभिधीयते॥ ३३.७३ ॥

पक्षाभ्यां मास एव स्यान्मासा द्वादश वत्सरः॥
तं कालं ज्ञातुकामेन कार्यं ज्ञानं विचक्षणैः॥ ३३.७४ ॥

प्रतिपद्दिनमारभ्य पौर्णमास्यंतमेव च॥
पक्षं पूर्णो हि यस्माच्च पूर्णिमेत्यभिधीयते॥ ३३.७५ ॥

पूर्णचंद्रमसी या तु सा पूर्णा देवताप्रिया॥
नष्टस्तु चंद्रो यस्यां वा अमा सा कथिता बुधैः॥ ३३.७६ ॥

अग्निष्वात्तादिपितॄणां प्रियातीव बभूव ह॥
त्रिंशद्दिनानि ह्येतानि पुण्यकालयुतानि च॥
तेषां मध्ये विशेषो यस्तं शृणुध्वं द्विजोत्तमाः॥ ३३.७७ ॥

योगानां वा व्यतीपात ऊडूनां श्रवणस्तथा॥
अमावास्या तिथीनां च पूर्णिमा वै तथैव च॥ ३३.७८ ॥

संक्रांतयस्तथाज्ञेयाः पवित्रा दानकर्मणि॥
तथाष्टमी प्रिया शंभोर्गणेशस्य चतुर्थिका॥ ३३.७९ ॥

पञ्चमी नागराजस्य कुमारस्य च षष्ठिका॥
भानोश्च सप्तमी ज्ञेया नवमी चण्डिकाप्रिया॥ ३३.८० ॥

ब्रह्मणो दशमी ज्ञेया रुद्रस्यैकादशी तथा॥

विष्णुप्रिया द्वादशी च अंतकस्य त्रयोदशी॥ ३३.८१ ॥

चतुर्द्दशी तथा शंभोः प्रिया नास्त्यत्र संशयः॥
निशीथसंयुता या तु कृष्णपक्षे चतुर्द्दशी॥
उपोष्या सा तिथिः श्रेष्ठा शिवसायुज्यकारिणी॥ ३३.८२ ॥

शिवरात्रितिथिः ख्याता सर्वपापप्रणाशिनी॥
अत्रैवोदाहरंतीममितिहासं पुरातनम्॥ ३३.८३ ॥

ब्राह्मणी विधवा काचित्पुरा ह्यासीच्च चंचला॥
श्वपचाभिरता सा च कामुकी कामहेतुतः॥ ३३.८४ ॥

तस्यां तस्य सुतो जातः श्वपचस्य दुरात्मनः॥
दुः सहो दुष्टनामात्मा सर्वधर्मबहिष्कृतः॥ ३३.८५ ॥

महापापप्रयोगाच्च पापमारभते सदा॥
कितवश्च सुरापायी स्तेयी च गुरुतल्पगः॥ ३३.८६ ॥

मृगयुश्च दुरात्मासौ कर्मचण्डाल एव सः॥
अधर्मिष्ठो ह्यसद्वृत्तः कदाचिच्च शिवालयम्॥
शिवरात्र्यां च संप्राप्तो ह्युषितः शिवसन्निधौ॥ ३३.८७ ॥

श्रवणं शैवशास्त्रस्य यदृच्छाजातमंतिके॥
शिवस्य लिंगरूपस्य स्वयंभुवो यदा तदा॥ ३३.८८ ॥

स एकत्रोषितो दुष्टः शिवरात्र्यां तु जागरात्॥
तेन कर्मविपाकेन पुण्यां योनिमवाप्तवान्॥ ३३.८९ ॥

भुक्त्वा पुण्यतामाँल्लोकानुषित्वा शाश्वतीः समाः॥
चित्रांगदस्य पुत्रोभूद्भूपालेश्वरलक्षणः॥ ३३.९० ॥

नाम्ना विचित्रवीर्योऽसौ सुभगः संदुरी प्रियः॥
राज्यं महत्तरं प्राप्य निःस्तंभो हि महानभूत्॥ ३३.९१ ॥

शिवे भक्तिं प्रकुर्वाणः शिवकर्मपरोऽभवत्॥
शैवशास्त्रं पुरस्कृत्य शिवपूजनतत्परः॥
रात्रौ जागरणं यत्नात्करोति शिवसन्निधौ॥ ३३.९२ ॥

शिवस्य गाथा गायंस्तु आनंदाश्रुकणान्मुहुः॥
प्रमुंचंश्चैव नेत्राभ्यां रोमांचपुलकावृतः॥ ३३.९३ ॥

आयुष्यं च गतं तस्य शिवध्यानपरस्य च॥

शिवो हि सुलभो लोके पशूनां ज्ञानिनामपि॥ ३३.९४ ॥

संसेवितुं सुखप्राप्त्यै ह्येक एव सदाशिवः॥
शिवरात्र्युपवासेन प्राप्तो ज्ञानमनुत्तमम्॥ ३३.९५ ॥

ज्ञानात्सर्वमनुप्राप्तं भूतसाम्यं निरंतरम्॥
सर्वभूतात्मकं ज्ञात्वा केवलं च सदा शिवम्॥
विना शिवेन यत्किंचिन्नास्ति वस्त्वत्र न क्वचित्॥ ३३.९६ ॥

एवं पूर्णं निष्प्रपंचं ज्ञानं प्राप्नोति दुर्लभम्॥
प्राप्तज्ञानस्तदा राजा जातो हि शिववल्लभः॥ ३३.९७ ॥

मुक्तिं सायुज्यतां प्राप्तः शिवरात्रेरुपोषणात्॥
तेन लब्धं शिवाज्जन्म पुरा यत्कथितं मया॥ ३३.९८ ॥

दाक्षायणीवीयो गाच्च जटाजूटेन विस्तरात्॥
य उत्पन्नो मस्तकाच्च शिवस्य परमात्मनः॥
वीरभद्रेति विख्यातो दक्षयज्ञविनाशनः॥ ३३.९९ ॥

शिवरात्रिव्रतेनैव तारिता बहवः पुरा॥
प्राप्ताः सिद्धिं पुरा विप्रा भरताद्याश्च देहिनः॥ ३३.१०० ॥

मांधाता धुन्धुमारिश्च हरिश्चन्द्रादयो नृपाः॥
प्राप्ताः सिद्धिमनेनेव व्रतेन परमेण हि॥ ३३.१०१ ॥

ततो गिरीशो गिरिजासमेतः क्रीडान्वितोऽसौ गिरिराजमस्तके॥
द्यूतं तथैवाक्षयुतं परेशो युक्तो भवान्या स भृशं चकार॥ ३३.१०२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवरात्रिव्रतमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः॥ ३३ ॥ छ ॥

**॥लोमश उवाच॥**

राज्यं चकार कैलास दवदवा जगत्पतिः॥
गणैः समेतो बहुभिर्वीरभद्रान्वितो महान्॥ ३४.१ ॥

ऋषिभिः सहितो रुद्रो देवैरिन्द्रादिभिः सह॥
ब्रह्मा यस्य स्तुतिपरो विष्णुः प्रेष्यवदास्थितः॥ ३४.२ ॥

इंद्रो देवगणैः सार्द्धं सेवाधर्मपरोऽभवत्॥
यस्य च्छत्रधरश्चंद्रो वायुश्चामरधृक्तथा॥ ३४.३ ॥

सूपान्नकर्ता सततं जातवदा निरन्तरम्॥
गंधर्वा गायका यस्य स्तावकाश्च पिनाकिनः॥ ३४.४ ॥

विद्याधराश्च बहवस्तथा चाप्सरसां गणाः॥
ननृतुश्चाग्रगा यस्य सोऽसौ कैलासपर्वते॥ ३४.५ ॥

पुत्रैर्गणेशस्कंदाद्यैस्तथा गिरिजया सह॥
राज्यं प्रतापिभिश्चक्रेऽशंकश्चंक्रमणेन च॥ ३४.६ ॥

येनांधको महा दैत्यः स देवानामरिर्महान्॥
दुष्टो विद्धस्त्रिशूलेन गगने स्थापितश्चिरम्॥ ३४.७ ॥

हत्वा गजासुरं येन उत्कृत्त्य चर्म वै कृतम्॥
चिरं प्रावरणं दिव्यं तथा त्रिपुरदीपनम्॥
विष्णुना पाल्यभूतेन रेजे सर्वांगसुन्दरः॥ ३४.८ ॥

तं द्रष्टुकामो भगवान्नारदो दिव्य र्शनः॥
ययौ च पर्वतश्रेष्ठं कैलासं चन्द्रपांडुरम्॥ ३४.९ ॥

सुधया परया चापि सेवितं परमाद्भुतम्॥
कर्पूरगौरं च तदा दृष्ट्वा तं सुमहाबलम्॥
नारदो विस्मयाविष्टः प्रविष्टो गन्धमादनम्॥ ३४.१० ॥

अनेकाश्चर्यसंयुक्तं तपनैश्च सुशोभितम्॥
गायद्विद्याधरीभिश्च पूरितं च महाप्रभम्॥ ३४.११ ॥

कल्पद्रुमाश्च बहवो लताभिः परिवेष्टिताः॥
घनच्छायासू तास्वेव विशिष्टा कामधेनवः॥ ३४.१२ ॥

पारिजातवनामोदलंपटा बहवोऽलयः॥
कलहंसाश्च बहवः क्रीडमानाः सरस्तु च॥ ३४.१३ ॥

शिखंडिनो महच्चक्रुस्तत्र केकारवं मुदा॥
पंचमालापिनः सर्वे विहंगाः संमदान्विताः॥ ३४.१४ ॥

करिणः करिणीभिश्च मोदमानाः सुवर्चसः॥
सिंहास्तथा गर्जमानाः शार्दूलैः सह संगताः॥ ३४.१५ ॥

वृषभा नंदिमुख्याश्च रेभमाना निरन्तरम्॥
देवद्रुमाश्च बहवस्तथा चंदनवाटिकाः॥ ३४.१६ ॥

नागपुंनागबकुलाश्चंपका नागकेसराः॥
तथा च वनजंब्वश्च तथा कनककेतकाः॥ ३४.१७ ॥

कह्लाराः करवीरिश्च कुमुदानि ह्यनेकशः॥
मंदाराश्च बदर्यश्च क्रमुकाः पाटलास्तथा॥ ३४.१८ ॥

तथान्ये बहवो वृक्षाः शम्भोस्तोषकराह्यमी॥
ऐकपद्येन दृष्टास्ते नानाद्रुमलतान्विताः॥
आरामा बहवस्तत्र द्विगुणाश्च बभूविरे॥ ३४.१९ ॥

गगनान्निस्सृतः सद्यो गंगौघः परमाद्भुतः॥
पतितो मस्तके तस्य पर्वतस्य सुशोभिते॥ ३४.२० ॥

कूपो हि पयसां ये न पवित्रं वर्तते जगत्॥
सोपि द्विधा तदा दृष्टो नारदेन महात्मना॥ ३४.२१ ॥

सर्वं तदा द्विधाभूतं दृष्टं तेन महात्मना॥
नारदेन तदा विप्राः परमेण निरीक्षितः॥ ३४.२२ ॥

एवं विलोकमानोऽसौ नारदो भगवानृषिः॥
त्वरितेन तथा यातः शिवालोकनतत्परः॥ ३४.२३ ॥

यावद्द्वारि स्थितोपश्यन्महदाश्चर्यमेव च॥
द्वारपालौ तदा दृष्टौ कृतकौ विश्वक्मणा॥ ३४.२४ ॥

नारदो मोहितो ह्यासीत्पप्रच्छ च स तौ तदा॥
अहं प्रवेष्टुमिच्छामि शिवदर्शनलालसः॥ ३४.२५ ॥

तस्मादनुज्ञा दातव्या दर्शनार्थं शिवस्य च॥
अश्रृण्वन्तौ तदा दृष्ट्वा नारदो विस्मितोऽभवत्॥ ३४.२६ ॥

ज्ञानदृष्ट्या विलोक्याथ दूष्णींभूतोऽभवत्तदा॥
कृत्रिमौ हि च तौ ज्ञात्वा प्रविष्टो हि महामनाः॥ ३४.२७ ॥

तथान्ये तत्सरूपाश्च दृष्टास्तेन महात्मना॥
ऋषिः प्रणमितस्तैश्च नारदो भगवान्मुxx॥ ३४.२८ ॥

एवमादीन्यनेकानि आश्चर्याणि ददर्श सः॥
ददर्शाथ च सुव्यक्तं त्र्यंबकं गिरिजान्वितम्॥ ३४.२९ ॥

अर्धासनगता साध्वी शंकरस्य महात्मनः॥
तनया गिरिराज्य यया व्याप्तं जगत्त्रयम्॥ ३४.३० ॥

गौरी सितेक्षणा बाला तन्वंगी चारुलोचना॥
यया रूपी कृतः शम्भुरुपादेयः कृतो महान्॥ ३४.३१ ॥

निर्विकानि विकारैश्च बहुभिर्विकलीकृतः॥
अर्द्धांगलग्ना सा देवी दृष्टा तेन शिवस्य च॥ ३४.३२ ॥

नारदेन तथा शम्भुर्दृष्टस्त्रिभुवनेश्वरः॥
शुद्धचामी करप्रख्यः सेव्यमानः सुरासुरैः॥ ३४.३३ ॥

शंखेन भोगिवर्येण सेवितं चांघ्रिपंकजम्॥
धृतराष्ट्रेण च तथा तक्षकेण विशेषतः॥
तथा पद्मेन महा शेषेणापि विशेषतः॥ ३४.३४ ॥

अन्यैश्च नागवर्यैश्च सेवितो हि निरंतरम्॥
वासुकिः कंठलग्नो हि हारभूतो महाप्रभः॥ ३४.३५ ॥

कंबलाश्वतरौ नित्यं कर्णभूषणभूषितौ॥
जटामूलगताश्चान्ये महाफणिवरा ह्यमी॥ ३४.३६ ॥

अनेकजातिसंवीता नानावर्णाश्च पद्मिनः॥
तक्षकः कुलिकः शंखो धृतराष्ट्रो महाप्रभः॥ ३४.३७ ॥

पद्मो दंभः सुदंभश्च करालो भीषणस्तथा॥
एते चान्ये च बहवो नागाश्चाशीविषा ह्यमी॥ ३४.३८ ॥

अंगभूता हरस्या सन्पूज्यस्यास्य जगत्त्रये॥
फणैकया शोभमानाः केचिद्धि पन्नगोत्तमाः॥ ३४.३९ ॥

फणानां द्वितयं केषां त्रितयं च महाप्रभम्॥
चतुष्क पंचकषट्कं सप्तकं चाष्टकं तथा॥ ३४.४० ॥

नवकं दशकं चैव तथैकादशकं त्वथ॥

द्वादशकं चाष्टादशकमेकोनविंशकं तथा॥ ३४.४१ ॥

चत्वारिंशत्फणाः केऽपि पंचाशत्कं च षष्टिकम्॥
सप्ततिश्चाप्यशीतिश्च नवतिश्च तथैव च॥ ३४.४२ ॥

तथा शतसहस्राणि ह्ययुतप्रयुतानि च॥
अर्बुदानि च रत्नानि तथा शङ्खमितानि च॥ ३४.४३ ॥

अनंताश्च फणा येषां ते सर्पाः शिवभूषणाः॥
दृष्टास्तदानीं ते सर्वे नारदेन महात्मना॥ ३४.४४ ॥

विद्यावंतोऽपि ते सर्वे भोगिनोऽपि सुशोभिताः॥
हारभूषणभूतास्ते मणिमंतोऽमितप्रभाः॥ ३४.४५ ॥

अर्द्धचंद्रांकितो यस्य कपर्द्दस्त्वतिसुंदरः॥
चक्षुषा च तृतीयेन भालस्थेन विराजितः॥ ३४.४६ ॥

पंचवक्त्रो महादेवो बाहुभिर्द्दशभिर्वृतः॥
तथा मरकतश्यामकंधरोऽतीवसुंदरम्॥ ३४.४७ ॥

उरो यस्य विशालं च तथोरुजघनं परम्॥
चरणद्वयं च रुद्रस्य शोभितं परमं महत्॥ ३४.४८ ॥

तद्दृष्टं चरणारविंदमतुलं तेजोमयं सुंदरं संध्यारागसुमंगलं च परमं तापापनुत्तिंकरम्॥
तेजोराशिकरं परात्परमिदं लावण्यलीलस्पदं सर्वेषां सुखवृद्धिकारणपरं शंभोः पदं पावनम्॥ ३४.४९ ॥

तथैव दृष्ट्वा परमं पराणां परा सती रूपवती च सुंदरी॥
सौभाग्यलावण्यमहाविभूत्या विराजमाना ह्यतिसुंदरी शुभा॥ ३४.५० ॥

दृष्ट्वा तौ दपती शुद्धौ राजमानौ जगत्त्रये॥
अभिन्नौ भेदमापन्नौ निर्गुणौ गुणिनौ च तौ॥ ३४.५१ ॥

साकारौ च निराकारौ निरातंकौ सुखप्रदौ॥
ववंदे च मुदा तौ स नारदो भगवत्प्रियः॥
उत्थायोत्थाय च तदा तुष्टाव जगदीश्वरौ॥ ३४.५२ ॥

**॥नारद उवाच॥**
नतोस्म्यहं देववरौ युवाभ्यां परात्पराभ्यां कलया तथापि॥
दृष्टौ मया दंपती राजमानौ यौ वीजभूतौ सचराचरस्य ॥ ३४.५३ ॥

पितरौ सर्वललोकस्य ज्ञातौ चाद्यैव तत्त्वतः॥
मया नास्त्यत्र संदेहो भवतोः कृपया तथा॥ ३४.५४ ॥

एवं स्तुतौ तदा तेन नारदेन महात्मना॥
तुतोष भगवाञ्छंभुः पार्वत्या सहितस्तदा॥ ३४.५५ ॥

**॥महादेव उवाच॥**
सुखेन स्थीयते ब्रह्मन्किं कार्यं करवाणि ते॥
तच्छ्रुत्वा वचनं शंभोर्नारदो वाक्यमब्रवीत्॥ ३४.५६ ॥

दर्शनं जातमद्यैव तेन तुष्टोऽस्म्यहं विभो॥
दर्शनात्सर्वमेवाद्य शंभो मम न संशयः॥ ३४.५७ ॥

क्रीडनार्थमिहायातः कैलासं पर्वतोत्तमम्॥
हृदिस्थो हि सदा नृणामास्थितो भगवन्प्रभो॥ ३४.५८ ॥

तथापि दर्शनं भाव्यं सततं प्राणिनामिह॥ ३४.५९ ॥

**॥गिरिजोवाच॥**
का क्रीडा हि त्वया भाव्या वद शीघ्रं ममाग्रतः॥
तस्यास्तद्वचनं श्रुत्वा उवाच प्रहसन्निव॥ ३४.६० ॥

द्यूतक्रीडा महादेव दृश्यते विविधात्र च॥
भवेद्द्वाभ्यां च द्यूते हि रमणाच् महत्सुखम्॥ ३४.६१ ॥

इत्येवमुक्त्वो परतं सती भृशमुवाच वाक्यं कुपिता ऋषिं प्रति॥
कथं विजानासि परं प्रसिद्धं द्यूतं च दुष्टोदरकं मनस्विनाम्॥ ३४.६२ ॥

त्वं ब्रह्मपुत्रोऽसि मुनिर्मनीषिणां शास्ता हि वाक्यं विविधैः प्रसिद्धैः॥
चरिष्यमाणो भुवनत्रये न हि त्वदन्यो ह्यपरो मनस्वी॥ ३४.६३ ॥

एवमुक्तस्तदा देव्या नारदो देवदर्शनः॥
उवाच वाक्यं प्रहसन्गिरिजां शिवसन्निधौ॥ ३४.६४ ॥

**॥नारद उवाच॥**
द्यूतं न जानामि न चाश्रयामि ह्यहं तपस्वी शिवकिंकरश्च कथं च मां पृच्छसि राजकन्यके योगीश्वराणां परमं पवित्रे॥ ३४.६५ ॥

निशम्य वाक्यं गिरिजा सती तदा ह्युवाच वाक्यं च विहस्य तं प्रति॥
जानासि सर्वं च बटोऽद्य पश्य मे द्यूतं महेशेन करोमि तेऽग्रतः॥ ३४.६६ ॥

इत्येवमुक्त्वा गिरिराजकन्यका जग्राह चाक्षान्भुवनैकसुंदरी॥
क्रीडां चकाराथ महर्षिसाक्ष्यके तत्रास्थिता सा हि भवेन संयुता॥ ३४.६७ ॥

तौ दंपती क्रीडया सज्जमानौ दृष्टौ तदा ऋषिणा नारदेन॥
सविस्मयोत्फुल्लमना मनस्वी विलोकमानोऽतितरां तुतोष॥ ३४.६८ ॥

सखीजनेन संवीता तदा द्यूतपरा सती॥
शिवेन सह संगत्य च्छलाद्द्यूतमकारयत्॥ ३४.६९ ॥

स पणं च तदा चक्रे छलेन महता वृतः॥
जिता भवानी च तदा शिवेन प्रहसन्निव॥ ३४.७० ॥

नारदोऽस्याः शिवेनाथ उपहासकरोऽभवत्॥
निशम्य हारितं द्यूतमुपहासं निशम्य च॥ ३४.७१ ॥

नारदस्य दुरुक्तैश्च कुपिता पार्वती भृशम्॥
उवाच त्वरिता चैव दत्त्वा चैवार्द्धचंद्रकम्॥ ३४.७२ ॥

तथा शिरोमणी चैव तरले च मनोहरे॥
मुखं सुखोभनं चैव तथा कुपितसुंदरम्॥
दृष्टं हरेण च पुनः पुनर्द्यूतमकारयत्॥ ३४.७३ ॥

तथा गिरिजया प्रोक्तः शंकरो लोकशंकरः॥
हारितं च मया दत्तः पण एव च नान्यथा॥ ३४.७४ ॥

क्रियते च त्वया शंभो कः पणो हि तदुच्यताम्॥
ततः प्रहस्य चोवाच पार्वतीं च त्रिलोचनः॥ ३४.७५ ॥

मया पणोऽयं क्रियते भवानि त्वदर्थमेतच्च विभूषणं महत्॥
सा चंद्रलेखा हि महान्हि हारस्तथैव कर्णोत्पलभूषणद्वयम्॥ ३४.७६ ॥

इदमेव त्वया तन्वि मां जित्वा गृह्यतां सुखम्॥
ततः प्रवर्तितं द्यूतं शंकरेण सहैव च॥ ३४.७७ ॥

एवं विक्रीडमानौ तावक्षविद्याविशारदौ॥
तदा जितो भवान्याथ शंकरो बहुभूषणः॥ ३४.७८ ॥

प्रहस्य गौरी प्रोवाच शंकरं त्वतिसुंदरी॥
हारितं च पणं देहि मम चाद्यैव शंकर॥ ३४.७९ ॥

तदा महेशः प्रहसन्सत्यं वाक्यमुवाच ह॥
न जितोऽहं त्वया तन्वि तत्त्वतो हि विमश्यताम्॥ ३४.८० ॥

अजेयोऽहं प्राणिनां सर्वथैव तस्मान्न वाच्यं तु वोच हि साध्वि॥
द्यूतं कुरुष्वाद्य यथेष्टमेव जेष्यामि चाहंच पुनः प्रपश्य॥ ३४.८१ ॥

तदाम्बिकाह स्वपतिं महेशं मया जितोऽस्यद्य न विस्मयोऽत्र॥
एवमुक्त्वा तदा शंभुं करे गृह्य वरानना॥
जितोऽसि त्वं न संदेहस्त्वं न जानासि शंकर॥ ३४.८२ ॥

एवं प्रहस्य रुचिरं गिरिजा तु शंभुं सा प्रेक्ष्या नर्मवचसा स तयाभिभूतः॥
देहीति म सकलमंगलमंगलेश यद्धारितं स्मररिपो वचसानुमोदितम्॥ ३४.८३ ॥

**॥शिव उवाच॥**
अजेयोऽहं विशालाक्षि तव नास्त्यत्र संशयः॥
अहंकारेण यत्प्रोक्तं तत्त्वतस्तद्विमृश्यताम्॥ ३४.८४ ॥

तस्य तद्वचनं श्रुत्वा प्रोवाच च विहस्य सा॥
अजेयो हि महादेवः सर्वेषामपि वै प्रभो॥ ३४.८५ ॥

मयैकया जितोऽसि त्वं द्यूतेन विमलेन हि॥
न जानासि च किंचिच्च कार्याकार्यं विवक्षितम्॥॥ ३४.८६ ॥

एवं विवदमानौ तौ दंपती परमेश्वरौ॥
नारदः प्रहसन्वाक्यमुवाच ऋषिसत्तमः॥ ३४.८७ ॥

**॥नारद उवाच॥**
आकर्णयाऽऽकर्णविशालनेत्रे वाक्यं तदेकं जगदेकमंगलम्॥
असौ महाभाग्यवतां वरेण्यस्त्वया जितः किं च मृषा ब्रवीषि॥ ३४.८८ ॥

अजितो हि महादेवो देवानां परमो गुरुः॥
अरूपोऽयं सुरूपोयं रूपातीतोऽयमुच्यते॥ ३४.८९ ॥

एक एव परं ज्योतिस्तेषामपि च यन्महः॥
त्रैलोक्यनाथो विश्वात्मा शंकरो लोकशंकरः॥ ३४.९० ॥

कथं त्वया जितो देवि ह्यजेयो भुवनत्रये॥
शिवमेनं न जानासि स्त्रीभावाच्च वरानने॥ ३४.९१ ॥

नारदेनैवमुक्ता सा कुपिता पार्वती भृशम्॥
बभाषे मत्सरग्रस्ता साक्षेपं वचनं सती॥ ३४.९२ ॥

**॥पार्वत्युवाच॥**
चापल्याच्च न वक्त्व्यं ब्रह्मपुत्र नमोस्तु ते ॥

तव भीतास्मि भद्रं ते देवर्षे मौनमावह॥ ३४.९३ ॥

कथं शिवो हि देवर्ष उक्तोऽतो हि त्वया बहु॥
मत्प्रसादा स्छ्वो जात ईश्वरो यो हि पठ्यते॥ ३४.९४ ॥

मया लब्धप्रतिष्ठोऽयं जातो नास्त्यत्र संशयः॥ ३४.९५ ॥

एवं बहुविधं श्रुत्वा नारदो मौनमाश्रयत्॥
पस्थितं च तद्दृष्ट्वा भृंगी वाक्यमथाब्रवीत्॥ ३४.९६ ॥

**॥भृंग्युवाच॥**
त्वया बहु न वक्तव्यं पुनरेव च भामिनि॥
अजेयो निर्विकारो हि स्वामी मम सुमध्यमे॥ ३४.९७ ॥

स्त्रीभावयुक्तासि वरानने त्वं देवं न जानासि परं पराणाम्॥
कामं पुरस्कृत्य पुरा भवानि समागतास्येव महेशमुग्रम॥ ३४.९८ ॥

यथा कृतं तेन पिनाकिना पुरा एतत्स्मृतं किं सुभगे वदस्व नः॥
कृतो ह्यनंगो हि तदा ह्यनेन दग्धं वनं तस्य गिरेः पितुस्ते॥ ३४.९९ ॥

xxxवात्त्वयाराधित एव एष शिवः पराणां परमः परात्मा॥ ३४.१०० ॥

भृंगिणेत्येवमुक्ता सा ह्युवाच किपिता भृशम्॥
श्रृण्वतो हि महेशस्य वाक्यं पृष्टा च भृंगिणम्॥ ३४.१०१ ॥

**॥पार्वत्युवाच॥**
हं भृंगिन्पक्षपातित्वाद्यदुक्तं वचनं मम॥
शिवप्रियोऽसि रे मन्द भेदबुद्धिरतो ह्यसि॥ ३४.१०२ ॥

अहं शिवात्मिका मूढ शिवो नित्यं मयि स्थितः॥
कथं शिवाभ्यां भिन्नत्वं त्वयोक्तं वाग्बलेन हि॥ ३४.१०३ ॥

श्रुतं च वाक्यं शुभदं पार्वत्या भृंगिणा तदा॥
उवाच पार्वतीं भृंगी रुषितः शिवसन्निधौ॥ ३४.१०४ ॥

पुतुर्यज्ञे च दक्षस्य शिवनिंदा त्वया श्रुता॥
अप्रियक्षवणात्सद्यस्त्वया त्यक्तं कलेवरम्॥ ३४.१०५ ॥

तत्क्षणादेव नन्वंगि ह्यधुना किं कृतं त्वया॥
संभ्रमात्किं न जानासि शिवनिंदकमेव च॥ ३४.१०६
कथं वा पर्वतश्रेष्ठाज्जाता से वरवर्णिनि॥
कथं वा तपसोग्रेण संतप्तासि सुमध्यमे॥ ३४.१०७ ॥

सप्रेमा च शिवे भक्तिस्तव नास्तीह संप्रातम्॥

शिवप्रियासि तन्वंगि तस्नादेवं ब्रवीमि ते॥ ३४.१०८ ॥

शिवात्परतरं नान्यत्त्रिषु लोकेषु विद्यते॥
शिवे भक्तिस्त्वया कार्या सप्रेमा वरवर्णिनि॥ ३४.१०९ ॥

भक्तासि त्वं महादेवि महाभाग्यवतां वरे॥
संसेव्यतां प्रयत्नेन तपसोपार्जितस्त्वया॥ ३४.११० ॥

शिवो वरेण्यः सर्वेशो नान्यथा कर्तुमर्हसि॥
भृंगिणो वचनं श्रुत्वा गिरिजा तमुवाचह॥ ३४.१११ ॥

**॥गिरिजोवाच॥**
रे भृंगिन्मौनमालंब्य स्थिरो भवाथ वा व्रज॥
वाच्यावाच्यं न जानासि किं ब्रवीषि पिशाचवत्॥ ३४.११२ ॥

तपसा केन चानीतः कया चापि शिवो ह्ययम्॥
काहं कोऽसौ त्वया ज्ञातो भेदबुद्ध्या ब्रवीषि मे॥ ३४.११३ ॥

कोऽसि त्वं केन युक्तोऽसि कस्माच्च बहु भाषसे॥
शापं तव प्रदास्यामि शिवः किं कुरुतेऽधुना॥ ३४.११४ ॥

भृंगिणोक्ता तिरस्कृत्य तदा शापं ददौ सती॥
निमामो भव रे मन्द रे भृंगिञ्छिंकरप्रिय॥ ३४.११५ ॥

एवमुक्त्वा तदा देवी पार्वती शंकरप्रिया॥
अथ कोपेन संयुक्ता पार्वती शंकरं तदा॥ ३४.११६ ॥

कर गृह्य च तन्वंगी भुजंगं वासुकिं तथा॥
उदतारयत्कंठात्सा तथान्यानि बहूनि च॥ ३४.११७ ॥

शंभोर्जग्राह कुपिता भूषणानि त्वरान्विता॥
हृत चंद्रकला तस्य गजाजिनमनुत्तमम्॥ ३४.११८ ॥

कंबलाश्वतरौ नागौ महेशकृतभूषणौ॥
हृतौ तया महादेव्या छलोक्त्यां च प्रहस्य वै॥ ३४.११९ ॥

कौपीनाच्छा दनं तस्या च्छलोक्त्या च प्रहस्य वै॥
तदा गणाश्च सख्यश्च त्रपया पीडिता भवन्॥ ३४.१२० ॥

पराङ्गमुखाश्च संजाता भृङ्गी चैव महातपाः॥
तथा चण्डो हि मुण्डश्च महालोमा महोदरः॥ ३४.१२१ ॥

एते चान्ये च बहवो गणास्ते दुःखिनोऽभवन्॥
तांश्च दृष्ट्वा तथाभूतन्महेशो लज्जितोऽभवत्॥ ३४.१२२ ॥

उवाच वाक्यं रुषितः पार्वतीं प्रति शंकरः॥ ३४.१२३ ॥

**॥रुद्र उवाच॥**
उपहासं प्रकुर्वंति सर्वे हि ऋषयो भृशम्॥
तथा ब्रह्मा च विष्णुश्च तथा चेन्द्रादयो ह्यमी॥ ३४.१२४ ॥

उपहासपराः सर्वे किं त्वयाद्य कृतं शुभे॥
कुले जातासि तन्वंगि कथमेवं करिष्यसि॥ ३४.१२५ ॥

त्वया जितो ह्यहं सुभ्रु यदि जानासि तत्त्वतः॥
तर्ह्येवं कुरु मे देहि कौपीनाच्छादनं परम्॥
देहि कौपी नामात्रं मे नान्यथा कर्तुमर्हसि॥ ३४.१२६ ॥

एवमुक्ता सती तेन शंभुना योगिना तदा॥
प्रहस्य वाक्यं प्रोवाच पार्वती रुचिरानना॥ ३४.१२७ ॥

किं कौपीनेन ते कार्यं मुनिना भावितात्मना॥
दिगम्बरेणैव तदा कृतं दारुवनं तथा॥ ३४.१२८ ॥

भिक्षाटनमिषेणैव ऋषिपत्न्यो विरोहिताः॥
गच्छ तस्ते तदा शंभो पूजनं तैर्महत्कृतम्॥ ३४.१२९ ॥

कौपीनं पतितं तत्र मुनिभिर्नान्यथोदितम्॥
तस्मात्त्वया प्रहातव्यं द्यूतोहारितमेव तत्॥ ३४.१३० ॥

तच्छ्रुत्वा कुपितो रुद्रः पार्वतीं परमेश्वरः॥
निरीक्षमाणोऽतिरुषा तृतीयेनैव चक्षुषा॥ ३४.१३१ ॥

कुपितं शंकरं दृष्ट्वा सर्व देवगणास्तदा॥
भयेन महताविष्टास्तथा गणकुमारकाः॥ ३४.१३२ ॥

ऊचुः सर्वे शनैस्तत्र शंकितेन परस्परम्॥
अद्यायं कुपितो रुद्रो गिरिजां प्रति संप्रति॥ ३४.१३३ ॥

यथा हि मदनो दग्धस्तथेयं नान्यथा वचः॥
एवं मीमांसमानास्ते गणा देवर्षयस्तदा॥ ३४.१३४ ॥

विलोकितास्तया देव्या सर्वे सौभाग्यमुद्रया॥
उवाच प्रहसन्नेव सती सत्पुरुषं तदा॥ ३४.१३५ ॥

किमालोकपरो भूत्वा चक्षुषा परमेण हि॥
नाहं कालो न कामोऽहं नाहं दभस्य वै मखः॥ ३४.१३६ ॥

त्रिपुरो नैव वै शंभो नांधको वृषभध्वज॥
वीक्षितेनैव किं तेन तव चाद्य भविष्यति॥
वृथैव त्वं विरूपाक्षो जातोऽसि मम चाग्रतः॥ ३४.१३७ ॥

एवमादीन्यनेकानि हयुवाच परमेश्वरी॥
निशम्य देवो वाक्यानि गमनाय मनो दधे॥ ३४.१३८ ॥

वनमेव वरं चाद्य विजनं परमार्थतः॥
एकाकी यतचित्तात्मा त्यक्तसर्वपरिग्रहः॥ ३४.१३९ ॥

स सुखी परमार्थज्ञः स विद्वान्स च पंडितः॥
येन मुक्तौ कामरागौ स मुक्तः स सुखी भवेत्॥ ३४.१४० ॥

एवं विमृश्य च तदा गिरिजां विहाय श्रीशंकरः परमकारुणिकस्तदानीम्॥
यातः प्रियाविरहितो वनमद्भुतं च सिद्धाटवीं परमहंसयुतां तथैव॥ ३४.१४१ ॥

निर्गतं शंकरं दृष्ट्वा सर्वे कैलासवासिनः॥
निर्ययुश्च गणाः सर्वे वीरभद्रादयोऽनु तम्॥ ३४.१४२ ॥

छत्रं भृंगी समादाय जगाम तस्य पृष्ठतः॥
चामरे वीज्यमाने च गंगायमुनसन्निभे॥ ३४.१४३ ॥

ताभ्यां युक्तस्तदा नंदी पृष्ठतोऽन्वगमत्सुधीः॥
वृषभो ह्यग्रतो भूत्वा पुष्पकेण विराजितः॥ ३४.१४४ ॥

शोभमानो महादेव एभिः सर्वैः सुशोभनैः॥
अंतःपुरगता देवी पार्वती सा हि दुर्मनाः॥ ३४.१४५ ॥

सखीभिर्बहुभिस्तत्र तथान्याभिः सुसंवृता॥
गिरिजा चिंतयामास मनसा परमेश्वरम्॥ ३४.१४६ ॥

ततो दूरं गतः शंभुर्विसृज्य च गणांस्तदा॥
गणेशं च कुमारं च वीरभद्रं तथाऽपरान्॥ ३४.१४७ ॥

भृंगिणं नंदिनं चंडं सोमनंदिनमेव च॥
एतानन्यांश्च सर्वांश्च कैलासपुरवासिनः॥ ३४.१४८ ॥

विसृज्य च महादेव एक एव महातपाः॥

गतो दूरं वनस्यांते तथा सिद्धवटं शिवः॥ ३४.१४९ ॥

काश्मीररत्नोपलसिद्धरत्नवैदूर्यचित्रं सुधया परिष्कृतम्॥
दिव्यासनं तस्य च कल्पितं भुवा तत्रास्थितो योगपतिर्महेशः॥ ३४.१५० ॥

पद्मासने चोपविष्टो महेशो योगवित्तमः॥
केवलं चात्मनात्मानं दध्यौ मीलितलोचनः॥ ३४.१५१ ॥

शुशुभे स महादेवः समाधौ चंद्रशेखरः॥
योगपट्टः कृतस्तेन शेषस्य च महात्मनः॥
वासुकिः सर्पराजश्च कटिबद्धः कृतो महान्॥ ३४.१५२ ॥

आत्मानमात्मात्मतया च संस्तुतो वेदांतवेद्यो न हि विश्वचेष्टितः॥
एको ह्यनेको हि दुरंतपारस्तथा ह्यक्र्यो निजबोधरूपः॥
स्थितस्तदानीं परमं पराणां निरीक्षमाणो भुवनैकभर्ता॥ ३४.१५३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवपार्वतीद्यूतप्रसंगेन पार्वतीहारितसर्वस्वस्य शिवस्य कैलासं विहाय तपोवनगमनवर्णनंनाम चतुस्त्रिंशोऽध्यायः॥ ३४ ॥ छ ॥

**॥लोमश उवाच॥**

वनं गते महादेवे गिरिजा विरहातुरा॥
सुखं न लेभे तन्वंगी हर्म्येष्वायतनेषु वा॥ ३५.१ ॥

चिंतयंती शिवंतन्वी सर्वभावेन शोभना॥
चिंतमानां शिवां ज्ञात्वा ह्युवाच विजया सखी॥ ३५.२ ॥

**॥विजयोवाच॥**

तपसा महता चैव शिवं प्राप्तासि शोभने॥
मृषशा द्यूतं कृतं तेन शंकरेण तपस्विना॥ ३५.३ ॥

द्यूते हि वहवो दोषा न श्रुताः किं त्वयाऽनघे॥
क्षमा पय शिवं तन्वि त्वरेणैव विचक्षणे॥ ३५.४ ॥

अस्माभिः सहिता देवि गच्छगच्छ वरानने॥ ३५.५ ॥

यावच्छंभुर्दूरतो नाभिगच्छेत्तावद्गत्वा शंकरं क्षामयस्व॥
नो चेतन्वि क्षामयेथाः शिवं त्वं दुःखं पश्चात्ते भविष्यत्यवश्यम्॥ ३५.६ ॥

निशम्य वाक्य विजयाप्रयुक्तं प्रहस्यामाना समधीरचेताः॥
उवाच वाक्यं विजयां सखीं च आश्चर्यभूतं परमार्थयुक्तम्॥ ३५.७ ॥

मया जितोऽसौ निरपत्रपश्च पुरा वृतो वै परया विभूत्या॥
किंचिच्च कृत्यं मम नास्ति सद्यो मया विनासौ च विरूप आस्थितः॥ ३५.८ ॥

रूपीकृतो मया देवो महेशो नान्यथा वद॥
मया तेन वियोगश्च संयोगो नैव जायते॥ ३५.९ ॥

साकारो हि निराकारो महेशो हि मया कृतः॥ ३५.१० ॥

कृतं मया विश्वमिदं समग्रं चराचरं देववरैः समेतम्॥
क्रीडार्थमस्योद्भववृत्तिहेतुभिश्चिक्रीडितं मे विजये प्रपश्य॥ ३५.११ ॥

एवमुक्त्वा तदा देवी गिरिजा सर्वमंगला॥
शबरीरूपमास्थाय गंतुकामा महेश्वरम्॥ ३५.१२ ॥

श्यामा तन्वी शिखरदशना बिंबबिंबाधरोष्ठी सुग्रीवाढ्या कुचभरनता गिरिजा स्निग्धकेशी॥
मध्ये क्षामा पृथुकटितटा हेमरंभोरुगौरी पल्लीयुक्ता वरवलयिनी बर्हिबर्हावतंसा॥ ३५.१३ ॥

पाणौ मृणालसदृशं दधती च चापं पृष्ठे लसत्कृतककेतकिबाणकोशम्॥
सा तं निरीशमलोकयति स्म तत्र संसेविता सुवदना बहुभिः सखीभिः॥ ३५.१४ ॥

भृंगीनादेन महता नादयंती जगत्त्रयम्॥
गिरिजा मन्मथं सद्यो जीवयंती पुनःपुनः॥ ३५.१५ ॥

सकामना राजहंसा बभूवुस्तत्क्षणादपि॥
द्विरेफा बर्हिणश्चैव सर्वे ते हृच्छयान्विताः॥ ३५ १६ ॥

एकाकी संस्थितो यत्र यमाधिस्थो महेश्वरः॥
दृष्टस्ततस्तया देव्या भृंगीनादेन मोहितः॥ ३५.१७ ॥

प्रबद्धो हि महादेवो निरीक्ष्य शबरीं तदा॥
समाधेरुत्थितः सद्यो महेशो मदनान्वितः॥ ३५.१८ ॥

यावत्करे गृहयमाणो गिरिजां स समीपगः॥
तावत्तस्य पुरः सद्यस्तिरोधानं गता सती॥ ३५.१९ ॥

तद्दृष्ट्वा तत्क्षणादेव देवो भ्रांतिविनाशनः॥
भ्रममाणस्तदा शंभुर्नापश्यदसितेक्षणाम्॥ ३५.२० ॥

विरहेण समायुक्तो हृच्छयेन समन्वितः॥
मदनारिस्तदा शंभुर्ज्ञानरूपो निरंतरम्॥ ३५.२१ ॥

निर्मोहो मोहमापन्नो ददर्श गिरिजां पुनः॥
उवाच वाक्यं शबरीं प्रस्ताव सदृशं महत्॥ ३५.२२ ॥

**॥शिव उवाच॥**
वाक्यं मे श्रृणु तन्वंगि श्रुत्वा तत्कर्तुमर्हसि॥
कासि कस्यासि तन्वंगि किमर्थमटनं वने॥
तत्कथ्यतां महाभागे याथातथ्यं सुमध्यमे॥ ३५.२३ ॥

**॥शिवोवाच॥**
पतिमन्वेषयिष्यामि सर्वज्ञं सकलार्थदम्॥
स्वतंत्रं निर्विकारं च जगतामीश्वरं वरम्॥ ३५.२४ ॥

इत्युक्तः प्रत्युवाचेदं गिरिजां वृषभध्वजः॥
अहं तवोचितो भद्रे पतिर्नान्यो हि भामिनि॥ ३५.२५ ॥

विमृश्यतां वरारोहे तत्त्वतो हि वरानने॥
वचो निशम्य रुद्रस्य स्मितपूर्वमभाषत॥ ३५.२६ ॥

मयार्थितो महाभाग पतिस्त्वं नान्यथा वद॥
किं तु वक्ष्यामि भद्रं ते निर्गुणोऽसि परंतपः॥ ३५.२७ ॥

यया पुरा वृतोऽसि त्वं तपसा च परेण हि॥
परित्यक्ता त्वयारण्ये क्षणमात्रेण भामिनी॥ ३५.२८ ॥

दुराराध्योऽसि सततं सर्वेषां प्राणिनामपि॥
तस्मान्न वाच्यं हि पुनर्यदुक्तं ते ममाग्रतः॥ ३५.२९ ॥

शबर्या वचनं श्रुत्वा प्रत्युवाच वृषध्वजः॥
मैवं वद विशालाक्षि न त्यक्ता सा तपस्विनी॥
यदि त्यक्ता मया तन्वि किं वक्तुमिह पार्यते॥ ३५.३० ॥

एवं ज्ञात्वा विशालाक्षि कृपणं कृपणप्रियम्॥
तस्मात्त्वया हि कर्तव्यं वचनं मे सुमध्यमे॥ ३५.३१ ॥

एवमभ्यर्थिता तेन बहुधा शूलपाणिना॥
प्रहस्य गिरिजा प्राह उपहासपरं वच॥ ३५.३२ ॥

तपोधनोऽसि योगीश विरक्तोऽसि निरंजनः॥
आत्मारामो हि निर्द्वंद्वो मदनो येन घातितः॥ ३५.३३ ॥

स त्वं साक्षाद्विरूपाक्षो मया दृष्टोसि चाद्य वै॥
अशक्यो हि मया प्राप्तुं सर्वेषां दुरतिक्रमः॥
तस्मात्त्वया न वक्तव्यं यदुक्तं च पुरा मम॥ ३५.३४ ॥

तस्यास्तद्वचनं श्रुत्वा प्रोवाच मदनांतकः॥
मम भार्या भव त्वं हि नान्यथा कर्तुमर्हसि॥ ३५.३५ ॥

इत्युक्त्वा तां करेऽगृह्णाच्छबरीं मदनातुरः॥
उवाच तं स्मयंती सा मुंचमुंचेति सादरम्॥ ३५.३६ ॥

नोचितं भगवान्कर्तुं तापसेन बलादिदम्॥
याचयस्व पितुर्मे त्वं नान्यथाभिभविष्यसि॥ ३५.३७ ॥

**॥महादेव उवाच॥**
पितरं कथयाशु त्वं स्थितः कुत्र शुभानने॥
द्रक्ष्यामि तं विशालाक्षि प्रणिपातपुरःसरम्॥ ३५.३८ ॥

एतदुक्तं तदा तेन निशम्यासितनेत्रया॥
आनीतो हि तया तन्व्या पितरं वृषभध्वजः॥ ३५.३९ ॥

स्थितं कैलासशिखरे हिमवंतं नगोत्तमम्॥
अहिभिर्बहुभिश्चैव संवृतं च महाप्रभम्॥ ३५.४० ॥

द्वारि स्थितं तया देव्या दर्शितं शंकरस्य च॥
असौ मम पिता देव याचस्व विगतत्रपः॥
ददाति मां न संदेहस्तपस्विन्मा विलंबितम्॥ ३५.४१ ॥

तथेति मत्वा सहसा प्रणम्य हिमालयं वाक्यमिदं बभाषे॥
प्रयच्छ तां चाद्य गिरीशवर्य ह्यार्ताय कन्यां सुभगां महामते॥ ३५.४२ ॥

कृपणं वाक्यमाकर्ण्य समुत्थाय हिमालयः॥
महेशं च समादाय ह्युवाच गिरिराट् स्वयम्॥ ३५.४३ ॥

किं जल्पसि हि भो देव तावयुक्तं च सांप्रतम्॥
त्वं दाता त्रिषु लोकेषु त्वं स्वामी जगतां विभो॥ ३५.४४ ॥

त्वया ततमिदं विश्वं जगदेतच्चराचरम्॥
एवं स्तुतिपरोऽभूच्च हिमालयागिरिर्महान्॥
आगतो नारदस्तत्र ऋषिभिः परिवारितः॥ ३५.४५ ॥

उवाच प्रहसन्वाक्यं शूलपाणे नमः प्रभो॥
हे शंभो श्रृणु मे वाक्यं तत्त्वसारमयं परम्॥ ३५.४६ ॥

योषिद्भिः संगति पुंसां विडंबायोपकल्पते॥
त्वं स्वामी जगतां नाथः पराणां परमः परः॥
विमृश्य सर्वं देवेश यथावद्वक्तुमर्हसि॥ ३५.४७ ॥

एवं प्रबोधितस्तेन नारदेन महात्मना॥
प्रबोधमगमच्छंभुर्जहास परमेश्वरः॥ ३५.४८ ॥

**॥शिव उवाच॥**
सत्यमुक्तं त्वया चात्र नान्यथा नारदक्वचित्॥
योषित्संगतिमात्रेण नृणां पतनमेव च॥ ३५.४९ ॥

भविष्यति न संदेहो नान्यथा वचनं तव॥
अनया मोहितोऽद्याहमानीतो गंधमादनम्॥ ३५.५० ॥

पिशाचवत्कृतमिदं चरितं परमाद्भुतम्॥ ३५.५१ ॥

तस्मान्न तिष्ठामि गिरेः समीपे व्रजामि चाद्यैव वनांतरं पुनः॥
इत्येवमुक्त्वा स जगाम मार्गं दुरत्ययं योगेनामप्यगम्यम्॥ ३५.५२ ॥

निरालंबं स विज्ञाय नारदो वाक्यमब्रवीत्॥
गिरिजां च गिरींद्रं च पार्षदान्प्रति सत्वरम्॥ ३५.५३ ॥

वंदनीयश्च स्तुत्यश्च क्षाम्यतां परमार्थतः॥
महेशोऽयं जगन्नाथस्त्रिपुरारिर्महायशाः॥ ३५.५४ ॥

एतच्छ्रुत्वा तु वचनं नारदस्य मुखोद्गतम्॥
गिरिजां पुरतः कृत्वा गिरयो हि महाप्रभाः॥ ३५.५५ ॥

दण्डवत्पतिताः सर्वे शंकरं लोकशंकरम्॥
तुष्टुवुः प्रणताः सर्वे प्रमथा गुह्यकादयः॥ ३५.५६ ॥

स्तूयमानो हि भगवानागतो गंधमादनम्॥
अंगिरसा हि सर्वेशो ह्यभिषिक्तो महात्मभिः॥ ३५.५७ ॥

तदा दुन्दुभयो नेदुर्वादित्राणि बहूनि च॥
इन्द्रादयः सुराः सर्वे पुष्पवर्षं ववर्षिरे॥ ३५.५८ ॥

ब्रह्मादिभिः सुरगणैर्बहुभिः परीतो योगीश्वरो गिरिजया सह विश्ववंद्यः॥
अभ्यर्थितः परममंगल मंगलैश्च दिव्यासनोपरि रराज महाविभूत्या॥ ३५.५९ ॥

एवंविधान्यनेकानि चरितानि महात्मनः॥
महेशस्य च भो विप्राः पापहारीणि श्रृण्वताम्॥ ३५.६० ॥

यानियानीह रुद्रस्य चरितानि महांत्यपि॥
श्रुतानि परमाण्येव भूयः किं कथयामि वः॥ ३५.६१ ॥

**॥ऋषय ऊचुः॥**
एव मुक्तं त्वया सूत चरितं शंकरस्य च॥
अनेन चरितेनैव संतृप्ताः स्मो न संशयः॥ ३५.६२ ॥

**॥सूत उवाच॥**
व्यासप्रसादाच्छ्रुतमस्ति सर्वं मया ततं शंकररूपमद्भुतम्॥
सुविस्तृतं चाद्भुतवेदगर्भं ज्ञानात्मकं परमं चेदमुक्तम्॥ ३५.६३ ॥

श्रद्धया परयोपेताः श्रावयंति शिवप्रियम्॥
श्रृण्वंति चैव ये भक्त्या शंभेर्माहात्म्यमद्भुतम्॥
शिवशास्त्रमिदं प्रीत्या ते यांति मरमां गतिम्॥ ३५.६४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे पार्वत्या शबरीरूपेण शिवस्य गन्धमादनपर्वतं प्रत्यानयनपूर्वकं बृहस्पतिकृतशिवराज्याभिषेकवर्णनं नाम पञ्चत्रिंशोऽध्यायः॥ ३५ ॥ छ ॥

॥ इति श्रीस्कान्दमहापुराणे प्रथमे माहेश्वरखण्डे प्रथमः केदारखण्डः समाप्तः॥ १ ॥

॥अथ श्रीस्कांदे महापुराणे प्रथमे माहेश्वरखण्डे कौमारिकाखण्डः प्रारभ्यते॥ २ ॥

श्रीगणेशाय नमः॥

ॐ नमो बृहस्पतये॥

नमतस्मै ब्रह्मणे॥

विष्णवे नमः॥

**॥श्रीमुनय ऊचुः॥**

दक्षिणार्णवतीरेषु यानि तीर्थानि पंच च॥

तानि ब्रूहि विशालाक्ष वर्णयंत्यति तानि च॥ १.१ ॥

सर्वतीर्थफलं येषु नारदाद्य वदंति च॥

तेषां चरितमाहात्म्यं श्रोतुमिच्छामहे वयम्॥ १.२ ॥

**॥उग्रश्रवा उवाच॥**

श्रृणुध्वचत्यद्भुतपुण्यसत्कथं कुमारनाथस्य महाप्रभावम्॥

द्वैपायनो यन्मम चाह पूर्वं हर्षाबुरोमोद्गमचर्चितांगः॥ १.३ ॥

कुमारगीता गाथात्र श्रूयतां मुनिसत्तमाः॥

या सर्वदेवैर्मुनिभिः पितृभिश्च प्रपूजिता॥ १.४ ॥

मध्वाचारस्तं भतीर्थं यो निषेवेत मानवः॥

नियतं तस्य वासः स्याद्ब्रह्मलोके यथा मम॥ १.५ ॥

ब्रह्मलोकाद्विष्णुलोकस्तस्मादपि शिवस्य च॥

पुत्राप्रियत्वात्तस्यापि गुहलोको महत्तमः॥ १.६ ॥

अत्राश्चर्यकथा या च फाल्गुनस्य पुरेरिता॥

नारदेन मुनिश्रेष्ठास्तां वो वक्ष्यामि विस्तरात्॥ १.७ ॥

पुरा निमित्ते कस्मिंश्चित्करीटी मणिकूटतः॥

समुद्रे दक्षिणेऽभ्यागात्स्नातुं तीर्थानि पंच च॥ १.८ ॥

वर्जयंति सदा यानि भयात्तीर्थानि तापसाः॥

कुमारेशस्य पूर्वं च तीर्थमस्ति मुनेः प्रियम्॥ १.९ ॥

स्तंभेशस्य द्वितीयं च सौभद्रस्य मुनेः प्रियम्॥

बर्करेश्वरमन्यच्च पौलोमीप्रियमुत्तमम्॥ १.१० ॥

चतुर्थं च महाकालं करंधम नृपप्रियम्॥

भरद्वाजस्य तीर्थं च सिद्धेशाख्यं हि पंचमम्॥ १.११ ॥

एतानि पंच तीर्थानि ददर्श कुरुपुंगवः॥

तपस्विभिर्वर्जितानि महापुण्यानि तानि च॥ १.१२ ॥

दृष्ट्वा पार्श्वे नारदीयानपृच्छत महामुनीन्॥

तीर्थानीमानि रम्याणि प्रभावाद्भुतवंति च॥ १.१३ ॥

किमर्थं ब्रूत वर्ज्यंते सदैव ब्रह्मवादिभिः॥

**॥तापसा ऊचुः॥**

ग्राहः पंच वसंत्येषु हरंति च तपोधनान्॥ १.१४ ॥

अत एतानि वर्ज्यंते तीर्थानि कुरुनंदन॥

इति श्रुत्वा महाबाहुर्गमनाय मनो दधे॥ १.१५ ॥

ततस्तं तापसाः प्रोचुत्हंतुं नार्हसि फाल्गुन॥

बहवो भक्षिता ग्राहै राजानो मुनयस्तथा॥ १.१६ ॥

तत्त्व द्वारशवर्षाणि तीर्थानामर्बुदेष्वपि॥

स्नातः किमेतैस्तीर्थैस्ते मा पतंगव्रतो भव॥ १.१७ ॥

**॥अर्जुन उवाच॥**

यदुक्तं करुणासारैः सारं किं तदिहोच्यताम्॥

धर्मार्थी मनुजो यश्च न स वार्यो महात्मभिः॥ १.१८ ॥

धर्मकामं हि मनुजं यो वारयति मंदधीः॥

तदाश्रितस्य जगतो निःश्वासैर्भस्मसाद्भवेत्॥ १.१९ ॥

यज्जीवितं चाचिरांशुसमानक्षणभंगुरम्॥

तच्चेद्धर्मकृते याति यातु दोषोऽस्ति को ननु॥ १.२० ॥

जीवितं च धनं दाराः पुत्राः क्षेत्रगृहाणि च॥

यान्ति येषआं धर्मकृते त एव भुवि मानवाः॥ १.२१ ॥

**॥तापसा ऊचुः॥**

एवं ते ब्रुवतः पार्थ दीर्घमायुः प्रवर्धताम्॥

सदा धर्मे रतिर्भूयाद्याहि स्वं कुरु वांछितम्॥ १.२२ ॥

एवमुक्तः प्रणम्यैतानाशीर्भिरभिसंस्तुतः॥

जगाम तानि तीर्थानि द्रष्टुं भरतसत्तमः॥ १.२३ ॥

ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम्॥
विगाह्य तरसा वीरः स्नानं चक्रे परंतपः॥ १.२४ ॥
अथ तं पुरुषव्याघ्रमंतर्जलचरो महान्॥
निजग्राह जले ग्राहः कुंतीपुत्रं धनंजयम्॥ १.२५ ॥
तमादायैव कौंतेयो विस्फुरंतं जलेचरम्॥
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः॥ १.२६ ॥
उद्धृतश्चैव तु ग्राहः सोऽर्जुनेन यशस्विना॥
बभूव नारी कल्याणी सर्वाभरणभूषिता॥ १.२७ ॥
दीप्यमानशिखा विप्रा दिव्यरूपा मनोरमा॥
तदद्भुतं महद्दृष्ट्वा कुंतीपुत्रो धनंजयः॥ १.२८ ॥
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत्॥
का वै त्वमसि कल्याणि कुतो वा जलचारिणी॥ १.२९ ॥
किमर्थं च महात्पापमिदं कृतवती ह्यसि॥
**॥नार्युवाच॥**
अप्सरा ह्यस्मि कौंतेय देवारण्यनिवासिनी॥ १.३० ॥
इष्टा धनपतेर्नित्यं वर्चानाम महाबल॥
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः॥ १.३१ ॥
ताभिः सार्धं प्रयातास्मि देवराजनिवेशनात्॥
ततः पश्यामहे सर्वा ब्राह्मणं चानिकेतनम्॥ १.३२ ॥
रूपवंतमधीयानमेकमेकांतचारिणम्॥
तस्य वै तपसा वीर तद्वनं तेजसावृतम्॥ १.३३ ॥
आदित्य इव तं देशं कृत्स्नमेवान्व भासयत्॥
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम्॥ १.३४ ॥
अवतीर्णास्ति तं देशं तपोविघ्नचिकीर्षया॥
अहं च सौरभेयी च सामेयी बुद्बुदालता॥ १.३५ ॥
यौगपद्येन तं विप्रमभ्यगच्छाम भारत॥
गायंत्यो ललमानाश्च लोभयंत्यश्च तं द्विजम्॥ १.३६ ॥
स च नास्मासु कृतवान्मनोवीरः कथंचन॥

नाकंपत महातेजाः स्थितस्तपसि निर्मले॥ १.३७ ॥

सोऽशपत्कुपितोऽस्मासु ब्राह्मणः क्षत्रियर्षभ॥

ग्राहभूता जले यूयं भविष्यथ शतं समाः॥ १.३८ ॥

ततो वयं प्रव्यथिताः सर्वा भरतसत्तम॥

आयाताः शरणं विप्रं तपोधनमकल्मषम् १.३९ ॥

रूपेण वयसा चैव कंदर्पेण च दर्पिताः॥

अयुक्तं कृतवत्यः स्म क्षंतुमर्हसि नो द्विज॥ १.४० ॥

एष एव वधोऽस्माकं स पर्याप्तस्तपोधन॥

यद्वयं शंसितात्मानं प्रलोब्धुं त्वामुपागताः॥ १.४१ ॥

अवध्याश्च स्त्रियः सृष्टा मन्यंते धर्मचिंतकाः॥

तस्माद्धर्मेण धर्मज्ञ एष वादो मनीषिणाम्॥ १.४२ ॥

शरणं च प्रपन्नानां शिष्टाः कुर्वंति पालनम्॥

शरण्यं त्वां प्रपन्नाः स्मस्तस्मात्त्वं क्षंतुमर्हसि॥ १.४३ ॥

एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत्॥

प्रसादं कृतवाञ्छूररविसोमसमप्रभः॥ १.४४ ॥

**॥ब्राह्मण उवाच॥**

भवतीनां चरित्रेण परिमुह्यामि चेतसि॥

अहो धार्ष्ट्यमहो मोहो यत्पापाय प्रवर्तनम्॥ १.४५ ॥

मस्त कस्थायिनं मृत्युं यदि पश्येदयं जनः॥

आहारोऽपि न रोचेत किमुताकार्यकारिता॥ १.४६ ॥

आहो मानुष्यकं जन्म सर्वजन्मसु दुर्लभम्॥

तृणवत्क्रियते कैश्चिद्योषिन्मूढैर्दुराधरैः॥ १.४७ ॥

तान्वयं समपृच्छामो जनिर्वः किंनिमित्ततः॥

को वा लाभो विचार्यैतन्मनासा सह प्रोच्यताम्॥ १.४८ ॥

न चैताः परिनिन्दामो जनिर्याभ्र्यः प्रवर्तते॥

केवलं तान्विनिंदामो ये च तासु निरर्गलाः॥ १.४९ ॥

यतः पद्मभुवा सृष्टं मिथुनं विश्ववृद्धये॥

तत्तथा परिपाल्यं वै नात्र दोषोऽस्ति कश्चन॥ १.५० ॥

या बांधवैः प्रदत्ता स्याद्वह्निद्विजसमागमे॥

गार्हस्थ्यपालनं धन्यं तया साकं हि सर्वदम्॥ १.५१ ॥

यथाप्रकृति पुंयोमो यत्नेनापि परस्परम्॥

साध्यामानो गुणाय स्यादगुणायाप्यसाधितः॥ १.५२ ॥

एवं यत्नात्साध्यमानं स्वकं गार्हस्थ्यमुत्तमम्॥

गुणाय महते भूयादगुणायाप्यसाधितम्॥ १.५३ ॥

पुरे पंचमुखे द्वाःस्थ एकादशभटैर्युतः॥

साकं नार्या बह्वपत्यः स कथं स्यादचेतनः॥ १.५४ ॥

यश्चस्त्रिया समायोगः पंचयज्ञादिकर्मभिः॥

विश्वोपकृतये सृष्टा मूढैर्हा साध्यतेऽन्यथा॥ १.५५ ॥

अहो श्रृणुध्वं नो चेद्वः शुश्रूषा जायते शुभा॥

तथापि बाहुमुद्धृत्य रोरूयामः श्रृणोति कः॥ १.५६ ॥

षड्धातुसारं तद्वीर्यं समानं परिहाय च॥

विनिक्षेपे कुयोनौ तु तस्येदं प्रोक्तवान्यमः॥ १.५७ ॥

प्रथमं चौषधीद्रोग्धा आत्मद्रोग्धा ततः पुनः॥

पितृद्रोग्धा विश्वद्रोग्धा यात्यंधं शाश्वतीः समाः॥ १.५८ ॥

मनुष्यं पितरो देवा मुनयो मानवास्तथा॥

भृतानि चोपजीवंति तदर्थं नियतो भवेत्॥ १.५९ ॥

वचसा मनसा चैव जिह्वया करश्रोत्रकैः॥

दांतमाहुर्हि सत्तीर्थं काकतीर्थमतः परम्॥ १.६० ॥

काकप्राये नरे यस्मिन्नमंते तामसा जनाः॥

हंसोऽयमिति देवानां कोऽर्थस्तेन विचिंत्यताम्॥ १.६१ ॥

एवंविधं हि विश्वस्य निर्माणं स्मरतोहृदि॥

अपि कृते त्रिलोक्याश्च कथं पापे रमेन्मनः॥ १.६२ ॥

तदिदं चान्यमर्त्यानां शास्त्रदृष्टमहो स्त्रियः॥

यमलोके मया दृष्टं मुह्ये प्रत्यक्षतः कथम्॥ १.६३ ॥

भवतीषु च कः कोपो ये यदर्थे हि निर्मिताः॥

ते तमर्थं प्रकुर्वंति सत्यमस्तुभमेव च॥ १.६४ ॥

शतं सहस्रं विश्वं च सर्वमक्षय वाचकम्॥
परिमाणं शतं त्वेव नैतदक्षय्यवाचकम्॥ १.६५ ॥
यदा च वो ग्राहभूता गृह्णतीः पुरुषाञ्जले॥
उत्कर्षति जलात्कश्चित्स्थले पुरुषसत्तमः॥ १.६६ ॥
तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ॥
अनृतं नोक्तपूर्वं मे हसतापि कदाचन॥
कल्याणस्य सुपृक्तस्य शुद्धिस्तद्वद्वरा हि वः॥ १.६७ ॥
**॥नार्युवाच॥**
ततोभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम्॥ १.६८ ॥
अचिंतयामापसृत्य तस्माद्देशात्सुदुःखिताः॥
क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम्॥ १.६९ ॥
समागच्छेम यो नः स्वं रूपमापादयेत्पुनः॥
ता वयं चिंतयित्वेह मुहूर्तादिव भारत॥ १.७० ॥
दृष्टवत्यो महाभागं देवर्षिमथ नारदम्॥
सर्वा दृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम्॥ १.७१ ॥
अभिवाद्य च तं पार्थ स्थिताः स्मो व्यथिताननाः॥
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तम्॥ १.७२ ॥
श्रुत्वा तच्च यथातत्त्वमिदं वचनमब्रवीत्॥
दक्षिणे सागरेऽनूपे पंच तीर्थानि संतिवै॥ १.७३ ॥
पुण्यानि रमणीयानि तानि गच्छत मा चिरम्॥
तत्रस्थाः पुरुषव्याघ्रः पांडवो वो धनंजयः॥ १.७४ ॥
मोक्षयिष्यति शुद्धात्मा दुःखा दस्मान्न संशयः॥
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः॥ १.७५ ॥
त्वमिदं सत्यवचनं कर्तुमर्हसि पांडव॥
त्वद्विधानां हि साधूनां जन्म दीनोपकारकम्॥ १.७६ ॥
श्रुत्वेति वचनं तस्याः सस्नौ तीर्थेष्वनुक्रमात्॥
ग्राहभूताश्चोज्जहार यथापूर्वाः स पांडवः॥ १.७७ ॥
ततः प्रणम्य ता वीरं प्रोच्यमाना जयाशिषः॥

गंतुं कृताभिलाषाश्च प्राह पार्थो धनंजयः॥ १.७८ ॥

एष मे हृदि संदेहः सुदृढः परिवर्तते॥

कस्माद्वोनारदमुनिरनुजज्ञे प्रवासितुम्॥ १.७९ ॥

सर्वः कोऽप्यतिहीनोऽपि स्वपूज्यस्यार्थसाधकः॥

स्वपूज्यतीर्थेष्वावासं प्रोक्तवान्नारदः कथम्॥ १.८० ॥

तथैव नवदुर्गासु सतीष्वतिबलासु च॥

सिद्धेशे सिद्धगणपे चापि वोऽत्र स्थितिः कथम्॥ १.८१ ॥

एकैक एषां शक्तो हि अपि देवान्निवारितुम्॥

तीर्थसंरोधकारिण्यः सर्वा नावारयत्कथम्॥ १.८२ ॥

इति चिंतयते मह्यं भृशं दोलायते मनः॥

महन्मे कौतुकं जातं सत्यं वा वक्तुमर्हथ॥ १.८३ ॥

**॥अप्सरस ऊचुः॥**

योग्यं पृच्छसि कौन्तेय पुनः पश्योत्तरां दिशम्॥ १.८४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे पार्थेन पञ्चाप्सरः समुद्धरणंनाम प्रथमोऽध्यायः॥ १ ॥ छ ॥

**॥सूत उवाच॥**

ततो द्विजौः परिवृतं नारदं देवपूजितम्॥

अभिगम्योपजग्राह सर्वानथ स पाण्डवः॥ २.१ ॥

ततस्तं नारदः प्राह जयारातिधनंजय॥

धर्मे भवति ते बुद्धिर्देवेषु ब्राह्मणेषु च॥ २.२ ॥

कच्चिदेतां महायात्रां वीर द्वादशवारषिकीम्॥

आचरन्खिद्यसे नैवमथ वा कुप्यसे न च॥ २.३ ॥

मुनीनामपि चेतांसि तीर्थयात्रासु पांडव॥

खिद्यंति परिकृप्यंति श्रेयसां विघ्नमूलतः॥ २.४ ॥

कच्चिन्नैतेन दोषेण समाश्लिष्टोऽसि पांडव॥

अत्र चांगिरसा गीतां गाथामेतां हि शुश्रुम॥ २.५ ॥

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्॥

निर्विकाराः क्रियाः सर्वाः स तीर्थफलमश्नुते॥ २.६ ॥

तदिदं हृदि धार्यं ते किं वा त्वं तात मन्यसे॥

भ्राता युधिष्ठिरो यस्य सखा यस्य स केशवः॥ २.७ ॥

पुनरेतत्समुचितं यद्विप्रैः शिक्षणं नृणाम्॥

वयं हि धर्मगुरवः स्थापितास्तेन विष्णुना॥ २.८ ॥

विष्णुना चात्र श्रृणुमो गीतां गाथां द्विजान्प्रति॥ २.९ ॥

यस्यामलामृतयशःश्रवणावगाहः सद्यः पुनाति जगदा श्वपचाद्विकुंठः॥

सोहं भवद्भिरुपलब्ध सुतीर्थकीर्तिश्छद्यां स्वबाहुमपि यः प्रतिकूलवर्ती॥ २.१० ॥

प्रियं च पार्थ ते ब्रूमो येषां कुशलकामुकः॥

सर्वे कुशलिनस्ते च यादवाः पांडवास्तथा॥ २.११ ॥

अधुना भीमसेनेन कुरूणामुपतापकः॥

शासनाद्धृतराष्ट्रस्य वीरवर्मा नृपो हतः॥ २.१२ ॥

स हि राज्ञामजेयोऽभूद्यथापूर्वं बलिर्बली॥

कंटकं कंटकेनेव धृतराष्ट्रो जिगाय तम्॥ २.१३ ॥

इत्यादिनारदप्रोक्तां वाचमाकर्ण्य फाल्गुनः॥

अतीव मुदितः प्राह तेषामकुशलं कुतः॥ २.१४ ॥

ये ब्राह्मणमते नित्यं ये च ब्राह्मणपूजकाः॥

अहं च शक्त्या नियतस्तीर्थानि विचरन्ननु॥ २.१५ ॥

आगतस्तीर्थमेतद्धि प्रमोदोऽतीव मे हृदि॥

तीर्थानां दर्शनं धन्यमवगाहस्ततोऽधिकः॥ २.१६ ॥

माहात्म्यश्रवणं तस्मादौर्वोपि मुनिरब्रवीत्॥

तदहं श्रोतुमिच्छामि तीर्थस्यास्य गुणान्मुने॥ २.१७ ॥
एतेनैव श्राव्यमेतद्यत्त्वयांगीकृतं मुने॥
त्वं हि त्रिलोकीं विचरन्वेत्सि सर्वां हि सारताम्॥ २.१८ ॥
तदेतत्सर्वतीर्थेभ्योऽधिकं मन्ये त्वदा हृतम्॥ २.१९ ॥
**॥नारद उवाच॥**
उचितं तव पार्थैतद्यत्पृच्छसि गुणिन्गुणान्॥
गुणिनामेव युज्यन्ते श्रोतुं धर्मोद्भवा गुणाः॥
साधूनां धर्मश्रवणैः कीर्तनैर्याति चान्वहम्॥ २.२० ॥
पापानामसदालापैरायुर्याति यथान्वहम्॥
तदहं कीर्तयिष्यामि तीर्थस्यास्य गुणान्बहून्॥ २.२१ ॥
यथा श्रुत्वा विजानासि युक्तमंगीकृतं मया॥
पुराहं विचरन्पार्थ त्रिलोकीं कपिलानुगः॥ २.२२ ॥
गतवान्ब्रह्मणो लोकं तत्रापश्यं पितामहम्॥
स हि राजर्षिदेवर्षिमूर्तामूर्तैः सुसंवृतः॥ २.२३ ॥
विभाति विमलो ब्रह्मा नक्षत्रैरुडुराडिव॥
तमहं प्रणिपत्याथ चक्षुषा कृतस्वागतः॥ २.२४ ॥
उविष्टः प्रमुदितः कपिलेन सहैव च॥
एतस्मिन्नंतरे तत्र वार्तिकाः समुपागताः॥ २.२५ ॥
प्रहीयंते हि ते नित्यं जगद्द्रष्टुं हि ब्रह्मणा॥
कृतप्रणामानथ तान्समासीनान्पितामहः॥ २.२६ ॥
चक्षुषामृतकल्पेन प्लावयन्निव चाब्रवीत्॥
कुत्र कुत्र विचीर्णं वो दृष्टं श्रुतमथापि वा॥ २.२७ ॥
किंचिदेवाद्भुतं ब्रूत श्रवणाद्येन पुण्यता॥
एवमुक्ते भगवता तेषां यः प्रवरो मतः॥ २.२८ ॥
सुश्रवानाम ब्रह्माणं प्रणिपत्येदमूचिवान्॥
प्रभोरग्रे च विज्ञप्तिर्यथा दीपो रवेस्तथा॥ २.२९ ॥
तथापि खलु वाच्यं मे परार्थं प्रेरितेन ते॥
मुनिः कात्यायनोनाम श्रुत्वा धर्मान्पुनर्बहून्॥ २.३० ॥
सारजिज्ञासया तस्थावेकांगुष्ठः शतं समाः॥
ततः प्रोवाच तं दिव्या वाणी कात्यायन श्रृणु॥ २.३१ ॥
पुण्ये सरस्वतीतीरे पृच्छ सारस्वतं मुनिम्॥
स ते सारं धर्मसाध्यं धर्मज्ञोऽभिवदिष्यति॥ २.३२ ॥
इति श्रुत्वा मुनिवरो मुनिश्रेष्ठमुपेत्य तम्॥

प्रणम्य शिरसा भूमौ पप्रच्छेदं हृदि स्थितम्॥ २.३३ ॥
सत्यं केचित्प्रशंसंतितपः शौचं तथा परे॥
सांख्यं केचित्प्रशंसंति योगमन्ये प्रचक्षते॥ २.३४ ॥
क्षमां केचित्प्रशंसंति तथैव भृशमार्ज्जवम्॥
केचिन्मौनं प्रशंसंति केचिदाहुः परं श्रुतम्॥ २.३५ ॥
सम्यग्ज्ञानं प्रशंसंति केचिद्वैराग्यमुत्तमम्॥
अग्निष्टोमादिकर्माणि तथा केचित्परं विदुः॥ २.३६ ॥
आत्मज्ञानं परं केचित्समलोष्टाश्मकांचनम्॥
इत्थं व्यवस्थिते लोके कृत्याकृत्यविधौ जनाः॥ २.३७ ॥
व्यामोहमेव गच्छंति किं श्रेय इति वादिनः॥
यदेतेषु परं कृत्यम् नुष्ठेयं महात्मभिः॥ २.३८ ॥
वक्तुमर्हसि धर्मज्ञ मम सर्वार्थसाधकम्॥ २.३९ ॥
**॥सारस्वत उवाच॥**
यन्मां सरस्वती प्राह सारं वक्ष्यामि तच्छृणु॥
छायाकारं जगत्सर्वमुत्पत्तिक्षयधर्मि च॥
वारांगनानेत्रभंगस्वदद्वद्भंगुरमेव तत्॥ २.४० ॥
धनायुर्यौवनं भोगाञ्जलचंद्रवदस्थिरान्॥
बुद्ध्या सम्यक्परामृश्य स्थाणुदानं समाश्रयेत्॥ २.४१ ॥
दानवान्पुरुषः पापं नालं कर्तुमिति श्रुतिः॥
स्थाणुभक्तो जन्ममृत्यू नाप्नोतीति श्रुति स्तथा॥ २.४२ ॥
सावर्णिना च गाथे द्वे कीर्तिते श्रृणु ये पुरा॥
वृषो हि भगवान्धर्मो वृषभो यस्य वाहनम्॥ २.४३ ॥
पूज्यते स महादेवः स धर्मः पर उच्यते॥
दुःखावर्ते तमोघोरे धर्माधर्मजले तथा॥ २.४४ ॥
क्रोधपंके मदग्राहे लोभबुद्बदसंकटे॥
मानगंभीरपाताले सत्त्वयानविभूषिते॥ २.४५ ॥
मज्जंतं तारयत्येको हरः संसारसागरात्॥
दानं वृत्तं व्रतं वाचः कीर्तिधर्मौ तथायुषः॥ २.४६ ॥
परोपकरणं कायादसारात्सारमुद्धरेत्॥
धर्मे रागः श्रुतौ चिंता दाने व्यसनमुत्तमम्॥ २.४७ ॥
इंद्रियार्थेषु वैराग्यं संप्राप्तं जन्मनः फलम्॥
देशेऽस्मिन्भारते जन्म प्राप्य मानुष्यमध्रुवम्॥ २.४८ ॥
न कुर्यादात्मनः श्रेयस्तेनात्मा वंचतश्चिरम्॥

देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम्॥ २.४९ ॥
तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा॥
सर्वस्य मूलं मानुष्यं तथा सर्वार्थसाधकम्॥ २.५० ॥
यदि लाभे न यत्नस्ते मूलं रक्ष प्रयत्नतः॥
महता पुण्यमूल्येन क्रीयते कायनौस्त्वया॥ २.५१ ॥
गंतुं दुःखोदधेः पारं तर यावन्न भिद्यते॥
अविकारिशरीरत्वं दुष्प्राप्यं वै ततः॥ २.५२ ॥
नापक्रामति संसारादात्महा स नराधमः॥
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः॥
दानानि चात्र दीयंते परलोकार्थमादरात्॥ २.५३ ॥
**॥कात्यायन उवाच॥**
दानस्य तपसो वापि भगवन्किं च दुष्करम्॥
किं वा महत्फलं प्रेत्य सारस्वत ब्रवीहि तत्॥ २.५४ ॥
**॥सारस्वत उवाच॥**
न दानाद्दुष्करतरं पृथिव्यामस्ति किचन॥
मुने प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम्॥ २.५५ ॥
परित्यज्य प्रियान्प्राणान्धनार्थे हि महाभयम्॥
प्रविशंति महालोभात्समुद्रमटवीं गिरिम्॥ २.५६ ॥
सेवामन्ये प्रपद्यंते श्ववृत्तिरिति या स्मृता॥
हिंसाप्रायां बहुक्लेशां कृषिं चेव तथा परे॥ २.५७ ॥
तस्य दुःखार्जितस्येह प्राणेभ्योपि गरीयसः॥
आयासशतलब्धस्य परित्यागः सुदुष्करः॥ २.५८ ॥
यद्ददाति यदश्नाति तदेव धनिनो धनम्॥
अनये मृतस्य क्रीडंति दारैरपि धनैरपि॥ २.५९ ॥
अहन्यहनि याचंतमहं न्ये गुरुं यथा॥
मार्जनं दर्पणस्येव यः करोति दिनेदिने॥ २.६० ॥
दीयमानं हि नापैति भूय एवाभिवर्धते॥
कूप उत्सिच्यमानो हि भवेच्छुद्धो बपहूदकः॥ २.६१ ॥
एकजन्मसुखस्यार्थे सहस्राणि विलापयेत्॥
प्राज्ञो जन्मसहस्रेषु संचिनोत्येकजन्मनि॥ २.६२ ॥
मूर्खो हि न ददात्यर्थानिह दारिद्र्यशंकया॥
प्राज्ञस्तु विसृजत्यर्थानमुत्र तस्य शंकया॥ २.६३ ॥
किं धनेन करिष्यंति देहिनो भंगुराश्रयाः॥

यदर्थं धनमिच्छंति तच्छरीरमशाश्वतम्॥ २.६४ ॥
अक्षरद्वयमभ्यस्तं नास्तिनास्तीति यत्पुरा॥
तदिदं देहिदेहिति विपरीतमुपस्थितम्॥ २.६५ ॥
बोधयंति च यावंतो देहीति कृपणं जनाः॥
अवस्थेयमदानस्य मा भूदेवं भवानपि॥ २.६६ ॥
दातुरेवोपकाराय वदत्यर्थीति देहि मे॥
यस्माद्दाता प्रयात्यूर्ध्वमधस्तिष्ठेत्प्रतिग्रही॥ २.६७ ॥
दरिद्रा व्याधिता मूर्खाः परप्रेष्यकराः सदा॥
अदत्तदानाज्जायंते दुःखस्यैव हि भाजनाः॥ २.६८ ॥
धनवंतमदातारं दरिद्रं वाऽतपस्विनम्॥
उभावंभसि मोक्तव्यौ कंठे बद्ध्वा महाशिलाम्॥ २.६९ ॥
शतेषु जायते शूरः सहस्रेषु च पंडितः॥
वक्ता शतसहस्रेषु दाता जायेत वा न वा॥ २.७० ॥
गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः॥
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही॥ २.७१ ॥
शिबिरौशीनरोङ्गानि सुतं च प्रियमौरसम्॥
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः॥ २.७२ ॥
प्रतर्द्दनः काशिपति प्रदाय नयने स्वके॥
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते॥ २.७३ ॥
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम्॥
ब्राह्मणेभ्यो ददौ चापि गचश्चोर्वी सपत्तनाम्॥ २.७४ ॥
अवर्षति च पर्जन्ये सर्वभूतनिवासकृत्॥
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः॥ २.७५ ॥
ब्रह्मदत्तश्च पांचाल्यो राजा बुद्धिमतां वरः॥
निधिं शंखं द्विजाग्र्येभ्यो दत्त्वा स्वर्गमवाप्तवान्॥ २.७६ ॥
सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः॥
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान्॥ २.७७ ॥
एते चान्ये च बहवः स्थाणोर्दानेन भक्तितः॥
रुद्रलोकं गता नित्यं शान्तात्मानो जितेन्द्रियाः॥ २.७८ ॥
एषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी॥
इति संचिंत्य सारार्थी स्थाणुदानपरो भव॥ २.७९ ॥
सोऽपि मोह परित्यज्य तथा कात्यायनोऽभवत्॥ २.८० ॥
**॥नारद उवाच॥**

एवं सुश्रवसा प्रोक्तां कथामाकर्ण्य पद्मभूः॥
हर्षाश्रुसंयुतोऽतीव प्रशशंस मुहुर्मुहुः॥ २.८१ ॥
साधु ते व्याहृतं वत्स एवमेतन्न चान्यथा॥
सत्यं सारस्वतः प्राह सत्या चैवं तथा श्रुतिः॥ २.८२ ॥
दानं यज्ञानां वरूथं दक्षिणा लोके दातारँसर्वभूतान्युपजीवंति दानेनारातीरँपानुदंत दानेन द्विषंतो मित्रा भवंति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदंतीति॥ २.८३ ॥
संसारसागरे घोरे धर्माधर्मोर्मिसंकुले॥
दानं तत्र निषेवेत तच्च नौरिव निर्मितम्॥ २.८४ ॥
इति संचिंत्य च मया पुष्करे स्थापिता द्विजाः॥
गङ्गायमुनयोर्मध्ये मध्यदेशे द्विजाः सृते॥ २.८५ ॥
स्थापिताः श्रीहरिभ्यां तु श्रीगौर्या वेदवित्तमाः॥
रुद्रेण नागराश्चैव पार्वत्या शक्तिपूर्भवाः॥ २.८६ ॥
श्रीमाले च तथा लक्ष्म्या ह्येवमादिसुरोत्तमैः॥
नानाग्रहाराः संदत्ता लोकोद्धरणकांक्षया॥ २.८७ ॥
न हि दानफले कांक्षा काचिन्नऽस्ति सुरोत्तमाः॥
साधुसंरक्षणार्थं हि दानं नः परिकीर्तितम्॥ २.८८ ॥
ब्राह्मणाश्च कृतस्थाना नानाधर्मोपदेशनैः॥
समुद्धरंति वर्णांस्त्रींस्ततः पूज्यतमा द्विजाः॥ २.८९ ॥
दानं चतुर्विधं दानमुत्सर्गः कल्पितं तथा॥
संश्रुतं चेति विविधं तत्क्रमात्परिकीर्तितम्॥ २.९० ॥
वापीकूपतडागानां वृक्षविद्यासुरौकसाम्॥
मठप्रपागृहक्षेत्रदानमुत्सर्ग इत्यसौ॥ २.९१ ॥
उपजीवन्निमान्यश्च पुण्यं कोऽपि चरेन्नरः॥
षष्ठमंशं स लभते यावद्यो विसृजेद्द्विजः॥ २.९२ ॥
तदेषामेव सर्वेषां विप्रसंस्थापनं परम्॥
देवसंस्थापनं चैव धर्मस्तन्मूल एव यत्॥ २.९३ ॥
देवतायतनं यावद्यावच्च ब्राह्मणगृहम्॥
तावद्दातुः पूर्वजानां पुण्यांशश्चोपतिष्ठति॥ २.९४ ॥
एतत्स्वल्पं हि वाणिज्यं पुनर्बहुफलप्रदम्॥
जीर्णोद्धारे च द्विगुणमेतदेव प्रकीर्तितम्॥ २.९५ ॥
तस्मादिदं त्वहमपिब्रवीमि सुरसत्तमाः॥
नास्ति दानसमं किंचित्सत्यं सारस्वतो जगौ॥ २.९६ ॥
**॥नारद उवाच॥**

इति सारस्वतप्रोक्तां तथा पद्मभुवेरिताम्॥
साधुसाध्वित्यमोदंत सुराश्चाहं सुविस्मिताः॥ २.९७ ॥
ततः सभाविसर्गांते सुरम्ये मेरुमूर्धनि॥
उपविश्य शिलापृष्ठे अहमेतदचिंतयम्॥ २.९८ ॥
सत्यमाह विरंचिस्तु स किमर्थं तु जीवति॥
येनैकमपि तद्वृत्तं नैव येन कृतार्थता॥ २.९९ ॥
तदहं दानपुण्यं हि करिष्यामि कथं स्फुटम्॥
कौपीनदण्डात्मधनो धनं स्वल्पं हि नास्ति मे॥ २.१०० ॥
अनर्हते यद्ददाति न ददाति तथार्हते॥
अर्हानर्हपरिज्ञानाद्दानधर्मो हि दुष्करः॥ २.१०१ ॥
देशेकाले च पात्रे च शुद्धेन मनसा तथा॥
न्यायार्जितं च यो दद्याद्यौवने स तदश्नुते॥ २.१०२ ॥
तमोवृतस्तु यो दद्यात्क्रोधात्तथैव च॥
भुंक्ते दान फलं तद्धि गर्भस्थो नात्र संशयः॥ २.१०३ ॥
बालत्वेऽपि च सोऽश्नाति यद्दत्तं दम्भकारणात्॥
दत्तमन्यायतो वित्तं वै चार्थकारणम्॥ २.१०४ ॥
वृद्धत्वे हि समश्नाति नरो वै नात्र भविष्यति॥
तस्माद्देशे च काले च सुपात्रे विधिना नरः॥
शुभार्जितं प्रयुञ्जीत श्रद्धया शाठ्यवर्जितः॥ २.१०५ ॥
तदेतन्निर्धनत्वाच्च कथं नाम भविष्यति॥
सत्यमाहुः पुरा वाक्यं पुराणमुनयोऽमलाः॥ २.१०६ ॥
नाधनस्यास्त्ययं लोको न परश्च कथंचन॥
अभिशस्तं प्रपश्यंति दरिद्रं पार्श्वतः स्थितम्॥ २.१०७ ॥
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति॥
पतितः शोच्यते सर्वैर्निर्धनश्चापि शोच्यते॥ २.१०८ ॥
यः कृशाश्वः कृशधनः कृशभृत्यः कृशातिथिः॥
स वै प्रोक्तः कृशोनाम न शरीरकृशः कृशऋ २.१०९ ॥
अर्थवान्दुष्कुलीनोऽपि लोके पूज्यतमो नरः॥
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते॥ २.११० ॥
ज्ञानवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः॥
ते सर्वे धनवृद्धस्य द्वारि तिष्ठन्ति किंकराः॥ २.१११ ॥
यद्यप्ययं त्रिभुवने अर्थोऽस्माकं पराग्नहि॥
तथाप्यन्यप्रार्थितो हि तस्यैव फलदो भवेत्॥ २.११२ ॥

अथवैतत्पुरा सर्वं चिंतयिष्यामि सुस्फुटम्॥
विलोकयामि पूर्वं तु किंचिद्योग्यं हि स्थानकम्॥ २.११३ ॥
स चिंतयित्वेति बहुप्रकारं देशांश्च ग्रामान्नगराणि चाश्रमान्॥
बहूनहं पर्यटन्नाप्तवान्हि स्थानं हितं स्थापये यत्र विप्रान्॥ २.११४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे नारदार्जुनसंवादे दानप्रशंसावर्णनंनाम द्वितीयऽध्यायः॥ २ ॥ छ ॥

॥सू उवाच॥

एवं स्थानानि पुण्यानि यानियानीह वै भुवि॥
निरीक्षंस्तत्र तत्राहं नारदो वीरसत्तम॥ ३.१ ॥
विचरन्मेदिनीं सर्वां प्राप्तोऽहमाश्रमं भृगोः॥
यत्र रेवानदी पुण्या सप्तकल्पस्मरा वरा॥ ३.२ ॥
महापुण्या पवित्रा च सर्वतीर्थमयी शुभा॥
पुनानि कीर्तनेनैव दर्शनेन विशेषतः॥ ३.३ ॥
तत्रावगाहनात्पार्थ मुच्यते जंतुरंहसा॥
यथा सा पिङ्गला नाडी देहमध्ये व्यवस्थिता॥ ३.४ ॥
इयं ब्रह्मांडपिण्डस्य स्थाने तस्मिन्प्रकीर्तिता॥
तत्रास्ते शुक्लतीर्थाख्यं रेवायां पापनाशनम्॥ ३.५ ॥
यत्र वै स्नानमात्रेण ब्रह्महत्या प्रणश्यति॥
तस्यापि सन्निधौ पार्थ रेवाया उत्तरे तटे॥ ३.६ ॥
नानावृक्षसमाकीर्णं लतागुल्मोपशोभितम्॥
नानापुष्पफलो पेतं कदलीखंडमंडितम्॥ ३.७ ॥
अनेकाश्वापदाकीर्णं विहगैरनुनादितम्॥
सुगंधपुष्पशोभाढ्यं मयूररवनादितम्॥ ३.८ ॥
भ्रमरैः सर्वमुत्सृज्य निलीनं रावसंयुतम्॥
यथा संसारमुत्सृज्य भक्तेन हरपादयोः॥ ३.९ ॥
कोकिला मधुरैः स्वानैर्नादयंति तथा मुनीन्॥
यथा कथामृताख्यानैर्ब्राह्मणा भवभीरुकान्॥ ३.१० ॥
यत्र वृक्षा ह्लादयंति फलैः पुष्पैश्च पत्रकैः॥
छायाभिरपि काष्ठैश्च लोकानिव हरव्रताः॥ ३.११ ॥
पुत्रपुत्रेति वाशंते यत्र पुत्रप्रियाः खगाः॥
यथा शिवप्रियाः शैवा नित्यं शिवशिवेति च॥ ३.१२ ॥
एवंविधं मुनेस्तस्य भृगोराश्रममंडलम्॥
विप्रैस्त्रैविद्यसंयुक्तैः सर्वतः समलंकृतम्॥ ३.१३ ॥
ऋग्यजुः सामनिर्घोषैरारूरितदिगन्तरम्॥
रुद्रभक्तेन धीरेण यथैव भुवनत्रयम्॥ ३.१४ ॥
तत्राहं पार्थ संप्राप्तो यत्रास्ते मुनिसत्तमः॥
भृगुः परमधर्मात्मातपसा द्योतितप्रभः॥ ३.१५ ॥
आगच्छंतं तु मां दृष्ट्वा दीनं च मुदितं तथा॥
अभ्युत्थआनं कृतं सर्वैर्विप्रैर्भृगुपुरोगमैः॥ ३.१६ ॥

कृत्वा सुस्वागतं दत्त्वा अर्घाद्यं भृगुणा सह॥
आसनेषूपविष्टास्ते मुनींद्रा ग्राहिता मया॥ ३.१७ ॥
विश्रांतं तु ततो ज्ञात्वा भृगुर्मामप्युवाचह॥
क्व गंतव्यं मुनिश्रेष्ठ कस्मादिह समागतः॥ ३.१८ ॥
आगमनकारणं सर्वं समाचक्ष्व परिस्फुटम्॥
ततस्तं चिंतयाविष्टो भृगुं पार्थाहमब्रुवम्॥ ३.१९ ॥
श्रूयतामभिधास्यामि यदर्थमहामागतः॥
मया पर्यटिता सर्वा समुद्रांता च मेदिनी॥ ३.२० ॥
द्विजानां भूमिदानार्थं मार्गमाणः पदेपदे॥
निर्दोषां च पवित्रां च तीर्थैष्वपि समन्विताम्॥ ३.२१ ॥
रम्यां मनोरमां भूमिं न पश्यामि कथंचन॥
**॥भृगुरुवाच॥**
विप्राणां स्थापनार्थाय मयापि भ्रमता पुरा॥ ३.२२ ॥
पृथ्वी सागरपर्यंता दृष्टा सर्वा तदानघ॥
महीनाम नदी पुण्या सर्वतीर्थमयी शुभा॥ ३.२३ ॥
दिव्या मनोरमा सौम्या महापापप्रणाशिनी॥
नदीरूपेण तत्रैव पृथ्वी सा नात्र संशयः॥ ३.२४ ॥
पृथिव्यां यानि तीर्थानि दृष्टादृष्टानि नारद॥
तानि सर्वाणि तत्रैव निवसंति महीजले॥ ३.२५ ॥
सा समुद्रेण संप्राप्ता पुण्यतोया महानदी॥
संजातस्तत्र देवर्षे महीसागरसंगमः॥ ३.२६ ॥
स्तंभाख्यं तत्र तीर्थं तु त्रिषु लोकेषु विश्रुतम्॥
तत्र ये मनुजाः स्नानं प्रकुर्वंति विपश्चितः॥ ३.२७ ॥
सर्वपापविनिर्मुक्ता नोपसर्पंति वै यमम्॥
तत्राद्भुतं हि दृष्टं मे पुरा स्नातुं गतेन वै॥ ३.२८ ॥
तदहं कीर्तयिष्यामि मुने श्रृणु महाद्भुतम्॥
यावत्स्नातुं व्रजाम्यस्मिन्महीसागरसंगमे॥ ३.२९ ॥
तीरे स्थितं प्रपश्यामि मुनींद्रं पावकोपमम्॥
प्रांशुं वृद्धं चास्थिशेषं तपोलक्ष्म्या विभूषितम्॥ ३.३० ॥
भुजावूर्ध्वौ ततः कृत्वा प्ररुदंतं मुहुर्मुहुः॥
तं तथा दुःखितं दृष्ट्वा दुःखितोऽहमथाभवम्॥ ३.३१ ॥
सतां लक्षणमेतद्धि यद्दृष्ट्वा दुःखितं जनम्॥
शतसंख्य तस्य भवेत्तथाहं विललाप ह॥ ३.३२ ॥

अहिंसा सत्यमस्तेयं मानुष्ये सति दुर्लभम्॥
ततस्तमुपसंगम्य पर्यपृच्छमहं तदा॥ ३.३३ ॥
किमर्थं रोदिशि मुने शोके किं कारणं तव॥
सुगुह्यमपि चेद्ब्रूहि जिज्ञासा महती हि मे॥ ३.३४ ॥
मुनिस्ततो मामवदद्भृगो निर्भाग्यवानहम्॥
तेन रोदिमि मा पृच्छ दुर्भाग्यं चालपेद्धि कः॥ ३.३५ ॥
तमहं विस्मयाविष्टः पुनरेवेदमब्रुवम्॥
दुर्लभं भारते जन्म तत्रापि च मनुष्यता॥ ३.३६ ॥
मनुष्यत्वे ब्राह्मणत्वं मुनित्वं तत्र दुर्लभम्॥
तत्रापि च तपःसिद्धिः प्राप्यैतत्पंचकं परम्॥ ३.३७ ॥
किमर्थं रोदिषि मुने विस्मयोऽत्र महान्मम॥
एवं संपृच्छते मह्यमेतस्मिन्नेव चांतरे॥ ३.३८ ॥
सुभद्रोनाम नाम्ना च मुनिस्तत्राभ्युपाययौ॥
स हि मेरुं परित्यज्य ज्ञात्वा तीर्थस्य सारताम्॥ ३.३९ ॥
कृताश्रमः पूजयति सदा स्तंभेश्वरं मुनिः॥
सोऽप्येवं मामि वापृच्छन्मुनिं रोदनकारणम्॥ ३.४० ॥
अथाहाचम्य स मुनिः श्रूयतां कारणं मुनी॥
अहं हि देवशर्माख्यो मुनिः संयतवाङ्मनाः॥ ३.४१ ॥
निवसामि कृतस्थानो गंगासागरसंगमे॥
तत्र दर्शेतर्पयामि सदैव च पितॄनहम्॥ ३.४२ ॥
श्राद्धांते ते च प्रत्यक्षा ह्याशिषो मे वदंति च॥
ततः कदाचित्पितरः प्रहृष्टा मामथाब्रवन्॥ ३.४३ ॥
वयं सदात्र चायामो देवशर्मंस्तवांतिके॥
स्थानेऽस्माकं कदाचित्त्वं न चायासि कुतः सुतः॥ ३.४४ ॥
स्थानं दिदृक्षुस्तच्चाहं न शक्तोऽस्मि निवोदितुम्॥
ततः परममित्युक्त्वा गतवान्पितृभिः सह॥ ३.४५ ॥
पितृणां मंदिरं पुण्यं भौमलोकसमास्थितम्॥
तत्रतत्र स्थितश्चाहं तेजोमण्डलदुर्दृशान्॥ ३.४६ ॥
दृष्ट्वाग्रतः पूजयाढ्यानपृच्छं स्वान्पितॄनिति॥
के ह्यमी समुपायांति भृशं तृप्ता भृशार्चिताः॥
भृशंप्रमुदिता नैव तथा यूयं यथा ह्यमी॥ ३.४७ ॥
**॥पितर ऊचुः॥**
भद्रं ते पितरः पुण्याः सुभद्रस्य महामुनेः॥

तर्पितास्तेन मुनिना महीसागरसंगमे॥ ३.४८ ॥
सर्वतीर्थमयी यत्र निलीना ह्युदधौ मही॥
तत्र दर्शे तर्पयति सुभद्रस्तानमून्सुत॥ ३.४९ ॥
इत्याकर्ण्य वचस्तेषां लज्जितोऽहं भृशंतदा॥
विस्मितश्च प्रणम्यैतान्पितॄन्स्वं स्थानमागतः॥ ३.५० ॥
यथा तथा चिंतितं च तत्र यास्याम्यहं श्फुटम्॥
पुण्यो यत्रापि विख्यातो महीसागरसंगमः॥ ३.५१ ॥
कृताश्रमश्च तत्रैव तर्पयिष्ये निजान्पितॄन्॥
दर्शेदर्शे यथा चासौ स्तुत्यनामा सुभद्रकः॥ ३.५२ ॥
किं तेन ननु जातेन कुलांगारेण पापिना॥
यस्मिञ्जीवत्यवि निजाः पितरोऽन्यस्पृहाकराः॥ ३.५३ ॥
इति संचिंत्य मुदितो रुचिं भार्यामथाब्रवुम्॥
रुचे त्वया समायुक्तो महीसागगरसंगमम्॥ ३.५४ ॥
गत्वा स्थास्यामि तत्रैव शीघ्रं त्वं सम्मुखीभव॥
पतिव्रतासि शुद्धासिकुलीनासि यशस्विनि॥
तस्मादेतन्मम शुभे कर्तुमर्हसि चिंतितम्॥ ३.५५ ॥
**॥रुचिरुवाच॥**
हता तस्य जनिर्नाभूत्कथं पाप दुरात्मना॥ ३.५६ ॥
श्मशानस्तंभ येनाहं दत्ता तुभ्यं कृतंत्वाय॥
इह कंदफलाहारैर्यत्किं तेन न पूर्यते॥ ३.५७ ॥
नेतुमिच्छसि मां तत्र यत्र क्षारोदकं सदा॥
त्वमेव तत्र संयाहि नंदंतु तव पूर्वजाः॥ ३.५८ ॥
गच्छ वा तिष्ठ वा वृद्ध वस वा काकवच्चिरम्॥
तथा ब्रुवन्त्यां तस्यां तु कर्णावस्मि पिधाय च॥ ३.५९ ॥
विपुलं शिष्यमादिश्य गृह एकोऽत्र आगतः॥
सोऽहं स्नात्वात्र संतर्प्य पितॄञ्छ्रद्धापरायणः॥ ३.६० ॥
चिंतां सुविपुलां प्राप्तो नरके दुष्कृती यथा॥
यदि तिष्ठामि चात्रैव अर्धदेहधरो ह्यहम्॥ ३.६१ ॥
नरो हि गृहिणीहीनो अर्धदेह इति स्मृतः॥
यथात्मना विना देहे कार्यं किंचिन्न सिध्यति॥ ३.६२ ॥
अनयोर्हि फलं ग्राह्यं सारता नात्र काचन॥
अर्धदेही च मनुजस्त्वसंस्पृश्यः सतांमतः॥ ३.६३ ॥
अनयोर्हिफलं ग्राह्यं सारता नात्र काचन॥

अर्धदेही च मनुजस्त्वसंस्पृश्यः सतांमतः॥ ३.६४ ॥
औत्तानपादिरस्पृश्य उत्तमो हि सुरैः कृतः॥
अथ चेत्तत्र संयामि न महीसागरस्ततः॥ ३.६५ ॥
यामि वा तत्कथं पादौ चलतो मे कथंचन॥
एतस्मिन्मे मनो विद्धं खिद्यतेऽज्ञानसंकटे॥ ३.६६ ॥
अतोऽहमतिमुह्यामि भृशं शोचामि रोदिमि॥
इतिश्रुत्वा वचस्तस्य भृशं रोमांचपूरितम्॥ ३.६७ ॥
साधुसाध्वित्यथोवाच तं सुभद्रोऽप्यहं तथा॥
दण्डवच्च प्रणमितो महीसागरसङ्गमम्॥ ३.६८ ॥
चिन्तयावश्च मनसि प्रतीकारं मुनेरुभौ॥
यो हि मानुष्यमासाद्य जलबुद्बुदभंगुरम्॥ ३.६९ ॥
परार्थाय भवत्येष पुरुषोऽन्ये पुरीषकाः॥
ततः संचिंत्य प्राहेदं सुभद्रो मुनिसत्तमम्॥ ३.७० ॥
मा मुने परिखिद्यस्व देवशर्मन्स्थिरो भव॥
अहं ते नाशयिष्यामि शोकं सूर्यस्तमो यथा।. ३.७१ ॥
गमिष्याम्याश्रमं त्वं च नात्रापि परिहास्यते॥
श्रृणु तत्कारणं तुभ्यं तर्पयिष्ये पितॄनहम्॥ ३.७२ ॥
**॥देवशर्मोवाच॥**
एवं ते वदमानस्य आयुरस्तु शतं समाः॥
यदशक्यं महत्कर्म कर्तुमिच्छसि मत्कृते॥ ३.७३ ॥
हर्षस्थाने विषादश्च पुनर्मां बाधते श्रृणु॥
अपि वाक्यं शुभं सन्तो न गृह्णन्ति मुधा मुने॥ ३.७४ ॥
कथमेतन्महत्कर्म कारयामि मुधावद॥
पुनः किंचित्प्रवक्ष्यामि यथा मे निष्कृतिर्भवेत्॥ ३.७५ ॥
शापितोऽसि मया प्राणैर्यथा वच्मि तथा कुरु॥
अहं सदा करिष्यामि दर्शे चोद्दिश्यते पितॄन्॥ ३.७६ ॥
श्राद्धं गंगार्णवे चात्र मत्पितॄणां त्वमाचर॥
अहं चैवापि तपसः संचितस्यापि जन्मना॥
चतुर्भागं प्रदास्यामि एवमेवैतदाचर॥ ३.७७ ॥
**॥सुभद्र उवाच॥**
यद्येवं तव संतोषस्त्वेवमस्तु मुनीश्वर॥
साधूनां च यथा हर्षस्तथा कार्यं विजानता॥ ३.७८ ॥
**॥भृगुरुवाच॥**

देवशर्मा ततो हृष्टो दत्त्वा पुण्यं त्रिवाचिकम्॥
चतुर्थांशं ययौ धाम स्वं सुभद्रोऽपि च स्थितः॥ ३.७९ ॥
एवंविधो नारदासौ मही सागरसंगमः॥
यमनुस्मरतो मह्यं रोमांचोऽद्यापि वर्तते॥ ३.८० ॥
**॥नारद उवाच॥**
इति श्रुत्वा फाल्गुनाहं हर्षगद्गदया गिरा॥
मृतोमृत इवा वोचं साधुसाध्विति तंभृगुम्॥ ३.८१ ॥
यूयं वयं गमिष्यामो महीतीरं सुशोभनम्॥
आवामीक्षावहे सर्वं स्थानकं तदनुत्तमम्॥ ३.८२ ॥
मम चैवं वचः श्रुत्वा भृगुः सह मयययौ॥
समस्तं तु महापुण्यं महीकूलं निरीक्षितम्॥ ३.८३ ॥
तद्दृष्ट्वा चातिहृष्टोहमासं रोमांचकंचुकः॥
अब्रवं मुनिशार्दूलं हर्षगद्गदया गिरा॥ ३.८४ ॥
त्वत्प्रसादात्करिष्यामि भृगो स्थानमनुत्तमम्॥
स्वस्थानं गम्यतां ब्रह्मन्नतः कृत्यं विचिंतये॥ ३.८५ ॥
एवं भृगुं चास्मिविसर्जयित्वा कल्लोलकोलाहलकौतुकीतटे॥
अथोपविश्येदमचिंतयं तदा किं कृत्यमात्मानमिवैकयोगी॥ ३.८६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारीकाखंडे नारदार्जुनसंवादे महीसागरसंगमतीर्थमाहात्म्ये तृतीयोऽध्यायः॥ ३ ॥ छ ॥

**॥ नारद उवाच॥**

ततस्त्वहं चिंतयामि कथं स्थानमिदं भवेत्॥
ममायत्तं यतो राज्ञां भूमिरेषा सदा वशे॥ ४.१ ॥
यत्त्वहं धर्मवर्णाणं गत्वा याचे ह मेदिनीम्॥
अर्पयत्येव स च मे याचितो न पुनः परः॥ ४.२ ॥
तथा हि मुनिभिः प्रोक्तं द्रव्यं त्रिविधमुत्तमम्॥
शुक्लं मध्यं च शबलमधमं गृष्णमुच्यते॥ ४.३ ॥
श्रुतेः संपादनाच्छिष्यात्प्राप्तं शुक्लं च क्न्ययया॥
तथा कुसीदवाणिज्यकृषियाचितमेव च॥ ४.४ ॥
शबलं प्रोच्यते सद्भिर्द्यूतचौर्येण साहसैः॥
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्॥ ४.५ ॥
शुक्लवित्तेन यो धर्मं प्रकुर्याच्छ्रद्धयान्वितः॥
तीर्थं पात्रं समासाद्य देवत्वे तत्समश्नुते॥ ४.६ ॥
राजसेन च भावेन वित्तेन शबलेन च॥
प्रदद्याद्दानमर्थिभ्यो मानुष्यत्वे तदश्नुते॥ ४.७ ॥
तमोवृतस्तु यो दद्यात्कृष्णवित्तेन मानवः॥
तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः॥ ४.८ ॥
तत्तु याचितद्रव्यं मे राजसं हि स्फुटं भवेत्॥
अथ ब्राह्मणभावेन नृपं याचे प्रतिग्रहम्॥ ४.९ ॥
तदप्यहो चातिकष्ट हेतुना तेन मे मतम्॥
अयं प्रतिग्रहो घोरो मध्वास्वादो विषोपमः॥ ४.१० ॥
प्रतीग्रहेण संयुक्तं ह्यमीवमाविशोद्द्विजम्॥
तस्मादहं निवृत्तश्च पापादस्मात्प्रतिग्रहात्॥ ४.११ ॥
ततः केनाप्युपायेन द्वयोरन्यतरेण तु॥
स्वायत्तं स्थानक कुर्म एतत्सञ्चिंतये मुहुः॥ ४.१२ ॥
यथा कुभार्यः पुरुषश्चिन्तांतं न प्रपद्यते॥
तथैव विमृशंश्चाहं चिंतांतं न लभाम्यणु॥ ४.१३ ॥
एतस्मिन्नन्तरे पार्थ स्नातुं तत्र समागताः॥
बहवो मुनयः पुण्ये महीसागरसंगमे॥ ४.१४ ॥
अहं तानब्रवं सर्वान्कुतो यूयं समागताः॥
ते मामूचुः प्रणम्याथ सौराष्ट्रविषये मुने॥ ४.१५ ॥
धर्मवर्मेति नृपतिर्योऽस्य देशस्य भूपतिः॥
स तु दानस्य तत्त्वार्थी तेपे वर्षगणान्बहून्॥ ४.१६ ॥

ततस्तं प्राह खे वाणी श्लोकमेकं नृप श्रृणु॥
द्विहेतु षडधिष्ठानं षडंगं च द्विपाकयुक्॥ ४.१७ ॥
चतुःप्रकारं त्रिविधं त्रिनाशं दानमुच्यते॥
इत्येकं श्लोकमाभाष्य खे वाणी विरराम ह॥ ४.१८ ॥
श्लोकस्यार्थं नावभाषे पृच्छमानापि नारद॥
ततो राजा धर्मवर्मा पटहेनान्वघोषयत्॥ ४.१९ ॥
यस्तु श्लोकस्य चैवास्य लब्धस्य तपसा मया॥
करोति सम्यगव्याख्यानं तस्य चैतद्ददाम्यहम्॥ ४.२० ॥
गवां च सप्त नियुतं सुवर्णं तावदेव तु॥
सप्तग्रामान्प्रयच्छामि श्लोकव्याख्यां करोति यः॥ ४.२१ ॥
पटहेनेति नृपतेः श्रुत्वा राज्ञो वचो महत्॥
आजग्मुर्बहुदेशीया ब्राह्मणाः कोटिशो मुने॥ ४.२२ ॥
पुनर्दुर्बोधविन्यासः श्लोकस्तैर्विप्रपुंगवैः॥
आख्यातुं शक्यते नैव गुडो मूकैर्यथा मुने॥ ४.२३ ॥
वयं च तत्र याताः स्मो धनलोभेन नारद॥
दुर्बोधत्वान्नमस्कृत्य श्लोकं चात्र समागताः॥ ४.२४ ॥
दुर्व्याख्येयस्त्वयं श्लोको धनं लभ्यं न चैव नः॥
तीर्थयात्रां कथं यामीत्येवाचिंत्यात्र चागताः॥ ४.२५ ॥
एवं फाल्गुन तेषां तु वचः श्रुत्वा महात्मनाम्॥
अतीव संप्रहृष्टोऽहं तान्विसृज्येत्यचिंतयम्॥ ४.२६ ॥
अहो प्राप्त उपायो मे स्थानप्राप्तौ न संशयः॥
श्लोकं व्याख्याय नृपतेर्लप्स्ये स्थानं धनं तथा॥ ४.२७ ॥
विद्यामूल्येन नैवं च याचितः स्यात्प्रतिग्रहः॥
सत्यमाह पुराणार्षिर्वासुदेवो जगद्गुरुः॥ ४.२८ ॥
धर्मस्य यस्य श्रद्धा स्यान्न च सा नैव पूर्यते॥
पापस्य यस्य श्रद्धास्यान्न च सापि न पूर्यते॥ ४.२९ ॥
एवं विचिंत्य विद्वांसः प्रकुर्वंति यथारुचि॥
सत्यमेतद्विभोर्वाक्यं दुर्लभोऽपि यथा हि मे॥ ४.३० ॥
मनोरथोऽयं सफलः संभूतोंकुरितः स्फुटम्॥
एनं च दुर्विदं श्लोकमहं जानामि सुस्फुटम्॥ ४.३१ ॥
अमूर्तैः पितृभिः पूर्वमेव ख्यातो हि मे पुरा॥
एवं हर्षान्वितः पार्थ संचिंत्याऽहं ततो मुहुः॥ ४.३२ ॥
प्रणम्य तीर्थं चलितो महीसागरसंगमम्॥

वृद्धब्राह्मणरूपेण ततोहं यातवान्नृपम्॥ ४.३३ ॥
इदं भणितवानस्मि श्लोकव्याख्यां नृप श्रृणु॥
यत्ते पटहविख्यातं दानं च प्रगुणीकुरु॥ ४.३४ ॥
एवमुक्ते नृपः प्राह प्रोचुरेवं हि कोटिशः॥
द्विजोत्तमाः पुनर्नस्यं प्रोक्तुमर्थो हि शक्यते॥ ४.३५ ॥
के द्विहेतू षडाख्यातान्यधिष्ठानानि कानि च॥
कानि चैव षडंगानि कौ द्वौ पाकौ तथा स्मृतौ॥ ४.३६ ॥
के च प्रकाराश्चत्वारः किंस्वित्तत्त्रिविधं द्विज॥
पयो नाशाश्च के प्रोक्ता दानस्यैतत्स्फुटं वद॥ ४.३७ ॥
स्फुटान्प्रश्नानिमान्सप्त यदि वक्ष्यसि ब्राह्मण॥
ततो गवां सप्तनियुतं सुवर्णं तावदेव तु॥ ४.३८ ॥
सप्त ग्रामांश्च दास्यामि नो चेद्यास्यसि स्वं गृहम्॥
इत्युक्त्वा वचनं पार्थ सौराष्ट्रस्वामिनं नृपम्॥ ४.३९ ॥
धर्मवर्माणमस्त्वेवं प्रावोचमवधारय॥
श्लोकव्याख्यां स्फुटां वक्ष्ये दानहेतू च तौ श्रृणु॥ ४.४० ॥
अल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम्॥
श्रद्धा शक्तिश्च दानानां वृद्ध्यक्षयकरेहि ते॥ ४.४१ ॥
तत्र श्रद्धाविषये श्लोका भवन्ति॥
कायक्लेशैश्च बहुभिर्न चैवारथस्य राशिभिः॥ ४.४२ ॥
धर्मः संप्राप्यते सूक्ष्मः श्रद्धा धर्मोऽद्भुतं तपः॥
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत्॥ ४.४३ ॥
सर्वस्वं जीवितं चापि दद्यादश्रद्धया यदि॥
नाप्नुयात्स फलं किंचिच्छ्रद्दधानस्ततो भवेत्॥ ४.४४ ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः॥
अकिंचना हि मुनयः श्रद्धावंतो दिवं गताः॥ ४.४५ ॥
त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा॥
सात्त्विकी राजसी चैव तामसी चेति तां श्रृणु॥ ४.४६ ॥
यजंते सात्त्विका देवान्यक्षरक्षांसि राजसाः॥
प्रेतान्भूतपिशाचांश्च यजंते तामसा जनाः॥ ४.४७ ॥
तस्माच्छ्रद्धावता पात्रे दत्तं न्यायार्जितं हि यत्॥
तेनैव भगवान्रुद्रः स्वल्पकेनापि तुष्यति॥ ४.४८ ॥
शक्तिविषये च श्लोका भवंति॥
कुटुंबभुक्तवसनाद्देयं यदतिरिच्यते॥

मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत्॥ ४.४९ ॥
शक्ते परजने दाता स्वजने दुःखजीविनि॥
मध्वापानविषादः स धर्माणां प्रतिरूपकः॥ ४.५० ॥
भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदैहिकम्॥
तद्भवत्यसुखोदकं जीवतोऽस्य मृतस्य च॥ ४.५१ ॥
सामान्यं याचितं न्यासमाधिर्दाराश्च दर्शनम्॥
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति॥ ४.५२ ॥
आपत्स्वपि न देयानि नववस्तूनि पंडितैः॥
यो ददाति स मूढात्मा प्रायाश्चित्तीयते नरः॥ ४.५३ ॥
इति ते गदितौ राजन्द्वौ हेतू श्रूयतामतः॥
अधिष्ठानानि वक्ष्यामि षडेव श्रृणु तान्यपि॥ ४.५४ ॥
धर्ममर्थं च कामं च व्रीडाहर्षभयानि च॥
अधिष्ठानानि दानानां षडेतानि प्रचक्षते॥ ४.५५ ॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्॥
केवलं धर्मबुद्ध्या यद्धर्मदानं तदुच्यते॥ ४.५६ ॥
धनिनं धनलोभेन लोभयित्वार्थमाहरेत्॥
तदर्थदानमित्याहुः कामदानमतः श्रृणु॥ ४.५७ ॥
प्रयोजनमपेक्ष्यैव प्रसंगाद्यत्प्रदीयते॥
अनर्हेषु सरागेण कामदानं तदुच्यते॥ ४.५८ ॥
संसदि व्रीडयाऽऽश्रुत्य आर्थिभ्यः प्रददाति च॥
प्रतिदीयते च यद्दानं व्रीडादानमिति श्रुतम्॥ ४.५९ ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत्प्रदीयते॥
हर्षदानमिति प्रोक्तं दानं तद्धर्मचिंतकैः॥ ४.६० ॥
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत्॥
दीयतेऽनुपकर्तृभ्यो भयदानं तदुच्यते॥ ४.६१ ॥
प्रोक्तानि षडधिष्ठानान्यंगान्यपि च षट्च्छृणु॥
दाता प्रतिग्रहीता च शुद्धिर्देयं च धर्मयुक्॥ ४.६२ ॥
देशकालौ च दानानामंगान्येतानि षड्विदुः॥
अपरोगी च धर्मात्मा दित्सुरव्यसनः शुचिः॥ ४.६३ ॥
अनिंद्याजीवकर्मा च षड्भिर्दाता प्रशस्यते॥
अनृजुश्चाश्रद्दधानोऽशांतात्मा धृष्टभीरुकः॥ ४.६४ ॥
असत्यसंधो निद्रालुर्दातायं तामसोऽधमः॥
त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेंद्रियः॥ ४.६५ ॥

विमुक्तो योनिदोषेभ्यो ब्राह्मः पात्रमुच्यते॥
सौमुख्यादभिसंप्रीतिरर्थिनां दर्शने सदा॥
सत्कृतिश्चानसूया च तदा शुद्धिरिति स्मृता॥ ४.६६ ॥
अपराबाधमक्लेशं स्वयत्नेनार्जितं धनम्॥
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते॥ ४.६७ ॥
तेनापि किल धर्मेण उद्दिश्य किल किंचन॥
देयं तद्धर्मयुगिति शून्ये शून्यं फलं मतम्॥ ४.६८ ॥
न्यायेन दुर्लभं द्रव्यं देशे कालेपि वा पुनः॥
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा॥ ४.६९ ॥
षंडगानीति चोक्तानि द्वौ च पाकावतः श्रृणु॥
द्वौ पाकौ दानजौ प्राहुः परत्राथ त्विहोच्यते॥ ४.७० ॥
सद्भ्यो यद्दीयते किंचित्ततत्परत्रोपतिष्ठति॥
असत्सु दीयते किंचित्तद्दानमिह भुज्यते॥ ४.७१ ॥
द्वौ पाकाविति निर्दिष्टौ प्रकारांश्चतुरः श्रृणु॥
ध्रुवमाहुस्त्रिकं काम्यं नैमित्तिकमिति क्रमात्॥ ४.७२ ॥
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते द्विजैः॥
प्रपारामतडागादिसर्वकामफलं ध्रुवम्॥ ४.७३ ॥
तदाहुस्त्रिकामित्याहुर्दीयते यद्दिनेदिने॥
अपत्यविजयैश्वर्यस्त्रीबालार्थं प्रदीयते॥ ४.७४ ॥
इच्छासंस्थं च यद्दानं काम्यमित्यभिधीयते॥
कालापेक्षं क्रियापेक्षं गुणापेक्षमिति स्मृतौ॥ ४.७५ ॥
त्रिधा नौमित्तिकं प्रोक्तं सदा होमविवर्जितम्॥
इति प्रोक्ताः प्रकारास्ते त्रैविध्यमभिधीयते॥ ४.७६ ॥
अष्टोत्तमानि चत्वारि मध्यमानि विधानतः॥
कानीयसानि शेषाणि त्रिविधत्वमिदं विदुः॥ ४.७७ ॥
गृहप्रासादविद्याभूगोकूपप्राणहाटकम्॥
एतान्युत्तमदानानि उत्तमद्रव्यदानतः॥ ४.७८ ॥
अन्नारामं च वासांसि हयप्रभृतिवाहनम्॥
दानानि मध्यमानीति मध्यमद्रव्यदानतः॥ ४.७९ ॥
उपानच्छत्रपात्रादिदधिमध्वासनानि च॥ ४.८० ॥
दीपकाष्ठोपलादीनि चरमं बहुवार्षिकम्॥
इति कानीयसान्याहुर्दाननाशत्रयं श्रृणु॥ ४.८१ ॥
यद्दत्त्वा तप्यते पश्चादासुरं तद्वृथा मतम्॥

अश्रद्धया यद्ददाति राक्षसं स्याद्वृथैव तत्॥ ४.८२ ॥
यच्चाक्रुश्य ददात्यंग दत्त्वा वाक्रोशति द्विजम्॥
पैशाचं तद्वृथा दानंदाननाशास्त्रयस्त्वमी॥ ४.८३ ॥
इति सप्तपदैर्बद्धं दानमाहात्म्य मुत्तमम्॥
शक्त्या ते कीर्तितं राजन्साधु वाऽसाधु वा वद॥ ४.८४ ॥
**॥धर्मवर्मोवाच॥**
अद्य मे सफलं जन्म अद्य मे सफलं तपः॥
अद्य ते कृतकृत्योऽस्मि कृतः कृतिमतां वर॥ ४.८५ ॥
पठित्वा सकलं जन्म ब्रह्मचारि यथा वृथा॥
बहुक्लेशात्प्राप्तभार्यः सावृथाऽप्रियवादिनी॥ ४.८६ ॥
क्लेशेन कृत्वा कूपं वा स च क्षारोदको वृथा॥
बहुक्लेशैर्जन्म नीतं विना धर्मं तथा वृथा॥ ४.८७ ॥
एवं मे यद्वृथा नाम जातं तत्सफलं त्वया॥
कृतं तस्मान्नमस्तुभ्यं द्विजेभ्यश्च नमोनमः॥ ४.८८ ॥
सत्यमाह पुरा विष्णुः कुमारान्विष्णुसद्मनि॥ ४.८९ ॥
नाहं तथाद्धि यजमानहविर्वितानश्चयोतद्घृतप्लुतमदन्हुतभुङ्मुखेन॥
यद्ब्राह्मणस्य मुखतश्चरतोनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः॥ ४.९० ॥
तन्मयाऽशर्मणा वापि यद्विप्रेष्वप्रियं कृतम्॥
सर्वस्य प्रभवो विप्रास्तत्क्षमतां प्रसादये॥ ४.९१ ॥
त्वं च कोसि न सामान्यः प्रणम्याहं प्रसादये॥
आत्मानं ख्यापय मुने प्रोक्तश्चेत्यब्रवं तदा॥ ४.९२ ॥
**॥नारद उवाच॥**
नारदोऽस्मि नृपश्रेष्ठ स्थानकार्थी समागतः॥
प्रोक्तं च देहि मे द्रव्यं भूमिं च स्थानहेतवे॥ ४.९३ ॥
यद्यपीयं देवतानां भूमिर्द्रव्यं च पार्थिव॥
तथापि यस्मिन्यः काले राजा प्रार्थ्यः स निश्चितम्॥ ४.९४ ॥
सहीश्वरस्यावतारो भर्त्ता दाताऽभयस्य सः॥
तथैव त्वामहं याचे द्रव्यशुद्धिप्सया॥
पूर्व ममालयं देहि देयार्थे प्रार्थनापरः॥ ४.९५ ॥
**॥राजोवाच॥**
यदि त्वं नारदो विप्र राज्यमस्त्वखिलं तव॥
अहं हि ब्राह्मणानां ते दास्यं कर्ता न संशयः॥ ४.९६ ॥
**॥नारद उवाच॥**

यद्यस्माकं भवान्भक्तस्तत्ते कार्यं च नो वचः॥ ४.९७ ॥
सर्वं यत्तद्देहि मे द्रव्यमुक्तं भुवं च मे सप्तगव्यूतिमात्राम्॥
भूयात्त्वत्तोप्यस्य रक्षेति सोऽपि मेने त्वहं चिंतये चार्थशेषम्॥ ४.९८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारि काखण्डे नारदार्जुनसंवादे दानभेदप्रशंसावर्णनंनाम चतुर्थोऽध्यायः॥ ४ ॥ छ ॥

**॥ नारद उवाच॥**

ततोऽहं धर्मवर्माणं प्रोच्य तिष्ठेद्धनं त्वयि॥
कृत्यकाले ग्रहीष्यामीत्यागमं रैवतं गिरिम्॥ ५.१ ॥
आसं प्रमुदितश्चाहं पश्यंस्तं गिरिसत्तमम्॥
आह्वयानं नरान्साधून्भूमेर्भुजमिवोच्छ्रितम्॥ ५.२ ॥
यस्मिन्नानाविधा वृक्षाः प्रकाशंते समंततः॥
साधुं गृहपतिं प्राप्य पुत्रभार्यादयो यथा॥ ५.३ ॥
मुदिता यत्र संतृप्ता वाशंते कोकिलादयः॥
सद्गुरोर्ज्ञानसंपन्ना यथा शिष्यगणा भुवि॥ ५.४ ॥
यत्र तप्त्वा तपो मर्त्या यथेप्सितमवाप्नुयुः॥
श्रीमहादेवमासाद्य भक्तो यद्वन्मनोरथम्॥ ५.५ ॥
तस्याहं च गिरेः पार्थ समासाद्य महाशिलाम्॥
शीतसौरभ्यमंदेन प्रीणीतोऽचिंतयं हृदि॥ ५.६ ॥
तावन्मया स्थानमाप्तं यदतीव सुदुर्लभम्॥
इदानीं ब्राह्मणार्थेऽहं कुर्वे तावदुपक्रमम्॥ ५.७ ॥
ब्राह्मणाश्च विलोक्य मे ये हि पात्रतमा मताः॥
तथा हि चात्र श्रूयंते वचांसि श्रुतिवादिनाम्॥ ५.८ ॥
न जलोत्तरणे शक्ता यद्वन्नौः कर्णवर्जिता॥
तद्वच्छ्रेष्ठोऽप्यनाचारो विप्रो नोद्धरणक्षमः॥ ५.९ ॥
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति॥
तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥ ५.१० ॥
दानपात्रमतिक्रम्य यदपात्रे प्रदीयते॥
तद्दत्तं गामतिक्रम्य गर्दभस्य गवाह्निकम्॥ ५.११ ॥
ऊषरे वापितं बीजं भिन्नभांडे च गोदुहम्॥
भस्मनीव हुतं हव्यं मूर्खे दानमशाश्वतम्॥ ५.१२ ॥
विधिहीने तथाऽपात्रे यो ददाति प्रतिग्रहम्॥
न केवलं हि तद्याति शेषं पुण्यं प्रणश्यति॥ ५.१३ ॥
भूराप्ता गौस्तथा भोगाः सुवर्णं देहमेव च॥
अश्वश्चक्षुस्तथा वासो घृतं तेजस्तिलाः प्रजाः॥ ५.१४ ॥
घ्नंति तस्मादविद्वांस्तु बिभियाच्च प्रतिग्रहात्॥
स्वल्पक केनाप्यविद्वांस्तु पंके गौरिव सीदति॥ ५.१५ ॥
तस्माद्ये गूढतपसो गूढस्वाध्यायसाधकाः॥
स्वदारनिरताः शांतास्तेषु दत्तं सदाऽक्षयम्॥ ५.१६ ॥

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्॥
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ ५.१७ ॥
न विद्यया केवलया तपसा वापि पात्रता॥
यत्र वृत्तिमिमे चोभे तद्वि पात्रं प्रचक्षते॥ ५.१८ ॥
तेषां त्रयाणां मध्ये च विद्या मुख्यो महागुणः॥
विद्यां विनांधवद्विप्राश्चक्षुष्मंतो हि ते मताः॥ ५.१९ ॥
तस्माच्चक्षुष्मतो विद्वान्देशे देशे परीक्षयेत्॥
प्रश्नान्ये मम वक्ष्यंति तेभ्यो दास्याम्यहं ततः॥ ५.२० ॥
इति संचिंत्य मनसा तस्माद्देशात्समुत्थितः॥
आश्रमेषु महर्षीणां विचराम्यस्मि फाल्गुन॥ ५.२१ ॥
इमाञ्छलोकान्गायमानः प्रश्नरूपाञ्छृणुष्व तान्॥
मातृकां को विजानाति कतिधा कीदृशाक्षराम्॥ ५.२२ ॥
पंचपंचाद्भुतं गेहं को विजानाति वा द्विजः॥
बहुरूपां स्त्रियं कर्तुमेकरूपां च वत्ति कः॥ ५.२३ ॥
को वा चित्रकथाबंधं वेत्ति संसारगोचरः॥
को वार्णवमहाग्राहं वेत्ति विद्यापरायणः॥ ५.२४ ॥
को वाष्टविधं ब्राह्मण्यं वेत्ति ब्राह्मणसत्तमः॥
युगानां च चतुर्णां वा को मूलदिवसान्वदेत्॥ ५.२५ ॥
चतुर्दशमनूनां वा मूलवासरं वेत्ति कः॥
कस्मिंश्चैव दिने प्राप पूर्वं वा भास्करो रथम्॥ ५.२६ ॥
उद्वेजयति भूतानि कृष्णाहिरिववेत्ति कः॥
को वास्मिन्घोरसंसारे दक्षदक्षतमो भवेत्॥ ५.२७ ॥
पंथानावपि द्वौ कश्चिद्वेत्ति वक्ति च ब्राह्मणः॥
इति मे द्वादश प्रश्नान्ये विदुर्ब्राह्मणोत्तमाः॥ ५.२८ ॥
ते मे पूज्यतमास्तेषामहामाराधकश्चिरम्॥
इत्यहं गायमानो वै भ्रमितः सकलां महीम्॥ ५.२९ ॥
ते चाहुर्दुःखदाः ख्याताः प्रश्नास्ते कुर्महे नमः॥
इत्यहं सकलां पृथ्वीं विचिंत्यालब्धब्राह्मणः॥ ५.३० ॥
हिमाद्रिशिखरासीनो भूयश्चिंतामवाप्तवान्॥
सर्वे विलोकिता विप्राः किमतः कर्तुमुत्सहे॥ ५.३१ ॥
ततो मे चिंतयानस्य पुनर्जातामतिस्त्वियम्॥
अद्यापि न गतश्चाहं कलापग्राममुत्तमम्॥ ५.३२ ॥
यस्मिन्विप्राः संवसंति मूर्तानीव तपांसि च॥

चतुराशीतिसाहस्राः श्रुताध्ययनशालिनः॥ ५.३३ ॥
स्थाने तस्मिन्गमिष्यामीत्युक्त्वाहं चलितस्तदा॥
खेचरो हिममाक्रम्य परं पारं गतस्ततः॥ ५.३४ ॥
अद्राक्षं पुण्यभूमिस्थं ग्रामरत्नमहं महत्॥
शतयोजनविस्तीर्णं नानावृक्षसमाकुलम्॥ ५.३५ ॥
यत्र पुण्यवतां संति शतशः प्रवराश्रमाः॥
सर्वेषामपि जीवानां यत्रान्योन्यं न दुष्टता॥ ५.३६ ॥
यज्ञभाजां मुनीनां यदुपकारकरं सदा॥
सतां धर्मवतां यद्वदुपकारो न शाम्यति॥ ५.३७ ॥
मुनीनां यत्र परमं स्थानं चाप्यविनाशकृत्॥
स्वाहास्वधावषट्कारहन्तकारो न नश्यति॥ ५.३८ ॥
यत्र कृतयुगस्तार्थं बीजं पार्थावशिष्यते॥
सूर्यस्य सोमवंशस्य ब्राह्मणानां तथैव च॥ ५.३९ ॥
स्थानकं तत्समासाद्य प्रविष्टोऽहं द्विजाश्रमान्॥
तत्र ते विविधान्वादान्विवदंते द्विजोत्तमाः॥ ५.४० ॥
परस्परं चिंतयाना वेदा मूर्तिधरा यथा॥
तत्र मेधाविनः केचिदर्थमन्यैः प्रपूरितम्॥ ५.४१ ॥
विचिक्षिपुर्महात्मानो नभोगतमिवामिषम्॥
तत्रा हं करमुद्यम्य प्रावोचं पूर्यतां द्विजाः॥ ५.४२ ॥
काकारावैः किमतैर्वो यद्यस्ति ज्ञानशालिता॥
व्याकुरुध्वं ततः प्रश्नान्मम दुर्विषहान्बहून्॥ ५.४३ ॥
**॥ब्राह्मणा ऊचुः॥**
वद ब्राह्मण प्रश्नान्स्वाञ्छ्रुत्वाऽऽधास्यामहे वयम्॥
परमो ह्येष नो लाभः प्रक्षान्पृच्छति यद्भवान्॥ ५.४४ ॥
अहं पूर्विकया ते वै न्यषेधंत परस्परम्॥
अहं पूर्वमहं पूर्वमिति वीरा यथा रणे॥ ५.४५ ॥
ततस्तान्ब्रवं प्रश्नानहं द्वादश पूर्वकान्॥
श्रुत्वा ते मामवो चंत लीलायंतो मुनीश्वराः॥ ५.४६ ॥
किं ते द्विज बालप्रश्नैरमीभिः स्वल्पकैरपि॥
अस्माकं यन्निहीनं त्वं मन्यसे स ब्रवीत्वमून्॥ ५.४७ ॥
ततोति विस्मितश्चाहं मन्यमानः कृतार्थताम्॥
तेषां निहीनं संचिंत्य प्रावोचं प्रब्रवीत्वयम्॥ ५.४८ ॥
ततः सुतनुनामा स बालोऽबालोऽभ्युवाच माम्॥

मम मंदायते वाणी प्रश्नैः स्वल्पैस्तव द्विज॥
तथापि वच्मि मां यस्मान्निहीनं मन्यते भवान्॥ ५.४९ ॥
**॥सुतनुरुवाच॥**
अक्षरास्तु द्विपं चाशन्मातृकायाः प्रकीर्तिताः॥ ५.५० ॥
ॐकारः प्रथमस्तत्र चतुर्दश स्वरास्तथा॥
स्पर्शाश्चैव त्रयस्त्रिं शदनुस्वारस्तथैव च॥ ५.५१ ॥
विसर्ज्जनीयश्च परो जिह्वामूलीय एव च॥
उपध्मानीय एवापि द्विपंचाशदमी स्मृताः॥ ५.५२ ॥
इति ते कथिता संख्या अर्थं चैषां श्रृणु द्विज॥
अस्मिन्नर्थे चेति हासं तव वक्ष्यामि यः पुरा॥ ५.५३ ॥
मिथिलायां प्रवृत्तोऽभूद्ब्राह्मणस्य निवेशने॥
मिथिलायां पुरा पुर्यां ब्राह्मणः कौथुमाभिधः॥ ५.५४ ॥
येन विद्याः प्रपठिता वर्तंते भुवि या द्विज॥
एकत्रिंशत्सहस्राणि वर्षाणां स कृतादरः॥ ५.५५ ॥
क्षणमप्यनवच्छिन्नं पठित्वा गेहवानभूत्॥
ततः केनापि कालेन कौथुमस्याभवत्सुतः॥ ५.५६ ॥
जडवद्वर्त्तमानः स मातृकां प्रत्यपद्यत॥
पठित्वा मातृकामन्यन्नाध्येति स कथंचन॥ ५.५७ ॥
ततः पिता खिन्नरूपी जडं तं समभाषत॥
अधीष्व पुत्रकाधीष्व तव दास्यामि मोदकान्॥ ५.५८ ॥
अथान्यस्मै प्रदास्यामि कर्णावुत्पाटयामि ते॥ ५.५९ ॥
**॥पुत्र उवाच॥**
तात किं मोदकार्थाय पठ्यते लोभहेतवे॥
पठनंनाम यत्पुंसां परामार्थं हि तत्स्मृतम्॥ ५.६० ॥
**॥कौथुम उवाच॥**
एवं ते वदमानस्य आयुर्भवतु ब्रह्मणः॥
साध्वी बुद्धिरियं तेऽस्तु कुतो नाध्येष्यतः परम्॥ ५.६१ ॥
**॥पुत्र उवाच॥**
तात सर्वं परिज्ञेयं ज्ञानमत्रैव वै यतः॥
ततः परं कंठशोषः किमर्थं क्रियते वद॥ ५.६२ ॥
**॥पितोवाच॥**
विचित्रं भाषसे बाल ज्ञातोऽत्रार्थश्च कस्त्वया॥
ब्रूहि ब्रूहि पुनर्वत्स श्रोतुमिच्छामि ते गिरम्॥ ५.६३ ॥

**॥पुत्र उवाच॥**

एकत्रिंशत्सहस्राणि पठित्वापि त्वया पितः॥

नानातर्कान्भ्रांतिरेव संधिता मनसिस्वके॥ ५.६४ ॥

अयमयं चायमिति धर्मो यो दर्शनोदितः॥

तेषु वातायते चेतस्तव तन्नाशयामि ते॥ ५.६५ ॥

उपदेशं पठस्येव नैवार्थज्ञोऽसि तत्त्वतः॥

पाठमात्रा हि ये विप्रा द्विपदाः पशवो हि ते॥ ५.६६ ॥

तत्ते ब्रवीमि तद्वाक्यं मोहमार्तंडमद्भुतम्॥ ५.६७ ॥

अकारः कथितो ब्रह्मा उकारो विष्णुरुच्यते॥

मकारश्च स्मृतो रुद्रस्त्रयश्चैते गुणाः स्मृताः॥ ५.६८ ॥

अर्धमात्रा च या मूर्ध्नि परमः स सदाशिवः॥

एवमोंकारमाहात्म्यं श्रुतिरेषा सनातनी॥ ५.६९ ॥

ॐकारस्य च माहात्म्यं याथात्म्येन न शक्यते॥

वर्षाणामयुतेनापि ग्रंथकोटिभिरेव वा॥ ५.७० ॥

पुनर्यत्सारसर्वस्वं प्रोक्तं तच्छ्रूयतां परम्॥

अःकारांता अकाराद्या मनवस्ते चतुर्दश॥ ५.७१ ॥

स्वायंभुवश्च स्वारोचिरौत्तमो रैवतस्तथा॥

तामसश्चाक्षुषः षष्ठस्तथा वैवस्वतोऽधुना॥ ५.७२ ॥

सावर्णिर्ब्रह्मसावर्णी रुद्रसावर्णिरेव च॥

दक्षसावर्णिरेवापि धर्मसावर्णिरेव च॥ ५.७३ ॥

रौच्यो भौत्यस्तथा चापि मनवोऽमी चतुर्दश॥

श्वेतः पांडुस्तथा रक्तस्ताम्रः पीतश्च कापिलः॥ ५.७४ ॥

कृष्णः श्यामस्तथा धूम्रः सुपिशंगः पिशंगकः॥

त्रिवर्णः शबलो वर्णैः कर्कंधुर इति क्रमात्॥ ५.७५ ॥

वैवस्वतः क्षकारश्च तात कृष्णः प्रदृश्यते॥

ककाराद्य हकारांतास्त्रयस्त्रिंशच्च देवताः॥ ५.७६ ॥

ककाराद्याष्ठकारांता आदित्या द्वादश स्मृताः॥

धाता मित्रोऽर्यमा शक्रो वरुणाश्चांशुरेव च॥ ५.७७ ॥

भगो विवस्वान्पूषा च सविता दशमस्तथा॥

एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते॥ ५.७८ ॥

जघन्यजः स सर्वेषामादित्यानां गुणाधिकः॥

डकाराद्या बकारांता रुद्राश्चैकादशैव तु॥ ५.७९ ॥

कपाली पिंगलो भीमो विरुपाक्षो विलोहितः॥

अजकः शासनः शास्ता शंभुश्चण्डो भवस्तथा॥ ५.८० ॥
भकाराद्याः षकारांता अष्टौ हि वसवो मताः॥
ध्रुवो घोरश्च सोमश्च आपश्चैव नलोऽनिलः॥ ५.८१ ॥
प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः॥
सौ हश्चेत्यश्विनौ ख्यातौ त्रयस्त्रिंशदिमे स्मृताः॥ ५.८२ ॥
अनुस्वारो विसर्गश्च जिह्वामूलीय एव च॥
उपध्मानीय इत्येते जरायुजास्तथांडजाः॥ ५.८३ ॥
स्वेदजाश्चोद्भिजाश्चेति तत जीवाः प्रकीर्तिताः॥
भावार्थः कथितश्चायं तत्त्वार्थं श्रृणु सांप्रतम्॥ ५.८४ ॥
ये पुमांसस्त्वमून्देवान्समाश्रित्य क्रियापराः॥
अर्धमात्रात्मके नित्ये पदे लीनास्त एव हि॥ ५.८५ ॥
चतुर्णां जीवयोनीनां तदैव परिमुच्यते॥
यदाभून्मनसा वाचा कर्मणा च यजेत्सुरान्॥ ५.८६ ॥
यस्मिञ्छास्त्रे त्वमी देवा मानिता नैव पापिभिः॥
तच्छास्त्रं हि न मंतव्यं यदि ब्रह्मा स्वयं वदेत्॥ ५.८७ ॥
अमी च देवाः सर्वत्र श्रौते मार्गे प्रतिष्ठिताः॥
पाषण्डशास्त्रे सर्वत्र निषिद्धाः पापकर्मभिः॥ ५.८८ ॥
तदमून्ये व्यतिक्रम्य तपो दानमथो जपम्॥
प्रकुर्वंति दुरात्मानो वेपते मरुतः पथि॥ ५.८९ ॥
अहो मोहस्य माहात्म्यं पश्यताविजितात्मनाम्॥
पठंति मातृकां पापा मन्यंते न सुरानिह॥ ५.९० ॥
**॥सुतनुरुवाच॥**
इति तस्य वचः श्रुत्वा पिताभूदतिविस्मितः॥
पप्रच्छ च बहून्प्रश्नान्सोप्य वादीत्तथातथा॥ ५.९१ ॥
मयापि तव प्रोक्तोऽयं मातृकाप्रश्न उत्तमः॥
द्वितीयं श्रृणु तं प्रश्नं पंचपंचादबुतं गृहम्॥ ५.९२ ॥
पंचभूतानि पञ्चैव कर्मज्ञानेंद्रियाणि च॥
पंच पंचापि विषया मनोबुद्ध्यहमेव च॥ ५.९३ ॥
प्रकृतिः पुरुषश्चैव पञ्चविंशः सदाशिवः॥
पञ्चपञ्चभिरेततैस्तु निष्पन्नं गृहमुच्यते॥ ५.९४ ॥
देहमेतदिदं वेद तत्त्वतो यात्यसौ शिवम्॥
बहुरूपां स्त्रियं प्राहुर्बुद्धिं वेदांतवादिनः॥ ५.९५ ॥
सा हि नानार्थभजनान्नानारूपं प्रपद्यते॥

धर्मस्यैकस्य संयोगाद्बहुधाप्येकिकैव सा॥ ५.९६ ॥
इति यो वेदे तत्त्वार्थं नासौ नरकमाप्नुयात्॥
मुनिभिर्यश्च न प्रोक्तं यन्न मन्येत दैवतान्॥ ५.९७ ॥
वचनं तद्बुधाः प्रहुर्बंधं चित्रकथं त्विति॥
यच्च कामान्वितं वाक्यं पंचमं वाप्यतः श्रुणु॥ ५.९८ ॥
एको लोभो महान्ग्राहो लोभात्पापं प्रवर्तते॥
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते॥ ५.९९ ॥
लोभान्मोहश्च माया च मानः स्तम्भः परेष्सुता॥
अविद्याऽप्रज्ञता चैव सर्वं लोभात्प्रवर्तते॥ ५.१०० ॥
हरणं परवित्तानां परदाराभिमर्शनम्॥
साहसानां च सर्वेषामकार्याणआं क्रियास्तथा॥ ५.१०१ ॥
स लोभः सह मोहेन विजेतव्यो जितात्मना॥
दम्भो द्रोहश्च निंदा च पैशुन्यं मत्सरस्तथा॥ ५.१०२ ॥
भवन्त्येतानि सर्वाणि लुब्धानामकृतात्मनाम्॥
सुमहां त्यपि सास्त्राणि धारयंति बहुश्रुताः॥ ५.१०३ ॥
छेत्तारः संशयानां च लोभग्रस्ता व्रजंत्यधः॥
लोभक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः॥ ५.१०४ ॥
अन्तःक्षुरा वाङ्मधुराः कूपाश्धन्नास्तृणौरिव॥
कुर्वते ये बहून्मार्गांस्तांस्तान्हेतुबलन्विताः॥ ५.१०५ ॥
सर्वमार्गं विलुंमपंति लोभाज्जातिषु निष्ठुराः॥
धर्मावतंसकाः क्षुद्रा मुष्णंति ध्वजिनो जगत्॥ ५.१०६ ॥
एतेऽतिपापिनो ज्ञेया नित्यं लोभसमन्विताः॥
जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित्॥ ५.१०७ ॥
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः॥
तस्मात्त्यजंति ये लोभं तेऽतिक्रामंति सागरम्॥ ५.१०८ ॥
संसाराख्यमतोऽनये ये ग्राहग्रस्ता न संशयः॥
अथ ब्राह्मणभेदांस्त्वमष्टो विप्रावधारय॥ ५.१०९ ॥
मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम्॥
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः॥ ५.११० ॥
एते ह्यष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ॥
तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः॥ ५.१११ ॥
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत्॥
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते॥ ५.११२ ॥

एकोद्देश्यमतिक्रम्य वेदस्याचारवानृजुः॥
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी॥ ५.११३ ॥
एकां शाखां सकल्पां च षड्भिरंगैरधीत्य च॥
षट्कर्मनिरतो विप्रः श्रोत्रियोनाम धर्मवित्॥ ५.११४ ॥
वेदवेदांगतत्त्वज्ञः शुद्धात्मा पापवर्जितः॥
श्रेष्ठः श्रोत्रियवान्प्राज्ञः सोऽनूचान इति स्मृतः॥ ५.११५ ॥
अनूचानगुणोपेतो यज्ञस्वाध्याययंत्रितः॥
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेंद्रियः॥ ५.११६ ॥
वैदिकं लौकिकं चैव सर्वज्ञानमवाप्य यः॥
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः॥ ५.११७ ॥
ऊर्ध्वरेता भवत्यग्र्यो नियताशी नसंश यी॥
शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः॥ ५.११८ ॥
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः॥
ध्यानस्थानिष्क्रियो दांतस्तुल्यमृत्कांचनो मुनिः॥ ५.११९ ॥
एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः॥
त्रिशुक्लानाम विप्रेंद्राः पूज्यन्ते सवनादिषु॥ ५.१२० ॥
इत्येवंविधविप्रत्वमुक्तं श्रृणु युगादयः॥
नवमी कार्तिके शुक्ला कृतादिः परिकीर्तिता॥ ५.१२१ ॥
वैशाखस्य तृतीया या शुक्ला त्रेतादिरुच्यते॥
माघे पञ्चदशीनाम द्वापरादिः स्मृता बुधैः॥ ५.१२२ ॥
त्रयोदशी नभस्ये च कृष्णा सा हि कलेः स्मृता॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः॥ ५.१२३ ॥
एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाक्षयमाशु विद्यात्॥
युगेयुगे वर्षशतेन दानं युगादिकाले दिवसेन तत्फलम्॥ ५.१२४ ॥
युगाद्याः कथिता ह्येता मन्वाद्याः श्रृणु सांप्रतम्॥
अश्वयुक्छुक्लनवमी द्वादशी कार्तिके तथा॥ ५.१२५ ॥
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा॥ ५.१२६ ॥
आषाढस्यापि दशमी माघमासस्य सप्तमी॥
श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा॥ ५.१२७ ॥
कार्तिकी फाल्गुनी चैत्री ज्येष्ठे पञ्चदशी सिता॥
मन्वंतरादयश्चैता दत्तस्याक्षयकारकाः॥ ५.१२८ ॥
यस्यां तिथौ रथं पूर्वं प्राप देवो दिवाकरः॥

सा तिथिः कथिता विप्रैर्माघे या रथसप्तमी॥ ५.१२९ ॥ द्र. **ऋ. ८.८०.४**
तस्यां दत्तं हुतं चेष्टं सर्वमेवाक्षयं मतम्॥
सर्वदारिद्र्यशमनं भास्करप्रीतये मतम्॥ ५.१३० ॥
नित्योद्वेजकमाहुर्यं बुधास्तं श्रृणु तत्त्वतः॥
यश्च याचनिको नित्यं न स स्वर्गस्य भाजनम्॥ ५.१३१ ॥
उद्वेजयति भूतानि यथा चौरास्तथैव सः॥
नरकं याति पापात्मा नित्योद्वेगकरस्त्वसौ॥ ५.१३२ ॥
इहोपपत्तिर्मम केन कर्मणा क्व च प्रयातव्यमितो मयेति॥
विचार्य चैवं प्रतिकारकारी बुधैः स चोक्तो द्विज दक्षदक्षः॥ ५.१३३ ॥
मासैरष्टभिरह्ना च पूर्वेण वयसायुषा॥
तत्कर्म पुरुषः कुर्याद्येनांते सुखमेधते॥ ५.१३४ ॥
अर्चिर्धूमश्च मार्गौ द्वावाहुर्वेदांतवादिनः॥
अर्चिषा याति मोक्षं च धूमेनावर्तते पुनः॥ ५.१३५ ॥
यज्ञैरासाद्यते धूमो नैष्कर्म्येणार्चिराप्यते॥
एतयोरपरो मार्गः पाखंड इति कीर्त्यते॥ ५.१३६ ॥
यो देवान्मन्यते नैव धर्मांश्च मनुसूचितान्॥
नैतौ स याति पंथानौ तत्त्वार्थोऽयं निरूपितः॥ ५.१३७ ॥
इते ते कीर्तिताः प्रश्नाः शक्त्या ब्राह्मणसत्तम॥
साधु वाऽसाधु वा ब्रूही ख्यापयात्मानमेव च॥ ५.१३८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
कलापग्रामवासिसुतनुब्राह्मणेन नारदप्रश्नोत्तरकथनंनाम पंचमोऽध्यायः॥ ५ ॥ छ ॥

**॥श्रीनारद उवाच॥**

इति श्रुत्वा फाल्गुनाहं रोमांचपुलकीकृतः॥

स्वरूपं प्रकटीकृत्य ब्राह्मणानिदमब्रवम्॥ ६.१ ॥

अहो धन्यः पितास्माकं यस्य सृष्टस्य पालकाः॥

युष्मद्विधा ब्राह्मणेंद्राः सत्यमाह पुरा हरिः॥ ६.२ ॥

मत्तोऽप्यनंतात्परतः परस्मात्समस्तभूताधिपतेर्न किंचित्॥

तेषां किमुस्यादितरेण येषां द्विजेश्वराणां मम मार्गवादिनाम्॥ ६.३ ॥

तत्सर्वथाद्या धन्योऽस्मि संप्राप्तं जन्मनः फलम्॥

यद्भवन्तो मया दृष्टाः पापोपद्रववर्जिताः॥ ६.४ ॥

ततस्ते सहसोत्थाय शातातपपुरोगमाः॥

अर्घ्यपाद्यादिसत्कारैः पूजयामासुर्मां द्विजाः॥ ६.५ ॥

प्रोक्तवन्तश्च मां पार्थ वचः साधुजनो चितम्॥

धन्या वयं हि देवर्षे त्वमस्मान्यदिहागतः॥ ६.६ ॥

कुतो वाऽऽगमनं तुभ्यं गन्तव्यं वा क्व सांप्रतम्॥

अत्राप्यागमने कार्यमुच्यतां मुनिसत्तम॥ ६.७ ॥

श्रुत्वा प्रीतिकरं वाक्यं द्विजानामिति पांडव॥

प्रत्यवोचं मुनीन्द्रांस्ताञ्छ्रूयतां द्विजसत्तमाः॥ ६.८ ॥

अहं हि ब्रह्मणो वाक्याद्विप्राणां स्थानकं शुभम्॥

दातुकामो महातीर्थे महीसागरसंगमे॥ ६.९ ॥

परीक्षन्ब्राह्मणानत्र प्राप्तो यूयं परीक्षिताः॥

अहं वः स्थायिष्यामि चानुजानीत तद्द्विजाः॥ ६.१० ॥

एवमुक्तो विलोक्यैव द्विजाञ्छातातपोऽब्रवीत्॥

देवानामपि दुष्प्राप्यं सत्यं नारद भारतम्॥ ६.११ ॥

किं पुनश्चापि तत्रैव मही सागरसंगमः॥

यत्र स्नातो महातीर्थफलं सर्वमुपाश्नुते॥ ६.१२ ॥

पुनरेको महान्दोषो बिभीमो नितरां यतः॥

तत्र चौराः सुबहवो निर्घृणाः प्रियसाहसाः॥ ६.१३ ॥

स्वर्शेषु षोडशं चैकविंशंगृह्णंति नो धनम्॥

धनेन तेन हीनानां कीदृशं जन्म नो भवेत्॥ ६.१४ ॥

वरं बुभुक्षया वासो मा चौरकरगा वयम्॥

**॥अर्जुन उवाच॥**

अद्भुतं वर्ण्यते विप्र के हि चौराः प्रकीर्तिताः॥ ६.१५ ॥

किं धनं च हरंत्येते येभ्यो बिभ्यति ब्राह्मणाः॥

**॥नारद उवाच॥**

कामक्रोधादयश्चौरास्तप एव धनं तथा॥ ६.१६ ॥

तस्यापहाभीतास्ते मामूचुरिति ब्राह्मणाः॥

तानहं प्राब्रवं पश्चाद्वि जानीत द्विजोत्तमाः॥ ६.१७ ॥

जाग्रतां तु मनुष्याणां चौराः कुर्वंति किं खलाः॥

भयभीतश्चालसश्च तथा चाशुचिरेव यः॥ ६.१८ ॥

तेन किं नाम संसाध्यं भूमिस्तं ग्रसते नरम्॥ ६.१९ ॥

**॥शातातप उवाच॥**

वयं चौरभयाद्भीतास्ते हरंति धनं महत्॥

कर्तुं तदा कथं शक्यमंगजागरणं तथा॥ ६.२० ॥

खलाश्चौरा गताः क्वापि ततो नत्वाऽऽगता वयम्॥

तस्मासर्वं संत्यजामो भयभीता वयं मुने॥ ६.२१ ॥

प्रतिग्रहश्च वै घोरः षष्ठांऽशफलदस्तथा॥

एवं ब्रुवति तस्मिंश्च हारीतोनाम चाब्रवीत्॥ ६.२२ ॥

मूढबुद्ध्या हि को नाम महीसागरसंगमम्॥

त्यजेच्च यत्र मोक्षश्च स्वर्गश्च करगोऽथ वा॥ ६.२३ ॥

कलापादिषु ग्रामेषु को वसेत विचक्षणः॥

यदि वासः स्तम्भतीर्थे क्षणार्धमपि लभ्यते॥ ६.२४ ॥

भयं च चौरजं सर्वं किं करिष्यति तत्र न॥

कुमारनाथं मनसि पालकं कुर्वतां दृढम्॥ ६.२५ ॥

साहसं च विना भूतिर्न कथंचन प्राप्यते॥

तस्मान्नारद तत्राहमा यास्ये तव वाक्यतः॥ ६.२६ ॥

षड्विंशतिसहस्राणि ब्राह्मणा मे परिग्रहे॥

षट्कर्मनिरताः शुद्धा लोभदम्भविवर्जिताः॥ ६.२७ ॥

तैः सार्धमागमिष्यामि ममेदं मतमुत्तमम्॥

इत्युक्ते वचने तांश्च कृत्वाहं दंडमूर्धनि॥ ६.२८ ॥

निवृत्तः सहसा पार्थ खेचरोऽतिमुदान्वितः॥

शतयोजनमात्रं तु हिममार्गमतीत्य च॥ ६.२९ ॥

केदारं समुपायातो युक्तस्तैर्द्विजसत्तमैः॥

आकाशेन सुशक्यश्च बिलेनाथ स देशकः॥ ६.३० ॥

अतिक्रांतुं नान्यथा च तथा स्कंदप्रसादतः॥ ६.३१ ॥

**॥अर्जुन उवाच॥**

क्व कलापं च द्ग्रामं कथं शक्यं बिलेन च॥

कथं स्कंदप्रसादः स्यादेतन्मे ब्रूहि नारद॥ ६.३२ ॥

**॥नारद उवाच॥**

केदाराद्धिमसंयुक्तं योजनानां शतं स्मृतम्॥

तदंते योजनशतं विस्तृतं तत्कलापकम्॥ ६.३३ ॥

तदंते योजनशतं वासुकार्णव मुच्यते॥

शतयोजनमात्रः स भूमिस्वर्गस्ततः स्मृतः॥ ६.३४ ॥

बिलेन च यथा शक्यं गंतुं तत्र श्रृणुष्व तत्॥

निरन्नं वै निरुदकं देवमाराधयेद्गुहम्॥ ६.३५ ॥

दक्षिणायां दिशि ततो निष्पापं मन्यते यदा॥

तदा गुहोऽस्य स्वप्ने गच्छेति भारत॥ ६.३६ ॥

ततो गुहात्पश्चिमतो बिलमस्ति बृहत्तरम्॥

तत्र प्रविश्य गंतव्यं क्रमाणां शतसप्तकम्॥ ६.३७ ॥

तत्र मारकतं लिंगमस्ति सूर्यसमप्रभम्॥

तदग्रे मृत्तिका चास्ति स्वर्णवर्णा सुनिर्मला॥ ६.३८ ॥

नमस्कृत्य च तल्लिंगं गृहीत्वा मृत्तिकां च ताम्॥

आगंतव्यं स्तंभतीर्थे समाराध्य कुमारकम्॥ ६.३९ ॥

कोलं वा कूपतो ग्राह्यं भूतायां निशि तज्जलम्॥

तेनोदकेन मृत्तिकया कृत्वा नेत्रद्वयाञ्जनम्॥ ६.४० ॥

उद्वर्तनं च देहस्य कदाचित्षष्टिमे पदे॥

नेत्रांजनप्रभावाच्च बिलं पश्यति शोभनम्॥ ६.४१ ॥

तन्मध्येन ततो याति गात्रोद्वर्त्तप्रभावतः॥

कारीषैर्नाम चात्युग्रैर्भक्ष्यते नैव कीटकैः॥ ६.४२ ॥

बिलमध्ये च संपश्यन्सिद्धान्भास्करसन्निभान्॥

यात्येवं यात्यसौ पार्थ कलापं ग्राममुत्तमम्॥ ६.४३ ॥

तत्र वर्षसहस्राणि चत्वार्यायुःप्रकीर्तितम्॥

फलानां भोजनं च स्यात्पुनः पुण्यं च नार्ज्जयेत्॥ ६.४४ ॥

इत्येतत्कथितं तुभ्यमतश्चाभूच्छृणुष्व तत्॥

तपः सामर्थ्यतः सूक्ष्मान्दण्डस्याग्रे निधाय तान्॥ ६.४५ ॥

द्विजानहं समायातो महीसागरसंगमम्॥ ६.४६ ॥

तदोत्तार्य मया मुक्तास्तीरे पुण्यजलाशये॥

ततो मया कृतं स्नानं सह तैर्द्विजसत्तमैः॥ ६.४७ ॥

निःशेषदोषदावाग्नौ महीसागरसंगमे॥

पितृणां देवतानां च कृत्वा तर्पणसत्क्रियाः॥ ६.४८ ॥

जपमानाः परं जप्यं निविष्टाः संगमे वयम्॥
भास्करं समवेक्षंतश्चिंतयंतो हरिं हृदि।. ६.४९ ॥
तस्मिंश्चैवांतरे पार्थ देवाः शक्रपुरोगमाः॥
आदित्याद्या ग्रहाः सर्वे लोकपालाश्च संगताः॥ ६.५० ॥
देवानां योनयो ह्यष्टौ गंधर्वाप्सरसां गणाः॥
महोत्सवे ततस्तस्मिन्गीतवादित्र उत्तमे॥ ६.५१ ॥
पादप्रक्षालनं कर्तुं विप्राणामुद्यतस्त्वहम्॥
तस्मिन्काले चाश्रृणवमहमातिथ्यवाक्यताम्॥ ६.५२ ॥
सामध्वनिसमायुक्तां तृतीयस्वरनादिताम्॥
अतीव मनसो रम्यां शिव भक्तिमिवोत्तमाम्॥ ६.५३ ॥
विप्रैरुत्थाय संपृष्टः कस्त्वं विप्र क्व चागतः॥
किं वा प्रार्थयसे ब्रूहि यत्ते मनसि रोचते॥ ६.५४ ॥
**॥विप्र उवाच॥**
मुनिः कपिलनामाहं नारदाय निवेद्यताम्॥
आगतः प्रार्थनायैव तच्छ्रुत्वाहमथाब्रवम्॥ ६.५५ ॥
धन्योहं यदिहायातः कपिल त्वं महामुने॥
नास्त्यदेयं तवास्माभिः पात्रं नास्ति तवाधिकम्॥ ६.५६ ॥
**॥कपिला उवाच॥**
ब्रह्मपुत्र त्वया देयं यदि मे त्वं श्रृणुष्व तत्॥
अष्टौ विप्रसहस्रामि मम देहीति नारद॥ ६.५७ ॥
भूमिदानं करिष्यामि कलापग्रामवासिनाम्॥
ब्राह्मणानामहं चैषां तदिदं क्रियतां विभो॥ ६.५८ ॥
ततो मया प्रतिज्ञातमेव मस्तु महामुने॥
त्वयापि क्रियतां स्थानं कापिलं कपिलोत्तमम्॥ ६.५९ ॥
श्राद्धे वा प्राप्तकाले वा ह्यतिथिर्विमुखीभवेत्॥
यस्याश्रममुपायातस्यस्य सर्वं हि निष्फलम्॥ ६.६० ॥
स गच्छेद्रौरवाँल्लोकान्योऽतिथिं नाभिपूजयेत्॥
अतिथिः पूजितो येन स देवैरपि पूज्यते॥ ६.६१ ॥
दानैर्यज्ञैस्त तस्तस्मिन्भोजितः कपिलो मुनिः॥
ततो महामुनिः श्रीमान्हारीतो ह्वयितस्तदा॥ ६.६२ ॥
पादप्रक्षालनार्थाय सिद्धदेवसमागमे॥
हारीतश्च पुरस्कृत्य वामपादं तदा स्थितः॥ ६.६३ ॥
ततो हासो महाञ्जज्ञे सिद्धाप्सरः सुपर्वणाम्॥

विचिंत्य बहुधा पृथ्वीं साधु साधुकृता द्विजाः॥ ६.६४ ॥
ततो ममापि मनसि शोकवेगो महानभूत्॥
सत्यां चैव तथा मेने गाथां पूर्वबुधेरिताम्॥ ६.६५ ॥
सर्वेष्वपि च कार्येषु हेतिशब्दो विगर्हितः॥
कुर्वतामतिकार्याणि शिलापातो ध्रुवं भवेत्॥ ६.६६ ॥
ततोहमब्रवं विप्रान्यूयं मूर्खा भविष्यथ॥
धनधान्याल्पसंयुक्ता दारिद्र्यकलिलावृताः॥ ६.६७ ॥
एवमुक्ते प्रहस्यैव हारीतः प्राब्रवीदिदम्॥
तवैवेयं मुने हानिर्यदस्माञ्छपते भवान्॥ ६.६८ ॥
कः शापो दीयते तुभ्यं शापोयमयमेव ते॥
ततो विमृश्य भूयोऽहब्रवं किमहंद्विज॥ ६.६९ ॥
तथाविधस्य भवतो वामपादप्रदानतः॥ ६.७० ॥
**॥हारीत उवाच॥**
श्रृणु तत्कारणं धीमञ्छून्यता मे यतो भवेत्॥ ६.७१ ॥
इति चिंतयतश्चित्ते हा दुःखोऽयं प्रतिग्रहः॥
प्रतिग्रहेण विप्राणां ब्राहयं तेजो हि शाम्यति॥ ६.७२ ॥
महादानं हि गृह्णानो ब्राह्मणः स्वं शुभं हि यत्॥
ददाति दातुर्दाता च अशुभं यच्छति स्वकम्॥ ६.७३ ॥
दाता प्रतिग्रहीता च वचनं हि परस्परम्॥
मन्यतेऽधःकरो यस्य सोऽल्पबुद्धिः प्रहीयते॥ ६.७४ ॥
इति चिंतयतो मह्यं शून्यताभूद्धि नारद॥
निद्रार्तश्च भयार्तश्च कामार्तः शोकपीडितः॥ ६.७५ ॥
हृतस्वश्चान्यचित्तश्च शून्याह्येते भवंति च॥
तदेषु मतिमान्कोपं न कुर्वीत यदि त्वया॥ ६.७६ ॥
कृतः कोपस्ततस्तुभ्यमेवं हानिरियं मुने॥
ततस्तापान्वितश्चाहं तान्वि प्रानब्रवं पुनः॥ ६.७७ ॥
धिङ्मामस्तु च दुर्बुद्धिमविमृश्यार्थकारिणम्॥
कुर्वतामविमृश्यैव तत्किमस्ति न यद्भवेत्॥ ६.७८ ॥
सहसा न क्रियां कुर्यात्पदमेतन्महापदाम्॥
विमृश्यकारिणं धीरं वृणते सर्वसंपदः॥ ६.७९ ॥
सत्यमाह महाबुद्धिश्चिरकारी पुरा हि सः॥
पुरा हि ब्राहमणः कश्चित्प्रख्यातों गिरसां कुले॥ ६.८० ॥
चिरकारि महाप्राज्ञो गौतमस्याभवत्सुतः॥

चिरेण सर्वकार्याणि यो विमृश्य प्रपद्यते॥ ६.८१ ॥
चिरकार्याभिसंपतेश्चिरकारी तथोच्यते॥
अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते॥ ६.८२ ॥
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना॥
व्यभिचारेण कस्मिन्स व्यतिकम्या परान्सुतान्॥ ६.८३ ॥
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति॥
स तथेति चिरेणोक्तः स्वभावाच्चिरकारकः॥ ६.८४ ॥
विमृश्य चिरकारित्वाच्चिंं तयामास वै चिरम्॥
पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम्॥ ६.८५ ॥
कथं धर्मच्छलेनास्मिन्निमज्जेयमसाधुवत्॥
पितुराज्ञा परो धर्मो ह्यधर्मो मातृरक्षणम्॥ ६.८६ ॥
अस्वतंत्रं च पुत्रत्वं किं तु मां नात्र पीडयेत्॥
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत्॥ ६.८७ ॥
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात्॥
अनवज्ञा पितुर्युक्ता युक्तं मातुश्च रक्षणम्॥ ६.८८ ॥
क्षमायोग्यावुभावेतौ नातिवर्तेत वै कथम्॥
पिता ह्यात्मानमाधत्ते जायायां जज्ञिवानिति॥ ६.८९ ॥
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च॥
सोऽहमात्मा स्वयं पित्रा पुत्रत्वे परिकल्पितः॥ ६.९० ॥
जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि॥
पर्याप्तः स दृढीकारः पितुर्गौरवलिप्सया॥ ६.९१ ॥
शरीरादीनि देयानि पिता त्वेकः प्रयच्चति॥
तस्मात्पितुर्वचः कार्यं न विचार्यं कथंचन॥ ६.९२ ॥
पातकान्यपि चूर्यंते पितुर्वचनकारिणः॥
पिता स्वर्गः पिता धर्मः पिता परमकं तपः॥ ६.९३ ॥
पितरि प्रीतिमापन्ने सर्वाः प्रीणंति देवताः॥
आशिषस्ता भजंत्येनं पुरुषं प्राह याः पिता॥ ६.९४ ॥
निष्कृतिः सर्वपापानां पिता यदभिनंदति॥
मुच्यते बंधनात्पुष्पं फलं वृंतात्प्रमुच्यते॥ ६.९५ ॥
क्लिश्यन्नपि सुतः स्नेहं पिता स्नेहं न मुंचति॥
एतद्विचिंत्यतं तावत्पुत्रस्य पितृगौरवम्॥ ६.९६ ॥
पिता नाल्पतरं स्थानं चिंतयिष्यामि मातरम्॥
यो ह्ययं मयि संघातो मर्त्यत्वे पांचभौतिकः॥ ६.९७ ॥

अस्य मे जननी हेतुः पावकस्य यथारणिः॥
माता देहारणिः पुंसः सर्वस्यार्थस्य निर्वृतिः॥ ६.९८ ॥
मातृलाभे सनाथत्वमनाथत्वं विपर्यये॥
न स शोचति नाप्येनं स्थावर्यमपि कर्षति॥ ६.९९ ॥
श्रिया हीनोऽपि यो गेहे अंबेति प्रतिपद्यते॥
पुत्रपौत्रसमापन्नो जननीं यः समाश्रितः॥ ६.१०० ॥
अपि वर्षशतस्यांते स द्विहायनवच्चरेत्॥
समर्थं वाऽसमर्थं वा कृशं वाप्यकृशं तथा॥ ६.१०१ ॥
रक्षयेच्च सुतं माता नान्यः पोष्यविधानतः॥
तदा स वृद्धो भवति तदा भवति दुःखितः॥ ६.१०२ ॥
तदा शुन्यं जगत्तस्य यदा मात्रा वियुज्यते॥
नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः॥ ६.१०३ ॥
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रपा॥
कुक्षिसंधारणाद्धात्री जननाज्जननी तथा॥ ६.१०४ ॥
अंगानां वर्धनादंबा वीरसूत्वे च वीरसूः॥
शिशोः शुश्रूषणाच्छ्वश्रूर्माता स्यान्माननात्तथा॥ ६.१०५ ॥
देवतानां समावापमेकत्वं पितरं विदुः
मर्त्यानां देवतानां च पूगो नात्येति मातरम्॥ ६.१०६ ॥
पतिता गुरवस्त्याज्या माता च न कथंचन॥
गर्भधारणपोषाभ्यां तेन माता गरीयसी॥ ६.१०७ ॥
एवं स कौशिकीतीरे बलिं राजानमीक्षतीम्॥
स्त्रीवृत्तिं चिरकालत्वाद्धन्तुं दिष्टः स्वमातरम्॥ ६.१०८ ॥
विमृश्य चिरकालं हि चिंतांतं नाभ्यपद्यत॥
एतस्मिन्नंतरे शक्रो रूपमास्थितः॥ ६.१०९ ॥
गायन्गाखामुपायातः पितुस्तस्याश्रमांतिके॥
अनृना हि स्त्रियः सर्वाः सूत्रकारो यदब्रवीत्॥ ६.११० ॥
अतस्ताभ्यः फलं ग्राह्यं न स्याद्दोषेक्षणः सुधीः॥
इति श्रुत्वा तमानर्च मेधातिथिरुदारधीः॥ ६.१११ ॥
दुःखितश्चिंतयन्प्राप्तो भृशमश्रूणि वर्तयन्॥
अहोऽहमीर्ष्ययाक्षिप्तो मग्नोऽहं दुःखसागरे॥ ६.११२ ॥
हत्वा नारीं च साध्वीं च को नु मां तारयिष्यति॥
सत्वरेण मयाज्ञप्तश्चिरकारी ह्युदारधीः॥ ६.११३ ॥
यद्ययं चिरकारी स्यात्स मां त्रायेत पातकात्॥

चिरकारिक भद्रं ते भद्रं ते चिरकारिक॥ ६.११४ ॥
यदद्य चिरकारी त्वं ततोऽसि चिरकारिकः॥
त्राहि मां मातरं चैव तपो यच्चार्जितं मया॥ ६.११५ ॥
आत्मानं पातके विष्टं शुभाह्व चिरकारिक॥
एवं स दुःखितः प्राप्तो गौतमोऽचिंतयत्तदा॥ ६.११६ ॥
चिरकारिकं ददर्शाथ पुत्रं मातुरुपांतिके॥
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः॥ ६.११७ ॥
शस्त्रं त्यक्त्वा स्थितो मूर्ध्ना प्रसादायोपचक्रमे॥
मेधातिथिः सुतं दृष्ट्वा शिरसा पतितं भुवि॥ ६.११८ ॥
पत्नीं चैव तु जीवंतीं परामभ्यगमन्मुदम्॥
हन्यादिति न सा वेद शस्त्रपाणौ स्थिते सुते॥ ६.११९ ॥
बुद्धिरासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम्॥
शस्त्रग्रहणचापल्यं संवृणोति भयादिति॥ ६.१२० ॥
ततः पित्रा चिरं स्मृत्वा चिरं चाघ्राय मूर्धनि॥
चिरं दोर्भ्यां परिष्वज्य चिरंजीवेत्यु दाहृतः॥ ६.१२१ ॥
चिरं मुदान्वितः पुत्रं मेधातिथिरथाब्रवीत्॥
चिरकारिक भद्रं ते चिरकारी भवेच्चिरम्॥ ६.१२२ ॥
चिराय यत्कृतं सौम्य चिरमस्मिन् दुःखितः॥
गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः॥ ६.१२३ ॥
चिरेण मंत्रं संधीयाच्चिरेम च कृतं त्यजेत्॥
चिरेण विहतं मित्रं चिरं धारणमर्हति॥ ६.१२४ ॥
रोगे दर्पे च माने च द्रोहे पापे च कर्मणि॥
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते॥ ६.१२५ ॥
बंधूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च॥
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते॥ ६.१२६ ॥
चिरं धर्मान्निषेवेत कुर्याच्चान्वेषणं चिरम्॥
चिरमन्वास्य विदुषश्चिरमिष्टानुपास्य च॥ ६.१२७ ॥
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम्॥
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम्॥ ६.१२८ ॥
चिरं पृच्छेच्च श्रृणुयाच्चिरं न परिभूयते॥
धर्मे शत्रौ शस्त्रहस्ते पात्रे च निकटस्थिते॥ ६.१२९ ॥
भये च साधुपूजायां चिरकारी न शस्यते॥
एवमुक्त्वा पुत्रभार्यासहितः प्राप्य चाश्रमम्॥ ६.१३० ॥

ततश्चिरमुपास्याथ दिवं यातिश्चिरं मुनिः॥
वयं त्वेवं ब्रुवन्तोऽपि मोहेनैवं प्रतारिताः॥ ६.१३१ ॥
कलौ च भवतां विप्रा मच्छापो निपतिष्यति॥
केचित्सदा भविष्यंति विप्राः सर्वगुणैर्युताः॥ ६.१३२ ॥
पादप्रक्षालनं कृत्वा ततोऽहं धर्मवर्मणः॥
समीपे साक्षिणो देवान्कृत्वा संकल्पमाचरम्॥ ६.१३३ ॥
कांचनैरर्नोप्रदानैश्च गृहदानैर्धनादिभिः॥
भार्याभूषणवस्त्रैश्च कृतार्था ब्राह्मणाः कृताः॥ ६.१३४ ॥
ततः करं समुद्यम्य प्राहेन्द्रो देवसंगमे॥
हरांगरुद्धवामार्द्ध यावद्देवी गिरेः सुता॥ ६.१३५ ॥
गणाधीशो वयं यावद्यावत्त्रिभुवनं त्विदम्॥
तावन्नन्द्यादिदे स्थानं नारदस्थापितं सुराः॥ ६.१३६ ॥
ब्रह्मशापो रुद्रशापो विष्णुशापस्तथैव च॥
द्विजशापस्तथा भूयादिदं स्थानं विलुंपतः॥ ६.१३७ ॥
ततस्तथेति तैः सर्वैर्हृष्टैस्तत्र तथोदितम्॥
एवं मया स्थापिते स्थानकेऽस्मिन्संस्थापयामास च कापिलं मुनिः॥
स्थाने उभे देवकृते प्रसन्नास्ततो ययुर्देवता देवसद्म॥ ६.१३८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे नारीयस्थानप्रतिष्ठावर्णनंनाम षष्ठोऽध्यायः ६ ॥ छ ॥

**॥ अर्जुन उवाच॥**

महीसागरमाहात्म्यमद्भुतं कीर्तितं त्वया॥

विस्मयः परमो मह्यं प्रहर्षश्चोपजायते॥ ७.१ ॥

तदहं विस्तराच्छ्रोतुमिदमिच्छामि नारद॥

कस्य यज्ञे मही ग्लाना वह्नितापाभिता पिता॥ ७.२ ॥

**॥नारद उवाच॥**

महादाख्यानमाख्यास्ये यथा जाता महीनदी॥

श्रृण्वन्नेतां कथां पुण्यां पुण्यमाप्स्यसि पांडव॥ ७.३ ॥

पुराभूद्भूपतिर्भूमाविन्द्रद्युम्न इति श्रुतः॥

वदान्यश्च सर्वधर्मज्ञो मान्यो मानयिता प्रभुः॥ ७.४ ॥

उचितज्ञो विवेकस्य निवासो गुणसागरः॥

न तदस्ति धरापृष्ठे नगरं ग्रामपत्तनम्॥ ७.५ ॥

तदीयपूर्तधर्मस्य चिह्नेन न यदंकितम्॥

कन्यादानानि बहुधा ब्राह्मेण विधिना व्यधात्॥ ७.६ ॥

भूपा लोऽसौ ददौ दानमासहस्राद्धनार्थिनाम्॥

दशमीदिवसे रात्रौ गजपृष्ठेन दुन्दुभिः॥ ७.७ ॥

ताड्यते तत्पुरे प्रातः कार्यमेकादशीव्रतम्॥

यज्वना तेन भूपेन विच्छिन्नं सोमपायिनाम्॥ ७.८ ॥

स्वरणैरास्तृता दर्भैर्द्व्यगुलोत्सेधिता मही॥

गंगायां सिकता धारा वर्षतो दिवि तारकाः॥ ७.९ ॥

शक्या गणयितुं प्राज्ञैस्तदीयं सुकृतं न तु॥

ईदृशैः सुकृतैरेष तेनैव वपुषा नृपः॥ ७.१० ॥

धाम प्रजापतेः प्राप्तो विमानेन कुरूद्वह॥

बुभुजे स तदा भोगान्दुर्लभानमरैरपि॥ ७.११ ॥

अथ कल्पशतस्यांते व्यतीते तं महीपतिम्॥

प्राह प्रजापतिः सेवावसरायातमात्मनः॥ ७.१२ ॥

**॥ब्रह्मोवाच॥**

इंद्रद्युम्न द्रुतं गच्छ धरापृष्ठं नृपोत्तम॥

न स्तातव्यं मदीयेद्य लोके क्षणमपि त्वया॥ ७.१३ ॥

**॥इंद्रद्युम्न उवाच॥**

कस्माद्ब्रह्मन्नितो भूमौ मां प्रेषयसि सम्प्रति॥

सति पुण्ये मदीये तु बहुले वद कारणम्॥ ७.१४ ॥

**॥ब्रह्मोवाच॥**

न पुण्यं केवलं राजन्गुप्तं स्वर्गस्य साधकम्॥
विना निष्कल्मषां कीर्ति त्रिलोकीतलविस्तृताम्॥ ७.१५ ॥
तव कीर्तिसमुच्छेदः सांप्रतं वसुधातले॥
संजातश्चिरकालेन गत्वा तां कुरु नूतनाम्॥ ७.१६ ॥
यदि वांछा महीपाल मम धामनि संस्थितौ॥ ७.१७ ॥
**॥इन्द्रद्युम्न उवाच॥**
मदीयं सुकृतं ब्रह्मन्कथं भूमौ भवेदिति॥
किं कर्तव्यं मया नैतन्मम चेतसि तिष्ठति॥ ७.१८ ॥
**॥ब्रह्मोवाच॥**
बलवानेष भूपाल कालः कलयति स्वयम्॥ ७.१९ ॥
ब्रह्मांडान्यपि मां चैव गणना का भवादृशाम्॥
तदेतदेव मन्येऽहं तव भूपाल सांप्रतम्॥ ७.२० ॥
यत्कीर्तिमात्मनो व्यक्तिं नीत्वाभ्ये हि पुनर्दिवम्॥
शुश्रुवानिति वाचं स ब्रह्मणः पृथिवीपतिः॥ ७.२१ ॥
पश्यतिस्म तथात्मानं महीतलमुपागतम्॥
कांपिल्यनगरे भूयः पप्रच्छात्मानमात्मना॥ ७.२२ ॥
नगरं स तदा देशमप्राक्षीदिति विस्मितः॥
**॥जना ऊचुः॥**
न जानीमो वयं भूपमिंद्रद्युम्नं न तत्पुरम्॥ ७.२३ ॥
यत्त्वं पृच्छसि भो भद्र कश्चित्पृच्छ चिरायुषम्॥
॥इन्द्रद्युम्न उवाच॥
कः संप्रति धरापृष्ठे चिरायुः प्रथितो जनाः॥ ७.२४ ॥
पृथिवीजयराज्येस्मिन्यत्र प्रबूत मा चिरम्॥
**॥जना ऊचुः॥**
श्रूयते नैमिवारण्ये सप्तकल्पस्मरो मुनिः॥ ७.२५ ॥
मार्कंडेय इति ख्यातस्तं गत्वा पृच्छ संशयम्॥
तथोपदिष्टस्तैर्गत्वा तत्र तं मुनिपुंगवम्॥ ७.२६ ॥
निशम्य प्रणिपत्याह नृपः स्वहृदयस्थितम्॥
**॥इंद्रद्युम्न उवाच॥**
चिरायुर्भगवान्भूमौ विश्रुतः सांप्रतं ततः॥ ७.२७ ॥
पृच्छाम्यहं भवान्वेत्ति इंद्रद्युम्नं नृपंन वा॥ ७.२८ ॥
**॥श्रीमार्कंडेय उवाच॥**
सप्तकल्पान्तरे नाभूत्कोपींद्रद्युम्नसंज्ञितः॥

भूपाल किमहं वच्मि तवान्यत्पृच्छ संशयम्॥ ७.२९ ॥
स निराशस्तदाकर्ण्य वचो भूपोग्निसाधने॥
समुद्योगं तदा चक्रे तं दृष्ट्वाह तदा मुनिः॥ ७.३० ॥
**॥मार्कंडेय उवाच॥**
मा साहसमिदं कार्षीर्भद्र वाचं श्रृणुष्व मे॥
एति जीवंतमानंदो नरं वर्षशतादपि॥ ७.३१ ॥
तत्करोमि प्रतीकारं तव दुःखोपशांतये॥
श्रृणु भद्र ममास्तीह बको मित्रं चिरंतनः॥ ७.३२ ॥
नाडीजंघ इति ख्यातः स त्वा ज्ञास्यत्यसंशयम्॥
तस्मादेहि द्रुतं यावदावां तत्र व्रजावहे॥ ७.३३ ॥
परोपकारैकफलं जीवितं हि महात्मनाम्॥
यदि ज्ञास्यत्यसंदिग्धमिंद्रद्युम्नं स वक्ष्यति॥ ७.३४ ॥
तौ प्रस्थिताविति तदा विप्रेंद्रनृपपुंगवौ॥
हिमाचलं प्रति प्रीतौ नाडीजंघा लयं प्रति॥ ७.३५ ॥
बकोऽथ मित्रं स्वं वीक्ष्य चिरकालादुपागतम्॥
मार्कंडेयं ययौ प्रीत्युत्कंठितः सम्मुखं द्विजैः॥ ७.३६ ॥
कृतसंविदभूत्पूर्वं कुशलस्वागतादिना॥
पप्रच्छानंतरं कार्यं वदागमनकारणम्॥ ७.३७ ॥
मार्कंडेयोथ तं प्राह बकं प्रस्तुतमीप्सितम्॥
इंद्रद्युम्नं भवान्वेत्ति भूपालं पृथिवीतले॥ ७.३८ ॥
एतस्य मम मित्रस्य तेन ज्ञातेन कारणम्॥
नो वायं त्यजति प्राणान्पुरा वह्निप्रवेशनात्॥ ७.३९ ॥
एतस्य प्राणरक्षार्थं ब्रूहि जानासि चेन्नृपम्॥ ७.४० ॥
**॥नडीजंघ उवाच॥**
चतुर्दश स्मराम्यस्मि कल्पान्विप्रेंद्र सांप्रतम्॥
आस्तां तद्दर्शनं वार्तामपि वा न स्मराम्यहम्॥ ७.४१ ॥
इंद्रद्युम्नो महीपालः कोऽपि नासीन्महीतले॥
एतावन्मात्रमेवाहं जानामि द्विजपुंगव॥ ७.४२ ॥
**॥नारद उवाच॥**
ततः स विस्मयाविष्टस्तस्यायुरिति शुश्रुवान्॥
पप्रच्छ राजा को हेतुर्दानस्य तपसोऽथ वा॥
यदायुरीदृशं दीर्घं संजातमिति विस्मितः॥ ७.४३ ॥
**॥नाडीजंघ उवाच॥**

घृतकंबलमाहात्म्यान्मम देवस्य शूलिनः॥
दीर्घमायुरिदं विप्र शापाद्बकवपुः श्रृणु॥ ७.४४ ॥
पुरा जन्मन्यहं बालो ब्राह्मणस्याभवं भुवि॥
पाराशर्यसगोत्रस्य विश्वरूपस्य सन्मुनेः॥ ७.४५ ॥
बालको बक इत्येवं प्रतीतोऽतिप्रियः पितुः॥
चपलोऽतीव बालत्वे निसर्गादेव भद्रक॥ ७.४६ ॥
अथ मारकतं लिंगं देवतावसरात्पितुः॥
चापल्याद्वालभावाच्चापहृत्य निहितं मया॥ ७.४७ ॥
घृतस्य कुंभे संक्रांतौ मकरस्योत्तरायणे॥
अथ प्रातर्व्यतीतायां निशि यावत्पिता मम॥ ७.४८ ॥
निर्माल्यापनयं चक्रे तावच्छून्यं शिवालयम्॥
निशम्य कांदिशीको मां पप्रच्छ मधुरस्वरम्॥ ७.४९ ॥
वत्स क्व नु त्वया लिंगं नूनं विनिहितं वद॥
दास्यामि वांछितं यत्ते भक्ष्यमन्यत्तवेप्सितम्॥ ७.५० ॥
ततो मया बालभावाद्भक्ष्यलुब्धेन तत्पितुः॥
घृतकुंभांतराकृष्य भद्रलिंगं समर्पितम्॥ ७.५१ ॥
अथ काले तु संप्राप्ते प्रमीतोऽहं नृपालये॥
जातो जातिस्मारस्तावदानर्ताधिपतेः सुतः॥ ७.५२ ॥
घॉतकंबलमाहात्म्यान्मकरस्थे दिवाकरे॥
अपि बाल्यादवज्ञानात्संयोगाद्घृतलिंगयोः॥ ७.५३ ॥
ततः संस्थापितं लिंगं प्राग्जन्म स्मरता मया॥
ततः प्रभृति लिंगानि घृतेनाच्छादयाम्यहम्॥ ७.५४ ॥
पितृपैतामहं प्राप्य राज्यं शक्त्यनुरूपतः॥
ततः प्रसन्नो भगवान्पार्वतीपतिराह माम्॥ ७.५५ ॥
पूर्वजन्मनि तुष्टोऽहं घृतकंबलपूजया॥
प्रयच्छाम्यस्मि त राज्यमधुनाभिमतं वृणु॥ ७.५६ ॥
ततो मया वृतः प्रादाद्गाणपत्यं मदीप्सितम्॥
कैलासे मां शिवो नित्यं संतुष्टः प्राह चेति च॥ ७.५७ ॥
तेनैव हि शरिरेण प्रणतं पुरतः स्थितम्॥
अद्यप्रभृति संक्रांतौ मकरस्यापरोपि यः॥ ७.५८ ॥
घृतेन पूजां कर्तासौ भावी मम गणः स्फुटम्॥
इत्युक्त्वा मां शिवो भद्र गणकोटीश्वरं व्यधात्॥ ७.५९ ॥
प्रतीपपालकंनाम संस्थितं शिवशासनम्॥

ततः कामादिभिः षड्भिः पदैश्चंक्रमणात्मिकाम्॥ ७.६० ॥
निसर्गचपलां प्राप्य भ्रमरीमिव तां श्रियम्॥
नैवालमभवं तस्या धारणे दैवयोगतः॥ ७.६१ ॥
विचचार तदा मत्तः किलाहं वारणो यथा॥
कृत्याकृत्यविचारेण विमुक्तोऽतीव गर्वितः॥ ७.६२ ॥
विद्यामभिजनं लक्ष्मीं प्राप्य नीचनरो यथा॥
आपदां पात्रतामेति सिंधूनामिव सागरः॥ ७.६३ ॥
अथ काले व्यतिक्रांते कियन्मात्रे यदृच्छया॥
विचरन्नगमं शैलं हिमानीरुद्धकंदरम्॥ ७.६४ ॥
तपस्यति मुनिस्तत्र गालवो भार्यया सह॥
सदैव तीव्रतपसा कृशो धमनिसंततः॥ ७.६५ ॥
ब्राह्मणस्य हि देहोयं नैवैहिकफलप्रियः॥
कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च॥ ७.६६ ॥
तस्य भार्याऽतिरूपेण विजिग्ये विश्ववर्णिनी॥
तन्वी श्यामा मृगाक्षी सा पीनोन्नतपयोधरा॥ ७.६७ ॥
हंसगद्गदसंभाषा मत्तमातंगगामिनी॥
विस्तीर्णजघना मध्ये क्षामा दीर्घशिरोरुहा॥ ७.६८ ॥
निम्ननाबिर्विधात्रैषा निर्मिता संदिदृक्षुणा॥
विकीर्णमिव सौंदर्यमेकपात्रमिव स्थितम्॥ ७.६९ ॥
ततोऽविनीतस्तां वीक्ष्य भद्र गालववल्लभाम्॥
अहमासं शरव्रातैस्ताडितः पुष्पधन्विना॥
विवेकिनोऽपि मुनयस्तावदेव विवेकिनः॥ ७.७० ॥
यावन्न हरिणाक्षीणामपांगविवरेक्षिताः॥
मया व्यवसितं चित्ते तदानीं तां जिहीर्षुणा॥ ७.७१ ॥
इति चेति हरिष्यामि तपसा रक्षितां मुनेः॥
अस्याः कृते यदि शपेन्मुनिस्तत्र पराभवः॥ ७.७२ ॥
मम भावी भवेदेषा भार्या मृत्युरुतापि मे॥
तस्माच्छिष्यो भवाम्यस्य शुश्रूषानिरतो मुनेः॥ ७.७३ ॥
प्राप्यांतरं हरिष्यामि नास्य योग्येयमंगना॥
इति व्यवस्य विद्यार्थिमूर्तिमास्थाय गालवम्॥ ७.७४ ॥
नमस्कृत्य वचोऽवोचमिति भाव्यर्थनोदितः॥
तथा मतिस्तथा मित्रं व्यवसायस्तथा नृणाम्॥ ७.७५ ॥
भवेदवश्यं तद्भावि यथा पुंभिः पुरा कृतम्॥

विवेकवैराग्ययुतो भगवंस्त्वासमुपस्थितः॥ ७.७६ ॥
शिष्योऽहं भवता पाठ्यं कर्णधारं महामुनिम्॥
अपारपारदं विष्णुं विप्रमूर्तिमुपाश्रितम्॥ ७.७७ ॥
नमस्ये चेतनं ब्रह्मा प्रत्यक्षं गालवाख्यया॥
अविद्याकृष्णसर्पेण दष्टं तद्विषपीडितम्॥ ७.७८ ॥
उपदेशमहामंत्रैर्मां जांगुलिक जीवय॥
महामोहमहा वृक्षो हृद्यावापसमुत्थितः॥ ७.७९ ॥
त्वद्वाक्यतीक्ष्णधारेण कुठारेण क्षयं व्रजेत्॥
अपवर्गपथव्यापी मूढसंसर्गसेचनः॥ ७.८० ॥
छिद्यतां सूत्रधारेण विद्यापरशुनाधुना॥
भजामि तव शिष्योऽहं वरिवस्यापरश्चिरम्॥ ७.८१ ॥
समिद्दर्भान्मूलफलं दारूणि जलमेव च॥
आहरिष्येऽनुगृह्णीष्व विनीतं मामुपस्थितम्॥ ७.८२ ॥
इत्थं पुरा बकाभिख्यं बकवृत्तिमुपाश्रितम्॥
तदाऽऽर्जवे कृतमतिरनुजग्राह मां मुनिः॥ ७.८३ ॥
ततोऽतीव विनीतोऽहं भूत्वा तं ब्राह्मणीयुतम्॥
विश्वासनाय सुदृढं तोषयामि दिनेदिने॥ ७.८४ ॥
स च जानन्मुनिः पत्नीं पात्रभूतामविश्वसन्॥
स्त्रीचरित्रविदंके तां विधाय स्वपिति द्विजः॥ ७.८५ ॥
अथान्यस्मिन्दिने साभूद्ब्राह्मण्यथ रजस्वला॥
तद्दूरशायिनी रात्रौ विश्वासान्मे तपस्विनी॥ ७.८६ ॥
इदमन्तरमित्यंतार्विचिंत्याहं प्रहर्षितः॥
मलिम्लुचाकृतिर्भूत्वा निशीथे तामथाहरम्॥ ७.८७ ॥
विललाप तदा बाला ह्रियमाणा मयोच्चकैः॥
मैवं मैवमिति ज्ञात्वा मां स्वरेणाब्रवीन्मुनिम्॥ ७.८८ ॥
बकवृत्तिरयं दुष्टो धर्मकंचुकमाश्रितः॥
हरते मां दुराचारस्तस्मात्त्वं त्राहि गालव॥ ७.८९ ॥
तव शिष्यः पुरा भूत्वा कोप्वेषोद्य मलिम्लुचः॥
मां जिहीर्षति तद्रक्ष शरण्य शरणं भव॥ ७.९० ॥
तद्वाक्यसमकालं स प्रबुद्धो गालवो मुनिः॥
तिष्ठतिष्ठेति मामुक्त्वा गतिस्तम्भं व्यधान्मम॥ ७.९१ ॥
ततश्चित्राकृतिकहं स्तम्भितो मुनिनाऽभवम्॥
व्रीडितं प्रविशामीव स्वांगानि किल लज्जया॥ ७.९२ ॥

ततः प्रकुपितः पाह मामभ्येत्याथ गालवः॥
तद्वज्रदुःसहं वाक्यं येनाहमभवं बकः॥ ७.९३ ॥
**॥गालव उवाच॥**
बकवृत्तिमुपाश्रित्य वंचितोऽह यतस्त्वया॥
तस्माद्बकस्त्वं भविता चिरकालं नराधम॥ ७.९४ ॥
इति शप्तोऽहमभवं मुनिनाऽधर्ममाश्रितः॥
परदारोपसेवार्थमनर्थमिममागतः॥ ७.९५ ॥
न हीदृशमनायुष्यं लोके किंचन विद्यते॥
यादृशं पुरुषस्येह परदारो पसेवनम्॥ ७.९६ ॥
ततः सती सा मत्स्पर्शद्वषितांगी तपस्विनी॥
मया विमुक्ता स्नात्वा मां तथैवानुशशाप ह॥ ७.९७ ॥
एवं ताभ्यामहं शप्तो ह्यश्वत्थपर्णवद्भयात्॥
कंपमानः प्रणम्योभाववोचं तत्र दम्पती॥ ७.९८ ॥
गणोऽहमीश्वरस्यैव दुर्विनीततरो युवाम्॥
निरोधमेवं कुरुतं भगवंतावनुग्रहम्॥ ७.९९ ॥
वाचि क्षुरो नावनीतं हृदयं हि द्विजन्मनाम्॥
प्रकुप्यंति प्रसीदंति क्षणेनापि प्रसादिताः॥ ७.१०० ॥
त्वयि विप्रतिपन्नस्य त्वमेव शरणं मम॥
भूमौ स्खलितपादानां भूमिरेवावलंबनम्॥ ७.१०१ ॥
गणाधिपत्यमपि मे जातं परिभवास्पदम्॥
विपदंता हि जायन्ते दुर्विनीतस्य सम्पदः॥ ७.१०२ ॥
विदुरेष्यद्धियाऽपायं परतोऽन्ये विवेकिनः॥
नैवोभयं विदुर्नीचा विनाऽनुभवमात्मनः॥ ७.१०३ ॥
दुर्वीनीतः श्रियं प्राप्य विद्यामैश्वर्यमेव वा॥
न तिष्ठति चिरं स्थाने यथाहं मदगर्वितः॥ ७.१०४ ॥
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः॥
एते मदा मदांधानामेत एव सतां दमाः॥ ७.१०५ ॥
नोदर्कशालिनी बुद्धिर्येषामविजितात्मनाम्॥
तैः श्रियश्चपला वाच्यं नीयंते मादृशैर्जनैः॥ ७.१०६ ॥
तत्प्रसीद मुनिश्रेष्ठ शापांतं मेऽधुना कुरु॥
दुर्विनीतेष्वपि सदा क्षमाचारा हि साधवः॥ ७.१०७ ॥
इत्थं वचसि विज्ञप्ते विनीतेनापि वै मया॥
प्रसादप्रवणो भूत्वा शापांतं मे तदा व्यधात्॥ ७.१०८ ॥

**॥गालव उवाच॥**

छन्नकीर्तिसमुद्धारसहायस्त्वं भविष्यसि॥

यदेन्द्रद्युम्नभूपस्य तदा मोक्षमवाप्स्यसि॥ ७.१०९ ॥

इत्यहं मुनिशापेन तदाप्रभृति पर्वते॥

हिमाचले बको भूत्वा काश्यपेयो वसामि च॥ ७.११० ॥

राज्यं चिरायुरिति मे घृतकम्बलस्य जातिस्मरत्वमधुनापि तथानु भावान्॥

शापाद्बकत्वमभवन्मुनिगालवस्य तद्भद्र सर्वमुदितं भवताद्य पृष्टम्॥ ७.१११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे महीप्रादुर्भावे सप्तमोऽध्यायः॥ ७ ॥ छ ॥

**॥नारद उवाच॥**

नाडीजंघबकेनोक्तां वाचमाकर्ण्यभूपतिः॥
मार्कंडेयेन संयुक्तो बभूवातीव दुःखितः॥ ८.१ ॥
तं निशम्य मुनिर्भूपं दुःखितं साश्रुलोचनम्॥
समानव्यसनः प्राह तदर्थं स पुनर्बकम्॥ ८.२ ॥
विधायाशां महाभाग त्वदंतिकमुपागतौ॥
आवां चिरायुर्ज्ञातांशाविन्द्रद्युम्नमिति द्विज॥ ८.३ ॥
निष्पन्नं नास्य तत्कार्यं प्राणानेष मुमुक्षति॥
वह्निप्रवेशेन परं वैराग्यं समुपागतः॥ ८.४ ॥
तन्मामुपागतोऽहं च त्वां सिद्धं नास्य वांछितम्॥
तदेनमनुयास्यामि मरणेन त्वया शपे॥ ८.५ ॥
आशां कृत्वाभ्युपायातं निराशं नेक्षितुं क्षमाः॥
भवंति साधवस्तस्माज्जीवितान्मरणं वरम्॥ ८.६ ॥
प्रार्थितं चामुना हृत्स्थं मया चास्मै प्रतिश्रुतम्॥
त्वां मित्रं तत्परिज्ञाने धृत्वा हृदि चिरायुषम्॥ ८.७ ॥
असंपादयतो नार्थं प्रतिज्ञातं ममायुषा॥
कलुषेणार्थिना माशापूरकेण सखेधुना॥ ८.८ ॥
प्रतिश्रुतं कृतं श्लाघ्या दासतांत्यजपक्वणे॥
हरिश्चंद्रस्येव नृणां न श्लाघ्या सत्यसंधता॥ ८.९ ॥
मित्रस्नेहस्य पर्यायस्तच्च साप्तपदं स्मृतम्॥
स्नेहः स कीदृशो मित्रे दुःखितो यो न दृश्यते॥ ८.१० ॥
तदवश्यमहं साकमधुना वह्निसाधनम्॥
करिष्ये कीर्तिवपुषः कृते सत्यमिदं सखे॥ ८.११ ॥
अनुजानीहि मामेतद्दर्शनं तव पश्चिमम्॥
त्वया सह महाभाग नाडीजंघ द्विजोत्तम॥ ८.१२ ॥

**॥नारद उवाच॥**

वज्रवद्दुःसहां वाचं मार्कंडेयसमीरिताम्॥
शुश्रुवान्स क्षणं ध्यात्वा प्रतीतः प्राह तावुभौ॥ ८.१३ ॥

**॥नाडीजंघ उवाच॥**

यद्येवं तदिदं मित्रं विशंतं ज्वलनेऽधुना॥
निवारय मुनिश्रेष्ठ मत्तोऽस्ति चिरजीवितः॥ ८.१४ ॥
प्राकारकर्णनामासावुलूकः शिवपर्वते॥
स ज्ञास्यति महीपालमिंद्रद्युम्नं न संशयः॥ ८.१५ ॥

तस्मादहं त्वया सार्धममुना च शिवालयम्॥
व्रजामि तं शिखरिणं मित्रकार्यप्रसिद्धये॥ ८.१६ ॥
इत्येव मुक्त्वा ते जग्मुस्त्रयोऽपि द्विजपुंगवाः॥
कैलासं ददृशुस्तत्र तमुलूकं स्वनीडगम्॥ ८.१७ ॥
कृतसंविदसौ तेन बकः स्वागतपूजया॥
पृष्टश्च तावुभौ प्राह तत्सर्वमभिवांछितम्॥ ८.१८ ॥
चिरायुरसि जानीषे यदीन्द्रद्युम्नभूपतिम्॥
तद्ब्रूहि तेन ज्ञानेन कार्यं जीवामहे वयम्॥ ८.१९ ॥
इति पृष्टः स विमना मित्रकार्यप्रसाधनात्॥
कौशिकः प्राह जानामि नेन्द्रद्युम्नमहं नृपम्॥ ८.२० ॥
अष्टाविंशत्प्रमाणा मे कल्पा जातस्य भूतले॥
न दृष्टो न श्रुतो वासाविंद्रद्युम्नो नृपः क्षितौ॥ ८.२१ ॥
तच्छ्रुत्वा विस्मितो भूपस्तस्यायुरतिमात्रतः॥
दुःखितोऽपि तदा हेतुं पप्रच्छासौ तदायुषः॥ ८.२२ ॥
एवमायुर्यदि तव कथं प्राप्तं ब्रवीहि तत्॥
उलूकत्वं कथमिदं जुगुप्सितमतीव च॥ ८.२३ ॥
**॥प्राकारकर्ण उवाच॥**
श्रृणु भद्र यथा दीर्घमायुर्मेशिवपूजनात्॥
जुगुप्सितमुलूकत्वं शापेन च महामुनेः॥ ८.२४ ॥
वसिष्ठकुलसंभूतः पुराहमभवं द्विजः॥
घंट इत्यभिविख्यातो वाराणस्यां शिवेरतः॥ ८.२५ ॥
धर्मश्रवणनिष्ठस्य साधूनां संसदि स्वयम्॥
श्रुत्वास्मि पूजयामीशं बिल्वपत्रैरखंडितैः॥ ८.२६ ॥
न मालती न मंदारः शतपत्रं न मल्लिका॥
तथा प्रियाणि श्रीवृक्षो यथा मदनविद्विषः॥ ८.२७ ॥
अखंडबिल्वपत्रेण एकेन शिवमूर्धनि॥
निहितेन नरैः पुण्यं प्राप्यते लक्षपुष्पजम्॥ ८.२८ ॥
अखंडितैर्बिल्वपत्रैः श्रद्धया स्वयमाहृतैः॥
लिंगप्रपूजनं कृत्वा वर्षलक्षं वसेद्दिवि॥ ८.२९ ॥
सच्छास्त्रेभ्य इति श्रुत्वा पूजयाम्यहमीश्वरम्॥
त्रिकालं श्रद्धया पत्रैः श्रीवृक्षस्य त्रिभिस्त्रिभिः॥ ८.३० ॥
ततो वर्षशतस्यांते तुतोष शशिशेखरः॥
प्रत्यक्षीभूय मामाह मेघगंभीरया गिरा॥ ८.३१ ॥

**॥ईश्वर उवाच॥**

तुष्टोस्मि तव विप्रेंद्राखंडबिल्वदलार्चनात्॥
वृणीष्वाभिमतं यत्ते दास्यम्यपि च दुर्लभम्॥ ८.३२ ॥
अखंडबिल्वपत्रेण महातुष्टिः प्रजायते॥
एकनापि यथान्येषां तथा न मम कोटिभिः॥ ८.३३ ॥
इत्युक्तोऽहं भगवता शंभुना स्वमनः स्थितम्॥
वृणोमि स्म वरं देव कुरु मामजरामरम्॥ ८.३४ ॥
अथ लीलाविलासो मां तथेत्युक्त्वाऽविचारितम्॥
ययावदर्शनं प्रीतिमहं च महतीं गतः॥ ८.३५ ॥
कृतकृत्यं तदात्मानमज्ञासिपमहं क्षितौ॥
एतस्मिन्नेव काले तु भृगुवंश्योऽभवद्द्विजः॥ ८.३६ ॥
अवदातत्रिजन्मासवक्षविच्चाक्षरार्थवित्॥
सुदर्शनेति प्रथिता प्रिया तस्याभवत्सती॥ ८.३७ ॥
अतीव मुदिता पत्युर्मुखं प्रेक्ष्यास्य दर्शनात्॥
तनया देवलस्यैपा रूपेणाप्रतिमा भुवि॥ ८.३८ ॥
तस्यां तस्मादभूत्कन्या निर्विशेषा निजारणेः॥
निवृत्तबालभावाभूत्कुमारी यौवनोन्मुखी॥ ८.३९ ॥
नालं बभूव तां दातुं तनयां गुणशालिनीम्॥
कस्यापि जनकः सा च वयःसंधौ मयेक्षिता॥ ८.४० ॥
प्रविश्द्यौवनाभोगभावैरतिमनोहरा॥
निर्वास्यमानैरपरैस्तिलतंदुलिताकृतिः॥ ८.४१ ॥
क्रीडमाना वयस्याभिर्लावण्यप्रतिमेव सा॥
व्यचिंतयमहं विप्र तां निरीक्ष्य सुमध्यमाम्॥ ८.४२ ॥
अनन्याकृतिमन्योऽसौ विधिर्येनेति निर्मिता॥
ततः सात्त्विकभावानां तत्क्षणादस्मि गोचरम्॥ ८.४३ ॥
प्रापितो लीलयाहत्य बाणैः कुसुमधन्विना॥
ततो मया स्खलद्वालं पृष्टा कस्येति तत्सखी॥ ८.४४ ॥
प्राहेति भृगुवंश्यस्य कन्येयं द्विजजन्मनः॥
अनूढाद्यापि केनापि समायातात्र खेलितुम्॥ ८.४५ ॥
ततः कुसुमबाणेन शरव्रातैर्भृशं हतः॥
पितरं प्रणतो गत्वा ययाचे तां भृगूद्वहम्॥ ८.४६ ॥
स च मां सदृशं ज्ञात्वा शीलेन च कुलेन च॥
अतीव चार्थिनं मह्यं ददौ वाचा पुरः क्रमात्॥ ८.४७ ॥

ततः सा तनया तस्य भार्गवस्या श्रृणोदिति॥
दत्तास्मि तस्मै विप्राय विरूपायेति जल्पताम्॥ ८.४८ ॥
रोरूयमाणा जननीमाह पश्य यथा कृतम्॥
अतीवानुचितं दत्त्वा जनकेन तथा वरे॥ ८.४९ ॥
विषमालोड्य पास्यामि प्रवेक्ष्यामि हुताशनम्॥
वरं न तु विरूपस्योद्वोढुर्भार्या कथंचन॥ ८.५० ॥
ततः संबोध्य जननी तां सुतामाह भार्गवम्॥
न देयास्मै त्वया कन्या विरूपायेति चाग्रहात्॥ ८.५१ ॥
स वल्लभावचः श्रुत्वा धर्मशास्त्राण्यवेक्ष्य च॥
दत्तामपि हरेत्पूर्वां श्रेयांश्चेद्वर आव्रजेत्॥ ८.५२ ॥
अर्वाक्छिलाक्रमणतो निष्ठा स्यात्सप्तमे पदे॥
इति व्यवस्य प्रददावन्यस्मै तां द्विजः सुताम्॥ ८.५३ ॥
श्वोभाविनि विवाहे तु तच्च सर्वं मया श्रुतम्॥
ततोतीव विलक्ष्योहं वयस्यानां पुरस्तदा॥ ८.५४ ॥
नाशकं वदनं भद्र तथा दर्शयितुं निजम्॥
कामार्तोतीव तां सुप्तामर्वाग्निशि तदाहरम्॥ ८.५५ ॥
नीत्वा दुर्गतमैकांतेऽकार्षमौद्वाहिकं विधिम्॥
गांधर्वेण विवाहेन ततोऽकार्षं हृदीप्सितम्॥ ८.५६ ॥
अनिच्छंतीं तदा बालां बलात्सुरतसेवनम्॥
अथानुपदमागत्य तत्पिता प्रातरेव माम्॥ ८.५७ ॥
निश्वस्य संवृतो विप्रास्तां वीक्ष्योद्वाहितां सुताम्॥
शशाप कुपितो भद्र मां तदानीं स भार्गवः॥ ८.५८ ॥
**॥भार्गव उवाच॥**
निशाचरस्य धर्मेण यत्त्वयोद्वाहिता सुता॥
तस्मान्निशाचरः पाप भव त्वमविलंबितम्॥ ८.५९ ॥
इति शप्तः प्रण्म्यैनं पादोपग्रहपूर्वकम्॥
हाहेति च ब्रुवन्गाढं साश्रुनेत्रं सगद्गदम्॥ ८.६० ॥
ततोहमब्रवं कस्माददोषं मां भवानिति॥
शपते भवता दत्ता मम वाचा पुरा सुता॥ ८.६१ ॥
सोद्वाहिता मया कन्या दानं सकृदिति स्मृतिः॥
सकृज्जल्पंति राजानः सकृज्जल्पंति पण्डिताः॥ ८.६२ ॥
सकृत्कन्याः प्रदीयंते त्रीण्येतानि सकृत्सकृत्॥
किं च प्रतिश्रुतार्थस्य निर्वाहस्तत्सतां व्रतम्॥ ८.६३ ॥

भवादृशानां साधूनां साधूनां तस्य त्यागो विगर्हितः॥
प्रतिश्रुता त्वया लब्धा तदा कालमियं मया॥ ८.६४ ॥
उद्वोढा चाधुना नाहमुचितः शापभाजनम्॥
वृथा शपन्ति मह्यं च भवंतस्तद्विचार्यताम्॥ ८.६५ ॥
यो दत्त्वा कन्यकां वाचा पश्चाद्धरति दुर्मतिः॥
स याति नरकं चेति धर्मशास्त्रेषु निश्चितम्॥ ८.६६ ॥
तदाकर्ण्य व्यवस्यासौ तथ्यं मद्वचनं हृदा॥
पश्चात्तापसमोपेतो मुनिर्मामित्यथाब्रवीत्॥ ८.६७ ॥
न मे स्यादन्यथा वाणी उलूकस्त्वं भविष्यति॥
निशाचरो ह्युलूकोऽपि प्रोच्यते द्विजसत्तम॥ ८.६८ ॥
यदेंद्रद्युम्नविज्ञाने सहायस्तंव भविष्यसि॥
तदा त्वं प्रकृतिं विप्र प्राप्स्यसीत्यब्रवीत्स माम्॥ ८.६९ ॥
तद्वाक्यसमकालं च कौशिकत्वमिदं मम॥
एतावंति दिनान्यासीदष्टाविंशद्दिनं विधेः॥ ८.७० ॥
बिल्वीदलौरिति पुरा शशिशेखरस्य संपूजनेन मम दीर्घतरं किलायुः॥
संजातमत्र च जुगुप्सितमस्य शापात्कैलासरोधसि निशाचररूपमासीत्॥ ८.७१ ॥
इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां माहेश्वरखण्डे कौमारिकाखण्डे महीनदीप्रादुर्भावे बिल्वदलमाहात्म्यवर्णनंनामाष्टमोऽध्यायः॥ ८ ॥ छ ॥

॥ **उलूक उवाच**॥

इतिदमुक्तमखिलं पूर्वजन्मसमुद्भवम्॥
स्वरूपमायुषो हेतुः कौशिकत्वस्य चेति मे॥ ९.१ ॥
इत्युक्त्वा विरते तस्मिन्पुरूहूतसनामनि॥
नाडीजंघो बको मित्रमाह तं दुःखितो वचः॥ ९.२ ॥

**॥नाडीजंघ उवाच॥**

यदर्थं वयमायातास्तन्न सिद्धं महामते॥
कार्यं तन्मरणं नूनं त्रयाणामप्युपागतम्॥ ९.३ ॥
इंद्रद्युम्नापरिज्ञाने भद्रकोऽयं मुमूर्षति॥
तस्यानु मित्रं मार्कंडस्तं चान्वहमपि स्फुटम्॥ ९.४ ॥
मित्रकार्ये विनिर्वृत्ते म्रियमाणं निरीक्षते॥
यो मित्रं जीवितं तस्य धिगस्निग्धं दुरात्मनः॥ ९.५ ॥
तदेतावनुयास्यामि म्रियमाणावहं द्विज॥
आपृच्छे त्वां नमस्कार आश्लेषश्चाथपश्चिमः॥ ९.६ ॥
प्रतिज्ञातमनिष्पाद्य मित्रस्याभ्यागतस्य च॥
कथंकारं न लज्जंते हताशा जीवितेप्सवः॥ ९.७ ॥
तस्माद्वह्निं प्रवेक्ष्यामि सार्धमाभ्यामसंशयम्॥
आपृष्टोऽस्यधुना स्नेहान्मम देहि जलांजलिम्॥ ९.८ ॥
इत्युक्तवत्युलूकोऽसौ नाडीजंघे सगद्गदम्॥
साश्रुनेत्रं स्थिरीभूय प्राह वाचं सुधासमुचम्॥ ९.९ ॥

**॥उलूक उवाच॥**

मयि जीवति मित्रे मे भवान्मरणमेति च॥
अद्यप्रभृति कस्तर्हि हृदा मम लभिष्यति॥ ९.१० ॥
अस्त्युपायो महानत्र गन्धमादनपर्वते॥
मत्तश्चिरायुर्मित्रोस्ति गृध्रः प्राणसमः सुहृत्॥ ९.११ ॥
स विज्ञास्यति वोऽभीष्टमिंद्रद्युम्नं महीपतिम्॥
इत्युक्त्वा पुरतस्तस्थावुलूकः स च भूपतिः॥ ९.१२ ॥
मार्कंडेयो बकश्चैव प्रययुर्गंधमादनम्॥
तमायांतमथालोक्य वयस्यं पुरतः स्थितम्॥ ९.१३ ॥
स्वकुलायात्प्रहृष्टोऽसौ गृध्रः संमुखमाययौ॥
कृतसंविदसौ पूर्वं स्वागतासनभोजनैः॥ ९.१४ ॥
उलूकं गृध्रराजश्च कार्यं पप्रच्छ तं तथा॥
म चाचख्यावयं मित्रं बको मेऽस्य मुनिः किल॥ ९.१५ ॥

मुनेरपि तृतीयोऽयं मित्रं चार्थोयमुद्यतः॥
इंद्रद्युम्नपरिज्ञाने स्वयं जीवति नान्यथा॥ ९.१६ ॥
वह्निनं प्रवेक्ष्यते व्यक्तमयं तदनु वै वयम्॥
मया निषिद्धोऽयं ज्ञात्वा त्वां चिरंतनमात्मना॥ ९.१७ ॥
तच्चेज्जानासि तं ब्रूहि चतुर्णां देहि जीवितम्॥
सरं क्ष्याप्नुहि सत्कीर्तिं क्षयं चाखिलपाप्मनः॥ ९.१८ ॥
**॥गृध्र उवाच॥**
षट्पंचाशद्व्यतीता मे कल्पा जातस्य कौशिक॥
न दृष्टो न श्रुतोऽस्माभिरिंद्रद्युम्नो महीपतिः॥ ९.१९ ॥
तच्छ्रुत्वा विस्मयाविष्ट इंद्रद्युम्नोऽपि दुःखितः॥
पप्रचछ जीविते हेतुमतिमात्रे विहंगमम्॥ ९.२० ॥
**॥गृध्र उवाच॥**
श्रृणु भद्रै पुरा जातो मर्कटोऽहं च चापलः॥
आसं कदाचिदभवद्वसंतोऽथ ऋतुः क्रमात्॥ ९.२१ ॥
तत्राग्रे देवदेवस्य वनमध्ये शिवालये॥
भवोद्भवस्य पुरतो जगद्योगेश्वराभिधे॥ ९.२२ ॥
चतुर्दशीदिने हस्तनक्षत्रे हर्षणाभिधे॥
योगे चैत्रे सिते पक्ष आसीद्दमनकोत्सवः॥ ९.२३ ॥
अत्र सौवर्ण्यदोलायां लिंग आरोपिते जनैः॥
निशायामधिरूह्याऽहं दोलां तां च व्यचालयम्॥ ९.२४ ॥
निसर्गाज्जतिचापल्याच्चिरकालं पुनःपुनः॥
अथ प्रभात आयाता जनाः पूजाकृते कपिम्॥ ९.२५ ॥
दोलाधिरूढमालोक्य लकुटैर्मां व्यताडयन्॥
दोलासंस्थित एवाहं प्रमीतः शिवमंदिरे॥ ९.२६ ॥
तेषां प्रहारैः सुदृढैर्बहुभिर्वज्रदुःसहैः॥
शिवांदोलनमाहात्म्याज्जातोऽहं नृपमंदिरे॥ ९.२७ ॥
काशीश्वरस्य तनयः प्रतीतोऽस्मि कुशध्वजः॥
जाति स्मरस्ततो राज्ये क्रमात्प्राप्याहमैश्वरम्॥ ९.२८ ॥
कारयामि धरापृष्ठे चैत्रे दमनकोत्सवम्॥
यता यथा दोलयति शिवं दोलास्थितं नरः॥ ९.२९ ॥
तथा तथाऽशुभं याति पुण्यमायाति भद्रक॥
शिवदीक्षामुपागम्याखिलसंस्कारसंस्कृतः॥ ९.३० ॥
शिवाचार्यैर्विमुक्तोऽहं पशुपाशैस्तदागमात्॥

निर्वाहदीक्षापर्यंतान्संस्कारान्प्राप्य सर्वतः॥ ९.३१ ॥
आराधयामि देवेशं प्रत्यक्चित्तमुमापतिम्॥
समस्तक्लेशविच्छेदकारणं जगतां गुरुम्॥ ९.३२ ॥
चित्तवृत्तिनिरोधेन वैराग्याभ्यासयोगतः॥
जपन्नुद्गीतमस्यार्थं भावयन्नष्टमं रसम्॥ ९.३३ ॥
ततो मां प्रणिधानेनाभ्यासेन दृढभूमिना॥
अन्तरायानुपहतं ज्ञात्वा तुष्टोऽब्रवीद्धरः॥ ९.३४ ॥
**॥ईश्वर उवाच॥**
कुशध्वजाहं तुष्टोद्य वरं वरय वांछितम्॥
न हीदृशमनुष्ठानं कस्याप्यस्ति महीतले॥ ९.३५ ॥
श्रुत्वेत्युक्तो मया शम्भुर्भूयासं ते गंणो ह्यहम्॥
अनेनैव शरीरेण तथेत्येवाह गां प्रभुः॥ ९.३६ ॥
ततः कैलासमानीय विमानं मम चादिशत्॥
सर्वरत्नमयं दिव्यं दिव्याश्चर्यसमावृतम्॥ ९.३७ ॥
विचरामि प्रतीतोऽहं तदारूढो यदृच्छया॥
अथ काले कियन्मात्रे व्यतीतेऽत्रैवं पर्वते॥ ९.३८ ॥
गवाक्षाधिष्ठितोऽपश्यं वसंते मुनिकन्यकाम्॥
प्रवाति दक्षिणे वायौ मदनाग्निप्रदीपितः॥ ९.३९ ॥
अग्निवेश्यसुतां भद्र विवस्त्रां जलमध्यगाम्॥
उद्भिन्नयौवनां श्यामां मध्यक्षामां मृगेक्षणाम्॥ ९.४० ॥
विस्तीर्णजघनाभोगां रंभोरुं संहतस्तनीम्॥
तामंकुरितलावण्यां जलसेका दिवाग्रतः॥ ९.४१ ॥
प्रोन्निद्रपंकजमुखीं वर्णनीयतमाकृतिम्॥
यथाप्रज्ञानयाथात्म्याद्विद्विद्भिरपि वर्णिनीम्॥ ९.४२ ॥
प्रोद्यत्कटाक्षविक्षेपैः शरव्रातैरिव स्मरः॥
स्वयं तदंगमास्थाय ताडयामास मां दृढम्॥ ९.४३ ॥
वयस्यासंवृचामेवं खेलमानां यदृच्छया॥
अवतीर्याहमहरं विमानान्मदनातुरः॥ ९.४४ ॥
सा गृहीता मया दीर्घं प्रकुर्वाणा महास्वनम्॥
तातेति च विमानस्था रुरोदातीव भद्रक॥ ९.४५ ॥
ततो वयस्यास्ता दीना मुनिमाहुः प्रधाविताः॥
वैमानिकेन केनापि ह्रियते तव पुत्रिका॥ ९.४६ ॥
रुदन्तीं भगवन्नेतां त्राह्युत्तिष्ठेति सर्वतः॥

तासां तदाकर्ण्य वचो मुनिर्भद्रतपोनिधिः॥ ९.४७ ॥
अग्निवेश्योऽभ्यगात्तस्या व्योमन्युपपदं त्वरन्॥
तिष्ठतिष्ठेति मामुक्त्वा संस्तभ्य तपसा गतिम्॥ ९.४८ ॥
ततः प्रकुपितः प्राह मुनिमामति दुःसहम्॥
**॥अग्निवेश्य उवाच॥**
यस्मान्मदीया तनया मांसपेशीव ते हृता॥ ९.४९ ॥
गृध्रेणेवाऽधुना व्योम्नि तस्माद्गध्रो भव द्रुतम्॥
अनिच्छंती मदीयेयं सुता बाला तपस्विनी॥ ९.५० ॥
त्वया हृताधुनास्यैतत्फलमाप्नुहि दुर्मते॥
इत्याकर्ण्य भयाविष्टो लज्जयाधोमुखो मुनेः॥ ९.५१ ॥
पादौ प्रगृह्य न्यपतं रुदन्नतितरां तदा॥
न मयेयं परिज्ञाय हृता नाद्यापि धर्षिता॥ ९.५२ ॥
प्रसादं कुरु ते शापं व्यावर्तय तपोनिधे॥
प्रणतेषु क्षमावन्तो निसर्गेण तपोधनाः॥ ९.५३ ॥
भवंति संतस्तद्गृध्रो मा भवेयं प्रसीद मे॥
इति प्रपन्नेन मया प्रणतोऽसौ महामुनिः॥ ९.५४ ॥
प्रसन्नः प्राह नो मिथ्या मम वाक्यं भवेत्क्वचित्॥
किं त्विंद्रद्युम्नभूपालपरिज्ञाने सहायताम्॥ ९.५५ ॥
यदा यास्यसि शापस्य तदा मुक्तिमवाप्स्यसि॥ ९.५६ ॥
इत्युक्त्वा स मुनिः प्रायाद्गृहीत्वा निजकन्यकाम्॥
अखण्डशीलां स्वावासमहं गृध्रोऽभवं तदा॥ ९.५७ ॥
एवं तदा दमनकोत्सव ईश्वरस्य आंदोलनेन नृपवेश्मनि मेऽवतारः॥
शम्भोर्गणत्वमभवच्च तथाग्निवेश्यशापेन गृध्र इह भद्र तवेदमुक्तम्॥ ९.५८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे महीप्रादुर्भावे दमनकमाहात्म्यंनाम नवमोऽध्यायः॥ ९ ॥ छ ॥

**॥ नारद उवाच॥**

गृध्रस्यैतद्वचः श्रुत्वा दुःखविस्मयसंयुतः॥

इन्द्रद्युम्नस्तमा पृच्छय मरणायोपचक्रमे॥ १०.१ ॥

ततस्तमालोक्य तथा मुमूर्षुं कौशिकादिभिः॥

स संहितं विचिंत्याह दीर्घायुषमथात्मनः॥ १०.२ ॥

मैवं कार्षीः श्रुणु गिरं भद्रक त्वं चिरंतनः॥

मत्तोऽप्यस्ति स्फुटं चैव ज्ञास्यति त्वदभीप्सितम्॥ १०.३ ॥

मानसे सरसि ख्यातः कूर्मोमंथरकाख्यया॥

तस्य नाविदितं किंचिदेहि तत्र व्रजामहे॥ १०.४ ॥

ततः प्रतीतास्ते भूपमुनिगृध्रबकास्तथा॥

उलूकसहिता जग्मुः सर्वे कूर्मदिदृक्षवः॥ १०.५ ॥

सरस्तीरे स्थितः कूर्मस्तान्निरीक्ष्य विदूरगान्॥

कांदिशीको विवेशासौ जलं शीघ्रतरं तदा॥ १०.६ ॥

कौशिकोऽथ तमाहेदं प्रहस्य वचनं स्वयम्॥

कस्मात्कूर्म प्रनष्टोद्य विमुखोऽभ्यागतेष्वपि॥ १०.७ ॥

अग्निर्द्विजानां विप्रश्च वर्णानां रमणः स्त्रियाम्॥

गुरुः पिता च पुत्राणां सर्वस्याभ्यागतो गुरुः॥ १०.८ ॥

विहाय तमिमं धर्ममातिथ्यविमुखः कथम्॥

गृह्णासि पापं सर्वेषां ब्रूहि कूर्माधुनोत्तरम्॥ १०.९ ॥

**॥कूर्म उवाच॥**

चिरंतनो हि जानामि कर्त्तुमातिथ्यसत्क्रियाम्॥

अभ्यागतेष्वपचितिं धर्मशास्त्रेषु निश्चितम्॥ १०.१० ॥

सुमहत्कारणं चात्र श्रूयतां तद्वदामि वः॥

नाहं पराङ्मुखो जात एतावंति दिनान्यपि॥ १०.११ ॥

अभ्यागतस्य कस्यापि सर्वसत्कारसद्व्रती॥

किं त्वेष पंचमो यो वो दृश्यते सरलाकृतिः॥ १०.१२ ॥

इंद्रद्युम्नो महीपालो बिभोम्यस्मादलंतराम्॥

अमुना यजमानेन रौचकाख्ये पुरा पुरे॥ १०.१३ ॥

यज्ञपावकदग्धा मे पृष्ठिर्नाद्यापि निर्व्रणा॥

तन्मे भयं पुनर्जातं किमयं पुनरेव माम्॥ १०.१४ ॥

आसुतीवलमाधाय भुवि धक्ष्यति संप्रति॥

इति वाक्यावसाने तु कूर्मस्य कुरुसत्तम॥ १०.१५ ॥

पपात पुष्पवृष्टिः खाद्विमुक्ताप्सरसां गणैः॥

सस्वनुर्देववाद्यानि कीर्त्युद्धारे महीपतेः॥ १०.१६ ॥
विस्मितास्ते च ददृशुर्विमानं पुरतः स्थितम्॥
इंद्रद्युम्नकृते देवदूतेनाधिष्ठितं तदा॥ १०.१७ ॥
अयातयामाः प्रददुराशिषोऽस्मै सुरद्विजाः॥
साधुवादो दिवि महानासीत्तस्य महीपतेः॥ १०.१८ ॥
ततो विमानमालंब्य देवदूतस्तमुच्चकैः॥
इंद्रद्युम्नमुवाचेदं श्रृण्वतां नाकवासिनाम्॥ १०.१९ ॥
**॥देवदूत उवाच॥**
नवीकृताधुना कीर्तिस्तव भूपाल निर्मला॥
त्रिलोक्यामपि तच्छीघ्रं विमानमिदमारुह॥ १०.२० ॥
गम्यतां ब्रह्मणो लोकमाकल्पं तपसोर्जितम्॥
प्रेषितोऽहमनेनैव तवानयनकारणात्॥ १०.२१ ॥
यावत्कीर्तिर्मनुष्यस्य पृथिव्यां प्रथिता भवेत्॥
तावानेव भवेत्स्वर्गी सति पुण्ये ह्यनंतके॥ १०.२२ ॥
सुरालयसरोवापीकूपारामादिकल्पना॥
एतदर्थं हि पूर्ताख्या धर्मशास्त्रेषु निश्चिता॥ १०.२३ ॥
**॥इंद्रद्युम्न उवाच॥**
अमी ममैव सुहृदो मार्कंडबककौशिकाः॥
गृध्रकूर्मौ प्रभावोऽयममीषां मम वृद्धये॥ १०.२४ ॥
तच्चेदमी मया साकं ब्रह्मलोकं प्रयांत्युत॥
पुरःस्थितास्तदायास्ये ब्रह्मलोकं च नान्यथा॥ १०.२५ ॥
परेषामनपेक्ष्यैव कृतप्रतिकृतं हि यः॥
प्रवर्तते हितायैव स सुहृत्प्रोच्यते बुधैः॥ १०.२६ ॥
स्वार्थोद्युक्तधियो ये स्युरन्वर्थास्तेप्यसुंधराः॥
मरणं प्रकृतिश्चैव जीवितं विकृतिर्यदा॥ १०.२७ ॥
प्राणिनां परमो लाभः केवलं प्राणिसौहृदम्॥
दरिद्रा रागिणोऽसत्यप्रतिज्ञाता गुरुद्रुहः॥ १०.२८ ॥
मित्रावसानिनः पापाः प्रायो नरकमंडनाः॥
परार्थनष्टास्तदमी पंच संप्रति साधवः॥ १०.२९ ॥
मम कीर्तिसमुद्धारः स प्रभावो महात्मनाम्॥
अमीषां यदि ते स्वर्गं प्रयास्यन्ति मया सह॥
तदाहमपि यास्यामि देवदूतान्यथा न हि॥ १०.३० ॥
**॥देवदूत उवाच॥**

एते हरगणाः सर्वेशापभ्रष्टाः क्षितिं गताः॥ १०.३१ ॥
शापांते हरपार्श्वे तु यास्यंति पृथिवीपते॥
विहायेमानतो भूप त्वमागच्छ मया सह॥ १०.३२ ॥
न चैषां रोचते स्वर्गो हित्वा देवं महेश्वरम्॥
**॥इंद्रद्युम्न उवाच॥**
यद्येवं गच्छ तद्दूत नायास्येहं त्रिविष्टपम्॥ १०.३३ ॥
तथा तथा यति ष्यामि भविष्यामि यथा गणः॥
अविशुद्धिक्षयाधिक्यदूषणैरेष निंदितः॥ १०.३४ ॥
स्वर्गः सदानुश्रविकस्तस्मादेनं न कामये॥
तत्रस्थास्य पुनः पातो भयं न व्येति मानसात्॥ १०.३५ ॥
पुनः पातो यतः पुंसस्तस्मात्स्वर्गं न कामये॥
सति पुण्ये स्वयं तेन पातितो निजलोकतः॥ १०.३६ ॥
चतुर्मुखेन वैलक्ष्यं गतोऽस्मि कथमेमि तम्॥
इतीदमुक्त्वा दूतं तं श्रृण्वतोऽस्यैव विस्मयात्॥ १०.३७ ॥
अप्राक्षीद्भूपतिः कूर्मं तदायुःकारणं तदा॥
इदमायुः कथं जातं कूर्म दीर्घतमं तव॥ १०.३८ ॥
सुहृन्मित्रं गुरुस्त्वं मे येन कीर्तिर्ममोद्धृता॥ १०.३९ ॥
**॥कूर्म उवाच॥**
श्रृणु भूप कथां दिव्यां श्रवणात्पापनाशिनीम्॥
कथां सुमधुरामेतां शिवमाहात्म्यसंयुताम्॥ १०.४० ॥
श्रृण्वन्निमामपि कथां नृपते मनुष्यः सुश्रद्धया भवति पापविमुक्तदेहः॥
शंभोः प्रसादमभिगम्य यथायुरेवमासीत्प्रसादत इयं मम कूर्मता च॥ १०.४१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्रायां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे
महीप्रादुर्भावे दशमोऽध्यायः॥ १० ॥ छ ॥

**॥कूर्म उवाच॥**

शांडिल्य इति विख्यातः पुराहमभवं द्विजः॥
बालभावे मया भूप क्रीडमानेन निर्मितम्॥ ११.१ ॥

पुरा प्रावृषि पांशूत्थं शिवायतनमुच्छ्रितम्॥
जलार्द्रवालुकाप्रायं प्रांशुप्राकारशोभितम्॥ ११.२ ॥

पंचायतनविन्यासमनोहरतरं नृप॥
विनायकशिवासूर्यमधुसूदनमूर्तिमत्॥ ११.३ ॥

पीतमृत्स्वर्णकलशं ध्वजमालाविभूषितम्॥
काष्ठतोरणविन्यस्तं दोलकेन विभूषितम्॥ ११.४ ॥

दृढप्रांशुसमुद्भूतसोपानश्रेणिभासुरम्॥
सर्वाश्चर्यमयं दिव्यं वयस्यैः संवृतेन मे॥ ११.५ ॥

तत्र जागेश्वरं लिंगं गृत्वाथ विनिवेशितम्॥
बाल्यादुपलरूपं तद्वर्षावारिविशुद्विमत्॥ ११.६ ॥

बकपुष्पैस्तथान्यैश्च केदारोत्थैः समाहृतैः॥
कोमलैरपरैः पुष्पैर्वृतिवल्लीसमुद्भवैः॥ ११.७ ॥

कूष्मांडैश्चैव वर्णाद्यैरुन्मत्तकुसुमायुतैः॥
मंदारैर्बिल्वपत्रैश्च दूर्वाद्यैश्च नवांकुरैः॥ ११.८ ॥

पूजा विरचिता रम्या शंभोरिति मया नृप॥
ततस्तांडवमारब्धमनपेक्षितसत्क्रियम्॥ ११.९ ॥

शिवस्य पुरतो बाल्याद्गीतं च स्वस्वर्जितम्॥
अकार्षं सकृदेवाहं बाल्ये शिशुगणावृतः॥ ११.१० ॥

ततो मृतोऽहं जातश्च विप्रो जातिस्मरो नृप॥
वैदिशे नगरेऽकार्षं शिवपूजां विशेषतः॥ ११.११ ॥

शिवदीक्षामुपागम्यानुगृहीतः शिवागमैः॥
शिवप्रासाद आधाय लिंगं श्रद्धासमन्वितः॥ ११.१२ ॥

कल्पकोटिं वसेत्स्वर्गेयः करोति शिवालयम्॥
यावंति परमाणूनि शिवस्यायतने नृप॥ ११.१३ ॥

भवंति तावद्वर्षाणि करकः शिवसद्मनि॥
इति पौराणवाक्यानि स्मरञ्छैलं शिवालयम्॥ ११.१४ ॥

अकारिषमहं रम्यं विश्वकर्मविधानतः॥
मृन्मयं काष्ठनिष्पन्नं पाक्वेष्टं शैलमेव वा॥ ११.१५ ॥

कृतमायतनं दद्यात्क्रमाद्दशगुणं फलम्॥
भस्मशायी त्रिषवणो भिक्षान्नकृतभोजनः॥ ११.१६ ॥

जटाधरस्तपस्यंश्च शिवाराधनतत्परः॥
इत्थं मे कुर्वतो जातं पुनर्भूप प्रमापणम्॥ ११.१७ ॥

जातो जाति स्मरस्तत्र कारिता तृतीयेहं भवांतरे॥
सार्वभौमो महीपालः प्रतिष्ठाने पुरोत्तमे॥ ११.१८ ॥

जयदत्त इति ख्यातः सूर्यवंशसमुद्भवः॥
ततो मया बहुविधाः प्रासादाः कारिता नृप॥ ११.१९ ॥

तस्मिन्भवांतरे शंभोराराधनपरेण च॥
ततो निरूपिता जाता बकपुष्पपुरस्सराः॥ ११.२० ॥

सौवर्णै राजतै रत्ननिर्मितैः कुसुमैर्नृप॥
तथाविधेऽन्नदानादि करोमि नृपसत्तम॥ ११.२१ ॥

केवलं शिवलिंगानां पूजां पुष्पैः करोम्यहम्॥
ततो मे भगवाञ्छंभुः संतुष्टोऽथ वरं ददौ॥ ११.२२ ॥

अजरामरतां राजंस्तेनैव वपुषावृतः॥
ततस्तथाविधं प्राप्यानन्यसाधारणं वरम्॥ ११.२३ ॥

विचरामि महीमेतां मदांध इव वारणः॥
शिवभक्तिं विहायाथ नृपोऽहं मदनातुरः॥ ११.२४ ॥

प्रधर्षयितुमारब्धः स्त्रियः परपरिग्रहाः॥
आयुषस्तपसः कीर्तेस्तेजसो यशसः श्रियः॥ ११.२५ ॥

विनाशकारणं मुख्यं परदारप्रधर्षणम्॥
सकर्णः श्रुतिहीनोऽसौ पश्यन्नंधो वदञ्जडः॥ ११.२६ ॥

अचेतनश्चेतनावान्मूर्खो विद्वानपि स्फुटम्॥
तदा भवति भूपाल पुरुषः क्षणमात्रतः॥ ११.२७ ॥

यदैव हरिणाक्षीणां गोचरं याति चक्षुषाम्॥
मृतस्य निरये वासो जीवतश्चेश्वराद्भयम्॥ ११.२८ ॥

एवं लोकद्वयं हंत्री परदारप्रधर्षणा॥
जरामरणहीनोहमिति निश्चयमास्थितः॥ ११.२९ ॥

ऐहिकामुष्मिकभयं विहायांह ततः परम्॥
प्रधर्षयितुमारब्धस्तदा भूप परस्त्रियः॥ ११.३० ॥

अथ मां संपरिज्ञाय मर्यादारहितं यमः॥
वरप्रदानादीशस्य तदंतिकसुपाययौ॥
व्यजिज्ञपन्मदीयं च शंभोर्धर्मव्यतिक्रमम्॥ ११.३१ ॥

**॥यम उवाच॥**
नाहं तवानुभावेन गुप्तस्यास्य विनिग्रहम्॥ ११.३२ ॥

शक्रोमि पापिनो देव मन्नियोगेऽन्यमादिश॥
जगदाधारूपा हि त्वयेशोक्ताः पतिव्रताः॥ ११.३३ ॥

गावो विप्राः सनिगमा अलुब्धा दानशीलिनः॥
सत्यनिष्ठा इति स्वामिंस्तेषां मुख्यतमा सती॥ ११.३४ ॥

तास्तेन धर्षिता लुप्तं मदीयं धर्मशासनम्॥
वरदानप्रमत्तेन तवैव परिभूय माम्॥ ११.३५ ॥

जयदत्तेन देवेश प्रतिष्ठानाधिवासिना॥
इमां धर्मस्य भगवान्गिरमाकर्ण्य कोपितः॥
शशाप मां समानीय वेपमानं कृतांजलिम्॥ ११.३६ ॥

**॥ईश्वर उवाच॥**
यस्माद्दुष्टसमाचार धर्षितास्ते पतिव्रताः॥ ११.३७ ॥

कामार्तेन मया शप्तस्तस्मात्कूर्मः क्षणाद्भव॥
ततः प्रणम्य विज्ञप्तः शापतापहरो मया॥ ११.३८ ॥

प्राह षष्टितमे कल्पे विशापो भविता गणः॥
मदीय इति संप्रोच्य जगामादर्शनं शिवः॥ ११.३९ ॥

अहं कूर्मस्तदा जातो दशयोजनविस्तृतः॥
समुद्रसलिले नीतस्त्वयाहं यज्ञसाधने॥ ११.४० ॥

पुरस्ताद्यायजूकेन स्मरंस्तच्च बिभेमि ते॥
दग्धस्त्वयाहं पृष्ठेत्र व्रणान्येतानि पश्य मे॥ ११.४१ ॥

चयनानि बहून्यत्र कल्पसूत्रविधानतः॥

पृष्ठोपरि कृतान्यासन्निंद्रद्युम्न तदा त्वया॥ ११.४२ ॥

भूयः संतापिता यज्ञैः पृथिवी पृथिवीपते॥
सुस्राव सर्वतीर्थानां सारं साऽभून्महीनदी॥ ११.४३ ॥

तस्यां च स्नानमात्रेण सर्वपापैः प्रमुच्यते॥
ततो नैमित्तिके कस्मिन्नपि प्रलय आगतः॥ ११.४४ ॥

प्लवमानमिदं राजन्मानसं शतयोजनम्॥
षट्पंचाशत्प्रमाणेन कल्पा मम पुरा नृप॥ ११.४५ ॥

व्यतीता इह चत्वारः शेषे मोक्षस्ततः परम्॥
एवमायुरिदं दीर्घमेवं शापाच्च कूर्मता॥ ११.४६ ॥

ममाभूदीश्वरस्यैव सतीधर्मद्रुहो नृप॥
ब्रूहि किं क्रियतां शत्रोरपि ते गृहगामिनः॥ ११.४७ ॥

मम पृष्ठिश्चिरं भूप त्वया दग्धाग्निनाऽपुरा॥
अहं ज्वलंतीमिव तां पश्याम्यद्यापि सत्रिणा॥ ११.४८ ॥

इदं विमानमायातं त्वया कस्मान्निराकृतम्॥
देवदूतसमायुक्तं भुंक्ष्व भोगान्निजार्जितान्॥ ११.४९ ॥

**॥इंद्रद्युम्न उवाच॥**
चतुर्मुखेन तेनाहं स्वर्गान्निर्वासितः स्वयम्॥
विलक्ष्योन प्रयास्यामि पाताधिक्यादिदूषिते॥ ११.५० ॥

तस्माद्विवेकवैराग्यमविद्यापापनाशनम्॥
आलिंग्याहं यतिष्यामि प्राप्य बोधं विमुक्तये॥ ११.५१ ॥

तन्मे गृहगतस्याद्य यथातिथ्यकरो भवान्॥
तदादिश यथाऽपारपारदः कोपि मे गुरुः॥ ११.५२ ॥

**॥कूर्म उवाच॥**
लोमशोनाम दीर्घायुर्मत्तोऽप्यस्ति महामुनिः॥
मया कलापग्रामे स पूर्वं दृष्टः क्वचिन्नृप॥ ११.५३ ॥

**॥इंद्रद्युम्न उवाच॥**
तस्मादागच्छ गच्छामस्तमेव सहितावयम्॥
प्राहुः पूततमां तीर्थादपि सत्संगतिं बुधाः॥ ११.५४ ॥

इत्थं निशम्य नृपतेर्वचनं तदानीं सर्वेऽपि ते षडथ तं मुनिमुख्यमाशु॥

चित्ते विधाय मुदिताः प्रययुर्द्विजेंद्रं जिज्ञासवः सुचिरजीवितहेतुमस्य॥ ११.७५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीप्रादुर्भावे कूर्माख्यानंनामैकादशोऽध्यायः॥ ११ ॥ छ ॥

**॥ नारद उवाच॥**

अथ ते ददृशुः पार्थ संयमस्थं महामुनिम्॥
कूर्माख्यानंनामैकादशोऽध्यायः॥ १२.१ ॥

जटास्त्रिषवणस्नानकपिलाः शिरसा तदा॥
धारयन्तं लोमशाख्यमाज्यसिक्तमिवानलम्॥ १२.२ ॥

सव्यहस्ते तृणौघं च च्छायार्थे विप्रसत्तमम्॥
दक्षिणे चाक्षमालां च बिभ्रतं मैत्रमार्गगम्॥ १२.३ ॥

अहिंसयन्दुरुक्ताद्यैः प्राणिनो भूमिचारिणः॥
यः सिद्धिमेति जप्येन स मैत्रो मुनिरुच्यते॥ १२.४ ॥

बकभूपद्विजोलूकगृध्रकूर्मा विलोक्य च॥
नेमुः कलापग्रामे तं चिरंतनतपोनिधिम्॥ १२.५ ॥

स्वागतासनसत्कारेणामुना तेऽति सत्कृताः॥
यथोचितं प्रतीतास्तमाहुः कार्यं हृदि स्थितम्॥ १२.६ ॥

**॥कूर्म उवाच॥**

इन्द्रद्युम्नोऽयमवनीपतिः सत्रिजनाग्रणीः॥
कीर्तिलोपान्निरस्तोऽयं वेधसा नाकपृष्ठतः॥ १२.७ ॥

मार्कंडेयादिभिः प्राप्य कीर्त्युद्धारंच सत्तम॥
नायं कामयते स्वर्गं पुनःपातादिभीषणम्॥ १२.८ ॥

भवतानुगृहीतोऽयमिहेच्छति महोदयम्॥
प्रणोद्यस्तदयं भूपः शिष्यस्ते भगवन्मया॥
त्वत्सकाशमिहानीतो ब्रूहि साध्वस्य वांछितम्॥ १२.९ ॥

परोपकरणं नाम साधूनां व्रतमाहितम्॥
विशेषतः प्रणोद्यानां शिष्यवृत्तिमुपेयुषाम्॥ १२.१० ॥

अप्रणोद्येषु पापेषु साधु प्रोक्तमसंशयम्॥
विद्वेषं मरणं चापि कुरुतेऽन्यतरस्य च॥ १२.११ ॥

अप्रमत्तः प्रणोद्येषु मुनिरेष प्रयच्छति॥
तदेवेति भवानेवं धर्मं वेत्ति कुतो वयम्॥ १२.१२ ॥

**॥लोमश उवाच॥**

कूर्म युक्तमिदं सर्वं त्वयाभिहितमद्य नः॥
धर्मशास्त्रोपनतं तत्स्मारिताः स्म पुरातनम्॥ १२.१३ ॥

ब्रूहि राजन्सुविश्रब्धं सन्देहं हृदयस्थितम्॥
कस्ते किमब्रवीच्छेषं वक्ष्याम्यहं न संशयः॥ १२.१४ ॥

**॥इन्द्रद्युम्न उवाच॥**
भगवन्प्रथमः प्रश्नस्तावदेव ममोच्यताम्॥
ग्रीष्मकालेऽपि मध्यस्थै रवौ किं न तवाश्रमः॥ १२.१५ ॥

कुटीमात्रोऽपि यच्छाया तृणैः शिरसि पाणिगैः॥ १२.१६ ॥

**॥लोमश उवाच॥**
मर्तव्यमस्त्यवश्यं च काय एष पतिष्यति॥
कस्यार्थे क्रियते गेहमनित्यभवमध्यगैः॥ १२.१७ ॥

यस्य मृत्युर्भवेन्मित्रं पीतं वाऽमृतमुत्तमम्॥
तस्यैतदुचितं वक्तुमिदं मे श्वो भविष्यति॥ १२.१८ ॥

इदं युगसहस्रेषु भविष्यमभविद्दिनम्॥
तदप्यद्यत्वमापन्नं का कथामरणावधेः॥ १२.१९ ॥

कारणानुगतं कार्यमिदं शुक्रादभूद्वपुः॥
कथं विशुद्धिमायाति क्षालितांगारवद्वद॥ १२.२० ॥

तदस्यापि कृते पापं शत्रुषड्वर्गनिर्जिताः॥
कथंकारं न लज्जन्ते कुर्वाणा नृपसत्तम॥ १२.२१ ॥

तद्ब्रह्मण इहोत्पन्नः सिकताद्वयसम्भवः॥
निगमोक्तं पठञ्छृण्वन्निदं जीविष्यते कथम्॥ १२.२२ ॥

तथापि वैष्णवी माया मोहयत्यविवेकिनम्॥
हृदयस्थं न जानंति हयपि मृत्यु शतायुषः॥ १२.२३ ॥

दन्ताश्चलाश्चला लक्ष्मीर्यौवनं जीवितं नृप॥
चलाचलमतीवेदं दानमेवं गृहं नृणाम्॥ १२.२४ ॥

इति विज्ञाय संसारसारं च चलाचलम्॥
कस्यार्थे क्रियते राजन्कुटजादि परिग्रहः॥ १२.२५ ॥

**॥इन्द्रद्युम्न उवाच॥**
चिरायुर्भगवानेव श्रूयते भुवनत्रये॥
तदर्थमहमायातस्तत्किमेवं वचस्तव॥ १२.२६ ॥

**॥लोमश उवाच॥**

प्रतिकल्पं मच्छरीरादेकरोमपरिक्षयः॥
जायते सर्वनाशे च मम भावि प्रमापणम्॥ १२.२७ ॥

पश्य जानुप्रदेशं मे द्व्यंगुलं रोमवर्जितम्॥
जातं वपुस्तद्बिभेमि मर्तव्ये सति किं गृहैः॥ १२.२८ ॥

**॥नारद उवाच॥**

इत्थं निशम्य तद्वाक्यं स प्रहस्यातिविस्मितः॥
भूपालस्तस्य पप्रच्छ कारणं तादृशायुषः॥ १२.२९ ॥

**॥इन्द्रद्युम्न उवाच॥**

पृच्छामि त्वामहं ब्रह्मन्यदायुरिदमीदृशम्॥
तव दीर्घं प्रभावोऽसौ दानस्य तपसोऽथवा॥ १२.३० ॥

**॥लोमश उवाच॥**

श्रृणु भूप प्रवक्ष्यामि पूर्वजन्मसमुद्भवाम्॥
शिवधर्मयुतां पुण्यां कथां पापप्रणाशनीम्॥ १२.३१ ॥

अहमासं पुरा शूद्रो दरिद्रोऽतीवभूतले॥
भ्रमामि वसुधापृष्ठे ह्यशनपीडितो भृशम्॥ १२.३२ ॥

ततो मया महल्लिंगं जालिमध्यगतं तदा॥
मध्याह्नेऽस्य जलाधारो दृष्टश्चैवा विदूरतः॥ १२.३३ ॥

ततः प्रविश्य तद्वारि पीत्वा स्नात्वा च शांभवम्॥
तल्लिंगं स्नापितं पूजा विहिता कमलैः शुभैः॥ १२.३४ ॥

अथ क्षुत्क्षामकंठोऽहं श्रीकंठं तं नमस्य च॥
पुनः प्रचलितो मार्गे प्रमीतो नृपसत्तम॥ १२.३५ ॥

ततोऽहं ब्राह्मणगृहे जातो जातिस्मरः सुतः॥
स्नापनाच्छिवलिंगस्य सकृत्कमलपूजनात्॥ १२.३६ ॥

स्मरन्विलसितं मिथ्या सत्याभासमिदं जगत्॥
अविद्यामयमित्येवं ज्ञात्वा मूकत्वमास्थितः॥ १२.३७ ॥

तेन विप्रेण वार्धक्ये समाराध्य महेश्वरम्॥
प्राप्तोऽहमिति मे नाम ईशान इति कल्पितम्॥ १२.३८ ॥

ततः स विप्रो वात्सल्यादगदान्सुबहून्मम॥
चकार व्यपनेष्यामि मूकत्वमिति निश्चयः॥ १२.३९ ॥

मंत्रवादान्बहून्वैद्यानुपायानपरानपि॥
पित्रोस्तथा महामायासंबद्धमनसोस्तथा॥ १२.४० ॥

निरीक्ष्य मूढतां हास्यमासीन्मनसि मे तदा॥
तथा यौवनमासाद्य निशि हित्वा निजं गृहम्॥ १२.४१ ॥

संपूज्य कमलैः शंभुं ततः शयनमभ्यगाम्॥
ततः प्रमीते पितरि मूढइत्यहमुज्झितः॥ १२.४२ ॥

संबंधिभिः प्रतीतोऽथ फलाहारमवस्थितः॥
प्रतीतः पूजयामीशमब्जैर्बहुविधैस्तथा॥ १२.४३ ॥

अथ वर्षशतस्यांते वरदः शशिशेखरः॥
प्रत्यक्षो याचितो देहि जरामरणसंक्षयम्॥ १२.४४ ॥

**॥ईश्वर उवाच॥**
अजरामरता नास्ति नामरूपभृतोयतः॥
ममापि देहपातः स्यादवधिं कुरु जीविते॥ १२.४५ ॥

इति शंभोर्वचः श्रुत्वा मया वृतिमिदं तदा॥
कल्पांते रोमपातोऽस्तु मरणं सर्वसंक्षये॥ १२.४६ ॥

ततस्तव गणो भूयामिति मेऽभीप्सितो वरः॥
तथेत्युक्त्वा स भगवान्हरश्चादर्शनं गतः॥ १२.४७ ॥

अहं तपसिनिष्ठश्च ततः प्रभृति चाभवम्॥
ब्रह्महत्यादिभिः पापैर्मुच्यते शिवपूजनात्॥ १२.४८ ॥

ब्रध्नाब्जैरितरैर्वपि कमलैर्नात्र संशयः॥
एवं कुरु महाराज त्वमप्याप्स्यसि वांछितम्॥ १२.४९ ॥
हरभक्तस्य लोकस्य त्रिलोक्यां नास्ति दुर्लभम्॥
बहिःप्रवृत्तिं सगृह्य ज्ञानकर्मेन्द्रियादि च॥ १२.५० ॥

लयः सदाशिवे नित्यमतर्यो गोऽयमुच्यते॥
दुष्करत्वाद्वहिर्योगं शिव एव स्वयं जगौ॥ १२.५१ ॥

पंचभिश्चार्चनं भूतैर्विशिष्टफलदं ध्रुवम्॥
क्लेशकर्मविपाकाद्यैराशयैश्चाप्य संयुतम्॥ १२.५२ ॥

ईशानमाराध्य जपन्प्रणवं मुक्तिपाप्नुयात्॥
सर्वपापक्षये जाते शिवे भवति भावना॥ १२.५३ ॥

पापोपहतबुद्धीनां शिवे वार्तापि दुर्लभा॥
दुर्लभं भारते जन्म दुर्लभं शिवपूजनम्॥ १२.५४ ॥

दुर्लभं जाह्नवीस्नानं शिवे भक्तिः सुदुर्लभा॥
दुर्लभं ब्राह्मणे दानं दुर्लभं वह्निपूजनम्॥ १२.५५ ॥

अल्पपुण्यैश्च दुष्प्रापं पुरुषोत्तमपूजनम्॥ १२.५६ ॥

लक्षेण धनुषां योगस्तदर्धेन हुताशनः॥
पात्रं शतसहस्रेण रेवा रुद्रश्च षष्टिभिः॥ १२.५७ ॥

इति दमुक्तमखिलं मया तव महीपते॥
यथायुरभवद्दीर्घं समाराध्य महेश्वरम्॥ १२.५८ ॥

न दुर्लभं न दुष्प्रापं न चासाध्यं महात्मनाम्॥
शिवभक्तिकृतां पुंसां त्रिलोक्यामिति निश्चितम्॥ १२.५९ ॥

नंदीश्वरस्य तेनैव वपुषा शिवपूजनात्॥
सिद्धिमालोक्य को राजञ्छंकरं न नमस्यति॥ १२.६० ॥

श्वेतस्य च महीपस्य श्रीकंठं च नमस्यतः॥
कालोपि प्रलयं यातः कस्तमीशं न पूजयेत्॥ १२.६१ ॥ (१६)
यदिच्छया विश्वमिदं जायते व्यवतिष्ठते॥
तथा संलीयते चांते कस्तं न शरणं व्रजेत्॥ १२.६२ ॥

एतद्रहस्यमिदमेव नृणां प्रधानं कर्तव्यमत्र शिवपूजनमेव भूप॥
यस्यांतरायपदवीमुपयांति लोकाः सद्योः नरः शिवनतः शिवमेव सत्यम्॥ १२.६३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीप्रादुर्भावे लोमशवृत्तान्ते शिवपूजनमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः॥ १२ ॥ छ ॥

॥नारद उवाच॥
इति तस्य मुनींद्रस्य भूपतिः शुश्रुवान्वचः॥
प्राह नाहं गमिष्यामि त्वां विहाय नरं क्वचित्॥ १३.१ ॥
लिंगमाराधयिष्येऽद्य सर्वसिद्धिप्रदं नृणाम्॥
त्वयैवानुगृहीतोऽद्य यांतु सर्वे यथागतम्॥ १३.२ ॥
तद्भूपतिवचः श्रुत्वा बको गृध्रोऽथ कच्छपः॥
उलूकश्च तथैवोचुः प्रणता लोमशं मुनिम्॥ १३.३ ॥
स च सर्वसुहृद्विप्रस्तथेत्येवाह तांस्तदा॥
प्रणोद्यान्प्रणतान्सर्वाननुजग्राह शिष्यवत्॥ १३.४ ॥
शिवदीक्षाविधानेन लिंगपूजां समादिशत्॥
तेषामनुग्रहपरो मुनिः प्रमतवत्सलः॥
तीर्थादप्यधिकं स्थाने सतां साधुसमागमः॥ १३.५ ॥
पचेलिमफलः सद्यो दुरंतकलुपापहः॥
अपूर्वः कोऽपि सद्गोष्ठीसहस्रकिरणोदयः॥ १३.६ ॥
य एकांततयात्यंतमंतर्गततमोपहः॥
साधुगोष्ठीसमुद्भूतसुखामृतरसोर्मयः॥ १३.७ ॥
सर्वे वराः सुधाकाराः शर्करामधुषड्रसाः॥
ततस्ते साधुसंसर्गं संप्राप्ताः शिवशासनात्॥ १३.८ ॥
आरेभिरे क्रियायोगं मार्कंडनृपपूर्वकाः॥
तेषां तपस्यतामेवं समाजग्मे कदाचन॥
तीर्थयात्रानुषंगेन लोमशालोकनोत्सुकः॥ १३.९ ॥
मुख्या पुरुषयात्रा हि तीर्थयात्रानुषंगतः॥
सद्भिः समाश्रितो भूप भूमिभागस्तथोच्यते॥ १३.१० ॥
कृतार्हणातिथ्यविधिं विश्रांतं मां च फाल्गुन॥
प्रणम्य तेऽथ पप्रच्छुर्नाडीजंघपुरः सराः॥ १३.११ ॥
**॥त उचुः॥**
शापभ्रष्टा वयं ब्रह्मंश्चत्वारोऽपि स्वकर्मणा॥
तन्मुक्तिसाधनार्थाय स्थानं किंचित्समादिश॥ १३.१२ ॥
इयं हि निष्फला भूमिः शपलं भारतं मुने॥ १३.१३ ॥
तत्रापि क्वचिदेकत्र सर्वतीर्थफलं वद॥
इति पृष्टस्त्वहं तैश्च तानब्रवमिदं तदा॥ १३.१४ ॥
संवर्तं परिपृच्छध्वं स वो वक्ष्यति तत्त्वतः॥
सर्वतीर्थफलावाप्तिकारकं भूप्रदेशकम्॥ १३.१५ ॥

॥त उचुः॥
कुत्रासौ विद्यते योगी नाज्ञासिष्म वयं च तम्॥
संवर्तदर्शनान्मुक्तिरिति चास्मदनुग्रहः॥ १३.१६ ॥
यदि जानासि तं ब्रूहि सुहृत्संगो न निष्फलः॥
ततोऽहमब्रवं तांश्च विचार्येदं पुनःपुनः॥ १३.१७ ॥
वाराणस्यामसावास्ते संवर्तो गुप्तलिंगभृत्॥
मलदिग्धो विवसनो भिक्षाशी कुतपादनु॥ १३.१८ ॥
करपात्रकृताहारः सर्वथा निष्परिग्रहः॥
भावयन्ब्रह्म परमं प्रणवाभिधमीश्वरम्॥ १३.१९ ॥
भुक्त्वा निर्याति सायाह्ने वनं न ज्ञायते जनैः॥
योगीश्वरोऽसौ तद्रूपाः सन्त्यन्ये लिंगधारिणः॥ १३.२० ॥
वक्ष्यामि लक्षणं तस्य ज्ञास्यथ तं मुनिम्॥
प्रतोल्या राजमार्गे तु निशि भूमौ शवं जनैः॥ १३.२१ ॥
अविज्ञातं स्थापनीयं स्थेयं तदविदूरतः॥
यस्तां भूमिमुपागम्य अकस्माद्विनिर्वतते॥ १३.२२ ॥
स संवर्तो न चाक्रामत्येष शल्यमसंशयम्॥
प्रष्टव्योऽभिमतं चासावुपाश्रित्य विनीतवत्॥ १३.२३ ॥
यदि पृच्छति केनाहमाख्यात इति मां ततः॥
निवेद्य चैतद्वक्तव्यं त्वामाख्यायाग्निमाविशत्॥ १३.२४ ॥
तच्छ्रुत्वा ते तथा चक्रुः सर्वेपि वचनं मम॥
प्राप्य वाराणसीं दृष्ट्वा संवर्तं ते तथा व्यधुः॥ १३.२५ ॥
शवं दृष्ट्वा च तैर्न्यस्तं संवर्तो वै न्यवर्तत॥
क्षुत्परीतोऽपि तं ज्ञात्वा ययुस्तमनु शीघ्रगम्॥ १३.२६ ॥
तिष्ठ ब्रह्मन्क्षणमिति जल्पंतो राजमार्गगम्॥
याति निर्भर्त्सयत्येष निवर्तध्वमिति ब्रुवन्॥ १३.२७ ॥
समया मामरे भोऽद्य नागंतव्यं न वो हितम्॥
पलायनमसौ कृत्वा गत्वा दूरतरं सरः॥
कुपितः प्राह तान्सर्वान्केनाख्यातोऽहमित्युत॥ १३.२८ ॥
निवेदयत शीघ्रं मे यथा भस्म करोमि तम्॥
शापाग्निनाथ वा युष्मान्यदि सत्यं न वक्ष्यथ॥ १३.२९ ॥
अथ प्रकंपिताः प्राहुर्नारदेनेति तं मुनिम्॥
स तानाह पुनर्यातः पिशुनः क्व नु संप्रति॥ १३.३० ॥
लोकानां येन सापाग्नौ भस्मशेषं करोमि तम्॥

ब्रह्मबंधुमहं प्राहुर्भीतास्ते तं पुनर्मुनिम्॥ १३.३१ ॥
**॥त ऊचुः॥**
त्वं निवेद्य स चास्माकं प्रविष्टो हव्यवाहनम्॥
तत्कालमेव विप्रेंद्र न विघ्नस्तत्र कारणम्॥ १३.३२ ॥
**॥संवर्त उवाच॥**
अहमप्येवमेवास्य कर्ता तेन स्वयं कृतम्॥
तद्ब्रूत कार्यं नैवात्र चिरं स्थास्यामि वः कृते॥ १३.३३ ॥
**॥अर्जुन उवाच॥**
यदि नारद देवर्षे प्रविष्टोऽसि हुताशनम्॥
जीवितस्तत्कथं भूय आश्चर्यमिति मे वद॥ १३.३४ ॥
**॥नारद उवाच॥**
न हुताशः समुद्रो वा वायुर्वा वृक्षपर्वतः॥
आयुधं वा न मे शक्ता देहपाताय भारत॥ १३.३५ ॥
पुनरेतत्कृतं चापि संवर्तो मन्यते यथा॥
अहं सन्मानितश्चेति वह्निं प्राप्याप्यगामहम्॥ १३.३६ ॥
यथा पुष्पगृहे कश्चित्प्रविशत्यंग फाल्गुन॥
तथाहमग्निं संविश्य यातवानुत्तरं श्रृणु॥ १३.३७ ॥
संवर्तस्तान्पुनः प्राह मार्कंडेयमुखानिति॥
विशल्यः पंथाः क्षुधितोऽहं पुनः पुरीम्॥
भिक्षार्थं पर्यटिष्यामि प्रश्नं प्रब्रूत चैव मे॥ १३.३८ ॥
**॥त ऊचुः॥**
शापभ्रष्टा वयं मोक्षं प्राप्स्यामस्तवदनुग्रहात्॥
प्रतीकारं तदाख्याहि प्रणतानां महामुने॥ १३.३९ ॥
यत्र तीर्थे सर्वतीर्थफलं प्राप्नोति मानवः॥
तत्तीर्थं ब्रूहि संवर्त तिष्ठामो यत्र वै वयम्॥ १३.४० ॥
**॥संवर्त उवाच॥**
नमस्कृत्य कुमाराय दुर्गाभ्यश्च नरोत्तमाः॥
तीर्थं च संप्रवक्ष्यामि महीसागरसंगमम्॥ १३.४१ ॥
अमुना राजसिंहेन इंद्रद्युम्नेन धीमता॥
यजनाद्व्यंगुलोत्सेधा कृतेयं वसुधायदा॥ १३.४२ ॥
तदा संताप्यमानाया भुवः काष्ठस्य वै यथा॥
सुस्राव यो जलौघश्च सर्वदेवनमस्कृतः॥ १३.४३ ॥
महीनाम नदी च पृथिव्यां यानिकानिचित्॥

तीर्थानि तेषां सलिलसंभवं तज्जलं विदुः॥ १३.४४ ॥
महीनाम समुत्पन्ना देशे मालवकाभिधे॥
दक्षिणं सागरं प्राप्ता पुण्योभयतटाशिवा॥ १३.४५ ॥
सर्वतीर्थमयी पूर्वं महीनाम महानदी॥
किं पुनर्यः समायोगस्तस्याश्च सरितां पतेः॥ १३.४६ ॥
वाराणसी कुरुक्षेत्रं गंगा रेवा सरस्वती॥ १३.४७ ॥
तापी पयोष्णी निर्विंध्या चन्द्रभागा इरावती॥
कावेरी शरयूश्चैव गंडकी नैमिषं तथा॥ १३.४८ ॥
गया गोदावरी चैव अरुणा वरुणा तथा॥
एताः पुण्याः शतशोन्या याः काश्चित्सरितो भुवि॥ १३.४९ ॥
सहस्रविंशतिश्चैव षट्शतानि तथैव च॥
तासां सारसमुद्भुतं महीतोयं प्रकीर्तितम्॥ १३.५० ॥
पृथिव्यां सर्वतीर्थेषु स्नात्वा यत्फलमाप्यते॥
तन्महीसागरे प्रोक्तं कुमारस्य वचो यथा॥ १३.५१ ॥
एकत्र सर्वतीर्थानां यदि संयोगमिच्छथ॥
तद्गच्छथ महापुण्यं महीसागरसंगमम्॥ १३.५२ ॥
अहं चापि च तत्रैव बहून्वर्षगणान्पुरा॥
अवसं चागतश्चात्र नारदस्य भयात्तथा॥ १३.५३ ॥
स हि तत्र समीपस्थः पिशुनश्च विशेषतः॥
मरुत्तः कुरुते यत्नं तस्मै ब्रूयादिदं भयम्॥ १३.५४ ॥
अत्र दिग्वाससां मध्ये बहूनां तत्समस्त्वहम्॥
निवसाम्यतिप्रच्छन्नो मरुत्तादतिभीतवत्॥ १३.५५ ॥
पुनरत्रापि मां नूनं कथयिष्यति नारदः॥
तथाविधा हि चेष्टास्य पिशुनस्य प्रदृश्यते॥ १३.५६ ॥
भवद्भिश्च न चाप्यत्र वक्तानां कस्यचित्क्वचित्॥
मरुत्तः कुरुते यत्नं भूपालो यज्ञसिद्धये॥ १३.५७ ॥
देवाचार्येण संत्यक्तो भ्रात्रा मे कारणां तरे॥
गुरुपुत्रं च मां ज्ञात्वा यज्ञार्त्विज्यस्य कारणात्॥ १३.५८ ॥
अविद्यांतर्गतैर्यज्ञकर्मभिर्न प्रयोजनम्॥
मम हिंसात्मकैरस्ति निगमोक्तैरचेतनैः॥ १३.५९ ॥
समित्पुष्पकुशप्रायैः साधनैर्यद्यचेतनैः॥
क्रियते तत्तथा भावि कार्यं कारणवन्नृणाम्॥ १३.६० ॥
तद्यूयं तत्र गच्छध्वं शीघ्रमेव नृपानुगाः॥

अस्ति विप्रः स्वयं ब्रह्मा याज्ञवल्क्यश्च तत्र वै॥ १३.६१ ॥
स हि पूर्वं मिथेः पुर्यां वसन्नाश्रममुत्तमम्॥
आगच्छमानं नकुलं दृष्ट्वा गार्गी वचोऽब्रवीत्॥ १३.६२ ॥
गार्गि रक्ष पयो भद्रे नकुलोऽयमुपेति च॥
पयः पातुं कृतिमतिं नकुलं तं निराकुरु॥ १३.६३ ॥
इत्युक्तो नकुलः क्रुद्धः स हि क्रुद्धः पुराऽभवत्॥
जमदग्नेः पूर्वजैश्च शप्तः प्रोवाच तं मुनिम्॥ १३.६४ ॥
अहो वा धिग्धिगित्येव भूयो धिगिति चैव हि॥
निर्लज्जता मनुष्याणां दृश्यते पापकारिणाम्॥ १३.६५ ॥
कथं ते नाम पापानि प्रकुर्वंति नराधमाः॥
मरणांतरिता येषां नरके तीव्रवेदना॥ १३.६६ ॥
निमेषोऽपि न शक्येत जीविते यस्य निश्चितम्॥
तन्मात्रपरमायुर्यः पापं कुर्यात्कथं स च॥ १३.६७ ॥
त्वं मुने मन्यसे चेदं कुलीनोऽस्मीति बुद्धिमान्॥
ततः क्षिपसि मां मूढ नकुलोऽयमिति स्मयन्॥ १३.६८ ॥
किमधीतं याज्ञवल्क्य का योगेश्वरता तव॥
निरपराधं क्षिपसि धिगधीतं हि तत्तव॥ १३.६९ ॥
कस्मिन्वेदं स्मृतौ कस्यां प्रोक्तमेतद्ब्रवीहि मे॥
परुषैरिति वाक्यैर्मां नकुलेति ब्रवीषि यत्॥ १३.७० ॥
किमिदं नैव जानासि यावत्यः परुषा गिरः॥
परः संश्राव्यते तावच्छंकवः श्रोत्रतः पुनरा॥ १३.७१ ॥
कंठे यमानुगाः पादं कृत्वा तस्य सुदुर्मतेः॥
अतीव रुदतो लोहशंकून्क्षेप्स्यंति कर्णयोः॥ १३.७२ ॥
वावदूकाश्च ध्वजिनो मुष्णंति कृपणाञ्जनान्॥
स्वयं हस्तसहस्रेण धर्मस्यैवं भवद्विधाः॥ १३.७३ ॥
वज्रस्य दिग्धशस्त्रस्य कालकूटस्य चाप्युत॥
समेन वचसा तुल्यं मृत्योरिति ममाभवत्॥ १३.७४ ॥
कर्णनासिकनाराचान्निर्हरंति शरीरतः॥
वाक्छल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः॥ १३.७५ ॥
यंत्रपीडैः समाक्रम्य वरमेष हतो नरः॥
न तु तं परुषैर्वाक्यैर्जिघांसेत कथंचन॥ १३.७६ ॥
त्वया त्वहं याज्ञवल्क्य नित्यं पंडितमानिना॥
नकुलोसीति तीव्रेण वचसा ताडितः कुतः॥ १३.७७ ॥

**॥संवर्त उवाच॥**

इति श्रुत्वा वचस्तस्य भृशं विस्मितमानसः॥
याज्ञवल्क्योऽब्रवीदेतत्प्रबद्धकरसंपुटः॥ १३.७८ ॥
नमोऽधर्माय महते न विघ्नो यस्य वै भवम्॥
परमाणुमपि व्यक्तं कोत्र विद्यामदः सताम्॥ १३.७९
विरंचिविष्णुप्रसमुखाः सोमेंद्रप्रमुखास्तथा॥
सर्वज्ञास्तेऽपि मुह्यति गणनास्मादृशं च का॥ १३.८० ॥
धर्मज्ञोऽस्मीति यो मोहादात्मानं प्रतिपद्यते॥
स वायुं मुष्टिना बद्धुमीहते कृपणो नरः॥ १३.८१ ॥
केचिदज्ञानतो नष्टाः केचिज्ज्ञानमदादपि॥
ज्ञानं प्राप्यापि नष्टाश्च केचिदालस्यतोऽधमाः॥ १३.८२ ॥
वेदस्मृतीतिहासेषु पुराणेषु प्रकल्पितम्॥
चतुःपादं तथा धर्मं नाचरत्यधमः पशुः॥ १३.८३ ॥
स पुरा शोचते व्यक्तं प्राप्य तच्चांतकं गृहम्॥
तथाहि गृह्यकारेण श्रुतौ प्रोक्तमिदं वचः॥ १३.८४ ॥
नकुलं सकुलं ब्रूयान्न कंचिन्मर्मणि स्पृशेत्॥
प्रपठन्नपि चैवाहमिदं सर्वं तथा शुकः॥ १३.८५ ॥
आलस्येनाप्यनाचाराद्वृथाकार्येकमंग तत्॥ १३.८६ ॥
केवलं पाठ मात्रेण यश्च संतुष्यते नरः॥
तथा पंडितमानी च कोन्यस्तस्मात्पशुर्मतः॥ १३.८७ ॥
न च्छंदांसि वृजिनात्तारयंति मायाविनं माययाऽऽवर्तमानम्॥
नीडं शकुंता इव जातपक्षाश्छंदास्येनं प्रजहत्यंतकाले॥ १३.८८ ॥
स्वार्गाय बद्धकक्षो यः पाठमात्रेण ब्राह्मणः॥
स बालो मातुरंकस्थो ग्रहीतुं सोममिच्छति॥ १३.८९ ॥
तद्भवान्सर्वथा मह्यमनयं सोढुमर्हसि॥
सर्वः कोऽपि वदत्येवं तन्मयैवमुदाहृतम्॥ १३.९० ॥

**॥नकुल उवाच॥**

वृथेदं भाषितं तुभ्यं सर्वलोकेन यत्समम्॥
आत्मानं मन्यसे नैतद्वक्तुं योग्यं महात्मनाम्॥ १३.९१ ॥
वाजिवारणलोहानां काष्ठपाषाणवाससाम्॥
नारीपुरुषतोयानामंतरं महदंतरम्॥ १३.९२ ॥
अन्ये चेत्प्राकृता लोका बहुपापानि कुर्वते॥
प्रधानपुरुषेणापि कार्यं तत्पृष्ठतोनु किम्॥ १३.९३ ॥

सर्वार्थं निर्मितं शास्त्रं मनोबुद्धी तथैव च॥
दत्ते विधात्रा सर्वेषां तथापि यदि पापिनः॥ १३.९४ ॥
ततो विधातुः को दोषस्त एव खलु दुर्भगाः॥
ब्राह्मणेन विशेषेण किं भाव्यं लोकवद्यतः॥ १३.९५ ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ १३.९६ ॥
तस्मात्सदा महद्भिश्च आत्मार्थं च परार्थतः॥
सतां धर्मो न संत्याज्यो न्याय्यं तच्छिक्षणं तव॥ १३.९७ ॥
यस्मात्त्वया पीडितोऽहं घोरेण वचसा मुने॥
तस्माच्छीघ्रं त्वां शप्स्यामि शापयोग्यो हि मे मतः॥ १३.९८ ॥
नकुलोऽसीति मामाह भवांस्तस्मात्कुलाधमः॥
शीघ्रमुत्पत्स्यसे मोहात्त्वमेव नकुलो मुने॥ १३.९९ ॥
**॥संवर्त उवाच॥**
इति वाचं समाकर्ण्य भाव्यर्थकृतनिश्चयः॥
याज्ञवल्क्यो मरौ देशे विप्रस्याजायतात्मजः॥ १३.१०० ॥
दुराचारस्य पापस्य निघृणस्यातिवादिनः॥
दुष्कुलीनस्य जातोऽसौ तदा जातिस्मरः सुतः॥ १३.१०१ ॥
सोऽथ ज्ञानात्समालोक्य भर्तृयज्ञ इति द्विजः॥
गुप्तक्षेत्रं समापन्नो महीसागरसंगमम्॥ १३.१०२ ॥
तत्र पाशुपतो भूत्वा शिवाराधनतत्परः॥
स्वायंभुवं महाकालं पूजयन्वर्ततेऽधुना॥ १३.१०३ ॥
यो हि नित्यं महाकालं श्रद्धया पूजयेत्पुमान्॥
स दौष्कुलीनदोषेभ्यो मुच्यतेऽहिरिव त्वचः॥ १३.१०४ ॥
यथायथा श्रद्धयासौ तल्लिंगं परिपश्यति॥
तथातथा विमुच्येत दोषैर्जन्मशतोद्भवैः॥ १३.१०५ ॥
भर्तृयज्ञस्तु तत्रैव लिंगस्याराधनात्क्रमात्॥
बीजदोषाद्विनिर्मुक्तस्तल्लिंगमहिमा त्वसौ॥ १३.१०६ ॥
बभ्रुं च नकुलं प्राह विमुक्तो दुष्टजन्मतः॥
यस्मात्तस्मादिदं तीर्थं ख्यातं वै बभ्रु पावनम्॥ १३.१०७ ॥
तस्माद्व्रजध्वं तत्रैव महीसागरसंगमम्॥
पंच तीर्थानि सेवन्तो मुक्तिमाप्स्यथ निश्चितम्॥ १३.१०८ ॥
इत्येवमुक्त्वा संवर्तो ययावभिमतं द्विजः॥
भर्तृयज्ञं मुनिं प्राप्य ते च तत्र स्थिताभवन्॥ १३.१०९ ॥

ततस्तानाह स ज्ञात्वा गणाञ्ज्ञानेन शांभवान्॥
महद्वो विमलं पुण्यं गुप्तक्षेत्रे यदत्र वै॥ १३.११० ॥
भवन्तोऽभ्यागता यत्र महीसागरसंगमः॥
स्नानं दानं जपो होमः पिंडदानं विशेषतः॥ १३.१११ ॥
अक्षयं जायते सर्वं महीसागर संगमे॥
कृतं तथाऽक्षयं सर्वं स्नानदानक्रियादिकम्॥ १३.११२ ॥
यदात्र स्तानकं चक्रे देवर्षिर्नारदः पुरा॥
तदा ग्रहैर्वरा दत्ताः शनिना च वरस्त्वसौ॥ १३.११३ ॥
शनैश्चरेण संयुक्ता त्वमावास्या यदा भवेत्॥
श्राद्धं प्रकुर्वीत स्नानदानपुरः सरम्॥ १३.११४ ॥
यदि श्रावणमासस्य शनैश्चरदिने शुभा॥
कुहूर्भवति तस्यां तु संक्रांतिं कुरुते रविः॥ १३.११५ ॥
तस्यामेव तिथौ योगो व्यतीपातो भवेद्यदि॥
पुष्करंनाम तत्पर्व सूर्यपर्वशताधिकम्॥ १३.११६ ॥
सर्वयोगसमावापः सथंचिदपि लभ्यते॥
तस्मिन्दिने शनिं लोहं कांचनं भास्करं तथा॥ १३.११७ ॥
महीसागरसंसर्गे पूजयीत यथाविधि॥
शनिमंत्रैः शनिं ध्यात्वा सूर्यमंत्रैर्दिवाकरम्॥ १३.११८ ॥
अर्घ्यं दद्याद्भाकरस्य सर्वपापप्रशांतये॥
प्रयागादिधिकं स्नानं दानं क्षेत्रात्कुरोरपि॥ १३.११९ ॥
पिंडदानं गयाक्षेत्रादधिकं पांडुनंदन॥
इदं संप्राप्यते पर्व महद्भिः पुण्यराशिभिः॥ १३.१२० ॥
पितॄणामक्षया तृप्तिर्जायते दिवि निश्चितम्॥
यथा गयाशिरः पुण्यं पितॄणां तृप्तिदं परम्॥ १३.१२१ ॥
तथा समधिकः पुण्यो महीसागरसंगमः॥ १३.१२२ ॥
अग्निश्च रेतो मृडया च देहे रेतोधा विष्णुरमृतस्य नाभिः॥
एवं ब्रुवञ्छ्रद्धया सत्यवाक्यं ततोऽवगाहेत महीसमुद्रम्॥ १३.१२३ ॥
मुखं च यः सर्वनदीषु पुण्यः पाथोधिरंबा प्रवरा मही च॥
समस्ततीर्थाकृतिरेतयोश्च ददामि चार्घ्यं प्रणमामि नौमि॥ १३.१२४ ॥
ताम्रा रस्याः पयोवाहाः पितृप्रीतिप्रदाः शभाः॥
सस्यमाला महासिन्धुर्दातुर्दात्री पृथुस्तुता॥
इन्द्रद्युम्नस्य कन्या च क्षितिजन्मा रावती॥ १३.१२५ ॥
महीपर्णा महीशृंगा गंगा पश्चिमवाहिनी॥

नदी राजनदी चेति नामाष्टाशमालिकाम्॥ १३.१२६ ॥
स्नानकाले च सर्वत्र श्राद्धकाले पठेन्नरः॥
पृथुनोक्तानि नामानि यज्ञमूर्तिपदं व्रजेत्॥ १३.१२७ ॥
महीदोहे महानंदसंदोहे विश्वमोहिनि॥
जातासि सरितां राज्ञि पापं हर महीद्रवे॥
॥इत्यर्घ्यमंत्रः॥ १३.१२८ ॥
कंकणं रजतस्यापि योऽत्र निक्षिपते नरः॥
स जायते महीपृष्ठे धनधान्ययुते कुले॥ १३.१२९ ॥
महीं च सागरं चैव रौप्यकंकण पूजया॥
पूजयामि भवेन्मा मे द्रव्यानाशो दरिद्रता॥ १३.१३० ॥
**॥कंकणक्षेपणम्॥**
यत्फलं सर्वतीर्थेषु सर्वयज्ञैश्च यत्फलम्॥
तत्फलं स्नानदानेन महीसागरसंगमे॥ १३.१३१ ॥
विवादे च समुत्पन्ने अपराधी च यो मतः॥
जलहस्तः सदा वाच्यो महीसागरसंगमे॥ १३.१३२ ॥
संस्नाप्याघोरमंत्रेण स्थाप्य नाभिप्रमाणके॥
जले करं समुद्धृत्य दक्षिणं वाचयेद्द्रुतम्॥ १३.१३३ ॥
यदि धर्मोऽत्र सत्योऽस्ति सत्यश्चेत्संगमस्त्वसौ॥
सत्याश्चेत्क्रतुद्रष्टारः सत्यं स्यान्मे शुभाशुभम्॥ १३.१३४ ॥
एवमुक्त्वा करं क्षिप्य दक्षिणं सकलं ततः॥
निःसृतः पापकारी चेज्ज्वरेणापीड्यते क्षणात्॥ १३.१३५ ॥
सप्ताहाद्दृश्यते चापि तावन्निर्दोषवान्मतः॥
अत्र स्नात्वा च जप्त्वा च तपस्तप्त्वा तथैव च॥ १३.१३६ ॥
रुद्रलोकं सुबहवो गताः पुण्येन कर्मणा॥
सोमवारे विशेषेण स्नात्वा योत्र सुभक्तितः॥ १३.१३७ ॥
पंच तीर्थानि कुरुते मुच्यते पंचपातकैः॥
इत्याद्युक्तं बहुविधं तीर्थमाहात्म्यमुत्तमम्॥ १३.१३८ ॥
भर्तृयज्ञः शिवस्यो च तेषामाराधने क्रमम्॥
शिवागमोक्तमादिश्य पूजायोगं यथाविधि॥ १३.१३९ ॥
शिवभक्तिसमुद्रैकपूरितः प्राह तान्मुनिः॥
न शिवात्परमो देवः सत्यमेतच्छिवव्रताः॥ १३.१४० ॥
शिवं विहाय यो ह्यान्यदसत्किंचिदुपासते॥
करस्थं सोऽमृतं त्यक्त्वा मृगतृष्णां प्रधावति॥ १३.१४१ ॥

शिवशक्तिमयं ह्येतत्प्रत्यक्षं दृश्यते जगत्॥
लिंगांकं च भगांकं च नान्यदेवांकितं क्वचित्॥ १३.१४२ ॥
यश्च तं पितरं रुद्रं त्यक्त्वा मातरमं बिकाम्॥
वर्ततेऽसौ स्वपितरं त्यक्तोदपितृपिंडकः॥
यस्य रुद्रस्य माहात्म्यं शतरूद्रीयमुत्तमम्॥ १३.१४३ ॥
श्रृणुध्वं यदि पापानामिच्छध्वं क्षालनं परम्॥
ब्रह्मा हाटकलिंगं च समाराध्य कपर्दिनः॥ १३.१४४ ॥
जगत्प्रधानमिति च नाम जप्त्वा विराजते॥
कृष्णमूले कृष्णलिंगं नाम चार्जितमेव च॥ १३.१४५ ॥
सनकाद्यैश्च तल्लिंगं पूज्याजयुर्जगद्गतिम्॥
दर्भांकुरमयं सप्त मुनयो विश्वयोनिकम्॥ १३.१४६ ॥
नारदस्त्वंतरिक्षे च जदद्बीजमिदं गृणन्॥
वज्रमिंद्रो लिंगमेवं विश्वात्मानं च नाम च॥ १३.१४७ ॥
सूर्यस्ताम्रं तथा लिंगं नाम विश्वसृजं जपन्॥
चंद्रश्च मौक्तिकं लिंगं जपन्नाम जगत्पतिम्॥ १३.१४८ ॥
इंद्रनीलमयं वह्निर्नाम विश्वेश्वरं जपन्॥
पुष्परागं गुरुलिंगं विश्वयोनिं जपन्हरम्॥ १३.१४९ ॥
पद्मरागमयं शुक्रो विश्वकर्मेति नाम च॥
हेमलिंगं च धनदो जपन्नाम्ना तथेश्वरम्॥ १३.१५० ॥
रौप्यजं विश्वदेवाश्च नामापि जगतांपतिम्॥
वायवो रीतिजं लिंगं शंभुमित्येव नाम च॥ १३.१५१ ॥
काशजं वसवो लिंगं स्वयंभुमिति नाम च॥
त्रिलोहं मातरो लिंगं नाम भूतेशमेव च॥ १३.१५२ ॥
लौहं च रक्षसां नाम भूतभव्यभवोद्भवम्॥
गुह्यकाः सीसजं लिंगं नाम योगं जपंति च॥ १३.१५३ ॥
जैगीषव्यो ब्रह्मरंध्रं नाम योगेश्वरं जपन्॥
निमिर्नयनयोर्लिंगे जपञ्शर्वेति नाम च॥ १३.१५४ ॥
धन्वंतरिर्गोमयं च सर्वलोकेश्वरेश्वरम्॥
गंधर्वा दारुजं लिंगं सर्वश्रेष्ठेति नाम च॥ १३.१५५ ॥
वैडूर्यं राघवो लिंगं जगज्ज्येष्ठेति नाम च॥
बाणो मारकतं लिंगं वसिष्ठमिति नाम च॥ १३.१५६ ॥
वरुणः स्फाटिकं लिंगं नाम्ना च परमेश्वरम्॥
नागा विद्रुमलिंगं च नाम लोकत्रयंकरम्॥ १३.१५७ ॥

भारती तारलिंगं च नाम लोकत्रयाश्रितम्॥
शनिश्च संगमावर्ते जगन्नाथेति नाम च॥ १३.१५८ ॥
शनिदेशे मध्यरात्रौ महीसागरसंगमे॥
जातीजं रावणो लिंगं जपन्नाम सुदुर्जयम्॥ १३.१५९ ॥
सिद्धाश्च मानसं नाम काममृत्युजरातिगम्॥
उंछजं च बलिर्लिंगं ज्ञानात्मेत्यस्य नाम च॥ १३.१६० ॥
मरीचिपाः पुष्पजं च ज्ञानगम्येति नाम च॥
शकृताः शकृतं लिंगं ज्ञानज्ञेयेति नाम च॥ १३.१६१ ॥
फेनपाः फेनजं लिंगं नाम चापि सुदुर्विदम्॥
कपिलो वालुकालिंगं वरदं च जपन्हरम्॥ १३.१६२ ॥
सारस्वतो वाचिलंगं नाम वागीश्वरेति च॥
गणा मूर्तिमयं लिंगं नाम रुद्रेति चाब्रुवन्॥ १३.१६३ ॥
जांबूनदमयं देवाः शितिकण्ठेति नाम च॥
शंखलिंगं बुधो नाम कनिष्ठमिति संजपन्॥ १३.१६४ ॥
अश्विनौ मृन्मयं लिंगं नाम्ना चैव सुवेधसम्॥
विनायकः पिष्टलिंगं नाम्ना चापि कपर्दिनम्॥ १३.१६५ ॥
नावनीतं कुजो लिंगं नाम चापि करालकम्॥
ताक्ष्र्य ओदनलिंगं च हर्यक्षेति हि नाम च॥ १३.१६६ ॥
गौडं कामस्तथा लिंगं रतिदं चेति नाम च॥
शची लवणलिंगं तु बभ्रुकेशेति नाम च॥ १३.१६७ ॥
विश्वकर्मा च प्रासादलिंगं याम्येति नाम च॥
विभीषणश्च पांसूत्थं सुहृत्तमेति नाम च॥
वंशांकुरोत्थं सगरो नाम संगतमेव च॥ १३.१६८ ॥
राहुश्च रामठं लिंगं नाम गम्येति कीर्तयन्॥
लेप्यलिंगं तथा लक्ष्मीर्हरिनेत्रेति नाम च॥ १३.१६९ ॥
योगिनः सर्वभूतस्थं स्थाणुरित्येव नाम च॥
नानाविधं मनुष्याश्च पुरुषंनाम नाम च॥ १३.१७० ॥
तेजोमयं च ऋक्षाणि भगं नाम च भास्वरम्॥
किंनरा धातुलिंगं च सुदीप्तमिति नाम च॥ १३.१७१ ॥
देवदेवेति नामास्ति लिंगं च ब्रह्मराक्षसाः॥
दंतजं वारणा लिंगं नाम रंहसमेव च॥ १३.१७२ ॥
सप्तलोकमयं साध्या बहूरूपेति नाम च॥
दूर्वांकुरमयं लिंगमृतवः सर्वनाम च॥ १३.१७३ ॥

कौंकुममप्सरसो लिंगं नाम शंभोः प्रियेति च॥
सिंदूरजं चोर्वशी च नाम च प्रियवासनम्॥ १३.१७४ ॥
ब्रह्मचारि गुरुर्लिंगं नाम चोष्णीषिणं विदुः॥
अलक्तकं च योगिन्यो नाम चास्य सुबभ्रुकम्॥ १३.१७५ ॥
श्रीखंडं सिद्धयोगिन्यः सहस्राक्षेति नाम च॥
डाकिन्यो मांस लिंगं च नाम चास्य च मीढुषम्॥ १३.१७६ ॥
अप्यन्नजं च मनवो गिरिशेति च नाम च॥
अगस्त्यो व्रीहिजं वापि सुशांतमिति नाम च॥ १३.१७७ ॥
यवजं देवलो लिंगं पतिमित्येव नाम च॥
वल्मीकजं च वाल्मीकिश्चिरवासीति नाम च॥ १३.१७८ ॥
प्रतर्दनो बाणलिंगं हिरण्यभुजनाम च॥
राजिकं च तथा दैत्या नाम उग्रेति कीर्तितम्॥ १३.१७९ ॥
निष्पावजं दानवाश्च लिंगनाम च दिक्पतिम्॥
मेघा नीरमयं लिंगं पर्जन्यपतिनाम च॥ १३.१८० ॥
राजमाषमयं यक्षा नाम भूतपतिं स्मृतम्॥
तिलान्नजं च पितरो नाम वृषपतिस्तथा॥ १३.१८१ ॥
गौतमो गोरजमयं नाम गोपतिरेव च॥
वानप्रस्थाः फलमयं नाम वृक्षावृतेति च॥ १३.१८२ ॥
स्कंदः पाषाणलिंगं च नाम सेनान्य एव च॥
नागश्चाश्वतरो धान्यं मध्यमेत्यस्य नाम च॥ १३.१८३ ॥
पुरोडाशमयं यज्वा स्रुवहस्तेति नाम च॥
यमः कालायसमयं नाम प्राह च धन्विनम्॥ १३.१८४ ॥
यवांकुरं जामदग्न्यो भर्गदैत्येति नाम च॥
पुरूरवाश्चाश्चान्नमयं बहुरूपेति नाम च॥ १३.१८५ ॥
मांधाता शर्करालिंगं नाम बाहुयुगेति च॥
गावः पयोमयं लिंगं नाम नेत्रसहस्रकम्॥ १३.१८६ ॥
साध्या भर्तृमयं लिंगं नाम विश्वपतिः स्मृतम्॥
नारायणो नरो मौंजं सहस्रशिरनाम च॥ १३.१८७ ॥
ताक्ष्र्यं पृथुस्तथा लिंगं सहस्रचरणाभिधम्॥
पक्षिणो व्योमलिंगं च नाम सर्वात्मकेति च॥ १३.१८८ ॥
पृथिवी मेरुलिंगं च द्वितनुश्चास्य नाम च॥
भस्मलिंगं पशुपतिर्नाम चास्य महेश्वरः॥ १३.१८९ ॥
ऋषयो ज्ञानलिंगं च चिरस्थानेति नाम च॥

ब्राह्मणा ब्रह्मलिंगं च नाम ज्येष्ठेति तं विदुः॥ १३.१९० ॥
गोरोचनमयं शेषो नाम पशुपतिः स्मृतम्॥
वासुकिर्विषलिंगं च नाम वै शंकरेति च॥ १३.१९१ ॥
तक्षकः कालकूटाख्यं बहुरूपेति नाम च॥
हालाहलं च कर्कोट एकाक्ष इति नाम च॥ १३.१९२ ॥
श्रृंगी विषमयं पद्मो नाम धूर्जटिरेव च॥
पुत्रः पितृमयं लिंगं विश्वरूपेति नाम च॥ १३.१९३ ॥
पारदं च शिवा देवी नाम त्र्यम्बक एव च॥
मत्स्याद्याः शास्त्रलिंगं च नाम चापि वृषाकपिः॥ १३.१९४ ॥
एवं किं बहुनोक्तेन यद्यत्सत्त्वं विभूतिमत्॥
जगत्यामस्ति तज्जातं शिवाराधनयोगतः॥ १३.१९५ ॥
भस्मनो यदि वृक्षत्वं ज्ञायते नीरसेवनात्॥
शिवभक्तिविहीनस्य ततोऽस्य फलमुच्यते॥ १३.१९६ ॥
धर्मार्थकाममोक्षाणां यदि प्राप्तौ भवेन्मतिः॥
ततो हरः समाराध्यस्त्रिजगत्याः प्रदो मतः॥ १३.१९७ ॥
य इदं शतरुद्रीयं प्रातःप्रातः पठिष्यति॥
तस्य प्रीतः शिवो देवः प्रदास्यत्यखिलान्वरान्॥ १३.१९८ ॥
नातः परं पुण्यतमं किंचिदस्ति महाफलम्॥
सर्ववेदरहस्यं च सूर्येणोक्तमिदं मम॥ १३.१९९ ॥
वाचा च यत्कृतं पापं मनसा वाप्युपार्जितम्॥
पापं तन्नाशमायाति कीर्तिते शतरुद्रिये॥ १३.२०० ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्॥
भयान्मुच्येत भीतश्च जपेद्यः शतरुद्रियम्॥ १३.२०१ ॥
नाम्नां शतेन यः कुम्भैः पुष्पैस्तावद्भिरीश्वरम्॥
प्रणामानां शतेनापि मुच्यते सर्वपातकैः॥ १३.२०२ ॥
लिंगानां शतमेतच्च शतमाराधकास्तथा॥
नामानि च शतं सर्वदोषसंनाशकं स्मृतम्॥ १३.२०३ ॥
विशेषादेषु लिंगेषु यः पठिष्यति पंचसु॥
पंचभिर्विषयोद्भूतैः स दोषैः परिमुच्यते॥ १३.२०४ ॥
**॥नारद उवाच॥**
निशम्यैवं प्रार्थ्यतेऽपि गुप्तक्षेत्रे मुदान्विताः॥
पंचलिंगानयर्चयंतः शिवध्यानपराभवन्॥ १३.२०५ ॥
ततो बहुतिथे काले प्रत्यक्षीभूय शंकरः॥

प्राहतान्मुदितो देवस्तेषां भक्तिविशेषतः॥ १३.२०६ ॥

**॥शिव उवाच॥**

बकोलूकगृध्रकूर्मा इन्द्रद्युम्न च पार्थिव॥
सारूप्यां मुक्तिमापन्ना मल्लोके निवसिष्यथ॥ १३.२०७ ॥
लोमशश्चापि मार्कंडो जीवन्मुक्तौ भविष्यतः॥
इत्युक्ते देवदेवेन लिंगं स्थापितवान्नृपः॥ १३.२०८ ॥
इन्द्रद्युम्नेश्वरं नाम महाकालाख्यमित्युत॥
ज्ञात्वा तीर्थगुणान्राजा कीर्तिमिच्छंश्चिरंतनीम्॥ १३.२०९ ॥
त्रिरम्यमतुलं लिंगं संस्थाप्येदमुवाच ह॥
यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी॥ १३.२१० ॥
इन्द्रद्युम्नेश्वरं लिंगं नंदताच्छाश्वतीः समाः॥
ततस्तथेति भगवाच्छिवः प्रोच्याब्रवीत्पुनः॥ १३.२११ ॥
अत्र यो नियतं लिंगमैंद्रद्युम्नं प्रपूजयेत्॥
स गणो जायते नूनं मम लोके निवत्स्यति॥ १३.२१२ ॥
इत्युक्त्वा सह तैश्चैव पंचभिः शशिशेखरः॥
रुद्रलोकम गाद्देवस्तेऽपि जाता गणाः पुनः॥ १३.२१३ ॥
एवं प्रभावो राजाभूदिंद्रद्युम्नो महीपतिः॥
यजता येन वीरेण निर्मितेयं महीनदी॥ १३.२१४ ॥
एवंविधःस पुण्योऽयं महीसागरसंगमः॥
अभूत्ततोऽपि संक्षेपात्तव पार्थ प्रकीर्तितः॥ १३.२१५ ॥
स्नात्वात्र संगमे यश्च इन्द्रद्युम्नेश्वरं नरः॥
पूजयेत्तस्य वासः स्याद्यत्रेशः पार्वतीपतिः॥ १३.२१६ ॥
सर्वबन्धहरं लिंगं गाणपत्यप्रदं त्विदम्॥
यतो बन्धान्विहायैव स्थापितं तेन फालल्गुन॥ १३.२१७ ॥
इतीदमुक्तं तव पुण्यकारि माहात्म्यमस्योत्तमसंगमस्य॥
माहात्म्यमत्यदबुतपुण्यमिन्द्रद्युम्नेश्वरस्यापि च पुण्यकारि॥ १३.२१८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीसागरसंगममाहात्म्यशतरुद्रियलिंगमाहात्म्येन्द्रद्युम्नेश्वरलिंगमाहात्म्य वर्णनंनाम त्रयोदशोऽध्यायः॥ १३ ॥ छ ॥

**॥अर्जुन उवाच॥**
कुमारनाथमाहात्म्यं यत्त्वयोक्तं कथांतरे॥
तदहं श्रोतुमिच्छामि विस्तरेण महामुने॥ १४.१ ॥

**॥नारद उवाच॥**
तारकं विनिहत्यैव वज्रांगतनयं प्रभुः॥
गुहः संस्थापयामास लिंगमेतच्च फाल्गुन॥ १४.२ ॥

दर्शनाच्छ्रवणाद्ध्यानात्पूजया श्रुतिवंदनैः॥
सर्वपापापहः पार्थ कुमारेशो न संशयः॥ १४.३ ॥

**॥अर्जुन उवाच॥**
अत्याश्चर्यमयी रम्या कथेयं पापनाशिनी॥
विस्तरेण च मे ब्रूहि याथातथ्येन नारद॥ १४.४ ॥

वज्रांगः कोप्यसौ दैत्यः किंप्रभावश्च तारकः॥
कथं स निहतश्चैव जातश्चैव कथं गुहः॥ १४.५ ॥

कथं संस्थापितं लिंगं कुमारेश्वरसंज्ञितम्॥
किं फलं चास्य लिंगस्य ब्रूहि तद्विस्तरान्मम॥ १४.६ ॥

**॥नारद उवाच॥**
प्रणिपत्य कुमाराय सेनान्ये चेश्वराय च॥
श्रृणु चैकमनाः पार्थ कुमारचरितं महत्॥ १४.७ ॥

मानसो ब्रह्मणः पुत्रो दक्षो नाम प्रजापतिः॥
षष्टिं सोऽजनयत्कन्या वीरिण्यां नाम फाल्गुन॥ १४.८ ॥

ददो स दश धर्माय कश्यपाय त्रयोदश॥
सप्तविंशतिं सोमाय चतस्रोरिष्टनेमिने॥ १४.९ ॥

भूतांगिरः कृशाश्वेभ्यो द्वेद्वे चैव ददौ प्रभुः॥
नामधेयान्यमूषां च सपत्नीनां च मे श्रृणु॥ १४.१० ॥

यासां प्रसूतिप्रभवा लोका आपूरितास्त्रयः॥
भानुर्लम्बा ककुद्भूमिर्विश्वा साध्या मरुत्वती॥ १४.११ ॥

वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुताञ्छृणु॥
भानोस्तु देवऋषभ सुतोऽभवत्॥ १४.१२ ॥

विद्योत आसील्लंबायां ततश्च स्तनयित्नवः॥
ककुदः शकटः पुत्रः कीकटस्तनयो यतः॥ १४.१३ ॥

भुवो दुर्गस्तथा स्वर्गो नंदश्चैव ततोऽभवत्॥
विश्वेदेवाश्च विश्वाया अप्रजांस्तान्प्रचक्षते॥ १४.१४ ॥

साध्या द्वादश साध्याया अर्थसिद्धिस्तु तत्सुतः॥
मरुत्वान्सुजयंतश्च मरुत्वत्या बभूवतुः॥ १४.१५ ॥

नरनारायणौ प्राहुर्यौ तौ ज्ञानविदो जनाः॥
वसोश्च वसवश्चाष्टौ मुहूर्तायां मुहूर्तकाः॥ १४.१६ ॥

ये वै फलं प्रयच्छंति भूतानां स्वं स्वकालजम्॥
संकल्पायाश्च संकल्पः कामः संकल्पजः सुतः॥ १४.१७ ॥

सुरूपासूत तनयान्रुद्रानेकादशैव तु॥
कपाली पिंगलो भीमो विरुपाक्षो विलोहितः॥ १४.१८ ॥

अजकः शासनः शास्ता शंभुश्चांत्यो भवस्तथा॥
रुद्रस्य पार्षदाश्चान्ये विरूपायाः सुताः स्मृताः॥ १४.१९ ॥

प्रजापतेरंगिरसः स्वधा पत्नी पितॄनथ॥
जज्ञे सनी(ची?)तथा पुत्रमथर्वागिरसं प्रभुम्॥ १४.२० ॥

कृशाश्वस्य च द्वे भार्ये अर्चिश्च दिषणा तथा॥
अस्त्रगामो ययोः पुत्रः ससंहारः प्रकीर्तितः॥ १४.२१ ॥

पतंगी यामिनी ताम्रा तिमिश्चारिष्टनेमिनः॥
पतंग्यसूत पतगान्यामिनी शलभानथ॥ १४.२२ ॥

ताम्रायाः श्येनगृध्राद्यास्तिमेर्यादोगणास्तथा॥
अथ कश्यपपत्नीनां यत्प्रसूदमिदं जगत्॥ १४.२३ ॥

श्रृणु नामानि लोकानां मातृणां शंकराणि च॥
अदितिर्दितिर्दनुः सिंही दनायुः सुरभिस्तथा॥ १४.२४ ॥

अरिष्टा विनता ग्रावा दया क्रोधवशा इरा॥
कद्रुर्मुनिश्च ते चोभे मातरस्ताः प्रकीर्तिताः॥ १४.२५ ॥

आदित्याश्चादितेः पुत्रा दितेर्दैत्याः प्रकीर्तिताः॥
दनोश्च दानवाः प्रोक्ता राहुः सिंहीसुतो ग्रहः॥ १४.२६ ॥

दनायुषस्तथा जातो दनायुश्च गणो बली॥
गावश्च सुरभेर्जातारिष्टापुत्रा युगंधराः॥ १४.२७ ॥

विनतासूत अरुणं गरुडं च महाबलम्॥
ग्रावायाः श्वापदाः पुत्रा गणः क्रोधवशस्तथा॥ १४.२८ ॥

जातः क्रोधवशायाश्च इराया भूरुहाः स्मृताः॥
कद्रूसुताः स्मृता नागा मुनेरप्सरसां गणाः॥ १४.२९ ॥

तत्र द्वौ तनयौ यौ च दितेस्तौ विष्णुना हतौ॥
हिरण्यकशिपुर्वीरो हिरण्याक्षस्तथाऽपरः॥ १४.३० ॥

ततो निहतपुत्रा सा दितिराराध्य कश्यपम्॥
अयाचत वरं देवी पुत्रमन्यं महाबलम्॥ १४.३१ ॥

समरे शक्रहंतारं स तस्या अददात्प्रभुः॥
नियमे चापि वर्तस्व वर्षाणां च सहस्रकम्॥ १४.३२ ॥

इत्युक्ता सा तथा चक्रे पुष्करस्था समाहिता॥
वर्तंत्या नियमे तस्याः सहस्राक्षः समाहितः॥ १४.३३ ॥

उपासामाचरद्भक्त्या सा चैनमन्वमन्यत॥
दशवत्सरशेषस्य सहस्रस्य तदा दितिः॥ १४.३४ ॥

उवाच शक्रं सुप्रीता भक्त्या शक्रस्य तोषिता॥
**॥दितिरुवाच॥**
अत्रोत्तीर्णव्रतप्रायां विद्धि देवसत्तम॥ १४.३५ ॥

भविष्यति तव भ्राता तेन सार्धमिमां श्रियम्॥
भोक्ष्यसे त्वं यथानयायं त्रैलोक्यं हतकंटकम्॥ १४.३६ ॥

इत्युक्त्वा निद्रयाविष्टा चरणाक्रांतमूर्धजा॥
दिवा सुप्ता दितिर्देवी भाव्यर्थबलनोदिता॥ १४.३७ ॥

तत्तु रंध्रमवेक्ष्यैव योगमूर्तिस्तदाविशत्॥
जठरस्थं दितेर्गर्भं चक्रे वज्रेण सप्तधा॥ १४.३८ ॥

एकैकं च पुनः खण्डं चकार मघवा ततः॥
सप्तधा सप्तधा कोपादुद्बुध्य च ततो दितिः॥ १४.३९ ॥

न हंतव्यो न हंतव्य इति सा शक्रमब्रवीत्॥
वज्रेण कृत्त्यमानानां बुद्ध्वा सा रोदनेन च॥ १४.४० ॥

ततः शक्रश्च मा रोदीरिति तांस्तान्यथाऽवदत्॥
निर्गत्य जठरात्तस्मात्ततः प्रांजलिरग्रतः॥ १४.४१ ॥

उवाच वाक्यं चात्रस्तो मातरं रिषपूरिताम्॥
दिवास्वापं कृथा मातः पादाक्रांतशिरोरुहा॥ १४.४२ ॥

सुप्ताथ सुचिरं वाते धिन्नो गर्भो मया तव॥
कृता एकोनपंचाशद्भागा वज्रेण ते सुताः॥ १४.४३ ॥

सत्यं भवतु ते वाक्यं सार्धं भोक्ष्यामि तैः श्रियम्॥
दास्यामि तेषां स्थानानि दिवि यावदहं दिते॥ १४.४४ ॥

मा रोदीरिति मे प्रोक्ताः ख्याताश्च मरुतस्त्विति॥
इत्युक्ता सा च सव्रीडा दितिर्जाता निरुत्तरा॥ १४.४५ ॥

सार्धं तैर्गतवानिंद्रो दिगंते वायवः स्मृताः॥
ततः पुनश्च भर्तारं दितिः प्रोवाच दुःखिता॥ १४.४६ ॥

पुत्रं मे भगवन्देहि शक्रहंतारमूर्जितम्॥
यो नास्त्रशस्त्रैर्वध्यत्वं गच्छेत्त्रिदिववासिनाम्॥ १४.४७ ॥

न ददास्युत्तरं विद्धि मृतामेव प्रजापते॥
इत्युक्तः स तदोवाच तां पत्नीमतिदुःखिताम्॥ १४.४८ ॥

दशवर्षसहस्राणि तपोनिष्ठा तु तप्स्यसे॥
वज्रसारमयैरंगैरच्छेद्यैरायसैर्दृढैः॥ १४.४९ ॥

वज्रांगोनाम पुत्रस्ते भविता धर्मवत्सलः॥
सा तु लब्धवरा देवी जगाम तपसे वनम्॥ १४.५० ॥

दशवर्षसहस्राणि तपो घोरं समाचरत्॥
तपसोंऽते भगवती जनयामास दुर्जयम्॥ १४.५१ ॥

पुत्रमप्रतिकर्माणमजेयं वज्रदुश्छिदम्॥
स जातामात्र एवाभूत्सर्वशा स्त्रार्थपारगः॥ १४.५२ ॥
उवाच मातरं भक्त्या मातः किं करवाण्यहम्॥
तमुवाच ततो हृष्टा दितिर्दैत्याधिपं सुतम्॥ १४.५३ ॥

बहवो मे हताः पुत्राः सहस्राक्षेण पुत्रक॥
तेषआमपचितिं कर्तुमिच्छे शक्रवधादहम्॥ १४.५४ ॥

बाढमित्येव सं प्रोच्य जगाम त्रिदिवं बली॥
ससैन्यं समरे शक्रं स च बाहवायुधोऽजयत्॥ १४.५५ ॥

पादेनाकृष्य देवेंद्रं सिंहः क्षुद्रमृगं यथा॥
मातुरंतिकमागच्छद्याचमानं भयातुरम्॥ १४.५६ ॥

एतस्मिन्नंतरे ब्रह्मा कश्यपश्च महातपाः॥
आगता तत्र संत्रस्तावथो ब्रह्मा जगाद तम्॥ १४.५७ ॥

मुंचामुं पुत्र याचंतं किमनेन प्रयोजनम्॥
अवमानो वधः प्रोक्तो वीरसंभावितस्य च॥ १४.५८ ॥

अस्मद्वाक्येन यो मुक्तो जीवन्नपि मृतो हि सः॥
शत्रुं ये घ्नंति समरे न ते वीराः प्रकीर्तिताः॥ १४.५९ ॥

कृत्वा मानपरिग्लनिं ये मुंचंति वरा हि ते॥
यतामान्यतमं मत्वा त्वया मातुर्वचः कृतम्॥ १४.६० ॥

तथा पितुर्वचः कार्यं मुंचामुं पुत्र वासवम्॥
एतच्छ्रुत्वा तु वज्रांगः प्रणतो वाक्यमब्रवीत्॥ १४.६१ ॥

न मे कृत्यमनेनास्ति मातुराज्ञा कृता मया॥
त्वं सुरासुरनाथो वै मम च प्रपितामहः॥ १४.६२ ॥

करिष्ये त्वद्वचो देव एष मुक्तः शतक्रतुः॥
न च कांक्षे शक्रभुक्तामिमां त्रैलोक्यराजताम्॥ १४.६३ ॥

परभुक्ता यथा नारी परभुक्तामिवस्रजम्॥
यच्च त्रिभुवनेष्वस्ति सारं तन्मम कथ्यताम्॥ १४.६४ ॥

**॥ब्रह्मोवाच॥**
तपसो न परं किंचित्तपो हि महतां धनम्॥
तपसा प्राप्यते सर्वं तपोयोग्योऽसि पुत्रक॥ १४.६५ ॥

**॥वज्रांग उवाच॥**
तपसे मे रतिर्देव न विघ्नं तत्र मे भवेत्॥
त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम सः॥ १४.६६ ॥

**॥ब्रह्मोवाच॥**
क्रूरभावं परित्यज्य यदीच्छसि तपः सुत॥
अनया चित्तबुद्ध्या तत्त्वयाप्तं जन्मनः फलम्॥ १४.६७ ॥

इत्युक्त्वा पद्मजः कन्यां ससर्ज्जयतलोचनाम्॥
तामस्मै प्रददौ देवः पत्न्यर्थं पद्मसंभवः॥ १४.६८ ॥

वरांगीति च नामास्याः कृतवांश्च पितामहः॥
जगाम च ततो ब्रह्मा कश्यपेन समं दिवम्॥ १४.६९ ॥

वज्रांगोऽपि तया सार्धं जगाम तपसे वनम्॥
ऊर्द्ध्वबाहुः स दैत्येंद्रोऽतिष्ठदब्दसहस्रकम्॥ १४.७० ॥

कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः॥
तावानधोमुखः कालं तावत्पंचाग्निसाधकः॥ १४.७१ ॥

निराहारो घोरतपास्तपोराशिरजायत॥
ततः सोंऽतर्जले चक्रे कालं वर्षसहस्रकम्॥ १४.७२ ॥

जलांतरप्रविष्टस्य तस्य पत्नी महाव्रता॥
तस्यैव तीरे सरसस्तत्परा मौनमाश्रिता॥ १४.७३ ॥

निराहारं पतिं मत्वा तपस्तेपे पतिव्रता॥
तस्यास्तपसि वर्तंत्या इंद्रश्चक्रे विभीषिकाम्॥ १४.७४ ॥

भूत्वा तु मर्कटाकारस्तस्याअभ्याशमागतः॥
अपविध्य दृशं तस्या मूत्रविष्ठे चकार सः॥ १४.७५ ॥

तथा विलोलवसनां विलोलवदनां तथा॥
विलोलकेशां तां चक्रे विधित्सुस्तपसः क्षतिम्॥ १४.७६ ॥

ततश्च मेषरूपेण क्लेशं तस्याश्चकार सः॥
ततो भुजंगरूपेण बद्धा चरणयोर्द्वयोः॥ १४.७७ ॥

अपाकर्षत दूरं स तस्माद्देवभृतस्तथा॥
तपोबालाच्च सा तस्य न वध्यत्वं जगाम ह॥ १४.७८ ॥

क्षमया च महाभागा क्रोधमण्वपि नाकरोत्॥
ततो गोमायुरूपेण तमदूषयदाश्रमम्॥ १४.७९ ॥

अग्निरूपेण तस्याश्च स ददाह महाश्रमम्॥
चकर्ष वायुरूपेण महोग्रेण च तां शुभाम्॥
एवं सिहवृकाद्याभिर्भीषिकाभिः पुनःपुनः॥ १४.८० ॥

विरराम यदा नैव वज्रांगमहिषी तदा॥
शैलस्य दुष्टतां मत्वा शापं दातुं व्यवस्यत॥ १४.८१ ॥

तां शापाभिमुखीं दृष्ट्वा शैलः पुरुषाविग्रहः॥
उवाच तां वरारोहां त्वरयाथ सुलोचनाम्॥ १४.८२ ॥

**॥शैल उवाच॥**

नाहं महाव्रते दुष्टः सेव्योऽहं सर्वदेहिनाम्॥
अतिखेदं करोत्येष ततः क्रुद्धस्तु वृत्रहा॥ १४.८३ ॥

एतस्मिन्नंतरे जातः कालो वर्षसहस्रिकः॥
तस्मिन्याते स भगवान्काले कमलसंभवः॥ १४.८४ ॥

तुष्टः प्रोवाच वज्रांगं तमागम्य जलाशये॥ १४.८५ ॥

**॥ब्रह्मोवाच॥**

ददामि सर्वकामांस्ते उत्तिष्ठ दितिनन्दन॥
एवमुक्तस्तदोत्थाय दैत्येंद्रस्तपसो निधिः॥
उवाच प्रांजलिर्वाक्यं सर्वलोकपितामहम्॥ १४.८६ ॥

**॥वज्रांग उवाच॥**

आसुरो मेऽस्तु मा भावः शक्रराज्ये च मा रतिः॥
तपोधर्मरतिश्चास्तु वृणोम्येतत्पितामह॥ १४.८७ ॥

एवमस्त्विवति तं ब्रह्मा प्राह विस्मितमानसः॥
उपेक्षते च शक्रं स भाव्यर्थं कोऽतिवर्तते॥ १४.८८ ॥

ऋषयो मनुजा देवाः शिवब्रह्ममुखा अपि॥
भाव्यर्थं नाति वर्तंते वेलामिव महोदधिः॥ १४.८९ ॥

इति चिंत्य विरिंचोऽपि तत्रैवांतरधीयत॥
वज्रांगोऽपि समाप्ते तु तपसि स्थिरसंयमः॥ १४.९० ॥

आहारमिच्छन्स्वां भार्यां न ददर्शाश्रमे स्वके॥
भार्याहीनोऽफलश्चेति स संचिंत्य इतस्ततः॥ १४.९१ ॥

विलोकयन्स्वकां भार्यां विधित्सुः कर्म नैत्यकम्॥
विलोकयन्ददर्शाथ इहामुत्र सहयिनीम्॥ १४.९२ ॥

रुदन्तीं स्वां प्रियां दीनां तरुप्रच्छादिताननाम्॥
तां विलोक्य ततो दैत्यः प्रोवाच परिसांत्वयन्॥ १४.९३ ॥

**॥वज्रांग उवाच॥**

केन तेऽपकृतं भीरु वर्तंत्यास्तपसि स्वके॥
कथं रोदिषि वा बाले मयि जीवति भर्तरि॥
कं वा कामं प्रयच्छामि शीघ्रं प्रब्रूहि भामिनि॥ १४.९४ ॥

गृहेश्वरीं सद्गुणभूषितां शुभां पंग्वंधयोगेन पतिं समेताम्॥
न लालयेत्पूरयेन्नैव कामं स किं पुमान्न पुमान्मे मतोस्ति॥ १४.९५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये वज्रांगेतिहासवर्णनं नाम चतुर्दशोऽध्यायः॥ १४ ॥ छ ॥

**॥वरांग्युवाच॥**

नाशितास्म्यपविद्धास्मि त्रासिता पीडितास्मि च॥
रौद्रोण देवनाथेन नष्टनाथेन भूरिशः॥ १५.१ ॥

दुःखपारमपश्यंती प्राणांस्त्यक्तुं व्यवस्थिता॥
पुत्रं मे घोरदुःखस्य तारकं देहि चेत्कृपा॥ १५.२ ॥

एवमुक्तस्तु दैत्येंद्रो दुःखितोऽचिंतयद्धृदि॥
आसुरेष्वपि भावेषु स्पृहा यद्यपि नास्ति मे॥ १५.३ ॥

तथापि मन्ये शास्त्रैभ्यस्त्वनुकंप्या प्रियेति यत्॥
सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान्॥ १५.४ ॥

व्यसनार्णवमत्येति जलयानैरिवार्णवम्॥
यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रयैः॥ १५.५ ॥

गेहिनो हेलया जिग्युर्दस्यून्दूर्ग पतिर्यथा॥
न केऽपि प्रभवस्तां चाप्यनुकर्तुं गृहेश्वरीम्॥ १५.६ ॥

अथायुषा वा कात्स्न्र्येन धर्मे दित्सुर्यथैव च॥
यस्यां भवति चात्मैव ततो जाया निगद्यते॥ १५.७ ॥

भर्तव्या एव यस्माच्च तस्माद्धार्येति सा स्मृता॥
सा एव गृहमुक्तं च गृहीणी सा ततः स्मृता॥ १५.८ ॥

संसारकल्मषात्त्रात्री कलत्रमिति सा ततः॥
एवंविधां प्रियां को वै नानुकंपितुमर्हति॥ १५.९ ॥

त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत्॥
भार्या कर्म च विद्या च संसाध्यं यत्नतस्त्रयम्॥ १५.१० ॥

तदेनां पीडितां चेद्यः पतिर्भूत्वा न पालये॥
ततो यास्ये शास्त्रवादान्नरकांतं न संशयः॥ १५.११ ॥

अह मप्येनमिंद्रं वै शक्तो जेतुं यथाऽनृणाम्॥
पुनः कामं करिष्येऽस्या दास्ये पुत्रऊं महाबलम्॥ १५.१२ ॥

इति संचिंत्य वज्रांगः कोपव्याकुललोचनः॥
प्रतिकर्तुं महेंद्राय तपो भूयो व्यवस्यत॥ १५.१३ ॥

ज्ञात्वा तु तस्य संकल्पं ब्रह्मा क्रूरतरं पुनः॥
आजगाम त्वरायुक्तो यत्राऽसौ दितिनंदनः॥ १५.१४ ॥

उवाचैनं स भगवान्प्रभुर्मधुरया गिरा॥ १५.१५ ॥

**॥ब्रह्मोवाच॥**
किमर्थं भूय एव त्वं नियमं क्रूरमिच्छसि॥
आहाराभिमुखो दैत्य तन्मे ब्रूहि महाव्रतः॥ १५.१६ ॥

यावदब्दसहस्रेण निराहारेण वै फलम्॥
त्यजता प्राप्तमाहारं लब्धं ते क्षणमात्रतः॥ १५.१७ ॥

त्यागो ह्यप्राप्तकामानां न तथा च गुरुः स्मृतः॥
यथा प्राप्तं परित्यज्य कामं कमललोचन॥
श्रुत्वैतद्ब्रह्मणो वाक्यं दैत्यः प्रांजलिरब्रवीत्॥ १५.१८ ॥

**॥दैत्य उवाच॥**
पत्न्यर्थेऽहं करिष्यामि तपो घोरं पितामह॥
पुत्रार्थमुद्यतश्चाहं यः स्याद्गीर्वाणदर्पहा॥ १५.१९ ॥

एतच्छ्रुत्वा वचो देवः पद्मगर्भोद्भवस्तदा॥
उवाच दैत्यराजानं प्रसन्नश्चतुराननः॥ १५.२० ॥

**॥ब्रह्मोवाच॥**
अलं ते तपसा वत्स मा क्लेशे विस्तरे विश॥
पुत्रस्ते तारकोनाम भविष्यति महाबलः॥ १५.२१ ॥

देवसीमंतिनीकाम्यधम्मिल्लकविमोक्षणः॥
इत्युक्तो दैत्यराजस्तु प्रणम्य प्रपितामहम्॥ १५.२२ ॥

विसृज्य गत्वा महिषीं नंदया मास तां मुदा॥
तौ दंपती कृतार्थौ च जग्मतुश्चाश्रमं तदा॥ १५.२३ ॥

आहितं च ततो गर्भं वरांगी वरवर्णिनी॥
पूर्णं वर्षसहस्रं तु दधारोदर एव हि॥ १५.२४ ॥

ततो वर्षसहस्रांते वरांगी समसूयत॥
जायमाने तु दैत्येंद्रे तस्मिँल्लोकभयंकरे॥ १५.२५ ॥

चचाल सकला पृथ्वी प्रोद्धूताश्च महार्णवा॥
चेलुर्धराधराश्चापि ववुर्वाता विभीषणाः॥ १५.२६ ॥

जेपुर्जप्यं मुनिवरा व्याधविद्धा मृगा इव॥
जहुः कांतिं च सूर्याद्या नीहाराश्छांदयन्दिशः॥ १५.२७ ॥

जाते महासुरे तस्मिन्सर्व एव महासुराः॥
आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः॥ १५.२८ ॥

जगुर्हर्षसमाविष्टा ननृतुश्चासुरांगनाः॥
ततो महोत्सवे जाते दानवानां पृथासुत॥ १५.२९ ॥

विषण्णमनसो देवाः समहेंद्रास्तदाभवन्॥
जातामात्रस्तु दैत्येंद्रस्तारकश्चंडविक्रमः॥ १५.३० ॥

अभिषिक्तोऽसुरो दैत्यैः कुरंगमहिषादिभिः॥
सर्वासुरमहाराज्ये युतः सर्वैर्महासुरैः॥ १५.३१ ॥

स तु प्राप्तमहाराज्यस्तारकः पांडुसत्तम॥
उवाच दानवश्रेष्ठान्युक्तियुक्तमिदं वचः॥ १५.३२ ॥

श्रृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः॥
श्रुत्वा वः स्थेयसी बुद्धिः क्रियतां वचने मम॥ १५.३३ ॥

अस्माकं जातिधर्मेण विरूढं वैरमक्षयम्॥
करिष्याम्यहं तद्वैरं तेषां च विजयाय च॥ १५.३४ ॥

किं तु तत्तपसा साध्यं मन्येहं सुरसंगमम्॥
तस्मादादौ करिष्यामि तपो घोरं दनोः सुताः॥ १५.३५ ॥

ततः सुरान्विजेष्यामो भोक्ष्यामोऽथ जगत्त्रयम्॥
युक्तोपायोऽहि पुरुषः स्थिरश्रीरेव जायते॥ १५.३६ ॥

अयुक्तश्चपलः प्राप्तामपि रक्षितुमक्षमः॥
तच्छ्रुत्वा दानवाः सर्वे वाक्यं तस्यासुरस्य तु॥ १५.३७ ॥

साधुसाध्वित्यथोचुस्ते वचनं तस्य विस्मिताः॥
सोऽगच्छत्पारियात्रस्य गिरेः कंदरमुत्तमम्॥ १५.३८ ॥

सर्वर्तुकुसुमाकीर्णनानौषधिविदिपितम्॥
नानाधातुरसस्राविचित्रनानागृहाश्रयम्॥ १५.३९ ॥

अनेकाकारबहुलं पृथक्पक्षिकुलाकुलम्॥
नानाप्रस्रवणोपेतं नानाविधजलाशयम्॥ १५.४० ॥

प्राप्य तत्कंदरं दैत्यश्चकार विपुलं तपः॥
वहन्पाशुपतीं दीक्षां पंच मंत्रान्जजाप सः॥ १५.४१ ॥

निराहारः पंचतपा वर्षायुतमभूत्किल॥
ततः स्वदेहादुत्कृत्त्य कर्षंकर्षं दिनेदिने॥ १५.४२ ॥

मांसस्याग्नौ जुहावैव ततो निर्मांसतां गतः॥
ततो निर्मांसदेहः स तपोराशिरजायत॥ १५.४३ ॥

जज्वलुः सर्वभूतानि तेजसा तस्य सर्वतः॥
उद्विग्नाश्च सुराः सर्वे तपसा तस्य भीषिताः॥ १५.४४ ॥

एतस्मिन्नंतरे ब्रह्मा परमं तोषमागतः॥
तारकस्य वरं दातुं जगाम शिखरं गिरेः॥ १५.४५ ॥

प्राप्य तं शैलराजानं हंसस्यंदनमास्थितः॥
उवाच तारकं देवो गिरा मधुरया तदा॥ १५.४६ ॥

**॥ब्रह्मोवाच॥**
उत्तिष्ठ पुत्र तपसो नास्त्यसाध्यं तवाधुना॥
वरं वृणीष्वाभिमतं यत्ते मनसि वर्तते॥ १५.४७ ॥

इत्युक्तस्तारको दैत्यः प्रांजलिः प्राह तं विभुम्॥ १५.४८ ॥

**॥तारक उवाच॥**
वयं प्रभो जातिधर्माः कृतवैराः सहमरैः॥
तैश्च निःशेषिता दैत्याः कृताः क्रूरैनृशं सवत्॥ १५.४९ ॥

तेषामहं समुद्धर्ता भवेयमिति मे मतिः॥
अवध्यः सर्वभूतानामस्त्राणां च महौजसाम्॥ १५.५० ॥

स्यामहं चामरैश्चैष वरो मम हृदिस्थितः॥
एतन्मे देहि देवेश नान्यं वै रोचये वरम्॥ १५.५१ ॥

तमुवाच ततो दैत्यं विरंचोऽमरनायकः॥
न युज्यते विना मृत्युं देहिनो देहधारणम्॥
जातस्य हि ध्रुवो मृत्युः सत्यमेतच्छ्रुतीरितम्॥ १५.५२ ॥

इति संचिंत्य वरय वरं यस्मान्न शंकसे॥
ततः संचिंत्य दैत्येंद्रः शिशुतः सप्तवासरात्॥ १५.५३ ॥

**॥तारक उवाच॥**
वासराणां च सप्तानां वर्जयित्वा तु बालकम्॥
देवानामप्यवध्योऽहं भूयासं तेन याचितः॥ १५.५४ ॥

वव्रे महासुरो मृत्युं ब्रह्माणं मानमोहितः॥
ब्रह्मा प्रोचे ततस्तं च तथेति हरवाक्यतः॥ १५.५५ ॥

जगाम त्रिदिवं देवो दैत्योऽपि स्वकमालयम्॥
उत्तीर्णं तपसस्तं च दैत्यं दैत्येश्वरास्तदा॥ १५.५६ ॥

परिवव्रुः फलाकीर्णं वृक्षं शकुनयो यथा॥
तस्मिन्महति राज्यस्थे तारके दितिनंदने॥ १५.५७ ॥

ब्रह्मणाभिहि तस्थाने महार्णवतटोत्तरे॥
तरवो जज्ञिरे पार्थ तत्र सर्वर्तवः शुभाः॥ १५.५८ ॥

कांतिर्द्युतिर्धृतिर्मेधा श्रीरखंडा च दानवम्॥
परिवव्रुर्गुणा कीर्णं निश्छिद्राः सर्व एव हि॥ १५.५९ ॥

कालागरुविलिप्तांगं महामुकुटमंडितम्॥
रुचिरांगदसन्नद्धं महासिंहासने स्थितम्॥ १५.६० ॥

नृत्यंत्यप्सरसः श्रेष्ठा गन्धर्वा गाययंति च॥
चन्द्रार्कौ दीपमार्गेषु व्यजनेषु च मारुतः॥
ग्रहा अग्रेसरास्तस्य जीवादेशप्रभाषिणः॥ १५.६१ ॥

एवं स्वकाद्बाहुबलात्स दैत्यः संप्राप्य राज्यं परिमोदमानः॥
कदाचिदाभाष्य जगाद मंत्रिणः प्रोद्धृत्तसर्वांगबलेन दर्पितः॥ १५.६२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकखण्डे कुमारेशमाहात्मये तारकासुरोत्पत्तिवर्णनंनाम पंचदशोऽध्यायः॥ १५ ॥ छ ॥

**॥ तारक उवाच॥**

राज्येन बुद्बुदाभेन स्त्रीभिरक्षैश्च पानकैः॥
मोहितो जन्म लब्ध्वात्र त्यजते पौरुषं नरः॥ १६.१ ॥

जन्म तस्य वृथा सर्वमाकल्पांतं न संशयः॥ १६.२ ॥

मातापितृभ्यां न करोति कामान्बन्धूनशोकान्न करोति यो वा॥
कीर्तिं हि वा नार्जयते न मानं नरः स जातोऽपि मृतोऽत्र लोके॥ १६.३ ॥

तस्माज्जयायामरपुंगवानां त्रैलोक्यलक्ष्मीहरणाय शीघ्रम्॥
संयोज्यतां मे रथमष्टचक्रं बलं च मे दुर्जयदैत्यचक्रम्॥ १६.४ ॥

ध्वजं च मे कांचनपट्टबन्धं छत्रं च मे मौक्तिकजालबद्धम्॥
अद्याहमासां सुरकामिनीनां धम्मील्लकांश्चाग्रथितान्करिष्ये॥ १६.५ ॥

यथा पुरा मर्कटको जनन्यास्तस्याश्च सत्येन तु तारकः स्याम्॥ १६.६ ॥

**॥नारद उवाच॥**

तारकस्य वचः श्रुत्वा ग्रसनोनाम दानवः॥
सेनानीर्दैत्यराजस्य तथा चक्रेऽविलंबितम्॥ १६.७ ॥

आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः॥
सज्जं चक्रे रथं दैत्यो दैत्यराजस्य धीमतः॥ १६.८ ॥

गरुडानां सहस्रेण गरुडोपमितत्विषा॥
ते हि पुत्राः सुपर्णस्य संस्थिता मेरुकन्दरे॥ १६.९ ॥

विजित्य दैत्यराजेन वाहनत्वे प्रकल्पिताः॥
अष्टाष्टचक्रः सरथश्चतुर्योजनविस्तृतः॥ १६.१० ॥

नानाक्रीडागृहयुतो गीतवाद्यमनोहरः॥
गंधर्वनगराकारः संयुक्तः प्रत्यदृस्यत॥ १६.११ ॥

आजग्मुस्तत्र दैत्याश्च दशा चंडपराक्रमाः॥
कोटिकोटिपरिवारा अन्ये च बहवो रणे॥ १६.१२ ॥

तेषामग्रेसरो जम्भः कुजम्भोनंतरस्तथा॥
महिषः कुञ्जरो मेषः कालनेमिर्निमिस्तथा॥ १६.१३ ॥

मथनो जंभकः शुम्भो दैत्येंद्रा दश नायकाः॥
दैत्येंद्रा गिरिवर्ष्माणः संति चंडपराक्रमाः॥ १६.१४ ॥

नानाविधप्रहरणा नानाशस्त्रास्त्रपारगाः॥
तारकस्याभवत्केतुर्बहूरूपो महाभयः॥ १६.१५ ॥

क्वचिच्च राक्षसो घोरः पिशाचध्वांक्षगृध्रकः॥
एवं बहुविधाकारः स केतुः प्रत्यदृश्यत॥ १६.१६ ॥

केतुना मकरेणापि सेनानीर्ग्रसनो बभौ॥
पैशाचं यत्र वदनं जंभस्यासीदयस्मयम्॥ १६.१७ ॥

खरो विधुतलांगूलः कुजम्भस्याभवद्ध्वजे॥
महिषस्य च गोमायुः कांतो हैमस्तथां बभौ॥ १६.१८ ॥

गृध्रो वै कुंजरस्यासीन्मेषस्याभूच्च राक्षसः॥
कालनेमेर्महाकालो निमेरासीन्महातिमिः॥ १६.१९ ॥

राक्षसी मथनस्यापि ध्वांक्षोऽभूज्जंभकस्य च॥
महावृकश्च शुम्भस्य ध्वजा एवंविधा बभुः॥ १६.२० ॥

अनेकाकारविन्यासादन्येषां च ध्वजा भवन्॥
शतेन शीघ्रवेगानां व्याघ्राणां हेममालिनाम्॥ १६.२१ ॥

ग्रसनस्य रथो युक्तो महामेघरवो बभौ॥
शतेन चापि सिंहानां रथो जंभस्य योजितः॥ १६.२२ ॥

कुजंभस्य रथो युक्तः पिशाचवदनैः खरैः॥
तावद्भिर्महिषस्योष्टैर्गजस्य च हयैर्युतः॥ १६.२३ ॥

मेषस्य द्वीपिभिर्भीमैः कुञ्जरैः कालनेमिनः॥
पर्वतं वै समारूढो निश्चित्य विधृतं गजैः॥ १६.२४ ॥

चतुर्दंष्ट्रैर्गंधवद्भिश्चर्भिर्मेघसन्निभैः॥
शतहस्तायते कृष्णे तुरंगे हेमभूषणे॥ १६.२५ ॥

सितचामरजालेन शोभिते पुष्पदामनि॥
मथनोनाम दैत्येन्द्रः पाशहस्तो व्यराजत॥ १६.२६ ॥

किंकिणीमालिनं चोष्ट्रमारूढोऽभूच्च जंभकः॥
कालमुंचं महामेघमारूढः शुम्भदानवः॥ १६.२७ ॥

अन्ये च दानवा वीरा नानावाहनहेतयः॥
प्रचण्डचित्रवर्माणः कुण्डलोष्णीषभूषिताः॥ १६.२८ ॥

नानाविधोत्तरासंगा नानामाल्यविभूषणाः॥
नानासुगंधगंधाढ्या नानाबंधिशतस्तुताः॥ १६.२९ ॥

नानावाद्यपरिस्यंदसाग्रेसरमहारथाः॥
नानाशौर्यकथासक्तास्तस्मिन्सैन्ये महारथाः॥ १६.३० ॥

तद्बलं दैत्यसिंहस्य भीमरूपं व्यदृश्यत॥
भूमिरेणुसमालिंगत्तुरंगरथपत्तिकम्॥ १६.३१ ॥

स च दैत्येश्वरः क्रुद्धः समारूढो महारथम्॥
दशभिः शुशुबे दैत्यैर्दशबाहुरिवेश्वरः॥
जगद्धंतुं प्रवृत्तो वा प्रतस्थेऽसौ सुरान्प्रति॥ १६.३२ ॥

एतस्मिन्नंतरे वायुर्देवदूतः सुरालयम्॥
दृष्ट्वा तद्दानव बलं जगामेंद्रस्य शंसितुम्॥ १६.३३ ॥

स गत्वा तु सभां दिव्यां महेंद्रस्य महात्मनः॥
शशंस मध्ये देवानामिदं कार्यमुपस्थितम्॥ १६.३४ ॥

तच्छ्रुत्वा देवराजः स निमीलितविलोचनः॥
बृहस्पतिमुवाचेदं वाक्यं काले महामतिः॥ १६.३५ ॥

**॥इन्द्र उवाच॥**
संप्राप्तोऽतिविमर्दोऽयं देवानां दानवैः सह॥
कार्यं किमत्र तद्ब्रुहि नीत्युपायोपबृंहितम्॥ १६.३६ ॥

एतच्छ्रुत्वा च वचनं महेंद्रस्य गिरांपतिः॥
प्रत्युवाच महाभागो बॉहस्पति रुदारधीः॥ १६.३७ ॥

**॥बृहस्पतिरुवाच॥**
सामपूर्वं स्मृता नीतिश्चतुरंगामनीकिनीम्॥
जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी॥ १६.३८ ॥

साम दानं च भेदश्च चतुर्थो दंड एव च॥
नीतौ क्रमात्प्रयोज्याश्च देशकालविशेषतः॥ १६.३९ ॥

तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च॥
दानं लुब्धेषु भेदश्च शंकितोष्वितो निश्चयः॥ १६.४० ॥

दण्डश्चापि प्रयोक्तव्यो नित्यकालं दुरात्मसु॥
साम दैत्येषु नैवास्ति निर्गुणत्वाद्दुरात्मसु।. १६.४१ ॥

श्रिया तेषां च किं कार्यं समृद्धानां तथापि यत्॥
जातिधर्मेण चाभेद्या विधातुरपि ते मताः॥ १६.४२ ॥

एको ह्युपायो दंडोऽत्र भवतां यदि रोचते॥
दुर्जनः सुजनत्वाय कल्पते न कदाचन॥ १६.४३ ॥

लालितः पालितो वापि स्वस्वभावं न मुंचति॥
एवं मे मन्यते बुद्धिर्भवंतो यद्व्यवस्यताम्॥ १६.४४ ॥

एवमुक्तः सहस्राक्ष एवमेवेत्युवाच ह॥
कर्तव्यतां च संचिंत्य प्रोवाचामरसंसदि॥ १६.४५ ॥

बहुमानेन मे वाचं श्रृणुध्वं नाकवासिनः॥ १६.४६ ॥

भवंतो यज्ञभोक्तारः सतामिष्टाश्च सात्त्विकाः॥
स्वेस्वे पदे स्थिता नित्यं जगतः पालने रताः॥ १६.४७ ॥

भवतां च निमित्तेन बाधंते दानवेश्वराः॥
तेषां समादि नैवास्ति दंड एव विधीयताम्॥ १६.४८ ॥

क्रियतां समरे बुद्धिः सैन्यं संयोज्यतामिति॥
आवाद्यंतां च शस्त्राणि पूज्यं तां शस्त्रदेवताः॥ १६.४९ ॥

इत्युक्ताः समनह्यंत देवानां ये प्रधानतः॥
वाजिनामयुतेनाजौ हेमपट्टपरिष्कृताः॥ १६.५० ॥

वाहनानि विमानानि योजयंतु ममामराः॥
यमं सेनापतिं कृत्वा शीघ्रं निर्यात देवताः॥ १६.५१ ॥

नानाश्चर्यगुणोपेता दुर्जया देवदानवैः॥
रथो मातलिना युक्तो महेंद्रस्याप्यदृश्यत॥ १६.५२ ॥

यमो महिषमास्थाय सेनाग्रे समवर्तत॥
चंडकिंकिणिवृंदेन सर्वतः परिवारितः॥ १६.५३ ॥

कल्पकालोज्जवालापूरितांबरगोचरः॥
हुताश उरणारूढः शक्तिहस्तो व्यवस्थितः॥ १६.५४ ॥

पवनोंऽकुशपाणिस्तु विस्तारितमहाजवः॥
महाऋक्षं समारूढं सेनाग्रे समदृश्यत॥ १६.५५ ॥

भुजगेन्द्रं समारूढो जलेशो भगवान्स्वयम्॥

महापाशधरो वीरः सेनायां समवर्तत॥ १६.५६ ॥

नरयुक्ते रथे दिव्ये धनाध्यक्षो व्यचीचरत्॥
महासिंहरवो युद्धे गदाहस्तो व्यवस्थितः॥ १६.५७ ॥

राक्षसेशोऽथ निर्ऋती रथे रक्षोमुखैर्हयैः॥
धन्वी रक्षोगणवृतो महारावो व्यदृश्यत॥ १६.५८ ॥

चंद्रादित्यावश्विनौ च वसवः साध्यदेवताः॥
विश्वेदेवाश्च रुद्राश्च सन्नद्धास्तस्थुराहवे॥ १६.५९ ॥

हेमपीठत्तरासंगाश्चित्रवर्मायुधध्वजाः॥
गंधर्वाः प्रत्यदृश्यन्त कृत्वा विश्वावसुं मुखे॥ १६.६० ॥

तथा रक्तोत्तरासंगा निर्मलायोविभूषणाः॥
गृध्रध्वजा अदृश्यंत राक्षसा रक्तमूर्धजाः॥ १६.६१ ॥

तथा भीमाशनिकराः कृष्णवस्त्रा महारथाः॥
यक्षास्तत्र व्यदृश्यंत मणिभद्रादिकोटिशः॥ १६.६२ ॥

ताम्रोलूकध्वजा रौद्रा द्वीपिचर्मांबरास्तथा॥
पिशाचास्तत्र राजंते महावेगपुरःसराः॥ १६.६३ ॥

तथैव श्वेतवसनाः सितपट्टपताकिनः॥
मत्तेभवाहनप्रायाः किंनरास्तस्थुराहवे॥ १६.६४ ॥

मुक्ताजाल पिरष्कारो हंसो हारसमप्रभः॥
केतुर्जलधिनाथस्य सौम्यरूपो व्यराजत॥ १६.६५ ॥

पंचरागमहारत्नविटंको धनदस्य च॥
ध्वजः समुत्थितो भाति यातुकाम इवांबरम्॥ १६.६६ ॥

कार्ष्णलोहमयो ध्वांक्षो यमस्याभून्महाध्वजः॥
राक्षसेशस्य वदनं प्रेतस्य ध्वज आबभौ॥ १६.६७ ॥

हेमसिंहध्वजौ देवौ चन्द्रार्कवमितद्युति॥
कुंभेन चित्रवर्णेन केतुराश्विनयोरभूत्॥ १६.६८ ॥

मातंगो हेमरचितश्चित्ररत्नपरिष्कृतः॥
ध्वजः शतक्रतोरासीत्सितचा मरसंस्थितः॥ १६.६९ ॥

अन्येषां च ध्वजास्तत्र नानारूपा बभू रणे॥

सनागयक्षगंधर्वमहोरगनिशाचरा॥ १६.७० ॥

सेना सा देवराजस्य दुर्जया प्रत्यदृश्यत॥
कोटयस्तास्त्रयस्त्रिंशन्नानादेवकायिनाम्॥ १६.७१ ॥

हैमाचलाभे सितकर्णचामरे सुवर्णपद्मामलसुंदरस्रजि॥
कृताभिरामोज्ज्वलकुंकुमांकुरे कपोललीताविविमुक्तरावे॥ १६.७२ ॥

श्रितस्तदैरावणनामकुंजरे महाबलश्चित्रविशेषितांबरः॥
विशालवज्रांगवितानभूषितः प्रकीर्णकेयूरभुजाग्रमंडलः॥ १६.७३ ॥

सहस्रदृग्बंदिसहस्रसंस्तुतस्त्रिविष्टपेऽशोभत पाकशासनः॥ १६.७४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारीकाखण्डे तारकासुरदेवेन्द्रयुद्धोपक्रमवर्णनंनाम षोडशोऽध्यायः॥ १६ ॥

**॥नारद उवाच॥**

ततस्तयोः समायोगः सेनयोरुभयोरभूत्॥
युगांते समनुप्राप्ते यथा क्षुब्धसमुद्रयोः॥ १७.१ ॥

सुरासुराणां संमर्दे तस्मिन्परमदारुणे॥
तुमुलं सुमहत्क्रांते सेनयोरुभयोरपि॥ १७.२ ॥

गर्जतां देवदैत्यानां शंखभेरीरवेण च॥
तूर्याणां चैव निर्घोषैर्मातंगानां च बृंहितैः॥ १७.३ ॥

हेषितैर्हयवृंदानां रथनेमिस्वनेन च॥
घोषेण चैव तूर्याणां युगांत इव चाभवत्॥ १७.४ ॥

रोषेणाबिपरीतांगास्त्यक्तजीवितचेतसः॥
समसज्जन्त तेन्योन्यं प्रक्रमेणातिलोहिताः॥ १७.५ ॥

रथा रथैः समासक्ता गजाश्चापि महागजैः॥
पत्तयः पत्तिभिश्चैव हयाश्चापि महाहयैः॥ १७.६ ॥

ततः प्रासाशनिगदाभिंडिपालपरश्वधैः॥
शक्तिभिः पट्टिशैः शूलैर्मुद्गरैः कणयैर्गुडैः॥ १७.७ ॥

चक्रैश्च शक्तिभिश्चैव तोमरैरंकुशैरपि॥
कर्णिनालीकनाराचवत्सदंतार्द्धचंद्रकैः॥ १७.८ ॥

भल्लैर्वेतसपत्रैश्च शुकतुंडैश्च निर्मलैः॥
वृष्टिभिश्चाद्भुताकारैर्गगनं समपद्यत॥ १७.९ ॥

संप्रच्छाद्य दिशः सर्वास्तमोमयमिवाभवत्॥
प्राज्ञायंत न तेऽन्योन्यं तस्मिंस्तमसि संकुले॥ १७.१० ॥

अदृश्यभूतास्तमसि न्यकृंतंत परस्परम्॥
ततो भुजैर्ध्वजैश्छत्रैः शिरोभिश्च सकुंडलैः॥ १७.११ ॥

गजैस्तुरंगैः पादातैः पतद्भिः पतितैरपि॥
आकाशशिरसो भ्रष्टैः पंकजैरिव भूश्चिता॥ १७.१२ ॥

भग्नदंता भिन्नकुंभाश्छिन्नदीर्घमहाकराः॥
गजाः शैलनिभाः पेतुर्धरण्यां रुधिरस्रवाः॥ १७.१३ ॥

भग्नैषाश्च रथाः पेतुर्भग्नाक्षाः शकलीकृताः॥
पत्तयः कोटिशः पेतुस्तुरंगाश्च सहस्रशः॥ १७.१४ ॥

ततः शोणितनद्यश्च हर्षदाः पिशिताशिनाम्॥
वैतालानंददायिन्यो व्यजायंत सहस३शः॥ १७.१५ ॥

तस्मिंस्तथाविधे युद्धे सेनानीर्ग्रसनोऽरिहा॥
बाणवर्षेण महता देवसैन्यमकंपयत्॥ १७.१६ ॥

ततो ग्रसनमालोक्य यमः क्रोधविमूर्छितः॥
ववर्ष शरवर्षेण विशेषादग्निवर्चसा॥ १७.१७ ॥

स विद्धो बहुभिर्षाणैर्ग्रसनोऽतिपराक्रमः॥
कृतप्रतिकृताकांक्षी धनुरानम्य भैरवम्॥ १७.१८ ॥

शरैः सहस्रैश्च पञ्चलक्षैश्चैव व्यताडयत्॥
ग्रसनेन विमुक्तांस्ताञ्छरान्सोपि निवार्य च॥ १७.१९ ॥

बाणवृष्टिभिरुग्राभिर्यमो ग्रसनमर्दयत्॥
कृतांतशरवृष्टीनां संततीः प्रतिसर्पतीः॥
चिच्छेद शरवर्षेण ग्रसनो दानवेश्वरः॥ १७.२० ॥

विफलां तां समालोक्य यमः स्वशरसंततिम्॥ १७.२१ ॥

प्राहिणोन्मुद्गरं दीप्तं ग्रसनस्य रथं प्रति॥
स तं मुद्गरमायांतमुत्पत्य रथसत्तमात्॥ १७.२२ ॥

जग्राह वामहस्तेन लीलया ग्रसनोऽरिहा॥
तेनैव मुद्गरेणाथ यमस्य महिषं रुषा॥ १७.२३ ॥

ताडयामास वेगेन स पपात महीतले॥
उत्पत्याथ यमस्तस्मान्महिषान्निपतिष्यतः॥ १७.२४ ॥

प्रासेन ताडयामास ग्रसनं वदने दृढम्॥
स तु प्राप्तप्रहारेण मूर्छितो न्यपतद्भुवि॥ १७.२५ ॥

ग्रसनं पतित दृष्ट्वा जंभो भीमपराक्रमः॥
यमस्य भिंडिपालेन प्रहारमकरोद्धृदि ॥ १७.२६ ॥

यमस्तेन प्रहारेण सुस्राव रुधिरं मुखात्॥
अतिगाढ प्रहारार्त्तः कृतांतोमूर्छितोऽभवत्॥ १७.२७ ॥

कृतांतमर्दितं दृष्ट्वा गदापाणिर्धनादिपः॥
वृतो यक्षायुतगणैर्जंभं प्रत्युद्ययौ रुषआ॥ १७.२८ ॥

जंभो रुषा तमायांतं दानवा नीकसंवृतः॥
जग्राह वाक्यं राज्ञस्तु यता स्निग्धेन भाषितम्॥ १७.२९ ॥

ग्रसनो लब्धसंज्ञोऽथ यमस्य प्राहिणोद्गदाम्॥
मणिहेमपरिष्कारां गुर्वी परिघमर्दिनीम्॥ १७.३० ॥

तामापतंतीं संप्रेक्ष्य गदां महिषवाहनः॥
गदायाः प्रतिघातार्थं जगज्ज्वलनभैरवम्॥ १७.३१ ॥

दंडं मुमोच कोपेन ज्वालामालासमाकुलम्॥
स गदां वियति प्राप्य ररासांबुधरोद्धतम्॥ १७.३२ ॥

संवट्टश्चाभवत्ताभ्यां शैलाभ्यामिव दुःसहः॥
ताभ्यां निष्पेषनिर्ह्राद जडीकृतदिगंतरम्॥ १७.३३ ॥

जगद्व्याकुलतां यातं प्रलयागमशंकया॥
क्षणात्प्रशांतनिर्ह्रादं ज्वलदुल्कासमाचितम्॥ १७.३४ ॥

निष्पेषणं तयोर्भीमम भूद्गनगोचरम्॥
निहत्याथ गदां दण्डस्ततो ग्रसनमूर्धनि॥ १७.३५ ॥

पपात पौरुषं हत्वा यथा दैवं पुरार्जितम्॥
सतु तेन प्रहारेण दृष्ट्वा सतिमिरादिशः॥ १७.३६ ॥

पपात भूमौ निःसंज्ञो भूमिरेणुविभूषितः॥
ततो हाहारवो घोरः सेनयोरुभयोरभूत्॥ १७.३७ ॥

ततो महूर्तमात्रेण ग्रसनः प्राप्य चेतनाम्॥
अपश्यत्स्वां तनुं ध्वस्तां विलोलाभरणांबराम्॥ १७.३८ ॥

स चापि चिंतयामास कृतप्रतिकृतक्रियाम्॥
धिगस्तु पौरुषं मह्यं प्रभोरग्रेसरः कथम्॥ १७.३९ ॥

मय्याश्रितानि सैन्यानि जिते मयि जितानि च॥
असंभावितरूपो हि सज्जनो मोदते सुखम्॥ १७.४० ॥

संभावितस्त्वशक्तश्चेत्तस्य नायं परोऽपि वा॥
एवं संचिंत्य वेगेन समुत्तस्थौ महाबलः॥ १७.४१ ॥

मुद्गरं कालदण्डाभं गृहीत्वा गिरिसंनिभम्॥
ग्रसनो घोरसंकल्पः संदष्टौष्ठपुटच्छदः॥ १७.४२ ॥

रथेन त्वरितोऽगच्छदासससादांतकं रणे॥
समासाद्य यमं युद्धे ग्रसनो भ्राम्य मुद्गरम्॥ १७.४३ ॥

वेगेन महता रौद्रं चिक्षेप यममूर्धनि॥
विलोक्य मुद्गरं दीप्तं यमः संभ्रांतलोचनः॥ १७.४४ ॥

वंचयामास दुर्द्धर्षं मुद्गरं तं महाबलः॥
तस्मिन्नपसृते दूरं चंडानां भीमकर्मणाम्॥ १७.४५ ॥

याम्यानां किंकराणां च अयुतं निष्पिपेष ह॥
ततस्तदयुतं दृष्ट्वा हतं किंकरवाहिनी॥ १७.४६ ॥

दशार्बुदमिता क्रुद्धा ग्रसनायान्वधावत॥
ग्रसनस्तु समालोक्य तां किंकरमयां शुभाम्॥ १७.४७ ॥

मेने यमसहस्राणि तादृग्रूपबला हि सा॥
विगाह्य ग्रसनं सेना ववर्ष शरवृष्टिभिः॥ १७.४८ ॥

कल्पांतघोरसंकाशो बभूव स महारणः॥
केचिच्छैलेन बिभिदुः केचिद्बाणैरजिह्यगैः॥ १७.४९ ॥

पिपिषुर्गदया केचित्कोचिन्मुद्गरवृष्टिभिः॥
केचित्प्रासप्रहारैश्च ताडयामासुरुद्धताः॥ १७.५० ॥

अपरे किंकरास्तस्य ललंबुर्बाहुमंडले॥
शिलाभिरपरे जघ्नुर्द्रुमैरन्ये महोच्छ्रयैः॥ १७.५१ ॥

तस्यापरे च गात्रेषु दशनांश्चन्यपातयन्॥
अपरे मुष्टिभिः पृष्ठं किंकरास्ताडयंति च ॥ १७.५२ ॥

एवं चाभिद्रुतस्तैः स ग्रसनः क्रोधमूर्छितः॥
उत्साद्य गात्रं भूपृष्ठे निष्पिपेष सहस्रशः॥ १७.५३ ॥

कांश्चिदुत्थाय जघ्नेऽसौ मुष्टिभिः किंकरान्रणे॥
कांश्चित्पादप्रहारेण धावन्नन्यानचूर्णयत्॥ १७.५४ ॥

क्षणैकेन स तान्निन्ये यमलोकायभारत॥
स च किंकरयुद्धेन ववृधेऽग्निरिवैधसा॥ १७.५५ ॥

तमालोक्य यमोऽश्रांतं श्रांतंस्तांश्च हतान्स्वकान्॥
आजगाम समुद्यम्य दंडं महिषवाहनः॥ १७.५६ ॥

ग्रसनस्तु तमायांतमाजघ्ने गदयोरसि॥
अचिंतयित्वा तत्कर्म ग्रसनस्यांतकोऽरिहा॥ १७.५७ ॥

व्याघ्रान्दंडेन संजघ्ने स रथान्न्य पतद्भुवि॥
ततः क्षणेन चोत्थाय संचिंत्यात्मानमुद्धतः॥ १७.५८ ॥

वायुवेगेन सहसा ययौ यमरथं प्रति॥
पदातिः स रथं तं च समारुह्य यमं तदा॥ १७.५९ ॥

योधयामास बाहुभ्यामाकृष्य बलिनां वरः॥
यमोऽपि शस्त्राण्युत्सृज्च बाहुयुद्धे प्रवर्तते॥ १७.६० ॥

ग्रसनं कटिवस्त्रे तु यमं गृह्य बलोत्कटः॥
भ्रामयामास वेगेन संभ्रमाविष्टचेतसम्॥ १७.६१ ॥

विमोच्याथ यमः कष्टात्कंठेऽवष्टभ्य चासुरम्॥
बाहुभ्यां भ्रामयामास सोऽप्यात्मानममोचयत्॥ १७.६२ ॥

ततो जघ्नतुरन्योन्यं मुष्टिभिर्निर्दयौ च तौ॥
दैत्येंद्रस्यातिवीर्यत्वात्परिश्रांततरो यमः॥ १७.६३ ॥

स्कंधे निधाय दैत्यस्य मुखं विश्रांतिमैच्छत॥
तमा लक्ष्य ततो दैत्यः श्रांतमुत्पाट्य चौजसा॥ १७.६४ ॥

निष्पिपेष महीपृष्ठे विनिघ्नन्पार्ष्णिपाणिभिः॥
ततो यमस्य वदनात्सुस्राव रुधिरं बहु॥ १७.६५ ॥

निर्जीवमिति तं दृष्ट्वा ततः संत्यज्य दानवः॥
जयं प्राप्योद्धतं नादं मुक्त्वा संत्रास्य देवताः॥ १७.६६ ॥

स्वकं सैन्यं समासाद्य तस्थौ गिरिरिवाचलः॥ १७.६७ ॥

नादेन तस्य ग्रसनस्य संख्ये महायुधैश्चार्दितसर्वगात्राः॥
गते कृथांते वसुधां च निष्प्रभे चकंपिरे कांदिशिकाः सुरास्ते॥ १७.६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे तारकसैन्यदेवसैन्ययोर्मध्ये यमग्रसनयोर्युद्धवर्णनं नाम सप्तदशोऽध्यायः॥ १७ ॥ छ ॥

**॥नारद उवाच॥**

धनाधिपस्य जंभेन सायकैर्मर्मभेदिभिः॥
दिशोपरुद्धाः क्रुद्धेन सैन्यं चाभ्यर्दितं भृशम्॥ १८.१ ॥

तद्दृष्ट्वा कर्म दैत्यस्य धनाध्यक्षः प्रतापवान्॥
आकर्णाकृष्टचापस्तु जंभमाजौ महाबलम्॥ १८.२ ॥

हृदि विव्याध बाणानां सहस्रेणाग्निवर्चसाम्॥
स प्रहस्य ततो वीरो बाणानामयुतत्रयम्॥ १८.३ ॥

नियुतं च तथा कोटिमर्बुदं चाक्षिपत्क्षणात्॥
तस्य तल्लाघ्रवं दृषट्वा क्रुद्धो गृह्य महागदाम्॥ १८.४ ॥

धनाध्यक्षः प्रचिक्षेप स्वर्गेप्सुः स्वधनं यथा॥
मुक्तायां वै नादोऽभूत्प्रलये यथा॥ १८.५ ॥

भूतानां बहुधा रावा जज्ञिरे खे महाभयाः॥
वायुश्च सुमहाञ्जज्ञे खमायान्मेघसंकुलम्॥ १८.६ ॥

सा हि वैश्रवणस्यास्ते त्रैलोक्याभ्यर्चिता गदा॥
आयांतीं तां समालोक्य तडित्संघातदुर्द्दशाम्॥ १८.७ ॥

दैत्यो गदाविघातार्थं शस्त्रवृष्टिं मुमोच ह॥
चक्राणि कुणपान्प्रासाञ्छतघ्नीः पट्टिशांस्तथा॥ १८.८ ॥

परिघान्मुशलान्वृक्षान्गिरींश्चातुलविक्रमः॥
कदर्थीकृत्य शस्त्राणि तानि सर्वाणि सा गदा॥ १८.९ ॥

कल्पांतभास्करो यद्वन्न्यपतद्दैत्यवक्षसि॥
स तया गाढभिन्नः सन्सफेनरुधिरं वमन्॥ १८.१० ॥

निःपपात रथाज्जंभो वसुधां गतचेतनः॥
जंभं निपतितं दृष्ट्वा कुजंभो घोरनिश्चयः॥ १८.११ ॥

धनाधिपस्य संक्रुद्धो नादेनापूरयन्दिशः॥
चक्रे बाणमयं जालं शकुंतस्येव पंजरम्॥ १८.१२ ॥

विच्छिद्य बाणजालं च मायाजालमिवोत्कटम्॥
मुमोच बाणानपरांस्तस्य यक्षाधिपो बली॥ १८.१३ ॥

चिच्छेद लीलया तांश्च दैत्यः क्रोधीव सद्वचः॥
निष्फलांस्तांस्ततो दृष्ट्वा बाणान्क्रुद्धो धनाधिपः॥ १८.१४ ॥

शक्तिं जग्राह दुर्धर्षां शतघंटामहास्वनाम्॥
प्रेषिता सा तदा शक्तिर्दारयामास तं हृति॥ १८.१५ ॥

यथाल्पबोधं पुरुषं दुःखं संसारसंभवम्॥
तथास्य हृदयं भित्त्वा जगाम धरणीतलम्॥ १८.१६ ॥

निमेषात्सोभिसंस्तम्भ्य दानवो दारुणाकृतिः॥
जग्राह पट्टिशं दैत्यो गिरीणामपि भेदनम्॥ १८.१७ ॥

स तेन पट्टिसेनाजौ धनदस्य स्तनांतरम्॥
वाक्येन तीक्ष्णरूपेण मर्माक्षरविसर्पिणा॥ १८.१८ ॥

निर्बिभेदाभिजातस्य हृदयं दुर्जनो यथा॥
तेन पट्टिश घातेन धनेशः। परिमूर्छितः॥ १८.१९ ॥

निषसाद रथोपस्थे दुर्वाचा सुजनो यथा॥
तथागतं तु तं दृष्ट्वा धनेशं वै मृतं यथा॥ १८.२० ॥

राक्षसो निर्ऋतिर्देवो निशाचरबलानुगः॥
अभिदुद्राव वेगेन कुजंभं भीमविक्रमम्॥ १८.२१ ॥

अथ दृष्ट्वातिदुर्धर्षं कुजंभो राक्षसेश्वरम्॥
नोदयामास दैत्यान्स राक्षसेशरथं प्रति॥ १८.२२ ॥

स दृष्ट्वा नोदितां सेनां प्रबलास्त्रां सुभीषणाम्॥
रथादाप्लुत्य वेगेन निर्ऋती राक्षसेश्वरम्॥ १८.२३ ॥

खड्गेन तीक्ष्णधारेण चर्मपाणिरधावत॥
प्रविश्य दानवानीकं गजः पद्मसरो यथा॥ १८.२४ ॥

लोडयामास बहुधा विनिष्कृत्य सहस्रशः॥
चिच्छेद कांश्चिच्छतशो बिभेदान्यान्वरासिना॥ १८.२५ ॥

संदष्टौष्ठमुखैः पृथ्वीं दैत्यानां सोऽभ्यपूरयत्॥
ततो निःशेषितप्रायां विलोक्य स्वां चमूं तदा॥ १८.२६ ॥

मुक्त्वा धनपतिं दैत्यः कुजंभो निर्ऋतिं ययौ॥
लब्धसंज्ञस्तु जंभोऽपि धनाध्यक्षपदानुगान्॥ १८.२७ ॥

जीवग्राहं स जग्राह बद्धा पाशैः सहस्रधा॥
मूर्तिमंति च रत्ननि पद्मादींश्च निधींस्तथा॥ १८.२८ ॥

वाहनानि च दिव्यानि विमानानि च सर्वशः॥
धनेशो लब्धसंज्ञस्तु तामवस्थां विलोक्य सः॥ १८.२९ ॥

निःश्वसन्दीर्घमुष्णं च रोषात्ताम्रविलोचनः॥
ध्यात्वास्त्रं गारुडं दिव्यं बाणं संधाय कार्मुके॥ १८.३० ॥

मुमोच दानवानीके तं बाणं शत्रुदारणम्॥
प्रथमं कार्मुकं तस्य वह्निज्वालमदृश्यत॥ १८.३१ ॥

निश्चेरुर्विस्फुलिंगानां कोटयो धनुषस्तथा॥
ततो ज्वालाकुलं व्योम चक्रे चास्त्रं समंततः॥ १८.३२ ॥

तदस्त्रं सहसा दृष्ट्वा जंभो भीमपराक्रमः॥
संवर्तं मुमुचे तेन प्रशांतं गारुडं तदा॥ १८.३३ ॥

ततस्तं दानवो दृष्ट्वा कुबेरं रोषविह्वलः॥
अभिदुद्राव वेगेन पदातिर्धनदं नदन्॥ १८.३४ ॥

अथाभिमुखमायांतं दैत्यं दृष्ट्वा धनाधिपः॥
बभूव संभ्रमाविष्टः पलायनपरायणः॥ १८.३५ ॥

ततः पलायतस्तस्य मुकुटो रत्नमंडितः॥
पपात भूतले दीप्तो रविबिंबमिवांबरात्॥ १८.३६ ॥

यक्षणामभिजातानां भग्नं प्रववृते रणात्॥
मर्तुं संग्राम शिरसि युक्तं नो भूषणाय तत्॥ १८.३७ ॥

इति व्यवस्य दुर्धर्षा नानाशस्त्रास्त्रपाणयः॥
युयुत्सवस्तथा यक्षा मुकुटं परिवार्य ते॥ १८.३८ ॥

अभिमान धना वीरा धनस्य पदानुगाः॥
तानमर्षाच्च संप्रेक्ष्य दानवश्चंडपौरुषः॥ १८.३९ ॥

भुशुण्डीं भीषणाकारां गृहीत्वा शैलगौरवाम्॥
रक्षिणो मुकुटस्याथ निष्पिपेष निशाचरान्॥ १८.४० ॥

तान्प्रमथ्याथ नियुतं मुकुटं तं स्वके रथे॥
समारोप्यामररिपुर्जित्वा धनदमाहवे॥ १८.४१ ॥

धनानि च निधीन्गृह्य स्वसैन्येन समावृतः॥
नादेन महता देवान्द्रावयामास सर्वशः॥ १८.४२ ॥

धनदोऽपि धनं सर्वं गृहीतो मुक्तमूर्धजः॥
पदातिरेकः सन्त्रस्तः प्राप्यैवं दीनवत्स्थितः॥ १८.४३ ॥

कुजंभेनाथ संसक्तो रजनीचरनंदनः॥
मायाममोघामाश्रित्य तामसीं राक्षसेश्वरः॥ १८.४४ ॥

मोहयामास दैत्येन्द्रो जगत्कृत्वा तमोमयम्॥
ततो विफलनेत्राणि दानवानां बलानि च॥ १८.४५ ॥

न शेकुश्चलितुं तत्र पदादपि पदं तदा॥
ततो नानास्त्रवर्षेण दानवानां महाचमूः॥ १८.४६ ॥

जघान निर्ऋतिर्देवस्तमसा संवृता भृशम्॥
हन्यमानेषु दैत्येषु कुजंभे मूढचेतसि॥ १८.४७ ॥

महिषो दानवेन्द्रस्तु कल्पांतां भोदसन्निभः॥
अस्त्रं चकार सावित्रमुल्कासंघातमंडितम्॥ १८.४८ ॥

विजृंभत्यथ सावित्रे परमास्त्रे प्रातपिनि॥
प्रणासमगमत्तीव्रं तमो घोरमनंतरम्॥ १८.४९ ॥

ततोऽस्त्रविस्फुलिंगांकं तमः शुक्लं व्यजायत॥
प्रोत्फुल्लारुणपद्मौघं शरदीवामलं सरः॥ १८.५० ॥

ततस्तमसि संशांते दैत्येन्द्राः प्राप्तचक्षुषः॥
चक्रुः क्रुरेण तमसा देवानीकं महाद्भुतम्॥ १८.५१ ॥

अथादाय धनुर्घोरमिषुं चाशीविषोपमम्॥
कुजंभोऽधावत क्षिप्रं रक्षोदेवबलं प्रति॥ १८.५२ ॥

राक्षसेन्द्रस्तथायांतं दृषट्वा तं स पदानुगः॥
विव्याध निशितैर्बाणैः कालाशनिसमस्वनैः॥ १८.५३ ॥

नादानं न च सन्धानं न मोक्षो वास्य लक्ष्यते॥
चिच्छेदोग्रैः शरव्रातैस्ताञ्छराननतिलाघवात्॥ १८.५४ ॥
ध्वजं शरेण तीक्ष्णेन निचकर्तामरद्विषः॥
सारथिं चास्य भल्लेन रथनीडादपाहरत्॥ १८.५५ ॥

कालकल्पेन बाणेन तं च वक्षस्याताडयत्॥
स तु तेन प्रहारेण चकम्पे पीडितो भृशम्॥ १९.५६ ॥

दैत्येंद्रो राक्षसेन्द्रेण क्षितिकंपेनगो यथा॥

स सुहूर्तात्समाश्वास्य मत्वा तं दुर्जयं रणे॥ १८.५७ ॥

पदातिरासाद्य रथं रक्षो वामकरेण च॥
केशेषु निर्ऋतिं गृह्य जानुनाक्रम्य च स्थितः॥ १८.५८ ॥

ततः खड्गेन च शिरश्छेत्तुमैच्छदमर्षणः॥
ततः कलकलो जज्ञे देवानां सुमहांस्तदा॥
कुजंभस्य वशं प्राप्तं दृष्ट्वा निर्ऋतिमाहवे॥ १८.५९ ॥

एतस्मिन्नन्तरे देवो वरुणः पाशभृद्धृतः॥
पाशेन दानवेंद्रस्य बबन्धाशु भुजद्वयम्॥ १८.६० ॥

ततो बद्धभुजं दैत्यं विफलीकृतपौरुषम्॥
ताडयामास गदया दयामुत्सृज्य पाशभृत्॥ १८.६१ ॥

स तु तेन प्रहारेण स्रोतोभिः क्षतजं स्रवन्॥
दधार कालमेघस्य रूपं विद्युल्लताभृतम्॥ १८.६२ ॥

तदवस्थागतं दृष्ट्वा कुजंभं महिषासुरः॥
व्यावृत्तवदनारावो भोक्तुमैच्छत्सुरावुभौ॥ १८.६३ ॥

निर्ऋति वरुणं चैव तीक्ष्णदंष्ट्रोत्कटाननः॥
तावभिप्रायमा लोक्य तस्य दैत्यस्य दूषितम्॥ १८.६४ ॥

त्यक्त्वा रथावुभौ भीतौ पदाती प्रद्रुतौ द्रुतम्॥
जग्मतुर्महिषाद्भीतौ शरणं पाकशासनम्॥ १८.६५ ॥

क्रुद्धोऽथ महिषो दैत्यो वरुणं समुपाद्रवत्॥
तमंतकमुखासन्नमालोक्य हिमदीधितिः॥ १८.६६ ॥

चक्रे शस्त्रं विसृष्टं हि हिमसंघातमुल्बणम्॥
वायव्यं चास्त्र मतुलं चंद्रश्चक्रे द्वितीयकम्॥ १८.६७ ॥

वायुना तेन चंडंन संशुष्केण हिमेन च॥
महाहिमनिपातेन शस्त्रैश्चंद्रप्रणोदितैः॥ १८.६८ ॥

गात्राण्यसुरसैन्यानामदह्यंत समंततः॥
व्यथिता दानवाः सर्वे सीतच्छादितपौरुषाः॥ १८.६९ ॥

न शेकुश्चलितुं तत्र नास्त्राण्यादातुमेव च॥
महिषो निष्प्रयत्नश्च शीतेनाकंपिताननः॥ १८.७० ॥

अंसमालिंग्य पाणिभ्यामुपविष्टो ह्यधोमुखः॥
सर्वे ते निष्प्रतीकारा दैत्याश्चंद्रमसा जिताः॥ १८.७१ ॥

रणेच्छां दूरतस्त्यक्त्वा तस्थुस्ते जीवितार्थिनः॥
तत्राब्रवीत्कालनेमिर्दैत्यान्क्रोधविदीपितः॥ १८.७२ ॥

भोभोः श्रृंगारिणः क्रूराः सर्वशस्त्रास्त्रपारगाः॥
एकैकोऽपि जगत्कृस्नं शक्तस्तुलयितुं भुजैः॥ १८.७३ ॥

एकैकोऽपि क्षमो ग्रस्तुं जगत्सर्वं चराचरम्॥
एकैकस्यापि पर्याप्ता न सर्वेऽपि दिवौकसः॥ १८.७४ ॥

किं त्रस्तनयनाश्चैव समरे परिनिर्जिताः॥
न युक्तमेतच्छूराणां विशेषाद्दैत्यजन्मनाम्॥ १८.७५ ॥

राज्ञश्च तारकस्यापि दर्शयिष्यथ किं मुखम्॥
विरतानां रणाच्चासौ क्रुद्धः प्राणान्हरिष्यति॥ १८.७६ ॥

इति ते प्रोच्यमानापि नोचुः किंचिन्महासुराः॥
शीतेन नष्टश्रुतयो भ्रष्टवाक्याश्च ते तथा॥ १८.७७ ॥

मूकास्तथाभवन्दैत्या मृतकल्पा महारणे॥
तान्दृष्ट्वा नष्टचेतस्कान्दैत्याञ्छीतेन पीडितान्॥ १८.७८ ॥

मत्वा कालक्षमं कार्यं कालनेमिर्महासुरः॥
आश्रित्य मानवीं मायां वितत्य च महावपुः॥ १८.७९ ॥

पूरयामास गगनं विदिश एव च॥
निर्ममे दानवेन्द्रोऽसौ शरीरेभास्करायुतम्॥ १८.८० ॥

दिशश्च विदिशश्चैव पूरयामास पावकैः॥
ततो ज्वालाकुलं सर्वं त्रैलोक्यमभवत्क्षणात्॥ १८.८१ ॥

तेन ज्वालासमूहेन हिमां शुरगमदद्रुतम्॥
ततः क्रमेण विभ्रष्टं शीतदुर्दिनमाबभौ॥ १८.८२ ॥

तद्बलं दानवेंद्राणां मायया कालनेमिनः॥
तद्दृष्ट्वा दानवानीकं लब्धसंज्ञं दिवाकरः॥
उवाचारुणमत्यर्थं कोपरक्तांतलोचनः॥ १८.८३ ॥

**॥दिवाकर उवाच॥**
नयारुण रथं शीघ्रं कालनेमिरथो यतः॥ १८.८४ ॥

विमर्दे तत्र विषमे भविता भूतसंक्षयः॥
जित एषशशांकोऽथ वयं यद्बलमाश्रिताः॥ १८.८५ ॥

इत्युक्तश्चोदयामास रथं गरुडपूर्वजः॥
रथे स्थितोऽपि तैरश्वैः सितचामरधारिभिः॥ १८.८६ ॥

जगद्दीपोऽथ भगवान्जग्राह विततं धनुः॥
शरौघो वै पांडुपुत्र क्षिप्रमासीद्विषद्युतिः॥ १८.८७ ॥

शंबरास्त्रेण संधाय बाणमेकं ससर्ज ह॥
द्वितीयं चेन्द्रजालेनायोजितं प्रमुमोच ह॥ १८.८८ ॥

शंबरास्त्रं क्षणाच्चक्रे तेषांरूपविपर्ययम्॥
देवानां दानवं रूपं दानवानां च दैविकम्॥ १८.८९ ॥

मत्वा सुरान्स्वकानेव जघ्ने घोरास्त्रलाघवात्॥
कालनेमी रुषाविष्टः कृतांत इव संक्षये॥ १८.९० ॥

कांश्चित्खड्गेन तीक्ष्णेन कांश्चिन्नाराचवृष्टिभिः॥
कांश्चिद्गदाभिर्घोराभिः कांश्चिद्घोरैः परश्वधैः॥ १८.९१ ॥

शिरांसि केषाचिदपातयद्रथाद्भुजांस्तथा सारथींस्चोग्रवेगान्॥
कांश्चित्पिपेषाथरथस्य वेगात्कांश्चित्तथात्यद्भुतमुष्टिपातैः॥ १८.९२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिका खण्डे
तारकसैन्यदेवसैन्ययोर्युद्धवर्णनंनामाष्टादशोऽध्यायः॥ १८ ॥ छ ॥

**॥नारद उवाच॥**

कालनेमी रुषाविष्टस्तेषां रूपं न बुद्धवान्॥
ततो निमिं च दैत्येन्द्रं मत्वा देवं महाजवः॥ १९.१ ॥

केशेषु गृह्य तं वीरं चकर्ष च ननाद च॥
ततो निमिरुवाचेदं कालनेमिं महाबलम्॥ १९.२ ॥

अहं निमिः कालनेमे सुतं मत्वा वधस्व मा॥
भवता मोहितेनाजौ देवान्मत्वासुराः स्वकाः॥ १९.३ ॥
सुरैः सुदुर्जयाः कोट्यो निहतादश विद्धि तत्॥
सर्वास्त्रवारणं मुंच ब्रह्ममस्त्रं त्वरान्वितः॥ १९.४ ॥

स तेन बोधितो दैत्यो मुक्त्वा तं संभ्रमाकुलः॥
बाणं ब्रह्मास्त्रविहितं मुमोच त्वरयान्वितः॥ १९.५ ॥

ब्रह्मास्त्रं तत्प्रजज्वाल ततः खे सुमहाद्भुतम्॥
देवानां चाभवत्सैन्यं सर्वमेव भयाकुलम्॥ १९.६ ॥

शंबरास्त्रं ततः शांतं ब्राह्मप्रतिहतं तदा॥
तस्मिन्प्रतिहते ह्यस्त्रे भास्करः प्रभुः॥ १९.७ ॥

महेंद्रजालमास्ताय चक्रे भीषणां तनुम्॥
विस्फूर्जत्करसंघातसमाक्रांतजगत्त्रयः॥ १९.८ ॥

ततापि दानवानीकं गलन्मज्जाङ्घ्रिशोणितम्॥
चक्षूंषि दानवेन्द्राणां चकारांधानि स प्रभुः॥ १९.९ ॥

गजानामगलन्मेदः पेतुश्चापि रथा भुवि॥
तुरंगमाः श्वसंतश्च घर्मार्ता रथिनोपि च॥ १९.१० ॥

इतश्चेतश्च सलिलं प्रार्थयंतस्तृषातुराः॥
गिरिद्रोणीश्च पादांश्च गिरिणां गहनानि च॥ १९.११ ॥

तेषां प्रार्थयतां शीघ्रमन्योन्यं च विसर्पिणाम्॥
दावाग्निरज्वलत्तीव्रो घोरो नर्दग्धपादपः॥ १९.१२ ॥

तोयार्थिनः पुरो दृष्ट्वा तोयं कल्लो लमालितम्॥
पुरःस्थितमपि प्राप्तुं न शेकुरुपसादितुम्॥ १९.१३ ॥

अप्राप्य सलिलं भूमावभ्याशे द्रुतमेव ते॥
तत्रतत्र व्यदृश्यन्त मृता दैत्येश्वराभुवि॥ १९.१४ ॥

रथा गजाश्च पतितास्तुरंगाश्च श्रमान्विताः॥
स्थिता वमंतो धावंतो गलदद्रुतवसास्रजः॥ १९.१५ ॥

दानवानां कोटिकोटि व्यदृश्यतमृतं तदा॥
एवं क्षयो जानवानां तस्मिन्महति वर्तिते॥ १९.१६ ॥

प्रकोपोद्भूतताम्राक्षः कालनेमी रुषातुरः॥
बभूव कालमेधाभः स्फुरद्रोमशतह्रदः॥ १९.१७ ॥

गंभीरास्फोटनिर्ह्रादजगद्धृदयकंपनः॥
प्रच्छाद्य गगनं सूर्यप्रभां सर्वां व्यनाशयत्॥ १९.१८ ॥

ववर्ष शीतं च जलं दानवेन्द्रबलं प्रति॥
दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात्॥ १९.१९ ॥

बीजांकुरा इव म्लानाः प्राप्य वृष्टिं धरातले॥
ततः स मेघरूपेण कालनेमिर्महासुराः॥ १९.२० ॥

शस्त्रवृष्टिं ववर्षोग्रां देवनीकेषु दुर्जयः॥
तया वृष्ट्या पीड्यमाना दैत्यैरन्यैश्च देवताः॥ १९.२१ ॥

गतिं कांचिन्न पश्यन्ति गावः शीतार्दिता इव॥
परस्परं व्यलीयंत गजेषु तुरगेषु च॥
रथेषु च भयत्रस्तास्तत्रतत्र निलिल्यिरे॥ १९.२२ ॥

एवं ते लीयमानाश्च निहताः कालने मिना॥
दृश्यंते पतिता देवाः शस्त्रभिन्नंगसंधयः॥ १९.२३ ॥

विभिन्ना भिन्नमूर्धानस्तथा भिन्नोरुजानवः॥
विपर्यस्तं रथांगैश्च पतितं ध्वजशक्तिभिः॥ १९.२४ ॥

तुरंगाणां सहस्राणि गजानामयुतानि च॥
रक्तेन तेषां घोरेण दुस्तरा चाभवन्मही॥ १९.२५ ॥

एवमाजौ महादैत्यः कालनेमिर्महासुरः॥
जघ्ने मुहुर्तमात्रेण गंधर्वाणां दशायुतम्॥ १९.२६ ॥

यक्षाणां पंचलक्षाणि किंनराणां तथैव च॥
जघ्ने पिशाचमुख्यानां सप्तलक्षाणि निर्भयः॥ १९.२७ ॥

इतरेषां न संख्यास्ति सुरजातिनिकायिनाम्॥
जघ्ने स कोटिशः क्रुद्धः कालनेमिर्मदोत्कटः॥ १९.२८ ॥

एवं प्रतिभये भीमे तदामर महाक्षये॥
संक्रुद्धावश्विनौ वीरौ चित्रास्त्रकवचोज्जवलौ॥ १९.२९ ॥

जघ्नतुस्तौ रणे दैत्यमेकैकं षष्टिभिः शरैः॥
निर्भिद्य ते महादैत्यं सपुंखा विविशुर्महीम्॥ १९.३० ॥

ताभ्यां बाणप्रहारैस्तु किंचित्सोऽवाप्तचेतनः॥
जग्राह चक्रं लक्षारं तैलधौतं रणेऽधिकम्॥ १९.३१ ॥

तेन चक्रेण सोश्विभ्यां चिच्छेद रथकूबरम्॥
जग्राहाथ धनुर्दैत्यः शरांश्चाशीविषोपमान्॥ १९.३२ ॥

ववर्ष भिषजोर्मूर्ध्नि संछाद्याकाशगोचरम्॥
तावप्यस्त्रैः स्मृतैः सर्वाश्छेदतुर्दैत्यसायकान्॥ १९.३३ ॥

तच्च करम तयोर्दृष्ट्वा विस्मितः कोपमाविशत्॥
जग्राह मुद्गरं भीम कालदंडविभीषणम्॥ १९.३४ ॥

स तदमुद्भ्राम्य वेगेन चिक्षेपास्य रथं प्रति॥
तं तु मुद्गरमायांतमालोक्यांबरगोचरे॥ १९.३५ ॥

मुक्त्वा रथावुभौ वेगादाप्लुतौ तरसाश्विनौ॥
तौ रथौ स तु निष्पिष्य मुद्गरोऽचलसंनिभः॥ १९.३६ ॥

दारयामास धरणीं हेमजालपरिष्कृतः॥
तस्य कर्माथ तद्दृष्ट्वा भिषजौ चित्रयोधिनौ॥ १९.३७ ॥

वज्रास्त्रं च प्रकुर्वाणौ दानवेंद्रमयुध्यताम्॥
घोरवज्रप्रहारैस्तु दानवः स परिक्षतः॥ १९.३८ ॥

रथो ध्वजो धनुश्चैव छत्रं च कवचं तथा॥
क्षणेन शतधा भूतं सर्वसैन्यस्य पश्यतः॥ १९.३९ ॥

तद्दृष्ट्वा दुकरं कर्म सोऽश्विभ्यां भीमविक्रमः॥
नारायणास्त्रं बलवान्मुमोच रणमूर्धनि॥ १९.४० ॥

ततः शशाम वज्रास्त्रं कालनेमिस्ततो रुषा॥
जीवग्राहं ग्राहयितुमश्विनौ तौ प्रचक्रमे॥ १९.४१ ॥

तावभिप्रायमालक्ष्य संत्यज्य समरांगणम्॥
पदाती वेपमानांगौ प्रद्रुतौ वासवोयतः॥ १९.४२ ॥

तयोरनुगतो दैत्यः कालनेमिर्निदन्मुहुः॥
प्राप्येंद्रस्य बलं क्रूरो दैत्यानीकपदानुगः॥ १९.४३ ॥

स काल इव कल्पांते यदा वासवमाद्रुतः॥
तं दृष्ट्वा सर्वभूतानि विविशुर्विह्वलानि तु॥ १९.४४ ॥

हाहारावं प्रकुर्वाणास्तदा देवाश्च मेनिरे॥
पराजयं महेंद्रस्य सर्वलोकक्षयावहम्॥ १९.४५ ॥

चेलुः शिखरिणो मुख्याः पेतुरुल्का नभस्तलात्॥
जगर्जुर्जलदा दिक्षु संभूतश्च महारवः॥ १९.४६ ॥

तां भूताविकृतिं दृष्ट्वा देवाः सेंद्रा भयावहाः॥
मनसा शरणं जग्मुर्वासुदेवं जगत्पतिम्॥ १९.४७ ॥

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च॥
जगद्धिताय कृष्णाय गोविंदाय नमोनमः॥ १९.४८ ॥

स नो रक्षतु गोविंदो भयार्तास्ते जगुः सुराः॥
सुराणां चिंतितं ज्ञात्वा भगवान्गरुडध्वजः॥ १९.४९ ॥

विबुध्यैव च पर्यंकाद्योगनिद्रां विहाय सः॥
लक्ष्मीकरयुगांभोजलालितांघ्रिसरोरुहः॥ १९.५० ॥

शारदंबरनीराब्जकांतिदेहच्छविः प्रभुः॥
कौस्तुभोद्भासिहृदयः कांतकेयूरभास्करः॥ १९.५१ ॥

विमृश्य सुरसंक्षोभं वैनतेयमाताह्वयत्॥
आहूतेऽविस्थितेतस्मिन्गरुडे दुःखिते भृशम्॥ १९.५२ ॥

दिव्यनानास्त्रतीक्ष्णार्चिरारुह्यागात्सुराहवम्॥
तत्रापश्यत देवेंद्रं भयभीतमभिद्रुतम्॥ १९.५३ ॥

दानवेंद्रैर्नवांभोदसच्छायैः सर्वथोत्कटैः॥
यथा हि पुरुषं घोरैरभाग्यैरर्थकांक्षिभिः॥ १९.५४ ॥

तत्त्राणायाव्रजद्विष्णुः स्तूयमानो मुहुः सुरैः॥
अभाग्येभ्यः परित्रातुं सुकृतं निर्मलं यथा॥ १९.५५ ॥

अथापश्यत दैत्येंद्रो वियति द्युतिमंडलम्॥
स्फुरंतमुदयाच्छीघ्रं कांतं सूर्यशतं यथा॥ १९.५६ ॥

प्रभवं ज्ञातुमिच्छंतो दानवास्तस्य तेजसः॥
गरुडं तमथा पश्यन्कल्पांतानलभैरवम्॥ १९.५७ ॥

तत्र स्थितं चतुर्बाहुं हरिं चानुपमद्युतिम्॥
तमालोक्यासुरेंद्रास्तु हर्षसंपूर्णमानसाः॥ १९.५८ ॥

अयं स देवः सर्वेषां शरणं केशवोऽरिहा॥
अस्मिञ्जिते जिताः सर्वा देवता नात्र संशयः॥ १९.५९ ॥

एनमाश्रित्य लोकेशा यज्ञभागभुजोऽमराः॥
इत्युक्त्वा ते समागम्य सर्व एव ततस्ततः॥ १९.६० ॥

तं जघ्नुर्विविधैः शस्त्रैः परिवार्य समंततः॥
कालनेमिप्रभृतयो दश दैत्यमहारथाः॥ १९.६१ ॥

षष्ट्या विव्याधबाणानां कालनेमिर्जनार्दनम्॥
निमिः शतेन बाणानां मथनोऽशीतिभिः शरैः॥ १९.६२ ॥

जंभकश्चैव सप्तत्या शुंभो दशभिरेव च॥
शेषा दैत्ये श्वराः सव विष्णुमेकैकशः शरैः॥ १९.६३ ॥

दशभिर्दशभिः शल्यैर्जघ्नुः सगरुडं रणे॥
तेषाममृष्यत्तत्कर्म विष्णुर्दानवसूदनः॥ १९.६४ ॥

एकैकं दानवं जघ्ने षड्भिः पड्भिरजिह्नगैः॥
आकर्णकृष्टैर्भूयश्च कालनेमिस्त्रिभिः शरैः॥ १९.६५ ॥

विष्णुं विव्याध हृदये रोषाद्रक्तविलोचनः॥
तस्याशोभंत ते बाणा हृदये तप्तकांचनाः॥ १९.६६ ॥

मयूखा इव संदीप्ताः कौस्तुभस्य स्फुरत्त्विषः॥
तैर्बाणैः किंचिदायस्तो हरिर्जग्राह मुद्गरम्॥ १९.६७ ॥

स तमुद्ग्राह्य वेगेन दानवाय मुमोच वै॥
दानवेन्द्रस्तमप्राप्तं वियत्येव शतैः शरैः॥ १९.६८ ॥

चिच्छेद तिलशः क्रुद्धो दर्शयन्पाणिलाघवम्॥
ततो विष्णुः प्रकुपितः प्रासं जग्राह भैरवम्॥ १९.६९ ॥

तेन दैत्यस्य हृदयं ताडयामास वेगतः॥
क्षणेन लब्धसंज्ञस्तु कालनेमिर्महासुरः॥ १९.७० ॥

शक्तिं जग्राह तीक्ष्णाग्रां हेमघंटाट्टहासिनीम्॥
तया वामं भुजं विष्णोर्बिभेद दितिनंदनः॥ १९.७१ ॥

भिन्नं शक्त्या भुजं तस्य स्रुतशोणितमाबभौ॥
नीले बला हके विद्युद्विद्योतंती यथा मुहुः॥ १९.७२ ॥

ततो विष्णुः प्रकुपितो जग्राह विपुलं धनुः॥
सप्तदश च नाराचांस्तीक्ष्णाग्रान्मर्मभेदिनः॥ १९.७३ ॥

दैत्यस्य हृदयं षड्भिर्विव्याध च शरैस्त्रिभिः॥
चतुर्भिः सारथिं चास्य ध्वजं चैकेन पत्रिणा॥ १९.७४ ॥

द्वाभ्यां धनुर्ज्याधनुषी भुजं चैकेन पत्रिणा॥
स विद्धो हृदये गाढं दोषैर्मूढो यथा नरः॥ १९.७५ ॥

स्रुतरक्तारुणः प्रांशुः पीडाचलितमानसः॥
चकंपे मारुतेनेव चोदितः किंशुकद्रुमः॥ १९.७६ ॥

ततः कंपितमालक्ष्य गदां जग्राह केशवः॥
तां च वेगेन चिक्षेप कालनेमिवधं प्रति॥ १९.७७ ॥

सा पपात शिरस्युग्रा सहसा कालनेमिनः॥
संचूर्णितोत्तमां गस्तु निष्पिष्टमुकुटोसुरः॥ १९.७८ ॥

स्रुतरक्तौघरंध्रश्च स्रुतधातुरिवाचलः॥
पपात स्वे रथे भग्नो विसंज्ञः शिष्टजीवनः॥ १९.७९ ॥

पतितस्य रथोपस्थे दानवस्याच्युतोऽरिहा॥
स्मितपूर्वमुवाचेदं वाक्यं चक्रायुधः प्रभुः॥ १९.८० ॥

गच्छासुर विमुक्तोऽसि सांप्रतं जीव निर्वृतः॥
ततः स्वल्पेन कालेन अहमेव तवांतकः॥ १९.८१ ॥

एवं वचस्तस्य निशम्य विष्णोः सर्वेश्वरस्याथ रथं निमेषात्॥
निनाय दूरं किल कालनेमिनो भीतस्तदा सारथिर्लोकनाथात्॥ १९.८२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे देवासुरासंग्रामे कालनेमिकृतयुद्धसंमर्दे विष्णुना सह कालनेमियुद्धवर्णनंनामैकोनविंशोऽध्यायः॥ १९ ॥ छ ॥

**॥नारद उवाच॥**

तं दृष्ट्वा दानवाः सर्वे क्रुद्धाः स्वैःस्वैर्बलैर्वृताः॥
सरघा इव माक्षिकं रुरुधुः सर्वतस्ततः॥ २०.१ ॥

पर्वताभे गजे भीमे मदस्राविणि दुर्दमे॥
सितचित्रपताके तु प्रभिन्नकरटामुखे॥ २०.२ ॥

स्वर्णवर्णाचिते यद्वन्नगे दावाग्निसंवृते॥
आरुह्यजौ निमिर्दैत्यो हरिं प्रत्युद्ययौ बली॥ २०.३ ॥

तस्यासन्दानवा रौद्रा गजस्य परिरक्षिणः॥
सप्तविंशतिकोट्यश्च किरीटकवचोज्जवलाः॥ २०.४ ॥

अश्वमारुह्य शैलाभं हरिमाद्रवत्॥
पंचयोजनप्रग्रीवमुष्ट्रमास्थाय जंभकः॥ २०.५ ॥

शुम्भो मेषं समारुह्याव्रजद्द्वादशयोजनम्॥
अपरे दानवेन्द्राश्च यत्ता नानास्त्रापाणयः॥ २०.६ ॥

आजग्मुः समरे क्रुद्धा विष्णुमक्लिष्टकारिणम्॥
परघेण निमिर्दैत्यो मथनो मुद्गरेण च॥ २०.७ ॥

शुम्भः शूलेन तीक्ष्णेन प्रासेन ग्रसनस्तथा॥
चक्रेण क्रथनः क्रुद्धो जंभः शक्त्या महारणे॥ २०.८ ॥

जघ्नुर्नारायणं शेषा विशिखैर्मर्मभेदिभिः॥
तान्यस्त्राणि प्रयुक्तानि विविशुः पुरुषोत्तमम्॥ २०.९ ॥

उपदेशा गुरोर्यद्वत्सच्छिष्यं बहुधेरिताः॥
ततः क्रुद्धो हरिर्गृह्य धनुर्बाणांश्च पुष्कलान्॥ २०.१० ॥

ममर्द दैत्यसेनां तद्धर्ममर्थवचो यथा॥
निमिं विव्याध विंशत्या वाणैरनलवर्चसैः॥ २०.११ ॥

मथनं दशभिश्चैव शुम्भं पंचभिरेव च॥
शतेन महिषं क्रुद्धो विव्याधोरसि माधवः॥ २०.१२ ॥

जंभं द्वादशभिस्तीक्ष्णैः सर्वांश्चैकैक शोऽष्टभिः॥
तस्य तल्लाघवं दृष्ट्वा दानवाः क्रोधमूर्छिताः॥ २०.१३ ॥

चक्रुर्गाढतरं यत्नमावृण्वाना हरिं शरैः॥
चिच्छेदाथ धनुर्ज्यां च निमिर्भल्लेन दानवः॥ २०.१४ ॥

हस्ताच्चापं च संरंभाच्चिच्छेद महिषासुरः॥
षीडयामासा गरुडं जंभो बाणायुतैस्त्रिभिः॥ २०.१५ ॥।
भुजावस्य च विव्याध शंभो बाणायुतेन वै॥
ततो विस्मितचित्तस्तु गदां जग्राह माधवः॥ २०.१६ ॥

तां प्राहिणोत्स वेगेन मथनाय महाहवे॥
तामाप्राप्तां निमिर्बाणैर्मुशलाभैः सहस्रशः॥ २०.१७ ॥

आहत्य पातयामास विनदन्कालमेघवत्॥
ततोंऽतरिक्षे हाहेति भूतानां जज्ञिरे कथाः॥ २०.१८ ॥

नैतदस्ति बलं व्यक्तं यत्राशीर्यत सा गदा॥
तां हरिः पतितां दृष्ट्वा अस्थाने प्रार्थनामिव॥ २०.१९ ॥

जग्राह मुद्गरं घोरं दिव्यरत्नपरिष्कृतम्॥
तं मुमोचातिवेगेन निमिमुद्दिश्य दानवम्॥ २०.२० ॥

तमायांतं वियत्येव त्रयो दैत्या ह्यवारयन्॥
गदया दंभदैत्यस्तु ग्रसनः पट्टिशेन तु॥ २०.२१ ॥

शक्त्या च महिषो दैत्यो विनदंतो महाररवम्॥
निराकृतं तमालोक्य दुर्जनैः सुजनं यथा॥ २०.२२ ॥

जग्राह शक्तिमुग्रोग्रां शतघंटामहास्वनाम्॥
जंभाय तां समुद्दिश्य प्राहिणोद्भीषणेरणे॥ २०.२३ ॥

तामायान्तीमथालोक्य जंभोऽन्यस्य रथात्त्वरात्॥
आप्लुत्य लीलया गृहणन्कामिनीं कामुको यथा॥ २०.२४ ॥

तयैव गरुडं मूर्ध्नि जघ्ने स प्रहसन्बली॥
ततो भूयो रथं प्राप्य घनुर्गृह्यभ्ययोजयत्॥ २०.२५ ॥

विचेताश्चाभवद्युद्धे गरुडः शक्तिपीडितः॥
ततः प्रहस्य तं विष्णुः साधुसाध्विति भारत॥ २०.२६ ॥

करस्पर्शेन कृतवान्विमोहं विनतात्मजम्॥
समाश्वास्य च तं वाग्भिः शक्तिं दृष्ट्वा च निष्फलाम्॥ २०.२७ ॥

कुभार्यस्य यथा पुंसः सर्वस्याच्चिंतितं वृथा॥
दृठसारमहामौर्वीमन्यां संयोजयत्ततः॥ २०.२८ ॥

कृत्वा च तलनिर्घोषं रौद्रमस्त्रं मुमोच सः॥
ततोऽस्त्रतेजसा सर्वमाकाशं नैव दृश्यते॥ २०.२९ ॥

भूमिर्दिशश्च विदिशो बामजालमया बुभुः॥
दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽसुरः॥ २०.३० ॥

ब्राह्ममस्त्रं चकाराशु सर्वास्त्रविनिवारणम्॥
तेन तत्प्रशमं यातं रौद्रास्त्रं लोकभीषणम्॥ २०.३१ ॥

अस्त्रे प्रतिहते तस्मिन्विष्णुर्दानवसूदनः॥
कालदंडास्त्रमकरोत्सर्वलोकभयंकरम्॥ २०.३२ ॥

संधीयमानेस्त्रे तस्मिन्मारुतः परुषो ववौ॥
चकंपे च मही देवी भिन्नाश्चांबुधयोऽभवन्॥ २०.३३ ॥

तदस्त्रमुग्रं दृष्ट्वा तु दानवा युद्धदुर्मदाः॥
चक्रुरस्त्राणि दिव्यानि नानारूपाणि संयुगे॥ २०.३४ ॥

नारायणांस्त्रं ग्रसनस्तु चक्रे त्वाष्ट्रं निमिश्चास्त्रवरं मुमोच॥
ऐषीकमस्त्रं च चकार जंभो युद्धस्य दण्डास्त्र निवारणाय॥ २०.३५ ॥

यावच्च संधानवशं प्रयांति नारायणादीनि निवारणाय॥
तावत्क्षणेनैव जघान कोटींदैत्येश्वराणां किल कालदंडः॥ २०.३६ ॥

अनंतरं शांतभयं तदस्त्रं दैत्यास्त्रयोगेन च कालदण्डम्॥
शांतं तदालोक्य हरिः स्वमस्त्रं कोपेन कालानलतुल्यमूर्तिः॥ २०.३७ ॥

जग्राह चक्रं तपना युतप्रभमुग्रारमात्मानमिव द्वितीयम्॥
चिक्षेप सेनापतये ज्वलंतं चतुर्भूजः संयति संप्रगृह्य॥ २०.३८ ॥

तदाव्रजच्चक्रमथो विलोक्य सर्वात्मना दैत्यवराः स्ववीर्यात्॥
नाशक्नुन्वारयितुं प्रचंडं दैवं यथा पूर्वमिवोपपन्नम्॥ २०.३९ ॥

तदप्रतर्क्यं नवहेतितुल्यं चक्रं पपात ग्रसनस्य कण्ठे॥
तद्रक्तधारा रुणघोरनाभि जगाम भूयोपि करं मुरारेः॥ २०.४० ॥

चक्राहतः संयति दानवश्च पपात भूमौ प्रममार चापि॥
दैत्याश्च शेषा भृशशौकमापुः क्रोधं च केचित्पिपिषुर्भुजांश्च॥ २०.४१ ॥

ततो विनिहते दैत्ये ग्रसने बलनायके॥
निर्मर्यादमयुध्यंत हरिणा सह दानवाः॥ २०.४२ ॥

पट्टिशैर्मुशलैः प्रासैग्नि दाभिः कणपैरपि॥
तीक्ष्णाननैश्च नाराचैश्चक्रैः शक्तिभिरेव च॥ २०.४३ ॥

तदस्त्रजालं तैर्मुक्तं लब्धलक्षो जनार्दनः॥
एकैकं शतधा चक्रे बाणैरग्नि शिखोपमैः॥ २०.४४ ॥

जघान तेषां संक्रुद्धः कोटिकोटिं जनार्दनः॥
ततस्ते सहसा भूत्वा न्यपतन्केशवोपरि॥ २०.४५ ॥

गरुडं जगृहुः केचित्पादयोः शतशोऽसुराः॥
ललंबिरे च पक्षाभ्यां मुखे चान्ये ललंबिरे॥ २०.४६ ॥

केशवस्यापि धनुषि भुजयोः शीर्ष एव च॥
ललंबिरे महादैत्या निनदंतो मुहुर्मुहुः॥ २०.४७ ॥

तदद्भुतं महद्दृष्ट्वा सिद्धचारणवार्तिकाः॥
हाहेति मुमुचुर्नादसंबरे चास्तुवन्हरिम्॥ २०.४८ ॥

ततो हरिर्विनिर्धूय पातयामास तान्भुवि॥
यथा प्रबुद्धः पुरुषो दोषान्संसारसंभवान्॥ २०.४९ ॥

विकोशं च ततः नंदकं खड्गमुत्तमम्॥
चर्म चाप्यमलं विष्णुः पदातिस्तानधावत॥ २०.५० ॥

ततो मुहूर्तमात्रेण पद्मानि दश केशवः॥
चकर्त्त मार्गे बहुभिर्विचरन्दैत्यसत्तमान्॥ २०.५१ ॥

ततो निमिप्रभृतयो विनद्यासुरसत्तमाः॥
अधावंत महेष्वासाः केशवं पादचारिणम्॥ २०.५२ ॥

गरुत्मांश्चाभ्ययात्तूर्णमारुरोह च तं हरिः॥
उवाच च गरुत्मंतं तस्मिंश्च तुमुले रणे॥ २०.५३ ॥९
अश्रांतो यदि ताक्ष्र्यासि मथनं प्रति तद्व्रज॥
श्रांतश्चेच्च मुहूर्तं त्वं रणादपसृतो भव॥ २०.५४ ॥
**॥ताक्ष्र्य उवाच॥**
न मे श्रमोऽस्ति लोकेश किंचित्संस्मरतश्च मे॥
यन्मे सुतान्वाहनत्वे कल्पयामास तारकः॥ २०.५५ ॥

इति ब्रवन्रणे दैत्यं मथनं प्रति सोऽगमत्॥
दैत्यस्तवभिमुखं दृष्ट्वा शंखचक्रगदाधरम्॥ २०.५६ ॥

जघान भिंडिपालेन शितधारेण वक्षसि॥

तं प्रहारमचिंत्यैव विष्णुस्तस्मिन्महाहवे॥ २०.५७ ॥

जघान पंचभिर्बाणैर्गिरींद्रस्यापि भेदकैः॥
आकर्णकृष्टैर्दशभिः पुनर्विद्धः स्तनांतरे॥ २०.५८ ॥

विचेतनो मुहूर्तात्स संस्तभ्य मथनः पुनः॥
गृहीत्वा परिघं मूर्ध्नि जनार्दनमताडयत्॥ २०.५९ ॥

विष्णुस्तेन प्रहारेण किंचिदाघूर्णितोऽभवत्॥
ततः कोपविवृत्ताक्षो गदां जग्राह माधवः॥ २०.६० ॥

तया संताडयामास मथनं हृदये दृढम्॥
स पपात तथा भूमौ चूर्णितांगो ममार च॥ २०.६१ ॥

तस्मिन्निपतिते भूमौ मथने मथिते भृशम्॥
अवसादं युयुर्दैत्याः सर्वे ते युद्धमण्डले॥ २०.६२ ॥

ततस्तेषु विषण्णेषु दानवेष्वतिमानिषु॥
चुकोप रक्तनयनो महिषो दानवेश्वरः॥ २०.६३ ॥

प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमाश्रितः॥
रीक्ष्णधारेण शूलेन महिषो हरिमर्दयन्॥ २०.६४ ॥

शक्त्या च गरुडं वीरो हृदयेऽभ्यहनद्दृढम्॥
ततो विवृत्य वदनं महामलगुहानिभम्॥ २०.६५ ॥

ग्रस्तुमैच्छद्रणे दैत्यः सगरुत्मंतमच्युतम्॥
अथाच्युतोऽपि विज्ञाय दानवस्य चिकीर्षितम्॥ २०.६६ ॥

वदनं पूरयामास दिव्यैस्त्रैर्महाबलः॥
स तैर्बाणैरभिहतो महिषोऽचलसंनिभः॥ २०.६७ ॥

परिवर्तितकायार्धः पपाताथ ममार च॥
महिषं पतितं दृष्ट्वा जीवयित्वा पुनर्हरिः॥ २०.६८ ॥

महिषं प्राह मत्तस्त्वं वधं नार्हसि दानव॥
योषिद्वध्यः पुरोक्तस्त्वं साक्षात्कमलयोनिना॥ २०.६९ ॥

उत्तिष्ठ गच्छ मन्मुक्तो द्रुतमस्मान्महारणात्॥
इत्युक्तो हरिणा तस्माद्देशादपगतोऽसुरः॥ २०.७० ॥

तस्मिन्पराङ्मुखे दैत्ये महिषे शुंभदानवः॥

संदष्टौष्ठपुटाटोपो भृकुटीकुटिलाननः॥ २०.७१ ॥

निर्मथ्य पाणिना पाणिं धनुरादाय भैरवम्॥
सज्जीकृत्य महाघोरान्मुमोच शतशः शरान्॥ २०.७२ ॥

स चित्रयोधी दृढमुष्टिपातस्ततश्व विष्णुं च दैत्यः॥
बाणैर्ज्वलद्वह्निशिखानिकाशैः क्षिप्तैरसंख्यैः प्रतिघाहीनैः॥ २०.७३ ॥

विष्णुश्च दैत्येंद्रशरार्दितो भृशं भुशुंडिमादाय कृतांततुल्याम्॥
तया मुखं चास्य पिपेष संख्ये शुंभस्य जत्रुं च धराधराभम्॥ २०.७४ ॥

ततस्त्रिभिः शंभुभुजं द्विषष्ट्या सूतस्य शीर्षं दशक्षिश्च केतुम्॥
विष्णुर्विकृष्टैः श्रवणावसानं दैत्यस्य बाणैर्ज्वलनार्कवर्णैः॥ २०.७५ ॥

स तैश्च विद्धो व्यथितो बभूव दैत्येश्वरो विस्रुतशोणिताक्तः॥
ततोऽस्य किंचिच्चलितस्य धैर्यादुवाच शंखांबुजसार्ङ्गपाणिः॥ २०.७६ ॥

योषित्सुवध्योऽसि रणं विभुंच शुंभाऽशुभ स्वल्पतरैरहोभिः॥
मत्तोर्हसि त्वं न वृथैव मूढ ततोऽपयातः स च शंभदानवः॥ २०.७७ ॥

जम्भोऽथ तद्विष्णुमुखान्निशम्य जगर्ज चोच्चैः कृतसिंहनादः॥
प्रोवाच वाक्यं च सलीलमाजौ महाट्टहासेन जगद्विकंप्य॥ २०.७८ ॥

किमेभिस्ते जलावास दैत्यैर्हीनपराक्रमैः॥
मामासादय युद्धेऽस्मिन्यदि ते पौरुषं क्वचित्॥ २०.७९ ॥

यत्ते पूर्वं हता दैत्या हिरण्याक्षमुखाः किल॥
जंभस्तदाभवन्नैव पश्य मामद्य संस्थितम्॥ २०.८० ॥

पश्य तालप्रती काशौ भुजावेतौ हरे मम॥
वक्षो वा वज्रकठिनं मयि प्रहर तत्सुखम्॥ २०.८१ ॥

इत्युक्तः केशवस्तेन सृक्किणी संलिहन्रुषा॥
मुमोच परिघंघोरं विरीणामपि दारणम्॥ २०.८२ ॥

ततस्तस्याप्यनुपदं कालायसमयं दृढम्॥
मुमोच मुद्गरं विष्णुर्द्वितीयं पर्वतं यथा॥ २०.८३ ॥

तदायुधद्वयं दृष्ट्वा जंभो न्यस्य रथे धनुः॥
आप्लुत्य परिघं गृह्य गरुडं तेन जघ्निवान्॥ २०.८४ ॥

द्वितीयं मुद्गरं चानु गृहीत्वा विनदन्रणे॥

सर्वप्राणेन गोविंदं तेन मूर्ध्नि जघान सः॥ २०.८५ ॥

ताभ्यां चातिप्रहाराभ्यामुभौ गरुडकेशवौ॥
मोहाविष्टौ विचेतस्कौ मृतकल्पाविवासताम्॥ २०.८६ ॥

तदद्भुतं महद्दृष्ट्वा जगर्जुर्दैत्यसत्तमाः॥
नैतान्हर्षमदोद्धूतानिदं सेहे जगत्तदा॥ २०.८७ ॥

सिंहनादैस्तलोन्नाहैर्धनुर्नादैश्च बाणजैः॥
जंभं ते हर्षयामासुर्वासांस्यादुधुवुश्च ते॥ २०.८८ ॥

शंखांश्च पूरयामासुश्चिक्षिपुर्देवता भृशम्॥ २०.८९ ॥

संज्ञामवाप्याथ महारणे हरिः सवैनतेयः परिरभ्य जंभम्॥
पराङ्मुखः संयुगादप्रधृष्यात्पलायनं वेगपरश्चकार॥ २०.९० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे दैत्यैः सह विष्णोर्युद्धवर्णनंनाम विंशोऽध्यायः॥ २० ॥ छ ॥

**॥नारद उवाच॥**

तमालोक्य पलायंतं विध्वस्तध्वजकार्मुकम्॥
दैत्यांश्च मुदितानिंद्रः कर्तव्यं नाध्यगच्छत॥ २१.१ ॥

अथायान्निकटं विष्णोः सुरेशस्त्वरयान्वितः॥
उवाच चैनं मधुरमुत्साहपरिबृंहितम्॥ २१.२ ॥

किमेभिः क्रीडसे देव दानवैर्दुष्टमानसैः॥
दुर्जनैर्लब्धरंध्रस्य पुरुषस्य कुतः क्रियाः॥ २१.३ ॥

शक्तेनोपेक्षितो नीचो मन्यते बलमात्मनः॥
तस्मान्न नीचं मतिमानुपेक्षेत कथंचन॥ २१.४ ॥

अथाग्रेसरसंपत्त्या रथिनो जयमाययुः॥
कस्ते सखाभवत्पूर्वं हिरण्याक्षवधे विभो॥ २१.५ ॥

हिरण्यकशिपुर्दैत्यो वीर्यशाली मदोद्धतः॥
प्राप्य त्वां तृमवन्नष्टस्तत्र कोऽग्रेसरस्तव॥ २१.६ ॥

पूर्वं प्रतिबला दैत्या मधुकैटभसन्निभाः॥
निविष्टास्त्वां तु संप्राप्य शलभा इव पावकम्॥ २१.७ ॥

युगेयुगे च दैत्यानां त्वत्तो नाशोऽभवद्धरे॥
तथैवाद्येह भीतानां त्वं हि विष्णो सुराश्रयः॥ २१.८ ॥

एवं संनोदितो विष्णुर्व्यवर्धत महाभुजः॥
बलेन तेजसा ऋद्ध्या सर्वभूताश्रयोऽरिहा॥ २१.९ ॥

अथोवाच सहस्राक्षं केशवः प्रहसन्निव॥
एवमेतद्यथा प्राह भवानस्मद्गतं वचः॥ २१.१० ॥

त्रैलोक्यदानवान्सर्वान्दग्धुं शक्तः क्षणादहम्॥
दुर्जस्तारकः किं तु मुक्त्वा सप्तदिनं शिशुम्॥ २१.११ ॥

महिषश्चैव शुंभश्च उभौ वध्यौ च योषिता॥
जंभो दुर्वाससा शप्तः शक्रवध्यो भवानिति॥
तस्मात्त्वं दिव्यवीर्येण जहि जंभं मदोत्कटम्॥ २१.१२ ॥

अवध्यः सर्वभूतानां त्वामृते स तु दानवः॥ २१.१३ ॥

मया गुप्तो रणे जंभो जगत्कंटकमुद्धर॥
तद्वैकुंठवचः श्रुत्वा सहस्राक्षोमरारिहा॥ २१.१४ ॥

समादिशत्सुराध्यक्षान्सैन्यस्य रचनां प्रति॥
ततश्चाभ्यर्थितो देवैर्विष्णुः सैन्यमकल्पयत्॥ २१.१५ ॥

यत्सारं सर्वलोकस्य वीर्यस्य तपसोऽपि च॥
तदैकादश रुद्रांश्च चकाराग्रेसरान्हरिः॥ २१.१६ ॥

व्यालीढांगा महादेवा बलिनो नीलकंधराः॥
चंद्रखंडत्रिपुंड्राश्च पिंगाक्षाः शूलपाणयः॥ २१.१७ ॥

पिंगोत्तुंगजटाजूटाः सिंहचर्मावसायिनः॥
भस्मोद्धूलितगात्राश्च भुजमंडलभैरवाः॥ २१.१८ ॥

कपालीशादयो रुद्रा विद्रावितमहाऽसुराः॥
कपाली पिंगलो भीमो विरुपाक्षो विलोहितः॥ २१.१९ ॥

अजकः शासनः शास्ता शंभुश्चंद्रो भवस्तथा॥
एत एकादशनंतबला रुद्राः प्रभाविनः॥ २१.२० ॥

अपालयंत त्रिदशान्विगर्जंत इवांबुदाः॥
हिमाचलाभे महति कांचनांबुरुहस्रहि॥ २१.२१ ॥

प्रचंचलमहाहेमघंटासंहतिमंडिते॥
ऐरावते चतुर्दंते मत्तमातंग आस्थितः॥ २१.२२ ॥

महामदजलस्रावे कामरूपे शतक्रतुः॥
तस्थौ हिमगिरेः श्रृंगे भानुमानिव दीप्तिमान्॥
तस्यारक्षत्पदं सव्यं मारुतोऽमितविक्रमः॥ २१.२३ ॥

जुगोपापरमग्निश्च ज्वालापूरितदिङ्मुखः॥
पृष्ठरक्षोऽभव द्विष्णुः समरेशः शतक्रतोः॥ २१.२४ ॥

आदित्या वसवो विश्वे मरुतश्चाश्विनावपि॥
गंधर्वा राक्षसा यक्षाः सकिंनरमहोरगाः॥ २१.२५ ॥

कोटिशःकोटिशः गृत्वा वृंदं चिह्नोपलक्षितम्॥
विश्रावयंतः स्वां कीर्तिं बंदिवृन्दैः पुरः सरैः॥ २१.२६ ॥

चेलुर्दैत्यवधे दृप्ता नानावर्णायुधध्वजाः॥ २१.२७ ॥

शतक्रतोरमरनिकायपालिता पताकिनी याननिनादनादिता॥
सितोन्नतध्वजपटकोटिमंडिता बभूव सा दितिसुतोकवर्धिनी॥ २१.२८ ॥

आयांतीं तां विलोक्याथ सुरसेनां गजासुरः॥
गजरूपी महांश्चैव संहारांभोधिविक्रमः॥ २१.२९ ॥

परश्वधायुधो दैत्यो दशनौष्ठकसंपुटः॥
ममर्द चरणे देवांश्चिक्षेपान्यान्करेण च॥ २१.३० ॥

परान्परशुना जघ्ने दैत्येंद्रो रौद्रविक्रमः॥
तस्यैवं निघ्नतः क्रुद्धा देवगन्धर्वकिंनराः॥ २१.३१ ॥

मुमुचुः संहताः सर्वे चित्रशस्त्रास्त्रसंहतिम्॥
परश्वधांश्च चक्राणि भिण्डिपालान्समुद्गरान्॥ २१.३२ ॥

कुन्तान्प्रासाञ्छरांस्तीक्ष्णान्मुद्गरांश्चापि दुःसहान्॥
तान्सर्वान्सोग्रसद्दैत्यो यूथपः कवलानिव॥ २१.३३ ॥

कोपस्फुरितदंष्ट्राग्रः करस्फोटेन नादयन्॥
सुरान्नघ्नंश्चराराजौ दुष्प्रेक्ष्यः सोऽथ दानवः॥ २१.३४ ॥

यस्मिन्यस्मिन्निपतति सुर वृंदे गजासुरः॥
तस्मिस्तीस्मिन्महाशब्दो हाहाकारो व्यजायत॥ २१.३५ ॥

अथ विद्रवमानं तब्लं प्रेक्ष्व समंततः॥
रुद्राः परस्परं प्रोचुरहंकारोत्थितार्चिषः॥ २१.३६ ॥

भोभो गृह्णत दैत्येंद्रं भिंदतैनं महाबलाः॥
कर्षतैनं शितैः शूलैर्भञ्जतैनं हि मर्मसु॥ २१.३७ ॥

कपाली वाक्यमाकर्ण्य शूलं सितशितंमुखे॥
संमार्ज्य वामहस्तेन संरंभाद्विवृतेक्षणः॥ २१.३८ ॥

प्रोत्फुल्लारुणनीलाब्जसंहतिः सर्वतो दिशः॥
अथागाद्भ्रुकुटीवक्रो दैत्येंद्राभिमुखो रणे॥ २१.३९ ॥

दृढेन मुष्टिबन्धेन शूलं विषृभ्य निर्मलः॥
जघान कुम्भदेशे तु कपाली गजदानवम्॥ २१.४० ॥

ततो दशापि ते रुद्रा निर्मलायोमयै रणे॥
जघ्नुः शूलैस्तु दैत्येंद्रं शैलवर्ष्माणमाहवे॥ २१.४१ ॥

सुस्राव शोणितं पश्चात्सर्वस्रोतस्सु तस्य वै॥
शूलरक्तेन रुद्रस्य शुशुभे गजदानवः॥ २१.४२ ॥

प्रोत्फुल्लामलनीलाब्जं शरदीवामलं सरः॥
भस्मशुभ्रतनुच्छायै रुद्र हंसैरिवावृतम्॥ २१.४३ ॥

क्रुद्धं कपालिनं दैत्यः प्रचलत्कर्णपल्लवः॥
भवं च दन्तैर्बिभिदे नाभिदेशे जगासुरः॥ २१.४४ ॥

दृष्ट्वानुरक्तं रुद्राभ्यां नवरुद्रास्ततो द्रुतम्॥
विव्यधुर्विशिखैः शूलैः शरीरममरद्विषः॥ २१.४५ ॥

ततः कपालिनं त्यक्त्वा भवं चासुरपुंगवः॥
वेगेन कुपितो दैत्यो नव रुद्रानुपाद्रवत्॥
ममर्द चरणाघातैर्दन्तैश्चापि करेण च॥ २१.४६ ॥

ततोऽसौ शूलयुद्धेन श्रममासादितो यदा॥
तदा कपाली जग्राह करमस्यामरद्विषः॥ २१.४७ ॥

भ्रामयामास चातीव वेगेन च गजासुरम्॥
दृष्ट्वाश्रमातुरं दैत्यं किंचिच्च्यावितजीवितम्॥ २१.४८ ॥

निरुत्साहं रणे तस्मिन्गतयुद्धोत्सवोऽभवत्॥
ततो भ्रमत एवास्य चर्म उत्कृत्त्य भैरवम्॥ २१.४९ ॥

स्रवत्सर्वांगर क्तौघं चकारांबरमात्मनः॥
तुष्टुवुस्तं तदा देवा बहुधा बहुभिः स्तवैः॥ २१.५० ॥

ऊचुश्चैनं चयो हन्यात्स म्रियेत ततस्त्वसौ॥
दृष्ट्वा कपालिनो रूपं गजचर्मांबरावृतम्॥ २१.५१ ॥

वित्रेसुर्दुद्रुवुर्जघ्नुर्निपेतुश्च सहस्रशः॥
एवं विलुलिते तस्मिन्दानवेन्द्रे महाबले॥ २१.५२ ॥

गजं मत्तमथारुह्य शतदुन्दुभिनादितम्॥
निमिरभ्यपतत्तूर्णं सुरसैन्यानि लोडयन्॥ २१.५३ ॥

यांयां निमिगजो याति दिशं तांतां सवाहनाः॥
दुद्रुवुश्चुक्रुशुर्देवा भयेनाकंपिता मुहुः॥ २१.५४ ॥

गन्धेन सुरमातंगा दुद्रुवुस्तस्य हस्तिनः॥
पलायितेषु सैन्येषु सुराणां पाकशासनः॥ २१.५५ ॥

तस्थौ दिक्पालकैः सार्धमष्टभिः केशवेन च॥
संप्राप्तस्तस्य मातंगो यावच्छक्रगजं प्रति॥ २१.५६ ॥

तावच्छक्रगजो भीतो मुक्त्वा नादं सुभैरवम्॥
ध्रियमाणोऽपि यत्नेन चकोर इव तिष्ठति॥ २१.५७ ॥

पलायति गजे तस्मिन्नारूढः पाकशासनः॥
विपरीतमुखं युद्धं दानवेन्द्रेण सोऽकरोत्॥ २१.५८ ॥

शतक्र तुस्तु शूलेन निमिं वक्षस्यताडयत्॥
गदया दंतिनं तस्य गल्लदेशेहनद्धृशम्॥ २१.५९ ॥

तं प्रहारचिंत्यैव निमिर्निर्भयपौरुषः॥
ऐरावतं कटीदेशे मुद्गरेणाभ्यताडयत्॥ २१.६० ॥

स हतो मुद्गरेणाथ शक्रकुञ्जर आहवे॥
जगाम पश्चात्पद्भ्यां च पृथिवीं भूधराकृतिः॥ २१.६१ ॥

लाघवात्क्षिप्रमुत्थाय ततोऽमरमहागजः॥
रणादपससर्पाथ भीषितो निमिहस्तिना॥ २१.६२ ॥

ततो वायुर्ववौ रूक्षो बहुशर्करपांशुलः॥
सम्मुखो निमिमातंगोऽकंपनोऽचलकंपनः॥
स्रुतरक्तो बभौ शैलो घनधातुह्रदो यता॥ २१.६३ ॥

धनेशोऽपि गदां गुर्वी तस्य दानवहस्तिनः॥
मुमोच वेगान्न्यपतत्सा गदा तस्य मूर्धनि॥ २१.६४ ॥

गजो गदानिपातेन स तेन परिमूर्छितः॥
दंतैर्भित्वा धरां वेगात्पपाताचलसन्निभः॥ २१.६५ ॥

पतिते च गजे तस्मिन्सिंहनादो महानभूत्॥
सर्वतः सुरसैन्यानां गजबृंहितबृंहितः॥ २१.६६ ॥

हेषारवेण चाश्वानां राणास्फोटैश्च धन्विनाम्॥
गजं तं निहतं दृष्ट्वा निमिं चापि पराङ्मुखम्॥ २१.६७ ॥

सुराणां सिंहनादं च सन्नादितदिगंतरम्॥
जंभो जज्वाल कोपेन संदीप्त इव पावकः॥ २१.६८ ॥

ततः स कोपरक्ताक्षो ध्नुष्यारोप्य सायकम्॥
तिष्ठेति चाब्रवीत्तारं सारथिं चाप्यनंदयत्॥ २१.६९ ॥

तमायांतमभिप्रेक्ष्य धनुष्याहितसा यकम्॥

शतक्रतुरदीनात्मा दृढमादत्त कार्मुकम्॥ २१.७० ॥

बाणं च तैलधौताग्रमर्धचंद्रमजिह्मगम्॥ २१.७१ ॥

तेनास्यट सशरं चापं चिच्छेद बलवृत्रहा॥
अपास्य तद्धनुश्छिन्नं जंभो दानवनंदनः॥ २१.७२ ॥

अन्यत्कार्मुकादाय वेगवद्भारसाधनम्॥
शरांश्चाशीविषाकारांस्तैलधौताजिह्मगान्॥ २१.७३ ॥

शक्रं विव्याध दशभिर्जत्रुदेशे च पत्रिबिः॥
हृदये च त्रिभिश्चैव द्वाभ्यां च स्कन्धयोर्द्वयोः॥ २१.७४ ॥

शक्रोपि दानवेन्द्राय बाणजालम भीरयन्॥
अप्राप्तान्दानवेन्द्रस्तु शराश्छक्रभुजेरितान्॥ २१.७५ ॥

चिच्छेद शतधाऽऽकाशे शरैरग्निशिखोपमैः॥
ततश्च शरजालेन देवेन्द्रो दानवेश्वरम्॥ २१.७६ ॥

आच्छादयत यत्नेन वर्षास्विव घनैर्नभः॥
दैत्योऽपि बाणजालेन विव्याध सायकैः शितैः॥ २१.७७ ॥

यथा वायुर्घनाटोपं यदवार्यं दिशां मुखे॥
शक्रोऽथ क्रोधसंरंभान्न विशेषयते यदा॥ २१.७८ ॥

दानवेन्द्रं तदा चक्रे गंधर्वास्त्रं महाद्भुतम्॥
ततोऽस्य तेजसा व्याप्तमभूद्गनगोचरम्॥ २१.७९ ॥

गन्धर्वनगरैश्चापि नानाप्राकारतोरणैः॥
मुंचद्भिरद्भुताकारैरस्त्रवृष्टिं समंततः॥ २१.८० ॥

तयास्त्रवृष्ट्या दैत्यानां हन्यमाना महाचमूः॥
जंभं शरणमागच्छत्त्राहित्राहीति भारत॥ २१.८१ ॥

ततो जंभो महावीर्यो विनद्य प्रहसन्मुहुः॥
स्मरन्साधुसमाचारं दैत्यानामभयं ददौ॥ २१.८२ ॥

ततोऽस्त्रं मौशलंनाम मुमोच सुमहाभयम्॥
अथोग्रमुसलैः सर्वमभवत्पूरितं जगत्॥ २१.८३ ॥

तैश्च भग्नानि सर्वाणि गंधर्वनगराणि च॥
अथोग्रैक प्रहारेण रथमश्वं गजं सुरम्॥ २१.८४ ॥

चूर्णयामास तत्क्षिप्रं शतशोऽथ सहस्रशः॥
ततः सुराधिपः सक्रस्त्वाष्ट्रमस्त्रमुदैरयत्॥ २१.८५ ॥

संध्यमाने ततश्चास्त्रे निश्चेरुः पावकार्चिषः॥
ततो यंत्रमया विद्याः प्रादुरासन्सहस्रशः॥ २१.८६ ॥

तैर्यंत्रैरभवद्युद्धमंतरिक्षं वितारकम्॥
तैर्यंत्रैर्मौशलं भग्नं हन्यंते चासुरास्तदा॥ २१.८७ ॥

शैलास्त्रं मुमुचे जंभो यंत्रसंघातचूर्णनम्॥
व्यामप्रमाणैरुपलैस्ततो वर्षः प्रवर्तत॥ २१.८८ ॥

त्वाष्ट्रोण निर्मितान्याशु यानि यंत्राणि भारत॥
तेनोपल निपातेन गतानि तिलशस्ततः॥ २१.८९ ॥

ततः शिरस्सु देवानां शिलाः पेतुर्महाजवाः॥
दारयंत्यश्च वसुधां चतुरंगबलं च तत्॥ २१.९० ॥

ततो वज्रास्त्रमकरोत्सस्राक्षः पुरंदरः॥
शिलामहार्षंव्यशीर्यत समंततः॥ २१.९१ ॥

ततः प्रशांतैः शैलास्त्रैर्जंभो भूधरसन्निभः॥
ऐषीकमस्त्रमकरोच्चूर्णितान्यपराक्रमः॥ २१.९२ ॥

ऐषीकेणागमन्नाशं वज्रास्त्रं गिरिदारणम्॥
विजृंभत्यथ चैषीके परमास्त्रेऽतिदारुणे॥ २१.९३ ॥

जज्वलुर्देवसैन्यानि सस्यंदनगजानि च॥
दह्यमानेष्व नीकेषु तेजसास्त्रस्य सर्वतः॥ २१.९४ ॥

आग्नेयमस्त्रमकरोद्बलहा पाकशासनः॥
तेनास्त्रेण च तन्नाशमैषीकमगमत्तदा॥ २१.९५ ॥

तस्मिन्प्रतिहते चास्त्रे पावकास्त्रं व्यजृंभत॥
जज्वाल सेना जंभस्य रथः सारथिरेव च॥ २१.९६ ॥

तः प्रतिहतास्त्रोऽसौ दैत्येंद्रः प्रतिभानवान्॥
वारुणास्त्रं मुमोचाथशमनं पावकार्चिषाम्॥ २१.९७ ॥

ततो जलधरैर्व्योम स्फुरद्विद्युल्लताकुलैः॥
गंभीराक्षसमाधारैश्चाभ्यपूर्यत मोदिनी॥ २१.९८ ॥

करींद्रकरतुल्याभिर्धाराभिः पूरितं जगत्॥
शांतमाग्नेयमस्त्रं च विलोक्येंद्रश्चकार ह॥ २१.९९ ॥

वायव्यमस्त्रमतुलं तेन मेघा ययुः क्षयम्॥
वायव्यास्त्रबलेनाथ निर्धूते मेघमंडले॥ २१.१०० ॥

बभूवानाविलं व्योम नीलोत्पलदलप्रभम्॥
वायुना चातिरूपेण कंपिताश्चैव दानवाः॥ २१.१०१ ॥

न शेकुस्तत्र ते स्थातुं रणेऽपि बलिनोऽपि ये॥
जभस्ततोऽभवच्छ्रौलो दशयोजनविस्तृतः॥ २१.१०२ ॥

मारुतप्रतिघातार्थं दानवानां बलाधिपः॥
नानाश्चर्यसमायुक्तो नानाद्रुमलतावृतः॥ २१.१०३ ॥

ततः प्रशमिते वायौ दैत्येंद्र पर्वताकृतौ॥
महाशनिं वज्रमयीं मुमोचाशु शतक्रतुः॥ २१.१०४ ॥

तयाशन्या पतितया दैत्यस्याच लरूपिणः॥
कंदराणि व्यशीर्यंतं समंतान्निर्झराणि च॥ २१.१०५ ॥

ततः सा दानवेंद्रस्य शैलमाया न्यवर्तत॥
निवृत्तशैलमायोऽथ दानवेंद्रो मदोत्कटः॥ २१.१०६ ॥

बभूव कुंजरो भीमो महाशैलमयाकृतिः॥
ममर्द च सुरानीकं दंतैश्चाभ्यहनत्सुरान्॥ २१.१०७ ॥

बभंज पृष्ठतः कांश्चित्करेणाकृष्य दानवः॥
ततः क्षपयतस्तस्य सुरसैन्यानि वृत्रहा॥ २१.१०८ ॥

अस्त्रं त्रैलोक्यदुर्धर्षं नारसिंहं मुमोच ह॥
ततः सिंहसस्राणि निश्चेरुर्मंत्रतेजसा॥ २१.१०९ ॥

हृष्टदंष्ट्राट्टहासानि क्रकचाभनखानि च॥
तैर्विपाटितगात्रोऽसौ गजमायां व्यपोहयत्॥ २१.११० ॥

ततश्चाशीविषो घोरोऽभवत्फणसमाकुलः॥
विषनिःश्वासनिर्दग्धसुरसैन्यमहारथः॥ २१.१११ ॥

ततोऽस्त्रं गारुडं चक्रे शक्रः संप्रहरन्रॅणे॥
ततस्तस्माद्गरुत्मंतः सहस्राणि विनिर्ययुः॥ २१.११२ ॥

तैर्गरुत्मद्भिरासाद्य जंभं भुजगरूपिणम्॥
कृतस्तु संढशो दैत्यः सास्य माया व्यनश्यत॥ २१.११३ ॥

मायायाम च प्रनष्टायां ततो जंभो महासुरः॥
चकार रूपमतुलं चंद्रादित्यपदानुगम्॥ २१.११४ ॥

विवृत्तनयनो ग्रस्तुमियेष सुरपुंगवान्॥
ततोऽस्य प्रविशद्वक्त्र समहारथकुंजरा॥ २१.११५ ॥

सुरसेनाऽभवद्भीमं पातालोत्तालतालुकम्॥
सैन्येषु ग्रस्यमानेषु दानवेन बलीयसा॥ २१.११६ ॥

शक्रो दीनत्वमापन्नः श्रांतवाहनवाहनः॥
कर्तव्यतां नाध्यगच्छत्प्रोवाचेदं जनार्दनम्॥ २१.११७ ॥

किमनंतरमेवास्ति कर्तव्यं नो विशेषतः॥
तदादिश घटामोऽस्य दानवस्य युयुत्सतः॥ २१.११८ ॥

ततो हरिरुवाचेदं वज्रायुधमुदारधीः॥
न सांप्रतं रणं त्याज्यं शत्रुकातरभैरवम्॥ २१.११९ ॥

मा गच्छ मोहं मा गच्छ क्षिप्रमस्त्रं स्मर प्रभो॥
नारायणास्त्रं प्रयतः श्रुत्वेति मुमुचे स च॥ २१.१२० ॥

एतस्मिन्नंतरे दैत्यो विवृतास्योऽग्रसत्क्षणात्॥
त्रीणित्रीणि च लक्षाणि किंनरोरगरक्षसाम्॥ २१.१२१ ॥

ततो नारायणास्त्रं च निपपातास्य वक्षसि॥
महास्त्रभिन्नहृदयः सुस्राव रुधिरं च सः॥ २१.१२२ ॥

ततः स्वतेजसा रूपं तस्य दैत्यस्य नाशितंम्॥
ततश्चां तर्दधे दैत्यः कृत्वा हासं महोत्कटम्॥ २१.१२३ ॥

गगनस्थः स दैत्येन्द्रः शस्त्राशनिमतींद्रियः॥
मुमोच सुरसैन्यानां सहारकरणीं पराम्॥ २१.१२४ ॥

तथा परश्वधांश्चक्रवज्रबाणान्समुद्गरान्॥
कुंतान्खड्गान्भिंडिपालानयोमुखगुडांस्तथा॥ २१.१२५ ॥

ववर्ष दानवो रोषादवध्यानक्षयानपि॥
तैरस्त्रैर्दानवोन्मुक्तैर्देवानीकेषु भीषणैः॥ २१.१२६ ॥

बाहुभिर्धरणी पूर्णा शिरोभिश्च सकुंडलैः॥
ऊरुभिर्गजहस्ताभैः करींद्रैश्चाचलोपमैः॥ २१.१२७ ॥

भग्नेषा दंडचक्राक्षै रथैभिः सह॥
दुःसंचाराभवत्पृथ्वी मांसशोणितकर्दमा॥ २१.१२८ ॥

रुधिरौघह्रदावर्ता गजदेहशिलोच्चया॥
कबंधनृत्यबहुला महा सुरप्रवाहिनी॥ २१.१२९ ॥

श्रृगालगृध्रध्वांक्षाणां परमानंदकारिणी॥
पिशाचजातिभिः कीर्णं पीत्वाऽऽमिषं सशोणितम्॥ २१.१३० ॥

असंभ्रमाभिर्भार्याभिः सह नृत्यद्भिरुद्धता॥
काचित्पत्नी प्रकुपिता गजकुंभांतमौक्तिकैः॥ २१.१३१ ॥

पिशाचो यत्र चाश्वानां खुरानेकत्र चाकरोत्॥
कर्णपूरेषु मोदंते पश्यंत्यन्याः सरोषतः॥ २१.१३२ ॥

प्रसादयंति बहुधा महाकर्णार्थकोविदाः॥
केचिद्वदन्ति भो देवा भो दैत्याः प्रार्थयामहे॥ २१.१३३ ॥

आकल्पमेवं योद्धव्यमस्माकं तृप्तिहेतवे॥
केचिदूचुरयं दैत्यो देवोयमतिमांसलः॥ २१.१३४ ॥

म्रियते यदि संग्रामे धातुर्दद्मोऽपयाचितम्॥
केचिद्युध्यत्सु वीरेषु सृक्किणी संलिहंति च॥ २१.१३५ ॥

एतेन पयसा विद्मो दुर्जनः सुजनो यथा॥
केचिद्रक्तनदीनां च तीरेष्वास्तिक्यबुद्धयः॥ २१.१३६ ॥

पितृन्देवांस्तर्पयंति शोणितैश्चामिषैः शुभैः॥
केचिदामिषराशिस्था दृष्ट्वान्यस्य करामिषम्॥ २१.१३७ ॥

देहिदेहीति वाशांतो धनिनः कृपणा यथा॥
केचित्स्वयं प्रतृप्ताश्च दृष्ट्वा वै खादतः परान्॥ २१.१३८ ॥

सरोषमोष्ठौ निर्भुज्य पश्यंत्येवात्यसूयया॥
केचित्स्वमुदरं क्रुद्धा निंदंति ताडयंति च॥ २१.१३९ ॥

सर्वभक्षमभीप्संतस्तृप्ताः परधनं यथा॥
केचिदाहुरद्य एव श्लाघ्या सृष्टिस्तु वेधसः॥ २१.१४० ॥

सुप्रभातं सुनक्षत्रं पूर्वमासीद्वृथैव तत्॥
एवं बहुविधालापे पलादानां ततस्ततः॥ २१.१४१ ॥

अदृश्यः समरे जंभो देवान्ठस्त्रैरचूर्णयत्॥
ततः शक्रोधनेशश्च वरुणः पवनोऽनलः॥ २१.१४२ ॥

यमोऽथ निर्ऋतिश्चापि दिव्यास्त्राणि महाबलाः॥
आकाशे मुमुचुः सर्वे दानवायाभिसंध्य तु॥ २१.१४३ ॥

व्यर्थतां जग्मुरस्त्राणि देवानां दानवं प्रति॥
यथातिक्रूरचित्तानामार्ये कृत्यशतान्यपि॥ २१.१४४ ॥

गतिं न विविदुश्चापि श्रांता दैत्याश्च देवताः॥
दैत्यास्त्रभिन्नसर्वांगा गावः शीतार्दिता इव॥ २१.१४५ ॥

परस्परं व्यलीयंत हाहाकिंभाविवादिनः॥
तामवस्थां हरिर्दृष्ट्वा देवान्छक्रमुवाचह॥ २१.१४६ ॥

अघोरमंत्रं स्मर देवराज अस्त्रं हि यत्पाशुपतप्रभावम्॥
रुद्रेण तुष्टेन तव प्रदत्तमव्याहतं वीरवराभिघाति॥ २१.१४७ ॥

एवं स शक्रो हरिबोधितस्तदा प्रणम्य देवं वृषकेतुमीश्वरम्॥
समाददे बाणममित्रघातनं संपूजितं दैवरणेऽर्द्धचंद्रम्॥ २१.१४८ ॥

धनुष्यजय्ये विनियोज्य बुद्धिमान्न्ययोजयत्तत्र अघोरमंत्रम्॥ २१.१४९ ॥

ततो वधायाशु मुमोच तस्य वा आकृष्य कर्णांतमकुंठदीधितिम्॥
अथासुरः प्रेक्ष्य महास्त्रमापतद्विसृज्य मायां सहसा व्यवस्थितः॥ २१.१५० ॥

प्रवेपमानेन मुखेन युज्यताचलेन गात्रेण च संभ्रमाकुलः॥
ततस्तु तस्यास्त्रवराभिमंत्रितः शरोर्धचंद्रः प्रसभं महारणे॥ २१.१५१ ॥

पुरंदरस्येष्वसनप्रमुक्तो मध्यार्कविंवं वपुषा विडंबयन्॥ २१.१५२ ॥

किरीटकूटस्फुरकांतिसंकुलं सुगंधिनानाकुसुमाधिवासितम्॥
प्रकीर्णधूमज्वलनाभमूर्धजं न्यपातयज्जंभिशिरः सकुंडलम्॥ २१.१५३ ॥

तस्मिन्निंद्रहते जंभे प्रशशंसुः सुरा बहु॥
वासुदेवोऽपि भगवान्साधु साध्विति चाब्रवीत्॥ २१.१५४ ॥

ततो जंभं हतं दृष्ट्वा दानवेन्द्राः पराङ्मुखाः॥
सर्वे ते भग्नसंकल्पा दुद्रुवुस्तारकं प्रति॥ २१.१५५ ॥

तांश्च त्रस्तान्समालोक्य श्रुत्वा स चतुरो हतान्॥
सारथिं प्रेरयामास याहींद्रं लघु संगरे॥ २१.१५६ ॥

तथेत्युक्त्वा स च प्रायात्तारके रथमास्थिते॥
सावलेपं च सक्रोधं सगर्वं सपराक्रमम्॥ २१.१५७ ॥

साविष्कारं सधिक्कारं प्रयातो दानवेश्वरः॥
स युक्तं रथमास्थाय सहस्रेण गरुत्मताम्॥ २१.१५८ ॥

सर्वायुधपरिष्कारं सर्वास्त्रपरिरक्षितम्॥
त्रैलोक्यऋद्धिसंपन्नं कल्पांतांतकनादितम्॥ २१.१५९ ॥

सैन्येन महता युक्तो नादयन्विदिशो दिशः॥
सहस्राक्षश्च तं दृष्ट्वा त्यक्त्वा वाहनदंतिनम्॥ २१.१६० ॥

रथं मातलिना युक्तं तप्तहेमपरिष्कृतम्॥
चतुर्योजनविस्तीर्णं सिद्धसंघपरिष्कृतम्॥ २१.१६१ ॥

गंधर्वकिंनरोद्गीतमप्सरोनृत्यसंकुलम्॥ २१.१६२ ॥

सर्वायुधमहाबाधं महारत्नसमाचितम्॥
अध्यतिष्ठत्तं रथं च परिवार्य समंततः॥ २१.१६३ ॥

दांशिता लोकपालाश्च तसथुः सगरुडध्वजाः॥
ततश्चचाल वसुधा ववौ रूक्षो मरुद्गणैः॥ २१.१६४ ॥

चेलुश्च सागराः सप्त तथाऽनश्यद्रवेः प्रभा॥
ततो जज्वलुरस्त्राणि ततोऽकंपंत वाहनाः॥ २१.१६५ ॥

ततः समस्तमुद्वृत्तं ततोदृस्यत तारकः॥
एकतस्तारको दैत्यः सुरसंघास्तथैकतः॥ २१.१६६ ॥

लोकावसाद मेकत्र लोकोद्धरणमेकतः॥
चराचराणि भूतानि भयविस्मयवंति च॥ २१.१६७ ॥

प्रशशंसुः सुराः पार्थ तदा तस्मिन्समागमे॥ २१.१६८ ॥

अस्त्राणि तेजांसि धनानि योधा यशो बलं वीरपराक्रमाश्च॥
सत्त्वौजसान्यंग बभूवुरेषां देवासुराणां तपसः परं तु नः॥ २१.१६९ ॥

अथाभिमुखमायांतं देवा विनतर्पवभिः॥
बाणैरनलकल्पाग्रार्विव्यधुस्तारकं प्रति॥ २१.१७० ॥

स तानचिंत्य दैत्येंद्रो देवबाणक्षतान्हृदि॥
बाणैर्व्योम दिशः पृथ्वीं पूरयामास दानवः॥ २१.१७१ ॥

नारायणं च सप्तत्या नवत्या च हुताशनम्॥
दशभिर्मारुतं मूर्ध्नि यमं दशभिरेव च॥ २१.१७२ ॥

धनदं चैव सप्त्या वरुणं च तथाष्टभिः॥
विंशत्या निर्ऋतिं दैत्यः पुनश्चाष्टभिरेव च॥ २१.१७३ ॥

विव्याध पुनरेकैकं दशभिर्मर्मभेदिभिः॥
तथा च मातलिं दैत्यो विव्याध त्रिभिराशुगैः॥ २१.१७४ ॥

गरुडं दशभिश्चैव महिषं नवभिस्तथा॥
पुनर्दैत्योऽथ देवानां तिलशो नतपर्वभिः॥ २१.१७५ ॥

चकार वर्मजालानि चिच्छेद च धनूंषि च॥
ततो विकवचा देवा विधनुष्काः प्रपीडिताः॥ २१.१७६ ॥

चापान्यन्यानि संगृह्य यावन्मुंचंति सायकान्॥
तावद्बाणं समाधाय कालानलसमप्रभम्॥ २१.१७७ ॥

ताडयामास शक्रं स हृदि सोपि मुमोचह॥
ततोंऽतरिक्षमालोक्य दृष्ट्वा सूर्यशताकृती॥ २१.१७८ ॥

ताक्ष्र्यविष्णू समाजघ्ने शराभ्यां तावमुहृयताम्॥
प्रेतनाथस्य वहनेश्च वरुणस्य शितैः शरैः॥ २१.१७९ ॥

निर्ऋतेश्चाकरोत्कार्यं भीतबीतं विमोहयन्॥
निरुच्छवासं समाहृत्य चक्रे बाणैः समीरणम्॥ २१.१८० ॥

ततः प्राप्य हरिः संज्ञां प्रोत्साहृय च दिशां पतीन्॥
बाणेन सारथेः कायाच्छिरोऽहार्षीत्सकुण्डलम्॥ २१.१८१ ॥

धूमकेतोर्ज्वलात्क्रुद्धस्तस्य च्छित्त्वा न्यपातयत्॥
दैत्यराजकिरीटयं च चिच्छेद वासवस्ततः॥ २१.१८२ ॥

धनेशश्च धनुः क्रुद्धो बिभेदबहुधा शरैः॥
वायुश्चक्रे च तिलशो रथं वा क्षोणिकूबरम्॥ २१.१८३ ॥

निर्ऋतिस्तिलशो वर्ण चक्रे बाणैस्ततो रणे॥
कृत्वैतदतुलं कर्मतिष्ठतिष्ठेति चाब्रुवन्॥ २१.१८४ ॥

लिहंतः सृक्किणीं देवा वासुदेवादयस्तदा॥
दृष्ट्वा तत्कर्म देवानां तारकोऽतुलविक्रमः॥ २१.१८५ ॥

मुमोच मुद्गरं भीमं सहस्राक्षाय संगरे॥
दृष्ट्वा मुद्गरमायांतमनिवार्यं रणाजिरे॥ २१.१८६ ॥

रथादाप्लुत्य धरणीमगमत्पाकशासनः॥
मुद्गरोऽपि रथोपस्थे पपात परुषस्वनः॥ २१.१८७ ॥

स रथं चूर्णयामास न ममार च मातलिः॥
गृहीत्वा पट्टिशं दैत्यो जधानोरसि केशवम्॥ २१.१८८ ॥

स्कन्धे गरुत्मतः सोऽपि निषसाद विचेतनः॥
खड्गेन राक्षसेन्द्रं च भित्त्वा भूमावपातयत्॥ २१.१८९ ॥

यमं च पातयामास भूमौ दैत्यो मुखे हतम्॥
वह्निं च भिंडिपालेन चक्रे हत्वा विचेतनम्॥ २१.१९० ॥

वायुं पदा तदाक्षिप्य पातयामास भूतले॥
धनेशं तद्धनुष्कोट्या कुट्टयामास कोपनः॥ २१.१९१ ॥

ततो देवनिकायानामेकैकं क्षणमात्रतः॥
तेषामेव जघानासौ शस्त्रैर्बालान्यथा गुरुः॥ २१.१९२ ॥

लब्धसंज्ञस्ततो विष्णुश्चक्रं जग्राह दुर्धरम्॥
रानवेंद्रवसामेदोरुधिरेणाभिरंजितम्॥ २१.१९३ ॥

मुमोच दानवेंद्रस्य दृढं वक्षसि केशवः॥
पपात चक्रं दैत्यस्य पतितं भास्करद्युति॥ २१.१९४ ॥

व्यशीर्यताथ कायेऽस्य नीलोत्पलमिवाश्मनि॥
ततो वज्रं महेन्द्रोऽपि प्रमुमोचार्चितं चिरम्॥ २१.१९५ ॥

तस्मिञ्जयाशा शक्रस्य दानवेन्द्राय संयुगे॥
तारकस्य च संप्राप्य शरीरं शौर्यशालिनः॥ २१.१९६ ॥

विशीर्यत विकीर्णार्चिः शतधा खण्डशो गतम्॥
ततो वायुरदीनात्मा वेगेन महता नदन्॥ २१.१९७ ॥

ज्वलितज्वलनाभासमंकुशं प्रमुमोच ह॥
विशीर्णं तस्य तच्चांगे दृष्ट्वा वायुर्महारुषा॥ २१.१९८ ॥

ततः शैलेन्द्रमुत्पाट्य पुष्पितद्रुमकंदरम्॥
चिक्षेप दानवेन्द्राय दशयोजनविस्तृतम्॥ २१.१९९ ॥

महीधरं तमायांतं सस्मितं दैत्यपुंगवः॥
जग्राह वामहस्तेन बालः कन्दुकलीलया॥ २१.२०० ॥

ततस्तेनैव चाहत्य पातयामास चांतकम्॥
दण्डं ततः समुद्यम्य कृतांतः क्रोधमूर्छितः॥ २१.२०१ ॥

दैत्येन्द्रमूर्ध्नि चिक्षेप भ्राम्य वेगेन दुर्जयम्॥
सोऽसुरस्यापतन्मूर्ध्नि दैत्यस्तं जगृहे स्मयन्॥ २१.२०२ ॥

कल्पांतलोकदहनो ज्वलनो रोषसंज्वलन्॥
शक्तिं चिक्षेपदुर्धर्षां दानवेन्द्राय संयुगे॥ २१.२०३ ॥

ततः शिरीषमालेव सास्य वक्षस्यराजत॥
ततः खड्गं समाकृष्य कोशादाकाशनिर्मलम्॥ २१.२०४ ॥

द्युति भासितत्रैलोक्यं लोकपालोऽपि निर्ऋतिः॥
चिक्षेप दानवेन्द्राय तस्य मूर्ध्नि पपात ह॥ २१.२०५ ॥

पतितश्चागमत्खड्गः स शीघ्रं शतखण्डताम्॥
जलेशश्च ततः क्रुद्धो महाभैरवरूपिणम्॥ २१.२०६ ॥

मुमोच पाशं दैत्येन्द्रभुजबन्धाबिलाषुकः॥
स दैत्यभुजमासाद्य पाशः सद्यो व्यपद्यत॥ २१.२०७ ॥

स्फुटितः क्रकचक्रूरदशनालिरहीश्वरः॥
ततोऽश्विनौ सचंद्रार्कौ साध्याश्च वसवश्च ये॥ २१.२०८ ॥

यक्षराक्षसगनधर्वाः सर्पाश्चास्त्रैः पृथग्विधैः॥
जघ्नुर्दैत्येश्वरं सर्वे भूयशस्ते महाबलाः॥ २१.२०९ ॥

न चास्त्राण्यस्यासज्जन्त गात्रे वज्राचलोपमे॥
ततो देवनवप्लुत्य तारको दानवादिपः॥ २१.२१० ॥

जघान कोटिशः क्रुद्धो मुष्टिपार्ष्णिभिरेव च॥
तथाविधं तस्य वीर्यमालोक्य भगवान्हरिः॥ २१.२११ ॥

पलायध्वमहो देवा वदन्नन्तर्हितोऽभवत्॥
शक्रादयस्ततो देवाः पलायनकृतादराः॥ २१.२१२ ॥

कालनेमिमुखैर्दैत्येरुपरुद्धा मदोत्कटैः॥
मुष्टिभिः पादघातैश्च केशष्वाकृष्य तैर्मुदा॥ २१.२१३ ॥

तारिताः शुष्कसरितं देवमार्गाश्च दंशिताः॥
बहुधा चाप्यकृष्यंत लोकपाला महासुरैः॥ २१.२१४ ॥

ततो निनादः संजज्ञे दैत्यानां बलशालिनाम्॥
कम्पयन्पृथिवीं द्यां च पातालानि च भारत॥ २१.२१५ ॥

जयेति मुदिता दैत्यास्तुष्टुवुस्तारकं तदा॥
शंखांश्च पूरयामासुः कुन्देन्दुसदृशप्रभान्॥ २१.२१६ ॥

धनुर्बाणरवांश्चोग्रान्कराघातांश्च चक्रिरे॥
भृशं हर्षान्विता दैत्या नेदुश्च ननृतुर्मुहुः॥ २१.२१७ ॥

ततो देवान्पुरस्कृत्य पशुपालः पशूनिव॥
दैत्येन्द्रो रथमास्थाय जगाम सहितोऽसुरैः॥ २१.२१८ ॥

महीसागरकूलस्थं तारकः स पुरं बली॥
योजनद्वादशायामं ताम्रप्राकारशोभितम्॥ २१.२१९ ॥

प्रासादर्बहुभिः कीर्णं दिव्याश्चर्योपशोभितम्॥
यत्र शब्दास्त्रयो नैव जीर्यंते चानिशंपुरे॥ २१.२२० ॥

गीतघोषश्च व्याघोषो भुज्यंतां विषयास्त्विति॥
तत्प्रविश्य पुरं राजा जगाम स्वकमालयम्॥ २१.२२१ ॥

महोत्सवेन महता पुत्रस्त्रीप्रतिनंदितः॥
तत्र दिव्यां सभां राजा प्राप्य सिंहासनस्थितः॥ २१.२२२ ॥

स्तूयमानो दितिसुतैरप्सरोभिर्विनोदितः॥
दिव्यासनस्थैर्दैत्येंद्रैर्वृतः सिंहैरिव प्रभुः॥ २१.२२३ ॥

एतस्मिन्नंतरे काचि द्दिव्यस्त्री तत्पुरेऽभवत्॥
विस्मितस्तैर्वृतो दैत्यैः प्रोवाचेदं स्मयन्निव॥ २१.२२४ ॥

रूपेणानुपमा पार्थ नानाभरणभूषिता॥
तां दृष्टवा तारको राजा भृशं वै विस्मितोऽभवत्॥ २१.२२५ ॥

कासि देवी मम ब्रूहि किं मया रूपसुंदरि॥
त्वत्समां योषितं नैव दृष्टवंतः पुरा वयम्॥ २१.२२६ ॥

**॥स्त्र्युवाच॥**

अहं त्रैलोक्यलक्ष्मीति विद्धि मां दैत्यसत्तम॥
अर्जिता तपसा चास्मि त्वया वीर्येण वा विभो॥ २१.२२७ ॥

वीर्यवंतं त्वनलसं तपस्विनमकातरम्॥
दातारं चापि भोक्तारं युक्त्या सेवामि तं नरम्॥ २१.२२८ ॥

भीरुं निर्विण्णमत्यर्थं साध्वीपीडाकरं नरम्॥
सर्वातिशंकिनं सद्यस्त्यजामि दितिनंदन॥ २१.२२९ ॥

महेंद्रण च माता ते यदा सा व्यपमानिता॥
तदैव त्यक्तप्रायोऽसाविदानीं तव संवशे॥ २१.२३० ॥

तारकश्च ततः प्राह परमं चेति तां तदा॥
सा चाविवेश तं देवी त्रिजगत्पूजिता रमा॥ २१.२३१ ॥

ततो दैत्याधिपं नार्यो दानवानां विभूषिताः॥
वीरकांस्यमुपादाय वर्धयांचक्रिरे मुदा॥ २१.२३२ ॥

देवाश्च द्वारि तिष्ठंति बद्धा दैत्यैर्भृशातुराः॥
उपहस्यमाना नारीभिर्दैत्यैरन्यैश्च नागरैः॥ २१.२३३ ॥

एतस्मिन्नंतरे विष्णुर्दैत्यरूपं समास्थितः॥
उपहासकमध्यस्थो गाथे द्वे प्राह बुद्धिमान्॥ २१.२३४ ॥

इदमल्पतरंनाम यदमीषां च दृश्यते॥
मातृक्रोधं स्मरन्राजा किंकिं यन्न करिष्यति॥ २१.२३५ ॥

बलीयांसं समासाद्य न नमेद्यो न चास्ति सः॥
मर्कवच्छ्वेतबाकीयैरुपायैः स्थीयतां सुराः॥ २१.२३६ ॥

उपहासमुखेनामी उपदेशं हरेर्मुखात्॥
समाकर्ण्य ततो देवा मर्क्करूपेण संस्थिताः॥ २१.२३७ ॥

नृत्यंतस्ते च बहुधा दैत्याश्चासुरयोषितः॥
भृशं च नोदयामासुर्मुदा भोज्यानि ते ददुः॥ २१.२३८ ॥

विष्णुर्दैत्यप्रतीहारं ततः प्रोवाच बुद्धिमान्॥
विनोदाय महाराज्ञो मर्कानेतान्प्रकीर्तय॥ २१.२३९ ॥

प्रतीहारस्ततो हृष्टः सभामध्ये विवेश सः॥
जानुभ्यां धरणीं गत्वा बद्धा च करसंपुटम्॥ २१.२४० ॥

उवाचानाविलं वाक्यमल्पाक्षरपरिस्फुटम्॥
दैत्येंद्र मर्कवृंदानि द्वारि तिष्ठंति ते प्रभो॥ २१.२४१ ॥

भृशं विनोदकारिणि स्पृहा चेद्द्रष्टुमर्हसि॥
तन्निशम्याब्रवीद्राजा किं चिरं क्रियते त्वया॥ २१.२४२ ॥

क्षत्ता चेति वचः श्रुत्वा कालनेमिं तदाब्रवीत्॥
मर्कानेतान्महाराजो द्रष्टुमिच्छति शीघ्रतः॥ २१.२४३ ॥

रक्षपाल सहैभिस्त्वं राजानमनुकूलय॥
कालनेमिरुपादाय मर्कान्यातो नृपं ततः॥ २१.२४४ ॥

मर्कमध्ये विष्णुमर्को यातस्त्यक्त्वा च दैत्यताम्॥
ततस्तारकदैत्यस्य पुरतो ननृतुर्भृशम्॥ २१.२४५ ॥

मर्का दैत्यकरोत्तालैर्हर्षनादविनोदितैः॥
ततोऽतिमुदितो राजा तेषां नृत्येन सोऽब्रवीत्॥ २१.२४६ ॥

अभयं वो मर्कदेवास्तुष्टो यच्छाम्यहं त्विदम्॥
मद्गृहे स्थीयतामेव न च कार्यं भयं हृदि॥ २१.२४७ ॥

इति श्रुत्वा विष्णुमर्कः प्रनृत्यन्नि दमब्रवीत्॥
राजन्विज्ञातुमिच्छामस्तव गेहावधिं वयम्॥ २१.२४८ ॥

एवमुक्ते प्रहस्याह तारको दैत्यसत्तमः॥
त्रिभूमिकं हि मे गेहमिदं यद्भुवनत्रयम्॥ २१.२४९ ॥

हरिमर्कस्ततः प्राह यद्येवं स्वं वचः स्मर॥
त्रैलोक्ये विचरंत्वेते मर्का राजन्सुनिर्भयाः॥ २१.२५० ॥

अश्वमेधशतस्यापि सत्यं राजन्विशिष्यते॥
धर्ममेनं स्मरन्सत्यं वचनं कुरु दैत्यप॥ २१.२५१ ॥

ततः सुविस्मितो दैत्यः प्राहेदं वचनं तदा॥
मर्कटाहो प्रबुद्धोऽसि सत्यं ब्रूहि च को भवान्॥ २१.२५२ ॥

**॥श्रीभगवानुवाच॥**
अहं नारायणोनाम यदि श्रोत्रमुपागतः॥
देवानां रक्षणार्थाय मर्करूपमुपाश्रितः॥ २१.२५३ ॥

तच्चेन्मान्यतमो धर्मस्तव तद्वचनं स्वकम्॥

परिपालय ते गेहं विचरंतु सुरास्त्वमी॥ २१.२५४ ॥

अवलोपश्च राजेंद्र न कर्तव्यस्त्वया हृदी॥
वीरोऽहमिति संचिन्त्य पश्यता कालजं बलम्॥ २१.२५५ ॥

पर्यायैर्हन्यमानानामभिहंता न विद्यते॥
मौढ्यमेतत्तु यद्द्वेष्टा कर्ताहमिति मन्यते॥ २१.२५६ ॥

ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च॥
कं वापदो नोपनमंति काले कालस्य वीर्यं न तु कर्तुरेतत्॥ २१.२५७ ॥

न मंत्रबलवीर्येण प्रज्ञया पौरुषेण वा॥
अलभ्यं लभ्यते काले काले सुप्तोपि विंदति॥ २१.२५८ ॥

न मातृपितृशुश्रूषा न च दैवतपूजनम्॥
नान्यो गुणसमाचारः पुरषस्य सुखावहः॥ २१.२५९ ॥

न विद्या न तपो दानं न मित्राणि न वांधवाः॥
शक्नुवंति परित्रातुं नरं कालेन पीडितम्॥ २१.२६० ॥

नागामिगमनार्थं हि प्रतिघातशतैरपि॥
शक्नुवंति प्रतिव्योढुमृते कालबलं नराः॥ २१.२६१ ॥

देहवत्पुण्यकर्माणि जीववत्काल उच्यते॥
द्वयोः समागमे दैत्य कार्याणां सिद्धिरिष्यते॥ २१.२६२ ॥

अहो दैत्य त्वद्विशिष्टा दैत्यानां कोटयः पुरा॥
शाल्मलेस्तूलवत्क्षिप्ताः कालवातेन दुर्दशाः॥ २१.२६३ ॥

इदं तु लब्ध्वा त्वं स्थानमात्मानं बहु मन्यसे॥
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम्॥ २१.२६४ ॥

न चेदमचलं स्थानमनंतं चापि कस्यचित्॥
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे॥ २१.२६५ ॥

अविश्वास्ये विश्वसिषि मन्यसे चाऽध्रुवं ध्रुवम्॥
ममेदमिति मोहात्त्वं त्रिलोकीश्रियमीप्ससि॥ २१.२६६ ॥

नेयं तव न चास्माकं न चान्येषां स्थिरा मता॥
अतिक्रम्य बहून्यांस्त्वयि तावदियं स्थिता॥ २१.२६७ ॥

कंचित्कालमियं स्थित्वा त्वयि तारक चंचला॥

पुंश्चलीवातिचपला पुनरन्यं गमिष्यति॥ २१.२६८ ॥

सरत्नौषदिसंपन्नं ससरित्पर्वताकरम्॥
तानिदानीं न पश्यामि यैर्भुक्तं भुवनत्रयम्॥ २१.२६९ ॥

हिरण्यकशिपुर्वीरो हिरण्याक्षश्च दुर्जयः॥
प्रह्रादो नमुचिर्वीरो विप्रचित्तिर्विरोचनः॥ २१.२७० ॥

कीर्तिः शूरश्च वीरश्च वातापिरिल्वलस्तथा॥
अश्वग्रीवः शंबरश्च पुलोमा मधुकैटभौ॥ २१.२७१ ॥

विश्वजित्प्रमुखाश्चान्ये दानवेंद्रा महाबलाः॥
कालेन निहताः सर्वे कालो हि बलवत्तरः॥ २१.२७२ ॥

सर्वैर्वर्षायुतं तप्तं न त्वमेको महातपाः॥
सर्वे सत्यव्रतपराः सर्वे चासन्बहुश्रुताः॥ २१.२७३ ॥

सर्वे यथार्हदातारः सर्वे दाक्षायणीसुताः॥
ज्वलंतः प्रजयंतश्च कालेन प्रतिसंहताः॥ २१.२७४ ॥

मुंचेच्छां कामभोगेषु मुंचेमं श्रीभवं मदम्॥
एतदैश्वर्यनाशे त्वां शोकः संपीडयिष्यति॥ २१.२७५ ॥

शोककाले शुचो मात्वं हर्षकाले च मा हृषः॥
अतीतानागते हि त्वा प्रत्युत्पन्नेन वर्तय॥ २१.२७६ ॥

इंद्रं चेदागतः कालः सदा युक्त मतंद्रितम्॥
क्षमस्व न चिराद्दैत्य त्वामप्युपगमिष्यति॥ २१.२७७ ॥

को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे॥
कालस्तु बलवान्प्राप्तस्तेन तिष्ठामि तारक॥ २१.२७८ ॥

त्वमेव वेत्सि मां दैत्य योहं यादृक्पराक्रमः॥
कल्पेकल्पे महादैत्याः कोटिशोऽर्बुदशोहताः॥ २१.२७९ ॥

येषां त्वं कोटिभागेऽपि परिपूर्णो न तारक॥
कल्पेकल्पे सृजामीदं ब्रह्मादि सकलं जगत्॥ २१.२८० ॥

इच्छन्संजीवयाम्येतदनिच्छन्नाशये क्षणात्॥
न हि त्वां नोत्सहे हंतुं सर्वदैत्यसमायुतम्॥ २१.२८१ ॥

अंगुल्यग्रेण दैत्येंद्र पुनर्धर्मं नलोपये॥

यद्यहं प्रवरो भूत्वा धर्मं ब्रह्मवरात्मकम्॥ २१.२८२ ॥

लोपयामि ततः कं च धर्मोऽयं शरणं व्रजेत्॥
अहं कर्तेति मा मंस्थाः कर्तायस्तु सदा प्रभुः॥ २१.२८३ ॥

सोऽयं कालः पचेद्विश्वं वृक्षे फलमिवागतम्॥
यैरेव कर्मभिः सौख्यं दुःखं तैरेवकर्मभिः॥ २१.२८४ ॥

प्राप्नोति पुरुषो दैत्य पश्य कालस्य चित्रताम्॥
सर्वं कालवशादेव बोद्वव्यं धीर्युतेर्नरैः॥ २१.२८५ ॥

स्वकर्मपरिपाकस्य फलदं वै विदुर्बुधाः॥
तस्मात्कर्म शुभं कार्यं पुण्यात्पुण्यात्मकं च यत्॥ २१.२८६ ॥

पुण्येन तत्र सोख्यं स्याद्दुःखं पापेन निश्चितम्॥
इति संचिंत्य दैत्येंद्र स्वं वचः परिपालय॥
मदुक्तं वचनं सर्वं यदि मंतुमिहार्हसि॥ २१.२८७ ॥

**॥तारक उवाच॥**
मामत्र संस्थितं दृष्ट्वा कालनेमिमुखैर्युतम्॥ २१.२८८ ॥

कस्येह न व्यथेद्बुर्मृत्योरपि जिवांसतः॥
सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी॥ २१.२८९ ॥

ब्रवीषि यद्यत्त्वं वाक्यं ततथैव न संशयः॥
को हि विश्वासमर्थेषु शरीरे वा शरीरभृत्॥ २१.२९० ॥

कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत्॥
अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम्॥ २१.२९१ ॥

कालाग्नावाहितं घोरे गुह्ये सततगत्वरे॥
इदमद्य करिष्यामि श्वःकर्तास्मीतिवादिनः॥ २१.२९२ ॥

कालो हरति संप्राप्ते नदीवेग इवोन्मुखान्॥
इदानीं तावदेवासौ मया दृष्टो न विस्मृतः॥ २१.२९३ ॥

कालेन ह्रियमाणानां प्रलापः श्रूयते नृणाम्॥
ईर्ष्याभिमानलोभेषु कामक्रो धभयेषु च॥ २१.२९४ ॥

स्पृहामोहातिवादेषु लोकः सक्तो न बुध्यते॥
गुरुं वाप्यगुरुं वापि कृत्याकृत्यं च केशव॥ २१.२९५ ॥

जानामि त्वामहं विष्णो सर्वभूतवरं प्रभुम्॥
किं कुर्मः स्वस्वभावेन बलिना त्वां न मन्महे॥ २१.२९६ ॥

केचिद्व्रजंति त्वां भक्त्या वैरेण हेलया परे॥
सर्वेनुकंप्यास्ते तुभ्यमतरात्मासि देहिनाम्॥ २१.२९७ ॥

पुराणः शाश्वतो धर्मः सर्वप्राणभृतां समः॥
मामालंब्य मया मुक्ता यांतु सर्वे दिवौकसः॥ २१.२९८ ॥

पुनर्मर्कस्वरूपेण भ्रांतव्यं भुवनत्रयम्॥
स्पृहापि यज्ञभागानां न कार्या समयस्त्वयम्॥ २१.२९९ ॥

एवमुक्ते तारकेण देवा हर्षं प्रपेदिरे॥
मुच्यते हृतलोमापि मेषो लाभो हि सौनिकात्॥ २१.३०० ॥

**॥श्रीभगवानुवाच॥**
दैत्येंद्र भव तत्त्वज्ञो विद्याज्ञानतपोन्वितः॥
कालं पश्यसि सुव्यक्तं पाणावामलकं यथा॥ २१.३०१ ॥

कालचारित्रतत्त्वज्ञ शिवभक्त महामते॥
वज्रांगसुत धन्योऽसि स्पृहणीयोऽसि धीमताम्॥ २१.३०२ ॥

यावत्ते तपसो वीर्यं तावद्भुंक्ष्वजगत्त्रयम्॥
एतेन समयेनैते चरिष्यंति सुरा जगत्॥ २१.३०३ ॥

इत्युक्त्वा मर्कयूथेन वृतो नारायणः प्रभुः॥
स्थानादस्मादपाक्रम्य मेरुं प्रति ययौ तदा॥ २१.३०४ ॥

ततो मेरुं समागम्य प्रोवाच वचनं हरिः॥
भवंतो यांतु ब्रह्मणं स धास्यति च वो हितम्॥ २१.३०५ ॥

अप्रमत्तैः सदा भाव्यं पाल्यश्च समयस्तथा॥
इत्युक्त्वा भगवान्विष्णुस्तत्रैवांतरधीयत॥ २१.३०६ ॥

प्रणतः संस्तुतो देवैर्ब्रह्माणं च सुरा ययुः॥ २१.३०७ ॥

दिव्योत्तमैस्तत्र गतैरभिष्टुतो विदीप्ततेजा भुवनत्रयेऽपि॥
वज्रांगपुत्रोऽपि मुमोद वीरः शिवप्रसादेन महर्द्धिमाप्य॥ २१.३०८ ॥

स्वयमिन्द्रो निमिर्वह्निः कालनेमिर्यमोऽपि च॥
स्तम्भश्च निर्ऋतिस्थाने महिषो वरुणास्तथा॥ २१.३०९ ॥

मेषो वाताधिकारि च कुजंभो धनदोऽभवत्॥
अन्येषां चाधिकारांश्च दैत्यानां तारको ददौ॥ २१.३१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे देवासुरसंग्रामे तारकविजयवर्णननामैकविंशतितमोऽध्यायः॥ २१ ॥ छ ॥

**॥नारद उवाच॥**

एवं विप्रकृता देवा महेंद्रसहितास्तदा॥
ययुः स्वायंभुवं दाम मर्करूपमुपाश्रिताः॥ २२.१ ॥

ततश्च विस्मितो ब्रह्मा प्राह तान्सुरपुंगवान्॥
स्वरूपेणेह तिष्ठध्वं नात्र वस्तारकाद्भयम्॥ २२.२ ॥

ततो देवाः स्वरूपस्थाः प्रम्लानवदनांबुजाः॥
तुष्टुवुः प्रणताः सर्वे पितरं पुत्रका यथा॥ २२.३ ॥

नमो जगत्प्रसूत्यै ते हेतवे पालकाय च॥
संहर्त्रे च नमस्तुभ्यं तिस्रोऽवस्थास्तव प्रभो॥ २२.४ ॥

त्वमपः प्रथमं सृष्ट्वा तासु वीर्यमवासृजः॥
तदण्डमभवद्धैमं यस्मिल्लोकाश्चराचराः॥ २२.५ ॥

वेदेष्वाहुर्विराड्रूपं त्वामेकरूपमीदृशम्॥
पातालं पादमूलं च पार्ष्णिपादे रसातलम्॥ २२.६ ॥

महातलं चास्य गुल्फौ जंघे चापि तलातलम्॥
सुतलं जानुनी चास्य ऊरू च वितलातले॥ २२.७ ॥

महीतलं च जघनं नाभिश्चास्य नभस्तलम्॥
ज्योतिः पदमुरः स्थानं स्वर्लोको बाहुरुच्यते॥ २२.८ ॥

ग्रीवा महश्चवदनं जनलोकः प्रकीर्त्यते॥
ललाटं च तपोलोकः शीर्ष सत्यमुदाहृतम्॥ २२.९ ॥

चन्द्रसूर्यौ च नयने दिशः श्रोत्रे नासिकाश्विनौ॥
आत्मानं ब्रह्मरंध्रस्थमाहुस्त्वां वेदवादिनः॥ २२.१० ॥

एवं ये ते विराड्रूपं संस्मरंत उपासते॥
जन्मबन्धविनिर्मुक्ता यांति त्वां परमं पदम्॥ २२.११ ॥

एवं स्थूलं प्राणिमध्यं च शूक्ष्मं भावेभावे भावितं त्वां गृणंति॥
सर्वत्रस्थं त्वामतः प्राहुर्वेदास्तस्मै तुभ्यं पदम्ज इद्विधेम॥ २२.१२ ॥

एवं स्तुतो विरंचिस्तु कृपयाभिपरिप्लुतः॥
जानन्नपि तदा प्राह तेषामाश्वासहेतवे॥ २२.१३ ॥

सर्वे भवन्तो दुःखार्ताः परिम्लानमुखांबुजाः॥
भ्रष्टायुदास्तथाऽकस्माद्भ्रष्टा भरणवाससः॥ २२.१४ ॥

ममैवयं कृतिर्देवा भवतां यद्वडम्बना॥
यद्वैराजशरीरे मे भवन्तो बाहुसंज्ञकाः॥ २२.१५ ॥

यद्यद्विभूतिमत्सत्त्वं धार्मिकं चोर्जितं महत्॥
तत्रासीद्बाहुनाशो मे बाहुस्थाने च ते मम॥ २२.१६ ॥

तन्नूनं मम भग्नौ च बाहू तेन दुरात्मना॥
येन चोपहृतं देवास्तन्ममाख्यातु मर्हथ॥ २२.१७ ॥

**॥देवा ऊचुः॥**
योऽसौ वज्रांगतनयस्त्वया दत्तवरः प्रभो॥
भृशं विप्रकृतास्तेन तत्त्वं जानासि तत्त्वतः॥ २२.१८ ॥

यत्तन्महीसमुद्रस्य तटं शार्विकतीर्थकम्॥
तदाक्रम्य कृतं तेन मरुभूमिसमं प्रभोः॥ २२.१९ ॥

ऋद्धयः सर्वदेवानां गृहीतास्तेन सर्वतः॥
महाभूतस्वरूपेण स एव च जगत्पतिः॥ २२.२० ॥

चंद्रसूर्यौ ग्रहास्तारा यच्चान्यद्देवपक्षतः॥
तच्च सर्वं निराकृत्य स्थापितो दैत्यपक्षकः॥ २२.२१ ॥

वयं च विधृता स्तेन बहूपहसितास्तथा॥
प्रसादान्मुक्ताश्च कथंचिदिव कष्टतः॥ २२.२२ ॥

तद्वयं शरणं प्राप्ताः पीडिताः क्षुत्तृषार्दिताः॥
धर्मरक्षा कराश्चेति संचिंत्य त्रातुमर्हसि॥ २२.२३ ॥

इत्युक्तः स्वात्मभूर्देवः सुरैर्दैत्यविचेष्टितम्॥
सुरानुवाच भगवानतः संचिंत्य तत्त्वतः॥ २२.२४ ॥

अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः॥
यस्य वध्यश्च नाद्यापि स जातो भगवान्पुनः॥ २२.२५ ॥

मया च वरदानेन च्छन्दयित्वा निवारितः॥ २२.२६ ॥

तपसा स हिदीप्तोऽभूत्त्रैलोक्यदहनात्मकः॥
स च वव्रे वधं दैत्यः शिशतः सप्तवासरात्॥ २२.२७ ॥

स च सप्तदिनो बालः शंकराद्यो भविष्यति॥
तारकस्य च वीरस्य वधकर्ता भविष्यति॥ २२.२८ ॥

सतीनामा तु या देवी विनष्टा दक्षहेलया॥
सा भविष्यति कल्याणी हिमाचलशरीरजा॥ २२.२९ ॥

शंकरस्य च तस्याश्च यत्नः कार्यः समागमे॥
अहमप्यस्य कार्यस्य शेषं कर्ता न संशयः॥ २२.३० ॥

इत्युक्तास्त्रिदशास्तेन साक्षात्कलयोनिना॥
जग्मुर्मेरुं प्रणम्येशं मर्करूपेण संवृताः॥ २२.३१ ॥

ततो गतेषु देवेषु ब्रह्मा लोकपितामहः॥
निशां सस्मार भगवान्स्वां तनुं पूर्वसंभवाम्॥ २२.३२ ॥

ततो भगवती रात्रिरुपतस्थे पितामहम्॥
तां विविक्ते समालोक्य तथोवाच विभावरीम्॥ २२.३३ ॥

विभावरि महाकार्यं विबुधानामुपस्थितम्॥
तत्कर्तव्यं त्वया देवि श्रृणु कार्यस्य निश्चयम्॥ २२.३४ ॥

तारकोनाम दैत्येंद्रः सुरकेतुरनिर्ज्जितः॥
तस्याभावाय भगवाञ्जनयिष्यति यं शिवः॥ २२.३५ ॥

सुतः स भविता तस्य तारकस्यांतकारकः॥
अहं त्वादौ यदा जातस्तदापश्यं पुरःस्थितम्॥ २२.३६ ॥

अर्धनारीश्वरं देवं व्याप्य विश्वमवस्थितम्॥
दृष्ट्वा तमब्रुवं देवं भजस्वेति च भक्तितः॥ २२.३७ ॥

ततो नारी पृथग्जाता पुरुषश्च तथा पृथक्॥
तस्याश्चैवांशजाः सर्वाः स्त्रियस्त्रिभुवने स्मृताः॥ २२.३८ ॥

एकादश च रुद्राश्च पुरुषास्तस्य चांशजाः॥
तां नारीमहामालोक्य पुत्रं दक्षमथा ब्रवम्॥ २२.३९ ॥

भजस्व पुत्रीं जगती ममापि च तवापि च॥
पुंदुःखनकात्त्रात्री पुत्री ते भाविनी त्वियम्॥ २२.४० ॥

एवमुक्तो मया दक्षः पुत्रीत्वे परि कल्पिताम्॥
रुद्राय दत्तवान्भक्त्या नाम दत्त्वा सतीति यत्॥ २२.४१ ॥

ततः काले चँ कस्मिंश्चिदवमेने च तां पिता॥
मुमूर्षुः पापसंकल्पो दुरात्मा कुलकज्जलः॥ २२.४२ ॥

ये रुद्रं नैव मन्यंते ते स्फुटं कुलकज्जलाः॥
पिशाचास्ते दुरात्मानो भवंति ब्रह्मराक्षसाः॥ २२.४३ ॥

अवमानेन तस्यापि यथा देवी जहौ तनुम्॥
यथा यज्ञः स च ध्वस्तो भवेन विदितं हि ते'॥ २२.४४ ॥

अधुना हिमशैलस्य भवित्री दुहिता च सा॥
महेश्वरं पतिं सा च पुनः प्राप्स्यति निश्चितम्॥ २२.४५ ॥

तदिदं च त्वया कार्यं मेनागर्भे प्रविश्य च॥
तस्याश्छविं कुरु कृष्णां यथा काली भवेत्तु सा॥ २२.४६ ॥

यदा रुद्रोपहसिता तपस्तप्स्यति सा महत्॥
समाप्तनियमा देवी यदा चोग्रा भविष्यति॥ २२.४७ ॥

स्वयमेव यदा रूपं सुगौरं प्रतिपत्स्यते॥
विरहेण हरश्चास्या मत्वा शून्यं जगत्त्रयम्॥ २२.४८ ॥

तस्यैव हिमशैलस्य कंदरे सिद्धसेविते॥
प्रतीक्षमाणस्तां देवीमुग्रं संतप्स्यते तपः॥ २२.४९ ॥

तयोः सुतप्ततपसोर्भविता यो महान्सुतः॥
भविष्यति स दैत्यस्य तारकस्य निवारकः॥ २२.५० ॥

तपसो हि विना नास्ति सिद्धिः कुत्रापि शोभने॥
सर्वासां कर्मसिद्धीनां मूलं हि तप उच्यते॥ २२.५१ ॥

त्वयापि दानवो देवि देहनिर्गतया तदा॥
चंडमुंडपुरोगाश्च हंतव्या लोकदुर्जयाः॥ २२.५२ ॥

यस्माच्चंडं च मुंडं च त्वं देवि निहनिष्यसि॥
चामुंडेति ततो लोके ख्याता देवि भविष्यसि॥ २२.५३ ॥

ततस्त्वां वरदे देवी लोकः संपूजयिष्यति॥
भेदेर्बहुविधाकारैः सर्वगां कामसाधनीम्॥ २२.५४ ॥
ॐकारवक्त्रां गायत्रीं त्वामर्चंति द्विजोत्तमाः॥
ऊर्जितां बलदां पापि राजानः सुमहाबलाः॥ २२.५५ ॥

वैश्याश्च भूतिमित्येव शिवां शूद्रास्तथा शुभे॥
क्षांतिर्मुनीनामक्षोभ्या दया नियमिनामपि॥ २२.५६ ॥

त्वं महोपाय सन्दोहा नीतिर्नयविसर्पिणाम्॥

परिस्थितिस्त्वमर्थानां त्वमहो प्राणिका मता॥ २२.५७ ॥

त्वं युक्तिः सर्वभूतानां त्वं गतिः सर्वदेहिनाम्॥
रतिस्त्वं रतिचित्तानां प्रीतिस्त्वं हृद्यदर्शिनाम्॥ २२.५८ ॥

त्वं कांतिः शुभरूपाणां त्वं शांति शुभकर्मिणाम्॥
त्वं भ्रांतिर्मूढचित्तानां त्वं फलं क्रतुयाजिनाम्॥ २२.५९ ॥

जलधीनां महावेला त्वं च लीला विलासिनाम्॥
संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनी॥ २२.६० ॥

त्वं कालरात्रिर्निःशेष भुवनावलिनाशिनी॥
प्रियकंठग्रहानन्ददायिनी त्वं विभावरी॥ २२.६१ ॥

प्रसीद प्रणतानस्मान्सौम्यदृष्ट्या विलोकय॥ २२.६२ ॥

इति स्तुवंतो ये देवि पूजयिष्यंति त्वां शुभे॥
ते सर्वकामानाप्स्यंति नियता नात्र संशयः॥ २२.६३ ॥

इत्युक्ता तु निशादेवी तथेत्युक्त्वा कृताञ्जलिः॥
जगाम त्वरिता पूर्वं गृहं हिमगिरेर्महत्॥ २२.६४ ॥

तत्राऽऽसीनां महाहर्म्ये रत्नभित्तिसमाश्रये॥
ददर्श मेनामापांडुच्छविवक्त्रसरोरुहाम्॥ २२.६५ ॥

किंचिच्छ्यामुखोदग्रस्तनभागावनामिताम्॥
महौषधिगणबद्धमंत्रराजनिषेविताम्॥ २२.६६ ॥

ततः किंचित्प्रमिलिते मेनानेत्रांबुजद्वये॥
आविवेशमुखं रात्रिर्ब्रह्मणो वचनात्तदा॥ २२.६७ ॥

जन्मदाया जगन्मातुः क्रमेण जठरांतरम्॥
अरंजयच्छविं देव्या गुहमातुर्विभावरी॥ २२.६८ ॥

ततो जगन्मं गलदा मेना हिमगिरेः प्रिया॥
ब्राह्मे मुहूर्ते सुभगे प्रासूयत शुभाननाम्॥ २२.६९ ॥

तस्यां तु जायमानायां जंतवः स्थाणुजंगमाः॥
अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः॥ २२.७० ॥

अभवत्क्रूरसत्त्वानां चेतः शांतं च देहिनाम्॥
ज्योतिषामपि तेजस्त्वमभवत्सुतरां तदा॥ २२.७१ ॥

वनाश्रिताश्चौषधयः स्वादवंति फलानि च॥
गंधवंति च माल्यानि विमलं च नभोऽभवत्॥ २२.७२ ॥

मारुतश्च सुखस्पर्शो दिशश्च सुमनोहराः॥
विस्मृता नि च शास्त्राणि प्रादुर्भावं प्रपेदिरे॥ २२.७३ ॥

प्रभावस्तीर्थमुख्यानां तदा पुण्यतमोऽभवत्॥
सत्ये धर्मे चाध्ययने यज्ञे दाने तपस्यपि॥ २२.७४ ॥

सर्वेषामभवच्छ्रद्धा जन्मकाले गुहारणेः॥
अंतरिक्षेमराश्चापि प्रहर्षोत्फुल्ललोचनाः॥ २२.७५ ॥

हरिब्रह्ममहेंद्रार्कवायुवह्निपुरोगमाः॥
पुष्पवृष्टिं प्रमुमुचुस्तस्मिन्मेनागृहे शुभे॥ २२.७६ ॥

मेरुप्रभृतयश्चापि मूर्तिमंतो महानगाः॥
तस्मिन्महोत्सवे प्राप्ता वीरकांस्योपशोभिताः॥ २२.७७ ॥

सागराः सरितश्चैव समाजग्मुश्च सर्वशः॥ २२.७८ ॥

हिमशैलोऽभवल्लोके तदा सर्वैश्चराचरैः॥
सेव्यश्चाप्यभिगम्यश्च पूजनीयश्च भारत॥ २२.७९ ॥

अनुभूयोत्सवं ते च जग्मुः स्वानालयांस्तदा॥ २२.८० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कुमारेश माहात्म्ये पार्वतीजन्मवर्णनंनाम द्वाविंशोऽध्यायः॥ २२ ॥ छ ॥

**॥नारद उवाच॥**

ततश्च शैलजा देवी चिक्रीड सुभगा तदा॥
देवगंधर्वकन्याभिर्नगकिंनरसंभवाः॥
मुनीनां चापि याः कन्यास्ताभिः सार्धं च शोभना॥ २३.१ ॥

कदाचिदथ मेरुस्थो वासवः पांडुनंदन॥
सस्मारा मां ययौ चाहं संस्मृतो वासवं तदा॥ २३.२ ॥

मां दृष्ट्वा च सहस्राक्षः समुत्थायातिहर्षितः॥
पूजयामास तां पूजां प्रतिगृह्याहमब्रुवम्॥ २३.३ ॥

महासुर महोन्मादकालानल दिवस्पते॥
कुशलं विद्यते कच्चिचच्च नंदसि॥ २३.४ ॥

पृष्टस्त्वेवं मया शक्रः प्रोवाच वचनं स्मयन्॥
कुशलस्यांकुरस्तावत्संभूतो भुवनत्रये॥ २३.५ ॥

तत्फलोदयसंपत्तौ तद्भवान्संस्मृतो मुने॥
वेत्सि सर्वमतं त्वं वै तथापि परिनोदकः॥ २३.६ ॥

निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने॥ २३.७ ॥

तद्भवाञ्छैलजां देवीं शैलंद्रं शैलवल्लभाम्॥
हरं संभावय वरं यन्नान्यं रोचयंति ते॥ २३.८ ॥

ततस्तद्वाक्यमाकर्ण्य गतोऽहं शैलसत्तमम्॥
ओषधिप्रस्थनिलयं साक्षादिव दिवस्पतिम्॥ २३.९ ॥

तत्र हैमे स्वयं तेन महाभक्त्या निवेदिते॥
महासने पूजितोहमुपविष्टो महासुखम्॥ २३.१० ॥

गृहीतार्घ्यं ततो मां च पप्रच्छ श्लक्ष्णया गिरा॥
कुशलं तपसः शैलः शनैः फुल्लाननांबुजः॥ २३.११ ॥

अहमप्यस्य तत्प्रोच्य प्रत्यवोचं गिरीश्वरम्॥
त्वया शैलेंद्र पूर्वां वाप्यपरां च दिशं तथा॥ २३.१२ ॥

अवगाह्य स्थितवता क्रियते प्राणिपालना॥
अहो धन्योसि विप्रेंद्राः साहाय्येन तवाचल॥ २३.१३ ॥

तपोजपव्रतस्नानौः साध्यंत्यात्मनः परम्॥
यज्ञांगसाधनैः कांश्चित्कंदादिफलदानतः॥ २३.१४ ॥

त्वं समुद्धरसि विप्रान्किमतः प्रोच्यते तव॥
अन्येऽपि जीव बहुधात्वामुपाश्रित्य भूधर॥ २३.१५ ॥

मुदिताः प्रतिवर्तंते गृहस्थमिव प्राणिनः॥
शीतमातपवर्षांश्च क्लेशान्नानाविधान्सहन्॥ २३.१६ ॥

उपाकरोषि जंतूनामेवंरूपा हि साधवः॥
किमतः प्रोच्यते तुभ्यं धन्यस्त्वं पृथिवीधर॥ २३.१७ ॥

कंदरं यस्य चाध्यास्ते स्वयं तव महेश्वरः॥
इत्युक्तवति वाक्यं च यथार्थं मयिफाल्गुन॥ २३.१८ ॥

हिमशैलस्य महिषी मेना आगाद्दिदृक्षया॥
अनुयाता दुहित्रा च स्वल्पाश्च परिचारिकाः॥ २३.१९ ॥

लज्जयानतसर्वांगी प्रविवेश सदो महत्॥
ततो मां शैलमहिषी ववंदे प्रणिपत्य सा॥ २३.२० ॥

वस्त्रनिर्गूढवदना पाणिपद्मकृतांजलिः॥
तामहं सत्यरूपाभिराशीर्भिः समवर्धयम्॥ २३.२१ ॥

पतिव्रता शुभाचारा सुबगा वीरसूः शुभे॥
सदा वीरवती चापि भव वंशोन्नतिप्रद॥ २३.२२ ॥

ततोऽहं विस्मिताक्षीं च हिमवद्गिरिपुत्रिकाम्॥
मृदुवाण्या प्रत्यवोचमेहि बाले ममांतिकम्॥ २३.२३ ॥

ततो देवी जगन्माता बालबावं स्वकं मयि॥
दर्शयंती स्वपितरं कंठे गृह्यांकमावि शत्॥ २३.२४ ॥

उवाच वाचं तां मंदं मुनिं वंदय पुत्रिके॥
मुनेः प्रसादतोऽवश्यं पतिमाप्स्यसि संमतम्॥ २३.२५ ॥

इत्युक्ता सा ततो बाला वस्त्रांतपि हितानना॥
किंचित्सहुंकृतोत्कंपं प्रोच्य नोवाच किंचन॥ २३.२६ ॥

ततो विस्मितचित्तोहमुपचारविदांवरः॥
प्रत्यवोचं पुनर्देवीमेहि दास्यामि ते शुभे॥ २३.२७ ॥

रत्नक्रीडनकं रम्यं स्तापितं सुचिरं मया॥
इत्युक्ता सा तदोत्थाय पितुरंकात्सवेगतः॥ २३.२८ ॥

वंदमाना च मे पादौ मया नीतांक मात्मनः॥
मन्यता तां जगत्पूज्यामुक्तं बाले तवोचितम्॥ २३.२९ ॥

न तत्पश्यामि यत्तुभ्यं दद्म्याशीः का तवोचिता॥
इत्युक्ते मातृवात्सल्याच्छैलेन्द्र महिषी तदा॥ २३.३० ॥

नोदयामास मां मंदमानशीःशंकिता तदा॥
भगवन्वेत्सि सर्वं त्वमतीतानागतं प्रभो॥ २३.३१ ॥

तदहं ज्ञातुमिच्छामि कीदृशोऽस्याः पतिर्भवेत्॥
श्रुत्वेति सस्मितमुखः प्रावोचं नर्मवल्लभः॥ २३.३२ ॥

न जातोऽस्याः पतिर्भद्रे वर्तते च कुलक्षणः॥
नग्नोऽतिनिर्धनः क्रोधीवृतः क्रूरैश्च सर्वदा॥ २३.३३ ॥

श्रुत्वेति संभ्रमाविष्टो ध्वस्तवीर्यो हिमाचलः॥
मां तदा प्रत्युवाचेदं साश्रुकण्ठो महागिरिः॥ २३.३४ ॥

अहो विचित्रः सं सारो दुर्वेद्यो महतामपि॥
प्रवरस्त्वपि शक्त्या यो नरेषु न कृपायते॥ २३.३५ ॥

यत्नेन महता तावत्पुण्यैर्बहुविधैरपि॥
साधयत्यात्मनो लोको मानुष्य मतिदुर्लभम्॥ २३.३६ ॥

अध्रुवं तद्ध्रवत्वे च कथंचित्परिकल्प्यते॥
तत्रापि दुर्लभानाम समानव्रतचारिणी॥ २३.३७ ॥

साध्वी महाकुलोत्पन्ना भार्याया स्यात्पतिव्रता॥
तत्रापि दुर्लभं यच्च तया धर्मनिषेवणम्॥ २३.३८ ॥

सह वेदपुराणोक्तं जगत्त्रयहितावहम्॥
एतत्सुदुर्लभं यच्च तस्यां चैव प्रजायते॥ २३.३९ ॥

तदपत्यमपत्यार्थं संसारे किल नारद॥
एतेषां दुर्लभानां हि किंचित्प्राप्नोति पुण्यवान्॥ २३.४० ॥

सर्वमेतदवाप्नोति स कोपि यदिवा न वा॥
किंचित्केनापि हि न्यूनं संसारः कुरुते नरम्॥ २३.४१ ॥

अथ संसारिको दोषः स्वकृतं यत्र भुज्यते॥
गार्हस्थ्यं च प्रशंसंति वेदाः सर्वेऽपि नारद॥ २३.४२ ॥

नेति केचित्तत्र पुनः कथं ते यदि नो गृही॥
अतो धात्रा च शास्त्रेषु सुतलाभः प्रशंसितः॥ २३.४३ ॥

पुनश्चसृष्टिवृद्ध्यर्थं नरकत्राणनाय च॥
तत्र स्त्रीणां समुत्पत्तिं विना सृष्टिर्न जायते॥ २३.४४ ॥

सा च जातिप्रकृत्यैव कृपणा दैन्यभागिनी॥
तासामुपरि मावज्ञा भवेदिति च वेधसा॥
शास्त्रेषूक्तमसंदिग्धं वाक्यमेतन्महात्फलम्॥ २३.४५ ॥

दशपुत्रसमा कन्या दशपुत्रान्प्रवर्द्धयन्॥
यत्फलं लभते मर्त्यस्तल्लभ्यं कन्ययैकया॥ २३.४६ ॥

तस्मात्कन्या पितुः शोच्या सदा दुःखविवर्धिनी॥ २३.४७ ॥

यापि स्यात्पूर्णसर्वार्था पतिपुत्रधनान्विता॥
त्वयोक्तं च कृते ह्यस्यास्तद्वाक्यं मम शोकदम्॥ २३.४८ ॥

केन दोषेण मे पुत्री न योग्या आशिषामता॥
न जातोऽस्याः पतिः कस्माद्वर्तते वा कुलक्षणः॥ २३.४९ ॥

निर्धनश्च मुने कस्मात्सर्वेषां सर्वदः कुतः॥
इति दुर्घटवाक्यं ते मनो मोहयतीव मे॥ २३.५० ॥

इति तं पुत्रवात्सल्यात्सभार्यं शोकसंप्लुतम्॥
अहमाश्वासयं वाग्भिः सत्याभिः पांडुनंदन॥ २३.५१ ॥

मा शुचः शैलराज त्वं हर्षस्थानेऽतिपुण्यभाक्॥
श्रृणु तद्वचनं मह्यं यन्मयोक्तं च ह्यर्थवत्॥ २३.५२ ॥

जगन्माता त्वियं बाला पुत्री ते सर्वसिद्धिदा॥
पुरा भवेऽभवद्भार्या सतीनाम्ना भवस्य या॥ २३.५३ ॥

तदस्याः किमहं दद्मि रवेर्दीपमिवाल्पकः॥
संचिंत्येति महादेव्या नाशिषं दत्तवानहम्॥ २३.५४ ॥

न जातोऽभवद्भार्या पतिश्चेति वर्तते च भवो हि सः॥
न स जातो महादेवो भूतभव्यभवोद्भवः॥ २३.५५ ॥

शरण्यः शाश्वतः शास्ता शंकरः परमेश्वरः॥ २३.५६ ॥

सर्वे देवा यत्पदमामनंति वेदैश्च सर्वैरपि यो न लभ्यः॥

ब्रह्मादिविश्वं ननु यस्य शैल बालस्य वा क्रीडनकं वदंति॥ २३.५७ ॥

स चामंगल्यशीलोऽपि मंगलां यतनो हरः॥
निर्धनः सर्वदश्चासौ वेद स्वं स्वयमेव सः॥ २३.५८ ॥

स च देवोऽचलः स्थाणुर्महादेवोऽजरो हरः॥
भविष्यति पतिः सोऽस्यास्तत्किमर्थं तु शोचसि॥ २३.५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये हिमवदाश्वासनंनाम त्रयोविंशोऽध्यायः॥ २३ ॥ छ ॥

**॥नारद उवाच॥**

एवं श्रुत्वा सभार्यः स प्रमोदप्लुतमानसः॥
प्रणम्य मामिति प्राह यद्येवं पुण्यवानहम्॥ २४.१ ॥

पुनः किंचित्प्रवक्ष्यामि पुत्र्या मे दक्षिणः करः॥
उत्तानः कारणं किं तच्छ्रोतुमिच्छामि नारद॥ २४.२ ॥

इति पृष्टोऽस्मि शैलेन प्रावोचं कारणं तदा॥
सर्वदैव करो ह्यस्याः सर्वेषां प्राणिनां प्रति॥ २४.३ ॥

अभयस्य प्रदाताऽसावुत्तानस्तु करस्ततः॥
एषा भार्या जगद्भर्तुर्वृषांकस्य महीधर॥ २४.४ ॥

जननी सर्वलोकस्य भाविनी भूतभाविनी॥
तद्यथा शीघ्रमेवैषा योगं यातु पिनाकिना॥ २४.५ ॥

त्वया विधेयं विधिवत्तथा शैलेन्द्रसत्तम॥
अस्त्यत्र सुमहतकार्यं देवानां हिमभूधर॥ २४.६ ॥

इति प्रोच्य तमापृच्छ्य प्रावोचं वासवाय तत्॥
मम भूयस्तु कर्तव्यं तन्मया कृतमेव हि॥ २४.७ ॥

किं तु पंचशरः प्रेर्यः कार्यशेषेऽत्र वासव॥
इत्यादिश्य गतश्चाहं तारकं प्रति फाल्गुन॥ २४.८ ॥

कलिप्रियत्वात्तस्यैनमर्थं कथयितुं स्फुटम्॥
हिमाद्रिरपि मे वाक्यप्रेरितः पार्वतीं प्रति॥ २४.९ ॥

भवस्याराधनां कर्तुं ससखीमादिशत्तदा॥
सा तं परिचचारेशं तस्या दृष्ट्वा सुशीलताम्॥ २४.१० ॥

पुष्पतोयफलाद्यानि नियुक्ता पार्वती व्यधात्॥
महेन्द्रोपि च मद्वाक्यात्स्मरं सस्मार भारत॥ २४.११ ॥

स च तत्स्मरणं ज्ञात्वा वसंतरतिसंयुतः॥
चूतांकुरास्त्रः‌ऋ सहसा प्रादुरासीन्मनोभवः॥ २४.१२ ॥

तमाह च वचो धीमान्स्मरन्निव च तं स्पृशन्॥
उपदेशेन बहुना किं त्वां प्रति रतिप्रिय॥ २४.१३ ॥

चित्ते वससि तेन त्वं वेत्सि भूतमनोगतम्॥
तथापि त्वां वदिष्यामि स्वकार्यपरतां स्मरन्॥ २४.१४ ॥

ममैकं सुमहत्कार्यं कर्तुमर्हसि मन्मथ॥
महेश्वरं कृपानाथं सतीभार्यावियोजितम्॥ २४.१५ ॥

संयोजय पुनर्देव्या हिमाद्रिगृहजातया॥
देवी देवश्च तुष्टौ ते करिष्यत इहेप्सितम्॥ २४.१६ ॥

**॥मदन उवाच॥**

अलीकमेतद्देवेन्द्र स हि देवस्य पोरतिः॥
नान्यासादयितव्यानि तेजांसि मुनरब्रवीत्॥ २४.१७ ॥

वेदान्तेषु च मां विप्रा गर्हसंयति पुनःपुनः॥
महाशनो महापाप्मा कामोऽयम नलो गहान्॥ २४.१८ ॥

आवृतं ज्ञानमेतेन ज्ञानिनां नित्यवैरिणा॥
तस्मादयं सदा त्याज्यः कामऽहिरिव सत्तमैः॥ २४.१९ ॥

एवं शीलस्य मे कस्मात्प्रतुष्यति महेश्वरः॥
मद्यपस्येव पापस्य वासुदेवो जगद्गुरः॥ २४.२० ॥

**॥इंद्र उवाच॥**

मैवं ब्रूहि महाभाग त्वां विनाकः पुमान्भुवि॥
धर्ममर्थं तथा कामं मोक्षं वा प्राप्तुमीश्वरः॥ २४.२१ ॥

यत्किंचित्साध्यते लोके मूलं तस्य च कामना॥
कथं कामं विनिंदति तस्मात्ते मोक्षसाधकाः॥ २४.२२ ॥

सत्यं चापि श्रुतेर्वाक्यं तव रूपं त्रिधागतम्॥
तामसं राजसं चैव सात्त्विकं चापि मन्मथ॥ २४.२३ ॥

अमुक्तितः कामनया रूपं तत्तामसं तव॥
सुखबुद्ध्या स्पृहा या च रूपं तद्राजसं तव॥ २४.२४ ॥

केवलं यावदर्थार्थं तद्रूपं सात्त्विकं तव॥
तत्ते रूपत्रयमिदं ब्रूहि नोपासते हि के॥ २४.२५ ॥

त्वं साक्षात्परमः पूज्यः कुरु कार्यमिदं हि नः॥
अथ वा पीडितान्दृष्ट्वा सामान्यानपि पंडिताः॥
स्वप्राणैरपि त्रायांति परमेतन्महाफलम्॥ २४.२६ ॥

इति संचिंत्य कार्यं त्वं सर्वथा कुरु तत्स्फुटम्॥ २४.२७ ॥

इत्या कर्ण्य तथेत्युक्त्वा वसंतरतिसंयुतः॥
पिकादिसैन्यसंपन्नो हिमाद्रिं प्रययौ स्मरः॥ २४.२८ ॥

तत्रापश्यत शंभोः स पुण्यमाश्रममंडलम्॥
नानावृक्षसमाकीर्णं शांतसत्त्वसमाकुलम्॥ २४.२९ ॥

तत्रापश्यत्त्रिनेत्रस्य वीरकंनाम द्वारपम्॥
यथा साक्षान्महेशानं गणआंश्चायुतशोऽस्य च॥ २४.३० ॥

ददर्श च महेशानं नासाग्रकृतलोचनम्॥
देवदारुद्रुमच्छायावेदिका मध्यमाश्रितम्॥
समाकायं सुखासीनं समाधिस्थं महेश्वरम्॥ २४.३१ ॥

निस्तरंगं विनिर्गृह्य स्थितमिंद्रियगोचरान्॥
आत्मानमात्मना देवं प्रविष्टं तपसो निधिम्॥ २४.३२ ॥

तं तथाविधमालोक्य सोंतर्भेदाय यत्नवान्॥
भ्रमरध्वनिव्याजेन विवेश मदनो मनः॥ २४.३३ ॥

एतस्मिन्नंतरे देवो विकासितविलोचनः॥
सस्मार नगराजस्य तनयां रक्तमानसः॥ २४.३४ ॥

निवेदिता वीरकेण विवेश च गिरेः सुता॥
तस्मिन्काले महाभागा सदा यद्वदुपैति सा॥ २४.३५ ॥

ततस्तस्यां मनः स्वीयमनुरक्तमवेक्ष्य च॥
निगृह्य लीलया देवः स्वकं पृष्ठमवैक्षत॥
तावदापूर्णधनुषमपश्यत रतिप्रियम्॥ २४.३६ ॥

तन्नाशकृपया देवो नानास्थानेषु सोऽगमत्॥
तावत्पस्यति पृष्ठस्तमाकृष्य धनुषः शरम्॥ २४.३७ ॥

स नदीः पर्वताश्चैव आश्रमान्सरसीस्तथा॥
परिभ्रमन्महादेवः पृष्ठस्थं तमवैक्षत॥ २४.३८ ॥

जगत्त्रयं परिभ्रम्य पुनरागात्स्वमाश्रमम्॥
पृष्ठस्थमेव तं वीक्ष्य निःश्वासं मुमुचे हरः॥ २४.३९ ॥

ततस्तृतीयनेत्रोत्थवह्निना नाकवासिनाम्॥
क्रोशतां गमितः कामो भस्मत्वं पांडुनंदन॥ २४.४० ॥

सस तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः॥

व्यजृंभत जगद्दग्धुं ज्वालापूरितदिङ्मुखः॥ २४.४१ ॥

ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम्॥
साहंकारे जने चंद्रे सुमनस्सु च गीतके॥ २४.४२ ॥

भृंगेषु कोकिलास्येषु विहारेषु स्मरानलम्॥
तत्प्राप्तौ स्नेहसंयुक्तं कामिनां हृदयं किल॥ २४.४३ ॥

ज्वालयत्यनिशं सोऽग्निर्दुश्चिकित्स्योऽसुखावहः॥
विलोक्य हरनिःश्वासज्वालाभस्मीकृतं स्मरम्॥ २४.४४ ॥

विललाप रतिर्दीना मधुना बंधुना सह॥
विलपंती सुबहुशो मधुना परिसांत्विता॥ २४.४५ ॥

रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः॥
कृपया परया प्राह कामपत्नीं निरीक्ष्य च॥ २४.४६ ॥

अमूर्तोऽपि ह्ययं भद्रे कार्यं सर्वं पतिस्तव॥
रतिकाले ध्रुवं बाले करिष्यति न संशयः॥ २४.४७ ॥

यदा विष्णुश्च भविता वसुदेवात्मजो विभुः॥
तदै तस्य सुतो यः स्यात्सपतिस्ते भविष्यति॥ २४.४८ ॥

सा प्रणम्य ततो रुद्रमिति प्रोक्ता रतिस्ततः॥
जगाम स्वेच्छया गत्या वसंतादिभिरन्विता॥ २४.४९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कामदहनोनाम चतुर्विंशोऽध्यायः॥ २४ ॥ छ ॥

**॥अर्जुन उवाच॥**

देवर्षे वर्ण्यते चेयं कथा पीयूषसोदरा॥
पुनरेतन्मुने ब्रूहि यदा वेत्ति महेश्वरः॥ २५.१ ॥

भगवान्स्वां सतीं भार्यां वधार्थं चापि तारकम्॥
सत्याश्च विरहात्तप्यन्ददाह किमसौ स्मरम्॥ २५.२ ॥

त्वयैवोक्तं स विरहात्सत्यास्तप्यति वै तपः॥
हिमाद्रिमास्थितो देवस्तस्याः संगमवांछया॥ २५.३ ॥

**॥नारद उवाच॥**

सत्यमेतत्पुरा पार्थ भवस्येदं मनीषितम्॥
अतप्ततपसा योगो न कर्तव्यो मयाऽनया॥ २५.४ ॥

तपो विना शुद्धदेहो न कथंचन जायते॥
असुद्धदेहेन समं संयोगो नैव दैहिकः॥ २५.५ ॥

महत्कर्माणि यानीह तेषां मूलं सदा तपः॥
नातप्ततपसां सिद्धिर्महत्कर्माणि यांति वै॥ २५.६ ॥

एतस्मात्कारणाद्देवो दर्पितं तं ददाह तु॥
ततो दग्धे स्मरे चापि पार्वतीमपि व्रीतिताम्॥ २५.७ ॥

विहाय सगणो देवः कैलासं समपद्यत॥
देवी च परमोद्विग्ना प्रस्खलंती पदेपदे॥ २५.८ ॥

जीवितं स्वं विनिंदंती बभ्रामेतस्ततश्चसा॥
हिमाद्रिरपि स्वे श्रृंगे रुदतीं पृष्टवान्रतिम्॥ २५.९ ॥

कासि कस्यासि कल्याणि किमर्थं चापि रोदिषि॥
पृष्टा सा च रतिः सर्वं यथावृत्तं न्यवेदयत्॥ २५.१० ॥

निवेदिते तथा रत्या शैलः संभ्रांतमानसः॥
प्राप्य स्वां तनयां पाणावादायागात्स्वकं पुरम्॥ २५.११ ॥

सा तत्र पितरौ प्राह सखीनां वदनेन च॥
दुर्भगेन शरीरेण किमनेन हि कारणम्॥ २५.१२ ॥

देहवासं परित्यक्ष्ये प्राप्स्ये वाभिमतं पतिम्॥
असाध्यं चाप्यभीष्टं च कथं प्राप्यं तपो विना॥ २५.१३ ॥

नियमैर्विविधैस्तस्माच्छोषयिष्ये कलेवरम्॥

अनुजानीत मां तत्र यदि वः करुणा मयि॥ २५.१४ ॥

श्रुत्वेति वचनं माता पिता च प्राह तां शुभाम्॥
उ मेति चपले पुत्रि न क्षमं तावकं वपुः॥ २५.१५ ॥

सोढुं क्लेशात्मरूपस्य तपसः सौम्यदर्शने॥
भावीन्यप्यनि वार्याणि वस्तूनि च सदैव तु॥ २५.१६ ॥

भाविनोर्था भवंत्येव नरस्यानिच्छतोपि हि॥
तस्मान्न तपसा तेऽस्ति बाले किंचित्प्रयोजनम्॥ २५.१७ ॥

**॥श्रीदेव्युवाच॥**
यदिदं भवतो वाक्यं न सम्यगिति मे मतिः॥
केवलं न हि दैवेन प्राप्तुमर्थो हि शक्यते॥ २५.१८ ॥

त्किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वभावतः॥
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम्॥ २५.१९ ॥

ब्रह्मणा चापि ब्रह्मत्वं प्राप्तं किलतपोबलात्॥
अन्यैरपि च यल्लब्धं तन्नसंख्यातुमुत्सहे॥ २५.२० ॥

अध्रुवेण शरीरेण यद्यभीष्टं न साध्यते॥
पश्चात्स शोच्यते मंदः पतितेऽस्मिञ्छरीरके॥ २५.२१ ॥

यस्य देहस्य धर्मोऽयं क्वचिज्जायेत्क्वचिन्म्रियेत्॥
क्वचिद्गर्भगतं नश्येज्जातमात्रं क्वचित्तथा॥ २५.२२ ॥

बाल्ये च यौवने चापि वार्धक्येपि विनश्यति॥
तेन चंचलदेहेन कोऽर्थः स्वार्थो न चेद्भवेत्॥ २५.२३ ॥

इत्युक्त्वा स्वसखीयुक्ता पितृभ्यां साश्रु वीक्षिता॥
श्रृंगं हिमवतः पुण्यं नानाश्चर्यं जगाम सा॥ २५.२४ ॥

तत्रां बराणि संत्यज्य भूषणानि च शैलजा॥
संवीता वल्कलैर्दिव्यैस्तपोऽतप्यत संयता॥ २५.२५ ॥

ईश्वरं हृदि संस्थाप्य प्रणवाभ्यसनादृता॥
मुनीनामप्य भून्मान्या तदानीं पार्थ पार्वती॥ २५.२६ ॥

त्रिस्नाता पाटलापत्रभक्षकाभूच्छतं समाः॥
शंत च बिल्वपत्रेण शीर्णोन कृतभोजना॥ २५.२७ ॥

जलभक्षा शतं चाभूच्छतं वै वायुभोजना॥
ततो नियममादाय पादांगुष्ठस्थिताभवत्॥ २५.२८ ॥

निराहारा ततस्तापं प्रापुस्तत्तपसो जनाः॥
ततो जगत्समालोक्य तदीयतपसोर्जितम्॥ २५.२९ ॥

हरस्तत्राययौ साक्षाद्ब्रह्मचारिवपुर्द्धरः॥
वसानो वल्कलं दिव्यं रौरवाजिनसंवृतः॥ २५.३० ॥

सुलक्षणाषाढधरः सद्वृत्तः प्रति भानवान्॥
ततस्तं पूजयामासुस्तत्सख्यो बहुमानतः॥ २५.३१ ॥

वक्तुमिच्छुः शैलपुत्रीं सखीभिरिति चोदितः॥
ब्रह्मन्नियं महाभागा गृहीतनियमा शुभा॥ २५.३२ ॥

मुहूर्तपंचमात्रेण नियमोऽस्याः समाप्यते॥
तत्प्रतीक्षस्व तं कालं पश्चादस्मत्सखीसमम्॥ २५.३३ ॥

नानाविदा धर्मवार्ताः प्रकरिष्यसि ब्राह्मण॥
इत्युक्त्वा विजयाद्यास्ता देवीचरितवर्णनैः॥ २५.३४ ॥

अश्रुमुख्यो द्विजस्याग्रे निन्युः कालं च तं तदा॥
ततः काले किंचिदूने ब्रह्मचारी महामतिः॥ २५.३५ ॥

विलोकनमिषेणागादाश्रमोपस्थितं ह्रदम्॥
निपपात च तत्रासौ चुक्रोशातितरां ततः॥ २५.३६ ॥

अहमत्र निमज्जामि कोऽपि मामुद्धरेत भोः॥
इति तारेण क्रोशंतं श्रुत्वा तं विजयादिकाः॥ २५.३७ ॥

आजग्मुस्त्वरया युक्ता ददुस्तस्मै करं च ताः॥
स चुक्रोश ततो गाढं दूरेदूरे पुनःपुनः॥ २५.३८ ॥

नाहं स्पृशाम्यसंसिद्धां म्रिये वा नानृतं त्विदम्॥
ततः समाप्तनियमा पार्वती स्वयमाययौ॥ २५.३९ ॥

सव्यं करं ददावस्य तं चासौ नाभ्यनन्दत॥
भद्रे यच्छुचि नैव स्याद्यच्चैवावज्ञया कृतम्॥ २५.४० ॥

सदोषेण कृतं यच्च तदाददद्यान्न कर्हिचित्॥
सव्यं चाशुचि ते हस्तं नावलंबामि कर्हिचित्॥ २५.४१ ॥

इत्युक्ता पार्वती प्राह नाहं दत्तं च दक्षिणम्॥
ददामि कस्यचिद्विप्र देवदेवाय कल्पितम्॥ २५.४२ ॥

दक्षिणं मे करं देवो ग्रहीता भव एव च॥
शीर्यते चोग्रतपसा सत्यमेतन्मयोदितम्॥ २५.४३ ॥

**॥विप्र उवाच॥**
यद्येवमवलेपस्ते गमनं केन वार्यते॥
यथा तव प्रतिज्ञेयं ममापीयं तथाचला॥ २५.४४ ॥

रुद्रस्यापि वयं मान्याः कीदृशं ते तपो वद॥
विषमस्थं यत्र विप्रं म्रियमाणमुपेक्षसि॥ २५.४५ ॥

अवजा नासि विप्रांस्त्वं तच्छीघ्रं व्रज दर्शनात्॥
यदि वा मन्यसे पूज्यांस्ततोऽभ्युद्धर नान्यथा॥ २५.४६ ॥

ततो विचार्य बहुधा इति चेति च सा शुभा॥
विप्रस्योद्धरणं सर्वधर्मेभ्योऽमन्यताधिकम्॥ २५.४७ ॥

ततः सा दक्षिणं दत्त्वा करं तं प्रोज्जहार च॥
नरं नारी प्रोद्धरति सज्जन्तं भववारिधौ॥
एतत्सन्दर्शनार्थाय तथा चक्रे भवोद्भवः॥ २५.४८ ॥

प्रोद्धृत्य च ततः स्नात्वा बद्ध्व योगासनं स्थिता॥ २५.४९ ॥

ब्रह्मचारी ततः प्राह प्रहसन्किमिदं शुभे॥
कर्तुकामासि तन्वंगि दृढयोगासनस्थिता॥ २५.५० ॥

देवी प्राह ज्वालयिष्ये शरीरं योगवह्निना॥
महादेवकृतमतिरुच्छिष्टाहं यतोऽभवम्॥ २५.५१ ॥

ब्रह्मचारी ततः प्राह काश्चिद्ब्राह्मणकाम्यया॥
कृत्वा वार्तास्ततः स्वीयमभीष्टं कुरु पार्वति॥ २५.५२ ॥

नोपहन्यां कदाचिद्वि साधुभिर्विप्रकामना॥
धर्ममेनं मन्यसे चेन्मुहूर्तं ब्रूहि पार्वति॥ २५.५३ ॥

देवी प्राह ब्रूहि विप्र मुहूर्तं संस्थिता त्वहम्॥
ततः स्वयं व्रती प्राह देवीं तां स्वसखीयुताम्॥ २५.५४ ॥

किमर्थमिति रम्भोरु नवे वयसि दुश्चरम्॥
तपस्त्वया समारब्धं नानुरूपं विभाति मे॥ २५.५५ ॥

दुर्लभं प्राप्य मानुष्यं गिरिराजगृहेऽधुना॥
भोगांश्च दुर्लभान्देवि त्यक्त्वा किं क्लिश्यते वपुः॥ २५.५६ ॥

अतीव दूये वीक्ष्य त्वां सुकुमारतराकृतिम्॥
अत्युग्रतपसा क्लिष्टा पद्मिनीव हिमर्दिता॥ २५.५७ ॥

इदं चान्यत्त्व शुभे शिरसो रोगदं मम॥
यद्देहं त्यक्तुकामा त्वं प्रबुद्धा नासि बालिके॥ २५.५८ ॥

वामः कामो मनुष्येषु सत्यमेतद्वचो यतः॥
स्पृहणीयासि सर्वेषामेवं पीडयसे वपुः॥ २५.५९ ॥

अविज्ञातान्वयो नग्नः शूली भूतगणाधिपः॥
श्मशाननिलयो भस्मोद्धूलनो वृषवाहनः॥ २५.६० ॥

गजाजिनो द्विजिह्वाद्यलंकृतांगो जटाधरः॥
विरूपाक्षः कथंकारं निर्गुणः स्यात्तवोचितः॥ २५.६१ ॥

गुणा ये कुलशीलाद्य वराणामुदिता बुधैः॥
तेषामेकोऽपि नैवास्ति तस्मिंस्तन्नोचितः स ते॥ २५.६२ ॥

शोचनीयतमा पूर्वमासीत्पार्वति कौमुदी॥
त्वं संवृत्ता द्वितीयासि तस्यास्तत्संगमाशया॥ २५.६३ ॥

तपोधनाः सर्वसमा वयं यद्यपि पार्वति॥
दुनोत्येव तवारंभः शूलायां यूपसत्क्रिया॥ २५.६४ ॥

वृषभारोहणं वासः श्मशाने पाणिसंग्रहः॥
सव्यालपाणिना क्षौमगजत्वग्बंधनः कथम्॥ २५.६५ ॥

जनहास्यकरं सर्वं त्वयारब्धमसांप्रतम्॥
स्त्रीभावाद्भूतिसंपर्क्कः कथं चाभिमतस्तव॥ २५.६६ ॥

निवर्तय मनस्तस्मादस्मात्सर्वविरोधिनः॥
मृगाक्षि मदनारातेर्मर्कटाक्षस्य प्रार्थनात्॥ २५.६७ ॥

विरुद्धवादिनं चैवं ब्रह्मचारिणमीश्वरम्॥
निशम्य कुपिता देवी प्राह वाचा सगद्गदम्॥ २५.६८ ॥

मा मा ब्राह्मण भाषिष्ठा विरुद्धमिति शंकरे॥
महत्तमो याति पुमान्देवदेवस्य निंदया॥ २५.६९ ॥

न सम्यगभिजानासि तस्य देवस्य चेष्टितम्॥
श्रृणु ब्राह्मण त्वं पापाद्यथास्मात्परिमुच्यसे॥ २५.७० ॥

स आदिः सर्वजगतां कोस्य वेदान्वयं ततः॥
सर्वं जगद्यस्य रूपं दिग्वासाः कीर्त्यते ततः॥ २५.७१ ॥

गुणत्रयमयं शूलं शूली यस्माद्बिभार्ते सः॥
अबद्वाः सर्वतो मुक्ता भूता एव च तत्पतिः॥ २५.७२ ॥

श्मशानं चापि संसारस्तद्वासी कृपयार्थिनाम्॥
भूतयः कथिता भूतिस्तां बिभर्ति स भूतिभृत्॥ २५.७३ ॥

वृषो धर्म इति प्रोक्तस्तमारूढस्ततो वृषी॥
सर्पाश्च दोषाः क्रोधाद्यास्तान्बिभर्ति जगन्मयः॥ २५.७४ ॥

नानाविधाः कर्मयोगा जटारूपा बिभर्ति सः॥
वेदत्रयी त्रिनेत्राणि त्रिपुरं त्रिगुणं वपुः॥ २५.७५ ॥

भस्मीकरोति तद्देवस्त्रिपुरध्नस्ततः स्मृतः॥
एवंविध महादेवं विदुर्ये सूक्ष्मदर्शिनः॥ २५.७६ ॥

कथंकारं हि ते नाम भजंते नैव तं हरम्॥
अथ वा भीतसंसाराः सर्वे विप्र यतो जनाः॥ २५.७७ ॥

विमृश्य कुर्वते सर्वं विमृश्यैतन्मया कृतम्॥
शुभं वाप्यशुभं वास्तु त्वमप्येनं प्रपूजय॥ २५.७८ ॥

इति ब्रुवंत्यां तस्यां तु किंचित्प्रस्फुरिताधरम्॥
विज्ञाय तां सखीमाह किमप्येष विवक्षुकः॥ २५.७९ ॥

वार्यतामिति विप्रोऽयं महद्दूषणबाषकः॥
न केवलं पापभागी श्रोता वै स्यान्न संशयः॥ २५.८० ॥

अथ वा किं च नः कार्यं वादेन सह ब्राह्मणैः॥
कर्णौ पिधाय यास्यामो यथा यः स्यात्ततास्तु सः॥ २५.८१ ॥

इत्युक्त्वोत्थाय गच्छंत्यां पिधाय श्रवणावुभौ॥
स्वरूपं समुपाश्रित्य जगृहे वसनं हरः॥ २५.८२ ॥

ततो निरीक्ष्य तं देवं संभ्रांता परमेश्वरी॥
प्रणिपत्य महेशानं तुष्टावावनता उमा॥ २५.८३ ॥

प्राह तां च महादेवो दासोऽस्मि तव शोभने॥
तपोद्रव्येण क्रीतश्च समादिश यथेप्सितम्॥ २५.८४ ॥

**॥देव्युवाच॥**
मनसस्त्वं प्रभुः शंभो दत्तं तच्च मया तव॥
वपुषः पितरावीशौ तौ सम्मानयितुमर्हसि॥ २५.८५ ॥

**॥महादेव उवाच॥**
पित्रा हि ते परिज्ञातं दृष्ट्वा त्वां रूपशालिनीम्॥
बालां स्वयंवरं पुत्री महं दास्यामि नान्यथा॥ २५.८६ ॥

तत्तस्य सर्वमेवास्तु वचनं त्वं हिमाचलम्॥
स्वयंवरार्थं सुश्रोणि प्रेरय त्वां वृणे ततः॥ २५.८७ ॥

इत्युक्त्वा तां महादेवः शुचिः शुचिषदो विभुः॥
जगामेष्टं तदा देशं स्वपुरं प्रययौ च सा॥ २५.८८ ॥

दृष्ट्वा देवीं तदा हृष्टो मेनया सहितोऽचलः॥ २५.८९ ॥

आलिंग्याघ्राय पप्रच्छ सर्वं सा च न्यवेदयत्॥
दुहितुर्देवदेवेन आज्ञप्तं तु हिमाचलः॥ २५.९० ॥

स्वयंवरं प्रमुदितः सर्वलोकेष्वघोषयत्॥
अश्विनो द्वादशादित्या गन्धर्वरुडोरगाः॥ २५.९१ ॥

यक्षाः सिद्धास्तथा साध्या दैत्याः किंपुरुषा नगाः॥
समुद्राद्याश्च ये केचित्त्रैलोक्यप्रवरास्च ये॥ २५.९२ ॥

त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च॥
त्रयस्त्रिंशच्च ये देवास्त्रयस्त्रिंशच्च कोटयः॥ २५.९३ ॥

जग्मुर्गिरीन्द्रपुत्र्यास्तु स्वयंवरमनुत्तमम्॥
आमंत्रितस्तथा विष्णुर्मेरुमाह हसन्निव॥ २५.९४ ॥

तातास्माकं च सा देवी मेरो गच्छ नमामि ताम्॥
अथ शैलसुता देवी हैममारुह्य शोभनम्॥ २५.९५ ॥

विमानं सर्वतोभद्रं सर्वरत्नैरलंकृतम्॥
अप्सरोभिः प्रनृत्यद्भिः सर्वाभरणभूषिता॥ २५.९६ ॥

गंधर्वसंघैर्विविधैः किंनरैश्च सुशोभनैः॥
बंदिभिः स्तूयमाना च वीरकांस्यधरा स्थिता॥ २५.९७ ॥

सितातपत्ररत्नांशुमिश्रितं चावहत्तदा॥
शालिनी नाम पार्वत्याः संध्यापूर्णेंदुमंडला॥ २५.९८ ॥

चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्च संवृता॥
मालां प्रगृह्य सा तस्थौ सुरद्रुमसमुद्भवाम्॥ २५.९९ ॥

एवं तस्यां स्थितायां तु स्थिते लोकत्रये तदा॥
शिशुर्भूत्वा महादेवः क्रीडार्थं वृषभध्वजः॥ २५.१०० ॥

उत्संगतलसंगुप्तो बभूव भगवान्भवः॥
जयेति यत्पदं ख्यातं तस्य सत्यार्थमीश्वरम्॥ २५.१०१ ॥

अथ दृष्ट्वा शिशुं देवास्तस्य उत्संगवर्तिनः॥
कोयमत्रेति संमंत्र्य चुक्रुशुर्भृशरोषिताः॥ २५.१०२ ॥

वज्रमाहारयत्तस्य बाहुमुद्यम्य वृत्रहा॥
स बाहुरुद्यतस्तस्य तथैव समतिष्ठत॥ २५.१०३ ॥

स्तंभितः शिशुरूपेण देवदेवेन लीलया॥
वज्रं क्षेप्तुं न शक्नोति बाहुं चालयितुं तदा॥ २५.१०४ ॥

वह्निः शक्तिं तदा क्षेप्तुं न शशाक तथोत्थितः॥
यमोऽपि दंडं खड्गं च निर्ऋतिस्तं शिशुं प्रति॥ २५.१०५ ॥

पाशं च वरुणो राजा ध्वजयष्टिं समीरणः॥
सोमो गुडं धनेशश्च गदां सुमहतीं दृढाम्॥ २५.१०६ ॥

नानायुधानि चादित्या मुसलं वसवस्तथा॥
महाघोराणि शस्त्राणि तारकाद्याश्च दानवाः॥ २५.१०७ ॥

स्तंभिता देवदेवेन तथान्ये भुवनेषु ये॥
पूषा दंतान्दशन्दंर्बालमैक्षत मोहितः॥ २५.१०८ ॥

तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शंभुना॥
भगश्च नेत्रे विकृते चकार स्फुटिते च ते॥ २५.१०९ ॥

बलं तेजश्च योगांश्च सर्वेषां जगृहे प्रभुः॥
अथ तेषु स्थितेष्वेव मन्युमत्सु सुरेष्वपि॥ २५.११० ॥

ब्रह्मा ध्यानमुपाश्रित्य बुबोध हरचेष्टितम्॥
सोऽभिगम्य महादेवं तुष्टाव प्रयतो विधिः॥ २५.१११ ॥

पौराणैः सामसंगीतैर्वैदिकैर्गुह्यनामभिः॥
नमस्तुभ्यं महादेव महादेव्यै नमोनमः॥ २५.११२ ॥

प्रसादात्तव बुद्ध्यादिर्जगदेतत्प्रवर्तते॥
मूढाश्च देवताः सर्वा नैनं बुध्यत शंकरम्॥ २५.११३ ॥

महादेवमिहायातं सर्वदेवनमस्कृतम्॥
गच्छध्वं शरणं शीघ्रं यदि जीवितुमिच्छत॥ २५.११४ ॥

ततः संभ्रम संपन्नास्तुष्टुवुः प्रणताः सुराः॥
नमोनमो महादेव पाहिपाहि जगत्पते॥ २५.११५ ॥

दुराचारान्भवानस्मानात्मद्रोहपरायणान्॥
अहो पश्यत नो मौढ्यं जानंतस्तव भाविनीम्॥ २५.११६ ॥

भार्यामुमां महादेवीं तथाप्यत्र समागताः॥
युक्तमेतद्यदस्माकं राज्यं गृह्येत चासुरैः॥ २५.११७ ॥

येषामेवंविधाबुद्धिरस्माभिः किं कृतं त्विदम्॥
अथ वा नो न दोषोऽस्ति पशवो हि वयं यतः॥ २५.११८ ॥

त्वयैव पतिना सर्वे प्रेरिताः कुर्महे विभो॥
ईश्वरः सर्व भूतानां पतिस्त्वं परमेश्वरः॥ २५.११९ ॥

भ्रामयस्यखिलं विश्वं यन्त्रारूढं स्वमायया॥
येन विभ्रामिता मूढाः समायाताः स्वयंवरम्॥ २५.१२० ॥

तस्मै पशुनां पतये नमस्तुभ्यं प्रसीद नः॥
अथ तेषां प्रसन्नऽभूद्देवदेवास्त्रियंबकः॥ २५.१२१ ॥

यथापूर्वं चकारैतान्संस्तवाद्ब्रह्मणः प्रभुः॥
तारकप्रमुखा दैत्याः संक्रुद्धास्तत्र प्रोचिरे॥ २५.१२२ ॥

कोयमंग महादेवो न मन्यामो वयं च तम्॥
ततः प्रहस्य बालोऽसौ हुंकारं लीलया व्यधात्॥ २५.१२३ ॥

हुंकारेणैव ते दैत्याः स्वमेव नगरं गताः॥
विस्मृतं सकलं तेषां स्वयंवरमुखं च तत्॥ २५.१२४ ॥

महादेवप्रभावेन दैत्यानां घोरकर्मणाम्॥
एवं यस्य प्रभावो हि देवदैत्येषु फाल्गुन॥ २५.१२५ ॥

कथमीश्वरवाक्यार्थस्तस्मादन्यत्र मुच्यते॥
असंशयं विमुढास्ते पश्चात्तापः पुरा महान्॥ २५.१२६ ॥

ईश्वरं भुवनस्यास्य ये भजंते न त्र्यंबकम्॥
ततः संस्तूयमानः स सुरैः पद्मभुवादिभिः॥ २५.१२७ ॥

वपुश्चकार देवेशस्त्र्यंबकः परमाद्भुतम्॥
तेजसा तस्य देवास्ते सेंद्रचंद्रदिवाकराः॥ २५.१२८ ॥

सब्रह्मकाः ससाध्याश्च वसुर्विश्वे च देवताः॥
सयमाश्च सरुद्राश्च चक्षुरप्रार्थयन्प्रभुम्॥ २५.१२९ ॥

तेभ्यः परतमं चक्षुः स्ववपुर्द्रष्टुमुत्तमम्॥
ददावम्बापतिः शर्वो भवान्याश्चालस्य च॥ २५.१३० ॥

लब्ध्वा रुद्रप्रसादेन दिव्यं चक्षुरनुत्तमम्॥
सब्रह्यकास्तदा देवास्तमपश्यन्महेश्वरम्॥ २५.१३१ ॥

ततो जगुश्च मुनयः पुष्पवृष्टिं च खेचराः॥
मुमुचुश्च तदा नेदुर्देवदुंदुभयो भृशम्॥ २५.१३२ ॥

जगुगधर्वमुख्याश्च ननृतुश्चाप्सरोगणाः॥
मुमुदुर्गणपाः सर्वे मुमोदांबा च पार्वती॥ २५.१३३ ॥

ब्रह्माद्या मेनिरे पूर्णां भवानीं च गिरीश्वरम्॥
तस्य देवी ततो हृष्टा समक्षं त्रिदिवौकसाम्॥ २५.१३४ ॥

पादयोः स्थापयामास मालां दिव्यां सुगंधिनीम्॥
सादुसाध्विति संप्रोच्य तया तं तत्र चर्चितम्॥ २५.१३५ ॥

सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः॥
सर्वे सब्रह्मका देवा जयेति च मुदा जगुः॥ २५.१३६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये श्रीमहादेववैवाहिकोत्सावर्णनंनाम पञ्चविंशोऽध्यायः॥ २५ ॥ छ ॥

**॥नारद उवाच॥**

अथ ब्रह्मा महादेवमभिवाद्य कृतांजलिः॥
उद्वाहः क्रियतां देव इत्युवाच महेश्वरम्॥ २६.१ ॥

तस्य तद्वचनं श्रुत्वा प्राहेदं भगवान्हरः॥
पराधीना वयं ब्रह्मन्हिमाद्रेस्तव चापि यत्॥ २६.२ ॥

यद्युक्तं क्रियतां तद्धि वयं युष्मद्वशेऽधुना॥
ततो ब्रह्मा स्वयं दिव्यं पुरं रत्नमयं शुभम्॥ २६.३ ॥

उद्वाहार्थं महेशस्य तत्क्षणात्समकल्पयत्॥
शतयोजनविस्तीर्णं प्रासादशतशोभितम्॥ २६.४ ॥

पुरेतस्मिन्महादेवः स्वयमेव व्यतिष्ठत॥
ततः सप्तमुनीन्देवश्चिंतिताब्यागतान्पुरः॥ २६.५ ॥

प्राहिणोदंबिकायाश्च स्थिरपत्रार्थमीश्वरः॥
सारुंधतीकास्ते तत्र ह्लादयंतो हिमाचलम्॥ २६.६ ॥

सभार्यामीश्वरगुणैः स्थिरपत्राणि चादधुः॥
ततः संपूजितास्तेन पुनरागम्य तेऽचलात्॥ २६.७ ॥

न्यवेदयंस्त्र्यंबकाय स च तानभ्यनंदत॥
उद्वाहार्थं ततो देवो विश्वं सर्वं न्यमंत्रयत्॥ २६.८ ॥

समागतं च तत्सव विना दैत्यैर्दुरात्मभिः॥
स्थावरं जंगमं यच्च विश्वं विष्णुपुरोगमम्॥ २६.९ ॥

सब्रह्यकं पुरारातेर्महिमानमवर्धयत्॥
ततस्तं विधिराहेदं गन्धमादनपर्वते॥ २६.१० ॥

पुरे स्थितं विवाहस्य देव कालः प्रवर्तते॥
ततस्तस्य जटाजूटे चंद्रखंडं पितामहः॥ २६.११ ॥

बबंध प्रणयोदारविस्फारितविलोचनः॥
कपर्द्दं शोभनं विष्णुः स्वय चक्रेऽस्य हर्षतः॥ २६.१२ ॥

कपालमालां विपुलां चामुण्डा मूर्ध्न्यबंधत॥
उवाच चापि गिरिशं पुत्रं जनय शंकर॥ २६.१३ ॥

यो दैत्येंद्रकुलं हत्वा मां रक्तैस्तर्पयिष्यति॥
सूर्यो ज्वलच्छिखारक्तं भाबासितजगत्त्रयम्॥ २६.१४ ॥

बबंध देवदेवस्यच स्वयमेव प्रमोदतः॥
शेषवासुकिमुख्याश्च ज्वलंतस्तेजसा शुभाः॥ २६.१५ ॥

आत्मानं भूषणस्थाने स्वयं ते चक्रुरीश्वरे ॥

वायवश्च ततस्तीक्ष्णश्रृंगं हिमगिरिप्रभम्॥ २६.१६ ॥

वृषं विभूषयामासुर्नानारत्नोपपत्तिभिः॥
शक्रो गजजिनं गृह्य स्वयमग्रे व्यवस्थितः॥ २६.१७ ॥

विना भस्म समाधाय कपाले रजतप्रभम्॥
मनुजास्थिमयीं मालां प्रेतनाथश्च वन्दनम्॥ २६.१८ ॥

वह्निस्तेजोमयं दिव्यमजिनं प्रददौ स्थितः॥
एवं विभूषितः सर्वैर्भृत्यैरीशो बभौ भृशम्॥ २६.१९ ॥

ततो हिमाद्रेः पुरुषा वीरकं प्रोचिरे वचः॥
मा भूत्कालात्ययः शीघ्रं भवस्यैतन्निवेद्यताम्॥ २६.२० ॥

ततो देवं प्रणम्याह वीरकः करसंपुटी॥
त्वरयंति महेशानं हिमाद्रेः पुरुषास्त्वमी॥ २६.२१ ॥

इति श्रुत्वा वचो देवः शीघ्रमित्येव चाब्रवीत्॥
सप्त वारिधयस्तस्य चक्रुर्दर्पणदर्शनम्॥ २६.२२ ॥

तत्रैक्षत महादेवः स्वरूपं स जगन्मयम्॥
ततो बद्धांजलिर्धीमान्स्थाणुं प्रोवाच केशवः॥ २६.२३ ॥

देवदेव महादेव त्रिपुरांतक शंकर॥
शोभसेऽनेन रूपेण जगदानंददायिना॥ २६.२४ ॥

महेश्वर यथा साक्षादपरस्त्वं महेश्वरः॥
ततः स्मयन्महादेवो जयेति भुवने श्रुतः॥ २६.२५ ॥

करमालंब्य विष्णोश्च वृषभं रुरुहेशनैः॥
ततश्च वसवो देवाः शूलं तस्य न्यवेदयन्॥ २६.२६ ॥

धनदो निदिभिर्युक्तः समीपस्थस्ततोऽभवत्॥
स शूलपाणिर्विश्वात्मा संचचाल ततो हरः॥ २६.२७ ॥

देवदुंदुभिनादैश्च पुष्पासारैश्च गीतकैः॥
नृत्यद्भिरप्सरोभिश्च जयेति च महास्वनैः॥ २६.२८ ॥

सव्यदक्षिणसंस्थानौ ब्रह्मविष्णूतु जग्मतुः॥
हंसं च गरुडं चैव समारुह्य महाप्रभौ॥ २६.२९ ॥

अथादितिर्दितिः सा च दनुः कद्रूः सुपर्णजा॥
पौलोमी सुरसा चैव सिंहिका सुरभिर्मुनिः॥ २६.३० ॥

सिद्धिर्माया क्षमा दुर्गा देवी स्वाहा स्वधा सुधा॥
सावित्री चैव गायत्री लक्ष्मीः सा दक्षिणा द्युतिः॥ २६.३१ ॥

स्पृहामतिर्धृतिर्बुद्धिर्मथिर्ऋद्धिः सरस्वती॥
राका कुहूः सिनीवाली देवी भानुमती तथा॥ २६.३२ ॥

धरणी धारणी वेला राज्ञी चापि च रोहिणी॥
इत्येताश्चान्यदेवानां मातरः पत्नयस्तथा॥ २६.३३ ॥

उद्वाहं देवदेवस्य जग्मुः सर्वा मुदान्विताः॥
उरगा गरुडा यक्षा गंधर्वाः किंनरा नराः॥ २६.३४ ॥

सागरा गिरयो मेघा मासाः संवत्सरास्तथा॥
वेदा मंत्रास्तथा यज्ञाः श्रौता धर्माश्च सर्वशः॥ २६.३५ ॥

हुंकाराः प्रणवाश्चैव इतिहासाः सहस्रशः॥
कोटिशश्च तथा देवा महेंद्राद्याः सवाहनाः॥ २६.३६ ॥

अनुजग्मुर्महादेवं कोटिशोऽर्बुदशश्च हि॥
गणाश्च पृष्ठतो जग्मुः शंखवर्णाश्च कोटिशः॥ २६.३७ ॥

दशभिः केकराख्याश्च विद्युतोऽष्टाभिरेव च॥
चतुःषष्ट्या विशाखाश्च नवभिः पारियात्रिकाः॥ २६.३८ ॥

षड्भिः सर्वांतकः श्रीमांस्तथैव विकृताननः॥
ज्वालाकेशो द्वादशभिः कोटिभिः संवृतो ययौ॥ २६.३९ ॥

सप्तभिः समदः श्रीमान्दुंदुभोष्ठाभिरेव च॥
पंचभिश्च कपालीशः षड्भिः संह्लादकः शुभः॥ २६.४० ॥

कोटिकोटिभिरेवैकः कुंडकः कुंभकस्तथा॥
विष्टंभोऽष्टाभिरेवेह गणपः सर्वसत्तमः॥ २६.४१ ॥

पिप्पलश्च सहस्रेण सन्नादश्च तथा बली॥
आवेशनस्तथाष्टाभिः सप्तभिश्चंद्रतापनः॥ २६.४२ ॥

महाकेशः सहस्रेण नंदिर्द्वादशभिस्तथा॥
नगः कालः करालश्च महाकालः शतेन च॥ २६.४३ ॥

अग्निकः शतकोट्या वै कोट्याग्निमुख एव च॥
आदित्यमूर्धा कोट्या च कोट्या चैव धनावहः॥ २६.४४ ॥

सन्नागश्च शतेनैव कुमुदः कोटिभिस्त्रिभिः॥
अमोघः कोकिलश्चैव कोटिकोट्या सुमंत्रकः॥ २६.४५ ॥

काकपादस्तता षष्ट्या षष्ट्या संतानको गणः॥
महाबलश्च नवभिर्मधुपिंगश्च पिंगलः॥ २६.४६ ॥

नीलो नवत्या सप्तत्या चतुर्वक्त्रश्च पूर्वपात्॥
वीरभद्रश्चश्चतुःषष्ट्या करणो बालकस्तथा॥ २६.४७ ॥

पंचाक्षः शतमन्युश्च मेघमन्युश्च विंशतिः॥
काष्ठकोटिश्चतुःषष्ट्या सुकोशो वृषभस्तथा॥ २६.४८ ॥

विश्वरूपस्तालकेतुः पंचाशच्च सिताननः॥
ईशानो वृद्धदेवश्च दीप्तात्मा मृत्युहा तथा॥ २६.४९ ॥

विषादो यमहा चैव गणो भृंगरिटिस्तथा॥
अशनी हासकश्चैव चतुःषष्ट्या सहस्रपात्॥ २६.५० ॥

एते चान्ये च गणपा असंख्याता महाबलाः॥
सर्वे सहस्रहस्ताश्च जटामुकुटधारीणः॥ २६.५१ ॥

चंद्रलेखावतंसाश्च नीलकंठास्त्रिलोचनाः॥
हारकुंडलकेयूरमुकुटाद्यैरलंकृताः॥ २६.५२ ॥

अणिमादिगुणैर्युक्ताः शक्ताः शापप्रसादयोः॥
सूर्यकोटिप्रतीकाशास्तत्राजग्मुर्गणेश्वराः॥ २६.५३ ॥

पातालांबरभूमिस्थाः सर्वलोकनिवासिनः॥
तुंबुरुर्नारदो हाहा हूहूश्चैव तु सामगाः॥ २६.५४ ॥

तंत्रीमादाय वाद्यांश्चाऽवादयञ्छंकरोत्सवे॥
ऋषयः कृत्स्नशश्चैव वेदगीतांस्तपोधनाः॥ २६.५५ ॥

पुण्यान्वैवाहिकान्मंत्राञ्जेपुः संहृष्टमानसाः॥
एवं प्रतस्थेगिरिशो वीज्यमानश्च गंगया॥ २६.५६ ॥

तथा यमुनया चापांपतिना धृतच्छत्रया॥
स्त्रीभिर्नानाविधालापैर्लाजाभिश्चानुमोदितः॥ २६.५७ ॥

महोत्सवेन देवेशो गिरिस्थानं विवेश सः॥
प्रभासत्स्वर्णकलशं तोरणानां शतैर्युतम्॥ २६.५८ ॥

वैडूर्यबद्धभूमिस्थं रत्नजैश्च गृहैर्युतम्॥
तत्प्रविश्य स्तूयमानो द्वारमभ्याससाद ह॥ २६.५९ ॥

ततो हिमाचलस्तत्र दृश्यते व्याकुलाकुलः॥
आदिशदात्मभृत्यानां महादेव उपस्थिते॥ २६.६० ॥

ततो ब्रह्माणमचलो गुरुत्वे प्रार्थयत्तदा॥
कृत्यानां सर्वभारेषु वासुदेवं च बुद्धिमान्॥ २६.६१ ॥

प्रत्याह च विवाहऽस्मिन्कुमारीभ्रातरं विना॥
भविष्यति कथं विष्णो लाजहोमादिकर्मसु॥ २६.६२ ॥

सुतो हि मम मैनाकः स प्रविष्टोऽर्णवे स्थितः॥
इति चिंताविषण्णं तं विष्णुराहमहामतिः॥ २६.६३ ॥

अत्र चिंता न कर्तव्या गिरिराज कथंचन॥
अहं भ्राता जगन्मातुरेतदे वं च नान्यथा॥ २६.६४ ॥

ततः प्रमुदितः शैलः पार्वतीं च स्वलंकृताम्॥
सखीभिः कोटिसंख्याभिर्वृतां प्रवेशयत्सदः॥ २६.६५ ॥

ततो नीलमयस्तंभं ज्वलत्कांचनकुट्टिमम्॥
मुक्ताजालपरिष्कारं ज्वलितौ षधिदीपितम्॥ २६.६६ ॥

रत्नासनसहस्राढ्यं शतयोजनविस्तृतम्॥
विवाहमंडपं शर्वो विवेशानुचरावृतः॥ २६.६७ ॥

ततः शैलः सपत्नीकः पादौ प्रक्षाल्य हर्षितः॥
भवस्य तेन तोयेन सिषिचे स्वं जगत्तथा॥ २६.६८ ॥

पाद्यमाचमनं दत्त्वा मधुपर्कं च गां तथा॥
प्रदानस्य प्रयोगं च संचिंतयंति ब्राह्मणाः॥ २६.६९ ॥

दौहित्रीं कव्यवाहानां दद्मि पुत्रीं स्वकामहम्॥
इत्युक्त्वा तस्थिवाञ्छैलो न जानाति हरस्य सः॥ २६.७० ॥

ततः सर्वानपृच्छत्स कुलं कोऽपि न वेद तत्॥
ततो विष्णुरिदं प्राह पृच्छ्यंतेऽन्ये किमर्थतः॥ २६.७१ ॥

अज्ञातकुलतां तस्य पृछ्यतामयमेव च॥
अहिरेव अहेः पादान्वेत्ति नान्यो हिमाचल॥ २६.७२ ॥

स्वगोत्रं यदि न ब्रूते न देया भगिनी मम॥
ततो हासस्तदा जज्ञे सर्वेषां सुमहास्वनः॥ २६.७३ ॥

निवृत्तश्च क्षणाद्भूयः किं वक्ष्यति हरस्त्विति॥
ततो विमृश्य बहुधा किंचिद्बीताननो यता॥ २६.७४ ॥

लज्जाजडः स्मितं चक्रे ततः पार्थ स वै हरः॥
ततो विशिष्टा ब्रुवति शीघ्रं कालोऽतिवर्तते॥ २६.७५ ॥

हरिः प्राह महेशानं बिभ्यदावेद्मयहं तव॥
मातामहं च पितरं प्रयोगं श्रृणु भूधर॥ २६.७६ ॥

आत्मपुत्राय ते शंभो आत्मदौहित्रकाय ते॥
इत्युक्ते विष्णुना सर्वे साधुसाध्विति ते जगुः॥ २६.७७ ॥

देवोऽप्युदाहरेद्वुद्धिं सर्वेभ्योऽप्यधिकां वराम्॥
ततः शैलस्तथा चोक्त्वा दत्त्वा देवीं च सोदकम्॥ २६.७८ ॥

आत्मानं चापि देवाय प्रददौ सोदकं नगः॥
ततः सर्वे तुष्टुवुस्तं विवाहं विस्मयान्विताः॥ २६.७९ ॥

दाता महीभृतां नाथो होता देवश्चतुर्मुखः॥
वरः पशुपतिः साक्षात्कन्या विश्वरणिस्तथा॥ २६.८० ॥

ततः स्तुवत्सु मुनिषु पुष्पवर्षे महत्यपि॥
नदत्सु देवतूर्येषु करं जग्राह त्र्यम्बकः॥ २६.८१ ॥

देवो देवीं समालोक्य सलज्जां हिमशैलजाम्॥
न तृप्यति न चाह्लादत्सा च देवां वृषध्वजम्॥ २६.८२ ॥

तत्र ब्रह्मादिमुनयो देवीमद्भुतरूपिणीम्॥
पश्यंतः शरणं जग्मुर्मनसा परमेश्वरम्॥ २६.८३ ॥

मा मुह्याम पार्वतीं च यथा नारदपर्वतौ॥
ततस्तथैव तच्चक्रे सर्वेषामीप्सितं वचः॥ २६.८४ ॥

ततो देवैश्च मुनिभिः संस्तुतः परमेश्वरः॥
प्रविवेश शुभां वेदीं मूर्तिमज्ज्वलनाश्रिताम्॥ २६.८५ ॥

वेधाः श्रुतीरितैर्मं त्रैर्मूर्तिमद्भिरुपस्थितैः॥
मूर्तमग्निं जुहाव त्रिः परिक्रम्य च तं हरः॥ २६.८६ ॥

लाजाहोम उमाभ्राता प्राह तं सस्मितं हरिः॥
बहवो मिलिताः संति लोकाः संमर्द ईश्वर॥ २६.८७ ॥

सावधानेन रक्ष्याणि भूषणानि त्वया हर॥
ततो हरश्च तं प्राह स्वजने माऽतिगोपय॥ २६.८८ ॥

किंचित्प्रार्थय दास्यामि प्राह विष्णुस्ततो वरम्॥
त्वयि भक्तिर्दृढा मेऽस्तु स च तद्दुर्लभं ददौ॥ २६.८९ ॥

ददतुः सृष्टिसंरक्षां ब्रह्मणे दक्षिणामुभौ॥
अग्नये यज्ञभागांश्च प्रीतौ हरजनार्दनौ॥ २६.९० ॥

भृग्वादीनां ततो दत्त्वा श्रुतिरक्षणदक्षिणाम्॥
ततो गीतैश्च नृत्यैश्च भोजनैश्च यथेप्सितैः॥ २६.९१ ॥

महोत्सवैरनेकैश्च विस्मयं समपद्यत॥
विसृज्य लोकं तं सर्वं किमिच्छादानकैर्भवः॥ २६.९२ ॥

सरस्वत्या च पितरौ देव्याश्चाऽऽश्वास्य दुःखितौ॥
आमंत्र्य हिमशैलेंद्रं ब्रह्मणं च सकेशवम्॥ २६.९३ ॥

जगाम मंदरगिरिं गिरिणा यानुगोर्चितः॥ २६.९४ ॥

ततो गते भगवति नीललोहिते सहोमया गिरिममलं हि भूधरः॥
सबांधवो रुदिति हि कस्य नो मनो विसंष्ठँलं जगति हि कन्यकापितुः॥ २६.९५ ॥

इमं विवाहं गिरिराजपुत्र्याः श्रृणोति चाध्येति च यो नरः शुचिः॥
विशेषतश्चापि विवाहमंगले स मंगलं वृद्धिमवाप्नुते चिरम्॥ २६.९६ ॥

इति श्रीस्कांदे महापुराम एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारेशमाहात्म्ये हरगौरीविवाहवर्णनंनाम षड्विंशोऽध्यायः॥ २६ ॥ छ ॥

**॥नारद उवाच॥**

ततो निरुपमं दिव्यं सर्वरत्नमयं शुभम्॥
ईशाननिर्मितं साक्षात्सह देव्याविशद्गृहम्॥ २७.१ ॥

तत्रासौ मंदरगिरौ सह देव्या भगाक्षहा॥
प्रासादे तत्र चोद्याने रेमे संहृष्टमानसः॥ २७.२ ॥

एतस्मिन्नंतरे देवास्तारकेणातिपीडिताः॥
प्रोत्साहितेन चात्यर्थं मया कलिचिकीर्षुणा॥ २७.३ ॥

आसाद्य ते भवं देवं तुष्टुबुर्बहुधा स्तवैः॥
एतस्मिन्नंतरे देवी प्रोद्वर्तयत गात्रकम्॥ २७.४ ॥

उद्वर्तनमलेनाथ नरं चक्रे गजाननम्॥
देवानां संस्तवैः पुण्यैः कृपयाभिपरिप्लुता॥ २७.५ ॥

पुत्रेत्युवाच तं देवी ततः संहृष्टमानसा॥
एतस्मिन्नंतरे शर्वस्तत्रागत्य वचोऽब्रवीत्॥ २७.६ ॥

पुत्रस्तवायं गिरिजे श्रृणु यादृग्भविष्यति॥
विक्रमेण च वीर्येण कृपया सदृशो मया॥ २७.७ ॥

यथाहं तादृशश्चासौ पुत्रस्ते भविता गुणैः॥
ये च पापा दुराचारा वेदान्धर्मं द्विषंति च॥ २७.८ ॥

तेषामामरणांतानि विघ्नान्येष करिष्यति॥
ये च मां नैव मन्यंते विष्णुं वापि जगद्गुरुम्॥ २७.९ ॥

विघ्निता विघ्नराजेन ते यास्यंति महत्तमः॥
तेषां गृहेषु कलहः सदा नैवोपसाम्यति॥ २७.१० ॥

पुत्रस्य तव विघ्नेन समूलं तस्य नश्यति॥
येषां न पूज्याः पूज्यंते क्रोधासत्यपराश्च ये॥ २७.११ ॥

रौद्रसाहसिका ये च तेषां विघ्नं करिष्यति॥
श्रुतिधर्मांज्ज्ञातिधर्मान्पालयंति गुरूंश्च ये॥ २७.१२ ॥

कृपालवो गतक्रोधास्तेषां विघ्नं हरिष्यति॥
सर्वे धर्माश्च कर्माणि तथा नानाविधानि च॥ २७.१३ ॥

सविघ्नानि भिवष्यंति पूजयास्य विना शुभे॥
एवं श्रुत्वा उमा प्राह एवमस्त्विति शंकरम्॥ २७.१४ ॥

ततो बृहत्तनुः सोऽभूत्तेजसा द्योतयन्दिशः॥
ततो गणैः समं शर्वः सुराणां प्रददौ च तम्॥
यावत्तार कहंता वो भवेत्तावदयं प्रभुः॥ २७.१५ ॥

ततो विघ्नपतिर्देवैः संस्तुतः प्रमतार्तिहा॥
चकार तेषां कृत्यानि विघ्नानि दितिजन्मनाम्॥ २७.१६ ॥

पार्वती च पुनर्देवी पुत्रत्वे परिकल्प्य च॥
अशोकस्यांकुरं वार्भिरवर्द्धयत स्वादृतैः॥ २७.१७ ॥

सप्तर्षीनथ चाहूय संस्कारमंगलं तरोः॥
कारयामास तन्वंगी ततस्तां मुनयोऽब्रुवन्॥ २७.१८ ॥

त्वयैव दर्शिते मार्गे मर्यादां कर्तुमर्हसि॥
किं फलं भविता देवि कल्पितैस्तरुपुत्रकैः॥ २७.१९ ॥

**॥देव्युवाच॥**
यो वै निरुदके ग्रामे कूपं कारयते बुधः॥
यावत्तोयं भवेत्कूपे तावत्स्वर्गे स मोदते॥ २७.२० ॥

दशकूपसमावापी दशवापी समं सरः॥
दशसरःसमा कन्या दशकन्यासमः क्रतुः॥ २७.२१ ॥

दशक्रतुसमः पुत्रो दशपुत्रसमो द्रुमः॥ २७.२२ ॥

एषैव मम मर्यादा नियता लोकभाविनी॥
जीर्णोद्धारे कृते वापि फलं तद्द्विगुणं मतम्॥ २७.२३ ॥

**॥इति गणेशोत्पत्तिः॥**
ततः कदाचिद्भगवानुमया सह मंदरे॥
मंदिरे हर्षजनने कलधौतमये शुभे॥ २७.२४ ॥

प्रकीर्णकुसुमामोदमहालिकुलकूजिते॥
किंनरोद्गीतसंगीत प्रतिशब्दितमध्यके॥ २७.२५ ॥

क्रीडामयूरैर्हंसैश्च श्रुतैश्चैवाभिनादिते॥
मौक्तिकैर्विविध रत्नैर्विनिर्मितगवाक्षके॥ २७.२६ ॥

तत्र पुण्यकथाभिश्च क्रीडतो रुभयोस्तयोः॥
प्रादुरभून्महाञ्छब्दः पूरितांबरगोचरः॥ २७.२७ ॥

तं श्रुत्वा कौतुकाद्देवी किमेतदिति शंकरम्॥
पर्यपृच्छच्छुभतनूरहरं विस्मयपूर्वकम्॥ २७.२८ ॥

तामाह देवीं गिरिशो दृष्टपूर्वास्तु ते त्वया॥
एते गणा मे क्रीडंति शैलेऽस्मिंस्त्वत्प्रियाः शुभे॥ २७.२९ ॥

तपसा ब्रह्मचर्येण क्लेशेन क्षेत्रसाधनैः॥
यैरहं तोषितः पृथ्व्यां त एते मनुजोत्तमाः॥ २७.३० ॥

मत्समीपमनुप्राप्ता मम लोकं वरानने॥
चराचरस्य जगतः सृष्टिसंहारणक्षमाः॥ २७.३१ ॥

विनैतान्नैव मे प्रीतिर्नैभिर्विरहितो रमे॥
एते अहमहं चैते तानेतान्पस्य पार्वति॥ २७.३२ ॥

इत्युक्ता विस्मिता देवी ददृशे तान्गवाक्षके॥
स्थिता पद्मपलाशाक्षी महादेवेन भाषिता॥ २७.३३ ॥

केचित्कृशा ह्रस्वदीर्घाः केचित्स्थूलमहोदराः॥
व्याघ्रेभमेषाजमुखा नानाप्राणिमहामुखाः॥ २७.३४ ॥

व्याघ्रचर्मपरीधाना नग्ना ज्वालामुखाः परे॥
गोकर्णा गजकर्णाश्च बहुपादमुखेक्षणाः॥ २७.३५ ॥

विचित्रवाहनाश्चैव नानायुधधरास्तथा॥
गीतवादित्रतत्त्वज्ञाः सत्त्वगीतरसप्रियाः॥ २७.३६ ॥

तान्दृष्ट्वा पार्वती प्राह कतिसंख्याभिधास्त्वमी॥ २७.३७ ॥

**॥श्रीशंकर उवाच॥**
असंख्ये यास्त्वमी देवी असंख्येयाभिधास्तथा॥
जगदापूरितं सर्वमेतैर्भीमैर्महाबलैः॥ २७.३८ ॥

सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु॥
दानवानां शरीरेषु बालेषून्मत्तकेषु च॥ २७.३९ ॥

एते विशति मुदिता नानाहारविहारिणः॥
ऊष्मपाः फेनपाश्चैव धूम्रपा मधुपायिनः॥
मदाहाराः सर्वभक्ष्यास्तथान्ये चाप्यभोजनाः॥ २७.४० ॥

गीतनृत्योपहाराश्च नानावाद्यरवप्रियाः॥
अनंतत्वादमीषां च वक्तुं शक्या न वै गुणाः॥ २७.४१ ॥

**॥श्रीदेव्युवाच॥**
मनःशिलेन कल्केन य एष च्छुरिताननः॥
तेजसा भास्कराकारो रूपेण सदृशस्तव॥ २७.४२ ॥

आकर्ण्याकर्ण्य ते देव गणैर्गीतान्महागुणान्॥
मुहुर्नृत्यति हास्यं च विदधाति मुहुर्मुहुः॥ २७.४३ ॥

सदाशिवशिवेत्येवं विह्वलो वक्ति यो मुहुः॥
धन्योऽमीदृशी यस्य भक्तिस्त्वयि महेश्वरे॥ २७.४४ ॥

एनं विज्ञातुमिच्छामि किंनामासौ गणस्तव॥
**॥श्रीशंकर उवाच॥**
स एष वीरक देवी सदा मेद्रिसुते प्रियः॥ २७.४५ ॥

नानाश्चर्यगुणाधारः प्रतीहारो मतोंऽबिके॥
**॥देव्युवाच॥**
ईदृशस्य सुतस्यापि ममोऽकंठा पुरांतक॥ २७.४६ ॥

कदाहमीदृशं पुत्रं लप्स्याम्यानंददायकम्॥
**॥शर्व उवाच॥**

एष एव सुतस्तेस्तु यावदीदृक्परो भवेत्॥ २७.४७ ॥

इत्युक्ता विजयां प्राह शीघ्रमानय वीरकम्॥
विजया च ततो गत्वा वीरकं वाक्यमब्रवीत्॥ २७.४८ ॥

एहि वीरक ते देवी गिरिजा तोषिता शुभा॥
त्वममाह्वयति सा देवी भवस्यानुमते स्वयम्॥ २७.४९ ॥

इत्युक्तः संभ्रमयुतो मुखं संमार्ज्य पाणिना॥
देव्याः समीपमागच्छज्जययाऽनुगतः शनैः॥ २७.५० ॥

तं दृष्ट्वा गिरिजा प्राह गिरामधुरवर्णया॥
एह्येहि पुत्र दत्तस्त्वं भवेन मम पुत्रकः॥ २७.५१ ॥

इत्युक्तो दंडवद्देवीं प्रणम्यावस्थितः पुरः॥
माता ततस्तमालिंग्य कृत्वोत्संगे च वीरकम्॥ २७.५२ ॥

चुचुंब च कपोले तं गात्राणि च प्रमार्जयत्॥
भूषयामास दिव्यैस्तं स्वयं नानाविभूषणैः॥ २७.५३ ॥

एवं संकल्प्य तं पुत्रं लालयित्वा उमाचिरम्॥
उवाच पुत्र क्रीडेति गच्छ सार्धं गणैरिति॥ २७.५४ ॥

ततश्चिक्रीड मध्ये स गणानां पार्वतीसुतः॥
मुहुर्मुहुः स्वमनसि स्तुवन्भक्तिं स शांकरीम्॥ २७.५५ ॥

प्रणम्य सर्वभूतानि प्रार्थयाम्यस्मि दुष्करम्॥
भक्त्या भजध्वमीशानं यस्या भक्तेरिदं फलम्॥ २७.५६ ॥

क्रीडितुं वीरके याते ततो देवी च पार्वती॥
नानाकथाभिस्चिक्रीड पुनरेव जटाभृता॥ २७.५७ ॥

ततो गिरिसुताकण्ठे क्षिप्तबाहुर्महेश्वरः॥
तपसस्तु विशेषार्थं नर्म देवीं किलाब्रवीत्॥ २७.५८ ॥

स हि गौरतनुः शर्वो विशेषाच्छशिशोभितः॥
रंजिता च विभावर्या देवी नीलोत्पलच्छविः॥ २७.५९ ॥

**॥शर्व उवाच॥**

शरीरे मम तन्वंगी सिते भास्यसितद्युतिः॥
भुजंगीवासिता शुभ्रे संश्लिष्टा चन्दने तरौ॥ २७.६० ॥

चंद्रज्योत्स्नाभिसंपृक्ता तामसी रजनी यथा॥
रजनी वा सिते पक्षे दृष्टिदोषं ददासि मे॥ २७.६१ ॥

इत्युक्ता गिरिजा तेन कण्ठं शर्वाद्विमुच्य सा॥
उवाच कोपरक्ताक्षी भृकुटीविकृतानना॥ २७.६२ ॥

स्वकृतेन जनः सर्वो जनेन परिभूयते॥
अवश्यमर्थी प्राप्नोति खण्डनां शशिखंडभृत्॥ २७.६३ ॥

तपोभिर्दीप्तचरितैर्यत्त्वां प्रार्थितवत्यहम्॥
तस्य मे नियमस्यैवमवमानः पदेपदे॥ २७.६४ ॥

नैवाहं कुटिला शर्व विषमा न च धूर्जटे॥
स्वदोषैस्त्वं गतः क्षांतिं तथा दोषाकरश्रियः॥ २७.६५ ॥

नाहं मुष्णामि नयने नेत्रहंता भवान्भव॥
भगस्तत्ते विजानाति तथैवेदं जगत्त्रयमा॥ २७.६६ ॥

मूर्ध्नि शूलं जनयसे स्वैर्दोषैर्मामदिक्षिपन्॥
यत्त्वं मामाह कृष्णेति महाकालोऽसि विश्रुतः॥ २७.६७ ॥

यास्याम्यहं परित्यक्तुमात्मानं तपसा गिरिम्॥
जीवंत्या नास्ति मे कृत्यं धूर्तेन परिभूतया॥ २७.६८ ॥

निशम्य तस्या वचनं कोपतीक्ष्णाक्षरं भवः॥
उवाचाथ च संभ्रांतो दुर्ज्ञेयचरितो हरः॥ २७.६९ ॥

न तत्त्वज्ञासि गिरिजे नाहं निंदापरस्तव॥
चाटूक्तिबुद्ध्या कृतवांस्त वाहं नर्मकीर्तनम्॥ २७.७० ॥

विकल्पः स्वच्छचित्तेति गिरिजैषा मम प्रिया॥
प्रायेण भूतिलिप्तानामन्यथा चिंतिता हृदि॥ २७.७१ ॥

अस्माद्दशानां कृष्णांगि प्रवर्तंतेऽन्यथा गिरः॥
यद्येवं कुपिता भीरु न ते वक्ष्याम्यहं पुनः॥ २७.७२ ॥

नर्मवादी भविष्यामि जहि कोपं सुचिस्मिते॥
शिरसा प्रणतस्तेऽहं रचितस्ते मयाञ्जलिः॥ २७.७३ ॥

दीनेनाप्यपमानेन निंदिता नमि विक्रियाम्॥
वरमस्मि विनम्रोऽपि न त्वं देवि गुणान्विता॥ २७.७४ ॥

इत्यनेकैश्चाटुवाक्यैः सूक्तैर्देवेन बोधिता॥
कोपं तीव्रं न तत्याज सती मर्मणि घट्टिता॥ २७.७५ ॥

अवष्टब्धावथ क्षिप्त्वा पादौ शंकरपाणिना॥
विपर्यस्तालका वेगाद्गन्तुमैच्छत शैलजा॥ २७.७६ ॥

तस्यां व्रजन्त्यां कोपेन पुनराह पुरांतकः॥
सत्यं सर्वैरवयवैः सुतेति सदृशी पितुः॥ २७.७७ ॥

हिमाचलस्य श्रृंगैस्तैर्मेघमालाकुलैर्मनः॥
तथा दुरवागाह्योऽसौ हृदयेभ्यस्तवाशयः॥ २७.७८ ॥

काठिन्यं कष्टमस्मिंस्ते वनेभ्यो बहुधा गतम्॥
कुटिलत्वं नदीभ्यस्ते दुःसेव्यत्वं हिमादपि॥ २७.७९ ॥

संक्रांतं सर्वमेवैतत्तव देवी हिमाचलात्॥
इत्युक्ता सा पुनः प्राह गिरिशं सैलजा तदा॥ २७.८० ॥

कोपकंपितधूम्रास्या प्रस्फुरद्दशनच्छदा॥
मा शर्वात्मोपमानेन निंद त्वं गुणिनो जनान्॥ २७.८१ ॥

तवापि दुष्टसंपर्कात्संक्रांतं सर्वमेवहि॥
व्यालेभ्योऽनेकजिह्वत्वं भस्मनः स्नेहवन्ध्यता॥ २७.८२ ॥

हृत्कालुष्यं शशांकात्ते दुर्बोधत्वं वृषादपि॥
अथवा बहुनोक्तेन अलं वाचा श्रमेण मे॥ २७.८३ ॥

श्मशानवास आसीस्त्वं नग्नत्वान्न तव त्रपा॥
निर्घृणत्वं कपालित्वादेवं कः शक्नुयात्तवं॥ २७.८४ ॥

इति श्रीस्कांदे महापुराण एकाशी तिसाहस्त्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये पार्वतीप्रकोपवर्णनंनाम सप्तविंशोऽध्यायः॥ २७ ॥ छ ॥

**॥नारद उवाच॥**

व्रजंती गिरिजाऽपश्यत्सखीं मातुर्महाप्रभाम्॥
कुसुमामोदिनींनाम तस्य शैलस्य देवताम्॥ २८.१ ॥

सापि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा॥
क्वपुनर्गच्छसीत्युच्चैरालिंग्योवाच देवता॥ २८.२ ॥

सा चास्यै सर्वमाचख्यौ शंकरात्कोपकारणम्॥
पुनश्चोवाच गिरिजा देवतां मातृसंमताम्॥ २८.३ ॥

नित्यं शैलाधिराजस्य देवता त्वमनिंदिते॥
सर्वं च सन्निधानं च मयि चातीव वत्सला॥ २८.४ ॥

तदहं संप्रवक्ष्यामि यद्विधेयं तवाधुना॥
अथान्य स्त्रीप्रवेशे तु समीपे तु पिनाकिनः॥ २८.५ ॥

त्वयाख्येयं मम शुबे युक्तं पश्चात्करोम्यहम्॥
तथेत्युक्ते तया देव्या ययौ देवी गिरिं प्रति॥ २८.६ ॥

रम्ये तत्र महाशृंगे नानाश्चर्योपशोभिते॥
विभूषणादि सन्यस्य वृक्षवल्कलधारिणी॥ २८.७ ॥

तपस्तेपे गिरिसुता पुत्रेण परिपालिता॥
ग्रीष्मे पंचाग्निसंतप्ता वर्षासु च जलोषिता॥ २८.८ ॥

यथा न काचित्प्रविशेद्योषिदत्र हरांतिके॥
दृष्ट्वा परां स्त्रियं चात्र वदेथा मम पुत्रक॥ २८.९ ॥

शीघ्रमेव करिष्यामि ततो युक्तमनंतरम्॥
एवमस्त्विवति तां देवीं वीरकः प्राह सांप्रतम्॥ २८.१० ॥

मातुराज्ञा सुतो ह्लाद प्लावितांगो गतज्वरः॥
जगाम त्र्यक्षं संद्रष्टुं प्रणिपत्य च मातरम्॥ २८.११ ॥

गजवक्त्रं ततः प्राह प्रणम्य समवस्थितम्॥
साश्रुकंठं प्रयाचंतं नय मामपि पार्वति॥ २८.१२ ॥

गजवक्त्रं हि त्वां बाल मामिवोपहसिष्यति॥
तदागच्छ मया सार्धं या गतिर्मे तवापि सा॥ २८.१३ ॥

पराभवाद्धि धूर्तानां मरणं साधु पुत्रक॥
एवमुक्त्वा समादाय हिमाद्रिं प्रति सा ययौ॥ २८.१४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये पार्वत्यस्तपोर्थं गमनवर्णनंनामाष्टाविंशोऽध्यायः॥ २८ ॥ छ ॥

**॥नारद उवाच॥**

व्रजंती गिरिजाऽपश्यत्सखीं मातुर्महाप्रभाम्॥
कुसुमामोदिनींनाम तस्य शैलस्य देवताम्॥ २९.१ ॥

सापि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा॥
क्वपुनर्गच्छसीत्युच्चैरालिंग्योवाच देवता॥ २९.२ ॥

सा चास्यै सर्वमाचख्यौ शंकरात्कोपकारणम्॥
पुनश्चोवाच गिरिजा देवतां मातृसंमताम्॥ २९.३ ॥

नित्यं शैलाधिराजस्य देवता त्वमनिंदिते॥
सर्वं च सन्निधानं च मयि चातीव वत्सला॥ २९.४ ॥

तदहं संप्रवक्ष्यामि यद्विधेयं तवाधुना॥
अथान्य स्त्रीप्रवेशे तु समीपे तु पिनाकिनः॥ २९.५ ॥

त्वयाख्येयं मम शुभे युक्तं पश्चात्करोम्यहम्॥
तथेत्युक्ते तया देव्या ययौ देवी गिरिं प्रति॥ २९.६ ॥

रम्ये तत्र महाशृंगे नानाश्चर्योपशोभिते॥
विभूषणादि संन्यस्य वृक्षवल्कलधारिणी॥ २९.७ ॥

तपस्तेपे गिरिसुता पुत्रेण परिपालिता॥
ग्रीष्मे पंचाग्निसंतप्ता वर्षासु च जलोषिता॥ २९.८ ॥

स्थंडिलस्था च हेमंते निराहारा तताप सा॥
एतस्मिन्नंतरे दैत्यो ह्यंधकस्य सुतो बली॥ २९.९ ॥

ज्ञात्वा गतां गिरिसुतां पितुर्वैरमनुस्मरन्॥
आडिर्नाम बकभ्राता रहस्यांतरप्रेक्षकः॥ २९.१० ॥

जिते किलांधके दैत्ये गिरिशेनामरद्विषि॥
आडिश्चकार विपुलं तपो हरजिगीषया॥ २९.११ ॥

तमागत्याब्रवीद्ब्रह्मा तपसा परितोषितः॥
ब्रूहि किं वासुरश्रेष्ठ तपसा प्राप्तुमिच्छसि॥ २९.१२ ॥

ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे॥
**॥ब्रह्मोवाच॥**
न कश्चिच्च विना मृत्युं जंतुरासुर विद्यते॥ २९.१३ ॥

यतस्ततोऽपि दैत्येंद्र मृत्युः प्राप्यः शरीरिणा॥
इत्युक्तस्तं तथेत्याह तुष्टः कमलसंभवम्॥ २९.१४ ॥

रूपस्य परिवर्तो मे यदा स्यात्पद्मसंभव॥
तदा मृत्युर्मम भवेदन्यथा त्वमरो ह्यहम्॥ २९.१५ ॥

इत्युक्तस्तं तथेत्याह तुष्टः कमलसंभवः॥
इत्युक्तोऽमरतां मेने दैत्यराज्यस्थितोऽसुरः॥ २९.१६ ॥

आजगाम स च स्थानं तदा त्रिपुरघातिनः॥
आगतो ददृशे तं च वीरकं द्वार्यवस्थितम्॥ २९.१७ ॥

तं चासौ वंचयित्वा च आडिः सर्पशरीरभृत्॥
अवारितो वीरकेण प्रविवेश हरांतिकम्॥ २९.१८ ॥

भुजंगरूपं संत्यज्य बभूवाथ महासुरः॥
उमारूपी छलयितुं गिरिशं मूढचेतनः॥ २९.१९ ॥

कृत्वोमायास्ततो रूपमप्रतर्क्यमनोहरम्॥
सर्वावयवसंपूर्णं सर्वाभिज्ञानसंवृतम्॥ २९.२० ॥

चक्रे भगांतरे दैत्यो दंतान्वज्रोपमान्दृढान्॥
तीक्ष्णाग्रान्बुद्धिमोहेन गिरिशं हंतुमुद्यतः॥ २९.२१ ॥

कृत्वोमारूपमेवं स स्थितो दैत्यो हरांतिके॥
तां दृष्ट्वा गिरिशस्तुषुटः समालिंग्य महासुरम्॥ २९.२२ ॥

मन्यमानो गिरिसुतां सर्वै रवयवांतरैः॥
अपृच्छत्साधु ते भावो गिरिपुत्री ह्यकृत्रिमा॥ २९.२३ ॥

या त्वं मदशयं ज्ञात्वा प्राप्तेह वरवर्णिनि॥
त्वया विरहितः शून्यं मन्योस्मिन्भुवनत्रये॥ २९.२४ ॥

प्राप्ता प्रसन्ना या त्वं मां युक्तमेवंविधं त्वयि॥
इत्युक्ते गूहयंश्चेष्टामुमारूप्यसुरोऽब्रवीत्॥ २९.२५ ॥

यातास्मि तपसश्चर्तुं कालीवाक्यात्तवातुलम्॥
रतिश्च तत्र मे नाभूत्ततः प्राप्ता तवांतिकम्॥ २९.२६ ॥

इत्युक्तः शंकरः शंकां किंचित्प्राप्यवधारयत्॥
कुपिता मयि तन्वंगी प्रत्यक्षा च दृढव्रता॥ २९.२७ ॥

अप्राप्तकामा संप्राप्ता किमेतत्संशयो मम॥
रहसीति विचिंत्याथ अभिज्ञानाद्विचारयन्॥ २९.२८ ॥

नापश्यद्वामपार्श्वे तु तस्यांकं पद्मलक्षणम्॥
लोम्नामावर्तचरितं ततो देवः पिनाकधृक्॥ २९.२९ ॥

बुद्ध्वा तां दानवीं मायां किंचित्प्रहसिताननः॥
मेढ्रे रौद्रास्त्रमाधाय चक्रे दैत्यमनोरथम्॥ २९.३० ॥

स रुदन्भैरवाज्ञावानवसादं गतोऽसुरः॥
अबुध्यद्वीरको नैतदसुरेंद्रनिषूदनम्॥ २९.३१ ॥

हते च मारुतेनाशुगामिना नगदेवता॥
अपरिच्छिन्नतत्त्वार्था शैलपुत्र्यां न्यवेदयत्॥ २९.३२ ॥

श्रुत्वा वायुमुखाद्देवी क्रोधरक्तातिलोचना॥
अपस्यद्वीरकं पुत्रं हृदयेन विदूयता॥ २९.३३ ॥

मातरं मां परित्यज्य यस्मात्त्वं स्नेहविह्वलाम्॥
विहितावसरः स्त्रीणां शंकरस्य रहोविधौ॥ २९.३४ ॥

तस्मात्ते परुषा रूक्षा जडा हृदय वर्जिता॥
गणेशाक्षरसदृशा शिला माता भविष्यति॥ २९.३५ ॥

एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनंतरम्॥
निर्जगाम मुखात्क्रोधः सिंहरूपी महाबलः॥ २९.३६ ॥

पश्चात्तापं समश्रित्य तया देव्या विसर्जितः॥

स तु सिंहः करालास्यो महाकेसरकंधरः॥ २९.३७ ॥

प्रोद्धूतबललांगूलदंष्ट्रोत्कट गुहामुखः॥
व्यावृतास्यो ललज्जिह्वः क्षामकुक्षिश्चिखादिषुः॥ २९.३८ ॥

तस्यास्ये वर्तितुं देवी व्यवस्यत सती तदा॥
ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः॥ २९.३९ ॥

आजगामाश्रमपंद संपदामाश्रयं ततः॥
आगम्योवाच तां ब्रह्मा गिरिजां मृष्टया गिरा॥ २९.४० ॥

किं देवी प्राप्तुकामासि किमलभ्यं ददामि ते॥
तच्छ्रुत्वोवाच गिरिजा गुरुगौरवगर्भितम्॥ २९.४१ ॥

तपसा दुष्करेणाप्तः पतित्वे शंकरो मया॥
स मां श्यामलवर्णेति बहुशः प्रोक्तवान्भवः॥ २९.४२ ॥

स्यामहं कांचनाकारा वाल्लभ्येन च संयुता॥
भर्तुर्भूतपतेरंगे ह्येकतो निर्विशंकिता॥ २९.४३ ॥

तस्यास्तद्भाषितं श्रुत्वा प्रोवाच जलजासनः॥
एवं भवतु भूयस्त्वं भर्तुर्देहार्धधारिणी॥ २९.४४ ॥

ततस्तस्याः शरीरात्तु स्त्री सुनीलांबुजत्विषा॥
निर्गता साभवद्भीमा घंटाहस्ता त्रिलोचना॥ २९.४५ ॥

नानाभरणपूर्णांगी पीतकौशेयवासिनी॥
तामब्रवीत्ततो ब्रह्मा देवीं नीलांबुजत्विषम्॥ २९.४६ ॥

अस्माद्भूधरजा रदेहसंपर्कात्त्वं ममाज्ञया॥
संप्राप्ता कृतकृत्यत्वमेकानंशा पुराकृतिः॥ २९.४७ ॥

य एष सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरानने॥
स तेस्तु वाहनो देवी केतौ चास्तु महाबलः॥ २९.४८ ॥

गच्छ विंध्याचले तत्र सुरकार्यं करिष्यति॥
अत्र शुंभनिशुंभौ च हत्वा तारकसैन्यपौ॥ २९.४९ ॥

पांचालोनाम यक्षोऽयं यक्षलक्षपदानुगः॥
दत्तस्ते किंकरो देवी महामायाशतैर्युतः॥ २९.५० ॥

इत्युक्ता कौशिकी देवी ततेत्याह पितामहम्॥
निर्गतायां च कौशिक्यां जाता स्वैराश्रिता गुणैः॥ २९.५१ ॥

सर्वैः पूर्वभवोपात्तैस्तदा स्वयमुपस्तितैः॥
उमापि प्राप्तसंकल्पा पश्चात्तापपरायणा॥ २९.५२ ॥

मुहुः स्वं परिनिंदंती जगाम गिरिशांतिकम्॥
संप्रयांतीं च तां द्वारी अपवार्य समाहितः॥ २९.५३ ॥

रुरोध वीरको देवीं हेमवेत्रलताधरः॥
तामुवाच च कोपेन तिष्ठ तिष्ठ क्व यासि च॥ २९.५४ ॥

प्रयोजनं न तेऽस्तीह गच्छ यावन्न भर्त्स्यसे॥
देव्या रूपधरो दैत्यो देवं वंचयितुं त्विह॥ २९.५५ ॥

प्रविष्टो न च दृष्टोऽसौ स च देवेन घातितः॥
घातिते चाहमाक्षिप्तो नीलकण्ठेन धीमता॥ २९.५६ ॥

कापि स्त्री नापि मोक्तव्या त्वया पुत्रेति सादरम्॥
तस्मात्त्वमत्र द्वारिस्था वर्षपूगान्यनेकशः॥ २९.५७ ॥

भविष्यसि न चाप्यत्र प्रवेशं लप्स्यसे व्रज॥
एका मे प्रविशेदत्र माता या स्नेहवत्सला॥ २९.५८ ॥

नगाधिराजतनया पार्वती रुद्रवल्लभा॥
इत्युक्ता तु ततो देवी चिंतयामास चेतसा॥ २९.५९ ॥

न सा नारी तु दैत्योऽसौ वायोर्नैवावबासत॥
वृथैव वीरकः शप्तो मया क्रोधपरीतया॥ २९.६० ॥

अकार्यं क्रियते मूढैः प्रायः क्रोधसमन्वितैः॥
क्रोधेन नश्यते कीर्तिः क्रोधो हंति स्थिरां श्रियम्॥ २९.६१ ॥

अपरिच्छिन्नसर्वार्था पुत्रं शापितवत्यहम्॥
विपरीतार्थबोद्धृणां सुलभा विपदो यतः॥ २९.६२ ॥

संचिंत्यैवमुवाचेदं वीरकं प्रति शैलजा॥
अधो लज्जाविकारेण वदनेनांबुजत्विषा॥ २९.६३ ॥

अहं वीरक ते माता मा तेऽस्तु मनसो भ्रमः॥
शंकरस्यास्मि दयिता सुता तु हिमभूभृतः॥ २९.६४ ॥

मम गात्रस्थितिभ्रांत्या मा शंकां पुत्र भावय॥
तुष्टेन गौरता दत्ता ममेयं पद्मयोनिना॥ २९.६५ ॥

मया शप्तोऽस्यविदिते वृत्तांते दैत्यनिर्मिते॥
ज्ञात्वा नारीप्रवेशं तु शंकरे रहसि स्तिते॥ २९.६६ ॥

न निवर्तयितुं शक्यः शापः किं तु ब्रवीमि ते॥
मानुष्यां तु शिलायां त्वं शिलादात्संभविष्यसि॥ २९.६७ ॥

पुण्ये चाप्यर्बुदारण्ये स्वर्गमोक्षप्रदे नृणाम्॥
अचलेश्वरलिंगं तु वर्तते यत्र वीरक॥ २९.६८ ॥

वाराणस्यां विश्वनाथसमं तत्फलदं नृणाम्॥
प्रभासस्य च यात्राभिर्दशभिर्यत्फलं नृणाम्॥ २९.६९ ॥

तदेकयात्रया प्रोक्तमर्बुदस्य महागिरेः॥
यत्र तप्त्वा तपो मर्त्या देहधातून्विहाय च॥ २९.७० ॥

संसारी न पुनर्भूयान्महेश्वरवचो यथा॥
अर्बुदो यदि लभ्येत सेवितुं जन्मदुःखितैः॥ २९.७१ ॥

वाराणसीं च केदारं किं स्मरंति वृथैव ते॥
तत्राराध्य भवं देवं भवान्नन्दीति नामभृत्॥ २९.७२ ॥

शीघ्रमेष्यसि चात्रैव प्रतीहारत्वमाप्स्यसि॥
एवमुक्ते हृष्टरोमा वीरकः प्रणिपत्य ताम्॥ २९.७३ ॥

संस्तूय विविधैर्वाक्यैर्मातरं समभाषत॥

धन्योऽहं देवि यो लप्स्ये मानुष्यमतिदुर्लभम्॥ २९.७४ ॥

शापोऽनुग्रहरूपोऽयं विशेषादर्बुदाचले॥
समीपे यस्य पुण्योऽस्ति महीसागरसंगमः॥ २९.७५ ॥

ऊधः पृथिव्या देशोऽयं यो गिरेश्चार्णवांतरे॥
तत्र गत्वा महत्पुण्यमवाप्य भवभक्तितः॥ २९.७६ ॥

पुनरेष्यामि भो मातरित्युक्त्वाभूच्छिलासुतः॥
देवी च प्रविवेशाथ भवनं शशिमौलिनः॥ २९.७७ ॥

**॥इत्यार्बुदाख्यानम्॥**
ततो दृष्ट्वा च तां प्राह धिग्नार्य इति त्र्यंबकः॥ २९.७८ ॥

सा च प्रणम्य तं प्राह सत्यमेतन्न मिथ्यया॥
जडः प्रकृतिभागोयं नार्यश्चार्हंति निन्दनाम्॥ २९.७९ ॥

पुरुषाणां प्रसादेन मुच्यंते भवसागरात्॥
ततः प्रहृष्टस्तामाह हरो योग्याऽधुना शुभे॥ २९.८० ॥

पुत्रं दास्यामि येन त्वं ख्यातिमाप्स्यसि शोभने॥
ततो रेम हि देव्या स नानाश्चर्यालयो हरः॥ २९.८१ ॥

ततो वर्षसहस्रेषु देवास्त्वरितमानसाः॥
ज्वलनं नोदयामासुर्ज्ञातुं शंकरचेष्टितम्॥ २९.८२ ॥

द्वारि स्थितं प्रतिहारं वंचयित्वा च पावकः॥
पारावतस्य रूपेण प्रविवेश हरांतिकम्॥ २९.८३ ॥

ददृशे तं च देवेशो विनतां प्रेक्ष्य पार्वतीम्॥
ततस्तां ज्वलनं प्राह नैतद्योग्यं त्वया कृतम्॥ २९.८४ ॥

यदिदं भुक्षुतं स्थानान्मम तेजो ह्यनुत्तमम्॥
गृहाण त्वं सुदुर्बुद्धे नो वा धक्ष्यामि त्वां रुषा॥ २९.८५ ॥

भीतस्ततोऽसौ जग्राह सर्वदेवमुखं च सः॥
तेन ते वह्निसहिता विह्वलाश्च सुराः कृताः॥ २९.८६ ॥

विपाट्य जठराण्येषां वीर्यं माहेश्वरं ततः॥
निष्क्रांतं तत्सरो जातं पारदं शतयोजनम्॥ २९.८७ ॥

वह्निश्च व्याकुलीभूतो गंगायां मुमुचे सकृत्॥
दह्यमाना च सा देवी तरंगैर्वहिरुत्सृजत्॥ २९.८८ ॥

जातस्त्रिभुवनक्यातस्तेन च श्वेतपर्वतः॥
एतस्मिन्नंतरे वह्निराहूतश्च हिमालये॥ २९.८९ ॥

सप्तर्षिभिर्वह्निहोमं कुर्वद्भिर्मंत्रवीर्यतः॥
आगत्य तत्र जग्राह वह्निर्भागं च तं हुतम्॥ २९.९० ॥

गतेऽह्न्यत्वस्मिंश्च तत्रस्थः पत्नी स्तेषामपश्यत॥
सुवर्णकदलीस्तंभनिभास्ताश्चंद्रलेखया॥ २९.९१ ॥

पश्यमानः प्रफुल्लाक्षो वह्निः कामवशं गतः॥
स भूयश्चिंतयामास न न्याय्यं क्षुभितोऽस्मि यत्॥ २९.९२ ॥

साध्वीः पत्नीर्द्विजेंद्राणामकामाः कामयाम्यहम्॥
पापमेतत्कर्म चोग्रं नश्यामि तृमवत्स्फुटम्॥ २९.९३ ॥

कृत्वैतन्नश्यते कीर्तिर्यावदाचंद्रतारकम्॥
एवं संचिंत्य बहुधा गत्वा चैव वनांतरम्॥ २९.९४ ॥

संयन्तुं नाभवच्छक्त उपायैर्बहुभिर्मनः॥
ततः स कामसंतप्तो मूर्छितः समपद्यत॥ २९.९५ ॥

ततः स्वाहा च भार्यास्य बुबुधे तद्विचेष्टितम्॥
ज्ञात्वा च चिंतयामास प्रहृष्टा मनसि स्वयम्॥ २९.९६ ॥

स्वां भार्यामथ मां त्यक्त्वा बहुवासादवज्ञया॥
भार्याः कामयते नूनं सप्तर्षीणां महात्मनाम्॥ २९.९७ ॥

तदासां रूपमाश्रित्य रमिष्ये तेन चाप्यहम्॥
ततस्त्वंगिरसो भार्या शिवानामेति शोभना॥ २९.९८ ॥

तस्या रूपं समाधाय पावकं प्राप्य साब्रवीत्॥
मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि॥ २९.९९ ॥

न चेत्करिष्यसे देव मृतां मामुपधारय॥
अहमंगिरसो भार्या शिवानाम हुताशन॥ २९.१०० ॥

सर्वाभिः सहिता प्राप्ता ताश्च यास्यंत्यनुक्रमात्॥
अस्माकं त्वं प्रियो नित्यं त्वच्चित्ताश्च वयं तथा॥ २९.१०१ ॥

ततः स कामसंतप्तः संबभूव तया सह॥
प्रीते प्रीता च सा देवी निर्जगाम वनांतरात्॥ २९.१०२ ॥

चिंतयंती ममेदं चेद्रूपं द्रक्ष्यंति कानने॥
ते ब्राह्मणीनामनृतं दोषं वक्ष्यंति पावकात्॥ २९.१०३ ॥

तस्मादेतद्रक्षमाणा गरुडी संभवाम्यहम्॥
सुपर्णा सा ततो भूत्वा ददृशे श्वेतपर्वतम्॥ २९.१०४ ॥

शरस्तंबैः सुसंपृक्तं रक्षोभिश्च पिशाचकैः॥
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम्॥ २९.१०५ ॥

प्राक्षिपत्कांचने कुंडे शुक्रं तद्धारणेऽक्षमा॥
शिष्टानामपि देवीनां सप्तर्षीणां महात्मनाम्॥ २९.१०६ ॥

पत्नीसरूपतां कृत्वा कामयामास पावकम्॥
दिव्यं रूपमरूंधत्याः कर्तुं न शकितं तया॥ २९.१०७ ॥

तस्यास्तपःप्रभावेण भर्तुः शुश्रूषणेन च॥
षट्कृत्वस्तत्तु निक्षिप्तमग्निरेतः कुरुद्वह॥ २९.१०८ ॥

कुंडेऽस्मिंश्चैत्रबहुले प्रतिपद्येव स्वाहया॥
ततश्च पावको दुःखाच्छुशोच च मुमोह च॥ २९.१०९ ॥

आः पापं कृतमित्येव देहन्यासेऽकरोन्मतिम्॥
ततस्तं खेचरी वाणी प्राह मा मरणं कुरु॥ २९.११० ॥

भाव्यमेतच्च भाव्यर्थात्को हि पावक मुच्यते॥

भाव्यर्थेनापि यत्ते च परदारोप सेवनम्॥ २९.१११ ॥

कृतं तच्चेतसा तेन त्वामजीर्णं प्रवेक्ष्यति॥
श्वेतकेतोर्महायज्ञे घृतधाराभितर्पितम्॥ २९.११२ ॥

शोकं च त्यज नैतास्ताः स्वाहै वेयं तव प्रिया॥
श्वेतपर्वतकुंडस्थं पुत्रं त्वं द्रष्टुमर्हसि॥
ततो वह्निस्तत्र गत्वा ददृशे तनयं प्रभुम्॥ २९.११३ ॥

**॥अर्जुन उवाच॥**
कस्मात्स्वाहा करोद्रूपं षण्णां तासां महामुने॥ २९.११४ ॥

यत्ता भर्तृपराः साध्व्यस्तपस्विन्योग्निसंनिभाः॥
न बिभेति च किं ताभ्यः षड्भ्यः स्वाहाऽपराधिनी॥
भर्तृभक्त्या जगद्दग्धुं यतः शक्ताश्च ता मुने॥ २९.११५ ॥

**॥नारद उवाच॥**
सत्यमेतत्कुरुश्रेष्ठ श्रृणु तच्चापि कारणम्॥
येन तासां कृतं रूपं न वा शापं ददुश्च ताः॥ २९.११६ ॥

यत्र तद्वह्निना क्षिप्तं रुद्रतेजः सकृत्पुरा॥
गंगायां तत्र सस्नुस्ताः षटत्न्योऽज्ञनाभावतः॥ २९.११७ ॥

ततस्ता विह्वलीभूतास्तेजसा तेन मोहिताः॥
लज्जया च स्वभर्तृणां गंगातीरस्थिता रहः॥ २९.११८ ॥

एतदंतमालोक्य चिकीर्षंती मनीषितम्॥
स्वाहा शरीरमाविश्यतासां तेजो जहार तत्॥ २९.११९ ॥

चिक्रीड वह्निजायापि यथा ते कथितं मया॥ २९.१२० ॥

उपकारमिमं ताभिः स्मरंतीभिश्च भारत॥
न शप्ता सा यतः शापो न देयश्चोपकारिणि॥ २९.१२१ ॥

ततः सप्तर्षयो ज्ञात्वा ज्ञानेनासुचितां गताः॥
तत्यजुः षट् तदा पत्नीर्विना देवीमरुंधतीम्॥ २९.१२२ ॥

विश्वामित्रस्तु भगवान्कुमारं शरणं गतः॥
स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः॥ २९.१२३ ॥

अष्टोत्तरशतं नाम्नां श्रृणु त्वं तानि फाल्गुन॥
जपेन येषां पापानि यांति ज्ञानमवाप्नुयात्॥ २९.१२४ ॥

त्वं ब्रह्मवादी त्वं ब्रह्मा ब्राह्मणवत्सलः॥
ब्रह्मण्यो ब्रह्मदेवश्च ब्रह्मदो ब्रह्मसंग्रहः॥ २९.१२५ ॥

त्वं परं परमं तेजो मंगलानां च मंगलम्॥
अप्रमेयगुणश्चैव मंत्राणां मंत्रगो भवान्॥ २९.१२६ ॥

त्वं सावित्रीमयो देव सर्वत्रैवापराजितः॥
मंत्र शर्वात्मको देवः षडक्षरवतां वरः॥ २९.१२७ ॥

माली मौली पताकी च जटी मुंडी शिखंड्यपि॥
कुण्डली लांगली बालः कुमारः प्रवरो वरः॥ २९.१२८ ॥

गवांपुत्रः सुरारिघ्नः संभवो भवभावनः॥
पिनाकी शत्रुहा श्वेतो गूढः स्कन्दः कराग्रणीः॥ २९.१२९ ॥

द्वादशो भूर्भुवो भावी भुवः पुत्रो नमस्कृतः॥
नागराजः सुधर्मात्मा नाकपृष्ठः सनातनः॥ २९.१३० ॥

त्वं भर्ता सर्वभूतात्मा त्वं त्राता त्वं सुखावहः॥
शरदक्षः शिखी जेता षड्वक्त्रो भयनाशनः॥ २९.१३१ ॥

हेमगर्भो महागर्भो जयश्च विजयेश्वरः॥
त्वं कर्ता त्वं विधाता च नित्यो नित्यारिमर्दनः॥ २९.१३२ ॥

महासेनो महातेज वीरसेनश्च भूपतिः॥
सिद्धासनः सुराध्यक्षो भीमसेनो निरामयः॥ २९.१३३ ॥

शौरिर्यदुर्महातेजा वीर्यवान्सत्यविक्रमः॥
तेजोगर्भोऽसुररिपुः सुरमूर्तिः सुरोर्जितः॥ २९.१३४ ॥

कृतज्ञो वरदः सत्यः शरण्यः साधुवत्सलः॥

सुव्रतः सूर्यसंकाशो वह्निगर्भः कणो भुवः॥ २९.१३५ ॥

पिप्पली शीघ्रगो रौद्री गांगेयो रिपुदारणः॥
कार्त्तिकेयः प्रभुः क्षंता नीलदंष्ट्रो महामनाः॥ २९.१३६ ॥

निग्रहो निग्रहाणां च नेता त्वं सुरनंदनः॥
प्रग्रहः परमानंदः क्रोधघ्नस्तार उच्छ्रितः॥ २९.१३७ ॥

कुक्कुटी बहुली दिव्यः कामदो भूरिवर्धनः॥
अमोघोऽमृतदो ह्यग्निः शत्रुघ्नः सर्वमोदनः॥ २९.१३८ ॥

अव्ययो ह्यमरः श्रीमानुन्नतो ह्यग्निसंभवः॥
पिशाचराजः सूर्याभः शिवात्मा शिवनंदनः॥ २९.१३९ ॥

अपारपारो दुर्ज्ञेयः सर्वभूतहिते रतः॥
अग्राह्यः कारणं कर्ता परमेष्ठी परं पदम्॥ २९.१४० ॥

अचिंत्यः सर्वभूतात्मा सर्वात्मा त्वं सनातनः॥
एवं स सर्वभूतानां संस्तुतः परमेश्वरः॥ २९.१४१ ॥

नाम्नामष्टशतेनायं विश्वामित्रमहर्षिणा॥
प्रसन्नमूर्तिराहेदं मुनींद्रं व्रियतामिति॥ २९.१४२ ॥

मम त्वया द्विजश्रेष्ठ स्तुतिरेषा निरूपिता॥
भविष्यति मनोऽभीष्टप्राप्तये प्राणिनां भुवि॥ २९.१४३ ॥

विवर्धते कुले लक्ष्मीस्तस्य यः प्रपठेदिमम्॥
न राक्षसाः पिशाचा वा न भूतानि न चापदः॥ २९.१४४ ॥

विघ्नकारीणि तद्गेहे यत्रैव संस्तुवंति माम्॥
दुःस्वप्नं च न पश्येत्स बद्धो मुच्यते बंधनात्॥ २९.१४५ ॥

स्तवस्यास्य प्रभावेण दिव्यभावः पुमान्भवेत्॥
त्वं च मां श्रुतिसंस्कारैः सर्वैः संस्कर्तुमर्हसि॥ २९.१४६ ॥

संस्काररहितं जन्म यतश्च पशुवत्स्मृतम्॥
त्वं च मद्वरदानेन ब्रह्मर्षिश्च भविष्यसि॥ २९.१४७ ॥

ततो मुनिस्तस्य चक्रे जातकर्मादिकाः क्रियाः॥
पौरोहित्यं तथा भेजे स्कंदस्यैवाज्ञया प्रभुः॥ २९.१४८ ॥

ततस्तं वह्निरभ्यागाद्ददर्श च सुतं गुहम्॥
षट्छीर्षं द्विगुणश्रोत्रं द्वादशाक्षिभुजक्रमम्॥ २९.१४९ ॥

एकग्रीवं चैककायं कुमारं स व्यलोकयत्॥
कलिलं प्रथमे चाह्नि द्वितीये व्यक्तितां गतम्॥ २९.१५० ॥

तृतीयायां शिशुर्जातश्चतुर्थ्यां पूर्ण एवच॥
पंचम्यां संस्कृतः सोऽभूत्पावकं चाप्यपश्यत॥ २९.१५१ ॥

ततस्तं पावकः पार्थ आलिलिंग चुचुंब च॥
पुत्रेति चोक्त्वा तस्मै स शक्त्यस्त्रम ददात्स्वयम्॥ २९.१५२ ॥

स च शक्तिं समादाय नमस्कृत्य च पावकम्॥
श्वेतश्रृंगं समारूढो मुखैः पश्यन्दिशो दश॥ २९.१५३ ॥

व्यनदद्भैरवं नादं त्रास यन्सासुरं जगत्॥
ततः श्वेतगिरेः श्रृंगं रक्षः पद्मदशावृतम्॥ २९.१५४ ॥

बिभेद तरसा शक्त्या शतयोजनविस्तृतम्॥
तदेकेन प्रहारेण खंडशः पतितं भुवि॥ २९.१५५ ॥

चूर्णीकृता राक्षसास्ते सततं धर्मशत्रवः॥
ततः प्रव्यथिता भूमिर्व्यशीर्यत समंततः॥ २९.१५६ ॥

भीताश्च पर्वताः सर्वे चुक्रुशुः प्रलयाद्यथा॥
भूतानि तत्र सुभृशं त्राहित्राहीति चोज्जगुः॥ २९.१५७ ॥

एवं श्रुत्वा ततो देवा वासवं सह तेऽब्रुवन्॥
येनैकेन प्रहारेण त्रैलोक्यं व्याकुली कृतम्॥ २९.१५८ ॥

स संक्रुद्धः क्षणाद्विश्वं संहरिष्यति वासव॥
वयं च पालनार्थाय सृष्टा देवेन वेधसा॥ २९.१५९ ॥

तच्च त्राणं सदा कार्यं प्राणैः कंठगतैरपि॥
अस्माकं पश्यतामेवं यदि संक्षोभ्यते जगत्॥ २९.१६० ॥

धिक्ततो जन्म वीराणां श्लाघ्यं हि मरणं क्षणात्॥
तदस्माभिः सहैनं त्वं क्षतुमर्हसि वासव॥ २९.१६१ ॥

एवमुक्तस्तथेत्युक्त्वा देवैः सार्धं तमभ्ययात्॥
विधित्सुस्तस्य वीर्यं स शक्रस्तूर्णतरं तदा॥ २९.१६२ ॥

उग्रं तच्च महावेगं देवानीकं दुरासदम्॥
नर्दमानं गुहॠ प्रेक्ष्य ननाद जलधिर्यथा॥ २९.१६३ ॥

तस्य नादेन महता समुद्धूतोदधिप्रभम्॥
बभ्राम तत्रतत्रैव देव सैन्यमचेतनम्॥ २९.१६४ ॥

जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः॥
विससर्ज्ज मुखात्तत्र प्रवृद्धाः पावकार्चिषः॥ २९.१६५ ॥

अदहद्देवसैन्यानि चेष्ट मानानि भूतले॥
ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः॥ २९.१६६ ॥

प्रच्युताः सहसा भांति दिवस्तारागणा इव॥
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम्॥ २९.१६७ ॥

देवा वज्रधरं प्रोचुस्त्यज वज्रं शतक्रतो॥
उक्तो देवैस्तदा शक्रः स्कंदे वज्रवासृजत्॥ २९.१६८ ॥

तद्विसृष्टं जघानाशु पार्श्वं स्कंदस्य दक्षिणम्॥
बिभेद च कुरुश्रेष्ठ तदा तस्य महात्मनः॥ २९.१६९ ॥

वज्रप्रहारात्स्कंदस्य संजातः पुरुषोऽपरः॥
युवा कांचनसन्नाहः शक्तिधृग्दिव्य कुंडलः॥ २९.१७० ॥

शाख इत्यभिविख्यातः सोपि व्यनददद्भुतम्॥
ततश्चेंद्रः पुनः क्रुद्धो हृदि स्कंदं व्यदारयत्॥ २९.१७१ ॥

तत्रापि तादृशो जज्ञे नैगमेय इति श्रुतः॥

ततो विनद्य स्कंदाद्याश्चत्वारस्तं तदाभ्ययुः॥ २९.१७२ ॥

तदेंद्रो वज्रमुत्सृज्य प्रांजलिः शरणं ययौ॥
तस्याभयं ददौ स्कंदः सहसैन्यस्य सत्तमः॥ २९.१७३ ॥

ततः प्रहृष्टास्त्रिभिदशा वादित्राण्यभ्यवादयन्॥
वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः॥ २९.१७४ ॥

या हरं ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः॥
काकी च हिलिमा चैव रुद्रा च वृषभा तथा॥ २९.१७५ ॥

आया पलाला मित्रा च सप्तैताः शिशुमातरः॥
एतासांवीर्यसंपन्नः शिशुश्चाभूत्सुदारुणः॥ २९.१७६ ॥

स्कंदप्रसादजः पुत्रो लोहिताक्षो भयंकरः॥
एष वीराष्टकः प्रोक्तः स्कंदमातृगणोऽद्भुतः॥ २९.१७७ ॥

पूजनीयः सदा भक्त्या सर्वापस्मारशांतिदः॥
उपातिष्ठत्ततः स्कंदं हिरण्यकवचस्रजम्॥ २९.१७८ ॥

लोहितांबरसंवीतं त्रैलोक्यस्यापि सुप्रभम्॥
युवानं श्रीः स्वयं भेजे तं प्रणम्य शरीरिणी॥ २९.१७९ ॥

श्रिया जुष्टं च तं प्राहुः सर्वे देवाः प्रणम्य वै॥
हिरण्यवर्ण्ण भद्रं ते लोकानां शंकरो भव॥ २९.१८० ॥

भवानिंद्रोऽस्तु नो नाथ त्रैलोक्यस्य हिताय वै॥ २९.१८१ ॥

**॥स्कंद उवाच॥**
किमिंद्रः सर्वलोकानां करोतीह सुरोत्तमाः॥
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः॥ २९.१८२ ॥

**॥देवा ऊचुः॥**
इंद्रो दिशति भूतानां बलं तेजः प्रजाः सुखम्॥
प्रज्ञां प्रयच्छति तथा सर्वान्दायान्सुरेश्वरः॥ २९.१८३ ॥

दुर्वृत्तानां स हरति वृत्तस्थानां प्रयच्छति॥

अनुशास्ति च भूतानि कार्येषु बलवत्तरः॥ २९.१८४ ॥

असूर्ये च भवेत्सूर्यस्तथाऽचंद्रे च चंद्रमाः॥
भवत्यग्निश्च वायुश्च पृथिव्यां जीवकारणम्॥ २९.१८५ ॥

एतदिंद्रेण कर्तव्यमिंद्रो हि विपुलं बलम्॥
त्वं चेंद्रो भव नो वीर तारकं जहि ते नमः॥ २९.१८६ ॥

**॥इंद्र उवाच॥**
त्वं भवेंद्रो महाबाहो सर्वेषां नः सुखावहः॥
प्रणम्य प्रार्थये स्कंद तारकं जहि रक्ष नः॥ २९.१८७ ॥

**॥स्कंद उवाच॥**
शाधि त्वमेव त्रैलोक्यं भवानिंद्रोस्तु सर्वदा॥
करिष्ये चेंद्रकर्माणि न ममेंद्रत्वमीप्सितम्॥ २९.१८८ ॥

त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च॥
करोमि किं च ते शक्रशासनं ब्रूहि तन्मम॥ २९.१८९ ॥

**॥इंद्र उवाच॥**
यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया॥
अभिषिच्छस्व देवानां सैनापत्ये महाबल॥
अहमिंद्रो भविष्यामि तव वाक्याद्यशोऽस्तु ते॥ २९.१९० ॥

**॥स्कंद उवाच॥**
दानवानां विनाशाय देवानामर्थसिद्धये॥
गोब्राह्मणस्य चार्थाय एवमस्तु वचस्तव॥ २९.१९१ ॥

इत्युक्ते सुमहानादः सुराणामभ्यजायत॥
भूतानां चापि सर्वेषां त्रैलोक्यांकपकारकः॥ २९.१९२ ॥

जयेति तुष्टुवुश्चैनं वादित्राण्यभ्यवादयन्॥
ननृस्तष्टुवुश्चैवं कराघातांश्च चक्रिरे॥ २९.१९३ ॥

तेन शब्देन महता विस्मिता नगनंदिनी॥
शंकरं प्राह को देव नादोऽयमतिवर्तते॥ २९.१९४ ॥

**॥रुद्र उवाच॥**

अद्य नुनं प्रहृष्टानां सुराणां विविधा गिरः॥
श्रूयंते च तथा देवी यथा जातः सुतस्तव॥ २९.१९५ ॥

गवां च ब्राह्मणानां च साध्वीनां च दिवौकसाम्॥
मार्जयिष्यति चाश्रूणि पुत्रस्ते पुण्यवत्यपि॥ २९.१९६ ॥

एवं वदति सा देवी द्रष्टुं तमुत्सुकाऽभवत्॥
शंकरश्च महातेजाः पुत्रस्नेहाधिको यतः॥ २९.१९७ ॥

वृषभं तत आरुह्य देव्या सह समुत्सुकः॥
सगणो भव आगच्छत्पुत्र दर्शनलालसः॥ २९.१९८ ॥

ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत्॥
अभिगच्छ महादेवं पितरं मातरं प्रभो॥ २९.१९९ ॥

अनयोर्वीर्यसंयोगात्तवोत्पत्तिस्तु प्राथमी॥
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम्॥ २९.२०० ॥

अपूजयदमेयात्मा पितरं मातरं च ताम्॥
ततस्तमालिंग्य सुतं चिरं संयोज्य चाशिषः॥ २९.२०१ ॥

चिरं जहृषतुश्चोभौ पार्वतीपरमेश्वरौ॥
सिद्धसारस्य तत्त्वं च ददौ तुष्टोऽस्य शंकरः॥ २९.२०२ ॥

देवी प्रकृतिमोक्षं च तुष्टा हर्षपरिप्लुता॥
एतस्मिन्नेव काले तु षड्देव्यस्तं समागमन्॥ २९.२०३ ॥

ऋषिभिस्ताः परित्यक्तास्तं पुत्रेति जगुस्तदा॥
पार्वती च ततः प्राह मम पुत्रो न वस्त्वयम्॥ २९.२०४ ॥

स्वाहा ममेति च प्राह पावकश्च ममेति च॥
रुद्रो ममेति च प्राह मम देवनदीति च॥ २९.२०५ ॥

चक्रुस्ते कलहं घोरं विवदंतः परस्परम्॥
पुत्रस्नेहो हि बलवान्पार्थ किंकिं न कारयेत्॥ २९.२०६ ॥

ततस्तान्प्रहसन्नाह विवादो युज्यते न च॥
सर्वेषां वो गुहः पुत्रो मत्तो वै व्रियतां वरः॥ २९.२०७ ॥

ततः प्राहुश्च षड्देव्यः स्वर्गो नो ह्यक्षयो भवेत्॥
तथेति ता गृहः प्राह शक्रस्तत्रांतरेऽब्रवीत्॥ २९.२०८ ॥

रोहिण्याश्चानुजा स्कंद स्पर्धमानाभिजित्खला॥
इत्छंती ज्येष्ठतां देवी पृथत्क्वं च तपोरता॥ २९.२०९ ॥

ततः प्रभृति मूढोऽस्मि तत्स्थाने स्थापयप्रभो॥
ततस्तथेति च प्रोक्ते कृत्तिकास्ता दिवं गताः॥ २९.२१० ॥

नक्षत्रं सप्तशीर्षाभं भाति तद्वह्निदैवतम्॥
अथैनमब्रवीत्स्वाहा प्रिया नाहं महार्चिषः॥
तदग्नेः प्रियतां देहि सहवासं सदैव च॥ २९.२११ ॥

**॥स्कंद उवाच॥**
हव्यं कव्यं च यत्किंचिद्द्विजा होष्यंति पावके॥ २९.२१२ ॥

तत्ते नाम्ना प्रदास्यंति वासः सार्धं भवेत्तव॥
पावकः प्रार्थयामास यज्ञभागान्पुनः सुतान्॥ २९.२१३ ॥

स चाप्याहाद्यप्रभृति यज्ञभागानवाप्नुहि॥
इतरे प्रार्थयामासुः ख्यातो नस्त्वं सुतो भव॥ २९.२१४ ॥

एवमेवेति तानाह स्कंदस्तद्धि सुदुर्लभम्॥
ततस्तं योगिनः सर्वे संभूय सनकादयः॥
अभ्यषिंचन्गिरौ तस्मिन्योगिनामादिपत्यके॥ २९.२१५ ॥

योगीश्वरमिति प्राहुस्ततस्तं योगिनस्तथा॥
जहृपुर्देवताश्चैव नानावाद्यन्यवादयन्॥ २९.२१६ ॥

अभिषिक्तेन तेनासौ शुशुभे श्वेतपर्वतः॥
आदित्येनेवांशुमता सुरम्य उदयाचलः॥ २९.२१७ ॥

ततो देवाः सगन्धर्वा नृत्यंत्यप्सरसस्तथा॥
हृष्टानां सर्वभूतानां श्रूयते निनदो महान्॥ २९.२१८ ॥

एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम्॥
प्रहृष्टं प्रेक्ष्य तं स्कन्दं न च तृप्यति दर्शनात्॥ २९.२१९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये स्कन्दकुमारस्य सर्वदेवसैनाधिपत्यभिषेकोत्सववर्मनंनामैकोनत्रिंशोऽध्यायः॥ २९ ॥ छ ॥

**॥नारद उवाच॥**

ततः स्कन्दः सुरैः सार्धं श्वेतपर्वत मस्तकात्॥
उत्तीर्य तारकं हन्तुं दक्षिणां स दिशं ययौ॥ ३०.१ ॥

ततः सरस्वतीतीरे यानि भूतानि नारद॥
ग्रहाश्चोपग्रहाश्चैव वेतालाः शाकिनी गणाः॥ ३०.२ ॥

उन्मादा ये ह्यपस्माराः पलादाश्च पिशाचकाः॥
देवैस्तेषामाधिपत्ये सोऽभ्यषिच्यत पावकिः॥ ३०.३ ॥

यथा ते नैव मर्यादां संत्यजंति दुराशयाः॥
एतैस्तस्मात्समाक्रांतः शरण्यं पावकिं व्रजेत्॥ ३०.४ ॥

अप्रकीर्णेन्द्रियं दांतं शुचिं नित्यमतंद्रितम्॥
आस्तिकं स्कन्दभक्तं च वर्जयंति ग्रहादिकाः॥ ३०.५ ॥

महेश्वरं च ये भक्ता भक्ता नारायणं च ये॥
तेषां दर्शनमात्रेण नश्यंते ते विदूरतः॥ ३०.६ ॥

ततः सर्वैः सुरैः सार्धं महीतीरं ययौ गुहः॥
तत्र देवैः प्रकथितं महीमाहात्म्यमुत्तमम्॥ ३०.७ ॥

श्रृण्वन्विसिष्मिये स्कन्दः प्रणनाम च तां नदीम्॥
ततो महीदक्षिणतस्तीरमाश्रित्य धिष्ठितम्॥ ३०.८ ॥

प्रणम्य शक्रप्रमुखा गुहं वचनमब्रुवन्॥
अभिषिक्तं विना स्कन्द सेनापतिमकल्मषम्॥ ३०.९ ॥

न शर्म लभते सेना तस्मात्त्वमभिषेचय॥
महीसागरसंभूतैः पुण्यैश्चापि शिवैर्जलैः॥ ३०.१० ॥

अभिषेक्ष्यामहे त्वां च तत्र नो द्रष्टुमर्हसि॥
यथा हस्तिपदे सर्वपदांतर्भाव इष्यते॥ ३०.११ ॥

सर्वतीर्थान्तरस्थानं तथार्णवमहीजले॥
सर्वभूतमयो यद्वत्र्यंबकः परिकीर्त्यते॥ ३०.१२ ॥

सर्वतीर्थमयस्तद्वन्महीसागरसंगमः॥
अर्धनारीश्वरं रूपं यथा रुद्रस्य सर्वदम्॥ ३०.१३ ॥

तथा महीसमुद्रस्य स्नानं सर्वफलप्रदम्॥
येनात्र पितरः स्कन्द तर्पिता भक्तिभावतः॥ ३०.१४ ॥

तेन सर्वेषु तीर्थेषु तर्पिता नात्र संशयः॥
न चैतद्धृदि मंतव्यं क्षारमेतज्जलं हि यत्॥ ३०.१५ ॥

यथा हि कटुतिक्तादि गवा ग्रस्तं हि क्षीरदम्॥
एवमेतत्त्विदं तोयं पितॄणां तृप्ति दायकम्॥ ३०.१६ ॥

एवं ब्रुवत्सु देवेषु कपिलोऽपि मुनिर्जगौ॥
सत्यमेतदुमापुत्र सर्वतीर्थमयी मही॥ ३०.१७ ॥

कर्दमो यस्त्वहमपि ज्ञात्वा तीर्थमहा गुणान्॥
सर्वां भुवं परित्यज्य कृत्वा ह्यश्रममास्तितः॥ ३०.१८ ॥

ततो महेश्वरः प्राह सत्यमेतत्सुरोदितम्॥
ब्रह्माद्यास्तं तथा प्राहुरत्र भूयोऽप्यथो गुरुः॥ ३०.१९ ॥

अत्राभिषेकं ते वीर करिष्यामः समादिश॥
ततः सुविस्मितस्तत्र स्नात्वा स्कन्दो महामनाः॥ ३०.२० ॥

अभिषिञ्चन्तु मां देवा इति तानब्रवीद्वचः॥
ततोऽभिषेकसंभारान्सर्वान्संभृत्य शास्त्रतः॥ ३०.२१ ॥

जुहुवुर्मंत्रपूतेऽग्नौ चत्वारो मुख्यऋत्विजः॥
ब्रह्मा च कपिलो जीवो विश्वामित्रश्चतुर्थकः॥ ३०.२२ ॥

अन्ये च शतशस्तत्र मुनयो वेदपारगाः॥
तत्राद्भुतं महादेवो दर्शयामास भारत॥ ३०.२३ ॥

यदग्निकुण्डमध्यस्थो लिंगमूर्तिर्व्यदृश्यत॥
अहमेवाग्निमध्यस्थो हविर्गृह्णामि नित्यशः॥ ३०.२४ ॥

एतत्संदर्शनार्थाय लिंगमूर्तिरभूद्विभुः॥
तल्लिंगमतुलं देवा नमश्चक्रुर्मुदान्विताः॥ ३०.२५ ॥

सर्वपापापहं पार्थ सर्वकामफलप्रदम्॥
तत्र होमावसाने च दत्ते हिमवता शुभे॥ ३०.२६ ॥

दिव्यरत्नान्विते स्कन्दो निषण्णः परमासने॥
सर्वमंगलसंभारैर्विधिमंत्रपुरस्कृतम्॥ ३०.२७ ॥

अभ्यषिंचंस्ततो देवाः कुमारं शंकरात्मजम्॥
इंद्रो विष्णुर्महावीर्यो ब्रह्मरुद्रौ च फाल्गुन॥ ३०.२८ ॥

आदित्याद्य ग्रहाः सर्वे तथोभावनिलानलौ॥
आदित्या वसवो रुद्राः साध्याश्चैवाश्विनावुभौ॥ ३०.२९ ॥

विश्वेदेवाश्च मरुतो गंधर्वाप्सरसस्तथा॥
देवब्रह्मर्षयश्चैव वालखिल्या मरीचिपाः॥ ३०.३० ॥

विद्याधरा योगसिद्धाः पुलस्त्यपुलहादयः॥
पितरः कश्यपोऽत्रिश्च मरीचिर्भृगुरंगिराः॥ ३०.३१ ॥

दक्षोऽथ मनवो ये च ज्योतींषि ॠतवस्तथा॥
मूर्तिमत्यश्च सरितो महीप्रभृतिकास्तथा॥ ३०.३२ ॥

लवणाद्याः समुद्राश्च प्रभासाद्याश्च तीर्थकाः॥
पृथिवी द्यौर्दिशश्चैव पादपाः पार्वतास्तथा॥ ३०.३३ ॥

आदित्याद्या मातरश्च कुर्वत्यो गुहमंगलम्॥
वासुकिप्रमुखा नागास्थथोभौ गरुडारुणौ॥ ३०.३४ ॥

वरुणो धनदश्चैव यमः सानुचरस्तथा॥
राक्षसो निर्ॠतिश्चैव भूतानि च पलाशनाः॥ ३०.३५ ॥

धर्मो बृहस्पतिश्चैव कपिलो गाधिनंदनः॥
बहुलत्वाच्च ये नोक्ता विविधा देवतागणाः॥ ३०.३६ ॥

ते च सर्वे महीकूले ह्यभ्यषिंचन्मुदा गुहम्॥
ततो महास्वनामुग्रां देवदैत्यादिदर्पहाम्॥ ३०.३७ ॥

ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम्॥
विष्णुर्ददौ वैजयंतीं मालां बलविवर्धिनीम्॥ ३०.३८ ॥

उमा ददौ चारजसी वाससी सूर्यसप्रभा॥
गंगा कमंडलुं दिव्यममृतोद्भवमुत्तमम्॥ ३०.३९ ॥

मही महानदी तस्य चाक्षमालां ससागरा॥
ददौ मुदा कुमाराय दंडं चैव बृहस्पतिः॥ ३०.४० ॥

गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम्॥
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम्॥ ३०.४१ ॥

छागं च वरुणो राजा बलवीर्यसमन्वितम्॥
कृष्णाजिनं तथा ब्रह्मा ब्रह्मण्याय ददौ जयम्॥ ३०.४२ ॥

चतुरोऽनुचरांश्चैव महावीर्यान्बलोत्कटान्॥
नंदिसेनं लोहिताक्षं घण्टाकर्णं च मानसान्॥ ३०.४३ ॥

चतुर्थं चाप्यतिबलं ख्यातं कुसुममालिनम्॥
ततः स्थाणुर्ददौ देवो महापारिषदं क्रतुम्॥ ३०.४४ ॥

स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम्॥
जघान दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्दश॥ ३०.४५ ॥

यमः प्रादादनुचरौ यमकालोपमौ तदा॥
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती॥ ३०.४६ ॥

सुभ्राजौ भास्करस्यैव यौ सदा चानुयायिनौ॥
तौ सूर्यः कार्तिकेयाय ददौ पार्थ मुदान्वितः॥ ३०.४७ ॥

कैलासश्रृङ्गसंकाशौ श्वेतमाल्यानुलेपनौ॥
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च॥ ३०.४८ ॥

ज्वालजिह्वं ज्योतिषं च ददावग्निर्महाबलौ॥
परिघं च बलं चैव भीमं च सुमहाबलम्॥ ३०.४९ ॥

स्कंदाय त्रीननुचरान्ददौ विष्णुरुरुक्रमः॥
उत्क्रोशं पंचजं चैव वज्रदण्डधरावुभौ॥ ३०.५० ॥

ददौ महेशपुत्राय वासवः परवीरहा॥
तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून्॥ ३०.५१ ॥

वर्धनं बंधनं चैव आयुर्वेदविशारदौ॥
स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ॥ ३०.५२ ॥

बलं चातिबलं चैव महावक्त्रौ महाबलौ॥
प्रददौ कार्तिकेयाय वायुश्चानुचरावुभौ॥ ३०.५३ ॥

घसं चातिघसं वीरौ वरुणश्च ददौ प्रभुः॥
सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम्॥ ३०.५४ ॥

हिमवान्प्रददौ पार्थ साक्षाद्दौहित्रकाय वै॥
कांचनं च ददौ मेरुर्मेघमालिनमेव च॥ ३०.५५ ॥

उच्छ्रितं चातिशृंगं च महापाषाणयोधिनौ॥
स्वाहेयाय ददौ प्रीतः स विंध्यः पार्षदौ शुभौ॥ ३०.५६ ॥

संग्रहं विग्रहं चैव समुद्रोऽपि गधाधरौ॥
प्रददौ पार्षदौ विरौ महीनद्या समन्वितः॥ ३०.५७ ॥

उन्मादं पुष्पदंतं च शंकुकर्णं तथैव च॥
प्रददावग्निपुत्राय पार्वती शुभदर्शना॥ ३०.५८ ॥

जयं महाजयं चैव नागौ ज्वलनसूनवे॥
प्रददुर्बलिनां श्रेष्ठौ सुपर्णः पार्षदावुभौ॥ ३०.५९ ॥

एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा॥
सर्वे जगति ये मुख्या ददुः स्कंदाय पार्षदान्॥ ३०.६० ॥

नानावीर्यान्महावीर्यान्नानायुधविभूषणान्॥
बहुलत्वान्न शक्यंते संख्यातुं ते च फाल्गुन॥ ३०.६१ ॥

मातश्च ददुस्तस्मै तदा मातृगणान्प्रभो॥
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्चराचराः॥ ३०.६२ ॥

प्रभावती विशालाक्षी गोपाला गोनसा तथा॥
अप्सुजाता बृहद्दंडी कालिका बहुपुत्रका॥ ३०.६३ ॥

भयंकरी च चक्रांगी तीर्थनेमिश्च माधवी॥
गीतप्रिया अलाताक्षी चटुला शलभामुखी॥ ३०.६४ ॥

विद्युज्जिह्वा रुद्रकाली शतोलूखलमेखला॥
शतघंटाकिंकिणिका चक्राक्षी चत्वरालया॥ ३०.६५ ॥

पूतना रोदना त्वामा कोटरा मेघवाहिनी॥
ऊर्ध्ववेणीधरा चैव जरायुर्जर्जरानना॥ ३०.६६ ॥

खटखेटी दहदहा तथा धमधमा जया॥
बहुवेणी बहुशीरा बहुपादा बहुस्तनी॥ ३०.६७ ॥

शतोलूकमुखी कृष्णा कर्णप्रावरणा तथा॥
शून्यालया धान्यवासा पशुदा धान्यदा सदा॥ ३०.६८ ॥

एताश्चान्याश्च बह्व्यश्च मातरो भरतर्षभ॥
बहुलत्वादहं तासां न संख्यातुमिहोत्सहे॥ ३०.६९ ॥

वृक्षचत्वरवासिन्यश्चतुष्पथनिवेशनाः॥
गुहास्मशानवासिन्यः शैलप्रस्रवणालयाः॥ ३०.७० ॥

नानाभरणवेषास्ता नानामूर्तिधरास्तथा॥
नानाभाषायुधधराः परिवव्रुस्तदा गुहम्॥ ३०.७१ ॥

ततः स शुशुभे श्रीमान्गुहो गुह इवापरः॥
सैनापत्ये चाभिषिक्तो देवैर्नानामुनीश्वरैः॥ ३०.७२ ॥

ततः प्रणम्य सर्वांस्ता नेकैकत्वेन पावकिः॥
व्रियतां वर इत्याह भवब्रह्मपुरोगमान्॥ ३०.७३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कार्तिकेयस्य सेनानीत्वेऽभिषेकवर्णनंनाम त्रिंशोऽध्यायः॥ ३० ॥ छ ॥

**॥नारद उवाच॥**

ते चैनं योज्य चाशीर्भिरयाचंत वरं गुहम्॥
एष एव वरोऽस्माकं यत्पापं तारकं जहि॥ ३१.१ ॥

एवमस्त्विति तानुक्त्वा योगोयोग इति ब्रुवन्॥
तारकारिमहातेजा मयूरं चाध्यरोहत॥ ३१.२ ॥

शक्तिहस्तो विनद्याथ गुहो देवांस्तदाब्रवीत्॥
यद्यद्य तारकं पापं नाहं हन्मि सुरोत्तमाः॥ ३१.३ ॥

गोब्राह्मणावमन्तॄणां ततो यामि गतिं स्फुटम्॥
एवं तेन प्रतिज्ञाते शब्दोऽतिसुमहानभूत्॥ ३१.४ ॥

योगोयोग इति प्राहुराज्ञया शरजन्मनः॥
अरजो वाससी रक्ते वसानः पार्वतीसुतः॥ ३१.५ ॥

अथाग्रे सर्वदेवानां स्थितो वीरो ययौ मुदा॥
तस्य केतुरलं भाति चरणायुधशोभितः॥ ३१.६ ॥

चरणाभ्यां चरणाभ्यां गिरीञ्छक्तो यो विदारयितुं रणे॥
या चेष्टा सर्वभूतानां प्रभा शांतिर्बलं यथा॥ ३१.७ ॥

तन्मया गुहशक्तिः सा भृशं हस्ते व्यरोचत॥
यद्दार्ढ्यं सर्वलोकेषु तन्मयं कवचं तथा॥ ३१.८ ॥

योत्स्यमानस्य वीरस्य देहेप्रादुरभूत्स्वयम्॥
धर्मः सत्यमसंमोहस्तेजः कांतत्वमक्षतिः॥ ३१.९ ॥

बलमोजः कृपा चव बद्धा करयुगं तथा॥
आदेशकारीण्यग्रेऽस्य स्वयं तस्थुर्महात्मनः॥ ३१.१० ॥

तमग्रे चापि गच्छंतं पृष्ठतोनुययौ हरः॥
रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः॥ ३१.११ ॥

निर्मितेन हरेणैव स्वयमीशेन लीलया॥
सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे॥ ३१.१२ ॥

अभीषून्पुरुषव्याघ्र ब्रह्मा च जगृहे स्वयम्॥
ते पिबंत इवाकाशं त्रासयंतश्चराचरम्॥ ३१.१३ ॥

सिंहा रथस्य गच्छंतो नदंतश्चारुकेसराः॥
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह॥ ३१.१४ ॥

विद्युता मेडितः सूर्यः सेंद्रचापघनो यथा॥
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह॥ ३१.१५ ॥

आस्थाय रुचिरं याति पुष्पकं नरवाहनः॥
ऐरावणं समास्ताय शक्रश्चापि सुरैः सह॥ ३१.१६ ॥

पृष्ठतोनुययौ यांतं वरदं वृषभध्वजम्॥
तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः॥ ३१.१७ ॥

गच्छंति वसुभिः सार्धं रुद्रैश्च सह संगताः॥
यमश्च मृत्युना सार्धं सर्वतः परिवारितः॥ ३१.१८ ॥

घोरैर्व्याधिशतैश्चापि सव्यतो याति कोपितः॥
यमस्य पृष्ठतश्चापि घोरस्त्रिशिखरः सितः॥ ३१.१९ ॥

विजयोनाम रुद्रस्य याति शूलः स्वयं कृतः॥
तमुग्रपाशो भगवन्वरुणः सलिलेश्वरः॥ ३१.२० ॥

परिवार्य शतैयाति यादोभिर्विविधैर्वृतः॥
पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः॥ ३१.२१ ॥

गदामुशलशक्त्याद्यैर्वरप्रहरणैर्वृतः॥
पट्टिशं चान्वगात्पार्थ अस्त्रं पाशुपतं महत्॥ ३१.२२ ॥

बहुशीर्षं महाघोरमेकपादं बहूदरम्॥
कमंडलुश्चास्य पश्चान्महर्षिगणसेवितः॥ ३१.२३ ॥

तस्य दक्षिणतो भाति दण्डो गच्छञ्छ्रिया वृतः॥
भृग्वंगिरोभिः सहितो देवैरप्य भिपूजितः॥ ३१.२४ ॥

राक्षसाश्चान्यदेवाश्च गन्धर्वा भुजगास्तथा॥
नद्यो नदाः समुद्राश्च मुनयोऽप्सरसां गणाः॥ ३१.२५ ॥

नक्षत्राणि ग्रहाश्चैव जंगमं स्थावरं तथा॥
मातरश्च महादेवमनुजग्मुः क्षुधान्विताः॥ ३१.२६ ॥

सर्वेषां पृष्ठतश्चासीत्ताक्ष्र्यस्थो बुद्धिमान्हरिः॥
पालयन्पृतनां सर्वां स्वपरीवारसंवृतः॥ ३१.२७ ॥

एवं सैन्यसमोपेत उत्तरं तटमागतः॥
ताम्रप्राकारमाश्रित्य तस्थौ त्र्यंबकनंदनः॥ ३१.२८ ॥

स तारकपुरस्यापि पश्यनृद्धि मनुत्तमाम्॥
विसिष्मिये महासेनः प्रशशंस तपोऽस्य च॥ ३१.२९ ॥

स्थितः पश्यन्स शुशुभे मयूरस्थो गुहस्तदा॥
छत्रेण ध्रियमाणेन स्वयं सोमसमस्त्विषा॥ ३१.३० ॥

वीज्यमानश्चामराभ्यां वाय्वग्निभ्यां महाद्युतिः॥
मातृभिश्च सुरैर्दत्तैः स्वैर्गणैरपि संवृतः॥ ३१.३१ ॥

ततः प्रणम्य तं शक्रो देव मध्ये वचोऽब्रवीत्॥
पश्यपश्य महासेन दैत्यानां बलशालिनाम्॥ ३१.३२ ॥

ये त्वां कालं न जानंति मर्त्या गृहरता इव॥
एतेषां च गृहे दूतो यस्त्वां शंसतु तारकम्॥ ३१.३३ ॥

वीराणामुचितं त्वेतत्कीर्तिदं च महाजने॥
अनुज्ञया ततः स्कन्दभक्तं शक्रो धनंजय॥ ३१.३४ ॥

मामादिश्यासुरेन्द्राय प्राहिणोद्दौत्ययोग्यकम्॥
अहं स्वयं गन्तुकामः शक्रेणापि च प्रेषितः॥ ३१.३५ ॥

प्रासादे स्त्रीसहस्राणां प्रावोचं मध्यतोऽप्यहम्॥
असुराधमदुर्बुद्धे शक्रस्त्वामाह तच्छृणु॥ ३१.३६ ॥

यज्जगद्दलनादाप्तं किल्बिषं दानव त्वया॥
तस्याहं नाशकस्तेऽद्य पुरुषश्चेद्भविष्यसि॥ ३१.३७ ॥

शीघ्रं निःसर पापिष्ठ निःसरिष्यसि चेन्न हि॥
क्षणात्तव पुरं क्षेप्स्ये पावित्र्यायैव सागरे॥ ३१.३८ ॥

इति श्रुत्वा रूक्षवाचं क्रुद्धः स्त्रीगणसंवृतः॥
मुष्टिमुद्यम्यमाऽधावद्भीतश्चाहं पलायितः॥ ३१.३९ ॥

व्याकुलस्तत्र वृत्तांतं कुमाराय न्यवेदयम्॥
मयि चाप्यागते दैत्यश्चिंतयामास चेतसि॥ ३१.४० ॥

नालब्ध संश्रयः शक्रो वक्तुमेतदिहार्हति॥
निमित्तानि च घोराणि संत्रासं जनयंति मे॥ ३१.४१ ॥

एवं विचिंत्य चोत्थाय गवाक्षं सोध्यरोहत॥
सहस्रभौमिकावासश्रृङ्गवातायनस्थितः॥ ३१.४२ ॥

अपश्यद्देवसैन्यं स दिवं भूमिं च संवृतम्॥
रतैर्गजैर्हयैश्चापि नादिताश्च दिशो दश॥ ३१.४३ ॥
विमानैश्चाद्भुताकारैः किंनरोद्गीतनादितैः॥
दुन्दुभिभिर्गोविषाणैस्तालैः शंखैश्च नादितैः॥ ३१.४४ ॥

अक्षोभ्यामिव तां सेनां दृष्ट्वा सोऽचिंतयत्तदा॥
एते मया जिताः पूर्वं कस्माद्भूयः समागताः॥ ३१.४५ ॥

इति चिंतापरो दैत्यः शुश्राव कटुकाक्षरम्॥
देवबंदिभिरुद्वुष्टं घोरं हृदयदारणम्॥ ३१.४६ ॥

जयातु लशक्तिदीधितिपिंजररुचारुणमंडलभुजोद्भासितदेवसैन्य पुरवनकुमुदकाननविकासनेंदो कुमारनाथ जय दितिकुलमहोदधिवडवानल मधुररवमयूररवासुरमुकुटकूटकुट्टितचरणनखांकुर महासेन तारकवंशशुष्कतृमदावानल योगीश्वरयॉ योगिजनहृदयगगनविततचिंतासंतानसंतमसनोदनखरकिरणकल्पनखनिकरविराजितचरणकमल स्कन्द जय बाल सप्तवासर भुवनावलिशोकसंदहन॥ ३१.४७ ॥

नमो नमस्तेस्तु मनोरमाय नमोस्तु ते साधुभयापहाय॥
नमोस्तु ते बालकृताचलाय नमोनमो नाशय देवशत्रून्॥ ३१.४८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कुमारस्य तारकासुनरनगरं प्रति गमनवर्णनंनामैकत्रिंशोऽध्यायः॥ ३१ ॥ छ ॥

**॥नारद उवाच॥**

श्रुत्वैतं संस्तवं दैत्यः संघुष्टं देवबंदिभिः॥
सस्मार ब्रह्मणो वाक्यं वधं बालादुपस्थितम्॥ ३२.१ ॥

श्रुत्वा स क्लिन्नसर्वांगो द्वाःस्थं राजा वचोऽब्रवीत्॥
अमात्यान्द्रष्टुमिच्छामि शीघ्रमानय मा चिरम्॥ ३२.२ ॥

ततस्ते राजवचनात्कालनेमि मुखागताः॥
प्राह तांस्तारको दैत्यः किमिदं वो विचेष्टितम्॥ ३२.३ ॥

यैः शत्रुसंभवा वार्ता कापि न श्रीवितस्त्वहम्॥
मदिराकाममत्तानां मंत्रित्वं वो न युज्यते॥
हितं मन्त्रयते राज्ञस्तेन मंत्री निगद्यते॥ ३२.४ ॥

**॥अमात्या ऊचुः॥**

को जानाति सुरान्दीनान्दैत्यानामिति नो मतिः॥ ३२.५ ॥

मा विषीद महाराज वयं जेष्यामहे सुरान्॥
बालादपि भयं किं वा लज्जायै चिंतितं त्विदम्॥ ३२.६ ॥

सर्वमेतत्सुसाध्यं च भेरी संताड्यतां दृढम्॥
ततो दैत्येन्द्रवचनात्संनाहजननी तदा॥ ३२.७ ॥

भृशं संताडिता भेरी कंपयामास सा जगत्॥
स्मरणाद्दैत्यराजस्य पर्वतेभ्यो महासुराः॥ ३२.८ ॥

निम्नगाभ्यः समुद्रेभ्यः पातालेभ्योंऽबरादपि॥
सहसा समनुप्राप्ता युगांतानलसप्रभाः॥ ३२.९ ॥

कोटिकोटिसहस्रैस्तु परार्धैर्दशभिः शतैः॥
सेनापतिः कालनेमिः शीघ्रं देवानुपाययौ॥ ३२.१० ॥

चतुर्योजनविस्तीर्णे नानाश्चर्यसमन्विते॥
रथे स्थितो मनाग्दीनस्तारकः समदृश्यत॥ ३२.११ ॥

एतस्मिन्नंतरे पार्थ क्रुद्धैः स्कन्दस्य पार्षदैः॥
प्राकारः पातितः सर्वो भग्नान्युपवनानि च॥ ३२.१२ ॥

ततश्चचाल वसुधा देवी सवनकानना॥
जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम्॥ ३२.१३ ॥

तमोभूतं जगच्चसीद्गृध्रैर्व्याप्तं नभोऽभवत्॥

ततो नानाप्रहरणं प्रलयांबुदसन्निभम्॥ ३२.१४ ॥

कालनेमिमुखं पार्थ अदृश्यत महद्बलम्॥
तद्धि घोरमसंख्येयं जगर्ज विविधा गिरः॥ ३२.१५ ॥

अभ्यद्रवद्रणे देवान्भगवंतं च शंकरम्॥
विनदद्भिस्ततो दैत्यैन्देवानीकं महायुधैः॥ ३२.१६ ॥

पर्वतैश्च शतघ्नीभिरायसैः परिधैरपि॥
क्षणेन द्रावितं सर्वं विमुखं चाप्यदृश्यत॥ ३२.१७ ॥

असुरैर्वध्यमाने तु पावकैरिव काननम्॥
अपतद्दावभूमिष्ठ महाद्रुमवनं यथा॥ ३२.१८ ॥

ते भिन्नास्थिशि रोदेहाः प्राद्रवंत दिवौकसः॥
न नाथमध्यगच्छंत वध्यमाना महासुरैः॥ ३२.१९ ॥

अथ तद्विद्रुतं सैन्यं दृष्ट्वाः पुरंदरः॥
आश्वासयन्नुवाचेदं बलवद्दानवार्दितम्॥ ३२.२० ॥

भयं त्यजत भद्रं वः शुराः शस्त्राणि गृह्णत॥
कुरुध्वं विक्रमे बुद्धि मा च काचिद्व्यथास्तु वः॥ ३२.३१ ॥

एष कालानलप्रख्यो मयूरं समुपस्थितः॥
रक्षिता वो महासेनः कथं भीतिस्तथापि वः॥ ३२.२२ ॥

शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवोकसः॥
दानवान्प्रत्ययुध्यंत शक्रं कृत्वा व्यपाश्रयम्॥ ३२.२३ ॥

कालनेमिर्महेन्द्रेण संयुगे समयुज्यत॥
सहस्राक्षौहिणीयुक्तो जंभकः शंकरेण च॥ ३२.२४ ॥

कुजंभो विष्णुना चैव तावत्य क्षौहिणीवृतः॥
अन्ये च त्रिदशाः सव मरुतश्च महाबलाः॥ ३२.२५ ॥

प्रत्ययुध्यंतं दैत्यैंद्रेः साध्याश्च वसुभिः सह॥
ततो बहुविधं युद्धं कालनेमिर्विधायच॥ ३२.२६ ॥

उत्सृज्य सहसा पार्थ ऐरावणशिरःस्थितः॥
स तु पादप्रहारेण मुष्टिना चैव तं गजम्॥ ३२.२७ ॥

शक्रं च चघ्ने विनदन्पेततुस्तावुभौ भुवि॥

ततः शक्रं समादाय कालनेमिर्विचेतसम्॥ ३२.२८ ॥

रथमाश्रित्य भूयोपि तारकाभिमुखो ययौ॥
अथ क्रुद्धं तदा देवैः सहसा चांतकादिभिः॥ ३२.२९ ॥

ह्रियते ह्रियते राजा त्राता कोऽपि न विद्यते॥
एतस्मिन्नंतरे शर्वं पिनाकधनुषश्च्युतैः॥ ३२.३० ॥

बाणैः ससैन्यं कृत्वा च जंभकं गृध्रमोदनम्॥
कालनेमिं समागम्य रथस्थो वाक्यमब्रवीत्॥ ३२.३१ ॥

किमेतेन महेन्द्रेण मया युध्यस्व दानव॥
वीरंमन्य सुदुर्बुद्धे ततो ज्ञास्यसि वीरताम्॥ ३२.३२ ॥

**॥कानेमिरुवाच॥**
नग्नेन सह को युध्येद्धतेनापि च येन वा॥
शंसत्सु दैत्यवीराणामुपहासः प्रजायते॥ ३२.३३ ॥

आत्मनस्तु समं किंचिद्विलोक्य सुदुर्मते॥
तदाकर्ण्य च सावज्ञं वचः शर्वो विसिष्मिये॥ ३२.३४ ॥

ततः कुमारः सहसा मयूरस्थोऽभ्यधावत॥
कुजंभं सानुगं हत्वा वासुदेवोप्यधावत॥ ३२.३५ ॥

ततो हरिः स्कंदमाह किमेतेन तव प्रभो॥
दैत्याधमेन पापेन मुहूर्तं पश्य मे बलम्॥ ३२.३६ ॥

एवमुक्त्वा निवार्यैनं केशवो गरुडस्थितः॥
शार्ङ्गकोदंडनिर्मुक्तैर्बाणैर्दैत्यमवाकिरत्॥ ३२.३७ ॥

स तैर्बाणैस्ताड्यमानो वज्रैरिव महासुरः॥
विमुच्य वासवं क्रुद्धो बाणांस्तान्व्यधमच्छरैः॥ ३२.३८ ॥

यान्यान्बाणान्हरिर्दिव्यानस्त्राणि च मुमोच ह॥
निवारयति दैत्यस्तान्प्रहसँल्लीलयैव च॥ ३२.३९ ॥

ततः कौमोदकीं गृह्य क्षिप्रकारी जनार्दनः॥
मुमोच सैन्यनाथाय सारथिं च व्यचूर्णयत्॥ ३२.४० ॥

ततो रथादवप्लुत्य विवृत्य वदनं महत्॥
गरुडं चंचुनादाय स विष्णुं क्षिप्तवान्मुखे॥ ३२.४१ ॥

ततोऽभूत्सर्वदेवानां विमोहो जगतामपि॥
चचाल वसुधा चेलुः पर्वताः सप्त चार्णवाः॥ ३२.४२ ॥

कालनेमिर्नश्चैव प्रानृत्यत महारणे॥
असंमूढस्ततो विष्णुस्त्वराकाल उपस्थिते॥ ३२.४३ ॥

कुक्षिं विदार्य चक्रेण भास्करोऽभादिवोदितः॥
बहिर्भूतो हरिश्चैनं महोयित्वा स्वनिन्दया॥ ३२.४४ ॥

पातालस्य तलं निन्ये तत्र शिश्ये स काष्ठवत्॥
ततश्चक्रेण दैत्यानां निहता दशकोट्यः॥ ३२.४५ ॥

प्रमोदितास्तथा देवा विमोहास्तत्क्षणाद्बभुः॥
ततःशर्वस्तमालिंग्य साधुसाधु जनार्दन॥ ३२.४६ ॥

त्वया यद्विहितं कर्म तत्कर्तान्यो न विद्यते॥
महिषाद्याः सुदुर्जेया देव्या ये विनिपतिताः॥ ३२.४७ ॥

तेषामतिबलो ह्येष त्वया विष्णो विनिर्जितः॥
तारकामयसंग्रामे वध्यस्तेसौ जनार्दन॥ ३२.४८ ॥

कंसरूपः पुनस्तेऽयं हंतव्योऽष्टमजन्मनि॥
एवं प्रशंसमानास्ते वासुदेवं जगद्गुरुम्॥ ३२.४९ ॥

शस्त्रजालैर्लब्धसंज्ञान्दैत्यसैन्याननाशयत्॥
तानि दैत्यशरीराणि जर्जराणि महायुधैः॥ ३२.५० ॥

अपतन्भूतले पार्थ च्छिन्नाभ्राणीव सर्वशः॥
ततस्तद्दानवं सैन्यं हतनाथमभूत्तदा॥ ३२.५१ ॥

देवैः स्कंदानुगैश्चैव कृतं शस्त्रैः पराङ्मुखम्॥
अथो क्रुष्टं तदा हृष्टैः सर्वैर्देवैर्मुदायुतैः॥ ३२.५२ ॥

संहतानि च सर्वाणि तदा तूर्याण्यवादयन्॥
अथ भग्नं बलं प्रेक्ष्य हतवीरं महारणे॥ ३२.५३ ॥

देवानां च महामोदं तारकः प्राह सारथिम्॥
सारथे पश्य सैन्यानि द्राव्यमाणानि मे सुरैः॥ ३२.५४ ॥

येस्माभिस्तृणवद्दृष्टाः पश्य कालस्य चित्रताम्॥
तन्मे वाहय शीघ्रं त्वं रथमेनं सुरान्प्रति॥ ३२.५५ ॥

पश्यंतु मे बलं बाह्वोर्द्रवंतु च सुराधमाः॥
ब्रुवन्नेवं सारथिं स विधुन्वन्सुमहद्धनुः॥ ३२.५६ ॥

क्रोध रक्तेक्षणो राजा देवसैन्यं समाविशत्॥
आगच्छमानं तं दृष्ट्वा हरिः स्कंदमथाब्रवीत्॥ ३२.५७ ॥

कुमार पश्य दैत्येंद्रं कालं यद्वद्युगात्यये॥
अयं स येन तपसा घोरेणाराधितः शिवः॥ ३२.५८ ॥

अयं स येन शक्राद्याः कृता मर्काः समार्बुदम्॥
अयं स सर्वशस्त्रैर्गैर्योऽस्माभिर्न जितो रणे॥ ३२.५९ ॥

नावज्ञया प्रद्रष्टव्यस्तारकोऽयं महासुरः॥
सप्तमं हि दिनं तेऽद्य मध्याह्नोऽयं च वर्तते॥ ३२.६० ॥

अर्वागस्तमनादेनं जहि वध्योऽन्यथा नहि॥
एवमुक्त्वा स शक्रादींस्त्वरितः केशवोऽब्रवीत्॥ ३२.६१ ॥

आयासयत दैत्येंद्रं सुखवध्यो यथा भवेत्॥
ततस्ते विष्णुवचनाद्विनदन्तो दिवौकसः॥ ३२.६२ ॥

तमासाद्य शरव्रातैर्मुदिताः समवाकिरन्॥
प्रहसन्निव देवांस्तान्द्रावयामास तारकः॥ ३२.६३ ॥

यथा नास्तिकदुर्वृत्तो नानाशास्त्रोपदेशकान्॥
सोढुं शक्ता न ते वीरं महति स्यंदने स्थितम्॥ ३२.६४ ॥

महापस्मारसंक्रांतं यथैवाप्रियवादिनम्॥
विधूय सकलान्देवान्क्षणमात्रेण तारकः॥ ३२.६५ ॥

आजगाम कुमाराय विधुवन्स महाधनुः॥
आगच्छमानं तं दृष्ट्वा स्कंदः प्रत्युद्ययौ ततः॥ ३२.६६ ॥

तस्यारक्षद्भवः पार्श्वं दक्षिणं चैव तं हरिः॥
पृष्ठे च पार्षदास्तस्य कोटिशोऽर्बदशस्तथा॥ ३२.६७ ॥

ततस्तौ सुमहायुद्धे संसक्तौ देवदैत्ययौः॥
धर्माधर्माविवोदग्रौ जगदाश्चर्यकारकौ॥ ३२.६८ ॥

ततः कुमारमासाद्य लीलया तारकोऽब्रवीत्॥
अहो बालातिबालस्त्वं यत्त्वं गीर्वाणवाक्यतः॥ ३२.६९ ॥

आसादयसि मां युद्धे पतंग इव पावकम्॥
वधेन तव को लाभो मम मुक्तोऽसि बालक॥ ३२.७० ॥

पिष क्षीरं गृहाणेमं कंदुकं क्रीड लीलया॥
एवमुक्तः प्रहस्याह तारकं योगिनां गुरुः॥ ३२.७१ ॥

शिशुत्वं मावमंस्था मे शिशुः कष्टो भुजंगमः॥
दुष्प्रेक्ष्यो भास्करो बालो दुःस्पर्शोऽल्पोऽपि पावकः॥ ३२.७२ ॥

अल्पाक्षरो न मंत्रः किं सस्फुरो दैत्य दृश्यते॥
एवमुक्त्वा दैत्यमुक्तं गृहीत्वा कंदुकं च तम्॥ ३२.७३ ॥

तस्मिञ्छक्त्यस्त्रमादाय दैत्याय प्रमुमोच ह॥
तस्य तेन प्रहारेम रथश्चूर्णिकृतोऽभवत्॥ ३२.७४ ॥

चतुर्योजनमात्रो यो नानाश्चर्यसमन्वितः॥
गरुडस्य सुता ये च शीर्यमाणे रथोत्तमे॥ ३२.७५ ॥

मुक्ताः कथंचिदुत्पत्य सागरांतरमाविशन्॥
ततः क्रुद्धस्तारकश्च मुद्गरं क्षिप्तवान्गुहे॥ ३२.७६ ॥

विंध्याद्रिमिव तं स्कंदो गृहीत्वा तं व्यताडयत्॥
स्थिरे तस्योरसि व्यूढे मुद्गरः शतधाऽगमत्॥ ३२.७७ ॥

मेने च दुर्जयं दैत्यस्तदा षड्वदनं रणे॥
चिंतयामास बुद्ध्या च प्राप्तं तद्ब्रह्मणो वचः॥ ३२.७८ ॥

तं भीतमिव चालक्ष्य दैत्यवीराश्च कोटिशः॥
नदंतोऽतिमहासेनं नानाशस्त्रैरवाकिरन्॥ ३२.७९ ॥

क्रुद्धस्तेषु ततः स्कंदः शक्तिं घोरामथाददे॥
अभ्यस्यमाने शक्त्यस्त्रे स्कंदनामिततेजसा॥ ३२.८० ॥

उल्काजालं महाघोरं पपात वसुधातले॥
चाल्यमाना तथा शक्तिः सुघोरा भवसूनुना॥ ३२.८१ ॥

ततः कोट्यो विनिष्पेतुः शक्तीनां भर्तर्षभ॥
स शक्त्यस्त्रेण बलवान्करस्थेनाहनत्प्रभुः॥ ३२.८२ ॥

अष्टौ पद्मानि दैत्वानां दशकोटिशतानि च॥
तथा नियुतसाहस्रं वाहनं कोटिरेव च॥ ३२.८३ ॥

ह्रंदोदरं च दैत्येंद्रं निखर्वैर्दशभिर्वृतम्॥
तत्राकुर्वन्सुतुमुलं नादं वध्येषु शत्रुषु॥ ३२.८४ ॥

कुमारानुचराः पार्थ पूरयंतो दिशो दश॥
शक्त्यस्त्रस्यार्चिः संभूतशक्तिभिः केऽपि सूदिताः॥ ३२.८५ ॥

पताकयावधूताश्च हताः केचित्सहस्रशः॥
केचिद्घंटारवत्रस्ताश्छिन्नभिन्नहृदोऽपतन्॥ ३२.८६ ॥

केचिन्मयूरपक्षाभ्यां चरणाभ्यां च सूदिताः॥
कोटिशस्ताम्रचूडेन विदार्यैव च भक्षिताः॥ ३२.८७ ॥

पार्षदैर्मातृभिः सार्धं पद्मशो निहताः परे॥
एवं निहन्यमानेषु दानवेषु गुहादिभिः॥ ३२.८८ ॥

अभाग्यैरिव लोकेषु तारकः स्कंदमाययौ॥
जग्राह च गदां दिव्यां लक्षघंटादुरासदाम्॥ ३२.८९ ॥

तया मयूरमाजघ्ने मयूरो विमुखोऽभवत्॥
दृष्ट्वा पराङ्मुखं लोकेषु वासुदेवोऽब्रवीत्त्वरन्॥ ३२.९० ॥

देवसेनापते शीघ्रं शक्तिं मुंच महासुरे॥
प्रतिज्ञामात्मनः पाहि लंबते रविमंडलम्॥ ३२.९१ ॥

**॥स्कंद उवाच॥**
त्वयैव रुद्रभक्तोऽयं जनार्दन ममेरितम्॥
वधार्थं रुद्रभक्तस्य बाहुः शक्तिं मुंचति॥ ३२.९२ ॥

नारुद्रः पूजयेद्रुद्रं भक्तरूपस्य यो हरः॥
रुद्ररूपममुं हत्वा कीदृशं जन्मनो भवेत्॥ ३२.९३ ॥

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ताः प्रपीडिताः॥
रुद्रभक्ताः कुलं सर्वं निर्दहंति हताः किमु॥ ३२.९४ ॥

एष चेद्धंति तद्भद्रं हन्यतामेष मां रणे॥
रुद्रभक्ते पुनर्विष्णो नाहं शस्त्रमुपाददे॥ ३२.९५ ॥

**॥श्रीभगवानुवाच॥**
नैतत्तवोचितं स्कंद रुद्रभक्तो यथा श्रृणु॥
द्वे तनू गिरिजाभर्तुर्वेदज्ञा मुनयो विदुः॥ ३२.९६ ॥

एका जीवात्मिका तत्र प्रत्यक्षा च तथापरा॥

द्रोग्धा भूतेषु भक्तश्च रुद्रभक्तो न स स्मृतः॥ ३२.९७ ॥

भक्तो रुद्रो कृपावांश्च जंतुष्वेव हरव्रतः॥
तदेनं भूतमर्त्येषु द्रोग्धारं त्वं पिनाकिनः॥ ३२.९८ ॥

जहि नैवात्र पश्यामि दोषं कंचन ते प्रभो॥
श्रुत्वेति वाचं गोविंदात्सत्यार्थामपि भारत॥ ३२.९९ ॥

हंतुं न कुरुते बुद्धिं रुद्रभक्त इति स्मरन्॥
तारकस्तु ततः क्रुद्धो ययौ वेगेन केशवम्॥ ३२.१०० ॥

प्राह चैवं सुदुर्बुद्धे हन्मि त्वां पश्य मे बलम्॥
देवानां चापि धर्माणां मूलं मतिमतां तथा॥
हत्वा त्वामद्य सर्वास्तांश्छेत्स्ये पश्याद्य मे बलम्॥ ३२.१०१ ॥

**॥विष्णुरुवाच॥**
दैत्येंद्र तव चास्माभिः किमहो श्रृणु सत्यताम्॥ ३२.१०२ ॥

रथे य एष शर्वोऽयं हतेऽस्मिन्सकलं हतम्॥
श्रुत्वेति तारकः क्रुद्धस्तूर्णं रुद्ररथं ययौ॥ ३२.१०३ ॥

अभिसृत्य स जग्राह रुद्रस्य रथकूबरम्॥
यदा स कूबरं क्रुद्धस्तारकः सहसाऽग्रहीत्॥ ३२.१०४ ॥

रेसतू रोदसी तूर्णं मुमुहुश्च महर्षयः॥
व्यनदंश्च महाकाया दैत्या जलधरोपमाः॥ ३२.१०५ ॥

आसीच्च निश्चितं तेषां जितमस्माभिरित्युत॥
तार कस्याप्यभिप्रायं भगवान्वीक्ष्य शंकरः॥ ३२.१०६ ॥

उमया सह संत्यक्त्वा रथं वृषभमावहत्॥
ओमित्यथ जपन्ब्रह्मा आकाशं सहसाश्रितः॥ ३२.१०७ ॥

ततस्तं शतसिंहं च रथं रुद्रेण निर्मितम्॥
उत्क्षिप्य पृथ्व्यामास्फोट्य चूर्णयामास तारकः॥ ३२.१०८ ॥

शूलपाशुपतादीनि सहसोपस्थितानि च॥
वारयामास गिरिशो भवः साध्य इति ब्रुवन्॥ ३२.१०९ ॥

ततः स्ववंचितं ज्ञात्वा रुद्रेणात्मानमीर्ष्यया॥
विनदन्सहसाऽधावद्वृषभस्थं महेश्वरम्॥ ३२.११० ॥

ततो जनार्दनोऽधावच्चक्रमुद्यम्य वेगतः॥
वज्रमिंद्रस्तथोद्यम्य दंडं चापि यमो नदन्॥ ३२.१११ ॥

गदां धनेश्वरः क्रुद्धः पाशं च वरुणो नदन्
वायुर्महांकुशं घोरं शक्तिं वह्निर्महाप्रभाम्॥ ३२.११२ ॥

निर्ऋतिर्निशितं खड्गं रुद्राः शूलानि कोपिताः॥
धनूंषि साध्या देवाश्च परिघान्वसवस्तथा॥ ३२.११३ ॥

विश्वेदेवाश्च मुसलं चंद्रार्कौ स्वप्रभामपि॥
ओषधीश्चाश्विनौ देवौ नागाश्च ज्वलितं विषम्॥ ३२.११४ ॥

हिमाद्रि प्रमुखाश्चापि समुद्यम्य महीधरान्॥
भृशमुन्नदतो देवान्धावतो वीक्ष्य तारकः॥ ३२.११५ ॥

निवृत्तः सहसा पार्थ महागज इवोन्नदन्॥
स वज्रमुष्टि नाहत्य भुजे शक्रमपातयत्॥ ३२.११६ ॥

दंडं यमादुपादाय मूर्ध्न्याहत्य न्यपातयत्॥
उरसाहत्य सगदं धनदं भुव्यपातयत्॥ ३२.११७ ॥

वरुणात्पाशमादाय तेन बद्धा न्यपातयत्॥
महांकुशेन वायुं च चिरं मूर्ध्नि जघान सः॥ ३२.११८ ॥

फूल्कारैरुद्धतं वह्निं शमयामास तारकः॥
निर्ऋतिंखड्गमादाय हत्वा तेन न्यपातयत्॥ ३२.११९ ॥

शूलैरेव तथा रुद्राः साध्याश्च धनुषार्दिताः॥
परिघैरेव वसवो मुशलैरेव विश्वकाः॥ ३२.१२० ॥

रेणुनाच्छाद्य चंद्रार्कौ वल्मीकस्थाविवेक्षितौ॥
महोग्राश्चौषधीस्तालैरश्विभ्यां सोऽभ्यवर्तयत्॥ ३२.१२१ ॥

सविषाश्च कृता नागा निर्विषाः पादकुट्टनैः॥
पर्वताः पर्वतैरेव निरुच्छवासा भृशं कृताः॥ ३२.१२२ ॥

एवं तद्देवसैन्यं च हाहाभूतमचेतनम्॥
कृत्वा मुहूर्तादाधावच्चक्रपाणिं तमुन्नदन्॥ ३२.१२३ ॥

ततश्चांतर्दधे सद्यः प्रहसन्निव केशवः॥
कुयोगिन इव स्वामी सदा बुद्धिमतां वरः॥ ३२.१२४ ॥

अपश्यंस्तारको विष्णुं पुनर्वृषभवा हनम्॥
आधावत्कुपितो दैत्यो मुष्टिमुद्यम्य वेगतः॥ ३२.१२५ ॥

अचिरांशुरिवालक्ष्यो लक्ष्योथ भगवान्हरिः॥
आबभाषे ततो देवान्बाहुमुद्यम्यचोच्चकैः॥ ३२.१२६ ॥

पलायध्वमहो देवाः शक्तिश्चेद्वः पलायितुम्॥
विमूढा हि वयं सर्वे ये बालवचसागताः॥ ३२.१२७ ॥

किं न श्रुतः पुरा गीतः श्लोकः स्वायंभुवेन यः॥
यथा बालेषु निक्षिप्ताः स्त्रीषु षंडितकेषु च॥
अपस्मारीषु चैवापि सर्वे ते संशयं गताः॥ ३२.१२८ ॥

प्रत्यक्षं तदिदं सर्वमाधुना चात्र दृस्यते॥ ३२.१२९ ॥

अज्ञासिष्म पुरैवैतद्रुद्रभक्तं न हंत्यसौ॥
यत्प्रतिज्ञां नाकरिष्यन्न स्यान्नः कदनं महत्॥ ३२.१३० ॥

अथैष यदि दैत्यैंद्रं न निहंति कुबुद्धिमान्॥
मा भयं वो महाभागा निहनिष्यामि वो रिपून्॥ ३२.१३१ ॥

अद्य मे विपुलं बाह्वोर्बलं पश्यत दैत्याधमं नाशयामि मुष्टिनैकेन पश्यत ३२.१३२ ॥

मया हि दक्षिणो बाहुर्दत्तश्च भवतां सदा॥
रिपून्वा निहनिष्यामि सत्यं तत्परिपालये॥ ३२.१३३ ॥

येंऽबरे ये च पाताले भुवि ये च महासुराः॥
क्षणात्तान्नासयिष्यामि महावातो घनानिव॥ ३२.१३४ ॥

एवमुक्ता जगन्नाथो मुष्टिमुद्यम्य दक्षिणम्॥
निरायुधस्ताक्ष्र्यपृष्ठादवप्लुत्याभ्यधावत॥ ३२.१३५ ॥

तस्मिन्धावति गोविंदे चचाल भुवनत्रयम्॥
विमूर्छितमभूद्विश्वं देवा भीतिं परां ययुः॥ ३२.१३६ ॥

धावतश्चापि कल्पांतं रुद्रकल्पस्य तस्य याः॥
मुखात्समुद्यजुर्ज्वालास्ताबिः खर्वशतं हतम्॥ ३२.१३७ ॥

ततोंऽतरिक्षे वाचश्च प्रोचुः सिद्धाः स्वयं तदा॥
जहि कोपं वासुदेव त्वयि क्रुद्धे क्व वै जगत्॥ ३२.१३८ ॥

अनादृत्येव तद्वाक्यं ब्रुवन्नान्यत्करोम्यहम्॥

आह्वयंश्च महादैत्यं क्रुद्धो हरिरधावत॥ ३२.१३९ ॥

उवाच वाचं साधूंश्च यत्नात्पालयतां फलम्॥
दुष्टान्विनिघ्नतां चैव तत्फलं मम जायताम्॥ ३२.१४० ॥

अथापश्यन्महासेनो रुद्रं यांतं च तारकम्॥
तारकं चान्वधावन्तं पुरामपुरुषं हरिम्॥ ३२.१४१ ॥

जगच्च क्षुब्धमत्यर्थं स्वां प्रतिज्ञां पुरा कृताम्॥
पश्चिमां प्रतिलंबंतं भास्करं चापि लोहितम्॥ ३२.१४२ ॥

आकाशवाणीं श्रृण्वंश्च किं स्कन्द त्वं विषीदसी॥
पश्चात्तापो यदि भवेत्कृत्वा ब्रह्मवधं त्वयि॥ ३२.१४३ ॥

स्थापयेर्लिंगमीशस्य मोक्षो हत्याशतैरपि॥
आविवेश महाक्रोधं दिधक्षुरिव मेदिनीम्॥ ३२.१४४ ॥

अथोत्प्लुत्य मयूरात्स प्रहसन्निव केशवम्॥
बाहुभ्यामप्युपादाय प्रोवाच भवनंदनः॥ ३२.१४५ ॥

जानामि त्वामहं विष्णो महाबुद्धिपराक्रमम्॥
भूतभव्यविष्यांश्च दैत्यान्हंस्यपि हूंकृतैः॥ ३२.१४६ ॥

त्वमेव हंता दैत्यानां देवानां परिपालकः॥
धर्मसंस्थापकश्च त्वमेव ते रचितोंऽजलिः॥ ३२.१४७ ॥

क्षणार्धं पश्य मे वीर्यं भास्करो लोहितायते॥
एवं प्रणम्य स्कन्देन वासुदेवः प्रसादितः॥ ३२.१४८ ॥

विरोषोऽभूत्तमालिंग्य वचनं केशवोऽब्रवीत्॥
सनाथस्त्वदद्य धर्मोऽयं सुराश्चैव त्वया गुह॥ ३२.१४९ ॥

स्मरात्मानं यदर्थं त्वमुत्पन्नोऽसि महेश्वरात्॥
साधूनां पालनार्थाय दुष्टसंहरणाय च॥
सुरविप्रकृते जन्म जीवितं च महात्मनाम्॥ ३२.१५० ॥

रुद्रस्य देव्या गंगायाः कृत्तिकानां च तेजसा॥
स्वाहावहनेश्च जातस्त्वं तत्तेजः सफलीकुरु॥
साधूनां च कृते यस्य धनं वीर्यं च संपदः॥ ३२.१५१ ॥

सफलं तस्य तत्सर्वं नान्यथा रुद्रनंदन॥ ३२.१५२ ॥

अद्य धर्मश्च देवाश्च गावः साध्याश्च ब्राह्मणाः॥
नंदंतु तव वीर्येण प्रदर्शय निजं बलम्॥ ३२.१५३ ॥

**॥स्कन्द उवाच॥**
या गतिः शिवत्यागेन त्वत्त्यागेन च केशव॥
तां गतिं प्राप्नुयां क्षिप्रं हन्मि चेन्न हि तारकम्॥ ३२.१५४ ॥

या गतिः श्रुतित्यागेन साध्वी भार्यातिपीडनात्॥
साधूनां च परित्यागाद्वृथा जीवितसाधनात्॥
निष्ठुरस्य गतिर्या च तां गतिं यामि केशव॥ ३२.१५५ ॥

इत्युक्ते सुमहान्नादः संप्रजज्ञे दिवौकसाम्॥
प्रशशंसुर्गुहं केचित्केचिन्नारायणं प्रभुम्॥ ३२.१५६ ॥

ततस्तार्क्षअयं समारुद्य हरिस्तस्मिन्महारणे॥
ताम्रचूडं महासेन स्तारकं चाप्यधावताम्॥ ३२.१५७ ॥

लोहितांबरसंवीतो लोहितस्रग्विभूषणः॥
लोहिताक्षो महाबाहुर्हिरण्यकवचः प्रभुः॥ ३२.१५८ ॥

भुजेन तोलयञ्छक्तिं सर्वभूतानि कम्पयन्॥
प्राप्य तं तारकं प्राह महासेनो हसन्निव॥ ३२.१५९ ॥

तिष्ठतिष्ठ सुदुर्बुद्धे जीवितं ते मयि स्थितम्॥
सुहृष्टः क्रियतां लोको दुर्लभः सर्वसिद्धिदः॥ ३२.१६० ॥

यत्ते सुनिष्ठुरत्वं च धर्मे देवेषु गोषु च॥
तस्य ते प्रहराम्यद्य स्मर शस्त्रं सुशिक्षितम्॥ ३२.१६१ ॥

एवमुक्ते गुहेनाथ निवृत्तस्यास्य भारत॥
तारकस्य शिरोदेशात्कापि नारी विनिर्ययौ॥ ३२.१६२ ॥

तेजसा भासयंती तमध ऊर्ध्वं दिशो दश॥
दृष्ट्वा नारीं गुहः प्राह कासि कस्माच्च निर्गता॥ ३२.१६३ ॥

**॥नार्युवाच॥**
अहं शक्तिर्गुहाख्याता भूतलेषु सदा स्थिता॥
अनेन दैत्यराजेन महता तपसार्ज्जिता॥ ३२.१६४ ॥

सुरेषु सर्वेषु वसामि चाहं विप्रेषु शास्त्रार्थरतेषु चाहम्॥
साध्वीषु नारीषु तथा वसामि विना गुणान्नास्मि वसामि कुत्रचित्॥ ३२.१६५ ॥

तदस्य पुण्यसंघस्य संप्राप्तोद्यावधिर्गुह॥
तदेनं त्यज्य यास्यामि जह्येनं विश्वहेतवे॥ ३२.१६६ ॥

तस्यां ततो निर्गतायां दैत्यशीर्षं व्यकम्पयत्॥
कंपितं चास्य तद्देहं गतवीर्योऽभवत्क्षणात्॥ ३२.१६७ ॥

एतस्मिन्नंतरे शक्तिं सोऽक्षिपद्गिरिजात्मजः॥
उल्काज्वाला विमुञ्चंतीमतिसूर्याग्निसप्रभाम्॥ ३२.१६८ ॥

कल्पांभोधिसमुन्नादां दिधक्षंतीं जगद्यथा॥
तारकस्यांतकालाय अभाग्यस्य दशामिव॥ ३२.१६९ ॥

दारणीं पर्वतानां च सर्वसत्त्वबलाधिकाम्॥
उत्क्षिप्य तां विनद्योच्चैरमुञ्चत्कुपितो गुहः॥ ३२.१७० ॥

धर्मश्चेद्बलवाँल्लोके धर्मो जयति चेत्सदा॥
तेन सत्येन दैत्योयं प्रलयं यात्वितीरयन्॥ ३२.१७१ ॥

सा कुमारभुजोत्सृष्टा दुर्निवार्या दुरासदा॥
विभेद हृदयं चास्य भित्त्वा च धरणिं गता॥ ३२.१७२ ॥

निःसृत्य जलकल्लोलपूर्विका स्कंदमाययौ॥
स च संताडितः शक्त्या विभिन्नहृदयोसुरः॥
नादयन्वसुधां सर्वां पपातायोमुखो मृतः॥ ३२.१७३ ॥

एवं प्रताप्य त्रैलोक्यं निर्जित्य बहुशः सुरान्॥
महारणे कुमारेण निहतः पार्थ तारकः॥ ३२.१७४ ॥

एतस्मिन्निहते दैत्ये प्रहर्षं विश्वमाययौ॥ ३२.१७५ ॥

ववुर्वातास्तथा पुण्याः सुप्रभोभूद्दिवाकरः॥
जज्वलुश्चाग्नयः शांताः शांता दिग्जनितस्वनाः॥ ३२.१७६ ॥

ततः पुनः स्कंदमाह प्रहृष्टः केशवोऽरिहा॥
स्कंदस्कंद महाबाहो बाणोनाम बलात्मजः॥ ३२.१७७ ॥

क्रौंचपर्वतमादाय देवसंघान्प्रबाधते॥
सोऽधुना ते भयाद्वीर पलायित्वा नगं गतः॥
जहि तं पापसंकल्पं क्रौंचस्थं शक्तिवेगतः॥ ३२.१७८ ॥

ततः क्रौंचं महातेजा नानाव्यालविनादितम्॥
शक्त्या बिभेद बहुभिर्वृक्षैर्जीवैश्च संकुलम्॥ ३२.१७९ ॥

तत्र व्यालसहस्राणि दैत्यकोट्ययुतं तथा॥
ददाह बाणां च गिरं भित्त्वा शक्तिर्महारवा॥ ३२.१८० ॥

अद्यापि छिद्रं तत्पार्थ क्रौंचस्य परिवर्तते॥ ३२.१८१ ॥

येन हंसाश्च क्रौंचाश्च मानसाय प्रयांति च॥
हत्वा बाणं महाशक्तिः पुनः स्कंदं समागता॥
प्रत्यायाति मनः साधोराहृतं प्रहितं तथा॥ ३२.१८२ ॥

ततो हरींद्रप्रमुखाः प्रतुष्टुवुर्ननृतुश्च रंभाप्रमुखा वरांगनाः॥
वाद्यानि सर्वाणि च वादयंतस्तं साधुसाध्वित्यमरा जगुर्भृशम्॥ ३२.१८३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेस्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कुमारकृततारकवधवर्णनंनाम द्वात्रिंशोऽध्यायः॥ ३२ ॥ छ ॥

**॥नारद उवाच॥**

ततस्तं गिरिवर्ष्माणं पतितं वसुधोपरि॥
आलिंगितमिव पृथ्व्या गुणिन्या गुणिनं यथा॥ ३३.१ ॥

दृष्ट्वा देवा विस्मितास्ते जयं जगुस्तथा मुहुः॥
केचित्समीपमागंतुं बिभ्यति त्रिदिवौकसः॥ ३३.२ ॥

उत्थाय तारको दैत्यः कदा चिन्नो निहंति चेत्॥
तं तथा पतितं दृष्ट्वा वसुधामण्डले गुहः॥ ३३.३ ॥

आसीद्दीनमनाः पार्थ शुशोच च महामतिः॥
स्तवनं चापि देवानां वारयित्वा वचोऽब्रवीत्॥ ३३.४ ॥

शोच्यं पातकिनं मां च संस्तुवध्वं कथं सुराः॥
पंचानामपि यो भर्ता प्राकृतोऽसौ न कीर्त्यते॥ ३३.५ ॥

स तु रुद्रांशजः प्रोक्तस्तस्य द्रुह्यन्न रुद्रँवत्॥
स्वायंभुवेन गीतश्च श्लोकः संश्रूयते तथा॥ ३३.६ ॥

वीरं हि पुरुषं हत्वा गोसहस्रेण मुच्यते॥
यथाकथंचित्पुरुषो न हंतव्यस्ततो बुधैः॥ ३३.७ ॥

पापशीलस्य हनने दोषो यद्यपि नास्ति च॥
तथापि रुद्रभक्तोऽयं संस्मरन्निति शोचिमि॥ ३३.८ ॥

तदहं श्रोतुमिच्छामि प्रायाश्चित्तं च किंचन॥
प्रायश्चित्तैरपैत्येनो यतोपि महदर्जितम्॥ ३३.९ ॥

इति संशोचतस्तस्य शिवपुत्रस्य धीमतः॥
वासुदेवो गुरुः पुंसां देवमध्ये वचोऽब्रवीत्॥ ३३.१० ॥

श्रुतिः स्मृतिश्चेतिहासाः पुराणं च शिवात्मज॥
प्रमाणं चेत्ततो दुष्टवधे दोषो न विद्यते॥ ३३.११ ॥

स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः पुमान्॥
तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान्॥ ३३.१२ ॥

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्या पचारिणी॥
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम्॥ ३३.१३ ॥

पापिनं पुरुषं यो हि समर्थो न निहंति च॥
तस्य तावंति पापानि तदर्धं सोऽप्यवाश्नुते॥ ३३.१४ ॥

पापिनो यदि वध्यंते नैव पालनसंस्थितैः॥
ततोऽयमक्षमो लोकः कं याति शरणं गुह॥ ३३.१५ ॥

कथं यज्ञाश्च वेदाश्च वर्तते विश्वधारकाः॥
तस्मात्त्वया पुण्यमाप्तं न च पापं कथंचन॥ ३३.१६ ॥

अथ चेद्रुद्रभक्तेषु बहुमानस्तव प्रभो॥
तत्र ते कीर्तयिष्यामि प्रायश्चित्तं महोत्तमम्॥ ३३.१७ ॥

आजन्मसंभवैः पापैः पुमान्येन विमुच्यते॥
आकल्पांत च वा येन रुद्रलोके प्रमोदते॥ ३३.१८ ॥

कृते पापेऽनुतापो वै यस्य स्कन्द प्रजायते॥
रुद्राराधनतोऽन्यच्च प्रायश्तित्तं परं न हि॥ ३३.१९ ॥

न यस्यालमपि ब्रह्मामहिमानं विवर्णितुम्॥
श्रुतिश्च भीता यं वक्ति किं तस्मात्परमं भवेत्॥ ३३.२० ॥

अकांडे यच्च ब्रह्मांडक्षयोद्युक्तं हलाहलम्॥
कण्ठे दधार श्रीकण्ठः कस्तस्मात्परमो भवेत्॥ ३३.२१ ॥

दुःखतांडवदीनोऽभूदण्डसंकीर्णमानसः॥
मारमारश्च यो देवः कस्तस्मात्परमो भवेत्॥ ३३.२२ ॥

वियद्व्यापी सुरसरित्प्रवाहो विप्रुषाकृतिः॥
बभूव यस्य शिरसि कस्तस्मात्परमो भवेत्॥ ३३.२३ ॥

यज्ञादिकाश्च ये धर्मा विना यस्यार्चनं वृथा॥
दक्षोऽत्र सत्यदृष्टांतः कस्तस्मात्परमो भवेत्॥ ३३.२४ ॥

क्षोणी रथो विधिर्यंता शरोऽहं मन्दरो धनुः॥
रथांगे चापि चंद्रार्कौ युद्धे यस्य च त्रैपुरे॥ ३३.२५ ॥

आराधनं तस्य केचिद्योगमार्गेण कुर्वते॥
दुःखसाध्यं हि तत्तेषां नित्यं शून्यमुपासताम्॥ ३३.२६ ॥

तस्मात्तस्यार्चयेल्लिंगं भुक्तिमुक्ती य इच्छति॥
सृष्ट्यादौ लिंगरूपी स विवादो मम ब्रह्मणः॥ ३३.२७ ॥

अभूद्यस्य परिच्छेदे नालमावां बभूविव॥
चराचरं जगत्सर्वं यतो लीनं सदात्र च॥ ३३.२८ ॥

तस्माल्लिंगमिति प्रोक्तं देवै रुद्रस्य धीमतः॥
तोयेन स्नापयेल्लिंगं श्रद्धया शुचिना च यः॥ ३३.२९ ॥

ब्रह्मादितृणपर्यंतं तेनेदं तर्पितं जगत्॥
पंचामृतेन तल्लिंगं स्नापयेद्यश्च बुद्धिमान्॥ ३३.३० ॥

तर्पितं तेन विश्वं स्यात्सुधया पितृभिः समम्॥
पुष्पैरभ्यर्चयेल्लिंगं यथाकालोद्भवैश्चयः॥ ३३.३१ ॥

तेन संपूजितं विश्वं सकलं नात्र संशयः॥
नैवेद्यं तत्र यो दद्याल्लिंगस्याग्रे विचक्षणः॥ ३३.३२ ॥

भोजितं तेन विश्वं स्याल्लिंगस्यैवं फलं महत्॥
किमत्र बहुनोक्तेन स्वल्पं वा यदि व बहु॥ ३३.३३ ॥

लिंगस्य क्रियते यच्च तत्सर्वं विश्वप्रीतिदम्॥
तच्च लिगं स्थापयेद्यः शुचौ देशे सुभक्तितः॥ ३३.३४ ॥

स सर्वपापनिर्मुक्तो रुद्रलोके प्रमोदते॥
यन्नित्यं यजतो यज्ञैः फलमाहुर्मनीषिणः॥ ३३.३५ ॥

तच्च स्थापयतो लिंगं शिवस्य शुभलक्षणम्॥
यथाग्निः सर्वदेवानां मुखं स्कन्द प्रकीर्त्यते॥ ३३.३६ ॥

तथैव सर्वजगतां मुखं लिंगं न संशयः॥
प्रारंभान्मुच्यते पापैः सर्वजन्मकृतैरपि॥ ३३.३७ ॥

अतीतं च तथागामि कुलानां तारयेच्छतम्॥
मृन्मयं काष्ठनिष्पन्नं पक्वेष्टं शैलमेव च॥ ३३.३८ ॥

कृतमायतनं दद्यात्क्रमाच्छतगुणं फलम्॥
कलशं तत्र चारोप्य एकविंशत्कुलैर्युतः॥ ३३.३९ ॥

आकल्पांतं रुद्रलोके मोदते रुद्रवत्सुखी॥
एवंविधफलं लिंगमतो भूयोऽप्यधो न हि॥ ३३.४० ॥

तस्मादत्र महासेन लिंगं स्थापितुमर्हसि॥
यदुक्तमेतदश्लीलं यदि किंचन चात्र चेत्॥ ३३.४१ ॥

तदब्रवीतु महा सेन स्वयं साक्षी महेश्वरः॥
एवं वदति गोविंदे साधुवादो महानभूत्॥ ३३.४२ ॥

महादेवो ह्यथालिंग्य स्कन्दं वचनब्रवीत्॥
यद्भवान्मम भक्तेषु प्रकरोति कृपां पराम्॥ ३३.४३ ॥

तेनापि परमा प्रीतिर्मम जाता तवोपरि॥
किं तु यद्भगवानाह वासुदेवो जगद्गुरुः॥ ३३.४४ ॥

तत्त्था नान्यथा किंचिदत्र प्रोक्तं हि विष्णुना॥
यो ह्यहं स हरिर्ज्ञेयो यो हरिः सोऽहमित्युता॥ ३३.४५ ॥

नावयोरंतरं किंचिद्दीपयोरिव सुव्रत॥
एनं द्वेष्टि स मां द्वेष्टियोन्वेत्येनं स माऽनुगः॥ ३३.४६ ॥

इति स्कन्द विजानाति स मद्भक्तोन्यथा न हि॥ ३३.४७ ॥

**॥स्कन्द उवाच॥**
एवमेवास्मि जानामि त्वां च विष्णुं च शंकर॥ ३३.४८ ॥

यच्च लिंगकृते प्राह हरिर्मां धर्मवत्सलः॥
खे वाणी तारकवधे एवमेव पुराह माम्॥ ३३.४९ ॥

लिंगं संस्थापयिष्यामि सर्वपापा पहं ततः॥
एकं यत्र प्रतिज्ञा मे गृहीतास्य वधाय च॥ ३३.५० ॥

द्वितीयं यत्र निःसत्त्वसत्यक्तः शक्त्याऽसुरोऽभवत्॥
तृतीयं यत्र निहतो हत्या पापोपशांतिदम्॥ ३३.५१ ॥

इत्युक्त्वा विश्वकर्माणमाहूय प्राह पावकिः॥
त्रीणि लिंगानि शुद्धानि शीघ्रं त्वं कर्तुमर्हसि॥ ३३.५२ ॥

वचनाद्बाहुलेयस्य निर्ममे देववर्द्धकिः॥
त्रीणि लिंगानि शुद्धानि न्यवेदयत तानि च॥ ३३.५३ ॥

ततो ब्रह्मादिभिः सार्धं विष्णुना शंकरेण च॥
पूर्वं संस्थापयामास पश्चिमायामदूरतः॥ ३३.५४ ॥

प्रतिज्ञेश्वरमित्येव लिंगं परमशोभनम्॥
अष्टम्यां बहुले चात्र चैत्रे स्नात्वा उपोष्य च॥ ३३.५५ ॥

पूजां च जागरं कृत्वा मुच्येत्पारुष्यपापतः॥
इत्याह स्कंदप्रीत्यर्थं स्वयं तत्र महेश्वरः॥ ३३.५६ ॥

ततो द्वितीयं लिंगं तु वह्निकोणाश्रितं तथा॥

स्थापयामास सरसो यत्र शक्तिर्विनिर्ययौ॥ ३३.५७ ॥

कपालेश्वरमित्येव लिंगं पापापहं शुभम्॥
शक्तिं च तामभिष्टूय स्थापयामास तत्र च॥ ३३.५८ ॥

कपालेश्वरसांनिध्यं देवीं कापालिकेश्वरीम्॥
तत्र चोत्तरदिग्भागे शक्तिच्छिद्रं प्रचक्षते॥ ३३.५९ ॥

पातालगंगा यत्रास्तिं सर्वपापहरा शिवा॥
तत्र स्नात्वा ददौ स्कंदः कृपयाभिपरिप्लुतः॥ ३३.६० ॥

तदा तोयं तारकाय सहितः सर्वदैवतैः॥ ३३.६१ ॥

काश्यपेयाय वज्रांगतनयाय महात्मने॥
रुद्रभक्ताय सतिलमक्षय्योदकमस्त्विति॥ ३३.६२ ॥

ततो महेश्वरः प्रीतः प्राह स्कंदस्य श्रृण्वतः॥
चतुर्दश्यां कृष्णपक्षे मधौ चैवात्र यो नरः॥
स्नात्वोपोष्य समभ्यर्च्य कपालेश्वरमीश्वरीम्॥ ३३.६३ ॥

तेजोवधसमुद्भूतपातकेन स मुच्यते॥ ३३.६४ ॥

अस्यामेव तिथौ सोमः शिवयोगश्च तैतिलम्॥
षड्योगः शक्तिच्छिद्रेयो दिनं रुद्रं जपन्निशि॥
स्नात्वात्र सशरीरो वै रुद्रलोकं व्रजीष्यति॥ ३३.६५ ॥

कपालेशस्य सांनिध्ये शक्तिच्छिद्रं हि कीर्त्यते॥
तस्य तुल्यं परं तीर्थं पृथिव्यां नैव विद्यते॥ ३३.६६ ॥

इति श्रुत्वा रुद्रवाक्यं स्कंदः प्रीतोऽभवद्भृशम्॥
देवाश्च मुदिताः सर्वे साधुसाध्विति ते जगुः॥ ३३.६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारस्थापितज्ञेश्वरशक्तिच्चिद्रेश्वर माहात्म्यवर्णनं नाम त्रयस्त्रिंशो.ध्यायः॥ ३३ ॥ छ ॥

**॥नारद उवाच॥**

ततस्तृतीयलिंगस्य चिकीर्षु स्थापनं गुहम्॥
ब्रह्मा प्राहास्य प्रीत्यर्थं स्वयमन्यं प्रकुर्महे॥ ३४.१ ॥

यद्यप्येतच्छुभं लिंगं सर्वदोषविवर्जितम्॥
तथाप्यन्यत्करिष्येऽहं सर्वश्रेष्ठतमं हि यत्॥ ३४.२ ॥

ततो ब्रह्मा सर्वदोषविमुक्तं निर्ममे स्वयम्॥
दृष्टिकांतं मनःकांतं फलकांतं सुलिंगकम्॥ ३४.३ ॥

तत्र स्कंदस्य प्रीत्यर्थं सर्वदेवैर्निनिर्मितम्॥
सरः सुरम्यं तीर्थानि तत्र ते निदधुस्तथा॥ ३४.४ ॥

गंगादिकानि तीर्थानि यानि प्रोचुर्दिवौकसः॥
इदं यावत्सरस्तावत्सर्वैरत्र समुष्यताम्॥ ३४.५ ॥

एवमस्त्विति तान्यूचुः प्रीत्यर्थं शरजन्मनः॥
ततो ब्रह्मा स्वयं तत्र रौद्रैर्मंत्रैर्हुताशनम्॥
गाधिपुत्रादिभिर्विप्रैस्तर्पयामास संयुतः॥ ३४.६ ॥

ततो वैशाखमासस्य चतुर्द्दश्यां शुभे दिने॥
प्रतिष्ठां चक्रिरे लिंगे चिरं विप्रमुका द्विजाः॥ ३४.७ ॥

जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः॥
ततः स्कंदः प्रीतियुक्तः स्नात्वा सरसि शोभने॥ ३४.८ ॥

सर्वतीर्थोदकैः स्नाप्य तल्लिंगं भक्तिसंयुतः॥
विविधैः पूजयामास पुष्पैर्मंत्रैश्च पंचभिः॥ ३४.९ ॥

पूजाकाले स्वयं तत्र लिंगमध्येस्थितो हरः॥
जंगमा जंगमैः सार्धं स्वयं जग्राह पूजनम्॥ ३४.१० ॥

ततस्तं पूजयन्प्राह स्कंदो भक्तिपरिप्लुतः॥
केन केनोपहारेण त्वयि दत्तेन किं फलम्॥ ३४.११ ॥

**॥श्रीमहादेव उवाच॥**

मम यः स्थापयेल्लिंगं शुभं सद्म च कारयेत्॥
मल्लोके वसतेऽसौ च वावच्चंद्रदिवाकरौ॥ ३४.१२ ॥

मम सद्म सुधाशुभ्रं यावत्संख्यं करोति यः॥
तावंत्येव च जन्मानि यशसासौ विराजते॥ ३४.१३ ॥

ध्वजभूतो ध्वजं दत्त्वा विपापः स्यात्पताकया॥
विधाय चित्रविन्यास गंधर्वैः सह मोदते॥ ३४.१४ ॥

रजःसंशोधनं कृत्वा नरो रोगैः प्रमुच्यते॥
प्राप्नोति देहं हार्दं च सुरसद्मानुलेपनात्॥ ३४.१५ ॥

पुष्पक्षीरादि भिर्दत्तैस्तिलाभोऽक्षतदर्भकैः॥
शंभोः शिरसि दत्त्वार्घ्यं दिवि वर्षायुतं वसेत्॥ ३४.१६ ॥

घृतेन हतपापः स्यान्मधुना सुभगो भवेत्॥
विरोगो दधिदुग्धाभ्यां लिंगं संस्नाप्य जायते॥ ३४.१७ ॥

पानीयदधिदुग्धाद्यैः क्रमाद्दशगुणं फलम्॥
मासं संस्नाप्य वै भक्त्या पिष्टाद्यैश्च विरूक्षयेत्॥ ३४.१८ ॥

कपिलापंचगव्येन सुरसिंधुजलेन वा॥
मां च संस्नाप्य चाभ्यच्च मल्लोकमधिगच्छति॥ ३४.१९ ॥

कुशोदकाद्गंधजलं तस्मात्तीर्थोदकं वरम्॥
तीर्थेभ्यश्च जलं दर्शे महीसागरसंभवम्॥ ३४.२० ॥

कपिलां दत्त्वा यदाप्नोति तत्फलं कलशे पृथक्॥
मृत्ताम्ररौप्यसौवर्णैः क्रमाच्छतगुणं फलम्॥ ३४.२१ ॥

श्रीखंडागरुकाश्मीरशशिनः क्रमशोऽधिकाः॥
मां च तैश्च समालभ्य स्याच्छ्रीमान्सुभगः सुखी॥ ३४.२२ ॥

प्रशस्तो गुग्लुलो धूपस्तस्माच्चंद्रोऽगरुर्वरः॥
धूपानेतान्नरो दत्त्वा सुखं स्वर्गमवाप्नुयात्॥ ३४.२३ ॥

दीपदः कीर्तिमाप्नोति चक्षुरुत्तममेव च॥
नैवेद्यस्य प्रदानेन नरो मृष्टाशनो भवेत्॥ ३४.२४ ॥

पुष्पेण हेमकर्णस्य प्रबद्धेन द्विसंगुणम्॥
फलमाप्नोति पुरुषः सत्यसंधश्च जायते॥ ३४.२५ ॥

अखंडैर्बिल्वपत्रैश्च पुष्पैर्वा विविधैरपि॥
लिंगं प्रपूरणं कृत्वा लक्ष्मेकं वसेद्दिवि॥ ३४.२६ ॥

यस्तु पुष्पगृहं कुर्यान्नरः शुद्धाशयो भवेत्॥
पुष्पकेण विमानेन दिवि संक्रीडते चिरम्॥ ३४.२७ ॥

भूषणांबरदानेन नरो भवति भोगभाक्॥
सच्चामरप्रदानेन जायते पार्थिवो नरः॥ ३४.२८ ॥

रम्यं वितानं यो दद्याच्छत्रुभिर्नाभूयते॥
गीतं वाद्यं प्रनृत्यं च कृत्वा शुद्धो व्रजेत्स माम्॥ ३४.२९ ॥

शंखघंटाप्रदानेन विद्वान्भवति शब्दवान्॥
विधाय रथयात्रां च चिरं शोकैः प्रमुच्यते॥ ३४.३० ॥

नमस्कारं प्रणामं च कृत्वा जायेन्महाकुले॥
वाचयंश्चाग्रतः शास्त्रं मम ज्ञानी प्रजायते॥ ३४.३१ ॥

विमुच्यते मनोमोहैर्भक्त्या स्तुत्वा च मां नरः॥
गोदानफलमाप्नोति निर्माल्यस्फेटनान्मम॥ ३४.३२ ॥

आरार्तिकं भ्रामयित्वा अर्तिहीनः प्रजायते॥
कृत्वा शीतलिकां तापैर्मुच्यते दोष संभवैः॥ ३४.३३ ॥

नत्वा दत्त्वाथ शक्त्या च दानं लिंगस्य संनिधौ॥
फलं शतगुणं प्राप्य इह चामुत्र मोदते॥ ३४.३४ ॥

प्रणामात्पंचदश च स्नानाद्विंशतिं पूजया॥
शतं यथाप्रोक्तविधेरपराधानहं क्षमे॥ ३४.३५ ॥

एतत्सर्वं यथोद्दिष्टं कुमारात्र भविष्यति॥
ये मां प्रपूजयिष्यंति कुमारेश्वर संस्थितम्॥ ३४.३६ ॥

वाराणस्यां यथा वत्स विश्वनाथोऽस्मि संस्थितः॥ ३४.३७ ॥

गुप्तक्षेत्रे तथा स्थास्ये कुमारेश्वरमध्यतः॥ ३४.३८ ॥

श्रुत्वेति वचनं रुद्राद्देवानां शृण्वतां गुहः॥
विस्मितः प्रणिपत्यैनं तुष्टाव गिरिजापतिम्॥ ३४.३९ ॥

नमः शिवायास्तु निरामयाय नमः शिवायास्तु मनोमयाय॥
नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय॥ ३४.४० ॥

नमो भवायास्तु भवोद्भवाय नमोस्तु ते ध्वस्तमनोभवाय॥
नमोऽस्तु ते गूढमहाव्रताय नमोऽस्तु मायगहनाश्रयाय॥ ३४.४१ ॥

नमोस्तु शर्वाय नमः शिवाय नमोस्तु सिद्धाय पुरातनाय॥
नमोस्तु कालाय नमः कलाय नमोऽस्तु ते कालकलातिगाय॥ ३४.४२ ॥

नमो निसर्गात्मकभूतिकाय नमोऽस्त्वमेयोक्षमहर्द्धिकाय॥
नमः शरण्याय नमोऽगुणाय नमोऽस्तु ते भीमगुणानुगाय ॥ ३४.४३ ॥

नमोऽस्तु नानाभुवनाधिकर्त्रे नमोऽस्तु भक्ताभिमतप्रदात्रे॥
नमोऽस्तु कर्मप्रसावाय धात्रे नमः सदा ते भगवन्सुकर्त्रे॥ ३४.४४ ॥

अनंतरूपाय सदैव तुभ्यमसह्यकोपाय सदैव तुभ्यम्॥
अमेयमानाय नमोस्तु तुभ्यं वृषेंद्रयानाय नमोऽस्तु तुभ्यम्॥ ३४.४५ ॥

नमः प्रसिद्धाय महौषधाय नमोऽस्तु ते व्याधिगणापहाय॥
चराचरायाथ विचारदाय कुमारनाथाय नमः शिवाय॥ ३४.४६ ॥

ममेश भूतेश महेश्वरोसि कामेश वागीश बलेश धीश॥
क्रोधेश मोहेश परापरेश नमोस्तु मोक्षेश गुहशयेश॥ ३४.४७ ॥

इति संस्तूय वरदं शूलपाणिमुमापतिम्॥
प्रणिपत्य उमापुत्रो नमोनम उवाच ह॥ ३४.४८ ॥

एवं भक्तिपराक्रांतमात्मयोग्यं स्तवं शिवः॥
अभिनन्द्य चिरं कालमिदं वचनमब्रवीत्॥ ३४.४९ ॥

त्वया दुःखं न संचिंत्यं मम भक्तवधात्मकम्॥
कर्मणानेन श्लाघ्योऽसि मुनीनामपि पुत्रक॥ ३४.५० ॥

ये च सायं तथा प्रातस्त्वत्कृतेन स्तवेन माम्॥
स्तोष्यंति परया भक्त्या श्रुणु तेषां च यत्फलम्॥ ३४.५१ ॥

न व्याधिर्न च दारिद्र्यं न चैवेष्टवियोजनम्॥
भुक्त्वा भोगान्दुर्लभांश्च मम यास्यंति सद्म ते॥ ३४.५२ ॥

तथान्यानपि दास्यामि वरान्परमदुर्लभान्॥
भक्त्या तवातितुष्टोऽहं प्रीत्यर्थं तव पुत्रक॥ ३४.५३ ॥

महीसा गरकूले तु ये मां स्तोष्यंति पूजया॥
तेषां दतक्षयं सर्वं वैशाख्यां दानपूजनम्॥ ३४.५४ ॥

सरस्यत्र च ये स्नानं प्रकरिष्यंति मानवाः॥
सर्वतीर्थफला वाप्तिर्वैशाख्यां प्रभविष्यति॥ ३४.५५ ॥

कुमारेशं तु मां भक्त्या महीसागरसंगमे॥
स्नात्वा संपूजयेन्नित्यं तस्य जातिस्मृतिर्भवेत्॥ ३४.५६ ॥

जातिस्मृतिरियं पुत्र यस्यां जातौ प्रजायते॥
स्मरतेऽस्याः प्रकर्तव्यं श्रेयोरूपं सुदुर्लभम्॥ ३४.५७ ॥

यस्मिन्काले ह्यनावृष्टिर्जायते कृत्तिकासुत॥
स्नापयेद्विधिवन्मां च कलशैर्विविधैः शुभैः॥ ३४.५८ ॥

एकरात्रं त्रिरात्रं वा पञ्चरात्रं च सप्त वा॥
स्नापयेद्गंधतोयेन कुंकुमेन विलेपयेत्॥ ३४.५९ ॥

करवीरै रक्तपुष्पैर्जपापुष्पैस्तथैव च॥
अर्चयेत्पुष्पमालाभिः परिधायारुणवाससी॥ ३४.६० ॥

भोजयेद्ब्रह्णांश्चैव तापसाञ्छंसिवव्रतान्॥
लक्षहोमं प्रकुर्वीत शिवहोमं ग्रहादिकम्॥ ३४.६१ ॥

भूमिदानं ततः कुर्यात्ततो दद्याद्गवाह्निकम्॥
आघोषयेच्छिवां शांतिं रुद्रजाप्यं हि कारयेत्॥ ३४.६२ ॥

अनेनैव विधानेन कृतेन तु द्विजोत्तमैः॥
आगर्भितास्तदा मेघा वर्षते नात्र संशयः॥ ३४.६३ ॥

विविधैः पूर्यते धान्यः शाद्वलैश्च वसुन्धरा॥
आरोग्यं हि भवेच्चैव जने गोपकुले तथा॥ ३४.६४ ॥

धर्मयुक्तो भवेद्राजा परचक्रैर्न पीड्यते॥
गृतेन स्नापयेन्मां च अर्कक्रांतौ नरोऽत्र यः॥ ३४.६५ ॥

कन्यादान फलं तस्य नात्र कार्या विचारणा॥
क्षीरेण स्नापयेद्देवं तथा पंचामृतेन यः॥ ३४.६६ ॥

अग्निष्टोमस्य यज्ञस्य फलं तस्योपजायते॥
कुमारेश्वरतीर्थेयः प्राणत्यागं करोति हि॥ ३४.६७ ॥

रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम्॥
अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः॥ ३४.६८ ॥

पौर्णमास्याममावास्यां संक्रांतौ वैधृते तथा॥
कुमारेशं नरः स्नात्वा महीसागरसंगमे॥ ३४.६९ ॥

भक्त्या योभ्यर्चयेन्मां च तस्य पुण्यफलं श्रृणु॥
यन्महीतलतीर्थेषु स्नाने स्यात्तु महत्फलम्॥३४.७० ॥

यच्चर्चितेषु लिंगेषु सर्वेषु स्यात्फलं च तत्॥
आरोग्यं पुत्रलाभं च धनलाभं सुखंसुतम्॥ ३४.७१ ॥

निश्चितं लभते मर्त्यः कुमारेश्वरसेवया॥
ब्रह्मचारी शुचिर्भूत्वा यस्तिष्ठेदत्र तापसः॥ ३४.७२ ॥

परं पाशुपतं योगं प्राप्य याति लयं मयि॥
पापात्मनां च मर्त्यानां सद्योऽस्मि फलदर्शकः॥ ३४.७३ ॥

दिव्येनाष्टविधेनात्र कोशः साधारणोऽत्र च॥
अघोराद्यैः पंचमंत्रैः स्नाप्य लिंगं महोज्जवलम्॥ ३४.७४ ॥

अघोरेणैव तत्तोयं दद्याद्दिव्यस्य कारणे॥
पिबेदेतदुदीर्या प्रसृतित्रयमेव च॥ ३४.७५ ॥

यदि धर्मस्तथा सत्यमीश्वरोऽत्र जगत्त्रये॥
कोशपानात्फलं सद्यो द्रक्ष्याम्यस्मि शुभा शुभम्॥ ३४.७६ ॥

यास्ये चेति कुलं हन्याद्गमने च कुटुम्बकम्॥
दर्शने च शुभं पाने हन्याद्देहं च मिथ्यया॥ ३४.७७ ॥

त्रिभिर्दिनैस्त्रिभिः पक्षैस्त्रिभिर्मासैस्त्रिभिः समैः॥
अत्युग्रपुण्यपापानां मानेन फलमश्नुते॥ ३४.७८ ॥

एते वरामया लिंगे दत्तात्रं स्थापिते त्वया॥
तव प्रीत्यभिवृद्ध्यर्थं ब्रूहि भूयोऽप्युमात्मज॥ ३४.७९ ॥

**॥स्कन्द उवाच॥**
कृतकृत्यो वरैर्दत्तैस्त्वया चैतैर्महेश्वर॥
नमोनमो नमस्तेस्तु नात्र त्याज्यं त्वया विभो॥ ३४.८० ॥

एवं प्रणम्य देवं स मातरं प्रणतोऽब्रवीत्॥
त्वयापि मातर्नैवात्र त्याज्यं मम प्रियेप्सया॥ ३४.८१ ॥

त्वामप्यत्र स्थापयिष्ये वरदा भव पर्वति॥ ३४.८२ ॥

**॥श्रीदेव्युवाच॥**
यत्र शर्वः स्वभावेन तत्र तिष्ठाम्यहं सुत॥ ३४.८३ ॥

तव भक्त्या विशेषेण स्थास्ये स्त्रीणां वरप्रदा॥
युद्धेषु तवकर्माणि रुद्रभक्तेषु ते कृपाम्॥ ३४.८४ ॥

पश्यंति पुत्रिणां मुख्या प्रीणिता च भृशं त्वया॥
गर्भक्लेशः स्त्रियो मन्ये साफल्यं भजते तदा॥ ३४.८५ ॥

सुतो यदा रुद्रभक्तः सानंदं सद्भिरीर्यते॥
भव तस्मात्प्रियार्थाय तिष्ठाम्यत्र षडानन॥ ३४.८६ ॥

स्त्रीभिराराधिता दास्ये सौभाग्यं सुपतिं सुतान्॥
चैत्रे चापि तृतीयायां स्नात्वा शीतेन वारिणा॥ ३४.८७ ॥

अर्चयिष्यंति मां याश्च पुष्पैर्धूपैर्विलेपनैः॥
दास्यामि चाष्टसौभाग्यं या नारी भक्तितत्परा॥ ३४.८८ ॥

पितरौ श्वशुरौ पुत्रान्पतिं सौभाग्यसंपदः॥
कुंकुमं पुष्पश्रीखंडं तांबूलांजनमिक्षवः॥ ३४.८९ ॥

सप्तमं लवणं प्रोक्तमष्टमं च सुजीरकम्॥
तोलयेत्तुलया वापि सांघ्रिश्च तुलिता भवेत्॥ ३४.९० ॥

सुवर्मेनाथ सौगन्ध्यद्रव्यैः शुभफलैरपि॥
भुंक्ते वा लवणं पश्चान्नासौ वै विधवा भवेत्॥ ३४.९१ ॥

माघे वा कार्तिके वापि चैत्रे स्नात्वार्चयेत् माम्॥
दौर्भाग्यदुःखदारिद्र्यैर्न सा संयोगमाप्नुयात्॥ ३४.९२ ॥

श्रुत्वेति गिरिजावाचं सानंदः पार्वतीसुतः॥
स्थापयित्वा गिरिसुतां कपर्दिनमथाब्रवीत्॥ ३४.९३ ॥

पुष्पैर्धूपैर्मोदकैश्च पूर्वमभ्यर्च्य त्वां प्रभो॥
पुजयंति कुमारेशं तेषां विघ्नहरो भव॥ ३४.९४ ॥

**॥कपर्द्युवाच॥**
भ्रातस्त्वया स्थापितेऽस्मिँल्लिंगे भक्ताश्च ये नराः॥
न तेषां मम विघ्नानि मम वागनुगामिनी॥ ३४.९५ ॥

एवमुक्ते विघ्नराज्ञा प्रतीतेऽस्थापयच्च तम्॥
तस्मादसौ सदाभ्यर्च्यश्चतुर्थ्यां च विशेषतः॥ ३४.९६ ॥

एवं स्थाप्य कुमारेशं लब्ध्वा चैतान्वराञ्छिवात्॥
मनसा कृतकृत्यं चात्मानं मेने षडाननः॥ ३४.९७ ॥

तस्थावंशेन तत्रैव कुमारेश्वरसंनिधौ॥
अत्र स्थितं कुमारं ये पश्यन्ति स्वामियात्रिमः॥ ३४.९८ ॥

सफला स्वामियात्रा च तेषां भवति भारत॥
कार्तिक्यां च विशेषेण कार्तिकेयं समर्चयेत्॥ ३४.९९ ॥

यत्फलं स्वामियात्रायां तत्फलं समावाप्नुयात्॥
एवंविधमिदं पार्थ महीसागरसंगमम्॥ ३४.१०० ॥

निमित्तीकृत्य चात्मानं साध्वर्थे लिंगमर्चितम्॥
रोगाभिभूतो रोगैर्वा नाम्नामष्टोत्तरं शतम्॥ ३४.१०१ ॥

जप्त्वा शुचिर्ब्रह्मचारी मासं मुच्येत पातकात्॥
एतदाराध्य संजाता रजिरामादयः पुरा॥ ३४.१०२ ॥

शतसंख्याबलं राज्यं रुद्रलोक च भेजिरे॥
जामदग्न्यस्त्विदं लिंगमाराध्य च समायुतम्॥ ३४.१०३ ॥

लेभे कुठारमुज्जह्ने येनार्जुनभुजान्युधि॥
अग्रतो देवदेवस्य ज्ञात्वा तीर्थे महागुणान्॥ ३४.१०४ ॥

रामेश्वरमिति ख्यातं स्थापितं लिंगमुत्तमम्॥
तच्च योऽभ्यर्चयेद्भक्त्या रुद्रलोकं स गच्छति॥ ३४.१०५ ॥

प्रीतः स्यात्तस्य रामश्च कुमारेशश्च फाल्गुन॥
इति संक्षेपतः प्रोक्तं कुमारेशस्य वर्णनम्॥ ३४.१०६ ॥

कुमारेशस्य माहात्म्यं कीर्तयेद्यस्तदग्रतः॥
ये च श्रृण्वंत्यनुदिनं रुद्रलोके वसंति ते॥ ३४.१०७ ॥

अस्य लिंगस्य माहात्म्यं श्राद्धकाले तु यः पठेत्॥
पितॄणामक्षयं जायते नात्र संशयः॥ ३४.१०८ ॥

अस्य लिंगस्य माहात्म्यं गुर्विणीं श्रावयेद्यदि॥
गुणवाञ्जायते पुत्रः कन्या चापि पतिव्रता॥ ३४.१०९ ॥

एतत्पुण्यं पापहरं धर्म्यं चाह्लादकारकम्॥
पठतां चापि सर्वाभीष्टफल प्रदम्॥ ३४.११० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे
कुमारेशस्थापनपूर्वकमाहात्म्यवर्णनं नाम चतुस्त्रिंशोऽध्यायः॥ ३४ ॥ छ ॥

**॥नारद उवाच॥**

कुमारेण स्थापितोऽत्र कुमारेशस्ततः सुराः॥
प्रणम्य गुहमूचुश्च प्रबद्धकरसंपुटाः॥ ३५.१ ॥

किंचिद्विज्ञापयष्यामो वयं त्वां श्रृणु तत्त्वतः॥
पूर्वप्रसिद्ध आचारः प्रोच्यते जयिनामयम्॥ ३५.२ ॥

जयंति ये रणे शत्रूंस्तैः कार्यः स्तंभचिह्नकः॥
तस्मात्तव जयोद्द्योतनिमित्तं स्तंममुत्तमम्॥ ३५.३ ॥

नक्षिपाम वयं यावत्त्मनुज्ञातुमर्हसि॥
विश्वकर्मकृतं यच्च तृतीयं लिंगमुत्तमम्॥ ३५.४ ॥

तस्य स्तंभाग्रतसतं च संस्थापय शिवात्मज॥
एवमुक्ते सुरैः स्कन्दस्ततेत्याह महामनाः॥ ३५.५ ॥

ततो हृष्टाः सुरगणाः शक्राद्याः स्तंभमुत्तमम्॥
जांबूनदमयं शुभ्रं रणभूमौ विनिक्षिपुः॥ ३५.६ ॥

परितः स्थंडिलं दिक्षु सर्वरत्नमयं तु ते॥
तत्र हृष्टाश्चाप्सरसो ननृतुर्दशधा शुभाः॥ ३५.७ ॥

मातरो मंगलान्यस्य जगुः स्कन्दस्य नंदिताः॥
इंद्राद्या ननृतुस्तत्र स्वयं विष्णुश्च वादकः॥ ३५.८ ॥

पेतुः खात्पुष्पवर्षाणि देववाद्यानि सस्वनुः॥
एवं स्तंभं समारोप्य जयाख्यं विश्वनंदकः॥ ३५.९ ॥

स्तम्भेश्वरस्ततो देवः स्थापितस्त्र्यक्षसूनुना॥
विरिंचिप्रमुखैर्देवैर्जातानन्दैः समं तदा॥ ३५.१० ॥

हरिहरादित्युक्तैस्तैः सेन्द्रैर्मुनिगणैरपि॥
तस्यैव पश्चिमे भागे शक्त्यग्रेण महात्मना॥ ३५.११ ॥

गुहेन निर्मितः कूपो गंगा तत्र तलोद्भवा॥
माघस्य च चतुर्दश्यां कृष्णायां पितृतर्पणम्॥ ३५.१२ ॥

कूपे स्नानं नरः कृत्वा भक्त्या यः पांडुनंदन॥
गयाश्राद्धेन यत्पुण्यं तत्फलं लभते स्फुटम्॥ ३५.१३ ॥

स्तंभेश्वरं ततो देवं गन्धपुष्पैः प्रपूजयेत्॥
वाजपेयफलं प्राप्य मोदते रुद्रसद्मानि॥ ३५.१४ ॥

पौर्णमास्याममावास्यां महीसागरसंगमे॥
श्राद्धं कृत्वा च योऽभ्यर्च्चेत्स्तंभेश्वरमकल्मषः॥ ३५.१५ ॥

पितरस्तस्य तृप्यंति तृप्ता यच्छंति चाशिषः॥
स भित्त्वा सर्वपापानि रुद्रलोके महीयते॥ ३५.१६ ॥

इत्याह भगवान्रुद्रः स्कन्दस्य प्रीतये पुरा॥
एवमेव चतुर्थं च स्थापितं लिंगमुत्तमम्॥ ३५.१७ ॥

प्रणेमुर्देवताः सर्वे साधुसाध्विति ते जगुः॥ ३५.१८ ॥

इति स्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे स्तंभेश्वरमाहात्म्यवर्णन नाम पंचत्रिंशोऽध्यायः॥ ३५ ॥ छ ॥

**॥नारद उवाच॥**

एवं दृष्ट्वा क्षितौ तानि लिंगानि हरसूनुना॥
हरिब्रह्मेंद्रप्रमुखा देवाः प्रोचुः परस्परम्॥ ३६.१ ॥

अहो धन्यः कुमारोऽयं महीसागरसंगमे॥
येन चत्वारी लिंगानि स्तापितानि सुदुर्लभे॥ ३६.२ ॥

वयमप्यत्र शुद्ध्यर्थं तोषार्थं स्कन्दरुद्रयोः॥
साध्वर्थे चात्मलाभाय कुर्मो लिंगपरंपराम्॥ ३६.३ ॥

अथवा कोटिशो देवा मुनयो नैव संख्यया॥
सर्वे चेत्स्थापयिष्यंति लिंगान्यत्र महीतटे॥ ३६.४ ॥

पूजा तेषां कतं भावि बहुत्वाच्चात्र पठ्यते॥
यस्य राष्ट्रे रुद्रलिंगं पूज्यते नैव शक्तितः॥ ३६.५ ॥

तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः॥
संभूय स्थापयिष्यामो लिंगमेकं ततः शुभम्॥ ३६.६ ॥

इति कृत्वा मतिं सर्वे प्राप्यानुज्ञां महेश्वरात्॥
प्रहर्षिता सुहश्चैव हरिब्रह्ममुखाः सुराः॥ ३६.७ ॥

भूमिभागं शुभं वीक्ष्य विजने लिंगमुत्तमम्॥
स्थापयामासुरथ ते स्वयं ब्रह्मविनिर्मितम्॥ ३६.८ ॥

सिद्धार्थैः स्तापितं यस्मा द्देवैर्ब्रह्मादिभिः स्वयम्॥
सिद्धेश्वरमिति प्राह नाम लिंगस्य वै गुहः॥ ३६.९ ॥

सर्वैर्देवैस्तत्र लिंगे खानितं सर उत्तमम्॥
सर्वतीर्थोदकैः शुभ्रैः पूरितं च महात्मभिः॥ ३६.१० ॥

एतस्मिन्नंतरे पार्थ पातालाच्छेषनंदनः॥
कुमुदोनाम आगत्य प्राह शेषाहिपन्नगान्॥ ३६.११ ॥

अस्मिंस्तारकयुद्धे तु प्रलंबोनाम दानवः॥
पलायित्वा स्कंदभीत्या पापः पातालमाविशत्॥ ३६.१२ ॥

स वो वसूनि पुत्रांश्च भार्याः कन्या गृहाणि च॥
विध्वंसयति नागेंद्राः शीघ्रं धावतधावत॥ ३६.१३ ॥

शेषात्मजस्य तद्वाक्यं कुमदस्य निशम्यते॥
औत्सुक्यमापुर्नागेंद्रा यामयामेति वादिनः॥ ३६.१४ ॥

तान्निवार्य ततः स्कंदः क्रुद्धः शक्तिमथाददे॥
पातालाय मुमोचाथ प्रोच्य दैत्यो निहन्यताम्॥ ३६.१५ ॥

ततः स्कंदभुजोत्सृष्टा भुवं निर्भिद्य वेगतः॥
प्रविष्टा सहसा शक्तिर्यथा दैवं नरं प्रति॥ ३६.१६ ॥

सा तं हत्वा प्रलंबं च कोटिभिर्दशभिर्वृतम्॥
नंदयित्वा गता नागाञ्जलकल्लोपूर्विका॥ ३६.१७ ॥

यांत्या शक्त्या तया पार्थ यत्कृतं विवरं भुवि॥
पातालगंगातोयेन पूरितं पापहारिणा॥ ३६.१८ ॥

तस्य नाम ददौ स्कंदः सिद्धकूप इति स्मृतः॥
कृष्माष्टम्यां चतुर्दश्यामुपवासी नरः स्वयम्॥ ३६.१९ ॥

स्नात्वा कूपेऽर्चयेदीशं सिद्धेश्वरमनन्यधीः॥
प्रभूतभवसंभूतपापं तस्य विलीयते॥ ३६.२० ॥

सिद्धकुंडे च यः स्नात्वा श्राद्धं कुर्याद्विचक्षणः॥
सर्वकल्मषनिर्मुक्तो भक्तियोग्यो भवेभवे॥ ३६.२१ ॥

वृश्चाप्यक्षयस्तस्य तुष्टो रुद्रो वरं ददौ॥
प्रयाग वटतुल्योऽयमेतत्सत्यं न संशयः॥ ३६.२२ ॥

अत्रागत्य महाभागः क्षाद्धं कुर्यात्सुभक्तितः॥
पितृणामक्षयं तच्च सर्वेषां पिंडपातनम्॥ ३६.२३ ॥

ततो ब्रहमादयो देवाः स्कंदेन सहितास्तदा॥
सिद्धांबिकां महाशक्तिं प्रार्थयामासुरीश्वरीम्॥ ३६.२४ ॥

त्वयाविष्टो हि भगवान्मत्स्यरूपी जनार्दनः॥
जगदुद्धारणार्थाय चक्रे कर्माम्यनेकशः॥ ३६.२५ ॥

इति तां प्रार्थयामासुरत्र त्याज्यं न ते शुभे॥
अत्र स्थिताः सर्व इमे क्षेत्रपाला महाबलाः॥ ३६.२६ ॥

अष्टम्यां वा चतुर्दश्यां बलिपुष्पैश्च त्वां शुभे॥
ये पूजयंति ते पाल्याः सर्वापत्सु च या सदा॥ ३६.२७ ॥

एवमुक्ता सिद्धमाता तथेति प्रत्यपद्यत॥
स्थापयामासुरथ तां लिंगादुत्तरभागतः॥ ३६.२८ ॥

ततः क्षेत्रपतीन्देवाश्चतुःषष्टिं महेश्वरम्॥
सिद्धेयं नाम क्षेत्रस्य रक्षार्थं निदधुः स्वयम्॥ ३६.२९ ॥

त्वां च ये पूजयिष्यंति कार्यारभेषु सर्वदा॥
वर्षे वर्षे राजमाषबलिना च विशेषतः॥ ३६.३० ॥

तानसौ पालयेत्तुष्टः पिता लोकानिव स्वकान् सिद्धिकृतो देवास्तत्र सिद्धिविनायकम्॥ ३६.३१ ॥

कपर्दितनयं प्रार्थ्य स्थापयाचक्रिरे मुदा॥
तं च ये पूजयंत्यत्र कार्यारंभेषु सर्वदा॥ ३६.३२ ॥

तेषां सिद्धिं ददात्येष प्रबलो विघ्नराड्भवः॥
यद्यत्र पूजयेद्यस्तु सततं सिद्धसप्तकम्॥ ३६.३३ ॥

पश्येद्वा स्मरते वापि सर्वदोषैर्विमुच्यते॥
सिद्धेश्वरः सिद्धवटश्च साक्षात्सिद्धांबिका सिद्धविनायकश्च॥
सिद्धेयक्षेत्राधिपतिश्च सिद्धसरस्तथा सिद्धकूपश्च सप्त॥ ३६.३४ ॥

अत्र तुष्टो ददौ रुद्रः सुराणां दुर्लभान्वरान्॥
वैशाखमासस्याष्टम्यां कृष्णायां सिद्धकूपके॥ ३६.३५ ॥

स्नात्वा पिंडान्वटे कृत्वा पूजयन्मां च सिद्धभाक्॥
सदा योऽभ्यर्चयेन्मां च ब्रह्मचारी जितेंद्रियः॥ ३६.३६ ॥

अष्टाविष्टकरा नित्यं भवेयुस्तस्य सिद्धयः॥
मंत्रजाप्यं बलिं होममत्र यः कुरुते नरः॥ ३६.३७ ॥

एकचित्तः शुचिर्भूत्वा सोऽभूष्टां सिद्धिमाप्नुयात्॥
समाहितमनाश्चाथ सिद्धेशं यस्तु पश्यति॥ ३६.३८ ॥

तस्य सिद्धिर्भवत्येव विघ्नैर्यदि न हन्यते॥
सिद्धांबिका महादेवी ह्यत्र संनिहितास्ति या॥ ३६.३९ ॥

सिद्धिदा साधकेंद्राणां महाविद्यां जपंति ये॥
धीरेभ्यो ब्रह्मचारिभ्यः सत्यचित्तेभ्य एव च॥ ३६.४० ॥

मंत्रजाप्याद्ददात्येषा सर्वसिद्धीर्यथोप्सिताः॥
पातालस्य बिलं चैतद्गुहशक्त्या कृतं महत्॥ ३६.४१ ॥

सिद्धां बिकाप्रसादेन विघ्नक्षेत्रपयोर्मम॥
प्रत्यक्षं भविता यत्र नानाश्चर्याणि भूरिशः॥ ३६.४२ ॥

अत्र सिद्धिं प्रयास्यंति कोटिशः पुरुषाः सुराः॥
विद्याधरत्वं देवत्वं गंधर्वत्वं च नागता॥ ३६.४३ ॥

यक्षत्वं चामरत्वं च प्राप्स्यंत्यत्र च साधकाः॥
अत्र वै विजयोनाम स्थंडिलस्य प्रभावतः॥ ३६.४४ ॥

सिद्धांबिकां समाराध्य सिद्धिमाप्स्यति दुर्लभाम्॥
यो मां द्रक्ष्यति चात्रस्थं यश्च मां पूजयिष्यति॥
वादप्रचारतो वापि पुण्यावाप्तिर्भविष्यति॥ ३६.४५ ॥

**॥नारद उवाच॥**
त्र्यंबकेण वरेष्वेवं दत्तेष्वपि सुरोत्तमाः॥ ३६.४६ ॥

प्रहृष्टाः समपद्यंत गाथां चेमां जगुस्तदा॥
तेन यज्ञैर्जपैःस्तोत्रैस्तपो भिस्तोषिता वयम्॥ ३६.४७ ॥

सर्वे देवाः सिद्धिलिंगं यो नरः पूजयिष्यति॥
सर्वकामफलावाप्तिरित्येवं शंकरोऽब्रवीत्॥ ३६.४८ ॥

इत्युक्त्वा ते जयं प्राप्ताः स्कंदेन सहिताः सुराः॥
काराय्यं रम्यप्रासादान्नम्यैस्तारकसंभवैः॥ ३६.४९ ॥

चतुर्वर्गफलावाप्तिं दत्त्वा क्षेत्रस्य संययुः॥
केचित्स्कंदं प्रशंसंतस्तीर्थमन्ये हरिं परे॥ ३६.५० ॥

केचिल्लिंगानि पंचापि युद्धं केचिद्दिवं ययुः॥
ततोंऽतरिक्षे चालिंग्य महासेनं हरोऽब्रवीत्॥ ३६.५१ ॥

सप्तमे मारुतस्कंधे व स नित्यं प्रियात्मज॥
कार्येष्वहं त्वया पुत्र संप्रष्टव्यः सदैव हि॥ ३६.५२ ॥

दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि॥
स्तंभतीर्थे च वत्स्येऽहं न विमोक्ष्यामि कर्हिचित्॥ ३६.५३ ॥

इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः॥
ब्रह्मविष्णुमुखांश्चैव भक्त्या तैरभिनंदितः॥ ३६.५४ ॥

विसर्जिताः सुराजग्मुः स्वानिस्वान्यालयानि च॥
शर्वो जगाम कैलासं स्कंधं वै सप्तमं गुहः॥ ३६.५५ ॥

इत्येतत्कथितं पार्थ लिंगपंचकसंभवम्॥
यः पठेत्स्कंदसंबद्धां कथां मर्त्यो महामतिः॥ ३६.५६ ॥

श्रृणुयाच्छ्रावयेद्वापि स भवेत्कीर्तिमान्नरः॥
बह्वायुः सुभगः श्रीमान्कांतिमाञ्छुभदर्शनः॥ ३६.५७ ॥

भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः॥
शुचिर्भूत्वा पुमान्यश्च कुमारेश्वरसन्निधौ॥ ३६.५८ ॥

श्रृणुयात्स्कंदचरितं महाधनपतिर्भवेत्॥
बालानां व्याधिदुष्टानां राजद्वारोपसेविनाम्॥ ३६.५९ ॥

इदं तत्परमं धन्यं सर्वदोषहरं सदा॥
तनुक्षये च सायुज्यं षण्मुखस्य व्रजेन्नरः॥ ३६.६० ॥

वरमेनं ददुर्देवाः स्कंदस्याथ गता दिवम्॥ ३६.६१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे पंचलिंगोपाख्यानसमाप्तिवर्णनंनाम षट्त्रिंशोऽध्यायः॥ ३६ ॥ छ ॥

**॥श्रीनारद उवाच॥**

बर्बरीतीर्थमाहात्म्यमथो वक्ष्यामि तेऽर्जुन॥
यथा बर्बरिका जाता शतश्रृंगा नृपात्मजा॥ ३७.१ ॥

कुमारिकेति विख्याता तस्या नाम्ना प्रकथ्यते॥
इदं कौमारिकाखंडं चतुर्वर्गफलप्रदम्॥ ३७.२ ॥

यया कृता पृथिव्यां च नानाग्रामादिकल्पना॥
इदं भरतखंडं च यया सम्यक्प्रकल्पितम्॥ ३७.३ ॥

**॥धनंजय उवाच॥**

महदेतन्ममाश्चर्यं श्रोतव्यं परमं मुने॥
कुमारीचरितं सर्वं ब्रूहि मह्यं सविस्तरम्॥ ३७.४ ॥

कथं विश्वमिदं जातं कर्मजातिप्रकल्पितम्॥
कथं वा भारतं खंडं शुश्रूषेय सदा मम॥ ३७.५ ॥

**॥नारद उवाच॥**

अव्यक्तोऽस्मिन्निरालोके प्रधानपुरुषावुभौ॥
अजौ समागतावेकौ केवलं श्रृणुमो वयम्॥ ३७.६ ॥

ततः स्वभावकालाभ्यां स्वरूपाभ्यां समीरितम्॥
ईक्षणेनैव प्रकृतेर्महत्ततत्त्वमजायत॥ ३७.७ ॥

महत्ततत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत॥
त्रिधा तन्मुनिभिः प्रोक्तं सत्त्वरासतामसम्॥ ३७.८ ॥

तामसात्पंच जातानि तन्मात्राणि वुदुर्बुधाः॥
तन्मात्रेभ्यश्च भूतानि वेशेषाः पंच तद्भवाः॥ ३७.९ ॥

सात्त्विकाच्चाप्यहंकाराद्विद्वि कर्मेंद्रियाणि च॥
एकादशं मनश्चैव राजसं च द्वयोर्विदुः॥ ३७.१० ॥

चतुर्विंशतितत्त्वानि जातानीति पुरा विदुः॥
सदाशिवेन वै पुंसा तानि दृष्टानि भारत॥ ३७.११ ॥

बुद्बुदाकारतां जग्मुरंडं जातं ततः शुभम्॥
शकतोटिप्रमाणं च ब्रह्मांडमिदमुच्यते॥ ३७.१२ ॥

आत्मास्य कथितो ब्रह्मा व्यभजत्स त्रिधा त्विदम्॥
ऊर्ध्वं तत्र स्थिता देवा मध्ये चैव च मानवाः॥ ३७.१३ ॥

नागा दैत्याश्च पाताले त्रिधैतत्परिकल्पितम्॥
ऐकैकं सप्तधाभूय ततस्तेन प्रकल्पितम्॥ ३७.१४ ॥

पातालानि च द्वीपानि स्वर्लोकाः सप्तसप्त च॥
सप्त द्वीपानि वक्ष्यामि श्रृणु तेषां प्रकल्पनाम्॥ ३७.१५ ॥

लक्षयोजनविस्तारं जंबूद्वीपं प्रकीर्त्यते॥
सूर्यबिंबसमाकारं तावत्क्षारार्णवावृतम्॥ ३७.१६ ॥

शाकद्वीपं द्विगुणतो जंबूद्वीपात्ततः परम्॥
तावता क्षीरतोयेन समुद्रेण परीवृतम्॥ ३७.१७ ॥

सुरातोयेन दैत्यानां मोहकार्यर्णवेन हि॥
पुष्करं तु ततो द्वीपं द्विगुणं तावता वृतम्॥ ३७.१८ ॥

कुशद्वीपं द्विगुणतस्ततस्तत्परतः स्मृतम्॥
दधितोयेन परितस्तावदर्णवसंवृतम्॥ ३७.१९ ॥

ततः परं क्रौञ्चसंज्ञं द्विगुणं हि घृताब्धिना॥
ततः शाल्मलिद्वीपं च द्विगुणं तावतैव च॥ ३७.२० ॥

इक्षुसारस्वरूपेण समुद्रेण परिवृतम्॥
गोमेदं तस्य परितो द्विगुणं तावता वृतम्॥ ३७.२१ ॥

स्वादुतोयेन रम्येण समुद्रेण समंततः॥
एवं कोटिद्वयं पार्थ लक्षपंचाशतत्रयम्॥ ३७.२२ ॥

पंचाशच्च सहस्राणि सप्तद्वीपाःससागराः॥
दशोत्तराणि पंचैव अंगुलानां शतानि च॥ ३७.२३ ॥

अपां वृद्धिक्षयो दृष्टः पक्षयोः शुक्लकृष्णयोः॥
ततो हेममयी भूमिर्दशकोट्यः कुरूद्वह॥ ३७.२४ ॥

देवानां क्रीडनस्थानं लोकालोकस्ततः परम्॥
पर्वतो वलयाकारो योजनायुतविस्तृतः॥ ३७.२५ ॥

अस्य बाह्ये तमो घोरं दुष्प्रेक्ष्यं जीववर्जितम्॥
पंचत्रिंशत्स्मृताः कोट्यो लक्षाण्येकोनविंशतिः॥ ३७.२६ ॥

चत्वारिंशत्सहस्राणि योजनानां च फाल्गुन॥
सप्तसागरमानस्तु गर्भोदस्तदनंतरम्॥ ३७.२७ ॥

कोटियोजनविस्तारः कटाहश्च संव्यवस्थितः॥
ब्रह्मणोंऽडं कटाहेन संयुक्तं मेरुमध्यतः॥ ३७.२८ ॥

पंचाशत्कोटयो ज्ञेया दशदिक्षु समंततः॥
जंबुद्वीपस्य मध्ये तु मेरुनामास्ति पर्वतः॥ ३७.२९ ॥

स लक्षयोजनो ज्ञेयो ह्यधश्चोर्ध्वं प्रमाणतः॥
षोडशैव सहस्राणि योजनानामधः स्थितः॥ ३७.३० ॥

उच्छ्रयश्चतुराशीतिर्द्वात्रिंशन्मूर्ध्नि विस्तृतः॥
त्रिभिः शृंगैः समायुक्तः शरावाकृतिमस्तकः॥ ३७.३१ ॥

मध्यशृंगे ब्रह्मवास ऐशान्यां त्र्यंबकस्य च॥
नैर्ऋत्ये वासुदेवस्य हेमशृंगं च ब्रह्मणः॥ ३७.३२ ॥

रत्नजं शंकरस्यापि राजतं केशवस्य च॥
मेरुदिक्षु चतसृषु विष्कंभा गिरयः स्मृताः॥ ३७.३३ ॥

पूर्वेण मंदरो नामदक्षिणे गंधमादनः॥
विपुलः पश्चिमो ज्ञेयः सुपार्श्वस्तु तथोत्तरे॥ ३७.३४ ॥

कदंबो मंदरे ज्ञेयोजंबुर्वै गंधमादने॥
अश्वत्थो विपुले चैव सुपार्श्वेच वटोमतः॥ ३७.३५ ॥

एकादशशतायामाश्चत्वारो गिरिकेतवः॥
एतेषां संति चत्वारि वनानि जयमूर्धसु॥ ३७.३६ ॥

पूर्वं चैत्ररथं नामदक्षिणे गंधमादनम्॥
वैभ्राजंपश्चिमे ज्ञेयमुदक्चित्ररथं वनम्॥ ३७.३७ ॥

सरांसि चापि चत्वारि चतुर्दिक्षु निबोध मे॥
प्राच्येऽरुणोदसंज्ञं तु मानसं दक्षिणे सरः॥ ३७.३८ ॥

प्रत्यक्छीतो दकंनाम उत्तरे च महाह्रदः॥
विष्कंभगिरयो ह्येत उच्छ्रिताः पंचविंशतिः॥ ३७.३९ ॥

योजनानां सहस्राणि सहस्रं पिंडतः स्मृतम्॥
अन्ये च संति बहुशस्तत्र वै केसराचलाः॥ ३७.४० ॥

मेरोर्दक्षिणतश्चैव त्रयो मर्यादपर्वताः॥
निषधो हेमकूटश्च हिमवानिति ते त्रयः॥ ३७.४१ ॥

लक्षयोजनदीर्घाश्च विस्तीर्णा द्विसहस्रकम्॥
त्रयश्चोत्तरतो मेरोर्नीलः श्वेतोऽथ श्रृंगवान्॥ ३७.४२ ॥

माल्यवान्पूर्वतो मेरोर्गंधाख्यः पश्चिमे तथा॥
इत्येते गिरयः प्रोक्ता जंबुद्वीपे समंततः॥ ३७.४३ ॥

गंधमादनसंस्थाया महागजप्रमाणतः॥
फलानि जंबवास्तन्नाम्ना जंबूद्वीपमिति स्मृतम्॥ ३७.४४ ॥

आसीत्स्वायंभुवोनाम मनुराद्यः प्रजापतिः॥
आसीत्स्त्री शतरूपा तामुदुवोढ प्रजापतिः॥
प्रियव्रतोत्तानपादौ तस्याऽऽस्तां तनयावुभौ॥ ३७.४५ ॥

ध्रुवश्चोत्तानपादस्य पुत्रः परमधार्मिकः॥
भक्त्या स विष्णुमाराध्य स्थानं चैवाक्षयं गतः॥ ३७.४६ ॥

प्रियव्रतस्य राजर्षेरुत्पन्ना दश सूनवः॥
त्रयः प्रव्रजितास्तत्र परंब्रह्म समाश्रिताः॥ ३७.४७ ॥

सप्त सप्तसु द्वीपेषु तेन पुत्राः प्रतिष्ठिताः॥
जंबूद्वीपाधिपो ज्येष्ठ आग्नीध्र इति विश्रुतः॥ ३७.४८ ॥

तस्यासन्नव सुताः पार्थ नववर्षेश्वराः स्मृताः॥
तेषां नाम्ना च ते वर्षास्तिष्ठंत्यद्यापि चांकिताः॥ ३७.४९ ॥

योजनानां सहस्राणि नव प्रत्येकशः स्मृताः॥
मेरोश्चतुर्दशं खंडं गंधमाल्यवतोर्द्वयोः॥ ३७.५० ॥

अंतरे हेमभूमिष्ठमिलावृतमिहोच्यते॥
माल्यवत्सागरांतस्य भद्राश्वमिति प्रोच्यते॥ ३७.५१ ॥

गंधवत्सागरांतस्य केतुमालमिति स्मृतम्॥ ३७.५२ ॥

श्रृंगवज्जलधेरंतः कुरुखंडमिति स्मृतम्॥
श्रृंगवच्छ्वेतमध्ये च खण्डं प्रोक्तं हिरण्मयम्॥ ३७.५३ ॥

सुनीलश्वेतयोर्मध्ये खंडमाहुश्च रम्यकम्॥
निषधो हेमकूटश्च हरिखंडं तदंतरा॥ ३७.५४ ॥

हिमवद्धिमकूटांतः खण्डं किंपुरुषं स्मृतम्॥
हिमाद्रिजलधेरन्तर्नाभि खण्डमिति स्मृतम्॥ ३७.५५ ॥

नाभिखण्डं च कुरवो द्वे वर्षे धनुपाकृती॥
हिमवांश्च गिरिश्रृंगी ज्यास्थाने परिकीर्तितौ॥ ३७.५६ ॥

नाभेः पुत्रश्च ऋषभ ऋषभाद्बरतोऽभवत्॥
तस्य नाम्ना त्विदं वर्षं भारतं चेति कीर्त्यते॥ ३७.५७ ॥

अत्र धर्मार्थकामानां मोक्षस्य च उपार्जनम्॥
अन्यत्र भोगभूमिश्च सर्वत्र कुरुनंदन॥ ३७.५८ ॥

शाकद्वीपे च शाकोऽस्ति योजनानां सहस्रकः॥
तस्य नाम्ना च तद्वर्षं शाकद्वीपमिति स्मृतम्॥ ३७.५९ ॥

तस्य च प्रियव्रत एवाधिपतिर्नाम्ना मेधातिथिरिति॥ ३७.६० ॥

तस्य पुरोजवमनोजववेपमानधूम्रानीकचित्ररेफबहुरूपविश्वचारसंज्ञानि पुत्रनामानि सप्त वर्षाणि॥ ३७.६१ ॥

शाकद्वीपे च वर्ष ऋतव्रतसत्यव्रतानुव्रतनामानो वाय्यवात्कमं भगवंतं जपंति॥ ३७.६२ ॥

अंतः प्रविश्य भूतानि यो विभज्यात्मकेतुभिः॥
अंतर्यामीश्वरः साक्षात्पातु नो यद्वशे जगत्॥ ३७.६३ ॥

**॥इति जपः॥**
कुशद्वीपे कुशस्तंबो योजनानां सहस्रकः॥
तच्चिह्नचिह्नितं तस्मात्कुशद्वीपं ततः स्मृतम्॥ ३७.६४ ॥

तद्द्वीपपतिश्च प्रैयव्रतो हिरण्यरोमा तत्पुत्रवसुवसुदानदृढकविनाभिगुप्तसत्यव्रतवामदेवनामांकितानि सप्त वर्षाणि॥
वर्णाश्च कुलिशकोविदाभियुक्तकुलकसंज्ञा जातवेदसं भगवंतं स्तुवंति॥ ३७.६५ ॥

परस्य ब्रह्णः साक्षाज्जातवेदासि हव्यवाट्॥
देवानां पुरुषांगानां यज्ञेन पुरुषं यजः॥ ३७.६६ ॥

**॥इति स्तुतिः॥**
क्रौंचद्वीपे क्रौंचनामा पर्वतो योजनायतः॥
योऽसौ गुहेन निर्भिन्नस्तच्चिह्नं क्रौंचद्वीपकम्॥ ३७.६७ ॥

तत्र च प्रैयव्रतो घृतपृष्टिनामा तत्पुत्राममधुरुहमेघपृष्ठस्वदामऋताश्वलोहितार्णववनस्पतिइतिसप्तपुत्रनामांकितानि सप्त वर्षाणि॥ ३७.६८ ॥

वर्णाश्च गुरुऋषभद्रविणदेवकसंज्ञाः॥ ३७.६९ ॥

आपोमयं भगवंतं स्तुवंति॥ ३७.७० ॥

आपः पुरुषवीर्याश्च पुनंतीर्भूर्भूवःस्वश्च॥

तैः पुनरमीवघ्नाःसंस्पृशेतात्मना भुवः॥ ३७.७१ ॥

**॥इति जपः॥**

शाल्मलेर्नाम वृक्षस्य तत्रवासः सहस्रं योजनानां तच्चिह्नं शाल्मलिद्विपमुच्यते॥ ३७.७२ ॥

तस्याधिपतिः प्रैयव्रतो यज्ञबाहुस्तत्पुत्रसुरोचनसौमनस्यरमणकदेवबर्हिपारिभद्राप्यायनाभिज्ञाननामानि सप्तवर्षाणि॥ ३७.७३ ॥

वर्णाश्च श्रुतधरवीर्यवसुंधरइषंधरसंज्ञा भगवंतं सोमं यजंति॥ ३७.७४ ॥

स्वयोनिः पितृदेवेभ्यो विभजञ्छुक्लकृष्णयोः॥
अधः प्रजानां सर्वासां राजा नः सोमोस्तु॥ ३७.७५ ॥

इति जपः गोमेदनामा प्लक्षोस्ति सुरम्यो यस्य च्छायया॥
मोदोवृद्धिं गतं लौल्याद्गोमेदं द्वीपमुच्यते॥ ३७.७६ ॥

तत्र प्रैयव्रत इध्मजिह्वः पतिस्तत्पुत्रसिवसुरम्यसुभद्र शांत्यशप्तमृताभयनामांकितानि सप्त वर्षाणि॥ ३७.७७ ॥

वर्णाश्च हंसपतंगोर्ध्वांचनसत्यांगसंज्ञाश्चत्वारो भगवंतं सूर्यं यजंते॥ ३७.७८ ॥

प्रश्नस्य विष्णुरूपंयत्तत्रोत्थस्य ब्रह्मणोऽमृतस्य च॥
मृत्योश्च सूर्यमात्मानं धीमहि॥ ३७.७९ ॥

**॥इति जपः॥**

स्वर्णपत्राणि नियुतं योजनानां सहस्रकम्॥
पुष्करं ज्वलदा भाति तच्चिह्नं द्वीपपुष्करम्॥ ३७.८० ॥

तस्याधिपतिः प्रैयव्रतो वीतहोत्रनामा तत्पुत्रौ रमणकघातकौ॥ ३७.८१ ॥

तन्नामचिह्नतं खंडद्वयम्॥ ३७.८२ ॥

तयोरंतरालेमानसाचलो नाम वलयाकारः पर्वतो यस्मिन्भ्रमति भगवान्भास्कर इति॥ ३७.८३ ॥

तत्र वर्णाश्च न संति केवलं समानास्ते ब्रह्म ध्यायंति॥ ३७.८४ ॥

यद्यत्कर्ममयं लिंगं ब्रह्मलिंगं जनोर्चयन्॥
भेदेनैकांतमद्वैतं तस्मै भगवते नमः॥ ३७.८५ ॥

**॥इति जपः॥**

नैषु क्रोधो न मात्सर्यं पुण्यपापार्जनेन च॥
अयुतं द्विगुणं चापि क्रमादायुः प्रकीर्तितम्॥ ३७.८६ ॥

जपंतः कामिनीयुक्ता विहरंत्यमरा इव॥

अथ ते संप्रवक्ष्यामि ऊर्ध्वलोकस्य संस्थितिम्॥ ३७.८७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारिकाख्याने भूसंस्थितिवर्णनंनाम स्पतत्रिंशोऽध्यायः॥ ३७ ॥ छ ॥

**॥नारद उवाच॥**

भूमेर्योजनलक्षे च कौरव्य रविमंडलम्॥
योजनानां सहस्राणि भास्करस्य रथो नव॥ ३८.१ ॥

ईषादंडस्ततैवास्य द्विगुणः परिकीर्तितः॥
सार्धकोटिस्तथा सप्त नियुतानि विवस्वतः॥ ३८.२ ॥

योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम्॥
त्रिनाभि तच्च पंचारं षण्नेमि परिकीर्तितम्॥ ३८.३ ॥

चत्वारिंशत्सहस्राणि द्वितीयोऽक्षोऽपि विस्तृतः॥
पंच चान्यानि सार्द्धानि स्यन्दनस्य तु पांडव॥ ३८.४ ॥

अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः॥
ह्रस्वोऽक्षस्तद्युगार्द्धं च ध्रुवाधारं रथस्य वै॥ ३८.५ ॥

द्वितीयोऽक्षस्तथा सव्ये चक्रं तन्मानसे स्थितम्॥
हयाश्च सप्त च्छांदांसि तेषां नामानि मे श्रृणु॥ ३८.६ ॥

गायत्री च बृहत्युष्णिग्जगती त्रिष्टुवेव च॥
अनुष्टुप्पंक्तिरित्युक्ताश्छंदांसि हरयो रवेः॥ ३८.७ ॥

नैवास्तमनमर्कस्य नोदयः सर्वदा सतः॥
उदयास्तमनाक्यं हि दर्शनादर्शनं रवेः॥ ३८.८ ॥

शक्रदीनां पुरे तिष्ठन्स्पृशत्येष पुरत्रयम्॥
विकीर्णोऽतो विकर्णस्थस्त्रिकोणार्धपुरे तथा॥ ३८.९ ॥

अयनस्योत्तरस्यादौ मकरं याति भास्करः॥
ततः कुम्भं च मीनं च राशे राश्यंतरं तथा॥ ३८.१० ॥

त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम्॥
प्रयाति सविता कुर्वन्नहोरात्रं च तत्समम्॥ ३८.११ ॥

ततो रात्रिः क्षयं याति वर्धते तु दिनं दिनम्॥
ततश्च मिथुनस्यांते परां काष्ठामुपागतः॥ ३८.१२ ॥

राशिं कर्कटकं प्राप्य कुरुते दक्षिणायांनम्॥
कुलालचक्रपर्यंतो यथा शीघ्रं निवर्तते॥ ३८.१३ ॥

दक्षिणायक्रमे सूर्यस्तथा शीघ्रं निवर्तते॥
अतिवेगितया कालं वायुमार्गबलाच्चरन्॥ ३८.१४ ॥

तस्मात्प्रकृष्टां भूमिं स कालेनाल्पेन गच्छति॥
कुलालचक्रमध्यस्थो यता मंदं प्रसर्पति॥ ३८.१५ ॥

तथोदगयने सूर्यः सर्पते मंदविक्रमः॥
तस्माद्दीर्घेण कालेन भूमिमल्पं निगच्छति॥ ३८.१६ ॥

संध्याकाले च मंदेहाः सूर्यमिच्छंति खादितुम्॥
प्रजापतिकृतः शापस्तेषां फाल्गुन रक्षसाम्॥ ३८.१७ ॥

अक्षयत्वं शरीराणां मरणं च दिनेदिने॥
ततः सूर्यस्य तैर्युद्धं भवत्यत्यंतदारुणम्॥ ३८.१८ ॥

ततो गायत्रिपूतं यद्द्विजास्तोयं क्षिपंति च॥
तेन दह्यंति ते पापाः संध्योपासनतः सदा॥ ३८.१९ ॥

ये संध्यां नाप्युपासंते कृतघ्ना यांति रौरवम्॥
प्रतिमासं पृथक्सूर्य ऋषिगन्धर्वराक्षसैः॥ ३८.२० ॥

अप्सरोग्रामणीसर्पैरथो याति च सप्तभिः॥
धातार्यमा मित्रवरुणौ विवस्वानिन्द्र एव च॥ ३८.२१ ॥

पूषा च सविता सोऽथ भगस्त्वष्टा च कीर्तितः॥
विष्णुश्चैत्रादिमासेषु आदित्या द्वादश स्मृताः॥ ३८.२२ ॥

ततो दिवाकरस्थानान्मंडलं शशिनः स्तितम्॥
लक्षमात्रेण तस्यापि त्रिचक्रोरथ उच्यते॥ ३८.२३ ॥

कुंदाभा दश चैवाश्वा वामदक्षिणतो युताः॥
पूर्णे शतसहस्रे च योजनानां निशाकरात्॥ ३८.२४ ॥

नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते॥
चतुर्दश चार्बुदान्यप्यशीतिः सरितांपतिः॥ ३८.२५ ॥

विंशतिश्च तथा कोट्यो नक्षत्राणां प्रकीर्तिताः॥
द्वे लक्षे चोत्तरे तस्मादबुधो नक्षत्रमण्डलात्॥ ३८.२६ ॥

वाय्वग्निद्रव्यसंभूतो रथश्चंद्रसुतस्य च॥
पिशंगैस्तुर--- सोष्टाभिर्वायवेगिभिः॥ ३८.२७ ॥

द्विलक्षश्चोत्तरे तस्मादबुधाच्चाप्युशना स्मृतः॥
शुक्रस्यापि रथोष्टाभिर्युक्तोऽभूत्संभवैर्हयैः॥ ३८.२८ ॥

लक्षद्वयेन भौमस्य स्मृतो देवपुरोहितः॥
अष्टाभिः पांडुरैरश्वैर्युक्तोऽस्य कांचनोरथः॥ ३८.२९ ॥

सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे समुपस्थितः॥
आकाशसंभवैरश्वैरष्टाभिः शबलै रथः॥ ३८.३० ॥

स्वर्भानोस्तुरगाश्चाष्टौ भृंगाभा धूसरारथम्॥
वहंति च सकृद्युक्ता आदित्याधःस्थितास्तथा॥ ३८.३१ ॥

सौरेर्लक्षं स्मृतं चोर्ध्वं ततः सप्तर्षिमण्डलम्॥
ऋषिभ्यश्चापि लक्षेण ध्रुवश्चोर्ध्वं व्यवस्थितः॥ ३८.३२ ॥

मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः॥
ध्रुवोऽपि शिंशुमारस्य पुच्छाधारे व्यवस्थितः॥ ३८.३३ ॥

यमाहुर्वासुदेवस्य रूपमात्मानमव्ययम्॥
वायुपाशैर्ध्रुवे बद्धं सर्वमेतच्च फाल्गुन॥ ३८.३४ ॥

नवयोजनसाहस्रं मण्डलं सवितुः स्मृतम्॥
द्विगुणं सूर्यविस्तारान्मण्डलं शशिनः स्मृतम्॥ ३८.३५ ॥

तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात्प्रसर्पति॥
उद्धृत्य पृथिवीच्छायां निर्मलां मण्डलाकृतिः॥ ३८.३६ ॥

चन्द्रस्य षोडशो भागो भार्गवश्च विधीयते॥
भार्गवात्पादहीनस्तु विज्ञेयोऽथ बृहस्पतिः॥ ३८.३७ ॥

बृहस्पतेः पादहीनौ वक्रसौरी बुधस्तथा॥
शतानि पंच चत्वारित्रीणि द्वे चैकयोजनम्॥ ३८.३८ ॥

योजनार्धप्रमाणानि भानि ह्रस्वं न विद्यते॥
भूमिलोकश्च भूर्लोकः पादगम्यः प्रकीर्तितः॥ ३८.३९ ॥

भूमिसूर्यांतरं तच्च भुवर्लोकः प्रकीर्तितः॥
ध्रुवसूर्यांतरं तच्च नियुतानि चतुर्दश॥ ३८.४० ॥

स्वर्लोकः सोऽपि गदितो लोकसंस्थानचिंतकैः॥
ध्रुवादूर्ध्वं तथा कोटचिर्महर्लोकः प्रकीर्तितः॥ ३८.४१ ॥

द्वे कोट्यौ च जनो यत्र निवसंति चतुःसनाः॥
चतुर्भिश्चापि कोटीभिस्तपोलोकस्ततः स्मॉतः॥ ३८.४२ ॥

वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः॥
षड्गुणेन तपोलोकात्सत्यलोको विराजते॥ ३८.४३ ॥

अपुनर्मरका यत्र ब्रह्मलोको हि स स्मृतः॥
अष्टादस तथा कोट्यो लक्षाण्यशीतिपंच च॥ ३८.४४ ॥

शुभं निरुपमं स्थानं तदूर्ध्वं संप्रकाशते॥
भूर्भूवःस्वरिति प्रोक्तं त्रैलोक्यं कृतकं त्विदम्॥ ३८.४५ ॥

जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम्॥
कृतकाकृतयोर्मध्ये मर्हर्लोक इति स्मृतः॥ ३८.४६ ॥

शून्यो भवति कल्पांते योत्यंतं न विनश्यति॥
एते सप्त समाख्याता लोकाः पुण्यैरुपार्जिताः॥ ३८.४७ ॥

यज्ञैर्दानैर्जपैर्होमैस्तीर्थैर्व्रतसमुच्चयैः॥
वेदादिप्रोक्तैरन्यैश्च साध्याँल्लोकानिमान्विदुः॥ ३८.४८ ॥

ततश्चांडस्य शिरसो धारा नीरमयी शिवा॥
सर्वलोकान्समाप्लाव्य गंगा मेरावुपागता॥ ३८.४९ ॥

ततो महीतलं सर्वं पातालं प्रविवेश सा॥
अंडमूर्ध्नि स्थिता देवी सततं द्वारवासिनी॥ ३८.५० ॥

देवीनां कोटिकोटीभिः संवृता पिंगलेन च॥
तत्र स्थिता सदा रक्षां कुरुतेऽण्डस्य सा शुभा॥ ३८.५१ ॥

निहंति दुष्टसंघातान्महाबलपराक्रमा॥
वायुस्कंधानि सप्तापिश्रृणुयद्वत्स्थितान्यपि॥ ३८.५२ ॥

पृथिवीं समभिक्रम्य संस्थितो मेघमंडले॥
प्रवहोनाम यो मेघान्प्रवहत्यतिशक्तिमान्॥ ३८.५३ ॥

धूमजाश्वोष्मजा मेघाः सामुद्रैयन पूरिताः॥
तोयैर्भवंति नीलांगा वर्षिष्ठाश्चैव भारत॥ ३८.५४ ॥

द्वितीयश्चावहो नाम निबद्धः सूर्यमंडले॥
तेन बद्धं ध्रुवेणेदं भ्राम्यते सूर्यमंडलम्॥ ३८.५५ ॥

तृतीयश्चोद्वहो नाम चंद्रस्कंधे प्रतिष्ठितः॥
बद्धं ध्रुवेण येनेदं भ्राम्यते चंद्रमंडलम्॥ ३८.५६ ॥

चतुर्थः संवहो नाम स्थितो नक्षत्रमण्डले॥
वातरश्मिभिराबद्धं ध्रुवेण सह भ्राम्यते॥ ३८.५७ ॥

ग्रहेषु पंचमः सोऽपि विवहो नाम मारुतः॥
ग्रहचक्रमिदं येन भ्राम्यते ध्रुवसंधितम्॥ ३८.५८ ॥

षष्ठः परिवहो नाम स्थितः सप्तर्षिमंडले॥
भ्रमंति ध्रुवसंबद्धा येन सप्तर्षयो दिवि॥ ३८.५९ ॥

सप्तमश्च ध्रुवे बद्धो वायुर्नाम्ना परावहः॥
येन संस्थापितं ध्रौव्यं चक्रं चान्यानि भारत॥ ३८.६० ॥

यं समासाद्य वेगेन दिशामंतं प्रपेदिरे॥
दक्षस्य दश पुत्राणां सहस्राणि प्रजापतेः॥ ३८.६१ ॥

एवमेते दितेः पुत्राः सप्तसप्त व्यवस्थिताः॥
अनारमंतः संवांति सर्वगाः सर्वधारिणः॥ ३८.६२ ॥

ध्रुवादूर्ध्वमसूर्यं चाप्यनक्षत्रमतारकम्॥
स्वतेजसा स्वशक्त्या चाधिष्ठितास्ते हि नित्यदा॥ ३८.६३ ॥

इत्यूर्ध्वं ते समाख्यातं पातालान्यथ मे शृणु॥ ३८.६४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहास्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारिकाक्याने लोकव्यवस्थितिवर्मनंनामाष्टत्रिंशोऽध्यायः॥ ३८ ॥ छ ॥

**॥नारद उवाच॥**

सहस्रसप्तत्युच्छ्राये पातालानि परस्परम्॥
अतलं वितलं चैव नितलं च रसातलम्॥ ३९.१ ॥

तलातलं च सुतलं पातालं चापि सप्तमम्॥
कृष्णशुक्लारुणाः पीताः शर्कराशैलकांचनाः॥ ३९.२ ॥

भूमयो यत्र कौरव्य वरप्रासादशोभिताः॥
तेषु दानवदैतेयनागाश्चैव सहस्रसः॥ ३९.३ ॥

स्वर्लोकादपि रम्याणि दृष्टानि बहुशो मया॥
आह्लादकारिणो नानामण्यो यत्र पन्नगः॥ ३९.४ ॥

दैत्यदानवकन्याभिर्महारूपाभिरन्विते॥
पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते॥ ३९.५ ॥

यत्र नोष्णं न वा शीतं न वर्षं दुःखमेव च॥
भक्ष्यभोज्यमहाभोगकालो यत्रापि जायते॥ ३९.६ ॥

पाताले सप्तमे चास्ति लिंगं श्रीहाटकेश्वरम्॥
ब्रह्मणा स्थापितं पार्थ सहस्रयोजनोच्छ्रितम्॥ ३९.७ ॥

हाटकस्य तु लिंगस्य प्रासादो योजनायुतः॥
सर्वरत्नमयो दिव्यो नानाश्चयविभूषितः॥ ३९.८ ॥

तच्चार्यंति तल्लिंगं नानानागेन्द्रसत्तमाः॥
तदधस्ताज्जलं भूरि तस्याधो नरकाः स्मृताः॥ ३९.९ ॥

पापिनो येषु पात्यंते तान्छृणुष्व महामते॥
कोटयः पंचपंचाशद्राजानश्चैकविंशति॥ ३९.१० ॥

रौरवः शूकरो रोधस्तालो विशसनस्तथा॥
महाज्वालस्तप्तकुम्भो लवणोथ विमोहकः॥ ३९.११ ॥

रुधिरांधो वैतरणी कृमिशः कृमिभोजनः॥
असिपत्रवनं कृष्णो लालाभक्ष्यश्च दारुमः॥ ३९.१२ ॥

तथा पूयवहः पापो वह्निज्वालोऽप्यधःशिराः॥

संदंशः कृष्णसूत्रश्च तमश्चावीचिरेवच॥ ३९.१३ ॥

श्वभोजनो विसूचिश्चाप्यवीचिश्च तथाऽपरः॥
कूटसाक्षी रौरवं च रोधं गोविप्ररोधकः॥ ३९.१४ ॥

सुरापः सूकरं याति तालं मिथ्याम नुष्यहा॥
गुरुतल्पी तप्तकुम्भं तप्तलोहं च भक्तहा॥ ३९.१५ ॥

गुरूणामवमंता यचो महाज्वाले निपात्यते॥
लवणं शास्त्रहंता च निर्मर्यादो विमोहके॥ ३९.१६ ॥

कृमिभक्ष्ये देवद्वेष्टा कृमिशे तु दुरिष्टकृत्॥
पितृदेवात्पूर्वमश्नल्लाँलाभक्ष्ये प्रयाति च॥ ३९.१७ ॥

मिथ्याजीवविरोधी विशसने कूटशस्त्रकृत्॥
अधोमुखे ह्यसद्ग्राही एकाशी पूयवाहके॥ ३९.१८ ॥

मार्ज्जारकुक्कुटश्वानपक्षिपोष्टा प्रयाति च॥
बधिरांधगृहक्षेत्रतृणधान्यादिज्वालकः॥ ३९.१९ ॥

नक्षत्ररंगजीवी च याति वैतरणीं नरः॥
धनयौवनमत्तो यो धनहा कृष्णमेति सः॥ ३९.२० ॥

असिपत्रवनं याति वृक्षच्छेदी वृथैव यत्॥
कुहकाजीविनः सर्वे वह्निज्वाले पतंति ते॥ ३९.२१ ॥

परस्त्रीं च परान्नं च गच्छन्संदंशमेति च॥
दिवास्वप्नपरा ये व्रतलोपपराश्च ये॥ ३९.२२ ॥

शरीरमदमत्ताश्च यांति चैते श्वभोजनम्॥
शिवं हरिं न मन्यंते यांत्यवीचिनमेव च॥ ३९.२३ ॥

इत्येवमादिभिः पापैरशास्त्रौघस्य सेवनैः॥
पतंत्येव महाघोरनरकेषु सहस्रशः॥ ३९.२४ ॥

तस्माद्य इच्छेदेतेभ्यो विमोक्षं बुद्धिमान्नरः॥
श्रुतिमार्गेण तेनाच्यौं देवौ हरिहरावुभौ॥ ३९.२५ ॥

नरकाणामधोभागे स्थितः कालाग्निसंज्ञकः॥
तदधो हट्टकश्चैव अनंतस्तदधः स्मृतः॥ ३९.२६ ॥

यस्यैतत्सकलं विश्वं मूर्धाग्रे सर्षपायते॥
इत्यनंतप्रभावात्स ह्यनंत इति कीर्त्यते॥ ३९.२७ ॥

दिशां गजास्तत्र पद्मकुमुदांजनवामनाः॥
तदधोंऽडकटाहश्च एकवीरास्ति तत्र च॥ ३९.२८ ॥

चतुर्लक्षसहस्राणि नवतिश्च शतानि च॥
एतनैव प्रमाणेन उदकं च ततः स्मृतम्॥ ३९.२९ ॥

तदधो नरकाः कोट्यो द्विकोट्योऽग्निस्ततो महान्॥
चत्वारिंशत्सहस्रैश्च तदधस्तम उच्यते॥ ३९.३० ॥

चत्वारिंश्च्चकोट्यस्तु चतस्रश्च ततः पराः॥
एकोननवतिर्लक्षाः सहस्राशीतिरेव च॥ ३९.३१ ॥

तदधोंऽडकटाहोथ कोटिमात्रस्तथापरः॥
देवी युक्ता कपालीशा दंडहस्तेन चापि सा॥ ३९.३२ ॥

देवीनां कोटिकोटीभिः संवृता तत्र पालिनी॥
संकर्षणस्य निःश्वासप्रेरितो दाहकोऽनलः॥ ३९.३३ ॥

कालाग्निं प्रेरयत्येव कल्पांते दह्यते जगत्॥
एवंविधमधःसूत्रं निर्मितं चात्र भारत॥ ३९.३४ ॥

मध्यसूत्रे कटाहे च पालकांस्ताञ्छृणुष्व मे॥
वसुधामा स्थितः पूर्वे शंखपालश्च दक्षिणे॥ ३९.३५ ॥

तक्षकेशः स्थितः पश्चादुत्तरे केतुमानिति॥
हरसिद्धिः सुपर्णाक्षी भास्करा योगनंदिनी॥ ३९.३६ ॥

कोटिकोटी युता देवी देवीनां पालयत्यदः॥
एवमेतन्महाश्चर्यं ब्रह्मांडं स्थापितं च यैः॥ ३९.३७ ॥

नमामि तानहं नित्यं ब्रह्मविष्णुमहेश्वरान्॥
विष्णुलोको रुद्रलोको बहिश्चास्मात्प्रकीर्त्यते॥ ३९.३८ ॥

तं च वर्णयितुं ब्रह्मा शक्तो नैवास्मदादयः॥
विमुक्ता यत्र संयांति नित्यं हरिहरव्रताः॥ ३९.३९ ॥

ब्रह्मांडं संवृतं ह्येतत्कटाहेन समंततः॥
कपित्थस्य यथा बीजं कटाहेन सुसंवृतम्॥ ३९.४० ॥

दशोत्तरेण पयसा वृतं तच्चापि तेजसा॥
तेजश्च वायुना वायुर्नभ साहंतया च तत्॥ ३९.४१ ॥

अहंकारश्च महता तं चापि प्रकृतिः परा॥
दशोत्तराणि सर्वाणि षडाहुः सप्तमं च तत्॥ ३९.४२ ॥

प्राकृतं चरणं पार्थ तदनंतं प्रकीर्तितम्॥
अंडानां तु सहस्राणां सहस्राण्ययुतानि च॥ ३९.४३ ॥

ईदृशानां तथा चात्र कोटिकोटिशतानि च॥
सर्वाण्येवंविधान्येव यादृशं कीर्तितंत्विदम्॥ ३९.४४ ॥

यस्यैवं वैभवं पार्थ तं नमामी सदाशिवम्॥
अहो मंदः स पापात्मा को वा तस्मादचेतनः॥ ३९.४५ ॥

य एवंविधसंमोहतारकं न शिवं भजेत्॥
अथ ते कीर्थयिष्यामि कालमानं निबोध तत्॥ ३९.४६ ॥

काष्ठा निमेषा दश पंच चाहुस्त्रिंशच्च काष्ठा गणयेत्कला हि॥
त्रिंशत्कलाश्चापि भवेन्मुहुर्त्तं तत्त्रिंशता रात्र्यहनी उभे च॥ ३९.४७ ॥

दिवसे पंच कालाः स्युस्त्रिमुहूर्ताः श्रृणुष्व तान्॥
प्रातस्ततः संगवश्च मध्याह्नश्चापराह्णकः॥ ३९.४८ ॥

सायाह्नः पंचमश्चापि मुहूर्ता दश पंच च॥
अहोरात्राः पंचदश पक्ष इत्यभिधीयते॥ ३९.४९ ॥

मासः पक्षद्वयेनोक्तो द्वौ मासौ चार्कजावृतुः॥
ऋतुत्रयं चाप्ययनं द्वेयने वर्षमुच्यते॥ ३९.५० ॥

चतुर्भेदं मासमाहुः पंचभेदं च वत्सरम्॥

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः॥ ३९.५१ ॥

इद्वत्सरस्तृतीयोऽसौ चतुर्थश्चानुवत्सरः॥
पंचमश्च युगोनाम गणनानिश्चयो हि सः॥ ३९.५२ ॥

मासेन च मनुष्याणामहोरात्रं च पैतृकम्॥
कृष्णपक्षस्त्वहः प्रोक्तः शुक्लपक्षश्च शर्वरी॥ ३९.५३ ॥

मानुषेण च वर्षेण दैविको दिवसः स्मृतः॥
अहस्तत्रो दगयनं रात्रिः स्याद्दक्षिणायनम्॥ ३९.५४ ॥

वर्षेण चैव देवानां मतः सप्तर्षिवासरः॥
सप्तर्षीणां च वर्षेण ध्रौवश्च दिवसः स्मृतः॥ ३९.५५ ॥

मनुष्याणां च वर्षाणि लक्षासप्तदशैव तु॥
अष्टाविंशतिसहस्राणि कृतं त्रेतायुगं ततः॥ ३९.५६ ॥

लक्षद्वादशसाहस्रषण्नवत्यधिकाः पराः॥
अष्टौ लक्षाश्चतुःषष्टिसहस्राणि च द्वापरः॥ ३९.५७ ॥

चतुर्लक्षं तु द्वात्रिंशत्सहस्राणि कलिः स्मृतः॥
चतुर्भिरेतैर्देवानां युगामित्यभिधीयते॥ ३९.५८ ॥

आयुर्मनोर्युगानां च साधिका ह्येकसप्ततिः॥
चतुर्दशमनूनां च कालेन ब्रह्मणो दिनम्॥ ३९.५९ ॥

युगानां च सहस्रेण स च कल्पः श्रृणुष्व तान्॥
भवोद्भवस्तपभव्य ऋतुर्वह्निर्वराहकः॥ ३९.६० ॥

सावित्र आसिकश्चापि गांधारः कुशिकस्तथा॥
ऋषभश्च तथा खड्गो गांधारीयश्च मध्यमः॥ ३९.६१ ॥

वैराजश्च निषादश्च मेघवाहनपंचमौ॥
चित्रको ज्ञान आकूतिर्मीनो दंशश्च बृंहकः॥ ३९.६२ ॥

श्वेतो लोहितरक्तौ च पीतवासाः शिवः प्रभुः॥
सर्वरूपश्च मासोऽयमेवं वर्षशतावधिः॥ ३९.६३ ॥

पूर्वार्धमपरार्धं च ब्रह्ममानमिदं स्मृतम्॥
विष्णोश्च शंकरस्यापि नाहं शक्तश्च वर्णने॥ ३९.६४ ॥

क्वाहमल्पमतिः पार्थ क्वापरौ हरित्र्यंबकौ॥
देविकेनैव मानेन पातालेष्वपि गण्यते॥ ३९.६५ ॥

इति ते सूचितं बुद्ध्या श्रृणु तत्प्राकृतं पुनः॥ ३९.६६ ॥

इति वैधात्रव्यवस्थितिः॥
**॥श्रीनारद उवाच॥**
ऋषभोनाम यन्नाम्ना नानापाषंड कल्पनाः॥
कलौ पार्थ भविष्यंति लोकानां मोहनात्मिकाः॥ ३९.६७ ॥

तस्य पुत्रस्तु भरतः शतश्रृंगस्तु तत्सुतः॥
तस्य पुत्राष्टकं जातं तथैकाच कुमारिका॥ ३९.६८ ॥

इंद्रद्वीपः कसेरुश्च ताम्रद्वीपो गभस्तिमान्॥
नागः सौम्यश्च गांधर्वो वरुणश्च कुमारिका॥ ३९.६९ ॥

वदनं चापि कन्यायाः पार्थ बर्करिकाकृति॥
श्रृणु तत्कारणं सर्वं महाश्चर्यसमन्वितम्॥ ३९.७० ॥

महीसागरपर्यंतं वृक्षराजिविराजिते॥
जालीगुल्मलताकीर्णे स्तंभतीर्थस्य संनिधौ॥ ३९.७१ ॥

अजासमजतो मध्यात्काचिदेका च बर्करी॥
भ्रांता सती समायाता प्रदेशे तत्र दुश्चरे॥ ३९.७२ ॥

इतस्ततो भ्रमंति सा जालिमध्ये समंततः॥
निर्गंतुं नैव शक्नोति क्षुत्पिपासार्दिता शुभा॥ ३९.७३ ॥

विलग्ना जालिमध्ये तु ततः पंचत्वमागता॥
कालेन कियता तस्य त्रुटित्वा शिरसो ह्यधः॥ ३९.७४ ॥

पपात शनिदर्शे च महीसागरसंगमे॥
सर्वतीर्थमये तत्र सर्वपापप्रमोचने॥ ३९.७५ ॥

शिरस्तु तदवस्थं हि समग्रं तत्र संस्थितम्॥

जालिगुल्मावलग्नं च तस्या नैवापतज्जले॥ ३९.७६ ॥

शेषकायप्रपातेन महीसागरसंगमे॥
तत्तीर्थस्य प्रभावेन बर्करीसा कुरूद्वह॥ ३९.७७ ॥

शकश्रृंगस्य वै राज्ञः सिंहलेष्वभवत्सुता॥
मुखं बर्करिकातुल्यं व्यक्तं तस्या व्यजायत॥ ३९.७८ ॥

दिव्यनारी शुभाकारा शेषकाये बभौ शुभा॥
पूर्वं तस्याप्यपुत्रस्य राज्ञः पुत्रशतोपमा॥ ३९.७९ ॥

पुत्री जाता प्रमोदेन स्वजनानंदवर्धिनी॥
ततस्तस्या विलोक्याथ मुखं वर्करिकाकृति॥ ३९.८० ॥

विस्मयं समनुप्राप्ताः सर्वे ते राजपूरुषाः॥
विषादं परमापन्नो राजा सांतःपुरस्तदा॥ ३९.८१ ॥

खिन्नाः प्रकृतयः सर्वास्तादृग्रूपविलोकनात्॥
तत्किमित्येतदाश्चर्यमूचुः पौराः सुविस्मिताः॥ ३९.८२ ॥

ततः सा यौवनं प्राप्ता साक्षाद्देवसुतोपमा॥
स्वमुखं दर्पणे वीक्ष्यस्मृतः पूर्वो भवस्तया॥ ३९.८३ ॥

तत्तीर्थस्य प्रभावेण मातृपित्रोर्निवेदितम्॥
विषादो नैव कर्तव्यो मदर्थे तात निश्चितम्॥ ३९.८४ ॥

मा शोकं कुरु मे मातः पूर्वजन्मार्जितं फलम्॥
ततः पूर्वं स्ववृत्तांतमुक्त्वा सा च कुमारिका॥ ३९.८५ ॥

पूर्वजन्मोद्भवः कायस्यस्या यत्रापतत्तथा॥
गमनाय तमुद्देशं विज्ञप्तौ पितरौ तया॥ ३९.८६ ॥

अहं तात गमिष्यामि महीसागरसंगमम्॥
भवामि तत्र संप्राप्ता यथा कुरु तथा नृप॥ ३९.८७ ॥

ततः पित्रा प्रतिज्ञातं शतश्रृंगेण तत्तथा॥
तस्याः संवाहनं चक्रे राजा पोतैः सरत्नकैः॥ ३९.८८ ॥

स्तंभतीर्थं ततः साऽपि प्राप्य पोतार्यसंयुता॥
भूरिदानं ततश्चक्रे दानं सर्वस्वलक्षणम्॥ ३९.८९ ॥

जालिगुल्मांतरेऽन्विष्य ततो दृष्टं निजं शिरः॥
अस्थिचर्मावशेषं च तदादाय प्रयत्नतः॥ ३९.९० ॥

दग्ध्वा संगमसांनिध्ये क्षिप्तान्यस्थीनि संगमे॥
ततस्तीर्थप्रभावेण मुखं जातं शशिप्रभम्॥ ३९.९१ ॥

न तादृग्देवकन्यानां न तादृङ्नागयोषिताम्॥
न तादृङ्मर्त्यनारीणां तस्या यादृङ्मुखं मुखम्॥ ३९.९२ ॥

सुरासुरनराः सर्वे तस्या रूपेण मोहिताः॥
बहुधा प्रार्थयंत्येनां न सा वरमभीप्सति॥ ३९.९३ ॥

कष्टं तया मुदा तत्र प्रारब्धं दुश्चरं तपः॥
ततः संवत्सरे पूर्णे देवदेवो महेश्वरः॥ ३९.९४ ॥

प्रत्यक्षतां गतस्तस्यै वरदोऽस्मीति चाब्रवीत्॥
ततस्तं पूजयित्वा च कुमारी वाक्यमब्रवीत्॥ ३९.९५ ॥

यदि तुष्टोऽसि देवेश यदि देयो वरो मम॥
सांनिध्यं क्रियतामत्र सर्वकालं हि शंकर॥ ३९.९६ ॥

एवमस्त्विति शर्वेण प्रोक्ते हृष्टा कुमारिका॥
यत्र दग्धं शिरस्तस्या बर्कर्याः कुरुसत्तम॥ ३९.९७ ॥

बर्करेशः शिवस्तत्र तया संस्थापितस्तदा॥
मन्मुखान्महादाश्चर्यं श्रुत्वेदं च तलातलात्॥ ३९.९८ ॥

स्वस्तिकोनाम नागेंद्रः कुमारीं द्रष्टुमागतः॥
शिरसा गच्छता तेन यत्रोत्क्षिप्ता च भूरभूत्॥ ३९.९९ ॥

ईशाने बर्करेशस्य कूपोऽभूत्स्वस्तिकाभिधः॥
पूरितो गंगया पार्थसर्वतीर्थफलप्रदः॥ ३९.१०० ॥

दृष्ट्वा च स्थापितं लिंगं शिवस्तुष्टो वरं ददौ॥
येषां मृतशरीराणामत्र दाहः प्रजायते॥ ३९.१०१ ॥

क्षिप्यंतेब्धौ तथा स्थीनि तेषां स्यादक्षया गतिः॥
ते स्वर्गे सुचिरं कालं वसित्वात्र समागताः॥ ३९.१०२ ॥

राजानः सर्वसंपूर्णाः सप्रतापा भवंति ते॥
बर्करेशं च यो भक्त्या संपूजयति मानवः॥ ३९.१०३ ॥

स्नात्वार्णवमहीतोये तस्य स्यान्मनसेप्सितम्॥
कार्तिके च चतुर्द्दश्यां कृष्णायां श्रद्धयान्वितः॥ ३९.१०४ ॥

कूपे स्नानं नरः कृत्वा संतर्प्य च पितॄन्निजान्॥
पूजयेद्बर्करेशं यः सर्पपापैः स मुच्यते॥ ३९.१०५ ॥

एवं लब्ध्वा वरान्सर्वान्सा पुनः सिंहलं ययौ॥
शतश्रृङ्गाय पित्रे च वृत्तांतं स्वं न्यवेदयत्॥ ३९.१०६ ॥

तच्छ्रुत्वा विस्मितो राजा लोकाः सर्वे च फाल्गुन॥
प्रशशंसुर्महीतीर्थमाजग्मुश्च कृतादराः॥ ३९.१०७ ॥

स्नात्वा दत्त्वा च दानानि विविधानि च ते ततः॥
सिंहलं च ययुर्भूयस्तीर्थमाहात्म्यहर्षिताः॥ ३९.१०८ ॥

अनिच्छंत्यां कुमार्यां च वरं द्रव्यं च पार्थिवः॥
तथान्यदपि प्रीत्यासौ यद्ददौ नृपतिः श्रृणु॥ ३९.१०९ ॥

इदं भारतखंडं च नवधैव विभज्य सः॥
ददावष्टौ स्वपुत्राणां कुमार्यै नवमं तथा॥ ३९.११० ॥

तेषां विभेदान्वक्ष्यामि पर्वतैरुपशोभितान्॥
पुत्रनामानि वर्षाणि पर्वतांश्च श्रृणुष्व मे॥ ३९.१११ ॥

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः॥
विंध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः॥ ३९.११२ ॥

महेन्द्रपरतश्चैव इन्द्रद्वीपो निगद्यते॥
पारियात्रस्य चैवार्वाक्खण्डं कौमारिकं स्मृतम्॥ ३९.११३ ॥

सहस्रमेकमेकं च सर्वखण्डान्यमूनि च॥

नदीनां संभवं चापि संक्षेपाच्छृणु फाल्गुन॥ ३९.११४ ॥

वेदस्मृतिमुखा नद्यः पारियात्रोद्भवा मताः॥
नर्मदासरसाद्याश्च नद्यो विंध्याद्विनिर्गताः॥ ३९.११५ ॥

शतद्रूचन्द्रभागाद्या ऋक्षपर्वतसंभवाः॥
ऋषिकुल्याकुमार्याद्याः शुक्तिमत्पादसंभवाः॥ ३९.११६ ॥

तापी पयोष्णी निर्विंध्या कावेरी च महीनदी॥
कृष्णा वेणी भीमरथी सह्यपादोद्भवाः स्मृताः॥ ३९.११७ ॥

कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः॥
त्रिसामऋष्यकुल्याद्या महेन्द्रप्रभवाः स्मृताः॥ ३९.११८ ॥

एवं विभज्य पुत्रेभ्यः कुमार्यै च महीपतिः॥
शतशृंगो गिरं गत्वा उदीच्यां तप्तवांस्तपः॥ ३९.११९ ॥

तत्र तप्त्वा तपो घोरं ब्रह्मलोकं जगाम सः॥
शतश्रृंगो नृपश्रेष्ठः शतश्रृंगे नगोत्तमे॥ ३९.१२० ॥

यत्र जातोऽसि कौतेय पांडोस्त्वं सोदरैः सह॥
कुमारी च महाभागा स्तंभतीर्थस्थिता सती॥ ३९.१२१ ॥

खंडोद्भवेन द्रव्येण तेपे दानानि यच्छती॥
ततः केनापि कालेन भ्रातृभ्योऽष्टभ्य एव च॥ ३९.१२२ ॥

महावीर्यबलोत्साहा जाता नव नवात्मजाः॥
ते समेत्य समागम्य कुमारीं प्रोचिरे ततः॥ ३९.१२३ ॥

कुलदेवी त्वमस्माकं प्रसादं कुरु नः शुभे॥
अष्टौ खण्डानि चास्माकं विभज्य स्वयमेव च॥
देही द्वासप्ततीनां नो विभेदः स्याद्यथा न नः॥ ३९.१२४ ॥

इत्युक्ता सर्वधर्मज्ञा विज्ञाने ब्रह्मणा समा॥
द्वासप्ततिविभेदैः सा नव खंडान्यचीकरत्॥ ३९.१२५ ॥

तेषां नामानि ग्रामांश्च पत्तनानि च फाल्गुन॥
वेलाकूलानि संख्यां च वक्ष्यामि तव तत्त्वतः॥ ३९.१२६ ॥

कोटिश्चतस्रो ग्रामाणां नीवृदासीच्च मंडले॥
सार्धकोटिद्वयग्रामैर्देशो बालाक जच्यते॥ ३९.१२७ ॥

सपादकोटिर्ग्रामाणां पुरसाहणके विदुः॥
लक्षाश्चत्वार एवापि ग्रामाणामंधके स्मृताः॥ ३९.१२८ ॥

एको लक्षश्च नेपाले ग्रामाणां परिकीर्तितः॥
षट्त्रींशल्लक्षमानं तु कान्यकुब्जे प्रकीर्तितम्॥ ३९.१२९ ॥

द्वासप्ततिस्तथा लक्षा ग्रामा गाजणके स्मृताः॥
अष्टादश तथा लक्षा ग्रामाणां गौडदेशके॥ ३९.१३० ॥

कामरूपे च ग्रामाणां नवलक्षाः प्रकीर्तिताः॥
डाहले वेदसंज्ञे तु ग्रामाणां नवलक्षकम्॥ ३९.१३१ ॥

नवैव लक्षा ग्रामाणां कांतिपुरे प्रकीर्तिताः॥
नवलक्षास्तथा चैव माचिपुरे प्रकीर्तिताः॥ ३९.१३२ ॥

ओड्डियाणे तथा देशे नवलक्षाः प्रकीर्तिताः॥
जालंधरे तथा देशे नवलक्षाः प्रकीर्तिताः॥ ३९.१३३ ॥

लोहपूरे तथा देशे लक्षाः प्रोक्ता नवैव च॥
ग्रामाणां सप्तलक्षं च पांबीपुरे प्रकीर्तितम्॥ ३९.१३४ ॥

ग्रामाणां सप्तलक्षं च रटराजे प्रकीर्तितम्॥
हरीआले च ग्रामाणां लक्षपंचकसंमितम्॥ ३९.१३५ ॥

सार्धलक्षत्रयं प्रोक्तं द्रडस्य विषये तथा॥
सार्धलक्षत्रयं प्रोक्तं तथावंभणवाहके॥ ३९.१३६ ॥

एकविंशतिसाहस्रं ग्रामणां नीलपूरके॥
तथामलविषये पार्थ ग्राममाणामेकलक्षकम्॥ ३९.१३७ ॥

नरेंदुनामदेशे तु लक्षमेकं सपादकम्॥
अतिलांगलदेशे च लक्षः प्रोक्तः सपादकः॥ ३९.१३८ ॥

लक्षाष्टादशसाहस्रं नवती द्वे च मालवे॥

सयंभरे तथा देशे लक्षः प्रोक्तः सपादकः॥ ३९.१३९ ॥

मेवाडे च तथा प्रोक्तो लक्षश्चैकःसपादकः॥
अशीतिश्च सहस्राणि वागुरिः परिकीर्तितः॥ ३९.१४० ॥

ग्रामसप्ततिसाहस्रो गुर्जरात्रः प्रकीर्तितः॥
तथा सप्ततिसाहस्रः पांडर्विषय एव च॥ ३९.१४१ ॥

जहाहुतिसहस्राणि द्वाचत्वारिंशदेव च॥
अष्टषाष्टसहस्राणि प्रोक्तं काश्मीरमंडलम्॥ ३९.१४२ ॥

षष्टित्रिंशत्सहस्राणि ग्रामाणां कौंकणे विदुः॥
चतुर्दशशतं द्वे च विंशतीलघुकौंकणम्॥ ३९.१४३ ॥

सिंधुः सहस्रदशके ग्रामाणां परिकीर्तितः॥ ३९.१४४ ॥

चतुर्दशशते द्वे च विंशतिः कच्छमंडलम्॥
पंचपंचाशत्सहस्रं ग्रामाः सौराष्ट्रमुच्यते॥ ३९.१४५ ॥

एकविंशतिसहस्रो लाडदेशः प्रकीर्तितः॥
अतिसिंधुश्च ग्रामाणां दशसहस्र उच्यते॥
तथा चाश्वमुखं पार्थ दशसाहस्रमुच्यते॥ ३९.१४६ ॥

सहस्रदशकं चापि एकपादः प्रकीर्तितः॥ ३९.१४७ ॥

तथैव दशसाहस्रो देशः सूर्यमुखः स्मृतः॥
एकबाहुस्तथा देशो दशसाहस्रमुच्यते॥ ३९.१४८ ॥

सहस्रदशकं चैव संजायुरिति देशकः॥
शिवनामा तथा देशः सहस्रदशकः स्मृतः॥
सहस्राणि दश ख्यातं तथा कालहयंजयः॥ ३९.१४९ ॥

लिंगोद्भवस्तथा देशः सहस्राणि दशैव च॥
भद्रश्च देवभद्रश्च प्रत्येकं दशकौ स्मृतौ॥ ३९.१५० ॥

षट्त्रिंशच्च सहस्राणि स्मृतौ चटविराटकौ॥
षट्त्रिंशच्च सहस्राणि यमकोटिः प्रकीर्तिता॥ ३९.१५१ ॥

अष्टादश तथा कोट्यो रामको देश उच्यते॥
तोमरश्चापि कर्णाटो युगलश्च त्रयस्त्विमे॥ ३९.१५२ ॥

सपादलक्षग्रामाणां प्रत्येकं परिकीर्तितः॥
पंचलक्षाश्च ग्रामाणां स्त्रीराज्यं परिकीर्तितम्॥ ३९.१५३ ॥

पुलस्त्यविषयश्चापि दशलक्षक उच्यते॥
प्रत्येकं लक्षदशकौ देशौ कांबोजकोशलौ॥ ३९.१५४ ॥

ग्रामाणां च चतुर्लक्षो बाल्हिकः परिकीर्त्यते॥
षट्त्रिंशच्च सहस्राणि लंकादेशः प्रकीर्तितः॥ ३९.१५५ ॥

चतुःषष्टिसहस्राणि कुरुदेशः प्रकीर्तितः॥
सार्धलक्षस्तथा प्रोक्तः किरातविजयो जयः॥ ३९.१५६ ॥

पंच प्राहुस्तथा लक्षान्विदर्भायां च ग्रामकान्॥
चतुर्दशसहस्राणि वर्धमानं प्रकीर्तितम्॥ ३९.१५७ ॥

सहस्रदशकं चापि सिंहलद्वीपमुच्यते॥
षट्त्रिंशच्च सहस्राणि ग्रामाणां पांडुदेशकः॥ ३९.१५८ ॥

लक्षैकं च तथा प्रोक्तं ग्रामाणां तु भयाणकम्॥
षट्षष्टिं च सहस्राणि देशो मागध उच्यते॥ ३९.१५९ ॥

षष्टिसहस्राणि तथा ग्रामाणां पांगुदेशकः॥
त्रिंशत्साहस्र उक्तश्च ग्रामाणां च वरेंदुकः॥ ३९.१६० ॥

पंचविंशतिसाहस्रं मूलस्थानं प्रकीर्तितम्॥
चत्वारिंशत्सहस्राणि ग्रामाणां यावनः स्मृतः॥ ३९.१६१ ॥

चत्वार्येव सहस्राणि पक्षबाहुरुदीर्यते॥
द्वासप्ततिरमी देशाः ग्रामसंख्याः प्रकीर्तिताः॥ ३९.१६२ ॥

एवं भरतखंडेऽस्मिन्षण्णवत्येव कोटयः॥
द्वासप्ततिस्तथा लक्षाः पत्तनानां प्रकीर्तिताः॥ ३९.१६३ ॥

षट्त्रिंशच्च सहस्राणि वेलाकूलानि भारत॥
एवं विभज्य खंडानि भ्रातृव्याणां ददौ नव॥ ३९.१६४ ॥

आत्मीयमपि सा देवी अनिच्छुष्वपि तेषु च॥
यतो मान्येति भगिनी प्रति क्रुध्यंति भ्रातरः॥ ३९.१६५ ॥

भ्रातॄन्प्रति भगिनी च विचार्यैव ददौ शुभा॥
तत्कृत्वा सानुमान्यैतान्स्तंभतीर्थमुपागता॥ ३९.१६६ ॥

तदा तेषु च देशेषु चतुर्वर्गस्य साधनम्॥
सर्वेषां प्रवरं प्रोक्तं कुमारीश्वरमेव च॥ ३९.१६७ ॥

तत्रापि गुप्तक्षेत्रं च वेदैतत्सा कुमारिका॥
गुप्तक्षेत्रे कुमारेशं पूजयंति महाव्रता॥ ३९.१६८ ॥

तस्थौ स्नायंती षट्सु चैवापि संगमे॥
ततः कालप्रकर्षाच् प्रासादे स्कंदनिर्मिते॥ ३९.१६९ ॥

जीर्णे नव्यं स्वर्णमयं प्रासादं साप्यकारयत्॥
ततस्तुष्टो महादेवस्तस्या भक्त्यातितोषितः॥ ३९.१७० ॥

कुमारलिंगादुत्थाय प्रत्यक्षस्तामवोचत॥
भद्रे तवाहं भक्त्या च विज्ञानेन च तोषितः॥ ३९.१७१ ॥

जीर्णः पुनरुद्धृतोऽयं प्रासादस्तेन तोषितः॥
तव नाम्ना च विख्यातो भविष्यामि कुमारिके॥ ३९.१७२ ॥

कर्ता चापि तथोद्धर्ता द्वौ वै समफलौ स्मृतौ॥
कुमारेशः कुमारीश इति वक्ष्यंति मां ततः॥ ३९.१७३ ॥

बर्करेशे च ये दत्त वरा दत्ताः सदैव ते॥
तवापि प्राप्तः कालश्च समीपे वरवर्णिनि॥ ३९.१७४ ॥

अभर्तृकाया नार्याश्च न स्वर्गो मोक्ष एव च॥
यथैव वृद्धकन्यायाः सरस्वत्यास्तटे शुभे॥ ३९.१७५ ॥

तस्मात्त्वमत्र तीर्थे च महाकालमिति स्मृतम्॥
सिद्धिं गतं वृणु भद्रे पतित्वे वरवर्णिनि॥ ३९.१७६ ॥

ततः सा रुद्रवाक्येन वरयामास तं पतिम्॥

रुद्रलोकं ययौ चापि महाकालसन्विता॥ ३९.१७७ ॥

तत्र तां पार्वती प्राह समालिंग्य प्रहर्षिता॥
यस्मात्त्वया चित्रवच्च लिखिता पृथिवी शुभे॥ ३९.१७८ ॥

चित्रलेखेतिनाम्ना त्वं तस्माद्भव सखी मम॥
ततः सखी समभवच्चित्रलेखेति सा शुभा॥ ३९.१७९ ॥

ययानिरुद्धः कथित उषायाः पतिरुत्तमः॥
योगिनीनां वरिष्ठा या महाकालस्य वल्लभा॥ ३९.१८० ॥

अप्सुसा वार्षिकं बिंदुं पूर्णे वर्षशते पपौ॥
तपश्चरंती तस्मात्सा प्रोच्यते चाप्सरा दिवि॥ ३९.१८१ ॥

एवंविधा कुमारी सा लिंगमेतद्धि फाल्गुन॥
स्थापयामास शिवदं बर्करेश्वरसंज्ञितम्॥ ३९.१८२ ॥

तस्मादत्र नृणां दाहश्चास्थिक्षेपश्च भारत॥
प्रयागादधिकौ प्रोक्तौ महेशस्य वचो यथा॥ ३९.१८३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बर्करेश्वरमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः॥ ३९ ॥ छ ॥

**॥अर्जुन उवाच॥**

महाकालस्त्वसौ कश्च कथं सिद्धिमुपागतः॥
अस्मिंस्तीर्थे मुनिश्रेष्ठ महदाश्चर्य मत्र मे॥ ४०.१ ॥

सर्वमेतत्समाख्याहि श्रद्दधानाय पृच्छते॥ ४०.२ ॥

**॥नारद उवाच॥**

नमस्कृत्य महाकालं वरदं स्थाणुमव्ययम्॥
शक्तितश्चरितं तस्य वक्ष्ये पांडुकुलोद्वह॥ ४०.३ ॥

वाराणस्यां पुरि पुरा बभूव जपतां वरः॥
रुद्रजापी महाभागो मांटिर्नाम महायशाः॥ ४०.४ ॥

तस्यापुत्रस्य पुत्रार्थे रुद्रान्संजपतः किल॥
गतं वर्षशतं तुष्टस्ततस्तं प्राह शंकरः॥ ४०.५ ॥

मांटे तव सुतो धीमान्मत्प्रभावपराक्रमः॥
वंशस्य तव सर्वस्य समुद्धर्ता भविष्यति॥ ४०.६ ॥

इति श्रुत्वा रुद्रवचो मांटिर्हर्षं परं गतः॥
ततः काले कियन्मात्रे पत्नी मांटेर्महात्मनः॥ ४०.७ ॥

दधार गर्भं चटिका तपोमूर्तिधरा यथा॥
तस्य गर्भस्य वर्षाणि चत्वारि किल संययुः॥ ४०.८ ॥

न पुनर्मातुरुदरंत्यक्त्वा निर्गच्छते बहिः॥
ततो मांटिरुपामंत्र्य सामभिस्तमवोचत॥ ४०.९ ॥

वत्स सामान्यपुत्रोऽपि पित्रोः सुखकरः सदा॥
शुद्धायां मातरी भवोमत्तः किं पीडयस्यलम्॥ ४०.१० ॥

वत्स मानुष्यवासस्य स्पृहा तुभ्यं कथं न हि॥
यत्र धर्मार्थकामानां मोक्षस्यापि च संततिः॥ ४०.११ ॥

कदामनुष्या जायेम पूजा यत्र महाफला॥
पितॄणां देवतानां च नानाधर्माश्च यत्र हि॥ ४०.१२ ॥

इति भूतानि शोचंति नानायोनिगतान्यपि॥
तत्त्वं मानुष्यमतुलं स्पृहणीयं दिवौकसाम्॥
अनादृत्य कथं ब्रूहि स्थितश्चोदर एव च॥ ४०.१३ ॥

**॥गर्भ उवाच॥**

तात जानाम्यहं सर्वमेतत्परम दुर्लभम्॥
किं तु बिभेमि चातिमात्रं कालमार्गस्य नित्यशः॥ ४०.१४ ॥

द्वौ मार्गौ किल वेदेषु प्रोक्तौ कालोऽर्चिरेव च॥
अर्चिषा मोक्षमायांति कालमार्गेण कर्मणि॥ ४०.१५ ॥

स्वर्गे वा नरके वापि कालमार्गगतो ह्ययम्॥
न शर्म लभते क्वापि व्याधविद्धमृगो यथा॥ ४०.१६ ॥

तस्यैव हेतोः प्रयतेत्कोविदो यन्न दुःखवित्॥
कालेन घोररुपेण गंभीरेण समाहितः॥ ४०.१७ ॥

तच्चेन्मम मनस्तात नानादोषैर्न मोहयते॥
ततोऽहं दुर्लभं जन्म मानुष्यं शीघ्रमाप्नुयाम्॥ ४०.१८ ॥

ततस्तस्य पिता पार्थ कांदिशीको महेश्वरम्॥
जगाम शरणं देवं त्राहित्राहि महेश्वर॥ ४०.१९ ॥

त्वां विना कोऽपरो देव पुत्रस्याभीष्टदोऽस्ति मे॥
त्वयैव दत्तस्त्वं चामुं जन्म प्रापय मे सुतम्॥ ४०.२० ॥

ततस्तस्यातिभक्त्यासौ प्राह तुष्टो महेश्वरः॥
विभूतीः स्वाधर्मज्ञानवैराग्यैश्वर्यमेव च॥ ४०.२१ ॥

विपरीतश्च शीघ्रं भो मांटिपुत्रः प्रबोध्यताम्॥
ततस्ता द्योतयंत्यश्च विभूत्यो गर्भमूचिरे॥ ४०.२२ ॥

महामते मांडिपुत्र न धार्यं ते भयं हृदि॥
चत्वारस्त्वां हि धर्माद्या मनस्त्यक्ष्यामहे न ते॥ ४०.२३ ॥

ततोऽपरास्त्वधर्माद्याः प्रोचुर्नैव तथा वयम्॥
भविष्यामो मनस्तुभ्यमस्मत्तव भयं न हि॥ ४०.२४ ॥

इत्युक्ते स विभूतीभिः शीघ्रमेव कुमारकः॥
निःससार बहिर्जातश्चकंपेतिरुरोद च॥ ४०.२५ ॥

ततो विभूतयः प्राहुर्मांटे तव सुतस्त्वसौ॥
अद्यापि कालमार्गस्य भीतः कम्पति रोदिति॥ ४०.२६ ॥

कालभीतिरिति ख्यातस्तस्मादेष भविष्यति॥
इति दत्त्वा वरं ताश्च महादेवांतिकं ययुः॥ ४०.२७ ॥

सोऽपि बालः प्रववृधे शुक्लपक्ष इवोडुपः॥
संस्कृतः स च संस्कारैर्धीमान्पशुपतिव्रती॥ ४०.२८ ॥

पंचमंत्राञ्जपञ्छुद्धस्तीर्थयात्रापरोऽभवत्॥
रुद्रक्षेत्रेषु सस्नौ स जपन्मन्त्रांश्च भारत॥ ४०.२९ ॥

कालभीतिगुप्तक्षेत्रगुणाञ्छ्रुत्वाभ्युपाययौ॥
स्नात्वा ततो महीतोये जप्त्वा मन्त्रांश्च कोटिशः॥ ४०.३० ॥

निवृत्तो नातिदूरेथ बिल्ववृक्षं ददर्श सः॥
दृष्ट्वा तं तस्य चाधस्तल्लक्षमेकं जजाप सः॥ ४०.३१ ॥

जपतस्तस्य विप्रस्य इंद्रियाणि लयं ययुः॥
केवलं परमानंदस्वरूपोऽसावभूत्क्षणात्॥ ४०.३२ ॥

तस्यानंदस्य नौपम्यं स्वर्गादीनां भवेत्क्वचित्॥
गंगोदकस्येव मानं केवलं सोऽप्यसावपि॥ ४०.३३ ॥

तत्र लीनो मुहुर्तेन पुनश्चाभूद्यथा पुरा॥
ततो विसिष्मिये पार्थ कालभीतिरुवाच ह॥ ४०.३४ ॥

नायं मम महानन्दो वाराणस्यां न नमिषे॥
न प्रभासे न केदारे न चाप्यमरकण्टके॥ ४०.३५ ॥

श्रीपर्वते न चान्यत्र यादृशोद्यप्रवर्त्तते॥
निर्विकाराणि स्वच्छानि गंगांबांसीवखानि मे॥ ४०.३६ ॥

भूतेषु परमा प्रीतिस्त्रिजगद्द्योतते स्फुटम्॥
धर्ममेकं परं मह्यं चेतश्चाप्यवगच्छति॥ ४०.३७ ॥

अहो स्थानप्रभावोऽयं स्फुटं चाप्यत्र प्रोच्यते॥
निर्दोषं यच्छुचि स्तान सर्वोपद्रववर्जितम्॥ ४०.३८ ॥

तत्र स्थितस्य धर्मार्थस्तद्वद्भूयात्सहस्रधा॥
तदस्माच्च प्रभावाद्धि जानामीतः स्वचेतसि॥ ४०.३९ ॥

विशिष्टं काशिमुख्येभ्यस्तीर्थेभ्यः स्थानकं त्विदम्॥
तस्मादत्रैव संस्थोहं तपस्तप्स्यामि पुष्कलम्॥ ४०.४० ॥

इदं चेदं तीर्थमिति सदा यस्तृषितश्चरेत्॥
न स सिद्धिमवाप्नोति क्लेशेनैव म्रियेत सः॥ ४०.४१ ॥

इति संचिंत्य बिल्वस्य वृक्षस्याधो व्यवस्थितः॥
जजाप मन्त्रान्रुद्रस्य अंगुष्ठाग्रेण धिष्ठितः॥ ४०.४२ ॥

गृहीत्वा नियमं तोयबिंदुं वर्षशतेऽग्निवत्॥
ततो वर्षशते याते जपतस्तस्य भारत॥ ४०.४३ ॥

कश्चित्तो यभृतं कुम्भं गृहीत्वा नर आव्रजत्॥
सतं प्रणम्य प्राहेदं कालभीतिं प्रहर्षतः॥ ४०.४४ ॥

अद्य ते नियमः पूर्णस्तोयमेतन्महामते॥
गृहाण सफलं मह्यं श्रमं कर्तुमिहार्हसि॥ ४०.४५ ॥

**॥कालभीतिरुवाच॥**
को भवान्वर्णतो ब्रूहि किमाचारश्च तत्त्वतः॥
जन्माचारौ विदित्वा ते ग्रहीष्याम्यन्यथा न हि॥ ४०.४६ ॥

**॥नर उवाच॥**
न जाने पितरौ स्वीयौ नष्टौ वा सर्वथा न हि॥
एवमेवापि पश्यामि सर्वदाऽहं स एव च॥ ४०.४७ ॥

आचारैश्चापि धर्मैश्च न कार्यं मम किंचन॥
तस्माद्वक्ष्यामि नाप्येतन्न चाप्यस्मि समाचरे॥ ४०.४८ ॥

**॥कालभीतिरुवाच॥**
यद्येवं नोदकं तुभ्यं ग्रहीष्याम्यस्मि कर्हिचित्॥
श्रृणुष्वात्र वचो यन्मे गुरुराह श्रुतीरितम्॥ ४०.४९ ॥

न ज्ञायते कुलं यस्य बीजशुद्धिं विना ततः॥
तस्य खादन्पिबन्वापि साधुः सीदति तत्क्षणात्॥ ४०.५० ॥

यश्च रुद्रं न जानाति रुद्रभक्तश्च यो नहि॥
अन्नोदकं तस्य भुञ्जन्पातकी स्यान्न संशयः॥ ४०.५१ ॥

अज्ञात्वा यः शिवं भुक्ते कथ्यते सोऽत्र ब्रह्महा॥
मार्ष्टि च ब्रह्महान्नादे तस्मात्तस्य न भक्षयेत्॥ ४०.५२ ॥

गंगोदकुम्भः स्याद्यद्वत्तन्मध्ये मद्य बिंदुना॥
अशिवज्ञस्य यो भुंक्ते शिवज्ञोऽपि तथैव सः॥ ४०.५३ ॥

हीनवर्णश्च यः स्याद्धि शिवभक्तोऽपि नैव सः॥
प्रतिगृह्यौ गुणौ तस्माद्विलोक्यौ द्वौ प्रतिग्रहे॥ ४०.५४ ॥

**॥नर उवाच॥**

एतेन तव वाक्येन हास्यं संजायते मम॥
अहो मुग्धोऽसि मिथ्या त्वमपस्मारी जडोऽपि च॥ ४०.५५ ॥

सदा सर्वेषु भूतेषु शिवो वसति नित्यशः॥
साध्वसाधु ततो वाक्यं नैव निन्दा शिवस्य सा॥ ४०.५६ ॥

आत्मनश्च परस्यापि यः करोत्यंतरो हरम्॥
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम्॥ ४०.५७ ॥

अथवा का हि पानीये भवेदशुचिता वद॥
मृत्तिकोद्भवकुम्भोऽयं पावकेनापि पाचितः॥ ४०.५८ ॥

पूर्णश्च पयसा कस्मिन्नेषामसुचिता कुतः॥ ४०.५९ ॥

अथ चेन्मम संसर्गादशुचित्वं च मीयते॥
तदस्यां संस्थितः पृथ्व्यामहंत्वं च कुतो वद॥ ४०.६० ॥

कुतः पृथिव्यां चरसि खे त्वं नैव चरस्युत॥
एवं विचार्यमाणे ते भाषितं मुग्धवद्भवेत्॥ ४०.६१ ॥

**॥कालभीतिरुवाच॥**

सर्वभूतेषु चेदेवं शिव एवेति चोच्यते॥
नास्तिकां मृत्तिका कस्माद्भक्षयंति नभस्यके॥ ४०.६२ ॥

शुद्ध्यर्थं तेन विश्वस्य स्थापिता संस्थितिर्यथा॥
फलेन पालिता सा च नान्यथा तां श्रृणुष्व च॥ ४०.६३ ॥

ससर्जेति पुरा धाता रूपात्मकमिदं जगत्॥
तच्च नामप्रपञ्चेन बद्धं दाम्ना च गौर्यथा॥ ४०.६४ ॥

स च नामप्रपञ्चस्तु चतुर्द्धा भिद्यते किल॥
ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्॥ ४०.६५ ॥

तत्र ध्वनिर्नादमयो वर्णाश्चाकारपूर्वकाः॥
पदं `शा वमि' ति प्रोक्तं वाक्यं चेति शिवं' भजेत्॥ ४०.६६ ॥

तच्चापि वाक्यं त्रिविधं भवेदिति श्रुतेर्मतम्॥
प्रभुसम्मतमेकं च सुहृत्संमतमेव च॥ ४०.६७ ॥

कांतासंमतमेवापि वाक्यं हि त्रिविधं विदुः॥
प्रभुः स्वामी यथा भृत्यमादिशत्येतदाचर॥ ४०.६८ ॥

तथा श्रुतिस्मृती चोभे प्राहतुः प्रभुसंमतम्॥
इतिहासपुराणादि सुहृत्संमतमुच्यते॥ ४०.६९ ॥

सुहृद्वत्प्रतिबोध्यैनं प्रवर्तयति तत्त्वतः॥
काव्यालापादिकं यच्च कांतासंमतमुच्यते॥ ४०.७० ॥

प्रभुवाक्यं स्मृतं यच्च सबाह्याभ्यंतरं शुचि॥
सुहृद्वाक्यं तथा शौचं पालयेत्स्वर्गकांक्षया॥ ४०.७१ ॥

तदेतत्पालनीयं स्याद्भूमिजानां श्रुतिर्वदेत्॥
त्वया नास्तिक्यवाक्येन चेदेतदभिधीयते॥ ४०.७२ ॥

एतेन श्रुतिशास्त्राणि पुराणं च वृतैव किम्॥
अग्रे सप्तर्षिपूर्वा ये ब्राह्मणाः क्षत्रिया भवन्॥ ४०.७३ ॥

मुग्धाः सर्वेऽभवन्दक्षा ये हि वेदं गता ह्यनु॥
तथा वेदांतवचनं सत्त्वस्था ह्यूर्ध्वगामिनः॥ ४०.७४ ॥

तिष्ठंति राजसा मध्ये ह्यधो गच्छंति तामसाः॥
सत्त्वाहारैः सत्त्ववृत्त्या स्वर्गगामी भवेत्ततः॥ ४०.७५ ॥

न चैतदप्य सूयामो यद्भूतेषु शिवो न हि॥
अस्त्येव सर्वभूतेषु श्रृण्वत्राप्युपमानकम्॥ ४०.७६ ॥

यथा सुवर्णजातानि भूषणानि बहूनि च॥
कानिचिच्छ्रुद्धरूपाणि हीनरूपाणि कानिचित्॥ ४०.७७ ॥

स्वर्णं सर्वेषु चास्त्येव तथैव स सदाशिवः॥
हीनरूपं शोधितं सच्छुद्धिमेति न चैकताम्॥ ४०.७८ ॥

तथेदं शोधितं देहं शुद्धं दिवि व्रजेत्स्फुटम्॥
तस्मात्सर्वात्मना हीनान्न ग्राह्यं बत धीमता॥ ४०.७९ ॥

चेदिदं शोधयेद्देहं नैव ग्राह्यं समंततः॥
सर्वतो यः प्रति ग्राही निहाराहारयोर्न च॥ ४०.८० ॥

शुचिः स्यादल्पदिवसात्पाषाणोऽसौ भवेत्स्फुटम्॥
तस्मात्सर्वात्मना नैव ग्रहीष्येहं जलं स्फुटम्॥ ४०.८१ ॥

साधुवाप्यथवाऽसाधु प्रमाणं नः श्रुतिः परा॥
एवमुक्ते स च नरः प्रहसन्दक्षिणेन च॥ ४०.८२ ॥

अंगुष्ठेन लिखन्भूमिं चक्रे गर्तं महोत्तमम्॥
तत्र चिक्षेप तत्तोयं तेन गर्तः स्म पूरितः॥ ४०.८३ ॥

अत्यरिच्यत तोयं च चक्रे पादेन संलिखन्॥
चक्रे सरः पूरितं चाप्यतिरिक्तजलेन तत्॥ ४०.८४ ॥

तदद्भुतं महद्दृष्ट्वा नैव विप्रो विसिष्मिये॥
यतो बहुविधं चित्रं भवेद्भूताद्युपासिषु॥ ४०.८५ ॥

तच्चित्रेण न जह्याच्च श्रुतिमार्गं सनातनम्॥ ४०.८६ ॥

**॥नर उवाच॥**
अतिमूर्खोसि विप्रत्वं प्रज्ञावादांश्च भाषसे॥
किं न श्रुतस्त्वया श्लोकः पुराविद्भिरुदीरितः॥
कूपोन्यस्य घटोऽन्यस्य रज्जुरन्यस्य भारत॥ ४०.८७ ॥

पायंत्यन्ये पिबंत्यन्ये सर्वे ते समभागिनः॥
तज्जलं मम कस्मात्त्वं धर्मज्ञो न पिबस्यसि॥ ४०.८८ ॥

**॥नारद उवाच॥**
ततो विममृशे श्लोको बहुधा समभागिनाम्॥
अनिश्चयाद्विचार्यासौ घटाद्यैः समभागिता॥ ४०.८९ ॥

बहुपोतद्रव्यक्षेपः सर्वैः सा समभागिता॥
एवं कर्तुः फलैः सर्वैः समं स्याच्च पुनःपुनः॥ ४०.९० ॥

यः शुचिश्च शिवं ध्यायन्प्रासादकूपकर्तरि॥
जलप्रतिग्रहाभावात्पिबतोऽस्य समं फलम्॥ ४०.९१ ॥

इति निश्चित्य प्रोवाच कालभीतिर्नरं च तम्॥
सत्यमेत्किं तु कुंभपयसा गर्तपूरणे॥ ४०.९२ ॥

दृष्ट्वा प्रत्यक्षतो मादृक्कथं पिबति भो वद॥
साधु वाप्यथवाऽसाधु न पिबेयं कथंचन॥ ४०.९३ ॥

एवं विनिश्चयं दृष्ट्वास्य स्थिरं कुरुनंदन॥
पुरुषोऽसौ प्रहस्यैव क्षणादंतर्दधे ततः॥ ४०.९४ ॥

कालभीतिश्च परमं विस्मयं समुपागतः॥
वृत्तांतः कोयमित्येव चिंतयामास भूयसा॥ ४०.९५ ॥

ततश्चिंतयतस्तस्य बिल्वाधस्तात्सुशोभनम्॥

उच्छ्रितं सुमहालिंगं पृथिव्या द्योतयद्दिशः॥ ४०.९६ ॥

प्रादुर्भावे ततस्तस्य महालिंगस्य भारत॥
ननर्त खेप्सरोवृंदं गधर्वा ललितं जगुः॥ ४०.९७ ॥

पारिजातमयीं पुष्पवृष्टिमिंद्रो मुमोच ह॥
जयेति देवा मुनयस्तुष्टुवुर्विविधैः स्तवैः॥ ४०.९८ ॥

तस्मिन्महति कौरव्य वर्तमाने महोत्सवे॥
कालभीतिः प्रमुदितः प्रणम्य स्तोत्रमैरयत्॥ ४०.९९ ॥

पापस्य कालं भवपंककालं कलाकलं कालमार्गस्य कालम्॥
देवं महाकालमहं प्रपद्ये श्रीकालकंठं भवकालरूपम्॥ ४०.१०० ॥

ईशानवक्त्रं प्रणमामि त्वाहं स्तौति श्रुतिः सर्वविद्येश्वरस्त्वम्॥
भूतेश्वरस्त्वं प्रपितामहस्त्वं तस्मै नमस्तेस्तु महेश्वराय॥ ४०.१०१ ॥

यं स्तौति वेदस्तमहं प्रपद्ये तत्पुरुषसंज्ञं शरणं द्वितीयम्॥
त्वां विद्महे तच् नस्त्वं प्रदेहि श्रीरुद्र देवेश नमोनमस्ते॥ ४०.१०२ ॥

अघोरवक्त्रं त्रितयं प्रपद्ये अथर्वजुष्टं तव रूपकाणि॥
अघोरघोराणि च घोरघोराण्यहं सदानौमि भूतानि तुभ्यम्॥ ४०.१०३ ॥

चतुर्थवक्त्रं च सदा प्रपद्ये सद्योभिजाताय नमोनमस्ते॥
भवेभवेनादिभवो भवस्व भवोद्भवो मां शिव तत्रतत्र॥ ४०.१०४ ॥

नमोस्तु ते वामदेवाय ज्येष्ठरुद्राय कालाय कलाविकारिणे॥
बलंकरायापि बलप्रमाथिने भूतानि हंत्रे च मनोन्मनाय॥ ४०.१०५ ॥

त्रियंबकं त्वां च यजामहे वयं सुपुण्यगंधैः शिवपुष्टिवर्धनम्॥
उर्वारुकं पक्वमिवोग्रबंधनाद्रक्षस्व मां त्र्यंबक मृत्युमार्गात्॥ ४०.१०६ ॥

षडक्षरं मंत्रवरं तवेश जपंति ये मुनयो वीतरागाः॥
तेषां प्रसन्नोऽसि जपामहेतं त्वोंकारपूर्वं च नमः शिवाय॥ ४०.१०७ ॥

एवं स्तुतो महादेवो लिंगान्निःसृत्य भारत॥
त्रिजगद्द्योतयन्मभासा प्रत्यक्षः प्राह च द्विजम्॥ ४०.१०८ ॥

यत्त्वयात्र महातीर्थे भृशमाराधितो द्विज॥
तेनाति तुष्टस्ते वत्स नेशः कालः कथंचन॥ ४०.१०९ ॥

अहं च नररूपी यो दृष्ट्वा ते धर्मसंस्थितिम्॥

धन्यस्तद्धर्ममार्गोऽयं पाल्यते यद्भवद्विधैः॥ ४०.११० ॥

सर्वतीर्थोदकैर्गरतः पूरितो मे सरस्तथा॥
जलमेतन्महापुण्यं त्वदर्थं मे समाहृतम्॥ ४०.१११ ॥

सप्तमंत्ररहस्यं च यत्कृतं स्तवनं मम॥
अनेन पठ्यमानेन सप्तमंत्रफलं भवेत्॥ ४०.११२ ॥

अभीष्टं च वरं मत्तो वृणीष्व मनसेप्सितम्॥
त्वयातितोषितो ह्यस्मिनादेयं विद्यते तव॥ ४०.११३ ॥

**॥कालभीतिरुवाच॥**
धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वं तुष्टोऽसि शंकर॥
त्वत्तोषात्सफला धर्माः श्रमायैवान्यतामताः॥ ४०.११४ ॥

यदि तुष्टोऽसि सांनिद्यं लिंगेऽत्र क्रियतां सदा॥
अक्षयं तत्कृतं चास्तु यल्लिंगे क्रियतेऽत्र च॥ ४०.११५ ॥

जपतो यत्फलं देवपंचमंत्रायुतेन च॥
तत्फलं जायतां नणामस्य लिंगस्य दर्शने॥ ४०.११६ ॥

कालमार्गादहं यस्मान्मोचितोऽहं महेश्वर॥
महाकालमिति ख्यातं लिंगं तस्माद्भवत्विदम्॥ ४०.११७ ॥

अस्मिंश्च कूपे यो मर्त्यः स्नात्वा तर्पयते पितॄन्॥
सर्वतीर्थफलं चास्तु पितॄणामक्षया गतिः॥ ४०.११८ ॥

इति तस्यवचः श्रुत्वा प्रीतस्तं शंकरोऽब्रवीत्॥
स्वायंभुवं यत्र लिंगं तत्र नित्यं वसाम्यहम्॥ ४०.११९ ॥

स्वयंभुबाणरत्नोत्थदातुपाषाणलोहजम्॥
लिंगं क्रमेण फलदमंत्यात्पूर्वं दशोत्तरम्॥ ४०.१२० ॥

आकाशे तारकालिंगं पाताले हाटकेश्वरम्॥
स्वायंभुवं धारपृष्ठे तदेतत्त्रितयं समम्॥ ४०.१२१ ॥

विशेषात्प्रार्थितं यच्च तच्च भविष्यति॥
अत्र पुष्पं फलं पूजा नैवेद्यं स्तवनक्रिया॥ ४०.१२२ ॥

दानं वान्यश्च यत्किंचिदक्षयं तद्भविष्यति॥
माघासितचतुर्दश्यां शिवयोगे च पुत्रक॥ ४०.१२३ ॥

लिंगाच्च पूर्वतः कूपेस्नात्वा यस्तर्पयेत्पितॄन्॥
सर्वतीर्थफलावाप्तिः पितॄणां चाक्षया गतिः॥ ४०.१२४ ॥

तस्यां रात्रौ महाकालं यामेयामे प्रपूजयेत्॥
यः क्षिपेत्सर्वलिंगेषु स जागरफलं लभेत्॥ ४०.१२५ ॥

जितेंद्रियश्च यो नित्यं मां लिंगेत्र प्रपूजयेत्॥
भुक्तिमुक्ती न दूरस्थे तस्य नित्यं द्विजोत्तम॥ ४०.१२६ ॥

माघे चतुर्दश्यष्टम्यां सोमवारे च पर्वणि॥
स्नात्वा सरसि योऽभ्यर्च्य लिंगमेतच्छिवं व्रजेत्॥ ४०.१२७ ॥

दानं तपो रुद्रजापः सर्वमक्षयमेव च॥
त्वं च नन्दी द्वितीयो मे प्रतीहारो भविष्यसि॥ ४०.१२८ ॥

कालमार्गजयाद्वत्स महाकाला भिधश्चिरम्॥
करंधमोऽत्र राजर्षिरचिरादागमिष्यति॥ ४०.१२९ ॥

तस्य प्रोच्य भवान्धर्मास्ततो मल्लोकमाव्रज॥
इत्युक्त्वा भगवान्रुद्रो लिंगमध्ये न्यलीयत॥ ४०.१३० ॥

महाकालोऽपि मुदितस्तत्र तेपे महत्तपः॥ ४०.१३१ ॥

॥इति महाकालप्रादुर्भावः॥
**॥नारद उवाच॥**
अथ केनापि कालेन पार्थ राजा करंधमः॥
विशेषमिच्छुर्धर्मेषु श्रुत्वा तीर्थमहागुणान्॥ ४०.१३२ ॥

महाकालचरित्रं च तत्रैव समुपाययौ॥
महीसागर तोयेऽसौ स्नात्वा लिंगान्यथार्चयत्॥ ४०.१३३ ॥

महाकालमनुप्राप्य परमां प्रीतिमागतः॥
स पश्यन्सुमहालिंगं नातृप्यत जनेस्वरः॥ ४०.१३४ ॥

यथा दरिद्रः कृपणो निधिकुम्भमवाप्य च॥
सफलं जीवितं मेने महाकालं निरीक्ष्य सः॥ ४०.१३५ ॥

पंचमंत्रायुतजपफलं यस्येह दर्शनात्॥
ततः सपर्ययाक्ष्यर्च्य महत्यासौ प्रणम्य च॥ ४०.१३६ ॥

श्रुत्वा च लिंगप्रवरं महाकालमुपासदत्॥
ततो रुद्रवचः स्मृत्वा महाकालः स्मयन्निव॥ ४०.१३७ ॥

प्रत्युद्गम्य नृपं पूजामर्घं च प्रत्यपादयत्॥
ततः कुशलप्रश्नादि कृत्वा शांतमुखं नृपः॥ ४०.१३८ ॥

महाकालमुपामंत्र्य कथांते वाक्यमब्रवीत्॥
भगवन्संशयो मह्यं सदाऽयं परिवर्तते॥ ४०.१३९ ॥

यदिदं तर्पणंनाम पितॄणां क्रियते नृभिः॥
जलमध्ये जलं याति कथं तृप्यंति पूर्वजाः॥ ४०.१४० ॥

एवं पिंडादिपूजा च सर्वमत्रैव दृश्यते॥
कथमेवं स्म मन्यामः पित्राद्यैरुपभुज्यते॥ ४०.१४१ ॥

न चैतदस्ति यत्तेषां नोपतिष्ठति किंचन॥
स्वप्ने यथाक्रम्य नरं दृश्यंते याचकाश्च ते॥ ४०.१४२ ॥

देवानां चापि दृश्यंते प्रत्यक्षाः प्रत्ययाः सदा॥
तत्कथं प्रतिगृह्णन्ति मनो मेऽत्र प्रमुह्यति॥ ४०.१४३ ॥

**॥महाकाल उवाच॥**
योनिरेवंविदा तेषां पितॄणां च दिवौकसाम्॥
दूरोक्तं दूरपूजा च दूरस्तुतिरथापि यत्॥ ४०.१४४ ॥

भव्यं भूतं भविष्यच्च सर्वं जानंति यांति च॥
पंचतन्मात्ररूपं च मनोबुद्धिरहंजडाः॥ ४०.१४५ ॥

नवतत्तवमयं देहं दशमः पुरुषो मतः॥
तस्माद्गंधेन तृप्यंति रसतत्त्वेन ते तथा॥ ४०.१४६ ॥

शब्दतत्त्वेन तुष्यंति स्पर्शतत्त्वं च गृह्णते॥
शुचि दृष्ट्वा त तुष्यंति नात्र राजन्भवेन्मृषा॥ ४०.१४७ ॥

यता तृणं पशूनां च नराणामन्नमुच्यते॥
एवं दैवतयोनीनामन्नसारस्य भोजनम्॥ ४०.१४८ ॥

शक्तयः सर्वभावानामचिंत्या ज्ञानगोचराः॥
तस्मात्तत्त्वं प्रगृह्णन्ति शेषमत्रैवदृश्यते॥ ४०.१४९ ॥

**॥करंधम उवाच॥**
पितृभ्यो दीयते श्राद्धं स्वकर्मवशगाश्च ते॥
स्वर्गस्था नरकस्था वा कथं तैरुपभुज्यते॥ ४०.१५० ॥

अथ स्वर्गेऽथ नरेक स्थिताः कर्माभियंत्रिताः॥
शक्नुवंति वरानेतान्दातुं ते चेश्वराः कथम्॥ ४०.१५१ ॥

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुकानि च॥
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः॥ ४०.१५२ ॥

**॥महाकाल उवाच॥**
सत्यमेततस्वकर्मस्थाः पितरो यन्नृपोत्तम॥
किं तु देवासुराणां च यक्षादीनाममूर्तकाः॥ ४०.१५३ ॥

मूर्ताश्चतुर्णां वर्णानां पितरः सप्तधा स्मृताः॥
ते हि सर्वे प्रयच्छंति दातुं सर्वं यतोप्सितम्॥ ४०.१५४ ॥

एकत्रिंशद्गणा येषां पितॄणां प्रबला नृप॥
कृतं च तदिदं श्राद्धं तर्पयेत्तान्परान्पितॄन्॥ ४०.१५५ ॥

ते तृप्तास्तर्पयन्त्यस्य पूर्वजान्यत्र संस्थितान्॥
एवं स्वानां चोपतिष्ठेच्छ्राद्धं यच्छंति ते वरान्॥ ४०.१५६ ॥

**॥राजोवाच॥**
भूतादिभ्यो यथा विप्र नाम्ना वोद्दिश्य दीयते॥
सुरादीनां कथं चैव संक्षेपेण न दीयते॥ ४०.१५७ ॥

इदं पितृभ्यो देवेभ्यो द्विजेभ्यः पावकाय च॥
एवं कस्माद्विस्तराः स्युर्मनः कायादिकष्टदाः॥ ४०.१५८ ॥

**॥महाकाल उवाच॥**
उचिता प्रतिपत्तिश्च कार्या सर्वेषु नित्यशः॥
प्रतिपत्तिं चोचितां ते विना गृह्णन्ति नैव च॥ ४०.१५९ ॥

यथा श्वा गृहद्वारस्थोबलिं गृह्णाति किं तथा॥
प्रधानपुरुषो राजन्गृह्णाति च शुना समः॥ ४०.१६० ॥

एवं ते भूतवद्देवा न हि गृह्णन्ति कर्हिचित्॥
शुचि कामं जुषंते न हविरश्रद्दधानतः॥ ४०.१६१ ॥

विना मंत्रैश्च यद्दत्तं न तद्गृह्णन्ति तेऽमलाः॥
श्रुतिरप्यत्र प्राहेदं मंत्राणां विषये नृप॥ ४०.१६२ ॥

"मंत्रा दैवता यद्यद्विद्वान्मन्त्रवत्करोति देवताभिरेव तत्करोति यद्ददानि देवतभिरेव तद्ददाति यत्प्रतिगृह्णाति देवताभिरेव तत्प्रतिगृह्णाति तस्मान्नामन्त्रवत्प्रतिगृह्णीयात् नामन्त्रवत्प्रतिपद्यते" इति॥ ४०.१६३ ॥

तस्मान्मंत्रैः सदा देयं पौराणैर्वैदिकैरपि॥
अन्यथा ते न गृह्णन्ति भूतानामुपतिष्ठति॥ ४०.१६४ ॥

**॥राजोवाच॥**
दर्भांस्तिलानक्षतांश्च तोयं चैतैः सुसंयुतम्॥
कस्मात्प्रदीयते दानं ज्ञातुमिच्छामि कारणम्॥ ४०.१६५ ॥

**॥महाकाल उवाच॥**
पुरा किल प्रदत्तानि भूमेर्दानानि भूरिशः॥
प्रत्यगृह्णन्त दैत्याश्च प्रविश्याभ्यंतरं बलात्॥ ४०.१६६ ॥

ततो देवाश्च पितरः प्रत्यूचुः पद्मसंभवम्॥ ४०.१६७ ॥

स्वामिन्नः पश्यतामेव सर्वं दैत्यैः प्रगृह्यते॥
विधेहि रक्षां तेषां त्वं न नष्टः स्मो यथा वयम्॥ ४०.१६८ ॥

ततो विमृश्यैव विधी रक्षो पायमचीकरत्॥
तिलैर्युक्तं पितॄणां च देवानामक्षतैः सह॥ ४०.१६९ ॥

तोयं दर्भांश्च सर्वत्र एवं गृह्णन्ति नासुराः॥
एतान्विना प्रदत्तं यत्फलं दैत्यैः प्रगृह्यते॥ ४०.१७० ॥

निःश्वस्य पितरो देवा यांति दातुः फलं न हि॥
तस्माद्युगेषु सर्वेषु दानमेव प्रदीयते॥ ४०.१७१ ॥

**॥करंधम उवाच॥**
चतुर्युगव्यवस्थानं श्रोतुमिच्छमि तत्त्वतः॥
महतीयं विवित्सा मे सदैव परिवर्तते॥ ४०.१७२ ॥

**॥महाकाल उवाच॥**
आद्यं कृतयुगं विद्धिततस्त्रेतायुगं स्मृतम्॥
द्वापरं च कलिश्चेति चत्वारश्च समासतः॥ ४०.१७३ ॥

सत्त्वं कृतं रजस्त्रेता द्वापरं च रजस्तमः॥
कलिस्तमस्तु विज्ञेयं युगवृत्तं युगेषु च॥ ४०.१७४ ॥

ध्यानं परं कृकयुगे त्रेतायां यज्ञ उच्यते॥
वृत्तं च द्वापरे सत्यं दानमेव कलौ युगे॥ ४०.१७५ ॥

कृते तु मानसी सृष्टिर्वृत्तिः साक्षाद्रसोल्लसा॥
तेजोमय्यः प्रजास्तृप्ताः सदानंदाश्च भोगिनः॥ ४०.१७६ ॥

अधमोत्तमो न तासां ता निर्विशेषाः प्रजाः शुभाः॥
तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे॥ ४०.१७७ ॥

न चाप्रीतिर्न च द्वंद्वो न द्वेषो नापि च क्लमः॥
पर्वतोदधिवासिन्यो ह्यनुक्रोशप्रियास्तु ताः॥ ४०.१७८ ॥

वर्णाश्रमव्यवस्था च तदासीन्न हि संकरः॥
एकमन्यं न ध्यायंति परमं ते सदा शिवम्॥ ४०.१७९ ॥

चतुर्थे च ततः पादे नष्ट साऽभूद्रसोल्लसा॥
प्रादुरासंस्ततस्तासां वृक्षाश्वगृहसंज्ञिताः॥ ४०.१८० ॥

वस्त्राणि च प्रसूयंते फलान्याभरणानि च॥
तेष्वेव जायते तासां गंधवर्णरसान्वितम्॥ ४०.१८१ ॥

सुमाक्षिकं महावीर्यं पुटके पुटके मधु॥
तेन ता वर्तयंति स्म कृतस्यांते प्रजास्तदा॥ ४०.१८२ ॥

हृष्टपुष्टास्तथा वृद्धाः प्रजा वै विगतज्वराः॥
ततः कालेन केनापि तासां वृद्धे रसेंद्रिये॥ ४०.१८३ ॥

युगभावात्तथा ध्याने स्वल्पीभूते शिवस्य च॥
वृक्षांस्तान्पर्यगृह्णंत मधु वा माक्षिकं बलात्॥ ४०.१८४ ॥

तासां तेनोपचारेण लोभदोषकृतेन वै॥
प्रनष्टा मधुना सार्धं कल्पवृक्षाः क्वचित्क्वचित्॥ ४०.१८५ ॥

तस्यां चाप्यल्पशिष्टायां द्वंद्वान्यभ्युत्थितानि वै॥
शीतातपैर्मनोदुःखैस्ततस्ता दुःखिता भृशम्॥ ४०.१८६ ॥

चक्रुरावरणार्थं हि केतनानि ततस्ततः॥
ततः प्रदुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः॥ ४०.१८७ ॥

वृष्ट्या बभूवुरौषध्यो ग्राम्यारण्याश्चतुर्दश॥
अकृष्टपच्यानूप्तास्तोयभूमिसमागमात्॥ ४०.१८८ ॥

ऋतु पुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे॥
तैश्च वृत्तिरभूत्तासां धान्यैः पुष्पैः फलैस्तथा॥ ४०.१८९ ॥

ततः पुनरभूत्तासां रागो लोभश्च सर्वतः॥
कालवीर्येण वा गृह्य नदीक्षेत्राणि पर्वतान्॥ ४०.१९० ॥

वृक्षगुल्मौषधीश्चैव प्रसह्याशु यथाबलम्॥
विपर्ययेण चौषध्यः प्रनष्टाश्च चतुर्दश॥ ४०.१९१ ॥

नत्वा धरां प्रविष्टास्ता ओषध्यः पीडिताः प्रजाः॥
दुदोह गां पृथुर्वैन्यः सर्वभूतहिताय वै॥ ४०.१९२ ॥

तदाप्रभृति चौषध्यः फालकृष्टाः प्रजास्ततः॥
वार्त्तया वर्तयंति स्म पाल्यमानाश्च क्षत्रियैः॥ ४०.१९३ ॥

वर्णाश्रमप्रतिष्ठा च यज्ञस्त्रेतासु चोच्यते॥
सदाशिवध्यानमयं त्यक्त्वा मोक्षमचेतनाः॥ ४०.१९४ ॥

पुष्पितां वाचमाश्रित्य रागात्स्वर्गमसाधयन्॥
द्वापरे च प्रवर्तंते मतिभेदास्ततो नृणाम्॥ ४०.१९५ ॥

मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति॥
लोभोऽधृतिः शिवं त्यक्त्वा धर्माणां संकरस्तथा॥ ४०.१९६ ॥

वर्णाश्रमपरिध्वंसाः प्रवर्तंते च द्वापरे॥
तदा व्यासैश्चतुर्द्धा च व्यस्यते द्वापरात्ततः॥ ४०.१९७ ॥

एको वेदश्चतुष्पादैः क्रियते द्विजहेतवे॥
इतिहासपुराणानि भिद्यंते लोकगौरवात्॥ ४०.१९८ ॥

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा॥
तथान्यन्नारदीय च मार्कंडेयं च सप्तमम॥ ४०.१९९ ॥

आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं स्मृतम्॥
दशमं ब्रह्मवैवर्तं लैंगमेकादशं तथा॥ ४०.२०० ॥

वाराहं द्वादशं चैव स्कांदं चैव त्रयोदशम्॥
चतुर्दशं वामनं च कौर्मं पंचदशं स्मृतम्॥ ४०.२०१ ॥

मात्स्यं षोडशकं प्रोक्तं गारुडं च ततः परम्॥
अतः परं तु ब्रह्मांडमेवञ्चाष्टादशानि हि॥ ४०.२०२ ॥

अस्मिन्वाराहकल्पे च व्यासानाकर्णयस्व च॥
ऋतुः सत्यो भार्गवश्च अंगिराः सविता तथा॥ ४०.२०३ ॥

मृत्युः शतक्रतुर्धीमान्वसिष्ठो भविताऽधुना॥
सारस्वतस्त्रिधामा च वेदवित्त्रिवृतो मुनिः॥ ४०.२०४ ॥

शततेजाः स्वयं विष्णुर्नारायण इति स्मृतः॥
करकश्चारुणिर्धीमास्तथा देव ऋतंजयः॥ ४०.२०५ ॥

कृतंजयो भरद्वाजो गौतमः कविसत्तमः॥
वाजश्रवा मुनिश्चैव तथा युष्मायणो मुनिः॥ ४०.२०६ ॥

तृणबिंदुस्तथा ऋक्षः शक्तिः पाराशरस्तथा॥
जातूकर्ण्योऽथ विष्णुश्च स्वयंद्वैपायनो मुनिः॥ ४०.२०७ ॥

अश्वत्थाममुखाश्चैते भविष्याः सूचितास्तव॥
धर्मशास्त्राणि लोकार्थं भिद्यंते चापि द्वापरे॥ ४०.२०८ ॥

मन्वत्रिविष्णुहारितयाज्ञवल्क्योशनोंगिराः॥
यमापस्तंबसंवर्ताः कात्यायनबृहस्पती॥ ४०.२०९ ॥

पराशरव्यासशंखलिखिता दक्षगौतमौ॥
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥ ४०.२१० ॥

ततो द्वापरसंध्यायां प्रवर्तति कलौ युगे॥
नश्यमाने शैवयोगे जायंते योगनंदनाः॥ ४०.२११ ॥

आद्ये श्वेतकलौरुद्रः सुतारस्तारणस्तथा॥
सुहोत्रः कंकणश्चैव लोकाख्यश्च महामुनिः॥ ४०.२१२ ॥

जैगीषव्यश्च भाव्यो वै भगवान्दधिवाहनः॥
ऋषभश्च मुनिर्धर्मउग्रश्चात्रिः सबालकः॥ ४०.२१३ ॥

गौतमौ वेदशीर्णश्च गोकर्णश्च शिखंडिभृत्॥
गृहावासी जटामाली अट्टहासश्च दारुणः॥ ४०.२१४ ॥

लांगली संयमी शूली डिंडी जुण्डीश्वरः स्वयम्॥
सहिष्णुः सोमशर्मा च लकुलीशश्च पार्थिव॥ ४०.२१५ ॥

कायावरोहणो भावीत्याद्या योगेश्वराः क्रमात्॥
एते संक्षिप्त वक्ष्यंति शिवधर्मं कलौ युगे॥ ४०.२१६ ॥

एवं कलियुगे राजञ्छास्त्रसंक्षेप उच्यते॥
श्रृणु तिष्यप्रवृत्तिं च हर्षोद्वेगकरीं किल॥ ४०.२१७ ॥

तिष्ये मायामसूयां च वधं चैव तपस्विनाम्॥
साधयंति नरास्तत्र तमसा व्याकुलेंद्रियाः॥ ४०.२१८ ॥

कलौ प्रमाथको रागः सततं क्षुद्भयानि च॥
अनावृष्टिभयं घोरं देशानां च विपर्ययः॥ ४०.२१९ ॥

न प्रमाणं श्रुतेरस्ति नृणां चाधर्मसेवनात्॥
अधार्मिकास्त्वनाचारा महाकोपाल्पतेजसः॥ ४०.२२० ॥

अनृतं ब्रुवते लुब्धा नारीप्रायाश्च दुष्प्रजाः॥
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः॥ ४०.२२१ ॥

विप्राणां कर्मदोषैश्च प्रजानां जायते क्षयः॥
उत्सीदंति क्षत्रविशो वर्धंते शूद्रविप्रकाः॥ ४०.२२२ ॥

शूद्रा विप्रैः सहासंते शयनासनभोजनैः॥
शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः॥ ४०.२२३ ॥

राजवृत्त्यां स्थिताश्चौराश्चौराचाराश्च पार्थिवाः॥
एकपत्न्यो न शिष्यंति वर्धयंत्यभिसारिकाः॥ ४०.२२४ ॥

तदा ह्यल्पफला भूमिः क्वचिच्चापि महाफला॥
अरक्षितारो हर्तारो राजानः पापनिर्भयाः॥ ४०.२२५ ॥

अक्षत्रियास्तु राजानो विप्राः शूद्रोषजीविनः॥
शूद्रा विवादिनः सर्वे ब्राह्मणैरभिनंदिताः॥ ४०.२२६ ॥

आसनस्थान्द्विजान्दृष्ट्वा चलंत्यत्यलपबुद्धयः॥
आस्ये निधाय वै हस्तं कर्णे शूद्रास्य च द्विजाः॥ ४०.२२७ ॥

नीचस्यापि तदा वाक्यं वक्ष्यंति विनयेन तम्॥
उच्चासनस्थाञ्छूद्रांश्च द्विजानां पश्यतामपि॥ ४०.२२८ ॥

ज्ञात्वा न हिंसते राजा पश्य कालबलं नृप॥
पुष्पैः शुभसितैश्चैव तथान्यैर्मंडनैर्द्विजाः॥ ४०.२२९ ॥

शूद्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः॥
पाषंडिनां च गृह्णंति ब्राह्मणाः कुप्रतिग्रहम्॥ ४०.२३० ॥

येन ते रौरवं यांति सुदुस्तारं द्विजाधमाः॥
तपोयज्ञफलानां च विक्रेतारो द्विजास्तथा॥ ४०.२३१ ॥

यतयश्च भविष्यंति बहवः कोटिशः कलौ॥
पुरुषाल्पबहुस्त्रीको नृणां चापत्यसंभवः॥ ४०.२३२ ॥

निंदंति वेदवाक्यानि वेदार्थांश्च कलौ युगे॥
शूद्रैः स्वयं निर्मितं यत्प्रमाणं शास्त्रमेव तत्॥ ४०.२३३ ॥

श्वापदप्रबलत्वं च गवां चापि परिक्षयः॥
कस्यचिद्दानप्रभृतिधर्मस्यास्ति न शुद्धता॥ ४०.२३४ ॥

साधूनां बहवो नाशाः पार्थिवाश्चाप्यरक्षिणः॥
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः॥ ४०.२३५ ॥

प्रमदाः केशशूलिन्यो भविष्यंति कलौ युगे॥
स्त्रीप्रधानानि गेहानि कुचैलास्ताश्च कर्कशाः॥ ४०.२३६ ॥

बहुभक्ष्यावलिप्ताश्च कृत्या इव भवंति च॥
सर्वे वणिग्जनाश्चापि चित्रवर्षी च वासवः॥ ४०.२३७ ॥

कुशीलचर्यापाषंडैर्वृथारूपैः समावृतः॥
बहुयाचनको लोको भविष्यति परस्परी॥ ४०.२३८ ॥

अशंकश्चैव पापेषु तदा लोको भविष्यति॥
हर्तारः पररत्नानां परदारप्रधर्षकाः॥ ४०.२३९ ॥

ऊनषोडशवर्षाश्च प्रजायंते युगक्षये॥
तथा द्वादशवर्षाश्च प्रसवंति स्त्रियस्तदा॥ ४०.२४० ॥

चौराश्चौरस्य हर्तारो हर्तुर्हर्त्ता तथापरः॥
ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते॥ ४०.२४१ ॥

कीटमूषकसर्पाश्च धर्षयिष्यंति मानवान्॥
वर्णाश्रमाणां ये चान्ये पाषंडाः परिपंथिनः॥ ४०.२४२ ॥

ते तदा प्रोद्भविष्यंति तेषआं वृद्धिश्च पार्थिव॥
दुःखं पुत्रकलत्राद्यं देहोत्सादः सरोगता॥ ४०.२४३ ॥

अधर्माभिनिवेशत्वात्तमसो जायते कलौ॥
कलेर्दोषनिधेश्चैव श्रृणुष्वैवं महागुणम्॥ ४०.२४४ ॥

तदाल्पेनैव काले न सिद्धिं गच्छंति मानवाः॥
त्रियुगीना वदंत्येवं धन्या धर्मं चरंति ये॥ ४०.२४५ ॥

श्रुतिस्मृतिपुराणोक्तं कलौ श्रद्धापरायणाः॥
त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः॥ ४०.२४६ ॥

यथा क्लेशं चरन्प्राज्ञस्तदह्ना प्राप्यते कलौ॥
युगत्रयेण तावंतः सिद्धिं गच्छंति पार्थिवः॥ ४०.२४७ ॥

यावंतः सिद्धिमायांति कलौ हरिहरव्रताः॥
अष्टाविंशे कलौ यच्च भावि तत्त्वं निबोध मे॥ ४०.२४८ ॥

त्रिषु वर्षसहस्रेषु कलेर्यातेषु पार्थिवः॥
त्रिशतेषु दशन्यूनेष्वस्यां भुवि भविष्यति॥ ४०.२४९ ॥

शूद्रकोनाम वीराणामधिपः सिद्धिमत्र सः॥
चर्चितायां समाराध्य लप्स्यते भूभरापहः॥ ४०.२५० ॥

ततस्त्रिषु सहस्रेषु दशाधिकशतत्रये॥
भविष्यं नंदराज्यं च चाणक्यो यान्हनिष्यति॥ ४०.२५१ ॥

शुक्लतीर्थे सर्वपापनिर्मुक्तिं योऽभिलप्स्यति॥
ततस्त्रिषु सहस्रेषु विंशत्या चाधिकेषु च॥ ४०.२५२ ॥

भविष्यं विक्रमादित्यराज्यं सोऽथ प्रलप्स्यते॥
सिदधिप्रसादाद्दुर्गाणां दीनान्यो ह्युद्धरिष्यति॥ ४०.२५३ ॥

ततः शतसहस्रेषु शतेनाप्यधिकेषु च॥
शकोनाम भविष्यश्च योऽतिदारिद्र्यहारकः॥ ४०.२५४ ॥

ततस्त्रिषु सहस्रेषु षट्शतैरधिकेषु च॥
मागधे हेमसदनादंजन्यां प्रभविष्यति॥ ४०.२५५ ॥

विष्णोरंशो धर्मपाता बुधः साक्षात्स्वयं प्रभुः॥
तस्य कर्माणि भूरिणि भविष्यंति महात्मनः॥ ४०.२५६ ॥

ज्योतिर्बिंदुमुखानुग्रान्स हनिष्यति कोटिशः॥
चतुःषष्टिं स वर्षाणि भुक्त्वा द्वीपानि सप्त च॥ ४०.२५७ ॥

भक्तेभ्यः स्वयशो मुक्त्वा दिवं पश्चाद्गमिष्यति॥
सर्वेषां चावताराणआं गुणैः समधिको यतः॥ ४०.२५८ ॥

ततो वक्ष्यंति तं भक्त्या सर्वपापहरं बुधम्॥
चतुर्षु च सहस्रेषु शतेष्वपि चतुर्षु च॥ ४०.२५९ ॥

साधिकेषु महान्राजा प्रमितिः प्रभविष्यति॥
गोत्रेषु वै चंद्रमसो बहुसेनापतिर्बली॥ ४०.२६० ॥

म्लेच्छान्स कोटिशो हत्वा पाषंडानि च सर्वशः॥
वैदिकं केवलं शुद्धं सद्धर्मं वर्तयिष्यति॥ ४०.२६१ ॥

गंगायमुनयोर्मध्ये निष्ठां यास्यति पार्थिवः॥
ततः प्रजाश्च कालेन केनापि भृशपीडिताः॥ ४०.२६२ ॥

घोरं वा धर्ममाश्रित्य शाठ्येन च भवंति ताः॥
अप्रग्रहास्ततस्ता वै लोभाविष्टाश्च वृंदशः॥ ४०.२६३ ॥

उपहिंसंति चान्योन्यं व्याकुलाः श्रमपीडिताः॥
नष्टे श्रौते तथा स्मार्ते परस्परहतास्तदा॥ ४०.२६४ ॥

निर्मर्यादा निष्करुणा निस्स्नेहा निरपत्रपाः॥
गृहदाराणि संत्यज्य ह्रस्वकाः पंटविंशतिः॥ ४०.२६५ ॥

हाहाभूताश्चरिष्यंति विषादव्याकुलेंद्रियाः॥
अनावृष्टिहताश्चैव वार्तामुत्सृज्य दुःखिताः॥ ४०.२६६ ॥

प्रत्यंतांस्ता निषेवंति हित्वा जनपदान्स्वकान्॥
सरित्सागरकूलांश्च सेवंते पर्वतांस्तथा॥ ४०.२६७ ॥

मांसैर्मूलफलैस्चैव वर्तयंति सुदुःखिताः॥
चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः॥ ४०.२६८ ॥

धर्मस्य वासमात्रं च शाल्वो म्लेच्छो हनिष्यति॥
उत्तमाधममध्यत्वं सर्वमुच्छिद्य घोरकृत्॥ ४०.२६९ ॥

ततस्तस्य वधार्थाय विष्णुः साक्षाज्जगत्पतिः॥
शंभले विष्णुयशसो भूत्वा पुत्रो नृपोत्तम॥ ४०.२७० ॥

द्विजोत्तमैः परिवृतः शाल्वं तं संहरिष्यति॥
कोटिशोऽर्बुदशः पापान्निहत्य च निखर्वशः॥ ४०.२७१ ॥

पालयिष्यति तं धर्मं यो धर्मः श्रुतिपूर्वकः॥ ४०.२७२ ॥

कृत्वा पोतं धर्मरूपं साधूनां परमेश्वरः॥
गमिष्यति परं लोकं कृत्वा कर्मामि भूरिशः॥ ४०.२७३ ॥

ततः कृतयुगं भूयः प्रवर्तिष्यति पार्थिव॥
आद्यं कृतयुगं चान्यं तदन्येभ्यो विशिष्यते॥ ४०.२७४ ॥

अष्टाविंशकलिश्चैव शेषः प्रावर्त अन्यतः॥

ततः कृते सूर्यवंशः प्रवत्स्यति॥ ४०.२७५ ॥

मरुराजाच्च देवापेः श्रुतदेवाच्च ब्राह्मणाः॥
इति चातुर्युगी राजन्व्यवस्था परिवर्तते॥
चतुर्युगे च ते धन्या ये भजंति हराच्युतौ॥ ४०.२७६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महाकालकरन्धमसंवादे चतुर्युगव्यवस्थावर्णनंनाम चत्वारिंशत्तमोऽध्यायः॥ ४० ॥ छ ॥

**॥करधम उवाच॥**

केचिच्छिवं समाश्रित्य विष्णुमाश्रित्य वेधसम्॥
वर्णयंति परे मोक्षं त्वं तु कस्मात्तु मन्यसे॥ ४१.१ ॥

**॥महाकाल उवाच॥**

अपारवैभवा देवास्त्रयोऽप्येते नरर्षभ॥
योगींद्राणामपि त्वत्र चेतो मुह्यति किं मम॥ ४१.२ ॥

पुरा किलैवं मुनयो नैमिषारण्यवासिनः॥
संदिह्यांतः श्रेष्ठतायां ब्रह्मलोकमुपागमन्॥ ४१.३ ॥

तस्मिन्क्षणे विरिंचोऽपि श्लोकं प्रह्वोऽब्रवीत्किल॥
अनंताय नमस्तस्मै यस्यांतो नोपलभ्यते॥ ४१.४ ॥

महेशाय च भक्ते द्वौ कृपायेतां सदा मयि॥
ततः श्रेष्ठं च तं मत्वा क्षीरोदं मुनयो ययुः॥ ४१.५ ॥

तत्र योगेश्वरः श्लोकं प्रबुध्यन्नमुमब्रवीत्॥
ब्रह्माणं सर्वभूतेषु परमं ब्रह्मरूपिणम्॥ ४१.६ ॥

सदाशिवं च वंदे तौ भवेतां मंगलाय मे॥
ततस्ते विस्मिता विप्रा अपसृत्य ययुः पुनः॥ ४१.७ ॥

कैलासे ददृशुः स्थाणुं वदंतं गिरिजां प्रति॥
एकादश्यां प्रनृत्यानि जागरे विष्णुसद्मनि॥ ४१.८ ॥

सदा तपस्यां चरामि प्रीत्यर्थं हरिवेधसोः॥
श्रुत्वेति चापसृत्यैव खिन्नास्ते मुनयोऽब्रुवन्॥ ४१.९ ॥

यद्वा देवा न संयांति पारं ये च परस्परम्॥
तत्सृष्टसृष्टसृष्टेषु गणना काऽस्मदादिषु॥ ४१.१० ॥

उत्तमाधममध्यत्वममीषां वर्णयंति ये॥
असत्यवादिनः पापास्ते यांति निरयं ध्रुवम्॥ ४१.११ ॥

एवं ते निश्चियामासुर्नैमिषेया स्तपस्विनः॥
सत्यमेतच्च राजेंद्र ममापीदं मतं स्फुटम्॥ ४१.१२ ॥

जापकानां सहस्राणि वैष्मवानां तथैव च॥
शैवानां च विधिं विष्णुं स्थाणुं चाप्यन्वमूमुचन्॥ ४१.१३ ॥

तस्माद्यस्य मनोरागो यस्मिन्देवे भवेत्स्फुटम्॥

स तं भजेद्विपापः स्यान्ममेदं मतमुत्तमम्॥ ४१.१४ ॥

**॥करंधम उवाच॥**
कानि पापानि विप्रेंद्र यैस्तु संमूढचेतसः॥
न वेदेषु न धर्मेषु रतिमापद्यते मनः॥ ४१.१५ ॥

**॥महाकाल उवाच॥**
अधर्मभेदा विज्ञेयाश्चित्तवृत्तिप्रभेदतः॥
स्थूलाः सूक्ष्मा असूक्ष्माश्च कोटिभेदैरनेकशः॥ ४१.१६ ॥

तत्र ये पापनिचयाः स्थूला नरकहेतवः॥
ते समासेन कथ्यंते मनोवाक्कायसाधनाः॥ ४१.१७ ॥ तु. महाभारत अनुशासन १३.२

परस्त्रीद्रव्यसंकल्पश्चेतसानिष्टचिंतनम्॥
अकार्याभिनिवेशश्च चतुर्द्धा कर्म मानसम्॥ ४१.१८ ॥

अनिबद्धप्रलापित्वमसत्यं चाप्रियं च यत्॥
परापवादपैशुन्यं चतुर्धा कर्म वाचिकम्॥ ४१.१९ ॥

अभक्ष्यभक्षणं हिंसा मिथ्या कामस्य सेवनम्॥
परस्वानामुपादानं चतुर्धा कर्म कायिकम्॥ ४१.२० ॥

इत्येतद्द्वादशविधं कर्म प्रोक्तं त्रिसंभवम्॥
अस्य भेदान्पुनर्वक्ष्ये येषां फलमनंतकम्॥ ४१.२१ ॥

ये द्विषंति महादेवं संसारार्णवतारकम्॥
सुमहात्पातकोपेतास्ते यांति नरकाग्निषु॥ ४१.२२ ॥

महांति पातकान्याहुर्निरंतरफलानि षट्॥
नाभिनंदंति ये दृष्ट्वा शंकरं न स्तुवंति ये॥ ४१.२३ ॥

यथेष्टचेष्टा निःशंकाः संतिष्ठंति रमंति च॥
उपचारविनिर्मुक्ताः शिवस्य गुरुसंनिधौ॥ ४१.२४ ॥

शिवाचारं न मन्यंते शिवभक्तान्द्विषंति षट्॥
गुरुमार्त्तमशक्तं वा विदेशप्रस्थितं तथा॥ ४१.२५ ॥

अरिभिः परिभूतं वा यस्त्यजति स पापकृत्॥
तद्भार्यापुत्रमित्रेषु यश्चावज्ञां करोति वा॥ ४१.२६ ॥

इत्येतत्पातकं ज्ञेयं गुरुनिंदासमं महत्॥
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः॥ ४१.२७ ॥

महापातकिनस्त्वेते तत्संसर्गी च पंचमः॥
क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्य वदंति ये॥ ४१.२८ ॥

मर्मांतिकं महादोषं ब्रह्मघ्नः स प्रकीर्तितः॥
ब्राह्मणं यः समाहूय याचमानमकिंचनम्॥ ४१.२९ ॥

पश्चान्नास्तीति यो ब्रूयात्स च वै ब्रह्महा स्मृतः॥
यश्च विद्याभिमानेन निस्तेजयति सद्द्विजम्॥ ४१.३० ॥

उदासीनः सभामध्ये ब्रह्महा स प्रकीर्तितः॥
मिथ्यागुणैः स्वमात्मानं नयत्युत्कर्षतां बलात्॥ ४१.३१ ॥

विरुद्धं गुरुभिः सार्धं ब्रह्मघ्नः स प्रकीर्तितः॥
क्षुत्तृष्णातप्तदेहानां द्विजानां भोक्तुमिच्छताम्॥ ४१.३२ ॥

यः समाचरते विघ्नं तमाहुर्ब्रह्मगातकम्॥
पिशुनः सर्वलोकानां छिद्रान्वेषणतत्परः॥ ४१.३३ ॥

उद्वेगजननः क्रूरः स च वै ब्रह्महा स्मृतः॥
गवां तृषाभिभूतानां जलार्थमुपसर्पताम्॥ ४१.३४ ॥

यः समाचरते विघ्नं तमाहुर्ब्रह्मघातकम्॥
परदोषं परिज्ञाय नृपकर्णे जपेत यः॥ ४१.३५ ॥

पापीयान्पिशुनः क्रूरस्तमाहुर्ब्रह्मघातकम्॥
न्यायेनोपार्जितं विप्रैस्तद्द्रव्यहरणं च यत्॥ ४१.३६ ॥

छद्मना वा बलाद्वापि ब्रह्महत्यासमं मतम्॥
अधीत्य यश्च शास्त्राणि परित्यजति मूढधीः॥ ४१.३७ ॥

सुरापानसमं ज्ञेयं जीवनायैव वा पठेत्॥
अग्निहोत्रपरित्यागः पंचयज्ञोपकर्मणाम्॥ ४१.३८ ॥

मातृपितृपरित्यागः कूटसाक्षी सुहृद्वधः॥
अभक्ष्यभक्षणं वन्यजंतूनां काम्यया वधः॥ ४१.३९ ॥

ग्रामं वनं गवावासं यश्च क्रोधेन दीपयेत्॥
इति घोराणि पापानि सुरापानसमानि च॥ ४१.४० ॥

दीनसर्वस्वहरणं नरस्त्रीगजवाजिनाम्॥
गोभूरत्नसुवर्णानामौषधीनां रसस्य च॥ ४१.४१ ॥

चंदनागरुकर्पूरकस्तूरीपट्टवाससाम्॥
हस्तन्यासापहरणं स्कमस्तेयसमं स्मृतम्॥ ४१.४२ ॥

कन्यानां वरयोग्यानामदानं सदृशे वरे॥
पुत्रमित्रकलत्रेषु गमनं भगिनीषु च॥ ४१.४३ ॥

कुमारीसाहसं घोरमंत्यजस्त्रीनिषेवणम्॥
सवर्णायाश्च गमनं गुरुतल्पसमं स्मृतम्॥ ४१.४४ ॥

द्विजायार्थं प्रतिश्रुत्य न प्रयच्छति यः पुनः॥
न च चस्मारयते विप्रं तुल्यं तदुपपपातकम्॥ ४१.४५ ॥

अभिमानोतिकोपश्च दांभिकत्वं कृतघ्नता॥
अत्यंतविषयासक्तिः कार्पण्यं शाठ्यमत्सरम्॥ ४१.४६ ॥

भृत्यानां च परित्यागः साधुबंधुतपस्विनाम्॥
गवां क्षत्रियवैश्यानां स्त्रीशूद्राणां च ताडनम्॥ ४१.४७ ॥

शिवाश्रमतरूणां च पुष्पारामविनाशनम्॥
अयाज्यानां याजनं चाप्ययाच्यानां च याचनम्॥ ४१.४८ ॥

यज्ञारामतडागादिदारापत्यस्य विक्रयः॥
तीर्थयात्रोपवासानां व्रतायतनकर्मणाम्॥ ४१.४९ ॥

स्त्रीधनान्युपजीवंति स्त्रीभिरत्यंतनिर्जिताः॥
अरक्षणं च नारीणां मद्यपस्त्रीनिषेवणम्॥ ४१.५० ॥

ऋणानामप्रदानं च मिथ्याघृद्ध्युपजीवनम्॥
निंदितानां धनादानं साद्वीकन्योक्तिदूषणम्॥ ४१.५१ ॥

विषमारणयंत्राणां प्रोयगो मूलकर्मणाम्॥
उच्चाटनाभिचाराश्च रागविद्वेषणक्रिया॥ ४१.५२ ॥

जिह्वाकामोपभो गार्थं यस्यारंभः स्वकर्मसु॥
मूल्येनाध्यापयेद्यस्तु मूल्येनाधीयते च ये॥ ४१.५३ ॥

व्रात्यता व्रतसंत्यागः सर्वाहारनिषेवणम्॥
असच्छास्त्राभिगमनं शुष्कतर्काव लंबनम्॥ ४१.५४ ॥

देवाग्निगुरुसाधूनां निंदा गोब्राह्मणस्य च॥
प्रत्यक्षं वा परोक्षं वा राज्ञां मंडलिनामपि॥ ४१.५५ ॥

उत्सन्नपतृदेवेज्याः स्वकर्मत्यागिनश्च ये॥
दुःशीला नास्तिकाः पापा न सदा सत्यवादिनः॥ ४१.५६ ॥

पर्वकाले दिवा चाप्सु वियोनौ पशुयोनिषु॥
रजस्वलास्वयोनौ च मैथुनं यः समाचरेत्॥ ४१.५७ ॥

स्त्रीपुत्रमित्रसुहृदामाशाच्छेदकराश्च ये॥
जनस्याप्रियवक्तारः क्रूराः समयभेदिनः॥ ४१.५८ ॥

भेत्ता तडागकूपानां संक्रमाणांरसस्य च॥
एकपंक्तिस्थितानां च पाकभेदं करोति यः॥ ४१.५९ ॥

इत्येतैश्च नराः पापैरुपपातकिनः स्मृताः॥
युक्तास्तदुनकैः पापैः पापिनस्तान्निबोध मे॥ ४१.६० ॥

ये गोब्राह्मणकन्यानां स्वामिमित्रतपस्विनाम्॥
अन्तरं यांति कार्येषु ते स्मृताः पापिनो नराः॥ ४१.६१ ॥

परश्रियाभितप्यंते हीनां सवंति ये स्त्रियाम्॥
पंक्त्यर्थं ये न कुर्वंति दानयज्ञादिकाः क्रियाः॥ ४१.६२ ॥

गोष्ठाग्निजलरथ्यासु तरुच्छायानगेषु च॥
त्यजंति ये पुरीषाद्यमारामायतनेषु च ॥ ४१.६३ ॥

गीतवाद्यरता नित्या मत्ताः किलकिलापराः॥
कूटवेषक्रियाचाराः कूटसंव्यवहारिणः॥ ४१.६४ ॥

कूटशासनकर्तारः कूटयुद्धकराश्च ये॥
निर्दयोऽतीव भृत्येषु पशूनां दमनश्च यः॥ ४१.६५ ॥

मिथ्याप्रसादितो वाक्यमाकर्णयति यः शनैः॥
चपलश्चापिमायावी शठो मिथ्याविनीतकः॥ ४१.६६ ॥

यो भार्यापुत्रमित्राणि बालवृद्धकृशातुरान्॥
भृत्यानतिथिबंधूंश्च त्यक्त्वाश्नाति बुभुक्षितान्॥ ४१.६७ ॥

यः स्वयं मृष्टमश्नाति विप्रायान्यत्प्रयच्छति॥
वृथापाकः स विज्ञेयो ब्रह्मवादिविगर्हितः॥ ४१.६८ ॥

नियमान्स्वयमादाय ये त्यजंत्यजितेंद्रियाः॥
ये ताडयंति गां नित्यं वाहयंति मुहुर्मुहुः॥ ४१.६९ ॥

दुर्बलान्नैव पुष्णंति प्रणष्टार्था द्विषंति च॥
पीडयन्त्यभिचारेण सक्षतान्वाहयंति च॥ ४१.७० ॥

तेषा मदत्त्वा चाश्नंति चिकित्संति न रोगिणः॥
अजाविको माहिषिकः समुद्री वृषलीपतिः॥ ४१.७१ ॥

हीनवर्णात्मवृत्तिश्च वैद्यो धर्मध्वजी च यः॥
यश्च शास्त्रमतिक्रम्य स्वेच्छयैवाहरेत्करम्॥ ४१.७२ ॥

सदा दण्डरुचिर्यश्च यो वा दण्डरुचिर्न हि॥
उत्कोचकैरधिकृतैस्तस्करैस्च प्रपीड्यते॥ ४१.७३ ॥

यस्य राज्ञः प्रजा राष्ट्रे पच्यते नरकेषु सः॥
अचौरं चौरवत्पश्येच्चौरं वाऽचौररूपिणम्॥ ४१.७४ ॥

आलस्योपहतो राजा व्यसनी नरकं व्रजेत्॥
एवमादीनि चान्यानि पापान्याहुः पुराविदः॥ ४१.७५ ॥

यद्वातद्वा परद्रव्यमपि सर्षपमात्रकम्॥
अपहृत्य नरः पापो नारकी नात्र संशयः॥ ४१.७६ ॥

एवमाद्यैर्नरः पापैरुत्क्रान्तैः समनंतरम्॥
शरीरं यातनार्थाय पूर्वाकारमवाप्नुयात्॥ ४१.७७ ॥

तस्मात्त्रिविधमप्येतन्नारकीयं विवर्जयेत्॥
सदाशिवं च शरणं व्रजेत्सच्छ्रद्धया युतः॥ ४१.७८ ॥

नमस्कारः स्तुतिः पूजा नामसंकीर्तनं तथा॥
संपर्कात्कौतुकाल्लोभान्न तस्य विफलं भवेत्॥ ४१.७९ ॥

**॥करंधम उवाच॥**
संक्षेपाच्छिवपूजाया विधानं वक्तुमर्हसि॥
कृतेन येन मनुजः शिवपूजाफलं लभेत्॥ ४१.८० ॥

**॥महाकाल उवाच॥**
प्रातर्मध्याह्नसायाह्ने शंकरं सर्वदा भजेत्॥
दर्शनात्स्पर्शनान्मर्त्यः कृततृत्यो भवेत्स्फुटम्॥ ४१.८१ ॥

आदौ स्नानं प्रकुर्वित भस्मस्नानमथापि वा॥
आपद्गतः कण्ठस्नानं मन्त्रस्नानमथापि वा॥ ४१.८२ ॥

आविकं परिदध्याच्च ततो वासः सितं च वा॥

धातुरक्तमथो नव्यं मलिनं संधितं न च॥ ४१.८३ ॥

उत्तरीयं च संदध्याद्विना तन्निष्फलार्चनम्॥
भस्मत्रिपुण्ड्रधारी च ललाटे हृति चांसयोः॥ ४१.८४ ॥

पूजयेद्यो महादेवं प्रीतः पश्यति तं मुहुः॥
सर्वदोषान्बहिः क्षिप्य शिवायतनमाविशेत्॥ ४१.८५ ॥

प्रविश्य च प्रणम्येशं ततो गर्भगृहं विशेत्॥
पाणी प्रक्षाल्य तच्चित्तो निर्माल्यमवरोपयेत्॥ ४१.८६ ॥

येन रुद्रायते भक्त्या कुरुते मार्जनक्रियाम्॥
तस्मान्मार्जयते त्वेवं स्थाणुनैतत्परस्परम्॥ ४१.८७ ॥

रुद्रभक्त्या च संतिष्ठेनमालिन्यं मार्जयेत्ततः॥
भक्तिर्देवस्य तिष्ठेन्न मालिन्यं मार्जतः सदा॥ ४१.८८ ॥

गडुकान्पूरयेत्पश्चान्निर्मलेन जलेन वै॥
गडुकास्तु समाः सर्वे सर्वे च शुभदर्शनाः॥ ४१.८९ ॥

निर्व्रणाः सौम्यरूपाश्च सर्वे चोदकपूरिताः॥
वस्त्रपूतजलैः पूर्णागन्धधूपैश्च वासिताः॥ ४१.९० ॥

क्षालिताः पूरिता नीताः षडक्षरजपेन च॥
गडुकाष्चशतं कुर्यादथवाप्यष्टविंशतिः॥ ४१.९१ ॥

अष्टादशापि चतुरस्ततोन्यूनं न कारयेत्॥
पयो दधि घृतं चैव क्षौद्रमिक्षुरसं तथा॥ ४१.९२ ॥

एवं सर्वं च तद्द्रव्यं वामतः संन्यसेद्भवात्॥
ततो बहिर्विनिष्क्रम्य पूजयेत्प्रतिहारकान्॥ ४१.९३ ॥

सर्वेषां वाचका मन्त्राः कथ्यंतेऽतः परं क्रमात्॥ ४१.९४ ॥

ॐगं गणपतये नमः॥ ॐक्षां क्षेत्रपालाय नमः॥ ॐगं गुरुभ्यो नमः॥ इति आकाशे॥ ॐकौं कुलदेव्यै नमः॥ ॐ नंदिने नमः॥ ॐमहाकालाय नमः॥ ॐधात्रे विधात्रे नमः॥
ततः प्रविस्य लिंगाच्च किञ्चिद्दक्षिणतः शुचिः॥
उदङ्मुखः क्षणं ध्यायेत्समकायासनस्थितः॥ ४१.९५ ॥

दर्भादिभिः परिवृतं मध्यपद्मार्कमंडलम्॥
सोममण्डलमध्यस्थं ध्यायेद्वै वह्निमंडलम्॥ ४१.९६ ॥

तन्मध्ये विश्वरूपं च वामाद्यष्टादिशक्तिकम्॥
पंचवक्त्रं दशभुजं त्रिनेत्रं चंद्रभूषितम्॥ ४१.९७ ॥

वामांकगिरिजं देवं ध्यायेत्सिद्धैः स्तुतं मुहुः॥
ततः पूर्वं प्रदद्याच्च पाद्यार्घं शंभवे नृप॥ ४१.९८ ॥

पानीयमक्षता दर्भा गंधपूष्पं ससर्पिषम्॥
क्षीरं दधि मधु पुनर्नवांगोऽर्घः प्रकीर्तितः॥ ४१.९९ ॥

ततः श्रद्धार्द्रचित्तस्य स्नानं लिंगस्य चाचरेत्॥
गृहीत्वा गडुकं पूर्वं मलस्नानं समाचरेत्॥ ४१.१०० ॥

अर्द्धेन स्नापयेत्पूर्वं कुर्याच्च मलघर्षणम्॥
सर्वेण स्नापयेत्पश्चात्पूजयेत्स्नापयेत्ततः॥ ४१.१०१ ॥

प्रणम्य च ततो भक्त्या स्नापयेन्मूलमंत्रतः॥
ॐहूं विश्वमूर्तये शिवाय नम॥
इति द्वादशाक्षरो मूलमंत्रः॥ ४१.१०२ ॥

वारिक्षरदधिक्षौद्रघृतेनेक्षुरसेन च॥
स्नापयेन्मूलमन्त्रेण जलधूपार्चनात्पृथक्॥ ४१.१०३ ॥

गडुकैः स्नापयेत्सर्वैः स्नातं गन्धैर्विरूक्षयेत्॥ ४१.१०४ ॥

विरूक्षितं ततः स्नाप्य श्रीखण्डेन विलेपयेत्॥
पूजयेद्विविधैः पुष्पैर्विधिना येन तच्छृणु॥ ४१.१०५ ॥

आग्नेयपादे॥ ॐधर्माय नमः॥ नैर्ऋतके॥ ॐज्ञानाय नमः॥ वायव्ये॥ ॐवैराग्याय नमः॥ ईशानपादे॥ ॐऐश्वर्याय नमः॥
पूर्वपादे॥ ॐअधर्माय नमः॥ दक्षिणे॥ ॐअज्ञानाय नमः॥ पश्चिमे॥ ॐअवैराग्याय नमः॥ उत्तरे ॐअनैश्वर्याय नमः॥
ॐअनन्ताय नमः॥ ॐपद्माय नमः ॐअर्कमण्डला नमः॥ ॐसोममण्डलाय नमः॥ ॐवह्निमण्डला नमः॥
ॐवामाज्येष्ठादिपंचमन्त्रशक्तिभ्यो नमः॥ ॐपरमप्रकृत्यै देव्यै नमः॥
ॐईशानतत्पुरुषाघोरवामदेवसद्योजातपञ्चवक्त्राय रुद्रसाध्यवस्वादित्यविश्वेदेवादिदेवविश्वरूपाय
अण्डजस्वेदजोद्भिज्जजरायुजरूपस्थावरजङ्गममूर्तये परमेश्वराय ॐहूं विश्वमूर्तये शिवाय
नमस्त्रिशूलधनुःखड्गकपालदण्डकुठारेभ्यः॥ ४१.१०६ ॥

ततो जलाधारमुखे चण्डीश्वराय नमः॥
एवं संपूज्य विधिवत्ततोऽर्घं संनिवेशयेत्॥ ४१.१०७ ॥

पानीयमक्षताः पुष्पमेतैर्युक्तं फलोत्तमैः॥
गृहाणार्घ्यं महादेव पूजासंपूर्तिहेतवे॥ ४१.१०८ ॥

अर्घादनंतरं शक्तः पूजयेद्वसुपूजया॥

धूपं दीपं च नैवेद्यं क्रमात्पश्चान्निवेदयेत्॥ ४१.१०९ ॥

घण्टां च वादयेत्तत्र ततो नीराजनं चरेत्॥
भ्रामयेद्देवदेवस्य शंखवादित्रनिःस्वनैः॥ ४१.११० ॥

नीराजनं च यः पश्ये द्देवदेवस्य शूलिनः॥
स मुच्येत्पातकैः सर्वैः किं पुनर्यः करिष्यति॥ ४१.१११ ॥

नृत्यं गीतं च वाद्यं च अलीकमपि यश्चरेत्॥
तस्य तुष्येदनंतंहि गीतवाद्यफलं यतः॥ ४१.११२ ॥

स्तोत्रैस्ततश्च संस्तूय दण्डवत्प्रणमेद्भुवि॥
क्षमापयेच्च देवेशं सुकृतं कुकृतं क्षम॥ ४१.११३ ॥

य एवं यजते रुद्रमस्मिँल्लिंगे विशेषतः॥
पितरं पितामहं चैव तथैव प्रपितामहम्॥ ४१.११४ ॥

सर्वात्पापात्समुत्तार्य रुद्रलोके वसेच्चिरम्॥
एवं माहेश्वरो भूत्वा सदाचारव्रतस्थितः॥ ४१.११५ ॥

पशुपाशविमोक्षार्थं पूजयेत्तन्मना यदि॥
य एवं यजते रुद्रं तेनैतत्तर्पितं जगत्॥ ४१.११६ ॥

किं त्वेतत्सफलं राजन्नाचारयो न लंघयेत्॥
आचारात्फलते धर्मो ह्याचारात्स्वर्गमश्नुते॥ ४१.११७ ॥

आचाराल्लभते ह्यायुराचारो हंत्यलक्षणम्॥
यज्ञदानतपांसीह पुरुषस्य न भूतये॥ ४१.११८ ॥

भवन्ति यः सदाचारं समुल्लंघ्य प्रवर्तते॥
तस्य किञ्चित्समुद्देशं वक्ष्ये तं श्रृणु पार्थिव॥ ४१.११९ ॥

त्रिवर्गसाधने यत्नः कर्तव्यो गृहमेधिना॥
तत्संसिद्धौ गृहस्थस्य सिद्धिरत्र परत्र च॥ ४१.१२० ॥

ब्राह्मे मुहूर्ते बुध्येन धर्मार्थौ चापि चिन्तयेत्॥
समुत्थाय तथाचम्य दंतधावनपूर्वकम्॥ ४१.१२१ ॥

सन्ध्यामुपासीत बुधः संशांतः प्रयतः शुचिः॥
पूर्वां सन्ध्यां सनक्षत्रां पश्चिमां सदिवाकराम्॥ ४१.१२२ ॥

उपासीत यथान्यायं नैनां जह्यादनापदि॥

वर्जयेदनृतं चासत्प्रलापं परुषं तथा॥ ४१.१२३ ॥

असत्सेवां ह्यसद्वादं ह्यसच्छास्त्रं च पार्थिव॥
आदर्शदर्शनं दंतधावनं केशसाधनम्॥ ४१.१२४ ॥

देवार्चनं च पूर्वाह्णे कार्याण्याहुर्महर्षयः॥
पालाशमासनं चैव पादुके दंतधावनम्॥
वर्जयेदासनं चैव पदा नाकर्षयेद्बुधः॥ ४१.१२५ ॥

जलमग्निं च निनयेद्युगपन्न विचक्षणः॥ ४१.१२६ ॥

पादौ प्रसारयेन्नैव गुरुदेवाग्निसंमुखौ॥
चतुष्पथं चैत्यतरुं देवागारं तथा यतिम्॥ ४१.१२७ ॥

विद्याधिकं गुरुं वृद्धं कुर्यादेतान्प्रदक्षिणान्॥ ४१.१२८ ॥

आहारनीहारविहारयोगाः सुसंवृता धर्मविदानुकार्याः॥
वाग्बुद्धिवीर्याणि तपस्तथैव वार्तायुषी गुप्ततमे च कार्ये॥ ४१.१२९ ॥

उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः॥
दक्षिणाभिमुखो रात्रौ ह्येवमायुर्न रिष्यते॥ ४१.१३० ॥

प्रत्यग्निं प्रति सूर्यं च प्रति गां व्रतिनं प्रति॥
प्रति सोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः॥ ४१.१३१ ॥

भोजने शयने स्थाने उत्सर्गे मलमूत्रयोः॥
रथ्याचंक्रमणे चार्द्रपञ्चकश्चाचमेत्सदा॥ ४१.१३२ ॥

न नद्यां मेहनं कुर्यान्न श्मशाने नभस्मनि॥
न गोमये न कृष्टे च नैवालूने न शाड्वले॥ ४१.१३३ ॥

उद्धृत्ताभिस्तथाद्भिस्तु शौचं कुर्याद्विचक्षणः॥
अंतर्जलाद्देवकुलाद्वल्मीकान्मूषकस्थलात्॥ ४१.१३४ ॥

अपविद्धापशौचाश्च वर्जयेत्पंच मृत्तिकाः॥
गन्धलेपापहरणं शौचं कुर्यात्तथा बुधः॥ ४१.१३५ ॥

नात्मानं ताडयेन्नैव दद्याद्दुः खेभ्य एव च॥
उभाभ्यामपि पाणिभ्यां कण्डूयेन्नात्मनः शिरः॥ ४१.१३६ ॥

रक्षेद्दारांस्त्यजेदीर्ष्यां तासु निष्कारणं बुधः॥
सूर्यास्तं न विनाकाश्चित्क्रिया नैवाचरेत्तथा॥ ४१.१३७ ॥

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः॥
शिवचित्तोर्जयोद्वित्तं न चातिकृपणो भवेत्॥ ४१.१३८ ॥

नेर्ष्युः स्यान्न कृतघ्नः स्यान्न परद्रोहकर्मधीः॥
न पाणिपादचपलो न नेत्रचपलोऽनृजुः॥ ४१.१३९ ॥

न च वागङ्गचपलो न चाशिष्टस्य गोचरः॥
न शुष्कवादं कुर्वीत शुष्क्रवैरं तथैव च॥ ४१.१४० ॥

उपायैः साधयेदर्थान्दण्डस्त्वगतिका गतिः॥
भिन्नाशनं भिन्नशय्यां वर्जयेद्भिन्नभाजनम्॥ ४१.१४१ ॥

अंतरेण न गच्छेन द्वयोर्ज्वलनलिंगयोः॥
नाग्न्योर्न विप्रयोश्चैव न दंपत्योर्नृपोत्तम॥ ४१.१४२ ॥

न सूर्यव्योमयोर्नैव हरस्य वृषभस्य च॥
एतेषामंतरं कुर्वन्यतः पापमवाप्नुयात्॥ ४१.१४३ ॥

नैकवस्त्रश्च भुंजीत नाग्नौ होममथाचरेत्॥
न चार्चयेद्द्विजान्नैव कुर्याद्देवार्चनं बुधः॥ ४१.१४४ ॥

खंडनं पेषणं मार्ष्टिं जलसंशोधनं तथा॥
रंधनं भोजनं स्वाप उत्थानं गमनं क्षुतम्॥ ४१.१४५ ॥

कार्यारंभं समाप्तिं च वचः प्रोच्य तथा प्रियम्॥
पिबञ्जिघ्रन्स्पृशञ्छृण्वन्विवक्षुर्मैथुनं तथा॥ ४१.१४६ ॥

शुचित्वं च जपं स्थाणुं यः कुर्याद्विंशतिं तथा॥
माहेश्वरः स विज्ञेयः शेषोन्यो नामधारकः॥ ४१.१४७ ॥

स वै रुद्रमयो भूत्वा ततश्चांते शिवं व्रजेत्॥
परस्त्रियं नाभिभाषेत्तथा संभाषयेद्यदि॥ ४१.१४८ ॥

मातः स्वसरथो पुत्रि आर्येति च वदेद्बुधः॥
उचछिष्टो नालभेत्किंचिन्न च सूर्यं विलोकयेत्॥ ४१.१४९ ॥

नेन्दुं न तारकाश्चैव नादयेन्नात्मनः शिरः॥
स्वस्रा दिहित्रा मात्रा वा नैकांतासन माचरेत्॥ ४१.१५० ॥

दुर्जयो हींद्रियग्रामो मुह्यते पंडितोऽपि सन्॥
गुरुमभ्यागतं गेहे स्वयमुत्थाय यत्नतः॥ ४१.१५१ ॥

आसनं कल्पयेत्तस्य कुर्यात्पादाभिवंदनम्॥
नोदक्छिराः स्वपेज्जातु न च प्रत्यक्छिरा बुधः॥ ४१.१५२ ॥

शिरस्यगस्त्यमाधाय तथैव च पुरंदरम्॥
उदक्यादर्शनं स्पर्शं वर्ज्यं संभाषणं तथा॥ ४१.१५३ ॥

नाप्सु मूत्रं पुरीषं वा मैथुनं वा समाचरेत्॥
कृत्वा विभवतो देवमनुष्यर्षिसमर्चनाम्॥ ४१.१५४ ॥

पितृणां च ततः शेषं भोक्तुं माहेश्वरोऽर्हति॥
वाग्यतः शुचिराचांतः प्राङ्मुखोदङ्मुखोऽपि वा॥ ४१.१५५ ॥

अन्तर्जानुश्च तच्चित्तो भुञ्जीतान्नमकुत्सयन्॥
नोपघातं विना दोषान्न तस्योदाहरेद्बुधः॥ ४१.१५६ ॥

नग्नस्नानं न कुर्वीत न शयीत व्रजेत वा॥
दुष्कृतं न गुरोर्ब्रूयात्क्रुद्धं चैनं प्रसादयेत्॥ ४१.१५७ ॥

परिवादं न श्रृमुयादन्येषामपि जल्पताम्॥
सदा चा कर्णयेद्धमास्त्यक्त्वा कृत्यशतान्यपि॥ ४१.१५८ ॥

नित्यं नित्यं हि संमार्ष्टि गेहदर्पणयोरिव॥
शुक्लायां च चतुर्दश्यां नक्तभोजी सदा भवेत्॥ ४१.१५९ ॥

तिस्रो रात्रीर्न शक्तश्चेदेवं माहेश्वरो भवेत्॥
संयावकृशरामांसं नात्मानमुपसाधयेत्॥ ४१.१६० ॥

सायंप्रातश्च भोक्तव्यं कृत्वा ह्यतिथि भोजनम्॥
स्वप्नाध्ययनभोज्यानि संध्ययोश्च विवर्जयेत्॥ ४१.१६१ ॥

भुंजानः संध्ययोर्मोहादसुरावसथो भवेत्॥
स्नातो न धूनयेत्केशान्क्षुते निष्ठीवितेऽध्वनि॥ ४१.१६२ ॥

आलभेद्दक्षिणं कर्णं सर्वभूतानि क्षामयेत्॥
न चापि नीलीवासाः स्यान्न विपर्यस्तवस्त्रधृक्॥ ४१.१६३ ॥

वर्ज्यं च मलिनं वस्त्रं दशाभिश्च विवर्जितम्॥
प्रक्षाल्य मुखहस्तौ च पादौ चाप्युपविश्य च॥ ४१.१६४ ॥

अंतजानुस्त्रिराचामेद्द्विर्मुखं परिमार्जयेत्॥
तोयेन स्पर्शयेत्खानि स्वमूर्धानं तथैव च॥ ४१.१६५ ॥

आचम्य पुनराचम्य क्रियाः कुर्वीत सर्वशः॥
क्षुते निष्ठीविते चैव दंतलग्ने तथैव च॥ ४१.१६६ ॥

पतितानां च संभाषे कुर्यादाचमनिक्रियाम्॥
अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता॥ ४१.१६७ ॥

धर्मतो धनमाहार्य यष्टव्यं चापि यत्नतः॥
हीनेभ्योपि न युंजीत त्वंकारं कर्हिचिद्बधः॥
त्वंकारो वा वधो वापि गुरूणामुभयं समम्॥ ४१.१६८ ॥

सत्यं वाच्यं नित्यमैत्रेण भाव्यं कार्यं त्याज्यं नित्यमायासकारि॥
लोकेऽमुष्मिन्यद्धिनं स्यात्तथास्मिन्नात्मा योगे येजनीयो गभीरैः॥ ४१.१६९ ॥

तीर्थस्नानैः सोपवासैर्व्रतैश्च पात्रे दानैर्होमजप्यैश्चयज्ञैः॥
भवार्चनैर्देवपूजाविशेषैरात्मा नित्यं शोधनीयो मलाक्तः॥ ४१.१७० ॥

यत्रापि कुर्वतो नात्मा जुगुप्सामेति पार्थिव॥
तत्कर्तव्यसमसंगेन यन्नगोप्यं महाजने॥ ४१.१७१ ॥

इति ते वै समुद्देशः कीर्तितः किंचिदेव च॥
शेषः स्मृतिपुराणेभ्यस्त्वया श्रोतव्य एव च॥ ४१.१७२ ॥

एवमाचरतो धर्मं महेशस्य गृहे सतः॥
धर्मार्थकामसंप्राप्तौ परत्रेह च शोभनम्॥ ४१.१७३ ॥

एवं नानाविधान्धर्मान्महाकालस्य फाल्गुन॥
वदतो ध्वनिराकाशे सुमहानभ्यजायत॥ ४१.१७४ ॥
यावत्पश्यंति ये तत्र समाजग्मुः श्रृणुष्व तान्॥
ब्रह्मा विष्णुः स्वयं रुद्रो दे वी रुद्रगणास्तथा॥ ४१.१७५ ॥

इंद्रादयस्तथा देवा वसिष्ठाद्या मुनीश्वराः॥
तुंबरुप्रवराश्चापि गंधर्वाप्सरसां गणाः॥ ४१.१७६ ॥

तान्महेशमुखान्सर्वान्महाकालो महामतिः॥
अर्चयामास बहुधा भक्त्युद्रेकातिपूरितः॥ ४१.१७७ ॥

ततो ब्रह्मादिभिर्देवैर्वरे रत्नमयासने॥
उपविष्टोऽभिषिक्तश्च महीसागरसंगमे॥ ४१.१७८ ॥

ततो देव्या समालिंग्य नीत्वोत्संगं स्वकं मुदा॥
पुत्रत्वे कल्पितः पार्थ महाकालो महामतिः॥ ४१.१७९ ॥

उक्तञ्च यावद्ब्रह्माण्डमिदमास्ते शिवव्रत॥
तावत्तिष्ठ शिवस्थाने शिववच्छिवभक्तितः॥ ४१.१८० ॥

देवेन च वरो दत्तस्त्वल्लिंगं योऽर्चयिष्यति॥
जितेन्द्रियः शुचिर्भूत्वा ऊर्ध्वं मल्लोकमेष्यति॥ ४१.१८१ ॥

दर्शनं स्तवनं पूजा प्रणामश्च ततो जपः॥
दानं चात्र कृतं लिंगे ममातितृप्तिकारणम्॥ ४१.१८२ ॥

इत्युक्ते विस्मिता देवाः साधु साध्विति ते जगुः॥
ब्रह्मविष्णुमुखाश्चैव महाकालं प्रतुष्टुवुः॥ ४१.१८३ ॥

ततः सुरैःस्तूयमानो वंद्यमानश्च चारणैः॥
नृत्यद्भिरप्सरोभिश्च कीतैर्गंधर्वजैः शुभैः॥ ४१.१८४ ॥

कोटिकोटिगणैश्चैव स्तुवद्भिः सर्वतो वृतः॥ ४१.१८५ ॥

महाकालो रुद्रभवनं गतो भवपुरस्सरः॥
एवमेतन्महालिंगमुत्पन्नं कुरुनंदन॥ ४१.१८६ ॥

कूपश्चापि सरः पुण्यं महाकालस्य सिद्धिदम्॥
अत्र ये मनुजाः पार्थ लिंगस्याराधने रताः॥ ४१.१८७ ॥

महाकालः समालिंग्य ताञ्छिवाय निवेदयेत्॥
एतदत्यद्भुतं लिंगं त्रिषु लोकेषु विश्रुतम्॥ ४१.१८८ ॥

दृष्टं स्पृष्टं पूजितं च गतास्ते भवसद्म तत् एवमेतानि लिंगानि सप्त जातानि फाल्गुन॥ ४१.१८९ ॥

ये श्रृण्वंति गृणंत्येतत्तेपि धन्या नरोत्तमाः॥ ४१.१९० ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे श्रीमहाकालमाहात्म्ये महाकालकरंधमसंवादे
शिवपूजनविधिनित्यकर्तव्यधर्मनिरूपणपूर्वकमहाकालशिवलोकप्राप्तिवर्णनंनामैकचत्वारिंशोऽध्यायः॥ ४१ ॥ छ ॥

**॥नारद उवाच॥**

ततो मया स्थापिते च स्थाने कालांतरेण ह॥
चिंतितं हृदये भूयो द्विजानुग्रहकाम्यया॥ ४२.१ ॥

वासुदेवविहीनं हि तीर्थमेतन्न रोचते॥
असूर्यं हि जगद्यद्वत्स हि भूषण भूषणम्॥ ४२.२ ॥

यत्र नैव हरिः स्वामी तीर्थे गेहेऽथ मानसे॥
शास्त्रे वा तदसत्सर्वं हांसं तीर्थं न वायसम्॥ ४२.३ ॥

तस्मात्प्रसाद्य वरदं तीर्थेऽस्मिन्पुरुषोत्तमम्॥
आनेष्ये कलया साक्षाद्विश्वनुग्रहकाम्यया॥ ४२.४ ॥

इति संचिंत्य कौरव्य ततोऽहं चात्र संस्थितः॥
ज्ञानयोगेन योगींद्रं शतं वर्षाण्यतोषयम्॥ ४२.५ ॥

अष्टाक्षरं जपन्मंत्रं संनिगृह्यैंद्रियाणि च॥
वासुदेवमयो भूत्वा सर्वभूतकृपापरः॥ ४२.६ ॥

एवं मयाराध्यमानो गरुडं हरिरास्थितः॥
गणकोटिपरिवृतः प्रत्यक्षः समजायत॥ ४२.७ ॥

तमहं प्रांजलिर्भूत्वा दत्त्वार्घ्यं विधिवद्धरेः॥
प्रत्यवोचं प्रमम्याथ प्रबद्धकरसं पुटः॥ ४२.८ ॥

श्वेतद्वीपे पुरा दृष्टं मया रूपं तव प्रभो॥
अजं सनातनं विष्णो नरनारायणात्मकम्॥ ४२.९ ॥

तद्रूपस्य कलामेकां स्थापयात्र जनार्दन॥
यदि तुष्टोऽसि मे विष्णो तदिदं क्रियतां त्वया॥ ४२.१० ॥

एवं मया प्रार्थितोऽथ प्रोवाच गरुडध्वजः॥
एवमस्तु ब्रह्मपुत्र यत्त्वयाभीप्सितं हृदि ॥ ४२.११ ॥

तत्तथा भविता सर्वमप्यत्रस्थं सदैव हि॥
एवमुक्त्वा गते विष्णौ निवेश्य स्वकलां प्रभो॥ ४२.१२ ॥

मया संस्थापितो विष्णुर्लोकानुग्रहकाम्यया॥
यस्मात्स्वयं श्वेतद्वीपनिवास्यत्र हरिः स्थितः॥ ४२.१३ ॥

वृद्धो विश्वस्य विश्वाख्यो वासुदेवस्ततः स्मृतः॥
कार्तिके शुक्लपक्षे या भवत्ये कादशी शुभा॥ ४२.१४ ॥

स्नानं कृत्वा विधानेन तोयप्रस्रवणादिषु॥
योर्चयेदच्युतं भक्त्या पंचोपचारपूजया॥ ४२.१५ ॥

उपोष्य जागरं कुर्याद्गीतवाद्यं हरेः पुरः॥
कथां वा वैष्णवीं कुर्याद्दंभक्रोधविवर्जितः॥ ४२.१६ ॥

दानं दद्याद्यथाशक्त्या नियतो हृष्टमानसः॥
अनेकभवसंभूतात्कल्मषादखिलादपि॥ ४२.१७ ॥

मुच्यतेऽसौ न संदेहो यद्यपि ब्रह्मघातकः॥
गारुडेन विमानेन वैकुंठं पदमाप्नुयात्॥ ४२.१८ ॥

कुलानां तारयेत्पार्थ शतमेकोत्तरं नरः॥
श्रद्धायुक्तं मुदा युक्तं सोत्साहं सस्पृहं तथा॥ ४२.१९ ॥

अहंकारविहीनं च स्नानं धूपानुपनम्॥
पुष्पनैवेद्यसंयुक्तमर्घदानसमन्वितम्॥ ४२.२० ॥

यामेयामे महाभक्त्या कृतारार्तिकसंयुतम्॥
चामराह्लादसंयुक्तं भेरीनादपुरस्कृतम्॥ ४२.२१ ॥

पुराणश्रुतिसंपन्नं भक्तिनृत्यसमन्वितम्॥
विनिद्रंक्षुत्तृषास्वादस्पृहाहीनं च भारत॥ ४२.२२ ॥

तत्पादसौरभघ्राणसंयुतं विष्णुवल्लभम्॥
सगीतं सार्चनकरं तत्क्षेत्रगमनान्वितम्॥ ४२.२३ ॥

पायुरोधेन संयुक्तं ब्रह्मचर्यसमन्वितम्॥
स्तुतिपाठेन संयुक्तं पादोदकविभूषितम्॥ ४२.२४ ॥

सत्यान्वितं सत्ययोगसंयुतं पुण्यवार्तया॥
पंचविंशतिभिर्युक्तं गुणैर्यो जागरं नरः॥
एकादश्यां प्रकुर्वीत पुनर्न जायते भुवि॥ ४२.२५ ॥

अत्र तीर्थवरे पूर्वमैतरेय इति द्विजः॥
सिद्धिं प्राप्तो महाभागो वासुदेवप्रसादतः॥ ४२.२६ ॥

**॥अर्जुन उवाच॥**
ऐतरेयः कस्य पुत्रो निवासः क्वास्य वा मुने॥
कथं सिद्धिमागाद्धीमान्वासुदेवप्रसादतः॥ ४२.२७ ॥

**॥नारद उवाच॥**

अस्मिन्नेव मम स्थाने हारीतस्यान्वयेऽभवत्॥ ४२.२८ ॥

मांडूकिरिति विप्राग्र्यो वेदवेदांगपारगः॥ ४२.२९ ॥

तस्यासी दितरा नाम भार्या साध्वीगुणैर्युता॥
तस्यामुत्पद्यत सुतस्त्वैतरेय इति स्मृतः॥ ४२.३० ॥

स च बाल्यात्प्रभृत्येव प्राग्जन्मन्यनुशिक्षितम्॥
जजापमंत्रं त्वनिशं द्वादशाक्षरसंज्ञितम्॥ ४२.३१ ॥

न श्रृणोति न वक्त्येव मनसापि च किंचन॥
एवंप्रभावः सोऽभूच्च बाल्ये विप्रसुतस्तदा॥ ४२.३२ ॥

ततो मूकोऽयमित्येव नानोपायैः प्रबोधितः॥
पित्रा यदा न कुरुते व्यवहाराय मानसम्॥ ४२.३३ ॥

ततो निश्चित्य मनसा जडोयमिति भारत॥
अन्यां विवाहयामास दारान्पुत्रांस्तथादधे॥ ४२.३४ ॥

पिंगानाम च सा भार्या तस्याः पुत्राश्च जज्ञिरे॥
चत्वारः कर्मकुशला वेदवेदांगवादिनः॥ ४२.३५ ॥

यज्ञेषु शांतिहोमेषु द्विजैः सर्वत्र पूजिताः॥
ऐतरेयोपि नित्यं च त्रिकालं हरिकंदिरे॥ ४२.३६ ॥

जजाप परमं जाप्यं नान्यत्र कुरुते श्रमम्॥
ततो माता निरीक्ष्यैव सपत्नीतनयांस्तथा॥ ४२.३७ ॥

दार्यमाणेन मनसा तनयं वाक्यमब्रवीत्॥
क्लेशायैव च जातोऽसि धिग्मे जन्म च जीवितम्॥ ४२.३८ ॥

नार्यास्तस्या नृलोकेऽत्र वरैवाजननिः स्फुटम्॥
विमानिता या भर्त्रास्यान्न पुत्रः स्याद्गुणैर्युतः॥ ४२.३९ ॥

पिंगेयं कृतपुण्या वै यस्याः पुत्रा महागुणाः॥
वेदवेदांगतत्त्वज्ञाः सर्वत्राभ्यर्चिता गुणैः॥ ४२.४० ॥

तदहं पुत्र दुर्भाग्या महीसागरसंगमे॥
निमज्जीष्ये वरं मृत्युर्जीविते किं फलं मम॥
त्वमप्येवं महामौनी नन्द भक्तो हरेश्चिरम्॥ ४२.४१ ॥

**॥नारद उवाच॥**

इति मातुर्वचः श्रुत्वा प्रहसन्नैतरेयकः॥ ४२.४२ ॥

ध्यात्वा मुहुर्तं धर्मज्ञो मातरं प्रणतोऽब्रवीत्॥
मातर्मिथ्याभिभूतासि अज्ञाने ज्ञानवत्यसि॥ ४२.४३ ॥

अशोच्ये शोचसि शुभे शोच्ये नैवाऽपि शोचसि॥
देहस्यास्य कृते मिथ्यासंसारे किं विमुह्यसि॥ ४२.४४ ॥

मूर्खाचरितमेतद्धि मन्मातुरुचितं न हि॥
अन्यत्संसारसारं च सारमन्यच्च मोहिताः॥ ४२.४५ ॥

प्रपश्यंति यथा रात्रौ खद्योतं दीपवत्स्थितम्॥
यदिदं मन्यसे सारं श्रृणु तस्याप्यसारताम्॥ ४२.४६ ॥

एवंविधं हि मानुऽयमा गर्भादिति कष्टदम्
अस्थिपट्टतुलास्तम्भे स्नायुबन्धेन यंत्रिते॥ ४२.४७ ॥

रक्तमांसमदालिप्ते विण्मूत्रद्रव्यभाजने॥
केशरोमतृणच्छन्ने सुवर्णत्वक्सुधूतके॥ ४२.४८ ॥

वदनैकमहाद्वारे षड्गवाक्षवितभूषिते॥
ओष्ठद्वयकाटे च तथा दंतार्गलान्विते॥ ४२.४९ ॥

नाडीस्वेदप्रवाहे च कालवक्त्रानलस्थिते॥
एवंविधे गृहे गेही जीवो नामास्ति शोभने॥ ४२.५० ॥

गुणत्रयमयी भार्या प्रकृतिस्तस्य तत्र च॥
बोधाहंकारकामाश्च क्रोधलोभादयोऽपि च ॥ ४२.५१ ॥

अपत्यान्यस्य हा कष्टमेवं मूढः प्रवर्तते॥
तस्य योयो यथा मोहस्तथा तं श्रृणु तत्त्वतः॥ ४२.५२ ॥

स्रोतांसि यस्य सततं प्रस्रवंति गिरेरिव॥
कफमूत्रादिकान्यस्य कृते देहस्य मुह्यति॥ ४२.५३ ॥

सर्वाशुचिनिधानस्य शरीरस्य न विद्यते॥
शुचिरेकप्रदेशोऽपि विण्मूत्रस्य दृतेरिव॥ ४२.५४ ॥

स्पृष्ट्वा स्वदेहस्रोतांसि मृत्तोयैः शोध्यते करः॥
तथाप्यशुचिभांडस्य न विरज्यति किं नरः॥ ४२.५५ ॥

कायः सुगन्धतोयाद्यैर्यत्नेनापि सुसंस्कृतः॥
न जहाति स्वकं भावं श्वपुच्छमिव नामितम्॥ ४२.५६ ॥

स्वदेहाशुचिगंधेन न विरज्यति यो नरः॥
विरागे कारणं तस्य किमन्यदु पदिश्यते॥ ४२.५७ ॥

गन्धलेपापनोदार्थं शौचं देहस्य कीर्तितम्॥
द्वयस्यापगमात्पश्चाद्भावशुद्ध्या विशुध्यति॥ ४२.५८ ॥

गंगातोयेन सर्वेण मृद्भारैः पर्वतोपमैः॥
आ मृत्योराचरञ्छौचं भावदुष्टो न शुध्यति॥ ४२.५९ ॥

तीर्थस्नानैस्तपोभिर्वा दुष्टात्मा नैव शुध्यति॥
स्वेदितः क्षालितस्तीर्थे किं शुद्धिमधिगच्छति॥ ४२.६० ॥

अंतर्भावप्रदुष्टस्य विशतोऽपि हुताशनम्॥
न स्वर्गो नापपर्गश्च देहनिर्दहनं परम्॥ ४२.६१ ॥

भावशुद्धिः परं शौचं प्रमाणं सर्वकर्मसु॥
अन्यथालिंग्यते कांता भावेन दुहिताऽन्यथा॥ ४२.६२ ॥

अन्यथैव स्तनं पुत्रश्चिंतयत्यन्यथा पतिः॥
चित्तं विशोधयेत्तस्मात्किमन्यैर्बाह्यशोधनैः॥ ४२.६३ ॥

भावतः संविशुद्धात्मा स्वर्गं मोक्षं च विंदति॥
ज्ञानामलांभसा पुंसः सद्वैराग्यमृदा पुनः॥ ४२.६४ ॥

अविद्यारागविण्मूत्रलेपगंधविशोधनम्॥
एवमेतच्छरीरं हि निसर्गादशुचि विदुः॥ ४२.६५ ॥

त्वङ्मात्रसारनिःसारं कदलीसारसंनिभम्॥
ज्ञात्वैवं दोषवद्देहं यः प्राज्ञः शिथिलीभवेत्॥ ४२.६६ ॥

स निष्क्रामति संसारे दृढग्राही स तिष्ठति॥
एवमेतन्महाकष्टं जन्म दुःखं प्रकीर्तितम्॥ ४२.६७ ॥

पुंसामज्ञातदोषेण नानाकर्मवशेन च॥
यथा गिरिवराक्रांतः कश्चिद्दुःखेन तिष्ठति॥ ४२.६८ ॥

यथा जरायुणा देही दुःखं तिष्ठति वेष्टितः॥
पतितः सागरे यद्वद्दुःखमास्ते समाकुलः॥ ४२.६९ ॥

गर्भोदकेन सिक्तांगस्तथाऽऽस्ते व्याकुलः पुमान्॥
लोहकुम्भे यथान्यस्त पच्यते कश्चिदग्निना॥ ४२.७० ॥

गर्भकुम्भे तथा क्षिप्तः पच्यते जठराग्निना॥
सूचीभिरग्निवर्णाभिर्विभिन्नस्य निरन्तरम्॥ ४२.७१ ॥

यद्दुःखं जायते तस्य तद्गर्भेऽष्टगुणं भवेत्॥
इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम्॥ ४२.७२ ॥

चरस्थिराणां सर्वेषामात्मगर्भानुरूपतः॥
तत्रस्थस्य च सर्वेषां जन्मनां स्मरणं भवेत्॥ ४२.७३ ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः॥
नानायोनिसहस्राणि मया दृष्टान्वनेकधा॥ ४२.७४ ॥

अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च॥
ततः श्रेयः करिष्यामि येन गर्भो न संभवेत्॥ ४२.७५ ॥

अध्येष्यामि हरेर्ज्ञानं संसारविनिवर्तनम्॥
एवं संचिंतयन्नास्ते मोक्षोपायं विचिन्तयन्॥ ४२.७६ ॥

गभात्कोटिगुणं दुःखं जायमानस्य जायते॥
गर्भवासे स्मृतिर्यासीत्सा जातस्य प्रणश्यति॥ ४२.७७ ॥

स्पृष्टमात्रस्य बाह्येन वायुना मूढता भवेत्॥
संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः॥ ४२.७८ ॥

स्मृतिभ्रंशात्ततस्तस्य पूर्वकर्मवशेन च॥
रतिः संजायते तूर्णं जंतोस्तत्रैव जन्मनि॥ ४२.७९ ॥

रक्तो मूढश्च लोकोयमकार्ये संप्रवर्तते॥
तत्रात्मानं न जानाति न परं न च दैवतम्॥ ४२.८० ॥

न श्रृणोति परं श्रेयः सति चक्षुषि नेक्षते॥
समे पथि समैर्गच्छन्स्खलतीव पदेपदे॥ ४२.८१ ॥

सत्यां बुद्धौ न जानाति बोध्यमानो बुधैरपि॥
संसारे क्लिश्यते तेन रागमोहवशानुगः॥ ४२.८२ ॥

गर्भस्मृतेरभावेन शास्त्रमुक्तं महर्षिभिः॥
तद्दुःखकथनार्थाय स्वर्गमोक्षप्रसाधकम्॥ ४२.८३ ॥

ये शास्त्रज्ञाने सत्यस्मिन्सर्वकर्मार्थसाधके॥
न कुर्वंत्यात्मनः श्रेयस्तदत्र परमद्भुतम्॥ ४२.८४ ॥

अव्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः॥
इच्छन्नपि न शक्नोति वक्तुं कर्तुं च किञ्चन॥ ४२.८५ ॥

दंतोत्थाने महद्दुःखं मौलेन व्याधिना तथा॥
बालरोगैश्च विविधैः पीडा बालग्रहैरपि॥ ४२.८६ ॥

तृड्बुभुक्षापरीतांगः क्वचित्तिष्ठति रारटन्॥
विण्मूत्रभक्षणाद्यं च मोहाद्बालः समाचरेत्॥ ४२.८७ ॥

कौमारे कर्णवेधेन मातापित्रोर्विताडनैः॥
अक्षराध्ययनाद्यैश्च दुःखं स्याद्गुरुशासनात्॥ ४२.८८ ॥

प्रमत्तेंद्रियवृत्तैश्च कामरागप्रपीडनात्॥
रागोद्वृत्तस्य सततं कुतः सौख्यं हि यौवने॥ ४२.८९ ॥

ईर्ष्यया सुमहद्दुःखं मोहाद्रक्तस्य जायते॥
मत्तस्य कुपितस्यैव रागो दोषाय केवलम्॥ ४२.९० ॥

न रात्रौ विंदते निद्रा कामाग्निपरिखेदितः॥
दिवापि हि कुतः सौख्यमर्थोपार्जनचिंतया॥ ४२.९१ ॥

नारीषु त्वनुभूतासु सर्वदोषाश्रयासु च॥
विण्मुत्रोत्सर्गसदृशं सौख्यं मैथुनजं स्मृतम्॥ ४२.९२ ॥

सन्मानमपमानेन वियोगेनेष्टसंगमः॥
यौवनं जरया ग्रस्तं क्व सौख्यमनुपद्रवम्॥ ४२.९३ ॥

वलीपलितकायेन शिथिलीकृतविग्रहः॥
सर्वक्रियास्वशक्तश्च जरयाजर्ज्जरीकृतः॥ ४२.९४ ॥

स्त्रीपुंसोर्यौवनं रूपं यदन्योन्याश्रयं पुरा॥
तदेवं जरया ग्रस्तमुभयोरपि न प्रियम्॥ ४२.९५ ॥

जराभिभूतःपुरुषः पत्नीपुत्रादिबांधवैः॥
अशक्तत्वाद्दुराचारैर्भृत्यैश्च परिभूयते॥ ४२.९६ ॥

धर्ममर्थं च कामं च मोक्षं च नातुरो यतः॥
शक्तः साधयितुं तस्माद्युवा धर्मं समाचरेत्॥ ४२.९७ ॥

वातपित्तकफादीनां वैषम्यं व्याधिरुच्यते॥
वातादीनां समूहश्च देहोऽयं परिकीर्तितः॥ ४२.९८ ॥

तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः॥
रोगैर्नानाविधैर्याति देहे दुःखान्यनेकशः॥ ४२.९९ ॥

तानि न स्वात्मवेद्यानि किमन्यत्कथयाम्यहम्॥
एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम्॥ ४२.१०० ॥

तत्रैकः कालसंयुक्तः शेषास्त्वागंतवः स्मृताः॥
ये त्विहागंतवः प्रोक्तास्ते प्रशाम्यन्ति भेषजैः॥ ४२.१०१ ॥

जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति॥
विविधा व्याधयः शस्ताः सर्पाद्याः प्राणिनस्तथा॥ ४२.१०२ ॥

विषाणि चाभिचाराश्च मृत्योर्द्वाराणि देहिनाम्॥
पीडितं सर्परोगाद्यैरपि धन्वंतरिः स्वयम्॥ ४२.१०३ ॥

स्वस्थीकर्तुं न शक्नोति कालप्राप्तं हि देहिनम्॥
नैषधं न तपो मंत्रा न मित्राणि न बांधवाः॥ ४२.१०४ ॥

शक्नुवंति परित्रातुं नरं कालेन पीडितम्॥
रसायनतपोजप्यैर्योगसिद्धैर्महात्मभिः॥ ४२.१०५ ॥

कालमृत्युरपि प्राज्ञैर्नीयते नापि संयुतैः॥
नास्ति मृत्युसमं दुःखं नास्ति मृत्युसमं भयम्॥ ४२.१०६ ॥

नास्ति मृत्युसमस्त्रासः सर्वेषामपि देहिनाम्॥
सद्भार्यापुत्रमित्राणि राज्यैश्वर्यसुखानि च॥ ४२.१०७ ॥

आबद्धानि स्नेहपाशैर्मृत्युः सर्वाणि कृंतति॥
किं न पश्यसि मातस्त्वं सहस्रस्यापि मध्यतः॥ ४२.१०८ ॥

जनाः शतायुषः पंचभवंति न भवन्ति वा॥
अशीतिका विपद्यन्ते केचित्सप्ततिका नराः॥ ४२.१०९ ॥

परमायुः स्थिता षष्टिस्तदप्यस्ति न निष्ठितम्॥
तस्य यावद्भवेदायुर्देहिनः पूर्वकर्म भिः॥ ४२.११० ॥

तस्यार्धमायुषो रात्रिर्हरते मृत्युरूपिणी॥
बालभावेन मोहेन वार्धके जरया तथा॥ ४२.१११ ॥

वर्षाणां विंशतिर्याति धर्मकामार्थवर्जितः॥
आगन्तुकैर्भवैः पुंसां व्याधिशोकैरनेकधा॥ ४२.११२ ॥

ह्रियतेर्द्धं हि तत्रापि यच्छेषं तद्धि जीवितम्॥
जीवितांतेच मरणं महाघोरमवाप्नुयात्॥ ४२.११३ ॥

जायते योनिकोटीषु मृतः कर्मवशात्पुनः॥
देहभेदेन यः पुंसां वियोगः कर्मसंख्यया॥ ४२.११४ ॥

मरणं तद्विनिर्द्दिष्टं न नाशः परमार्थतः॥
महातमःप्रविष्टस्य च्छिद्यमानेषु मर्मसु॥ ४२.११५ ॥

यद्दुःखं मरणं जंतोर्न तस्येहोपमा क्वचित्॥
हा तात मातर्हा कांते क्रंदत्येवं सुदुःखितः॥ ४२.११६ ॥

मण्डूक इव सर्पेण गीर्यते मृत्युना जनः॥
बांधवैः संपरित्यक्तः प्रियैश्च परिवारितः॥ ४२.११७ ॥

निःश्वसन्दीर्घमुष्णं च मुकेन परिशुष्यता॥
चतुरंतेषु खट्वायाः परिवर्तन्मुहुर्मुहुः॥ ४२.११८ ॥

संमूढः क्षिपतेत्यर्थं हस्तपादावितस्ततः॥
खट्वातो वांछते भूमिं भूमेः खट्वां पुनर्महीम्॥ ४२.११९ ॥

विवस्त्रो मुक्तलज्जश्च विष्ठानुलेपितः॥
याचमानश्च सलिलं शुष्ककण्ठोष्ठतालुकः॥ ४२.१२० ॥

चिंतयानः स्ववित्तानि कस्यैतानि मृते मयि॥
पंचावटान्खनमानः कालपाशेन कर्षितः॥ ४२.१२१ ॥

म्रियते पश्यतामेव गले घुर्घुररावकृत्॥
जीवस्तृणजलूकेव देहाद्देहं विशेत्क्रमात्॥ ४२.१२२ ॥

संप्राप्योत्तरमंशेन देहं त्यजति पूर्वकम्॥
मरणात्प्रार्थना दुःखमधिकं हि विवेकिनः॥ ४२.१२३ ॥

क्षणिकं मरणे दुःखमनंतं प्रार्थनाकृतम्॥
ज्ञातं मयैतदधुना मृतो भवति यद्गुरुः॥ ४२.१२४ ॥

न परः प्रार्थयेद्भूयस्तृष्णा लाघवकारणम्॥
आदौ दुःखं तथा मध्ये ह्यन्त्ये दुःखं च दारुणम्॥ ४२.१२५ ॥

निसर्गात्सर्वभूतानामिति दुःखपरंपरा॥
क्षुधा च सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः॥ ४२.१२६ ॥

स चान्नौषधिलेपेन क्षणमात्रं प्रशाम्यति॥
क्षुद्ध्याधेर्वेदना तीव्रा निःशेषबलकृन्तनी॥ ४२.१२७ ॥

तयाभिभूतो म्रियते यथान्यैर्व्याधिभिर्न्नरः॥
राज्ञोऽभिमानमात्रं हि ममैव विद्यते गृहे॥ ४२.१२८ ॥

सर्वमाभरणं भारं सर्वमालेपनं मम॥
सर्वं प्रलापितं गीतं नित्यमुन्मत्तचेष्टितम्॥ ४२.१२९ ॥

इत्येवं राज्यसंभोगैः कुतः सौख्यं विचारतः॥
नृपाणां व्यग्रचित्तानामन्योन्यविजिगीषया॥ ४२.१३० ॥

प्रायेण श्रीमदालेपान्नहुषाद्या महानृपाः॥
स्वर्गं प्राप्यापि पतिताः कः श्रियो विंदते सुखम्॥ ४२.१३१ ॥

उपर्युपरि देवानामन्योन्यातिशये स्थितम्॥
नरैः पुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते॥ ४२.१३२ ॥

न चान्यत्क्रियते कर्म सोऽत्र दोषः सुदारुणः॥
छिन्नमूलतरुर्यद्वदवशः पतते क्षितौ॥ ४२.१३३ ॥

पुण्यमूलक्षये तद्वत्पातयंति दिवौकसः॥
इति स्वर्गेपि देवानां नास्ति सौख्यं विचारतः॥ ४२.१३४ ॥

तथा नारकिणां दुःखं प्रसिद्धं किं च वर्ण्यते॥
स्थावरेष्वपिदुःखानि दावाग्निहिमशोषणम्॥ ४२.१३५ ॥

कुठारैश्छेदनं तीव्रं वल्कलानां च तक्षणम्॥
पर्णशखाफलानां च पातनं चंडवायुना॥ ४२.१३६ ॥

अपमर्दश्च सततं गजैर्वन्यैश्च देहिभिः॥
तृड्बुभुक्षा च सर्पाणां क्रोधो दुःखं च दारुणम्॥ ४२.१३७ ॥

दुष्टानां घातनं लोके पाशेन च निबन्धनम्॥
एवं सरीसृपाणां च दुःखं मातर्मुहुर्मुहुः॥ ४२.१३८ ॥

अकस्माज्जन्ममरणं कीटादीनां तथाविधम्॥
वर्षाशीतातपैर्दुःखं सुकष्टं मृगपक्षिणाम्॥ ४२.१३९ ॥

क्षुत्तृट्क्लेशेन महता संत्रस्ताश्च सदा मृगाः॥
पशुनागनिकायानां श्रृणु दुःखानि यानि च॥ ४२.१४० ॥

क्षुत्तृट्छीतादिदमनं वधबन्धनताडनम्॥
नासाप्रवेधनं त्रासः प्रतोदांकुशताडनम्॥ ४२.१४१ ॥

वेणुकुन्तादिनिगडमुद्गरांऽकुशताडनम्॥
भारोद्वहनसंक्लेशं शिक्षायुद्धादिपीडनम्॥ ४२.१४२ ॥

आत्मयूथवियोगश्च वने च नयनादिकम्॥
दुर्भिक्षं दुर्भगत्वं च मूर्खत्वं च दरिद्रता॥ ४२.१४३ ॥

अधरोत्तरभावश्च मरणं राष्ट्रविभ्रमः॥
अन्योन्याभिभवाद्दुःखमन्योन्यातिशयात्पुनः॥ ४२.१४४ ॥

अनित्यता प्रभावाणामुच्छ्रयाणां च पातनम्॥
इत्येवमादिभिर्दुःखैर्यस्माद्व्याप्तं चराचरम्॥ ४२.१४५ ॥

निरयादिमनुष्यांतं तस्मात्सर्वं त्यजेद्बुधः॥
स्कन्धात्सकन्धं नयेद्भारं विश्रामं मन्यतेन्यथा॥ ४२.१४६ ॥

तद्वत्सर्वमिदं लोके दुःखं दुःखेन शाम्यति॥
एवमेतज्जगत्सर्वमन्योन्यातिशयोच्छ्रितम्॥ ४२.१४७ ॥

दुःखैराकुलितं ज्ञात्वा निर्वेदं परमाप्नुयात्॥
निर्वेदाच्च विरागः स्याद्विरागाज्ज्ञानसंभवः॥ ४२.१४८ ॥

ज्ञानेन तं परं ज्ञात्वा विष्णुं मुक्तिमवाप्नुयात्॥
नाहमेतादृशे लोके रमेयं जननि क्वचित्॥ ४२.१४९ ॥

राजहंसो यथा शुद्धः काकामेध्यप्रदर्शकः॥
श्रृणु मातर्यत्र संस्थो रमेयं निरुपद्रवः॥ ४२.१५० ॥

अविद्यायनमत्युग्रं नानाकर्मातिशाखिनम्॥
संकल्पदंशमकरं शोकहर्षहिमातपम्॥ ४२.१५१ ॥

मोहांधकारतिमिरं लोभव्यालसरीसृपम्॥
विषयानन्यथाध्वानं कामक्रोधविमोक्षकम्॥ ४२.१५२ ॥

तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम्॥
न तत्प्रविश्य शोचंति न प्रदुष्यंति तद्विदः॥ ४२.१५३ ॥

न च बिभ्यति केषांचिन्नास्य बिभ्यति केचन॥ ४२.१५४ ॥

तस्मिन्वने सप्तमहाद्रुमास्तु सप्तैव नद्यश्च फलानि सप्त॥
सप्ताश्रमाः सप्त समाधयश्च दीक्षाश्च सप्तैतदरण्यरूपम्॥ ४२.१५५ ॥

पंचवर्णानि दिव्यानि चतुर्वर्णानि कानिचित्॥
त्रिद्विवर्णैकवर्णानि पुष्पाणि च फलानि च॥ ४२.१५६ ॥

सृजंतः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्॥ ४२.१५७ ॥

सप्त स्त्रियस्तत्र वसंति सत्यस्त्ववाङ्मुख्यो भानुमतो भवंति॥
ऊर्ध्वं रसानाददते प्रजाभ्यः सर्वाश्च तास्तत्त्वतः कोपि वदे॥ ४२.१५८ ॥

सप्तैव गिरयश्चात्र धृतं यैर्भुवनत्रयम्॥
नद्यश्च सरितः सप्त ब्रह्मवारिवहाः सदा॥ ४२.१५९ ॥

तेजश्चाभयदानत्वमद्रोहः कौशलं तथा॥
अचापल्यम थाक्रोधः प्रियवादश्च सप्तमः॥ ४२.१६० ॥

इत्येते गिरयो ज्ञेयास्तस्मिन्विद्यावने स्थिताः॥
दृढनिश्चयस्तथा भासा समता निग्रहो गुमः॥ ४२.१६१ ॥

निर्ममत्वं तपश्चात्र सन्तोषः सप्तमो ह्रदः॥
भगवद्गुणविज्ञानाद्भक्तिः स्यात्प्रथमा नदी॥ ४२.१६२ ॥

पुष्पादिपूजा द्वितीया तृतीया च प्रदक्षिणा॥
चतुर्थी स्तुतिवाग्रूपा पञ्चमी ईश्वरार्पणा॥ ४२.१६३ ॥

षष्ठी ब्रह्मैकता प्रोक्ता सप्तमी सिद्धिरेव च॥
सप्त नद्योऽत्र कथिता ब्रह्मणा परमेष्ठिना॥ ४२.१६४ ॥

ब्रह्मा धर्मो यमश्चाग्निरिंद्रो वरुण एव च॥ ४२.१६५ ॥

धनदश्च ध्रुवादीनां सप्तकानर्चयंत्यमी॥
नदीनां संगमस्तत्र वैकुंठसमुपह्वरे॥ ४२.१६६ ॥

आत्मतृप्ता यतो यांति शांता दांताः परात्परम्॥
केचिद्द्रुमाः स्त्रियः केचित्केचित्तत्त्वविदोऽपरे॥ ४२.१६७ ॥

सरितः केचिदाहुः स्म सप्तैव ज्ञानवित्तमाः॥
अनपेतव्रतकामोऽत्र ब्रह्मचर्यं चरामि च॥ ४२.१६८ ॥

ब्रह्मैव समिधस्तत्र ब्रह्माग्निर्ब्रह्म संस्तरः॥

आपो ब्रह्म गुरुब्रह्म ब्रह्मचर्यमिदं मम॥ ४२.१६९ ॥

एतदेवेदृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः॥
गुरुं च श्रृणु मे मातर्यो मे विद्याप्रदोऽभवत्॥ ४२.१७० ॥

एकः शास्ता न द्वितीयोऽस्ति शास्ता हृद्येव तिष्ठन्पुरुषं प्रशास्ति॥
तेनाभियुक्तः प्रणवादिवोदकं यता नियुक्तोस्मि तथाचरामि॥ ४२.१७१ ॥

एको गुरुर्नास्ति तथा द्वितीयो हृदि स्थितस्तमहं नृ ब्रवीमि॥
यं चावमान्यैव गुरुं मुकुन्दं पराभूता दानवाः सर्व एव॥ ४२.१७२ ॥

एको बंधुर्नास्ति ततो द्वितीयो हृदी स्थितं तमहमनुब्रवीमि॥
तेनानुशिष्टा बांधवा बंधुमंतः सप्तर्षयः सप्त दिवि प्रभांति॥ ४२.१७३ ॥

ब्रह्मचर्यं च संसेव्यं गार्हस्थ्य श्रृणु यादृशम्॥
पत्नी प्रकृतिरूपा मे तच्चित्तो नास्मि कर्हिचित्॥ ४२.१७४ ॥

मच्चित्ता सा सदा मातर्मम सर्वार्थसाधनी॥
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पंचमम्॥ ४२.१७५ ॥

मनो बुद्धिश्च सप्तैते दीप्यंते पावका मम॥
गंधो रसश्च रूपं च शब्दः स्पर्शश्च पंचमम्॥ ४२.१७६ ॥

मंतव्यमथ बोद्धव्यं सप्तैताः समिधो मम॥
हुतं नारायणध्यानाद्भुंक्ते नारायणः स्वयम्॥ ४२.१७७ ॥

एवंविधेन यज्ञेन यजाम्यस्मि तमीश्वरम्॥
अकामयानस्य च सर्वकामो भवेदद्विषाणस्य च सर्वदोषः॥ ४२.१७८ ॥

न मे स्वभावेषु भवंति लेपास्तोयस्य बिंदोरिव पुष्करेषु॥
नित्यस्य मे नैव भवंत्यनित्या निरीक्षमाणस्य बहुस्यभावात्॥ ४२.१७९ ॥

न सज्जते कर्मसु भोगजालं दिवीव सूर्यस्य मयूखजालम्॥ ४२.१८० ॥

एवंविधेन पुत्रेण मा मातर्दुःखिनी भव॥
तत्पदं त्वा च नेष्यामि न यत्क्रतुशतैरपि॥ ४२.१८१ ॥

इति पुत्रवचः श्रुत्वा विस्मिता इतराभवत्॥
चिंतयामास यद्येवं विद्वान्मम सुतो दृढम्॥ ४२.१८२ ॥

लोकेषु ख्यातिमायाति ततो मे स्याद्यशः परम्॥
इत्यादि चिंतयंत्यां च रजन्यां भगवान्हरिः॥ ४२.१८३ ॥

प्रहृष्टस्तस्य तैर्वाक्यैर्विस्मितः प्रादुरास च॥
मूर्तेः स्वयं विनिष्क्रम्य शंखचक्रगदाधराः॥ ४२.१८४ ॥

जगदुद्भासयन्भासा सूर्यकोटिसमप्रभः॥
ततो निष्पत्य धरणीं हृष्टरोमाश्रुद्गदः॥ ४२.१८५ ॥

मूर्ध्नि बद्धांजलिं धीमानैतरेयोऽथ तुष्टुवे॥ ४२.१८६ ॥

नमस्तुभ्यं भगवते वासुदेवाय धीमहि॥
प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च॥ ४२.१८७ ॥

नमो विज्ञानमात्राय परमानंदमूर्तये॥
आत्मारामाय शांताय निवृत्तद्वैतदृष्टये॥ ४२.१८८ ॥

आत्मानंदानुरुद्धाय सम्यक्तयक्तोर्मये नमः॥
हृषीकेशाय महते नमस्तेऽनंतशक्तये॥ ४२.१८९ ॥

वचस्युपरते प्राप्यो य एको मनसा सह॥
अनामरूपचिन्मात्रः सोऽव्यान्नः सदसत्परः॥ ४२.१९० ॥

यस्मिन्निदं यतश्चेदं तिष्ठत्यपैति जायते॥
मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः॥ ४२.१९१ ॥

यं न स्पृशंति न विदुर्मनोबुद्धींद्रियासवः॥
अंतर्बहिश्च विततं व्योमवत्प्रणतोऽस्म्यहम्॥ ४२.१९२ ॥

देहेंद्रियप्राणमनोधियोऽमी यदंशबद्धाः प्रचरंति कर्मसु॥
नैवान्यदालोहमिव प्रतप्तं स्थानेषु तद्दृष्टपदेन एते॥ ४२.१९३ ॥

चतुर्भिश्च त्रिभिर्द्वाभ्यामेकधा प्रणमामि तम्॥
पूर्वापरापरयुगे शास्तारं परमीश्वरम्॥ ४२.१९४ ॥

हित्वा गतीर्मोक्षकामा यं भजंति दशात्मकम्॥
तं परं सत्यममलं त्वां वयं पर्युपास्महे॥ ४२.१९५ ॥

ॐनमो भगवते महापुरुषाय महानुभावाय विभूतिपतये
सकलसात्वतपरिवृढनिकरकरकमलोत्पलकुड्मलोपलालितचरणारविंदयुगल परमपरमेष्ठिन्नमस्ते॥ ४२.१९६ ॥

तवाग्निरास्यं वसुधांघ्रियुग्मं नभः शिरश्चंद्ररवी च नेत्रे॥
समस्तलोका जठरं भुजाश्च दिशश्चतस्रो भगवन्नमस्ते॥ ४२.१९७ ॥

जन्मानि तावंति न संति देव निष्पीड्य सर्वाणि च सर्वकालम्॥

भूतानि यावंति मयात्र भीमे पीतानि संसारमहासमुद्रे॥ ४२.१९८ ॥

संपच्छिलानां हिमवन्महेंद्रकैलासमेर्वादिषु नैव तादृक्॥
देहाननेकाननुगृह्णतो मे प्राप्तास्ति संपन्महती तथेश॥ ४२.१९९ ॥

न संतिते देव भुवि प्रदेशा न येषु जातोऽस्मि तथा विनष्टः॥
भूत्वा मया येषु न जंतवश्च संभक्षितो वा न च भूतसंघैः॥ ४२.२०० ॥

शोकाभिभूतस्य ममाश्रु देव यावत्प्रमाणं पतितं भवेषु॥
तावत्प्रमाणं न जलं पयोदा मुंचंति दिव्यैरपि वर्षलक्षैः॥ ४२.२०१ ॥

मन्ये धरित्रीपरमाणुसंख्यामुपैति पित्रोर्गणना न मह्यम्॥
मित्राव्यमित्राण्यनुजीव्यबंधून्संख्यातुमीशोऽस्मिन देवदेव॥ ४२.२०२ ॥

त्वय्यर्पितं नाथ पुनः पुनर्मे मनः समाक्षिप्य सुदुर्द्धरारि॥
कामो वशं क्रधमुखैः सहायैः करोति किं तद्भगवन्करोमि॥ ४२.२०३ ॥

सोऽहं भृशार्तः करुणाकरस्त्वं संसारगर्ते पतितस्य विष्णो॥
महात्मनां संश्रयमभ्युपेतो नैवावसीदत्यपि दुर्गतोऽपि॥ ४२.२०४ ॥

परायणं रोगवतो हि वैद्यो महाब्धिमग्नस्य च नौर्नरस्य॥
बालस्य मातापितरौ सुघोरसंसारखिन्नस्य हरे त्वमेव॥ ४२.२०५ ॥

प्रसीद सर्वेश्वर सर्वभूत सर्वस्य हेतो परमार्थसार॥
मामुद्धरास्मादुरुदुःखसंघात्संसारगर्तात्स्वपरिग्रहेण॥ ४२.२०६ ॥

क्षुत्तृट्त्रिधातुभिरिमं मुहुरर्द्यमानं शीतोष्ण वातसलिलैरितरेतराच्च॥
कामाग्निनाच्युत रुषा च सुदुर्भरेण संपश्यतो मम उरुक्रम सीदतो हि॥ ४२.२०७ ॥

भवंतु भद्राणि समस्तदोषाः प्रयांतु नाशं जगतोऽखिलस्य॥
मयाद्य भक्त्या परमेश्वरे प्रभौ स्तुते जगद्धातरि वासुदेवे॥ ४२.२०८ ॥

ये भूतले ये दिवि चांतरिक्षे रसातले प्राणिगणाश्च केचित्॥
भवंतु ते सिद्धियुजो मयाद्य स्तुते जगद्धातरि वासुदेवे॥ ४२.२०९ ॥

अज्ञानिनो ज्ञानविदो भवंतु प्रशान्तिभाजः सततोग्रचित्ताः॥
मया च विश्वंभरणे ह्यनंते स्तुते जगद्धातरि वासुदेवे॥ ४२.२१० ॥

श्रृण्वंति ये मे स्तुवतस्तथान्ये पश्यंति ये मामिदमीरयंतम्॥
देवासुराद्या मनुजास्तिरश्चो भवंतु तेऽप्यच्युतयोगभाजः॥ ४२.२११ ॥

ये चापि मूका विकलेंद्रियत्वात्पठंति नो नैव विलोकयंति॥

पश्वादयः कीटपिपीलिकाद्या भवंतु तेऽप्यच्युतयोगभाजः॥ ४२.२१२ ॥

नश्यंतु दुःखानि जगत्यपेतु लोभादिको दोषगणः प्रजाभ्यः॥
यथात्मनि भ्रातरि चात्मजे वा तथा नरस्यास्तु जनेपि भावः॥ ४२.२१३ ॥

संसारवैद्यैऽखिलदोषहानिविचक्षणे निर्वृतिहेतुभूते॥
संसारबंधाः शिथिलीभवंतु हृदि स्थिते सर्वजनस्य विष्णौ॥ ४२.२१४ ॥

पापं प्रणाशं मम च प्रयातु यन्मानसं यच्च करोमि वाचा॥
शरीरमप्याचरितं च यन्मे स्मृते जगद्धातरि वासुदेवे॥ ४२.२१५ ॥

यथा हि वा वासुदेवेति प्रोक्ते संकीर्त्तने विष्णुभक्तस्य वापि॥
स्मृते हरौ वापि प्रयाति पापं सत्येन मे नश्यतां तेन पापम्॥ ४२.२१६ ॥

मूढोऽयमल्पमतिरल्पविचेष्टितोऽयं क्लिष्टं मनोऽपि विषयैर्मयि न प्रसंगि॥
इत्थं कृपां कुरु मयि प्रणतेऽखिलेश त्वां स्तोतुमंबुजभवोऽपि हि देव नेशः॥ ४२.२१७॥

स त्वं प्रसीद भगवन्कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः किल त्वम्॥
संसारसागरनिमग्नमनंत दीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमोसि॥ ४२.२१८ ॥

इत्थं स्तुतः स भगवानैतरेयेण भारत॥
वासुदेवो विशालात्मा सानंदमिदमाह तम्॥ ४२.२१९ ॥

वत्सैतरेय तुष्टोस्मि भक्त्यानेन स्तवेन ते॥
वरं वृणुष्व मत्तस्त्वं दुर्लभं यदभीप्सितम्॥ ४२.२२० ॥

**॥ऐतरेय उवाच॥**
एष एव वरो नाथमम नित्यमभीप्सितः॥
मज्जतो घोरसंसारे कर्णधारो हरे भव॥ ४२.२२१ ॥

**॥श्रीभगवानुवाच॥**
मुक्त एवासि संसाराद्यस्य ते भक्तिरीदृशी॥
ग्रहैर्महाग्रहैर्बद्धो नैव ते द्वित्रयोदशी॥ ४२.२२२ ॥

यश्च स्तोत्रेण सततं गुप्तक्षेत्रसमीहितम्॥
स्तोष्यते वासुदेवं मां स पापक्षयमाप्स्यति॥ ४२.२२३ ॥

यस्मादेतेन स्तोत्रेण पापं नाशमवाप्स्यति॥
अघनाशनमित्येव तस्मात्ख्यातिमवाप्स्यति॥ ४२.२२४ ॥

एकादश्यामुपोष्यैव ममाग्रे यः पठिष्यति॥
स्तवमेनं स पूतात्मा मम लोकमवाप्स्यति॥ ४२.२२५ ॥

सर्वेषामेव क्षेत्राणां गुप्तक्षेत्रं प्रियं यथा॥
तथा सर्वस्तवानां च स्तवोयं सुप्रियोमम॥ ४२.२२६ ॥

यानि चोद्दिश्य भूतानि जप्यतेऽसौ महात्मभिः॥
तानि शांतिं भगं प्रज्ञां प्राप्स्यंति कृपया मम॥ ४२.२२७ ॥

त्वं च वत्स श्रौतधर्मान्सम्यगाचर श्रद्धया॥
न तैर्बंधं मयि न्यस्तैराप्स्यस्यनभिसंधितैः॥ ४२.२२८ ॥

यज यज्ञैरवाप्यैव दारान्नन्दय मातरम्॥
मयि ध्यानेन तीव्रेण मामवाप्स्यस्यसंशयम्॥ ४२.२२९ ॥

बुद्धिर्मनोथ भूतानि बुद्धिकर्मेन्द्रियाणि च॥
त्रयोदशग्रहैर्ये स्युस्त्रयोदश महाग्रहाः॥ ४२.२३० ॥

बोद्धव्यमथ मंतव्यमहंता शब्द एव च॥
स्पर्शो रसो रूपगन्धौ वचनादानमेव च॥ ४२.२३१ ॥

विहृत्युत्सर्ग आनंदस्त्रयोदश महाग्रहाः॥
एतान्महाग्रहन्पुत्र शुद्धाञ्छुद्धैः स्वकैर्ग्रहैः॥ ४२.२३२ ॥

गृहाण ध्यानयोगेन ममैवं मोक्षमाप्स्यसि॥
एवं त्वं कर्मभिर्वीर नैष्कर्म्यं समवाप्स्यसि॥ ४२.२३३ ॥

शुल्बंरसेन संविद्धं दक्षो हेम यथाश्नुते॥
वर्णाश्रमाचारवता मयि संन्यस्तकर्मणा॥ ४२.२३४ ॥

मदनुध्यानयुक्तेन मोक्षो नास्तीह दुर्लभः॥
तस्मादेवं वर्तमानो नन्द व्रतपरायणः॥ ४२.२३५ ॥

उद्धृत्य सप्तपुरुषाल्लँयं मयि गमिष्यसि॥
सांप्रतं प्रतिभास्यंति वेदश्चापठिता अपि॥ ४२.२३६ ॥

ततस्त्वं कोटितीर्थे च यज्ञे वै हरिमेधसः॥
याहि तत्र भविष्यं ते सर्वं मातुरभीप्सितम्॥ ४२.२३७ ॥

इत्युक्त्वा भगवान्विष्णुर्मूर्तिमध्ये विवेश ह॥
विलोक्य मानो निमिषं मात्रा चैव सुतेन च॥ ४२.२३८ ॥

ततो मूर्तिं नमस्कृत्य वासुदेवस्य विस्मितः॥
ऐतरेयः स्वजननीं मुदितो वाक्यमब्रवीत्॥ ४२.२३९ ॥

पुराहमभवं शूद्रो भीतः संसारदोषतः॥
परिनिष्ठागतं धर्मं ब्राह्मणं शरणं गतः॥ ४२.२४० ॥

स कृपालुर्मम प्राह मन्त्रं वै द्वादशाक्षरम्॥
सदेमं जपचेत्युक्त्वा तमहं जप्तवान्सदा॥ ४२.२४१ ॥

तेन जाप्यप्रभावेन ममोत्पत्तिस्तवोदरात्॥
जातस्मृतिर्विष्णुभक्तिः स्थितिरत्र च सर्वदा॥ ४२.२४२ ॥

इदानीं च प्रयाम्येष यज्ञं तं हरिमेधसः॥
त्वद्रूपं विष्णुप्रीत्यर्थं प्रणम्य त्वां प्रसादये॥ ४२.२४३ ॥

ततो महीनगरकाख्ये कोटितीर्थतलस्थितम्॥
यजन्तं संवृतं विप्रैः कोटिशस्तमुपागमत्॥ ४२.२४४ ॥

गेहाय मातरं प्रोच्य स यज्ञे प्रोक्तवान्द्विजः॥
नमस्तस्मै भगवते विष्णवेऽकुण्ठमेधसे॥ ४२.२४५ ॥

यन्मायामोहितधियो भ्रमामः कर्मसागरे॥
इति श्लोकं महार्थं ते हरिमेधमुखा द्विजाः॥ ४२.२४६ ॥

आकर्ण्यासनपूजाद्यैः पूजयामासुरंग तम्॥
ततो वेदार्थनैपुण्यैस्तेन ते तोषिता द्विजाः॥ ४२.२४७ ॥

प्रददुर्दक्षिणां सर्वां हरिमेधाः सुतामपि॥
द्रव्यं कन्यां च संगृहय स्वगृहं समुपागमत्॥ ४२.२४८ ॥

वन्दयित्वा स्वजननीं पुत्रानुत्पाद्य चामलान्॥
इष्ट्वा यज्ञैरैतरेयो द्वादशीव्रततत्परः॥ ४२.२४९ ॥

वासुदेवानुध्यानेन मोक्षं पश्चादुपागतः॥
एवंविधो वासुदेवः स्वयमत्रास्ति भारत॥ ४२.२५० ॥

योर्ययेत्पूजयेत्स्तौति सर्वं तस्याक्षयं विदुः॥
शिवधर्मेषु यत्प्रोक्तं फलं पूर्वं मया तव॥ ४२.२५१ ॥

तादृशं लभते मर्त्यो वासुदेवप्रसादतः॥ ४२.२५२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे श्रीवृद्धवासुदेवमाहात्म्यवर्णन ऐतरेयब्राह्मणचरित्रवर्णनंनाम द्विचत्वारिंशोऽध्यायः॥ ४२ ॥ छ ॥

**॥श्रीनारद उवाच॥**

ततोऽहं पार्थ भूयोऽपि जनानुग्रहकाम्यया॥
प्रत्यक्षदेवं मार्तंडमत्रानेतुमियेष ह॥ ४३.१ ॥

सर्वेषां प्राणिनां यस्माद्डुपो भगवान्रविः॥
इहामुत्र च कौंतेय विश्वद्धारी रविर्मतः॥ ४३.२ ॥

ये स्मरंति रविं भक्त्या कीर्तयंति च ये नराः॥
पूजयंति च ये नित्यं कृतार्थास्ते न संशयः॥ ४३.३ ॥

सूर्यभक्तिपरा ये च नित्यं तद्गतमानसाः॥
ये स्मरंति सदा सूर्यं न ते दुःखस्य भाजिनः॥ ४३.४ ॥

भवनानि मनोज्ञानि विविधाभरणाः स्त्रियः॥
धनं चादृष्टपर्यंतं सूर्यपूजाविधेः फलम्॥ ४३.५ ॥

दुर्लभा भक्तिः सूर्ये वा दुर्लभं तस्य चार्चनम्॥
दानं च दुर्लभं तस्मै ततो होमश्च दुर्लभः॥ ४३.६ ॥

नमस्कारादिसंयुक्तं रविरित्यक्षरद्वयम्॥
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम्॥ ४३.७ ॥

इत्यहं हृदि संचिंत्य माहात्म्यं रविजं महत्॥
पूर्णं वर्षशतं पार्थ रविं भक्त्या ह्यतोषयम्॥ ४३.८ ॥

जपेन सुविशुद्धेन च्छन्दसां वायुभोजनः॥
ततः खाद्द्वितीयां मूर्तिं कृत्वा योगबलाद्विभुः॥ ४३.९ ॥

तेजसा दुर्दृशो भास्वान्प्रत्यक्षः समजायत॥ ४३.१० ॥

तमहं प्रांजलिर्भूत्वा नमस्कृत्य रविं प्रभुम्॥
सामभिर्विविधैर्देवं पर्यतोषयमीश्वरम्॥ ४३.११ ॥

तुष्टो मामाह वरदो देवर्षे सुचिरं त्वया॥
तपसाराधितोऽस्मीति वरं वृणु यथेप्सितम्॥ ४३.१२ ॥

इत्युक्तोऽहं लोकनाथं प्रांजलिः प्रास्तुवं वचः॥
यदि तुष्टो भवान्मह्यं यदि देयो वरो मम॥ ४३.१३ ॥

ततस्ते कामरूपे या कला नाथ प्रवर्तते॥
राजवर्धनराज्ञा याऽऽराधिता च जनैः पुरा॥ ४३.१४ ॥

तया च कलया भानो सदात्र स्थातुमर्हसि॥
ततस्तथेति देवेन प्रोक्ते तुष्टेन भारत॥ ४३.१५ ॥

अस्थापयमहं सूर्यं भट्टादित्याभिधानकम्॥
भट्टेनस्थापितं यस्मान्मया तस्माद्रविर्जगौ॥ ४३.१६ ॥

ततः संपूज्य तं पुष्पैः कृतावेशमहं रविम्॥
भक्त्युद्रेकाप्लुतांगोऽथ स्तुतिमेतामथाचरम्॥ ४३.१७ ॥

सर्ववेदरहस्यैश्च नामभिश्च शताष्टभिः॥
सप्तसप्तिरचिंत्यात्मा महाकारुणिकोत्तमः॥ ४३.१८ ॥

संजीवनो जयो जीवो जीवनाथो जगत्पतिः॥
कालाश्रयः कालकर्ता महायोगी महामतिः॥ ४३.१९ ॥

भूतांतकरणो देवः कमलानन्दनन्दनः॥
सहस्रपाच्च वरदो दिव्यकुण्डलमण्डितः॥ ४३.२० ॥

धर्मप्रियोचितात्मा च सविता वायुवाहनः॥
आदित्योऽक्रोधनः सूर्यो रश्मिमाली विभावसुः॥ ४३.२१ ॥

दिनकृद्दिनहृन्मौनी सुरथो रथिनांवरः॥
राज्ञीपतिः स्वर्णरेताः पूषा त्वष्टा दिवाकरः॥ ४३.२२ ॥

आकाशतिलको धाता संविभागी मनोहरः॥
प्रज्ञः प्रजापतिर्धन्यो विष्णुः श्रीशो भिषग्वरः॥ ४३.२३ ॥

आलोककृल्लोकनाथो लोकपालनमस्कृतः॥
विदिताशयश्च सुनयो महात्मा भक्तवत्सलः॥ ४३.२४ ॥

कीर्तिकीर्तिकरो नित्यो रोचिष्णुः कल्मषापहः॥
जितानन्दो महावीर्यो हंसः संहारकारकः॥ ४३.२५ ॥

कृतकृत्यः सुसंगश्च बहुज्ञो वचसां पतिः॥
विश्वपूज्यो मृत्युहारि घृणी धर्मस्य कारणम्॥ ४३.२६ ॥

प्रणतार्तिहरोऽरोग आयुष्यमान्सुखदः सुखी॥
मङ्गलं पुण्डरीकाक्षो व्रती व्रतफलप्रदः॥ ४३.२७ ॥

शुचिः पूर्णो मोक्षमार्गदाता भोक्ता महेश्वरः॥
धन्वंतरिः प्रियाभाषी धनुर्वेदविदेकराट॥ ४३.२८ ॥

जगत्पिता धूमकेतुर्विधूतो ध्वांतहा गुरुः॥
गोपतिश्च कृतातिथ्यः शुभाचारः शुचिप्रियः॥ ४३.२९ ॥

सामप्रियो लोकबन्धुर्नैकरूपो युगादिकृत्॥
धर्मसेतुर्लोकसाक्षी खेटतत्त्रः सर्वदः प्रभुः॥ ४३.३० ॥

मयैवं संस्तुतो भानुर्नाम्नामष्टशतेन च॥
तुष्यतां सर्वलोकानां सर्वलोकप्रियो विभुः॥ ४३.३१ ॥

इत्येवं संस्तवात्प्रीतो भास्करो मामवोचत॥
सदात्र कलया स्थास्ये देवर्षे त्वत्प्रियेप्सया॥ ४३.३२ ॥

यो मामत्र महाभक्त्या भट्टादित्यं प्रपूजयेत्॥
सहस्रशः का मरूपे संपूज्याप्नोति तत्फलम्॥ ४३.३३ ॥

मामुद्दिश्य च यो विप्रः स्वल्पं वा यदि वा बहु॥
दास्यतेऽत्राक्षयं तच्च ग्रहीष्ये करजं यथा॥ ४३.३४ ॥

रक्तोत्पलैश्च कह्लारैः केसरैः करवीरकैः॥
शतत्रयैर्महाप्दमै रविवारेण मानवः॥ ४३.३५ ॥

सप्तम्यामथ षष्ठ्यां वा येऽर्चयिष्यंति मामिह॥
यान्यान्प्रार्थयते कामांस्तांतान्प्राप्स्यति निश्चितम्॥ ४३.३६ ॥

दर्शनान्मम भक्त्या च नाशो व्याधिदरिद्रयोः॥
प्रणामात्स्वर्गमाप्नोति श्रुत्वा मोक्षं च नित्यशः॥ ४३.३७ ॥

अभक्तिं यश्च कर्ता मे स गच्छेन्निश्चिंतं क्षयम्॥
अष्टोत्तरशतं नाम ममाग्रे यत्त्वयेरितम्॥ ४३.३८ ॥

त्रिकालमेककालं वा पठतः श्रृणुयत्फलम्॥
कीर्तिमान्सुभगो विद्वान्सुसुखी प्रियदर्शनः॥ ४३.३९ ॥

भवेद्वर्षशतायुश्च सर्वरोगविवर्जितः॥
यस्त्विदं श्रृणुयान्नित्यं पठेद्वा प्रयतः शुचिः॥ ४३.४० ॥

अक्षयं स्वल्पमप्यन्नं भवेत्तस्योपसाधितम्॥
विजयी च भवेन्नित्यं तथा जातिस्मरो भवेत्॥ ४३.४१ ॥

तस्मादेतत्त्वया जाप्यं परं स्वस्त्ययनं महत्॥
तथा ममाग्रे कुंडं च कुरु स्नानार्थमुत्तमम्॥ ४३.४२ ॥

कामरूपकला यत्र तत्र कुंडं वने भवेत्॥
एवं दत्त्वा वरान्भानुस्तत्रैवां तरधीयत॥ ४३.४३ ॥

ततो भास्करवाक्येन सिद्धेशस्य च सव्यतः॥
वनमध्ये मया कुंडं कृतं दर्भशलाकया॥ ४३.४४ ॥

कामरूपभवं कुंडं वृक्षास्ते चापि भारत॥
संलीनास्तन्महाश्चर्यं ममाजायत चेतसि॥ ४३.४५ ॥

माघमासस्य शुक्लायां सप्तम्यां स्त्री नरोऽपि वा॥
स्नानं कुंडे शुभं कृत्वा भट्टादित्यं प्रपश्यति॥ ४३.४६ ॥

तस्यानंतं भवेत्पुण्यं रथं यश्च प्रपूजयेत्॥
रथयात्रां च कुरुते यस्मिन्यस्मिन्नसौ पथि॥ ४३.४७ ॥

ये च पश्यंति लोकास्ते धन्याः सर्वे न संशयः॥
पुत्रधान्यधनैर्युक्ता नीरुजस्तेजसाऽन्विताः॥ ४३.४८ ॥

भविष्यंति नरास्ते ये कारयंति रथोत्सवम्॥
गंगादिसर्वतीर्थेषु यत्फलं कीर्तितं बुधैः॥ ४३.४९ ॥

भट्टादित्यस्य कुंडे च तत्फलं सप्तमीदिने॥
तत्र कुंडे च यः स्नात्वा सूर्यार्घ्यं प्रयच्छति॥
कपिला गोशतस्यासौ दत्तस्य फलमश्नुते॥ ४३.५० ॥

**॥अर्जुर उवाच॥**
वासुदेवादयः सर्वे वदंत्येवं महामुने॥ ४३.५१ ॥

भास्करार्घं विना पातः कृतं सर्वं च निष्फलम्॥
तस्याहं श्रोतुमिच्छामि विधिं विधिविदां वर॥ ४३.५२ ॥

**॥नारद उवाच॥**
यथा ब्रह्मादयो देवा यच्छंत्यर्घं महात्मने॥
भास्कराय श्रृणु त्वं तं विधिं सर्वाघनाशनम्॥ ४३.५३ ॥

प्रथमं तावत्प्रत्युषे उदिते सूर्ये शुचिर्भूत्वा गोमयकृतमंडलस्योपरि रक्तचंदनेन मंडलकं कृत्वा ततस्ताम्रपात्रे रक्तचंदनोदकश्वेतचंदनादिद्रव्यैः प्रपूरणं कृत्वा तन्मध्ये हेमाक्षतदूर्वादधिसर्पीषि परिक्षिप्य स्थापयेत्॥ ४३.५४ ॥

स्वशरीरमालभेत् अनेन मंत्रेण॥
ॐखखोल्काय नमः॥
सप्तवारानुच्चार्य स्थातव्यम्॥
तेन शुद्धिरुपसंजायते देहस्यार्चार्हता भवति॥

पश्चादासनस्थं देवं सवितारं मंडलमध्ये द्वादशात्मकं सुरादिभिः संपूज्यमानं ध्यात्वा पूर्वोक्तमर्घपात्रं शिरसि कृत्वा भूमौ जानुनी निपात्य सूर्याभिमुखस्तद्गतमनाभूत्वार्घमंत्रमुदाहरेत्॥
तदुच्यते सूर्यवक्त्राद्विनिर्गतमिति॥ ४३.५५ ॥

यस्योच्चारणशब्देन रथं संस्थाप्य भास्करः॥
प्रतिगृह्णाति चैवार्घ्यं वरमिष्टं च यच्छति॥ ४३.५६ ॥

ॐयस्याहुः सप्त च्छंदांसि रथे तिष्ठंति वाजिनः॥
अरुणः सारथिर्यस्य रथवाहोऽग्रतः स्थितः॥ ४३.५७ ॥

जया च विजया चैव जयंती पापनाशनी॥
इडा च पिंगला चैव वहंतोऽश्वमुखास्तथा॥ ४३.५८ ॥

डिंडिश्च शेषनागश्च गणाध्यक्षस्तथैव च॥
स्कंदरेवंतताक्ष्याश्च तथा कल्माषपक्षिणौ॥ ४३.५९ ॥

राज्ञी च निक्षुभा देवी ललिता चैव संज्ञिका॥
तथा यज्ञभुजो देवा ये चान्ये परिकीर्तिताः॥ ४३.६० ॥

एभिः परिवृतो योऽसावधरोत्तरवासिभिः॥
तमहं लोककर्तारमाह्वयामि तमोपहम्॥ ४३.६१ ॥

अम्मयो भगवान्भानुरमुं यज्ञं प्रवर्तयन्॥
इदमर्घ्यं च पाद्यं च प्रगृहाण नमोनमः॥ ४३.६२ ॥

**॥आवाहनम्॥**
सहस्रकिरण वरद जीवनरूप ते नमः॥
इति सांनिध्यकरणम्॥

ॐवषट् इत्युच्चार्य सूर्यस्य चरणयुगलं पश्यन् भुवि पद्भ्यां पात्रीं निर्वापयेत् पाद्यं तदुच्यते॥
एवं पाद्यं दत्त्वा बद्धांजलिः सुस्वागतमिति कुर्यात्॥
स्वागतं भगवन्नेहि मम प्रसादं विधाय आस्यताम्॥
इह गृहाण पूजां च प्रसादं च धिया कुरु॥
तिष्ठ त्वं तावदत्रैव यावत्पूजां करोम्यहम्॥ ४३.६३ ॥

एवं विज्ञापनं दद्यादनेन मंत्रेण कमलासनम्॥
तत्कमलासनं कमलनंदन उपाविशति॥
आसन उपविष्टस्य शेषां पूजां नियोजयेत् अनेन विधानेन॥
ॐसोममूर्तिक्षीरोदपतये नमः॥
इति क्षीरादिस्नपनम्॥
ॐभास्कराय नीरव सिने नमः॥

॥इति जलस्नानम्॥

ततो वासोयुगं शुभ्रं दद्यात् अनेन मंत्रेण॥
इदं वासोयुगं सूर्य गृहाण कृपया मम॥
कटिभूषणमेकं ते द्वितीयं चांगप्रावरणम्॥ ४३.६४ ॥

ततो यज्ञोपवीतं दद्यात् अनेन मंत्रेण॥
सूत्रतंतुमयं शुद्धं पवित्रमिदमुत्तमम्॥
यज्ञोपवीतं देवेश प्रगृहाण नमोऽस्तु ते॥ ४३.६५ ॥

ततो यथाशक्ति श्वेतमुकुटमुद्रिकादिभूषणानि दद्यात् अनेन मंत्रेण॥
मुकुटो रत्ननद्धोऽयं मुद्रिकां भूषणानि च॥
अलंकारं गृहणेमं मया भक्त्या समर्पितम्॥ ४३.६६ ॥

एवमलंकारं निवेद्य पश्चात्केशरकुंकुमकर्पूररक्तचंदनमिश्रमनुलेपनं दद्यात्॥ ४३.६७ ॥

ॐतवातिप्रिय वृक्षाणां रसोऽयं तिग्मदीधिते॥
स तवैवोचितः स्वामिन्गृहाण कृपया मम॥ ४३.६८ ॥

ततश्चंपकजपाकरवीरकर्णककेसरकोकनदादिभिः पूजां कुर्यात्॥ ४३.६९ ॥

ॐवनस्पतिरसो दिव्यो गंधाढ्यो गंध उत्तमः॥
आहारः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥ ४३.७० ॥

॥शल्लकीधूपमंत्रः॥
ततः पायसादिनिष्पन्नं नैवेद्यं निवेदयेदनेन मंत्रेण॥
नैवेद्यममृतं सर्वभूतानां प्राणवर्धनम्॥
पूर्णपात्रे मया दत्तं प्रतिगृह्ण प्रसीद मे॥ ४३.७१ ॥

ततः शौचोदकतांबूलदीपारार्तिकशीतलिकापुनः पूजादि निवेद्य यथाशक्त्या स्तुत्वा सुकृतं दुष्कृतं वा क्षमस्वेति प्रोच्य विसर्जयेत्॥
ततो भूयो नमस्य हेमवस्त्रोपवीतालंकारान् ब्राह्मणाय निवेद्य निर्माल्यं संहृत्यांभसि निक्षिपेत्॥ ४३.७२ ॥

॥इत्यर्घ्यदानविधिः॥

य एवं भास्करायार्घ्यं मूर्तौ मंडलकेऽपि वा॥
नित्यं निवेदयेत्प्रातः स्याद्रवेरात्मवत्प्रियः॥ ४३.७३ ॥

अनेन विधिना कर्णो भास्करार्घ्यं प्रयच्छति॥
ततः सूर्यस्य पार्थासावात्मवद्वल्लभो मतः॥ ४३.७४ ॥

अशक्तश्चेन्नित्यमेकमर्घ्यं दद्याद्दिवाकृते॥

ततोऽत्र रथसप्तम्यां कुंडे देयः प्रयत्नतः॥ ४३.७५ ॥

अश्वमेधफलं प्राप्य सूर्यलोक मवाप्नुयात्॥
तस्मात्सर्वप्रयत्नेन दातव्योऽर्घोऽत्र भारत॥ ४३.७६ ॥

एवंविधस्त्वसौ देवो भट्टादित्योऽत्र तिष्ठति॥
भूयानतोऽपि बहुशः पापहा धर्मवर्धनः॥ ४३.७७ ॥

दिव्यमष्टविधं चात्र सद्यः प्रत्ययकारकम्॥
पापानां चोपभुक्तं हि यथा पार्थ हलाहलम्॥ ४३.७८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे सागरसंगमे भट्टादित्यमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः॥ ४३ ॥ छ ॥

**॥अर्जुन उवाच॥**

दिव्यप्राकारमिच्छामि श्रोतुं चाहं मुनीश्वर॥
कथं कार्याणि कानीह स्फुटं यैः पुण्यपापकम्॥ ४४.१ ॥

**॥नारद उवाच॥**

शपषाः पोशघटकौ विषाग्न तप्तमाषकौ॥
फलं च तंदुलं चैव दिव्यान्यष्टौ विदुर्बुधाः॥ ४४.२ ॥

असाक्षिकेषु चार्थेषु मिथो विवदमानयोः॥
राजद्रोहाभिशापेषु साहसेषु तथैव च॥ ४४.३ ॥

अविदस्तत्त्वतः सत्यं शपथेनाभिलंघयेत्॥
महर्षिभिश्च देवैश्च सत्यार्थाः शपथाः कृताः॥ ४४.४ ॥

जवनो नृपतिः क्षीणो मिथ्याशपथमाचरेत्॥
वसिष्ठाग्रे वर्षमध्ये सान्वयः किल भारत॥ ४४.५ ॥

अंधः शत्रुगृहं गच्छेद्यो मिथ्याशपथांश्चरेत्॥
रौरवस्य स्वयं द्वारमुद्घाटयति दुर्मतिः॥ ४४.६ ॥

मन्यंते वै पापकृतो न कश्चितपश्यतीति नः॥
तांश्च देवाः प्रपश्यंति स्वस्यैवांतरपौरुषाः॥ ४४.७ ॥

आदित्यचंद्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च॥
अहश्च रात्रिश्च उभे च संध्ये धर्मो हि जानाति नरस्य वृत्तम्॥ ४४.८ ॥

एवं तस्मादभिज्ञाय सत्यर्थशपथांश्चरेत्॥
वृथा हि शपथान्कुर्वन्प्रेत्य चेह विनश्यति॥ ४४.९ ॥

इदं सत्यं वदामीति ब्रुवन्साक्षी भवान्यतः॥
शुभाशुभफलं देहि शुचिः पादौ रवेः स्वृशेत्॥ ४४.१० ॥

अथ शास्त्रस्य विप्रोऽपि शस्त्रस्यापि च क्षत्रियः॥
मां संस्पृशंस्तथा वैश्यः शुद्रः स्वगुरुमेव च॥ ४४.११ ॥

मातरं पितरं पूज्यं स्पृशेत्साधारणं त्विदम्॥
कोशस्य रूपं पूर्वं ते व्याख्यातं पांडुनंदन॥ ४४.१२ ॥

विप्रवर्ज्यं तथा केशं वर्णिनां दापयेन्नृपः॥
यो यो यद्देवताभक्तः पाययेत्तस्य तं नरम्॥ ४४.१३ ॥

समभक्तं च देवानामादित्यस्यैव पाययेत्॥

सर्वेषां चोग्रदेवानां स्नापयेदायुधास्त्रकम्॥ ४४.१४ ॥

स्नानोदकं वा संकल्पं गृहीत्वा पाययेन्नवम्॥
त्रिसप्तरात्रमध्ये च फलं कोशस्य निर्दिशेत्॥ ४४.१५ ॥

अतः परं महादिव्यविधानं श्रृणु यद्भवेत्॥
संशयच्छेदि सर्वेषां धार्ष्ट्यत्तद्दिव्यमेव च॥ ४४.१६ ॥

सशिरस्कंप्रदातव्यमिति ब्रह्मा पुराब्रवीत्॥
महोग्राणां च दातव्यमशिरस्कमपि स्फुटम्॥ ४४.१७ ॥

साधूनां वर्णिनां राजा न शिरस्कं प्रदापयेत्॥
न प्रवातेधटं देयं नोष्णकाले हुताशनम्॥ ४४.१८ ॥

वर्णिनां च तथा कालं तंदुलं मुखरोगिणाम्॥ ४४.१९ ॥

कुष्ठपित्तार्दितानां च ब्राह्मणानां च नो विषम्॥
तप्तमाषकमर्हंति सर्वे धर्म्यं निरत्ययम्॥ ४४.२० ॥

न व्याधिमरके देशे शपथान्कोशमेव च॥
दिव्यान्यासुरकैर्मंत्रैः स्तंभयंतीह केचन॥ ४४.२१ ॥

प्रतिघातविदस्तेषां योजयेद्धर्मवत्सलान्॥
दिव्यानां स्तभकाञ्ज्ञात्वा पापान्नित्यं महीपतिः॥ ४४.२२ ॥

विवासयेत्स्वकाद्राष्ट्रात्ते हि लोकस्य कंटकाः॥
तेषामन्वेषणे यत्नं राजा नित्यं समाचरेत्॥ ४४.२३ ॥

ते हि पापसमाचारास्तस्करेभ्योऽपि तस्कराः॥
प्राग्दृष्टदोषान्स्वल्पेषु दिव्येषु विनियोजयेत्॥ ४४.२४ ॥

महत्स्वपि न चार्थेषु धर्मज्ञान्धर्मवत्सलान्॥
न मिथ्यावचनं येषां जन्मप्रभृति विद्यते॥ ४४.२५ ॥

श्रद्दध्यात्पार्थिवस्तेषां वचना देव भारत॥
ज्ञात्वा धर्मिष्ठतां राजा पुरुषस्य विचक्षणः॥ ४४.२६ ॥

क्रोधाल्लोभात्कारयंश्च स्वयमेव प्रदुष्यति॥
तस्मात्पापिषु दिव्यं स्यात्तत्रादौ प्रोच्यते धटे॥ ४४.२७ ॥

सुसमायां पृथिव्यां च दिग्भागे पूर्वदक्षिणे॥
यज्ञियस्य तु वृक्षस्य स्थाप्यं स्यान्मुंडकद्वयम्॥ ४४.२८ ॥

स्तंभकस्य प्रमाणं च सप्तहस्तं प्रकीर्तितम्॥
द्वौ हस्तौ निखनेत्काष्ठं दृश्यं स्याद्धस्तपंचकम्॥ ४४.२९ ॥

अंतरं तु तयोः कार्यं तथा हस्तचतुष्टयम्॥
मुंडकोपरि काष्ठं च दृढं कुर्याद्विचक्षणः॥ ४४.३० ॥

चतुर्हस्तं तुलाकाष्ठमव्रणं कारयेत्स्थिरम्॥
खदिरार्जुनवृक्षाणां शिंशपाशालजं त्वथ॥ ४४.३१ ॥

तुलाकाष्ठे तु कर्तव्यं तथा वै शिक्यकद्वयम्॥
प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटस्तथा॥ ४४.३२ ॥

पाषाणस्यापि जायेत् स्तंभेषु च धटस्तथा॥
वणिक्सुवर्णकारो वा कुशलः कांस्यकारकः॥ ४४.३३ ॥

तुलाधारधरः कार्यो रिपौ मित्रे च यः समः॥
श्रावयेत्प्राड्विवाकोऽपि तुलाधारं विचक्षणः॥ ४४.३४ ॥

ब्रह्मघ्ने ये स्मृता लोका ये च स्त्रीबालघातके॥
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा॥ ४४.३५ ॥

एकस्मिंस्तोलयेच्छिक्ये ज्ञातं सूपोषितं नरम्॥
द्वितीये मृत्तिकां शुभ्रां गौरां तु तुलयेद्बुधः॥ ४४.३६ ॥

इष्टिकाभस्मपाषाणकपालास्थीनि वर्जयेत्॥
तोलयित्वा ततः पूर्वं तस्मात्तमवतारयेत्॥ ४४.३७ ॥

मूर्ध्नि पत्रं ततो न्यस्य न्यस्तपत्रं निवेशयेत्॥
पत्रे मंत्रस्त्वयं लेख्यो यः पुरोक्तः श्वयंभुवा॥ ४४.३८ ॥

ब्रह्मणस्त्वं सुता देवी तुलानाम्नेति कथ्यते॥
तुकारो गौरवे नित्यं लकारो लघुनि स्मृतः॥ ४४.३९ ॥

गुरुलाघवसंयोगात्तुला तेन निगद्यसे॥
संशयान्मोचयस्वैनमभिशस्तं नरं शुभे॥ ४४.४० ॥

भूय आरोपयेत्तं तु नरं तस्मिन्सपत्रकम्॥
तुलितो यदि वर्धेत शुद्धो भवति धर्मतः॥ ४४.४१ ॥

हीयमानो न शुद्धः स्यादिति धर्मविदो विदुः॥
शिक्यच्छेदे तुलाभंगे पुनरारोपयेन्नरम्॥ ४४.४२ ॥

एवं निःसंशयं ज्ञानं यच्चान्यायं न लोपयेत्॥
एतत्सर्वं रवौ वारे कार्यं संपूज्य भास्करम्॥ ४४.४३ ॥

अथातः संप्रवक्ष्यामि विषदिव्यं श्रृणुष्व मे॥ ४४.४४ ॥

द्विप्रकारं च तत्प्रोक्तं घटसर्पविषं तथा॥
शृंगिणो वत्सनाभस्य हिमशैलभवस्य वा॥ ४४.४५ ॥

यवाः सप्त प्रदातव्या अथवा षड्घृतप्लुताः॥
मूर्ध्नि विन्यस्तपत्रस्य पत्रे चैवं निवेशयेत्॥ ४४.४६ ॥

त्वं विष ब्रह्मणः पुत्र सत्यधर्मे व्यवस्थितः॥
त्रायस्वैनं नरं पापात्सत्येनास्य भवामृतम्॥ ४४.४७ ॥

येन वेगैर्विना जीर्णं छर्दिमूर्च्छाविवर्जितम्॥
तं तु शुद्धं विजानीयादिति धर्मविदो विदुः॥ ४४.४८ ॥

क्षुधितं क्षुधितः सर्पं घटस्थं प्रोच्य पूर्ववत्॥
संस्पृशेत्तालिकाः सप्त न दशेच्छुध्यतीति सः॥ ४४.४९ ॥

अग्निदिव्यं यथा प्राह विरंचिस्तच्छृणुष्व मे॥
सप्तमंडलकान्कुर्याद्देवस्याग्रे रवेस्तथा॥ ४४.५० ॥

मंडलान्मंडलं कार्यं पूर्वेणेति विनिश्चयः॥
षोडशांतुलकं कार्यं मंडलात्तावदं तरम्॥ ४४.५१ ॥

आर्द्रवाससमाहूय तथा चैवाप्युपोपितम्॥
कारयेत्सर्वदिव्यानि देवब्राह्मणसंनिधौ॥ ४४.५२ ॥

प्रत्यक्षं कारयेद्दिव्यं राज्ञो वाधिकृतस्य वा॥
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च॥ ४४.५३ ॥

पश्चिमे दिनकाले हि प्राङ्मुखः प्राञ्जलिः शुचिः॥
चतुरस्रे मंडलेऽन्ये कृत्वा चैव समौ करौ॥ ४४.५४ ॥

लक्षयेयुः कृतादीनि हस्तयोस्तस्य हारिणः॥
सप्ताश्वत्थस्य पत्राणि भध्नीयुः करयोस्ततः॥ ४४.५५ ॥

नवेन कृतसूत्रेण कार्पासेन दृढं यथा॥
ततस्तु सुसमं कृत्वा अष्टांगुलमथायसम्॥ ४४.५६ ॥

पिंडं हुताशसंतप्तं पंचाशत्पलिकं दृढम्॥

आदौ पूजां रवेः कृत्वा हुताशस्याथ कारयेत्॥ ४४.५७ ॥

रक्तचंदनधूपाभ्यां रक्तपुष्पैस्तथैव च॥
अभिशस्तस्य पत्रं च बध्नीयाच्चैव मूर्धनि॥ ४४.५८ ॥

मंत्रेणानेन संयुक्तं ब्राह्मणाभिहितेन च॥
त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे॥ ४४.५९ ॥

पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे॥
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥ ४४.६० ॥

जठरस्थोऽसि भूतानां ततो वेत्सि शुभाशुभम्॥
पापेषु दर्शयात्मानमर्चिष्मान्भव पावक॥ ४४.६१ ॥

अथवा शुद्धभावेषु शीतो भवमहाबल॥
ततोऽभिशस्तः शनकैर्मंडलानि परिक्रमेत्॥ ४४.६२ ॥

परिक्रम्य शनैर्जह्याल्लोहपिंडं ततः क्षितौ॥
विपत्रहस्तं तं पश्चात्कारयेद्व्रीहिमर्दनम्॥ ४४.६३ ॥

निर्विकारौ करौ दृष्ट्वा शुद्धो भवति धर्मतः॥
भयाद्वा पातयेद्यस्तु तदधो वा विभाव्यते॥ ४४.६४ ॥

पुनस्त्वाहारयेल्लोहं विधिरेष प्रकीर्तितः॥
अथातः संप्रऐवक्ष्यामि तप्तमाषविधिं श्रृणु॥ ४४.६५ ॥

कारयेदायसं पात्रं ताम्रं वा षोडशांगुलम्॥
चतुरंगुलखातं तु मृन्मयं वापि कारयेत्॥ ४४.६६ ॥

पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्ततः॥
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम्॥ ४४.६७ ॥

वह्न्युक्तं विन्यसेन्मंत्रमभिशस्तस्य मूर्धनि॥
अंगुष्ठांगुलियोगेन तप्तमाषं समुद्धरेत्॥ ४४.६८ ॥

शुद्धं ज्ञेयमसंदिग्धं विस्फोटादिविवर्जितम्॥
फालशुद्धिं प्रवक्ष्यामि तां श्रृणु त्वं धनंजय॥ ४४.६९ ॥

आयसं द्वादशपलं घटितं फालमुच्यते॥
अष्टांगुलमदीर्घं च चतुरंगुलविस्तृतम्॥ ४४.७० ॥

वह्न्युक्तं विन्यसेन्मंत्रमभिशस्तस्य मूर्धनि॥

त्रिःपरावर्तयेज्जिह्वा लिहन्नस्मात्षडंगुलम्॥ ४४.७१ ॥

गवां क्षीरं प्रदातव्यं जिह्वाशोधनमुत्तमम्॥
जिह्वापरीक्षणं कुर्याद्दग्धा चेन्न तु विमोच्यते॥ ४४.७२ ॥

तं विशुद्धं विजानीयाद्विशुद्धा चेत्तु जायते॥
तंदुलस्याथ वक्ष्यामि विधिधर्मं सनातनम्॥ ४४.७३ ॥

चौर्ये तु तंदुला देया न चान्यत्र कथंचन॥
तंदुलानुदके सिक्त्वा रात्रौ तत्रैव स्थापयेत्॥ ४४.७४ ॥

प्रभाते कारिणे देया भक्षणाय न संशयः॥
त्रिःकॉत्वः प्राङ्मुखश्चैव पत्रे निष्ठीवयेत्ततः॥ ४४.७५ ॥

पिप्पलस्याथ भूर्जस्य न त्वन्यस्य कथंचन॥
तांस्तु वै कारयेच्छुद्धांस्तंदुलाञ्छालिसंभवान्॥ ४४.७६ ॥

मृन्मये भाजने कृत्वा सवितुः पुरतः स्थितः॥
तन्दुलान्मंत्रयेच्छुद्धान्मन्त्रेणानेन धर्मतः॥ ४४.७७ ॥

दीयसे धर्मतत्त्वज्ञैर्मानुषाणां विशोधनम्॥
स्तुतस्तन्दुल सत्येन धर्मतस्त्रातुमर्हसि॥ ४४.७८ ॥

निष्ठीवने कृते तेषां सवितुः पुरतः स्थिते॥
शोणितं दृश्यते यस्य तमशुद्धं विनिर्दिशेत्॥ ४४.७९ ॥

एवमष्टविधं दिव्यं पापसंशयच्छेदनम्॥
भट्टादित्यस्य पुरतो जायते कुरुनंदन॥ ४४.८० ॥

जलदिव्यं तथा प्राहुर्द्विप्रकारं पुराविदः॥
जलहस्तं स्मृतं चैकं मज्जनं चापरं विदुः॥ ४४.८१ ॥

बाणक्षेपस्तथादानं यावद्वीर्यवता कृतम्॥
तावत्तं मज्जयेज्जीवेत्तथा तच्छुद्धिमादिशेत्॥ ४४.८२ ॥

एवंविधमिदं स्थानं भट्टादित्यस्य भारत॥
ममैव कृपया भानोर्जातमेतन्महीतले॥ ४४.८३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे भट्टादित्यमाहात्म्ये दिव्यवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥ छ ॥

**॥नारद उवाच॥**

तथा बहूदकस्थाने कथामाकर्णयाद्भुताम्॥
यस्माद्बहूदकं कामरूपे यदस्ति च॥ ४५.१ ॥

तदस्ति चात्र संक्रांतं तस्मात्प्रोक्तं बहूदकम्॥
कपिलेनात्र तप्त्वा च वर्षाणि सुबहून्यपि॥ ४५.२ ॥

स्थापितं शोभनं लिंगं कपिलश्वरसंज्ञितम्॥
तच्च लिगं सदा पार्थ नन्दभद्र इति समृतः॥ ४५.३ ॥

वाणिक्संपूजयामास त्रिकालं च कृतादरः॥
सर्वधर्प्रविशेवज्ञः साक्षाद्धर्म इवापरः॥ ४५.४ ॥

नाज्ञातं तस्य किंचिच्च यद्धर्मेषु प्रकीर्त्यते॥
सर्वेषां च सुहृन्नित्यं सर्वेषां च हिते रतः॥ ४५.५ ॥

कर्मणा मनसा वाचा धर्ममेनमुपाश्रितः॥
न भूतो न भविष्यश्च न स धर्मोऽस्ति किंचन॥ ४५.६ ॥

विदोषो यो हि सर्वत्र निश्चित्यैवं व्यवस्थितः॥
अस्य धर्मसमुद्रस्य संप्रवृद्धस्य सर्वतः॥ ४५.७ ॥

निर्मथ्य नन्दभद्रेण आहृतं तन्निशामय॥
वाणिज्यं मन्यते श्रेष्ठं जीवनाय तदा स्थितः॥ ४५.८ ॥

परिच्छिन्नैः काष्ठतृणैः शरणं तेन कारितम्॥
मद्यवर्जं भेदवर्जं कूटवर्जं समं तथा॥ ४५.९ ॥

सर्वभूतेषु वाणिज्यमल्पलाभेन सोऽचरत्॥
अमायया परेभ्योऽसौ गृहीत्वैव क्रयाणकम्॥ ४५.१० ॥

अमाययैव भूतेभ्यो विक्रीणात्यस्य सद्व्रतम्॥
केचिद्यज्ञं प्रशंसंति नन्दभद्रो न मन्यते॥ ४५.११ ॥

दोषमेनं विनिश्चत्य श्रृमु तं पांडुनन्दन॥
लुब्धोऽनृती दांभीकश्च स्वप्रशंसापरायणः॥ ४५.१२ ॥

यजन्यज्ञैर्जगद्धं ति स्वं चांधतमसं नयेत्॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते॥ ४५.१३ ॥

आदित्याज्जायते वृष्टिर्वष्टेरन्नं ततः प्रजाः॥
यद्यदा यजमानस्य ऋत्विजो द्रव्यमेव च॥ ४५.१४ ॥

चौरप्रायस्य कलुषाज्जन्म जायेज्जनस्य हि॥
अदक्षिणे वृथा यज्ञे कृते चाप्यविधानतः॥ ४५.१५ ॥

पशवो लकुटैर्हन्युर्यजमानं मृतं हताः॥
तस्माच्छुद्धैर्यवद्रव्यैर्यजमानः शुभः स्मृतः॥ ४५.१६ ॥

यज्ञ एवं विचार्यासौ यज्ञसारं समास्थितः॥
श्रद्धया देवपूजा या नमस्कारः स्तुतिः शुभा॥ ४५.१७ ॥

नैवेद्यं हविषश्चैव यज्ञोऽयं हि विकल्मषः॥
स एव यज्ञः प्रोक्तो वै येन तुष्यन्ति देवताः॥ ४५.१८ ॥

केचिच्छंसन्ति संन्यासं नन्दभद्रो न मन्यते॥
यो हि संन्यस्य विषयान्मनसा गृह्यते पुनः॥ ४५.१९ ॥

उभयभ्रष्ट एवासौ भिन्ना भूमिर्विनश्यति॥
संन्यासस्य तु यत्सारं तत्तेनावृतमुत्तमम्॥ ४५.२० ॥

कस्यचिन्नैव कर्माणि शपते वा प्रशंसति॥
नानामार्गस्थिताँल्लोकांश्चन्द्रवल्लीयते क्षितौ॥ ४५.२१ ॥

न द्वेष्टि नो कामयते न विरुद्धोऽनुरुध्यते॥
समाश्मकांचनो धीरस्तुल्यनिंदात्मसंस्तुतिः॥ ४५.२२ ॥

अभयः सर्वभूतेभ्यो यथांधबधिराकृतिः॥
न कर्मणां फलाकांक्षा शिवस्याराधनं हि तत्॥ ४५.२३ ॥

कारणाद्धर्ममन्विच्छन्न लोभं च ततश्चरन्॥ ४५.२४ ॥

विविच्य नंदभद्रस्तत्सारं मोक्षेषु जगृहे॥
कृषिं केचित्प्रशंसंति नंदभद्रो न मन्यते॥ ४५.२५ ॥

यस्यां छिंदंति वृषाणां चैव नासिकाम्॥
कर्षयंति महाभारान्बध्नंति दमयंति च॥ ४५.२६ ॥

बहुदंशमयान्देशान्नयंति बहुकर्दमान्॥
वाहसंपीडिता धुर्याः सीदंत्यविधिना परे॥ ४५.२७ ॥

मन्यंते भ्रूणहत्यापि विशिष्टा नास्य कर्मणः॥
अघ्न्या इति गवां नाम श्रुतौ ताः पीडयेत्कथम्॥ ४५.२८ ॥

भूमिं भूमिशयांश्चैव हंति काष्ठमयोमुखम्॥
पंचेंद्रियेषु जीवेषु सर्वं वसति दैवतम्॥ ४५.२९ ॥

आदित्यश्चंद्रमा वायुः प्रभूत्यैव च तांस्तु यः॥
विक्रीणाति सुमूढस्य तस्य का नु विचारणा॥ ४५.३० ॥

अजोऽग्निर्वरुणो मेषः सूर्यश्च पृथिवी विराट्॥
धेनुर्वत्सश्च सोमो वै विक्रीयैतान्न सिध्यति॥ ४५.३१ ॥

एवंविधसहस्रैश्च युता दोषैः कृषिः सदा॥
अष्टगवं स्याद्धि हलं त्रिंशद्भागं त्यजेत्कृषेः॥ ४५.३२ ॥

धर्मे दद्यात्पशून्वृद्धान्पुष्यादेषा कृषिः कुतः॥
सारमेतत्कृषेस्तेन नंदभद्रेण चादृतम्॥ ४५.३३ ॥

विसाधितव्यान्यन्नानि स्वशक्त्या देवपितृषु॥
मनुष्य द्विजभूतेषु नियुज्याश्नीत सर्वदा॥ ४५.३४ ॥

केचिच्छंसंति चैश्वर्यं नंदभद्रो न मन्यते॥
मानुषा मानुषानेव दासभावेन भुंजते॥ ४५.३५ ॥

वधबंधनिरोधेन पीडयंति दिवानिशम्॥
देहं किमेतद्धातुः स्वं मातुर्वा जनकस्य वा॥ ४५.३६ ॥

मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा॥
इति संचिंत्य व्यहरन्नमरा इव ईश्वराः॥ ४५.३७ ॥

ऐश्वर्यमदपापिष्ठा महामद्यमदादयः॥
ऐश्वर्यमदमत्तो हि ना पतित्वा हि माद्यति॥ ४५.३८ ॥

आत्मवत्सर्वभृत्येषु श्रिया नैव च माद्यति॥ ४५.३९ ॥

आत्मप्रत्ययवान्देही क्वेश्वरश्चेद्दशोऽस्ति हि॥
ऐश्वर्यस्यापि सारं स जग्राहैतन्निशामय॥ ४५.४० ॥

स्वशक्त्या सर्व भूतेषु यदसौ न पराङ्मुखः॥
तीर्थायेके प्रशंसंति नंदभद्रो न मन्यते॥ ४५.४१ ॥

श्रमेण संकरात्तापशीतवातक्षुधा तृषा॥
क्रोधेन धर्मगेहस्य नापि नाशमवाप्नुयात्॥ ४५.४२ ॥

सौख्येन वा धनस्यापि श्रद्धया स्वल्पगोर्थवान्॥
समर्थो हि महत्पुण्यं शक्त आप्तुं क्व वास्ति सः॥ ४५.४३ ॥

सदा शुचिर्देवयाजी तीर्थसारं गृहेगृह॥
नापः पुनंति पापानि न शैला न महाश्रमाः॥ ४५.४४ ॥

आत्मा पुनाति पापानि यदि पापान्निवर्तते॥
एवमेव समाचारं प्रादुर्भूतं ततस्ततः॥ ४५.४५ ॥

एकीकृत्य सदा धीमान्नंदभद्रः समास्थितः॥
तस्यैवं वर्ततः साधोः स्पृहयंत्यपि देवताः॥ ४५.४६ ॥

वासवप्रमुखाः सर्वे विस्मयं च परं ययुः॥
अत्रैव स्थानके चापि शूद्रोऽभूत्प्रतिवेश्मकः॥ ४५.४७ ॥

स नंदभद्रं धर्मिष्ठं पुनः पुनरसूयत॥
नास्तिकः स दुराचारः सत्यव्रत इति श्रुतः॥ ४५.४८ ॥

स सदा नंदभद्रस्य विलोकयति चांतरम्॥
छिद्रं चेदस्य पश्यामि ततो धर्मान्निवर्तये॥ ४५.४९ ॥

स्वभाव एव क्रूराणां नास्तिकानां दुरात्मनाम्॥
आत्मानं पातयंत्येव पातयंत्यपरं च यत्॥ ४५.५० ॥

ततस्त्वेवं वर्ततोऽस्य नंदभद्रस्य धीमतः॥
एकोऽभूत्तयः कष्टाद्वार्धिके सोऽप्यनश्यत॥ ४५.५१ ॥

तच्च दैवकृतं मत्वा न शुशोच महामतिः॥
देवो वा मानवो वापि को हि दवाद्विमुच्यते॥ ४५.५२ ॥

ततोऽस्य सुप्रिया भार्या सर्वैः साध्वीगुणैर्युता॥
गृहधर्मस्य मूर्तिर्या साक्षादिव अरुंधती॥ ४५.५३ ॥

विनाशमागता पार्थ कनकानाम नामतः॥
ततो यतेंद्रियोऽप्येष गृहधर्मविनाशतः॥ ४५.५४ ॥

शुशोच हा कष्टमिति पापोहमिति चासकृत्॥
तत्तस्य चांतरं दृष्ट्वाऽहृष्यत्यव्रतश्चिरात्॥ ४५.५५ ॥

उपाव्रज्य च हा कष्टं ब्रुवंस्तं नंदभद्रकम्॥
दधिकर्ण इवासाद्य नंदभद्रमुवाच सः॥ ४५.५६ ॥

हा नंदभद्र यद्येवं तवाप्येवंविधं फलम्॥
एतेन मन्ये मनसि धर्मोप्येष वृथैव यत्॥ ४५.५७ ॥

इत्यादि बहुधा प्रोच्य तत्तद्वाक्यं ततस्ततः॥
सत्यव्रतस्ततः प्राह नंदभद्रं कृपान्वितः॥ ४५.५८ ॥

नंदभद्र सदा तुभ्यं वक्तुकामोस्मि किंचन॥
प्रस्तावस्याप्यभावाच्च नोदितं च मया क्वचित्॥ ४५.५९ ॥

अप्रस्तावं ब्रुवन्वाक्यं बृहस्पतिरपिध्रुवम्॥
लभते बुद्ध्यवज्ञानमवमानं च हीनवत्॥ ४५.६० ॥

**॥नन्दभद्र उवाच॥**
ब्रूहिब्रूहि न मे किंचित्साधु गोप्यं प्रियं परम्॥
वचोभिः शुद्धसत्त्वानां न मोक्षोऽप्युपमीयते॥ ४५.६१ ॥

**॥सत्यव्रत उवाच॥**
नवभिर्नवभिश्चैव विमुक्तं वाग्विदूषणैः॥
नवभिर्बुद्धिदोषैश्च वाक्यं वक्ष्याम्यदोषवत्॥ ४५.६२ ॥

सौक्ष्म्यं संख्याक्रमश्चापि निर्णयः सप्रयोजनः॥
पंचैतान्यर्थजातानि यत्र तद्वाक्यमुच्यते॥ ४५.६३ ॥

धर्ममर्थं च कामं च मोक्षं चोद्दिश्य चोच्यते॥
प्रयोजनमिति प्रोक्तं प्रथमं वाक्यलक्षणम्॥ ४५.६४ ॥

धर्मार्थकाममोक्षेषु प्रतिज्ञाय विशेषतः॥
इदं तदिति वाक्यांते प्रोच्यते स विनिर्णयः॥ ४५.६५ ॥

इदं पूर्वमिदं पश्चाद्वक्तव्यं यत्क्रमेण हि॥
क्रमयोगं तमप्याहुर्वाक्यतत्तविदो बुधाः॥ ४५.६६ ॥

दोषाणां च गुणानां च प्रमाणं प्रविभागतः॥
उभयार्थमपि प्रेक्ष्य सा संख्येत्युपधार्यताम्॥ ४५.६७ ॥

वाक्यज्ञेयेषु भिन्नेषु यत्राभेदः प्रदृश्यते॥
तत्रातिशयहेतुत्वं तत्सौक्ष्म्यमिति निर्दिशेत्॥ ४५.६८ ॥

इति वाक्यगुणानां च वाग्दोषान्द्विनव श्रृणु॥
अपेतार्थमभिन्नार्थमपवृत्तं तथाधिकम्॥ ४५.६९ ॥

अश्लक्ष्णं चापि संदिग्धं पदांते गुरु चाक्षरम्॥
पराङ्मुखमुखं यच्च अनृतं चाप्यसंस्कृतम्॥ ४५.७० ॥

विरुद्धं यत्त्रिवर्गेण न्यूनं कष्टातिशब्दकम्॥
व्युत्क्रमाभिहृतं यच् सशेषं चाप्यहेतुकम्॥ ४५.७१ ॥

निष्कारणं च वाग्दोषान्बुद्धिजाञ्छृणु त्वं च यान्॥
कामात्क्रोधाद्भयाच्चैव लोभाद्दैन्यादनार्यकात्॥ ४५.७२ ॥

हीनानुक्रोशतो मानान्न च वक्ष्यामि किंचन॥
वक्ता श्रोता च वाक्यं च यदा त्वविकलं भवेत्॥ ४५.७३ ॥

सममेति विवक्षायां तदा सोऽर्थः प्रकाशते॥
वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते॥ ४५.७४ ॥

श्रोता चाप्यथ वक्तारं तदा वाक्यं न रोहति॥
अथ यः स्वप्रियं ब्रूयाच्छ्रोतुर्वोत्सृज्ययदृतम्॥ ४५.७५ ॥

विशंका जायते तस्मिन्वाक्यं तदपि दोषवत्॥
तस्माद्यः स्वप्रियं त्यक्त्वा श्रोतुश्चाप्यथ यत्प्रियम्॥ ४५.७६ ॥

सत्यमेव प्रभाषेत स वक्ता नेतरो भुवि॥
मिथ्यावादाञ्छास्त्रजालसंभवान्यद्विहाय च॥ ४५.७७ ॥

सत्यमेव व्रतं यस्मात्तस्मात्सत्यव्रतस्त्वहम्॥
सत्यं ते संप्रवक्ष्यामि मंतुमर्हसि तत्तथा॥ ४५.७८ ॥

यदाप्रभृति भद्र त्वं पाषाणस्यार्चने रतः॥
तदाप्रभृति किंचिच्च न हि पश्यामि शोभनम्॥ ४५.७९ ॥

एकः सोऽपि सुतो नष्टो भार्या चार्याऽप्यनश्यत॥
कूटानां कर्मणां साधो फलमेवंविधं भवेत्॥ ४५.८० ॥

क्व देवाः संति मिथ्यैतद्दृश्यंते चेद्भवंत्यपि॥
सर्वा च कूटविप्राणां द्रव्यायैषा विकल्पना॥ ४५.८१ ॥

पितॄनुद्दिश्य यच्छंति मम हासः प्रजायते॥
अन्नस्योपद्रवं यच्च मृतो हि किमशिष्यत॥ ४५.८२ ॥

यत्त्विदं बहुधा मूढा वर्णयंति द्विजाधमाः॥
विश्वनिर्माणमखिलं तथापि श्रृणु सत्यतः॥ ४५.८३ ॥

उत्पत्तिश्चापि भंगश्च विश्वस्यैतद्द्वयं मृषा॥
एवमेव हि सर्वं च सदिदं वर्तते जगत्॥ ४५.८४ ॥

स्वभावतो विश्वमिदं हि वर्तते स्वभावतः सूर्यमुखा भ्रमंत्यमी॥
स्वभावतो वायवो वांति नित्यं स्वभावतो वर्षति चांबुदोऽयम्॥ ४५.८५ ॥

स्वभावतो रोहति धान्यजातं स्वभावतो वर्षशीतातपत्वम्॥
स्वभावतः संस्थिता मेदिनी च स्वभावतः सरितः संस्रवंति॥ ४५.८६ ॥

स्वभावतः पर्वता भांति नित्यं स्वभावतो वारिधिरेष संस्थितः॥
स्वभावतो गर्भिणी संप्रसूते स्वभावतोऽमी बहवश्च जीवाः॥ ४५.८७ ॥

यथा स्वभावेन भवंति वक्रा ऋतुस्वबावाद्बदरीषु कण्टकाः॥
तथा स्वभावेन हि सर्वमेतत्प्रकाशते कोऽपि कर्ता न दृश्यः॥ ४५.८८ ॥

तदेवं संस्थिते लोके मूढो मुह्यति मत्तवत्॥

मानुष्यमपि यद्भूर्ता वदंत्यग्र्यं श्रृणुष्वतत्॥ ४५.८९ ॥

मानुष्यान्न परं कष्टं वैरिणां नो भवेद्धि तत्॥
शोकस्थानसहस्राणि मनुष्यस्य क्षणेक्षणे॥ ४५.९० ॥

मानुष्यं हि स्मृताकारं सभाग्योऽस्माद्विमुच्यते॥
पशवः पक्षिणः कीटाः कृमयश्च यथासुखम्॥ ४५.९१ ॥

अबद्धा विहरंत्येते योनिरेषां सुदुर्लभा॥
निश्चिंताः स्थावरा ह्येते सौख्यमेषां महद्भुवि॥ ४५.९२ ॥

बहुना किं मनुष्येभ्यः सर्वो धन्योऽन्ययोनिजः॥
स्वभावमेव जानीहि पुण्यापुण्यादिकल्पना॥ ४५.९३ ॥

यदेके स्थावराः कीटाः पतंगा मानुषादिकाः॥
तस्मान्मित्या परित्यज्य नंदभद्र यथासुखम्॥
पिब क्रीडनकैः सार्धं भोगान्सत्यमिदं भुवि॥ ४५.९४ ॥

**॥नारद उवाच॥**
इत्येतैरमुखैर्वाक्यैरयुक्तैरसमंजसैः॥ ४५.९५ ॥

सत्यव्रतस्य नाकम्पन्नंदभद्रो महामनाः॥
प्रहसन्निव तं प्राह स्वक्षोभ्यः सागरो यथा॥ ४५.९६ ॥

यद्भवानाह धर्मिष्ठाः सदा दुःखस्य भागिनः॥
तन्मिथ्या दुःखजालानि पश्यामः पापिनामपि॥ ४५.९७ ॥

वधबंधपरिक्लेशाः पुत्रदारादि पंचता॥
पापिनामपि दृश्यंते तस्माद्धर्मो गुरुर्मतः॥ ४५.९८ ॥

अयं साधुरहो कष्टं कष्टमस्य महाजनाः॥
साधोर्वदंत्येतदपि पापिनां दुर्लभं त्विदम्॥ ४५.९९ ॥

दारादिद्रव्यलोभार्यं विशतः पापिनो गृहे॥
भवानपि बिभेत्यस्माद्द्वेष्टि कुप्यति तद्वृथा॥ ४५.१०० ॥

यथास्य जगतो ब्रूषे नास्ति हेतुर्महेश्वरः॥
तद्बालभाषितं तुभ्यं किं राजानं विना प्रजाः॥ ४५.१०१ ॥

यच्च ब्रवीषि पाषाणं मिथ्या लिंगं समर्चसि॥
तद्भवाँल्लिंगमाहात्म्यं वेत्ति नांधो यथा रविम्॥ ४५.१०२ ॥

ब्रह्मादायः सुरा सर्वे राजानश्च महर्द्धिकाः॥
मानवा मुनयश्चैव सर्वे लिंगं यजंति च॥ ४५.१०३ ॥

स्वनामकानि चिह्नानि तेषां लिंगानि संति च॥
एते किं त्वभवत्मूर्खास्त्वं तु सत्यव्रतः सुधीः॥ ४५.१०४ ॥

प्रतिष्ठाप्य पुरा ब्रह्मा पुष्करे नीललोहितम्॥
प्राप्तवान्परमां सिद्धिं ससर्जेमाः प्रजाः प्रभुः॥ ४५.१०५ ॥

विष्णुनापि निहत्याजौ रावणं पयसांनिधेः॥
तीरे रामेश्वरं लिंगं स्थापितं चास्ति किं मुधा॥ ४५.१०६ ॥

वृत्रं हत्वा पुरा शक्रो महेंद्रे स्थाप्य शंकरम्॥
लिंगं विमुक्तपापोऽथ त्रिदिवेद्यापि मोदते॥ ४५.१०७ ॥

स्थापयित्वा शिवं सूर्यो गंगासागरसंगमे॥
निरामयोऽभूत्सोमश्च प्रभासे पश्चिमोदधौ॥ ४५.१०८ ॥

काश्यां यमश्च धनदः सह्ये गरुडकश्यपौ॥
नैमिषे वायुवरुणौ स्थाप्य लिंगं प्रमोदिताः॥ ४५.१०९ ॥

अस्मिन्नेव स्तंभतीर्थे कुमारेणं गुहो विभुः॥
लिंगं संस्थापयामास सर्वपापहरं न किम्॥ ४५.११० ॥

एवमन्यैः सुरैर्यानि पार्थिवैर्मुनिभिस्तथा॥
संस्तापितानि लिंगानि तन्न संख्यातुमुत्सहे॥ ४५.१११ ॥

पृथिवीवासिनः सर्वे ये च स्वर्गनिवासिनः॥
पातालवासिनस्तृप्ता जायंते लिंगपूजया॥ ४५.११२ ॥

यच्च ब्रवीषि गीर्वाणा न संति सन्ति चेत्कुतः॥
कुत्रापि नैव दृश्यंते तेन मे विस्मयो महान्॥ ४५.११३ ॥

रंकवत्किं स्म ते देवा याचंतां त्वां कुलत्थवत्॥

यमिच्छिसि महाप्राज्ञ साधको हि गुरुस्तव॥ ४५.११४ ॥

स्वबावान्नैव सर्वार्थाः संसिद्धा यदि ते मते॥
भोजनादि कथं सिध्येद्वद कर्तारमंतरा॥ ४५.११५ ॥

बदरीमंतरेणापि दृश्यंते कण्टका न हि॥
तस्मात्कस्यास्ति निर्माणं यस्य यावत्तथैव तत्॥ ४५.११६ ॥

यच्च ब्रवीषि पश्वाद्याः सुखिनो धन्यकास्त्वमी॥
त्वदृते नेदमुक्तं च केनापि श्रुतमेव वा॥ ४५.११७ ॥

तामसा विकला ये च कष्टं तेषां च श्लाघ्यताम्॥
सर्वेंद्रिययुताः श्रेष्ठाः कुतो धन्या न मानुषाः॥ ४५.११८ ॥

सत्यं तव व्रतं मन्ये नरकाय त्वयाऽऽदृतम्॥
अत्यनर्थे न भीः कार्या कामोयं भविताचिरात्॥ ४५.११९ ॥

आदावाडंबरेणैव ध्रुवतोऽज्ञानमेव मे॥
इत्थं निःसारता व्यक्तमादावाडंबारात्तु यत्॥ ४५.१२० ॥

मायाविनां हि ब्रुवतां वाक्यं चांडबरावृतम्॥
कुनाणकमिवोद्दीप्तं परीक्षेयं सदा सताम्॥ ४५.१२१ ॥

आदौ मध्ये तथा चांते येषां वाक्यमदोषवत्॥
कषदाहैः स्वर्णमिव च्छेदेऽपि स्याच्छुभं शुभम्॥ ४५.१२२ ॥

त्वयान्यथा प्रतिज्ञातमुक्तं चैवान्यथा पुनः॥
त्वद्दोषो नायमस्माकं तद्वचः श्रृणुमो हि ये॥ ४५.१२३ ॥

नास्तिकानां च सर्पाणां विषस्य च गुणस्त्वयम्॥
मोहयंति परं यच्च दोषो नैषपरस्य तु॥ ४५ १२४ ॥

आपो वस्त्रं तिलास्तैलं गंधो वा स यथा तथा॥
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः॥ ४५.१२५ ॥

मोहजालस्य यो योनिर्मूढैरिह समागमः॥
अहन्यहनि धर्मस्य योनिः साधुसमागमः॥ ४५.१२६ ॥

तस्मात्प्राज्ञैश्च वृद्धैश्च शुद्धभावैस्तपस्विभिः॥
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः॥ ४५.१२७ ॥

न नीचैर्नाप्यविद्वद्भिर्नानात्मज्ञैर्विशेषतः॥
येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च॥ ४५.१२८ ॥

तांश्च सेवेद्विशेषेण शास्त्रं येषां हि विद्यते॥
असतां दर्शनस्पर्शसंजल्पासनभोजनैः॥ ४५.१२९ ॥

धर्माचारात्प्रहीयंते न च सिध्यंति मानवाः॥
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात्॥ ४५.१३० ॥

मध्यैश्च मध्यतां याति श्रेष्ठतां याति चोत्तमैः॥
इति धर्मं स्मरन्नाहं संगमार्थी पुनस्तव॥
यन्निन्दसि द्विजानेव यैरपेयोऽर्णवः कृतः॥ ४५.१३१ ॥

वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम्॥
नैतत्त्रयं यस्य भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम्॥ ४५.१३२ ॥

इतिरयित्वा वचनं महात्मा स नंदभद्रः सहसा तदैव॥
गृहाद्विनिःसृत्य जगाम पुण्यं बहूदकं भट्टरवेस्तु कुंडम्॥ ४५.१३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कपिलेश्वरतीर्थमाहात्म्ये नंदभद्रवणिग्वृत्तान्तवर्णनं नाम पञ्चचत्वारिंशत्तमोऽध्यायः॥ ४५ ॥ छ ॥

**॥नारद उवाच॥**

बहूदकस्य कुंडस्य तीरस्थं लिंगमुत्तमम्॥

कपिलेश्वरमभ्यर्च्य नंदभद्रस्ततः सुधी॥ ४६.१ ॥

प्रणम्य चाग्रतस्तस्थौ प्रबद्धकरसंपुटः॥

संसारचरितैः किंचिद्द्दुःखी गाथां व्यगायत॥ ४६.२ ॥

स्रष्टारमस्य जगतश्चेत्पश्यामि सदाशिवम्॥

नानापृच्छाभिरथ तं कुर्यां नाथं विलज्जितम्॥ ४६.३ ॥

अपूर्यमाणं तव किं जगत्संसृजनं विना॥

निरीह बहुधा यत्ते सृष्टं भार्गववज्जगत्॥ ४६.४ ॥

सचेतनेन शुद्धेन रागादिरहितेन च॥

अथ कस्मादात्मसदृशं न सृष्टं निर्मितं जडम्॥ ४६.५ ॥

निर्वैरेण समेनाथ सुखदुःखभवाभवैः॥

ब्रह्मादिकीटपर्यन्तं किमेव क्लिश्यते जगत्॥ ४६.६ ॥

कांश्चित्स्वर्गेथ नरके पातयंस्त्वं सदाशिव॥

किं फलं समवाप्नोषि किमेवं कुरुषे वद॥ ४६.७ ॥

इष्टैः पुत्रादिभिर्नाथ वियुक्ता मानवा ह्यमी॥

क्रंदंति करुणासार किं घृणापि भवेन्न ते॥ ४६.८ ॥

अतीव नोचितं सर्वमेतदीश्वर सर्वथा॥

यत्ते भक्ताः समं पापैर्मज्जंते दुःखसागरे॥ ४६.९ ॥

एवंविधेन संसारचारित्रेण विमोहिताः॥

स्थानां तरं न यास्यामि भोक्ष्ये पास्यामि नोदकम्॥ ४६.१० ॥

मरणांतमेव यास्यामि स्थास्ये संचिंतयन्नदः॥

स एवं विमृशन्नेव नंदभद्रः स्वयं स्थितः॥ ४६.११ ॥

ततश्चतुर्थे दिवसे बहूकतटे शुभे॥

कश्चिद्बालः सप्तवर्षः पीडापीडित आययौ॥ ४६.१२ ॥

कृशोतीव गलत्कुष्ठी प्रमुह्यंश्च पदेपेद॥

नंदभद्रमुवाचेदं कृच्छ्रात्संस्तभ्य बालकः॥ ४६.१३ ॥

अहो सुरूपसर्वांग कस्माद्दुःखी भवानपि॥

ततोस्य कारणं सर्वं व्याचष्ट नंदभद्रकः॥ ४६.१४ ॥

श्रुत्वा तत्कारणं सर्वं बालो दीनमना ब्रवीत्॥

अहो हा कष्टमत्युग्रं बुधानां यदबुद्धिता॥ ४६.१५ ॥

संपूर्णेंद्रियगात्रा यन्मर्तुमिच्छंति वै वृथा॥

मुहूर्तादध्यत्र खट्वांगो मोक्षमार्गमुपागतः॥ ४६.१६ ॥

तदहो भारतं खंडं सत्यायुषि त्यजेद्धि कः॥
अहमेव दृढो मन्ये पितृभ्यां यो विवर्जितः॥ ४६.१७ ॥
अशक्तश्चलितुं वापि मर्तुमिच्छामि नापि च॥
सर्वे लाभाः सातिमाना इति सत्या बतश्रुतिः॥ ४६.१८ ॥
संतोषोऽप्युचितस्तुभ्यं देहं यस्य दृढं त्विदम्॥
शरीरं नीरुजं चेन्मे भवेदपि कथंचन॥ ४६.१९ ॥
क्षणेक्षणे च तत्कुर्यां भुज्यते यद्युगेयुगे॥
इंद्रियाणि वशे यस्य शरीरं च दृढं भवेत्॥ ४६.२० ॥
सोऽप्यन्यदिच्छते चेच्च कोऽन्यस्तस्मादचेतनः॥
शोकस्थानसहस्राणि हर्षस्थानशतानि च॥ ४६.२१ ॥
दिवसे दिवसे मूढमावशंति न पंडितम्॥
न हि ज्ञानविरुद्धेषु बह्वबपायेषु कर्मसु॥ ४६.२२ ॥
मूलघातिषु सज्जंते बुद्धिमंतो भवद्विधाः॥
अष्टांगां बुद्धिमाहुर्यां सर्वाश्रेयोविघातिनीम॥ ४६.२३ ॥
श्रुतिस्मृत्यविरुद्धा सा बुद्धिस्त्वय्यस्ति निर्मला॥
अथ कृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च॥ ४६.२४ ॥
शारीरमानसैर्दुःखैर्न सीदंति भवद्विधाः॥
नाप्राप्यमभिवांछंति नष्टं नेच्छंति शोचितुम्॥ ४६.२५ ॥
आपत्सु च न मुह्यंति नराः पंडितबुद्धयः॥
मनोदेहसमुत्थाभ्यां दुःखाब्यामर्पितं जगत्॥ ४६.२६ ॥
तयोर्व्यासससमासाभ्यां शमोपायमिमं श्रृणु॥
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविसर्जनात्॥ ४६.२७ ॥
चतुर्भिः कारणैर्दुःखं शीरिरं मानसं च यत्॥
मानसं चाप्यप्रियस्य संयोगः प्रियवर्जनम्॥ ४६.२८ ॥
द्विप्रकारं महाकष्टं द्वयोरेतदुदाहृतम्॥
मानसेन हि दुःखैन शरीरमुपतप्यते॥ ४६.२९ ॥
अयःपिंडेन तप्तेन कुंभसंस्थमिवोदकम्॥
तदाशु प्रति काराच्च सततं च विवर्जनात्॥ ४६.३० ॥
व्याधेराधेश्च प्रशमः क्रियायोगद्वयेन तु॥
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवांबुना॥ ४६.३१ ॥
प्रशांते मानसे ह्यस्य शारीरमुपशाम्ति॥
मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते॥ ४६.३२ ॥
स्नेहाच्च सज्जनो नित्यं जन्तुर्दुःखमुपैति च॥

स्नेहमूलानि दुःखानि स्नेहजानि भायानि च॥ ४६.३३ ॥

शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते॥ ४६.३४ ॥

स्नेहात्करणरागश्च प्रजज्ञे वैषयस्तथा॥

अश्रेयस्कावुभावतौ पूर्वस्तत्र गुरुः स्मृतः॥ ४६.३५ ॥

त्यागी तस्मान्न दुःखी स्यान्नवैरो निरवग्रहः॥

अत्यागी जन्ममरणे प्राप्नोतीह पुनःपुनः॥ ४६.३६ ॥

तस्मात्स्नेहं न लिप्सेन मित्रेभ्यो धनसंचयात्॥

स्वशरीरसमुत्थं च ज्ञानेन विनिर्वतयेत्॥ ४६.३७ ॥

ज्ञानान्वितेषु सिद्धेषु शास्त्रज्ञेषु कृतात्मसु॥

न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम्॥ ४६.३८ ॥

रागाभिभूतः पुरुषः कामेन परिकृष्यते॥

इच्छा संजायते चास्य ततस्तृष्णा प्रवर्धते॥ ४६.३९ ॥

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी मता॥

अधर्मबहुला चैव घोररूपानुबंधिनी॥ ४६.४० ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यतः॥

यासौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम्॥ ४६.४१ ॥

अनाद्यंता तु सा तृष्णा ह्यंतर्देहगता नृणाम्॥

विनाशयति संभूता लोहं लोहमलो यथा॥ ४६.४२ ॥

यथैवैधः समुत्थेन वह्निना नाशमृच्छति॥

तथाऽकृतात्मा लोबेन स्वोत्पन्नेन विनश्यति॥ ४६.४३ ॥

तस्माल्लोभो न कर्तव्यः शरीरे चात्मबंधुषु॥

प्राप्तेषु व न हृष्येत नाशो वापि न शोचयेत्॥ ४६.४४ ॥

**॥नंदभद्र उवाच॥**

अहो बाल न बालस्त्वं मतो मे त्वां नमाम्यहम्॥

त्वद्वाक्यैरतितृप्तोऽहं त्वां तु प्रक्ष्यामि किंचन॥ ४६.४५ ॥

कामक्रोधावहंकारमिंद्रियाणि च मानवाः॥

निंदंति तत्र मे नित्यं विवक्षेयं प्रजायते॥ ४६.४६ ॥

अहमेष ममेदं च कार्यमीदृशकस्त्वहम्॥

इत्यादि चात्मविज्ञानमहंकार इति स्मृतः॥ ४६.४७ ॥

परिहार्यः य चेत्तं च विनोन्मत्तः प्रकीर्यते॥

कामोऽभिलाष इत्युक्तः सं चेत्पुंसा विवर्ज्यते॥ ४६.४८ ॥

कथं स्वर्गो मुमुक्षा वा साध्यते दृषदा यथा॥

क्रोधो वा यदि संत्याज्यस्ततः शत्रुक्षयः कथम्॥ ४६.४९ ॥

बाह्यानामांतराणां वा विना तं तृणवद्विदुः॥
इंद्रियाणि निगृह्यैव दुष्टानीति निपीडयेत्॥ ४६.५० ॥
कथं स्याद्धर्मश्रवणं कथं वा जीवनं भवेत्॥
एतस्मिन्मे मनो विद्धंखिद्यतेऽज्ञानसंकटे॥ ४६.५१ ॥
तथा कस्मादिदं सृष्टं जडं विश्वं चिदात्मना॥
एवं यद्बहुधा क्लेशः पीड्यते हा कुतस्त्विदम्॥ ४६.५२ ॥
**॥बाल उवाच॥**
सम्यगेतद्यथा पृष्टं यत्र मुह्यंति जंतवः॥
श्रृण्वेकाग्रमना भूत्वा ज्ञातं द्वैपायनान्मया॥ ४६.५३ ॥
प्रकृतिः पुरुषश्चैव अनादी श्रृणुमः पुरा॥
साधर्म्येणावतिष्ठेते सृष्टेः प्रागजरामरौ॥ ४६.५४ ॥
ततः कालस्वबावाभ्यां प्रेरिता प्रकृतिः पुरा॥
पुंसः संयोगमैच्छत्सा तदभावात्प्रकुप्यत॥ ४६.५५ ॥
ततस्तमोमयी सा च लीलया देववीक्षिता॥
राजसी समभूद्दृष्टा सात्त्विकी समजायत॥ ४६.५६ ॥
एवं त्रिगुणतां याता प्रकृतिर्देवदर्शनात्॥
तां समास्थाय परमस्त्रिमूर्तिः समजायत॥ ४६.५७ ॥
तस्याः प्रोच्चारणार्थं च प्रवृत्तः स्वांशतस्ततः॥
असूयत महत्तत्त्वं त्रिगुणं तद्विदुर्बुधाः॥ ४६.५८ ॥
अहंकार स्ततो जातः सत्त्वराजसतामसः॥
तमो रजस्त्वमापद्य रजः सत्त्वगुणं नयेत्॥ ४६.५९ ॥
शुद्धसत्त्वे ततो मोक्षं प्रवदंति मनीषिणः॥
तमसो रजसस्त स्मात्संशुद्ध्यर्थं च सर्वशः॥ ४६.६० ॥
जीवात्मसंज्ञान्स्वीयांशान्व्यभजत्परमेश्वरः॥
तावंतस्ते च क्षेत्रज्ञा देहा यावंत एव हि॥ ४६.६१ ॥
निःसरंति यथा लोहात्तप्तल्लिंगात्स्फुलिंगकाः॥
तन्मात्रभूतसर्गोयमहंकारात्तु तामसात्॥ ४६.६२ ॥
इंद्रियाणां सात्त्विकाच्च त्रिगुणानि च तान्यपि॥
एतैः संसिद्धयंत्रेण सच्चिदानन्दवीक्षणात्॥ ४६.६३ ॥
रजस्तमश्च शोध्यंते सत्त्वेनैव मुमुक्षुभिः॥
तस्मात्कामं च क्रोधं च इंद्रियाणां प्रवर्तनम्॥ ४६.६४ ॥
अहंकारं च संसेव्य सात्त्विकीं सिद्धिमश्नुते॥
राजसास्तामसाश्चैव त्याज्याः कामादयस्त्वमी॥ ४६.६५ ॥

सात्त्विकाः सर्वदा सेव्याः संसारविजिगीषुभिः॥
गुणत्रयस्य वक्ष्यामि संक्षेपाल्लक्षणं तव॥ ४६.६६ ॥
सास्त्राभ्यासस्ततो ज्ञानं शौचमिंद्रियनिग्रहः॥
धर्मक्रियात्मचिंता च सात्त्विकं गुण लक्षणम्॥ ४६.६७ ॥
अन्यायेन धनादानं तंद्री नास्तिक्यमेव च॥
क्रौर्यं च याचकाद्यं च तामसं गुणलक्षणम्॥ ४६.६८ ॥
तस्माद्बुद्धिमुकैस्त्वतैः सात्त्विकैर्देवतां भजेत्॥
राजसैर्मानवत्वं च तामसैः स्थाणुयोनिता॥ ४६.६९ ॥
बुद्ध्याद्यैरेव मुक्तिः स्यादेतैरेव च यातना॥ ४६.७० ॥
अमीषां चाप्य भावे वै न किंचिदुपपद्यते॥
कलादो हि कलादीनां सुवर्णं शोधयेद्यथा॥ ४६.७१ ॥
तथा रजस्तमश्चैव संशोध्ये सात्त्विकैर्गुणैः॥
अस्मादेव गुणानां च समवायादनादिजात्॥ ४६.७२ ॥
सुखिनो दुःखिनश्चैव प्राणिनः शास्त्रदर्शिनः॥
अष्टाविंशतिलक्षैश्च गुणमेकैकमीश्वरः॥ ४६.७३ ॥
व्यभजच्चतुरा शीतिलक्षास्ता जीवयोनयः॥
सकाशान्मनसस्तद्वदात्मनः प्रभवंति हि॥ ४६.७४ ॥
ईश्वरांशाश्च ते सर्वे मोहिताः प्राकृतैर्गुणैः॥
क्लेशानासादयंत्येव यथैवाधिकृता विभोः॥ ४६.७५ ॥
अन्नानां पयसां चापि जीवानां चाथ श्रेयसे॥
मानुष्यमाहुस्तत्त्वज्ञाः शिवभावेन भावितम्॥ ४६.७६ ॥
**॥नंदभद्र उवाच॥**
एवमेतत्किं तु भूयः प्रक्ष्याम्येतन्महामते॥
ईश्वराः सर्वदातारः पूज्यंते यैश्च देवताः॥ ४६.७७ ॥
स्वभक्तांस्तान्न दुःखेभ्यः कस्माद्रक्षंति मानवान्॥
विशेषात्केपि दृश्यंते दुःखमग्नाः सुरान्नताः॥ ४६.७८ ॥
इति मे मुह्यते बुद्धिस्त्वं वा किं बाल मन्यसे॥ ४६.७९ ॥
**॥बाल उवाच॥**
अशुचिश्च शुचिश्चापि देवभक्तो द्विधा स्मृतः॥
कर्मणा मनसा वाचा तद्रतो भक्त उच्यते॥ ४६.८० ॥
अशुचिर्देवताश्चैव यदा पुजयते नरः॥
तदा भूतान्या विशंति स च मुह्यति तत्क्षणात्॥ ४६.८१ ॥
विमूढश्चाप्टयकार्याणि तानि तानि निषेवते॥

ततो विनश्यति क्षिप्रं नाशुचिः पूजयेत्ततः॥
शुचिर्वाभ्यर्चयेद्यश्च तस्य चेदशुभं भवेत्॥ ४६.८२ ॥
तस्य पूर्वकृतं व्यक्तं कर्मणां कोटि मुच्यते॥
महेश्वरो ब्रह्महत्याभयाद्यत्र ततस्ततः॥ ४६.८३ ॥
सस्नौ तीर्थेषु कस्माच्च इतरो मुच्यते कथम्॥
अम्बरीषसुतां हृत्वा पर्वतान्नारदात्तथा॥ ४६.८४ ॥
सीतापहारमापेदे रामोऽन्यो मुच्यते कथम्॥
ब्रह्मापि शिरसश्छेदं कामयित्वा सुतामगात्॥ ४६.८५ ॥
इंद्रचंद्ररविविष्णुप्रमुखाः प्राप्नुयुः कृतम्॥
तस्मादवश्यं च कृतं भोज्यमेव नरैः सदा॥ ४६.८६ ॥
मुच्यते कोऽपि स्वकृतान्नैवेति श्रुतिनिर्णयः॥
किं तु देवप्रसादेन लभ्यमेकं सुरव्रतैः॥ ४६.८७ ॥
बहुभिर्जन्मभिर्भोज्यं भुज्यतैकेन जन्मना॥
तच्च भुक्त्वात तस्त्वर्थो भवेदिति विनिश्चयः॥ ४६.८८ ॥
ये तप्यंते गतैः पापैः शुचयो देवताव्रताः॥
इह ते पुत्रपौत्रैश्च मोदंतेऽमुत्र चेह च॥ ४६.८९ ॥
तस्माद्देवाः सदा पूज्याः शुचिभिः श्रद्धयान्वितैः॥
प्रकृतिः शोधनीया च स्ववर्णोदितकर्मभिः॥ ४६.९० ॥
स्वनुष्ठितोऽपि धर्मः स्यात्क्लेशायैव विनाशिवम्॥
दुराचारस्य देवोपि प्राहेति भगवान्हरः॥ ४६.९१ ॥
भोक्तव्यं स्वकृतं तस्मात्पूजनीयः सदाशिवः॥
स्वाचारेण परित्याज्यौ रागद्वेषाविदं परम्॥ ४६.९२ ॥
**॥नन्दभद्र उवाच॥**
शुद्धप्रज्ञ किमेतच्च पापिनोऽपि नरा यदा॥
मोदमानाः प्रदृश्यन्ते दारैरपि धनैरपि॥ ४६.९३ ॥
**॥बाल उवाच॥**
व्यक्तं तैस्तमसा दत्तं दानं पूर्वेषु जन्मसु॥
रजसा पूजितः शंभुस्तत्प्राप्तं स्वकृतं च तैः॥ ४६.९४ ॥
किं तु यत्तमसा कर्म कृतं तस्य प्रभावतः॥
धर्माय न रतिर्भूयात्ततस्तेषां विदांवर॥ ४६.९५ ॥
भुक्त्वा पुण्यफलं याति नरकं संशयः॥
अस्मिंश्च संशये प्रोक्तं मार्कंडेयेन श्रूयते॥ ४६.९६ ॥
इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह॥

इह चामुत्र चैकस्य नामुत्रैकस्य नो इह॥ ४६.९७ ॥
पूर्वोपात्तं भवेत्पुण्यं भुक्तिर्नैवार्जयन्त्यपि॥
इह भोगः स वै प्रोक्तो दुर्भगस्याल्पमेधसः॥ ४६.९८ ॥
पूर्वोपात्तं यस्य नास्ति तपोभिश्चार्जयत्यपि॥
परलोके तस्य भोगो धीमतः स क्रियात्स्फुटम्॥ ४६.९९ ॥
पूर्वोपात्तं यस्य नास्ति पुण्यं चेहापि नार्जयेत्॥
ततश्चोहामुत्र वापि भो धिक्तं च नराधमम्॥ ४६.१०० ॥
इति ज्ञात्वा महाभागत्यक्त्वा शल्यानि कृत्स्नशः॥
भज रुद्रं वर्णधर्मं पालयास्मात्परं न हि॥ ४६.१०१ ॥
योहि नष्टेष्वभीष्टेषु प्राप्तेष्वपि च शोचति॥
तृप्येत वा भवेद्बन्धो निश्चितं सोऽन्यजन्मनः॥ ४६.१०२ ॥
**॥नन्दभद्र उवाच॥**
नमस्तुभ्यमबालाय बालरूपाय धीमते॥
को भवांस्तत्त्वतो वेत्तुमिच्छामि त्वां शुचिस्मितम्॥ ४६.१०३ ॥
बहवोऽपि मया वृद्धा दृष्टाश्चोपासिताः सदा॥
तेषामीदृशका बुद्धिर्न दृष्टा न श्रुतामया॥ ४६.१०४ ॥
येन मे जन्मसंदेहा नाशिता लीलयैव च॥
तस्मात्सामान्यरूपस्त्वं निश्चितं न मतं मम॥ ४६.१०५ ॥
**॥बाल उवाच॥**
महदेतत्समाख्येयमेकाग्रः श्रृणु तत्त्वतः॥
इतः सप्ताधिके चापि सप्तमे जन्मनि त्वहम्॥ ४६.१०६ ॥
वैदिशे नगरे विप्रो नाम्नाऽसं धर्मजालिकः॥
वेदवेदांगतत्त्वत्रः स्मृतिशास्त्रार्थविद्वरः॥ ४६.१०७ ॥
व्याख्याता धर्मशास्त्राणां यथा साक्षाद्बृहस्पतिः॥
किं त्वहं विविधान्धर्माल्लोंकानां वर्णये भृशम्॥ ४६.१०८ ॥
स्वयं चातिदुराचारः पापिनामपि पापराट्॥
मंसाशी मद्यसेवी च परदाररतः सदा॥ ४६.१०९ ॥
असत्यभाषी दम्भीच सदा धर्मध्वजी खलः॥
लोभी दुरात्मा कथको न कर्ता कर्हिचित्क्वचित्॥ ४६.११० ॥
यस्माज्जालिकवज्जालं लोकेभ्योऽहं क्षिपामि च॥
तत्त्वज्ञा मां ततः प्राहुर्धर्मजालिक इत्युत॥ ४६.१११ ॥
सोऽहं तैर्बहुभिश्चीर्णैः पातकैरंत आगते॥
मृतो गतो यमस्थानं पातितः कूटशाल्मलीम्॥ ४६.११२ ॥

यमदुतैस्ततः कृष्टः स्मार्यमामः स्वचेष्टितम्॥
खड्गैश्च कृत्यमानोऽहं जीवामि प्रमियामि च॥ ४६.११३ ॥
आत्मानं बहुधा निंदञ्छाश्वतीर्न्यवसं समाः॥
नरके या मतिर्भूयाद्धर्मं प्रति प्रपीडतः॥ ४६.११४ ॥
सा चेन्मुहूर्तमात्रं स्यादपि धन्यस्ततः पुमान्॥
नमोनमः कर्मभूम्यै सुकृतं दुष्कृतं च वा॥ ४६.११५ ॥
यस्यां मुहूर्तमात्रेण युगैरपि न नश्यति॥
ततो विपश्चिज्जनको मोक्षयामास नारकात्॥ ४६.११६ ॥
तैः सहाहं प्रमुक्तश्च कथंचिदवपीडितः॥
स्थाणुत्वमनुभूयाथ क्लेशानासाद्य भूरिशः॥ ४६.११७ ॥
कीटोहमभवं पश्चात्तीरे सारस्वते शुभे॥
तत्र मार्गे सुखमिव संसुप्तोहं यदृच्छया॥ ४६.११८ ॥
आगच्छतो रथस्यास्य शब्दमश्रौषमुन्नतम्॥
तं मेघनिनदं श्रुत्वा भीतोहं सहसा जवात्॥ ४६.११९ ॥
मार्गमुत्सृज्य दूरेण प्रपलायनमाचरम्॥
एतस्मिन्नंतरे व्यासस्तत्र प्राप्तो यदृच्छया॥ ४६.१२० ॥
स मामपश्यत्त्रस्तं च कृपया संयुतो मुनिः॥
यन्मया सर्वलोकानां नानाधर्माः प्रकीर्तिताः॥ ४६.१२१ ॥
विप्रजन्मनि तस्यैव प्रभावाद्व्याससंगमः॥
ततः सर्वरुतज्ञो मां प्राहाचर्यः कीटभाषया॥ ४६.१२२ ॥
किमेवं नश्यसे कीट कस्मान्मृत्योर्बिभेषि च॥
अहो समुचिता भीतिर्मनुष्यस्य कुतस्तव॥ ४६.१२३ ॥
इत्युक्तो मतिमान्पूर्वपुण्याद्व्यासं तदोचिवान्॥
न मे भयं जगद्वंद्य मृत्योरस्मात्कथंचन॥ ४६.१२४ ॥
एतदेव भयं मान्य गच्छेयमधमां गतिम्॥
अस्या अपि कुयोनेश्च संत्यन्याः कोटिशोऽधमाः॥ ४६.१२५ ॥
तासु गर्भादिकक्लेशभीतस्त्रस्तोऽस्मि नान्यथा॥ ४६.१२६ ॥
**॥व्यास उवाच॥**
मा भयं कुरु सर्वाभ्यो योनिभ्यश्च चिरादिव॥
मोक्षयिष्यामि ब्राह्मण्यं प्रापयिष्यामि निश्चितम्॥ ४६.१२७ ॥
इत्युक्तोहं कालियेन तं प्रणम्य जगद्गुरुम्॥
मार्गमागत्य चक्रेण पीडितो मृत्युमागमम्॥ ४६.१२८ ॥
ततः काकशृगालादियोनिष्वस्मि यदाऽभवम्॥

तदातदा समागम्य व्यासो मां स्मारयच्च तत्॥ ४६.१२९ ॥
ततो बहुविधा योनीः परिक्रम्यास्मि कर्षितः॥
ब्राह्मणस्य च गेहेस्यां योनौ जातोऽतिदुःखितः॥ ४६.१३० ॥
ततो जन्मप्रभृत्यस्मि पितृभ्यां परिवर्जितः॥
गलत्कुष्ठी महापीडामेतां योऽनुभवामि च॥ ४६.१३१ ॥
ततो मां पंचमे वर्षे व्यास आगत्य जप्तवान्॥
कर्णे सारस्वतं मंत्रं तेनाहं संस्मरामि च॥ ४६.१३२ ॥
अनधीतानि शास्त्राणि वेदान्धर्मांश्च कृत्स्नशः॥
उक्तं व्यासेन चेदं मे गच्छ क्षेत्रं गुहस्य च॥
तत्र त्वं नंदभद्रं च आश्वासयमहामतिम्॥ ४६.१३३ ॥
त्यत्क्वा बहूदके प्राणानस्थिक्षेपं महीजले॥
काराय्य त्वं ततो भावी मैत्रेय इति सन्मुनिः॥ ४६.१३४ ॥
गमिष्यसि ततो मोक्षमिति मां व्यास उक्तवान्॥
आगतश्च ततश्चात्र वाहीकेभ्योऽयोऽतिक्लेशतः॥ ४६.१३५ ॥
इति ते कथितं सर्वमात्मनश्चरितं मया॥
पापमेवंविधं कष्टं नंदभद्र सदा त्यज॥ ४६.१३६ ॥
**॥नंदभद्र उवाच॥**
अहो महाद्भुतं तुभ्यं चरितं येन मे हृदि॥
भूयः शतगुणं जातं धर्मायदृढमानसम्॥ ४६.१३७ ॥
किं तु त्वयोक्तधर्मस्य कर्तुकामोस्मि निष्कृतिम्॥
धर्मं स्मर भवांस्तस्मात्किंचिदादिश निश्चितम्॥ ४६.१३८ ॥
**॥बाल उवाच॥**
अत्र तीर्थे च सप्ताहं निराहारस्त्वहं स्थितः॥
सूर्यमंत्राञ्जमिष्यामि त्यक्ष्यामि च ततस्त्वसून्॥ ४६.१३९ ॥
ततो बर्करिकातीर्थे दग्धव्योहं त्वया तटे॥
अस्थीनि सागरे चापि मम क्षेप्याणि चात्र हि॥ ४६.१४० ॥
यदि सापह्नवं चित्तं मय्यतीव तवास्ति चेत्॥
ततस्त्वां गुरुकार्यार्थमादेक्ष्यामि श्रृणुष्व तत्॥ ४६.१४१ ॥
अस्मिन्बहूदके तीर्थे यत्र प्राणांस्त्यजाम्यहम्॥
तत्र मन्नामचिह्नस्ते संस्थाप्यो भास्करो विभुः॥ ४६.१४२ ॥
आरोग्यं धनधान्यं च पुत्रदारादिसंपदः॥
भास्करो भगवांस्तुष्टो दद्यादेतच्छ्रुतेर्वचः॥ ४६.१४३ ॥
सविता परमो देवः सर्वस्वं वा द्विजन्मनाम्॥

वेदवेदांगगीतश्च त्वमप्येनं सदा भज॥ ४६.१४४ ॥
बहूदकमिदं कुंडं संसेव्यं च सदा त्वया॥
माहात्म्यमस्य वक्ष्यामि संक्षेपाद्व्यास सूचितम्॥ ४६.१४५ ॥
बहूदके कुंडवरे स्नाति यो विधिवन्नरः॥
आरोग्यं धनधान्याद्यं तस्य स्यात्सर्वजन्मसु॥ ४६.१४६ ॥
बहूदके च यः स्नात्वा सप्तम्यां माघमासके॥
दद्यात्पिंडं पितॄणां च तेऽक्ष्यां तृप्तिमाप्नुयुः॥ ४६.१४७ ॥
बहूदकस्य तीरे यः शुचिर्यजति वै क्रतुम्॥
शतक्रतुफलं तस्य नास्ति काचिद्विचारणा॥ ४६.१४८ ॥
अत्र यस्त्यजति प्राणान्बहूदकतटे नरः॥
मोदते सूर्यलोकेऽसौ धर्मिणां च सुतो भवेत्॥ ४६.१४९ ॥
बहूदकस्य तीरे च यः कुर्य्याज्जपसाधनम्॥
सर्वं लक्षगुणं प्रोक्तं जपो होमश्च पूजनम्॥ ४६.१५० ॥
बहूदकस्य तीरे च द्विजमेकं च भोजयेत्॥
यो मिष्टान्नेन तस्य स्याद्विप्रकोटिश्च भोजिता॥ ४६.१५१ ॥
बहूदकस्य तीरे या नारी गौरिणिकाः शुभाः॥
संभोजयति तस्याश्च कुर्यात्सुस्वागतं ह्युमा॥ ४६.१५२ ॥
बहूदकस्य तीरे च यः कुर्याद्योगसाधनम्॥
षण्मासाभ्यन्तरे सिद्धिर्भवेत्तस्य न संशयः॥ ४६.१५३ ॥
बहूदकस्य तीरे च प्रेतानुद्दिश्य दीयते॥
यत्किंचिदक्षयं तेषामुपतिष्ठेन्न चान्यथा॥ ४६.१५४ ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्॥
कृतं बहूदकतटे सर्वं स्यात्सुमहात्फलम्॥ ४६.१५५ ॥
त्वयैतद्धृदि संधार्य फलं व्यासेन सूचितम्॥
बहूदकस्य कुंडस्य नंदभद्र महामते॥ ४६.१५६ ॥
इत्युक्त्वा सोऽभवन्मौनी स्नात्वा कुंडे ततः शुचिः॥
तीरे प्रस्तरमाश्रित्य स्वयं मंत्राञ्जाप ह॥ ४६.१५७ ॥
**॥श्रीनारद उवाच॥**
ततः स सप्तरात्रांते जहौ बालो निजानसून्॥
संस्कारितो यथोक्तं च नंदभद्रेण ब्राह्मणैः॥ ४६.१५८ ॥
यत्र बालः स च प्राणाञ्जहौ जपपरायणः॥
बालादित्यमिति ख्यातं तत्रास्थापयत प्रभुम्॥ ४६.१५९ ॥
बहूदके च यः स्नात्वा बालादित्यं प्रपूजयेत्॥

तस्य स्याद्भास्करस्तुष्टो मोक्षोपायं च विंदति॥ ४६.१६० ॥
नंदभद्रो ऽप्यथान्यस्यां भार्यायामपरान्सुतान्॥
उत्पाद्यात्मसमन्धीमाञ्छिवसूर्यपरायणः॥ ४६.१६१ ॥
रुद्रदेहं ययौ पार्थ पुनरावृत्तिदुर्लभम्॥
एवमेतन्महाकुंडं बहूदकमिति स्मृतम्॥ ४६.१६२ ॥
अस्य तीरे स्वमंशं च वल्लीनाथः प्रमेक्ष्यति॥
दत्तात्रेयस्य यो योगी ह्यवतारो भविष्यति॥ ४६.१६३ ॥
अर्चयित्वा च तं देवं योगसिद्धि मवाप्नुयात्॥
पशूनामृद्धिमाप्नोति गोशरण्यो ह्यसौ प्रभुः॥ ४६.१६४ ॥
पश्चिमायां बुधसुतस्तथा क्षेत्रं स भारत॥
पुरूरवादित्यमिति स्थापयामास पार्थिवः॥ ४६.१६५ ॥
सर्वकामप्रदश्चासौ भट्टदित्यसमो रिवः॥
बहूदकक्षेत्रसमं तस्य क्षेत्रं च भारत॥ ४६.१६६ ॥
अस्य तीर्थस्य माहात्म्यं जप्तव्यं कर्णमूलके॥
पुत्रस्य वापि शिष्यस्य न कथंचन नास्तिकः॥ ४६.१६७ ॥
श्रृणोतीदं श्रद्धया यस्तस्य तुष्येश्च भास्करः॥
धारयन्हृदये मोक्षंमुच्यते भवसागरात्॥ ४६.१६८ ॥
इचि श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बहूदकमाहात्म्य बालादित्यवृत्तान्तवर्णनंनाम षट्चत्वारिंशोऽध्यायः॥ ४६ ॥ छ ॥

।। नारद उवाच ।। ।।
ततो मयास्य तीर्थस्य रक्षणाय पुनर्जय ।।
समाराध्य यथा देव्यः स्थापितास्तच्छृणुष्व भोः ।।१।।
यथात्मा सर्वभूतेषु व्यापकः परमेश्वरः ।।
तथैव प्रकृतिर्नित्या व्यापका परमेश्वरी ।। २ ।।
शक्ति प्रसादादाप्नोति वीर्यं सर्वाश्च संपदः ।।
ईश्वरी सर्वभूतेषु सा चैवं पार्थ संस्थिता ।। ३ ।।
बुद्धिर्ह्रीपुष्टिलज्जेति तुष्टिः शांतिः क्षमा स्पृहा ।।
श्रद्धा च चेतना शक्तिर्मंत्रोत्साहप्रभूद्भवा ।। ४ ।।
इयमेव च बंधाय मोक्षायेयं च सर्वदा ।।
एनामाराध्य चैश्वर्यमिन्द्राद्याः समवाप्नुयुः ।। ५ ।।
ये च शक्तिं न मन्यंते तिरस्कुर्वंति चाधमाः ।।
योगीन्द्रा अपि ते व्यक्तं भ्रश्यंते काशिजा यथा ।। ६ ।।
वाराणस्यां किल पुरा सिद्धयोगीश्वराः पुनः ।।
अवमन्य च ते शक्तिं पुनर्भ्रंशमुपागताः ।। ७ ।।
तस्मात्सदा देहिनेयं शक्तिः पूज्यैव नित्यदा ।।
तुष्टा ददाति सा कामान्रुष्टा संहरते क्षणात् ।। ८ ।।
परमा प्रकृतिः सा च बहुभेदैर्व्यवस्थिता ।।
तासां मध्ये महादेव्यो ह्यत्र संस्थापिताः शृणु ।।९।।
चतस्रस्तु महाशक्त्यश्चतुर्दिक्षु व्यवस्थिताः ।।
सिद्धांबिका तु पूर्वस्यां स्थापिता सा गुहेन च ।।1.2.47.१ ०।।
जगदादौ मूलूप्रकृतेरुत्पन्ना सा प्रकीर्त्यते ।।
आराधिता यतः सिद्धैस्तस्मात्सिद्धांबिका च सा ।।११।।
दक्षिणस्यां तथा तारा संस्थिता स्थापिता मया ।।
तारणार्थाय देवानां यस्मात्कूर्मं समाश्रिता ।। १२ ।।
ययाविष्टः समुज्जह्रे वेदान्कूर्मो जगद्गुरुः ।।
अनयाविष्टदेहश्च बुधो बौद्धान्हनिष्यति ।।१३।।
कोटिशो वेदमार्गस्य ध्वंसकान्पापकर्मिणः।।
इयं मया समाराध्य समानीता गिरेः सुता ।। १४ ।।
कोटिसंख्याभिरत्युग्रदेवीभिः संवृता च सा ।।
दक्षिणां दिशमाश्रित्य संस्थिता मम गौरवात् ।।१५।।
पश्चिमायां तथा देवी संस्थिता भास्करा शुभा ।।
ययाविष्टानि भासंते भास्करप्रमुखानि च।।१६।।

बिंबानि सर्वताराणां गच्छन्त्यायांति च द्रुतम् ।।
सैषा महाबला शक्तिर्भास्वरा कुरुनन्दन ।।१७।।
मयाराध्य समानीता कटाहादत्र संस्थिता ।।
कोटिकोटिवृता नित्यं त्रायते पश्चिमां दिशम् ।। १८ ।।
उत्तरस्यां तथा देवी संस्थिता योगनंदिनी ।।
परमप्रकृतेर्देहात्पूर्वं निःसृतया यया ।। १९ ।।
दृष्ट्या दृष्टा निर्मलया योगमापुश्चतुःसनाः ।।
योगीश्वरी च सा देवी सनकाद्यैः सुतोषिता ।। 1.2.47.२० ।।
सैव चांडकटाहान्मे समाराध्यात्र प्रापिता ।।
योगिनीभिः परिवृता संस्थिता चोत्तरां दिशम् ।। २१ ।।
एवमेता महाशक्त्यश्चतस्रः संस्थिताः सदा ।।
पूजिताः कामदा नित्यं रुष्टाः संहरणक्षमाः ।। २२ ।।
ततश्च नव मे दुर्गाः समानीताः शृणुध्व ताः ।। २३ ।।
त्रिपुरानाम परमा देवी स्थाणुर्यया पुरा ।।
आविष्टस्त्रिपुरं निन्ये भस्मत्वं जगदीश्वरः ।। २४ ।।
त्रिपुरेति ततस्तां तु प्रोक्तवान्भगवान्हरः ।।
तुष्टाव च स्वयं तस्मात्पूज्या सा जगतामपि ।। २५ ।।
सा चाराध्य समानीता मयामरेश्वरपर्वतात् ।।
भक्तानां कामदा सास्ति भट्टादित्यसमीपतः ।। २६ ।।
अपरा चापि कोलंबा महाशक्तिः सनातनी ।।
कोलरूपी ययाविष्टः केशवश्चोज्जहार गाम् ।। २७ ।।
तस्मात्सा विष्णुना चोक्ता कोलंबेति स्तुतार्चिता ।।
सा च देवी मया पार्थ भक्तियोगेन तोषिता ।। २८ ।।
वाराहगिरिसंस्था मां समानीता च साब्रवीत् ।।
यत्राहं नारद सदा तिष्ठामि कृपयार्थिनाम् ।। ।। २९ ।।
तत्र कूपेन संस्थेयं रुद्राणीसंस्थितेन वै ।।
तं हि कूपं विना मह्यं न रतिर्जायते क्वचित् ।।1.2.47.३०।।
तस्माद्भवान्कूपवरं स्वयमत्र खन द्विज ।।
एवमुक्ते पार्थ देव्या दर्भमूलेन मे तदा ।। ३१ ।।
कूपोऽखनि यत्र साक्षाद्रुद्राणी कूप आबभौ ।।
ततो मया तत्र देवाः स्नात्वा जप्त्वा च तर्पिताः।।३२।।
पूजिता च ततो दैवी कोलंबा जगदीश्वरी ।।
परितुष्टा तदा देवी प्रणतं मा ततोऽब्रवीत् ।। ३३ ।।

सदात्र चाहं स्थास्यामि प्रसादं प्रापिता त्वया ।।
ये च कूपेत्र संस्नात्वा माघाष्टम्यां विशेषतः ।।३४।।
पूजयिष्यंति मां मर्त्यास्तेषां छेत्स्यामि दुष्कृतम् ।।
सर्वतीर्थमयी यश्च सर्वर्तुकवनेस्थितः ।। ३५ ।।
मेरोः समीपे रुद्राण्याः कूप एष स एव च ।।३६।।
प्रयागादपि गंगाया गयायाश्च विशेषतः ।।
कूपेस्मिन्नधिकं स्नानं मया नारद कीर्तितम् ।। ३७ ।।
तदहं तव वाक्येन संस्थितात्र तपोधन ।।
गुहेनाथ सरः पुण्यं पालयिष्याम्यतंद्रिता ।। ३८ ।।
कुमारेशं पूजयित्वा पूजयिष्यंति ये च माम् ।।
देवीभिः षष्टिकोटीभिर्युता तेषामभीष्टदा ।। ३९ ।।
।। नारद उवाच ।। ।।
इत्युक्तोऽहं पार्थ देव्या तदानीं प्रीयमाणया ।।
प्रत्यब्रवं प्रमुदितः कोलंबां विश्वमातरम् ।। 1.2.47.४० ।।
अत्रास्य माता त्वं देवि गुप्तक्षेत्रस्यकारणम् ।।
तीर्थयात्रा वृथा तेषां नार्च्चयंतीह त्वां च ये ।। ४१ ।।
इदं च यत्सरः पुण्यं त्वन्नाम्ना ख्यातिमेष्यति ।।
ईश्वरी सरसोऽस्य त्वं तीर्थस्यास्य तथेश्वरी ।। ४२ ।।
एवं दीर्घं तपस्तत्वा स्थापिता मयका शुभा ।।
महादुर्गा नरैस्तस्मात्पूज्येयं सततं बुधैः ।। ४३ ।।
तृतीया च दिशि तस्यां स्थिता संस्थापिता मया ।।
गुहेन च कपालेश्याः प्रभावोस्याः पुरेरितः ।। ४४ ।।
धन्यास्ते ये प्रपश्यंति नित्यमेनां नरोत्तमाः ।।
कपालेश्वरमभ्यर्च्य विश्वशक्तिरियं यतः ।। ४५ ।।
एवमेतास्तिस्रो दुर्गाः पूर्वस्यां दिशि संस्थिताः ।।
पश्चिमायां प्रवक्ष्यामि तिस्रो दुर्गा महोत्तमा ।। ४६ ।।
सुवर्णाक्षी तु या देवी ब्रह्मांडपरिपालिनी ।।
सा मयात्र समाराध्य तीर्थे देवी निवेशिता ।। ।। ४७ ।।
ये चैनां प्रणमिष्यंति पूजयिष्यंति भक्तितः ।।
त्रयस्त्रिंशद्भिः कोटीभिर्देवीभिः पूजिता च तैः ।। ४८ ।।
अपरा च महादुर्गा चर्चिता चेति संस्थिता ।
रसातलतलात्तत्र मयानीता सुभक्तितः ।। ४९ ।।
इयमर्च्या च चिंत्या च वीरत्वं समभीप्सुभिः ।।

बहुभिर्देवदैतेयैर्ददौ तेभ्यश्च वीरताम् ।। 1.2.47.५० ।।
इयमेव महादुर्गा शूद्रकं वीरसत्तमम् ।
चौरैर्बद्धं कलौ चाग्रे मोक्षयिष्यति विक्रमात् ।। ५१ ।।
ततस्त्वेतां स चाराध्य वीरेंद्रत्वमवाप्स्यति ।।
निहनिष्यति चाक्रम्य कालसेनमुखान्रिपून् ।। ५२ ।
तस्मादियं समाराध्या वीर्यकामैर्नरैः सदा ।।
चर्चिता या महादुर्गा पश्चिमायां दिशि स्थिता ।। ५३ ।।
तथा त्रैलोक्यविजया तृतीयस्यां दिशि स्थिता ।
यामाराध्य जयं प्राप्तस्त्रिलोक्यां रोहिणीपतिः ।।
सोमलोकान्मयानीता पूजिता जयदा सदा ।। ५४ ।।
एवमेताः पश्चिमायामुत्तरस्यामतः शृणु ।।
तिस्रो देव्यश्चोत्तरस्यामेकवीरामुखाः स्थिताः ।। ५५ ।।
एकवीरेति या देवी साक्षात्सा शिवपूजिता ।।
ययाविष्टो जगत्सर्वं संहरत्येष भूतराट् ।। ५६ ।।
वीर्येणाद्येकवीरायाः कृत्वा लोकांश्च भस्मसात् ।।
युगैकादशपूर्णत्वे विलक्षोऽभूत्स भस्मनि ।। ५७ ।।
एवंविधा त्वेकवीरा शक्तिरेषा सनातनी ।।
पूजिताराधिता चैव सर्वाभीप्सितदा नृणाम् ।। ।। ५८ ।।
ब्रह्मलोकात्समानीता मयाराध्यात्र भारत ।।
नामकीर्तनमप्यस्या दुष्टानां घातनं विदुः ।। ५९ ।।
द्वितीया हरसिद्ध्याख्या देवी दुर्गा महाबला ।।
शीकोत्तरात्समाराध्य मयानीतात्र पांडव ।। 1.2.47.६० ।।
यदा शीकोत्तरस्थेन पार्वत्या प्रार्थितेन च ।।
रुद्रेण डाकिनीमंत्रः प्रोक्तो देव्याः कृपालुना । ६१ ।।
तदा मंत्रप्रभावेण मोहिता गिरिजा सती ।।
तमेवाक्रम्य मांसं च शोणितं च भवं पपौ ।। ६२ ।।
ततो रुद्रशरीरात्तु विनिष्क्रांतार्तिनाशिनी ।।
हरसिद्धिर्महादुर्गा महामंत्रविशारदा ।। ६३ ।।
सा सहस्रभुजा देवी समाक्रम्याभिपीड्य च ।।
मोक्षयामास गिरिशमशापयत तां तथा ।। ६४ ।।
ततः प्रभृति सा लोके हरसिद्धिः प्रकीर्त्यते ।।
देवीनां षष्टिकोटीभिरावृता पूज्यते सुरैः ।। ६५ ।।
एतामाराध्य सुग्रीवप्रमुखा दोषनाशिनीम्।।।

अभूवन्त्सुमहावीर्या डाकिनीसंघनाशनाः ।। ६६ ।।
तस्मादेतां पूजयेत्तु मनोवाक्कायकर्मभिः ।।
डाकिन्याद्या न सर्पंति हरसिद्धेरनंतरम् ।। ६७ ।।
तृतीयेशानकोणस्था चंडिका नवमी स्थिता ।।
वागीशोऽपि लभेत्पारं नैव यस्याः प्रवर्णने । ६८ ।।
या पुरा पार्वतीदेहाद्विनिःसृत्य महासुरौ ।।
चंडमुंडौ निहत्यैव भक्षयामास क्रोधतः ।। ६९ ।।
अक्षौहिणीशतं त्वेकं चंडमुंडौ च तावुभौ ।।
नापूर्यतैकग्रासोऽस्याः किंलक्ष्या यात्वियं हि सा ।। 1.2.47.७० ।।
इयमेवांधकानां च तृषिता शोणितं पुनः ।।
पपौ ततो निजग्राह चांधकं भगवान्भवः ।। ७१ ।।
इयं च रक्तबीजानां कृत्वा पानं च रक्तजम् ।।
अर्पयामास तं देव्याश्चामुण्डापीतशोणितम् ।। ७२ ।।
एषा तृप्यति भक्तानां प्रणामेनापि भारत ।।
अर्बुदानां च कोटीभिर्दैत्यानां पापकर्मिणाम् ।। ७३ ।।
कुण्डं चास्या मया देव्याः पुण्यं निष्पादितं शुभम् ।।
यत्र वै स्पर्शमात्रेण सर्वतीर्थफलं लभेत् ।। ७४ ।।
हरसिद्धिर्देवसिद्धिर्धर्मसिद्धिश्च भारत ।।
विविधा प्राप्यते सिद्धिस्तीर्थेऽस्मिंश्चंडिकारतैः ।। ७५ ।।
यश्च पूजयते देवीं स्वल्पेन बहुनापि वा ।।
कात्यायनी कोटिशतैर्वृता तस्य विभूतिदा ।। ७६ ।।
एवमेता महादुर्गा नवतीर्थेऽत्र संस्थिताः ।।
चतस्रश्चापि दिग्देव्यो नित्यमर्च्याः शुभेप्सुभिः ।।७७।।
आश्विनस्य च मासस्य नवरात्रे विशेषतः ।।
उपोष्य चैकभक्तैर्वा देवीस्त्वेताः प्रपूजयेत् ।। ७८ ।।
बलिपूपकनैवेद्यैस्तर्पणैर्धूपगंधिभिः ।।
तस्य रक्षां चरंत्येता रथ्यासु त्रिकचत्वरे ।। ७९ ।।
भूतप्रेतपिशाचाद्या नोपकुर्युः प्रपीडनम् ।।
आपदो विद्रवंत्याशु योगिन्यो नंदयंति तम् ।। 1.2.47.८० ।।
पुत्रार्थी लभते पुत्रान्धनार्थी धनमाप्नुयात् ।।
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।। ८१ ।।
आसां यः कुरुते भक्तिं नरो नारी च श्रद्धया ।।
सर्वान्कामानवाप्नोति यांश्चिंतयति चेतसि ।। ८२ ।।

कामगव्य इमा देव्यश्चिन्तामणिनिभास्तथा ।।
कल्पवल्ल्योऽऽथ भक्तानां प्रतिच्छन्दोऽत्र नव हि ।। ८३ ।।
तथात्र भूतमातास्ति हरसिद्धेस्तु दक्षिणे ।।
तस्या माहात्म्यमतुलं संक्षेपात्प्रब्रवीमि ते ।। ८४ ।।
पूर्वं किल गुहो विद्वान्पुण्ये सारस्वते तटे।।
भूतप्रेतपिशाचानामाधिराज्येऽभ्यषिच्यत ।। ८५ ।।
स च सर्वाणि भूतानि मर्यादायामधारयत् ।।
एतदन्नं प्रदायैव कृपया भगवान्गुहः ।। ८६ ।।
यदमंत्रहुतं किंचिद्वेदबाह्यं च यत्कृतम् ।।
अश्रद्धया च क्रोधेन तद्वस्तृप्त्यै भविष्यति ।। ८० ।।
ततस्त्वनेन भोगेन तानि नंदंति कृत्स्नशः ।।
ततः केनापि कालेन श्रद्धयाऽश्रद्धया कृतम् ।। ८८ ।।
पुण्यं तान्येव भूतानि ग्रसंत्याक्रम्य देवताः ।।
ततो देवाः क्षुधार्त्तास्ते गुहायैतन्न्यवेदयन् ।। ८९ ।।
स वै तदाकर्ण्य क्रुद्धो गुहः काल इवाभवत् ।।
तस्य क्रुद्धस्य भ्रूपद्ममध्यात्काचिद्विनिर्गता ।। 1.2.47.९० ।।
ज्वालामाला सुदुर्दर्शा नारी द्वादशलोचना ।।
सा च प्रणम्य तं प्राह तव शक्तिरहं प्रभो ।।
शीघ्रमादिश मां कृत्ये किं करोमि तवेप्सितम्।। ९१ ।। ।।
।। स्कन्द उवाच ।। ।।
एतैर्भूतगणैः पापैरुल्लंघ्य मम शासनम् ।। ९२ ।।
मनुष्यदत्तं सकलं भुज्यते स्वेच्छयाधमैः ।।
शीघ्रमेतानि त्वं तस्मान्मर्यादायामुपानय ।। ९३ ।।
एतास्त्वानुव्रजिष्यंति देव्यः कोटिशतं शुभे ।।
ततस्तथेति सा चोक्ता देवीभिः संवृता तदा ।। ९४ ।।
मयूरं समुपास्थाय गुहशक्तिः समागता ।।
सरोजवनमासाद्य भूतसंघानपश्यत ।। ९५ ।।
जघान च समासाद्य देवी नानाविधायुधैः ।।
ततः प्रेतपिशाचाद्या हन्यमाना महारणे ।। ९६ ।।
प्रसादयंति तां देवीं नानावेषैः सुदीनवत् ।।
केचिद्ब्राह्मणवेषैश्च तापसानां तथो क्तिभिः ।। ९७ ।।
नृत्यंति देवि पद्माक्षि प्रसीदेति पुनःपुनः ।।
ततः प्रसन्ना सा देवी व्रियतां स्वेच्छयाऽऽह तान् ।। ९८ ।।

तां ते प्रोचुस्त्राहि नस्त्वं भूतमाता भवेश्वरि ।।
मर्यादां नैव त्यक्ष्यामो वयं स्कन्दविनिर्मिताम् ।। ९९ ।।
ये चैवं त्वां तोषयन्ति तेषां देहि वरान्सदा ।।1.2.47.१००।। ।।
।। श्रीदेव्युवाच ।। ।।
वैशाखे दर्शदिवसे ये चैवं तोषयंति माम् ।।
अरिष्टाभरणैः पुष्पैर्दधिभक्तैश्च पूजनैः ।।
तेषां सर्वोपसर्गा वै यास्यंति विलयं स्फुटम् ।। १०१ ।।
एवं दत्त्वा वरं देवी मुमुदे भूतसंवृता ।।
एवंप्रभावा सा देवी मयानीतात्र भारत ।। १०२ ।।
य एनां प्रणमेन्मर्त्यः सर्वारिष्टैर्विमुच्यते ।। १०३ ।।
एवं प्रभावाः परिकीर्तिता मया समासतस्तीर्थवरेऽत्र देव्यः ।।
चतुर्दशैवार्जुन पूजिता याश्चतुर्दशस्थानवरैर्नृमुख्यैः ।। ।। १०४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे
श्रीदेव्याख्यानवर्णनंनाम सप्तचत्वारिंशत्तमोऽध्यायः ।। ४७ ।।

।। नारद उवाच ।। ।।
अथातः संप्रवक्ष्यामि सोमनाथमहिं स्फुटम् ।।
शृण्वन्यां कीर्त यिष्यामि पापमोक्षमवाप्नुयात् ।। १ ।।
पुरा त्रेतायुगे पार्थ चौडदेशसमुद्भवौ ।।
ऊर्जयंतश्च प्रालेयो विप्रावास्तां महाद्युती । २ ।।
तावेकदा पुराणार्थे श्लोकमेकमपश्यताम् ।।
तं दृष्ट्वा सर्वशास्त्रज्ञावास्तां कंटकितत्वचौ ।। ३ ।।
प्रभासाद्यानि तीर्थानि पुलस्त्यायाह पद्मभूः ।
न यैस्तत्राप्लुतं चैव किं तैस्तीर्थमुपासितम् ।। ४ ।।
इति श्लोकं पठित्वा तौ पुनःपुनरभिष्टुतम् ।।
तर्ह्येव च प्रभासाय निःसृतौ स्नातुमुत्तमौ ।। ५ ।।
तौ वनानि नदीश्चैव व्यतिक्रम्य शनैःशनैः ।।
महर्षिगणसंकीर्णामुत्तीणौ नर्मदां शिवाम् ।। ६ ।।
गुप्तक्षेत्रस्य माहात्म्यं महीसागरसंगमम् ।।
तत्र स्नात्वा प्रभासाय तन्मध्येन प्रतस्थतुः ।। ७ ।।
ततो मार्गस्य शून्यत्वात्तृट्क्षुधापीडितौ भृशम् ।।
आस्तां विचेतनौ विप्रौ सिद्धलिंगसमीपतः ।। ८ ।।
सिद्धनाथं नमस्कृत्य संप्रयातौ सुधैर्यतः ।।
क्षुधावेगेन तीव्रेण तृषा मध्यार्कतापितौ ।। ९ ।।
सहसा पतितौ भूमौ स्थूणपादौ विमूर्छितौ ।।
ततो मुहूर्तात्प्रालेय ऊर्जयंतमभाषत ।। 1.2.48.१० ।।
किंचिद्विश्वस्य धैर्याच्च सखे किं न श्रुतं त्वया ।।
यथा यथा विवर्णांगो जायते तीर्थयात्रया ।। ११ ।।
तथातथा भवेद्दानैर्दीनः सोमेश्वरो हरः ।।
तथाऽऽस्तां लुंठमानौ तावेवमुक्ते श्रुतेऽपि च ।। १२ ।।
लुंठमानो जगामैव प्रालेयः किंचिदंतरे ।।
उत्थितं सहसा लिंगं भूमिं भित्त्वा सुदुर्दृशम् ।। १३ ।।
खे वाणी चाभवत्तत्र पुष्पवर्षपुरःसरा ।।
प्रालेय तव हेतोस्तु सोमनाथसमं फलम् ।।
उत्थितं सागरतटे लिंगं तिष्ठात्र सुव्रत ।। १४ ।।
।। प्रालेय उवाच ।। ।।
यद्येवं सत्यमेतच्च तथाप्यात्मा प्रकल्पितः ।। १५ ।।
प्रभासाय प्रयातव्यं यदाऽऽ मृत्योर्मया स्फुटम् ।।

ततश्चैवोर्ज्जयंतोऽपि मूर्च्छाभावाल्लुठन्पुरः ।। १६ ।।
अपश्यदुत्थितं लिंगं स चैवं प्रत्यपद्यत ।।
ततः प्रत्यक्षतां प्राप्तो भवश्चक्रे तयोर्दृढे ।। १७ ।।
दृष्ट्या तनू ततो यातौ प्रभासं शिवसद्म च ।।
तावेतौ सोमनाथौ द्वौ सिद्धेश्वरसमीपतः ।। १८ ।।
ऊर्जयंतः प्रतीच्यां च प्रालेयस्येश्वरोऽपरः ।।
सोमकुडांभसि शनैः स्नात्वार्णवमहीजले ।। १९ ।।
सोमनाथद्वयं पश्येज्जन्मपापात्प्रमुच्यते ।।
ब्रह्मात्र स्थापयित्वा तु हाटकेश्वर संज्ञितम् ।। 1.2.48.२० ।।
महीनगरके लिंगं पातालात्सुमनोहरम् ।।
तुष्टाव देवं प्रयतः स्तुतिं तां शृणु पांडव ।। २१ ।।
नमस्ते भगवन्रुद्र भास्करामिततेजसे ।।
नमो भवाय रुद्राय रसायांबुमयाय ते ।। २२ ।।
शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ।।
ईशाय वायवे तुभ्यं संस्पर्शाय नमोनमः ।। २३ ।।
पशूनां पतये चापि पावकायातितेजसे ।।
भीमाय व्योमरूपाय शब्दमात्राय ते नमः ।। २४ ।।
महादेवाय सोमाय अमृताय नमोऽस्तु ते ।।
उग्राय यजमानाय नमस्ते कर्मयोगिने ।। २५ ।।
इत्येवं नामभिर्दिव्यैः स्तव एष उदीरितः ।।
यः पठेच्छृणुयाद्वापि पितामहकृतं स्तवम् ।। २६ ।।
हाटकेश्वरलिंगस्य नित्यं च प्रयतो नरः ।।
अष्टमूर्तेः स सायुज्यं लभते नात्र संशयः ।। २७ ।।
हाटकेश्वरलिंगं च प्रयतो यः स्मरेदपि ।।
तस्य स्याद्वरदो ब्रह्मा तेनेदं स्थापितं जय ।। २८ ।।
एवंविधानि तीर्थानि महीसागरसंगमे ।।
बहूनि संति पुण्यानि संक्षेपाद्वर्णितानि मे ।। २९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे स्तम्भतीर्थमाहात्म्ये सोमनाथवृत्तांतवर्णनंनामाष्टचत्वारिंशोऽध्यायः ।। ४८ ।।

।। अर्जुन उवाच ।। ।।
अत्यद्भुतानि तीर्थानि लिंगानि च महामुने ।।
श्रुत्वा तव मुखांभोजाद्भृशं मे हृष्यते मनः ।। १ ।।
महीनगरकस्यापि स्थापितस्य त्वया मुने ।।
यानि तीर्थानि मुख्यानि तानि वर्णय मे प्रभो ।। २ ।।
।। नारद उवाच ।। ।।
श्रीमन्महीनगरके यानि तीर्थानि फाल्गुन ।।
तानि वक्ष्यामि यत्रास्ते जया दित्यो रविः प्रभुः ।। ३ ।।
जयादित्यस्य यो नाम कीर्तयेदिह मानवः ।।
सर्वरोगविनिर्मुक्तो लभेत्सोऽपि हृदीप्सितम् ।। ४ ।।
यस्य संदर्शनादेव कल्याणैरपि पूर्यते ।।
मुच्यते चाप्यकल्याणैः श्रद्धावान्पार्थ मानवः ।। ५ ।।
तस्य देवस्य चोत्पत्तिं शृणु पार्थ वदामि ते ।।
शृण्वन्वा कीर्तयन्वापि प्रसादं भास्कराल्लभेत् ।। ६ ।।
अहं संस्थाप्य संस्थानमेतत्कालेन केनचित् ।।
प्रयातो भास्करं लोकं दर्शनार्थी यदृच्छया ।। ७ ।।
स मां प्रणतमासीनमभ्यर्च्यार्घेण भास्करः ।।
प्रहसन्निव प्राहेदं देवो मधुरया गिरा ।। ८ ।।
कुत आगम्यते विप्र क्व च वा प्रतिगम्यते ।।
क्व चायं नारदमुने कालस्ते विहृतोऽभवत् ।। ९ ।।
।। नारद उवाच ।। ।।
एवमुक्तो भास्करेण तं तदा प्राब्रवं वचः ।।
भारते विहृतः खण्डे महीनगरकादपि ।।
दर्शनार्थं तव विभो समायातोऽस्मि भास्कर ।। 1.2.49.१० ।।
।। रविरुवाच ।। ।।
यत्त्वया स्थापितं स्थानं तत्र ये संति ब्राह्मणाः ।।
तेषां गुणान्मम ब्रूहि किंगुणा ननु ते द्विजाः ।। ११ ।।
।। नारद उवाच ।। ।।
एवं पृष्टो भगवता पुनरेवाब्रवं वचः ।। १२ ।।
यदि तान्भोः प्रशंसामि स्वीयान्स्तौतीति वाच्यता ।।
निंदाम्यनर्हान्कस्माद्वा कष्टमेवोभयत्र च ।। १३ ।।
अथवा पारमाहात्म्ये सति तेषां महात्मनाम् ।।
अल्पे कृते वर्णने स्याद्दोष एव महान्मम ।। १४ ।।

मदर्चितद्विजेंद्राणां यदि स्याच्छ्रवणेप्सुता ।।
ततः स्वयं विलोक्यास्ते गत्वेदं मे मतं रवे ।। १५ ।।
इति श्रुत्वा मम वचो रविरासीत्सुविस्मितः ।।
स्वयं द्रक्ष्यामि चोवाच पुनःपुनरहर्पतिः ।। १६ ।।
सोऽथ विप्रतनुं कृत्वा मां विसर्ज्यैव भास्करः ।।
प्रतपन्दिवि योगाच्च प्रयातोर्णवरोधसि ।। १७ ।।
जटां त्रिषवणस्नानपिंगलां धारयन्नथ ।।
वृद्धद्विजो महातेजा ददृशे ब्राह्मणैर्मम ।। १८ ।।
ततो हारीतप्रमुखाः प्रहर्षोत्फुल्ललोचनाः ।।
उत्थाय ब्रह्मशालायास्ते द्विजा द्विजमाद्रवन् ।।१९।।
नमस्कृत्य द्विजाग्र्यं ते प्रहर्षादिदमब्रुवन् ।।1.2.49.२०।।
अद्य नो दिवसः पुण्यः स्थानमद्योत्तमं त्विदम् ।।
यत्त्वया विप्रप्रवर स्वयमागमनं कृतम् ।। २१ ।।
धन्यस्य हि गृहस्थस्य कृपयैव द्विजोत्तमाः ।।
आतिथ्यवेषेणायांति पावनार्थं न संशयः ।।२२।।
तत्त्वं गेहानि चास्माकं पादचंक्रमणेन च ।।
दर्शनाद्भोजनात्स्थानादस्माभिः सह पावय ।।२३।।
।। अतिथिरुवाच ।। ।।
भोजनं द्विविधं विप्रा प्राकृतं परमं तथा ।।
तदहं सम्यगिच्छामि दत्तं परमभोजनम् ।।२४ ।।
इत्येतदतिथेः श्रुत्वा हारीतः पुत्रमब्रवीत् ।।
अष्टवर्षं तु कमठं वेत्सि पुत्र द्विजोदितम् ।।२५।।
।।कमठ उवात्र।। ।।
तात प्रणम्य त्वां वक्ष्ये तादृक्परमभोजनम् ।।
द्विजं च तर्पयिष्यामि दत्त्वा परमभोजनम् ।। ।।२६।।
सुतेन किल जातेन जायते चानृणः पिता।।
सत्यं करिष्ये तद्वाक्यं संतर्प्यातिथिमुत्तमम्।।२७।।
भोजनं द्विप्रकारं च प्रविभागस्तयोरयम् ।।
प्राकृतं प्रोच्यते त्वेवमन्यत्परमभोजनम् ।। २८ ।।
तत्र यत्प्राकृतं नाम प्रकृतिप्रमुखस्य तत्।।
चतुर्विंशतितत्त्वानां गणस्योक्तं हि तर्पणम् ।। २९ ।।
षड्रसं भोजनं तच्च पंचभेदं वदंति च ।।
येन भुक्तेन तृप्तं स्यात्क्षेत्रं यद्देहलक्षणम् ।। 1.2.49.३० ।।

यथापरं परंनाम प्रोक्तं परमभोजनम् ।।
परमः प्रोच्यते चात्मा तस्य तद्भोजनं भवेत् ।। ३१ ।।
ततो नानाप्रकारस्य धर्मस्य श्रवणं हि यत् ।।
तदन्नं प्रोच्यते भोक्ता क्षेत्रज्ञः श्रवणौ मुखम् ।। ३२ ।।
तद्वास्यामि द्विजाग्र्याय पृच्छ विप्र यदिच्छसि ।।
शक्तितस्तर्पयिष्यामि त्वामहं विप्रसंसदि ।। ३३ ।।
।। नारद उवाच ।। ।।
कमठस्यैतदाकर्ण्य सोऽतिथिर्वचनं महत् ।।
मनसैव प्रशस्यामुं प्रश्नमेनमथाकरोत् ।। ३४ ।।
कथं संजायते जंतुः कथं चापि प्रलीयते ।।
भस्मतामथ संप्राप्य क्व चायं प्रति पद्यते ।। ३५ ।।
।। कमठ उवाच ।। ।।
गुरवे प्राङ्नमस्कृत्य धर्माय तदनंतरम् ।।
छंदोगीतममुं प्रश्नं शक्त्या वक्ष्यामि ते द्विज ।। ३६ ।।
जनने त्रिविधं कर्म हेतुर्जंतोर्भवेत्किल ।।
पुण्यं पापं च मिश्रं च सत्त्वराजसतामसम् ।। ३७ ।।
तत्र यः सात्त्विको नाम स स्वर्गं प्रतिपद्यते ।।
स्वर्गात्कालपरिभ्रष्टो धनी धर्मी सुखी भवेत्।। ३८ ।।
तथा यस्तामसो नाम नरकं प्रतिपद्यते ।।
भुक्त्वा बह्वीर्यातनाश्च स्थावरत्वं प्रपद्यते ।। ३९ ।।
महतां दर्शनस्पर्शैरुपभोगसहासनैः ।।
महता कालयोगेन संसरन्मानवो भवेत् ।। 1.2.49.४० ।।
सोऽपि दुःखदरिद्राद्यैर्वेष्टितो विकलेंद्रियः ।।
प्रत्यक्षः सर्व लोकानां पापस्यैतद्धि लक्षणम्।। ४१ ।।
अथ यो मिश्रकर्मा स्यात्तिर्यक्त्वं प्रतिपद्यते ।।
महतामेव संसर्गात्संसरन्मानवो भवेत् ।। ४२ ।।
यस्य पुण्यं पृथुतरं पापमल्पं हि जायते ।।
स पूर्वं दुःखितो भूत्वा पश्चात्सौख्यान्वितो भवेत् ।। ४३ ।।
पापं पृथुतरं यस्य पुण्यमल्पतरं भवेत् ।।
पूर्वं सुखी ततो दुःखी मिश्रस्यैतद्धि लक्षणम् ।। ४४ ।।
तत्र मानुषसंभूतिं शृणु यादृगसौ भवेत् ।।
पुरुषस्य स्त्रियाश्चैव शुक्रशोणितसंगमे ।। ४५ ।।
सर्वदोषविनिर्मुक्तो जीवः संसरते स्फुटम्।।

गुणान्वितमनोबुद्धिशुभाशुभसमन्वितः ।। ४६ ।।
जीवः प्रविष्टो गर्भं तु कलले प्रतितिष्ठति ।।
मूढश्च कलले तत्र मासमात्रं च तिष्ठति ।। ४७ ।।
द्वितीयं तु तथा मासं घनीभूतः स तिष्ठति ।।
तस्यावयवनिर्माणं तृतीये मासि जायते ।। ४८ ।।
अस्थीनि च तथा मासि जायंते च चतुर्थके ।।
त्वग्जन्म पंचमे मासि पष्ठे रोम्णां समुद्भवः ।। ४९ ।।
सप्तमे च तथा मासि प्रबोधश्चास्य जायते ।।
मातुराहारपीतं च सप्तमे मास्युपाश्नुते ।। 1.2.49.५० ।।
अष्टमे नवमे मासि भृशमुद्विजते ततः ।।
जरायुणा वेष्टितांगो मुखे बद्धकरांगुलिः ।।५१।।
मध्ये क्लीबस्तु वामे स्त्री दक्षिणे पुरुषस्तथा ।।
तिष्ठत्युदरभागे च पृष्ठेरग्निमुखः किल ।। ५२।।
यस्यां तिष्ठत्यसौ योनौ तां च वेत्ति न संशयः ।।
सर्वं स्मरति वृत्तांतं बहूनां जन्मनामपि ।। ५३ ।।
अंधे तमसि किं दृश्यो गंधान्मोहं दृढं लभेत् ।।
शीते मात्रा जले पीते शीतमुष्णं तथोष्णके ।। ५४ ।।
व्यायामे लभते मातुः क्लेशं व्याधेश्च वेदनाम् ।।
अलक्ष्याः पितृमातृभ्यां जायंते व्याधयः पराः ।। ५५ ।।
सौकुमार्याद्रुजं तीव्रां जनयंति च तस्य ते ।।
स्वल्पमप्यथ तं कालं वेत्ति वर्षशतोपमम् ।। ५६ ।।
संतप्यते भृशं गर्भे कर्मभिश्च पुरातनैः ।।
मनोरथांश्च कुरुते सुकृतार्थं पुनःपुनः ।। ५७।।
जन्म चेदहमाप्स्यामि मानुष्ये जीवितं तथा ।।
ततस्तत्प्रकरिष्यामि येन मोक्षो भवेत्स्फुटम्।।५८।।
एवं तु चिंतयानस्य सीमंतोन्नयनादनु।।
मासद्वयं तद्व्रजति पीडतस्त्रियुगाकृति ।। ५९ ।।
ततः स्वकाले संपूर्णे सूतिमारुतचालितः ।।
भवत्यवाङ्मुखो जंतुः पीडामनुभवन्पराम् ।। ।।1.2.49.६०।।
अधोमुखः संकटेन योनिद्वारेण निःसरेत्।।
पीडया पीडमानोऽपि चर्मोत्कर्तनतुल्यया ।। ६१ ।।
करपत्रसमस्पर्शं करसंस्पर्शनादिकम् ।।
असौ जातो विजानाति मासमात्रं विमोहितः ।। ६२ ।।

प्राक्कर्मवशगस्यास्य गर्भज्ञानं च नश्यति ।।
ततः करोति कर्माणि श्वेतरक्तासितानि च ।। ६३ ।।
अस्थिपट्टतुलास्तंभस्नायुबंधेन यंत्रितम् ।।
रक्तमांसमृदालिप्तं विण्मूत्रद्रव्यभाजनम् ।। ६४ ।।
सप्तभित्तिसुसंबद्धं छन्नं रोम तृणैरपि ।।
वदनैकमहाद्वारं गवाक्षाष्टविभूषितम् ।। ६५ ।।
ओष्ठद्वयकपाटं च दंतार्गलविमुद्रितम् ।।
नाडीस्वेदप्रवाहं च कफपित्तपरिप्लुतम् ।। ।। ६६ ।।
जराशोकसमाविष्टं कालवक्त्रानलस्थितम् ।।
रागद्वेषादिभिर्ध्वस्तं षट्कौशिकसमुद्भवम् ।। ६७ ।।
एवं संजायते पुंसो देहगेहमिदं द्विज ।।
यस्मिन्वसति क्षेत्रज्ञो गृहस्थो बुद्धिगेहिनी ।। ६८ ।।
मोक्षं स्वर्गं च नरकमास्ते संसाधयन्नपि ।। ६९ ।। ।।
इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कमठसूर्यसंवादे जीवस्य देहोत्पत्तिवर्णनंनामैकोनपञ्चाशत्तमोऽध्यायः ।। ४९ ।।

।। अतिथिरुवाच ।। ।।

साध्वबालमते बाल कमठैतत्त्वयोच्यते ।।

शरीरलक्षणं श्रोतुं पुनरिच्छामि तद्वद ।। १ ।।

।। कमठ उवाच ।। ।।

यथैतद्वेद ब्रह्मांडं शरीरं च तथा शृणु ।।

पादमूलं च पातालं प्रपदं च रसातलम् ।। २ ।।

तलातलं तथा गुल्फौ जंघे चास्य महातलम् ।।

जानुनी सुतलं चोरू वितलं चातलं कटिम् ।। ३ ।।

नाभिं महीतलं प्राहुर्भुवर्लोकमथोदरम् ।।

उरःस्थलं च स्वर्लोकं महर्ग्रीवा मुखं जनम् ।। ४ ।।

नेत्रे तपः सत्यलोकं शीर्षदेशं वदंति च ।।

तद्यथा सप्त द्वीपानि पृथिव्यां संस्थितानि च ।। ५ ।।

तथात्र धातवः सप्त नामतस्तान्निबोध मे ।।

त्वगसृङ्मांस मेदोऽस्थिमज्जाशुक्राणि धातवः ।। ६ ।।

अस्थ्नामत्र शतानि स्युस्त्रीणि षष्ट्यधिकानि च ।।

त्रिंशच्छतसहस्राणि नाडीनां कथितानि च ।। ७ ।।

षट्पंचाशत्सहस्राणि तथान्यानि नवैव तु ।।

ता वहंति रसं देहे जलं नद्यो यथा भुवि ।।८।।

सार्धाभिस्तिसृभिश्छन्नं समंताद्रोमकोटिभिः ।।

शरीरं स्थूलसूक्ष्माभिर्दृश्यादृश्या हि ताः स्मृताः ।।९।।

षडंगानि प्रधानानि कथ्यमानानि मे शृणु ।।

द्वौ बाहू सक्थिनी द्वे च मूर्धा जठरमेव च ।। 1.2.50.१० ।।

अंत्राण्यत्र तथा त्रीणि सार्धव्यामत्रयाणि च ।।

त्रिव्यामानि तथा स्त्रीणामाहुर्वेदविदो द्विजाः ।। ११ ।।

ऊर्ध्वनालमधोवक्त्रं हृदि पद्मं प्रकीर्त्यते ।।

हृत्पद्मवामतः प्लीहो दक्षिणे स्यात्तथा यकृत् ।। १२ ।।

मज्जातो मेदसश्चैव वसायाश्च तथा द्विज ।।

मूत्रस्य चैव पित्तस्य श्लेष्मणः शकृतस्तथा ।। ।। १३ ।।

रक्तस्य चरमस्यात्र गर्ता द्व्यंजलयः स्मृताः ।।

गेयः प्रवर्तमानास्ते देहं संधारयंत्युत ।। १४ ।।

सीवन्यश्च तथा सप्त पंच मूर्धानमास्थिताः ।।

एका मेढ्रं गता चैका तथा जिह्वां गता द्विज ।। १५ ।।

नाड्यः सर्वाः प्रवर्तंते नाभिपद्मात्तथात्र च ।।

यासां श्रेष्ठा शिरो याता सुषुम्नेडाऽथ पिंगला ।। १६ ।।

नासिकाद्वारमासाद्य संस्थिते देहवर्धने ।।

वायुरग्निश्चंद्रमाश्च पंचधा पंचधात्र च ।। १७ ।।

प्राणापानसमानाश्च उदानो व्यान एव च ।।

पंच भेदाः स्मृता वायोः कर्माण्येषां वदंति च ।। १८ ।।

उच्छ्वासश्चैव निःश्वासो ह्यन्नपानप्रवेशनम् ।।

आकंठाच्छीर्षसंस्थास्य प्राणकर्म प्रकीर्तितम् ।। १९ ।।

त्यागो विण्मूत्रशुक्राणां गर्भविस्रवणं तथा ।।

अपानकर्म निर्दिष्टं स्थानमस्य गुदोपरि ।। 1.2.50.२० ।।

समानो धारयत्यन्नं विवेचयति चाप्यथ ।।

रसयंश्चैव चरति सर्वश्रोणिष्ववारितः ।। २१ ।।

वाक्प्रवृत्तिप्रदोद्गारे प्रयत्ने सर्वकर्मणाम् ।।

आकंठसुरसंस्थानमुदानस्य प्रकीर्त्यते ।। २२ ।।

व्यानो हृदि स्थितो नित्यं तथा देहचरोपि च ।।

धातुवृद्धिप्रदः स्वेदलालोन्मेषनिमेषकृत् ।। २३ ।।

पाचको रजकश्चैव साधकालोचकौ तथा ।।

भ्राजकश्च तथा देहे पञ्चधा पावकः स्थितः ।। २४ ।।

पाचकस्तु पचत्यन्नं नित्यं पक्वाशये स्थित. ।।।

आमाशयस्थोऽपि रसं रंजकः कुरुते त्वसृक् ।। २५ ।।

साधको हृदिसंस्थश्च बुद्ध्याद्युत्साहकारकः ।।

आलोचकश्च दृक्संस्थो रूपदर्शनशक्ति कृत ।। २६ ।।

त्वक्संस्थो भ्राजको देहं भ्राजयेन्निर्मलीकृतः ।।

क्लेदको बोधकश्चैव तर्पणः श्लेष्मणस्तथा ।। २७ ।।

आलंबकस्तथा देहे पंचधा सोम उच्यते ।।

क्लेदकः क्लेदयत्यन्नं नित्यं पक्वाशये स्थितः ।।२८।।

बोधको रसनास्थश्च रसानामवबोधकः ।।

शिरःस्थश्चक्षुरादीनां तर्पणात्तर्पणः स्मृतः ।। २९ ।।

सर्वसंधिगतश्चैव श्लेष्मणः श्लेष्मकृत्तथा ।।

उरःस्थः सर्वगात्राणि स वै ह्यालंबकः स्थितः ।।1.2.50.३०।।

एवं वाय्वग्निसोमैश्च देहः संधारितस्त्वसौ ।।

आकाशजानि स्रोतांसि तथा कोष्ठविविक्तता ।। ३१ ।।

पार्थिवानीह जानीहि घ्राणकेशनखानि च ।।

अस्थीनि धैर्यं गुरुता त्वङ्मांस हृदयं गुदम् ।। ३२ ।।

नाभिर्मेदो यकृन्मज्जा अंत्रमामाशयः शिरा ।।

स्नायुः पक्वाशयश्चैव प्राहुर्वेदविदो द्विजाः ।। ३३ ।।

नेत्रयोर्मडलं शुक्लं कफाद्भवति पैतृकम् ।।

कृष्णं च मण्डलं वातात्तथा भवति मातृकम् ।। ३४ ।।

पक्ष्ममण्डलमेकं तु द्वितीयं चर्ममण्डलम् ।।

शुक्लं तृतीयं कथित चतुर्थं कृष्णमण्डलम् ।। ३५ ।।

दृङ्मण्डलं पंचमं तु नेत्रं स्यात्पंचमण्डलम् ।।

अपरे नेत्रभागे द्वे उपांगोऽपांग एव च।। ३६ ।।

उपांगो नेत्रपर्यंतो नासा मूलमपांगकः ।।

वृषणौ च तथा प्रोक्तौ मेदोसृक्कफमांसकौ ।। ३७ ।।

असृङ्मांसमयी जिह्वा सर्वेषामेव देहिनाम् ।।

हस्तयोरोष्ठयोर्मेढ्रे ग्रीवायां षट् च कूर्चकाः ।। ३८ ।।

एवमत्र स्थिते जीवो देहेऽस्मिन्सप्तसप्तके ।।

पंचविंशतिको व्याप्य देहं वासोऽस्य मूर्धनि ।। ३९ ।।

त्वगसृग्मांसमित्याहुस्त्रिकं मातृसमुद्भवम् ।।

मेदोमज्जास्थिकं प्रोक्तं पितृजं षट्च कौशिकम् ।। 1.2.50.४० ।।

एवं भूतमयं देहं पंचभूतसमुद्भवैः ।।

अन्नैर्यथा वृद्धिमेति तदहं वर्णयामि ते ।।४१।।

तदन्नं पिण्डकवलैर्ग्रासैर्भुक्तं च देहिभिः ।।

पूर्वं स्थूलाशये वायुः प्राणः प्रकुरुते द्विधा।। ४२।।

संप्रविश्यान्नमध्ये तु पृथगन्नपृथग्जलम्।।

अग्नेरूर्ध्वं जलं स्थाप्य तदन्नं तज्जलोपरि ।। ४३ ।।

जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः ।।

वायुना धम्यमानोग्निरत्युष्णं कुरुते जलम्।। ४४ ।।

तदन्नमुष्णतोयेन समंतात्पच्यते पुनः ।।

द्विधा भवति तत्पक्वं पृथक्किट्टं पृथग्रसम् ।। ४५ ।।

मलैर्द्वादशभिः किट्टं भिन्नं देहाद्बहिर्व्रजेत् ।।

कर्णाक्षिनासिकाजिह्वादताः शिश्नं गुदं नखाः ।। ४६ ।।

रोमकूपाणि चैव स्युर्द्वादशैते मलाश्रयाः।।

हृत्पद्मप्रतिबद्धाश्च सर्वा नाड्यः समंततः ।। ४७ ।।

तासां मुखेषु तं सूक्ष्मं व्यानः स्थापयते रसम् ।।

रसेन तेन ता नाडीः समानः पूरयेत्पुनः ।। ४८ ।।

ततः प्रयांति संपूर्णास्ताश्च देहं समंततः ।।

ततः स नाडिमध्यस्थो रञ्जकेनोष्मणा रसः ।। ४९ ।।

पच्यते पच्यमानस्तु रुधिरत्वं भजेत्पुनः ।।

ततस्त्वग्लोमकेशाश्च मांसं स्नायु शिरास्थि च ।। 1.2.50.५० ।।

नखा मज्जा खवैमल्यं शुक्रवृद्धिः क्रमाद्भवेत् ।।

एवं द्वादशधान्नस्य परिणामः प्रकीर्त्यते ।। ५१ ।।

एवमेतद्विनिष्पन्नं शरीरं पुण्यहेतवे ।।

यथैव स्यंदनः शुभ्रो भारसंवाहनाय च ।। ५२ ।।

तैलाभ्यंगादिभिर्यत्नैर्बहुभिः पाल्यते न चेत् ।।

किं कृत्यं साध्यते तेन यदि भारं वहेन्न हि ।। ५३ ।।

एवमेतेन देहेन किं कृत्यं भोजनोत्तमैः ।।

वर्धितेन न चेत्पुण्यं कुरुते पशुवच्च तत् ।। ५४ ।।

भवंति चात्र श्लोकाः ।।

यस्मिन्काले च देशे च वयसा यादृशेन च ।।

कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ।। ५५ ।।

तस्मात्सदा शुभं कार्यमविच्छिन्नसुखार्थिभिः ।।

विच्छिद्यंतेऽन्यथा भोगा ग्रीष्मे कुसरितो यथा ।। ५६ ।।

यस्मात्पापेन दुःखानि तीव्राणि सुबहून्यपि ।।

तस्मात्पापं न कर्तव्यमात्मपीडाकरं हि तत् ।। ५७ ।।

एवं ते वर्णितः साधो प्रश्नोऽयं शक्तितो मया ।।

यथा संजायते प्राणी यथा शृणु प्रलीयते ।। ५८ ।।

आयुष्ये कर्मणि क्षीणे संप्राप्ते मरणे नृणाम्।।

स्वकर्मवशगो देही कृष्यते यमकिंकरैः ।। ५९ ।।

पंचतन्मात्रसहितः समनोबुद्ध्यहंकृतिः ।।

पुण्यपापमयैः पाशैर्बद्धो जीवस्त्यजे द्वपुः ।। 1.2.50.६० ।।

शीर्ष्णश्च सप्तभिश्छिद्रैर्निर्गच्छेत्पुण्यकर्मणाम् ।।

अधश्च पापिनां यांति योगिनां ब्रह्मरंध्रतः ।। ६१ ।।

तत्क्षणात्सोऽथ गृह्णाति शारीरं चातिवाहिकम् ।।

अंगुष्ठपर्वमात्रं तु स्वप्राणैरेव निर्मितम् ।। ६२ ।।

ततस्तस्मिन्स्थितं जीवं देहे यमभटास्तदा ।।

बद्ध्वा नयंति मार्गेण याम्येनाति यथाबलम्।। ६३ ।।

तप्तांबरीषतुल्येन अयोगुडनिभेन च ।।

प्रतप्तसिकतेनापि ताम्रपात्रनिभेन च ।। ६४ ।।

षडशीतिसहस्राणि योजनानां महीतलात् ।।

कृष्यमाणो यमपुरीं नीयते पापकृद्भटैः।।६५।।

क्वचिच्छीतं महादुर्गमन्धकारं क्वचिन्महत्।।

अग्निसंस्पर्शवदनैः काककाकोलजंबुकैः ।६६।।

मक्षिकादंशमशकैर्भक्ष्यते सर्पवृश्चिकैः ।।

भक्ष्यमाणोऽपि तैर्जंतुः क्रंदते म्रियते न हि ।। ६१७ ।।

क्वचिच्च भक्ष्यते घोरै राक्षसैः कृष्यतेऽस्यते ।।

दह्यमानोतिघोरेण सैकतेन च नीयते ।। ६८ ।।

मुहूर्तैर्दशभिर्याति तं मार्गमतिदुस्तरम् ।।

तं कालं सुमहद्वेत्ति पुरुषो वर्षसंमितम् ।। ६९ ।।

तार्यते च नदीं घोरां पूयशोणितवाहिनीम् ।।

नदीं वैतरणीं नाम केशशैवलशाद्वलाम् ।। 1.2.50.७० ।।

ततो यमस्य पुरतः स्थाप्यते यमकिंकरैः ।।

पापी महाभयं पश्येत्कालांतकमुखैर्वृतम् ।। ७१ ।।

पुण्यकर्मा सौम्यरूपं धर्मराजं तदा किल ।।

मनुष्या एव गच्छंति यमलोकेन चापरे ।। ।। ७२ ।।

मरणानंतरं तेषां जंतूनां योनिपूरणम् ।।

तथाहि प्रेता मनुजाः श्रूयंते नान्यजंतवः ।। ७३ ।।

धार्मिकः पूज्यते तत्र पापः पाशगलो भवेत् ।।

धार्मिकश्च यथा याति तं मार्गं शृणु वच्मि ते ।। ७४ ।।

आरामद्रुमदातारः फलपुष्पवता पथा ।।

छायया च सुखं यांति तथा ये च्छत्रदा नराः ।। ।। ७५ ।।

उपानहप्रदा यानैर्वितृषाः पूर्तधर्मिणः ।।

विमानैर्यानदा यांति तथा शय्यासनप्रदाः ।। ७६ ।।

भक्ष्यभोज्यैस्तथा तृप्ता यांति भोजनदायिन ।।

दीपप्रदाः प्रकाशेन गोप्रदास्तां नदीं सुखम् ।।७७।।

श्रीसूर्यं श्रीमहादेवं भक्ता ये पुरुषोत्तमम् ।।

जन्मप्रभृति ते यांति पूज्यमाना यमानुगैः ।। ७८ ।।

महीं गां कांचनं लोहं तिलान्कार्पासमेव च ।।

लवणं सप्तधान्यं च दत्त्वा याति सुखं नरः ।।७९।।

तेषां तत्र गतानां च पापिनां पुण्यकर्मिणाम् ।।

चित्रगुप्तः प्रेतपाय निरूपयति वै ततः ।। 1.2.50.८० ।।

प्रेतलोके स वसति ततः संवत्सरं नरः ।।

वत्सरेण च तेनास्य शरीरमभिजायते ।। ८१ ।।

सोदकुम्भमथान्नाद्यं बांधवैर्यत्प्रदीयते ।।

दिनेदिने स तद्भुक्त्वा तेन वृद्धिं प्रयाति च ।। ८२ ।।

पूर्वदत्तमथान्नाद्यं प्राप्नोति स्वयमेव च ।।

स्वयं येन न दत्तं च तथा दाता न विद्यते ।। ८३ ।।

न चाप्युदकदातासौ क्षुत्तृड्भ्यामतिपीड्यते ।।

बांधवैस्तूदकं दत्तं नदीभूत्वोपतिष्ठति ।। ८४ ।।

मासिमासि च यच्छ्राद्धं षोडशश्राद्धपूर्वकम् ।।

अत्र न क्रियते यस्य प्रेतत्वात्स न मुच्यते ।। ८५ ।।

मानुषेण दिनेनैव प्रेतलोके दिनं स्मृतम् ।।

तस्माद्दिनेदिने देयं प्रेतायान्नं च वत्सरम् ।। ८६ ।।

तं च स्माशानिकानाम गणा याम्या भयावहाः ।।

शीतवातातपोपेतं तत्र रक्षंति पापिनम् ।। ८७ ।।

यथेह बन्धने कश्चिद्रक्ष्यते विषमैर्नरैः ।।

प्रेतपिंडा न दीयंते षोडशश्राद्धपूर्वकाः ।। ८८ ।।

यस्य तस्य न मोक्षोऽस्ति प्रेतत्वाद्वै युगैरपि ।।

ततः सपिण्डीकरणे बांधवैः सुकृते नरः ।। ८९ ।।

पूर्णे संवत्सरे देहं संपूर्णं प्रतिपद्यते ।।

पापात्मा घोररूपं तु धार्मिको दिव्यमुत्तमम् ।। 1.2.50.९० ।।

ततः स नरकं याति स्वर्गं वा स्वेन कर्मणा ।।

रौरवाद्याश्च नरकाः पातालतलसंस्थिताः ।।९१।।

सुराद्याः सत्यपर्यंताः स्वर्लोकस्योर्ध्वमाश्रिताः ।।

इतिहासपुराणेषु वेदस्मृतिषु यच्छ्रुतम् ।। ९२ ।।

पुण्यं तेन भवेत्स्वर्गो नरकस्तद्विपर्ययात् ।।

तत्रापि कालवसति कर्मणामनुरूपतः ।।९३।।

अर्वाक्सपिंडीकरणं यस्य वर्षाच्च वा कृतम् ।।

प्रेतत्वमपि तस्यापि प्रोक्तं संवत्सरं ध्रुवम् ।। ९४ ।।

यैरिष्टं च त्रिभिर्मेधैरर्चितं वा सुरत्रयम् ।।

प्रेतलोकं न ते यांति तथा ये समरे हताः।।९५।।

शुद्धेन पुण्येन दिवं च शुद्धां पापेन शुद्धेन तथा तमोंधम्।।

मिश्रेण स्वर्गं नरकं च याति देहस्तथैवास्य भवेच्च तादृक्।। ९६ ।।

प्रश्नत्रयं चेति तव प्रणीतमुत्पत्तिमृत्यू परलोकवासः ।।

यथा गुरुर्मे समुदाजहार किं भूय इच्छत्युत तद्वदामि ।। ९७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्ड कौमारिकाखण्डे आदित्यकमठसंवादे जीवस्य पारलौकिकगत्यादिवर्णनंनाम पंचाशत्तमोऽध्यायः ।। ५० ।।

---

।। अतिथिरुवाच ।। ।।
यदेतत्परलोकस्य स्वरूपं व्याहृतं त्वया ।।
आगमं समुपाश्रित्य तत्तथैव न संशयः ।। १ ।।।
किंत्वत्र नास्तिकाः पापाः सन्दिह्यन्तेऽल्पचेतनाः ।।
तेषां निःसंशयकृते वद कर्मफलं हि यत् ।।२ ।।
इहैव कस्य कस्यैव कर्मणः पापकस्य च ।।
प्रभावात्कीदृशो जायेत्कमठैतद्वदास्ति चेत् ।। ३ ।।
।। कमठ उवाच ।। ।।
सर्वमेतत्प्रवक्ष्यामि स्थिरो भूत्वा शृणुष्व तत् ।।
यथा मम गुरुः प्राह यन्मे चेतसि संस्थितम् ।। ४ ।।
ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदंतकः ।।
सुवर्णचौरः कुनखी दुश्चर्मा गुरुतल्पगः ।। ५ ।।
संसर्गी सर्वरोगी स्यात्पंचपातकिनस्त्वमी ।।
निंदामाकर्ण्य साधूनां बधिरः संप्रजायते ।। ६ ।।
स्वयं प्रकीर्तयेच्चापि मूकः पापोऽभिजायते ।।
आज्ञालोपी गुरूणां च अपस्मारी भवेन्नरः ।। ७ ।।
अवज्ञाकारकस्तेषां कृमिरेवाभिजायते ।।
उपेक्षतः पूज्यकार्यं दुष्प्रज्ञत्वं च जायते ।। ८ ।।
चौर्याय साधुद्रव्याणां दद्याद्यावत्पदानि च ।।
तावद्वर्षाणि पंगुत्वं स प्राप्नोति नराधमः ।। ९ ।।
दत्त्वा हरति तद्भूयो जायते कृकलासकः ।।
कुपितानप्रसाद्यैव पूज्यान्स्याच्छीर्षरोगवान् ।। 1.2.51.१० ।।
रजस्वलामभिगच्छंश्च चंडालः संप्रजायते ।।
वस्त्रापहारी चित्री स्यात्कृष्णकुष्ठी तथाग्निदः ।। ११ ।।
दर्दुरो रूप्यहारी स्यात्कूटसाक्षी मुखारुजः ।।
परदारांश्च कामेन द्रष्टा स्यादक्षिरोगवान् ।। १२ ।।
प्रतिज्ञायाप्रयच्छन्यो ह्यल्पायुर्जायते नरः ।।
विप्रवृत्त्यपहारी स्यादजीर्णी सर्वदाऽधमः ।। १३ ।।
नैष्ठिकान्नाशनाद्भूयो निवृत्तो रोगवान्सदा ।।
पत्नीबहुत्वे त्वेकस्यां रेतोमोक्षः क्षयी भवेत्।।१४।।
स्वामिना धर्मयुक्तो यस्त्वन्यायेन समाचरेत्।।
स्वयं वा भक्षयेद्द्रव्यं स मूढः स्याज्जलोदरी।।१५।।
दुर्बलं पीड्यमानं यो बलवान्समुपेक्षते।।

अंगहीनः स च भवेदन्नहृत्क्षुधितो भवेत्।।१६।।
व्यवहारे पक्षपाती जिह्वारोगी भवेन्नरः।।
धर्मप्रवृत्तिं सञ्चार्य पत्न्यादीष्टवियोगकृत् ।। १७ ।।
स्वयं पाकाग्रभोजी यो गलरोगमवाप्नुयात् ।।
पंचयज्ञानकृत्वैव भुञ्जानो ग्रामशूकरः ।। १८ ।।
पर्वमैथुन कृन्मेही परित्यज्य स्वगेहिनीम् ।।
वेश्यादिरक्तो मूढात्मा खल्वाटो जायते नरः ।। १९ ।।
परिक्षीणान्मित्रबन्धून्स्वामिनं दयितानुगान् ।।
अवमन्य निवृत्तात्मा क्लिष्टवृत्तिः सदा भवेत् ।। 1.2.51.२० ।।
छद्मनोपचरेद्यस्तु पितरौ स्वामिनं गुरून् ।।
प्राप्तव्यार्थस्यातिकष्टात्परिभ्रंशोर्थजो भवेत् ।। २१ ।।
विश्रब्धस्यापहारी तु दुःखानां भाजनं भवेत् ।।
धार्मिके क्षुद्रकारी यो नरः स वामनो भवेत् ।। २२ ।।
दुर्बलवृषवाही यः कटिलूती भवेत्स च ।। २३ ।।
जात्यंधश्चापि यो गोघ्नो निःपशुर्दुःखकृद्गवाम् ।।
निर्दयो गोषु घाताद्यैः सदा सोध्वसु कष्टगः ।। २४ ।।
निस्तेजकः सभायां यो गलगण्डी स जायते ।।
सदा क्रोधी च चंडालः पूतिवक्त्रश्च सूचकः ।। २५ ।।
अजविक्रयकृद्व्याधः कुण्डाशी भृतको भवेत् ।।
नास्तिकस्तिल पिंडी स्यादश्रद्धो गीतजीवनः ।। २६ ।।
अभक्ष्यादो गण्डमाली स्त्रीखादी चाऽऽसुतस्य कृत् ।।
अन्यायतो ज्ञानग्राही मूर्खो भवति मानवः ।।२७।।.
शास्त्रचौरः केकराक्षः कथां पुण्यां च द्वेष्टि यः ।।
कृमिवक्त्रः स च भवेद्विभ्रष्टो नरकात्कुधीः ।। २८ ।।
देवद्विजगवां वृत्तिहारको वांतभक्षकृत् ।।
तडागारामभेत्ता यो भवेद्विकलपाणिकः ।। २९ ।।
व्यवहारे च्छलग्राही भृत्यग्रस्तो भवेन्नरः ।।
सदा पुरुषरोगी स्यात्परदाररतो नरः ।। 1.2.51.३० ।।
वात रोगी कुवैद्यः स्याद्दुश्चर्मा गुरुतल्पगः ।।
मधुमेही खरीगामी गोत्रस्त्रीमैथुनोऽप्रसूः ।। ३१ ।।
स्वसारं मातरं पुत्रवधूं गच्छन्नबीजवान् ।।
कृतघ्नः सर्व कार्याणां वैफल्यं समुपाश्नुते ।। ३२ ।।
इत्येष लक्षणोद्देशः पापिनां परिकीर्तितः ।।

चित्रगुप्तोऽपि मुह्येत सकलस्यानुवर्णने ।। ३३ ।।
एते नरक विभ्रष्टा भुक्त्वा योनीः सहस्रशः ।।
एवंविधैश्चिह्निताश्च जायंते लक्षणैर्नराः ।। ३४ ।।
ये हि धर्मं न मन्यंते तथा ये व्यसनैर्जिताः ।।
अनुमानेन बोद्धव्यं यदेते शेषपापिनः ।। ३५ ।।
येषां त्वंतगतं पापं स्वर्गाद्वा ये समागताः ।।
सर्वव्यसननिर्मुक्ता धर्ममेकं भजन्ति ते ।। ३६ ।।
भवंति चात्र श्लोकाः ।।
धर्मादनवमं सौख्यमधर्माद्दुःखसम्भवः ।।
तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विवर्जयेत् ।। ३७ ।।
लोकद्वयेऽपि यत्सौख्यं तद्धर्मात्प्रोच्यते यतः ।।
धर्ममेकमतः कुर्यात्सर्वकार्यार्थसिद्धये ।। ३८ ।।
मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा ।।
न कल्पमपि जीवेत लोकद्वयविरोधिना ।। ३९ ।।
इति पृष्टं त्वया विप्र यथाशक्त्या मयेरितम् ।।
असूक्तं सूक्तमथवा क्षंतव्यं किं वदामि च ।। 1.2.51.४० ।।
।। नारद उवाच ।। ।।
कमठस्यैतदाकर्ण्य अष्टवर्षस्य भाषितम् ।।
भगवान्भास्करः प्रीतो बभूवातीव विस्मितः ।। ४१ ।।
प्रशशंस च तान्विप्रान्हारीतप्रमुखांस्तदा ।।
अहो वसुमती धन्या द्विजैरेवंविधोत्तमैः ।। ४२ ।।
अथ प्रजापतिर्धन्यो यन्मर्यादाभिपाल्यते ।।
अमीभिर्ब्राह्मणवरैर्धन्या वेदाश्च संप्रति ।। ४३ ।।
येषां मध्ये बालबुद्धिरियमेतादृशी स्फुटा ।।
हारीतप्रमुखानां हि का वै बुद्धिर्भविष्यति।। ४४ ।।
असंशयं त्रिलोकस्थमेषामविदितं न हि ।।
यथैतान्नारदः प्राह भूयस्तस्मादमी बहु ।। ४५ ।।
इति प्रशस्य तान्विप्रान्प्रहृष्टो रविरब्रवीत् ।।
अहं सूर्यो विप्रमुख्या युष्माकं दर्शनात्कृते ।। ४६ ।।
समागतः सूर्यलोकात्प्राप्तं नेत्रफलं च मे ।।
भवद्विधैर्विप्रमुख्यैः संजल्पनसहासनात्।।४७।।
अंत्यजा अपि पूयन्ते किं पुनर्मादृशा द्विजाः ।।
सर्वथा नारदो धन्यो योऽसौ त्रैलोक्यतत्त्ववित्।। ४८ ।।

युष्माभिर्बध्यते श्रेयो यस्य वै धूतकिल्विषैः ।।
प्रणमामि च वः सर्वान्मनोबुद्धिसमाधिभिः ।।
तपो विद्या च वृत्तं च यतो वार्द्धक्यकारणम्।।४९।।
वरं मत्तो वृणीध्वं च दुर्लभं यं हृदीच्छत।।
यूयं स्वयं हि वरदा मत्संगो मास्तु निष्फलः।।1.2.51.५०।।
देवतानां हि संसर्गो निष्फलो नोपजायते ।।
तस्मान्मत्तो वरं किंचिद्वृणुध्वं प्रददामि वः ।।५१।।
।। श्रीनारद उवाच।। ।।
इति सूर्यवचः श्रुत्वा प्रहृष्टास्ते द्विजोत्तमाः ।।५२।।
संपूज्य परया भक्त्या पाद्यार्घ्यस्तुतिवंदनैः ।।
मंडलादीन्महाजप्यान्गृणंतः प्रोचिरे रविम्।।५३।।
जयादित्य जय स्वामिञ्जय भानो जयामल।।
जय वेदपते शश्वत्तारयास्मानहर्पते ।। ५४ ।।
विप्राणां त्वं परो देवो विप्रसर्गोऽपि त्वन्मयः ।।
नितरां पूतमेतन्नः स्थानं देव त्वयेक्षितम् ।। ५५ ।।
अद्य नः सफला वेदा अद्य नः सफलाः क्रियाः ।।
अद्य नः सफलं गेहं त्वया संगम्य गोपते ।। ५६ ।।
वरं यदि प्रदातासि तदेनं प्रवृणीमहे ।।
आस्माकीनमिदं स्थानं न हि त्याज्यं कथंचन ।। ५७ ।।
।। श्रीसूर्य उवाच ।। ।।
यस्माद्भवद्भिः पूर्वं हि जयादित्येति चोदितम् ।।
जयादित्य इति ख्यातस्तस्मात्स्थास्येऽत्र सर्वदा ।। ५८ ।।
यावन्मही समुद्राश्च पर्वता नगराणि च ।।
तावत्स्थानमिदं विप्रा न हि त्यक्ष्यामि कर्हिचित्।।५९।।
दारिद्र्यरोगसंघातान्दद्रवो मंडलानि च ।।
कुष्ठादीन्नाशयिष्यामि भजतामत्र संस्थितः ।। 1.2.51.६० ।।
यो मामत्र स्थितं चापि पूजयिष्यति मानवः ।।
सूर्यलोकमिवागम्य पूजां तस्य भजाम्यहम् ।। ६१ ।।
।। श्रीनारद उवाच ।। ।।
एवमुक्ते भगवता हारीताद्या द्विजोत्तमाः ।।
मूर्तिं संस्थापयामासुर्वेदोदितविधानतः ।। ६२ ।।
ततो द्विजाः प्राहुरेवं कमठं त्वत्कृते रविः ।।
अत्र स्वामी स्थितस्तस्मात्प्रथमं स्तुहि त्वं रविम्।। ६३ ।।

इत्युक्तो ब्राह्मणैः सर्वैः कमठो वाग्मिनां वरः ।
प्रणिपत्य जयादित्यं महास्तोत्रमिदं जगौ ।। ६४ ।।
न त्वं कृतः केवलसंश्रुतश्च यजुष्येवं व्याहरत्यादिदेव ।।
चतुर्विधा भारती दूरदूरं धृष्टः स्तौमि स्वार्थकामः क्षमैतत् ।। ६५ ।।
मार्तंडसूर्यांशुरविस्तथेन्द्रो भानुर्भगश्चार्यमा स्वर्णरेताः ।। ६६ ।।
दिवाकरो मित्रविष्णुश्च देव ख्यातस्त्वं वै द्वादशात्मा नमस्ते ।।
लोकत्रयं वै तव गर्भगेहं जलाधारः प्रोच्यसे खं समग्रम् ।। ६७ ।।
नक्षत्रमाला कुसुमाभिमाला तस्मै नमो व्योमलिंगाय तुभ्यम् ।। ६८ ।।
त्वं देवदेवस्त्वमनाथनाथस्त्वं प्राप्यपालः कृपणे कृपालुः ।।
त्वं नेत्रनेत्रं जनबुद्धिबुद्धिराकाशकाशो जय जीवजीवः ।। ६९ ।।
दारिद्र्यदारिद्र्य निधे निधीनाममंगलामंगल शर्मशर्म ।।
रोगप्ररोगः प्रथितः पृथिव्यां चिरं जयादित्य जयाप्रमेय ।।1.2.51.७०।।
व्याधिग्रस्तं कुष्ठरोगाभिभूतं भग्न प्राणं शीर्णदेहं विसंज्ञम् ।।
माता पिता बांधवाः संत्यजंति सर्वैस्त्यक्तं पासि कोस्ति त्वदन्यः ।। ७१ ।।
त्वं मे पिता त्वं जननी त्वमेव त्वं मे गुरुर्बान्धवाश्च त्वमेव ।।
त्वं मे धर्मस्त्वं च मे मोक्षमार्गो दासस्तुभ्यं त्यज वा रक्ष देव ।।७२।।
पापोऽस्मि मूढोऽस्मि महोग्रकर्मा रौद्रोऽस्मि नाचारनिधानमस्मि ।।
तथापि तुभ्यं प्रणिपत्य पादयोर्जयं भक्तानामर्पय श्रीजयार्क ।। ७३ ।।
।। नारद उवाच ।। ।।
एवं स्तुतो जयादित्यः कमठेन महात्मना ।।
स्निग्धगंभीरया वाचा प्राह तं प्रहसन्निव ।। ७४ ।।
जयादित्याष्टकमिदं यत्त्वया परिकीर्तितम् ।।
अनेन स्तोष्यते यो मां भुवि तस्य न दुर्लभम् ।। ७५ ।।
रविवारे विशेषेण मां समभ्यर्च्य यः पठेत् ।।
तस्य रोगा न शिष्यंति दारिद्र्यं च न संशयः ।। ७६ ।।
त्वया च तोषितो वत्स तव दद्मि वरंत्वमुम् ।।
सर्वज्ञो भुवि भूत्वा त्वं ततो मुक्तिमवाप्स्यसि ।। ७७ ।।
त्वत्पिता स्मृतिकारश्च भविष्यति द्विजार्चितः ।।
स्थानस्यास्य न नाशश्च कदाचित्प्रभविष्यति ।। ७८ ।।
न चैतत्स्थानकं वत्स परित्यक्ष्यामि कर्हिचित् ।।
एवमुक्त्वा स भगवान्ब्राह्मणैरर्चितः स्तुतः ।। ७९ ।।
अनुज्ञाप्य द्विजेद्रांस्तांस्तत्रैवांतर्दधे प्रभुः ।।
एवं पार्थ समुत्पन्नो जयादित्योऽत्र भूतले ।। 1.2.51.८० ।।

आश्विने मासि संप्राप्ते रविवारे च सुव्रत ।।
आश्विने भानुवारेण यो जयादित्यमर्चयेत् ।।८१।।
कोटितीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति।।
पूजनाद्रक्तमाल्यैश्च रक्तचंदनकुंकुमैः।।८२।।
लेपनाद्गंधधूपाद्यै नैवेद्येर्घृतपायसैः ।।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।। ८३ ।।
मुच्यते सर्वपापेभ्यः सूर्यलोकं च गच्छति ।।
पुत्रदारधनान्यायुः प्राप्य सां सारिकं सुखम् ।। ८४ ।।
इष्टकामैः समायुक्तः सूर्यलोके चिरं वसेत् ।। ८५ ।।
सर्वेषु रविवारेषु जयादित्यस्य दर्शनम् ।।
कीर्तनं स्मरणं वापि सर्व रोगोपशांतिदम् ।। ८६ ।।
अनादिनिधनं देवमव्यक्तं तेजसां निधिम् ।।
ये भक्तास्ते च लीयंते सौरस्थाने निरामये ।। ८७ ।।
सूर्योपरागे संप्राप्ते रविकूपे समाहितः ।।
स्नानं यः कुरुते पार्थ होमं कुर्यात्प्रयत्नतः ।। ८८ ।।
दानं चैव यथाशक्त्या जयादित्याग्रतः स्थितः ।।
तस्य पुण्यस्य माहात्म्यं शृणुष्वैकमना जय ।। ८९ ।।
कुरुक्षेत्रेषु यत्पुण्यं प्रभासे पुष्करेषु च ।।
वाराणस्यां च यत्पुण्यं प्रयागे नैमिषेऽपि वा ।।
तत्पुण्यं लभते मर्त्यो जयादित्यप्रसादतः ।। 1.2.51.९० ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे जयादित्य माहात्म्यवर्णनंनामैकपंचाशत्तमोऽध्यायः ।। ५१ ।।

।। अर्जुन उवाच ।। ।।
कोटितीर्थं कथं जातं केन वा निर्मितं मुने ।।
कस्माद्वा कोटितीर्थानां फलमत्रोच्यते मुने ।। १ ।।
।। नारद उवाच ।। ।।
यदा मे स्थापितं स्थानं प्रसाद्याथ मया प्रभुः ।।
ब्रह्मलोकात्समानीतः साक्षाद्ब्रह्मा पितामहः ।। २ ।।
ततो मध्याह्नसमये स्नानार्थे भगवान्विधिः ।।
सस्मार कोटितीर्थानां स्मृतान्यत्रागतानि च ।। ३ ।।
स्वर्गात्त्रिदशलक्षाणि सप्ततिश्च महीतलात् ।।
पातालाद्विंशलक्षाणि स्मृतान्यभ्यागतानि च ।। ४ ।।
अनेन प्रविभागेन लिंगान्यपि कुरूद्वह ।।
आयातानि यथा पूजां विदधाति पितामहः ।। ५ ।।
ततोऽभिषेचनं कृत्वा लिंगान्यभ्यर्च्य पद्मभूः ।।
मध्याह्नकृत्यं संसाध्य मम प्रेम्णा वरं ददौ ।। ६ ।।
ततो भगवता ह्यत्र मनसा निर्मितं सरः ।।
भगवानर्चितस्तीर्थैरिदमूचे प्रजापतिः ।। ७ ।।
किं कुर्म भगवन्धातरादेशं देहि नः प्रभो ।।
तेषां तद्वचनं श्रुत्वा ब्रह्मा प्राह प्रजापतिः ।। ८ ।।
एतस्मिन्सरसि स्थेयं तीर्थैः सर्वैरथात्र च ।।
एकस्मिंश्च तथा लिंगे सर्वलिंगैर्ममार्चनात् ।। ९ ।।
कोटीनामेव तीर्थानां लिंगानां स्नानपूजया ।।
दानेन च फलं त्वत्र यदि सत्यं वचो मम ।। 1.2.52.१० ।।
यः श्राद्धं कुरुते चात्र पिंडदानं यथाविधि ।।
पितॄणामक्षया तृप्तिर्जायते नात्र संशयः ।। ११ ।।
स्नात्वा योऽभ्यर्चयेद्देवं कोटीश्वरमनन्यधीः ।।
कोटिलिंगार्चनफलं व्यक्तं तस्योपजायते ।। १२ ।।
त्रैलोक्ये यानि तीर्थानि गंगाद्याः सरितस्तथा ।।
तेषां स फलमाप्नोति कोटितीर्थावगाहनात् ।। १३ ।।
एवं दत्त्वा वरं ब्रह्मा ब्रह्मलोकं ययौ प्रभुः ।।
कोटितीर्थं च संजातं ततः प्रभृति विश्रुतम् ।।१४।।
अस्य तीरे पुरा पार्थ ब्रह्माद्यैर्देवसत्तमैः ।।
यज्ञान्बहुविधान्कृत्वा ततः सिद्धिं परां ययुः ।। १५ ।।
वसिष्ठाद्यैर्मुनिवरैस्तपश्चीर्णं पुरानघ ।।

मनसोऽभीप्सितान्कामान्प्रापुरन्ये तपोधनाः ।। १६ ।।
अत्र तीर्थे पुरा पार्थ अत्रिणा विहितं तपः ।।
कोटितीर्थाद्दक्षिणतः स्थापितं लिंगमुत्तमम् ।। १७ ।।
अत्रीश्वराभिसंज्ञं तु महापापहरं परम् ।।
स्थापयित्वा च तल्लिंगमग्रे चक्रे सरोवरम् ।। १८ ।।
तत्र स्नात्वा च यो मर्त्यः श्राद्धं कुर्यात्प्रयत्नतः ।।
अत्रीश्वरं समभ्यर्च्य रुद्रलोके वसेच्चिरम् ।।१९।।
भरद्वाजेन मुनिना कोटितीर्थे सरोवरे ।।
तपश्चीर्णं महाबाहो यज्ञाश्च विहिताः किल ।। 1.2.52.२० ।।
भरद्वाजेश्वरं लिंगं स्थापितं सुमनोहरम् ।।
तत्र कृत्वा सरो रम्यं परां मुदमवाप्तवान् ।। २१ ।।
तत्र स्नात्वा नरो भक्त्या श्राद्धं कुर्याद्विधानतः ।।
भरद्वाजेश्वरं पूज्य शिवलोके महीयते ।। २२ ।।
ततश्च कोटितीर्थेऽस्मिन्गौतमो भगवानृषिः ।।
अतप्यत तपो घोरमहल्यासंगमाशया ।। २३ ।।
तं कामं प्राप्तवान्धीमान्परां मुदमुपागतः ।।
अहल्यया समायोगमेतत्तीर्थप्रभावतः ।। २४ ।।
अस्मिन्क्षेत्रे महालिंगं गौतमेश्वरसंज्ञितम् ।।
स्थापयामास भगवानहल्यासरसस्तटे ।। २५ ।।
।। अर्जुन उवाच ।। ।।
अहल्यया कदा ब्रह्मन्खानितं वै महत्सरः ।।
तन्मम ब्रूहि सकलमहल्यासरःकारणम् ।। २६ ।।
।। नारद उवाच ।। ।।
अहल्या शापमापन्ना गौतमात्किल फाल्गुन ।।
पुरा चेंद्रसमायोगे परं दुःखमुपागता ।। २७ ।।
ततो दुःखार्तः स मुनिः कोटितीर्थेऽकरोत्तपः ।।
तपसा तेन वै पार्थाहल्यया सह संगतः ।। २८ ।।
ततः साध्वी परं हृष्टा अत्र क्षेत्रे सरोवरम् ।।
चकार सुमहत्पुण्यं तीर्थोदैः परिपूरितम् ।। २९ ।।
अहल्यासरसि स्नानं पिंडदानं समाचरेत् ।।
गौतमेशं च संपूज्य ब्रह्मलोकं स गच्छति ।। 1.2.52.३० ।।
कोटितीर्थे नरश्रेष्ठ अनेके मुनयोऽमलाः ।।
तपस्तप्त्वा सुघोरं च परां सिद्धिमपागताः ।। ३१ ।।

राजभिर्बहुभिः पूर्वं तपो दानं तथाध्वराः ।।
अस्मिंस्तीर्थे सुविहिताः परां सिद्धिमुपागताः ।। ३२ ।।
अस्य तीरे द्विजं चैकं मृष्टान्नैर्यश्च तर्पयेत् ।।
तेन श्रद्धासहायेन कोटिर्भवति तर्पिता ।। ३३ ।।
अस्य तीरे नरः पार्थ रत्नानि विविधानि च ।।
गोभूमितिलधान्यानि वासांसि विविधानि च ।। ३४ ।।
श्रद्धया परया पार्थ द्विजेभ्यः संप्रयच्छति ।।
शतकोटिगुणं पुण्यं कोटितीर्थप्रभावतः ।।
कोटितीर्थे प्रतिश्रुत्य द्विजेभ्यो न प्रयच्छति ।। ३५ ।।
नरके पातयित्वा च कुलमेकोत्तरं शतम् ।।
आत्मानं पातयेत्पश्चाद्दारुणं रौरवं महत् ।। ३६ ।।
माघमासे तु संप्राप्ते प्रातःकाले तथाऽमले ।।
यः स्नाति मकरादित्ये तस्य पुण्यं शृणुष्व मे ।। ३७ ।।
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्।।
सर्वदानव्रतैर्यच्च कोटि तीर्थे दिनेदिने ।। ३८ ।।
तत्पुण्यं लभते मर्त्यो नात्र कार्या विचारणा ।।
कन्यागते सवितरि यः श्राद्धं कुरुते नरः ।। ३९ ।।
पितरस्तस्य तुष्यंति गयाश्राद्धशतैर्न तु ।।
कार्तिके मासि संप्राप्ते स्नानादि कुरुते यदि ।। 1.2.52.४० ।।
तदक्षयफलं सर्वं ब्रह्मणो वचनं यथा ।।
इष्ट्वात्र यज्ञमेकं तु कोटियज्ञफलं लभेत् ।। ४१ ।।
कन्यां ब्राह्मेण विधिना दत्त्वा कोटिगुणं फलम् ।।
सर्वदानं कोटिगुणं कोटितीर्थे भवेद्यतः ।। ४२ ।।
कोटि तीर्थे त्यजेत्प्राणान्हृदि कृत्वा तु माधवम् ।।
तस्य पार्थ चिरं स्वर्गे ह्यक्षया शाश्वती गतिः ।। ४३ ।।
कोटितीर्थे तीर्थवरे देहत्यागं करोति यः ।।
तस्य पूजां प्रकुर्वंति ब्रह्माद्या देवतागणाः ।। ४४ ।।
अस्य तीरे देहदाहो यस्य कस्य प्रजायते ।।
अस्थिक्षेपो यस्य भवेन्महीसागरसंगमे ।। ४५ ।।
तत्फलं गदितुं पार्थ वागीशोऽपि न वै क्षमः ।।
एतज्ज्ञात्वा परं पार्थ कोटितीर्थं प्रसेवते ।। ४६ ।।
दिनेदिने फलं तस्य कापिलं गोसहस्रकम् ।।
स्वर्गे मर्त्ये च पाताले तस्मादेतत्सुदुर्लभम् ।। ४७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कोटितीर्थमाहात्म्यवर्णनंनाम द्विपञ्चाशत्तमोऽध्यायः ।। ५२ ।।

।। नारद उवाच ।। ।।
अथान्यत्संप्रवक्ष्यामि शालामाहात्म्य मुत्तमम् ।।
संस्थापिते पुरा स्थाने प्रोक्तोहं द्विजपुंगवैः ।। १ ।।
स्थानस्य रक्षणार्थाय उपायं कुरु सुव्रत ।।
ततो मया प्रतिज्ञातं करिष्ये स्थान रक्षणम् ।। २ ।।
आराधिता मया पश्चाद्ब्रह्मविष्णुमहेश्वराः ।।
त्रयस्त्वेकाग्रचित्तेन ततस्तुष्टाः सुरोत्तमाः ।। ३ ।।
समागम्याथ मां प्रोचुर्नारद व्रियतां वरः ।।
प्रोक्तं तानार्च्य च मया क्रियतां स्थानरक्षणम् ।। ४ ।।
अयमेव वरो मह्यं देयो देवैः सुतोषितैः ।।
स्थानलोपो यथा न स्याद्यथा कीर्तिर्भवेन्मम ।। ५ ।।
एवमस्त्विति देवेशैः प्रतिज्ञातं तदा मुने ।।
स्वांशेन प्रकरिप्याम द्विजानां तव रक्षणम् ।। ६ ।।
एवमुक्त्वा कला मुक्ता देवैस्त्रिपुरुषैः स्वयम् ।।
अंतर्धानं ततः प्राप्ताः सर्वेऽपि सुरसत्तमाः ।। ७ ।।
ततो मया द्विजैः सार्धं शालाग्रे स्थानरक्षणम् ।।
स्थापिताश्च पृथग्देवास्त्रयस्त्रिभुवनेश्वराः ।। ८ ।।
पीड्यमाना यदा विप्राः केनापि च भवंति हि ।।
पूर्वाह्ने चापि ऋग्वेदं मध्याह्ने च यजूंष्यथ ।। ९ ।।
यामे तृतीये सामानि तारस्वरमधीत्य च ।।
शापं यस्य प्रदास्यंति शालाग्रे भृशरोषिताः ।। 1.2.53.१० ।।
सप्ताहाद्वर्षमध्याद्वा त्रिवर्षाद्भस्मतां व्रजेत् ।।
प्रतिज्ञाता स्थानरक्षा यदि वो नारदाग्रतः ।। ११ ।।
सत्येन तेन नो वैरी भस्मीभवतु ह क्षणात् ।।
अनेन शाप मंत्रेण भस्मीभवति निश्चितम् ।। १२ ।।
शालां त्रिपुरुषां तत्र यः पश्यति दिनेदिने ।।
अर्चयेत्तोषयेच्चासौ स्वर्गलोके महीयते ।। १३ ।। ।।
इति त्रिपुरुषशालामाहात्म्यम् ।। ।।
नारद उवाच ।। ।।
अथान्यत्संप्रवक्ष्यामि मदीयसरसो महत् ।। १४ ।।
माहात्म्यमतुलं पार्थ देवानामपि दुर्लभम् ।।
मया पूर्वं सरः खातं दर्भांकुरशलाकया ।। १५ ।।
मृत्तिका ताम्रपात्रेण त्यक्ता बाह्ये ततः स्वयम् ।।

सर्वेषामेव तीर्थानामाहृत्योदक मुत्तमम् ।। १६ ।।
तत्तत्र सरसि क्षिप्तं तेन संपूरितं सरः ।।
आश्विने मासि संप्राप्ते भानुवारे नरः शुचिः ।। १७ ।।
श्राद्धं यः कुरुते तत्र स्नात्वा दानं विशेषतः ।।
पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ।। १८ ।।
नारदीयं सरो ह्येतद्विख्यात जगतीतले ।।
महता पुण्ययोगेन देवैरपि हि लभ्यते ।। १९ ।।
यदत्र दीयते दानं हूयते यच्च पावके ।।
सर्वं तदक्षयं विद्याज्जपानशनसाधनात् ।। 1.2.53.२० ।।
नारदीये सरःश्रेष्ठे स्नात्वा यो नारदेश्व रम् ।।
पूजयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ।। २१ ।।
अत्र तीर्थे पुरा पार्थ सर्वनागैस्तपः कृतम् ।।
कद्रूशापस्य मोक्षार्थमात्मनो हितका म्यया ।। २२ ।।
ततः सिद्धिं परां प्राप्ता एतत्तीर्थप्रभावतः ।।
ततो नागेश्वरं लिंगं स्थापयामासुरूर्जितम् ।। २३ ।।
नारदादुत्तरे भागे सर्वे नागाः प्रहर्षिताः ।।
नारदीये सरःश्रेष्ठे यः स्नात्वा पूजयेद्धरम् ।। २४ ।।
नागेश्वरं महाभक्त्या तस्य पुण्यमनन्तकम् ।।
तेषां सर्पभयं नास्ति नागानां वचनं यथा ।। २५ ।।
इति नारदीयसरोमाहात्म्यम् ।।
।। नारद उवाच ।। ।।
अपरद्वारकानाम देवी चात्रास्ति पांडव ।। २६ ।।
सा च ब्रह्मांडद्वारे वै सदैव विहितालया ।।
चतुर्विंशतिकोटीभिर्देवीभिः परिरक्षिता ।। २७ ।।
ततो दीर्घं तपस्तप्त्वा मयानीतात्र तोषिता ।।
अपरस्मिंस्ततो द्वारे स्था पिता परमेश्वरी ।। २८ ।।
पूर्वस्मिन्नगरद्वारे स्थापिता द्वारवासिनी ।।
नवमी चैत्रमासस्य कृष्णपक्षे भवेत्तु या ।। २९ ।।
कुण्डे स्नानं नरः कृत्वा तां च देवीं प्रपूजयेत् ।।
बलिबाकुलनैवेद्यैर्गन्धधूपादिपूजनैः ।। 1.2.53.३० ।।
सप्तजन्मकृतं पापं नाशमायाति तत्क्षणात् ।।
यान्यान्प्रार्थयते कामांस्तांस्ताना प्नोति मानवः ।। ३१ ।।
वन्ध्या च लभते पुत्रं स्नानमात्रेण तत्र वै ।।

नवम्यां चैत्रमासस्य पुष्पधूपार्घ्यपूजया ।। ३२ ।।
विघ्नानि नाशयेद्देवी सर्व सिद्धिं प्रयच्छति ।।
भक्तानां तत्क्षणादेव सत्यमेतन्न संशयः ।। ३३ ।।
उत्तरद्वारकां चापि पूज्यैवं विधिवन्नरः ।।
एतदेव फलं सोपि प्राप्नुयान्मान वोत्तमः ।। ३४ ।।
पूर्वद्वारे तु वै देवी या स्थिता द्वारवासिनी ।।
तस्याः पूजनमात्रेण प्राप्नुयाद्वांछितं फलम् ।। ३५ ।।
आश्विने मासि संप्राप्ते नव रात्रे विशेषतः ।।
उपोष्य नवरात्रं च स्नात्वा कुण्डे समाहितः ।। ३६ ।।
पूजयेद्देवतां भक्त्या पुष्पधूपान्नतर्पणैः ।।
अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ।। ३७ ।।
वन्ध्या प्रसूयते पार्थ नात्र कार्या विचारणा ।। ३८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वर खण्डे कौमारिकाखंडे कोटितीर्थादिमाहात्म्यवर्णनंनाम त्रिपंचाशत्तमोऽध्यायः ।। ५३ ।। ।।।५।।

।। नारद उवाच ।। ।।
ममापि पार्थ तत्रास्ति मूर्तिर्ब्राह्मणकाम्यया ।।
तत्र नाहं त्यजाम्यंग च्छत्रदण्डविभूषिताम् ।। १ ।।
कार्तिकस्य तु या शुक्ला भवत्येकादशी शुभा ।।
तस्यां मदर्चनं कृत्वा कलिदोषैर्विमुच्यते ।। २ ।।
।। अर्जुन उवाच ।। ।।
बाल्यात्प्रभृति संदेहो ममायं हृदि वर्तते ।।
पृच्छतस्तं च मे विप्र न क्रोधं कर्तुमर्हसि ।। ३ ।।
सदा त्वं मोक्षधर्मेषु परिनिष्ठां परां गतः ।।
सर्वभूतसमो दांतो रागद्वेषविवर्जितः ।। ४ ।।
त्यक्तनिंदास्तुतिर्मौनी मोक्षस्थः परिकीर्त्यसे ।।
त्वं च नारद लोकेषु वायुवच्चपलो मुने ।। ५ ।।
सौदामिनीव विचरन्दृश्यसे प्राज्ञसंमतः ।।
सदा कलिकरो लोके निर्दयः सर्वप्राणिषु ।। ६ ।।
बहूनां हि सहस्राणि देवगंधर्वरक्षसाम् ।।
राज्ञां मुनीन्द्रदैत्यानां कलेर्नष्टानि तेऽभवन् ।। ७ ।।
कस्मात्तदेषा चेष्टा ते संदेहं मे हर द्विज ।।
संदेहान्न सुखं शेते बाणविद्धो मृगो यथा ।। ८ ।।
।। सूत उवाच ।। ।।
शौनकेदं वचः श्रुत्वा फाल्गुनान्नारदो मुनिः ।।
प्रहसन्निव बाभ्रव्यवदनं स निरैक्षत ।। ९ ।।
स च बाभ्रव्यनामा वै हारीतस्यान्वयोद्भवः ।।
ब्राह्मणो नारदमुनेः समीपे वर्तते सदा ।। 1.2.54.१० ।।
स च ज्ञात्वा महाबुद्धिर्नारदस्य मनीषितम् ।।
प्रहसन्निव प्रोवाच फाल्गुनं स्निग्धया गिरा ।। ११ ।।
।। बाभ्रव्य उवाच ।। ।।
सत्यमेतद्यथात्थ त्वं नारदं प्रति पांडव ।।
सर्वोऽपि चात्र वृत्तांते संशयं याति मानवः ।। १२ ।।
तदहं ते प्रवक्ष्यामि यथा कृष्णान्मया श्रुतम् ।।
स्तोककालांतरे पूर्वं सर्वं यादवनंदनः ।। १३ ।।
महीसागरयात्रायां कृष्णस्तत्राययौ प्रभुः ।।
उग्रसेनेन सहितो वसुदेवेन बभ्रुणा ।। १४ ।।
रामेण रौक्मिणेयेन युयुधानादिभिस्तदा ।।

स च ज्ञात्वा ज्ञातिसमं महीसागरसंगमे ।। १५ ।।

पिंडदानादिकं कृत्वा दत्त्वा दानानि भूरिशः ।।

गुहेश्वरादिलिंगानि यत्नतः प्रतिपूज्य च ।। १६ ।।

स्नानं कृत्वा कोटितीर्थे जयादित्यं समर्च्य च ।।

पूजयन्नारदमुनिं युक्तः कृष्णो महामनाः ।। १७ ।।

उग्रसेनेन राज्ञा वै पूर्वजेन जटायुना ।।

मदादिविप्रमुख्यानां बहूनां चोपशृण्वताम् ।।

उग्रसेनो महाराजः कृष्णं प्रोवाच संसदि ।। १६ ।।

।। उग्रसेन उवाच ।। ।।

कृष्ण प्रक्ष्यामि त्वामेकं संशयं वद तं मम ।। १९ ।।

योऽयं नाम महाबुद्धिर्नारदो विश्ववंदितः ।।

कस्मादेषोऽतिचपलो वायुवद्भ्रमते जगत् ।। २० ।।

कलिप्रियश्च कस्माद्वा कस्मात्त्वय्यतिप्रीतिमान् ।। 1.2.54.२० ।।

।। श्रीकृष्ण उवाच ।। ।।

सत्यं राजंस्त्वया पृष्टमेतत्सर्वं वदामि ते ।।

दक्षेण तु पुरा शप्तो नारदो मुनिसत्तमः ।। २१ ।।

सृष्टिमार्गास्तु तान्वीक्ष्य नारदेन विचालितान् ।।

नावस्थानं च लोकेषु भ्रमतस्ते भविष्यति ।। २२ ।।

पैशुन्य वक्ता च तथा द्वितीयानां प्रचालनात् ।।

इति शापद्वयं प्राप्य द्विविधात्मजचालनात् ।। २३ ।।

निराकर्तुं समर्थोऽपि मुनिर्मेने तथैव तत् ।।

एतावान्साधुवादो हि यतश्च क्षमते स्वयम् ।। २४ ।।

विनाशकालं चावेक्ष्य कलिं वर्धयते यतः ।।

सत्यं च वक्ति तस्मात्स न च पापेन लिप्यते ।।२५।।

भ्रमतोऽपि च सर्वत्र नास्य यस्मात्पृथङ्मनः ।।

ध्येयाद्भवति नैव स्याद्भ्रमदोषस्ततोस्य च ।।

यच्च प्रीतिर्मयि तस्य परमा तच्छृणुष्व च ।। २६ ।।

अहं हि सर्वदा स्तौमि नारदं देवदर्शनम् ।।

महेंद्रगदितेनैव स्तोत्रेण शृणु तन्नृप ।। २७ ।।

श्रुतचारित्रयोर्जाता यस्याहंता न विद्यते ।।

अगुप्तश्रुत चारित्रं नारदं तं नमाम्यहम् ।। २८ ।।

अरतिक्रोधचापल्ये भयं नैतानि यस्य च ।।

अदीर्घसूत्रं धीरं च नारदं तं नमाम्यहम् ।। २९।।

कामाद्वा यदि वा लोभाद्वाचं यो नान्यथा वदेत् ।।
उपास्यं सर्वजंतूनां नारदं तं नमाम्यहम् ।। 1.2.54.३० ।।
अध्यात्मगतितत्त्वज्ञं क्षांतं शक्तं जितेंद्रियम् ।।
ऋजुं यथार्थ वक्तारं नारदं तं नमाम्यहम् ।।३१।।
तेजसा यशसा बुद्ध्या नयेन विनयेन च ।।
जन्मना तपसा वृद्धं नारदं तं नमाम्यहम् ।।३२।।
सुखशीलं सुखं वेषं सुभोजं स्वाचरं शुभम् ।।
सुचक्षुषं सुवाक्यं च नारदं तं नमाम्यहम् ।। ३३ ।।
कल्याणं कुरुते गाढं पापं यस्य न विद्यते ।।
न प्रीयते परानर्थे यो ऽसौ तं नौमि नारदम् ।। ३४ ।।
वेदस्मृतिपुराणोक्तधर्मे यो नित्यमास्थितः ।।
प्रियाप्रियविमुक्तं तं नारदं प्रणमाम्यहम् ।। ३५ ।।
अशनादिष्वलिप्तं च पंडितं नालसं द्विजम् ।।
बहुश्रुतं चित्रकथं नारदं प्रणमाम्यहम् ।। ३६ ।।
नार्थे क्रोधे च कामे च भूतपूर्वोऽस्य विभ्रमः ।।
येनैते नाशिता दोषा नारदं तं नमाम्यहम् ।। ३७ ।।
वीतसंमोहदोषो यो दृढभक्तिश्च श्रेयसि ।।
सुनयं सत्रपं तं च नारदं प्रणमाम्यहम् ।। ३८ ।।
असक्तः सर्वसंगेषु यः सक्तात्मेति लक्ष्यते ।।
अदीर्घसंशंयो वाग्ग्मी नारदं तं नमाम्यहम् ।। ३९ ।।
न त्यजत्यागमं किंचिद्यस्तपो नोपजीवति ।।
अवंध्यकालो यस्यात्मा तमहं नौमि नारदम् ।। 1.2.54.४० ।।
कृतश्रमं कृतप्रज्ञं न च तृप्तं समाधितः ।।
नित्यं यत्नात्प्रमत्तं च नारदं तं नमाम्यहम् ।। ।। ४१ ।।
न हृष्यत्यर्थलाभेन योऽलाभे न व्यथत्यपि ।।
स्थिरबुद्धिरसक्तात्मा तमहं नौमि नारदम् ।। ४२ ।।
तं सर्वगुणसंपन्नं दक्षं शुचिमकातरम् ।।
कालज्ञं च नयज्ञं च शरणं यामि नारदम् ।।४३।।
इमं स्तवं नारदस्य नित्यं राजन्पठाम्यहम् ।।
तेन मे परमा प्रीतिं करोति मुनिसत्तमः ।। ४४ ।।
अन्योपि यः शुचिर्भूत्वा नित्यमेतां स्तुतिं जपेत् ।।
अचिरात्तस्य देवर्षिः प्रसादं कुरुते परम् ।। ४५ ।।
एतान्गुणान्नारदस्य त्वमथाकर्ण्य पार्थिव ।।

जप नित्यं स्तवं पुण्यं प्रीतस्ते भविता मुनिः ।। ४६ ।।
।। बाभ्रव्य उवाच ।। ।।
इति कृष्णमुखाच्छ्रुत्वा नारदस्य गुणान्नृपः ।।
बभूव परमप्री तश्चक्रे तच्च तथा वचः ।। ४७ ।।
ततो नारदमानर्च दत्त्वा दानं च पुष्कलम् ।।
नारदीयद्विजाग्र्याणां नारदः प्रीयतामिति ।। ४८ ।।
ययौ द्वारवतीं कृष्णः सभ्रातृजातिबांधवः ।।
तीर्थयात्रामिमां कृत्वा विधिवत्पुरुषोत्तमः ।। ४९ ।।
तथा त्वमपि कौरव्य नारदस्य गुणानिमान् ।।
श्रुत्वा श्रद्धामयो भूत्वा शृणु कृत्यं यदत्र च ।। 1.2.54.५० ।।
कार्तिके शुक्लद्वादश्यां प्रबोधिन्यामसौ मुनिः ।।
विष्णोर्ध्यानसमाधेश्च प्रबुद्धो जायते सदा ।। ५१ ।।
तस्मिन्दिने नारदेन निर्मितेऽत्रैव कूपके ।।
स्नानं कृत्वा प्रयत्नेन श्राद्धं कुर्यात्समाहितः ।। ५२ ।।
तपो दानं जपश्चात्र कूपे भवति चाक्षयम् ।। ५३ ।।
इदं विष्णिवति मंत्रेण ततो विष्णुं प्रबोधयेत् ।।
नारदं च मुनिं पश्चान्मन्त्रेणानेन पांडव ।। ५४ ।।
योगनिद्रा यथा त्यक्ता हरिणा मुनिसत्तम ।।
तथा लोकोपकाराय भवानपि परित्यज ।। ५५ ।।
इति मंत्रेण चोत्थाप्य नारदं परिपूजयेत् ।।
कृष्णप्रोदितया स्तुत्या छत्रधोत्रार्चनैः शुभैः ।।५६।।
शक्त्या द्विजानां देयं च छत्रं धोत्रं कमंडलुम् ।।
प्रणम्य ब्राह्मणान्भक्त्या नारदः प्रीयतामिति ।। ५७ ।।
एवं कृते प्रसादात्स मुनेः पापेन मुच्यते ।।
जायते न कलिस्तस्य न चासौख्यं भवेदिह।। ५८ ।। ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे
नारदमाहात्म्यवर्णनंनाम चतुःपंचाशत्तमोऽध्यायः ।। ५४ ।।

।। सूत उवाच ।। ।।
इति बाभ्रव्यवचनमाकर्ण्य कुरुनन्दनः ।।
प्राणमन्नारदं भक्त्या विस्मितः पुलकान्वितः ।। १ ।।
प्रशस्य च चिरं कालं पुनर्नारदमब्रवीत् ।। २ ।।
गुप्तक्षेत्रस्य माहात्म्यं शृण्वानस्त्वन्मुखान्मुने ।।
तृप्तिं नैवाधिगच्छामि भूयस्तद्वक्तुमर्हसि ।। ३ ।।
।। नारद उवाच ।। ।।
महालिंगस्य वक्ष्यामि महिमानं कुरूद्वह ।।
गौतमेश्वर लिंगस्य सावधानः शृणुष्व तत् ।। ४ ।।
अक्षपादो महायोगी गौतमाख्योऽभवन्मुनिः ।।
गोदावरीसमानेता अहल्यायाः पतिः प्रभुः ।। ५ ।।
गुप्त क्षेत्रस्य माहात्म्यं स च ज्ञात्वा महोत्तमम् ।।
योगसंसाधनं कुर्वन्नत्र तेपे तपो महत् ।। ६ ।।
योगसिद्धिं ततः प्राप्य गौतमेन महात्मना ।।
अत्र संस्थापितं लिंगं गौतमेश्वरसंज्ञया ।। ७ ।।
संस्नाप्यैतन्महालिंगं चन्दनेन विलिप्य च ।।
संपूज्य पुष्पैर्विविधैर्गुग्गुलं दाहयेत्पुरः ।।
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ।। ८ ।।
।। अर्जुन उवाच ।। ।।
योगस्वरूपमिच्छामि श्रोतुं नारद तत्त्वतः ।।
योगं सर्वे प्रशंसंति यतः सर्वोत्तमोत्तमम् ।। ।। ९ ।।
।। नारद उवाच ।। ।।
समासात्तव वक्ष्यामि योगतत्त्वं कुरूद्वह ।।
श्रवणादपि नैर्मल्यं यस्य स्यात्सेवनात्किमु ।। 1.2.55.१० ।।
चित्तवृत्तिनिरोधाख्यं योगतत्त्वं प्रकीर्त्यते।।
तदष्टांगप्रकारेण साधयंतीह योगिनः।।११।।
यमश्च नियमश्चैव प्राणायामस्तृतीयकः।।
प्रत्याहारो धारणा च ध्येयं ध्यानं च सप्तमम् ।। १२ ।।
समाधिरिति चाष्टांगो योगः संपरिकीर्तितः ।।
प्रत्येकं लक्षणं तेषामष्टानां शृणु पांडव ।। ।। १३ ।।
अनुक्रमान्नरो येषां साधनाद्योगमश्नुते ।।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।।१४।।
एते पंच यमाः प्रोक्ताः शृण्वेषामपि लक्षणम् ।।

आत्मवत्सर्वभूतेषु यो हिताय प्रवर्तते ।। १५ ।।
अहिंसैषा समाख्याता वेदसंविहिता च या ।।
दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः ।। १६ ।।
कथनं सत्यमित्युक्तं परपीडाविवर्जितम् ।।
अनादानं परस्वानामापद्यपि कथंचन ।। १७ ।।
मनसा कर्मणा वाचा तदस्तेयं प्रकीर्तितम् ।।
अमैथुनं यतीनां च मनोवाक्कायकर्मभिः ।। १८ ।।
ऋतौ स्वदारगमनं गेहिनां ब्रह्मचर्यता ।।
यतीनां सर्वसंन्यासो मनोवाक्कायकर्मणा ।। १९ ।।
गृहस्थानां च मनसा स्मृत एषोऽपरिग्रहः ।।
एते यमास्तव प्रोक्ताः पंचैव नियमाञ्छृणु ।।1.2.55.२०।।
शौचं तुष्टिस्तपश्चैव जपो भक्तिर्गुरोस्तथा ।।
एतेषामपि पंचानां पृथक्संशृणु लक्षणम् ।। २१ ।।
बाह्यमाभ्यतरं चैव द्विविधं शौचमुच्यते ।।
बाह्यं तु मृज्जलैः प्रोक्तमांतरं शुद्धमानसम् ।। २२ ।।
न्यायेनागतया वृत्त्या भिक्षया वार्तयापि च ।।
संतोषो यस्य सततं सा तुष्टिरिति चोच्यते ।। २३ ।।
चांद्रायणादीनि पुनस्तपांसि विहितानि च ।।
आहारलाघवपरः कुर्यात्तत्तप उच्यते ।। २४ ।।
स्वाध्यायस्तु जपः प्रोक्तः प्रणवाभ्यसनादिकः ।।
शिवे ज्ञाने गुरौ भक्तिर्गुरुभक्तिरिति स्मृता ।। ।। २५ ।।
एवं संसाध्य नियमान्संयमांश्च विचक्षणः ।।
प्राणायामाय संदध्यान्नान्यथा योगसाधकः ।। २६ ।।
यतोऽशुचिशरीरस्य वायुकोपो महान्भवेत् ।।
वायुकोपात्कुष्ठता च जडत्वादीनुपाश्नुते ।। २७ ।।
तस्माद्विचक्षणः शुद्धं कृत्वा देहं यतेत्परम् ।।
प्राणायामस्य वक्ष्यामि लक्षणं शृणु पांडव ।। २८ ।।
प्राणापाननिरोधश्च प्राणायामः प्रकीर्तितः ।।
लघुमध्योत्तरीयाख्यः स च धीरैस्त्रिधोदितः ।। २९ ।।
लघुर्द्वादशमात्रस्तु मात्रा निमिष उन्मिषः ।।
द्विगुणो मध्यमश्चोक्तस्त्रिगुणश्चोत्तमः स्मृतः ।। 1.2.55.३० ।।
प्रथमेन जयेत्स्वेदं मध्यमेन तु वेपथुम् ।।
विषादं च तृतीयेन जयेद्दोषाननुक्रमात् ।। ३१ ।।

पद्माख्यमासनं कृत्वा रेचकं पूरकं तथा ।।
कुंभकं च सुखासीनः प्राणायामं त्रिधाऽभ्यसेत् ।। ३२ ।।
प्राणानामुपसंरोधात्प्राणायाम इति स्मृतः ।।
यथा पर्वतधातूनां ध्मातानां दह्यते मलः ।। ३३ ।।
तथैंद्रियवृतो दोषः प्राणायामेन दह्यते ।।
गोशतं कापिलं दत्त्वा यत्फलं तत्फलं भवेत् ।। ३४ ।।
प्राणायामेन योगज्ञस्तस्मात्प्राणं सदा यमेत् ।।
प्राणायामेन सिद्ध्यन्ति दिव्याः शान्त्यादयः क्रमात् ।। ।। ३५ ।।
शांतिः प्रशान्तिर्दीप्तिश्च प्रसादश्च यथाक्रमम् ।। स
हजागंतुकामानां पापानां च प्रवर्तताम् ।।३६।।
वासनाशांतिरित्याख्यः प्रथमो जायते गुणः ।।
लोभमोहात्मकान्दोषान्निराकृत्यैव कृत्स्नशः ।। ३७ ।।
तपसां च यदा प्राप्तिः सा शांतिरिति चोच्यते ।।
सर्वेन्द्रियप्रसादश्च बुद्धेर्वै मरुतामपि ।। ३८ ।।
प्रसाद इति स प्रोक्तः प्राप्यमेवं चतुष्टयम् ।।
एवंफलं सदा योगी प्राणायामं समभ्यसेत् ।। ३९ ।।
मृदुत्वं सेव्यमानास्तु सिंहशार्दूलकुंजराः ।।
यथा यान्ति तथा प्राणो वश्यो भवति साधितः ।। 1.2.55.४० ।।
प्राणायामस्त्वयं प्रोक्तः प्रत्याहारं ततः शृणु ।।
विषयेषु प्रवृत्तस्य चेतसो विनिवर्तनम् ।। ४१ ।।
प्रत्याहारं विनिर्दिष्टतस्य संयमनं हि यत् ।।
प्रत्याहारस्त्वयं प्रोक्तो धारणालक्षणं शृणु ।। ४२ ।।
यथा तोयार्थिनस्तोयं पत्रनालादिभिः शनैः ।।
आपिबेयुस्तथा वायुं योगी नयति साधितम् ।। ४३ ।।
प्राग्नाभ्यां हृदये वायुरथ तालौ भ्रुवोंऽतरे ।।
चतुर्दले षड्दशे च द्वादशे षोडशद्विके ।। ४४ ।।
आकुंचनेनैव मूर्द्धमुन्नीय पवनं शनैः ।।
मूर्धनि ब्रह्मरंध्रे तं प्राणं संधारयेत्कृती ।। ४५ ।।
प्राणायामा दश द्वौ च धारणैषा प्रकीर्त्यते ।।
दशैता धारणाः स्थाप्य प्राप्नोत्यक्षरसाम्यताम् ।। ४६ ।।
धारणास्थस्य यद्ध्येयं तस्य त्वं शृणु लक्षणम् ।।
ध्येयं बहुविधं पार्थ यस्यांतो नोपलभ्यते ।। ४७ ।।
केचिच्छिवं हरिं केचित्केचित्सूर्यं विधिं परे ।।

केचिद्देवीं महद्भूतामुत ध्यायन्ति केचन ।। ४८ ।।
तत्र यो यच्च ध्यायेत स च तत्र प्रलीयते ।।
तस्मात्सदा शिवं देवं पंचवक्त्रं हरं स्मरेत् ।। ४९ ।।
पद्मासनस्थं तं गौरं बीजपूरकरं स्थितम् ।।
दशहस्तं सुप्रसन्नवदनं ध्यानमास्थितम् ।। 1.2.55.५० ।।
ध्येयमेतत्तव प्रोक्तं तस्माद्ध्यानं समाचरेत् ।।
ध्यानस्य लक्षणं चैतन्निमेषार्धमपि स्फुटम् ।। ५१ ।।
न पृथग्जायते ध्येयाद्धारणां यः समास्थितः ।।
एवमेतां दुरारोहां भूमिमास्थाय योगवित् ।। ५२ ।।
न किंचिच्चिंतयेत्पश्चात्समाधिरिति कीर्त्यते ।।
समाधेर्लक्षणं सम्यग्ब्रुवतो मे निशामय ।। ५३ ।।
शब्दस्पर्शरसैर्हीनं गंधरूपविवर्जितम् ।।
परं पुरुषं संप्राप्तः समाधिस्थः प्रकीर्तितः ।। ५४ ।।
तां तु प्राप्य नरो विघ्नैर्नाभिभूयेत कर्हिचित् ।।
समाधिस्थश्च दुःखेन गुरुणापि न चाल्यते ।।५५।।
शंखाद्याः शतशस्तस्य वाद्यन्ते यदि कर्णयोः ।।
भेर्यश्च यदि हन्यंते शब्दं बाह्यं न विंदति ।। ५६ ।।
कशाप्रहाराभिहतो वह्निदग्धतनुस्तथा ।।
शीताढ्येव स्थितो घोरे स्पर्शं बाह्यं न विन्दति ।। ।। ५७ ।।
रूपे गंधे रसे बाह्ये तादृशस्य तु का कथा ।।
दृष्ट्वा य आत्मनात्मानं समाधिं लभते पुनः ।। ५८ ।।
तृष्णा वाथ बुभुक्षा वा बाधेते तं न कर्हिचित् ।। ५९ ।।
न स्वर्गे न च पाताले मानुष्ये क्व च तत्सुखम् ।।
समाधिं निश्चलं प्राप्य यत्सुखं विंदते नरः ।। 1.2.55.६० ।।
एवमारूढयोगस्य तस्यापि कुरुनदन ।।
पंचोपसर्गाः कटुकाः प्रवर्तंते यथा शृणु ।। ६१ ।।
प्रातिभः श्रावणो दैवो भ्रमावर्तोऽथ भीषणः ।।
प्रतिभा सर्वशास्त्राणां प्रातिभोऽयं च सात्त्विकः ।। ६२ ।।
तेन यो मदमादद्याद्योगी शीघ्रं च चेतसः ।।
योजनानां सहस्रेभ्यः श्रवणं श्रावणस्तु सः ।। ६३ ।।
द्वितीयः सात्विकश्चायमस्मान्मत्तो विनश्यति ।
अष्टौ पश्यति योनीश्च देवानां दैव इत्यसौ ।। ६४ ।।
अयं च सात्त्विको दोषो मदादस्माद्विनश्यति ।।

आवर्त इव तोयस्य जनावर्ते यदाकुलः ।। ६५ ।।
आवर्ताख्यस्त्वयं दोषो राजसः स महाभयः ।।
भ्राम्यते यन्निरालम्बं मनो दोषैश्च योगिनः ।। ६६ ।।
समस्ताधारविभ्रंशाद्भ्रमाख्यस्तामसो गुणः ।।
एतैर्नाशितयोगाश्च सकला देवयोनयः ।। ६७ ।।
उपसर्गैर्महाघोरैरावर्त्यंते पुनः पुनः ।।
प्रावृत्य कंबलं शुक्लं योगी तस्मान्मनोमयम् ।। ६८ ।।
चिंतयेत्परमं ब्रह्म कृत्वा तत्प्रवणं मनः ।।
आहाराः सात्त्विकाश्चैव संसेव्याः सिद्धिमिच्छता ।। ६९ ।।
राजसैस्तामसैश्चैव योगी सिद्ध्येन्न कर्हिचित् ।।
श्रद्दधानेषु दांतेषु श्रोत्रियेषु महात्मसु ।। 1.2.55.७० ।।
स्वधर्मादनपेतेषु भिक्षा याच्या च योगिना ।।
भैक्षं यवान्नं तक्रं वा पयो यावकमेव वा ।। ७१ ।।
फलमूलं विपक्वं वा कणपिण्याकसक्तवः ।।
श्रुता इत्येत आहारा योगिनां सिद्धिकारकाः ।। ७२ ।।
मृत्युकालं विदित्वा च निमित्तैर्योगसाधकः ।।
योगं युञ्जीत कालस्य वंचनार्थं समाहितः ।। ७३ ।।
निमित्तानि च वक्ष्यामि मृत्युं यो वेत्ति योगवित् ।।
रक्तकृष्णांबरधरा गायंतीह सती च यम् ।। ७४ ।।
दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ।।
नग्नं क्षपणकं स्वप्ने हसमानं प्रदृश्य च ।। ७५ ।।
एनं च वीक्ष्य वल्गन्तं तं विद्यान्मृत्युमागतम् ।।
ऋक्षवानरयुग्यस्थो गायन्यो दक्षिणां दिशम् ।। ।। ७६ ।।
याति मज्जेदधौ पंके गोमये वा न जीवति ।।
केशांगारैस्तथा भस्मभुजंगैर्निजलां नदीम् ।। ७७ ।।
एषामन्यतमैः पूर्णां दृष्ट्वा स्वप्ने न जीवति ।।
करालैर्विकटै रूक्षैः पुरुषैरुद्यतायुधैः ।। ७८ ।।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं भजेन्नरः ।।
सूर्योदये यस्य शिवा क्रोशंती याति सम्मुखम् ।। ७९, ।।
विपरीतं परीतं वा स सद्यो मृत्युमृच्छति ।।
दीपाधिगंधं नो वेत्ति वमत्यग्निं तथा निशि ।। 1.2.55.८० ।।
नात्मानं परनेत्रस्थं वीक्षते न स जीवति ।।
शक्रायुधं चार्धरात्रे दिवा वा ग्रहणं तथा ।। ८१ ।।

दृष्ट्वा मन्येत स क्षीणमात्मजीवितमाप्तवान् ।।
नासिका वक्रतामेति कर्णयोर्न्नमनोन्नती ।। ८२ ।।
नेत्रं च वामं स्रवति यस्य तस्यायुरुद्गतम् ।।
आरक्तताामेति मुखं जिह्वा चाप्यसिता यदा ।। ८३ ।।
तदा प्राज्ञो विजानीयादासन्नं मृत्युमात्मनः ।।
उष्ट्रासभयानेन स्वप्ने यो याति दक्षिणाम् ।। ८४ ।।
दिशं कर्णौ पिधायापि निर्घोषं शृणुयान्न च ।।
न स जीवेत्तथा स्वप्ने पति तस्य पिधीयते ।। ८५ ।।
द्वारं न चोत्तिष्ठति च शुभ्रा दृष्टिश्च लोहिता ।।
स्वप्नेऽग्निं प्रविशेद्यश्च न च निष्क्रमते पुनः ।। ८६ ।।
जलप्रवेशादपि वा तदंतं तस्य जीवितम् ।।
यश्चाभिहन्यते दुष्टैर्भूतै रात्रावथो दिवा ।। ८७।।
प्रकृतैर्विकृतैर्वापि तस्यासन्नौ यमांतकौ ।।
देवतानां गुरूणां च पित्रोर्ज्ञानविदां तथा ।। ८८ ।।
निन्दामवज्ञां कुरुते भक्तो भूत्वा न जीवति ।।
एवं दृष्ट्वा निमित्तानि विपरीतानि योगवित् ।। ८९ ।।
धारणां सम्यगास्थाय समाधावचलो भवेत् ।।
यदि नेच्छति ते मृत्युं ततो नासौ प्रपद्यते ।। 1.2.55.९० ।।
विमुक्तिमथवा वांछेद्विसृजेद्ब्रह्ममूर्धनि ।।
संति देहे विमुक्ते च उपसर्गाश्च ये पुनः ।। ९१ ।।
योगिनं समुपायांति शृणु तानपि पांडव ।।
ऐशान्ये राक्षसपुरे यक्षो गन्धर्व एव च ।। ९२ ।।
ऐन्द्रे सौम्ये प्रजापत्ये ब्राह्मे चाष्टसु सिद्धयः ।।
भवंति चाष्टौ शृणु ताः पार्थिवी या च तैजसी ।। ९३ ।।
वायवी व्योमात्मिका चैव मानसाहम्भवा मतिः ।।
प्रत्येकमष्टधा भिन्ना द्विगुणा द्विगुणा क्रमात।९४।।
पूर्वे चाष्टौ चतुःषष्टिरन्ते शृणुष्व तद्यथा ।।
स्थूलता ह्रस्वता बाल्यं वार्धक्यं योवनं तथा ।।९५।।
नानाजाति स्वरूपं च चतुर्भिर्देहधारणम् ।।
पार्थिवांशं विना नित्यमष्टौ पार्थिवसिद्धयः ।। ९६ ।।
विजिते पृथिवीतत्त्वे यदैशान्ये भवन्ति च ।।
भूमाविव जले वासो नातुरोऽर्णवमापिबेत् ।। ९७ ।।
सर्वत्र जलप्राप्तिश्च अपि शुष्कं द्रवं फलम् ।।

त्रिभिर्देहस्य धरणं नदीर्वा स्थापयेत्करे ।। ९८ ।।
अव्रणत्वं शरीरस्य कांतिश्चाथाष्टकं स्मृतम् ।।
अष्टौ पूर्वा इमाश्चाष्टौ राक्षसानां पुरे स्मृताः ।। ९९ ।।
देहादग्निविनिर्माणं तत्तापभयवर्जनम् ।।
शक्तिदत्वं च लोकानां जलमध्येग्निज्वालनम् ।। 1.2.55.१०० ।।
अग्निग्रहश्च हस्तेन स्मृतिमात्रेण पावनम् ।।
भस्मीभूतस्य निर्माणं द्वाभ्यां देहस्य धारणम् ।।१०१।।
पूर्वाः षोडश चाप्यष्टौ तेजसो यक्षसद्मनि ।।
मनोगतित्वं भूतानामन्तर्निवेशनं तथा।।१०२।।
पर्वतादिमहाभारवहनं लीलयैव च ।।
लघुत्वं गौरवत्वं च पाणिभ्यां वायुवारणम्।।१०३।।
अंगुल्यग्रनिपातेन भूमेः सर्वत्र कम्पनम् ।।
एकेन देहनिष्पत्तिर्गांधर्वे वांति सिद्धयः ।।१०४।।
चतुर्विंशतिः पूर्वाश्चाप्यष्टावेताश्च सिद्धयः ।।
गन्धर्वलोके द्वात्रिंशदत ऊर्ध्वं निशामय ।। १०५ ।।
छायाविहीननिष्पत्तिरिंद्रियाणामदर्शनम् ।।
आकाशगमनं नित्यमिंद्रियादिशमः स्वयम् ।। १०६ ।।
दूरे च शब्दग्रहणं सर्वशब्दावगाहनम् ।।
तन्मात्रलिंगग्रहणं सर्वप्राणिनिदर्शनम् ।। १०७ ।।
अष्टौ वातात्मिकाश्चैन्द्रे द्वात्रिंशदपि पूर्वकाः ।।
यथाकामोपलब्धिश्च यथाकामविनिर्गमः ।।१०८।।
सर्वत्राभिभवश्चैव सर्वगुह्यनिदर्शनम् ।।
संसारदर्शनं चापि मानस्योऽष्टौ च सिद्धयः ।। १०९ ।।
चत्वारिंशच्च पूर्वाश्च सोमलोके स्मृतास्त्विमाः ।।
छेदनं तापनं बन्धः संसारपरिवर्तनम् ।। 1.2.55.११० ।।
सर्वभूत प्रसादत्वं मृत्युकालजयस्तथा ।।
अहंकारोद्भवश्चाष्टौ प्राजापत्ये च पूर्विकाः ।। १११ ।।
आकारेण जगत्सष्टिस्तथानुग्रह एव च ।।
प्रलयस्याधिकारं च लोकचित्रप्रवर्तनम् ।। ११२ ।।
असादृश्यमिदं व्यक्तं निर्वाणं च पृथक्पृथक् ।।
शुभेतरस्य कर्तृत्वमष्टौ बुद्धिभवास्त्वमी ।। ११३ ।।
षट्पंचाशत्तथा पूर्वाश्चतुःषष्टिरिमे गुणाः ।।
ब्राह्मये पदे प्रवर्तंते गुह्यमेतत्तवेरितम् ।। ११४ ।।

जीवतो देहभेदे वा सिद्ध्यश्चैतास्तु योगिनाम् ।।
संगो नैव विधातव्यो भयात्पतनसंभवात् ।। ११५ ।।
एतान्गुणान्निराकृत्य युञ्जतो योगिनस्तदा ।।
सिद्धयोऽष्टौ प्रवर्तंते योगसंसिद्धिकारकाः ।। ११६ ।।
अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।।
प्राकाम्यं च तथेशित्वं वशित्वं च तथापरे ।। ११७ ।।
यत्र कामावसायित्वं माहेश्वरपदस्थिताः ।।
सूक्ष्मात्सूक्ष्मत्वमणिमा शीघ्रत्वाल्लघिमा स्मृता ।। ११८ ।।
महिमा शेषपूज्यत्वात्प्राप्तिर्नाप्राप्यमस्य यत्।।
प्राकाम्यमस्य व्यापित्वादीशित्वं चेश्वरो यतः।।११९।।
वशित्वाद्वशिता नाम सप्तमी सिद्धिरुत्तमा ।।
यत्रेच्छा तत्र च स्थानं तत्र कामावसायिता ।। 1.2.55.१२० ।।
ऐश्वरं पदमाप्तस्य भवंत्येताश्च सिद्धयः ।।
ततो न जायते नैव वर्धते न विनश्यति ।।१२१।।
एष मुक्त इति प्रोक्तो य एवं मुक्तिमाप्नुयात् ।।
यथा जलं जलेनैक्यं निक्षिप्तमुपगच्छति।।१२२।।
तथैवं सात्म्यमभ्येति योगिनामात्मा परात्मना ।।
एवं ज्ञात्वा फलं योगी सदा योगं समभ्यसेत् ।। १२३ ।।
अत्रोपमां व्याहरंति योगार्थं योगिनोऽ मलाः ।।
शशांकरश्मिसंयोगादर्ककांतो हुताशनम् ।। १२४ ।।
समुत्सृजति नैकः सन्नुपमा सास्ति योगिनः ।।
कपिंजलाखुनकुला वसंति स्वामिव द्गृहे ।। १२५ ।।
ध्वस्ते यांत्यन्यतो दुःखं न तेषां सोपमा यतेः ।।
मृद्देहकल्पदेहोऽपि मुखाग्रेण कनीयसा ।। १२६ ।।
करोति मृद्भागचयमुपदेशः स योगिनः ।।
पशुपक्षिमनुष्याद्यैः पत्रपुष्पफलान्वितम् ।। १२७ ।।
वृक्षं विलुप्यमानं च लब्ध्वा सिध्यंति योगिनः ।।
रुरुगात्रविषाणाग्रमालक्ष्य तिलकाकृतिम् ।। १२८ ।।
सह तेन विवर्धेत योगी सिद्धिमुपाश्नुते ।।
द्रव्यं पूर्णमुपादाय पात्रमारोहते भुवः ।। १२९ ।।
तुंगमार्गं विलोक्यैवं विज्ञातं कि न योगिनाम् ।।
तद्गेहं यत्र वसति तद्भोज्यं येन जीवति ।। 1.2.55.१३० ।।
येन निष्पाद्यते चार्थः स्वयं स्याद्योगसिद्धये ।।

तथा ज्ञानमुपासीत योगी यत्कार्यसाधकम् ।। १३१ ।।
ज्ञानानां बहुता येयं योगविघ्नकरी हि सा ।।
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।। १३२ ।।
अपि कल्पसहस्रायुर्नैव ज्ञेयमवाप्नुयात्।।
त्यक्तसंगो जितक्रोधो लब्धाहारो जितेंद्रियः ।।१३३।।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ।।
आहारं सात्त्विकं सेवेन्न तं येन विचेतनः ।।१३४।।
स्यादयं तं च भुंजानो रौरवस्य प्रियातिथिः ।।
वाग्दण्डः कर्मदण्डश्च मनोदंडश्च ते त्रयः।।१३५।।
यस्यैते नियता दंडाः स त्रिदंडी यतिः स्मृतः।।
अनुरागं जनो याति परोक्षे गुणकीर्तनम् ।।१३६ ।।
न बिभ्यति च सत्त्वानि सिद्धेर्लक्षणमुच्यते ।। १३७ ।।
अलौल्यमारोग्यमनिष्ठुरत्वं गंधः शुभो मूत्रपुरीषयोश्च ।।
कांतिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नम् ।। १३८ ।।
समाहितो ब्रह्मपरोऽप्रमादी शुचिस्तथैकांतरतिर्जितेन्द्रियः ।।
समाप्नुयाद्योगमिमं महामना विमुक्तिमाप्नोति ततश्च योगतः ।। १३९ ।।
कुलं पवित्रं जननी कृतार्था वसुन्धरा भाग्यवती च तेन ।।
अवाह्यमार्गे सुखसिन्धुमग्नं लग्नं परे ब्रह्मणि यस्य चेतः ।। 1.2.55.१४० ।।
विशुद्धबुद्धिः समलोष्टकांचनः समस्तभूतेषु वसन्समो हि यः ।।
स्थानं परं शाश्वतमव्ययं च यतिर्हि गत्वा न पुनः प्रजायते ।। १४१ ।।
इदं मया योगरहस्यमुक्तमेवंविधं गौतमः प्राप योगम् ।।
तेनैतच्च स्थापितं पार्थ लिंगं संदर्शनादर्चनात्कल्मषघ्नम् ।। १४२ ।।
यश्चाश्विने कृष्णचतुर्दशीदिने रात्रौ समभ्यर्चति लिंगमेतन् ।।
स्नात्वा अहल्यासरसि प्रधाने श्रद्धाय सर्वं प्रविधाय भक्तितः ।। १४३ ।।
महोपकारेण विमुक्तपापः स याति यत्रास्ति स गौतमो मुनिः ।। १४४ ।।
इदं मया पार्थ तव प्रणीतं गुप्तस्य क्षेत्रस्य समासयोगात् ।।
माहात्म्यमेतत्सकलं शृणोति यः स स्याद्विशुद्धः किमु वच्मि भूयः ।। १४५ ।।
य इदं शृणुयाद्भक्त्या गौतमाख्यानमुत्तमम् ।।
पुत्रपौत्रप्रियं प्राप्य स याति पदमव्ययम् ।। १४६ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे गौतमेश्वरमाहात्म्यसविस्तरयोगलक्षणवर्णनंनाम पञ्चपंचाशत्तमोऽध्यायः ।। ५५ ।।

।। नारद उवाच ।। ।।
अतः परं प्रवक्ष्यामि ब्रह्मेशं लिंगमुत्तमम् ।।
यस्य स्मरणमात्रेण वाजपेयफलं भवेत् ।। १ ।।
एकदा तु पुरा पार्थ सृष्टि कामेन ब्रह्मणा ।।
तपः सुचरितं घोरं सार्धवर्षसहस्रकम् ।। २ ।।
तपसा तेन सन्तुष्टः पार्वतीपतिशंकरः ।।
वरमस्मै ततः प्रादाल्लोककर्त्रे स्ववांछितम् ।। ३ ।।
ततो हृष्टः प्रमुदितः कृतकृत्यः पितामहः ।।
ज्ञात्वा क्षेत्रस्य माहात्म्यं स्वयं लिंगं चकार ह ।।४।।
चखान च सरः पुण्यं नाम्ना ब्रह्मसरः शुभम ।।
महीनगरकात्पूर्वे महापातकनाशनम् ।। ५ ।।
अस्य तीरे महालिंगं स्थापयामास वै विभुः ।।
तत्र देवः स्वयं साक्षाद्विद्यते किल शंकरः ।। ।। ६ ।।
पुष्करादधिकं तीर्थं ब्रह्मेशंनाम फाल्गुन ।।
तत्र स्नात्वा नरो भक्त्या पिण्डदानं समाचरेत् ।। ७ ।।
दानं चैव यथाशक्त्या कार्तिक्यां च विशेषतः ।।
देवं प्रपूजयेद्भक्त्या ब्रह्मेशं हृष्टमानसः ।। ८ ।।
पितरस्तस्य तुष्यंति यावदाभूतसंप्लवम् ।।
पुष्करेषु च यत्पुण्यं कुरुक्षेत्रे रविग्रहे ।। ९ ।।
गंगादिपुण्यतीर्थेषु यत्फलं प्राप्यते नरैः ।।
तत्फलं समवाप्नोति तीर्थस्यास्यावगाहनात् ।। 1.2.56.१० ।।
मोक्षलिंगस्य माहात्म्यं शृणु पार्थ महाद्भुतम् ।।
मया स्थानहितार्थं च समाराध्य महेश्वरम् ।। ११ ।।
स्थापितं प्रवरं लिंगं नाम्ना मोक्षेश्वरं हरम् ।।
दर्भाग्रेण ततः पार्थ कूपं खनितवानहम् ।।१२।।
प्रसाद्य लोककर्तारं ब्रह्माणं परमेष्ठिनम् ।।
कमण्डलोर्ब्रह्मणश्च समानीता सरस्वती ।। १३ ।।
कूपेऽस्मिन्मोक्षनाथस्य लोकानां प्रेतमुक्तये ।।
कार्तिकस्य तु मासस्य शुक्लपक्षे चतुर्दशी ।। १४ ।।
कूपे स्नात्वा नरस्तस्यां तिलपिण्डं समाचरेत् ।।
प्रेतानुद्दिश्य नियतं मोक्षतीर्थफलं भवेत् ।। १५ ।।
कुले न जायते तस्य प्रेतः पार्थ न संशयः ।।
प्रेता मोक्षं प्रगच्छन्ति तीर्थस्यास्य प्रभावतः ।। १६ ।।

जयादित्यकूपवरे नरः स्नात्वा प्रयत्नतः ।।
गर्भेश्वरं नमस्कृत्य न स गर्भेषु मज्जति ।।१७।।
इदं मया पार्थ तव प्रणीतं गुप्तस्य क्षेत्रस्य समासयोगात् ।।
माहात्म्यमेतत्सकलं शृणोति यः स्याद्विशुद्धः किमु वच्मि भूयः ।। १८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखंडे कौमारिकाखंडे ब्रह्मेश्वरमोक्षेश्वर गर्भश्वरमाहात्म्यवर्णनंनाम षट्पंचाशत्तमोऽध्यायः ।।५६।।

।। नारद उवाच ।। ।।

ततो विप्रा नारदश्च समाराध्य महेश्वरम् ।।

महीनगरके पुण्ये स्थापयामास शंकरम् ।। १ ।।

लोकानां च हितार्थाय केदारं लिंगमुत्तमम् ।।

अत्रीशादुत्तरे भागे महापातकनाशनम् ।। २ ।।

अत्रिकुण्डे नरः स्नात्वा श्राद्धं कृत्वा यथाविधि ।।

अत्रीशं च नमस्कृत्य केदारं यः प्रपश्यति ।।३।।

मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्भवेत् ।।

ततो रुद्रो नीलकंठं नारदाय महात्मने ।।४।।

स्वयं दत्त्वा स्वयं तस्थौ महीनगरके शुभे ।।

कोटितीर्थे नरः स्नात्वा नीलकंठं प्रपश्यति ।। ५ ।।

जयादित्यं नमस्कृत्य रुद्रलोकमवाप्नुयात् ।।

जयादित्यं पूजयंति कूपे स्नात्वा नरोत्तमाः ।। ६ ।।

न तेषां वंशनाशोऽस्ति जयादित्यप्रसादतः ।।

इदं ते कथितं पार्थ महीनगरकस्य च ।। ७ ।।

आख्यानं सकलं श्रुत्वा सर्वपापैः प्रमुच्यते ।। ८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे नीलकंठमाहात्म्यवर्णनंनाम सप्तपञ्चाशत्तमोऽध्यायः ।। ५७ ।।

।। अर्जुन उवाच ।। ।।
गुप्तक्षेत्रमिदं कस्मात्कस्माद्गुप्तं च नारद ।।
यस्य प्रभावः सुमहान्नैव कस्यापि संस्तुतः ।। १ ।।
।। नारद उवाच ।। ।।
पुरातनामत्र कथां गुप्तक्षेत्रस्य कारणे ।।
शृणु पांडव शापेन गुप्तमासीदिदं यथा ।। २ ।।
पुरा निमित्ते कस्मिंश्चित्सर्वतीर्थाधिदैवताः ।।
प्रणामाय ब्रह्मसदो ब्रह्माणं सहिता ययुः ।। ३ ।।
पुष्करस्य प्रभासस्य निमिषस्यार्बुदस्य च ।।
कुरुक्षेत्रस्य क्षेत्रस्य धर्मारण्यस्य देवताः ।। ४ ।।
वस्त्रापथस्य श्वेतस्य फल्गुतीर्थं स्य चापि याः ।।
केदारस्य तथान्येषां क्षेत्राणां कोटिशोऽपि याः ।। ५ ।।
सिंधुसागरयोगस्य महीसागरकस्य च ।।
गंगासागरयोगस्य अधिपाः सूकरस्य च ।। ६ ।।
गंगारेवामुखीनां तु नदीनामधिदेवताः ।।
शोणह्रदपुरोगाणां ह्रदानां चाधिदेवताः ।। ७ ।।
ते सर्वे संघशो भूत्वा श्रैष्ठ्य ज्ञानाय चात्मनः ।।
समुपाजग्मुरमला महतीं ब्रह्मणः सभाम् ।। ८ ।।
तत्र तीर्थानि सर्वाणि समायातानि वीक्ष्य सः ।।
उत्तस्थौ सहितः सर्वैः सभासद्भिः पितामहः ।। ९ ।।
प्रणम्य सर्वतीर्थेभ्यः प्रबद्धकरसंपुटः ।।
तीर्थानि भगवानाह विस्मयोत्फुल्ललोचनः ।। 1.2.58.१० ।।
अद्य नः सद्म सकलं युष्माभिरतिपावितम् ।।
वयं च पाविता भूयो युष्माकं दर्शनादपि ।। ११ ।।
तीर्थानां दर्शनं श्रेयः स्पर्शनं स्नानमेव च ।।
कीर्तनं स्मरणं चापि न स्यात्पुण्यं विना परम् ।।१२।।
महापापान्विता रौद्रास्त्वपि ये स्युः सुनिष्ठुराः ।।
तेऽपि तीर्थैः प्रपूयंते किं पुनर्धर्मसंस्थिताः ।।१३।।
एवमुक्त्वा पुलस्त्यं स पुत्रमभ्यादिदेश ह ।।
शीघ्रमर्घं तीर्थहेतोः समानय यथार्चये ।। १४ ।।
।। पुलस्त्य उवाच ।।
असंख्यानीह तीर्थानि दृश्यंते पद्मसंभव ।।
यथा दिशसि मां तात अर्घमेकमुपानये ।। १५ ।।

धर्मप्रवचने श्लोको यत एष प्रगीयते ।। १६ ।।
भवेयुर्यद्यसंख्याता अर्घयोग्याः समर्चने ।।
ततस्तेषां वरिष्ठाय दातव्योऽर्घः किलैकतः ।। १७ ।।
।। ब्रह्मोवाच ।। ।।
साभिप्रायं साधु वत्स त्वया प्रोक्तमिदं वचः ।।
एवं कुरुष्वैकमर्घमानय त्वं सुशीघ्रतः ।। १८ ।।
।। नारद उवाच ।। ।।
ततः पुलस्त्यो वेगेन समानिन्येऽर्घमुत्तमम् ।।
तं च ब्रह्मा करे गृह्य तीर्थान्याहेति भारतीम् ।। १९ ।।
सर्वैर्भवद्भिः संहत्य मुख्यस्त्वेकः प्रकीर्त्यताम् ।।
तस्मै चार्घं प्रयच्छामि नैवं मामनयः स्पृशेत् ।। 1.2.58.२० ।।
।। तीर्थान्यूचुः ।। ।।
न वयं श्रेष्ठतां विद्मः कथंचन परस्परम् ।।
अस्माद्धेतोश्च संप्राप्ता ज्ञात्वा देहि त्वमेव तत् ।। २१ ।।
।। ब्रह्मोवाच ।। ।।
नाहं वेद्मि श्रेष्ठतां वः कथंचन नमोऽस्तु वः ।।
सर्वे चापारमाहात्म्यं स्वयं मे वक्तुमर्हथ ।। २२ ।।
यत्र गंगा गया काशी पुष्करं नैमिषं तथा ।।
कुरुक्षेत्रं तथा रेवा महीसागरसंगमः ।। २३ ।।
प्रभासाद्यानि शतशो यत्र नस्तत्र का मतिः ।। २४ ।।
।। नारद उवाच ।। ।।
एवमुक्ते पद्मभुवा कोपि नोवाच किंचन ।।
चिरेणेदं ततः प्राह महीसागरसंगमः ।। २५ ।।
ममैनमर्घं त्वं यच्छ चतुरानन शीघ्रतः ।।
यतः कोटिकलायां वा मम कोऽपि न पूर्यते ।। २६ ।।
यतश्चेन्द्रद्युम्नराज्ञा ताप्यमाना वसुंधरा ।।
सर्वतीर्थद्रवीभूता महीनामाभवन्नदी ।। २७ ।।
सा च सर्वाणि तीर्थानि संयुक्तानि मया सह ।।
सर्वतीर्थमयस्तस्मादस्मि ख्यातो जगत्त्रये ।। २८ ।।
गुहेन च महालिंगं कुमारेश्वरमीश्वरम् ।।
संस्थाप्य तीर्थमुख्यत्वं मम दत्तं महात्मना ।। २९ ।।
नारदेनापि मत्तीरे स्थानं संस्थाप्य शोभनम् ।।
सर्वेभ्यः पुण्यक्षेत्रेभ्यो दत्तं श्रैष्ठ्यं पुरा मम ।। 1.2.58.३० ।।

एवं त्रिभिर्हेतुवरैर्ममेवार्घः प्रदीयताम् ।।
गुणैकदेशेऽपि समं मम तीर्थं न वै परम् ।। ३१ ।।
इत्युक्ते वचने पार्थ तीर्थराजेन भारत।।
सर्वे नोचुः किंचनापि किं ब्रह्मा वक्ष्यतीति यत् ।। ३२ ।।
ततो ब्रह्मसुतो ज्येष्ठः श्वेतमाल्यानुलेपनः ।।
दक्षिणं बाहुमुद्धत्य धर्मो वचनमब्रवीत् ।। ३३ ।।।
अहो कष्टमिदं कूक्तं तीर्थराजेन मोहतः ।।
सन्तोऽपि न गुणा वाच्याः स्वयं सद्भिः स्वका यतः ।। ३४ ।।
स्वीयान्गुणान्स्वयं यो हि सम्पत्सु प्रक्षिपन्परान् ।।
ब्रवीति राजसस्त्वेष ह्यहंकारो जुगुप्सितः ।। ३५ ।।
तस्मादस्मादहंकारात्सत्स्वप्येषु गुणेषु च ।।
अप्रख्यातं ध्वस्तरूपमिदं तीर्थं भविष्यति ।।३६।।
स्तंभतीर्थमिति ख्यातं स्तम्भो गर्वः कृतो यतः ।।
स्तंभस्य हि फलं सद्यो ब्रह्मापि प्राप किं परः ।। ३७ ।।
इत्युक्ते धर्मदेवेन हाहेति रव उत्थितः ।।
ततः शीघ्रं समायातो योगीशोऽहं च पांडव ।। ३८ ।।
गुहस्ततो वचः प्राह धर्मदेवसमागमे ।।
अयुक्तमेतच्छापोऽयं दत्तो यद्धर्म धार्ष्ट्यतः ।। ३९ ।।
ब्रवीतु कोऽपि सर्वेषां तीर्थानां तेषु वर्तताम् ।।
यद्यैश्वर्यं नार्हतेसौ महीसागरसंगमः ।। 1.2.58.४० ।।
तिष्ठत्वात्मगुणो यच्च तीर्थराजेन वर्णितः ।।
तत्र को विगुणो नाम मिथ्यावादी यतो गुणः ।। ४१ ।।
अहो न युक्तं पालानां यदि तेऽप्यविमृश्य च ।।
एवमर्थान्करिष्यंति कं यांति शरणं प्रजाः ।। ४२ ।।
एवमुक्ते गुहेनाथ धर्मो वचनमब्रवीत् ।।
सत्यमेतद्यदर्होऽयं महीसागरसंगमः ।। ४३ ।।
मुख्यत्वं सर्वतीर्थानामर्घं चापि पितामहात् ।।
किंतु नात्मगुणा वाच्याः सतामेतत्सदा व्रतम् ।।
परोक्षेपि स्वप्रशंसा ब्रह्माणमपि चालयेत् ।। ४४ ।।
स्वप्रशंसां प्रकुर्वाणः पराक्षेपसमन्विताम् ।।
किं दिवः पृथिवीं पूर्वं ययातिर्न पपात ह ।।
यानि पूर्वं प्रमाणानि कृतानीशेन धीमता ।।४५।।
तानि सम्पालनीयानि तानि कोऽति क्रमेद्बुधः ।।

तव पित्रा समादिश्य यदर्थं स्थापिता वयम् ।। ४६ ।।
पालयामास एतच्च त्वं पालयितुमर्हसि ।।
ईश्वराः स्वप्रमाणेन भवंतो यदि कुर्वते ।। ४७ ।।
तदस्माभिरिदं युक्तं शासनं दिश्यतां परम् ।।
एवमुक्त्वा स्वीयमुद्रां मोक्तुकामं वृषं तदा ।।४८।।
अहं प्रस्तावमन्वीक्ष्य वाक्यमेतदुदैरयम्।।
नमो धर्माय महते विश्वधात्रे महात्मने ।। ४९।।
ब्रह्मविष्णुशिवैर्नित्यं पूजितायाघनाशिने ।।
यदि मुद्रां भवान्धर्म परित्यक्ष्यति कर्हिचित् ।। 1.2.58.५० ।।
तदस्माकं कुतो भावो मा विश्वं नाशय प्रभो ।।
योगीश्वरं गुहं चापि संमानयितुमर्हसि ।। ५१ ।।
शिववन्माननीयो हि यतः साक्षाच्छिवात्मजः ।।
त्वां च देवो गुहः स्वामी संमानयितुमर्हति।।५२।।
युवयोरैक्यभावेन सुखं जीवेदिदं जगत् ।।
त्वया प्रदत्तः शापोऽयं मा प्रत्याख्यातिलक्षणः।।५३।।
अनुग्रहश्च क्रियतां तीर्थराजस्य मानद।।५४।।
एवमुच्चरमाणं मां प्रशस्याहापि पद्मभूः।।
साध्वेतन्नारदेनोक्तं धर्मैतद्वचनं कुरु।।
सम्मानय गुहं चापि गुहः स्वामी यतो हि नः।।
एवमुक्ते ब्रह्मणा च धर्मो वचनमब्रवीत्।।५६।।
नमो गुहाय सिद्धाय किंकरायस्य ते वयम्।।
मदीयां स्कन्द विज्ञप्तिं नाथैनामवधारय ।।५७।।
स्तंभादेतन्महातीर्थमप्रसिद्धं भविष्यति ।।
स्तंभतीर्थमिति ख्यातं सुप्रसिद्धं भविष्यति ।।५८ ।।
स्तम्भतीर्थमिति ख्यातं सर्वतीर्थफलप्रदम् ।।
यश्चात्र स्नानदानानि प्रकरिष्यति मानवः ।। ५९ ।।
यथोक्तं च फलं तस्य स्फुटं सर्वं भविष्यति ।।
शनिवारे ह्यमावास्या भवेत्तस्याः फलं च यत् ।। 1.2.58.६० ।।
महीसागरयात्रायां भवेत्तच्चावधारय ।।
प्रभासदशयात्राभिः सप्तभिः पुष्करस्य च ।। ६१ ।।
अष्टाभिश्च प्रयागस्य तत्फलं प्रभविष्यति ।।
पंचभिः कुरुक्षेत्रस्य नकुलीशस्य च त्रिभिः ।। ६२ ।।
अर्बुदस्य च यत्षड्भिस्तत्फलं च भविष्यति ।।

वस्त्रापथस्य तिसृभिर्गंगायाः पंचभिश्च यत् ।। ६३ ।।
कूपोदर्याश्चतुर्भिश्च तत्फलं प्रभविष्यति ।।
काश्याः षड्भिस्तथा यत्स्याद्गोदावर्याश्च पंचभिः ।। ६४ ।।
तत्फलं स्तंभतीर्थे वै शनिदर्शे भविष्यति ।।
एवं दत्ते वरे स्कंदस्तदा प्रीतमनाभवत् ।। ६५ ।।
ब्रह्मापि स्तंभतीर्थाय ददावर्घं समाहितः ।।
ददौ च सर्वतीर्थानां श्रेष्ठत्वममितद्युतिः ।। ६६ ।।
तीर्थानि च गुहं नाथं सम्मान्य विससर्ज सः ।।
एवमेतत्पुरा वृत्तं गुप्तक्षेत्रस्य कारणम् ।। ६७ ।।
भूयश्चापि प्रसिद्ध्यर्थं प्रेषिताप्सरसोऽत्र मे ।।
विमोक्षिता ग्राहरूपात्त्वया ताश्च कुरूद्वह ।। ६८ ।।
यतो धर्मस्य सर्वस्य नानारूपैः प्रवर्ततः ।।
परित्राणाय भवतः कृष्णस्य च भवो भवे ।।६९।।
तदिदं वर्णितं तुभ्यं सर्वतीर्थफलं महत् ।।
श्रुत्वैतदादितः पूर्वं पुमान्पापैः प्रमुच्यते ।।1.2.58.७०।।
।। सूत उवाच ।। ।।
श्रुत्वेति विजयो धीमान्प्रशशंस सुविस्मितः ।।
विसृष्टो नारदाद्यैश्च द्वारकां प्रति जग्मिवान् ।।७१।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे महीसागरमाहात्म्यवर्णनेऽर्जुनतीर्थयात्रापरिसमाप्तिवर्णनंनामष्टपंचाशत्तमोऽध्यायः ।। ५८ ।।

।। शौनक उवाच ।। ।।
अत्यद्भुतमिदं सूत गुप्तक्षेत्रस्य पावनम् ।।
महन्माहात्म्यमतुलं कीर्तितं हर्षवर्धनम् ।। १ ।।
पुनर्यत्सिद्धलिंगस्य पूर्वं माहात्म्यकीर्तने ।।
इत्युक्तं यत्प्रसादेन सिद्धमातुस्तु सेत्स्यति ।। २ ।।
विजयोनाम पुण्यात्मा साहाय्याच्चंडिलस्य च ।।
को न्वसौ चंडिलोनाम विजयोनाम कस्तथा।। ।। ३ ।।
कथं च प्राप्तवान्सिद्धिं सिद्धमातुः प्रसादतः ।।
एतदाचक्ष्व तत्त्वेन श्रोतुं कौतूहलं हि नः ।।४।।
सतां चरित्रश्रवणे कौतुकं कस्य नो भवेत् ।। ।।
।। उग्रश्रवा उवाच ।। ।।
साधु पृष्टमिदं विप्रा दूरांतरितमप्युत ।। ५ ।।
श्रुता द्वैपायनमुखात्कथां वक्ष्यामि चात्र वः ।।
पुरा द्रुपदराजस्य पुत्रीमासाद्य पांडवाः ।। ६ ।।
धृतराष्ट्रमते पश्चादिंद्रप्रस्थं न्यवेशयन् ।।
रक्षिता वासुदेवेन कदाचित्तत्र पांडवाः ।।७।।
उपविष्टाः सभामध्ये कथाश्चक्रुः पृथग्विधाः ।।
देवर्षिपितृभूतानां राज्ञां चापि प्रकीर्तने ।। ८ ।।
क्रियमाणेऽथ तत्रागाद्भीमपुत्रो घटोत्कचः ।।
तं दृष्ट्वा भ्रातरः पंच वासुदेवश्च वीर्यवान् ।। ९ ।।
उत्थाय सहसा पीठादालिलिंगुर्मुदा युताः ।।
स च तान्प्रणतः प्रह्वो ववंदे भीमनंदनः ।। 1.2.59.१० ।।
साशिषं च ततो राज्ञा स्वोत्संग उपवेशितः ।।
आघ्राय स्नेहतो मूर्ध्नि प्रोक्तश्च जनसंसदि ।। ११ ।।
।। युधिष्ठिर उवाच ।। ।।
कुत आगम्यते पुत्र क्व चायं विहृतस्त्वया ।।
कालः क्वचित्सुखं राज्यं कुरुषे मातुलं तव ।। १२ ।।
कच्चिद्देवेषु विप्रेषु गोषु साधुषु सर्वदा ।।
हैडंबे नापकुरुषे प्रियमेतद्धरेश्च नः ।। १३ ।।
हेडंबस्य वनं सर्वं तस्य ये सैन्यराक्षसाः ।।
पाल्यमानास्त्वया साधो वर्धंते जनक्षेमकाः ।। १४ ।।
कच्चिन्नंदति ते माता भृशं नः प्रियकारिणी ।।
कन्यैव या पुरा भीमं त्यक्त्वा मानं पतिं श्रिता ।। १५ ।।

इति पृष्टो धर्मराज्ञा स्मयन्हैडंबिरब्रवीत् ।।
हते तस्मिन्दुराचारे मातुलेऽस्मि नियोजितः ।। १६ ।।
तद्राज्यं शासने स्थाप्य दुष्टान्निघ्नंश्चराम्यहम् ।।
माता कुशलिनी देवी तपो दिव्यमुपाश्रिता ।। १७ ।।
मामुवाच सदा पुत्र पितॄणां भक्तिकृद्भव ।।
सोऽहं मातुर्वचः श्रुत्वा मेरुपादात्समागतः ।। १८ ।।
प्रणामायैव भवतां भक्तिप्रह्वेण चेतसा ।।
आत्मानं च महत्यर्थे कस्मिंश्चित्तु नियोजितम् ।।
भवद्भिरहमिच्छामि फलं यस्मादिदं महत् ।। १९ ।।
यदाज्ञापालनं पुत्रः पितॄणां सर्वदा चरेत् ।।
अथोर्द्ध्वलोकान्स जयेदिह जायेत कीर्तिमान् ।। 1.2.59.२० ।।
।। सूत उवाच ।। ।।
इत्युक्तवंतं तं राजा परिरभ्य पुनःपुनः ।।
उवाच धर्मराट् पुत्रमानंदाश्रुः सगद्गदम् ।। २१ ।।
त्वमेव नो भक्तिकारी सहायश्चापि वर्तसे ।। २२ ।।
एतदर्थं च हैडंबे पुत्रानिच्छंति साधवः ।।
इहामुत्र तारयंते तादृशाश्चापि पुत्रकाः ।। २३ ।।
अवश्यं यादृशी माता तादृशस्तनयो भवेत् ।।
माता च ते भक्तिमती दृढं नस्त्वं च तादृशः ।। २४ ।।
अहो सुदुष्करं देवी कुरुते मे प्रिया वधूः ।।
या भर्तृश्रियमुल्लंघ्य तप एव समाश्रिता ।। २५ ।।
नूनं कामेन भोगैर्वा कृत्यं वध्वा न मे मनाक् ।।
या पुत्रसुखमन्वीक्ष्य परलोकार्थमाश्रिता ।। २६ ।।
दुष्कुलीनापि या भक्ता सूतेऽपत्यं च भक्तिमत् ।।
कुलीनमेव तन्मन्ये ममेदं मतमुत्तमम् ।।२७।।
एवं बहूनि वाक्यानि तानि तानि वदन्नृपः ।।
धर्मराजः समाभाष्य केशवं वाक्यमब्रवीत् ।। २८ ।।
पुंडरीकाक्ष जानासि यथा भीमादभूदयम् ।।
जातमात्रस्तु यश्चासीद्यौवनस्थो महाबलः ।। २९ ।।
अष्टानां देवयोनीनां यतो जन्म च यौवनम् ।।
सद्य एव भवेत्तस्मात्सद्योऽस्यासीच्च यौवनम् ।। ।। 1.2.59.३० ।।
तदस्योचितदारार्थे सदा चिंतास्ति कृष्ण मे ।।
उचितं बत हैडंबेः क्व कलत्रं करोम्यहम् ।। ३१ ।।

तद्भवान्कृष्णसर्वज्ञ त्रिलोकीमपि वेत्सि च ।।
हैडंबेरुचिता दारान्वक्तुमर्हसि यादव ।। ३२ ।।
।। सूत उवाच ।। ।।
एवमुक्तो धर्मराज्ञा क्षणं ध्यात्वा जनार्दनः ।।
धर्मराजमिदं वाक्यं पदांतरितमब्रवीत् ।। ३३ ।।
अस्ति राजन्प्रवक्ष्यामि दारानस्योचितां शुभाम् ।।
सांप्रतं संस्थिता रम्ये प्राग्ज्योतिषपुरे वरे ।। ३४ ।।
सा च पुत्री मुरोः पार्थ दैत्यस्याद्भुतकर्मणः ।।
योऽसौ नरकदैत्यस्य प्राणतुल्यः सखाऽभवत् ।। ३५ ।।
स च मे निहतो घोरः पाशदुर्गसमन्वितः ।।
नरकश्च दुराचारस्त्वमेतद्वेत्सि सर्वशः ।। ३६ ।।
ततो हते मुरौ दैत्ये मया तस्य सुताव्रजत् ।।
योद्धुं मामतिवीर्यत्वाद्घोरा कामकटंकटा ।। ३७ ।।
तां ततोऽहं महायुद्धे खड्गखेटकधारिणीम् ।।
अयोधयं महाबाणैः सुशार्ङ्गधनुषश्च्युतैः ।। ३८ ।।
खड्गेन चिच्छेद बाणान्मम सा च मुरोः सुता ।।
समागम्य च खड्गेन गरुडं मूर्ध्न्यताडयत् ।। ३९ ।।
स च मोहसमाविष्टो गरुडोऽभूदचेतनः ।।
ततस्तस्या वधार्थाय मया चक्रं समुद्यतम् ।। 1.2.59.४० ।।
चक्रं समुद्यतं दृष्ट्वा मया तस्मिन्रणाजिरे ।।
कामाख्या नाम मां देवी पुरः स्थित्वा वचोऽब्रवीत् ।। ४१ ।।
नैनां हंतुं भवानर्हो रक्षैतां पुरुषोत्तम ।।
अजेयत्वं मया ह्यस्या दत्तं खड्गं च खेटकम् ।। ४२ ।।
बुद्धिरप्रतिमा चापि शक्तिश्च परमा रणे ।।
ततस्त्वया त्रिरात्रेऽपि न जितासीन्मुरोः सुता ।। ४३ ।।
एवमुक्ते तदा देवीं वचनं चाहमब्रवम् ।।
अयमेष निवृत्तोऽस्मि वारयैनां च त्वं शुभे ।। ४४ ।।
ततश्चालिंग्य तां भक्तां कामाख्या वाक्यमब्रवीत् ।।
भद्रे रणान्निवर्तस्व नायं हंतुं कथंचन ।।४५।।
शक्यः केनापि समरे माधवो रणदुर्जयः ।।
नाभूदस्ति भविष्यो वा य एनं संयुगे जयेत् ।।४६।।
अपि वा त्र्यंबकः पुत्रि नैनं शक्तः कुतोऽन्यकः ।।
तस्मादेनं नमस्कृत्य भाविनं श्वशुरं शुभे ।। ४७ ।।

रणादस्मान्निवर्तस्व तवोचितमिदं स्फुटम् ।।
अस्य भ्रातुर्हि भीमस्य स्नुषा त्वं च भविष्यसि ।। ४८ ।।
तस्मात्त्वं श्वशुरं भद्रे सम्मानय जनार्दनम् ।।
न च शोकस्त्वया कार्यः पितरं प्रति पंडिते ।। ४९ ।।
जातस्य हि ध्रुवो मृत्युर्ध्रुव जन्म मृतस्य च ।।
बहवश्चाऽस्य वेत्तारो वद केनापि वार्यते ।। 1.2.59.५० ।।
ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यविद्यान्पुरुषान्नृपांश्च ।।
कान्मृत्युरेको न पतेत काले परावरज्ञोऽत्र न मुह्यते क्वचित् ।। ५१ ।।
श्लाघ्य एव हि ते मृत्युः पितुरस्माज्जनार्द्दनात् ।।
सर्वपातकनिर्मुक्तो गतोऽसौ धाम वैष्णवम् ।। ५२ ।।
एवं कामाख्यया प्रोक्ता सा च कामकटंकटा ।।
त्यक्त्वा क्रोधं च संवृत्य गात्राणि प्रणता च माम् ।। ५३ ।।
तामहं साशिषं चापि प्रावोचं भरतर्षभ ।।
अस्मिन्नेव पुरे तिष्ठ भगदत्तप्रपूजिता ।। ५४ ।।
मया देव्या पृथिव्या च भगदत्तः कृतो नृपः ।।
स ते पूजां बहुविधां करिष्यति स्वसुर्यथा ।। ५५ ।।
वसंती चात्र तं वीरं हैडिंबं पतिमाप्स्यसि ।।
एवमाश्वास्य तां देवीं मौर्वीं चाहं व्यसर्जयम् ।। ५६ ।।
सा स्थिता च पुरे तत्र गतोऽहं शक्रसद्म च ।।
ततो द्वारवतीं प्राप्य त्वया सह समागतः ।। ५७ ।।
एवमेषोचिता दारा हैडंबेर्विद्यते शुभा ।।
कामाख्ये च रणे घोरा या विद्युदिव भासते ।। ५८ ।।
न च रूपं वर्णितं मे श्वशुरस्योचितं यतः ।।
साधोर्हि नैतदुचितं सर्वस्त्रीणां प्रवर्णनम् ।। ५९ ।।
पुनरेकश्च समयः कृतस्तं शृणु यस्तया ।।
यो मां निरुत्तरां प्रश्ने कृत्वैव विजयेत्पुमान् ।। 1.2.59.६० ।।
यो मे प्रतिबलश्चापि स मे भर्ता भविष्यति ।।
एवं च समयं श्रुत्वा बहवो दैत्यराक्षसाः ।। ६१ ।।
तस्या जयार्थमगमंस्तेऽपि जित्वा हतास्तया ।।
यो य एनां गतः पूर्वं न स भूयो न्यवर्तत ।। ६२ ।।
वह्नेरिव प्रभां दीप्तां पतंगानां समुच्चयः ।।
एवमेतादृशीं मौर्वीं जेतुमुत्सहते यदि ।। ६३ ।।
घटोत्कचो महावीर्यो भार्यास्य नियतं भवेत् ।। ६४ ।।

।। युधिष्ठिर उवाच ।। ।।
अलं सर्वगुणैस्तस्या यस्यास्त्वेको गुणो महान् ।।
क्रियते किं हि क्षीरेण यदि तद्विषमिश्रितम् ।। ६५ ।।
प्राणाधिकं भैमसेनिं कथं केवलसाहसात् ।।
क्षिपेयं तव वाक्यानां शुद्धानां चाथ कोविदम् ।। ६६ ।।
अन्या अपि स्त्रियः संति देशे देशे जनार्दन ।।
बह्व्यस्तासां वरां कांचिद्योषितं वक्तुमर्हसि ।।६७।।
।। भीम उवाच ।। ।।
सम्यगुक्तं केशवेन वाक्यं बह्वर्थमुत्तमम् ।।
राज्ञा पुनः स्नेहवशाद्यदुक्तं तन्न भाति मे ।। ६८ ।।
कार्ये दुःसाध्य एव स्यात्क्षत्रियस्य पराक्रमः ।।
करींद्रस्येव यूथेषु गजानां न मृगेषु च ।। ६९ ।।
आत्मा प्रख्यातिमानेयः सर्वथा वीरपुंगवैः ।।
सा च ख्यातिः कथं जायेद्दुःसाध्यकरणादृते ।। 1.2.59.७० ।।
न ह्यात्मवशगं पार्थ हैडंबेरस्य रक्षणम् ।।
येन दत्तस्त्वयं धात्रा स एनं पालयिष्यति ।। ७१ ।।
सर्वथोच्चपदारोहे यत्नः कार्यो विजानता ।।
तन्न सिध्यति चेद्दैवान्नासौ दोषो विजानतः ।। ७२ ।।
यथा देवव्रतस्त्वेको जह्रे काशिसुताः पुरा ।।
तथैक एव हैडंबिर्मौर्वीं प्राप्नोतु मा चिरम् ।। ७३ ।। ।।
।। अर्जुन उवाच ।। ।।
केवलं पौरुषपरं भीमेनोक्तमिदं वचः ।।
अबलं दैवहेतुत्वात्प्रबलं प्रतिभाति मे ।। ७४ ।।
न मृषा हि वचो ब्रूते कामाख्या या पुराऽब्रवीत् ।।
भीमसेनसुतः पाणिं तव भद्रे ग्रहीष्यति ।। ७५ ।।
अनेन हेतुना यातु शीघ्रं तत्र घटोत्कचः ।।
इति मे रोचते कृष्ण तव किं ब्रूहि रोचते ।। ७६ ।।
।। कृष्ण उवाच ।। ।।
रोचते मे वचस्तुभ्यं भीमस्य च महात्मनः ।।
न हि तुल्यो भैमसेनेर्बुद्धौ वीर्ये च कश्चन ।। ७७ ।।
अंतरात्मा च मे वेत्ति प्राप्तामेव मुरोः सुताम् ।।
तच्छीघ्रं यातु हैडंबिस्त्वं च किं पुत्र मन्यसे ।। ७८ ।।
।। घटोत्कच उवाच ।। ।।

न हि न्याय्याः स्वका वक्तुं पूज्यानामग्रतो गुणाः ।।
प्रवृत्ता एव भासंते सद्गुणाश्च रवेः कराः ।। ७९ ।।
सर्वथा तत्करिष्यामि पितरो येन मेऽमलाः ।।
लज्जिष्यंति न संसत्सु मया पुत्रेण पांडवाः।।1.2.59.८०।।
एवमुक्त्वा महाबाहुरुत्थाय प्रणनाम तान् ।।
जयाशीर्भिश्च पितृभिर्वर्द्धितो गंतुमैच्छत ।।८१।।
तं गतुकाममाहेदमभिनंद्य जनार्दनः ।।
कथाकथनकाले मां स्मरेथास्त्वं जयावहम् ।।८२।।
यथा बुद्धिं सुदुर्भेद्यां वर्धयामि बलं च ते ।।
इत्युक्त्वालिंग्य तं कृष्णो व्यससर्जत साशिषम् ।। ८३ ।।
ततो हिडंबातनयो महौजाः सूर्याक्षकालाक्षमहोदरानुगः ।।
वियत्पथं प्राप्य जगाम तत्पुरं प्राग्ज्योतिषं नाम दिनव्यपाये ।। ८४ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बर्बरिकोपाख्याने घटोत्कचस्य प्राग्ज्योतिषपुरं प्रति गमनवर्णनंनामैकोनषष्टितमोऽध्यायः ।। ५९ ।।

।। सूत उवाच ।। ।।
सोऽथ प्राग्ज्योतिषाद्बाह्ये महोपवनसंस्थितम् ।।
सहस्रभूमिकं गेहमपश्यत हिरण्मयम् ।। १ ।।
वेणुवीणामृदंगानां निःस्वनैः परिपूरितम् ।।
दशसाहस्रसंख्याभिश्चेटीभिः परिपूरितम् ।। २ ।।
आयाद्भिः प्रतियाद्भिश्च भगदत्तस्य किंकरैः ।।
किमिच्छन्तीति भगिनी पृच्छकैरभिपूरितम् ।। ३ ।।
तदासाद्य स हैडंबिर्मेरोः शिखरवद्ग्रहम् ।।
द्वारि स्थितां संददर्श कर्णप्रावरणां सखीम् ।। ४ ।।
तामाह ललितं वीरो भद्रे सा क्व मुरोः सुता ।।
कामुको द्रष्टुमिच्छामि दूरदेशागतोऽतिथिः ।। ५ ।।
।। कर्णप्रावरणोवाच ।। ।।
किं तवास्ति महाबाहो तया मौर्व्या प्रयोजनम् ।।
कोटिशो निहताः पूर्वं तया कामुक कामुकाः ।। ६ ।।
तव रूपमहं दृष्ट्वा घटहासं सदोत्कचम् ।।
प्रणम्य पादयोर्वीर स्थिता ते वचनंकरी ।। ७ ।।
तन्मया सह मोदस्व भुंक्ष्व भोगांश्च कामुक ।।
दास्याम्यनुचराणां ते त्रयाणां च प्रियात्रयम् ।। ८ ।।
।। घटोत्कच उवाच ।। ।।
कल्याणि किंवदंती ते प्रमुक्ता स्वोचिता शुभे ।।
पुनर्नैतद्वचस्तुभ्यं विशते मम चेतसि ।। ९ ।।
वामः कामो यतो भद्रे यस्मिन्नुपनिबद्ध्यते ।।
स चात्र नैव बध्नाति तद्वयं कि प्रकुर्महे ।। 1.2.60.१० ।।
अद्य ते स्वामिनी दृष्टा जिता वा क्रीडते मया ।।
तया वा विजितो यास्ये पूर्वेषां कामिनां गतिम् ।। ११ ।।
कर्णप्रावरणे तस्माच्छीघ्रमेव निवेद्यताम् ।।
यथा दर्शनमात्रेण पूजयंत्यतिथिं खलु ।। १२ ।।
इति भैमेर्वचः श्रुत्वा प्रस्खलंती निशाचरी ।।
प्रासादशिखरस्थां तां मौर्वीमेवं वचोवदत् ।। १३ ।।
देवि कोऽपि युवा श्रीमांस्त्रैलोक्येष्वमितप्रभः ।।
कामातिथिस्तव द्वारि वर्तते दिश तत्परम् ।। १४ ।।
।। कामकटंकटोवाच ।। ।।
मुच्यतां शीघ्रमेवासौ किमर्थं वा विलंबसे ।।

कदाचिद्देवसंगत्या समयो मेऽभिपूर्यते ।। १५ ।।
इत्युक्तवचनाच्चेटी प्राप्यावोचद्घटोत्कचम् ।।
व्रज शीघ्रं कामुक त्वं तस्या मृत्योश्च सन्निधौ ।। १६ ।।
इत्युक्तः स प्रहस्यैव तत्रोत्सृज्य स्वकानुगान् ।।
प्रविवेश गृहं भैमिः सिंहो मेरुगुहामिव ।। १७ ।।
स पश्यञ्छुकसंघातान्पारावतगणांस्तथा ।।
सारिकाश्च मदोन्मत्ताश्चेटीस्तां चाप्यपश्यत ।। १८ ।।
रूपेण वयसः चैव रतेरपि रतिंकरीम् ।।
आंदोलकसुखासीनां सर्वाभरणभूषिताम् ।। १९ ।।
तां विद्युतमिवोन्नद्धां दृष्ट्वा भैमिरचिंतयत ।।
अहो कृष्णेन पित्रा मे निर्दिष्टेयं ममोचिता ।। 1.2.60.२० ।।
न्याय्यमेतत्कृते पूर्वं नष्टा यत्कामिनां गणाः ।।
शरीरक्षयपर्याप्तं क्षीयते यदि कामिनाम् ।। २१ ।।
कामिनीनां कृते येषां क्षीयते गणनात्र का ।।
एवं बहुविधं कामी चिंतयन्नाह भीमभूः ।। २२ ।।
निष्ठुरे वज्रहृदये प्राप्तोऽहमतिथिस्तव ।।
उचितां तत्सतां पूजां कुरु या ते हृदि स्थिता ।। २३ ।।
इति हैडंबिवचनं श्रुत्वा कामकटंकटा ।।
विस्मिताभूत्तस्य रूपात्स्वं निनिंद च बालिशम् ।। २४ ।।
धिगहं यन्मया पूर्वं समयः स कृतोऽभवत् ।।
न कृतोऽभूद्यदि पुरा अभविष्यदसौ पतिः ।। २५ ।।
इति संचिन्तयन्ती सा भैमिं वचनमब्रवीत् ।।
वृथा त्वमागतो भद्र जीवन्याहि पुनः सुखी ।। २६ ।।
अथ कामयसे मां त्वं तत्कथां शीघ्रमुच्चर ।।
कथामाभाष्य यदि मां सन्देहे पातयिष्यसि ।।
ततोऽहं वशगा जाता हतो वा स्वप्स्यसे मया ।। २७ ।।
।। सूत उवाच ।। ।।
इत्युक्तवचनामेतां नेत्रोपांतेन वीक्ष्य सः।।२८।।
स्मृत्वा चराचरगुरुं कृष्णमारब्धवान्कथाम् ।।
कस्यांचिदभवत्पत्न्यां युवा कोऽप्यजितेद्रियः ।।२९।।
तस्य चैका सुता जज्ञे भार्या तस्य मृताऽभवत् ।।
ततो बालकिकां पुत्रीं ररक्ष च पुपोष च ।। 1.2.60.३० ।।
सा यदाभूद्यौवनगा व्यंजितावयवा शुभा ।।

प्रोल्लसत्कुचमध्यांगी प्रोल्लसन्मुखपंकजा ।। ३१ ।।
तदास्य कामलुलितमालानं प्रजहौ मनः ।।
प्रोवाच तां च तनयां समालिंग्य दुराशयः ।। ३२ ।।
प्रातिवेश्मकपुत्री त्वं मयानीयात्र पोषिता ।।
भार्यार्थं सुचिरं कालं तत्कार्यं साधय प्रिये ।। ३३ ।।
इत्युक्ता सा च मेने च तत्तथैव वचस्तदा ।।
पतित्वेन च भेजे तं भार्यात्वेन स तां तथा ।। ३४ ।।
ततस्तस्यां सुता जज्ञे तस्मान्मदनरासभात् ।।
वद सा तस्य भवति किं दौहित्री सुताऽथवा ।।
एनं प्रश्नं मम ब्रूहि शीघ्रं चेच्छक्तिरस्ति ते ।। ३५ ।। ।।
।। सूत उवाच ।। ।।
इति प्रश्नं सा च श्रुत्वा चिंतयद्बहुधा हृदि ।। ३६ ।।
न च पश्यति निर्द्धारं प्रश्नस्यास्य कथंचन ।।
ततः प्रश्नेन विजिता स्वां शक्तिं समुपाददे ।। ३७ ।।
अताडयद्रुक्मरज्जुं कराभ्यां दोलकस्य च ।।
ततो रक्षांसि निष्पेतुः कोटिशो भीषणान्यति ।। ३८ ।।
सिंहव्याघ्रवराहाश्च महिषाश्चित्रका मृगाः ।।
समीक्ष्य तानसंख्येयान्खादितुं धावतो रुषा ।। ३९ ।।
अवादयन्नखौ भैमिः कनिष्ठांगुष्ठजौ हसन् ।।
ततो विनिःसृतास्तत्र द्विगुणा राक्षसादयः ।। 1.2.60.४० ।।
तैर्मौर्वीनिर्मिताः सर्वे क्षणादेव स्म भक्षिताः ।।
विजितायां स्वशक्तौ च बलशक्तिमथाददे ।। ४१ ।।
उत्थाय सहसा दोलात्खड्गमादातुमैच्छत ।।
उत्तिष्ठंतीं च तां भैमिरनुसृत्य जवादिव ।। ४२ ।।
केशेष्वादाय सव्येन पाणिनाऽपातयद्भुवि ।।
ततः कंठे सव्यपादं दत्त्वादाय च कर्तिकाम् ।।४३।।
दक्षिणेन करेणास्याश्छेत्तुमैच्छत नासिकाम्।।
विस्फुरंती ततो मौर्वी मंदमाह घटोत्कचम् ।।४४।।
प्रश्नेन शक्त्या च बलेन नाथ त्रिधा त्वयाहं विजिता नमस्ते ।।
तन्मुंच मां कर्मकरी तवास्मि समादिश त्वं प्रकरोमि तच्च ।। ४५ ।।
।। घटोत्कच उवाच ।। ।।
यद्येवं तर्हि मुक्तासि भूयो दर्शय यद्बलम् ।।
एवमुक्त्वा मुमोचैनां मुक्ता चाह प्रणम्य सा ।। ४६ ।।

जानामि त्वां महाबाहो वीरं शक्तिमतां वरम् ।।
सर्वराक्षसभर्तारं त्रैलोक्येऽमितविक्रमम् ।। ४७ ।।
गुह्यकाधिपतिस्त्वं हि कालनाभ इति स्मृतः ।।
षष्टिकोटिपतिर्जातो यक्षरक्षाकृते भुवि ।। ४८ ।।
इति मां प्राह कामाख्या सर्वं तत्संस्मराम्यहम् ।।
इदं गेहं सानुगं मे दत्तं मयात्मना तव ।। ४९ ।।
समादिश प्राणनाथ कमादेशं करोमि ते ।।
।। घटोत्कच उवाच ।। ।।
प्रच्छन्नस्तस्य घटते न विवाहः कथंचन ।। 1.2.60.५० ।।
मोर्वि यस्य हि वर्तंते पितरौ बांधवास्तथा ।।
तन्मां शीघ्रं वह शुभे शक्रप्रस्थाय संप्रति ।। ५१ ।।
अयं कुलक्रमोऽस्माकं यद्भार्या पतिमुद्वहेत् ।।
तत्रानुज्ञां समासाद्य परिणेष्यामि त्वामहम् ।। ५२ ।।
भगदत्तमथो नाथं ततो मौर्वी न्यवेदयत् ।।
समादाय बहुद्रव्यं विससर्जाथ भ्रातरम् ।। ५३ ।।
ततः पृष्ठिं समारोप्य घटोत्कचमनिंदिता ।।
नानाद्रव्यपरीवारा शक्रप्रस्थं समाव्रजत् ।। ५४ ।।
ततोऽसौ वासुदेवेन पांडवैश्चाभिनंदितः ।।
शुभे लग्ने पाणिमस्या जगृहे भीमनंदनः ।। ५५ ।।
कुरूणां राक्षसानां च प्रोक्तोत्तमविधानतः ।।
उद्वाह्य तां तद्धनैश्च तर्पयामास पांडवान् ।। ५६ ।।
कुंती च द्रौपदी चोभे मुमुदाते नितांततः ।।
मंगलान्यस्य चक्राते मौर्व्याश्च धन तर्पिते ।। ५७ ।।
ततो विवाहे निर्वृत्ते प्रतिपूज्य घटोत्कचम् ।।
भार्यया सहितं राजा स्वराज्याय समादिशत् ।। ५८ ।।
मौर्व्याऽऽज्ञां शिरसा गृह्य हैडंबिर्भार्ययान्वितः ।।
शुभं हिडम्बस्य वने स्वराज्यं समुपाव्रजत् ।।५९।।
ततो राक्षसयोषाभिर्वीरकांस्यैः प्रवर्धितः।।
महोत्सवेन महता स्वराज्ये प्रमुमोद सः ।।1.2.60.६०।।
ततो वनेषु चित्रेषु निम्नगापुलिनेषु च ।।
रेमे सह तया भैमिर्मंदोदर्येव रावणः ।। ६१ ।।
एवं विक्रीडतस्तस्य गर्भो जज्ञे महाद्युतेः।।
हेडंबै राक्षसव्याघ्राद्बालसूर्यसमप्रभः ।। ६२ ।।

स जातमात्रो ववृधे क्षणाद्यौवनगोऽभवत् ।।
नीलमेघचयप्रख्यो घटास्यो दीर्घलोचनः ।। ६३ ।।
ऊर्ध्वकेशश्चोर्ध्वरोमा पितरौ प्रणतोऽब्रवीत् ।।
प्रणमामि युवां चोभौ जातस्य पितरौ गुरू ।। ६४ ।।
भवतोर्हि प्रियं कृत्वा अनृणः स्यां सदा ह्यहम् ।।
भवद्भ्यां दत्तमिच्छामि अभिधानं यथात्मनः।।६५।।
अतः परं तु यच्छ्रेयं कर्तव्यं प्रोन्नतिप्रदम्।।
ततो भेमिस्तमालिंग्य पुत्रं वचनमब्रवीत् ।।६६।।
बर्बराकारकेशत्वाद्बर्बरीकाभिधो भवान् ।।
भविष्यति महाबाहो कुलस्यानन्दवर्धनः ।। ६७ ।।
श्रेयश्च ते यत्परमं दृढं च तत्कीर्त्यते बहुधा विप्र मुख्यैः ।।
प्रक्ष्यावहे तद्यदुवंशनाथं गत्वा पुरीं द्वारकां वासुदेवम् ।। ६८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे बर्बरीकोत्पत्तिवर्णनंनाम षष्टितमोऽध्यायः ।। ६० ।।

।। सूत उवाच ।। ।।
ततो घटोत्कचो मुक्त्वा तत्र कामकटंकटाम्।।
पुत्रेणानुगतो धीमान्वियता द्वारकां ययौ ।। १ ।।
आगच्छन्तं च तंदृष्ट्वा राक्षसं राक्षसानुगम् ।।
द्वारकावासिनो योधाश्चक्रुरत्युल्बणं रवम् ।। २ ।।
ग्रामे ग्रामे सुसंनद्धा नवलक्षमिता रथाः ।।
राक्षसौ द्वौ समायातौ पात्येतां विशिखैरिति ।। ३ ।।
तान्गृहीतायुधान्दृष्ट्वा यदुवीरान्घटोत्कचः ।।
प्रगृह्य विपुलं बाहुं जगौ तारस्वरेण सः ।। ४ ।।
राक्षसं वित्त मां वीरा भीमपुत्रं घटोत्कचम् ।।
सुप्रियं वासुदेवस्य प्रणामार्थमुपागतम् ।। ५ ।।
निवेदयत मां प्राप्तं यादवेन्द्राय सात्मजम् ।।
इति तस्य वचः श्रुत्वा ते कृष्णाय न्यवेदयन् ।। ६ ।।
आह देवः सभास्थश्च शीघ्रमत्राव्रजत्वसौ ।।
ततः प्रवेशयामासुर्द्वारकां ते घटोत्कचम् ।। ७ ।।
सपुत्रः सोऽपि रम्याणि वनान्युपवनानि च ।।
क्रीडाशैलांश्च हर्म्याणि संपश्यन्नागतः सभाम् ।।८।।
स तत्र उग्रसेनं च वसुदेवं च सात्यकिम् ।।
अक्रूररामप्रमुखान्ववन्दे कृष्णमेव च ।। ९ ।।
तं पादयोर्निपतितं समालिंग्य सहात्मजम् ।।
साशिषं स्वसमीपस्थमुपवेश्येदमब्रवीत् ।। 1.2.61.१० ।।
पुत्र राक्षसशार्दूल कुरूणां कुलवर्धन ।।
कुशलं सर्वतः कच्चित्किमर्थस्ते समागमः ।। ।। ११ ।।
।। घटोत्कच उवाच ।। ।।
देव युष्मत्प्रसादेन सर्वतः कुशलं मम ।।
श्रूयतां कारणं स्वामिन्यदर्थमहमागतः ।। १२ ।।
देवोपदिष्ट भार्यायां जातोऽयं तनयो मम ।।
स च प्रश्नं वक्ष्यति त्वां श्रूयतामागतस्त्वतः ।। १३ ।।
।। श्रीकृष्ण उवाच ।। ।।
वत्स मौर्वेय ब्रूहि त्वं सर्वं पृच्छ यदिच्छसि ।।
यथा घटोत्कचो मह्यं सुप्रियश्च तथा भवान् ।। १४ ।।
।। बर्बरीक उवाच ।। ।।
प्रणम्य त्वामादिदेवं मनोबुद्धिसमाधिभिः ।।

प्रक्ष्यामि केन श्रेयः स्याज्जंतोर्जातस्य माधव ।। १५ ।।
केचिच्छ्रेयो धर्ममाहुरैश्वर्यं त्यागभोजनम् ।।
केचिद्दमं तपो द्रव्यं भोगान्मुक्तिं च केचन ।। १६ ।।
तदेवं शतसंख्येषु श्रेयस्सु पुरुषोत्तम ।।
मम चैवं कुलस्यास्य श्रेयो यद्ब्रूहि निश्चितम् ।। १७ ।।
।। श्रीकृष्ण उवाच ।। ।।
वत्स पृथक्पृथक्प्रोक्तं वर्णानां श्रेय उत्तमम् ।।
ब्राह्मणानां तपो मूलं दमोऽध्ययनमेव च ।। १८ ।।
धर्मप्रकटनं चापि श्रेय उक्तं मनीषिभिः ।।
बलं साध्यं पूर्व मेव क्षत्रियाणां प्रकीर्तितम् ।। १९ ।।
दुष्टानां शासनं चापि साधूनां परिपालनम् ।।
पाशुपाल्यं च वैश्यानां कृषिर्विज्ञानमेव च ।। 1.2.61.२० ।।
शूद्रस्य द्विजशुश्रूषा तया जीवन्वणिग्भवेत् ।।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ।। २१ ।।
भार्यारतिर्भृत्यपोष्टा शुचिः श्रद्धा परायणः ।।
नमस्कारेण मन्त्रेण पंचयज्ञान्न हापयेत् ।। २२ ।।
तद्भवान्क्षत्रियकुले जातोऽसि कुरु तच्छृणु ।।
बलं साधय पूर्वं त्वमतुलं तेन शिक्षय ।। २३ ।।
दुष्टान्पालय साधूंश्च स्वर्गमेवमवाप्स्यसि ।।
बलं च लभ्यते पुत्र देवीनां सुप्रसादतः ।। २४ ।।
तद्भवान्बलप्राप्त्यर्थं देव्याराधनमाचर ।। २५ ।।
।। बर्बरीक उवाच ।। ।।
कस्मिन्क्षेत्रे च कां देवीं कथमाराधयाम्यहम् ।।
एतत्प्रसादप्रवणं मनः कृत्वा निवेदय ।। २६ ।।
।। सूत उवाच ।। ।।
इति पृष्टः क्षणं ध्यात्वा प्राह दामोदरो विभुः ।।
वत्स क्षेत्रं प्रवक्ष्यामि यत्र तप्स्यसि तत्तपः ।।
गुप्तक्षेत्रमिति ख्यातं महीसागरसंगमे ।। २७ ।।
तत्र त्रिभुवने याश्च संति देव्यः पृथग्विधाः ।।
नारदेन समानीतास्ताश्चैक्यं सुमहात्मना ।। २८ ।।
चतस्रस्तस्य दिग्देव्यो नव दुर्गाश्च संति याः ।।
समाराधय ता गत्वा तासामैक्यं हि दुर्लभम् ।। २९ ।।
नित्यं पूजय ताः पुत्र पुष्पधूपविलेपनैः ।।

स्तुतिभिश्चोपहारैश्च यथा तुष्यति तास्तव ।। 1.2.61.३० ।।
तुष्टासु देवीषु बलं धनं च कीर्तिश्च पुत्राः सुभगाश्च दाराः ।।
स्वर्गस्तथा मुक्तिपदं च सत्सुखं न दुर्लभं सत्यमेतत्तवोक्तम् ।। ३१ ।।
।। सूत उवाच ।। ।।
एवमुक्त्वा बर्बरीकं कृष्णः प्राह घटोत्कचम् ।।
घटोत्कचार्य पुत्रस्ते दृढं सुहृदयो ह्यसौ ।। ३२ ।।
तस्मात्सुहृदयेत्येवं दत्तं नाम मया द्विकम् ।।
एवमुक्त्वा समालिंग्य संतर्ज्य विविधैर्धनैः ।। ३३ ।।
गुप्तक्षेत्राय भगवान्बर्बरीकं समादिशत् ।।
सोऽथ कृष्णं नमस्कृत्य पितरं यादवांश्च तान् ।। ३४ ।।
अनुज्ञाप्य च तान्सर्वान्गुप्तक्षेत्रं समाव्रजत् ।।
घटोत्कचोऽपि कृष्णेन विसृष्टः स्ववनं ययौ ।। ३५ ।।
स्मरन्पुत्रगुणान्पत्न्या स्वराज्यं समपालयत् ।।
ततः सुहृदयो धीमान्दग्धस्थल्यां कृताश्रमः ।। ३६ ।।
त्रिकालं पूजयामास देवीः कर्मसमाधिभिः ।।
नित्यं पुष्पैश्च धूपैश्च उपहारैः पृथग्विधैः ।। ३७ ।।
तस्याराधयतो देव्यस्तुतुषुर्हायनैस्त्रिभिः ।।
ततः प्रत्यक्षतो भूत्वा बलात्तस्य महात्मनः ।। ३८ ।।
बलं यत्त्रिषु लोकेषु कस्यचिन्नास्ति दुर्लभम् ।।
ऊचुश्च कंचित्कालं त्वं वसात्रैव महाद्युते ।। ३९ ।।
संगत्या विजयस्य त्वं भूयः श्रेयो ह्यवाप्स्यसि ।।
इत्युक्तः सर्वदेवीभिः स तत्रैव व्यवस्थितः ।।1.2.61.४० ।।
आजगामाथ विजयो नाम्ना मागधब्राह्मणः ।।
स सर्वां पृथिवीं कृत्वा पादाक्रांतां द्विजोत्तमः ।। ४१ ।।
काश्यां विद्याबलं प्राप्य साधनार्थमुपाययौ ।।
गुहेश्वरमुखान्येष सप्तलिंगान्यपूजयत् ।। ।।४२।।
आराधयामास चिरं देवीर्विद्याफलाप्तये।।
ततस्तुष्टास्तस्य देव्यः स्वप्ने प्रोचुरिदं वचः।।४३।।
विद्यां साधय त्वं साधो सिद्धमातुः पुरोंऽगणे ।।
अयं भक्तः सुहृदयः साहाय्यं ते करिष्यति ।। ४४ ।।
ततस्तद्वचनं श्रुत्वा विजयः स्वप्नमध्यतः ।।
उत्थाय गत्वा देव्यास्तं वव्रे भीमात्म जात्मजम् ।। ४५ ।।
सोऽपि देवीवचः श्रुत्वा मेने साहाय्यकारणम् ।।

ततः कृष्णचतुर्दश्यामुपोष्य विजयः शुचिः ।। ४६ ।।
स्नात्वाभ्यर्च्यैव लिंगानि देवीश्चैवार्चयत्पृथक् ।।
कृत्वा स्नानमुपोष्यैव बर्बरीकोंऽतिकेऽभवत् ।। ४७ ।।
प्रथमायां ततो रात्रौ ययौ सिद्धांबिकापुरः ।।
मंडलं तत्र कृत्वा च भगाकारं करान्नव ।। ४८ ।।
अष्टदिक्ष्वष्टकीलांश्च निखन्यैव ससूत्रकान् ।।
कृष्णाजिनधरो भूत्वा बर्बरीकसमन्वितः ।। ४९ ।।
शिखामाबद्ध्य दिग्बंधं कृत्वा रेभे ततो विधिम् ।।
मध्ये वै मंडलस्यापि कुंडे शुभ्रे त्रिमेखलं ।। 1.2.61.५० ।।
समर्प्य च ततः खड्गं खादिरं मंत्रतेजितम् ।।
संस्थाप्य कीलानभितो बर्बरीकमथाब्रवीत् ।। ५१ ।।
शुचिर्विनिद्रः संतिष्ठ स्तवं देव्याः समुद्गिरन् ।।
यावत्कर्म करोम्येष यथा विघ्नं न जायते ।। ५२ ।।
इत्युक्ते संस्थिते तत्र बर्बरीके महाबले ।।
विजयः शोषणं दाहं प्लावनं कृतवान्यमी ।। ५३ ।।
ततः सुखासनो भूत्वा गुंगुरुभ्यो नमः इति ।।
मंत्रमष्टोत्तरशतं जप्त्वा गुरुभ्यः प्रणम्य च ।।
ततो गणेश्वरविधानमारब्धवान् ।। ५४ ।।
अथातः संप्रवक्ष्यामि मंत्रं गणपतेः परम् ।। ५५ ।।
सर्वकार्यकरं स्वल्पं महार्थं सर्वसिद्धिदम् ।। ५६ ।।
ॐगांगींगूंगैंगौंगः सप्ताक्षरोऽयं महामंत्रः ।।
ॐगणपतिमंत्रस्य गणको नाम ऋषिः विघ्नेश्वरो देवता गं बीजम् ॐशक्तिः पूजार्थे जपार्थे वा तिलकार्थे वा मनस ईप्सितार्थे होमार्थे वा विनियोग इति ।।
साध कस्य पूर्वं तिलककरणम् ।।
ॐगांगणपतये नमः ।।
इति तिलकस्योपरि अक्षतान्दद्यात् अनेन मन्त्रेण ।।
ॐ गांगणपतये नमः ।।
इति तिलकमंत्रः ।।
ॐगां गणपतये नमः ।।
अनेन मंत्रेण गणेशाय पुष्पांजलित्रयं दद्यात् ।।
मूलमंत्रेणात्र चंदनगंधपुष्पधूपदीपनैवेद्यपूगीफल तांबूलादिकं दद्यात् ।।
अत ऊर्ध्वं मूलमन्त्रेण जपं कुर्यात् ।।
अष्टोत्तरशतं सहस्रं लक्षं कोटिं चेति यथाशक्ति जप्त्वा दशांशहोमार्थे गणेशाग्नये आवाहयामीति

अग्निमावाह्य ।।

ॐ गां गणपतये स्वाहेति मन्त्रेण गुग्गुलगुटिकाभिर्होमं विदध्याद्विनियोगं चेति गाणेश्वरो ता?कल्पः ।।

य एवं सर्व विघ्नेषु साधयेन्मन्त्रमुत्तमम् ।।

सर्वविघ्नानि नश्यंति मनोभीष्टं च सिध्यति ।। ५७ ।।

डाकिन्यो यातुधानाश्च प्रेताद्याश्च भयंकराः ।।

शत्रूणां जायते नाशो वशीकरणमेव च ।। ५८ ।।

इमं गाणेश्वरं कल्पं विजानन्विजयोऽपि च ।।

तिलकं विधिना कृत्वा जप्त्वा चाष्टोत्तरं शतम् ।। ५९ ।।

दशांशं गुटिका हुत्वा पूज्य सिद्धिविनायकम् ।।

सिद्धेयक्षेत्रपालस्य चक्रे पूजां ततो निशि ।। 1.2.61.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महाविद्यासाधने गाणेश्वरकल्पवर्णनंनामैकषष्टितमोऽध्यायः ।। ६१ ।।

।। शौनक उवाच ।। ।।
सूत श्रुता पुरास्माभिरुत्पत्तिर्गणपस्य च ।।
क्षेत्रनाथः कथं जज्ञे वदैतच्छृण्वतां हि नः ।। १ ।।
।। सूत उवाच ।। ।।
यदा दारुकदैत्येन पीड्यमाना दिवौकसः ।।
शिवं देव्या सहासीनं प्रणिपत्येदमब्रुवन् ।। २ ।।
देव दैत्येन घोरेण दुर्जयेन सुरासुरैः ।।
पीडिता दारुकेण स्मः स्वस्थानाच्चापि च्याविताः ।। ३ ।।
न विष्णुना न चंद्रेण न चान्येनापि केनचित् ।।
शक्यो हंतुं स दुष्टात्मा अर्धनारीश्वरं विना ।। ४ ।।
तेन संपीड्यमानानामस्माकं शरणं भव ।।
इत्युक्त्वा रुरुदुर्देवास्त्राहित्राहीति चाब्रुवन् ।। ५ ।।
ततोऽतिकृपयाविष्टहरकंठस्य कालिमाम् ।।
गृहीत्वा पार्वती चक्रे नारीमेकां महाभयाम् ।। ६ ।।
आत्मशक्तिं तत्र मुक्त्वा प्रोवाचेदं वचः शुभा ।।
यस्मादतीव कालासि नाम्ना त्वं कालिका भव ।। ७ ।।
देवारिं च दुरात्मानं शीघ्रं नाशय शोभने ।।
एवमुक्ता महारावा कालिका प्राप्य तं तदा ।। ८ ।।
रवेणैव मृतं चक्रे सानुगं स्फुटितहृदम् ।।
ततोवन्ती श्मशानस्था महारावानमुंचत ।। ९ ।।
यैरासन्विकला लोकास्त्रयोऽपि प्रमृता यथा ।।
ततो रुद्रो बालरूपं कृत्वा विश्वकृते विभुः ।। 1.2.62.१० ।।
रुदंस्तस्याः समीपे चाप्यागतः प्रेतसद्मनि ।।
रुदंतं च ततो बालं कृत्वोत्संगे कृपान्विता ।। ११ ।।
कालिकाऽपाययत्स्तन्यं मा रुदेति प्रजल्पती ।।
स्तन्य व्याजेन बालोऽपि पपौ क्रोधं तदंगजम् ।। १२ ।।
योऽसौ हरकंठभवविषादासीत्सुदुर्धरः ।।
पीतक्रोधस्वभावे च सौम्यासीत्कालिका तदा ।। १३ ।।
बालोऽपि बालरूपं तत्त्यक्तुमैच्छत्कृतक्रियः ।। १४ ।।
ततो देवाः कालिकायाः शंकमानाः पुनर्भयम् ।।
ऊचुर्मा बाल बालत्वं परित्यज कृपां कुरु ।। १५ ।।
।। बाल उवाच ।। ।।
न भेतव्यं कालिकायाः सौम्या देवी यतः कृता ।।

अस्ति चेद्भवतां भीतिरन्यान्स्रक्ष्यामि बालकान् ।।
चतुःषष्टिक्षेत्रपालानित्युक्त्वा सोऽसृजन्मुखात् ।। १६ ।।
प्राह तान्बालरूपांश्च बालरूपी महेश्वरः ।।
स्वर्गेषु पंचविशानां पातालेषु च तावताम् ।। १७ ।।
चतुर्दशानां भूर्लोके वासो वः पालनं तथा ।।
अयमेव श्मशानस्थो भविता श्वा च वाहनम् ।। १८ ।।
नैवेद्यं भवतां राजमाषतंदुलमिश्रकाः ।।
अनभ्यर्च्य च यो युष्मान्किंचित्कृत्यं विधास्यति ।। १९ ।।
तस्य तन्निष्फलं भावि भुक्तं प्रेतैश्च राक्षसैः ।।
इत्युक्त्वा भगवान्रुद्रस्तत्रैवां तरधीयत ।। 1.2.62.२० ।।
क्षेत्रपालाः स्थिताश्चैव यथास्थाने निरूपिताः ।।
इति वः क्षेत्रपालानां सृष्टिः प्रोक्ता समासतः ।। २१ ।।
आराधनं प्रवक्ष्यामि येन प्रीता भवंति ते ।। २२ ।।
ॐक्षां क्षेत्रपालाय नमः ।।
इति नवाक्षरो महामंत्रः ।।२३।।
अनेनात्र चंदनादि दत्त्वा राजमाषतण्डुलमिश्रकाश्च चतुःषष्टिकृतभागान्वटकान्निवेद्य तावत्यो दीपिकास्तावन्ति पत्राणि पूगानि निवेद्य दण्डवत्प्रणम्य महास्तुतिमेतां जपेत् ।। २४ ।।
ॐऊर्ध्वकेशा विरू पाक्षा नित्यं ये घोररूपिणः ।।
रक्तनेत्राश्च पिंगाक्षाः क्षेत्रपालान्नमामि तान् ।। २५ ।।
अह्वरो ह्यापकुम्भश्च इडाचारस्तथैव यः ।।
इंद्रमूर्तिश्च कोलाक्ष उपपाद ऋतुंसनः ।। २६ ।।
सिद्धेयश्चैव वलिको नीलपादेकदंष्ट्रिकः ।।
इरापतिश्चाघहारी विघ्नहारी तथांतकः ।। २७ ।।
ऊर्ध्वपादः कम्बलश्च खंजनः खर एव च ।।
गोमुखश्चैव जंघालो गणनाथश्च वारणः ।। २८ ।।
जटालोप्यजटालश्च नौमि स्वःक्षेत्रपालकान् ।।
ऋकारो हठकारी च टंकपाणिः खणिस्तथा ।। २९ ।।
ठंठंकणो जंबरश्च स्फुलिंगास्यस्तडिद्रुचिः ।।
दंतुरो घननादश्च नन्दकश्च तथा परः ।। 1.2.62.३० ।।
फेत्कारकारी पंचास्यो बर्बरी भीमरूपवान् ।।
भग्नपक्षः कालमेघो युवानो भास्करस्तथा ।। ३१ ।।
रौरवश्चापि लंबोष्ठो वणिजः सुजटालिकः ।।
सुगंधो हुहुकश्चैव नौमि पातालरक्षकान् ।। ३२ ।।

सर्वलिंगेषु हुंकारः स्मशानेषु भयावहः ।।
महालक्षो वने घोरे ज्वालाक्षो वसतौ स्थितः ।। ३३ ।।
एकवृक्षश्च वृक्षेषु करालवदनो निशि ।।
घण्टारवो गुहावासी पद्मखंजो जले स्थितः ।। ३४ ।।
चत्वरेषु दुरारोहः पर्वते कुरवस्तथा ।।
निर्झरेषु प्रवाहाख्यो माणिभद्रो निधिष्वपि ।। ३५ ।।
रसक्षेत्रे रसाध्यक्षो यज्ञवाटेषु कोटनः ।।
चतुर्दश भुवं व्याप्य स्थिताश्चैवं नमामि तान् ।। ३६ ।।
एवं चतुःषष्टिमिताञ्छरणं यामि क्षेत्रपान् ।।
प्रसीदंतु प्रसीदंतु तृप्यंतु मम पूजया ।। ३७ ।।
सर्वकार्येषु यश्चैवं क्षेत्रपानर्चयेच्छुचिः ।।
क्षेत्रपास्तस्य तुष्यंति यच्छंति च समीहितम् ।। ३८ ।।
इमं क्षेत्रपकल्पं च विजानन्विजयस्तथा ।।
यथोक्तविधिनाभ्यर्च्य सिद्धेयं तुष्टुवे च तम् ।। ३९ ।।
प्रणम्य च ततो देवीमानर्च वटयक्षिणीम् ।।
पुरा यदा नारदेन कलापग्रामतो द्विजाः ।। 1.2.62.४० ।।
समानीतास्तैश्च साकं सुनंदा नाम ब्राह्मणी ।।
विधवाभ्यागता तत्र तपस्तप्तुं महीतटे ।। ४१ ।।
सा कृच्छ्राणि पराकांश्च अतिकृच्छ्राणि कुर्वती ।।
ज्यैष्ठे भाद्रपदे चक्रे सावित्र्या द्वे त्रिरात्रिके ।। ४२ ।।
मासोपवासं च तथा कार्तिके कुलनंदिनी ।।
सप्तलिंगानि संपूज्य देवीपूजां सदा व्यधात् ।। ४३ ।।
दर्शे स्नानं तथा चक्रे महीसागरसंगमे ।।
इत्यादिबहुभिस्तैस्तैर्नित्यं नियमपालनैः ।। ४४ ।।
धूतपापा ययौ लोकमुमायाः कृतस्वागता ।।
अंशेन च तटे तस्मिन्संभूता वटयक्षिणी ।। ४५ ।।
तस्यास्तुष्टो वरं प्रादात्सिद्धलिंगस्थितो हरः ।।
अनभ्यर्च्य य एनां च मत्पूजां प्रकरिष्यति ।। ४६ ।।
तस्य तन्निष्फलं सर्वमित्युक्तं पाल्यमेव मे ।।
तस्मात्प्रपूजयेन्नित्यं वटस्थां वटयक्षिणीम् ।।
पुष्पैर्धूपैस्तु नैवेद्यैर्मंत्रेणानेन भक्तितः ।। ४७ ।।
सुनंदे नंदनीयासि पूजामेतां गृहाण मे ।।
प्रसीद सर्वकालेषु मम त्वं वटयक्षिणि ।। ४८ ।।

एवं संपूज्य तां नत्वा क्षमाप्य वटयक्षिणीम् ।।
सर्वान्कामानवाप्नोति नरो नारी च सर्वदा ।। ४९ ।।
विजयश्चापि माहात्म्यमिदं जानन्महामतिः ।।
आनर्च वटवृक्षस्थां भक्तितो वटयक्षिणीम् ।। 1.2.62.५० ।।
ततः सिद्धांबिकां स्तुत्वा जप्तवानपराजिताम् ।।
महाविद्यां वैष्णवीं तु साधनेन समन्विताम् ।। ५१ ।।
यस्याः स्मरणमात्रेण सर्वदुःखक्षयो भवेत् ।।
तां विद्यां कीर्तयिष्यामि शृणुध्वं विप्रपुंगवाः ।। ५२ ।।
ॐ नमो भगवते वासुदेवाय नमोऽनंताय सहस्रशीर्षाय क्षीरोदार्णवशायिने शेषभोगपर्यंकाय गरुडवाहनाय पीतवाससे वासुदेव संकर्षण प्रद्युम्नानिरुद्ध हयशिरो वराह नरसिंह वामन त्रिविक्रम राम राम वरप्रद नमोऽस्तु ते नमोऽ स्तुते असुरदैत्यदानवयक्षराक्षस भूतप्रेतपिशाचकुंभांड सिद्धयोगिनी डाकिनी स्कंदपुरोगमान्ग्रहान्नक्षत्रग्रहांश्चान्यांश्च हन २ दह २ पच २ मथ २ विध्वंसय २ विद्रावय २ शंखेन चक्रेण वज्रेण गदया मुशलेन हलेन भस्मीकुरु सहस्रबाहवे सहस्रचरणायुध जय २ विजय २ अपराजित अप्रतिहत सहस्रनेत्र ज्वल २ प्रज्वल २ विश्वरूप बहुरूप मधुसूदन महावराह महापुरुष वैकुंठ नारायण पद्मनाभ गोविंद दामोदर हृषीकेश सर्वासुरो त्सादन सर्वभूतवशंकर सर्वदुःखप्रभेदन सर्वयंत्रप्रभंजन सर्वनागप्रमर्दन सर्वदेवमहेश्वर सर्वबंधविमोक्षण सर्वाहितप्रमर्दन सर्वज्वरप्रणाशन सर्वग्रह निवारण सर्वपापप्रशमन जनार्दन जनानंदकर नमोऽस्तु ते स्वाहा ।। ५३ ।।
इमामपराजितां परमवैष्णवीं महाविद्यां जपति पठति शृणोति स्मरति धारयति कीर्तयति न च तस्य वाय्वग्निवज्रोपलाशनिवर्षभयं न समुद्रभयं न ग्रहभयं न च चौरभयं न च श्वापदभयं वा भवेत् ।। ५४ ।।
क्वचिद्रात्र्यंधकारस्त्रीराजकुलविषोपविषगरदवशीकरण विद्वेषणोच्चाटनवधबंधभयं वा न भवेदेतैर्मंत्रपदैरुदाहृतैर्हृदा बद्धैः संसिद्धपूजितैः ।। ५५ ।।
तद्यथा ।।
नमोनमस्तेऽस्तु अभये अनघे अजिते अत्रसिते अमृते अपराजिते पठितसिद्धे स्मरितसिद्ध एकानंशे उमे ध्रुवे अरुंधति सावित्रि गायत्रि जातवेदसि मानस्तोके सरसि सरस्वति धरणि धारिणि सौदामिनि अदिते विनते गौरि गांधारि मातंगि कृष्णे यशोदे सत्यवादिनि ब्रह्मवादिनि कालि कपालिनि सद्योवयवचयनकरि स्थलगतं जलगतमंतरिक्षगतं वा रक्ष २ सर्वभूतभयोपद्रवेभ्यो रक्ष २ स्वाहा ।। ५६।।
यस्याः प्रणश्यते पुष्पं गर्भो वा पतते यदि ।।
म्रियंते बालका यस्याः काकवंध्या च या भवेत् ।।
धारयेत इमां विद्यामेभिर्दोषैर्न लिप्यते ।।५७ ।।
रणे राजकुले द्यूते नित्यं तस्य जयो भवेत् ।।
शस्त्र धारयते ह्येषां समरे कांडधारिणी ।। ५८ ।।
गुल्मशूलाक्षिरोगाणां नित्यं नाशकरी तथा ।।

शिरोरोगज्वराणां च नाशनी सर्वदेहिनाम् ।। ५९ ।।
तद्यथा ।।
हन २ कालि सर २ कालि सर २ गौरि धम २ गौरि धम २ विद्ये आले ताले माले गंधे वधे पच २ विद्ये नाशय पापं हन् दुःस्वप्नं विनाशय कष्टनाशिनि रजनि संध्ये दुंदुभिनादे मानसवेगे शंखिनि चक्रिणि वज्रिणि शूलिनि अपमृत्युविनाशिनि विश्वेश्वरि द्रविडि द्राविडि केशवदयिते पशुपतिमहिते दुर्द्दमदमिनि शर्वरि किराति मातंगि ॐह्राँह्रँह्रँह्रँक्राँक्रँक्रँक्रँत्वर २ ये मां द्विषति प्रत्यक्षं परोक्षं वा सर्वान्दम २ मर्द्द २ तापय २ पातय २ शोषय २ उत्सादय २ ब्रह्माणि माहेश्वरि वाराहि विनायकि ऐंद्रि आग्नेयि चामुंडे वारुणि प्रचंडविद्योते इंदोपेंद्रभगिनि विजये शांतिस्वस्तिपुष्टिविवर्धिनि कामांकुशे कामदुधे सर्वकामवरप्रदे सर्वभूतेषु वासिनि प्रति विद्यां कुरु २ आकर्षिणि वेशिनि ज्वालामालिनि रमणि रामणि धरणि धारिणि मानोन्मानिनि रक्ष २ वायव्ये ज्वालामालिनि तापनि शोषणि नीलपताकिनि महागौरि महाश्रये महामयूरि आदित्यरश्मि जाह्नवि यमधंटे किणि २ चिंतामणि सुरभि सुरोत्पन्ने कामदुघे यथा मनीषितं कार्यं तन्मम सिध्यतु स्वाहा ॐस्वाहा ॐभूः स्वाहा ॐभुवः स्वाहा ॐस्वः स्वाहा ॐभूर्भुवःस्वःस्वाहा यत्रैवागतं पापं तत्रैव प्रतिगच्छतु स्वाहा ॐबले महाबले उासिद्धसाधिनि स्वाहा ।। 1.2.62.६० ।।
इतीमां साधयामास वैष्णवीमपरा जिताम् ।।
विजयः संयतो भूत्वा मनोबुद्धिसमाधिभिः ।। ६१ ।।
य इमां पठते नित्यं साधनेन विनापि च ।।
तस्यापि सर्वविघ्नानि नश्यंति द्विजपुंगवाः ।। ६२ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बर्बरिकोपाख्याने महाविद्या साधनवर्णनंनाम द्विषष्टितमोऽध्यायः ।। ६२ ।।

।। सूत उवाच ।। ।।
अश्वत्थलाक्षावह्नौ च सर्षपान्केसरप्लुतान् ।।
जुह्वतो मंत्रमुख्यैश्च बलातिबलसंज्ञकैः ।। १ ।।
यामे तु प्रथमे याते काचिन्नारी समाययौ ।।
शोणिताक्तैकवसना महोच्चोर्ध्वशिरोरुहा ।। २ ।।
दारुणाक्षी शुक्लदन्ती भयस्यापि भयंकरी ।।
सा रुरोद महारावं प्राप्य तां होमभूमिकाम् ।। ३ ।।
तां दृष्ट्वा चुक्षुभे सद्यो विजयो भीतिमानिव ।।
बर्बरीकश्च निर्भीतिस्तस्याः संमुखमाययौ ।। ४ ।।
ततः कण्ठं समाश्लिष्य तस्या मतिमतां वरः ।।
रुरोद द्विगुणं वीरो मेघवन्नादयन्बहु ।। ५ ।।
तं दृष्ट्वा विस्मिता सा च यावन्मुंचति कर्तिकाम्।।
तावन्निष्पीडिते कंठे मोक्तुं तस्मिन्न चाशकत्।।६।।
पीड्यमाने च बलिना कंठे तस्या मुहुर्मुहुः।।
मुमोच विविधाञ्छब्दान्वज्राहत इवाचलः ।। ७ ।।
क्षणं रावांस्ततो मुक्त्वा त्राहि मुञ्चेति वक्त्यणु ।।
ततः कृपालुना मुक्ता पादयोः पतिताऽब्रवीत् ।। ८ ।।
शरणं ते प्रपन्नास्मि दासी कर्मकरी तव ।।
महाजिह्वेति मां विद्धि राक्षसीं कामरूपिणीम् ।। ९ ।।
काशीश्मशाननिलयां देवदानवदर्पहाम् ।।
ददासि यदि मे वीर दुर्लभां प्राणदक्षिणाम् ।। 1.2.63.१० ।।
ततस्तपश्चरिष्यामि सर्वभूताभयप्रदा ।।
अस्मिन्नर्थे स्वदेवस्य शपथा मे तथात्मनः ।। ११ ।।
यद्येतद्व्यत्ययं कुर्यां भस्मीभूयां ततः क्षणम् ।।
एवं ब्रुवाणां तां वीरो निगृह्य शपथैर्दृढम् ।। १२ ।।
मुमोच सापि संहृष्टा कृच्छ्रा- न्मुक्ता ययौ वनम् ।।
सोऽपि वीरः खड्गधारी तत्रैवावस्थितोऽभवत् ।। १३ ।।
ततो मध्यमरात्रौ च गर्जितं श्रूयते महत् ।।
अन्धकारं च संजज्ञे तमोंऽधनरकप्रभम् ।। १४ ।।
ददृशे च ततः शैलः शतशृंगोऽतिविस्तरः ।।
नानाशिलाः प्रमुमुचे नानावृक्षांश्च सोच्छ्रयान् ।। १५ ।।
नानानिर्झर संघोषं ववृषे शोणितं वहु ।।
तं तथा नगमालोक्य निर्भीतो भैमिनंदनः ।। १६ ।।

पर्वतो द्विगुणो भूत्वा पर्वतं सहसाप्लुतः ।।
तदाभिजघ्ने संहृत्य पर्वतं स्वेन भूभृता ।। १७ ।।
तदा विशीर्णः सोऽभूच्च पर्वतो भूमिमंडले ।।
ततो योजनदेहात्मा शतशीर्षः शतोदरः ।। १८ ।।
वक्त्रैर्मुंचन्महाज्वालां रेपलेन्द्रोऽभ्यधावत ।।
तं धावमानं दृष्ट्वैव बर्बरीको महाबलः ।। १९ ।।
विधाय तादृशं रूपं नर्दन्तं चाप्यधावत ।।
ततो मध्यमरात्रौ ती लघु चित्रं च सुष्ठु च ।। 1.2.63.२० ।।
युयुधाते बाणजालैर्यथा प्रावृषि तोयदौ ।।
छिन्नचापौ च खड्गाभ्यां छिन्नखड्गौ च मुष्टिभिः ।। ।। २१ ।।
पर्वताविव सत्पक्षौ चिरं युयुधतुः स्थिरम् ।।
ततः कक्षे समुत्पाट्य भ्रामयित्वा मुहूर्तकम् ।। २२ ।।
भूमौ प्रधर्षयामास प्रसृतं च मुमोच ह ।।
चिक्षेप चाग्निकोणे तं महीसागररोधसि ।। २३ ।।
तद्दूरे रेपलेन्द्राख्यं ग्राममद्यापि वर्तते ।।
एवं स रेपलोनाम वृत्रतुल्यपराक्रमः ।। २४ ।।
नाथः श्मशानस्यावन्त्या विघ्नकृन्निहतोऽभवत् ।।
तं निहत्य पुनर्वीरो बर्बरीकः स्थितोऽभवत् ।। २५ ।।
ततस्तृतीययामे च प्रतीच्या दिश आययौ ।।
पर्वताभा महानादा पादैः कम्पयतीव भूः ।। २६ ।।
दुहद्रुहाख्याश्वतरी मेघभ्रष्टा तडिद्यथा ।।
तामायांतीं तथा दृष्ट्वा सूर्यवैश्वानरप्रभाम् ।। २७ ।।
उपसृत्य जवाद्भैमी रुरोह प्रहसन्निव ।।
वेगात्ततः प्रद्रवतीं तुण्डे प्राहत्य मुष्टिभिः ।। २८ ।।
स्थापयामास तत्रैव तस्थौ सा चातिपीडिता ।।
ततः क्रुद्धा महारावं कृत्वाप्लुत्य दुहद्रुहा ।। २९ ।।
जगत्यामाशु चिक्षेप बर्बरीकं तथेच्छकम् ।।
ततो नदित्वा चातीव पादघातममुंचत ।। 1.2.63.३० ।।
पादौ च वीरः संगृह्य चिक्षेप भुवि लीलया ।।
ततः पुनः समुत्थाय धावंतीं तां निगृह्य सः ।। ।। ३१ ।।
मुष्टिना पातयित्वैव दंतान्कंठमपीडयत् ।।
क्लिन्नं वास इवापीड्य प्राणानत्याजयदद्रुतम् ।। ३२ ।।
एवं सीकोत्तरस्थाने स्मशानैकपदो द्भवा ।।

शाकिनीनामधीशा सा बर्बरीकेण सूदिता ।। ३३ ।।
हत्वा तां चापि चिक्षेप प्रतीच्यामेव लीलया ।।
दुहद्रुहाख्यमद्यापि तत्र ग्रामं स्म वर्तते ।। ३४ ।।
ततस्तथैव संतस्थौ बर्बरीकोऽभिरक्षणे ।।
ततश्चतुर्थे यामे च प्राप्तः क्षपणकोऽद्भुतः ।। ३५ ।।
मुंडी नग्नो मयूराणां पिच्छधारी महाव्रतः ।।
प्रोवाच चेदं वचनं हाहा कष्टमतीव भोः ।। ३६ ।।
अहिंसा परमो धर्मस्तदग्निर्ज्वाल्यते कुतः ।।
हूयमाने यतो वह्नौ सूक्ष्मजीववधो महान् ।। ३७ ।।
श्रुत्वेदं वचनं तस्य बर्बरीकोऽब्रवीत्स्मयन् ।।
वदने सर्वदेवानां हूयमाने स्म पावके ।। ३८ ।।
अनृतं भाषसे पाप शिक्षायोग्योऽसि दुर्मते ।।
इत्युक्त्वा सहसोत्पत्य कक्षामध्ये स्थिरोऽस्य च ।। ३९ ।।
दन्तान्मुष्टिप्रहारैश्च समाहत्याभ्यपातयत् ।।
रुधिराविलवक्त्रं तं मुमोच पतितं भुवि ।। 1.2.63.४० ।।
स क्षणाच्चेतनां प्राप्य घोरदैत्यवपुर्धरः ।।
भयाद्भैमेः प्रदुद्राव गुहाविवरमाविशत् ।। ४१ ।।
बहुप्रभेति नगरी षष्टियोजनमायता ।।
तस्यां विवेश सहसा तं चानु बर्बरीककः ।। ४२ ।।
बर्बरीकं ततो दृष्ट्वा नादोऽभूच्च पलाशिनाम् ।।
धावध्वं हन्यतामेष छिद्यतां भिद्यतामिति ।। ४३ ।।
तच्छ्रुत्वा दैत्यवीराणां कोटयो नव भीषणाः ।।
नानायुधधरा वीरं बर्बरीकमुपाद्रवन् ।। ४४ ।।
दृष्ट्वा तान्कोटिशो दैत्यान्क्रुद्धो भीमात्मजात्मजः ।।
निमील्य सहसा नेत्रे तेषां मध्यमधावत ।। ४५ ।।
पादघातैस्ततः कांश्चिद्भुजाघातैस्तथापरान् ।।
हृदयस्याभिघातैश्च क्षणान्निन्ये यमक्षयम् ।। ४६ ।।
यथा नलवनं क्रुद्धः कुर्याद्भूमिसमं करी ।।
नवकोटीस्तथा जघ्ने सह तेन पलाशिना ।। ४७ ।।
ततो नागाः समागम्य वासुकिप्रमुखास्तदा ।।
तुष्टुबुर्विविधैर्वाक्यैरूचुः सुहृदयं च ते ।। ४८ ।।
नागानां परमं कृत्यं कृतं ते भैमिनंदन ।।
पलाशीनाम दैत्योयं नीतो यत्सानुगो यमम् ।। ।। ४९ ।।

अनेन हि वयं वीर सानुगेन दुरात्मना ।।
पीडिता विविधोपायैः पातालादप्यधः कृताः ।। 1.2.63.५० ।।
वरं वृणीष्व त्वं तस्मान्नागेभ्योऽभिमतं परम् ।।
वरदाः सर्व एव स्म वयं तुभ्यं सुतोषिताः ।। ५१ ।।
।। सुहृदय उवाच ।। ।।
यदि देयो वरो मह्यं तदेनं प्रवृणोम्यहम् ।।
सर्वविघ्नविनिर्मुक्तो विजयः सिद्धिमाप्नुयात् ।। ५२ ।।
ततस्तथेति तं प्रोचुः प्रहृष्टा वायुभोजनाः ।।
स च तेभ्यः पुरीं दत्त्वा निवृत्तो नागपूजितः ।। ५३ ।।
विवरस्य च मध्येन समागच्छन्महाप्रभम् ।।
सर्वरत्नमयं लिंगं स्थितं कल्पतरोरधः ।। ५४ ।।
अर्च्यमानं सुवह्नीभिर्नागकन्याभिरैक्षत ।।
ततोऽसौ विस्मयाविष्टो नागकन्या ह्यपृच्छत ।। ५५ ।।
केनेदं स्थापितं लिंगं सूर्यवैश्वानरप्रभम् ।।
लिंगादपि चतुर्दिक्षु मार्गाश्चेमे तु कीदृशाः ।। ५६ ।।
इति वीरवचः श्रुत्वा बृहत्कटिपयोधरा ।।
सव्रीडं सस्मितापांगनिर्मोक्षमिदमब्रवीत् ।। ५७ ।।
सर्वपन्नगराजेन शेषेण सुमहात्मना ।।
तप स्तप्त्वा महालिंगमिदमत्र प्रतिष्ठितम् ।। ५८ ।।
दर्शनात्स्पर्शनाद्ध्यानादर्चनात्सर्वसिद्धिदम् ।।
लिंगात्पूर्वेण मार्गोयं याति श्रीपर्वतं भुवि ।। ५९ ।।
एलापत्रेण विहितो नागानां तत्र प्राप्तये ।।
दक्षिणेन च मार्गोऽयं याति शूर्पारकं भुवि ।।1.2.63.६०।।
कर्कोटकेन नागेन कृतोऽयं तत्र प्राप्तये ।।
पश्चिमेन च मार्गोऽयं प्रभासं याति सुप्रभम् ।।६१।।
ऐरावतेन विहितो नागानां गमनाय च ।।
उत्तरेण च मार्गोयं येन यातुं भवान्स्थितः।।६२।।
गुप्तक्षेत्रे सिद्धलिंगं याति शक्तिगुहाऽऽकृतः ।।
विहितस्तक्षकेणासौ यातुं तत्र महात्मना ।।६३।।
इतीदं वर्णितं वीर विज्ञप्तिः श्रूयतां मम।।
को भवानधुनैवेतो दैत्यपृष्ठ गतोऽभवत् ।।
अधुनैव तथैकाकी समायातोऽत्र नो वद ।।६४।।
वयं च सर्वास्ते दास्यस्त्वां पतिं प्रवृणीमहे ।।

अस्माभिः सहितः क्रीड विविधास्वत्र भूमिषु ।। ६५ ।।
।। बर्बरीक उवाच ।। ।।
अहं कुरुकुलोत्पन्नः पांडुपुत्रस्य पौत्रकः ।।
बर्बरीक इति ख्यातस्तं दैत्यं हंतुमागतः ।। ६६ ।।
स च दैत्यो हतः पापः पुनर्यास्ये महीतलम् ।।
भवतीभिश्च मे नास्ति कृत्यं भोभोः कथंचन ।। ६७ ।।
ब्रह्मचारिव्रतं यस्मादहं सततमास्थितः ।।
इत्युक्त्वाभ्यर्च्य तल्लिंगं प्रणिपत्य च दण्डवत् ।। ६८ ।।
ऊर्ध्वमाचक्रमे वीरः कातरं ताभिरीक्षितः।।
ततो बहिः समागत्य सप्रकाशं मुखं तदा ।।६९।।
प्रहर्षेणैव पूर्वस्या विजयं ददृशे दिशः ।।
तस्मिन्काले च विजयः कर्म सर्वं समाप्तवान् ।। 1.2.63.७० ।।
कांत्या सूर्यसमाभास ऊर्ध्वमाचक्रमे क्षणात् ।।
ततो वियद्गतं देवैः पुष्पवर्षमभून्महत् ।। ७१ ।।
जगुर्गंधर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ।।
विजयो बर्बरीकं च ततो वचनमब्रवीत् ।। ७२ ।।
तव प्रसादाद्वीरेश सिद्धिः प्राप्ता मयातुला ।।
चिरं जीव चिरं नंद चिरं वस चिरं जय ।। ७३ ।।
अत एव हि साधूनां संगमिच्छंति साधवः ।।
औषधं सर्वदोषाणां भवेत्सत्यं गमो यतः ।। ७४ ।।
त्वं च होमस्थितं भस्म सिंदूरसदृशप्रभम् ।।
निःशल्यं सविवरकं पूर्यमाणं गृहाण च ।। ७५ ।।
अक्षय्यमेतत्संग्रामे प्रथमं ते प्रमुंचतः ।।
शत्रूणां स्थानकं मृत्योर्देहं ध्वस्तं करिष्यति ।। ७६ ।।
एवं सुखेन विजयः शत्रूणां ते भविष्यति ।। ७७ ।।
।। बर्बरीक उवाच ।। ।।
उपकुर्यान्निराकांक्षो यः स साधुरितीर्यते ।।
साकांक्षमुपकुर्याद्यः साधुत्वे तस्य को गुणः ।। ७८ ।।
तद्देहि भस्म चान्यस्मै केनाप्यर्थो न मेऽण्वपि ।।
प्रसादसुमुखां दृष्टिं विना नान्यद्वृणोमि ते ।। ७९ ।।
।। देवा ऊचुः ।। ।।
कुरूणां पांडवानां च भविष्यति महान्रणः ।।
ततो भूमिस्थितं भस्म प्राप्स्यंति यदि कौरवाः ।। 1.2.63.८० ।।

महानर्थो भविता पांडवानां ततः स्फुटम् ।।
तस्माद्गृहाण त्वं भस्म सोपि चक्रे तथो वचः ।। ८१ ।।
देवीभिः सहिता देवाः संमान्य विजयं च ते ।।
सिद्धैश्वर्यं ददुस्तस्मै सिद्धसेनेति नाम च ।। ८२ ।।
एवं स विजयो विप्रः सिद्धिं लेभे सुदुर्लभाम् ।।
बर्बरीकश्च कृत्वैतद्देवीभक्तिरतोऽवसत् ।। ८३ ।। ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कार्यसिद्धिवर्णनंनाम त्रिषष्टितमोऽध्यायः ।। ६३ ।।

एवं तत्र स्थिते तीरे देव्याराधनतत्परे ।।
सप्तलिंगार्चनरते भीमनन्दननन्दने ।। १ ।।
ततः कालेन केनापि पांडवा द्यूतनिर्जिताः ।।
तत्राजग्मुश्च क्रमतस्तीर्थस्नानकृते भुवम् ।। २ ।।
प्रागेव चंडिकां देवीं क्षेत्रादीशानतः स्थिताम् ।।
आसेदुर्मार्गखिन्नास्ते द्रौपदीपंचमास्तदा ।। ३ ।।
तत्रैव चोपविष्टोऽभूत्तदानीं चंडिकागणः ।।
बर्बरीकश्च तान्वीरान्समायातानपश्यत ।। ४ ।।
परं नासौ वेद पाण्डून्पाण्डवास्तं च नो विदुः ।।
आजन्म यस्मान्नैवाभूत्पाण्डूनां चास्य संगमः ।। ५ ।।
ततः प्रविश्य वै तस्मिन्देवीमासाद्य पांडवाः ।।
पिंडकाद्यं तत्र मुक्त्वा तृषा प्रैक्षि जलं तदा।।६।।
ततो भीमः कुण्डमध्यं जलं पातुं विवेश ह ।।
प्रविशंतं च तं प्राह युधिष्ठिर इदं वचः ।।७।।
उद्धृत्य भीम तोयं त्वं पादौ प्रक्षाल्य भो बहिः ।।
ततः पिबाऽन्यथा दोषो महांस्त्वामुपपत्स्यते ।। ८ ।।
एतद्राज्ञो वचो भीमस्तृषा व्याकुललोचनः ।।
अश्रुत्वैव विवेशासौ कुण्डमध्ये जलेच्छया ।। ९ ।।
स च दृष्ट्वा जलं पातुं तत्रैव कृतनिश्चयः ।।
मुखं हस्तौ च चरणौ क्षालयामास शुद्धये ।। 1.2.64.१० ।।
यतः पीतं जलं पुंसामप्रक्षाल्य च यद्भवेत् ।।
प्रेताः पिशाचास्तद्रूपं संक्रम्य प्रपिबंति तत् ।। ११ ।।
एवं प्रक्षालयाने च पादौ तत्र वृकोदरे ।।
उपरिस्थस्तदा प्राह सत्यं सुहृदयो वचः ।। १२ ।।
दुर्मते भोः किमेतत्त्वं कुरुषे पापनिश्चयः ।।
देवीकुण्डे क्षालयसि मुखं पादौ करौ च यत् ।। १३ ।।
यतो देवी सदानेन जलेन स्नाप्यते मया ।।
दत्र प्रक्षिपंस्तोयं मलपापान्न बिभ्यसि ।। १४ ।।
मलाक्ततोयं यन्नाम अस्पृश्यं तन्नरैरपि ।।
कुतो देवैश्च तत्पापं स्पृश्यते तत्त्वतो वद ।। १५ ।।
शीघ्रं च त्वं निःसरास्मात्कुण्डाद्भूत्वा बहिः पिब ।।
यद्येवं पाप मूढोऽसि तीर्थेषु भ्रमसे कुतः ।। १६ ।।
।। भीम उवाच ।। ।।

किमेतद्भाषसे क्रूर परुषं राक्षसाधम ।।
यतस्तोयानि जंतूनामुपभो गार्थमेव हि ।। १७ ।।
तीर्थेषु कार्यं स्नानं चेत्युक्तं मुनिवरैरपि ।।
अंगप्रक्षालनं स्नानमुक्तं मां निंदसे कुतः ।। १८ ।।
यदि न क्रियते पानमंगप्रक्षालनं तथा ।।
तत्किमर्थं पूर्तधर्माः क्रियन्ते धर्मशालिभिः ।। १९ ।।
।। सुहृदय उवाच ।। ।।
स्नातव्यं तीर्थमुख्येषु सत्यमेतन्न संशयः ।।
चरेषु किं तु संविश्य स्थावरेषु बहिः स्थितः ।। 1.2.64.२० ।।
स्थावरेष्वपि संविश्य तन्न स्नानं विधीयते ।।
न यत्र देवस्नानार्थं भक्तैः संगृह्यते जलम् ।।२१।।
यच्च हस्तशतादूर्ध्वं सरस्तत्र विधीयते ।।
संवेशेऽपि क्रमश्चायं पादौ प्रक्षाल्य यद्बहिः ।। २२ ।।
ततः स्नानं प्रकर्तव्यमन्यथा दोष उच्यते ।।
किं न श्रुतस्त्वया प्रोक्तः श्लोकः पद्मभुवा पुरा ।। २३ ।।
मलं मूत्रं पुरीषं च श्लेष्म निष्ठीनाश्रु च ।।
गंडूषाश्चैव मुञ्चति ये ते ब्रह्महणैः समाः ।। २४ ।।
तस्मान्निःसर शीघ्रं त्वं यद्येवमजितेन्द्रियः ।।
तत्किमर्थं दुराचार तीर्थेष्वटसि बालिश ।। २५ ।।
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।।
निर्विकाराः क्रियाः सर्वाः स हि तीर्थफलं लभेत् ।। २६ ।।
।। भीम उवाच ।। ।।
अधर्मो वापि धर्मोऽस्तु निर्गंतुं नैव शक्नुयाम् ।।
क्षुधा तृषा मया नित्यं वारितुं नैव शक्यते ।। २७ ।।
।। सुहृदय उवाच ।। ।।
जीवितार्थे भवान्कस्मात्पापं प्रकुरुते वद ।।
किं न श्रुतस्त्वया श्लोकः शिबिना यः समीरितः ।। २८ ।।
मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा ।।
न कल्पमपि जीवेत लोकद्वयविरोधिना ।। २९ ।।
।। भीम उवाच ।। ।।
काकारवेण ते मह्यं कर्णौ बधिरतां गतौ ।।
पास्याम्येव जलं चात्र कामं विलप शुष्य वा ।। 1.2.64.३० ।।
।। सुहृदय उवाच ।। ।।

क्षत्रियाणां कुले जातस्त्वहं धर्माभिरक्षिणाम् ।।
तस्मात्ते पातकं कर्तुं न दास्यामि कथंचन ।। ३१ ।।
तद्वराकाथ शीघ्रं त्वमस्मात्कुंडाद्विनिःसर ।।३२।।
इष्टकाशकलैः शीघ्रं चूर्णयिष्येऽन्यथा शिरः ।।
इत्युक्त्वा चेष्टकां गृह्य मुमोच शिरसः प्रति ।। ३३ ।।
भीमश्च वंचयित्वा तामुत्प्लुत्य बहिराव्रजत् ।।
भर्त्सयंतौ ततश्चोभावन्योन्यं भीमविक्रमौ ।। ३४ ।।
युयुधाते प्रलंबाभ्यां बाहुभ्यां युद्धपारगौ ।।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।। ३५ ।।
मुष्टिभिः पार्ष्णिघातैश्च जानुभिश्चाभिजघ्नतुः ।।
ततो मुहूर्तात्कौरव्यः पर्यहीयत पांडवः ।। ३६ ।।
हीयमानस्ततो भीम उद्यतोऽभूत्पुनः पुनः ।।
अहीयत ततोऽप्यंग ववृधे बर्बरीककः ।। ३७ ।।
ततो भीमं समुत्पाट्य बर्बरीको बलादिव ।।
निष्पिपेष ततः क्रुद्धस्तदद्भुतमिवाभवत् ।। ३८ ।।
मूर्छितं चैवमादाय विस्फुरन्तं पुनःपुनः ।।
सागराय प्रचलितः क्षेप्तुं तत्र महांभसि ।। ३९ ।।
ददृशुः पांडवा नैतद्देव्या नयनयंत्रिताः ।। 1.2.64.४० ।।
तथा गृहीते कुरुवीरमुख्ये वीरेण तेनाद्भुतविक्रमेण ।।
आश्चर्यमासीद्दिवि देवतानां देवीभिराकाशतले निरीक्ष्य तम् ।। ४१ ।।
सागरस्य ततस्तीरे बर्बरीकं गतं तदा ।।
निरीक्ष्य भगवान्रुद्रो वियत्स्थः समभाषत ।। ४२ ।।
भोभो राक्षसशार्दूल बर्बरीक महाबल ।।
मुंचैनं भरतश्रेष्ठं भीमं तव पितामहम् ।। ४३ ।।
अयं हि तीर्थयात्रायां विचरन्भ्रातृभिर्युतः ।।
कृष्णया चाप्यदस्तीर्थं स्नातुमेवाभ्युपाययौ ।। ४४ ।।
सम्मानं सर्वथा तस्मादर्हः कौरवनंदनः ।।
अपापो वा सपापो वा पूज्य एव पितामहः ।। ४५ ।।
।। सूत उवाच ।। ।।
इति रुद्रवचः श्रुत्वा सहसा तं विमुच्य सः ।।
न्यपतत्पादयोर्हा धिक्कष्टं कष्टं च प्राह सः ।। ४६ ।।
क्षम्यतां क्षम्यतां चेति पुनः पुनरवोचत ।।
शिरश्च ताडयन्स्वीयं रुरोद च मुहुर्मुहुः ।। ४७ ।।

तं तथा परिशोचंतं मुह्यमानं मुहुर्मुहुः ।।
भीमसेनः समालिंग्य आघ्राय च वचोऽब्रवीत् ।। ४८ ।।
वयं त्वां नैव जानीमस्त्वं चास्माञ्जन्मकालतः ।।
अत्र वासश्च ते पुत्र भैमेः कृष्णाच्च संश्रुतः ।। ४९ ।।
परं नो विस्मृतं सर्वं नानादुःखैः प्रमुह्यताम् ।।
दुःखितानां यतः सर्वा स्मृतिर्लुप्ता भवेत्स्फुटम् ।। 1.2.64.५० ।।
तदस्माकमिदं दुःखं सर्वकालविधानतः ।।
मा शोचस्त्वं च तनय न ते दोषोऽस्ति चाण्वपि ।। ५१ ।।
यतः सर्वः क्षत्रियस्य दंड्यो विपथिसंस्थि तः ।।
आत्मापिदंड्यः साधूनां प्रवृत्तः कुपथाद्यदि ।। ५२ ।।
पितृमातृसुहृद्भ्रातृपुत्रादीनां किमुच्यते ।।
अतीव मम हर्षोऽयं धन्योहं पूर्वजाश्च मे ।। ।। ५३ ।।
यस्य त्वीदृशकः पौत्रो धर्मज्ञो धर्मपालकः ।।
वरार्हस्त्वं प्रशंसार्हो भवान्येषां सतां तथा ।। ५४ ।।
तस्माच्छोकं विहायेमं स्वस्थो भवि तुमर्हसि ।। ५५ ।।
बर्बरीक उवाच ।। ।।
पापं मां ताततात त्वं ब्रह्मघ्नादपि कुत्सितम् ।।
अप्रशस्यं नार्हसीह द्रष्टुं स्प्रष्टुमपि प्रभो ।। ५६ ।।
सर्वेषामेव पापानां निष्कृतिः प्रोच्यते बुधैः ।।
पित्रोरभक्तस्य पुनर्निष्कृतिर्नैव विद्यते ।। ५७ ।।
तद्येन देहेन मया ताततातोऽभिपीडितः ।।
तत्त्वमेव समुत्स्रक्ष्ये महीसागरसंगमे ।। ५८ ।।
मैवं भवेयमन्येषु अपि जन्मसु पातकी ।।
न मामस्मादभिप्रायादर्हः कोऽपि निवर्तितुम् ।। ५९ ।।
यतोंऽशेन विलुप्येत प्रायश्चित्तान्निवारकः ।।
एवमुक्त्वा समुत्प्लुत्य ययौ चैवार्णवं बली ।। 1.2.64.६० ।।
समुद्रोऽपि चकंपे च कथमेनं निहन्म्यहम् ।।
ततः सिद्धांबिकायाश्च देव्यस्तत्र चतुर्दश ।। ६१ ।।
समालिंग्य च संस्थाप्य रुद्रेण सहिता जगुः ।।
अज्ञातविहिते पापे नास्ति वीरेंद्र कल्मषम् ।। ६२ ।।
शास्त्रेषूक्तमिदं वाक्यं नान्यथा कर्तुमर्हसि ।।
अमुं च पृष्ठलग्नं त्वं पश्य भोः स्वं पितामहम् ।। ६३ ।।
पुत्रपुत्रेति भाषंतमनु त्वा मरणोन्मुखम् ।।

अधुना चेत्स्वकं देहं वीर त्वं परित्यक्ष्यसि ।। ६४ ।।
ततस्त्यक्ष्यति भीमोऽपि पातकं तन्महत्तव ।।
एवं ज्ञात्वा धारय त्वं स्वशरीरं महामते ।। ६५ ।।
अथ चेत्त्यक्तुकामस्त्वं तत्रापि वचनं शृणु ।।
स्वल्पेनैव च कालेन कृष्णाद्देवकिनंदनात् ।। ६६ ।।
देहपातस्तव प्रोक्तस्तं प्रतीक्ष यदीच्छ सि ।।
यतो विष्णुकराद्वत्स देहपातो विशिष्यते ।। ६७ ।।
तस्मात्प्रतीक्ष तं कालमस्माकं प्रार्थितेन च ।।
एवमुक्तो निववृते बर्बरीकोऽपि दुर्मनाः ।। ६८ ।।
रुद्रं देवीश्च चामुंडां सोपालंभं वचोऽब्रवीत् ।।
त्वमेव देवि जानासि रक्ष्यते शार्ङ्गधन्विना ।। ६९ ।।
पांडवा भूमिलाभार्थे तत्ते कस्मादुपेक्षितम् ।।
त्वया च समुपागत्य रक्षितोऽयं वृकोदरः ।। 1.2.64.७० ।।
।। देव्युवाच ।। ।।
अहं च रक्षयिष्यामि स्वभक्तं कृष्णमृत्युतः ।।
यस्माच्च चंडिकाकृत्ये कृतोऽनेन महारणः ।।
तस्माच्चंडिलनाम्नायं विश्वपूज्यो भविष्यति ।। ७१ ।।
एवमुक्त्वा गताः सर्वे देवा देव्यस्त्वदृश्यताम् ।।
भीमोऽपि तं समादाय पांडुभ्यः सर्वमूचिवान् ।। ७२ ।।
विस्मिताः पांडवास्तं च पूजयित्वा पुनः पुनः ।।
यथोक्तविधिना चक्रुस्तीर्थस्नानमतंद्रिताः ।। ७३ ।।
भीमोपि यत्र रुद्रेण मोक्षितस्तत्र सुप्रभम् ।।
लिंगं संस्थापयामास भीमेश्वरमिति श्रुतम् ।। ७४ ।।
ज्येष्ठमासे कृष्णपक्षे चतुर्दश्यामुपोषितः ।।
रात्रौ संपूज्य भीमेशं जन्मपापाद्विमुच्यते ।। ७५ ।।
यथैव लिंगानि सुपूजितानि सप्तात्र मुख्यानि महाफलानि ।।
भीमेश्वरं लिंगमिदं तथैव समस्तपापापहरं सुपूज्यम् ।। ७६ ।। ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे
भीमेश्वरमाहात्म्यवर्णनंनाम चतुःषष्टितमोऽध्यायः ।। ६४ ।।

।। सूत उवाच ।। ।।
उषित्वा सप्तरात्राणि तीर्थेस्मिन्भ्रातृभिः सह ।।
युधिष्ठिरो महातेजा गमनायोपचक्रमे ।। १ ।।
प्रभाते विमले स्नात्वा देवीर्लिंगान्यथार्च्य च ।।
कृत्वा प्रदक्षिणं क्षेत्रं देवीस्तोत्रं जजाप सः ।।
प्रयाणकालेषु सदा जप्यं कृष्णेन कीर्तितम् ।। २ ।।
।। युधिष्ठिर उवाच ।। ।।
देवि पूज्ये महाशक्ते कृष्णस्य भगिनि प्रिये ।।
नत्वा त्वां शरणं यामि मनोवाक्कायकर्मभिः ।। ३ ।।
संकर्षणाभयदाने कृष्णच्छविसमप्रभे ।।
एकानंशे महादेवि पुत्रवत्त्राहि मां शिव ।। ४ ।।
त्वया ततमिदं विश्वं जगदव्यक्तरूपया ।।
इति मत्वा त्वां गतोऽस्मि शरणं त्राहि मां शुभे ।। ५ ।।
कार्यारम्भेषु सर्वेषु सानुगेन मया तव ।।
स्व आत्मा कल्पितो भद्रे ज्ञात्वैतदनुकंप्यताम ।। ६ ।।
।। सूत उवाच ।। ।।
इति ब्रुवाणं राजानं शिरोबद्धाजलिं तदा ।।
वायुपुत्रः प्रहस्यैव सासूयमिदमब्रवीत् ।। ७ ।।
ये त्वां राजन्वदंत्येवं सर्वज्ञोऽयं युधिष्ठिरः ।।
वृथैव वचनं तेषां यतस्त्वं वेत्सि नाण्वपि ।। ८ ।।
को हि प्रज्ञावतां मुख्यः सर्वशास्त्रविदांवरः ।।
स्त्रीणां शरणमापद्येदृजुर्बुद्धिर्यथा भवान् ।। ९ ।।
यतस्त्वमेव वेत्सीदं सर्वशास्त्रेषु कीर्त्यते ।।
जडेयं प्रकृतिर्मूढा यया संमोह्यते जगत् ।। 1.2.65.१० ।।
सचेतनं च पुरुषं प्रकृतिं च विचेतनाम् ।।
प्राहुर्बुधा नराध्यक्ष पुंसश्चप्रकृतिः प्रिया ।। ११ ।।
तत्स्वयं पुरुषो भूत्वा युधिष्ठिर वृथामते ।।
प्रकृतिं नौषि नत्वा तां हासो मेऽतीव जायते ।। १२ ।।
आरोहयेच्छिरो नैव क्वचिद्धित्वा उपानहौ ।।
यथा स मूढो भवति देवीभक्तिरतस्तथा ।। १३ ।।
यदि ते बन्दिवत्पार्थ तिष्ठेद्वाण्यनिवारिता ।।
तत्किमर्थं महादेवं न स्तौषि त्रिपुरान्तकम् ।। १४ ।।
अलक्ष्यमिति वा मत्वा महेशानं महामते ।।

ततः किमर्थ दाशार्हं न स्तौषि पुरुषोत्तमम् ।। १५ ।।
यस्य प्रसादादस्माभिः प्राप्ता द्रुपदनंदिनी ।।
इन्द्रप्रस्थे तथा राज्यं राजसूयस्त्वया कृतः ।। १६ ।।
विजयेन धनुर्लब्धं जरासन्धो मया हतः ।।
प्रत्याहर्तुं तथेच्छामः कौरवेभ्यः स्वकां श्रियम् ।। १७ ।।
यस्य प्रसादात्तं मुक्त्वा कृष्णं हा स्तौषि यज्जयी ।।
अथ स्वयं कौरवाणामुत्पन्नं कुलसत्तमे ।। १८ ।।
जानन्नात्मानमल्पत्वाद्बुद्धेर्न स्तौषि यादवम् ।।
तत्किमर्थं महावीर्यं न स्तौष्यर्जुनमुत्तमम् ।। १९ ।।
येन विद्धं पुरा लक्ष्यं येन कर्णादयो जिताः ।।
येन तत्खांडवं दग्धं यज्ञे येन नृपा जिताः ।। 1.2.65.२० ।।
श्रूयते येन विक्रम्य महेशानोऽपि निर्जितः ।।
स्वर्लोकसंस्थितस्यास्य शरणं याहि स्तौषि च ।। २१ ।।
अथवा तेन शक्रेण राज्यं मे नार्पितं कुतः ।।
इति मत्वा वृथैव त्वं न स्तौषि भ्रातरं मम ।। २२ ।।
ततो मां वा कथं वीरं न स्तौषि त्वं युधिष्ठिर ।।
येन त्वं रक्षितः पूर्वं लाक्षागेहाग्निमध्यतः ।। २३ ।।
वृक्षेणाहत्य मद्रेशो नदीं शुष्कां प्रसारितः ।।
राजराजस्तथा येन जरासंधो निपातितः ।। २४ ।।
पूर्वा दिङ्निर्जिता येन येन पूर्वं बको हतः ।।
हिडम्बश्च महावीरः किर्मीरश्चाधुना वने ।।२५।।
कालेकाले च रक्षामि त्वामेवाहं सदानुगः ।।
न तां पश्यामि रक्षंतीं नत्वा यां स्तौषि भारत।।२६।।
अथ क्षुधाबलं ज्ञात्वा मामौदरिकसत्तमम्।।
क्रूरं साहसिकं चैव न स्तौषि क्षमिणां वरः।।२७।।
ततः सुसंयतो भूत्वा प्रणवं समुदीरयन्।।
कथं न यासि मार्गे त्वं वृथालापो हि दोषभाक्।।२८।।
प्रेताः पिशाचा रक्षांसि वृथालापरतं नरम् ।।
आविशंति तदाविष्टो वक्ताबद्धं पुनः पुनः ।।२९।।
वृथालापी यदश्नाति यत्करोति शुभं क्वचित् ।।
प्रेतादितृप्तये सर्वमिति शास्त्रविनिश्चयः ।।1.2.65.३०।।
नायं तस्यास्ति वै लोकः कुत एव परो भवेत् ।।
तस्माद्विजानता यत्नात्त्याज्यमेव वृथा वचः ।। ३१ ।।

एवं संस्मारितोऽपि त्वं यदि भूयः प्रवर्तसे ।।
भूताविष्टश्चिकित्स्यो नो विविधैरौषधैर्भवान् ।। ३२ ।।
।। सूत उवाच ।। ।।
इति प्रवर्णितां श्रुत्वा भीमसेनेन भारतीम् ।।
पटीमिव प्रविततां विहस्याह युधिष्ठिरः ।। ३३ ।।
नूनं त्वमल्पविज्ञानो वेदाधीतास्त्वया वृथा ।।
मातरं सर्वभूतानामंबिकां यन्न मन्यसे ।। ३४ ।।
स्त्रीपक्ष इति मत्वा तामवजानासि भोः कथम् ।।
स्त्री सती न प्रणम्या किं त्वया कुन्ती वृकोदर ।। ३५ ।।
यदि न स्यान्महामाया ब्रह्मविष्णुशिवार्चिता ।।
तव देहोद्भवः पार्थ कथं स्यात्तत्त्वतो वद ।। ३६ ।।
ईश्वरः परमात्मा तां त्यक्तुं शक्तः कथं न हि ।।
पुनर्भेजे यतो देवीं तेन मन्ये महोर्जिताम् ।। ३७ ।।
वासुदेवोऽपि नित्यं तां स्तौति शक्तिं परात्पराम् ।।
अहं यदि चिकित्स्यः स्यां चिकित्स्यः सोऽपि किं भवान् ।। ३८ ।।
नैवं भूयः प्रवक्तव्यं मौर्ख्यात्प्रति महेश्वरीम् ।।
भूमौ निपत्य शरणं याहि चेत्सुखमिच्छसि ।। ३९ ।।
।। भीम उवाच ।। ।।
सर्वोपायैर्बोधयंति चाटा हस्तगतं नरम् ।।
इदमेवौषधं तत्र तैः सार्धं जल्पनं न हि ।। 1.2.65.४० ।।
मुण्डे मुण्डे मतिर्भिन्ना सत्यमेतन्नृप स्फुटम् ।।
स्वाभीष्टं कुरुते सर्वः कुर्मोऽभीष्टं वयं तथा ।। ४१ ।।
नागायुतसमप्राणो वायुपुत्रो वृकोदरः ।।
न स्त्रियं शरणं गच्छेद्वाङ्मात्रेण कथंचन ।। ४२ ।।
इत्युक्त्वा वचनं भीमो ह्यनुवव्राज तं नृपम् ।।
राजापि सानुगो यातो न साध्विति मुहुर्ब्रुवन् ।। ४३ ।।
ततः क्षणेन विकलस्त्वितश्चेतश्च प्रस्खलत् ।।
उवाच वचनं भीमः सुसंभ्रांतो नृपं प्रति ।। ४४ ।।
धर्मराज महाबुद्धे पश्य मां नृपसत्तम ।।
चक्षुर्भ्यां नैव पश्यामि वैकल्यं किमिदं मम ।। ४५ ।।
।। राजोवाच ।।
भीमभीम ध्रुवं देवी कुपिता ते महेश्वरी ।।
तेन नष्टे चक्षुषी ते महासाहसवल्लभ ।। ४६ ।।

तत्सांप्रतमभिप्रैहि शरणं परमेश्वरीम् ।।
पुनः प्रसन्ना ते दद्यात्कदाचिन्नयने पुनः ।। ४७ ।।
।। भीम उवाच ।। ।।
अहमप्यंग जानामि समो देव्या न कश्चन ।।
प्रभावप्रत्ययार्थं हि सदा निन्दामि तां पुनः ।। ४८ ।।
तस्मात्प्रभावं दृष्ट्वैवं निपत्य वसुधातले ।।
मनोवाग्बुद्धिभिर्नत्वा शरणं स्तौमि मातरम् ।। ४९ ।।
।। सूत उवाच ।। ।।
इत्युक्त्वा भ्रातरं ज्येष्ठं साष्टांगं प्रणिपत्य च ।।
गत्वैव देव्याः शरणं भीमस्तुष्टाव मातरम् ।। 1.2.65.५० ।।
।। भीम उवाच ।। ।।
सर्वभूतांबिके देवि ब्रह्मांडशतपूरके ।।
बालिशं बालकं स्वीयं त्राहित्राहि नमोऽस्तु ते ।। ५१ ।।
त्वं ब्राह्मी ब्रह्मणः शक्तिर्वैष्णवी त्वं च शांभवी ।।
त्रिमूर्तिः शक्तिरूपा त्वं रक्षरक्ष नमोऽस्तु ते ।। ५२ ।।
त्वमैन्द्री च त्वमाग्नेयी त्वं याम्या त्वं च नैर्ऋती ।।
त्वं वारुणी त्वं वायव्या त्वं कौबेरी नमोऽस्तु ते ।।५३ ।।
ऐशानि देवि वाराहि नारसिंहि जयप्रदे ।।
कौमारि कुलकल्याणि कृपेश्वरि नमोऽस्तु ते ।। ५४ ।।
त्वं सूर्ये त्वं तथा सोमे त्वं भौमे त्वं बुधे गुरौ ।।
त्वं शुक्रे त्वं स्थिता राहौ त्वं केतुषु नमोऽस्तु ते ।। ५५ ।।
वससि ध्रुवचक्रे त्वं मुनिचक्रे च ते स्थितिः ।।
भचक्रेषु खचक्रेषु भूचक्रे च नमोऽस्तु ते ।। ५६ ।।
सप्तद्वीपेषु त्वं देवि समुद्रेषु च सप्तसु ।।
सप्तस्वपि च पातालेष्ववसंस्थे नमोऽस्तु ते ।। ५७ ।।
त्वं देवि चावतारेषु विष्णोः साहाय्यकारिणी ।।
विष्णुनाभ्यर्थ्यसे तस्मात्त्राहि मातर्नमोऽस्तु ते ।। ५८ ।।
चतुर्भुजे चतुर्वक्त्रे फलदे चत्वरप्रिये ।।
चराचरस्तुते देवि चरणौ प्रणमामि ते ।। ५९ ।।
महाघोरे कालरात्रि घंटालि विकटोज्वले ।।
सततं सप्तमीपूज्ये नेत्रदे शरणं भव ।। 1.2.65.६० ।।
मेरुवासिनि पिंगाक्षि नेत्रत्राणैककारिणि ।।
हुंहुंकारध्वस्तदैत्ये शरण्ये शरणं भव ।। ६१ ।।

महानादे महावीर्ये महा मोहविनाशिनि ।।
महाबन्धापहे देवि देहि नेत्रत्रयं मम ।। ६२ ।।
सर्वमंगलमंगल्या यदि त्वं सत्यतोंबिके ।।
ततो मे मंगलं देहि नेत्रदानान्नमोस्तु ते ।। ६३ ।।
यदि सर्वकृपालुभ्यः सत्यतस्त्वं कृपावती ।।
ततः कृपां कुरु मयि देहि नेत्रे नमोऽस्तु ते ।। ६४ ।।
पापोयमिति यद्देवि प्रकुप्यसि वृथैव तत् ।।
त्वं मां मोहयसि त्वेवं न ते तत्किं नमोऽस्तु ते ।। ६५ ।।
स्वयमुत्पाद्य यो रेणुं वेष्टितस्तेन कुप्यति ।।
तथा कुप्यसि मे मातरनाथस्यास्य दर्शय ।। ६६ ।।
इति स्तुता पांडवेन देवी कृष्णच्छविच्छविः ।।
रामा रामाभिवदना प्रत्यक्षा समजायत ।। ६७ ।।
विद्युत्कोटिसमाभास मुकुटेनातिशोभिता ।।
सूर्यबिंबप्रभाभ्यां च कुण्डलाभ्यां विभूषिता ।। ६८ ।।
प्रवाहेनेव हारेण सुरनद्या विराजिता ।।
कल्पद्रुमप्रसूनैश्च पूर्णावतंसमंडिता। ।। ६९ ।।
दन्तेन्दुकांतिविध्वस्तभक्तमोहमहाभया ।।
खड्गचर्मशूलपात्रचतुर्भुजविराजिता ।। 1.2.65.७० ।।
वाससा तडिदाभेन मेघलेखेव वेष्टिता ।।
मालया सुममालिन्या भ्राजिता सालिमालया ।। ७१ ।।
सतां शरणदाभ्यां च पद्भ्यां नूपुरराजिता ।।
जयेति पुष्पवर्षैश्च शक्राद्यैरभिपूजिता।। ७२ ।।,
गणैर्देवीभिराकीर्णा शतपद्मैर्महामलैः ।।
तां तादृशीं व्योम्नि दृष्ट्वा मातरं व्योमवाहिनीम् ।। ७३ ।।
भूमौ निपत्य राजेंद्रो नमोनम इति स्थितः ।।,
भीमोपि मातरं दृष्ट्वा यथा बालोऽभिधावति ।। ७४ ।।
तथा सम्मुखमाधावज्जय मातरिति ब्रुवन् ।।
दर्शनेनैव देव्याश्च शुभनेत्रत्रयस्तदा ।। ७९ ।।।
प्रणिपत्य नमस्तुभ्यं नमस्तुभ्यं मुहुर्जगौ ।।
प्रसीद देवि पद्माक्षि पुनर्मातः प्रसीद मे ।। ७६ ।।
पुनः प्रसीद पापस्य क्षमाथीले प्रसीद मे ।। ७७ ।।
एवं स्तुता भगवती स्वयमुत्थाय पार्थिवम् ।।
भीमं चोत्संगमारोप्य कृपयेदं वचोऽब्रवीत् ।। ७८ ।।

।। श्रीदेव्युवाच ।। ।।
यत्त्वयाभिहितं स्तोत्रं तेन तुष्टा तवोपरि ।।
अतो नेत्रत्रयं दत्तं द्वे बाह्ये चांतरं परम् ।। ७९ ।।
नाहं कोपं यत्र तत्र दर्शयामि वृकोदर ।।
त्वं तु प्रमाणपुरुषस्त्वत्तः क्रोधमदर्शयम् ।। 1.2.65.८० ।।
नैतत्प्रियं च कृष्णस्य भ्रातुर्मे क्रोधमाचरम् ।।
भवन्तो वासुदेवस्य यत्र प्राणा बहिश्चराः ।। ८१ ।।
त्वं च निन्दसि मां नित्यं तच्च जाने वृकोदर ।।
मत्प्रभावपरिज्ञानहेतवे कीदृशस्त्विति ।। ८३ ।।
तदेवं नैव भूयस्ते प्रकर्तव्यं कथंचन ।।
अक्षिक्षेपो हि पूज्यानामावहत्यधिकं रुजम् ।। ८४ ।।
तदिदानीं सर्वमेवं क्षन्तव्यं च परस्परम् ।।
यच्च ब्रवीमि त्वां वीर तन्निशामय भारत ।। ८५ ।।
यदा यदा हि धर्मस्य ग्लानिराविर्भवेद्धरिः ।।
तदातदावतीर्याहं विष्णोरस्य सहायिनी ।। ८६ ।।
इदानीं च हरिर्जातो वसुदेवसुतो भुवि ।।
अहं च गोपनन्दस्य एकानंशाभिधा सुता ।। ८७ ।।
तद्यथा भगवान्कृष्णो मम भ्राताभिपूजितः ।।
भवन्तोऽपि तथा मह्यं भ्रातरः पांडवा सदा ।। ८८ ।।
ये भीमभगिनीत्येवं मां स्तोष्यंति नरोत्तमाः ।।
आबाधा नाशयिष्यामि तेषां हर्षसमन्विता ।। ८९ ।।
त्वं च भ्रातुर्जयं वीर प्रदास्यसि महारणे ।।
भुजयोस्ते वसिष्यामि धार्तराष्ट्रनिपातने ।। 1.2.65.९० ।।
कृत्वा राज्यं च वर्षाणि षट्त्रिंशत्तदनन्तरम् ।।
महाप्रस्थानधर्मेण पृथिवीं परिचरिष्यथ ।। ९१ ।।
अस्मिन्नेव ततो देशे लोहोनाम महासुरः ।।
भवतां न्यस्तशस्त्राणां वधार्थं प्रक्रमिष्यति ।। ९२ ।।
ततस्तं सर्वभूतानामवध्यं भवतां कृते ।।
अन्धं कृत्वा पातयिष्ये ततो यूयं प्रयास्यथ ।। ९३ ।।
निस्तीर्य च हिमं सर्वं निमग्नाः बालुकार्णवे ।।
स्वर्गं यास्यति राजैकः सशरीरो गमिष्यति ।। ९४ ।।
अन्धो यत्र कृतो लोहो लोहाणाभिधया पुरम् ।।
भविष्यति च तत्रैव स्थास्येऽहं कलया सदा ।।९५।।

ततः कलियुगे प्राप्ते केलो नाम भविष्यति ।।
मम भक्तस्तस्य नाम्ना भाव्या केलेश्वरीत्यहम् ।। ९६ ।।
वैलाकश्चापरो भक्तो भविष्यति ममोत्तमः ।।
तस्याराधनतः ख्यातिं प्रयास्यामि कलौ युगे ।। ९७ ।।
लोहाणासंस्थितां चैव येर्चयिष्यंति मां जनाः ।।
श्रद्धया सितसप्तम्यां तैश्च सर्वत्र पूजिता ।। ९८ ।।
अंधानां च प्रदास्यामि भावीनि नयनान्यहम् ।।
तस्मिन्दिने तर्पिताहं भक्तिभावेन पांडव ।। ९९ ।।
पादांगुष्ठेन च भवांस्तत्र कुंडं विधास्यति ।।
सर्वतीर्थस्नान तुल्यं तत्र स्नानं च तद्दिने ।। 1.2.65.१०० ।।
मत्स्यानां नेत्रनेत्रस्थतेजस्तन्मात्रमुत्तमम् ।।
उद्धृत्य योजयिष्यामि प्रत्यक्षं तद्भविष्यति ।। १०१ ।।
एवं मम महास्थानं कलौ ख्यातं भविष्यति ।। १०२ ।।
लोहाणाख्यं महाबाहो नाम केलेश्वरीति च ।।
दुर्गमाख्यं ततो हत्वा अस्मिन्क्षेत्रे च भारत।।१०३।।
दुर्गा नाम भविष्यामि महीसागरपूर्वतः ।।
धर्मारण्ये वसिष्यामि भवतां त्राणकारणात् ।। १०४ ।।
धर्मारण्ये स्थितां चैव येऽर्चयिष्यंति मानवाः ।।
आश्विने मासि चैत्रे वा नवम्यां शुक्लपक्षके ऽ।।। १०५ ।।
स्नात्वा महीसागरे च तेषां दास्यामि वांछितम् ।।
विधिना येऽर्चयिष्यंति मां च श्रद्धास मन्विताः ।। १०६ ।।
पुत्रपौत्रान्प्रदास्यामि स्वर्गं मोक्षं न संशयः ।।
प्रवेशे च कलेः काले भवतां वंशसंभवः ।।
वत्सराजः पांडवानां तोषयिष्यति यत्नतः ।। १०७ ।।
यस्य नाम्ना ततः ख्याता भविष्यामि कलौ युगे ।।
वत्सेश्वरीति वत्सस्य राज्ञः सर्वार्थदायिनी ।।१०८।।
मत्प्रसादात्स राजा वै भवनोत्तापकारिणीम् ।।
अट्टालयांनाम तदा राक्षसीं निहनिष्यति ।। १०९ ।।
तस्याश्चापि वधस्थानमट्टालजमिति स्थितम् ।।
भविष्यति पुरं तत्र मां च संस्थापयिष्यति ।। 1.2.65.११० ।।
अट्टालयाजग्रामे मामर्चयिष्यंति ये जनाः ।।
वत्सेश्वरीं सिताष्टम्यामाश्विने तैः सदार्चिता ।। १११ ।।
वत्सेश्वरीं च ये देवीं पूजयिष्यंति मानवाः ।।

तेषां सर्वफलावाप्तिर्भविष्यति न संशयः ।। ११२ ।।
इत्थमट्टालये वासो लोहाणे च भविष्यति ।।
धर्मारण्ये महाक्षेत्रे महीसागरसंनिधौ ।। ११३ ।।
मम लोकहितार्थाय लोहस्य च निशम्यताम् ।।
अधीकृतो मया लोहो बह्वीस्तप्तां तपः समाः ।। ।। ११४ ।।
वृत्रासुर इवाजेयो लोकानुत्सादयिष्यति ।।
तं च विश्वपतिर्धीमानवतीर्य बुधो हरिः ।। ११५ ।।
यत्र हंता तत्र ग्रामं लोहाटीति भविष्यति ।।
गयोनाम महादैत्यो भवतां विघ्नकृत्तदा ।।११६।।
प्रस्थाने लोहवद्भावी करिष्ये तं नपुंसकम् ।।
गयत्राडेति मां तत्र पूजयिष्यंति मानवाः ।। ।। ११७ ।।
ग्रामं चापि गयत्राडं तत्र ख्यातं भविष्यति ।।
गयत्राडे गयत्राडां येऽर्चयिष्यंति मानवाः ।। ११८ ।।
माघाष्टम्यां न शिष्यंति तस्य सर्वेऽप्युपद्रवाः ।।
ये च मां कोपयिष्यंति पांडवाराधितां सदा ।। ११९ ।।
तेषां पुंस्त्वं हरिष्यामि महारौद्राधितिष्ठति ।।
परिवारश्च मे चात्र षण्ढः सर्वो भविष्यति ।। 1.2.65.१२० ।।
तस्मिन्कलियुगे घोरे रौद्रे रुद्रेऽतिनिर्घृणे ।।
एवं तृतीयं तन्मह्यं स्थानमत्र भविष्यति ।। १२१ ।।
भवत्सु च स्वर्गतेषु गयोऽपि सुमहत्तपः ।।
तप्त्वा प्राप्य पुनः पुंस्त्वं लोकान्संपीडयिष्यति ।। १२२ ।।
गयातीर्थं गतं तं च गयाध्वंसनकाम्यया ।।
बुध एव जगत्स्वामी तत्र तं सूदयिष्यति ।। १२३ ।।
इत्थं श्रीमान्पीतवासा अवतीर्य बुधः प्रभुः ।।
बहूनि कृत्वा कर्माणि स्वस्थानं प्रतिपत्स्यते ।। १२४ ।।
इति संक्षेपतः प्रोक्तं भविष्यं पांडवा मया ।।
भवतां चित्तनिर्वृत्यै श्रूयतां भूय एव च ।। १२५ ।।
इदं तीर्थवरं मह्यं संसेव्यं सर्वदा प्रियम् ।।
कृतं यदत्रागमनं तेन प्रीतिः परा मम ।। १२६ ।।
भीमस्य चापि पौत्रेण दृढं संतोषिताऽस्मि च ।।
देव्यः सर्वाश्च मद्रूपं नैतज्ज्ञेयम तोऽन्यथा ।। १२७ ।।
व्रजध्वं चापि तीर्थानि यानि वो न कृतानि च ।।
आबाधास्वस्मि सर्वासु स्मरणीया स्वसेव च ।। १२८ ।।

आपृच्छे चापि वः सर्वान्यूयं कृष्णसमा मम ।। १२९ ।।
।। सूत उवाच ।। ।।
इति देव्या वचः श्रुत्वा विस्मयोत्फुल्ललोचनाः ।।
पुनःपुनः प्रणम्यैनां नापश्यन्दीपवद्गताम् ।। 1.2.65.१३० ।।
ततस्ते बर्बरीकं च संस्थाप्यात्रैव निष्ठितम् ।।
आगच्छ योगे चोक्त्वेदं चक्रुस्तीर्थानि मुख्यशः ।। १३१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बर्बरीकोपाख्याने केलेश्वरी वत्सेश्वरीदुर्गादेवीगयत्राडामाहात्म्यवर्णनंनाम पञ्चषष्टितमोऽध्यायः ।। ६५ ।।

।। सूत उवाच ।। ।।
ततस्त्रयोदशे वर्षे व्यतीते समये तदा ।।
उपप्लवे संगतेषु सर्वराजसु पांडवाः ।। १ ।।
योद्धुमागत्य संतस्थुः कुरुक्षेत्रं महारथाः ।।
कौरवाश्चापि संतस्थुर्दुर्योधनपुरोगमाः ।।२।।
ततो भीष्मेण प्रोक्तां च नरैः श्रुत्वा युधिष्ठिरः ।।
रथातिरथसंख्यां तु राज्ञां मध्ये वचोऽब्रवीत् ।।३।।
भीष्मेण विहिता कृष्ण रथातिरथवर्णना ।।
ततो दुर्योधनोऽपृच्छदिदं स्वीयान्महारथान्।।४।।
ससैन्यान्पांडवानेतान्हन्यात्कालेन केन कः ।।
मासेन तु प्रतिज्ञातं भीष्मेण च कृपेण च ।।५।।
पक्षं द्रोणेन चाह्नां च दशभिर्द्रौणिना रणे ।।
षड्भिः कर्णेन च तथा सदा ममभयंकृता ।। ६ ।।
तदहं स्वांश्च पृच्छामि केन कालेन हंति कः ।।
एतच्छ्रुत्वा वचो राज्ञः फाल्गुनो वाक्यमब्रवीत् ।। ७ ।।
अयुक्तमेतद्भीष्माद्यैः प्रतिज्ञातं युधिष्ठिर ।।
ततो जये च विजये निश्चयो हि मृषैव तत् ।। ८ ।।
तवापि ये संति नृपाः सन्नद्धा रणसंस्थिताः ।।
पश्यैतान्पुरुषव्याघ्रान्कालकल्पान्दुरासदान् ।। ९ ।।
द्रुपदं च विराटं च धृष्टकेतुं च कैकयम् ।।
सहदेवं सात्यकिं च चेकितानं च दुर्जयम्।। 1.2.66.१० ।।
धृष्टद्युम्नं सपुत्रं च महावीर्यं घटोत्कचम् ।।
भीमादींश्च महेष्वासान्केशवं चापराजितम् ।। ११ ।।
मन्येहमेकस्त्वेतेषां हन्यात्कौरववाहिनीम् ।।
सन्नद्धाः प्रतिदृश्यंते भीष्माद्या बहवो रथाः ।। १२ ।।
तेभ्यो भयं न कार्यं ते फल्गवोऽमी मृगा इव ।। १३ ।।
अस्माकं धनुषां घोषैरिदानीमेव भारत ।।
कौरवा विद्रविष्यंति सिंहत्रस्ता मृगा इव ।। १४ ।।
वृद्धाद्भीष्माद्द्विजाद्वृद्धाद्द्रोणादपि कृपादपि।।
बालिशात्किं भयं द्रौणेः सूतपुत्राच्च दुर्मतेः ।। १५ ।।
अथवा चित्तनिर्वृत्यै ज्ञातुमिच्छसि भारत ।।
शत्रूणां प्रत्यनीकेषु संधावच्छृणु मे वचः ।।१६।।
एकोऽहमेव संग्रामे सर्वे तिष्ठंतु ते रथाः ।।

एकाहना क्षपये सर्वान्कौरवान्सैन्यसंयुतान् ।। १७ ।।
इत्यर्जुनवचः श्रुत्वा स्मयन्दामोदरोऽब्रवीत् ।।
एवमेतद्यथा प्राह फाल्गुनोऽयं मृषा न तत् ।। १८ ।।
ततश्च शंखान्भेरीश्च शतशश्चैव पुष्करान् ।।
निवार्य राजमध्यस्थो बर्बरीको वचोऽब्रवीत् ।। ।। १९ ।।
येन तप्तं गुप्तक्षेत्रे येन देव्यः सुतोषिताः ।।
यस्यातुलं बाहुबलं तेन चोक्तं निशम्यताम् ।। 1.2.66.२० ।।
यद्ब्रवीमि वचः सत्यं शृणुध्वं तन्नराधिपाः ।।
आत्मनो वीर्यसदृशं केवलं न तु दर्पतः ।। २१ ।।
यदार्येण प्रतिज्ञातमर्जुनेन महात्मना ।।
न मर्षयामि तद्वाक्यं कालक्षेपो महानयम् ।। २२ ।।
सर्वे भवंतस्तिष्ठंतु सार्जुनाः सहकेशवाः ।।
एको मुहूर्ताद्भीष्मादीन्सर्वान्नेष्ये यमक्षयम् ।। २३ ।।
मयि तिष्ठति केनापि शस्त्रग्राह्यं न क्षत्रियैः ।।
स्वधर्मशपथो वोऽस्तु मृते ग्राह्यं ततो मयि ।। २४ ।।
पश्यध्वं मे बलं बाह्वोर्देव्याराधनसंभवम् ।।
माहात्म्यं गुप्तक्षेत्रस्य तथा भक्तिं च पांडुषु ।। २५ ।।
पश्यध्वं मे धनुर्घोरं तूणीरावक्षयौ तथा ।।
खड्गं च देव्या यद्दत्तं ततो वच्मि वचस्त्विदम् ।। २६ ।।
इति तस्य वचः श्रुत्वा क्षत्रिया विस्मयं ययुः ।।
अर्जुनश्च कटाक्षेपे लज्जितः कृष्णमैक्षत ।। २७ ।।
तमाह ललितं कृष्णः फाल्गुनं परमं वचः ।।
आत्मौपयिकमेवेदं भैमि पुत्रोऽभ्यभाषत ।। २८ ।।
नवकोटियुतोऽनेन पलाशी निहतः पुरा ।।
क्षणादेव च पाताले श्रूयते महदद्भुतम् ।। २९ ।।
पुनः प्रक्ष्यामदे त्वेनं क्वेनोपायेन कौरवान्।।
मुहूर्ताद्धंसि ब्रूहीति पृच्छयतां चाह तं जयः ।। 1.2.66.३० ।।
ततः स्मरन्यादवेंद्रो भैमिपुत्रमभाषत ।। ३१ ।।
भीप्मद्रोणकृपद्रौणिकर्णदुर्योधनादिभिः ।।
गुप्तां त्र्यंबकदुर्जेयां सेनां हंसि कथं क्षणात् ।। ३२ ।।
अयं महान्विस्मयस्ते वचसो भैमिनंदन ।।
संभूतः सर्वराज्ञां च फाल्गुनस्य च धीमतः ।। ३३ ।।
तद्ब्रूहि केनोपायेन मुहूर्ताद्धंसि कौरवान् ।।

उपायवीर्यं ते ज्ञात्वा मंस्यामो वयमप्युत ।। ३४ ।।
।। सूत उवाच ।। ।।
इत्युक्तो वासुदेवेन सर्वभूतेश्वरेण च ।।
सिंहवक्षाः पर्वताभो नानाभूषणभूषितः ।। ३५ ।।
घटास्यो घटहासश्च ऊर्ध्वकेशोऽतिदीप्ति मान् ।।
विद्युदक्षो वायुजवो यश्चेच्छेन्नाशयेज्जगत् ।। ३६ ।।
देवीदत्तातुलबलो बर्बरीकोऽभ्यभाषत ।।
यदि वो मानसं वीरा उपायस्य प्रदर्शने ।। ३७ ।।
तदहं दर्शयाम्येष पश्यध्वं सहकेशवाः ।।
इत्युक्त्वा धनुरारोप्य संदधे विशिखं त्वरन् ।।
निःशल्यं चापि संपूर्णं सिंदूराभेण भस्मना ।।३८।।
आकर्णमाकृष्य च तं मुमोच मुखादथोद्भूतमभूच्च भस्म ।। ३९ ।।
सेनाद्वये तच्च पपात शीघ्रं यस्यैव यत्रास्ति च मृत्युमर्म ।।
सर्वरोमसु भीष्मस्य कंठे राधेयद्रोणयोः ।। 1.2.66.४० ।।
ऊरौ दुर्योधनस्यापि शल्यस्यापि च वक्षसि ।।
कंठे च शकुनेर्दीप्तं भगदत्तस्य चापतत् ।। ४१ ।।
कृष्णस्य पादतल लके कंठे द्रुपदमत्स्ययोः ।।
शिखंडिनस्तथा कट्यां कंठे सेनापतेस्तथा ।। ४२ ।।
पपात रक्तं तद्भस्म यत्र येषां च मर्म च ।।
केवलं चैव पांडूनां कृपद्रोण्योश्च नास्पृशत ।। ४३ ।।
इति कृत्वा ततो भूयो बर्बरीकोऽभ्यभाषत ।।
दृष्टं भवद्भिरेवं यन्मया मर्म निरीक्षितम् ।। ४४ ।।
अधुना पातयिष्यामि मर्मस्वेषां शिताञ्छरान् ।।
देवीदत्तानमोघाख्यान्यैर्मरिष्यंत्यमी क्षणात् ।। ४५ ।।
शपथा वः स्वधर्मस्य शस्त्रं ग्राह्यं न वः क्वचित् ।।
मुहूर्तात्पातयिष्यामि शत्रूनेताञ्छितैः शरैः ।। ४६ ।।
ततो विस्मितचित्तानां युधिष्ठिरपुरोगिणाम् ।।
आसीन्निनादः सुमहान्साधुसाध्विति शंस ताम् ।। ४७ ।।
वासुदेवश्च संक्रुद्धश्चक्रेण निशितेन च ।।
एवं ब्रुवत एवास्य शिरश्छित्त्वा न्यपातयत् ।। ४८ ।।
ततः क्षणात्सर्वमासीदाविग्नं राजमं डलम् ।।
व्यलोकयन्केशवं ते विस्मिताश्चाभवन्भृशम् ।। ४९ ।।
किमेतदिति प्राहुश्च बर्बरीकः कुतो हतः।।

पांडवाश्चापि मुमुचुरश्रूणि सहपार्थिवाः ।। 1.2.66.५० ।।
हाहा पुत्रेति च गृणन्प्रस्खलंश्च पदेपदे ।।
घटोत्कचोऽपतद्दीनः पुत्रोपरि विमूर्छितः ।। ५१ ।।
एतस्मिन्नंतरे देव्यश्चतुर्दश समाययुः ।। ५२ ।।
सिद्धांबिका क्रोडमाता कपाली तारा सुवर्णा च त्रिलोकजेत्री ।।
भाणेश्वरी चर्चिका चैकवीरा योगेश्वरी चंडिका त्रैपुरा च ।।५३।।
भूतांबिका हरसिद्धिस्तथामूः संप्राप्य तस्थुर्नृपविस्मयंकराः ।।
श्रीचंडिकाऽऽश्वास्य ततौ घटोत्कचं प्रोवाच वाक्यं महता स्वरेण ।। ५४ ।।
शृणुध्वं पार्थिवाः सर्वे कृष्णेन विदितात्मना ।।
हेतुना येन निहतो बर्बरीको महाबलः ।। ५५ ।।
मेरुमूर्ध्नि पुरा पृथ्वी समवेतान्दिवौकसः ।।
भाराक्रांता जगादैतान्भारोऽप ह्रियतां हि मे ।। ५६ ।।
ततो ब्रह्मा प्राह विष्णुं भगवंस्त्वमिदं शृणु ।।
देवास्त्वानुगमिष्यंति भारं हर भुवः प्रभो ।। ५७ ।।
ततस्तथेति तन्मेने वचनं विष्णुरव्ययः ।।
एतस्मिन्नंतरे बाहुमुद्धृत्योच्चैरभाषत ।। ५८ ।।
सूर्यवर्चेति यक्षेंद्रश्चतुराशीतिकोटिपः ।।
किमर्थं मानुषे लोके भवद्भिर्जन्म कार्यते ।। ५९ ।।
मयि तिष्ठति दोषाणामनेकानां महास्पदे ।।
सर्वे भवंतो मोदंतु स्वर्गेषु सह विष्णुना ।। 1.2.66.६० ।।
अहमेकोऽवतीर्यैतान्हनिष्यामि भुवो भरान् ।।
स्वधर्मशपथा वो वै संति चेज्जन्म प्राप्स्यथ ।। ६१ ।।
इत्युक्तवचने ब्रह्मा क्रुद्धस्तं समभाषत ।।
दुर्मते सर्वदेवानामविषह्यं महाभरम् ।।६२।।
स्वसाध्यं ब्रूषे मोहात्त्वं शापयोग्योऽसि बालिश ।।
देशकालोचितं स्वीयं परस्य च बलं हृदा ।। ६३ ।।
अविचार्यैव प्रभुषु वक्ति सोऽर्हति दंडनम् ।।
तस्माद्भूभारहरणे युद्धस्योपक्रमे सति ।। ६४ ।।
शरीरनाशं कृष्णात्त्वमवाप्स्यसि न संशयः ।।
एवं शप्तो ब्रह्मणाऽसौ विष्णुमेतदयाचत ।। ६५ ।।
यद्येवं भविता नाशस्तदेकं देव प्रार्थये ।।
जन्मप्रभृति मे देहि मतिं सर्वार्थसाधनीम् ।। ६६ ।।
ततस्तथेति तं प्राह केशवो देवसंसदि ।।

शिरस्ते पूजयिष्यंति देव्याः पूज्यो भविष्यसि ।। ६७ ।।
इत्युक्त्वा चावतीर्णोऽसौ सह देवैर्हरिस्तदा ।।
हरिर्नाम स कृष्णोऽसौ भवंतस्ते तथा सुराः ।। ६८ ।।
सूर्यवर्चाः स चायं हि निहतो भैमिपुत्रकः ।।
प्राक्छापं ब्रह्मणः स्मृत्वा हतोनेन महात्मना ।।
तस्माद्दोषो न कृष्णेऽस्मिन्द्रष्टव्यः सर्वभू मिपैः ।।६९।।
।। श्रीकृष्ण उवाच ।। ।।
यदुक्तं भूमिपा देव्या तत्तथैव न संशयः ।। 1.2.66.७० ।।
यद्येनमधुना नैव हन्यां ब्रह्मवचोऽन्यथा ।।
ततो भवेदिति स्मृत्वा मयासौ विनिपातितः ।। ७१ ।।
गुप्तक्षेत्रे मयैवाऽसौ नियुक्तो देव्यनुस्मृतौ ।।
पूर्वं दत्तं वरं स्वीयं स्मरता देवसंसदि ।।७२ ।।
इत्युक्ते चंडिका देवी तदा भक्तशिरस्त्विदम् ।।
अभ्युक्ष्य सुधया शीघ्रमजरं चामरं व्यधात् ।। ७३ ।।
यथा राहुशिरस्तद्वत्तच्छिरः प्रणनाम तान् ।।
उवाच च दिदृक्षामि युद्धं तदनुमन्यताम् ।। ७४ ।।
ततः कृष्णो वचः प्राह मेघगंभीरवाक्प्रभुः ।।
यावन्मही सनक्षत्रा यावच्चंद्रदिवाकरौ ।। ७५ ।।
तावत्त्वं सर्वलोकानां वत्स पूज्यो भविष्यसि ।।
देवीलोकेषु सर्वेषु देवीवद्विचरिष्यसि ।।७६।।
स्वभक्तानां च लोकेषु देवीनां दास्यसे स्थितिम् ।।
बालानां ये भविष्यंति वातपित्तकफोद्भवाः ।।
पिटकास्ताः सुखेनैव शामयिष्यसि पूजनात् ।। ७७ ।।
इदं च शृंगमारुह्य पश्य युद्धं यथा भवेत् ।। ७८ ।।
धावंतः कौरवास्त्वस्मान्वयं यामस्त्वमूनिति ।।
इत्युक्ते वासुदेवेन देव्योऽथांबरमाविशन् ।। ७९ ।।
बर्बरीकशिरश्चैव गिरिशृंगमवाप्य तत् ।।
देहस्य भूमिसंस्काराश्चाभवच्छिरसो नहि ।।
ततो युद्धं महदभूत्कुरुपांडवसेनयोः ।।1.2.66.८०।।
अष्टादशाहेन हता ये च द्रोणवृषादयः ।।
दुर्योधने हते क्रूरे अष्टादशदिनात्यये ।। ८१ ।।
युधिष्ठिरो ज्ञातिमध्ये गोविंदं समभाषत ।।
पुरुषोत्तम संग्राममर्मु संतारिता वयम् ।। ८२ ।।

त्वयैव नाथेन हरे नमस्ते पुरुषोत्तम ।।
श्रुत्वा तस्यापि सासूयमिदं भीमो वचोऽब्रवीत् ।। ८३ ।।
येन ध्वस्ता धार्तराष्ट्रास्तं निराकृत्य मां नृप ।।
पुरुषोत्तमं कृष्णमिति ब्रवीषि किमु मूढवत् ।। ८४ ।।
धृष्टद्युम्नं फाल्गुनं च सात्यकिं मां च पांडव ।।
निराकृत्य ब्रवीष्येव सूतं धिक्त्वा युधिष्ठिर ।। ८५ ।।
।। अर्जुन उवाच ।। ।।
मैवं मैवं ब्रूहि भीम न त्वं वेत्सि जनार्दनम् ।।
न मया न त्वया पार्थ नान्येनाप्यरयो हताः ।। ८६ ।।
अहं हि सर्वदाग्रस्थं नरं पश्यामि संयुगे ।।
निघ्नंतं शात्रवांस्तत्र न जाने कोऽप्यसाविति ।। ८७ ।।
।। भीम उवाच ।। ।।
विभ्रांतोऽसि ध्रुवं पार्थ नात्र हंता नरोऽपरः ।।
अथ चेदस्ति त्वत्पौत्रमुच्चस्थं वच्मि हंत कः ।। ८८ ।।
उपसृत्य ततो भीमो बर्बरीकमपृच्छत ।।
ब्रूह्येते केन निहता धार्तराष्ट्रा हि शत्रवः ।। ८९ ।।' ।।
।। बर्बरीक उवाच ।। ।।
एको मया पुमान्दृष्टो युध्यमानः परैः सह ।।
सव्यतः पंचवक्त्रः स दक्षिणे चैकवक्त्रतः ।। 1.2.66.९० ।।
सव्यतो दशहस्तश्च धृतशूलाद्युदायुधः ।।
दक्षिणे च चतुर्हस्तो धृतचक्राद्युदायुधः ।। ९१ ।।
सव्यतश्च जटाधारी दक्षिणे मुकुटोच्चयः ।।
सव्यतो भस्मधारी च दक्षिणे धृतचंदनः ।। ९२ ।।
सव्यतश्चंद्रधारी च दक्षिणे कौस्तुभद्युतिः ।।
ममापि तद्दर्शनतो महद्भयमजायत ।। ९३ ।।
ईदृशो मे नरो दृष्टो न चान्यो यो जघान तान् ।।
इत्युक्ते पुष्पवर्षं तु खादासीत्सुमहाप्रभम् ।। ९४ ।।
सस्वनुर्देववाद्यानि साधुसाध्विति वै जगुः ।।
विस्मिताः पांडवाश्चासन्प्रणेमुः पुरुषोत्तमम् ।। ९५ ।।
विलक्षश्चाभवद्भीमो निश्वासांश्चाप्यमुंचत ।।
तं ततः केशवः स्वामी समादाय करे दृढे ।। ९६ ।।
कुरुशार्दूल एहीति प्रोच्य सस्मार काश्यपिम् ।।
आरुह्य गरुडं पश्चात्स्मृतमात्रमुपस्थितम् ।। ९७ ।।

भीमेन सहितो व्योम्नि प्रयातो दक्षिणां दिशम् ।।
ततोऽर्णवमतीत्यैव सुवेलं च महागिरिम् ।। ९८ ।।
लंकासमीपे दृष्ट्वैव सरः कृष्णोऽब्रवीद्वचः ।।
कुरुशार्दूल पश्येदं सरो द्वादशयोजनम् ।। ९९ ।।
यदि शूरोऽसि तच्छीघ्रमानयास्यतलान्मृदम् ।।
इत्युक्तो गरुडाच्छीघ्रं न्यपतत्तज्जले बली ।। 1.2.66.१०० ।।
योजनं वायुजवाद्गच्छन्नधो नांतमपश्यत ।।
ततो भीमो विनिःसृत्य भग्नवीर्योऽभ्यभाषत ।। १०१ ।।
अगाधमेतत्सुमहत्सरः कैश्चिन्महाबलैः ।।
अहं खादितुमारब्धः कथंचिच्चापि निर्गतः ।।१ ०२।।
एवमुक्तो हसन्कृष्ण उच्चिक्षेप महत्सरः ।।
स्वेनांगुष्ठेन तेजस्वी तदर्धार्धमजायत ।।१०३।।
तद्दृष्ट्वा विस्मितः प्राह किमिदं कृष्ण ब्रूहि मे ।। १०४ ।
।। श्रीकृष्ण उवाच।।
कुम्भकर्ण इति ख्यातः पूर्वमासीन्निशाचरः ।।
रामबाणहतस्याभूच्छिरश्छिन्नं सुदुर्मतेः ।। १०५ ।।
शिरसस्तस्य तालुक्यखंडमेतद्वृकोदर ।।
योजनद्वादशायामं मृदु क्षिप्तं विचूर्णितम् ।। १०६ ।।
विधृतस्त्वं च यैस्ते तु सरोगेयाभिधाः सुराः ।।
त्रिकूटस्य शिला भिश्च चूर्णिता ये च कोटिशः ।। १०७ ।।
एते हि विश्वरिपवो निहताः स्युरुपायतः ।।
गच्छामः पांडवान्भीम द्रौणिर्हि त्वरते दृढम् ।। १०८ ।।
ततो भीमः प्रणम्याह मनोवाक्कायवृद्धिभिः ।।
कृतमाजन्मतः सव कुकृतं क्षम केशव ।। १०९ ।।
पुरुषोत्तम भवान्नाथ बालिशस्य प्रसीद मे ।।
ततः क्षांतमिति प्रोच्य भीमेन सहितो हरिः ।। 1.2.66.११० ।।
रणाजिरं भूय एत्य बर्बरीकं वचोऽब्रवीत् ।।
चरन्नेवं सुहृदय सर्वलोकेषु नित्यशः ।। । १११ ।।
पूजितः सर्वलोकैस्त्वं यच्छंस्तेषां वरान्वृतान् ।।
गुप्तक्षेत्रं च न त्याज्यं सर्वक्षेत्रोत्तमोत्तमम् ।। ११२ ।।
देहिस्थल्यां तथा वासी क्षमस्व दुष्कृतं च यत् ।।
इत्युक्तस्तान्नमत्कृत्य भैमिः स्वैरं ययौ मुदा ।। ११३ ।।
वासुदेवोऽपि कार्याणि सर्वाण्यूर्ध्वमकारयत् ।।

इति वो वर्णितोत्पत्तिर्बर्बरीकस्य वाडवाः ।।
स्तवं चास्य प्रवक्ष्यामि येन तुष्यति यक्षराट् ।। ११४ ।।
जयजय चतुरशीतिकोटिपरिवार सूर्यवर्चाभिधान यक्षराज जय भूभारहरणप्रवृत्त लघुशापप्राप्तनैर्ऋतियोनिसंभव जय कामकटंकटाकुक्षिराजहंस जय घटोत्कचानंदवर्धन बर्बरीकाभिधान जय कृष्णोपदिष्टश्रीगुप्तक्षेत्रदे वीसमाराधनप्राप्तातुलवीर्य जय विजयसिद्धिदायक जय पिंगलारेपलेन्द्रदुहद्रुहानवकोटीश्वर पलाशनदावानल जय भूपातालांतराले नागकन्यापरि हारक जय भीममानमर्दन जय सकलकौरवसेनावधमुहूर्तप्रवृत्त जय श्रीकृष्णवरलब्धसर्ववरप्रदानसामर्थ्य जयजय कलिकालवंदितनमोनमस्ते पा हिपाहीति ।। ११५ ।।
अनेन यः सुहृदयं श्रावणेऽभ्यचर्च्य दर्शके ।।
वैशाखे च त्रयोदश्यां कृष्णपक्षे द्विजोत्तमाः ।।
शतदीपैः पूरिकाभिः संस्तवेत्तस्य तुष्यति ।। ११६ ।।
ततो विप्रा नारदश्च समाराध्य महेश्वरम् ।।
महीनगरके पुण्ये स्थापयामास शंकरम् ।। ११७ ।।
लोकानां च हितार्थाय केदारं लिङ्गमुत्तमम् ।।
अत्रीशादुत्तरे भागे महापापप्रणाशनम् ।। ११८ ।।
अत्र कुण्डे नरः स्नात्वा श्राद्धं कृत्वा यथाविधि ।।
अत्रीशं च नमस्कृत्य केदारं च प्रपश्यति ।। ११९ ।।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्भवेत् ।।
ततो रुद्रो नीलकण्ठो नारदाय महात्मने ।। 1.2.66.१२० ।।
वरं दत्त्वा स्वयं तस्थौ महीनगरके शुभे ।।
कोटितीर्थे नरः स्नात्वा नीलकण्ठं प्रपश्यति ।। १२१ ।।
जयादित्यं नमस्कृत्य रुद्रलोकमवाप्नुयात् ।।
जयादित्यं पूजयंति कूपे स्नात्वा नरोत्तमाः ।। ११२ ।।
न तेषां वंशनाशोऽस्ति जयादित्यप्रसादतः ।।
तेषां कुले न रोगः स्यान्न दारिद्र्यं न लाञ्छनम् ।। १२३ ।।
पुत्रपौत्रसमायुक्ता धनधान्यसमायुताः ।।
भुक्त्वा भोगानिह बहून्सूर्यलोके वसन्ति ते ।। १२४ ।।
इति प्रोक्तं मया विप्रा गुप्तक्षेत्रं समासतः ।।
सप्तक्रोशप्रमाणं च क्षेत्रस्यास्य पुरा द्विजाः ।।
स्वयंभुवा प्रोक्तमिदं सर्वकामार्थसिद्धिदम् ।। १२५ ।।
इति वो वर्णितः पुण्यो महीसागरसम्भवः ।।
शृण्वन्संकीर्तयंश्चैव सर्वपापैः प्रमुच्यते ।। १२६ ।।
य इदं श्रावयेद्विद्वान्महामाहात्म्यमुत्तमम् ।।

सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ।। १२७ ।।
गुप्तक्षेत्रस्य माहात्म्यं सकलं श्रावयेद्यदि ।।
सर्वैश्वर्यमवाप्नोति ब्रह्महत्यां व्यपोहति ।। १२८ ।।
कोटितीर्थस्य माहात्म्यं महीनगरकस्य च ।।
शृणोति श्रावयेद्यस्तु ब्रह्मभूयाय कल्पते ।। १२९ ।।
कोटितीर्थे नरः स्नात्वा श्राद्धं कृत्वा प्रयत्नतः ।।
दानं दद्याद्यथाशक्त्या शृणुध्वं तत्फलं हि मे ।। 1.2.66.१३० ।।
स्वर्गपातालमर्त्येषु यानि तीर्थानि सन्ति वै ।।
तेषु दानेषु यत्पुण्यं तत्फलं प्राप्यते नरैः ।। १३१ ।।
अश्वमेधादिभिर्यज्ञैरिष्टैश्चैवाप्तदक्षिणैः ।।
सर्वव्रततपोभिश्च कृतैर्यत्पुण्यमाप्यते ।। १३२ ।।
तत्पुण्यं प्राप्यते विप्राः कोटितीर्थे न संशयः ।। १३३ ।।
इदं पवित्रं खलु पुण्यदं सदा यशस्करं पापहरं परात्परम् ।।
शृणोति भक्त्या पुरुषः स पुण्यभागसुक्षये रुद्रसलोकतां व्रजेत्।। १३४ ।।
धन्यं यशस्यं नियतं सुपुण्यं स्वर्मोक्षदं पापहरं नराणाम् ।।
शृणोति नित्यं नियतः शुचिः पुमान्भित्त्वा रविं विष्णु पदं प्रयाति ।। १३५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे गुप्तक्षेत्रमाहात्म्यपरि समाप्तिवर्णनंनाम त्रिषष्टितमोऽध्यायः ।।६३।। ।।
अत ऊर्ध्वं कापिलस्थानोपाख्यानं भविष्यति ।।?।।
इति श्रीस्कन्दपुराणीयप्रथममाहेश्वरखण्डान्तर्गतो द्वितीयः कौमारिकाखण्डः समाप्तः ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०१



।। श्रीगणेशाय नमः।। ।।

अथ श्रीमदरुणाचलमाहात्म्यपूर्वार्धः प्रारभ्यते।। ।।

ललाटे त्रैपुंड्री निटिलकृतकस्तूरितिलकः स्फुरन्मालाधारः स्फुरितकटिकौपीनवसनः ।।

दधानो दुस्तारं शिरसि फणिराजं शशिकलां प्रदीपः सर्वेषामरुणगिरियोगीविजयते ।।१।।

।। व्यास उवाच ।। ।।

अथाहुर्मुनयः सूतं नैमिषारण्यवासिनः ।।

अरुणाचलमाहात्म्यं त्वत्तः शुश्रूषवो वयम् ।। २ ।।

तन्माहात्म्यं वदेत्युक्तः सूतः प्रोवाच तान्मुनीन् ।।

।। श्रीसूत उवाच ।। ।।

एतदर्थं चतुर्वक्त्रं पप्रच्छ सनकः पुरा ।। ३ ।।

शृणुतावहिता यूयं तद्वो वक्ष्यामि सांप्रतम् ।।

यदाकर्णयतां भक्त्या नराणां पापनाशनम् ।। ४ ।।

सत्यलोके स्थितं पूर्वं ब्रह्माणं कमलासनम् ।।

सनकः परिपप्रच्छ प्रणतः प्रांजलिः स्थितः ।। ५ ।।

।। सनक उवाच ।। ।।

भुवनाधार देवेश वेदवेद्य चतुर्मुख ।।

आसीदशेषविज्ञानं प्रसादाद्भवतो मम ।। ६ ।।

भवद्भक्तिविभूत्या मे शोधिते चित्तदर्पणे ।।

बिंबते सकलं ज्ञानं सकृदेवोपदेशतः ।। ७ ।।

सारार्थं वेदवेदानां शिवज्ञानमनाकुलम् ।।

लब्धवानहमत्यंतं कटाक्षैस्ते जगद्गुरोः ।। ८ ।।

लिंगानि भुवि शैवानि दिव्यानि च कृपानिधे ।।

मानुषाणि च सैद्धानि भौतानि सुरनायक ।। ९ ।।

नामस्मरणमात्रेण यत्पातकविनाशनम् ।।

शिवसारूप्यदं नित्यं मह्यं वद दयानिधे ।। ११ ।।

अनादिजगदाधारं यत्तेजः शैवमव्ययम् ।।

यच्च दृष्ट्वा कृतार्थः स्यात्तन्मह्यमुपदिश्यताम् ।। १२ ।।

इति भक्तिमतस्तस्य कौतूहलसमन्वितम् ।।

वाक्यमाकर्ण्य भगवान्प्रससाद तपोनिधिः ।। ।। १३ ।।

दध्यौ च सुचिरं शंभुं पंकजासनसंस्थितः ।।

अंतरंगसुखांभोधिमग्नचेताश्चतुर्मुखः ।। १४ ।।

दृष्ट्वा यदा पुरा दृष्टं तेजःस्तंभमयं शिवम् ।।

उत्तीर्णसकलाधारं न किंचित्प्रत्यबुध्यत ।। १५ ।।

पुनराज्ञां शिवाल्लब्धामनुपालयितुं प्रभुः ।।

निर्वर्त्य हृदयं योगात्सस्मार सुतमानतम् ।। १६ ।।

शिवदर्शनसंजातपुलकांकितविग्रहः ।।

आनंदवाष्पवन्नेत्रः सगद्गदमभाषत ।। १७ ।।

।। ब्रह्मोवाच ।। ।।

अतः संस्मारितः पुत्र भवताऽहं पुरातनम् ।।

शिवयोगमनुध्यायन्नस्मार्षं तव चादरात् ।।१८।।

शिवभक्तिः परा जाता तपोभिर्बहुभिस्तव ।।

तया मदीयं हृदयं व्यावर्तितमिव क्षणात् ।। १९ ।।

पावयंति जगत्सर्वं चरितैस्ते निराकुले ।।

येषां सदाशिवे भक्तिर्वर्द्धते सार्वकालिकी ।। 1.3.1.1.२० ।।

संभाषणं सहावासः क्रीडा चैव विमिश्रणम् ।।

दर्शनं शिवभक्तानां स्मरणं चाघनाशनम्।। २१ ।।

श्रूयतामद्भुतं शैवमाविर्भूतं यथा पुरा ।।

अव्याजकरुणापूर्णमरुणाद्र्यभिधं महः ।। २२ ।।

अहं नारायणश्चोभौ जातौ विश्वाधिकोदयात् ।।

बहु स्यामिति संकल्पं वितन्वानात्सदाशिवात् ।। २३ ।।

स्वभावेन समुद्भूतौ विवदंतौ परस्परम् ।।

न च श्रांतौ नियुध्यंतौ साहंकारौ कदाचन ।।२४।।

परस्परं रणोत्साहमावयोरतिभीषणम् ।।

आलोक्य करुणामूर्तिरचिंतयदथेश्वरः ।। २५ ।।

किमर्थमनयोर्युद्धं जायते लोकनाशनम् ।।

मया सृष्टमहं पातेति विवादमधितस्थुषोः ।। २६ ।।

समयेऽस्मिन्स्वयं लक्ष्यो मुग्धयोरनयोर्भृशम् ।।

यदि युद्धं न रोत्स्यामि तदा स्याद्भुवनक्षयः ।। २७ ।।

वेदेषु मम माहात्म्यं विश्वाधिकतया श्रुतम् ।।

न जानाते इमौ मुग्धौ क्रोधतो गलितस्मृती ।। २८ ।।

सर्वोपि जंतुरात्मानमधिकं मन्यते भृशम् ।।

अमतान्यसमाधिक्यस्त्वधः पतति दुर्मतिः ।। २९ ।।

यद्यहं क्वापि भुवने दास्यामि मितिमात्मनः ।।

तदा तद्रूपविज्ञानात्स आत्मा सोपि मामियात् ।। 1.3.1.1.३० ।।

इति निश्चित्य मनसा स्वयमेव सदाशिवः ।।

आवयोर्युध्यतोर्मध्ये वह्निस्तंभः समुद्यतः ।। ३१ ।।

अतीत्य सकलाँल्लोकान्सर्वतोऽग्निरिव ज्वलन् ।। ३२ ।।

अनाद्यंततया चाथ दृगातौ संव्यतिष्ठताम् ।।

तेजःस्तंभं ज्वलंतं तमालोक्य शिथिलाशयौ ।। ३३ ।।

आवयोः पुरतो जाता वाणी चाप्यशरीरिणी ।।

किमर्थं बालकौ युद्धं कल्प्यते मूढमानसौ ।। ३४ ।।

युवयोर्बलवैषम्यं शिव एव विवेक्ष्यते ।।

तेजःस्तभमयं रूपमिदं शंभोर्व्यवस्थितम् ।। ३५ ।।

आद्यंतयोर्यदि युवामीक्षिषाथां बलाधिकौ ।।

इति तां गिरमाकर्ण्य नियुद्धाद्विरतौ तदा ।। ३६ ।।

अहं विष्णुश्च गतिमान्विचेतुं तद्व्यवस्थितौ ।।

अग्निस्तंभमयं रूपं शंभोराद्यंतवर्जितम् ।। ३७ ।।

आलोकितुं व्यवसितावावामाद्यंतभागतः ।।

बिंबितं व्योमगं चंद्रं यथा बालौ जिघृक्षतः ।।३८।।

तथैवावां समुद्युक्तौ परिच्छेतुं च तन्महः।।

अथ विष्णुर्महोत्साहात्क्रोडोऽभूत्सुमहावपुः ।। ३९ ।।

तन्मूलविचयाऽयाच्च भूमिगर्भं व्यदारयत् ।।

अहं च हंसतां प्राप्तो महावेगं समुत्पतन् ।। 1.3.1.1.४० ।।

दिदृक्षुस्तच्छिरोभागं वियदूर्ध्वमगाहिषम् ।।

अधोधोदारयन्क्षोणिमशेषामपि माधवः ।। ४१ ।।

आविर्भूतमिवाधस्तादग्निस्तंभमवैक्षत ।।

अनेककोटिवर्षाणि विचिन्वन्नपि तेजसः ।। ४२ ।।

अपश्यन्नादिमक्षय्यमार्तरूपः स विह्वलः ।।

विशीर्णदंष्ट्रबलयो विगलत्संधिबंधनः ।। ४३ ।।

श्रमातुरस्तृषाक्रांतो नो यातुमशकद्धरिः ।।

वाराहं रूपमतुलं संधारयितुमक्षमः ।। ४४ ।।

विहंतुमपि विश्रांतो विषसाद रमापतिः ।।

अचिंतयदमेयात्मा परिश्रांतशरीरवान् ।। ४५ ।।

गलितश्रीः क्रियाश्रांतः शरण्यं शिवमाश्रयन् ।।

धिङ्ममेदं महन्मौग्ध्यमहंकारसमुद्भवम् ४८।।।

येनाहमात्मनो नाथमात्मानं नावबुद्धवान् ।।

अयं हि सर्ववेदानां देवानां जगतामपि ।। ४७ ।।

मूलभूतः शिवः साक्षान्मूलमस्य कथं भवेत् ।।

अस्मादेव समुद्भूतोऽस्म्यहमाद्यंतवर्जितात् ।। ४८ ।।

यन्मयान्वेष्टुमारब्धं शिवं पशुवपुर्धृता ।।

अव्याजकरुणाबन्धोः पितुः शंभोः प्रसादतः ।। ४९ ।

पुनरेवेदृशी लब्धा मतिर्मे स्वात्मबोधिना ।।

स्वयमेव महादेवः शंभुर्यं पातुमिच्छति ।। 1.3.1.1.५० ।।

तस्य सद्यो भवेज्ज्ञानमनहंकारमात्मजम् ।।

न शक्नोमि पुनः कर्तुं पूजामस्य जगद्गुरोः ।। ५१ ।।

निवेदयामि चात्मानं शरणं यामि शंकरम् ।।

इति दध्यौ शिवं विष्णुः स्तुत्यामर्पितचेतनः ।।। ।। ५२ ।।

सत्प्रसादाद्भूतपतेः पुनरेवोद्धुतः क्षितौ ।।

अहं च गगनेऽभ्राम्यमनेकानपि वत्सरान् ।। ५३ ।।

आघूर्णमाननयनः श्लथपक्षः श्रमं गतः ।।।

उपर्युपरि चापश्यं ज्वलनं पुरतः स्थितम् ।। ५४ ।।

तेजःस्तम्भं स्थूललिंगाभं शैवं तेजः सुरार्चितम् ।।

आहुः स्म केचिदालोक्य सिद्धास्तेजोंशसंभवाः ।। ५५ ।।

नित्यां शंभोः परां कोटिं दिदृक्षुं मां कृतोद्यमम् ।।

अहोऽयं सत्यमुग्धत्वमद्यापि च चिकीर्षति ।। ५६ ।।

आसन्नदेहपातोऽपि नाहंकारोऽस्य वै गतः ।।

विशीर्यमाणपक्षोऽयं श्रांत्वा विभ्रांतलोचनः ।। ५७ ।।

अपारतेजसि व्यर्थो विमोहोऽयं भविष्यति ।।

एवं व्याकुलचित्तोऽयं क्रोडरूपी जनार्दनः ।। ५८ ।।

व्यावर्त्तितः शिवेनैव निर्व्याजकरुणाजुषा ।।

ईदृशां ब्रह्ममुख्यानां सुराणां कोटिसंभवः ।। ५९ ।।

यत्तेजःपरमाणुभ्यस्तस्य पारं दिदृक्षते ।।

स्वात्मनो यो गतो ध्यात्वा समये भगवाञ्छिवः ।। 1.3.1.1.६० ।।

यदि बुद्धिं ददात्यस्मै तस्य नश्येदहंक्रिया ।।

इत्येवं वदतां तेषां सिद्धानां सदयं वचः ।। ६१ ।।

आकर्ण्य शीर्णाहंकारो ह्यहमात्मन्यचिंतयम् ।।

न वेदराशिविज्ञानात्तपस्तीर्थनिषेवणात् ।। ६२ ।।

संजायते शिवज्ञानमस्यैवानुग्रहादृते ।।

शीर्णेऽपि पक्षयुगले सीदत्यंगे ह्यचंचले ।। ६३ ।।

पुनरुत्सहते चेतः स्वाहंकारस्य संग्रहे ।।

धिङ्मामहं क्रियाक्रांतमनात्मबलवेदिनम् ।। ६४ ।।

शिवार्पितमनस्केभ्यः सिद्धेभ्यः सततं नमः ।।

येषां संसर्गलब्धेन तपसा शोधिताशयः ।। ६५ ।।

शिवमेनं विजानामि स्वात्महेतुं पुरःस्थितम् ।।

यत्प्रसादोपलब्धेन विभवेन समन्विताः ।। ६६ ।।

देवाः सर्वे भविष्यंति सततं शमितारयः ।।

यस्य वेदा न जानंति परमार्थं महागमैः ।। ६७ ।।

तमेव शरणं यामि शंभुं विश्वविलक्षणम् ।।

अवादिषमथाभाष्यं विष्णुं कमललोचनम् ।। ६८ ।।

लब्धदेहः शिवं भक्त्या संश्रितश्चन्द्रशेखरम् ।।

अहो किमिदमाश्चर्यमागतं शौर्यशालिनाम् ।। ६९ ।।

शंभुना यत्समुद्भूतमहंकारमुपाश्रितौ ।।

आवां परस्परं युद्धमाकर्ण्य विपुलं महत् ।। 1.3.1.1.७० ।।

स एव शंकरः सर्वमहंकारमथावयोः ।।

अपाहरदमेयात्मा स्वमाहात्म्यप्रकाशनात् ।। ७१ ।।

इममीश्वरमानतं सुरैरनलस्तम्भमयं सदाशिवम् ।।

अभिपूजयितुं प्रवर्तते स भवेद्वै भवसागरस्य नौः ।। ७२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे ब्रह्मसनकसंवादे लिंगप्रादुर्भाववर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०२



।। ब्रह्मोवाच ।। ।।

अथाहमुच्चरन्वेदानशेषैर्वदनैः शिवम् ।।

अस्तौषं भक्तिसंपूर्णं कृत्वा मानसमर्चनम् ।। १ ।।

नमः शिवाय महते सर्वलोकैकहेतवे ।।

येन प्रकाश्यते सर्वं ध्रियते सततं नमः ।। २ ।।

विश्वव्याप्तमिदं तेजः प्रकाशयति संततम् ।।

नेक्षंते त्वद्दयाहीना जात्यंधा भास्करं यथा ।। ३ ।।

भूलिंगममलं ह्येतद्दृश्यमध्यात्मचक्षुषा ।।

अंतस्स्थं वा बहिस्स्थं वा त्वद्भक्तैरनुभूयते ।। ४ ।।

अपरिच्छेद्यमाकारमंतरात्मनि योगिनः ।।

तदेतत्तव देवेश ज्वलितं दर्पणो यथा ।। ५ ।।

अथवा शांकरी शक्तिः सत्याऽणोरप्यणीयसी ।।

मत्तो नान्यतरः कश्चिद्यन्मय्यपि विलीयते ।। ६ ।।

अणुस्ते करुणापात्रं महत्त्वं ध्रुवमश्नुते ।।

नाधिकोऽस्ति परस्त्वत्तो न मत्तोऽपि तदाश्रयात् ।। ७ ।।

त्वय्यर्पितं मनस्त्वतो न वियोगमपेक्षते ।।

वाचः कथं प्रवृत्तिः स्यात्तव वैभवकीर्त्तने ।। ६ ।।

स्वयमीश महादेव प्रसीद भुवनाधिक ।।

आदिश प्रयतं भक्तमपेक्षितनियुक्तिषु ।। ९ ।।

इदं विज्ञाप्य विनयान्नमस्कृत्वा पुनःपुनः ।।

प्रांजलिर्देवदेवेशं न्यषीदं सविधे विभो ।।1.3.1.2.१०।।

अथ विष्णुर्नवांभोदगंभीरध्वनिरभ्यधात् ।।

वाचः कृतार्थन्भूयः शुक्लाः शंकरकीर्त्तनैः ।। ११ ।।

जय त्रिभुवनाधीश जय गंगाधर प्रभो ।।

जय नाथ विरूपाक्ष जय चंद्रार्द्धशेखर ।। १२ ।।

अव्याजममितं शंभो कारुण्यं तव वर्द्धते ।।

येन निर्धूतमखिलं भक्तेषु ज्ञानमाहितम् ।। १३ ।।

पालनं सर्वविद्यानां प्रापणं भूतिसंचयैः ।।

पुराणं च सपुत्राणां पितुरेव प्रवर्धनम् ।। ।। १४ ।।

शतानामपि मूर्तीनामेकामपि नवैः स्तवैः ।।

स्तोतुं न शक्नुमेशान समवायस्तु कि पुनः ।। १५ ।।

त्वमेव त्वामलं वेत्तुं यदि वा त्वत्प्रसादतः ।।

भ्रमरः कीटमाकृष्य स्वात्मानं किं न चानयेत् ।। १६ ।।

देवास्त्वदंशसंभूतिप्रभवो न भवन्ति किम् ।।

अप्यायस्याग्निकीलस्य दाहे शक्तिर्न किं भवेत् ।। १७ ।।

देशकालक्रियायोगाद्यथाग्नेर्भेदसम्भवः ।।

तथा विषयभेदेन त्वमेकोऽपि विभिद्यसे ।। १८ ।।

अनुग्रहपरो देव मूर्तिं दर्शय शंकर ।।

आवयोरखिलाधार नयनानंददायिनीम् ।। १९ ।।

एवं प्रणमतोर्देवः श्रद्धाभक्तिसमन्वितम् ।।

प्रससाद परं शंभुः स्तुवतोरावयोर्द्वयोः ।। 1.3.1.2.२० ।।

तेजःस्तंभात्पुनस्तस्माद्देवश्चन्द्रार्द्धशेखरः ।।

आविर्बभूव पुरुषः कपिलः कालकन्धरः ।। २१ ।।

परशुं बालहरिणं करैरभयविश्रमौ ।।

दधानः पुरुषोऽवादीत्पुत्रावावामिति प्रभुः।। २२ ।।

परितुष्टोऽस्मि युवयोर्भक्त्या युक्तात्मनोर्मयि।।

भवतं सर्वलोकानां सृष्टिरक्षाधिपौ युवाम् ।। २३ ।।

युवयोरिष्टसिद्ध्यर्थमाविर्भूतोऽस्म्यहं यतः ।।

वरं वृणुतमन्यं च वरदोऽहमुपागतः ।। २४ ।।

इति देवस्य वचनात्सप्रीतौ च कृतांजली ।।

विज्ञापयामासिवतौ स्वं स्वमर्थं पृथक्पृथक् ।। २५ ।।

अहं मन्त्रैः शिशुप्रायजगत्त्रयविधायकः ।।

संस्तुवन्वैदिकैर्मंत्रैरीशानमपराजितम् ।। ।। २६ ।।

नमस्येहमिदं रूपं शश्वद्वरदमीश्वरम् ।।

तेजोमयं महादेवं योगिध्येयं निरंजनम् ।। २७ ।।

आपूर्यमाणं भवता तेजसा गगनांतरम् ।।

परिपृच्छ्यः सुरावासः क्षणाद्देव भविष्यति ।। २८ ।।

सिद्धचारणगन्धर्वा देवाश्च परमर्षयः ।।

नावसन्दिवि संचारं लभेरंस्तेजसा तव ।। २९ ।।

पृथ्वी च सकला चैव तप्यमाना तवौजसा ।।

चराचरसमुत्पत्तिक्षमा नैव भविप्यति ।। 1.3.1.2.३० ।।

उपसंहृत्य तेजः स्वमरुणाचलसंज्ञया ।।

भव स्थावरलिंगं त्वं लोकानुग्रहकारणात् ।। ३१ ।।

ज्योतिर्मयमिदं रूपमरुणाचलसंज्ञितम् ।।

ये नमन्ति नरा भक्त्या ते भवन्त्यमराधिकाः ।। ३२ ।।

सेवंतां सकला लोकाः सिद्धाश्च परमर्षयः ।।

गणाश्च विविधा भूमौ मानुषं भावमास्थिताः ।। ३३ ।।

दिव्याराम समुद्भूतकल्पकाद्याः सुरद्रुमाः ।।

सेविनस्त्वां प्ररोहंतु भरिता विविधैः फलैः ।। ३४ ।।

दिव्यौषधिगणास्सर्वे सिंहाद्या मृगजातयः ।।

प्रशांताः परिवर्त्तंता पापकल्मषनाशनम् ।। ३५ ।।

अयनद्वयभिन्नेन गमनेनापि संयुतः ।।

न लंघयिष्यति रविः शृंगं लिंगतनोस्तव ।। ३६ ।।

दिव्य दुंदुभिशंखानां घोषैः पुष्पौघवृष्टिभिः ।।

सेवितो भव देव त्वमप्सरोनृत्यगीतिभिः ।। ३७ ।।

अमरत्वं च सिद्धत्वं ग्ससिद्धीश्च निर्वृतिम् ।।

लभंतां मानुषा नित्यं त्वत्संनिधिमुपागताः ।। ३८ ।।

ईशत्वं च वशित्वं च सौभाग्यं कालवंचनम् ।।

त्वामाश्रित्य नरास्सर्वे लभंतामरुणाचल ।। ३९ ।।

सर्वावयवदानेन सर्वव्याधिविनाशनात् ।।

सर्वाभीष्टप्रदानेन दृश्यो भव महीतले ।।1.3.1.2.४०।।

तथेति वरदं देवमरुणाद्रिपतिं शिवम्।।

प्रणम्य कमलानाथः प्रार्थयन्निदमब्रवीत् ।। ४१ ।।

प्रसीद करुणापूर्ण शोणशैलेश्वर प्रभो ।।

महेश सर्वलोकानां हिताय प्रकटोदय ।। ४२ ।।

यदाहं त्वामुपाश्रित्य जगद्रक्षणदक्षिणः ।।

श्रीपतित्वमनुप्राप्तस्तदा भक्ता भवंतु ते ।। ४३ ।।

नाल्पपुण्यैरुपास्येत त्वद्रूपं महदद्भुतम् ।।

मया च ब्रह्मणा चैवमदृष्टपदशेखरः ।। ४४ ।।

प्रदक्षिणानमस्कारैर्नृत्यगीतैश्च पूजनैः ।।

त्वामर्चयंति ये मर्त्याः कृतार्थास्ते गतांहसः ।। ४५ ।।

उपवासैर्व्रतैः सत्रैरुपहारैस्तथार्चनैः ।।

त्वामर्चयंति मनुजाः सार्वभौमा भवंतु ते ।। ४६ ।।

आरामं मंडपं चापि कूपं विधिविशोधनम् ।।

कुर्वतामरुणाद्रीश संनिधाने पुनर्भव ।। ४७ ।।

अंगप्रदक्षिणं कुर्वन्नष्टैश्वर्यसमन्वितः ।।

अशेषपातकैः सद्यो विमुक्तो निर्मलाशयः ।। ४८ ।।

आवामप्यविमुंचंतौ सदा त्वत्पादपंकजम् ।।

ध्यातव्यं मनुजैः सर्वैस्तव संनिधिमागतैः ।। ४९ ।।

तथास्त्विति वरं दत्त्वा विष्णवे चंद्रशेखरः ।।

भरुणाचलरूपेण प्राप्तः स्थावरलिंगताम् ।। 1.3.1.2.५० ।।

तैजसं लिंगमेतद्धि सर्वलोकैककारणम् ।।

अरुणाद्रिरिति ख्यातं दृश्यते वसुधातले ।। ५१ ।।

युगांतसमये क्षुब्धैश्चतुर्भिरपि सागरैः ।।

अपि निर्मग्नलोकांतैरस्पृष्टांतिकभूतलम् ।। ५२ ।।

गजप्रमाणैः पृषतैः पूरयंतो जगत्त्रयम् ।।

पुष्कराद्या महामेघा विश्रांता यस्य सानुनि ।। ५३ ।।

प्रवृत्ते भूतसंहारे प्रकृतौ प्रतिसंचरे ।।

भविष्यत्सर्वबीजानि निषेदुर्यत्र निश्चयम् ।। ५४ ।।

मया चाहूयमानेभ्यः प्रलयानंतरं पुनः ।।

यत्पादसेविविप्रेभ्यो वेदाध्ययनसंग्रहः ।। ५५ ।।

सर्वासामपि विद्यानां कलानां शास्त्रसंपदाम् ।।

आगमानां च वेदानां यत्र सत्यव्यवस्थितिः ।। ५६ ।।

यद्गुहागह्वरांतस्स्था मुनयः शंसितव्रताः ।।

जटिनः संप्रकाशंते कोटिसूर्याग्नितेजसः ।। ५७ ।।

पंचब्रह्ममयैर्मंत्रैः पंचाक्षरवपुर्धरैः ।।

अकारपीठिकारूढो नादात्मा यः सदाशिवः ।। ५८ ।।

अष्टभिश्च सदा लिंगैरष्टदिक्पालपूजितः ।।

अष्टमूर्तितया योऽयमष्टसिद्धिप्रदायकः ।। ५९ ।।

यत्र सिद्धास्तथा लोकान्स्वान्स्वान्मुक्त्वा सुरेश्वराः।।

अपेक्षंते स्थिता मुक्तिं विहाय कनकाचलम् ।।1.3.1.2.६०।।

एवं वसुंधरापुण्यपरिपाकसमुच्चयः ।।

अरुणाद्रिरिति ख्यातो भक्तभक्तिवरप्रदः ।।६१।।

कैलासान्मेरुशिखरादागतैर्देवसंचयैः ।।

पूज्यते शोणशैलात्मा शंभुः सर्ववरप्रदः ।।६२।।

इति कमलजवक्त्रपद्मजां तं मुदितमनाः सनको निशम्य भक्त्या ।।

विरचितविनयः प्रणम्य पुत्रः पितरमपृच्छदशेषवेदसारम् ।। ६३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे ब्रह्मविष्णुस्तुतिपूर्वकं शंकरस्य स्थावरलिंगमाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०३

https://sa.wikisource.org/s/h25
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् १

सनक उवाच ।। ।।

भगवन्नरुणाद्रीश माहात्म्यमिदमद्भुतम् ।।

श्रुतं शिवप्रसादेन दयया ते जगद्गुरोः ।। १ ।।

आश्चर्यमेतन्माहात्म्यं सर्वपापविनाशनम् ।।

आराधयन्पुनः के वा वरदं शोणपर्वतम् ।। २ ।।

अनादिरंतरहितः शिवः शोणचलाकृतिः ।।

युवयोस्तपसा देव वरदानाय संस्थितः ।। ।।३।।

सकृत्संकीर्तिते नाम्नि शोणाद्रिरिति मुक्तिदे ।।

सन्निधिः सर्वकामानां जायते चाघनाशनम् ।।४।।

शिवशब्दामृतास्वादः शिवार्चनकथाक्रमः।।

इति तद्वचनं श्रुत्वा देवदेवः पितामहः ।। ५ ।।

उवाच करुणामूर्तिररुणाद्रीशमानमन् ।।

।। ब्रह्मोवाच ।। ।।

श्रूयतां वत्स पार्वत्याश्चरितं यत्पुरातनम् ।। ६ ।।

अरुणाद्रीशमाश्रित्य यथा सा निर्वृताभवत् ।।

आससाद महादेवः कदाचित्पार्वतीपतिः ।। ७ ।।

रत्नसिंहासनं दिव्यं रत्नतोरणसंयुतम् ।।

रत्नपुष्पफलोपेत कल्पद्रुममनोहरम् ।। ८ ।।

पराध्र्य दृषदास्तीर्णं बद्धमुक्तावितानकम् ।।

विमुक्तपुष्पप्रकरदिव्यधूपोरुसौरभम् ।। ९ ।।

प्रलंबमालिकाजालनिनदद्भृंगसंकुलम् ।।

दिव्यतूर्यघनारावप्रनृत्यद्गुहवाहनम् ।। 1.3.1.3.१० ।।

पार्वतीसिंहसंचारपरित्रस्तमहागजम् ।।

अप्सरोभिः प्रनर्त्ताभिर्गायंतीभिश्च केवलम् ।। ११ ।।

आसेवितपुरोरंगं दिक्पालकनिषेवितम् ।।

ऋग्यजुःसामजैर्मंत्रैः स्तुवद्भिर्मुनिपुंगवैः ।। १२ ।।

ब्रह्मर्षिभिस्तथा देवैः सिद्धै राजर्षिभिवृतम् ।।

गणैश्च विविधाकारैर्भस्मालंकृतविग्रहैः ।। १३ ।।

रुद्राक्षधारसुभगैरापूर्णं शिवतत्परैः ।।

वीणावेणुमृदंगादितौर्यत्रिकजनिस्वनैः ।।।१४ ।।

घंटाटंकारसुभगैर्वेदध्वनिविमिश्रितैः ।।

मनोहरं महादिव्यमासनं पार्वतीसखः ।। १५ ।।

अलंचकार भगवन्भक्तानुग्रहकाम्यया ।।

आस्थाय विमलं रूपं सर्वतेजोमयं शिवम् ।। १६ ।।

अंबिकासहितः श्रीमान्विजहार दयानिधिः ।।

संगीतेन कथाभेदैर्द्यूतक्रीडाविकल्पनैः ।। १७ ।।

गणानां विकटैर्नृत्यै रमयामास पार्वतीम् ।।

विसृज्य सकलान्देवानृषींश्चापि सभासदः ।। १८ ।।

वरान्प्रदाय विविधान्भक्तलोकाय वाञ्छितान् ।।

आगमेषु विचित्रेषु सर्वर्तुकुसुमेषु च ।। १९ ।।

विजहारोमया सार्द्धं रत्नप्रासादपंक्तिषु ।।

वापिकासु मनोज्ञासु रत्नसोपानपंक्तिषु ।। 1.3.1.3.२० ।।

केलिपर्वतशृंगेषु हेमरंभावनांतरे ।।

गंगातरंगशीतेन फुल्लपंकजगंधिना ।। २१ ।।

वातेन मंदगतिना विहारविहतश्रमः ।।

स्वकामतः स्वयं देवः प्रेयसीमभ्यनन्दयत् ।। २२ ।।

रतिरूपां शिवां देवीं सर्वसौभाग्यसुन्दरीम् ।।

कदाचिद्रहसि प्रीता निजाज्ञावशवर्त्तिनम् ।। २३ ।।

रमणं जानती मुग्धा पश्चादभ्येत्य सादरम् ।।

कराभ्यां कमलाभाभ्यां त्रिणेत्राणि जगद्गुरोः ।। २४ ।।

पिदधे लीलया शंभोः किमेतदिति कौतुकात् ।।

चन्द्रादित्याग्निरूपेण पिहितेष्वक्षिषु क्रमात् ।। २५ ।।

अन्धकारोऽभवत्तत्र चिरकालं भयंकरः ।।

निमिषार्द्धेन देवस्य जग्मुर्वत्सरकोटयः ।। २६ ।।

देवीलीलासमुत्थेन तमसाभूज्जगत्क्षयः ।।

तमसा पूरितं विश्वमपारेण समन्ततः ।।२७।।

शून्यं ज्योतिः प्रचारेण विनाशं प्रत्यपद्यत ।।

न व्यजृंभत विबुधा न च वेदाश्चकाशिरे ।।२८।।

नापि जीवाः समभवन्नव्यक्तं केवलं स्थितम् ।।

जगतामपि सर्वेषामकाले वीक्ष्य संक्षयम् ।।२९।।

तपसा लब्धस्फूर्तीनां विचारः समपद्यत ।।

किमेतत्तमसो जन्म भुवनक्षयकारणम् ।। 1.3.1.3.३० ।।

भगवानपि सर्वात्मा न नूनं कालमाक्षिपत् ।।

देवी विनोदरूपेण पिधत्ते पुरजिद्दृशः ।। ३१ ।।

तेनेदमखिलं जातं निस्तेजो भुवनत्रयम् ।।

अकालतमसा व्याप्ते सकले भुवनत्रये ।। ३२ ।।

का गतिर्लब्धराज्यानां तपसो देवजन्मनाम् ।।

न यज्ञाः संप्रवर्तंते न पूज्यन्ते सुरा भुवि ।। ३३ ।।

इति निश्चित्य मनसा वीक्ष्य ते ज्ञानचक्षुषा ।।

नित्यास्ते सूरयो भक्त्या शंभुमागम्य तुष्टुवुः ।। ३४ ।।

नमः सर्वजगत्कर्त्रे शिवाय परमात्मने ।।

मायया शक्तिरूपेण पृथग्भावमुपेयुषे ।। ३५ ।।

अविनाभाविनी शक्तिराद्यैका शिवरूपिणी ।।

लीलया जगदुत्पत्तिरक्षासंहृतिकारिणी ।। ३६ ।।

अर्धांगी सा तव देव शिवशक्त्यात्मकं वपुः ।।

एक एव महादेवो न परे त्वद्विना विभो ।। ३७ ।।

लीलया तव लोकोयमकाले प्रलयं गतः ।।

करुणा तव निर्व्याजा वर्द्धतां लोकवर्द्धनी ।। ३८ ।।

भवतो निमिषार्द्धेन तेजसामुपसंहृतेः ।।

गतान्यनेकवर्षाणि जगतां नाशहेतवे ।। ३९ ।।

ततः प्रसीद करुणामूर्त्ते काल सदाशिव ।।
विरम प्रणयारब्धादमुष्माल्लोकसंक्षयात् ।। 1.3.1.3.४० ।।
इति तेषां वचः श्रुत्वा भक्तानां सिद्धिशालिनाम् ।।
विसृजाक्षोणि गौरीति करुणामूर्त्तिरब्रवीत् ।। ४१ ।।
विससर्ज च सा देवी पिधानं हरचक्षुषाम् ।।
सोमसूर्याग्निरूपाणां प्रकाशमभवज्जगत् ।। ४२ ।।
कियान्कालो गतश्चेति पृष्टैः सिद्धैश्च वै नतैः ।।
उक्तं त्वन्निमिषार्द्धेन जग्मुर्वत्सरकोटयः ।। ४३ ।।
अथ देवः कृपामूर्त्तिरालोक्य विहसन्प्रियाम् ।।
अब्रवीत्परमोदारः परं धर्मार्थसंग्रहम् ।। ४४ ।।
अविचार्य कृतं मुग्धे भुवनक्षयकारणात् ।।
अयुक्तमिह पश्यामि जगन्मातुस्तवैव हि ।। ४५ ।।
अहमप्यखिलाँल्लोकान्संहरिष्यामि संक्षये ।।
प्राप्ते काले त्वया मौग्ध्यादकाले प्रलयं गताः ।। ४६ ।।
केयं वा त्वादृशी कुर्यादीदृशं सद्विगर्हितम् ।।
कर्म नर्मण्यपि सदा कृपामूर्तिर्न बाधते ।। ४७ ।।
इति शम्भोर्वचः श्रुत्वा धर्मलोपभयाकुला ।।
किं करिष्यामि तच्छांत्या इत्यपृच्छत्स्म तं प्रिया ।। ४८ ।।
अथ देवः प्रसन्नात्मा व्याजहार दयानिधिः ।।
देव्यास्तेनानुतापेन भक्त्या च तोषितः शिवः ।। ४९ ।।
मन्मूर्तेस्तव केयं वा प्रायश्चित्तिरिहोच्यते ।।
अथापि धर्ममार्गोयं त्वयैव परिपाल्यते ।। 1.3.1.3.५० ।।
श्रुतिस्मृतिक्रियाकल्पा विद्याश्च विबुधादयः ।।
त्वद्रूपमेतदखिलं महदर्थोस्मि तन्मयः ।। ५१ ।।
मान्ययाभिन्नया देव्या भाव्यं लोकसिसृक्षया ।। ।। ५२ ।।
तस्माल्लोकानुरूपं ते प्रायश्चित्तं विधीयते ।।
षड्विधो गदितो धर्मः श्रुतिस्मृतिविचारतः ।। ५३ ।।
स्वामिना नानुपाल्येत यदि त्याज्योऽनुजीविभिः ।।

न त्वां विहाय शक्नोमि क्षणमप्यासितुं क्वचित् ।। ५४ ।।

अहमेव तपः सर्वं करिष्याम्यात्मनि स्थितः ।।

पृथ्वी च सकला भूयात्तपसा सफला तव ।। ५५ ।।

त्वत्पादपद्मसंस्पर्शात्त्वत्तपोदर्शनादपि ।।

निरस्यंति स्वसान्निध्याद्दुष्टजातमुपद्रवम् ।। ५६ ।।

कर्मभूमेस्त्वमाधिक्यहेतवे पुण्यमाचर ।।

त्वत्तपश्चरणं लोके वीक्ष्य सर्वोपि संततम् ।। ५७ ।।

धर्मे दृढतरा बुद्धिं निबध्नीयान्न संशयः ।।

कृतार्थयिष्यति महीं दया ते धर्मपालनैः ।। ५८ ।।

त्वमेवैतत्सकलं प्रोक्ता वेदैर्देवि सनातनैः ।।

अस्ति कांचीपुरी ख्याता सर्वभूतिसमन्विता ।। ५९ ।।

या दिवं देवसंपूर्णा प्रत्यक्षयति भूतले ।।

यत्र कृतं तपः किंचिदनंतफलमुच्यते ।। 1.3.1.3.६० ।।

देवाश्च मुनयः सर्वे वासं वांछंति संततम् ।।

तत्र कंपेति विख्याता महापातकनाशिनी ।। ।।६१।।

यत्र स्थितानां मर्त्यानां कम्पन्ते पापकोटयः ।।

तत्र चूतद्रुमश्चैको राजते नित्यपल्लवः ।।६२।।

संपूर्णशीतलच्छायः प्रसूनफलपल्लवैः ।।

तत्र जप्तं हुतं दत्तमनन्तफलदं भवेत् ।। ६३ ।।

गणाश्च विविधाकारा डाकिन्यो योगिनीगणाः ।।

परितस्त्वां निषेवंतां विष्णुमुख्यास्तथा पराः ।।६४।।

अहं च निष्कलो भूत्वा तव मानसपंकजे ।।

सन्निधास्यामि मा भूस्त्वं देवि मद्विरहाकुला ।। ६५ ।।

इत्युक्ता देवदेवेन देवी कंपांतिकं ययौ ।।

तपः कर्तुं सखीयुक्ता विस्मयाक्रान्तलोचना ।।६६ ।।

कंपां च विमलां सिन्धुं मुनिसमघनिषेविताम् ।।

आलोक्य कोमलदलमेकाम्रं दृष्टिवारणम् ।। ६७ ।।

फलपुष्पसमाकीर्णं कोकिलालापसंकुलम् ।।

प्रससाद पुनर्देवं सस्मार च महेश्वरम् ।। ६८ ।।

कामाग्निपरिवीतांगी तपःक्षामेव साऽभवत् ।।

अभ्यभाषत सा गौरी विजयां पार्श्ववर्तिनीम् ।। ६९ ।।

कामशोकपरीतांगी पुरारिविरहाकुला ।। 1.3.1.3.७० ।।

इममघहरमागतानिशं स्वयमपि पूजयितुं तपोभिरीशम् ।।

अयमभिनवपल्लवप्रसूनः स्मरयति मां स्मरबन्धुरेकचूतः ।। ७१ ।।

कथमिव विरहः शिवस्य सह्यः क्षुभितधियात्र भृशं मनोभवेन ।।

तदपि च तरुणेंदुचूडपादस्मरणमहौषधमेकमेव दृष्टम् ।। ७२ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्द्धे पार्वत्याः शिवनेत्रमीलनेन तमसा क्षुब्धलोकपापभयेन कांच्यां कंपास्थितैकाम्रतले तपश्चर्यार्थमागमनंनाम तृतीयोऽध्यायः ।। ३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०४



।। ब्रह्मोवाच ।। ।।

अथाभ्यधत्त विजया प्रणम्य जगदम्बिकाम् ।।

सांत्वयन्ती स्तुतिशतैरुपायैः शिवदर्शनैः ।। १ ।।

देवि त्वमविनाभूता सदा देवेन शंभुना ।।

प्राणेश्वरी त्वमेकासि शक्तिस्तस्य परात्मनः ।। २ ।।

तथा मायां त्वमात्मीयां संदर्शयितुमीहसे ।।

पृथग्भावमिवेशानः प्रकाशयति न स्वयम् ।। ३ ।।

आदेशं प्रतिगृह्यैव समुपेतासि पार्वति ।।

अलंघनीया सेवाज्ञा शांभवी सर्वदा त्वया ।।४ ।।

विधातव्यं तपः प्राप्तं स्थानेस्मिच्छिवकल्पिते ।।

निवृत्य निखिलान्कामाच्छंमुमाश्रितया त्वया ।। ५ ।।

अन्यथापि जगद्रक्षा त्वदधीना जगन्मयि ।।

धर्मसंरक्षणं भूयः शिवेन सहितं तव ।। ६ ।।

निष्कलं शिवमत्यंतं ध्यायंत्यात्मन्यवस्थितम् ।।

वियोगदुःखं कञ्चित्त्वं न स्मरिष्यसि पार्वति ।। ७ ।।

भक्तानां तव मुख्यानां तवैवाचारसंग्रहः ।।

उपदेशितया लोके प्रथतां धर्मवत्सले ।। ८ ।।

इति तस्या वचः श्रुत्वा गौरी सुस्थिरमानसा ।।

तपः कर्तुं समारेभे कंपा नद्यास्तटे शुभे ।। ९ ।।

विमुच्य विविधा भूषा रुद्राक्षगणभूषिता ।।

विसृज्य दिव्यं वसनं पर्यधाद्वल्कले शुभे ।। 1.3.1.4.१० ।।

अलकैः सहसा शिल्पमनयच्च कपर्दताम् ।।

अलिंपत तनूं सर्वां भस्मना मुक्तकुंकुमा ।। ११ ।।

मृगेषु कृतसंतोषा शिलोंछीकृतवृत्तिषु ।।

जजाप नियमोपेता शिवपंचाक्षरं परम् ।। १२ ।।

कृत्वा त्रिषवणं स्नानं कम्पा पयसि निर्मले ।।

कृत्वा च सैकतं लिंगं पूजयामास सादरम् ।। १३ ।।

वृक्षप्ररोपणैर्दानैरशेषातिथिपूजनैः ।।

श्रांतिं हरंती जीवानां देवी धर्ममपालयत् ।। १४ ।।

ग्रीष्मे पंचाग्निमध्यस्था वर्षासु स्थंडिलेशया ।।

हेमन्ते जलमध्यस्था शिशिरे चाकरोत्तपः ।। १५ ।।

पुण्यात्मनां महर्षीणां दर्शनार्थमुपेयुषाम् ।।

विस्मयं जनयामास पूजयामास सादरम् ।। १६ ।।

कदाचित्स्वयमुच्चित्य वनांतात्पल्लवान्वितम् ।।

पुष्पोत्करं विशेषेण शोधितुं समुपाविशत् ।। १७ ।।

कृत्वा च सैकतं लिंगं कंपारोधसि पावने ।।

संपूजयितुमारेभे न्यासावाहनपूर्वकम् ।। १८ ।।

सूर्यमभ्यर्च्य विधिवद्रक्तैः पुष्पैश्च चंदनैः ।।

पंचावरणसंयुक्तं क्रमादानर्च शंकरम् ।। १९ ।।

धूपैर्दीपश्च नैवेद्यैर्भक्तिभावसमन्वितैः ।।

अपरोक्षितमीशानमालुलोके पुरोहितम् ।। 1.3.1.4.२० ।।

अथ देवः शिवः साक्षात्संशोधयितुमंबिकाम् ।।

कंपानद्याः प्रवाहेण महता पर्यवेष्टयत् ।। २१ ।।

अतिवृद्धं प्रवाहं तं कम्पायाः समुपस्थितम् ।।

आलोक्य नियमासीनामाहुः सख्यस्तदांबिकाम् ।।२२।।

उत्तिष्ठ देवि बहुलः प्रवाहोऽयं विजृंभते ।।

दिशां मुखानि संपूर्य तरसा प्लावयिष्यति ।। २३ ।।

इति तद्वचनं श्रुत्वा ध्यायंती मीलितेक्षणा ।।

उन्मील्य वेगमतुलं नद्यास्तं समवैक्षत ।। २४ ।।

अचिंतयच्च सा देवी पूजाविघ्नसमाकुला ।।

किं करोमि न शक्नोमि हातुमारब्धमर्चनम् ।। २५ ।।

श्रेयः प्राप्तुमविघ्नेन प्रायः पुण्यात्मनां भुवि ।।

घटते धर्मसंयोगो मनोरथफलप्रदः ।। २६ ।।

सैकतं लिंगमतुलप्रवाहाल्लयमेष्यति ।।

लिंगनाशे विमोक्तव्यः सद्भक्तैः प्राणसंग्रहः ।। २७ ।।

प्रवाहोऽयं समायाति शिवमायाविनिर्मितः ।।

विशोधयितुमात्मानं भक्तियुक्तं निजे पदे ।। २८ ।।

आलिंग्य सुदृढं दोर्भ्यामेतल्लिंगमनाकुलम् ।।

अहं वत्स्यामि याताशु सख्यो यूयं विदूरतः ।। २९ ।।

इत्युक्ता सैकतं लिगं गाढमालिंग्य सांबिका ।।

न मुमोच प्रवाहेन वेष्ट्यमानापि वेगतः ।। 1.3.1.4.३० ।।

स्तनचूचुकनिर्मग्नमुद्रादर्शितलांछनम् ।।

महालिंगं स्वसंयुक्तं प्रणनाम तदादरात् ।। ३१ ।।

निमीलितेक्षणा ध्याननिष्ठैकहृदया स्थिता ।।

पुलकांचितसर्वांगी सा स्मरंती सदाशिवम् ।। ३२ ।।

कंपस्वेदपरित्राणलज्जाप्रणयकेलिदात् ।।

क्षणमप्यचला लिंगान्न वियोगमपेक्षते ।। ३३ ।।

अथ तामब्रवीत्कापि दैवी वागशरीरिणी ।।

विमुंच बालिके लिंगं प्रवाहोऽयं गतो महान् ।।३४।।

त्वयार्चितमिदं लिंगं सैकतं स्थिरवैभवम् ।।

भविष्यति महाभागे वरदं सुरपूजितम् ।। ३५ ।।

तपश्चर्यां तवालोक्य रचितं धर्मपालनम् ।।

लिंगं चैतन्नमस्कृत्य कृतार्थाः संतु मानवाः ।। ३६ ।।

अहं हि तैजसं रूपमास्थाय वसुधातले ।।

वसामि चात्र सिद्ध्यर्थमरुणाचलसंज्ञया ।। ३७ ।।

रुणद्धि सर्वलोकेभ्यः परुषं पापसंचयम् ।।

रुणो न विद्यते यस्मिन्दृष्टे तेनारुणाचलः ।। ३८ ।।

ऋषयः सिद्धगंधर्वा महात्मानश्च योगिनः ।।

मुक्त्वा कैलासशिखरं मेरुं चैनमुपासते ।। ३९ ।।

मदंश जातयोः पूर्वं युध्यतोर्ब्रह्मकृष्णयोः ।।

अहं मोहमपाकर्तुं तेजोरूपो व्यवस्थितः ।। 1.3.1.4.४० ।।

ब्रह्मणा हंसरूपेण विष्णुना क्रोडरूपिणा ।।

अदृष्टशेखरपदः प्रणतो भक्तियोगतः ।। ४१ ।।

ततः प्रसन्नः प्रत्यक्षस्तस्यां वरमभीप्सितम् ।।

प्रादां जगत्त्रयस्यास्य संरक्षायां तु कौशलम् ।। ४२ ।।

प्रार्थितश्च पुनस्ताभ्यामरुणाचलसंज्ञया ।।

अनैषि तैजसं रूपमहं स्थावरलिंगताम् ।। ४३ ।।

गत्वा पृच्छ महाभागं मद्भक्तिं गौतमं मुनिम् ।।

अरुणाचलमाहात्म्यं श्रुत्वा तत्र तपश्चर ।। ४४ ।।

तत्र ते दर्शयिष्यामि तैजसं रूपमात्मनः ।।

सर्वपापनिवृत्त्यर्थं सर्वलोकहिताय च ।। ४५ ।।

इति वाचं समाकर्ण्य निष्कलात्कथितां शिवात् ।।

तथेति सहसा देवी गंतुं समुपचक्रमे ।। ४६ ।।

अथ देवानृषीन्सर्वान्पश्चात्सेवार्थमागतान् ।।

अवादीदंबिकालोक्य स्नेहपूर्णेन चक्षुषा ।। ४७ ।।

तिष्ठतात्रैव वै देवा मुनयश्च दृढव्रताः ।।

नियमांश्चाधितिष्ठंतः कंपारोधसि पावने ।। ४८ ।।

सर्वपापक्षयकरं सर्वसौभाग्यवर्द्धनम् ।।

पूज्यतां सैकतं लिंगं कुचकंकणलांछनम् ।। ४९ ।।

अहं च निष्कलं रूपमास्थायैतद्दिवानिशम् ।।

आराधयामि मंत्रेण शोणेश्वरं वरप्रदम् ।। 1.3.1.4.५० ।।

मत्तपश्चरणाल्लोके मद्धर्मपरिपालनात् ।।

मल्लिंगदर्शनाच्चैव सिध्यंत्विष्टविभूतयः ।। ।। ५१ ।।

सर्वकामप्रदानेन कामाक्षीमिति कामतः ।।

मां प्रणम्यात्र मद्भक्ता लभंतां वांछितं वरम् ।। ५२ ।।

अहं हि देवदेवस्य शंभोरव्याहतो जनः ।।

आदेशं पालयिष्यामि गत्वारुणमहीधरम् ।। ५३ ।।

तत्र गत्वा तपस्तीव्रं कृत्वा शंभुं प्रसाद्य च ।।

मां तु लब्धवरां यूयं पश्चाद्रक्ष्यथ संगताः ।। ५४ ।।

इति सर्वान्विसृज्याशु सद्भक्तान्पादसेविनः ।।

अरुणाद्रिं गता बाला तपसे शंकराज्ञया ।। ५५ ।।

नित्याभिसेविताऽकारि सखीभिरभियोगतः ।।

आससादारुणाद्रीशं दिव्यदुंदुभिनादितम् ।। ५६ ।।

अंतस्तेजोमयं शांतमरुणाचलनायकम् ।।

अप्सरोनृत्यगीतैश्च पूजितं पुष्पवृष्टिभिः ।। ५७ ।।

प्रणम्य स्थावरं लिंगं कौतूहलसमन्विता ।।

सिद्धानां योगिनां सार्थमृषीणां चान्ववैक्षत ।। ५८ ।।

अत्रिर्भृगुर्भरद्वाजः कश्यपश्चांगिरास्तथा ।।

कुत्सश्च गौतमश्चान्ये सिद्धविद्याधरामराः ।। ५९ ।।

तपः कुर्वंति सततमपेक्षितवराप्तये ।।

गंगाद्याः सरितश्चान्याः परितः पर्युपासते ।। 1.3.1.4.६० ।।

दिव्यलिंगमिदं पूज्यमरुणाद्रिरिति स्मृतम् ।।

वंदस्वेति सुरैः प्रोक्ता प्रणनाम पुनःपुनः ।। ६१ ।।

अभ्यर्थिता पुनः सर्वैरातिथ्यार्थे महर्षिभिः ।।

शिवाज्ञया गौतमो मे द्रष्टव्य इति सावदत् ।। ६२ ।।

अयमत्रर्षिभिर्भक्तैर्निर्दिष्टं तमथाभ्यगात् ।।

स मुनिः शिवभक्तानां प्रथमस्तपसां निधिः ।। ६३ ।।

वनांतरं गतेः प्रातः समित्कुशफलाहृतेः ।।

अतिथीनाश्रमं प्राप्तानर्चयेति दृढव्रतान् ।। ६४ ।।

शिष्यानादिश्य धर्मात्मा गतश्च विपिनांतरम् ।।

अथ सा गौतमं द्रष्टुमागता पर्णशालिकाम् ।।६५।।

क्व गतो मुनिरित्युक्तैरित आयास्यति क्षणात् ।।

शिष्यैरभ्यर्थितेत्युक्त्वा फलमूलैस्सुगंधिभिः ।। ६६ ।।

अभ्युत्थानेनासनेन पाद्येनार्घेण सूनृतैः ।।

वचनैः फलमूलेन सार्चिता शिष्यसंपदा ।। ६७ ।।

क्षणं क्षमस्वसूनुस्तामन्ये जग्मुस्तदन्तिकम् ।।

देव्यां प्रविष्टमात्रायां महर्षेराश्रमो महान् ।। ६८ ।।

अभवत्कल्पबहुलो मणिप्रासादसंकुलः ।।

वनांतरादुपावृत्त्य समित्कुशफलाहरः ।। ६९ ।।

अपश्यत्स्वाश्रमं दूरे विमानशतशोभितम् ।।

किमेतदिति साश्चर्यं चिंतयन्मुनिपुंगवः ।। 1.3.1.4.७० ।।

गौर्याः समागमं सर्वमपश्यज्ज्ञानचक्षुषा ।।

शीघ्रं निवर्तमानोऽसौ द्रष्टुं तां लोकमातरम् ।। ७१ ।।

शिष्यैः शीघ्रचरैर्वृत्तमावेदितमथाशृणोत् ।। ७२ ।।

अथ महर्षिरुपागतकौतुको निजतपःफलमेव तदागमम् ।।

शिवदयाकलितं परिचिन्तयन्नभजदाश्रममाश्रितवत्सलः ।। ७३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे पार्वत्याः कंपाया अरुणाचले गौतमाश्रमागमनंनाम चतुर्थोऽध्यायः।। ४ ।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०५



।। ब्रह्मोवाच ।। ।।

अरण्याद्गौतमं शांतमुटजद्वार आगतम् ।।

प्रत्याधातुं प्रववृते शिवभक्तिर्जगन्मयी ।।१।।

आलुलोके समायातं गौतमं शिष्यसेवितम् ।।

लंबमानशिरःश्मश्रुसम्पूर्णमुखमण्डलम् ।।२।।

जटाभिरतिताम्राभिस्तीर्थस्नानविशुद्धिभिः ।।

न्यस्तरुद्राक्षमणिभिर्ज्वालाभिरिव पावकम् ।।।। ३ ।।

भस्मत्रिपुण्ड्रकोपेतविशालनिटिलोज्वलम् ।।

शुक्लयज्ञोपवीतेन पूर्णं रुद्राक्षदामभिः ।। ४ ।।

दधानं वल्कले रक्ते तपः कृशितविग्रहम् ।।

जपंतं वैदिकान्मंत्रान्रुद्रप्रीतिकरान्बहून् ।। ५ ।।

शम्भुनावसितोदात्तसारूप्यमिव भाषितम् ।।

तेजोनिधिं दयापूर्णं प्रत्यक्षमिव भास्करम् ।। ६ ।।

आलोक्य तं महात्मानं वृद्धं शंभुपदाश्रयम् ।।

कृतांजलिपुटा गौरी प्रणन्तुमुपचक्रमे ।। ७ ।।

कृतांजलिं मुनिर्वीक्ष्य समस्तजगदम्बिकाम् ।।

किमेतदिति साश्चर्यं वारयन्प्रणनाम सः ।। ८ ।।

स्वागतं गौरि सुभगे लोकमातर्दयानिधे ।।

व्याजेन भक्तसंरक्षां कर्तुमत्रागतास्यहो ।। ९ ।।

अहो मान्ये मान्यमर्थं विज्ञायैव पुरा वयम् ।।

पृथग्भावमिवालंब्य शिष्यादिभिः समागताः ।। 1.3.1.5.१० ।।

यद्देवि ते न चेत्किंचिन्मायाविलसितन्निजम् ।।

ततः प्रपंचसंसिद्धिः कथमेव भविष्यति ।। ११ ।।

तिष्ठत्वशेषं मे वक्तुं मायाविलसितं तव ।।

न शक्यते यन्निर्णेतुं त्वदीयैश्च कदाचन ।। ।। १२ ।।

आस्यतां पावने शुद्धं आसने कुशनिर्मिते ।।

गृह्यतां पाद्यमर्घं च दत्तं च विधिवन्मया ।। १३ ।।

इति शिष्यैः समानीते दर्भांके परमासने।।

आसीनामंबिकां वृद्धो मुनिरानर्च भक्तिमान् ।।१४।।

निवेद्य सकलां पूजां भक्तिभावसमन्वितः ।।

गौर्या समभ्यनुज्ञातः स्वयमप्यासने स्थितः।।१५।।

उवाच दशनज्योत्स्नापरिधौतदिशामुखः ।।

पुलकांचितसर्वांगः सानंदाश्रु सगद्गदम् ।। १६ ।।

अहो देवस्य माहात्म्यं शम्भोरमिततेजसः ।।

सद्भक्त रक्षणाय त्वामादिशद्भक्तवत्सलः ।। १७ ।।

असिद्धमन्यल्लब्धव्यं किं वान्यत्तव विद्यते ।।

अम्बैतद्भक्तिमाहात्म्यं संदर्शयितुमीश्वरः ।। १८ ।।

कैलासशैलवृत्तांतः कंपातटतपःस्थितः ।।

अरुणाद्रिसमादेशः सर्वं ज्ञातमिदं मया ।। १९ ।।

आगतासि महाभागे भक्ताश्रममिमं स्वयम् ।।

स्नेहेन करुणामूर्ते कर्तव्यमुपदिश्यताम् ।। 1.3.1.5.२० ।।

इति तस्य वचः श्रुत्वा महर्षेः सर्ववेदिनः ।।

अंबिका प्राह कुतुकात्स्तुवन्ती तं महामुनिम् ।। २१ ।।

महावैभवमेतत्ते देवदेवः स्वयं शिवः ।।

मध्ये तपस्विनां त्वं तु द्रष्टव्य इति चादिशत् ।। २२ ।।

आगमानां शिवोक्तानां वेदानामपि पारगः ।।

तपसा शंभुभक्तानां त्वमेव शिवसंमतः ।। २३ ।।

अरुणाचल नाम्नाहं तिष्ठामीत्यब्रवीच्छिवः ।।।

अस्याचलस्य माहात्म्यं श्रोतव्यं च भवन्मुखात् ।। २४ ।।

प्राप्तास्म्यहं तपः कर्तुमरुणाचलसन्निधौ ।।

भवतां दर्शनादेव स्वयमीशः प्रसीदति ।। २५ ।।

शिवभक्तेन संभाषा शिवसंकीर्तनश्रवः ।।

शिवलिंगार्चनं लोके वपुर्ग्रहफलोदयः ।। २६ ।।

तस्मान्ममैतन्माहात्म्यं श्रोतव्यं भवतो मुखात् ।।

सुव्यक्तमुपदेशेन ज्ञानतोऽसि पिता मम ।। २७ ।।

इति तस्या वचः श्रुत्वा गौतमस्तपसां निधिः ।।

आचख्यौ गिरिशं ध्यायन्नरुणाचलवैभवम् ।। २८ ।।

अज्ञातमिव यत्किंचित्पृच्छ्यते च पुनस्त्वया ।।

अवैमि सर्वविद्यानां माया शैवी त्वमेव सा ।। २९ ।।

अथवा भक्तवक्त्रेण शिववैभवसंश्रवः ।।

शिक्षणं शांभवं तेषां तव तुष्टेश्च कारणम् ।। 1.3.1.5.३० ।।

पठितानां च वेदानां यदावृत्तफलावहम् ।।

वदतां शृण्वतां लोके शिवसंकीर्त्तनं तथा ।। ३१ ।।

सफलान्यद्य सर्वाणि तपांसि चरितानि मे ।।

यदहं शंभुनादिष्टं माहात्म्यं कीर्तये श्रुतम् ।। ३२ ।।

शिवाशिवप्रसादेन माहात्म्यमिदमद्भुतम् ।। ३३ ।।

अरुणाचलमाहात्म्यं दुरितक्षयकारणम् ।।

श्रूयतामनवद्यांगि पुरावृत्तमिदं महत् ।। ३४ ।।

अरुणाद्रिमयं लिंगमाविर्भूतं यथा पुरा ।।

न शक्यते पुनर्वक्तुमशेषं वक्त्रकोटिभिः ।। ३५ ।।

अरुणाचलमाहात्म्यं ब्रह्मणामपि कोटिभिः।।

ब्रह्मणा विष्णुना पूर्वं सोमभास्करवह्निभिः ।। ३६ ।।

इन्द्रादिभिश्च दिक्पालैः पूजितश्चाष्टसिद्धये ।।

सिद्धचारणगंधर्व यक्षविद्याधरोरगैः ।। ३७ ।।

खगैश्च मुनिभिर्दिव्यैः सिद्धयोगिभिरर्चितः ।।

तत्तत्पापनिवृत्त्यर्थं तत्तदीप्सितसिद्धये ।। ३८ ।।

आराधितोऽयं भगवानरुणाद्रिपतिः शिवः ।।

दृष्टो हरति पापानि सेवितो वांछितप्रदः ।। ३९ ।।

कीर्तितोपि जनैर्दूरैः शोणाद्रिरिति मुक्तिदः ।।

तेजःस्तंभमयं रूपमरुणाद्रिरिति श्रुतम् ।। 1.3.1.5.४० ।।

ध्यायन्तो योगिनश्चित्ते शिवसायुज्यमाप्नुयुः ।।
दत्तं हुतं च यत्किंचिज्जप्तं चान्यत्तपः कृतम् ।। ४१ ।।
अक्षय्यं भवति प्राप्तमरुणाचलसंनिधौ ।।
पुरा ब्रह्मा च विष्णुश्च शिवतेजोंशसंभवौ ।।४२।।
साहंकारौ युयुधतुः परस्परजिगीषया ।।
तथा तयोर्गर्वशांत्यै योगिध्येयः सदाशिवः ।। ४३।।
अग्नितेजोमयं रूपमादिमध्यांतवर्जितम् ।।
संप्राप्य तस्थौ तन्मध्ये दिशो दश विभासयन् ।। ४४ ।।
तेजःस्तंभस्य तस्याथ द्रष्टुमाद्यंतभागयोः ।।
हंसक्रोडतनू कृत्वा जग्मतुर्द्यां रसातलम् ।। ४५ ।।
तौ विषण्णमुखौ दृष्ट्वा भगवान्करुणानिधिः ।।
आविर्बभूव च तयोर्वरं प्रादादभीप्सितम् ।।४६।।
तत्प्रार्थितश्च देवेशो यातः स्थावरलिंगताम् ।।
अरुणाद्रिरिति ख्यातः प्रशांतः संप्रकाशते ।।४७।।
दिव्यदुन्दुभिनिर्घोषैरप्सरोगीतनर्तनैः।।
पूज्यते तैजसं लिंगं पुष्पवृष्टिशतैः सदा ।। ४८ ।।
ब्रह्मणामप्यतीतानां पुरा षण्णवतेः प्रभुः ।।
विष्णुनाभिसमुद्भूतो ब्रह्मा लोकान्ससर्ज हि ।। ४९ ।।
स कदाचित्तपोविघ्नं कर्तुकामेन योगिनाम् ।।
इंद्रेण प्रार्थितो ब्रह्मा ससर्ज ललितां स्त्रियम् ।। 1.3.1.5.५० ।।
लावण्यगुणसंपूर्णामालोक्य कमलेक्षणाम् ।।
मुमोह कंदर्पशरैः स विद्धहृदयो विधिः ।। ५१ ।।
स्प्रष्टुकामं तमालोक्य ब्रह्माणं कमलासनम् ।।
नत्वा प्रदक्षिणव्याजाद्गंतुमैच्छद्वराप्सराः ।। ५२ ।।
अस्यां प्रदक्षिणां भक्त्या कुर्वाणायां प्रजापतेः ।।
चतसृभ्योऽपि दिग्भ्योऽस्य मुखान्युदभवन्क्षणात् ।। ५३ ।।
सा बाला पक्षिणी भूत्वा गगनं समगाहत ।।
पुनश्च खगरूपेण समायांतं समीक्ष्य सा ।। ५४ ।।

शरणं याचमाना सा शोणाद्रिमिममाश्रयत् ।।

ब्रह्मणा विष्णुना च त्वमदृष्टपदशेखरः ।। ५५ ।।

रक्ष मामरुणाद्रीश शरण्य शरणागताम् ।।

इति तस्यां भयार्त्तायां क्रोशंत्यामरुणाचलात् ।। ५६ ।।

उदभूत्स्थावराल्लिंगाद्व्याधः कश्चिद्धनुर्द्धरः ।।

संधाय सायकं चापे समेघगगनद्युतिः ।। ५७ ।।

निषादे पुरतो दृष्टे मोहस्तस्य ननाश हि ।।

ततः प्रसन्नहृदयोतिनम्रः कमलोद्भवः।। ५८ ।।

नमश्चक्रे शरण्याय शोणाद्रिपतये तदा ।।

सर्वपापक्षयकृते नमस्तुभ्यं पिनाकिने ।। ५९ ।।

अरुणाचलरूपाय भक्ववश्याय शंभवे ।।

अजानतां स्वभक्तानामकर्मविनिवर्त्तने ।। 1.3.1.5.६० ।।

त्वदन्यः कः प्रभुः कर्तुमशक्यं चापि देहिनाम् ।।

उपसंहर मे देहं तेजसा पापनिश्चयम् ।। ६१ ।।

अन्यं वा सृज विश्वात्मन्ब्रह्माणं लोकसृष्टये ।।

अथ तस्य वचः श्रुत्वा शिवो दीनस्य वेधसः ।। ६२ ।।

उवाच करुणामूर्तिर्भूत्वा चंद्रार्द्धशेखरः ।।

दत्तः कालस्तव मया पुरैव न निवर्त्यते ।। ६३ ।।

कं वा रागादयो दोषा न बाधेरन्प्रभुस्थितम् ।।

तस्माद्दूरस्थितोऽप्येतदरुणाचलसंज्ञितम्।।६४।।

भजस्व तैजसं लिंगं सर्वदोषनिवृत्तये ।।

वाचिकं मानसं पापं कायिकं वा च यद्भवेत् ।।६५।।

विनश्यति क्षणात्सर्वमरुणाचलदर्शनात् ।।

प्रदक्षिणा नमस्कारैः स्मरणैरर्चनैः स्तवैः ।।६६।।

अरुणाद्रिरयं नृणां सर्वकल्मषनाशनः ।।

कैलासे मेरुशृंगे वा स्वस्थानेषु कलाद्रिषु ।।६७।।

संदृश्यः कश्चिदेवाहमरुणाद्रिरयं स्वयम् ।।

यच्छृंगदर्शनान्नृणां चक्षुर्लाभेन केवलम् ।। ६८ ।।

भवेत्सर्वाघनाशश्च लाभश्च ज्ञानचक्षुषः ।।

मदंशसंभवो ब्रह्मा स्वनाम्ना ब्रह्मपुष्करे ।। ६९ ।।

अत्र स्नातः पुरा ब्रह्मन्मोहोऽगाज्जगतीपतेः ।।

स्नात्वा त्वं ब्रह्मतीर्थे मां समभ्यर्च्य कृतांजलिः ।। 1.3.1.5.७० ।।

मौनी प्रदक्षिणं कृत्वा विश्वात्मन्भव विज्वरः ।।७१।।

इति वचनमुदीर्य विश्वनाथं स्थितमरुणाचलरूपतो महेशम् ।।

अथ सरसि निमज्य पद्मजन्मा दुरितहरं समपूजयत्क्रमेण।।७२।।

इममरुणगिरीशमेष वेधा यमनियमादिविशुद्धचित्तयोगः ।।

स्फुटतरमभिपूज्य सोपचारं गतदुरितोऽथ जगाम चाधिपत्यम् ।।७३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे ब्रह्मपुष्करमाहात्म्यवर्णनंनाम पञ्चमोऽध्यायः।।५।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०६



।। गौतम उवाच ।। ।।

पुरा नारायणः कल्पे शयानः सलिलार्णवे ।।

शेषपर्यंकशयने कदाचिन्नैव बुध्यत ।। १ ।।

तमसा पूरितं विश्वमपज्ञातमलक्षणम् ।।

वीक्ष्य कल्पावसानेऽपि विषेदुर्नित्यसूरयः।।२।।

अहो कष्टमिदं रूपं तमसा विश्वमोहनम् ।।

येन कल्पावसानेपि विष्णुर्नाद्यापि बुध्यते ।।३।।

ज्योतिषः पुरुषं पूर्णमपश्यंतं सुरा अपि ।।

कथं वा तमसः शांतिं लभेरन्परिभाविनः ।।४।।

इति निश्चित्य मनसा देवदेवमुमापतिम् ।।

चिंतयामासुरात्मस्थं तेजोराशिं निरंजनम् ।। ५ ।।

ततः प्रसन्नो भगवांस्तेजोराशिर्महेश्वरः ।।

विश्वावनाय विज्ञप्तः प्रणतैर्नित्यसूरिभिः ।। ६ ।।

ततस्तेजोमयाच्छंभोः स्फुलिंगांशुसमुद्भवाः ।।

उदस्तंभंत देवानां त्रयस्त्रिंशच्च कोटयः ।।७।।

बोधितः सकलैर्देवैः समुत्थाय रमापतिः।।

प्रभातं वीक्ष्य सकलं मनस्येवमचिन्तयत् ।। ८ ।।

मया तमसि उद्रेकादकाले शयनं कृतम् ।।

प्रबोधाय परं ज्योतिः स्वयं दृष्टः सदाशिवः ।। ९ ।।

जगदुत्पत्तिकृत्यानि स्वयं कर्तुं व्यवस्यति ।।

किं मयात्र पुनः कार्यं ब्रह्मणा वा स्वयंभुवा।।। 1.3.1.6.१०।।

धिङ्मां स्थितमनात्मज्ञं निद्रया हृतचेतसम् ।।

अथवा सर्वकर्तारं शरणं यामि शंकरम् ।। १ १।।

सर्वदोषप्रशमनं सर्वाभीष्टफलप्रदम् ।।

पवित्रमल्पपुण्यानां दुर्लभं शंभुदर्शनम् ।।१२।।

चिंतयन्नेवमात्मस्थं ज्योतिर्लिंगं सदाशिवम् ।।

प्रणनाम हरिर्भक्त्या देवमष्टांगतो मुहुः।।१३।।

विश्वस्रष्टारमीशानं तुष्टाव दुरितच्छिदम् ।।

अथ तेजोमयः शंभुः शरण्यः शरणागतम् ।। १४।।

अनुगृह्य कटाक्षैस्तं समुत्तिष्ठेत्यभाषत ।।

उत्थाय करुणापूर्णं शंभुं चंद्रार्द्धशेखरम् ।।१५।।

नमस्त्रिभुवनेशाय त्रिमूर्तिगुणधारिणे ।।

त्रिदेववपुषे तुभ्यं त्रिदृशे त्रिपुरद्रुहे ।। १६ ।।

त्वमेव जगतामीशो निजांशैर्देवतामयैः ।।

कार्यकारणरूपेण करोषि स्वेच्छया क्रियाः ।। १७ ।।

मां नियुज्य जगद्गुप्तौ परिमोह्य च मायया ।।

न दोषमुत संकल्पं विहातुमपि नेच्छसि ।। १८ ।।

किं करोमि जगन्मूर्तौ न्यस्तभारोऽस्म्यहं त्वयि ।।

न दोषमीहसे नूनमकालशयनेन माम् ।। १९ ।।

हर शम्भो हरेरार्तिमनुतापं समीक्ष्य सः ।।

आदिदेश हरः श्रीमान्प्रायश्चित्तं हरेरिदम् ।। 1.3.1.6.२० ।।

अरुणाचलरूपेण तिष्ठामि वसुधातले ।।

तस्य दर्शनमात्रेण भविता ते तमः क्षयः ।। २१ ।।

पूर्वस्मै विष्णवे तत्र वरो दत्तो मया पुरा।।

तदैव तैजसं लिंगमरुणाचल संज्ञितम् ।।

तेजोमयमिदं रूपं प्रशांतं लोकरक्षणात्।।

यदग्निमयमव्यक्तमपारगुणवैभवम्।। २३।।

नदीनां निर्झराणां च मेघमुक्तांभसामपि ।।

अंतर्ज्योतिर्मयत्वेन लयस्तत्रैव दृश्यते ।। २४ ।।

अंधानां दृष्टिलाभेन पंगूनां पादसंचरैः ।।

अपुत्राणां च पुत्राप्त्या मूकानां वाक्प्रवृत्तिभिः ।। २५ ।।

सर्वसिद्धिप्रदानेन सर्वव्याधिविमोचनैः ।।

सर्वपापप्रशमनैर्यत्सर्ववरदं स्थितम् ।। २६ ।।

इत्युक्तांतर्दधे शम्भुर्हरिश्चैवारुणाचलम् ।।

आगत्य तप आस्थाय शोणाचलमुपास्त च ।। २७ ।।

तमद्रिं परितो दृष्ट्वा सुरान्काननसंश्रयान् ।।

ऋषीणामाश्रमान्पुण्यान्स्थापयामास वै हरिः ।।

वेदान्सांगोपनिषदान्समंतान्मूर्तिधारिणः ।। २८ ।।

ससर्ज दिव्यरूपाणां शतमप्सरसां कुलम् ।।

नृत्यैर्गीतैश्च वादित्रैस्सेवध्वमिति चादिशत् ।। २९ ।।

स्नात्वा ब्रह्मसरस्यस्मिन्विष्णुः कमललोचनः ।।

प्रदक्षिणं चकारामुमरुणाद्रिं समर्चितम् ।। 1.3.1.6.३० ।।

अपापः सर्वलोकानामाधिपत्यं च लब्धवान् ।।

रमया सहितो नित्यमभिरूपसुरूपया ।। ३१ ।।

भास्करस्तेजसां राशिरसुरैरपि पीडितः ।।

ब्रह्मोपदेशादानर्च भक्त्यारुणगिरीश्वरम् ।। ३२ ।।

निमज्ज्य विमले तीर्थे पावने ब्रह्मनिर्मिते ।।

प्रदक्षिणं चकारैनमरुणाद्रिं स्वयंप्रभुम् ।। ३३ ।।

अशेषदैत्यविजयं लब्ध्वा मेरुप्रदक्षिणम् ।।

लेभे च परमं तेजः परतेजःप्रणाशनम् ।। ३४ ।।

दक्षशापानलाक्रांतस्सोमः शिववचोबलात् ।।

अरुणाचलमभ्यर्च्य लब्धरूपोऽभवत्पुनः ।। ३५ ।।

अग्निर्ब्रह्मर्षिशापेन यक्ष्मरोगप्रपीडितः ।।

अपूतोऽपि पवित्रोऽभूदरुणाचलसेवया ।। ३६ ।।

शक्रो वृत्रं बलं पाकं नमुचिं जृंभमुद्धतम् ।।

शिवलब्धवरान्दैत्यान्पुरा हत्वा जगत्पतीन् ।। ३७ ।।

पातकैश्च परिक्षीणस्तथा लोकांतमाश्रितः ।।

शम्भुं प्रसाद्य तपसा शिवेन परिचोदितः!।। ३८ ।।

अरुणाद्रिं समभ्यर्च्य विपापोऽभूत्सुराधिपः ।।

इष्ट्वा च हयमेधेन प्रीणयामास शंकरम् ।। ३९ ।।

लब्ध्वा चेन्द्रपदं शक्रः शतमप्सरसांकुलम् ।।

सेवार्थमादिशन्छ्रीमान्दिव्यदुंदभिसेवया ।। 1.3.1.6.४० ।।

पुष्पमेघान्समादिश्य दिव्याभिः पुष्पवृष्टिभिः ।।

समर्चयति शोणाद्रिं दिवि नित्यं च वंदते ।। ४१ ।।

शेषोऽपि शोणशैलेशं समभ्यर्च्य शिवाज्ञया ।।

अभजत्कामरूपत्वं महीमण्डलधारकः ।। ४२ ।।

अन्ये नागाश्च गन्धर्वाः सिद्धाश्चाप्सरसां गणाः ।।

दिक्पालाश्च तमभ्यर्च्य लेभिरेऽपेक्षितान्वरान् ।। ४३ ।।

देवैरशेषैर्दैत्यादीञ्जेतुकामैः समुद्यतैः ।।

प्रार्थितः सर्वतोऽभीष्टवरदोऽरुणभूधरः ।। ४४ ।।

त्वष्ट्रा विरचिताकार आदित्यस्तेजसा तपन् ।।

ग्रहनाथस्तु शोणाद्रिं विलंघयितुमुद्यतः ।। ४५ ।।

रथवाहाः पुनस्तस्य शक्तिहीनाः श्रमं गताः ।।

सोऽपि श्रिया विहीनश्च जातः गोणाद्रितेजसा ।। ४६ ।।

नाशक्नोच्च दिवं गन्तुं सर्वगत्यांशुमालिनः ।।

स तु ब्रह्मोपदेशेन समाराध्यारुणाचलम् ।। ४७ ।।

प्रीत्या तस्माद्विभोर्लेभे मार्गं व्योम्नो हयाञ्छुभान् ।।

ततः प्रभृति तिग्मांशुः स हि शोणाख्यपर्वतम् ।। ४८ ।।

न लंघयति किं त्वस्य प्रदक्षिणपरिक्रमैः ।।

दक्षयागपरिध्वस्ता हीनांगास्त्रिदशाः पुरा ।। ४९ ।।

अरुणाचलमाराध्य नवान्यंगानि लेभिरे ।।

पूषा दन्तं शिखी हस्तं भगो नेत्रं त्वखंडितम् ।। 1.3.1.6.५० ।।

घ्राणं वाणी च लेभे सा शोणाचलनिषेवणात् ।।

भार्गवः क्षीणनेत्रस्स विष्णुहस्तकुशाग्रतः ।। ५१ ।।

बलिदत्तावनीदानजलधारानिरोधतः ।।

स तु शोणाचलं गत्वा तपः कृत्वातिदुष्करम् ।। ५२ ।।

लेभे नेत्रं च पूतात्मा भास्कराख्ये गिरौ स्थितः ।।

अरुणाचलनाथस्य सेवया सूर्यसारथिः ।। ५३ ।।

प्रतर्दनाख्यो नृपतिर्ग्रहीतुं देवकन्यकाम् ।।

अरुणाद्रिपतेर्गानं कुर्वंतीं सादरोऽभवत् ।। ५४ ।।

क्षणात्कपिमुखो जातो मंत्रिभिश्चोदितो नृपः ।।

प्रत्यर्प्य तां पुनश्चान्याः प्रादादरुणभूभृते ।। ५५ ।।

ततश्चारुमुखोजातः प्रसादादरुणेशितुः ।।

सायुज्यमस्मै सकलं दत्तवान्भक्तिभावतः ।।५६।।

अरुणाचलनाथस्यसंनिधौ ज्ञानदुर्बलः ।।

गंधर्वः पुष्पकाख्यस्तु भक्तिहीनो ह्यगात्पुरा ।। ५७ ।।

ततो व्याघ्रमुखं दृष्ट्वा गंधर्वपरिचारकाः ।।

किमेतदिति साश्चर्यं पप्रच्छुस्ते परस्परम् ।। ५८ ।।

अथ नारद निर्दिष्टमवज्ञाफलमात्मनः ।।

बुद्ध्वारुणाद्रिं संपूज्य पुनश्च सुमुखोऽभवत् ।। ५९ ।।

शिवभूमिरियं ख्याता परितो योजनद्वयम् ।।

मुक्तिस्तत्र प्रमीतानां कदापि विलयो न हि ।। 1.3.1.6.६० ।।

सप्तर्षयः पुरा भूमौ शापदोषसमन्विताः ।।

सिषेविरेरुणाद्रिं वै नाथो ज्ञात्वा विनिश्चयम् ।। ६१ ।।

शापमोक्षं ददौ श्रीमान्सप्तर्षीणां महात्मनाम् ।।

सप्तर्षिभिः कृतं तीर्थं सर्वपापविनाशनम् ।। ६२ ।।

शोणाचलस्य निकटे दृश्यते पावनं शुभम् ।।

पंगुर्मुनिः शोणशैलात्पादौ लब्धुं समागतः ।। ६३ ।।

अंतर्हितप्रार्थितार्थो दारुहस्तपुटे वहन् ।।

जानुचंक्रमणव्यग्रः शोणनद्यास्तटं गतः ।। ६४ ।।

दारुहस्तपुटे तीर्थे निचिक्षेप पिपासतः ।।

जानुचंक्रमणे तस्मिन्धूर्तस्तोयं पिपासति ।। ६५ ।।

अथ शोणाचलं प्राप्तः कथं वा दारुहस्तकः ।।

किमेतदिति तं पृच्छन्नाधावत्कलितत्परः ।। ६६ ।।

लब्धपादश्च सहसा जगाम च निजालयम् ।।

नाद्राक्षीत्पुरुषं तत्र दारुहस्तौ पुरोगमौ ।। ६७ ।।

स्वयं गृहीत्वा चालोक्य ववंदेऽरुणपर्वतम् ।।

ननंद लब्धचरणो लब्धरूपो महामुनिः ।। ६८ ।।

विस्मयोत्फुल्लनयनैः शिवभक्तैर्महात्मभिः ।।

पूजितो लब्धपादः सञ्जगाम च यथागतम् ।। ६९ ।।

वाली शक्रसुतः श्रीमाञ्छृंगादुदयभूभृतः ।।

अस्ताचलस्य शिखरं प्रतिगन्तुं समुद्यतः ।। 1.3.1.6.७० ।।

आलुलोकेऽरुणगिरिं मध्ये देवनमस्कृतम् ।।

ऊर्ध्वं गंतुं समुद्युक्तः क्षीणवीर्योऽपतद्भुवि ।। ७१ ।।

पित्रा शक्रेण संगम्य चोदितः शोणपर्वतम् ।।

लिंगं तैजसमभ्यर्च्य लब्धवीर्योऽभवत्पुनः ।। ७२ ।।

नलः पूर्वं समभ्यर्च्य स्वसृष्टा मानवप्रियाः ।।

पालयामास धर्मात्मा नीतिसारसमन्वितः ।। ७३ ।।

इलः प्रविश्य सहसा गौरीवनमखंडितम् ।।

स्त्रीभावं समनुप्राप्तः पप्रच्छ स्वं पुरोधसम् ।। ७४ ।।

वशिष्ठेन समादिष्टः शोणाद्रिं समपूजयत् ।।

तपसाराध्य देवेशं पुनः पुंस्त्वमुपागतः ।। ७५ ।।

सोमोपदेशाद्भक्त्याथ सस्मारारुणपर्वतम् ।।

ईशानुग्रहतो लेभे शापमोक्षं तपोधिकः ।। ७६ ।।

लेभे च परमं स्थानमप्राप्यममरैरपि ।।

भरतो मृगशावस्य स्मरणादायुषोऽत्यये ।। ७७ ।।

न मुक्तिं प्राप योगेन मृगजन्मनि संगतः ।।

पत्नीविरहजं दुःखं प्राप्तवानमितं हरिः ।। ७८ ।।

पुनर्भृगूपदेशेन शोणाद्रिमिममर्चयन् ।।

अवतारेषु सर्वेषु सर्वदुःखान्यपाकरोत् ।। ७९ ।।

सरस्वती च सावित्री श्रीर्भूमिः सरितस्तथा ।।

अभ्यर्च्य शोणशैलेशमापदो निरतारिषुः ।। 1.3.1.6.८० ।।

भास्करः पूर्वदिग्भागे विश्वामित्रस्तु दक्षिणे ।।

पश्चिमे वरुणो भागे त्रिशूलं चोत्तराश्रयम् ।। ८१ ।।

योजनद्वयपर्यंते सीमाः शैलेषु संस्थिताः ।।

चतस्रो देवतास्त्वेताः सेवंते शोणपर्वतम्।। ८२ ।।

स्थिताः सीमावसानेषु शोणाद्रीशमवस्थितम् ।।

नमंति देवाश्चत्वारः शिवं शोणाचलाकृतिम् ।। ८३ ।।

अस्योत्तरस्मिञ्छिखरे दृश्यते वटभूरुहः ।।

सिद्धवेषः सदैवास्ते यस्य मूले महेश्वरः ।। ८४ ।।

यस्य च्छायातिमहती सर्वदा मण्डलाकृतिः ।।

लक्ष्यते विस्मयोपेतैः सर्वदा देवमानवैः ।। ८५ ।।

अष्टभिः परितो लिंगैरष्टदिक्पालपूजितैः ।।

अष्टासु संस्थितैर्दिक्षु शोभते ह्युपसेवितः ।। ८६ ।।

नृपाणां शम्भुभक्तानां शंकराज्ञानुपालिनाम् ।।

अत्रैव महदास्थानमादिदेवेन निर्मितम् ।। ८७ ।।

बकुलश्च महांस्तत्र सदार्थितफलप्रदः ।।

आगमार्थविदा मूले वामदेवेन सेव्यते ।। ८८ ।।

अगस्त्यश्च वशिष्ठश्च संपूज्यारुणभूधरम् ।।

संस्थाप्य लिंगे विमले तेपाते तादृशं तपः ।।८९।।

हिरण्यगर्भतनयः पुरा शोणनदः पुमान्।।

अत्र तीव्रं तपस्तप्त्वा गंगाभिमुखगोऽभवत ।। 1.3.1.6.९० ।।

अत्र शोणनदी पुण्या प्रवहत्यमलोदका ।।

वेणा च पुण्यतटिनी परितः सेवतेऽचलम् ।। ९१ ।।

वायव्याश्च दिशो भागे वायुतीर्थं च शोभते ।।

तत्र स्नात्वा मरुत्पूर्वं जगत्प्राणत्वमाप्तवान् ।। ९२ ।।

उत्तरेऽस्य गिरेस्तीर्थं सुवर्णकमलोज्ज्वलम् ।।

दिव्यसौगंधिकाकीर्णं हंसभृंगमनोहरम् ।। ९३ ।।

कौबेरं तीर्थमेशान्यामैशान्यं तीर्थमुत्तमम् ।। ९४ ।।

तस्यैव पश्चिमे भागे विष्णुः कमललोचनः ।।

स्नात्वा विष्णुत्वमभजत्कमलालालिताकृतिः ।। ९५ ।।

नवग्रहाः पुरा तत्र स्नात्वा ग्रहपदं गताः ।।

नवग्रहप्रसादश्च जायते तत्र मज्जताम् ।। ९६ ।।

दुर्गा विनायक स्कन्दो क्षेत्रपालः सरस्वती ।।

रक्षंति परितस्तीर्थं ग्राहयमेतदनन्तरम् ।। ९७ ।।

गंगा च यमुना चैव गोदावरी सरस्वती ।।

नर्मदासिन्धुकावेर्यः शोणः शोर्णनदी च सा ।। ९८ ।।

एता गूढा निषेवंते पूर्वाद्याशासु संततम् ।।

नश्यंत्यः सकलं पापमात्मक्षेत्रसमुद्भवम्।। ९९ ।।

अन्याश्च सरितो दिव्याः पार्थिव्यश्च शुभोदकाः ।।

उदजृंभंत सहसा शोणाद्रीशप्रसादतः ।। 1.3.1.6.१०० ।।

आगस्त्यं दक्षिणे भागे तीर्थं महदुदाहृतम् ।।

सर्वभाषार्थसंसिद्धिर्जायते तत्र मज्जताम् ।। १०१ ।।

अत्रागस्त्यः समागत्य स्नात्वा मुनिगणावृतः ।।

अभ्यर्चयति शोणाद्रिं मासि भाद्रपदे सदा ।। १०२ ।।

वाशिष्ठमुत्तरे भागे तीर्थं दिव्यं शुभोदयम् ।।

सर्ववेदार्थसंसिद्धिर्जायते तत्र मज्जनात् ।। १०३ ।।

अत्र मेरोः समागत्य वशिष्ठो भगवानृषिः ।।

करोत्याश्वयुजे मासि शोणाद्रीशनिषेवणम् ।। १०४ ।।

गंगानाम महत्तीर्थं पूर्वोत्तरदिशि स्थितम् ।।

तत्र स्नानाद्भवेन्नृणां सर्वपातकनाशनम् ।। १०५ ।।

गंगाद्याः सरितः सर्वाः कार्त्तिके मासि संगताः ।।

अत्रारुणाद्रिनाथस्य सेवां कुर्वंति सादरम् ।। १०६ ।।

ब्राह्म्यं नाम महातीर्थमरुणाद्रीशसन्निधौ ।।

तस्योपसंगमात्सद्यो ब्रह्महत्यादि नश्यति ।। १०७ ।।

मार्गे मासि समागत्य ब्रह्मलोकात्पितामहः ।।

स्नात्वा तत्प्रत्यहं देवमर्चयत्यरुणाचलम् ।।।। १०८ ।।

पौषे मासि समागत्य स्नात्वा तीर्थे निजैः सुरैः ।।

महेन्द्रः शोणशैलेशमभ्यर्चयति शंकरम् ।। १०९ ।।

शैवंनाम महातीर्थं संनिधौ तत्र वर्तते ।।

रुद्रो ब्रह्मकपालेन सह तत्र न्यमज्जत ।। 1.3.1.6.११० ।।

अत्र शम्भुर्गणैः सार्द्धं माघे मासि प्रसीदति ।।

प्रायश्चित्तानि सर्वाणि नृणां सफलयन्भुवि ।। १११ ।।

आग्नेयमग्निदिग्भागे तीर्थं सौभाग्यदायकम् ।।

अग्निरत्र पुरा स्नात्वा स्वाहया संगतः सुखी ।। ११२ ।।

अनंगोपि स्मरः स्नात्वा फाल्गुने मासि संगतः ।।

अभ्यर्च्य शोणशैलेशमभूत्सर्वसुखाधिपः ।। ११३ ।।

दिशि दक्षिणपूर्वस्यां वैष्णवं तीर्थमद्भुतम् ।।

ब्रह्मर्षयः सदा तत्र वसंति कृतकौतुकाः ।। ११४ ।।

चैत्रे मासि समागत्य विष्णुस्तत्र रमापतिः ।।

स्नात्वाभ्यर्च्यारुणाद्रीशमभवल्लोकनायकः ।। ११५ ।।

सौरंनाम महातीर्थं कौबेरदिशि जृंभितम् ।।

सर्वरोगोपशांतिश्च जायते तत्र मज्जनात् ।। ।। ११६ ।।

वैशाखे मासि दिनकृत्स्नात्वात्रेशं निषेवते ।।

वालखिल्यैः समं श्रीमान्वेदैश्च सह संगतः ।। ११७ ।।

आश्विनं पावनं तीर्थमीशब्रह्मोत्तरे स्थितम् ।।

आप्लुतौ भिपजौ दस्रौ पूतावत्र निमज्जनात् ।। ११८ ।।

अत्राश्विनौ समागत्य स्नात्वाभ्यर्च्य च शंकरम् ।।

दक्षिणे शोण शैलस्य निकटे वर्त्तते शुभम् ।। ११९ ।।

कामदं मोक्षदं चैव तीर्थं पांडवसंज्ञितम् ।।

पुरा हि पांडवास्तत्र मजनात्क्षितिनायकाः ।। 1.3.1.6.१२० ।।

अत्र धात्री समागत्य सर्वौषधिफलान्विता ।।

ज्येष्ठे मासि समं देवैरार्चयच्चारुणाचलम् ।। १२१ ।।

आषाढे मासि संत्यक्ता विश्वेदेवा महाबलाः ।।

अभ्यर्च्य शोणशैलेशमागच्छन्मखराध्यताम् ।। १२२ ।।

वैश्वदेवं महातीर्थं सोमसूर्योत्तराश्रयम् ।।

विश्वाधिपत्यमतुलं लभ्यते तत्र मज्जनात् ।। ।। १२३ ।।

परितो लक्ष्यते तीर्थं पूर्वस्यां दिशि शोभने ।।

अत्र लक्ष्मीः पुरा स्नात्वा लेभे पुरुषमुत्तमम् ।। १२४ ।।

उत्तरस्यां दिशि पुरा पुण्या स्कंदनदी स्थिता ।।

अत्र स्नात्वा पुरा स्कंदः संप्राप्तो विपुलं बलम् ।। १२५ ।।

पश्चिमस्यां दिशि ख्याता परा कुंभनदी शुभा ।।

अगस्त्यः कुंभकः कुंभस्तत्र नित्यं व्यवस्थितः ।। १२६ ।।

गंगा च मूलभागस्था यमुना गगने स्थिता ।।

सोमोद्भवा शिरोभागे सेवंते शोणपर्वतम् ।। १२७।।

बहून्यपि च तीर्थानि संभूतानि समंततः ।।

तेषां भेदान्पुरा वेत्तुं मार्कण्डेयस्तु नाशकत् ।। १२८ ।।

तपोभिर्बहुभिस्सोयं शोणाद्रीशमतोषयत् ।।

प्रार्थयामास च वरं प्रीतात्तस्मान्मुनीश्वरः ।। १२९ ।।

।। मार्कण्डेय उवाच ।। ।।

भगवन्नरुणाद्रीश तीर्थभेदाः सहस्रशः ।।

प्रख्याताश्च प्रकाशंते दुर्बोधास्त्वल्पचेतसाम् ।। 1.3.1.6.१३० ।।

कथमेकत्र सांनिध्यं लभेरन्भुवि मानवाः ।।

अपर्याप्तश्च भवति पृथगेषां निषेवणे ।।१३१।।

अंतर्निगूढतेजास्त्वं गत्वा यस्सकलैः सुरैः ।।

आरण्यसे कुरु तथा शोणाद्रिस्पर्शभीरुभिः ।। १३२ ।।

अहं च शंभुमभ्यर्च्य तपसारुणपर्वतम् ।।

सर्वलोकोपकारार्थं सूक्ष्म लिंगमपूजयम् ।। १३३ ।।

विश्वकर्मकृतं दिव्यं विमानं विविधोत्सवम् ।।

संकल्प्य सकलान्भोगान्नित्यानजनयत्पुनः ।। १३४ ।।

धर्मशास्त्राणि विविधान्यवापुर्मुनिपुंगवाः ।।

शिवकार्याणि सर्वाणि चक्रुभक्तिसमन्विताः ।। १३५ ।।

मया च शंभुमभ्यर्च्य कृताग्न्याहुतिसंभवाः ।।

सप्त कन्या वरारोहाः पूजार्थं विनियोजिताः ।। १३६ ।।

हतशत्रुगणैर्भूपैर्लब्धराज्यैः पुरा नृपैः ।।

प्रत्येकं विविधैर्भोगैः शोणशैलाधिपोर्चितः ।। १३७ ।।

इदमनुभववैभवं विचित्रं दुरितहरं शिवलिंगमद्रिरूपम् ।।

अमलमनभिगम्यनामधेयं वरमरुणाद्रिनायकं भजस्व ।। १३८ ।।

अवनतजनरक्षणोचितस्य स्मरणनिराकृतविश्वकल्मषस्य ।।

भजनममितपुण्यराशियोगादरुणगिरेः कृतिनः परं लभस्व ।। १३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धेऽरुणाचलस्थविविधतीर्थमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०७



।। पार्वत्युवाच ।। ।।

कथमग्निमयं लिंगमभिगम्यमभूद्भुवि ।।

प्राणिनामपि सर्वेषामुपशांतिं कथं गतः ।। १ ।।

तीर्थानामुद्भवः पुण्यात्कथं चारुणपर्वतात् ।।

उपसंहृतसर्वांगः कथं वा वद मेऽचलः ।।२।।

।। गौतम उवाच।। ।।

कृते त्वग्निमयः शैलस्त्रेतायां मणिपर्वतः ।।

द्वापरं हाटकगिरिः कलौ मरकताचलः ।। ३ ।।

बहुयोजनपर्यंतं कृते वह्निमये स्थिते ।।

बहिः प्रदक्षिणं चक्रुः प्रशाम्यति महर्षयः ।।४।।

शनैः शांतोरुणाद्रीशः श्रीमानभ्यर्थितः सुरैः ।।

लोकगुप्त्यर्थमत्यर्थमुपशांतोऽरुणाचलः ।।५।।

अथ गौरी मुनिं प्राह कथं शांतोऽरुणाचलः ।।

कथं वा प्रार्थयामासुर्देवेशं त्रिदशा इमम्।।६।।

इति तस्या वचः श्रुत्वा गौतमस्त्वभ्यभाषत ।।

प्रशस्य भक्तिमतुलां तस्यास्तत्त्वार्थवेदिनीम् ।।७ ।।

।। गौतम उवाच ।। ।।

अग्निरूपं पुरा शैलमासादयितुमक्षमाः ।।

पुरा सुराः स्तुतिं चक्रुरभ्यर्च्य क्रतुसंभवैः ।। ८ ।।

भगवन्नरुणाद्रीश सर्वलोकहितावह ।।

अग्निरूपोऽपि संशांतः प्रकाशस्य महीतले ।। ९ ।।

असौ यस्ताम्रो अरुण उत बभ्रुः सुमंगलः ।।

इति त्वां सकला वेदाः स्तुवंति शिवविग्रहम् ।। 1.3.1.7.१० ।।

नमस्ताम्रायारुणाय शिवाय परमात्मने ।।

वेदवेद्य स्वरूपाय सोमाय सुखरूपिणे ।। ११ ।।

त्वद्रूपमखिलं देव जगदेतच्चराचरम् ।।

निधानमिव ते रूपं देवानामिदमीक्ष्यते ।।१२।।

वर्षतां च पयोदानां निर्झराणां च भूयसाम् ।।

सलिलोपायसंहारो युक्तस्ते युगसंक्षये ।।१३।।

अग्नेरापः समुद्भूतास्त्वत्तो हि परमात्मनः ।।

विश्वसृष्टिं वितन्वति विचित्रगुण वैभवात् ।। १४ ।।

शीतो भव महादेव शोणाचल कृपानिधे ।।

सर्वेषामपि जीवानामभिगम्यो भव प्रभो ।। १५ ।।

इति स्तुतः सुरैः सर्वेरानतैर्भक्तवत्सलः ।।

सद्यः शीतलतां गच्छन्नभिम्योऽभवत्प्रभुः ।। १६ ।।

प्रावर्त्तत पुनर्नद्यो निर्झराश्च बहूदकाः ।।

वर्षतामपि मेघानां न जग्राह जलं बहु ।। ।। १७ ।।

तथापि तरुणार्कोद्यत्कालाग्निशतकोटिभिः ।।

समानदीप्तिरभजज्जीवानामभिगम्यताम् ।।१८।।

विसृज्य विश्वसलिलं नदीश्च रसविक्षरैः ।।

संपूर्यः सकलैर्देवः सर्वदा संप्रकाशते ।। १९ ।।

तीर्थानि तानि तान्यासन्परितः प्रार्थनावशात् ।।

दिक्पालानां सुराणां च महर्षीणां महात्मनाम् ।।।। 1.3.1.7.२० ।।

।। ब्रह्मोवाच ।। ।।

इति तस्य वचः श्रुत्वा गौरी कुतुकसंयुता ।।

तीर्थानामुद्भवं सर्व श्रोतुं समुपचक्रमे ।। २१ ।।

।। पार्वत्युवाच ।। ।।

कानि तीर्थानि जातानि शोणाद्रेर्लोकगुप्तये ।।

भगवन्ब्रूहि सकलं तीर्थानामुद्भवं मम ।। २२ ।

इति तस्या वचः शृण्वन्गिरीशात्संश्रुतं पुरा ।।

तीर्थानामुद्भवं सर्वं व्याख्यातुमुपचक्रमे ।। २३ ।।

।। गौतम उवाच ।। ।।

ऐन्द्रं नाम महातीर्थमिंद्रभागे समुत्थितम् ।।

तत्र स्नात्वा पुरा शक्रो ब्रह्महत्यां व्यपोहयत् ।। २४ ।।

ब्रह्मतीर्थं पुनर्दिव्यं वह्निःकोणे समुत्थितम् ।।

परस्त्रीसंगमात्पापं वह्निः स्नात्वात्र चात्यजत् ।। २५ ।।

याम्यं नाम महातीर्थं यमभागे विजृंभते ।।

अत्र स्नात्वा यमोऽत्याक्षीद्भयं ब्रह्मास्त्रसंभवम् ।। २६ ।।

नैर्ऋतं तु महातीर्थं नैर्ऋत्यां दिशि शोभते ।।

भूतवेतालविजयं तत्र स्नात्वर्षयो गताः ।। २७ ।।

पश्चिमे वारुणं तीर्थं दिग्भागे च प्रकाशते ।।

शल्यकोशं पुरा लेभे स्नात्वात्र वरुणो निजम् ।। २८ ।।

वायवे वायवीयं च तीर्थमत्र प्रकाशते ।।

तत्र स्नात्वा ययौ वायुर्जगत्प्राणत्ववैभवम् ।। २९ ।।

उत्तरे चात्र दिग्भागे सोमतीर्थमिति स्मृतम् ।।

तत्र स्नात्वा पुरा सोमो यक्ष्मरोगादमुंचत ।। 1.3.1.7.३० ।।

ऐशाने चात्र दिग्भागे विष्णुतीर्थमिति स्मृतम् ।।

तत्र स्नात्वा पुरा विष्णुः श्रिया च सह संगतः ।। ३१ ।।

मार्कण्डेयः पुरा देवि प्रार्थयामास शंकरम् ।।

सदाशिव महादेव देवदेव जगत्पते ।। ३२ ।।

बहूनामिह तीर्थानामेकत्र स्यात्समागमः ।।

केनोपायेन भगवन्कृपया वद शंकर ।। ३३ ।।

इति तस्य वचः श्रुत्वा देवदेव उमापतिः ।।

उपायं दर्शयामास मुनये प्रीतमानसः।। ३४ ।।

।। महेश्वर उवाच ।। ।।

सदोपहारवेलायां सर्वतीर्थसमुच्चयः ।।

सन्निधिं मम संप्राप्तः सेवते गूढरूपतः ।। ३५ ।।

नान्यदन्वेषणीयं ते तीर्थमत्र महामुने ।।

ममोपहारवेलायां दृश्यते तीर्थसंचयः ।। ३६ ।।

तस्माद्भक्तियुतैर्नित्यं सर्वतीर्थसमागमः ।।

मुनिभिश्च सुरैः सर्वैर्नैवेद्यांते विलोक्यताम् ।। ३७ ।।

इति देवि पुरा देवो मार्कंडेयाय शंकरः ।।

उपादिशदमेयात्मा तीर्थसंदर्शनक्रमम् ।। ३८ ।।

।। गौतम उवाच ।। ।।

सर्वाण्यपि च पुण्यानि तीर्थानि शिवसन्निधौ ।।

सदोपहारवेलायां दृश्यानि किल मानवैः ।। ३९ ।।

व्रतं तीर्थं तपो वेदा यज्ञाश्च नियमादयः ।।

योगाश्च शोणशैलेशदर्शनाद्दृष्टसंचराः ।। 1.3.1.7.४० ।।

निशम्य वाक्यं मुनिपुंगवस्य प्रसेदुषी पर्वतराजपुत्री ।।

अवोचदत्यद्भुतमेतदत्र त्वयोपदिष्टं भुवि तीर्थजालम् ।। ४१ ।।

अहं कृतार्था तपतां वरिष्ठ त्वत्संगमात्संप्रति तीर्थजालम् ।।

प्राप्ता नमस्तेऽस्तु तपोविशेष शिवोपि मेऽत्रादिशदेव कर्तुम् ।। ४२ ।।

कथं गिरीशः पुनरत्र देवः स्फुरन्महावह्निवपुर्धरोऽपि ।।

प्रशांतरूपः परमेश्वरोऽयमभ्यर्चनीयो भुवि मर्त्यवर्गैः ।। ४३ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे ऽरुणाचलमाहात्म्ये पूर्वार्धेऽरुणाचलस्थविविधतीर्थवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०८



।। गौतम उवाच ।। ।।

शृणु देवि पुरावृत्तं कैलासे मेरुधन्विना ।।

आदिष्टस्तीर्थयात्रार्थमहं लिंगानि वीक्षितुम् ।। १ ।।

रुद्रक्षेत्रे च केदारे तथा बदरिकाश्रमे ।।

काश्यां पुण्येषु देशेषु तथा श्रीपर्वते शिवे ।। २ ।।

कांचीमुख्यासु पुण्यासु पुरीष्वप्यगमं तदा ।।

ऋषिभिर्विबुधैः सार्थैर्गणैर्योगिभिरुत्तमैः ।। ३ ।।

स्थापितानि च लिंगानि स्वयंभूनि च दृष्टवान् ।।

तत्रतत्र महाभागे तीर्थानि शिवसन्निधौ ।। ४ ।।

सेवमानः सशिष्योऽहं पर्यटन्पृथिवीमिमाम् ।।

एवं तीर्थानि सर्वाणि गाहमानो व्रतान्वितः ।। ५ ।।

तपांसि यज्ञकर्माणि कुर्वन्भूमिं समाचरन्।।

शिवस्मरणसंयुक्तः शिवलिंगानि सन्नमन् ।। ६ ।।

सर्वाणि भुवि पुण्यानि देशमेतमुपाश्रयम् ।।

अत्र देवं महादेवमविकेशं त्रियंबकम् ।। ७ ।।

अरुणाद्रिरितिख्यातं पर्वतं लिंगमैक्षिषि ।।

अत्र सिद्धा महात्मानो मुनयश्च दृढव्रताः ।। ८ ।।

कंदमूलफलाहारा दृष्टाः शोणाद्रि सेवकाः ।।

अस्तौषमादिमं लिंगमरुणाद्रिमयं महत् ।।९।।

आद्येन ब्रह्मणा पूर्वमर्चितं दिव्यचक्षुषा ।।

असौ यस्ताम्रो अरुण उत बभ्रुः सुमंगलः ।। ।। 1.3.1.8.१० ।।

इति वेदा स्तुवंति त्वामरुणाद्रीश संततम्।।

नमस्ताम्राय चारुणाय शिवाय परमात्मने ।। ११ ।।

सर्ववेदस्वरूपाय नित्यायामृतमूर्तये ।।

कालाय करुणार्द्राय दृष्टिपेयामृताब्धये ।।१२।।

भक्तवात्सल्यपूर्णाय पुण्याय पुरभेदिने ।।

दर्शनं तव देवेश सर्वधर्मफलप्रदम् ।।१३।।

भुवि लब्धवता भूयो नान्यत्कार्यं तपः क्वचित् ।।

भवता कर्मभूरेषा वर्ततेद्य निरोधिता ।। १४ ।।

प्रार्थयते स्वयं वासान्देवाश्चात्र त्वदाश्रये ।।

कालसंग्रहसंजातं फलं लब्धं मयाधुना ।। १५ ।।

अन्यत्कृतं तपः सर्वं त्वद्दर्शनफलं मम ।।

ईदृशं तव देवेश रूपमत्यद्भुतोदयम् ।। १६ ।।

एकमद्रिमयं लिंगं न क्वचिद्दृष्टवान्भुवि ।।

सूर्येंद्वग्निसुसंयुक्त कोणत्रयमनोहरम् ।। १७ ।।

त्रिमूर्तिरूप देवेश दृश्यते ते वपुर्महत् ।।

शक्तित्रयस्वरूपेण कालत्रयविधानकम् ।। १८ ।।

त्रिवेदात्मं त्रिकोणांगं लिंगं ते दृष्टमद्भुतम् ।।

त्रैलोक्यरक्षणार्थाय विततं रूपमास्थितः ।। १९ ।।

दृश्यते वसुधाभागे शोणाद्रिरिति विश्रुतः ।।

अजानतां च मर्त्यानां समालोकनमात्रतः ।। 1.3.1.8.२० ।।

वितरत्यखिलान्भोगान्व्याजकरुणानिधिः ।।

अर्चया रहितं लिंगमन्यं शून्यमुदाहृतम् ।। २१ ।।

इदं तु पूजितं देवैः सदा सर्ववरप्रदम् ।।

प्रसीद करुणापूर्ण शोणाचल महेश्वर ।। २२ ।।

त्रायस्व भवभीतं मां प्रपन्नं भक्तवत्सल ।।

द्रष्टव्यं द्रष्टमेतत्ते रूपमत्यद्भुतं महत् ।। २३ ।।

कृतार्थय कृपासिंधो शरण्य शरणागतम् ।।

इति संस्तूयमानो मे देवः शोणाचलेश्वरः ।। २४ ।।

अदर्शयत्परं रूपं दिव्यमेहीत्युवाच माम् ।।

प्रीतोऽस्मि भवतः स्तोत्रैर्भक्त्या च परया भृशम् ।। २५ ।।

अत्रैव भवतो वासो नित्यमस्तु ममांतिके ।।

संपूजय च मां नित्यं भुवि भोगैः सनातनैः ।। २६ ।।

तपसा तप सर्वेषां महत्त्वमिह दर्शय ।।

पूर्वं कैलासशिखरे वसंतं त्वां तपोन्वितम् ।। २७ ।।

आदिशं पृथिवीभागं शोणाद्रौ पूजयेति माम् ।।

सप्तर्षिपूजिता पूजा दिवि मे संप्रकाशते ।। २८ ।।

तथा नित्यार्चनायुक्त प्रकाशय धरातले ।।

सर्वेषामेव जंतूनां हिताय त्वं तपोऽधिकः ।। २९ ।।

भुवि मां पूजयार्चाभिरागमोक्ताभिरादरात् ।।

दिव्या मम महापूजा दृश्या हि दिवि दैवतैः ।। 1.3.1.8.३० ।।

प्रकाशनीया भवता पार्थिवी वसुधातले ।।

माहात्म्यं पूर्वमेवोक्तं यथाहमरुणाचलः ।। ३१ ।।

स्थितो वसुंधराभागे मया प्रीतं तु ते भृशम् ।।

ये वा संपूजयंति स्म पूर्वं मां सुकृताधिकाः ।। ३२ ।।

तेभ्यस्त्वमधिको भूमौ प्रकाशस्व शिवार्चनम् ।।

इत्यादिष्टो हि देवेशं प्रणम्य भवभक्तिमान् ।। ३३ ।।

अन्वपृच्छं दयापूर्णमरुणाद्रीशमानमन् ।।

अनासाद्यमिदं रूपमग्निरूपं महेश्वरम् ।। ३४ ।।

कथमद्यार्चयाम्येनं मर्त्यलोकोचितार्चनैः ।।

आदेशमिममन्वर्थं कथं वा कल्पयाम्यहम् ।। ३५ ।।

उपायमादिश श्रीमन्नभिगम्यो यथा भवान् ।।

इति विज्ञापितो देवः श्रीमाञ्छोणाचलेश्वरः ।। ३६ ।।

अन्वग्रहीदशेषात्मा प्रणतं मां दयानिधिः ।।

अहं तु सूक्ष्मलिंगानि प्रकाशिष्ये महीतले ।।।। ३७ ।।

आगमोक्तक्रियाभेदैः पूजां मे प्रतिपादय ।।

पंचावरणसंयुक्तं लिंगं मे सूक्ष्ममद्भुतम् ।। ३८ ।।

अरुणाद्रीश्वराभिख्यं संपूजय तपोबलैः ।।

इत्यादिश्य महादेवः स्वयंभु विमलं महत् ।। ३९ ।।

रूपं मे दर्शयामास सूक्ष्मलिंगात्मना शिवः ।।

आलोक्य विमलं लिंगं सूक्ष्मं तत्स्वयमुच्छ्रितम्।। 1.3.1.8.४० ।।

अशेषाऽऽवरणोपेतं कृतार्थहृदयोऽभवम् ।।

पुनर्व्यज्ञापयं देवं शम्भुमाश्रितवत्सलम् ।। ४१ ।।

आगमोक्तप्रकाराणामनिरीक्ष्यत्वमागतम् ।।

कथं तु तव रूपाणां नामभेदान्वियोजितान् ।। ४२ ।।

जानीयां करुणामूर्ते स्वयमीश्वर मत्प्रभो ।।

पूजकास्तव के वा स्युर्मंदिरं वात्र कीदृशम् ।। ४३ ।।

कथं स्तोत्रं कथं पूजा के वात्र परिचारकाः ।।

स्थानरक्षा कथं वा स्यात्के वात्मपरिरक्षकाः ।। ४४ ।।

कथं वा मानुषी पूजा नित्या संवर्धते तव ।।

आगता बहवो देवाः श्रद्धेयं मनुजैः कथम् ।। ४५ ।।

प्रसीद परमेशान स्वयमाज्ञापयाखिलम् ।।

एवं विज्ञापितो देवः शोणाद्रीशः स्वयं प्रभुः ।। ४६ ।।

आज्ञापयत्तदा देवो विश्वकर्माणमागतम् ।।

सृज त्वं नगरं दिव्यमरुणाख्यं गुणाधिकम् ।। ४७ ।।

मंदिरं मम दिव्यं च महामणिगणोज्ज्वलम् ।।

तौर्यत्रिकं सपर्यांगं तन्मे सर्वं प्रकल्पय ।। ४८ ।।

आबभाषे शिवः श्रीमान्नामभेदार्चनक्रमम् ।।

व्रतं च करुणामूर्तिररुणाद्रीश्वरः शिवः ।। ४९ ।।

शृणु तन्मे च ये सृष्टा पूजार्थं परिचारकाः ।।

शृणु गौतम सर्वं मे मानुषं पूजनक्रमम् ।। 1.3.1.8.५० ।।

य एष सर्वलोकानां क्षेमाय प्रथते भुवि ।।

इदं तेजोमयं लिंगमतुलं दृश्यते महत् ।।५१।।

अरुणाद्रीश्वराभिख्यं पूज्यतां सततं त्वया ।।

शक्तिर्ममोत्तरे भागे पूज्या नित्योदया मुदा ।। ।। ५२ ।।

दधती स्थानमाहात्म्यमपीतकुचनामिका ।।

अरुणाचलराजोयमविभागः प्रियान्वितः ।। ५३ ।।

उत्सवार्थो महादेवः पूज्यो भोगसुतावृतः ।।

बोधदो भक्तलोकस्य दत्ताभयकरः शिवः ।। ५४ ।।

सारंगं परशुं विभ्रत्प्रसन्नवदनः सदा ।।

उमास्कन्देश्वरः शम्भुर्दिव्यरत्नविभूषणः ।। ।। ५५ ।।

आभया भासयँल्लोकानविकुण्ठश्रियान्वितः ।।

शक्तेरुत्सवभद्रे च संपूज्या सुंदरेश्वरी ।। ५६ ।।

सर्वभूषणसंयुक्ता शृङ्गाररसवर्द्धनी ।।

बालो गणपतिः पूज्यः पुरस्ताद्भूतिनन्दनः ।। ५७ ।।

मदंतिकमलंकुर्वन्भक्ष्यैर्भोज्यैर्बहूदयैः ।।

मत्पार्श्वमविमुंचंती शोणरेखांचितेक्षणा ।। ५८ ।।

उत्सवार्था परा शक्तिरंतिकस्थैव पूज्यताम् ।।

मुखरांघ्रिपतिः श्रीमान्नृत्यंस्तांडवपण्डितः ।। ५९ ।।

उत्सवार्थं समभ्यर्च्यश्चक्षुरग्रेऽमृतेश्वरः ।।

शक्तिश्चान्या महाभागा संपूज्या भूविनायका ।। 1.3.1.8.६० ।।

द्वारे नन्दी महाकालः पुरस्तात्सूर्यसंनिभः ।।

भक्तानां मम सर्वेषां पूजनं चापि कल्प्यताम् ।। ६१ ।।

दक्षिणे मातरः पूज्या विघ्नशास्तृसमन्विताः ।।

संपूज्यो नैर्ऋते कोणे विघ्ननाशो विनायकाः ।। ६२ ।।

स्कन्दः शक्तिधरश्चैवैशानकोणे समर्च्यताम् ।।

लिंगानि च मनोज्ञानि पूजनीयान्यनन्तरम् ।। ६३ ।।

मंदिरं मम संपूज्य दक्षिणामूर्ति दक्षिणम् ।।

पश्चिमे विष्णुरूपांकमग्निरूपान्वितं तथा ।। ६४ ।।

उत्तरे ब्रह्मरूपांकं पूर्वे सारंगभूयुतम् ।।

सर्वदेवगुणोपेतं सर्वशक्तिसमन्वितम् ।।।। ६५ ।।

अपीतकुचनाथायाः सर्वशक्तिसमन्वितम् ।।

मंदिरं गुरु संपूज्य दिक्पालकवधूवृतम् ।। ६६ ।।

मंदिरस्यावनार्थाय देवीवैभवनायकाः ।। ।। ६७ ।।

क्षेत्रपालं तु संपूज्य सर्वावरणसंयुतम् ।।

पुत्रस्य त्राणमायाता पूज्यारुणगिरीश्वरी ।। ६८ ।।

काली बहुविधाश्चान्या देवता विधिपालकाः ।।
उत्सवा विविधाः कल्प्याः प्रतिमाससमहोदयाः ।। ६९ ।।
सृजस्व कन्यका दिव्याः शिवदेवार्हणे रताः ।।
नृत्तगीतकलाभिज्ञा रूपसौभाग्यसंयुताः ।। ।। 1.3.1.8.७० ।।
चारुविभ्रमसंयुक्ताः कामदा नित्यपावनाः ।।
शिष्यानादिश वेदज्ञान्सदाचारसमुज्ज्वलान् ।। ७१ ।।
दिव्योपचारसंसिद्ध्यै सुभगाञ्छुद्धचेतसः ।।
दीक्षितान्विमलाञ्छुद्धाञ्छैवागमविशारदान् ।। ७२ ।।
शैवाचारप्रसिद्ध्यर्थमादिशाभ्यर्चने मम ।।
मार्द्दलाञ्छांखिकान्वैणांस्तालिकान्वेणुवादकान् ।। ७३ ।।
शौल्बिकान्सृज सद्विद्यांश्चतुर्विद्याविशारदान् ।।
क्षत्रियान्विविधान्वैश्याञ्छूद्रांश्च शिवसंमतान् ।। ७४ ।।
चत्वारश्च मठाः कल्प्याश्चतुर्दिक्तीर्थवासिनाम् ।।
मुनीनां शिवभक्तानां निराशानां निवासतः ।। ७५।।
तेषु स्थिता मुनींद्रा मे रक्षंतु शिवपूजनम् ।।
भिक्षमाणाः पुनः शैवा भक्ताः पाशुपता अपि ।। ७६ ।।
पालयंतु सदान्ये च युक्ताः कापालिका अपि ।।
सर्वेषां जायमानानां जातानां संभविष्यताम् ।। ७७ ।।
अव्याहताज्ञमारक्ष्यमिदं स्थानं महीभृताम् ।।
बकुलश्च महानत्र दृश्यते दिव्यभूरुहः ।। ७८ ।।
अत्र भक्ता वितन्वन्तु शिवकार्यविनिश्चयम् ।।
अत्र मे दीयते द्रव्यमप्रेक्षितपराप्तये ।। ७९ ।।
यत्तदक्षय्यफलदमारक्ष्यं शिवसेवकैः ।।
भक्तैर्विज्ञापितं चार्थं श्रोष्यामि पुरतः स्थितैः ।। 1.3.1.8.८० ।।
सर्वं संपादयिष्यामि तेषां चित्तानुकूलकम् ।।
अपराधसहस्राणि क्षंस्ये मां स्वर्चतामहम् ।। ८१ ।।
आगमोक्ता च पूजेयं मानुषी निर्मिता यतः ।।
ग्रहीष्ये तामहं सर्वामर्चां सर्वागमोदिताम् ।। ८२ ।।

संकल्पितं भवेत्कर्म प्रीतिकृन्मम सेवकैः ।।

आगमार्थानशेषांस्त्वमालोक्य समयोचितान् ।। ८३ ।।

विधायाभ्यर्चनाभेदाँल्लोकरक्षाकृते मुने ।।

कर्तव्या महती पूजा पौर्णमास्यां तु सादरम् ।। ८४ ।।

सत्राणि विविधान्यत्र कर्तव्यानि सहस्रशः ।।

विविधानि च दानानि शक्त्या चैवास्य सन्निधौ ।। ८५ ।।

अव्युच्छिन्नप्रदीपस्य दातारो मम सन्निधौ ।।

तेजोमयमिदं रूपं मम यांति न संशयः।। ।। ८६ ।।

जलजं तरुजं पुष्पं कक्षजं च लतोद्भवम् ।।

ददते ये च भक्त्या मे ते भविष्यंति भूभृतः ।। ८७ ।।

तेषां पुरोगतः साक्षादहं जेष्यामि विद्विषः ।।

यस्य यस्य तु देशस्य यो यो राजा तपोधिकः ।। ८८ ।।

तत्तत्समर्द्धितं रम्यं संभवं ददतेऽत्र मे ।।

मत्संनिधिमुपागत्य दुरात्मानोऽपि भूमिपाः ।। ८९ ।।

शिवभक्ता भृशं पूर्णा भविष्यंति न संशयः ।। 1.3.1.8.९० ।।

इति शंभुमुखोत्थितं वचः समुपश्रुत्य विधूतकल्मषः ।।

अहमानतवान्व्यजिज्ञपं कुतुकाच्छोणगिरीश्वरं शिवम् ।। ९१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धेऽरुणेश्वराराधनामाहात्म्यवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ०९

https://sa.wikisource.org/s/h1z
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् १

।। गौतम उवाच ।। ।।

भगवन्नरुणाद्रीश नामधेयानि ते भृशम् ।।

विशेषाच्छ्रोतुमिच्छामि स्थानेऽस्मिन्सुरपूजिते ।। १ ।।

।। महेश्वर उवाच ।। ।।

नामानि शृणु मे ब्रह्मन्मुख्यानि द्विजसत्तम ।।

दुर्लभान्यल्पपुण्यानां कामदानि सदा भुवि ।। २ ।।

शोणाद्रीशोऽरुणाद्रीशो देवाधीशो जनप्रियः ।।

प्रपन्नरक्षको धीरः शिवसेवकवर्धकः ।। ३ ।।

अक्षिपेयामृतेशानः स्त्रीपुंभावप्रदायकः ।।

भक्तविज्ञप्तिसंधाता दीनबंदिविमोचकः ।। ४ ।।

मुखरांघ्रिपतिः श्रीमान्मृडो मृगमदेश्वरः ।।

भक्तप्रेक्षणकृत्साक्षी भक्तदोषनिवर्त्तकः ।। ५ ।।

ज्ञानसंबंधनाथश्च श्रीहलाहलसुंदकः ।।

आहवैश्वर्यदाता च स्मर्तृसर्वाघनाशनः ।। ६ ।।

व्यत्यस्तनृत्यद्ध्वजधृक्सकांतिर्नटनेश्वरः ।।

सामप्रियः कलिध्वंसी वेदमूर्तिर्निरंजनः ।। ७ ।।

जगन्नाथो महादेवस्त्रिनेत्रस्त्रिपुरांतकः ।।

भक्तापराधसोढा च योगीशो भोगनायकः ।। ८ ।।

बालमूर्त्तिः क्षमारूपी धर्मरक्षो वृषध्वजः ।।

हरो गिरीश्वरो भर्गश्चंद्ररेखावतंसकः ।। ९ ।।

स्मरांतकोंऽधकरिपुः सिद्धराजो दिगंबरः ।।

आगमप्रिय ईशानो भस्मरुद्राक्षलांछनः ।। 1.3.1.9.१० ।।

श्रीपतिः शंकरः स्रष्टा सर्वविद्येश्वरोऽनघः ।।

गंगाधरः क्रतुध्वंसो विमलो नागभूषणः ।। ११ ।।

अरुणो बहुरूपश्च विरूपाक्षोऽक्षराकृतिः ।।

अनादिरंतरहितः शिवकामः स्वयंप्रभुः ।। १२ ।।

सच्चिदानंदरूपश्च सर्वात्मा जीवधारकः ।।

स्त्रीसंगवामसुभगो विधिर्विहितसुंदरः ।। १३ ।।

ज्ञानप्रदो मुक्तिदश्च भक्तवांछितदायकः ।।

आश्चर्यवैभवः कामी निरवद्यो निधिप्रदः ।। १४ ।।

शूली पशुपतिः शंभुः स्वयंभुर्गिरिशो मृडः ।।

एतानि मम मुख्यानि नामान्यत्र महामुने ।। १५ ।।

अन्यानि दिव्यनामानि पुराणोक्तानि संस्मर ।।

प्रदक्षिणेन मां नित्यं विशेषात्त्वं समर्चय ।। १६ ।।

प्रदक्षिणप्रियो यस्मादहं शोणाचलाकृतिः ।।

इत्याज्ञप्तो महादेवमर्चयन्नरुणाचलम् ।।

अविमुंचन्निहावासं कृतवानहमद्रिजे ।। १७ ।।

।। गौर्युवाच ।। ।।

भगवन्सर्वधर्मज्ञ गौतमार्य्य मुनीश्वर ।।

प्रदक्षिणस्य माहात्म्यं ब्रूहि मे शोणभूभृतः ।। १८ ।।

कस्मिन्काले कथं कार्यं कैर्वा पूर्वं प्रदक्षिणम् ।।

कृतं शोणाद्रिनाथस्य प्राप्तमिष्टं परं पदम् ।। १९ ।।

।। ब्रह्मोवाच ।। ।।

इति पृष्टो मुनिः प्राह गौतमः शैलकन्यकाम् ।।

श्रूयतां देवि माहात्म्यमादिशन्मे महेश्वरः ।। 1.3.1.9.२० ।।

।। महादेव उवाच ।। ।।

अहं हि शोणशैलात्मा प्रकाशो वसुधातले ।। २१ ।।

परितो मां सुराः सर्वे वर्तंते मुनिभिः सह ।। २२ ।।

यानि कानि च पापानि जन्मांतरकृतानि च ।।

तानि तानि विनश्यंति प्रदक्षिणपदे पदे ।। २३ ।।

अश्वमेधसहस्राणि वाजपेयायुतानि च ।।

सिद्ध्यंति सर्वतीर्थानि प्रदक्षिणपदे पदे ।। २४ ।।

अपि प्रहीणस्य समस्तलक्षणैः क्रियाविहीनस्य निकृष्टजन्मनः ।।

प्रदक्षिणीकृत्य शशांकशेखरं प्रयास्यतः कस्य न सिद्धिरग्रतः ।। २५ ।।

समस्त तीर्थाभिगमेषु पुण्यं समस्तयज्ञागमधर्मजातम् ।।

अवाप्यते शोणमहीधरस्य प्रदक्षिणाप्रक्रमणेन सत्यम् ।। २६ ।।

पदेनैकेन भूलोकं द्वितीयेनांतरिक्षकम् ।।

तृतीयेन दिवं मर्त्यो जयत्यस्य प्रदक्षिणे ।। २७ ।।

एकेन मानसं पापं द्वितीयेन तु वाचिकम् ।।

कायिकं तु तृतीयेन पदेन क्षीयते नृणाम् ।। २८ ।।

पातकानि च सर्वाणि पदेनैकेन मार्जयेत् ।।

द्वितीयेन तपः सर्वं प्राप्नोत्यस्य प्रदक्षिणात् ।।२९।।

पर्णशाला महर्षीणां सिद्धानां च सहस्रशः ।।

सुराणां च तथाऽऽवासा विद्यंतेत्र सहस्रशः ।। 1.3.1.9.३० ।।

अत्र सिद्धः पुनर्नित्यं वसाम्यग्रे सुरार्चितः।।

ममांतरे गुहा दिव्या ध्यातव्या भोगसंयुता ।। ३१ ।।

अग्निस्तंभमयं रूपमरुणादिरिति श्रुतम् ।।

ध्यायँल्लिंगं मम बृहत्मन्दं कुर्यात्प्रदक्षिणम् ।। ३२ ।।

अष्टमूर्तिमयं लिंगमिदं यैस्तैजसं भृशम् ।।

ध्यात्वा प्रदक्षिणं कुर्वन्पातकानि विनिर्दहेत् ।।३३।।

न पुनः संभवस्तस्य यः करोति प्रदक्षिणाम् ।।

शोणाचलाकृतेर्नित्यं नित्यत्वं ध्रुवमश्नुते ।।३४।।

अस्य पादरजःस्पर्शात्पूयते सकला मही ।।

पदमेकं तु धत्ते यः शोणाद्रीशप्रदक्षिणे ।। ३५ ।।

नमस्कुर्वन्प्रतिदिशं ध्यायन्स्तौति कृतांजलिः ।।

असंसृष्टकरः कैश्चिन्मंदं कुर्यात्प्रदक्षिणम् ।।३६।।

आसन्नप्रसवा नारी यथा गच्छेदनाकुलम् ।।

तथा प्रदक्षिणं कुर्यादशृण्वंश्च पदध्वनिम् ।।३७।।

स्नातो विशुद्धवेषः सन्भस्मरुद्राक्षभूषितः ।।

शिवस्मरणसंसृष्टो मंदं दद्यात्पदं बुधः ।।३८।।

मनूनां चरतामग्रे देवानां च सहस्रशः ।।

अदृश्यानां च सिद्धानां नान्येषां वायुरूपिणाम् ।।३९।।

संघट्टमतिसंमर्दं मार्गरोधं विचिंतयन् ।।

अनुकूलेन भक्तः सञ्छनैर्दद्यात्पदं बुधः ।।1.3.1.9.४०।।

अथवा शिवनामानि संकीर्त्य वरगीतिभिः।।

शिवनृत्यं च रचयन्भक्तैः सार्द्धं परिक्रमेत् ।।४१।।

माहात्म्यं मम वा शृण्वन्ननन्यमतिरादरात् ।।

शनैः प्रदक्षिणं कुर्यादानन्दरसनिर्भरः ।। ४२ ।।

दानैश्च विविधैः पुण्यैरुपकारैस्तथार्थिनाम् ।।

यथामति दयापूर्ण आस्तिकः परितो व्रजेत् ।।४३।।

कृते त्वग्निमयं लिंगं त्रेतायां मणिपर्वतम् ।।

द्वापरे चिंतयेद्धैमं कलौ मरकताचलम् ।। ४४ ।।

अथवा स्फाटिकं रूपमरुणं तु स्वयंप्रभम् ।।

ध्यायन्विमुक्तः सकलैः पापैः शिवपुरं व्रजेत् ।। ४५ ।।

अवाङ्मनसगम्यत्वादप्रमेयतया स्वयम् ।।

अग्नित्वाच्च परं लिंगमनासाद्याचलाभिधम् ।। ४६ ।।

ध्यात्वा प्रदक्षिणं कर्तुरभिगम्योऽहमंजसा ।।

तस्य पादरजो नृणामजरामरकारणाम् ।। ४७ ।।

रूपमेकं तु धत्ते यः शोणाद्रीशप्रदक्षिणे ।।

वाहनानि सुरौघाणां प्रार्थयंते परस्परम् ।। ४८ ।।

कुर्वतां चरणं वोढुमरुणाद्रिप्रदक्षिणाम् ।।

छायाप्रदानं कुर्वंति कल्पकाद्याः सुरद्रुमाः ।। ४९ ।।

कुर्वतां भुवि मर्त्यानामरुणाद्रिप्रदक्षिणाम् ।।

देवगन्धर्वकाद्यानां सहस्रेण समावृताः ।। 1.3.1.9.५० ।।

सेवंते ते गणाकीर्णा विमानशतकोटयः ।।

मम प्रदक्षिणं भूमौ कुर्वतां पादपांसुभिः।। ५१ ।।

पाविता महती वीथी दृष्टा शिवपदप्रदा ।।

अंगप्रदक्षिणं कुर्वन्क्षणात्स्वर्ग्यतनुर्भवेत् ।। ५२ ।।

प्राप्तो वज्रशरीरत्वं न धृष्येत महीतले ।।
व्योमयानोत्सुका देवाः सिद्धाश्च परमर्षयः ।। ५३ ।।
अदृश्याः संचरंत्यत्र पश्यंते मम संनिधिम् ।।
विनयं मम भक्तिं च प्रदक्षिणपरिक्रमे ।। ५४ ।।
दृष्ट्वा हर्षसमायुक्ता मर्त्येभ्यो ददते वरम् ।।
अत्र देवास्त्रयस्त्रिंशत्पुरा कृत्वा प्रदक्षिणाम् ।। ५५ ।।
प्रत्यहं मार्गमासीनाः प्रत्येकं कोटितां गताः ।।
आदित्याद्या ग्रहाः सर्वे पुरा कृत्वा प्रदक्षिणाम् ।। ५६ ।।
संपूर्णजगतीभागे सर्वे ग्रहपतां गताः ।।
यः करोति नरो भूमौ सूर्यवारे प्रदक्षिणाम् ।। ५७ ।।
स सूर्यमडलं भित्त्वा मुक्तः शिवपुरं व्रजेत् ।।
सोमवारे नरः कुर्वन्नरुणाद्रिप्रदक्षिणाम् ।। ५८ ।।
अजरामरतां प्राप्तो नासौम्यो भवति क्षितौ ।।
भौमवारे नरः कुर्वन्नरुणाद्रिप्रदक्षिणाम् ।। ५९ ।।
आनृण्यमखिलं प्राप्य सार्वभौमो भवेद्ध्रुवम् ।।
बुधवारे नरः कुर्वञ्छोणाद्रीशप्रदक्षिणाम् ।। 1.3.1.9.६० ।।
सर्वज्ञतामनुप्राप्तः स वाचां पतितामियात् ।।
गुरुवारे नरः कुर्वन्सर्वदेवनमस्कृतः ।। ६१ ।।
प्रदक्षिणेन शोणाद्रेः स तु लोकगुरुर्भवेत् ।।
भृगुवारे नरः कुर्वन्नरुणाद्रिप्रदक्षिणाम् ।। ६२ ।।
संप्राप्य महतीं लक्ष्मीं लभते वैष्णवं पदम् ।।
मन्दवारे नरः कृत्वा शोणाद्रीशप्रदक्षिणाम् ।। ६३ ।।
विमुक्तो ग्रहपीडाभिः स विश्वविजयी भवेत् ।।
नक्षत्राणि च सर्वाणि पुरा तद्दैवतैः सह ।। ६४ ।।
मम प्रदक्षिणां कर्तुः पुण्यानि सहसा व्रजेत् ।।
तिथयः करणानीह योगाश्च मम संमताः ।। ६५ ।।
अभीष्टफलदा जाताः कुर्वतां मत्प्रदक्षिणाम् ।।
मुहूर्ता विविधा होराः सौम्याश्च सततोदयाः ।। ६६ ।।

मत्प्रदक्षिणकर्तृणां जायंते सततं शुभाः।।

प्रच्छिनत्ति प्रकारोऽघं दकारो वांछितप्रदः ।।६७।।

क्षिकारात्क्षीयते कर्म णकारो मुक्तिदायकः।।

दुर्बलाः कार्श्यसंयुक्ता आधिव्याधिविजृंभिताः ।। ६८ ।।

मम प्रदक्षिणं कृत्वा मुच्यंते सर्वदुष्कृतैः ।।

मम प्रदक्षिणं कर्तुर्भक्त्या पादेन संततम् ।।६९।।

क्षणेन साध्वां पश्यामि त्रैलोक्यस्य प्रदक्षिणाम् ।।

लोकेशाश्च दिगीशाश्च ये चान्ये कारणेश्वराः।।1.3.1.9.७०।।

मम प्रदक्षिणां कृत्वा स्थिरा राज्ये पुराऽभवन् ।।

अहं च गणसंयुक्तः सर्वदेवर्षिसंयुतः ।।७१।।

उत्तरायणसंयोगे करोमि स्वप्रदक्षिणाम् ।।

मद्रूपं तैजसं लिंगमरुणाद्रिरिति श्रुतम् ।।७२।।

त्रैलोक्यस्य हितार्थाय करिष्यामि प्रदक्षिणाम् ।।

आगता च परांते च गौरी तप इहाद्भुतम् ।। ७३ ।।

कर्तुं प्रदक्षिणं कृत्वा मामेष्यत्यनघा पुनः ।।

कार्तिके मासि नक्षत्रे कृत्तिकाख्ये महातपाः ।। ७४ ।।

मम प्रदक्षिणां गौरी प्रदोषे रचयिष्यति ।।

नराणामल्पपुण्यानां दुर्लभं तत्प्रदक्षिणम् ।। ७५ ।।

ज्योतिर्लिंगस्य दृष्टस्य देवी प्रार्थनया तथा ।।

मया समेता देवी सा प्राप्ताऽपीतकुचाभिधा ।। ७६ ।।

आश्वास्यति सुरान्सर्वानुत्तरायणसंगमे ।।

देवगन्धर्वयक्षाणां सिद्धानामपि रक्षसाम् ।। ७७ ।।

सर्वेषां देवयोनीनां भविता तत्र संगमः ।।

ये तदा मां समागत्य पूजयंति तपोधिकाः ।। ७८ ।।

सर्वजन्मकृताघौघ प्रायश्चित्तं व्रजंति ते ।।

दुर्ल्लभं तद्दिनं पुंसामुत्तरायणसंगमे ।। ७९ ।।

तदा मद्रूपमभ्यर्च्य कृतार्थाः सन्तु मानवाः ।।

प्रदक्षिणं तु मे दिव्यं कुर्वंति च महीभुजः ।। 1.3.1.9.८० ।।

तेषां पुरोगतः साक्षादहं जेष्यामि विद्विषः ।।

राजा यस्य तु देशस्य यो यो राजा तपोधिकः ।। ८१ ।।

स कारयेद्विप्रमुख्यैः श्रोत्रियैर्मे प्रदक्षिणाम् ।।

मंडलं मंडलार्द्धं वा संकल्पविधिपूर्वकम् ।। ८२ ।।

तस्य तस्य स्थिरं राज्यं शत्रूणां च पराहतिम् ।।

करिष्यामि मुने नित्यमहमेव पुरःस्थितः ।। ८३ ।।

न वाहनेन कुर्वीत मम जातु प्रदक्षिणाम् ।।

धर्मलुब्धमना जानञ्छिवाचारपरिप्लुतिम् ।। ८४ ।।

धर्मकेतुः पुरा राजा यमलोकादुपागतः ।।

मम प्रदक्षिणां कर्त्तुं तुरगेणाभ्यरोचयत् ।। ८५ ।।

क्षणेन तुरगो जातो गणनाथः सुरार्चितः ।।

प्रतिपेदे पदं शैवं विमुच्य धरणीपतिम् ।। ८६ ।।

वीक्ष्य तं वाहनं भूयो गणनाथवपुर्द्धरम् ।।

पादप्रदक्षिणां कृत्वा स्वयं च गणपोऽभवत् ।। ८७ ।।

तदाप्रभृति शक्राद्याः सुरा विष्णुसमन्विताः ।।

पादाभ्यामेव कुर्वंति मम सर्वे प्रदक्षिणाम् ।। ८८ ।।

स्वर्गान्निपातितः कोऽपि सिद्धः काले तपःक्षयात् ।।

प्रदक्षिणां ततः कृत्वा पुनर्लब्धपदोऽभवत् ।। ८९ ।।

स्खलितं पादजं रक्तं मम कर्तुः प्रदक्षिणम् ।।

मार्ज्यते तस्य देवेन्द्र मौलिमंदारकेसरैः ।। 1.3.1.9.९० ।।

प्रदक्षिणमहावीथी शिलाशकलघट्टितम् ।।

पदं संधार्यते पुंसां श्रीपयोधरकुंकुमैः ।। ९१ ।।

मणिपर्वतशृंगेषु कल्पद्रुमवनांतरे ।।

संचरंति सदा मर्त्या मम कृत्वा प्रदक्षिणम् ।। ९२ ।।

।। गौर्युवाच ।। ।।

उपचारप्रवृत्तानां फलं मे शंस सुव्रत ।।

यैर्वै जनः कृतार्थः स्याद्यथाशक्ति कृतादरः ।। ९३ ।।

।। मुनिरुवाच ।। ।।

उपचारफलं देवि शृणु वक्ष्याम्यहं तव ।।

यन्मह्यं कृपया पूर्वमुक्तवान्परमेश्वरः ।। ९४ ।।

लूती तंतुकजालानि संसृज्य क्वचिदेव मे ।।

जातिस्मरो महीध्रेऽस्मिन्सोंऽशुकैर्मां व्यवेष्टयत् ।। ९५ ।।

गजः कश्चितृषाक्रांतो विमुच्य च मधु क्वचित् ।।

वनपल्लवमुत्कीर्य मुक्तोऽभूद्गणनायकः ।। ९६ ।।

कृमयो विलुठन्तो मे पार्श्वे दुरितवर्जिताः ।।

सिद्धवेषाः पुनः सर्वे मम लोकं व्रजंति ते ।। ९७ ।।

अव्युच्छिन्नप्रदीपार्चिः क्षणमप्यादधाति यः ।।

स्वयंप्रकाशः स भवन्मम सारूप्यमश्नुते ।। ९८ ।।

हारीतः कोपि संप्राप्तः शाखानीडो ममांतिके ।।

खद्योतो दीपवन्नक्तं तावन्मुक्तिं समागतः ।। ९९ ।।

गावः प्रस्रवणैः सिक्ता वत्सस्मरणसंभवैः ।।

मत्पार्श्वे मुक्तिमापुस्ता मम लोकं समाश्रयन् ।। 1.3.1.9.१०० ।।

काकः पक्षजवातेन बलिग्रहणलोलुपः ।।

मार्जयन्मत्पुरोभागं मुक्तिं प्रापद्यत क्षणात् ।। १०१ ।।

मूषको मद्गुहाभागं मणिसंघविकर्षणैः ।।

प्रकाशयन्वितिमिरं मम रूपमपद्यत ।। १०२ ।।

छायावृक्षत्वमास्थातुं मुनयस्त्रिदशा अपि ।।

प्रार्थयंत्येव मत्पार्श्वे न पुनःसंभवेच्छया।।१०३।।

गोपुरं शिखरं शालां मण्डपं वापिकामपि ।।

कुर्वतां मत्पुरोभागे सिध्यंतीष्टार्थसंपदः ।। १०४ ।।

सदा मर्त्यैरनासाद्यमग्निलिंगमिदं मम ।।

अनासाद्याचलेशाख्यं पूज्यतां वसुधातले ।।१०५।।

वीक्षणस्पर्शनध्यानैः स्वभूतं निखिलं जगत् ।।

पोषयंती परा शक्तिः पूज्याऽपीतकुचाभिधा ।।१०६।।

सर्वलोकैकजननी संप्राप्ता नित्ययौवनम्।।

यौवनप्रार्थिभिः सेव्या सदाऽपीतकुचाभिधा ।। १०७।।

क्षणात्तस्य पुरोभागे वसतां प्राणिनामिह ।।

परत्र वात्र दुष्प्राप्यमिष्टवस्तु न विद्यते ।।१०८।।

अप्रमेयगुणाधारमपेक्षितवरप्रदम् ।।

अशेषभोगनिलयं शोणाद्रीशं समर्चय ।।१०९।।

लब्धकामा पुनः शम्भुमाश्रयिष्यसि सुव्रते ।।

तपश्चरणमप्येतत्तव लोकहितावहम् ।। 1.3.1.9.११० ।।

न केवलं तव तपः स्ववांछितफलप्रदम् ।।

तपस्यतामृषीणां च क्षेमायैव भविष्यति।।१११।।

कारणांतरमाशंक्य तपः कुर्वंति देवताः ।।

रहस्यं देवतानां तु फलेनैवानुमीयते ।। ११२ ।।

वयं च सहसंवासास्तव व्रतनिरीक्षणात् ।।

कृतार्थाः स्याम देवेशि तपसा नः कृतार्थता ।। ११३ ।।

इति तस्य मुनेर्वाक्यमर्थगर्भं निशम्य सा ।।

गौरी कौतुकसंयुक्ता प्रशशंस महामुनिम् ।। ११४ ।।

तपः किमन्यत्कर्तव्यं लब्धं तव तु दर्शनम् ।।

अरुणाद्रिरयं दृष्टः श्रुतं माहात्म्यमस्य च ।। ११५ ।।

अहो भूमेस्तु वैचित्र्यं यतो दृष्टा दिवोऽधिका ।।

यत्रैव तैजसं लिंगं देवतानां वरप्रदः ।। ११६ ।।

शिवः प्रसादसिद्धो मे दर्शितं स्थानमात्मनः ।।

अत्रैव शिवमाराध्य वशीकुर्यां जगद्गुरुम् ।। ११७ ।।

अविनाभूतमैक्यं मे देवेन भवतात्सदा ।।

त्वया कृतेन साह्येन भवेयं शिवनायिका ।। ११८ ।।

इति गौतमसंनिधौ तदानीं कृतसंवित्तप आदरेण कर्तुम् ।।

अभजद्रुचिरां च पर्णशालां मुनिना चानुमता तथेति भक्त्या ।। ११९ ।।

सुकुमारतनुः सरोरुहाक्षी घनतुंगस्तनकल्पितोत्तरीया ।।

जटिला हरिनीलरत्नकांतिर्गिरिजा राजति देहवत्तपःश्रीः ।। 1.3.1.9.१२० ।।

नियमैर्बहुभिस्तपोविशेषैः क्रतुषु प्राप्तविचित्रयोगबंधैः ।।

निगमागमदृष्टधर्ममार्गं सकलं सा तु कृतार्थतामनैषीत् ।। १२१ ।।

तपसा विविधेनतप्यमाना न कदाचित्परिखेदमाप तन्वी ।।

हरिरत्नमयी च कापि वल्ली नितरां दीप्तिमती बभूव बाला ।। १२२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धेऽरुणेश्वरप्रदक्षिणामाहात्म्यवर्णनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः १०

https://sa.wikisource.org/s/ex9



।। ब्रह्मोवाच ।। ।।

अथ देवा महीं हित्वा महिषासुरपीडिताः ।।

नत्वा गौरीं तपस्यंतीं जग्मुः शरणमाकुलाः ।। १ ।।

अथ तानभयं देहि देवीति भयविह्वलान् ।।

अमरान्वीक्ष्य सा देवी किं कार्यमिति चाभ्यधात् ।। २ ।।

ततो विज्ञापयामासुर्दैत्येंद्राद्भयमात्मनाम् ।।

देव्यै बद्धांजलिपुटा देवा इंद्रपुरोगमाः ।। ३ ।।

।। देवा ऊचुः ।। ।।

अप्सरोभिः परिवृतः सुखं क्रीडति नंदने ।।

ऐरावतमुखान्सर्वान्दिङ्नागान्निजमंदिरे ।। ४ ।।

आवसयन्विनोदार्थमंगनाभिः सहागतान् ।।

उच्चैःश्रवःपुरोगानामुपभोगं करोत्यसौ ।। ५ ।।

मंदुरास्वस्य रम्यासु दृश्यंते लक्षकोटयः ।।

हुताशवाहनं मेषं पुत्रारोहार्थमीप्सति ।। ६ ।।

याम्यं महिषमानीय शकटे सोऽभ्यवाहयत् ।।

सिद्धीराकृष्य सकला गृहकर्मणि चादिशत् ।। ७ ।।

अप्सरःसंघमखिलमात्मसेवार्थमानयत् ।।

अन्यत्किमपि यद्वस्तु रत्नभूतं जगत्त्रये ।। ८ ।।

अनाहृतं पुनर्हर्तुं न विश्राम्यति कोपवान् ।।

वयं च सेवका भूत्वा नित्यं भीतिसमन्विताः ।। ९ ।।

पूजयंतश्च तस्याज्ञां नान्यां वीक्षामहे गतिम् ।।

शरणागतसंत्राणं तपःफलमुदाहृतम् ।। 1.3.1.10.१० ।।

दुर्जयोऽयं वरो दैत्यः सर्वेषां बलिनामपि ।।

सुराणामपि दैत्यानां शिवाल्लब्धवरोदयः ।। ११ ।।

अस्य शृंगाहतः सिंधुर्व्योवर्जितमिति ब्रुवन् ।।

रत्नोपहारदानेन नित्यं तत्प्रीतिमिच्छति ।। १२ ।।

पर्वतांश्च समुत्क्षिप्य शृंगाग्रेण महोद्धतः ।।

क्रीडति क्षोदिताशेषधातुधूलिविलेपनैः ।। १३ ।।

न शक्यमतुलं तस्य बलमन्यदुरासदम् ।।

स्वयमेव विजानीहि हत्वा ते निजतेजसा ।। १४ ।।

शंभुशक्तिः परा सेयं स्त्रीरूपेणात्र दृश्यते ।।

त्वयैवायं निहंतव्यः शिवाल्लब्धवरो ह्ययम् ।। १५ ।।

न जानीमो वयं देवि किंचिच्छंभुविचेष्टितम् ।।

केवलं पालनीयाः स्म जगन्मात्रा सदा त्वया ।। १६ ।।

इति तेषां भयार्तानामाकर्ण्य वचनं शुभम् ।।

व्याजहार प्रसन्नात्मा देवी दत्त्वाभयं तदा ।। १७ ।।

शरणागतसंत्राणं तपसि स्थितया मया।।

कर्त्तव्यममराः कालात्क्षीणः शत्रुर्भविष्यति ।।१८।।

उपायेन समाकृष्य हनिष्यामि महासुरम् ।।

निरागसस्तु हननमद्य मे न हि युज्यते ।।१९।।

धर्मगे धर्मभेत्तारः शलभत्वं व्रजंति हि ।।

देवास्तद्वचनं श्रुत्वा प्रणम्य गिरिकन्यकाम् ।।1.3.1.10.२०।।

जग्मुर्यथागतं सर्वे निर्भया हृष्टचेतसः ।।२१।।

गतेषु तेषु देवेषु गौरी कमललोचना ।।

बभूव मोहिनी शक्तिः कांतियुक्ता ततोदरी ।।२२ ।।

सा देवी दिक्षु शैलेषु चतुर्ष्वरुणभूभृतः ।।

रक्षार्थं स्थापितवती चतुरो बटुकान्वरान् ।। २३ ।।

यदा कैलासशिखरादागता शैलकन्यका ।।

अन्वगच्छन्सेवमानाश्चतस्रो मातरस्तदा ।। २४ ।।

दुन्दुभिः सत्यवत्याख्या तथा चानवमी परा ।।

सुन्दरीति चतस्रस्तामन्वयुः परिचारिकाः ।। २५ ।।

विमुञ्चतातिथिं श्रांतं क्षुत्पिपासा समन्वितम् ।।

अरुणाद्रिमिमं द्रष्टुं नान्यमित्यब्रवीच्च तान् ।। २६ ।।

सीमाशलस्थितान्वीरांस्तानादिश्य बलाधिकान् ।।

तपश्चचाराद्रिकन्या गौतमाश्रमसन्निधौ ।। २७ ।।

तस्यां तपत्यां तन्वंग्यां न तापः कश्चिदप्यभूत् ।।

ववर्ष काले जलदः सफलाश्चाभवन्द्रुमाः ।। २८ ।।

विरोधीनि च सत्त्वानि मुमुचुः पूर्वमत्सरम् ।।

आश्रमः सर्वजन्तूनां शरण्योऽभूद्भयापहः ।। २९ ।।

योजनद्वयपर्यंतं सीमाशैलेषु संस्थितैः ।।

चतुर्भिर्वटकैः शूरै रक्षितश्चारुणाचलः ।। 1.3.1.10.३० ।।

नोदभूत्कश्चन त्रासो न च दृष्टो भयोदयः ।।

न व्याधिपीडनं चासीत्तत्र नारिविजृंभणम् ।। ३१ ।।

कृतार्था मुनयः सर्वे प्रशंसंतो नगात्मजाम् ।।

शिवलोकपदं केचित्प्रत्यशंसंस्तथाश्रमम् ।। ३२ ।।

सा च गौरी तपो घोरं कुर्वती च दिवानिशम् ।।

न तृप्तिमाययौ बाला शिवसंतोषकारकम् ।। ३३ ।।

महिषश्च महावीर्यो मृगयां कर्तुमुद्यतः ।।

चचार काननं सर्वं विदूरे शोणभूभृतः ।। ३४ ।।

दैत्यसैन्यसमायुक्तो मृगयूथान्यनेकशः ।।

वनेषु निघ्नस्तरसा विचचाराशु भक्षयन् ।। ३५ ।।

धन्विभिर्बलिभिर्वीरैर्मृगाः केचिदनुद्रुताः ।।

भयार्त्ताः परिधावंतः प्राविशंस्तं तथाश्रमम् ।। ३६ ।।

अनुव्रजन्तो दितिजा मृगांस्तान्हंतुमुद्यताः ।।

वारिता बटुकैर्वीरैर्मा यातात्रेति सत्वरैः ।। ३७ ।।

किमत्रेति तदा पृष्टा बटुका दुष्टदानवैः ।।

तपस्यति वरारोहा कन्यात्रेत्याहुरंजसा ।। ३८ ।।

न केनचित्प्रवेष्टव्यं बलिना मुनिसेवितम् ।।

तपःस्थानमिदं देव्याः शरणागतरक्षकम् ।। ३९ ।।

इति तेषां वचः श्रुत्वा बलिनो दुष्टदानवाः ।।

तथेति विनिवृत्याशु कर्त्तव्यं समचिंतयन् ।। 1.3.1.10.४० ।।

मायया पक्षिरूपास्ते प्रविश्याश्रममादरात् ।।

आरामवृक्षशाखासु निषेदुः खादिहेक्षितुम् ।। ४१ ।।

सा पुनर्ल्लसितारण्ये सर्वर्तुकुसुमान्विते ।।

तपस्यन्ती तदा दृष्टा माया दैत्यस्य सैनिकैः ।। ४२ ।।

रूपलावण्यते तस्या निश्चयं तपसि स्थितम् ।।

वीक्ष्य ते विस्मयोपेता गत्वा तस्मै न्यवेदयन् ।।४३।।

स स्मरार्तो वृद्धरूपः प्रविवेशाश्रमं तदा ।।

पूजितोऽस्याः सखीभिश्च गतश्रांतिरिव स्थितः ।। ४४ ।।

वृद्धोऽपृच्छत्किमर्थं तु तपोऽस्या इति तास्तथा ।।

बाला कांतप्रसादार्थं चिरमत्र तपस्यति ।। ४५ ।।

परं स बलवान्कांतो न कदापि प्रसीदति ।।

कार्यं विवाहसमये मनोरथं यथोचितम् ।। ४६ ।।

अपूर्वप्रभुणा तेन नवोपकरणं महत् ।।

सद्योजातकुलालेन सद्यः सृष्टैर्विपाचितैः ।। ४७ ।।

भाजनरपि साद्यस्कैर्न्यस्तः पक्वैश्च शालिभिः ।।

तादृशैः साधनैः सर्वैस्तादृशैर्द्रव्यसंचयैः ।। ४८ ।।

अपूर्वदृष्टविभवैः कार्यं स्यादुपकारणम् ।।

सिद्धे तथोपकरणेऽस्याः सद्योऽस्तु स्वयंवरः ।। ४९ ।।

इति तासां वचः श्रुत्वा विहसन्महिषोऽभ्यधात् ।।

तपःफलमहं प्राप्तः सत्यमस्या इति स्थितम् ।।

मदीया सकलां भूतिं शृणु बाले तपस्विनि ।। 1.3.1.10.५० ।।

महिषोऽहं महावीरो दैत्येन्द्रः सुरवंदितः ।।

जगत्त्रयमिदं सर्वं मयैव परिगृह्यते ।। ५१ ।।

अनन्यवीरसद्भावो मय्येव भुजशुष्मणा ।।

कामरूपोस्म्यहं बाले सर्वभोगप्रदायकः ।। ५२ ।।

भज मां तव भर्त्तारं प्राणिनां तपसः फलम् ।।

सर्वं संपादयिष्यामि कल्पवृक्षैः समाहृतैः ।। ५३ ।।

सृजामि तपसा चाहं विश्वकर्माणमादितः ।।

कामधेनुसहस्राणि सृजामि तपसा क्षणात् ।। ५४ ।।

नवभिर्निधिभिः प्राप्तैः पार्श्वस्थैर्नित्यदा मम ।।

अपेक्षितार्थसंसिद्धिः सहसैवोपपाद्यते ।। ५५ ।।

इति तस्य वचः श्रुत्वा स्मृतदेवाभवत्क्रमात् ।।

विसृज्य मौनं शनकैर्विहसंती तमब्रवीत् ।। ५६ ।।

अहं बलवतो भार्या भविष्यामि तपश्चिरम् ।।

करोमि यद्यसि बली बलं दर्शय मे निजम् ।।५७।।

विरच स्त्रीस्वभावं स्वं श्रुत्वा तद्वाक्यमुत्थितम् ।।

हते कोयमिति क्रोधान्ननर्द महिषासुरः ।।५८ ।।

जिघृक्षतं समायांतं वीक्ष्य तं महिषासुरम् ।।

अभूद्दुरासदा दुर्गा कन्या सा ज्वलनाकृतिः ।। ५९ ।।

महामायां समालोक्य ज्वलंती पुरतः स्थिताम् ।।

स्वयं स महिषाकारो ववृधे मेरुसन्निभः ।।1.3.1.10.६० ।।

कुलभूधरशृंगाणि शृंगाभ्यां मुहुराक्षिपन् ।।

आजुहाव निजां सेनामापूरितदिगंतराम् ।। ६१ ।।

अथ ब्रह्ममुखा देवाः प्रणम्य विविधायुधैः ।।

पूजयामासुरात्मीयैर्दुर्गां कालाग्निरूपिणीम् ।। ६२ ।।

पंचहेतीर्हरिः प्रादाद्दश चापि सदाशिवः ।।

ब्रह्मा चतस्रश्च तदा तस्यै मायातिरोहिताः ।। ६३ ।।

दिक्पालाश्च सुराश्चान्ये पर्वताश्च पयोधयः ।।

स्वीयैराभरणैः शस्त्रैरधृष्यास्तामपूजयन् ।। ६४ ।।

माया सा बहुभिर्हस्तैर्ज्वलदायुधसंचयैः ।।

आबद्धकवचा तूर्णं दुर्गाभूत्सिंहवाहना ।। ६५ ।।

आपूरितदिशाभोगा तेजस्तत्सोढुमक्षमः ।।

दुर्गाया घोरमालोक्य महिषस्तु पलायितः ।। ६६ ।।

अथ तेजो निजं घोरं प्रज्वलत्सोढुमक्षमम् ।।

पलायमानमालोक्य महिषं सा व्यचिंतयत् ।। ६७ ।।

उपायेन निहंतव्यो दुष्टोऽयं महिषासुरः ।।

मदपूर्वं निवृत्यंते मृगा मृगयुभिर्वने ।। ६८ ।।

दूतोक्तिभिः समाकृष्य मृद्वीभिर्मर्मवृत्तिभिः ।।

कोपमस्य समुद्भाव्य करिष्येभिमुखं क्षणात् ।। ६९ ।।

अधर्मवृत्तियुक्तानां धर्मवाक्यपरिश्रवात् ।।

कोपः समुद्भवेत्सद्यः स्वजीवक्षयकारणम् ।। 1.3.1.10.७० ।।

अथवा धर्मबुद्धिस्सन्यदि शांतो भविष्यति ।।

तदा हितोपदेशेन धर्मलोपो न संभवेत् ।। ७१ ।।

तपस्यद्भिः सदा कार्यः कोपत्यागः फलान्वितः ।।

धर्महानिर्न सोढव्या तत्कोपो हि तपः परम् ।। ७२ ।।

इति संचिंत्य सा गौरी नाम्ना सुरगुरुं मुनिम् ।।

संकल्प्य वानरमुखं प्राहिणोदसुरं प्रति ।। ७३ ।।

गच्छ त्वं मायया युक्तो महर्षे वानरानन ।।

महिषं बोधयित्वा च वचनं शीघ्रमाव्रज ।। ७४ ।।

मैव त्वमरुणाद्रीशमुपपीडय दुर्मते ।।

अत्र दुर्मनसां वीर्यमदृश्यं भवति क्षणात् ।। ७५ ।।

न कलेरुपतापोऽत्र नासुरैरपि पीडनम् ।।

न साहसं च शुभदं शिवभक्तिमतामपि ।। ७६ ।।

पूर्वजन्मकृतैः पुण्यैर्लब्धवीर्यमहोदयः ।।

मा त्वं शोणाचलेशाग्नौ शलभत्वं भजासुर ।। ७७ ।।

शिवेन दत्ता विभवास्तव पूर्वतपोबलात् ।।

दह्येरन्यत्र तरसा दाववह्नौ यथा द्रुमाः ।। ७८ ।।

अत्र धर्मात्मनां वासः शिवभक्तिमतां सदा ।।

परपीडाप्रसक्तानां भवेद्रोगशतावृतः ।। ७९ ।।

ऐश्वर्य्यमतुलं प्राप्तो बलमन्यद्दुरासदम् ।।

किमर्थं स्वल्पबुद्धिः सन्स्वदोषैर्नाशमेष्यसि ।। 1.3.1.10.८० ।।

मया कन्या पुनर्दृष्टा विशेषादबला मता ।।

अंतर्गतोरुणाद्रीश एतस्मात्सा विशिष्यते ।। ८१ ।।

अथवा युक्तिभेदैस्त्वं शास्त्रैर्वा शिवसंमतैः ।।

अनिग्राह्यमनोवृत्तिरात्मसैन्यं समानय ।। ८२ ।।

येन लोकान्समस्तांस्त्वं बाधसे बलगर्वितः ।।

तत्सैन्यं तव वृद्धं च क्षणाद्धक्ष्यामि तेजसा ।।८३।।

आनीय सकलं सैन्यमग्रे स्थापय सायुधम् ।।

सद्यस्त्वात्मबलैः सृष्टैः संहरिष्यामि तत्क्षणात् ।।८४।।

मच्छस्त्र परिकृत्तस्य ससैन्यस्य तवायुषः ।।

मुक्तिरत्रैव भविता को जानाति शिवेहितम् ।। ८५ ।।

वार्यमाणोऽपि पूर्वेण कर्मणा प्रेरितो जनः ।।

अवशः कर्म कुरुते भुंक्ते च सदृशं फलम् ।। ८६ ।।

त्वयापि करुणावाक्यं वक्तव्यं किल भूरिभिः ।।

अकार्यविनिवृत्त्यर्थं नित्यधर्मानुपालने ।। ८७ ।।

इति गौर्या समादिष्टा वाचं कपिमुखो मुनिः ।।

दूतः सन्सर्वमाचष्ट महिषस्याग्रतः स्थितः ।। ८८ ।।

सोऽपि सर्वं समाकर्ण्य क्रोधवेगसमाकुलः ।।

तं भक्षयितुमारेभे सोपि मायाबलाद्ययौ ।।८९।।

अथ सैन्यं निजं सर्वं समाहूय दुराशयः ।।

सन्नद्धं सायुधं योद्धुमादिशल्लोकभीषणम् ।।1.3.1.10.९०।।

युगांतसमयोद्वेलचतुर्णवसंनिभम् ।।

सैन्यानां सैन्यमतुलं शोणाद्रिं पर्यवेष्टयत् ।। ९१ ।।

अथ गौरी समालोक्य दैत्यानां सैन्यमद्भुतम्।।

ससर्ज तैजसाञ्शूरान्घोरान्भूतगणान्बहून् ।।९२।।

एकपादाक्षिचरणा लंबकर्णपयोधराः ।।

पाणिपादशिरःकुक्षिवक्त्राः केचिद्विनिर्गताः ।। ९३ ।।

अहं ग्रसामि सकलमपर्याप्तमिदं मम ।।

अहमेव हनिष्यामि दैत्यसैन्यमशेषतः ।।९४।।

किं त्वयात्र पुनः कार्यं वीक्ष्य त्वं तिष्ठ केवलम् ।।

अहमेवात्र योत्स्यामीत्यभाषंत परस्परम्।। ।।९५।।

तेषां कथयतां शंखं गणानां योगिनीगणैः ।।

अधमत्सा भगवती हंतुं तद्दैत्यमंडलम् ।।९६।।

आलोक्य तां तथारूपामापतंस्तस्य सैनिकाः ।।

दर्शयंतः स्ववीर्याणि स्वामिनोग्रे धृतायुधाः ।। ९७ ।।

ववृषुः शस्त्रवर्षाणि दैत्याः प्रतिदिगन्तरम् ।।

बाणैः कार्मुकनिर्मुक्तैस्तानि सा तु न्यवारयत् ।। ।। ९८ ।।

रथानां वारणेंद्राणां हयानां लक्षकोटिभिः ।।

युयुधुर्भूतवेताला देव्या सृष्टास्तु दुर्जयाः ।। ९९ ।।

मातरो विविधाकारा डाकिन्यो योगिनीगणाः ।।

सृष्टाश्च तेजसा भूयः पिशाचाः प्रेतराक्षसाः ।। 1.3.1.10.१०० ।।

देव्या सृष्टेन सैन्येन दुर्जयेन महासुराः ।।

भक्षिताश्चूर्णिता भिन्ना दारिता निहताः क्षणात् ।। १०१ ।।

देवी च सायुधा दृष्टा ज्वलंती निहतासुरैः ।।

नृत्यद्भूतगणैर्भुक्तै रक्तैर्मांसैश्च तोषितैः ।। १०२ ।।

यदा कैलासशिखरात्प्राप्ता कर्त्तुं तपो भुवम् ।।

तदा समागताः काश्चिन्मातृका देहगुप्तये ।। १०३ ।।

दुंदुभिः सत्यवत्याख्या तथा चान्तवती परा ।।

सुंदरीति चतस्रस्ता अन्वयुः परिचारिकाः ।। १०४ ।।

देव्या सृष्टा च चामुंडा दंष्ट्रावलयभीपणा ।।

दैत्यकृत्तिवसा मांसरक्ततृप्ता चचार सा ।। १०५ ।।

असुरं कंचिदाक्रम्य नटनं सा चकार ह ।। १०६ ।।

अथ तां समवेक्ष्य दुर्मदो हि ज्वलयामास च कोपवह्निना सः ।।

अतितीव्रविवृत्तभीष्मनेत्रश्रुतिशृंगाग्रविभिन्नमेघजालः ।। ।। १०७ ।।

ज्वलदग्निशिखाभदीर्घजिह्वापरिलीढोन्नतशैलशृंगभागः ।।

अवनिं दलयन्खुराभिघातैरसकृत्पांसुभिरास्वनन्दिगंतान् ।।१०८।।

अतिघर्घर दीर्घघोरनादस्फुटदंडभ्रममोहितामरो यः ।।

धृतवालधिदंडताड्यमानप्रतिशीर्णामितशस्त्रवर्षसंघः ।।१०९।।

मृतये व्यगमद्वलित्रयाढ्यां मृगराजस्थितिभासुरां भवानीम्।।1.3.1.10.११०।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे देव्यास्तपश्चर्यायां महिषासुरेण सह युद्धवर्णनंनाम दशमोऽध्यायः ।।१०।।छ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः ११



।। ब्रह्मोवाच ।। ।।

स तु सिंहस्थितां गौरीं ज्वलंती विविधायुधाम् ।।

शैलवर्षेण महता कुपितः समपूरयत् ।। १ ।।

शरवर्षेण महता तन्निवार्य विदूरतः ।।

बिभेद निशितैः शस्त्रैरशेषं तस्य विग्रहम् ।। २ ।।

भिद्यमानोऽपि दैत्येंद्रः शैलसारप्रदुर्धरः ।।

विषादं नागमत्किंचिद्ववृधे युद्धदुर्मदः ।। ३ ।।

भिद्यमानः स खड्गेन चक्रैरसिभिर्ऋष्टिभिः ।।

शूलेन चायुधैश्चान्यैरंतर्धानमगाहत ।।।। ४ ।।

ततः सिंहाकृतिर्भीमः प्रचंडनिनदाननः ।।

तीक्ष्णदंष्ट्रः शितनखः परिबभ्राम केसरी ।। ५ ।।

देवीसिंहश्चपेटेन ताडयामास पाणिना ।।

दैत्यसिंहस्य च नखैस्तस्य वक्षो व्यदारयत् ।। ६ ।।

अथ व्याघ्रतया प्राप्तः स्फुटव्यात्ताननो महान् ।।

तं हंतुं च बलाद्देवी वेगेन करमक्षिपत् ।। ७ ।।

दीर्घाभिर्न्नीलरेखाभिः पूर्णः पिंगलविग्रहः ।।

यानावलिभिराकीर्णः स्वर्णाद्रिरिव संचरन् ।। ८ ।।

मृगैरिव परित्रातुं मुच्यमानोऽग्रतो बली ।।

ज्वलंतमिव रोषाग्निं जिह्वाहेतिभिरावहन्।।९।।

आगच्छंतं रयाद्देवी भल्लेन शशिवर्चसा ।।

प्रतिविव्याध तं व्याघ्रं पुरत्रयमिवेश्वरः ।।1.3.1.11.१०।।

स बाणस्तन्मुखे मग्नस्तद्रक्तेन समुक्षितः ।।

जगाहे गगनं भित्त्वा देहमस्य विनिर्गतः ।। ११ ।।

स दैत्यो वारणो भूत्वा देवीमाश्वभ्युपागमत् ।।

बलिभिः पशुभिर्भिन्नैस्तस्याः प्रीतिमिवावहन् ।। १२ ।।

तं गजेंद्रं समायांतं मदक्लिन्नमहीतलम् ।।

देवीसिंहस्तदा दृष्ट्वा ननर्द च जघान च ।। १३ ।।

अथ खड्गधरो वीरश्चर्मपाणिः समुद्गतः ।।

वक्त्रं दधानो बभ्राम दंष्ट्राभ्रुकुटिभीषणम् ।। १४ ।।

देवी च विलसत्खड्गचक्रचक्रलसत्करा ।।

युयोध तेन वीरेण भग्नशीर्षाभ्यपद्यत ।। १५ ।।

भूयः स माहिषं रूपमास्थायासुरमायया ।।

देव्या योद्धुं प्रववृते यथापूर्वमनाकुलम् ।। १६ ।।

अथ देवैर्मुनींद्रैश्च चोदितो गौतमो मुनिः ।।

प्रबोधयितुमारेभे स्तुतिभिर्जगदंबिकाम् ।। १७ ।।

त्वयि सर्वस्य जगतः प्राणशक्तिः परा मता ।।

ओजःशक्तिर्ज्ञानशक्तिर्बलशक्तिश्च गम्यते ।। १८।।

किमेतदद्य मोहाय युद्धमारभ्यते त्वया ।।

उपसंह्रियतामेष दैत्यो भुवनगुप्तये ।। १९ ।।

भिन्नानामस्य देहानामुपसंहरणात्तव ।।

वलयश्चोपदिश्यन्ते निगमोक्ता वरप्रदाः ।।1.3.1.11.२०।।

अन्यथा तृणकल्पस्य शत्रोरस्य निबर्हणे ।।

कालाग्निवर्चसो देवि किमर्थं संभ्रमस्त्वियान् ।। २१ ।।

स्वशक्तिमवसंस्तभ्य समाकर्षयतां रिपोः ।।

प्राणशक्तिं त्रिशूलेन गुणत्रयवपुर्धृता ।। २२ ।।

इति स्म बोधितातेन पुरा भगवती तदा ।।

महिषासुरमाक्रम्य त्रिशूलेनाभ्यधारयत्।। २३ ।।

अनेकगिरिसंकाशं देव्या विग्रहमात्मनः।।

अशक्तस्तं धारयितुं ससाद महिषासुरः ।।२४।।

निष्पिष्टो विलुठन्क्रोशन्नाक्रांतश्च परिस्फुरन् ।।

निर्गंतुमुद्गतशिरा न शशाकासुराधिपः ।।२५।।

त्रिशूलमुखभिन्नांगरक्तधारासमुद्धतः ।।

समुद्र इव संजातः संध्यारुणकलेवरः ।। ।। २६ ।।

अथ खड्गेन तीक्ष्णेन कर्तयित्वा च तच्छिरः ।।

ननर्त्त तस्य शिरसि तिष्ठन्ती महिषार्दिनी ।। २७ ।।

दुर्गां सिद्धाश्च गन्धर्वाः प्रशशंसुर्महर्षयः ।।

पुष्पवृष्टिश्च महती देवैर्मुक्ता समंततः ।।

प्रणतः प्रांजलिर्देवीं तुष्टाव विबुधाधिपः ।। २८ ।।

।। इन्द्र उवाच ।। ।।

नमस्ते जगतां मात्रे भूतानां बीजसंविदे ।। २९ ।।

भक्तिः श्रद्धा च भजतां शक्तिश्चासि त्वमंबिके ।।

कारणं परमा कीर्तिः शातिर्दांतिः कला क्षमा ।। 1.3.1.11.३० ।।

एकैव विश्वरूपा त्वं नामभेदेर्निगद्यसे ।।

तेषुतेषु पदेष्वस्मांस्तपोऽनुगुणसिद्धिषु ।। ३१ ।।

नियुज्य शत्रुं निर्भिद्य शिवा ज्ञेया प्रकाशसे ।।

हतोयं महिषो दुष्टो विनिकृत्तश्च शांभवि ।। ३२ ।।

छिन्नमेतस्य तु शिरः सजीवमिव लक्ष्यते ।।

रक्तनेत्रं तीक्ष्णशृगं ज्वलज्जिह्वं चलं शिरः ।। ३३ ।।

आक्रम्य तव तिष्ठन्त्या रूपमेव सदास्तु नः ।।

चक्रशृंगधनुर्बाणखड्गचर्मवराभयैः ।। ३४ ।।

शूलघण्टांकुशकशाकपालकुलिशादिभिः ।।

अशेषदेवतामूर्तिरशेषैर्देवतायुधैः ।। ३५ ।।

आपूरिता त्वमेवांब सर्वशत्रून्निहंसि नः ।।

आयुधानां सहस्राणि तन्मयास्ते विभूतयः ।। ३६ ।।

त्वज्जितारातयः सर्वे विविधायुधवाहनाः ।।

रथनागहयैर्युक्ताः ससैन्या अपि भूभृतः ।। ३७ ।।

क्षणेन दग्धवीर्याः स्युस्त्वत्प्रसादविवर्जिताः ।।

अपदोऽप्यल्पवीर्योऽपि त्वत्पादांबुजसेवकः ।। ३८ ।।

त्रिलोकनाथतां प्राप्तः प्रथते कीर्तिमण्डितः ।।

तद्रूपमिदमत्युग्रं ध्यायतामर्चतां सदा ।। ३९ ।।

न शत्रुभ्यो भयं किंचिद्भवेद्विजयशालिनाम् ।।

ईदृशं सर्वलोकेषु रूपं ते देववंदितम् ।। 1.3.1.11.४० ।।

पूज्यतामिष्टसिद्ध्यर्थं देवैर्भृत्यैश्च सर्वदा ।।

मातरश्च त्वया सृष्टाः सर्वाभीष्टफलप्रदाः ।। ४१ ।।

सगणाः प्रतिपूज्यंतां सर्वस्थानेषु सर्वदा ।।

अयं च निहतो दैत्यस्त्वत्पादकृतलांछनः ।। ४२ ।।

तव भक्तैः सदा पूज्यस्त्वत्प्रमादात्त्वदग्रतः ।।

इत्थं सुरेन्द्रप्रणुता सर्वर्षिसुरसेविता ।। ४३ ।।

तथेति वरदा देवी ससर्ज च दिवं प्रति ।।

स्वयमप्यात्मनस्तत्र तद्रूपं विविधायुधम् ।।।। ४४ ।।

संस्थाप्य मातृभिः सार्धं स्थानरक्षणमातनोत् ।।

संगृह्य विमलं रूपं सखीजनसमावृता ।। ४५ ।।

महिषस्य शिरोऽपश्यद्विकृतं खड्गधारया ।।

कथयन्ती पुनस्तस्य चित्रं लोकविभूषणम् ।। ४६ ।।

सखीभिः सह सा बाला कण्ठं तस्य व्यलोकयत् ।।

अपश्यच्च तदा लिगं कर्त्तुं तस्य च पूजनम् ।। ४७ ।।

आदत्त सहसा गौरी लिगं तस्य गले स्थितम् ।।

आलोकयच्च सुचिरं रक्तधारापरिप्लुतम् ।। ४८ ।।

आसज्जत पुनर्लिंगमस्याः पाणितलं गतम् ।।

विमोचयितुमुद्युक्ता नाशक्नोल्लग्नमंजसा ।। ४९ ।।

अचिंतयच्च सा देवी किमेतदिति विस्मयात् ।।

विषादेन च संयुक्ता महर्षीणां पुरः स्थिता ।। 1.3.1.11.५० ।।

आहतः शिवभक्तोऽयमिति शोकं समाविशत् ।।

अगर्हत भृशं मौढ्यमात्मनः स्त्रीस्वभावजम् ।। ५१ ।।

अविचार समारब्धं शिवभक्तनिबर्हणम् ।।

उपतापपरीतांगी गौतमं मुनिसत्तमम् ।। ५२ ।।

उपगम्याब्रवीद्बाला साहसं कृतमात्मना ।।

भगवन्सर्वधर्मज्ञ गौतमार्य मुनीश्वर ।। ५३ ।।

मान्यया धर्मरूपेण कोऽप्यधर्मः प्रकल्पितः ।।

देवानां रक्षणं कर्तुमभयं दातुमुद्यता ।। ५४ ।।

अज्ञानान्महिषं दैत्यं शिवभक्तिममर्दयम् ।।

रजसाक्रान्तबुद्धीनां न भवेद्धर्मसंग्रहः ।। ५५ ।।

गुरुप्रसादसुलभः स्फुरद्विघ्नशताकुलः ।।

सुदुर्धर्षा निराचारदुर्दमाः शिवसंश्रयाः ।। ५६ ।।

विशेषतो लिंगधराः शिवस्तान्बहु मन्यते ।।

पुरा पुरत्रयावासा दैतेया लिंगधारका ।। ५७ ।।

अजिताः शंभुना पूर्वं मुक्तलिंगा निषूदिताः ।।

अस्य कंठस्थितं लिंगं मम पाणिं न मुंचति ।। ५८ ।।

कथं पापं निरस्यामि शिवभक्तवधाश्रितम् ।।

अस्य कंठस्थितं लिंगं धारयंती तपोन्विता ।। ५९ ।।

तीर्थयात्रां करिष्यामि यावच्छंभुः प्रसीदति ।।

पुनः कैलासमुख्येषु शंभुस्थानेषु भूरिषु ।। 1.3.1.11.६० ।।

तीर्थेषु रचितस्नाना लप्स्ये पापविशोधनम् ।।

इति तस्याः परिश्रांतिं दुर्धर्मपरिशंकया ।। ६१ ।।

आकर्ण्य शिवधर्मज्ञो भयार्त्तां तामवोचत ।।

मा भैषीर्गिरिजे मोहाच्छिवभक्तो हतस्त्विति ।। ६२ ।।

धर्मसूक्ष्मार्थवेत्तारौ दुर्लभा गिरिकन्यके ।।

सदा शिवस्य वदनैः सद्योजातादि संश्रितैः ।। ६३ ।।

आगमाः पंचभिः प्रोक्ता अष्टाविंशतिकोटयः ।।

निर्णयाः शिवभक्तानां शिवमार्गस्य शोभनाः ।। ।। ६४ ।।

तेषुतेषु मुनींद्रैश्च नत्वैव प्रतिपद्यते ।।

कालो मुखं च कंकालं शैवं पाशुपतं तथा ।। ६५ ।।

महाव्रतं पंच चैताः शिवमार्गप्रवृत्तयः ।।

भेदाश्च बहवस्तेषामन्योन्यस्य शिवे रताः ।। ६६ ।।

साध्य एको हि बलवान्सर्वैस्तैरनिशं शिवः ।।

सर्व एव सदा पूज्याः स्वधर्मपरिनिष्ठितैः ।। ६७ ।।

अमत्सरैः शिवे भक्तैः शिवाज्ञापरिपालकैः ।।
वेदैश्च बहुभिर्यज्ञैर्भक्त्या च परया शिवः ।। ६८ ।।
आराध्यते महादेवः सर्वदा सर्वदायकः ।।
जीवहिंसा न कर्त्तव्या विशेषण तपस्विभिः ।। ६९ ।।
शिवधर्मस्य भेत्तारो निहंतव्यास्तथांजसा ।।
न वेषजुषि वीक्षेत न लिगं नैव संभवम् ।। 1.3.1.11.७० ।।
शिवधर्मस्य भेत्तारं हन्यादेवाविचारयन् ।।
बहुभिः स्फूर्तया बुद्ध्या धर्मविद्भिर्निरूपिते ।। ७१ ।।
शिवधर्मस्य विलये सद्यः शक्तिः प्रवर्तते ।।
अस्य कर्म पुनर्दिष्टं लिंगमैश्वर्यचर्चितम् ।। ७२ ।।
न जेतुं शक्यते देवि तेनासौ सर्वदैवतैः ।।
यदयं निहतो देवि त्वया शंकरमान्यया।। ७३ ।।
आक्रांतः शापदोषेण महर्षीणां शिवाश्रयात् ।।
अथ ते कुपितास्तस्य वैषम्यादवमानतः ।। ७४ ।।
शेपुर्महिषवद्दुष्टो महिषोऽयं भवत्विति ।।
ततस्तद्वचनात्सद्यो महिषोऽभूत्क्षणात्तथा ।। ७५ ।।
प्रणम्य तोषयामास ययाचे शापमोचनम् ।।
दत्त्वा प्रकामरूपत्वं ददुरस्मै प्रसादिताः ।। ७६ ।।
महिषत्वेपि संहारं स्वयं देव्या शिवाज्ञया ।।
विषादो न च कर्तव्यो अंगदर्शनतस्त्वया ।। ७७ ।।
सिद्धानां शिवरूपाणामवज्ञा कं न बाधते ।।
महिषत्वे समुत्पन्ने दोषेण समुपस्थिते ।। ७८ ।।
सिद्धप्रसादाल्लब्धोऽयं शापनाशस्त्वया कृतः ।।
सर्वे लोकाश्च संत्राता दुष्टोयं परिरक्षितः ।। ७९ ।।
शापदोषसमुत्पन्ने महिषत्वे विमोचिते ।।
त्वया च गिरिशप्रीत्यै तपः कुर्वाणयाद्रिजे ।। 1.3.1.11.८० ।।
द्रष्टव्यं तैजसं लिंगमरुणाचलसंज्ञितम् ।।
पूर्वजन्मनि भक्तोऽयमरुणाद्रिपतेः स्फुटम् ।। ८१ ।।

महिषत्वे मदाक्रांतः परं लिंगेन संगतः ।।
भक्त्या लिंगधरं हंतुं कः समर्थो जगत्त्रये ।। ८२ ।।
दृष्टाः पुरत्रये पूर्वं रुद्रेण पूजितास्त्रयः ।।
त्वत्खड्गपरिकृत्तेन कंठेनास्य वरानने ।।८३।।
दीक्षादिरहितं लिंगं दत्तं हंतीति चोदितम् ।।
कृतं हि महिषेणापि भक्तितो लिंगधारणम् ।। ८४ ।।
कदाचित्क्षपणोक्तानां विभाषात्प्रत्ययं गतः।।
पूर्वजन्मतपोयोगात्स्मरणो लिंगधारणात् ।।८५।।
त्वत्पादपद्मसंस्पर्शादयं मुक्तो न संशयः।।
मदुक्तनिष्कृतीनां तु पातकानां च नाशनम् ।।८६।।
दर्शनं शैलवर्यस्य प्रायश्चित्तं परं मतम् ।।
संस्थाप्य विविधाञ्छैवाञ्छिवसिद्धांतवेदिनः ।।८७।।
आवाह्य सर्वतीर्थानि सर्वदोषनिवृत्तये।।
सरः किमपि संपाद्य स्नात्वा तत्र वरानने।।८८।।
अघमर्षणसंयुक्ता सलिंगा स्नानमाचर ।।
त्रिसंध्यं चैव मासांते देवयागमहोत्सवे ।। ८९ ।।
आराधयोपचारैस्त्वमरुणाद्रिमयं शिवम् ।। 1.3.1.11.९० ।।
एवं तस्य मुनेर्निशम्य वचनं शैवार्थसंभावितं प्रीता देवनमस्कृता गिरिसुता देवी जगद्रक्षिका ।।
शैवं धर्ममिमं विधातुमुचितं शोणाचलस्याग्रतस्तीर्थागाहनबुद्धिमाशु विदधे कर्तुं त्वघक्षालनम् ।। ९१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे महिषासुरवधोत्तरं देवीपाणौ महिषासुरशिरःसंलग्नतावृत्तांतवर्णनंनामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः १२



।। ब्रह्मोवाच ।। ।।

इति संभाषमाणे तु महर्षौ मुनि सेविते ।।

विजहौ गिरिजा शंकां शिवभक्तवधाश्रिताम् ।। १ ।।

अथांतरिक्षादुदभूद्वाणी कर्णमनोहरा ।।

मा गमः शैलकन्ये त्वं पापनिष्कृतिकारणात् ।। २ ।।

गंगा च यमुना सिंधुर्गोदापि च सरस्वती ।।

नर्मदा सा च कावेरी शोणः शोणनदी च सा ।। ३ ।।

अत्रैव नव तीर्थानि संभवंतु शिलातले ।।

त्वत्खड्गदारिते देवि कुरु तत्राघमर्षणम् ।। ४ ।।

अस्मिन्नाश्वियुजे मासि ज्येष्ठानक्षत्र आगते ।।

निमज्य खड्गतीर्थे त्वं सलिंगा मासमावस ।। ५ ।।

निवर्त्य सावनं मासमत्र दिक्पालसंमितम् ।।

ततः पाणिस्थितं लिंगं लब्ध्वा पापविशोधनम् ।। ६ ।।

प्रतिष्ठापय तीर्थाग्रे लोकानुग्रहकारणात् ।।

उत्तीर्य तीर्थवर्येऽस्मिन्स्नात्वा लिंगेऽर्चिते शिवे ।। ७ ।।

तापत्रयोपशांतिश्च त्रैलोक्यस्य न संशयः ।।

सर्वपापहरं लिंगं स्थावरं तीर्थसन्निधौ ।। ८ ।।

स्थापय स्थिरया भक्त्या सदालोकहिताय च ।।

नक्षत्रे वैश्वदैवत्ये देवक्याः संगमाचर ।। ९ ।।

महोत्सवसमायुक्तं यावद्दशदिनावधि ।।

कृत्वा चावभृथं पुण्यनक्षत्रे वह्निदैवते ।। 1.3.1.12.१० ।।

सायमभ्यर्च्य विधिवच्छोणाचलवपुर्मम ।।

ततस्ते दर्शयिष्यामि तैजसं रूपमात्मनः ।। ११ ।।

एतत्कृतं ते लोकानां रक्षायै संभविष्यति ।।

इति तद्वचनं श्रुत्वा महर्षिवचनं च सा ।। १२ ।।

उभयं कर्तुमारेभे तपसा शैलकन्यका ।।

खङ्गेन दारयामास शिलातलमनाकुला ।। १३ ।।

उदजृंभत तीर्थानां नवकं तत्र तत्क्षणात् ।।

तस्य कण्ठस्थितं लिगं ध्यायन्ती पर्वतात्मजा ।। १४ ।।

तीर्थे ममज्ज तस्मिन्सा मुनीनामभ्यनुज्ञया ।।

तीर्थानां नवकं तत्र संजातं स्फटिकप्रभम् ।। १५ ।।

अंतर्वसतितः कांत्या मेचकीकृतमंजसा ।।

वसंत्यां शैलकन्यायां तीर्थे त्रिंशद्दिनं त्वथ ।। १६ ।।

शम्भोर्विरहसंतप्तं मनश्चंचलतां ययौ ।।

तत्र श्रिया सरोजानि चक्षुषोत्पलकाननम् ।। १७ ।।

मंदस्मितेन कुमुदं ससर्ज सलिलस्य सा ।।

देव्यास्तेनोदवासेन लोकास्तु निरुपद्रवाः ।। १८ ।।

कृतार्थास्सहसा जातास्तत्तत्कालफलान्विताः ।।

मासांते सा समुत्तीर्य कृत्वा देव्युत्सवं तथा ।। १९ ।।

कार्तिके मासि नक्षत्रे कृत्तिकाख्ये निशोदये ।।

पूजयित्वा तपःसिद्धैरुपचारैर्बहूदयैः ।। 1.3.1.12.२० ।।

अरुणाद्रिमयं लिंगं तुष्टाव जगदंबिका ।।

नमस्ते विश्वरूपाय शोणाचलवपुर्भृते ।। २१ ।।

तेजोमयाद्रिलिंगाय सर्वपाततकनाशिने ।।

ब्रह्मणा विष्णुना च त्वं दुष्परिच्छेद्यवैभवः ।। २२ ।।

अग्निरूपोऽपि सञ्छांतो लोकानुग्रहक्लृप्तये ।।

शक्त्या च तत्त्वसंघातकरः कालानलाकृतिः ।। २३ ।।

अद्रिश्रेष्ठारुणाद्रीश रूपलावण्यवारिधे ।।

विचित्ररूपमेतत्ते वेदवेद्यसुरार्चितम् ।। २४ ।।

तेजसां देव सर्वेषां बीजभूतं निगद्यसे ।।

दिव्यं हि परमं तेजस्तव देव महेश्वर ।। २५ ।।

यत्पुरा ब्रह्मणा दृष्टं विष्णुना च विचिन्वता ।।

अद्य पूतास्मि देवेश तव संदर्शनादहम् ।।।। २६ ।।

तेजो दर्शय मे दिव्यं सर्वदोषहरं परम् ।।

प्रार्थयंत्यां तदा देव्यामरुणाद्रिमयः शिवः ।। २७ ।।

आविर्बभूव तेजोभिरापूर्य भुवनांतरम् ।।

कोटिसूर्योदयप्रख्यं तुल्यं पूर्णेंदुकोटिभिः ।। २८ ।।

कालाग्निकोटिसंकाशं तेजः परमदृश्यत ।।

प्रणम्य परया भक्त्या मुनिभिः सार्धमंबिका ।।।। २९ ।।

विस्मयाक्रांतहृदया ननंद नलिनेक्षणा ।।

अथ तेजोनिधेस्तस्मादरुणाद्रिः समुत्थितः ।। 1.3.1.12.३० ।।

हिरण्मयोऽब्रवीद्वाचं पुरुषः कलकन्धरः ।।

प्रसन्नोऽस्मि तपोभिस्ते स्थानेषु मम कल्पितैः ।। ३१ ।।

तेजोमयमिदं रूपमीक्षितं च त्वयाधुना ।।

कारणैर्बहुभिर्लोकान्रक्षेथास्त्वं जगन्मयि ।। ३२ ।।

तपांसि कुरुषे भूमौ किमन्यत्प्रार्थितं तव ।।

मल्लोचनत्विषा तेद्य तमोराशिः समुत्थितः ।। ३३ ।।

अशेषो हि प्रशांतोऽभूत्तेजसोऽस्य निरीक्षणात् ।।

अयं तु महिषो दुष्टो मद्भक्तिं लिंगपूजकः ।। ३४ ।।

जग्राह सहसा ह्येतत्तस्य लिंगं गले स्थितम् ।।

अनेन भक्षितं तच्च नास्तिकस्योपदेशतः ।। ३५ ।।

अकरोन्मय्यविश्वासं लिंगरूपे गले स्थिते ।।

क्रमेण सोपि संप्राप्तो मुनिजन्म मनोहरम् ।। ३६ ।।

मामेवाभ्यर्चयन्ध्यायन्गणनाथत्वमावसन् ।।

पूर्वजन्मनि भक्तोऽयं महिषोपि त्वया हतः ।। ३७ ।।

चिरं मल्लिंगधृग्यस्मात्सिद्धिरस्यापि देव्यतः ।।

शिवलिंगेष्वविश्वासः शिवभक्तावमाननम् ।। ३८ ।।

न कर्तव्यं सदा भक्तैस्तस्माद्वै मुक्तिकांक्षिभिः ।।

दीक्षया रहितं लिगं येन संधार्यते बलात् ।। ।। ३९ ।।

न तादृशं फलं दत्ते वज्रवत्तं निहंति च ।।

न दोषस्तत्र किंचित्ते शोणाचलनिरीक्षणात् ।। 1.3.1.12.४० ।।

सफला नयनावाप्तिः सर्वदोषविनाशनात् ।।

त्वत्पुत्रस्तन्यदानेन धात्र्योपकृतमात्मजे ।। ४१ ।।

त्वामपीतकुचां चक्रे वत्सलां भक्तरक्षिणीम् ।।

नक्षत्रे कृत्तिकाख्येऽत्र तव सन्निधिलोभतः।। ४२ ।।

प्रायश्चित्ताभिधानेन भवापीतकुचाभिधा ।।

पूजाशेषं समाधाय भक्तानुग्रहहेतवे ।। ४३ ।।

भज मां करुणामूर्तिरपीतकुचनायिका ।।

इति देवस्य वचनमाकर्ण्यात्यंतशीतलम् ।। ४४ ।।

प्रणम्य प्रार्थितवती प्रोवाच च तमंबिका ।।

देवदेव प्रसादेन त्वयानुग्रहशालिना ।। ४५ ।।

एतत्ते दर्शितं तेजो दृष्टं देवैश्च मानवैः ।।

प्रत्यक्षं कृत्तिकामासि मद्व्रतांतमहोत्सवे ।। ४६ ।।

नक्षत्रे कृत्तिकाख्येऽस्मिंस्तेजस्ते दृश्यतां परम् ।।

तद्वीक्षितमिदं तेजः परमं प्रतिवत्सरम् ।। ४७ ।।

दृष्ट्वा समस्तैर्दुरितैर्मुच्यतां सर्वजंतवः ।।

तथेति देवदेवेन प्रोचेऽथांतर्दधे गिरौ ।। ४८ ।।

प्रदक्षिणं चकारैनं सखीभिः सा ततोंऽबिका ।।

घनश्यामलया कांत्या परितो जृंभमाणया ।। ४९ ।।

अरुणाद्रिमयं लिंगं चक्रे मरकतप्रभम् ।।

मंदं चरन्ती जाताभिः प्रभाभिः पादपद्मयोः ।। 1.3.1.12.५० ।।

तस्तार परितो भूमिं पद्मपत्रैः सपल्लवैः ।।

प्रफुल्लकनकांभोजनीलोत्पलदलोत्करैः ।। ५१ ।।

अर्चयन्तीव शोणाद्रिमभितो दृष्टिकांतिभिः ।।

इन्द्रादिलोकपालानामंगनाभिर्निषेविता ।। ५२ ।।

प्रसादिता मातृगणैर्गंधदानविभूषणैः ।।

छत्रचामरभृंगारतालवृन्तफलाचिकाः ।। ५३ ।।

वहन्तीभिः सुरस्त्रीभिर्वृता मुनिवधूयुता ।।

प्रदक्षिणं चकारैनमरुणाद्रिं स्वयंप्रभम् ।।।। ५४ ।।

कांक्षन्ती शिवसायुज्यं विवाहाग्निमिवाद्रिजा ।।

तस्यां प्रदक्षिणं भक्त्या कुर्वाणायां पदेपदे ।। ५५ ।।

प्रेषिता शंभुना देवाः परिवव्रुः सुरेश्वराः ।।

सरस्वतीसमं धात्रा विष्णुना च समं रमा ।। ५६ ।।

सर्वदिक्पालकांताभिः समेता शैलबालिका ।।

निरुन्धतीव देवेन्द्रं सलिलैर्वरदानतः ।। ५७ ।।

अद्रिनाथस्वरूपस्य शीतत्वमिव कुर्वती ।।

तपस्ययाऽविनाभावाद्देवस्येव कृतस्मृतिः ।। ५८ ।।

दुष्करस्योदवासस्य बोधयन्तीव साधुताम् ।।

ऋषीणां देवमानानामुपदेष्टुमिव क्रमात् ।। ५९ ।।

क्रीडामिव पुराभ्यस्तां तपसापि च संगता ।।

आत्मानं विरहोत्तप्तामात्मस्थं तादृश शिवम् ।। 1.3.1.12.६० ।।

संचिंत्य चोभयोः कर्तुं शीतलत्वं जले स्थिता ।।

तीर्थानामिव सर्वेषामुद्भूतानां शिलातले ।। ६१ ।।

आधिक्यमथ लोकस्य वक्तुकामा स्वयं स्थिता ।।

दुरितघ्नं च पंचाग्निमर्थावासं सुदुष्करम् ।। ६२ ।।

अधिगम्य तपस्तस्य शांतिं कर्तुमिव स्थिता ।।

महिषासुरकंठोत्थरक्तधारापरिप्लुतम् ।। ६३ ।।

क्षालयंतीव लिंगं तदमलैस्तीर्थवारिभिः ।।

अरुणाख्यं पुरं रम्यं निर्मितं विश्वकर्मणा ।। ६४ ।।

अपीतकुचनाथेशशोणाद्रीश्वरतुष्टये ।।

शृंगेषु यस्य सौधेषु वसन्त्यो वारयोषितः ।। ६५ ।।

अधःकृताभ्रतडितो जिगीषंतीव चामरीः ।।

यत्तुंगसौधशृंगाग्रे गायंतीर्वारयोषितः ।। ६६ ।।

सिद्धचारणगंधर्वविद्याधरविराजितम् ।।

अष्टापदरथाक्रांतमष्टवीथिविराजितम् ।। ६७ ।।

अष्टापदपथाकारमष्टदिक्पालपूजितम् ।।

अष्टसिद्धियुतैः सिद्धैरष्टमूर्तिपदाश्रयैः ।। ६८ ।।

अष्टांगभक्तियुक्तैस्तैर्युक्तमष्टांगबुद्धिभिः ।।

चातुर्वर्ण्यगुणोपेतमुपवर्णं परिष्कृतम् ।। ६९ ।।

लसत्सुवर्णदुवर्णशालामालासमास्थितम् ।।

शंखदुंदुभिनिस्साणमृदंगमुरजादिभिः ।। 1.3.1.12.७० ।।

वीणावेणुमुखैस्तालैः सालापैरुपरंजितम् ।।

ब्रह्मघोषनिनादेन महर्षीणां शिवात्मनाम् ।। ७१ ।।

सेवितव्यं दिने दिव्यसमदर्शवृषध्वजम् ।।

नवरत्नप्रभाजालैर्नवग्रहसमोदयैः ।।७२।।

निशादिवसयोरेवं दर्शयन्निव सर्वदा ।।

विष्णुः स्थितश्च तं प्रीत्या सिषेवे पुरतो विभुम् ।। ७३ ।।

शक्रः सुरगणैः सार्धं सहस्राक्षः समाययौ ।।

पपात दिव्यगंधाढ्या पुष्पवृष्टिः समंततः ।। ७४ ।।

व्योमगंगाजलोत्संगशीतलो मरुदाववौ ।।

अतीव सौरभामोदवासिताखिलदिङ्मुखः ।। ७५ ।।

कनकांकितशृंगाग्रपरिधूतवनावलिः ।।

दर्पसंभ्रमसंनद्धो ननाद वृषभो मुहुः ।। ७६ ।।

वसंतप्रमुखाः सर्वे सहर्षमृतवः पुरः ।।

असेवंत प्रियकरैः पुष्पैः स्वयमथोचितैः ।। ७७ ।।

गणैश्च विविधाकाराः सिद्धाश्च परमर्षयः ।।

सुराश्च कुतुकोपेताः समागच्छन्दिदृक्षवः ।। ७८ ।।

कुंकुमक्षोदसंमिश्रकर्पूररजसान्वितः ।।

चर्यामुष्टिमहासारः समकीर्यत सर्वतः ।। ७९ ।।

अथ मृदंगकमर्दलझल्लरीपटहदुंदुभितालसमन्वितैः ।।

जलजकीचककाहलनिस्वनैः सुरकृतैर्भुवन समपूरयन् ।। 1.3.1.12.८० ।।

सुरवधूजननृत्तनिरंतरोल्लुलिततुंबरुगायनगीतिभिः ।।

अभिवृतो मुनिदेवगणान्वितो वृषगतः समदर्शि वृषध्वजः ।। ८१ ।।

सरसमेत्य शिवः करुणानिधिर्नतमुखीमपि तामपलज्जया ।।

ललितमंकमनंगरिपुः शिवां धृतिमहानधिरोप्य जहर्ष सः ।। ८२ ।।

ललितया निजया प्रिययान्वितः सुरमुनींद्रसमाजसमावृतः ।।

ललितमप्सरसां मुहुरादरान्नटनमैक्षत गीतिसमन्वितम् ।। ८३ ।।

अथ शिवः सुरराजसमर्पिताञ्छुभपटीरमुखानिलसौरभान् ।।

हिमगिरिप्रहितांश्च समग्रहीन्मृगमदैः सह गंधसमुच्चयान् ।। ८४ ।।

समनुलेपितहारसुमंडिताविभिगतौ सिततां समलंकृतौ ।।

स्वयमपीतकुचाकुचकुड्मलावरणरंभणचञ्चलसत्करौ ।। ८५ ।।

कठिनतुंगघनस्तनकोरकस्थगितमंगलगंधमनोहराम् ।।

गिरिसुतामधिगम्य शिवः स्वयं विरहतापमशेषमपाकरोत् ।। ८६ ।।

अथ विनोदशतैरुपलक्षितां निजवियोगजताप कृशान्विताम् ।।

अरुणशैलपतिः स्वयमद्रिजां वरमभीप्सितमर्थय चेत्यशात् ।। ८७ ।।

सकुतुकं प्रणिपत्य नगात्मजा पुररिपुं भुवनत्रयगुप्तये ।।

इममयाचत शोणगिरीश्वरं वरमुदारमनुग्रहसंमुदम् ।। ८८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे देव्याः शिवसमागमवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् १/अध्यायः १३



।। ब्रह्मोवाच ।। ।।

अथ गौरी पुरारातिं प्रणम्य जगदंबिका ।।

अयाचत्तादृशा शंभुमविनाभावमात्मनः ।। १ ।।

इदं विज्ञापयामास लोकानुग्रहकारणात् ।।

कृपया परया पूर्णा गौरी संवादसुंदरी ।। २।।

न त्याज्यमेतत्ते रूपमत्र दृष्टिमनोहरम् ।।

अहं त्वया न च त्याज्या सापराधापि सर्वदा ।।

मनोहरमिदं रूपमेतत्ते लोकमंगलम् ।। ३ ।।

आलोक्यतां सदा सर्वैर्दिव्यगन्धसमन्वितम् ।।

भुजंगगरलब्रह्मकपालशिवभस्मभिः ।। ४ ।।

भीषणैरलमीशान जय वेषपरिग्रहैः ।।

सुकुमारो भवेर्दिव्यमाल्यगंधांबरादिभिः ।।।। ५ ।।

भूषितो रत्नभूषाभिर्विहरस्व महेश्वर ।।

आगता नित्यमीशान देवगन्धर्वकन्यकाः ।। ६ ।।

सेवंतामत्र देवेशं नृत्यवादित्रगीतिभिः ।।

गणाश्च मानुषा भूत्वा सेवंतां त्वामहर्निशम् ।। ७ ।।

त्वत्प्रसादादयं देव सुगंधिः पुष्टिवर्द्धनः ।।

आवयोः संगमो दृष्टो भूयात्सर्वार्थदायकः ।। ८ ।।

गृहीतमत्र देवेश सर्वमंत्रात्मकं वपुः ।।

चरितं तव कैंकर्यमस्तु भक्तिः सदा तव ।। ९ ।।

ज्ञानाज्ञानकृतं नित्यमपराधसहस्रकम् ।।

क्षम्यतां तव भक्तानामनन्यशरणेक्षणात् ।। 1.3.1.13.१० ।।

इति देव्या वचः श्रुत्वा शम्भुः शोणाचलेश्वरः ।।

तमेव वरदः प्रादाद्वरं सर्वमभीप्सितम् ।। ११ ।।

आभाष्य गौरीं कुतुकाद्रंतुकामः स्वयं शिवः ।।

धारय त्वं मृगमदं मनोज्ञमिदमूचिवान् ।। १२ ।।

।। महादेव उवाच ।। ।।

पुलकाख्यो महान्दैत्यो मृगरूपी तपोधिकम् ।।

कृत्वा प्राप वरं मत्तः सौगन्ध्यं परमाद्भुतम् ।। १३ ।।

लब्ध्वा वरं स्वगन्धेनामोहयत्सुरयोषितः ।।

तथैवाधर्मसंप्राप्तो बबाधे सकलं जगत् ।। १४ ।।

देवैरभ्यर्थितः सोहमाहूयासुरनायकम् ।।

विमुंच लोकरक्षार्थमासुरं देहमित्यशाम् ।। १५ ।।

।। पुलक उवाच ।। ।।

त्यक्ष्यामि देवदेवेश देहमेतं त्वदाज्ञया ।।

प्रणम्य भक्तिमनसा मामप्यर्चेदमूचिवान् ।। १६ ।।

मदंगसंभवं दिव्यं सौरभं विश्वमोहनम् ।।

धार्यतां देव देवेश सदा सादरचेतसा ।। १७ ।।

पुलकस्वेदजातो हि सदा प्रख्यायतां तव ।।

अयं मृगमदो लोके शृङ्गाररसवर्द्धनः ।। १८ ।।

त्वत्प्रियः कांतिसौभाग्यरूपलावण्यदायकः ।।

विसृजामि निजं देहं देवदेव जगत्पते ।। १९ ।।

सदा बहुमतो देव्या दिव्यसौरभलुब्धया ।।

मदंशसंभवा ये स्युर्मत्तपोलब्धसौरभाः ।। 1.3.1.13.२० ।।

लीयंतां तव देवेश मूर्तावालेपनच्छलात् ।।

तथेति मय्युक्तवति स दैत्यः पुलकाभिधः ।। २१ ।।

विससर्ज निजं देहं मयिसन्यस्तजीवितः ।।

ततस्तदंगसंभूतं मदं बहुलसौरभम् ।। २२ ।।

अधारयमहं प्रेम्णा शतशृंगारवर्द्धनम् ।।

तपसा देवदेवेशि तप्तं तव वपुः कृशम् ।। २३ ।।

मदंगं च वियोगात्त इदं निर्वापयाधुना ।।

इति प्रशस्य बहुधा पुलकस्नेहमद्भुतम् ।। २४ ।।

आलिलिंप महादेवः पार्वतीं प्रेममंदिराम् ।।

अपृच्छच्च हसन्देवः पार्वतीं ललनाकृतिम् ।। २५ ।।

किमेतदिति हस्तोत्थं दृष्ट्वा तं जगदंबिका ।।

अब्रवीदरुणाद्रीशमानम्य जगदंबिका ।। ।। २६ ।।

आगतिं तस्य पुष्पस्य सदा स्वकरवर्तिनः ।। २७ ।।

।। देव्युवाच ।। ।।

अहं कैलासशिखराद्देवदेव त्वदाज्ञया ।।

तपः कर्तुमनुप्राप्ता कांचीं कनकतोरणाम् ।। २८ ।।

अवाप्य मानसोद्भूतं कह्लारमिदमुत्तमम् ।।

आराधयं महादेवमम्लानगुरुसौरभम् ।। २९ ।।

यदक्षयमविश्रांतमर्चनायोजितं मया ।।

अविच्छिन्नमहादीप्तिः कामधेनुघृताप्लुतः ।। 1.3.1.13.३० ।।

अवेक्षणीयो भूपालैरनुपाल्यश्च सर्वदा ।।

धर्मलक्षणमाधेयं लोकरक्षार्थमादरात् ।। ३१ ।।

सर्वाभीप्सितसिद्ध्यर्थं मत्प्रीतिकरणाय च ।।

मया संस्थापिता धर्मा द्वात्रिंशल्लोकगुप्तये ।। ३२ ।।

रक्षणीया प्रयत्नेन तत्संनिधिमुपागतैः ।।

सर्वालंकारसंयुक्तं सर्वभोगकृतोत्सवम् ।।

आलोक्यतामिदं रूपं कन्यायां मम कांतिमत् ।। ३३ ।।

।। ब्रह्मोवाच ।। ।।

इति देव्या वचः श्रुत्वा शम्भुः शोणाचलेश्वरः ।। ३४ ।।

तथेति वरदः प्रादाद्वरं सर्वमभीप्सितम् ।।

एष शोणाचलः श्रीमान्दृश्यते लोकपूजितः ।। ।। ३५ ।।

सर्वदा वरदागौर्या सर्वभोगैश्च संवृतः ।।

य एतच्छांभवं रूपमरुणाद्रितया स्थितम् ।। ३६ ।।

संपश्यंति नमस्यंति कृतार्थाः सर्व एव ते ।।

अरुणाचलमाहात्म्यमेतच्छृण्वंति ये भुवि ।। ३७ ।।

भवंति सततं तेषां समग्राः सर्वसंपदः ।।

श्रीमत्त्वं वाक्पतित्वं च रूपमव्याहतं बलम् ।। ३८ ।।

लभंते पापनाशं च माहात्म्यस्यास्य धारणात् ।।

सर्वतीर्थाभिषवणं सर्वयज्ञक्रियाफलम् ।। ३९ ।।

सदाशिवप्रसादं च दत्ते शोणाद्रिदर्शनम् ।। 1.3.1.13.४० ।।

इति कैलासशिखरात्प्राप्ता देवी शिवाज्ञया ।।

शापमोक्षगतवती शोणाचलनिरीक्षणात् ।। ४१ ।।

स्थानेष्वन्येषु देवस्य विद्यमानेषु च क्षितौ ।।

दिवि चात्यंतपुण्येषु शंभुरत्र प्रसेदिवान् ।। ४२ ।।

अयं सदाशिवः साक्षादरुणाचलरूपतः ।।

दृश्यते परमं तेजः सर्गस्थित्यंतकारणम्।। ४३ ।।

एतत्तु तैजसं लिगं सर्वदेवनमस्कृतम् ।।

दृश्यते कर्मभूरेषा तेन धर्माधिका मता ।। ४४ ।।

अरुणाचलनाथस्य तेजसा धूतकल्मषाः ।।

भक्तिमंतो नरा लोके सुखमाप्स्यंति सर्वतः ।। ४५ ।।

प्रदक्षिणैर्नमस्कारैस्तपोभिर्नियमैरपि ।।

येऽर्चयंत्यरुणाद्रीशं तेषां शंभुर्वशंगतः ।। ४६ ।।

न तथा तपसा योगैर्दानैः प्रीणाति शंकरः ।।

यथा सकृदपि प्राप्तादरुणाचलदर्शनात् ।। ४७ ।।

स्वयंभुवः सदा वेदाः सेतिहासा दिवि स्थिताः ।।

परितो गिरिरूपास्ते स्तुवंत्यरुणपर्वतम् ।। ४८ ।।

एतस्य वैभवं सर्वं न मया न च शार्ङ्गिणा ।।

वचसा शक्यते वक्तुं वर्षकोटिशतैरपि ।। ४९ ।।

देवाश्च हरिमुख्यास्ते कल्पकाद्याः सुरद्रुमाः ।।

प्रच्छन्नरूपाः सेवंते सर्वदैवारुणाचलम् ।। 1.3.1.13.५० ।।

न तस्य कलिदोषः स्यान्नाधिव्याधिविजृंभणा ।।

यत्र संपूज्यते लिंगमरुणाचलसंज्ञितम् ।। ५१ ।।

इत्येतत्कथितं सर्वं तव शंभुपदाश्रयम् ।।

चरितं ह्यरुणस्यास्य कल्पपुण्यदुरासदम् ।। ५२ ।।

।। सूत उवाच ।। ।।

इति विधिमुखनिःसृतामुदारामरुणगिरीशकथासुधापगां हि ।।

श्रुतिपुटयुगलात्पिबन्मनोज्ञां सनकमुनिस्तपसां फलं स लेभे ।। ५३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये पूर्वार्धे शिवेनारुणाचलस्य सर्वश्रैष्ठ्यवरप्रदानवर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।।।छ।।

अरुणाचलमाहात्म्यस्य पूर्वार्द्धं संपूर्णम् ।। ।।

इत्यरुणाचलमाहात्म्यपूर्वार्धं समाप्तम् ।। ( ३।१) ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०१



।। श्रीगणेशाय नमः ।।

अथारुणाचलमाहात्म्योत्तरार्धम्

।। व्यास उवाच ।।

वसंतो नैमिषारण्ये मुनयः सूतमब्रुवन् ।।

।। मुनय ऊचुः ।। ।।

स्थानानामुत्तमं शैवं यत्स्थलं तद्वदस्व नः ।। १ ।।

सूत उवाच ।। ।।

यूयं शृणुत यत्पूर्वं नंदीश्वरमुखाच्छ्रुतम्।।

मार्कण्डेयेन तद्वक्ष्ये मुनयः शृणुतादरात्।।२।।

।।मार्कंडेय उवाच ।।

नंदीश्वर त्वया प्रोक्तो महिमा माध्यमेश्वरः।।

मयाप्यवधृतः सर्वो भक्तिश्रद्धार्द्रचेतसा ।।३।।

तथापि वद मे भूयो देवदेव दयानिधे।।

अहं यत्परिपृच्छामि भवंतं विहितादरः ।।४।।

त्वयाप्यविदितं किंचिन्नास्त्यत्र भुवनत्रये ।।

सर्वागमपुराणेषु बाह्येष्वाभ्यंतरेषु च ।।५।।

स्वर्गापवर्गयोः पुंसां भूमिरेव विशिष्यते ।।

सर्वकर्माणि निर्मातुं तत्तत्फलपरायणैः ।।६।।

फलं च त्रिविधं पुंसां त्वयैव कथितं पुरा ।।

भूमौ सुखं स्वर्गभोगः कैवल्यमिति भेदतः ।। ७ ।।

पुण्यक्षयेण क्षीयेत प्रायः प्राथमिकं द्वयम्।।

क्षीयते न तृतीयं तु कर्मणामेव नाश्रयात् ।। ८ ।।

तत्सिद्धिस्तु त्वया प्रोक्ता विशुद्धज्ञानगोचरा ।।

सर्वेषां दुर्लभं शुद्धज्ञानं देहभृतां पुनः ।।९।।

तज्ज्ञानं कुत्र वा क्षेत्रे शास्त्रादिपठनं विना ।।

शिवपूजनमात्रेण सिद्ध्येत्सर्वशरीरिणाम् ।। 1.3.2.1.१० ।।

ज्ञानयोगक्रियाचर्यास्वशेषाणां शरीरिणाम् ।।

अपि शैवागमोक्तासु न बुद्धिः संप्रवर्त्तते ।। ११ ।।

यस्य स्थानस्य माहात्म्यादल्पैरपि शरीरिणः ।।

लप्स्यते नियमैः शुद्धज्ञानं तन्मम कथ्यताम् ।। १२ ।।

भस्मरुद्राक्षवहनादीश्वरस्मरणात्सकृत् ।।

यत्र मुग्धैरपि श्रेयो लभ्यं तत्स्थानमुच्यताम् ।। १३ ।।

अबुद्धिपूर्वकेणापि यत्र वासेन देहिनाम् ।।

अविघ्नं सेत्स्यते श्रेयः स्थानं तन्मेऽनुगृह्यताम् ।। १४ ।।

जातानां वर्णसांकर्य्ये तैरश्ची योनिमीयुषाम् ।।

स्थावराणामपि श्रेयो यत्र तत्क्षेत्रमुच्यताम् ।।१५।।

इतीरयित्वा स मृकंडुनंदनः समं मुनींद्रैरपरैर्महात्मभिः।।

पपात तस्यांघ्रिसरोरुहद्वये शिलादसूनोरखिलागमाब्धेः ।। १६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे स्थानमाहात्म्यप्रस्तावववर्णनंनाम प्रथमोऽध्यायः ।।।१।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०२

https://sa.wikisource.org/s/ho8
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

नंदिकेश्वर उवाच ।। ।।

स्थानं त्वया मुने पृष्टमस्ति माहेश्वराग्रणि।।

चराचराणां सर्वेषां भूतानामपि शर्मणे ।। १ ।।

प्रकल्पितं हि देवेन तत्तत्कर्मानुगुण्यतः ।।

शरीरभाजां जननं तासुतास्वपि योनिषु ।। २ ।।

त्वया शुश्रुषितं तेषां हिताय महते ह्यलम् ।।

अन्यथा संसृतेर्हानिः कल्पकोटिशतैर्नहि ।। ३ ।।

स्वल्पैर्हि कर्मभिर्ज्ञानैरपि प्राप्ता पुनःपुनः ।।

घटीयंत्रनयाज्जन्ममरणे नैव शाम्यतः ।। ४ ।।

कथं नु विरतो देही गर्भमोकसमागमात् ।।

विश्रांतये प्रकल्पेत विशुद्धज्ञानतो विना ।। ५ ।।

प्रदेशाः कथिताः पूर्वं प्रसंगवशतो मया ।।

ऋषिभेदादिकं तेषु निवासः कृत्तिवाससः ।। ६ ।।

केचित्तीरेषु गंगायाः केचित्सारस्वते तटे ।।

कालिंदीतीरयोरन्ये कतिचिच्छोणरोधसि ।।७।।

अपरे नर्मदातीरे परे गोदावरीतटे ।।

कतिचिद्रोमतीतीरेष्वन्ये हैमवतीतटे ।।८।।

समुद्रपार्श्वेष्वितरं द्वीपेष्वन्ये सरस्वताम् ।।

मुखेषु केचित्सिंधूनां संभेदेष्वपि केचन ।।९।।

कृष्णवेणीतटे केचित्तुंगभद्रांतिके परे ।।

उपवेण्यां कतिपये परे शक्त्यापगांतिके ।। 1.3.2.2.१० ।।

कावेरीतीर इतरे केचिद्वेगवतीतटे ।।

अन्ये तु ताम्रपर्ण्याश्च कतिचिन्मुरलातटे ।। ११ ।।

केचिदैरावतीतीरे त्वितरे यातुकांक्षिके ।। १२ ।।

कन्यातटेषु कतिचित्कतिचित्कुमारीतीरे परे च तमसावरुणांतिकेन्ये ।।

मंदाकिनीसविधयोरितरे परेऽपि शिप्रातटे परिसरेषु परे सरय्वाः ।। १३ ।।

विपाशाभ्याश इतरे शतद्रुतितटे परे ।।

चर्मण्वत्युपकंठेऽन्ये केचिद्भीमरथीतटे ।। १४ ।।

केचिद्विंदुसरोभ्यर्णे परे पंपासरस्तटे ।।

अभ्यर्णकेपि भैरव्याः कतिचित्कौशिकीतटे।। १५ ।।

अपरे मालिनीतीरे परे गंधवतीतटे ।।

कतिचिन्मानसोपांते केचिदच्छोदरोधसि ।। १६ ।।

इंद्रद्युम्नसरस्यन्य एके तु मणिकर्णिके ।।

परे तु वरदातीरे ताप्यां कतिचनापरे ।।

पातालगंगासविधे शरावत्यंतिके परे ।। १७ ।।

लोहित्याकूलयोः केचित्कतिचित्कालमातटे ।।

वितस्तोपांतिके त्वन्ये चंद्रभागांतिके परे ।। १८ ।।

सुरलोपांतिके केचित्पयोष्णीतीरयोः परे ।।

केचिन्मधुमतीतीरे केचनानु पिनाकिनीम् ।। १९ ।।

उक्तं वाराणसीक्षेत्रं क्रोशपंचकपावनम् ।।

देवस्तत्राविमुक्ताख्यो विशालाक्ष्या समर्चितः ।। 1.3.2.2.२० ।।

कपालमोचनं यत्र यत्रास्ते कालभैरवः ।।

मृतानां यत्र रुद्रत्वं काशीं विद्धि हि तां मुने ।। २१ ।।

गयाप्रयागावपि ते कथितौ सर्वसिद्धिदौ ।।

यत्र पिंडप्रदानेन तुष्यंति पितरः किल ।। २२ ।।

आकर्णितं च केदारं यस्मिन्महिषरूपधृक् ।।

देवोपि च हतो देव्या सर्वश्रेयस्करो नृणाम् ।। २३ ।।

सर्वसिद्धिकरं पुंसां क्षेत्रं बदरिकाश्रमम् ।।

यत्रास्ते त्र्यंबको देव्या नरनारायणार्चितः ।। २४ ।।

श्रुतं हि नैमिषं क्षेत्रं त्वया यत्र महेश्वरः ।।

देवदेवाभिधः पुण्यो देवी सारंगधारिणी ।। २५ ।।

अमरेशमिति स्थानं प्रोक्तं सर्वार्थसाधकम् ।।

ॐकारनामा तत्रेशश्चंडिकाख्या महेश्वरी ।। २६ ।।

पुष्कराख्यं महास्थानं श्रुतं ते कथितं मया ।।

यत्र देवो रुजोगंधिः पुरुहूता महेश्वरी ।। २७ ।।

आषाढीनाम ते स्थानं पावनं कथितं मया ।।

आषाढेशो हरस्तत्र रतीशा परमेश्वरी ।। २८ ।।

दंडिमुंडी समाख्यं च स्थानं ते कथितं मया ।।

यत्र मुंडी महादेवो दंडिका परमेश्वरी ।।२९।।

लाकुलंनाम ते स्थानं संशुद्धं कथितं मया ।।

लाकुलीशो हरो यस्मिन्ननंगा सर्वमंगला ।। 1.3.2.2.३० ।।

भारभूतिरिति स्थानं भवतोऽभिहितं मया ।।

यत्र भाराभिधः शंभुर्भूत्याख्या भूधरात्मजा ।। ३१ ।।

अरालकेश्वरं नाम स्थानं ते कथितं मया ।।

यत्र सूक्ष्माभिधः शूली सूक्ष्माख्या शैलनंदिनी ।। ३२ ।।

गयानाम महाक्षेत्रं तव प्रस्तावितं मया ।।

मंगलाख्या शिवा यत्र शंकरः प्रपितामहः ।। ३३ ।।

कुरुक्षेत्रमिति स्थानं भवते विनिवेदितम् ।।

यत्र स्थाणुप्रिया देवी देवः स्थाणुसमाह्वयः ।। ३४ ।।

उक्तं कनखलंनाम मया ते स्थानमुत्तमम् ।।

उग्रो यत्र पुरारातिरुग्रा गिरिवरात्मजा ।। ३५ ।।

तालकाख्यं महाक्षेत्रं मार्कंडेय मयोदितम् ।।

देवी स्वायंभुवी यत्र स्वयंभूः परमेश्वरः ।। ३६ ।।

अट्टहासमिति प्रोक्तं महास्थानं मया तव ।।

यत्रार्कः पूजयित्वेशमासीत्पूर्णमनोरथः ।। ।। ३७ ।।

कृत्तिवासाभिधं क्षेत्रमुक्तं ते वेदवित्तम ।।

यः कैलासादपि श्लाघ्यो निवासः कृत्तिवाससः ।। ३८ ।।

भ्रमरांबिकया देव्या महेशो मल्लिकार्जुनः ।।

श्रीशैले सृष्टिसिद्ध्यर्थं पूजितः परमेष्ठिना ।। ३९ ।।

सुवर्णमुखरीतीरे कालहस्तीति शंकरः ।।

व्यासेनाराधितो भृंगमुखरालकयांबया ।। 1.3.2.2.४० ।।

कांच्यामेकाम्रमूलस्थः कामाक्ष्या कामशासनः ।।

तपस्यंत्याभिसंश्लिष्टो वलयेनांकितोऽभवत् ।। ४१ ।।

अस्ति व्याघ्रपुरंनाम तिल्लिकाननमध्यगम् ।।

यत्र नृत्यंतमीशानं पर्युपास्ते पतंजलिः ।। ४२ ।।

श्वेतारण्यमिति स्थानमुक्तं तव मया पुरा ।।

भग्नमैरावतो दंतं भेजे यत्र शिवार्चनात् ।। ४३ ।।

सेतुबंधमिति स्थानमवोचं तत्र राघवः ।।

रामनाथाख्यया देवमंहोघ्नं प्रत्यतिष्ठिपत् ।। ४४ ।।

गतप्रत्याह्वय स्थानं विद्यते वृषभध्वजः ।।

यत्र जंबूतरोर्मूले जगद्रक्षार्थमाश्रितः ।। ४५ ।।

मणिमुक्तानदीमन्वक्क्षेत्रे वृद्धाचलाह्वये ।।

नित्यं सन्निहितो देव इत्याकर्णित एव ते ।। ४६ ।।

श्रीमन्मध्यार्जुनंनाम श्रुतं स्थानमनुत्तमम् ।।

यस्मिन्वरप्रदो नित्यं गौरीसहचरो हरः ।। ४७ ।।

आस्थितं सोमनाथेन सोमतीर्थं त्वया श्रुतम् ।।

यत्र त्यक्तवतां देहं न भूयो भवबंधनम् ।।४८।।

आकर्णितं हि भवता क्षेत्रं सिद्धवटाह्वयम् ।।

यत्र सिद्धाः समर्चंति ज्योतिर्लिंगमनुत्तमम् ।। ४९ ।।

अश्रावि खलु ते क्षेत्रं कमलालयसंज्ञकम् ।।

वल्मीकेशार्चनाल्लेभे यत्र श्रीर्जीविता हरेः ।। 1.3.2.2.५० ।।

श्रुतवानसि कंकाद्रिं यत्र संनिहितो हरः ।।

इदानीमप्युपासाते मोक्षाय ब्रह्मकेशवौ ।।५१।।

श्रीमद्द्रोणपुरं वेत्सि यस्मिन्कलियुगक्षये ।।

नौकामारूढवानब्धौ क्षुभिते पार्वतीपतिः ।। ५२ ।।

श्रुतं ब्रह्मपुरंनाम क्षेत्रं यत्रेंद्रजित्पुरा ।।

आर्यपुष्करिणीतीरे स्थापयामास धूर्जटिम् ।। ५३ ।।

श्रीकोटिकाख्यं ज्ञानाभिक्षेत्रं यत्रेंदुशेखरः ।।

समाराधयतां पुंसां पापकोटीर्व्यपोहति ।। ५४ ।।

आकर्णितं च गोकर्णं शिवं यत्संनिधानतः ।।

आरिराधयिषुः स्वर्गं जामदग्न्यो न कांक्षति ।। ५५ ।।

त्रिपुरांतकमुक्तं ते क्षेत्रं यत्र त्रियंबकः ।।

निराकरोति निरयाद्भयं दृष्टवतां नृणाम् ।। ५६ ।।

उक्तं कालांजनं क्षेत्रं यद्वासी कालकंधरः ।।

निर्वापयति भक्तानां घोरसंसारसंज्वरम् ।। ५७ ।।

प्रियालवणमाख्यातं क्षेत्रं यत्रांबिकापतिः ।।

पयोर्थिने पयःसिंधुं विततारोपमन्यवे ।। ५८ ।।

क्षेत्रं प्रभासमुक्तं ते यत्र खंडेंदुशेखरः ।।

पूजितः शौरिसीरिभ्यां दत्तवानक्षयं फलम् ।। ५९ ।।

वेदारण्यं विजानीषे यस्मिन्प्रमथनायकः।।

अभ्यर्थितोऽभून्मोक्षार्थं दक्षेण प्राक्कृतागसा ।। 1.3.2.2.६० ।।

हेमकूटं त्वमश्रौषीः स्थानं विषमचक्षुषः ।।

पुंसां तपस्यतां यत्र पुनर्जननतो न भीः ।। ६१ ।।

क्षेत्रं वेणुवनंनाम विद्यते पापनाशनम् ।।

यत्र वंशलतागर्भाज्जातो मुक्तामणिः शिवा ।। ६२ ।।

जालंधरमिति स्थानमंधकारेस्त्वया श्रुतम् ।।

लेभे गणपतां तत्र तपस्याभिर्जलंधरः ।। ६३ ।।

ज्वालामुखमिति स्थानमज्ञासीः कथितं मया ।।

यत्र ज्वालामुखी देवी कालरुद्रमपूजयत् ।। ६४ ।।

अस्ति भद्रवटोनाम क्षेत्रमुक्तं श्रुतं त्वया ।।

त्र्यंबकं यत्र हेरंबः संपदे पर्यपूजयत् ।। ६५ ।।

न्यग्रोधारण्यमुक्तं ते यत्रोग्रो निर्ममे किल ।।

उच्चंडतांडवं काल्या साकं संघर्षमेयिवान् ।। ६६ ।।

गंधमादनसंज्ञं तत्क्षेत्रमाकर्णितं त्वया ।।

आंजनेयेन रचितं यत्र मृत्युंजयार्चनम् ।। ६७ ।।

गोपर्वतमिति स्थानं शंभोः प्रख्यापितं मया ।।

यत्र पाणिनिना लेभे वैयाकरणिकाग्र्यता ।। ६८ ।।

वीरकोष्ठमिति क्षेत्रस्थानं नन्ववधारितम् ।।

यत्र प्रचेतसा लेभे तपसा कविमुख्यता ।। ६९ ।।

महातीर्थमिति प्रोक्तं जानीषे यत्र शंभुना ।।

अध्यापितास्सुपर्वाणः सर्वेऽपि द्रुहिणादयः ।। 1.3.2.2.७० ।।

मयूरपुरमुक्तं ते क्षेत्रं माहेश्वरं मया ।।

लेभे यत्र व्रतस्थेन ह्रादिनी वज्रपाणिना ।। ७१ ।।

श्रीसुंदरमिति क्षेत्रमुक्तं वेगवती तटे ।।

कलावपि युगे यस्मिन्देवदेवेन दीप्यते ।। ७२ ।।

कुंभकोणमिति स्थानं शंभोर्वेत्सि हि यत्र सा ।।

गंगापि माघे सान्निध्यं कुरुते स्वाघशांतये ।। ७३ ।।

अनुगोदावरीतीरं त्र्यंबकंनाम ते श्रुतम् ।।

शक्तिं यत्र गुहो लेभे तारकासुरघातिनीम् ।। ७४ ।।

श्रीपाटलं व्याघ्रपुरमाख्यातं वेदवित्तम ।।

त्रिशंकुना जातिशुद्ध्यै यत्र गंगाधरोर्चितः ।। ७५ ।।

क्षेत्रं कदंबपुर्य्याख्यं भवता चावधारितम् ।।

त्वत्कृते यत्र शूलेन कृतांतं शम्भुरक्षिणोत् ।। ।। ७६ ।।

अविनाशाख्यमुक्तं ते क्षेत्रं यत्र वृषध्वजः ।।

सान्निध्यं पडिकण्ठाय विततार प्रसेदिवान् ।। ७७ ।।

रक्तैकाननमाख्यातं मया क्षेत्रं तवानघ ।।

मित्रावरुणयोर्यत्र रुद्रोऽजनि वरप्रदः ।। ७८ ।।

श्रीहाटकेश्वरं क्षेत्रं पातालस्थं त्वया श्रुतम् ।।

यत्र वैरोचनिर्देवं स्वपदप्राप्तयेर्चति ।। ७९ ।।

वेत्सि शंभोः प्रियावासं कैलासं नित्यसेवकः ।।

यत्र यक्षेश्वरस्त्र्यक्षमयर्चयति भक्तितः ।। 1.3.2.2.८० ।।

स्थानानि खंडपरशोरित्युक्तानि मया पुरा ।।

त्वयाप्यवधृतान्येव किं भूयः श्रोतुमिच्छसि ।। ८१ ।।

इत्यूचिवानेष शिलादनंदनो मुनेर्मृकण्डोस्तनयं मुनीश्वरम् ।।

भक्त्या नमंतं पदयोः करेण पस्पर्श मौलौ करुणारसार्द्रः ।। ८२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे महीमण्डलस्थविविधशिवक्षेत्रवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०३

https://sa.wikisource.org/s/h1x
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। मार्कंडेय उवाच ।। ।।

भगवन्वंचनेनालं त्वदेकप्रवणे मयि ।।

किं मादृशोऽस्ति ते शिष्यस्त्वत्कृपैवात्र साक्षिणी ।। १ ।।

स्थानेषु प्राक्त्वदुक्तेषु फलानि च पृथक्पृथक् ।।

यत्र सर्वफलप्राप्तिः स्थानं तद्वद मे विभो ।। २ ।।

चराचराणां भूतानां जानतामप्यजानताम् ।।

यस्य स्मरणमात्रेण मुक्तिस्तद्वद देशिक ।। ३ ।।

पश्यैतेन मयैकेन भगवान्नानुराध्यसे ।।

सर्वैरप्येतदर्थं हि मुनिभिः परिवार्यसे ।। ४ ।।

पुलहेन पुलस्त्येन वशिष्ठेन मरीचिना ।।

अगस्त्येन दधीचेन नक्रुणा भृगुणात्रिणा ।। ५ ।।

जाबालिना जैमिनिना धौम्येन जमदग्निना ।।

उपयाजेन याजेन भरतेनार्वरीवता ।। ६ ।।

पिप्पलादेन कण्ठेन कुमुदेनोपमन्युना ।।

कुमुदाक्षेण कुत्सेन वत्सेन वरतंतुना ।। ७ ।।

विभांडकेन व्यासेन कण्वरीषेण कंडुना ।।

मांडव्येन मतंगेन कुक्षिणा मांडकर्णिना ।। ८ ।।

चंडकौशिकशांडिल्यशाकटायनकौशिकैः ।।

शातातपमधुच्छन्दोगर्गसौभरिरोमशैः ।। ९ ।।

आपस्तंबपृथुस्तंबभार्गवोदंकपर्वतैः ।।

भारद्वाजेन दाल्भ्येन दांतेन श्वेतकेतुना ।। 1.3.2.3.१० ।।

कौंडिन्यपुण्डरीकाभ्यां रैभ्येण तृणबिन्दुना ।।

वाल्मीकिना नारदेन वह्निना दृढमन्युना ।। ११ ।।

बोधायनसुबोधाभ्यां हारीतेन मृकण्डुना ।।

दुर्वाससातितीक्ष्णेन जालपादेन शक्तिना ।। १२ ।।

कांक्वार्येण नदन्तेन देवदत्तेन न्यंकुना ।।

सुश्रुता चाग्निवेश्येन गालवेन मरुत्वता ।। १३ ।।

लोकाक्षिणा विश्रवसा सैंधवेन सुमंतुना ।।

शिशुपायनमौद्गल्यपथ्यचावनमातुरैः ।। १४ ।।

ऋष्यशृङ्गैकपात्क्रौंचदृढगोमुखदेवलैः ।।

अंगिरोवामदेवौर्वपतंजलिकपिंजलैः ।। १५ ।।

सनत्कुमारसनकसनंदनसनातनैः ।।

हिरण्यनाभसत्याख्यवाताशनसुहोतृभिः ।। १६ ।।

मैत्रेयपुष्पजित्सत्यतपःशालीष्यशैशिरैः ।।

निदाघोतथ्यसंवर्त्तशौल्कायनिपराशरैः ।। १७ ।।

वैशंपायनकौशल्यशारद्वतकपिध्वजैः ।।

कुशस्वार्चिककैवल्ययाज्ञवल्क्याश्वलायनैः ।। १८ ।।

कृष्णातपोत्तमानंतकरुणामलकप्रियैः ।।

चरकेण पवित्रेण कपिलेन कणाशिना ।। १९ ।।

नरनारायणाभ्यां च दिव्यैश्चान्यैर्महर्षिभिः ।।

मत्प्रश्नोत्तरशुश्रूषातत्परैः प्रत्यवेक्ष्यसे ।। 1.3.2.3.२० ।।

माहेश्वराग्रगण्यस्त्वं समस्तागमपारगः ।।

व्याप्तश्च सर्वलोकेषु यस्मात्तदनुसाधि नः ।। २१ ।।

त्वन्मुखादेव भगवन्वयमेते सुशिक्षिताः ।।

पूर्वमेव त्वया देव किं वान्यदुपपद्यते ।। २२ ।।

दिव्यागमपुराणानि द्रष्टव्यः परमेश्वरः ।।

कात्यायनी वा स्कन्दो वा भगवान्वाथ वा भवान् ।। २३ ।।

त्वयि यद्यस्ति नो भक्तिर्दया चास्मासु ते यदि ।।

रहस्यमिदमुद्घाट्य प्रसादं कर्तुमर्हसि ।। २४ ।।

इत्थं मृकण्डुतनयेन स नंदिकेशो विज्ञापितः सविनयं स्मयमानवक्त्रम् ।।

तं प्राह चोन्नततरं शिवभक्तिमस्तु प्राग्भक्तितोषितशिवाप्तशरीरसिद्धिम् ।। २५ ।।

।। इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धेऽरुणाचलाख्यरहस्यस्थानप्रश्नवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।। ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०४



।। नंदिकेश्वर उवाच ।। ।।

मुने मनःपरीक्षार्थं तथा त्वं भाषितो मया ।।

तव चेन्नाभिधास्यामि कस्य वान्यस्य कथ्यते ।। १ ।।

त्वादृगन्योस्ति किं लोके शिवधर्मपरायणः ।।

येन स्वल्पायुषाप्येवं नित्येनाभावि भक्तितः ।। २ ।।

कस्यान्यस्य कृते देवः स्वस्यैवाज्ञाकरं यमम् ।।

क्रुद्धो नियंत्रयामास चरणांगुष्ठपीडितम् ।। ३ ।।

त्वमेव शांकरान्धर्मान्सर्वान्विद्धि रहस्यतः ।।

योग्रेऽसि कालवद्भ्रांतः परिपक्वोसि चेतसा ।। ४ ।।

त्वयैवान्येन केनाहमेवं शुश्रूषितश्चिरम् ।।

त्वयीव कस्मिन्नन्यस्मिन्ममापि प्रीतिरीदृशी ।। ५ ।।

उपदेक्ष्यामि ते क्षेत्रं गुप्तं तद्धर्मशासनैः ।।

भक्त्यावधारणीयं यद्भक्तिकैवल्यकांक्षिभिः ।। ६ ।।

आदरादनुयुंजानं शिष्यं यो देशिकः स्वयम् ।।

उपदेशेन संतुष्टं न करोति स किं गुरुः ।। ७ ।।

समाहितमना भूत्वा विश्वासं कुरु शाश्वतम् ।।

मयोपदिश्यमानेऽस्मिन्रहस्ये पारमेश्वरे ।। ८ ।।

स्मर स्मरांतकं देवं वंदस्वाध्याय शांकरीम् ।।

उपांशूच्चारयोंकारं श्रेयस्ते महदागतम् ।। ९ ।।

अस्ति दक्षिणदिग्भागे द्राविडेषु तपोधन ।।

अरुणाख्यं महाक्षेत्रं तरुणेंदुशिखामणेः ।। 1.3.2.4.१० ।।

योजनत्रयविस्तीणमुपास्यं शिवयोगिभिः ।।

तद्भूमेर्हृदयं विद्धि शिवस्य हृदयंगमम् ।। ११ ।।

तत्र देवः स्वयं शम्भुः पर्वताकारतां गतः ।।

अरुणाचलसंज्ञावानस्ति लोकहितावहः ।। १२ ।।

आवासः सर्वसिद्धानां महर्षीणां सुपर्वणाम् ।।

विद्याधराणां यक्षाणां गंधर्वाप्सरसामपि ।। १३ ।।

सुमेरोरपि कैलासादप्यसौ मन्दरादपि ।।

माननीयो महर्षीणां यः स्वयं परमेश्वरः ।। १४ ।।

स्पृहयंति यदीयेभ्यो जंतुभ्योपि दिवौकसः ।।

अयत्नलभ्यमुक्तिभ्यो दिवावासप्रवंचिताः ।। १५ ।।

न कल्पवृक्षाः सदृशा यत्रत्यानां महीरुहाम् ।।

पत्रपुष्पफलैर्नित्यं येर्चयंति गिरौ हरम् ।। १६ ।।

हिंसैकरुचयो व्याधा अपि रूपानुसारतः ।।

अनंता यत्र देवस्य प्रादक्षिण्यफलास्पदम्।। १७ ।।

यदुद्देशचरा मेघाः शिखराण्यभिबंधकाः ।।

गंगावतो हिमवतोऽप्यधिकं स्वं विजानते ।। १६ ।।

कलारावाः खगा यत्र क्वणंते कीचका अपि ।।

यक्षकिंनरगन्धर्वैर्लभ्यते दुर्लभं पदम् ।। १९ ।।

स्मरन्तो यत्र खद्योताः कृष्णपक्षे निशागमे ।।

आरार्तिकप्रदातॄणां देवस्याश्नुवते पदम् ।।1.3.2.4.२०।।

निष्प्रत्यूहकृताश्लेषा नित्यं यत्तटिनीरुहाः ।।

सौभीग्यगर्वतो देवीमपर्णामवमन्वते ।।२१।।

यस्योत्तुंगस्य शृंगाग्रसंगमा अपि तारकाः ।।

आत्मनो लब्धसामान्याश्चन्द्रेण बहु मन्वते ।। २२ ।।

मृगाः सर्वेपि सततं चरंतो यत्र सानुषु ।।

पाणिप्रणयिनं शम्भोरेणमप्यवजानते ।। २३ ।।

यस्य पादांतिकचरैः प्रायेण शबरैरपि ।।

निकुम्भकुम्भसादृश्यमयत्नादुपलभ्यते ।। २४ ।।

किं बहूक्त्याभ्यसूयंते द्वैमातुरकुमारयोः ।।

यदंगरूढास्तरवस्तिर्यंचः शबरा अपि ।। २५ ।।

सिंहव्याघ्रद्विपा यस्मिन्काले त्यक्तकलेवराः ।।

वासप्रदत्वान्मान्यंते ध्रुवं शोणाद्रिशम्भुना ।। २६ ।।

अस्य भास्करनामाद्रिः पूर्वस्यां दिशि दृश्यते ।।

यत्र स्थितः सदा वज्री सेवते शोणपर्वतम् ।।२७।।

प्रतीच्यां दिशि दंडाद्रिरिति कश्चिन्महीधरः ।।

प्राचेतसस्तदगगः सेवतेऽरुणपर्वतम् ।। २८ ।।

दक्षिणस्यां च शोणाद्रेरद्रिरस्त्यमराचलः ।।

कालः शोणाद्रिसेवार्थमध्यास्ते तदधित्यकाम् ।।२९।।

उत्तरेऽस्मिन्हरिद्भागे सिद्धाध्यासितकन्दरः ।।

विराजते त्रिशूलाद्रिः श्रीदेन परिपालितः ।। 1.3.2.4.३० ।।

तत्पर्यंतप्रभूतानामन्येषामपि भूभृताम् ।।

तटकेष्वपरे चैव दिक्पालाः पर्युपासते ।। ३१ ।।

धारिता येन सततं सर्वेपि धरणीरुहाः ।।

आराधनादप्यधिकमधिगच्छंति वैभवम् ।। ३२ ।।

यस्मिन्गिरीशे संदृष्टे मेनातुहिनभूभृतोः ।।

समानसंबंधतया प्रमोदो वर्द्धतेतराम् ।। ३३ ।।

तरुपल्लवलक्षेण लक्ष्यमाणजटाधरः ।।

स्थावरोयं स्वयं शम्भुरिहेश इव जंगमः ।। ३४ ।।

ज्योतिष्मत्तोयशृंगस्य द्विपार्श्वस्थेन्दुभास्करः ।।

व्यनक्ति स्वस्य लोकेभ्यस्तेजस्त्रितयनेत्रताम् ।। ३५ ।।

वर्षासु शिखराधस्तादभिनीलबलाहकः ।।

विराजते यः कण्ठेन कालकूटमिवोद्वहन् ।। ३६ ।।

सहस्रपादः साहस्रशीर्षो यः पर्वतेश्वरः ।।

उक्तो न केवलं श्रुत्या साक्षादप्युपलक्ष्यते ।। ३७ ।।

शिरोलीनामरसरित्स्रोताः प्रागिति नाद्भुतम् ।।

गिरीशोऽद्यापि यः शृंगलीनानेकसरिद्गणः ।। ३८ ।।

आसादितापकटकः शारदैर्यः पयोधरैः ।।

विडंबयति गोश्रेष्ठमारूढवृषपुंगवम् ।। ३९ ।।

यत्र शृङ्गाग्रसंलग्रसंलग्ननीललोहितः ।।

स्थाणुत्वं स्थावरत्वेन गहनत्वेन भीमताम् ।। 1.3.2.4.४० ।।

सुदुर्गमत्वादुग्रत्वमपि धत्ते न नामतः ।।

क्षुद्राः सरीसृपा यत्र कटकेषु कृतास्पदाः ।। ४१ ।।

तक्षकानंतसर्पाद्यैः स्पर्धन्ते भुजगेश्वरैः ।।

अष्टाभिर्योऽभितः कोणैराविभूर्तो विभूतिभिः ।। ४२ ।।

सुस्पष्टं विशिनष्टीव स्वकीयामष्टमूर्तिताम् ।।

येण्र्याशक्तितरंगिण्यो इडापिंगलयोः स्वयम् ।। ४३ ।।

शिवस्य शृङ्गतो मध्ये सुषुम्ना कमलापगा ।।

ज्योतिःस्तंभस्वरूपस्य मूलाग्रे यस्य वीक्षतुम् ।। ४४ ।।

कोलहंसाकृती नालं ब्रह्मविष्णू बभूवतुः ।।

ताभ्यां च प्रार्थितः शम्भुस्तस्मिन्सांनिध्यवानभूत् ।। ४५ ।।

अरुणाचलनाथाख्यं प्रपन्नः प्रमदैः समम् ।।

गौतमस्तत्र योगींद्रः सहस्रं परिवत्सरान् ।। ४६ ।।

तस्वा तपांसि तीव्राणि साक्षाच्चक्रे सदाशिवम् ।।

प्रालेयशैलकन्यापि तत्र कृत्वा तपः पुरा ।। ४७ ।।

अलब्ध वामदेहार्द्धं मन्मथारेः प्रसेदुषः ।।

गौर्या प्रतिष्ठितं तत्र प्रवालाद्रीश्वराभिधम् ।। ४८ ।।

लिंगं भोगप्रदं पुंसां कैवल्याय प्रकल्पते ।।

तत्र गौरीनिदेशेन दुर्गा महिषमर्दिनी ।। ४९ ।।

साक्षाद्भूय सतां दत्ते मन्त्रसिद्धिमविघ्नतः ।।

खड्गतीर्थमिति ख्यातं तत्र गौर्याश्रमे नवम् ।। 1.3.2.4.५० ।।

सकृन्निमज्जनान्नृणां पंचपातकनाशनम् ।।

दुर्गया चार्चितं लिंगं पापनाशननामकम् ।। ५१ ।।

सकृत्प्रणाममात्रेण सर्वपापप्रणाशनम् ।।

तत्र वज्रांगदो राजा वित्तसारो व्यतिक्रमात् ।। ५२ ।। पुनस्तद्भक्तिमाहात्म्याच्छिवसायुज्यमाप्तवान् ।।

तस्य प्रदक्षिणेनैव कांतिशालिकलाधरौ ।। ५३ ।।

विद्याधरेश्वरौ मुक्तौ दुर्वासःशापबन्धनात् ।।

नास्ति शोणाद्रितः क्षेत्रं नास्ति पंचाक्षरान्मनुः ।। ५४ ।।

नास्ति माहेश्वराद्धर्मो नास्ति देवो महेश्वरात् ।।

नास्ति ज्ञानं शिवज्ञानान्नास्ति श्रीरुद्रतः श्रुतिः ।।५५ ।।

नास्ति शैवाग्रणीर्विष्णोर्नास्ति रक्षा विभूतितः ।।

नास्ति भक्तेः सदाचारो नास्ति रक्षाकराद्गुरुः ।। ५६ ।।

नास्ति रुद्राक्षतो भूषा नास्ति शास्त्रं शिवागमात् ।।

नास्ति बिल्वदलात्पत्रं नास्ति पुष्पं सुवर्णकात्।।५७।।

नास्ति वैराग्यतः सौख्यं नास्ति मुक्तेः परं पदम् ।।

नारुणाद्रेः समो मेरुर्न कैलासो न मंदरः ।। ५८ ।।

ते निवासा गिरिव्याप्ताः सोऽयं तु गिरिशः स्वयम् ।। ५९ ।।

इति वदति शिलादनंदने मुदितमनाः स मृकण्डुनंदनः ।।

पुनरपि बहुशः प्रणम्य तं चकितमना भवतो व्यजिज्ञपत् ।। ।। 1.3.2.4.६० ।।

किं किं नृणां कर्म भवाय जायते कथं नु तत्तन्नरकाय श्रूयते ।।

तेषां च तेषां च कथं प्रतिक्रिया कथं नु तत्तन्मम कथ्यतामिति ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उतरार्धेऽरुणाचलस्थानमाहात्म्यवर्णनंनाम चतुर्थोऽध्यायः ।। ४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०५



।। नंदिकेश्वर उवाच ।। ।।

शुद्धसत्त्वगुणोपेतो लोकेऽस्मिन्दुर्लभः पुमान् ।।

रजस्तमोगुणोपेता भवंति सुलभा नराः ।। १ ।।

सात्त्विकः पुण्यशीलत्वान्निःश्रेयसमवाप्नुयात् ।।

वैचित्र्यात्कर्मणामेषामनुभोगाय वेधसा ।। २ ।।

वैचित्र्याण्येव सृष्टानि नरकाण्यत्र तत्र च ।।

महारौरवभाग्भूत्वा खरः श्वा शूकरोऽपि वा ।। ३ ।।

चंडालो वा भवेत्प्रेत्य पुरुषो ब्रह्महत्यया ।।

चिरं रौरवसंरुद्धः कृमिकीटपतंगताम् ।।।। ४ ।।

प्राप्नुयात्कर्मकर्तृत्वं सुरापानेन च द्विजः ।।

ब्रह्मस्वहरणाद्ब्रह्मराक्षसत्वमवाप्नुयात् ।। ५ ।।

यद्यत्तु चोरयेत्तत्तच्छून्यं स्यादन्यजन्मनि ।।

असिपत्रवने पीडामवाप्य सुचिरं पुनः ।। ६ ।।

नपुंसकत्वं संगच्छेत्पुरुषो गुरुतल्पगः ।।

तप्तैः कालायसैर्दंडैः पीडितो यमकिंकरैः ।। ७ ।।

नरके कालसूत्राख्ये निवसेत्परदारगः ।।

अग्निदो निवसेद्घोरे सुघोरे गरदायकः ।। ८ ।।

महाघोरे च पिशुनोऽवीच्यां धर्मविनिंदकः ।।

वसेत्कराले मित्रध्रुग्भीमे हिंसैकतत्परः ।। ९ ।।

संहारे छन्नपापिष्ठो मृषावादी भयानके ।।

असिघोरे वसेद्वापि कूपक्षेत्रनरादिहृत् ।। 1.3.2.5.१० ।।

वज्रे परद्रोहरतो मांसाशी तरले द्विज ।।

तीक्ष्णे मातृपितृद्रोही तापने जपदूषकः ।। ११ ।।

अश्वघ्नोपि निरुच्छ्वासे वसेद्गोघ्नश्च दारुणे ।।

भ्रूणहा निवसेच्चंडे स्त्रीहत्याकृत्कुकूलके ।। १२ ।।

देवस्वहारी दहने घोरघोरे परस्वहृत् ।।

कृतांतदूता नरके सर्वानेव हि पापिनः ।। १३ ।।

बध्नंति पाशैर्निघ्नंति दंडैर्विध्यंति शंकुभिः ।।

तीक्ष्णायश्चंचवः कंकाः क्रूरदंष्ट्रा महोरगाः ।। १४ ।।

कालेयकाश्च व्याघ्राश्च हिंस्राश्चान्ये दशंत्यमून् ।।

शकलीकुर्वते शस्त्रैर्दहंतिदेहमेव च ।। १५ ।।

खनंति गहने श्वभ्रे कशाभिस्ताडयंति च ।।

तैलद्रोण्यां विपच्यंते तुद्यंते सूक्ष्मसूचिभिः ।। १६ ।।

बाह्यन्ते दुर्वहान्भारान्यमदूतैर्हि पापिनः ।।

ब्रह्महा क्षयरोगी स्यत्सुरापः श्यावदंतकः ।। १७ ।।

स्वर्णापहारी कुनखी दुश्चर्मा गुरुतल्पगः ।।

अपस्मारी गुरुद्रोही चंडालो वेददूषकः ।। १८ ।।

कूटसाक्षी चाक्षिरोगी मंदाग्निश्चाग्रभोजनः ।।

विद्यापहारी मूकः स्यादंधः पुस्तकचोरकः ।। १९ ।।

परदाररतः पंगु बधिरः परनिंदकः ।।

विड्वराहो निराचारो जिह्वारोगी च तस्करः ।। 1.3.2.5.२० ।।

अभ्यागतातिथित्यागी कपोलकंटको भवेत् ।।

पर्वसु स्त्रीरतो मेही पूत्यास्योऽभक्ष्यभक्षकः ।। २१ ।।

मर्यादाभेदको दासस्तटाकारामहृत्खरः ।।

प्रतिश्रुताप्रदाता स्यादल्पायुः श्वा विकत्थनः ।। २२ ।।

विष्णुद्रोही च सरठः शिवद्रोही च मूषकः ।।

एवं पापफलं ज्ञात्वा प्रायश्चित्तं समाचरेत् ।। २३ ।।

तच्चास्मिन्नरुणक्षेत्रे कर्तव्यः सम्यगास्तिकैः ।। २४ ।।

इति निशम्य स दुष्कृतकारिणां बहुविधां नरकेषु नृणां व्यथाम् ।।

चरणयोः पतितश्च तदा पुनःपुनरयाचत तच्छमनक्रियाम्।। २५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे कर्मविपाकवर्णनं नाम पंचमोध्यायः ।। ५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०६



।। नंदिकेश्वर उवाच ।। ।।

विस्तरात्कथयाम्यद्य प्रायश्चित्तं महांहसाम् ।।

सर्वेषामवधत्स्व त्वमवलंब्यास्तिकीं धियम् ।। १ ।।

ब्रह्महा प्राप्य शोणाद्रिं निमग्नः खड्गतीर्थके ।।

जपन्पंचाक्षरं मंत्रं भस्मरुद्राक्षधारकः ।। २ ।।

कृतोपवासः संपूज्य प्रयतः परमेश्वरम् ।।

ब्राह्मणान्भोजयेद्वर्षं भिक्षाशी नियतेंद्रियः ।। ३ ।।

विशेषपूजाशुश्रूषां कुर्याद्देवस्य भक्तितः ।।

ब्रह्महत्या विनिर्मुक्तो ब्रह्मलोके महीयते ।। ४ ।।

सुरापोऽप्यरुणक्षेत्रे वर्षमेकं वसन्प्रति ।।

प्राग्वत्कृतसमाचारः संपूज्यैवं महेश्वरम् ।। ५ ।।

क्षीरेण स्नापयेद्देवं शतरुद्रीयमुच्चरन् ।।

सुरापानोद्भवेनाशु पापेन परिमुच्यते ।। ६ ।।

सुवर्णस्तेयकृच्छोणक्षेत्रे बिल्वदलैर्हरम् ।।

अभ्यर्च्य भोजयेद्विप्रान्पापान्मुच्येत दुष्करात् ।। ७ ।।

गुरुदाररतिर्गत्वा कृत्तिकास्वरुणाचलम् ।।

यथापूर्वं व्रती भूत्वा सहस्रेण प्रदीपकैः ।। ८ ।।

मासत्रयं समाराध्य श्रीशोणाचलशंकरम् ।।

प्रदद्याद्भूषितां कन्यां ब्राह्मणाय सुधीमते ।। ९ ।।

षडक्षरं जपेन्नित्यं तेन मुच्येत पाप्मना ।।

शिवलोके च निवसेदासंसारं न संशयः ।। 1.3.2.6.१० ।।

परदारापहर्त्ता च क्षेत्रेस्मिन्नियतेंद्रियः ।।

मासमेकं नवैः पुष्पैरभ्यर्च्यारुणशंकरम् ।। ११ ।।

माहेश्वराय वितरेद्धनं शक्त्यानुगुण्यतः ।।

तत्क्षणेन विनिर्मुक्तस्तस्मात्पापाद्भविष्यति ।। १२ ।।

गरदोऽप्यरुणक्षेत्रे व्रती भूत्वा यथापुरा ।।

क्षीरोपहारं देवाय दत्त्वा दोषेण मुच्यते ।। ।। १३ ।।

पिशुनोऽप्यरुणक्षेत्रे व्रती वेदरतो नरः ।।

अध्यापयेद्द्विजान्मुख्यांस्ततो निष्कल्मषो भवेत् ।। १४ ।।

अग्निदोऽप्यरुणक्षेत्रे त्रीन्मासान्पूर्ववद्व्रती ।।

दद्याच्छैवाय निर्माय्य गृहं तत्पापशांतये ।। १५ ।।

धर्मनिंदाकरः शोणक्षेत्रे वर्षं व्रती वसन् ।।

सत्रादिकं प्रकुर्वीत यथाशक्त्यघशांतये ।। १६ ।।

पितृद्रोह्यरुणक्षेत्रे तिष्ठन्मासमतंद्रितः ।।

गिरीशाय द्विजेभ्योपि प्रदद्याद्गाः सहस्रशः ।। १७ ।।

ग्रहोपरागकालेषु भोजयित्वा द्विजान्बहून्।।

विमुंचेद्वृषभं नीलं विमुच्येत ततोंऽहसः ।। १८ ।।

स्त्रीघ्नश्चापि शिशुघ्नोऽपि शोणक्षेत्रमुपेयिवान् ।।

व्यतीपाते तिलान्दद्याद्द्विजभ्यो दुरितच्छिदे ।। १९ ।।

प्रच्छन्नपापकृच्छोणक्षेत्रेऽस्मिन्नियतेंद्रियः ।।

गुप्तदानानि कुर्वीत भवेद्वै गतकल्मषः ।। 1.3.2.6.२० ।।

मृषाभाष्यरुणक्षेत्रे षण्मासान्निवसन्व्रती ।।

शोणाचलेश्वरस्तोत्रपाठेन स्यादकल्मषः ।। २१ ।।

कूपादिभेदकृच्छोणक्षेत्रमासाद्य भक्तितः ।।

तटाकान्खानयेत्तत्र ध्रुवं निर्वृजिनो भवेत् ।। २२ ।।

क्षेत्रापहारी देवाय क्षेत्रं दद्यान्महाफलम् ।।

आरामकंटकोप्यस्मै दद्यादुद्यानमुत्तमम् ।। २३ ।।

गृहापहारी कुर्वीत देवस्यायतनं नवम् ।।

अंहसा तेन निर्मुक्तः शिवसायुज्यमाप्नुयात् ।। २४ ।।

परद्रोही वसञ्छोणक्षेत्रे माहेश्वरान्धनैः ।।

प्रीणयित्वा पराँल्लोकान्निःसंशयमवाप्नुयात् ।। २५ ।।

पश्वादिमांसभुक्छोणक्षेत्रे पक्षत्रयं व्रती ।।

प्रीणयेदरुणेशानं सोपहारैर्मनोहरैः ।। २६ ।।

त्रिःशोणाचलनाथेति निनदन्ननघो भवेत्।।

निवसन्नरुणक्षेत्रे पूजयेदरुणेश्वरम् ।।२७।।

अरुणेश्वरमंत्रं च जपेन्मोक्षेच्छुरादरात्।।

यद्यस्याभिहितं तेन पद्भ्यामेव प्रदक्षिणाम्।।२८।।

कुर्वतारुणशैलस्य तत्प्राप्यं शुभमंजसा ।।

श्रुतेषु स्खलितेष्वत्याहिते दुःस्वप्नदर्शने ।। २९ ।।

प्रीत्युत्कर्षेऽपि च बुधैरुच्चार्योऽरुणशंकरः ।।

अपि वर्णाश्रमभ्रष्टः शिवद्रोहरतोऽपि वा ।। 1.3.2.6.३० ।।

त्रीण्यहान्यरुणक्षेत्रे वसन्मुच्येत पातकैः ।।

पार्थिवः शिवलोकोऽयं मूर्त्तमेतत्त्रयीशिरः ।।३१ ।।

एष दक्षिणकैलासो योसावरुणपर्वतः ।।

अन्येषु सिद्धक्षेत्रेषु तपोभिः सिद्धयो नृणाम् ।। ३२ ।।

अस्मिन्स्मरणमात्रेण तारतम्यं विचिंत्यताम् ।।

यद्गंगायां प्रयागे यत्काश्यां वै पुष्करेषु यत् ।। ३३ ।।

कर्म सेतौ च यत्पुंसां शोणक्षेत्रे ततोऽधिकम् ।।

अग्निष्टोमं वाजपेयं वैराजं सर्वतोमुखम् ।। ।। ३४ ।।

राजसूयाश्वमेधौ च कुर्याच्छोणाचले बुधः ।।

एकाहं वारुणक्षेत्रे नरो यत्स्यादुपोषितः ।। ३५ ।।

तस्य चांद्रायणशतं भवेत्सांतपनायुतम् ।।

षोडशापि महादानान्यरुणक्षेत्रसंनिधौ ।। ३६ ।।

अनुष्ठितानि कल्पोक्तं कुर्वंति द्विगुणं फलम् ।। ३७ ।।

इति नंदिकेश्वरमुखेन शुश्रुवान्मुनिनंदनोथ निरयप्रतिक्रियाम्।।

अभिनंद्य तं वद दिनर्तुवत्सरप्रमुखार्हणक्रममिति व्यजिज्ञपत् ।। ३८ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे पापापनोदकप्रायश्चित्तवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।। ।। छ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०७



।। नंदिकेश्वर उवाच ।। ।।

रक्तोत्पलैरर्कवारे यः शोणाद्रीशमर्चयेत् ।।

अवश्यं तस्य सिध्यंति सार्वभौममहर्द्धयः ।। १ ।।

सौम्यवारेऽरुणाद्रीशं कस्तूरीकरवीरकैः ।।

यः पूजयति तस्य स्यात्सत्यलोके सुखासिका ।। २ ।।

गुरुवारे सितांभोजैः शोणेशं वरिवस्यतः ।।

जनलोके चिरं वासः सिद्धैः सह भविष्यति ।। ३ ।।

चंपकैर्मल्लिकाभिश्च शुक्रवारे समर्चयेत् ।।

तपोलोकं प्रपद्येत ब्रह्मर्षिभिरभिष्टुतः ।। ४ ।।

सौरिवारे च जातीभिस्समाराध्यारुणेश्वरम् ।।

न जातु यमलोकानां पापीयानपि कल्पते ।। ५ ।।

प्रथमायां तिथौ देवस्योपहारं समर्पयेत् ।।

यः पायसेन स भवेद्धनधान्यसमृद्धिमान्।। ६ ।।

द्वितीयस्यां तिथौ भक्त्या यो दध्यन्नं निवेदयेत् ।।

स भवेद्भाग्यवाञ्छ्रेष्ठः सोमपाश्च भवेद्ध्रुवम् ।। ७ ।।

तृतीयायां च योऽपूपैः शोणेशं परितर्पयेत् ।।

तस्या व्याहतमारोग्यमाशरीरं भविष्यति ।। ८ ।।

चतुर्थ्यामरुणेशाय पूर्णकुम्भोत्करादिकम् ।।

निवेदयति यस्तस्य भवेत्पूर्णमनोरथः ।। ९ ।।

मुद्गौदनं च पंचम्यामुपहारं प्रकल्पयेत ।।

शोणेश्वराय भक्त्या यः स स्यादक्षय्यवैभवः ।। 1.3.2.7.१० ।।

षष्ठ्यां गुडौदनं दद्यादरुणाचलशम्भवे ।।

भक्त्या यस्तस्य सन्तानो न कदाचित्प्रहीयते ।। ११ ।।

तिलौदनं यस्सप्तम्यां शोणेशाय समर्पयेत् ।।

स दीनोऽप्यधमर्णत्वमयत्नेन व्यपोहति ।। १२ ।।

अष्टम्यां राजशाल्यन्नं यो दद्याच्छोणशम्भवे ।।

तस्य सेवां विनापि स्याद्राजलोको वशीकृतः ।। १३ ।।

गोधूमान्नं नवम्यां च शोणाद्रीशाय योऽर्पयेत् ।।

राजयक्ष्मादयस्तस्य न भविष्यंति जातु च ।। १४ ।।

दशम्यां शोणनाथाय यः करंभं निवेदयेत् ।।

स भवेत्सर्वलोकानां सदैव प्रीतिभाजनम् ।। १५ ।।

पृथुकैरुपहारान्य एकादश्यां प्रकल्पयेत् ।।

अरुणाचलनाथस्य स भवेदकुतोभयः ।। १६ ।।

द्वादश्यां शोणनाथाय सूपौदननिवेदनम् ।।

यः करोति भवेत्तस्य निर्विघातो मनोरथः ।। १७ ।।

यः सक्तूनरुणेशाय त्रयोदश्यां समर्पयेत् ।।

तस्या व्याकुलचित्त्वमश्रांतमपि जायते ।। १८ ।।

अर्पयेच्छोणनाथाय फलानि विविधानि यः ।।

चतुर्दश्यां स मूढोऽपि सिद्धसारस्वतो भवेत् ।। १९ ।।

यः पौर्णमास्यां शोणाद्रिनाथाय विनिवेदयेत् ।।

पनसस्य फलं तस्य चक्षूरोगो न जायते ।। 1.3.2.7.२० ।।

कुह्वां च संगमे भक्त्या कंदमूलादि योऽर्पयेत् ।।

शोणाचलेश्वरायास्य तुष्यंति पितरः किल ।। २१ ।।

अश्विन्यामरुणेशाय दद्याद्वासांसि भक्तिमान् ।।

भरण्यामरुणेशाय दद्यादाभरणान्यपि ।। २२ ।।

कृत्तिकासु प्रदीपांश्च रोहिण्यां रौप्यमर्पयेत् ।।

मृगशीर्षे मलयजमार्द्रायां हरिचंदनम् ।। २३ ।।

पुनर्वसौ मृगमदं पुष्ये कर्पूरमर्पयेत् ।।

काश्मीरोद्भवमाश्लेषे मघायां तुहिनोदकम् ।। २४ ।।

तांबूलं पूर्वफाल्गुन्यां धूपमुत्तरफाल्गुने ।।

कालागुरूंश्च हस्तर्क्षे चित्रायां यक्षकर्दमम् ।। २५ ।।

स्वात्यां सुवासिनीवृंदं विशाखायां प्रकीर्णकम् ।।

मैत्रे मुक्तातपत्रं च ज्येष्ठायां धैनुकान्यपि ।। २६ ।।

मूले मुक्तासरान्पूर्वाषाढे मुकुटमर्पयेत् ।।

रत्नानि चोत्तराषाढे श्रवणे भद्रपीठिकाम् ।। २७ ।।

अष्टापदं धनिष्ठायां वासः शतभिषज्यपि ।।

पूर्वाभाद्रपदे भोगानुत्तरायां तुरंगमान् ।। २८ ।।

रेवत्यां च रथं हैमं प्रदद्याच्छोणशंभवे ।।

दद्यात्कृत्वा महापूजां तत एवार्पयेन्नरः ।। २९ ।।

पूज्यो राशिषु मेषादिष्वरुणेथो विशेषतः ।।

सिंदुवारैः कुरबकैः ककुभैः पाटलैः क्रमात् ।। 1.3.2.7.३० ।।

कुटजैर्नीपकुसुमैर्जीवंतीमल्लिकादिभिः ।।

सरोरुहैर्दमनकैर्नद्यावर्तसरोरुहैः ।। ३१ ।।

पंचामृतेन स्नपयन्नुभयोरुपरागयोः ।।

पंचाक्षरेण कुर्वीत शोणनाथस्य भक्तितः ।। ३२ ।।

स्नपनं पञ्चगव्येन द्वयोरयनयोरपि ।।

षडक्षरेण कुर्वीत गव्येन स्नपनक्रियाम् ।। ३३ ।।

प्रणवेनैव कुर्वीत क्षीरेण स्नपनक्रियाम् ।।

अरुणाचलनाथस्य भक्त्या विषुवयोर्द्वयोः ।।।। ३४ ।।

प्राह्णे स्याद्रुद्रतुलसी मध्याह्ने कृतमालकम् ।।

अपराह्ने मल्लिका च शोणाद्रीशस्य शस्यते ।।३५।।

अद्धोदये च स्नपयेत्सहस्रकलशोदकैः ।।

शतरुद्रीयमुच्चार्य श्रीशोणाचलशंभवे ।। ३६ ।।

शिवरात्रौ विशेषेण त्रिशिखैर्बिल्वपत्रकैः ।।

कमलैः कर्णिकारैश्च जागरूको यतेंद्रियः ।। ३७ ।।

गीतवादित्रनृत्यैश्च दिव्यागमविधानतः ।।

पूजयेदपवर्गार्थं शोणशैले महेश्वरम् ।। ३८ ।।

मासि पौषे च देवस्य कुर्यादाग्नेयमुत्सवम् ।।

नवान्नैरुपदंशाद्यैर्व्याहृतीरुच्चरन्बुधः ।। ३९ ।।

वैशाखे च विशाखायां शिवतंत्रानुसारतः।।

शोणाचलेश्वरस्यास्य कुर्याद्दमनकोत्सवम् ।। 1.3.2.7.४० ।।

प्राबोधिक मार्गशीर्षे प्रातर्निर्माय सामभिः ।।

महापूजां प्रकुर्वीत शोणशैलस्य भक्तिमान् ।। ४१ ।।

शनिप्रदोषेष्वार्द्रासु व्यतीपातेषु पर्वसु ।।

सोमार्कवारयोश्चार्चेच्छोणाद्रीशं यथागमम ।। ४२ ।।

दीक्षोपनयनोद्वाहपुत्रजन्मादिकेष्वपि ।।

विशेषपूजां कुर्वीत शोणनाथस्य भक्तिमान् ।। ४३ ।।

अपि स्वजन्मनक्षत्रे संपत्स्वापत्सु भीतिषु ।।

प्रवेशनिर्गमनयोश्चार्चनीयोऽरुणेश्वरः ।। ४४ ।

व्रतिचक्रागमे पादबंधने नववैभवे ।।

अरुणेशार्चनं कुर्यादभियानेषु च द्विषाम्।। ४५।।

स्मरेदतिदवीयांश्चेत्पश्येत्पर्यंतगो यदि ।।

स्थितश्चेदरुणक्षेत्रे त्रिकालं पूजयेच्छिवम् ।। ४६ ।।

किमन्यद्वद वत्सेति उद्धृत्य भुजमुच्यते ।।

अरुणक्षेत्रतो नान्यदलं स्वर्गापवर्गयोः ।। ४७ ।।

स्मरणेन मनःश्रोत्रे श्रवणाद्दर्शनादृशौः ।।

जिह्वां च कीर्तनाच्छोणक्षेत्रं सद्यः पुनात्यलम्।। ४८ ।।

अरुणेस्मिन्महाक्षेत्रे देहिभिर्लब्धजन्मभिः ।।

जीवद्भिर्लभ्यते भोगो मोक्षश्चोन्मुक्तजीवितैः । ४९ ।।

अन्यत्र मुक्तदेहानामप्यत्र श्राद्धकर्मणा ।।

अपि पापात्मनां पुंसामपवर्गो भविष्यति ।। 1.3.2.7.५० ।।

अयोध्यां मथुरां मायां काशीं कांचीमवंतिकाम् ।।

द्वारकां चारुणक्षेत्रमतिशेते न संशयः ।। ५१ ।।

इत्युक्तवंतं च शिलादपुत्रं मृकण्डुसूनुः पुनरप्युवाच ।।

माहात्म्यमेतन्महनीयकीर्ते भूयोपि पृच्छामि वदस्व मह्यम् ।। ५२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे काम्यकर्मवर्णनं नाम सप्तमोऽध्यायः।। ७ ।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०८



।। नंदिकेश्वर उवाच ।। ।।

अरुणाचलमाहात्म्यं विस्तरात्परिपृच्छता ।।

मार्कंडेय त्वया मन्ये मयि न्यस्तो महान्भरः ।। १ ।।

स्थाने कुतूहलाक्षिप्तं मनस्तव महामते ।।

यः शोणाद्रीशचरितं न वेत्ति स नरः पशुः ।। २ ।।

कथं वा शक्यते वक्तुं जानानरपि कात्स्न्र्यतः ।।

शोणाचलजुषः शंभोर्माहात्म्यं महितोदयम् ।।३।।

कथं वा श्रुतमप्येतदाश्चर्यरसभावितैः ।।

अशेषमवधार्येत प्रज्ञावत्प्रवरैरपि ।।४।।

इदानीं स्मर चित्रं तु चरित्रं स्मरवैरिणः ।।

परामृतानुभूत्येव सत्यं नृत्यति मे मनः ।। ५ ।।

अद्भुतं शिवचारित्रमास्कंदितमनोहरम् ।।

मम वर्णयितुं कात्स्न्र्यान्नैव शक्नोति शेमुषी ।। ६ ।।

तथाप्येष प्रवक्ष्येऽहमंशांशेन यथामति ।।

पुण्यं शोणाद्रिनाथस्य माहात्म्यं श्रूयतां मुने ।। ७ ।।

पुरादिदेवकल्पादौ निर्विकल्पो महेश्वरः ।।

स्वेच्छया सकलं विश्वं पुनरप्युदभावयत् ।। ८ ।।

उद्भावितं च तद्विश्वं स्रष्टुं पातुं च सर्वदा ।।

अन्विच्छन्नादिदेवोऽसौ ब्रह्मविष्णू विनिर्ममे ।। ९ ।।

असृजद्दक्षिणांगेन त्र्यंबकः परमेष्ठिनम् ।।

विष्टरश्रवसं देवो वामांगेन च सृष्टवान् ।। 1.3.2.8.१० ।

ब्रह्माणं रजसा विष्णुं सत्त्वेन समयूयुजत् ।।

नियुक्तौ देवदेवेन तौ विरंच्यच्युतावुभौ ।। ११ ।।

ईशाते सर्वजगतां सृष्टिरक्षाविधानयोः ।।

मनसैव मरीच्यादीन्ससर्ज ब्राह्मणान्दश ।। १२ ।।

दक्षं च दक्षिणांगुष्ठात्सृष्ट्यै प्रावर्तयद्विधिः ।।

मुखेन ब्राह्मणान्दोर्भ्यां क्षत्रियानूरुतो विशः ।। १३ ।।

शूद्रांश्च पद्भ्यां निरमात्स्वयं च कमलासनः ।।

मरीचितनयाज्जज्ञुः कश्यपादसुरास्सुराः ।। १४ ।।

मरुतः फणिनो गृध्रा गंधर्वासरसोऽपि च ।।

मनुश्च यस्य संतानो मानवोऽयं प्रवर्त्तते ।। १५ ।।

नानाज्ञातित्वमापाद्य नानाकर्मप्रवर्तकाः ।।

अत्रेश्च समभूदार्षं क्षात्रं च द्विविधं कुलम् ।। १६ ।।

पुलस्त्यपुलहाभ्यां च जज्ञिरे यक्षराक्षसाः ।।

उतथ्यगीष्पतिमुखा जज्ञिरेंऽगिरिसो मुनेः ।। १७ ।।

भृगोरग्निः समुदभूच्च्यवनाद्यास्तथर्षयः ।।

वसिष्ठप्रमुखेभ्यश्च संबभूबुर्महर्षयः ।।

यत्पुत्रपौत्रैर्भुवनमिदमापूर्यतेऽखिलम् ।। १८ ।।

एवं ब्रह्माऽऽत्मजैः स्वीयैरिदमापूरयज्जगत् ।।

कालेन वैभवेनापि विसस्मार महेश्वरम् ।। १९ ।।

अच्युतोऽपि भृगोः पुत्रीमुद्वाह्य कमलालयाम् ।।

मत्स्यादिरूपो जगति भवन्नास्मरदीश्वरम् ।। 1.3.2.8.२० ।।

सृष्टिस्थितिभ्यां द्रुहिणाब्जनाभौ स्वाधीनतां नूनमुपागताभ्याम् ।।

अतीव गर्वं दधतुर्न कस्य मदोऽधिकारेण भवेन्नरस्य ।। २१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखंडेऽरुणाचलमाहात्म्य उत्तरार्धे सृष्टिवणर्ननामाष्टमोऽध्यायः ।। ८ ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ०९



।। नंदिकेश्वर उवाच ।। ।।

अहमेव प्रभुरिति प्ररूढाधिकगर्वयोः ।।

विरंच्यप्युतयोरासीद्विवादो मोहसंभवः ।। १ ।।

रजोविकाराभ्यधिको बाह्ये नील इवोत्थितः ।।

विश्वसृष्टिकरो विष्णुं विरंच्योऽब्रूत गर्वतः ।। २ ।।

।। ब्रह्मोवाच ।। ।।

कथं त्वमधिकश्चासि विष्णो जनयितुर्मम ।।

पितामहस्य लोकानां किमेवमतिमोहितः ।। ३ ।।

त्वत्त एवोदितौ दैत्यौ निहत्य मधुकैटभौ ।।

दैत्यारिरिति मुग्ध त्वं गर्वं वहसि केशव ।। ४ ।।

त्वामेव सृजतो नित्यं बहुधा मम वेधसः ।।

अद्याप्यायासजां पीडां न परित्यजतः करौ ।। ५ ।।

मम श्रमांभसोद्भूते महांभोधौ निमज्जतः ।।

नैयग्रोधं न चोत्पन्नं कुतस्तेऽस्त्ववलंबनम्।। ६ ।।

मदुपज्ञे महांभोधौ स्रवते कोऽपि पन्नगः ।।

तदाश्रयस्त्वमूर्ध्वं ते पद्मं तच्चासनं मम ।। ७ ।।

कुतस्तमोमये ब्रूहि त्वयि सत्त्वगुणोदयः।।

स वेत्सि किं त्वं प्रकृतिं निद्राजडिमनिर्भरः ।। ८ ।।

जलाशये प्रस्वपता दैत्यभीत्या जनार्दन ।।

कथं त्वया रक्षितासौ मदधीना जगत्त्रयी ।। ।। ९ ।।

चतुर्भ्यो मम वक्त्रेभ्यो वेदाः समुदयं गताः ।।

चैतन्यरूपिणी शक्तिः कलत्रं मे सरस्वती ।। 1.3.2.9.१० ।।

मया हि सृज्यते विश्वमिदं स्थावरजंगमम् ।।

रक्ष्यते च तदिन्द्राद्यैर्मामकैःपुत्रपौत्रकैः।।११।।

ततः कथय वैकुंठ मन्नियोज्येषु कश्चन ।।
जगतामीश्वरान्मत्तः कथं नामातिरिच्यसे ।।१२।।
।। ।। नंदिकेश्वर उवाच ।। ।।
इत्थं सरोषसंरंभे विधौ पौरुषभाषिणि ।।
नारायणोऽपि सासूयं स्मित्वैवं समभाषत ।। १३ ।। ।।
।। विष्णुरुवाच ।। ।।
विरंचे मुंच संरंभं वृथा खलु विकत्थसे ।।
नाभीसरोजसंजातो मम त्वमवधारय ।। १४ ।।
योगनिद्रां मयोन्मुच्य पुरा ह मधुकैटभौ ।।
न चेद्यन्मथितौ ताभ्यां तथैव स्याः प्रणाशितः ।। १५ ।।
सोमकप्रमुखान्दैत्यान्हंतुमात्मेच्छया मम ।।
धृतमत्स्यादिरूपस्य को वान्यः सृष्टिकारणम् ।। १६ ।।
न किंचिदपि पश्यंति रजसारूढदृष्टयः ।।
रजोमयेन भवता किं निरूपयितुं क्षमम् ।। १७ ।।
अविनाभाविनी शक्तिर्ननु मे पद्मवासिनी ।।
यस्याः कटाक्षमात्रेण जगवितयमेधते ।। १८ ।।
भूतान्यमूनि कालोऽयमात्मनोप्यहमेव हि ।।
मया विरहितं कि वा त्रिषु लोकेषु विद्यते ।। १९ ।।
प्र आदित्या वसवो रुद्रा दिक्पाला मनवोऽप्यहम् ।।
भूर्भुवःस्वस्त्रयीमेनां मदधीनां विचिंतय ।। 1.3.2.9.२० ।।
ममैव विनियोगेन सृष्टिशक्तिः स्वयं स्थिता ।।
तन्मे त्रैलोक्यनाथस्यकि त्वंज्येष्ठः समोऽथवा ।। २१ ।। ।। ।।
।। नंदिकेश्वर उवाच ।। ।।
एवं मोहांधमनसोरन्योन्यं प्रतिगर्जतोः ।।
ययावनल्पसमयःसवर्तसदृशस्तयो. ।। २२ ।।
उदयास्तमयौ स्यातां न तदा चंद्रसूर्ययोः ।।
नक्षत्राणि च ताराश्च ग्रहाश्च क्षीणतां ययुः ।। २३ ।।
नाववुर्मरुतो वा न जज्वलुर्जातवेदसः ।।

नांतरिक्षं न च क्षोणी न दिशोऽपि चकाशिरे ।। २४ ।।

समुद्राश्चुक्षुभुस्सर्वे पर्वताश्च चकंपिरे ।।

औषध्यः शोषमासेदुरवसेदुश्च जंतवः ।। २५ ।।

पक्षमासर्तुवर्षादिकालस्य नियमो गतः ।।

अहोरात्रव्यवस्थापि प्रणाश समुपाययौ ।। २६ ।।

इन्द्रादयो लोकपाला मरीच्याद्या महर्षयः ।।

सर्वेप्यकाले संप्राप्तं कल्पांतं मेनिरे तदा ।। २७ ।।

एवं जाते महाक्षोभे भूताक्रन्दप्रचोदितः ।।

भूतनाथो जगज्जातमविद्यायामबुध्यत ।। २८ ।।

व्यचिंतयच्च विश्वात्मा विश्वसंरक्षणोद्यतः ।।

अवाह्यया दृशाऽपश्यदनयोमोहकारणम् ।। २९ ।।

स्वामिनं सकलैश्वर्यदातारं मां मदोद्धतौ ।।

विस्मृत्य स्वं स्वमेवैतावमंसेतां जगत्प्रभू ।। 1.3.2.9.३० ।।

अहो मोहस्य माहात्म्यं वदिमौ द्रुहिणाच्युतौ ।।

जानानावपि मां सम्यगभूतामेवमुद्धतौ ।। ३१ ।।

अज्ञानतिमिरोद्भूति दूषिताशयलोचनः ।।

जनः प्राप्तं स्तुतमपि प्रायो वस्तु न पश्यति ।। ३२ ।।

कृतापराधावप्येतौ निमग्नौ मोहसागरे ।।

मया नोपेक्षणीयौ हि लोकानां हितकाम्यया ।। ३३ ।।

इति निश्चित्य मनसा माया वैवश्यमेतयोः ।।

देवो दयामहांभोधिर्व्यपोहयितुमैहत ।। ३४ ।।

अहोऽनुकम्पा तरुणेंदुमौलेः स्वभावसिद्धा भुवनत्रयेऽस्मिन् ।।

असौ प्रमोहांबुधिमध्यतोभूदाविर्निरस्तावपि धातृविष्णू ।। ३५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे शिवविष्णुविवादवर्णनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १०



।। ।। मार्कण्डेय उवाच ।। ।।

आज्ञापय विभो मह्यं यथा शंभुः सनातनः ।।

अनुजग्राह मोहांधो वैकुण्ठपरमेष्ठिनौ ।। १ ।।

।। नंदिकेश्वर उवाच ।। ।।

शृणुष्व सर्वं वक्ष्यामि विस्तरेण यथातथम् ।।

यदेव देवो विदधे दयया भक्तवत्सलः ।। २ ।।

अथोदस्थात्तयोर्मध्ये तथा विवदमानयोः ।।

ज्योतिःस्तंभत्वमभ्येत्य रोदोरंध्रनिरोधकः ।। ३ ।।

महता जृंभमाणेन तस्य ब्रह्मांडभेदिनः ।।

अन्तरिक्षमतिश्यामं समुत्क्षिप्तमिवाभवत ।। ४ ।।

विष्वग्विवर्णता तस्य ज्योतिर्लिंगस्य तेजसा ।।

दिशो विरेजिरे सद्यो दूरविस्तारिता इव ।। ५ ।।

तीव्रैस्तस्य महाज्वालैः शोषिता इव सागराः ।।

विमुक्तवीचिसंक्षोभाः स्वामेव प्रकृतिं ययुः ।। ६ ।।

व्यद्योतंत दिवि प्राग्वद्ग्रहास्तारागणैः सह ।।

तेजःस्तंभात्समुद्भिन्नाः स्फुलिंगा इव केचन ।।७।।

तेजसा तस्य शोणेन गैरिकेणेव रंजिताः ।।

भौमरविश्रियं सर्वेऽप्यवहन्नवनीभृतः ।।८।।

समुद्रास्तत्प्रतिच्छायानिर्भराश्लिष्ट यादसः ।।

पद्मरागशिलाखण्डे घटिता इव रेजिरे ।। ९ ।।

प्रवालगुच्छैः प्रत्यग्रैर्लंबिता इव पादपाः ।।

नद्यश्च निर्भरोत्फुल्लकह्लारा इव रेजिरे।। 1.3.2.10.१० ।।

मही कुंकुमलिप्तेव दिशः सिंदूरिता इव ।।

सर्वारुणमिव व्योम समगत्प्रत्यदृश्यत ।। ११ ।।

ब्रह्मांडकर्परमभूत्तन्महः पूरितांतरम् ।।
शोणितेनेव संपूर्णं कपालं कृत्तिवाससः ।। १२ ।।
एवं प्रवर्द्धमानेन तेजःस्तम्भेन तेन च ।।
अरुणाकारतां भेजे विश्वं स्थावरजंगमम् ।। १३ ।।
तेजोलिंगं तदाश्चर्यं दृष्ट्वा त्यक्तमिथः क्रुधौ ।।
अचिंतयेतामेकैकं चतुर्मुखचतुर्भुजौ ।। १०२ ।।
किमेष वसुधां भित्त्वा शेषादीनां फणाभृताम् ।।
फणामाणिक्यमहसां राशिरुन्मुखतां गतः ।। १५ ।।
किं वा कल्पांतसुलभप्रादुर्भावाः प्रभाकराः ।।
द्वादशापि नभोभूम्योर्मध्ये युगपदुत्थिताः ।। १६ ।।
आहोस्विन्मेघ संघर्षाद्वितता व्योममध्यतः।।
अन्योन्यं मिलिताः क्षिप्रा निपतंत्यवनीतले ।। १७ ।।
प्रतिघ्नन्नेष तेजोभिरक्ष्णोः शक्तिमनुक्षणम् ।।
स्वनिर्विशेषिताशेषभूतजालः प्रवर्द्धते ।। १८ ।।
एष उद्दीप्यमानोऽपि संतापाय न कल्पते ।।
नेदीयांस्यपि भूतानि न निर्दहति वह्निवत् ।। १९ ।।
एतस्य कांतिसंक्रांत्या जगदेव न केवलम् ।।
मदीयमपि शोणत्वमनुप्राप्तमहो वपुः ।। 1.3.2.10.२० ।।
कस्मादेष समुत्पन्नः किं मूलः किमुपाधिकः ।।
कुतस्त्यः किमुपादानः कया भक्त्या प्रकाशते ।। २१ ।।
कियानवधिरेतस्य विष्वक्तिर्यगधोर्ध्वतः ।।
अवगाढश्च पातालं कियन्मात्रमसाविति ।। २२ ।।
तदेतदखिलं ज्ञातुं मनः पर्युत्सुकं मुहुः ।।
इच्छत्युत्पतितुं व्योम प्रवेष्टुं च रसातलम् ।। २३ ।।
इति चिंताभराक्रांतौ तेजःस्तंभावलोकनात् ।।
उभावप्यवकुलितौ वैकुण्ठपरमेष्ठिनौ ।। २४ ।।
अभाषत च गोविंदः सुतरामेव गर्वितम् ।।
हिरण्यगर्भमालोक्य स्मयमानमुखांबुजः ।। २५ ।।

।। विष्णुरुवाच ।। ।।

अयमेवावयोर्ब्रह्मन्नन्योन्योत्कर्षकांक्षिणोः ।।

सत्यमेव परीक्षायै निकषः समुपस्थितः ।। २६ ।।।

अमुष्य तेजसां राशेरपरिच्छेद्यसंपदः ।।

आद्यंतौ ज्ञातुमेकेन न शक्यं ध्रुवमावयोः ।। २७ ।।

यः पश्येन्मूलमग्रं वा तेजसोस्य स्वयंभुवः ।।

स एव नावभ्यधिको जगतां नाथकोऽपि सः ।। २८ ।।

।। नंदिकेश्वर उवाच ।। ।।

इत्युभावपि विनिश्चिताशयौ मूलमग्रमपि तस्य वीक्षितुम् ।।

तेजसोतिमहतो बभूवतुः स्पर्धया विरचितोद्यमौ मिथः ।। २९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे ब्रह्मविष्णवोर्मध्ये तेजोमयलिंगप्रादुर्भाववर्णनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः ११



।। नंदिकेश्वर उवाच ।। ।।

अथ हंसाकृतिं व्योमपदवीलंघनक्षमाम् ।।

भेजे विरंचिस्तस्याग्रं द्रक्ष्यामीति कृतोद्यमः ।। १ ।।

जग्राह विष्णुर्वाराहं विग्रहं दृढविग्रहः ।।

विश्वंभराविनिर्भेद क्रीडासुलभवैभवम् ।। २ ।।

मूलं तस्य परिज्ञाय प्रत्यावर्तितुमुत्सुकः ।।

कृत्रिमस्तब्धरोमैष दंष्ट्राभ्यामभिनन्महीम्।।३।।

विदारयन्स पोत्रेण भूतधात्रीमवाङ्मुखः ।।

महावराहो ददृशे तेजस्तंभं नमन्निव ।।

क्रीडाक्रोडकठोरेण कंठघोषेण पूरयन् ।।

पातालं बहुलोत्साहः प्रवेष्टुमुपचक्रमे ।।५ ।।

विवेश यत्रयत्रासौ तत्रतत्र तथास्थितम् ।।

अवैक्षिष्टानलस्तंभं तमेव कुहनाकिटिः ।।६।।

विदारितान्महीरंधात्प्रत्यदृश्यंत भोगिनः ।।

प्ररोहा इव शेषाद्यास्तेजःस्तंभस्य केचन ।।७।।

प्रत्यदृश्यत हेमाद्रेर्मूल कन्द इव स्थितः ।।

आधारतां गतो दृष्टो ह्यच्युतेनादिकच्छपः ।। ८ ।।

आराद्वसुन्धरागुल्फे धुरंधरतया स्थिताः ।।

दिक्सिंधुराश्च दृश्यंते मदमंथरबंधुराः ।। ९ ।।

मधुद्विषा च स महान्मंडूकोऽपि विलोकितः ।।

अखंडमंडलं भूमेर्यस्य पृष्ठे प्रतिष्ठितम् ।। 1.3.2.11.१० ।।

आधारशक्तिमपि तामभ्यपश्यदधोक्षजः ।।

यदनुग्रहतः शेषकूर्माद्या अपि धूर्वहाः ।। ११ ।।

अतलं वितलं चैष सुतलं नितलं तथा ।।

तलातलं च प्रतलं महातलमिति क्रमात् ।।।। १२ ।।

ददर्श सप्त पातालानपि वारिजलोचनः ।।

तत्रत्यान्विविधाकारान्सर्वानपि सविस्मयः ।। १३ ।।

अत्यगाद्भोगवत्याख्यां पुरीं वैरोचनीमपि ।।

जगाहेन्यांश्च दैत्यानामावासानतिगह्वरान् ।। १४ ।।

इदं दृष्टमिदं दृष्टमित्युपारूढकौतुकः ।।

मूलं मुग्धाशयस्तस्य विचिनोति स्म माधवः ।। १५ ।।

अधस्तादपि गाढेन पयोधेस्तेन पोत्रिणा ।।

तथैव तेजःस्तंभः स निर्विकारमवैक्ष्यत।।१६।।

दलिता केवलं पृष्वी पाथोराशिर्विलोलितः।।

नैवालोक्यत तन्मूलं कोलरूपेन विष्णुना ।। १७ ।।

इत्थं वर्षसहस्राणि भ्रांत्या संभ्रांतमानसः ।।

नालं बभूव तन्मूलं लीलाक्रोडो विलोकितुम् ।। ।। १८ ।।

अवरुग्णखुरः क्षुण्णदंष्ट्रो विध्वस्तविग्रहः ।।

भग्नपोत्रः स भूदारो जगाहे बहलं श्रमम् ।। १९ ।।

श्रांत्या निश्वसतस्तस्य तादृग्दर्पो विशृंखलः ।।

ननाश तत्क्षणात्साकं तन्मूलावेक्षणेच्छया ।। 1.3.2.11.२० ।।

अनिर्व्यूढप्रतिज्ञोऽपि प्रत्यावर्तितुमुत्सकः ।।

न चक्षमे सरोजाक्षश्चलितुं च पदात्पदम् ।। २१ ।।

श्रमांधचक्षुषस्तस्य पातालांतरवर्त्तिनः ।।

तत्तेज एव पंथानं पुनरप्युदभावयत् ।। २२ ।।

कथंकथंचिदुत्तीर्णो ऽप्यकूपारादपारतः ।।

स्वेदांभःसागरस्रावे मग्नोऽभूच्छद्मशूकरः ।। २३ ।।

रज्ज्वेव तेजःस्तंभस्य प्रभया सानुबद्धया ।।

लब्ध्वाचलं वनं कष्टं न्यवर्त्तिष्ट जनार्दनः ।। २४ ।।

नावैक्षि यन्मया मूलममुष्य महसां निधेः ।।

ततः स्रष्ट्रापि नो दृष्टः शिरोभागः कथंचन ।। २५ ।।

अमुष्य महसां राशेः प्रागभूद्यत्र संभवः ।।

ततो निवृत्त्य यास्यामि शरणं शिवमीश्वरम् ।।२६।।

स हि विश्वाधिको देवश्चिरं मोहांधचक्षुषा ।।

यद्विस्मृतो मया तस्माद्दुर्विपाकोऽजनीदृशः ।। २७ ।।

एवं विनिर्धार्य विमुक्तदर्पो निवृत्तवानाशु सरोरुहाक्षः ।।

तमेव देशं प्रबभूव यत्र स्तंभः स तेजोमयतां दधानः ।। २८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे विष्णुना लिंगाधोभागशोधनवर्णनंनामैकादशोऽध्यायः ।।।। ११ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १२

https://sa.wikisource.org/s/ewf

< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। नंदिकेश्वर उवाच ।। ।।

ततस्तेजोमयं स्तंभमनुसृत्य पितामहः ।।

उत्पपातोन्मुखो वेगान्निरालंबे नभस्तले ।।१।।

द्रुतमुत्पततस्तस्य पक्षावेगेन वारिताः ।।

व्यशीर्यत समुद्वर्ताः प्रणुन्ना इव वायुभिः।।२।।

स वेगादुत्पतन्दूरं नाक्ष्णोर्विषयतामगात् ।।

केवलं दीर्घदीर्घैव रेखा व्योम्नि व्यभाव्यत।।३।।

मायामरालो ददृशे तेजःस्तंभस्यपार्श्वतः।।

संध्यापयोधराभ्यर्णचारीव रजनीकरः।।४।।

प्रागत्यगादुत्पततां ततोऽध्वानं पयोमुचाम्।।

विमानपदवीं पश्चात्तारावर्तं ततः परम् ।।५।।

तेजसां यानि धामानि ह्यत्युच्चान्यूर्ध्वचारिणाम् ।।

अतिचक्राम वेगेन तान्यसौ कुहनाखगः ।। ।। ६ ।।

मरुतो मनसो वापि जवः सूक्ष्मतराकृतेः ।।

सोऽभूदधःकृतस्तेन हंसेन गमनादिना ।। ७ ।।

यथायथा चोत्पपात सुदूरं श्रमितच्छदः ।।

तथातथा च ददृशे तेजःस्तंभः समुन्नतः ।। ८ ।।

अतीत्य मरुतां स्कंधान्सप्त संप्राप्तविस्मयः ।।

बिभेदांडकटाहं च ज्वलंतं तमुदैक्षत ।। ९ ।।

कथं वाऽदृष्टमूलस्य स्थातव्यं पुरतो हरेः ।।

अविमोचयतः शौरेरसमासमशीर्षताम् ।। 1.3.2.12.१० ।।

अनिर्व्यूढप्रतिज्ञस्य दीर्घैः किं वा ममासुभिः ।।

तदत्रौपयिकं किं स्यात्कार्यं का मा गतिर्मम ।।११।।

अतिसंधित्सतो विष्णुं कस्सहायो भविष्यति ।।

आर्जवं नैव निर्जेतुं प्रतिवादिनमक्षमः ।। १२ ।।

छद्मना वा तिरस्कुर्यान्माना हि महतां धनम् ।।

इति संचितयत्येव विरिंचौ व्याकुलात्मनि ।। १३ ।।

आकाशे ददृशे नातिदूरे किमपि निर्मलम् ।।

ऐंदवी किमियं रेखा तस्याः कथमिहागमः ।। १४ ।।

यद्वा मृणालं तत्सिंधौ वियत्यस्यां कुतस्तु सः ।।

इति तस्मिन्ससंदेहे नेदीयस्तं तदागतम् ।। १५ ।।

अबोधि केतकीबर्हमिति राजीवजन्मना ।।

तत्पर्युषितमप्युद्यत्सौरभं वस्तुशक्तितः ।। १६ ।।

हिरण्यगर्भो विमलमगृह्णात्केतकच्छदम् ।।

गृहीतमात्रं तेनैतत्सचैतन्यं किलाब्रवीत् ।। १७ ।।

।। केतक उवाच ।। ।।

भो गृह्णासि किमर्थं त्वं मुंच मां विश्रमोद्यतम् ।।

वर्षाणां शतसाहस्रमुत्पत्यैवं विहायसा ।। १६ ।।

।। नंदीश उवाच ।। ।।

तथा समेधमानं तं दृष्ट्वा श्रममखिद्यत ।।

अचिंतयत्पद्मसूतिरत्यंतं विहताशयः ।। १९ ।।

अनिर्व्यूढप्रतिज्ञावान्नीचतामपि संश्रितः ।।

आक्रांतरोदोविवरः क्व राशिस्तेजसामसौ ।। 1.3.2.12.२० ।।

अहमेतत्परीक्षायां क्व परिच्छिन्न पौरुषः ।।

भज्येते इव मे पक्षौ दृशा चांधायते इव ।।

प्रध्वंसंत इवांगानि पतामीवाहमप्यधः ।। २१ ।।

किं वान्यद्बहुनोक्तेन सह निश्वासवायुभिः ।।

मम प्राणाश्च नियतं निर्गच्छंतीव सांप्रतम् ।। २२ ।।

अहंकारमदग्रंथिरयं त्रुटतु चित्ततः ।।

मुकुंदेन सह स्पर्धा सा च शीघ्रं प्रणश्यतु ।। २३ ।।

यदेष रोदःकुहरपरिणाहाधिकोद्यमः ।।

औन्नत्यमयतेऽद्यापि तेजस्तंभो यथा पुरा ।। २४ ।।

तदस्य तेजसां राशेर्नाहं नारायणोऽथवा ।।

कारणं दूरतश्चान्ये महेंद्रप्रमुखाः सुराः ।। २५ ।।

इतो नोत्पतितुं शक्तिरस्ति मे तन्निवर्त्तये ।।

इति निश्चित्य मनसा विधाता जातविस्मयः ।। २६ ।।

प्रत्यभाषत तं कस्त्वं कुतो वा प्राप्तवानिति ।।

स च प्रत्यब्रवीदेनं वेधसं केतकच्छदः ।। २७ ।।

केतकच्छद एवासं सचैतन्यः शिवाज्ञया ।।

तेजस्तंभात्मनः शंभोरस्य मूर्ध्नि चिरं स्थितः ।। २८ ।।

भूलोक इच्छया वस्तुं ततः संप्राप्तवानहम् ।।२९।।

इत्थं श्रुत्वा केतकीबर्हवाचं लब्ध्वाश्वासं तं किलांभोजभूतिः ।।

ब्रूहि त्वं मे तत्कियत्यंतरे वा तेजःस्तंभस्याग्रमित्यावभाषे ।। 1.3.2.12.३० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे ब्रह्मणा लिंगोपरिभागशोधनवर्णनंनाम द्वादशोऽध्यायः ।। १२।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १३



।।नंदिकेश्वर उवाच ।। ।।

केतकीबर्हमप्येनं विहस्य पुनरब्रवीत् ।।

।। केतक्युवाच ।। ।।

अपि मूढ न किंचित्त्वं वेत्सि कस्त्वं कुतो न तत् ।। १ ।।

ईदृश्यः परितो लग्ना यस्मिन्ब्रह्मांडकोटयः ।।

तस्य प्रमाणमेतावदिति को वेदितुं क्षमः ।।२।।

चतुर्युगायुतैर्यातं ततो निपततो मम।।

इदानीमपि नाप्नोति तन्मध्यं किल भूतलम् ।।३।।

इति ब्रुवाणमेनं च नमस्कृत्य सरोजभूः।।

हित्वा निजमहंकारमभाषत कृतांजलिः।।४।।

ब्रह्मोवाच।।

महात्मन्सत्यमेवास्मि मूढोऽहं केतकच्छद।।

ब्रह्मणा हि मया स्पर्द्धा विष्णुना सह निर्मिता।। ५।।

द्वाभ्यामपीदमावाभ्यां विस्मृतं शिववैभवम्।।

यन्नौ महानभूद्गर्वस्सर्गसंत्राणमात्रतः।। ६।।

ह्रेपणी संकथा तावदास्तामद्याप्यहं यतः ।।

स्पर्द्धया न विमुक्तोऽस्मि बद्धया गरुडध्वजे ।। ७ ।।

सख्यं साप्तपदीनं हि कथ्यते तद्भवान्मयि ।। ८ ।।

असंस्तुतधियं हित्वा कर्तुमर्हस्यनुग्रहम् ।।

अहं विष्णुश्च मोहांधौ तेजःस्तंभस्य वीक्षणात् ।। ९ ।।

हंसकोलाकृती दध्वो मिथः साम्यं व्यपोहितुम् ।।

मूलं दिदृक्षुः स दशां कीदृशीं यातवानिति ।। 1.3.2.13.१० ।।

न जाने मम चास्याग्रं दिदृक्षोरीदृक्षी दशा ।।

गतमुड्डीयमानस्य मे सहस्रेण हायनेः ।। ।। ११ ।।

जातश्रमोऽस्मि नितरां वियुज्य इव चासुभिः ।।

दिष्ट्याद्य भद्र लब्धस्त्वं मयाऽऽलंबोवसीदताम्।। १२ ।।

तन्मे कुरुष्व मित्रस्य सफलां याचनामिमाम् ।।

सखाहं सहसंजल्पादस्मि दासोनुषंजनात् ।। १३ ।।

तत्त्वया करणीयैवं प्रार्थनैषा कृतांजलिः ।।

यदि पश्यति मूलं स जितोऽहममुना तदा ।। १४ ।।

यद्वा न पश्यति तदाप्यस्मि साम्यमुपेयिवान् ।।

इदं द्वयमपि प्रायो ममातिह्रेपणं सखे ।। १५ ।।

त्वयैव परिहार्यत्वमिदानीं समुपागतम् ।।

अनृतामभिभाष त्वमुचितां च सुहृत्कृते ।। १६ ।।

गिरमेकामिमामग्रे चक्रपाणेरुदीरय ।।

एष हंसाकृतिर्ब्रह्मा तेजःस्तंभस्वरूपिणः ।। १७ ।।

अत्युच्चं दृष्टवानग्रमत्र साक्ष्ये स्थितोऽस्म्यहम् ।।

तेनापि तेजःस्तम्भत्वमेयुषा चन्द्रमौलिना ।। १८ ।।

संभावितोयं सुतरां पित्रेव हि पितामहः ।।

अतोऽयमेवाभ्यधिको भवतो विष्टरश्रवाः ।। १९ ।।

इत्युक्त्वा मम साहाय्यं सुमहत्क्रियतां त्वया ।। 1.3.2.13.२० ।। ।।

।। नंदिकेश्वर उवाच ।। ।।

एवं भूयः प्रार्थितोऽयं विधात्रा दाक्षिण्यार्द्रः केतकीबर्हकोपि ।।

तेजःस्तंभाभ्यर्णभाजे तथैव प्राहाशेषं विष्णवे ब्रह्मवाक्यम् ।। २१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे ब्रह्मणाऽसत्यसाक्ष्यार्थं केतकच्छदप्राथनावर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १४



।। नंदिकेश्वर उवाच ।। ।।

सोऽपि ब्रह्माणमुद्वीक्ष्य तावता द्विगुणं स्मयन् ।।

नाग्रं दृष्टमनेनेति निश्चिकाय विवेकवान् ।। १ ।।

अनुग्रहीतुं मां मुग्धं हंतुं चास्य विधेर्मदम्।।

देवदेवः स एवालं भूतभर्तेत्यमन्यत ।। २ ।।

मूलसंदर्शनाशक्त्या तेजःस्तंम्भस्य मे मदः ।।

व्यपेत एव मन्येऽद्य यद्भक्तिस्त्र्यंबकेऽजनि ।। ३ ।।

स्तूयते वीतगर्वत्वात्स इदानीं महेश्वरः ।।

यस्य दक्षिणवामाभ्यामंगाभ्यां नौ समुद्भवौ ।। ४ ।।

अद्याप्यवीतगर्वत्वाल्लब्ध्वासौ कूटसाक्षिणम् ।।

हिरण्यगर्भो मामेवमतिसंधातुमिच्छति ।। ।। ५ ।।

तदद्य सकलस्यापि दुःखस्यापनये क्षमः ।।

स एव शरणत्वेन प्राप्तव्यः शंकरो मया ।। ६ ।।

तथा कृतापराधस्य कृतघ्नस्य गुरुद्रुहः ।।

तमृते रक्षिता कोऽन्यस्तमेव स्तौमि शंकरम् ।। ७ ।।

।। विष्णुरुवाच ।। ।।

जय पृथ्वीमयाकार जय चापोमयाकृते ।।

जय प्रभाकराकार जयामृतकराकृते ।। ८ ।।

जय वैश्वानराकार जय गन्धवहाकृते ।।

जय होतृमयाकार जयाकाशमयाकृते ।। ९ ।।

रक्ष मां त्रिगुणातीत रक्ष मां कालविग्रह ।।

रक्ष मामक्षयैश्वर्य रक्ष मां करुणाकर ।। 1.3.2.14.१० ।।

स्रष्टा त्वं सर्वजगतां रक्षिता सर्वदेहिनाम् ।।

हर्ता च सर्वभूतानां त्वां विनैवास्ति कोऽपरः ।। ११ ।।

अणूनामप्यणीयांस्त्वं महांस्त्वं महतामपि ।।

अन्तर्बहिस्त्वमेवैतज्जगदाक्रम्य वर्तसे ।। १२ ।।

निगमास्तव निश्वासा विश्वं ते शिल्पवैभवम् ।।

स त्वं त्वदीय एवासि ज्ञानमात्मा तव प्रभो ।। १३ ।।

अमरा दानवा दैत्याः सिद्धा विद्याधरा नराः ।।

प्राणिनः पक्षिणः शैलाः शिखिनोऽपि त्वमेव हि ।। १४ ।।

स्वर्गस्त्वमपवर्गस्त्वं त्वमोंकारस्त्वमध्वरः ।।

त्वं योगस्त्वं परा संवित्किं त्वं न भवसीश्वर ।। १५ ।।

त्वमादिर्मध्यमंतश्च तस्थुषां जग्मुषामपि ।।

कालस्वरूपतां प्राप्य कलयस्यखिलं जगत् ।। १६ ।।

परेशः परतः शास्ता सर्वानुग्राहकः शिवः ।।

स एष मे कथंकारं साक्षाद्भवति धूर्जटिः ।। १७ ।।

यं दृष्ट्वा शरणं प्राप्तो निःश्रेयसमवाप्नुयात् ।।

अथ वा स्तौमि तद्धाम जातमात्रं यथामिति ।। १८ ।।

तच्छ्रुत्वैष कृपां कुर्यादवश्यं सर्वतः श्रुतिः ।।

इति निश्चित्य वैकुंठः स्तोतुं समुपचक्रमे ।। १९ ।।

तमेव तैजसं स्तंभं प्रणम्य परमेश्वरम् ।।

आदिमध्यांतरहितं मत्वा तं जगदीश्वरम् ।।

हठात्तेन विरंचेन वार्यमाणोपि सस्मितम् ।। 1.3.2.14.२० ।।

।। श्रीविष्णुरुवाच ।। ।।

जय देव महादेव वामदेव वृषध्वज ।।

कालांतक क्रतुध्वंसिन्नीलकंठेंदुशेखर ।। २१ ।।

जय शंभो शिवेशान शर्व त्र्यंबक धूर्जटे ।।

स्मरवैरिन्पुराराते स्थाणो भव महेश्वर ।। २२ ।।

जयेश खंडपरशो शूलिन्पशुपते हर ।।

सर्वज्ञ भर्ग भूतेश कपालिन्नीललोहित ।। २३ ।।

जय रुद्र मखाराते पिनाकिन्प्रमथाधिप ।।

गंगाधर व्योमकेश गिरीश परमेश्वर ।। २४ ।।

जय भीम मृगव्याध कृत्तिवासः कृपानिधे ।।
कृशानुरेतः कैलासे नित्यमेव हि वर्तसे ।। २५ ।।
त्वदाज्ञया मरुद्वाति फणी वहति भूभरम् ।।
दीप्यतः सूर्यशशिनौ ब्रह्मांडं प्लवतेंऽबुधौ ।। २६ ।।
ज्योतींषि संचरंते खे सर्वं त्वच्छासनात्प्रभो ।।
अहं ब्रह्मा च जगतां सर्गसंत्राणयोरलम् ।। २७ ।।
विधाय कल्पसे पुष्ट्यै सूते सस्यानि मेदिनी ।।
नाक्रामंत्यव्ययः सीमां यच्च त्वन्महिरेव सः ।। २८ ।।
अणिमादिमहासिद्धिनिःसाधारणवैभवः ।।
कथं त्वाममरैरन्यैरुपेक्षे समभिष्टुतम् ।। २९ ।।
विशुक्त्वे विस्मरामस्त्वां स्मरामः संकटेपि च ।।
न रोषो जातु भक्तेषु प्रसादः सर्वदैव ते ।। 1.3.2.14.३० ।।
यदा विधित्सेर्भक्तिं त्वं यदा च प्रावृणोषि ताम् ।।
मोहबोधौ तदा पुंसां कल्पेते बंधमोक्षयोः ।। ३१ ।।
इति स्तुतस्सांजलिबद्धपाणिना पतिः पशूनामथ चक्रपाणिना ।।
कृतापहासे च सरोजसंभवे मदोद्धते प्रादुरभूद्दयानिधिः ।। ३२।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे शंकरप्रादुर्भाववर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १५



।। नंदिकेश्वर उवाच ।। ।।

तेजःस्तंभं विनिर्भिद्य संध्याभ्रमिव चंद्रमाः ।।

कैलासकूटधवलं वृषेन्द्रमधितस्थिवान् ।। १ ।।

जटाजूटवता बालचंद्रचूडेन मौलिना ।।

कपालमालिकां वैधीं स्रजं चारग्वधी दधत् ।। २ ।।

नागकुंडलिभिः फालफलकोद्भासिलोचनैः ।।

पंचभिर्वदनैर्दीप्तैः क्ष्वेडकल्माषकंधरैः ।। ३ ।।

शूलं कपालं डमरुं सारंगं परशुं धनुः ।।

खट्वांगममलं खड्गं दोर्भिर्नागं च धारयन् ।। ४ ।।

श्वसितोद्धूलिताकारो गजचर्मोत्तरीयवान् ।।

सर्वालंकारसंपन्नः सर्वदेवैरभिष्टुतः ।। ५ ।।

परिधानीकृतव्याघ्रचर्मा ताभ्यामदर्शि सः ।।

रूपं दृष्ट्वा स आनंदं ननर्त्त नलिनेक्षणः ।। ६ ।।

न किंचिदपि जानानो मुमोह च सरोजभूः ।। ७ ।।

दृशाभिनंद्य माधवं प्रसन्नया महेश्वरः ।।

अथोदतिष्ठिपच्च तं सहुंक्रियश्चतुर्मुखम् ।। ८ ।।

जगाद चाधिकारितामदाद्युवां समुद्धतौ ।।

न लज्जितव्यमत्र वामयं क्रमोऽधिकारिणाम् ।। ९ ।।

परीक्ष्य वैभवं मम प्रबोधवानभूद्धरिः ।।

अयं न जातुपद्मभूश्छलन्मनो दुरात्मवान्।। 1.3.2.15.१० ।।

अशासि पंचवक्त्रता यदोपहासितो ह्यहम् ।।

पुनःस्वपुत्रिकारतिर्मयैष शिक्षितोऽभवत् ।। ११ ।।

तृतीय एष मंतुरप्यहो कथं नु सह्यते ।।

तदस्य तु प्रतिष्ठया क्वचिन्न भूयतां विधेः ।। १२ ।।

अयं च केतकच्छदो यदाप कूटसाक्षिताम् ।।

अतः परं न जातु तन्ममैतु मूर्ध्नि संस्थितिम् ।। १३ ।।

शस्वैवमेतौ गिरिशः प्रीत्या विष्णुमभाषत ।। ।। १४ ।।

।। श्रीमहेश्वर उवाच ।। ।।

वत्स मा भैः प्रसन्नोऽस्मि भवते भक्तिशालिने ।।

ननु त्वमंगान्मे जातस्सात्त्विकोऽसि विशेषतः ।।

माहेश्वराग्रगण्योऽसि जगत्यां हि यथा पुरा ।। १५ ।।

न तवातः परं जातु भक्तिहानिर्भवेन्मयि ।।

प्रतिक्षणं वर्द्धमाना कल्पते च विमुक्तये ।। ।। १६ ।।

इत्यनुग्रहकृतं त्रिलोचनं भक्तिभाजि निरहंक्रिये हरौ ।।

भीतिमानवनतः स्वयं विधिः स्तोतुमारभत क्लृप्तवंदनः ।। १७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्ये उत्तरार्धे ब्रह्मकृतशिवस्तुत्युद्यमवर्णनंनाम पञ्चदशोऽध्यायः ।। १५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १६

https://sa.wikisource.org/s/f59

< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। ब्रह्मोवाच ।। ।।

देवदेव तवैश्वर्यं केन शक्येत वेदितुम् ।।

विना भायैक्यसुलभं भवदीयमनुग्रहम् ।। १ ।।

अकर्तृकाणि वाक्यानि ऐश्वर्यं ते निरत्ययम् ।।

न स्तोतुं शक्यते किं तु नमस्कुर्वंति दूरतः ।। २ ।।

को विष्णुः कोऽहमेते वा दिक्पाला वासवादयः ।।

त्वमेव देव कर्त्तासि जगत्सृजनरक्षयोः ।। ३ ।।

पतिस्त्वं पार्वतीनाथ पशवो वयमप्यमी ।।

बद्धं पाशेन मोक्तुं वा त्वमेवास्मान्प्रगल्भसे ।। ४ ।।

षड्विंशत्तत्त्वरूपस्त्वमभितश्चाभिवर्त्तसे ।।

कोविदः को विनिर्णेतुं तव याथात्म्यमीश्वरः ।।५।।

किरातः किल देवस्त्वं सारमेयैः किलागमैः ।।

षड्वर्गहिंस्रान्संहर्तुं करोष्याखेटकौतुकम् ।।६।।

देव दक्षाध्वरे पूर्वं वरिभद्रस्त्वदाज्ञया ।।

कांकां शिक्षामकार्षीन्न इति कापि विडम्बना ।। ७ ।।

तव कालाग्निरूपस्य सर्वब्रह्मांडदाहिनः ।।

पोषणात्पुष्पचापस्य प्रायो जिह्रेति शेमुषी ।। ८ ।।

कृतापराधः शूलेन त्वया दीर्णो जलंधरः ।।

अन्तकोंधकदैत्यश्च प्रतिवीरश्च कोऽस्ति ते ।।९।।

अधारयिष्यत्कण्ठेन कालकूटं न चेद्भवान् ।।

कथं च धारयिष्यामो वयं सर्वेऽपि जीवितम् ।। 1.3.2.16.१० ।।

देवदारुवने पूर्वं मुनीन्केवलकर्मठान् ।।

प्रक्षोभ्य धूर्तवेषस्त्वं दययान्वग्रहीस्तथा ।। ११ ।।

अंघ्रिणाक्रांतवान्नो चेदत्युग्रां त्वमपस्मृतिम् ।।

तयाक्रांतमिदं कृत्स्नमंधकारायते जगत् ।। १२ ।।

अर्धनारीश्वरं रूपं त्वया चेन्न प्रकाशितम् ।।

प्रभवामि कथं स्रष्टुं जगदेतच्चराचरम् ।। १३ ।।

भवता स्तंभितः शम्भो संरंभाज्जंभजिद्भुजः।।

कियंतं हंत कालं ते जयस्तंभ इव स्थितः।।१४।।

भिक्षोः कपालमापूर्य रुधिरेणात्मनो हरिः।।

शूलेनोत्क्षिप्य मुमुहे ह्येतत्त्वमवधारय।। १५।।

न चेदशिक्षयः सर्वशस्त्रास्त्राण्यनुकंपया ।।

निर्वापयेत्कथं वैरं क्रुद्धोपि जमदग्निभूः ।। १६ ।।

नृहरिं शरभाकारः समहार्षीन्न चेद्भवान् ।।

स एव संहरेद्विश्वं हिरण्यकशिपोरपि ।। १७ ।।

त्वमाचकृक्षः कल्पाब्धौ कैवर्त्तो मत्स्यकच्छपौ ।।

हरिं बद्ध्वाहिराट्सूत्रैर्नृसिंहमथ सूकरम् ।। १८ ।।

एकोने पद्मसाहस्रे स्वनेत्रेण कृतार्चनम् ।।

शूलिन्सुदर्शनं दत्त्वा दैत्यद्विषमतूतुपः ।। १९ ।।

।। नंदिकेश्वर उवाच ।। ।।

स्तुत्यैवमस्य विष्णोश्च प्रार्थनेन प्रसेदिवान् ।।

धूर्जटिः सृष्टिकर्तृत्वं पुनरस्याभ्यमन्यत ।। 1.3.2.16.२० ।।

समँज्यासु द्विजानां च पूजनं चानुशिष्टवान् ।।

उभावप्यब्रवीदेतौ वात्सल्याच्चद्रशेखरः।। २१ ।।

।। श्रीशिव उवाच ।। ।।

वत्सौ युवां न ज्ञात्वैवं भूयो भवतमुद्धतौ ।।

गुरुं स्मरतो मामेव जाग्रतं सृष्टिरक्षयोः ।। २२ ।।

इह प्रदेशे युवयोर्यन्मयानुग्रहः कृतः ।।

पुण्यक्षेत्रमिदं पुंसां ततो मोक्षाय कल्पताम् ।। २३ ।।

योजनत्रयमात्रेऽस्मिन्क्षेत्रे निवसतां नृणाम् ।।

दीक्षादिकं विनाप्यस्तु मत्सायुज्यं ममाज्ञया ।। २४ ।।

यद्वा तिरश्चामप्यत्र स्थावराणां च देहिनाम् ।।

अबुद्धिपूर्विका बुद्धिरपवर्गस्य जायताम् ।। २५ ।।

नृणां च दर्शनाद्दूरे कैवल्यं स्मरणेन वा ।।

अस्तु वेदांतविज्ञानं न साध्यं निष्प्रयासतः ।। २६ ।।

शुभाय तैजसी मूर्तिः स्थावरा मम शाश्वती ।।

अरुणाद्रिरिति ख्याता नित्यमेवात्र वर्त्तताम् ।। २७ ।।

युगात्ययेपि नैनं तु मज्जयेयुर्महाब्धयः ।।

न चालयेयुर्मरुतो न दहेयुश्च वह्नयः ।। २८ ।।

ज्योतिर्मयमिदं लिंगं ज्योतिःष्वपि न जातुचित्।।

क्रमंता निर्गमागत्या खेचराणि समंततः।। २९।।

यस्यानुग्रहमिच्छामि जंतो्तस्यात्र संभवः।।

देहांते कल्पतां मुक्त्यै विनौपनिषदीर्गिरः।। 1.3.2.16.३०।।

एष दूरात्प्रणामेन निकर्षाच्च प्रदक्षिणात्।।

अपि पापात्मनां पुंसामस्तु निश्रेयसप्रदः ।। ३१ ।।

अत्रैव नियतं वासाः संभवंति महात्मनाम् ।।

तस्मात्स्थलमिदं हित्वा न गंतव्यं कदाचन ।। ३२ ।।

शोणाचलमनादृत्य क्वचित्स्थित्वापि मुक्तये ।।

तस्माद्युवां विधिहरी वसतं चात्र नित्यशः ।। ३३ ।।

।। नंदिकेश्वर उवाच ।। ।।

इत्युक्तवंतं कामारिं प्रणम्य विधिमाधवौ ।।

तौ व्यज्ञापयतां देवं दूरीभवदहंक्रियौ ।। ३४ ।।

।। विधिमाधवावूचतुः ।। ।।

एवमेतज्जगदाधार जगदाधारतां गतः ।।

आस्तां गिरिरसौ किं तु तेजो ह्यस्य सुदुस्सहम् ।। ३५ ।।

अतोयमुत्तमो रुद्र तेजः सामान्यशैलवत् ।।

तिष्ठत्वभेद्यमहिमा निश्रेयसमहाखनिः ।। ३६ ।।

विवृणोति निजं ज्योतिर्विश्वस्यास्य समृद्धये ।।

प्रत्यब्दं कार्त्तिके मासि कृत्तिकासु दिनात्यये ।। ३७ ।।

शर्मदोपि नृणां देव शोणाद्रिस्तव शासनात् ।।

महत्त्वादर्चितुं शक्यो न स्याद्भक्तस्य कस्यचित्।।३८।।

एतस्योपत्यकायां तदद्यारभ्यास्मदर्थनात्।।

देवेन सन्निधातव्यमवन्यां लिंगरूपिणा।।३९।।

तच्चारुणगिरीशानमावामाराधयावहे।।

अभिषेकानुलेपाद्यैरुपचारैर्यथाविधि ।।1.3.2.16.४०।।

संत्यत्र केशराश्चूता नागपुंनागकेसराः।।

आरग्वधाः कुरबका मालूराः पाटला अपि ।। ४१ ।।

अत्रैव सन्निधातव्यं देवदेव दयानिधे ।।

यतस्त्वद्भक्तिदार्ढ्यं नौ भवतात्त्वदुपासनात्।।४२।।

नान्यथा चित्तशुद्धिर्न्नौ देवेऽप्येवं प्रसेदुषि ।।

अनाद्यविद्यावृतये यो भविष्यति नित्यशः ।। ४३ ।।

शोणाद्रेः पूर्वदिग्भागे स एष भृशमुन्नतः ।।

स एवालं निवासाय देवस्य हृदयंगमः ।।।।४४।।

सांगवेदा धर्मशास्त्रं पुराणानि शिवागमाः ।।

कृत्वा च सकलाः प्रोक्ता भवतैव भवावयोः ।।४५।।

निश्रेयसाय भक्तानां त्वयैव गुरुरूपिणा।।

अष्टाविंशतिराख्याता आगमाः शैवसंज्ञिताः ।। ४६ ।।

तेषु कस्य प्रकारेण कुर्वाणौ त्वदुपासनाम् ।।

कदाप्यज्ञानजामार्तिं नाधिगच्छाव शंकर ।। ४७ ।।

।। नंदिकेश्वर उवाच ।। ।।

इति तौ धातृगोविंदौ पादपद्मावलंबिनौ ।।

जगाद करुणामूर्त्तिर्जगतीभृत्सुतापतिः ।। ४८ ।।

।। श्रीमहादेव उवाच ।। ।।

युक्तमुक्तमिदं भद्रौ मयाप्येवं मनीषितम् ।।

कामिकोक्तेन मार्गेण मामर्चयितुमर्हथः ।। ४९ ।।

मोहतो विस्मृता मन्ये भवद्भ्यां शैवसंहिता ।।

अधुना मत्प्रसादेन पुनरुद्भासतां हृदि ।। 1.3.2.16.५० ।।

।। नन्दीश उवाच ।। ।।

इत्युक्त्वा श्रीशवागीशौ गिरिशोऽन्तरधादथ ।।

तदा प्रादुरभूत्तत्र लिंगं किमपि मंगलम् ।। ५१ ।।

तच्चावलोक्य साश्चर्य्यौ मुकुन्दकमलासनौ ।।

मुहुः प्रणम्य सानंदं प्राच्र्य तुष्टुवतुश्चिरम् ।। ५२ ।।

तावकारयतां शोणगिरिनाथस्य चालयम् ।।

नानाशिल्पाद्भुतं विश्वकर्मणा प्रचयेन च ।। ५३ ।।

खानयामासतुस्तत्र सरः किमपि पावनम् ।।

अभिषेकाय देवस्य सर्वतीर्थमयं नवम् ।। ५४ ।।

अरुणाख्यं पुरं चारात्कल्पयामासतुश्चिरम् ।।

सिद्ध्यै नोत्कंठते लब्ध्वा कैलासायापि धूर्जटिः ।।५५।।

तस्यां ब्रह्मर्षयो देवा गंधर्वा दिव्ययोषितः ।।

सिद्धविद्याधरा यक्षाः पौरत्वं समुपाययुः ।। ५६ ।।

तीर्थानि धार्य कूपत्वं गंगाद्याः सरितस्तथा ।।

नंदनादीनि च वनान्यभवन्निष्कुटत्वतः ।।५७।।

गोलोको गोगोष्ठतया नैगमत्वं किलागमाः ।।

शैलाश्च गोपुरादित्वं स्मृतयो विधितां ययुः ।।५८।।

भूताः प्रेताः पिशाचाश्च वेतालाः कटपूतनाः ।।

प्रपन्ना मानुषं देहं तस्यां किल पृथग्जनाः ।। ५९ ।।

देवोपि धूर्जटिस्तस्यां कौतुकी सिद्धरूपधृक् ।।

योगित्वं समुपास्थाय मात्राकौपीनमुण्डधृक् ।।1.3.2.16.६०।।

न केनचिदविज्ञातः सदा सर्वत्र दीप्यति ।।

तौ च केशवलोकेशौ जटिलौ भस्मगुण्ठितौ ।।६१।।

दांतौ शोणाद्रिनाथं तमर्चयामासतुश्चिरम् ।।

तत्रत्यानां च सर्वेषां वर्णानामानुगुण्यतः ।। ६२ ।।

दीक्षादिकानि चक्राते स्वयमाचार्यतां गतौ ।।

क्रमेण हृतनिर्माल्यौ सर्वागमरहोविदौ ।। ६३ ।।

प्रातः स्नात्वा समाहृत्य पुष्पपत्रादिकं फलम् ।।

मंत्रं चारुणनाथस्य तत एव रहः श्रुतम् ।। ६४ ।।

जंजल्पाकौ जजपतुः सर्वमंत्राधिकं सदा ।।

धूपप्रदीपनैवेद्यैर्गीतवादित्रनर्तनैः ।। ६५ ।।

प्रदक्षिणानमस्कारैर्मुद्राबंधैर्नवैर्नवैः ।।

आसनेन च मूर्त्या च मूलेन च यथाविधि ।। ६६ ।।

पंचब्रह्मषडंगाद्यैरर्चयामासतुः शिवम् ।।

एवं वर्षसहस्राणि षोडशारुणशंकरम् ।। ६७ ।।

वेधोविष्णू समाराध्य शिवज्ञानमवापतुः ।। ६८ ।।

इतीदमश्रावि मया रहस्यं पितुः शिलादस्य मुखात्पुरा यत् ।।

निवेदितं चाद्य तदेव तुभ्यं किमन्यदाकर्णयितुं मनीषा ।। ६९ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे ब्रह्मविष्णुकृतारुणाचलेश मंदिरवर्णनंनाम षोडशोऽध्यायः ।। १६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/ अरुणाचलमाहात्म्यम् २/अध्यायः १७



।। सूत उवाच ।। ।।

इति श्रुत्वास्य वचनं मार्कंडेयोऽभ्यभाषत ।।

।। मार्कंडेय उवाच ।। ।।

श्रुतमेव मया देव श्रोतव्यं भवतो मुखात् ।। १ ।।

तथापि कौतुकेनाहमाक्रांतो मुनयोऽप्यमी ।।

गौर्या कथं तपस्तप्तं महादेव्यात्र कथ्यताम् ।। २ ।। ।।

।। नंदिकेश्वर उवाच ।। ।।

कथयामि तदप्येतद्यथाऽधिगतमात्मना ।।

शृणु त्वमवधानेन मार्कंडेय महामते ।। ३ ।।

ननु जानासि तत्पूर्वं यथा दाक्षायणी शिवः ।।

उपयेमे सतीं नाम सतीनामधिदेवताम् ।। ४ ।।

यथा च सा क्रुधा भर्तुर्द्रुहि दक्षप्रजापतौ ।।

योगादहासीदात्मीयं वपुरित्यपि ते श्रुतम् ।। ५ ।।

तदा हराज्ञानिघ्नेन वीरभद्रेण यत्कृतम् ।।

अध्वरध्वंसनं दक्षस्यापि ते विदितं महत् ।। ६ ।।

अश्रौषीस्तस्य दक्षस्य गणैः शीर्षासखंडनम् ।।

ब्रह्माच्युतेंद्रमुख्यानां देवानामपि शिक्षणम् ।। ७ ।।

दंतघातं रवेः पाणिपाटनं जातवेदसः ।।

अदितिप्रभृतीनां च दिव्यस्त्रीणां पराभवम्।। ।। ८ ।।

सा च देवी पुनर्जन्म लेभे हिमवतो गृहे ।।

उमेति पार्वतीत्याख्यां द्वितीयां विभ्रती पुनः ।। ९ ।।

देवः स्थाणुवने तां च परिचर्यापरं रहः ।।

अरुरोचयिषुः काममधाक्षीत्कालवह्निना ।। 1.3.2.17.१० ।।

जितेंद्रियं च तं देवं क्वापि यातं गणैः सह ।।

तपोभिस्तोषयामास गौरी शिखरवासिनी ।। ११ ।।

उपयम्याथ तां देवो वृत्तांतैश्चित्तखंडिभिः ।।

रमयामास चैकांते मोदस्वेति विलासिनीम् ।। १२ ।।

वैधव्यखिन्नया रत्या प्रार्थिता शैलनंदिनी ।।

कामपीठे तपस्यंती कामं प्रत्युददीपयत् ।। १३ ।।

पुनश्च मेनया मात्रा पित्रा च हिमभूभृता ।।

आनीता भवनं भर्त्रा साकं चिरमरंस्त सा ।। १४ ।।

तदा शुंभनिशुंभाख्यौ लेभाते वेधसो वरम् ।।

देवदानवमर्त्येषु मास्तु नौ पुरुषान्मृतिः ।। १५ ।।

इति तद्वचनं श्रुत्वा जातत्रासैः सुपर्वभिः ।।

अभ्यर्थितोऽवदद्देवो रहश्चक्रधरादिभिः ।। १६ ।।

माभैष्ट भद्र कालेन तथा प्रतिविधीयते ।।

यथा निषूदितौ स्यातां तादृशौ दानवाविति ।। १७ ।।

दत्ताभयान्मुकुंदादीन्विसृज्यांधकसूदनः ।।

अंतःपुरगतो रेमे देव्या सह यथा पुरा ।। १८ ।।

कदाचिन्मर्मलक्ष्येण प्रीत्या कालीति निंदिता ।।

तस्य प्रीत्यै कालिका च त्वचमेवाजहान्निजाम् ।। १९ ।।

यत्रोत्क्षिप्तवती चर्म स्वेच्छया परमेश्वरी ।।

महाकाशीप्रपाताख्यं तदभूत्क्षेत्रमुत्तमम् ।। 1.3.2.17.२० ।।

सा च त्वक्कौशिकी नाम्ना काली विंध्याद्रिवासिनी ।।

तपस्यंती वृषस्यंतौ तो जघान महासुरौ ।। २१ ।।

देवी च गौरी शिखरे तस्मिन्नेव मनोहरे ।।

तपोभिर्लब्धगौरीत्वाद्भर्त्तारं समतोषयत् ।। २२ ।।

क्रमेण दौर्हृदवती भूत्वा प्रासूत पार्वती ।।

गजाननं च हेरंबं सेनान्यं च षडाननम् ।। २३ ।।

तौ चागमविदः प्राहुर्नारायणचतुर्मुखौ ।।

पूर्वापराधशुद्ध्यर्थं देवीगर्भसमुद्भवौ ।। २४ ।।

वर्धमानौ च तौ बालौ पित्रोरालोकमानयोः ।।

मग्नयोरिव वर्षाब्धौ प्रेमग्रंथिरभूद्दृढा ।। २५ ।।

जातु वीणानिनादेन कदाचिच्चित्रलेखनैः ।।

विजह्रतुश्शिवौ स्वैरमेकदा मंडनैर्मिथः ।। २६ ।।

जातु विद्यागमालापैः कदाचिच्चित्रवस्तुभिः ।।

एकदा लोकवृत्तांतैर्दंपतिभ्यां विनोदितम् ।। २७ ।।

पुष्पावचयनैर्जातु कदाचिद्वारिखेलनैः ।।

अदीव्यतां च रागार्द्रौ दोलाकेलिभिरेकदा ।। २८ ।।

मैनाकेनार्चितौ जातु मेनया जातु पूजितौ ।।

जात्वर्हितौ हिमवता दंपती तौ विनोदितौ ।।२९।।

जातु द्यूतविनोदेन गतिगोष्ठ्या कदाचन ।।

एकदा दानलीलाभिः शिवौ चिक्रीडतुश्चिरम् ।। 1.3.2.17.३० ।।

द्यूतनिर्जितमाच्छिद्य पत्युरुत्संगतां गतम् ।।

वलयीकृतमेणांकं ताटंकीकृतवत्युमा ।। ३१ ।।

इति तौ पितरौ चराचराणां निवसंतौ कनकाचलादिकेषु ।।

रुचिरेषु पदेषु कामभोगानतिहृद्यान्सुचिरं किलान्वभूताम् ।। ३२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे शिवपार्वतीविहारवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १८



।। नंदिकेश्वर उवाच ।। ।।

गार्हस्थ्यं बिभ्रती भर्तुरेकाम्रतलवासिनः ।।

पक्वान्नपानैस्सा तत्र पर्य्यतर्पयत प्रजाः ।। १ ।।

जातु संध्यानुसंधानमुकुलीकृतलोचनम् ।।

बद्धांजलिपुटं देवमद्राक्षीदद्रिनंदिनी ।। २ ।।

ध्यायते नूनमधुना कापि सौभाग्यशालिनी ।।

क्रियते यन्मयि प्रेम तन्मन्ये वचनं महत् ।। ३ ।।

कथं विज्ञायते पुंसां कुटिला मानसी स्थितिः ।।

मिथ्योपचाराद्दक्षेण वंचितास्म्यमुना भृशम् ।। ४ ।।

मयि दाक्षिण्यमेवास्य मन्ये मनसि चेद्रहः ।।

जनः सौभाग्यवान्यस्माद्भवति स्नेहभाजनम् ।। ५ ।।

अद्यप्रभृति ते दासस्तपोभिः क्रीत इत्यपि ।।

मुग्धेंदुशेखरेणास्मि विप्रलब्धा स्मरारिणा ।। ६ ।।

असमानानुरागेषु नारीणां मूढचेतसाम् ।।

सौभाग्यगर्वो लोकेषु परिहासाय केवलम् ।। ७ ।।

इति प्रणयरोषेण देव्याः कलुषचेतसः ।।

हव्यवाहातपालीढमिवाननमलक्ष्यत ।। ८ ।।

वाष्पवारिप्लवे तस्या आताम्रे च विलोचने ।।

नीलोत्पले जलापूर्णे इव भूम्ना विरेजतुः ।। ९ ।।

यत्तस्याधीनतिलकं भ्रुवोर्युगमभज्यत ।।

द्वेधाकृतमिवादर्शि मन्मथस्य शरासनम्।। 1.3.2.18.१० ।।

अंतर्मन्युभरेणास्याः कंपते स्माधरच्छदः ।।

मुहुः प्रवालस्थायीव रक्ताशोकस्य पल्लवः ।।११।।

अतीव रज्यमाने तत्पार्वत्या गंडमंडलम् ।।

शाणावघर्षमाणिक्यदर्पणप्रतिमं बभौ ।। १२ ।।

अंतर्वेपधुतौ तस्याश्चकंपाते पयोधरौ ।।

पद्मकोशाविवांतःस्थ चंचरीकप्रचालितौ ।। १३ ।।

अचिंतयच्च संभूय सौभाग्याभावतो ननु ।।

ममायमन्यस्त्रीचिंतां कुरुते चंद्रभूषणः ।। १४ ।।

तदैषा क्वापि यास्यामि किमत्रास्त्येकया मम ।।

तपस्यते च सौभाग्यमर्जनीयं मयाधुना ।। १५ ।।

निमीलिताक्षिण्येवास्य गंतव्यं निभृतं मया ।।

न चेन्मां वारयत्येष कंठादुपरि भाषितैः ।। १६ ।।

वत्सौ तु वर्धयत्येव गंगेयमतिवत्सला ।।

देवस्तु न स्मरत्येव मामन्यस्त्रीपरायणः ।। १७ ।।

इति निश्चित्य देवस्य पार्श्वादाशु निवृत्त्य सा ।।

अनिर्दिश्य दिशं कांचिद्यातुं व्यग्रा प्रचक्रमे ।। १८ ।।

चलावती माल्यवती मालिनी विजया जया ।।

वारिता अपि संरंभात्स्वामिनीमन्वयुः स्वयम् ।। १९ ।।

तत्र सापि गिरीन्पुण्यान्वनानि नगराणि च ।।

सरांसि सरितश्चैषा विचचार समंततः ।। 1.3.2.18.२० ।।

भ्रमंती सह्यपादेषु द्राविडाख्ये सुनीवृति ।।

तीर्त्वा शक्त्यापगां देवी विजयां समभाषत ।। २१ ।।

दृश्योऽयं नातिदूरेण पुरस्तात्सकलारुणः ।।

शृंगैस्संलक्ष्यतेऽष्टाभिर्नूनं माहात्म्यवान्गिरिः ।। २२ ।।

उपत्यकासु चैतस्य दृश्यंते तापसाश्रमाः ।।

अतीव पावनाः शांताः पुण्यारण्यमनोहराः ।। २३ ।।

गत्वा निरूपयामस्तानिमान्पुण्याश्रमान्वयम् ।।

प्रसीदतितरां चेत एषां संदर्शनेन मे ।। २४ ।।

एवमाह्लादयत्यालि क्रमेण गिरिनंदिनी ।।

तस्याद्रेर्जग्मुषी पार्श्वमपश्यत्कंचिदाश्रमम् ।। २५ ।।

लूतास्तंतून्नयंत्यत्र कुम्भीराः शैवलान्यपि ।।

शिशून्पुष्णंति नीवारैः सफरान्भूरिमायवः ।। २६ ।।

हरंत्यवकरान्वालैश्चमराः स्फीतरोमभिः ।।

समीकुर्वंति चोद्भूतैर्विषाणैर्यत्र सैरिभाः ।। २७ ।।

वानराः फलपुष्पाणि मधुपत्राणि भल्लुकाः ।।

क्रोडाः स्नानीयमृत्स्नां च यत्रर्षिभ्यो नयंत्यहो ।। २८ ।।

काकोलूकैः शुकश्येनैर्मृगव्याघ्रैर्हरिद्विपैः ।।

कलापिसर्पैर्यत्रासुमार्जारैः सौहृदं श्रितम् ।। २९ ।।

हूयमानपुराडाशद्रव्यसौरभ्यहारिणी ।।

यत्र द्रुमांतरालेभ्यो धूम्या निर्याति पावनी ।। 1.3.2.18.३० ।।

पठंति शतरुद्रीयं यत्र वायसवैरिणः ।।

गृणंति काकाः स्तोत्राणि साम गायंति सारिकाः ।। ३१ ।।

शाकशालिषु शार्दूलाश्चरंति च तथैव गाः ।।

सिंचंति पुष्करांभोभिः कुंभिनी यत्र पादपान् ।। ।। ३२ ।।

क्वचिच्च शोभने देशे पुण्ये पुण्यमनोहरे ।।

ददर्श सा तपस्यन्तं यं कंचिदृषिसत्तमम् ।। ३३ ।।

अधस्तात्सप्तपर्णस्य चित्रव्याघ्रत्वगासने ।।

बद्धवीरासनं सम्यक्पावने कुशविष्टरे ।। ३४ ।।

शालिशूकारुणाभाभिर्जटाभिर्भस्मपांडुरम् ।।

अचंचलाभिर्विद्युद्भिरिव शारदवारिदम् ।। ३५ ।।

नासाग्रनिश्चलदृशं समप्रस्फुरिताधरम् ।।

आवर्त्तयन्तं रुद्राक्षमालिकामग्रपाणिना ।। ३६ ।।

प्रत्यग्रनिर्णेजनतो ह्यंत्यश्यानदशांचले ।।

वसानं वल्कलयुगे संध्याभ्रे भूभृतां यथा ।। ३७ ।।

षड्वर्गहिंस्रबंधाय स्थापितां वागुरामिव ।।

उपवीतत्रयीमारादुरोगर्तस्य बिभ्रतम् ।।

कृतोचितोपचारा सा तमप्राक्षीत्तपोधनम् ।। ३८ ।।

।। पार्वत्युवाच ।। ।।

कस्त्वं कोऽयं गिरिवरो यत्र त्वं कुरुषे तपः ।। ३९ ।।

स चाहारुणशैलोऽयं पुण्यक्षेत्रेषु पूजितः।।

गौतमोऽहं मुनिर्मुक्त्यै तपसाराधये शिवम् ।। 1.3.2.18.४० ।।

इत्युक्त्वा विजयादीनां मुखेनैनामुमां विदन् ।।

प्रणम्य भक्त्या बहुशो नीतवानुटजं निजम् ।। ४१ ।।

कन्दमूलफलाद्यैश्च कृतातिथ्यामिमां मुनिः ।।

जगन्मंगलमूलाय तपसे चान्वमन्यत ।। ४२ ।।

ज्योतिःस्तम्भस्य संभूतिमारभ्यानुक्रमेण सः ।।

जगाद चास्यै शोणाद्रेर्महिमानमशेषतः ।। ४३ ।।

शोणाद्रेः पूर्वदिग्भागे स्थलीश्वरमिति स्थलम् ।।

यत्र संनिहितः शंभुर्ज्योतिर्लिंगात्मतां गतः ।। ४४ ।।

वैकुण्ठपरमेष्ठ्यादि गीर्वाण निबिडीकृते ।।

न तत्र मे तपः कर्तुमव्याक्षेपेण शक्यते ।। ४५ ।।

अयं शोणगिरेः पादः प्रवालाचलनामवान्।।

पुण्यारण्योपरुद्धत्वाद्रहस्यत्वं विगाहते ।। ४६ ।।

तत एवाहमत्रैव प्रतिष्ठाप्य त्रिलोचनम् ।।

आराधये यथाशक्ति तपोभिः कल्पितात्मभिः ।। ४७ ।।

ममाश्रमसमीपेऽस्मिन्पुण्यक्षेत्रमिदं महत् ।।

क्रियतामाश्रमो देव्या कर्त्तव्यं हि तपश्चिरम् ।। ४८ ।।

मुनेरेवमनुज्ञानात्कृताश्रमपरिग्रहा ।।

उदयुंक्त तपः कर्तुं सुमहत्पर्वतात्मजा ।। ४९ ।।

आश्रमं रक्षितुं सत्यवतीं काननवासिनीम् ।।

शुभगां धुंधुमारिं च प्रागाद्याशास्वतिष्ठिपत् ।। 1.3.2.18.५० ।।

तपोवनस्य सर्वस्य रक्षार्थं सा समादिशत् ।।

दुर्गामनर्गलस्फूर्तिमाज्ञानिर्वाहणक्षमाम् ।। ।। ५१ ।।

अनंतरं सा धम्मिल्लं मंदारप्रसवोचितम् ।।

जटाभरत्वं तपसे गमयामास पार्वती ।। ५२ ।।

हंसचिह्नदशं हित्वा दुकूलं मिहकालघु ।।

परुषं सुकुमारांगी परिधत्तेस्म वल्कलम् ।। ५३ ।।

अपि प्रसूनावचयनिस्सहांगुलिपल्लवा ।।
अलावीदतितीक्ष्णाग्राण्यविकारं कुशानि सा ।। ५४ ।।
वज्रसूचिनिर्भरांगैरवच्छिन्नानि कंटकैः ।।
शिरीषमृद्वी शांडिल्यपल्लवान्युच्चिकाय या ।। ५५ ।।
पावन्यां कमलानद्यां प्रातर्विहितमज्जना ।।
अर्चयामास रक्ताब्जैर्यथाविधि विभाकरम् ।। ५६ ।।
दर्भाक्षततिलोन्मिश्रैर्गौरी श्रीनदिवारिभिः ।।
देवी निर्वर्तयामास देवर्षिपितृतर्पणम् ।। ५७ ।।
वालुकामंडले सूर्यमावाह्याभ्यर्च्य पंकजैः ।।
कृतप्रदक्षिणा गौरी प्रणनाम सहस्रशः ।। ५८ ।।
स्वयमेव प्रतिष्ठाप्य लिंगं किमपि शंकरम् ।।
आगमोक्तेन विधिना पूजयामास पार्वती ।। ५९ ।।
आसनेन च मूर्त्या च मूलेनांगैश्च सा रविम् ।।
दंडिपिंगलमुख्यांश्च शक्तीर्दीप्तादिका अपि ।। 1.3.2.18.६० ।।
तत्तद्दिक्षु च सोमादीन्ग्रहान्धेन्वादिमुद्रया ।।
तेजश्चंडे चार्चयित्वा निर्माल्यं च न्यवेदयत् ।। ६१ ।।
अर्घेणातीव शुद्धेन संप्रोक्ष्य च समंततः ।।
द्वारवास्तु समभ्यर्च्य न्यासानपि चकार सा ।। ६२ ।।
भूतशुद्धिं विधायान्वगंतर्यागं चकार सा ।।
हृदि पद्मासने चार्च्य ज्ञानधर्मादिकान्क्रमात् ।। ।। ६३ ।।
शक्तीर्दलेषु वामादीर्दलाग्रे सूर्यवेधसौ ।।
केसराग्रे सोमविष्णू कर्णिकाग्रेऽग्निधूर्जटी ।। ६४ ।।
तदूर्ध्वे शक्तिचक्रं च विन्यस्तब्रह्मपंचका ।।
अंगैर्दत्त्वा च पाद्यादीनुपचर्याभिषिच्य सा ।। ६५ ।।
प्रादाच्चंदनपुष्पादि धूपदीपप्रदायिनी ।।
भूयोपि पंचब्रह्माणि षडंगान्यप्यपूजयत् ।। ६६ ।।
तत्तद्दिक्षु च शक्रादीन्वज्रादींश्च विधानतः ।।
कृत्वा सर्वोपचारांश्च वितताराष्टपुष्पिकाम् ।। ६७ ।।

पंचवक्त्राणि चाभ्यचर्य कृतचंडेश्वरार्चना ।।
प्रदक्षिणा प्रणामाद्यैर्नित्यं शिवमपूजयत् ।। ६८ ।।
शिवागमोक्तविधिना द्रव्यैः सौभाग्यदायिभिः ।।
सा जुहाव च पूजांते प्रणीते जातवेदसि ।। ६९ ।।
परिकल्पितोपचारा च कंदमूलफलादिकैः ।।
स्वयं कृतोपचारेयमतिथीनभ्यपूजयत् ।। 1.3.2.18.७० ।।
अंगुष्ठाग्रेण तिष्ठंती ग्रीष्ये पंचाग्निमध्यतः ।।
ह्रदे च शिशिरे चंद्रपीयूषाप्यायिताऽभवत् ।। ७१ ।।
वर्षरात्रीषु धाराभिः सह वारिधरा पुनः ।।
सौदामिनीव ददृशे तमसि स्तिमिता कृतिः ।। ७२ ।।
पाणिपादेन पद्मानि मुखेन च कलानिधिम् ।।
प्रदर्शयत्यनायासान्निन्ये सा हैमनीर्निशाः ।। ७३ ।।
नीवारबीजदानेन सा मृगानप्यपोषयत् ।।
अज्ञातहिंसाभिभवानाश्रमोपांतवर्तिनः ।। ७४ ।।
कृतालवालसलिलैः सुवालाकलशाहृतैः ।।
वात्सल्याद्वर्द्धयामास पूर्णानाश्रमपादपान्।। ७५ ।।
प्रदक्षिणां कृतवती शोणशैलं गिरींद्रजा ।।
सा मनोरथसंसिद्ध्यै नित्यं सह सखीजनैः ।। ७६ ।।
पंचाक्षरी जजापैषा शिवस्तोत्राण्युदैरयत्।।
दध्यौ च देवं मनसा शोणपर्वतरूपिणम् ।। ७७ ।।
अनुदिनमरुणाचलेश्वरं सा प्रणतवती विहितप्रदक्षिणाद्यैः ।।
शिवनिगमविधानवेदिनी सा व्यरचयदद्रिसुता चिरं तपस्याम् ।। ७८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे पार्वतीकृतारुणाचलेश्वरपरिचरणवर्णनंनामाऽष्टादशोऽध्यायः ।। १८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः १९

https://sa.wikisource.org/s/f30



।। नंदिकेश्वर उवाच ।। ।।

तावत्कुतश्चिदाकर्ण्य तत्रस्थां महिषासुरः ।।

अवज्ञातसुरारातिर्विध्वंसितपुरंदरः ।। १ ।।

सर्वलोकजयी सिद्धविद्याधरभयावहः ।।

दुर्निग्रहो वरादासीच्छस्त्रास्त्रैरखिलैरपि ।। २ ।।

तीक्ष्णानामपि शापानामप्यगोचरतां गतः ।।

दर्पद्भिर्दानवैदैत्यैः कौणपैश्च निषेवितः ।। ३ ।।

दूषको मुनिपत्नीनां धर्ममार्गोपघातकः ।।

बलात्पुलोम्नो नमुचेर्वृत्रादपि बलाधिकः ।। ४ ।।

हिरण्यकशिपोर्वश्यो हिरण्याक्ष इवापरः ।।

तां विलोभयितुं कांचित्प्राहिणोत्किल दूतिकाम्।। ५ ।।

ततः सा तापसीवेषधारिणी गिरिजां प्रति ।।

सखीसमक्ष एवेदमुवाचानुचितं वचः ।। ६ ।।

अरारु भीषणे भीरो निवसस्यत्र किं वने ।।

विहर्तुमुचिता रम्येष्ववरोधनवेश्मसु ।। ७ ।।

किमर्थं वाद्य चित्तं ते यौवने भोगनिःस्पृहम् ।।

निवेशितं तपसि च दैवतैरपि दुष्करे ।। ८ ।।

हंसतूलमयीं शय्यां मुक्तामयवितानिकाम् ।।

हित्वा किमिति मृद्वंगि सुप्यते परुषाश्मसु ।। ९ ।।

तपोजडो मृडो दिष्ट्या प्रागेवास्ति त्वयोज्झितः ।।

तवानुरूपो नैवान्यो विद्यते दिविषत्सु च ।। 1.3.2.19.१० ।।

किं तु त्रैलोक्यनाथोऽस्ति महिषो दानवेश्वरः ।।

यदि द्रक्ष्यसि तं सुभ्र त्यक्ष्यस्येव क्षणात्तपः ।। ११ ।।

किं निह्नवेन नन्वेष श्रुत्वा सर्वं चिरात्प्रभुः ।।

स प्राहिणोदुपानेतुं दूतिकां मां स्मरातुरः ।। १२ ।।

इत्यत्यंतविरुद्धं तां ब्रुवाणामसमंजसम् ।।

देव्याश्चित्तस्थितिं ज्ञात्वा विजया निरकासयत् ।। १३ ।।

सा चातिरोषेण कृतप्रतिज्ञा दैत्यरूपिका ।।

गत्वा विदितवृत्तांतमकरोन्महिषासुरम् ।। १४ ।।

सोऽपि तत्सर्वमाकर्ण्य रुषातीवारुणेक्षणः ।।

देवीं जिघृक्षुरभ्यागाद्वृतो दैतेयकोटिभिः ।। ।। १५ ।।

स्यन्दनैर्द्विरदैरश्वैः पत्तिभिश्च समंततः ।।

भुवमाच्छादयामास ध्वजैश्च गगनांतरम् ।। १६ ।।

क्ष्वेलितैर्वाद्यघोषैश्च नभः स्फुटदिवाभवत् ।।

पादाघातैश्च दैत्यानां विदद्रे वसुधातलम् ।। १७ ।।

करालो दुर्द्धरस्तस्य विचष्णुर्विकरालकः ।।

बाष्कलो दुर्मुखश्चंडः प्रचंडश्चामरासुरः ।। १८ ।।

महाहनुर्महामौलिरुग्रास्यो विकटेक्षणः ।।

ज्वालास्यो दहनश्चेमे सेनान्योपि प्रतस्थिरे ।। १९ ।।

कोलाहलमिमं श्रुत्वा देवी नियमविघ्नतः ।।

शंकिता दैत्यसंहृत्यै दुर्गामादिशति स्म सा ।। 1.3.2.19.२० ।।

सारुणाद्रिरहोद्रोण्यामधिरूढा मृगाधिपम् ।।

दीप्तायुधधरैर्दोर्भिः कालिकेव महीं गता ।। २१ ।।

घनाघनरवोदग्रं सिंहनादमचीकरत् ।।

स्फुरद्दंतच्छदोपांतं वल्गदंगुलिपल्लवा ।। २२ ।।

स्वांगेभ्यो योगिनीचक्रं मातरोऽप्यसृजन्रुषा ।।

देव्याः प्रियाय दैतेयसंहारार्हाः सहस्रशः ।। २३ ।।

काश्चित्तत्रारुणच्छाया दंडिन्यो हंसवाहनाः ।।

मुखैश्चतुर्भिराजग्मुः कोपप्रस्फुरिताधरैः ।। ।। २४ ।।

निर्ययुः काश्चन क्रुद्धा ज्वलत्त्रिशिखपाणयः ।।

निस्वनद्भूषणाः पंसल्ललाटा वृषवाहनाः ।। २५ ।।

निर्जग्मुरपराः सेनासहिताः शिखिवाहनैः ।।

शक्तिदंडाभयकराः शतशः षड्भिराननैः ।। २६ ।।

निश्चक्रमुः परास्ताक्ष्र्यमधिरुह्याधिकक्रुधा ।।

शंखचक्रधराः सूर्यचंद्रमोभ्यां दिवो यथा ।। ।। २७ ।।

प्रतिष्ठंते तथा व्याघ्रवाहाः कुवलयत्विषः ।।

पोत्रैः सद्घर्घरारावैर्बिभ्रत्यो मुसलं हलम् ।। २८ ।।

रोषारुणसहस्राक्ष्यो वलक्षद्विपवाहनाः ।।

प्रतस्थिरे शातकोटिशतकोटिधराः पराः ।। २९ ।।

अश्वारूढा समापेतुरेकाः सौदामिनीनिभाः ।।

खड्गखेटकधारिण्यः कोपेन कपिलाननाः ।। ।। 1.3.2.19.३० ।।

ताश्च कोटिचतुःषष्टिमसुरानाश्रमाद्वहिः ।।

अरुन्धन्प्रसभं ध्वांतराशीनिव रवेस्त्विषः ।। ३१ ।।

ततश्च योगिनीचक्रदानवानीकयोर्मिथः ।।

प्रावर्त्तत रणं घोरं मुष्टामुष्टि कचाकचि ।। ३२ ।।

सायकैर्योगिनीमुक्तैर्दलिता दैत्यमौलयः ।।

आच्छादयन्महीपृष्ठं स्थलजानीव सर्वतः ।। ३३ ।।

प्रसस्रू रक्तसरितो लगत्कैशिकशैवलाः ।।

लुठद्विपाठपाठीनाः स्मरैर्देवीमुखांबुजैः ।। ३४ ।।

वेतण्डतुण्डान्यारुह्य सौधानिव पिशाचिकाः ।।

प्रचण्ड तांडवाः पीतरक्तमद्याश्चकाशिरे ।। ३५ ।।

कपालैर्दैत्यवीराणामघासुरसृगासवान् ।।

क्रीडड्डमरुकाकारैर्डामरैर्योगिनीगणाः ।। ३६ ।।

परिजह्रुस्तथांत्राणि कंकौघाः पाशशंकया ।।

क्षुधिता अपि मांसानि सशल्यान्यजहुः शिवाः ।। ३७ ।।

सिद्धविद्याधरोन्मुक्तमंदारप्रसवासवैः ।।

इयाय शांतिं भूरेणुः संग्रामे क्षोभसम्भवः ।। ३८ ।।

विरेजुर्योगिनीमुक्तैर्देहलग्नैर्द्विषां हयाः ।।

अमर्षातिशयोत्क्षिप्तैः शल्यैः शल्यमृगा इव ।। ३९ ।।

दंडैः केचित्परे शूलैर्निशितैः केऽपि शक्तिभिः ।।

चक्रैरन्ये हलैरेके कतिचिच्छतकोटिभिः ।। 1.3.2.19.४० ।।

योगिनीनां परे खड्गैर्दलिता दानवेश्वराः ।।

निःशेषतामुपाजग्मुर्विना सेनाधिपान्निजान्।। ४१ ।।

ब्राह्मी स्वयमुपागम्य विहितायोधनावधीत् ।।

करालं विकरालेन दण्डेन ज्वलिता चिरात् ।। ४२ ।।

माहेश्वरी त्रिशूलेन सुचिरं कृतसंगरा ।।

चकर्त दुर्द्धरस्याशु मूर्द्धानमतिरोषणा ।। ४३ ।।

शक्त्या लुलाव कौमारी चिक्षुरासुरमस्तकम् ।।

चक्रेण चालुनान्मौलिं विकरालस्य वैष्णवी ।। ४४ ।।

बाष्कलस्याशु वाराही मुसलेनालुनाच्छिरः ।।

दुर्मुखं चाशु वज्रेण व्यधादैंद्री गतायुषम् ।। ४५ ।।

ख्यातं यस्याश्च नामेदं तयोरेव निदूषनात् ।।

चामुण्डा चण्डमुण्डौ च मण्डलाग्रेण चिच्छिदे ।। ४६ ।।

प्रचण्डचामरौ वीरौ महामौलिं महाहनुम् ।।

उग्रास्यविकटाक्षौ च ज्वालास्यदहनावपि ।। ४७ ।।

अनुजग्मुः क्रुधा यान्तं युद्धाय महिषासुरम् ।।

कालनेमिप्रभृतयो विप्रचित्तिमिवासुराः ।। ४८ ।।

शिरस्त्रवंतो रथिनः सुनिषंगा धनुर्धराः ।।

उद्धूतकटकाः प्रापुर्युद्धभूमिं चलद्ध्वजाः ।। ४९ ।।

समंतात्पूरितदिशः सिंहनादैर्भयंकरैः ।।

पृषत्कवर्षिणो मातृमंडलान्यभिदुद्रुवुः ।। 1.3.2.19.५० ।।

ताश्च तैर्बलिभिः कृत्वा संग्रामं निस्सहत्वतः ।।

दुर्गां प्रपेदिरे देवीं शरणं सिंहवाहनाम् ।। ५१ ।।

उक्त्वा मायालुलायस्य दुर्जयत्वं दुरात्मनः ।।

देवी तां तुष्टुवुर्दुर्गामेवं सप्तापि मातरः ।। ५२ ।।

योगनिद्रेति रूपेण विष्णोर्नयनपद्मयोः ।।

त्वया निलीयते देवि मधुकार्येव लीलया ।। ५३ ।।

अमूमुहस्तं न तथा मातश्च मधुकैटभौ ।।

कथं जघान तौ विष्णुस्तयोरेवाभ्यनुज्ञया ।। ५४ ।।

त्वं कौशिकी न चेज्जाता मृत्युः शुंभनिशंभयोः ।।

कथं तु लोकपालानामैश्वर्यं देवि एष्यति ।। ५५ ।।

विंध्यवासिनि विंध्येन किमवंध्यं कृतं तपः ।।

यत्र मैत्री किरातीभिरपि लभ्या त्वया समम् ।। ५६ ।।

कापिशायनमापीतं धनदोपायनीकृतम् ।।

त्वयांब नीतं दैत्यानां रसैर्नियतमानवैः ।। ५७ ।।

ब्रह्मणः सृष्टिशक्तिस्त्वं स्थितिशक्तिर्मधुद्विषः ।।

अंब संहारशक्तिश्च रुद्रस्यापि प्रगल्भसे ।। ५८ ।।

यशोदानंदजाता त्वमेकानंशेति नामतः ।।

कंसाद्यसुरसंहारे हरेः साह्यं करिष्यसि ।। ५९ ।।

त्वं विद्या त्वं महामाया त्वं लक्ष्मीस्त्वं सरस्वती ।।

त्वं देवी पार्वतीशापि दुर्गे किं वा न जायसे ।। 1.3.2.19.६० ।।

।। नन्दिकेश्वर उवाच ।। ।।

स्तोत्रेणानेन मातृभ्यो दुर्गा दत्ताभया स्वयम् ।।

महिषासुरयुद्धाय संतुष्टा निर्ययौ तदा ।। ६१ ।।

प्रचंडमंडलाग्रेण भिंडिपालेन चामरम् ।।

महामौलिं क्षुरिकया कर्परेण महाहनुम् ।। ६२ ।।

उग्रवक्त्रं कुठारेण शक्त्या विकटचक्षुषम् ।।

ज्वालामुखं मुद्गरेण दहनं मुसलेन च ।। ६३ ।।

निहत्य महिषस्याग्रे सरोषं युध्यती स्वयम् ।।

सिंहनादं महाघोरं चक्रेण मुदिताशया ।। ६४ ।।

अथात्यमर्षितो दुर्गां विशिखैर्महिषासुरः ।।

विव्याध फालफलके स्तनयोर्गंडयोरपि ।। ६५ ।।

ततो दुर्गाथ संरंभात्प्रजहारासुरेश्वरम् ।।

बाह्वोर्वक्षसि वक्त्रे च क्षुरप्रैः प्रज्वलत्फलैः ।।६६।।

ततो दैत्यस्त्रिभिर्दुर्गां जघान विशिखैर्मुखे ।।

पंचभिः पंचभिर्बाह्वोर्द्वाभ्यां द्वाभ्यां च नेत्रयोः ।। ६७ ।।

एकेन सारथिं रथ्यानष्टभिः कार्मुकं त्रिभिः।।
चतुर्भिश्च ध्वजं तस्य दुर्गा चिच्छेद सायकैः ।। ६८ ।।
पदातिरथ दैत्येंद्रः शतघ्नीं ज्वलदाकृतिम् ।।
कालदंडप्रतीकाशां दुर्गां प्रति विमुक्तवान् ।। ६९।।
हाहाकुर्वस्तु देवेषु विद्राणे मातृमंडले ।।
तामापतंतीमादाय दुर्गा जग्राह लीलया ।।1.3.2.19.७० ।।
कृपाणमंकुशं पाशं भुशुंडीं करवालिकाम् ।।
शंकुं शक्तिं गदां चक्रं तोमरं फलकं सृणिम् ।। ७१ ।।
परश्वधं भिंडिपालं पट्टिशं लगुडं च सः ।।
दुर्गां प्रति विचिक्षेप क्षयांभोद इवाशनिम् ।। ७२ ।।
आपतंत्येव शस्त्राणि क्षिप्तान्यादाय वैरिणाम्।।
बभंज पाणिभिः स्वैरं करिणीवेक्षुकांडकम्।।७३।।
दुर्गोपवाह्यः सिंहोऽपि लांगूलाग्रेण मुद्रितम् ।।
दंष्ट्रया दारयामास प्रहरन्नखपंकजैः ।। ७४ ।।
क्षणं सिंहः क्षणं क्रोडः क्षणं व्याघ्रः क्षणं गजः ।।
क्षणं च महिषो भूत्वा दैत्यो दुर्गामयोधयत् ।। ७५ ।।
महिषोऽथ विषाणाभ्यां तीक्ष्णाभ्यामत्यमर्षितः ।।
ताडयामास सिंहं च देवीमपि मुहुर्मुहुः ।। ७६ ।।
क्षणं गगनमध्यस्थः क्षणं प्राप्तो महीतले ।।
क्षणं दिक्षु भ्रमन्प्राप्तः क्षणं चादृश्यतां गतः ।।७७।।
प्रार्थिता मातृचक्रेण दुर्गा महिषदानवम् ।।
अमोघेन त्रिशूलेन दारयामास सस्मिता ।। ७८ ।।
मुक्तघर्घरनिर्घोषो यावत्पतति दानवः ।।
तावदस्य हठेनांघ्रिं स्कंधपीठे न्यवेशयत् ।। ७९ ।।
कंठपीडनतो यातजीवितस्यामरद्रुहः ।।
छिन्नमूर्द्धानमादाय पाणिनाथ ननर्त्त सा ।। 1.3.2.19.८० ।।
इति दुर्गया समिति कासरासुरे दलिते समस्तभुवनैककंटके ।।

ननृतुः सुराः प्रजहृषुर्महर्षयो ववृषुश्च दिव्यकुसुमानि वारिदाः ।। ८१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्यउत्तरार्धे देव्यास्तपश्चर्यायां दुर्गाकृतमहिषासुरवधवर्णननामैकोनविंशोऽध्यायः ।। १९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः २०



।। मार्कंडेय उवाच ।। ।।

अहो महिषदैत्यस्य दुराचारत्वमीदृशम् ।।

अहो दुरितहारिण्या दुर्गायाश्च पराक्रमः ।। १ ।।

एवं तया भद्रकाल्या निहते महिषासुरे ।।

किं चकार गिरींद्रस्य नंदिनी तपसि स्थिता।। २ ।।

।। नंदिकेश्वर उवाच ।। ।।

अनंतरं सा हस्तेन दधती दैत्यमस्तकम् ।।

ननाम गौरीमन्येन पाणिना खड्गधारिणा ।। ३ ।।

अथ हर्षेण नृत्यंतीं तामालोक्य दयार्द्रया ।।

दृष्ट्या देवी जगादैनां दंतांशुद्योतितांबरा ।। ४ ।।

त्वयातिदुष्करं कर्म निर्मितं विंध्यवासिनि ।।

जातं तव प्रभावेन निष्प्रत्यूहं च मे तपः ।। ५ ।।

अथैतन्माहिषं शीर्षमपवित्र भयंकरम् ।।

जगत्पवित्रचारित्रे त्यक्तुमर्हसि हस्ततः ।। ६ ।।

इति गौर्योदिता दुर्गा जुगुप्साकुलमानसा ।।

मूर्ध्नस्तस्य निपाताय व्यधुनोद्बहुशः करम् ।। ७ ।।

तीर्थमुत्पाद्यतां देवि नवं पापविनाशनम् ।।

तस्मिन्निमज्जनाद्दुर्गे प्रायश्चित्तं भविष्यति ।। ८ ।।

इतीरिता गौतमेन दुर्गा दुरितशंकिनी ।।

पाटयामास खड्गेन शिलापट्टं पटीयसा ।। ९ ।।

पातालावधि निर्भिन्नात्पाषाणतलतस्ततः ।।

उदजृंभत्तरंगांभः सच्चित्तमिव निर्मलम् ।। 1.3.2.20.१० ।।

ममज्ज सापि गंभीरे तस्मिन्नंभसि पावने ।।

नमः शोणाद्रिनाथायेत्युक्त्वा मंत्रमनुत्तमम् ।। ११ ।।

तावन्महिषकंठस्थं लिंगं तद्गलितं तले ।।

तटे प्रतिष्ठितं जातं पापनाशनसंज्ञया ।। १२ ।।

उन्ममज्ज ततो दुर्गा तीर्थांभोधूतकल्मषा ।।

निपपाताथ तत्पाणेर्महिषासुरमस्तकम् ।। १३ ।।

कृतप्रदक्षिणा नत्वा पापनाशनमीश्वरम् ।।

पुरस्तादस्ति सा गौर्या गौतमेनाभिनंदिता।।१४।।

एवं प्रत्यक्षनिरतपापां तां वीक्ष्य पार्वती।।

जगाद दीर्घतपसं जगतीधरनंदिनी।।१५।।

महिषासुरसंहारेंऽजसा स्वनुमतिः कृता ।।

विंध्यवासिनीयमहो दुष्टमाहिषविग्रहम् ।। १६ ।।

गृहीत्वा भक्षयामास तस्य लिंगमिदं शिवम् ।।

प्रायश्चित्तं ततो ब्रूहि ममापि मुनिसत्तम ।।१७ ।।

।। गौतम उवाच ।। ।।

देवि सर्वजगत्सर्गस्थितिसंहारकारिणि ।।

त्वद्ध्यानमेव जगतां सर्वपातकनाशनम् ।। ।। १८ ।।

अथापि लौकिकं वृत्तमवलंब्य त्वयेरितम् ।।

स्वकृतापि हि मर्यादा न महद्भिर्विलंघ्यते ।। १९ ।।

अन्तःकरणकालुष्यक्षालिनी काचन क्रिया ।।

कथ्यतेऽद्य मया मातरवधानं विधीयताम् ।। 1.3.2.20.२० ।।

अरुणाद्रिरयं साक्षादनलाद्रिस्तिरोहितः ।।

ज्वलतिज्योतिषा स्वेन कृत्तिकापूर्णिमा निशि ।। २१ ।।

तत्सपर्यातपश्चर्या कार्या कात्यायनि त्वया ।।

तज्ज्योतिर्दर्शनात्सर्वमभीष्टं तव सिध्यति ।। २२ ।।

इत्युक्ता गौतमेनांबा तदाप्रभृति दारुणा ।।

इयं च शिवभक्ता हि शिवपूजारता तदा ।। २३ ।।

तपश्चचार पंचानामग्नीनां मध्यमाश्रिता ।।

चतुर्णां शिखिनां मध्ये स्थिता सूर्यनिविष्टदृक् ।। २४ ।।

रेजे हैमी शलाकेव द्योतमाना गिरींद्रजा ।।

अथाकृष्टेवपार्वत्याः प्रेमपाशैर्निरायतैः ।। २५ ।।

सा कार्त्तिकी पौर्णमासी समापेदे शुभा तिथिः ।।

ततस्तस्य दिनस्यांते शृंगे शोणमहीभृतः ।। २६ ।।

अदर्शि किमपि ज्योतिरनुपाधिकवैभवम् ।।

तदर्थोपगतैर्ब्रह्ममधुभिद्वासवादिभिः ।। २७ ।।

उपास्यमानमभितो देवैर्दिव्यर्षिसंगतैः ।।

तदनिंधनमस्नेहमदशावर्तिसंभवम् ।। २८ ।।

महाप्रदीपमालोक्य विस्मयं प्राप पार्वती ।।

कृतप्रदक्षिणा साथ प्रणमंती पदेपदे ।।

अरुणाद्रीश्वरं नाथं तुष्टा तुष्टाव शैलजा ।। २९ ।।

नमस्ते मेरुचापाय कैलासाचलवासिने ।।

नीहारशैलजामात्रे शोणक्ष्माधररूपिणे ।। 1.3.2.20.३० ।।

वरुणादिसुराच्र्याय तरुणादित्यवर्चसे ।।

अरुणाचलनाथाय करुणामूर्त्तये नमः ।। ।। ३१ ।।

जय जह्नुसुताचन्द्र लेखालंकृतशेखर ।।

सौंदर्यमोहिताशेषमुनिपत्नीजनाशय ।। ३२ ।।

जय शैलसुतासंगसंभृतानंगवैभव ।।

माया नारायणाभोगक्रीडाम्रेडनपंडित ।। ३३ ।।

जय संध्यासमोपेतसंभृतानंदतांडव ।।

जय गीर्वाणगंधर्वसिद्धविद्याधरार्चित ।। ३४ ।।

जय हेरंबजनक जय षण्मुखवत्सल ।।

जय हैमवतीप्राथ्र्य जय पार्थिवदुर्लभ ।। ३५ ।।

इति स्तुत्वा मुहुस्तस्मिञ्ज्योतिषि न्यस्तलोचनाम् ।।

दृष्ट्वा देवीं दयाव्याजाद्विलिल्ये वृषभध्वजः ।। ३६ ।।

लयित्वा निजमास्थाय रूपमुत्कटसुन्दरम् ।।

आस्थाय वृषभं दिव्यममूं दृष्ट्वा शिवां शुभाम् ।। ३७ ।।

मानातिरेकादपहाय सर्वमैश्वर्यमेवं तपसि प्रवृत्ताम् ।।

मुग्धां पुनः सांत्वयितुं गिरीशः प्रचक्रमे पर्वतराजपुत्रीम् ।। ३८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे पार्वतीकृतारुणाचलेश्वरस्तुतिवर्णनंनाम विंशतितमोऽध्यायः ।।२०।।छ।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः २१

https://sa.wikisource.org/s/f35
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। नंदिकेश्वर उवाच ।। ।।

तदा ब्रह्मा सरस्वत्या महाविष्णुश्च पद्मया ।।

शक्रः पुलोमसुतया परे दिक्पालका अपि ।। १ ।।

गंधर्वाप्सरसां संघा वसवोऽपि सुरा अपि ।।

त्रयस्त्रिंशत्कोटिगणाः परे मुनि गणा अपि ।। २ ।।

एकादशमहारुद्रा आदित्या द्वादशापि च ।।

भैरवाश्च पिशाचाश्च वेतालाः कटपूतनाः ।। ३ ।।

यक्षरक्षोरगा भूता ये चान्ये शिवकिंकराः ।।

संतोषभाजः सर्वेऽपि विकटाकारवेष्टिताः ।। ४ ।।

परिवार्य महेशानं समाजग्मुः सहस्रशः ।।

तद्वीराशंसनं दृष्ट्वा योगिनीदानवैः कृतम् ।। ५ ।।

अतीव विस्मयं भेजुः सर्वे कल्पांतभीषणम् ।।

कृतसांनिध्यमालोक्य देवमानंदयंत्युमा ।। ६ ।।

चिररात्रप्ररूढां च तद्वियोगव्यथां जहौ ।।

रोमांचिता स्विन्नमुखी वेपमाना घनस्तनी ।। ७ ।।

पादांगुलीषु नयने विनिवेशयति स्म सा ।।

वृषभादवरुह्याथ गृहीत्वैनां करे शिवः ।।

स्मितशरीरकंठश्रीप्रणयेनैवमब्रवीत् ।। ८ ।।

।। शिव उवाच ।। ।।

व्याकुलीक्रियते देवि किमेवं कारणं विना ।। ९ ।।

सर्वैराराधनीयेति मयापि घटितोंजलिः ।।

किं न वेत्स्यावयोरैक्यं ज्योत्स्नाचंद्रमसोरिव ।। 1.3.2.21.१० ।।

अनादिसिद्धं देवेशि तवेदं मौग्ध्यमीदृशम् ।।

क्वेदं शिरीषमृद्वंगि शरीरं ते गिरीन्द्रजे ।। ११ ।।

तपः समाधयश्चेति क्व कर्कशजनोचिताः ।

नारायणोहं लक्ष्मीस्त्वं ब्रह्मास्मि त्वं सरस्वती ।। १२ ।।

वारुणी त्वं फणींद्रोहं रोहिणी त्वमहं शशी ।।

स्वाहा त्वं हव्यवाहोऽहं सूर्योऽहं त्वं सुवर्चला ।।१३।।

जाह्नवी त्वं समुद्रोऽहं मेरुरस्मि त्वमुर्वरा ।।

पुलोमजा त्वं शक्रोहं त्वं रतिश्चित्तभूरहम् ।। १४ ।।

बुद्धिस्त्वं राजराजोहं त्वं शमाऽहं समीरण ।।

पाथोधिपोऽहं वीचिस्त्वं प्रकृतिस्त्वं पुमानहम् ।। १५ ।।

विद्या त्वं वेदितव्योऽहं वाक्त्वमर्थोपि पार्वती ।।

ईश्वरोऽहं मदंशासि त्वयैवाज्ञास्वरूपया ।। १६।।

सृष्टि स्थित्युपसंहारविधानानुग्रहेश्वरे ।।

न भेदोऽतस्त्वया कार्यः पृथग्जनवदावयोः ।। १७ ।।

चित्प्रकाशात्मनोर्देवि स्वेच्छाधृतशरीरया ।।

व्याकुलीकुरुषे शश्वद्वृथैवेर्ष्यायसे हि माम् ।। १८ ।।

दृष्टाप्रतिक्रिया तस्य क्रियते याधुना मया।।

इत्युक्त्वेशो निषण्णस्तां पार्श्वदेशे न्यवेशयत् ।। १९ ।।

गौरीं स्वकीय एवांगे गूहमानामिव ह्रिया ।।

अंगद्वयं तयोरैक्यमगात्प्रेम्णा च लीनयोः ।। 1.3.2.21.२० ।।

अर्थद्वयमिवाह्नाय संनिकर्षोपलंभतः ।।

अर्धे कर्पूरधवलमर्धे सिंधूरपाटलम् ।। २१ ।।

तद्विचित्रमभूदंगं शिवयोरेकतां गतम् ।।

अर्धे कुंतलदामार्धहारमध्ये तु कुंचिका ।।२२ ।।

अंगादर्धेंदुचूडस्य वपुरर्धेन्दुकूलितम् ।।

एकनूपुरताटंकपरिहार्यमनोहरम् ।। २३ ।।

एकपिंगलसध्रीचो गात्रमेकस्तनं बभौ ।।

देव्यै दत्त्वा च धामार्थं वामदेवो जगाद ताम् ।। २४ ।।

अवकाशो रुषो देवि मा भूरतः परं तव ।।

स्तन्यार्थिनं गुहं हित्वा यातासि तपसे यतः ।। २५ ।।

तदपीतस्तनीनाम्ना निवसात्र ममांतिके ।।

त्वामपीतस्तनीं देवीं शोणाद्रीशं च मामपि ।। २६ ।।

जनाः सर्वे समाराध्य रमंतां भोगमोक्षयोः ।।

इयं त्वदंशजा देवी दुर्गा महिषसूदिनी ।। २७ ।।

अत्रैव सन्निधत्तां तु मंत्रसिद्धिप्रदा नृणाम् ।।

खड्गतीर्थमिदं पुण्यं सकृदेव निमज्जनात् ।। २८ ।।

सर्वरोगहरं पुंसामस्तु सर्वाघनाशनम्।।

प्रवालगिरिनाथश्च देवोऽयं पापनाशनः।।२९।।

भक्तिश्रद्धावतां नृणां भूयास्तां भूतये भृशम्।।

अयं च गौतमो देवि त्वदनुग्रहभाजनम्।। ।।1.3.2.21.३०।।

तपोनुरूपं भजतां लोकेष्वाचंद्रतारकम् ।।

इमाश्च मातरः सप्त सप्तलोकैकमातरः ।।३१।।

अद्यप्रभृति कुर्वंतु सान्निध्यं जगतां श्रियै ।।

शास्तारो भैरवाः क्षेत्रपालका बटुका अपि ।। ३२ ।।

अरुणक्षेत्र एवात्र नित्यं कुर्वंतु संनिधिम् ।।

अत्राहमरुणक्षेत्रे निवसाम्यरुणाह्वयः ।। ३३ ।।

त्वयाप्यरुणया देव्या स्थातव्यं करुणार्द्रया ।।

ईप्सिनामरुणादेवौ सान्निध्यं कुरुतो यतः ।। ३४ ।।

तदस्मिन्नरुणक्षेत्रे सुलभाः सर्वसिद्धयः।। ३५ ।।

इदं कृतं पर्वतराजपुत्र्या प्रसादनं शोणगिरीश्वरस्य ।।

शृणोति यः स द्विषतो विधूय स्वर्गापवर्गौ सुलभावुपेयात् ।। ३६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे शिवकृतपार्वतीप्रशंसावर्णनंनामैकविंशतितमोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः २२

https://sa.wikisource.org/s/f37
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। मार्कंडेय उवाच ।। ।।

स्वामिन्नित्यशिवानन्द भगवन्नंदिकेश्वर ।।

आह्लादितोऽस्मि शोणेशमाहात्म्यसुधया त्वया ।। १ ।।

कथं वज्रांगदः पांड्यराजः शोणव्यतिक्रमम् ।।

चक्रे कथं तद्भक्त्यैव प्राप्तवान्संपदं पुनः ।। २ ।।

कथं विद्याधराधीशौ कांतिशालिकलाधरौ ।।

दुर्वासःशापनिर्विद्धाववितौ शोणशंभुना ।। ३ ।।

।। नंदिकेश्वर उवाच ।। ।।

दीर्घायुष्यत्वसाफल्यं लब्धवांस्त्वं मृकण्डुज ।।

यदियं स्थेयसी भक्तिर्भवतो भूतनायके ।। ४ ।।

वक्ष्ये वज्रांगदोदंतं वृत्तं विद्याभृतोरपि ।।

यतोऽभून्महितो लोके शोणाद्रीश्वरवैभवः ।। ५ ।।

आसीद्वज्रांगदोनाम पुरा पांड्येषु पार्थिवः ।।

आस्ते यस्य भुजस्तम्भे वसुधा सालभंजिका ।। ६ ।।

धार्मिको न्यायविज्ज्ञाता गंभीरो दक्षिणम् क्षमः ।।

शांतो विनयवान्धीमानेकदारव्रतः कृती ।। ७ ।।

शिवपूजार्चनरतः श्रीमाञ्छीलवतां वरः ।।

पृथ्वीमासेतुकेदाराच्छशास जितशात्रवः ।। ८ ।।

कदाचिन्मृगयाव्याजात्स चरन्सुतुरंगमः ।।

अरुणाचलपर्यंतं कांतारं समगाहत ।। ९ ।।

स तत्र बहलामोदं कंचित्कस्तूरिकामृगम् ।।

दृष्ट्वा तमन्वक्तुरगं प्रावर्तयत कौतुकात् ।। 1.3.2.22.१० ।

स मृगोऽनुद्रुतस्तेन अभितः शोणपर्वतम् ।।

प्रादक्षिण्यात्परीयाय पपात च मनोजवः ।। ११ ।।

ततः स भग्नसारोपि राजा जातश्रमश्चरन् ।।

पपात वाहाद्विच्छायः क्षीणपुण्य इव द्युतः ।। १२ ।।

अज्ञातकारणेनैवं मातंगेनेव पीडितः ।।

नाज्ञासीत्क्षणमात्मानं राजा ग्रहगृहीतवत् ।। १३ ।।

अचिंतयच्च कोयं मे निर्हेतुः सत्त्वविप्लवः ।।

क्व गतः स ह्यकस्मान्मे उपवाह्यस्तुरंगमः ।। १४ ।।

इति चिंताकुले तस्मिंस्तज्ज्ञानेप्यपटीयसि ।।

तडित्तटजटालेव सहसा द्यौरदृश्यत ।। १५ ।।

निरीक्षमाण एवास्मिन्हित्वा तिर्यक्कलेवरम् ।।

तूर्णं तुरंगसारंगौ खेचरत्वमुपागतौ ।। १६ ।।

किरीटिनौ कुण्डलिनौ हारकेयूरधारिणौ ।।

क्षौमांतरीयोत्तरीयौ स्रग्विणौ च विरेजतुः ।। १७ ।।

अवोचतां च नृपतिमाश्चर्याकृष्टमानसम् ।।

हरंताविव दन्तांशुजालैस्त्वस्यार्त्तिजं तमः ।। १८ ।।

राजन्नलं विषादेन शोणाद्रीशप्रभावतः ।।

एतां जानीहि संजातां नवां नौ चेदृशी दशाम्।। १९ ।।

तदोवाच तयोः किंचिदाश्वस्तइव पार्थिवः ।।

कृतांजलिरभाषिष्ट तावुभौ विनयान्वितः ।।1.3.2.22.२०।।

कौ युवां निर्मितो याभ्यामभिषंगो ममेदृशः ।।

भद्रौ भणतमार्त्तानां त्राणं हि महतां गुणः ।। २१ ।।

इति तेन कृते प्रश्ने तमुवाच कलाधरः ।।

राजानं जनिताश्चर्यं निर्दिष्टः कांतिशालिना ।। २२ ।।

अवेहि राजन्नावां हि पुराविद्याधरेश्वरौ ।।

परस्परातिसौहार्दौ वसंतमदनाविव ।। २३ ।।

एकदा तु सुवर्णाद्रेः पार्श्वे दुर्वाससो मुनेः ।।

तपोवनमगच्छाव मनसोऽपि दुरासदम् ।।२४।।

क्रोशेद्धां तपसस्तस्य शिवाराधनसाधनीम् ।।

पुष्पोज्ज्वलामपश्याव पुण्यामारामवाटिकाम् ।।२५।।

विनीतावप्यसंजातौ तत्त्वोचितसुधीगणौ ।।

प्राविशाव तदुद्यानं प्रसूनावचयोत्सुकौ ।। २६ ।।

स्थलस्य तस्य सौहार्दात्कांतिशाल्यतिगर्वितः ।।

संचचार मुहुः पादन्यासैराघट्टयन्महीम् ।। २७ ।।

अहं तु तत्र पुष्पाणां गंधातिशयमोहितः ।।

विकस्वरेषु पुष्पेषु न्यस्तहस्तो दुराशयः ।। २८ ।।

ततः शांडिल्यमूलस्थो व्याघ्रचर्मासने स्थितः ।।

दुर्वासास्तपसां राशिर्ज्वलन्निव हुताशनः ।।२९ ।।

अमर्षोत्कर्षनीरंध्रस्पंदमानाधरच्छदः ।।

कराल भृकुटीबंधसारालितविशालभूः ।। 1.3.2.22.३० ।।

सरोषोऽभूत्तेजसाढ्यो घर्मदंतुरविग्रहः ।।

दहन्निव दृशा पश्यन्नभर्त्सयत नौ मुनिः ।। ३१ ।।

आः पापौ प्रच्युताचारौ कौ युवामतिगर्वितौ ।।

ज्वलतः कोपवह्नेर्मे शलभत्वमुपागतौ ।। ३२ ।।

तपोवनमिदं मत्कं पावनं भूतभावनम् ।।

पादैर्न स्पृशतः क्वापि सूर्याचंद्रमसावपि ।।३३।।

पुरवैरिसपर्यायाः पर्यायकमिदं वनम् ।।

न स्पंदतेऽत्र वातोपि न लिप्यंतेऽत्र षटपदाः ।। ३४ ।।

तदेतत्पादसंचारैर्दूषयन्नेष पातकी।।

हयो भवतु भूलोके परवाह्यत्वपीडितः ।। ३५ ।।

अपरोप्ययमत्युग्रे पतत्वचलकंदरे।

प्रसूनगंधलोभाद्यो गंधसारंगतां गतः ।।३६।।

इति तेनोग्ररोषेण शापवज्रे निपातिते ।।

तत्क्षणाद्विगलद्गर्वावावां तं शरणं गतौ ।। ३७ ।।

अभिधाय च तं देवमाहितांघ्रिपरिग्रहैः ।।

अमोघ एष त्वच्छापस्तदस्यांतो निवेद्यताम् ।। ३८ ।।

अथातिदीनमनसावावामालोक्य पार्थिव ।।

सानुग्रहोऽभून्मुनिराट् कारुण्याददतिशीतलः ।। ३९ ।।

अभाषत च मैवं भो भवतोः क्वापि दुर्धियोः ।।

शापस्य भविता शांतिररुणाद्रेः प्रदक्षिणात् ।। 1.3.2.22.४० ।।

पुरा खलु पुरारातिरध्यतिष्ठच्छुभां सभाम् ।।

पर्युपास्यत दिक्पालैरिंद्रोपेंद्रयमादिभिः ।। ४१ ।।

तदा च देवदेवाय नंदनारण्यदेवता ।।

उपायनीकृतवती फलं किमपि पाटलम् ।। ४२ ।।

बाल्यात्कुतूहलाक्रान्तौ गजाननषडाननौ ।।

पितरं तदयाचेतां लोभनीयतरं फलम् ।। ४३ ।।

अथ तावददद्देवस्तनयौ फलतर्षितौ ।।

गोपयित्वा फलं पाणिसंपुटेन कुमारकौ ।। ४४ ।।

इमां समस्तां पृथिवीं लोकालोकेन वेष्टिताम् ।।

यो वां प्रदक्षिणीकर्तुमीष्टे तस्मै ददाम्यहम् ।। ४५ ।।

इत्युक्ते पार्वतीशेन स्मयमानमुखेंदुना ।।

स्कंदः प्रदक्षिणीकर्तुं मेदिनीमुपचक्रमे ।। ४६ ।।

लंबोदरस्तु देवस्य शोणशैलाकृतेः पितुः ।।

प्रदक्षिणं ततः कृत्वा पुरस्तादेव तत्क्षणात् ।। ४७ ।।

तद्दृष्ट्वा तस्य चातुर्यं हेरंबाय त्रियंवकः ।।

फलं वितीर्णवानस्मै प्रणयाघ्रातमस्तकः ।। ४८ ।।

अद्यप्रभृति सर्वेषां फलानामधिनायकः ।।

भवेत्यस्मै वरं दत्त्वा ह्येकदंताय शंकरः ।। ४९ ।।

बभाषे च सभास्तारान्सर्वानपि सुरासुरान् ।।

प्रसरद्दशनज्योत्स्नाकर्बुरीकृतमंदिरः ।।1.3.2.22.५० ।।

स्थावरोयं ममाकारः शोणाद्रिर्योऽस्य भक्तितः ।।

प्रदक्षिणां वितनुते स मे सारूप्यभाग्भवेत् ।। ५१ ।।

गिरेः प्रदक्षिणेनास्य यस्य धत्तः पदे रुजम् ।।

स सम्राट्सकलोत्कृष्टं लभते शाश्वतं पदम् ।। ५२ ।।

इति शासनतः शंभोः शोणशैलप्रदक्षिणम् ।।

विधाय सर्वगीर्वाणा लेभिरे स्वं स्वमीप्सितम् ।। ५३ ।।

युवामपि मदोद्भूतमालिन्यौ शिक्षितौ मया ।।

प्रदक्षिणेन शोणाद्रेः शापांतो वां भविष्यति ।। ५४ ।।

तिरश्चोरपि वां सिध्येदरुणाद्रेः प्रदक्षिणा ।।

वज्रांगदस्य पांड्यस्य नृपतेरनुबंधतः ।। ५५ ।।

इत्यमर्षणमहर्षिमहाब्धेः शापहालहल शोषितगात्रौ ।।

पातितौ बहुलपातकभारात्क्षिप्रमश्वमृगजातिषु जातौ ।। ५६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे ऽरुणाचलप्रदक्षिणामाहात्म्ये वज्रांगद वृत्तांतवर्णनं नाम द्वाविंशतितमोऽध्यायः ।। २२ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः २३



।। कलाधर उवाच ।। ।।

कांबोजेषु हयो भूत्वा कांतिशाली सुहृन्मम ।।

अयासीदौपवाह्यत्वं भवतो राजपुंगव ।। १ ।।

अहं च गंधमृगतां गतः स्वांगप्रसूतिना ।।

सुगंधिना मदेनास्य संचारं चाचरं गिरेः ।। २ ।।

धर्मात्मन्मृगयाव्याजादागतेन त्वयाधुना ।।

आवां शोणाद्रिनाथस्य प्रापितौ हि प्रदक्षिणाम् ।। ३ ।।

वाहारोहणदोषेण तवासीदीदृशी दशा ।।

पादप्रचारपुण्येन प्राप्तं नौ प्राक्तनं पदम्।। ४ ।।

राजेंद्र तव संबंधादस्मात्तिर्यक्त्वबंधनात् ।।

मुक्तावावां स्वकं धाम प्राप्तौ स्वस्त्यस्तु ते सदा।। ५ ।।

इत्युदीर्य निजं धाम यियासंतं कलाधरम् ।।

कांतिशालिनं च राजा जगाद रचितांजलिः ।। ६ ।।

एवं युवां शोणशैलशंकरस्य प्रभावतः ।।

शापार्णवं समुत्तीर्णौ कथं मे पुनरुच्छ्रयः ।।७।।

भ्राम्यतीव मम स्वांतमाधाय तदवेक्षणम् ।।

निर्यातीव मम प्राणास्तत्र दैवं बलोत्तरम् ।। ८।। ।।

कलाधरकांतिशालिनावूचतुः ।। ।।

अवधारय निस्तारं कथयाव तवास्यदम् ।।

समाहितेन मनसा निर्धूतनिखिलाधिना ।। ९ ।।

जगत्सर्गस्थितिध्वंसविधानानुग्रहेश्वरे ।।

अरुणाद्रीश्वरे चित्तं निधेहि करुणानिधौ ।।1.3.2.23.१०।।

प्रत्यक्षितं त्वयेदानीमस्य देवस्य वैभवम् ।।

तिरश्चोरावयोरेतदीदृशत्वं वितन्वतः ।। ११ ।।

कुरु प्रदक्षिणां पादचारी मृगमदाद्दतैः ।।

कल्हारैः पूजयेशानं देवं मृगमदप्रियम् ।। १२ ।।

यावती तव संपत्तिस्तावतीमखिलां विभो ।।

प्राकारगोपुरागारनवीकाराय कल्पय ।। १३ ।।

अचिरादेव सिद्धिस्ते भविष्यति गरीयसी ।।

मनुमांधातृनाभागभगीरथवदाधिका ।। १४ ।।

।। नंदिकेश्वर उवाच ।। ।।

इत्थं निशम्य च तयोर्निजमेव धाम विद्याभृतोः सपदि संश्रुतयोर्नरेन्द्रः ।।

निःसंशयेन मनसा निरतस्तदानीं भक्तिं बबंध भगवत्यरुणाद्रिनाथे ।।१५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे कलाधरकांतिशालिवृत्तांतवर्णनंनाम त्रयोविंशतितमोऽध्यायः ।।२३।। ।।

# स्कन्दपुराणम्/खण्डः १ (माहेश्वरखण्डः)/अरुणाचलमाहात्म्यम् २/अध्यायः २४

https://sa.wikisource.org/s/f38
< स्कन्दपुराणम् | खण्डः १ (माहेश्वरखण्डः) | अरुणाचलमाहात्म्यम् २

।। मार्कंडेय उवाच ।। ।।

भगवन्भवमाहात्म्यरत्नाकरसुधाकरम् ।।

नंदीश चित्रं चारित्रं श्रुतं विद्याभृतोर्द्वयोः ।। १ ।।

कदा वज्रांगदः सिद्धः कथं देवमपूजयत् ।।

कथं चान्वग्रहीत्प्रह्वं देवस्तमरुणेश्वरः ।। २ ।।

।। नंदिकेश्वर उवाच ।। ।।

निवर्त्तनेच्छां हित्वाथ नृपो निजपुरं प्रति ।।

तस्यैव पादपर्यंते स्वस्य वासमरोचयत् ।। ३ ।।

अथास्य महती सेना वाहमार्गानुसारिणी ।।

प्राप्ता शतांगमातंगतुरंगभटसंकुला ।। ४ ।।

समदृश्यत भूपालस्तादृशो धैर्यसागरः ।।

पुरोधोमंत्रिसामंतसेनापतिसुहृत्तमैः ।। ५ ।।

ततस्तामागतां सेनामवनीपतिरादृतः ।।

अरुणाद्रेश्च सीमाया बहिरेव न्यवेशयत् ।। ६ ।।

स्वकीयमखिलं कोशं देशानपि महाफलान् ।।

शोणाद्रिनाथपूजायै कल्पयामास भक्तिमान् ।। ७ ।।

गौतमस्याश्रमाभ्याशे स्वयं कृततपोवनः ।।

पुरोधोक्तः ससचिवः शिवार्चनरतोऽभवत् ।। ८ ।।

रत्नांगदाख्यं तनयं स्थापयित्वा निजे पदे ।।

तत्प्रेषितैरपर्याप्तैः शोणेशं पर्यतर्पयत् ।। ९ ।।

परितः शोणशैलस्य परिपूर्णजलाशयान् ।।

अग्रहारान्बहुफलान्ब्राह्मणेभ्योऽतिसृष्टवान् ।। 1.3.2.24.१० ।।

तेजसारुणनाथस्य ज्वलनस्तंभरूपिणः ।।

धन्वप्रायेऽपि देशेऽस्मिन्दीर्घिकाः शतशो व्यधात् ।। ११ ।।

सौंदर्यशालिनीरात्मपरिवारवरांगनाः ।।

सेवार्थं शोणनाथस्य दत्तवान्दीर्घदर्शनः ।। १२ ।।

अथागतेनागस्त्येन लोपामुद्रासखेन सः ।।

अभ्यनंद्यत शोणाद्रिनाथपूजापरायणः ।। १३ ।।

प्रत्यहं नवतीर्थाख्ये सरसि स्नानमाचरन् ।।

पापनाशप्रवालेशौ प्रयतः पर्यपूजयत् ।। १४ ।।

महिषासुरसंहारकारिणी मानवेश्वरः ।।

नित्यमाराधयामास दुर्गां दुर्ग्गार्तिहारिणीम् ।। ।। १५ ।।

प्रतिक्षणं ब्रह्मविष्णुपूज्यस्य लिंगरूपिणः ।।

आदिदेवस्य विविधाः सपर्याः पर्यकल्पयत् ।। १६ ।।

प्रत्युषस्युत्थितः स्नातः पादाभ्यामेव पार्थिवः ।।

जपन्पंचाक्षरीमंत्रमकार्षीत्त्रिः प्रदक्षिणाम् ।। १७ ।।

पौर्णमास्यां स कार्त्तिक्यां पार्वतीवल्लभप्रियम् ।।

महादीपोत्सवं चक्रे महितं भुवनत्रये ।। १८ ।।

सुगंधसारकह्लारकर्पूरजलपूरितः ।।

सहस्रैः स्वर्णकुंभानामभ्यषिंचत्त्रियंत्रकम् ।। १९ ।।

प्रतिमासध्वजारोहपूर्वं तीर्थोत्सवादिकम् ।।

त्रैलोक्याभ्यर्हितं चक्रे रथारोहं महोत्सवम्।। 1.3.2.24.२०।।

अंगं प्रदक्षिणं चास्य विदधे विशदाशयः।।

योजनत्रितयायामव्यापिनः शोणभूभृतः।।२१।।

अरुणाचलनाथेति करुणामृतसागरः।।

अरुणांवासनाथेति तुष्टाव च मुहुर्मुहुः।।२२।।

संलिप्य विविधैर्द्रव्यैर्नित्यं पंचामृतादिभिः।।

आचर्च यद्गंधसारपंकैः कर्पूरपांडुरैः ।। २३ ।।

अपूजयत कल्हारैः स्रवन्मृगमदद्रवैः ।। प्रा

तरारभ्य शोणाद्रिनायकं गणरूपिणम् ।। २४ ।।

इति वर्षत्रयं तस्य वशिनो वरिवस्यया ।।

अरुणाद्रीश्वरस्तुष्टः प्रत्यक्षत्वमगाहत ।।२५।।

नीहाराचलसंकाशमारूढो वृषपुंगवम्।।

अन्वगासीनया देव्या कृतगाढोपगूहनः।। २६।।

ब्रह्मर्षिभिर्वसिष्ठाद्यैर्नारदाद्यैर्महर्षिभिः।।

गणैर्निकुंभकुंभाद्यैः क्रियमाणजयस्तुतिः ।। २७।।

करुणासिंधुकल्लोलैः कमलावासवेश्मभिः ।।

कटाक्षपातैर्जगतां कालुष्यमिव वारयन् ।। २८ ।।

दृष्ट्वा च देवदेवं तमष्टांगं न्यस्य भूतले ।।

प्रणनाम परं हृष्टो वज्रांगदमहीपतिः ।। २९ ।।

व्यज्ञापयच्च भूपालो मौलीकृतशतांजलिः ।।

क्षालयन्निव दंतांशुजालैस्तत्पादपंकजे ।। 1.3.2.24.३० ।। ।।

।। वज्रांगद उवाच ।। ।।

देवेश यदहं मोहाद्बहुपातकसंचयम् ।।

अचारिषं स एकोऽयं क्षम्यतां मे व्यतिक्रमः ।। ३१ ।।

इतिवादिनमत्यंतं दीनमेव दयानिधिः ।।

जगाद जगतीनाथो देवः शोणाचलेश्वरः ।। ३२ ।।

।। श्रीमहेश्वर उवाच ।। ।।

मा भैषीर्वत्स भद्रं ते संत्यष्टौ मम मूर्तयः ।।

ताः सर्वाः सर्वजंतूनामत्यर्थं परिकल्पिताः ।। ३३ ।।

पुरा पुरंदरस्त्वं हि कैलासशिखरे स्थितम् ।।

गर्वितो मामवामंस्थाः स्तंभितश्च तदा मया ।। ३४ ।।

क्षणं गलितगर्वस्त्वं स्तंभना व्रीडितस्तदा ।।

अयाचिष्ठाः शिवज्ञानमखिलैश्वर्यकारणम् ।। ३५ ।।

आदिष्टस्त्वं मया वज्रिन्नवतीर्यावनिं भवान्।।

राजा वज्रांगदो भूत्वा लप्स्यसे मत्कृपामिति।। ३६।।

जातं ततः प्रभावेण क्षेत्रमेतन्मदास्पदम्।।

शिक्षितोतीव मुग्धस्त्वं भक्तोसि च परं मयि ।। ३७ ।।

अधुनातिसपर्याभिस्त्वत्कृताभिरहर्निशम् ।।

परितुष्टोस्म्यहं राजन्नतस्त्वां बोधयाम्यहम् ।। ३८ ।।

खं वायुरनलो वारि भूः सूर्य शशिनौ पुमान् ।।
इति मन्मूर्तिभिर्विश्वं भासते सचराचरम् ।। ३९ ।।
कालो हि कालयाम्यर्थान्सत्त्वानध्वन एव च ।।
तत्त्वातीतः शिवश्चाहं न मत्तोस्तीह किंचन ।। 1.3.2.24.४० ।।
अपर्यंतचिदानंदसिंधोर्मे केचिदूर्मयः ।।
वेधोमुकुन्दरुद्रेंद्रमुखानाहुरुदित्वराः ।। ४१ ।।
वाणीलक्ष्मीक्षमाश्रद्धाप्रज्ञास्वाहास्वधादयः ।।
असंख्येयमहाशक्तेर्मम विसृष्टिशक्तयः ।। ४२ ।।
इयं मम महाशक्तिर्गौरी माया जगत्प्रसूः ।।
अनयाच्छाद्यते विश्वं शश्वद्विस्तार्यतेऽपि च ।। ४३ ।।
शक्त्यानयान्वितः सर्गरक्षासंहृतिविभ्रमः ।।
विचित्रमेतत्पश्यामि जगच्चित्रं निजेच्छया ।।४४।।
अपवाहितमोहस्त्वं महिमा मे विचारय ।।
आत्मानमविभिन्नं मे तरंगमिव वारिधेः ।। ४५ ।।
ततो मद्रूपशालिन्या आधिपत्यं क्षितेर्गतः ।।
मत्प्रसादेन राजेंद्र भुंक्ष्व भोगान्यथासुखम् ।। ४६ ।।
पुनः पुरंदरत्वेन भुक्तदिव्यसुखश्चिरम्।।
मदेकरूपतां राजन्निश्चयात्त्वमवाप्स्यसि ।। ४७ ।। ।।
नंदिकेश्वर उवाच ।। ।।
इत्युक्त्वांतर्हिते देवे राजा वज्रांगदः कृती ।।
शोणेशं पूजयन्नेव सर्वान्भोगानवाप्तवान् ।।४८।।
इत्थं ते कथितं साधो शिवभक्तविजृंभणम् ।।
प्रदक्षिणाफलं चैव शोणशैलस्य शाश्वतम् ।। ४९ ।।
किं वाचां विस्तरेणात्र शोणशैलप्रदक्षिणा ।।
महतामश्वमेधानां शतादपि विशिष्यते ।। 1.3.2.24.५० ।।
विषुवायनसंक्राति व्यतीपातादिपर्वसु ।।
प्रदक्षिणाच्छोणगिरेरसंख्येयं फलं लभेत् ।। ५१ ।।
न क्षेत्रमरुणादस्ति नास्ति देवोऽरुणेश्वरात् ।।

नापि प्रदक्षिणादन्यद्विपद्यतेऽभ्यधिकं तपः ।। ५२ ।।

इति कथयति नंदिकेश्वरेस्मिन्पुलकितसर्ववपुर्मृकण्डुपुत्रः ।।

मुहुरधिगतहर्षवाष्पवृष्टिर्महति निमग्न इवाभवत्सुधाब्धौ ।। ५३ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डेऽरुणाचलमाहात्म्य उत्तरार्धे वज्रांगदसद्गतिवर्णनंनाम चतुर्विंशतितमोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०१



वेङ्कटाचलमाहात्म्यम्

नारदस्य सुमेरुशिखरस्थयज्ञवराहदर्शनम्

पावने नैमिषारण्ये शौनकाद्या महर्षयः ।।

चक्रिरे लोकरक्षार्थं सत्रं द्वादशवार्षिकम् ।।१।।

तानभ्यगच्छत्कथको व्यासशिष्यो महामतिः ।।

मुनिरुग्रश्रवा नाम रोमहर्षणसम्भवः ।। २।।

सम्यगभ्यर्चितस्त्वेषां सूतः पौराणिकोत्तमः ।

कथयामास तद्दिव्यं पुराणं स्कन्दनामकम् ।।३ ।।

सृष्टिसंहारवंशानां वंशानुचरितस्य च ।

कथां मन्वन्तराणां च विस्तरात्स न्यवेदयत् ।।४।।

कथास्तीर्थप्रभावाणां श्रुत्वा ते मुनिपुङ्गवाः ।।

ऊचिरे वशिनं सूतं कथाश्रवणकाङ्क्षया ।।५।।

।।ऋषय ऊचुः ।।

रोमहर्षण सर्वज्ञ पुराणार्थविशारद ।।

माहात्म्यं श्रोतुमिच्छामो गिरीन्द्राणां महीतले ।।

ब्रूहि त्वं नो महाभाग के प्रधाना महीधराः ।६।।।

।।श्रीसूत उवाच ।।

एतमेव पुरा प्रश्नमपृच्छं जाह्नवीतटे ।।

व्यासं मुनिवरश्रेष्ठं सोऽब्रवीन्मे गुरूत्तमः ।। ७ ।।

।।व्यास उवाच।।

पुरा देवयुगे सूत नारदो मुनिसत्तमः ।

सुमेरुशिखरं गत्वा नानारत्नसुशोभिनम् ।।८।।

तन्मध्ये विपुलं दीप्तं ब्रह्मणो दिव्यमालयम् ।

दृष्ट्वा तस्योत्तरे देशे पिप्पलद्रुममुत्तमम् ।।९।।

सहस्रयोजनोच्छ्रायं विस्तीर्णं द्विगुणं तथा ।

तन्मूले मण्डपं दिव्यं नानारत्नसमन्वितम् ।।2.1.1.१०।।

पद्मरागमणिस्तम्भैः सहस्रैः समलंकृतम् ।।

वैडूर्यमुक्तामणिभिः कृतस्वस्तिकमालिकम् ।।११।।

नवरत्नसमाकीर्णं दिव्यतोरणशोभितम् ।

मृगपक्षिभिराकीर्णं नवरत्नमयैः शुभैः ।। १२।।

पुष्परागमहाद्वारं सप्तभूमिकगोपुरम् ।।

सन्दीप्तवज्रसुकृतकवाटद्वयशोभितम् ।। १३।

प्रविश्याऽसौ ददर्शान्तर्दिव्यमौक्तिकमण्डपम् ।।

वैडूर्यवेदिकं तुङ्गमारुरोह महामुनिः ।।१४।।

तन्मध्ये तुङ्गमतुलं वसुपादविराजितम् ।।

ददर्श मुक्तासङ्कीर्णं सिंहासनं महाद्युति।। १५।।

तन्मध्ये पुष्करं दिव्यं सहस्रदलशोभितम् ।।

श्वेतं चन्द्रसहस्राभं कर्णिकाकेसरोज्ज्वलम्।। १६।।

तस्य मध्ये समासीनं पूर्णचन्द्रायुतप्रभम्।।

कैलासपर्वताकारं सुन्दरं पुरुषाकृतिम्।। १७।।।

चतुर्बाहुमुदारांगं वराहवदनं शुभम्।।

शंखचक्राभयवरान्बिभ्राणं पुरुषोत्तमम्।।१८।।

पीताम्बरधरं देवं पुंडरीकायतेक्षणम्।।

पूर्णेंदुसौम्यवदनं धूपगंधिमुखांबुजम्।। १९।।

सामध्वनिं यज्ञमूर्तिं स्रुक्तुण्डं स्रुवनासिकम्।।

क्षीरसागरसंकाशं किरीटोज्ज्वलिताननम्।।2.1.1.२०।।

श्रीवत्सवक्षसं शुभ्रयज्ञसूत्रविराजितम्।।

कौस्तुभश्रीसमुद्द्योतं समुन्नतमहोरसम्।। २१।।

जांबूनदमयैर्दिव्यैः सुरत्नाभरणैर्युतम्।।

विद्युन्मालापरिक्षिप्तशरन्मेघमिवोज्ज्वलम्।। २२।।

वामपादतलाक्रांतपादपीठविराजितम्।।

कटकांगदकेयूरकुण्डलोज्ज्वलितं सदा।।२३।।

चतुर्मुखवसिष्ठात्रिमार्कण्डेयैर्मुनीश्वरैः ।।

भृग्वादिभिरनेकैश्च सेव्यमानमहर्निशम् ।। २४ ।।

इन्द्रादिलोकपालैश्च गन्धर्वाप्सरसां गणैः ।।

सेवितं देवदेवेशं प्रणिपत्याभिगम्य च ।। २५ ।।

दिव्यैरुपनिषद्भागैरभिष्टूय धराधरम् ।।

नारदः परमप्रीतः स्थितो देवस्य सन्निधौ ।। २६ ।। ।।

अथ वराहसन्निधिं प्रति धरण्यागमनम् ।। ।।

एतस्मिन्नंतरे चाभूद्दिव्यदुन्दुभिनिःस्वनः ।। २७ ।।

ततस्तमागता देवी धरणी सखिसंयुता ।।

सुरत्नसागराकारदिव्यांबरसमुज्ज्वला ।। २८ ।।

सुमेरुमन्दराकारस्तनभारावनामिता ।।

नवदूर्वादलश्यामा सर्वाभरणभूषिता ।। २९ ।।

इलया वै पिंगलया सखीभ्यां च समन्विता ।।

ततस्ताभ्यां समानीतं पुष्पाणां निचयं मही ।। 2.1.1.३० ।।

श्रीमद्वराहदेवस्य पादमूले विकीर्य च ।।

प्रणम्य देवदेवेशं कृताञ्जलिपुटा स्थिता ।। ३१ ।।

तां देवीं श्रीवराहोऽपि ह्यालिंग्यांके निधाय च ।। ३२ ।।

।। अथ धरणिवराहसंवादः ।। ।।

पप्रच्छ कुशलं पृथ्वीं प्रीतिप्रवणमानसः ।। ३३ ।।

।। श्रीवराह उवाच ।। ।।

त्वां निवेश्य महीदेवि शेषशीर्षे सुखावहे ।।

लोकं त्वयि निवेश्यैव त्वत्सहायान्धराधरान् ।।

हहागतोऽस्म्यहं देवि किमर्थं त्वमिहागता ।। ३४ ।।

।। पृथिव्युवाच ।। ।।

मां समुद्धृत्य पातालात्सहस्रफणशोभिते ।।

रत्नपीठ इवोत्तुंगे सरत्नेऽनन्तमूर्धनि ।।

कृत्वा मां सुस्थिरां देव भूधरान्संनिवेश्य च ।। ३५ ।।

मद्धारणक्षमान्पुण्यांस्त्वन्मयान्पुरुषोत्तम ।।

तेषु मुख्यान्महाबाहो मदाधारान्वदस्व मे ।। ३६ ।। ।।

अथ शेषाचलस्यसर्वपर्वतातिशायित्ववर्णनम् ।।

।। श्रीवराह उवाच ।। ।।

सुमेरुर्हिमवान्विंध्यो मन्दरो गंधमादनः ।।

सालग्रामश्चित्रकूटो माल्यवान्पारियात्रकः ।। ३७ ।।

महेंद्रो मलयः सह्यः सिंहाद्रिरपि रैवतः ।।

मेरुपुत्रोऽञ्जनो नाम शैलः स्वर्णमयो महान् ।। ३८ ।।

एते शैलवराः सर्वे त्वदाधारा वसुन्धरे ।।

ये मया देवसंघैश्च ऋषिसंघैश्च सेविताः ।।३९।।

एतेषु प्रवरान्वक्ष्ये तत्त्वतः शृणु माधवि ।।

सालग्रामश्च सिंहाद्रिश्शैलेंद्रो गन्धमादनः।। ।।2.1.1.४०।।

एते शैलवरा देवि दिशं हैमवतीं श्रिताः ।।

दक्षिणस्यां प्रतीतांस्तु वक्ष्ये शैलान्वसुन्धरे ।।४१।।

अरुणाद्रिर्हस्तिशैलो गृध्राद्रिर्घटिकाचलः ।।

एते शैलवराः सर्वे क्षीरनद्यास्समीपगाः ।। ४२।।

हस्तिशैलादुत्तरतः पंचयोजनमात्रतः ।।

सुवर्णमुखरीनाम नदीनां प्रवरा नदी ।। ४३ ।।

तस्या एवोत्तरे तीरे कमलाख्यं सरोवरम् ।।

तत्तीरे भगवानास्ते शुकस्य वरदो हरिः।।४४।।

बलभद्रेण संयुक्तः कृष्णो भक्तार्तिनाशनः।।

वैखानसैर्मुनिगणैर्नित्यमाराधितोऽमलैः ।४५।।

कमलाख्यस्य सरस उत्तरे काननोत्तमे ।।

क्रोशद्वयार्धमात्रे तु हरिचंदनशोभिते ।।

श्रीवेंकटाचलोनाम वासुदेवालयो महान् ।।।४६।।

सप्तयोजनविस्तीर्णः शैलेन्द्रो योजनोच्छ्रितः ।।

अस्ति स्वर्णमयो देवि रत्नसानुभृदायतः ।।४७।।

इन्द्राद्या दैवतगणा वसिष्ठाद्या मुनीश्वराः।।

सिद्धाः साध्याश्च मरुतो दानवा दैत्यराक्षसाः ।।

रम्भाद्या अप्सरःसंघा वसन्ति नियतं धरे ।। ४० ।।

तपश्चरंति नागाश्च गरुडाः किन्नरास्तथा ।।

एतैरधिष्ठितास्तत्र सरितः पुण्यदर्शनाः ।।

सरांसि विविधान्यत्र संति दिव्यानि माधवि ।। ४९ ।।

।। अथ स्वामिपुष्करिण्याः सर्वतीर्थातिशायित्ववर्णनम् ।। ।।

तीर्थानां चैव सर्वेषां शृणुष्व प्रवराणि वै ।।2.1.1.५०।।

चक्रतीर्थं दैवतीर्थं वियद्गंगा तथैव च ।।

कुमारधारिकातीर्थं पापनाशनमेव च ।।

पाण्डवं नाम तीर्थं च स्वामिपुष्करिणी तथा ।। ५१ ।।

सप्तैतानि वराण्याहुर्नारायणगिरौ शुभे ।।

एतेषु प्रवरा देवि स्वामिपुष्करिणी शुभा ।। ५२ ।।

अस्यास्तु पश्चिमे तीरं निवसामि त्वया सह ।।

आस्तेऽस्या दक्षिणे तीरं श्रीनिवासो जगत्पतिः ।। ५३ ।।

गंगाद्यैः सकलैस्तीर्थैः समा सा सागराम्बरे ।।

त्रैलोक्ये यानि तीर्थानि सरांसि सरितस्तथा ।।

तेषां स्वामित्वमापन्नं धरे स्वामिसरोवरे ।। ५४ ।।

स्वामिपुष्करिणीं पुण्यां सेवितुं दिव्यभूधरे ।।

वसन्ति सर्वतीर्थानि तेषां संख्यां वदामि ते ।। ५५ ।।

षट्षष्टिकोटितीर्थानि पुण्येऽस्मिन्भूधरोत्तमे ।।

तेषु चात्यंतमुख्यानि षट् तीर्थानि वसुन्धरे ।। ५६ ।।

पञ्चानां तीर्थराजानां तुम्बो गर्भसमो महान् ।।

गर्भवासभयध्वंसी स्नातानां भूधरोत्तमे ।। ५७ ।।

।। धरण्युवाच ।। ।।

षट् तीर्थानि महाबाहो त्वयोक्तानि महीधरे ।।

माहात्म्यं वद तेषां मे यथाकालं यथाविधि ।।

फलानि तेषु स्नातानां नराणां वद भूधर ।। ५८ ।। ।।

।। श्रीवराह उवाच ।। ।।

नारायणाद्रिमाहात्म्यं वदामि शृणु माधवि ।। ५९ ।।

देवाश्च ऋषयश्चैव योगिनः सनकादयः ।।
कृतेंऽजनाद्रिं त्रेतायां नारायणगिरिं तथा ।। 2.1.1.६० ।।
द्वापरे सिंहशैलं च कलौ श्रीवेङ्कटाचलम् ।।
प्रवदन्तीह विद्वांसः परमात्मालयं गिरिम् ।। ६१ ।।
योजनानां सहस्रान्ते द्वीपांतरगतोऽपि वा ।।
यो नमेद्भूधरेन्द्रं तद्दिशमुद्दिश्य भक्तितः ।।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।। ६२ ।।
तस्मिन्षट्तीर्थमाहात्म्यं यथाकालं वदामि ते ।। ६३ ।।
।। अथ कुमारधारामाहात्म्यम् ।। ।।
शृणुष्वावहिता भद्रे सर्वपापप्रणाशनम् ।।
कुभसंस्थे रवौ माघे पौर्णमास्यां महातिथौ ।। ६४ ।।
मघानक्षत्रयुक्तायां भूधरेन्द्रे वसुन्धरे ।।
कुमारधारिकानाम सरसी लोकपावनी ।। ६५ ।।
यत्रास्ते पार्वतीसूनुः कार्तिकेयोऽग्निसंभवः ।।
देवसेनासमायुक्तः श्रीनिवासार्चकोऽमले ।। ६६ ।।
तस्यां यः स्नाति मध्याह्ने तस्य पुण्यफलं शृणु ।।
गंगादिसर्वतीर्थेषु यः स्नाति नियमाद्धरं ।।
द्वादशाब्दं जगद्धात्रि तत्फलं समवाप्नुयात् ।। ६७ ।।
योऽन्नं ददाति तत्तीर्थे शक्त्या दक्षिणयान्वितम् ।।
स तावत्फलमाप्नोति स्नाने तूक्तं फलं यथा ।। ६८ ।।
।। अथ तुंबतीर्थमाहात्म्यम् ।। ।।
मानसंस्थे सवितरि पौर्णमासीतिथौ धरे ।।
उत्तराफाल्गुनीयुक्ते चतुर्थे काल उत्तमे ।। ६९ ।।
पंचानामपि तीर्थानां तुंबेऽथ गिरिगह्वरे ।।
यः स्नाति मनुजो देवि पुनर्गर्भे न जायते ।। 2.1.1.७० ।।
अथ आकाशगंगामाहात्म्यम् ।।
अग्निवाहस्थिते भानौ चित्रानक्षत्रसंयुते ।।
पूर्णिमाख्ये तिथौ पुण्ये प्रातःकाले तथैव च ।।

आकाशगंगासरिति स्नातो मोक्षमवाप्नुयात् ।। ७१ ।।

।। अथ पाण्डवतीर्थमाहात्म्यम् ।। ।।

वृषभस्थे रवौ राधे द्वादश्यां रविवासरे ।।

शुक्ले वाप्यथ वा कृष्णे पक्षे भौमसमन्विते ।। ७२ ।।

शुक्ले वाप्यथवा कृष्णे भानुवारेण संयुते ।।

पुष्यनक्षत्रसंयुक्त हस्तर्क्षेण युतेऽपि वा ।। ७३ ।।

तीर्थे पांडवनाम्न्यत्र संगवे स्नाति यो नरः ।।

नेह दुःखमवाप्नोति परत्र सुखमश्नुते ।। ७४ ।।

अथ पापनाशनतीर्थमाहात्म्यम् ।।

शुक्ले पक्षेऽथ वा कृष्णे यार्कवारेण सप्तमी ।।

पुष्यनक्षत्रसंयुक्ता हस्तर्क्षेण युतापि वा ।। ७५ ।।

तस्यां तिथौ महाभागे पापनाशनसंज्ञके ।।

तीर्थे यः स्नाति नियमाद्भूधरेन्द्रस्य मस्तके ।। ७६ ।।

कोटिजन्मार्जितैः पापैर्मुच्यते स नरोत्तमः ।। ७७ ।।

।। अथ देवतीर्थमाहात्म्यम् ।। ।।

शृणु देवि परं गुह्यमनन्ताख्ये महागिरौ ।।

मद्दिव्यालयवायव्ये शिखरे गिरिगह्वरे ।।

देवतीर्थमिति ख्यातं तटाकमतिशोभनम् ।। ७८ ।।

तस्मिन्पुण्यतमे देवि स्नानकालं वदामि ते ।। ७९ ।।

गुरुपुष्ये व्यतीपाते सोमश्रवणके तथा ।।

दिनेष्वेतेषु यः स्नाति तस्य पुण्यफलं शृणु ।। 2.1.1.८० ।।

यानि कानीह पापानि ज्ञानाज्ञानकृतानि च ।।

तानि सर्वाणि नश्यंति देवतीर्थेऽतिपावने ।। ८१ ।।

पुण्यान्यपि च वर्धंते देवतीर्थनिमज्जनात ।।

दीर्घमायुरवाप्नोति पुत्रपौत्रसमन्वितः ।।

अन्ते स्वर्गं समासाद्य चन्द्रलोके महीयते ।। ८२ ।।

तद्दिनेष्वन्नदो देवि यावज्जीवान्नदो भवेत् ।।

अतिगुह्यतमं देवि प्रोक्तं तुभ्यं वसुन्धरे ।। ।। ८३ ।।

।। व्यास उवाच ।। ।।

श्रुत्वाथ पृथिवी देवी प्रीतिप्रवणमानसा ।।

इष्टाभिर्वाग्भिरतुलं तुष्टाव धरणीधरम् ।। ८४ ।।

।। अथ धरणीकृत वराहस्तुतिः ।।

।। धरण्युवाच ।। ।।

नमस्ते देवदेवेश वराहवदनाच्युत ।।

क्षीरसागरसंकाश वज्रशृंग महाभुज ।। ८५ ।।

उद्धृतास्मि त्वया देव कल्पादौ सागरांभसः ।।

सहस्रबाहुना विष्णो धारयामि जगन्त्यहम् ।। ८६ ।।

अनेकदिव्याभरणयज्ञसूत्रविराजित ।।

अरुणारुणांबरधर दिव्यरत्नविभूषित ।। ८७ ।।

उद्यद्भानुप्रतीकाशपादपद्म नमोनमः ।।

बालचंद्राभदंष्ट्राग्रमहाबलपराक्रम ।। ८८ ।।

दिव्यचन्दनलिप्तांग तप्तकांचनकुण्डल ।।

इन्द्रनीलमणिद्योतिहेमांगदविभूषित ।। ८९ ।।

वज्रदंष्ट्राग्रनिर्भिन्नहिणयाक्ष महाबल ।।

पुण्डरीकाभिरामाक्ष सामस्वनमनोहर ।। 2.1.1.९० ।।

श्रुतिसीमन्तभूषात्मन्सर्वात्मश्चारुविक्रम ।।

चतुराननशंभुभ्यां वन्दिताऽऽयतलोचन ।। ९१ ।।

सर्वविद्यामयाकार शब्दातीत नमो नमः ।।

आनंदविग्रहाऽनन्त कालकाल नमोनमः ।। ९२ ।।

इति स्तुत्वाऽचला देवी ववन्दे पादयोर्विभुम् ।।

वन्दमाना समुद्वीक्ष्य देवः फुल्लविलोचनः ।। ९३ ।।

उद्धृत्य धरणीं देवीमालिलिंगेऽथ बाहुभिः ।।

आघ्राय धरणीवक्त्रं वामांके सन्निवेश्य च ।। ९४ ।।

अथ वराहस्य भगवतो धरण्या साकं शेषाचलागमनम् ।। ।।

आरुह्य गरुडेशानं जगाम वृषभाचलम् ।।

मुनींद्रैर्नारदाद्यैश्च स्तूयमानो महीपतिः ।। ९५ ।।

स्वामिपुष्करिणीतीरे पश्चिमे लोकपूजिते ।।

आस्ते वराहवदनो मुनीन्द्रैस्तत्र पूजितः ।।

वैखानसैर्महाभागैर्ब्रह्मतुल्यैर्महात्मभिः ।। ९६ ।।

।। अथ वेंकटाचलमाहात्म्यश्रवणावसरः ।।

।। व्यास उवाच ।। ।।

तं दृष्ट्वा नारदः सूत मुनीनामुक्तवान्पुरा ।।

तदेतदहमश्रौषं तत्र वै मुनिसंसदि ।। ९७ ।।

यत्पृष्टोऽहं त्वया सूत माहात्म्यं धरणीभृताम् ।।

मया तूक्तं यथावद्धि नारदाच्च पुरा श्रुतम् ।। ९८ ।।

।। अथाध्यायफलश्रुतिः ।। ।।

य इदं धर्मसंवादमावयोः सूत पावनम् ।।

पठेद्वा देवपुरतो ब्राह्मणानां पुरस्तथा ।। ९९ ।।

सर्वेषामपि वर्णानां शृण्वतां भक्तिपूर्वकम् ।।

स प्रतिष्ठामवाप्नोति पुत्रपौत्रैः समन्वितः ।। 2.1.1.१०० ।।

शृण्वतामपि सर्वेषां यदिष्टं तद्भविष्यति ।। १०१ ।।

।। सूत उवाच ।। ।।

इति मे भगवान्व्यासः प्रोवाच मुनिसेवितः ।।

यथाश्रुतं मया पूर्वं कृष्णद्वैपायनाद्गुरोः ।। १०२ ।।

तत्तथा सर्वमेवात्र मयाप्युक्तं मुनीश्वराः ।।

श्रुत्वा सूतवचस्त्वित्थं ते प्रीतमनसोऽभवन् ।। १०३ ।।

।। ऋषय ऊचुः ।। ।।

सूत त्वयोक्तं भुवि पर्वतेषु पुण्येषु पुण्यस्य महीधरस्य ।।

माहात्म्यमस्माकमहीन्द्रनाम्नः पापापहं मोक्षफलप्रदायकम् ।। १०४ ।।

ततो वृषाद्रिं संप्राप्य वराहो धरणीयुतः ।।

किमुक्तवान्धरण्यै स तन्नो ब्रूहि महामते ।। १०५ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे नारदस्य सुमेरुशिखरस्थ यज्ञवराहदर्शनप्राप्त्यादिवर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०२



।। अथ श्रीवराहमंत्राराधनविधिः ।।

।। श्रीसूत उवाच ।। ।।

शृणुध्वं मुनयः सर्वे कथां पुण्यां पुरातनीम् ।।

वैवस्वतेंऽतरे पूर्वं कृते पुण्यतमे युगे ।। १ ।।

नारायणाद्रौ देवेशं निवसन्तं क्षमापतिम् ।।

वराहरूपिणं देवं धरणी सखिभिर्वृता ।। २ ।।

प्रणम्य परिपप्रच्छ रक्तपद्मायतेक्षणम् ।। ३ ।।

।। धरण्युवाच ।। ।।

आराध्यः केन मंत्रेण भवान्प्रीतो भविष्यति ।।

तं मे वद त्वं देवेश यः प्रियो भवतः सदा ।। ४ ।।

जपतां सर्वसंपत्तिकारकं पुत्रपौत्रदम् ।।

सार्वभौमत्वदं चैव कामिनां कामदं सदा ।। ।। ५ ।।

अन्ते यस्त्वत्पदप्राप्तिं ददाति नियमात्मनाम् ।।

एवंभूतं वद प्रीत्या मयि वाराह मानद ।। ६ ।।

।। श्रीसूत उवाच ।। ।।

इति पृष्टस्तया भूम्या प्राह प्रीतिस्मिताननः ।। ७ ।।

।। श्रीवराह उवाच ।। ।।

शृणु देवि परं गुह्यं सद्यः संपत्तिकारकम् ।।

भूमिदं पुत्रदं गोप्यमप्रकाश्यं कदाचन ।। ८ ।।

किं च शुश्रूषवे वाच्यं भक्ताय नियतात्मने ।। ९ ।।

ॐ नमः श्रीवराहाय धरण्युद्धरणाय च ।।

वह्निजायासमायुक्तः सदा जप्यो मुमुक्षुभिः ।। 2.1.2.१० ।।

अयं मंत्रो धरादेवि सर्वसिद्धिप्रदायकः ।।

ऋषिः संकर्षणः प्रोक्तो देवता त्वहमेव हि ।। ११ ।।

छन्दः पंक्तिः समाख्याता श्रीबीजं समुदाहृतम् ।।

चतुर्लक्षं जपेन्मंत्रं सद्गुरोर्लब्धतन्मनुः ।। १२ ।।

जुहुयात्पायसान्नं वै क्षौद्रसर्पिःसमन्वितम् ।।

अथ ध्यानं प्रवक्ष्यामि मनःशुद्धिप्रदायकम् ।। १३ ।।

शुद्धिस्फटिकशैलाभं रक्तपद्मदलेक्षणम् ।।

वराहवदनं सौम्यं चतुर्बाहुं किरीटिनम् ।। १४ ।।

श्रीवत्सवक्षसं चक्रशंखाभयकरांबुजम् ।।

वामोरुस्थितया युक्तं त्वया मां सागरांबरे ।। १५ ।।

रक्तपीतांबरधरं रक्ताभरणभूषितम् ।।

श्री कूर्मपृष्ठमध्यस्थशेषमूर्त्यब्जसंस्थितम् ।। १६ ।।

एवं ध्यात्वा जपेन्मंत्रं सदा चाष्टोत्तरं शतम् ।।

सर्वान्कामानवाप्नोति मोक्षं चान्ते व्रजेद्ध्रुवम् ।। १७ ।।

प्रोक्तं मया ते धरणि यत्पृष्टोऽहं त्वयाऽमले ।।

अतः किं ते व्यवसितं ब्रूहि तद्विमलानने ।। १८ ।।

।। ।।अथ श्रीवराहमंत्रेण धर्मादीनां स्वाभीष्टसिद्धिवर्णनम् ।।

।। श्रीसूत उवाच ।। ।।

एतच्छ्रुत्वा ततो भूमिः पप्रच्छ पुनरेव तम् ।।

केनैवानुष्ठितं देव पुरा प्राप्तं फलं च किम् ।। १९ ।।

इति पृष्टः पुनर्देवः श्रीवराहोऽब्रवीदिदम् ।।

पुरा कृतयुगे देवि धर्मो नाम मनुर्महान् ।। 2.1.2.२० ।।

ब्रह्मणोऽमुं मनुं लब्ध्वा जप्त्वास्मिन्धरणीधरे ।।

मां च दृष्ट्वा वरं लब्ध्वा प्राप्तोऽभून्मामकं पदम् ।। २१ ।।

इंद्रो दुर्वाससः शापात्पुरा भ्रष्टस्त्रिविष्टपात् ।।

अनेनेष्ट्वाऽत्र मां देवि पुनः प्राप्तस्त्रिविष्टपम् ।। २२ ।।

अन्येऽपि मुनयो भूमे जप्त्वा प्राप्ताः परां गतिम् ।।

अनंतः पन्नगाधीशो ह्यमुं लब्ध्वाथ कश्यपात् ।। २३ ।।

श्वेतद्वीपे जपित्वैव बभूव धरणीधरः ।।

तस्माज्जप्यः सदा चेह मनुष्यैश्च धरार्थिभिः ।। २४ ।।

।। श्रीसूत उवाच ।। ।।

एतच्छ्रुत्वाथ सुप्रीता पुनः प्राह धराधरम् ।। २५ ।।

।। धरण्युवाच ।। ।।

वेंकटाख्ये महाशैले श्रीनिवासो जगत्पतिः ।।

कदा ह्यायाति देवेशः श्रीभूमिसहितोऽमलः ।। २६ ।।

कथं कल्पान्तरस्थायी भविष्यति जनार्दनः ।।

एतद्ब्रूहि वराहात्मन्महत्कौतहलं मम ।। २७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे श्रीवराहमंत्राराधनविध्यादिवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/gzq
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

अथ अगस्त्यप्रार्थनया भगवतः सर्वजनदृग्गोचरत्ववर्णनम् ।।

।। श्रीवराह उवाच ।। ।।

हन्त ते कथयिष्यामि पुरावृत्तं वरानने ।।

शृणु पुण्यं महादेवि सभविष्यं सहोत्तरम् ।। १ ।।

वैवस्वतेऽन्तरे देवि पूर्वे कृतयुगेंऽतरे ।।

वायोस्तपो महद्दृष्ट्वा श्रीभूमिसहितोऽनघ ।।

आगच्छच्छ्रीनिवासश्च स्वामिपुष्करिणीतटे ।। २ ।।

दक्षिणेऽस्मिन्पुण्यतम आनन्दाख्यविमानके ।।

वसिष्यति च श्रीकांतो वायोः प्रियकरो हरिः ।। ३ ।।

तदारभ्य हृषीकेशः सेनान्याराधितोऽनिशम् ।।

आकल्पांतमदृश्योऽस्मिन्विमानेऽसौ वसिष्यति ।। ४ ।।

।। धरण्युवाच ।। ।।

अदृश्यो भगवान्मर्त्यैः कथ दृश्यो भविष्यति ।। ५ ।।

श्रीनिवासोऽपि देवेशो भवद्दक्षिणपार्श्वगः ।।

एतद्वद सुराधीश जनैराराध्यते कथम् ।। ६ ।। ।।

।। श्रीवराह उवाच ।। ।।

अगस्त्योऽस्मिन्समासाद्य दृष्ट्वा देवं सनातनम् ।।

आराध्य द्वादशाब्दं तं प्रीणयित्वा पुनःपुनः ।। ७ ।।

ययाचे तत्र सान्निध्यं भवान्दृश्यो भवत्विति ।।

एवमुक्तो हृषीकेशः श्रीभूमिसहितो धरे ।। ८ ।।

।। श्रीभगवानुवाच ।। ।।

अहं दृश्यो भविष्यामि त्वत्कृते सर्वदेहिनाम् ।।

एतद्विमानं देवर्षे न दृश्यं स्यात्कदाचन ।। ९ ।।

आकल्पान्तं मुनीन्द्रास्मिन्दृश्योऽहं नात्र संशयः ।।

मुनिस्तद्वचनं श्रुत्वा प्रीतः प्रायात्स्वमाश्रमम् ।। 2.1.3.१० ।।

ततश्चतुर्भुजो देवः स दृश्योऽभून्नरादिभिः ।।

विमाने मुनिचिन्त्येऽस्मिन्नासिता च तथोत्तरम् ।। ११ ।।

आराध्यमानः स्कंदेन वायुना सेवितः सदा ।।

एवं गते महाकाले चतुर्युगसमन्विते ।। १२ ।।

।।अथ मित्रवर्मण आकाशराजाख्यसुतोत्पत्तिवर्णनम् ।।

अष्टाविंशे तु संजाते द्वापरान्ते वसुन्धरे ।।

युद्धे च भारतेऽतीते तिष्ये सति युगे तथा ।। १३ ।।

विक्रमार्कादयो भूपाः शकाः शूद्रादयस्तथा ।।

गमिष्यंति स्वर्गलोकं मामज्ञात्वा वरानने ।। १४ ।।

ततः सोमकुलोद्भूतो मित्रवर्मा महारथः ।।

तुण्डीरमण्डले राजा नारायणपुरं वसन् ।। १५ ।।

भविष्यति वरारोहे महाभाग्योदयो महान् ।।

तस्मिञ्छासति भूलोकं धर्मेण पृथिवीपतौ ।। १६ ।।

अकृष्टपच्या पृथिवी सर्वसस्यविभूषणा ।।

निरीतिकोऽभवत्सर्वो जनो धर्मसमन्वितः ।। १७ ।।

तस्य पत्नी समभवत्पांड्यकन्या मनोरमा ।।

तस्य जज्ञे कुलोत्तंसो वियन्नामा सुतोऽस्य वै ।। १८ ।।

तस्य पत्नी तु धरणी नाम्नासीच्छकवंशजा ।।

तस्मिन्राज्यं विनिक्षिप्य मित्रवर्मा नृपोत्तमः ।। १९ ।।

ययौ तपोवनं पुण्यं वेंकटाद्रेः समीपतः ।। 2.1.3.२० ।।

।। अथ धरणीतलात्पद्मावत्युत्पत्तिक्रमः ।। ।।

आकाशनामा तु महान्राजाभूत्सार्वभौमकः ।।

एकदारव्रतो राजा धरणीसक्तचेतनः ।। २१ ।।

यज्ञार्थं शोधयामास भुवमारणितीरतः ।।

कांचनेन हलेनैव कृष्यमाणे धरातले ।। २२ ।।

बीजमुष्टिं विकिरता दृष्टा कन्या धरोद्गता ।।

पद्मशय्यागता रम्या सर्वलक्षणलक्षिता ।। २३ ।।

तप्तजांबूनदमयी पुत्रिकेव विराजती ।।

तां दृष्ट्वा स महीपालो विस्मयोत्फुल्ललोचनः ।। २४ ।।

आदाय तनया चेयं ममैवेति पुनःपुनः ।।

जहर्ष मंत्रिभिश्चैनं प्राह वागशरीरिणी ।। २५ ।।

सत्यं तवैव तनया वर्धयस्व सुलोचनाम् ।।

ततः प्रीतमना राजा स्वपुरं प्रविवेश ह ।। २६ ।।

आहूय धरणीं देवीमिदमाह महीपतिः ।।

देवदत्तामिमां पश्य भूतलादुत्थितां मम ।। २७ ।।

आवाभ्यां तदपुत्राभ्यां पुत्रीयं भविता ध्रुवम् ।।

इत्युक्त्वा प्रददौ देव्या हस्ते प्रीत्या वियन्नृपः ।। २८ ।।

।। अथ आकाशराजस्य धरण्याख्यपत्न्यां वसुदानाख्यसुतोत्पत्तिः ।। ।।

तस्यां गृहं प्रविष्टायां धरणी गर्भमादधौ ।।

वियन्नृपश्च सुप्रीतो वीक्ष्य स्निग्धविलोचनाम् ।। २९ ।।

उवाच फलिता सुभ्रुर्लता सान्तानिकी च मे ।। 2.1.3.३० ।।

अथ सा धरणी देवी काले कमललोचना ।।

सुप्रशस्ते मुहूर्ते च स्वोच्चसंस्थेषु पञ्चसु ।।

ग्रहेषु सुषुवे पुत्रं मेषस्थे च दिवाकरे ।। ३१ ।।

देवदुन्दुभयो नेदुः पुष्पवृष्टिर्गृहेऽपतत् ।।

ववौ वायुः सुखस्पर्शस्तज्जन्मदिवसे तदा ।। ३२ ।।

पुत्रसूतिप्रवक्तॄणां सुप्रीतः पुत्रजन्मनि ।।

सर्वस्वदानमकरोच्छत्रचामर वर्जितम् ।। ३३ ।।

कपिलाकोटिदानं च वृषभाणां शताधिकम् ।।

दिवसे द्वादशे पुण्ये जातकर्मादिकाः क्रिया ।।

चकार नामधेयं च वसुदान इति स्वयम् ।। ३४ ।।

।। श्रीवराह उवाच ।। ।।

आकाशतनयो देवि वसुदानो मनोरमः ।।

ववृधे दिवसैर्बालः शुक्लपक्ष इवोडुराट् ।। ३५ ।।

उपनीतो विनीतोऽसौ गुरुभिर्ब्रह्मपारगैः ।।

पितुरस्त्राणि शस्त्राणि मन्त्रवत्सोऽप्यशिक्षत ।। ३६ ।।

चतुष्पादं धनुर्वेदं सांगोपांगमधीतवान् ।।

पिता तेनातिबलिना दुराधर्षः परैरभूत् ।। ३७ ।।

आकाश इव निष्पंको ग्रीष्मे भानुमता युतः ।।

वैशाख इव मध्याह्ने दुःसहो दुर्निरीक्षकः ।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादेऽगस्त्यप्रार्थनयाभगवतः सर्वजनदृग्गोचरत्वादिवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/h16



।। अथ उद्यानवासिन्याः पद्मावत्याः समीपे नारदागमनम् ।।

।। धरण्युवाच ।। ।।

उक्तं भगवता तस्य वियत्पुत्रस्य नाम च ।।

अयोनिजायास्तत्पुत्र्याः किं नाम च तदाऽकरोत्।।१।।

।। श्रीसूत उवाच ।। ।।

इति पृष्टः पुनः प्राह श्रीवराहो जगत्पतिः ।। २ ।।

।। श्रीवराह उवाच ।। ।।

आकाशराजो मतिमांस्तां दृष्ट्वा कमलेशयाम् ।। ३ ।।

पद्मिनीति च नाम्ना वै चकार वसुधासुताम् ।।

तां तु यौवनसम्पन्नां सखीभिः परिवारिताम् ।। ४ ।।

आरामे विहरंतीं च शुककोकिलनादिते ।।

यदृच्छयाऽऽगतस्तत्र नारदो मुनिसत्तमः ।। ५ ।।

वनलक्ष्मीमिवालोक्य विस्मयादिदमब्रवीत् ।। ६ ।।

।। नारद उवाच ।। ।।

कासि कस्य सुता भीरु हस्तं दर्शय मे तव ।।

इत्युक्ता सा सुचार्वंगी स्वात्मानं मुनयेऽब्रवीत्।। ७ ।।

वियद्राजसुता ब्रह्मँल्लक्षणानि वदस्व मे ।।

इत्युक्तः स तदा प्राह नारदो मुनिसत्तमः ।। ८ ।।

।। अथ नारदोदीरित पद्मावतीशरीरलक्षणानि ।।

।। नारदउवाच ।।

शृणु त्वं चारुवदने लक्षणानि वदामि ते ।।

पादौ प्रतिष्ठितौ सुभ्रु रक्तपद्मदलान्वितौ ।। ९ ।।

पादांगुल्यः समा रक्ता रक्ततुंगनखान्विताः ।।

गुल्फौ गूढौ समावेतौ जंघे चारोमशे शुभे ।। 2.1.4.१० ।।

जानुनी समसुस्निग्धे समावूरू क्रमादुरू ।।

नितंबौ पृथुलौ पीनौ जघनं चिंत्यमेव हि ।। ११ ।।

नाभिर्मंडलवान्निम्नः पार्श्वौ ते मेदुरावुभौ ।।

त्रिवलीललितं मध्यं रोमराजिविराजितम् ।। १२ ।।

स्तनौ पीनौ घनौ स्निग्धाबुन्नतौ मग्नचूचुकौ ।।

करौ ते रक्तपद्माभौ पद्मरेखासमन्वितौ ।।

सुसूक्ष्मौ रक्तसत्पर्व निरन्तरसमांगुली ।। १३ ।।

शुकतुंडसमाकारनखपंक्तिविराजितौ ।।

दीर्घौ च कोमलौ भद्रे भुजौ ते पुष्पदंडवत् ।। १४ ।।

पृष्ठं ते वेदिवद्भाति विलग्नमृजु मध्यमम् ।।

कंठस्तु रक्तो दीर्घश्च स्कन्धौ चावनतौ शुभे ।। १५ ।।

मुखं प्रसन्नं सततमकलंकशशिप्रभम् ।।

कपोलौ कनकादर्शसदृशौ कुंडलोज्ज्वलौ ।। १६ ।।

तिलपुष्पसमाकारा नासिका ते शुभानने ।।

अकलंकाष्टमीचंद्रसदृशोऽतिमनोहरः ।। १७।।

दृश्यतेऽयं ललाटस्ते नीलालकसुशोभितः ।।

मूर्धा ते समवृत्तश्च स्निग्धायतकचान्वितः ।। १८ ।।

स्मितसंशोभिदशनं बिंबाधरसमन्वितम् ।।

मुखं ते विष्णुयोग्यं स्यादिति मे निश्चिता मतिः ।।१९।।

नाभिस्ते दक्षिणावर्त आवर्त इव गांगजः ।।

त्वं हि क्षीराब्धिसम्भूता लक्ष्मीरिव हि दृश्यसे ।। 2.1.4.२० ।।

।। श्रीवराह उवाच ।।

इत्युक्त्वा पूजितस्ताभिर्नारदोऽन्तर्दधे तदा ।।

एतच्छ्रुत्वाऽथ तत्सख्यस्तामूचुः पद्मिनीं सखीम् ।।२१।।

अथ पद्मावत्याः स्वसखीभिः साकं पुष्पाटवी गमनम् ।। ।।

वनं गच्छाम पुष्पार्थं वसन्तः समुपागतः ।।

कर्णिकाराश्च चूताश्च चंपकाः पारिभद्रकाः ।।२२।।

पलाशाः पाटलाः कुन्दा रक्ताशोकाश्च पुष्पिताः।।

पद्मिन्यः सिन्धुवाराश्च मालत्यो यूथिकालताः ।।२३।।

कह्लारकरवीराश्च संघर्षादिव पुष्पिताः ।।

पुष्पावचयनं कुर्मो वनेऽस्मिन्सुमनोहरे ।।२४।।

इत्युक्त्वा ता वनं जग्मुराकाशतनयायुताः ।।

पुष्पाण्याहरमाणास्तु विचरन्त्यस्ततस्ततः ।। २५ ।।

कंचिद्गजेंद्रं ददृशुः शुभ्रदन्तद्वयोज्ज्वलम् ।।

गण्डभित्तितलोद्भूतमदधाराद्वयोज्ज्वलम्।।२६।।

उन्नतं करिणीयूथैः समुपेतं रजोज्ज्वलम् ।।

फूत्कारिपुष्करप्रोद्यच्छीकरापूरिताननम्।। २७ ।।

दृष्ट्वा चोद्विग्नहृदया वनस्पतिमुपाश्रिताः ।।

एतस्मिन्नंतरे चाशु ददृशुर्हयमुत्तमम्।।२८।।

अथ मृगयार्थं पुष्पाटवीं प्रति श्रीनिवासागमनम्।।

अकलंकेन्दुधवलं जाम्बूनदपरिष्कृतम् ।।

स्फुरद्विद्युल्लतायुक्तशरन्मेघमिवोन्नतम् ।। २९ ।।

तस्मिंस्तु पुरुषं कृष्णं मदनाकारवर्चसम्।।

पुंडरीकदलाकारकर्णान्तायतलोचनम् ।। 2.1.4.३० ।।

सुसूक्ष्मक्षौमसंवीतनीलचूलिकयोज्ज्वलम् ।।

पद्मरागमणिद्योतिस्फुरत्कुंडलमण्डितम् ।। ३१ ।।

सुवर्णरत्नखचितशार्ङ्गदिव्यधनुर्धरम् ।।

अपरेण करेणैव वहन्तं काञ्चनं शरम् ।।३२।।

पीतकक्षोमसंवीतकटिदेशं सुमध्यमम् ।।

रत्नकंकणकेयूरकटिसूत्रविराजितम।।३३।।

विशालवक्षः संशोभिदक्षिणावर्तसंयुतम् ।।

स्वर्णयज्ञोपवीतेन स्फुरत्स्कन्धं मनोहरम्।।३४।।

ईहामृगं समुद्दिश्य महावेगादनुद्रुतम् ।।

तं दृष्ट्वा विस्मिता नार्यः सस्मितास्तस्थुरत्र वै ।।३५।।

तं दृष्ट्वा हयमारूढं गजेन्द्रो नम्रमस्तकः ।।

तुण्डमुद्धृत्य गर्जन्वै विनिर्वृत्य ययौ वनम् ।।३६।।

तस्मिन्गते गजे तत्र हयारूढः समाययौ ।।

ईहामृगं विचिन्वानः पुष्पलावीसमीपतः।।३७।।

।। अथ भगवतः कन्यकानां चान्योन्यसंवादः।। ।।

ताः समेत्य स चोवाच तुरगोपरि संस्थितः।।

अत्रागतो मृगः कश्चिदीहामृग इतीरितः ।।३८।।

दृष्टो वा भवतीभिः स ब्रूत मे कन्यका इति ।।३९।

।। श्रीवराह उवाच ।। ।।

प्रत्यूचुस्तास्तु तं कन्या दृष्टोस्माभिर्न कश्चन ।।2.1.4.४०।।

किमर्थमागतोस्माकं वनं वरधनुर्धरः ।।

अत्रावध्या मृगाः सर्वे वर्तमाना निषादप ।।४१।।

आशु गच्छ वनादस्मादाकाशनृपपालितात् ।।

इति तासां वचः श्रुत्वा हयादवरुरोह सः ।। ४२ ।।

कास्तु यूयमियं चापि कन्यकांबुजसन्निभा ।।

सुभगा चारुसर्वांगी पीनोन्नतपयोधरा ।।

ब्रूत मेऽहं गमिष्यामि श्रुत्वा स्वस्यालयं गिरिम् ।। ४३ ।।

इति तस्या वचः श्रुत्वा धरण्यात्मजयेरिता ।।

सखी पद्मावती प्राह निषादं पर्वतालयम् ।। ४४ ।।

आकाशराजतनया वसुधातलसंभवा ।।

अस्माकं नायिका शूर पद्मिनीनाम नामतः ।। ४५ ।।

ब्रूहि त्वं सुभगाकार किन्नामा कस्य वा सुतः ।।

जातिः का कुत्र ते वासः किमर्थं त्वमिहागतः ।।

इति पृष्टः स ताः प्राह मन्दस्मितमुखांबुजः ।। ४६ ।।

दिवाकरकुलं प्राहुरस्माकं तु पुराविदः ।।

यस्य नामान्यनंतानि पावनानि मनीषिणाम् ।। ४७ ।।

वर्णतो नामतश्चापि कृष्णं प्राहुस्तपस्विनः ।।

ब्रह्मद्विषां सुरारीणां यस्य चक्रं भयावहम् ।। ४८ ।।

यस्य शंखध्वनिं श्रुत्वा मोहमीयुर्हि वैरिणः ।।

यस्य वै धनुषस्तुल्यं धनुर्नैवामरेष्वपि ।। ४९ ।।

तं मां वीरपतिं प्राहुर्वेंकटाद्रिनिवासिनम् ।।

तस्मादद्रितटात्सोऽहं निषादैरनुगैर्वृतः ।। 2.1.4.५० ।।

मृगयार्थं हयारूढो युष्माकं वनमागतः ।।

मयाप्यनुद्रुतः कश्चिन्मृगो वायुगतिर्ययौ ।। ५१ ।।

तमदृष्ट्वा वनं पश्यन्दृष्टवान्सुभगामिमाम् ।।

कामादिहागतोऽहं वो मया किं लभ्यते न्वियम् ।। ५२ ।।

इति कृष्णवचः श्रुत्वा क्रुद्धास्ताः पुनरब्रुवन् ।।

आकाशराजो दृष्ट्वा त्वां कृत्वा निगडबन्धनम् ।।

यावन्नयति तावत्त्वं गच्छ शीघ्रं स्वमालयम् ।।५३।।

तर्जितस्ताभिरेवं स हयमारुह्य शीघ्रगम् ।।

युक्तः स्वानुचरैः सर्वैर्ययौ द्रुततरं गिरिम् ।। ५४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवाद उद्यानवासिन्याः पद्मावत्यास्समीपे नारदागमन श्रीनिवासमृगयादिवर्णनंनाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०५



अथ पद्मावतीदर्शनेन श्रीनिवासस्य मोहप्राप्तिः ।। ।। ।।

।। श्रीवराह उवाच ।। ।।

सम्प्राप्य चालयं दिव्यमवतीर्य हयोत्तमात् ।।

विसृज्य सानुगान्सर्वान्देवान्कैरातरूपकान् ।। १ ।।

विश्रमध्वमिति प्रोच्य विवेश मणिमण्डपम् ।।

आरुह्य मणिसोपानं पंचकक्षा अतीत्य च ।। २ ।।

मुक्तागृहं समासाद्य तस्मिँल्लोलायिते शुभे ।।

नवरत्नमये मंचे संविवेशावशो हरिः ।। ३ ।।

संस्मरन्पद्मगर्भाभां तामेवायतलोचनाम् ।।

तनुमध्यां पीनकुचां मन्दस्मितसुखांबुजाम् ।। ४ ।।

क्षीराब्धितनयामेव मेने पद्मोद्भवां शुभाम् ।।

तस्यां गतमना देवः श्रीनिवासो मुमोह च ।। ५ ।।

।। अथ मुह्यमानं श्रीनिवासं प्रति बकुलमालिकोक्तिः ।। ।।

ततो मध्याह्नसमये कृत्वान्नं दिव्यमुत्तमम् ।।

सूपदंशं सुगन्धं च देवार्हमतिशोभनम् ।। ६ ।।

शुद्धान्नं पायसान्नं च गौडं मुद्गान्नमेव च ।।

कृत्वा पञ्चविधापूपान्पूरिकावटकानपि ।। ७ ।।

देवं द्रष्टुं ययौ शीघ्रं सखी वकुलमालिका ।।

पद्मावतीपद्मपत्रा चित्ररेखासमन्विता ।। ८ ।।

निवेश्य द्वारि देवस्य ताः सर्वाः प्रमदोत्तमाः ।।

विवेश तत्समीपं सा स्वयं बकुलमालिका ।।९।।

गत्वा समीपं देवस्य ववन्दे भक्तिभावतः ।।

दृष्ट्वाथ देवं विवशं पर्यंके रत्नभूषिते ।। 2.1.5.१० ।।

पादसंवाहनं कृत्वा निमीलितविलोचनम् ।।

तं ध्यायन्तं च किमपि व्याजहार शुचिस्मिता ।। ११ ।।

उत्तिष्ठ देवदेवेश किं शेषे पुरुषोत्तम ।।

परमान्नं कृतं देव भोक्तुमागच्छ माधव ।। १२ ।।

किं वा त्वमार्तवच्छेषे सर्वलोकार्तिनाशन ।।

मृगयामटता देव कि दृष्टं भवता वने ।। १३ ।।

अवस्था ते विशालाक्ष कामुकस्येव दृश्यते ।।

का दृष्टा देवकन्या वा मानुषी वाऽहिकन्यका ।। ।। १४ ।।

ब्रूहि मे त्वमचिन्त्यात्मन्कन्यां तां चित्तहारिणीम् ।। १५ ।।

।। श्रीवराह उवाच ।। ।।

तस्यास्तद्वचनं श्रुत्वा निःश्वासमकरोद्विभुः ।।

निःश्वसंतं पुनः प्राह प्रीता बकुलमालिका ।। १६ ।।

एवं मनोहरा का सा तवापि पुरुषोत्तम ।।

तामवोचद्धृषीकेशो वक्ष्यामि शृणु तत्त्वतः ।। १७ ।।

।। ।। अथ श्रीनिवासोक्तपद्मावतीपरिणयकारणानि ।।

।। श्रीभगवानुवाच ।। ।।

पुरा त्रेतायुगे पुण्ये रावणं हतवानहम् ।।

तदा वेदवती कन्या साहाय्यमकरोच्छ्रियः ।।१८।।

सीतारूपाभवल्लक्ष्मीर्जनकस्य महीतलात् ।।

गते मयि तु मारीचं हन्तुं पञ्चवटीवने ।। १९ ।।

ममानुजोऽपि मामेव सीतया चोदितोन्वयात् ।।

तदन्तरे राक्षसेन्द्रो हर्तुं सीतामुपाययौ ।। 2.1.5.२० ।।

अग्निहोत्रगतो वह्निस्तं ज्ञात्वा रावणोद्यमम् ।।

आदाय सीतां पाताले स्वाहायां सन्निवेश्य च ।। २१ ।।

तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् ।।

अग्नौ विसृष्टदेहां तां संहर्तुं रावणं पुनः ।। २२ ।।

सीताया रूपसदृशीं कृत्वा चैवोत्ससर्ज ह ।।

सा रावणहृता भूत्वा लंकायां च निवेशिता ।। २३ ।।

हते तु रावणे पश्चात्पुनरग्निं विवेश सा ।।

अग्निस्तु रक्षितां लक्ष्मीं स्वाहायां मम जानकीम् ।। २४ ।।

दत्त्वा हस्ते च मामाह सीतया सहितां सखीम ।।

इयं वेदवती देव सीतायाः प्रियकारिणी ।। २५ ।।

सीतार्थं राक्षसपुरे तेन बन्दीकृता स्थिता ।।

तस्मादेनां वरेणैव प्रीणय त्वं श्रिया सह ।। २६ ।।

इति वह्निवचः श्रुत्वा सीता मामवदच्छुभा ।।

मम प्रीतिकरी नित्यमियं वेदवती विभो ।। २७ ।।

तस्मात्परं भागवतीं देवैनां वरय प्रभो ।। २८ ।।

।। श्रीभगवानुवाच ।। ।।

तथा देवि करिष्यामि ह्यष्टाविंशे कलौ युगे ।।

तावदेषा ब्रह्मलोके वसत्वमरपूजिता ।। २९ ।।

पश्चात्तु भूमितनया भविष्यति वियत्सुता ।।

इति दत्तवरा पूर्वं मया लक्ष्म्या च सुन्दरी ।। 2.1.5.३० ।।

अद्य नारायणपुरे सम्भूता धरणीतलात् ।।

पद्मासमा पद्मनेत्री पद्मादत्तवरा सती ।। ३१ ।।

सखीभिरनुरूपाभिर्वने पुष्पाणि चिन्वती ।।

मृगयामटता तत्र मया दृष्टा मनोरमा ।। ३२ ।।

तस्या रूपं मया वक्तुं न शक्यं शतहायनैः ।।

लक्ष्म्येव च तया मेऽद्य संगमो भविता यदि ।। ३३ ।।

प्राणाः स्थिरा भविष्यन्ति सत्यमित्यवधारय ।। ३४ ।।

।। अथ वियद्राजपुरं प्रति बकुलमालिकागमनम्।। ।।

त्वं तत्र गत्वा तां कन्यां दृष्ट्वा बकुलमालिके ।।

जानीहि रूपलावण्यादियं योग्येति चास्य वै ।।

अनवद्या विशालाक्षी पद्मेन्दीवरलोचना ।। ३५ ।।

इत्युक्त्वा मोहमापन्नं तं प्राह बकुला पुनः ।।

इतो गच्छामि देवेश मनोज्ञा तव यत्र सा ।। ३६ ।।

मार्गं वद रमाधीश गमिष्ये येन तां प्रति ।।

एवमुक्तो रमाधीशस्तां प्राह वकुलस्रजम् ।। ३७ ।।

इतो गच्छ महाभागे श्रीनृसिंहगुहा यतः ।।
तन्मार्गेणावतीर्यास्माद्भूधरेन्द्रान्मनोरमात् ।। ३८ ।।
अगस्त्याश्रममासाद्य दृष्ट्वा लिंगं तदर्चितम् ।।
अगस्त्येश इति ख्यातं सुवर्णमुखरीतटे ।। ३९ ।।
तीरेणैव ततो गच्छ शुकब्रह्मऋषेर्वनम् ।।
पश्यन्ती स्वर्णमुखरीं तत्र कल्लोलमालिनीम् ।। 2.1.5.४० ।।
तत्र पद्मसरोनाम पावनं पद्मसंयुतम् ।।
तत्र स्नात्वाऽथ तत्तीरे तपन्तं मुनिसत्तमम् ।। ४१ ।।
छायाशुकं नमस्कृत्य कृष्णं च बलसंयुतम् ।।
आराध्यमानं मुनिना शुकेन सततं शुभे ।। ४२ ।।
इन्द्रनीलमणिश्यामं पीतनिर्मलवाससम् ।।
तीर्थयात्रां गमिष्यन्तं बलभद्रं सिताकृतिम् ।। ४३ ।।
उपासयन्तं मंत्राणि मुक्तान्वितकरद्वयम् ।।
उद्यन्तं पादुकायुक्तं बलभद्रं प्रणम्य च ।। ४४ ।।
आदाय स्वर्णकमलं सरसोऽस्माद्वरानने ।।
तीर्त्वा सुवर्णमुखरीं वनान्युपवनानि च ।। ४५ ।।
अरणीतीरमासाद्य विश्रम्य च वनान्तरे ।।
नारायणपुरीं दृष्ट्वा विस्मयं च गमिष्यसि ।। ४६ ।।
तस्याश्चोपवने वृक्षान्पुष्पाढ्यान्फलसंयुतान् ।।
पनसाम्रशिरीषांश्च कुन्दतिन्दुकपाटलान् ।। ४७ ।।
पुन्नागनागवरणरसालांकोलचंपकान्।।
बकुलामलकान्सालांस्तालहिंतालपद्मकान् ।। ४८ ।।
जम्बूनिम्बकदम्बैलापिप्पलीमधुकार्जुनान् ।।
प्रियंगुहिंगुखर्जूरमायूराशोकलोध्रकान् ।। ४९ ।।
अश्वत्थोदुम्बरप्लक्षबदरीभूर्जकीचकान् ।।
चिञ्चाकिंशुकमन्दारशाल्मलीबीजपूरकान् ।। 2.1.5.५० ।।
पूगनारंगलिकुचनारिकेलवनाकुलान् ।।
मल्लिकामालतीकुन्द यूथिकाकेतकीयुतान् ।। ५१ ।।

करवीराब्जसंपन्नान्राजरंभाविराजितान् ।।

मयूरकीरगरुडशुकसारससंकुलान् ।। ५२ ।।

भृंगझंकारनिबिडानारामान्सुमनोहरान् ।।

पश्यन्तीं परमं हर्षमवाप्य च नदीतटे ।। ५३ ।।

गत्वा पूर्वोत्तरे मार्गे पुरीमिन्द्रपुरीसमाम् ।।

गङ्गयेवावृतां नित्यं सरितारणिनामया ।। ५४ ।।

आकाशराजनगरीं गत्वा तत्रोचितं कुरु ।। ५५ ।।

।। श्रीवराह उवाच ।। ।।

इत्यादिश्य सुराधीशः सखीं तां बकुलाभिधाम् ।।

विसृज्य शयने शुभ्रे स शिश्ये श्रीसमन्वितः ।। ५६ ।।

प्रणम्य देवदेवेशं सखी बकुलमालिका ।।

गुञ्जामणिसमाकारं रक्ताश्वमधिरुह्य सा ।। ५७ ।।

यथोक्तमार्गेण ययौ पश्यन्ती विविधान्मृगान् ।।

मत्तेभान्पर्वताकाराञ्छ्वेतदन्तविभूषितान् ।। ।। ५८ ।।

करिणीयूथसहिताञ्जलदादानतत्परान् ।।

सिंहाञ्छ्वे(?)तघनप्रख्यान्सिंहीयूथैरनुद्रुतान् ।। ५९ ।।

शार्दूलर्क्षांश्च खड्गांश्च शरभान्गवयान्मृगान् ।।

कृष्णसारांश्च गोमायूञ्छशांश्च प्रियकानपि ।। 2.1.5.६० ।।

सारसांश्च मयूरांश्च मार्जारान्वनगोचरान् ।।

वृकाञ्छुकान्सूकरांश्च सुवाचः पक्षिणस्तथा ।। ६१ ।।

पश्यन्ती विविधाकारांस्तुष्यन्ती च मुहुर्मुहुः ।।

आससादारणीतीरं पश्चिमं पादपाकुलम् ।। ६२ ।।

अवतीर्यारुणादश्वादगस्त्येशसमीपतः ।।

दृष्ट्वागस्त्येश्वरं लिङ्गमगस्त्येन सुपूजितम् ।। ६३ ।।

तत्र स्नात्वा च पीत्वा च विशश्राम नदीतटे ।। ६४ ।। ।।

।। अथ दिव्योद्यानस्थपद्मावतीसखीः प्रति बकुलमालिकोक्तिः ।। ।।

तत्रागता राजगृहाद्योषितो देवसंनिधौ ।।

सखीः पद्मालयायास्ता दृष्ट्वा बकुलमालिका ।। ६५ ।।

गत्वा समीपे तासां सा किंवदन्तीं स्म पृच्छति ।। ६६ ।।

।। बकुलमालिकोवाच ।। ।।

का यूयं योषितो ब्रूत विचित्राभरणस्रजः ।।

कुतः समागता ह्यत्र किं कार्यं वोऽमलाननाः ।। ६७ ।।

तास्तु तस्या वचः श्रुत्वा स्मितपूर्वमथाब्रुवन् ।।

शृणुष्वावहिता देवि वयं वक्ष्यामहेऽधुना ।। ६८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे पद्मावतीदर्शनेन श्रीनिवासस्यमोहप्राप्त्यादिवर्णनंनाम पञ्चमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०६



।। अथ बकुलमालिकां प्रति सखीविनिवेदितपद्मावत्युदन्तः ।।

।। योषित ऊचुः ।। ।।

वयमाकाशराजस्य शुद्धान्तनिलयाः स्त्रियः ।।

सख्यः पद्मालयाया वै दुहितुर्वसुधापतेः ।। १ ।।

राजपुत्रीं पुरस्कृत्य गताः पूर्वं वनांतरम् ।।

कुर्वंत्यः पुष्पावचयं राजपुत्र्यर्थमाकुलाः ।। २ ।।

वृक्षमूले समासीनास्तत्र पश्याम पूरुषम् ।।

इन्द्रनीलमणिश्याममिन्दिरामन्दिरोरसम्।। ३ ।।

ईषत्स्मितमुखं चारुपीनदीर्घभुजद्वयम् ।।

मृष्टपीतांबरं हेमबाणबाणासनोज्ज्वलम् ।। ४ ।।

सुवर्णमुकुटं हारकेयूरादिविभूषितम् ।।

तं तु पद्मालया दृष्ट्वा सखी कमललोचना ।। ५ ।।

द्रुतहेमनिभाकारा पश्य पश्येति साब्रवीत् ।।

पश्यन्तीनां तदास्माकं गतोऽन्तर्धानमाशु सः ।। ६ ।।

सा सखी मूर्च्छितास्माभिनीता राजगृहं ततः।। ७ ।। ।।

अथ पद्मावतीमुद्दिश्य दैवज्ञं प्रति वियद्राजकृतप्रश्नादिः ।। ।।

दृष्ट्वाऽस्वस्थां नृपः पुत्रीमपृच्छद्दैवचिन्तकम् ।।

वद विप्रेन्द्र पुत्र्या मे ग्रहचारफलं मुने ।। ८ ।।

बृहस्पतिसमो विप्रो विचार्यात्मनि खेचरान् ।।

अनुकूला ग्रहाः सर्वे तव पुत्र्या नृपोत्तम ।। ९ ।।

किन्तु नित्यं ग्रहफलं किंचिद्भ्रांतिकरं नृप ।।

तमुवाच पुनर्धीमान्प्रश्नकालं विचार्य च ।। 2.1.6.१० ।।

छायां गुणित्वा लग्नं च तत्फलानि विचार्य च ।।

लग्ने लग्नाधिपश्चन्द्रः केंद्रे चैव बृहस्पतिः ।। ११ ।।

निद्राति दिनपक्षी तु प्रश्नपक्षी तु राज्यगः ।।
शृणु राजन्फलं तस्य स्वास्थ्यमेव भविष्यति ।। १२ ।।
उत्तमः पुरुषः कश्चिदागतः कन्यकां प्रति ।।
तं दृष्ट्वा मूर्च्छिता पुत्री तेन योगं समेष्यति ।। १३ ।।
तेनैव प्रेषिता काचिदागमिष्यति कन्यका ।।
सा तु वक्ष्यति यद्वाक्यं तद्धितं ते भविष्यति ।। १४ ।।
तत्कुरुष्व महाराज सत्यंसत्यं वदाम्यहम् ।।
किं च सर्वार्थदं यत्तु सर्वव्याधिविनाशनम् ।। १५ ।।
वक्ष्यामि तत्कुरुष्वाद्य पुत्र्यास्तव सुखावहम् ।।
कारयागस्त्यलिंगस्य ब्राह्मणैरभिषेचनम् ।। १६ ।।
इत्युक्ताथ गृहं यातो राजानं दैवचितकः ।। ।। १७ ।।
।। अथ दैवज्ञोक्त्यागस्त्यलिंगार्चनाय विप्रादिप्रेषणम् ।। ।।
आकाशराजोऽपि तदा विप्रानाहूय वैदिकान् ।।
अभ्यर्च्याज्ञापयामास गत्वा देवालयं द्विजाः ।। १८ ।।
महाभिषेकं शम्भोश्च कुरुध्वं मंत्रपूर्वकम् ।।
इत्यनुज्ञाप्य तानस्मानाहूयाभ्यवदच्छुभे ।। १९ ।।
महाभिषेकसम्भारान्सम्पादयत कन्यकाः ।।
इत्याज्ञप्ता नृपेणैव वयं देवालयं गताः ।। 2.1.6.२० ।।
ब्रूहि त्वं सुभगेऽस्माकं त्वदागमनमंजसा ।।
कुतोसि कस्य वार्थेन क्व वा जिगमिषा हि ते ।। २१ ।।
दिव्याश्वमधिरुह्येमं देवलोकादिवागता ।। २२ ।।
।। श्रीवराह उवाच ।। ।।
इति ताभिस्तदा पृष्टा हृष्टा बकुलमालिका ।।
प्रोवाच वाचं मधुरां हर्षयन्तीव बालिकाः ।। २३ ।।
।। बकुलमालिकोवाच ।। ।।
श्रीवेंकटाद्रेः प्राप्ताहं नाम्ना बकुलमालिका ।।
धरणीं द्रष्टुकामाहमारुह्येमं तुरंगमम् ।। २४ ।।
द्रष्टुं शक्या भवेद्देवी किमु तत्र नृपालये ।।

इति तस्या वचः श्रुत्वा ताः प्रोचुर्नृपकन्यकाः ।। २५ ।।

अस्माभिः सहिता त्वं वै द्रक्ष्यसे धरणीं शुभे ।।

इत्युक्ता सा ततस्ताभिरागता नृपमंदिरम् ।।२६।।

आगच्छन्तीषु तास्वेवं धरणी तु पुलिन्दिनीम् ।। २७ ।।

।। अथ धरणीकृत प्रश्नस्य पुलिन्दिनीप्रतिवचनम् ।। ।।

आयान्तीं वीथिकायां सा सगुंजाशंखभूषिताम् ।।

शिशुं स्तनं धयं पृष्ठे बद्ध्वा वस्त्रांचलेन वै ।। २८ ।।

वदामि सत्यं शृणुत भूतं भव्यं भविष्यकम् ।।

वदन्ती वीथिवीथीषु तामाहूय शुचिस्मिता ।। २९ ।।

स्वर्णशूर्पं समादाय तस्मिन्मुक्ता निधाय च ।।

त्रिप्रस्थमात्रांस्त्रीन्राशीन्कृत्वा तस्यै निधाय च ।। 2.1.6.३० ।।

वद सत्यं त्वमेष्यद्वा भूतमेव वा ।।

इत्येवं धरणी देवी पृच्छंती तां स्थिताऽभवत् ।। ३१ ।।

पृष्टा सावददस्यास्तु मनसा यद्विचिन्तितम्।।

मध्यराशौ चिन्तितं ते वद कल्याणि मे ऋजु ।। ३२ ।।

ओमित्याहाथ धरणी पुलिंदां राजवल्लभा ।।

।। धरण्युवाच ।। ।।

राशिरुक्तः फलं ब्रूहि धनराशिं ददामि ते ।। ३३ ।।

।। पुलिन्दोवाच ।। ।।

सत्यं वदामि ते सुभ्रु शिशोरन्नं प्रयच्छ मे ।।

इत्युक्ता सा तु धरणी स्वर्णपात्रेऽन्नमाददे ।। ३४ ।।

दत्त्वा तस्यै पुलिंदिन्यै सत्यं ब्रूहीति सावदत्।।

सक्षीरमन्नमादाय दत्त्वा पुत्राय भामिनी ।। ३५ ।।

सा सत्यमवदत्सुभ्रूर्दुहितुर्देहशोषणम्।।

पुरुषादागतं भीरु तद्रूपाऽदर्शनादियम् ।। ३६ ।।

अंगतापं समापन्ना ह्यनंगशरपीडिता ।।

स तु देवादिदेवो वै वैकुण्ठादागतः स्वयम् ।। ३७ ।।

श्रीवेंकटाद्रिशिखरे स्वामिपुष्करिणीतटे ।।

मायावी परमानंदः श्रिया सह रमापतिः ।। ३८ ।।

कामरूपी विहरते भक्ताभीष्टप्रदो हरिः ।।

स तुरंगं समारुह्य विहरन्काननान्तरे ।। ३९ ।।

आगत्योपवनं राज्ञि तव कन्यां स दृष्टवान् ।।

रमासमामिमां दृष्ट्वा स्वयं कामवशं गतः ।। 2.1.6.४० ।।

स्वसखीं ललितां देवः प्रेषयिष्यति तेंतिकम् ।।

रमेव तं समेत्यैषा रमिष्यति सुखं चिरम् ।। ४१ ।।

एतत्सत्यं मम वचः पश्याद्यैव नृपात्मजे ।।

पुत्रस्यान्नं प्रयच्छेति तूष्णीमास पुलिन्दिनी ।। ४२ ।।

अन्नं दत्त्वा पुनर्भूरि तस्यै तां विससर्ज ह ।।

तस्यां विनिर्गतायां तु पुलिंदिन्यामनिन्दिता ।। ४३ ।।

उत्थाय चांगणात्तस्माद्विवेशांतःपुरं शुभम् ।।

यत्र पद्मालया कन्या समास्ते स्वसखीवृता ।। ४४ ।।

गत्वा पुत्रीसमीपस्था कन्यां कामातुरां सुताम्।।

पुत्रि किं ते करिष्यामि वस्तु किं वा प्रियं शुभे ।। ४५ ।।

इति मात्राभिपृष्टा सा मन्दमाह मनस्विनी ।। ४६ ।।

।। अथ पद्मावती निवेदित भगवद्भागवतयोर्लक्षणानि ।। ।।

नेत्राभिरामं यल्लोके सतामपि मनःप्रियम् ।।

यद्द्रष्टुकामा ब्रह्माद्या यत्तु सर्वगतं महत् ।। ४७ ।।

तेजसामपि तेजस्वि देवानामपि दैवतम् ।।

भक्तैस्सद्भिरिह प्राप्यमभक्तैर्न कदाचन ।। ४८ ।।

तस्मिन्नेव मनो मेऽम्ब वस्तुनीह प्रवर्तते।।

तदेवान्विष्यतां मातर्भक्तानां सर्वकामदम् ।। ४९ ।।

।। श्रीवराह उवाच ।। ।।

एतच्छ्रुत्वाथ धरणी तामपृच्छत्पुनः सुताम् ।।

तद्भक्तलक्षणं ब्रूहि यैः प्राप्यं तत्सुलोचने ।। 2.1.6.५० ।।

।। पद्मालयोवाच ।। ।।

भक्तानां लक्षणं मातः शृणु गुह्यं समाहिता ।।

शंखचक्रांकिता नित्यं भुजयुग्मे वसुन्धरे।। ।। ५१ ।।
ऊर्ध्वपुंड्रं सान्तरालं तेषामेव विशेषतः ।।
पुण्ड्रानि द्वादश पुनर्धारयंति तथापरे ।। ५२ ।।
ललाटोदरहृत्कण्ठे जठरे पार्श्वयोरपि ।।
कूर्परयोर्भुजद्वन्द्वे पृष्ठे च गलपृष्ठके ।। ५३ ।।
केशवादीनि नामानि द्वादशांगेषु द्वादश ।।
वासुदेवेति तन्मूर्ध्नि धारयंति नमोऽस्त्विति ।। ५४ ।।
तेषां तु नियमान्वक्ष्ये मातः शृणु मनोरमान् ।।
वेदपारायणरताः कर्म कुर्वंति वैदिकम् ।। ५५ ।।
सत्यं वदन्ति ये देवि नासूयंति परान्क्वचित् ।।
परनिंदां न कुर्वंति परस्वं न हरंति च ।। ५६ ।।
न स्मरंति न पश्यन्ति न स्पृशंति कदाचन ।।
परदारान्सुरूपांश्च ये च तान्विद्धि वैष्णवान् ।।५७।।
सर्वभूतदयावंतः सर्वभूतहिते रताः ।।
सदा गायंति देवेशमेतान्भक्तानवेहि वै ।। ५८ ।।
येन केन च सन्तुष्टाः स्वदारनिरताश्च ये ।।
वीतरागभयक्रोधास्तान्भक्तान्विद्धि वैष्णवान् ।। ५९ ।।
एवंविधैर्गुणैर्युक्ताः पंचायुधधरा अपि ।।
पित्रा चाचार्यरूपेण शिष्टेनान्येन वा पुनः ।। 2.1.6.६० ।।
स्वगृह्योक्तविधानेन वह्निमादाय वै बुधः ।।
चक्राद्यायुधमंत्रेण जुहुयात्षोडशाहुतीः ।। ६१ ।।
मूलमंत्रेण सूक्तेन पौरुषेण ततः परम् ।।
जातवेदः सुमंत्रेण पश्चादष्टोत्तरं शतम् ।। ६२ ।।
हुत्वा महाव्याहृतिभिश्चक्रादींस्तत्र तापयेत् ।।
सद्यान्सुतप्तान्गुरुणा मंत्रवद्धारयेद्बुधः ।। ६३ ।।
भुजद्वये शंखचक्रे मूर्ध्नि शार्ङ्गशरौ तथा ।।
ललाटे तु गदा धार्या हृदये खड्गमेव च ।। ६४ ।।
एवं धार्याणि पञ्चैव विष्णुभक्तैर्मुमुक्षुभिः ।।

अथवा भुजयोश्चक्र शंखौ चैव सुलक्षणौ ।। ६५ ।।

एवं लाञ्छनयुक्ता ये भक्तास्ते वैष्णवाः स्मृताः ।।

तैरेव लभ्यं तद्ब्रह्म सदाचारसमन्वितैः ।। ६६ ।।

तस्मिन्नेव मम प्रीतिस्तत्प्राप्तिं कांक्षते मनः ।।

मातर्विष्णुविनान्येषु वाञ्छा काचिन्न जायते ।। ६७ ।।

स्मरामि श्यामलं विष्णुं वदामि हरिमच्युतम् ।।

तेनैव मातर्जीवामि तद्योगे चिन्त्यतां विधिः ।। ६८ ।।

।। श्रीवराह उवाच ।। ।।

इत्युक्त्वा मातरं दीना विररामाम्बुजानना ।।

तच्छ्रुत्वा चिन्तयामास विष्णुः प्रीतः कथं भवेत्।।६९।।

अथ बकुलमालिकया सार्द्धं सखीनां धरणीसमीप आगमनम्।।

एतस्मिन्नंतरे कन्या अगस्त्येशं समर्च्य च ।।

आगता धरणीं द्रष्टुं सहैव बकुलस्रजा ।। 2.1.6.७० ।।

आगतान्ब्राह्मणान्साथ पूजयित्वा सुभोजनैः ।।

दत्त्वाथ दक्षिणाः पूर्णा वस्त्रालंकारसंयुताः ।। ७१ ।।

आशिषौ वाचयित्वाथ वांछितार्थस्य सिद्धये ।।

विसृज्य व्राह्मणान्सर्वानथापृच्छत्स्वयोषितः ।। ७२ ।।

पूजयित्वा ह्यगस्त्येशमागतास्ता मनस्विनीः ।। ७३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे बकुलमालिकां प्रति सखीविनिवेदितपद्मावत्युदन्तविष्णुभक्तलक्षणादिवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/gzy
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

अथ धरणीदेव्यै बकुलमालिकानिवेदितश्रीनिवासोदन्तः ।।

।। धरण्युवाच ।। ।।

कैषा बत वरा कन्या युष्माभिः संगता कुतः ।।

किमर्थमागता चेह पूज्यैषा प्रतिभाति मे ।। १ ।।

।। कन्यका ऊचुः ।। ।।

एषा दिव्याङ्गना देवी त्वयि कार्यार्थमागता ।।

देवालये सङ्गतेयमस्माभिः शिवसन्निधौ ।। २ ।।

पृष्टावदच्च भवतीं द्रष्टुमेवागतेति वै ।।

शक्या द्रष्टुं राजगृहे मया राज्ञी सुखेन वा ।। ३ ।।

एवं पृष्टास्ततो ब्रूमः सहास्माभिश्च गम्यताम्।।

वयं तु धरणीदास्यो गमिष्यामो नृपालयम् ।। ४ ।।

इत्युक्तास्माभिरायाता त्वत्समीपं वसुन्धरे।।

भवत्या पृच्छ्यतामेषा किमित्यागमनं तव ।। ५ ।।

श्रीवराह उवाच ।। ।।

इति तासां वचः श्रुत्वा तामपृच्छद्वसुन्धरा ।। ६ ।।

।। धरण्युवाच ।। ।।

कुतस्त्वमागता देवि किं वा कार्यं मया तव ।।

ब्रूहि सत्यं करिष्यामि त्वदागमनकारणम् ।। ७ ।। ।।

बकुलमालिकोवाच ।। ।।

वेङ्कटाद्रेः समायाता नाम्ना बकुलमालिका ।। ८ ।।

स्वामी नारायणोऽस्माकमास्ते श्रीवेंकटाचले ।।

कदाचिद्धयमारुह्य हंसशुक्लं मनोजवम् ।। ९ ।।

मृगयार्थं गतो राज्ञो वेंकटाद्रेः समीपतः ।।

वनानि विचरन्काले शोभने कुसुमाकरे ।। 2.1.7.१० ।।

पश्यन्मृगान्गजान्सिंहान्गवयाञ्छरभान्रुरून् ।।
शुकान्पारावतान्हंसान्पत्रिणोऽन्यान्वनान्तरे ।। ११ ।।
गजराजं तत्र कञ्चिद्यूथपं मदवर्षिणम् ।।
करेणुसहितं तुंगमन्वगच्छत्सुरोत्तमः ।। १२ ।। ।।
अथ श्रीनिवासोक्त्या शंखनृपस्य स्वामितीर्थे तपःकरणम् ।। ।।
वनाद्वनान्तरं गत्वा नृपं शंखमुपागमत् ।।
तपस्यन्तं बृहच्छैले प्रतिष्ठाप्य जनार्दनम् ।। १३ ।।
श्रीभूमिसहितं नित्यमर्चयन्तं च भक्तितः ।।
शंखनागबिलंनाम सरः पावनमुत्तमम् ।। १४ ।।
तत्सरस्तीरमासाद्य तुरंगादवरुह्य च ।।
राजवेषं समासाद्य तमपृच्छन्नृपोत्तमम्।। १५ ।।
क्रियते किं नृपश्रेष्ठ पादेऽस्मिच्छेषभूभृतः ।। १६ ।।
।। शंख उवाच ।। ।।
अहं हैहयदेशीयः पुत्रः श्वेतस्य भूभृतः ।।
महाविष्णोः प्रीतयेऽत्र कृतवानखिलान्क्रतून् ।। १७ ।।
अदर्शनान्महाविष्णोर्निर्विण्णोहं नृपात्मज ।।
तदानीमवदद्दिव्या वाणी सर्वार्त्तिनाशिनी ।। १८ ।।
राजन्नात्र भविष्यामि प्रत्यक्षस्ते वचः शृणु ।।
गच्छ नारायणाद्रिं त्वं तपः कुर्विति मां स्फुटम् ।। १९ ।।
ततो देशमहं त्यक्त्वा तपसाऽऽराधयाम्यहम्।।
अत्र देवं नृपाचिंत्यं प्रतिष्ठाप्य श्रियः पतिम् ।। 2.1.7.२० ।।
अगस्त्यानुग्रहान्नित्यमर्चयामि विधानतः ।।
इति तस्य वचः श्रुत्वा सोत्प्रासं प्राह तं विभुः।। ।। २१ ।।
गच्छ नारायणाद्रिं त्वमस्य पादे किमास्यते ।।
आरुह्यानेन मार्गेण पश्चिमे शिखरे स्थितम् ।। २२ ।।
प्रणम्य विष्वक्सेनं त्वं बालं न्यग्रोधमूलतः ।।
स्वामिपुष्करिणीं गत्वा स्नात्वा तीरेऽथ पश्चिमे ।। २३ ।।
अश्वत्थं तत्र वल्मीकं द्रक्ष्यसे नृपनन्दन ।।

तयोर्मध्यं समासाद्य तपः कुर्वित्यचोदयत् ।। २४ ।।

कश्चिच्छ्वेतो वराहोऽस्मिन्वल्मीके चरति ध्रुवम् ।।

स तु पुण्यवतामेव दर्शनं याति भूपते ।।२५ ।।

।। ।। श्रीवराह उवाच ।। ।।

इत्यादिश्य हयारूढो जगाम मृगयां विभुः ।।

चरन्वनाद्वनं सुभ्रूः समासाद्यारणीं नदीम् ।। २६ ।।

अवरुह्य हयात्तत्र विचचार तटे शुभे ।।

वनान्तादागतो वायुः पद्मकह्लारशीतलः ।।

श्रमापनयनो मन्दं सिषेवे पुरुषोत्तमम् ।। २७ ।।

तरवः पुष्पवर्षाणि विकिरन्तः सिषेविरे ।।

एवं स विचरन्देवः पुष्पभारानतांस्तरून् ।। २८ ।।

विचिन्वन्गजराजं तं पुष्पलावीर्ददर्श ह ।।

कन्याः सुवेषा रुचिरा मेघेष्विव शतह्रदाः ।। २९ ।।।

तासां मध्यगतां तन्वीं ददर्शातिमनोहराम् ।।

लक्ष्मीसमां हेमवर्णां तस्यां सक्तमना अभूत् ।। 2.1.7.३० ।।

तां गृध्नुराह ताः कन्याः केयमित्येव पूरुषः ।।

उक्तस्ताभिरियं कन्या वियद्राज्ञो महाबल ।। ३१ ।।

इदं श्रुत्वा वचस्तासां हयमारुह्य वेगवान् ।।

आजगामाशु भगवान्स्वालयं रुचिरं गिरिम्।। ३२ ।।

तत्र स्वालयमासाद्य स्वामिपुष्करिणीतटे ।।

मामाहूयावदद्देवो हला बकुलमालिके ।। ३३ ।।

वियद्राजपुरं गत्वा प्रविश्यान्तःपुरं सखि ।।

तत्पत्नीं धरणीं प्राप्य पृष्ट्वा कुशलमेव च ।। ३४ ।।

याचस्व तनयां तस्या रुचिरां कमलालयाम् ।।

राज्ञोभिमतमाज्ञाय शीघ्रमागच्छ भामिनि ।। ३५ ।।

इत्थं दैवेन चाज्ञप्ता देवि त्वद्गृहमागता ।।

यथोचितं कुरुष्वेह राज्ञा मंत्रियुतेन च ।। ३६ ।। ।।

अथ बकुलमालिकोक्त्या धरण्यादिकृतविवाहनिश्चयः ।। ।।

कन्यया च विचार्यैव प्रोच्यतामुत्तरं वचः ।। ३७ ।।

।। श्रीवराह उवाच ।। ।।

अथ तस्या वचः श्रुत्वा प्रीता राज्ञी बभूव ह ।।

आहूयाकाशराजं तमुपेत्य कमलालयाम् ।। ३८ ।।

मंत्रिमध्येऽवदद्देवी वचनं बकुलस्रजः ।। श्रु

त्वा प्रीतोऽवदद्राजा मंत्रिणः सपुरोहितान् ।। ३९ ।।

।। आकाशराज उवाच ।। ।।

कन्या त्वयोनिजा दिव्या सुभगा कमलालया ।।

अर्थिता देवदेवेन वेंकटाद्रिनिवासिना ।। 2.1.7.४० ।।

पूर्णो मनोरथो मेऽद्य ब्रूत किं संमतं तु वः ।।

श्रुत्वा मंत्रिगणाः सर्वे राज्ञो वचनमुत्तमम् ।। ४१ ।।

प्रोचुः सुप्रीतमनसो वियद्राजं महीपतिम् ।।

वयं कृतार्था राजेन्द्र कुलं सर्वोन्नतं भवेत् ।। ४२ ।।

भवत्कन्येयमतुला श्रिया सह रमिष्यति ।।

दीयतां देवदेवाय शार्ङ्गिणे परमात्मने ।। ४३ ।।

अयं वसन्तः श्रीमांश्च शुभं शीघ्रं विधीयताम् ।। ४४ ।। ।।

अथ बृहस्पत्युक्त्या विवाहलग्नस्थिरीकरणम् ।। ।।

आहूय धिषणं लग्नं विवाहार्थं विधीयताम् ।। ४५ ।।

तथास्त्वित्याह्वयामास सुरलोकाद्बृहस्पतिम् ।।

पप्रच्छ कन्यावरयोर्विवाहार्थं नरेश्वरः ।। ४६ ।।

।। राजोवाच ।। ।।

कन्याया जन्मनक्षत्रं मृगशीर्षमिति स्मृतम् ।।

देवस्य श्रवणर्क्षन्तु तयोर्योगो विचार्यताम् ।। ४७ ।।

श्रुत्वाऽब्रवीत्स धिषणस्तयोरुत्तरफल्गुनी ।।

संमता सुखवृद्ध्यर्थं प्रोच्यते दैवचिंतकैः ।। ४८ ।।

तयोरुत्तरफल्गुन्यां विवाहः क्रियतामिति ।।

वैशाखमासे विधिवत्क्रियतामिति सोऽब्रवीत् ।। ४९ ।।

।। श्रीवराह उवाच ।। ।।

राजा तु धिषणं तत्र संपूज्याथ विसृज्य च ।।
देवस्य दूतिकामाह गच्छ देवालयं शुभे ।। ।। 2.1.7.५० ।।
वैशाखे देवदेवाय कल्याणं वद सुव्रते ।।
वैवाहिकविधानं तु कृत्वा चागम्यतामिति ।। ५१ ।।
ततो देव्याः प्रियकरं शुकं दूतं तया सह ।।
विसृज्य वायुं स्वसुतमिन्द्राद्यानयनेऽसृजत् ।। ५२ ।।
।। अथ विश्वकर्मादिकृतपुरालंकारादिक्रमः ।। ।।
आहूय विश्वकर्माणं पुरालंकारकर्मणि ।।
नियोजयामास सोऽपि निर्ममे निमिषांतरात् ।। ५३ ।।
इन्द्रोऽसृजत्पुष्पवृष्टिं ननृतुश्चाप्सरोगणाः ।।
धनदो धनधान्याद्यैः पूरयामास वेश्म तत् ।। ।। ५४ ।।
यमस्तु रोगरहितांश्चकार मनुजान्भुवि ।।
वरुणो रत्नजालानि मौक्तिकादीन्यपूरयत् ।। ५५ ।।
एवं संपाद्य सर्वाणि ययुर्देवा वृषाचलम् ।। ।। ५६ ।।
।। अथ शुकेन सह बकुलायाः श्रीनिवाससमीपे गमनम् ।।
।। श्रीवराह उवाच ।। ।।
ततः सा हयमारुह्य शुकेन सहिता ययौ ।।
श्रीवेंकटाद्रिमासाद्य देवालयसमीपतः ।। ५७ ।।
अवरुह्य तुरंगात्सा सशुकाऽभ्यन्तरं ययौ ।।
दृष्ट्वा देवं रत्नपीठे श्रिया सह सुलोचनम् ।। ।। ५८ ।।
प्रणम्य ह्यवदत्प्रीता कृत्यं तत्र कृतं विभो ।।
मांगल्यवार्तां वक्तुं वै शुक एष समागतः ।। ५९ ।।
।। अथ श्रीनिवासाय शुकावेदित पद्मावतीपरिणयवृत्तान्तः ।। ।।
वदेति देवेनाज्ञप्तः शुको नत्वा तमब्रवीत् ।।
।। शुक उवाच ।। ।।
त्वां प्रत्याह सुता भूमेर्मामंगीकुरु माधव ।। 2.1.7.६० ।।
वदामि तव नामानि स्मरामि त्वद्वपुस्सदा ।।
ध्रियन्ते तव चिह्नानि भुजाद्यंगै रमापते ।। ६१ ।।

त्वद्भक्तानर्चयामीह पंचसंस्कारसंयुतान् ।।

त्वत्प्रीतये हि कर्माणि करोमि मधुसूदन ।। ६२ ।।

एवं सदैवाचरंत्याः पित्रोरनुमते मम ।।

कुरु प्रसादं देवेश मामंगीकुरु माधव ।। ६३ ।।

इति विज्ञापयामास कमलस्था धरासुता ।।

शुकस्य वचनं श्रुत्वा सुप्रियं त्वात्मनो हरिः ।। ६४ ।।

।। अथ पद्मावत्याः शुकदत्तश्रीनिवासमालाधारणम्।।

।। श्रीभगवानुवाच ।। ।।

कर्तुं कल्याणमुद्वाहमागमिष्यामि चाऽमरैः ।।

शुक गच्छ वदैवं तामित्थं देवोऽब्रवीदिति ।। ६५ ।।

शुकः श्रुत्वा देववाक्यमादाय वनमालिकाम्।।

देवदत्तां ययौ शीघ्रं वियद्राजसुतां प्रति ।। ६६ ।।

तुलसीमालिकां दत्त्वा मृगनाभिसुगंधिनीम् ।।

प्रणम्य देवीमवदच्छुको देववचः शुभम् ।। ६७ ।।

श्रुत्वा तन्मालिकां गृह्य भूमिजा शिरसा दधौ ।।

चक्रेऽलंकारमुचितं देवागमनकांक्षिणी ।। ।। ६८ ।।

वियद्राजोऽपि सानन्दमिन्दुमाहूय सादरम्।।

अन्नं विधीयतां राजन्विविधं रससंयुतम् ।। ६९ ।।

विष्णोर्नैवेद्ययोग्यं यत्परमान्नं विधीयताम् ।।

देवानां च ऋषीणां च नराणामपि संमतम् ।। 2.1.7.७० ।।

चतुर्विधं सुगन्धाढ्यममृतांशैः सुधाकर ।।

एवं कृत्वा संविधानं प्रतीक्ष्यागमनं विभोः ।। ७१ ।।

सभायां मंत्रिसहितः समास्त प्रीतमानसः ।।

पुत्रीमलंकृतां कृत्वा धरणीसहितो नृपः ।। ७२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे धरणीदेव्यै बकुलमालिकानिवेदित श्रीनिवासोदन्तकमलालयाकल्याणविध्यादिवृत्तांतवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/h19
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ श्रीनिवासस्य लक्ष्म्यादिकृतपरिणयालंकारः ।। ।।

।। श्रीवराह उवाच ।। ।।

ततो देवाधिदेवोऽपि लक्ष्मीमाहूय भामिनीम् ।।

किं कार्यं वद कल्याणि विवाहार्थं सुलोचने ।। १ ।।

आज्ञापयस्व स्वसखी रमे कार्यं कुरु प्रियम् ।।

श्रीस्तु कृष्णवचः श्रुत्वा सखीराहूय चोदयत् ।। २ ।।

श्रियाज्ञप्ता ततः प्रीतिः सुगंधं तैलमाददौ ।।

श्रुतिः क्षौमं समादाय तस्थौ देवस्य सन्निधौ ।। ३ ।।

भूषणानि समादाय स्मृतिरप्यcraयौ मुदा ।।

धृतिरादर्शमाधत्त शान्तिर्मृगमदं दधौ ।। ४ ।।

यक्षकर्दममादाय ह्रीः स्थिता पुरतो हरेः ।।

कीर्तिः कनकपट्टं च सरत्नं मुकुटं दधौ ।। ५ ।।

छत्रं दधौ तदेंद्राणी चामरं तु सरस्वती ।।

द्वितीयं चामरं गौरी व्यजने विजयाजये ।। ६ ।।

आगतास्ताः समालोक्य श्रीरुत्थायाथ सत्वरा ।।

सुगंधं तैलमादाय देवमभ्यज्य शीर्षतः ।। ७ ।।

उद्वर्तितं गंधचूर्णैर्देवांगं परिमृज्य च ।।

आनीतान्करिभिस्तोयकलशान्कांचनाञ्छतम् ।। ८ ।।

वियद्गंगादितीर्थेभ्यः कर्पूरादिसुवासितान्।।

एकमेकं समादाय त्वभ्यषिंचद्रमा हरिम् ।। ९ ।।

संधूप्य केशान्धूपेन तानाश्यामान्बबंध च ।।

सुगंधेनानुलिप्यांगं स्वर्णवर्णेन तद्विभोः ।। 2.1.8.१० ।।

पीतकौशेयकं बद्ध्वा कट्यां कांचीसमन्वितम् ।।

मुकुटादिविभूषाभिर्भूषयामास चेन्दिरा ।। ११ ।।

अंगुलीयकरत्नानि सर्वास्वेवांगुलीषु च ।।

आदर्शं दर्शयामास धृतिर्देवस्य सन्निधौ ।। १२ ।।

दृष्ट्वादर्शं देवदेवो ह्यूर्ध्वपुंड्रं स्वयं दधौ ।।

आरुह्य गरुडं पश्चात्स्वयं लक्ष्मीसमन्वितः ।। १३ ।। ।।

अथ ब्रह्मादिभिस्साकं श्रीनिवासस्य वियद्राजपुरगमनम् ।। ।।

ब्रह्मेशवज्रिवरुणयमयक्षेशसेवितः ।।

वसिष्ठाद्यैर्मुनींद्रैश्च सनकाद्यैश्च योगिभिः ।। १४ ।।

भक्तैर्भागवतैर्युक्तो नारायणपुरीं ययौ ।।

जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।।१५।।

देवदुंदुभयो नेदुस्तदा देवस्य सन्निधौ ।।

जपन्तः स्वस्तिसूक्तानि मुनयस्तं समन्वयुः ।। १६ ।।

देवो देवगणैर्युक्तो विष्वक्सेनादिपार्षदैः ।।

सखीभिस्स्यंदनस्थाभिर्बकुलाद्याभिरन्वितः ।।

आकाशराजस्य पुरमाससाद स्वलंकृतम् ।। १७ ।।

।। अथ पद्मावतीपरिणयघट्टः ।। ।।

देवमागतमालोक्य कन्यामैरावतस्थिताम्।।

पुरीं प्रदक्षणीकृत्य गोपुरद्वारमागताम् ।। १८ ।।

आलोक्याकाशराजोऽपि समानीय वधूवरौ ।।

बन्धुभिः सहितस्तस्थौ देवमालोक्य केशवम् ।। १९ ।।

विष्णुर्मालां स्वकंठस्थां हस्तेनादाय सस्मितः ।।

कमलायाः स्कन्धदेशे मुमोच सुमनश्चिताम् ।। 2.1.8.२० ।।

आदाय मल्लिकामाला साऽस्य कंठे समर्पयत् ।।

एवं त्रिवारं तौ कृत्वा वाहनादवरुह्य च ।। २१ ।।

स्थित्वा पीठे क्षणं पश्चाद्गृहं विविशतुः शुभम् ।।

ब्रह्मादिदेवयूथैश्च सहितौ भूमिजाहरी ओ। २२ ।।

मांगल्यसूत्रबंधादि सांकुरार्पणमब्जजः ।।

वैवाहिकं कारयित्वा लाजहोमान्तमेव च ।। २३ ।।

व्रतादेशं समाज्ञाय शयितौ कमलाहरी ।।

चतुर्थे दिवसे सर्वं समापय्य चतुर्मुखः ।। २४ ।।

अनुज्ञाप्य वियद्राजमारोप्य गरुडे हरिम् ।।

देवीभ्यां सहितं देवं देवैर्गन्तुं प्रचक्रमे ।। २५ ।।

दिव्यदुन्दुभिर्निर्घोषैः संप्राप्य वृषभाचलम् ।।

तुष्टुवुर्देवदेवेशं ब्रह्माद्या देवतागणाः ।। २६ ।।

शुकादयो मुनिगणास्तुष्टुवुः पुरुषोत्तमम् ।।

स्तूयमानोऽथ देवोऽपि विवेश मणिमंडपम् ।। २७ ।।

रमाधरणिजाभ्यां च तत्र सिंहासनं ययौ।। २८ ।।

।। अथ वधूवरयोर्वियद्राजवितीर्णप्राभृतादिकम् ।। ।।

आकाशराजोऽपि तदा महेन्द्रादिसुरैः सह ।।

पुत्रीविष्ण्वोः प्रियार्थं तु प्राभृतं कतुमुद्यतः ।।२९।।

सौवर्णेषु कटाहेषु तंडुलाञ्छालिसंभवान्।।

मुद्गपात्राण्यनेकानि घृतकुम्भशतानि च ।। 2.1.8.३० ।।

पयोघटसहस्राणि दधिभाण्डान्यनेकशः ।।

दिव्यानि चूतकदलीनारिकेलफलानि च ।। ३१ ।।

धात्रीफलानि कूष्माडराजरंभाफलानि च ।।

पनसान्मातुलुंगांश्च शर्करापूरितान्घटान् ।। ३२ ।।

सुवर्णमणिमुक्ताश्च क्षौमकोट्यंबराणि च ।।

दासीदाससहस्राणि कोटिशो गास्तथैव च।। ३३ ।।

हंसेन्दुशुक्लवर्णानां हयानामयुतं ददौ ।।

तुंगानां नित्यमत्तानां गजानामधिकं शतात् ।। ३४ ।।

अंतःपुरचरा नारीर्नृत्तगीतविशारदाः ।।

ददौ चतुःसहस्राणि श्रीनिवासाय विष्णवे ।।

दत्त्वा चैतानि सर्वाणि तस्थौ देवपुरो विभुः ।। ३५ ।।

।। अथ श्रीनिवासकृपया वियद्राजस्य भक्तिरूपवरप्राप्तिः ।। ।।

दृष्ट्वा देवोऽपि तत्सर्वं देवीभ्यां सहितो हरिः ।। ३६ ।।

सुप्रीतः प्राह राजानं श्वशुरं वेंकटेश्वरः ।।

वरं वृणीष्व हे राजन्गुरो मत्तो यदीच्छसि ।। ३७ ।।

इति श्रीशवचः श्रुत्वा वियद्राजोऽवदद्विभुम् ।।

त्वत्सेवैवेह देवैवं भूयादव्यभिचारिणी ।। ३८ ।।

मनस्त्वत्पादकमले त्वयि भक्तिर्ममास्तु वै ।। ३९ ।।

।। श्रीभगवानुवाच ।। ।।

त्वया यदुक्तं राजेन्द्र सर्वमेतद्भविष्यति ।।

इति दत्त्वा वरं तस्मै संमान्यैव यथोचितम् ।। 2.1.8.४० ।।

।। अथ विवाहार्थमागतानां ब्रह्मादीनां स्वावासगमनम् ।। ।।

ब्रह्मेशादिसुरान्सर्वान्समभ्यर्च्य यथोचितम् ।।

स्वर्लोकगमनायैवमनुमेने मुदा हरिः ।।

गतेषु तेषु सर्वेषु श्रिया भूमिजया युतः ।। ४१ ।।

विहरन्स यथापूर्वं स्वामिपुष्करिणीतटे ।।

आस्ते दिव्यालये देवोप्यचर्य्यमानो गुहेन वै ।। ४२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे ब्रह्मादिभिः साकं श्रीनिवासस्य वियद्राजपुरगमन कमलालयापरिणयादिवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ०९



।। अथ वसुनामकनिषादवृत्तांतः ।।

।। धरण्युवाच ।। ।।

कलौ युगे भूमिधर केन त्वं द्रक्ष्यसे प्रिय ।।

विमानं केन ते देव कार्यतेऽस्मिन्महीधरे ।। १ ।।

श्रीनिवासोऽपि केनैव द्रक्ष्यते सुभगाकृतिः ।।

एतद्ब्रूहि मम प्रीत्या श्रोतुं कौतूहलं विभो ।। २ ।।

।। श्रीवराह उवाच ।। ।।

वक्ष्यामि शृणु हे देवि भविष्यद्यद्वदामि ते ।।

अस्मिन्महीधरे पुण्ये निषादो वसुनामकः ।। ३ ।।

श्यामाकवनपालोऽभूद्भक्तिमान्पुरुषोत्तमे ।।

श्यामाकतंडुलान्पक्त्वा मधुना परिषिच्य च ।। ४ ।।

निवेद्य देवदेवाय श्रीभूमि सहिताय च ।।

एवं भक्तिमतस्तस्य भार्या चित्रवती शुभा ।। ५ ।।

असूत तनयं बाला वीरनामानमुत्तमम् ।।

वसुः पुत्रेण सहितो भार्यया पतिभक्तया ।। ६ ।।

कस्मिंश्चिद्दिवसे पुत्रं श्यामाकं पालयेति च ।।

विसृज्य पत्न्या सहितो मध्वन्वेषणतत्परः ।। ७ ।।

गतो वनान्तरं शीघ्रं मधुच्छत्रदिदृक्षया ।।

बालः श्यामाकपक्वानि गृहीत्वाग्नौ निधाय च ।। ८ ।।

पिष्ट्वा निवेदयामास वृक्षमूले श्रियः पतेः ।।

नैवेद्यं भक्षयित्वैव वीरस्त्वास सुखेन वै।। ९ ।।

तदन्तरे वसुश्चापि मध्वादाय समागतः ।।

श्यामाकान्भक्षितान्दृष्ट्वा संतर्ज्य सुतमात्मनः ।। 2.1.9.१० ।।

खड्गमादाय तं हन्तुं त्वरया हस्तमुद्दधौ ।। ११ ।।

।। अथ सुतहननोद्युक्तं वसुं प्रति भगवदुक्तिः ।। ।।

तद्वृक्षस्थस्तदा विष्णुः खड्गं जग्राह पाणिना ।।

खड्गो गृहीतः केनेति पश्यन्वृक्षं ददर्श सः ।। १२ ।।

शङ्खचक्रगदापाणिं वृक्षारूढार्धविग्रहम् ।।

मुक्त्वा वसुश्च तं खड्गं प्रणम्योवाच केशवम् ।। १३ ।।

किमिदं देवदेवेश चेष्टितं क्रियते त्वया ।। १४ ।।

।। श्रीभगवानुवाच ।। ।।

वसो शृणु वचो मे त्वं पुत्रस्ते भक्तिमान्मयि ।।

त्वत्तोऽपि मे प्रियतमस्तस्मात्प्रत्यक्षमागतः ।।१५।।

अस्य सर्वत्र तिष्ठामि तव स्वामिसरस्तटे ।।

इति देववचः श्रुत्वा प्रीतिमानभवद्वसुः ।। १६ ।।

एतस्मिन्नेव काले तु पांड्यदेशात्समागतः ।।

बाल्यात्प्रभृति शूद्रोऽपि विष्णुभक्तिसमन्वितः ।। १७ ।।

।। अथ रंगदासस्य श्रीनिवाससेवार्थं श्रीशेषाचलागमनम् ।। ।।

नारायणपुरीं प्राप्य श्रीवराहं प्रणम्य च ।।

तत्र श्रुत्वा श्रीनिवासं वेंकटाद्रिनिवासिनम् ।। १८ ।।

स्वयंभुवं देवदेवसेवितं प्रययौ ततः ।।

सुवर्णमुखरीं प्राप्य स्नात्वा चोत्तीर्य तत्तटे ।। १९।।

कमलाख्ये सरसि च स्नात्वा पुण्यप्रदायिनि ।।

तत्तीरवासिनं देवं कृष्णं रामेण संवृतम् ।। 2.1.9.२० ।।

नमस्कृत्य ततः प्रायाद्वनं गजघटायुतम् ।।

शनैः संप्राप्य शेषाद्रिं निर्झरं संददर्श ह ।। २१ ।।

तत्समीपं समासाद्य कपिलापूजितं शिवम् ।।

तत्पुरश्चक्रतीर्थं तदगाधं पापनाशनम् ।। २२ ।।

तत्र स्नात्वा ततोऽगच्छद्वेंकटाद्रिं शनैःशनैः ।।

आराद्धुं गच्छता मार्गे युक्तो वैखानसेन च ।। २३ ।।

रंगदासस्त्वारुरोह बालो द्वादशवार्षिकः ।।

स्वामिपुष्करिणीं प्राय स्नात्वा भक्तिसमन्वितः ।।२४।।

वैखानसेन मुनिना गोपीनाथेन पूजितम् ।।

वनमध्ये तरोर्मूले स्वामिपुष्करिणीतटे ।।२५।।

तिष्ठन्तं पुण्डरीकाक्षं श्रीभूमिसहितं हरिम् ।।

आकाशस्थं संददर्श पीतनीलाकृतिं शुभम् ।। २६ ।।

पार्श्वस्थशंखचक्राभ्यां गदासिभ्यां निषेवितम्।।

पक्षौ विस्तार्य चाकाशे देवमूर्ध्नि वितानवत् ।।२७।।

स्थितं च गरुडेशानं पश्चाच्छार्ङ्गं शरं तथा ।।२८।। ।।

अथ श्रीनिवासार्थं रंगदासकृतदिव्योद्यानमण्डपादिनिर्माणानि ।। ।।

एवं दृष्ट्वा श्रीनिवासं विस्मितो रंगदासकः ।।

अस्य देवस्य चारामं करिष्यामीत्यचिन्तयत् ।। २९ ।।

निश्चित्य मनसा सर्वं तरुमूलेऽवसत्सुधीः ।।

कृत्वा वैखानसाद्विष्णोर्नैवेद्यं च दिनेदिने ।। 2.1.9.३० ।।

शनैश्छित्त्वा वनं घोरं वृक्षांश्चिच्छेद पार्श्वगान् ।।

आस्थानचिञ्चां देवस्य रमायाश्चम्पकं तरुम् ।।३१।।

देवाज्ञप्तो वर्जयित्वा तावुभौ देवसेवितौ ।।

देवस्यपरितो भूमौ शिलाकुड्यं तदाकरोत् ।।३२।।

तत्कुड्यस्यैव परितः पुष्पारामांश्चकार ह ।।

मल्लिकाकरवीराब्जकुन्दमंदारमालतीः ।।३३।।

तुलसीचम्पकानां तु वनान्येव चकार ह ।।

खनित्वा तत्र कूपं तु वर्धयंस्तज्जलैर्वनम् ।। ३४ ।।

आरामपुष्पाण्यादाय स्वयं दामान्यथाकरोत् ।।

विचित्राणि तदा बद्ध्वा पूजकस्य करे ददौ ।। ३५ ।।

आदाय पूजकस्तानि स्कन्धे मूर्ध्नि बबन्ध च ।।

श्रीनिवासस्य देवस्य श्रीभूमिसहितस्य च ।। ३६ ।।

एवं देवस्य कैंकर्यं कुर्वंस्तस्थावुदारधीः ।।

तस्यैवं वर्तमानस्य समास्त्वा सप्ततेर्गताः ।। ३७ ।।

कुर्वाणे पुष्पावचयं रंगदासे महात्मनि ।। ३८ ।।

।। अथ रंगदासस्य गन्धर्वक्रीडादर्शनेन भगवत्कैंकर्यविस्मृतिः ।। ।।

आरामे सरसि स्नातुं गन्धर्वः कश्चिदाययौ ।।
गन्धर्वराजकन्याभिस्तरुणीभिः समन्वितः ।। ३९ ।।
जलक्रीडां करोति स्म दिवि स्थाप्य विमानकम्।।
सुरूपाभिश्च सहितं क्रीडन्तं कमलाकरे ।। 2.1.9.४० ।।
पश्यञ्छ्रीरंगदासोऽयं व्यस्मरन्माल्यसञ्चयम् ।।
जितेन्द्रियोऽपि तत्क्रीडां पश्यन्नेतः ससर्ज ह ।। ४१ ।।
पश्यतस्तस्य सरसः समुत्तीर्य मनोहरम् ।।
दिव्यवस्त्राणि चाच्छाद्य कान्ताभिः सह सस्मितम् ।। ।। ४२ ।।
अधिरुह्य विमानं तु ययौ स धनदालयम् ।।
गते गन्धर्वराजे तु रंगदासो विमोहितः ।। ४३ ।।
त्यक्त्वा च तानि माल्यानि स्नात्वा सरसि लज्जितः ।।
पुनराहृत्य पुष्पाणि शनैर्देवालयं ययौ ।। ४४ ।।
वैखानसस्तु तं दृष्ट्वा पूजाकालमतीत्य च ।।
आगतं किमिति प्राह सखेऽतिक्रम्य चागतः ।। ४५ ।।
न बद्धा मालिकाश्चापि त्वयाऽऽरामे च किं कृतम् ।। ४६ ।।
।। श्रीवराहउवाच ।। ।।
इत्थं पृष्टो रंगदासो नावदल्लज्जया ततः ।।
लज्जितं रंगदासं तं प्रोवाच मधुसूदनः ।। ४७ ।।
।। अथ स्वरूपानुसन्धानेन लज्जितं रंगदासं प्रति श्रीनिवासवचनम्।।
।। श्रीभगवानुवाच ।। ।।
लज्जया किं रंगदास मया त्वं मोहितो ह्यसि ।।
त्वं तावज्जितकामोऽसि धीरो भव महामते ।। ४८ ।।
गन्धर्वराजवद्राजा भवितासि महीतले ।।
तत्र भुक्त्वा महाभोगान्भक्तिमान्मयि सर्वदा ।। ४९ ।।
प्राकारं च विमानं च कारयिष्यसि मे तदा ।।
तत्र मुक्तिं प्रदास्यामि प्रीत्या परमया युतः ।। 2.1.9.५० ।।
अत्रैव कुरु सेवां त्वमाशरीरविमोक्षणात् ।।
मद्भक्तानां सकामानामेवं मुक्तिर्भविष्यति ।। ५१ ।।

इत्युक्त्वा भगवान्विष्णुः पुनर्नोवाच किंचन ।।
श्रुत्वा तद्रंगदासोऽपि चकारारामनुत्तमम् ।। ।। ५२ ।।
।। अथ तोण्डमान्नामकनृपवृत्तान्तः ।। ।।
साग्रं शताब्दं सेवित्वा गतः स्वर्गममन्दधीः ।।
जातः सोमकुले तुंगे तोण्डमानिति विश्रुतः ।। ५३ ।।
सुवीरतनयो वीरो नन्दिनीगर्भसंभवः ।।
स पंचवर्षादुद्भूतविष्णुभक्तिः स्वयं सुधीः ।।
सौशील्यशौर्यवीर्यादिगुणानामाकरो महान्।। ५४ ।।
पाण्ड्यस्य तनयां पद्मामुपयेमे मनोहराम् ।।
ततो राजा शतं कन्या नानादेश्याः स्वयंवराः ।। ५५ ।।
रेमे देवेंद्रवद्भूमौ नारायणपुरे वसन्।।
अनुज्ञां प्राप्य पितृतः पुत्रः पंचास्यविक्रमः।। ५६ ।।
उद्दिश्य मृगयां वीरो वेङ्कटाद्रेः समीपतः ।। ५७ ।।
।। अथ तोण्डमान्नृपस्य मृगयार्थं श्रीशेषाचलगमनम् ।। ।।
पादचारेण विचरन्परिवारैः समन्वितः ।।
मदधारां विमुंचंतं ददर्श गजयूथपम् ।। ५८ ।।
तं दृष्ट्वा विस्मितो भूत्वा ग्रहीतुं तमनुद्रुतः ।।
सुवर्णमुखरीं तीर्त्वा ब्रह्माष शुकमुत्तमम् ।। ५९ ।।
नमस्कृत्याभ्यनुज्ञातस्ततोऽगच्छद्वनाद्वनम् ।।
ददर्श रेणुकां देवीं वल्मीकाकारसंस्थिताम् ।। 2.1.9.६० ।।
इष्टदामिष्टभक्तानां दिव्यारामनिवासिनीम्।।
परिवारैः सदोपेतां पूजितां त्रिदशैरपि ।।६१ ।।
तोण्डमानपि तां नत्वा ततः पश्चान्मुखो ययौ ।। ६२ ।।
।। अथ श्रीनिवाससमीपस्थपंचवर्णशुकवृत्तांतः ।। ।।
पंचवर्णं शुकं दृष्ट्वा तं जिघृक्षुरनुद्रुतः ।।
स वदञ्छ्रीनिवासेति गिरिं शीघ्रतरं ययौ ।। ६३ ।।
अनुद्रवन्स राजापि गिरिराजं समारुहत् ।।
दरीश्च विविधाः पश्यञ्छिखराणि समंततः।। ।। ६४ ।।

शुकमन्वेषमाणोऽसौ श्यामाकवनमेयिवान् ।।
तमदृष्ट्वा शुकवरं वनपालं ददर्श ह ।। ६५ ।।
तं तु राजानमायांतं प्रत्युद्गच्छन्स सत्वरः ।।
प्रणम्य विनयोपेतः कृताञ्जलिपुटः स्थितः ।।६६।।
तोण्डमानपि संपूज्य तं पप्रच्छ वनेचरम्।।
पंचवर्णः शुकः कश्चिद्दृष्टश्चात्रागतस्त्वया ।। ६७ ।।
श्रीनिवासेति च वदन्क्व गतोऽसौ वनेचर ।। ६८ ।।
।। वनेचर उवाच ।। ।।
स पंचवर्णो राजेंद्र श्रीनिवासप्रियः सदा ।।
पार्श्ववर्ती सदा तस्य श्रीभूमिभ्यां विवर्धितः ।। ६९ ।।
स्वामिपुष्करिणीतीरे सदास्ते देवसन्निधौ ।।
ग्रहीतुं स शुकः श्रीमान्न तु केनापि शक्यते ।। 2.1.9.७० ।।
विहृत्य स्वेच्छया नित्यमस्मिन्गिरिवरे शुभे ।।
दिनांते देवमासाद्य तत्समीपे वसत्ययम् ।। ७१ ।।
तं देवमाराधयितुं गमिष्यामि नृपात्मज ।।
विश्रम्यतां वृक्षमूले यावदागमनं मम ।। ७२ ।।
पुत्रेणानेन सहितो विहर त्वं यथासुखम् ।। ७३ ।।
।। राजोवाच ।। ।।
त्वया सहागमिष्यामि द्रष्टुं देवं जनार्दनम् ।।
त्वं मे दर्शय देवेशं वेंकटाद्रिनिवासिनम् ।। ७४ ।।
तस्य राज्ञो वचः श्रुत्वा श्यामाकं मधुमिश्रितम् ।।
चूतपत्रपुटे क्षिप्त्वा राज्ञा सह ययौ हरिम् ।। ७५ ।।
।। अथ तोण्डमान्नृपस्य निषादेन सह श्रीनिवाससमीपागमनम् ।। ।।
गत्वा सुदूरमध्वानं पश्यन्तौ तौ शिलातलम् ।।
मुहूर्तादेव संप्राप्तौ स्वामिपुष्करिणीं शुभाम् ।। ७६ ।।
स्नात्वा तत्र विधानेन राज्ञा सह निषादपः ।।
दर्शयामास देवशं राज्ञस्तस्य महात्मनः ।। ७७ ।।
स्वामिपुष्करिणीतीरे स्थितं श्रीवृक्षमूलके ।।

अतसीपुष्पसंकाशमंबुजायतलोचनम् ।। ७८ ।।

चतुर्भुजमुदाराङ्गमीषत्स्मितमुखांबुजम् ।।

दिव्यपीतांबरधरं किरीटकटकोज्ज्वलम् ।। ७९ ।।

पार्श्वस्थाभ्यां सुरूपाभ्यां श्रीभूमिभ्यां समन्वितम् ।।

परितः शंखचक्रासिगदाशार्ङ्गेषुसेवितम् ।।।। 2.1.9.८० ।।

अन्यैर्दिव्यायुधैश्चापि दिव्यमाल्यैर्निषेवितम् ।।

स्कन्देनाराध्यमानं तं त्रिसन्ध्यं पुरुषोत्तमम् ।। ८१ ।।

वल्मीकगूढपादाब्जमाजानुपुरुषोत्तमम् ।।

ततो दृष्ट्वा मुदा देवं प्रणेमतुरुभौ तदा ।। ८२ ।।

राजा तु प्रांजलिर्भूत्वा विस्मयोत्फुल्ललोचनः ।।

आनंदलहरीं प्राप्य न प्राज्ञायत किंचन ।। ८३ ।।

निषादोऽपि निवेद्यैव श्यामाकं मधुमिश्रितम् ।।

राज्ञे तदर्धं दत्त्वैव शिष्टार्धं भुक्तवान्स्वयम् ।। ८४ ।।

पीत्वा पुष्करिणीतोयं तेन राज्ञा समन्वितः ।।

स पुनः श्यामकवने पुण्यां पर्णकुटीं ययौ ।। ८५ ।।

उषित्वा चैकरात्रं तु प्रातरुत्थाय भूमिपः ।।

स्वसैन्येन समायुक्तो निवृत्तः स्वपुरं ययौ ।। ८६ ।।

।। अथ तोण्डमान्नृपं प्रति रेणुकोक्तिः ।। ।।

पुनर्देवीवनं गत्वा हयादवततार ह ।।

चैत्रशुद्धनवम्यां तु पूजयामास रेणुकाम् ।। ८७।।

हविष्यं परमान्नं च सोपस्करमनेकशः ।।

पशूपहारसहितं धूपदीपसमन्वितम् ।। ८८ ।।

सुराघटीशतं दत्त्वा जातीकेसरवासितम् ।।

एवं संपूजिता देवी प्रीता राज्ञे वरं ददौ ।। ८९ ।।

आविष्टः पुरुषः कश्चिदवदन्नृपसत्तमम् ।।

शृणु राजन्भविष्यं ते राज्यं निहतकंटकम् ।। 2.1.9.९० ।।

राजंस्तवैव नाम्नात्र राजधानी भविष्यति ।।

मत्समीपे महाराज चिरं राज्यं करिष्यसि ।। ९१ ।।

देवदेवप्रसादश्च भविष्यति तवानघ ।।
इति दत्त्वा वरं तस्मा आविष्टः प्रकृतिं ययौ ।। ९२ ।।
ततो लब्धवरो राजा ययौ शुकमुनिं पुनः ।। ९३ ।।
।। अथ शुकवर्णितपद्मसरोवरमाहात्म्यम् ।। ।।
अभिवाद्य मुनिं तेन पूजितो मुदितोऽभवत् ।।
माहात्म्यं सरसो ब्रूहि कमलाख्यस्य मे मुने ।। ९४ ।।
।। श्रीशुक उवाच ।। ।।
पुरा दुर्वाससः शापादवतीर्णा सुरालयात् ।।
पद्मा पद्माक्षदयिता विष्णुना सहिता नृप ।। ९५ ।।
सरः कांचनपद्माढ्यमिदं प्राप्य महेश्वरी ।।
तपश्चकार वर्षाणां दिव्यानामयुतं रमा ।। ९६ ।।
ततो देवा विचिन्वन्तः श्रियं विष्णुसमन्विताम् ।।
पुरंदरेण संयुक्ता राजन्नस्मिन्सरोवरे ।। ९७ ।।
स्थिता सुवर्णकमले पुण्डरीकाक्षसंयुताम् ।।
दृष्ट्वा प्रीतिसमायुक्ताः प्रणम्यांबुजधारिणीम् ।।
कृताञ्जलिपुटाः सेन्द्रास्तुष्टुवुर्लोकमातरम् ।। ।। ९६ ।।
।। अथ देवादिकृतश्रीलक्ष्मीस्तुतिः ।।
।। देवा ऊचुः ।। ।।
नमः श्रियै लोकधात्र्यै ब्रह्ममात्रे नमोनमः ।।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमोनमः ।। ९९ ।।
प्रसन्नमुखपद्मायै पद्मकान्त्यै नमोनमः ।।
नमो बिल्ववनस्थायै विष्णुपत्न्यै नमोनमः ।। 2.1.9.१०० ।।
विचित्रक्षौमधारिण्यै पृथुश्रोण्यै नमोनमः ।।
पक्वबिल्वफलापीनतुंगस्तन्यै नमोनमः ।। १०१ ।।
सुरक्तपद्मपत्राभकरपादतले शुभे ।।
सुरत्नांगदकेयूरकांचीनूपुरशोभिते ।।
यक्षकर्दमसंलिप्तसर्वांगे कटकोज्ज्वले ।। १०२ ।।
मांगल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषिते ।।

ताटंकैरवतंसैश्च शोभमानमुखांबुजे ।। १०३ ।।

पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे ।।

ऋग्यजुःसामरूपायै विद्यायै ते नमोनमः ।। १०४ ।।

प्रसीदास्मान्कृपादृष्टिपातैरालोकयाब्धिजे ।।

ये दृष्टास्ते त्वया ब्रह्मरुद्रेंद्रत्वं समाप्नुयुः ।। १०५ ।।

।। अथ इंद्रादीन्प्रति स्तुतिप्रसन्नलक्ष्मीवचनम् ।।

।। श्रीशुक उवाच ।। ।।

इति स्तुता तदा दैवैर्विष्णुवक्षःस्थलालया ।।

विष्णुना सह संदृश्या रमा प्रीतावदत्सुरान् ।। १०६ ।।

।। श्रीरुवाच ।। ।।

सुरारीन्सहसा हत्वा स्वपदानि गमिष्यथ ।।

ये स्थानहीनाः स्वस्थानाद्भ्रंशिता ये नरा भुवि ।। १०७ ।।

ते मामनेन स्तोत्रेण स्तुत्वा स्थानमवाप्नुयुः ।।

अखंडैर्बिल्वपत्रैर्मामर्चयंति नरा भुवि ।। १०८ ।।

स्तोत्रेणानेन ये देवा नरा युष्मत्कृतेन वै ।।

धर्मार्थकाममोक्षाणामाकरास्ते भवन्ति वै ।। १०९ ।।

इदं पद्मसरो देवा ये केचन नरा भुवि ।।

प्राप्य स्नानं करिष्यन्ति मां स्तुत्वा विष्णुवल्लभाम् ।। 2.1.9.११० ।।

तेऽपि श्रियं दीर्घमायुर्विद्यां पुत्रान्सुवर्चसः ।।

लब्ध्वा भोगांश्च भुक्त्वाऽन्ते नरा मोक्षमवाप्नुयुः ।। १११ ।।

इति दत्त्वा वरं देवी देवेन सह विष्णुना ।।

आरुह्य गरुडेशानं वैकुण्ठस्थानमाययौ ।। ।। ११२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे वसु नामक निषादवृत्तान्तपद्मसरोमाहात्म्यादिवर्णनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १०



।। अथ तोण्डमान्नृपस्य स्वपितुः सकाशाद्राज्यप्राप्तिः ।।

।। श्रीशुक उवाच ।। ।।

इदं पद्मसरोनाम राजन्पापप्रणाशनम् ।।

कीर्तनात्स्मरणात्स्नानान्नृणां लक्ष्मीप्रदं भुवि ।।

कृत्वा स्नानं त्वमप्यस्मिन्व्रज स्वपितुरंतिकम् ।। १ ।।

।। श्रीवराह उवाच ।। ।।

एतच्छुकवचः श्रुत्वा स्नात्वा पद्मसरोवरे ।। २ ।।

तं नत्वा हयमारुह्य तोण्डमान्स्वपुरं ययौ ।।

तं पिता युवराजानं कृत्वा त्रीन्वत्सरानथ ।। ३ ।।

रंजकत्वं च सामर्थ्यं शौर्यं वीर्यं सुशीलताम् ।।

भक्तिं विप्रेषु पुत्रस्य वीक्ष्य राजा स्वमंत्रिभिः ।। ४ ।।

स्वपदे स्थापयामास स्वभिषिच्य विधानतः ।।

अनुनीय सुतं पत्न्या सार्धं राजा वनं ययौ ।। ५ ।।

।। अथ वसोर्वल्मीके श्रीवराहसन्दर्शनम् ।। ।।

तोण्डमानपि साम्राज्यं लब्ध्वा राज्यं चकार ह ।।

निषादस्य वने देवो वाराहं रूपमास्थितः ।। ६ ।।

श्यामाकपक्वं भक्षित्वा रात्रौरात्रौ चचार ह ।।

पदानि स वराहस्य चान्वियेष दिवादिवा ।। ७ ।।

अदृष्ट्वा तं वराहं स रात्रौ जाग्रद्धनुर्धरः ।।

स्थितोऽपश्यच्चरन्तं तं चंद्रकोटिसमप्रभम् ।। ८ ।।

वराहं सुभगाकारं श्यामाकवनमध्यतः ।।

तं दृष्ट्वा धनुरादाय सिंहनादं चकार ह ।। ९ ।।

वराहस्तद्ध्वनिं श्रुत्वा वनान्निष्क्रम्य सत्वरम् ।।

ययौ तं चाप्यनुययौ वराहं स निषादपः ।। 2.1.10.१० ।।

रात्रिशेषमनुद्रुत्य वने चंद्रसमप्रभम् ।।
वल्मीकं प्रविशन्तं च ददर्श स निषादपः ।। ११ ।।
गच्छंतं पूर्णिमाचन्द्रमस्तं गिरिवरं यथा ।।
विस्मितोऽखानयत्कोपाद्वल्मीकं स निषादपः ।। १२ ।।
धरावराहो ददृशे मूर्च्छितोऽयं पपात ह ।।
पितरं मूर्च्छितं दृष्ट्वा तत्पुत्रो भक्तिमांस्तदा ।। ।। १३ ।।
वराहदेवं तुष्टाव तेन प्रीतोऽभवद्धरिः ।।
आविश्य पितरं तस्य प्रोवाच मधुसूदनः ।। १४ ।।
।। श्रीभगवानुवाच ।। ।।
अहं वराह देवेशो नित्यमस्मिन्वसाम्यहम् ।।
राज्ञे त्वमुक्त्वा मामत्र प्रतिष्ठाप्यैव पूजय ।। १५ ।।
वल्मीकं कृष्णगोक्षीरैः क्षालयित्वा तदुत्थिते ।।
शिलातले च वाराहमुद्धृत्य धरणीस्थितम् ।। १६ ।।
कारयित्वा प्रतिष्ठाप्य विप्रैर्वैखानसैश्च माम् ।।
पूजयेद्विविधैर्भोगैस्तोण्डमान्राजसत्तमः ।। १७ ।।
इत्युक्त्वा तं जहौ देवः स च स्वस्थो बभूव ह ।।
सुखासीनं तु पितरं नमस्कृत्य निषादजः ।। १८ ।।
न्यवेदयद्देववचः पित्रे सर्वं यथातथम् ।।
स श्रुत्वा विस्मितो भूत्वा कृत्स्नं पुत्रवचः शुभम् ।। १९ ।। ।।
अथ तोण्डमन्नृपाय वसुनिवेदितवाराहोदंतः ।। ।।
राज्ञे वक्तुं ययौ शीघ्रं निषादः स्वानुगैः सह ।।
वसुर्निषादाधिपती राजद्वारमुपागमत् ।। 2.1.10.२० ।।
निषादाधिपमाज्ञाय द्वारपालैर्नृपोत्तमः ।।
आहूय तं निषादेशं सभायां मंत्रिभिः सह ।। ।। २१ ।।
सत्कृत्य तं वसुं राजा सपुत्रं सपरिच्छदम् ।।
पप्रच्छ प्रीतिमान्राजा वसुं तं वनगोचरम्।।
किमागमनकृत्यं ते वद त्वं वनगोचर ।।२२।।
।। ।। वसुरुवाच ।। ।।

राजन्मम वने दृष्टमाश्चर्यं शृणु भूपते ।। २३ ।।

कश्चिच्छ्वेतवराहस्तु श्यामाकमचरन्निशि ।। ।।

तं वराहं धनुष्पाणिरन्वधावमहं नृप ।। २४ ।।

अनुद्रुतो वायुवेगो गत्वा वल्मीकमाविशत् ।।

स्वामिपुष्करिणीतीरे पश्यते मम भूपते ।। २५ ।।

वल्मीकमखनं क्रोधान्मूर्च्छितो न्यपतं भुवि ।।

मत्पुत्रोऽयं समागत्य मां दृष्ट्वा मूर्च्छितं भुवि ।। २६ ।।

शुचिर्भूत्वा देवदेवं तुष्टाव मधुसूदनम् ।।

ततो मयि समाविश्य वराहोऽध्यवदत्सुतम् ।। २७ ।।

राज्ञे निवेदय क्षिप्रं मच्चरित्रं निषादप ।।

कृष्णगोक्षीरसेकेन वल्मीकं क्षालयेन्नृपः ।। २८ ।।

दृश्यते च शिला काचिद्वल्मीकस्था सुशोभना ।।

वामांकस्थभुवं मां च वराहवदनं स्थितम् ।। २९ ।।

कारयित्वा शिल्पिनाथ प्रतिष्ठाप्य मुनीश्वरैः ।।

वैखानसैर्मुनिवरैरर्चयेत्तोण्डमानपि ।। 2.1.10.३० ।।

अथ गत्वा श्रीनिवासं वल्मीकावृतपद्द्वयम् ।।

कपिलाकृष्णगोक्षीरसेचनैः क्षालयेच्छनैः ।। ।। ३१ ।।

आपादपीठपर्यंतं क्षालयित्वा दिनेदिने ।।

कुर्यात्प्राकारमुभयोरुत्तरे दक्षिणे तथा ।। ३२ ।।

इत्युक्त्वा चैव माऽमुंचद्देवः स्वस्थोऽभवं नृप ।।

इदं ते वक्तुमायातो देवदेवचिकीर्षितम् ।। ३३ ।।

।। अथ नृपस्य निषादवाक्यस्वप्नाभ्यां बिलमार्गेण शेषाचलगमनम् ।। ।। ।।

।। श्रीवराह उवाच ।। ।।

तोण्डमानपि तच्छ्रुत्वा सुप्रीतो विस्मितोऽभवत् ।।

ततः कार्यं विनिश्चित्य मन्त्रिभिः पुष्करादिभिः ।। ३४ ।।

वेकटाद्रिं जिगमिषुर्गोपानाहूय सर्वशः ।।

कृष्णाश्च कपिला गावो याः काश्चित्संति मामिकाः ।। ३५ ।।

ताः सवत्सा आनयध्वं वेंकटाद्रिसमीपतः ।।

इत्याज्ञाप्य नृपो गोपाञ्छ्वो यात्रेति च मन्त्रिणः ।। ३६ ।।

विसृज्य प्रकृतीः सर्वा विवेशांतःपुरं वशी ।।

उक्त्वा कथां तां पत्नीभ्यः सुष्वाप निशि पार्थिवः ।। ३७ ।।

तं स्वप्ने श्रीनिवासोऽपि बिलमार्गं ह्यदर्शयत् ।।

स्वपुरादाबिलं मार्गे पल्लवानसृजद्धरिः ।। ३८ ।।

एवं स्वप्नं नृपो दृष्ट्वा प्रातरुत्थाय सत्वरः ।।

आहूय मन्त्रिणः सर्वान्प्रकृतीर्ब्राह्मणानपि ।। ३९ ।।

स्वप्नं तथाविधं चोक्त्वाऽपश्यदद्वारेऽथ पल्लवान् ।।

युक्ते मुहूर्ते प्रययौ हयमारुह्य तोण्डमान् ।। 2.1.10.४० ।।

पश्यन्पल्लवभंगांश्च शनैः प्रीतो ययौ बिलम् ।।

दृष्ट्वा विस्मयमापन्नो निर्ममे तत्र पत्तनम् ।। ।। ४१ ।।

।। अथ भगवदुक्त्या तोण्डमन्नृपकृतक्षीराभिषेकवप्रनिर्माणादिकम् ।। ।।

बिलमंतःपुरे कृत्वा प्राकारं चाप्यकारयत् ।।

वसंस्तत्र नृपेन्द्रोऽसौ निर्जित्य पृथिवीमिमाम्।। ४२ ।।

यथोक्तं देवदेवेन क्षीरप्रक्षालनादिकम् ।।

कृत्वा प्राकारनिर्माणं कर्तुमुद्योगमाययौ ।। ४३ ।।

तदानीं देवदेवेन स्वयमाज्ञापितो नृपः ।।

तिंतिणीं चंपकं चोभौ पालयैतौ नगोत्तमौ ।। ४४ ।।

मम चास्थानिकी चिंचा लक्ष्म्याः स्थानं च चंपकः ।।

नमस्कार्यौ नृपैस्तौ हि ऋषिदेवनरैः सदा ।। ४५ ।।

संस्थाप्यैतौ नृपश्रेष्ठ च्छेदयान्यान्नगोत्तमान् ।।

प्राकारमात्रं कुरु मे द्वारगोपुरसंयुतम् ।। ४६ ।।

विमानं तु भवद्वंश्यो नाम्ना नारायणो नृपः ।।

कारयिष्यति मद्भक्तः स्वर्णेनालंकरिष्यति ।। ४७ ।।

।। श्रीवराह उवाच ।। ।।

एवमुक्त्वा तोण्डमानं विरराम श्रियः पतिः ।। ४८ ।।

एवं देववचः श्रुत्वा कृत्वा प्राकारमेव च ।।

पूजयामास मुनिभिर्वैखानसकुलोद्भवैः ।। ४९ ।।

नित्यं बिलेन चागत्य देवं नत्वा नृपोत्तमः ।।
राज्यं चकार धर्मेण भुंजानो भोगमुत्तमम् ।। 2.1.10.५० ।।
।। अथ गंगास्नानागतवीरशर्माख्यविप्रचरित्रम् ।। ।।
एतस्मिन्नेव काले तु दाक्षिणात्यो द्विजोत्तमः ।। ५१ ।।
गंगास्नानाय गच्छन्वै सदारः प्रययौ पुरात् ।।
मार्गेऽथ गर्भिणी जाता ब्राह्मणी ब्राह्मणः स च ।। ५२ ।।
तां तु गर्भवतीं दृष्ट्वा स्वात्मानुगमनेऽक्षमाम् ।।
राजानं द्रष्टुकामोऽसौ राजद्वारमुपागमत् ।। ५३ ।।
द्वाःस्थेनाज्ञापितो राजा तमाहूय द्विजोत्तमम् ।।
पूजयित्वा तु विधिवत्पप्रच्छ कुशलं द्विजम् ।। ५४ ।।
।। राजोवाच ।। ।।
किमागमनकृत्यं ते किं करिष्याम्यहं द्विज ।।
।। ब्राह्मण उवाच ।। ।।
वासिष्ठो वीरशर्माहं सामवेदी नृपोत्तम ।। ५५ ।।
सदारो निर्गतो रात्तगंगास्नानाय सादरः ।।
मार्गे च गर्भिणी चेयं कौशिकी पुण्यशालिनी ।। ५६ ।।
नाम्ना लक्ष्मीरिति ख्याता शीला च पतिव्रता ।।
संस्थाप्यैनां तव गृहे व्रतं निर्वर्तयाम्यहम् ।। ५७ ।।
तस्माद्राजन्प्रयच्छास्यै यथेष्टं भक्तवेतने ।।
तावच्च रक्ष्यतां लक्ष्मीर्यावदागमनं मम ।। ५८ ।।
।। श्रीवराह उवाच ।। ।।
राजा तस्य वचः श्रुत्वा तंडुलानि धनान्यपि ।।
दत्त्वा षण्मासपर्यन्तं गृहमंतःपुरे ददौ ।। ५९ ।।
तां न्यस्य ब्राह्मणः प्रीतो गंगास्नानाय निर्ययौ ।।
गत्वा भागीरथीं गंगां प्रयागे क्षेत्र उत्तमे ।। 2.1.10.६० ।।
स्नात्वा काशीं ततो गत्वा तत्रोषित्वा दिनत्रयम् ।।
गयां प्राप्य पितृश्राद्धमकरोद्ब्राह्मणोत्तमः ।। ६१ ।।
गत्वायोध्यामपि पुरीं प्रययौ बदरीवनम् ।।

सालग्रामं ततो गत्वा स्वदेशं प्रति निर्ययौ ।। ६२ ।।
संवत्सरद्वयेऽतीते चैत्रे मासि शुभे दिने ।।
निवृत्तोऽसौ द्विजश्रेष्ठः शनैरागत्य माधवे ।। ६३ ।।
एकादश्यां शुक्लपक्षे पुना राजानमाययौ ।।
राजा तु विस्मृत्य तदा ब्राह्मणीं नास्मरन्नृपः ।। ६४ ।।
ब्राह्मणी मानिनी गेहे मृता शुष्का बभूव ह ।।
वीरशर्मा ततो विप्रो गंगातोयकरंडकम् ।। ६५ ।।
विमुच्य बन्धनं त्वेकं गंगांभःकरकं शुभम् ।।
प्रादाय राज्ञे पप्रच्छ पत्नी कुशलिनीति मे ।। ६६ ।।
स्मृत्वाथ राजा विप्रं तं स्थीयतामिति चाब्रवीत् ।।
अन्तःपुरं ततो गत्वा तामपश्यन्मृतां गृहे ।। ६७ ।।
अनुक्त्वा ब्रह्मणे तस्मै प्रविश्य बिलमुत्तमम् ।।
श्रीनृसिंहं नमस्कृत्य पुनः प्राप्य बिलोत्तमम् ।। ६८ ।।
श्रीनिवासं ययौ द्रष्टुं श्रीभूमिसहितं परम् ।।
तं दृष्ट्वा सहसायांतं जुगूहाते धरारमे ।। ६९ ।।
प्रणमन्तमवोचत्तं किमकाले नृपागतः।।
नृपोऽवदत्प्रणम्येशं भीतोऽथ ब्राह्मणीं मृताम् ।। 2.1.10.७० ।।
।। अथ अस्थिसरोवरमाहात्म्यम् ।। ।।
तच्छ्रुत्वा देवदेवोऽपि मा भै राजन्द्विजोत्तमात् ।।
आन्दोलिकां तामारोप्य स्त्रीभिः स्वाभिः समन्विताम्।। ७१ ।।
मदालयात्पूर्वभागे द्वादश्यां स्नापय प्रभो ।।
अस्थिनाम्नि सरस्यस्मिन्नपमृत्युनिवारणे ।। ७२ ।।
प्राप्तजीवा समं स्त्रीभिर्ब्राह्मणेन च योक्ष्यते ।।
शीघ्रं याहि नृपश्रेष्ठ यथोक्तं वचनं कुरु ।। ७३ ।।
इति देववचः श्रुत्वा प्रययौ स्वपुरं नृपः ।।
आन्दोलिकासु रम्यासु स्त्रिय आरोप्य तामपि ।। ७४ ।।
ब्राह्मणं च पुरस्कृत्य द्रष्टुं देवं ययौ नृपः ।।
अस्थिकूटसरः प्राप्य स्नापयामास ताः स्त्रियः ।। ७५.।।

त्वगस्थिरूपा सा चापि ताभिः क्षिप्ता सरोवरे ।।

प्राप्तजीवा यथापूर्वं सुव्यंजितशरीरजा ।। ७६ ।।

उत्थिता सरसः स्नात्वा राज्ञीभिः सहमंगला ।।

प्राप्ता च ब्राह्मणं प्रीता भर्तारं पुनरागतम् ।। ७७ ।।

राजा हरिं पूजयित्वा ब्राह्मणाय धनं ददौ ।।

सहस्रनिष्कपर्यंतं वस्त्राणि विविधानि च ।। ७८ ।।

स्वदेशगमनायैव सादरं विससर्ज ह ।।

विप्रः श्रुत्वा स्त्रियो वृत्तं प्रभावं वेंकटेशितुः ।। ७९ ।।

आशीः प्रयुज्य राज्ञेऽथ स्वदेशं प्रययौ द्विजः ।।

विप्रे गते श्रीनिवासो राजानं पुनरब्रवीत् ।। 2.1.10.८० ।।

दिनेदिने च मध्याह्ने नैवेद्यानेतरं नृप ।।

आगत्य मामर्चयित्वा यथेष्टं स्वर्णपंकजैः ।। ८१ ।।

गत्वा पुरीं स्वधर्मेण राज्यं कुरु नराधिप ।।

यद्यदिष्टं तव नृप भविष्यति न संशयः ।। ८२ ।।

नागंतव्यमकाले तु त्वया नृप कदाचन ।।

एवं कालार्चनं कृत्वा गत्वा त्वं स्वपुरं वस ।। ८३ ।।

।। राजोवाच ।। ।।

तथा करिष्ये देवेश मध्याह्ने चार्चयाम्यहम् ।।

इति देवाज्ञया नित्यमर्चयन्स्वर्णपंकजैः ।। ८४ ।।

तदूर्ध्वं तुलसीपुष्पं जात्त्वपश्यत्स मृण्मयम् ।। ८५ ।।

।। अथ कुर्वग्रामस्थकुलालवंशजभीमाख्यभक्तोदन्तः ।। ।।

विस्मितो देवदेवेशमपृच्छन्नृपसत्तमः ।।

।। राजोवाच ।। ।।

केनार्च्यसे मृन्मयैश्च कमलैस्तुलसीसमैः ।। ८६ ।।

राज्ञा पृष्टो देवदेवः स्मृत्वा राजानमब्रवीत् ।।

कश्चित्कुलालो मद्भक्तः कुर्वग्रामे वसत्यसौ ।। ८७ ।।

स्वगृहेऽर्चयते राजंस्तदंगीक्रियते मया ।।

इति देववचः श्रुत्वा तं द्रष्टुं प्रययौ नृपः ।। ८८ ।।

गत्वा कुर्वपुरं तस्य कुलालस्य गृहं ययौ ।।

राजानमागतं दृष्ट्वा प्रणम्यैवाग्रतः स्थितः ।। ८९ ।।

स्थितं तं भीमनामानं पप्रच्छ नृपसत्तमः ।। ।।

।। तोण्डमानुवाच ।। ।।

भीम पूजयसे देवं कथं वद कुलोत्तम ।। 2.1.10.९० ।।

।। श्रीवराह उवाच ।। ।।

पृष्टः प्राह कुलालोऽपि जातु जाने न चार्चनम् ।।

केनोक्तं नृपतिश्रेष्ठ कुलालोऽर्चयतीति हि ।। ९१ ।।

।। तोण्डमानुवाच ।। ।।

देवेन श्रीनिवासेन ममोक्तं हि त्वदर्चनम् ।।

स तु श्रुत्वा नृपवचः स्मृत्वा देववरं पुरा ।। ९२ ।।

।। भीम उवाच ।। ।।

यदा प्रकाशिता पूजा यदा राजा समागतः ।।

तोण्डमांस्तेन संवादस्तदा मोक्षं गमिष्यसि ।। ९३ ।।

इति पूर्वं वरं देवो दत्तवान्वेकटेश्वरः ।। ९४ ।।

।। अथ कुर्वग्रामस्थभीमाख्यभक्तस्य पत्न्या सह वैकुण्ठप्राप्तिः ।। ।।

इत्युक्त्वाथ कुलालोऽपि पत्न्या सार्धं तथैव च ।।

विमानमागतं दृष्ट्वा देवं दृष्ट्वा जनार्दनम्।।९५।।

प्रणमन्प्रजहौ प्राणान्सदारो भक्तसत्तमः ।।

पश्यतो राजराजस्य विमानमधिरुह्य च ।।९६।।

दिव्यरूपधरो देव्या सार्धं विष्णुपदं ययौ ।।

दृष्ट्वा राजाद्भुतं तत्र स्वपुरं प्राप्य हर्षितः ।। ९७ ।।

स्वपुत्रं श्रीनिवासाख्यमभिषिच्य विधानतः ।।

परिपालय धर्मेण मानवांश्च वसुन्धराम् ।। ९८ ।।

इत्याज्ञाप्य सुतं धीमांस्तताप परमं तपः ।।

तप्यतस्तस्य देवोऽपि प्रत्यक्षमभवद्धरिः ।। ९९ ।।

।। अथ श्रीनिवासकृपया तोण्डमन्नृपस्य सारूप्यप्राप्तिः ।। ।।

आरुह्य गरुडं देवो रमाभूमिसमन्वितः ।। 2.1.10.१०० ।।

।। श्रीभगवानुवाच ।। ।।

किं करोमि नृपश्रेष्ठ तपसा तोषितस्तव ।।

इत्युक्तो देवदेवेन तोण्डमानपि राजराट् ।। १०१ ।।

प्रीतिमान्प्राञ्जलिर्भूत्वा सगद्गदमुवाच ह ।।

त्वल्लोके वस्तुमिच्छामि जरामरणवर्जिते ।। १०२ ।।

इदमेव वरं देहि माधवैतन्ममेप्सितम् ।। १०३ ।।

।। श्रीवराह उवाच ।। ।।

इत्युक्त्वा निपपातोर्व्यां साष्टांगं देवसन्निधौ ।।

तदा कलेवरं मुक्त्वा विमानं त्वारुरोह च ।। ।। १०४ ।।

गन्धर्वैः स्तूयमानोऽसौ सारूप्यं प्राप्य शार्ङ्गिणः ।।

यच्छोकमोहहतं जरामरणवर्जितम् ।। १०५ ।।

पुनरावृत्तिरहितं तद्विष्णोः पदमाययौ ।। १०६ ।।

।। अथैतन्माहात्म्यश्रवणपठनफलश्रुतिः ।। ।।

एतद्भविष्यं देवेशि मयोक्तं वरवर्णिनि ।।

यः श्रावयेद्यः शृणुयाद्विष्णुलोकं स गच्छति ।। १०७ ।।

।। श्रीसूत उवाच ।। ।।

इत्युक्तं देवदेवेन सभविष्यं सहोत्तरम् ।।

शृणुयाद्यः पठेद्भक्त्या कथां पुण्यां पुरातनीम् ।। १०८ ।।

स तु भुक्त्वाखिलान्कामानन्ते विष्णुपदं व्रजेत् ।। १०९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये धरणीवराहसंवादे भविष्यद्वर्णने तोण्डमांश्चक्रवर्तिवृत्तवर्णनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ११

https://sa.wikisource.org/s/h2b
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। श्रीसूत उवाच ।।

।। अथ काश्यपस्य स्वामिपुष्करिणीस्नानेन महापातकनाशः ।। ।।

अथातः संप्रवक्ष्यामि स्वामिपुष्करिणीं शुभाम्।।

लक्षीकृत्य कथामेकां पवित्रां द्विजसत्तमाः ।। १ ।।

काश्यपाख्यो द्विजः पूर्वमस्मिंस्तीर्थवरे शुभे ।।

स्नात्वातिमहतः पापाद्विमुक्तो नरकप्रदात् ।। २ ।। ।।

।। ऋषय ऊचुः ।। ।।

मुने काश्यपनामासावकरोत्किं हि पातकम् ।।

स्नात्वा तीर्थवरे ह्यत्र यस्मान्मुक्तोऽभवत्क्षणात् ।। ३ ।।

एतन्नः श्रद्दधानानां ब्रूहि सूत कृपाबलात् ।।

त्वद्वचोऽमृततृप्तानां न पिपासापि विद्यते ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

श्रीस्वामिपुष्करिण्याश्च माहात्म्यप्रतिपादकम्।।

इतिहासं प्रवक्ष्यामि पठतां पापनाशनम् ।। ५ ।।

।। अथ परीक्षिद्वृत्तान्तः ।। ।।

अभिमन्युसुतो राजा परीक्षिन्नाम नामतः ।।

अध्यास्त हास्तिनपुरं पालयन्धर्मतो महीम् ।। ६ ।।

स राजा जातु विपिने चचार मृगयारतः ।।

षष्टिवर्षवया भूपः क्षुत्तृष्णापरिपीडितः ।। ७ ।।

नष्टमेकं स विपिने मार्गयन्मृगमादरात् ।।

ध्यानारूढं मुनिं दृष्ट्वा प्राह भूपालकोत्तमः ।। ८ ।।

मया बाणेन विपिने मृगो विद्धोऽधुना मुने ।।

दृष्टः स किं त्वया विद्वन्विद्रुतो भयकातरः ।। ९ ।।

समाधिनिष्ठो मौनित्वान्न किंचिदपि सोऽब्रवीत् ।।

ततो धनुरटन्या स स्कन्धे तस्य महामुनेः ।। 2.1.11.१० ।।

निधाय मृतसर्पं तु कुपितः स्वपुरं ययौ ।।

मुनेस्तस्य सुतः कश्चिच्छृंगीनाम बभूव वै ।। ११ ।।

सखा तस्य कृशाख्योऽभूच्छृंगिणो द्विजसत्तमः ।।

सखायं शृंगिणं प्राह कृशाख्यः स सखा ततः ।। १२ ।।

पिता तव मृतं सर्पं स्कन्धेन वहतेऽधुना ।।

मा भूद्दर्पस्तव सखे मा क्रुध्यस्त्वमिदं वृथा ।। १३ ।।

सोऽभवत्कुपितः शृंगी दित्सुः शापं नृपाय वै ।।

मत्ताते शवसर्पं यो न्यस्तवान्मूढचेतनः ।। ।। १४ ।।

स सप्तरात्रान्म्रियतां संदष्टस्तक्षकाहिना ।।

शशापैवं मुनिसुतः सौभद्रेयं परीक्षितम् ।। १५ ।।

शमीकाख्यः पिता तस्य शप्तं श्रुत्वा सुतेन तम् ।।

नृपं प्रोवाच तनयं शृङ्गिणं मुनिपुंगवः ।। १६ ।।

रक्षकं सर्वलोकानां नृपं किं शप्तवानसि ।।

अराजके वयं लोके स्थास्यामः कथमञ्जसा ।। १७ ।।

क्रोधेन पातकं भूयाद्दयया प्राप्यते सुखम् ।।

यः समुत्पादितं कोपं क्षमयैव निरस्यति ।। १८ ।।

इह लोके परत्रासावत्यंतं सुखमश्नुते ।।

क्षमायुक्ता हि पुरुषा लभंते श्रेय उत्तमम् ।। १९ ।।

ततः शमीकः स्वं शिष्यं प्राह गौरमुखाभिधम् ।।

भो गौरमुख गत्वा त्वं वद भूपं परीक्षितम् ।। 2.1.11.२० ।।

इमं शापं मत्सुतोक्तं तक्षकाधिपदंशनम् ।।

पुनरायाहि शीघ्रं त्वं मत्समीपं महामते ।। २१ ।।

एवमुक्तः शमीकेन ययौ गौरमुखो नृपम् ।।

समेत्य चाब्रवीद्भूपं सौभद्रेयं परीक्षितम् ।। २२ ।।

दृष्ट्वा सर्पं पितुः स्कंधे त्वया विनिहितं मृतम् ।।

शमीकस्य सुतः शृङ्गी शशाप त्वां रुषान्वितः ।। २३ ।।

एतद्दिनात्सप्तमेऽह्नि तक्षकेण महाहिना ।।

दष्टो विषाग्निना दग्धो भूयादाश्वभिमन्युजः ।। २४ ।।

एवं शशाप त्वां राजञ्छृंगी तस्य मुनेः सुतः ।।

एतद्वक्तुं पिता तस्य प्राहिणोन्मां त्वदंतिकम् ।। २५ ।।

इतीरयित्वा तं भूपमाशु गौरमुखो ययौ ।।

गते गौरमुखे पश्चाद्राजा शोकपरायणः ।। २६ ।।

अभ्रंलिहमथोत्तुङ्गमेकस्तंभं सुविस्तृतम् ।।

मध्ये गङ्गं व्यतनुत मण्डपं नृपपुङ्गवः ।। २७ ।।

महागारुडमन्त्रज्ञैरोषधिज्ञैश्चिकित्सकैः ।।

तक्षकस्य विषं हन्तुं यत्नं कुर्वन्समाहितः ।। २८ ।।

अनेकदेवब्रह्मर्षिराजर्षिप्रवरान्वितः ।।

आस्ते तस्मिन्नृपस्तुङ्गे मण्डपे विष्णुभक्तिमान् ।। २९ ।।

तस्मिन्नवसरे विप्रः काश्यपो मान्त्रिकोत्तमः ।।

राजानं रक्षितुं प्रायात्तक्षकस्य महाविषात् ।। ।। 2.1.11.३० ।।

सप्तमेऽहनि विप्रेन्द्रो दरिद्रो धनकामुकः ।।

अत्रांतरे तक्षकोऽपि विप्ररूपी समाययौ ।। ३१ ।।

मध्येमार्गं विलोक्याथ काश्यपं प्रत्यभाषत ।।

ब्राह्मण त्वं कुत्र यासि वद मेऽद्य महामुने ।। ३२ ।।

इति पृष्टस्तदाऽवादीत्काश्यपस्तक्षकं द्विजः ।।

परीक्षितं महाराजं तक्षकोऽद्य विषाग्निना ।। ३३ ।।

धक्ष्यते तं शमयितुं तत्समीपमुपैम्यहम् ।।

इत्युक्तः स च तं विप्रं तक्षकः पुनरब्रवीत् ।। ३४ ।।

तक्षकोऽहं द्विजश्रेष्ठ मया दष्टश्चिकित्सितुम् ।।

न शक्योब्दशतेनाऽपि महामन्त्रायुतैरपि ।। ३५ ।।

चिकित्सितुं चेन्मद्दष्टं शक्तिरस्ति तवाधुना ।।

अनेकयोजनोच्छ्रायं दशाम्युज्जीवय द्रुमम्।। ३६ ।।

ततो भवान्समर्थो हीत्येवं मे भाति हे द्विज ।।

इतीरयित्वा तं वृक्षमदशत्तक्षकस्तदा ।। ३७ ।।

अभवद्भस्मसात्सोऽपि वृक्षोत्यन्तसमुच्छ्रितः ।।

पूर्वमेव नरः कश्चित्तं वृक्षमधिरूढवान् ।। ३८ ।।

तक्षकस्य विषोल्काभिः सोऽपि दग्धोऽभवत्तदा ।।

तन्नरं न विजज्ञाते तौ च काश्यपतक्षकौ ।। ३९ ।।

काश्यपः प्रतिजज्ञेऽथ तक्षकस्यापि शृण्वतः ।।

मन्मन्त्रशक्तिं पश्यन्तु सर्वे विप्रादयोऽधुना ।। 2.1.11.४० ।।

इतीरयित्वा तं वृक्षं भस्मीभूतं विषाग्निना ।।

आजीवयन्मन्त्रशक्त्या काश्यपो मान्त्रिकोत्तमः ।। ४१ ।।

स नरस्तेन वृक्षेण साकमुज्जीवितोऽभवत् ।।

अथाब्रवीत्तक्षकस्तं काश्यपं मन्त्रकोविदम् ।। ४२ ।।

यथा न मुनिवाङ्मिथ्या भवेदेवं कुरु द्विज ।।

यत्ते राजा धनं दद्यात्ततोऽपि द्विगुणं धनम् ।। ४३ ।।

ददाम्यहं निवर्तस्व शीघ्रमेव द्विजोत्तम ।।

इत्युक्त्वानर्घरत्नानि तस्मै दत्त्वा स तक्षकः ।। ४४ ।।

न्यवर्तयत्काश्यपं तं ब्राह्मणं मन्त्रकोविदम् ।।

अल्पायुषं नृपं मत्वा ज्ञानदृष्ट्या स काश्यपः ।। ४५ ।।

स्वाश्रमं प्रययौ तूष्णीं लब्धरत्नश्च तक्षकात् ।।

सोऽब्रवीत्तक्षकः सर्पान्सर्वानाहूय तत्क्षणे ।। ४६ ।।

यूयं तं नृपतिं प्राप्य मुनीनां वेषधारिणः ।।

उपहारफलान्याशु प्रयच्छत परीक्षिते ।। ४७ ।।

तथेत्युक्त्वा सर्वसर्पा ददू राज्ञे फलान्यमी ।।

तक्षकोऽपि तथा तत्र कस्मिंश्चिद्बदरीफले ।। ४८ ।।

कृमिवेषधरो भूत्वा व्यतिष्ठद्दंशितुं नृपम् ।।

अथ राजा प्रदत्तानि सर्वैर्ब्राह्मणरूपकैः ।। ४९ ।।

परीक्षिन्मन्त्रिवृद्धेभ्यो दत्त्वा सर्वफलान्यपि ।। 2.1.11.५० ।।

कौतूहलेन जग्राह स्थूलमेकं करे फलम् ।।

तस्मिन्नवसरे सूर्योऽप्यस्ताचलमगाहत ।। ५१ ।।

मिथ्या ऋषिवचो माभूदिति तत्रत्यमानवाः ।।

अन्योऽन्यमवदन्सर्वे ब्राह्मणाश्च नृपास्तदा ।। ५२ ।।

एवं वदत्सु सर्वेषु फले तस्मिन्नदृश्यत ।।
साधु रक्तः कृमिः सर्वै राज्ञा चापि परीक्षिता ।। ५३ ।।
अयं किं मां दशेदद्य क्रिमिरित्युक्तवान्नृपः ।।
निदधे तत्फलं कण्ठे सकृमि द्विजसत्तमाः ।। ५४ ।।
तक्षकोऽस्मिन्स्थितः कण्ठे कृमिरूपी फले तदा ।।
निर्गत्य तत्फलादाशु नृपदेहमवेष्टयत् ।। ५५ ।।
तक्षकावेष्टिते भूपे पार्श्वस्था दुद्रुवुर्भयात् ।।
अनन्तरं नृपो विप्रास्तक्षकस्य विषाग्निना ।। ५६ ।।
दग्धोभूद्भस्मसादाशु सप्रासादो बलीयसा ।।
कृत्वौर्ध्वदेहिकं तस्य नृपस्य सपुरोहिताः ।। ५७ ।।
मंत्रिणस्तत्सुतं राज्ये जनमेजयनामकम् ।।
राजानमभ्यषिञ्चन्वै जगद्रक्षणवाच्छया ।। ५८ ।।
तक्षकाद्रक्षितुं भूपमायातः काश्यपाभिधः ।।
यो ब्राह्मणो मुनिश्रेष्ठः स सर्वैर्निंदितो जनैः ।। ५९ ।।
बभ्राम सकलान्देशाञ्छिष्टैः सर्वैश्च दूषितः ।।
अवस्थानं न लेभे स ग्रामे वाप्याश्रमेऽपि वा ।। 2.1.11.६० ।।
यान्यान्देशानसौ यातस्तत्र तत्र महाजनैः ।।
तत्तद्देशान्निरस्तः सञ्छाकल्यं शरणं ययौ ।। ६१ ।।
प्रणम्य शाकल्यमुनिं काश्यपो निन्दितो जनैः ।।
इदं विज्ञापयामास शाकल्याय महात्मने।। ।। ६२।।
।। काश्यप उवाच ।। ।।
भगवन्सर्वधर्मज्ञ शाकल्य हरिवल्लभ ।।
मुनयो ब्राह्मणाश्चान्ये मां निन्दंति सुहृज्जनाः ।। ६३ ।।
नास्याहं कारणं जाने किं मां निन्दंति मानवाः ।।
ब्रह्महत्या सुरापानगुरुस्त्रीगमनं तथा ।। ६४ ।।
स्तेयं संसर्गदोषो वा मया नाचरितं क्वचित् ।।
अन्यान्यपि च पापानि न कृतानि मया मुने ।। ६५ ।।
तथाऽपि निन्दंति जना वृथा मां बान्धवादयः ।।

जानासि चेत्त्वं शाकल्य मया दोषं कृतं वद ।। ।। ६६ ।।

उक्तोऽथ काश्यपेनैव शाकल्याख्यो महामुनिः ।।

क्षणं ध्यात्वा बभाषे तं काश्यपं द्विजसत्तमाः ।। ६७ ।।

अथ शाकल्योक्तधर्माः ।।

।। शाकल्य उवाच ।। ।।

परीक्षितं महाराजं तक्षकाद्रक्षितुं भवान् ।।

आयासीदर्धमार्गे तु तक्षकेण निवारितः ।। ६८ ।।

चिकित्सितुं समर्थोऽपि विषरोगादिपीडितम् ।।

यो न रक्षति लोकेस्मिंस्तमाहुर्ब्रह्मघातकम् ।। ६९ ।।

क्रोधात्कामाद्भयाल्लोभान्मात्सर्यान्मोहतोऽपि वा ।।

यो न रक्षति विप्रेंद्र विषरोगातुरं नरम् ।। 2.1.11.७० ।।

ब्रह्महा च सुरापी वा स्तेयी च गुरुतल्पगः ।।

संसर्गदोषदुष्टश्च नापि तस्य विनिष्कृतिः ।। ७१ ।।

कन्याविक्रयिणश्चापि हयविक्रयिणस्तथा ।।

कृतघ्नस्याऽपि शास्त्रेषु प्रायश्चित्तं तु विद्यते ।। ७२ ।।

विषरोगातुरं यस्तु समर्थोऽपि न रक्षति ।।

न तस्य निष्कृतिः प्रोक्ता प्रायश्चित्तायुतैरपि ।। ७३ ।।

न तेन सह पङ्क्तौ च भुञ्जीत सुकृती जनः ।।

न तेन सह भाषेत न पश्येत्तं नरं क्वचित् ।। ७४ ।।

तत्संभाषणमात्रेण महापातकभाग्भवेत् ।।

परीक्षित्स महाराजः पुण्यश्लोकश्च धार्मिकः ।। ७५ ।।

विष्णुभक्तो महायोगी चातुर्वर्ण्यस्य रक्षिता ।।

व्यासपुत्राद्धरिकथां श्रुतवान्भक्तिपूर्वकम् ।। ७६ ।।

अरक्षित्वा नृपं तं तु वचसा तक्षकस्य यत् ।।

निवृत्तस्तेन विप्रेन्द्रैर्बान्धवैरपि दूष्यसे ।। ७७ ।।

स परीक्षिन्महाराजो यद्यपि क्षणजीवितः ।।

तथापि यावन्मरणं बुधैः कार्यं चिकित्सितम् ।।७८।।

यावत्कण्ठगताः प्राणा मुमूर्षोर्मानवस्य हि ।।

तावच्चिकित्सा कर्तव्या कालस्य कुटिला गतिः ।। ७९ ।।

इति प्राहुः पुरा श्लोकं भिषग्विद्याब्धिपारगाः ।।

ततश्चिकित्साशक्तोऽपि यस्मादकृतभेषजः ।। 2.1.11.८० ।।

अर्धमार्गे निवृत्तश्च तेन त्वं गर्हितो ह्यसि ।।

शाकल्येनैवमुदितः काश्यपः प्रत्यभाषत ।। ८१ ।।

।। काश्यप उवाच ।। ।।

ममैतद्दोषशांत्यर्थमुपायं वद सुव्रत ।।

येन मां प्रतिगृह्णीयुर्बान्धवाः ससुहृज्जनाः ।। ८२ ।।

कृपां मयि कुरुष्व त्वं शाकल्य हरिवल्लभ ।।

काश्यपेनैवमुक्तस्तु शाकल्योऽपि मुनीश्वरः ।। ८३ ।।

क्षणं ध्यात्वा जगादैवं काश्यपं कृपया तदा ।। ८४ ।।

।। शाकल्य उवाच ।।

अस्य पापस्य शान्त्यर्थमुपायं प्रवदामि ते ।।

तत्कर्तव्यं त्वया शीघ्रं विलम्बं मा कृथा द्विज ।। ८५ ।।

सुवर्णमुखरीतीरे लक्ष्मीपतिनिवासभूः ।।

वेंकटाद्रिरिति ख्यातः सर्वलोकेषु पूजितः ।। ८६ ।।

तस्मिञ्छेषगिरौ पुण्ये सुरासुरनमस्कृते ।।

ब्रह्महत्यासुरापानस्वर्णस्तेयादिनाशके ।। ८७ ।।

स्वामिपुष्करिणी चेति सर्वपापापनोदिनी ।।

उत्तरे श्रीनिवासस्य वर्तते मंगलप्रदा।। ८८ ।।

तं गत्वा वेंकटं शैलं स्वामिपुष्करिणीं शुभाम् ।।

स्नात्वा संकल्पपूर्वं तु वराहस्वामिनं हरिम् ।। ८९ ।।

सेवित्वा पश्चिमे तीरे निर्गत्य हरिमन्दिरम् ।।

गत्वा तत्र विधानेन स्वर्णाचलनिवासिनम् ।। 2.1.11.९० ।।

श्रीनिवासं परं देवं भक्तानामभयप्रदम्।।

शङ्खचक्रधरं देवं वनमालाविभूषितम् ।। ९१ ।।

दृष्ट्वा निर्धूतपापोऽसि संशयं मा कृथा द्विज ।।

शाकल्येनैवमुक्तस्तु काश्यपो मुनिपुंगवः ।। ९२ ।।

गत्वा वेंकटशैलेन्द्रं सुरासुरनमस्कृतम् ।।

पुष्करिण्यां शुभायां तु स्नातो नियमपूर्वकम् ।। ९३ ।।

स्वस्थोऽभूत्काश्यपो विप्रो भिषग्विद्याब्धिपारगः ।।

सर्वे बंधुजना विप्राः काश्यपं ब्राह्मणोत्तमम् ।। ९४ ।।

पूजयित्वा विधानेन पूज्योऽसि न च संशयः ।।

एवं वः कथितं विप्रा वेंकटाचलवैभवम् ।। ९५ ।।

यः शृणोति नरो भक्त्या विष्णुलोके महीयते ।। ९६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखंडे श्रीवेङ्कटाचलस्थस्वामिपुष्करिणीमाहात्म्ये काश्यपदोषनिवृत्तिर्नामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/h2c
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ स्वामिपुष्करिणी स्नानात्तामिस्रादिनरकनिस्तारः ।।

।। ऋषय ऊचुः ।। ।।

सूत सर्वार्थतत्त्वज्ञ वेदवेदांगपारग ।।

श्रीस्वामिपुष्करिण्याश्च वैभवं वद नः प्रभो ।। ।। १ ।।

यस्याः स्मरणमात्रेण मुक्तः स्यान्मानवो भुवि ।। २ ।।

।। श्रीसूत उवाच ।। ।।

स्वामितीर्थं प्रशंसन्ति स्नांति वा कथयंति ये ।।

अष्टाविंशतिभेदांस्ते नरकान्नोपभुञ्जते ।। ३ ।।

तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।।

कुम्भीपाकं कालसूत्रमसिपत्रवनं तथा ।। ४ ।।

कृमिभक्षोऽन्धकूपश्च संदंशः शाल्मली तथा ।।

लालाभक्षो ह्यवीचिश्च सारमेयादनं तथा ।। ५ ।।

तथैव वज्रकणकः क्षारकर्दमपातनम् ।।

रक्षोगणाशनं चापि शूलप्रोतनिरोधनम्।। ६ ।।

तिरोधानाभिधं विप्रास्तथा सूचीमुखाभिधम् ।।

पूयशोणितभक्षं च विषाग्निपरिपीडनम् ।। ७ ।।

अष्टाविंशतिसंख्यातमेतन्नरकसंचयम्।।

न याति मनुजो विप्राः स्वामितीर्थनिमज्जनात् ।। ८ ।।

वित्तापत्यकलत्राणां योऽन्येषामपहारकः ।।

स कालपाशबद्धोऽयं यमदूतैर्भयानकैः ।। ९ ।।

तामिस्रे नरके घोरे पात्यते बहुवत्सरम् ।।

स्नाति चेत्स्वामितीर्थे स तस्मिन्नासौ निपात्यते ।। 2.1.12.१० ।।

मातरं पितरं विप्रान्यो द्वेष्टि पुरुषाधमः ।।

स कालसूत्रनरके विस्तृतायुतयोजने ।। ११ ।।

अधस्तादग्निसन्तप्ते उपर्यर्कमरीचिभिः ।।

खले ताम्रमये विप्राः पात्यते क्षुधयार्दितः ।। १२ ।।

स्नाति चेत्पुष्करिण्यां वै तस्मिन्नाऽसौ निपात्यते ।।

यो वेदमार्गमुल्लंघ्य वर्तते कुपथे नरः ।। १३ ।।

सोऽसिपत्रवने घोरे पात्यते यमकिंकरैः ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ।। १४ ।।

योऽश्नाति पंक्तिभेदेन पक्वं सूपादिकं नरः ।।

अकृत्वा पंचयज्ञान्वा भुंक्ते मोहेन स द्विजाः ।। १५ ।।

पात्यतेऽयं यमभटैर्नरके कृमिभोजने ।।

भक्ष्यमाणः कृमिशतैर्भक्षयन्कृमिसंचयान् ।। १६ ।।

स्वयं च कृमिभूतः संस्तिष्ठेद्यावदघक्षयम् ।।

स्नाति चेत्स्वामितीर्थे वै तस्मिन्नाऽसौ निपात्यते ।। १७ ।।

यो हरेद्विप्रवित्तानि स्नेहेन बलतोऽपि वा ।।

अन्येषामपि वित्तानि राजा तत्पुरुषोऽपि वा ।। १८ ।।

अयोमयाग्निकुंडेषु संदंशैः सोऽपि पीडितः ।।

संदंशे नरके घोरे पात्यते यमपूरुषैः ।। १९ ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते ।।

अगम्यां योभिगच्छेत स्त्रियं वै पुरुषाधमः ।। 2.1.12.२० ।।

अगम्यं पुरुषं योषिदभिगच्छेत वा द्विजाः ।।

तावयोमयनारीं च पुरुषं चाप्ययोमयम् ।। २१ ।।

तप्तावालिङ्ग्य तिष्ठन्तौ यावच्चन्द्रदिवाकरम् ।।

सूच्याख्ये नरके घोरे पात्येते यमकिंकरैः ।। २२ ।।

स्नाति चेत्स्वामितीर्थे च तस्मिन्नासौ निपाप्यते ।।

बाधते सर्वजन्तून्यो नानोपायैरुपद्रवैः ।। २३ ।।

शाल्मलीनरके घोरे पात्यते बहुकण्टके ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते ।। २४ ।।

राजा वा राजभृत्यो वा यः पाषण्डमनुद्रुतः ।।

भेदको धर्मसेतूनां वैतरण्यां निपात्यते ।। २५ ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते ।।

वृषलीसङ्गदुष्टो वा शौचाद्याचारवर्जितः ।। २६ ।।

त्यक्तलज्जस्त्यक्तवेदः पशुचर्यारतः सदा ।।

स पूयविष्ठामूत्रासृक्छ्लेष्मपित्तादिपूरिते ।। २७ ।।

अतिबीभत्सनरके पात्यते यमकिंकरैः ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते ।। २८ ।।

यः श्वभिर्मृगयुर्वन्यान्बाणैर्वा बाधते मृगान् ।।

स विध्यमानो बाणौघैः परत्र यमकिंकरैः ।। २९ ।।

प्राणरोधाख्यनरके पात्यते यमकिंकरैः ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते।। 2.1.12.३० ।।

दाम्भिको यः पशून्यज्ञे विध्यनुष्ठानवर्जितः ।।

हन्त्यसौ परलोकेषु वैशसे नरके द्विजाः ।।३१।।

कर्त्यमानो यमभटैः पात्यते यमकिंकरैः ।।

स्नाति चेत्पुष्करिण्यां वै तस्मिन्नासौ निपात्यते ।।३२।।

आत्मभार्यां सवर्णां यो रेतः पाययते यदि ।।

परत्र रेतःपायी स रेतःकुण्डे निपात्यते ।। ३३ ।।

स्नाति चेत्पुष्करिण्यां वै तस्मिन्नासौ निपात्यते ।।

यो दस्युर्मार्गमाश्रित्य गरदो ग्रामदाहकः ।। ।। ३४ ।।

वणिग्द्रव्यापहारी च स परत्र द्विजोत्तमाः ।।

वज्रदंष्ट्राभिधे घोरे पात्यते नरके चिरम् ।। ३५ ।।

स्नाति चेत्स्वामितीर्थे तु तस्मिन्नासौ निपात्यते ।।

विद्यन्ते यानि चान्यानि नरकाणि परत्र वै ।। ३६ ।।

तानि नाप्नोति मनुजः स्वामितीर्थनिमज्जनात् ।।

पुष्करिण्यां सकृत्स्नानादश्वमेधफलं लभेत् ।। ३७ ।।

आत्मविद्या भवेत्साक्षान्मुक्तिश्चापि चतुर्विधा ।।

न पापे रमते बुद्धिर्न भवेदुःखमेव वा ।। ३८ ।।

तुलापुरुषदानेन यत्फलं लभ्यते नरैः ।।

तत्फलं लभ्यते पुम्भिः स्वामितीर्थनिमज्जनात् ।। ३९ ।।

गोसहस्रप्रदानेन यत्पुण्यं हि भवेन्नृणाम् ।।
तत्पुण्यं लभते मर्त्यः स्वामितीर्थनिमजनात् ।। 2.1.12.४० ।।
धर्मार्थकाममोक्षाणां यं यमिच्छति पूरुषः ।।
तं तं सद्यः समाप्नोति स्वामितीर्थनिमज्जनात् ।। ४१ ।।
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।।
सद्यः पूतो भवेद्विप्राः स्वामितीर्थनिमज्जनात् ।। ४२ ।।
प्रज्ञा लक्ष्मीर्यशः संपज्ज्ञानं धर्मो विरक्तता ।।
मनःशुद्धिर्भवेन्नृणां स्वामितीर्थनिषेवणात् ।। ४३ ।।
ब्रह्महत्याऽयुतं चापि सुरापानायुतं तथा ।।
अयुतं गुरुदाराणां गमनं पापकारिणाम् ।। ।। ४४ ।।
स्तेयायुतं सुवर्णानां तत्संसर्गाश्च कोटिशः ।।
शीघ्रं विलयमायान्ति स्वामितीर्थनिमज्जनात् ।। ४५ ।।
ब्रह्महत्यासमानानि सुरापानसमानि च ।।
गुरुस्त्रीगमनेनापि यानि तुल्यानि चास्तिकाः ।। ४६ ।।
सुवर्णस्तेयतुल्यानि तत्संसर्गसमानि च ।।
तानि सर्वाणि नश्यन्ति स्वामितीर्थनिमज्जनात् ।। ४७ ।।
।। अथ स्वामितीर्थमहिमाश्रद्धालूनां महानरकप्राप्तिः ।। ।।
उक्तेष्वेतेषु सन्देहो न कर्त्तव्यः कदाचन ।।
जिह्वाग्रे परशुं तप्तं प्रक्षिपंति च किंकराः ।। ४८ ।।
अर्थवादमिमं सर्वं ब्रुवन्वै नरकं व्रजेत् ।।
सूकरः स हि विज्ञेयः सर्वकर्मबहिष्कृतः ।। ४९ ।।
अहो मौर्ख्यमहो मौर्ख्यमहो मौर्ख्यं द्विजोत्तमाः ।।
स्वामितीर्थाभिधे तीर्थे सर्वपातकनाशने ।। 2.1.12.५० ।।
अद्वैतज्ञानदे पुंसां भुक्तिमुक्तिप्रदायिनि ।।
इष्टकामप्रदे नित्यं तथैवाज्ञाननाशने ।। ५१ ।।
स्थितेऽपि तद्विहायायं रमतेन्यत्र वै जनः ।।
अहो मोहस्य माहात्म्यं मया वक्तुं न शक्यते ।। ५२ ।।
स्नातस्य स्वामितीर्थे तु नान्तकाद्भयमस्ति वै ।।

स्वामितीर्थं च पश्यंति तत्र स्नांति च ये नराः ।। ५३ ।।

स्तुवन्ति च प्रशंसंति स्पृशंति च नमन्ति च ।।

न पिबन्ति हि ते स्तन्यं मातृणां द्विजपुंगवाः ।। ५४ ।।

एवं वः कथितं विप्राः स्वामितीर्थस्य वैभवम् ।।

भुक्तिमुक्तिप्रदं नृणां सर्वपापनिबर्हणम् ।।५५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये श्री स्वामिपुष्करिणीतीर्थमहिमानुवर्णनं नाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १३

https://sa.wikisource.org/s/h05



।। अथ धर्मगुप्तचरित्रवर्णनम् ।।

।। श्रीसूत उवाच ।। ।।

भूयोपि संप्रवक्ष्यामि स्वामितीर्थस्य वैभवम् ।।

युष्माकमादरेणाऽहं नैमिषारण्यवासिनः ।। १ ।।

नन्दोनाम महाराजः सोमवंशसमुद्भवः ।।

धर्मेण पालयामास सागरान्तां धरामिमाम् ।। २ ।।

तस्य पुत्रः समभवद्धर्मगुप्त इति स्मृतः ।।

राज्यरक्षाधुरं नन्दो निजपुत्रे निधाय सः ।। ३ ।।

जितेंद्रियो जिताहारः प्रविवेश तपोवनम् ।।

ताते तपोवनं याते धर्मगुप्ताभिधो नृपः ।। ४ ।।

मेदिनीं पालयामास धर्मज्ञो नीतितत्परः ।।

ईजे वहुविधैर्यज्ञैर्देवानिन्द्र पुरोगमान् ।। ५ ।।

ब्राह्मणानां ददौ वित्तं क्षेत्राणि च बहूनि सः ।।

सर्वे स्वधर्मनिरतास्तस्मिन्राजनि शासति ।।६।।

कदाचिन्नाभवन्पीडास्तस्मिंश्चोरादिसंभवाः ।।

कदाचिद्धर्मगुप्तोऽयमारुह्य तुरगोत्तमम् ।। ७ ।।

वनं विवेश विप्रेंद्रा मृगयारसकौतुकी ।।

तमालतालहिन्तालकुरवाकुलदिङ्मुखे ।। ८ ।।

विचचार वने तस्मिन्सिंसहव्याघ्रभयानके ।।

मत्तालिकुलसन्नादसंमूर्च्छितदिगन्तरे ।। ९ ।।

पद्मकल्हारकुमुदनीलोत्पलवनाकुले ।।

तटाके रससंपूर्णे तपस्विजनमण्डिते ।। 2.1.13.१० ।।

तस्मिन्वने सञ्चरतो धर्मगुप्तस्य भूपतेः ।।

अभूद्विभावरी विप्रास्तमसावृतदिङ्मुखा ।। ११ ।।

राजाऽपि पश्चिमां सन्ध्यामुपास्य विनयान्वितः ।।

जजाप च वने तत्र गायत्रीं वेदमातरम् ।। १२ ।।

सिंहव्याघ्रादिभीत्यास्मिन्वृक्षमेकं समाश्रिते ।।

राजपुत्रे तदभ्याशमृक्षः सिंहभयार्दितः ।। १३ ।।

अन्वधावत वृक्षं तमेकः सिंहो वनेचरः ।।
अनुद्रुतः स सिंहेन ऋक्षो वृक्षमुपारुहत् ।। १४ ।।
आरुह्य ऋक्षो वृक्षं तं ददर्श जगतीपतिम् ।।
वृक्षस्थितं महात्मानं महाबलपराक्रमम् ।। १५ ।।
उवाच भूपतिं दृष्ट्वा ऋक्षोयं वनगोचरः ।।
मा भीतिं कुरु राजेंद्र वत्स्यावो रजनीमिह ।। १६ ।।
महासत्त्वो महाकायो महादंष्ट्रसमाकुलः ।।
वृक्षमूलं समायातः सिंहोऽयमतिभीषणः ।। १७ ।।
रात्र्यर्धं भज निद्रां त्वं रक्ष्यमाणो मयोद्यतः ।।
ततः प्रसुप्तं मां रक्ष शर्वर्यर्धं महामते ।। १८ ।।
इति तद्वाक्यमाकर्ण्य सुप्ते नन्दसुते हरिः ।।
प्रोवाच ऋक्षं सुप्तोऽयं नृपो मे त्यज्यतामिति ।। १९ ।।
तं सिंहमब्रवीदृक्षो धर्मज्ञो द्विजसत्तमाः ।।
भवान्धर्मं न जानीते मृगराज वनेचर ।। 2.1.13.२० ।।
विश्वासघातिनां लोके महाकष्टं भवत्यहो ।।
न हि मित्रद्रुहां पापं नश्येद्यज्ञायुतैरपि ।। २१ ।।
ब्रह्महत्यादिपापानां कथञ्चिन्निष्कृतिर्भवेत् ।।
विश्वासघातिनां पापं न नश्येज्जन्मकोटिभिः ।। २२ ।।
नाहं मेरुं महाभारं मन्ये पञ्चास्य भूतले ।।
महाभारमिमं मन्ये लोकविश्वासघातकम् ।। २३ ।।
एवमुक्तोऽथ ऋक्षेण सिंहस्तूष्णीं बभूव ह ।।
धर्मगुप्ते प्रबुद्धे तु ऋक्षः सुष्वाप भूरुहे ।। २४ ।।
ततः सिंहोऽब्रवीद्भूपमेनमृक्षं त्यजस्व मे ।।
एवमुक्तोऽथ सिंहेन राजा सुप्तमशंकितः ।। २५ ।।
स्वांकन्यस्तशिरस्कं तमृक्षं तत्याज भूतले ।।
पात्यमानस्ततो राज्ञा समालम्बितपादपः ।। २६ ।।
ऋक्षः पुण्यवशाद्वृक्षान्न पपात महीतले ।।
स ऋक्षो नृपमभ्येत्य कोपाद्वाक्यमभाषत ।। २७ ।।
कामरूपधरो राजन्नहं भृगुकुलोद्भवः ।।
ध्यानकाष्ठाभिधो नाम्ना ऋक्षरूपमधारयम् ।। २८ ।।
कस्मादनागसं सुप्तमत्याक्षीन्मां भवान्नृप ।।
मच्छापादतिशीघ्रं त्वमुन्मत्तश्चर भूतले ।। २९ ।।
इति शप्त्वा मुनिर्भूपं ततः सिंहमभाषत ।।

न सिंहस्त्वं महायक्षः कुबेरसचिवः पुरा ।। 2.1.13.३० ।।
हिमवद्गिरिमासाद्य कदाचित्तं वधूसखः ।।
अज्ञानाद्गौतमाभ्याशे विहारमतनोर्मुदा ।। ३१ ।।
गौतमोऽप्युटजाद्दैवात्समिदाहरणाय वै ।।
निर्गतस्त्वां विवसनं दृष्ट्वा शापमुदाहरत् ।। ३२ ।।
यस्मान्ममाश्रमेऽद्य त्वं विवस्त्रः स्थितवानसि ।।
अतः सिंहत्वमद्यैव भविता ते न संशयः ।। ३३ ।।
इति गौतमशापेन सिंहत्वमगमत्पुरा ।।
कुबेरसचिवो यक्षो भद्रनामा भवान्पुरा ।। ३४ ।।
कुबेरो धर्मशीलो हि तद्भृत्याश्च तथैव हि ।।
अतः किमर्थं त्वं हंसि मामृषिं वनगोचरम् ।। ३५ ।।
एतत्सर्वमहं ध्यानाज्जानामि हि मृगाधिप ।।
इत्युक्तो ध्यानकाष्ठेन त्यक्त्वा सिंहत्वमाशु सः ।। ।। ३६ ।।
यक्षरूपं गतो दिव्यं कुबेरसचिवात्मकम् ।।
ध्यानकाष्ठमसावाह प्रांजलिः प्रणतो मुनिम् ।। ३७ ।।
अद्य ज्ञातं मया सर्वं पूर्ववृत्तं महामुने ।।
गौतमः शापकाले मे शापान्तमपि चोक्तवान् ।। ३८ ।।
ध्यानकाष्ठेन संवाद ऋक्षरूपेण ते यदा ।।
तदा निर्धूय सिंहत्वं यक्षरूपमवाप्स्यसि ।। ३९ ।।
इति मामब्रवीद्ब्रह्मन्गौतमो मुनिपुङ्गवः ।।
अद्य सिंहत्वनाशान्मे जानामि त्वां महामुने ।। 2.1.13.४० ।।
ध्यानकाष्ठाभिधं शुद्धं कामरूपधरं सदा ।।
इत्युक्त्वा तं प्रणम्याथ ध्यानकाष्ठं स यक्षराट् ।। ४१ ।।
विमानवरमारुह्य प्रययावलकापुरीम् ।।
उन्मत्तरूपं तं दृष्ट्वा मन्त्रिणस्तु नृपोत्तमम्।। ।। ४२ ।।
पितुः सकाशमानिन्यू रेवातीरे नृपोत्तमम् ।।
तस्मै निवेदयामासुर्मतिभ्रंशं सुतस्य च ।। ४३ ।।
ज्ञात्वा तु पुत्रवृत्तान्तं पिता वै नंदनस्तदा ।। ४४ ।।
।। अथ जैमिनिवाक्यात्स्वामितीर्थस्नातस्य धर्मगुप्तस्योन्मादनिवृत्तिः ।। ।।
पुत्रमादाय सहसा जैमिनेरन्तिकं ययौ ।।
तस्मै निवेदयामास पुत्रवृत्तान्तमादितः ।। ४५ ।।
भगवञ्जैमिने पुत्रो ममाद्योन्मत्ततां गतः ।।
अस्योन्मादविनाशाय ब्रूह्युपायं महामुने ।। ४६ ।।

इति पृष्टश्चिरं दध्यौ जैमिनिर्मुनिपुंगवः ।।
ध्यात्वा तु सुचिरं कालं नृपनन्दनमब्रवीत् ।। ४७ ।।
ध्यानकाष्ठस्य शापेन ह्युन्मत्तस्ते सुतोऽभवत् ।।
तस्य शापस्य मोक्षार्थमुपायं प्रब्रवीमि ते ।। ४८ ।।
सुवर्णमुखरीतीरे वेंकटेनाम पर्वते ।।
सर्वपापहरे पुण्ये नानाधातुविनिर्मिते ।। ४९ ।।
स्वामिपुष्करिणी चेति तीर्थमस्ति महत्तरम् ।।
पवित्राणां पवित्रं हि मंगलानां च मंगलम् ।। 2.1.13.५० ।।
श्रुतिसिद्धं महापुण्यं ब्रह्महत्यादिशोधकम् ।।
नीत्वा तत्र सुतं तेऽद्य स्नापयस्व महामते ।। ५१ ।।
उन्मादस्तत्क्षणादेव तस्य नश्येन्न संशयः ।।
इत्युक्तस्तं प्रणम्यासौ जैमिनिं मुनिपुंगवम् ।। ५२ ।।
नन्दः पुत्रं समादाय स्वामिपुष्करिणीं ययौ ।।
तत्र च स्नापयामास पुत्रं नियमपूर्वकम् ।। ५३ ।।
स्नानमात्रात्ततः सद्यो नष्टोन्मादोऽभवत्सुतः ।।
स्वयं सस्नौ स नन्दोऽपि स्वामिपुष्करिणीजले ।। ५४ ।।
उषित्वा दिनमेकं तु सहपुत्रः पिता तदा ।।
सेवित्वा वेंकटेशं च श्रीनिवासं कृपानिधिम् ।। ५५ ।।
पुत्रमापृच्छ्य नन्दस्तं प्रययौ तपसे वनम् ।।
गते पितरि पुत्रोऽपि धर्मगुप्तो नृपो द्विजाः ।। ५६ ।।
प्रददौ वेंकटेशस्य बहुवित्तानि भक्तितः ।।
ब्राह्मणेभ्यो धनं धान्यं क्षेत्राणि च ददौ तदा ।। ५७ ।।
प्रययौ मन्त्रिभिः सार्धं स्वां पुरीं तदनन्तरम् ।।
धर्मेण पालयामास राज्यं निहतकण्टकम् ।। ५८ ।।
पितृपैतामहं विप्रा धर्मगुप्तोतिधार्मिकः ।।
उन्मादैरप्यपस्मारैर्ग्रहैर्दुष्टैश्च ये नराः ।। ५९ ।।
ग्रस्ता भवन्ति विप्रेन्द्रास्तेऽपि चात्र निमज्जनात् ।।
पुष्करिण्यां विमुक्ताः स्युः सत्यं सत्यं वदाम्यहम् ।। 2.1.13.६० ।।
स्वामिपुष्करिणीं त्यक्त्वा तीर्थमन्यद्व्रजेत्तु यः ।।
स्निग्धं स गोपयस्त्यक्त्वा स्नुहीक्षीरं प्रयाचते ।। ६१ ।।
स्वामितीर्थं स्वामितीर्थं स्वामितीर्थमिति द्विजाः ।।
त्रिःपठन्तो नरा एवं यत्र क्वापि जलाशये ।। ६२ ।।
स्नांति सर्वे नरास्ते वै यास्यन्ति ब्रह्मणः पदम् ।।

एवं वः कथिता विप्रा धर्मगुप्तकथा शुभा ।। ६३ ।।
यस्याः श्रवणमात्रेण ब्रह्महत्या विनश्यति ।। ।। ६४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये स्वामिपुष्करिणीमहिमानुवर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/h2d
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ सुमत्याख्यद्विजवृत्तान्तः ।।

।। श्रीसूत उवाच ।। ।।

भोभोस्तपोधनाः सर्वे नैमिषारण्यवासिनः ।।

स्वामितीर्थस्य माहात्म्यं भूयोऽपि प्रवदाम्यहम् ।। १ ।।

पुरा किरातीसंसर्गात्सुमतिर्ब्राह्मणः सुराम् ।।

पीतवान्पुष्करिण्यां स स्नात्वा पापाद्विमोचितः ।। २ ।।

।। ऋषय ऊचुः ।। ।।

सुमतिः कस्य पुत्रोऽसौ कथं स च सुरां पपौ ।।

कथं किरात्यासक्तोऽभूत्सूत पौराणिकोत्तम ।। ३ ।।

सर्वेषां विस्तरादेतद्वद त्वं कृपयाधुना ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

महाराष्ट्राभिधे देशे ब्राह्मणः कश्चिदास्तिकः ।।

यज्ञदेव इति ख्यातो वेदवेदांगपारगः ।। ५ ।।

दयालुरातिथेयश्च शिवनारायणार्चकः ।।

सुमतिर्नामपुत्रोऽभूद्यज्ञदेवस्य तस्य वै ।। ६ ।।

पितरं स परित्यज्य भार्यामपि पतिव्रताम् ।।

प्रययावुत्कले देशे विटगोष्ठीपरायणः ।।७।।

काचित्किराती तद्देशे वसन्ती युवमोहनी ।।

यूनां समस्तद्रव्याणि प्रलोभ्य जगृहे चिरम् ।।८।।

तस्या गृहं स प्रययौ सुमतिर्ब्राह्मणाधमः ।।

सुमतिं सा च जग्राह किराती निर्धनं द्विजम् ।। ९ ।।

।।अथ सुमत्याख्यद्विजस्य किरातीसङ्गान्महापातकप्राप्तिः ।।

तया युक्तोऽथ सुमतिस्तत्संयोगैकतत्परः ।।

इतस्ततश्चोरयित्वा बहुद्रव्याणि सन्ततम् ।।2.1.14.१०।।

दत्त्वा तया चिरं रेमे तद्गृहे बुभुजे च सः।।
एकेन चषकेणासौ तया सह सुरां पपौ ।। ११ ।।
एवं स बहुकालं वै रममाणस्तया सह ।।
पितरौ निजपत्नीं च नास्मरद्विषयातुरः ।। १२ ।।
स कदाचित्किरातैस्तु चौर्यं कर्तुं ययौ सह ।।
विप्रस्य कस्यचिद्गेहे सोऽपि कैरातवेषभृत् ।। १३ ।।
ययौ चोरयितुं द्रव्यं साहसी खड्गहस्तवान् ।।
तद्गृहस्वामिनं विप्रं हत्वा खड्गेन साहसात् ।।१४।।
समादाय बहु द्रव्यं किरातीभवनं ययौ ।।
तं यान्तमनुयाति स्म ब्रह्महत्या भयंकरी ।। १५ ।।
नीलवस्त्रधरा भीमा भृशं रक्तशिरोरुहा ।।
गर्जन्ती साट्टहासं सा कम्पयन्ती च रोदसी ।। १६ ।।
अनुद्रुतस्तया सोऽयं बभ्राम जगतीतले ।।
एवं भ्रमन्भुवं सर्वां कदाचित्सुमतिः स्वयम् ।। १७ ।।
स्वग्रामं प्रययौ भीत्या विप्रबन्धुर्दुरात्मवान्।।
अनुद्रुतस्तया भीतः प्रययौ स्वगृहं प्रति ।। १८ ।।
ब्रह्महत्याप्यनुद्रुत्य तेन साकं गृहं ययौ ।।
पितरं रक्षरक्षेति सुमतिः शरणं ययौ ।। १९ ।।
मा भैषीरिति तं प्रोच्य पिता रक्षितुमुद्यतः ।।
तदानीं ब्रह्महत्येयं तत्तातं प्रत्यभाषत ।। 2.1.14.२०।।
।। ब्रह्महत्योवाच।। ।।
मैव त्वं प्रतिगृह्णीष्व यज्ञदेव द्विजोत्तम ।।
असौ सुरापी स्तेयी च ब्रह्महा चातिपातकी ।।२१।।
मातृद्रोही पितृद्रोही भार्यात्यागी च पातकी ।।
किरातीसंगदुष्टश्च ह्येनं मुंच दुरात्मकम् ।। २२ ।।
गृह्णासि चेदिमं विप्र महापातकिनं सुतम् ।।
त्वद्भार्यामस्य भार्यां च त्वां च पुत्रमिमं द्विज ।। २३ ।।
भक्षयिष्यामि वंशं च तस्मान्मुञ्च सुतं त्विमम् ।।

इमं त्यजसि चेत्पुत्रं युष्मान्मुचांमि सांप्रतम्।। ।। २४ ।।

नैकस्यार्थे कुलं हन्तुमर्हसि त्वं महामते ।।

इत्युक्तः स तया तत्र यज्ञदेवोऽब्रवीच्च ताम् ।। २५ ।।

।। यज्ञदेव उवाच ।। ।।

बाधते मां सुतस्नेहः कथमेनं परित्यजे ।।

ब्रह्महत्या तदाकर्ण्य द्विजोक्तं तमभाषत ।। २६ ।।

।। ब्रह्महत्योवाच ।। ।।

अयं हि पतितो भूत्वा वर्णाश्रम बहिष्कृतः ।।

पुत्रेस्मिन्मा कुरु स्नेहं निन्दितं चास्य दर्शनम् ।। २७ ।।

इत्युक्त्वा ब्रह्महत्या सा यज्ञदेवस्य पश्यतः ।।

तलेन प्रजहारास्य पुत्रं सुमतिनामकम् ।। २८ ।।

रुरोद ताततातेति पितरं प्रब्रुवन्मुहुः ।। २९ ।।

।। अथ सुमतिं प्रति दुर्वासः कथित ब्रह्महत्यामुक्त्युपायः ।। ।।

रुरु दुर्जनको माता भार्यापि सुमतेस्तदा ।।

एतस्मिन्नंतरे तत्र दुर्वासाः शंकरांशकः ।। 2.1.14.३० ।।

दिष्ट्या समाययौ योगी धार्मिको मुनिसत्तमः ।।

यज्ञदेवोऽथ तं दृष्ट्वा मुनिं रुद्रावतारकम्।। ३१ ।।

स्तुत्वा प्रणम्य शरणं ययाचे पुत्रकारणात् ।।

दुर्वासास्त्वं महायोगिन्साक्षाद्वै शंकरांशकः ।। ।। ३२ ।।

त्वद्दर्शनमपुण्यानां भविता न कदाचन ।।

ब्रह्महा च सुरापी च स्तेयी चाभूत्सुतो मम ।। ३३ ।।

एनं प्रहर्तुमायाता ब्रह्महत्यापि वर्तते ।।

स्याद्यथा मे पुत्रोऽयं महापातकमोचितः ।। ३४ ।।

घोरा च ब्रह्महत्येयं यथा शीघ्रं लयं व्रजेत् ।।

तमुपायं वदस्वाद्य मम पुत्रे दयां कुरु ।। ३५ ।।

अयमेव हि पुत्रो मे नान्योऽस्ति तनयो मुने ।।

अस्मिन्मृते तु वंशो मे समुच्छिद्येत मूलतः ।। ३६ ।।

ततः पितृभ्यः पिण्डानां दातापि न भवेद्ध्रुवम् ।।

ततः कृपां कुरुष्व त्वमस्मासु भगवन्मुने ।। ३७ ।।

इत्युक्तः स तदोवाच दुर्वासाः शंकरांशकः ।।

ध्यात्वाथसुचिरं कालं यज्ञदेवं द्विजोत्तमम् ।। ३८ ।।

।। दुर्वासा उवाच ।। ।।

यज्ञदेवकृतं षापमतिदूर सुतेन ते ।।

नास्य पापस्य शातिः स्यात्प्रायश्चित्तायुतैरपि ।। ।। ३९ ।।

तथापि ते सुतस्याहं तस्य पापस्य शान्तये ।।

प्रायश्चित्तं वदिष्यामि शृणु नान्यमना द्विज ।। 2.1.14.४० ।।

वेंकटाद्रौ महापुण्ये सर्वपातकनाशने ।।

स्वामिपुष्करिणी चेति वर्तते मंगलप्रदा ।। ४१ ।।

।। अथ सुमतेः स्वामिपुष्करिणीस्नानाद्ब्रह्महत्या विमुक्तिः ।। ।।

स्नाति चेत्तव पुत्रोऽयं पातकान्मुच्यते क्षणात् ।।

एवं श्रुत्वा मुनेर्वाक्यं यज्ञदेवो महामतिः ।। ४२ ।।

पुत्रमादाय सुमतिं स्वामिपुष्करिणींगतः ।।

स्नापयामास सुमतिं हत्यया पीडितं सुतम् ।। ४३ ।।

आकाशवाणी तं विप्रमुवाच मधुरस्वरा ।।

यज्ञदेव महाभाग स्नानेनानेन सुव्रत ।। ४४ ।।

पूतोऽभवत्तव सुतः संशयं मा कृथा द्विज ।।

एवंप्रभावं तत्तीर्थं पापवृक्षकुठारकम् ।। ४५ ।।

एवं वः कथितं विप्रा इतिहासं पुरातनम्।।

शृण्वतां पठतां चापि वाजपेयफलं लभेत् ।। ४६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये स्वामिपुष्करिणीतीर्थमहिमानुवर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १५

https://sa.wikisource.org/s/h2e



।। अथ रामकृष्णतीर्थमाहात्म्यम् ।।

।। श्रीसूत उवाच ।। ।।

वेंकटाख्ये महापुण्ये सर्वपातकनाशने ।।

कृष्णतीर्थस्य माहात्म्यं शृणुध्वं सुसमाहिताः ।। १ ।।

यत्र मज्जनमात्रेण कृतघ्नोऽपि विमुच्यते ।।

पितॄन्मातॄर्गुरूंश्चावमन्यंते मोहमोहिताः ।। २ ।।

ये चाप्यन्ये दुरात्मानः कृतघ्ना निरपत्रपाः ।।

ते सर्वे कृष्णतीर्थेस्मिञ्छुद्ध्यन्ति स्नानमात्रतः ।। ३ ।।

कृष्णनामा मुनिः पूर्वं वेंकटाह्वयभूधरे ।।

अवर्तत तपः कुर्वन्विष्णुं ध्यायन्समाहितः ।। ४ ।।

स तत्र कल्पयामास स्नानार्थं तीर्थमुत्तमम् ।।

तत्र स्नात्वा सकृन्मर्त्यः कृतघ्नोऽपि विमुच्यते ।। ५ ।।

अत्रेतिहासं वक्ष्यामि पुराणं पापनाशनम् ।।

यस्य श्रवणमात्रेण नरो मुक्तिमवाप्नुयात्।। ६ ।।

पुरा बभूव विप्रेन्द्रो रामकृष्णो महामुनिः ।।

सत्यवाञ्छीलवान्वाग्मी सर्वभूतदयान्वितः ।। ७ ।।

शत्रुमित्रसमो दान्तस्तपस्वी विजितेंद्रियः ।।

परे ब्रह्मणि निष्णातो ब्रह्मतत्त्वैकसंश्रयः ।। ८ ।।

एवंप्रभावः स मुनिस्तपस्तेपे सुदारुणम् ।।

स वै निश्चलसर्वांगस्तिष्ठन्सर्वत्र भूतले ।। ९ ।।

परमाण्वन्तरं वापि न स्वस्थानाच्चचाल सः ।।

स्थित्वा तत्र तपस्यंतमनेकशतवत्सरान् ।। 2.1.15.१० ।।

तं चाक्रमत वल्मीकं छादितांगं चकार वै ।।

वल्मीकाक्रान्तदेहोऽपि रामकृष्णो महामुनिः ।।११।।

अकरोत्तप एवासौ वल्मीकं न त्वबुध्यत ।।

तस्मिंश्च तप्यति तपो वासवो मुनिपुंगवे।। १२ ।।

विसृज्य मेघजालानि वर्षयामास वेगवान् ।।

एवं दिनानि सप्तायं ववर्ष च निरन्तरम् ।। १३ ।।

धारावर्षेण महता वृष्यमाणोपि वै मुनिः ।।

तद्वर्षं प्रतिजग्राह निमीलितविलोचनः ।। १४ ।।

महता स्तनितेनाशु तदा बधिरयन्छ्रुतीः ।।

वल्मीकस्योपरिष्टाद्वै निपपात महाशनिः ।। १५ ।।

तस्मिन्वर्षति पर्जन्ये शीतवातादिदुःसहे ।। १६ ।।

।। अथ रामकृष्णाख्यमहर्षितपःप्रसन्नभगवदाविर्भावः ।। ।।

वल्मीकशिखरं ध्वस्तं बभूवाशनिताडितम्।।

तदाप्रादुरभूद्देवः शङ्खचक्रगदाधरः ।। १७ ।।

विनतानन्दनारूढो वनमालाविभूषितः ।।

रामकृष्णस्य तपसा तोषितो वाक्यमब्रवीत्।। १८ ।।

तपोनिधे रामकृष्ण वेदशास्त्रार्थपारग ।।

मदाविर्भावदिवसे यः स्नाति मनुजोत्तमः ।। १९ ।।

तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते ।।

मकरस्थे रवौ विप्र पौर्णमास्यां महातिथौ ।। 2.1.15.२० ।।

पुष्यनक्षत्रयुक्तायां स्नानकालो विधीयते ।।

तद्दिने स्नाति यो मर्त्यः कृष्णतीर्थं महामतिः ।। २१ ।।

सर्वपापविनिर्मुक्तः सर्वान्कामाँल्लभेत सः ।।

मदाविर्भावदिवसे कृष्णतीर्थजले शुभे ।। २२ ।।

स्नातुं तत्र समायांति स्वपापपरिशुद्धये ।।

देवा मनुष्याः सर्वे च दिक्पालाश्च महौजसः ।। २३ ।।

एते सर्वे महात्मानः कोटिसूर्यसमप्रभाः ।।

ते सर्वे कृष्णतीर्थेस्मिन्स्नानात्पूता भवंति हि ।। २४ ।।

त्वन्नाम्नेदं महातीर्थं लोके प्रख्यातिमेष्यति ।।

इत्युक्त्वा श्रीनिवासश्च तत्रैवान्तरधीयत ।। २५ ।।

एवं प्रभावं तत्तीर्थं महापापविशोधनम् ।।

बुद्धिशुद्धिप्रदं पुसां सर्वैश्वर्यप्रदायकम् ।। २६ ।।

एवं वः कथितं विप्राः कृष्णतीर्थस्य वैभवम् ।।

शृण्वतां पठतां चैव विष्णुलोकप्रदायकम् ।। २७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये रामकृष्णतीर्थमहिमानुवर्णनंनाम पञ्चदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/h1g



।। अथ श्रीवेंकटाद्रौ जलदानप्रशंसा ।।

।। श्रीसूत उवाच ।। ।।

वेंकटाख्ये महापुण्ये तृषार्तानां विशेषतः ।।

जलदानमकुर्वाणस्तिर्यग्योनिमवाप्नुयात् ।।१।।

तस्माद्वेंकटशैलेन्द्रे यथाशक्त्यनुसारतः ।।

जलदानं हि कर्तव्यं सर्वेषां जीवनं महत्।। २ ।।

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।।

विप्रस्य गृहगोधायाः संवादं परमाद्भुतम् ।। ३ ।।

।। अथ हेमांगस्य जलदानाकरणेन गृहगोधिकात्वप्राप्तिः ।। ।।

पुरा चेक्ष्वाकुवंशेऽभूद्धेमांग इति भूमिपः ।।

ब्रह्मण्यो ब्रह्मभूयिष्ठो जितामित्रो जितेंद्रियः ।।४।।

यावन्तो भूमिकणिका यावन्तस्तोयबिन्दवः ।।

यावन्त्युडूनि गगने तावतीर्गा ददात्यसौ ।। ५ ।।

येनेष्टयज्ञदर्भैश्च भूमिर्बर्हिष्मती स्मृता ।।

गोभूतिलहिरण्याद्यैस्तोषिता बहवो द्विजाः ।। ६ ।।

तेनादत्तानि दानानि न विद्यन्त इति श्रुतम् ।।

तेनादत्तं जलं चैकं सुखलभ्यधिया द्विजाः ।। ७ ।।

बोधितो ब्रह्मपुत्रेण वसिष्ठेन महात्मना ।।

अमूल्यं सर्वतोलभ्यं तद्दातुः किं फलं लभेत् ।। ८ ।।

इति दुर्धीर्हेतुवादैर्न जलं दत्तवान्विभुः ।।

अलभ्यदाने पुण्यं स्यादित्यवादीत्सयुक्तिकम् ।। ९ ।।

स आनर्च द्विजान्व्यङ्गान्दरिद्रान्वृत्तिकर्शितान् ।।

नानर्च श्रोत्रियान्विप्रान्ब्रह्मज्ञान्ब्रह्मवादिनः ।। 2.1.16.१० ।।

प्रख्यातान्पूजयिष्यन्ति सर्वलोकाः सहार्हणैः ।।

अनाथानामविद्यानां व्यङ्गानां च कुटुंबिनाम् ।। ११ ।।

दरिद्राणां गतिः का वा तस्मात्ते मद्दयास्पदाः ।।

इति दुष्टेषु पात्रेषु दत्तवान्किमपि स्वकम् ।। १२ ।।

तेन दोषेण महता चातकत्वं त्रिजन्मसु ।।

एकजन्मनि गृध्रत्वं श्वत्वं वा सप्त जन्मसु ।। १३ ।।

प्राप्य पश्चाद्गृहे जातो भूपोऽयं गृहगोधिका ।।

श्रुतकीर्तेस्तु भूपस्य मिथिलाधिपतेर्द्विजाः ।। १४ ।।

गृहद्वारप्रतोल्यां स्म वर्तते कीटकाशनः ।।

अष्टाशीतिषु वर्षेषु स्थितं तेन दुरात्मना ।। १५ ।।

।। अथ श्रुतदेवपादोदकसेवनेन हेमांगस्य जातिस्मरणम् ।। ।।

विदेहाधिपतेर्गेहं कदाचिदृषिसत्तमः ।।

श्रुतदेव इति ख्यातः श्रान्तो मध्याह्न आगमत् ।। १६ ।।

तं दृष्ट्वा सहसोत्थाय जातहर्षो नराधिपः ।।

मधुपर्कैः सुसंपूज्य तस्य पादावनेजनीः ।। १७ ।।

अपो मूर्ध्नावहत्क्षिप्रं तदोत्क्षिप्तैश्च बिन्दुभिः ।।

दैवोपदिष्टकालेन प्रोक्षिता गृहगोधिका ।। १८ ।।

सद्यो जातिस्मृतिरभूत्कृतकर्मातिदुःखिता ।।

त्राहि त्राहीति चुक्रोश ब्राह्मणं गृहमागतम् ।। १९ ।।

तिर्यग्जन्तुरवं श्रुत्वा ब्राह्मणो विस्मितोऽभवत् ।।

कुतः क्रोशसि गोधे त्वं दशेयं केन कर्मणा ।। 2.1.16.२० ।।

उपदेवोऽथ देवो वा त्वं नृपोऽथ द्विजोत्तमः ।।

कस्त्वं ब्रूहि महाभाग त्वामद्याहं समुद्धरे ।। २१ ।।

इत्युक्तः स नृपः प्राह श्रुतदेवं महाप्रभुः ।।

अहमिक्ष्वाकुकुलजः शस्त्रविद्याविशारदः ।। २२ ।।

यावन्तो भूमिकणिका यावन्तस्तोयबिन्दवः ।।

यावन्त्युडूनि गगने तावतीर्गा अदामहम् ।। २३ ।।

सर्वैर्यज्ञैर्मया चेष्टं पूर्तान्याचरितानि मे ।।

दानान्यपि च दत्तानि धर्मजातं स्वनुष्ठितम् ।। ।। २४ ।।

तथापि दुर्गतिर्जाता न मे चोर्ध्वगतिर्विभो ।।

त्रिवारं चातकत्वं मे गृध्रत्वं चैकजन्मनि ।।२५।।

सप्तजन्मसु च श्वत्वं प्राप्तं पूर्वं मया द्विज ।।

धरतानेन भूपेन चापः पादावनेजनीः ।। २६ ।।

बिन्दवो दूरमुत्क्षिप्तास्तैः सिक्तोऽहं कथंचन ।।

तदा जन्मस्मृतिरभूत्तेन मे हतपाप्मनः ।। २७ ।।

गोधाजन्मानि भाव्यानीत्यष्टाविंशति मे द्विज ।।

दृश्यन्ते देवदिष्टानि बिभ्यते जन्मभिर्भृशम् ।। २८ ।।

न कारणं प्रपश्यामि तन्मे विस्तरतो वद ।।

इत्युक्तः स द्विजः प्राह ज्ञातं विज्ञानचक्षुषा ।। २९ ।।

।। अथ श्रुतदेवदत्तपुण्येन हेमांगस्य गोधिकात्वविमुक्तिः ।। ।।

शृणु भूप प्रवक्ष्यामि तव दुर्गतिकारणम् ।।

न जलं तु त्वया दत्तं वेंकटाह्वयभूधरे ।। 2.1.16.३० ।।

तज्जलं सुलभं मत्वा न मौल्यमिति निश्चितः ।।

नाध्वगानां द्विजादीनां घर्मकालेऽप्यजानता ।। ३१ ।।

तथा पात्रं समुत्सृज्य ह्यपात्रे प्रतिपादितम् ।।

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ।। ३२ ।।

तुलसीं तु समुत्सृज्य बृहती पूज्यते नु किम् ।।

अनाथव्यंगपंगुत्वं न प्रयोजकतामियात् ।। ३३ ।।

पंग्वाद्या येप्यनाथा हि दयापात्रं हि केवलम् ।।

तपोनिष्ठा ज्ञाननिष्ठाः श्रुतिशास्त्रपरायणाः ।। ३४ ।।

विष्णुरूपाः सदा पूज्या नेतरे तु कदाचन ।।

तत्रापि ज्ञानिनोऽत्यर्थं प्रिया विष्णोः सदैव हि ।। ३५ ।।

ज्ञानिनामपि भूपाल विष्णुरेव सदा प्रियः ।।

तस्माज्ज्ञानी सदा पूज्यः पूज्यात्पूज्यतरः स्मृतः ।। ३६ ।।

न जलं तु त्वया दत्तं साधवो वा न सेविताः ।।

तेन ते दुर्गतिश्चेयं प्राप्ता चेक्ष्वाकुनन्दन ।। ३७ ।।

वेंकटाद्रौ कृतं पुण्यं तुभ्यं दास्यामि शान्तये ।।

भूतं भव्यं भवत्तेन कर्मजातं विजेष्यसि ।। ३८ ।।

इत्युक्त्वाप उपस्पृश्य ददौ पुण्यमनुत्तमम् ।।

यद्दत्तं ब्राह्मणेनापि स्नानं चैकदिने कृतम् ।। ३९ ।।

तेन ध्वस्ताखिलाऽऽगास्तु त्यक्त्वा च गृहगोधिका ।।

रूपं कर्मोचितं घोरं सद्योऽदृश्यत पूरुषः ।। 2.1.16.४० ।।

दिव्यं विमानमारूढो दिव्यस्रग्वस्त्रभूषणः ।।

पश्यतामेव साधूनां मैथिलस्य गृहान्तरे ।। ४१ ।।

बद्धाञ्जलिपुटो भूत्वा परिक्रम्य प्रणम्य च ।।

अनुज्ञातो ययौ राजा स्तूयमानोऽमरैर्दिवम् ।। ४२ ।।

तत्र भुक्त्वा महाभोगान्वर्षायुतमतन्द्रितः ।।

स एव चेक्ष्वाकुकुले ककुत्स्थोऽभून्महारथः ।। ४३ ।।

सप्तद्वीपप्रतीपालो ब्रह्मण्यः साधुसंमतः ।।

देवेन्द्रस्य समो विष्णोरंश एवं महाप्रभुः ।। ४४ ।।

बोधितस्तु वसिष्ठेन सर्वान्धर्मान्मनोहरान् ।।

अनुष्ठायाखिलान्राजा तेन ध्वस्ताशुभादिकः ।। ४५ ।।

दिव्यं ज्ञानं समासाद्य विष्णोः सायुज्यमाप्तवान् ।।

तस्माद्वेंकटशैलेन्द्रः पुण्यः पापविनाशनः ।। ४६ ।।

तस्मिंश्च जलदानं तु विष्णुलोकप्रदायकम् ।।

एवं वः कथितं विप्रा जलदानस्य वैभवम् ।।

वेंकटाद्रौ महापुण्ये सर्वपातकनाशने ।। ४७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये जलदानवैभववर्णनंनाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १७

https://sa.wikisource.org/s/h2f



।। अथ श्रीवेंकटाचलक्षेत्रादिवर्णनम् ।।

।। श्रीसूत उवाच ।। ।।

वेंकटाद्रेस्तु माहात्म्यं भूयोऽपि प्रवदाम्यहम् ।।

युष्माकं सावधानेन शृणुध्वं सुसमाहिताः ।। १ ।।

पृथिव्यां यानि तीर्थानि ब्रह्माण्डान्तर्गतानि च ।।

तानि सर्वाणि वर्तंते वेंकटाह्वयभूधरे ।। २ ।।

तस्मिन्नगोत्तमे पुण्ये वसन्तं पुरुषोत्तमम् ।।

शंखचक्रधरं देवं पीताम्बरधरं शुभम् ।। ३ ।।

कौस्तुभालंकृतोरस्कं भक्तानामभयप्रदम् ।।

देवदेवं विशालाक्षं वेदवेद्यं सनातनम् ।। ।। ४ ।।

अंगकोसलकर्णाटकाशीगुर्जरदेशगाः ।।

चोलकेरलपाण्ड्यादिसर्वदेशसमुद्भवाः ।। ५ ।।

सकुटुंबाश्च सेवार्थमायान्ति प्रतिवत्सरम् ।।

देवाश्च ऋषयः सिद्धा योगिनः सनकादयः ।। ६ ।।

ये भाद्रपदमासे तु वेंकटेशमहोत्सवे ।।

सेवां कुर्वन्ति ते सर्वे निष्पापा उत्तमोत्तमाः ।। ७ ।।

तत्र श्रीवेंकटेशस्य ब्रह्मा लोकपितामहः ।।

चकार कन्यामासे तु ध्वजारोपमहोत्सवम् ।। ८ ।।

प्रतिवर्षं च तत्सेवा निमित्तं सर्वमानवाः ।।

सर्वे देवाश्च गंधर्वाः सिद्धाः साध्या महौजसः ।। ९ ।।

ब्रह्मोत्सवे भगवतः समायांति द्विजोत्तमाः ।।

विद्यानां वेदविद्येव मंत्राणां प्रणवो यथा ।। 2.1.17.१० ।।

प्राणवत्प्रियवस्तूनां धेनूनां कामधेनुवत् ।।

तथा वेंकटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।। ११ ।।

शेषवत्सर्वनागानां पक्षिणां गरुडो यथा ।।

देवानां तु यथा विष्णुर्वर्णानां ब्राह्मणो यथा ।। १२ ।।

तथा वेंकटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।।

भूरुहाणां सुरतरुर्भार्येव सुहृदां यथा ।। १३ ।।

तीर्थानां तु यथा गंगा तेजसां तु रविर्यथा ।।

तथा वेंकटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।।१४।।

आयुधानां यथा वज्रं लोहानां कांचनं यथा ।।

वैष्णवानां यथा रुद्रो रत्नानां कौस्तुभो यथा ।। १५ ।।

तथा वेंकटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।।

नानेन सदृशो लोके विष्णुप्रीतिविवर्धनः ।। १६ ।।

न माधवसमो मासो न कृतेन समं युगम् ।।

न च वेदसमं शास्त्रं न तीर्थं गंगया समम् ।। १७ ।।

न जलेन समं दानं न सुखं भार्यया समम्।।

न कृषेस्तु समं वित्तं न लाभो जीवितात्परः ।। १८ ।।

न तपोऽनशनादन्यन्न दानात्परमं सुखम् ।।

न धर्मस्तु दयातुल्यो न ज्योतिश्चक्षुषा समम् ।। १९ ।।

न तृप्तिरशनातुल्या न वाणिज्यं कृषेः समम् ।।

न धर्मेण समं मित्रं न सत्येन समं यशः ।। ।। 2.1.17.२० ।।

यथा तथा भगवतः स्थानेन सदृशं न हि ।। २१ ।।

यत्कीर्तनं सकलपापहरं मुनीन्द्रा यद्वन्दनं सकलसौख्यदमेव लोके ।।

यात्रापि यं प्रति सुरैरपि पूजनीया तादृङ्महान्भवति वेंकटशैलमुख्यः ।। २२ ।।

तस्यानुभावं प्रवदामि भूयः समस्ततीर्थानि वसंति यत्र ।।

एवं समस्तेषु च मुख्यतीर्थं श्रीस्वामिनामास्ति सरोवरं तत् ।। २३ ।।

माहात्म्यमेतस्य मयोच्यते कथं यत्पश्चिमे रोधसि भूवराहः ।।

आलिंग्य कान्तामतिसौम्यमूर्तिर्विराजते विश्वजनोपकारी ।। २४ ।।

श्रीस्वामिपुष्करिण्यां च दक्षिणे वेंकटेश्वरः ।।

आलिंगितवपुर्लक्ष्म्या वरदो वर्तते चिरम् ।। २५ ।।

एवं वः कथितं विप्राः क्षेत्रमाहात्म्यमुत्तमम् ।।

यः शृणोति सदा भक्त्या विष्णुलोके महीयते ।। २६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये क्षेत्रमहिमानुवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/h2g



।। अथ श्रीवेंकटेश्वरवैभववर्णनम् ।।

।। श्रीसूत उवाच ।। ।।

अथेदानीं प्रवक्ष्यामि वेंकटेश्वरवैभवम् ।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। १ ।।

श्रीवेंकटेश्वरं देवं यः पश्यति सकृन्नरः ।।

स नरो मुक्तिमाप्नोति विष्णुसायुज्यमाप्नुयात् ।। २ ।।

दशवर्षैस्तु यत्पुण्यं क्रियते तु कृते युगे ।।

त्रेतायामेकवर्षेण तत्पुण्यं साध्यते नृभिः ।। ३ ।।

द्वापरे पञ्चमासेन तद्दिनेन कलौ युगे ।।

तत्फलं कोटिगुणितं निमिषेनिमिषे नृणाम् ।। ४ ।।

निःसंदेहं भवेदेवं श्रीनिवासविलोकिनाम्।।

श्रीवेंकटेश्वरे देवे तीर्थानि सकलान्यपि ।। ५ ।।

विद्यन्ते सर्वदेवाश्च मुनयः पितरस्तथा ।।

एककालं द्विकालं वा त्रिकालं सर्वदैव वा ।। ६ ।।

ये स्मरन्ति महादेवं श्रीनिवासं विमुक्तिदम् ।।

कीर्तयन्त्यथवा विप्रास्ते मुक्ताः पापपञ्जरात् ।। ७ ।।

नारायणं परं देवं वेंकटेशं प्रयान्ति वै ।।

पूजितं शङ्खराजेन सच्चिदानंदविग्रहम् ।। ८ ।।

तस्य स्मरणमात्रेण यमपीडाऽपि नो भवेत् ।।

श्रीनिवासं महादेवं येऽर्चयंति सकृन्नराः।। ।। ९ ।।

किं दानैः किं व्रतैस्तेषां किं तपोभिः किमध्वरैः ।।

वेंकटेशं परं देवं यो न चिन्तयति क्षणम् ।। 2.1.18.१० ।।

अज्ञानी स च पापी स्यात्स मूको बधिरस्तथा ।।

स जडोऽन्धश्च विज्ञेयश्छिद्रं तस्य सदा भवेत् ।। ११ ।।

श्रीनिवासे महादेवे सकृद्दृष्टे मुनीश्वराः ।।

किं काश्या गयया चैव प्रयागेनापि किं फलम्।। १२ ।।

दुर्लभं प्राप्य मानुष्यं मानवा इह भूतले ।।

वेंकटेशं परं देवं ये पश्यन्त्यर्चयन्ति वा ।। १३ ।।

जन्म तेषां हि सफलं ते कृतार्थाश्च नेतरे ।।

वेंकटेशे परे देवे दृष्टे वा पूजितेऽपि वा ।। १४ ।।

शम्भुना ब्रह्मणा किं वा शक्रेणाप्यखिलामरैः ।।

वेंकटेशे महादेवे भक्तियुक्ताश्च ये नराः ।। १५ ।।

तेषां प्रणामस्मरणपूजायुक्तास्तु ये नराः ।।

न ते पश्यंति दुःखानि नैव यांति यमालयम् ।। १६ ।।

ब्रह्महत्यासहस्राणि सुरापानायुतानि च ।।

दृष्टे नारायणे देवे विलयं यांति कृत्स्नशः ।। १७ ।।

ये वाञ्छंति सदा भोगं राज्यं च त्रिदशालये ।।

वेंकटाद्रिनिवासं ते प्रणमन्तु सकृन्मुदा ।। १८ ।।

यानि कानि च पापानि जन्मकोटिकृतानि च ।।

तानि सर्वाणि नश्यन्ति वेंकटेश्वरदर्शनात् ।। १९ ।।

संपर्कात्कौतुकाल्लोभाद्भयाद्वापि च संस्मरन् ।।

वेंकटेशं महादेवं नेहामुत्र च दुःखभाक् ।। 2.1.18.२० ।।

वेंकटाचलदेवेशं कीर्तयन्नर्चयन्नपि ।।

अवश्यं विष्णुसारूप्यं लभते नात्र संशयः ।। २१ ।।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुते क्षणात् ।।

तथा पापानि सर्वाणि वेंकटेश्वरदर्शनम् ।। २२ ।।

वेंकटेश्वरदेवस्य भक्तिरष्टविधा स्मृता ।।

तद्भक्तजनवात्सल्यं तत्पूजापरितोषणम् ।। २३ ।।

स्वयं तत्पूजनं भक्त्या तदर्थे देहचेष्टितम् ।।

तन्माहात्म्यकथावांछाश्रवणेष्वादरस्तथा ।। २४ ।।

स्वरनेत्रशरीरेषु विकारस्फुरणं तथा ।।

श्रीनिवासस्य देवस्य स्मरणं सततं तथा ।। २५ ।।

वेंकटाद्रिनिवासं तमाश्रित्यैवोपजीवनम्।।

एवमष्टविधा भक्तिर्यस्मिन्म्लेच्छेऽपि वर्तते।।२६।।

स एव मुक्तिमाप्नोति शौनकाद्या महौजसः।।

भक्त्या त्वनन्यया मुक्तिर्ब्रह्मज्ञानेन निश्चिता।। २७।।

वेदान्तशास्त्रश्रवणाद्यतीनामूर्ध्वरेतसाम् ।।

सा च मुक्तिर्विना ज्ञानं वेदान्तश्रवणोद्भवम्।।

यत्याश्रमं विना विप्रा विरक्तिं च विना तथा ।। २८ ।।

सर्वेषां चैव वर्णानामखिलाश्रमिणामपि ।।

वेकटेश्वरदेवस्य दर्शनादेव केवलम् ।। २९ ।।

अपुनर्भवदा मुक्तिर्भविष्यत्यविलंबितम् ।।

कृमिकीटाश्च देवाश्च मुनयश्च तपोधनाः ।। 2.1.18.३० ।।

तुल्या वेंकटशैलेन्द्रे श्रीनिवासप्रसादतः ।।

पापं कृतं मयानेकमिति मा क्रियतां भयम् ।। ३१ ।।

मा गर्वः क्रियतां पुण्यं मयाऽकारीति वा जनैः ।।

वेंकटेशे महादेवे श्रीनिवासे विलोकिते ।। ३२ ।।

न न्यूना नाधिकाश्च स्युः किन्तु सर्वे महाजनाः।।

वेंकटाख्ये महापुण्ये सर्वपातकनाशने।।३३।।

श्रीनिवासं परं देवं यः पश्यति सभक्तिकम्।।

न तेन तुल्यतामेति चतुर्वेद्यापि भूतले।।३४।।

वेंकटेश्वरदेवेशं यः पूजयति भक्तितः।।

स कोटिकुलसंयुक्तः प्रयाति हरिमंदिरम्।।३५।।

श्रीनिवासाच्च न समं नाधिकं पुण्यमस्ति वै ।।

वेंकटाद्रिनिवासं तं द्वेष्टि यो मोहमास्थितः ।। ३६ ।।

ब्रह्महत्यायुतं तेन कृतं नरककारणम् ।।

तत्संभाषणमात्रेण मानवो नरकं व्रजेत् ।। ३७ ।।

श्रीनिवासपरा वेदाः श्रीनिवासपरा मखाः ।।

श्रीनिवासपराः सर्वे तस्मादन्यन्न विद्यते ।। ३८ ।।

अन्यत्सर्वं परित्यज्य श्रीनिवासं समाश्रयेत् ।।

सर्वयज्ञतपोदानतीर्थस्नाने तु यत्फलम् ।। ३९ ।।

तत्फलं कोटिगुणितं श्रीनिवासस्य सेवया ।।

वेंकटाद्रिनिवासं तं चिंतयन्घटिकाद्वयम् ।। 2.1.18.४० ।।

कुलैकविंशतिं धृत्वा विष्णुलोके महीयते ।।

स्वामिपुष्करिणीतीर्थे स्नानं देवस्य दर्शनम् ।। ४१ ।।

यदि लभ्येत वै पुंसां किं गङ्गाजलसेवया ।।

वेकटेशं परं देवं यः कदापि न पश्यति ।। ४२ ।।

संकरः स तु विज्ञेयो न पितुर्बीजसंभवः ।।

तस्मात्सर्वप्रयत्नेन वेंकटेशो दयानिधिः ।। ४३ ।।

द्रष्टव्योऽतिप्रयत्नेन परलोकेच्छया द्विजाः ।।

एवं वः कथितं विप्रा वेंकटेशस्य वैभवम् ।। ४४ ।।

यस्त्वेतच्छृणुयान्नित्यं पठते च सभक्तिकम् ।।

स वै वेंकटनाथस्य सेवाफलमवाप्नुयात् ।। ४५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये वेंकटेश्वरवैभवानुवर्णनं नामाष्टादशोऽध्यायः ।। १८ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/h2h



अथ ब्रह्मादीनां नैरंतर्येण श्रीवेंकटाचले स्थितिवर्णनम् ।।

।। श्रीसूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि वेंकटाचलवैभवम् ।।

युष्माकं सावधानेन शृणुध्वं सुसमाहिताः ।। १ ।।

लक्षकोटिसहस्राणि सरांसि सरितस्तथा ।।

समुद्राश्च महापुण्या वनान्यप्याश्रमा अपि ।। २ ।।

पुण्यानि क्षेत्रजातानि वेदारण्यादिकानि च ।।

मुनयश्च वसिष्ठाद्या सिद्धचारणकिंनराः ।। ३ ।।

लक्ष्म्या सह धरण्या च भगवान्मधुसूदनः ।।

सावित्र्या च सरस्वत्या सहैव चतुराननः ।। ४ ।।

पार्वत्या सह देवेशस्त्र्यम्बकस्त्रिपुरांतकः ।।

हेरम्बषण्मुखाद्याश्च देवाः सेन्द्रपुरोगमाः ।। ५ ।।

आदित्यादि ग्रहाश्चैव तथाष्टवसवो द्विजाः ।।

पितरो लोकपालाश्च तथान्ये देवतागणाः ।। ६ ।।

महापातकसंघानां नाशने लोकपावने ।।

दिवानिशं वसन्त्यंतर्वेंकटाचलमूर्धनि ।। ७ ।।

तस्य दर्शनमात्रेण बुद्धिसौख्यं नृणां भवेत् ।।

तन्मूर्धनि कृतावासा सिद्धचारणयोषितः ।। ८ ।।

पूजयंति सदाकालं वेंकटेशं कृपानिधिम् ।।

कोटयो ब्रह्महत्यानामगम्यागमकोटयः ।। ९ ।।

अङ्गलग्ना विनश्यंति वेंकटाचलमारुतैः ।। 2.1.19.१० ।।

।। अथ श्रीवेंकटाचलारोहणसमयानुसंध्यानक्रमः ।। ।।

वेंकटाद्रिं गिरिं तं तु प्रार्थयेत्पुण्यवर्धनम् ।।

स्वर्णाचल महापुण्य सर्वदेवनिषेवित ।। ११ ।।

ब्रह्मादयोऽपि यं देवाः सेवन्ते श्रद्धया सह ।।

तं भवन्तमहं पद्भ्यामाक्रमेयं नगोत्तम ।। १२ ।।

क्षमस्व तदघं मेऽद्य दयया पापचेतसः ।।

त्वन्मूर्धनि कृतावासं माधवं दर्शयस्व मे ।। १३ ।।

प्रार्थयित्वा नरस्त्वेवं वेंकटाद्रिं नगोत्तमम् ।।

ततो मृदुपदं गच्छेत्पावनं वेंकटाचलम् ।। १४ ।।

वेंकटाद्रौ महापुण्ये सर्वपातकनाशने ।।

स्वामिपुष्करिणीतीर्थे स्नात्वा नियमपूर्वकम् ।। १५ ।।

पिण्डदानं ततः कुर्यादपि सर्षपमात्रकम् ।।

शमीदलसमानान्वा दद्यात्पिंडान्पितॄन्प्रति ।। १६ ।।

स्वर्गस्था मोक्षमायांति स्वर्गं नरकवासिनः ।। १७ ।।

।। अथ पापविनाशनाख्यतीर्थमाहात्म्यम् ।। ।।

ततस्तस्योपरि महत्सर्वलोकेषु विश्रुतम् ।।

सर्वतीर्थोत्तमं पुण्यं नाम्ना पापविनाशनम् ।। १८ ।।

अस्ति पुण्यतमे विप्राः पवित्रे वेंकटाचले ।।

यस्य संस्मरणादेव गर्भवासो न विद्यते ।। १९ ।।

तत्प्राप्य तु नरः स्नायात्स्वामितीर्थस्य चोत्तरे ।।

तत्र स्नानान्नरा यांति वैकुण्ठं नात्र संशयः ।। 2.1.19.२० ।।

।। ऋषय ऊचुः ।। ।।

सूत पापविनाशाख्यतीर्थस्य ब्रूहि वैभवम् ।।

व्यासेन बोधितस्त्वं हि वेत्सि सर्वं महामुने ।। २१ ।।

।। श्रीसूत उवाच ।। ।।

ब्रह्माश्रमपदे वृत्तां पार्श्वे हिमवतः शुभे ।।

वक्ष्यामि ब्राह्मणश्रेष्ठा युष्माकं तु कथां शुभाम् ।। २२ ।।

तदाश्रमपदं पुण्यं ब्रह्माश्रमपदं शुभम्।।

नानावृक्षसमाकीर्णं पार्श्वे हिमवतः शुभे ।। २३ ।।

बहुगुल्मलताकीर्णं मृगद्विपनिषेवितम् ।।

सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम् ।। ।। २४ ।।

यतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम्।।

ब्राह्मणैश्च महाभागैः सूर्यज्वलनसन्निभैः ।। २५ ।।

नियमव्रतसम्पन्नैः समाकीर्णे तपस्विभिः ।।

दीक्षितैर्यागशीलैश्च यताहारैः कृतात्मभिः ।।२६।।

वेदाध्ययनसंपन्नैर्वैदिकैः परिवेष्टितम् ।।

वर्णिभिश्च गृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ।। २७ ।।

स्वाश्रमाचारनिरतैः स्ववर्णोक्तविधायिभिः ।।

वालखिल्यैश्च ऋषिभिः समंतात्परिवेष्टितम् ।।२८ ।।

।। अथ दृढमत्याख्यशूद्रवृत्तान्तः ।। ।।

तत्राश्रमे पुरा कश्चिच्छूद्रो दृढमतिर्द्विजाः ।।

साहसी ब्राह्मणाभ्याशमाजगाम मुदान्वितः ।। २९ ।।

आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ।।

नाम्ना दृढमतिः शूद्रः साष्टांगं प्रणनाम वै ।। 2.1.19.३० ।।

तान्स दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः ।।

कुर्वतो विविधान्यज्ञान्संप्राशहृष्यत शूद्रकः ।। ३१ ।।

अथास्य बुद्धिरभवत्तपः कर्तुमनुत्तमम् ।।

ततोऽब्रवीत्कुलपतिं मुनिमागत्य तापसम् ।। ३२ ।। ।।

दृढमतिरुवाच।। ।।

तपोधन नमस्तेऽस्तु रक्ष मां करुणानिधे ।।

तव प्रसादादिच्छामि यागं कर्तुं प्रसीद मे ।। ३३ ।।

।। अथ दृढमतिं प्रति कुलपत्याख्यमुन्युपदिष्टशूद्रधर्माः ।। ।।

एवमुक्तस्तु शूद्रेण तमाह ब्राह्मणस्तदा ।। ३४ ।।

।। कुलपतिरुवाच ।। ।।

यागे दीक्षयितुं शक्यो न शूद्रो हीनजन्मभाक् ।।

भूयते यदि ते बुद्धिः शुश्रूषा निरतो भव ।। ३५ ।।

उपदेशो न कर्तव्यो जातिहीनस्य कर्हिचित् ।।

उपदेशे महान्दोष उपाध्यायस्यविद्यते ।। ३६ ।।

नाध्यापयेद्बुधः शूद्रं तथा नैव च याजयेत् ।।

न पाठयेत्तथा शूद्रं शास्त्रं व्याकरणादिकम् ।। ३७ ।।

काव्यं वा नाटकं वापि तथालंकारमेव वा ।।

पुराणमितिहासं च शूद्रं नैव तु पाठयेत् ।। ३८ ।।

यदि चोपदिशेद्विप्रः शूद्रस्यैतानि कर्हिचित् ।।

त्यजेयुर्ब्राह्मणा विप्रं ते ग्रामाद्ब्रह्मसंकुलात् ।। ३९ ।।

शूद्राय चोपदेष्टारं द्विजं चण्डालवत्त्यजेत्।।

शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत् ।। 2.1.19.४० ।।

तच्छुश्रूषस्व भद्रं ते ब्राह्मणाच्छ्रद्धयासह ।।

शूद्रस्य द्विजशुश्रूषा मन्वादिभिरुदीरिता ।। ४१ ।।

न हि नैसर्गिकं कर्म परित्यक्तुं त्वमर्हसि ।।

एवमुक्तः स मुनिना स शूद्रोऽचिन्तयत्तदा ।। ४२ ।।

किं कर्तव्यं मया त्वद्य व्रते श्रद्धा हि मे परा ।।

यथा स्यान्ममसुज्ञान यतिष्येऽहं तथाद्य वै ।। ४३ ।।

इति निश्चित्य मनसा शूद्रो दृढमतिस्तदा ।।

गत्वाश्रमपदादूरं कृतवानुटजशुभम्।। ४४ ।।

तत्र वै देवतागारं पुण्यान्यायतनानि च ।।

पुष्पारामादिकं चापि तटाकखननादिकम् ।। ४५।।

श्रद्धया कारयामास तपः सिद्ध्यर्थमात्मन ।।

अभिषेकांश्च नियमानुपवासादिकानपि ।। ४६ ।।

बलिं कृत्वा च हुत्वा च दैवतान्यभ्यपूजयत् ।।

संकल्पनियमोपेतः फलाहारो जितेंद्रियः ।। ४७ ।।

नित्यं कन्दैश्च मूलैश्च पुष्पैरपि तथा फलैः ।।

अतिथीन्पूजयामास यथावत्समुपागतान् ।। ४८ ।।

एवं हि सुमहान्कालो व्यतिचक्राम तस्य वै ।। ४९ ।।

।। अथ दृढमतये सुमत्याख्यविप्रप्रकाशितकर्मानुष्ठानक्रमः ।। ।।

अथाश्रममगात्तस्य सुमतिर्नाम नामतः ।।

द्विजो गर्गकुलोद्भूतः सत्यवादी जितेंद्रियः ।। 2.1.19.५० ।।

स्वागतैर्मुनिमाराध्य तोषयित्वा फलादिकैः ।।

।। अगस्त्य उवाच ।। ।।
का त्वं सुश्रोणि भद्रं ते भेकजन्मप्रदायकम् ।।
पापं पूर्वभवे चासीत्तद्वदस्व च मा चिरम् ।।७६।।
।। ।। नार्युवाच ।। ।।
तुम्बुरुर्नाम गन्धर्वः सर्वविद्याविशारदः ।।
तस्य भार्यास्म्यहं विप्र ह्यगस्त्य मुनिसेवित ।। ७७ ।।
भर्ता मे सर्वधर्मज्ञस्तुम्बुरुर्मुनिसत्तमः ।।
सर्वधर्मान्मनोज्ञा त्वं कुरु नित्यं मया सह ।। ७८ ।।
पतिवाक्यं तदा श्रुत्वा परलोकोपकारकम् ।।
असह्यं वाक्यमत्युग्रं दुर्गतिप्रदमेव हि ।। ७९ ।।
मया चोक्तं हि दुर्बुद्ध्या हे तात मुनिसत्तम ।। 2.1.26.८० ।।
।। अथागस्त्यकथितपतिव्रताधर्माः ।।
।। अगस्त्य उवाच ।। ।।
कुशाग्रबुद्धिस्ते भर्ता शशाप त्वां रुषान्वितः ।।
एवं शापो युक्त एव पतिवाक्यविरोधिनीम् ।। ८१ ।।
पतिवाक्यमनादृत्य स्वेच्छया वर्तते तु या ।।
सा नारी निरये घोरे पतत्याचन्द्रतारकम् ।। ८२ ।।
न स्वातन्त्र्यं तु नारीणां नोल्लंघ्यं पतिभाषणम् ।।
पातिव्रत्येन पुण्येन पतिशुश्रूषणेन च ।। ८३ ।।
स्त्रियो विष्णुपदं यान्ति न चान्यैरपि सुव्रतैः ।।
पतिर्माता पतिर्विष्णुः पतिर्ब्रह्मा पतिः शिवः ।। ८४ ।।
पतिर्गुरुः पतिस्तीर्थमिति स्त्रीणां विदुर्बुधाः ।।
पतिवाक्यमपाकृत्य या नारी सुकृतैः परैः ।। ८५ ।।
सदैव युज्यते सापि नैव शुद्धा भवेत्सकृत् ।।
पतिहीना तु या नारी गुरुभिर्धर्मवित्तमैः ।। ८६ ।।
सा कृतज्ञा विदध्यात्तु व्रतं धर्मफलप्रदम् ।।
पतिना प्रेरिता सैव पतिबुद्धिपरायणा ।। ८७ ।।
पतिपादाब्जतीर्थेन या स्नाता सा हरिप्रिया ।।
सा स्नाता सर्वतीर्थेषु गङ्गादिषु न संशयः ।। ८८ ।।
तस्मात्त्वत्कृतदोषस्तु त्वामायातीति तत्फलम् ।।
भुञ्जन्त्यास्तेऽत्र शृण्वन्त्या घोणतीर्थस्य वैभवम् ।। ८९ ।।
मुक्तिरासीच्छुभांगं तन्नारीरूपं पुनर्यथा ।। ।।
तस्माद्घोणस्य तीर्थस्य तुम्बुतीर्थमितीह वै ।। 2.1.26.९० ।।

लोके प्रसिद्धिरभवदहो तीर्थस्य वैभवम् ।। ९१ ।। ।।
अथ घोणतीर्थस्नातृणां नानाविधफलप्राप्तिः ।।
।। श्रीसूत उवाच ।। ।।
घोणतीर्थे महापुण्ये सर्वपापविनाशिनि ।।
स्नान्ति ये पौर्णमास्यां वै शौनकाद्या महौजसः ।। ९२ ।।
तेषां क्रतुफलं पुण्यं तीर्थायुतफलं भवेत् ।।
कपिलागोसहस्रं तु यो ददाति दिनेदिने ।। ९३ ।।
तत्फलं समवाप्नोति स्नानात्तुम्बुरुतीर्थके ।।
रत्नकोटिसहस्राणि यो ददाति दिनेदिने ।। ९४ ।।
मत्तेभानां सहस्राणि तथैवाश्वायुतान्यपि ।।
तत्फलं समवाप्नोति घोणतीर्थावगाहनात् ।। ९५ ।।
कन्याकोटिप्रदानेन यत्फलं चर्षिभिः स्मृतम् ।।
तत्फलं समवाप्नोति घोणतीर्थाच्च पावनात् ।। ९६ ।।
हेमांबरसहस्रं यः कुरुक्षेत्रे प्रयच्छति ।।
तत्फलं समवाप्नोति घोणतीर्थस्य वैभवात् ।। ९७ ।।
गुर्वर्थे ब्राह्मणार्थे च स्वाम्यर्थे यस्त्यजेत्तनुम् ।।
तत्फलं समवाप्नोति घोणतीर्थस्य वैभवात् ।। ९८ ।।
आपन्नार्तिहराणां च तीर्थसेवापरात्मनाम् ।।
सत्यव्रतानां यत्पुण्यं घोणतीर्थाच्च तद्भवेत् ।। ९९ ।।
यत्फलं श्राद्धकर्तृणां पितृणामिन्दुसंक्षये ।।
तत्फलं समवाप्नोति घोणतीर्थाद्धि पावनात् ।। 2.1.26.१०० ।।
गङ्गायां नर्मदायां च सरयूचन्द्रभागयोः ।।
सर्वेषु पुण्यतीर्थेषु यः स्नानं कुरुते नरः ।।
तत्फलं समवाप्नोति घोणतीर्थाद्धि पावनात् ।। १०१ ।।
तस्मात्पुण्यतमं तीर्थं घोणतीर्थं विदुर्बुधाः ।। १०२ ।।
य इमं शृणुतेऽध्यायं सर्वपापनिबर्हणम् ।।
वाजपेयफलं तस्य विष्णुलोकश्च शाश्वतः ।। १०३ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां द्वितीये वैष्णवखंडे श्रीवेङ्कटाचलमाहात्म्ये तुम्बुरुतीर्थमाहात्म्यवर्णनंनाम षड्विंशोऽध्यायः ।। ।। २६ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः २७

https://sa.wikisource.org/s/h2o



अथ श्रीवेंकटाचलस्य सर्वपुण्यतीर्थाधारत्ववर्णनम् ।।

।। ऋषय ऊचुः ।। ।।

वेंकटाद्रौ महापुण्ये सर्वसंकटनाशने ।।

सन्ति वै कति तीर्थानि सूत पौराणिकोत्तम ।। १ ।।

तेषां संख्यां च मे ब्रूहि कति मुख्यानि तत्र वै ।।

तत्राप्यत्यन्तमुख्यानि वद मे मुनिसत्तम ।। २ ।।

सद्धर्मरतिदान्यत्र कति मुख्यानि तानि च ।।

कानि ज्ञानप्रदान्यत्र भक्तिवेराग्यदानि च ।। ३ ।।

मुक्तिप्रदानि कान्यत्र तानि मे वद सुव्रत ।। ४ ।। ।।

।। श्रीसूत उवाच ।। ।।

षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तमे ।।

अष्टोत्तरसहस्राणि तेषु मुख्यानि सुव्रत ।। ५ ।।

सद्धर्मरतिदान्यत्र सन्ति चाष्टोत्तरं शतम् ।।

सहस्रेभ्यश्च मुख्यानि पृथक्तेभ्यश्च तानि च ।।६।।

भक्तिवैराग्यदान्यत्र षष्टिरष्टोत्तरे शते ।। ७ ।।

।। अथ स्वामिपुष्करिण्यादिषट्तीर्थस्नानकालनिर्णयः ।। ।।

मुक्तिदान्यत्र षट् चैव वेंकटाचलमूर्धनि ।।

स्वामिपुष्करिणी चैव वियद्गङ्गा ततः परम् ।। ८ ।।

पश्चात्पापविनाशं च पाण्डुतीर्थमतःपरम् ।।

कुमारधारिकातीर्थं तुम्बोस्तीर्थमतः परम् ।। ९ ।।

कुम्भमासे पौर्णमास्यां मघायोगो यदा भवेत् ।।

कुमारधारिकां यान्ति सर्वतीर्थानि हे द्विजाः ।। 2.1.27.१० ।।

तत्र यः स्नाति विप्रेन्द्रा राजसूयफलं लभेत् ।।

मुक्तिश्च भविता तत्र नात्र कार्या विचारणा ।। ११।।

अन्नदानविधिस्तत्र सार्धं दक्षिणयाऽ द्विजाः ।।
उत्तराफल्गुनीयुक्तशुक्लपक्षीयपर्वणि ।। १२ ।।
तुम्बोस्तीर्थं मीनसंस्थे रवौ तीर्थानि सर्वशः ।।
अपराह्ने समायान्ति तत्र स्नातो न जायते।।१३।।
मौञ्जीबन्धं विवाहं च कारयेद्द्रव्यदानतः ।।
मेषसंक्रमणे भानौ चित्रानक्षत्रसंयुते ।। ।। १४ ।।
पौर्णमास्यां समायान्ति वियद्गङ्गां तथैव च ।।
तत्र स्नात्वा नरः सद्यः शतक्रतुफलं लभेत् ।। १५।।
सुवर्णं तत्र दातव्यं कन्यादानं विशेषतः ।।
वृषभस्थे रवौ विप्रा द्वादश्यां हरिवासरे ।। १६ ।।
शुक्ले वाप्यथ कृष्णे वा भौमेनापि समन्विते ।।
पाण्डुतीर्थं समायान्ति गङ्गादीनि जगत्त्रये ।। १७ ।।
तत्र स्नात्वा च गां दत्त्वा मुच्यते प्रतिबन्धकात् ।।
आश्वयुक्छुक्लपक्षे च सप्तम्यां भानुवासरे ।। १८ ।।
उत्तराषाढयुक्तायां तथा पापविनाशनम् ।।
उत्तराभाद्रयुक्तायां द्वादश्यां वा समागतः ।। १९ ।।
शालग्रामशिलां दत्त्वा स्नात्वा च विधिपूर्वकम् ।।
मुच्यते सर्वपापैश्च जन्म कोटिशतोद्भवैः ।। 2.1.27.२० ।।
धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले ।। २१ ।।
तत्र स्नात्वा नरः सद्यो मुक्तिमेति न संशयः ।।
यस्य जन्मसहस्रेषु पुण्यमेवार्जितं पुरा ।। २२ ।।
तस्य स्नानं भवेद्विप्रा नान्यस्य त्वकृतात्मनः ।।
विभवानुगुणं दानं कार्यं तत्र यथाविधि।। २३।।
शालिग्रामशिलादानं गां दद्याच्च विशेषतः।। २४।।
।। अथ पुराणश्रवणस्य विशेषतः प्राशस्त्यवर्णनम्।। ।।
ये शृण्वंति कथां विष्णोः सदा भुवनपावनीम् ।।
ते वै मनुष्यलोकेऽस्मिन्विष्णुभक्ता भवन्ति हि।।२५।।

यद्यशक्तः सदा श्रोतुं कथां भुवनपावनीम्।।

मुहूर्तं वा तदर्धं वा क्षणं वा विष्णुसत्कथाम्।।

यः शृणोति नरो भक्त्या दुर्गतिर्नास्ति तस्य हि।। २६।।

यत्फलं सर्वयज्ञेषु सर्वदानेषु यत्फलम् ।।

सकृतपुराणश्रवणात्तत्फलं विन्दते नरः।। २७।।

कलौ युगे विशेषेण पुराणश्रवणादृते।।

नास्ति धर्मः परः पुंसां नास्ति मुक्तिप्रदं परम्।।२८ ।।

पुराणश्रवणं विष्णोर्नामसंकीर्तनं परम्।।

उभे एव मनुष्याणां पुण्यद्रुममहाफले।। २९।।

पिबन्नेवामृतं यत्नादेकः स्यादजरामरः।।

विण्णोः कथामृतं कुर्यात्कुलमेवाजरामरम् ।। 2.1.27.३० ।।

।। अथ पुराणवक्तुः सर्वपूजनीयत्ववर्णनम् ।। ।।

बालो युवाथ वृद्धो वा दरिद्रो दुर्भगोऽपि वा ।।

पुराणज्ञः सदा वन्द्यः स पूज्यः सुकृतात्मभिः ।। ३१ ।।

नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।।

यस्य वक्त्रोद्गता वाणी कामधेनुः शरीरिणाम् ।। ३२ ।।

भवकोटिसहस्रेषु भूत्वा भूत्वावसीदताम् ।।

यो ददात्यपुनर्वृत्तिं कोऽन्यस्तस्मात्परो गुरुः ।। ३३ ।।

व्यासासनसमारूढो यदा पौराणिको द्विजः ।।

आ समाप्तेः प्रसंगस्य नमस्कुर्यान्न कस्यचित् ।। ३४ ।।

न दुर्जनसमाकीर्णे न शूद्रश्वापदावृते ।।

देशे न द्यूतसदने वदेत्पुण्यकथां सुधीः ।। ३५ ।।

सुग्रामे सुजनाकीर्णे सुक्षेत्रे देवतालये ।।

पुण्ये वाथ नदीतीरे वदेत्पुण्यकथां सुधीः ।।३६।।

श्रद्धाभक्तिसमायुक्ता नान्यकार्येषु लालसा ।।

वाग्यताः शुचयोऽव्यग्राः श्रोतारः पुण्यभागिनः ।। ३७ ।।

अभक्त्या ये कथां पुण्यां शृण्वंति मनुजाधमाः ।।

तेषां पुण्यफलं नास्ति दुःखं जन्मनि जन्मनि ।। ३८ ।।

पुराणं ये तु संपूज्य ताम्बूलाद्यैरुपायनैः ।।
शृण्वंति च कथां भक्त्या न दरिद्रा न पापिनः ।। ३९ ।।
कथायां कथ्यमानायां ये गच्छन्त्यन्यतो नराः।।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च संपदः ।।2.1.27.४०।।
सोष्णीषमस्तका ये च कथां शृण्वंति पावनीम् ।।
ते बालकाः प्रजायन्ते पापिनो मनुजाधमाः।।४१।।
तांबूलं भक्षयन्तो ये कथां शृण्वंति पावनीम् ।।
श्वविष्ठां भक्षयन्त्येते नरके च पतंति हि।।४२।।
ये च तुंगासनारूढाः कथां शृण्वन्ति दांभिकाः ।।
अक्षय्यान्नरकान्भुक्त्वा ते भवन्त्येव वायसाः ।।४३।।
ये च वीरासनारूढा ये च सिंहासनस्थिता।।
शृण्वन्ति सत्कथां ते वै भवन्त्यर्जुनपादपाः ।।४४।।
असंप्रणम्य शृण्वन्तो विषवृक्षा भवन्ति हि ।।
तथा शयानाः शृण्वन्तो भवन्त्यजगरा हि ते ।। ४५ ।।
यः शृणोति कथां वक्तुः समानासनसंस्थितः।।
गुरुतल्पसमं पापं संप्राप्य नरकं व्रजेत् ।। ४६ ।।
ये निन्दंति पुराणज्ञं सत्कथां पापहारिणीम् ।।
ते वै जन्मशतं मर्त्याः शुनकाश्च भवंति हि ।। ४७ ।।
कथायां कीर्त्यमानायां ये वदंति दुरुत्तरम् ।।
ते गर्दभाः प्रजायन्ते कृकलासास्ततःपरम् ।। ४८ ।।
कदाचिदपि ये पुण्यां न शृण्वंति कथां नराः ।।
ते भुक्त्वा नरकान्घोरान्भवन्ति वनसूकराः ।। ४९ ।।
कथायां कीर्त्यमानायां विघ्नं कुर्वंति ये नराः ।।
कोट्यब्दं नरकान्भुक्त्वा भवंति ग्रामसूकराः ।। 2.1.27.५० ।।
ये कथामनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।।
अशृण्वन्तोऽपि ते यान्ति शाश्वतं पदमव्ययम्।। ।। ५१ ।।
ये श्रावयन्ति मनुजाः पुण्यां पौराणिकीं कथाम् ।।
कल्पकोटिशतं साग्रं तिष्ठन्ति ब्रह्मणः पदे ।। ५२ ।।

आसनार्थं प्रयच्छन्ति पुराणज्ञस्य ये नराः ।।

कम्बलाजिनवासांसि तथा मंचकमेव वा ।। ५३ ।।

स्वर्गलोकं समासाद्य भुक्त्वा भोगान्यथेप्सितान् ।।

स्थित्वा ब्रह्मादिलोकेषु पदं यांति निरामयम् ।। ५४ ।।

पुराणस्य प्रयच्छन्ति ये च सूत्रं नवं वरम् ।।

भोगिनो ज्ञानसंपन्नास्ते भवंति भवे भवे ।। ५५ ।।

ये महापातकैर्युक्ता ह्युपपातकिनश्च ये ।।

पुराणश्रवणादेव ते यांति परमं पदम् ।। ५६ ।।

वेंकटाद्रेस्तु माहात्म्यं श्रुत्वा त ऋषयस्ततः ।।

व्यासप्रसादसंपन्नं सूतं पौराणिकोत्तमम् ।।

पूजयित्वा यथान्यायं प्रहर्षमतुलं गताः ।। ५७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सर्वतीर्थमहिमोपसंहारपूर्वकपुराणश्रवणप्रक्रियाद्यनुवर्णनंनाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/h2p
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ कटाहतीर्थमाहात्म्यम् ।।

।। ऋषय ऊचुः ।। ।।

सूत सर्वार्थतत्त्वज्ञ वेदवेदान्तपारग ।।

श्रीवेंकटाचले तीर्थं कटाहाख्यं सुपावनम् ।। ।।१।।

श्रूयते तस्य माहात्म्यं घुष्यते च जगत्त्रये ।।

अस्माकमेतद्ब्रूहि त्वं कृपया व्यासशासित ।। २ ।।

पुरा वै नारदः श्रीमान्ब्रह्मपुत्रो महानृषिः ।।

दृष्ट्वा वै नैमिषारण्यं संप्राप्तो द्विजसत्तमः ।। ३ ।।

तदानीं ब्रह्मपुत्रं तमर्घ्यपाद्यादिभिः शुभैः ।।

पूजयित्वा यथान्यायं पवित्रे च कुशासने ।। ।। ४ ।।

सन्निवेश्य महाभक्त्या विनयानतकन्धराः ।।

प्रणम्य प्रार्थयामासुरिमे सर्वे महर्षयः ।। ५ ।।

त्वां विना नारद श्रीमन्नस्माकं भुवनत्रये ।।

धर्मोपदेशकः कश्चिन्नास्ति नास्ति महर्षिषु ।। ६ ।।

वेंकटाद्रौ महापुण्ये सर्वदेवनिषेविते।।

वैकुण्डादागते दिव्ये सिद्धगन्धर्वसेविते ।। ७ ।।

कटाहतीर्थमाहात्म्यं वर्णयाद्य वनौकसाम् ।। ८ ।।

।। श्रीनारद उवाच ।। ।।

शृणुध्वमृषयः सर्वे शौनकाद्या महौजसः ।।

कटाहतीर्थमाहात्म्यं को वेत्ति भुवनत्रये ।। ९ ।।

महादेवो विजानाति तस्य तीर्थस्य वैभवम् ।।

यानि कानि च पुण्यानि ब्रह्माण्डान्तर्गतानि वै ।। 2.1.28.१० ।।

तानि गंगादितीर्थानि स्वपापपरिशुद्धये ।।

कटाहतीर्थसेवां च कुर्वन्ति द्विजसत्तमाः ।। ११ ।।

ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चेतरजातयः ।।

स्पृशन्ति तज्जलमिति न पिबेद्यो विमूढधीः ।। १२ ।।

स हि चण्डालतां प्राप्य कुम्भीपाके पतिष्यति ।।

ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतीश्वरः ।। १३ ।।

सेवया तस्य तीर्थस्य प्राप्नोति परमं पदम् ।।

श्रुतिस्मृतिपुराणेषु तत्तीर्थस्य प्रशंसनम् ।। १४ ।।

बहुधा वर्ण्यते पंचमहापातकनाशनम् ।।

अत्यद्भुततरं विप्राः सर्वलोकैकपावनम् ।। १५ ।।

ब्रह्महत्यायुतं चापि सुरापानायुतं तथा ।।

अयुतं गुरुदाराणां गमनं पापकारणम् ।। १६ ।।

स्तेयायुतं सुवर्णानां तत्संसर्गाश्च कोटयः ।।

शीघ्रं विलयमायांति तस्य तीर्थस्य सेवया ।। १७ ।।

यानि निष्कृतिहीनानि पापानि विविधानि च ।।

तानि सर्वाणि नश्यंति तीर्थस्यास्य निषेवणात् ।। १८ ।।

इदं तीर्थं महापुण्यं भगवत्पादनिस्सृतम् ।।

कुष्ठादिरोगयुक्तो यः प्रत्यहं च पिबेदिदम् ।। १९ ।। ।।

।। अथ कटाहतीर्थमहिमश्रद्धाशून्यानां महानरकप्राप्तिः ।। ।।

सोऽपि रोगविहीनः सन्विष्णुलोकं च गच्छति ।।

भगवाञ्छंकरो देवो रहस्यानुभवे पुरा ।। 2.1.28.२० ।।

पार्वत्यै कथयामास तस्य तीर्थस्य वैभवम् ।।

उक्तेष्वेतेषु सन्देहो न कर्तव्यः कदाचन ।। २१ ।।

अर्थवादोऽयमिति च न वक्तव्यं कदाचन ।।

येऽर्थवादमिदं ब्रूयुस्तेषां वै नास्तिकात्मनाम् ।। २२ ।।

जिह्वाग्रे परशुं तप्तं प्रक्षिपन्ति च किंकराः ।।

तस्मात्कटाहतीर्थं तु सेवनीयं प्रयत्नतः ।।२३।।

सर्वदुःखप्रशमनमपवर्गफलप्रदम् ।।

यत्र पीत्वा नरो भक्त्या सर्वान्कामानवाप्नुयात्।।२४।।

एवमुक्त्वा महाभागः काशीं त्रैलोक्यपावनीम् ।।

संप्राप्तो नारदः श्रीमान्सूत पौराणिकोत्तम ।। २५ ।।

संक्षेपतश्च भगवान्नैमिषे ह्युक्तवान्खलु ।।

इदानीं श्रोतुमिच्छामः कटाहस्य च वैभवम् ।। २६ ।।

सुविस्तरेण चास्माकं वद सूत कृपावशात् ।। २७ ।।

।। अथ कटाहतीर्थपानक्रमः ।।

।। श्रीसूत उवाच ।। ।।

भोभोस्तपोधनाः सर्वे नैमिषारण्यवासिनः ।।

कटाहतीर्थमाहात्म्यं शृणुध्वं द्विजसत्तमाः ।। २८ ।।

कटाहतीर्थं भो विप्राः सर्व लोकेषु विश्रुतम् ।।

सर्वसम्पत्करं शुद्धं सर्वपापप्रणाशनम् ।। २९ ।।

दुःस्वप्ननाशनं ह्येतन्महापातकनाशनम् ।।

महाविघ्नप्रशमनं महाशान्तिकरं नृणाम् ।। 2.1.28.३० ।।

स्मृतिमात्रेण यत्पुंसां सर्वपापनिषूदनम् ।।

मन्त्रेणाष्टाक्षरेणैव पिबेत्तीर्थं मनोहरम् ।। ३१ ।।

अथवा केशवाद्यैश्च नामभिर्वा पिबेज्जलम् ।।

यद्वा नामत्रयेणाऽपि पिबेत्तीर्थं शुभप्रदम् ।। ३२ ।।

आहोस्विद्वेंकटेशस्य मन्त्रेणाष्टाक्षरेण वै ।।

पिबेत्कटाहतीर्थं तद्भुक्तिमुक्तिप्रदायकम् ।। ३३ ।।

विना मंत्रेण यो विप्रः संपिबेत्तीर्थमुत्तमम् ।।

पापं मे नाशय क्षिप्रं जन्मान्तरकृतं महत् ।। ३४ ।।

इत्युक्त्वा स पिबेन्नित्यं मोक्षमार्गैकसाधनम् ।।

स्वामिपुष्करिणीस्नानं वराहश्रीशदर्शनम् ।। ३५ ।।

कटाहतीर्थपानं च त्रयं त्रैलोक्यदुर्लभम् ।।

बहुना किमिहोक्तेन ब्रह्महत्यादिनाशनम् ।। ३६ ।।

।। अथ केशवाख्यद्विजवृत्तान्तः ।। ।।

पुरा कश्चिद्द्विजो मोहात्केशवाख्यो बहुश्रुतम् ।।

हत्वा खड्गेन दुर्बुद्ध्या ब्रह्महत्यामवाप्तवान् ।। ३७ ।।

सोऽपि तस्मिन्महातीर्थे पीत्वा जलमनुत्तमम् ।।

केशवाख्यो महापापी विमुक्तो ब्रह्महत्यया ।। ३८ ।।

।। ऋषय ऊचुः ।। ।।

कस्य पुत्रः केशवाख्यः कथं प्राप्तो भयंकरीम् ।।

ब्रह्महत्यामतिक्रूरामस्माकं वक्तुमर्हसि ।। ३९ ।।

।। श्रीसूत उवाच ।। ।।

तुङ्गभद्रातटे रम्ये गन्धर्वैरुपसेविते ।।

अग्रहारो महानासीद्वेदाढ्य इति नामतः ।। 2.1.28.४० ।।

तस्मिन्वेदपुरे रम्ये ब्राह्मणा वेदपारगाः ।।

शब्दशास्त्रपराः सर्वे ज्योतिःशास्त्रप्रवर्तकाः ।। ४१ ।।

मीमांसातर्कशास्त्रज्ञाः सर्वे वेदान्तवादिनः ।।

धर्मशास्त्रेषु निरता अन्नदानपराः सदा ।। ४२ ।।

पुत्रवन्तश्च ते सर्वे ह्यग्रहारे महाजनाः ।।

वेदाढयेऽप्यग्रहारे वै पद्मनाभ इति श्रुतः ।। ४३ ।।

।। अथ गणिकालंपटस्य केशवद्विजस्य ब्रह्महत्याप्राप्तिक्रमः ।। ।।

तस्य पुत्रः केशवाख्यः सर्वकर्मबहिष्कृतः ।।

मातरं पितरं त्यक्त्वा भार्यामपि पतिव्रताम् ।। ४४ ।।

सर्वदा गणिकासक्तो वेश्यागारं विवेश ह ।।

दिनद्वये च तां वेश्यामनुभूय द्विजस्ततः ।। ४५ ।।

निष्कद्वयं प्रदातव्यं हस्ते दत्त्वा गतः सुखम् ।।

वेश्यया चाधनस्त्यक्तस्तत्संयोगैकतत्परः ।। ४६ ।।

इतस्ततश्चोरयित्वा बहुद्रव्याणि सन्ततम् ।।

दत्त्वा तया चिरं रेमे तद्गृहे बुभुजे च सः ।। ४७ ।।

एकेन चषकेणासौ तया सह सुरां पपौ ।।

स कदाचित्किरातैस्तु द्रव्यं हर्तुं ययौ द्विजः ।।।। ४८ ।।

विप्रस्य कस्यचिद्गेहे सोऽपि कैरातवेषधृक् ।।

केशवो विप्रबन्धुर्वै साहसी खड्गहस्तवान् ।। ४९ ।।

तद्गृहस्वामिनं विप्रं हत्वा खड्गेन साहसात् ।।

समादाय बहु द्रव्यं वेश्यागारं विवेश ह ।। 2.1.28.५० ।।

तं यान्तमनुयाति स्म ब्रह्महत्या भयंकरी ।।

नीलवस्त्रधरा भीमा भृशं रक्तशिरोरुहा ।।।। ५१ ।।

गर्जन्ती साट्टहासं सा कम्पयन्ती च रोदसी ।।

अनुद्रुतस्तया विप्रो बभ्राम जगतीतले ।। ५२ ।।

एवं भ्रमन्धरां सर्वां विप्रबन्धुर्दुरात्मवान् ।।

स्वग्रामं प्रययौ भीत्या शौनकाद्या महौजसः ।। ५३ ।।

अनुद्रुतस्तया भीतः प्रययौ स्वनिकेतनम्।।

ब्रह्महत्याप्यनुद्रुत्य तेन साकं गृहं ययौ ।।५४।।

जनकं रक्ष रक्षेति केशवः शरणं ययौ ।।

मा भैषीरिति स प्रोच्य पिता रक्षितुमुद्यतः ।। ५५ ।।

।। अथ स्वसुतरक्षणोद्युक्ते पद्मनाभे ब्रह्महत्योक्तिः ।।

क्रूरैनं ब्रह्महत्या सा जनकं प्रत्यभाषत ।। ५६ ।।

।। ब्रह्महत्योवाच ।। ।।

मैनं त्वं प्रतिगृह्णीष्व पद्मनाभ द्विजोत्तम ।।

अयं सुरापी स्तेयी च ब्रह्महा चातिपातकी ।। ५७ ।।

मातृद्रोही पितृद्रोही भार्यात्यागी च दुष्टधीः ।।

गणिकासक्तचित्तश्च ह्येनं मुञ्च दुरात्मकम् ।। ५८ ।।

गृह्णासि चेत्सुतं विप्र महापातकिनं वृथा ।।

त्वद्भार्यामस्य भार्यां च त्वां च पुत्रमिमं द्विज ।। ५९ ।।

भक्षयिष्यामि वंशं च तस्मान्मुञ्च दुरात्मकम् ।।

इमं त्यजसि चेत्पुत्रं युष्मान्मुञ्चामि सांप्रतम् ।। 2.1.28.६० ।।

नैकस्यार्थे कुलं हन्तुमर्हसि त्वं महामते ।।

इत्युक्तः स तया तत्र पद्मनाभोऽब्रवीच्च ताम् ।। ६१ ।। ।।

।। पद्मनाभ उवाच ।। ।।

बाधते मां सुतस्नेहः कथं पुत्रं परित्यजे ।।

ब्रह्महत्या तदाकर्ण्य पद्मनाभं तमब्रवीत् ।। ६२ ।।

।। ब्रह्महत्योवाच ।। ।।

पुत्रोऽयं पतितोऽभूत्ते वर्णाश्रमबहिष्कृतः ।।

पुत्रेस्मिन्मा कुरु स्नेहं निंदितं तस्य दर्शनम् ।। ६३ ।।

इत्युक्त्वा ब्रह्महत्या सा पद्मनाभस्य पश्यतः ।।

हस्तेन प्रजहारास्य सुतं केशवनामकम् ।। ६४ ।।

रुरोद तातताततेति जनकं प्रब्रुवन्मुहुः ।।

रुरुदुर्जनको माता भार्या तस्य दुरात्मनः ।। ६५ ।।

।। अथ पद्मनाभं प्रति भरद्वाजकथितो ब्रह्महत्याविमुक्त्युपायः ।। ।।

तस्मिन्काले महाभागो भरद्वाजो महामुनिः ।।

दिष्ट्या समाययौ योगी शौनकाद्या महौजसः ।। ६६ ।।

पद्मनाभोऽथ तं दृष्ट्वा भरद्वाजं महामुनिम् ।।

स्तुत्वा प्रणम्य शरणं ययाचे पुत्रकारणात् ।। ६७ ।।

भरद्वाज महाभाग साक्षाद्विष्ण्वंशको भवान् ।।

त्वद्दर्शनमपुण्यानां भविता न कदाचन ।। ६८ ।।

ब्रह्महा च सुरापी च स्तेयी चाभूत्सुतो मम ।।

पुत्रं प्रहर्तुमा याता ब्रह्महत्या भयंकरी ।। ६९ ।।

भूयाद्यथा मे पुत्रोयं महापातकमोचितः ।।

घोरेयं ब्रह्महत्या च यथा शीघ्रं लयं व्रजेत् ।। 2.1.28.७० ।।

तमुपायं वदस्वाद्य मम पुत्रे दयां कुरु ।।

एक एव हि पुत्रो मे नान्योऽस्ति तनयो मुने ।। ७१ ।।

सुते मृते तु वंशो मे समुच्छिद्येत मूलतः ।।

ततः पितृभ्यः पिण्डानां दाताऽपि न भवेद्ध्रुवम् ।। ७२ ।।

ततः कृपां कुरुष्व त्वमस्मासु भगवन्मुने ।।

इत्युक्तः स भरद्वाजः साक्षान्नारायणांशकः ।। ७३ ।।

ध्यात्वा तु सुचिरं कालं पद्मनाभं वचोऽब्रवीत् ।। ७४ ।।

।। भरद्वाज उवाच ।। ।।

पद्मनाभ कृतं पापमतिक्रूरं सुतेन ते ।।

नास्य पापस्य शान्तिः स्यात्प्रायश्चित्तायुतैरपि ।। ७५ ।।

तथाऽपि ते सुतस्याहमस्य पापस्य शान्तये ।।

प्रायश्चित्तं वदिष्यामि पद्मनाभ शृणु द्विज ।। ७६ ।।

गङ्गाया दक्षिणे भागे द्विशतीयोजने द्विज ।।
पूर्वाम्भोधेः पश्चिमे तु पञ्चभिर्योजनैर्मिते ।। ७७ ।।
सुवर्णमुखरीतीरे चोत्तरे क्रोशमात्रके ।।
वेंकटाद्रिति ख्यातः सर्वलोकनमस्कृतः ।। ७८ ।।
मेरुपुत्रो महापुण्यः सर्वदेवाभिवन्दितः ।।
वैकुण्ठलोकादानीतो विष्णोः क्रीडाचलो महान् ।। ७९ ।।
गरुत्मता वेगवता स्वर्णमुख्यास्तटे शुभे ।।
वर्तते देवसंघैश्च ऋषिसंघैश्च पूजितः ।। 2.1.28.८० ।।
तस्मिन्वेंकटशैलेन्द्रे साक्षान्नारायणः स्वयम् ।।
लक्ष्मीदेव्या च भूदेव्या नीलादेव्या समागतः ।। ८१ ।।
वर्तते वेंकटेशः स साक्षान्मोक्षप्रदायकः ।।
तस्य वेंकटनाथस्य ह्यालयस्य तथोत्तरे ।। ८२ ।।
कटाहतीर्थं विप्रेन्द्र वर्तते मङ्गलप्रदम् ।।
ब्रह्महत्यादिपापघ्नं वाञ्छितार्थप्रदायकम् ।। ८३ ।।
सुतेन साकं विप्रेंद्र पिब तीर्थं मनोहरम् ।।
भरद्वाजस्य वाक्यं तच्छ्रुत्वा वै वेदसंमितम् ।। ८४ ।।
शिरसा तं प्रणम्याथ ययौ वेंकटपर्वतम् ।। ।। ८५ ।।
।। अथ भरद्वाजोक्त्या कटाहतीर्थपानेन केशवस्य ब्रह्महत्याविमुक्तिः ।। ।।
तं गत्वा वेंकटं शैलं स्वामिपुष्करिणीजले ।।
सुतेन साकं विप्रेंद्रः सस्नौ नियमपूर्वकम् ।। ८६ ।।
वराहस्वामिनं नत्वा श्रीनिवासालयं गतः ।।
प्रदक्षिणं ततः कृत्वा विमानं संप्रणम्य च ।। ८७ ।।
पद्मनाभोऽथ पुत्रेण केशवेन दुरात्मना ।।
पपौ कटाहतीर्थं तद्ब्रह्महत्याविनाशकम् ।। ८८ ।।
तदानीं ब्रह्महत्या सा शीघ्रमेव लयं गता ।।
अनन्तरं ततो गत्वा वेंकटेशं कृपानिधिम् ।। ८९ ।।
पुत्रेण सह विप्रेन्द्रः पद्मनाभो ददर्श सः ।।
तदा प्रादुरभूद्देवो वेङ्कटेशो दयानिधिः ।। 2.1.28.९० ।।

कटाहतीर्थपानेन तोषितो वाक्यमब्रवीत् ।। ९१ ।।

।। अथ ब्रह्महत्याविमुक्तसुतेन सहितं पद्मनाभं प्रति भगवदुक्तिः ।।

।। श्रीभगवानुवाच ।। ।।

पद्मनाभ महाबुद्धे वेदवेदान्तपारग ।।

भरद्वाजस्य वाक्येन प्राप्य वेंकटपर्वतम् ।। ९२ ।।

कटाहतीर्थं त्वं पीत्वा कृतार्थोऽसि न संशयः ।।

तव पुत्रः केशवाख्यो विमुक्तो ब्रह्महत्यया ।। ९३ ।।

तस्मात्कटाहतीर्थं तु सेवनीयं प्रयत्नतः ।।

तस्मिंस्तीर्थे महाभाग पीत्वा जलमनुत्तमम् ।। ९४ ।।

पापिनोऽपि कृतार्थाः स्युः सत्यं सत्यं न संशयः ।।

मामकं लोकमागत्य सुखी भव महामते ।। ९५ ।।

इत्युक्त्वा वेंकटेशोऽसावन्तर्धानं गतस्ततः ।। ९६ ।।

।। श्रीसूत उवाच ।। ।।

तस्मात्तपोधनाः सर्वे शौनकाद्या महौजसः ।।

कटाहतीर्थमाहात्म्यमितिहाससमन्वितम् ।। ९७ ।।

यथाश्रुतं मया सम्यक्तथोक्तं भवतां द्विजाः ।। ९८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सूतशौनक संवादे कटाहतीर्थप्रशंसनंनामाष्टाविंशोऽध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः २९

https://sa.wikisource.org/s/h2q
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। ऋषय ऊचुः ।। ।।

तीर्थानामिह सर्वेषां प्रभावः कथितस्त्वया ।।

नदीनां पर्वतानां च क्षेत्राणां सरसामपि ।। १ ।।

निदेशात्पद्मगर्भस्य सुवर्णमुखरी नदी ।।

नीता भुवमगस्त्येन व्याख्याता भवतानघ ।। २ ।।

तदुत्पत्तिप्रभावं च तीर्थौघांस्तत्समाश्रयान् ।।

श्रोतुं संप्रीतिरुत्पन्ना तन्नो वक्तुं त्वमर्हसि ।। ३ ।।

प्रणम्य शम्भुं नन्दीशं षडास्यं व्यासमेव च ।।

मुनिभिः प्रार्थितः सूतस्तदा वक्तुं प्रचक्रमे ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

साधु पृष्टं महाभाग भवद्भिर्मंगलावहम् ।।

आख्यानमेतदाम्नाय श्रवणोद्भूतसिद्धिदम् ।। ५ ।।

शृणुतावहिता दिव्यां कथां कल्मषनाशिनीम् ।।

भरद्वाजेन कथितां पार्थाय कथयामि वः ।। ६ ।।

अवाप्य द्रुपदात्प्राज्ञाद्याज्ञसेनीं पृथासुताः ।।

धृतराष्ट्रनिदेशेन जग्मुः करिपुरं शुभम् ।। ७ ।।

भीष्मेण चांबिकेयेन तत्र संमानितास्तदा ।।

दुर्योधनादिभिः सार्द्धं न्यवसन्पञ्चवत्सरान् ।। ८ ।।

ततोऽनुशिष्टो भीष्माद्यैर्धृतराष्ट्रो महायशाः ।।

सर्वेषां कुलवृद्धानां वासुदेवस्य चाग्रतः ।। ९ ।।

प्रददौ पांडुपुत्रेभ्यस्तत्सेवाहृष्टमानसः ।।

सार्धराज्यं पुरवरं खाण्डवप्रस्थसंज्ञिकम् ।। 2.1.29.१० ।।

आमंत्र्य पाण्डुतनया धृतराष्ट्रादिकान्कुरून् ।।

जग्मुस्तत्खाण्डवप्रस्थं पुरं कृष्णसमन्विताः ।। ११ ।।

इन्द्रप्रस्थाह्वये तत्र रक्षिते विश्वकर्मणा ।।
वसन्पुरेऽशिषत्पृथ्वीं सानुजो धर्मनंदनः ।।१२।।
गते कृष्णे निजपुरं नारदस्यानुशासनात्।।
प्रतिज्ञां चक्रिरे पार्था धर्मज्ञा द्रौपदीं प्रति ।। १३ ।।
।। अथार्जुनतीर्थयात्रोपोद्घातः ।। ।।
यथाक्रमेण सा कृष्णा वर्षमेकैकमादरात् ।।
एकैकस्य गृहे तिष्ठेत्प्रतिनिर्णयपूर्वकम् ।। १४ ।।
यः पश्येत्तां परगृहे स्थितां पांचालनंदिनीम् ।।
तेनैकहायनमितं विधेयं तीर्थसेवनम् ।। १५ ।।
एवं कृतप्रतिज्ञास्ते पाण्डुभूपालनंदनाः ।।
व्यापारैर्लोकसामान्यैर्निन्युः कालमतंद्रिताः ।। १६ ।।
अथ जानपदो विप्रो राजगेहांगणे स्थितः ।।
चुक्रोश बहुधा धेनुर्हृता मे तस्करैरिति ।। १७ ।।
समाश्वास्य च तं विप्रं प्रविवेश धनंजयः ।।
आयुधानि समानेतुं त्वरया शस्त्रमंदिरम् ।। १८ ।।
तत्रापश्यत्समासीनौ पांचालीधर्मनन्दनौ ।।
जानन्नपि प्रतिज्ञां स धनुर्जग्राह सेषुधि ।। १९ ।।
स गत्वा तस्करानाजौ निहत्य नृपनन्दनः ।।
निवर्त्य धेनुं तां तस्मै ददौ विप्राय सादरम् ।। 2.1.29.२० ।।
अथ विज्ञापयामास फाल्गुनो धर्मनन्दनम् ।।
तीर्थयात्रा मया कार्या समयोल्लंघनादिति ।। २१ ।।
अनुजस्य वचः श्रुत्वा सर्वधर्मविदां वरः ।।
उवाच वचनं धीरः सादरं धर्मनंदनः ।। २२ ।।
।। युधिष्ठिर उवाच ।। ।।
गवार्थं ब्राह्मणार्थं च यद्वदेदनृतं वचः ।।
यदाचरेदसत्कर्म तत्सत्यं तत्समंजसम् ।। २३ ।।
ब्राह्मणार्थं गवार्थं च त्वया कर्मेदृशं कृतम् ।।
तदसद्भावमाप्नोति कथं कथय सुव्रत ।। २४ ।।

प्रजापालनकृत्यस्य चोरोपेक्षणशिक्षणैः ।।
नूनं फलं भवेद्राज्ञो ब्रह्महत्याश्वमेधजम् ।। २५ ।।
असाध्यान्वैरिणो ज्ञात्वाऽप्यवनीशो न भद्रभाक् ।।
स्वदेशोपप्लवकरास्तस्करा यद्यशिक्षिताः ।। २६ ।।
अस्माकं भूभुजां लोकजालस्य च हितं हि यत् ।।
त्वयेदृशं कृतं कर्म नास्ति दोषो ह्यतस्तव ।। २७ ।।
।। श्रीसूत उवाच ।। ।।
धर्मपुत्रस्य वचनमाकर्ण्य रचितांजलिः ।।
पुनर्विज्ञापयामास धर्मनित्यो धनंजयः ।।।। २८ ।।
।। अर्जुन उवाच ।। ।।
मैवं भूपाल वादीस्त्वं स्वप्रतिज्ञातिलंघनम् ।।
जानता धर्मसर्वस्वमुल्लसद्धर्ममूर्तिना ।। २९ ।।
कृत्याकृत्यविदा दक्षेणात्मना प्राक्समीरिता ।।
नोल्लंघनीया सततं प्रतिज्ञा पुरुषेण हि ।। 2.1.29.३० ।।
अशक्तानां गतिः सेयं यद्बंधुगुरुवाक्यतः ।।
धर्मं त्यजंति समयं त्यक्ताः प्राक्स्वं समीरितम् ।। ३१ ।।
कृपया तीर्थगमनादार्यो यदि निवर्तयेत् ।।
हतप्रतिज्ञं मां लोकाञ्जल्पतः को निवारयेत् ।। ३२ ।।
ममापि तीर्थयात्रायां कौतुकोत्तरलं मनः ।।
कर्तव्यं च स्मृतं राजन्नारदादिष्टशासनम् ।। ३३ ।।
तत्प्रसीद महाराज यत्तीर्थगमनोद्यमे ।।
संमाननीयः प्रभुभिः समयो ह्यनुजीविनाम् ।। ३४ ।।
तथेति भ्रातृभिः सार्द्धं कृतानुमतिरर्जुनः ।।
अग्रजं तोषयामास प्रणामप्रश्रयादिभिः ।। ३५ ।।
यथार्हं भीमसेनादीन्भ्रातॄनामन्त्र्य पाण्डवः ।।
कृतस्वस्त्ययनो भव्यैर्निर्ययौ धरणीसुरैः ।। ३६ ।।
पौराणिका ज्यौतिषिका भिषजो धरणीसुराः ।।
अनुजग्मुर्भृत्यगणाः शिल्पिनः सूतमागधाः ।। ३७ ।।

युधिष्ठिराज्ञया तस्य भोगत्यागक्षमं धनम् ।।

गृहीत्वानुययुः स्निग्धाः सभ्याः कोशाधिकारिणः ।। ३८ ।।

।। अथ अर्जुनस्य गंगादितीर्थावगाहनपूर्वक सुवर्णमुखर्यागमनम् ।। ।।

स राजपुत्रः प्रथमं प्राप्य भागीरथीं नदीम् ।।

गंगाद्वारं प्रयागं च सिषेवे काशिकामपि ।। ३९ ।।

पश्यंस्तीर्थानि जाह्नव्यास्तत्तीरोपान्तवर्त्मना ।।

आससाद समुत्तुङ्गकल्लोलं दक्षिणोदधिम् ।। 2.1.29.४० ।।

महानदीं महापुण्यां प्रसिद्धं पुरुषोत्तमम् ।।

सिंहाचलं च संवीक्ष्य प्राप्तवान्कृतकृत्यताम् ।। ४१ ।।

ततो ददर्श कौन्तेयः पुण्यां गोदावरीं नदीम् ।।

समस्तदुरितव्रातशातनोत्तीर्णगौरवाम् ।। ४२ ।।

कृताभिषेकस्तत्तोयैर्विधिवत्पाण्डुनन्दनः ।।

प्रमोदं विविधैर्दानैरकरोद्भूसुवर्णकैः ।। ४३ ।।

नदीं मलापहाख्यां च दृष्ट्वा मोदं ययौ शुभम् ।।

ततः समाससादासौ कृष्णवेणीं सरिद्वराम् ।। ४४ ।।

शिवस्य नियतावासं चतुर्द्वारसमन्वितम् ।।

नानातीर्थगणाकीर्णं श्रीपर्वतमवैक्षत ।। ४५ ।।

नदीं पिनाकिनीं तीर्त्वा गत्वा देवर्षिसेवितम् ।।

नारायणप्रियावासमपश्यद्वेंकटाचलम् ।। ४६ ।।

शृङ्गेऽस्य भूभृतस्तुंगे स्थितं लोकैकनायकम् ।।

अपूजयद्धरिं भक्त्या प्रसिद्धं शुभसिद्धये ।। ४७ ।।

अवरुह्य वेंकटमहाद्रिशृङ्गतः स ददर्श सिद्धमुनिसंघसेविताम् ।।

कलशोद्भवेन मुनिना समाहृतां तटिनीं सुवर्णमुखरीसमाह्वयाम् ।। ४८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्ये अर्जुनतीर्थयात्रागमनवर्णनंनामैकोनत्रिंशोऽध्यायः ।। २९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३०



।। अथ सुवर्णमुखरीवर्णनम् ।।

।। सूत उवाच ।। ।।

तथा सर्वाणि तीर्थानि समालोक्यागतस्य च ।।

मुदं प्रगुणयाञ्चके सा पार्थस्य महापगा ।। १ ।।

यस्यास्तटनिकुञ्जेषु मोदन्ते वनिताः सुखाः ।।

सिद्धाः संसेविता वातैः शीकरासारशीतलैः ।।।। २ ।।

या समुद्यतहस्तेव गङ्गामाकाशवाहिनीम् ।।

आलिंगितुं समुत्तुंगैः कल्लोलैरभ्रसंगिभिः ।। ३ ।।

धूमैराहुतिसंभूतैस्तरुशाखोपलंभिभिः ।।

वल्कलैश्च विराजन्ते यत्तटाश्रमभूमयः ।। ४ ।।

मुनीन्द्रैः सुरवर्यैश्च स्थापितानि समन्ततः ।।

यत्तटद्वितये भांति दिव्यलिंगानि शूलिनः ।। ५ ।।

यदीयसैकतावासविश्रान्ता मानसं सरः ।।

न स्मरंति निजावासं मराला विहगोत्तमाः ।। ६ ।।

शमितावग्रहातंकैः कुल्यामुखविनिर्गतैः ।।

पुष्णाति तोयैः सस्यानि लोकरक्षाक्षमाणि या ।। ७ ।।

चक्रवाककुचोत्तुंगवीचिवल्लीविभूषिता ।।

आवर्तनाभिविलसत्सैकतश्रोणि मण्डला ।। ८ ।।

प्रफुल्लपद्मवदना चलन्मीनयुगेक्षणा ।।

विलसत्फेनवसना हंसयानमनोहरा ।। ९ ।।

जलपक्षिरवालापा नयनानन्दकारिणी ।।

अपूर्वकामिनीरूपा या विभात्यम्बुधिप्रिया ।। 2.1.30.१० ।।

रोधस्यन्तरवाहिन्या नद्याः प्राच्यां धनञ्जयः ।।

ददर्श शैलमुत्तुंगं कालहस्तिसमाहयम् ।।११।।

उदग्रशिखराभोगोल्लिखिताकाशमण्डलम् ।।

सप्तपातालमूलाधोरूढमूलोपलांचितम् ।। १२ ।।

।। अथ अर्जुनस्य स्वर्णमुखरीतीरस्थकालहस्तीश्वरादिसेवाप्राप्तिः ।। ।।

स्नात्वा तस्यां महानद्यां तस्मिञ्छैले सुरार्चितम् ।।

अपश्यदर्जुनो देवं कालहस्तीशनामकम् ।। १३ ।।

संपूज्य च महादेवं नगेन्द्रतनयासखम् ।।

मनसा भक्तियुक्तेन कृतार्थत्वमुपेयिवान् ।। १४ ।।

ततो महागिरौ तस्मिन्नद्भुतैकनिकेतने ।।

चचाराभूतपूर्वाणां विशेषाणां दिदृक्षया ।। १५ ।।

सिद्धानालोकयामास वसतो गिरिसानुषु ।।

गायतो देवदेवस्य चरित्राण्यबलायुतान् ।। १६ ।।

अप्सरोललनाजुष्टान्पुष्पासवमदाकुलान् ।।

निकुञ्जेषु समासीनान्गंधर्वानैक्षतादरात् ।। १७ ।।

विविक्तेषु प्रदेशेषु शिवध्यानपरायणान् ।।

अपश्यद्योगिनो दिव्यानादरानन्दशालिनः ।। १८ ।।

प्रशान्तान्याश्रमपदान्यवैक्षत समंततः ।।

बलिनीवारविलसद्द्वारभूमीश्च पाण्डवः ।। १९ ।।

निराहारान्वायुभुजः पर्णादानातपाशनान् ।।

शान्तानालोकयामास मुनीन्नियमितेन्द्रियान् ।। 2.1.30.२० ।।

मुदं वितेनिरे तस्य नेत्रयोः कमलाकराः।।

फुल्लसौगन्धिकामोदसंवासितदिगन्तराः ।। २१ ।।

मृगयासंभृतधियश्चरतोऽधिज्यकार्मुकान् ।। २२ ।।

।। अथाऽर्जुनस्य सुवर्णमुखरीतीरस्थभरद्वाजाश्रमगमनम् ।। ।।

ददर्शान्वेषितमृगान्किरातान्वनितायुतान् ।।

ततो दक्षिणदिग्भागे चरन्नद्रेर्मनोहरे ।। २३ ।।

पुण्यमाश्रममद्राक्षीद्भरद्वाजस्य कौरवः ।।

कदलीनारिकेलाम्रकोलचंपकचंदनैः ।। २४ ।।

तक्कोलाशोकहिन्तालतालकेतकिदाडिमैः ।।

जंबूकदम्वकतकखदिरार्जुनपाटलैः ।।।। २५ ।।

नागपुन्नागसरलदेवदारुकरञ्जकैः ।।

लवंगलुंगलवलीप्रियंगुतिलकैरपि ।। २६ ।।

बिभीतश्रीफलाश्वत्थमधूकप्लक्षकेसरैः ।।

पूगजम्बीरनारंगनिम्बामलककौशिकैः ।। २७ ।।

अन्यैश्च फलपुष्पाढ्यैः शोभितं धरणीरुहैः ।।

वासन्तीकुन्दजात्यादिलताभिः परिवेष्टितम् ।। २८ ।।

अपूर्वसौरभाकृष्टभ्रमरीभिः समन्ततः ।।

चक्रवाकबकक्रौञ्चहंसकारण्डवाश्रयैः ।। २९ ।।

सौगन्धिकोत्पलांभोजकैरवौघविराजितैः ।।

सरोभिरमृतस्यंदिमधुरस्फारवारिभिः ।। 2.1.30.३० ।।

समापादितलक्ष्मीकं कौतुकैकनिकेतनम् ।।

सिंहदन्तावलव्याघ्रतरक्षुरुरुरङ्कुभिः ।। ३१ ।।

मृगैरन्यैः समाकीर्णमन्योऽन्यहितकारिभिः ।।

जितचैत्ररथोद्यानमधरीकृतनन्दनम् ।। ३२ ।।

अतिवाङ्मनसोदारं परमानन्दकारणम् ।।

शिवागमानां दिव्यानामर्थजातमनुत्तमम् ।। ३३ ।।

प्रकाशयन्ति शावानां यत्र मञ्जुगिरः शुकाः ।।

यस्मिन्हुताशनो दारधूमश्यामलितं नभः ।। ३४ ।।

अकालजलदभ्रांतिमातनोति शिखण्डिनाम् ।।

यस्मिन्विहारश्रान्तानां सिंहानां स्वेच्छयागताः ।। ३५ ।।

निर्वापयन्ति गात्राणि करिणः करशीकरैः ।।

तदाश्रमपदं पश्यन्विस्मयाक्रांतमानसः ।। ३६ ।।

प्रभावं पाण्डुतनयः प्रशशंस तपस्विनाम् ।।

निवार्य तत्र तत्रैव सकलाननुजीविनः ।। ३७ ।।

।। अथार्जुनकृतभरद्वाजसेवाक्रमः ।। ।।

मित्रैर्विप्रवरैः सार्धं प्रविवेश तमाश्रमम् ।।

अग्रे ददर्श कौन्तेयः स्फुरत्पावकतेजसम् ।। ३८ ।।

भरद्वाजं मुनिवरैरनेकैः परिवारितम् ।।

भस्मानुलिप्तसर्वांगं मृगचर्मोत्तरीयकम् ।। ३९ ।।

नववारिदसंवीतं कैलासमिव भास्वरम् ।।

जटाभिर्लम्बमानाभिर्भास्वन्तं स्वर्णकांतिभिः ।। 2.1.30.४० ।।

स्थिरविद्युल्लताकीर्णमिव शारदनीरदम् ।।

श्रुतिस्मृति पुराणार्थैरेकीभूय समागतैः ।। ४१ ।।

अङ्गीकृतमिवाकारं दिव्यज्ञानशुभास्पदम् ।।

धृतिक्षांतिदयातुष्टिशांतिभिर्नित्यसेवितम् ।। ४२ ।।

प्रियाभिरिव रक्ताभिरखंडब्रह्मवर्चसम् ।।

उपगम्य शनैः पार्थस्तत्पादांबुजयोः पुरः ।। ४३ ।।

चक्रे प्रणामं साष्टांगं समालिंगितभूतलम् ।। ४४ ।।

।। अथार्जुनं प्रति भरद्वाजकृतातिथ्यप्रकारः।।

तमागतं पृथापुत्रमुत्थाप्य मुनिपुङ्गवः।।

आशीर्भिरेधयाञ्चक्रे प्रहर्षोत्फुल्लमानसः।। ४५।।

संपूज्य च यथान्यायं तमर्घ्याद्यैः प्रियातिथिम्।।

विनिर्दिष्टासनासीनं समपृच्छदनामयम्।।४६।।

संमाननमवाप्यास्मान्मुनेः पाण्डवमध्यमः।।

प्रियैर्वाक्यैर्मुनिपतेरकरोन्मनसो मुदम् ।। ४७ ।।

सस्माराथ भरद्वाजः स्वर्धेनुं कामदोहिनीम् ।।

सा वितेनेऽतिमहतीं भक्ष्यभोज्यादिकल्पनाम् ।। ४८ ।।

भुक्त्वा पार्थः सानुचरस्तमुपास्य तपोनिधिम् ।।

दिनशेषं कथालापकौतुकेनात्यवाहयत् ।। ४९ ।।

ततः सायन्तनीं संध्यामुपास्य हुतपावकः ।।

विप्रैरमात्यैः सहितो ययौ तस्य कुटीगृहान् ।। 2.1.30.५० ।।

तत्रासीनो मुनिपतेराशीर्भिरभिनन्दितः ।।

आनन्ध्यमानो मुमुदे तन्नदीशीतलानिलैः ।। ५१ ।।

संप्रापिता केन भुवः प्रभूता कस्मान्महीध्रादधिकप्रभावा ।।

इति प्रभावं परिपृच्छ्य नद्याः श्रोतुं मुनीन्द्रान्मतिरस्य जज्ञे ।। ५२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्यप्रशंसायां भरद्वाजाश्रमवर्णनंनाम त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३१

https://sa.wikisource.org/s/h2s
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ सुवर्णमुखरीप्रभावशुश्रूषया भरद्वाजं प्रत्यर्जुनप्रश्नः ।।

।। श्रीसूत उवाच ।। ।।

कृतसायन्तनविधिं हुताशनसमद्युतिम् ।।

सुखासीनं मुनिपतिं प्रणम्य भरतर्षभः ।। १ ।।

तदीयशीतलामोदसुधापूरानुमोदितः ।।

गम्भीरं प्रश्रयोपेतमिदं वचनमब्रवीत् ।। २ ।। ।।

।। अर्जुन उवाच ।। ।।

मुनिपुंगव लोकेऽस्मिन्धन्य एकोऽहमेव हि ।।

पुत्राविशेषं भवता यदेवं सम्यगादृतः ।। ३ ।।

भवदादरसञ्जातकौतुकं मम मानसम् ।।

भवद्वाक्यामृतं दिव्यं पातुं त्वरयतीव माम् ।।४।।

कस्माच्छैलादियं जाता केनानीता महानदी ।।

किं पुण्यं स्नानदानाद्यैः कृतैस्तत्रोपलभ्यते ।।५।।

अस्याः प्रभावं प्रभवं प्रह्वस्य मम सन्मुने ।।

वक्तुमर्हसि कार्यो हि भक्तानुग्रह एव ते ।।६।।

अर्जुनस्य वचः श्रुत्वा भरद्वाजो द्विजोत्तमः ।।

तदाननं समालोक्य वाक्यं वाक्यविदब्रवीत् ।। ७ ।।

।। भरद्वाज उवाच ।। ।।

त्वमर्जुन महाबाहो कौरवान्वयपावनः ।।

विशेषान्मम मान्योऽसि धर्मपुत्रानुजो यतः ।। ८ ।।

अनेके भूमिपा दृष्टा न ते त्वमिव फाल्गुन ।।

लीलार्जवदयौदार्यधैर्यगाम्भीर्यशालिनः ।। ९ ।।

कुलं विद्या धनं चैव बलिनां मदकारणम् ।।

भवादृशानां भव्यानां तानि प्रश्रयकारणम् ।। 2.1.31.१० ।।

प्राज्येषु राज्यभोगेषु विद्यमानेषु कौरव ।।
ऋते भवन्तं को वान्यो नोपैति विकृतेर्वशम् ।। ११ ।।
परवानस्मि कौन्तेय गुणैलाकोत्तरैस्तव ।।
किमस्त्यकथनीयं ते कौतुकोपेतमानस ।। १२ ।।
शृणु राजन्कथां दिव्यां मया मुनिमुखाच्छ्रुताम् ।।
यां श्रुत्वा पातकातङ्कान्मुच्यन्ते सर्वजन्तवः ।। १३ ।।
।। अथ भरद्वाजकथित शंकरविवाहप्रक्रिया ।। ।।
पूर्वं दाक्षायणी देवी जनकेनावमानिता ।।
त्यक्त्वा तनुं तां नीहारगिरेरभवदात्मजा ।। १४ ।।
सप्तर्षिभिरुपागम्य प्रार्थितो धरणीधरः ।।
मृत्युंजयाय स्वां पुत्रीं विवाहे दातुमुद्यतः ।। १५ ।।
वृषभांको जगत्स्वामी विवोढुं सर्वमंगलाम् ।।
प्राप्तो हिमवदावासमोषधीप्रस्थनामकम् ।। १६ ।।
तच्छासनात्समाजग्मुः स्थावराणि चराणि च ।।
भूतानि भूतनाथस्य कल्याणमभिनंदितुम् ।। १७ ।।
तद्भूरिभारसंभग्ना भूमिरुत्तरसंश्रया ।।
निम्नतामाययौ तावद्यावत्पातालमास्थिता ।।१८।।
निर्भारलाघवादस्माद्भृशं दक्षिणगामिनी ।
ऊर्ध्वं गता च तं दृष्ट्वा सर्वेषामभवद्भयम् ।।१९।।
ज्ञात्वा तां विकृतिं भूमेर्दृष्ट्वागस्त्यंमहेश्वरः ।।
इत एहि महाप्राज्ञेत्युक्त्वा वचनमब्रवीत् ।। 2.1.31.२० ।।
आगतेषु समस्तेषु भूतेष्वत्र वसुन्धरा ।।
तद्भारेण समाक्रान्ता विकृतिं समुपागता ।। २१ ।।
तद्भुवः साम्यकरणे त्वमर्हसि महामते ।।
ऋते त्वामत्र हि त्वत्तः परेणैतत्कथं भवेत् ।। २२ ।।
मत्तेजःसंभवो हि त्वं लोकसंरक्षणोद्यतः ।।
तस्मान्मद्वचनाद्वत्स भुवमेतां समीकुरु ।। २३ ।।
मत्पाणिग्रहणाल्लोककौतुकायत्तबुद्धिषु ।।

आगतेषु समस्तेषु स्थातव्यं भवताऽपि च ।। २४ ।।

त्वं न तिष्ठसि चेदत्र न कश्चिद्विकृतिं भुवः ।।

अपनेतुं हि शक्नोति तद्गन्तव्यं त्वयानघ ।। २५ ।।

इमां गिरिसुतापाणिग्रहकल्याणभासुराम् ।।

मूर्तिं प्रदर्शयिष्यामि यत्र तिष्ठसि तत्र ते ।। २६ ।।

।। अथ भूसाम्यकरणायागस्त्यस्य हिमाद्रेर्दक्षिणदिग्गमनम् ।। ।।

इत्युक्त्वा तं परिष्वज्य विससर्ज महेश्वरः ।।

तथेति प्रणम्यासौ ययौ याम्यां दिशं मुनिः ।। २७ ।।

विन्ध्याद्रिं समतिक्रम्य दक्षिणामागते दिशम् ।।

अगस्त्ये मुनिशार्दूले मही साम्यमुपाययौ ।। २८ ।।

भुवोऽपनीय विकृतिं स्थितं कलशजं मुनिम् ।।

तुष्टुवुर्हर्षतरलाः सुरगन्धर्वकिन्नराः ।। २९ ।।

स ददर्श ततो गत्वा कश्चिच्छैलं समुन्नतम् ।।

विततैर्धरणीं पादैर्धृत्वा संस्थितमग्रतः ।। 2.1.31.३० ।।

महौषधीनां रत्नानामशेषाणां स्वयंभुवा ।।

अखण्डतेजोदीप्तानां विनिर्मितमिवाकरम् ।। ३१ ।।

समुन्नतैर्यः शिखरैर्निपतद्व्योमभूतले ।।

उदारधारासंपन्नैर्दधातीव निरन्तरम् ।। ३२ ।।

शनैरारुह्य तं शैलमगस्त्यो मुनिपुंगवः ।।

निवासाय मतिं चक्रे रम्ये तच्छिखरस्थले ।। ३३ ।।

तस्यामृतोपमेयस्य पद्मोत्पलकुलश्रियः ।।

नानाद्रुमपरीतस्य कासारस्योत्तरे तटे ।। ३४ ।।

मनोहरे महीभागे विधायाश्रममुत्तमम् ।।

आराध्य पितृदेवर्षीन्विधिवद्वास्तुदेवताम् ।। ३५ ।।

उवास सुचिरं तत्र मुनिसङ्घसमन्वितः ।।

देवतासिद्धगन्धर्वाप्सरोजुष्टमहीधरे ।। ३६ ।।

तपः समावेशितवित्तवृत्तौ तपोवने तिष्ठति कुम्भजाते ।।

प्रशस्तसौभाग्यसमन्वितोऽद्रिरगस्त्यशैलाह्वयमाससाद ।। ३७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्यप्रशंसायामर्जुनभरद्वाजसंवादे शंकरविवाहागस्त्यदक्षिणदिग्गमनवर्णननामैकत्रिंशोऽध्यायः ।। ३१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३२



।। अथ नद्युत्पादनायागस्त्वं प्रति अशरीर्युक्तिः ।।

।। भरद्वाज उवाच ।। ।।

स कदाचिन्मुनिवरः कृतपौर्वाह्णिकक्रियः ।।

विवेश देवतागारं समाराधयितुं शिवम्।। १ ।।

अदृश्यरूपा वाग्देवी तत्राश्रावि महात्मना ।।

तेनाद्भुतोपपन्नेन व्यक्तवर्णसमुज्ज्वला ।। २ ।।

आकाशवाण्युवाचैनमगस्त्यं जपतां वरम् ।।

नदीहीनो ह्ययं देशः प्रसिद्धोऽपि न शोभते ।। ३ ।।

ज्ञानविज्ञानविमुखः साकार इव भूसुरः ।।

दीक्षेव दक्षिणाहीना ज्योत्स्नाहीनेव शर्वरी ।। ४ ।।

न विभाति नदीहीना पृथ्वीयं भूसुरोत्तम ।।

प्रवर्तय नदीं काञ्चिल्लोकानां हितकाम्यया ।। ५ ।।

अगाधदुरितोद्भूतभीतिमोचनशालिनीम् ।।

हितमेतत्सुरौघानामेतन्मुनिवरार्थितम् ।। ६ ।।

भद्रमेतन्मनुष्याणामेतदाचर सुव्रत ।।

देवानामृषिवर्याणां भूजनानां हितावहाम् ।। ७ ।।

पापपंकप्रशमनीं प्रवर्तय महानदीम् ।। ८ ।।

।। श्रीभरद्वाज उवाच ।। ।।

तदाकर्ण्य वचो विप्रः क्षणं चिन्तापरायणः ।।

समाप्य देवतापूजां बहिर्वेद्यामुपाविशत् ।। ९ ।।

आनाययामास तदा तदाश्रमगतान्मुनीन् ।।

तेषामकथयच्चासौ दिव्यवाणीरितं वचः ।। 2.1.32.१० ।।

तदद्भुतमुपश्रुत्य मुनयो हृष्टमानसाः ।। ११ ।।

अभिवन्द्य मुनिश्रेष्ठं मैत्रावरुणिमब्रुवन् ।। १२ ।।

।। अथ सुवर्णमुखर्युत्पादनायागस्त्यं प्रति महर्षिप्रार्थना ।।

।। मुनय ऊचुः ।। ।।

आश्चर्याणां महाश्चर्यं मंगलानां च मंगलम् ।।

तवैव शोभते दिव्यं त्वच्चरित्रं कृपानिधे ।।।। १३ ।।

तव हुंकारमात्रेण भ्रष्टो देवाधिराज्यतः ।।

नहुषः कीटतां प्राप ततश्चित्रं न विद्यते ।। १४ ।।

समावृतधराचक्रः कल्लोलाताडिताम्बरः ।।

किं न्वतो विद्यते चित्रं यदब्धिश्चुलकीकृतः ।। १५ ।।

सूर्यमार्गनिरोधार्थं प्रवृत्तो विन्ध्यभूधरः ।।

त्वया प्रशांतिं गमितः किं न्वतो विद्यते परम् ।। १६ ।।

तवाद्भुतानि कर्माणि कः स्तोतुं प्रभवेद्भुवि ।।

मन्महाभाग्ययोगात्त्वं प्राप्तोऽसीति शरीरिताम् ।। १७ ।।

वयं कृतार्थाः संजातास्त्रैलोक्ये यन्महामुने ।।

निवसामोऽत्र भवता सनाथा ह्याश्रमस्थले ।। १८ ।।

वर्ण्यो हि याम्यतो दूरे विषयोऽयं द्विजोत्तम ।।

समस्तवस्तुपूर्णोपि नदीहीनो न राजते ।। १९ ।।

किमलब्धनदीस्नानेनाऽमुना हतजन्मना ।।

अनदीके जनपदे वासादजननं वरम् ।। 2.1.32.२० ।।

परिपाकस्तु भाग्यानामस्माकं समुपस्थितः ।।

यदादिष्टोसि विबुधैः प्रवर्तय महानदीम् ।। २१ ।।

प्रवर्तितायां देशेस्मिन्महानद्यां तवानघ ।।

कदा नु खलु यास्यामः कृतस्नाना कृतार्थताम् ।। २२ ।।

किं वितर्केण बहुना प्रयत्नः क्रियतां ध्रुवम् ।।

समानेतुं जगद्वन्द्यां शरण्यां सरिदुत्तमाम् ।। २३ ।। ।।

।। श्रीभरद्वाज उवाच ।। ।।

स तेषां वचनं हृद्यं मानयित्वा महाद्विजः ।।

समानेष्यामि सरितमिति चक्रे विनिश्चयम् ।। २४ ।। ।।

।। अथ सुवर्णमुखर्याविर्भावायागस्त्यकृततपःप्रकारः ।। ।।

मुनीश्वरैरनुज्ञातस्तानभ्यर्च्य सुरानपि ।।
विशेषपूजां विधिवद्विधाय पुरविद्विषः।। २५ ।।
अंगीकृत्य व्रतं गाढं बहुलक्लेशदुःसहम् ।।
अनन्यसुलभं यत्नात्स चकार महत्तपः ।। २६ ।।
घोरेषु घर्मदिवसेष्वन्तरस्थो हविर्भुजाम् ।।
चतुर्णां सवितृन्यस्तदृष्टिर्नापययौ क्लमम् ।। २७ ।।
वार्षिकेषु दिनेषूग्रवायुसम्पातदुःसहैः ।।
आसारैस्ताड्यमानोऽपि नोद्वेगमगमद्धृदि ।। २८ ।।
हेमन्ते समये तिष्ठन्कण्ठदघ्नेषु वारिषु ।।
जपध्यानपरो भूत्वा न किञ्चिद्विकृतिं ययौ ।। २९ ।।
ततः समीहितार्थस्य विलम्बमवलोक्य सः ।।
पुनर्गाढतरां निष्ठां प्रपेदे लोकभीषणाम् ।। 2.1.32.३० ।।
निगृह्य मानसीं वृत्तिं निराहारो जितेन्द्रियः ।।
अविज्ञातबहिर्वृत्तिस्तस्थौ पाषाणवत्तदा ।। ३१ ।।
एवं तपस्यतस्तस्य सर्वाङ्गेषु हुताशनः ।।
अभ्रंलिहो ज्वलज्ज्योतिर्निश्चक्राम भयङ्करः ।।३२।।
ततोऽद्भुतशिखाजालैरावृताः सर्वतो दिशः ।।
समुदग्रभयोद्विग्ना जनौघाः परिचुक्रुशुः ।। ३३ ।।
तदा तथाविधं घोरं जगत्संक्षोभमागतम् ।।
देवा विज्ञापयामासुर्नमस्कृत्याब्जजन्मने ।। ३४ ।।
।। अथागस्त्याश्रमं प्रति चतुर्मुखागमनम् ।। ।।
तानाश्वास्य ततो ब्रह्मा सिद्धगन्धर्वसेवितः ।।
प्रादुरासीत्कुम्भभुवः पुरोभागे तपस्यतः ।। ३५ ।।
तमागतं समालोक्य ब्रह्माणं परमं द्विजः ।।
प्रणम्य विविधैः स्तोत्रैस्तोषयामास तन्मनाः ।। ३६ ।।
ततस्तं विनयानम्रमगस्त्यं वीक्ष्य पद्मभूः ।।
प्रसादसुमुखो भूत्वा पूतां गिरमुपाददे ।। ३७ ।।
।। ब्रह्मोवाच ।। ।।

परितुष्टोऽस्मि तपसा दुश्चरेण तवानघ ।।

वृणीष्व यद्यदिष्टं ते तत्तद्दास्यामि सुव्रत ।। ३८ ।।

।। अगस्त्य उवाच ।। ।।

तव प्रसादात्सकलमुपपन्नं मम प्रभो ।।

संप्रयच्छसि चेत्कामं याचे निःशंकया धिया ।। ३९ ।।

नदीहीनमिमं देशं दृष्ट्वा खिद्यति मे मनः ।।

अर्थाववोधरहितं श्रुतिपाठमिवाधिकम् ।। 2.1.32.४० ।।

उर्वीं पावयितुं दक्षां रक्षितुं च महानदीम् ।।

प्रसादं कुरु देवेश ममेष्टमिदमेव हि ।। ४१ ।।

।। अथागस्त्यप्रार्थनया गङ्गां प्रति चतुर्मुखचोदना ।।

।। श्रीभरद्वाज उवाच ।। ।।

अगस्त्यस्य वचः श्रुत्वा भूयादेवमिति ब्रुवन् ।।

सस्मार मनसा ब्रह्मा सुरवर्त्माश्रयां नदीम् ।। ४२ ।।

अथोपेत्य वियद्गंगा पुरस्तात्परमेष्ठिनः ।।

अतिष्ठन्मुकुटन्यस्तप्रशस्ताञ्जलिभासुरा ।। ४३ ।।

स्वशासनात्समायातां विनयानतमस्तकाम् ।।

तां सर्वजगतां धात्रीमिदं वचनमब्रवीत् ।। ४४ ।। ।।

।। ब्रह्मोवाच ।। ।।

गंगे मयानुशास्यासि कार्ये लोकोपकारके ।।

तवापि लोकरक्षायां ममेव नियता स्थितिः ।। ४५ ।।

देशे नदीविहीनेऽत्र प्रवर्तयितुमापगाम् ।।

हितार्थं सर्वलोकानां कुम्भजन्मा समीहते ।। ४६ ।।

तस्मात्त्वमवतीर्योर्वीं स्वांशेनैकेन भूजनान् ।।

पुनीहि गच्छ वसुधामेतद्दर्शितवर्त्मना।। ४७ ।।

भूलोके संप्रवृत्ते तु प्रवाहे सिद्धिकांक्षिणः ।।

सेविष्यन्ते सुरवरा मुनिवर्याश्च संततम् ।। ४८ ।।

नदीषूत्तमतां याहि त्राहि त्वत्संश्रयाञ्जनान् ।।

कुरु प्रियमगस्त्यस्य गच्छ भद्रे यथासुखम् ।। ४९ ।।

।। भरद्वाज उवाच ।। ।।

इत्युक्त्वान्तर्दधे ब्रह्मा तया नद्या च तेन च ।।

प्रणामपूजनस्तोत्रैर्विशेषैरभिनन्दितः ।। 2.1.32.५० ।।

।। अथागस्त्यसमीपे स्वांशत्वेन गंगाकृतनद्युत्पत्त्यभ्युपगमः ।। ।।

अथ गंगा मुनिपतेः पुरस्तात्स्वांशसंभवाम् ।।

दिव्यतेजोमयीं मूर्तिं दर्शयित्वा वचोऽब्रवीत् ।। ५१ ।।

।। गंगोवाच ।। ।।

मदीयांशोऽयमवनीं संप्राप्य मुनिवल्लभ ।।

पूरयिष्यति तेऽभीष्टं नदीरूपं समाश्रितः ।। ५२ ।।

।। भरद्वाज उवाच ।। ।।

इत्युक्त्वा सिद्धवाहिन्यां गतायां तत्प्रयुक्तया ।।

गन्तव्यं वर्त्मना केनेत्युक्तो मुनिरुवाच ताम् ।। ५३ ।।

।। अगस्त्य उवाच ।। ।।

गच्छन्पुरस्तात्कल्याणि त्वदीयगमनोचितम् ।।

अहं प्रदर्शयिष्यामि मार्गं त्वं मामनुव्रज ।। ५४ ।।

इत्युक्ता मुनिना तेन संप्रहृष्टा तवानघ ।।

यदिष्टं तत्करिष्येऽहमिति प्रोवाच सा शुभा ।। ५५ ।।

अथ मुनिरवतार्य तां नगेन्द्राद्धुततटिनीतनुमभ्रसंगिशृङ्गात् ।।

मुदिततरमना ययौ पुरस्तात्तदभिमतां पदवीं प्रदर्शयन्सः ।। ५६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये श्रीसुवर्णमुखरीमाहात्म्यप्रशंसायां सुवर्णमुखर्याविर्भाववर्णनंनाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३३



।। अथ सुवर्णमुखरीं प्रति शक्रादिस्तुतिः ।।

।। भरद्वाज उवाच ।।

तदा दिव्यविमानस्थाः शक्रमुख्या दिवौकसः ।।

अगस्त्यमनुयान्तीं तामनुजग्मुर्महापगाम् ।। १ ।।

नवावतारां तां दिव्यां सर्वे च मुनिपुंगवाः ।।

कृताञ्जलिपुटाः स्तोत्रैरनुयाताः सिषेविरे ।। २ ।।

सिद्धचारणगन्धर्वाः संभृताश्च सहस्रश ।।

तां नदीं तं मुनीन्द्रं च प्रशशंसुः शुभैःस्तवैः ।। ३ ।।

सुधोपमानममलं दिष्ट्या लब्धमिदं जलम् ।।

इत्यौत्सुक्यरसायत्ता ननन्दुर्धरणीजनाः ।। ४ ।।

तदा निदेशाद्देवस्य पद्मयोनेः समीरणः ।।

शृण्वतां सर्वदेवानामिदं वचनमब्रवीत् ।। ५ ।।

।। अथ वायुकथितसुवर्णमुखरीनामनिष्पत्तिः ।।

।। वायुरुवाच ।। ।।

सुवर्णमिव लोकानां भागधेयादियं नदी ।।

नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा ।। ६ ।।

तस्माद्यास्यति विख्यातिं सर्वलोकाभिनन्दिताम् ।।

सुवर्णमुखरी नाम्ना धाम्नि कैवल्यसंपदः ।। ७ ।।

एषा सुवर्णमुखरी सरित्सु सकलास्वपि ।।

विशिष्टा सेवनीया च ब्रह्मणो वचनं त्विदम् ।। ८ ।। ।।

अथागस्त्यकृतस्वानीतसुवर्णमुखरीमहिमानुवर्णनम् ।।

।। भरद्वाज उवाच ।। ।।

श्रुत्वेत्थं पवनेनोक्तं वचनं कुम्भसम्भवः ।।

तुतोष विस्मयाक्रान्तः स्वान्तःपुलकितांगकः ।। ९ ।।

एवमेषा दिव्यनदी स्नानपानादिकल्पनैः ।।

सौख्यावहा मनुष्याणां प्रतिष्ठामगमद्भुवि ।।।। 2.1.33.१० ।।

आज्ञया पद्मगर्भस्य तटिन्याकाशवाहिनी। ।।

सुवर्णमुखरीनाम्ना पुनात्यात्मैकसंश्रयान् ।। ११ ।।

बहून्गिरीन्द्रान्वनमण्डलं च देशाननेकान्सररिदुत्तमेयम् ।।

क्रमादतिक्रम्य निषेव्यमाणा महानदीभिर्गिरिसंभवाभिः ।। १२ ।।

रोगाहतानामधिकातुराणामनामयैकप्रतिपादकानि ।।

अन्तर्बहिः संभृतभूरितापनिवारणानि प्रियकारणानि ।। १३ ।।

विहारलोलद्विरदप्रकाण्डशुण्डामहाघातरयोत्थितेन ।।

पुष्पोपहारं पृषतोत्करेण हर्षाद्ददातीव दिवाकरस्य ।। १४ ।।

सौगंधिकाम्भोरुहकैरवाणां सौरभ्यसंवासितदिङ्मुखानाम् ।।

द्विरेफभाग्यैकनिकेतनानामाधारभूतान्प्रतिनिर्मलानि ।। १५ ।।

लीलावगाहोत्सुकनाकनारीसीमन्तसिन्दूररजोऽरुणानि ।।

तत्केशपाशच्युतपारिजातप्रसूनगन्धैरधिवासितानि ।। १६ ।।

सा बिभ्रती संभृतमंगलानि स्वादून्यपंकान्यतिनिर्मलानि ।।

सुधोपमानानि सुरेन्द्रसूनोः पयांसि पापप्रतिघातुकानि ।। १७ ।।

अगस्त्यशैलात्समवाप्तजन्मा नीता भुवं कुम्भसमुद्भवेन ।।

प्रशस्ततीर्थौघविराजमाना समाययौ दक्षिणवारिराशिम् ।। १८ ।।

शीकराक्षतविन्यासै रत्नदीपार्पणैरपि ।।

प्रत्युद्ययुस्तामम्भोधेर्वीचयोऽभिमुखागताः ।। १९ ।।

तरंगहस्तैरालिंग्य संभाव्यैनां समागताम् ।।

चकार सरितां नाथः प्रियमाघोषभाषणैः ।।।। 2.1.33.२० ।।

प्राप्तायामनुकूलायां तदा तस्यामपांनिधेः ।।

प्रहृष्टेन तरंगेण जीवनं ववृधेतराम् ।। २१ ।।

इत्थं संसृज्य सरितमगस्त्यस्तामुदन्वता ।।

स्तुत्वा ययौ समामन्त्र्य कृतकृत्यो यदृच्छया ।। २२ ।।

।। अर्जुन उवाच ।। ।।

त्वयैष कथितो ब्रह्मन्महानद्याः समुद्भवः ।।

अस्याः प्रभावं भगवन्निदानीं श्रोतुमुत्सहे ।। २३ ।।

।। अथ भरद्वाजवर्णितसुवर्णमुखरीमाहात्म्यम् ।।

।। भरद्वाज उवाच ।। ।।

अहो निवर्हणं सर्वश्रेयसामेककारणम् ।।

शृणु माहात्म्यमस्यास्ते कथयिष्यामि पाण्डव ।। २४ ।।

पाश्चात्त्यं जन्म संप्राप्य ज्ञानिनां कर्मणः क्षये ।।

सुवर्णमुखरीस्नानं सिद्ध्येद्ब्रह्मत्वकारणम् ।। २५ ।।

एतां सुवर्णमुखरीं योजनानां शतैरपि ।।

स्मृत्वा मनुष्यः पापेभ्यो मुच्यते नात्र संशयः ।।।। २६ ।।

निःक्षिप्तमस्थि जन्तूनां सुवर्णमुखरीजले ।।

सोपानतां समायाति ब्रह्मलोकाधिरोहणे ।। २७ ।।

स्मरन्तः स्वर्णमुखरीं यत्र कुत्रापि मानवाः ।।

तोयान्तरेषु स्नात्वापि लभन्ते फलमुत्तमम् ।। २८ ।।

तावदेवाभिभूयन्ते नराः पातककोटिभिः।।

सुवर्णमुखरीस्नानं यावत्तल्लभ्यते शुभम् ।। २९ ।।

दिव्यान्तरिक्षभौमानि तीर्थानि निजसिद्धये ।।

स्मरन्त्यहरहः प्रातः सुवर्णमुखरीं नदीम् ।। 2.1.33.३० ।।

अगस्त्याचलसंभूता दक्षिणोदधिगामिनी ।।

पापानि स्वर्णमुखरी स्मरणादेव नाशयेत् ।। ३१ ।।

सुवर्णमुखरीस्नानलोलुपेनान्तरात्मना ।।

वाञ्छंति मर्त्यतामेव देवाः शक्रपुरोगमाः ।। ३२ ।।

सुवर्णमुखरीतोयपुष्टसस्यान्नभोजिनः ।।

न लिप्यन्ते महापापैर्दुर्भोजनशतोद्भवैः ।। ४३ ।।

अपि निष्कमितं पीतं सुवर्णमुखरीजलम् ।।

नाशयेदद्रितुल्यानि ह्याशु पापानि देहिनाम् ।। ३४ ।।

प्राप्याऽपि मानुषं जन्म सुवणमुखरीजले ।।

ये वा स्नानं न कुर्वन्ति तेषां जन्म निरर्थकम् ।। ३५ ।।

सुवर्णमुखरीस्नानं यदेकं विधिना कृतम् ।।

जाह्नवीस्नानकोटीनां समं भवति पर्वसु ।। ३६ ।।

गोविंद इव देवेषु नक्षत्रेष्विव चन्द्रमाः ।।

नरेष्विव महीपालो भूरुहेष्विव कल्पकः ।। ३७ ।।

महाभूतेष्विव वियन्मायेवाखिलशक्तिषु ।।

गायत्रीव च मन्त्रेषु वज्रं देवायुधेष्विव ।। ३८ ।।

तत्त्वेष्विवात्मनस्तत्त्वं रुद्राध्यायो यजुष्ष्विव ।।

अनन्त इव नागेषु हिमाचल इवाद्रिषु ।। ३९ ।।

पोत्रिक्षेत्रमिव क्षेत्रेष्विन्द्रियेष्विव मानसम् ।।

नदीष्वपि च सर्वासु सुवर्णमुखरी वरा ।। 2.1.33.४० ।।

नित्यं स्मरेन्नमस्कुर्यात्कीर्तयेन्मनसार्चयेत् ।।

शुद्धिक्षेम शिवापेक्षी सुवर्णमुखरीं शुभाम् ।। ४१ ।।

अगस्त्याचलसंभूतां दक्षिणोदधिगामिनीम् ।।

समस्तपापहन्त्रीं त्वां सुवर्णमुखरीं श्रये ।। ४२ ।।

महापातकविप्लुष्टं गात्रं मम तवोदकैः ।।

क्षालयामि जगद्धात्रि श्रेयसा योजयस्व माम् ।। ४३ ।।

इति सूक्तद्वयं सम्यगुच्चार्य नियतो नरः ।।

सुवर्णमुखरीतोये स्नात्वा शुद्धः प्रमोदते ।। ४४ ।।

ब्रह्मणा निर्मिता पूर्वमगस्त्येन समाहृता ।।

स्वयं मन्दाकिनी मूर्ता सुवर्णमुखरी वरा ।। ४५ ।।

एवंप्रभावा दिव्येयं कीर्तनीया शुभार्थिभिः ।।

मनसा भक्तियुक्तेन स्नातव्या शुभकांक्षिभिः ।। ४६ ।।

सोमसूर्योपरागेषु स्नानदानादिकं कृतम् ।।

स्यादमेयफलं पार्थ सुवर्णमुखरीतटे ।। ४७ ।।

संक्रान्तावयने पुण्ये व्यतीपातेऽथ वासरे ।।

सुवर्णमुखरीस्नानं कुलकोटिं समुद्धरेत् ।। ४८ ।।

जन्मर्क्षे जन्मदिवसे सुवर्णमुखरीजले ।।

स्नात्वा विधिवदाप्नोति क्षेमारोग्यसुखश्रियः ।। ४९ ।।

दुःस्वप्नविघ्नजं भूतग्रहदुःस्थानजं तथा ।।

सुवर्णमुखरीतोये स्नात्वा तरति किल्बिषम् ।। 2.1.33.५० ।।

सुवर्णमुखरीतीरे गोपादप्रमितां भुवम् ।।

दत्त्वा सर्वमहीदानाद्यत्फलं तदवाप्नुयात् ।। ५१ ।।

धेनुं सवस्त्रालंकारां सुवर्णमुखरीतटे ।।

दत्त्वा विप्राय विधिवद्याति ब्रह्म सनातनम् ।। ५२ ।।

पुण्यकालेषु दानानि विधेयान्यखिलान्यपि ।।

इहामुत्र फलप्राप्त्यै सुवर्णमुखरीतटे ।। ५३ ।।

जपो होमस्तपो दानं पितृकर्म सुरार्चनम् ।।

कृतं भवेच्छतगुणं सुवर्णमुखरीतटे ।। ५४ ।।

अन्यत्ते कथयिष्यामि विधेयं व्रतमुत्तमम् ।।

सुवर्णमुखरीतीरे प्रतिवर्षं सुखार्थिभिः ।। ५५ ।।

मेघकाले रविकरैस्तिरोधानमुपागतः ।।

यदोदेति मुनिः श्रीमान्मित्रावरुणनन्दनः।। ५६ ।।

तस्मिन्दिने ये नियताः स्नानमस्यां प्रकुर्वते ।।

तैः कल्पं च सुरावासे स्थीयते कुरुनन्दन ।। ५७ ।।

तदागस्त्यस्य यद्रूपं सुवर्णेन विनिर्मितम् ।।

विधिना ददते पार्थ ते यांति ब्रह्म शाश्वतम् ।। ५८ ।।

।। अर्जुन उवाच ।। ।।

विधिना केन कर्तव्यं व्रतमेतन्महामुने ।।

तन्ममाचक्ष्व सकलं जिज्ञासोस्तु महात्मनः ।। ५९ ।।

।। अथागस्त्यप्रतिमादानविधिः ।।

।। भरद्वाज उवाच ।। ।।

अगस्त्यस्योदयदिनं ज्ञात्वा नियतमानसः ।।

स्वशक्त्या कारयेद्रूपं तस्य हेम्ना महामुनेः ।। 2.1.33.६० ।।

सुवर्णभास्वरच्छायं जटाबन्धमनोहरम् ।।

दधानं करपद्माभ्यामक्षमालां कमण्डलुम् ।। ६१ ।।

वसानं मृदुलं वल्कं मृगचर्मोत्तरीयकम् ।।

सौम्यं भस्मांकरुचिरं रुद्राक्षकृतभूषणम् ।। ६२ ।।

एवं विधाय तद्रूपं स्नात्वा नियतमानसः ।।
आचार्यं गन्धपुष्पाद्यैरलङ्कृत्य यथाविधि ।। ६३ ।।
शालेयतण्डुलानां तामाढकस्योपरि स्थिताम् ।।
वस्त्रद्वयसमायुक्तां प्रतिमां प्रतिपूजयेत् ।। ६४ ।।
विन्ध्यसंस्तम्भनो वार्धिचुलकीकृतिपेशलः ।।
ब्रह्मादिसर्वदेवानां तेजसा सुप्रकाशितः ।। ६५ ।।
अगस्त्यः कुम्भसंभूतो देवासुरनमस्कृतः ।।
प्रीतिमाप्नोतु महतीं दानेनानेन मे प्रभुः ।। ६६ ।।
इमं मन्त्रं समुच्चार्य धारापूर्वं सदक्षिणम् ।।
दत्त्वा विमुक्तः पापेभ्यो याति ब्रह्म सनातनम् ।। ६७ ।।
जन्मान्तरकृतैर्नूनमिह जन्मकृतैरपि ।।
महापापोपपापौघैर्मुच्यते नात्र संशयः ।। ६८ ।।
ब्रह्माद्याः सकला देवाः सनकाद्या महर्षयः ।।
चराचराणि भूतानि प्रीतिं यांति न संशयः ।। ६९ ।।
कृत्वा व्रतमिदं पुण्यमगस्त्यस्य च सन्मुनेः ।।
प्रीत्यर्थं भोजयेद्विप्रान्यथाशक्ति सदक्षिणम् ।। 2.1.33.७० ।।
तस्मिन्कर्मणि चाशक्तो यथाशक्ति महीसुरान् ।।
स्वर्णधान्यादिदानेन तोषयेद्भक्तिसंयुतः ।। ७१ ।।
तिथिं न वितथीकुर्यात्तां यत्नेन समाचरेत् ।।
यत्किञ्चिदपि चावश्यं कर्म कुर्याच्च पूरुषः ।। ७२ ।।
महामुनेरगस्त्यस्य परिपक्वं तपःफलम् ।।
नदी सुवर्णमुखरी कीर्तनीया सुरासुरैः ।। ७३ ।।
एवं ते कथितः सम्यङ्महानद्याः समुद्भवः ।।
प्रभावश्च तदाचक्ष्व यद्भूयः श्रोतुमिच्छसि ।। ७४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वेंकटाचलमाहात्म्ये सुवर्णमुखरीप्रभावप्रशंसानाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३४

https://sa.wikisource.org/s/h02
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथागस्त्यतीर्थागस्त्येश्वरयोः प्रभावः ।।

।। अर्जुन उवाच ।। ।।

श्रोत्राञ्जलिभ्यां पीत्वापि भवद्वाक्यामृतं मुहुः ।।

मनो नोपैति मे तृप्तिं भूयः श्रवणकाङ्क्षया ।। १ ।।

क्रियासमभिहारो मे त्वद्वाक्याकर्णनैषिणः ।।

मनः खेदाय मा भूत्ते करुणाभरितात्मनः ।। २ ।।

इदानीं श्रोतुमिच्छामि नद्यामस्यां महामुने ।।

कुत्र कुत्र समर्थानि तीर्थान्यघनिबर्हणे ।। ३ ।।

काः काः पुण्यतरंगिण्यः सङ्गता अनया मुने ।।

कुत्र स्नानेन कृत्ताघा नोपयांति यमाद्भयम् ।। ४ ।।

हराच्युतादिदेवानां पुण्यान्यायतनानि च ।।

यानियानि च पुण्यानि तिष्ठन्त्यस्यास्तटद्वये ।।।। ५ ।।

तेषु क्षेत्रेषु मनुजैर्यत्फलं समवाप्यते ।।

विहितैर्विधिवत्स्नानदानादिशुभकर्मभिः ।। ६ ।।

सोपाख्यानमिदं सर्वं वेदितं वेदवित्तम ।।

संजाता महती प्रीतिर्विस्तार्याचक्ष्व मे क्रमात् ।। ७ ।।

।। भरद्वाज उवाच ।। ।।

यत्पृष्टं भवता पार्थ क्रमाद्विस्तार्य कथ्यते ।।

आरभ्यागस्त्यतीर्थेन्द्रादस्यास्तीर्थौघवैभवम् ।। ८ ।।

अखण्डज्ञानरूपेण सर्वलोकहितैषिणा ।।

सुरासुराणां संभाव्येनागस्त्येन महात्मना ।। ९ ।।

वसुधामवतीर्णायां प्रथमं तद्धराधरात् ।।

स्नात्वा यत्र महानद्यां संप्राप्नोति कृतार्थताम् ।। 2.1.34.१० ।।

अगस्त्यतीर्थमित्युक्तं पावनं तज्जगत्त्रये ।।

तत्र स्नानेन शुद्धिः स्यान्महापातकिनामपि ।। ११ ।।

अनेकजन्माचरितमहापातकसंहतिंम् ।।

निर दिवि मोदन्ते तत्र स्नानरता जनाः ।। १२ ।।

ये तत्र तीर्थे यतिनः कृतस्नाना यतेन्द्रियाः ।।

गोभूतिलहिरण्यादिमहादानानि कुर्वते ।। १३ ।।

ते प्राप्नुवन्ति संपूर्णं गंगाद्वारे समाहितैः ।।

विहितानां शतगुणं दानानां फलमर्जुन।। ।। १४ ।।

अत्रास्ति भगवानीशः ख्यातोऽगस्त्येशसंज्ञया ।।

स्थापितोऽगस्त्यमुनिना लोकानन्दविधायिना ।। १५ ।।

स्नात्वा तस्यां महानद्यां तल्लिंगं पूजयन्ति ये ।।

दशानामश्वमेधानां फलं संप्राप्नुवंति ते ।। १६ ।।

।। अथ सुवर्णमुखरीस्नानकालनिर्णयः ।। ।।

धनूराशिं परित्यज्य यदा मकरमंशुमान्।।

विशेत्तदयनं पुण्यमुत्तरं परिकीर्तितम् ।। १७ ।।

तस्मिन्दिने ये नियता नद्यां स्नात्वा समाहिताः ।।

पश्यन्ति पार्वतीनाथमगस्त्येशं सुरार्चितम् ।। १८ ।।

अग्निष्टोमसहस्रस्य वाजपेयशतस्य च ।।

फलं संप्राप्य मोदन्ते दिवि देवगणार्चिताः ।। १९ ।।

मृगसंक्रमवेलायां पुरुषैर्मंगलार्थिभिः ।।

अवश्यमेव कर्तव्यमगस्त्येशस्य दर्शनम् ।। 2.1.34.२० ।।

।। अथ देवर्षिपितृतीर्थमाहात्म्यम् ।। ।।

ऐशान्यां तस्य तीर्थस्य देशे क्रोशमितेऽर्जुन ।।

अस्ति तीर्थत्रयं ख्यातं देवर्षिपितृनामभिः ।। २१ ।।

देवर्षिपितरस्तत्र मुनिना तेन पूजिताः ।।

प्रददुर्हृष्टमनसः सर्वान्समभिवाञ्छितान्।। २२ ।।

तदा देवर्षिपितृभिरिदं तीर्थत्रयं क्रमात् ।।

अस्मन्नामभिरीड्यं स्यादित्युक्तं तस्य सन्निधौ ।। २३ ।।

तस्मिंस्तीर्थत्रये ये तु स्नात्वा विहिततर्पणाः ।।

ऋणत्रयविनिर्मुक्तास्ते यान्ति दिवमक्षयाम् ।। २४ ।।

।। अथ वेणासुवर्णमुखरीसंगमवर्णनम् ।। ।।

ततः प्रागुत्तरक्षोण्यां योजनद्वयसीमनि ।।

प्राप्ता सुवर्णमुखरी वेणानाम महानदी ।। २५ ।।

समुदग्ररयाघातनिपातिततटद्रुमा ।।

कुल्यानिर्गतवाःपूरसमाप्लावितकानना ।। २६ ।।

उत्तुङ्गपुलिनोत्संगखेलत्कोककुलाकुला ।।

अम्बुजामोदलोलालिमालालीलारवान्विता ।। २७ ।।

अतिक्रम्य समुत्तुंगाननेकान्धरणीधरान्।।

प्रभूततोयरुचिरा सुवर्णमुखरीं गता ।। २८ ।।

नदीद्वयव्यतिकरे कृतस्नाना यथाविधि ।।

दशानामश्वमेधानामखण्डं प्राप्नुयुः फलम् ।। २९ ।।

संगता वेणया पुण्या सुवर्णमुखरी नदी ।।

गिरिदुर्गममार्गेण ययावुत्तरवाहिनी ।। 2.1.34.३० ।।

मध्यगेन महीध्राणां मार्गेण विषमेण सा ।।

गत्वा विरेजे तटिनी योजनानां चतुष्टयम्।। ३१ ।।

पूर्वतस्तस्य देशस्य विषये सार्धयोजने ।।

उदक्कूले महानद्याः प्राग्वाहिन्या मनोहरे ।। ३२ ।।

अगस्त्येश्वर नामास्ते ख्यातं लिंगं पुरद्विषः ।।

स्मरणं देवमर्त्यानां समस्ताघनिवारणम् ।। ३३ ।।

तत्र स्नात्वा महानद्यां ये नरा नियतेन्द्रियाः ।।

पश्यन्ति पार्वतीनाथमगस्त्येन प्रतिष्ठितम् ।। ३४ ।।

अनेकैः पूर्वजननैरर्जितं पापसञ्चयम् ।।

ते निरस्य सुरावासे मोदन्ते कालमक्षयम् ।। ।। ३५ ।।

ततः सोदङ्मुखी भूत्वा सुवर्णमुखरी ययौ ।।

योजनार्धमिदं देशं तीर्थसंघसमन्विता ।। ३६ ।।

।। अथ सुवर्णमुखर्या व्याघ्रपदाह्वय नदीसंगमः ।। ।।

तस्मिन्देशे तु हिन्तालतालसालमनोरमे ।।

गता सुवर्णमुखरी नदी व्याघ्रपदाह्वया ।। ३७ ।।

दुर्वारभूरिदुरितविनिवारणपेशला ।।

नीरंधतीरवानीरवनमण्डलमंडिता ।। ३८ ।।

सिद्धगंधर्वललना लीलागाहनशालिनी ।।

तपस्विकन्यानिःक्षिप्त बलिपुष्पविराजिता ।। ।। ३९ ।।

हंसकारण्डवक्रौञ्चकुलकोलाहलाकुला ।।

प्राक्प्रवाहा समागत्य शैलान्तरगताध्वना ।। 2.1.34.४० ।।

संगमे सरितोस्तत्र कृतस्नाना नरोत्तमाः ।।

समग्रमश्वमेधानां दशानाप्राप्नुयुः फलम् ।। ४१ ।।

।। अथ शंखतीर्थवर्णनम् ।। ।।

तत्र व्याघ्रपदाख्यायास्तटे लोकमलापहे ।।

अनघं सर्वपापघ्नं शंखतीर्थं विराजते ।। ४२ ।।

ब्रह्मर्षिनियतावासं सुरगन्धर्वसेवितम् ।।

दर्शनस्नानपानाद्यैरमितानन्ददायकम्।। ४३ ।।

तत्रास्ते भगवानीशः शंखेशोनाम फाल्गुन ।।

शंखनाम्ना मुनींद्रेण लिंगरूपं प्रतिष्ठितम् ।। ४४ ।।

ये तत्र तीर्थे सुस्नाताः पश्यन्ति वृषवाहनम् ।।

दशाश्वमेधजं पुण्यं लब्ध्वा यांति सुरालयम् ।। ४५ ।।

युक्ता तया व्याघ्रपदाभिधानया गत्वा ततो योजनसंमितां भुवम् ।।

ययौ मुनीन्द्रैर्वृषभाचलांतिकं संसेव्यमाना शुभनिर्मलोदका ।। ४६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्येऽगस्त्यतीर्थादिविविधतीर्थमाहात्म्यवर्णनंनाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३५

https://sa.wikisource.org/s/h01
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ सुवर्णमुखर्या कल्यानदीसंगमः ।।

।। भरद्वाज उवाच ।। ।।

सुवर्णमुखरी तत्र संगता मंगलप्रदा ।।

कल्यानाम नदी पुण्या कालिन्दी जाह्नवीमिव ।। १ ।।

वृषभाचलसंभूता तीर्थराजविराजिता ।।

नदीनामुत्तमा कल्या कलुषौघविनाशिनी ।। २ ।।

नानातरुलताव्रातविभूषिततटद्वया ।।

मुनिसंघसुखावासा पुण्याश्रमसमुत्कटा ।। ३ ।।

द्विजदत्तार्ध्यविलसत्कुशाक्षतलसत्तटा ।।

अप्सरःकुचकस्तूरीपंकक्षालनपंकिला ।। ४ ।।

दन्तावलकटच्च्योतन्मदाम्बुसुरभीकृता ।।

विप्रभूपालविततमखयूप शतावृता ।। ५ ।।

अनाविलजलापूरतोषिताशेषमानवा ।।

एकैवालं परा कर्तुं महानद्योस्तु पातकम् ।। ६ ।।

तयोः संगतयोः स्तोतुं महिमानं क ईशते ।।

यत्र ब्रह्मशिलानाम सरिन्मध्ये च वर्तते ।। ७ ।।

अगस्त्यतपसा पश्चाद्गया सांनिध्यमेति च ।।

नदीद्वयजले तत्र स्नाताः पुण्ये कुरूद्वह ।।८।।

मखानां पौण्डरीकाणां शतस्य फलमाप्नुयुः ।।

ब्रह्महत्यादिपापानि समायांति परिक्षयम् ।। ९ ।।

तत्राभिषेकपूतानां नदीद्वितयसंगमे ।।

सङ्गता भवनाशिन्या कृष्णवेणीव पावनी ।। 2.1.35.१० ।।

।। अथ सुवर्णमुखरीतीरस्थितश्रीवेंकटाचलवर्णनम् ।। ।।

राजते स्वर्णमुखरी कल्यया संगता तदा ।। ११ ।।

अथोदीच्यां महानद्या योजनार्द्धे विराजते ।।
योजनोत्सेधसहितो विख्यातो वेंकटाचलः ।। १२ ।।
सर्वेषामेव तीर्थानामाश्रयोऽयं नगोत्तमः ।।
अञ्जनानन्तवृषभनीलकेसरिपोत्रिणः ।। १३ ।।
एतान्युपवनान्यद्रेः स्युर्नारायणवेंकटौ।।
वराहवपुषा पूर्वं स्वीकृतत्वान्मधुद्विषा ।।।। १४ ।।
वराहक्षेत्रमित्यार्यैः कीर्तितोऽयं महीधरः ।।
सुवर्णमुखरीतीरे विख्याते वेंकटाचले ।। १५ ।।
निवसत्यच्युतो नित्यमब्धीन्द्रतनयान्वितः।।
तस्मिन्गिरौ श्रिया सार्द्धं वसन्ते वेंकटाधिपम्।। १६।।
सेवन्ते सिद्धगन्धर्वमुनिमानवदानवाः।।
तस्मिन्विन्यस्तचित्तानां भक्तानां पुरुषोत्तमे।। १७।।
वांछितान्याशु सिध्यंति नश्यंति विपदोऽर्जुन ।।
ये स्मरंति जगन्नाथं वेंकटाद्रिनिवासिनम् ।।१८।।
निरस्तदोषास्ते यांति शाश्वतं पदमव्ययम् ।।१९।।
।। ।। अर्जुन उवाच ।। ।।
वेंकटाद्रौ महापुण्ये सुरासुरनमस्कृतः ।।
कथं प्रादुरभूद्देवो भगवान्कमलापतिः ।। 2.1.35.२० ।।
कस्य वा कृतिनस्तत्र प्रसन्नो निजमद्भुतम् ।।
रूपं प्रकाशयांचक्रे भुक्तिमुक्तिफलप्रदम् ।। २१ ।।
विष्णोर्देवादिदेवस्य महिमानं महामुने ।।
श्रोतुमिच्छामि तत्त्वेन तन्मे कथय विस्तरात् ।। २२ ।।
।। अथ श्रीवेंकटाचलवासिभगवद्वैभववर्णनम् ।।
।। भरद्वाज उवाच ।। ।।
शृणु वेंकटनाथस्य महिमानं समाहितः ।।
विस्तरेण समाख्यातुं ब्रह्मणापि न शक्यते ।। २३ ।।
धन्योऽसि देवदेवस्य माहात्म्यं मधुविद्विषः ।।
यद्भक्तियुक्ताभूतात श्रोतुं मतिररिन्दम ।। २४ ।।

कृतपुण्योऽस्म्यहं पार्थ सर्वभूतपतेर्हरेः ।।

पवित्राणि चरित्राणि स्तोष्यन्ते यन्मयाऽधुना ।। २५ ।।

पुरा भागीरथीतीरे जनकाय महात्मने ।।

क्रतुदीक्षाप्रसक्ताय विशुद्धज्ञानशालिने ।। २६ ।।

वामदेवेन कथितां कथां पापप्रणाशिनीम् ।।

कथयिष्यामि ते पार्थ विष्णुकीर्तनपावनीम् ।। २७ ।।

सर्वेषामेव भूतानामाद्यो नारायणः प्रभुः ।।

जगन्मयो जगत्कर्ता चित्स्वरूपो निरंजनः ।। ।। २८ ।।

सहस्रशीर्षा भगवान्सहस्राक्षः सहस्रपात् ।।

यस्य भासा जगदिदं विभाति सचराचरम् ।। २९ ।।

तस्मात्परतरं तेजस्तस्मात्परतरं तपः ।।

तस्मात्परतरं ज्ञानं योगस्तस्मात्परो न च ।। 2.1.35.३० ।।

विद्या तस्मादपि परा नास्ति पार्थ नरर्षभ ।।

सर्वेष्वपि च भूतेषु सदा सन्निहितः प्रभुः ।। ३१ ।।

सर्वाण्यपि च भूतानि तस्मिन्नेवासते सुखम् ।।

स एव यज्ञो यज्वा च साधनं स्रुक्स्रुवादिकम् ।। ३२ ।।

फलं फलप्रदाता च तत्संप्राप्या गतिस्तथा ।।

वह्नौ प्रणीते पशुना प्रोक्षितेन प्रजुह्वति ।।

ये तं प्रयांति ते यांति गतिं तत्प्रतिपादिताम् ।। ३३ ।।

कर्मबन्धं पशुं कृत्वा ज्ञानाग्नौ संप्रवर्तिते ।।

ये जुह्वते तमुद्दिश्य ते तत्सायुज्यभागिनः ।। ३४ ।।

हरिः सदाशिवो ब्रह्मा महेन्द्रः परमः स्वराट् ।।

सर्वेश्वरस्य तस्यैते पर्यायाः परिकीर्तिताः ।। ३५ ।।

ममाहितोऽनुसंधत्ते य इदं परमात्मनः ।।

नारायणस्य माहात्म्यं स न याति पुनर्भवम् ।। ३६ ।।

चिदानन्दमयः साक्षी निर्गुणो निरुपाधिकः ।।

नित्योऽपि भजते तांतामवस्थां स यदृच्छया ।। ३७ ।।

पवित्राणां पवित्रं यो ह्यगतीनां परा गतिः ।।

दैवतं देवतानां च श्रेयसां श्रेय उत्तमम् ।। ३८ ।।

बोध्यानां बोध्य एकोऽसौ ध्येयानां ध्येय उत्तमः ।।

विनयानां समधिको विनयो नयसंयुतः ।। ३९ ।।

तेजसां जनकं तेजः प्रकृष्टं तपसां तपः ।।

आधारः सर्वभूतानामनाद्यन्तो जनार्दनः ।। 2.1.35.४० ।।

तस्येदं भावविज्ञाने मूढा ब्रह्मादयोऽपि च ।।

अजो गृह्णाति जननं सर्वात्मा हन्ति विद्विषः ।। ४१ ।।

स्वतन्त्रोऽपि स्वभक्तानां परतन्त्रः प्रवर्तते ।।

स साक्षी कर्मणां देवः सर्वज्ञो गरुडध्वजः ।। ४२ ।।

तस्य स्वरूपं मुनयो मृगयन्ते समाहिताः ।।

सङ्कर्षणो वासुदेवः प्रद्युम्नश्च तथा पुनः ।। ४३ ।।

अनिरुद्ध इति ख्यातं तन्मूर्तीनां चतुष्टयम् ।।

कीर्तितः प्रणवः पश्चाद्धृदयं तस्य भास्वरम् ।। ४४ ।।

भगवान्वासुदेवश्च मन्त्रोऽयं तत्प्रकाशकः ।। ४५ ।।

मन्त्रराजमिमं नित्यं प्रजपेद्यः समाहितः ।।

स विष्णोः करुणायोगात्सिद्धीनां भाजनं भवेत् ।। ४६ ।।

।। अथ भगवत्कृतभूतसृष्ट्यादिवर्णनम् ।। ।।

आपन्निवारकः संपत्प्रापको भुक्तिमुक्तिदः ।।

यथा ससर्ज भूतानि कल्पादावेव माधवः ।। ४७ ।।

तत्सर्वं कथयिष्यामि समाहितमनाः शृणु ।।

तस्य चिन्तयतः सर्गं तेजोरूपं परं हरेः ।। ४८ ।।

विरिंच इति विख्यातं राजसं गुणमाश्रितम् ।।

तस्य देवस्य वदनाच्छक्रो देवः सपावकः ।।

जज्ञे यश्च त्रिलोकेशः पाककर्मणि यः प्रभुः ।। ४९ ।।

मनसश्चाभवच्चन्द्रः करुणानित्यशीतलात् ।।

अपां सर्वौषधीनां च विप्राणां रक्षकः सदा ।। ।। 2.1.35.५० ।।

नेत्राभ्यामुदभूत्सूर्यस्तस्य विश्वप्रकाशकः ।।

शीतोष्णवर्षकृत्कालकारणं तेजसां निधिः ।। ५१ ।।

प्राणेभ्योऽस्य जगत्प्राणः समीरः समजायत ।।
धर्ता ग्रहर्क्षस्वर्गंगा विमानानां महाबलः ।। ५२ ।।
नाभिदेशात्समुत्पन्नमन्तरिक्षं महात्मनः ।।
तस्यासीच्छिरसो व्योम भूतसंभवकारणम् ।। ५३ ।।
पादाम्बुजाभ्यामुदभूद्भूमिर्भूतगणाश्रया ।।
विनिःसृता दिशः सर्वाः श्रोत्राभ्यां परमात्मनः ।। ५४ ।।
भूर्भुवाद्यास्तथा लोकाः स्मरणात्तस्य जज्ञिरे ।।
रसातलादिलोकाश्च यक्षरक्षोगणादयः ।। ५५ ।।
मुखबाहूरुपादेभ्यो जनयामास स क्रमात् ।।
ब्राह्मणान्क्षत्त्रियान्वैश्याञ्छूद्रादींश्च कुरूद्वह ।। ५६ ।।
छन्दांसि यज्ञस्तुरगा गावो मेषाविकादयः ।।
अतर्क्यप्रभवां तस्मादुत्पत्तिं प्रतिपेदिरे ।। ५७ ।।
संकल्पाद्देवदेवस्य तस्य स्थावरजंगमम् ।।
भूतजातमभूत्कालो भूतो भावी भवंस्तथा ।। ५८ ।।
पिबत्यम्बु समुद्राणां बडवानलरूपधृक ।।
कल्पान्तकाले तत्सर्वं विसृजत्यात्मनि स्थितम् ।। ५९ ।।
सञ्चारयति भूतानां वृत्तिं सूर्येन्दुरूपधृक् ।।
तमोनिरसनाच्चापि कालधर्मप्रवर्तनात् ।। 2.1.35.६० ।।
जगन्ति कल्पविरमे विन्यस्य स्वोदरान्तरे ।।
लीलाबालाकृतिः शेते वटपत्रे महाम्बुधौ ।। ६१ ।।
अथ चोदग्रभोगीन्द्रभोगतल्पे सुखोचिते ।।
योगनिद्रामवाप्नोति सद्वितीयोऽब्जवासया ।। ६२ ।।
नाभिकासारसंभूताज्जनयामास पंकजात् ।। ६३ ।।
सर्वेषां जगतां नाथो विधातारं चतुर्मुखम् ।। ६४ ।।
लीला ह्येषा मुकुन्दस्य स्वेच्छायोगप्रवर्तिनः ।।
विज्ञायते न केनाऽपि याथार्थ्येन स ईश्वरः ।। ६४ ।।
यदा धर्मस्य हानिः स्यादधर्मो वर्धते यदा ।।
यदा वा महतीं पीडां भजन्ते देवतागणाः ।। ६५ ।।

यदावलेपदुर्वारा यांति वृद्धिं सुरद्रुहः ।।

भूमेर्भूमिजनानां च यदोदेति महद्भयम् ।। ६६ ।।

यदा वा निजभक्तानां साधूनामनिवारिता ।।

दुरन्तातंकजननी विपत्समुपजायते ।। ६७ ।।

तदा तदनुरूपाणि रूपाण्यास्थाय कौतुकात् ।।

अधर्ममवधूयाशु कुरुते जगतो हितम् ।। ६८ ।।

सृजति विधिसमाख्यो राजसेनात्मनाऽसौ वहति हरिसमाख्यः सत्त्वनिष्ठः प्रपञ्चम् ।।

हरति हरसमाख्यस्तामसीमेत्य वृत्तिं मधुमथनमहिम्नामस्ति वेत्ता न कोऽपि ।। ६९ ।।

यज्ञांगैः कृतसकलांगसंधिबंधं वाराहं वपुरधिगम्य लोकनाथः ।।

शैलेऽस्मिन्नभजदसौ यथा निवासं तद्वक्ष्ये शृणु विबुधाधिनाथसूनो ।। 2.1.35.७० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्ये विष्णुमाहात्म्यप्रस्तावे सृष्ट्यादिवर्णनंनाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३६

https://sa.wikisource.org/s/h1f

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ वराहकृतधरण्युद्धरणक्रमः।।

।। भरद्वाज उवाच ।। ।।

पुरा निशात्यये धातुः प्रबुद्धो मधुसूदनः ।।

पुनः प्रवृत्तिं भूतानामन्वियेष धिया भृशम् ।।१।।

विना वसुमतीमन्ये भूतौघधरणक्षमाः ।।

न भवन्तीति हृदये तर्कस्तस्याजनिष्ट च ।। २ ।।

अपश्यत्प्रणिधानेन महीं पातालगोचराम्।।

अतिमात्रभयोद्विग्नां परीतां महताम्बुना ।। ३ ।।

प्रतिपेदे तदा रूपं भूसमुद्धरणोचितम् ।।

उपकर्मोष्ठमनलजिह्वं प्रणवघोषणम् ।।४।।

चतुराम्नायचरणं प्रायश्चित्तखुरांचितम् ।।

प्राग्वंशकायं विलसद्दर्भरोमावलीयुतम् ।। ५ ।।

प्रवर्ग्यावर्तसंपन्नं दक्षिणाग्न्युदरान्वितम् ।।

स्रुक्तुण्डमखिलैः सर्वैः संविभक्तांगसन्धिकम् ।। ६ ।।

दिव्यसूक्तसटाजालं परब्रह्मशिरस्तथा ।।

हव्यकव्यरयोपेतं विशुद्धपशुजानुकम् ।। ७ ।।

उक्तात्युक्तादिकच्छन्दोमार्गमंत्र बलान्वितम् ।।

सर्वयज्ञमयं दिव्यं वाराहं रूपमास्थितः ।। ८ ।।

अन्वेष्टुं धरणीमब्धेर्विवेश सलिलांतरम् ।।

दंष्ट्राबालशशांकोत्थलसत्कांतिचयैर्हठात्।। ।। ९ ।।

कल्पांतसमयस्फीतं तमिस्रमपसारयन् ।।

अभिभूतांबुभृद्घोषैर्मुहुर्ब्रह्माण्डकन्दराम् ।। 2.1.36.१० ।।

निनादमुखरां कुर्वन्गाढैर्घुरुघुरुस्वनैः ।।

खुरप्रखुरविन्यासैर्जर्जरीकृतविग्रहम् ।। ११ ।।

इतस्ततो विलुठयन्नुरगाणामधीश्वरम् ।।

तीव्रैर्निःश्वासपवनैरापातालं सरित्पतेः ।। १२ ।।

प्रापयन्नतलस्पर्शमन्तरं दर्शनीयताम् ।।

अतिदीर्घेण पात्रेण मग्नोन्मग्नेन वारिधेः ।। १३ ।।

संक्षोभितानि पाथांसि कुर्वन्नन्तर्ययौ तदा ।।

सप्तपातालमूलाधः स्थितां तोये भयाकुलाम् ।। १४ ।।

वेपमानां समालोक्य धरणीं हृष्टमानसः ।।

तामारोप्य स्वदंष्ट्राग्रमुन्ममज्ज सरित्पतेः ।। १५ ।।

संस्तूयमानो मुनिभिर्जनलोकनिवासिभिः ।।

तस्मिन्नुद्वहति प्रेम्णा देवे वसुमतीं क्षणम् ।। १६ ।।

प्रतिसारा बभूवाधो वारिधेमर्ङ्गलोचिता ।।

तदुत्तारणवेलायां वराहवपुषोऽर्जुन ।। १७ ।।

गम्भीरघोषैरम्भोधिः प्राप मंगलतूर्यताम् ।।

उद्वृत्तवीचिविक्षिप्तशीकरासारसंगतः ।। १८ ।।

भेजे मुक्ताफलचयो मंगलाक्षतविभ्रमम्।।

उदूढा तेन देवेन सा बभौ सलिलाप्लुता ।। १९ ।।

गाढरागसमुत्पन्नस्वेदक्लिन्नतनूरिव ।।

इत्थमुद्धृत्य भगवान्महीं पातालमूलतः ।। 2.1.36.२० ।।

सुदृढं स्थापयामास मध्येऽम्बुनिधिपाथसाम् ।।

तेनोद्धृतायां मेदिन्यां पूर्णं तद्भूनभोन्तरे ।। २१ ।।

जलं तत्कृतमर्यादाऽव्यवच्छिन्नमभूत्तदा ।।

संस्थाप्य पृथिवीमित्थं तदीयाधारसिद्धये ।। २२ ।।

दिग्गजानहिराजं च कमठं च न्यवेशयत् ।।

तेषामपि च सर्वेषामाधारत्वेन सादरम् ।। २३ ।।

अव्यक्तरूपां स्वां शक्तिं युयोज च दयानिधिः ।।

ततो धरां समुद्धृत्य स्थितं किटितनुं हरिम् ।। २४ ।।

तुष्टुवुः सनकाद्यास्तं जनलोकनिवासिनः ।।

तदा वराहवपुषमाराध्य पुरुषोत्तमम् ।। २५ ।।

तदाज्ञया जगद्ब्रह्मा यथापूर्वमकल्पयत् ।। २६ ।।

।। अर्जुन उवाच ।। ।।

कल्पान्तसलिले मग्ना कथं तिष्ठति भूरियम् ।।

सप्तपाताललोकाधः किमाधारा महामुने ।। २७ ।।

कल्पकालः कियानेष स्यात्तद्वृत्तिश्च कीदृशी ।। २८ ।।

।। अथ कल्पवृत्तांतवर्णनपूर्वकं श्वेतवराहावतारवर्णनम् ।। ।।

एतद्विस्तार्य सकलं मम ब्रह्मन्मुने वद ।। २९ ।।

।। भरद्वाज उवाच ।। ।।

विनाडिकानां षष्ट्या स्यान्नाडिकैका दिनं भवेत् ।।

तत्षष्ट्या दिवसास्त्रिंशन्मासः पक्षद्वयात्मकः ।। 2.1.36.३० ।।

मासौ द्वावृतुरित्युक्तस्तैः षड्भिर्वत्सरो भवेत् ।।

अयनद्वितयाकारः शीतवर्षोष्णसंश्रयः ।। ३१ ।।

देवासुराणामन्योयमहोरात्रं विपर्ययात् ।।

उत्तरं दक्षिणे भानोरयने ते यथाक्रमम् ।। ३२ ।।

मानुषाब्दैः खखव्योमखाक्षिपावकसागरैः ।।

महायुगं भवेत्पार्थ कृताद्याकारसंयुतम् ।। ।। ३३ ।।

सप्तत्या सैकया कालो युगानामन्तरं मनोः ।।

अस्मिञ्छ्वेतवराहाख्ये कल्पे जातान्मनूञ्छृणु ।। ३४ ।।

स्वायंभुवः स्यात्प्रथमस्ततः स्वारोचिषो मनुः ।।

उत्तमस्तामसाख्यश्च रैवतश्चाक्षुषाह्वयः ।। ३५ ।।

एते गताः प्राङ्मनवः षट्सेन्द्रसुरतापसाः ।।

वैवस्वतो वर्ततेऽद्य सप्तमो मनुरर्जुन ।। ३६ ।।

आदित्यवसुरुद्राद्यास्तत्काले देवतागणाः ।।

इष्ट्वाश्वमेधशतकं तेजस्वी प्राप शक्रताम् ।। ३७ ।।

विश्वामित्रोऽहमत्रिश्च जमदग्निश्च कश्यपः ।।

वसिष्ठो गौतमश्चैव ते वै सप्तर्षयोऽर्जुन ।। ३८ ।।

इक्ष्वाकुप्रमुखाः शूरा मनुपुत्रा महाबलाः ।।

अवनिं पालयामासुर्नित्यं धर्मपरायणाः ।। ३९ ।।

सूर्यदक्षब्रह्मधर्मरुद्राणां पञ्च सूनवः ।।

सावर्णिरौच्यभौमाद्या भविष्यन्मनुसप्तकम् ।। 2.1.36.४० ।।

चतुर्दश विधातुस्ते भवन्ति मनवोऽहनि ।।

तत्कल्पसंज्ञं तस्यान्ते निशा स्यात्तत्समा शृणु ।। ४१ ।।

दिनावसानसमये ब्रह्मणः पाण्डुनन्दन ।।

जायतेऽवग्रहो घोरः पृथिव्यां शतवार्षिकः ।। ४२।।

तस्मिन्नवग्रहे पृथ्व्यां नीरसायां धनञ्जय ।।

चतुर्विधानि भूतानि समायान्ति परिक्षयम् ।। ४३ ।।

तदा तप्तशिखाकारैरुपेतो घर्मदीधितिः ।।

मयूखैरग्निसदृशैर्वमद्भिः पावकच्छटाः ।। ४४ ।।

विनष्टग्रामनगरशैलवृक्षादिकानना ।।

कूर्मपृष्ठोपमोर्वी स्यात्तप्तायःपिण्डसन्निभा ।। ४५ ।।

ततो विधातुर्गात्रेभ्यः समुत्पन्ना महाघनाः ।।

आच्छादयन्तो गगनं गर्जितध्वानबन्धुराः ।। ४६ ।।

सितपीतारुणश्यामाश्चित्रवर्णाश्च भीषणाः ।।

शैलेभसौधवृक्षादिनानारूपसमन्विताः ।। ४७ ।।

ते शताब्दमितं कालं महावृष्टिं वितन्वते ।।

तेनाम्भसा शमं याति सूर्योद्भूतो महानलः ।। ४८ ।।

भूयश्च शतवर्षाणि वर्षन्त्युग्रं महाघनाः ।।

तदम्भसा समुद्वेला विकृतिं यान्ति वार्द्धयः ।। ४९ ।।

कल्पान्ताम्बुदनिर्मुक्तं लोकान्व्याप्नोति तज्जलम् ।।

भूर्भुवःस्वर्महर्लोकानावृणोति तमो महत् ।।

तदा निमग्ना सलिले मही पातालमूलगा ।। 2.1.36.५० ।।

अनष्टा कथमप्यास्ते ब्रह्मशक्त्यवलम्बिता ।।

अथ निःश्वाससंभूतो मारुतो ब्रह्मणोऽर्जुन ।। ५१ ।।

उत्सारयति तान्सर्वान्कल्पान्तोत्थान्महाघनान् ।।

एवं प्रवृद्धः पवनः शतसंवत्सरात्मकम् ।। ५२ ।।

कालं निरन्तरं वाति दुर्निवाररयोत्थितः ।।

तमुग्रमनिलं हित्वा हरेर्नाभिसरोरुहे ।। ५३ ।।

योगनिद्रामवाप्नोति तस्मिन्पाथसि पद्मभूः ।।

योगनिद्रानुषक्तस्य याति तस्य जगद्विभोः ।। ५४ ।।

तावती शर्वरी पार्थ दिनं यावत्प्रमाणकम् ।।

निशायां समतीतायामुत्थितो वेगवान्पुनः ।। ५५ ।।

सृजप्यखिलजन्तून्वै पूर्ववच्छासनाद्धरेः ।।

कल्पेकल्पे समुचितै रूपैः पाति जगद्धरिः । ५६ ।।

अस्मिन्कल्पे श्वेतवर्णां प्राप्तवान्यज्ञपोत्रिताम्।।

वराहवपुषा देवो विहरन्नवनीतले ।।५७।।

स्वपूर्वनियतावासं प्रपेदे वेंकटाचलम् ।।

स्वामिपुष्करिणीतीरे चरंश्चिरमधोक्षजः।।५८।।

भक्त्या परमया युक्तमपश्यज्जलजासनम् ।।

संपूज्य प्रार्थयामास ब्रह्मा तं भूतभावनम् ।। ५९ ।।

पुरातनीं निजां स्वामिन्भज दिव्यां तनूमिति ।।

गृहीत्वानुनयं तस्य त्यक्त्वा तां सूकराकृतिम् ।। 2.1.36.६० ।।

अनन्यभजनीयां स्वां प्राप विश्वात्मिकां तनुम् ।।

तथास्थितं गिरौ तत्र कृत्वाप्युत्साहमूर्जितम् ।।।। ६१ ।।

द्रष्टुं न शेकुः सर्वेऽपि कालेन बहुनापि च ।। ६२ ।।

।। अर्जुन उवाच ।। ।।

दर्शनस्मरणादीनां हरिरित्थमगोचरः ।।

कथं प्रत्यक्षतां प्राप मानुषाणां महामुने ।। ६३ ।।

भाग्यभूतोऽथ जगतां यः को वाऽऽराध्य तं विभुम् ।।

इह प्रकाशयामास कथामेतां निवेदय ।। ६४ ।।

हरिकथाश्रवणं दुरितापहं कथयतां सकलागमविद्भवान् ।।

सुकृतिनां ननु संप्रति धुर्यता मुनिवरेण्य ममाद्य समागता ।। ६५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्यप्रशंसायां वराहावतारकीर्तनं नाम षट्त्रिंशोऽध्यायः ।। ३६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३७



।। ।। अथ शंखाभिधाननृपवृत्तान्तः ।।

।। भारद्वाज उवाच ।। ।।

शृणु पार्थ प्रवक्ष्यामि कथामाश्चर्यकारिणीम् ।।

यथाऽसौ भगवानस्मिञ्छैले प्राप प्रकाशताम् ।। १ ।।

श्रुताभिधानो नृपतिरस्ति हैहयवंशजः ।।

यः प्रजाः स्वा इव चिरं शशास धरणीं शुभाम् ।। २ ।।

तस्य पुत्रो गुणनिधिः शंखो नाम महीपतिः ।।

पालयामास वसुधां सर्वशास्त्रविशारदः ।। ३ ।।

तस्य विष्णौ जगन्नाथे पुण्डरीकायतेक्षणे ।।

बभूव निश्चला भक्तिः परित्यक्तान्यसंश्रया ।। ४ ।।

देवदेवं जगन्नाथमनन्तं पुरुषोत्तमम् ।।

प्रगाढनिश्चयो नित्यं ध्यायन्नद्भुतवैभवम् ।। ५ ।।

चक्रे व्रतानि दानानि पुण्यानि विविधानि च ।।

वेदवेद्यस्य नियतं प्रीत्यर्थं मधुविद्विषः ।। ६ ।।

तमुद्दिश्यैव विदधे वाजिमेधादिकान्क्रतून् ।।

यथोक्तदक्षिणायोगात्प्रीणिताशेषभूसुरः ।। ।। ७ ।।

इष्टापूर्तात्मकं चक्रे कर्मजातमतन्द्रितः ।।

विन्यस्तहृदयो नित्यं केशवे भक्तवत्सले ।। ८ ।।

स्मरत्यजस्रं गोविन्दं जपत्यच्युतमव्ययम् ।।

पूजयत्यब्जनयनं संकीर्तयति शार्ङ्गिणम् ।। ९ ।।

शृणोति सततं राजा संसारार्णवतारिणीः ।।

पौराणिकैः समाख्याताः पवित्रा वैष्णवी कथाः ।।2.1.37.१०।।

ब्राह्मणानर्चति स्मायं हरिप्रीत्यर्थमेव च ।।

इत्थं सर्वात्मना युक्तोऽप्यश्रान्तः पृथिवीपतिः ।। ११ ।।

नापश्यच्छाश्वतैश्वर्यं स्वतन्त्रं पुरुषोत्तमम् ।।

अप्राप्य दर्शनं विष्णोः सर्वयज्ञमयात्मनः ।। १२ ।।

सशोकाक्रान्तहृदयः परां चिन्तामुपागमत् ।। १३ ।।

।। शंख उवाच ।। ।।

परः सहस्रैर्जनैरतीतदुष्कृतं बहु ।।

कृतं मया यदप्राप्तं हृषीकेशस्य दर्शनम् ।। १४ ।।

उपार्जितानां तमसामनेकैः पूर्वजन्मभिः ।।

अखण्डं हि फलं विष्णोर्दर्शनं मधुघातिनः ।। १५ ।।

कथं नु यायाद्भगवान्विषयं मम नेत्रयोः ।।

कदा वा लभ्यते श्रेयस्तद्वाक्याकर्णनात्मकम् ।। १६ ।।

हा धिङ्मां विहितागस्कं क्रियासाफल्यवर्जितम् ।।

नारायणकृपादूरं संसारक्लेशगोचरम् ।। १७ ।।

।। भरद्वाज उवाच ।। ।।

इति चिन्ताकुले तस्मिन्राज्ञि जीवितनिःस्पृहे ।।

अदृश्यमूर्तिः सर्वेषां शृण्वतामाह केशवः ।। १८ ।।

।। श्रीभगवानुवाच ।। ।।

मा शोकस्य वशं यायाः शृणु वक्ष्याभि ते हितम् ।।

मदेकशरणं साधुं त्वां त्यक्ष्यामि कथं नृप ।। १९ ।।

अयं वेंकटनामाद्रिस्त्रिषु लोकेषु विश्रुतः ।।

वैकुण्ठादपि मे राजन्नावासोऽतिप्रियावहः ।। ।।2.1.37.२०।।

तं गत्वा भूधरवरं तव भक्त्या तपस्यतः ।।

गते सहस्रे वर्षाणां यास्याम्यालोकनीयताम् ।।२१।।

भवानिवोद्यतोऽगस्त्यो मम दर्शनमञ्जसा ।।

क्व वा संदृश्यते विष्णुरेवमाह चतुर्मुखम् ।। २२ ।।

वृषभाद्रौ हरिर्द्रष्टुं लभ्यते नियतात्मभिः ।।

गच्छ तत्रेति मुनये कथयामास पद्मभूः ।। २३।।

अम्भोजसंभवेनेत्थमादिष्टः कुम्भसम्भवः ।।

अञ्जनाद्रौ महावासे तपस्तप्तुं समेष्यति ।। २४ ।।

तस्मिन्महीधरे पुण्ये कृतवासो भवानपि ।।

आराध्य मां तपोनिष्ठो मम दर्शनमाप्स्यसि ।। २५ ।।

।। अथ भगवदुक्त्या शंखनृपस्य श्रीवेंकटाचलागमनम् ।।

।। भरद्वाज उवाच ।। ।।

इत्याज्ञप्तो भगवता शंखो दानववैरिणा ।।

जगाम प्रीतिमतुलां धन्योस्मीति स्वचेतसि ।। २६ ।।

विन्यस्य तनयं वज्रं प्रजापालनकर्मणि ।।

गोविन्ददर्शनापेक्षी नारायणगिरिं ययौ ।। २७ ।।

तस्य शृंगे समुत्तुंगे स्वामिपुष्करिणीं शुभाम् ।।

दिव्यैः पयोभिरापूर्णामपश्यदमृतोपमैः ।। २८ ।।

अनेकसिद्धगन्धर्वदेवर्षिगणसेविताम् ।।

भवतापप्रशमनी सर्वतीर्थसमाश्रयाम् ।। २९ ।।

जलकाकबकक्रौञ्चहंसकारण्डवाकुलाम् ।।

कुमुदोत्पलराजीवसौगन्धिकमनोहराम् ।। 2.1.37.३० ।।

तां दृष्ट्वा पद्मिनीं दिव्यां तत्तीरे विहितोटजः ।।

तोषितः स्नानपानाद्यैर्निर्विकल्पमनोगतिः ।। ३१ ।।

सर्वकर्माणि विन्यस्य जगदीशे जनार्दने ।। ३२ ।।

।। अथ भगवद्दर्शनार्थमगस्त्यस्य वेंकटाचलागमनम् ।। ।।

जपध्यानपरो नित्यं तपस्तेपे सुदारुणम् ।।

तस्मिन्नेव मुनिः काले शासनात्परमेष्ठिनः ।। ३३ ।।

अगस्त्योऽप्यासससादाद्यं शैलं मुनिशतावृतः ।।

प्रतीचीं दिशमारभ्य कृतयत्नः प्रदक्षिणे ।। ३४ ।।

पश्यंस्तीर्थानि पुण्यानि बभ्राम सुचिरं गिरौ ।।

तत्र तत्र ददर्शासौ हरिदर्शनलालसान् ।। ३५ ।।

विरिंचिगुहशक्रेशविष्वक्सेनादिकान्क्रमात् ।।

सनकाद्यांश्च योगीन्द्रान्नारदप्रमुखानृषीन् ।। ३६ ।।

सिद्धगन्धर्वदैतेययक्षराक्षसपन्नगान् ।।

तैस्तैः संमान्यमानोऽसौ प्रश्रयप्रियभाषणैः ।। ३७ ।।

पश्यन्नाश्चर्यभूतानि सर्वाणि विचचार ह ।।

स्नात्वा तीर्थेषु सर्वेषु स्कन्दधारादिकेषु च ।। ३८ ।।

तत्र तत्रार्चयामास गोविन्दं जगतां पतिम् ।।

एवं भ्रान्त्वा गतेऽब्दानां सहस्रे मुनिसत्तमः ।। ३९ ।।

नापश्यत्पुण्डरीकाक्षं चिन्ताशोकपरोऽभवत् ।। 2.1.37.४० ।।

।। अथागस्त्यं प्रति गुरुवस्वाद्युक्तिः ।। ।।

तस्मिन्काले समाजग्मुर्धिषणोशनसौ पुनः ।।

राजोपरिचरो नाम वसुश्च तमृषीश्वरम् ।। ४१ ।।

अस्माकं सफलं जातं जीवितं मुनिसत्तम ।।

दृष्टो भवान्यदस्माभिर्नारायण इवापरः ।। ४२ ।।

ब्रह्मणा लोकनाथेन यदादिष्टा वयं मुने ।।

अच्युतालोकनपरास्तदिदं कथ्यते तव ।। ४३ ।।

अस्ति दक्षिणदिग्भागे वेंकटोनाम भूधरः ।।

श्वेतद्वीपादपि हरेरावासोऽयमभीप्सितः ।। ४४ ।।

तस्मिन्गिरावगस्त्यस्य शंखस्य च महीपतेः ।।

दर्शयिष्यति गोविन्दो निजरूपं जगद्गुरुः ।। ४५ ।।

तदानीं सर्वदेवानामृषीणां यक्षरक्षसाम् ।।

अस्माकं देवदेवस्य दर्शनं संभविष्यति ।। ४६ ।।

अचिरेणैव तद्भावि ततः संत्यक्तकल्मषाः ।।

अन्वेष्टुं गच्छतागस्त्यं तस्मिन्नारायणाचले ।। ४७ ।।

इत्याज्ञप्ता वयं धात्रा समागम्यात्र भाग्यतः ।।

दृष्टवन्तो महाभागं भवंतं भूरितेजसम् ।। ४८ ।।

भवता सहिता गत्वा स्वामिपुष्करिणीतटे ।।

तमप्यालोकयिष्यामः शंखं भागवतोत्तमम् ।। ४९ ।। ।।

अथागस्त्यादिकृतश्रीवेंकटाचलस्थरम्यवस्तुदर्शनम् ।।

।। ।। भरद्वाज उवाच ।। ।।

गीष्पतिप्रमुखैरित्थमादिष्टः कुम्भसंभवः ।।

शोकजालं परित्यज्य ययौ तैः सहितो द्रुतम् ।। 2.1.37.५० ।।

स ददर्श महावृक्षान्फलपुष्पभरानतात् ।।

प्ररूढशाखानिकरच्छायाच्छादितदिक्तटान् ।। ५१ ।।

सिंहदंतावलव्याघ्रवराहमहिषादिकान् ।।

मृगानालोकयामास पंथानं चांतरांतरा ।। ५२ ।।

तैस्तदानीं ददृशिरे सानवोऽप्यम्बुभृद्धृतः ।।

सुवर्णरौप्यताम्रादिशोभितास्तत्र तत्र तु ।। ५३ ।।

उच्चलच्छीकरासारनिर्वाहितदिवौकसः ।।

वेगोद्धृतशिला दृष्टाः शतशो गिरिनिर्झराः ।। ५४ ।।

तेषामापादयामास प्रमोदं मंदमारुतः ।।

कमलामोदसंवाही विचरन्गिरिसानुषु ।। ५५ ।।

शुकानां कोकिलानां च तदा शुश्रुविरे गिरः ।। ५६ ।।

तत्र तत्र समासीनान्विस्तीर्णासु दृषत्सु ते ।।

सिद्धानपश्यन्कृष्णस्य गायतो गुणवैभवम् ।। ५७ ।।

अगस्त्यप्रमुखाः सर्वे परिक्रम्य मुनीश्वराः ।।

स्वामिपुष्करिणीं दिव्यां ददृशुर्विमलोदकाम् ।। ५८ ।।

तत्तीरे विहितावासमपश्यच्छङ्खभूपतिम् ।।

वाङ्मनःकायजं कर्म सन्निवेश्य स्थितं हरौ ।। ५९ ।।

स तानालोक्य सहसा मुनीन्द्रान्संशितव्रतान् ।।

यथोक्तमकरोत्पूजां प्रणामस्तुतिपूर्विकाम् ।। 2.1.37.६० ।।

आसीनास्तत्र ते सर्वे संभाव्यान्योऽन्यमुत्सुकाः ।।

गोविन्दकीर्तनपराः कृतार्थत्वं प्रपेदिरे ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्यप्रशंसायां श्रीवेंकटाचलं प्रति शंखागस्त्याद्यागमनवर्णनंनाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३८

https://sa.wikisource.org/s/h2v
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथाऽगस्त्यशङ्खादितपस्तुष्टस्य भगवत आविर्भावः ।।

।। भरद्वाज उवाच ।।

तेषां हरौ जगन्नाथे समावेशितचेतसाम् ।।

दिनत्रयं गतं तत्र पूजास्तोत्रपरात्मनाम् ।। १ ।।

तृतीये दिवसे प्राप्ते ते सर्वे निद्रिता निशि ।।

अन्ते चतुर्थयामस्य ददृशुः स्वप्नमुत्तमम् ।। २ ।।

शङ्खचक्रगदापाणिं प्रसन्नं पुरुषोत्तमम् ।।

वरदानाय संप्राप्तमपश्यन्स्मेरलोचनम् ।। ३ ।।

उत्थाय मुदितात्मानो गृहान्निर्गत्य पावने ।।

स्वामिपुष्करिणीतोये सस्नुर्विधिवदादरात् ।। ४ ।।

विधाय विधिवत्कर्म सर्वे दिनमुखोचितम् ।।

गृहान्प्रत्याययुर्देवमाराधयितुमच्युतम् ।। ५ ।।

सद्यः श्रेयस्करं मार्गे निमित्तं पक्षिसूचितम् ।।

दृष्ट्वा प्रसादं देवस्य करस्थं मेनिरे तदा ।। ६ ।।

ततस्त्रिलोककर्तारं पूजयित्वा जनार्दनम् ।।

तुष्टुवुर्विविधैः स्तोत्रैः पवित्रैर्वेदवर्णितैः ।। ७ ।।

स्तोत्रावसाने कौन्तेय मुनीन्द्रः कुम्भसंभवः ।।

जजाप शंखसहितो मन्त्रमष्टाक्षरं हरेः ।। ८ ।।

इत्थं तेषां जगत्स्वामिन्यच्युतेऽर्पितचेतसाम् ।।

अग्रभागे प्रादुरभूदेकं तेजो महाद्भुतम् ।। ९ ।।

अनेककोटिसंख्यानामादित्येन्दु हविर्भुजाम् ।।

एकीभूयाम्बरतले ज्योतिर्जालमिव स्थितम् ।। 2.1.38.१० ।।

तत्तेजो वीक्ष्य ते सर्वेऽमितान्ताश्चर्यगोचराः ।।

दध्युर्नारायणं दिव्यं परमानन्दविग्रहम् ।। ११ ।।

वाङ्मानसपथातीतं विश्रुतैश्वर्यभासुरम् ।।

सहस्रनेत्रं साहस्रबाहुपादैः समन्वितम् ।। १२ ।।

तप्तकार्तस्वरनिभस्फुरत्कांतिमनोहरम ।।

दंष्ट्राकरालं दुर्दर्शं वमन्तं दहनच्छटाः ।। १३ ।।

कौस्तुभेन विराजन्तं दधानमुरसि श्रियम् ।।

अविचिन्त्यमनाद्यन्तमत्यन्तभयदायकम् ।। ।। १४ ।।

प्रकाशयन्तं ब्रह्माण्डं सर्वमात्मनि सर्वगम् ।।

अगस्त्यशंखप्रमुखास्ते सर्वे हृष्टचेतसः ।। १५ ।।

तमालोक्य जगन्नाथं भूयोभूयो ववन्दिरे ।।

भ्रमन्ति लोकरक्षार्थमायुधानि तदा हरेः ।। १६ ।।

निजतेजोबलोपेतान्याजग्मुस्तं निषेवितुम् ।।

चक्रमर्कप्रभं दिव्या गदा खङ्गश्च नन्दकः ।। ।। १७ ।।

पुण्डरीकं चोग्ररवः पाञ्चजन्यः शशिप्रभः ।।

तदा ब्रह्माण्डमखिलं पूरयामास निर्भरः ।। १८ ।।

पाञ्चजन्यस्य निनदः सर्वासुरभयंकरः ।।

पाञ्चजन्यध्वनिं श्रुत्वा नितान्ताश्चर्यभीषणम् ।। १९ ।।

आययुर्देवताः सर्वाः स्वंस्वं वाहनमास्थिताः ।।

ब्रह्मा रुद्रः शतमखः सनकाद्याश्च योगिनः।। ।। 2.1.38.२० ।।

वसिष्ठमुख्या मुनयो गन्धर्वोरगकिन्नराः ।।

विष्वक्सेनो गरुत्मांश्च विष्णुभृत्या जयादयः ।। २१ ।।

सरूपाश्चैव ये नित्याः श्वेतद्वीपनिवासिनः ।।

सुमनोद्रुमसंभूता सुमनोवृष्टिरद्भुता ।।२२।।

पपात मेदुरामोदमोदिताशेषमानसा ।।

ननृतुर्दिव्यसुदृशो जगुः किन्नरपुङ्गवाः ।। २३ ।।

तुष्टुवुर्हर्षतरलाः सुरगन्धर्वचारणाः ।।

दृष्ट्वा ते पुण्डरीकाक्षं प्रसन्नं भक्तवत्सलम् ।। २४ ।।

प्रणम्य तोषयामासुः साष्टांगं विविधैस्तवैः ।। २५ ।।

।। ब्रह्मादय ऊचुः ।। ।।

जय विष्णो कृपासिन्धो जय तामरसेक्षण ।।

जय लोकैकवरद जय भक्तार्तिभञ्जन ।। २६ ।।

अनन्तमक्षरं शान्तमवाङ्मनसगोचरम् ।।

को वा भवन्तं जानाति चिदानन्दमयात्मकम् ।। २७ ।।

अणोरणुतरं स्थूलात्स्थूलं सर्वान्तरस्थितम् ।।

त्वामामनन्ति पुरुषं प्रकृतेः परमच्युतम् ।। ।। २८ ।।

वेदान्तसाररूपं त्वां सर्वान्तर्बाह्यवर्तिनम् ।।

को हि वर्णयितुं शक्तो मायायत्तेषु देहिषु ।। २९ ।।

भवदीयमिदं रूपं दृष्ट्वातिभयदायकम् ।।

भयोद्विग्ना वयं सर्वे शान्तं रूपं भजस्व ह ।। 2.1.38.३० ।।

।। भरद्वाज उवाच ।। ।।

इति स्तुतो विरिञ्चाद्यैः प्रसन्नो गरुडध्वजः ।।

मेघघोषप्रतिमया वाचा सादरमब्रवीत ।। ३१ ।।

।। अथ ब्रह्मादिप्रार्थनया भगवद्गृहीतसौम्यरूपप्रकारः ।।

।। श्रीभगवानुवाच ।। ।।

भयावहामिमां मूर्तिमुत्सृज्याहं प्रियावहम् ।।

शान्तं रूपं भजिष्यामि मां पश्यत निराकुलाः ।। ३२ ।।

इत्युक्त्वान्तर्हितो भूत्वा तस्मिन्नेव क्षणांतरे ।।

विमाने रत्नखचिते बभूव सुखदर्शनः ।। ३३ ।।

चन्द्रबिम्बाननः शान्तो नीलोत्पलदलद्युतिः ।।

सुवर्णवर्णवसनो रत्नभूषणभूषितः ।। ३४ ।।

शंखचक्रगदापद्मलसत्करचतुष्टयः ।।

तमालोक्य रमाकान्तं भूयो भूयो ववंदिरे ।। ३५ ।।

सन्तोषयित्वा ब्रह्मादीनभीष्टप्रतिपादनैः ।।

अवोचद्विनयानम्रमगस्त्यं मुनिपुंगवम् ।। ३६ ।।

।। श्रीभगवानुवाच ।। ।।

त्वं मुनीन्द्र व्रतैर्घोरैश्चीर्णैर्मां प्रति संप्रति ।।

परिक्लिष्टोऽसि दास्यामि वरांस्तेऽभीप्सितान्वद ।। ३७ ।।

।। भरद्वाज उवाच ।। ।।

निशम्य वाक्यं श्रीभर्तुः प्रणम्य च पुनःपुनः ।।

स रोमाञ्चितसर्वांगः कुम्भजन्मा वचोऽब्रवीत् ।। ३८ ।।

।। अथागस्त्यप्रार्थनया स्वर्णमुखरीनद्या भगवद्दत्तसर्वाधिकत्वप्राप्तिः ।।

।। अगस्त्य उवाच ।। ।।

यद्धुतं यत्तपस्तप्तं यदधीतं श्रुतं मया ।।

तत्सर्वं सफलं जातमादृतोऽस्मि यतस्त्वया ।। ३९ ।।

एषोऽहमेव धर्मात्मा त्रिषु लोकेष्वपि प्रभो ।।

त्वां विचिन्वन्तमधुना मामन्विष्यागतोऽसि यत् ।। 2.1.38.४० ।।

त्वत्प्रसादात्पुरैवाहं प्राप्ताखिलमनोरथः ।।

न पश्यामि विचिन्त्यापि प्राप्यं संप्रति माधव ।। ४१ ।।

तथापि चापलादेतत्तव विज्ञाप्यते प्रभो ।।

त्वत्पादाम्बुजयोर्भक्तिमेवं कुरु निरन्तरम् ।। ४२ ।।

अवधारय चैतत्त्वं सुरप्रार्थनया मया ।।

नदी सुवर्णमुखरी स्नाताघौघविनाशिनी ।। ४३ ।।

सा भवच्छैलकटकसमासन्ना समागता ।।

तां कृतार्थय लोकेश त्वदनुग्रहवृत्तिभिः ।। ४४ ।।

सुवर्णमुखरीतोये स्नात्वा ये वेंकटे स्थितम् ।।

पश्यंति भुक्तिमुक्त्योस्तु भूयासुर्भाजनानि ते ।। ४५ ।।

अल्पायुषो नरा मूढा ज्ञानयोगपरिच्युताः ।।

न शक्नुवंति त्वां द्रष्टुं व्रताध्ययनकर्मभिः ।। ४६ ।।

सदास्मिन्नास्थितः शैले सर्वेषां च जगद्गुरो ।।

प्रसादसुमुखो देव कांक्षितार्थप्रदो भव ।। ।। ४७ ।।

।। श्रीभगवानुवाच ।। ।।

यत्प्रार्थितं त्वया विप्र तत्तथैव भविष्यति ।।

नूनमप्रतिमा लोके मयि भक्तिः कृता त्वया ।। ४८ ।।

जाह्नवीव नदी सेयं सुवर्णमुखरी मुने ।।

स्यादाशास्या सुराणां च वांछितश्रीविधायिनी ।। ४९ ।।

स्वामिपुष्करिणी चेयं नदी मूर्त्या समन्विता ।।
संक्रमिष्यति तां दिव्यां नदीं तीर्थौघसंश्रयाम् ।। 2.1.38.५० ।।
वैकुण्ठनाम्नि शैलेऽस्मिन्नद्यप्रभृति सर्वदा ।।
कृतावासो भविष्यामि मुने प्रार्थनया तव ।। ।। ५१ ।।
सुवर्णमुखरीस्नानक्षालिताघौघकर्दमाः ।।
अस्मिन्वैकुण्ठशैले मां ये पश्यंति समाहिताः ।। ५२ ।।
भुवि पुत्रादिसंपन्नाः सर्वैश्वर्यसमन्विताः ।।
मृतास्त्रिविष्टपे भोगानाकल्पमनुभूय च ।। ५३ ।।
पुनरावृत्तिरहितं केवलानन्दभासुरम् ।।
मत्पदं समवाप्स्यन्ति नात्र कार्या विचारणा ।। ।। ५४ ।।
मां द्रष्टुमागतान्सर्वान्प्रतीक्ष्याभीप्सितैः शुभैः ।।
योजयिष्यामि सततं त्वद्वचोगौरवान्मुने ।। ५५ ।।
पुत्रार्थिनां बहून्पुत्रान्धनानि च धनार्थिनाम् ।।
तथैवारोग्यकामानां रोगशांतिं गरीयसीम् ।। ५६ ।।
तीव्रापत्परिभूतानां तथैवापन्निवारणम् ।।
दास्याम्यभीप्सितान्भोगान्दुर्लभानपि सर्वदा ।। ५७ ।।
ये यान्कामानपेक्ष्येह प्रेक्षन्ते मां समागताः ।।
अवाप्नुवन्ति ते सर्वे तांस्तान्कामान्न संशयः ।। ५८ ।।
स्थिता वा यत्र कुत्रापि मां स्मरन्ति नरोत्तमाः ।।
ते सर्वे वाञ्छितां सिद्धिं लभन्ते मत्प्रसादतः ।। ५९ ।।
।। अथ शङ्खनृपवरप्रदानपूर्वकं भगवदन्तर्धानम् ।।
।। भरद्वाज उवाच ।। ।।
इत्युक्त्वा तं मुनिं देवः शंखमालोक्य भूपतिम् ।।
शृण्वतां ब्रह्ममुख्यानामिदं वचनमब्रवीत् ।। 2.1.38.६० ।।
।। श्रीभगवानुवाच ।। ।।
प्रीतोऽस्मि शंख भक्त्या ते वृणीष्वाभीप्सितं वरम् ।।
ददामि वरदोऽहं ते क्रशिष्ठस्य तपस्यतः ।। ६१ ।।
।। शंख उवाच ।। ।।

न याचेऽन्यन्महाबाहो त्वत्पादाम्बुजसेवनात् ।।

यां प्राप्नुवंति त्वद्भक्तास्तां याचे गतिमुत्तमाम् ।। ६२ ।।

।। श्रीभगवानुवाच ।। ।।

यत्प्रार्थितं त्वया शंख तत्तथैव भविष्यति ।।

मत्सेवायोगभव्यानामलभ्यं किमु विद्यते ।। ६३ ।।

आकल्पमिन्द्रलोकस्थो ह्यप्सरोगणसेवितः ।।

भुक्त्वा बहुविधान्भोगांस्ततो मल्लोकमेष्यसि ।। ६४ ।।

एवं ददौ वरानिष्टाञ्छङ्खाय पृथिवीपते ।।

नारायणो जगद्योनिर्भजतां कल्पभूरुहः ।। ६५ ।।

ततो ब्रह्मादिकान्सर्वान्विसृज्य कमलेक्षणः ।।

संस्तूय मानसैर्भक्त्या तत्रैवांतर्दधे प्रभुः ।। ६६ ।।

।। अथ भरद्वाजवर्णितश्रीवेंकटाचलमाहात्म्यनिगमनम् ।। ।। ।।

।। भरद्वाज उवाच ।। ।।

वेंकटाद्रेः प्रभावोऽयमाख्यातो भवतेऽर्जुन ।।

नराः पापैः प्रमुच्यंते श्रुत्वेमां पावनीं कथाम् ।।६७।।

वाराहं रूपमुत्सृज्य ब्रह्मणाभ्यर्थितो हरिः ।।

मुमोदात्राद्भुताकारो मायया मोहयञ्जगत् ।। ६८ ।।

पश्चादगस्त्यशंखाभ्यां प्रार्थितः सुखदर्शनम् ।।

ददौ नितान्तसुभगं शान्तं भोगात्मकं वपुः ।। ६९ ।।

नारायणं वेंकटाद्रिं स्वामिपुष्करिणीं तथा ।।

इमामाख्यां च संस्मृत्य मुच्यंते पातकैर्जनाः ।। 2.1.38.७० ।।

वेंकटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।।

वेंकटेशसमो देवो न भूतो न भविष्यति ।। ७१ ।।

वेंकटाद्रिसमं स्थानं न भूतं न भविष्यति ।।

स्वामितीर्थसरस्तुल्यं न कुत्रापि च विद्यते ।। ७२ ।।

प्रातरुत्थाय ये नित्यं वेंकटेशं स्मरंति वै ।।

तेषां करस्था मोक्षश्रीर्नात्र कार्या विचारणा ।। ७३।।

स्वामिपुष्करिणीतीर्थे स्नात्वा सर्वात्मकं हरिम् ।।

ये वा पश्यंति नियता वराहाचलवासिनम् ।।७४।।

तेऽश्वमेधसहस्रस्य वाजपेयशतस्य च ।।

प्राप्नुवंति फलं पूर्णं नात्र कार्या विचारणा ।। ७५ ।।

वेंकटाचलमाहात्म्यं ये शृण्वंति नरोत्तमाः ।।

तेषां मुक्तिश्च भुक्तिश्च इह लोके परत्र च ।। ७६ ।।

वेंकटाचलमाहात्म्यं संक्षिप्य कथितं तव ।।

अतः परं महानद्याः प्रभावः कथ्यतेऽर्जुन ।।७७।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्यप्रशंसायामगस्त्यशङ्खादितपस्तुष्टश्रीवेंकटेशाविर्भावादिमाहात्म्यवर्णनं नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ३९

https://sa.wikisource.org/s/h2w
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ पुत्रार्थमञ्जनाकृततपःप्रकारः ।।

।। श्रीसूत उवाच ।। ।।

पुत्रहीनाञ्जना पूर्वं दुःखिता तपसि स्थिता ।।

तां दृष्ट्वा मुनिशार्दूलो मतङ्गो विष्णुतत्परः ।। १ ।।

अञ्जनाख्यामुवाचेदमत्युग्रे तपसि स्थिताम् ।। २ ।।

।। मतंग उवाच ।। ।।

समुत्तिष्ठाञ्जने देवि किमर्थं तपसि स्थिता ।।

वद देवि महाभागे कार्यं तव वरानने ।। ३ ।।

।। अंजनोवाच ।। ।।

मतंग मुनिशार्दूल वचनं मे शृणुष्व ह ।।

पिता मे केसरी नाम राक्षसः शिवतत्परः ।। ४ ।।

शैवं घोरं तपश्चक्रे पुत्रार्थं तु सुदुष्करम् ।।

पार्वतीसहितः शंभुर्वृषभोपरि संस्थितः ।। ५ ।।

प्रादुरासीत्तदा देवो ददौ तस्मै वरं शुभम् ।। ६ ।।

।। शम्भुरुवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि विधिना निर्मितं तव ।।

अस्मिजन्मन्यपुत्रत्वं तथाप्यन्यद्ददामि ते ।। ७ ।।

विश्रुता सर्वलोकेषु पुत्री तव भविष्यति ।।

तस्याः पुत्रो महाबुद्धिस्तव प्रीतिं करिष्यति ।। ८ ।।

इति तस्मै वरं दत्त्वा तत्रैवान्तर्दधे हरः ।।

मां लब्ध्वा मत्पिता विप्रः कृतकृत्यो बभूव ह ।। ९ ।।

ततः कालान्तरे विप्रः केसर्याख्यो महाकपिः ।।

ययाचेमां ददस्वेति पितरं मे ततः पिता ।। ।। 2.1.39.१० ।।

तस्मै मां दत्तवांश्चैव पारिबर्हं ददौ च सः ।।

गवां लक्षसहस्राणि गजलक्षं महामनाः ।। ११ ।।

वाजिनामर्बुदं चैव रथानामर्बुदं तथा ।।

वस्त्ररत्नान्यनेकानि दासदासीसहस्रकम् ।। १२ ।।

अन्तःपुरचरीर्नारीर्नृत्यगीतविशारदाः ।।

ददौ वासः सहस्रं च मया साकं महामते ।। १३ ।।

पत्या मे रममाणाया भूयान्कालो गतो मुने ।।

अपुत्रा दुःखिता विप्र व्रतानि विविधानि च ।। १४ ।।

कृतानि च मया तत्र किष्किन्धायां महापुरि ।।

माघे मासि च विप्रेन्द्र वैशाखे कार्तिके तथा ।। १५ ।।

स्नानदानव्रतादीनि चातुर्मास्यव्रतं तथा ।।

नमस्कारस्तथा विप्र प्रदक्षिणमनुत्तमम् ।। ।।१६ ।।

शालग्रामान्नदानानि दीपदानं तथैव च ।।

गोदानं तिलदानं च वस्त्रदानं महामुने ।। १७ ।।

भूदानं वारिदानं च दत्त्वा पुष्पादिकं मुने ।।

यानि यानि च मुख्यानि वैष्णवानि व्रतानि च ।।

मया कृतानि सर्वाणि सत्पुत्रफलकांक्षया ।। १८ ।।

श्रवणादिषु यत्प्रोक्तं व्रतं विप्रैमहात्मभिः ।।

मया कृतं च विप्रेद्रं तुष्ट्यर्थं मधुविद्विषः ।। १९ ।।

यानि यानि च मुख्यानि फलानि विविधानि च ।।

मया दत्तानि सर्वाणि सत्पुत्रफलकांक्षया ।। 2.1.39.२० ।।

मया कृतान्यसंख्यानि व्रतानि विविधानि च ।।

पुत्रं तथाप्यलब्ध्वाहं दुःखिता तपसि स्थिता ।। २१ ।।

भविष्यति कथं विप्र पुत्रस्त्रैलोक्यविश्रुतः ।।

याचेऽहं तु मुनिश्रेष्ठ प्रणता च तवाग्रतः ।। २२ ।।

वद त्वं मुनिशार्दूल दीनाहं तपसि स्थिता ।। २३ ।।

।। श्रीसूत उवाच ।। ।।

एवं वदन्तीं तां प्राह मतङ्गो मुनिसत्तमः ।।

शृणु मद्वचनं देवि पुत्रपौत्रप्रदायकम् ।। २४ ।।

इतो दक्षिणदिग्भागे दशयोजनदूरतः ।।

घनाचल इति ख्यातो नृसिंहस्य निवासभूः ।। २५ ।।

तस्योपरि महाभागे ब्रह्मतीर्थं मनोहरम् ।।

तस्यापि पूर्वदिग्भागे दशयोजनमात्रतः ।। २६ ।।

सुवर्णमुखरी नाम नदीनां प्रवरा नदी ।।

तस्या एवोत्तरे भागे वृषभाचलनामतः ।। २७ ।।

तस्याग्रे सरसी नाम्ना स्वामिपुष्करिणी शुभा ।।

गत्वा दृष्ट्वा शुभं तोयं मनःशुद्धिं गमिष्यसि ।। २८ ।।

तत्र स्नात्वा विधानेन वराहं तं प्रणम्य च ।।

वेङ्कटेशं नमस्कृत्य ततो गच्छ वरानने ।। २९ ।।

उत्तरे स्वामितीर्थस्य सिंहशादूलसंयुते ।।

चूतपुन्नागपनसैर्बकुलामलकः शुभैः ।। 2.1.39.३० ।।

चन्दनागुरुनिम्बैश्च तालहिन्तालकिंशुकैः ।।

कपित्थाश्वत्थबिल्वैश्च इङ्गुदैश्च वरानने ।। ३१ ।।

एतादृशैर्महापुण्यैर्वृक्षैश्च विविधैः शुभैः ।।

वियद्गंगेति विख्यातं तीर्थमेकं विराजते ।। ३२ ।।

तस्मिंस्तीर्थेऽञ्जने देवि संकल्पविधिपूर्वकम् ।।

स्नात्वा पीत्वा शुभं तीर्थं तीर्थस्याभिमुखी स्थिता ।। ३३ ।।

वायुमुद्दिश्य हे देवि तपः कुरु वरानने ।।

देवैश्च राक्षसैर्विप्रैर्मनुजैर्मुनिसत्तमैः ।। ३४ ।।

भृङ्गैः पक्षिभिरस्त्रैश्च शस्त्रैश्च विविधैः शुभैः ।।

अवध्यो भविता पुत्रस्तपसा ते न संशयः ।। ३५ ।।

।। श्रीसूत उवाच ।। ।।

इति प्रोक्ताञ्जना देवी तं प्रणम्य पुनःपुनः ।।

भर्त्रा साकं ययावाशु वेंकटाचलसंज्ञकम् ।। ३६ ।।

कापिलं तीर्थमासाद्य स्नात्वा निर्मलमानसा ।।

वेंकटाद्रिं समारुह्य स्वामिपुष्करिणीं ययौ । ३७ ।।

स्नात्वा वराहमानम्य वेंकटेशकृतानतिः ।।

मतंगस्य ऋषेर्वाक्यं स्मरन्ती च मुहुर्मुहुः ।। ३८ ।।

वियद्गङ्गां ययावाशु चाञ्जना मंजुभाषिणी ।।

स्नात्वा पीत्वा शुभं तोयं तीरं तस्य तदुन्मुखी ।। ३९ ।।

प्राणवायुं समुद्दिश्य तपश्चक्रे यतव्रता ।।

फलाहारा जलाहारा निराहारा ततः परम् ।। 2.1.39.४० ।।

सहस्राब्दं तपश्चक्रे न्यस्तनासाग्रदृष्टिका ।।

वयस्या विपुला नाम शुश्रूषामकरोच्छुभा ।। ४१ ।।

वर्षाणां च सहस्रान्ते वायुर्देवो महामतिः ।।

प्रादुरासीत्तदा तां वै भाषमाणो महामतिः ।। ४२ ।।

मेषसंक्रमणं भानौ संप्राप्ते मुनिसत्तमाः ।।

पूर्णिमाख्ये तिथौ पुण्ये चित्रानक्षत्रसंयुते ।। ४३ ।।

तवेप्सितमहं दास्ये वरं वरय सुव्रते ।।

इति तद्वचनं श्रुत्वा ततः प्राहाञ्जना सती ।। ४४ ।।

पुत्रं देहि महाभाग वायो देव महामते ।।

तस्यास्तद्वचनं श्रुत्वा मातरिश्वाब्रवीत्ततः ।। ४५ ।।

पुत्रस्तेऽहं भविष्यामि ख्यातिं दास्ये शुभानने ।।

इति तस्यै वरं दत्त्वा तत्रैवास्ते महाबलः ।। ४६ ।।

तदा ब्रह्मादयो देवा इन्द्राद्या लोकपालकाः ।।

वसिष्ठाद्या महात्मानः सनकाद्याश्च योगिनः ।। ४७ ।।

व्यासादयश्च विप्रेंद्रा लक्ष्म्या साकं जगत्पतिः ।।

मुनिपत्न्यो देवपत्न्य ऋषिपत्न्यस्तथैव च ।। ४८ ।।

स्वं स्वं वाहनमारुह्य दारभृत्यसुतादिभिः ।।

आगतास्ते महात्मानो द्रष्टुं तां तपसि स्थिताम् ।। ४९ ।।

आश्चर्यमाश्चर्यमिति ब्रुवाणा ब्रह्मादयो देवगणाश्च सर्वे ।।

आलोकयन्तो दिवि दूरतस्ते स्थितास्तदा ब्रह्ममहेशमुख्याः ।। 2.1.39.५० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्ये अंजनातपःकरणप्रकारादिवर्णनं नामैकोनचत्वारिंशोऽध्यायः ।। ३९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वेङ्कटाचलमाहात्म्यम्/अध्यायः ४०

https://sa.wikisource.org/s/h2x

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वेङ्कटाचलमाहात्म्यम्

।। अथ व्यासप्रोक्ताकाशगंगास्नानकालनिर्णयः ।।

।। श्रीसूत उवाच ।। ।।

अंजनापि वरं लब्ध्वा भर्त्रा साकं मुमोद ह ।।

ब्रह्मादीनागतान्दृष्ट्वा विस्मयाविष्टमानसा ।। १ ।।

पत्या साकं ततः स्वस्था चांजना मंजुभाषिणी ।।

ब्रह्मादिभिरनुज्ञातो व्यासो वेदविदां वरः ।। २ ।।

अञ्जना तामुवाचेदं मेघगम्भीरया गिरा ।। ३ ।।

।। व्यास उवाच ।। ।।

अञ्जने शृणु मद्वाक्यं सर्वलोकोपकारकम् ।।

मतङ्गस्य ऋषेर्वाक्यं श्रुत्वा निर्मलचेतसा ।। ४ ।।

यस्मात्तु वेंकटं गत्वा तपः कृत्वा सुदुष्करम् ।।

प्रसूयते त्वया पुत्रः शूरस्त्रैलोक्यविक्रमः ।। ५ ।।

इदं तीर्थोत्तमं तस्मात्प्रत्यक्षदिवसे तव ।।

गंगाद्यानि च तीर्थानि समायांति जगत्त्रये ।। ६ ।।

वेंकटाद्रिसमं तीर्थं ब्रह्माण्डे नास्ति किञ्चन ।।

तत्राप्यत्यन्तपुण्या वै स्वामिपुष्करिणी शुभा ।। ७ ।।

ततोऽधिकमिदं तीर्थं प्रत्यक्षं दिवसे तव ।।

स्नानार्थं ये समायांति चित्राऋक्षसमन्विते ।। ८ ।।

मेषं पूषणि संप्राप्ते पूर्णिमायां शुभे दिने ।।

शृणु तेषां फलं देवि वक्ष्यामि तव सुव्रते ।। ९ ।।

गंगादिसर्वतीर्थेषु द्वादशाब्दं वरानने ।।

यत्फलं विद्यते देवि तत्फलं भवति ध्रुवम् ।। 2.1.40.१० ।।

दानानि कुर्वतां पुंसां तेषां शृणु फलोन्नतिम् ।।

स्थाने तूक्तं फलं देवि विद्धि तेषां वरानने ।। ११ ।।

।। अञ्जनोवाच ।। ।।

कार्याणि यानि दानानि वेंकटाद्रौ नगोत्तमे ।।

तानि सर्वाणि विप्रेन्द्र वद वेदविदां वर ।। १२ ।।

।। अथ व्यासप्रोक्तश्रीवेंकटाचलकरणीयदानप्रशंसा ।।

।। व्यास उवाच ।।

अन्नदानं वस्त्रदानं द्वयमेतत्प्रशस्यते ।।

पितुः श्राद्धं विशेषेण वेंकटाद्रौ नगोत्तमे ।। १३ ।।

सुवर्णं ये प्रयच्छन्ति प्रीतये मधुघातिनः ।।

सर्वलोकं समासाद्य मोदन्ते मुनिसत्तमाः ।। १४ ।।

शालग्रामशिलादानं ये कुर्वन्ति नगोत्तमे ।।

अंगभंगमवाप्नोति स्वानुभूतिं च विन्दति ।। १५ ।।

यो ददाति द्विजेन्द्राय गोदानं च कुटुम्बिने ।।

रोमसंख्याप्रमाणेन विष्णुलोके विराजते ।। १६ ।।

भूमिं ददाति यो देवि ब्राह्मणाय कुटुम्बिने ।।

तस्याश्च पुण्यफलं वक्तुं कः शक्तो दिवि वा भुवि ।। १७ ।।

कन्यां ददाति यो देवि श्रोत्रियाय द्विजातये ।।

विष्णुलोकं समासाद्य मोदते पितृभिः सह ।। ।। १८ ।।

प्रपां कुर्वन्ति ये देवि शीतलोदकसंयुताम् ।।

तेषां पुण्यफलं वक्तुं शेषेणापि न शक्यते ।। १९ ।।

तिलं ददाति विप्राय श्रोत्रियाय कुटुंबिने ।।

सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।। 2.1.40.२० ।।

धान्यदानं प्रशंसन्ति विप्रा वेदविदां वराः ।।

बहुपुत्रा भविष्यन्ति धान्यदानं प्रकुर्वताम् ।। २१ ।।

गन्धचम्पकपुष्पादीञ्छत्रव्यजनचामरान् ।।

ताम्बूलघनसारादीन्यो ददाति द्विजातये ।। २२ ।।

भुक्त्वा भोगं चिरं कालं स्वर्गलोकं ततो व्रजेत् ।।

दिव्यवर्षसहस्रं च भुक्त्वा भोगाननेकशः ।। २३ ।।

सार्वभौमस्ततो भूत्वा तत्र भुक्त्वा चिरं महीम् ।।

ततो विप्रत्वमासाद्य वेदवेदान्तपारगः ।। २४ ।।

ततो मुक्तिं समायाति प्रसादाच्चक्रपाणिनः ।।

इत्येतत्कथितं देवि वेंकटाचलवैभवम् ।। २५ ।।

य एतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।।

सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।। २६ ।।

इत्येतत्कथितं पूर्वं व्यासेनैव महात्मना ।।

शृणुयाद्वा पठेद्वापि कृतकृत्यो भविष्यति ।। २७ ।।

तस्यैव वंशजाः सर्वे मुक्तिं यान्ति न संशयः ।। २८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेंकटाचलमाहात्म्येऽञ्जनावरलब्ध्याकाशगंगा स्नानकालनिर्णयादिवर्णनंनाम चत्वारिंशोऽध्यायः ।। ४० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०१



।। अथ श्रीस्कांदे महापुराणे द्वितीये वैष्णवखंडे पुरुषोत्तम (जगन्नाथ) क्षेत्र- माहात्म्य प्रारंभः ।। ( २-२) ।।

।। ।। श्रीगणेशाय नमः ।। ।।

अथ पुरुषोत्तम (जगन्नाथ) क्षेत्रमाहात्म्य प्रारम्भः ।।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।। १ ।।

।। मुनय ऊचुः ।। ।।

भगवन्सर्वशास्त्रज्ञ सर्वतीर्थमहत्त्ववित् ।।

कथितं यत्त्वया पूर्वं प्रस्तुते तीर्थकीर्तने ।।

पुरुषोत्तमाख्यं सुमहत्क्षेत्रं परमपावनम् ।।२।।

यत्रास्ते दारवतनुः श्रीशो मानुषलीलया ।।

दर्शनान्मुक्तिदः साक्षात्सर्वतीर्थफलप्रदः ।।३।।

तन्नो विस्तरतो ब्रूहि तत्क्षेत्रं केन निर्मितम् ।।

ज्योतिःप्रकाशो भगवान्साक्षान्नारायणः प्रभुः ।। ४ ।।

कथं दारुमयस्तस्मिन्नास्ते परमपूरुषः ।।

वद त्वं वदतां श्रेष्ठ सर्वलोकगुरो मुने ।। ५ ।।

श्रोतुमिच्छामहे ब्रह्मन्परं कौतूहलं हि नः ।।

।। जैमिनिरुवाच ।। ।।

शृणुध्वं मुनयः सर्वे रहस्यं परमं हि तत् ।। ६ ।।

अवैष्णवानां श्रवणे भक्तिस्तव न जायते ।।

यस्य संकीर्तनादेव सकलं लीयते तमः ।। ७ ।।

यद्यप्येष जगन्नाथः सर्वगः सर्वभावनः ।।

स्कन्देन कथितं पूर्वं श्रुत्वा शंभोर्मुखाम्बुजात् ।।

संति क्षेत्राणि चान्यानि सर्वपापहराणि वै ।। ८ ।।

एतत्क्षेत्रं परं चास्य वपुर्भूतं महात्मनः ।।

स्वयं वपुष्मांस्तत्रास्ते स्वनाम्ना ख्यापितं हि तत् ।।९।।

तत्र ये स्थातुमिच्छंति तेपि सर्वे हतांहसः ।।

किं पुनस्तव तिष्ठंतो ये पश्यन्ति गदाधरम् ।।2.2.1.१०।।

अहो तत्परमं क्षेत्रं विस्तृतं दशयोजनम् ।।

तीर्थराजस्य सलिलादुत्थितं वालुकाचितम् ।। ११ ।।

नीलाचलेन महता मध्यस्थेन विराजितम् ।।

एकस्तनमिव पृथ्व्याः सुदूरात्परिभावितम् ।। १२ ।।

वराहरूपिणा पूर्वं समुद्धृत्य वसुन्धराम् ।।

सर्वतः सुसमां कृत्वा पर्वतैः सुस्थिरीकृताम् ।। १३ ।।

सृष्ट्वा चराचरं सर्वं तीर्थानि सरिदब्धिकान् ।।

क्षेत्राणि च यथास्थानं संनिवेश्य यथा पुरा । १४ ।।

ब्रह्मा विचिन्तयामास सृष्टिभारनिपीडितः ।।

पुनरेतां क्रियां गुर्वीं नारभेय कथं त्विति ।। १५ ।।

तापत्रयाभिभूता हि मुच्यंते जंतवः कथम् ।।

एवं चिन्तयमानस्य मतिरासीत्प्रजापतेः ।।१६।।

मुक्त्येककारणं विष्णुं स्तोष्ये ऽहं परमेश्वरम् ।।

।। ब्रह्मोवाच ।। ।।

नमस्ते जगदाधार शङ्खचक्रगदाधर ।। १७ ।।

यन्नाभिपंकजादेव जातोऽहं विश्वसृष्टिकृत् ।।

परमार्थस्वरूपं ते त्वं वै वेत्सि जगन्मय ।। १८ ।।

यन्मायया जगत्सर्वं निर्मितं महदादिकम् ।।

यन्निःश्वाससमुद्भूतं शब्दब्रह्म त्रिधाऽभवत् ।। १९।।

उपजीव्य तदेवाहमसृजं भुवनानि वै ।।

त्वत्तो नान्यः स्थूलसूक्ष्मदीर्घह्रस्वादि किंचन ।। 2.2.1.२० ।।

विकारभेदैर्भगवंस्त्वमेवेदं चराचरम् ।।

कटकादि यथा स्वर्णं गुणत्रयविभागशः ।।२१।।

स्रष्टा सृज्यं त्वमेवात्र पोष्टा पोष्यं जगत्प्रभो ।।

आधारो ध्रियमाणं च धर्त्ता त्वं परमेश्वर ।।२२ ।।

त्वत्प्रेरितमतिः सर्वश्चरते च शुभाऽशुभम् ।।

ततः प्राप्नोति सदृशीं त्वयैव विहितां गतिम् ।। २३ ।।

जगतोऽस्य गतिर्भर्त्ता साक्षी त्वं परमेश्वर ।।

चराचरगुरो सर्वजीवभूत कृपामय ।।

प्रसीदाद्य जगन्नाथ नित्यं त्वच्छरण्यस्य मे ।।२४।।

।। जैमिनिरुवाच ।। ।।

एवं संस्तूयमानश्च ब्रह्मणा गरुडध्वजः ।।

नीलजीमूतसंकाशः शंखचक्रादिचिह्नितः ।। २५ ।।

पतगेंद्रसमारूढः स्फुरद्वदनपंकजः ।।

आविरासीद्द्विजश्रेष्ठा विवक्षुः स्फुरिताधरः ।। २६ ।।

।। श्रीभगवानुवाच ।। ।।

यदर्थं मां स्तुषे ब्रह्मन्न शक्यः प्रतिभाति सः ।। २७ ।।

अनाद्यविद्या सुदृढा सुश्छेद्या कर्मबंधनैः ।।

प्रभवंत्यां कथं तस्यां ह्रीयेते मृतिजन्मनी ।।२८।।

तथापि चेदत्र कृते व्यवसायस्तवानघ ।।

क्रमेण येन हि भवेत्तत्ते वक्ष्यामि कारणम् ।। २९ ।।

अहं त्वं त्वमहं ब्रह्मन्मन्मयं चाखिलं जगत् ।।

चिस्ते यत्र मे तत्र नान्यथेति विचारय ।। 2.2.1.३० ।।

सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे ।।

स प्रदेशः पृथिव्यां हि सर्वतीर्थफलप्रदः ।।३१।।

तत्र ये मनुजा ब्रह्मन्निवसंति सुबुद्धयः ।।

जन्मांतरकृतानां च पुण्यानां फलभागिनः ।। ३२ ।।

नाल्पपुण्याः प्रजायंते नाभक्ता मयि पद्मज ।।

एकाम्रकाननाद्यावद्दक्षिणोदधितीरभूः ।। ३३ ।।

पदात्पदाच्छ्रेष्ठतमः क्रमात्परमपावनः ।।

सिन्धुतीरं तु यो बह्मन्राजते नीलपर्वतः ।।३४।।

पृथिव्यां गोपितं स्थानं तव चापि सुदुर्लभम् ।।

सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम ।। ३५ ।।

सर्वसंगपरित्यक्तस्तत्र तिष्ठामि देहभृत् ।।

क्षराक्षरावतिक्रम्य वर्त्तेऽहं पुरुषोत्तमे ।।३६।।

सृष्ट्या लयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।।

यथा मां पश्यसि ब्रह्मन्रूपं चक्रादिचिह्नितम् ।। ३७ ।।

ईदृशं तत्र गत्वैव द्रक्ष्यसे मां पितामह ।।

नीलाद्रेरंतरभुवि कल्पन्यग्रोधमूलतः ।। ३८ ।।

वारुण्यां दिशि यत्कुण्डं रौहिणं नाम विश्रुतम् ।।

तत्तीरे निवसन्तं मां पश्यन्तश्चर्मचक्षुषा ।। ३९ ।।

तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः ।।

तत्र व्रज महाभाग दृष्ट्वा मां ध्यायतस्तव ।। 2.2.1.४० ।।

प्रकाशं यास्यते तस्य क्षेत्रस्य महिमाऽपरः ।।

आश्चर्यभूतः परमस्तवापि च भविष्यति ।। ४१ ।।

श्रुतिस्मृतीहासपुराणगोपितं मन्मायया तन्न हि कस्य गोचरम् ।।

प्रसादतो मे स्तुवतस्तवाधुना प्रकाशमायास्यति सर्वगोचरम् ।। ४२ ।।

व्रतेषु तीर्थेषु च यज्ञदानयोः पुण्यं यदुक्तं विमलात्मनां हि तत् ।।

अहर्निवासाल्लभतेऽत्र सर्वं निःश्वास वासात्खलु चाश्वमेधिकम् ।। ४३ ।।

इत्यादिश्य विधिं विप्रास्तदासौ पुरुषोत्तमः ।।

पश्यतस्तस्य तत्रैव प्रभुरन्तरधीयत ।। ४४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h29

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

ततो ब्रह्मागमत्तूर्णं यत्रास्ते भगवान्स्वयम् ।।

स्तवान्तेऽसौ यथा दृष्टस्तथाद्राक्षीत्प्रभुं तदा ।। १ ।।

प्रत्यभिज्ञानसंहृष्टस्तं दृष्ट्वा परमेश्वरम् ।।

अत्यद्भुतज्ञाननिधिर्बभूवासौ द्विजोत्तमाः ।। २ ।।

यावत्स्तोतुं समारेभे हर्षसंफुल्ललोचनः ।।

तावदेव समागत्य कुतश्चिद्वायसोत्तमः ।। ३ ।।

कारुण्योदकसंपूर्णे तस्मिन्कुण्डे निमज्य तम् ।।

विलोक्य माधवं नीलरत्नकांतिं कृपानिधिम् ।। ४ ।।

काकदेहं समुत्सृज्य लुठमानो मुहुः क्षितौ ।।

शंखचक्रगदापाणिस्तस्य पार्श्वे व्यवस्थितः ।। ५ ।।

तिरश्चस्तां गतिं दृष्ट्वा योगींद्राणां सुदुर्लभाम् ।।

मेनेऽसौ मुनयः सृष्टिः क्रमात्क्षीणा भविष्यति ।। ६ ।।

मनुष्याधिकृते मुक्तौ वेदांते संशयोऽभवत्।।

न किंचिद्दुर्लभं चेह विष्णुभक्तस्य विद्यते ।। ७ ।।

प्रत्यक्षोऽभूद्द्विजश्रेष्ठाः पुराणपुरुषोदिते ।।

संकीर्त्य यन्नाम नरः सर्वपापैः प्रमुच्यते ।। ८ ।।

तस्य संदर्शने विप्रा मुक्तिः किं खलु दुर्लभा ।।

मनसा ध्याययन्विष्णुं त्यजन्प्राणान्विमुच्यते ।। ९ ।।

साक्षात्कृतो भगवतः किं चित्रं मुक्तिमेति यत् ।।

पुरुषोत्तमसंज्ञस्य क्षेत्रस्य महिमाद्भुतः ।। 2.2.2.१० ।।

यत्र काकोऽपि च हरिं साक्षात्पश्यति भो द्विजाः ।।

सुदुर्लभं क्षेत्रमिदमज्ञानां च विमोचनम् ।।

अहो क्षेत्रस्य माहात्म्यं काकस्यापि विमुक्तिदम् ।।

किं पुनः सततं शांति वैराग्यज्ञानसंयुजाम् ।। ११ ।।

।। ऋषय ऊचुः ।। ।।

नीलाख्यं माधवं दृष्ट्वा किं चकार पितामहः ।। १२ ।।

तद्दर्शने क्षणान्नष्टदेहबन्धं च वायसम् ।। १३ ।।

।। जैमिनिरुवाच ।। ।।

अत्यद्भुतमयं दृष्ट्वा यावद्ध्यायति माधवम् ।।

तावत्पितृपतिः स्वाधिकारसंयमनाकुलः ।। १४ ।।

दीनाननो निःश्वसन्वै तत्र यातस्त्वरान्वितः ।।

नीलाद्रौ माधवं दृष्ट्वा साऽष्टांगं प्रणिपत्य च ।। १५ ।।

तुष्टाव स जगन्नाथं स्वाधिकारदृढस्थितौ ।। ।।

।। यम उवाच ।। ।।

नमस्ते देवदेवेश सृष्टिस्थित्यन्तकारण ।। १६ ।।

त्वयि प्रोतमिदं सर्वं सूत्रे मणिगणा यथा ।।

त्वया धृतं त्वया सृष्टं त्वया चाप्यायितं जगत् ।। १७ ।।

चन्द्रसूर्यादिरूपेण नित्यं भासयसेऽखिलम् ।।

विश्वेश्वरं जगद्योनिं विश्वावासं जगद्गुरुम् ।। ।। १८ ।।

विश्वसाक्षिणमाद्यन्तवर्जितं प्रणमाम्यहम् ।।

नमः परमकारुण्यजलसंभृतसिन्धवे ।। १९ ।।

परापरपरातीतविभवे विश्वसंभवे ।। ।। 2.2.2.२० ।।

भवसंतापनीहारभानवे दीनबन्धवे ।।

स्वमायारचिताशेष भवे गुणरज्जवे ।। २१ ।।

नमः कमलकिंजल्क पीतनिर्मलवाससे ।।

महाहवरिपुस्कन्ध कृंतचक्राय चक्रिणे ।। २२ ।।

दंष्ट्रोद्धृत क्षितिभृते त्रयीमूर्तिमते नमः ।।

नमो यज्ञवराहाय चन्द्रसूर्याग्निचक्षुषे ।। २३ ।।

नरसिंहाय दंष्ट्रोग्रमूर्तिद्रावितशत्रवे ।।

यदपांगविलासैक सृष्टिस्थित्युपसंहृतिः ।। २४ ।।

उच्चावचात्मको ह्येष भवः संभवते मुहुः ।।

तममुं नीलमेघाभं नीलाश्ममणिविग्रहम् ।। २५ ।।

नीलाचलगुहावासं प्रणमामि कृपानिधिम् ।।

शंखचक्रगदापद्मधारिणं शुभदायिनम् ।। २६ ।।

प्रणताशेषपापौघदारिणं मुरवैरिणम् ।।

नमस्ते कमलापांग संगसंस्कारचक्षुषे ।। २७ ।।

श्रीवत्सकौस्तुभोद्भासि मनोहृद्व्यूढवक्षसे ।।

यत्पादपंकजद्वंद्वसंश्रयैश्वर्यभागिनी ।। ।। २८ ।।

श्रीः संश्रिता जनैः शश्वत्पृथगैश्वर्यदायिनी ।।

या परापरसंभिन्ना प्रकृतिस्ते सिसृक्षया ।। २९ ।।

निर्विकारं परं ब्रह्म विकारि ससृजेंऽजसा।।

सर्वलक्षणसंपूर्णा लक्षितां शुभलक्षणैः ।।

लक्ष्मीशोरसि नित्यस्था लक्ष्मीं तां प्रणमाम्यहम् ।। 2.2.2.३० ।।

।। जैमिनिरुवाच ।। ।।

तदेवं धर्मराजेन श्रीकांतः परितोषितः ।।

पार्श्वस्थां वल्लकीहस्तां नेत्रांतेनादिशच्छ्रियम् ।। ३१ ।।

तेन संभाविता लक्ष्मीर्भवदुःखविनाशिनी ।।

शुभाय सर्वलोकानां यमं प्रोवाच लीलया ३२ ।।

।। लक्ष्मीरुवाच ।। ।।

यदर्थमावां संस्तौषि क्षेत्रेस्मिन्दुर्लभं हि तत् ।।

अत्याज्यमावयोरेतत्क्षेत्रं श्रीपुरुषोत्तमम् ।। ३३ ।।

कल्पावसानेप्यावां वै ध्रियेते परमेष्ठिना ।।

ब्रह्मादिदिक्प्रभूणां हि स्वामित्वं नेह विद्यते ।। ३४ ।।

नेह कर्मपरीपाकाः संभवंति कदाचन।।

अत्र प्रवसतां नृणां तिरश्चामपि दुष्कृताम्।। ३५ ।।

दह्यते ज्वलिताग्नौ हि तूलराशिर्यथा भृशम् ।।

ये बद्धा पापपुण्याभ्यां निगडाभ्यामहर्निशम् ।। ३६ ।।

तेषां संयमिता त्वं हि यमः पूर्वं विनिर्मितः ।।

अत्र साक्षाद्वपुष्मंतं नीलेन्द्रमणिमंजुलम् ।। ३७ ।।

दृष्ट्वा नारायणं देवं मुच्यते कर्मबन्धनात् ।।

अतोऽन्यतः कर्मभूमौ प्रभुत्वं सूर्यसंभव ।। ३८ ।।

वैक्लव्यं क्षेत्रराजेस्मिन्मा गास्त्वं यम संयमे ।।

तवापि भगवानेष विधाता प्रपितामहः ।। ३९ ।।

तिर्यंचं विष्णुसारूप्यं प्राप्तं पश्यति कौतुकात् ।।

एष कर्मपरीपाकं सर्वेषां वेत्ति कंजजः ।। 2.2.2.४० ।।

ज्ञात्वा क्षेत्रस्य माहात्म्यं स्तौति देवं गदाधरम्।।

त्वद्वशं गंतुमुचिता नेह तिष्ठंति जंतवः ।। ४१ ।।

वैवस्वत वसंत्यत्र जीवन्मुक्ता मुमुक्षवः ।।

तया संबोधितस्त्वेवं विष्णुना स्त्रीस्वरूपिणा ।।

ततोऽहंकारलज्जाभ्यां विनीतः प्राब्रवीद्यमः ।। ४२ ।।

।। यम उवाच ।। ।।

मातस्त्वया यदाज्ञप्तं पुरा नैतन्मया श्रुतम्।। ४३ ।।

अज्ञानोपहतो वेद्मि रहस्यं कथमुत्तमम् ।।

यस्य स्वरूपं वेदाश्च न च वेत्ति पितामहः।।४४।।

महिमानं कथं तस्य वेद्म्यहंकार मोहितः।।

यदादिष्टं सुरेशानि क्षेत्रमेतद्विमुक्तिदम्।।४५।।

सान्निध्याद्वासुदेवस्य ईश्वरेच्छा निरंकुशा।।

अन्यत्र बन्धदो विष्णुरत्र मोक्षं ददाति यत्।। ४६।।

ममापि निरयाणां च स्रष्टासौ त्रिदिवस्य च।।

मृतानामत्र मुक्तिश्चेतन्मामंब सुविस्तरम्।।४७।।

क्षेत्रसंस्थाप्रमाणं हि तत्र स्थिति फलं हि यत् ।।

तीर्थानि कानि संत्यत्र किमन्यद्वा रहस्यकम् ।। ४८ ।।

किमधिष्ठातृकं क्षेत्रं तत्सर्वं कथयस्व मे ।।

तदहं संपरित्यज्य निर्भयः संचरे यथा।। ४९ ।। ।।

इति श्रीस्कांदे महापुराण एकाशातिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h2a

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। श्रीरुवाच ।। ।।

साधु ते बुद्धिरुत्पन्ना विष्णोः संनिधिमाश्रिता ।।

अद्भुतं कथयाम्येतत्क्षेत्रस्य रविनंदन ।। १ ।।

यथाहं भगवद्वक्षः स्थलस्था ददृशे पुरा ।।

चराचरे जगत्यस्मिन्प्रलीने प्रलये यम ।। २ ।।

एतत्क्षेत्रमहं चैव द्वे एवोपस्थिते तदा।।

स तदा सप्तकल्पायुर्मृकंडोरात्मजो मुनिः।।३।।

प्रणष्टे स्थावरचरे निमग्नः प्रलयार्णवे।।

नावस्थानमवाप्यैव शर्म लेभे न कुत्रचित्।।४।।

जलार्णवे भ्राम्यमाणः प्रलये स इतस्ततः।।

पुरुषोत्तमसादृश्ये क्षेत्रे स वटमैक्षत।। ५।।

उत्प्लुत्योत्प्लुत्य मूलं तु न्यग्रोधस्य समीपतः।।

शुश्राव बाल वचनं मार्कण्डेय ममांतिकम् ।। ६ ।।

प्रविश्य दुःखमतुलं जहीहि खलु मा शुचः ।।

तच्छ्रुत्वा चित्रवचनमप्रतर्क्यं तदा मुनिः ।। ७ ।।

विस्मयं परमं लेभे स्वदुःखं नाप्यचिन्तयत् ।।

वारिभिः शीर्यते नैतद्दह्यते कालवह्निना ।। ८ ।।

संवर्तकादिभिर्नैतच्छोष्यते नापि चाल्यते ।।

एकार्णवे महाघोरे नौरिव क्षेत्रमीक्ष्यते ।। ९ ।।

तत्रायं यूपसदृशो न्यग्रोधस्तिष्ठते महान् ।।

यं गृहीत्वा क्षेत्रमिदं न्यग्रोध ईशितुस्तनुः ।। 2.2.3.१० ।।

महाप्रलय वातेन शाखा नास्य हि कम्पते ।।

तस्याधस्तात्स हि मुनिः स्थित्वा चैतदचिंतयत् ।। ११ ।।

एकार्णवेऽस्मिन्प्रलये नष्टे स्थावरजंगमे ।।

भूप्रदेशः स्थिरतरः कथमेष विभाव्यते ।। १२ ।।

यत्रायं शाखिप्रवरः कोमलः परिदृश्यते ।।

मार्कंडेयागच्छ मुहुरिति सप्रश्रयं वचः ।। १३ ।।

कुतो निराश्रमियदं चिन्तयन्निति स प्लवन् ।।

शंखचक्रगदापाणिं नारायणमलोकयत् ।। १४ ।।

तदंगपद्मासनगां मां च वैवस्वतैक्षत ।।

विवशो जलवाताभ्यां तदा सुस्थो व्यवस्थितः ।। १५ ।।

हृष्टांतरात्मा स मुनिरावां साष्टांगमानतः ।।

प्रसादनाय देवस्य स्तोत्रमेतदुदाहरत् ।। १६ ।।

।। मार्कंडेय उवाच ।। ।।

त्वत्पादपद्मानुसरानुषंगं रुद्रेंद्रपद्मासनसम्पदाढ्यम् ।।

त्वद्भक्तिहीनं परितः प्रतप्तं दीनं परित्राहि कृपांबुधे माम् ।। १७ ।।

ब्रह्मादिभिर्यत्परिचर्यमाणं पदाम्बुजद्वन्द्वमचिंत्यशक्ति ।।

श्वः श्रेयसप्राप्तिनिदानतत्त्वं दीनं परित्राहि कृपाम्बुधे माम् ।। १८ ।।

यदंगभूतं जगदण्डमेतदनेककोटि प्रगुणं विभाति ।।

लीलाविलासस्थितिसृष्टिलीनं तन्मां सुदीनं परिरक्ष विष्णो ।। १९ ।।

एकं सुवर्णं कटकादिभेदैर्नाना यथा वा नभसोदितोऽर्कः ।।

आधारवैषम्यजलेषु तादृग्विभाव्यसे निर्गुण एक एव ।। 2.2.3.२० ।।

अशेषसंपूर्णरुचिप्रहीणोपादानसंकल्पविवर्जितोऽपि ।।

दीनानुकंपानुगुणं बिभर्षि युगे युगे देहमपारशक्ते ।। २१ ।।

त्वत्पादपद्मं जगदीश पूर्वमसेव्यतानात्मधिया मया यत् ।।

तत्कर्मणा दारुणपाकभाजं दीनं परित्राहि कृपांबुधे माम् ।। २२ ।।

अशेषलोकस्थितिसृष्टिलीनविलासि यत्ते त्रिगुणं विभाति ।।

वपुर्महात्मन्महदादिहेतुर्हेतोर्नमस्ते प्रकृतेः परस्य ।। ।। २३ ।।

सर्वत्र गत्वा बृहदप्रमेयं प्रवर्द्धमानं त्वयि बृंहितं च ।।

तद्ब्रह्मरूपं परिणामहेतुं स्वाध्यात्मविश्वात्मकमाश्रयामि ।। २४ ।।

एकार्णवे महाघोरे नावस्थातुं प्रदेशभूः ।।

अस्ति लक्ष्मीपते मेघवारिवातप्रकंपनात् ।। २५ ।।

त्राहि विष्णो जगन्नाथ मग्नं संसारसागरे ।।
मामुद्धरास्माद्गोविंद कृपापांगविलोकनात ।। २६ ।।
।। श्रीरुवाच ।। ।।
स्तुवंतमेवं ब्रह्मर्षि साक्षान्नारायणो विभुः ।।
विलोक्यानुग्रहदृशा वाक्यं चेदमुवाच ह ।। २७ ।।
।। श्रीभगवानुवाच ।। ।।
मार्कंडेय सुदीनोऽसि मामज्ञाय द्विजोत्तम ।।
दुश्चरं तु तपस्तप्तं दीर्घायुस्तेन केवलम् ।। २८ ।।
शयानं पत्रपुटके पश्य कल्पवटोर्ध्वगम ।।
बालस्वरूपं सर्वेषां कालात्मानं महामुने ।।
प्रविश्य विस्तृतं वक्त्रं तत्रावस्थातुमर्हसि ।। २९ ।।
।। ।। श्रीरुवाच ।। ।।
एवमुक्तो भगवता स मुनिर्विस्मिताननः ।। 2.2.3.३० ।।
आरुह्य ददृशे बालरूपं तस्याविशन्मुखे ।।
प्रविष्टः कंठमार्गेण महायामं महोदरम् ।। ३१ ।।
तत्रासौ ददृशे विप्रो भुवनानि चतुर्दश ।।
ब्रह्मादिदिक्पालसुरान्सिद्धगंधर्वराक्षसान् ।। ३२ ।।
ऋषीन्दिव्यऋषींश्चैव भूतलं सागरांकितम् ।।
नानातीर्थैर्नदीभिश्च पर्वतैः काननैस्तथा ।। ३३ ।।
लक्षितं पत्तनपुरं ग्रामखर्वटकैर्युतम् ।।
पातालानि तथा सप्त नागकन्याः सहस्रशः ।। ३४ ।।
महार्घ्यमणिसौधैश्च सुधापात्रैः समुज्ज्वलैः ।।
अनर्घ्यमणिभिर्नागैः सेवितं परमाद्भुतम् ।। ।। ३५ ।।
जगतां धारिणं शेषं सहस्रफणमंडितम् ।।
व्याकर्तारमशेषाणां शास्त्राणां शिष्यमध्यगम् ।। ३६ ।।
ब्रह्मांडोदरगं वस्तु यत्किंचित्परमेष्ठिना ।।
सृष्टं सर्वं ददृशेऽसौ तत्कुक्षौ स महामुनिः ।। ३७ ।।
नापश्यदंतं कुक्षेस्तु भ्रममाण इतस्ततः ।।

ततो विनिष्क्रम्य पुनर्ददृशे च मया सह ।। ३८ ।।

पूर्वमालक्षितं यद्वदास्थितं पुरुषोत्तमम् ।।

विस्मयोत्फुल्लनयनः प्रणिपत्येदमब्रवीत् ।। ३९ ।।

।। मार्कंडेय उवाच ।। ।।

भगवन्देवदेवेश किमद्भुतमिदं प्रभो ।।

महाप्रलयसंरोधे सृष्टिरत्र विभाव्यते ।। 2.2.3.४० ।।

त्वन्माया दुरवच्छेद्या कथं वै ज्ञायते मया ।। ।। ४१ ।।

।। श्रीभगवानुवाच ।। ।।

मुने क्षेत्रमिदं चित्रं शाश्वतं मे विभावय ।।

न सृष्टिप्रलयावत्र विद्येते न च संसृतिः ।। ४२ ।।

सदैकरूपं पुरुषोत्तमाख्यं मुक्तिप्रदं मामिह संप्रबुध्य ।।

अत्र प्रविष्टो न पुनः प्रयाति गर्भस्थितिं सांद्रसुखस्वरूपः ।। ४३ ।।

इत्याज्ञप्तो भगवता मार्कंडेयो महामुनिः ।।

अत्र वासं करिष्यामीत्यन्यतीर्थपराङ्मुखः ।।

प्रहृष्टवदनः प्राह प्रणिपत्य जगद्गुरुम् ।। ४४ ।।

।। मार्कण्डेय उवाच ।। ।।

उवाच स तथा विष्णुं भक्तिश्रद्धासमन्वितः ।।

अनुगृह्णीष्व भगवन्क्षेत्रेऽस्मिन्पुरुषोत्तमे ।।

यथा स्थितो मृत्युवशं न व्रजे पुरुषोत्तम ।। ४५ ।।

।। श्रीभगवानुवाच ।। ।।

अत्र स्थितिं मे विप्रर्षे क्षेत्रे मोक्षप्रसाधके ।। ४६ ।।

करिष्यामि न संदेहो यावदाभूतसंप्लवम् ।।

प्रलयावसाने तीर्थं ते रचयिष्यामि शाश्वतम् ।। ४७ ।।

यत्तीरे तप आस्थाय मद्द्वितीयतनुं शिवम् ।।

आराध्य मदनुक्रोशान्मृत्युं जेष्यसि निश्चितम् ।। ४८ ।।

।। जैमिनिरुवाच ।। ।।

एवं पुरा दत्तवरो मार्कंडेयो महामुनिः ।।

न्यग्रोधवायव्यकोणे खातं चक्रेण वै हरेः ।। ४९ ।।

पावनं गर्तमास्थाय पूजयित्वा महेश्वरम् ।।

महता तपसा विप्रो जितवान्मृत्युमंजसा ।। 2.2.3.५० ।।

मुनेस्तस्यैव नाम्नायं प्रख्यातो गर्त उत्तमः ।।

यत्र स्नात्वा शिवं दृष्ट्वा वाजिमेधफलं लभेत् ।। ५१ ।। ।।

।। श्रीरुवाच ।। ।।

पञ्चक्रोशमिदं क्षेत्रं समुद्रांतर्व्यवस्थितम् ।।

द्विक्रोशं तीर्थराजस्य तटभूमौ सुनिर्मलम् ।। ५२ ।।

सुवर्णवालुकाकीर्णं नीलपर्वतशोभितम् ।।

योऽसौ विश्वेश्वरो देवः साक्षान्नारायणात्मकः ।। ५३ ।।

संयम्य विषयग्रामं समुद्रतटमास्थितः ।।

उपासितुं जगन्नाथं चतुःषष्टितमः प्रभुः ।। ५४ ।।

यमेश्वर इति ख्यातो यमसंयमनाशनः ।।

यं दृष्ट्वा पूजयित्वा तु कोटिलिंगफलं लभेत् ।। ५५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०४



।। श्रीरुवाच ।। ।।

सीमाप्रतीची क्षेत्रस्य शंखाकारस्य मूर्द्धनि ।।

सर्वकामप्रदो देवः स आस्ते वृषभध्वजः ।। १ ।।

शंखाग्रे नीलकण्ठः स्यादेतत्क्रोशं सुदुर्लभम् ।।

परमं पावनं क्षेत्रं साक्षान्नारायणस्य वै ।। २ ।।

सिंधुराजस्य सलिलाद्यावन्मूलं वटस्य वै ।।

शंखस्योदरभागस्तु समुद्रोदकसंप्लुतः ।। ३ ।।

यत्संपर्कात्समुद्रोऽत्र तीर्थराजत्वमागतः ।।

यथायं भगवान्मुक्तिप्रदो दृष्टिपथं गतः ।। ४ ।।

तथेदं मरणात्क्षेत्रं सिंधुः स्नानाद्विमुक्तिदः ।।

चिच्छेद ब्रह्मणः पूर्वं रुद्रः क्रोधात्तु पञ्चमम् ।। ५ ।।

तच्छिरो दुस्त्यजं गृह्णन्ब्रह्मांडं परिबभ्रमे ।।

अत्रागतो यदा ब्रह्मकपालं परिमुक्तवान् ।। ६ ।।

कपालमोचनं लिंगं द्वितीयावर्तसंस्थितम् ।।

कपालमोचनं पश्येत्पूजयेत्प्रणमेच्च यः ।। ७ ।।

ब्रह्महत्यादिपापानां कंचुकं विजहात्यसौ ।।

तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् ।। ८ ।।

तृतीयावर्तगामाद्यां शक्तिं मे विमलाह्वयाम् ।।

जानीहि धर्मराज त्वं भुक्तिमुक्तिफलप्रदाम् ।। ९ ।।

य इमां पूजयेद्भक्त्या प्रणमेत्कीर्तयेत्तु वा ।।

सर्वान्कामानवाप्नोति मुक्तिं चांते च विंदति ।। 2.2.4.१० ।।

नाभिदेशे स्थितं ह्येतत्त्रयं कुंडं वटो विभुः ।।

कपालमोचनाद्यावदर्द्धाशिनी प्रतिष्ठिता ।। ११ ।।

मध्यं शंखस्य जानीयात्सुगुप्तं चक्रपाणिना ।।

अर्द्धमश्नाति सलिलं महाप्रलयवर्द्धितम् ।। १२ ।।

सृष्ट्यादौ धर्मराजेयं शक्तिर्मेऽर्द्धांशिनी स्मृता ।।

तां दृष्ट्वा प्रणमेद्यस्तु भोगान्सोऽश्नाति शाश्वतान् ।। १३ ।।

सिन्धुराजस्य सलिलाद्यावन्मूलं वटस्य वै ।।

कीटपक्षि मनुष्याणां मरणान्मुक्तिदो मतः ।।१४।।

अन्तर्वेदी त्वियं पुण्या वांछ्यते त्रिदशैरपि ।।

यत्र स्थितां हि पश्यंति सर्वांश्चक्राब्जधारिणः ।।१५।।

पृथिव्यां यानि तीर्थानि गगने च त्रिविष्टपे ।।

सार्द्धत्रिकोटिसंख्यानि स्वर्गमोक्षप्रदानि वै ।। १६ ।।

तेषामयं तीर्थराजः कीर्तितः पुरुषोत्तमः ।।

सर्वेषां मुक्तिक्षेत्राणामिदं सायुज्यदं मतम् ।। १७ ।।

अत्र स्थिता न शोचंति जराजन्ममृतिष्वपि ।।

कुण्डं ह्येतद्रोहिणाख्यं कारुण्याख्यजलेन वै ।। १८ ।।

संभृतं तिष्ठते नित्यं स्पर्शनाद्बंधमुक्तिदम् ।।

अत्र प्रतिष्ठितं वारि प्रलये यत्प्रवर्द्धते ।। १९ ।।

अत्रैव लीयते पश्चात्तस्माद्रोहिणसंज्ञितम् ।।

तस्मात्ते माऽत्र चिंतास्तु स्वाधिकारविपर्यये ।। 2.2.4.२० ।।

मोक्षाधिकारिणामत्र नेश्वरस्त्वं परेतराट् ।।

धर्मराजं समादिश्य लक्ष्मीरेवं पुरः स्थितम् ।। २१ ।।

ब्रह्माणमाह जगतामंबा सप्रश्रया गिरा ।।

पितामह जगन्नाथ विदितं सर्वमेव यत् ।। २२ ।।

मोक्षदं सर्वजंतूनामेतत्क्षेत्रं समादिश ।।

कामाख्यं क्षेत्रपालं च विमलं वा तपास्थिता ।। २३ ।।

साक्षाद्ब्रह्मस्वरूपोऽसौ नृसिंहो दक्षिणे विभोः ।।

हिरण्यकशिपोर्वक्षो विदार्यायं प्रभोज्ज्वलः ।। २४ ।।

दर्शनादस्य नश्यंति पातकानि न संशयः ।।

भुक्तेर्मुक्तेश्च योग्यः स्यान्नात्र कार्या विचारणा ।। २५ ।।

अस्याग्रे संत्यजन्प्राणान्ब्रह्मसायुज्यमाप्नुयात् ।।

यत्किंचित्कुरुते कर्म कोटिकोटिगुणं भवेत् ।। २६ ।।

छायैषा कल्पवृक्षस्य नृसिंहार्केण भासिता ।।

तस्यां नश्यत्यविद्या हि ज्ञानतोऽज्ञानतो मृतौ ।। २७ ।।

वेदांतेषु प्रसिद्धैस्तैर्विज्ञानैः श्रवणादिभिः ।।

मूढानां दुर्लभैर्विप्रा विनाप्यत्र विमोचनम् ।। २८ ।।

अविमुक्ते मुमुक्षोस्तु कर्णमूले महेश्वरः ।।

दिशति ब्रह्मसंज्ञानं बोधोपायं कृपानिधिः ।। २९ ।।

तेन बुद्या समभ्यस्य क्रमान्मोक्षमवाप्नुयात् ।।

उपदेष्टुर्महिम्ना हि तस्य ज्ञानं न हीयते ।। 2.2.4.३० ।।

अत्र त्यजंति ये प्राणांस्तेषां तत्क्षण एव हि ।।

स्वरूपाज्जायते मुक्तिः संशयो माऽस्तु ते यम ।। ३१ ।।

गतागत प्रसक्तानां कर्मिणां मूढचेतसाम् ।।

वैवस्वत कदाचिन्नो विश्वासो ह्यत्र जायते ।। ३२ ।।

उत्सृज्य वारि गांगेयं स्वादु शीतं सुनिर्मलम् ।।

पिपासुः पल्वलं याति तद्वत्ते मूढचेतसः ।। ३३ ।।

भ्रमंति तीर्थान्यन्यानि त्यक्त्वैतत्क्षेत्रमुत्तमम् ।।

पलाशामोदकैस्तृप्ता लभंते श्रमजं फलम् ।। ३४ ।।

स्नानादब्धिदृशा देवश्छायया कल्पपादपः ।।

यत्र कुत्रापि च क्षेत्रं मरणान्मुक्तिदं नृणाम् ।। ३५ ।।

यो यत्र विषये भक्त्या विश्वासं कुरुते नरः ।।

स तु तेनैव मुच्येत नेदृशं तीर्थमस्ति वै ।। ३६ ।।

एतत्त्यक्त्वान्यतीर्थे वै विदधाति रुचिं तु यः ।।

नूनं स मायया विष्णोर्वंचितो लोभलालसः ।। ।। ३७ ।।

उपदेशेन बहुना न प्रयोजनमस्ति ते ।।

प्रत्यक्षो ह्यनुभूतोऽयं करटो विष्णुरूपधृक् ।। ३८ ।।

अन्तर्वेदीरक्षणार्थं शक्तयोऽष्टौ प्रकीर्तिताः ।।

उग्रेण तपसा पूर्वमहं रुद्रेण भाविता ।। ३९ ।।

पत्न्यर्थं सा मया सृष्टा गौरी तस्याथ भाविनी ।।

सर्वसौंदर्यवसतिर्वपुषो मे विनिर्गता ।। 2.2.4.४० ।।

तदादिष्टा मया भद्रे वचनं मे प्रियं कुरु ।।

अन्तर्वेदी रक्ष मम परितस्त्वं स्वमूर्तिभिः ।। ४१ ।।

सा तु तिष्ठति मत्प्रीत्या अष्टधा दिक्षु संस्थिता ।।

मंगला वटमूले तु पश्चिमे विमला तथा ।। ४२ ।।

शंखस्य पृष्ठभागे तु संस्थिता सर्वमंगला ।।

अर्द्धांशिनी तथा लंबा कुबेरदिशि संस्थिता ।। ४३ ।।

कालरात्रिर्दक्षिणस्यां पूर्वस्यां तु मरीचिका ।।

कालरात्र्यास्तथा पश्चाच्चंडरूपा व्यवस्थिता ।। ४४ ।।

एताभिरुग्ररूपाभिः शक्तिभिः परिरक्षितम् ।।

अल्पपुण्यस्य पुंसो हि स्थानमेतत्सुदुर्लभम् ।। ४५ ।।

एतासामष्टशक्तीनां दर्शनात्कीर्तनात्तथा ।।

नश्यंति सर्वपापानि हयमेधफलं लभेत् ।। ४६ ।।

रुद्राण्याश्चाष्टधा भेदं दृष्ट्वा रुद्रोऽपि शंकरः ।।

आत्मानमष्टधा भित्त्वा उपास्ते परमेश्वरम् ।।४७।।

आराध्य तपसा विष्णुं प्रार्थयद्वरमुत्तमम् ।।

यत्र त्वं देव तत्राहं वसेयं हि यथासुखम् ।। ४८ ।।

त्वामृते कमलाकांत नान्यन्निर्वाणकारणम् ।।

अंतर्यामिन्प्रभो मे त्वं त्वां विना विग्रहः कुतः ।।४९।।

मूढा ये त्वां न जानंति हृष्यंति विषयेऽशुचौ ।।

निर्मलांबरसंकाश त्वामहं शरणं गतः।।2.2.4.५०।।

।। ।। जैमिनिरुवाच ।। ।।

भगवानपि रुद्रं तं क्षेत्रपालं तथा विभुः ।।

स्थापयामास परितः स्वयं मध्ये व्यवस्थितः ।। ५१ ।।

कपालमोचनं नाम क्षेत्रपालं यमेश्वरम् ।।

मार्कण्डेयं तथेशानं बिल्वेशं नीलकंठकम् ।। ५२ ।।

वटमूले वटेशं च लिंगान्यष्टौ महेशितुः ।।

यानि दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा विमुच्यते ।। ५३ ।।

अत्र क्षेत्रे मृता ये च न तेषां तु प्रभुर्यमः ।।

यदर्थमागतस्त्वं हि तदन्यत्र प्रसाधय ।। ५४ ।।

तथाप्यसौ जगन्नाथो भक्तायात्मसमर्पकः ।।

यमेन तोषितो भक्त्या प्रपन्नार्तिहरः प्रभुः ।। ५५ ।।

सुदर्शनेन चक्रेण मायां च व्यवधास्यति ।।

अत्याज्येऽस्मिन्क्षेत्रवरे स्वर्णवालुकया वृते ।। ५६ ।।

तं यमं वंचयित्वा तु प्रस्थापय्य यमालयम् ।।

साधु मत्वा ततः प्राह ब्रह्माणं पुरतः स्थितम् ।। ५७ ।। ।

।। श्रीरुवाच ।। ।।

इंद्रद्युम्नो नाम राजा युगे सत्ये भविष्यति ।।

वैष्णवः सर्वयज्ञानामाहर्त्ता शास्त्रकोविदः ।। ५८ ।।

अत्रागत्य महाभक्तिं करिष्यति नृपोत्तमः ।।

भगवत्प्रीतये येन वाजिमेधसहस्रकम् ।। ५९ ।।

करिष्यते प्रजानाथ तदनुग्रहकारणात् ।।

एकदारुसमुत्पन्नश्चतुर्द्धा संभविष्यति ।। ।।। 2.2.4.६० ।।

दारवप्रतिमानानि विश्वकर्मा घटिष्यति ।।

प्रतिष्ठापयिता त्वं हि इंद्रद्युम्नप्रसादितः ।। ६१ ।।

अस्माकं सदृशानां च प्रतिमानां पितामह ।।

तद्रूपका प्रतिष्ठा हि घटना च भविष्यति ।। ६२ ।।

इति श्रुत्वा श्रियो वाक्यं चतुर्वक्त्रो यमश्च सः ।।

स्वंस्वं पुरं जग्मतुस्तौ मुदा परमया युतौ ।। ६३ ।।

क्षेत्रस्य महिमानं तं संस्मृत्य च मुहुर्मुहुः ।।

विस्मयेन च हर्षेण रोमांचांचितविग्रहौ ।। ६४ ।।

सांप्रतं मुनयस्तस्मिन्निंद्रद्युम्नप्रसादितः ।।

शंखचक्रधरः श्रीमान्नीलजीमूतसंनिभः ।। ६५ ।।

नीलाचलगुहांतःस्थो बिभ्रद्दारुमयं वपुः ।।

आस्ते लोकोपकाराय बलेन च सुभद्रया ।।।। ६६ ।।

सुदर्शनेन चक्रेण दारुणा निर्मितेन च ।।

सहितः प्रणतार्त्तीनां नाशनः करुणार्णवः ।। ६७ ।।

यं दृष्ट्वा पापबंधेन सुदृढेन विमुच्यते ।। ।।

सुकर्मौघपरीपाको युगपत्समुपस्थितः ।। ६८ ।।

पश्यतां भो मुनिश्रेष्ठास्तापत्रयसुधानिधिम् ।।

बहवो ह्यवतारा हि विष्णोर्दिव्याश्च मानुषाः ।। ।। ६९ ।।

अत्यद्भुतानि कर्माणि माहात्म्यं चापि वर्णितम् ।।

पारिचित्यान्मनुष्यांस्तु न मन्यंते सुरा अपि ।। 2.2.4.७० ।।

देवासुरमनुष्याणां गंधर्वोरगरक्षसाम् ।।

तिरश्चामपि भो विप्रास्तस्मिन्दारुमये हरौ ।। ७१ ।।

सर्वात्मभूते वसति चित्तं सर्वसुखावहे ।।

उपजीवंत्यस्य सुखं यस्यानन्यस्वरूपिणः ।। ७२ ।।

ब्रह्मणः श्रुतिवागाहेत्येतदत्रानुभूयते ।।

द्यति संसारदुःखानि ददाति सुखमव्ययम् ।। ७३ ।।

तस्माद्दारुमयं ब्रह्म वेदांतेषु प्रगीयते ।।

न हि काष्ठमयी मोक्षं ददाति प्रतिमा क्वचित् ।। ७४ ।।

कृतेनाकृतता विप्राः कदाचिन्नोपलभ्यते ।।

अकृतो ह्यपवर्गस्तु कृताद्वा दारुणः कथम् ।। ७५ ।।

अधिष्ठानं विना ब्राह्म्यमैश्वर्यं नोपलभ्यते ।।

रहस्यमेतत्परमं विष्णोः स्थानमनुत्तमम् ।। ७६ ।।

अलौकिकी सा प्रतिमा लौकिकीति प्रकाशिता ।।

कुत्र श्रुता वा दृष्टा वा प्रतिमा व्याहरेदिति ।। ७७ ।।

इंद्रद्युम्नाय स वरं तदा दारुवपुर्ददौ ।।

दीनानाथैकशरणं तरणं भववारिधेः ।। ७८ ।।

चराचर सदावंद्य चरणं तं परायणम् ।।

नारायणं जगद्योनिं सृष्टिसंहृतिकारणम् ।। ७९ ।।

मोक्षणं सर्वपापानां दारणं सकलापदाम् ।।

विभूतीनां विसरणं वरणं सर्वयोगिनाम् ।। 2.2.4.८० ।।

भरणं सर्वजंतूनां धरणं जगतामपि ।।

भाषणं सर्वभाषाणां दूषणं सर्वदुष्कृताम् ।। ८१ ।।

शोषणं सर्वपंकानां नीलाद्रिशरणं हरिम् ।।

शरणं प्रयात मुनयो ह्यनन्यशरणं विभुम् ।। ८२ ।।

निश्चेष्टो दारुवर्ष्मापि दिव्यलीलाविलासकृत् ।।

क्षमते स्वल्पभक्त्यापि सोपराधशतं नृणाम् ।। ८३ ।।

अत्र वः कथयिष्यामि चरितं पापनाशनम् ।।

लीलया दारुदेहस्य मुनयः परमात्मनः ।। ८४ ।।

कुरुक्षेत्रे समुद्भूतौ ब्राह्मणक्षत्रियावुभौ ।।

सखायौ जग्मतुः प्रीत्या एकाहारविहारिणौ ।। ८५ ।।

वृत्तच्युतौ निषिद्धानामाहर्त्तारौ विमोहितौ ।।

अस्वाध्यायवषट्कारौ स्वधास्वाहाविवर्जितौ ।। ६६ ।।

अपात्रभूतौ धर्मस्य महापातकदूषितौ ।।

मधुभक्षौ पण्ययोषित्सहवासौ मुदान्वितौ ।। ८७ ।।

पारलौकिकचिंता तु तयोः स्वप्नेपि नागता ।।

एवं प्रवर्तमानौ तावायुषोऽर्द्धं च निन्यतुः ।। ८८ ।।

एकदा भ्रममाणौ तौ यज्ञवाटमगच्छताम् ।।

शृण्वन्तो दूरतः स्तोत्रं शास्त्रशब्दं मनोहरम् ।। ८९ ।।

दृष्ट्वा तास्ताः क्रियाः सर्वाः श्रुतिसंचोदिता द्विजाः ।।

तौ तदा चक्रतुः श्रद्धां धर्मे वर्त्मन्यधार्मिकौ ।। 2.2.4.९० ।।

संस्मरंतौ स्वजातिं तौ पुंडरीकांबरीषकौ ।।

निंदन्तौ दुश्चरित्रं स्वं परस्परमभाषताम् ।। ९१ ।।।

कथमावां तरिष्यावो दुष्कृतार्णवमुल्बणम् ।।

इहैव जन्मन्यजरं बुद्धिपूर्वमुपार्ज्जितम् ।। ९२ ।।

न तच्छास्त्रं हि जानाति यदावाभ्यां च दुष्कृतम् ।।।

सञ्चितं तस्य घोरस्य प्रायश्चित्तं सुदुर्ल्लभम् ।। ९३ ।।

तथापि ब्राह्मणानेतान्ब्रह्मिष्ठान्वै सदोगतान् ।।

प्रणिपातप्रपन्नान्वै पृच्छावोऽत्र च निष्कृतिम् ।। ।। ९४ ।।

इति निश्चित्य तौ विप्रानभिवाद्याभ्यपृच्छताम् ।।

यथावत्कल्मषं स्वंस्वं विज्ञाप्य च मुहुर्मुहुः ।। ९५ ।।

ते तयोर्वचनं श्रुत्वा मीलिताक्षा द्विजोत्तमाः।।

नाब्रुवन्किंस्विदन्योन्यं वीक्षंतो विस्मिताननाः ।। ९६ ।।

अहो सुघोरकर्माणि संचितानि दुरात्मनोः ।।

येषु शास्त्रं पदं दातुं प्रायश्चित्ताय न ह्यलम् ।। ९७ ।।

शक्नुमो न वयं तस्मादनयोर्निष्कृताविति ।।

तेषां मध्ये सदोमुख्यः कश्चिद्वैष्णवपुंगवः ।। ९८ ।।

भगवद्भक्तिमाहात्म्य क्षपिताशेषकल्मषः ।।

तानुवाच विहस्येदं वाक्यं वाक्यविदां वरः ।। ९९ ।।

।। वैष्णव उवाच ।। ।।

भो द्विज क्षत्रदायाद पापराशेः सुदारुणात् ।।

मुक्तिं चेद्वांच्छतस्तूर्णं गच्छतं पुरुषोत्तमम् ।। 2.2.4.१०० ।।

क्षेत्रोत्तमं दारुमयो यत्रास्ते पुरुषोत्तमः ।।

इन्द्रद्युम्नस्य राजर्षेर्भक्त्यानुग्रहकृद्विभुः ।। १०१ ।।

तमाराध्य जगन्नाथं शंखचक्रगदाधरम् ।।

पापक्षयं वा मुक्तिं वा स्वेच्छया प्राप्स्यथ धुवम् ।। १०२ ।।

घोरदुष्कृततूलौघ दावाग्निसदृशस्तु सः ।।

तपसे तत्क्षयं नेतुं न शक्यं जन्मकोटिभिः ।। १०३ ।।

युगपत्संक्षयं याति यं दृष्ट्वा सर्वकिल्बिषम् ।।

तन्मा विलंबं कुरुतं प्रयातं तत्र सत्वरं ।। १०४ ।।

सुपुण्ये चोत्कले देशे दक्षिणार्णवतीरगे ।।

नीलाद्रिशिखरावासं व्रजतं शरणं विभुम् ।। १०५ ।।

सोऽभीष्टसिद्धिं वां देवः प्रदास्यति कृपानिधिः ।।

इत्यादिष्टौ ततो विप्रक्षत्रियौ हर्षसंयुतौ ।। १०६ ।।

तेनैव वर्त्मना विप्राः प्रयातौ पुरुषोत्तमे ।। १०७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०५



।। जैमिनि रुवाच ।। ।।

निर्विण्णचेतसौ तौ तु त्यक्त्वा वेश्यादिसंगतिम् ।।

ध्यायंतौ मनसा विष्णुं शुद्धाहारव्रतावुभौ ।। १ ।।

कालेन कियता प्राप्तौ नीलाद्रिनिलयं हरेः ।।

तीर्थराजजले स्नात्वा यथावद्विधिचोदितम् ।। २ ।।

प्रासादद्वारि तिष्ठंतौ साष्टांगं प्रणिपत्य च ।।

भगवंतं निरीक्षंतौ नापश्यतां तदा द्विजा ।। ३ ।।

विवर्णवदनौ देवमदृष्ट्वा चिंतयाकुलौ ।।

आरभेते ह्यनशनं भगवद्दर्शनावधि ।। ४ ।।

कीर्तयंते भगवतो नाम कल्मषनाशनम् ।।

तृतीयस्यां त्रियामायां ज्योतिरेकमपश्यताम् ।। ५ ।।

त्रीण्यहानि पुनस्तौ च तदोपावसतां स्थिरौ ।।

मध्ये सप्तमरात्रेस्तु भगवंतमपश्यताम् ।। ६ ।।

त्रिदशानां स्तुतीः श्रुत्वा दिव्यज्ञानौ बभूवतुः ।।

अपास्तपापनिर्मोकौ साक्षाद्देवमपश्यताम् ।। ७ ।।

शंखचक्रगदापाणि दिव्यालंकारभूषितम् ।।

रत्नपादुकयोः पृष्ठे विन्यस्तचरणांबुजम् ।। ८ ।।

व्याकोशपुंडरीकाक्षं प्रसन्नवदनं विभुम् ।।

वामपार्श्वे स्थितां लक्ष्मीं वामेनालिंग्य बाहुना ।। ९ ।।

नागवल्लीदलं बद्धमाददानं श्रिया हृतम् ।।

रत्नवेत्रकराः काश्चित्काश्चिच्चामरपाणयः ।। 2.2.5.१० ।।

गंधतैलप्रदीपास्तु रत्नवर्तिप्रदीपिकाः ।।

काश्चिद्दधानाः स्वकरैर्योवनाढ्याः सुभूषिताः ।।११।।

पश्चाद्रत्नमयं छत्रं बिभ्रती काचिदुज्ज्वला।।

धूपपात्रं मुखाभ्याशे कृष्णागुरुसुधूपितम् ।। १२ ।।

काचिद्दधाना प्रम्लोचां हसंती विग्रहश्रिया ।।

लीलालकदृशा देवाननुगृह्णंतमग्रतः ।। १३ ।।

बद्धांजलिपुटान्नम्रकन्धरान्स्तुवतः पृथक् ।।

सिद्धान्मुनिगणान्दिव्यान्सनकादीन्स्मितेन च ।। १४ ।।

नारदादींश्च गंधर्वान्दिव्यगानमनोहरान् ।।

दत्तावधानं श्रवणे लीलयैवानुकम्पिनम्।।१५।।

प्रह्लादादीन्वैष्णवाग्र्यान्स्वरूपं ध्यायतोऽग्रतः ।।

चित्ताकर्षणसंलीनां विदधानं स्वविग्रहे ।। १६ ।।

वक्षःस्थलप्रविलसत्कौस्तुभप्रतिबिंबितैः ।।

देवादिभिर्विश्वरूपमूर्तेः स्वस्याः प्रकाशकम् ।। १७ ।।

उपर्युपरि दिव्यायाः पुष्पवृष्टेरधः स्थितम् ।।

श्रीसन्निधानविगतश्रियमप्सरसां गणम् ।। ।। १८ ।।

पश्यंतं विविधं नित्यमङ्गहारमनोहरम् ।।

दिव्यलीलाविलासं तं दृष्ट्वा तौ द्विजबाहुजौ ।। १९ ।।

बभूवतुः क्षणात्सर्वविद्यानां पारगौ द्विजाः ।।

त्रिः परिक्रम्य देवेशं कृतांजलिपुटावुभौ ।।

साष्टांगपातप्रणतौ तुष्टुवाते मुदान्वितौ ।। 2.2.5.२० ।।

।। पुण्डरीक उवाच ।। ।।

नमस्ते जगदाधार सर्गस्थित्यंतकारण ।।

नारायण नमस्तेऽस्तु परमात्मन्परायण ।। २१ ।।

परमार्थस्त्वमेवैको भवाप्ययविवर्जितः ।।

नित्यानन्दस्वरूपं त्वां विदन्ति ध्यानचक्षुषः ।। २२ ।।

चिन्मात्रं जगतामीशमधिष्ठानं परात्परम् ।।

कथं नु मूढहृदयास्त्वां जानंति सुनिर्मलम् ।। २३ ।।

कामार्थलिप्सासंभ्रातचेतसोऽत्यंतदुःखिनः ।।

गतागतपथे श्रांताः सुखभाजः कदाचन ।। २४ ।।

अनुकंपय मां नाथ सुदीनं शरणागतम् ।।

मूढं दुष्कृतकर्माणं पतितं भवसागरे ।। २५ ।।

कोऽन्यस्त्वत्सदृशो बन्धुर्ब्रह्मांडे नाथ वर्त्तते ।।

स्वकर्त्तव्यानपेक्षो यो दीनानाथदयालुकः ।। २६ ।।

उच्चावचभ्रमाद्दुःखं जलयंत्रघटीमिव ।।

अजस्रमधिकर्त्तारं परित्राहि कृपांबुधे ।। २७ ।।

योगक्षेमाभिसंधाना ये मूढास्त्वामुपासते ।।

लीलाविमुक्तिदं ते वै त्वन्मायापरिमोहिताः ।। २८ ।

नारायणेति त्वन्नाम कीर्तितं तु यदृच्छया ।।

त्वत्तोऽधिकं जगन्नाथ चतुर्वर्गैकसाधनम् । २९ ।।

त्वं तु तैस्तैः पृथग्यज्ञैस्तास्ताः सिद्धीः प्रयच्छसि ।।

त्वमेकः शरणं नाथ पतितानां भवार्णवे ।। 2.2.5.३० ।।

ज्ञाननौकासमारूढः करुणाक्षेपणीकरः ।।

परं पारं प्रभो नेतुं संसाराब्धेर्विचेतनम् ।। ३१ ।।

त्वमेक ईशिषे भक्त्यानन्यया परिचिंतितः ।।

येऽन्ये मुक्तिप्रदा देवाः शास्त्रेषु परिनिष्ठिताः ।। ३२ ।।

दुःखाब्धिकुम्भयोनिं ते त्वद्भक्तिं प्रापयंति वै ।। ३३ ।।

तन्मे प्रसीद भगवन्पदपंकजे ते भक्तिं दृढां वितर नाथ भवाब्धिमुच्चैः ।।

घोरं सुदुस्तरममुं हि यया तरेयमष्टांगयोगजनितश्रमवर्जितोऽपि ।। ३९३ ।।

धर्मार्थकामनिचयैः कुमतिप्रगृह्यैः क्षुद्रैरमीभिरहिताल्पसुखैर्न कार्यम् ।

आज्ञापयांघ्रिनलिनद्वयचिंतनेद्ध सांद्रानुवर्धितसुखार्णवमज्जनं मे ।। ३५ ।।

स्तुत्वेत्थं जगदीशस्य पादपद्मांतिके द्विजः ।।

पपात त्राहि कृष्णेति वदन्वाष्पार्द्रया गिरा ।।

तस्थौ स पुनरुत्थाय कृतांजलिपुटः स्तुवन् ।। ३६ ।।

।। अम्बरीष उवाच ।। ।।

प्रसीद देव सर्वात्मन्नसंख्येयशिरोभुज ।।

असंख्य घ्राणनयनपाणिपाद नमोऽस्तु ते ।। ३७ ।।

षट्त्रिंशत्तत्त्वातीतोऽसि निष्प्रपंच प्रपंचकः ।।

चतुर्विधजगद्धाम विश्वमूर्ते नमोऽस्तु ते ।। ३८ ।।

एकपादस्त्रिपादश्च तीर्थपादोऽतरिक्षपात् ।।

यस्य पादोद्भवा गंगा पुनाति भुवनत्रयम्।।३९ ।।

ब्रह्महत्यादिपापानां शोधकं यस्य नाम वै ।।

कीर्तितं सर्वशुभदं नमस्तस्मै शुभात्मने।।2.2.5.४०।।

देव त्वन्नामकीर्त्यापि जायंते सर्वसिद्धयः।।

कौतुकात्त्वां हि मृग्यंति विद्वांसो बुद्धिशालिनः।। ४१।।

नाथ त्वत्पादसलिलं संश्रयात्तापहारकम्।।

तापत्रयाभिभूतस्य भक्तिं मेऽत्र दृढां कुरु।। ४२।।

अनन्यस्वामिनो मेऽद्य नास्त्यन्यत्प्रार्थनीयकम्।।

प्रणिपत्य जगन्नाथ त्वां प्रयाचे सहस्रधा ।।४३ ।।

समस्तपुरुषार्थस्य बीजं त्वत्पादपंकजे ।।

यावत्प्राणान्धारयामि तावद्भक्तिर्दृढास्तु मे ।।४४ ।।

सृष्टिं विनिर्ममे चेमां यया भक्त्या पितामहः ।।

संहरत्यखिलं रुद्रो लक्ष्मीश्चैश्वर्यदायिनी ।। ४५।।

दीनानुकंपिंस्तां भक्तिं प्रार्थये नान्यमानसः ।।

अनाद्य विद्यापंकेस्मिन्सुदृढे दुस्तरं भृशम् ।। ४६ ।।

निमग्नस्य जगन्नाथ निरालंबं प्रणश्यतः ।।

महामहिम्नस्त्वद्भक्तेर्नान्यदस्ति परायणम् ।। ४७ ।।

श्रुतिस्मृत्यादिसंभिन्नमार्गाः संमोहहेतवः ।।

त्वद्भक्तिमपहार्यैते न प्रवर्त्तितुमीश्वराः ।। ४८ ।।

अनन्यशरणं स्वामिन्ननुकम्पय मां विभो ।।

इति स्तुवञ्जगन्नाथपादपद्मांतिके मुदा ।। ४९ ।।

पपात दण्डवद्भूमौ प्रसीदेति वदन्मुहुः ।।

ततस्ते देवताः सर्वे स्तुत्वा संपूज्य केशवम् ।। 2.2.5.५० ।।

तल्लीलापांगसंतुष्टाः प्रयातास्त्रिदिवं पुनः ।।

तत उन्मीलितदृशौ पुण्डरीकांबरीषकौ ।। ५१ ।।

मायया मोहितौ विष्णोः स्वप्नदृष्टमबुध्यताम् ।।

यां दृष्ट्वा दिव्यलीलां हि साक्षात्पललचक्षुषा ।। ५२ ।।

पुनर्मानुषभावौ तौ दिव्यसिंहासनस्थितम् ।।
नीलजीमूतसंकाशं फुल्लपद्मायतेक्षणम् ।। ५३ ।।
शोणाधरं चारुनासं दिव्यकुण्डलभूषितम् ।।
शंखचक्रगदापद्मधारिणं वनमालिनम् ।। ५४ ।।
पीनोरस्कं चारुहारमनर्घ्यमुकुटोज्ज्वलम् ।।
श्रीवत्सकौस्तुभोरस्कं दिव्यांगदविभूषितम् ।। ५५ ।।
प्रलंबबाहुं दीनार्तपरित्राणसमुद्यतम् ।।
सुवर्णसूत्रसंनद्ध मध्यग्रंथिमणीयुतम् ।। ५६ ।।
दिव्य पीतांबरधरं दिव्यस्रग्गन्धभूषितम् ।।
स्वर्णपद्मासनासीनं सर्वांगालिंगितश्रियम् ।। ५७ ।।
प्रपन्नसंतापहरं सुधासागरमुल्बणम् ।।
अशेषवांछाफलदं कल्पवृक्षं सुपुष्पितम् ।। ५८ ।।
दक्षपार्श्वस्थितं तस्य ददृशाते हलायुधम् ।।
बिभर्त्ति येन ब्रह्मांडं बलेन महता विभुः ।। ५९ ।। ।
तं बलं नागराजानं फणासप्तकमंडितम् ।।
कैलासशिखरोत्तुंग धवलं कुण्डलोज्ज्वलम् ।। 2.2.5.६० ।।
विचित्रवनमालाढ्यं दिव्यनीलनिचोलिनम् ।।
सततं वारुणीक्षीब घूर्णोन्नयनपंकजम् ।। ६१ ।।
निम्नपृष्ठोन्नतोरस्कं कुण्डलीकृतविग्रहम् ।।
शंखचक्रगदापद्मसमुज्ज्वलचतुर्भुजम् ।। ६२ ।।
नानालंकाररुचिरं नतकल्मषनाशनम् ।।
तयोर्मध्ये स्थितां भद्रां सुभद्रां कुंकुमारुणाम् ।। ६३ ।।
सर्वलावण्यवसतिं सर्वदेव नमस्कृताम् ।।
लक्ष्मीं लक्ष्मीशहृदयपंकजस्थां पृथक्स्थिताम् ।। ६४ ।।
वराब्जधारिणीं देवीं दिव्यनेपथ्यभूषणाम् ।।
प्रपन्नकल्पलतिकां सर्वकल्मषनाशिनीन् ।। ६५ ।।
संसारार्णवमग्नानां तारिणीं देवतारणीम् ।।
वामपार्श्वस्थितं विष्णोरद्राष्टां चक्रमुत्तमम् ।। ६६ ।।

दार्वग्रनिर्मितं विप्राः स्वर्णभक्तिसमुज्ज्वलम् ।।

चतुर्द्धावस्थितं विष्णुं दृष्ट्वा तौ द्विजबाहुजौ ।। ६७ ।।

अरुणोदयवेलायां श्रमं सार्थममन्यताम् ।।

संस्मृत्य तां स्वप्नलीलां विस्मयं जग्मतुस्तदा ।। ६८ ।।

न दारुप्रतिमा चेयं साक्षाद्ब्रह्म प्रकाशते ।।

सदोगतानां विप्राणां वाक्यं श्रद्दधतुश्च तौ ।। ६९ ।।

क्वावां महापातकिनौ यातनाक्रमभागिनौ ।।

क्वेदं सुरसमाक्रांतस्थितं विष्णोः प्रदर्शनम् ।। 2.2.5.७० ।।

मूर्खयोरावयोरष्टादशविद्याप्रवीणता ।।

यस्मात्तस्मान्न च भ्रांतिर्ज्ञानं तत्समवादिनः ।। ७१ ।।

यदूचुर्दारवं ब्रह्म तीर्थराजतटे स्थितम् ।।

वटमूले प्रकाशंतं दृष्ट्वा जंतुर्विमुच्यते ।। ७२ ।।

तदेवायं जगन्नाथश्चतुर्द्धा संव्यवस्थितः।।

क्षितौ यदावतरति चतूरूपः प्रकाशते।। ७३।।

तदास्य संनिधावावां स्थास्यावः प्राणधारिणौ।।

यावन्नान्यत्र गच्छावः क्षुद्रकामपराङ्मुखौ ।। ७४ ।।

इति निश्चित्य मुनयो विष्णौ भक्तिपरायणौ ।।

नारायणाख्यं सततं जपन्तौ मुक्तिमागतौ ।। ।। ७५ ।।

।। जैमिनिरुवाच ।। ।।

प्रसंगात्कथितं ह्येतद्रहस्यं पापनाशनम् ।।

शृण्वंति ये तु चरितं पुण्डरीकांबरीषयोः ।। ७६ ।।

सततं च् कीर्तयंतश्च मुदा परमय युताः ।।

व्रजंति विष्णुनिलयं मुदा परमया युताः ।।

व्रजंति विष्णुनिलयं तेऽपि निर्द्धूतकल्मषाः ।। ७७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्या संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे पञ्चमोऽध्यायः ।। ५ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/h3h



।। मुनय ऊचुः ।। ।।

कस्मिन्देशे द्विजश्रेष्ठ तत्क्षेत्रं पुरुषोत्तमम् ।।

यत्र नारायणः साक्षाद्दारुरूपी प्रकाशते ।। १ ।।

।। जैमिनि रुवाच ।। ।।

उत्कलोनाम देशोऽस्ति ख्यातः परमपावनः ।।

यत्र तीर्थान्यनेकानि पुण्यान्यायतनानि च ।।२।।

दक्षिणस्योदधेस्तीरे स तु देशः प्रतिष्ठितः ।।

यत्र स्थिता वै पुरुषाः सदाचारनिदर्शनाः ।। ३ ।।

वृत्ताध्ययनसंपन्ना यज्वानो यत्र भूसुराः ।।

सृष्ट्यादौ क्रतवो वेदा वेदशास्त्रप्रवर्तकाः ।।४।।

अष्टादशानां विद्यानां निधानं संप्रकीर्तितम् ।।

गृहे गृहे निवसति लक्ष्मीर्नारायणाज्ञया ।। ५ ।।

लज्जाशीला विनीताश्च आधिव्याधिविवर्जिताः ।।

पितृमातृरताः सत्यवादिनो वैष्णवा जनाः ।। ६ ।।

न चात्रावैष्णवः कश्चिन्नास्तिको वापि वर्तते ।।

सर्वे परहितास्तत्र न लुब्धा न शठाः खलाः ।। ७ ।।

दीर्घायुषस्तत्र जनाः स्त्रियश्च पतिदेवताः ।।

सुशीला धर्मशीलाश्च त्रपाचारित्रभूषिताः ।। ८ ।।

रूपयौवनगर्वाढ्याः सर्वालंकारभूषिताः ।।

कुलशीलवयोवृत्तानुरूपाचारचंचवः ।। ९ ।।

स्वकर्मनिरतास्तत्र प्रजारक्षणदीक्षिताः ।।

क्षत्रिया दानशौंडाश्च शस्त्रशास्त्रविशारदाः ।। 2.2.6.१० ।।

यजंते क्रतुभिः सर्वे सततं भूरिदक्षिणैः ।।

दीप्यंते चित्तयो येषां यूपाः कांचनभूषिताः ।। ११ ।।

येषां गृहेष्वतिथयः कामनाधिकपूजिताः ।।
वैश्याश्च कृषि वाणिज्यगोरक्षावृत्तिसंस्थिताः ।। १२ ।।
देवान्गुरून्द्विजान्भक्त्या प्रीणयंति धनैरपि ।।
एकस्य द्वारि यातोऽर्थी न गच्छेदन्यवेश्मनि ।। १३ ।।
गीतकाव्यकलाशिल्पकुशलाः प्रियवादिनः ।।
शूद्राश्च धार्मिकास्तत्र स्नानदानक्रियारताः ।। १४ ।।
कर्मणा मनसा वाचा धनैश्च द्विजसेवकाः ।।
येऽन्ये संकरजातास्ते स्वेस्वे धर्मे प्रतिष्ठिताः ।। १५ ।।
न विपर्यंति ऋतवो नाकाले वर्षते घनः ।।
न सस्यहानिर्न मरुत्क्षुन्न पीडयति प्रजाः ।। १६ ।।
दुर्भिक्षमरके नात्र राष्ट्रभंगः प्रजायते ।।
नालभ्यं तत्र वस्त्वस्ति यत्किंचित्पृथिवीगतम् ।। १७ ।।
एवं सर्वगुणैर्युक्तो नानाद्रुमलताकुलः ।।
अर्जुनाशोकपुन्नाग तालहिंतालशालकैः ।। १८ ।।
प्राचीनामलकैर्लोध्रैर्बकुलैर्नागकेशरैः ।।
नारिकेलैः प्रियालैश्च सरलैर्देवदारुभिः ।। ।। १९ ।।
धवैश्च खदिरैर्बिल्वैः पनसैश्च कपित्थकैः ।।
चंपकैः कर्णिकारैश्च कोविदारैः सपाटलैः ।। 2.2.6.२० ।।
कदंबनिंबनिचुरलरसालामलकैस्तथा ।।
नागरंगैश्च जंबीरैर्नीपकैर्मातुलुंगकैः ।। २१ ।।
मंदारैः पारिजातैश्च न्यग्रोधागुरुचंदनैः ।।
खर्जूराम्रातकैः सिद्धैर्मुचुकुंदैः सकिंशुकैः ।। २२ ।।
तिंदुकैः सप्तपर्णैश्च अश्वत्थैश्च बिभीतकैः ।।
अन्यैश्च विविधैर्वृक्षैः प्रकीर्णः सुमनोहरैः ।। २३ ।।
मालतीकुंदबाणैश्च करवीरैः सितेतरैः ।।
केतकीवनषंडैश्च अतिमुक्तैः सकुब्जकैः ।। २४ ।।
एलालवंगकंकोलदाडिमैर्बीजपूरकैः ।।
श्रेणीकृतैः पूगवनैरुद्यानैः शतशो वृतः ।। २५ ।।

नानाद्रुमलताकीर्णः पर्वतैः सिंधुर्भिर्वृतः ।।

स एष देशप्रवर उत्कलाख्यो द्विजोत्तमाः ।। २६ ।।

ऋषिकुल्यां समासाद्य दक्षिणोदधिगामिनीम् ।।

स्वर्णरेखामहानद्योर्मध्ये देशः प्रतिष्ठितः ।। २७ ।।

सन्त्यत्र पुण्यायतने क्षेत्राणि सुबहून्यपि ।।

पूर्वं वस्तीर्थयात्रायां वर्णितानि मया द्विजाः ।।

भूस्वर्गः सांप्रतं ह्येष कथितः पुरुषोत्तमः ।। २८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्य ओढ्रदेशवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०७



।। मुनय ऊचुः ।। ।।

कस्मिन्युगे स तु नृप इन्द्रद्युम्नोऽभवन्मुने ।।

कस्मिन्देशेऽस्य नगरं कथं वा पुरुषोत्तमम् ।। ।। १ ।।

गत्वा च विष्णोः प्रतिमां कारयामास वा कथम् ।।

एतत्सर्वं विस्तरतः कथयस्व महामुने ।। २ ।।

याथातथ्येन सर्वज्ञ परं कौतूहलं हि नः ।। ३ ।।

।। जैमिनिरुवाच ।। ।।

साधु साधु द्विजश्रेष्ठा यत्पृच्छध्वं पुरातनम् ।।

सर्वपापहरं पुण्यं भुक्तिमुक्तिप्रदं शुभम् ।। ।। ४ ।।

चरितं तस्य वक्ष्यामि तथावृत्तं कृते युगे ।।

शृणुध्वं मुनयः सर्वे सावधाना जितेन्द्रियाः ।। ५ ।।

आसीत्कृतयुगे विप्रा इन्द्रद्युम्नो महा नृपः ।।

सूर्यवंशे स धर्मात्मा स्रष्टुः पंचमपूरुषः ।। ६ ।।

सत्यवादी सदाचारोऽवदातः सात्त्विकाग्रणीः ।।

न्यायात्सदा पालयति प्रजाः स्वा इव स प्रजाः ।। ७ ।।

अध्यात्मविज्ज्ञानशौंडः शूरः संग्रामवर्द्धनः ।।

सदोद्यतः सदा विप्रपूजकः पितृभक्तिमान् ।। ८ ।।

अष्टादशसु विद्यासु बृहस्पतिरिवापरः ।।

ऐश्वर्येण सुराधीशः कुबेरः कोषसंचये ।। ९ ।।

रूपवान्सुभगः शीली दाता भोक्ता प्रियंवदः ।।

यष्टा समस्तयज्ञानां ब्रह्मण्यः सत्यसंगरः ।। 2.2.7.१० ।।

वल्लभो नरनारीणां पौर्णमास्यां यथा शशी ।।

आदित्य इव दुष्प्रेक्ष्यः शत्रुपक्षक्षयंकरः ।। ११ ।।

वैष्णवः सत्य संपन्नो जितक्रोधो जितेंद्रियः ।।

राजसूयं क्रतुवरं वाजिमेधसहस्रकम् ।। १२ ।।

इयाज परमः श्रीमान्मुमुक्षुर्धर्मतत्परः ।।

एवं सर्वगुणोपेतः स पृथ्वीं पालयन्नृपः ।। १३ ।।

अवंतींनाम नगरीं मालवे भुवि विश्रुताम् ।।

उवास सर्वरत्नाढ्यां द्वितीयाममरावतीम् ।। १४ ।।

तत्र स्थितो नरपतिर्विष्णौ भक्तिमनुत्तमाम् ।।

चकार मनसा वाचा कर्मणा परमाद्भुताम् ।। १५ ।।

एवं प्रवर्तमानोऽसौ कदाचिच्छ्रीपतेर्विभोः ।।

पूजासमयमासाद्य देवार्चनगृहांतरे ।। १६ ।।

विद्वद्भिः कविभिश्चैव तीर्थयात्राप्रसिद्धिभिः ।।

दैवज्ञैः श्रोत्रियैः सार्द्धं पुरोहितमवस्थितम् ।। १७ ।।

आदृतो व्याजहारेद ज्ञायतां क्षेत्रमुत्तमम् ।।

यत्र साक्षाज्जगन्नाथं पश्यामोऽनेन चक्षुषा ।। १८ ।।

एवमुक्तो नृपाग्र्येण वैष्णवेन पुरोहितः ।।

तीर्थयातृव्रजं पश्यन्नुवाच प्रश्रितं वचः ।। १९ ।।

भोभोस्तीर्थाटनव्यग्रा धार्मिकास्तीर्थकोविदाः ।।

यदादिशति देवोऽयं युष्माभिस्तच्छ्रुतं किल ।। 2.2.7.२० ।।

विज्ञाय तस्याभिप्रायं कश्चित्सुबहुतीर्थगः ।।

उवाच वाग्ग्मी राजानं बद्धांजलिपुटं मुदा ।।२१।।

राजन्ननेकतीर्थानि व्यचारिषमहं प्रभो ।।

आशैशवात्क्षितितले श्रुतान्यन्यैस्तु यानि वै ।। २२ ।।

ओढ्रदेश इति ख्यातो वर्षे भारतसंज्ञिते ।।

दक्षिणस्योदधेस्तीरे क्षेत्रं श्रीपुरुषोत्तमम् ।। २३ ।।

यत्र नीलगिरिर्नाम समंतात्काननावृतः।।

तस्योत्संगे कल्पवृक्षः समंतात्क्रोशसंमितः ।। २४ ।।

तस्य छायां समाक्रम्य ब्रह्महत्यां व्यपोहति ।।

तस्य पश्चाद्दिशि ख्यातं कुंडं रौहिणसंज्ञितम् ।। ।। २५ ।।

तत्पूर्णं कारणांभोभिः स्पर्शनादेव मुक्तिदम् ।।

तस्य प्राक्तटमास्थाय नीलेंद्रमणिनिर्मिता ।। २६ ।।

तनुः श्रीवासुदेवस्य साक्षान्मुक्तिप्रदायिनी ।।

तत्र कुंडे तु यः स्नात्वा दृष्ट्वा तु पुरुषोत्तमम् ।। २७ ।।

अश्वमेधसहस्रस्य फलं प्राप्य विमुच्यते ।।

तत्रास्त आश्रमश्रेष्ठः ख्यातः शबरदीपकः ।। २८ ।।

पश्चिमस्यां दिशि विभोर्वेष्टितः शबरालयैः ।।

यस्मादेकपदीमार्गो येन विष्ण्वालयं व्रजेत् ।। २९ ।।

यत्र साक्षाज्जगन्नाथः शंखचक्रगदाधरः ।।

जंतूनां दर्शनान्मुक्तिं यो ददाति कृपानिधिः ।। 2.2.7.३० ।।

तत्रोषितं मया राजन्वर्षं श्रीपुरुषोत्तमे ।।

तुष्ट्यर्थं देवदेवस्य व्रतिना वनवासिना ।। ३१ ।।

प्रतिरात्रं भगवतो दर्शनाय दिवौकसाम् ।।

आगतानां महाराज दिव्यगंधो ह्यमानुषः ।। ३२ ।।

नानास्तुतिवचःकल्पपुष्पवृष्टिश्च लभ्यते।।

महिमैष न कुत्रापि विष्णोः स्थाने प्रकाशते ।। ३३ ।।

पौराणिकी प्रवृत्तिश्च श्रुता तत्र महीपते ।।

वायसो माधवं दृष्ट्वा तिर्यग्देहोऽपि मुच्यते ।। ३४ ।।

नाधिकारी पुण्यकृत्ये ज्ञानहीनोऽपि पार्थिव ।।

तृषार्त्तो रौहिणे कुंडे जलं पातुं समागतः ।। ३५ ।।

त्यक्त्वा कालवशात्प्राणान्विष्णुसारूप्यमाप्तवान् ।।

अहमासं पुरा मूर्खस्तत्प्रसादात्तु सांप्रतम् ।। ३६ ।।

अष्टादशसु विद्यासु शेषो वा स्यान्ममापरः ।।

मतिश्च निर्मला जाता विष्णोः पश्यामि नापरम् ।। ३७ ।।

त्वं यस्माद्विष्णुभक्तोऽसि सततं च दृढव्रतः ।।

अतस्तवोपदेशार्थमागतोऽहं तवांतिकम् ।। ३८ ।।

नो धनं न च भूमिं च त्वत्तः संप्रार्थ्यतेऽधुना ।।

व्यलीकमेतन्मा बुद्ध्वा तत्रस्थं श्रीधरं भज ।। ३९ ।।

एवमुक्त्वा तु जटिलः सर्वेषां पश्यतां तदा ।।

अंतर्द्धानं जगामाशु राजा परमविस्मयम् ।। 2.2.7.४० ।।

अवाप्य व्याकुलमतिः कथं मे निर्वहेदिति ।।

पुरोहितमुवाचेदं तस्यैवार्थस्य साधने ।। ४१ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

अमानुषमिदं वृत्तं श्रुत्वेदानीममानुषात् ।।

बुद्धिस्त्वरयते तत्र यत्रास्तेऽसौ गदाधरः ।। ४२ ।।

मम धर्मार्थकामा हि त्वदायत्ता द्विजोत्तम ।।

अविरुद्धास्त्वत्प्रसादात्त्रिवर्गः साधितो मया ।। ४३ ।।

इदानीं चेद्द्विजश्रेष्ठ त्वमत्रार्थे गमिष्यसि ।।

चतुर्वर्गस्तु संपूर्णः प्राप्तः स्यात्सांप्रतं मया ।। ४४ ।।

।। पुरोहित उवाच ।। ।।

बाढमेतत्करिष्यामि यथा द्रक्ष्यसि केशवम् ।।

वर्माच्छादितचक्षुर्भ्यां साक्षान्मुक्तिप्रदं विभुम् ।। ४५ ।।

एवमत्र यतिष्यामि तत्र सर्वे यथा वयम् ।।

वत्स्यामः ससहायाश्च क्षेत्रे श्रीपुरुषोत्तमे ।।४६।।

साफल्यं किमतो राजञ्जन्मिनो जन्मनो भवेत् ।।

पुरुषं तमसः पारं साक्षाद्द्रक्ष्यसि माधवम् ।। ४७ ।।

भ्राता विद्यापतिर्नाम कनीयान्मे व्रजिष्यति ।।

देशभ्रमणशीलैश्च चारैः सह तवाधुना ।। ४८ ।।

तत्र गत्वा जगन्नाथं दृष्ट्वा स हि गिरौ यथा ।।

कंटकावाससंस्थानं भूप्रदेशं प्रमीय च ।। ।। ४९ ।।

तूर्णं प्रवृत्तिमानेता श्रेयोऽस्माकं भविष्यति ।।

तस्य तद्वचनं श्रुत्वा राजा पुनरुवाच ह ।। 2.2.7.५० ।।

।। इन्द्रद्युम्न उवाच ।। ।।

साधु ब्रह्मन्समाधाय व्यवसायो विचारितः ।।

अहं प्रथमतोप्येतच्छ्रुत्वैव कृतनिश्चयः ।। ५१ ।।

तत्र क्षेत्रे भगवतः सन्निधौ निवसाम्यहम् ।।

तद्गच्छतु तव भ्राता यथेष्टं साधयिष्यति ।। ५२ ।।

इत्युक्त्वांतःपुरं राजा प्रविवेश मुदान्वितः ।।

पुरोहितोऽपि तान्सर्वान्यथावदनुपूर्वशः ।।५३।।

राजाज्ञया पूजयित्वा प्राहिणोत्स्वं स्वमाश्रमम् ।।

भ्रातरं सुमुहूर्ते च दैवज्ञकृतनिश्चये ।। ५४ ।।

प्रस्थापयामास तदा कृतस्वस्त्ययनं द्विजैः ।।

अपसर्पैः प्रत्ययिकैः पुष्पस्यन्दनमास्थितः ।। ५५ ।।

ततः संप्रस्थितो विप्राः स तु विद्यापतिर्द्विजः ।।

मनसा चिन्तयामास मध्ये स्यन्दनमास्थितः ।। ५६ ।।

अहो मे सफलं जन्म सुकल्या शर्वरी च मे ।।

द्रक्ष्यामि यद्भगवतो मुखपद्ममघापहम् ।। ५७ ।।

श्रवणाद्यैरुपायैर्यं यतमाना अहर्निशम् ।।

पश्यंति यतयः चेतः पुंडरीके व्यवस्थितम् ।। ५८ ।।

तमद्य नीलशिखरिशृंगस्थं बिभ्रतं वपुः ।।

वपुःसंबन्धहरणं साक्षाद्द्रक्ष्यामि चक्रिणम् ।। ५९ ।।

श्रुति स्मृतीहासपुराणवाक्यैर्यद्रूपमास्थापयितुं न शक्यम् ।।

तच्छ्रीनिधे रूपमदृष्टपूर्वं दृष्ट्वा तरिष्यामि भवांबुराशिम् ।। 2.2.7.६० ।।

यन्नामसंकीर्तनतस्त्रिवांहः संघः प्रणाशं स्मरतां प्रयाति ।।

तमद्य विश्वेश्वरमप्रमेयं साक्षात्करिष्यामि गिरौ वसन्तम् ।। ६१ ।।

यत्पादपद्मानननुसंहितस्य पदेपदे दुःखमुपार्जितस्य ।।

तमः प्रकांडप्रभवं कदाचिन्नात्माश्रितं कर्मभिरेति नाशम् ।। ६२ ।।

आराध्य सूक्ष्मं स्वगुहानिवासं यं पञ्चकोषावृतमात्मसंस्थम् ।।

वेदांतगीराह न चापि वेद वंदे स्वविद्यैकनिवेद्यमाद्यम् ।। ६३ ।।

ब्रह्मांडमालाकलितानुरोमं सहस्रमूर्द्धांघ्रिदृशं पुराणम् ।।

निःश्वासवातोत्थित वेदराशिं सर्वप्रपंचेशमहं प्रपद्ये ।। ६४ ।।

यन्मायया निर्मितकूटमेतत्सृष्टिक्षयस्थानविलासि रूपम् ।।

निरूपितारोपितहेयरूपस्वरूपहीनं प्रणवस्वरूपम् ।। ६५ ।।

तिर्यक्तृषाशांतिनिमित्ततोऽपि यदृच्छया यत्सविधं प्रयातः ।।

देहेन तेनैव सरूपमुक्तिमवाप तं दृष्टिपथं करिष्ये ।। ६६ ।।

अहो अहो मे खलु भाग्यशंसी यत्कोटिजन्मार्जितपुण्य एकः ।।

समुत्थितो मे खलु चर्मदृग्भ्यां विलोकयिष्ये जगदादिकंदम् ।। ६७ ।।

इत्थं संचिन्तयन्विप्रः प्रहृष्टेनांतरात्मना ।।

अतीतं बहुमध्वानं नाबुध्यद्रथवेगतः ।। ६८ ।।

दिनमध्ये व्यतिक्रांते लंबिते बहुवासरे ।।

वर्त्मन्यदृश्यताग्रे तु देशो भुवनमंडनः ।। ६९ ।।

ओढ्रसंज्ञस्तु भो विप्राः क्षितिमंडलपावनः ।।

इत्थं पश्यन्वनांतानि गिरिदुर्गांश्च मार्गगान् ।।

सूर्यास्तमनवेलायां महानद्यास्तटेऽभवत् ।। 2.2.7.७० ।।

अवरुह्य रथाद्विप्रः कृत्वा चाह्निकमादृतः ।।

उपास्य पश्चिमां सन्ध्यां दध्यौ स मधुसूदनम्।। ७१ ।।

रथपृष्ठे स्थितो रात्रिं गमयित्वा त्वरान्वितः ।।

महानदीं समुत्तीर्य प्रातःकृत्यं समाप्य सः ।। ७२ ।।

चिंतयन्नेव गोविंदं प्रतस्थे रथमास्थितः ।।

पश्यन्भगवतो मार्गं श्रोत्रियाणां हि यज्वनाम् ।। ७३ ।।

वह्निवर्चस्विनां विप्रा ग्रामान्पूगैरलंकृतान् ।।

विलंघ्यैकाम्रकवनं यावदायाति स द्विजः ।। ७४ ।।

शंखचक्रगदापद्मधारिणो ददृशे जनान् ।।

जन्मांतरितमात्मानं बुबुधे दिव्यरूपिणम् ।। ७५ ।।

अवरुह्य रथात्तूर्णं साष्टांगं प्रणिपत्य च ।।

हर्षाश्रुपूर्णनयनो नान्यत्किंचिदपश्यत ।। ७६ ।।

केवलं मनसा विष्णुं पश्यन्बाह्ये च भो द्विजाः ।।

एवं व्रजन्यदा विप्रो ध्यायन्पश्यन्स्तुवन्हरिम् ।। ७७ ।।

अपश्यत्काननाकीर्णं कल्पन्यग्रोधभूषितम् ।।

नीलाचलं लिखंतं खं पश्यतां पापनाशनम् ।। ७८ ।।

अत्यद्भुतं निवसंति साक्षात्तनुभृतो हरेः।।

उपत्यकायामारूढः समंतान्मार्गयन्द्विजः।।७९।।

मार्गं न लेभे विप्रोऽसौ मुकुंदालोकनोत्सुकः।।

असुप्यत ततो भूमौ कुशानास्तीर्य वाग्यतः।।2.2.7.८०।।

दर्शने तस्य देवस्य तमेव शरणं ययौ।।

ततः शुश्राव वचनं गिरेः पश्चादमानुषम्।।८१।।

भगवद्भक्तिविषयं संलापं कुर्वतां मिथः।।

ततो विद्यापतिर्हृष्टोऽनुसरंस्तं जगाम वै।।८२।।

ददर्श शबरागारैर्वेष्टितं परितो द्विजाः।।

क्षेत्रस्य दीपसंस्थानं ख्यातं शबरदीपकम्।।८३।।

तत्र गत्वा शनैर्विप्रः प्रविश्य विनयान्वितः।।

ददर्श विष्णुभक्तांस्ताञ्छंखचक्रगदाधरान्।।८४।।

प्रणम्य शिरसा विप्रस्तस्थौ बद्धांजलिस्तदा ।।

ततोविश्वावसुर्नाम शबरः पलितांगकः ।। ८५ ।।

अवसाय हरेः पूजां पूजाशेषोपशोभितः ।।

संप्राप्तो गिरिमध्यात्तु तस्मिन्नेव क्षणे द्विजाः।।८६।।

आलोक्य तं द्विजो हर्षमुपयातो व्यचिंतयत्।।

एष प्राप्तो हरेः स्थानाच्छ्रांतो निर्माल्यभूषितः।।८७।।

वैष्णवाग्र्य इतो वार्तां विष्णोः प्राप्स्यामि दुर्लभाम्।।

चिंतयन्नेव विप्रोऽसौ शबरेणाभ्यभाषत।।८८।।

।।शबर उवाच।।

कुतः समागतो विप्र काननांतं सुदुस्तरम्।।

क्षुत्तृड्भिरतिश्रांतश्च सुखमत्रास्यतां चिरम्।।८९।।

पाद्यमासनमर्घं च दत्त्वा विश्वावसुर्द्विजम्।।

उवाच प्रश्रयगिरा प्रस्तुतं प्रतिपादयन्।। 2.2.7.९० ।।

फलैः पाकेन वा विप्र प्राणयात्रा भवेत्तव ।।

यत्तुभ्यं रोचते तद्वै दीयतेऽत्र मया द्विज ।। ९१ ।।

भाग्यं ममाद्य भगवञ्जीवितं सफलं च मे ।।

प्राप्तोऽसि मद्गृहं विप्र साक्षाद्विष्णुरिवापरः ।। ९२ ।।

इति ब्रुवाणं शबरं प्रोवाच द्विजपुंगवः ।।

न मे फलैर्न पाकेन कार्यं वैष्णवपुंगव ।। ९३ ।।

यदर्थमागतं दूरात्साधो तत्सफलं कुरु ।।

इन्द्रद्युम्नस्य नृपतेरवंतिपुरवासिनः ।। ९४ ।।

पुरोहितोऽहं संप्राप्तो विष्णोर्दर्शनलालसः ।।

राज्ञाग्रे तैर्थिकानां हि समाजावसरे श्रुतम् ।। ९५ ।।

तीर्थक्षेत्रप्रसंगेन केनचित्प्रस्तुतं तदा ।।

तथा निवेदितं क्षेत्रं राजाग्रे जटिलेन वै ।। ९६ ।।

आनुपूर्व्याच्च तत्सर्वं कथयामास स द्विजः ।।

एतदर्थमहं साधो राज्ञा चोत्कण्ठितेन वै ।। ९७ ।।

प्रेषितोऽहं हरिं द्रष्टुमत्रस्थं नीलमाधवम् ।।

दृष्ट्वा यावन्नरपतेर्वार्त्तां नेष्यामि सोऽप्यहम् ।। ९८ ।।

निराहारो ध्रुवं साधो तन्मां विष्णुं प्रदर्शय ।। ९९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे सप्तमोऽध्यायः ।। ७ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०८



।। जैमिनिरुवाच ।। ।।

इत्युक्तस्तेन विप्रेण शबरश्चिंतयाकुलः ।।

अस्माकमुपजीव्योऽसौ रहस्यस्थो जनार्दनः ।। १ ।।

उपस्थितं नो दुर्दैवं येन स्यात्सार्वलौकिकः ।।

न दर्शयामि चेद्विप्रं शापं मेऽसौ प्रदास्यति ।। २ ।।

सर्वेषां ब्राह्मणो मान्यो विशेषादतिथिस्त्वयम् ।।

यस्मिन्विफलकामे तु द्वौ लोकौ विफलौ मम ।। ३ ।।

एवं विचारयन्विश्वावसुः शबरपुंगवः ।।

जनप्रवादं सस्मार पुराणं शबरालये ।। ४ ।।

अस्मिन्नंतर्हिते देवे भूम्यंतर्लीनमाधवे ।।

इन्द्रद्युम्नो नरपतिः शक्रतुल्यपराक्रमः ।। ५ ।।

मनुष्यवपुषा यो वै ब्रह्मलोकं व्रजेदपि ।।

सोऽस्मिन्प्रजाभिरागत्य वाजिमेधशतेन च ।। ६ ।।

इष्ट्वा दारुमयं विष्णुं चतुर्द्धा स्थापयिष्यति ।।

अस्य चेद्भाग्यमुत्पन्नं ब्राह्मणस्यातिथेर्भृशम् ।। ७ ।।

अंतर्द्धानं भगवतः सन्निधानमथो भवेत् ।।

तदेनं दर्शयिष्यामि नीलेंद्रमणिमच्युतम् ।। ८ ।।

न पौरुषेयं कस्यापि कर्तव्ये देवनिर्मिते ।।

इत्थं विचार्य मनसा शबरश्च पुनःपुनः ।। ९ ।।

उवाच विप्रं पुरतो ध्यायंतं विष्णुमव्ययम् ।। 2.2.8.१० ।।

।। शबर उवाच ।। ।।

अस्माभिः पूर्वतोऽप्येष उदंतः श्रुत एव हि ।।

इंद्रद्युम्नो नरपतिरत्र वासं करिष्यति ।। ११ ।।

ततोऽपि भाग्यवांस्त्वं हि यदग्रे नीलमाधवम् ।।

चक्षुषा पश्यसे ब्रह्मन्नेहि यामो ह्यधित्यकाम् ।। १२ ।।

इत्युक्त्वा तं करे धृत्वा वर्त्मना गहनं ययौ ।।

उपर्युपर्युपारुह्य शिलाविषमवर्त्मनि ।। १३ ।।

एकैकनरगम्ये च कंटकाचितदुर्गमे ।।

तमःप्राये पथि गतं बोधयन्वचसा द्विजम् ।। १४ ।।

मुहूर्ताभ्यां रौहिणस्य कुंडस्याविशतां तटे ।।

तं दृष्ट्वा सोऽब्रवीद्विप्रं कुंडमेतद्द्विजोत्तम ।। १५ ।।

रौहिणाख्यं महत्तीर्थं कारणं सर्वपाथसाम् ।।

अत्र स्नात्वा नरो याति वैकुंठभवनं द्विज ।। १६ ।।

एतस्य पूर्वभागेऽसो कल्पच्छायावटो महान् ।।

छायां यस्य समाक्रम्य ब्रह्महत्यां व्यपोहति ।। १७ ।।

एतयोरंतरे ब्रह्मन्निकुंजाभ्यंतरे स्थितम् ।।

पश्य साक्षाजगन्नाथं वेदांतप्रतिपादितम् ।। १८ ।।

दृष्ट्वा जहीहि सकलं विविधं पापसंचयम् ।।

इत ऊर्ध्वं न शोचस्व पतितो भवसागरे ।। १९ ।। ।।

।। जैमिनिरुवाच ।। ।।

स तु कुंडे द्विजः स्नात्वा संप्रहृष्टमनाः सुधी ।।

दूरात्प्रणम्य शिरसा मनसा वचसा हरिम् ।। 2.2.8.२० ।।

तुष्टाव चैकाग्रमना हर्षगद्गदया गिरा ।। २१ ।।

।। विद्यापतिरुवाच ।। ।।

प्रधानपुरुषातीत सर्वव्यापिन्परात्पर ।।

चराचरपरीणाम परमार्थ नमोऽस्तु ते ।। ।। २२ ।।

श्रुतिस्मृतिपुराणेतिहास संप्रतिपादितैः ।।

कर्मभिस्त्वं समाराध्य एक एव जगत्पते ।। २३ ।।

त्वत्त एतज्जगत्सर्वं सृष्टौ संपद्यते विभो ।।

त्वदाधारमिदं देव त्वयैव परिपाल्यते ।। २४ ।।

कल्पांते संहृतं सर्वं त्वत्कुक्षौ सावकाशकम् ।।

सुखं वसति सर्वात्मन्नंतर्यामिन्नमोऽस्तु ते ।। २५ ।।

नमस्ते देवदेवाय त्रयीरूपाय ते नमः ।।

चंद्रसूर्यादिरुपेण जगद्भासयते सदा ।। २६ ।।

सर्वतीर्थमयी गंगा यस्य पादाब्जसंगमात् ।।

पुनाति सकलाँल्लोकांस्तस्मै पावयते नमः ।। २७ ।।

हवींषि मंत्रपूतानि सम्यग्दत्तानि वह्निषु ।।

परिणामकृते तुभ्यं .जगज्जीवयते नमः ।। २८ ।।

यदंशमुपजीवंति जगंत्यानंदरूपिणः ।।

सर्वकल्मषहीनाय तस्मै ब्रह्मात्मने नमः ।। २९ ।।

निर्मलाय स्वरूपाय शुभरूपाय मायिने ।।

सर्वसंगविहीनाय नमस्ते विश्वसाक्षिणे ।। 2.2.8.३० ।।

बहुपादाक्षिशीर्षास्यबाहवे सर्वजिष्णवे ।।

सर्वजीवस्वरूपाय नमस्ते सर्वरूपिणे ।। ३१ ।।

नमस्ते कमलाकांत नमस्ते कमलासन ।।

नमः कमलपत्राक्ष त्राहि मां पुरुषोत्तम ।। ३२ ।।

असारसंसारपरिभ्रमेण निपीड्यमानं खलु रोगशोकैः ।।

मामुद्धरास्माद्भवदुःखजातात्पादाब्जयोस्ते शरणं प्रपन्नम् ।। ३३ ।।

।। जैमिनिरुवाच ।। ।।

इति स्तुत्वा सुरेशानं देवं प्रणवरूपिणम् ।।

प्रणतः प्रणवं मंत्रं जजाप पुरतो हरेः ।। ३४ ।।

जपांते शांतमनसं कृतांजलिमुपस्थितम् ।।

मन्यमानं कृतार्थं स्वं प्रोवाच शबरो द्विजम् ।। ३५ ।।

।। विश्वावसुरुवाच ।। ।।

कृतार्थस्त्वं प्रभुं दृष्ट्वा सांप्रतं द्विजपुंगव ।।

दिनांतोऽभूद्गृहं यावः क्षुधितोऽसि श्रमान्वितः ।। ३६ ।।

वासोऽप्यरण्ये हिंस्राणां नास्माकमुचिता स्थितिः ।।

यावद्भानोर्भाति भासस्तावद्यामो निजालयम् ।। ३७ ।।

इत्युक्त्वा ब्राह्मणं पाणौ गृहीत्वा शबरः पुनः ।।

आजगाम द्विजश्रेष्ठाः स्वाश्रमं त्वरयान्वितः ।। ३८ ।।

ब्राह्मणोऽपि जगन्नाथं ध्यायन्नानंदसागरम् ।।

क्षुत्तृषाश्रमजातानि दुःखानि बुबुधे न हि ।। ३९ ।।

शिलाविषममार्गेऽपि कंटकोत्करदुर्गमे ।।

व्रजन्न दुःखं लेभेऽसौ शरीरानास्थया मुदा ।। 2.2.8.४० ।।

एवं व्रजंतौ तौ विप्र शबरौ शबरालयम् ।।

सायाह्ने तमनुप्राप्तौ वैष्णवाग्र्यौ तु भो द्विजाः ।। ४१ ।।

तत्रातिथिमनुप्राप्तं ब्राह्मणं शबरोत्तमः ।।

भक्ष्यभोज्य विधानैश्च विविधैः समपूजयत् ।। ४२ ।।

ततोऽभितृप्तस्तद्दत्तैरुपचारैर्नृपोचितैः ।।

विस्मयं परमं लेभे शबरस्य सुदुर्लभैः ।। ४३ ।।

शबरोऽयं निवसति विषमे काननांतरे ।।

आरण्यकैर्वर्त्तमानः कथमस्य गृहांतरे ।। ४४ ।।

राजार्हभक्ष्यभोज्यानि सुलभान्यद्भुतं महत् ।।

इति विस्मयमापन्नं ब्राह्मणं शबरस्तदा ।। ४५ ।।

प्रोवाच स्निग्धवचसा विनयावनतो भृशम् ।। ४६ ।।

।। शबर उवाच ।। ।।

भो विप्र श्रमहीनोऽसि कच्चित्क्षुत्तृड्विवर्जितः ।।

आरण्यकानां भवने नागराणां कुतः सुखम् ।। ४७ ।।

अज्ञाता नागरी वृत्तिः शबरैस्तु विशेषतः ।।

राजोपजीविनां श्रेष्ठौ राजामात्यपुरोहितौ ।। ४८ ।।

तयो राजसमः पूज्यः पुरोधाः शास्त्रसंमतः ।।

इन्द्रद्युम्नो नरपतिः सार्वभौमः प्रतापवान् ।। ४९ ।।

त्वयि तुष्टे स संतुष्टो ध्रुवं विप्र भविष्यति ।।

इत्युक्तवत्यरण्यस्थे स तु प्रीततरो द्विजः ।।

उवाच शबरं प्रीत्या विनयाद्भुतवादिनम् ।। 2.2.8.५० ।।

।। विद्यापतिरुवाच ।। ।।

साधो मदुपचाराय हृतान्येतानि यानि ते ।।

वस्तुन्यमानुषाणीह यान्यदृष्टानि राजभिः ।। ५१ ।।

चित्रमेतद्दिव्यवस्तुसंचयः शबरालये ।।

एतत्ख्यातुं कौतुकं मे साधो संवर्द्धते महत् ।। ५२ ।।

।। शबर उवाच ।। ।।

एतत्प्रकाशितुं विप्र मतिर्नोत्सहते मम ।।

तथापि ते द्विजश्रेष्ठाऽतिथिभक्त्या वदाम्यहम् ।। ५३ ।।

शक्रादयो देवगणाः समायान्त्यन्वहं द्विज ।।

दिव्योपचारानादाय पूजनाय जगत्पतेः ।। ५४ ।।

पूजयित्वा जगन्नाथं स्तुत्वा नत्वा च भक्तितः ।।

गीतशवादित्रनृत्यैश्च संतोष्य पुरुषोत्तमम् ।। ५५ ।।

पुनः प्रयांति सततं त्रिदिवं सुरसत्तमाः ।।

दिव्यान्येतानि वस्तूनि निर्माल्यानि जगत्पतेः ।। ५६ ।।

दत्तानि तुभ्यं विदुषे कथं विस्मयते भवान् ।।

विष्णोर्निर्माल्यभोगेन क्षीणरोगजरा वयम् ।। ५७ ।।

सपुत्रबांधवाः सर्वे निवसामोऽयुतायुषः ।।

विष्णुनिर्माल्यभोगेन क्षीयते पापसंहतिः ।। ५८ ।।

न तच्चित्रं द्विजश्रेष्ठ येन स्यान्मुक्तिभाजनम् ।।

श्रुत्वैतद्दुर्लभं कर्म ब्राह्मणो रोमहर्षणः ।। ५९ ।।

आनंदाश्रुविलुप्ताक्षः स्वं कृतार्थममन्यत ।।

अहो शबरजन्मासौ पश्यत्यव्ययमीश्वरम् ।। 2.2.8.६० ।।

तदुच्छिष्टं दिव्यभोगमुपभुंक्ते दिवानिशम् ।।

नान्योऽस्य सदृशो लोके पृथिव्यां सचराचरे ।। ६१ ।।

यादृशो विष्णुभक्तोऽयं शबरो नीलपर्वते ।।

किं गत्वा स्वगृहे मेऽद्य कुटुंबेनाऽसुखात्मना ।। ६२ ।।

अनेन सख्यं निष्पाद्य स्थास्याम्यत्र वनांतरे ।।

चिन्तयित्वा चिरं विप्रः श्रीकृष्णासक्तमानसः ।। ६३ ।।

पुनः प्रोवाच शबरं मयि ते चेदनुग्रहः ।।

साधो सख्यं त्वया कार्यमिति मे निश्चयो महान् ।। ६४ ।।

किं गत्वा सेवया राज्ञः परत्रासुखहेतुना ।।

अत्र स्थित्वा त्वया सार्धमुपास्य मधुसूदनम् ।। ६५ ।।

यथा पुनर्देहबंधो यतिष्ये न भवेन्मम ।।

साधु मित्र त्वया सार्द्धं भाग्यान्मे संगमोऽभवत् ।। ६६ ।।

दुस्तारं भवसंसारं तरिष्ये त्वत्प्रसादतः ।।

सारमेतत्प्रशंसंति संसारे भवसागरे ।। ६७ ।।

यद्वैष्णवेन मित्रत्वं दुःखसंसारपारदम् ।।

मित्रस्य सहवासेन पुनः प्रत्यक्षमेष्यति ।। ६८ ।।

भगवान्पुण्डरीकाक्षः शंखचक्रगदाधरः ।।

इंद्रद्युम्नो नरपतिर्मयि प्रत्यागते सखे ।। ६९ ।।

भगवंतं समाराद्धुमिहैव स निवत्स्यति ।।

प्रासादं विपुलं चात्र चिकीर्षुर्भगवत्प्रियम् ।। 2.2.8.७० ।।

सहस्रमुपचाराणां पूजनाय जगत्पतेः ।।

रचयिष्यामीति महत्प्रतिज्ञासीन्महीपतेः ।। ७१ ।।

प्रतिश्रुतं तत्पुरतः प्रीतस्तन्मेऽनुमन्यताम् ।। ७२ ।। ।।

।। शबर उवाच ।। ।।

सखे पुरातनी वार्त्ता प्रसिद्धैवात्र तादृशी ।। ७३ ।।

त्वया यथैव कथितं इन्द्रद्युम्नसमागमः ।।

केवलं माधवं तत्र न द्रक्ष्यति महीपतिः ।। ७४ ।।

अचिरादेव भगवान्स्वर्णवालुकयावृतः ।।

प्रतिजज्ञे यमायैतदन्तर्द्धानं गमिष्यति ।। ७५ ।।

महाभाग्यपरीपाकात्प्रत्यक्षोऽयं त्वया कृतः ।।

इन्द्रद्युम्नागमाभ्यासे ध्रुवं स व्यवधास्यति ।। ७६ ।।

एषोऽर्थस्तु त्वया मित्र न वक्तव्यो नृपाग्रतः ।।

आगत्य सोऽत्र नृपतिरदृष्ट्वा परमेश्वरम् ।। ७७ ।।

प्रायोपवेशव्रतवान्स्वप्ने दृष्ट्वा गदाधरम् ।।

तदादेशाद्दारुमयं प्रभोर्लिंगचतुष्टयम् ।। ७८ ।।

पूजयिष्यति भक्त्या च प्रतिष्ठाय स्वयंभुवा ।।

स्थितिरत्र हरेर्यावदावयोर्वंशसंस्थितिः ।। ७९ ।।

अनुग्रहाद्भगवतो नात्र कार्या विचारणा ।।

तदत्रार्थे सखे खेदं मा व्रज क्षिप्रमेव हि ।। 2.2.8.८० ।।

निर्वत्स्र्यतेऽचिरादेव मित्रेदानीं सुखं स्वप ।।

प्रातर्दृष्ट्वा पुनर्देवं नीलेन्द्राश्ममयं विभुम् ।। ८१ ।।

सिंधौ स्नात्वा तस्य तटे निवासाय महीपतेः ।।

द्रक्ष्यामः साधु संस्थानं यथाभिलषितं सखे ।। ८२ ।।

इत्यन्याश्च कथाः पुण्याः कृत्वा तौ च परस्परम् ।।

शुभस्थाने चास्वपतां शयने पल्लवास्तृते ।। ८३ ।।

प्रभातायां तु शर्वर्यां तीर्थराजोदकेन तौ ।।

स्नानं निर्वर्त्य विधिवन्माधवं प्रणिपत्य च ।। ८४ ।।

राजार्हस्थानं निर्णीय निवासाय गतौ पुनः ।।

तत्र मित्रेणाभिमन्त्र्य राज्ञो निर्देशकारणात् ।। ८५ ।।

रथमारुह्य विप्रः स त्ववंतीपुरमाययौ ।। ८६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादेऽष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ०९



।। जैमिनिरुवाच ।। ।।

प्रत्यागते ततो विप्रे सायाह्ने सुरसंकुले ।।

माधवार्चनवेलायां वातश्चंडगतिर्ववौ ।। १ ।।

सुवर्णवालुकाश्चासौ विचकार च सर्वशः ।।

तेनाकुलदृशो देवा न शेकुरवलोकने ।। २ ।।

श्रीकांतस्य तदा विप्रा दध्युस्ते पुरुषोत्तमम् ।।

यावद्ध्यानस्थिरदृशो मुहूर्तं ते दिवौकसः ।। ३ ।।

ध्यानांते वालुकाराशिं ददृशुस्ते न माधवम् ।।

रौहिणं च तथा कुंडं बभूवुर्व्याकुलेन्द्रियाः ।। ४ ।।

चिंतामवापुर्महतीं हाहेति रुरुदुर्भृशम् ।।

किमेतन्नो हि दुर्दैवमेकदा समुपस्थितम् ।। ५ ।।

दृशां सेचनकः श्रीशः क्षणाद्यन्नोपलभ्यते ।।

अपराधं किमस्माकं लक्षितं पुरुषोत्तम ।। ६ ।।

युगपत्सेवकान्सर्वानपहाय न दृश्यसे ।।

येषामर्थे जगन्नाथ स्वीचकर्थ कलेवरम् ।। ७ ।।

ताननाथान्परित्यज्य कानने किमुपेक्षसे ।।

स्वशरीरविभूतीर्नो विहाय कमलेक्षण ।। ८ ।।

किमकांडं रचयसि कथाशेषान्दिवौकसः ।।

तवांशभूतान्नः सर्वान्यज्वानः प्रयजंति वै ।। ९ ।।

त्वत्प्रीत्यै यज्ञपुरुष त्वदादिष्टफलप्रदान्।।

त्वदहंकारवर्ष्माणस्त्वदनुग्रहजीवनाः ।। 2.2.9.१० ।।

कांदिशीका कुत्र यामः सांप्रतं त्वदुपेक्षिताः।।

दिवि स्थानैश्च किं कार्यं त्वामनालोक्य माधव ।। ११ ।।

अकृतार्थास्त्वया हीना भविष्यामो वनेचराः ।।

निष्कलंकसुधाभानुं सुषमापरिभावुकम् ।। १२ ।।

त्वदास्यं चेन्न पश्यामो न यास्यामः सुरालयम् ।।

तप आस्थाय परममत्रैव संशितव्रताः ।। १३ ।।

वर्तामहे वन्यवृत्त्या जटावल्कलधारिणः ।।

यावत्त्वां पुंडरीकाक्ष विलोकिष्यामहे वयम् ।। १४ ।।

निसर्गकरुणांभोधे दीनान्नस्त्रातुमर्हसि ।।

अनाथान्दीनहृदयांस्त्वामेव शरणं गतान् ।। १५ ।।

त्वदनालोकशोकैकपारावारे निमज्जतः ।।

शुभदृष्टितरण्या नः समुद्धर जगत्पते ।। १६ ।।

एवं प्रलपतां तत्र सर्वेषां त्रिदिवौकसाम् ।।

अशरीरा तदा वाणी पुनः प्रादुर्बभूव ह ।। १७ ।।

अत्रार्थे भोः सुरा यत्नं कर्तुमर्हथ नो वृथा ।।

अद्यप्रभृति देवस्य दर्शनं दुर्लभं भुवि ।। १८ ।।

अत्र स्थानेऽपि तं नत्वा तद्दर्शनफलं लभेत् ।।

स्वयंभुवोंऽतिकं गत्वा हेतुं ज्ञास्यथ निश्चितम् ।। १९ ।।

तच्छ्रुत्वा त्रिदशाः सर्वे ब्रह्मणोंऽतिकमागताः ।।

यमानुग्रहवृत्तांतमवतारं च दारुणः ।। 2.2.9.२० ।।

श्रुत्वा संतुष्टमनसः सर्वे ते त्रिदिवं गताः ।।

स तु विद्यापतिर्विप्रो रथारूढोऽभ्यचिंतयत् ।। २१ ।।

मम कार्यं तु निष्पन्नं यद्दृष्टो नीलमाधवः ।।

आसमंतात्क्षेत्रमिदं परिभ्रम्यावलोकये ।। २२ ।।

अदृष्टपूर्वं परमं सुपुण्यं संकीर्तनं यस्य मलापहारि ।।

क्षेत्रोत्तमं श्रीपुरुषोत्तमाख्यं प्रदक्षिणीकृत्य व्रजामि तूर्णम् ।। २३ ।।

पृथ्वीप्रदक्षिणफलं शतधा भजंते पर्यंति ये सकलकल्मषदार्यरण्यम् ।।

नीलाद्रिमण्डिमिदं पुरुपोत्तमाख्यं मित्रं ममोपदिशति स्म समुद्रतीरे ।। २४ ।।

विचिंत्येत्थं द्विजश्रेष्ठः परिबभ्राम वै तदा ।।

क्षेत्रं पश्यन्वनं चैव नानाद्रुमगणान्वितम् ।। २५ ।।

नानापक्षिगणाघुष्टं कूजद्भ्रमरगुंफितम् ।।

अप्रविष्टार्ककिरणं छायातरुगणावृतम् ।। २६ ।।

सर्वर्तुकुसुमोपेतं लतागुल्मोपशोभितम्।।

नानाजलाशयाधारकूजत्सारससंकुलम्।। २७ ।।

पद्मकह्लारकुमुदविकचोत्पलराजितम् ।।

न जलं तत्र कुसुमपरिहीनं लतादिकम् ।। २८ ।।

परीत्य वेगात्तत्क्षेत्रं जगामाथ द्विजोत्तमः ।।

ध्यायन्निरशनः प्राज्ञः प्राप्यावन्तीं दिनात्यये ।। २९ ।।

दूतैरावेदितं पूर्वं दूरस्थस्यागतं द्विजाः ।।

श्रुत्वेंद्रद्युम्नो नृपतिः प्रहर्षं परमं ययौ।। 2.2.9.३० ।।

तदागमनमाकांक्षन्पूजयित्वा जनार्द्दनम्।।

विद्वद्भिर्ब्राह्मणैः सार्द्धं तस्थौ संहृष्टमानसः ।। ३१ ।।

एतस्मिन्नंतरे विप्राः स तु विद्यापतिर्द्विजः।।

प्रावेशिकैर्वेत्रहस्तैर्दौवारिकपुरःसरैः।।३२।।

निर्दिष्टमार्गः पौरैश्चाऽनुमतः कौतुकान्वितैः।।

निर्माल्यमालां नीलाख्य माधवस्य सुशोभनाम्।।३३।।

निधाय पाणौ राजाग्रे प्रविवेश त्वरान्वितः।।

तं दृष्ट्वा नृपतिः सोऽथ समुत्थाय वरासनात् ।।

प्रसीद जगदीशेति वदन्नंतिकमभ्यगात् ।। ३४ ।।

अद्य मे जीवितं जातं सफलं जन्मकर्मणा ।।

निर्माल्यमालावपुषं यत्पश्यामीहमाधवम् ।। ३५ ।।

मालां मुकुन्दशिरसोऽनुपमप्रमोदलाभाधरीकृतसुरद्रुमकांतगन्धाम् ।।

अन्धीकृतालिनिचयां पवनप्रसारिगन्धप्रणाशितजगत्कलुषां नमामि ।। ३६ ।।

यत्पादपंकजगलद्रजसोनुषंगा ब्रह्मादयः परमसंपदमापुरस्य ।।

विष्णोः कलेवरसमुज्ज्वलितांगरागसंसक्तपुष्पनिलयां प्रणतोस्मि मालाम् ।। ३७ ।।

पद्मां हृत्पद्मवसतिं सपत्नीं या हसत्यसौ ।।

विकस्वरैः सुकुसुमैर्विष्ण्वंकस्थितिगर्विताम् ।। ३८ ।।

कुत्र स्थितेयमाहार्षीन्महिमानं स्रगुज्वला ।।

या श्रीनिधेः शरीरेऽऽभूत्सर्वांगव्यापिनी चिरम् ।। ३९ ।।

जय नीलाद्रिशिखरभूषणाघप्रदूषण ।।

प्रणतार्तिहर श्रीमंस्त्राहि मां शरणागतम् ।। 2.2.9.४० ।।

इति ब्रुवाणः क्षितिपो बाष्पगद्गदया गिरा ।।

जगाम शिरसा भूमिं स्फुरद्रोमांचकंचुकः ।। ४१ ।।

सोऽपि विद्यापतिर्विप्रः क्षपिताशेषकल्मषः ।।

दिव्यदेहो नृपस्याग्रे ध्यायन्माधवमास्थितः ।। ४२ ।।

तेजसा सर्वलोकानां पापानि क्षालयन्सुधीः ।।

अनुगृह्णातु देवस्त्वां नीलाद्रिशिखरालयः ।। ४३ ।।

श्रीपतेरियमाज्ञा ते मालारूपा प्रकाशिता ।।

द्रष्टुं क्षेत्रोत्तमगतं स्वं साक्षान्मुक्तिदायकम् ।। ।। ४४ ।।

इत्युच्चरन्नरपतेरामुमोच गले स्रजम् ।।

सोऽप्युत्थाय क्षितिपतिर्मालां हृदयलंबिनीम् ।। ४५ ।।

दृष्ट्वा मेने श्रियः कांतं साक्षाद्धृदयगामिनम् ।।

निधाय पाणी शिरसि दरमीलितलोचनः ।। ४६ ।।

आनंदाश्रुजलक्लिन्नवदनस्तुष्टुवे हरिम् ।। ४७ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

जयाखिलजगत्सृष्टिस्थितिसंहारशिल्पकृत् ।।

लीलाविश्ववपुर्लोमसंख्यब्रह्मांडभारभृत् ।। ४८ ।।

अंतर्यामिन्नशेषाणां प्रणतार्तिहर प्रभो ।।

ब्रह्मेंद्र रुद्रमुकुटकिर्मीरितपदांबुज ।। ४९ ।।

दीनानाथविपन्नैकसततत्राणतत्पर ।।

निर्व्याजकरुणावारिपारावार परात्पर ।। 2.2.9.५० ।।

त्वदेकशरणं दीनमनादिभ्रमनिर्भरम् ।।

परित्राहि जगन्नाथ भक्ताविरतवत्सल ।। ५१ ।।

इति स्तुवन्नरपतिः स्वासने समुपाविशत् ।।

गृहमेधिब्रह्मचारियतिवैखानसैर्वृतः ।। ।। ५२ ।।

अष्टादशसु विद्यासु कुशलैर्यज्वभिर्द्विजैः ।।

मीनैः स्थविरभृत्यैश्च सार्द्धं मंत्रिपुरःसरैः ।। ५३ ।।

विद्यापति पूजयित्वा बहुमानपुरःसरम् ।।

उपवेश्याग्रतः पीठे पृष्ट्वा कुशलमादितः ।। ५४ ।।

पुरुषोत्तमक्षेत्रस्य विष्णोर्नीलाश्मवर्ष्मणः ।।

महिमानं स्वरूपं च पप्रच्छावहितो मुदा ।। ५५ ।।

ब्राह्मणः क्षत्रियेणासौ पृष्टोनुभवमात्मनः ।।

भिल्लद्वीपप्रवेशादिमज्जनांतं सरित्पतेः ।। ५६ ।।

क्षेत्रोत्तमस्य वृत्तांतं कथयामास विस्तरात् ।।

नीलाद्रिरोहणं नीलमाधवस्य च दर्शनम् ।। ५७ ।।

स्नानं च रौहिणे कुण्डे महिमानं वटस्य च ।।

नृसिंहाद्यष्टशंभून शक्तीनामष्टसंस्थितिम् ।। ५८ ।।

रथेनाक्रमणाद्दृष्टौ क्षेत्रस्यायामविस्तरौ ।।

तत्सर्वं वर्णयामास यथावदनुपूर्वशः ।। ५९ ।।

तच्छ्रुत्वा चित्रमतुलं तैर्थिकावेदितं पुरा ।।

संप्रतीतो हृष्टमनाः पुनस्तं क्षितिपोऽब्रवीत् ।। २.२.९.६० ।।

।। इन्द्रद्युम्न उवाच ।। ।।

श्रुतपूर्वं तु भगवंस्त्वत्तोऽश्रौषं सुदुर्लभम् ।।

क्षेत्रोत्तमं द्विजश्रेष्ठ सांप्रतं वर्णयस्व मे ।। ६१ ।।

नीलेन्द्रमणिमूर्तेस्तु विष्णो रूपं यथातथम् ।।

।। विद्यापतिरुवाच ।। ।।

हंत ते कथयिष्यामि दिव्यां मूर्तिं जगत्पतेः ।। ६२ ।।

यां चर्मचक्षुषा दृष्ट्वा जायते मुक्तिभाजनम् ।।

नीलेन्द्रमणिपाषाणमयी मूर्तिः पुरातनी ।। ६३ ।।

यान्वहं ब्रह्मरुद्रेंद्रपुरोगैरर्चिता सुरैः ।।

आरोपितेयं दिव्या स्रक्पूजायां हि सुपर्वभिः ।। ६४ ।।

सेयं न म्लायति नृप न च गन्धेन रिच्यते ।।

दिने बहुतिथे यातेऽपीदृशी स्रग्धरोद्भवा ।। ६५ ।।

दिव्योपहारः निर्माल्यभक्षणात्क्षीणकल्मषम् ।।

मां न पश्यसि किं राजन्नतिमानुषवर्चसम् ।। ६६ ।।

सकृदप्यशनाद्यस्य क्षुत्पिपासाबलक्षयाः ।।

न बाधन्ते नृपश्रेष्ठ दृष्टेनादृष्टकल्पनम् ।। ६७ ।।

भुक्तिर्मुक्तिश्च वै राजन्न् तत्र युगपत्स्थिते ।।

न जरारोगशोकादिदुःखं तत्र हि विद्यते ।। ६८ ।।

यत्र साक्षाज्जगन्नाथः प्रसन्नवदनो विभुः ।।

फुल्लेंदीवरपत्राक्षः प्रपन्नामृतमुक्तिदः ।। ६९ ।।

इति श्रीस्कांदे महापुराण एकशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीपुरुषोत्तममाहात्म्ये जैमिनिऋषिसंवादे नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १०



।। इन्द्रद्युम्न उवाच ।। ।।

जन्मप्रभृति तत्र त्वं न प्रयातो द्विजोत्तम ।।

कथं विद्याद्भवान्दिव्यवृत्तांतं पुरुषोत्तमे ।। १ ।।

।। विद्यापतिरुवाच ।। ।।

तत्र स्थितोऽहं सायाह्ने भगवंतमुपागमम् ।।

तस्मिन्काले दिव्यगन्धो ववौ च शिशिरो मरुत् ।। २ ।।

उद्यतः संकुलः शब्दः श्रूयते स्म वियत्पथे ।।

क्रमाद्याहि प्रयाहीति स तु वर्णमयः स्वनः ।। ३ ।।

दिविष्ठानां पतत्पुष्पवृष्ट्याच्छादितपर्वतः ।।

समागमोऽभूत्सान्निध्ये वैकुंठस्य महीपते ।। ४ ।।

वीणावेणुमृदंगानां चर्चरीणां च निःस्वनः ।।

अभूतपूर्वस्तत्रासीद्दिव्यगानविमिश्रितः ।। ५ ।।

सहस्रमुपचाराणां प्रीतये परमेशितुः ।।

देवैः समर्पितं तत्र मनुष्यादृष्टपूर्वकम् ।। ६ ।।

संपूज्य विधिवद्देवं करमात्रोपलक्षिताः ।।

जयपूर्वैश्च तं स्तोत्रैः संतोष्य मधुसूदनम् ।। ७ ।।

यथागतं ते त्रिदशाः प्रययुस्त्रिदशालयम् ।।

तेषु यातेषु शबरः सखा विश्वावसुर्मम ।। ८ ।।

दिव्योपहारभोज्यानि माल्यं चेदं ददौ मम ।।

अनर्घ्यमेतदम्लानं श्रीराज्यसुखदायकम् ।। ९ ।।

अलक्ष्मीपापरक्षोघ्नं योग्यं तेनाहृतं मया ।।

शृणुष्व तस्य संस्थानं विष्णोर्यत्क्षेत्रमुत्तमम् ।। 2.2.10.१० ।।

अपूर्वशिल्पनैपुण्यं रूपं चास्य मनोहरम् ।।

न भूमिजन्मना पुंसा शक्यते गदितुं हि तत् ।।१ १।।

तद्भाग्यपौरुषाभ्यां तल्लक्षितं कथयामि ते ।।

समंताद्गहनाकीर्णं क्षेत्रं नीलाद्रिनाभिकम् ।। १२ ।।

आयामविस्तृतिभ्यां च विख्यातं क्रोशपंचकम् ।।

तीर्थराजस्य वेलायां स्वर्णवालुकयावृतम् ।। १३ ।।

अद्रेः शृंगे महानुच्चः कल्पस्थायी वटो महान् ।।

क्रोशायतः पुष्पफलवर्जितः पल्लवोज्ज्वलः ।। १४ ।।

सूर्यापक्रमणे तस्य छायां नापक्रमेत वै ।।

तस्य पश्चात्प्रदेशे हि कुंडं रोहिणसंज्ञकम् ।। १५ ।।

जलोद्गमान्नीलदृषदारोहणविभूषितम् ।।

बहिः स्फटिकवेदीभिश्चतुर्दिक्षु परीवृतम् ।। १६ ।।

अघसंघातहारीभिरद्भिः पूर्णं मनोरमम् ।।

तत्पूर्ववेदिकामध्ये न्यग्रोधच्छायशीतले ।। १७ ।।

इन्द्रनीलमयो देव आस्ते चक्रगदाधरः ।।

एकाशीत्यंगुलमितः स्वर्णपद्मोपरि स्थितः ।। १८ ।।

अष्टमीचन्द्रशकलशोभाविजयिभालभूः ।।

स्मेरेंदीवरयुग्मश्रीधिक्कारोद्यतलोचनः ।। १९ ।।

आननामृतभानूद्यत्संतापत्रयमोचनः ।।

नासापुटद्वयोद्भासितिलपुष्पप्रशोभनः ।। 2.2.10.२० ।।

वपुषोऽश्ममयत्वेऽपि सुस्मितस्नपिताधरः ।।

हाससंफुल्लगंडाभ्यां रुचिरं चिबुकं हनुः ।। २१ ।।

अनन्यपूर्वघटितं सृक्किणीयुगमंजसा।।

हासनिम्नाधरौ गंडौ चिबुकं सृक्किणी शुभे ।। २२ ।।

वहन्निदर्शनं देवो विश्वकर्मादिशिल्पिनाम् ।।

मकरास्यकर्णभूषाशोभिश्रुतियुगेन सः ।। २३ ।।

गुरुभार्गवयोर्मध्ये पूर्णचंद्रोपहासकः ।।

ग्रैवयशोभाजनककंठदेशेन पश्यताम् ।। २४ ।।

दक्षिणावर्तशंखस्य मुक्ताजन्माभिशंककृत् ।।

पीनायतस्कंधयुगजानुदीर्घचतुर्भुजः ।। २५ ।।

स्वच्छनिर्मलहारोपशोभकोरःस्थलो विभुः ।।
धत्ते चतुर्दशजगद्दिव्यकौस्तुभबिंबितम् ।। २६ ।।
निम्ननाभिह्रदाविष्टतनुरोमालिमंजुलः ।।
हारं त्रिवलिमध्येन स्थाणुत्वपरिणामकः ।। २७ ।।
सुरत्नमेखलादाम्ना किंकिणीमौक्तिकस्रजा ।।
जगल्लावण्यपुटके स्फिचौ देवस्य शोभतः ।। २८ ।।
जघनालंविमुक्तास्रक्पीतचैलोपशोभितम् ।।
जंघास्तंभयुगं मोक्षमांगल्यतोरणाश्रयम् ।। २९ ।।
वृत्तानुपूर्वजानुभ्यां मालया प्रपदीनया ।।
रत्नाढ्यवलयाभ्यां च शोभेते चरणौ विभोः ।। 2.2.10.३० ।।
हारकंकणकेयूर मुकुटाद्यैरलंकृतम् ।।
ज्ञानाहंकारकैश्वर्यशब्दब्रह्मणि केशवः ।। ३१ ।।
चक्रपद्मगदाशंखपरिणामानि धारयन् ।।
सर्वाशाद्योतको देवो नीलाद्रेरुपरि स्थितः ।। ३२ ।।
भक्त्या प्रणम्य दृष्ट्वा यं देहबंधात्प्रमुच्यते ।।
वामपार्श्वगता लक्ष्मीराश्लिष्टा पद्मपाणिना ।। ३३ ।।
वल्लकीवादनपरा भगवन्मुखलोचना ।।
सर्वलावण्यवसतिः सर्वालंकारभूषिता ।। ३४ ।।
तावपश्यं हि जगतः पितरावचलस्थितौ ।।
तूष्णींभूतौ स्मेरदृशाऽनुगृह्णंतौ च पश्यतः ।। ३५ ।।
सजीवौ तावबुधं भो दीनानुग्रहकारणात् ।।
छत्रीभूतफणावृंदः शेषः पश्चादवस्थितः ।। ३६ ।।
अग्रे व्यवस्थितं दृष्टं वपुर्बिभ्रत्सुदर्शनम् ।।
कृतांजलिपुटं तस्य पश्चाद्गरुडमास्थितम् ।। ३७ ।।
एवमद्भुतरूपं तं दृष्ट्वा साक्षाच्छ्रियः पतिम् ।।
चेतोरज्जुभिराकृष्टमिव तत्रैव धावति ।। ३८ ।।
अनेकजन्मसाहस्रैः सुकर्माण्यर्जितानि चेत् ।।
युगपत्परिपक्वानि यस्यासौ तं हि पश्यति ।। ३९ ।।

तीर्थस्नानतपोदानदेवयज्ञव्रतैरपि ।।
नालमालोकितुं मर्त्यस्तादृशं पुरुषोत्तमम् ।। 2.2.10.४० ।।
ये नीलमूर्तिं विमलांबराभं ध्यायंति विष्णुं पुरुषोत्तमस्थम् ।।
ते क्षीणबंधाः प्रविशंति विष्णोः पुरं हि यत्प्राप्य न शोचतीह ।। ४१ ।।
विद्याभिरष्टादशभिः प्रणीतं नानाविधं कर्मफलं नृणां यत् ।।
एकत्र तत्सर्वममुष्य विष्णोः संदर्शनस्यैति शतांशमानम् ।। ४२ ।।
किमत्र वाच्यं त्वधिकं क्षितींद्र पुंसो मतिर्यावदुपैति कामान् ।।
लभेत नीलाद्रिपतिं प्रणम्य ततोऽधिकंक्षेत्रभुवो महिम्ना ।। ४३ ।।
स एव दाता क्रतुभिः स यष्टा सत्यप्रवक्ता स तु धर्मशीलः ।।
सर्वैर्गुणैः सर्वभवैर्वरिष्ठो नीलाद्रिनाथः खलु येन दृष्टः ।। ४४ ।।
तत्र ये सेवकाः संति माधवस्य जगत्पतेः ।।
तेभ्यः सकाशान्माहात्म्यमिदं ज्ञातं मया नृप ।। ४५ ।।
तस्मिन्परंपरायातमादिसृष्टेः पुरातनम् ।।
प्रसिद्धमिदमाख्यानं श्रुत्वा तत्रागतो ह्यहम् ।। ४६ ।।
त्वदाज्ञया तत्र गत्वा दृष्ट्वा श्रीपुरुषोत्तमम् ।।
निवेदितं ते राजेंद्र यथेच्छसि तथा कुरु ।। ४७ ।।
।। इंद्रद्युम्न उवाच ।। ।।
आप्तवाक्याद्भगवतः श्रुत्वा रूपमघापहम् ।।
कृतकृत्योऽस्मि भगवन्दिव्यनिर्माल्यसंगमात् ।। ४८ ।।
बहुजन्मस्वर्जितानि क्षीणानि दुरितानि मे ।।
अधिकारी त्वहं जातो दर्शने श्रीपतेरिह ।। ४९ ।।
सर्वात्मनाहं यास्यामि राज्येन सुसमृद्धिना ।।
तत्रावासं करिष्यामि पुरदुर्गाणि चैव हि ।। 2.2.10.५० ।।
क्रतुना हयमेधेन यक्ष्ये प्रीत्यै मुरद्विषः ।।
शतोपचारैः श्रीनाथं पूजयिष्ये दिनेदिने ।। ५१ ।।
व्रतोपवासनियमैः प्रीणयिष्ये जगद्गुरुम् ।।
वाक्यामृतेन संतप्तं यथा मामभिषेक्ष्यति ।। ५२ ।।
दीनानुकंपी भगवान्साक्षान्नारायणो विभुः ।।

एवं स श्रद्धया भक्त्या संस्तुते यावदीश्वरम् ।। ५३ ।।

नारदस्तत्र संप्राप्तो भुवनालोककौतुकी ।।

तमायांतमृषिं दृष्ट्वा वैष्णवाग्र्यं विधेः सुतम् ।। ५४ ।।

आशशंस स्वकार्यस्य सिद्धिं नरपतिस्तदा ।।

उत्थाय सहसा विप्राः पाद्यार्घ्याचमनीयकैः ।।

वरासनस्थं प्रणतः प्रोवाचेदं कृतांजलिः ।। ५५ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

अद्य मे सफला यज्ञा दानमध्ययनं तपः ।। ५६ ।।

यन्मे गृहं समागच्छद्द्वितीया ब्रह्मणस्तनुः ।।

कृतार्थो यद्यपि मुने आगमानुग्रहात्तव ।। ५७ ।।

तथापि त्वत्प्रसादाय किमाज्ञां करवाणि ते ।।

किं प्रयोजनमुद्दिश्य भवनं मे पवित्रितम् ।। ५८ ।।

।। जैमिनिरुवाच ।। ।।

तच्छ्रुत्वा नृपतेर्वाक्यं भक्तिप्रश्रयकोमलम् ।।

उवाच ब्रह्मणः पुत्रः स्मितपूर्वं महीपतिम् ।। ५९ ।।

।। ।। नारद उवाच ।। ।।

इंद्रद्युम्न नृपश्रेष्ठ विमलैस्त्वद्गुणोत्करैः ।।

प्रीणिता देवताः सिद्धा मुनयो ब्रह्मणा सह ।। 2.2.10.६० ।।

स्वप्रतिष्ठा पृथग्योग्या गुणा एकैकशस्तव ।।

ब्रह्मणः सदने स्थित्यै पर्याप्तास्तु समीहिताः ।। ६१ ।।

अवतीर्णो नरं द्रष्टुं तिष्ठंतं बदराश्रमे ।।

तद्ध्यानावसरे ज्ञातो व्यवसायस्तवेदृशः ।। ६२ ।।

साधु व्यवसितं राजन्याभूत्ते बुद्धिरीदृशी ।।

सहस्रजन्मस्वभ्यासाद्भक्तिर्भवति भूपते ।। ६३ ।।

नीलाचलगुहावासे माधवे जगतां धवे ।।

पितामहो महाप्राज्ञो यमाराध्य जगत्पतिम् ।। ६४ ।।

विनिर्ममे सृष्टिमिमां लेभे पैतामहं पदम् ।।

तदन्वयप्रसूतोऽसि युक्ता ते भक्तिरीदृशी ।। ।।६५।।

चतुर्वर्गफला भक्तिर्विष्णौ नाल्पतपःफलम् ।।

अनाद्यविद्या सुदृढपञ्चक्लेशविवर्द्धिनी ।।६६।।

एकैवेयं विष्णुभक्तिस्तदुच्छेदाय जायते ।।

भवारण्ये प्रतिपदं दुःखसंकटसंकुले । ६७ ।।

नराणां भ्रमतां विष्णुभक्तिरेका सुखप्रदा ।।

निरालये द्वंद्ववातप्रोद्यतेस्मिन्सुदुस्तरे ।।६८।।

निमग्नानां भवांभोधौ विष्णुभक्तिस्तरिः स्मृता ।।

आश्रित्यैकां भगवतीं विष्णुभक्तिं तु मातरम् ।। ६९ ।।

सन्तः सन्तुष्टमनसो न तु शोचन्ति जातुचित् ।।

विष्णुभक्तिसुधापानसंहृष्टानां महात्मनाम् ।।2.2.10.७०।।

ब्राह्म्यं पदं स्वल्पलाभो भाजनानां विमुक्तये ।।

त्रिविधो योंऽहसा राशिः सुमहाञ्जन्मिनां नृप ।। ७१ ।।

विष्णुभक्तिमहादाववह्नौ स शलभायते ।।

प्रयागगंगाप्रमुखतीर्थानि च तपांसि च ।। ७२ ।।

अश्वमेधः क्रतुवरो दानानि सुमहांति च ।।

व्रतोपवासनियमाः सहस्राण्यर्जिता अपि ।। ७३ ।।

समूह एषामेकत्र गुणितः कोटिकोटिभिः ।।

विष्णुभक्तेः सहस्रांशसमोऽसौ न हि कीर्तितः ।। ।। ७४ ।।

।। जैमिनिरुवाच ।। ।।

विष्णुभक्तेस्तु माहात्म्यं श्रुत्वा ब्रह्मर्षिणोदितम् ।।

विष्णुभक्तेः स्वरूपं हि ज्ञातुकामः क्षितीश्वरः ।। ७५ ।।

नारदं पुनराहेदं वाक्यं सत्कारयुक्तिमान् ।। ७६ ।।

। इन्द्रद्युम्न उवाच ।। ।।

महिमा विष्णुभक्तेस्तु साधु प्रोक्तो महामुने ।।

तस्याः स्वरूप जिज्ञासा चिरान्मे हृदि वर्त्तते ।। ७७ ।।

लक्षणं वर्णयेदानीं भक्तेर्वैष्णवपुंगव ।।

त्वदन्यो न हि वक्ता स्याद्विज्ञातो मे महीतले ।। ७८ ।।

।। नारद उवाच ।। ।।

साधु राजंस्त्वया पृष्टं भक्तिलक्षणमुत्तमम् ।।
कथयिष्ये यथार्थं त्वां भक्तिभाजनमुत्तमम् ।। ७९ ।।
अपात्रे न हि वाच्येयं नरेंऽधे मलिनांतरे ।।
शृणुष्वावहितो राजन्प्रोच्यमानां मयानघ ।। 2.2.10.८० ।।
सामान्यतो विशेषाच्च विष्णोर्भक्तिं सनातनीम् ।।
अत्यन्तसुखसंप्राप्तौ विच्छेदे दुःखसंततेः ।। ८१ ।।
हेतुरेकोऽयमेवेति संश्रयाद्भक्तिरुच्यते ।।
त्रिधा सा गुणभेदेन तुरीया निर्गुणा मता ।। ८२ ।।
कामक्रोधाभिभूतानां दृष्ट्वा यान्यं न पश्यताम् ।।
लब्धये चाभिचाराय भक्तिः स्यान्नृप तामसी ।। ८३ ।।
यशसे चातिरिक्ताय परस्य स्पर्द्धयापि वा ।।
प्रसंगात्परलोकाय भक्तिः सा राजसी स्मृता ।। ८४ ।।
आमुष्मिकं स्थिरतरं दृष्ट्वा भावान्विनश्वरान् ।।
पश्यताश्रमवर्णोक्तान्धर्मान्नैव जिहासता ।। ८५ ।।
आत्मज्ञानाय या भक्तिः क्रियते सा तु सात्त्विकी ।।
जगच्चेदं जगन्नाथो नान्यं चापि च कारणम् ।। ८६ ।।
अहं च न ततो भिन्नो मत्तोसौ न पृथक्स्थितः ।।
हीनं बहिरुपाधीनां प्रेमोत्कर्षेण भावनम् ।। ८७ ।।
दुर्लभा भक्तिरैषा हि मुक्तयेऽद्वैतसंज्ञिता ।।
सात्त्विक्या ब्रह्मणः स्थानं राजस्या शक्रलोकताम् ।। ८८ ।।
प्रयांति भुक्त्वा भोगान्हि तामस्या पितृलोकताम् ।।
पुनरागत्य भूर्लोकं भक्तिं तां वैपरीत्यतः ।। ८९ ।।
तामसो राजसीं कुर्याद्राजसः सात्त्विकीं तथा ।।
सात्त्विको मुक्तिमाप्नोति कृत्वा चाद्वैतभावनाम् ।। 2.2.10.९० ।।
एकामपि समाश्रित्य क्रमान्मुक्तिपथं व्रजेत् ।।
विष्णुभक्तिविहीनस्य श्रौतस्मार्ताश्च याः क्रियाः ।। ९१ ।।
प्रायश्चित्तादिकं तीर्थं यात्रा कृच्छ्रादिकं तपः ।।
कुले प्रसूतिः शिल्पानि सर्वं लौकिकभूषणम् ।। ९२ ।।

कायक्लेशः फलं तेषां स्वैरिणी व्यभिचारवत् ।।

कुलाचारविहीनोऽपि दृढभक्तिर्जितेंद्रियः ।। ।। ९३ ।।

प्रशस्यः सर्वलोकानां न त्वष्टादशविद्यकः ।।

भक्तिहीनो नृपश्रेष्ठ सज्जातिर्द्धार्मिकस्तथा ।। ९४ ।।

नाल्पभाग्यस्य पुंसो हि विष्णौ भक्तिः प्रजायते ।।

यां तु संपाद्य यत्नेन कृतकृत्यो न सीदति ।। ९५ ।।

यया वेत्ति जगन्नाथं सा विद्या परिकीर्तिता ।।

येन प्रीणाति भगवांस्तत्कर्माशुभनाशनम् ।। ९६ ।।

विष्णुभक्तश्च संप्रोक्तस्ताभ्यां युक्तो दृढव्रतः ।।

यत्पादपांसुना विश्वं पूयते सचराचरम् ।। ९७ ।।

सृष्टिस्थितिविनाशानां स्वेच्छया प्रभवत्यसौ ।।

कि पुनः क्षुद्रकामानां भूमिस्वर्गादिसंपदाम् ।। ९८ ।।

वासुदेवस्य भक्तस्य न भेदो विद्यतेऽनयोः ।।

वासुदेवस्य ये भक्तास्तेषां वक्ष्यामि लक्षणम् ।। ९९ ।।

प्रशांतचित्ताः सर्वेषां सौम्याः कामजितेंद्रियाः ।।

कर्मणा मनसा वाचा परद्रोहमनिच्छवः ।। ।। 2.2.10.१०० ।।

दयार्द्रमनसो नित्यं स्तेयहिंसापराङ्मुखाः ।।

गुणेषु परकार्येषु पक्षपातमुदान्विताः ।। १ ।।

सदाचारावदाताश्च परोत्सवनिजोत्सवाः ।।

पश्यावः सर्वभूतस्थं वासुदेवममत्सराः ।। २ ।।

दीनानुकंपिनो नित्यं भृशं परहितैषिणः ।।

राजोपचारपूजायां लालनाः स्वकुमारवत् ।। ३ ।।

कृष्णसर्पादिव भयं बाह्ये परिचरंति ते ।।

विषयेष्वविवेकानां या प्रीतिरुपजायते ।। ४ ।।

वितन्वते तु तां प्रीतिं शतकोटिगुणां हरौ ।।

नित्यकर्तव्यताबुद्ध्या यजंतः शंकरादिकान् ।। ५ ।।

विष्णुस्वरूपान्ध्यायंति भक्त्या पितृगणेष्वपि ।।

विष्णोरन्यं न पश्यंति विष्णुं नान्यत्पृथग्गतम् ।। ६ ।।

पार्थक्यं न च पार्थक्यं समष्टिव्यष्टिरूपिणः ।।

जगन्नाथ तवास्मीति दासस्त्वं चास्मि नो पृथक् ।। ७ ।।

अन्तर्यामी यदा देवः सर्वेषां हृदि संस्थितः ।।

सेव्यो वा सेवको वापि त्वत्तो नान्योऽस्ति कश्चन ।। ८ ।।

इति भावनया कृतावधानाः प्रणमंतः सततं च कीर्तयंतः ।।

हरिमब्जजवन्द्यपादपद्मं प्रभजंतस्तृणवज्जगज्जनेषु ।। ९ ।।

उपकृतिकुशला जगत्स्वजस्रं परकुशलानि निजानि मन्यमानाः ।।

अपि परपरिभावने दयार्द्राः शिवमनसः खलु वैष्णवाः प्रसिद्धाः ।। 2.2.10.११० ।।

दृषदि परधने च लोष्टखंडे परवनितासु च कूटशाल्मलीषु ।।

सखिरिपुसहजेषु बन्धुवर्गे सममतयः खलु वैष्णवाः प्रसिद्धाः ।। १३ ।।

हरिचरणसरोजयुग्मचित्ता जडिमधियः सुखदुःखसाम्यरूपाः ।।

अपचितिचतुरा हरौ निजात्मनतवचसः खलु वैष्णवाः प्रसिद्धाः ।। १४ ।।

रथचरणगदाब्जशंखमुद्राकृतितिलकांकितबाहुमूलमध्याः ।।

मुररिपुचरणप्रणामधूलीधृतकवचाः खलु वैष्णवा जयंति ।। १५ ।।

मुरजिदपधनापकृष्टगन्धोत्तमतुलसीदलमाल्यचंदनैर्ये ।।

वरयितुमिव मुक्तिमाप्तभूषाकृतिरुचिराः खलु वैष्णवा जयंति ।। १६ ।।

विगलितमदमानशुद्धचित्ताः प्रसभविनस्यदहंकृतिप्रशांताः ।।

नरहरिममराप्तबंधुमिष्ट्वा क्षयितशुचः खलु वैष्णवा जयंति ।। १७ ।।

भगवति सततं प्रभक्तिभाजां शुभचरितं तव लक्ष्म नोभ्यधायि ।।

श्रुतिपथभवतीर्णमाशु पुंसां हरति मलं चिरसंचितं यदेतत् ।। १६ ।।

न हि धनमपि मृग्यते कदाचिन्न खलु शरीरजखेदसंप्रयोगः ।।

मृदुलघुवचसाभिधानकीर्तिं भजनमहं तव दास्य एव चिंता ।। १९ ।।

शुभचरितमपि द्विषंति पुंसां स्वयमिह दुश्चरितानुबंधचित्ताः ।।

महदकुशलमप्यवाप्य सुस्था भगरसरसिका अवैष्णवास्ते ।। 2.2.10.१२ ० ।।

परमसुखपदं हृदंबुजस्थं क्षणमपि नानुसज्जंति मत्तभावाः ।।

वितथवचनजालकैरजस्रं पिदधति नाम हरेरवैष्णवास्ते ।।२१।।

परयुवतिधनेषु नित्यलुब्धाः कृपणधियो निजकुक्षिभारपूर्णाः।।

नियतपरमहत्त्वमन्यमाना नरपशवः खलु विष्णुभक्तिहीनाः ।।२२।।

अनवरतमनार्यसंगरक्ताः परपरिभावकहिंसकाऽतिरौद्राः ।।

नरहरिचरणस्मृतौ विरक्ता नरमलिनाः खलु दूरतो हि वर्ज्याः ।। १२३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ११



।। जैमिनिरुवाच ।। ।।

नारदाद्ब्रह्मणः पुत्राद्भगवद्भक्तिमुत्तमाम् ।।

श्रुत्वेत्थं परमप्रीत इंद्रद्युम्नोऽप्युवाच तम् ।। १ ।। ।।

इंद्रद्युम्न उवाच ।। ।।

साधुसंगस्तु विद्वद्भिर्भवव्याधिविनाशनः ।।

ममोपदिष्टो भगवन्सोऽभूत्सांप्रतमेव मे ।। ।। २ ।।

येन साक्षात्कृतो विष्णुः परमात्मा परात्परः ।।

स त्वं यन्मंदिरायातस्त्वदन्यः साधुरत्र कः ।। ३ ।।

त्वत्संनिधानाद्भगवस्तमो मे नाशमभ्यगात् ।।

यन्मे त्वरयते चित्तमर्चितुं नीलमाधवम् ।। ४ ।।

वेत्सि ब्रह्मांडवृत्तांतं पर्यटन्सार्वलौकिकः ।।

तदावां रथमास्थाय पश्यावो नीलमाधवम् ।। ।। ५ ।।

पुरुषोत्तमसंज्ञस्य क्षेत्रस्यालंकृतं शुभम् ।।

तत्र तीर्थानि संतीति बहुभिः कथितानि मे ।।

त्वद्वाक्याद्यदि जानामि भवेयुः सफलानि मे ।।६।। ।।

।। नारद उवाच ।। ।।

हंत ते दर्शयिष्यामि क्षेत्रं क्षेत्रस्थितानि च ।।

तीर्थानि शक्तिशंभूंश्च क्षेत्रमाहात्म्यमेव च ।। ७ ।।

साक्षाद्द्रक्ष्यसि देवेशं भक्तस्यात्मसमर्पकम् ।।

तवानुग्रहतः शीघ्रं चतुर्द्धा संव्यवस्थितम्।।८।।

यस्य संदर्शनान्मर्त्यो जायते भक्तिभाजनम् ।।

एवं कथांते तौ प्रीतावहःकृत्यं समाप्य च ।। ९ ।।

यात्रानुकूलं निर्णीय पंचम्यां बुधवासरे ।।

ज्येष्ठकृष्णेतरे पक्षे पुष्यर्क्षे लग्न उत्तमे ।।

एकत्र शयितौ रात्रिं निन्यतुर्नृपनारदौ ।।2.2.11.१०।।

ततः प्रभाते विमल इंद्रद्युम्नो नृपोत्तमः ।।

घोषणां कारयामास राज्यस्य सह बंधुभिः ।। ११ ।।

यथाविभवतः सैन्यैर्नीलाद्रिगमनं प्रति ।।

यावज्जीवं तत्र वासं करिष्यामो विनिश्चितम् ।।१२।।

या वृत्तिः कल्पिता यस्य स तया तत्र जीवतु ।।

राजानः सावरोधाश्च सामात्याः सपरिच्छदाः ।। १३ ।।

रथैर्गजैस्तुरगैश्च कोषैः सह पदातिभिः ।।१४।।

व्रजंतु सज्जितास्तत्र ब्राह्मणाः साग्निहोत्रिणः ।।

वणिजः सह भांडैश्च सपण्याः पण्यजीविनः।। १५ ।।

राष्ट्रकर्मणि निष्णाता कुशला राजवर्त्मसु ।।

ज्योतिर्विदो नृत्यविदो दंडनीतौ प्रवीणकाः ।। १६ ।।

नृत्यगायनवादित्रचतुर्विधसुबुद्धयः ।।

गजवाजिनराणां च भैषज्ये शास्त्र उत्तमे ।। १७ ।।

कुशला दृष्टकर्माणो विद्यास्वष्टादशस्वपि ।।

उपांगविद्यासु तथा कुहकार्थकुतूहलाः ।। १८ ।।

वाटसाहसिकाश्चोरास्तथान्ये पश्यतोहराः ।।

विचित्रकथनाजीवाश्चाटुकाराश्च मागधाः ।। १९ ।।

शास्त्रोपजीविनश्चैव तथान्ये शल्यहारकाः ।।

द्यूतकाराश्च पुंश्चल्यो वेश्या वेशानुगा विटाः।। 2.2.11.२० ।।

कृषीवलाश्च गोमेषच्छागोष्ट्रखररक्षकाः ।।

शकुंतपालाश्च कपिव्याघ्रशार्दूलरक्षकाः ।।२१।।

आहितुंडिकगोरक्ष्य शबरा म्लेच्छजातयः ।।२२।।

अन्ये च ये मालवदेशजाता आज्ञां मदीयामनुपालयंति ।।

ते यांतु सर्वे वसतौ हि नीलाचले यथास्वं कृतवास्तुभागाः ।। २३ ।।

एवमाज्ञाप्य नृपतिर्यात्रायां च कृतक्षणः ।।

नारदेन समागम्य दैवज्ञमिदमाह सः ।। २४ ।।

सांवत्सर मुहूर्तं मे निर्णीतं ते यथा पुरा ।।

तावन्मांगलिकं वस्तुजातं सम्यगुपानय ।। २५ ।।

पुरोहितमतेनास्मिन्क्षणे यावद्विमृग्यते ।।

तेनादिष्टः स गणकः पुरोहितसहायवान् ।। ।। २६ ।।

आजहार समस्तानि मांगल्यानि द्विजोत्तमाः ।।

अत्रांतरे स राजर्षिर्दिव्यसिंहासनस्थितः ।। २७ ।।

यात्राभिषेकमांगल्यं विप्रैः प्रागनुभावितम् ।।

श्रीसूक्तवह्निसूक्ताभ्यां सूक्तेनाब्दैवतेन च ।। २८ ।।

पावमान्याब्धिसूक्तेन पृथङ्मांगल्यवर्द्धकैः ।।

तीर्थाद्भिरौषधीभिश्च सर्वगन्धैः पृथक्पृथक् ।। २९ ।।

अभिषिक्तस्ततो राजा चीनांशुकहृतांभसा ।।

रराज वपुषा दीप्तो निर्धूमः पावको यथा ।। 2.2.11.३० ।।

आमुक्तशुक्लवसनः स्वाचांतः सपवित्रकः ।।

नांदीमुखान्पितृगणान्पूजयित्वा यथाविधि ।। ३१ ।।

जयाराष्ट्रभृतो हुत्वा गणहोमांश्च यत्नतः ।।

शंखध्वनिसुगंधाढयं श्वेतवर्णं विधूमकम् ।। ३२ ।।

वह्निं प्रदक्षिणं चक्रे दक्षिणावर्त्तगार्चिषा ।।

साक्षात्कारेण ददतं जयं राज्ञे जयार्थिने ।। ३३ ।।

नवग्रहमखांते च ग्रहकुंभेन सेवितः ।। ग्र

हाणां दौष्ट्यनाशाय सौस्थ्यस्यापि विवृद्धये ।। ३४ ।।

ज्योतिःशास्त्रोदितैर्मंत्रैर्दैवज्ञविधिचोदितैः ।।

ततो मांगल्यनेपथ्यविधानमुपचक्रमे ।।३५।।

चीनांशुकप्रावरणे विधाय कवचं निजम् ।।

शिरोवेष्टनकं शुभ्रं सुरत्नमुकुटोज्ज्वलम्।। ३६ ।।

सावतंसे श्रुतियुगे रत्नकुंडलभूषिते ।।

ग्रैवेयकं महार्घं तु हारं तरलभूषितम् ।। ३७ ।।

दधाराथ नृपश्रेष्ठः केयूरांगदमुद्रिकाः ।।

मध्येन त्रिवलीसक्तं स्वर्णसूत्रं त्रिवृद्दधौ ।। ३८ ।।

हिरण्यकिंकिणीयुक्त मुक्तातोरणमालिकम् ।।

नानारत्नैः सुघटितां दधाराथ सुमेखलाम् ।। ३९ ।।

अनर्घ्ये पादकटके पादयोः संन्यवेशयत् ।।

सम्मुखादर्शितादर्शे ददृशे स्वं विभूषितम् ।। 2.2.11.४० ।।

मंगलारोपणार्थाय हैमपीठमुपाविशत् ।।

प्राङ्मुखः श्रीधरं देवं संस्मरन्मधुसूदनम् ।। ४१ ।।

मगलायतनं विष्णुं सर्वमांगल्यकारणम ।।

स्मरणादस्य नश्यंति पातकानि बहून्यपि ।। ४२ ।।

सौमनस्यामथो मालामार्त्तवीं गंधवर्णिताम् ।।

दधार प्रथमं राजा मंत्रितां स्वपुरोधसा ।। ४३ ।।

मृदं दीपं फलं दूर्वा दधि गोरोचनां ततः ।।

मन्त्राभिमंत्रितान्सर्वान्सिद्धार्थैरभिरक्षितः ।।४४।।

आत्मानं ददृशे राजा सौरभेये हविष्यथ ।।

मुकुरे मंत्रिते पश्चात्स्वं दृष्ट्वा नृपकेसरी ।। ४५ ।।

बह्वृचैः शांतिघोषेण समुदीर्णशुभायतिः ।।

याजुष्कैः पथिसूक्तेन व्रजन्मार्गेऽभिरक्षितः ।। ४६ ।।

पौराणैर्मंगलैर्वाक्यैः कृतवीर्यधृतिर्नृपः ।।

मागधैः स्तुतिपाठेन प्रादुर्भूतपराक्रमः ।। ४७ ।।

पारिजातहरं सत्यासहितं गरुडध्वजम्।।

ध्यायन्हृत्पंकजे राजा दक्षिणं पादमुद्दधौ ।। ४८ ।।

प्रदक्षिणीकृत्य मुनिं नारदं पुरतः स्थितम् ।।

मध्यद्वारमुपागच्छद्वेत्रपाणिभिरावृतः ।। ।। ४९ ।।

आदिष्टपदमार्गोऽसावग्निहोत्रपुरःसरः ।।

तत्रापश्यत्स्थितान्विप्रानात्मनो दक्षिणेन वै ।। 2.2.11.५० ।।

मांगल्यसूक्तंऽ पठतः शुभ्राभान्पांडुरांशुकान्।।

लाजाः सपुष्पा राजाग्रे क्षिपतः शंसतः शुभम् ।। ५१ ।।

वामपार्श्वस्थिता वेश्याश्चामरव्यग्रपाणयः ।।

शुभ्रालंकारवसनाः स्मेरपद्मानना शुभाः ।। ५२ ।।

ब्राह्मणान्पूजयामास भक्तिनम्रो द्विजोत्तमाः ।।

वस्त्रालंकारमाल्यैश्च सुगन्धैरनुलेपनैः ।। ५३ ।।

तोषयामास तान्विप्रान्भगवद्बुद्धि भावितान् ।।

वेश्याभ्यो मागधेभ्यश्च दीनानाथेभ्य एव च ।। ८४ ।।

राजानुमत्या सचिवो यथार्हं प्रददौ धनम् ।।

श्वेतान्पारावतान्हंसाञ्छ्वेताश्वं श्वेतकुंजरम् ।। ५५ ।।

सचूतपल्लवं श्वेतमालाफलविभूषितम् ।।

कदलीकांडसन्नद्धतोरणाधः स्थितं नृपः ।।

पूर्णकुंभं स पश्यन्वै मंगलानि बहून्यपि।।

सितातपत्रेण शिरःप्रदेशे वारितातपः ।।५६।।

युगपत्पूर्यमाणैस्तु कंबुभिः शतसंख्यकेः।।

संमिश्रितानि शुश्राव वादित्राणि बहूनि सः।।५७।।

तथा मंगलगीतानि जयशब्दांश्च भूपतिः ।।

ततो विवेश प्रासादं नृसिंहमवलोकितुम्।।५८।।

यं स्मृत्वा जायते मर्त्यः सर्वकल्याणभाजनम् ।।

दृष्ट्वा स दूरान्नृहरिं दिव्यसिंहासनस्थितम् ।। ५९ ।।

प्रणम्य साष्टावयवं सन्तोष्योपनिषद्गिरा ।।

दक्षपार्श्वस्थितां दुर्गां सर्वदुर्गतिमोचिनीम् ।। 2.2.11.६० ।।

ववंदे चरणाभ्याशे पश्यतीं कृपया नृपः ।।

ततः पुरोधा देवांगादवरोप्य शुभा स्रजम् ।। ६१ ।।

आसञ्जयामाम गले सुगंधेनान्वलेपयत् ।।

नीराजयामास राज्ञः शिरश्चावेष्टयन्मुदा ।। ५२ ।।

पुनः प्रदक्षिणीकृत्य तौ देवौ नृपसत्तमः ।।

शिबिकायां समारोप्य प्रतस्थे च पुरस्कृतौ ।। ६३ ।।

प्रादुर्भूय बहिर्द्वारे रथं दृष्ट्वा सुसज्जितम् ।।

तुरंगमैर्वातजवैर्दशभिः परयोजितम् ।। ६४ ।।

प्रदक्षिणीकृत्य नृपो नारदेन समाविशत् ।।

ढक्कामृदंगनिःसाणभेरीपणव गोमुखाः ।। ६५ ।।

मधुरीचर्चरीशंखा अवाद्यंत सहस्रशः ।।

स्यन्दनाः कोटिशस्तत्र नृपाणामनुजीविनाम् ।। ६६ ।।

चकाशिरे श्रेणिकृता इन्द्रद्युम्नरथाभितः ।।

नानाप्रहरणोपेताः पताकाभिरलंकृताः ।। ६७ ।।

ध्वजोच्छ्रिताः स्वर्णरौप्यैः किंकिणीजालदर्पणैः ।।

यन्त्रैर्नानाविधैर्युक्ता गंभीर स्निग्धनिःस्वनाः ।। ६८ ।।

पदातीनां कुञ्जराणां हयानां वातरंहसाम् ।।

पत्तिसंस्फोटनैर्हस्तिबृंहितैर्हयहेषितैः ।। ६९ ।।

बहुलै रथनिर्घोषैर्मिश्रिता वाद्यनिःस्वनाः ।।

युगांतार्णवनिस्वानतुल्याः शुश्रुविरे जनैः ।। 2.2.11.७० ।।

तस्मिन्क्षणे पौरजनाः स्वस्वसंभारसज्जिताः ।।

अश्वकै रासभैरुष्ट्रैर्वाहकैः प्रतितस्थिरे ।। ७१ ।।

आंदोलिकाश्च पल्यंकाः कोटिशश्च तुरंगकाः ।।

श्रेणीभूताश्च दृश्यंते राष्ट्रप्रस्थानसंकुले ।। ७२ ।।

राजावरोधाः शतशो वृता वर्षवरैस्ततः ।।

नानायानसमारूढाः पालिताश्चाधिकारिभिः ।। ७३ ।।

महासैन्यैश्च संरुद्धा राजागाराद्विनिर्ययुः ।।

यज्वानश्चाग्निहोत्राणि शम्यारूढानि वृन्दशः ।। ७४ ।।

शकटेषु समारोप्य सपत्नीकाः प्रतस्थिरे ।।

तथा पुस्तकभारांश्च देवतार्चाकरंडकान् ।। ७५ ।।

इध्मबर्हिकुशान्पात्रीः संभारान्होमसंभृतान् ।।

वाहयामासुरन्यैश्च शकटावाहकद्विजैः ।। ७६ ।।

सामन्तामात्यभृत्याश्च पुरोधा ऋत्विजश्च ये ।।

राज्ञः प्रकृतद(?)साश्च उपचारनियोगिनः ।। ७७।।

सर्वोपचारसंभारानासतेऽन्ये प्रयायिनः ।।

कोषागारनियुक्ताश्च कोषजातमशेषतः ।। ७८ ।।

समादाय ययुस्तूर्णं राज्ञोऽवसरसेवकाः ।।

मालाकारादयः सर्वे पण्यजीवादयस्तथा ।। ७९ ।।

स्वं स्वं पण्यं समादाय ययू राजनियोगिनः ।।

श्रेष्ठश्रेण्यादयः सर्वे पुरखर्वटवासिभिः ।। 2.2.11.८० ।।

समं विनिर्ययुः स्वस्वव्यवहारविलासकाः ।।

इन्द्रद्युम्नस्य नृपतेर्यात्रासमयवादितान् ।। ८१ ।।

भेरीमृदंगपटहान्व्यश्रुवानान्दिगंतरम् ।।

श्रुत्वा जनपदावासिजनाः सर्वे ससंभ्रमाः ।। ८२ ।।

राजाज्ञां मूर्ध्नि संमान्य निर्गता नीलपर्वतम् ।।

यस्य यश्च ऋजुः पंथाः स च तेनैव जग्मिवान् ।। ८३ ।।

न राजमार्गं प्रजवाद्व्यमृग्यंत नृपाज्ञया ।।

नीलाद्रिप्राप्तिमार्गेण दुर्गमेणापि ते ययुः ।। ८४ ।।

इन्द्रद्युम्नोऽपि राजेन्द्रः समस्तपुरवासिभिः ।।

चतुरंगानीकिनीभिः सहर्षाभिश्च वेष्टितः ।। ८५ ।।

श्रेणीभूतक्षितिपतिस्यन्दनावलिमध्यगे ।।

रथे रराज राजर्षिः शक्रतुल्य परिच्छदः ।। ८६ ।।

पुरस्त्रीमङ्गलाचारगीतलाजप्रसूनकैः ।।

मङ्गलाचारशोभाभिः प्रसन्नशुभचेतनः ।। ८७ ।।

वातरंहैर्हयैर्युक्तरथेन प्रययौ मुदा ।।

अनुकूलानिलप्रोद्यद्वनच्छायसुशीतले ।। ८८ ।।

नीरजस्के महीपृष्ठे समीकृतचतुष्पथे ।।

देशाध्वनीनैः पुरुषैः काननांतरवेदिभिः ।। ८९ ।।

आदिष्टवर्त्मा नृपतिर्मार्गस्योभयपार्श्वगान् ।।

देशानरण्यानि मुहुःपश्यन्नानन्दलोचनः ।। 2.2.11.९० ।।

सीमामुत्कलदेशस्य विभजंतीं वनांतरे ।।

मार्गस्थां चर्चिकां प्राप चर्चितां मुंडमालया ।। ९१ ।।

अवतीर्य रथाद्राजा विनतो नारदाज्ञया ।।

साष्टांगपातं तां नत्वा तुष्टावानंदचेतनः ।।९२ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

नमस्ते त्रिदशेशानि सर्वापद्विनिवारिणि ।।

ब्रह्मविष्णुशिवाद्याभिः कल्पनाभिरुदीरिते ।।९३।।

कारणं जगतामाद्ये प्रसीद परमेश्वरि ।।

त्वया विना जगन्नैतत्क्षणमुत्सहते शिवे ।। ९४ ।।

सिद्धयः सर्वकार्याणां मंगलानि च शाश्वते ।।

त्वत्पादाराधनफलं मर्त्यलोके हि नान्यथा ।।९५ ।।

चराचरपतेर्विष्णोः शक्तिस्त्वं परमेश्वरि ।।

यया सृजत्यवति च जगत्संहरते विभुः ।। ९६ ।।

चराचरगुरुं देवं नीलाचलनिवासिनम् ।।

अनुगृह्णीष्व मां देवि यथा पश्ये स्वचक्षुषा ।। ९७ ।।

।। जैमिनिरुवाच ।। ।।

नारदस्योपदेशेन स्तुत्वा देवीं नराधिपः ।।

आरुरोह रथं तूर्णं विवस्वानुदयं यथा ।। ९८ ।।

ततः प्रतस्थे तरसा स राजा श्रांतवाहनः ।।

चित्रोत्पलमहानद्यास्तीरे विरलकानने ।। ९९ ।।

धातुकन्दरविख्याते न्यवेशयदनीकिनीम् ।।

अपराह्णक्रियां कर्तुं यावदाह्निकमादृतः ।।2.2.11.१ ००।।

जलावतरणे नद्यां विवेश स्वपुरोधसा ।।

पूर्वं संशोधिते प्राज्ञैर्विषकण्टकवर्जिते ।।१।।

स्नात्वा संतर्प्य देवांश्च पितॄनथ विशांपतिः ।।

संपूज्य विधिवद्विष्णुं नृपतीन्प्रकृतीस्ततः ।। २ ।।

संमानयामास नृपः संनिवेशासनादिभिः।।

नारदेन सह श्रीमान्प्रविश्यांतःपुरं ततः।।३।।

सुधारसानि भोज्यानि बुभुजे प्रीतमानसः ।।

पश्चिमाद्रिं ततो याते विवस्वति विशांपतिः ।।४।।

सायं विधिं समाप्याशु शीतभानौ समुद्यते।।

अनुजीविविशां नाथः सभामध्य उपाविशत् ।।५।।

तत्र तस्मिन्नरपतिर्बभौ सात्राज्यलक्षणः ।।

संपूर्णमंडलश्चन्द्रो ज्योतिषामिव शारदः।।६।।

कवयः कवयांचकुः कीर्तिं तस्य सुधामलाम् ।।

जगुर्गाथां सुग्रथितां गायकाः कलसुस्वराः।।७।।

रूपयौवनलावण्यगर्विता गणिकास्ततः ।।

लयतानांगहारैश्च सुशुद्धैर्ननृतुः पुरः ।। ८ ।।

मागधास्तुष्टुवुश्चैनं लोकोत्तरशुभाकृतिम् ।।

गद्यपद्यप्रबन्धाद्यैश्चित्रैः पदकदम्बकैः ।। ९ ।।

ततः स राजा प्रानर्च वैष्णवाग्र्यान्सभासदः ।।

सुसंमतैर्गंधमाल्यतांबूलैरतिशोभनैः ।। 2.2.11.११० ।।

नृपांश्च शतशस्तत्र सुखासीनान्नृपाज्ञया ।।

संभावयामास यथायोग्यं नृपतिभाजनैः ।। ११ ।।

अथापृच्छन्मुनिवरं नारदं भगवत्प्रियम् ।।

सिंहासनार्हे स्वासीनं बहुमानपुरःसरम् ।।

भगवच्चरितं श्रोतुं सर्वपापापनोदनम् ।। १२ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

भगवन्वेदवेदांगनिधान भगवत्प्रिय ।।

त्वमेव चरितं विष्णोर्जानासि ज्ञानचक्षुषा ।। १३ ।।

हरेश्चारित्रसुधया दृढपंकमलीमसम् ।।

क्षालयांतर्मम मुने यद्यनुक्रोशको मयि ।। १४ ।।

इत्थमालापसंमिश्रे मुनिराज्ञोः कथांतरे ।।

प्रविवेश नृपं द्वाःस्थ उत्कलेशप्रसेवकः ।। १५ ।।

उवाच देवद्वारांते तिष्ठत्युत्कलभूमिपः ।।

सोपायनो देवपादपद्मं द्रष्टुं समौलिकः ।। १६ ।।

विज्ञापितः स राजर्षि द्वास्थेनैवं ससंभ्रमः ।।

उवाच तं हि भो विप्राः श्रुत्वा तद्देशमण्डनम् ।। १७ ।।

क्षेत्रं श्रीपुरुषेशस्य तद्वार्त्ताकर्णनोत्सुकः ।।

प्रवेशयाविलंबं तं श्रीमदोढ्रमहीपतिम् ।। १८ ।।

स हि नीलगिरौ विष्णुं समाराध्य सुनिर्मलः ।।

यस्य संदर्शनात्सर्वे भविष्यामो हतांहसः ।। १९ ।।

श्रुत्वा तद्वचनं सद्यो द्वारपालो महीपतिम् ।।

प्रवेशयामास सभामिंद्रद्युम्नस्य भूपतेः ।। 2.2.11.१२० ।।

विवेशोढ्रपतिस्तूर्णं सचिवैवैर्ष्णवैः सह ।।

ननामांघ्रियुगं वन्द्यमिन्द्रद्युम्नस्य सादरम्।। २१ ।।

युगं वन्द्यमिन्द्रद्युम्नस्य सादरम्।। २१ ।।

तमुत्थाप्य च राजेंद्रः पुरस्कृत्य स वैष्णवम् ।।

स्वासनांते निवेश्याथ प्रोचे सप्रश्रयं वचः ।। २२ ।।

राजन्सर्वत्र कुशली भवानोढ्रपते किल ।।

अपि देवो विजयते नीलाद्रिशिखरालयः ।। २३ ।।

कच्चित्ते निर्मला बुद्धिर्भगवत्पादपद्मयोः ।।

उपैति समचित्तस्य सर्वभूतेषु ते हरौ ।। २४ ।।

ओढ्राधीशस्तदा तस्य वचः श्रुत्वा कृतांजलिः ।।

उवाच प्रश्रितं वाक्यं हर्षविस्मयचंचुकः ।। २५ ।।

स्वामिन्सर्वत्र कुशलं त्वत्पादानुग्रहान्मम ।।

सूर्ये तपत्यंधकारः कथं वा प्रभविष्यति ।। २६ ।।

निसर्गगुणसंसर्गवशीकृतमहीभुजा ।।

त्वया सनाथा पृथिवी जिष्णुनेवामरावती ।। २७ ।।

सदा धर्मश्चतुष्पादस्त्वयि शासति मेदिनीम् ।।

निषेधाचरण राजन्केवलं श्रूयते श्रुतौ ।। २८ ।।

राजनीतिषु ये राज्ञां गुणाः समुदितास्त्वयि ।।

त एकैकं क्षितिभुजां गता दार्ष्टांतिकं विभो ।। २९ ।।

एतावदपि साम्राज्यं दुर्लभं ते नृपोत्तम ।।

अष्टादशद्वीपवती क्षितिरेकगृहोपमा ।। 2.2.11.१३० ।।

यदि त्वां नासृजद्ब्रह्मा वत्सलं सर्वजंतुषु ।।

कथं शोकविहीनाः स्युर्मृतेष्वात्मजबंधुषु ।। ३१ ।।

साधारणा नृपतयो विष्णोरंशा इति श्रुतिः ।।

भवान्साक्षात्तु भगवान्कोऽन्य ईदृग्गुणाकरः ।। ३२ ।।

दक्षिणोदधि तीरेऽस्ति नीलाद्रिः काननावृतः ।।

न तत्र लोकसंचारस्तत्रास्ते साऽपि देवता ।। ३३ ।।

वात्यया वालुकाकीर्णः सांप्रतं श्रूयते तु सः ।।
तद्वशान्मम राज्येऽपि दुर्भिक्षमरकादिकम् ।। ३४ ।।
त्वय्यागते तु सर्वस्मिन्कुशलं मे भविष्यति ।।
इत्युक्तवंतं नृपतिरुत्कलेशं द्विजोत्तमाः ।। ३५ ।।
विसर्जयामास तदा संनिवेशाय मानयन् ।।
नारदं प्रेक्ष्य निर्विण्णः किमेतदिति भो मुने ।। ३६ ।।
यदर्थं मे श्रमस्तं च विफलं हि वितर्कये ।।
इत्युक्तवंतं तं प्राह नारदस्तु त्रिकालवित् ।। ३७ ।।
न कार्यो विस्मयस्तेऽत्र भाग्यवान्वैष्णवोत्तमः ।।
वैष्णवानां न वांछा हि विफला जायते क्वचित् ।। ३८ ।।
अवश्यं प्रेक्षसे राजन्बिभ्रतं पार्थिवं वपुः ।।
कारणं जगतामादिं नारायणमनामयम् ।। ३९ ।।
त्वदनुग्रहहेतोर्वै क्षिताववतरिष्यति ।।
जगच्चराचरं सर्वं विष्णोर्वशमुपागतम्।।2.2.11.१४०।।
न कस्यापि वशे सोऽपि परमात्मा सनातनः ।।
केवलं भक्तिवशगो भगवान्भक्तवत्सलः ।। ४१ ।।
ब्रह्मादिकीटपर्यंतं सुगुप्तं यस्य मायया ।।
स कथं परतंत्रः स्यादृते भक्तजनान्नृप ।। ४२ ।।
धर्मार्थकाममोक्षाणां मूलं भक्तिर्मुरद्विषः ।।
सैव तद्ग्रहणोपायस्तामृते नास्ति किंचन ।। ४३ ।।
एक एव यदा विष्णुर्बहुधा स्वस्य मायया ।।
तमृते परमात्मानं सुखहेतुर्न विद्यते ।। ४४ ।।
येऽप्यन्ये शिवदुर्गाद्यास्तैस्तैः कर्मभिरावृताः ।।
यच्छंति पूजिताः कामं तेऽपि विष्णुपरायणाः ।। ४५ ।।
अन्तर्यामी स भगवान्देवानामपि हृत्स्थितः ।।
यावत्फलं प्रेरयति तावदेव ददत्यमी ।। ४६ ।।
वैष्णवस्त्वं च राजेंद्र पद्मयोनेश्च पंचमः ।।
अष्टादशानां विद्यानां पारगो वृत्तसंस्थितः ।। ४७ ।।

न्यायेन रक्षिता पृथ्वीं विशेषाद्ब्राह्मणार्चकः ।।

अवश्यं द्रक्ष्यसि क्षेत्रे वैकुण्ठं चर्मचक्षुषा ।। ४८ ।।

पितामहोऽप्यत्र कार्ये भवतो मां नियुक्तवान् ।।

सर्वं ते कथयिष्यामि प्राप्ते क्षेत्रोत्तमे नृप ।। ४९ ।।

सांप्रतं रात्रिशेषो हि तृतीयं याममृच्छति ।।

स्वान्तान्निवेशान्निर्गंतुं राज्ञ आज्ञापयाधुना ।। 2.2.11.१५० ।।

त्वमप्यंतर्गृहं याहि निद्राया वशमागतः ।। १५१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषि संवाद एकादशोऽध्यायः ।।११।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/h3n
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

उक्ते ब्रह्मसुतेनेत्थमिंद्रद्युम्नो महीपतिः।।

मुनेस्तुवचनं श्रुत्वा प्रहृष्टेनांतरात्मना ।।

विचार्य परया बुद्ध्या श्रमं मेने फलावहम् ।।१।।

अहो मे परमं भाग्यं बहुजन्मांतरार्जितम्।।

व्यवसाये ममोद्युक्तः सर्वलोकपितामहः।।२।।

जीवन्मुक्तं स्वतनुजं मत्सहायमकारयत् ।।

सहायो यादृशः पुंसां भवेत्कार्यं हि तादृशम्।।३।।

श्रुतं सभासु सर्वासु इति वृद्धानुशासनम् ।।

स इत्थं चिंतयन्राजा विसृज्य च सभासदः ।।४।।

ततो मुनिं करे धृत्वा विवेशांतःपुरे द्विजाः ।।

तमर्चयित्वा विधिवत्पल्यंके सह तेन वै ।।५।।

निशावशेषं नृपतिर्निनाय संलपन्मिथः ।।

ततः प्रभाते विमले नित्यं कर्म समाप्य वै ।। ६ ।।

पूजयित्वा जगन्नाथं संततार महानदीम् ।।

ओढ्रदेशाधिपेनाग्रे गच्छतादिष्टपद्धतिः।। ७ ।।

एकाम्र वनकं क्षेत्रमभियातो बलान्वितः ।।

स गत्वा किंचिदध्वानं प्राप्य गंधवहाभिधाम् ।।८।।

नदीं वेगवतीं शीततोयामाक्रम्य वेगवान् ।।

पूर्वाह्नपूजासमये कोटिलिंगेश्वरस्य वै ।। ९ ।।

चर्चरीशंखकाहालमृदंगमुरजध्वनिम् ।।

व्यश्नुवानं महारण्यं दूराच्छुश्राव भूपतिः।।2.2.12.१०।।

मन्यमानो भगवतो नीलाचल निवासिनः ।।

उवाच नारदं प्रीतो ध्वनिः कुत्र महामुने ।। ११ ।।

नीलाद्रिशिखरावासः प्राप्तः किं परमेश्वरः ।।
यदर्चासमये ह्येष श्रूयते संकुलध्वनिः ।। १२ ।।
उताहोप्यन्यदेवो वा निकटे वर्त्तते मुने ।
इति पृष्टस्तदा राज्ञा प्रोवाच मुनिपुंगवः ।। १३ ।।
राजन्सुदुर्लभं क्षेत्रं गोपितं मुरवैरिणा ।।
न तत्रास्तीति भगवान्कैरपि ज्ञायते नृभिः ।। १४ ।।
त्वं हि भाग्यवतां श्रेष्ठस्त्वद्भाग्यात्ते पुरोधसा ।।
दृष्टः कथंचिद्भगवान्संयतेंद्रियवर्त्मना ।। १५ ।।
त्वं हि तावद्बलैर्युक्तः षडंगैर्नृपसत्तम ।।
साहसेऽतिप्रवृत्तोऽसि संशयो मे महीपते ।। १६ ।।
संवर्त्तते नीलगिरिर्योजने तु तृतीयके ।।
इदं त्वेकाम्रकवनं क्षेत्रं गौरीपतेर्विभोः ।।
नातिदूरे महीपाल भीतः स शरणागतः ।। १७ ।।
।। इंद्रद्युम्न उवाच ।। ।।
कथं स भीतो गौरीशः कं वा शरणमागतः ।। १८ ।।
ददाह त्रिपुरं घोरं शरेणैकेन यः पुरा ।।
अत्र मे विस्मयो जातः श्रोतुमिच्छामि दुर्लभम् ।। १९ ।।
रक्षिता भवभीतानां भवः परमपावनः ।।
किमर्थं भयभीतोऽसौ कः समर्थोऽस्य वै जये ।। 2.2.12.२० ।।
।। नारद उवाच ।। ।।
अत्र ते कथयिष्यामि पुरावृत्तं महीपते ।।
उपयेमे पुरा गौरीं तपसा वशमागतः ।। २१ ।।
ब्रह्मचारी हिमगिरौ भगवान्नीललोहितः ।।
उत्सृज्य ब्रह्मचर्यं तु सोऽनंगशरपीडितः ।। २२ ।।
तया रेमे रुचिरया यौवनोन्मत्तया नृप ।।
तत्पितुर्विषये भोगान्बुभुजे देवकांक्षितान् ।। २३ ।।
कदाचिदथ निर्याती स्ववासभवनात्सती ।।
सामपूर्वं कुलस्त्रीभिर्मात्रोक्ता सस्मितं वचः ।। २४ ।।

आर्ये महत्तपस्तप्तं वरार्थं गहने वने ।।
निष्कुलो निर्गुणो वृद्धो वरः प्राप्तो वरानने ।। २५ ।।
दिवारात्रिं न त्यजसि सन्निधिं तादृशस्य वै ।।
को गुणः कथ्यतां वत्से किं वा पत्युः प्रसादजम्।। २६ ।।
भूषणाच्छादनं प्राप्तं ममैव गृहवासिनी ।।
चिरं तिष्ठसि भद्रे त्वं पितृभोगोपलालिता ।। २७ ।।
त्रैलोक्ये यास्तु कन्या वै परिणीताः पितुर्गृहात्।।
प्रयात्यलंकृताभर्त्रा भर्तृवेश्मनि शुश्रुम ।। २८ ।।
अहं तु मानसी कन्या पितॄणां पितृलोकतः ।।
आगता तु महाभागे परिणीता हिमाद्रिणा ।। २९ ।।
इत्थमुक्ता मया हास्यान्न क्रोधाच्चलललोचने ।।
जामातुरग्रे नो वाच्यं स हि विष्णुसमो मतः ।। 2.2.12.३० ।।
।। नारद उवाच ।। ।।
मातुरित्थं वचः श्रुत्वा भर्तृनिंदाप्रपीडिता ।।
कोपप्रस्फुरदोष्ठी सा वाचं नोचे मनागपि ।। ३१ ।।
प्रययावंतिकं भर्तुर्निह्नु(ह्नु?)वानांऽबिकावचः ।।
जगाद परुषं वाक्यं स्नेहगर्भं मिताक्षरम् ।। ३२ ।।
स्वामिन्न सांप्रतं चैतद्यद्वासः श्वशुरालये ।।
क्षौद्रीयसामपि गुरोस्त्रैलोक्यस्य कथं नु ते ।। ३३ ।।
तदावयोर्नात्र योग्या वसतिर्मे प्रिया विभो ।।
न संति किं ते वासाय योग्या वै भूमयः प्रभोः ।। ३४ ।।
इत्युक्तः शिवया सोऽथ भगवान्वृषभध्वजः ।।
तया सार्द्धं वृषारूढो मध्यदेशं ययौ त्वरन् ।। ३५ ।।
विलंघ्य सर्व तीर्थानि प्रयागं पावनं महत् ।।
पूर्वसागरगामिन्या गंगाया उत्तरे तटे ।। ३६ ।।
वाराणसीं नाम पुरीं गौर्या वासाय निर्ममे ।।
पंचक्रोशमितां रम्यां वरप्रासादशोभिताम् ।। ३७ ।।
अट्टालकशतैर्युक्तामसंख्योपवनैर्युताम् ।।

नानातीर्थसमायुक्तां नानाजनसमाकुलाम् ।। ३८ ।।

आज्ञया धूर्जटेः शुभ्रां निर्मितां विश्वकर्मणा ।।

पावनैः शीतलैर्गंगातरंगैः क्षपितांहसाम् ।। ३९ ।।

तत्र मध्ये पुरे स्वर्णप्राकाराट्टालशोभिते ।।

रत्नस्तंभैः सुघटिते सर्वाशापरिपूरके ।। 2.2.12.४० ।।

तया रेमे पशुपतिः श्रियेव मधुसूदनः ।।

सा पुरी विश्वनाथेन कदाचिन्नैव मुच्यते ।। ४१ ।।

अविमुक्तेति सा ख्याता नृणां मुक्तिप्रदायिनी।।

पुरासीन्मनुजाधीश सेविता भवभीरुभिः ।।४२।।

तत्रोषिता तदा गौरी तेन भर्त्रा स्वलंकृता।।

मातरं पितरं चापि न सस्मार महीपते ।। ।।४३।।

एवं बहुयुगेऽतीते कैलासाद्रिं स जग्मिवान् ।।

आत्मनः कोटिलिंगानि तत्र संस्थाप्य वै प्रभुः।।४४।।

राजानः पालयामासुस्तां पुरीं बहुशो नृप।।

तत्रासीत्काशिराजाख्यः पुरा द्वापरके युगे।। ४५।।

शंभुं संतोषयामास तपसोग्रेण वै प्रभुम्।।

जरासन्धपुरोगाणां राज्ञां जेतारमच्युतम्।।४६।।

संग्रामे प्रभविष्यामीत्यभिसंधाय पार्थिवः।।

प्रादात्तस्मै वरं सोऽपि पिनाकी पारितोषितः।। ४७।।

जेतासि कंसहंतारं संग्रामे त्वमरिंदम।।

तवार्थे प्रमथैः सार्द्धमहं योत्स्ये वृषे स्थितः ।। ४८ ।।

शंभोरिति वरं लब्ध्वा प्रमत्तः स नराधिपः ।।

शंखचक्रधरं संख्ये हरिमाह्वत वीर्यवान्।। ४९ ।।

अन्तर्यामी स भगवाञ्ज्ञात्वा वृत्तांतमीदृशम् ।।

चक्रं प्रस्थापयामास काशिराजस्य सूदने ।। 2.2.12.५० ।।

तदुग्रदर्शनं चक्रं सहस्रादित्यवर्चसम् ।।

काशिराजशिरश्छित्त्वा तद्बलं तां पुरीं ततः ।। ५१ ।।

ददाह कुपितं राजन्विष्णोराशयवीर्यवित् ।।

तद्दृष्ट्वा सुमहत्कर्म क्रुद्धः पशुपतिस्तदा ।। ५२ ।।

गणैर्वृतो वृषारूढः पिनाकी तदुपाद्रवत् ।।

ततः सुदर्शनं चक्रं दृष्ट्वा तं प्रथमं पुरः ।। ५३ ।।

शंभुः पाशुपतास्त्रं तच्चकारोत्पातसन्निभम् ।।

पुरा विष्णोर्वरं प्राप्तं शंभुना भक्तितोषितात् ।। ५४ ।।

बलेनाप्याययिष्यामि तवास्त्रं संस्मृतस्त्वया ।।

मयि चेत्प्रतिकूलस्त्वं भविष्यति च निष्प्रभम् ।। ५५ ।।

घोरे पाशुपते चास्मिन्नस्त्रे च विफलीकृते ।।

वाराणस्यां च दग्धायां भयत्रस्तो वृषध्वजः ।। ५६ ।।

तुष्टाव जगतामदिमनादिं पुरुषोत्तमम् ।। ५७ ।। ।।

।। महादेव उवाच ।। ।।

नारायण परंधाम परमात्मन्परात्पर ।।

सच्चिदानन्दविभव निरञ्जन नमोऽस्तु ते ।। ५८ ।।

जगत्कारणसृष्ट्यादि कर्मकृद्गुणभेदतः ।।

मायया निजया गुप्त स्वप्रकाश नमोऽस्तु ते ।। ५९ ।।

नांतर्बहिर्बहिश्चांतर्दूरस्थो निकटाश्रयः ।।

गुरुर्लघुः स्थिरोऽणीयान्स्थवीयांश्च नमोऽस्तु ते ।। 2.2.12.६० ।।

कोटयश्चतुरास्यस्य पलार्द्धं मम चातुल ।।

यदपांगविलासोत्थं तस्मै कालात्मने नमः ।। ६१ ।।

एकैकरोमाकलितब्रह्माण्डगणसंवृतम् ।।

मानातीतं वपुर्यस्य तस्मै विश्वात्मने नमः ।। ६२ ।।

स्वकालपरिमाणेन वेधसः प्रलयोद्भवौ ।।

मन्वंतरादिघटनाकलनाय नमोऽस्तु ते ।। ६३ ।।

सृष्टोऽहं तमसा नाथ त्वत्प्रभावानभिज्ञकः ।।

तत्क्षमस्वापराधं मे त्राहि मां शरणागतम् ।। ६४ ।।

स्तुतिमित्थं प्रकुर्वाणे तस्मिंस्त्रिपुरदाहिनि ।।

चक्ररूपं परित्यज्य आविरासीदधोक्षजः ।। ६५ ।।

प्रसन्नवदनः श्रीमाञ्छंखचक्रगदाधरः ।।

ताक्ष्यर्पद्मासनगतो वनमालाविभूषणः ।। ६६ ।।

हारकुण्डलकेयूरमुकुटादिभिरुज्ज्वलः ।।

वामोत्संगगतां लक्ष्मीं सत्यां दक्षिणपार्श्वगाम् ।। ६७ ।।

बिभ्राणः कृष्णजीमूतकांतदेहं कृपाम्बुधिः ।।

क्रोधाविष्ट इवोवाच बिभ्यतं गिरिजापतिम् ।। ६८ ।।

।। श्रीभगवानुवाच ।। ।।

कालेनैतावता शंभो दुर्बुद्धिः कथमागता ।।

हेतोर्नृपतिकीटस्य मया योद्धुमुपस्थितः ।। ६९ ।।

कति वा मत्प्रभावास्ते नो ज्ञाता धूर्जटे त्वया ।।

सत्यं पाशुपतं तेऽस्त्रं दुर्जयं ससुरासुरैः ।। 2.2.12.७० ।।

मत्क्रोधरूपं तच्चक्रं त्वामपि क्षमते न यत् ।।

मामवज्ञाय जगति भ्रमति त्वामृते हि कः ।। ७१ ।।

तपोभिर्बहुभिः पूर्वं मच्छरीरतयोर्जितः ।।

सांप्रतं चेच्चिरं रंतुं गौर्या सार्द्धमिहेच्छसि ।।। ७२ ।।

पुरीं वाराणसीं चेमां यदीच्छसि चिरस्थिताम् ।।

मन्नाम्ना भुवि विख्यातं क्षेत्रं श्रीपुरुषोत्तमम् ।। ७३ ।।

दक्षिणस्योदधेस्तीरे नीलाचलविभूषितम् ।।

दशयोजनविस्तीर्णं यावद्विरजमण्डलम् ।।७४।।

क्रमशः पावनं क्षेत्रं यावच्चित्रोत्पला नदी ।।

ततः प्रभृति यो देशो यावत्स्याद्दक्षिणार्णवः ।। ७५ ।।

पदात्पदाच्छ्रेष्ठतमो नीलाद्रिरपवर्गदः ।।

चतुर्देहस्थितोऽहं वै यत्र नीलमणीमयः ।। ७६ ।।

तस्योत्तरस्यां विख्यातं वनमेकाम्रकाह्वयम् ।।

पार्वत्या तत्र निवस निर्भयस्त्रिपुरांतक ।। ७७ ।।

सृजता सर्वलोकानां मन्निदेशात्स्वयंभुवा ।।

तत्रापि कोटिलिंगानां राजा त्वमभिषेक्ष्यसे ।।७८।।

सर्वतीर्थमयं चेदं तीर्थं यन्मणिकर्णिकम् ।।

इहाहंकारमुत्सृज्य व्रज त्वं सपरिच्छदः ।। ७९ ।।

।। नारद उवाच ।। ।।

इत्युक्तो वासुदेवेन त्र्यंबको नतकन्धरः ।।

कृतांजलिपुटो भूत्वा प्रोवाच मधुसूदनम् ।। 2.2.12.८० ।।

।। महादेव उवाच ।। ।।

देवदेव जगन्नाथ प्रणतार्तिहर प्रभो ।।

त्वदाज्ञापालनं श्रेयः कारणं मे जगत्पते ।। ८१ ।।

यत्तु मूढतया देव अवलेपः कृतो मया ।।

तवैवानुग्रहस्तत्र प्रभो चांचल्यकारणम् ।। ।। ८२ ।।

यदादिशसि देवेश प्रयाणं पुरुषोत्तमम् ।।

तन्मूर्ध्नि कृत्वा यास्यामि क्षेत्रं मुक्तिप्रदं शिवम् ।। ८३ ।।

अभिसंधिं कुरुष्वाद्य ममानुग्रहकारणम् ।।

पुरुषोत्तमं मम क्षेत्रं त्वमेव परिपालय ।। ८४ ।।

यथा पुनर्नेदृशं तद्विनाशमुपयास्यति ।।

इत्थमेतत्पुरा क्षेत्रं महादेवेन निर्मितम् ।। ८५ ।।

बलश्रीसहितं देवमर्चयन्पुरुषोत्तमम् ।।

अत्र साक्षादुमाकांतः स्थापितः परमेष्ठिना ।। ८६ ।।

वयं तत्र व्रजिष्यामो द्रक्ष्यामः पुरनाशनम् ।।

सुदृढांतस्तमःस्तोमभास्वंतं गिरिजापतिम् ।।८७।।

यदेतच्छांभवं क्षेत्रं तमसो नाशनं परम् ।।

रजःप्रक्षालनं श्रेयः ख्यातं विरजमण्डलम् ।। ८८ ।।

सत्त्वोद्रिक्ततया ख्यातं मुक्तिदं पुरुषोत्तमम्।।

यावत्यन्यानि क्षेत्राणि मुक्तिदानि श्रुतानि ते।।८९।।

तानि सर्वाणि राजेंद्र ददते मुक्तिमत्र वै ।।

एतत्क्षेत्रं महाराज दुष्कृताविलचेतसाम् ।।2.2.12.९०।।

न विश्वासपथं याति रहस्यं चक्रपाणिनः ।। ९१ ।।

।। जैमिनिरुवाच ।। ।।

नारदस्य वचः श्रुत्वा प्रहृष्टहृदयो नृपः।।

उवाच मुनिशार्दूलं विस्मयोत्फुल्ललोचनः ।।

साधु मे कथितं ब्रह्मन्क्षेत्रं परमपावनम् ।।९२ ।।

यत्रोमापतिरास्तेऽसौ पालकः पुरुषोत्तमः ।।

अवश्यं तत्र गच्छामः पन्था यद्यपि वक्रभूः ।।

उद्दिष्टेष्टपरिप्राप्तौ यदिदं कारणं महत् ।। ९३ ।।

।। जैमिनिरुवाच ।। ।।

ततस्तौ मुनिभूपालौ मध्याह्नसमये द्विजाः ।।

प्रापतुः सबलौ क्षेत्रमेकाम्रवनसंज्ञकम् ।। ९४ ।।

बिंदुतीर्थे नृपः स्नात्वा तीरस्थं पुरुषोत्तमम् ।।

संपूज्य विधिवद्यातः कोटीश्वरमहालयम् ।। ९५ ।।

तद्वारि सम्यगाचांतस्तत्प्रीत्यै सुबहूनि सः ।।

गजाश्वधनरत्नानि वस्त्रालंकरणानि च ।। ९६ ।।

द्विजेभ्यः प्रददौ राजा सात्त्विकं धर्ममास्थितः ।।

लिंगं त्रिभुवनेशं तं महास्नानेन पूजयन् ।। ९७ ।।

अतुलां प्रीतिमालेभे विष्णोरद्वैतदर्शनः ।।

स्तुत्वा प्रणम्य भक्त्यासौ वीणया चोपगाय्य च ।। ९८ ।।

कृतांजलिपुटो देवप्रसादनकृतोद्यमः ।।

अनन्यमनसा तस्थौ चिंतयन्वृषभध्वजम् ।। ।९९ ।।

ततः प्रसन्नो भगवांस्त्र्यंबकः परमेश्वरः ।।

साक्षान्नृपमुवाचेदं स्पष्टाक्षरपदं द्विजाः ।। 2.2.12.१०० ।।

।। कोटिलिंगेश उवाच ।। ।।

इन्द्रद्युम्न महाराज वैष्णवस्त्वादृशो भुवि ।।

दुर्लभः खलु ते वांछा चिरात्सम्यग्भविष्यति ।।१।।

इत्युक्त्वांतर्दधे शंभुः पश्यतस्तु महीक्षितः।।

नारदं पुनराहेदं यदादिष्टं स्वयंभुवा ।। २ ।।

तत्कल्पय महाभाग वाजिमेधपुरःसरम् ।।

विष्णोः कलेवरे तस्मिन्क्षेत्रे श्रीपुरुषोत्तमे ।। ३ ।।

अंतर्वेदी महापुण्या विष्णोर्हृदयसंनिभा ।।

तस्याः संरक्षणायाहं स्थापितो विष्णुनाष्टधा ।। ४ ।।

शंखाकृतेरग्रभागे नीलकण्ठोऽहमास्थितः ।।

दुर्गया सह विप्रेंद्र तत्रेमं भूपतिं नय ।। ५ ।।

अन्तर्हितः खल्विदानीं नीलरत्नतनुर्हरिः ।।

तत्र श्रीनरसिंहस्य क्षेत्रं कुरु मदाज्ञया ।। ६ ।।

तत्र नः सन्निधौ वाजिमेधेन यजतामयम् ।।

सहस्रेण नृपश्रेष्ठ तदन्ते तरुमद्भुतम् ।। ७ ।।

दर्शयैनं द्विजश्रेष्ठ ब्रह्मरूपमकल्मषम् ।।

चतस्रः प्रतिमास्तेन विश्वकर्मा घटिष्यति ।। ८ ।।

तासां प्रतिष्ठितौ ब्रह्मा स्वयमेवागमिष्यति ।।

यथायं क्षीणपापः स्याद्वाजिमेधैर्यजन्हरिम् ।। ९ ।।

तिष्ठत्वब्दसहस्रं वै तदंते लोकयिष्यति ।।

समस्तजगदाधारं सर्वकल्मषनाशनम् ।। 2.2.12.११० ।।

दारवीं तनुमास्थाय दर्शनादपवर्गदम् ।।

न तस्य चरितं वेत्ति ब्रह्माऽहं त्वं च नारद ।। ११ ।।

आज्ञानुष्ठानतो भक्त्या प्रसीदति स केवलम्।।

नारदोऽपि महादेवं प्रणिपत्य जगद्गुरुम्।।

उवाच प्रांजलिर्भूत्वा यदादिष्टं त्वया विभो।।१२।।

पितामहोऽपि मामित्थं निर्दिदेशास्य कल्पनम्।।

पितामहश्च त्वं नाथ नो भिन्नौ परमात्मनः।।१३।।

नृपतेरस्य भाग्यर्द्धिरीदृशी यत्कृते विभो।

अगोचरोऽसि मनसस्त्र्याणामप्यनुग्रहः।।१४।।

यत्प्रसंगेन तरणं भवाब्धेरपि दुष्कृताम् ।।

अचिंत्यमहिमा ह्येष भगवान्भूतभावनः ।।१५ ।।

न बुद्धिगोचरे भक्तिर्यावत्या प्रीयते ह्यसौ ।।

चिरं यतंतस्तिष्ठंति वेदानुवचनादिभिः ।।

क्षुद्रोऽपि लभते मुक्तिमनायासेन कर्मणा ।।१६।।

गव्योपजीव्या गोप्यस्तु वनचारगृहोषिताः ।।

अरण्यजीवनाः प्रापुर्मुक्तिं कामोपभोगतः ।। १७ ।।

द्रुहन्निरंतरं प्राप शिशुपालः सभांतरे ।।

व्याधोः हृदयमाविध्य गतिं प्राप सुदुर्लभाम् ।। १८ ।।

वस्त्राकर्षं गृहं नीत्वा कुब्जैनं बुभुजे पुरा ।।

यं ध्यानलयमापन्ना लभंते न सुरस्त्रियः ।। १९ ।।

चंडालाय ददौ मुक्तिं दूरस्थायापि नो पुनः।।

आसन्नायातिभक्ताय श्रोत्रियाय पुरा विभुः।।2.2.12.१२०।।

मायाभिर्वंचयेत्त्वां हि पितामहमपि प्रभुः।।

तिष्ठंति दुःखबहुलास्तपोभिर्देहबंधनाः।।२१।।

गौतमाद्या ब्रह्मचर्यनिष्ठाः कल्पान्तवासिनः।।

ईदृक्ताद‍ृक्परिच्छेदगोचरं नास्य चेष्टितम्।।२२।।

व्यवसायेन बहुना कालेन महता तथा।।

निर्णेतुं शक्यते नास्य चरितं वा सुमेधसः ।। २३ ।।

उपाया बहवः संति ये शास्त्रपरिनिष्ठिताः ।।

विदुषां मोचनायेह बहुशस्तैर्यजंति वै ।। २४ ।।

सर्वेषामुत्तमोपायो वसतिः पुरुषोत्तमे ।।

याऽवश्यं स्वामिसायुज्यं प्रापयेत्सुसखा यथा ।। २५ ।।

तदेनं मायिनं प्राप्तुमुपायो नांतरीयकः।।

स्वयं निधाय हरिणा यत्र वासः सुरक्षितः ।। २६ ।।

इंद्रद्युम्नप्रसंगेन जायते सार्वलौकिकः ।।

तदाज्ञापय देवेश गृहीत्वैनं बलान्वितम् ।।२७।।

उपत्यकायां संस्थाप्य दीक्षयित्वा महाक्रतौ ।।

आगमिष्यामि पादाब्जसमीपं ते वृषध्वज ।। २८।।

।। जैमिनिरुवाच ।। ।।

तथेत्युक्त्वा महादेवः क्षणादंतर्दधे मुनेः ।।

सोऽपि राज्ञो रथे तिष्ठन्प्रययौ क्षेत्रमुत्तमम् ।।२९।।

द्वितीयेऽह्नि कपोतेशस्थलीमासेदिवान्नृपः ।।

दैर्घ्यायामसमायुक्तां जलाशयद्रुमाकुलाम्।।2.2.12.१३०।।

बिल्वेशः पूर्वसीमायां समुद्रतटमास्थितः ।।

सेनानिवेश योग्यां तां मत्रिणा संनिवेदिताम् ।।३१।।

यथायोग्यं यथास्थानं स्थापयित्वा नृपोत्तमः ।।

बिल्वेश्वरकपोतेशं नमस्कृत्य प्रपूज्य च ।। ३२ ।।

रथमास्थाय मतिमान्सहितो ब्रह्मसूनुना ।।

मनसा वचसा विष्णुं नीलाचलनिवासिनम्।।

चिंतयन्कीर्तयन्विप्रा जगाम संनिधिं हरेः ।।१३३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे द्वादशोऽध्यायः ।।१२।।।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १३

https://sa.wikisource.org/s/h30



।। मुनय ऊचुः । ।।

कपोतेशस्थली चापि कथं ख्याता महामुने ।।

को वा कपोतः कश्चेश एतन्नो वक्तुमर्हसि ।।१।।

।। जैमिनिरुवाच ।। ।।

पुरा कुशस्थली सा वै असेव्या सर्वजंतुभिः ।।

तीक्ष्णधारैः कुशाग्रैस्तु परितः कंटकैश्चिता ।।२।।

निस्तरुर्निर्जलाधारा पिशाचवसतिर्यथा ।।

यदा पूर्वं भगवतो नान्यो देवोऽपि पूज्यते ।।३।।

पूज्यः स्यामहमप्येवं स्पर्धासीद्धूर्जटेस्तदा ।।

चिंतयन्निति तस्यैव विष्णोर्भक्तौ मनोऽदधत्।। ४ ।।

सर्वनिर्विषये देशे स्थित्वाऽहं निष्परिग्रहः ।।

सुमहत्तप आस्थाय तोषयिष्यामि तं हरिम् ।। ५ ।।

किं वदेयं रमेशाय का स्तुतिः शारदापतेः ।।

सर्वब्रह्मांडनाथस्य किं वान्यत्तुष्टिकारकम् ।। ६ ।।

तस्मान्न बाह्यं वस्त्वन्यदुपयोगाय तस्य वै ।।

अंतर्यागं समास्थाय निर्व्यलीकेन चेतसा ।। ७ ।।

भक्तेभ्य आत्मप्रददं चराचरगुरुं हरिम् ।।

आराधयिष्ये सर्वेषां पूज्यः स्यां तत्प्रसादतः ।। ८ ।।

तत इत्यभिसंधाय ययौ पुण्यां कुशस्थलीम् ।।

समीपे नीलगोत्रस्य सर्वद्वंद्वविवर्जितः ।। ९ ।।

ततस्तेपे तपस्तीव्रं वायुभक्षो महेश्वरः ।।

कपोत इव सूक्ष्मोऽभूदष्टमूर्तिरपि प्रभुः ।। 2.2.13.१० ।।

ततः प्रसन्नो भगवानैश्वर्यं प्रददौ तदा ।।

येनात्मतुल्यः संजातः पूजासंमाननादिषु ।। ११ ।।

तपःप्रभावात्तस्यासीत्स्थली वृन्दावनोपमा ।।

सरस्तडागसरसी नदीभिः शोभितांतरा ।। १२ ।।

नानाद्रुमैर्लताभिश्च सर्वर्तुफलपुष्पकैः ।।

मधुमत्तद्विरेफाणां झंकारैर्मुखराशया ।। १३ ।

नानापक्षिगणाकीर्णा सर्वजंतुसुखाश्रया ।।

कपोतसदृशो जातो यतः स तपसा शिवः ।। १४ ।।

मुरारेराज्ञया सोऽत्र कपोतेश्वरतां गतः ।।

तदाज्ञयाऽत्र वसति मृडान्या त्र्यंबकः सदा ।। १५ ।।

येऽर्चयन्ति कपोतेशं स्तुवन्ति प्रणमंति वा ।।

निर्धूतकल्मषास्ते वै प्रयांति पुरुषोत्तमम् ।। १६ ।।

अतः परं प्रवक्ष्यामि बिल्वेशमहिमां द्विजाः ।।

पातालवासिनः पूर्वं दैत्या भित्त्वा महीतलम् ।। १७ ।।

उपद्रवंति भूर्लोकं भक्षयन्ति जनांस्तथा ।।

भारावतरणार्थाय देवकीगर्भसंभवः ।। १८ ।।

पालयामास पृथिवीं यदा स भगवान्प्रभुः ।।

यादवैः पांडवैः सार्द्धं तदा तत्स्थानमागतः ।। १९ ।।

तीर्थराजस्य सलिले स्नात्वा तं नीलमाधवम् ।।

दूरात्प्रणम्य मनसा दैत्यद्वारमुपागतः ।। 2.2.13.२० ।।

दृष्ट्वा तद्विवरं घोरमप्रवेश्यं तु मानवैः ।।

भ्रांत्या संमोहयँल्लोकान्प्रथयञ्छिवपूज्यताम् ।। ९३ ।।

बैल्वं फलं समादाय तत्रावाह्य त्रिलोचनम् ।।

पूजयित्वा पुरारातिं तुष्टावासुरसूदनः ।। २२ ।।

।।श्री भगवानुवाच ।। ।।

नमस्ते त्रिगुणातीत गुणत्रयविभागकृत् ।।

त्रयीमय त्रयातीत त्रिकालज्ञानिने नमः ।। ।। २३ ।।

शशिसूर्याग्निनेत्राय ब्रह्मण्याय वरात्मने ।।

अष्टैश्वर्यनिधानाय तुभ्यमष्टात्मने नमः ।। २४ ।।

यस्य रूपं तमःपारे तमोनाशनमव्ययम् ।।

अज्ञानानां तमश्छिन्नं तस्मै वितमसे नमः ।। २५ ।।

एवं स्वमात्मनात्मानं स्तुत्वा स भगवान्प्रभुः ।।

तस्य प्रसादाद्विवरं सुप्रवेशमपश्यत ।। २६ ।।

तेन मार्गेण पातालं ससैन्योऽभ्यगमत्प्रभुः ।।

हत्वा तत्र बलोदग्रान्दैत्यान्भारावतारणः ।। २७ ।।

पुनरागम्य तत्रैव स्थित्वा स वृषभध्वजम् ।।

संपूज्य भगवान्द्वाररोधाय स्थापयञ्छिवम् ।। २८ ।।

इदमाह महाबुद्धिर्भक्तिवश्यो गदाधरः ।।

धूर्जटे तिष्ठ प्रासादे रुन्धानोऽसुर निर्गमम् ।। २९ ।।

त्वदन्यः कः क्षमः शंभो कर्बूरबलनाशने ।।

स्थापयित्वा महादेवं ततो द्वारावतीं ययौ ।। 2.2.13.३० ।।

ततःप्रभृति बिल्वेशः पृथिव्यां ख्यातिमागतः ।।

पूर्वविधिः स बिल्वेशः क्षेत्रराजस्य भो द्विजाः ।। ३१ ।।

तं दृष्ट्वा पापहंतारं मृड्रानीपतिमव्ययम् ।।

सर्वान्कामानवाप्नोति विपत्तिं दुस्तरां जयेत् ।। ३२ ।।

कपोतबिल्वेश्वरयोर्माहात्म्यं कथितं तु वः ।।

अतः परं भो मुनयः किमन्यच्छ्रोतुमिच्छथ ।। ३३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १४



।। मुनय ऊचुः ।। ।।

रथमारुह्य तौ यातौ यदा नारदपार्थिवौ ।।

क्व यातौ चक्रतुः किं वा तन्नो वद महामुने ।।१।।

।। जैमिनिरुवाच ।। ।।

सार्द्धं च विद्यापतिना पुरोहितकनीयसा ।।

क्षेत्रांते नीलकण्ठस्य समीपमुपजग्मतुः ।। २ ।।

दुर्निमित्तमभून्मार्गे व्रजतोऽस्य महीक्षितः ।।

वामाक्षिभुजयोः स्पन्दः स्फुरणं च मुहुर्मुहुः ।। ३ ।।

तद्दृष्ट्वा नृपशार्दूलो विषादमुपसेदिवान् ।।

पप्रच्छ कारणं चास्य सर्वज्ञाननिधिं मुनिम् ।। ४ ।।

अव्याहतं मे साम्राज्यं प्राप्तं क्षेत्रोत्तमं त्विदम् ।।

दर्शनार्थं माधवस्य यात्रेयं तु शुभावहा ।। ५ ।।

अकार्यं मे भवेदद्य किं मुने ब्रूहि तत्त्वतः ।।

स्पन्दते वामनेत्रं तु स्फुरते च भुजोऽसकृत् ।। ६ ।।

तच्छ्रुत्वा नारदः प्राह भावि कार्यं च सूचयन् ।।

श्रावयन्कुशलं वाक्यं यदुक्तं पद्मयोनिना ।। ७ ।।

नारद उवाच ।। ।।

मा भूद्विषादस्ते भूप सविघ्नं प्रायशः शुभम् ।।

विघ्नांते च शुभं पुंसां पुनर्भाग्यवतां नृप ।। ८ ।।

सत्यं त्वं सार्वभौमोऽसि क्षेत्रं विष्णोर्वपुस्त्विदम् ।।

यात्रा तेऽत्र यदर्थेयं सोऽऽतर्द्धानमुपागमत् ।। ९ ।।

एष विद्यापतिर्विप्रो दिने यस्मिन्ददर्श तम् ।।

सायंकाले ततोऽन्येद्युः स्वर्णवालुकया वृतः ।।

ययौ पातालनिलयं मर्त्यलोके सुदुर्लभः ।। 2.2.14.१० ।।

।। जैमिनिरुवाच ।। ।।

तच्छ्रुत्वा घोरवचनं वज्रपातसमं नृपः ।।

पपात धरणीपृष्ठे निःसंज्ञः स द्विजोत्तमाः ।। ११ ।।

तं तथा पतितं दृष्ट्वा पुरोहितपुरोगमाः ।।

स्निग्धाः सखायः सर्वे ते हाहाकारमुपाद्रवन् ।।१२।।

कर्पूरशीतलं वारि मुखे सिक्त्वा पुनःपुनः ।।

चन्दनागुरुकर्पूरैः सर्वांगं लिलिपुश्च ते ।। १३ ।।

चामरैस्तालवृंतैश्च वीजयामासुराशु तम् ।।

नारदोऽपि च संभ्रांतो धारयन्योगधारणाम् ।। १४ ।।

प्राणानररक्षन्नरपतेर्जानंस्तत्र शुभायतिम् ।।

सोऽपि राजा चिरात्संज्ञां लेभे यत्नैरनुत्तमैः ।। १५ ।।

उत्थाय पादयोर्विप्रा नारदस्यापतत्पुनः ।।

किमकार्षं मुने पापं कस्मिञ्जन्मांतरे दृढम् ।। १६ ।।

यस्य पाकदशायां वै दुःखमासीत्सुदारुणम् ।।

कर्मणा मनसा वाचा नो द्विजानां गवामपि ।।

अपराधः कृतः कश्चित्स्वप्नेऽपि मुनिपुंगव ।। १७ ।।

नित्यं नैमित्तिकं काम्यं कर्म यत्परिकीर्तितम् ।।

राज्ञस्तन्मुनिशार्दूल न त्यक्तं वै मया क्वचित् ।। १८ ।।

देवतातिथिभृत्यानां पितॄणां च महामुने ।।

तथाश्रितानां बंधूनां नापमानः कृतो मया ।। १९ ।।

पंचाशदपराधा ये विष्णोर्वैष्णवपुंगव ।।

त्यक्ताः प्रयत्नात्ते सर्वे क्रुद्धा इव महोरगाः ।। 2.2.14.२० ।।

किं भाग्यं चरितं तेन पुरोहितकनीयसा ।।

यच्चर्मचक्षुषा दृष्टो भगवान्नीलमाधवः ।। २१ ।।

किमर्थं राज्यविभ्रंशो जानतैष न्वया कृतः ।।

यात्रासमय एवैतत्कथं वा न प्रकीर्तितम् ।। २२ ।।

किमर्थं वा श्रोत्रियाणां स्थानभ्रंशो मया कृतः ।।

कथमेतैः परित्यक्ताश्चिरात्संस्कृतभूमयः ।। २३ ।।

आवंशभूतेर्वृत्तिर्या प्रजाभिः परिपालिता ।।

मदर्थं सा परित्यक्ता जीविष्यंति कथं नु ताः ।। २४ ।।

प्राणान्न धारयिष्यामि न द्रक्ष्यामि यदा हरिम् ।।

एष मे निश्चयो ब्रह्मन्मयि नष्टे कुतः प्रजाः ।। ।। २५ ।।

मुने सदा सकरुणस्त्वं मां शास्ति शुभाशुभम् ।।

सांप्रतं मत्सुतं नीत्वा मालवेष्वभिषेचय ।। २६ ।।

स पालयतु न्यायेन न शोचंतु इमाः प्रजाः ।।

राजानो ये समायातास्ते सर्वं मन्निदेशतः ।। २७ ।।

मत्सूनोर्मालवेशस्य प्रयांतु वचने स्थिताः ।।

प्रायोपवेशविधिना चिंतयन्नीलमाधवम् ।। २८ ।।

आयुःशेषं करिष्यामि सफलं क्षेत्रसंस्थितः ।। २९ ।।

।। जैमिनिरुवाच ।। ।।

विलपंतमिन्द्रुम्नं राजानं ब्रह्मणः सुतः ।।

उत्थाप्य प्रश्रयगिरा सांत्वयन्निदमब्रवीत् ।। 2.2.14.३० ।।

।। नारद उवाच ।। ।।

राजन्पंडितमूर्द्धन्यो वैष्णवो धैयसागरः ।।

श्रेयः सविघ्नं सततं कथं वा नावधारयेः ।। ३१ ।।

इदं तु परमं श्रेयः पुंसो जन्मशतार्जितम् ।।

शरीरधारिणं पश्येच्चर्मचक्षुर्गदाधरम् ।। ३२ ।।

निरंकुशा हरेर्लीला केन वाप्यवधार्यते ।।

जीवन्मुक्तोऽप्यहं राजंस्तल्लीलां नातिवर्तये ।। ३३ ।।

कियता वंचितो नाहं दृढभक्तोऽन्तिकस्थितः ।।

दुरत्यया तस्य माया बहुजन्मशतैरपि ।। ३४ ।।

अनन्ता तस्य मायेयं दुर्ज्ञेया पद्मयोनिना ।।

नाभिपद्मास्थितेनापि नित्यं च स्तुतिशालिना ।। ३५ ।।

स्वभाव एवं कथितस्तस्य मायाविनो नृप ।।

विशेषं कथयाम्येवं त्वं तु भाग्यवतां वरः ।। ३६ ।।

तिस्रोऽपि मूर्तयस्तस्य त्वदनुग्रहबुद्धयः ।।

चराचराणां स्रष्टा यः साक्षाल्लोकपितामहः ।।
मामुवाच व्रजाशु त्वमिंद्रद्युम्नस्य चांतिकम् ।। ३७ ।।
नीलाचलं प्रयात्येष दिदृक्षुर्नीलमाधवम् ।।
अन्तर्द्धानं गतो ह्येष यमेन प्रार्थितो विभुः ।। ३८ ।।
न तत्र शोकः कर्तव्यः शक्यते तत्र नान्यथा ।।
वाच्यो मद्वचनाद्राजा पंचमी मम संततिः ।। ३९ ।।
तत्कृते परमात्मानं प्रसाद्य पुरुषोत्तमम् ।।
श्वेतद्वीपान्नयिष्यामि सहस्रांते महाक्रतोः ।। 2.2.14.४० ।।
इन्द्रद्युम्नः स इदानीं क्षेत्रे श्रीपुरुषोत्तमे ।।
अश्वमेधसहस्रैस्तु यजन्विष्णुं स तिष्ठतु ।। ४१ ।।
तदंते दारवतनुं विष्णुं द्रक्ष्यति चक्षुषा ।।
सोऽवतारो हरेः ख्यातिं तस्य द्वारा गमिष्यति ।। ४२ ।।
तदा तु तनवो विष्णोः प्रतिष्ठप्या मया धुवम् ।।
पुरा स्म मणिमूर्तिस्तु चतुर्द्धावस्थितो हरिः ।।४३।।
दृष्ट्वा पुरोधसा तस्य साक्षादग्रे निवेदितः ।।
दिव्यदारुवपुर्भूयश्चतुर्द्धावतरिष्यति ।। ४४ ।।
तस्मान्मा व्यथ राजेंद्र वांछा ते सफला ध्रुवम् ।।
भविष्यति न संदेहो निर्व्यलीको वसेह वै ।। ४५ ।।
।। जैमिनिरुवाच ।। ।।
सांत्वयित्वा निनायेत्थं राजानं नारदस्तदा ।।
विश्वासपदवीं विप्राः पुनर्वाक्यमुवाच ह ।। ४६ ।।
।। नारद उवाच ।। ।।
शंखाकृतेः क्षेत्रवरस्य चाग्रे यो नीलकण्ठः खलु दुर्गयाऽऽस्ते ।।
यामो वयं तत्र च वाजिमेधक्रतूपयोग्या सुसमा स्थली सा ।। ४७ ।।
तस्यां विनिर्माय सहस्रवर्षस्थिरां सुशालां हयमेधनाय ।।
नीलाद्रिवासस्य नृसिंहमूर्तिं दृष्ट्वा कृतार्थं विरचय्य जन्म ।। ४८ ।।
तस्यैव मूर्तिं प्रतियातनां ते नित्यार्चनीयां तव पूजनीयाम् ।।
प्रत्यक्प्रतिष्ठाप्य समस्तविघ्नविनाशहेतोः फलबृंहणाय ।। ४९ ।।

आरप्स्यामः क्रतुवरं मुनिवर्यैर्यथोचितम् ।।

विलम्बोऽत्र न हि श्रेयानिति पैतामहं वचः ।। 2.2.14.५० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १५



।। जैमिनिरुवाच ।। ।।

ततस्ते प्रस्थिता विप्रा नीलकण्ठांतिकं मुदा ।।

प्रपूज्य तं महादेवं श्रीदुर्गां प्रणिपत्य च ।। १ ।।

विमुच्य स्यंदनवरं पादचाराः सहानुगाः ।।

आरोढुं नीलभूमिध्रं प्रयाताः संयतेद्रियाः ।। २ ।।

नानाद्रुमलताकीर्णं नानापक्षिगणाकुलम् ।।

शिलाविषमसंरोधमभितः परिवेषकम् ।। ३ ।।

भ्रमद्भ्रमरसंभूतभ्रमकृद्गंडशैलकम्।।

दक्षिणांभोधिकल्लोलजलावृतनितंबकम् ।। ४ ।।

अप्रतर्क्यं सदा मर्त्यैर्दुष्प्रवेश्यं महोरगैः ।।

मत्तमातंगकघटाबृंहितैर्भीषणांतरम् ।। ५ ।।

श्वापदैश्चिरसंवासैः शस्त्राघातमवेदिभिः ।।

निर्भयैः परितः कीर्णं मृगयूथैरनेकशः ।। ६ ।।

प्रवेष्टुकामा न प्रापुर्यदा ते मार्गमंतरम्।।

तदा नारदसंसर्गाद्विदित्वा तु गिरेः शिरः ।। ७ ।।

आसेदुर्यत्र वसति कृष्णागुरुतरोरधः ।।

सर्वापद्भयसंहर्ता दिव्यसिंहवपुर्विभुः ।। ।। ८ ।।

यं दृष्ट्वा ब्रह्महत्याया लीयन्ते कोटयो नृणाम् ।।

व्यात्तास्यं भीमदशनमापिंगलसटाकुलम् ।। ९ ।।

उग्रं त्रिनेत्रं दैत्यस्य स्वोरावुत्तानशायिनः ।।

वक्षःस्थलं दारयंतं नखरैर्वज्रदारुणैः ।। 2.2.15.१० ।।

अरुणाभं लसज्जिह्वं साट्टहासमुखं विभुम् ।।

शंखचक्रलसद्बाहुं किरीटमुकुटोज्ज्वलम् ।।।। ११ ।।

नेत्रोच्छलद्वह्निकणसंत्रासितदिगन्तरम् ।।

प्रचंडाघातभूम्यंतप्रविष्टपदपंकजम् ।। १२ ।।

तमादिमूर्तिं ते दृष्ट्वा नारदाग्रे तदा हरिम् ।।

निर्भया ददृशुर्दूरात्प्रणेमुर्विगतज्वराः ।। १३ ।।

इन्द्रद्युम्नोऽपि तं दृष्ट्वा नारदोक्तौ विशस्वसे ।।

भाविकार्ये प्रत्ययवानिदमाह महामुनिम् ।। १४ ।।

महर्षे कृतकृत्योऽस्मि त्वं हि ज्ञाननिधिः परम् ।।

दुराराध्यो नृसिहोऽयं दर्शनेऽपि भयावहः ।।१५।।

भवादृशैः सुसेव्योयं मादृशैर्दूरतोऽपि सः ।।

दर्शनात्कृतकृत्योऽस्मि संलीनाशेषपातकः ।। १६ ।।

त्वत्सन्निधानादेवात्र तिष्ठामो निर्भया मुने ।।

अत्युग्र मूर्तिर्भगवान्स्वल्पवीर्यैर्नरैः कथम् ।। १७ ।।

आराध्यते दैत्यराजं त्रिलोकेशं विदारयन् ।।

यस्य नीलमयी मूर्तिः कृपासिंधोः स्थिता तु वै ।। १८ ।।

कस्मिन्स्थले मुनिश्रेष्ठ दर्शनाद्या विमुक्तिदा ।।

तन्मे दर्शय विप्रेंद्र यन्मे मुक्तिप्रदं मतम् ।। १९ ।।

इत्युक्तो नारदस्तस्मै दर्शयामास पावनम् ।।

स्थानं यत्र स्थितो देवः स्वर्णसैकत संवृतः ।। 2.2.15.२० ।।

पश्यैतं योजनायामं योजनद्वयमुच्छ्रितम् ।।

कल्पांतस्थायिनं भूप न्यग्रोधं मुक्तिदं नृणाम् ।। २१ ।।

छायायाः क्रमणाद्यस्य मुच्यते पापकंचुकात् ।।

अस्य मूले नरः प्राणांस्त्यजन्मुक्तिमवाप्नुयात् ।।२२।।

न्यग्रोधरूपं दृष्ट्वापि नारायणमकल्मषम् ।।

निष्पापो जायते मर्त्यः किमुत पूजयन्स्तुवन् ।। २३ ।।

अस्य मूलात्प्रतीच्यां हि नृसिंहस्योत्तरे नृप ।।

अतिष्ठन्माधवो यत्र चतुर्मूर्तिधरो विभुः ।। २४ ।।

अनुग्रहीतुं त्वामेव पुनरत्रोद्भविष्यति ।।

श्वेतद्वीपे यथा विष्णुर्भोगभूमौ निजालयः ।। २५ ।।

जंबूद्वीपे कर्मभूमौ निजं स्थानमिदं स्मृतम् ।।

स्वस्यैवातिरहस्यत्वान्न प्रकाशोस्य संमतः ।। २६ ।।

मोक्षाधिकारी जानाति स्थलमेतन्महीपते ।।

अविश्वासपदं नृणां दुष्कृतां हि विशेषतः ।। २७ ।।

अत्र याऽन्या प्रतिकृतिः पौरैर्विष्णोः प्रतिष्ठिता ।।

सापि मुक्तिप्रदा भूप किं पुनः सा स्वयंभुवा ।। २८ ।।

अंतर्द्धानतिरोधाने सुनिमित्ते जगत्प्रभोः।।

अनुग्रहार्थं साधूनां जायते च युगेयुगे ।। २९ ।।

नानावतारैर्भगवान्मत्स्यकूर्मादिकैर्नृप ।।

निमित्तनाशे च तिरोदधाति परमेश्वरः ।। 2.2.15.३० ।।

निर्निमित्तं स्थितो नित्यमिह कारुण्यसागरः ।।

श्वेतद्वीपाद्यथा विष्णुरन्यत्रावतरेत्प्रभुः ।। ३१ ।।

अत्र स्थितोऽपि स द्वारकाकांचीपुष्करादिषु ।।

प्रकाशं याति कृपया तरुमूलप्ररोहवत् ।। ३२ ।।

नानातीर्थेषु देशेषु क्षेत्रेष्वायतनेषु च ।।

अंशावतारास्तस्यैव मा भूत्ते संशयो नृप ।।३३।।

क्षणं न त्यजतीशानः क्षेत्रं क्षेत्रमिव स्वकम् ।।

त्वदुपज्ञस्तु भूपाल प्रकाशोऽन्यो भविष्यति ।। ३४ ।।

इति संदर्शितं स्थानं नारदेन महात्मना ।।

साष्टांगपातं भूमौ तदिंद्रद्युम्नो ननाम ह ।। ३५ ।।

मन्वानस्तु स्थितं देवं प्रकाशमिव तुष्टुवे ।। ३६ ।।

।। इंद्रद्युम्न उवाच ।। ।।

देवदेव जगन्नाथ प्रणतार्तिविनाशन ।।

त्राहि मां पुंडरीकाक्ष पतितं भवसागरे ।। ३७ ।।

त्वमेक एव दुःखौघध्वंसकः परमेश्वर ।।

क्षुद्राः क्षुद्रान्हि सेवंते सुखलेशस्य लिप्सया ।। ३८ ।।

अनादित्रिविधौघस्य राशेः स्वस्य महांहसः ।।

दुरुच्छेद्यस्य सततं पूर्यमाणस्य जन्मनः ।। ३९ ।।

किं पुनर्भक्तिभावेन साक्षान्मुक्तिप्रदं नृणाम्।।

कर्माधीनं तु ये मूढा वदंति त्वां क्रृपानिधिम् ।। 2.2.15.४० ।।

ते न जानंति भगवन्कर्मैवं प्रेरितं त्वया ।।

अजामिलेन विप्रेण त्यक्त्वा वर्णाश्रमोदितम् ।। ४१ ।।

किं न पापं कृतं स्वामिन्सोऽपि त्वन्नामकीर्तनात् ।।

मुक्तोऽभूत्स्मरणादेव पाशहस्तैर्विमोचितः ।। ४२ ।।

सर्वेऽप्युपाया देवेश कीर्तितास्तव दर्शने ।।

त्वयि दृष्टे हि भिद्यंते संशया हृदि संस्थिताः ।। ४३ ।।

निःसंशयो भवेत्सद्यः पापपुण्यक्षयो धुवम् ।।

त्वमेव शरणं दीनमनुगृह्णीष्व मां विभो ।। ४४ ।।

निश्चितानि त्वया देव गर्भस्थस्य च यानि मे ।।

तैरेव मे जनिर्जातु याचे त्वां केवलं त्विदम् ।। ४५ ।।

तिरश्चो मुक्तिदा मूर्तिः स्थिता ते याऽत्र तां पुनः ।।

अनेन चक्षुषा पश्यामीश नान्यत्प्रयोजनम् ।।४६।।

कृतांजलिपुटो राजा स्तुत्वैवं मधुसूदनम्।।

पुनर्ननाम धरणीपृष्ठे साश्रुविलोचनः ।। ४७ ।।

ततोंऽतरिक्षगा वाणी सामसुस्वरभाषिणी ।।

उच्चचार नभोमध्ये इन्द्रद्युम्नस्य शृण्वतः ।। ४८ ।।

मा चिंतां व्रज भूपाल व्रजिष्ये त्वदृशोः पथम् ।।

पैतामहं वचः प्राह नारदो यत्कुरुष्व तत् ।। ४९ ।।

तच्छ्रुत्वा दिव्यवचनं नारदस्य च भाषितम् ।।

श्रद्दधे वाजिमेधाय भगवत्प्रीतिकारकः ।। 2.2.15.५० ।।

नारदं च पुनः प्राह हर्षगद्गदया गिरा ।।

मुने त्वया यदादिष्टं चतुर्मुखनिदेशतः ।। ५१ ।।

अशरीरा त्वियं वाणी अनुजज्ञे तदेव हि ।।

पितामहो जगन्नाथो भेदो वै नाऽनयोः क्वचित् ।। ५२ ।।

पद्मयोनेः सुतस्त्वं हि वचस्ते भगवद्वचः ।।

तत्कर्तव्यं प्रयत्नेन यच्छ्रेयउपपादकम् ।। ५३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे पंचदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १६



।। जैमिनिरुवाच ।। ।।

नृपं सुमनसं दृष्ट्वा श्रद्दधानं महाक्रतौ ।।

उवाच परमप्रीत्या नारदो लोकहर्षणः ।। १ ।।

व्यवसाये सुकृतिनां देवा यांति सहायताम् ।।

तत्रोदाहरणं त्वं हि यत्सहायश्चतुर्मुखः ।। २ ।।

तदेहि यामस्तत्रैव नीलकंठस्य सन्निधौ ।।

सर्वराक्षससंहारं सर्वविघ्ननिवारणम् ।।३।।

स्थापयाम्यग्रतो राजन्नृसिंहं वारुणीमुखम् ।।

अंतर्हितो हि भगवान्प्रत्यक्षोऽसौ नृकेसरी ।।४।।

सन्निधावस्य यागस्तु फलातिशयवान्भवेत् ।।

त्वमग्रतो गच्छ शीघ्रं प्रासादं तत्र कारय ।। ५ ।।

स्मरणान्मम चागत्य सुतो वै विश्वकर्मणः ।।

प्रत्यङ्मुखं तु प्रासादं स तूर्णं घटयिष्यति ।। ६ ।।

दक्षिणे नीलकंठस्य यो महांश्चंदनद्रुमः ।।

धनुःशतांतरे राजंश्चिररूढस्तु तिष्ठति ।। ७ ।।

तस्य पश्चिमदेशस्थं क्षेत्रं राजन्भविष्यति ।।

वाजिमेधसहस्रेण तस्याग्रे यजतां भवान् ।। ८ ।।

गच्छ त्वमहमत्रैव स्थास्यामि दिनपञ्चकम् ।।

आराध्यैनं दिव्यसिंहं ज्योतीरूपमनन्तकम् ।। ९ ।।

प्रत्यर्चायां प्रतिष्ठाप्य प्राणेंद्रियमनोयुतम् ।।

दीपाद्दीपं यथा राजन्नयिष्ये शोभनाकृतिम् ।। 2.2.16.१० ।।

नारदस्येति वचनं प्रतिश्रुत्य नृपोत्तमः ।।

जगाम तत्र वेगेन चन्दनद्रुमसंनिधिम् ।। ११ ।।

तत्रापश्यत्सुघटकं शिल्पशास्त्रविशारदम् ।।

नारदस्याज्ञया प्राप्तं पुत्रं वै देवशिल्पिनः ।। १२ ।।

मनुष्यरूपमास्थाय शस्त्रसूत्रधरं स्थितम् ।।

राजानं स तु दृष्ट्वा वै चिकीर्षतं सुरालयम् ।। १३ ।।

कृतांजलिपुटः प्रोचे देवाहं शिल्पशास्त्रवित् ।।

नरसिंहालयं तेऽद्य घटयिष्यामि शोभनम् ।।

राजापि तमुवाचेदं प्रहसन्भो द्विजोत्तमाः ।। १४ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

न शिल्पी त्वं हि सामान्यः शिल्पशास्त्रप्रणेतृकः ।।

कथितो नारदेनैव त्वष्टुः पुत्रो महायशाः ।। १५ ।।

निर्जनेऽस्मिन्महारण्ये नेतः पूर्वं जनाश्रयः ।।

वयमद्यागताः शिल्पिन्सम्बन्धः किंनिमित्तकः ।। १६ ।।

देवशिल्पी भवानेव विष्णोरमिततेजसः ।।

सदानुध्यायिनस्तस्य निदेशवशवर्तिनः ।। १७ ।।

येन स्मृतस्त्वं मुनिना स एवात्रागमिष्यति ।।

प्रत्यर्चां नरसिंहस्य गृहीत्वा तु दिनांतरे ।। १८ ।।

तदाशु घटयस्वाद्य सप्राकारं सतोरणम् ।।

प्रासादं नरसिंहस्य प्रतीचीवदनं शुभम् ।। १९ ।।

तं पूजयित्वा विधिवन्नियोज्य घटने नृपः ।।

शिलासंचयकान्भृत्यान्बहुवित्तैरयोजयत् ।। 2.2.16.२० ।।

चतुर्थे दिवसे विप्राः प्रासादोऽभूदनुत्तमः ।।

बहुकालप्रसाध्योऽपि महिम्ना देवशिल्पिनः ।। २१ ।।

ततः प्रभाते विमले नित्यकर्मावसानतः ।।

प्रतिष्ठाविधिसंभारं गृहीत्वा सपरिच्छदः ।। २२ ।।

नारदागमनं प्रेक्ष्य यावत्तिष्ठति भूपतिः ।।

तावच्छुश्रुविरे शङ्खा मृदङ्गा मुरजास्तथा ।। २३ ।।

गीतमङ्गलवाद्यानि घंटानां करिणां स्वनाः ।।

तथा जय जयेत्युच्चैः शब्दा आकाशमण्डले ।। २४ ।।

ताञ्छ्रुत्वा विस्मयापन्ना इंद्रद्युम्नपुरोगमाः ।।

राजानः श्रोत्रिया विप्रा वैष्णवाश्च सहस्रशः ।। २५ ।।

निराधारास्त्विमे शब्दा अद्भुतानि न संशयः ।।

विचारयंतस्ते यावत्तावद्दक्षिणतो मरुत् ।। २६ ।।

गन्धान्वितद्विरेफौघशब्दिताः पुष्पवृष्टयः ।।

आविर्भूतास्त्रिपथगा वारिणार्द्रीकृता द्विजाः ।। २७ ।।

तदनंतरमेवासौ नारदो ब्रह्मणः सुतः ।।

तपःप्रभावनिर्व्यूढ विमानवरशायिनीम् ।। २८ ।।

रत्नचामरहस्ताभिर्दिव्यस्त्रीभिः सुशोभिताम् ।।

अलंकृतां वहुविधैर्मणिरत्नप्रसाधनैः ।। २९ ।।

दिव्यमाल्यांबरधरां दिव्यगन्धानुलेपनाम् ।।

रम्यां प्रतिष्ठितप्राणां घटितां विश्वकर्मणा ।। 2.2.16.३० ।।

तेजोमण्डलसंवीतां परितो हर्षदामपि ।।

आदाय नरसिंहस्य प्रत्यर्चा प्रत्युपस्थितः ।। ३१ ।।

तां दृष्ट्वा हर्षिताः सर्वे राजा राजानुयायिनः ।।

अन्तर्द्धानं गतो देवो नारदेनोद्धृतः किमु ।। ३२ ।।

मेनिरे हर्षितात्मानः प्रशशंसुश्च तं मुनिम् ।।

निरूप्य संनिधिस्थां तु नरसिंहाकृतिं द्विजाः ।।

आद्यमूर्तेर्नृसिंहस्य प्रतिमामथ मेनिरे ।। ३३ ।।

प्रत्युत्थाय ततो राजा प्रहृष्टेनांतरात्मना ।।

प्रदक्षिणीकृत्य हरिं जगाम शिरसा महीम् ।। ३४ ।।

श्रद्धासंपत्तियोग्येन संभारेण नृपाज्ञया ।।

प्रस्थापयामास मुनिः प्रासादं शुभलक्षणम् ।। ३५ ।।

प्रतिमां देवदेवस्य सुमुहूर्ते द्विजोत्तमाः ।।

धरारमाभ्यां सहितां रत्नवेद्यां प्रतिष्ठिताम्।।

योगारूढतनुं राजा इन्द्रद्युम्नोऽथ तुष्टुवे ।। ३६ ।।

वैष्णवैर्ब्राह्मणैर्भूपैर्नारदेन च धीमता।।

गुह्योपनिषदैः स्मार्तैः स्तोत्रैः शास्त्रैर्मुदान्वितैः ।। ३७ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

एकानेकस्थूलसूक्ष्माणुमूर्ते व्योमातीत व्योमरूपैकरूप ।।

व्योमाकार व्यापक व्योमसंस्थ व्योमारूढ व्योमकेशाब्जयोने ।। ३८ ।।

दुःखांभोधेस्त्राहि मां दिव्यसिंह प्रादुर्भूतानेककोट्यर्कधामन् ।।

नित्यासन्नो दूरसंस्थो न दूरो नासन्नो वा बोध्यबोधात्मभाव ।। ३९ ।।

ज्ञेयज्ञेयो ज्ञानगम्योऽप्यगम्यो मायातीतो मानमेयोऽनुमानात् ।।

कृत्स्नस्यादिः कृत्स्नकर्त्तानुमंता पाता हर्त्ता विश्वसाक्षिन्नमस्ते ।। 2.2.16.४० ।।

दुःखध्वंसस्यैकहेतुं न हेतुं भेत्तुं छेत्तुं संशयानग्रजातम् ।।

ज्योतीरूप ज्ञानरूप प्रकाश स्तोमव्यूहाकार निर्माणहेतो ।। ४१ ।।

त्वत्पादब्जे भक्तिमग्र्यां सदा मे देहि स्वामिन्मूलभूतां चतुर्णाम् ।।

श्रौतैः स्मार्तैर्नित्ययुक्ता जनास्ते दीनास्तिष्ठन्त्यत्र बद्धा भवाब्धौ ।। ४२ ।।

अनन्तपादं बहुहस्तनेत्रमनंतकर्णं ककुभौघवस्त्रम् ।।

दिवानिशानाथसुकुण्डलाढ्यं नक्षत्रमाला कृतचारुहारम् ।। ४३ ।।

त्वामद्भुतं दिव्यनृसिंहमूर्तिं भक्तेष्टपूर्तिं शरणं प्रपद्ये ।।

यत्पादपद्म हि पितामहस्य किरीटरत्नैर्विकचत्वमेति।।४४।।

यदीयपादाब्जयुगांतभूमौ लुठेच्छिरो यस्य हि पांचभौतम् ।।

तद्दिव्यपादं शिरसा वहंति सुरेन्द्रनार्यः खलु तं नमामि ।। ४५ ।।

तद्दिव्यसिंहं हतपापसंघं पादाश्रितानां करुणाब्धिसिंहम् ।।

पादाऽब्जसंघट्टविघट्टमानब्रह्मांडभांडं प्रणमामि चण्डम् ।। ४६ ।।

सटाच्छटाकंपनशीर्यमाणघनौघविद्रावितपापसंघम् ।।

चंडाट्टहासांतरिताब्दशब्दं त्रिलोकगर्भं नृहरिं नमामि ।। ४७ ।।

नमस्ते नमस्ते नमस्तेऽद्य विष्णो परित्राहि दीनानुकंपिन्ननाथम् ।।

भवंतं समासाद्य मे देहबन्धो मुरारे न संसारकारागृहेऽस्तु ।। ४८ ।।

हयमेधसहस्रांते यथा त्वां चर्मचक्षुषा ।।

दिव्यरूपं प्रपश्यामि तथानुक्रोशय प्रभो ।। ४९ ।।

यथा चेज्यासहस्रं मे निर्विघ्नं तत्समाप्यते ।।

यज्ञेश त्वत्प्रसादान्मे तथा सान्निध्यमस्तु ते ।। 2.2.16.५० ।।

कोटयः पापराशीनां क्षयं यांति यथा प्रभो ।।

धर्मार्थकामा हस्तस्था नैषां चित्रं स्तुवंति ये ।।

मोक्षस्य भाजनं विष्णो ते नरा ये तवाश्रयाः ।। ५१ ।।

स्तुत्वेत्थं दिव्य सिंहं तं भूपतिर्हृष्टमानसः ।।

दण्डपातप्रणामेन जगाम धरणीं मुहुः ।। ५२ ।।

।। जैमिनिरुवाच ।। ।।

क्षेत्रं तन्नरसिंहस्य ब्रह्मणा निर्मितं पुरा ।।

इन्द्रद्युम्नानुग्रहाय सर्वलोकहिताय च ।। ५३ ।।

पश्यंति ये नृसिंहं तं शंभुना सह संस्थितम् ।।

न देहबन्धं ते विप्राः प्राप्नुवंति न संशयः ।। ।। ५४ ।।

मनसा वांछितं यद्यत्प्राप्नुवंति ततोऽधिकम् ।।

स्तोत्रेणानेन ये दिव्यसिंहरूपं स्तुवंति वै ।। ५५ ।।

सर्वकामप्रदो देवस्तस्य मुक्तिं प्रयच्छति ।।

ज्येष्ठशुक्लद्वादशी या स्वातीनक्षत्रसंयुता ।। ५६ ।।

तस्यां प्रतिष्ठितः क्षेत्रे दिव्यसिंहो महर्षिणा ।।

सुतेन ब्रह्मणः साक्षात्तत्र पश्यंति तं च ये ।। ५७ ।।

वाजिमेधसहस्रस्य फलं साग्रं लभंति ते ।।

पञ्चामृतैर्वा क्षीरेण नारिकेलरसेन वा ।। ५८ ।।

स्नापयंति नरा ये वै अथवा गन्धवारिणा ।।

पूजयित्वा महासिंहमुपचारैः सपायसैः ।। ५९ ।।

जपाकुसुममाल्यैश्च गन्धमाल्यैः सुशोभनैः ।।

धूपदीपैः सकर्पूरैस्तांबूलैरतिशोभनैः ।। 2.2.16.६० ।।

सुगीर्भिः स्तुतिपाठैश्च जयशब्दैस्तथोच्चकै ।।

प्रदक्षिणप्रणामैश्च दानैर्ब्राह्मणतर्पणैः ।।

सन्तोष्य नरसिंहं तं ब्रह्मलोकमवाप्नुयात् ।। ६१ ।।

वैशाखस्य चतुर्दश्यां सौरिवारेऽनिलर्क्षके ।।

आद्यावतारः सिंहस्य प्रदोषसमये द्विजाः ।।६२।।

तस्यां संपूज्य विधिवन्नरसिंहं समाहितः ।।

जन्मकोटिसहस्रैस्तु पापराशिः सुसंचितः ।।

दह्यते तत्क्षणादेव तूलराशिरिवाग्निना ।। ६३ ।।

दृष्ट्वा स्पृष्ट्वा नमस्कृत्वा प्रणिपत्य च भक्तितः ।।

स्तुत्वा विमुच्यते पापैर्निर्मोकेन भुजंगवत् ।। ६४ ।।

न तस्य व्याधयः संति न शोका नाधयस्तथा ।।

सर्वान्कामानवाप्नोति हयमेधफलं तथा ।। ६५ ।।

समीपे तस्य भो विप्रा यजनं दानमेव च ।।

अन्यानि पुण्यकर्माणि कृतानि च सकृन्नरैः ।।

कोटिकोटिगुणानि स्युर्नरसिंहप्रसादतः ।। ६६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १७



।। मुनय ऊचुः ।। ।।

प्रतिष्ठिते नारसिंहे क्षेत्रे तस्मिन्नराधिपः ।।

किं चकार मुने ब्रूहि परं कौतूहलं तु तत् ।। १ ।।

।। जैमिनिरुवाच ।। ।।

इन्द्रादींस्त्रिदशान्सर्वान्न्यमन्त्रयत पूर्वतः ।।

ततः स मन्त्रयामास ऋषीन्विप्रान्सहस्रशः ।। २ ।।

अध्येतॄंश्चतुरो वेदान्सषडंगपदक्रमैः ।।

यज्ञविद्यासु कुशलान्मीमांसापरिनिष्ठितान् ।। ३ ।।

सभाष्यकल्पसूत्रैस्तु परिनिष्ठितकर्मिणः ।।

अष्टादशसु विद्यासु कुशलान्धर्मकोविदान् ।। ४ ।।

सदाचारावदातांश्च कुलीनान्सत्यवादिनः ।।

वैष्णवांश्च विशेषेण मंत्रयामास सादरम् ।। ५ ।।

त्रैलोक्ये ये च राजानः सिद्धाः सप्तर्षयो द्विजाः ।।

सच्छूद्रा वणिजो द्वीपपतयश्च निमंत्रिताः ।। ६ ।।

क्रोशद्वयमिता विप्राः सभासीत्तस्य भूपतेः ।।

पाषाणघटिता सोच्चा सुधया सानुलेपिता ।। ७ ।।

क्वचिद्रत्नमयी भूमिः क्वचित्कांचननिर्मिता ।।

स्फाटिकी राजती चैव यथायोग्यं कृतस्थली।। ८ ।।

स्तंभै रत्नमयैः प्रोच्चैर्दुकूलपरिवेष्टितैः ।।

चारुचंद्रातपाढ्या तु गन्धमाल्यैः सचामरैः ।। ९ ।।

मुक्तादामांतरस्थैश्च चारुवातायना शुभा ।।

कृष्णागुरुस्नेहसिक्ता श्रीखण्डसलिलोक्षिता ।। 2.2.17.१० ।।

सर्वर्तुकुसुमाकीर्णा प्रांतोपवनसंवृता ।।

वाप्यः स्फटिकसोपानाः पद्मकद्वारमंडिताः ।। ११ ।।

चक्रवाकैः प्लवैर्हंसैः सारसैर्मधुरस्वनैः ।।
व्याप्तांतराः स्वच्छशीतसुगंधमधुरांभसः ।। १२ ।।
परितः शतशस्तस्याः सुखावतरणा द्विजाः ।।
उपच्छायाविरचनाः शोभमानाः समंततः ।। १३ ।।
यज्ञशाला मरुत्तस्य यथासीद्धो द्विजोत्तमाः ।।
तथेंद्रद्युम्नभूपस्य रचिता विश्वकर्मणा ।। १४ ।।
शुभेऽह्नि शुभनक्षत्रे वासयित्वा सभासदः ।।
राज्ञः सिंहासनासीनान्दृष्ट्वासीनानृषीनपि ।। १५ ।।
ससिद्धान्ब्रह्मर्षिगणान्बहुमूल्यकुथस्थितान् ।।
देवान्कांचनपीठस्थान्यथायोग्यमथ द्विजान् ।। १६ ।।
वरासनस्थानन्यांश्च यथादेशं सुखस्थितान् ।।
मध्ये नृपाणां देवानामृषीणां च शचीपतिम् ।। १७ ।।
साम्राज्यलक्षणे स्वस्य रत्नसिंहासने स्थितम् ।।
दिव्यैर्माल्यैस्तथा गंधैर्वासोभिर्विष्टरादिभिः ।। १८ ।।
पुरोधसा समं पूर्वमर्चयामास ऋद्धिमत् ।।
विनीतो दीनवत्तस्य चक्रे पूजां तथा नृपः ।। १९ ।।
आश्चर्यं मन्यतेऽस्यासौ त्रैलोक्येशोऽपि तद्यथा ।।
ततः सिद्धान्देवमुनीनचर्यन्निंद्रवत्तदा ।। 2.2.17.२० ।।
विस्मयं जनयामास कुवेरस्याप्यधिश्रियः ।।
ततो देवान्समानर्च प्रभूतस्वस्वसंपदः ।। २१ ।।
उपचारैर्महीनाथः सम्यगव्यग्रमानसः ।।
राज्ञः संपूजयामास राजयोग्यैः परिच्छदैः ।। २२ ।।
यथा ते मेनिरे भूपा भवामः सांप्रतं वयम् ।।
सत्यं राज्यं क्रमात्प्राप्तं नेदृशश्च परिच्छदः ।। २३ ।।
आनर्च वैष्णवान्भूय उपचारैः समानयन्।।
शांता अपि यथा चित्रं मेनिरे विषयागमम् ।। २४ ।।
ततो विप्रान्बाहुजातान्वैश्यान्मुनिपुरःसरम् ।।
सम्यक्प्रपूजयामास सत्त्वोद्रिक्तो महीपतिः ।। २५ ।।

अन्यांश्च सचिवद्वारा पूजयित्वा ससंभ्रमः ।।
दृष्टः स विनयान्नम्रः कृतांजलिपुटस्तथा ।। २६ ।।
महेंद्रमुच्चैराहेदं नारदेन पुरोधसा ।। २७ ।।
।। इन्द्रद्युम्न उवाच ।। ।।
तव प्रसादाद्देवेश इच्छामीदं प्रसीद मे ।।
क्रतुना हयमेधेन प्रयक्ष्ये यज्ञपूरुषम्।। २८ ।।
अनुजानीहि मां देव क्रतूनामीश्वरो भवान् ।।
त्वदाज्ञापालकाः सर्वे त्रैलोक्ये निवसंति ये ।। २९ ।।
यावत्क्रतुसहस्रस्य संस्था च भवति प्रभो ।।
तावत्त्वं त्रिदशैः सार्द्धं सदोमध्यगतो वस ।। 2.2.17.३० ।।
यष्टुमिच्छामि देवेश नाहं त्वत्पदलिप्सया ।।
सर्वेषां वेत्सि देवेश मनोवृत्तिं सदा प्रभो ।। ३१ ।।
युष्माकं पूर्वदृष्टोऽत्र वपुष्मान्माधवः प्रभुः ।।
उपासनायां सोऽयं यो वालुकाभिस्तिरोदधे ।। ३२ ।।
तस्य भूयः प्रकाशार्थं वाजिमेधसहस्रकम्।।
करिष्ये वचनादिंद्र चतुरास्यस्य शासनात् ।।
पुनः प्रकाशिते तस्मिञ्छ्रेयो वोऽपि भविष्यति ।। ३३ ।।
इति विज्ञापिते राज्ञा महेंद्रप्रमुखाः सुराः ।।
अन्तर्द्धानोतरं या च श्रुता पूर्वं सरस्वती ।। ३४ ।।
अशरीरां स्मरंतस्तामिदं प्रोचुः प्रहर्षिताः ।।
इन्द्रद्युम्न महात्मासि सत्यं सत्यवतो भुवि ।। ३५ ।।
तच्चेष्टितं पुरास्माभिरन्वभावि भविष्यकम् ।।
सहायास्ते भविष्यामः कार्ये त्रैलोक्यपावने ।।३६।।
स्रष्टा स जगतां यत्र उद्युक्तः स्वयमेव हि ।।
अत्रैवोवाच भगवानस्माकमपि भूतले ।। ३७ ।।
प्रविशंस्तदनुक्रोशवशाद्भूयः प्रकाशनम् ।।
करिष्ये दारवं देहमित्येतत्परिनिष्ठितम् ।। ३८ ।।
नात्रास्माकं व्यलीकं तु नेंद्रस्य च महीपते ।।

अस्मद्दिष्टसमुद्योगस्तव नः प्रीतिकारकः ।। ३९ ।।

सुखं यजस्व राजेंद्र वैकुंठं भक्तवत्सलम् ।।

क्रतुना हयमेधेन सहस्रपरिवर्तिना ।। 2.2.17.४० ।।

दुराराध्यो हि भगवानस्माकं भक्तवत्सलः ।।

वयमप्यत्र देवत्वं त्यक्त्वा भक्ति परायणाः ।। ४१ ।।

आराधयामः क्षेत्रेस्मिन्विनीता नररूपिणः ।।

प्रियं हि मानुषे लोके कर्म सिद्ध्यति वै कृतम् ।। ४२ ।।

।। जैमिनिरुवाच ।। ।।

इत्युक्ते त्रिदशैः सेंद्रैः परितुष्टांतरात्मना ।।

आरंभार्थं क्रतो राजा भगवंतमपूजयत् ।। ४३ ।।

उपचारसहस्रैस्तु यथावत्प्रतिपादितैः ।।

ततः पितृगणान्राजा निरूप्य श्रद्धयान्वितः ।। ४४ ।।

सदोगृहगतान्विप्रान्याज्ञिकान्समलंकृतान् ।।

कृत्वेष्टदेवं पुरतो वैकुंठं साग्निहोत्रकम् ।। ४५ ।।

आकांक्षन्कल्पितं लग्नं संवृत्ते स्वस्तिवाचने ।।

उपस्थितः सपत्नीकः शुद्धमांगल्यवेषधृक् ।। ४६ ।।

स्वस्ति वाच्य द्विजाञ्छुद्धान्पुण्याहं वृद्धिकर्म च ।।

ततः संभृतसंभारो वरयामास ऋत्विजः ।। ४७ ।।

वृतास्ते तु सपत्नीकं दीक्षयंतो नृपोत्तमम् ।।

विहृत्य दीक्षणायेष्टान्न्ययजन्सभ्यचोदिताः ।। ४८ ।।

प्रणीय तं प्रज्वलंतं वेद्यामाहवनीयकम् ।।

त्रैलोक्यमंगलकरं किं साक्षाद्वैष्णवं महः ।। ४९ ।।

सुप्रोक्षितं चाभिमंत्र्य अनुज्ञाप्य दिगीश्वरान् ।।

मुमुचुस्ते हयं मुख्यमंगेषु शुभलक्षणम् ।। 2.2.17.५० ।।

ततः स दीक्षितो राजा वाग्यतो रौरवीं त्वचम् ।।

अधिष्ठाय सदोमध्ये मृत्युंजय इव स्थितः ।। ५१ ।।

निमंत्रितानां मुक्त्यर्थं चक्षुषा संदिदेश वै ।।

सुराणां रत्नपात्राणि महार्घाणि नृपाज्ञया ।। ५२ ।।

सचिवः कारयामास भोजनाय समृद्धिमत् ।।
शुद्धसौवर्णपात्राणि मुनीनां च महीक्षिताम् ।। ५३ ।।
द्विजानां भोजनार्थाय नवानि प्रत्यहं द्विजाः ।।
क्षत्रियाणां विशां विप्रा राजतानि शुभानि च ।। ५४ ।।
कांस्यनिर्मलपात्राणि शूद्राणां भोजनाय वै ।।
अहन्यहनि पात्राणि भोजनांते द्विजोत्तमाः ।। ५५ ।।
आकरेषु प्रपात्यंते प्रोच्छिष्टदलवज्जनैः ।।
तत्र यज्ञोत्सवे ये वै भोजनाय निमंत्रिताः ।। ५६ ।।
तेषां पुत्राश्च पौत्राश्च प्रपौत्राश्चैव संततिः ।।
नित्यं पंचरसान्नानि बहुमानपुरःसरम् ।। ।। ५७ ।।
आदृतैर्भोजिता राज्ञ इंद्रद्युम्नस्य शासनात् ।।
कुटुंबवत्स्थितास्तत्र संस्था यावन्महाक्रतोः ।। ५८ ।।
यद्देशीया जनास्तेषामधिष्ठाता च तान्नृपः ।।
नृपाणामनुसंधाता इंद्रद्युम्नप्रयाचितः ।। ५९ ।।
नारदः समदर्शी तु परोपकृतिलोलुपः ।।
इंद्रादीनां सुरेंद्राणां देवर्षीणां नृपोत्तमः ।।2.2.17.६०।।
स्वयं नरपतिश्चर्यां चकार क्रतुपूर्तये ।।
षड्विधान्यन्नपानानि संस्कृतानि द्विधा नरैः ।। ६१ ।।
देवानां भोजने तत्र मंत्रतंत्रविशारदैः ।।
मर्त्यानां नल विद्यायां कुशलैः संस्कृतानि वै ।। ६२ ।।
क्षुत्पिपासानभिज्ञा हि सुधाहारा दिवौकसः ।।
तेषामपि अपूर्वत्वादाश्चर्यं तद्धि भोजनम् ।। ६३ ।।
नराणां दुर्लभं मर्त्ये इंद्रद्युम्नगृहेऽशनम्।।
इन्द्रद्युम्नस्य चेंद्रस्य विशेषो मर्त्यवासिता ।। ६४ ।।
अत्यद्भुतकरं ह्येतत्प्रत्यहं च नवं नवम् ।।
संमाननादरावृद्धिर्भोज्यस्य द्विजसत्तमाः ।। ६५ ।।
अन्योन्यस्पर्द्धयैवात्र प्रवर्द्धते परस्परम् ।।
सुगंधसुमनोमाल्यकस्तूर्यादिप्रलेपनम् ।। ६६ ।।

चित्रसूक्ष्मदुकूलानि सोपधानासनानि च ।।

रत्नपल्यंकिका शय्या रत्नदंडप्रकीर्णकम् ।। ६७ ।।

जातीलवंगकर्पूरैर्नागवल्लीदलानि च ।।

मनोहराणि गीतानि नृत्यानि विविधानि च ।। ६८।।

भरतस्य मुनेः शिक्षापंडितै रचितानि च ।।

स्वस्ववंशयशोऽभिज्ञाः शतशः सूतमागधाः ।। ६९ ।।

एतान्यन्यानि वस्तूनि दुर्लभान्यपि यानि वै ।।

त्रिदशाश्चापि मर्त्याश्चान्वभुज्यंत सुसादरम् ।। 2.2.17.७० ।।

एकतोऽन्यत्र चित्राणि न च हीनानि कुत्रचित् ।।

पातालवासिनां चापि भोजनं वै सुधाधिकम् ।। ७१ ।।

यद्भुक्त्वा नानुवाञ्छन्ति पातालगमनं हि ते ।।

पुराणि यानि पाताले रत्नौघालोकितानि च ।। ७२ ।।

विना सूर्यप्रकाशेन तादृशान्येव भूपतिः ।।

ददौ तेषां निवासाय येषु पातालबुद्धयः ।। ७३ ।।

सुखासीनाश्च क्रीडंतो भुंजाना शेरते मुदा ।।

देवानामपि नान्यत्र भूमिस्पर्शनमस्ति वै ।। ७४ ।।

इन्द्रद्युम्नपुरे तत्र स्वर्गादपि मनोहरे ।।

यदृच्छया सुखक्रीडासक्ता नो तत्यजुर्भुवम् ।। ।। ७५ ।।

अभिलाषोपजातं तु सुखं स्वर्गे वदंति हि ।।

अनिच्छयापि भो विप्राः सुखं सर्वत्र तत्र वै ।। ७६ ।।

आदृत्य यत्रान्मन्यंते भोज्यं ते सादरं नराः ।।

न याचितः कोपि जनः कुतो वा स्यात्पराङ्मुखः ।। ७७ ।।

राजाधिराजवेश्मानि जनानां स्वगृहैः समम् ।।

तदासीत्स्वगृहे तेषां न सदा सर्वसंभवः ।। ७८ ।।

तत्र यत्कामनातीतं तद्वस्तु सुलभं बहु ।।

इत्थं प्रवर्तिते यज्ञे यज्ञेशप्रीतये मुदा ।। ७९ ।।

पृथिवी हृतसर्वस्वा वाजिमेधेस्य भूपतेः ।।

या पूर्वं साभवद्भूयः स्वर्णवृष्टिसुभूषिता ।। 2.2.17.८० ।।

इत्थं प्रवृत्ते लोकानां तत्र त्रैलोक्यवासिनाम् ।।
दानसंमानभोज्यानां विधौ विधिवतोऽन्वहम् ।। ८१ ।।
अश्वमेधं प्रति जना जगुर्गाथाः परस्परम् ।।
नेदृग्यागस्य संभारो विधेः शास्त्रप्रचोदितः ।। ८२ ।।
इंद्रद्युम्नस्य राजर्षेर्न भूतो न भविष्यति ।।
न याचितारोऽदातारो मिथो यत्र निमंत्रिताः ।। ८३ ।।
न कामभंगो यत्रासीद्देवानामपि भो द्विजाः ।।
ईदृक्समृद्धिः क्रतुराट् प्रवृत्तो भूपतेस्तदा ।। ८४ ।।
अधिश्रद्धः सुसंपन्नः पूर्वस्मादपरोऽभवत् ।।
स्मृतिकाराः कल्पकारास्तथा शास्त्रप्रणेतृकाः ।। ८५ ।।
यज्ञानुष्ठानकुशलाः सदाचारावतंसकाः ।।
अग्न्याधानाद्यवभृथप्रचारमनुपूर्वशः ।। ८६ ।।
क्रतुः सदस्यानुमते नृपतेः प्रीतये द्विजाः ।।
न मंत्राः स्वरतो हीना वर्णतो वापि कर्हिचित् ।। ८७ ।।
ये वै विधिविधातारस्ते वै कर्मप्रचारकाः ।।
प्रायश्चित्तनिमित्तेन प्रायश्चित्तनिबंधनात् ।। ८८ ।।
कर्मोपघातो नो तत्र योगिनः कर्मयोगिनः ।।
यत्र सप्तर्षयो दिव्याः सदस्याः क्रतुसाक्षिणः ।।८९।।
प्रचारयंति कर्माणि गुणदोषविभागिनः ।।
याज्ञवल्क्यादयस्तेऽत्र मुनयस्त्वृत्विजो वृताः ।। 2.2.17.९० ।।
सदोगतास्ते मुनयः परस्परकथांतरे ।।
वाकोवाक्यानि सूक्तानि गुह्योपनिषदानि च ।। ९१ ।।
गाथाः पौराणिकीर्विप्रा विष्णुभक्तिपुरःसराः ।।
चरितानि हरेः सर्वकल्मषौघहराणि च ।। ९२ ।।
तत्र संवर्तयामासुस्ते सभायां महीक्षितः ।।
तस्य यज्ञे हविः प्राशुः प्रत्यक्षं वह्निमध्यगाः ।। ९३ ।।
मुदितास्त्रिदशा विप्रा महेंद्रप्रमुखामखे ।।
चिरप्रवासिनो देवा नास्मरंतामरावतीम् ।। ९४ ।।

अमृतं हि हविस्तेषां कल्पितं ब्रह्मणा पुरा ।।

तत्प्राश्य मुदिता देवा वीर्यवन्तश्चिरायुषः ।। ९५ ।।

यागानुष्ठानविषयादन्यत्र विषयान्बहून् ।।

इन्द्रद्युम्नेन रचितान्समस्तानुपभुंजते ।। ९६ ।।

तत्र ये नागराजानः पातालतलवासिनः ।।

ततोऽधिकान्मर्त्यलोके विषयानुपभुंजते ।। ९७ ।।

पातालगमनं ते वै नेहंते मनसा ध्रुवम् ।।

इत्थं प्रवर्तितो यज्ञस्त्रैलोक्यप्रीतिकारकः ।। ९८ ।।

इन्द्रद्युम्नस्य नृपतेः क्षेत्रेऽस्मिन्पुरुषोत्तमे ।।

जगदीशप्रसादाय पितामहनिदेशतः ।। ९९ ।।

एकोनं क्रमतः संस्थामवाप पृथिवीपतिः ।।

सहस्रं हयमेधस्य यथावद्विधिचोदितम् ।। 2.2.17.१०० ।।

ततः साहस्रिके यज्ञे वाजिमेधे महीपतिः ।।

दिनेदिने दिव्यगतिर्बभूव नृपतिस्तदा ।। १ ।।

सुत्यायाः सप्त दिवसाद्या रात्रिरभवत्पुरा ।।

तस्यास्तुरीयप्रहरे दध्यौ स विष्णुमव्ययम् ।। २ ।।

ध्याने तस्मिन्ददर्शासौ महाभाग्यवशान्नृपः ।।

प्रत्यक्षमिव स श्वेतद्वीपं स्फटिकनिर्मितम् ।। ३ ।।

समंतात्परिवार्यैनं तिष्ठंतं क्षीरसागरम् ।।

महाकल्पद्रुमैः पुष्पगंधामोदिदिगंतरैः ।। ४ ।।

फलपल्लववल्केषु बहिरंतश्च सर्वशः ।।

शंखचक्रांकितैः शुभ्रैः सर्वालंकारभूषितः ।। ५ ।।

महामंजिष्ठवर्णैश्च मूर्तिभिस्तैर्मुरद्विषः ।।

तन्मध्ये घटितं दिव्यमणिभिर्मंडपोत्तमम् ।। ६ ।।

मध्यस्थसूर्यवद्भासिरत्नसिंहासनोज्ज्वलम् ।।

क्षीराब्धिशीतकल्लोलमंदवातमनोहरम् ।। ।। ७ ।।

तन्मध्ये ददृशे देवं शंखचक्रगदाधरम् ।।

नीलजीमूतसंकाशं वनमालाविभूषितम् ।। ८ ।।

सर्वलावण्यभवनं सौंदर्यश्रीनिकेतनम् ।।

निर्भर्त्सयंतं वपुषा पिनद्धं दिव्यभूषणम् ।। ९ ।।

दक्षपार्श्वे स्थितं तत्र अनंतं धरणीधरम् ।।

कोटिचन्द्रप्रतीकाशं हिमाद्रिसदृशप्रभम् ।। 2.2.17.११० ।।

फणामुकुटविस्तारच्छत्रीभूतं मनोहरम् ।।

मणिकुंडलयुग्मांकं चारुनीलनिचोलकम् ।। ११ ।।

हललांगलशंखारिस्फुरद्बाहुचतुष्टयम्।।

हारकेयूरवलय मुद्रिकाभिरलंकृतम् ।। १२ ।।

मेखलाकटिसूत्राढ्यं दिव्यरत्नप्रसाधनम् ।।

दिव्यहालाक्षीबमूर्तिं चारुहासं सुनेत्रकम् ।। १३ ।।

दक्षपार्श्वस्थितां चास्य लक्ष्मीं तां शुभलक्षणाम् ।।

वराभयाब्जहस्तां वै कुंकुमाभां सुलोचनाम् ।। १४ ।।

त्रैलोक्ययुवतीवृन्ददृष्टांताद्भुतविग्रहाम् ।।

ददर्श पद्मासनगां लावण्यांबुधिपुत्रिकाम् ।। १५ ।।

पितामहं च ददृशे पुरतोऽस्य कृतांजलिम् ।।

वामपार्श्वस्थितं चक्रं नानामणिमयं विभोः ।। १६ ।।

सनकाद्यैर्मुनींद्रैस्तं स्तूयमानं जगद्गुरुम् ।।

दृष्ट्वा स्वप्ने स राजा वै प्रहृष्टो द्विजसत्तमाः ।। १७ ।।

अदृष्टपूर्वरूपं तं ज्योतिर्मयमनंतकम् ।।

तुष्टाव तत्र ध्यानस्थो हर्षगद्गदया गिरा ।। १८ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

नमस्ते जगदाधार जगदात्मन्नमोऽस्तु ते ।।

कैवल्यत्रिगुणातीत गुणांजन नमोऽस्तु ते ।। १९ ।।

सुशुद्धनिर्मलज्ञानस्वरूपाय नमोऽस्तु ते ।।

शब्दब्रह्माभिधानाय जगद्रूपाय ते नमः ।। 2.2.17.१२० ।।

संसारपतितश्रांत दुःखध्वंस नमोऽस्तु ते ।।

दुर्भेद्यहृदयग्रंथिभेदकाय नमोऽस्तु ते ।। २१ ।।

द्विसप्तभुवनागारमूलस्तंभाय ते नमः ।।

ब्रह्मांडकोटिघटनाशिल्पिने चक्रिणे नमः ।।२२।।

करुणामृतपाथोधिसुधाधाम्ने नमो नमः ।।

दीनोद्धारैकगुह्याय कृपापाथोधये नमः ।। २३ ।।

प्रकाशकानां सूर्यादिज्योतिषां ज्योतिषे नमः ।।

प्रतिस्वस्वनदीप्ताय अन्तःपापाग्नये नमः ।। २४ ।।

पावकाय पवित्राय पवित्राणां नमो नमः ।।

गरिष्ठाय वरिष्ठाय द्राघिष्ठाय नमो नमः ।। २५ ।।

नेदिष्ठाय दविष्ठाय क्षोदिष्ठाय नमो नमः ।।

वरेण्याय सुपुण्याय नारायण नमोऽस्तु ते ।। २६ ।।

परित्राहि जगन्नाथ दीनबन्धो नमोऽस्तु ते ।।

निस्तीर्णोऽहं भवांभोधिं प्राप्य त्वां तरणिं सुखाम् ।। २७ ।।

त्वयि दृष्टे रमानाथ क्लेशा व्यपगता मम ।।

चिदानंदस्वरूपं त्वां प्राप्तानां दुःखसंक्षयः ।। २८ ।।

ध्रुवं नाथ समुत्पन्नपरमानंदहेतुकम् ।।

त्राहि त्राहि भवांभोधिमग्नं मां दीनचेतसम् ।। २९ ।।

मध्याह्नार्कोदिते व्योम्नि कुतः संतमसोदयः ।।

ध्यानस्थितः स्तुवन्नेवं प्रणम्य जगदीश्वरम् ।। 2.2.17.१३० ।।

ध्यानावसाने स पुनः स्वयं जाग्रदबुध्यत ।।

स्वप्नांत इन्द्रद्युम्नोऽपि सस्मारात्मानमात्मना ।। ३१ ।।

अत्यद्भुतमिदं स्वप्नं दृष्ट्वा च नृपकुंजरः ।।

मेने कृतार्थमात्मानं हयमेधक्रतोस्तथा ।। ३२ ।।

सहस्रं सफलं चैव स्वभाग्यं समुपस्थितम् ।।

न हि देवर्षिवचनं वृथा भवति कर्हिचित् ।। ३३ ।।

प्रत्यक्षं मे कथं नाथः स्वयमत्र भविष्यति ।।

इति चिंताकुलो रात्रिशेषं नीत्वा विशांपतिः ।। ३४ ।।

शशंस नारदस्याग्रे यथा स्वप्नोऽन्वभूयत ।।

स चापि नारदः प्राह शोकस्ते विगतो नृप ।। ३५ ।।

अरुणोदयकाले हि भगवंतं ददर्श यत् ।।

दशाहात्फलदः स्वप्नस्तस्मिन्काले नृपोत्तम ।। ३६ ।।

क्रत्वंते भगवानत्र प्रत्यक्षस्ते भविष्यति ।।

यदाह मद्गिरा त्वां हि चराचरगुरुर्विधिः ।। ३७ ।।

सोऽपि त्वया जगत्स्रष्टा स्वप्नेऽस्मिन्नवलोकितः ।।

तदनुष्ठीयतां यज्ञः परागे न प्रकाशय ।। ३८ ।।

स्वप्नोऽयं नृपशार्दूल दुर्बोधाचरितो हरेः ।।

किंतु भाग्यवतस्त्वेव स्वप्नस्तादृक्प्रजायते ।। १३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋृषिसंवादे सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १८



।। जैमिनिरुवाच ।। ।।

ततः प्रववृते सुत्या नृपतेर्वाजिमेधिका ।।

तस्यां त्रैलोक्यमभवदेकसद्मनिभं द्विजाः ।। १ ।।

शास्त्रैः स्तोत्रैर्दिवस्पृग्भिर्वर्णक्रमसमुज्ज्वलैः ।।

यथापदस्वरन्यासैरन्ये शब्दास्तिरोहिताः ।। २ ।।

दीनेभ्योऽवारितं तत्र दीयन्ते वाञ्छितानि वै ।।

नटनर्त्तकसूतानां साभूत्कल्पद्रुमोपमा ।। ३ ।।

तन्मध्येऽवभृथे स्नातुं कृता यत्रोपकारिका ।।

दक्षिणे तटभूदेशे बिल्वेश्वरसमीपतः ।। ४ ।।

नियुक्ताः सेवका राज्ञा ससंभ्रममुपस्थिताः ।।

न्यवेदयन्त नृपतिं कृतांजलिपुटा द्विजाः ।। ५ ।।

देव दृष्टो महान्वृक्षस्तटभूमौ महोदधेः ।।

प्रविष्टाग्रसमुद्रांतः कल्लोलप्लवमूलकः ।। ६ ।।

मंजिष्ठवर्णः सर्वत्र शंखचक्रांकितः प्लवन् ।।

स्नानवेश्मसमीपेऽसौ दृष्टोऽस्माभिः परोऽद्भुतः ।। ७ ।।

न दृष्टपूर्वो वृक्षोऽयमुद्यत्सूर्यनिभोंऽशुना ।।

गंधेन वासयन्सर्वा तटभूमिं सुगंधिना ।। ८ ।।

द्रुमः साधारणो नायं लक्ष्यते देवभूरुहः ।।

कश्चिद्देवस्तरुव्याजादागतो लक्ष्यते धुवम् ।। ९ ।।

नियुक्तानां वचः श्रुत्वा राजा नारदमब्रवीत् ।।

तत्किं निमित्तं यद्दृष्टं तरुश्रेष्ठं वदंति ते ।। 2.2.18.१० ।।

नारदः प्रहसन्वाक्यमुवाच नृपसत्तमम् ।।

पूर्णाहुतिः समाप्नोतु यथा स्यात्सफलः क्रतुः ।। ११ ।।

उपस्थितं ते तद्भाग्यं स्वप्ने यद्दृष्टवान्पुरा ।।

श्वेतद्वीपे विश्वमूर्तिर्दृष्टो यो विष्णुरव्ययः ।। १२ ।।

तदंगस्खलितं रोम तरुत्वमुपपद्यते ।।

अंशावतारः स्थास्नुर्यः पृथिव्यां परमेष्ठिनः ।। १३ ।।

तद्रूपावतरं याति भगवान्भक्तवत्सलः ।।

द्रुमो ह्यपौरुषो योसौ भाजनं नास्य दर्शने ।। १४ ।।

त्वामृते पुरुषव्याघ्र पृथिव्यां नृपसत्तम ।।

त्वद्भाग्यवशतः सर्वलोकानां नयनातिथिः ।। १५ ।।

भविष्यति महाराज सर्वकल्मषनाशनः ।।

समाप्यावभृथस्नानं तटांते सरितां पतेः ।। १६ ।।

उत्सवं सुमहत्कृत्वा कृतकौतुकमंगलम् ।।

महावेद्यां स्थापयात्र यज्ञेशं तरुरूपिणम् ।। १७ ।।

विचार्येत्थं मुदा युक्तौ तावुभौ नृपनारदौ ।।

सुसमृद्धौ तत्र यातौ यत्रासौ भगवद्द्रुमः ।। ।। १८ ।।

तं दृष्ट्वा हर्षिताः सर्वे ब्रह्म साक्षादुपस्थितम् ।।

मेनिरे जन्मसाफल्यं जीवन्मुक्ता महोदयाः ।। १९ ।।

इन्द्रद्युम्नोऽपि नृपतिर्ममज्जामृतसागरे ।।

स्वप्ने दृष्ट्वा जगन्नाथं यथासौ भगवत्प्रियः ।। 2.2.18.२० ।।

तथा ददर्श तं वृक्षं चक्षुःशाखं चतुर्भुजम् ।।

स्वकं श्रमं मन्यमानः सफलं नृपसत्तमः ।। ।। २१ ।।

जहौ शोकं नीलमणिमाधवांतर्धिजं द्विजाः ।।

पुनः पुनः प्रणम्यैनं हर्षाश्रुनयनो नृपः ।। २२ ।।

द्विजैराहारयामास तरुं कल्लोललोलितम् ।।

शंखकाहालमुरजढक्कापटहनिःस्वनैः ।। २३ ।।

गीतवादित्रनिनदैर्जयशब्दैः सहस्रशः ।।

सुगंधिपुष्पांजलिभिराकाशात्पतितैर्मुहुः ।। २४।।

परितो धूपपात्रैश्च कृष्णागुरुसुधूपितैः ।।

वेश्याभिर्यौवनोन्मत्तसुरूपाभिः प्रचालितैः ।। २५ ।।

रत्नदण्डप्रकीर्णैश्च वीज्यमानं समंततः ।।

पताकाभिर्दिव्यपट्टदुकूलाभिः सुशोभितम् ।। २६ ।।

राजर्षिराजवृन्दैश्च तुरगैः पत्तिभिर्वृतम् ।।

मागधैर्वंद्यमानं तु स्तूयमानं महर्षिभिः ।।२७।।

ऋत्विग्भिर्ब्राह्मणैश्चैव विद्वद्भिः श्रोत्रियैस्तथा ।।

राजन्यैर्वैश्यकुलजैः सच्छूद्रैः परिचारितम् ।। २८ ।।

स्तोत्रैर्बहुविधैः श्रौतैः स्मार्तैः पौराणिकैस्तथा ।।

स्तूयमानं तरुं विष्णोर्भूर्लोके परिवेष्टितम् ।।२९।।

स्रग्गन्धालंकृतं दिव्यं महावेदीं विनिन्यतुः।।

वितानवरचित्रायां वेष्टितायां निरंतरम् ।।2.2.18.३०।।

वेद्यां तं स्थापयामासुरिंद्रद्युम्नस्य शासनात् ।।

वचसा नारदस्यैनं पूजयामास पार्थिवः ।। ३१ ।।

सहस्रैरुपचाराणां दिव्यरूपैर्नृपोत्तमः ।।

पूजावसाने पप्रच्छ नारदं मुनिसत्तमम् ।।३२।।

कीदृश्यः प्रतिमा विष्णोर्घटयिष्यति कः पुनः ।।

तच्छ्रुत्वा तं मुनिः प्राह अचिंत्यमहिमा गुरुः ।। ३३।।

को वेद तस्य चेष्टां वै सर्वलोकोत्तरां नृप ।।

स्रष्टा यो जगतां तस्याप्येषा संशयगोचरा ।। ३४ ।।

विचारयंतौ तावित्थं यावन्नारदपार्थिवौ ।।

अशरीरा ततो वाणी शुश्रुवे चांतरिक्षतः ।। ३५ ।।

तत्र विस्मयमानानां सर्वेषामेव शृण्वताम् ।।

अपौरुषेयो भगवानविचारपथे स्थितः ।। ३६ ।।

सुगुप्तायां महावेद्यां स्वयं सोऽवतरिष्यति ।।

प्रच्छाद्यतां दिनान्येषा यावत्पंचदशानि वै ।। ३७ ।।

उपस्थितोऽयं यो वृद्धः शस्त्रपाणिस्तु वर्द्धकिः ।।

एनमंतः प्रवेश्यैव द्वारं बध्नंतु यत्नतः ।। ३८ ।।

बहिर्वाद्यानि कुर्वंतु यावत्तु घटना भवेत् ।।

श्रुतो हि घटनाशब्दो बाधिर्यांधत्वदायकः ।। ३९ ।।

नरके वसतिं चैव कुर्यात्संताननाशनम् ।।

नांतःप्रवेशनं कुर्यान्न पश्येच्च कदाचन ।।2.2.18.४०।।

नियुक्तादन्यः पश्येच्चेद्राज्ञो राष्ट्रस्य चैव ह ।।

द्रष्टुश्चापि महाभीतिरंधता चक्षुषोर्युगे ।। ४१ ।।

तस्मान्नावेक्षणं कार्यं यावत्प्रतिमनिर्मितिः ।।

निर्व्यूढस्तु स्वयं दैवः कृत्यांते तु वदिष्यति ।। ४२ ।।

यत्कार्यं प्रयत्नेन सर्वलोकसुखावहम् ।।

तच्छ्रुत्वा नारदाद्यास्ते यथोक्तं विष्णुना स्वयम् ।। ४३ ।।

चिकीर्षंति तथा कर्तुं तत्रायातश्च वर्द्धकिः ।।

प्रोवाच नृपतिं सोऽथ स्वप्ने दृष्टास्तु यास्त्वया ।। ।। ४४ ।।

ता एवाहं घटिष्यामि दारुणा दिव्यरूपिणा ।।

इत्युक्त्वांतर्दधे वेद्यां वृद्धवर्द्धकिरूपधृक् ।। ४५ ।।

वंचनार्थं मनुष्याणां साक्षान्नारायणो विभुः ।। ४६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादेऽष्टादशोऽध्यायः ।। १८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/h3u
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

ततः स पृथिवीपालस्तथा कृत्वांऽतरिक्षगा ।।

यदुवाच गिरां देवी तद्वत्परिचचार ह ।। १ ।।

एवं दिनेदिने याते दिव्यगंधोऽनुभूयते ।।

पारिजातप्रसूनानां वृष्टिर्मर्त्येषु दुर्लभा ।। २ ।।

दिव्यसंगीतनादश्च गीतानि रुचिराणि च ।।

स्वर्गंगाजलवृष्टिश्च सूक्ष्मबिंदुसुशोभना ।। ३ ।।

ऐरावतादिनागानां मदगंधो वनद्विपैः ।।

दुःसहः सर्वभूतानां सुखकार्यनुभूयते ।। ४ ।।

यज्ञार्थमागता देवास्ते सर्वे विगतज्वराः ।।

आविर्भूतं हरिं दृष्ट्वा उपासांचक्रिरे द्विजाः ।। ५ ।।

यथा हि माधवं पूर्वं तथा तं विष्णुशाखिनम् ।।

उपासनासु देवानां दिव्यचिह्नानि जज्ञिरे ।। ६ ।।

निर्ववाह स्वयं देवः क्रमात्पंचदशे दिने ।।

चतुर्मूर्तिः स भगवान्यथा पूर्वं मयोदितः ।। ७ ।।

तादृगाविर्बभूवासौ युष्माकं वर्णितः पुरा ।।

दिव्यसिंहासनगतो बलभद्रासुदर्शनैः ।। ८ ।।

शंखचक्रगदापद्मलसद्बाहुर्जनार्दनः ।।

गदामुसलचक्राब्जं धारयन्पन्नगाकृतिः ।। ९ ।।

छत्राकृतिफणासप्तमुकुटोज्ज्वलकुंडलः ।।

सुभद्रा चारुवदना वराब्जाभयधारिणी ।। 2.2.19.१० ।।

लक्ष्मीः प्रादुर्बभूवेयं सर्वचैतन्यरूपिणी ।।

इयं कृष्णावतारे हि रोहिणीगर्भसंभवा ।। ११ ।।

बलभद्राकृतिर्जाता बलरूपस्य चिंतनात् ।।

क्षणं न सहते सा हि मोक्तुं लीलावतारिणम्।। १२ ।।

न भेदोऽस्तीह को विप्राः कृष्णस्य च बलस्य च ।।

एकगर्भप्रसूतत्वाद्व्यवहारोऽथ लौकिकः ।। १३ ।।

भगिनी बलदेवस्येत्येषा पौराणिकी कथा ।।

पुंरूपे स्त्रीस्वरूपेण लक्ष्मीः सर्वत्र तिष्ठति ।। १४ ।।

पुंनाम्ना भगवान्विष्णुः स्त्रीनाम्ना कमलालया ।।

देवतिर्यङ्मनुष्यादौ विद्यते न तयोः परम्।। १५।।

को ह्यन्यः पुंडरीकाक्षाद्भुवनानि चतुर्दश ।।

धारयेत्तु फणाग्रेण सोऽनंतो बलसंज्ञितः ।। १६ ।।

तस्य शक्तिस्वरूपेयं भगिनी श्रीः प्रकीर्तिता ।।

सुदर्शनं तु यच्चक्रं सदा विष्णोः करे स्थितम् ।। १७ ।।

शाखाग्रस्तंभमध्यस्थं तद्रूपं तत्तुरीयकम् ।।

एवं तु मूर्तयस्तेन चतस्रो वै प्रकाशिताः ।।१८।।

निर्वृत्ते भगवद्रूपे चतुर्द्धा दिव्यरूपिणि ।।

लोकानामुपकाराय पुनराहांतरिक्षगा ।। १९ ।।

पटैराच्छाद्य सुदृढं नृपते प्रतिमास्त्विमाः ।।

स्वं स्वं वर्णं प्रापयाशु वर्णकैश्चित्रकर्मणा ।। 2.2.19.२० ।।

नीलाभ्रश्यामलं विष्णुं शंखेंदुधवलं बलम् ।।

रक्तं सुदर्शनं चक्रं सुभद्रां कुंकुमारुणाम् ।। २१ ।।

नानालंकाररुचिरां नानाभंगिविभागशः ।।

अमी दारुस्वरूपेण दृष्टाः पापाय हेतवे ।। २२ ।।

गोपनीया प्रयत्नेन पटनिर्यासवल्कलैः ।।

तस्मात्प्रथममेवैतांस्तरोरेवास्य वल्कलैः ।। २३ ।।

शिल्पिभिः कर्मकुशलैर्दृढमाच्छादयाग्रतः ।।

वर्षे वर्षे च संस्कार्याः पूर्वसंस्कार मोचनात् ।। २४ ।।

ऋते वल्कललेपं तु स तु दिव्यश्चिरंतनः ।।

प्रमादाद्य इमं लेपमपनीयेत कश्चन ।। २५ ।।

दुर्भिक्षं मरकं राष्ट्रे संततिश्चास्य हीयते ।।

नेक्षितव्यास्त्वया राजन्कदाचिदपवारणाः ।। २६ ।।

मनुष्यैश्चापि राजेंद्र दृष्टाः स्युर्भयहेतवः ।।

तस्मात्सचित्रा द्रष्टव्या बहुलेपविलेपिताः ।। २७ ।।

सुचित्रं पुण्डरीकाक्षं सविलासं सविभ्रमम् ।।

दृष्ट्वा विमुच्यते पापैः कल्पकोटिसमुद्भवैः ।। २८ ।।

सुचित्रान्कुरु राजेंद्र चित्रान्कामानवाप्स्यति ।।

आविर्बभूव भगवांस्तवानुग्रहकाम्यया ।। २९ ।।

तव प्रसादाज्जंतूनां चतुर्वर्गं प्रदास्यति ।।

नीलाद्रौ कल्पवृक्षस्य वायव्यां शतहस्ततः ।। 2.2.19.३० ।।

प्रदेशे सुमहत्स्थाने प्रासादं सुदृढायतम् ।।

उत्तरे नरसिंहस्य सहस्रकरमुच्छ्रितम् ।। ३१ ।।

कारयित्वा प्रतिष्ठाप्य तत्रैनं विनिवेशय ।।

पुरा स्थितं पर्वतेऽस्मिन्योऽभ्यर्चयति माधवम् ।। ३२ ।।

नाम्ना विश्वावसुर्नाम शबरो वैष्णवोत्तमः ।।

पुरोधसः सख्यमासीत्तेन सार्द्धं पुरा च ते ।। ३३ ।।

तयोः संततिरेवास्य लेपसंस्कारकर्मणि ।।

नियुज्यतां महाराज भविष्यत्सूत्सवेषु च ।। ३४ ।।

विररामैतदाभाष्य सा तु दिव्या सरस्वती ।।

तयोपदिष्टमाकर्ण्य प्रहृष्टेनांतरात्मना ।। ३९ ।।

वेष्टनं मोचयामास महावेद्या नृपोत्तमः ।।

ददृशुस्ते तदा सर्वे रत्नसिंहासने स्थितम् ।। ३६ ।।

रामं कृष्णं सुभद्रां च वासुदेवं सुदर्शनम् ।।

यथोपदिष्टलेप्यादिसंस्कारे रुचिराकृतिम् ।। ३७ ।।

कृपया स्मेरवदनमुन्नतायतवक्षसम् ।।

दीनानामुद्धृतौ नाथं प्रलंबभुजपंजरम् ।। ३८ ।।

प्रबुद्धपुण्डरीकाक्षं हासशोणायताधरम् ।।

पश्यतां दृष्टिमात्रेण हर्तारं पापसंचयम् ।। ३९ ।।

पद्मासनस्थितं कृष्णं दिव्यालंकारभूषितम्।।

स्वतेजसा परिवृतं दारुदेहेऽपि निर्मलम् ।। 2.2.19.४० ।।

नीलजीमूतसंकाशं सर्वसंतापनाशनम् ।।

ददर्श बलदेवं च साट्टहासमुखांबुजम् ।। ४१ ।।

फणामण्डलविस्तीर्णं वारुणीघूर्णितेक्षणम् ।।

प्रोत्थितं नागराजानं पीनोन्नतसुवक्षसम् ।। ४२ ।।

किंचिन्नतं पृष्ठदेशे कुण्डलीकृतविग्रहम् ।।

अग्रसंफुल्लककुभं कैलासशिखरं यथा ।। ४३ ।।

हलचक्राब्जमुसलधारिणं वनमालिनम् ।।

हारकुण्डलकेयूरकिरीटमुकुटोज्ज्वलम् ।। ४४ ।।

तयोर्मध्ये स्थितां लक्ष्मीं सुभद्रां भद्ररूपिणीम् ।। ४५ ।।

सर्वदेवारणीं पापसागरोत्तारकारिणीम् ।।

विकचांभोजवदनां वराब्जाभयधारिणीम् ।। ४६ ।।

रूपलावण्यवसतिं शोभमानां प्रसाधनैः ।।

कुंकुमारुणदेहां तां साक्षाल्लक्ष्मीमिवापराम् ।। ४७ ।।

ददर्श विष्णोर्वामस्थां चक्रशाखाग्रनिर्मिताम् ।।

बालार्कसदृशीं तीक्ष्णधारां तेजोमयीं द्विजाः ।। ४८ ।।

तां दृष्ट्वानन्दपाथोधि निमग्नः पृथिवीपतिः ।।

कर्तव्यमूढः स्वतनौ स्वयं न प्रबभूव ह ।। ४९ ।।

दरमीलितनेत्रः सन्सृजन्बाष्पांबु केवलम् ।।

कृतांजलिपुटस्तस्थौ स्थूणाकारो नृपोत्तमः ।। 2.2.19.५० ।।

उवाच तं मुनिवरः स्मितवक्त्रः क्षितीश्वरम् ।।

यदर्थं श्रममापन्नस्तत्सांप्रतमभूत्तव ।। ५१ ।।

प्रत्यक्षं नृपशार्दूल एकस्त्वं भाग्यवान्भुवि ।।

अमुं पश्य जगन्नाथं पुण्डरीकायतेक्षणम् ।। ५२ ।।

भक्तानुग्रहपाथोधिं सर्वज्ञाननिधिं हरिम् ।।

यं द्रष्टुं योगिनो नित्यं यतंति यतमानसाः ।। ५३ ।।

अवधानेन महता क्षणं पश्यन्ति मानवाः ।।

सोऽयं दारुमयं देहं समास्थाय जनार्दनः ।। ५४ ।।

अनुग्रहीतुं त्वां भूप प्रत्यक्षत्वमुपागतः ।।

भजैनं धरणीनाथं स्तुहि कारुण्यसागरम् ।। ५५ ।।

ददाति संस्तुतः कामान्सर्वान्नृप मनोगतान् ।। ५६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवाद एकोनविशोऽध्यायः ।। १९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २०

https://sa.wikisource.org/s/h3v
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

इत्थं प्रबोधितस्तेन नारदेन क्षितीश्वरः ।।

तुष्टाव जगतां नाथं वचोभिः करुणान्वितम् ।। १ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

त्वदंघ्रिपाथोजयुगं मुरारे नोपासितं जन्मसु पूर्वजेषु ।।

तत्कर्मणां दारुणपाकभाजं दीनं परित्राहि कृपांबुधे माम् ।। २ ।।

क्व निर्मलं त्वच्चरणाब्जयुग्मं विरिंचिरुद्रेंद्रकिरीटमग्नम् ।।

क्वाहं कुदीनः शकृदस्रमांसमूत्रास्थिसंघैः पिहितस्त्वचा वै ।। ३ ।।

असारसंसारपरिभ्रमेण श्रमातुरस्त्वां कथमीश जाने ।।

जानंति ते त्वां खलु देवदेव येषां भवो दुःखभवप्रकाशः ।। ४ ।।

प्रभो मया दुःखमनेकजन्मपापार्जितं भुक्तमनेकभावम् ।।

शुभार्जितो यः सुखलेशभावो निदर्शनं यन्मधुपृक्ततिक्ते ।। ५ ।।

यदेव सौख्यानुभवाय देव कर्मार्जितो मे विषयोपभोगः ।।

स एव दुःखं परिणामतो मे न मद्विधो दुःखिजनोऽस्ति चान्यः ।। ६ ।।

विभो यदि त्वां मनसापि पूर्वमुपास्तमन्यद्विषमेक्षणोऽहम्।।

कथं तदालप्स्यमनेकजन्म पुनः पुनर्भोग्यमशेषदुःखम् ।। ७ ।।

विभुत्वदासत्वपितृत्वपुत्रप्रियत्वमातृत्वधनित्वभावैः ।।

वध्यत्वहिंस्रत्वपतित्वजायाभावैश्च तिर्यक्त्वसुरादिभावैः ।। ८ ।।

नीचोर्द्धभावं बहुशः सकृद्वा भवांगणेऽस्मिँन्लुठतानुभूतम् ।।

न वा मुरारे तव पादपद्मदूरीभवस्येष्टफलं हि चैतत् ।।९।।

कोशं बलं चैतदशेषपृथिवीधनैर्वृतं यौवनरूपरूप्यः।।

मनोऽनुकूलाः शतशः स्त्रियश्च निष्कंटकं मे नृपमंडलं च।। 2.2.20.१०।।

साम्राज्यता चापि भरो महान्मे त्वज्ज्ञानहीस्य पशोरिवायम्।।

भारावतारं कुरु मे कृपाब्धे सदैव तत्रोदित खेदयोगः।।११।।

दीनानुकंपिन्करिणो विमुक्तिः कृता विभो त्वत्स्मृतिमात्रकेण।।

भ्रांतं घटीयंत्रवदत्र नाथ मां त्रातुमर्हस्यनुकंपिभावात्।।१२।।

न मे त्वदन्यः खलु बन्धुरत्र प्रवाहविभ्रष्टतरुस्वभावे ।।

पापीयसी बुद्धिरुपेतभावा स्नेहानुबन्धा विषयेऽभिभेद्या ।। १३ ।।

अहर्निशं मे तव पादपद्मान्नापैतु मत्प्रार्थितमेतदेव ।।

त्वां सच्चिदानंदसुपूर्णसिंधुं प्राप्तास्तु ये जन्मसहस्रभाग्यैः ।। १४ ।।

किं ते हि पश्यंति लवैकसौख्यमनेकदुःखं विषयेन्द्रजालम् ।।

क्व बन्धनं कर्मभिरिष्टलेशदुःखाकरग्रंथिशतैरभेद्यम् ।। १५ ।।

अनंतमाद्यंतविहीनमेकमानंददं त्वत्पदपंकजं क्व ।।

मायांबुधौ ते ममता भ्रमौ च कुकर्मनक्रायितगर्तमध्ये ।। १६ ।।

निराश्रयं मे पतितं विलासकटाक्षपातेन नयाद्य तीरम् ।।

स्वकार्यसंसाधनयाश्रितानां संपादनायेष्टविधेरजस्रम्।। १७ ।।

भ्राम्यंतमात्मीयहितं विसृज्य मां त्राहि मूढं सहजानुकंपिन् ।।

क्षुद्राय कार्याय बहु भ्रमंतमप्राप्य मूलं परमेश्वरं त्वाम्।। १८ ।।

ओं आयासपात्रं परमं सुदीनं मां त्राहि विष्णो जगदेकवंद्य ।।

वेदांतवेद्याव्यय विश्वनाथ तत्वमीशिषे हंतुमघौघराशीन् ।। १९।।

तं त्वां परित्यज्य सुखैकहेतुं क्षुद्राशयं मां परिपाहि विष्णो।।

प्रसुप्त एषोऽखिलभूतसंघश्चतुर्विधो यत्कृतमोहरात्रौ।।2.2.20.२०।।

त्वज्ज्ञानभानूदयमेत्य चांते प्रबोध्यते त्वां शरणं प्रपद्ये।।

त्वमेक एवाखिललोककर्त्ता फणासहस्रैः परिवीतमूर्तिः।।२१ ।।

पर्यायवृत्त्या बलिनां वरिष्ठ त्वामिशितारं शरणं प्रपद्ये।।

यया सृजस्यत्सि जगंति नाथ वक्षःसरोजासनया स्वशक्त्या ।। २२ !।

तां भद्ररूपां जगदाश्रयां ते देवारणिं पादयुगे नतोऽस्मि ।।

यदंशुजालप्रतिसृष्टमेतद्ब्रह्मांडजालं करसंगि नाथ।।२३।।

सुदर्शनं दैत्यबलस्य हंतृ चक्राभिधं त्वां प्रणतः सुदर्शनम्।।

स्तुत्वेत्थं नृपतिश्रेष्ठः साष्टांग प्रणनाम सः।। २४।।

परित्राहि जगन्नाथ मग्नं संसारसागरे।।

अनाथबन्धो कृपया दीनं मां तमसाकुलम्।।२५।।

नारद उवाच।।

जय जय नारायण अपारभवसागरोत्तारपरायण सनकसनंदनसनातनप्रभृति योगिवरविचिंत्यमानदिव्यतत्त्व स्वमायाविलसिताध्यासपरिण मिताशेषभूततत्त्व त्रितत्त्व त्रिदण्डधर त्रिणाचिकेतत्रिमधुत्रिसुपर्णोपगीयमानदिव्यज्ञान च्छन्दोमय स्वासनसुपर्णप्रिय भक्तप्रिय भक्तजनैकवत्सल स्वमायाजालव्यवहितस्वरूप विश्वरूप विश्वप्रकाश विश्वतोमुख विश्वतोक्षि विश्वतःश्रवण विश्वतःपादशिरोग्रीव विश्वहस्तनासारसनात्वक्केशलोमलिंग सर्वलोकात्मक सर्वलोकसुखावह सर्वलोकोपकारक सर्वलोकनमस्कृत लीलाविलसितकोटिपद्मोद्भव रुद्रेंद्रमरुदश्विसाध्यसिद्धगणप्रणताशेषसुरासुरत्रिभुवनगुरो न कस्यापि ज्ञानगोचर नमस्ते नमस्ते ।। २६ ।।

।। जैमिनिरुवाच ।। ।।

अन्ये च ये नृपतयः श्रोत्रिया वेदपारगाः ।।

मुनयो द्विजाः क्षत्रियाश्च विद्वांसो वैश्यजातयः ।। २७ ।।

अस्तुवन्पुण्डरीकाक्षं बलिनं भद्रया सह ।।

सूक्तैः स्तोत्रैः पुराणैश्च कविताभिर्यथा तथा ।। २८ ।।

अथेंद्रद्युम्नः प्रोवाच पुरोधसमकल्मषम् ।।

पूजार्थं वासुदेवस्य उपचारोपसंस्कृतम् ।। २९ ।।

स्वयं स नृपतिश्रेष्ठः पूजयामास तान्क्रमात् ।।

नारदस्योपदेशेन विधिना मंत्रतस्तथा ।। 2.2.20.३० ।।

द्वादशाक्षरमंत्रेण बलभद्रमपूजयत् ।।

यमुपास्य ध्रुवः स्थानं प्राप्तवानुत्तमोत्तमम् ।। ३१ ।।

त्रयीप्रसिद्धं यत्सूक्तं पावनं पौरुषं महत् ।।

तेन नारायणं भूपः पूजयामास शक्तितः ।। ३२ ।।

देव्याः सूक्तेन भद्रां तां सौदर्शन्या सुदर्शनम् ।।

यथासमृद्धि भक्त्या तान्पूजयित्वा नृपोत्तमः ।। ३३ ।।

तत्प्रीत्यै द्विजमुख्येभ्यो ददौ दानानि भक्तितः ।।

तुलापुरुषदानानि महादानानि पार्थिवः ।। ३४ ।।

अश्वमेधांगभूताश्च कोटिशो गा ददौ तदा ।।

अलंकृतास्तथान्याश्च ददौ गा बहुदक्षिणाः ।। ३५ ।।

तासां खुरोद्धतेर्योगाद्गर्तोभूद्द्विजसत्तमाः ।।
दानांबुना स पूर्णो वै तीर्थमासीन्महाफलम् ।। ३६ ।।
तस्मिन्स्नात्वा पितॄन्देवान्संतर्प्य विधिवन्नरः ।।
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयः ।। ३७ ।।
नाम्ना ख्यातं सरस्तस्य इन्द्रद्युम्नस्य भूपतेः ।।
निर्वपत्यत्र पिंडांश्च पितॄनुद्दिश्य मानवः ।। ३८ ।।
कुलैकविंशमुद्धत्य ब्रह्मलोके महीयते ।।
नातः परतरं तीर्थं हयमेधांगसंभवात् ।। ३९ ।।
इन्द्रद्युम्नस्य सरसः स्याद्वा त्रिपथगा समा ।।
ततः प्रासादघटनामुपचक्राम भूपतिः ।। 2.2.20.४० ।।
शुभे काले सुनक्षत्रे दैवज्ञविधिचोदिते ।।
समुहूर्ते नारदादीन्ब्राह्मणाग्र्यान्प्रपूज्य च ।। ४१ ।।
स्वस्तिवाचं च कर्मर्द्धिं वाचयित्वा नृपोत्तमः ।।
अर्घ्यं ददौ जगन्नाथं स्मरन्प्रासादवेश्मनि ।। ४२ ।।
वसुधां प्रार्थयित्वा तु स्थानमाचंद्रतारकम् ।।
शिल्पिनः पूजयामास वास्तुयागपुरःसरम् ।। ४३ ।।
महोत्सवं तथा चक्रे गीतवाद्यैः प्रभूतकैः ।।
दीनानाथविपन्नेभ्यो ददौ वस्तु यथेप्सितम् ।। ४४ ।।
राज्ञो विसर्जयामास बहुमानपुरःसरम् ।।
कृतार्थानवतारं तं हरेर्दृष्ट्वा हतांहसः ।। ४५ ।।
ततः स कोटिशो वित्तं ददौ पाषाणदारके ।।
आहृतौ बहुदेशेभ्यो दृषदां पार्थिवोत्तमः ।। ४६ ।।
उवाचेदं मुदा युक्तः सभायां पृथिवीधरः ।।
अष्टादशभ्यो द्वीपेभ्यो यन्मया पौरुषार्जितम् ।। ४७ ।।
तत्सर्वं जगदीशस्य प्रासादायापवर्जितम् ।।
जैत्रयात्राप्रसंगेन श्रमो लब्धस्तु यो मया ।। ४८ ।।
सफलोऽस्तु स मे विष्णोः प्रासादायार्थयोगतः ।।
अतः परं मे किं भाग्यं चराचरगुरुं हरिम् ।। ४९ ।।

प्रसादयिष्ये संपत्त्या भुजद्वंद्वार्जितश्रिया ।।

श्रीः सदा पुण्डरीकाक्षे श्रियोनुग्रहजा मम ।। 2.2.20.५० ।।

किं कर्तुमीशस्तस्यां वै देवदेवस्य चक्रिणः ।।

कटाक्षपातो यस्य स्यात्तस्य श्रीः सर्वतोमुखी ।। ५१ ।।

अष्टादशात्मिका देवी जिह्वाग्रे चास्य नृत्यति ।।

यमाराध्य जगन्नाथं ब्रह्मत्वं प्राप्तवान्विधिः ।। ५२ ।।

रुद्रो महेश्वरत्वं च शक्रस्त्रिदिवराजताम् ।।

लेभे तमर्च्य जगतामर्चयिष्यामि शाश्वतम्।। ५३ ।।

जितं तेन त्रिधा राशीभूतमंहो महात्मना ।।

सांगोपांगेन विधिना येन कृष्णः समर्चितः ।। ५४ ।।

कलेवरमिदं क्षेत्रं यत्राहंकारवान्विभुः ।।

आविर्भावतिरोभावौ स्थितिर्नित्या हि यत्प्रभुः ।। ५५ ।।

अत्र साक्षाद्वपुष्मन्तं संपूज्य जगतां गुरुम् ।।

साक्षात्कृतार्थो भवति चतुर्वर्गस्य भाजनम् ।। ५६ ।।

बहुव्ययाऽऽयासतो या राज्यऋद्धिर्मयार्जिता ।।

अस्यैवानुग्रहात्सा तु सफलास्तु पदांबुजे ।। ५७ ।।

सर्वोपचारैः परिपूज्य देवं द्रव्यैर्हृतैः सागरमेखलायाः ।।

यावत्समाप्नोति हि कर्मपाकः साम्राज्ययात्रा सफला हि मास्तु ।। ५८ ।।

किं द्रव्यजातं खलु येन विष्णुं नोपाहरेत्सांगमपेतकल्मषः ।।

किं पौरुषेयं यदि वासुदेवपरिच्छदो येन न साधितो मे ।। ५९ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनि ऋषिसंवादे विंशोऽध्यायः ।। २० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २१

https://sa.wikisource.org/s/h3w
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

इति ब्रुवाणं राजर्षिं कश्चिदृग्वेदपारगः ।।

वेदांतविज्ज्ञानशीलो द्विजो वाक्यं मुदा जगौ ।। १ ।।

अहो तवायं खलु भाग्यराशिर्येनाविरासीद्भुवि दारुमूर्तिः ।।

यस्यात्युपास्तिं श्रुतिराह मुक्तिप्रदामनात्मज्ञविमोहितानाम्।। २ ।।

य एष प्लवते दारुः सिंधोः पारे ह्यपौरुषम् ।।

तमुपास्य दुराराध्यं मुक्तिं यांति सुदुर्लभाम् ।। ३ ।।

ब्रह्मज्ञाननिधिः साक्षान्नारदः प्रत्युवाच यत् ।।

न हि वेदांतवचसोऽपरस्माज्ज्ञानमस्य वै ।। ४ ।।

न हि प्रवृत्तिर्विष्णोस्तु विना वेदं प्रवर्तते ।।

परेषां स्वस्य वा सृष्टौ श्रुतिप्रामाण्यवान्प्रभुः ।। ५ ।।

विना श्रुतिं प्रवर्तेच्चेत्कस्तत्प्रामाण्यमृच्छति ।।

तस्माच्छ्रुतिप्रसिद्धोऽयमवतारोऽत्र भूपते ।।६।।

वेदांतवेद्यं पुरुषं गीतं तं सामगीतिषु ।।

प्रतिमां न तु जानीहि निःश्रेयसकरं नृणाम् ।। ७ ।।

दर्शनादेव नः शांतं सुदृढं तम उत्तमम् ।।

संत्येव श्रुतयः पूर्वमेतदर्चाप्रकाशिकाः ।। ८ ।।

एतदर्चा प्रशस्ता वै सदर्थे विनियोजिता ।।

अहो भारतवर्षस्था मनुष्याः क्षीणकल्मषाः ।। ९ ।।

अपवर्गप्रदो येषामाविरासीज्जनार्दनः ।।

तत्राप्ययं चोढ्रदेशः सर्वेषामुत्तमोत्तमः ।। 2.2.21.१० ।।

यत्रस्थाश्चर्मनेत्रेण पश्यंति ब्रह्मरूपिणम् ।।

श्रुतिस्मृतीनां गहनः पंथा कर्मभिराकुलः ।। ११ ।।

येन याता भ्रमंतीह घटीयंत्रवदाकुलाः ।।

निर्व्यलीकपदप्राप्तिहेतुरेष स चिन्मयः ।। १२ ।।

श्रुत्यादिभिर्विनोपायैः परमानंदमुक्तिदः ।।

निरंतरगतायातदुःस्थितानां दुरात्मनाम्।। १३ ।।

एष दारुवपुर्विष्णुः सुखदाता सुबांधवः ।।

श्रुतिस्मृत्युक्तनियमा वर्तंते नेह पार्थिव ।। १४ ।।

यथा तथा दृष्टिपथमाचांडालाद्विमुक्तिदः ।।

अभक्तश्चेदमुं पश्येद्गतानुगतिको नरः ।। १५ ।।

अश्वमेधसहस्राणां फलं ह्यविकलं लभेत् ।।

भजेच्चेन्नियमस्थो हि भक्तिमान्दृढमानसः ।। १६ ।।

असंशयं स सायुज्यं ब्रह्मणा लभते नरः ।।

क्व दुःखायासबहुलमनायासविनश्वरम् ।। १७ ।।

अचिरस्थं क्षुद्रफलं पुनरावृत्तिलक्षणम् ।।

क्वेदं दारुमयं ब्रह्म पापराशिदवानलम् ।। १८ ।।

सच्चिदानंदकैवल्यमुक्तिदं दर्शनादपि ।।

वेदानुवचनादीनि दुष्कराणि दुरात्मनाम् ।। १९ ।।

महात्मभिस्तैर्यत्प्राप्यं तदव्यग्रमयं ददेत् ।।

अन्यक्षेत्रेषु भगवान्सुदूरो मर्त्यवासिनाम् ।।2.2.21.२०।।

स्वक्षेत्रेऽस्मिन्निवसति नित्यं मुक्तिप्रदो विभुः ।।

अस्मादत्र महाभाग तिष्ठ स्वबलपौरुषः ।। २१ ।।

विद्वत्तमोऽसि भक्तश्च सांगोपांगममुं भज ।। २२ ।।

।। जैमिनिरुवाच ।। ।।

द्विजस्य तद्वचः श्रुत्वा नारदो हृष्टमानसः ।।

साधूक्तं द्विजवर्येण श्रौतमार्गानुसारिणा ।। २३ ।।

सृष्ट्यादौ ब्रह्मनिश्वासैरभवद्वेदसंहतिः ।।

तत्रोपनिषदर्थोऽयं सांप्रतं व्यक्तिमागतः ।। २४ ।।

वेत्त्येतदर्थं भगवान्पद्मयोनिः प्रजापतिः ।।

अज्ञासिषं च भूपाल सांप्रतं तन्मुखादहम् ।। २५ ।।

तस्याज्ञया कृतं सर्वं यथाभिलषितं तव ।।

एनमाराध्य तिष्ठात्र याम्यहं ब्रह्मणोऽतिकम् ।। २६ ।।

कृतं निवेदयिष्यामि प्रकाशं च मुरद्विषः ।।

प्रासादं कुरु भूपाल धनेन महता तथा ।। २७ ।।

प्रासादे नरसिंहं तु प्रतिष्ठाप्य विमुच्यसे ।। २८ ।।

।। जैमिनिरुवाच ।। ।।

तच्छ्रुत्वा स तु भूमींद्रः प्रत्युवाच मुनिं तदा ।।

महर्षेऽहं त्वया सार्द्धं यियासुर्ब्रह्मणोऽतिकम् ।। २९ ।।

यत्प्रसादाज्जगन्नाथश्चकेऽयं लोचनातिथिः ।।

निवेद्य तं च प्रासादं प्रतिष्ठार्थं मुरद्विषः ।। 2.2.21.३० ।।

विज्ञापयिष्ये सान्निध्ये प्रासादस्थापनोत्सवम् ।।

यथा स्वयं समागम्य ब्रह्मलोकात्पितामहः ।। ३१ ।।

महोत्सवं भगवतः प्रासादेऽत्र करिष्यति ।।

तन्मुने मामपि विधेः संनिधिं प्रापयस्व च ।। ३२ ।।

गर्भप्रतिष्ठां प्रासादे समाप्येह स्थितो मुने ।।

पश्चादावां गमिष्यावः कंचित्कालं प्रतीक्ष मे ।। ।। ३३ ।।

ततः स नृपतिः सर्वाञ्छिल्पशास्त्रविशारदान् ।।

पाषाणखंडघटनाकर्मण्येकैकयोगतः ।। ३४ ।।

सत्कारैर्दानमानैश्च योजयामास सादरम् ।।

दिने दिने सुघटितः प्रासादो ववृधे द्विजाः ।। ३५ ।।

परितः पूर्यमाणस्तु शुक्लपक्षे यथा शशी ।।

एवं संवर्ध्यमानोऽपि प्रासादः परिवर्द्धितः ।। ३६ ।।

महोच्छ्रयत्वादल्पेन न कालेनाभिलक्ष्यते ।।

पाषाणसंख्या शक्या वा कथंचिद्घटनाक्रमात् ।। ३७ ।।

वित्तव्ययस्तु कोटीनां न संख्यातुं च शक्यते ।।

यावन्तो भारते वर्षे लोकाः समयवर्तिनः ।। ३८ ।।

इन्द्रद्युम्नस्य नृपतेर्नियुक्तास्ते महीभृतः ।।

एकैकशो नियुक्ता ये परस्परसमन्विताः ।।३९।।

तेऽपि चान्यैर्नियुक्तास्ते सर्वे तत्र प्रवर्तिताः ।।

अजस्रं तन्नियुक्तानां यो हर्षोत्थो महारवः ।। 2.2.21.४० ।।

आकाशमश्नुवानोऽसौ दिशां भागानपूरयत् ।।

नृपतेः श्रद्धया भक्त्या सात्त्विकेन प्रसादिता ।। ४१ ।।

श्रीः समृद्धाभवद्विप्राः कीर्त्या सह महीपतेः ।।

क्वचित्कांचनविन्यस्तनानारत्नमहोज्ज्वलः ।। ४२ ।।

क्वचित्स्फटिकभागांतशारदाभ्रनिभच्छविः ।।

क्वचिन्नीलाश्मघटिता भित्तिः कालाभ्रमेदुरा ।। ४३ ।।

एवं सुघटिते विष्णोः प्रासादे सुमनोहरे ।।

गर्भप्रतिष्ठां विधिवत्कृत्वा स नृपसत्तमः ।। ४४ ।।

वज्रपातादिभंगादिवारणार्थं यथोचितम् ।।

शिल्पशास्त्रेषु मण्यादि विन्यस्य पौरुषाहृतम् ।। ४५ ।।

पुनः प्रासादघटनासंभारोचितमेव वै ।।

बहुमूल्यं वस्तुजातं यत्नात्तत्र न्यवेशयत् ।। ४६ ।।

ततो विरच्यमानेऽस्मिन्प्रासादे कीर्तिवर्द्धने ।।

मनसापि न संभाव्ये त्रिषु लोकेषु भूभुजाम् ।। ४७ ।।

देवानामपि नो लक्ष्ये द्विजाः कल्पांतवासिनाम् ।।

प्रासाद ईदृशो भूमौ क्वचिच्च घटितो न हि ।। ४८ ।।

स्वर्गे वा इत्थमादित्या आलपंति परस्परम्।।

अहो सुबुद्धिरस्योच्चैर्येयमीदृक्परीणता ।। ४९ ।।

श्रद्धया भगवत्पादपद्मयोः साभिलाषिणी ।।

अलौकिकानि कर्माणि पश्यंति हि रचंत्यपि ।। 2.2.21.५० ।।

के वात्र भूमौ राजानो बभूवुर्नीतिशालिनः ।।।

सार्वभौमास्तु साम्राज्यजेतारः सर्वविद्विषाम् ।। ५१ ।।

वित्तानि यैः संचितानि सुबहूनि च कोटिशः ।।

अश्वमेधसहस्रं तु यत्कृतं त्रिदिवेशितुः ।। ।।५२।।

शक्यं वा स्याद्भूभुजां तु नातः पूर्वमनुष्ठितम्।।

न दृष्टं न श्रुतं वापि वाजिमेधसहस्रकम्।।५३।।

महीक्षितानुष्ठितं वै यत्र त्रैलोक्य वासिनः।।

पृथिव्यामस्य नृपतेः सहस्था भोगभोगिनः।।५४।।

ब्रह्मलोक इवाभाति सभ यस्य च यज्विनः।।

मूर्तिमंतस्त्रयो वेदाश्चतुष्पादो वृषस्तथा ।। ५५ ।।

सुराः संकल्पकामास्तु यत्राद्भुतधियोऽभवन् ।।

अयं प्रासादवर्यो वै बुद्धेर्विषयतां गतः ।। ५६ ।।

मनोऽपि यत्र भवति न वा त्रैलोक्यवासिनाम् ।।

भूपतेर्दुर्लभं किं स्यात्सहायो यस्य नारदः ।। ५७ ।।

पितामहश्च जगतां स्रष्टा सर्वामरेश्वरः ।।

अथवा विष्णुभक्तस्य नातिदूरं चिकीर्षितम् ।। ५८ ।।

विष्णोस्तद्भक्तलोकस्य नांतरं विद्यते द्विजः ।।

ततः स नारदं प्राह प्रासादांते मुनीश्वरम् ।। ५९ ।।

सर्वं सपन्नमासीन्मे यदशक्यं सुरासुरैः ।।

साक्षाद्भगवतो विष्णोरद्वैतोपासनारतः ।। 2.2.21.६० ।।

भगवद्वपुराभाषि प्रासादस्तु चिरं मयि ।।

इत्युक्त्वा पादयोर्मूर्ध्ना प्रणनाम स नारदम्।। ६१।।

नारदोऽपि तमुत्थाप्य परिपूज्य नृपोत्तमम्।।

त्वत्तो न भेदो नृपते ममास्ति खलु तत्त्वतः।।६३।।

यस्तु साक्षाज्जगन्नाथ आविर्भूतः कृतेन वा।।

अवश्यमर्चयस्वैनं जीवन्मुक्तोऽसि सांप्रतम्।।६३।।

तत्पादपद्मे यादृक्ते चेतः प्र प्रवणतान्वितम्।।

भक्त्या ह्यनन्यया पुंसः किमतः परमस्ति वै।।६४।।

तीर्थैर्मंत्रैर्जपैर्दानैः क्रतुभिर्भूरिदक्षिणैः।।

व्रतैरध्ययनैर्भूप तपोभिश्च यदर्जितुम्।। ६५।।

न शक्यं तव राजेन्द्र भक्त्या तत्करमागतम् ।।

अतः परं न शोचस्व भक्तियोगे नमोऽस्तु ते ।। ६६ ।।

प्रकर्षं बहुराजेंद्र स्थित्वा चास्मिंश्चिरं भुवि ।।

आराधय जगन्नाथमुपचारैर्महोत्सवैः ।। ६७ ।।

पितामहं द्रष्टुकामो गंता चेदंतिकं विभोः ।।

उपदेक्ष्यति सोऽप्यस्य यात्रास्तास्ता महोत्सवाः ।। ६८ ।।

स्वयं च भगवानेव वरं तुभ्यं प्रदास्यति ।।

प्रतिष्ठापिते प्रासादे तस्मिन्काले स्वयंभुवा ।। ६९ ।।

अहमप्यागमिष्यामि तदा सप्तर्षिभिः सह ।।

तदावां तत्र गच्छावो ब्रह्मलोकमकल्मषम् ।। 2.2.21.७० ।।

त्वां विना भुवि कः शक्तो ब्रह्मलोकगतिं प्रति ।।

इत्युक्त्वा नारदो भूपं समुत्तस्थौ नभस्तलम् ।। ७० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवाद एकविंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २२



।। ।। जैमिनिरुवाच ।। ।।

राजाथ तमुवाचेदं निर्लक्ष्य गमनं कथम् ।।

अयं पुष्परथोऽस्त्येव मनसो वेगवान्मुने ।। १ ।।

एनमारुह्य यास्यावः क्षणं तावत्प्रतीक्ष्यताम् ।।

यावदेताननुज्ञाप्य प्रासादे ह्यधिकारिणः ।। २ ।।

प्रदक्षिणीकृत्य विभुमायामि मुनिसत्तम ।।

नारदोऽपि वचः श्रुत्वा श्रद्दधानो नृपोक्तिषु ।। ३ ।।

करेण धृत्वा राजानं महावेदीं प्रविश्य च ।।

सहितं रामभद्राभ्यां नत्वा कृष्णं मुहुर्मुहुः ।।

अनुज्ञां प्रार्थयामास ब्रह्मलोकगतिं प्रति ।। ४ ।।

इन्द्रद्युम्नोऽपि वचसा मनसा वपुषा हरिम् ।।

प्रदक्षिणीकृत्य पुनर्नत्वा साष्टांगमुन्मनाः ।।

ब्रह्मलोकगतिं विप्रा याचते स्म कृतांजलिः ।। ५ ।।

उभौ तौ दिव्ययानेन जग्मतुर्मुनिभूभृतौ ।।

प्रदक्षिणीकृत्य रविं व्योममण्डलमध्यगम् ।।

उपर्युपरि जग्माते व्यतीत्य ध्रुवमंडलम् ।। ६ ।।

जनलोकगतैः सिद्धैः सत्वरावनतोन्मुखैः ।।

वीक्ष्यमाणौ मुदा युक्तौ संलपंतौ परस्परम् ।। ७ ।।

भगवच्चरितं विप्रा मनोमलविशोधनम् ।।

जीवन्मुक्तो मुनिश्रेष्ठः सर्वलोकान्भ्रमन्नयम् ।।

यथानुपहतव्रज्यस्तथायं मर्त्यवास्यपि ।। ८ ।।

भूपतिः प्रययौ शीघ्रं विष्णुभक्तिप्रसादतः ।।

ब्रह्मांडविषये नैतद्दुष्प्राप्यं वस्तु विद्यते ।। ९ ।।

विष्णुभक्तेन यल्लभ्यमथवा मुक्तिमेति सः ।।

महर्लोकगतैः सिद्धैः सादराभ्यर्चितौ च तौ ।। 2.2.22.१० ।।

इन्द्रद्युम्नो न सस्मार पार्थिवं वासमात्मनः ।।

क्रमादूर्ध्वगतिर्गच्छन्पश्यन्सौख्यैकभाजनान् ।। ११ ।।

निर्द्वंद्वानभिलाषोत्थ तत्क्षणानेकपौरुषान् ।।

केवलं भगवत्प्रीत्यै कर्मभूमौ चकार यत् ।। १२ ।।

प्रासादं चिंतयामास संपूर्णो वा न वा भवेत् ।।

मय्यागते ब्रह्मलोकं शत्रुभिर्वाभिभूयते ।। १३ ।।

श्लथादरा वा भूयासुः सेवका द्रव्यलोभतः ।।

गृहीतवेतनाः शिल्पिवृंदा मंदक्रियास्तथा ।।

न शीघ्रं घटयिष्यंति मयि ब्रह्मक्षयागते ।। १४ ।।

यावद्गमिष्ये धातारं गृहीत्वाहं चतुर्मुखम् ।।

तावन्न पुनरेव स्यात्प्रासादो मयि दूरगे ।। १५ ।।

इहायातास्तु ये पूर्वे न पुनस्ते क्षितिं गताः ।।

मन्वाना मम सामंता इत्थं वा दुष्टमानसाः ।।

राज्यं ममाहरिष्यंति द्विषतः किमु सांप्रतम् ।। १६ ।।

इत्थं सुविग्नमनसा चिंतयानं महीपतिम् ।।

अतीतानागतज्ञाननिधिर्मुनिरुवाच तम् ।। १७ ।।

किं चिंतयसि राजेंद्र त्वमेवं दीनमानसः ।।

यत्र चाभ्यागतावावां न चिंताविषयो ह्ययम् ।।१८।।

नाधयो व्याधयश्चात्र प्रभवंति कदाचन ।।

न जरा न च वा मृत्युः किमन्यदुःखहेतुकम् ।। १९ ।।

कृतार्थोऽसि महाभाग यन्मानुषवपुः स्वयम् ।।

ब्रह्मलोकमिहायातः प्रत्यक्षं दृष्टवान्हरिम् ।। 2.2.22.२० ।।

इहायाता न शोचंति हेये संसारकल्पके ।।

ब्रुवाणमित्थं भूपालस्तमुवाच मुनीश्वरम् ।। २१ ।।

शोचामि भगवन्राज्ञः स्वजनबन्धुषु।।

समारब्धो भगवतः प्रासादो यो मयाधुना।। २२।।

अत्रागतं मां ते ज्ञात्वा नानुतिष्ठंति सेवकाः।।

आरब्धस्य प्रतिष्ठा हि कर्तव्या निश्चिता मुने।। २३।।

तस्यांतरायं संभाव्य दुःखितं मे मनः प्रभो।।

तस्य तद्वचं श्रुत्वा प्रहस्य मुनिरब्रवीत्।। २४।।

प्रजापतिसमत्वं हि न तु सामान्यभूपतिः।।

केनाप्यपकृतं नैव भूमौ पूर्वैरनुष्ठितम्।। २५।।

किं पुनस्तव कृत्यं तु यः सृष्टिस्थितिहानिकृत् ।।

ब्रह्मलोकं गतस्याद्य प्रतापयशसा तव ।। २६ ।।

त्रैलोक्ये भ्रमतो नित्यं यथा सूर्यनिशाकरौ ।।

यस्य कार्येषु भगवान्सहायोऽसौ चतुर्मुखः ।। २७ ।।

तेषु किं राजशार्दूल विघ्नशंकापि जायते ।।

एष दूरेऽस्ति राजेंद्र प्रत्यक्षं यस्तव द्विषाम् ।। २८ ।।

सदोमध्य गतः शक्रः साक्षात्त्रिजगतीपतिः ।।

विशेषतो जगन्नाथप्रासादे कः पुमान्नृप ।। २९ ।।

निहंतुं मनसापीच्छेत्तत्र शंकास्तु मा तव ।।

तदग्रतः पश्य भूप चंद्रकोटिसमत्विषा ।। 2.2.22.३० ।।

परितो ह्लादजनकः सुधासागरकोटिवत् ।।

यश्चायं तेजसां राशिर्जानीहि ब्रह्मसद्मनः ।। ३१ ।।

इत्थमालपतस्तौ तु ब्रह्मलोकांतिकं गतौ ।।

शुश्रुवाते सुदूरात्तौ ब्रह्मर्षीणां मुखोद्गतम् ।। ३२ ।।

स्वाध्यायशब्दं सुपदं स्पष्टवर्णक्रमस्वरम् ।।

इतिहासपुराणानि च्छंदः कल्पानि गाथिकाः ।। ३३ ।।

असंकीर्णोज्ज्वलपदं श्रूयते प्रविभागशः ।।

अत्रैतद्राजशार्दूल जानीहि ब्रह्मणः पुरम् ।। ३४ ।।

सभा हि दृश्यते चैषा यत्र लोकपितामहः ।।

सार्द्धं ब्रह्मर्षिमुख्यैश्च सुखासीनश्चतुर्मुखः ।। ३५ ।।

नाना चैतन्यशबलैर्जीवन्मुक्तैरुपासितः ।।

यत्रागतानि वर्त्तंते न संसाराब्धिसंकटे ।। ३६ ।।

सदिति ब्रह्मणो नाम तस्यायं भुवनोत्तमः ।।

सत्यलोक इति ख्यातस्तदूर्ध्वं नास्ति किंचन ।। ३८ ।।

अस्यैव किंचिदुपरि अधश्चांडकपालतः ।।

वैकुण्ठभुवनं राजन्मुक्ता यत्र वसंति वै ।। ३८ ।।

यत्र योगीश्वरः साक्षाद्योगिचिंत्यो जनार्दनः ।।

चैतन्यवपुरास्ते वै सांद्रानंदात्मकः प्रभुः ।। ३९ ।।

यं प्राप्य न निवर्त्तंते मृत्युसंसारवर्त्मनि ।।

यमुपास्ते सदा ब्रह्मा जीवन्मुक्तैः स्वमुक्तये ।। 2.2.22.४० ।।

कल्पितस्यायुषोन्तेऽसावेभिः सार्द्धं प्रपद्यते ।।

स एष स्रष्टा लोकानां मत्स्यकूर्मादिरूपधृक् ।। ४१ ।।

रक्षिता रौद्ररूपेण संहर्त्ता लोकभावनः ।।

इन्द्रद्युम्नं वदन्नित्थं प्राप ब्रह्मनिकेतनम् ।। ४२ ।।

क्षणेन च सभाद्वारि प्रकोष्ठे स न्यवर्तत ।।

यत्र तिष्ठन्ति दिक्पालाः शक्राद्याः परितस्तथा ।। ४३ ।।

चिरकालं ध्यानपरास्तथा मन्वंतराधिपाः ।।

पृथग्जननिभा द्वाःस्थनिषिद्धांतः प्रवेशनाः ।।४४ ।।

इन्द्रद्युम्नेन सहितं नारदं प्रविलोक्य सः ।।

द्वारपालः सविनयं ननामानतकन्धरः ।। ४५ ।।

चतुर्दशानां लोकानां भ्रमणे रसिक प्रभो ।।

त्वया विना शोभते नो स्वामिंस्तव पितुः सभा ।। ४६ ।।

संत्येव मुनयः श्रेष्ठा ब्राह्मणा ब्रह्मविद्वराः ।।

गौतमाद्यास्तथाप्येषा न रम्या ब्रह्मणः सभा ।। ४७ ।।

बहुतारा सुरजनी चंद्रेणेव प्रकाशते ।।

इति स्तुवन्ददौ तस्य प्रवेशं विनयान्वितः ।। ४८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे द्वाविंशोऽध्यायः ।। २२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २३

https://sa.wikisource.org/s/h3z
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। नारद उवाच ।। ।।

दौवारिकाय राजर्षिरिंद्रद्युम्नो महायशाः ।।

सार्वभौमो वैष्णवाग्र्यो धातारं द्रष्टुमागतः ।। १ ।।

यात्वयं पुरतस्तस्य यदि त्वमनुमन्यसे ।।

इत्युक्तस्तं पुनः प्राह नारदं मणिकोदरः ।। २ ।।

स्वामिंस्त्वयागतो योऽसौ न सामान्यो हि बुध्यते ।।

यत्र पश्यसि दिक्पालान्पितॄन्मन्वंतराधिपान् ।। ३ ।।

तत्रायं मर्त्यनिलयस्तिष्ठेदपि हि पौरुषम् ।।

भवान्गत्वा पद्मयोनिं विज्ञाप्यैनं प्रवेशय ।। ४ ।।

सभाद्वारगतो योऽसौ दिक्पालैः सह यास्यति ।।

एकाग्रचित्तो भगवान्गायने चतुराननः ।। ५ ।।

अस्माकं द्वारि युक्तानां प्रतीक्ष्योऽवसरो ध्रुवम् ।।

न क्रोधो मयि कर्त्तव्यो दासे तव पितुश्च ते ।।६।।

इत्युक्तो नारदो गत्वा ब्रह्माणं जगतां पतिम् ।।

नत्वा साष्टांगपतनं विज्ञप्तो वसुधाधिपः ।। ७ ।।

कटाक्षेणादिशत्सोऽथ इन्द्रद्युम्नप्रवेशनम् ।।

नोवाच किंचिद्भगवान्गाने दत्तावधानतः ।। ८ ।।

दिव्यगायनसंगीते कौतुकाविष्टमानसः ।।

ज्ञात्वेंगितं नारदोऽथ इंद्रद्युम्नं नृपोत्तमम् ।।

प्रवेशयामास ततः शक्राद्यैः सुनिरीक्षितः ।। ९ ।।

दृष्ट्वा पितामहं दूरात्स्रष्टारं जगतां नृपः ।।

अमन्यत द्विजश्रेष्ठाः साक्षाद्दारुमयं हरिम् ।। 2.2.23.१० ।।

शनैः शनैर्ययौ भूपः प्रणमंश्च कृतांजलिः ।।

स्तुवन्नमन्प्रणिपतन्साध्वसस्खलितं व्रजन् ।।

किंचिद्दूरे स्थितो भूपो नारदस्य निदेशतः ।। ११ ।।

ततः पुण्यं गीयमानं चरितं सिंधुजापतेः ।।

शृण्वंश्चतुर्मुखस्तस्थौ मुहूर्त्तं द्विजपुंगवाः ।। १२ ।।

सावित्रीशारदाभ्यां च वीज्यमानस्तु पार्श्वयोः ।।

शुद्धदेहधरैर्वेदैः स्तूयमानः स्वयंभुवः ।। १३ ।।

कलाकाष्ठानिमेषादि कल्पयन्युगपर्ययम् ।।

न जराजन्ममरणं रूपादिपरिणामनम् ।। १४ ।।

यस्य लोकगतानां वै नाधयो व्याधयस्तथा ।।

मन्वतरादयो यत्र युगावर्त्तादयस्तथा ।। १५ ।।

कल्पांताद्या न विद्यंते स साक्षात्परमेश्वरः ।।

गीतावसाने तं भूपमुवाच प्रहसन्निव ।। १६ ।।

इंद्रद्युम्न महासत्त्व साक्षात्त्वं भगवत्प्रियः ।।

अन्यस्य दुर्लभो लोकः सत्याख्यो विदितस्तव ।। १७ ।।

अत्रागतिं हि वांछंतो मुनयः क्षीणकल्मषाः ।।

तपोनिष्ठाश्च तिष्ठंति यावदाभूतसंप्लवम् ।। १८ ।।

चतुर्दशसु लोकेषु सृष्टानां प्राणिनां हि यत् ।।

चैतन्यादिविचित्राणि सर्वेषामाश्रयो ह्यसौ ।। १९ ।।

जानन्नपि हि तत्कार्यं मानयन्नृपसत्तमम् ।।

उवाच परमप्रीत इंद्रद्युम्नं पितामहः ।। 2.2.23.२० ।।

किमर्थमागतोस्यत्र तद्ब्रूहि हृदयस्थितम् ।।

मयि दृष्टे न दुष्प्रापममृतं किन्नु वांछितम् ।। २१ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

अंतर्यामिन्हि भगवंस्त्वदज्ञातं कुतो भवेत्।।

तथापि प्रश्नो यो नाथ मय्यनुक्रोश एव सः ।। २२ ।।

मूर्ध्न्याधाय तवानुज्ञां कथितं तव सूनुना ।।

इष्टाः सहस्रं क्रतवस्तदंते दारुदेहभृत्।। २३ ।।

आविर्बभूव भगवान्भूतभव्यभवत्प्रभुः ।।

त्वदनुग्रहसंपत्तिवशादेवावलोकयन् ।। २४ ।।

तादृशं पुंडरीकाक्षं येन त्वल्लोकमागतः ।।

यस्यारब्धो मया देव प्रासादस्तत्र चेत्स्वयम् ।। २५ ।।

गत्वा देवं जगन्नाथं स्थापयिष्यसि चेत्प्रभो ।।

त्वदनुग्रहस्तु सफलो भवेन्मे लोकभावन ।।। ।। २६ ।।

एतदर्थं जगत्स्वामिन्नारदेन सहाधुना ।।

त्वत्पादपद्मयुगलं द्रष्टुं त्वल्लोकमागतः ।। २७ ।।

प्रसीद मां कुरुष्वेदं जगन्नाथस्त्वमेव हि ।।

त्वमेव स जगन्नाथो न भेदो युवयोर्विभो ।।२८ ।।

स्थाप्यः स्थापयिता चासि वेद्यो वेदयिता भवान् ।। २९ ।।

।। जैमिनिरुवाच ।। ।।

एवं विज्ञापनांते तु दुर्वासा स महामुनिः ।।

प्रणम्य साष्टांगपातं कृतांजलिरुपस्थितः ।।

प्रोवाच विनयान्नीचो धातारं जगतां गुरुम् ।। 2.2.23.३० ।।

विभो द्वारप्रवेशेऽत्र दौवारिकनिवारिताः ।।

लोकपालाः सपितरस्तथा मन्वंतराधिपाः ।। ३१ ।।

तिष्ठंति दीनजनवत्सुचिराल्लोकभावन ।।

तदाज्ञापय पश्यंतु तव पादसरोरुहम् ।। ३२ ।।

तच्छ्रुत्वा देवदेवस्तु तदा दुर्वाससो वचः ।।

प्रहस्य वचनं प्राह नैषां प्रस्ताव एव हि ।। ३३ ।।

इंद्रद्युम्नेन स्पर्द्धंते किं तु मोहवशानुगाः ।।

जीवन्मुक्तोऽयं नृपतिः क्षीणकर्माघसंहतिः । ३४ ।।

मत्संततेः पंचमोऽयं वैष्णवो विष्णुतत्परः ।।

एते हि सुखभोगाय कर्मणा प्राप्तपौरुषाः ।। ३५ ।।

अत्रागतिं प्रार्थयंतस्तपस्तप्त्वा हि देवताः ।।

ममानुग्रहत एते आयाता मदुपासने ।। ३६ ।।

तथापि त्वदनुज्ञाता आयांतु मम दर्शने ।।

ततः प्रविष्टास्ते देवा दुर्वासोवचनेन वै ।। ३७ ।।

दूरात्प्रणेमुर्ब्रह्माणं गायनानां समीपतः ।।

इंद्रद्युम्नं नरपतिं संलपंतं कृतांजलिम्।। ३८ ।।

ताँल्लोकपालान्प्रणतान्कटाक्षेण जगत्प्रभुः ।।

अनुजग्राह कथयन्निंद्रद्युम्नं ससादरम् ।। ३९ ।।

राजन्कृतस्त्वया सत्यं प्रासादो भगवत्स्थितौ ।।

नायं कालस्तथा राज्यं न वा त्वत्संततिर्नृप ।। 2.2.23.४० ।।

गीतगानावसरतो भूयान्कालो गतस्तव ।।

मन्वंतरो हि दिव्यानां युगानामेकसप्ततिः ।। ४१ ।।

तव वंशोऽपि विच्छिन्नः कोटिशः क्षितिपा गताः ।।

देवोंऽतिमश्च प्रासादो द्वयमत्रावशिष्यते ।। ४२ ।।

द्वितीयस्य मनोरादियुगं स्वारोचिषस्य तु ।।

ममांतिकेऽत्र वसतोमृत्युर्वा न जरा तथा ।। ४३ ।।

विपर्ययमृतूनां वा न कालपरिणामता ।।

तद्गच्छ भूमौ राजेंद्र देवं प्रासादमेव च ।। ४४ ।।

आत्मसंबंधिनं कृत्वा पुनरायाहि वेगवान् ।।

अथवाहं प्रयास्यामि तवानुपदमेव हि ।। ४५ ।।

त्वमग्रतो धरां गत्वा यावत्संभारमृद्धिमत् ।।

करिष्यसि महाभाग तावदेव व्रजाम्यहम् ।। ४६ ।।

इत्याज्ञाप्येंद्रद्युम्नं तं भगवान्स पितामहः ।।

देवान्पुरःस्थितानाह विनयानतकंधरान् ।। ४७ ।।

बद्धांजलीन्साध्वसांस्तांस्तत्पादन्यस्तवीक्षणान् ।।

उवाच भगवान्स्निग्धगंभीरवचसा द्विजाः ।। ४८ ।।

किमर्थमागताः सर्वे युगपत्तु दिवौकसः ।।

यत्कार्यं वो मया कार्यं विज्ञापयत मा चिरम् ।। ४९ ।।

।। जैमिनिरुवाच ।। ।।

इति श्रुत्वा वचो धातुस्त्रिदशा विगतज्वराः ।।

प्रत्यूचुर्हर्षिताः सर्वे भगवंतं पितामहम् ।। 2.2.23.५० ।।

।। देवा ऊचुः ।। ।।

उपासितः पुरास्माभिर्यो नीलाद्रौ मणीमयः ।।

अन्तर्हितः कथं देव इदानीं दारुदेहधृक् ।। ५१ ।।

आविर्भूतः क्रतोरंत इन्द्रद्युम्नस्य भूपतेः ।।

एतस्य कारणं ज्ञातुं भवतः पादपंकजम् ।। ५२ ।।

आराधितुमिहायाताः प्रसीद कथयस्व तत् ।।

इत्युक्ते त्रिदशैर्देवो भगवान्पंकजासनः ।। ५३ ।।

रहस्यमेतद्वो देवाः कस्यचिन्नोदितं पुरा ।।

सर्वे समुदिता यस्मादपृच्छत चिरागताः ।। ५४ ।।

ततो वः कथयिष्यामि सुराणां गुह्यमुत्तमम् ।।

पूर्वे परार्द्धे भो देवाः क्षेत्रं श्रीपुरुषोत्तमम् ।। ५५ ।।

नीलाश्मवपुरास्थाय न तत्याज जनार्दनः ।।

सांप्रतं मे द्वितीयं तु परार्द्धं समुपस्थितम् ।। ५६ ।।

मनुः स्वायम्भुवो नाम श्वेतवाराहकल्पके ।।

प्रवर्त्ततेऽयं कालो वै प्रातराद्यदिनस्य च ।। ५७ ।।

दारुमूर्तिरयं देवो भुवनानां हि मध्यमे ।।

ममायुषः प्रमाणं तु स्थास्यते मानयन्प्रभुः ।। ५८ ।।

ममात्मा एष भगवानहमेतन्मयः सुराः ।।

नावयोर्विद्यते किंचिदस्मिन्स्थावरजंगमे ।। ५९ ।।

क्षीरोदार्णवमध्ये हि श्वेतद्वीपे हि तल्पके ।।

यः शेते योगनिद्रां तां मानयन्पुरुषोत्तमः ।। 2.2.23.६० ।।

स मूलं जगतामादिस्तस्य रोमाणि यानि वै ।। तानि कल्पद्रुमाख्यानि शंखचक्रांकितानि वै ।। ६१ ।।

तन्मध्यस्थो ह्ययं वृक्षश्चैतन्याधिष्ठितः सुराः ।।

स्वयमुत्पतितः सिंधोः सलिले सत्यपूरुषः ।। ६२ ।।

भोगान्भोक्तुं त्रिलोकस्थान्दारुवर्ष्मा जनार्दनः ।।

अनेकजन्मसाहस्रैर्भक्तियोगेन भावितः ।। ६३ ।।

घोरसंसारनाशाय मया पूर्वं प्रयाचितः ।।

पुनः पुनः सृष्टिलीनपालनोद्विग्नचेतसा ।। ६४ ।।

अशेषकर्मनाशाय जगतां सर्वमुक्तये ।।

धारणाध्यानयोगानां दुष्कराणां विनापि सः ।। ६५ ।।

मोक्षाय भगवानाविर्बभूव पुरुषोत्तमः ।।

प्रच्छन्नं वपुरेतस्य क्षेत्रं नास्य विचारयेत् ।। ६६ ।।

धर्मिग्राहप्रमाणेन यादृग्दृष्टः स एव सः ।।

चतुर्वर्गप्रदो देवो यो यथा तं विभावयेत् ।। ६७ ।।

तद्दर्शनपरिक्षीणपापसंघाः क्रमाद्भुवि ।।

भवन्ति निर्मलात्मानः पुरुषा मुक्तिभाजनम् ।। ६८ ।।

।। जैमिनिरुवाच ।। ।।

एतच्छ्रुत्वा तु ते देवाः पद्मयोनेर्वचोमृतम् ।।

हृष्टाः संचिंतयामासुः प्रहृष्टेनांतरात्मना ।। ६९ ।।

अचिरस्थायि देवत्वं विहायैतद्ध्रुवं गताः ।।

अस्मिन्क्षेत्रवरे देवमाराध्यामः सुसंयताः ।। 2.2.23.७० ।।

हर्षप्रफुल्लवदनान्सुरान्दृष्ट्वा पितामह ।।

इन्द्रद्युम्नानुग्रहाय यः प्रकाशं गतः प्रभुः ।। ७१ ।।

याताऽत्र प्रतिमा त्वस्य स्वयमेव वदिष्यति ।।

वरान्प्रदास्यति बहून्भगवान्भक्तवत्सलः ।। ७२ ।।

प्रासादमिन्द्रद्युम्नस्य प्रतिष्ठापयितुं विभुम् ।।

अहं चापि गमिष्यामि यूयं तत्र प्रयात वै ।। ७३ ।।

इन्द्रद्युम्नोऽग्रतो यातु प्रतिष्ठावस्तुसंभृतौ ।।

सहायास्तत्र भवत यूयं क्षीणाधिकारिणः ।। ७४ ।।

मन्वन्तरं व्यतीतं वै प्रथमं सांप्रतं सुराः ।।

इन्द्रद्युम्नेन सहितास्तत्र गत्वा सुरोत्तमाः ।। ७५ ।।

प्रासादप्रतिमानां च विधर्ता स्वाम्यमस्य वै ।।

तस्मात्संभृतसंभारः ससहायोऽधुना ह्यसौ ।। ७६ ।।

अस्य संततिसंबन्धस्मरणादपि भूतले ।।

मदाज्ञया पद्मनिधिः सह यास्यति भूतलम् ।। ७७ ।।

प्रतिष्ठायै भगवतः संयतौ सर्ववस्तुनः ।।

इन्द्रद्युम्नोऽपि हृष्टात्मा दृष्ट्वा ब्राह्मीं श्रियं द्विजाः ।। ७८ ।।

महदाश्चर्यसंपन्नः प्रणिपत्य जगद्गुरुम् ।।

तदाज्ञां शिरसा धृत्वा देवैः क्षीणाधिकारिभिः ।। ७९ ।।

आजगाम भुवं विप्रा विधिना चानुमोदिताः ।। 2.2.23.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे त्रयोविंशोऽध्यायः ।। २३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २४

https://sa.wikisource.org/s/h40



।। जैमिनिरुवाच ।। ।।

आगत्य च जगन्नाथं चिरादुत्कंठमानसः ।।

दंडवत्प्रणनामासौ घनरोमांचकंचुकः ।। १ ।।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।।

प्रणतार्तिविनाशाय चतुर्वर्गैकहेतवे ।। २ ।।

हिरण्यगर्भपुरुषप्रधानव्यक्तरूपिणे ।।

ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ।। ३ ।।

इत्युच्चरन्स्तुतिं भूपः सानंदाश्रुविलोचनः ।।

प्रदक्षिणं पुनः कुर्वन्ननाम च पुनःपुनः ।। ४ ।।

ततोऽन्या देवता या वै तत्रागच्छन्मुदान्विताः ।।

तुष्टुवुः प्रणता देवं कृतांजलिपुटा मुदा ।। ५ ।।

।। देवा ऊचुः ।। ।।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।।

स भूमिं सर्वतो व्याप्य अध्यतिष्ठद्दशांगुलम् ।।।। ६ ।।

यः पुमान्परमं ब्रह्म परमात्मेति गीयते ।।

भूतं भव्यं भविष्यं च सर्वं पुरुष एव तत् ।। ७ ।।

एतावानस्य महिमा ज्यायानेष पुमान्प्रभुः ।।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।। ८ ।।

छन्दांसि जज्ञिरे त्वत्तस्त्वत्तो यज्ञपुमानपि ।।

त्वत्तोऽश्वाश्च व्यजायंत गावो मेषादयस्तथा ।। ९ ।।

ब्राह्मणा मुखतो जाता बाहुजाः क्षत्रियास्तव ।।

विशस्तवोरुजा पद्भ्यां तथा शूद्राः समागताः ।। 2.2.24.१० ।।

मनसश्चंद्रमा जातश्चक्षुषस्ते दिवाकरः।।

कर्णाभ्यां श्वसनः प्राणैर्जिह्वाया हव्यवाडपि ।। ११ ।।

नाभितो गगनं द्यौश्च मूर्ध्नस्ते समवर्त्तत ।।

पादाभ्यां ते धरा जाता दिशश्चाष्टौ श्रुतेर्गताः ।। १२ ।।

सप्तासन्परिधयस्त्वत्त एकविंशत्समिच्च वै ।।

चराचराः सर्वभावास्त्वत्त एव हि जज्ञिरे ।। १३ ।।

त्वमेव जगतां नाथस्त्वमेव परिपालकः ।।

उग्ररूपश्च संहर्ता त्वमेव परमेश्वर ।। १४ ।।

त्वमेव यज्ञो यज्ञांशस्त्वं यज्ञेशः परात्परः ।।

शब्दब्रह्मपरं त्वं हि शब्दब्रह्मासि विश्वराट् ।। १५ ।।

स्वराट् सम्राड्जगन्नाथ विराडसि जगत्पते ।।

अधश्चोर्ध्वं च तिर्यक्त्वं त्वया व्याप्तं जगन्मय ।। १६ ।।

प्राप्नुवंति परं स्थानं त्वां यजंतश्च याज्ञिकाः।।

भोज्यं भोक्ता हविर्होता हवनं त्वं फलप्रदः ।। १७ ।।

समस्तकर्मभोक्ता त्वं सर्वकर्मात्मकः प्रभो ।।

सर्वकर्मोपकरणं सर्वकर्मफलप्रदः ।। १८ ।।

कर्मप्रेरयिता त्वं हि धर्मकामार्थसिद्धिदः ।।

त्वामृते मुक्तिदः कोऽन्यो हृषीकेश नमोऽस्तु ते ।। १९ ।।

नमोऽस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे ।।

सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।। 2.2.24.२० ।।

वयं च्युताधिकारास्त्वां प्रपन्नाः शरणं प्रभो ।।

त्राहि नः पुंडरीकाक्ष अगतीनां गतिर्भव ।। २१ ।।

संसारपतितस्यैको जन्तोस्त्वं शरणं प्रभो ।।

त्वत्सृष्टौ त्वादृशो नास्ति यो दीनपरिपालकः ।। २२ ।।

दीनानाथैकशरणं पिता त्वं जगतः प्रभो ।।

पाता पोष्टा त्वमेवेश सर्वापद्विनिवारकः ।। २३ ।।

त्राहि विष्णो जगन्नाथ त्राहि नः परमेश्वर ।।

त्वामृते कमलाकांत कः शक्तः परिरक्षणे ।। २४ ।।

अन्तर्यामिन्नमस्तेऽस्तु सर्वतेजोनिधे नमः ।। २५ ।।

इति स्तुवंतस्ते देवाः प्रणिपत्य पुनःपुनः।।

इंद्रद्युम्नेन सहिता बहिर्भूय द्विजोत्तमाः ।। २६ ।।

क्षेत्रं श्रीनरसिंहस्य गत्वा तं प्रणिपत्य च ।।

नमस्कृत्य परां भक्तिं कृत्वाभ्यर्च्य नृकेसरिम् ।। ।।२७।।

नीलाचलाद्रेः शिखरं यत्र प्रासाद उत्तमः ।।

ययुस्ते पद्मनिधिना सार्द्धं संभारकारणात् ।। २८ ।।

ददृशुस्ते महाप्रांशुं व्याप्तं गगनमण्डले ।।

उत्तिष्ठंतं विंध्यगिरिं रोद्धुं भानोर्गतिं किमु ।। २९ ।।

व्यश्नुवानं दिशः सर्वा विचित्रघटनोज्ज्वलम् ।।

बहुकालव्यतिक्रांतस्वस्तिभंगिविचित्रकम् ।।।। 2.2.24.३० ।।

ततश्च चिंतयामास इन्द्रद्युम्नः स वैष्णवः ।।

घटनार्थे मया यातः सत्यलोकमितः पुरा ।। ३१ ।।

सुचिराद्दृष्टिपथगः पूर्णः प्रासाद उत्तमः ।।

अनुग्रहाद्वै देवस्य नात्र मानुषपौरुषम् ।। ३२ ।।

मन्वंतरसमाप्तिः क्व सूर्यचन्द्रेंद्ररोधिका ।।

तथापि तिष्ठते चायं प्रासादो ह्येष दुर्लभः ।।। ३३ ।।

वल्मीकसदृशा ह्येते प्रासादा मानुषैः कृताः ।।

शीर्यंति रोहणैर्वृक्षैः स्वल्पकालगतायुषः ।। ३४ ।।

मदनुक्रोशबुद्ध्या तु रक्षितं भवनं हरेः ।।

ततस्तान्स सहायान्वै जगाद प्रश्रयं वचः ।। ३५ ।।

जानीत जगदीशस्य प्रासादं कारितं मया ।।

आविर्बभूव भगवान्दारुरूपवपुः स्वयम् ।।

तदांतरिक्षगा वाणी मामुवाचाशरीरिणी ।। ३६ ।।

सहस्रपाणिसंमितं नीलाद्रेः शिखरोपरि ।।

प्रासादं कारयस्वेति स्थितये जगदीशितुः ।। ३७ ।।

एतत्प्रतिष्ठानविधौ स्वयमत्रागमिष्यति ।।

पद्मयोनिः स्वयं सार्द्धं सिद्धब्रह्मर्षिदैवतैः ।। ३८ ।।

तदत्र क्रियते को वा संभारो ज्ञायते कथम् ।।

इत्युक्तवंतं ते प्रोचुर्देवा भग्नाधिकारिणः ।। ३९ ।।

।। देवा ऊचुः ।। ।।

न जानीमो वयमपि तदस्माकं गुरुर्गुरुः ।।

इदानीं न वशेऽस्माकं स हि स्वर्गपरो हितः ।। 2.2.24.४० ।।

।। पद्मनिधिरुवाच ।। ।।

स्वामिन्विधेरनुज्ञानादागतोऽस्मि त्वया सह ।।

कर्तव्यं किं मया चात्र किं वा वस्तु प्रतीक्ष्यते ।। ४१ ।।

।। जैमिनिरुवाच ।। ।।

इति ह्यालप्यमानानां नारदः पुरतः स्थितः ।।

ब्रह्मणा प्रेषितः पूर्वं सर्वशास्त्रविशारदः ।। ४२।।

सर्वसंभारवस्तूनि यथाशास्त्रं मुने कुरु ।।

संपादयिष्यति तव शासनात्पद्मको निधिः ।। ४३ ।।

तं दृष्ट्वा ते मुदा युक्ता उत्तस्थुर्ब्रह्मणः सुतम् ।।

षडर्घ्यपूजया तस्य पूजां चक्रे नृपोत्तमः ।। ४४ ।।

प्रणेमुस्तेऽपि तं देवा मनुष्याकारधारिणः ।।

ऊचे तमिंद्रद्युम्नोऽपि प्रतिष्ठाविधिवस्तुनि ।। ।। ४५ ।।

नाहं वेद्मि मुनिश्रेष्ठ चिरात्यक्तः पुरोधसा ।।

आदेशय क्रमाद्ब्रह्मन्संपाद्यं यद्यदेव हि ।। ४६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे चतुर्विंशोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २५



।। जैमिनिरुवाच ।। ।।

इत्युक्ते नारदः सोऽथ यथाशास्त्रं विचार्य वै ।।

आलेख्य क्रमशः पत्रे राज्ञे तस्मै न्यवेदयत् ।। १ ।।

राजापि पत्रं तच्छ्रुत्वा सोऽवधार्य पुनःपुनः ।।

प्रददौ पद्मनिधये लिखितान्यत्र यानि वै ।। २ ।।

संपादय पद्मनिधे शालां स्वर्णमयीं कुरु ।।

ब्रह्मणः सदनं दिव्यं ब्रह्मर्षीणां च निर्मलम् ।। ३।।

इंद्रादीनां सुराणां च सिद्धानां मर्त्यवासिनाम् ।।

मुनींद्राणां निवासाय राज्ञां पातालवासिनाम् ।। ४ ।।

तथा च नागराजानां निधे त्रैलोक्यवासिनाम् ।।

यथायोग्यासनैर्युक्तं गृहं गृहमतंद्रितः ।। ५ ।।

कारयाशु निधे द्रव्यसंभारं यावदेव तु ।।

विश्वकर्मापि च तव साहाय्यं रचयिष्यति ।। ६ ।।

इत्यादिशंतं स मुनिरिंद्रद्युम्नमुवाच वै ।।

संभारान्पृथगेतद्धि कर्तव्यं व्यवधानतः ।। ७ ।।

स्वर्णैः सुघटितं साधुरथत्रयमलंकृतम् ।।

दुकूलरत्नमालाद्यैर्बहुमूल्यैर्दृढं महत् ।। ८ ।।

श्रीवासुदेवस्य रथो गरुडध्वजचिह्नितः ।।

पद्मध्वजः सुभद्राया रथमूर्द्धनि धार्यताम् ।। ९ ।।

रथः षोडशचक्रस्तु विष्णोः कार्यः प्रयत्नतः ।।

चतुर्दश बलस्यैव सुभद्रायास्तु द्वादश ।। 2.2.25.१० ।।

हस्तषोडशविस्तारो रथश्चक्रधरस्य तु ।।

चतुर्दश बलस्यैव सुभद्रायास्तु द्वादश ।। ११ ।।

आसनं जगतां भूयः स्वयं स्वासनविग्रहः ।।

तद्याने जगतां नाशस्ततो यानं न विद्यते ।। १२ ।।

पश्येच्चराचरं विश्वं ज्ञानादश(थ?) सुनिर्मले ।।

स्थितो हस्ततले नित्यं निर्मलस्तस्य दर्पणः ।। १३ ।।

तलस्थत्वादसौ तालः सदा तेनांकितः प्रभुः ।।

ततः स एव शेषस्य बलभद्रावतारिणः ।। १४ ।।

अथवा सीरिणः कार्यं सीरमेव ध्वजोत्तमम् ।।

ध्वजः सुनिर्मलः कार्यस्तस्मात्तालध्वजो मतः ।। १५ ।।

न वासितव्यो देवोऽसावप्रतिष्ठे रथे नृप ।।

प्रासादे मंडपे वापि पुरे तन्निष्फलं भवेत् ।। १६ ।।

तस्मात्प्रतिष्ठा प्रथमं हरेः कार्या रथस्य वै ।।

संभारः क्रियतां तस्य ह्यनुष्ठेया मया तु सा ।। १७ ।।

इत्याज्ञां मत्पितुर्लब्ध्वा शीघ्रमायाम्यहं नृप ।।

तस्य तद्वचनं श्रुत्वा घटितं स्यंदनत्रयम् ।। १८ ।।

निधिसंपादितैर्द्रव्यैरेकाह्नाद्विश्वकर्मणा ।।

स्वक्षं सुचक्रं सुस्तंभं सुविस्तीर्णं सुतोरणम् ।। १९ ।।

सुध्वजं सुपताकं च नानाचित्रमनोहरम् ।।

विचित्रबंधमिथुनपुत्तलीवलयान्वितम् ।। 2.2.25.२०।।

अर्द्धहाटकनिर्व्यूढं साक्षाद्रविरथोपमम् ।।

मेघगंभीरनिर्घोषं दृष्ट्वा कर्षगुणैर्युतम् ।।

वातरंहोहयैर्युक्तं शतसंख्यैः सितप्रभैः ।। २१ ।।

यथाशास्त्रविधानेन नारदेन प्रतिष्ठितम् ।।

सुलग्ने सुमुहूर्ते च सुतिथौ ज्योतिषोदिते ।। २२ ।।

।। मुनय ऊचुः ।। ।।

भगवञ्जैमिने ब्रूहि सर्वज्ञोसि मतो हि नः ।।२३।।

विधिना केन हि रथः प्रतिष्ठाप्यो हरेरयम् ।।

यथावद्वद नो येन जानीमो विधिविस्तरम् ।। २४ ।।

।। जैमिनिरुवाच ।। ।।

यथा प्रतिष्ठितं तेन नारदेन महात्मना ।।

तद्वो वदिष्यामि विधिं यथा दृष्टं पुरा मया ।। २५ ।।

रथस्येशानदिग्भागे शालां कृत्वा सुशोभनाम् ।।

तन्मध्ये मण्डपं कृत्वा वेदिं तत्र सुनिर्मलाम् ।।२६।।

चतुरस्रा चतुर्हस्तमितां हस्तोच्छ्रितां द्विजाः ।।

प्रतिष्ठापूर्वदिवसे रात्रावुत्तरतः शुभे ।।२७।।

मुहूर्ते स्वस्ति वाच्याथ कारयेदंकुरार्पणम् ।।

द्वात्रिंशद्देवताभ्यश्च बलिं दत्त्वा यथाविधि ।।२८।।

प्रातस्ततो वेदिकायां मध्ये मण्डलमालिखेत् ।।

पद्मं वा स्वस्तिकं वापि कुम्भं तत्र निधापयेत् ।। २९ ।।

पञ्चद्रुमकषायं च तन्मध्ये पूरयेत्सुधीः ।।

गंगादिपुण्यतोयानि पल्लवान्स समृत्तिकाः ।। 2.2.25.३० ।।

सर्वगंधान्पञ्चरत्नसर्वौषधिगणं तथा ।।

पूरयित्वा विधानेन आचार्यः प्राङ्मुखः शुचिः ।। ३१ ।।

विष्णुं स्मरन्पंचगव्यं पश्चादपि प्रपूरयेत् ।।

दुकूलवेष्टितं कण्ठे माल्यैर्गंधैः सुशोभनैः ।। ३२ ।।

फलपल्लवसंयुक्तं कृतकौतुकमंगलम् ।।

पूरयेत्तत्र देवेशं नरसिंहमनामयम् ।। ३३ ।।

मंत्रराजेनविधिवदुपचारैस्तथांतरैः ।।

प्रार्थयित्वा प्रसादाय तस्मिन्नावाह्य तं हरिम् ।। ३४ ।।

बाह्योपचारैर्विविधैः पूजयेद्विधिवद्द्विजाः ।।

वायव्यां तस्य कुम्भस्य समिदाज्यचरुं तथा ।। ३५ ।।

अष्टोत्तरसहस्रं च जुहुयाद्विधिवद्गुरुः ।।

संपातान्प्रापयेत्तत्र कुम्भमध्ये तदन्ततः ।। ३६ ।।

रथं सुशोभनं कृत्वा पताकागंधमाल्यकैः ।।

सर्वांगं सेचयेत्तस्य गंधचन्दनवारिभिः ।। ३७ ।।

धूपयेत्कालागुरुणा शंखकाहालनिस्वनैः ।।

ध्वजे तस्य नृसिंहस्य प्रतिष्ठाप्य समीरणम्।। ३८ ।।

पूजयित्वा विधानेन रक्तस्रग्गंधमाल्यकैः ।।

इमं मंत्रं समुच्चार्य सुपर्णं प्रार्थयेत्ततः ।। ३९ ।।

यो विश्वप्राणहेतुस्तनुरपि च हरेर्यानकेतुस्वरूपोयं संचित्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतंति ।।

चंचच्चण्डोरुतुंडत्रुटित फणिवसारक्तपंकांकितास्यं वन्दे छन्दोमयं तं खगपतिममलं स्वर्णवर्णं सुपर्णम् ।। 2.2.25.४० ।।

ब्रह्मघोषैः शंखनादैर्नानावाद्यसुविस्तरैः ।।

रथमूर्ध्नि स्थापयेत्तं चारुसूक्तं समुच्चरन् ।। ४१ ।।

तस्योपरिष्टात्तं कुम्भं समंतात्प्लावयन्रथम्।।

त्रिरुच्चरन्मंत्रराजं सेचयेद्ब्रह्मणा सह ।। ४२ ।।

ततः पूर्णाहुतिं दत्त्वा ब्रह्मणे दक्षिणां ददेत् ।।

आचार्यं दक्षिणां दद्याद्येन तुष्यति तद्गुरुः ।। ४३ ।।

ब्राह्मणान्भोजयेदन्ते पायसैर्मधुसर्पिषा ।।

द्वादशाक्षरमंत्रेण बलभद्रस्य कारयेत् ।। ४४ ।।

लांगलं च पविरवन्मंत्रः स्याल्लांगलध्वजे ।।

अथवा द्विषड्वर्णोपि मूलमन्त्रः प्रकीर्तितः ।। ४५ ।।

लक्ष्मीसूक्तेन भद्रायाः प्रतिष्ठाप्यो रथस्तथा ।।

नाभिह्रदान्मुरारेस्त्वं ब्रह्मांडावलिरूपधृक् ।। ४६ ।।

आसनं चतुरास्यस्य श्रियो वास स्थिरो भव ।।

इम मन्त्रं समुच्चार्य ध्वजपद्मं समुच्छ्रयेत् ।। ४७ ।।

इयान्विशेषो हविषा त्रयाणां च पृथक्पृथक् ।।

पंचपंचभिर्होतव्यमेकैकं तु विभागशः ।। ४८ ।।

इत्थं रथान्प्रतिष्ठाप्य सुवर्णं गां च वस्त्रकम् ।।

धान्यं च दक्षिणां दद्यात्सम्यग्देवस्य भक्तितः ।। ४९ ।।

एवं प्रतिष्ठिते तत्र स्यंदनेऽथ सुभूषिते ।।

आरोप्य देवं विधिवद्ब्रह्मघोषपुरःसरम् ।। 2.2.25.५० ।।

जयमंगलशब्दैश्च नानावाद्यपुरःसरैः ।।

चामरांदोलनैर्धूपैः पुष्पवृष्टिभिरेव च ।। ५१ ।।

ब्राह्मणैः क्षत्रियैर्वैश्यैर्नीयते स्म रथं प्रति ।।

हयैः सुलक्षणैर्दांतैर्बलीवर्दैरथापि वा ।। ५२ ।।

पुरुषैर्विष्णुभक्तैर्वा नेतव्या ह्यप्रमादतः ।।

प्रीणयित्वा जनं सर्वं भक्ष्यभोज्यादिलेपनैः ।। ५३ ।।

रथस्योपरि देवेभ्यो बलिमन्त्रेण भो द्विजाः ।।

बलिं गृह्णन्तु भो देवा आदित्या वसवस्तथा ।। ५४ ।।

मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ।।

असुरा यातुधानाश्च रथस्थाश्चैव देवताः ।। ५५ ।।

दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।।

जगतः स्वस्ति कुर्वंतु दिव्या महर्षयस्तथा ।। ५६ ।।

अविघ्नमाचरंत्वेते मा संतु परिपंथिनः ।।

सौम्या भवंतु तृप्ताश्च दैत्या भूतगणास्तथा ।। ५७ ।।

ततस्तु नीयते देवः समभूमौ समुच्चरन् ।।

मंत्रं वैष्णवगायत्रीं विष्णोः सूक्तं पवित्रकम् ।। ५८ ।।

वामदेव्यैः पवित्रैश्च मानस्तोक्यै रथंतरैः ।।

ततः पुण्याहघोषेण कृतवादित्रनिःस्वनम् ।। ५९ ।।

शनैः शनैरथो नेयो रथः स्नेहात्तु चक्रिणः ।।

तत्रोत्पातान्प्रवक्ष्यामि रथेत्र द्विजसत्तमाः ।। 2.2.25.६० ।।

ईषाभंगे द्विजभयं भग्नेऽक्षे क्षत्रियक्षयः ।।

तुलाभंगे वैश्यनाशः शम्या शूद्रभयं भवेत् ।।६१।।

धुराभंगे त्वनावृष्टिः पीठभंगे प्रजाभयम् ।।

परचक्रागमं विद्याच्चक्रभंगे रथस्य तु ।। ६२ ।।

ध्वजस्य पतने विप्रा नृपोऽन्यो जायते धुवम् ।।

प्रतिमाभंगतायां तु राज्ञो मरणमादिशेत् ।। ६३ ।।

पर्यस्ते तु रथे विप्राः सर्वजानपदक्षयः ।।

उत्पन्नेष्वेवमाद्येषु उत्पातेष्वशुभेषु च ।।६४।।

बलिकर्म पुनः कुर्याच्छांतिहोमं तथैव च ।।

ब्राह्मणान्भोजयेद्भूयो दद्याद्दान्नानि चैव हि ।। ६५ ।।

पूर्वोत्तरे च दिग्भागे रथस्याग्निं प्रकल्पयेत ।।

समिद्भिर्घृतमध्वाज्यमूलाग्राभिश्च होमयेत् ।। ६६ ।।

पालाशाभिर्द्विजश्रेष्ठा मंत्रराजेन दीक्षितः ।।

सोमायाग्नये प्रजाभ्यः प्रजानां पतये तथा ।। ६७ ।।

ग्रहेभ्यश्च ब्रह्मणे च दिक्पालेभ्यस्तदंततः ।।

यत्र यत्र रथे दोषास्तत्र तत्र च दीक्षितः ।। ६८ ।।

जुहुयात्प्रतिष्ठामंत्रेण विशेषः सर्वतो भवेत् ।।

ब्राह्मणैः सहितः कुर्याद्धोमांते शांतिवाचनम् ।।६९।।

स्वस्ति भवतु विप्रेभ्यः स्वस्तिराज्ञेऽस्तु नित्यशः ।।

गोभ्यः स्वस्ति प्रजाभ्यस्तु जगतः शांतिरस्तु वै ।। 2.2.25.७० ।।

स्वस्त्यस्तु द्विपदे नित्यं शांतिरस्तु चतुष्पदे ।।

शं प्रजाभ्यस्तथैवास्तु शं तथात्मनि चास्तु नः ।।७१।।

शांतिरस्तु च देवस्य भूर्भुवः स्वः शिवं तथा ।।

शांतिरस्तु शिवं चास्तु सर्वतः स्वस्तिरस्तु नः ।। ७२ ।।

त्वं देव जगतः स्रष्टा पोष्टा चैव त्वमेव हि ।।

प्रजाः पालय देवेश शांतिं कुरु जगत्पते ।।७३।।

यात्राकारणभूतस्य पुरुषस्य च भूपते ।।

दुष्टान्ग्रहांस्तु विज्ञाय ग्रहशांतिं समाचरेत् ।। ७४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये पञ्चविंशोऽध्यायः ।। २५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २६

https://sa.wikisource.org/s/h4c

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

निरुत्पातं समे देशे विधिवर्त्तनयापि च ।।

प्रासादनिकटं देवाः प्रापिताः सुमुहुर्त्तके ।। १ ।।

ततः शालासुमहती रत्नवर्णविनिर्मिता ।।

निदेशादिंद्रद्युम्नस्य निर्मिता विश्वकर्मणा ।। २ ।।

सभार्चनायां वस्तूनि हवींषि च समित्कुशाः ।।

भोज्यं नानाविधं गीतनृत्यांश्च विविधांस्तथा ।। ३ ।।

साम्राज्ये यादृशी पूर्वं संपत्तिरभवत्क्षितौ ।।

ततः श्रेष्ठतरा विप्राः प्रतिष्ठायां बभूव ह ।। ४ ।।

गालोनाम महीपालस्तदा क्षितितलेऽभवत् ।।

सोप्यत्र प्रतिमां कृत्वा माधवाख्यां दृषन्मयीम् ।। ५ ।।

स्थापयित्वात्र प्रासादे पूजयामास ऋद्धिमत् ।।

कनीयांसं च प्रासादं निर्माय नृपसत्तमः ।। ६ ।।

तत्र तां स्थापयामास ततो निष्कृष्य सादरम् ।।

ततोऽस्य नृपतिर्दूतमुखाच्छुत्वास्य कर्म तत् ।। ७ ।।

गालोऽभ्यागात्ससैन्यः सन्क्रुद्धस्तं नीलपर्वतम् ।।

दृष्ट्वा प्रतिष्ठासंभारं मर्त्यैः स्वप्नेऽपि दुर्लभम् ।। ८ ।।

विस्मयाविष्टचेताः स तस्थौ गालो नराधिपः ।।

किमेतदिति वृत्तान्तं को वा कारयतीदृशम् ।। ।। ९ ।।

यत्नाद्दिव्यं स विज्ञाय इन्द्रद्युम्नं नराधिपम् ।।

ब्रह्मलोकादागतं तं कर्त्तारं देववेश्मनः ।। 2.2.26.१० ।।

प्रतिष्ठापयितुं देवैः सार्द्धं संभारकारकम् ।।

सहितं पद्मनिधिना गुरुणा नारदेन च ।। ११ ।।

ब्रह्माणं चागमिष्यन्तं प्रतिष्ठायै सुरोत्तमम् ।।

श्रुत्वा सर्वं च वृत्तान्तं तद्राजा दिव्यचेष्टितम् ।। ।। १२ ।।

मेने कृतार्थमात्मानं तद्राज्ये परमाद्भुतम् ।।

इतः श्रेयस्करं कर्म न भूतं न भविष्यति ।। १३ ।।

तदस्य निकटे स्थित्वा ज्ञात्वा कर्मक्रमं विधिम् ।।

उत्सवांश्चापि विज्ञाय करिष्ये प्रतिवत्सरम् ।। १४ ।।

अमुं दारुमयं साक्षाद्ब्रह्मरूपं जनार्दनम् ।।

अभाग्योपचयादेतावंतं कालं न जानता ।। १५ ।।

असेव्यमानेन कृतं जन्मैव विफलं मया ।।

तदेनमिंद्रद्युम्नं वै प्रणिपत्य जगद्गुरुम् ।। १६ ।।

महाभागवतश्रेष्ठं ब्रह्मलोकादिहागतम् ।।

उपेत्य शरणं साक्षाद्दृष्ट्वा नारायणं विभुम् ।। १७ ।।

प्रतिष्ठितं वै प्रासादे मुक्तिमेष्यामि निश्चयम् ।।

वैकुण्ठं स प्रतिष्ठाप्य मय्येवारोपयिष्यति ।। १८ ।।

ब्रह्मलोकं गतो यो वै किं क्षितौ सोऽवतिष्ठते ।।

उपचारान्समादिश्य कोषं संभृत्य च प्रभोः।। ।। १९ ।।

ब्रह्मणा सहितोऽवश्यं पुनर्यास्यति तत्क्षयम् ।।

विचार्य मंत्रिभिः सार्द्धं ततो गालोऽपि वैष्णवः ।। 2.2.26.२० ।।

इन्द्रद्युम्नस्य निकटं विनीतः प्रययौ मुदा ।।

गत्वा तं दूरतो दृष्ट्वा प्रणिपातपुरःसरम् ।। २१ ।।

बद्धांजलिपुटो राजा मूर्ध्नि वीक्षन्ससाध्वसम् ।।

शनैः शनैर्ययौ तस्य निकटं गालपार्थिवः ।। २२ ।।

देव त्वं राजराजोऽसि मर्त्योऽसि ब्रह्मलोकगः ।।

किं स्तौमि नृपकीटोऽहं त्वां जीवन्मुक्तमीश्वरम् ।। २३ ।।

अज्ञात्वा महिमानं ते सचिवैर्मंत्रयन्मुहुः ।।

योद्धुमभ्यागतो देव दृष्ट्वा ते पौरुषं महत् ।। २४ ।।

अतिमानुषमाश्चर्यं पदं चापि शचीपतेः ।।

दृष्ट्वैतन्निश्चितं देव ब्रह्मलोकागतस्य हि ।। २५ ।।

ईदृशं हि महत्कर्म यदाज्ञाकृन्महानिधिः ।।

चेतः प्रसादप्रवणं मयि धेहि सुरोत्तम ।। २६ ।।

त्रैलोक्यवासिनो देवा यदाज्ञावशवर्तिनः ।। २७ ।।

।। जैमिनिरुवाच ।। ।।

इत्थं विज्ञापयंतं तं गालं नृपतिकुंजरम् ।।

स्मयमान उवाचेदं राजन्किं बहु भाषसे ।। २८।।

भवानपि हरेर्भक्तः सार्वभौमो महीपतिः ।।

सामान्यमेतद्राज्ञा वै भूस्वाम्यं भुवि वर्त्तताम् ।। २९ ।।

सांप्रतं हि भवानत्र पृथिव्यामेकपार्थिवः ।।

नृपायत्ताः क्रियाः सर्वा मर्त्यानां मरुतामपि।।2.2.26.३०।।

अष्टदिक्पालकांशैस्तु ब्रह्मणा निर्मितो नृपः।।

न ह्यल्पपुण्यकृद्राजा प्रजापालनतत्पर ।। ३१ ।।

इह कीर्तिं च धर्मश्च यत्र गच्छन्सुवर्त्मनि ।।

प्राप्नोति राजशार्दूल विशेषात्त्वं तु वैष्णवः ।।३२।।

प्रासादे स्थापयेद्यस्तु हरेरर्चां विधानतः।।

न देहबन्धमाप्नोति याति विष्णोः परं पदम् ।।३३।।

माधवप्रतिमामेतां दारवीं शुभलक्षणाम् ।।

साक्षान्मुक्तिप्रदां भूप स्वयं स्थापितवानसि ।।३४।।

निर्विघ्नं कर्म ते जातं मम मन्वंतरं गतम् ।।

भवेद्वा संशयो मेऽत्र न स्वतंत्रश्चतुर्मुखः ।। ३५ ।।

प्रतिष्ठायै प्रार्थितोऽयं तदन्यः स्थापयेत्कथम् ।।

साक्षाद्दार्ववतारस्य प्रासादस्य नृपोत्तम ।। ३६ ।।

संनिधानेन चेदत्र विधातानुग्रहिष्यति ।।

तदेनं स्थापयित्वा तु चतूरूपं जनार्दनम् ।। ३७ ।।

समर्प्य त्वां गमिष्यामि त्वमेवोपचरिष्यसि ।।

नित्योपहारं यात्राश्च उत्सवांश्च जगत्पतेः ।। ३८ ।।

यानेवोपदिशेद्देवः स्वयं वा प्रपितामहः ।।

तांस्तान्प्रयत्नात्कुर्वीत राजा वै धर्मपालकः ।। ३९ ।।

ततः स गालो नृपतिः श्रुत्वा तच्चिंतितं स्वयम् ।।

इन्द्रद्युम्नादिष्टमेतदिति प्राप परां मुदम् ।। 2.2.26.४० ।।

तस्थौ तस्यांतिके गाल आज्ञाकार इव स्वयम् ।।

तत्तदाशु करोत्येष इन्द्रद्युम्नो यदादिशत् ।। ४१ ।।

एवं संभृतसंभारः सिंहासनगतः प्रभुः ।।

देवैः परिवृतश्चेंद्रद्युम्नः शक्र इवाबभौ ।। ४२ ।।

ततोऽश्रूयंत निनदा दिव्यदुंदुभिजाः शुभाः ।।

मृदंगवेणुवीणादि तालकाहालनिःस्वनाः ।। ४३ ।।

ऐरावतादिकरिणां बृंहितानि बहूनि खे ।।

समंताज्जयशब्दाश्च पुष्पवृष्टिविमिश्रिताः ।। ४४ ।।

आकाशगंगासलिलकणा मन्दारमिश्रिताः ।।

दिव्य स्रग्लेपधूपानां गन्धा दिग्व्यापिनस्तथा ।।

वैमानिकानां देवानां किंकिणीजालनिःस्वनाः ।। ४५ ।।

ततश्च तेजसां राशी रोदसीमध्यपूरकः ।।

आविरासीत्क्षितिगत नयनाच्छादको द्विजाः ।। ४६ ।।

उत्तोलिताक्षिमालाभिः प्रजाभिर्वीक्षितः पुरः ।।

ततः क्रमात्स ददृशे विमानाग्र्यं प्रजापतेः ।। ।। ४७ ।।

स्वर्णहंसशतैः स्कंधेनोह्यमानः समंततः ।।

दिक्पालैश्चामरव्यग्रहस्तैरासेवितः पुरः ।। ४८ ।।

जाह्नवीयमुनानीरप्रकीर्णककरेऽभितः ।।

पार्श्वयोश्चन्द्रसूर्याभ्यामुभाभ्यामातपत्रके ।। ४९ ।।

धार्यमाणे शनैर्वायोर्गतिचंचलचोलके ।।

ब्रह्मर्षिभिर्गौतमाद्यैः स्तूयमानो रहस्यकैः ।। 2.2.26.५० ।।

तन्मध्यस्थः प्रजानाथ इंद्रद्युम्नादिभिः स्तुतः ।।

आलुलोके देवगणैर्जयशब्दैरभिष्टुतः ।। ५१ ।।

रंभादिकाभिर्वेश्याभिर्नृत्यते स्म ससाध्वसम् ।।

हाहाहूहूप्रभृतिभिर्गीयमानश्च गायकैः ।। ५२ ।।

सिद्धविद्याधरगणैः सादरं चोपवीणितः ।।

कृतांजलिपुटैर्दूरात्तपस्विभिरुपासितः ।। ५३ ।।

सावित्रीशारदे तस्य वाक्प्रबंधैर्विचित्रकैः ।।

तोषमासादयंत्यौ च कोऽन्यस्तत्तोषणे क्षमः ।। ५४ ।।

जाह्नवीयमुनानीर प्रकीर्णित कलेवरः ।।

ये च गंधर्वसिद्धाद्या नारदप्रमुखा द्विजाः ।। ५५ ।।

वेत्रहस्ताः सविनया दिव्यसोपानदर्शनाः ।।

संमर्दः स महानासीद्देवानां दिवि गच्छताम् ।। ५६ ।।

न कोऽपि गण्यते देवः को वा केन पथा व्रजेत् ।।

अहंपूर्विकया तेषां व्रजतां त्रिदिवौकसाम् ।। ५७ ।।

संमर्दातिशयात्तेषां विभ्रंशोऽभूत्स्ववाहनैः ।।

स्रष्टा पाता च संहर्त्ता जगतां यो जगन्मयः ।। ५८ ।।

साक्षाद्व्रजति तत्रैषां सुराणां महिमा कुतः ।।

तं दृष्ट्वा साध्वसान्नम्रो भक्त्या बद्धांजलिर्नृपः ।। ५९ ।।

तैर्देवैर्गालराजेन नारदप्रमुखेन च ।।

सहितो धरणीं प्रायात्साष्टांगं प्रणिपत्य च ।। 2.2.26.६० ।।

उत्थाय परया भक्त्या प्रहृष्टेनांतरात्मना ।।

पुलकांकितसर्वांगं स्वं मन्वानः कृतार्थकम् ।। ६१ ।।

पुरतो जगदीशस्य पश्यञ्छुद्धं पितामहम् ।।

कृतांजलिपुटो राजा ममज्जानंदसागरे ।। ६२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे षड्विंशोऽध्यायः ।। २६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २७



।। जैमिनिरुवाच ।। ।।

अथांतरिक्षान्निःश्रेणी रत्नकांचननिर्मिता ।।

संलग्ना पादसंपीठे पद्मयोनेर्विमानगा ।। १ ।।

सा क्षितिस्पृष्टमूला वै विधातुरवरोहणे ।।

चतुर्व्यायामतापीन सोपानश्रेणिसंयुता ।। २ ।।

रथप्रासादयोर्मध्ये शक्रचाप इवांशुमान् ।।

आविर्बभूव सहसा साद्भुतं वीक्षितो जनैः ।। ३ ।।

ततो गंधर्वराजैस्तु रत्नवेत्रकरैर्द्विजाः ।।

एष पंथाः प्रभो ह्येहि इत्यादेशितमार्गकैः ।। ।। ४ ।।

दुर्वाससो नारदस्य करयोर्दत्तहस्तकः ।।

सोपानैरवतीर्णोऽथ पुनानश्चक्षुषा जगत् ।। ५ ।।

स्मयमानो रथान्दृष्ट्वा प्रासादं समलंकृतम् ।।

दिगंतव्यापिनीं शालां रत्नस्तंभोपशोभिताम् ।। ६ ।।

शक्रस्याप्यद्भुतकरी सर्वसंभारसंभृताम् ।।

अवातरद्विमानात्स देवब्रह्मर्षिराजभिः ।। ७ ।।

किरीटदत्तांजलिभिः स्तूयमानः समंततः ।।

कटाक्षेणानुगृह्णाति यां दिशं स पितामहः ।। ८ ।।

तत्रांजलीनां संमर्दाः कोटयः शिरसा धृताः ।।

पादाब्ज प्रणतं दृष्ट्वा इंद्रद्युम्नं प्रजापतिः ।। ९ ।।

उवाच प्रश्रयगिरा स्मितभिन्नोष्ठसंपुटः ।।

अंगुल्या निर्दिशन्देवान्पितॄन्ब्रह्मर्षितापसान् ।। ।। 2.2.27.१० ।।

सिद्धविद्याधरान्यक्षगंधर्वाप्सरसस्तथा ।।

एकत्र मिलितान्सर्वान्युगपन्मोदनिर्भरान् ।। ११ ।।

पश्येंद्रद्युम्न भाग्यं ते सर्वलोकवशीकरम् ।।

त्वदर्थमेकदा सर्वे मां पुरस्कृत्य संगताः ।। १२ ।।

इत्युक्त्वा प्रययौ शीघ्रं नारायणरथं ततः ।।

प्रणिपत्य जगन्नाथं त्रिः परीत्य पितामहः ।। १३ ।।

आनंदसिंधुसंमग्नः सरोमांचवपुः स्वयम् ।।

स्वमात्मानं नुनावाथ प्रत्यक्षं स्वरगद्गदम् ।। १४ ।।

।। ब्रह्मोवाच ।। ।।

नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमोनमः ।।

अहं त्वं त्वमहं सर्वं जगदेतच्चराचरम् ।। १५ ।।

महदादि जगत्सर्वं मायाविलसितं तव ।।

अध्यस्तं त्वयि विश्वात्मंस्त्वयैव परिणामितम् ।। १६ ।।

यदेतदखिलाभासं तत्त्वदज्ञानसंभवम् ।।

ज्ञाते त्वयि विलीयेत रज्जुसर्पादिबोधवत् ।। १७ ।।

अनिर्वक्तव्यमेवेदं सत्त्वात्सत्त्वविवेकतः ।।

अद्वितीय जगद्भास स्वप्रकाश नमोऽस्तु ते ।। १८ ।।

विषयानंदमखिलं सहजानंदरूपिणः ।

अंशं तवोपजीवंति येन जीवंति जंतवः ।। १९ ।।

निष्प्रपंच निराकार निर्विकार निराश्रय ।।

स्थूलसूक्ष्माणुमहिमन्स्थौल्यसूक्ष्मविवर्जित ।। 2.2.27.२० ।।

गुणातीत गुणाधार त्रिगुणात्मन्नमोऽस्तु ते ।। २१ ।।

त्वन्मायया मोहितोऽहं सृष्टिमात्रपरायणः ।।

अद्यापि न लभे शर्म अंतर्य्यामिन्नमोस्तु ते ।। २२ ।।

त्वन्नाभिपंकजाज्जातो नित्यं तत्रैव संस्तुवन् ।।

नातिक्रमितुमीशोऽस्मि मायां ते कोऽन्य ईश्वरः ।। २३ ।।

अहं यथांडमध्येऽस्मिन्नचितः सृष्टिकर्मणि ।।

तथानुलोमकलिता ब्रह्मांडे ब्रह्मकोटयः ।। २४ ।।

सार्द्धत्रिकोटिसंख्यानां विरिंचीनामपि प्रभो ।।

नैकोऽपि तत्त्वतो वेत्ति यथाहं त्वत्पुरः स्थितः ।। २५ ।।

नमोचिंत्यमहिम्ने ते चिद्रूपाय नमोनमः ।।

नमो देवाधिदेवाय देवदेवाय ते नमः ।। २६ ।।

दिव्यादिव्यस्वरूपाय दिव्यरूपाय ते नमः ।।

जरामृत्युविहीनाय मृत्युरूपाय ते नमः ।। २७ ।।

ज्वलदग्निस्वरूपाय मृत्योरपि च मृत्यवे ।।

प्रपन्नमृत्युन(?)शाय सहजानंदरूपिणे ।।

भक्तिप्रियाय जगतां मात्रे पित्रे नमो नमः ।। २८ ।।

प्रणतार्तिविनाशाय नित्योद्योगिन्नमोऽस्तु ते ।।

नमोनमस्ते दीनानां कृपासहजसिंधवे ।। २९ ।।

पराय पररूपाय परंपाराय ते नमः ।।

अपारपारभूताय ब्रह्मरूपाय ते नमः ।। 2.2.27.३० ।।

परमार्थस्वरूपाय नमस्ते परहेतवे ।।

परंपरा परिव्याप्त परतत्त्वपराय ते ।। ३१ ।।

प्रणतार्तिविनाशाय नमः स्वात्मैकभानवे ।।

पुरा यत्प्रार्थितं स्वास्मिन्सृष्टिभारावतारणे ।। ३२ ।।

तत्कुरुष्व जगन्नाथ सहजात्कदरूपभाक् ।।

त्वयि प्रसन्ने किं नाथ दुर्लभं मयि विद्यते ।। ३३ ।।

त्वयैवाहं पृथग्लीलाभेदाद्भिन्नः कृपांबुधे ।।

अज्ञानतिमिरच्छन्ने जगत्कारागृहांतरे ।। ३४ ।।

भ्राम्यन्न द्वारमाप्नोति त्वामृते मुक्तिहेतवे ।। ३५ ।।

नमोनमस्ते जगदेकवन्द्य सुरासुराभ्यर्चितपादपद्म ।।

नमोनमस्तापहरैकचंद्र नमोनमः शर्मसुबोधसांद्र ।। ३६ ।।

नमो नमः कल्पकदूरभूत दुष्प्राप्यकामप्रद कल्पवृक्ष ।।

दीनाशरण्यप्रणतैकदुःखसंघोद्धृतौ नित्यसुबद्धपक्ष ।। ३७ ।।

प्रसीद जगतां नाथ मग्नानां दुःखसागरे ।।

कटाक्षलीलापातेन त्रायस्व करुणाकर ।। ।। ३८ ।।

स्तुत्वेत्थं श्रीजगन्नाथं वेदार्थः स पितामहः ।।

जगाम सीरिणं द्रष्टुमवतीर्णं धराधरम् ।। ३९ ।।

प्रणम्य परया भक्त्या तुष्टाव बलिनं मुदा ।।

नभः शिरस्ते देवेश आपस्ते विग्रहः प्रभो ।। 2.2.27.४० ।।

पादौ क्षितिर्मुखं वह्निः श्वसितानि समीरणः ।।

मनस्ते ह्योषधीनाथश्चक्षुषी ते दिवाकरः ।। ४१ ।।

बाहवः ककुभो नाथ नमस्ते ज्ञानदर्पण ।।

चतुर्दशानां लोकानां मूलस्तंभाय सीरिणे ।। ४२ ।।

पदांभोजप्रपन्नानां नमः पापौघदारिणे ।।

अनन्तवक्त्रनयनश्रोत्रपादाक्षिबाहवे ।। ४३ ।।

नमो नादिमहामूलतमःस्तोमौघभानवे ।।

त्रयीमय त्रिधादोषनाशाय त्र्यवतारिणे ।।४४।।

फणामणिफणाकार क्षितिमण्डलधारिणे ।।

नमः कालाग्निरुद्राय महारुद्राय ते नमः ।। ४५ ।।

भोगतल्पफणाच्छत्रमध्यसुप्ताय ते नमः ।।

महार्णवजले वृद्ध एकीभूते जगत्त्रये ।। ४६ ।।

त्वमेव शेषो भगवन्सहस्रफणमंडितः ।।

फणामणिगणव्याजसंभृताखिलभौतिकः ।। ४७ ।।

त्वमेव नाथः सर्वेषां स्रष्टा पालयिता विभो ।।

अत्ता धारयिता नित्यं मदाद्यास्त्वन्निमित्तकाः ।। ४८ ।।

एष नारायणो देवो वेदांतेषूपगीयते ।।

त्वत्तो न भिन्नो भगवन्कारणाद्भेदभागसि ।। ४९ ।।

शय्या त्वं शयिता ह्येष छाद्यः संछादको भवान् ।।

यो वै विष्णुः स वै रामो यो रामः कृष्ण एव सः ।। 2.2.27.५० ।।

युवयोरंतरं नास्ति प्रसीद त्वं जगन्मय ।।

इति स्तवांते बलिनं प्रणम्य परमेश्वरम् ।। ५१ ।।

ईश्वरीं जगतां द्रष्टुं सुभद्रास्यन्दनं ययौ ।।

जय देवि जगन्मातः प्रसीद परमेश्वरि ।। ५२ ।।

कार्यकारणकर्त्री त्वं सर्वशक्त्यै नमोऽस्तु ते ।।

सर्वस्य हृदि संविष्टे ज्ञानमोहात्मिके सदा ।। ५३ ।।

कैवल्यमुक्तिदे भद्रे त्वां नमामि सुरारणिम्।।

देवि त्वं विष्णुमायासि मोहयन्ती चराचरम्।। ५४ ।।

हृत्पद्मासनसंस्थासि विष्णुभावानुसारिणी।।

त्वमेव लक्ष्मीर्गौरी च शची कात्यायनी तथा ।।५५।।

यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।।

तस्य सर्वस्य शक्तिस्त्वं स्तोतुं त्वां कस्तु शक्तिमान् ।। ।।५६।।

जय भद्रे सुभद्रे त्वं सर्वेषां भद्रदायिनि ।।

भद्राभद्रस्वरूपे त्वं भद्रकालि नमोऽस्तु ते।।५७।।

त्वं माता जगतां देवि पिता नारायणो हि सः।।

स्त्रीरूपं त्वं सर्वमेव पुंरूपो जगदीश्वरः ।। ५८ ।।

युवयोर्न हि भेदोऽस्ति नास्त्यन्यत्परमेव हि ।।

यथा वयं नियुक्ता हि त्वया वै विष्णुमायया ।। ५९ ।।

निदेशकारिणो नित्यं भ्रमामः परमेश्वरि ।।

वृत्तिः प्रवृत्तिः परमा क्षुधा निद्रा त्वमेव च ।। 2.2.27.६० ।।

आशा त्वमाशापूर्णा च सर्वाशा परिपूरिका।।

मुक्तिहेतुस्त्वमेवेशि बंधहेतुस्त्वमेह हि।। ६१।।

सर्वज्ञानप्रदे नित्ये भक्तानां कल्पवल्लरी।।

त्राहि पादाब्जनम्रं मां कृपापांगविलोकनैः।। ६२।।

स्तुत्वेत्थं भद्ररूपां तां तत्समीपस्थितं रथे।।

चक्रं सुदर्शनं विष्णोश्चतुर्थं वपुरास्थितम्।।६३।।

प्रणम्य परया भक्त्या इमां स्तुतिमुदाहरत्।।

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ।।६४।।

अज्ञानतिमिरांधानां वैकुण्ठाध्वप्रदर्शकः।।

नमस्ते नित्यविलसद्वैष्णवस्वनिकेतन ।। ६५।।

अवार्यवीर्यं यद्रूपं विष्णोस्तत्प्रणमाम्यहम् ।।

प्रणम्य स्तुत्वा देवान्स रथेभ्यः परिवृत्य च ।। ६६ ।।

इन्द्रद्युम्ननारदाभ्यामादिष्टपदपद्धतिः ।।

नीलाचलमथारोहत्प्रासादं द्रष्टुमुत्सुकः ।। ६७ ।।

ततः स गत्वा प्रासादसमीपं दैवतैः सह ।।

ददर्श शालां-रुचिरां स्वचित्ताभिमता द्विजाः ।। ६८ ।।

तन्मध्ये स्थापयामास दैवतोरगभूपतीन् ।।

ब्रह्मर्षीन्योगिनो विप्रान्वैष्णवांश्च तपस्विनः ।। ६९ ।।

दिव्यसिंहासनवरे नृपेण प्रतिपादिते ।।

स पादपीठे भगवानुपविष्टः स्वयं विभुः ।। 2.2.27.७० ।।

शांतिकं पौष्टिकं कर्तुं भारद्वाजं महामुनिम् ।।

पितामहाज्ञया भूपो वरयामास ऋद्धिमत् ।।७१।।

प्रतिष्ठायां तु ये देवा बलिपूजाविधौ मताः ।।

होमेषु च तथा ते वै ध्यानरूपमुपाश्रिताः।।७२।।

आज्ञया पद्मयोनेस्तु चतुर्दिग्भागमाश्रिताः ।।

सुपूजिता गंधपुष्पमालालंकारभूषणैः ।। ७३ ।।

ततः कर्म प्रववृते भारद्वाजेन धीमता ।।

प्रत्यक्षं देवदेवस्य सर्वेषां च दिवौकसाम् ।। ७४ ।।

त्रैलोक्यवासिनां पूजां चकार नृपतिर्मुदा ।।

सांगोपांगं समभ्यर्च्य जगत्स्रष्टारमग्रतः ।। ७५ ।।

ततः संपूजिताः सर्वे तेन त्रैलोक्यवासिनः ।।

पश्यन्तोऽवस्थितं मध्ये साक्षाद्ब्रह्माणमव्ययम् ।। ७६ ।।

वपुष्मंतं जगन्नाथं प्रत्यक्षं ब्रह्मरूपिणम् ।।

इन्द्रद्युम्नप्रसादेन जीवन्मुक्तत्वमाप्नुवन् ।। ७७ ।।

कलेवरं भगवतः प्रासादं सुमनोहरम् ।।

प्रतिष्ठाय भरद्वाजः समुच्छ्रितमहाध्वजम् ।। ७८ ।।

व्यज्ञापयतत्प्रतिष्ठायै जीवस्याथ पितामहम् ।।

समुत्तस्थौ ततो ब्रह्मा कृतस्वस्त्ययनः स्वयम् ।। ७९ ।।

ऋषिभिर्नारदाद्यैश्च विद्वद्भिर्ब्राह्मणैस्तथा ।।

राजभिः क्षत्रियैर्नागैः सहितः परमर्षिभिः ।। 2.2.27.८०।।

गन्धर्वैर्गायमानेषु दिव्यगानेषु सुस्वरम् ।।

मांगल्योचितरागेषु नृत्यन्तीष्वप्सरःसु च ।। ८१ ।।

शाकुनेषु च सूक्तेषु पठ्यमानेषु च द्विजैः ।।

शंखकाहालमुरजभेरीवादित्रवैणवे ।। ८२ ।।

शब्दे प्रमूर्च्छति ततः सर्वे ते स्यन्दनोपरि ।।

गत्वावतारयामासू रथात्सोपानवर्त्मनि ।। ८३ ।।

सावधानाः समाधिस्था भक्त्या संयमितात्मकाः ।।

पार्श्वयोर्भुजयोर्मूर्ध्नि पादयोर्न्यस्तपाणयः ।। ८४ ।।

शनैः शनैः सलीलं ते नारायणमनामयम् ।।

वासं वासं तूलिकासु निन्युः प्रासादसन्निधिम् ।। ८५ ।।

उपर्युपरि संतानवृष्टिपूत्पतितासु च ।।

जय कृष्ण जगन्नाथ जय सर्वाऽघनाशन ।। ८६ ।।

जय लीलादारुतनो जय वांछाफलप्रद ।।

जय संसारसंमग्नलीलोद्धार जयाव्यय ।। ८७ ।।

जयानुकंपापाथोधे जय दीनपरायण ।।

जयाच्युत जयानन्त जयेशान नमोऽस्तु ते ।।८८।।

एभिः स्तवैः स्तूयमानो ब्रह्मणा च स्वयंभुवा ।।

तुष्टाव स मुदा युक्तो नारदश्चोपवीणयन् ।। ८९ ।।

रत्नच्छत्रयुगे मूर्ध्नि धार्यमाणेऽथ पृष्ठतः ।।

शशिना भास्वता भक्त्या दिव्यधूपेन धूपिता ।।2.2.27.९०।।

श्रेणीकृता ह्युभयतः पार्श्वयोश्चामरग्रहाः ।।

सलीलांदोलनव्यग्रा यौवनालंकृतास्तथा ।। ९१ ।।

एवं च सहिताः सर्वे कौतूहलसमन्विताः ।।

सुदर्शनं सुभद्रां च बलभद्रमनैषिषुः ।। ९२ ।।

प्रासादद्वारि रचिते रत्नस्तंभेऽथ मण्डपे ।।

वासयित्वाभिषेकाय संमुखादर्शमण्डले ।। ९३ ।।

अधिवासितै रत्नकुंभैस्तीर्थवार्युपसंभृतैः ।।

सूक्ताभ्यां श्रीपुरुषयोरभिषेकं पितामहः ।।

चकार भगवाँल्लोकसंग्रहार्थं द्विजोत्तमाः ।। ९४ ।।

ततो ह्यलंकृतान्देवान्गंधमाल्योपशोभितान् ।।

नीराजयित्वा भगवान्स स्वयं लोकभावनः ।।

रत्नसिंहासने रम्ये स्थापयामास मन्त्रतः ।। ९५ ।।

।। ब्रह्मोवाच ।। ।।

अशेषजगदाधार सर्वलोकप्रतिष्ठित ।।

सुप्रतिष्ठाखिलव्यापिन्प्रासादे सुस्थिरो भव ।। ९६ ।।

त्वयि प्रतिष्ठिते नाथ वयं सर्वे प्रतिष्ठिताः ।।

त्वदाज्ञया प्रतिष्ठेयं पूर्णाऽऽस्तां त्वत्प्रसादतः ।। ९७ ।।

स्थापयित्वा जगन्नाथं स्पृष्ट्वा तस्य हृदंबुजम् ।।

आनुष्टुभं मंत्रराजं सहस्रं स जजाप ह ।। ९८ ।।

वैशाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः ।।

कृता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ।। ९९ ।।

तद्दिनं सुमहत्पुण्यं सर्वपापप्रणाशनम् ।।

स्नानं दानं तपो होमः सर्वमक्षय्यमश्नुते ।। 2.2.27.१०० ।।

तस्मिन्दिने ये पश्यंति मानवा भक्तिभाविताः ।।

कृष्णं रामं सुभद्रां च मुक्तिभाजो न संशयः ।। १०१ ।।

शुक्लाष्टमी या वैशाखे गुरुपुष्ययुता यदा ।।

तस्यामभ्यर्चनं विष्णोः कोटिजन्माघनाशनम् ।। १०२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/h4e
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

ततः स भगवान्मन्त्रमहिम्ना नरकेसरी ।।

इन्द्रद्युम्नादिभिः सर्वैददृशेऽद्भुतदर्शनः ।। १ ।।

लेलिहानो जगत्सर्वं समंताज्ज्वलजिह्वया ।।

कालाग्निरुद्रं सकलं ग्रसंतमिव चोत्थितम् ।। २ ।।

रोदसीकंदरं व्याप्य तेजसा तपता भृशम् ।।

अनेकाक्षिमुखग्रीवाकरपादश्रुतिर्विभुः ।। ३ ।।

सर्वाश्चर्यमयो देवः केवलं तेजसो निधिः ।।

भयत्रस्ताः समुद्विग्ना नेशाः स्तोतुमपि प्रभुम् ।। ४ ।।

तं तथाविधमालोक्य नारदः पितरं तदा ।।

पप्रच्छ भगवन्नित्थं कथमेष प्रकाशते ।। ५ ।।

।। नारद उवाच ।। ।।

अनुग्रहायावतरत्प्रत्युतैष भयप्रदः ।।

सर्वे भयात्स्थिरतराः प्रलयाशंकिनोऽधुना ।। ६ ।।

त्वमेव भगवल्लीलां जानासि जगतां पते ।। ७ ।।

तच्छ्रुत्वा नारदवचः पद्मयोनिः स्मिताननः ।।

उवाच कौतुकं वाक्यं सर्वेषामुपकारकम् ।। ८ ।।

।। ब्रह्मोवाच ।। ।।

अवतीर्णं जगन्नाथं दृष्ट्वा दारुवपुर्धरम् ।। ९ ।।

अवज्ञास्यंति वै लोकाः साक्षाद्ब्रह्मस्वरूपिणम् ।।

अतत्त्ववेदिनो मूढा महिमानं विदंत्विति ।। 2.2.28.१० ।।

मंत्रितो मन्त्रराजेन येनासौ परमेष्ठिना ।।

पुराभिमंत्रितो येन विददार महासुरम् ।। ११ ।।

तादृग्रूपं सुदुर्दर्शं प्राप्यमेति भयप्रदम् ।।

मूर्तिरेषा परा काष्ठा विष्णोरमिततेजसः ।। ।। १२ ।।

यामभ्यर्च्य गतिं यांति पुनरावृत्तिदुर्लभाम् ।।

नृसिंहाभिमुखः स्तोत्रमिदमाह मुदान्वितः ।। १३ ।।

नमोऽस्तु ते देववरैकसिंह नमोऽस्तु पापौघगजैकसिंह ।।

नमोऽस्तु दुःखार्णवपारसिंह नमोऽस्तु तेजोमय दिव्यसिंह ।। १४ ।।

नमोऽस्तु सर्वाकृतिचित्रसिंह नमोऽस्तु ते क्लेशविमुक्तिसिंह ।।

नमोऽस्तु ते दिव्यवपुर्नृसिंह नमोऽस्तु ते वीरवरैकसिंह ।। १५ ।।

नमोऽस्तु ते दैत्यविदारसिंह नमोऽस्तु देवेष्वधि देवसिंह ।।

नमोऽस्तु वेदांतवनैकसिंह नमोऽस्तु ते योगिगुहैकसिंह ।। १६ ।।

नमोऽस्तु ते सिंह वृषैकसिंह नमोऽस्तु नीलाचलशृंगसिंह ।। १७ ।।

।। जैमिनिरुवाच ।। ।।

स्तुत्वेत्थं दिव्यसिंहं तमिंद्रद्युम्नं प्रजापतिः ।।

सिंहयंत्रं समालेख्य तस्योपरि निवेश्य च ।। १८ ।।

दीक्षयित्वा मन्त्रराजं साक्षादाथर्वणोदितम् ।।

आहुर्वैष्णवनिर्वाणं यं वेदांतपरायणाः ।। १९ ।।

यत्र वेदाश्च चत्वारः साक्षान्नित्यं प्रतिष्ठिताः ।।

यमधीत्य महामन्त्रं मनुः स्वायंभुवः पुरा ।। 2.2.28.२० ।।

सृष्टिं चकार भगवान्प्राप्तमस्माच्चतुर्मुखात् ।।

अणिमादिगुणा यस्य फलं स्यादानुषंगिकम् ।। २१ ।।

एक एव महामन्त्रः पुरुषार्थचतुष्टयम् ।।

प्राप्तुं कारणभूतो हि किं पुनः क्षुद्रकामनाम् ।। २२ ।।

एक एव महामंत्रः सर्वक्रतुफलप्रदः ।।

सर्वतीर्थप्रदः सर्वदानव्रतफलप्रदः ।। २३ ।।

यथायं सर्वपापौघतूलराशेर्दवानलः ।।

दिव्यसिंहाकृतिर्देवो मंत्रराज्ञस्तथा ह्ययम् ।। २४ ।।

एनमभ्यस्य यतयो भवरोग त्यजंति हि ।।

यस्य ग्रहणमात्रेण ग्रहापस्मारराक्षसाः ।। २५ ।।

डाकिन्यो भूतवेतालपिशाचा उरगा ग्रहाः ।।

दूरादेव पलायंते नेशते वीक्षितुं च तम् ।। २६ ।।

मंत्रराजं ततो लब्ध्वा इन्द्रद्युम्नश्चतुर्मुखात् ।।

नृसिंहं शातवपुषं लक्ष्मीसंश्रितवक्षसम् ।। २७ ।।

चक्रं पिनाकं दधतं चंद्रसूर्याग्निचक्षुषम् ।।

जानुप्रसारितकरसरोजद्वंद्वमुन्नसम् ।। २८ ।।

योगपट्टासनारूढद्वात्रिंशद्दलपद्मके ।।

मंत्रवर्णमये मध्ये कर्णिकाप्रणवोज्ज्वले ।। २९ ।।

सुखासीनं साट्टहासं वीक्षंतं श्रीमुखांबुजम् ।।

सटामंडितवक्त्राब्जं दिव्यरत्नोज्ज्वलाकृति ।। 2.2.28.३० ।।

फणासहस्रं विस्तार्य पश्चाच्छत्राकृतिं विभोः ।।

ददर्श बलभद्रं तं हललांगलधारिणम् ।। ३१ ।।

प्रजहर्ष नृपो दृष्ट्वा तादृशं पुरुषोत्तमम् ।।

विस्मयाविष्टचेताश्च पप्रच्छ कमलासनम् ।। ३२ ।।

भगवंश्चित्रमेतद्वै चरितं मधुघातिनः ।।

विज्ञातुं कथमस्माभिः शक्यः स्याल्लोकभावन ।। ३३ ।।

यज्ञांते तादृशं रूपं बभार दारुनिर्मितम् ।।

रथस्थं भगवानेव प्रासादांतर्न्यवेशयत् ।। ३४ ।।

मामाह पूर्वं वाणी सा गगनांतरिता तदा ।।

अपौरुषेयतरुणा चतुर्मूर्तिर्भविष्यति ।। ३५ ।।

इदानीमेक एवासौ दृश्यते सुप्रतिष्ठितः ।।

माया वा तत्त्वमथ वा तत्त्वतो मे वद प्रभो ।। ३६ ।।

श्रवणे यदि मां वेत्सि भाजनं भवभावन ।।

श्रुत्वैतत्प्रत्युवाचाथ संशयानं नृपोत्तमम् ।। ३७ ।।

।। ब्रह्मोवाच ।। ।।

आद्या मूर्तिर्भगवतो नारसिंहाकृतिर्नृप ।।

नारायणेन प्रथिता मदनुग्रहतस्त्वयि ।। ३८ ।।

दारवी मूर्तिरेषेति प्रतिमाबुद्धिरत्र वै ।।

मा भूत्ते नृपशार्दूल परं ब्रह्माकृतिस्त्वियम् ।। ३९ ।।

खंडनात्सर्वदुःखानामखंडानंददानतः ।।
स्वभावाद्दारुरेषो हि परं ब्रह्माभिधीयते ।। 2.2.28.४० ।।
इत्थं दारुमयो देवश्चतुर्वेदानुसारतः ।।
स्रष्टा स जगतां तस्मादात्मानं चापि सृष्टवान् ।। ४१ ।।
शब्दब्रह्म परंब्रह्म नानयोर्भेद इष्यते ।।
लये तु एकमेवेदं सृष्टौ भेदः प्रवर्त्तते ।। ४२ ।।
अन्योन्यापेक्षिणौ भूप शब्दार्थौ हि परस्परम्।।
अर्थाभावेन शब्दोऽस्ति शब्दाभावेन बुद्ध्यते ।। ४३ ।।
अर्थस्तस्माच्चतुर्वेदाः शब्दा ह्यर्थाश्च तादृशाः ।।
ऋग्वेदरूपी हलधृक्सामवेदो नृकेसरी ।। ४४ ।।
यजुर्मूर्तिस्त्वियं भद्रा चक्रमाथर्वणं स्मृतम् ।।
वेदश्चतुर्द्धा भेदोऽयमेकराशिरभेदतः ।। ४५ ।।
अतस्ते संशयो मा भूदेकस्तु बहुधा विभुः ।।
अवतारेषु चान्येषु न्यायेनैतेन वर्त्तते ।। ४६ ।।
भेदाभेदौ तथा ख्यातौ जगन्नाथस्य ते नृप ।।
येन ते मनसस्तुष्टिस्तेन भक्त्या समाचर ।। ४७ ।।
सर्वरूपमयो ह्येष सर्वमंत्रमयः प्रभुः ।।
आराध्यते यथा येन तथा तस्य फलप्रदः ।। ४८ ।।
यथा सुशुद्धं कनकं स्वेच्छया घटितं नृप ।।
तत्तत्संज्ञामवाप्येह तत्तत्संतोषकारकम् ।। ४९ ।।
एवं महिम्ना भगवानत्राविरभवन्नृप ।।
यस्य यावांस्तु विश्वासस्तस्य सिद्धिस्तु तावती ।। 2.2.28.५० ।।
कर्मणा मनसा वाचा विशुद्धेनांतरात्मना ।।
समाराधय गोविंदमत्र दारुवपुर्द्धरम् ।। ५१ ।।
चतुर्वर्गफलावास्यै यथाभिलषितं तव ।।
अनेन मंत्रराजेन विष्णुमेनं समर्चय ।। ५२ ।।
नातः परतरो मंत्रो न भूतो न भविष्यति ।।
अनेनाभ्यर्चितो विष्णुः प्रीतो भवति तत्क्षणात् ।। ५३ ।।

ददाति स्वपुरं चापि भगवान्भक्तवत्सलः ।।

यज्ञैस्तीर्थैर्व्रतैर्दानैस्तपोभिश्चापि तस्य किम् ।। ५४ ।।

नीलाचलस्थं यो विष्णुं दारुमूर्तिमुपास्ति वै ।।

तत्त्वं ब्रवीमि ते भूप श्रुत्वैतदवधारय ।। ५५ ।।

न्यग्रोधमूले कूलेऽस्य सिंधोर्नीलाचले स्थितम् ।।

दारुव्याजामृतं ब्रह्म दृष्ट्वा मुच्येन्न संशय ।। ५६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादेऽष्टाविंशोऽध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः २९



।। जैमिनिरुवाच ।। ।।

इत्युक्त्वा नृपशार्दूलं लोकसंग्रहणाय वै ।।

सिंहाकृति स हृदये उद्वास्य कमलासनः ।।१।।

पूर्वं प्रकाशरूपं यद्विष्णोस्तु प्रकटीकृतम् ।।

रथावरोहणे दृष्टाश्चतस्रो मूर्तयः पुरा ।। २ ।।

ता एव सिंहासनगाः सर्वे ते ददृशुः पुनः ।।

द्विषडक्षरमन्त्रेण बलभद्रमपूजयत् ।। ३ ।।

सूक्तेन पौरुषेणैनं नारायणमनामयम् ।।

देवीसूक्तेन चक्रं च द्वादशाक्षरकेण च ।।

पूजयित्वानुग्रहाय पार्थिवस्य न्यवेदयत् ।। ४ ।। ।।

।। ब्रह्मोवाच ।। ।।

भगवन्देवदेवेश भक्तानुग्रहकारक ।।

इन्द्रद्युम्नस्य जन्मानि त्वयि भक्तिं प्रकुर्वतः ।।

सहस्रं समतीतानि तदन्ते त्वामलोकयत् ।। ५ ।।

त्वद्दर्शनं हि भगवंस्त्वयि सायुज्यकारणम् ।।

यद्यप्ययं भक्तियोगेनेच्छति त्वां समर्चितुम् ।। ६ ।।

तदाज्ञापय येन त्वां भक्तियोगेन भावयेत् ।।

देशकालव्रताद्यैस्तु तथा नानोपचारकैः ।। ७ ।।

त्वन्मुखांभोजगलितमाज्ञामृतरसं नृपः ।।

पिपासुस्त्वां जगन्नाथ पश्यत्येषोऽनिमेषकम्।।८ ।।

।। जैमिनिरुवाच ।। ।।

इति विज्ञापितो देवः साक्षात्कमलयोनिना ।।

दारुदेहोऽपि विहसन्प्राह गंभीरया गिरा ।। ९ ।।

।। श्रीप्रतिमोवाच ।। ।।

इन्द्रद्युम्न प्रसन्नस्ते भक्त्या निष्कामकर्मभिः ।।

त्वदन्येनेदृशी संपन्न केनाप्यपवर्जिता ।। 2.2.29.१० ।।

वरं ददामि ते भूप मयि भक्तिः स्थिराऽस्तु ते ।।

उत्सृज्य वित्तकोटीस्तु यन्ममायतनं कृतम् ।। ११ ।।

भंगेप्येतस्य राजेंद्र स्थानं न त्यज्यते मया ।।

कालांतरेऽपि योऽप्यन्यः प्रासादं कारयिष्यति ।। १२ ।।

तवैव कीर्त्तिः सा नूनं त्वत्प्रीत्या तत्र मे स्थितिः ।।

सत्यं सत्यं पुनः सत्यं सत्यमेव ब्रवीमि ते ।। १३ ।।

प्रासाद भंगे तत्स्थानं न त्यक्ष्यामि कदाचन ।।

अनेन दारुवपुषा स्थास्याम्यत्र परार्द्धकम् ।। १४ ।।

द्वितीयं पद्मयोनेस्तु यावत्परिसमाप्यते ।।

मनोः स्वायंभुवस्यास्य द्वितीये च चतुर्युगे ।। १५ ।।

कृतस्य प्रथमे ज्येष्ठे दशेति क्रतुसंस्थितिः ।।

ज्यैष्ठ्यामहं चावतीर्णस्तत्पुण्यजन्मवासरम् ।। १६ ।।

तस्यां मे स्नपनं कुर्यान्महास्नानविधानतः ।।

प्रत्यर्चायां महाराज साधिवासं समृद्धिमत् ।।१७।।

पापं विनाशयिष्यामि कोटिजन्मभिरर्जितम् ।।

सर्वतीर्थक्रतुफलं सर्वदानफलं तथा ।। १८ ।।

पश्यतां चापि राजेंद्र फलं तावत्प्रपद्यते ।।

न्यग्रोधादुत्तरे कूपः सर्वतीर्थमयोऽस्ति हि ।। १९ ।।

स्नानाय पूर्वं निर्माय किंचिदाच्छादितं भुवा ।।

अवतीर्णस्त्वहं पश्चात्तं विविच्य प्रकाशय ।। 2.2.29.२० ।।

संस्कार्यः स चतुर्दश्यां बलिं दत्त्वा विधानतः ।।

रक्षकक्षेत्रपालाय दिशांपालेभ्य एव च ।। २१ ।।

कम्बुकाहालमुरजध्वनिषु सुस्वरेषु च ।।

द्विजातयः स्वर्णकुम्भैरुद्धरेयुस्ततो जलम् ।।२२।।

ज्यैष्ठ्यां प्रातस्तने काले ब्रह्मणा सहितं च माम् ।।

रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात् ।। २३ ।।

स्नाप्यमानं तु यः पश्येन्मां तदा नृपसत्तम ।।
देहबन्धं च नाप्नोति स पुनर्न तु पूरुषः ।। २४ ।।
कारयित्वा दृढं मंचमैशान्यां दिशि मंडितम् ।।
वितानशोभारचितं चंदनांभः समुक्षितम् ।। २५ ।।
तत्र मां रामभद्राभ्यां स्नापयित्वा पुनर्नयेत् ।। २६ ।।
दक्षिणाभिमुखं यांतं यो मां पश्यति भक्तितः ।।
तत्तद्ध्रुवमवाप्नोति मनसा यद्यदिच्छति ।। २७ ।।
ततः पंचदशाहानि स्थापयित्वा तु मां नृप ।।
विरूपमभिरूपं वा न पश्येत्तु कदाचन ।। २८ ।।
ज्येष्ठस्नानमिदं कृत्वा सर्वपापैः प्रमुच्यते ।। २९ ।।
गुंडिचाख्यां महायात्रां प्रकुर्वीयाः क्षितीश्वर ।।
यस्याः संकीर्तनादेव नरः पापाद्विमुच्यते ।। 2.2.29.३० ।।
माघमासस्य पंचम्यामष्टम्यां चैत्रशुक्लके ।।
एते कालाः प्रशस्ता हि गुंडिचाख्यमहोत्सवे ।। ३१ ।।
विशेषान्मोक्षदाषाढद्वितीया पुष्यसंयुता ।।
ऋक्षाभावे तिथौ कार्या सदा सा प्रीतये मम ।। ३२ ।।
आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।।
तस्यां रथे समारोप्य रामं मां भद्रया सह ।। ३३ ।।
महोत्सवप्रवृत्त्यर्थं प्रीणयित्वा द्विजान्बहून् ।।
गुंडिचामण्डपंनाम यत्राहमजनं पुरा ।। ३४ ।।
अश्वमेधसहस्रस्य महावेदी तदाभवत् ।।
तस्याः पुण्यतमं स्थानं पृथिव्यां नेह विद्यते ।। ३५ ।।
यत्राजुहोः पंचशतवर्षाणि प्रीतये मम ।।
मम प्रीतिकरं स्थानं तस्मान्नान्यद्धरागतम् ।। ३६ ।।
यथेयं नीलशिखरा प्रासादेन तवाधुना ।।
चतुर्मुखानुरोधेन महाप्रीतिकरी मम ।। ३७ ।।
तथा नृसिंहक्षेत्रे वै महावेदी तव क्रतोः ।।
ममोत्पत्तेश्च निलयं प्रीतिकृन्मम शाश्वतम् ।। ३५ ।।

बहुकालं स्थितश्चाहं तस्यां मे प्रीतिरुत्तमा ।।
आत्मा मे पद्मभूरेष प्रासादे स्थापितोऽमुना ।। ३९ ।।
अस्यानुरोधात्त्वद्भक्त्या ह्यवतिष्ठेऽत्र नित्यदा ।।
दिनानि नव यास्यामि तथा तस्मादिहागतः ।। 2.2.29.४० ।।
तत्रास्ति ते महाराज सर्वतीर्थमयं सरः ।।
तत्तीरे सप्तदिवसान्स्थास्याम्यनुजिघृक्षया ।। ४१ ।।
तत्र स्थितं मां पश्यंतो यांति मर्त्या ममालयम् ।।
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां भुवनत्रये ।। ४२ ।।
तानि सर्वाणि सरसि मत्सान्निध्याद्व्रजंति ते ।।
तत्र स्नात्वा च विधिवद्दृष्ट्वा मां भक्तिभावतः ।। ४३ ।।
जननीजठरे क्लेशं पुनर्नानुभवंति हि ।।
नवमेऽह्नि समायातं दक्षिणाशामुखं तदा ।। ४४ ।।
ये पश्यन्ति प्रतिपदमश्वमेधक्रतोः फलम् ।।
प्राप्य भोगानिंद्रसमान्भुक्त्वान्ते मां विशंति ते ।। ४५।।
ममोत्थानं मम स्वापं मत्पार्श्वपरिवर्त्तनम् ।।
मार्गप्रावरणं चैव पुष्यस्नानमहोत्सवम् ।।४६ ।।
फाल्गुन्यां क्रीडनं कुर्याद्दोलायां मम भूमिप ।।
दोलायां येऽपि पश्यंति दक्षिणामुखपूजितम् ।। ४७ ।।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ।। ४८ ।।
अनयोर्मां समभ्यर्च्य दृष्ट्वा मां प्रणिपत्य च ।।
प्रत्येकमष्टसाहस्रं वाजिमेधफलं लभेत् ।। ४९ ।।
चैत्रे सितत्रयोदश्यां कुर्यात्कर्मप्रपूरणम् ।।
चैत्रे मासि चतुर्दश्यां दमनैर्मे प्रपूजनम् ।।
शुक्लपक्षे तु ये लोकाः सर्वपापक्षयो भवेत् ।। 2.2.29.५० ।।
वैशाखस्य सिते पक्षे तृतीयाऽक्षयसंज्ञिता ।।
तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः ।। ५१ ।।
प्रीतये मम ये कुर्युरुत्सवान्मम शाश्वतान् ।।
चतुर्वर्गप्रदा ह्येते प्रत्येकं परिकीर्तिताः ।। ५२ ।।

।। जैमिनिरुवाच ।। ।।

इति दत्त्वा वरं तस्मा इन्द्रद्युम्नाय भो द्विजाः ।।

ब्रह्माणमाह भगवान्स्मेरांभोरुहसन्मुखः।। ५३ ।।

चतुर्मुख तव प्रीत्यै सर्वं संपादितं मया ।।

त्वदिच्छा हि ममैवेच्छा न भेदो ह्यावयोर्ध्रुवम् ।। ५४ ।।

यन्मां माधवमूर्तिं त्वं पुरा प्रार्थितवानसि ।।

तस्यैव परिपाकोऽयमवतारः कृतो मया ।। ५५ ।।

मामत्र दृष्ट्वा त्वभ्यर्च्य प्राणान्संत्यज्य मुच्यते ।।

क्रमात्सर्वे त्वया सार्द्धं भूयः सायुज्यमेव च ।। ५६ ।।

यद्वाचाभिलपन्मर्त्यो मामत्र हि निषेवते ।।

अवश्यं तदवाप्नोति संगत्या चात्र भूपतिः ।। ५७ ।।

व्रजेदानीं सत्यलोकं त्रिदिवं यांतु देवताः।।

तवायुःपूर्णिपर्यंतमहमत्र स्थितो ध्रुवम् ।। ५८ ।।

ततस्ते हर्षिताः सर्वे ब्रह्मर्षिसुरसत्तमाः ।।

प्रणम्य शिरसा देवं जग्मुस्ते निलयं स्वकम् ।। ५९ ।।

देवोऽपि च जगन्नाथः प्रतिमारूपधृक्तदा ।।

तूष्णीं तिष्ठति सर्वेषां हर्षमापादयन्नृणाम्।। 2.2.29.६० ।।

इन्द्रद्युम्नोऽपि धर्मात्मा विष्णुभक्तो दृढव्रतः ।।

अनुव्रजन्पद्मयोनिं तेनादिष्टो न्यवर्तत ।। ६१ ।।

यात्राः सर्वा भगवता आज्ञप्ताः साधु कारय ।।

अस्मिंस्तुष्टे जगन्नाथे सन्तुष्टं वै चराचरम्।।६२।।

इत्याज्ञां पद्मयोनेस्तु मूर्ध्न्याधाय क्षितीश्वरः ।।

नारदेन सह श्रीमान्निधिना च समृद्धिमत् ।।

ज्येष्ठस्नानादिकं सर्वमुत्सवं निरवर्तयत् ।। ६३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्य एकोनत्रिंशोऽध्यायः ।। २९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३०



।। मुनय ऊचुः ।। ।।

चकार केन विधिना जन्मस्नानं श्रियः पतेः ।।

अन्यानप्युत्सवान्सर्वान्विधिवद्ब्रूहि नो मुने ।। १ ।।

नारदेन पुरा प्रोक्तं सर्वं ते मुनिसत्तम ।।

स हि वेद तमःपारे ब्रह्म ब्रह्मसुतो मुनिः ।। २ ।।

तत्सर्वं ब्रूहि तत्त्वेन मुने क्रौतूहलं हि नः ।।

अहो भाग्यं नरपतेरिंद्रद्युम्नस्य भो मुने ।। ३ ।।

तस्य तावति कर्मांते अत्यद्भुतमिदं महत् ।।

न श्रुता हि न दृष्टा हि प्रतिमा दारुनिर्मिता ।। ४ ।।

सजीवतनुवत्साक्षाद्वारं दद्यान्मनुष्यवत् ।।

स्मारंस्मारं भगवतश्चरितं पापनाशनम् ।। ५ ।।

चरितं तस्य नृपतेर्दुर्लभं मर्त्यवासिनाम् ।।

न सन्तोषोऽस्ति भगवञ्शृण्वतां नो महामुने ।। ६ ।।

तद्वदानुक्रमेणास्मान्यात्राः सर्वाघनाशनाः ।।

यासां संदर्शनाद्वासो वैकुण्ठ इति निश्चितम् ।। ७ ।।

यात्रामाहात्म्यवक्तासौ यत्साक्षान्मधुसूदनः ।।

तन्नो वद महाभाग जगतां हितकाम्यया ।। ८ ।। ।।

।। जैमिनिरुवाच ।। ।।

ज्येष्ठस्नानं प्रवक्ष्यामि शृणुध्वं मुनयोऽधुना ।।

ज्येष्ठशुक्लदशम्यां तु व्रतं संकल्प्य वाग्यतः ।। ९ ।।

प्रातरुत्थाय कुर्वीत पंचतीर्थविधानतः ।।

मार्कंडेय वटं गत्वा आचम्य प्रयतः पुमान् ।। 2.2.30.१० ।।

प्रार्थयेच्छंकरं नत्वा कृतांजलिपुटोऽग्रतः ।। ११ ।।

अतितीक्ष्ण महाकाय कल्पांतदहनोपम ।।

भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।। १२ ।।

ततः प्रविश्य तीर्थं तु वैदिकैः पंच वारुणैः ।।

अघमर्षणसूक्तेन त्रिरावृत्तेन वा द्विजाः ।।

स्नात्वा यथावत्स्नायीत मन्त्रेणानेन चांततः ।। १३ ।।

नमः शिवाय शांताय सर्वपापहराय च ।।

स्नानं करोमि देवेश मम नश्यतु पातकम् ।। १४ ।।

संसारसागरे मग्नं पापग्रस्तमचेतनम् ।।

त्राहि मां भगनेत्रघ्न त्रिपुरारे नमोऽस्तु ते ।। १५ ।।

एवं स्नात्वा बहिर्गत्वा धौतवासा सपुण्ड्रकः ।।

देवानृषीन्पितॄंश्चैव तर्पयित्वा यथाविधि ।। १६ ।।

प्रविश्य शंकरागारं स्पृष्ट्वा वृषणयोर्वृषम् ।।

मन्त्रेणानेन भो विप्राः सर्वक्रतुफलं लभेत् ।। १७ ।।

धर्मश्चतुष्पाद्यज्ञस्त्वं स्वर्णशृंगस्त्रयीवपुः ।।

गोपते वाहरूपस्त्वं शूलिनं त्वां नमाम्यहम् ।। १८ ।।

अघोरमन्त्रेण ततः पूजयेद्वृषवाहनम् ।।

पञ्चब्रह्मभिर्ऋग्भिस्तु संस्पृशेल्लिंगमुत्तमम् ।। १९ ।।

अंगुष्ठेन स्पृशेल्लिगं मुष्टिना शक्तिमेव च ।।

पूजयित्वा तु विधिवत्स्तुत्वा देवं पुरद्विषम् ।। 2.2.30.२० ।।

दशानामश्वमेधानां फलं प्राप्नोत्यनुत्तमम् ।।

मार्कंडेयवटे स्नात्वा दृष्ट्वा देवं तु शंकरम् ।। २१ ।।

फलं प्राप्नोत्यविकलं राजसूयाश्वमेधयोः ।।

अन्ते शिवस्य सालोक्यं प्राप्य ज्ञानं ततो नरः ।। २२ ।।

क्रमाच्च लभते मुक्तिं जगन्नाथप्रसादतः ।।

ततो मौनी व्रजेद्देवं नारायणमनामयम् ।। २३ ।।

तद्दक्षिणस्थितं विष्णुरूपं न्यग्रोधमुत्तमम् ।।

दर्शनादपि पापानां पापसंहतिनाशनम् ।। २४ ।।

तं दृष्ट्वा प्रणमेद्दूराद्भावयन्पुरुषोत्तमम् ।।

प्रदक्षिणं ततः कुर्यादिमं मन्त्रमुदीरयन् ।। २५ ।।

अमरस्त्वं सदा कल्प विष्णोरायतनं महत् ।।

न्यग्रोध हर मे पापं विष्णुरूप नमोऽस्तु ते ।। २६ ।।

नमोऽस्त्वव्यक्तरूपाय महाप्रलयस्थायिने ।।

एकाश्रयाय जगतां कल्पवृक्षाय ते नमः ।। २७ ।।

स्तुवञ्जपेत्तु तद्भक्त्या मूले तस्य जनार्दनम् ।।

कोटिजन्मशतोद्भूतपापादेव विमुच्यते ।। २८ ।।

तच्छायाक्रमणेनापि निष्पापो जायते नरः ।।

ततः सुपर्णं प्रणमेद्यानरूपं हरेः पुरः ।। २९ ।।

स्थितो भक्तिनतो विष्णोः कृतांजलिपुटो मुदा ।।

छन्दोमय जगद्धामन्यानरूप त्रिवृद्वपुः ।। 2.2.30.३० ।।

यज्ञरूप जगद्व्यापिन्प्रीयमाणाय ते नमः ।।

स्तुत्वेत्थं गरुडं पापान्मुच्यतेऽनेकजन्मजात् ।। ३१ ।।

वाङ्मनःकर्मनियतो गच्छेदेवं विचिंतयन् ।।

प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणम् ।। ३२ ।।

पूजयेन्मन्त्रराजेन सूक्तेन पुरुषस्य वा ।।

द्वादशाक्षरमंत्रेण यत्र वा जायते रुचिः ।। ३३ ।।

पूजाधिकारिणः सर्वे ब्रह्मक्षत्रविशस्ततः ।।

अन्येषां दर्शन भक्त्या तयोर्नामानुकीर्तनात् ।। ३४ ।।

पंचोपचारविधिना पूजयेत्परमेश्वरम् ।।

कृतांजलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत् ।। ३५ ।।

देवदेव जगन्नाथ संसारार्णवतारक ।।

भक्तानुग्राहक सदा रक्ष मां पादयोर्नतम् ।। ३६ ।।

जय कृष्ण जगन्नाथ जय सर्वाघनाशन ।।

जयाशेषजगद्वंद्य पादांभोज नमोऽस्तु ते ।। ३७ ।।

जय ब्रह्मांडकोटीश वेदनिःश्वासवातक ।।

अशेषजगदाधार परमात्मन्नमोऽस्तु ते ।।३८।।

जय ब्रह्मेंद्ररुद्रादि देवौघप्रणतार्तिनुत् ।।

जयाखिलजगद्धामन्नंतर्यामिन्नमोऽस्तु ते ।। ३९ ।।

जय निर्व्याजकरुणापाथोधे दीनवत्सल ।।

दीनानाथैकशरण विश्वसाक्षिन्नमोऽस्तु ते ।। 2.2.30.४० ।।

संसारसिंधुसलिले मोहावर्ते सुदुस्तरे ।।

षडूर्मिकुलदुष्पारे कुकर्मग्राहदारुणे ।। ४१ ।।

निराश्रये निरालंबे निःसारे दुःखफेनिले ।।

तव मायागुणैर्बद्धमवशं पतितं ततः ।। ४२ ।।

मां समुद्धर देवेश कृपापांगविलोकनैः ।।

तत्र मग्नं सुरश्रेष्ठ सुप्रसादप्रकाशक ।। ४३ ।।

एक एव जगन्नाथ बन्धुस्त्वं भवभीरुणाम् ।।

बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ।। ४४ ।।

शोकमोहौ शरीरस्य जरा मृत्युर्वपुर्भवः ।।

त्वत्सृष्टौ तादृशो नास्ति यो दीनपरिपालकः ।। ४५ ।।

अवतीर्णोसि लोकानामनुग्रहधिया विभो ।।

पूर्णकामस्य ते नाथ किमन्यत्कारणं क्षितौ ।। ४६ ।।

त्वत्पादपद्ममासाद्य न चिंतास्ति जगत्पते ।।

यतस्ते चरणांभोजं चतुर्वर्गैकसाधनम् ।। ४७ ।।

दर्शनात्सर्वलोकानां सर्ववांछा फलप्रदम् ।।

ततः सीरध्वजं शेषमन्त्रेण परिपूजयेत् ।। ४८ ।।

द्वादशाक्षरमन्त्रेण नाम्ना वा प्रणवादिना ।।

एकाग्रमानसो भूत्वा प्रणिपत्य प्रसादयेत् ।। ४९ ।।

जय राम सदाराम सच्चिदानदविग्रह ।।

अविद्यापंकरहित निर्मलाकृतये नमः ।। 2.2.30.५० ।।

जयाखिलजगद्भारधारणश्रमवर्जित ।।

तापत्रयविकर्षाय हलं कलयसे सदा ।। ५१ ।।

प्रपन्नदीनत्राणाय स्फुटनेत्रसरोरुह ।।

त्वमेवेश पराशेषकलुषक्षालनप्रभुः ।। ५२ ।।

प्रसन्नकरुणासिंधो दीनबन्धो नमोऽस्तु ते ।।

चराचराफणाग्रेण धृता येन वसुन्धरा ।। ५३ ।।

मामुद्धरास्माद्दुष्पाराद्भवांभोधेरपारतः ।।
परापराणां परमपरमेश नमोऽस्तु ते ।। ५४ ।।
स्तुत्वैवं नागराजानं बलं मुसलधारिणम् ।।
पूजयेज्जगतामादिकारणां भद्रलोचनाम् ।। ५५ ।।
स्तुत्वा जयां तां भो विप्राः प्रणिपत्य प्रसादयेत् ।।
जय देवि महादेवि प्रसीद भवतारिणि ।। ५६ ।।
सुखारणि श्रितवतां जय संतुष्टिकारिणि।।
कार्यं कार्यस्वरूपाणां कारणानां च कारणम् ।। ९७ ।।
धारणां धार्यमाणानां त्वामादिं प्रणमाम्यहम् ।।
वक्षःस्थलस्थितां विष्णोः शंभोरर्द्धांगधारिणीम्।। ५८ ।।
पद्मयोनि मुखाब्जस्थां प्रणमामि जगत्प्रियाम् ।।
सृष्टिस्थितिविनाशादिकर्मणां परमात्मनः ।। ५९ ।।
त्वमेका शक्तिरतुला त्वां विना सोऽपि नेश्वरः ।।
त्वां सर्वलोकजननीं विष्णुमायां तपस्विनीम् ।। 2.2.30.६० ।।
सुभद्रां भद्ररूपां तां मूलभूतां नमाम्यहम् ।।
ततः सागरस्नानाय प्रार्थयेत्पुरुषोत्तमम् ।। ६१ ।।
नमस्ते भगवन्विष्णो जगद्व्यापिंश्चराचर ।।
निर्विघ्नं सिद्धिमायातु सिंधुस्नानं मम प्रभो ।। ६२ ।।
नमस्ते जगतामीश शंखचक्रगदाधर ।।
देहि देव ममानुज्ञां तव तीर्थनिषेवणात् ।। ६३ ।।
ततो मौनं व्रजेद्विष्णुं चिंतयन्सरितां पतिम् ।।
उग्रसेनं स्थितं मार्गे अनुज्ञाप्य समाहितः ।। ६४ ।।
उग्रसेन महाबाहो वलवन्नुग्रविक्रम ।।
लब्ध्वा वरं सुप्रसन्नात्समुद्रतटमास्थितः ।। ६५ ।।
तीर्थराजकृतस्नानसुसंपूर्णफलप्रद ।।
सिंधुस्नानं करिष्यामि अनुज्ञां दातुमर्हसि ।। ६६ ।।
ततो गच्छेद्द्विजश्रेष्ठाः स्वर्गद्वारं ततः परम् ।।
येन देवाः समायांति क्षेत्रेऽस्मिन्पुरुषोत्तमे ।। ६७ ।।

भूस्वर्गे जगदीशस्य दर्शनाय दिनेदिने ।।

स्वर्गावतारमार्गेण तत्रस्थौ वां नमाम्यहम् ।। ६८ ।।

मामप्यूर्ध्वं नयेतां वै साक्षिणौ कर्मणां सताम् ।।

सागरांभः समुत्पन्नौ श्रेष्ठौ सर्वगुणान्वितौ ।। ६९ ।।

मध्येन युवयोर्यामि स्वर्गद्वारमपावृतम् ।।

प्रार्थयित्वा ततो गच्छेत्तीर्थराजस्य संनिधिम् ।। 2.2.30.७० ।।

यं दृष्ट्वा दूरतः पापान्मुच्यते महतो ध्रुवम् ।।

प्रक्षालितकरांघ्रिक आचांतः शुचिविष्टरे ।। ७१ ।।

आसीनः प्राङ्मुखोभूत्वा लिखेन्मंडलमग्रतः ।।

चतुरस्रं चतुर्द्वारं चतुःस्वस्तिककोणकम्।।७२।।

तन्मध्ये विलिखेत्पद्ममष्टपत्रं सुशोभनम्।।

ततोऽष्टाक्षरमंत्रं तु करयोश्च तनौ न्यसेत्।।७३।।

षड्भिर्वर्णैः षडंगानां न्यासः प्रोक्तो मनीषिभिः।।

शेषौ कुक्षौ च पृष्ठे च न्यस्तव्यौ च ततः पुनः ।।७४।।

पादयोर्जंघयोरूर्वोः स्फिचोश्च पार्श्वयोः पुनः ।।

नाभौ पृष्ठे बाहुयुग्मे हृदि कण्ठे च कक्षयोः ।। ७५ ।।

ओष्ठयोः कर्णयोरक्ष्णोर्गंडयोर्नासयोस्तथा ।।

भ्रुवोर्ललाटे शिरसि मंत्रवर्णान्यथाक्रमम्।। ७६ ।।

विन्यस्य व्यापकं सर्वैर्न्यासं कुर्यात्समाहितः ।।

प्राणायामत्रयं कुर्यान्मूलेन पंचविंशतिम्।। ७७।।

बध्नीयात्कवचं दिव्यं सर्वपापापनोदनम् ।।

पूर्वे मां पातु गोविंदो वारिजाक्षस्तु दक्षिणे ।। ७८ ।।

प्रद्युम्नः पश्चिमे पातु हृषीकेशस्तथोत्तरे ।।

आग्नेय्यां नरसिंहस्तु नैर्ऋत्यां मधुसूदनः ।। ७९ ।।

वायव्यां श्रीधरः पातु ऐशान्यां च गदाधरः ।।

ऊर्ध्वं त्रिविक्रमः पातु अधो वाराहरूपधृक् ।। 2.2.30.८० ।।

सर्वत्र पातु मां देवः शंखचक्रगदाधरः ।।

नारायणो मनः पातु चैतन्यं गरुडध्वजः ।। ८१ ।।

पातु मे बुद्ध्यहंकारौ त्रिगुणात्मा जनार्दनः ।।

इंद्रियाणि सदा पातु दैत्यवर्गनिकृन्तनः ।। ८२ ।।

एवं बद्ध्वा च कवचं निष्पापो जायते पुमान् ।।

षोडशैरुपचारैश्च मनसा कल्पितैर्नरः ।। ८३ ।।

पुरुषोत्तमं पूजयित्वा यथावद्विधितो द्विजाः ।।

आवाह्य मण्डले तस्मिन्देवदेवमनामयम्।। ८४ ।।

पूजयित्वा विधानेन यथाशक्त्युपबृंहितैः ।।

आत्मानं तीर्थराजस्य देवदेवस्य चिंतयन् ।। ८५ ।।

एवं बद्धांजलिपुटमिमं मन्त्रमुदीरयेत् ।।

सुदर्शन नमस्तेऽस्तु कोटिसूर्यसमप्रभ ।। ८६ ।।

अज्ञानतिमिरांधस्य विष्णोर्मार्गं प्रदर्शय ।।

एवं संप्रार्थ्य भो विप्रास्तीर्थराजजलांतिके ।। ८७ ।।

जानुभ्यामवनिं गत्वा प्रणमेद्भक्तिभावितः ।।

तीर्थराज नमस्तुभ्यं जलरूपाय विष्णवे ।। ८८ ।।

जीवनाय च जंतूनां परं निर्वाणहेतवे ।। ८९ ।।

अग्निश्च ते योनिरिला च देहे रेतोधा विष्णोरमृतस्य नाभिः ।।

उपैमि ते रूपमनन्यहेतुमानंदसंपन्नमप्रनुप्रविश्य ।। 2.2.30.९० ।।

इति मन्त्रं पठन्विप्राः प्रविशेज्जलमध्यतः ।।

आवाहयेत्तीर्थराजं भावयञ्जगतांपतिम् ।। ९१ ।।

जलाधीशं कृतस्नानफलदानेऽतः स्थितम् ।।

अघमर्षणसूक्तेन नारायणयुतेन च ।। ९२ ।।

त्रिरावृत्तेन कुर्वीत पञ्चवारुणकेन च ।।

सकृदावाहनादीनि षडंगान्यभिषेचने ।।।। ९३ ।।

आवाहनं पुर प्रोक्तं सन्निधानमथोच्यते ।।

स्नातुरिष्टफलप्राप्तौ सान्निध्यपरिकल्पनम् ।। ९४ ।।

अन्तःशुद्ध्यर्थमाचामेत्पीत्वा तदभिमंत्रितम्।।

बाह्यावयवशुद्ध्यर्थं मार्जयेत्कुशवारिणा ।। ९५ ।।

अंतर्बहिर्विशुद्ध्यर्थं मन्त्रपूतेन वारिणा ।।

त्रीनंजलीन्मूर्ध्नि सिंचेत्सिंधौ नांतर्जले जपः ।। ९६ ।।

त्रिः स्नानायात्स्वकृताघानि कोटिजन्मकृतानि च ।।

प्लावितानि जले तस्मिन्भावयन्नघनाशनम् ।। ९७ ।।

उत्थायाचम्य विधिवत्प्रार्थयेन्मन्त्रमुच्चरन् ।।

त्वमग्निर्जगतां नाथ रेतोधाः कामदीपनः ।। ९८ ।।

प्रधानं सर्वभूतानां जीवानां प्रभुरव्यय ।।

अमृतस्यारणिस्त्वं हि देवयोनिरपांपते ।। ९९ ।।

वृजिनं हर मे सर्वं तीर्थराज नमोस्तु ते ।।

जन्मकोटिसहस्रेषु यत्पापं पूर्वमर्जितम् ।। 2.2.30.१०० ।।

तदशेषं लयं यातु देहि मे ब्रह्म शाश्वतम्।।

स्नात्वापि च ततस्तीरमुत्तीर्याचम्य वाग्यतः ।। १०१ ।।

धारयेद्वाससी शुक्ले पुंड्रकानुज्ज्वलाकृतीन् ।।

शंखचक्रगदापद्मतिलकानि च भक्तितः ।। २ ।।

देवान्पितॄन्यथान्यायं चिंतयन्भगवद्धिया ।।

तर्प्पयेद्विधिवद्विप्राः सम्यगव्यग्रमानसः ।। ३ ।।

ततः पूर्ववदालिख्य मण्डलं चोत्तरामुखः ।।

पूजयेन्मूलमन्त्रेण मन्त्रैरेभिश्च भक्तितः ।। ४ ।।

नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ।।

धरारमाभ्यां सहितं केवलं वा द्विजोत्तमाः ।।

ध्यात्वांतर्यागसंतुष्टं बहिरावाहयेत्ततः ।। ५ ।।

आगच्छ परमानंद जगद्व्यापिञ्जगन्मय ।।

अनुग्रहाय देवेश मण्डले सन्निधिं कुरु ।। ६ ।।

चराचरमिदं सर्वं जगदत्र प्रतिष्ठितम्।।

तदन्तस्थस्त्वमेवेश आसनं कल्पयामि ते ।। ७ ।।

यस्य पादांबुजे धौते धर्मेण ब्रह्मरूपिणा ।।

पुनाति तद्भवा गंगा जगत्पाद्यं ददाम्यहम् ।। ८ ।।

अनर्घ्यरत्नघटितचूडामणिकरोत्करैः ।।

ब्रह्मादयः पादपद्मं चिंतयंति दिने दिने ।।

अनर्घ्यायजगद्धाम्ने अर्घ्यमेतद्ददाम्यहम् ।। ९ ।।

आचांतस्तीर्थराजो वै येनागस्त्यस्वरूपिणा ।।

तस्मै सुवासितं वारि ददाम्याचमनीयकम् ।। 2.2.30.११० ।।

यः प्राप्य मधुसंपर्कं चकर्ष जलरूपिणम् ।।

अशेषाघविकर्षाय मधुपर्कं ददाम्यहम् ।। ११ ।।

यः क्रोडरूपमास्थाय प्रलयार्णवविप्लुताम् ।।

उज्जहार धरामेतां स्नपयामि तमंभसा ।। १२ ।।

ब्रह्मांडकोटयो यस्य विश्वरूपस्य संवृतिः ।।

आच्छादनाय सर्वेषां प्रददे वाससी शुभे ।। ।। १३ ।।

विना येनानुष्ठितोऽपि यज्ञः स्यादकृतो ध्रुवः ।।

तस्मै यज्ञेश्वरायेदमुपवीतं प्रकल्पये ।। १४ ।।

यदंगसंगमासाय शोभंते भूषणानि वै ।।

विश्वालंकृतये तस्मै भूषणानि प्रकल्पये ।। १५ ।।

यदंगसंस्पर्शिमरुत्संगान्मलयजा द्रुमाः ।।

सुगंधरससंपन्नास्तस्मै गंधानुलेपनम् ।। १६ ।।

यस्य संचितनादेव सौमनस्यं हतांहसाम् ।।

तस्मै सुमनसां मालां सुगंधां परिकल्पये ।। १७ ।।

यं चित्ते स्थिरमादाय भवाग्निपरिधूपनम् ।।

जहाति तस्मै प्रददे सुगंधं धूपमुत्तमम्।। १८ ।।

स्वतेजसाखिलमिदं दीपितं यस्य भासतः ।।

तस्मै दीपप्रदीप्ताय दीपमेतं ददाम्यहम् ।। १९ ।।

चराचरं जगत्सर्वमत्ति यो यश्च भावयेत् ।।

अनेन च पुनः पुष्टौ तस्मादन्नं निवेदये ।। 2.2.30.१२० ।।

यदीयमुखरागेण सहजावासितेन च ।।

मोहिताः सुरसुंदर्यस्तस्मै तांबूलमुत्तमम् ।। २१ ।।

प्रदक्षिणप्रक्रमणाद्भवांगणविवर्त्तनम् ।।

हंति यः करुणांभोधिस्तं नमामि जगद्गुरुम् ।। २२ ।।

मंत्रास्तु कथिता ह्येत उपचारैः पृथक्पृथक् ।।

आवाह्य चिंतयेद्देवं बहिःसंस्थितमात्मनः ।। २३ ।।

रत्नसिहासनं दत्त्वा तत्रासीनं विचिंतयेत् ।।

पादपद्मद्वये दद्यात्पाद्यं श्यामाकपंकजैः ।। २४ ।।

दूर्वापराजिताभ्यां च संस्कृतं मूलमंत्रणात् ।।

सौवर्णे राजते वापि ताम्रे वा शंख एव वा ।। २५ ।।

अर्घ्यं संस्कृत्य विधिवद्वारिचंदनपुष्पकैः ।।

यवदूर्वाकुशाग्रैश्च फलसिद्धार्थकैस्तिलैः ।। २६ ।।

दूर्वाकुशाग्रैर्देवस्य मूर्ध्नि सिंचेत्तदग्रतः ।।

सावशेषं क्षिपेद्भूमावेषोऽर्घविधिरीरितः ।। २७ ।।

जातीफलैर्वा कंकोलैर्लवंगैः संस्कृतं जलम् ।।

दद्यादाचमनार्थं तु मधुपर्कं ततो ददेत् ।। ।। २८ ।।

मधुसर्पिर्युतं गव्यं दधि कांस्ये हि निर्मले ।।

पात्रे स्थितं च पिहितं पात्रेणान्येन तादृशा ।।

सुसंस्कृतं फलयुतं स्नपने जलमुच्यते ।। ।। २९ ।।

पट्टकौशेयकापासनिर्मिते वाससी शुभे ।।

यथाशक्ति प्रदेये च वित्तशाठ्यं न कारयेत् ।। 2.2.30.१३० ।।

हारकेयूरमुकुटग्रैवेयादिकभूषणम् ।।

यथाशक्ति यथास्थानं देवस्यांगे निवेशयेत् ।। ३१ ।।

उपवीतं हरेर्दद्यात्पट्टसूत्रविनिर्मितम् ।।

कार्पासमथवा विप्रा गंधचंदनसंस्कृतम् ।। ३२ ।।

चंद्रचंदनकस्तूरीकुंकुमैरनुलेपनम् ।। ३३ ।।

तुलसीदलमालां च जातीपंकजचंपकैः ।।

अशोकच्छुरपुन्नागनागकेसरकेसरैः ।। ३४ ।।

अन्यैः सुगंधैः कुसुमैर्माला माल्यमथापि वा ।।

मुक्तकानि च पुष्पाणि दद्याद्देवस्य मूर्द्धनि ।। ३५ ।।

माला सा प्रपदीनातु माल्यं कंठोरुसंमितम् ।।

गर्भकं केशमध्ये तु मूर्ध्नि पुष्पांजलिं क्षिपेत् ।। ३६ ।।

सगुग्गुल्वगुरूशीरसिताज्यमधुचंदनैः ।।

धूपं दद्यात्सुगंधाढ्यं दीपं गोसर्पिषा शुभम् ।।

कर्पूरगर्भया वर्त्या तिलतैलेन वा ददेत्।। ३७ ।।

अखंडितसमुद्धौतं शालितंडुलनिर्मितम् ।।

सुपक्वमन्नं सुरभि सर्पिषा च सुवासितम् ।। ३८ ।।

सौरभेयदधिक्षीरपक्वरंभासितायुतम् ।।

नानाव्यंजनसंकीर्णं सोपदंशं सपूपकम् ।। ३९ ।।

नानाफलयुतं हृद्यं सुगंधं सुरसं नवम् ।।

नैवेद्यं देवदेवस्य प्रस्थादूनं न शस्यते ।। 2.2.30.१४० ।।

धूपे दीपे च नैवेद्ये स्नानेऽर्घे मधुपर्कके ।।

वस्त्रे यज्ञोपवीते च दद्यादाचमनीयकम् ।। ४१ ।।

अन्यत्र केवलं वारि संस्कृतं त्वौपचारिकम्।

नैवेद्यांते त्वाचमनं दद्याच्च करघृष्टिकम्।।४२।।

सगंधचंदनं विप्रास्तांबूलं च ददेत्ततः।।

सकर्पूरलवंगैलाजातीक्रमुकसंयुतम्।।४३।।

अष्टोत्तरशतं जप्त्वा मूलमंत्रमनन्यधीः ।।

स्तुत्वा प्रदक्षिणं कृत्वा प्रार्थयेत्पुरुषोत्तमम् ।। ४४ ।।

देवदेव जगन्नाथ सर्वतीर्थप्रवर्त्तक ।।

सर्वतीर्थमयश्चासि सर्वदेवमय प्रभो ।।४५।।

त्वत्प्रसादान्मया तीर्थराजे स्नानं हि यत्कृतम् ।।

तदस्तु सफलं देव यथोक्तफलदो भव ।।४६।।

सिंधुराजस्त्वं च विभो द्रवरूपोऽस्यसंशयम् ।।

पापालये निमग्नं मां परित्राहि नमोऽस्तु ते ।। ४७ ।।

इत्थं प्रपूज्य देवेशं नारायणमनामयम् ।।

तीर्थराजकृतस्नानः सर्वतीर्थफलं लभेत् ।।४८।।

गवां कोटिप्रदानेन क्रतुकोटिकृतेन च ।।

कोटिब्राह्मणभोज्येन महादानैश्च कोटिशः ।।

यत्पुण्यं कर्मिणां प्रोक्तं तदनेन हि लभ्यते ।। ४९ ।।

ध्यानं दानं तपो जाप्यं श्राद्धं च सुरपूजनम् ।।

सिंधुराजे कृतं सर्वं कोटिकोटिगुणं भवेत् ।। 2.2.30.१५० ।।

अपि नः स कुले कश्चित्सिंधुस्नायी भविष्यति ।।

देवेभ्यश्च पितृभ्यश्च दास्यते च तिलोदकम् ।। ५१ ।।

क्रंदंति सर्वपापानि संभ्रांताः सर्वपातकाः ।।

अनिष्टानि पलायन्ते सिंधुस्नानोद्यतस्य वै ।। ५२ ।।

अन्यतीर्थे कृतं पापं सिंधुतीरे विनश्यति ।।

सिंधुतीरे कृतं पापं सिधुस्नाने विनश्यति ।। ५३ ।।

सिंधुस्नानरतं नित्यं दृष्ट्वैव यमकिङ्कराः ।।

दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ।। ५४ ।।

यमोऽपि भीतस्तं दृष्ट्वा प्रणिपत्य प्रपूज्य च ।।

न शक्नोति तदा स्थातुं तस्याग्रे पुण्यकर्मिणः ।। ५५ ।।

वांछंति देवता नित्यं मानुष्यं प्राप्नुयामहे ।।

सम्यक्छु(छ्रु?)द्धतन्वो भूत्वा सिंधुस्नानं लभेमहि ।। ५६ ।।

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।।

सिंधुस्नानेन दग्धः स्यात्तूलराशिरिवानलात् ।। ५७ ।।

अप्सु नारायणं देवं स्नानकाले स्मरेत्सदा ।।

साक्षाद्विष्णुस्वरूपेऽत्र सिंधौ चैव विशेषतः ।। ५८ ।।

ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी ।।

सर्वे ते निष्कृतिं यांति सिंधुस्नानान्न संशयः ।। ५९ ।।

कपिलाकोटिदानाच्च सिन्धुस्नानं विशिष्यते ।।

सकृत्सिंध्ववगाहेन कुलकोटिं समुद्धरेत् ।।2.2.30.१६०।।

सर्वतीर्थेषु यत्पुण्यं सर्वेष्वायतनेषु च।।

तत्फलं लभते सर्वं सिन्धुस्नानान्न संशयः ।। ६१ ।।

य इच्छेत्सफलं जन्म जीवितं श्रुतमेव वा ।।

स पितृंस्तर्पयेत्सिंधुमभिगम्य सुरांस्तथा ।। ६२ ।।

चत्वारः सुलभा वेदाः सषडंग पदक्रमाः ।।

सुलभानि कुरुक्षेत्रे दानानि विविधानि च ।। ६३ ।।

चांद्रायणानि कृच्छ्राणि तपांसि सुलभान्यपि ।।

अग्निष्टोमादयो यज्ञाः सुलभा बहुदक्षिणाः ।। ६४ ।।

सिन्धुतोयैश्च सलिलैर्दुर्लभं पितृतर्पणम् ।।

मासं तर्पणमात्रेण पिंडानां पातनेन च ।। ६५ ।।

सिन्धौ वै पितरः सर्वे विमानान्सूर्यवर्चसः ।।

सिन्धुतर्पणसंतुष्टाः श्राद्धपिंडसुतर्पिताः ।।

आरुह्य सहसा यांति ब्रह्मलोकं सनातनम् ।। ६६ ।।

आद्यंतयोर्जगन्नाथं पूजयित्वा यथाविधि ।।

तीर्थराजेऽभिषिच्य स्वं नरः स्यान्मुक्तिभाजनम् ।। ६७ ।।

ततस्तीर्थविसर्गं च कृत्वा शुद्धमनाः पुमान् ।।

रामं कृष्णं सुभद्रां च नत्वा रूपं विचिन्तयेत् ।। १६८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३१



।। जैमिनिरुवाच ।। ।।

कृतकृत्यं तदात्मानं मन्यमानस्ततो व्रजेत् ।।

अश्वमेधांगसंभूतमिंद्रद्युम्नसरः प्रति ।। १ ।।

यस्य तीरे निवसति नरसिंहाकृतिर्हरिः ।।

नरसिंहमनुप्रार्थ्य तत्र स्नायाद्यथाविधि ।। २ ।।

नरसिंह नमस्तुभ्यं यस्य ते क्षेत्र उत्तमे ।।

सहस्रं वाजिमेधस्य क्रतोश्चक्रे नृपोत्तमः ।। ३ ।।

इन्द्रद्युम्नः प्रसादात्ते तस्य क्रत्वंगसंभवे ।।

सरसि स्नातुमायातो मामनुज्ञापय प्रभो ।। ४ ।।

ततस्तीर्थतटं गत्वा कृतशौचाचमक्रियः ।।

प्रार्थयेदंजलिं कृत्वा इमं मंत्रमुदीरयेत् ।। ५ ।।

अश्वमेधांगगोकोटिखुरक्षुण्णमहीतलः ।।

तन्मूत्रफेनादानांभः पूरिताखिलपावनः ।।६।।

स्नातुं तवागतः पुण्ये सर्वतीर्थमये जले ।।

पूर्वजन्मसहस्रोत्थं पापं स्नानाद्विमोचय ।। ७ ।।

अन्तः प्रविश्य च ततो वारुणैः पंचभिर्द्विजाः ।।

स्नायादन्तर्जले जप्यात्त्रिरावृत्त्याघमर्षणम् ।। ८ ।।

अश्वमेधांगसंभूत तीर्थ सर्वाघनाशन ।।

जन्मकोटिभवं पापं त्वयि स्नानाद्विनश्यतु ।। ९ ।।

इमं मन्त्रं त्रिरुच्चार्य त्रिः स्नायात्तज्जले द्विजाः ।।

संस्मरेद्विष्णुगायत्र्या नरसिंहाकृतिं हरिम् ।। 2.2.31.१० ।।

आपो नारा इति प्रोक्ता यस्मात्ता नरसूनवः ।।

अयनं प्रथमं चास्य तस्मादप्सु हरिं स्मरेत् ।।११।।

देवानृषीन्पितृंश्चैव तर्पयेद्विधिवन्नरः ।।

नरसिंहं ततो गच्छेत्पश्चिमाभिमुखं स्थितम् ।। १२ ।।

सिद्धं शंभुं कृत्रिमं वा पश्चिमाभिमुखं हरिम् ।।

दृष्ट्वा विमुच्यते पापैर्जन्मकोटिसमुद्भवैः ।। १३ ।।

तमाथर्वणमंत्रेण यजेच्च नरकेसरिम् ।।

नारदेन पुरा ह्येष मंत्रराजः प्रतिष्ठितः ।। १४ ।।

इन्द्रद्युम्नेन तेनैव चिरादेष उपासितः ।।

नरसिंहाकृतौ नान्यो मंत्रस्तत्सदृशो द्विजाः ।। १५ ।।

यस्योच्चारणमात्रेण तुष्टो भवति केसरी ।।

अनेन दारुवर्ष्मापि ब्रह्मणा संप्रतिष्ठितः ।। १६ ।।

पूर्वोक्तैरुपचारैस्तु पूजयेन्नरकेसरिम् ।।

जपाप्रसूनैररुणैरन्यैश्चैव सुगंधिभिः ।। १७ ।।

चंदनागरुकर्पूरैर्लेपयेन्नरकेसरिम् ।।

पायसं सितया युक्तं सौरभेयेण सर्पिषा ।। १८ ।।

कर्पूरखण्डसंयुक्तान्मोदकान्घृतपाचितान् ।।

संयावान्घृतपूपांश्च फलं नानाविधं तथा ।। १९ ।।

शर्करादधिसंयुक्तं शाल्यन्नं विनिवेदयेत् ।।

दृष्ट्वा स्पृष्ट्वा नमस्कृत्वा संपूज्य नरकेसरिम् ।। 2.2.31.२० ।।

स्वान्स्वानभीष्टानाप्नोति नरो वै नात्र संशयः ।।

देवत्वममरेशत्वं गंधर्वत्वं च भो द्विजाः ।।२१।।

ईशित्वं च वशित्वं च सार्वभौमत्वमेव वा ।।

यद्यत्कामयते चित्ते तत्तदाप्नोत्यसंशयम् ।। २२ ।।

पंचतीर्थीविधानं च कथितं पृच्छतां द्विजाः ।।

दिनानि पंच कृत्वैतां पञ्चभूतमये पुनः ।।२३।।

न देहे प्रविशेन्मर्त्यो व्रती विष्णुपरायणः ।।

पौर्णमास्यां प्रत्युषसि तीर्थराजजले पुनः ।। २४ ।।

पूर्वोक्तविधिना स्नात्वा शुद्धाहारो जितेंद्रियः ।।

एकभक्तव्रतेनैव वर्त्तते प्रीतये नरः ।।

यावत्पंच दिनानि स्युस्तावत्कालं द्विजोत्तमाः ।। २५ ।।

ततः प्रविश्यप्रासादं मंचस्थं पुरुषोत्तमम् ।।

रामं सुभद्रां दृष्ट्वा च मुच्यते पापकंचुकैः ।। २६ ।।

सर्वतीर्थमयात्कूपादुद्धृतेन सुगन्धिना ।।

वारिणा स्नाप्यमानं तु यो ज्यैष्ठ्यां पश्यते हरिम् ।। २७ ।।

न तस्य पापसंबंध आत्मनि प्रभविष्यति ।।

यात्राकर्तृविधिं वक्ष्ये शृणुध्वं मुनयः परम् ।। २८ ।।

चतुर्दश्यां दृढं मंचं कारयित्वा सुशोभनम् ।।

तृणकाष्ठमयं लिप्तं सुधया बहुलं शुभम् ।। २९ ।।

अथवा दार्षदं कुर्याच्चिरस्थायि द्विजोत्तमाः ।।

स्नानार्थं देवदेवस्य वित्तशाठ्यं न कारयेत् ।। 2.2.31.३० ।।

नानाद्रुमगणाकीर्णं दक्षिणानिलशीतलम् ।।

उल्लसत्सिंधुकल्लोलशाड्वलोपरि संस्कृतम् ।। ३१ ।।

समुच्छ्रितमहामूल्यवितानवरशोभितम् ।।

विरलाच्छादनं कुर्याद्देवानां दर्शनाय वै ।। ३२ ।।

आयांति ब्रह्मणा सार्द्धं स्नपनाय जगत्पतेः ।।

स्वर्गंगांभः समादाय पारिजातविभूषितम् ।। ३३ ।।

ब्रह्मर्षयश्च त्रिदशा ब्रह्मणा सहिता विभुम् ।।

मंचस्थं स्नापयन्तीह वचनात्परमेष्ठिनः ।। ३४ ।।

जयशब्दैश्च स्तुतिभिर्वंद्योऽयं त्रिदिवौकसाम् ।।

तस्मान्मंचस्तु कर्तव्यो मंडितो माल्यचामरैः ।। ३५ ।।

नानामणिस्रजा हारिदुकूलकृततोरणम् ।।

सुगंधधूपसुरभिचंदनाभः समुक्षितम् ।। ३६ ।।

एवं मंचं प्रतिष्ठाप्य तस्य दक्षिणतो द्विजाः ।।

कूपाद्वारि समुद्धृत्य कलशान्स्वर्णनिर्मितान् ।। ३७ ।।

शालायां शास्त्रदृष्टेन विधिना त्वधिवासयेत्।। ३८ ।।

सुवासितं जलं तेषु पावमान्या प्रपूरयेत् ।।

चतुर्दशीनिशामध्ये कर्मैतत्समुदाहृतम् ।। ३९ ।।

शनैः शनैश्च नीयासुर्हरिं हलि पुरःसरम् ।।

ब्राह्मणाः क्षत्रिया वैश्या राज्ञा संमानितादृताः ।। 2.2.31.४० ।।
चामरैस्तालवृन्तैश्च वीज्यमानं निरंतरम् ।।
पुराकृतामलेपं तं विष्णोरंगान्न हापयेत् ।। ४१ ।।
यथा सुगंधलेपेन सुपुष्टांगो दिने दिने ।।
तथा प्रयत्नतः कार्यः कृशांगो न हि पुष्टिकृत् ।। ४२ ।।
नयेयुरप्रमाद्यंतो भगवंतमानदिताः ।।
प्रमादतो यदि भवेत्पतनं मुरवैरिणः ।। ४३ ।।
बलस्य वा सुभद्राया राज्ञो राज्यस्य भीतिकृत् ।।
अपि पातयतां हानिः संततेर्बहुदुःखिता ।। ४४ ।।
नरके नियतं वासो भवेत्तेषां दुरात्मनाम् ।।
विमुह्यंतश्चिराद्दारुमयीयं प्रतिमा कथम् ।। ४५ ।।
तिष्ठेदविश्वसंतो ये भगवद्द्रोहिणस्तु ते ।।
नरकं प्रतिपद्यंते सर्वकर्मबहिष्कृताः ।।४६।।
मूढानां नास्तिकानां च कृतघ्नानां हतात्मनाम् ।।
धर्मकृत्येषु जायंते अविश्वासस्य युक्तयः।।४७।।
अदृष्टं यस्य यावद्धि स तु तेन विनिर्मितः ।।
तदंते तस्य क्षीयंते प्रासादप्रतिमादयः ।।४८।।
न चायं निर्मितः केन द्रुमः सोऽपि प्रवर्द्धितः ।।
वरं ददाति या नूनं न चासौ प्रतिमा मता ।। ४९ ।।
निर्मितायां प्रतिकृतौ पुरा मन्वंतरादिषु ।।
व्यतीतेष्वपि वर्द्धंते जनानां च सुपर्वणाम् ।। 2.2.31.५० ।।
भक्तयस्तादृशो विप्राः सर्वेषां पृथिवीक्षिताम् ।।
स्वारोचिषेंऽतरे चैव आविर्भूतः कृपानिधिः ।। ५१ ।।
वैवस्वतेंऽतरे सप्तविंशे चैव चतुर्युगे ।।
द्वापरांते समायातौ तदा कृष्णार्जुनावुभौ ।। ५२ ।।
त्रिदिनानि स्थितावत्र व्रतस्थौ मधुसूदनम् ।।
भक्त्या संपूज्य तं स्तुत्वा जग्मतुर्द्वारकां पुनः ।। ५३ ।।
न केऽपि तत्त्वं जानंति मानुषीं तनुमास्थिताः ।।

अवताराः प्रवर्तंते विष्णोरस्य युगेयुगे ।। ५४ ।।

धर्मस्थापनया विप्रा लीयंते स्वपदे पुनः ।।

पूर्वं च ब्रह्मणा प्रोक्तः स चानेन परस्परम् ।। ५५ ।।

स्थाता परार्द्धपर्यंतं भगवान्दारुरूपधृक् ।।

सदायं वरदो विष्णुः शुद्धसत्त्वेन भावितः ।। ५६ ।।

यस्य यावांस्तु विश्वासस्तस्य सिद्धिस्तु तावती ।।

प्रमादीकृतविश्वासो भक्तो दृढमतिः पुमान् ।। ५७ ।।

यत्रानुरूपं लभते फलमस्मात्सुदुर्लभम् ।।

पुरा वः कथितं सर्वमंबरीषविमोचनम् ।। ५८ ।।

ततस्तस्मिञ्जगन्नाथे परमात्मस्वरूपिणि ।।

विधाय सुदृढां भक्तिं वसध्वं पुरुषोत्तमे ।।५९ ।।

अतोऽयं भक्तितो नेयः श्रीकृष्णमंच उत्तमः ।।

सुभद्राबलभद्रौ च राजवत्परिचर्य वै ।। 2.2.31.६० ।।

उत्तोलितेषु च्छत्रेषु चामरैर्वीजितेषु च ।।

कालागुरुसुधूपासु दिक्षु गंभीरनादिषु ।। ६१ ।।

नानाविधेषु वाद्येषु त्वगारे परिपूरिते ।।

तौर्यत्रिके साधुवृत्ते दीपिका श्रेणिराजिते ।। ६२ ।।

अंधकारेऽथ सर्वेषां वर्द्धमाने महोत्सवे ।।

आच्छन्ने श्रीपतेरंगे प्रमादपरिशंकया ।। ६३ ।।

पटुपट्टदुकूलेषु नीयमानेषु दूरतः ।।

गतेर्वेगात्तदोत्तानीकृतास्ये जगतां गुरौ ।। ६४ ।।

आवर्त्तदृष्टयो देवा दिवारोहणशंकिनः ।।

जयस्व राम कृष्णेति जय भद्रेति चोचिरे ।। ६५ ।।

एवं सलीलं भगवाञ्जन्मज्यैष्ठ्याभिषेचने ।।

नीयते मंचदेशं तु निशीथे ब्राह्मणादिभिः ।। ६६ ।।

अहंपूर्विकशब्दस्तु देवानां श्रूयते दिवि ।।

देवदुंदुभयश्चैव जयशब्दविमिश्रिताः ।। ६७ ।।

ततो मंचस्थितं ब्रह्मरूपं प्रत्यर्चया सह ।।

आच्छाद्य सर्वाण्यंगानि मुखवर्जं सुचेलकैः ।। ६८ ।।

विना निवेद्यं संपूज्य उपचारैः पुरोदितैः ।।

अधिवासितकुंभैश्च शांतिघोषपुरःसरम् ।। ६९ ।।

समुदज्येष्ठामंत्रेण स्नापयेत्सुरपुंगवान् ।।

पश्यतामभिषेक्तॄणां कृतकृत्यत्वहेतवे ।। 2.2.31.७० ।।

स्नाप्यमानं तु पश्यंति ये नरास्तत्र संस्थिताः ।।

गर्भोदकेन स्नपनं न ते पुनरवाप्नुयुः ।। ७१ ।।

ज्येष्ठस्नानं भगवतो ये पश्यंति मुदान्विताः ।।

न ते भवाब्धौ मज्जंति यात्रामुत्कंठमानसाः ।। ७२ ।।

बुद्ध्यबुद्धिकृतः पुंसामनादिः पापसंचयः ।।

तत्क्षणान्नाशमायाति पश्यतां स्नपनं हरेः ।। ७३ ।।

सत्यं सत्यं पुनः सत्यं ब्रवीमि द्विजपुंगवाः ।।

सर्वसंतापशमनमशेषमलनाशनम् ।। ७४ ।।

स्नपनं श्रीपतेर्ज्यैष्ठ्यां यदि भक्त्या विलोकनम् ।।

प्रायश्चित्तनिमित्तानि यानि पापानि संति वै ।। ७५ ।।

तानि सर्वाणि क्षीयंते पश्यतां स्नपनं हरेः ।।

नातः परतरं कर्म ह्यनायासेन मोचनम् ।। ७६ ।।

ज्येष्ठजन्मदिने स्नानं हरेर्यदवलोकितम् ।।

स्नानदानतपःश्राद्धजपयज्ञादयस्तु ये ।। ७७ ।।

विधयः कोटिगुणिताः कोटिजन्मोपपादिताः ।।

स्नानदर्शनपुण्यस्य हरेस्ते न तुलां गताः ।। ७८ ।।

भक्त्या यः स्नपनं विष्णोरेकस्मिन्वत्सरेऽपि वा ।।

पश्येन्न शोचते विप्रा इह संसारमोचने ।। ७९ ।।

तेनेष्टं क्रतुभिः पुण्यैः श्रद्धाविपुलदक्षिणैः ।।

महादानानि दत्तानि भोजिताः कोटिशो द्विजाः ।। 2.2.31.८० ।।

श्राद्धानि गयशीर्षादौ कोटिशश्च कृतानि वै ।।

पुण्यकाले च तीर्थादौ तपांसि चरितानि च ।। ८१ ।।

अर्धोदयादियोगेषु कोटितीर्थेषु कोटिशः ।।

स्नातानि तेन भो विप्रा यः पश्येत्स्नपनं हरेः ।। ८२ ।।

सत्यं सत्यं पुनः सत्यं ब्रवीमि द्विजपुंगवाः ।।

नातः श्रेयस्करं कर्म शास्त्रदृष्टपथिस्थितम् ।। ८३ ।।

मञ्चस्थं स्नाप्यमानं हि यः पश्येत्पुरुषोत्तमम् ।।

स्नानाच्छतगुणं पुण्यं लभते वै न संशयः ।। ८४ ।।

मञ्चस्थितं जगन्नाथं स्नानार्द्रं यस्तु पश्यति ।।

सांद्रानन्दार्द्रचित्तोऽसौ न किंचित्पापमश्नुते ।। ८५ ।।

यदेव पुण्यमुदितं स्नानदर्शनकर्मणि ।।

तत्तत्फलमवाप्नोति दृष्ट्वा मञ्चस्थमच्युतम् ।। ८६ ।।

एक एव जगन्नाथस्त्रिधा तत्र स्थितो द्विजाः ।।

एकैकस्यापि स्नपनदर्शनं भुक्तिमुक्तिदम् ।। ८७ ।।

जयस्व रामभद्रेति जय भद्रेति यो वदेत् ।।

जय कृष्ण जगन्नाथ जयेत्युच्चारयेन्मुदा ।। ८८ ।।

स्नानकाले स वै मुक्तिं प्रयाति द्विजसत्तमाः ।।

अधिवासादिकं तत्र यैः कृतं स्नानकर्मणि ।। ८९ ।।

तेषां श्रद्धामुदायुक्तः प्रदद्याद्दक्षिणाः पृथक् ।।

ब्राह्मणेभ्यश्च मिष्टान्नं वस्त्रालंकरणानि च ।। 2.2.31.९० ।।

प्रदद्याच्छ्रद्धया युक्तो दीनानाथांश्च तर्पयेत् ।।

ये द्रष्टुमागताः स्नानं जीवन्मुक्तास्तु ते ध्रुवम् ।। ९१ ।।

तान्यथाशक्ति वै राजा मानयेत्प्रीतये हरेः ।।

स्नानावशेषतोयेन स्नायाद्भद्रासनस्थितः ।। ९२ ।।

नारी वा पुरुषो वापि तस्य पुण्यं वदामि वः ।।

कल्पः स्याच्चिररोगार्तो ह्यपमृत्युं जयेदसौ ।। ९३ ।।

अपुत्रा मृतवत्सा वा वन्ध्या वापि लभेत्सुतम् ।।

सुभगः सर्वलोकानां निर्धनो धनवान्भवेत् ।। ९४ ।।

गुर्विणी लभते पुत्रं दीर्घायुर्गुणवत्तरम्।।

गंगादिसर्वतीर्थानां स्नानजं फलमुच्यते ।। ९५ ।।

स्नानदर्शनजं पुण्यं धर्मात्मा लभते ध्रुवम् ।।९६।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्य एकत्रिंशोऽध्यायः ।। ३१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३२



।। जैमिनिरुवाच ।। ।।

अतः परं प्रवक्ष्यामि दक्षिणामूर्तिदर्शनम् ।।

पदेपदेश्वमेधस्य फलं यत्रोपलभ्यते ।। १ ।।

ततो नानाविधैर्दिव्यैर्भक्ष्यभोज्यादिकैस्तथा ।।

यथाशक्त्युपचारैस्तु गंधैर्माल्यैश्च पूजयेत् ।। २ ।।

रामं कृष्णं सुभद्रां च गीतनृत्यादिकैस्तथा ।।

प्रेक्षणीयैश्च विविधैः श्रद्धया चोपपादितैः ।। ३ ।।

वस्त्रचंदनमाल्याद्यैः पूजयित्वा द्विजोत्तमान् ।।

भगवद्ब्राह्मणांश्चैतान्महाभागवतांस्तथा ।। ४ ।।

ततो नयेद्दक्षिणाभिमुखांस्तांस्त्रिदशेश्वरान् ।।

उत्सवं च महत्कृत्वा पूर्वानयनवद्धरेः ।। ५ ।।

तस्मिन्काले हरिं पश्येद्व्रजंतं दक्षिणामुखम् ।।

समं सुभद्रां यो मर्त्यो न स प्राकृतमानुषः ।। ६ ।।

स्नानार्थमागता देवाः स्नापयित्वा जगद्गुरुम् ।।

आकाशेऽपि ससंबाधास्तावत्कालं स्थिता हरिम् ।।

द्रष्टुं व्रजंतं याम्याशावदनं भवनाशनम् ।। ७ ।।

धर्मशास्त्रेषु यावंति धर्मकर्माणि संति वै ।।

तानि सर्वाणि संद्रष्टुं व्रजंतं दक्षिणामुखम् ।। ८ ।।

स्नानदर्शनजं पुण्यं समग्रं लभते तु सः ।।

स्नातं मुरारिं यः पश्येद्व्रजंतं दक्षिणामुखम्।। ९ ।।

नीराजयित्वा देवेशं रामेण सह भद्रया ।।

प्रासादांतः प्रवेश्याथ न पश्येद्वै कथंचन ।। 2.2.32.१० ।।

एतत्तु विस्तरेणोक्तं पूर्वमेव मया द्विजाः ।। ११ ।। ।।

।। मुनय ऊचुः ।। ।।

भगवन्यत्त्वया प्रोक्तं ज्येष्ठास्नानप्रदर्शनात् ।।

फलं प्राप्नोति नियतं तन्नो बूहि विदांवर।।१२।।

।। जैमिनिरुवाच ।। ।।

हंत वः कथयिष्यामि तद्व्रतं ज्येष्ठपंचकम् ।।

नातः परतरं प्रोक्तमृषिभिः शास्त्रपारगैः ।।१३।।

श्रौतस्मार्तपुराणोक्त व्रतानामिदमुत्तमम्।।

इदं प्रथमतः प्रोक्तं ब्रह्मणा परमेष्ठिना ।। १४ ।।

ज्येष्ठत्वाद्व्रतमुख्यानां ख्यातं तज्जयेष्ठपंचकम् ।।

समुद्रो ज्येष्ठफलदः प्रभुर्ज्येष्ठफलप्रदः ।। १५ ।।

वर्षसंदर्शनात्पुण्यं मञ्चकेनैव लभ्यते ।।

मंचकेन तु यल्लभ्यं महाज्यैष्ठ्यां तु तल्लभेत् ।। १६ ।।

यन्मयोक्तं पुरा विप्राः स्नानदर्शनजं फलम् ।।

समग्रं तदवाप्नोति महाज्यैष्ठ्यां न संशयः ।। १७ ।।

।। मुनय ऊचुः ।। ।।

महाज्यैष्ठीं समाचक्ष्व यत्र स्नानं महाफलम् ।।

तत्र नः कौतुकं ब्रह्मन्महद्वै संप्रवर्त्तते ।। १८ ।। ।।

।। जैमिनिरुवाच ।। ।।

ज्येष्ठस्य विमले पक्षे या वै पंचदशी भवेत् ।।

शक्रर्क्षैकांशगौ चन्द्रगुरू च गुरुवासरे ।। १९ ।।

शुभे योगे महाज्यैष्ठी सर्वपापप्रणाशिनी ।।

सर्वक्षेत्रं सर्वतीर्थं सप्त वै सागरास्तथा ।। 2.2.32.२० ।।

क्रतवश्च महादानसमूहश्च तपांसि च ।।

विद्याश्चाष्टादशविधा व्रतानि विविधानि च ।। २१ ।।

शांतिपौष्टिककर्माणि सांख्ययोगस्तथैव च ।।

सर्वे संभूय गच्छंति क्षेत्रं श्रीपुरुषोत्तमम्।। २२ ।।

वृन्दशः प्रविभक्तास्त एकैकं क्षेत्रगं प्रति ।।

कस्मै वयं भाग्यवते ज्येष्ठस्नानावलोकने ।। २३ ।।

महाज्यैष्ठ्यां प्रवेक्ष्यामः परस्परमहंमया ।।

तत्र यांति महायोगे भगवत्क्षेत्रमुत्तमम् ।। २४ ।।

महाज्यैष्ठी महापुण्या भगवत्प्रीतिवर्द्धनी ।।

तस्यां संपूज्य देवेशं जगन्नाथं कृपार्णवम् ।।

दृष्ट्वा च स्नाप्यमानं तं पापकोशाद्विमुच्यते ।। २५ ।।

अत ऊर्ध्वं प्रवक्ष्यामि व्रतं तज्ज्येष्ठपञ्चकम् ।।

व्रतेनानेन लभ्यं यत्तत्तदेव ब्रवीमि वः ।। २६ ।।

दशम्यां नियमं कुर्यात्प्रातः स्नात्वा यथाविधि ।।

आचार्यं वृणुयात्तत्र वैष्णवं द्विजपुंगवम् ।। २७ ।।

इत्थं संकल्पममलं गृह्णीयाद्व्रतमुत्तमम् ।। २८ ।।

देवदेवजगन्नाथ संसारार्णवतारक ।।

अद्यारभ्य व्रतं देव यावज्ज्यैष्ठी च सा तिथिः ।।

तावद्व्रतं करिष्यामि प्रीतये तव केशव ।।२९।।

सर्वतीर्थाभिषेकं च प्रत्यहं व्रतभोजनम् ।।

मूर्तीनां तव पंचानामेकस्यापि प्रपूजनम् ।। 2.2.32.३० ।।

एकस्मिन्दिवसे देव त्रिसंध्यं त्वत्प्रसादतः ।।

समाप्यतां व्रतमिदं सफलं चास्तु ते प्रभो ।।।। ३१ ।।

ततः पंचसु तीर्थेषु स्नात्वा च गृहमेत्य च ।।

स्थंडिले विलिखेत्पद्ममष्टपत्रं सकर्णिकम् ।। ३२ ।।

तन्मध्ये स्थापयेत्कुंभं तीर्थांभोभिः प्रपूरितम् ।।

सचंदनफलैर्युक्तं तन्मुखे ताम्रभाजनम् ।। ३३ ।।

वाससा वेष्टितं कण्ठे पात्रं चाक्षतपूरितम् ।।

तन्मध्ये स्थापयेद्देवं सौवर्णं मधुसूदनम् ।। ।। ३४ ।।

शुभांगावयवं शांतं वामे श्रीयुतमीश्वरम् ।। ३५ ।।

दक्षिणे च गरुत्मंतं स्पृशंतं पृष्ठदेशतः ।।

शंखचक्रधरं चोर्ध्वे पद्मासनगतं विभुम् ।। ।। ३६ ।।

पूजयेदुपचारैस्तमाचार्यो वापि भो द्विजाः ।।

नीलोत्पलानां मालां तु भक्त्या देवाय दापयेत् ।। ३७ ।।

दशम्यां पूजयित्वैवं दशकोट्यघनाशनम् ।।

प्रार्थयेत्प्रांजलिर्भूत्वा मन्त्रमेतं समुच्चरन् ।। ३८ ।। ।।

मधुसूदन देवेश नमस्ते माधवीप्रिय ।।

कृपावारांनिधे पाहि पतितं मां भवार्णवे ।। ३९ ।।

एकादश्यां चतुर्बाहुं शंखचक्रगदाधरम् ।।

नारायणं पद्मसंस्थं पंचनिष्कविनिर्मितम् ।।

तदर्द्धं निर्मितं वापि पूजयेत्पद्ममालया ।। 2.2.32.४० ।।

नैवेद्यं पायसं दद्यात्सितां रंभाफलानि च ।।

नानाविधं च नैवेद्यं दत्त्वा संप्रार्थयेन्मुदा ।। ४१ ।।

नारायण नमस्तेऽस्तु भवसागरतारण ।।

त्राहि मां पुंडरीकाक्ष शरणागतवत्सल ।। ४२ ।।

एकादशेंद्रियकृतं पापराशिमनुत्तमम् ।।

अनादिभवनिर्व्यूढं नाशयेत्पूजितः प्रभुः ।। ४३ ।।

द्वादश्यां यज्ञवाराहं पूजयेत्स्वर्णनिर्मितम् ।।

चंदनागुरुकर्पूरलेपनैश्चंपकस्रजा ।। ४४ ।।

नानाविधापूपसारा भक्ष्यभोज्यफलान्विताः ।।

निवेद्य प्रार्थयेद्देवं स्तुतिमेतां समुच्चरन् ।। ४५ ।।

प्रलयार्णवसंमग्नां धरणीं धृतवानसि ।।

किन्न शक्तो ममोद्धारे पतितस्यांघ्रिपंकजे ।।

तन्मामुद्धर गोविंद निमग्नं शोकसागरे ।। ४६ ।।

अब्दो द्वादशमासो वै यावदब्दकृतानि तु ।।

पापानि महदल्पानि इतः पूर्वेषु जन्मसु ।।

तद्विनाशयते देवो द्वादश्यामर्चितो नृणाम् ।। ४७ ।।

त्रयोदश्यां तु प्रद्युम्नं शंखचक्रवराभयान् ।।

धारयन्तं पद्मगतं चतुर्निष्कविनिर्मितम् ।। ४८ ।।

उपचारैर्यथाप्रोक्तैः पूजयेद्भक्तितो नरः ।।

अशोकपाटलीमालां चंद्रपूर्णां समुज्ज्वलाम् ।। ४९ ।।

नैवेद्यं चैव पक्वान्नं फलं पक्वं मनोहरम् ।।

दत्त्वा नमस्कृतिं कुर्वन्प्रार्थयेत्प्रांजलिः शुचिः ।। 2.2.32.५० ।।

देव प्रद्युम्न कामानां पूरक कामरूपधृक् ।।
कामाश्च सफलाः संतु कामपाल नमोऽस्तु ते ।। ५१ ।।
चतुर्दश्यां नरहरिं पूजयेत्कनकाकृतिम् ।।
वक्षःस्थलस्थया लक्ष्म्या प्रीयमाणं सटोज्ज्वलम् ।। ५२ ।।
व्यात्ताननं साट्टहासं योगपट्टाब्जसंस्थितम् ।।
सुतीक्ष्णनखरं देवं सर्वापद्विनिवारणम् ।। ५३ ।।
चतुर्भिर्हेमनिष्कैश्च घटितं शुभलक्षणम् ।।
पूजयेत्पूर्ववद्देवं सोपहारं सुभक्तितः ।। ५४ ।।
जपाकुसुममालां च जातीपुष्पस्रजं तथा ।।
दत्त्वा पुष्पांजलीन्पादे प्रणम्य सप्रदक्षिणम् ।। ५५ ।।
यथा हिरण्यकशिपुं लोकानां हितकाम्यया ।।
व्यदारयस्तथा पापसंघं नाशय पूजितः ।। ५६ ।।
एवं संप्रार्थ्य नृहरिं प्रणम्य दण्डवत्क्षितौ ।।
निर्वर्त्य व्रतमेवं तद्व्रती पंचदिनात्मकम् ।।
पंच पंच प्रदीपांस्तु दिवारात्रौ प्रदापयेत् ।। ५७ ।।
वस्त्रयुग्मान्पंच पञ्च च्छत्रोपानद्युगं तथा ।।
सयज्ञसूत्रान्कलशान्पञ्च पञ्च फलान्वितान् ।। ५८ ।।
भोजनांते द्विजेभ्यश्च प्रदद्याच्छ्रद्धयान्वितः ।। ५९ ।।
रात्रौ जागरगीताद्यैस्तथा नानोपहारकैः ।।
तोषयेद्वासुदेवं तु पुराणपठनेन तु ।। 2.2.32.६० ।।
पौर्णमास्युषसि स्नात्वा श्रीकृष्णस्यांतिकं व्रजेत् ।। ६१ ।।
रामं कृष्णं सुभद्रां च पूजयित्वा यथाविधि ।।
स्नपनं कारयित्वाथ दृष्ट्वा वा शास्त्रचोदितम् ।। ६२ ।।
स्नानं कृत्वा पुनः सिंधौ गृहमागत्य तत्र वै ।।
यत्र विष्णोर्मूर्तयस्ताः कुम्भस्था मन्त्रपूजिताः ।। ६३ ।।
तासां पश्चिमतो वह्निं समाधाय यथाविधि ।।
अग्निकार्यं प्रकुर्वीत स्वैः स्वैर्मंत्रैः पुरोहितः ।।६४।।
प्रणवादिचतुर्थ्यंतं नमोंतं नाम ईरयेत् ।।

देवानां मूलमंत्रस्तु स्वाहांतो होमकर्मणि ।। ।। ६५ ।।

चरोराज्यस्य समिधां पलाशानां पृथक्पृथक् ।।

एकैकं देवमुद्दिश्य जुहुयाच्च शतं शतम् ।। ६६ ।।

तस्य पुष्पशतं चैव जुहुयात्तदनंतरम् ।।

पूर्णाहुतिं ततो हुत्वा ब्रह्मणे दक्षिणां ददेत् ।। ६७ ।।

आचार्ये दक्षिणां दद्यात्सुवर्णं धेनुमेव च ।।

स्वर्णशृंगीं रौप्यखुरां नानोपकरणैर्युताम् ।। ।। ६८ ।।

महार्घ्यवस्त्रदानानि येन तुष्यति वा गुरुः ।।

सर्वोपकरणैर्युक्ताः प्रतिमाश्च निवेदयेत् ।। ६९ ।।

ब्राह्मणान्भोजयेत्सर्पिः खण्डयुक्तैश्च पायसैः ।।

एतद्व्रतं समाख्यातं ज्येष्ठपंचकमुत्तमम् ।। 2.2.32.७० ।।

अनुष्ठाय नरो भक्त्या स्नानदर्शनजं फलम् ।।

समग्रं लभते विप्रास्तदा नैवात्र संशयः ।। ७१ ।।

एकादशी या तु मध्ये निर्जला सा प्रकीर्तिता ।।

एकां तां भक्तियुक्ता ये यथाविधि उपासते ।। ७२ ।।

यावज्जीवकृताः सर्वा एकादश्यो न संशयः ।।

व्रतराजमिमं कृत्वा सर्वव्रतफलं लभेत् ।। ७३ ।।

यान्यान्समीहते कामांस्तांस्तानाप्नोत्यसंशयः ।। ७४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये ज्येष्ठपंचकव्रतवर्णनंनाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३३

https://sa.wikisource.org/s/h4i
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। ।। जैमिनिरुवाच ।। ।।

अत ऊर्ध्वं प्रवक्ष्यामि महावेदीमहोत्सवम् ।।

अज्ञानतिमिरांधोऽपि येन भास्वत्पदं व्रजेत् ।।१।।

वैशाखस्यामले पक्षे तृतीया पापनाशिनी ।।

स्वयमाविष्कृता चैषा प्राजापत्यर्क्षसंयुता ।। २ ।।

तस्यां संकल्प्य नृपतिराचार्यं वरयेच्छुचिः ।।

एकं त्रीनथ तक्षाणं दृष्टकर्माणमादरात्।।३।।

वृणुयाद्वनयागाय वस्त्रालंकरणादिभिः ।।

तक्ष्णा सार्द्धं वनं गत्वा साधुवृक्षगणाकुलम् ।।४।।

तन्मध्ये वह्निमाधाय मंत्रराजेन मंत्रवित्।।

अष्टोत्तरशतं हुत्वा संपाताज्यविमिश्रितम् ।। ५ ।।

आज्यं तरूणां मूले तु प्रत्येकमभिघारयेत् ।।

दिक्पालेभ्यो बलिं दत्त्वा क्षेत्रपालपशूंस्तथा ।। ६ ।।

वनस्पतये जुहुयात्क्षीरोदनशताहुतिम् ।।

ततः परशुमादाय वृक्षमूलेषु दिक्षु वै ।। ७ ।।

आज्यसंस्कृतिदेशेषु आचार्यो मंत्रमुच्चरन् ।।

किंचित्किंचिच्छेदयेद्वै चिंतयन्गरुडध्वजम् ।। ८ ।।

नदत्सु तूर्यघोषेषु गीतमंगलवादिषु ।।

नियोज्य वर्द्धकिं तत्र आचार्यः स्वगृहं व्रजेत् ।। ९ ।।

अथवा स्थान लब्धानि दारूणि रथकर्मणि ।।

उक्तसंस्कारविधिना संस्कुर्यात्कल्पितेनले ।। 2.2.33.१० ।।

आरभेत रथं कृत्वा विघ्नराजमहोत्सवम् ।।

षोडशारैः षोडशभिश्चक्रैर्लोहमयैर्दृढैः ।। ११ ।।

युक्तं विष्णो रथं कुर्याद्दृढाक्षं दृढकूबरम् ।।

विचित्रघटनाकक्षपुत्तलीपरिवेष्टितम् ।। १२ ।।

नानाविचित्रबहुलमिक्षुखण्डविराजितम्।।

चतुस्तोरणसंयुक्तं चतुर्द्वारं सुशोभनम् ।। १३ ।।

नानाविचित्रबहुलं हेमपट्टविराजितम् ।।

द्वाविंशतिकरोच्छ्रायं पताकाभिरलंकृतम् ।। १४ ।।

गारुडं च ध्वजं कुर्याद्रक्तचंदननिर्मितम् ।।

दीर्घनासं स्थूलदेहं कुण्डलाभ्यां विभूषितम् ।। १५ ।।

चंच्वग्रदष्टभुजगं सर्वालंकारभूषितम् ।।

वितत्य पक्षती व्योम्नि उड्डीयंतमिवोदितम् ।। १६ ।।

दैत्यदानवसंघस्य बलदर्पविनाशनम् ।।

सर्वांगं तस्य कनकैराच्छाद्य परिशोभयेत् ।। १७ ।।

रथमेव हरेः कुर्यात्स्वासनं सुपरिष्कृतम् ।।

चतुर्दशरथांगैस्तं रथं कुर्याच्च सीरिणः ।। १८ ।।

चक्रैर्द्वादशभिः कुर्यात्सुभद्राया रथोत्तमम् ।।

सप्तच्छदमयं कुर्यात्सीरिणो लांगलध्वजम् ।। १९ ।।

देव्याः पद्मध्वजं कुर्यात्पद्मकाष्ठविनिर्मितम् ।।

विरचय्य रथान्राजा प्रतिष्ठां पूर्ववच्चरेत् ।। 2.2.33.२० ।।

यथामन्त्रं यथाशास्त्रं विश्वसेद्ब्राह्मणेषु च ।।

ब्राह्मणा जगदीशस्य जंगमास्तनवः स्मृताः ।। २१ ।।

इत्थं सुघटितं चक्रित्रयं देवत्रयस्य वै ।।

आषाढस्य सिते पक्षे दिने विष्णोः शुभप्रदे ।। २२ ।।

प्रतिष्ठाप्य समृद्धेन विधिना पूर्ववद्विजाः ।।

रक्षणीयं तथा तत्र नारोहेत्कश्चनाशुभः ।। २३ ।।

पक्षी वा मानुषो वापि मार्जारनकुलादयः ।।

ततो दिनत्रयादर्वाग्रथानामुत्तरे कृते ।। २४ ।।

मण्डपे उत्सवांगे वा प्रकुर्यादंकुरार्पणम् ।।

अद्भुतेष्वथ जातेषु शांतिं कुर्यात्पुरोदिताम् ।। २५ ।।

रथ्या सुसंस्कृता कार्या महावेदीं यथा व्रजेत् ।।

पार्श्वयोर्मंडलं कुर्यात्पथि गुल्मादिभिः फलैः ।। २६ ।।

सुमनस्तबकैर्माल्यैर्दुकूलैश्चामरैस्तथा ।।

यथा सुपुष्पितारण्यराजी तत्र विराजते ।। २७ ।।

भूमिः समा च कार्या वै निष्पंका सुखचारणा ।।

निर्मला च सुगन्धा च सुदूराद्वर्जितोत्करा ।। २८ ।।

धूपपात्राण्यनुपदं दिगामोदकराणि च ।।

चंदनांभः परिक्षेपो यंत्रपातोत्करस्तथा ।। २९ ।।

बहूनि ऋतुपुष्पाणि पुष्पवृष्ट्यर्थमेव हि ।।

नटनर्त्तकमुख्याश्च गायना बहवस्तथा ।। 2.2.33.३० ।।

वेश्या यौवनगर्वाढ्याः रूपालंकारभूषिताः ।।

मृदंगा पणवाश्चैव भेरीढक्कादयस्तथा ।। ३१ ।।

बहवो बहुधा तत्र पताकाश्चित्रितांतराः ।।

ध्वजाश्च बहवस्तत्र स्वर्णराजतनिर्मिताः ।। ।। ३२ ।।

वैजयंत्यो बहुविधा भूमिगा वाहनास्तथा ।।

हस्तिनश्च हयाश्चैव सुसन्नद्धाः स्वलंकृताः ।। ३३ ।।

एवं संभृतसंभारः क्षितिपालः शुचिव्रतः ।।

मुदा भक्त्या च परया युक्तः कुर्यान्महोत्सवम् ।। ३४ ।।

आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।।

अरुणोदयवेलायां तस्यां देवं प्रपूजयेत् ।। ३५ ।।

ब्राह्मणैर्वैष्णवैः सार्द्धं यतिभिश्च तपस्विभिः ।।

विज्ञापयेद्देवदेवं यात्रायै संस्कृतांजलिः ।। ३६ ।।

इन्द्रद्युम्नं क्षितिभुजं यथाज्ञासीः पुरा विभो ।।

विजयस्व रथे नाथ गुंडिचामण्डपं प्रति ।। ३७ ।।

तवापांगविलोकेन प्रपुनंतु दिशो दश ।।

निःश्रेयसपदं यांतु स्थावराणि चराणि च ।। ३८ ।।

अवतारः कृतो ह्येष लोकानुग्रहकाम्यया ।।

तदेहि भगवन्प्रीत्या चरणं न्यस्य भूतले ।। ३९ ।।

ततः कर्पूरचूर्णैश्च सुमनोभिरवाकिरेत् ।।

पथि शाकुनसूक्तानि प्रपठंति द्विजातयः ।। 2.2.33.४० ।।

केचिन्मंगलगाथाश्च केचिज्जय जयेति च ।।

जितं त इति मन्त्रं वै केचिदुच्चैर्जपंति च ।। ४१ ।।

सूतमागधमुख्याश्च कीर्तिं पुण्यां मुदा जगुः ।।

स्वर्णदंडप्रकीर्णानां श्रेणी चोभयपार्श्वयोः ।। ४२ ।।

लीलयांदोलयंति स्म रणत्कंकणमंजुलम् ।।

स्वर्णपात्रपरिक्षिप्तकृष्णागुरुसुधूपितैः ।। ४३ ।।

सुरभीकृतसर्वाशा मुखे व्योमांगणे तथा ।।

चर्चरीझर्झरीवेणुवीणामाधुरिकादयः ।।

शब्दायंते सुमधुरं गोविंदविजयांतरे ।। ४४ ।।

एवं प्रवृत्ते समये कृष्णं रामपुरःसरम्।।

नयंति विप्रा भद्रां च क्षत्रियाश्च विशस्तथा ।। ४५ ।।

छत्रमाला समुदिता मुक्तास्रक्चीनतोरणा ।।

रत्नध्वजा हेमदंडाः पार्श्वयोर्मुरवैरिणः ।। ४६ ।।

राजा चतुर्विधा वर्णा अन्ये ये च पृथग्जनाः ।।

दीना महांतश्च तदा समानास्तत्र भांति वै ।। ४७ ।।

सलीलचरणन्यासं तूलिकास्तरणेषु तान् ।।

वासयंतः क्वचित्छांता देवांस्ते रथमन्वियुः ।। ४८ ।।

महोत्सवं समासाद्य गीतकोलाहलानि च ।।

करे कृत्वा जगन्नाथं भ्रामयित्वा रथोत्तमम् ।। ४९ ।।

रामं कृष्णं सुभद्रां च रथमध्ये निवेशयेत् ।।

चारुचंद्रातपाढ्येन मंडपेन विराजिते ।। 2.2.33.५० ।।

किंकिणीमालिकाभिश्च माल्यचामरभूषिते ।।

ससारकृष्णागुरुजधूपपूरितगर्भके ।। ५१ ।।

ततस्तान्वासयित्वा तु तूलिकासु सुरोत्तमान् ।।

भूषयेद्विविधैर्भक्त्या वस्त्रालंकार माल्यकैः ।। ५२ ।।

पूजयेदुपचारैस्तैः समृद्धैर्भक्तिभावितैः ।।

नातः परतरं विष्णोर्यात्रांतरमवेक्ष्यते ।। ५३ ।।

यत्र स्वयं त्रिलोकेशः स्यंदनेन कुतूहलात् ।।

मानयन्पूर्वमाज्ञां तां वर्षे वर्षे व्रजेदसौ ।। ५४ ।।

रथस्थितं व्रजंतं तं महावेदीमहोत्सवे ।।

ये पश्यंति मुदा भक्त्या वासस्तेषां हरेः पदे ।। ।। ५५ ।।

सत्यं सत्यं पुनः सत्यं प्रतिजाने द्विजोत्तमाः ।।

नातः श्रेयः परं विष्णोरुत्सवः शास्त्रसंमतः ।। ५६ ।।

यथा रथविहारोऽयं महावेदीमहोत्सवः ।।

यत्रागत्य दिवो देवाः स्वर्गं यांत्यधिकारिणः ।। ५७ ।।

किं वच्मि तस्य माहात्म्यमुत्सवस्य मुरद्विषः ।।

यस्य संकीर्तनात्पापं नश्येज्जन्म शतोद्भवम् ।। ५८ ।।

महावेदीं व्रजंतं तं रथस्थं पुरुषोत्तमम् ।।

बलभद्रं सुभद्रां च जन्मकोटिसमुद्भवम् ।। ५९ ।।

दृष्ट्वा पापं नाशयति नात्र कार्या विचारणा ।।

रथच्छायां समाक्रम्य ब्रह्महत्या व्यपोहति ।। 2.2.33.६० ।।

तद्रेणुसंसक्तवपुस्त्रिविधां पापसंहतिम् ।।

नाशयेत्स्वर्गगंगायाः स्नानजं फलमाप्नुयात् ।। ६१ ।।

घनांबुवृष्टियोगेन रथमार्गे तु पंकिले ।।

दिव्यदृष्ट्या च कृष्णस्य समस्तमलहारिणि ।। ६२ ।।

तत्र ये प्रणिपातांस्तु कुर्वते वैष्णवोत्तमाः ।।

अनादिव्यूढपंकांस्ते हित्वा मोक्षमवाप्नुयुः ।। ६३ ।।

गवां कोटिप्रदानस्य कन्यानामयुतस्य च ।।

वाजिमेधसहस्रस्य फलं प्राप्नोत्यसंशयः ।। ६४ ।।

अनुगच्छंति कृष्णं ये यात्राकौतूहलादपि ।।

अनुव्रजंति नित्यं वै देवाः शक्रपुरोगमाः ।। ६५ ।।

पश्यंति ये रथं यांतं दारुब्रह्म सनातनम् ।।

पदे पदेऽश्वमेधस्य फलं तेषां प्रकीर्तितम् ।। ६६ ।।

वेदैः स्तुवंति वेदानां वक्तारो मोक्षदायिनम्।।

इतिहासपुराणाद्यैः स्तोत्रैर्वापि स्वयंकृतैः ।। ६७ ।।

स्तुवंति पुंडरीकाक्षं ये वै विगतकल्मषाः ।।

वैष्णवं योगमास्थाय मोदंते नारदादिभिः ।। ६८ ।।

कुर्वंति वासुदेवाग्रे जयशब्देन वा स्तुतिम् ।।

ते वै जयंति पापानि विविधानि न संशयः ।। ६९ ।।

लयतालानभिज्ञोपि गीतमाधुर्यवर्जितः ।।

नर्त्तनं कुरुते वापि गायत्यथ नरोत्तमः।।

वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयः ।।2.2.33.७०।।

नामानि कीर्तयन्नस्य तेन याति सहैव यः ।।

अनुव्रज्यात्तत्फलं वै प्राप्नोत्यत्र न संशयः ।। ७१ ।।

जय कृष्ण जय कृष्ण जय कृष्णेति यो वदेत् ।।

गुंडिचानगरं यांतं कृष्णं भक्तिसमन्वितः ।।

न मातृगर्भवासस्य स च दुःखमवाप्नुयात् ।।७२।।

चामरैर्व्यजनैः पुष्पस्तबकैर्नीलचोलकैः।।

रथस्याग्रस्थितो यो वै वीजयेत्पुरुषोत्तमम्।।७३।।

स वीज्यमानोप्सरोभिर्गंधर्वैरुपशोभितः।।

अनुव्रजद्भिस्त्रिदशैर्महेंद्रासनसंस्थितः ।। ७४ ।।

भुनक्ति भोगानतुलान्यावदाभूतसंप्लवम् ।।

तदंते च ब्रह्मलोकं प्राप्य मुक्तिमवाप्नुयात् ।।७५ ।।

कृष्णस्य पुरतो ये वै पुष्पवृष्टिं प्रकुर्वते ।।

ते वै मनोगतान्सर्वान्प्राप्नुवंति मनोरथान् ।। ७६ ।।

सहस्रनामभिः पुण्यैः पर्यटंति रथं तु ये ।।

तेषां प्रदक्षिणं कुर्युस्त्रिदशानतकंधराः ।। ७७ ।।

वसंति वैकुण्ठगृहे विष्णुतुल्यपराक्रमाः ।। ७८ ।।

तस्मिन्काले महापुण्ये देवर्षिपितृसेविते ।।

एकं ब्रह्म त्रिधाभूतं माययानुगतं स्वया ।। ७९ ।।

साक्षाद्दारुस्वरूपेण महावेदीमहोत्सवम्।।2.2.33.८०।।

रथारूढः कौतुकवान्यत्रयाति जगत्प्रभुः।।

तस्मिन्काले पृथिव्यां तु चरेत्तत्र महोत्सवम् ।। ८१ ।।

देवा अप्युत्सवे तस्मिन्पुरुहूतपुरोगमाः ।।
अभिमानं परित्यज्य श्रेणीभूता हि पार्श्वयोः ।। ८२ ।।
प्रकुर्वते महायात्रां तैस्तैर्दिव्यैः परिच्छदैः ।। ८३ ।।
तेषामग्रेसरस्तत्र देवोपि प्रपितामहः ।।
चतुर्दशानां जगतां कर्त्ता यः परमेश्वरः ।। ८४ ।।
सोऽपि तत्र जगन्नाथं रथे यांतं महोत्सवे ।।
ब्रह्मलोकात्परावृत्य स्तुवन्वेदमयैः स्तवैः ।।
पदे पदे प्रणमति भगवंतं सनातनम् ।। ८५ ।।
यद्यप्यब्जनिधेः कृष्णान्न भेदोऽस्ति तथाप्ययम् ।।
महोत्सवस्य महिमा यत्र सर्वेऽनुयायिनः ।। ८६ ।।
नातः परतरो लोके महावेदीमहोत्सवात् ।।
सर्वपापहरो योगः सर्वतीर्थफलप्रदः ।। ८७ ।।
कृष्णमुद्दिश्य यस्तत्र दानं ददाति वै नरः ।।
यत्किंचिदक्षयफलं मेरुदानेन तत्समम् ।।८८।।
तस्याग्रे देवदेवस्य व्रजतो गुंडिचालयम् ।।
यत्किंचित्कुरुते कर्म तत्तदक्षयमश्नुते ।। ८९ ।।
उपायनानि नाना वै भक्ष्यभोज्यानि चैव हि ।।
समर्पयंति देवाय तत्प्रीत्यै वा द्विजन्मने ।।
तेषामक्षयपुण्यानि सर्वकामप्रदानि च ।। 2.2.33.९० ।।
हरेरग्रेसरा ये वै पश्यंतस्तन्मुखांबुजम् ।।
पदे पदे नमंतश्च पंकधूलिपरिप्लुताः ।। ९१ ।।
विहाय पाप कवचमभेद्यं कोटिजन्मभिः ।।
क्षणान्मुक्तिफलं प्राप्य यांति विष्णोः शुभालयम् ।। ९२ ।।
सर्वक्रतूनां तीर्थानां दानानां यांति ते फलम् ।।
भगवद्भक्तिभावानां नातः पुण्यतमो महः ।। ९३ ।।
एवं स भगवान्कृष्णः सुभद्रारामसंगतः ।।
व्रजन्स्यंदनश्रेष्ठस्थो द्योतयंश्च चतुर्दिशः ।। ९४ ।।
श्रीमदंगोपसृष्टेन मरुता सर्वदेहिनाम् ।।

पापानि नाशयञ्छ्रीमान्दयालुर्भक्तभावनः ।। ९५ ।।

अज्ञानामप्यविश्वासभाजां विश्वासहेतवे ।।

निसर्गमुक्तिदोऽप्येष यात्रारंभान्करोति वै ।। ९६ ।।

व्रजन्समृद्ध्या देवानां मर्त्यानां च जनार्दनः ।।

सूर्ये ललाटं तपति मध्याह्ने मार्गमध्यतः ।। ९७ ।।

श्रांता कर्षजनस्तस्थौ म्लायन्वै तद्रजोवृतः ।।

तत्रातपस्य शांत्यर्थं दर्पणेष्वभिषेचयेत् ।। ९८ ।।

पंचामृतैः शीततोयैः पुष्पकर्पूरवासितैः ।।

चामरैश्च जलार्द्रांतैः शीतलैर्व्यजनैस्तथा ।। ९९ ।।

वीजयेत्पुण्डरीकाक्षं सुभद्रां राममेव च ।।

शीतैश्च पानकैर्हृद्यैस्तथा खण्डविकारकैः ।। 2.2.33.१०० ।।

खर्जूरैर्नारिकेलैश्च नानारंभाफलैस्तथा ।।

तथा क्षीरविकारैश्च पनसैस्तृणराजकैः ।। १ ।।

इक्षुभिः स्वादुहृद्यैश्च फलैर्नानाविधैस्तथा ।।

वासितैः शीततोयैश्च पक्वतांबूलपत्रकैः ।। २ ।।

सकर्पूरलवंगाद्यैः पूजयेत्पुरुषोत्तमम् ।। ३ ।।

तस्मिन्काले द्विजश्रेष्ठा ये पश्यंति जनार्दनम् ।।

पूजयंति यथाशक्ति न ते संसारजं श्रमम् ।। ४ ।।

प्राप्नुवंति द्विजश्रेष्ठा ब्रह्मलोकनिवासिनः ।। ५ ।।

रथत्रयस्थितं देवत्रयं ये पुरुषर्षभाः ।।

प्रदक्षिणं प्रकुर्वंति त्रिश्चतुः सप्त एव वा ।। ६ ।।

दशप्रणामान्कृत्वांते स्थिताः प्रांजलयोऽग्रतः ।।

पुरारथस्थितान्ब्रह्मा स्तुतिभिर्याभिरब्जभूः ।।७।।

तुष्टाव ताभिर्देवेशं स्तुवंति परमेश्वरम् ।।

ये नरा ब्रह्मलोकं ते प्रयांति नियतं द्विजाः ।। ८ ।।

ततोऽपराह्णे देवेशं दक्षिणानिलवीजितम् ।।

शनैः शनैर्नयेद्गीतैर्वेणुवीणादिनादितैः ।। ९ ।।

बंदिनः स्तुतिपाठैश्च कलैर्मधुरिकास्वनैः ।।

निरंतरैः पुष्पवर्षैश्चामरांदोलनैस्तथा ।। 2.2.33.११० ।।

एवं व्रजति देवेशे सूर्यश्चास्तंगतो भवेत् ।।

दीपिकानां सहस्राणि ज्वालितानि सहस्रशः ।। १११ ।।

तदालोकप्रकाशेन मार्गशेषश्च नीयते ।।

रथावरोहणेनैषां मण्डपारोहणेन च ।। ११२ ।।

संमर्दः सुमहांस्तत्र दिदृक्षूणां कुतूहलात् ।।

मण्डपे वासयेद्देवं गुण्डिचाख्ये मनोहरे ।। ११३ ।।

चारुचंद्रातपे चारुमाल्यचामरभूषिते ।।

रत्नस्तंभमये स्वर्णवेदिकोपस्कृतांतरे ।। ११४ ।।

प्राचीरवलयावीते सुधालेपसमुज्ज्वले ।।

साधुसोपानघटिते चतुर्द्वारोपशोभिते ।। ११५ ।।

त्रैलोक्यांडबरयुते महावेद्यां महाक्रतोः ।।

प्रादुर्भावो महेशस्य यत्राभूद्दारुवर्ष्मणः ।। ११६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव खण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये गुंडिचायात्राकथनंनाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३४



।। जैमिनिरुवाच ।। ।।

अश्वमेधांगसरसो नृसिंहस्य च दक्षिणे ।।

तत्रासीनश्च भगवान्पुनश्चावतरन्निव ।। १ ।।

बभासे दिव्यरूपोऽसौ दुर्विभाव्यः सुरासुरैः ।।

तदा पूजोपहारैश्च भक्ष्यभोज्यादिकैस्तथा ।। ।। २ ।।

पूजयित्वा जगन्नाथं तोषयेद्गीतनृत्यकैः ।।

पुष्पोपहारैर्विविधैः सुगंधैरनुलेपनैः ।। ३ ।।

कृष्णागुरुजधूपैश्च गंधतैलप्रदीपकैः ।।

तोषयेज्जगतां नाथमनेकैरुपहारकैः ।। ४ ।।

बिन्दुतीर्थतटे तस्मिन्सप्ताहानि जनार्दनः ।।

तिष्ठेत्पुरा स्वयं राज्ञे वरमेतत्समादिशत् ।। ५ ।।

त्वत्तीर्थतीरे राजेंद्र स्थास्यामि प्रतिवत्सरम् ।।

सर्वतीर्थानि तस्मिंश्च स्थास्यंति मयि तिष्ठति ।। ६ ।।

तत्र स्नात्वा विधानेन तीर्थे तीर्थौघपावने ।।

सप्ताहं ये प्रपश्यंति गुंडिचामण्डपे स्थितम् ।। ७ ।।

मां च रामं सुभद्रां च मत्सायुज्यमवाप्नुयुः ।।

ततस्तस्मिन्महापुण्ये सर्वपापप्रणाशने ।। ८ ।।

सर्वतीर्थैकफलदे विष्णु प्रीतिकरे शुभे ।।

स्नात्वा संतर्प्य विधिवत्पितॄन्देवानतंद्रितः ।। ९ ।।

तटस्थं नरसिंहं तं पूजयित्वा प्रणम्य च ।।

महावेदीं नरो गत्वा कृतशौचाचमक्रियः ।। 2.2.34.१० ।।

पूजयेत्पूर्ववद्विप्राः प्रणमेद्वापि भक्तितः ।।

सप्ताहं यो नरो नारी न सा प्राकृतमानुषी ।। ११ ।।

विष्णुसायुज्यमाप्नोति शासनान्मुरवैरिणः ।।

दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् ।। १२ ।।

यत्किंचित्क्रियते कर्म संनिधौ जगदीशितुः ।।

स्वल्पं वाप्यथवा भूरि कोटिकोटिगुणं भवेत्।। १३ ।।

तुलापुरुषदानानि महादानानि यो ददेत् ।।

एके प्रदत्ते दानेपि सर्वं दत्तं भवेद्द्विजाः ।। १४ ।।

सर्वं मेरुसमं दानं सर्वे व्याससमा द्विजाः ।।

महावेद्यां गते कृष्णे योगोऽयं खलु दुर्लभः ।। १५ ।।

अर्द्धोदयादिका योगाः स्कन्देन परिभाषिताः ।।

महावेद्याख्ययोगस्य कला नार्हति षोडशीम् ।। १६ ।।

अतः परं प्रवक्ष्यामि पितृणां कार्यमुत्तमम् ।।

यावज्जीवं गयाश्राद्धैरलभ्यं भुवि यत्फलम् ।। १७ ।।

दिविस्था नरकस्था वा तिर्यग्योनिगतास्तथा ।।

तथा मनुष्यजातिस्थाः सर्वे पितृपितामहाः ।। १८ ।।

शतं पुरुषविख्याता यं वांछंति सुतैः कृतम्।।

तं वो विधिं प्रवक्ष्यामि शृणुध्वं मुनयो वरम् ।। १९ ।।

मघा वै पितृनक्षत्रं पितृणा प्रीतिदं परम् ।।

तत्र श्राद्धं तु प्रीणाति दत्तं पुत्रैर्मुदान्वितैः ।। 2.2.34.२० ।।

पंचमी च तिथिः श्रेष्ठा श्राद्धेभ्युदयकारिणी ।।

उभयोर्यदि संयोगो महापुण्यतमा तिथिः ।। २१ ।।

यस्यां श्राद्धे कृते पुत्रैः पितृणामुद्धृतिर्भवेत् ।।

सर्वतीर्थमये तस्मिन्संनिधौ मुरवैरिणः ।।२२।।

श्राद्धं चेच्छ्रद्धया कुर्यान्नीलकण्ठनृसिंहयोः ।।

मध्ये मेध्यतमे देशे योगे परमदुर्लभे ।। २३ ।।

पुरुषाञ्छतमुद्धृत्य ब्रह्मलोके महीयते ।।

प्रशस्यः कुतपः कालो मन्दीभूतदिवाकरः ।। २४ ।।

पितॄनुद्दिश्य वा दद्यादशक्तः कनकं शुचिः ।।

तर्पयित्वा तिलैः सम्यक्पैतृकीं प्रीतिमुत्तमाम् ।। २५ ।।

अथवा भोजयैद्विप्रान्भोज्यमूल्यानि वा ददेत् ।।

एकस्मै वा गुणवते सहस्रं भोजनं ददेत् ।। २६ ।।

गुणागुणविवेकस्तु नात्र योगे विधीयते ।।

तस्मिन्सुदुर्लभे योगे सर्वे मुनिसमा द्विजाः ।। २७ ।।

आषाढस्य सिते पक्षे पंचमी पितृदैवतम् ।।

नक्षत्रं जगदीशस्य महावेदीसमागमः ।। २८ ।।

एते यदा त्रयः स्युश्चेदिंद्रद्युम्नसरोवरे ।।

चतुष्पादः स्मृतो योगः पितृणामक्षयप्रदः ।।२९।।

पितृकार्ये न सीदंति निरूप्य श्राद्धमत्र वै ।।

शृणुध्वमन्यद्विप्रा वै प्रसंगाच्च ब्रवीमि वः ।। 2.2.34.३० ।।

नभस्य दर्शे यः कुर्याच्चतुर्ष्वपि युगादिषु ।।

श्राद्धं पितॄन्समुद्दिश्याऽश्वमेधांगसंभवे ।। ३१ ।।

गयाश्राद्धसहस्रस्य श्रद्धया विहितस्य वै ।।

फलं यद्धि समं त्वस्य नात्र कार्या विचारणा ।। ३२ ।।

दानं होमो जपश्चापि सर्वपापापनोदनः।।

दिनानि सप्त यान्यत्र कृष्णे वसति मंडपे ।। ३३ ।।

एकस्मादुत्तरं श्रेयो यत्तस्मादुत्तरोत्तरम् ।।

आषाढशुक्ल तृतीयायां प्रातःस्नानं समाचरेत् ।। ३४ ।।

इंद्रद्युम्नतटे देशे नृसिंहक्षेत्र उत्तमे ।।

व्रतमेतत्तु गृह्णीयात्संकल्प्य विधिवन्नरः ।। ३५ ।।

वनजागरणं नाम भगवत्प्रीतिवर्द्धनम् ।।

सर्वपापप्रशमनं सर्वव्रतफलप्रदम् ।। ३६ ।।

दिनानि सप्त मौनी स्यात्कृतत्रिषवणक्रियः ।।

कुंभे च पूजयेद्देवं त्रिसंध्यं भक्तिभावितः ।। ३७ ।।

गोघृतेनाथ तैलेन तिलजेन प्रदीपयेत् ।।

अहर्निशं हरेरग्रे रक्षेत्तं यत्नतो व्रती ।। ।। ३८ ।।

दिवा दिवा वसेन्मौनी रात्रौ रात्रौ च जागृयात् ।।

मंत्रं भागवतं जप्यान्नित्यकृत्यांतरे व्रती ।। ३९ ।।

उपवासपरो भूत्वा सप्ताहानि नयेद्व्रती ।।

अष्टमे प्रातरुत्थाय प्रतिष्ठां कारयेद्दिने ।। 2.2.34.४० ।।

तस्मिन्नेव तीर्थवरे स्नात्वागत्य गृहं पुनः ।।

मंडले सर्वतोभद्रे पूर्वे कुंभं निवेशयेत ।। ४१ ।।

तत्रावाह्य हृषीकेशं पूजयेदुपचारकैः ।।

तस्य पश्चिमदेशे च स्थंडिले विधिसंस्कृते ।। ४२ ।।

अग्निं प्रणीय गृह्योक्तविधिना ब्राह्मणावृतः ।।

अग्निकार्यं प्रकुर्वीत समिदाज्यचरूंस्तथा ।। ४३ ।।

सहस्रं जुहुयादग्नौ प्रत्येकं वा शतं शतम् ।।

गायत्री वैष्णवी या वै तया होमविधिः स्मृतः ।। ।। ४४ ।।

संप्राश्य दक्षिणां दयाद्धेनुं वस्त्रं हिरण्यकम् ।।

विप्रांश्च भोजयेदंते प्रीतये विश्वसाक्षिणः ।। ४५ ।।

व्रतराजमिमं कृत्वा विधिनानेन भो द्विजाः ।।

चतुर्वर्गानवाप्नोति यो यः कामानभीप्सति ।। ४६ ।।

नारी वा श्रद्धया युक्ता कुर्याद्वेदीमहोत्सवम् ।।

सापि तत्फलमाप्नोति या कुर्याद्व्रतमुत्तमम् ।। ४७ ।।

यात्राकर्तुः फलं यादृग्व्रतकर्तुश्च तत्फलम् ।।

भवते वै द्विजश्रेष्ठाः कथितं वो मुदान्विताः ।। ४८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३५

https://sa.wikisource.org/s/h4k
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

अतः परं प्रवक्ष्यामि रथरक्षाकरं विधिम्।।

भूतप्रेतादयो घोरा दारुणान्यद्भुतानि च ।। १ ।।

न बाधंते रथान्येन मुनयो वश्च यन्मतम् ।।

प्रत्यहं पूजयेद्देवान्कृष्णादीन्ध्वजसंस्थितान् ।। २ ।।

गंधपुष्पाक्षतैर्माल्यैरुपहारैरनुत्तमैः ।।

गीतनृत्तादिकैश्चैव धूपदीपनिवेदनैः ।। ।। ३ ।।

दिक्पालेभ्यो बलिं दद्यात्पायसान्नेन चान्वहम् ।।

भूतप्रेतपिशाचेभ्यो दद्याच्च बलिमुत्तमम् ।। ४ ।।

रक्षेच्च यत्नतस्तान्वै रथानारोहणोचितान् ।।

यथा न कश्चिदारोहेन्नरो ग्राम्यपशुस्तथा ।।

पक्षिणश्च विशेषेण येषां वासो न शोभनः ।। ५ ।।

अष्टमेऽह्नि पुनः कृत्वा दक्षिणाभिमुखान्रथान्।।

विभूषयेद्वस्त्रमाल्यपताकैश्चामरादिभिः ।। ६ ।।

नवम्यां वासयेद्देवांस्तेषु प्रातः समृद्धिमत् ।। ७ ।।

दक्षिणाभिमुखा यात्रा विष्णोरेषा सुदुर्लभा ।।

यात्रा प्रयत्नतः सा हि भक्तिश्रद्धासमन्वितैः ।। ८ ।।

यथा पूर्वा तथा चेयं द्वे च मुक्तिप्रदायिके ।।

यात्राप्रवेशौ देवस्य एक एवोत्सवो मतः ।। ९ ।।

पुराविदो वदंत्येतां यात्रां नवदिनात्मिकाम् ।।

एषा त्र्यवयवा यात्रा संपूर्णा यैरुपासिता ।। 2.2.35.१० ।।

सुसंपूर्णफलस्तेषां महावेदीमहोत्सवः ।। ११ ।।

गुंडिचामंडपात्कृष्णमायांतं दक्षिणामुखम् ।।

रथस्थं बलिनं भद्रां पश्यंतो मुक्तिभागिनः । १२ ।।

उत्तराभिमुखान्दृदृष्ट्वा लभंते यादृश फलम् ।।
रामादीन्स्यंदनस्थान्ये पश्यंत्येवं महोदयान् ।।
यादृशं फलमाप्नुयुस्तादृशं दक्षिणामुखान् ।। ।। १३ ।।
पदा यांतं रथे यांतं यः पश्येद्दक्षिणामुखम् ।।
तस्य जन्म कृतार्थं स्याद्वाजिमेधः पदे पदे ।। १४ ।।
स्तुतिभिः प्रणिपातैश्च पुष्पवृष्टिभिरेव च ।।
नानानृत्तोपहारैश्च व्यजनच्छत्रचामरैः ।।
उपायनैर्बहुविधैरुपतिष्ठेद्रथाग्रतः ।। १५ ।।
नीलाचलं समायांतं रथस्थं दक्षिणामुखम्।
ये पश्यंति हृषीकेशं सुभद्रां लांगलायुधम् ।। १६ ।।
कामकल्पतरुं पुंसां दर्शनादेव मुक्तिदम् ।।
ते व्रजंति महात्मानो वैकुण्ठ भवनं हरेः ।। १७ ।।
रथेन विचरंतं तं सिन्धुतीरे जनार्दनम् ।।
पश्यन्तं करुणापांगैः प्रणतान्पुरतो नरान् ।। १८ ।।
दक्षिणाभिमुखं यांतं प्रासादं नीलभूधरे ।।
सर्वतीर्थनिधिं सर्वदानकल्पतरुं हरिम् ।। १९ ।।
स्तुवंतः प्रणमंतश्च श्रद्दधानाश्च ये नराः ।।
न ते पुनरिहायांति ब्रह्मलोकस्थिता ध्रुवम्।। 2.2.35.२० ।।
मुनयः कथितो वोऽयं महावेदीमहोत्सवः ।।
यस्य संकीर्तनादेव निर्मलो जायते नरः ।। २१ ।।
यश्चेदं कीर्तयेन्नित्यं प्रातरुत्थाय मानवः ।।
शृणुयादपि बुद्धिस्थः शक्रलोकं व्रजेदसौ ।। २२ ।।
प्रत्यर्चारूपमपि वा रथमास्थाप्य यो हरेः ।।
कुर्याद्यात्रामिमां श्रद्धाभक्तिभावेन मानवः ।। २३ ।।
सोऽपि विष्णोः प्रसादेन गुंडिचोत्सवजं फलम्।।
प्राप्य वैकुण्ठभवनं याति नात्र विचारणा ।। २४ ।।
पश्य श्रीर्यावती विप्रा भक्तिर्वा श्रद्धयान्विता ।।
तावतीयं महायात्रा यो यथा कर्तुमिच्छति ।। २५ ।।

इदं पवित्रं परमं रहस्यं वेधसोदितम् ।।
कारयित्वाथवा दृष्ट्वा यन्नरो नावसीदति ।। २६ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये पञ्चत्रिंशोऽध्यायः ।। ३५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३६



।। जैमिनिरुवाच ।। ।।

अतः परं प्रवक्ष्यामि शयनोत्सवमुत्तमम् ।।

आषाढीमवधिं कृत्वा हरेः स्वापस्तु कर्कटे ।। १ ।।

वार्षिकांश्चतुरो मासान्यावत्स्यात्कार्त्तिकी द्विजाः ।।

अयं पुण्यतमः कालो हरेराराधनं प्रति ।। २ ।।

काश्यां बहुयुगं वासान्नियमव्रतसंस्थितेः ।।

फलं यदुक्तं तद्विद्यात्क्षेत्रे श्रीपुरुषोत्तमे ।। ३ ।।

चातुर्मास्यदिनैकेन वसतः सन्निधौ हरेः ।।

वार्षिकाणां चतुर्णां तु यान्यहानि वसन्नयेत् ।। ४ ।।

पुण्यक्षेत्रे जगन्नाथसन्निधौ निर्मलांतरे ।।

प्रत्यक्षं वाजिमेधस्य सहस्रस्य लभेत्फलम् ।। ५ ।।

स्नात्वा सिंधुजले पुण्ये दृष्ट्वा श्रीपुरुषोत्तमम् ।।

चातुर्मास्यव्रते तिष्ठन्न शोचति कुतश्चन ।। ६ ।।

चातुर्मास्ये निवसति क्षेत्रे श्रीपुरुषोत्तमे ।।

साक्षाद्दृष्टिर्भगवतस्तदद्द्वयं मुक्तिसाधनम् ।। ७ ।।

तस्मात्सर्वाणि संत्यज्य श्रौतस्मार्त्तानि मानवः ।।

प्रयत्नान्निवसेत्पुण्ये क्षेत्रे श्रीपुरुषोत्तमे ।। ८ ।।

भोगिभोगासने सुप्तश्चातुर्मास्येषु वै प्रभुः ।।

सर्व क्षेत्रेषु सान्निध्यं न करोति जगद्गुरुः ।। ९ ।।

अत्र साक्षान्निवसति यथा वैकुण्ठवेश्मनि ।।

द्वादशस्वपि मासेषु भगवानत्र मूर्तिमान् ।।

मुक्तिदश्चक्षुषा दृष्टश्चातुर्मास्ये विशेषतः ।। 2.2.36.१० ।।

अष्टमासनिवासेन दृष्ट्वा विष्णुं दिने दिने ।।

यदाप्नोति फलं तद्धि चातुर्मास्यदिनैकतः ।। ११ ।।

चातुर्मास्यनिवासेन क्षेत्रे श्रीपुरुषोत्तमे ।।

दिनं दिनं महापुण्यं सर्वक्षत्रनिवासजम् ।।

फलं ददाति भगवान्क्षेत्रे वर्षनिवासतः ।। १२ ।।

सर्वपापप्रसक्तोऽपि सर्वाचारच्युतोऽपि च ।।

सर्वधर्मबहिर्भूतो निवसेत्पुरुषोत्तमे ।। १३ ।।

चातुर्मास्यमथैकं यः कुर्याद्वै पापकृन्नरः ।।

विहाय सर्वपापानि बहिरंतश्च निर्मलः ।। १४ ।।

नरसिंहप्रसादेन वैकुण्ठभवनं व्रजेत् ।। १५ ।।

तस्मान्नरः सर्वभावैर्विष्णोः शयनभावितान् ।।

वार्षिकांश्चतुरो मासान्निवसेत्पुरुषोत्तमे ।। १६ ।।

कुर्यादन्यन्न वा कुर्याज्जन्मसाफल्यमृच्छति ।। १७ ।।

आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवम् ।।

मण्डपं रचयेत्तत्र शयनागारमुत्तमम् ।। १८ ।।

देवस्य पुरतः शय्यां रत्नपल्यंकिकोपरि ।।

स्वास्तीर्य सोपधानां तु मृदुचीनोत्तरच्छदाम् ।। १९ ।।

कर्पूरधूलिविक्षिप्तां साधुचंद्रातपां शुभाम् ।।

सर्वतो वेष्टितां छिद्ररहितां चदनोक्षिताम् ।। 2.2.36.२० ।।

साधुद्वारां समां स्निग्धां नानाचित्रोपशोभिताम्।।

एकं स्वापगृहं कृत्वा निशीथे प्रतिमात्रयम् ।। २१ ।।

सौवर्णं राजतं वापि रीतिजं दार्षदं तथा ।।

यथाश्रद्धं प्रकुर्वीत प्रशस्तं चोत्तरोत्तरम्।। २२ ।।

तत्त्रयाणां सुराणां वै पादमूले यथातथम् ।।

निधाय पूजयेद्देवांस्तच्छेषं तेषु निक्षिपेत् ।। २३ ।।

पूजांते भावयेदैक्य तेषां कृष्णादिभिः सह ।।

एह्येहि भगवन्देव सर्वलोकैकजीवन ।। २४ ।।

स्वापार्थं चतुरो मासान्सर्वकल्याणवृद्धये ।।

इति संप्रार्थ्य देवेशांस्तदंगात्तत्स्रजां त्रयम् ।। २५ ।।

प्रत्यर्चासु विनिक्षिप्य मांगल्यस्तुतिगीतिभिः ।।

नयेच्छय्यागृहद्द्वारं वासयेद्धटिकात्रये ।।२६।।

पंचामृतैः स्नापयेत्तान्पृथक्पलशताधिकैः ।।

सुगन्धचंदनैर्लिप्तान्वस्त्रालंकरणादिभिः ।। २७ ।।

पूजयित्वा यथान्यायं प्रांजलिर्मंत्रमुच्चरेत् ।।

जगद्वन्द्य जगन्नाथ जगत्त्राणपरायण ।।२८ ।।

हिताय जगतामीश चातुर्मास्यान्घनागमान् ।।

सुप्त्वा प्रशमयारिष्टाञ्छक्रेण सह पूजितः ।। २९ ।।

एह्येहि शयनागारं सुखमत्र स्वप प्रभो ।।

इति संप्रार्थ्य देवेशं स्वापयेत्पुरुषोत्तमम् ।। 2.2.36.३० ।।

सुदृढं बन्धयेद्द्वारं विष्णोः शयनवेश्मनः ।।

स्वापयित्वा जगन्नाथं लभते सुखमुत्तमम् ।। ।। ३१ ।।

वार्षिकांश्चतुरो मासान्प्रसुप्ते वै जनार्दने ।।

व्रतैरनेकैर्नियमैर्मासान्वै चतुरः क्षिपेत् ।। ३२ ।।

कल्पस्थायी विष्णुलोके नरो भक्तो भवेद्ध्रुवम्।।

नियमव्रतानि गदतः शृणुध्वं मुनयो मम ।। ३३ ।।

मंचखट्वादिशयनं वर्जयेद्भक्तिमान्नरः ।।

अनृतौ न व्रजेद्भार्यां मासं मधु परौदनम् ।। ।। ३४ ।।

पटोलं मूलकं चैव वार्ताकं च न भक्षयेत् ।।

अभक्ष्यं वर्जयेद्दूरान्मसूरं सितसर्षपम् ।। ३५ ।।

राजमाषान्कुलत्थांश्च आशुधान्यं च संत्यजेत्।।

शाकं दधि पयो माषाच्छ्रावणादौ क्रमादिमान् ।। ३६ ।।

राजगोपयतींस्त्यक्त्वा नारोहेच्चर्मपादुके ।।

वार्षिकांश्चतुरो मासानव्रतेन नयेद्यदि ।।

तस्य पापस्य शांत्यर्थं कार्तिके वा व्रती भवेत् ।। ३७ ।।

नमः कृष्णाय हरये केशवाय नमोनमः ।।

नमोऽस्तु नारसिंहाय विष्णवे पापजिष्णवे ।। ३८ ।।

सायं प्रातर्दिवामध्ये कर्मांतेषु च योजयेत् ।। ३९ ।।

तस्य पापानि घोराणि चितानि बहुजन्मसु ।।

निर्दहत्येव सर्वाणि तूलराशिमिवानलः ।। 2.2.36.४० ।।

एकाहारो यताहारो विष्णुनिर्माल्यभोजनः ।।

आषाढीमवधिं कृत्वा कार्तिक्यवधि यो भवेत् ।।

नक्तभोजी भवेद्वापि स्वर्गस्तस्याल्पकं फलम्।। ४१ ।।

तैलाभ्यंगं दिवास्वापं मृषावादं च वर्जयेत् ।।

आषाढशुक्लैकादश्यां संक्रांतौ कर्कटस्य वा ।। ४२ ।।

आषाढ्यां वा नरो भक्त्या गृह्णीयान्नियमं व्रती ।।

सर्वपापहरं देवं प्रपूज्य मधुसूदनम् ।। ४३ ।।

तदग्रे प्रतिसंकल्प्य व्रतार्चनजपादिकम् ।।

प्रार्थयेत्परमानन्दं कृतांजलिपुटो व्रती ।। ४४ ।।

चातुर्मास्यव्रतं देव गृहीतं त्वत्प्रसादतः ।।

तव प्रसादान्निर्विघ्नं सिद्धिमायातु केशव ।। ४५ ।।

व्रतेस्मिन्यद्यसंपूर्णे परलोकगतिर्भवेत्।।

तन्मे भवतुसंपूर्णं त्वत्प्रसादादधोक्षज ।। ४६ ।।

इति संप्रार्थ्य देवेशं पूर्वोक्तनियमे स्थितः ।।

यापयेच्चतुरो मासान्विष्ण्वर्पित मतिर्व्रती।।४७।।

पारणं प्रतिमासांते प्रीत्यै कृष्णस्य कारयेत् ।।४८।।

मिष्टान्नैर्भोजयेद्विप्रान्पूजयित्वा जगत्पतिम् ।।

असमर्थस्तु कार्तिक्यां पारयेद्व्रतमुत्तमम्।।४९।।

तस्यां पूज्य जगन्नाथं वह्निस्थं तर्पयेत्ततः ।।

द्विजाग्र्यान्पायसैर्मिष्टैर्विष्णुभक्त्या प्रपूजयेत् ।।2.2.36.५०।।

यथाशक्त्या प्रदद्याद्वै कनकं वस्त्रमेव च ।।

अशक्तः कार्तिके मासि व्रतं कुर्यात्पुरोदितम् ।।५१।।

व्रतं च विविधं विष्णोः कृच्छ्रचांद्रायणं तथा ।।५२।।

पयः पीत्वा नयेद्यस्तु शाकाहारेण वा पुनः ।।

भुक्त्वात्र विपुलान्भोगान्परं निर्वाणमृच्छति।।५३।।

तत्रापि चेदशक्तः स्याद्भीष्मपंचकमुत्तमम्।।

प्रीतये देवदेवस्य वन्यवृत्तिर्भवेद्व्रती ।।५४।।

एतद्व्रतं समाख्यातं भगवत्प्रीतिकारकम् ।।

सर्वपापप्रशमनं विष्णुलोकगतिप्रदम् ।।

धन्यं यशस्यमायुष्यं सर्वकामप्रसाधनम् ।।५५।।

मुनयः प्रोक्तमेतद्वो रहस्यं शृणुतापरम् ।।

एतद्व्रतानि चान्यानि व्रतानि सबहूनि च ।। ५६ ।।

भगवद्भक्तिहीनानां जानीध्वं विफलानि वै ।।

फलं महाक्रतूनां यत्तीर्थानां फलमुत्तमम् ।। ५७ ।।

दानानां तपसां चैव सात्त्विकानां च यत्फलम् ।।

एकया विष्णुभक्त्या तत्समग्रं फलमश्नुते ।। ५८ ।।

ये पश्यंति महात्मानः शयनोप्सवमुत्तमम्।।

मातुर्गर्भे न स्वपंति कारयंति च ये महम् ।। ५९ ।।

उत्सवांते व्रतं चेदं प्रतिज्ञाय तदग्रतः ।।

पर्याप्तं पारयित्वा तु ब्रह्मलोके महीयते ।। 2.2.36.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये षट्त्रिंशोऽध्यायः ।। ३६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३७



।। जैमिनिरुवाच ।। ।।

अतः परं प्रवक्ष्यामि दक्षिणायनमुत्तमम् ।।

संक्रांतेः पूर्वकाले याः कला वै विंशतिर्मताः ।। १ ।।

अयनं पुण्यकालोऽयं पुण्यकर्मसु कर्मिणाम् ।।

पंचामृतैस्तत्र देवं स्नापयेत्स्वापवद्द्विजाः ।। २ ।।

सर्वांगं लेपयेदस्यागुरुकर्पूरचंदनैः ।।

सुगन्ध माल्यालंकारैश्चारुवस्त्रैश्च दीपकैः ।। ३ ।।

नानाभक्ष्योपहारैश्च पूजयेत्परमेश्वरम् ।।

कर्पूरालतिकामुच्चैर्मुखाभ्याशे हरेर्ददेत् ।। ४ ।।

दूर्वांकुराक्षतैर्नीराजनेनाथ प्रवन्दयेत् ।।

मांगल्यगीतनृत्ताद्यैर्नारी हुलुहुलां वदेत् ।। ५ ।।

पूजितं पूज्यमानं च यः पश्येत्पुरुषोत्तमम् ।।

पूजाशतगुणं पुण्यं तस्मै दद्याज्जनार्दनः ।। ६ ।।

अयने दक्षिणे तस्मिन्नर्च्यमानं श्रियः पतिम् ।।

विहाय सर्वपापानि विष्णुलोकं व्रजंति ते ।। ७ ।।

स्वल्पा वा महती यात्रा सर्वा मुक्तिप्रदा हरेः ।।

तस्मिंस्तस्मिन्दिने दृष्टो भगवान्मुक्तिदो ध्रुवम् ।। ८ ।।

विश्वासहेतोर्मूर्खाणां यात्रा ह्येताः कृपावता ।।

विष्णुना कथिता विप्राः पापिनां किल्बिषापहाः ।। ९ ।।

आयासजनितं पुण्यं मन्यन्ते ये नराधमाः ।।

लक्ष्मीपतेर्भोजनाय संस्कार्योऽत्र महानसः ।। 2.2.37.१० ।।

वैष्णवाग्निं समाधाय निरुप्य चरुमुत्तमम् ।।

वैश्वदेवं प्रकुर्वीत भगवत्पाकसाधनम् ।।११।।

ब्रह्मणे वास्तुपतये प्रजानां पतये तथा ।।

विष्णवे विश्वकर्त्रे च शुच्यग्नौ जुहुयाच्छुचिः ।। १२ ।।

राज्ञा नियुक्त आचार्यः श्रौतस्मार्तक्रियापरः ।।

द्वारपालप्रचंडाभ्यामैशान्यां क्षेत्रपालिने ।। १३ ।।

दक्षिणे च विरूपाय खगानां पतये तथा ।।

दुर्गासरस्वतीभ्यां च नैर्ऋत्यां विनिवेदयेत् ।। १४ ।।

महालक्ष्मीमहेंद्राभ्यां प्राच्यां दिशि बलिः स्मृतः ।।

विष्णु पारिषदेभ्योऽथ पशूनां पतये तथा ।। १५ ।।

उदीच्यां बलिदानं तु नारदायाथ पश्चिमे ।।

आग्नेय्यामग्नये दद्याद्वायव्यां विश्वसाक्षिणे ।। १६ ।।

पञ्चश्वसनरूपेभ्यो विश्वकर्त्रेऽथ मध्यतः ।।

आद्यंतयोर्जलं दद्यात्प्रत्येकं बलिकर्मणि ।। ३७ ।।

दत्त्वा वलिं तदग्नौ तु कारयेत्पाकमुत्तमम् ।।

संध्यात्रये भगवतः पूजायै चरुकारणात् ।। १८ ।।

चरुसंस्कारकांगानि भक्ष्यभोज्यादिकानि वै ।।

न दीक्षान्योजयेत्तत्र लोके त्रैवर्णिको नृपः ।। ।। १९ ।।

आर्यान्पवित्राञ्छूद्रान्वा वर्णांश्च परिसेवकान् ।।

लौकिकव्यवहारोऽयं पचति श्रीः स्वयं ध्रुवम् ।। 2.2.37.२० ।।

भुंक्ते नारायणो नित्यं तया पक्वं शरीरवान् ।।

अमृतं तद्धि नैवेद्यं पापघ्नं मूर्ध्नि धारणात् ।। २१ ।।

भक्षणान्मद्यपानादिमहादुरितनाशनम् ।।

आघ्राणान्मानसं पापं दर्शनाद्दृष्टिजं तथा ।। २२ ।।

आस्वादात्तु कृतं पापं श्रावणं च व्यपोहति ।।

स्पर्शनात्त्वक्कृतं पापं मिथ्याभाषणजं तथा ।। २३ ।।

गात्रलेपाद्दहेत्पापं शारीरं वै न संशयः ।। २४ ।।

महापवित्रं हि हरेर्निवेदितं नियोजयेद्यः पितृदेवकर्मसु ।।

तृप्यंति तस्मै पितरः सुरास्तथा प्रयांति लोकं मधुसूदनस्य ते ।। २५ ।।

नात्ः पवित्रं वस्त्वस्ति हव्यकव्येषु भो द्विजाः ।।

नराणां रूपमास्थाय तदश्नंति दिवौकसः ।। २६ ।।

अभिमानो महांस्तत्र देवदेवस्य चक्रिणः ।।

श्वेतो नाम महाराजः पुरा त्रेतायुगेऽभवत् ।। २७ ।।

व्रतस्थोऽपि महाभक्तिं चकार पुरुषोत्तमे ।।

इन्द्रद्युम्नेन रचितभोगमात्रानुसारतः ।। २८ ।।

भोगान्प्रकल्पयामास प्रत्यहं श्रीपतेर्मुदा ।।

भक्ष्यभोज्यान्यनेकानि षड्रसांश्च सुसंस्कृतान् ।। २९ ।।

माल्यानि च विचित्राणि सुगंधमनुलेपनम् ।।

गीतवादित्रनृत्यानि दिव्यानि सुबहूनि च ।। 2.2.37.३० ।।

राजोपचारा बहुशोऽवसरेऽवसरे हरेः ।।

बहुवित्तव्ययायास भक्तिभावनिरूपकाः ।। ३१ ।।

तत्तद्वैष्णवशास्त्रोक्तचित्रभोगाः पृथग्विधाः ।।

कल्पितास्तेन भूपेन विद्वत्पंकजभानुना ।। ३२ ।।

प्रातः पूजनवेलायां हरिं द्रष्टुं जगाम सः ।।

कस्मिंश्चिद्दिवसे राजा पूज्यमानं ददर्श तम् ।। ३३ ।।

प्रणम्य देवदेवं तु बद्धांजलिपुटो मुदा ।।

प्रासादद्वारनिकटे तस्थिवानृपसत्तमः ।। ३४ ।।

दृष्ट्वा स्वयं विरचितानुपचाराननुत्तमान् ।।

उपायनसहस्रं च हरेरग्रे प्रकल्पितम् ।। ३५ ।।

चिंतयामास मनसा किंचिद्ध्यानावलंबितः ।।

मनुष्यकल्पितंभोगं ग्रहीष्यति हरिः किमु ।। ३६ ।।

देवैर्दिव्योपचारैर्यो शक्यते नार्चनाविधौ ।।

मानसैरुपहारैर्यं पूजयंति यतव्रताः ।। ३७ ।।

भावदुष्टो बहिर्यागो न मुदे तस्य निश्चितम् ।।

इत्थं संचितयन्राजा दिव्यासनगतं विभुम् ।। ३८ ।।

भुंजानमन्नपानाढ्यं श्रिया सुपरिवेषितम् ।।

दिव्यस्रजालंकृतया दिव्यगंधदुकूलया ।। ३९ ।।

अनर्घ्यरत्नमंजीरसिंजितेन सुरालयम् ।।

पूरयंत्या स्वर्णदर्व्या ददत्या सादरं रसान् ।। 2.2.37.४० ।।

भगवत्प्रतिरूपैश्च भुंजानैः परिवेष्टितम् ।।
दृष्ट्वा कृतार्थमात्मानं मन्यमानस्तदद्भुतम् ।। ४१ ।।
प्रोन्मीलिताक्षः स पुनः प्राग्दृष्टं समवैक्षत ।।
अतः प्रभृति राजासौ परां निर्वृतिमाप्तवान् ।। ४२ ।।
निवेदिताशीर्व्रतवांश्चचार सुमहत्तपः ।।
अकालमृत्युनाशाय स्वराज्ये मृतमुक्तये ।। ४३ ।।
मंत्रराजं जपन्नित्यं श्रितानां कल्पपादपम् ।।
ददर्श शतवर्षांते नृहरिं दुरितापहम् ।। ४४ ।।
योगासनाब्जनिलयं वामांगावस्थितश्रियम् ।।
दिव्यालंकृतसर्वांगं स्फटिकामलविग्रहम् ।। ४५ ।।
त्रिदशैः सिद्धमुक्तैश्च स्तूयमानं स्मिताननम् ।।
भ्रांतो विस्मयभीतिभ्यां हर्षगद्गदया गिरा ।।
प्रसीद नाथेति लपन्पपात धरणीतले ।। ४६ ।।
तपःकृशं तं प्रणतं दृष्ट्वा मनुजकेसरी ।।
अकल्मषं क्षितिपतिं विवक्षुर्भक्तवत्सलः ।। ४७ ।। ।।
।। श्रीभगवानुवाच ।। ।।
उत्तिष्ठ वत्स भक्त्या ते प्रसन्नं विद्धि मां प्रभुम् ।।
मयि प्रसन्ने नालभ्यं वरं तत्प्रार्थ्यतां भवान् ।।४८।।
श्रुत्वेत्थं भगवद्वाक्यं समुत्तस्थौ ततो नृपः ।।
बद्धांजलिपुटो नम्रो भक्त्योवाच जनार्दनम् ।। ४९ ।।
।। श्वेत उवाच ।। ।।
स्वामिन्यदि प्रसादस्ते मयि जातः सुदुर्लभः ।।
सारूप्यमथ संप्राप्य स्थास्यामि तव सन्निधौ ।। 2.2.37.५० ।।
स्थास्ये यावन्नृपत्वेऽहं मद्राज्ये नो जनः क्वचित् ।।
अकाले म्रियतां जंतुः काले चेन्मुक्तिमाप्नुयात् ।।५१।।
तच्छ्रुत्वा भगवान्प्राह श्वेतराजानमुत्तमम् ।।५२।।
श्वेत ते वांछितं भूयात्तिष्ठ त्वं मम दक्षिणे ।।
भुक्त्वा वर्षसहस्रं तु स्वराज्यं सुसमृद्धिमत् ।।५३।।

मम निर्माल्यभोगेन क्षीणशेषाघसंचयः ।।

सुनिर्मलांतःकरणो मत्सायुज्यमवाप्स्यसि ।। ५४ ।।

वटसागरयोर्मध्ये मुक्तिस्थाने सुदुर्लभे ।।

मदीयाऽऽद्यावतारस्य विष्णोर्मत्स्यस्वरूपिणः ।।५५।।

संमुखीनो वस त्वं हि स्फटिकामलविग्रहः ।।

ख्यातिं यास्यसि भूर्लोके श्वेतमाधवसंज्ञया।।५६।।

युवयोरंतराले ये प्राणांस्त्यक्ष्यंति मानवाः ।।

तिर्यंचोऽपि च कीटा वा ध्रुवं ते मुक्तिमाप्नुयुः ।।५७।।

अमरा यत्र मरणमिच्छंति किमु मानवाः ।।

तवोत्तरस्यां दिशि यत्सरः पापनिबर्हणम् ।।५८।।

तत्र स्नात्वा उपस्पृश्य तदीये दक्षिणे तटे ।।

उभयोर्दृष्टिपूतःसंत्यक्त्वा प्राणान्विमुच्यते ।। ।।५९।।

आसमंतादिदं क्षेत्रं यत्रतत्रापि मुक्तिदम् ।।

मूढात्मनां विश्वसितुं प्रधानं स्थानमीरितम्।।2.2.37.६०।।

तव राज्ये तु ये लोका मम निर्माल्यभोजिनः।।

मृतिराकालिकी तेषां न कदाचिद्भविष्यति ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये सप्तत्रिंशोऽध्यायः।।३७।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३८

https://sa.wikisource.org/s/h28
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

इति दत्त्वा वरं तस्मै श्वेतराजाय वै पुरा ।।

जगामांतर्हितो विप्राः प्रासादांतः स्थितो हरिः।।१।।

समस्तजगतां या श्रीः सृष्टिस्थितिविनाशकृत् ।।

वैष्णवीशक्तिरतुला परिवेषणकारिणी ।। २ ।।

सुधोपमं सुपक्वान्नं भुंक्ते नारायणः प्रभुः ।।

तदुच्छिष्टोपभोगो हि सर्वाघक्षयकारकः ।। ३ ।।

न तादृशसमं पुण्यं वस्त्वस्ति पृथिवीतले ।।

पापसंस्कारकर्तृणां संपर्कात्तु न दुष्यति ।। ४ ।।

पद्मायाः सन्निधानेन सर्वे ते शुचयः स्मृताः ।।

विष्ण्वालयगतं तद्धि निर्माल्यं पतितादयः ।। ५ ।।

स्पृशंति चेन्न दुष्टं तद्यथा विष्णुस्तथैव तत् ।।

व्रतस्था विधवाश्चैव सर्वे वर्णाश्रमास्तथा ।। ६ ।।

तत्प्राशनेन पूयन्ते दीक्षिताश्चाग्निहोत्रिणः ।।

दरिद्रः कृपणो वापि गृहस्थः प्रभुरेव वा ।।७।।

स्वदेश्याः परदेश्या वा सर्वे तत्र समागताः ।।

नाभिमानं प्रकुर्वीरन्विष्णोर्निर्माल्यभक्षणे ।। ८ ।।

भक्त्या लोभात्कौतुकाद्वा क्षुधासंशमनेन वा ।।

आकंठभक्षितं तद्धि पुनाति सकलांहसः ।। ९ ।।

सर्वरोगोपशमनं पुत्रपौत्रप्रवर्द्धनम् ।।

दारिद्र्यहरणं श्रेष्ठं विद्यायुःश्रीप्रदं शुभम् ।। 2.2.38.१० ।।

पक्षपातो महांस्तत्र विष्णोरमिततेजसः ।।

निन्दन्ति ये तदमृतं मूढाः पंडितमानिनः ।। ११ ।।

स्वयं दंडधरस्तेषु सहते नापराधिनः ।।

येषामत्र स दण्डश्चेद्ध्रुवा तेषां हि दुर्गतिः ।। १२ ।।

कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे

तं न विक्रयः क्रयो वापि प्रशस्तस्तस्य भो द्विजाः ।। १३ ।।

निर्माल्यं जगदीशस्य नाशित्वाश्नामि किञ्चन ।।

इति सत्यप्रतिज्ञो यः प्रत्यहं तच्च भक्षयेत् ।। १४ ।।

सर्वपापविनिर्मुक्तः शुद्धांतःकरणो नरः ।।

स शुद्धं वैष्णव स्थानं क्रमाद्याति न संशयः ।। १५ ।।

चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।।

यथातथोपयुक्तं तत्सर्वं पापापनोदनम् ।। १६ ।।

कुक्कुरस्य मुखाद्भ्रष्टं तदन्नं पतितं यदि ।।

ब्राह्मणेनापि भोक्तव्यमितरेषां तु का कथा ।। १७ ।।

उपोष्य तिष्ठता वापि नोपवासं च कुर्वता ।।

अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।।

प्राप्तमात्रेण भोक्तव्यं नात्र कार्या विचारणा ।। १८ ।।

नैवेद्यान्नं जगद्भर्तुर्गांगं वारि समं द्वयम् ।।

दृष्टेः स्वर्गादि संप्राप्तिर्भक्षणाच्चाघनाशनम् ।। १९ ।।

जगद्धात्र्या हि यत्पक्वं वैष्णवेऽग्नौ सुसंस्कृते ।।

भुक्तेऽन्वहं चक्रपाणिर्युगमन्वंतरादिषु ।। 2.2.38.२० ।।

सप्तद्वीप धरामध्ये सान्निध्यं नेदृशं हरेः ।।

यादृशं नीलगोत्रेऽस्मिन्व्याजमानुषचेष्टितम् ।। २१ ।।

दारुरूपं परं ब्रह्म सर्वचाक्षुषगोचरम् ।।

प्रकाशते भो मुनयो न दृष्टं न श्रुतं क्वचित् ।। २२ ।।

तस्मै प्रवृत्तिरूपाय ब्रह्मणे परमात्मने ।।

प्रवृत्तिरूपा शक्तिः श्रीः प्रवर्तयति यद्धविः ।। २३ ।।

तदश्नाति जगन्नाथस्तच्छेषं दुरितापहम् ।।

किमत्र चित्रं भो विप्रा यदुक्तं मुक्तिकारणम् ।। २४ ।।

नाल्पपुण्यवतां तत्र विश्वासश्च प्रजायते ।।

वेदाचारप्रधानेषु युगे ह्येतत्प्रकीर्तितम् ।। २५ ।।

महिमानं न वेदास्य विशेषाच्छ्रूयतां कलौ ।।
घोरे कलियुगे तस्मिंस्त्रिपादो धर्मविप्लवः ।। २६ ।।
धर्मः स्यादेकपादस्तु क्वचित्तस्य भयाच्चरेत् ।।
सर्वेनृतप्रधाना हि दांभिकाः शब्दवृत्तयः ।। २७ ।।
प्रायश्च धर्मविमुखा जिह्वोपस्थपरायणाः ।।
न ध्यायंति तपस्यन्ति व्रतयंति कदाचन ।। २८ ।।
अधर्मबहुलाः सर्वे हिंसका लोलुपाः परम् ।।
परेषां परिवादेन तुष्यन्ति स्वकृतं विना ।। २९ ।।
प्रसंगात्कौतुकाद्वापि निघ्नंति परकर्म वै ।।
क्षुद्रकार्याशयात्स्वस्य परकार्यप्रबाधकाः ।। 2.2.38.३० ।।
धर्मलब्धां स्त्रियं रम्यामवज्ञाय स्ववेश्मनि ।।
परयोषिति निंद्यायां प्रसक्ताः पशुचेष्टिताः ।। ३१ ।।
अग्निहोत्रादिकं वापि व्रतं नान्यत्क्वचित्क्वचित् ।।
जीविका तद्द्विजातीनां येषां वा पारलौकिकम्।।३२।।
अव्रताधीतवेदेन अन्यायाप्तधनेन च ।।
वित्तशाठ्येन च कृतं न तथा फलदायि तत् ।। ३३ ।।
प्रायः कलियुगे भूपाः प्रजावनपराङ्मुखाः ।।
करादानपरा नित्यं पापिष्ठाश्चौर्यवृत्तयः ।। ३४ ।।
वर्णसंकरिणः सर्वे शूद्रप्रायाः कलौ युगे ।।
हर्तारः पार्थिवा एव शूद्राश्च नृपसेवकाः ।। ३५ ।।
श्रौतस्मार्तादिकं कर्म न तथा सदनुष्ठितम् ।।
युगे चतुर्थे भो विप्राः परलोकाय कल्पिते ।। ३६ ।।
दानधर्मः परो ह्येष नान्यो धर्मः प्रशस्यते ।।
कर्मणा मनसा वाचा हितमिच्छेद्द्विजन्मनाम् ।। ३७ ।।
इति होवाच भगवान्ब्राह्मणो मामकी तनुः ।।
ब्राह्मणा यस्य संतुष्टाः सन्तुष्टस्तस्य चाप्यहम् ।। ३८ ।।
उभयत्र समो भूयाद्ब्राह्मणे च जनार्दने ।।
यद्वदंति द्विजा वाक्यं तत्स्वयं भगवान्वदेत् ।। ३९ ।।

यथातथा वर्तमानो वर्णानां ब्राह्मणो गुरुः ।।

भगवानपि देवेशः स साक्षाद्ब्राह्मणप्रियः ।। 2.2.38.४० ।।

सदावतारं कुरुते ब्राह्मणार्थं जनार्दनः ।।

तत्पालनार्थं दुष्टान्वै निगृह्णाति युगे युगे ।। ४१ ।।

ससर्ज ब्राह्मणानग्रे सृष्ट्यादौ स चतुर्मुखः ।।

सर्वे वर्णाः पृथक्पश्चात्तेषां वंशेषु जज्ञिरे ।। ४२ ।।

तस्मात्कलियुगे तस्मिन्ब्राह्मणो विष्णुरेव च ।।

उभौ गतिश्च सर्वेषां ब्राह्मणानां हरिर्गतिः ।। ४३ ।।

हरिरेवात्र सर्वेषां गतिः प्राप्ते कलौ युगे ।।

शालग्रामादिके क्षेत्रे स्मर्यते कीर्त्यतेऽपि च ।। ।। ४४ ।।

तस्मिन्नीलाचले पुण्ये क्षेत्रे क्षेत्रज्ञवर्ष्मणि ।।

जीवभूतः स सर्वेषां दारुव्याजशरीरभृत् ।। ४५ ।।

कलिकल्मषनाशाय प्रायो दुष्कृतकर्मणाम् ।।

दर्शनस्तवनोच्छिष्टभोजनैर्मुक्तिदायकः ।। ४६ ।।

उच्छिष्टेन सुरेशस्य व्याप्तं यस्य कलेवरम् ।।

तदाहारस्तदात्मा हि लिप्यते न स पातकैः ।। ४७ ।।

निवेदनीयमन्यासु मूर्तिष्वीशस्य वर्तते ।।

पावनं तदपि प्रोक्तमुच्छिष्टं तु विमोचकम् ।। ४८ ।।

भुंक्ते त्वत्रैव भगवान्पश्यत्यन्यत्र चक्षुषा ।।

पुरायं प्रार्थितो देवो योगिभिः परिवेष्टितैः ।। ४९ ।।

निर्माल्योच्छिष्टभोगेन तव मायां जयेमहि ।।

अत्यंतस्तिमिताक्षाणामनायासेन मुक्तिदः ।। 2.2.38.५० ।।

शयनासनभोगाद्यै रमते च श्रिया सह ।।

अत्र चेष्टा भगवतो वेदार्थ इति धार्यताम् ।। ५१ ।।

समतिक्रांतवेदो हि न कदाचित्प्रवर्तते ।।

वेदरक्षार्थमेवास्य संभवो हि युगे युगे ।। ५२ ।।

प्रमाणभूतो भगवान्विरुद्धं कथमाचरेत् ।।

तस्मिन्विरुद्धं चरति जगदेव तथा भवेत् ।। ५३ ।।

आचारेण हि वेदार्थो नियतो धामतां गतः ।।

मध्यदेशभवः पूर्वमत्रागच्छद्द्विजोत्तमः ।। ५४ ।।

शिष्टाचारैः सुविमलः शास्त्रार्थपरिनिष्ठितः ।।

सदा शांतः सदा दांतः कायवाङ्मनसैर्गृही ।। ५५ ।।

स तीर्थविधिना देवं समभ्यर्च्य च साग्निकः ।।

त्रिरात्रमत्रोषितवान्विष्ण्वर्चनपरः शुचिः ।। ।। ५६ ।।

यज्ञशेषं गृहस्थानां भोक्तव्यमिति शास्त्रतः ।।

देवोच्छिष्टं न जग्राह अन्यपाकाभिशंकया ।। ५७ ।।

दैवतैरत्र संस्कार्यो देवयोग्यः कथं भवेत् ।।

अयोग्यत्वाच्च नैवेद्यमग्राह्यं च भवेद्ध्रुवम् ।।५८।।

अगृहीते च नैवेद्ये श्रोत्रियेण तदा द्विजाः ।।

सर्वे च तस्यानुचरा नाभुंजंत निवेदितम् ।। ।। ५९ ।।

ततः स व्याधिसंमग्नो विह्वलीभूतविग्रहः ।।

सकुटुंबोऽभवन्मूको भगवद्द्रोहसंयुतः ।। 2.2.38.६० ।।

मनसा चिन्तयत्येवं निर्निमित्तं कथं नु मे ।।

कुटुम्बसहितस्याभूत्पीडा सर्वांगभंजिनी ।। ६१ ।।

एवं चिन्तयमानस्य त्रिरात्रांतेऽभवन्मतिः ।।

नेदृशी व्याधिपीडा च सर्वेषामेकदा भवेत् ।। ।। ६२ ।।

को वा द्रोहः कृतोऽस्माभिरेतस्मिन्पुरुषोत्तमे ।।

न बुद्धिपूर्वकः किं स्यात्ततो मे व्याधिकारणम् ।। ६३ ।।

मुहुरित्थं चिन्तयित्वा दध्यौ नारायणं प्रभुम् ।।

ध्यानावसाने तुष्टाव शास्त्रतत्त्वार्थदर्शकः ।। ६४ ।।

।। शांडिल्य उवाच ।। ।।

चतुर्दशापि या विद्या धर्मनिर्णयहेतवः ।।

ताः सर्वास्तव वाक्यानि मुखपद्मविनिर्गताः ।। ६५ ।।

ताभिरेवाचरेद्धर्ममिति शास्त्रार्थनिश्चयः ।।

तस्य धर्मस्य रक्षार्थमवतारो युगे युगे ।। ६६ ।।

तमुल्लंघ्य वर्त्तमानो भवद्द्रोहकरो ध्रुवम् ।।

अहं ते देवदेवेश कर्मणा मनसा गिरा ।। ६७ ।।

धर्मशास्त्रमतिक्रम्य न वर्त्तेऽप्यर्थकामयोः ।।

अनेक जन्मसाहस्रैः संचितं पापसंचयम् ।। ६८ ।।

दग्धुमत्रागतो देव त्वद्दर्शनदवाग्निना ।।

कोऽपराधः कृतो देव त्वच्छास्त्रपथि वर्तिना ।।

सर्वांगं वाधते यस्मादुग्रो व्याधिरहेतुकः ।। ६९ ।।

ज्ञानतोऽज्ञानतो वापि त्वत्पादसरसीरुहे ।।

कृतोऽपराधो यो देव तं क्षमस्व कृपांबुधे ।।

भूमौ स्खलितपादानां भूमिरेवावलंबनम् ।। 2.2.38.७० ।।

त्वयि जातापराधानां त्वमेव शरणं प्रभो ।।

तवापराधजं पापं त्वमेव च क्षमस्व मे ।। ७१ ।।

वह्निसंतापतो नश्येद्वह्निसंतापजो व्रण ।।

तदिमां दुर्दशां देव प्रारब्धां पापबीजजाम् ।। ७२ ।।

लीलापांगेन शमय अपवर्गैकहेतुना ।।

मामुद्धर जगन्नाथ पतितं शोकसागरे ।। ७३ ।।

त्वद्दर्शनपथं यातः किं नु शोच्यो भवेन्नरः ।।

निसर्गकरुणांभोधे यस्त्वद्दृष्टिपथं गतः ।। ७४ ।।

सदानन्दाब्धिसंमग्नो न शोचति न कांक्षति ।।

नाल्पभाग्यो ह्यहं देव त्वामद्राक्षं स्वचक्षुषा ।। ७५ ।।

अपवर्गांतरायो मे ध्रुवमेषा विभीषिका ।।

तत्प्रसीद जगन्नाथ सेवकं द्रोहिणं सदा ।। ७६ ।।

सेव्यसेवकसंबंधादपराधं क्षमस्व मे ।।

इति स्तवांते तस्याशु देहपीडागमत्तदा ।। ७७ ।।

ददर्श सोथ गोविन्दं नृसिंहं भक्तवत्सलम् ।।

दिव्यसिंहासनारूढं दिव्यालंकारभूषितम् ।। ७८ ।।

आददानं श्रिया दत्तं परमान्नं करांबुजे ।।

ग्रासावशेषं पात्रेषु क्षिपंतं च मुहुर्मुहुः ।। ७९।।

यावद्दत्तं वस्तुजातं तावदश्नंतमत्वरम् ।।

विलाससस्मितापांगं हस्ते लक्ष्म्यापवर्जितम् ।। 2.2.38.८० ।।

तं दृष्ट्वा विस्मयाविष्टः शांडिल्यः स द्विजोत्तमः ।।

सस्मारात्मकृतं द्रोहं नैवेद्याग्रहणे स्थितम् ।। ८१ ।।

क्वाहं प्रादेशिकः प्राज्ञः सर्वज्ञाननिधिर्भवान् ।।

क्व त्वं महदहंकारभूततत्त्व विसर्जकः ।। ८२ ।।

त्वन्मायामूढमनसो जानीयुः कथमीश ते ।।

निरंकुशामनिर्वाच्यामिच्छां सृष्टिलयात्मिकाम् ।। ८३ ।।

इति स्तुवंतं नृहरिस्तेनैवोच्छिष्टपाणिना ।।

सिषेच ग्रासशिष्टांश्च सर्वांगे द्विजसत्तमम् ।। ८४ ।।

तैः सिक्तैर्ब्राह्मणः सद्यः सुधासेकोपमैर्मुदा ।।

बभौ दिव्यवपुः श्रीमांञ्जीवन्मुक्तो यथा मुनिः ।। ८५ ।।

महिमानं हि भक्तेस्तु भक्ता एव विजानते ।।

महतीं सूतिपीडां तु वन्ध्या नानुभवेत्क्वचित्।। ८६ ।।

इत्युदीर्य स्वयं गात्रादुच्छिष्टं परमात्मनः ।।

भुक्त्वा कृतार्थमात्मानं मेने श्रोत्रियपुंगवः ।। ८७ ।।

साधारणं धर्मशास्त्रं क्षेत्रेऽस्मिन्न विचार्यते ।।

अयं तु परमो धर्मो यो देवेन प्रकीर्तितः ।। ८८ ।।

आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।।

इत्थं संचितयन्विप्रः कुटुम्बार्थेऽवशेषितम् ।। ८९ ।।

आजहार स्वयं मुष्ट्या ध्यानभङ्गमवाप च ।।

प्रबुद्धश्चिंतयामास स्वप्नं तं विस्मिताशयः ।। 2.2.38.९० ।।

अयमेव मम द्रोहो ह्यवज्ञासिषमीश्वरम् ।।

नैवेद्याशन माहात्म्यमजानन्परमाद्भुतम् ।। ९१ ।।

अष्टादश चतुर्दश ब्रह्मांडं यत्पदांबुजम् ।।

धर्मद्रवेण प्रक्षाल्य अपुनात्स्वं तदंबुना ।। ९२ ।।

यमर्चयंति शक्राद्या दिव्यभोगैरनुत्तमैः ।।

स मानुष्यकृतं भुंक्ते क्षेत्रेस्मिन्महदद्भुतम् ।। ९३ ।।

इत्याश्चर्यपरस्तेन स्वप्नलब्धेन वै द्विजाः ।।

नैवेद्येन कुटुम्बं स्वं मार्जयामास सादरम् ।। ९४ ।।

ततः सर्वे नीरुजास्ते सुवाक्याहृष्टमानसाः ।।

पुनर्जन्म मन्यमानाः शशंसुः क्षेत्रमुत्तमम् ।। ९५ ।।

नास्त्यस्य सदृशं क्षेत्रं सप्तद्वीपावनीतले ।।

यत्र स्वोच्छिष्टदानेन पापान्मोचयते नरान् ।। ९६ ।।

पुरुषोत्तममाहात्म्यं क्षेत्रं परमदुर्लभम् ।।

यतः स्वर्गश्च भोगश्च मुक्तिश्चैव करे स्थिता ।।९७ ।।

आर्तानां भवकांतारे भाग्यादत्र समीयुषाम् ।।

नानाभोगोपतृप्तानां मुक्तिमार्गः सुखं भवेत् ।। ९८ ।।

इत्थं ते हर्षमापन्नाः प्रलपंतः परस्परम् ।।

यथेष्टं भोजयामासुरन्योन्यं च निवेदितम् ।।९९।।

ततस्ते निर्मला विप्रास्तरुणादित्यवर्चसः।।

देवा इव बभुः सर्वे निष्पापा निर्गतज्वराः ।।2.2.38.१००।।

नैवेद्याशनमाहात्म्यं कथितं वो द्विजोत्तमाः ।।

श्रुत्वापि महतः पापान्मुच्यते पापकृत्तमः।।१।।

निर्माल्यग्रहणस्यास्य फलं वक्तुं न शक्नुमः।।

साक्षाद्ब्रह्मस्वरूपेण ध्रियते वपुषा हि तत् ।। २ ।।

पुष्पचंदनमाल्यादि यदंगैरुपधार्यते।।

अपनीतं यथाकाले निर्माल्यं तत्प्रकीर्तितम् ।।३।।

धारणं शिरसा तस्य तेनांगे चापि मार्जनम् ।।

सार्द्धानां कोटितीर्थानामभिषेकफलप्रदम् ।।

भक्षणं गुरुतल्पादि पातकौघविनाशनम् ।। ४ ।।

लेप्या मूर्त्तिरियं विष्णोरन्येभ्यो लेप उत्तमः ।।

श्रीखंडागुरुकर्पूरकस्तूरीकुंकुमादिभिः ।।५ ।।

प्रपिष्टलेपस्नेहेन चंदनागुरुदारुणा ।।

शरीरे वासुदेवस्य इंद्रद्युम्नेन कारितः ।। ६ ।।

प्रत्यहं भो द्विजश्रेष्ठा वर्षांते चापनीयते ।।

लेप्यानां लेपनिर्मोके दर्शनं न प्रशस्यते ।। ७ ।।

अंतरा चेत्पतेल्लेपः पिष्टं लिंपेत्पुनश्च तम् ।।
नान्यलेपः प्रशस्यो हि स विष्णोरंगसंमतः ।। ८ ।।
चंदनार्द्रशरीरं च दृष्ट्वा विष्णुं पुरा किल ।।
सौगंध्याल्लोभयामास नृपपुत्रः स मूढधीः ।। ९ ।।
तस्य प्रीत्यै नियुक्तस्तु आकृष्यांगात्प्रलेपनम् ।।
ददौ नृपकुमाराय स लिलिंपे हृदि स्वके ।। 2.2.38.११० ।।
तावत्प्रदेशं कुष्ठं वै श्वेतं तस्याभवत्क्षणात् ।।
स आसीत्कुष्ठपाणिस्तु तस्मै यो दत्तवान्किल ।। ११ ।।
ततो वर्षावधिष्ठायी लेपः पुण्यतमः स्मृतः ।।
निर्माल्यानां प्रधानं तद्घ्राणादंहोविनाशनम् ।।१२।।
पुरा दमनकं दैत्यं समुद्रोदकचारिणम् ।।
बाधितारं जनानां वै मायाबलपराक्रमम्।।१३।।
भगवानपि मायावी पितामहनिदेशतः ।।
मत्स्यावतारेण विभुः प्रविश्य वरुणालयम् ।। १४ ।।
अन्विष्याकृष्य वेलायां निष्पिपेष महीतले ।।
मधोः शुक्लचतुर्दश्यां पतितो दानवोत्तमः ।। १५ ।।
भगवत्करसंपर्कात्सुगंधिरभवत्तृणम् ।।
तस्यैव नाम्ना त सम्यग्जग्राहाश्चर्यमानसः ।। १६ ।।
मालां कृत्वा हृत्प्रदेश मिलितं वनमालया ।।
अचिंतयत्तस्य गंधं यावद्वस्तु चिरस्थितम् ।। १७ ।।
तस्यापि गंधः सर्वेषां पुष्पाणां सौरभापहः ।।
वर्णस्तु भगवन्मूर्तेस्तुल्योऽभूत्स सुशोभनः ।। १८ ।।
तस्य माला भगवतः परमप्रीतिकारिणी ।।
शुष्का पर्युषिता वापि न दुष्टा भवति क्वचित् ।। १९ ।।
तस्य सुग्रथितां मालां दत्त्वा दमनकारये ।।
उत्पादयेन्महाप्रीतिं विष्णोर्या मुक्तिदायिनी ।। 2.2.38.१२० ।।
अंगापकर्षितां मालां भक्त्या यो धारयेन्नरः ।।
हयमेधसहस्रस्य फलं प्राप्नोत्यसंशयम् ।। २१ ।।

तुलसीकल्पितां मालां विष्णोरंगापकर्षिताम् ।।

धारयेन्मूर्ध्नि कंठे च भक्तो यो विन्यसेद्धदि ।।

तावत्संख्यं वाजिमेधफलमव्यग्रमश्नुते ।। २२ ।।

निर्माल्यतुलसीपत्रं यावद्भक्षयते हरेः ।।

तावज्जन्मसहस्रं तु विष्णुलोके महीयते ।। २३ ।।

हरेर्नैवेद्यमन्नं च तुलसीदलमिश्रितम् ।।

प्रतिग्रासं सोमपानं फलं तत्सममश्नुते ।।२४।।

यावज्जीवं तु भुंजानो ध्रुवं मोक्षमवाप्नुयात् ।।२५।।

अर्घ्यशेषादिकं विष्णोस्तथा चाचमनोदकम् ।।

पादोदकं स्नानवारि प्रत्येकं पापनाशनम् ।। २६ ।।

सर्वतीर्थाभिषेकाणां फलदं ग्रहनाशनम् ।।

अलक्ष्मीपापरक्षोघ्नं भूतवेतालनाशनम् ।। ।। २७ ।।

शवाद्यमेध्यसंस्पर्शदोषनाशनमुत्तमम् ।।

सर्वदीक्षाव्रतफलप्रदमैश्वर्यवर्द्धनम् ।। २८ ।।

अकालमृत्युहरणं व्याधिव्यूहनिबर्हणम् ।।

सुरोपमांसभक्ष्यादि पापसंघविनाशनम् ।। २९ ।।

एतैराप्लुतदेहस्तु शृणुयाद्यदि सूतकम् ।।

नाशौचं विद्यते तस्य सर्वकर्माधिकारिणः ।। 2.2.38.१३० ।।

यावज्जीवं प्रतिज्ञाय यस्त्वेतान्येकमेव वा ।।

गृह्णीयाद्भूरि वा स्वल्पं मुच्येद्विष्णोः प्रसादतः ।। ३१ ।।

एवं तत्र वसन्देवो लोकानुग्रहकांक्षया ।।

रममाणः श्रिया सार्द्धमनायासविमोचकः ।। ३२ ।।

निर्माल्यपादांबुनि वेदनीयदानैस्तदालोकनतत्प्रणामैः ।।

पूजोपहारैश्च विमुक्तिदाता क्षेत्रोत्तमेस्मिन्पुरुषोत्तमाख्ये ।। १३३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसंवादे दमनकचरितंनामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ३९

https://sa.wikisource.org/s/h4l
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। मुनय ऊचुः ।। ।।

मुने त्वत्तः श्रुतं सम्यङ्माहात्म्यं जगदीशितुः ।।

निर्माल्यप्रभृतीनां च यथावदनुपूर्वशः ।। १ ।।

श्रोतुमिच्छामहे ब्रह्मन्यात्रां तरफलानि वै ।।

शृण्वतां तत्त्वतो ब्रूहि यथोद्देशः कृतः पुरा ।। २ ।।

।। जैमिनिरुवाच ।।

सर्वथा वर्त्तते लोकहिताय पुरुषोत्तमः ।।

नानागुणविकासैश्च नानारूपविचेष्टितैः ।। ३ ।।

नानारूपविलासेन नानात्मा च जगन्मयः।।

अहंकारं विना कर्मफलं नो द्विजसत्तमाः।।४।।

अहंकारेण बध्यन्ते कारागारे भवाभिधे ।।

बुद्ध्यहंकारयुक्तस्तु यत्कर्मारभते नरः ।। ५ ।।

तस्य सद्गुणमाप्नोति फलं शुभमथापरम् ।।

बुद्धिस्तु त्रिविधा तेषां गुणभेदेन भाविता ।। ६ ।।

तत्र ये सात्त्विकाः संतः फलावाप्तिपराङ्मुखाः ।।

भगवत्प्रीतये कर्म कुर्वते ते मुमुक्षवः ।। ७ ।।

परस्य स्पर्द्धया कीर्त्यै फलमुद्दिश्य वा पुनः।।

बहुवित्तव्ययायासै राजसं कर्म तन्वते ।। ८ ।।

गतानुगतिका ये च दृष्टार्थैकपरायणाः ।।

प्रसंगात्फलमिच्छंतस्तामसं कर्म कुर्वते ।। ९ ।।

सात्त्विकानां जगन्नाथः सर्वदा सर्वभावनः ।।

ध्यातो दृष्टः स्मृतो वापि मुक्तिदाता न संशयः ।। 2.2.39.१० ।।

राजसास्तामसा ये वै मूढात्मानः फलैषिणः ।।

उत्सवादिकृतं कर्म मन्यंते फलदायि ते ।। ११ ।।

संभूय बहवो विप्रा आरभंतेऽल्पकं विधिम् ।।
बहुलायासदुःखं यत्कर्म तेषां फलप्रदम् ।। १२ ।।
तेषामुद्धरणार्थाय विश्वासाय दुरात्मनाम् ।।
यात्रा नानाविधा विप्रा वर्षे वर्षे प्रवर्तयेत् ।। १३ ।।
जन्मस्नानं महावेद्या उत्सवश्च प्रकीर्तितः ।।
महायात्राद्वयं पुंसां कीर्तनात्पापनाशनम् ।। १४ ।।
दर्शनं दक्षिणामूर्तेस्तथा च शयनोत्सवः ।।
सर्वपापहरश्चैषामुत्सवो दक्षिणायने ।। १५ ।।
अतः परं प्रवक्ष्यामि पार्श्वस्य परिवर्तनम् ।।
शयितस्य जगद्भर्तुः परिवर्तयितुर्युगम् ।।१६।।
नभस्य विमले पक्षे संप्राप्ते हरिवासरे ।।
विष्णोः स्वापगृहद्वारि शनैर्गत्वा प्रविश्य च ।।१७।।
नमस्कृत्वा जगन्नाथं पर्यंके शयितं मुदा ।।
अवच्छाद्य शनैर्गत्वा पूजयेदुपचारकैः ।। १८ ।।
प्रणम्य भक्त्या तत्पादौ गुह्योपनिषदैः स्तुवन् ।।
मन्त्रं चेमं पठन्देवं स्वापयेदुत्तरामुखम् ।। १९ ।।
देवदेव जगन्नाथ कल्पानां परिवर्तक ।।
परिवृत्तमिदं सर्वं येन स्थावरजंगमम् ।। 2.2.39.२० ।।
यदिच्छाचेष्टितैरेव जाग्रत्स्वप्नसुषुप्तिभिः ।।
जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्त्तय ।। २१ ।।
परिवर्त्तनकालोऽयं जगतः पालनाय ते ।।
तवाज्ञयाऽयं शक्रोऽपि ध्वजे तिष्ठन्समुत्सुकः ।। २२ ।।
द्रष्टुं त्वत्पादकमलं विमुचञ्जलदैर्जलम् ।।
महीतलं प्लावयति प्रजापालनहेतुकम् ।। २३ ।।
इति संप्राथ्य देवेशं वीप्सया तोषयेत्ततः ।।
व्यजनैश्चामरैश्चैव वीजयेदनुकल्पकृत् ।। २४ ।।
सुगन्धचन्दनैरस्य सर्वांगं परिलेपयेत् ।।
स्वादूनिक्षुविकारांश्च विकृतैः पायसैस्तथा ।। २५ ।।

यावकानि च हृद्यानि फलानि विविधानि वै ।।

स्वादूपदंशानन्यांश्च घृतपूपान्सपायसान् ।। २६ ।।

पक्वतांबूल पत्राणि सोपस्काराणि च द्विजाः ।।

शय्यागृहद्वारि विभोः शनैर्भक्त्या निवेदयेत् ।। २७ ।।

तस्मिन्दिने हरे रूपं भवेद्यदि महाफलम् ।।

देवमुद्दिश्य यः कुर्यात्सर्वमक्षयतां व्रजेत् ।। २८ ।।

स्नानं दानं जपो होमस्तपो जागरणं तथा ।।

उपवासश्च नियमो व्रतांते द्विजतर्पणम् ।। २९ ।।

सांगं व्रतमिदं कृत्वा विष्णुलोकमवाप्नुयात् ।।

यं यं कामयते चित्ते तं तमाप्नोत्यसंशयम् ।। 2.2.39.३० ।।

अयं वः कथितो विप्राः पार्श्वपर्यायणोत्सवः ।।

अनायासेन लोकानामक्षयः सुखदायकः ।। ३१ ।।

अतः परं वै शृणुत उत्थापनमहोत्सवम् ।।

पूजयित्वा जगन्नाथं कौमुद्याख्ये महोत्सवे ।। ३२ ।।

अक्षक्रीडादिभिः पुष्पवस्त्रमाल्यानुलेपनैः ।।

ततोस्मिन्पौर्णमास्यायां रात्रावुत्सवसंयुतम् ।। ३३ ।।

नारिकेलादिभिर्द्रव्यैः पिष्टकैरर्चयेद्धरिम् ।।

ततः प्रभाते संकल्प्य कार्त्तिके व्रतमुत्तमम् ।। ३४ ।।

व्रतेन तेनैव नयेद्यावदेकादशी सिता ।।

तस्यामुत्थापयेद्देवं सुसुप्तं जगदीश्वरम् ।। ३५ ।।

पूर्ववत्पूजयित्वा तु निशामध्ये जगद्गुरुम् ।।

उत्थापयेदिमं मंत्रमाह्वयञ्छनकैर्मुदा ।। ३६ ।।

उत्तिष्ठ देवदेवेश तेजोराशे जगत्पते ।।

वीक्षस्व सकलं देव प्रसुप्तं तव मायया ।। ३७ ।।

प्रफुल्लपुंडरीकश्रीहारिणा नयनेन वै ।।

त्वया दृष्टं जगदिदं पावित्र्यं परमेष्यति ।। ३८ ।।

श्रौतस्मार्त्ताः क्रियाः सर्वाः प्रवर्तंते ततो ध्रुवम् ।।

इत्युत्थाप्य जगन्नाथं वेणुवीणादिकस्वनैः ।। ३९ ।।

बंदिमागधसूतानां स्तुतिभिर्मंगलस्वनैः ।।

शंखकाहालमुरजवादनैर्नृत्यगीतकैः ।। 2.2.39.४० ।।

जयशब्दैस्तथा स्तोत्रैर्नयंतं नृत्यमण्डपम् ।।

सुगन्धतैलेनाभ्यज्य स्नापयेत्पुरुषोत्तमम् ।। ४१ ।।

पञ्चामृतैर्नारिकेलरसैः फलरसैस्तथा ।।

सुगन्धामलकेनाथ यवकल्केन लेपयेत् ।। ४२ ।।

घर्षयेत्तुलसीचूर्णैर्लेपयेद्गन्धचन्दनैः ।।

पुष्पाधिवासितैस्तोयैस्तथा कर्पूरवासितैः ।। ४३ ।।

कुशोदकै रत्नतोयैस्तथा गंधोदकैस्तथा ।।

स्नाप्यमानं तथा देवं ये पश्यंति मुदान्विताः ।। ४४ ।।

क्षालयन्ति दृढं पंकं बहुजन्मोपपादितम् ।।

ततः श्रीजगदीशस्य क्रोडे संवासयेद्द्विजाः ।।४५।।

आपादान्मूर्धपर्यंतं सर्वांगं परिलेपयेत् ।।

कुंकुमागुरुकस्तूरीकर्पूरैश्चंदनान्वितैः ।। ४६ ।।

पाटलोदकसंपिष्टैः कालागुरुरसाप्लुतैः ।।

दत्त्वा च मालतीमाला चन्द्रचूर्णेन संयुताम् ।। ४७ ।।

महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः ।।

कृतांजलिपुटो भूत्वा प्रार्थयेत्परया मुदा ।। ४८ ।।

चराचरमिदं सर्वं त्वदेकशरणं विभो ।।

अनुग्रहामृतालोकैः पावयस्व जगद्गुरो ।। ।। ४९ ।।

नृत्यगीतैः प्रेक्षणकै रात्रिशेषं समापयेत् ।।

शयनादुत्थितं देवं यः पश्यति गदाधरम् ।। 2.2.39.५० ।।

निद्रां मोहमयीं भित्त्वा ज्योतिः शांतं व्रजंति ते ।।

सर्वान्कामानवाप्नोति यान्यान्कामयते हृदि ।। ५१ ।।

अश्वमेधसहस्रस्य फलं साग्रं लभेत वै ।।

कपिलालंकृताधेनुकोटिदानफलं तथा ।। ५२ ।।

पुण्यं चाप्नोति परमं सर्वतीर्थाभिषेकजम् ।।

कार्तिक्यां पारणं कुर्याच्चातुर्मास्यव्रतस्य वै ।। ५३ ।।

दामोदरस्य प्रतिमां स्वर्णनिष्केण निर्मिताम् ।।
यथाशक्तिकृतां वापि शालग्रामशिलास्थिताम् ।।५४।।
चक्रमूर्तिं भगवतः पूजयेत्प्रयतात्मवान् ।।
रचयेन्मण्डपं शुभ्रमेकदेशं गृहस्य वा ।। ५५ ।।
अलंकुर्यात्पुष्पदामचामरैः सवितानकैः ।।
भूमिभित्तीः सुधालेपैः स्तंभैश्चित्रदुकूलकैः ।। ५६ ।।
कालागुरूणां धूपैश्च धूपयेत्तद्गृहं शुभम् ।।
तन्मध्ये मण्डलं कुर्यात्स्वस्तिकं वर्णकैः शुभैः ।। ५७ ।।
तदन्तः स्थापयेत्खट्वां करिदन्तमयीं शुभाम् ।।
पट्टतूलीं तदुपरि वासयेत्पुरुषोत्तमम् ।।५८।।
दामोदराकृतिं शंखपद्मपाणिं चतुर्भुजम् ।।
लक्ष्मीमालिंग्य पद्मस्थां क्रोडस्थां वामपाणिना ।।५९।।
भक्तेभ्यो दातुमुद्यंतं वरं दक्षिणपाणिना ।।
सुनासं सुललाटं च सुनेत्रं सुश्रुतिद्वयम् ।। 2.2.39.६० ।।
विशालवक्षसं देवं सर्वलावण्यसंयुतम् ।।
सर्वालंकाररुचिरं दिव्यपीतनिचोलिनम् ।। ६१ ।।
लक्ष्मीं पद्मकरां वापि तांबूलं ददतीं तथा ।।
पञ्चामृतैः स्नापयित्वा वासोयुग्मेन वेष्टयेत् ।। ६२ ।।
पूजयेदुपचारैस्तं यथाविभवविस्तरैः ।।
ताम्रदीपान्मृन्मयान्वा ज्वालयेद्गव्यसर्पिषा ।।६३।।
तैलेन वा शतं दीपवृक्षांश्चैव प्रदापयेत् ।।
ब्रह्माणं नारदादींश्च देवर्षीस्तत्र पूजयेत् ।।६४।।
दामोदरस्वरूपान्वै ब्राह्मणानपि पूजयेत् ।।
वस्त्रयुग्मैर्माल्यगन्धैर्भक्ष्यभोज्यफलैस्तथा ।।६५।।
तीर्थराजाभिषेकांगं पूजाकर्म यथोचितम् ।।
दामोदरस्य तेनैव विधिनेहार्चनं भवेत् ।। ।। ६६ ।।
तद्विष्णोरिति मन्त्रेण ब्रह्मादीनपि पूजयेत् ।।
वेणुवीणादिकैर्गीतैः पुराणपठनेन च ।। ६७ ।।

महोत्सवं प्रकुर्वीत ततो जागरणेन च ।।

ततः प्रभाते विमलेऽग्निकार्यं च समाचरेत् ।। ६८ ।।

अष्टाक्षरेण मंत्रेण समिदाज्यचरूनपि ।।

लाजान्मधुसमिन्मिश्राञ्जुहुयाच्च ततः श्रिये ।।६९।।

सूक्तेनाष्टोत्तरशतं ब्रह्मादीनां तदन्ततः ।।

अष्टाहुतीर्वै जुहुयात्क्रमादेकैकशस्तिलैः ।। 2.2.39.७० ।।

ब्रह्माणं नारदं दक्षं वसिष्ठं गौतमं तथा ।।

सनत्कुमारमत्रिं च भरद्वाजं च कश्यपम् ।।७१।।

दुर्वाससमगस्त्यं च महादेवं ततः परम् ।।

विख्याता वैष्णवा ह्येते विष्णुरूपा न संशयः ।।७२।।

एतान्संपूजयन्विप्रान्विष्णुः प्रीणाति तत्क्षणात् ।।

होमांते प्राशनं कृत्वा दद्यादाचार्यदक्षिणाम् ।।७३।।

सुवर्णभूषितां धेनुं वस्त्रं धान्यं च भक्तितः ।।

प्रीतये वासुदेवस्य भोजयेद्द्विजपुंगवान्।। ७४ ।।

सर्वोपचारसहितं दद्याद्दामोदरं ततः ।। ७६ ।।

ॐ दामोदर जगन्नाथ त्वन्मयं विश्वमेव हि ।।

त्वदाधारमिदं सर्वं त्वं धर्मः सर्वभावनः।।।

त्वत्प्रसादाद्व्रतं चीर्णं सुसंपूर्णं तदस्तु मे ।।७६।।

दामोदरः प्रदाता च गृहीता च वृषध्वजः।।

प्रदीयते जगन्नाथः प्रीयतां मे जगद्गुरुः।।७७।।

इति मंत्रं जपन्दद्यादाचार्याय सुरोत्तमम्।।

समाप्य पूजयेद्भक्त्या स्तूयात्तं च प्रसादयेत् ।। ७८ ।।

आचार्ये परितुष्टे तु तुष्टो भवति माधवः ।।

तत्तद्द्रव्याणि च ततो दद्याद्विप्रेभ्य एव हि ।। ७९ ।।

ततः स्वयं वै भुंजीत इष्टैः शिष्टैः स्वबंधुभिः ।।

चातुर्मास्यव्रतं चेदं प्रतिष्ठाप्य विधानतः ।। 2.2.39.८० ।।

यथोक्तफलसंपन्नो विष्णुलोकमवाप्नुयात् ।।

श्रुतिस्मृतिपुराणेषु नातः परतरं व्रतम् ।। ८१ ।।

येनानुष्ठितमात्रेण कृतकृत्यो भवेन्नरः ।।

विष्णोः प्रीतिकरं यादृङ्न तथान्यद्व्रतं द्विजाः ।। ८२ ।।

तिलपात्रसहस्रैस्तु गवां चैवायुतायुतैः ।।

कृष्णाजिनशतेनापि कन्यानामयुतेन च ।। ८३ ।।

दत्त्वा यत्फलमाप्नोति कृत्वैतद्व्रतमुत्तमम् ।।

सार्द्धत्रिकोटितीर्थानामभिषेकफलं तथा ।।८४।।

प्राप्नोति तत्फलं विप्रा यं यं कामयते नरः ।। ८५ ।।

इति श्री स्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये चातुर्मास्यव्रतविधिर्नामैकोनचत्वारिंशोऽध्यायः ।।३९।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४०



।। ।। जैमिनिरुवाच ।। ।।

मार्गशीर्षे सिते पक्षे षष्ठ्यां प्रावरणोत्सवम् ।।

कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात् ।। १ ।।

विधानं तस्य वक्ष्यामि शृणुध्वं मुनयोऽधुना ।।

वासोधिवासं कुर्वीत पंचम्यां निशि कर्मवित् ।। २ ।।

देवाग्रे मंडपे कुर्यात्पद्ममष्टदलान्वितम् ।।

दिक्पालान्पूजयेद्दिक्षु क्षेत्रपालं गणाधिपम् ।। ३ ।।

चंडप्रचंडौ च बहिश्चतुर्दिक्षु प्रपूजयेत् ।।

मध्ये पात्रं समाधाय प्रोक्षयेद्वस्त्रवारिणा ।। ४ ।।

घृतानस्त्वेति मंत्रेणच्छादयेद्दिव्यवाससा ।।

सुधूपितं वस्त्रजातमेकविंशतिसंख्यकम् ।। ५ ।।

तन्मध्ये स्थापयेन्मंत्रं वैष्णवं च समुच्चरन् ।।

अन्येन वाससा तद्धि समाच्छाद्य प्रयत्नतः ।।६।।

स्पृष्ट्वा जपेन्मंत्रमिमं संस्मरन्पुरुषोत्तमम् ।।

आच्छादको यो जगतां तेजसा विष्णुरव्ययः ।। ७ ।।

वसनात्तस्य वस्त्र त्वं वस वासे जगत्पतेः ।।

इन्द्रघोषस्त्वेति रक्षां विदध्यात्तस्य सर्वतः ।। ८ ।।

पूजयेद्गंधपुष्पाभ्यां ततो देवं प्रपूजयेत् ।।

सर्वलेपं प्रकुर्वीत नृत्यगीतैर्नयेन्निशाम् ।। ९ ।।

ततोऽरुणोदये काले प्रातःसंध्यासमीपतः ।।

पुनः प्रपूजयेद्देवं पूर्ववत्सुसमाहितः ।। 2.2.40.१० ।।

ततस्तं पूजितं वस्त्रसमूहं बहिरानयेत् ।।

कार्पासपट्टक्षौमाढ्यं तथैवाच्छादितं द्विजाः ।। ११ ।।

छत्रध्वजपताकाभिश्चामरांदोलनैस्तथा ।।

गीतवादित्रनृत्यैश्च प्रसूनोत्किरणेन च ।। १२ ।।

प्रासादं त्रिः परिभ्रम्य देवं त्रिर्भ्रामयेत्ततः ।।

आच्छादितं तदाकृष्य संस्कुयार्द्वीक्षणादिभिः ।। १३ ।।

सप्तभिः सप्तभिर्देवान्वासोभिः परिवेष्टयेत् ।।

मुखवर्जं तु सर्वांगं शीतप्रावरणैर्द्विजाः ।। १४ ।।

तांबूलं च निवेद्याथ कर्पूरलतिकां तथा ।।

दूर्वाक्षतैः प्रपूज्याथ कुर्यान्नीराजनं विभोः ।। १५ ।।

हिमागमे नृसिंहं ये प्रावृण्वंति सुचेलकैः ।।

पश्यंति प्रावृतिं ये वा न तेषां मोहसंवृतिः ।। १६ ।।

ते द्वंद्ववातशीतोत्थभयं नाप्नुवते क्वचित् ।।

विष्णोर्देवाधिदेवस्य इमं प्रावरणोत्सवम् ।। १७ ।।

भक्त्या ये वै प्रपश्यंति सर्वान्कामानवाप्नुयुः ।।

भगवंतं समुद्दिश्य ब्राह्मणेभ्यः प्रदापयेत् ।। ।। १८ ।।

गुरुभ्यश्चान्यदेवेभ्यो दीनानाथेभ्य एव च ।।

शीतप्रावरणं दद्यात्सत्कृत्य परया मुदा ।।

ददाति भगवान्प्रीतस्तस्मै वरमनुत्तमम्।। ।। १९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये प्रावरणोत्सववर्णनंनाम चत्वारिंशोऽध्यायः ।। ४० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४१





।। जैमिनिरुवाच ।। ।।

पुष्यस्नानोत्सवं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।।

पुष्यर्क्षेण च संयुक्ता पौर्णमासी यदा भवेत् ।। १ ।।

पौषे मासि तथा कुर्यात्पुष्यस्नानोत्सवं हरेः ।।

एकादश्यां प्रकुर्वीत ऐशान्यामंकुरार्पणम् ।। २ ।।

ततः प्रतिदिनं कुर्यात्प्रतिमायां हरेर्गृहे ।।

नृत्यगीतोपहारैश्च प्रतिरात्रं वलिं हरेत् ।। ३ ।।

चतुर्दशीनिशायां तु कुंभानामधिवासनम् ।।

एकाशीतिप्रमाणानां तथा स्वर्णमयाञ्च्छुभान् ।। ४ ।।

गव्यसर्पिःप्रपूर्णांश्च स्थापयेदेकविंशतिम् ।।

कारयेत्सर्वतोभद्रं मंडलं पुरतो हरेः ।। ५ ।।

तन्मध्ये बृहदाधारं स्थापयेद्दर्पणं शुभम् ।।

रात्रौ जागरणं कुर्याद्गीतनृत्यादिविस्तरैः ।। ६ ।।

प्रभाते वह्निकार्यं च कुर्यात्तद्दैवतं द्विजाः ।।

पालाशीभिः समिद्भिस्तु चरुणा सर्पिषा तथा ।। ७ ।।

ब्रह्मविष्णुशिवेभ्यस्तु प्रत्येकं तु सहस्रकम् ।।

स्वलिंगमन्त्रैर्जुहुयात्तदंते पुरुषोत्तमम् ।। ८ ।।

पूजयेदुपचारैस्तैरादर्शे प्रतिबिंबितम् ।।

ततः पुरुषसूक्तेन कुम्भांस्तानभिमन्त्रयेत् ।। ९ ।।

तेनैवाच्छिद्रधारेण स्नापयेत्पुरुषोत्तमम्।।

पावमानीयकैर्देवाञ्छ्रीसूक्तेन ततः परम् ।। 2.2.41.१० ।।

सर्पिः कुंभैः स्नापयेच्च गायत्र्या च ततः परम् .।।

वैष्णव्या गन्धतोयेन श्रीसूक्तेन समर्चयेत् ।। ११ ।।

सहस्रधारया देवं ततो निर्माल्यमुत्सृजेत् ।।

देवांगं लेपयेद्गन्धैश्चंदनेन च विग्रहे ।। १२ ।।

यथास्थानं यथाशोभमलंकारांश्च योजयेत् ।।

सुगन्धसुमनोमाल्यैर्भूषयेत्तदनंतरम् ।। १३ ।।

अष्टायुधानि देवस्य चक्रादीनि न्यसेत्पुरः ।।

रत्नच्छत्रं समुच्छ्रित्य पूजयेत्पुरुषोत्तमम् ।। १४ ।।

लक्ष्म्या युक्तं पुनर्विप्रा उपहारैः समृद्धिमत् ।।

शंखेषु पूर्यमाणेषु स्निग्धगंभीरनादिषु ।। १५ ।।

चामरांदोलव्यग्रासु वेश्यासु रुचिरासु च ।।

मांगल्यगीतनृत्याद्यैः स्तुतिपाठेषु बन्दिनाम् ।। १६ ।।

जयशब्दं प्रकुर्वत्सु द्विजातिषु मुहुर्मुहुः ।।

दूर्वाक्षतांजलिभिस्त्रिभिः संपूज्य केशवम् ।। १७ ।।

गोसर्पिर्दीपकैः स्वर्णपात्रकैरतिनिर्मलैः ।।

नीराजयेज्जगन्नाथं कर्पूरयुतवर्तिभिः ।। १८ ।।

स्वर्णपात्रस्थितं चारु तांबूलं सुपरिष्कृतम् ।।

शनैःशनैर्मुखाभ्याशे प्रत्येकं विनिवेदयेत् ।। ।। १९ ।।

आचार्ये दक्षिणां दद्याद्ब्राह्मणांश्चैव पूजयेत् ।। 2.2.41.२० ।।

पुष्यस्नानोत्सवं पुण्यं ये पश्यंति मुदान्विताः ।।

संपूर्णसर्वकामास्ते व्रजेयुर्वैष्णवं पदम् ।। २१ ।।

राज्यभ्रष्टो लभेद्राज्यं सार्वभौमं च विंदति ।।

अपुत्रा मृतवत्सा वा पुत्रं दीर्घायुषं लभेत् ।। २२ ।।

दारिद्र्यनाशनं धन्यं ब्रह्मवर्चसकारणम् ।।

पुष्यस्नानं कीर्तितं वः शृणुध्वं चोत्तरायणम् ।। २३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये पुष्याभिषेकविधिवर्णनं नामैकचत्वारिंशोऽध्यायः ।। ४१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४२



।। जैमिनिरुवाच ।। ।।

मृगराशिं संक्रमति यदा भास्वान्द्विजोत्तमाः ।।

उत्तराशां जिगमिषुस्तदा स्यादुत्तरायणम् ।। १ ।।

तस्य संक्रमणार्द्धं च यावत्स्युर्विंशतिः कलाः ।।

महापुण्यतमः कालः पितृदेवद्विजप्रियः ।। २ ।।

तत्र स्नात्वा विधानेन तीर्थराजजले नरः ।।

नारायणं समभ्यर्च्य कल्पवृक्षं प्रणम्य च ।। ३ ।।

प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणाम्।।

मन्त्रराजेन संपूज्य देवं श्रीपुरुषोत्तमम् ।। ४ ।।

तथा बलं सुभद्रां च स्वमन्त्रेण प्रपूजयेत् ।।

दृष्ट्वोत्तरायणे देवं मुच्यते देहबन्धनात् ।। ५ ।।

विधानं तस्य वक्ष्याभि शृणुध्वं पावनं महत् ।।

संक्रांतेः पूर्वदिवसे नवां शालिं सुकुट्टिताम् ।। ६ ।।

प्रासादपूर्वदेशे च स्थापयित्वाधिवासयेत् ।।

नवेन वाससावेष्ट्य दूर्वासर्षपपुष्पकैः ।। ७ ।।

पूजयित्वा मन्त्रयेद्वै कृष्णस्त्वामभिरक्षतु ।।

तस्मिन्नेव निशायामे व्यतीते जगदीशितुः ।। ८ ।।

प्रत्यर्चां सन्निधौ नीत्वा भावयेदेकताधिये ।।

उपचारावशिष्टाभ्यां पूजयेद्वै समाहितः ।। ९ ।।

ततो निर्माल्यवसनमालामस्यां निधापयेत् ।।

महासमृद्ध्या तामर्चां त्रिर्देवान्भ्रामयेत्ततः ।। 2.2.42.१० ।।

आंदोलिकायामारोप्य प्रासादद्वारमानयेत् ।।

त्रिविक्रमं त्रिक्रमेण त्रैलोक्यक्रमणं विभुम् ।। ११ ।।

विडंबयंतं तां लीलां प्रासादं भ्रामयेच्च तम् ।।

त्रिरंते पुनरंके च सुसमृद्ध्या शनैःशनैः ।। १२ ।।

दीपिकाशतसंरुद्धतमसोवरणांतरे ।।

छत्रध्वजपताकाभिर्नृत्यवादित्रगीतकैः ।। १३ ।।

तद्दर्शनपरिक्षीणपातकानां महात्मनाम् ।।

न च चिह्नं शरीरेऽस्य नवांगे भ्रमणं ततः ।। १४ ।।

अनुयांति तदा ये तं महे यांतं त्रिविक्रमम् ।।

लभंते वाजिमेधस्य फलं ते वै पदे पदे ।। १५ ।।

प्रथमभ्रमणं दृष्ट्वा मुच्यते पञ्चपातकैः ।।

मलिनीकरणैर्मुच्येद्द्वितीयं भ्रमणं द्विजाः ।। १६ ।।

अपात्रीकरणैर्दृष्ट्वा तृतीयं भ्रमणं ध्रुवम् ।।

उपपातकपापैश्च चतुर्थं मुच्यते ततः ।। १७ ।।

पुनः प्रभाते देवेशं प्रलिंपेद्गन्धचन्दनैः ।।

वस्त्रालंकारमाल्यैश्च भूषयित्वा यथाविधि ।। १८ ।।

पूजयेदुपचारैस्तं यथाशक्ति समृद्धिमत् ।।

नीराजयित्वा देवेशं तंदुलानधिवासितान् । १९ ।।

स्थालीषु शातकुंभासु दधिखंडाज्यमिश्रितान् ।।

सनारिकेलशकलाच्छृंगवेर दलान्वितान् ।। 2.2.42.२० ।।

प्रासादं त्रिः परिभ्रम्य नयेद्देवसमीपतः ।।

पंक्तिशः स्थापयेदग्रे गन्धपुष्पाक्षतान्वितान् ।। २१ ।।

जीवनं सर्वभूतानां जनकस्त्वं जगत्प्रभो ।।

त्वन्मयाः शालयो ह्येते त्वयैव जनिताः प्रभो ।। २२ ।।

लोकानुग्रहणार्थाय गृहीतोचितविग्रह ।।

तव प्रीत्यै कृतानेतान्गृहाण परमेश्वर ।। २३ ।।

त्वयि तुष्टे जगत्सर्वमनेन प्रभविष्यति ।।

स्वाहाकारस्वधाकारवषट्कारा दिवौकसाम् ।। २४ ।।

आप्यायना भविष्यंति तैरेवाप्यायितं जगत् ।।

रक्ष सर्वं जगन्नाथ त्वन्मयं सचराचरम् ।। २५ ।।

इति संप्रार्थ्य देवेशं शालिस्तंबान्निवेदयेत् ।।

तन्मयान्भक्षभोज्यांश्च दधिकुंभान्सुगंधिनः ।। २६ ।।

कर्पूरखंडमरिचचूर्णयुक्तान्निवेदयेत् ।।

ब्राह्मणान्पूजयेद्भक्त्या देवदेवपुरःस्थितान् ।। २७ ।।

तेभ्यः प्रदद्याद्भक्त्या ताञ्छाल्यादीन्भगवद्धिया ।।

इमं महोत्सवं विप्राः पुरा कल्पे च कश्यपः ।। २८ ।।

स च सृष्टिं विनिर्माय भगवत्प्रीतयेऽकरोत् ।।

ये पश्यन्त्युत्सवं चैनं कश्यपेन विनिर्मितम् ।। २९ ।।

सर्वदा सर्वकामैस्ते पूर्णाः शोचंति न द्विजाः ।।

उषित्वा त्रिदशैः सार्द्धं कल्पांते मोक्षमाप्नुयुः ।। 2.2.42.३० ।।

महानसस्य संस्कारं वह्नेः संस्कारमेव च ।।

अत्रापि कुर्यान्मुनयो वैश्वदेवं दिनेदिने ।। ३१ ।।

आधानसंस्कृते वह्नौ भगवद्भुक्तये रमा ।।

प्रत्यहं पाकमाधत्ते दिव्यरूपा तिरोहिता ।। ३२ ।।

अस्मिन्महापुण्यतम उत्सवे परमात्मनः ।।

तुलापुरुषदानादि कोटिकोटिगुणं भवेत्।। ३३ ।।

स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।।

सर्वमक्षयतां याति ह्युत्सवे चोत्तरायणे ।। ३४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये मकरसंक्रमविधिवर्णनंनाम द्विचत्वारिंशोऽध्यायः।। ४२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४३

https://sa.wikisource.org/s/h4y

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

फाल्गुने मासि कुर्वीत दोलारोहणमुत्तमम् ।।

यत्र क्रीडति गोविंदो लोकानुग्रहणाय वै ।। १ ।।

प्रत्यर्चां देवदेवस्य गोविंदाख्यां तु कारयेत् ।।

प्रासादपुरतः कुर्यात्षोडश स्तंभमुच्छ्रितम।। २ ।।

चतुरस्रं चतुर्द्वारं मण्डपं वेदिकान्वितम् ।।

चारुचंद्रातपं माल्यचामरध्वजशोभितम् ।। ३ ।।

भद्रासनं वेदिकायां श्रीपर्णीकाष्ठनिर्मितम् ।।

फल्गूत्सवं प्रकुर्वीत पञ्चाहानि त्र्यहाणि वा ।। ४ ।।

फाल्गुन्यां पूर्वतो विप्राश्चतुर्दश्यां निशामुखे ।।

वह्न्युत्सवं प्रकुर्वीत दोलामण्डपपूर्वतः ।। ५ ।।

गोविंदानुगृहीतं तु यात्रांगं तत्प्रकीर्तितम्।।

आचार्यवरणं कृत्वा वह्निं निर्मथनोद्भवम् ।। ६ ।।

भूमिं संस्कृत्य विधिवत्तृणराशिं महोच्छ्रयम्।।

सुसमं कारयित्वा तु वह्निं तत्र विनिक्षिपेत्।। ७ ।।

पूजयित्वा विधानेन कूष्मांडविधिना हुनेत् ।।

गोविंदं पूजयित्वा तु भ्रामयेत्स तत विभुम् ।। ८ ।।

यत्नात्तं रक्षयेद्वह्निं यावद्यात्रा समाप्यते ।।

प्रातर्यामे चतुर्दश्यां गोविंदप्रतिमां शुभाम् ।। ९ ।।

वासयित्वा हरेरग्रे पूजयेत्पुरुषोत्तमम् ।।

उपचारावशिष्टैस्तु प्रत्यर्चामपि पूजयेत् ।। 2.2.43.१० ।।

ततोऽवरोप्य वसनं मालां च द्विजसत्तमाः ।।

अर्चायां विन्यसेन्मंत्री परं ज्योतिर्विभावयन् ।। ११ ।।

ततः सा प्रतिमा साक्षाज्जायते पुरुषोत्तमः ।।

रत्नांदोलिकया तां वै नयेत्स्नानस्य मंडपम् ।। ।। १२ ।।

तत्र नाना तूर्यनादैः शंखध्वनिपुरःसरम्।।

जयशब्दैस्तथा स्तोत्रैः पुष्पवृष्टिभिरेव च ।। १३ ।।

छत्रध्वजपताकाभिश्चामरैर्व्यजनैस्तथा ।।

निरंतरं दीपिकाभिस्तदा कुर्यान्महोत्सवम् ।। १४ ।।

आगच्छंति तदा देवाः पितामहपुरोगमाः ।।

द्रष्टुं चर्षिगणैः सार्द्धं गोविंदस्य महोत्सवम् ।। ।। १५ ।।

भद्रासनेऽधिवास्यैव पूजयेदुपचारकैः ।।

महास्नानस्य विधिना स्नपनं तस्य कारयेत् ।। १६ ।।

पंचामृतैश्च सर्वैश्च तेषामन्यतमेन वा ।।

स्नानांते गंधतोयेन श्रीसूक्तेनाभिषेचयेत् ।। १७ ।।

संप्रोक्ष्य भूषयेद्देवं वस्त्रालंकारमाल्यकैः ।।

नीराजयित्वा संपूज्य प्रासादं परिवेष्टयेत् ।। १८ ।।

सप्तकृत्वस्ततो देवं दोलामंडपमानयेत् ।।

सुसंस्कृतायां रथ्यायां पताकातोरणादिभिः ।।

अधोदेशे मंडपं तं सप्तशो भ्रामयेत्पुनः ।। १९ ।।

ऊर्द्ध्वदेशे पुनः सप्त स्तंभवेद्यां च सप्त वै ।।

यात्रावसाने च पुनर्भ्रामयेदेकविंशतिम् ।। 2.2.43.२० ।।

इयं लीला भगवतः पितामहमुखेरिता ।।

राजर्षिणेंद्रद्युम्नेन कारिता पूर्वमेव हि ।। २१ ।।

फलपुष्पोपनम्रैश्च शाखिभिः परिकल्पिते ।।

वृंदावनांतरे रम्ये मत्तभ्रमरराविणि ।। २२ ।।

कोकिलारावमधुरे नानापक्षिगणाकुले ।।

नानोपशोभारचितनानागुरुसुधूपिते ।। २३ ।।

प्रफुल्लकेतकीषंडगंधामोदिदिगंतरे ।।

मल्लिकाशोकपुन्नागचंपकैरुपशोभिते ।। २४ ।।

तत्काननांतर्घटिते मंडपे चारुतोरणे ।।

भूषिते माल्यवसनचामरैरुपशोभिते ।। २५ ।।

रत्नखट्वांदोलिकायां तन्मध्ये वासयेत्प्रभुम् ।।

सद्रत्नमुकुटं तारहारशोभितवक्षसम् ।। २६ ।।

अनर्घ्यरत्नघटितकुंडलोद्भासितश्रुतिम् ।।

यथास्थानं यथाशोभं दिव्यालंकारमंजुलम् ।। २७ ।।

विकचांबुजमध्यस्थं विश्वधात्र्या श्रिया युतम् ।। २८ ।।

शंखचक्रगदापद्मधारिणं वनमालिनम् ।।

सुप्रसन्नं सुनासं तं पीनवक्षःस्थलोज्ज्वलम् ।। २९ ।।

पुरो व्योमस्थितैर्देवैर्ब्रह्माद्यैर्नतमस्तकैः ।।

कृतांजलिपुटैर्भक्त्या जयशब्दैरभिष्टुतम् ।। 2.2.43.३० ।।

गंधर्वैरप्सरोभिश्च किन्नरैः सिद्धचारणैः ।।

हाहाहूहूप्रभृतिभिः सत्वरं दिव्यगायनैः ।। ३१ ।।

अहंपूर्विकया नृत्यगीतवादित्रकारिभिः ।।

नेत्रांबुजसहस्रैश्च पूज्यमानं मुदान्वितैः ।। ३२ ।।

किरद्भिः सर्वतोदिक्षु गंधचंदनजं रजः ।।

उपवेश्याथ गोविंदं पूजयेदुपचारकैः ।। ३३ ।।

बल्लवीवृंदमध्यस्थं कदंबतरुमूलगम् ।।

हावहास्यविलासैश्च क्रीडमानं वनांतरे ।। ३४ ।।

गोपीभिश्चैव गोपालैर्लीलांदोलितयानगम् ।।

चिंतयित्वा जगन्नाथं विकिरेद्गंधचूर्णकैः ।। ३५ ।।

सकर्पूरै रक्तपीतशुक्लैर्दिक्षु समंततः ।।

दिव्यैर्वस्त्रैर्दिव्यमाल्यैर्द्दिव्यैर्गंधैः सुधूपकैः ।। ३६ ।।

चामरांदोलनैर्गीतैः स्तुतिभिश्च समर्चितम् ।।

आंदोलयेद्दोलिकास्थं सप्तवाराञ्छनैः शनैः ।। ।।३७।।

तदा पश्यंति ये कृष्णं मुक्तिस्तेषां न संशयः ।।

ब्रह्महत्यादिपापानां पंचकानां क्षयो भवेत् ।। ३८ ।।

त्रिरेवं दोलयेद्देवं सर्वपापापनोदनम् ।।

भक्त्यानुग्राहकं पुंसां भुक्तिमुक्त्येककारणम् ।। ३९ ।।

लीलाविचेष्टितं यस्य कृत्रिमं सहजं तथा ।।

अंहःसंघक्षयकरं मूलाविद्यानिवर्त्तकम् ।। 2.2.43.४० ।।

पश्यन्द्वितीयं हरति गोहत्याद्युपपातकम् ।।

हरत्यशेषपापानि तृतीये नात्र संशयः ।।४१।।

दृष्ट्वा दोलायितं देवं सर्वपापैः प्रमुच्यते ।।

आध्यात्मिकैराधिभौतैराधिदैवैर्विमुच्यते ।। ४२ ।।

इमां यात्रां कारयित्वा चक्रवर्ती भवेन्नृपः ।।

ब्राह्मणस्तु चतुर्वेदी ज्ञानवाञ्जायते ध्रुवम् ।।४३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये दोलारोहणंनाम त्रयश्चत्वारिंशोऽध्यायः ।।४३।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४४

https://sa.wikisource.org/s/h4z
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

अत्र वः कथयिष्यामि व्रतं सांवत्सरं परम्।।

संवत्सरस्यादिदिने पौर्णमास्यां तु फाल्गुने।।१।।

अनादिदेवस्य हरेर्मूर्तयो द्वादशैव याः।।

विष्ण्वादिनामप्रथिताः प्रतिमासं प्रपूजयेत्।।२।।

एकैकां मूर्तिमेतासां मासेषु द्वादशस्वपि ।।

प्रत्यहं पूजयेत्पुष्पैः फलैर्द्वादशभिस्तथा ।।३।।

अशोको मल्लिका चैव पाटलं च कदंबकम् ।।

करवीरं जातिपुष्पं मालतीशतपत्रकम् ।।४ ।।

उत्पलं चैव वासंती कुंदं पुन्नागकं तथा।।

एतानि क्रमशो दद्यात्कुसुमानि हरेर्मुदा ।। ५ ।।

दाडिमं नारिकेलं च आम्रं च पनसं तथा ।।

खर्जूरं तृणराजं च प्राचीनामलकं तथा ।। ६ ।।

श्रीफलं नागरंगं च क्रमुकं करमङ्गकम् ।।

जातीफलं च क्रमशः फलान्येतानि वै ददेत् ।। ७ ।।

भक्ष्यभोज्यानि चोष्याणि लेह्यानि मधुराणि च ।।

आसनाद्युपचारांश्च दत्त्वा स्तुत्वा जगद्गुरुम् ।। ८ ।।

सर्वव्यापिन्जगन्नाथ भूतभव्यभवत्प्रभो ।।

त्राहि मां पुंडरीकाक्ष विष्णो संसारसागरात् ।। ९ ।।

एकार्णवजले रौद्रे निरालंबे पुरा मधुम्।।।

अवधीर्विश्वरक्षार्थं मधुसूदन रक्ष माम् ।।2.2.44.१०।।

त्रीन्विक्रमान्क्रमित्वा यो हत्वा दैत्यबलं महत्।।

त्रैलोक्यं पालयामास त्रिविक्रम नमोस्तु ते ।।११।।

कृत्वा वामनकं रूपमृग्यजुःसामगर्भकम् ।।

मोहयित्वाद्भुतं रूपं तस्मै मायाविने नमः ।। १२ ।।

यः श्रियं धारयेन्नित्यं हृदि भक्तेभ्य एव च ।।

ददात्यपि श्रियं तस्मै श्रीधराय नमोऽस्तु ते ।। १३ ।।

इंद्रियाणामधिष्ठाता यः सर्वेषां सदा प्रभुः ।।

सुखैकहेतुर्भक्तानां हृषीकेश नमोऽस्तु ते ।। १४ ।।

यन्नाभिपद्मसंभूतं जगदेतच्चराचरम् ।।

विधातुरासनं नित्यं पद्मनाभ नमोऽस्तु ते ।। १५ ।।

यस्यैतत्त्रिगुणैर्बद्धं जगदेतच्चराचरम्।।

दाम्ना बद्धः स गोप्या तु दामोदर नमोऽस्तु ते ।। १६ ।।

त्रैलोक्यविप्लवकरं हतवान्केशिदानवम्।।

ईशिता सर्वसौख्यानां त्राहि केशव मां प्रभो ।। १७ ।।

स्रष्टा ससर्ज भूतानि जगतामादिकारणम् ।।

अचिंत्यमहिमन्विष्णो नारायण नमोऽस्तु ते ।।१८।।

मायया यस्य विश्वं वै मोहितं यदनाद्यया ।।

सर्वधर्मस्वरूपाय माधवाय नमो नमः ।। १९ ।।

ज्ञानिनां ज्ञानगम्यस्त्वमगतीनां गतिप्रदः ।।

संपूर्णमस्तु गोविंद त्वत्प्रसादाद्व्रतं मम ।। 2.2.44.२० ।।

प्रतिमासं पूजनांते मंत्रैरेतैः कृतांजलिः ।।

प्रार्थयेत्परया भक्त्या भजनांतं जनार्दनम् ।। २१ ।।

एवं संवत्सरं नीत्वा व्रतं वै मूर्तिपंजरम् ।।

संपूर्णफलसिद्ध्यर्थं प्रतिष्ठाविधिमाचरेत् ।। २२ ।।

सुवर्णनिर्मिता विष्णोर्मूर्तयो द्वादशैव तु ।।

यथाशक्ति कृताः स्थाप्याः कुंभेषु द्वादशस्वपि ।। २३ ।।

आम्रपात्राच्छादितेषु साक्षात्तेषु पृथक्पृथक् ।।

श्वेतवस्त्रावनद्धेषु गंधपल्लववारिषु ।। २४ ।।

अष्टदिक्षु चतुर्दिक्षु सर्वतोभद्रमंडले ।।

स्थापनीयाश्च ते कुंभास्तेषु पूज्याश्च मूर्तयः ।। २५ ।।

द्वादशाक्षरमंत्रेण उपचारैः पृथक्पृथक् ।।

पंचामृतैश्च स्नपनं सर्वेषामादितो द्विजाः ।।२६।।

गीतवादित्रनृत्याद्यैस्तथा ब्राह्मणपूजनैः ।।

वस्त्रयुग्मैर्द्वादशभिश्छत्रोपानद्युगैस्तथा ।।२७।।

व्यजनैरुदकुंभैश्च शयनीयैः सपीठकैः ।।

गंधैर्माल्यैः सुतांबूलैर्मुद्रिकाकुंडलैस्तथा ।। २८ ।।

प्रदीपाः सर्पिषा ज्वाल्या द्वादशद्वादश क्रमात् ।।

नीत्वा त्रियामामित्थं वै प्रभाते वह्निकर्म च ।। २९ ।।

समिदाज्यचरूणां वै प्रतिदेवं शतत्रयम्।।

अष्टोत्तरसहस्रं तु तिलैर्व्याहृतिभिस्ततः ।। 2.2.44.३० ।।

होमांते प्राशनं कृत्वा दद्यादाचार्यदक्षिणाम् ।।

कपिला धेनवो देयाः सालंकाराश्च द्वादश ।।३१।।

शतं चतुश्चत्वारिंशद्ब्राह्मणान्भोजयेत्ततः ।।

तद्देववृंदं सघटं सवितानं सचामरम् ।। ३२ ।।

सर्वोपचारसहितमाचार्याय निवेदयेत्।।

व्रतराजमिमं कृत्वा सर्वान्कामानवाप्नुयात् ।।३३।।

गुंडिचाद्यास्तु या यात्रा विष्णोर्द्वादश कीर्तिताः ।।

तासां दर्शनजं पुण्यं व्रतेनानेन लभ्यते ।। ३४।।

ऐंद्रं पदं सार्वभौमं चक्रवर्तित्वमेव च ।।

अष्टैश्वर्यमवाप्नोति देवदेवप्रसादतः ।। ३५ ।।

एतन्महापुण्यतमं नारदः कृतवान्व्रतम् ।।

कृत्वा द्वादश वर्षाणि जीवन्मुक्तोऽभवन्मुनिः ।। ३६ ।।

अन्ये च वैष्णवा ये वै चक्रुस्ते बहुशः पुरा ।। व्रतं नातः परतरं भगवत्प्रीतिकारकम् ।। ३७ ।।

धर्म्यं यशस्यमायुष्यं ब्राह्मण्यं वंशवर्द्धनम्।।

भवंतोऽपि यतात्मानः कुर्वंति व्रतमुत्तमम्।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये ज्येष्ठपंचकव्रतवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४५

https://sa.wikisource.org/s/h1p
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। मुनय ऊचुः ।। ।।

मुने व्रतमिदं पुण्यं श्रुतं वै मूर्तिपंजरम् ।।

अन्तःप्रमोदजननं महिम्ना च महत्तरम् ।। १ ।।

यात्रा द्वादश पुण्या या उद्दिष्टा भगवत्प्रियाः ।।

तासां द्वे अवशिष्टे नः कथयस्व महामुने ।। २ ।।

।। जैमिनिरुवाच ।। ।।

वासंतिकां समाख्यास्ये यात्रां दमनभंजिकाम्।।

यस्यां कृतायां दृष्टायां प्रीणाति पुरुषोत्तमः ।। ३ ।।

पुरा यत्कथितं विप्रास्तृणं दमनकाह्वयम् ।।

चैत्रशुक्लत्रयोदश्यामाहरेत्तत्समूलकम् ।। ४ ।।

तन्मध्ये मंडलं कुर्यात्सुशुभं पद्मसंज्ञितम् ।।

तदंतर्वासयेद्देवप्रत्यर्चां प्रतिपूजिताम् ।। ५ ।।

युक्तां श्रीसत्यभामाभ्यां पूजयेद्विधिवच्च ताः ।।

अर्द्धरात्रे तु कर्मेदं देवदेवस्य कारयेत् ।। ६ ।।

पुरा निशीथेऽपि विभुर्बभंज दमनासुरम् ।।

भंक्त्वा लेभे परां प्रीतिं तदंगोत्थं च तत्तृणम् ।।७।।

तस्यामेव त्रयोदश्यां तृणं दैत्यं विभावयेत् ।।

कृतांजलिपुटो भूत्वा वाक्यं चेदमुदाहरेत् ।। ८।।

अवधीर्दमनं दैत्यं पुरा त्रैलोक्यकंटकम् ।।

स एवेत्थं परिणतः पुरतस्तव तिष्ठति ।। ९ ।।

अस्योत्पत्तौ तदा प्रीतिरासीद्या तव माधव ।।

अधुनापि तथैवास्तां प्रीतिर्दमनभंजने ।। 2.2.45.१० ।।

इत्युक्त्वा तृणमेके तु करे देवस्य दापयेत् ।।

ततोऽवशिष्टां रात्रिं च नृत्यगीतादिभिर्नयेत् ।। ११ ।।

ततश्चाभ्युदिते सूर्ये देवं तृणपुरःसरम् ।।

नयेच्च जगदीशस्य समीपं द्विजसत्तमाः ।। १२ ।।

उपचारैर्जगन्नाथं पूजयेत्पूर्ववत्ततः ।।

हिरण्यकशिपुं हत्वा ह्यन्त्रमालां तदंगजाम् ।। १३ ।।

कृत्वा कण्ठे यथाऽप्रीणास्तथेदं दमनं तृणम् ।।

तव प्रीत्यै तु भगवन्मया दत्तं तवांगके ।। १४ ।।

इत्युच्चार्य हरेर्मूर्ध्नि दद्याद्गंधतृणं शुभम् ।।

तदा दृष्ट्वा हरेर्वक्त्रपद्मं प्रीतिकरं मुदा ।।

भवदुःखपरिक्षीणः सुखमाप्नोत्यनुत्तमम् ।। १५ ।।

गृहीत्वा मूर्ध्नि तच्छाखां विष्णुमूर्ध्नोऽपकाषताम् ।।

सर्वपापविनिर्मुक्तो वसेद्विष्णुपुरे ध्रुवम् ।। १६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये दमनकभंजनविधिवर्णनंनाम पञ्चचत्वारिंशोऽध्यायः ।। ४५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४६

https://sa.wikisource.org/s/h50
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। जैमिनिरुवाच ।। ।।

अतः परं प्रवक्ष्यामि यात्रामक्षयमोक्षदाम् ।।

अनायासेन मूढानां वासनाबद्धचेतसाम् ।। १ ।।

वैशाखस्यामले पक्षे द्वितीयारात्रिमध्यतः ।।

मण्डपं च चतुष्कोणं सुधालिप्तं सवेदिकम् ।। २ ।।

सुधौतवाससा कुर्यात्प्रतिसीरासमं ततः ।।

साधुसोपानसंयुक्तं चारुचंद्रातपान्वितम्।। ३ ।।

तन्मध्ये विन्यसेन्नूनं साधु भद्रासनोत्तमम् ।।

तस्मिन्निचोलसंछन्ने विन्यसेत्स्वर्णभाजनम् ।। ४ ।।

तस्य पश्चिमभागे वै स्वासीनो ब्राह्मणः शुचिः ।।

पात्रांतरे तु गृह्णीयाच्चंदनं पचविंशतिम् ।। ५ ।।

सुपिष्टं कृष्णस्नेहस्य गृह्णीयाच्च पलाधिकम् ।।

अगुर्वर्द्धं कुंकुमं स्यात्कुंकुमार्द्धं च सिह्लकम् ।। ६ ।।

कस्तूरिकाकर्पुरयोः प्रमाणं सिह्लसंमितम् ।।

सर्वमेकत्र संपिष्यात्पाटलोद्भववारिणा ।। ७ ।।

पलद्वयं ततो दद्यादगुरुस्नेहमुत्तमम् ।।

एकत्र लोडितां कृत्वा पूर्वपात्रे निधापयेत् ।। ८ ।।

आच्छाद्य केतकीपत्रैर्वेष्टयेच्चीनवाससा ।।

गन्धस्ते सोममंत्रेण रक्षेद्गरुडमुद्रया ।। ९ ।।

एवं तु मण्डपे तस्मिन्साधिवासं निधापयेत् ।।

अरुणोदयकालेऽथ नयेत्कृष्णस्य सन्निधिम् ।। 2.2.46.१० ।।

शंखचामरछत्राद्यैर्भ्रामयित्वा सुरालयम् ।।

देवाग्रे स्थापयित्वा च पूजयेत्पुरुषोत्तमम्।। ११ ।।

उद्घाटयेत्ततो वस्त्रे दिव्यदृष्ट्यावलोकयेत् ।।

प्रोक्षितं मंत्रराजेन संकुर्यात्ताडनादिभिः ।। १२ ।।

गंधपुष्पाक्षतैः पूज्यः श्रियः सूक्तेन लेपयेत् ।।

श्रीशस्य सर्वगात्रेषु मृदुस्पर्शं शनैः शनैः ।। १३ ।।

वैष्णवा जयशब्दैस्तं वर्द्धयंति तदा हरिम् ।।

नानासूक्तोपनिषदैर्विद्वांसस्तं स्तुवंति वै ।। १४ ।।

वेणुवीणादिकैर्नृत्यगीतवाद्यैरनेकशः ।।

व्यजनैश्चामरैच्छत्रैरन्यैर्नानोपहारकैः ।। १५ ।।

संतोषयञ्जगन्नाथं तृतीयादौ विलेपयेत् ।।

यस्य चिंतनमात्रेण तापा नश्यंति देहिनाम् ।। ।। १६ ।।

सोऽसौ संदर्शनात्तापान्नृणां हंति तदा द्विजाः ।।

अचिन्त्यो महिमा विष्णोरीदृक्ताद्दृक्तया सदा ।। १७ ।।

ततः सूक्ष्मांबरैर्माल्यैर्भक्ष्यभोज्यादिपानकैः ।।

द्रव्यैर्नानाविधैर्हृद्यैर्गव्यैरावर्तितैः शुभैः ।। १८ ।।

ततः संपूजयेद्देवं तांबूलैश्च सुसंस्कृतैः ।।

तस्मिन्काले तु ये कृष्णं भक्त्या पश्यंति मानवाः ।। १९ ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।।

विष्णोः स्वरूपमासाद्य विष्णुलोके वसंति वै ।। 2.2.46.२० ।।

पुरा कलियुगे विप्रा दक्षो नाम प्रजापतिः ।।

आध्यात्मिकादिसंतापैः सुदीनान्वीक्ष्य मानवान् ।। २१ ।।

तत्र गत्वा कृपायुक्तो महिमानं चकार वै ।।

यथाविधि मया प्रोक्तं स एव प्रथमं द्विजाः ।। २२ ।।

प्रलिप्य चन्दनेनांगे माधवामलपक्षके ।।

तृतीयायां जगन्नाथं स्तुतिमेतां मुदा जगौ ।।२३।।

।। दक्ष उवाच ।। ।।

देवदेव जगन्नाथ सहजानंदनिर्मल ।।

संसारार्णवसंमग्नांस्त्राहि नः परमेश्वर ।। २४ ।।

नानाविधैश्च संतापैः संतप्तान्मानवानिमान् ।।

ममानुक्रोशबुद्ध्या वै शुभदृष्ट्याऽमृतेन च ।।२५।।

संतर्पय तृणाञ्छुष्कान्कृष्ण मेऽघ नमोऽस्तुते ।।

कलिकल्मषसंमूढानुद्धर्तुं जगतां पते ।। २६ ।।

अवतारोऽयमेतस्मिन्नीलाचलगुहांतरे ।।

चिरकालप्ररूढानां दुस्त्यजानां महांहसाम् ।।२७।।

राशिं दग्धुं त्वमेवेशो दीनानाथकृपाकर ।।

त्वद्दर्शनमहायोगे यमाद्यष्टांगवर्जिते ।। २८ ।।

येषां मतिः समुत्पन्ना चतुर्वर्गैकसाधने ।।

न ते शोचंति दुष्पारे भवारण्ये महाभये ।। २९ ।।

कर्मानपेक्षं देवेश नात्मज्ञानं विमोचकम् ।।

इदं ते दर्शनं नाथ विना कर्मापि मोचयेत् ।। 2.2.46.३० ।।

जय कृष्ण जयेशान जयाक्षर जयाव्यय ।।

प्रसीदानुगृहाणेमान्दीनान्मूढान्विचेतसः ।। ३१ ।।

इति स्तुत्वा दंडपातं पपात चरणांबुजे ।।

प्रसीदेश प्रसीदेश प्रसीदेशेति घोषयन् ।। ३२ ।।

ततो जगाद भगवान्सुस्वरेण प्रजापतिम् ।।

उत्तिष्ठ वत्स ते दत्तं दुर्लभं यद्वरं त्वया ।। ३३ ।।

कांक्षितं मत्प्रसादेन भविष्यति न संशयः ।।

मदनुग्रहोऽल्पपुण्यानां दुर्लभो विदितस्तव ।। ।। ३४ ।।

मदंगजातोऽस्ति भवान्मां त्वं प्रार्थितवानसि ।।

ममोत्सवेन सन्तोष्य ततस्ते प्रददाम्यहम् ।। ३५ ।।

इमामक्षययात्रां ये भक्त्या पश्यंति हर्षिताः ।।

तस्मिन्काले यदिच्छंति मनसा तदवाप्नुयुः ।। ३६ ।।

यथा संतापहरणं चन्दनेनानुलेपनम् ।।

तथोत्सवोऽयं मे दक्ष संतापत्रयनाशनः ।। ३७ ।।

मत्प्रेरितमतिस्त्वं हि उत्सवं कृतवानसि ।।

संकल्पितोऽयं मनसा दीनोद्धृत्यै मया ध्रुवम् ।। ३८ ।।

त्वयाभिकाक्षितं सर्वं दास्याम्येव प्रजापते ।।

द्वादशैता महायात्रा गुण्डिचाद्यास्तु पावनाः ।। ३९ ।।

एकैका मुक्तिदा सर्वा धर्मकामार्थवर्द्धनाः ।। 2.2.46.४० ।।

तासामेकतमां वापि यो भक्त्या चावलोकयेत् ।।

एकयापि भवाब्धिं स तीर्त्वा विष्णुपदं व्रजेत् ।। ४१ ।।

।। जैमिनिरुवाच ।। ।।

इत्युदीर्य प्रजानाथं भगवान्स तिरोदधे ।। ४२ ।।

दक्षः प्रजापतिः सोऽपि श्रद्दधानस्तदाज्ञया ।।

संवत्सरं गिरौ स्थित्वा संददर्श महोत्सवान् ।। ४३ ।।

सर्वज्ञो ब्राह्मणो भूत्वा कौशिकस्य कुलोत्तमे ।।

लोकान्प्रवर्तयामास यथाविधि महेषु सः ।। ४४ ।।

विश्वासायाल्पबुद्धीनां यात्रा वै परिकीर्तिताः ।।

अयं च साक्षात्परमब्रह्मरूपी जगद्गुरुः ।।

प्रसादितः सुरेशेन लोकानुग्रहणाय वै ।। ४५ ।।

यथा तथा दृष्टिपथं यातो मुक्तिप्रदो धुवम् ।।

सर्वान्कामान्ददात्येव नारीणां नात्र संशयः ।। ४६ ।।

सत्यप्रतिज्ञो भगवांस्तत्रास्ते मधुसूदनः ।।

शोकं तरति यं दृष्ट्वा भवपाथोधिसंभवम् ।।

किं व्रतैः किं तपोदानैः किं कृच्छ्रैः क्रतुभिस्तथा ।। ४७ ।।

किमष्टांगेन योगेन किं सांख्येन परेण च ।। ४८ ।।

तीर्थराजजले स्नात्वा क्षेत्रे श्रीपुरुषोत्तमे ।।

न्यग्रोधमूलवसतौ वसन्तं चर्मचक्षुषा ।।

दृष्ट्वा दारुमयं ब्रह्म देहबंधात्प्रमुच्यते ।। ४९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४७

https://sa.wikisource.org/s/h51
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।। मुनय ऊचुः ।। ।।

भगवन्सर्वशास्त्रज्ञ श्रुतं परममद्भुतम् ।।

यात्रारूपं भगवतो माहात्म्यं पापनाशनम् ।। १ ।।

यथाहं पूजितो देवः कामिभिः सर्वकामदः ।।

भूत्युपासनया भूतिप्रदो ब्रूहि तथा हि नः ।।२।।

।।जैमिनिरुवाच।।

सर्वा विभूतयो विष्णोर्जगत्यस्मिंश्चराचराः।।

भूतिप्रदो विभूतिश्च स एकः परमेश्वरः।।३।।

यथायथोप चरति तथा वै जायते नरः।।

एतावदस्य महिमा परिमातुं न शक्यते।।४।।

यो यथा समुपास्ते तं तथा वै फलमाप्नुयात्।।

एकः पंथाश्चतुर्णां वै धर्मादीनां स दारवः ।। ५ ।।

धर्मस्य पथा गहनः संकीर्णो वहुशासनैः ।।

तत्त्वावधारणे नास्य क्षमः कोऽपि द्विजोत्तमाः ।। ६ ।।

अर्थकामौ हि तन्मूलावित्थं स्थूलगती सदा ।।

तेषां त्रयाणां भगवाननायासेन वृद्धिकृत् ।। ७ ।।

धर्मो हि भगवान्विष्णुर्धर्ममूलमिदं जगत् ।।

धर्मस्य जगतश्चापि प्रभुरेष जनार्दनः ।। ८ ।।

पुरुषार्थमये तस्मिन्भक्तिर्यस्य प्रतिष्ठिता ।।

स सर्वकामतृप्तात्मा न शोचति न कांक्षति ।। ९ ।।

त्रैलोक्यैश्वर्यदातासौ शक्ररूपो ह्युपासितः ।।

भावितो धातृरूपेण वंशवृद्धिकरो हरिः ।। 2.2.47.१० ।।

सनत्कुमाररूपेण दीर्घमायुः प्रयच्छति ।।

वृत्तिसंपत्प्रदो ह्येष पृथुरूपेण भावितः ।। ११ ।।

गङ्गादितीर्थफलदो वाचस्पतिरुपासितः ।।

अंतस्तमः प्रणुदति भास्वद्रूपेण भावितः ।। १२ ।।

सौभाग्यमतुलं दद्यादमृतांशुरुपासितः ।।

विद्याष्टादशतत्त्वज्ञो वाक्पतित्वेन भावयन् ।। १३ ।।

वाजिमेधादियज्ञानां फलदोऽयं सनातनः ।।

यज्ञेश्वरस्वरूपेण भावितोऽयं जगन्मयः ।। १४ ।।

ध्यातः कुबेररूपेण समृद्धिमतुलां ददेत् ।। १५ ।।

एवं दयांबुधिरसौ तस्मिन्नीलाचले वसन् ।।

दीनानाथानुग्रहाय दारुव्याजशरीरवान् ।। १६ ।।

प्रयात तत्र भो विप्रा वसध्वं सुसमाहिताः ।।

श्रीशपादाब्जयुगलं शरणं तत्प्रपद्यत ।। १७ ।।

ऐहिकामुष्मिकान्भोगान्वाञ्छध्वं यदि शाश्वतान् ।।

अन्ते मुक्तिं च कैवल्यां यथेच्छं तत्र प्राप्नुत ।। १८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४८



।। मुनय ऊचुः ।। ।।

प्रासादस्य प्रतिष्ठांत इन्द्रद्युम्नाय यद्वरान् ।।

आज्ञापयामास हरिर्यात्रास्ता द्वादशापि च ।। १ ।।

त्वत्सकाशाच्छ्रुतं सर्वं ततः स पृथिवीपतिः ।।

किं चकार महाबुद्धिर्विष्णुभक्तोऽप्यवस्थितः ।। ।। २ ।।

।। जैमिनिरुवाच ।। ।।

वराँल्लब्ध्वा जगन्नाथात्साक्षाद्ब्रह्मस्वरूपिणः ।।

कृतकृत्यं स मेने वा आत्मानं नरपुंगवः ।। ३ ।।

यथाज्ञं कारयित्वा वै यात्रास्ताः पुण्यमोक्षदाः ।।

बहूपचारैर्बहुधा समभ्यर्च्य जगद्गुरुम् ।। ४ ।।

गालराजं समादिश्य देवस्याज्ञां यथाविधि ।।

इदं प्रोवाच मधुरं धर्मन्यायसमायुतम् ।। ५ ।।

।। इन्द्रद्युम्न उवाच ।। ।।

राजन्बहुश्रुतोऽसि त्वं धर्मनिष्ठामुपागतः ।।

भगवत्यपि भक्तिस्ते कर्मणा मनसा गिरा ।। ।। ६ ।।

न ह्येकस्योपदशाय भगवाननुशास्ति वै ।।

चराचरगुरुर्ह्येष विश्वं तच्छिष्यतां गतम् ।। ७ ।।

ममानुग्रहलक्ष्येण अवतीर्णो जगत्पतिः ।।

उद्धृत्यै दीनमनसामत्रापि स्थास्यते चिरात् ।। ८ ।।

भक्त्या च श्रद्धया युक्त एतदाज्ञां प्रवर्तय ।।

प्रतिमाव्यवहारेण नैनं जानीहि भूमिप ।। ९ ।।

प्रत्यक्षं ते यथा जातं त्रैलोक्यं भूमिमागतम् ।।

प्रासादांतः प्रवेशे हि यस्यास्य जगदीशितुः ।। 2.2.48.१० ।।

पितामहाद्यास्त्रिदशाः सर्वे युगपदागताः ।।

विश्वमूर्त्या वयं सर्वे जाता वै नष्टचेतनाः ।। ११ ।।

चराचरमयो ह्येष साक्षाद्दारुस्वरूपधृक् ।।

कल्पवृक्षमिमं विद्धि भूगतं सर्वकामदम् ।। १२ ।।

उपास्यैनं हि लभते यो यथा कामनाफलम् ।।

यतंतो बहुधा यं हि यतयो न विदन्ति वै ।।

तमःपारे प्रतिष्ठतं किंस्विज्ज्योतिः स्वरूपिणम् ।। १३ ।।

यतीनां धर्मनिष्ठानां शुद्धानामूर्ध्वरेतसाम् ।।

अनन्यभक्तियुक्तानामेकः पंथास्तु योगिनाम् ।। १४ ।।

ग्रीष्मे शीत गभीरे वै निमज्ज्य सलिलाशये ।।

परां निर्वृतिमाप्नोति तथास्मिन्करुणांबुधौ ।। १५ ।।

त्रितापदुःखं त्यजति संप्राप्ते पुरुषोत्तमे ।। १६ ।।

न माता न पिता मित्रं न पत्नी न सुतस्तथा ।।

शरणागतदीनानां यथायमुपकारकः ।। १७ ।।

तदेनं परिसेवस्व भुक्तिमुक्तिफलप्रदम् ।।

पौरैः प्रजाभिर्यात्रास्ताः समृद्धं परिवर्त्तय ।। १८ ।।

साधारणो धर्मपंथा नृपाणां नृपसत्तम ।।

प्रवर्तितश्च पूर्वेण पाल्यतेऽनंतरेण सः ।। १९ ।।

नृसिंहं भज राजेंद्र उपचारैर्महर्द्धिभिः ।।

पूजयस्व त्रिसंध्यं तं परं निर्वाणमाप्नुहि ।। 2.2.48.२० ।।

स्वकृतादुत्तमं प्राहुः परकृत्योपरक्षणम्।।

पालयेत्परदत्तं यः स्वदत्तादुत्तमं हि तत् ।। २१ ।।

।। जैमिनिरुवाच ।। ।।

कृतांजलिपुटः सोऽथ श्वेतो नृपतिसत्तमः ।।

मूर्ध्नि जग्राह तद्वाक्यं मालामिव गुणान्विताम् ।। २२ ।।

इंद्रद्युम्नोऽपि राजर्षिः प्रसाद्य पुरुषोत्तमम् ।।

सह श्रीमान्ब्रह्मलोकं जगाम ह ।। ।। २३ ।।

एतद्वः कथितं पुण्यं क्षेत्रमाहात्म्यमुत्तमम् ।।

तत्र नित्योषितस्यापि माहात्म्यं ब्रह्मदारुणः ।। २४ ।।

यश्चैतच्छृणुयाद्भक्त्या वाच्यमानं द्विजोत्तमाः ।।

अश्वमेधसहस्रस्य फलं सोऽविकलं लभेत् ।। २५ ।।

अर्द्धोदयस्तु यो योगः स्कंदेन परिकीर्तितः ।।

तत्कोटिगुणितं पुण्यं विष्णोर्माहात्म्यकीर्तनात् ।। २६ ।।

प्रातः प्रातर्यः शृणुयात्कपिलाशतदो भवेत् ।।

गांगैः पुष्करजैस्तोयैरभिषेकफलं लभेत् ।। २७ ।।

धन्यं यशस्यमायुष्यं पुण्यं संतानवर्द्धनम्।।

स्वर्गप्रतिष्ठागतिदं सर्वपापापनोदनम् ।। २८ ।।

एतद्रहस्यमाख्यातं पुराणेषु सुगोपितम् ।।

वैष्णवेभ्यो विनाऽन्येषु न तु वाच्यं कदाचन ।।२९।।

कुतर्कोपहता ये च दुरधीतश्रुतागमाः ।।

नास्तिका दांभिका नित्यं परदोषोपदर्शिनः ।।

अवैष्णवा मोघजीवास्तेभ्यो गोप्यं सदैव हि ।। 2.2.48.३० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्रमाहात्म्येऽष्टचत्वारिंशोऽध्यायः ।। ४८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/पुरुषोत्तमजगन्नाथमाहात्म्यम्/अध्यायः ४९

https://sa.wikisource.org/s/h53

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | पुरुषोत्तमजगन्नाथमाहात्म्यम्

।।मुनय ऊचुः ।। ।।

भगवञ्जैमिने सर्वं वेदवेदांगपारग ।।

त्वदनुग्रहतोऽस्माभिर्माहात्म्यं जगदीशितुः ।। १ ।।

क्षेत्रराजस्य तस्यैव यात्राणां चैव सर्वशः ।।

भगवद्भोजनोच्छिष्टप्राशनादिफलं तथा ।। २ ।।

इंद्रद्युम्नस्य राज्ञो वै वृत्तांतमतिदुर्लभम् ।।

नीलमाधवरूपं तु दारुब्रह्मप्रकाशनम् ।। ।। ३ ।।

श्रुतं त्वद्वदनांभोजाद्गलितं तद्यथाविधि ।।

इदानीं श्रोतुमिच्छामस्त्वत्तो हि वदतां वर ।। ४ ।।

सर्वं विस्तरतो ब्रह्मन्वयं सर्वे मुदान्विताः ।।

पुराणश्रवणस्यैव यदुक्तं फलमेव तत् ।। ५ ।।

को वा तस्य विधिश्चैव केन वा स्यात्तु सांगकम्।।

अस्मासु चेदनुक्रोशो यथावद्वक्तुमर्हसि ।। ६ ।।

।। ।। जैमिनिरुवाच ।। ।।

साधु साधु मुनिश्रेष्ठा यत्पृष्टं परया मुदा ।।

तत्र मे प्रीतिरतुला जाता रोमांचकारिणी ।। ७ ।।

तद्वः सर्वं प्रवक्ष्यामि शृणुध्वं सावधानतः ।।

पुराणश्रवणारंभे यथाविभवमात्मनः ।। ८ ।।

आदौ संकल्प्य विधिवद्ब्राह्मणं शुद्धवंशजम् ।।

अव्यंगावयवं शांतं स्वशाखं स्वपुरोधसम् ।। ९ ।।

सर्वशास्त्रार्थतत्त्वज्ञं भूषणैरतिशोभनैः ।।

वस्त्रचंदनमाल्याद्यैर्वृणुयात्पाठसंश्रुतौ ।। 2.2.49.१० ।।

कृतांजलिपुटो भूत्वा ततः संप्रार्थयेद्द्विजम् ।।

त्वं विष्णुर्विष्णुरेव त्वं न तु भेदः कदाचन ।। ११ ।।

निर्विघ्नं मे भवत्वेव त्वत्प्रसादात्प्रसीद च ।।

ततो वृतं ब्राह्मणं च बहुमूल्यासने शुभे ।। ।। १२ ।।

वासयित्वा च तस्यैव गले मालां विनिक्षिपेत् ।।

मस्तके पुष्पगर्भं च चंदनैरनुलेपयेत् ।। १३ ।।

यस्मात्तस्मिंश्च समये विप्रो व्याससमो मतः ।।

तेनैव ब्राह्मणेनैव पुस्तके विष्णुरूपके ।। १४ ।।

कारयेद्व्यासपूजां च श्रीखण्डागुरुपुष्पकैः ।।

नानोपचारै रुचिरैर्भक्ष्यभोज्यादिकैरपि ।। १५ ।।

भक्त्या चासनदानादिविधिः कार्यो दिने दिने ।।

सांप्रतं कथयाम्येवं श्रूयतां श्रोतृलक्षणम् ।। १६ ।।

गतानुगतिकानां च निवासार्थं तथा द्विजाः ।।

आसनानि यथायोग्यं रचयित्वा स्वयं तथा ।। १७ ।।

शुभासनांतरस्थो हि भवेदुत्कण्ठमानसः ।।

अथवा संस्कृते देशे सर्वैः सह वसेद्भुवि ।। १८ ।।

व्यासस्याग्रे निवसतिरासने नोच्च एव च ।।

कृतस्नानो मुदा युक्तो धारयंञ्छुक्लवाससी ।। १९ ।।

आचांतः शंखचक्रादितिलकान्वितविग्रहः ।।

मनसा भावयेद्विष्णुं विश्वासं कारयेद्दृशम् ।। 2.2.49.२० ।।

पुराणे ब्राह्मणे चैव देवे च मंत्रकर्मणि ।।

तीर्थे वृद्धस्य वचने विश्वासः फलदायकः ।। २१ ।।

अतो मुनिवराः सर्वं पुण्यं विश्वासकारणम् ।।

पाषंडादिकसंभाषं वृथालापं प्रयत्नतः ।। २२ ।।

पुराणश्रवणे काले सर्वचिंतां च वर्जयेत् ।।

अनेन विधिना विप्राः प्रत्यहं शृणुयान्मुदा ।। २३ ।।

ततः पाठे समाप्ते च करतालादिकैर्मुहुः ।।

जय कृष्ण जगन्नाथ हर इत्यादिनामभिः ।। २४ ।।

विस्तारयेद्यथाकाशे श्रूयते शब्द एव सः ।।

एवं च प्रत्यहं कुर्यात्प्रीतये मुरवैरिणः ।। २५ ।।

ततो ग्रंथसमाप्तौ च विष्णुप्रीणनतत्परः ।।

विशेषाद्वस्त्रमाल्यादिचंदनैर्भूषणैस्तथा ।।

भूषयेत्परया भक्त्या विप्रं व्याससमं द्विजाः ।। २६ ।।

आत्मशक्त्या प्रदद्याच्च दक्षिणां वै यथाविधि ।।

ये ये प्रदद्युर्यद्यच्च मत्तस्तच्छृणुताधुना ।। २७ ।।

राजानः करिणो दद्युः सालंकारान्सुलक्षणान् ।।

क्षत्रिया एवमेवं च ते वै राजसमा मताः ।। २८ ।।

ब्राह्मणाः पुस्तकांश्चैव विष्णोरर्चाकरंडिकाः ।।

कनकं रजतं चैव धान्यं वस्त्रं स्वभक्तितः ।। २९ ।।

विशश्च रत्नभूषाढ्यान्सिन्धुदेशोद्भवानपि ।।

गाश्च लक्षणसंयुक्ताः सवत्साश्च पयस्विनीः ।। 2.2.49.३० ।।

अन्यच्च कनकाद्यं च त्यजेयुर्धर्मतत्पराः ।।

शूद्राः प्रदद्युः परया मुदा संयुक्तमानसाः ।। ३१ ।।

वासांसि च सुवर्णं च धान्यं रत्नानि गास्तथा ।।

नानालंकारयुक्ताश्च घटोघ्नीर्बालगर्भिणीः ।। ३२ ।।

एवं वै दक्षिणां दद्याद्येन संतुष्यते गुरुः ।।

आत्मनः शक्तितो विप्रा वित्तशाठ्यं न कारयेत् ।। ३३ ।।

शांतिकं पौष्टिकं चैव व्रतोद्वाहादि कर्म च ।।

मोक्षस्य साधकं कर्म पुराणश्रवणं तथा ।। ३४ ।।

यज्ञादिकं च दानं च व्रतं नानाविधं तथा ।।

यदि चेद्दक्षिणाहीनं तदा भवति निष्फलम्।।३५।।

असुराः कर्मणस्तस्य हरंति फलमेव तत् ।।

यथा स्त्रीणां च लावण्यं भर्तृस्नेहविवर्जितम् ।। ३६ ।।

युद्धात्पलायितानां च पृष्ठं कृत्वा धनुष्मताम् ।।

विना धावनमश्वानां दुष्टत्वं हि यथा द्विजाः ।। ३७ ।।

मूकत्वेनेव पांडित्यं सर्वशास्त्रविपश्चिताम् ।।

हीनं दक्षिणया यद्यत्कर्म तद्वच्च निष्फलम् ।।३८।।

दानेन क्षीयते यस्मादुरितानां कदंबकम् ।।

दक्षिणेति तथा विप्रा गीयते शास्त्रवेदिभिः ।। ३९ ।।

ततो विप्रान्भोजयेद्वै यथाशक्तिप्रकल्पितैः ।।

कर्पूरेण च खंडेन सर्पिषा पायसैर्युतैः ।।2.2.49.४० ।।

षड्विधैरन्नपानाद्यैः सुस्वादैरमृतोपमैः ।।

तेभ्योपि स्वर्णवस्त्रादि यथाशक्त्या प्रदापयेत्।। ४१ ।।

एतद्वः कथितं सर्वं पुराणश्रवणस्य च ।।

सांगोपांगविधानं च येन स्यात्सफलं त्विदम् ।।

इदानीं भो मुनिश्रेष्ठाः किमन्यज्ज्ञातुमिच्छथ ।।४२।।

।। मुनय ऊचुः ।। ।।

अहोऽस्माकं महाभाग्यं यत्पापौघविनाशनम् ।।

पुराणश्रवणस्यैव फलमस्माभिरेव च ।। ४३ ।।

सांगोपांगविधानं च श्रुतं त्वन्मुखपंकजात् ।।

धन्याः स्म कृतपुण्याः स्म संसारे विगतज्वराः ।। ४४ ।।

इदानीमात्मशक्त्या वै दीयते भवते मुने ।।

दक्षिणा फलसंप्राप्त्यै प्रसन्नस्त्वं गृहाण च ।। ४५ ।।

इत्युक्तवंतो मुनयो ह्यकिंचनाः समित्कुशं पुष्पफलाक्षतादिकम् ।।

क्लृप्त्वा च तस्मै मुनयः सुमुक्ताः क्षेत्रोत्तमं जग्मुरतिप्रहर्षिताः ।। ४६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे पुरुषोत्तमक्षेत्र माहात्म्ये जैमिनिऋषिसंवाद एकोनपंचाशत्तमोऽध्यायः ।। ४९ ।। ।। ।। ।। ।। ।।

इति वैष्णवखण्डे द्वितीयं श्रीपुरुषोत्तम (जगन्नाथ) क्षेत्रमाहात्म्यं समाप्तम् ।। (२-२) ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०१



।। श्रीबदरीनाथाय नमः ।।

।। शौनक उवाच ।। ।।

सूतसूत महाभाग सर्वधर्मविदां वर ।।

सर्वशास्त्रार्थतत्त्वज्ञ पुराणे परिनिष्ठित ।। १ ।।

व्यासः सत्यवतीपुत्रो भगवान्विष्णुरव्ययः ।।

तस्य यत्प्रियशिष्यस्त्वं त्वत्तो वेत्ता न कश्चन ।। २ ।।

प्राप्ते कलियुगे घोरे सर्वधर्मबहिष्कृते ।।

जना वै दुष्टकर्माणः सर्वधर्मविवर्जिताः ।।३।।

क्षुद्रायुषः क्षुद्रप्राणबलवीर्यतपःक्रियाः ।।

अधर्मनिरताः सर्वे वेदशास्त्रविवर्जिताः ।। ४ ।।

तीर्थाटनतपोदानहरिभक्तिविवर्जिताः ।।

कथमेषामल्पकानामुद्धारोऽल्पप्रयत्नतः ।। ५ ।।

तीर्थानामुत्तमं तीर्थं क्षेत्राणामुत्तमं तथा ।।

मुमुक्षूणां कुतः सिद्धिः कुत्र वा ऋषिसंचयः ।।६ ।।

कुत्र वाल्पप्रयत्नेन तपो मन्त्राश्च सिद्धिदाः ।।

कुत्र वा वसति श्रीमाञ्जगतामीश्वरेश्वरः।।

भक्तानामनुरक्तानामनुग्रहकृपालयः।। ७ ।।

एतदन्यच्च सर्वं मे परार्थैकप्रयोजनम् ।।

ब्रूहि भद्राय लोकानामनुग्रहविचक्षण ।। ८ ।।

।। सूत उवाच ।। ।।

साधु साधु महाभाग भवान्परहिते रतः ।।

हरिभक्तिकृतासक्तिप्रक्षालितमनोमलः ।। ९ ।।

अथ मे देवकीपुत्रो हृत्पद्ममधिरोहति ।।

प्रसंगात्तव विप्रर्षे दुर्ल्लभः साधुसंगमः ।। 2.3.1.१० ।।

हरति दुष्कृतसंचयमुत्तमां गतिमलं तनुते तनुमानिनाम् ।।

अधिकपुण्यवशादवशात्मनां जगति दुर्लभः साधुसमागमः ।। ११ ।।

हरति हृदयबन्धं कर्मपाशार्दितानां वितरति पदमुच्चैरल्पजल्पैकभाजाम ।।

जननमरणकर्मश्रांतविश्रांतिहेतुस्त्रिजगति मनुजानां दुर्ल्लभः सत्प्रसंगः ।। १२ ।।

।। सूत उवाच ।। ।।

अयं प्रश्नः पुरा साधो स्कन्देनाकारि सर्वतः ।।

कैलासशिखरे रम्य ऋषीणां परिशृण्वताम् ।।

पुरतो गिरिजाभर्तुः कर्तुं निःश्रेयसं सताम्।।१३।।

।। स्कंद उवाच।। ।।

भगवन्सर्वलोकानां कर्त्ता हर्त्ता पिता गुरुः ।।

क्षेमाय सर्वजंतूनां तपसे कृतनिश्चयः ।। १४ ।।

कलिकाले ह्यनुप्राप्ते वेदशास्त्रविवर्जिते ।।

कुत्र वा वसति श्रीमान्भगवान्सात्वतां पतिः ।। १५ ।।

क्षेत्राणि कानि पुण्यानि तीर्थानि सरितस्तथा ।।

केन वा प्राप्यते साक्षाद्भगवान्मधुसूदनः ।।

श्रद्दधानाय भगवन्कृपया वद मे पितः ।। १६ ।।

।। श्रीमहादेव उवाच ।। ।।

बहूनि संति तीर्थानि क्षेत्राणि च षडानन ।।

हरिवासनिवासैकपराणि परमार्थिनाम् ।। १७ ।।

काम्यानि कानिचित्संति कानिचिन्मुक्तिदान्यपि ।।

इहामुत्रार्थदान्येव बहुपुण्यप्रदानि वै ।। १६ ।।

गंगा गोदावरी रेवा तपती यमुना सरित् ।।

क्षिप्रा सरस्वती पुण्या गौतमी कौशिकी तथा ।। १९ ।।

कावेरी ताम्रपर्णी च चंद्रभागा महेंद्रजा ।।

चित्रोत्पला वेत्रवती सरयूः पुण्यवाहिनी ।। 2.3.1.२० ।।

चर्मण्वती शतद्रूश्च पयस्विन्यत्रिसंभवा ।।

गंडिका बाहुदा सर्वाः पुण्याः सिंधुः सरस्वती ।। २१ ।।

भुक्तिमुक्तिप्रदाश्चैताः सेव्यमाना मुहुर्मुहुः ।।

अयोध्या द्वारका काशी मधुरावंतिका तथा ।। ।।२२।।

कुरुक्षेत्रं रामतीर्थं कांची च पुरुषोत्तमम् ।।

पुष्करं दर्दुरं क्षेत्रं वाराहं विधिनिर्मितम् ।।

बदर्य्याख्यं महापुण्यं क्षेत्रं सर्वार्थसाधनम् ।। २३ ।।

अयोध्यां विधिवद्दृष्ट्वा पुरीं मुक्त्येकसाधनीम् ।।

सर्वपापविनिर्मुक्ताः प्रयांति हरिमंदिरम् ।। २४ ।।

विविधविष्णुनिषेवणपूर्वकाचरितपूजननर्तनकीर्तनाः ।।

गृहमपास्य हरेरनुचिंतनाज्जितगृहार्जितमृत्युपराक्रमाः ।। २५ ।।

स्वर्गद्वारे नरः स्नात्वा दृष्ट्वा रामालयं शुचिः ।।

न तस्य कृत्यं पश्यामि कृतकृत्यो भवेद्यतः ।। २६ ।।

द्वारिकायां हरिः साक्षात्स्वालयं नैव मुंचति ।।

अद्यापि भवनं कैश्चित्पुण्यवद्भिः प्रदृश्यते ।। २७ ।।

गोमत्यां तु नरः स्नात्वा दृष्ट्वा कृष्णमुखांबुजम् ।।

मुक्तिः प्रजायते शेषो विना सांख्यं षडानन ।। २८ ।।

असीवरुणयोर्मध्ये पंचक्रोश्यां महाफलम् ।।

अमरा मृत्युमिच्छंति का कथा इतरे जनाः ।। २९ ।।

मणिकर्ण्यां ज्ञानवाप्यां विष्णुपादोदके तथा ।।

ह्रदे पंचनदे स्नात्वा न मातुः स्तनपो भवेत् ।। 2.3.1.३० ।।

प्रसंगेनापि विश्वेशं दृष्ट्वा काश्यां षडानन ।।

मुक्तिः प्रजायते पुंसां जन्ममृत्युविवर्जिता ।। ३१ ।।

बहुना किमिहोक्तेन नैतत्क्षेत्रसमं क्वचित् ।।

तपोपवासनिरतो मथुरायां षडानन ।।

जन्मस्थानं समासाद्य सर्वपापैः प्रमुच्यते ।। ३२ ।।

विश्रांतितीर्थे विधिवत्स्नात्वा कृत्वा तिलोदकम् ।।

पितॄनुद्धृत्य नरकाद्विष्णुलोकं प्रगच्छति ।। ३३ ।।

यदि कुर्यात्प्रमादेन पातकं तत्र मानवः ।।

विश्रांते स्नानमासाद्य भस्मीभवति तत्क्षणात् ।। ३४ ।।

अवंत्यां विधिवत्स्नात्वा शिप्रायां माधवे नराः ।।
पिशाचत्वं न पश्यंति जन्मांतरशतैरपि ।। ३५ ।।
कोटितीर्थे नरः स्नात्वा भोजयित्वा द्विजोत्तमान्।।
महाकालं हरं दृष्ट्वा सर्वपापैः प्रमुच्यते ।। ३६ ।।
मुक्तिक्षेत्रमिदं साक्षान्मम लोकैकसाधनम् ।।
दानाद्दरिद्रताहानिरिह लोके परत्र च ।। ३७ ।।
कुरुक्षेत्रे रामतीर्थे स्वर्णं दत्त्वा स्वशक्तितः ।।
सूर्योपरागे विधिवत्स नरो मुक्तिभाग्भवेत् ।। ३८ ।।
ये तत्र प्रतिगृह्णंति नरा लोभवशंगताः ।।
पुरुषत्वं न तेषां वै कल्पकोटिशतैरपि ।। ३९ ।।
हरिक्षेत्रे हरिं दृष्ट्वा स्नात्वा पादोदके जनः ।।
सर्वपापविनिर्मुक्तो हरिणा सह मोदते ।। 2.3.1.४० ।।
खगगणा विविधा निवसंत्यहो ऋषिगणाः फलमूलदलाशनाः ।।
पवनसंयमनक्रमनिर्जितेंद्रियपराक्रमणा मुनयस्त्विह ।। ४१ ।।
विष्णुकांच्यां हरिः साक्षाच्छिवकांच्यां शिवः स्वयम् ।।
अभेदादुभयोर्भक्त्या मुक्तिः करतले स्थिता ।।
विभेदजननात्पुंसां जायते कुत्सिता गतिः ।। ४२ ।।
सकृद्दृष्ट्वा जगन्नाथं मार्कंडेयह्लदे प्लुतः ।।
विना ज्ञानेन योगेन न मातुः स्तनपो भवेत् ।। ४३ ।।
रोहिण्यामुदधौ स्नात्वा इंद्रद्युम्नह्लदे तथा ।।
भुक्त्वा निवेदितं विष्णोर्वैकुंठे वसतिं लभेत्।। ४४।।
दशयोजनविस्तीर्णं क्षेत्रं शंखोपरि स्थितम्।।
चतुर्भुजत्वमायांति कीटा अपि न संशयः।। ४५।।
कार्त्तिक्यां पुष्करे स्नात्वा श्राद्धं कृत्वा सदक्षिणम्।।
भोजयित्वा द्विजान्भक्त्या ब्रह्मलोके महीयते।।४६।।
सकृत्स्नात्वा ह्लदे तस्मिन्यूपं दृष्ट्वा समाहितः ।।
सर्वपापविनिर्मुक्तो जायते द्विजसत्तमः ।। ४७ ।।
षष्टिवर्षसहस्राणि योगाभ्यासेन यत्फलम् ।।

सौकरे विधिवत्स्नात्वा पूजयित्वा हरिं शुचिः ।।४८ ।।

सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ।।

तीर्थराजं महापुण्यं सर्वतीर्थनिषेवितम् ।। ४९ ।।

कामिनां सर्वजंतूनामीप्सितं कर्मभिर्भवेत् ।।

वेण्यां स्नात्वा शुचिर्भूत्वा कृत्वा माधवदर्शनम् ।।

भुक्त्वा पुण्यवतां भोगानन्ते माधवतां व्रजेत् ।। ।। 2.3.1.५० ।।

माघे मासि नरः स्नात्वा त्रिवेण्यां भक्तिभावितः ।।

बदरीकीर्तनात्पुण्यं तत्समाप्नोति मानवः ।। ५१ ।।

दशाश्वमेधिकं तीर्थं दशयज्ञफलप्रदम् ।।

संक्षेपात्कथितं पुत्र किं भूयः श्रोतुमिच्छसि ।। ५२ ।।

।। स्कंद उवाच ।। ।।

बदर्य्याख्यं हरेः क्षेत्रं त्रिषु लोकेषु दुर्लभम् ।।

क्षेत्रस्य स्मरणादेव महापातकिनो नराः ।।

विमुक्तकिल्विषाः सद्यो मरणान्मुक्तिभागिनः ।। ५३ ।।

अन्यतीर्थे कृतं येन तपः परमदारुणम् ।।

तत्समा बदरीयात्रा मनसापि प्रजायते ।। ५४ ।।

बहूनि संति तीर्थानि दिवि भूमौ रसातले ।।

बदरीसदृशं तीर्थं न भूतं न भविष्यति ।। ५५ ।।

अश्वमेध सहस्राणि वायुभोज्ये च यत्फलम् ।।

क्षेत्रांतरे विशालायां तत्फलं क्षणमात्रतः ।। ५६ ।।

कृते मुक्तिप्रदा प्रोक्ता त्रेतायां योगसिद्धिदा ।।

विशाला द्वापरे प्रोक्ता कलौ बदरिकाश्रमः ।। ५७ ।।

स्थूलसूक्ष्मशरीरं तु जीवस्य वसतिस्थलम् ।।

तद्विनाशयति ज्ञानाद्विशाला तेन कथ्यते ।। ५८ ।।

अमृतं स्रवते या हि बदरीतरुयोगतः ।।

बदरी कथ्यते प्राज्ञैर्ऋषीणां यत्र संचयः ।। ५९ ।।

त्यजेत्सर्वाणि तीर्थानि कालेकाले युगेयुगे ।।

बदरीं भगवान्विष्णुर्न मुञ्चति कदाचन ।। 2.3.1.६० ।।

सर्वतीर्थावगाहेन तपोयोगसमाधितः ।।

तत्फलं प्राप्यते सम्यग्बदरीदर्शनाद्गुह ।। ६१ ।।

षष्टिवर्षसहस्राणि योगाभ्यासेन यत्फलम् ।।

वाराणस्यां दिनैकेन तत्फलं बदरीं गतौ ।। ६२ ।।

तीर्थानां वसतिर्यत्र देवानां वसतिस्तथा ।।

ऋषीणां वसतिर्यत्र विशाला तेनकथ्यते ।। ६३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्त्तिकेयसंवादे बदरिकाश्रमस्य सर्वतीर्थाधिकत्ववर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h58
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | बदरिकाश्रममाहात्म्यम्

।। स्कंद उवाच ।। ।।

कथमेतत्समुत्पन्नं कैर्वा क्षेत्रं निषेवितम् ।।

को वा तस्याप्यधीशः स्यादेतद्विस्तरतो वद ।। १ ।।

।। शिव उवाच ।। ।।

अनादिसिद्धमेतत्तु यथा वेदा हरेस्तनूः ।।

अधिष्ठाता हरिः साक्षान्नारदाद्यैर्निषेवितम् ।। २ ।।

पुरा कृतयुगस्यादौ स्वीयां दुहितरं विधिः ।।

रूपयौवनसंपन्नां स तां यभितुमुद्यतः ।। ३ ।।

तं दृष्ट्वा तादृशं रोषाच्छिरः खड्गेन पञ्चधा ।।

चिच्छेदाऽहं कपालं तद्ब्रह्महत्यासमुद्यते ।। ४ ।।

हस्ते कृत्वा जगामाशु तत्र तीर्थानि सेवितुम् ।।

दिवि भूमौ च पाताले तपश्चरणपूर्वकम् ।। ५ ।।

न गता ब्रह्महत्या मे कपालं तादृशं करे ।।

तदा वैकुण्ठमगमं द्रष्टुं लक्ष्मीपतिं हरिम् ।। ६ ।।

विनयावनतो भूत्वा नमस्कृत्य पुनः पुनः ।।

सर्वमाख्यातवांस्तस्मै व्यसनं करुणात्मने ।। ७ ।।

तस्योपदिष्टमादाय बदरीं समुपागतः ।।

तत्क्षणाद्ब्रह्महत्या मे वेपमाना मुहुर्मुहुः ।। ८ ।।

अंतर्हितं कपालं तत्कराद्विगलितं मम ।।

ततःप्रभृति तत्क्षेत्रं पार्वत्या सह सादरम् ।।९।।

तिष्ठामि तप आस्थाय ऋषीणां प्रीतिमावहन् ।।

वाराणस्यां यथा प्रीतिः श्रीशैलशिखरे तथा ।। 2.3.2.१० ।।

कैलासे शिवया सार्द्धं ततोनंतगुणाधिका ।।

अन्यत्र भरणान्मुक्तिः स्वधर्मविधिपूर्वकात ।। ११ ।।

बदरी दर्शनादेव मुक्तिः पुंसां करे स्थिता ।।

हरेश्चरणसान्निध्यं यत्र वैश्वानरः स्वयम् ।। १२।।

तत्र केदाररूपेण मम लिंगं प्रतिष्ठितम् ।।

केदारदर्शनात्स्पर्शादर्च्चनाद्भक्तिभावतः।। १ ३।।

कोटिजन्मकृतं पापं भस्मीभवति तत्क्षणात् ।।

कलामात्रेण तिष्ठामि तत्र क्षेत्रे विशेषतः ।। १ ४।।

कला पंचदशैवात्र मूर्तिमध्ये ह्यवस्थितम् ।। १५।।

जितकृतांतभयाः शिवयोगिनः कृतमृगाजिनकृत्तिसुवाससः ।।

वरविभूतिजटान्वितभूषणाः स्वयमुपासत एव जटाधरम् ।। १ ६।।

फलदलांबुसमीरणतोषिताः शिवमनोजितमृत्युपरिश्रमाः ।।

गिरिवरस्थितनिर्जितमानसाः प्रसरनिर्म्मलबुद्धिमहोदयाः ।। १७ ।।

कमलकोमलकांतिमुखांबुजाः शिवकृपाजितनिर्भरवैरिणः ।।

करधृतांजलिमौलिशिवेक्षणाः शिवमुपासत एव निशामुखे ।। १८ ।।

करधृतजपमालाः शांतिसंतोषभाजः कृतनतिपरनित्यप्रार्थनाश्चन्द्रमौलौ ।।

हरचरणसरोजध्यानविज्ञानमूर्तिव्यथितजनमनोजाः सर्वभावान्नितांतम् ।। १९ ।।

वाराणस्यां मृतानां च तारकं ब्रह्मसंज्ञकम् ।।

जनानां पूजनात्तत्र मम लिंगस्य जायते ।। 2.3.2.२० ।।

वह्नितीर्थं परिभ्राजद्भगवच्चरणांतिके ।।

केदाराख्यं महालिंगं दृष्ट्वा नो जन्मभाग्भवेत् ।। २१ ।।

।। स्कन्द उवाच ।। ।।

कथं वैश्वानरः श्रीमान्सर्वलोकैककारणम् ।।

बदरीमनुसंतस्थौ तन्मे वद महामते ।। २२ ।। ।।

।। शिव उवाच ।। ।।

पुरा समाजः समभूदृषीणामूर्ध्वरेतसाम् ।।

गंगा भगवती यत्र कालिंद्या सह संगता ।।२३।।

दशाश्वमेधिकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।।

बभूव तत्र भगवान्हुतभुक्प्रश्रयानतः ।।

ऋषीणामग्रतः स्थित्वा प्रष्टुं समुपचक्रमे ।। २४ ।।

।। वैश्वानर उवाच ।। ।।

दृष्ट्वा इहैकदृग्ज्ञाना भवन्तो ब्रह्मवित्तमाः ।।

दीनार्थे करुणापूर्णा हृदयार्द्रा दयालवः ।। २५ ।।

सर्वदुर्लक्षणोद्भूतपातकालिप्तचेतसः ।।

कथं स्यान्निरयान्मुक्तिर्मम ब्रह्मविदुत्तमाः ।। २६ ।।

सर्वेषामृषिवर्य्याणामाजगाम मुनीश्वरः ।।

गंगांभसि समाप्लुत्य वाक्यं चेदमुवाच ह ।। २७ ।।

।। व्यास उवाच ।। ।।

अस्त्येकः परमोपायो भवतः पापनिष्कृतौ ।।

सर्वभक्षाख्यदोषस्य बदरीं शरणं श्रय ।। २८ ।।

यत्रास्ते भगवान्साक्षाद्देवदेवो जनार्द्दनः ।।

भक्तानामप्यभक्तानामघहा मधुसूदनः ।। २९ ।।

तत्र गंगांभसि स्नात्वा कृत्वा प्रदक्षिणां हरेः ।।

दंडवत्प्रणिपातेन सर्वपापक्षयो भवेत् ।। 2.3.2.३० ।।

ततो व्यासमुखाच्छ्रुत्वा ऋषीणामनुवादतः ।।

उत्तराभिमुखो वह्निर्गंधमादनमाययौ ।। ३१ ।।

ततो बदरिकां प्राप्य स्नात्वा गंगांभसि स्वयम्।।

नारायणाश्रमं गत्वा नत्वा प्रोवाच भक्तिमान् ।। ३२ ।।

।। अग्निरुवाच ।। ।।

विशुदविज्ञानघनं पुराणं सनातनं विश्वसृजां पतिं गुरुम् ।।

अनेकमेकं जगदेकनाथं नमाम्यनंताश्रितशुद्धबुद्धिम् ।। ३३ ।।

मायामयीं शक्तिमुपेत्य विश्वकर्त्तारमुद्दिश्य रजोपयुक्तम् ।।

सत्त्वेन चास्य स्थितिहेतुमुग्रमथो तमोभिग्रसितारमीडे ।।३४।।

अविद्यया विश्वविमोहितात्मा विद्यैकरूपं विततं त्रिलोक्याम् ।।

विद्याश्रितत्वात्सकलज्ञमीशं त्वविद्यया जीवमहं प्रपद्ये ।। ३५ ।।

भक्तेच्छयाविष्कृतदेहयोगमाभोगभोगार्पितयोगयोगम् ।।

कौशेयपीताम्बरजुष्टशक्तिं विचित्रशक्त्यष्टमयेष्टमीडे ।। ३६ ।।

अथ प्रसन्नो भगवान्स्तुतः सर्वैर्हृदि स्थितः ।।

प्रोवाच मधुरं वाक्यं पावकं पावनार्थिनम् ।। ३७ ।।

।। श्रीनारायण उवाच ।।

वरं वरय भद्रं ते वरदोऽहमुपागतः ।।

स्तवेनानेन तुष्टोऽस्मि विनयेन तवानध ।। ३८ ।।

।। अग्निरुवाच ।। ।।

ज्ञातं भगवता सर्वं यदर्थमहमागतः ।।

तथापि कथयाम्येतदीश्वराज्ञानुपालनम् ।। ३९ ।।

सर्वभक्षो भवाम्येव निष्कृतिस्तु कथं भवेत् ।।

अत्यन्तभयसंपत्तिरेतस्माज्जायते मम ।। 2.3.2.४० ।।

।। श्रीनारायण उवाच ।। ।।

क्षेत्रदर्शनमात्रेण प्राणिनां नास्ति पातकम् ।।

मत्प्रसादात्पातकं तु त्वयि मास्तु कदाचन ।। ४१ ।।

ततः प्रभृति भूतात्मा पावकः सर्वतो भृशम् ।।

कलयावस्थितश्चात्र सर्वदोषविवर्जितः ।। ४२ ।।

य एतत्प्रातरुत्थाय शृणोति श्रावयेच्छुचिः ।।

अग्नितीर्थकृतस्नानं फलं प्राप्नोत्यसंशयम् ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीबदरिकाश्रममाहात्म्येऽग्निकृतभगवत्स्तुतिवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०३



।। स्कन्द उवाच ।। ।।

भगवन्सर्वभूतेषु सर्वधर्मविशारद ।।

अग्नितीर्थस्य माहात्म्यं कृपया वद मे पितः ।। १ ।।

।। शिव उवाच ।। ।।

अतिगुह्यतमं तीर्थं सर्वतीर्थनिषेवितम् ।।

संक्षेपात्कथयाम्येतत्तवादरवशादहम्।। २ ।।

महापातकिनो ये च अतिपातकिनस्तथा ।।

स्नानमात्रेण शुद्ध्यंति विनायासेन पुत्रक ।। ३ ।।

प्रायश्चित्तेन यत्पापं न गच्छेन्मरणांतिकम्।।

स्नानमात्रेण तीर्थस्य पावकस्य विशुद्ध्यति ।। ४ ।।

अत्यंतमलसंबद्धं यथा शुद्ध्यति हाटकम् ।।

तथाग्नितीर्थमासाद्य देही पापैर्विशुद्ध्यति ।। ५ ।।

कुशाग्रेणोदबिंदुं च पीत्वा वर्षत्रयं नरः ।।

अन्यक्षेत्रे तपः कृत्वा तदत्र स्नानमात्रतः ।। ६ ।।

ब्राह्मणान्भोजयित्वास्मिन्यथाविभवसंभवैः ।।

दरिद्रता कुले तेषां न कदाचित्प्रजायते ।।७ ।।

उपवासेन यः प्राणान्वह्नितीर्थे त्यजेन्नरः ।।

स भित्त्वा सूर्यलोकादीन्विष्णुलोकं प्रपद्यते ।।८।।

चांद्रायणसहस्रैस्तु कृच्छ्रैः कोटिभिरेव च ।।

यत्फलं लभते मर्त्यस्तत्स्नानाद्वह्नितीर्थतः ।। ९ ।।

पंचधा ये प्रकुर्वंति पापमस्मिन्षडानन ।।

जपेन पवनायामैर्विशुद्धिरिति मे मतिः ।। 2.3.3.१० ।।

ज्ञानेन मोहवशतः पापं कुर्वन्ति येऽधमाः ।।

पैशाचीं योनिमायामति यावदिंद्राश्चतुर्दश ।। ११ ।।

अनाश्रमी चाश्रमी वा यावद्देहस्यधारणम् ।।
न तीर्थे पावके कुर्यात्पातकं बुद्धिपूर्वकम् ।। १२ ।।
स्नानं दानं जपो होमः संध्या देवार्चनं तथा ।।
अत्रानंतगुणं प्रोक्तमन्यतीर्थात्षडानन ।। १३ ।।
बहूनि संति तीर्थानि पावनानि महांत्यपि ।।
वह्नितीर्थसमं तीर्थं न भूतं न भविष्यति ।। १४ ।।
न ब्रह्मा न शिवः शेषो न देवा न च तापसाः ।।
शक्नुवंति फलं नालं वक्तुं पावकतीर्थजम् ।।१५।।
किं तेषां बहुभिर्यज्ञैः किं दानैर्नियमैर्यमैः।।
येषां पावकतीर्थेऽस्मिन्स्नानं दशदिनं भवेत् ।। १६ ।।
उपवासेन यः प्राणान्वह्नितीर्थे जयेन्नरः ।।
उपवासत्रयं कृत्वा पूजयित्वा जनार्द्दनम्।।
नरः पावकतीर्थेऽस्मिन्स भवेत्पावकोपमः ।। १७ ।।
शिलापंचकमध्यस्थं सान्निध्यं नित्यदा हरेः ।।
तत्रैव पावकं तीर्थं सर्वपापप्रणाशनम् ।।१८ ।।
।। स्कंद उवाच ।। ।।
कथं तत्र शिलाः पंच केन वा तत्र निर्मिताः ।।
किं पुण्यं किं फलं तासां वक्तुमर्हस्यशेषतः ।। १९ ।।
।। शिव उवाच ।। ।।
नारदी नारसिंही च वाराही गारुडी तथा ।।
मार्कंडेयीति विख्याताः शिलाः सर्वार्थसिद्धिदाः ।। 2.3.3.२० ।।
नारदो भगवांस्तेपे तपः परमदारुणम्।।
दर्शनार्थं महाविष्णोः शिलायां वायुभोजनः ।। २१ ।।
षष्टिवर्षसहस्राणि शिलायां वृक्षवृत्तिमान्।।
तदासौ भगवान्विष्णुस्तत्र ब्राह्मणरूपधृक् ।। २२ ।।
जगाम पुरतस्तस्य कृपया मुनिसत्तमम् ।।
उवाच वचनं चारु किमिति क्लिश्यते ह्यृषे ।।
किं वा तवेप्सितं ब्रूहि तपसा क्षीणकल्मष ।। २३ ।।

।। नारद उवाच ।। ।।

को भवान्विजनेऽरण्ये ममानुग्रहतत्परः ।।

मनः प्रसन्नतामेति दर्शनात्ते द्विजोत्तम ।। २४ ।।

इत्युक्तो नारदेनासौ शंखचक्रगदाधरः ।।

पीतांबरलसत्पद्मवनमालाविभूषणः ।। २५ ।।

श्रीवत्सकौस्तुभभ्राजत्कमलाविमलालयः ।।

सुनंदनप्रमुख्यैः स स्तूयमानो जनार्द्दनः ।। २६ ।।

दर्शयामास रूपं स्वं नारदाय कृपार्दितः ।।

तं दृष्ट्वा सहसोत्थाय तनुं प्राण इवागतः ।। २७ ।।

कृतांजलिपुटो भूत्वा नमस्कृत्य पुनः पुनः ।।

तुष्टाव प्रणतो भूत्वा जगतामीश्वरेश्वरम् ।। २८ ।।

।। नारद उवाच ।। ।।

यः सर्वसाक्षी जगतामधीश्वरो भक्तेच्छया जातशरीरसंपदः ।।

कृपामहांभोनिधिराश्रितानां प्रसीदतां पावनदिव्यमूर्तिः ।। २९ ।।

हिताय लोकस्य सतां पुनर्मनः सुतोषणायाचिरमुत्कलादिभिः ।।

प्रसन्नलीलाहसितावलोकनः प्रसीदतां सत्त्वनिकायमूर्तिमान् ।। 2.3.3.३० ।।

कंदर्प्पलावण्यविलाससुंदरः प्रसन्नगंभीरगिरैंदिरोत्सवः ।।

स्वमाश्रितानां वरकल्पपादपः प्रसीदतां दीनदयार्द्रमानसः ।। ३१ ।।

यदंघ्रिपद्मार्चननिर्मलांतरा ज्ञानासिना शातितबंधहेतवः ।।

विदंति यद्ब्रह्मसुखं गतक्लमाः प्रसीदतां दीनदयार्द्रमानसः ।।३२।।

संसारवारांनिधिबद्धसेतुर्यः सृष्टिपालांतविधानहेतुः ।।

उपांतनामा गुणलब्धमूर्तिः प्रसीदतां ब्रह्मसुखानुभूतिः ।। ३३ ।।

य इंद्रियाधिष्ठितभूतसूक्ष्माद्विकासहेतुर्धुतिमद्वरिष्ठः ।।

जीवात्मतां गच्छति मायया स्वया स एक ईशो भगवान्प्रसीदताम् ।। ३४ ।।

स्वदृग्गुणैर्येन विलिप्यते महान्गुणाश्रयं येन च पाञ्चभौतिकम्।।

एकोऽपि नानागुणसंप्रयुक्तः प्रसीदतां दीनदयालुवर्यः ।। ३५ ।।

यस्यानुवर्तिनो देवा विपदां पदमंबुधिम् ।।

कृत्वा वत्सपदं स्वर्गे निरातंका वसंति हि ।।३६।।

नमस्ते वासुदेवाय नमः संकर्षणाय च ।।
प्रद्युम्नायानिरुद्धाय सर्वभूतात्मने नमः ।। ३७ ।।
अद्य मे जीवितं धन्यमद्य मे सफलं तपः ।।
अद्य मे सफलं ज्ञानं दर्शनात्ते जनार्दन ।। ३८ ।।
।। श्रीभगवानुवाच ।। ।।
तुष्टोऽहं तपसानेन स्तोत्रेण तव नारद ।।
त्वत्तो भक्तो न मे कश्चित्त्रिषु लोकेषु विद्यते ।। ३९ ।।
वरं वरय भद्रं ते वरदोऽहं तवाग्रतः ।।
मद्दर्शनात्ते कामः स्यात्संसिद्धो विद्धि नारद।। 2.3.3.४० ।।
।। नारद उवाच ।। ।।
वरदो यदि मे देव वरार्हो यदि वाप्यहम् ।।
भक्तिं तव पदांभोजे निश्चलां देहि मे विभो ।। ४१ ।।
पच्छिलासन्निधानं च न त्याज्यं ते कदाचन ।।
मत्तीर्थदर्शनात्स्पर्शात्स्नानादाचमनात्तथा ।।
देहैर्न युज्यते देयस्त्तृतीयस्तु वरो मम ।। ४२ ।।
।। श्रीभगवानुवाच।। ।।
एवमस्तु तव स्नेहात्तव तीर्थे वसाम्यहम् ।।
चराचराणां जंतूनां विदेहाय न संशयः ।। ४३।।
एवमुक्त्वा हरिः साक्षात्तत्रैवांतरधीयत ।।
नारदोऽपि महातेजा दिनानि कतिचित्सह ।।
बदरीमावसन्हृष्टो ययौ मधुपुरीं ततः ।। ४४ ।।
।। स्कंद उवाच ।। ।।
मार्कंडेयशिलायास्तु महिमानं वदस्व मे ।।
किं पुण्यं किं फलं तस्याः संज्ञा च तादृशी कथम् ।।४५।।
।।शिव उवाच ।। ।।
पुरा त्रेतायुगस्यांते मृकंडुतनयो महान् ।।
स्वल्पायुषं निजं ज्ञात्वा जजाप परमं जपम् ।। ४६ ।।
द्वादशाक्षरमंत्रेण पूजितो हरिरव्ययः ।।

सप्तकल्पायुषं ज्ञात्वा तत्रैवांतरतो ययौ ।। ४७ ।।

मार्कंडेयस्ततः श्रुत्वा तीर्थाटनपरिश्रमम् ।।

दर्शनं नारदस्यासीन्मथुरायां षडानन ।। ४८ ।।

पूजितो वंदितस्तेन नारदो मुनिसत्तमः ।।

कथयामास माहात्म्यं बदर्या यत्र केशवः ।। ४९ ।।

।। नारद उवाच ।। ।।

किमिति क्लिश्यते साधो तीर्थाटनपरिश्रमैः ।।

बदर्याख्यं महाक्षेत्रं सान्निध्यं नित्यदा हरेः ।। २.३.३.५० ।।

तत्र याहि यत्र साक्षाद्धरिं पश्यसि चक्षुषा ।।

तच्छ्रुत्वा विस्मयोपेतो विशालामाययावृषिः ।। ५१ ।।

स्नात्वा शिलामुपविशञ्जजापाष्टाक्षरं परम् ।।

ततःप्रसन्नो भगवाँस्त्रिरात्र्यंते जनार्दनः ।। ५२ ।।

शंखचक्रगदापद्मवनमालाविभूषणम् ।।

तं दृष्ट्वा सहसोत्थाय प्रेमगद्गदया गिरा ।।

तुष्टाव प्रणतो भूत्वा मार्कंडेयो जनार्दनम् ।। ५३ ।।

।। मार्कंडेय उवाच ।। ।।

अशाश्वते च संसारे सारे ते चरणांबुजे ।।

समुद्धारः कथं नृणां त्राहि मां परमेश्वर ।।५४।।

तापत्रयपरिश्रांतमनेकाज्ञानजृंभितम् ।।

संसारकुहरे भ्रांतं त्राहि मां कृपयाऽच्युत ।। ५५ ।।

अनेकयोनियंत्रेषु निःसृतेस्तनुवेदनाम् ।।

गर्भवासकृतां प्राप्तं त्राहि मां करुणांबुधे ।।५६।।

कृमिभक्षितसर्वांगं क्षुत्पिपासाकुलं च हि ।।

आंत्रमालाकुलेगर्भे त्राहि मां मधुसूदन ।। ५७।।

अमेध्यादिभिरालिप्तं निश्चेष्टश्रममाकुलम्।।

स्मरंतं निजकर्मोत्थं त्राहि मां मधुसूदन ।। ५८ ।।

वचनादाननिःश्वासाशक्तं भयमुपागतम्।।

गर्भवासमहादुःखं त्राहि मां मधुसूदन ।। ५९ ।।

जरामरणबाल्यादिदुःखसंसारपीडितम् ।।

दुःखाब्धौ सुखबुद्धिं मां कृपासिंधो प्रपालय ।। 2.3.3.६० ।।

कदाचित्कृमितां प्राप्तं कदाचित्स्वेदजन्मिताम्।।

कदाचिदुद्भिज्जत्वं च कदाचिन्नरतां गतम् ।।६१।।

सर्वयोनिसमापन्नं विपन्नं विगतप्रभम्।।

अनाथं त्वां समापन्नं त्राहि मां कृपयाऽच्युत।।६२।।

एवं स्तुतस्ततः कृष्णो मार्कण्डेयेन धीमता ।।

प्रीतस्तमाह विप्रर्षे वरं मे व्रियतामिति ।।६३।।

।। श्रीमार्कंडेय उवाच ।। ।।

यदि तुष्टो भवान्मह्यं भगवन्दीनवत्सल ।।

निश्चलां देहि मे भक्तिं पूजायां दर्शने तव ।।

शिलायां तव सान्निध्यमेष एव वरो मम ।।।। ६४ ।।

।। सूत उवाच ।। ।।

तथेत्युक्त्वा महाविष्णुर्ययावंतर्हितं द्विज ।।

मार्कंडेयस्ततस्तुष्टो जगाम पितुराश्रमम् ।। ६५ ।।

उपस्थानमिदं पुण्यं सर्वपापप्रणाशनम् ।।

शृणुयाच्छ्रावयेन्मर्त्यो गोविन्दे लभते गतिम् ।। ६६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे शिवकार्तिकेयसंवादे अग्नितीर्थनारदशिलामार्कण्डेयशिलामाहात्म्यवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०४



।। स्कन्द उवाच ।।

वैनतेयशिलायास्तु माहात्म्यं वद मे पितः ।।

किं पुण्यं किं फलं चास्य अनुभावं च किं भवेत् ।। १ ।।

।। शिव उवाच ।। ।।

कश्यपाद्विनतागर्भे महाबलपराक्रमौ ।।

गरुडारुणौ प्रजातौ द्वावरुणः सूर्यसारथिः ।। २ ।।

बदर्य्या दक्षिणे भागे गन्धमादनशृङ्गके ।।

गरुडस्तप आतेपे हरिवाहनकाम्यया ।। ३ ।।

फलमूलजलाहारो निर्द्वंद्वो जपतां वरः ।।

पदैकेनोपसंक्रम्य भुवि जेपे निरामयः ।। ४ ।।

त्रिंशद्वर्षसहस्राणि हरिदर्शन लालसः ।।

ततस्तु भगवान्साक्षात्पीतवासा निजायुधः ।। ५ ।।

आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कलः ।।

उवाच वचनं सम्यङ्मेघगंभीरनिस्वनः ।। ६ ।।

तथापि न बहिर्वृत्तिर्दध्मौ दरवरं ततः ।।

तथापि न बहिर्वृत्तिर्गरुडस्य महात्मनः ।। ७ ।।

ततः प्रविश्य भगवानंतरं पवनक्रमात् ।।

बहिरुन्मुखतां चैव रचयन्बहिराबभौ ।। ८ ।।

भगवंतं हरिं दृष्ट्वा गरुडो गतसाध्वसः ।।

पुलकांकित सर्वांगस्तुष्टाव विहितांजलिः ।। ९ ।।

।। गरुड उवाच ।। ।।

जयजय त्रिभुवनजनमनोभवन विदलिताघगुण सकलगीर्वाणवंदित चरणकमलयुगलपरिमलबहलरिपुवनविभंजन विद्योतमान सकलसुरासुरमुकुटकोटिविलसित निजपीठकमलनिरसित निजजनहृदयतिमिरपटलबहल हिमकर इव त्रिविधसंतापसंदोहहरणचरण

जगदुदयस्थितिलयविलासविलसित त्रिविधमूर्तिकीर्तिविस्फूर्जित जगदुदयसंदोह दिनकर इव निजजनमानससरोजषट्पदविदित सकलवेदविद्योतमान मानस निजजनमुनिजनवन्दित पदनखनीरपवित्रीकृत गीर्वाणमुनिमानसवंदित चरणरजःप्रसादसारभूत जगतामधीश नमस्ते नमस्ते ।। ।। 2.3.4.१० ।।

अपि च ।।

अष्टशक्तिसहितो वनमाली पीतचैलकुसुमावलिशोभः ।।

पंकजाकरविराजितपादः पातु मामवहितेन्द्रियवर्गः ।। ११ ।।

भक्तहृत्कमलराजितमूर्तिर्दुष्टदैत्यदलनोत्थितकीर्तिः ।।

बद्धसेतुरविताश्रितलोकः पातु मामनुदिनं भुवनेशः ।। १२ ।।

स्थिरचलत्रिविधतापहिमांशुर्भासमानतरणिप्रतिभासः ।।

एक एव बहुधा कृतवेषो माययावतु महामतिरीशः ।। १३ ।।

भक्तचिंतनकृते कृतरूपः शैशवेन बहुशासितभूपः ।।

वेदमार्ग उरुधा हितकारी रीतिरीशितुरियं गुणशाली ।। १४ ।।

यज्ञभुग्घृदयबंधनधारी विश्वमूर्तिरबलांशुकहारी।।

पालनेऽपि महतां बहुदेहो रास एष तनुमानवतान्नः ।।१५।।

प्रेमभक्तिपुरुषैरुपलभ्यः पूरुषः कृतसमस्तनिवासः ।।

दास्यवृंदहृषितो निजदासः प्रेक्षणैककरुणोवतु विश्वम् ।। १६ ।।

कंठलंबिततरक्षुनखाग्रक्रुष्टगोपरमणीकुचभारः।।

लीलया युवतिभिः कृतवेषः शेष एष भवतादुपशांत्यै।।१७।।

दंडपाणिरयमेव जनानां शासितात्मनियमोक्तहितानाम्।।

पावनाय महतामनुशाली विश्वदुःखशमनो भवतान्नः ।।१८।।

एवं स्तुतस्ततः साक्षाद्गरुडेन महात्मना ।।

पूजार्थमाजुहावैनां गंगां त्रिपथगामिनीम् ।।१९।।

ततः पंचमुखी साक्षादाविरासीन्नगोपरि।।

तेनोदकेन पादार्घं चकार विनतासुतः ।।2.3.4.२०।।

व्रियतां वर इत्युक्तो गरुडो हरिणा ततः ।।

तवैकवाहनः श्रीमान्बलवीर्यपराक्रमः ।।

अजेयो देवदैत्यानां स्यामहं ते प्रसादतः ।। २१ ।।

इयं मन्नामविख्याता सर्वपापहरा शिला ।।
एतस्याः स्मरणात्पुंसां विषव्याधिर्न जायताम्।।२२।।
एवमुक्त्वा ततस्तूष्णीं बभूव विनतासुतः ।।
ओमित्युक्त्वा ततो विष्णुरुवाचेदं वचो हितम् ।।२३।।
बदरीं त्वं प्रयाहीति नारदेन निषेविताम् ।।
स्नानं नारदतीर्थादावुपवासत्रयं शुचिः ।।
कृत्वा मद्दर्शनं तत्र सुलभं ते भविष्यति ।। २४ ।।
इत्युक्त्वांतर्द्दधे विष्णुस्तडित्सौदामनी यथा ।।
गरुडस्तु ततः शीघ्रमागत्य बदरीं मुदा ।। २५ ।।
वह्नितीर्थं समासाद्य शिलामाश्रित्य तत्परः ।।
स्नात्वा नारदतीर्थेषु व्रतचर्यामथाकरोत् ।। २६ ।।
ततस्तु नारदे तीर्थे दृष्ट्वा भगवतः स्थितिम् ।।
नमस्कृत्य विधानेन तदाज्ञातः पुरं ययौ ।। २७ ।।
ततः प्रभृति त्रैलोक्ये गारुडीति शिलोच्यते ।। २८ ।।
।। स्कंद उवाच ।। ।।
वाराह्या वद माहात्म्यं कीदृशं हीश्वरेश्वर ।।
किं पुण्यं किं फलं तस्या अभिधानं तथा कथम् ।। २९ ।।
।। शिव उवाच ।। ।।
रसातलात्समुद्धृत्य महीं दैवतवैरिणम् ।।
हिरण्याक्षं रणे हत्वा बदरीं समुपागतः ।। 2.3.4.३० ।।
आकल्पांतं महादेवो योगधारणया स्थितः ।।
बदर्याः सौष्ठवादेव विदधे स्थितिमात्मनः ।। ३१ ।।
शिलारूपेण भगवान्स्थितिं तत्र चकार ह ।।
तत्र गत्वा तु मनुजः स्नात्वा गंगाजलेऽमले ।। ३२ ।।
दानं दत्त्वा स्वशक्त्या वै गंगांभः शांतमानसः ।।
अहोरात्रे स्थितो भूत्वा जपेदेकाग्रमानसः ।। ३३ ।।
शिलायां देवदृष्टिश्च तस्य पुंसः प्रजायते ।।
बहुना किमिहोक्तेन यद्वदिष्यति साधकः ।। ३४ ।।

तत्तस्य सिध्यति क्षिप्रं यद्यपि स्यात्सुदुष्करम् ।। ३५ ।। ।।

।। स्कंद उवाच ।। ।।

नारसिंहीशिलायास्तु माहात्म्यं वद मे प्रभो ।।

त्वत्प्रसादान्महादेव दुर्ल्लभं श्रुतवानहम् ।।३६।।

।। शिव उवाच ।। ।।

हिरण्यकशिपुं हत्वा नखाग्रेणैव लीलया ।।

क्रोधाग्निना प्रदीप्तांगः प्रलयानलसन्निभः ।। ३७ ।।

तदा देवैः समागत्य स्थित्वा दूरे दयालुभिः ।।

स्तुतोऽसौ भगवान्देवो लीलया धृतविग्रहः ।। ३८ ।।

तदा प्रसन्नो हरिरुग्रविक्रमः स्वतेजसा व्याप्तसुरासुरोत्तमः ।।

उवाच मत्तो वरमावृणीध्वं गीर्वाणनिर्वाण सुखैकहेतुम् ।। ३९ ।।

तदासुराणामधिपः स्वयंभूरुवाच वाक्यं स्मितशोभिताननः ।।

रूपं तवात्युग्रमशेषदेहिनां भयावहं संहर नारसिंह ।। 2.3.4.४० ।।

अनेकधैतद्विधिवद्विधाय निधाय शैलादिषु दिव्यमूर्तिम् ।।

उवाच किं वः प्रकरोमि कृत्यमहं प्रसन्नस्त्रिदशाः परंतपाः ।। ४१ ।।

ततोमरा ऊचुरनेन चैव रूपेण संक्षोभितविश्वमूर्ते ।।

प्रशांतमंतःसुखहेतुबंधि चतुर्भुजत्वं वरमीप्सितं नः ।। ४२ ।।

ततो हरिर्वीक्ष्य निरीक्षणेन दिव्येन विश्वं प्रययौ विशालाम्।।

गंगाजले क्रीडति विष्टचेताः सुरासुरेभ्यो भगवानुवाच ।। ४३ ।।

ततोऽमराः शांतभया अथैनं निरीक्ष्य देवं जलमध्यसंस्थम् ।। ।।

नत्वा परिक्रम्य तदा समाययुर्निरूढभावाः स्वपुरं ततः क्रमात् ।। ४४ ।।

ततः समस्ता ऋषयस्तपोधनाः समाययुर्भक्तिभरावनम्राः ।।

नृसिंहमत्यद्भुतविकमं हरिं समीडिरे बद्धकरा वचोभिः ।। ४५ ।।

।। ऋषय ऊचुः ।। ।।

नमोनमस्ते जगतामधीश विश्वेश विश्वाभय विश्वमूर्ते ।।

कृपांबुराशे भजनीयतीर्थ पादांबुज श्रीश दयां विधेहि ।। ४६ ।।

एकोऽसि नाना निजमायया स्वया घटे पयो यद्वदुपाधिभिन्नम् ।।

भक्तेच्छयोपात्तविचित्रविग्रह प्रसीद विश्वानन विश्वभावन ।। ४७ ।।

ततः प्रसन्नो भगवान्नृसिंहः सिंहविक्रमः ।।

उवाच वचनं चारु वरं मे व्रियतामिति ।। ४८ ।।

।। ऋषय ऊचुः ।। ।।

यदि प्रसन्नो भगवन्कृपया जगतां पते ।।

विशाला न परित्याज्या वरोऽस्माकमभीप्सितः ।। ४९ ।।

एवमस्तु ततः सर्वे स्वाश्रमं ह्यृषयो ययुः ।।

नृसिंहोऽपि शिलारूपी जलक्रीडापरोऽभवत् ।। 2.3.4.५० ।।

उपवासत्रयं कृत्वा जपध्यानपरायणः ।।

नृसिंहरूपिणं साक्षात्पश्यत्येव न संशयः ।। ५१ ।।

य एतच्छ्रद्धया मर्त्यः शृणोति श्रावयञ्छुचिः ।।

सर्वपापविनिर्मुक्तो वैकुंठे वसतिं लभेत्।।५२।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्त्तिकेयसंवादे गरुडशिला वाराहीशिला नारसिंहीशिलामाहात्म्यवर्णनंनाम चतुर्थोऽध्यायः ।।४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०५

https://sa.wikisource.org/s/h5b
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | बदरिकाश्रममाहात्म्यम्

।। स्कंद उवाच ।। ।।

किमर्थं भगवांस्तत्र वसति श्रद्धया पुनः ।।

किं पुण्यं किं फलं तस्य दर्शनस्पर्शनादिभिः ।। १ ।।

नैवेद्यभक्षणं चापि महापूजाकृतेस्तथा ।।

प्रदक्षिणस्य च फलं ब्रूहि मे कृपया पितः ।। २ ।।

।। शिव उवाच ।। ।।

पुरा कृतयुगस्यादौ सर्वभूतहिताय च ।।

मूर्तिमान्भगवांस्तत्र तपोयोगसमाश्रितः ।। ३ ।।

त्रेतायुगे ह्यृषिगणैर्योगाभ्यासैकतत्परः ।।

द्वापरे समनुप्राप्ते ज्ञाननिष्ठो हि दुर्लभः ।। ४ ।।

ऋषीणां देवतानां च दुर्दर्शो भगवानभूत् ।।

ततो ह्यृषिगणा देवा अलभ्य भगवद्गतिम् ।। ५ ।।

स्वायंभुवं पदं याता विस्मयाकुलचेतसः ।।

तत्र गत्वा नमस्कृत्य ऊचुर्लोकेश्वरं मुदा ।।

बृहस्पतिं पुरस्कृत्य ऋषयश्च तपोधनाः ।। ६ ।।

।। देवा ऊचुः ।। ।।

नमस्ते सर्वलोकानामाश्रयः शरणार्तिहा ।।

वृत्तिदः करुणापूर्णः पितामह सुरेश्वर ।।

निवेदनीया विपदः समुद्धर्ता पितासि नः ।। ७ ।।

।। ब्रह्मोवाच ।। ।।

किमर्थमागता यूयं विस्मयाकुलमानसाः ।।

मिलिता ऋषिभिः साकं ब्रूतागमनकारणम् ।। ८ ।।

।। देवा ऊचुः ।। ।।

द्वापरे समनुप्राप्ते विशालायां विशालधीः ।।

भगवान्दृश्यते नैव तत्र किं कारणं वद ।। ९ ।।

विशाला किं परित्यक्ता ततो वा क्व गतः स्वयम् ।।

अपराधादुतास्माकं कथं चासौ प्रसीददति ।। 2.3.5.१० ।।

।। ब्रह्मोवाच ।। ।।

नाहमेतद्विजानामि श्रुतं चाद्य मुखाद्धि वः ।।

को हेतुर्दृक्पथातीतो भगवान्भवतां सुराः ।।

आगच्छत वयं यामस्तीरं क्षीरपयोनिधेः ।।११।।

इत्युक्तास्ते पुरोधाय ब्रह्माणं त्रिदिवौकसः ।।

ययुः क्षीरांबुधेस्तीरमृषयश्च तपोधनाः।।१२।।

तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।।

गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ।। १३ ।।

।। ब्रह्मोवाच ।। ।।

नमस्ते पुरुषाध्यक्ष सर्वभूतगुहाशय ।।

वासुदेवाखिलाधार जगद्धेतो जगन्मय ।। १४ ।।

त्वमेव सर्वभूतानां हेतुः पतिरुताश्रयः ।।

मायाशक्तिमुपाश्रित्य विचरस्येकसुन्दर ।। १५ ।।

एको नानायते योऽसौ नटवज्जायतेऽव्ययः ।।

व्यापकोऽपि कृपालुत्वाद्भक्तहृत्पद्मषट्पद ।।

ददाति विविधानंदं तं वंदे जगतां पतिम् ।। १६ ।। ।।

।। देवा ऊचुः ।। ।।

विपद्वनांते हुतभुग्जनानां गृहीतसत्त्वस्त्रिदशावनीशः ।।

चराचरात्मा भगवाननंतः कृपाकटाक्षैरवलोकतां नः ।। १७ ।।

सकृद्यन्नामपीयूषरसपानपरः पुमान् ।।

निःश्रेयसं तृणमिव मन्यते तं हरिं भजे।। १८ ।।

अविद्याप्रतिबिंबत्वाज्जीवभावमुपागतः ।।

विज्ञत्वादुपशांतात्मा स पुनातु जगत्त्रयम् ।।१९।।

।। गंधर्वा ऊचुः ।। ।।

पिबंति ये हरेः पदांबुसंगलेशतः पयः पयो न ते पुनःपुनः पिबंति मातुरंकतः ।।

प्रसंगतो यदा भिधासुधां निपीय मानवा मृताऽमृतं व्रजंत्यधो न जातु यांत्यशंकिताः ।। 2.3.5.२० ।।

ततः स्तुतो हरिः साक्षात्सिंधोरुत्थाय चाब्रवीत् ।।

अलक्षितोऽपरैर्ब्रह्मा परं तद्वेद नापरः ।। २१ ।।

ब्रह्मा तदुपधार्याथ नत्वा तस्मै दिवौकस ।।

बोधयामास सकलं सुराः शृणुत सादरम् ।। २२ ।।

अंतर्हितोऽसौ भगवान्दृष्ट्वा लोकान्कुमेधसः ।।

श्रुत्वेत्थं वचनं तस्य सर्वे देवा दिवं ययुः ।।२३।।

ततोऽहं यतिरूपेण तीर्थान्नारदसंज्ञकात् ।।

उद्धृत्य स्थापयिष्यामि हरिं लोकहितेच्छया ।। २४ ।।

यस्य दर्शनमात्रेण पातकानि महान्त्यपि ।।

विलीयंते क्षणादेव सिंहं दृष्ट्वा मृगा इव ।। २५ ।।

धर्माधर्मान्विजित्याथ बदरीशं विभुं हरिम् ।।

दृष्ट्वा मुक्तिमुपायांति विनाऽऽयासं षडानन ।। २६ ।।

त्यक्तप्रायाणि तीर्थानि हरिणा कलिकालतः ।।

बदरीं समनुप्राप्य साक्षादेवावतिष्ठते ।। २७ ।।

कलिकालमनुप्राप्य मुक्तिर्येषामभीप्सिता ।।

द्रष्टव्या बदरी तैस्तु हित्वा तीर्थान्यशेषतः ।। २८ ।।

विना ज्ञानेन योगेन तीर्थाटनपरिश्रमैः ।।

एकेन जन्मना जंतुः कैवल्यं पदमश्नुते ।। २९ ।।

जन्मांतरसहस्रैस्तु येन चाराधितो हरिः ।।

स गच्छेद्बदरीं द्रष्टुं यत्र जंतुर्न शोचति ।। 2.3.5.३० ।।

बदरीबदरीत्युक्त्वा प्रसंगान्मनुजोत्तमः ।।

संसारतिमिराबाधे दीपमुज्वालयत्यसौ ।। ३१ ।।

यथा दीपावलोकेन तमोबाधा न जायते ।।

तथैव बदरीं दृष्ट्वा पुंसो मृत्युभयं कुतः ।।३२।।

दर्शनाद्यस्य पापानि रुदंत्यव्याहतानि च ।।

मुक्तिमार्गमुपालक्ष्य तं वंदे बदरीपतिम् ।। ।।३३।।

सशैलकानना भूमिर्दशधा दक्षिणीकृता ।।

हरेः प्रदक्षिणं तद्वद्वदर्यां तत्पदेपदे ।। ३४ ।।

अश्वमेधे तु यत्पुण्यं वाजपेयशतेन च ।।

हरेः प्रदक्षिणात्तद्वद्वदर्यां तत्पदेपदे ।। ३५ ।।

चतुर्मासे तु यत्पुण्यं ब्रह्मांडदानतस्तथा ।।

हरेः प्रदक्षिणं तद्वद्वदर्यां तत्पदेपदे ।। ३६ ।।

अतिकृच्छ्रैर्महाकृच्छ्रैश्छांदसैः सुकृतं भवेत् ।।

हरेः प्रदक्षिणं तद्वद्वदर्यां तत्पदेपदे ।। ३७ ।।

बदर्यां विष्णुनैवेद्यं सिक्थमात्रं षडानन ।।

अशनाच्छोधयेत्पापं तुषाग्निरिव कांचनम् ।। ३८ ।।

यदन्नं भगवानत्ति ऋषिभिर्न्नारदादिभिः ।।

तत्सत्त्वशुद्धये सर्वैर्भोक्तव्यमविचारितम् ।। ३९ ।।

अमरा अपि यन्नूनं व्याजेनेच्छन्ति सर्वतः ।।

भोक्तुं बदरिकां विष्णोर्नैवेद्यं यांति तत्पराः ।। 2.3.5.४० ।।

भोजनानंतरं विष्णोः प्रगच्छन्ति स्वमालयम् ।।

प्रह्लादप्रमुखा भक्ताः प्रविशंति हरेः पदम् ।। ४१ ।।

बाल्ययौवनवार्द्धक्ये यत्पापं ज्ञानतः कृतम् ।।

नैवेद्यभक्षणाद्विष्णोर्बदर्यां तद्विलीयते ।। ४२ ।।

प्राणांतं यस्य पापस्य प्रायश्चित्तं प्रकीर्तितम् ।।

विष्णोर्निवेदितं भुक्त्वा बदर्य्यां तन्निवर्त्तते ।।४६।।

तीर्थांतरेषु यत्नेन मुक्तिं गच्छति मानवः ।।

नैवेद्यभक्षणाद्विष्णोः सालोक्यं लभते नरः ।।४४।।

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।।

पादोदकं सनिर्माल्यं मस्तके यस्य सोऽच्युतः।।४५।।

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ।।

नैवेद्यभक्षणाद्विष्णोर्बदर्यां यांति संक्षयम् ।। ४६ ।।

बदरीसदृशं क्षेत्रं नैवेद्यसदृशं वसु ।।

नारदीयसमं क्षेत्रं न भूतं न भविष्यति ।।४७।।

बदरी यत्नतो गम्या भोक्तव्यं तन्निवेदितम् ।।

द्रष्टव्यो भगवान्वह्नितीर्थे स्नानं सुदुर्लभम् ।। ४८ ।।

पृथिव्यां यानि तीर्थानि व्रतानि नियमास्तथा ।।

पादोदकं विशालायां पावनं पुरतो भवेत् ।। ४९ ।।

किं तस्य दानैस्तपसा तीर्थाटनपरिश्रमैः ।।

बदर्यां विष्णुपादोदबिंदुमात्रं लभेद्यदि ।। 2.3.5.५० ।।

प्रायश्चित्तानि जल्पंति तावदेव षडानन ।।

यावन्न लभ्यते विष्णोर्बदर्यां चरणोदकम् ।। ५१ ।।

अनायासेन येषां वा इच्छा मुक्तिपथे नृणाम् ।।

कर्त्तव्यं तैः प्रयत्नेन विष्णोर्नैवेद्यभक्षणम् ।। ५२ ।।

ये नराः प्रतिगृह्णंति पापाः संसारभागिनः ।।

यात्राकृतं फलं तेषां न कदाचित्प्रजायते ।। ।। ५३ ।।

नैवेद्यनिंदनाद्विष्णोर्निंद्यंते ते तमोगताः ।।

नैवेद्यभक्षणात्सत्त्वशुद्धिरेव न संशयः ।। ५४ ।।

नैवेद्यं स्वयमानीय ब्राह्मणान्भोजयंति ये ।।

तुलापुरुषदानेन किं फलं ते कृतार्थिनः ।। ५५ ।।

कुरुक्षेत्रे समासाद्य राहुग्रस्ते दिवाकरे ।।

महादानेन यत्पुण्यं बदर्य्यां ग्रासमात्रतः ।। ५६ ।।

बदरीक्षेत्रमासाद्य ग्रासमात्रं प्रयत्नतः ।।

उपायोऽयं महांस्तत्र बदर्यां हरितोषणे ।।

यतिभ्यो भोजनाद्विष्णोरपराध्यपि वल्लभः ।। ५७ ।।

न विष्णोः सदृशो देवो न विशाला समा पुरी ।।

न भिक्षुसदृशं पात्रमृषितीर्थसमं न हि ।। ५८ ।।

चातुर्मास्यं प्रकुर्वंति ये नराः पुण्यशालिनः।।

तेषां पुण्यफलं वक्तुं ब्रह्मणापि न शक्यते ।। ५९ ।।

भिक्षुकाणां फलावाप्तिर्विशेषादिह कीर्त्यते ।।

वेदांतश्रवणात्पुण्यं दशधा यत्प्रकीर्तितम् ।। 2.3.5.६० ।।

बदरी दृष्टिमात्रेण भिक्षुकाणां तदिष्यते ।।

चातुर्मास्ये विशेषेण कैवल्यफलभागिनः ।। ६१ ।।

न्यासिनो बदरीस्थाने विनायासेन पुत्रक ।।
ये मूर्खा जाड्यमापन्ना दम्भकाषायवाससः ।।
बदरीदर्शनात्तेषां मुक्तिः करतले स्थिता ।। ६२ ।।
ज्ञानिनोऽज्ञानिनो वापि न्यासिनो नियतव्रता ।।
द्रष्टव्या बदरी तैस्तु फलानि समभीप्सुभिः ।। ६३ ।।
श्रुत्वाऽध्यायमिमं पुण्यं प्रसंगेनापि मानवः ।।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।। ६४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्त्तिकेयसंवादे पंचमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/h1o
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | बदरिकाश्रममाहात्म्यम्

।। स्कंद उवाच ।। ।।

कराद्विगलितं यत्र कपालं ते महेश्वर ।।

तस्य तीर्थस्य माहात्म्यं कृपया वद मे पितः ।। १ ।।

।। ।। शिव उवाच ।। ।।

अतिगुह्यमिदं तीर्थं सुरासुरनमस्कृतम् ।।

ब्रह्महाऽपि नरो यत्र स्नानमात्रेण शुद्ध्यति ।। २ ।।

पंच तीर्थानि तिष्ठंति कपाले पापमोचने ।।

तत्र स्नानं तपो दानं सर्वमक्षयमिष्यते ।। ३ ।।

पिंडं विधाय विधिवन्नरकात्तारयेत्पितॄन् ।।

पितृतीर्थमिदं प्रोक्तं गयातोऽष्टगुणाधिकम् ।। ४ ।।

तिलतर्प्पणतो यांति पितरः स्वर्गमुत्तमम् ।। ५ ।।

अहोरात्रं स्थिरो भूत्वा जपनिष्ठः समाहितः ।।

तस्येष्टसिद्धिर्महती तत्क्षणादेव जायते ।। ६ ।।

पारलौकिककर्माणि सर्वाण्यव्याहतानि च ।।

कपालमोचने तीर्थे नाधिकं पितृकर्मणि ।। ७ ।।

।। स्कंद उवाच ।। ।।

कुत्र वा ब्रह्मतीर्थं वै फलं वा कीदृशं भवेत् ।।

के वा तत्र वसंतीह कृपया वद मे पितः ।। ८ ।।

शिव उवाच ।। ।।

एकदा विष्णुनाभ्यम्भोरुहस्थस्य प्रजापतेः ।।

वेदान्मुखांबुजाद्धृत्वा जग्मतुर्मधुकैटभौ ।। ९ ।।

ततो ह्युत्थाय शयनात्सिसृक्षुरब्जसंभवः ।।

स्रष्टुं विनाऽगमं लोके न शशाक हृतस्मृतिः ।। 2.3.6.१० ।।

तदा बदरिकामेत्य हरिणा प्रतिपालिताम् ।।

तुष्टाव प्रणतो भूत्वा भगवंतं सनातनम् ।। ११ ।।

ततः कुंडात्समुद्भूतो हयशीर्षो निजायुधः ।।

पीतांबरधरः शुक्लश्चतुर्बाहुः सुदृसदृक् ।। १२ ।।

अत्यद्भुतः प्रकटकठोरलोचनश्चलच्छटाविच्छुरितमेघडंबरः ।।

स्वतेजसा हतनिखिलप्रभाकुलः कृपान्वितो द्रुहिणपुरःसरोऽभवत् ।। १३ ।।

निरीक्ष्य तं विधिरपि विस्मयाकुलः प्रणम्य च स्तुतिमकरोत्प्रसन्नदृक् ।। १४ ।। ।।

।। ब्रह्मोवाच ।। ।।

नमः कमलनाभाय नमस्ते कमलाश्रय ।।

नमस्ते कमलावासविशालवनमालिने ।। १५ ।।

नमो विज्ञानभात्राय गुहावास निवासिने ।।

हृषीकेशाय शांताय तुभ्यं भगवते नमः ।। १६ ।।

स्वभक्तरक्षणकृते धृतदेहाय शार्ङ्गिणे ।।

अनंतक्लेशनाशाय गदिने ब्रह्मणे नमः ।।।। १७ ।।

संसारविविधासारनिवृत्तिकृतकर्मणे ।।

रक्षित्रे सर्वजंतूनां विष्णवे जिष्णवे नमः ।। १८ ।।

नमो विश्वंभराशेषनिवृत्तगुणवृत्तये ।।

सुरासुरवरस्तंभनिवृत्तिस्थितिकीर्तये ।।१९।।

इतीरितः सुरपतिना महेश्वरो हृदिस्थितोऽखिलविदशेषकर्मभिः ।।

ततोऽन्तरं सपदि गतो निबध्य तौ सुरद्रुहौ किल निजघान लीलया ।। 2.3.6.२० ।।

ततो निगममादाय ब्रह्मणोंऽतिकमाययौ।।

दत्त्वा स्वनिगमं तस्मै स्वस्थोऽभूत्स समीडितः ।। २१ ।।

ततः प्रभृति तत्तीर्थं ब्रह्मणा प्रकटीकृतम् ।।

ब्रह्मकुंडमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ।। २२ ।।

यस्य दर्शनमात्रेण महापातकिनो जनाः ।।

विमुक्तकिल्बिषाः सद्यो ब्रह्मलोकं व्रजंति ते ।। २३ ।।

स्नानं कुर्वंति ये लोका व्रतचर्यामथापि वा ।।

ब्रह्मलोकमतिक्रम्य विष्णुलोकं व्रजंति ते ।। २४ ।।

।। स्कंद उवाच ।। ।।

ततः किमकरोद्धाता लब्ध्वा वेदाञ्जनार्द्दनात् ।।

एतदन्यच्च सर्वं मे कृपया वद सांप्रतम् ।। २५ ।।

।। महादेव उवाच ।। ।।

चतुर्णामपि वेदानां दृष्ट्वा बदरिकाश्रमम् ।।

मतिर्न जायते गंतुं ब्रह्मणा सह पुत्रक ।। २६ ।।

ततस्तु विकलं दृष्ट्वा ब्रह्माणं जनवासिनः ।।

सिद्धास्तु विधिवत्स्तुत्वा प्रणिपत्येदमब्रुवन् ।। २७ ।।

।। सिद्धा ऊचुः ।। ।।

आज्ञा भगवतः कार्या सर्वैः स्थावरजंगमैः ।।

भगवान्सर्वजंतूनां कर्त्ता हर्ता पिता गुरुः ।। २८ ।।

स्थितिर्ब्रह्मांतिके वश्च हरिणैवानुकल्पिता ।।

निवृत्तिर्वर्तते चैषा तथाप्येतन्निरामयम् ।।२९।।

एकांते द्रवरूपेण मूर्तिर्वोऽत्रावतिष्ठताम् ।।

द्वितीया ब्रह्मणा सार्द्धं ब्रह्मलोकं व्रजेत्पुनः ।। 2.3.6.३० ।।

ततः सहृदया वेदा द्वैधीकृतात्मरूपकाः ।।

ब्रह्मणा ब्रह्मलोकं ते ययुः सार्द्धं प्रहर्षिताः ।। ३१ ।।

ततस्त्रिलोकं विधिवत्ससर्ज चतुराननः ।।

द्रवरूपेषु वेदेषु स्नानदानतपःक्रियाः ।।

कृता विच्छेदिता न स्युर्यावदाभूतसंप्लवम् ।। ३२ ।।

फलमुद्दिश्य कुर्वंति उपवासत्रयं नराः ।।

चतुर्णामपि वेदानां व्याख्यातारो न संशयः ।। ३३ ।।

अनुक्रमेण तिष्ठंति वेदाश्चत्वार एव च ।।

ऋग्यजुःसामाथर्वाख्या भगवत्पार्श्ववर्तिनः ।। ३४ ।।

ये पुण्यवंतोऽकलुषा वेदवेदांगपारगाः ।।

ते वेदघोषं विरलाः शृण्वंत्यपि कलौ युगे ।। ३५ ।।

चतुर्णामपि वेदानामुदगस्ति सरस्वती ।।

जप्ताथ सा नृणां हंति जडतां जलरूपिणी ।। ३६ ।।

सरस्वत्या जले स्थित्वा जपं कृत्वा समाहितः ।।

मनोस्तस्य न विच्छेदः कदाचिदपि जायते ।। ३७ ।।

वेदव्यासोऽपि भगवान्यत्प्रसादादुदारधीः ।।

पुराणसंहितार्थज्ञोऽभवदत्र न संशयः ।। ३८ ।।

त्रयाणामपि लोकानां हिताय जगतां पतिः ।।

स्थापयामास विधिना वाणीं वाग्विभवप्रदाम् ।। ३९ ।।

दर्शनस्पर्शनस्नानपूजास्तुत्यभिवन्दनैः ।।

सरस्वत्या न विच्छेदः कुले तस्य कदाचन ।। 2.3.6.४० ।।

मन्त्रसिद्धिर्विशेषेण सरस्वत्यास्तटे नृणाम् ।।

जपतामचिरणैव जायते नात्र संशयः ।।४१।।

बहुना किमिहोक्तेन वाणी वाग्विभवप्रदा ।।

द्रवरूपधरा नृणां दर्शनात्पूतिरुज्ज्वला ।। ४२ ।।

ततोऽर्वाग्दक्षिणे भागे द्रवधारेति विश्रुतम् ।।

तीर्थमिंद्रपदं यत्र तपश्चक्रे पुरंदरः ।। ४३ ।।

सुदारुणं तपः कृत्वा परितोष्य जनार्द्दनम् ।।

पदमैंद्रं समालेभे सुरासुरनमस्कृतम् ।। ४४ ।।

तपो दानं जपो होमो व्रतानि नियमा यमाः ।।

तत्रानन्तगुणं प्रोक्तं तत्तीर्थमतिदुर्लभम् ।। ४५ ।।

प्रतिमासे त्रयोदश्यां शुक्लायां हरितोषणे ।।

स्नात्वा सुतीर्थे सुत्रामाच्छन्दं चोपेत्य संगतः ।। ४६ ।।

उपवासद्वयं कृत्वा पूजयित्वा जनार्द्दनम् ।।

सर्वपापविनिर्मुक्तः शक्रलोके महीयते ।। ४७ ।।

तत्रैव मानसोद्भेदः सर्वपापप्रणाशनः ।।

दुर्लभः सर्वजंतूनां यत्र ते स्युर्महर्षयः ।। ४८ ।।

मानसं चिदचिद्ग्रन्थिमुद्ग्रथ्नंति च सर्वतः ।।

मानसोद्भेव इत्याख्या ऋषिभिः परिगीयते ।। ४९ ।।

भिंदंति हृदयग्रंथीश्छिंदन्ति बहुसंशयम् ।।

कर्माणि क्षपयन्त्यस्मान्मानसोद्भेद इत्यभूत् ।। 2.3.6.५० ।।

यदि भाग्यवशादत्र बिंदुमात्रं लभेन्नरः ।।

तत्क्षणान्मुक्तिमाप्नोति किमतस्त्वधिकं भवेत् ।। ५१ ।।

गिरिदरीनिलये निवसत्यमी ऋषिगणाः फलमूलजलाशनाः ।।

जितमनोविषयाः शितबुद्धयः कलिभयादिव पापभयाकुलाः ।। ५२ ।।

फलसमीरणगह्वरनिर्झराश्रमभरादुपलब्धपटोत्तमाः ।।

त्रिषवणक्रमनिर्जितदुर्जयेन्द्रियपराक्रमणा मुनयस्त्वमी ।। ५३ ।।

साधनानि बहून्येव कायक्लेशकराण्यहो ।।

सुलभं साधनं लोके मानसोद्भेददर्शनम् ।। ५४ ।।

यस्मिन्दिने जलं चैतल्लभते पुण्यवाञ्जनः ।।

भवति व्याससदृशो यमपितृसमः क्रमात् ।। ५५ ।।

काम्यतीर्थमिदं नृणां कामनावशकृत्पुनः ।।

अकामतस्तु मुक्तिः स्यादुभयोरेष निश्चयः ।। ५६ ।।

यदि कश्चित्प्रमादेन कामनां कुरुते नरः ।।

फलं भुक्त्वा पुनर्मुक्तिर्भवत्येव न संशयः ।।५७।।

महरादिषु लोकेषु भुक्त्वा भोगान्यथेप्सितान् ।।

भोगे भुक्ते पुनर्याति कामनावशतो जनः ।।५८।।

पुरुषार्थसमावाप्त्यै यतनीयं मनीषिभिः ।।

मानसोद्भेदने तीर्थे नापेत्यत्रेति मे मतिः ।। ५९ ।।

मानसोद्भेदनात्प्रत्यग्दिशि सर्वमनोहरम् ।।

वसुधारेति विख्यातं तीर्थं त्रैलोक्यदुर्लभम् ।। ।। 2.3.6.६० ।।

त्रिलोक्यां सर्वतीर्थेभ्यः श्रेष्ठो बदरिकाश्रमः ।।

श्रुत्वा तन्नारदात्सर्वे वसवः समुपागताः ।। ६१ ।।

त्रिंशद्वर्षसहस्राणि तपः परमदारुणम् ।।

दलांबुप्राशनाश्चक्रुस्ततः सिद्धिमुपाययुः ।। ६२ ।।

भगवद्दर्शनात्प्राप्तानंदनिर्वृत्तविक्लमाः ।।

हृदयानन्दसंदोहप्रफुल्लितमुखांबुजाः ।। ६३ ।।

दृष्ट्वा नारायणं देवं वरं लब्ध्वा मनोरमम्।।

हरिभक्तिसुखैश्वर्य्यं परं लब्ध्वा मुदं ययुः।।६४।।

अत्र स्नात्वा जलं पीत्वा पूजयित्वा जनार्द्दनम्।।

इह लोके सुखं भुक्त्वा यात्यंते परमं पदम् ।।६५।।

अत्र पुण्यवतां ज्योतिर्दृश्यते जलमध्यतः।।

यद्दृष्ट्वा न पुनर्भूयो गर्भवासं प्रपद्यते ।। ६६ ।।

येऽशुद्धपितृजाः पापाः पाषंडमतिवृत्तयः ।।

न तेषां शिरसि प्रायः पतंत्यापः कदाचन ।। ६७ ।।

दिनत्रयं शुचिर्भूत्वा पूजयित्वा जनार्दनम् ।।

उपोष्य भगवद्भक्त्या सिद्धान्पश्यंति साधवः ।।६८।।

ये तत्र चपलास्तथ्यं न वदंति च लोलुपाः ।।

परिहासपरद्रव्यपरस्त्रीकपटाग्रहाः ।।६९।।

मलचैलावृताऽशांताऽशुचयस्त्यक्तसत्क्रियाः ।।

तेषां मलिनचित्तानां फलमत्र न जायते ।। 2.3.6.७० ।।

ये तत्र साधकाः शांता विरला विधिवर्त्मगाः ।।

तेषां जपस्तपोहोमो दानव्रतजपक्रियाः ।। ।। ७१ ।।

क्रियमाणा यथाशक्त्या ह्यक्षय्यफलदायकाः ।। ७२ ।।

यत्किंचिच्छुभकर्माणि क्रियमाणानि देहिनाम् ।।

महदादिफलं दद्युर्निःश्रेयसमनुत्तमम् ।। ७३ ।।

श्रावणीयमिह किं फलाधिकं यत्र यांति विबुधाः फलार्थिनः ।।

पूजितादनु हरेः प्रियार्थिनः स्वर्गमार्गनिरताः प्रमोदिनः ।। ७४ ।।

यत्र संति न च विघ्नकारिणः कर्मणां हरिभयात्सुसिध्यति ।।

निर्विशंति च फलं विवेकिनः कर्ममार्गनिरताः सुदेहिनः ।। ७५ ।।

ये पठंत्यथ च पाठयंत्यहो पुण्यतीर्थविषयं प्रकाशितम् ।।

भक्तिभावसमलंकृताश्च ते संप्रयान्ति हरिमंदिरं शुभम् ।। ७६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्तिकेयसंवादे वसुधारातीर्थमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।। ।।

।। शिव उवाच ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/h5c



।। शिव उवाच ।। ।।

ततो नैर्ऋत्यदिग्भागे पंचधाराः पतंत्यधः ।।

प्रभासं पुष्करं चैव गयां नैमिषमेव च ।।

कुरुक्षेत्रं विजानीहि द्रवरूपं षडानन ।। १ ।।

पुरा ते ब्रह्मणः स्थानं गता मलिनरूपिणः ।।

पापिनां पापदोषेण विकृताः कृतबुद्धयः ।। २ ।।

तत्र गत्वा नमस्कृत्य ब्रह्माणं लोकभावनम् ।।

ऊचुः प्रांजलयः सर्वे निजागमनकारणम् ।। ३ ।।

तच्छ्रुत्वा ध्यानमालंब्य प्रहस्य जगदीश्वरः ।।

उवाच वचनं चारु स्मृत्वा बदरीकाश्रमम् ।। ४ ।।

मा भैष्ट गच्छत क्षिप्रं हरेर्बदरिकाश्रमम् ।।

यस्य निर्देशमात्रेण सद्यः पुण्यं भविष्यति ।।५।।

ततस्ते हर्षवेगेन नमस्कृत्य पितामहम् ।।

जग्मुरुत्फुल्लनयना विशालाममितप्रभाम् ।। ६ ।।

यस्य निर्वेशमात्रेण तत्क्षणाद्विगतेनसः ।।

ततो द्विरूपमास्थाय स्वस्थानं ययुरुत्सुकाः ।। ७ ।।

द्रवरूपेण चान्येन पंच तिष्ठंति निर्मलाः ।।

तेषु स्नात्वा विधानेन कृत्वा नित्यक्रियां शुचिः ।। ८ ।।

तत्तत्तीर्थफलं लब्ध्वा यात्यंते परमं पदम् ।।

पंचोपवास निरतः पूजयित्वा जनार्दनम् ।। ९ ।।

इह भोगान्बहून्भुक्त्वा हरेः सालोक्यमाप्नुयात् ।। 2.3.7.१० ।।

ततस्तु विमलं तीर्थं सोमकुंडाभिधं परम् ।।

तपश्चकार भगवान्सोमो यत्र कलानिधिः ।। ११ ।।

।। स्कन्द उवाच ।। ।।

सोमकुण्डस्य माहात्म्यं वद मे वदतां वर ।।

त्वत्प्रसादादहं श्रोतुमिच्छामि परमेश्वर ।। १२ ।।

।। शिव उवाच ।। ।।

पुरात्रितनयः श्रीमान्सोमः संप्राप्य यौवनम्।।

श्रुत्वा स्वर्वासिनां सौख्यं गंधर्वेभ्यो मुहुर्मुहुः ।।

तदा स्वपितरं प्रायात्प्रष्टुं तल्लभते कथम् ।। १३ ।।

।। सोम उवाच ।। ।।

भगवन्सर्वधर्मज्ञ करुणामृतसागर ।।

कथं वा लभ्यते स्वर्गः सर्वेषामुत्तमोत्तमः ।। १४ ।।

ग्रहनक्षत्रताराणामोषधीनां पतिः प्रभो ।।

स्यामहं येन तं यत्नं कृपया वद मे पितः ।। १५ ।।

।। अत्रिरुवाच ।। ।।

तपसाराध्य गोविंदं यमैर्वा नियमैः सुत ।।

किं दुर्ल्लभं तु साधूनामिह लोके परत्र च ।। १६ ।।

ततस्तु नारदाच्छ्रुत्वा क्षेत्रं परमनिर्मलम् ।।

जगाम बदरीं नत्वा पितरं दिशमुत्तराम् ।। १७ ।।

तत्र गत्वा फलैर्मेध्यैर्विष्णोः पूजामकल्पयत् ।।

जजाप परमं जाप्यमष्टाक्षरं मनोहरम् ।। १८ ।।

अष्टाशीतिसहस्राणि वर्षाणि भगवत्परम् ।।

तपस्तेपेऽतिपरमं सर्वलोकभयावहम् ।। १९ ।।

ततस्तुष्टः समागत्य भगवान्भक्तवत्सलः ।।

उवाच सोमं विधिवद्वरं वरय सुव्रत ।।2.3.7.२०।।

ततः सोमः समुत्थाय नमस्कृत्य पुनःपुनः ।।

ग्रहनक्षत्रताराणामोषधीनामहं पतिः ।।

द्विजानामपि सर्वेषां भूयासं ते प्रसादतः ।। २१ ।।

।। हरिरुवाच ।। ।।

वरमन्यं वृणुष्वातो दुर्ल्लभं त्वं भवादृशाम् ।।

वरान्नो वरयामास तदा तं हिमजात्मज ।। २२ ।।

ततोऽतिविमनाः सोमः पुनस्तेपे तपो महत् ।।

त्रिंशद्वर्षसहस्राणि देवमानेन पुत्रक ।।२३।।

तदासौ करुणापूर्णहृदयो भगवानगात् ।।

वरं वरय भद्रं ते वरदोऽहं तवाग्रतः ।।

सोमस्तु तादृशं वव्रे तच्छ्रुत्वान्तर्दधे हरिः।।२४।।

ततोऽतिविमनाः सोमः पुनस्तेपे तपो महत्।।

चत्वारिंशत्सहस्राणि तपस्तप्तं सुदुष्करम् ।।२५।।

ततस्तुष्टो हरिः साक्षाच्छंखचक्रगदाधरः ।।

उवाच वचनं चारु सोमं श्रांतं तपोनिधिम् ।।२६।।

उत्तिष्ठोत्तिष्ठ भद्रं ते वरं वरय सुव्रत ।।

तपसाराधितो नूनं त्वयाहं तपसां निधिः ।। २७ ।।

।। सोम उवाच ।। ।।

यदि तुष्टो भवान्मह्यं भगवान्वरदर्षभः ।।

ग्रहनक्षत्रताराणामाधिपत्यं प्रयच्छ मे ।।

तथौषधीनां विप्राणां यामिन्याश्च जगत्पते ।। २८ ।।

।। श्रीभगवानुवाच ।। ।।

दुर्ल्लभं प्रार्थितं वत्स वितरामि तथाप्यहम् ।।

एवमस्तु ततः सर्वे समागत्य दिवौ कसः ।।

अभिषिक्तवंतो विधिवत्सोमं राजानमादृताः ।। २९ ।।

ततो विमानमारूढो रथेन शुभ्रवाससा ।।

अभिष्टुतः सुरैरभूद्दिवं गतो निशाकरः ।। ।। 2.3.7.३० ।।

ततः प्रभृति तीर्थं तत्सोमकुंडेति दुर्ल्लभम् ।।

यद्दृष्टिमात्रान्मनुजा गतदोषा भवंति हि ।। ३१ ।।

यदुपस्पर्शनाद्यांति सोमलोकं विनिंदिताः ।।

यत्र स्नात्वा विधानेन संतर्प्य पितृदेवताः ।।३२।।

सोमलोकं विनिर्भिद्य विष्णुलोकं प्रपद्यते ।।

उपवासत्रयं कृत्वा पूजयित्वा जनार्द्दनम् ।। ।। ३३ ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।।

त्रिरात्रेण स्थितो भूत्वा पूजयित्वा जनार्द्दनम् ।।

जपं कुर्वन्विशेषेण मंत्रसिद्धिः प्रजायते ।। ।। ३४ ।।

कर्मणा मनसा वाचा यत्कृतं पातकं नृभिः ।।

तत्सर्वं क्षयमायाति सोमकुंडेक्षणादिह ।। ३५ ।।

ततस्तु द्वादशादित्यतीर्थं पापहरं परम् ।।

यत्र तस्वा पुनः कृच्छ्रं काश्यपः सूर्यतां ययौ ।। ३६ ।।

दुर्ल्लभं त्रिषु लोकेषु तपःसिद्ध्येककारणम् ।।

रविवारेषु सप्तम्यां संक्रात्यां विधिवन्नरः ।।

सप्तजन्मकृतात्पापात्स्नानमात्रेण शुद्ध्यति ।। ३७ ।।

पाराकं विधिवत्कृत्वा पूजनीयो जनार्द्दनः ।।

सूर्यलोके सुखं भुक्त्वा विष्णुलोके महीयते ।। ।। ३८ ।।

महारोगाभिभूतस्तु स्नात्वा पीत्वा जलं शुचिः ।।

रोगमुक्तोऽचिरादेव नात्र कार्या विचारणा ।। ३९ ।।

चतुःस्रोतं परं तीर्थं विलोचनमनोहरम् ।।

धर्मार्थकाममोक्षास्ते तिष्ठंति द्रवरूपिणः ।। 2.3.7.४० ।।

हरेराज्ञानुसारेण क्षेत्रेऽस्मिन्वैष्णवे स्वयम् ।।

पुरुषार्था द्रवीभूता भूतानां मुक्तिहेतवः ।। ।। ४१ ।।

पूर्वादिदिक्षु क्रमसन्निविष्टा धर्मप्रधाना इव रूपभाजः ।।

भजंति ये तान्क्रमसन्निविष्टान्प्रसन्नतैषां सततं भवेद्धि ।। ४२ ।।

नान्यत्र क्षेत्रे मिलिताः कथंचिच्चत्वार एते त्रिदशैरलभ्याः ।।

तानग्रिमं जन्म जवेन लब्ध्वा पश्यंति पूर्वार्जितपुण्यपुंजाः ।। ४३ ।।

ये दुर्जना दुर्जनसंगभाजः क्षमार्जवप्राणजयप्रधानाः ।।

क्रीडामृगा ग्राम्यवधूजनानां न ते प्रपश्यंत्यचिरात्पुमर्थान्।।४४।।

तथैव पश्यंत्यचिरेण तत्त्वज्ञानैकहेतूनपि तान्पुमर्थान् ।। ४५ ।।

अत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।।

पर्वणि प्रयताः स्नातुं समायांति षडानन ।। ४६ ।।

ततः सत्यपदंनाम तीर्थं सर्वमनोहरम् ।।

त्रिकोणाकारमेवैतत्कुंडं कल्मषनाशनम् ।।

एकादश्यां हरिस्तत्र स्वयमायाति पावने ।।४७।।

तत्पश्चादृषयः सर्वे मुनयश्च तपोधनाः ।।

स्नातुमायांति विधिवत्कुंडे सत्यपदाभिधे ।।४८।।

गंधर्वाप्सरसां यत्र मध्याह्ने हरिवासरे ।।

गानं शृण्वंति विरलाः सत्यव्रतपरायणाः ।। ४९ ।।

दर्शनाद्यस्य तीर्थस्य पातकानि महांत्यपि ।।

पलायंते भयेनैव सिंहं दृष्ट्वा मृगा इव ।।2.3.7.५०।।

स्वशाखोक्तविधानेन स्नानं कृत्वा विचक्षणः ।।

सत्यलोकमवाप्नोति ततो नैःश्रेयसं पदम् ।। ५१ ।।

अहोरात्रं शुचिर्भूत्वा उपोष्य च जनार्द्दनम् ।।

पूजयित्वा यथाशक्त्या स जीवन्मुक्तिभाजनः ।। ५२ ।।

ब्रह्मा विष्णुश्च रुद्रश्च त्रिकोणस्थाः समाहिताः ।।

तपः कुर्वंत्यनुदिनं सर्वलोकादितोषणम् ।। ५३ ।।

त्रिकोणमंडितं तीर्थं नाम्ना सत्यपदप्रदम् ।।

दर्शनीयं प्रयत्नेन सर्वपापमुमुक्षुभिः ।। ५४ ।।

जपं तपो हरिस्तोत्रं पूजां स्तुत्यभिवंदनम् ।।

माहात्म्यं कुर्वतां वक्तुं ब्रह्मणापि न शक्यते ।। ५५ ।।

ततोऽतिविमलं नाम नरनारायणाश्रमम् ।।

द्विविधं दृश्यते तत्र पाथः परमनिर्मलम् ।। ५६ ।।

उभाभ्यामुभयोः प्रीतिर्भवतीति विनिश्चितम् ।।

तत्र स्नात्वा प्रयत्नेन पूजयित्वा जनार्द्दनम् ।।

सर्वपापविनिर्मुक्तस्तत्क्षणान्नात्र संशयः ।। ५७ ।।

ततो नारायणावासशिखरे विमलाकृति ।।

तीर्थं पवित्रमुर्वश्या अभिव्यक्तिकरं भवेत् ।। ५८ ।।

।। स्कन्द उवाच ।। ।।

अभिव्यक्तिः कथं तस्या उर्वश्याः शिखरे पितः ।।

किं पुण्यं किं फलं तत्र परं कौतूहलं वद ।।५९।।

।। शिव उवाच ।। ।।

धर्मस्यपत्नी मूर्त्यासीत्तस्यां जातौ षडानन ।।
नरनारायणौ साक्षाद्भगवानेव केवलम् ।। 2.3.7.६० ।।
पित्रोराज्ञामनुप्राप्य तपोऽर्थं कृतमानसौ ।।
उभयोर्नगयोस्तौ तु तपोमूर्ती इव स्थितौ ।। ६१ ।।
तौ दृष्ट्वा विस्मितः शक्रः प्रेषयामास मन्मथम् ।।
सगणं तपसो ध्वंसो यथा स्याद्गन्धमादनम् ।। ६२ ।।
विक्रम्य विधिवत्ते तु नारायणबलोदयम् ।।
ज्ञात्वा हतमनस्कास्तानुवाच जगतीपतिः ।। ६३ ।।
।। हरिरुवाच ।। ।।
किमर्थमागता यूयमातिथ्यं गृह्यतामिति ।। ६४ ।।
इत्युक्त्वा फलमूलानि तेभ्यो दत्त्वोर्वशीं तथा ।।
दत्त्वान्तर्धिमगादेव पश्यतां विघ्नकारिणीम् ।। ६५ ।।
ते तु गत्वा दिवं भीते शक्रायोचुर्बलं हरेः ।।
शक्रस्तामुर्वशीं प्राप्य हर्षणैकयुतोऽभवत् ।। ६६ ।।
ततः प्रभृति तत्तीर्थमुर्वशी नामतः पृथक् ।।
प्रसिद्धं यत्र भगवान्स्वयमास्ते तपोमयः ।। ६७ ।।
तत्र स्नात्वा विधानेन उपोष्य रजनिद्वयम् ।।
पूजयित्वा हरिस्तत्र नरो नारायणो भवेत् ।। ६८ ।।
उर्वशीकुण्डमासाद्य कामनावशतो नरः ।।
उर्वशीलोकमाप्नोति स्नानमात्रेण पुत्रक ।। ६९ ।।
सदैव भगवांस्तत्र उर्वशीकुंड सन्निधौ ।।
भूतानां भावयन्भव्यं तपोमूर्तिर्व्यवस्थितः ।। 2.3.7.७० ।।
आमोदं तदुपरि वै प्रभञ्जनोऽपि श्रीभर्तुर्वहति पदांबुजैकलब्धम् ।।
यत्संगात्कलियुगकल्मषातुराणामुत्संगे न भवति पापभारपाकः ।। ७१ ।।
यत्संगाद्धर्षमुपावहत्पदश्रीनिर्विण्णो गिरिविवरेच्युतैकसेवी ।।
श्रीभर्तुश्चरणयुगं वहन्समन्तादभ्येति प्रशममहस्तपःसमीरे ।।७२।।
गीर्वाणानुपहसति स्वधेन पूर्णः कीटोऽपिप्रशमितदुर्नयो निरीहः।।
यत्रस्थः कुसुमनिवेदमात्मयोगपर्युष्टं जहदुपयास्यते पदं तत् ।। ७३ ।।

यत्रेत्वा मुनिमतयो बहिःपदार्थान्नापश्यन्निहितपदांबुजैकभाजः ।।

यत्रस्थः स्वयमपि गोपतिर्जनानामाधत्ते स्वपदमनुक्रमागतानाम् ।। ७४ ।।

बहूनि संति तीर्थानि गिरौ नारायणाश्रिते ।।

सर्वपापहराण्याशु तान्यहं वेद नो जनः ।। ७५ ।।

संसारकुहरे घोरे यत्र स्थगितमात्मनः ।।

उर्वशीकुण्डमासाद्य दिनमेकं वसेन्नरः ।। ७६ ।।

उर्वशीदक्षिणे भागे आयुधानि जगत्पतेः ।।

विद्यंते दर्शनात्तेषां न शस्त्रभयभाग्भवेत् ।। ७७ ।।

य इदं शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।

सर्वपापविनिर्मुक्तः सालोक्यं लभते हरेः ।।७८।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्त्तिकेयसंवादे पञ्चधारादितीर्थमाहात्म्यवर्णनंनाम सप्तमोध्यायः ।। ७ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/बदरिकाश्रममाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/h5d
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | बदरिकाश्रममाहात्म्यम्

।। शिव उवाच ।। ।।

ब्रह्मकुण्डाद्दक्षिणतो नरावासगिरिर्महान् ।।

यत्र भगवता मेरुः स्थापितो लोकसुन्दरः ।। १ ।।

।। स्कन्द उवाच ।। ।।

कथं भगवता मेरुः स्थापितो नरसन्निधौ ।।

महत्कौतूहलं तात कथ्यतां यदि रोचते ।। २ ।।

।। महादेव उवाच ।। ।।

यदा भगवतो वासो विशालायां समागतः ।।

देवा महर्षयः सिद्धाः सविद्याधरचारणाः ।।३।।

विहाय मेरुशृंगाणि भगवद्दर्शनोत्सुकाः ।।

भगवद्दर्शनाह्लाददतिरस्कृतसुरालयाः ।। ४ ।।

तदा तु भगवांस्तेषां सुखहेतोः षडानन ।।

उत्पाद्य मेरुशृंगाणि करेणैकेन लीलया ।।

स्थापयामास सर्वेषां भगवान्प्रीतिवर्द्धनः ।।५।।

ततः सर्वे समालोक्य गिरिं कांचननिर्मितम् ।।

प्रसन्नास्तुष्टुवुः सर्वे नारायणमनामयम्।।६।।

।।देवा ऊचुः।। ।।

योस्मत्सुखाय भवविश्रमणाय बिभ्रल्लीलातनूः कनकशैलमिहानिनाय ।।

जेता सुरार्द्दनशतं त्रिदशैकपक्षस्तस्मै विधेम नम उग्रतपःश्रियाय।।७।।

यद्यत्करोति कृपया कृपणार्तितूलशैलाग्निराश्रितकृदेकविदां वरिष्ठः।।

स्वेनैव तेन करणेन स तुष्यतां नो यस्यान्वकारि पुरुषेण न केनचिद्वै ।।८।।

अस्माकमुन्नतधियां विदधाति सम्यक्छिक्षां पितेव करुणो निजलाभपूर्णः।।

त्रैलोक्यरक्षणविचक्षणदृष्टिपातपूर्णामृतांबुधिरसौ विपदः प्रपायात् ।। ९ ।।

।। ऋषय ऊचुः ।। ।।

येनाध्यस्तं भाति समस्तं जगदेकं क्रीडाभांडं सत्यतयाऽजस्य विभूम्नः ।।

भानां वृदं यद्वदनेप्याश्रितमूर्तिस्तस्मै नित्यं शाश्वत तुभ्यं प्रणमाम ।। २.३.८.१० ।।

।। सिद्धा ऊचुः ।। ।।

यत्कृपालवत एव महांतः सिद्धिमीयुरितरे भवभाजः ।।

तेऽचिरेण भवभीमपयोधिं तीर्णवंत इति नः सुमनीषा ।।११।।

।। विद्याधरा ऊचुः।। ।।

विभो सद्गुणग्राम कल्याणमूर्ते परेशान संमानसंतानहेतो ।।

भवत्पादपद्मासवस्वादमत्ताः कृतार्था न चित्रं भवत्यत्र किंचित् ।।१२।।

ततस्तुष्टोऽथ भगवांस्तेषामासीद्दिवौकसाम् ।।

वरं वृणुध्वमित्युक्तास्ते प्रोचुर्वरदर्षभम्।।१३।।

परितुष्टो भवान्साक्षाद्देवदेवो रमापतिः।।

बदरी न त्वया त्याज्या न च मेरुः कदाचन।।१४।।

मेरुशृंगं प्रपश्यंति ये जनाः पुण्यभागिनः ।।

तेषां वै त्वत्प्रसादेन मेरौ वासः प्रजायताम्।।१५।।

तत्र भुक्त्वा चिराद्भोगान्भूयादन्ते लयस्त्वयि।।

एवमस्त्विति चाभाष्य तत्रैवांतर्हितो हरिः ।। १६ ।।

ततः प्रभृति ते सर्वे मेरुशृंगविहारिणः ।।

नरनारायणस्यांते पाल्यमाना मुहुर्मुहुः।।१७।।

कदाचिद्दिवि तिष्ठंति कदाचिन्मेरुमध्यतः।।

निर्विशंका निरुद्वेगा ऋषयश्च तपोधनाः।।१८।।

भगवानपि तत्रैव नररूपेण तिष्ठति।।

धनुर्बाणधरः श्रीमांस्तपसा पावकोपमः।।

आनंदमृषिवृंदस्य जनयंस्तप आस्थितः ।। १९ ।।

ततस्तु परमं तीर्थं लोकपालाभिवंदितम् ।।

यत्र संस्थापयामास लोकपालान्हरिः स्वयम् ।।२.३.८.२०।।

।। स्कंद उवाच ।। ।।

कथं भगवता तत्र लोकपालाश्च स्थापिताः ।।

महत्कौतूहलं तात कथयस्व महामते ।। २१ ।।

।। शिव उवाच ।। ।।

एकदा मेरुमध्यस्थाश्रयानिह हरन्हरिः।।

देवानामृषिमुख्यानां चरितं द्रष्टुमुद्यतः ।।२१।।

तं दृष्ट्वा सहसोत्थाय नमस्कृत्य दिवौकसः ।।

ऊचुस्ते विनयात्सर्वे प्रसीद भगवन्विभो ।। २३ ।।

क्षणं विश्राम्य विधिवद्दृष्ट्वा तां विरलां भुवम् ।।

सान्निध्यमृषिदेवानामयुक्तं भावयन्मिथः ।। २४ ।।

ततः प्रहस्य भगवानुवाच मधुसूदनः ।।

लोकपालान्समाहूय नात्र स्थेयं भवद्विधैः ।। २५ ।।

ऋषयस्तापसाः सिद्धाः सस्त्रीका निवसंति हि ।।

भवद्विधानामास्थानं पुरेव कल्पितं मया ।।२६।।

ततः स त्वरितो गत्वा रम्ये गिरिवरे हरिः ।।

लोकपालान्समाहूय स्थापयामास तान्गुह ।। २७ ।।

तत्रैव शैलदंडेन हत्वाग्निं जलकांक्षया ।।

क्रीडापुष्करणीं तेषां निर्ममे सुमनोहराम ।। २८ ।।

सस्त्रीका यत्र गीर्वाणा विचरंति निजेच्छया ।।

गायंति स्वनुमोदंति गंधर्वास्त्रिदिवौकसाम् ।। २९ ।।

वनानि कुसुमामोदरम्याणि परितोषतः ।।

दिनानि यत्र गच्छंति क्षणप्रायाणि देहिनाम् ।। 2.3.8.३० ।।

भगवानपि तत्रैव तेषामानंदमावहन्।।

द्वादश्यां पौर्णमास्यां च स्वयमायाति मज्जने ।। ३१ ।।

तत्पश्चादृषयः सर्वे मुनयश्च तपोधनाः ।।

यत्र स्नात्वा विधानेन गुह मध्याह्नकालतः ।।

असंगं परमं ज्योतिर्जले पश्यंति चक्षुषा ।। ३२ ।।

सर्वतीर्थावगाहेन यत्फलं परिकीर्तितम् ।।

तत्फलं तत्क्षणादेव दण्डपुष्करिणीक्षणात् ।। ।। ३३ ।।

यत्र काम्यानि कर्माणि सफलानि मनीषिणाम् ।।

यत्र पिंडप्रदानेन गयातोऽष्टगुणं फलम् ।।३४।।

यज्ञो दानं तपः कर्म सर्वमक्षयमुच्यते।।

द्वादश्यां शुक्लपक्षस्य ज्येष्ठे मासि षडानन ।। ३५ ।।

तत्र स्नात्वा विधानेन कृतकृत्यो भवेद्यतः ।।

बदरीतीर्थमध्ये तु गुप्तमेतत्सुरोत्तमैः ।।

न वाच्यं यत्र कुत्रापि तव प्रीत्या मयोदितम् ।।३६।।

वक्तव्यं किमिह बहु प्रभूतपुण्याः पश्यंति प्रथितमिदं सुरैकगुप्तम् ।।

नान्येषां कथमपि चेतसि प्रसंगाद्देवैः स्यादनुदिनचिंतितं गुहैतत् ।। ३७ ।।

येषां वै भगवति चेत्समग्रकर्म स्वाध्यायाभ्यसनविधिक्रमेण जातम् ।।

पश्यंति त्रिभुवनदुर्ल्लभं सुतीर्थं दंडोदं न भवति चान्यथा सुदृष्टम् ।।३८।।

दंडोदकात्परं तीर्थं न विष्णोः सदृशोऽमरः ।।

विशालासदृशं क्षेत्रं न भूतं न भविष्यति ।।३९।।

सेवनीया प्रयत्नेन विशाला च विचक्षणैः ।।

य इच्छेत्सततं धाम भगवत्पार्श्ववर्ति वै ।। 2.3.8.४० ।।

।। स्कंद उवाच ।। ।।

गंगामाश्रित्य तीर्थानि कानि संतीह सत्पदे ।।

श्रेयस्कराणि भूरीणि संक्षेपात्तानि मे वद ।। ४१ ।।

।। महादेव उवाच ।। ।।

गंगायां यत्र संयोगो मानसोद्भेदसन्निधौ ।।

तत्तीर्थं विमलं पुण्यं प्रयागादधिकं महत् ।। ४२ ।।

त्रिंशद्वर्षसहस्राणि वायुभोजनतो भवेत् ।।

तत्फलं स्नानमात्रेण गंगायाः संगमे नृणाम् ।। ४३ ।।

संगमाद्दक्षिणे भागे धर्मक्षेत्रं प्रकीर्तितम् ।।

यत्र मूर्त्या श्रुतौ जातौ नरनारायणावृषी ।।४४।।

तत्क्षेत्रं पावनं मर्त्ये सर्वेषामुत्तमोत्तमम् ।।

धर्मस्तत्रैव भगवांश्चतुष्पादवतिष्ठति ।। ४५ ।।

यत्र यज्ञास्तपो दानं यत्किंचित्क्रियते नृभिः ।।

तत्पुण्यस्य क्षयो नास्ति कल्पकोटिशतैरपि ।। ४६ ।।

ततो दक्षिणदिग्भाग उर्वशी संगमाभिधम् ।।

सर्वपापहरं पुंसां स्नानमात्रेण देहिनाम् ।। ४७ ।।

कूर्मोद्धारस्ततः साक्षाद्धरिभक्त्येकसाधनम् ।।

स्नानमात्रेण भूतानां सत्त्वशुद्धिः प्रजायते ।। ४८ ।।

ब्रह्मावर्त्तस्ततः साक्षाद्ब्रह्मलोकैककारणम् ।।

दर्शनादेव तीर्थस्य सर्वपापक्षयो भवेत् ।। ४९ ।।

बहूनि संति तीर्थानि दुर्गम्यानीह देहिनाम् ।।

संक्षेपात्कथितं वत्स तवादरवशादिदम् ।। 2.3.8.५० ।।

य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ।।

सर्वपापविनिर्मुक्तः पदं विष्णोः प्रपद्यते ।।।। ५१ ।।

राजा विजयमाप्नोति सुतार्थी लभते सुतम् ।।

कन्यार्थी लभते कन्यां कन्या विंदति सत्पतिम् ।। ५२ ।।

धनार्थी धनमाप्नोति सर्वकामैकसाधनम् ।। ५३ ।।

मासमात्रं नरो भक्त्या शृणुयाद्यः समाहितः ।।

तस्याभीष्टसमावाप्तिर्दुर्लभोपि न संशयः ।। ५४ ।।

आधिव्याधिभयं घोरं दारिद्र्य कलहं तथा ।।

यस्य गेहेषु माहात्म्यं तत्रैतानि न कर्हिचित् ।। ५५ ।।

नापमृत्युर्न सर्पादि दौर्भाग्यं चापि वर्तते ।।

दुःस्वप्नग्रहपीडा च परराष्ट्रभयं तथा ।। ५६ ।।

युद्धे यात्राप्रयाणे च पठनीयं प्रयत्नतः ।।

विवाहे च विवादे च शुभकर्मणि यत्नतः ।। ५७ ।।

पूर्णं वाऽध्यायमात्रं वा तदर्धं वा विचक्षणैः ।।

सर्वकार्यप्रसिद्धिः स्यान्नात्र कार्या विचारणा ।। ५८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे बदरिकाश्रममाहात्म्ये शिवकार्तिकेयसंवादे बदरिकाश्रमे मेरुसंस्थापनतीर्थलोकपालतीर्थदंडपुष्करिणीतीर्थधर्मक्षेत्रादिविविधतीर्थक्षेत्रमाहात्म्य वर्णनंनामाष्टमोऽध्यायः ।। ८ ।। ।। छ ।।

इति श्रीस्कांदे द्वितीये वैष्णवखण्डे तृतीयं बदरिकाश्रममाहात्म्यं समाप्तम् ।। २-३) ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०१

https://sa.wikisource.org/s/h5e

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। ।। श्रीगणेशाय नमः ।।

।। अथ कार्त्तिकमासमाहात्म्यप्रारम्भः ।।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।।

देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।। १ ।।

।। ऋषय ऊचुः ।। ।।

सूत नः कथितं पुण्यं माहात्म्यमाश्विनस्य च ।।

भूयोऽन्यच्छ्रोतुमिच्छामः कार्तिकस्य च वैभवम् ।। २ ।।

कलौ कलुषचित्तानां नराणां पापकर्मणाम् ।।

संसाराब्धौ निमग्नानामनायासेन का गतिः ।। ३ ।।

को धर्मः सर्वधर्माणामधिको मोक्षसाधकः ।।

इहाऽपि मुक्तिदो नृणामेतत्त्वं कथय प्रभो ।। ४ ।।

।। सूत उवाच ।। ।।

भवद्भिर्यदहं पृष्टस्तदेतत्पृष्टवान्मुनिः ।।

नारदो ब्रह्मणः पुत्रो ब्रह्माणं तु जगद्गुरुम् ।। ५ ।।

तथैव सत्यभामा च श्रीकृष्णं जगदीश्वरम् ।।

अपृच्छत्कार्तिकस्यैव वैभवं श्रवणोत्सुका ।।६।।

वालखिल्यैश्च ऋषिभिर्यदुक्तमृषिसंसदि ।।

श्रीसूर्यारुणसंवादरूपेणाऽतिमनोहरम् ।। ७ ।।

कैलासे शंकरेणैव कार्तिकस्य च वैभवम् ।।

वर्णितं षण्मुखस्याग्रे नानाख्यानसमन्वितम् ।। ८ ।।

पृथुं प्रति नारदेन कथितं च महात्म्यकम् ।।

कार्तिकस्य च विप्रेंद्रा श्रुत्वा ब्रह्ममुखात्पुरा ।। ९ ।।

एकदा नारदो योगी सत्यलोकमुपागतः ।।

पप्रच्छ विनयेनैव सर्वलोकपितामहम् ।। 2.4.1.१० ।।

।। श्रीनारद उवाच ।। ।।

पापेंधनस्य घोरस्य शुष्कार्द्रस्य च भूरिशः ।।

को वह्निर्दहते ब्रह्मंस्तद्भवान्वक्तुमर्हति ।। ११ ।।

नाज्ञातं त्रिषु लोकेषु ब्रह्मांडांतर्गतस्य यत् ।।

विद्यते तव देवेश त्रिविधस्य सुनिश्चितम् ।। १२ ।।

मासानां प्रवरो मासो देवानामुत्तमोत्तमः ।।

तीर्थानि तद्विशेषेण कथयस्व पितामह ।। १३ ।।

।। ब्रह्मोवाच ।। ।।

मासानां कार्तिकः श्रेष्ठो देवानां मधुसूदनः ।।

तीर्थं नारायणाख्यं हि त्रितयं दुर्लभं कलौ ।। १४ ।।

।। नारद उवाच ।। ।।

भगवंस्तव दासोऽस्मि भक्तोऽस्मि हरिवल्लभ ।।

वैष्णवान्ब्रूहि मे धर्मान्सर्वज्ञोऽसि पितामह ।। १५ ।।

आदौ कार्तिकमाहात्म्यं वक्तुमर्हसि मे प्रभो ।।

दीपदानस्य माहात्म्यं व्रतिनां नियमांस्तथा ।। १६ ।।

गोपीचंदनमाहात्म्यं तुलस्याश्च तथा विभो ।।

धात्र्याश्चैव च माहात्म्यं विधिं स्नानादिकस्य च ।।

व्रतारंभः कदा कार्यं उद्यापनविधिं तथा ।। १७ ।।

यत्किंचिद्वैष्णवं धर्मं तत्सर्वं वक्तुमर्हसि ।।

येनाऽहं त्वत्प्रसादेन पदं यास्याम्यनामयम् ।।।। १८ ।।

।। सूत उवाच ।। ।।

इति पुत्रवचः श्रुत्वा ब्रह्मा हर्षसमन्वितः ।।

राधादामोदरं स्मृत्वा प्रोवाच तनुजं प्रति ।। १९ ।।

।। ब्रह्मोवाच ।। ।।

साधु पृष्टं त्वया पुत्र लोकोद्धरणहेतवे ।।

कथयामि न संदेहः कार्तिकस्य च वैभवम् ।। 2.4.1.२० ।।

एकतः सर्वतीर्थानि सर्वे यज्ञाः सदक्षिणाः ।। ।।

कार्तिकस्य तु मासस्य कलां नार्हंति षोडशीम् ।। २१ ।।

एकतः पुष्करे वासः कुरुक्षेत्रे हिमालये ।।

एकतः कार्तिकः पुत्र सर्वपुण्याधिको मतः ।। ।। २२ ।।

स्वर्णानि मेरुतुल्यानि सर्वदानानि चैकतः ।।

एकतः कार्तिको वत्स सर्वदा केशवप्रियः ।। २३ ।।

यत्किंचित्क्रियते पुण्यं विष्णुमुद्दिश्य कार्तिके ।।

तस्य क्षयं न पश्यामि मयोक्तं तव नारद ।। २४ ।।

सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।।

तथात्मानं समादद्यान्न भ्रश्येत यथा पुनः ।। २५ ।।

दुष्प्राप्यं प्राप्य मानुष्यं कार्तिकोक्तं चरेन्न यः ।।

धर्मं धर्मभृतां श्रेष्ठ स मातापितृघातकः ।। २६ ।।

कार्तिकः खलु वै मासः सर्वमासेषु चोत्तमः ।।

पुण्यानां परमं पुण्यं पावनानां च पावनम् ।। २७ ।।

अस्मिन्मासे त्रयस्त्रिंशद्देवाः सन्निहिता मुने ।।

अत्र स्नानानिदानानि भोजनानि व्रतानि च ।। २८ ।।

तिलधेनुं हिरण्यं च रजतं भूमिवाससी ।।

गोप्रदानानि कुर्वंति सर्वभावेन नारद ।। २९ ।।

तानि दानानि दत्तानि गृह्णंति विधिवत्सुराः ।।

यत्किंच दत्तं विप्रेंद्र तपश्चैव तथा कृतम् ।। 2.4.1.३० ।।

तदक्षय्यफलं प्रोक्तं विष्णुना प्रभविष्णुना ।। ।।

पापानां मोक्षणं चैव कार्तिके मासि शस्यते ।। ३१ ।।

तस्माद्यत्नेन विप्रेंद्र कार्तिके मासि दीयते ।।

यत्किंचित्कार्तिके दत्तं विष्णुमुद्दिश्य मानवैः ।। ३२ ।।

तदक्षयं हि लभते अन्नदानं विशेषतः ।।

यथा नदीनां विप्रेंद्र शैलानां चैव नारद ।। ३३ ।।

उदधीनां च विप्रर्षे क्षयो नैवोपपद्यते ।।

दानं कार्तिकमासे तु यत्किंचिद्दीयते मुने ।।।। ३४ ।।

न तस्यास्ति क्षयो विप्र पापं याति सहस्रधा ।।

संप्राप्तं कार्तिकं दृष्ट्वा परान्नं यस्तु वर्जयेत् ।।३५।।

दिनेदिनेऽतिकृच्छ्रस्य फलं प्राप्नोत्ययत्नतः ।।

न कार्तिकसमो मासो न कृतेन समं युगम् ।।३६।।

न वेदसदृशं शास्त्रं न तीर्थं गंगया समम् ।।

न चान्नसदृशं दानं न सुखं भार्यया समम् ।। ३७ ।।

न्यायेनोपार्जितं द्रव्यं दुर्लभं दानकारिणाम् ।।

दुर्लभं मर्त्यधर्माणां तीर्थे च प्रतिपादनम् ।। ३८ ।।

कार्तिके मुनिशार्दूल शालिग्रामशिलार्चनम् ।।

स्मरणं वासुदेवस्य कर्तव्यं पापभीरुणा ।। ३९ ।।

एतादृशं कार्तिकं च अकृतेनैव यो नयेत् ।।

पूर्वं कृतस्य पुण्यस्य क्षयमाप्नोत्यसंशयम् ।। 2.4.1.४० ।।

।। नारद उवाच ।। ।।

अशक्तेन कथं कार्यं कार्तिकव्रतमुत्तमम् ।।

येन तत्फलमाप्नोति तन्मे वद पितामह ।। ४१ ।।

।। ब्रह्मोवाच ।। ।।

अशक्तस्तु यदा मर्त्यस्तदैवं व्रतमाचरेत् ।।

अन्यस्मै द्रविणं दत्त्वा कारयेत्कार्तिकव्रतम् ।। ४२ ।।

तस्मात्पुण्यं प्रगृह्णीत दानसंकल्पपूर्वकम् ।।

द्रव्यदानेऽप्यशक्तश्चेद्यदा देवर्षिसत्तम ।। ४३ ।।

तदा तेन प्रकर्तव्यं पानं तीर्थजलस्य च ।।

तत्राप्यशक्तो यो मर्त्यस्तेन नित्यं हरेर्मुदा ।। ४४ ।।

स्मरणं च प्रकर्तव्यं नाम्ना नियमपूर्वकम् ।।

अखंडितं तदा तेन कार्तिकव्रतजं फलम् ।। ४५ ।।

विष्णोः शिवस्य वा कुर्यादालये हरिजागरम् ।।

शिवविष्ण्वोर्गृहाभावे सर्वदेवालयेष्वपि ।।४६।।

दुर्गाटव्यां स्थितो वाऽथ यदिवाऽऽपद्गतो भवेत् ।।

कुर्यादश्वत्थमूले तु तुलसीनां वनेष्वपि ।। ४७ ।।

विष्णुनामप्रबंधानां गायनं विष्णुसन्निधौ ।।

गोसहस्रप्रदानस्य फलमाप्नोति मानवः ।। ४८ ।।

वाद्यकृत्पुरुषश्चापि वाजपेयफलं लभेत्।।

सर्वतीर्थावगाहोत्थं नर्तकः फलमाप्नुयात् ।। ४९ ।।

सर्वमेतल्लभेत्पुण्यमेतेषां द्रव्यदः पुमान्।।

श्रवणाद्दर्शनाद्वापि षडंशं फलमाप्नुयात् ।। 2.4.1.५० ।।

आपद्गतो यदाप्यंभो न लभेत्कुत्रचिन्नरः ।।

व्याधितो वाथवा कुर्याद्विष्णोर्नाम्नाऽपि मार्जनम् ।। ५१ ।।

उद्यापनविधिं कर्तुमशक्तो यो व्रतस्थितः ।।

ब्राह्मणान्भोजयेत्पश्चाद्व्रतसंपूर्तिहेतवे ।। ५२ ।।

अशक्तो दीपदानाय परदीपं प्रबोधयेत् ।।

तस्य वा रक्षणं कुर्याद्वातादिभ्यः प्रयत्नतः ।। ५३ ।।

श्रीविष्णोः पूजनाऽभावे तुलसीधात्रिपूजनम् ।।

सर्वाऽभावे व्रती कुर्याद्ब्राह्मणानां गवामपि ।।

तस्याप्यभावे मनसि विष्णोर्नामानुकीर्तनम् ।। ५४ ।।

।। नारद उवाच ।। ।।

ब्रह्मन्ब्रूहि विशेषेण धर्मान्कार्तिकसंभवान् ।। ५५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकव्रतप्रशंसावर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h5f



।। ।। ब्रह्मोवाच ।। ।।

अथ कार्तिकमासस्य धर्मान्वक्ष्यामि नारद ।।

संप्राप्तं कार्तिकं दृष्ट्वा परान्नं यस्तु वर्जयेत् ।। १ ।।

स तु मोक्षमवाप्नोति नात्र कार्या विचारणा ।।

सर्वेषामेव धर्माणां गुरुपूजा परा मता ।।

गुरुशुश्रूषया सर्वं प्राप्नोति ऋषिसत्तम ।।२।।

गुरौ तुष्टे च तुष्टाः स्युर्देवाः सर्वे सवासवा ।।

गुरौ रुष्टे च रुष्टाः स्युर्देवाः सर्वे सवासवाः ।। ३ ।।

कार्तिकं मासि संप्राप्ते कृत्वा कर्माणि भूरिशः ।। ४ ।।

अकृत्वा गुरुशुश्रूषां नरकानेव विंदति ।। ४ ।।

यत्किंचिद्वा समादिष्टो गुरुणा तत्समाचरेत् ।।५।।

आज्ञप्तो गुरुणा विप्र न तद्वाक्यं तु लंघयेत् ।।

यदि दुःखादिकं प्राप्तं गुरुं तु शरणं व्रजेत् ।। ६ ।।

मातृत्वे च पितृत्वे च गुरुमेव स्मरेद्बुधः ।।

गुरौ न प्राप्यते यत्तन्नान्यत्राऽपि हि लभ्यते ।। ७ ।।

गुरुप्रसादात्सर्वं तु प्राप्नोत्येव न संशयः ।।

मेधावी कपिलश्चैव सुमतिश्च महातपाः ।।

गौतमस्य गुरोः सम्यक्सेवयाऽमरतां गताः ।। ८ ।।

तस्मात्सर्वप्रयत्नेन कार्तिके विष्णुतत्परः ।।

गुरुसेवां प्रकुर्वीत ततो मोक्षमवाप्नुयात् ।। ९ ।।

नरेभ्यो वैष्णवं धर्मं यो ददाति द्विजोत्तमः ।।

ससागरमहीदाने तत्पुण्यं लभते हि सः ।। 2.4.2.१० ।।

तिलधेनुं हिरण्यं च रजतं भूमिवाससी ।।

गोप्रदानानि दास्यंति सर्वभावेन सुव्रत ।। ११ ।।

सर्वेषामेव दानानां कन्यादानं विशिष्यते ।।
सहस्रमेव धेनूनां शतं चानडुहां समम् ।। १२ ।।
दशानडुत्समं यानं दशयानसमो हयः ।।
हयदान सहस्रेभ्यो गजदानं विशिष्यते ।। १३ ।।
गजदानसहस्राणां स्वर्णदानं च तत्समम् ।।
स्वर्णदानसहस्राणां विद्यादानं च तत्समम् ।। १४ ।।
विद्यादानात्कोटिगुणं भूमिदानं विशिष्यते ।।
भूमिदानसहस्रेण गोप्रदानं विशिष्यते ।। १५ ।।
गोप्रदानसहस्रेभ्यो ह्यन्नदानं विशिष्यते ।।
अन्नाधारमिदं प्रोक्तं तस्माद्देयं तु कार्तिके ।। १६ ।।
परान्नवर्जनादेव लभेच्चांद्रायणं फलम् ।।
दिनेदिनेऽतिकृच्छ्रस्य फलं प्राप्नोति मानवः ।। १७ ।।
कार्तिके वर्जयेन्मांसं सन्धानं च विशेषतः ।।
राक्षसीं योनिमाप्नोति सकृन्मांसस्य भक्षणात् ।। १८ ।।
प्रवृत्तानां तु भक्ष्याणां कार्तिके नियमे कृते ।।
अवश्यं विष्णुरूपत्वं प्राप्यते मोक्षदं पदम् ।। १९ ।।
ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे सूर्यचंद्रयोः ।।
यत्फलं लभते वत्स तत्फलं भूमिशायिनः ।। 2.4.2.२० ।।
भोजनं द्विजदंपत्योः पूजनं च विलेपनैः ।।
कंबलानि च रत्नानि वासांसि विविधानि च ।। २१ ।।
तूलिकाश्च प्रदातव्याः प्रच्छादनपटैः सह ।।
उपानहावातपत्रं कार्तिके देहि सुव्रत ।। २२ ।।
कार्तिके क्षितिशायी च हन्यात्पापं युगार्जितम् ।।
जागरं कार्तिके मासि यः करोत्यरुणोदये ।। २३ ।।
दामोदराग्रे देवर्षे गोसहस्रफलं लभेत् ।।
नदीस्नानं कथा विष्णोर्वैष्णवानां च दर्शनम् ।। २४ ।।
न भवेत्कार्तिके यस्य हरेत्पुण्यं दशाब्दिकम् ।।
पुष्करं यः स्मरेत्प्राज्ञः कर्मणा मनसा गिरा ।। २५ ।।

कार्तिके मुनिशार्दूल लक्षकोटिगुणं भवेत् ।।

प्रयागो माघमासे तु पुष्करं कार्तिके तथा ।। २६ ।।

अवन्ती माधवे मासि हन्यात्पापं युगार्जितम् ।।

धन्यास्ते मानवा लोके कलिकाले विशेषतः ।। २७ ।।

ये कुर्वंति नरा नित्यं प्रीत्यर्थं हरिपूजनम् ।।

तारितास्तैश्च पितरो नरकाच्च न संशयः ।। २८ ।।

क्षीरादिस्नपनं विष्णोः क्रियते पितृकारणात् ।।

कल्पकोटिं दिवं प्राप्य वसन्ति त्रिदिवैः सह ।। २९ ।।

कार्तिके नार्चितो यैस्तु कृष्णस्तु कमलेक्षणः ।।

जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे ।। 2.4.2.३० ।।

अहो मुष्टा विनष्टास्ते पतिताः कलिकन्दरे ।।

यैर्नार्चितो हरिर्भक्त्या कमलैरसितैः सितैः ।। ३१ ।।

पद्मेनैकेन देवेशं योऽर्चयेत्कमलापतिम् ।।

वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम् ।।

पुष्करार्चनयोगेन श्वेतो मुक्तिमवाप ह ।। ३२ ।।

अपराधसहस्राणि तथा सप्तशतानि च ।।

पद्मेनैकेन देवेशः क्षमते प्रणतोऽर्चितः ।।३३।।

तुलसीपत्रलक्षेण कार्तिके योऽर्चयेद्धरिम् ।।

पत्रेपत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम् ।। ३४ ।।

मुखे शिरसि देहे तु कृष्णोत्तीर्णां तु यो वहेत् ।।

तुलसी कृष्णनिर्माल्यैर्यो गात्रं परिमार्जयेत् ।।

सर्वरोगैस्तथा पापैर्मुक्तो भवति मानवः ।। ३५ ।।

शंखोदकं हरेर्भक्तिर्निर्माल्यं पादयोर्जलम् ।।

चन्दनं धूपशेषं च ब्रह्महत्यापहारकम् ।। ३६ ।।

कार्तिके मासि विप्रेन्द्र प्रातःस्नानपरायणः ।।

विप्रेभ्यश्चान्नदानं तु कुर्याच्छक्त्यनुसारतः ।। ३७ ।।

सर्वेषामेव दानानामन्नदानं विशिष्यते ।।

अन्नेन जायते लोको ह्यन्नेनैवाऽभिवर्द्धते ।। ३८ ।।

अन्नं हि सर्वभूतानां प्राणभूतं परं विदुः ।।

अन्नदः सर्वदो लोके सर्वयज्ञादिकृद्भवेत् ।। ३९ ।।

तीर्थस्नानेन किं तस्य देवयात्रादिनाऽपि किम् ।।

सर्वं संपाद्यते ब्रह्मन्नन्नदानान्न संशयः ।। 2.4.2.४० ।।

सत्यकेतुर्द्विजः पूर्वं चान्नदानेन केवलम् ।।

सर्वपुण्यफलं प्राप्य मोक्षं प्राप सुदुर्लभम् ।। ४१ ।।

कार्तिकव्रतनिष्ठस्तु कुर्याद्गोदानमुत्तमम्।।

व्रतं संपूर्णतां याति गोदानेन न संशयः ।। ४२ ।।

गोदानात्परमं दानं संसारार्णवतारकम् ।।

नास्ति नारद लोकेऽस्मिन्सुशर्मा ब्राह्मणो यथा ।। ४३ ।।

कार्तिके मासि विप्रेंद्र दत्त्वा दानान्यनेकशः ।।

हरिस्मृतिविहीनश्चेन्न पुनंति कदाचन ।। ४४ ।।

नामस्मरणमाहात्म्यं मया वक्तुं न शक्यते ।।

पुष्करेण यथा पूर्वं नारकीयाश्च मोचिताः ।। ४५ ।।

गोविंद गोविंद हरे मुरारे गोविंद गोविंद् मुकुंद कृष्ण ।।

गोविंद गोविंद रथांगपाणे गोविंद दामोदर माधवेति ।। ४६ ।।

श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।।

कार्तिके यः पठन्मर्त्यः श्रद्धाभक्तिसमन्वितः ।। ४७ ।।

यैर्न श्रुतं भागवतं पुराणं नाराधितो वै पुरुषः पुराणः ।।

हुतं मुखे नैव धरामराणां तेषां वृथा जन्म गतं नराणाम् ।। ४८ ।।

कार्तिके मासि विप्रेंद्र यस्तु गीतां पठेन्नरः ।।

तस्य पुण्यफलं वक्तुं मम शक्तिर्न विद्यते ।। ४९ ।।

गीतायास्तु समं शास्त्रं न भूतं न भविष्यति ।।

सर्वपापहरा नित्यं गीतैका मोक्षदायिनी ।। 2.4.2.५० ।।

एकेनाऽध्यायपाठेन सर्वपापकृतोऽपि च ।।

मुच्यंते नरकाद्घोराज्जडो वै ब्राह्मणो यथा ।। ५१ ।।

शालिग्रामशिलादानं यः कुर्यात्कार्तिके मुने ।।

तस्य पुण्यस्य विश्रांतिर्विष्णुना न निरूपिता ।। ५२ ।।

शालिग्रामं समभ्यर्च्य श्रोत्रियाय महामुने ।।

दानं यः कुरुते विप्र तस्य पुण्यफलं शृणु ।। ५३ ।।

सप्तसागरपर्यंतं भूदानाद्यत्फलं भवेत् ।।

शालिग्रामशिलादानात्तत्फलं समवाप्नुयात् ।। ५४ ।।

शालिग्रामशिलादानात्कार्तिके ब्राह्मणी यथा ।।

विधवा सधवा जाता विवाहे पंचमेऽहनि ।। ५५ ।।

तस्मात्तु कार्तिके मासि स्नानदानपुरःसरम् ।।

शालिग्रामशिलादानं कर्तव्यं नाऽत्र संशयः ।। ५६ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकव्रतधर्मनिरूपणंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h5g

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। ।। ब्रह्मोवाच ।। ।।

भूयः शृणुष्व विप्रेंद्र कार्तिकस्य च वैभवम् ।।

दशमीदिनमारभ्य दशम्यां तु समापयेत् ।। १ ।।

पौर्णमासीं समारभ्य पौर्णमास्यां समापयेत् ।।

आश्विनस्य हरिदिनीं समारभ्य तु भक्तिमान् ।। २ ।।

दामोदरं नमस्कृत्य कुर्यात्संकल्पमादितः ।।

दामोदर नमस्तेऽस्तु सर्वपापविनाशन ।। ३ ।।

कार्तिकस्य व्रतं कर्तुमनुज्ञां दातुमर्हसि ।।

निर्विघ्नं कुरु देवेश आमासं पुरुषोत्तम ।। ४ ।।

इति संप्रार्थ्य विधिना कार्तिकव्रतमाचरेत् ।।

अनूरुं वदता प्रोक्तं भास्करेण श्रुतं मया ।।

कलौ च स्वर्गगमनकारणं श्रूयतां हि तत् ।। ५ ।।

।। सूर्य उवाच ।। ।।

द्वादशानां तु मासानां मार्गशीर्षोऽतिपुण्यदः ।। ६ ।।

तस्मात्पुण्यफलः प्रोक्तो वैशाखो नर्मदातटे ।।

ततो लक्षगुणः प्रोक्तः प्रयागे माघमासकः ।। ।। ७ ।।

तस्मान्महाफलः प्रोक्तः कार्तिको जलमात्रके ।।

एकतः सर्वदानानि व्रतानि नियमास्तथा ।। ८ ।।

एकतः कार्तिकस्नानं ब्रह्मणा तुलया धृतम् ।।

संततिश्चैव संपत्तिः कलौ येषां प्रजायते ।। ९ ।।

अवश्यं तैः कृतं विद्धि कार्तिकस्नानमादरात् ।।

स्नानं च दीपदानं च तुलसीवनपालनम् ।। 2.4.3.१० ।।

भूमिशय्या ब्रह्मचर्य्यं तथा द्विदलवर्जनम् ।।

विष्णुसंकीर्तनं सत्यं पुराणश्रवणं तथा ।। ११ ।।

कार्तिके मासि कुर्वंति जीवन्मुक्तास्त एव हि ।।

न कार्तिकसमं धर्म्यमर्थ्यं नो कार्तिकात्परम् ।। १२ ।।

न कार्तिकसमं काम्यं मोक्षदानं न कार्तिकात् ।।

युधिष्ठिरेण धर्मार्थमर्थार्थं च ध्रुवेण च ।।१३ ।।

श्रीकृष्णेन तु कामार्थं मोक्षार्थं नारदेन च ।।

कृतमेतद्व्रतं तस्माच्छ्रेष्ठं कृष्णप्रियं च हि ।। १४ ।। ।।

।। अरुण उवाच ।। ।।

ब्रूहि भास्कर सर्वात्मन्कदाऽऽरभ्य व्रतं कृतम्।।

सफलं जायते सम्यक्का च पूज्याऽत्र देवता ।।१५।।

।। भास्कर उवाच ।।

अहं विष्णुश्च शर्वश्च देवी विघ्नेश्वरस्तथा ।।

एकोऽहं पंचधा जातो नाट्ये सूत्रधरो यथा ।। १६ ।।

अस्माकं सर्व एवैते भेदा विद्धि खगेश्वर ।।

तस्मात्सौरैश्च गाणेशैः शाक्तैः शैवैश्च वैष्णवैः ।। १७ ।।

कर्तव्यं कार्तिकस्नानं सर्वपापापनुत्तये ।।

सूर्यस्य प्रीतये कार्यं तुलासंस्थे दिवाकरे।।१८।।

इषपूर्णां समारभ्य यावत्कार्तिकपूर्णिमा ।।

तावत्स्नानं विधातव्यं शिवसंतुष्टये नरैः ।। १९।।

देवीपक्षं समारभ्य महारात्रिचतुर्दशी ।।

तावत्स्नानं विधातव्यं देवी संप्रीयतामिति।। 2.4.3.२०।।

गणपक्षं समारभ्य कृष्णा या कार्तिके भवेत्।।

चतुर्थी तावदेव स्यात्स्नानं गणपतुष्टये।।२१।।

एकादशीं समारभ्य आश्विनस्याऽसितेतराम् ।।

एकादश्यां कार्तिकस्य शुक्लायां परिपूर्यते ।।

कृतं येन तु तस्य स्यात्परितुष्टो जनार्दनः ।। २२ ।।

न कार्तिकसमो मासो न काशीसदृशी पुरी ।।

न प्रयागसमं तीर्थं न देवः केशवात्परः ।। २३ ।।

प्रसंगाद्वा बलात्कारैर्ज्ञात्वाज्ञात्वा कृतं भवेत् ।।

स्नानं कार्तिकमासस्य न पश्येद्यमयातनाम् ।। २४ ।।

स्नानार्थं चेन्न सामर्थ्यं दत्वान्यस्मै धनादिकम् ।।

स्नातस्य तस्य हस्तस्य ग्रहणा पुण्यभाग्भवेत् ।। २५ ।।

अथवा कार्तिकस्नानं ये कुर्वंति द्विजातयः ।।

तेषां प्रावरणं दत्त्वा स्नानजं फलमाप्नुयात् ।।२६।।

राधादामोदरः पूज्यः कार्तिके तु विशेषतः ।। २७ ।।

स्वर्णस्य वाथ रौप्यस्याऽप्यभावे शुल्बजामपि ।।

मृज्जां वा चित्रजातां वाऽथ वा पिष्टविचित्रिताम् ।। २८ ।।

दामोदरस्य राधायास्तुलस्यधोऽर्चयंति ये ।।

मूर्तिं ते तु नरा ज्ञेया जीवन्मुक्ता न संशयः ।।२९।।

अपि पापसहस्राढ्यः कार्तिकस्नानतो नरः ।।

मुक्तोऽवश्यं स भवति नाऽत्र कार्या विचारणा ।। 2.4.3.३० ।।

तुलस्यभावे कर्तव्या पूजा धात्रीतले खग ।।

मुख्यपूजाविधानं तु कर्तव्यं सूर्यमंडले ।। ३१ ।।

अप्रत्यक्षाः सर्वदेवाः प्रत्यक्षो भगवानयम् ।।

सर्वे देवाः कालवशाः कालकालो दिवाकरः ।।३२।।

एतदाराधनेऽशक्तः प्रतिमां पूजयेन्नरः ।।

प्रतिमातोऽधिकं पुण्यं ब्राह्मणस्य तु पूजने ।। ३३ ।।

दरिद्रो दानपात्रं स्याद्विद्यावांस्तु विशेषतः ।।

विप्राभावे पूजनीया गावः कृष्णा मनोहराः ।। ३४ ।।

विष्णोर्मूर्तिर्जंगमतः स्थावरा तु प्रशस्यते ।।

शूद्रस्थापितमूर्तीनां नमस्कारं करोति यः ।।

पितृभिर्निरयं याति दशपूर्वैर्दशापरैः ।। ३५ ।।

शूद्रार्चितस्य संस्पर्शाद्दहेदासप्तमं कुलम् ।। ३६ ।।

तस्माद्विचार्य्य विप्रैर्या स्थापिता तां समर्चयेत् ।।

ततोऽपि या देवताभिः कृता सा भुक्तिमुक्तिदा ।। ३७ ।।

मूर्त्यभावे पूजनीयोऽश्वत्थो वाऽथ वटोऽथ वा ।।

अश्वत्थरूपी विष्णुः स्याद्वटरूपी शिवो यतः ।। ३८ ।। $

कार्तिके तुलसीशाकं तांबूलं वा नराधमः ।।
अज्ञानाज्ज्ञानतो वाऽपि भुञ्जानो निरयं व्रजेत् ।। ३९ ।।
शालिग्रामशिलाचक्रे नित्यं सन्निहितो हरिः ।।
तस्मात्सर्वप्रयत्नेन शालिग्रामं प्रपूजयेत् ।। 2.4.3.४० ।।
रुद्रशापवशाद्गावो विष्ठाभक्षणतत्पराः ।।
तथाऽपि ताः पूजनीया लोकद्वयफलप्रदाः ।। ४१ ।।
ब्रह्मांऽशकसमुद्भूते पालाशे यस्तु भोजनम् ।।
कुर्यात्कार्तिकमासेऽसौ विष्णुलोकं प्रयास्यति ।। ४२ ।। *
अश्वत्थरूपी भगवान्वटरूपी सदाशिवः ।।
तस्मात्सर्वप्रयत्नेन कार्तिकेऽश्वत्थमर्चयेत् ।। ४३ ।।
या नारी कार्तिके मासि लक्षं कुर्यात्प्रदक्षिणाः ।।
राधादामोदरं पूज्य मन्दवारे च तत्तले ।। ४४ ।।
दम्पती भोजयेद्राधादामोदरस्वरूपिणौ ।।
भोजयित्वा सपत्नीकान्पश्चाद्भुंजीत वाग्यतः ।। ४५ ।।
वन्ध्याऽपि लभते पुत्रमितरासां तु का कथा ।।
सदा सन्निहितो विष्णुर्द्विपत्सु ब्राह्मणे यथा ।। ४६ ।।
बोधिद्रुमे पादपेषु शालिग्रामे शिलासु च ।।
तस्मादश्वत्थमूले वै कर्तव्यं विष्णुपूजनम् ।। ४७ ।। **
अश्वत्थपूजा स्पर्शेन कर्त्तव्या शनिवासरे ।। ***
अन्यवारेऽश्वत्थसंगाद्दरिद्रो जायते नरः ।।४८।।
स्नानं जागरणं दीपं तुलसीवनपालनम् ।।
कार्तिके मासि कुर्वंति ते नरा विष्णुमूर्तयः ।। ४९ ।।
संमार्जनं विष्णुगृहे स्वस्तिकादिनिवेदनम् ।।
विष्णोः पूजां च ये कुर्युर्जीवन्मुक्तास्तु ते नराः ।। 2.4.3.५० ।।
स्नानकालं प्रवक्ष्यामि तीर्थादिषु च यत्फलम् ।।
स्नानधर्माश्च ये केचित्तान्सर्वान्मे निबोधत ।। ५१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकवैभववर्णनंनाम तृतीयोऽध्यायः ।। ३ ।।.

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/h3y
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। ब्रह्मोवाच ।। ।।

नाडीद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशयम् ।।

तुलसीमृत्तिकायुक्तः सवस्त्रकलशो मुने ।। १ ।।

आगत्य तोयनिकटे तीरे संस्थाप्य पात्रकम् ।।

पादप्रक्षालनं कृत्वा देशकालादि चोच्चरेत् ।। २ ।।

स्मरेद्गंगादिका नद्यो विष्णुशर्वादिदेवताः ।।

नाभिमात्रे जले स्थित्वा मंत्रमेतमुदीरयेत् ।। ३ ।।

कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ।।

प्रीत्यर्थं तव देवेश दामोदर मया सह ।। ४ ।।

नित्ये नैमित्तिके कृत्वा कार्तिके पापनाशन ।।

स्नानं चार्घं प्रदास्यामि निर्विघ्नं कुरु केशव ।। ५ ।।

तीर्थादिदेवताभ्यश्च क्रमादर्घ्यादि दापयेत् ।।

गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ।। ६ ।।

नमः कमलनाभाय नमस्ते जलशायिने ।।

नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ।। ७ ।।

व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।।

गृहाणार्घ्यं मया दत्तं दनुजेंद्रनिषूदन ।। ८ ।।

किरणा धूतपापा च पुण्यतोया सरस्वती ।।

गंगा च यमुना चैव पंचनद्यः पुनंतु माम् ।। ९ ।।

अन्यासां च नदीनां च दद्यादर्घ्यं यथाविधि ।।

जाह्नवीस्मरणं कुर्यात्सर्वतीर्थेषु मानवः ।। 2.4.4.१० ।।

नान्यत्तीर्थं तु जाह्नव्यां स्मरणीयं कदाचन ।।

एतान्मंत्रान्समुच्चार्य मलस्नानं समाचरेत् ।। ११ ।।

मृत्स्नानं च पितृस्नानं गुरुस्नानं ततः परम् ।।

ततस्तु पावमानीभिरभिषिंचेत्स्वमस्तकम् ।। १२ ।।

अघमर्षणकं कृत्वा स्नानांगं तर्पणं तथा ।।

ततः पुरुषसूक्तेन जलं शिरसि सिंचयेत् ।। १३ ।।

ततस्तु बहिरागत्य तीर्थं शिरसि निक्षिपेत्।।

तीर्थं पीत्वा त्रिवारं तु तुलसीं गृह्य पाणिना।। १४ ।।

ततो जलाद्विनिष्क्रम्य चांचलं पीडयेद्बहिः।।

यन्मया दूषितं तोयं शारीरमलसंचयैः ।। १५ ।।

तद्दोषपरिहारार्थं यक्ष्मणं तर्पयाम्यहम् ।।

वस्त्रनिष्पीडनं कृत्वा कुर्याच्च तिलकादिकम् ।।।। १६ ।।

।। सूत उवाच ।। ।।

शृणुध्वमृषयः सर्वे कार्तिकस्नानजं फलम् ।।

अरुणं प्रति सूर्येण यदुक्तं च सविस्तरम् ।। १७ ।।

।। अरुण उवाच ।। ।।

कस्मिंस्तीर्थे विशेषेण फलं कार्तिकसंभवम् ।।

क्षेत्रे वा एतदाऽऽख्याहि भगवन्स्नानयोगतः ।। १८ ।।

।। सूर्य उवाच ।।

यत्र कुत्राऽपि कर्तव्यं जले स्नानं तु कार्तिकं ।।

उष्णोदकेन कर्तव्यं स्नानं कुत्राऽपि कार्तिके ।। १९ ।।

ततो दशगुणं पुण्यं शीततोयनिमज्जनात् ।।

ततः शतगुणं पुण्यं बहिः कूपोदके कृतम्।। 2.4.4.२० ।।

कूपात्सहस्रगुणितं फलं वापीनिषेकतः ।।

ततोऽयुतगुणं पुण्यं तडागस्नानतो भवेत् ।। २१ ।।

ततो दशगुणं पुण्यं निर्झरेषु निमज्जनात् ।।

ततोऽधिकतरं पुण्यं नदीस्नानस्य कार्तिके ।। २२ ।।

नद्या दशगुणं प्रोक्तं तीर्थस्नानं खगोत्तम ।।

ततो दशगुणं पुण्यं नद्योर्यत्र च संगमः ।।२३।।

नदीत्रयस्य संयोगे पुण्यस्यांऽतो न विद्यते ।।

सिंधुः कृष्णा च वेणी च यमुना च सरस्वती ।। २४ ।।

गोदावरी विपाशा च नर्मदा तमसा मही ।।

कावेरी शरयूः शिप्रा तथा चर्मण्वती नदी ।। २५ ।।

वितस्ता वेदिका शोणो वेत्रवत्यपराजिता।।

गंडकी गोमती पूर्णा ब्रह्मपुत्रा सरोवरम् ।। २६ ।।

वाग्मती च शतद्रुश्च तथा बदरिकाश्रमः ।।

दुर्लभाः कार्तिके त्वेते तीर्थान्यथ निबोध मे ।। २७ ।।

सर्वेभ्यश्च स्थलेभ्यश्च आर्यावर्तं तु पुण्यदम् ।।

कोल्हापुरी ततः श्रेष्ठा ततः कांचीद्वयं स्मृतम् ।। ।। २८ ।।

अनंतसेनवसतिर्वराहक्षेत्रमेव च ।।

चक्रक्षेत्रं ततः पुण्यं मुक्तिक्षेत्रं ततोऽधिकम् ।। २९ ।।

अवंतिका ततः श्रेष्ठा ततो बदरिकाश्रमः ।।

अयोध्या च ततः श्रेष्ठा गंगाद्वारं ततोऽधिकम् ।। 2.4.4.३० ।।

ततः कनखलं तीर्थं ततो मधुपुरी वरा ।।

एकोऽपि कार्तिको मासो मथुरायमुनाजले ।। ।। ३१ ।।

यैः स्नातस्ते तु वैकुंठे बहुकालं वसंति हि ।।

राधादामोदरस्तत्र स्वयं स्नातस्तु कार्तिके ।। ३२ ।।

अतो मधुपुरी श्रेष्ठा यमुना च विशेषतः ।। ३३ ।।

द्वारावती ततः श्रेष्ठा प्रत्यहं स्नाति केशवः ।।

षोडशस्त्रीसहस्रेण सार्द्धं यादवसंयुतः ।। ३४ ।।

द्वारकायां मृत्तिकायास्तिलको येन मस्तके ।।

धार्यतेऽसौ नरो ज्ञेयो जीवन्मुक्तो न संशयः ।।

द्वारकास्नानमाहात्म्यं न वक्तुं शक्यते मया ।। ३५ ।।

गोविंदार्पितचित्तानां जायते पुण्यभास्करा ।।

ततो भागीरथी श्रेष्ठा यत्र विंध्येन संगता ।। ३६ ।।

तस्माद्दशगुणं पुण्यं तीर्थराजेऽत्र जायते ।। ३७ ।।

कलौ दशसहस्रांऽते विष्णुस्त्यक्ष्यति मेदिनीम्।।

तदर्द्धं जाह्नवीतोयं तदर्धं देवतागणाः ।। ३८ ।।

यावत्तिष्ठति गंगाऽत्र तावत्तीर्थानि संति च ।।

स्वस्वस्थाने नृणां पापं तावदेव हरंति च ।। ३९ ।।

यदैव गंगा नष्टा स्यात्को वा तत्पापमाहरेत् ।।

विचार्यैवं सुतीर्थानि गमिष्यंति धरातले ।। 2.4.4.४० ।।

तस्मान्मुनीश्वराः सर्वे यावत्तिष्ठति जाह्नवी ।।

तावच्च क्रियतां धर्मस्ततो भूमौ निलीयताम् ।। ४१ ।।

समाधिं गृह्य सुदृढां यावत्कृतयुगं भवेत् ।।

अन्यथा कलिकालेन भ्रंशनीयो भवेत्सुधीः ।। ४२ ।।

ततः श्रेष्ठतरा काशी यस्या नाशो न जायते ।।

यदाश्रयेण गंगापि सर्वपापं व्यपोहति ।। ४३ ।।

काशिकाया नैव नाशो ब्रह्मण्यपि मृते सति ।।

यद्दर्शनार्थं गंगाऽपि जाता चोत्तरवाहिनी ।।

तस्यां पंचनदं तीर्थं त्रिषु लोकेषु विश्रुतम्।। ४४ ।।

आगते कार्तिके मासि रौरवं नरकं गताः ।।

आक्रोशंते तु पितरो वंशेऽस्माकं भविष्यति ।। ४५ ।।

कश्चिद्भाग्यवतां श्रेष्ठो गत्वा पंचनदे शुभे ।।

अस्माकं तर्पणं कुर्यान्नरकार्णवतारकम् ।। ४६ ।।

तीर्थराजादितीर्थानि प्राप्ते कार्तिकमासके ।।

स्नानार्थं पञ्चगंगं तु समायांति न संशयः ।। ४७ ।।

कृत्वा तु लक्षपापानि स्नात्वा पंचनदे शुभे ।।

बिंदुमाधवमभ्यर्च्य विलयं यांति तत्क्षणात् ।। ४८ ।।

यैः स्नातं कार्तिके मासि सकृत्पंचनदे शुभे ।।

सर्वतीर्थकृतास्नानात्फलं कोटिगुणं भवेत् ।। ४९ ।।

।। ब्रह्मोवाच ।। ।।

कार्तिके मासि कावेर्य्यां यः स्नानं कर्तुमिच्छति ।।

तावता वै विमुक्ताऽघो विष्णुसायुज्यमाप्नुयात् ।। 2.4.4.५० ।।

कावेर्य्याश्चैव माहात्म्यं को वदेत्परमुत्तमम् ।।

अत्र ते वर्णयिष्यामि इतिहासं पुरातनम् ।। ५१ ।।

कावेर्या विषये ब्रह्मन्सावधानमनाः शृणु ।।

गौतम्या उत्तरे तीरे विष्णुपादाब्जसंभवा ।। ५२ ।।

गंगा त्रैलोक्यपापघ्नी वर्तते लोकपूजिता ।।

सा गंगा चिंतयामास कदाचित्पापशंकिता ।। ५३ ।।

सर्वलोकाः समागत्य मयि पापं त्यजंति हि ।।

तत्पापं तु कथं गच्छेदिति चिन्तापरा तदा ।। ५४ ।।

प्रष्टुं जगाम कैलासं गिरिजावल्लभं भवम् ।।

तत्र दृष्ट्वा महारुद्रं प्रोवाच हरिपादजा ।। ५५ ।।

।। गङ्गोवाच ।। ।।

महारुद्र नमस्तेऽस्तु त्वां प्रष्टुमहमागता ।।

सर्वे लोकाः समागत्य मयि पापं त्यजंति हि ।। ५६ ।।

तत्पापं तु मया सोढुं न शक्यं पार्वतीपते ।।

येनोपायेन तत्पापं नाऽऽगच्छेन्मम तद्वद ।। ५७ ।।

एवं गंगावचः श्रुत्वा प्रत्याह परमेश्वरः ।।

।। रुद्र उवाच ।। ।।

पापनिर्हरणायादौ पद्मनाभांघ्रिपंकजात्।।५८।।

प्रादुर्भूताऽसि त्वं देवि किमर्थं तप्यते त्वया ।।

पापप्रहाराऽऽधिपत्यं कल्पितं तव विष्णुना ।। ५९ ।।

तथाऽपि पापनिर्हार उपायं ते ब्रवीम्यहम्।।

कवेश्च तनया देवी कावेरी सरितां वरा ।। 2.4.4.६० ।।

सर्वोत्कृष्टा च सर्वेषां हरेर्बलवशात्तु सा ।।

सर्वपापप्रहरणे सामर्थ्यं तत्र वर्तते ।। ६१ ।।

कार्तिके मासि कावेर्यां यः स्नानं कुरुते नरः ।।

स तु पापविनिर्मुक्तो याति विष्णोः परं पदम् ।। ६२ ।।

तस्मात्तां गच्छ देवि त्वं ततः पापाद्विमोक्ष्यसे ।।

इत्युक्ता सा तदागच्छत्कावेरीं पापहारिणीम् ।।६३।।

तज्जलस्पर्शमात्रेण कार्तिके विष्णुपादजा ।।

निर्धूतपातका गंगा जगाम स्वनिकेतनम् ।।६४।।

कार्तिके प्रतिवर्षं तु गंगा त्रैलोक्यपावनीम् ।।

स्नातुं भक्त्या समायाति कावेरीं पापहारिणीम् ।।६५।।

तज्जलस्पर्शमात्रेण कार्तिके विष्णुपादजा ।।

निर्धूतपातका गंगा जगाम स्वनिकेतनम् ।।६६।।

तस्माच्छस्तं तुलास्नानं कावेर्य्यां शस्यते बुधैः ।।

यः कावेर्यां तुलास्नानं भक्त्या तु कुरुते मुने।।६७।।

विमुक्तदुरितः सद्यस्ततो याति परां गतिम् ।।

तस्मात्स्नानं तु कावेर्यां कार्तिके मासि शस्यते ।। ६८ ।।

इतिहासमिमं श्रुत्वा कार्तिकव्रततत्परः ।।

स कावेरी स्नानफलं प्राप्नोति च परां गतिम् ।। ६९ ।।

रात्रिशेषे भवेत्स्नानमुत्तमं विष्णुतुष्टिकृत् ।।

सूर्योदये मध्यमं स्याद्यावन्नाऽऽस्ता तु कृत्तिका ।। 2.4.4.७० ।।

तावदेव भवेत्स्नानमन्यथा तन्न कार्तिकम् ।।

स्नानं स्त्रीभिर्विधातव्यं गृहीत्वाऽऽज्ञां धवस्य च ।।७१।।

अपृष्ट्वा यत्कृतं धर्म्यं भर्तारं तत्क्षयं नयेत् ।।

स्त्रीणां नास्त्यपरो धर्मो भर्तारं प्रोज्झ्य कश्चन ।। ७२ ।।

कुर्यात्सहस्रपापानि भर्त्राऽऽज्ञां या समाचरेत् ।।

सैषा धर्मवती लोके न जायेत व्रतादिना ।। ७३ ।।

दरिद्रः पतितो मूर्खो दीनोऽपि यदि चेत्पतिः ।।

तादृशः शरणं स्त्रीणां तत्त्यागान्निरयं व्रजेत् ।। ७४ ।।

कलौ वत्स मनुष्याणां शैथिल्यं स्नानकर्मणि ।।

तथापि कथयिष्यामि स्नानं कार्तिकमाघयोः ।। ७५ ।।

यस्य हस्तौ च पादौ च वाङ्मनश्च सुसंयतम्।।

विद्या तपश्च कीर्तिश्च स तीर्थफलभाङ्नरः ।। ७६ ।।

अश्रद्दधानः पापात्मा नास्तिकश्छिन्नमानसः ।।

हेतुवादी च पंचैते न तीर्थफलभागिनः ।। ७७ ।।

प्रातरुत्थाय यो विप्रस्तीर्थस्नायी सदा भवेत् ।।

सर्वपापविनिर्मुक्तः परं ब्रह्माऽधिगच्छति ।। ७८ ।।

स्नानं चतुर्विधं प्रोक्तं स्नानविद्भिर्मनीषिभिः।।

वायव्यं वारुणं दिव्यं ब्राह्मं चेति तथा स्मृतम् ।।७९।।

वायव्यं गोरजःस्नानं वारुणं सागरादिषु ।।

ब्राह्मं ब्राह्मणमंत्रोक्तं दिव्यं मेघांऽबु भास्करम् ।। 2.4.4.८० ।।

स्नानानां चैव सर्वेषां विशिष्टं तत्र वारुणम् ।।

ब्राह्मणः क्षत्रियो वैश्यो मंत्रवत्स्नानमाचरेत् ।। ८१ ।।

तूष्णीमेव हि शूद्रस्य स्त्रीणां चैव तथा स्मृतम् ।।

बाला च तरुणी वृद्धा नरनारीनपुंसकाः ।। ८२ ।।

पापैः सर्वैः प्रमुच्यंते स्नानात्कार्तिकमाघयोः ।।

स्नाता वै कार्तिके लोकाः प्राप्नुवंतीप्सितं फलम् ।। ८३ ।।

पुष्करे तीर्थवर्ये तु नंदायाः संगमे पुरा ।।

प्रभंजनश्च मुक्तोभूत्तदैव व्याघ्रजन्मतः ।। ८४ ।।*

नंदाया वचनेनैव कार्तिके सा परं ययौ ।।

एवं स्नानविधिः प्रोक्तः किं भूयः श्रोतुमिच्छसि ।। ८५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकस्नानविधिनिरूपणंनाम चतुर्थोऽध्यायः ।। ४

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०५

https://sa.wikisource.org/s/h5h
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

कदा स्नानं प्रकर्तव्यं कथं स्थेयं दिनावधि ।।

आह्निकं तत्समाचक्ष्व विशेषेण पितामह ।।१।। ।।

।। ब्रह्मोवाच ।। ।।

रात्र्यां तुर्यांशशेषायामुत्तिष्ठेत्सर्वदा व्रती ।।

विष्णुं स्तुत्वा बहुस्तोत्रैर्दिनकार्यं विचारयेत् ।। २ ।।

ग्रामनैर्ऋत्यदिग्भागे मलोत्सर्गं यथाविधि ।।

ब्रह्मसूत्रं दक्षकर्णे स्थाप्य तत्र उदङ्मुखः ।। ३ ।।

अंतर्धाय तृणं भूमौ शिरः प्रावृत्य वाससा।।

वक्त्रं नियम्य वस्त्रेणाऽसंगः सोदकभाजनः ।। ४ ।।

कुर्यान्मूत्रपुरीषं तु रात्रौ चेद्दक्षिणामुखः ।।

तत उत्थाय चाऽऽगच्छेत्समीपं कलशस्य हि ।। ५ ।।

गंधलेपक्षयकरं मृत्तिकाशौचमाचरेत् ।।

एका लिंगे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् ।।६।।

मूत्रशौचे त्विदं ज्ञेयं विष्ठाशौचमतः शृणु ।।

पंचापानेऽथवा सप्त दश वामकरे तथा ।। ७ ।।

उभयोः सप्त दातव्याः पादयोर्मृत्तिकात्रयम् ।।

एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।। ८ ।।

वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् ।।

एतच्छौचं दिवा प्रोक्तं रात्रावर्द्धं समाचरेत् ।। ९ ।।

मार्गस्थस्य तदर्धं स्यात्स्त्रीशूद्राणां तदर्धकम् ।।

शौचकर्मविहीनस्य समस्ता निष्फलाः क्रियाः ।। 2.4.5.१० ।।

दंतजिह्वाविशुद्धिं च ततः कुर्यादतंद्रितः ।।

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।। ।। ११ ।।

ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ।।

दंतकाष्ठं तु गृह्णीयाद्द्वादशांगुलसंमितम् ।। १२ ।।

क्षीरवृक्षस्य न ग्राह्यं कार्पासस्य तथैव च ।।

कंटकस्य च वृक्षस्य दग्धवृक्षस्य चैव हि ।। १३ ।।

सद्वासनं मृदुतरं दंतधावनमादितः ।। १४ ।।

उपवासे नवम्यां च षष्ठ्यां श्राद्धदिने रवौ ।।

ग्रहणे प्रतिपद्दर्शे न कुर्याद्दंतधावनम् ।।

कुर्याद्द्वादशगंडूषाननुक्ते दंतधावने ।। १५ ।।

दंतान्विशोध्य विधिवन्मुखं संमार्ज्य वारिणा ।।

ललाटे चोर्ध्वपुंड्रं तु धृत्वा चाचम्य वारिणा ।। १६ ।।

देवालये नदीतीरे राजमार्गे विशेषतः ।।

दत्त्वा चाकाशदीपं तु तुलसीसन्निधावथ ।। १७ ।।

गृहीत्वार्चनसामग्रीमिष्टदेवगृहं व्रजेत् ।।

ततो गायेत नृत्येत पूजां कृत्वा तु बुद्धिमान् ।। १८ ।।

पठित्वा विष्णुनामानि कुर्य्यान्नीराजनं हरेः ।

नाडीद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशयम् ।। १९ ।।

तत्रोक्तविधिना स्नानं कुर्याद्वै कार्तिकव्रती ।।

वस्त्रनिष्पीडनं कृत्वा कुर्याच्च तिलकं तथा ।। 2.4.5.२० ।।

ततः संध्यामुपासीत स्वसूत्रोक्तेन वर्त्मना ।।

ततः कार्यो जपो देव्या यावदर्कोदयो भवेत् ।। २१ ।।

एतत्प्रोक्तं रात्रिशेषकृत्यं दैनमथोच्यते ।।

यस्मिन्कृते कार्तिकोऽयं सकलः सफलो भवेत् ।। २२ ।।

विष्णोः सहस्रनामाऽऽद्यं संध्यांते च पठेत्ततः ।।

देवालये समागत्य पुनः पूजनमारभेत् ।। २३ ।।

नृत्यगानादिकार्येषु प्रहरं दिवसं नयेत् ।।

ततः पुराणश्रवणं यामार्धं सम्यगाचरेत् ।। २४ ।।

पौराणिकस्य पूजां तु तुलसीपूजनं तथा ।।

कृत्वा माध्याह्निकं कर्म भुंजीत द्विदलोज्झितम् ।। २५ ।।

बलिदानं वैश्वदेवमतिथीनां समर्पणम् ।।

कृत्वा भुंक्ते तु यो मर्त्यः केवलं चाऽमृतं हि तत् ।। २६ ।।

यथाशक्ति द्विजा भोज्याः प्रत्यहं वाऽथ पर्वणि ।।

हविष्यभोजनं कुर्यादामिषं परिवर्जयेत् ।। २७ ।।

भक्षयेत्तुलसीं वक्त्रशुद्ध्यर्थं तीर्थवारिणा ।।

संसारव्यवहारेण दिनशेषं समापयेत् ।।२८।।

सायंकाले पुनर्गच्छेद्विष्णोर्देवालयं प्रति ।।

संध्यां कृत्वा प्रयुंजीत तत्र दीपन्यथाबलम्।। २९ ।।

विष्णुं प्रणम्य हरये कृत्वा नीराजनं शुभम् ।।

स्तोत्रपाठादिकं कुर्वन्नाद्ययामे तु जागरम् ।। ।। 2.4.5.३० ।।

यामे तु प्रथमेऽतीते निद्रां कुर्याद्विचक्षणः ।।

ब्रह्मचर्यव्रतं कुर्याद्भार्यामीयादृतौ तथा ।। ३१ ।।

तया कामयमानो वा भार्यां गच्छेन्न दोषभाक् ।।

एवं प्रतिदिनं कुर्यादामासं तु यथाविधि ।। ३२ ।।

एवं तु कार्तिके मासि यः कुर्यात्परमं व्रतम् ।।

सर्वपापविनिर्मुक्तो याति विष्णोः सलोकताम् ।। ३३ ।।

रोगापहं पातकनाशकृत्परं सद्बुद्धिदं पुत्रधनादिसाधकम् ।।

मुक्तेर्निदानं नहि कार्तिकव्रताद्विष्णुप्रियादन्यदिहाऽस्ति भूतले ।। ३४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये नित्यकर्मकथनंनाम पंचमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/h5i



।। ब्रह्मोवाच ।। ।।

शृणु नारद वक्ष्यामि कार्तिकस्य व्रतं महत् ।।

यच्छुत्वा सर्वपापेभ्यो मुक्तो मोक्षमवाप्स्यसि ।। १ ।।

कार्तिके मासि संप्राप्ते निषिद्धानि च वर्जयेत् ।।

तैलाभ्यंगं परान्नं च तथा वै तैलभोजनम् ।। २ ।।

फलानि बहुबीजानि धान्यानि द्विदलान्यपि ।।

वर्जयेत्कार्तिके मासि नाऽत्र कार्या विचारणा ।। ३ ।।

अलाबुं गृंजरं चैव वृंताकं बृहतीफलम् ।।

अन्नं पर्युषितं वाऽपि भिस्सटं च मसूरिकम् ।। ४ ।।

पुनर्भोजनं माध्वं च परान्नं कांस्यभोजनम् ।।

नखं चर्म च छत्राकं कांजि दुर्गंधमेव च ।। ५ ।।

गणान्नं गणिकान्नं च तथा वै ग्रामयाजिनः ।।

शूद्रान्नं शद्रसंपर्कं सूतकान्नं तथैव च ।। ६ ।।

श्राद्धान्नमृतुशांत्याश्च जातकं नामकं तथा ।।

श्लेष्मातकफलं चैव वर्जयेत्कार्तिकव्रती ।। ७ ।।

निषिद्धेषु च पत्रेषु भोजनं नैव कारयेत् ।।

मधुपालाशकदलीजंबूप्लक्षमकूटिकाः ।।

एतत्पत्रेषु भोक्तव्यं पुष्करे न कदाचन ।। ८ ।।

कार्तिके मासि संप्राप्ते यः कुर्याद्वनभोजनम् ।।

स याति परमं लोकं विष्णोर्देवस्य चक्रिणः ।। ९ ।।

प्रातःस्नानं तु कर्तव्यं तथैव हरिपूजनम् ।।

कथायाः श्रवणं चैव कार्तिके शस्यते मुने ।। 2.4.6.१० ।।

गोपीचंदनदानं तु गोदानं श्रोत्रियाय च ।।

कर्तव्यं कार्तिके मासि तेन मोक्षमवाप्नुयात् ।। ११ ।।

कदलीफलदानं तु दानं धात्रीफलस्य च ।।
वस्त्रदानं तथा कुर्याच्छीतार्ताय द्विजन्मने ।। १२ ।।
शाकादिदानं कुर्वीत चान्नदानं विशेषतः ।।
शालिग्रामस्य दानं च कर्तव्यं तु द्विजन्मने ।। १३ ।।
पौराणिकाय यो दद्यादामान्नं घृतपायसम् ।।
स चैश्वर्यमवाप्नोति शतब्राह्मणभोजनात् ।। १४ ।।
कमलैः पूजयेद्यस्तु कार्तिके कमलाप्रियम् ।।
स तु पुण्यमवाप्नोति नाऽत्र कार्या विचारणा ।। १५ ।।
कार्तिके तुलसीपत्रं यो भक्त्या विष्णवेऽर्पयेत् ।।
संसाराच्च विनिर्मुक्तो याति विष्णोः परं पदम् ।। १६ ।।
कार्तिके केतकीपुष्पैरर्चयेद्गरुडध्वजम् ।।
पूजितो जन्मसाहस्रं नाऽत्र कार्या विचारणा ।। १७ ।।
शंखदानं तु यः कुर्यात्तथा चक्रांकितस्य च ।।
तस्य पापानि नश्यंति दानमात्रान्न संशयः ।। १८ ।।
गीतापाठं तु यः कुर्यात्कार्तिके विष्णुवल्लभे ।।
तस्य पुण्यफलं वक्तुं नाऽलं वर्षशतैरपि ।। १९ ।।
श्रीमद्भागवतस्याऽपि श्रवणं यः समाचरेत् ।।
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ।। 2.4.6.२० ।।
एकादश्यां निराहारमुपवासं करोति यः ।।
पूर्वजन्मकृतात्पापान्मुच्यते नाऽत्र संशयः ।। २१ ।।
शालिग्रामस्य नैवेद्यं कोटियज्ञफलं लभेत् ।।
अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत् ।। २२ ।।
पूजाकाले तु देवस्य घण्टानादं करोति यः ।।
हरेस्तृप्तिं परां याति मनुजो नाऽत्र संशयः ।। २३ ।।
परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतुष्टये ।।
दामोदरस्य प्रीतिं स सम्यक्प्राप्नोति मानवः ।। २४ ।।
अध्वगं तु परिश्रांतं काले च गृहमागतम् ।।
योऽतिथिं पूजयेद्भक्त्या जन्मसाहस्रनाशनम् ।। २५ ।।

निंदां कुर्वंति ये मूढा वैष्णवानां महात्मनाम् ।।

पतंति पितृभिः सार्द्धं महारौरव संज्ञके ।। २६ ।।

दृष्ट्वा भागवतान्विप्रान्सन्मुखो न च याति हि ।।

न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् ।। २७ ।।

निंदां भगवतः शृण्वंस्तत्परस्य जनस्य च ।।

ततो नाऽपैति यः सोऽपि हरेः प्रियतमो नहि ।। २८ ।।

प्रदक्षिणां तु यः कुर्यात्कार्तिके केशवस्य हि ।।

पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ।। २९ ।।

दंडप्रणामं यः कुर्यात्कार्तिके केशवाऽग्रतः ।।

राजसूयाऽश्वमेधानां फलं प्राप्नोत्यसंशयः ।। 2.4.6.३० ।।

कुटुम्बभोजनं चैव कार्तिके भक्तिसंयुतः ।।

कारयेद्विप्रशार्दूल तस्य पुण्यमनंतकम् ।। ३१ ।।

परस्त्रीसंगमं यस्तु कार्तिके कुरुते नरः ।।

तस्य पापस्य विश्रांतिर्यावद्वक्तुं न शक्यते ।। ३२ ।।

तुलसीमृत्तिकापुंड्रं ललाटे यस्य दृश्यते ।।

यमस्तं नेक्षितुं शक्तः किमु दूता भयंकराः ।। ३३ ।।

शाकं वा लवणं वाऽपि यत्किंचिद्वा भविष्यति ।।

तद्देयं कार्तिके मासि प्रीत्यर्थं शार्ङ्गधन्वनः ।। ३४ ।।

इत्याद्या बहवो धर्माः कार्तिके विष्णुवल्लभाः ।।

यथाशक्त्या प्रकुर्वीत धर्मं देवस्य तुष्टिदम् ।। ३५ ।।

हरिसंतुष्टये कार्यस्त्यागो वा स्वेष्टवस्तुनः।।

मासांते द्विजवर्याय दद्यात्तद्व्रतपूर्तये ।। ३६ ।।

सर्वव्रतानि चैकत्र सत्यव्रतमथैकतः।।

तस्मात्सर्वप्रयत्नेन सत्यं भाषेत सर्वदा ।। ३७ ।।

अन्यधर्मेष्वधिकृतिः कुलजातिविभागतः ।।

अधिकारी कार्तिके तु सर्व एव जनो भवेत् ।। ३८ ।।

गोग्रासः कार्तिके मासि विशेषाद्यैस्तु दीयते ।।

तेषां पुण्यफलं वक्तुं न शक्नोति पितामहः ।। ३९ ।।

विष्णुदेवालयं प्रातः संमार्जयति कार्तिके ।।

तस्य वैकुंठभवने जायते सुदृढं गृहम् ।। 2.4.6.४० ।।

दद्यात्कार्तिकमासे तु धर्मकाष्ठानि भूरिशः ।।

न तत्पुण्यस्य नाशोस्ति कल्पकोटिशतैरपि ।।४१।।

सुधादि लेपयेद्यस्तु कार्तिके विष्णुमंदिरे ।।

चित्रादिकं लिखेद्वाऽपि मोदते विष्णुसन्निधौ ।।४२।।

देवालये वा तीर्थे वा कृतो दुष्टैर्नृपैः करः ।।

तं मोचयंति ये लोकास्तेषां धर्मः सनातनः।। ४३ ।।

कार्तिके मासि यो विप्रो गभस्तीश्वरसन्निधौ ।।

शतरुद्रीजपं कुर्यान्मंत्रसिद्धिः प्रजायते ।।४४।।

वाराणस्यां तु यैः स्थित्वा त्रिवर्षं कार्तिकव्रतम् ।।

सोपांगं सांगं यैर्मर्त्यैः कृतं भक्त्यैकतत्परैः ।।४५।।

इह लोके फलं तेषां प्रत्यक्षं जायते किल ।।

संपत्त्या चैव संतत्या यशोभिर्धर्मबुद्धिभिः ।।४६।।

पलांडुं शृंगं मांसं च शय्यां सौवीरकं तथा ।।

राजिकोन्मादिकं चाऽपि चिपिटान्नं च वर्जयेत् ।। ४७ ।।

धात्रीफलं भानुवारे परदेशागमं तथा ।।

तीर्थं विना सदैवेह वर्जयेत्कार्तिकव्रती ।। ४८ ।।

देववेदद्विजातीनां गुरुगोव्रतिनां तथा ।।

स्त्रीराजमहतां निंदां वर्जयेत्कार्तिकव्रती ।। ४९ ।।

नरकस्य चतुर्दश्यां तैलाभ्यंगं च कारयेत् ।।

अन्यत्र कार्तिके मासि तैलस्नानं विवर्जयेत् ।।

नालिकां मूलकं चैव कूष्मांडं च कपित्थकम् ।। ।। 2.4.6.५० ।।

रजस्वलांत्यज म्लेच्छ पतितऽव्रतिकैस्तथा ।।

द्विजद्विड्वेदबाह्यैश्च न वदेत्सर्वदा व्रती।।५१।।

एभिर्दृष्टं च काकैश्च सूतिकान्नं च यद्भवेत् ।।

द्विःपाचितं च दग्धान्नं नैवाद्याद्वैष्णवव्रती ।। ५२ ।।

क्रमात्कूष्मांडबृहतीतरुणीमूलकं तथा ।।

श्रीफलं च कलिंगं च फलं धात्रीभवं तथा ।। ५३ ।।

नारिकेलमलाबुं च पटोलं बृहतीफलम् ।।

चर्मवृंताकचवलीशाकं तुलसिजं तथा ।। ५४ ।।

शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु ।।

एवमेव हि माघेऽपि कुर्य्याच्च नियमान्व्रती ।। ५५ ।।

कार्तिकव्रतिनः पुण्यं यथोक्तव्रतकारिणः ।।

न समर्थो भवेद्वक्तुं ब्रह्माऽपीह चतुर्मुखः ।। ५६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकव्रतनिरूपणंनाम षष्ठोऽध्यायः ।।६।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/h0o
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

भगवन्कृतकृत्योऽस्मि तव पादसमाश्रयात् ।।

श्रोतव्यं नेह भूयो मे विद्यते देवसत्तम ।। १ ।।

तथापि भगवन्किंचित्प्रष्टव्यं मे हृदि स्थितम्।।

त्वद्वाक्यामृतपीतस्य न मे तृप्तिर्हि जायते ।।२।।

दीपदानस्य माहात्म्यं श्रोतुमिच्छामि ते प्रभो ।।

येन चाऽपि पुरा दत्तस्तद्वदस्व चतुर्मुख ।।३।।

।। ब्रह्मोवाच ।। ।।

प्रातः स्नात्वा शुचिर्भूत्वा दीपं दद्यात्प्रयत्नतः ।।

तेन पापानि नश्येयुस्तमांसीव भगोदये ।।४।।

आजन्म यत्कृतं पापं स्त्रिया वा पुरुषेण च ।।

तत्सर्वं नाशमायाति कार्तिके दीपदानतः ।। ५ ।।

अत्र ते वर्णयिष्यामि इतिहासं पुरातनम् ।।

श्रवणात्सर्वपापघ्नं दीपदानफलप्रदम् ।। ६ ।।

पुरा द्रविडदेशे तु ब्राह्मणो बुद्धनामकः ।।

तस्य भार्याऽभवद्दुष्टा अनाचाररता मुने ।। ७ ।।

तस्याः संसर्गदोषेण क्षीणाऽऽयुर्मृतिमाप्तवान् ।।

पत्यौ मृतेऽपि सा पत्नी अनाचारे विशेषतः ।। ८ ।।

रताभून्न हि तस्यास्तु लज्जा लोकापवादतः ।।

सुतबंधुविहीना सा सदाभिक्षान्नभोजना ।। ९ ।।

न संस्कारान्नमल्पं वा भुक्त्वा पर्युषिताशिनी ।।

परपाकरता नित्यं तीर्थयात्रादिवर्जिता ।। ।। 2.4.7.१० ।।

कथायाः श्रवणं चैव न श्रुतं तु तया द्विज ।।

एकदा ब्राह्मणः कश्चित्तीर्थयात्रापरायणः ।। ११ ।।

तस्या गृहं समागच्छद्विद्वान्वै कुत्सनामकः ।।
अनाचाररतां तां तु दृष्ट्वा ब्रह्मर्षिसत्तमः ।।
कोपेन रक्तचक्षुः संस्तामुवाचाऽसतीं स्त्रियम् ।। १२ ।।
।। कुत्स उवाच ।। ।।
वक्ष्यामि सांप्रतं मूढे मद्वाक्यमवधारय ।। १३ ।।
दुःखहेतुमिमं देहं पूयशोणितपूरितम् ।।
पंचभूतात्मकं चैव किं च पुष्णासि दूतिके ।। १४ ।।
जलबुद्बुदवद्देहो नाशमायाति निश्चितम् ।।
अनित्यं देहमाश्रित्य नित्यं त्वं मन्यसे हृदि ।। १५ ।।
तस्मादंतःस्थितं मोहं त्यज मूढे विचारतः ।।
स्मर सर्वोत्तमं देवं कुरु श्रवणमादरात् ।। १६ ।।
कार्तिके मासि संप्राप्ते स्नानदानादिकं कुरु ।।
दामोदरस्य प्रीत्यर्थं दीपदानं तथा कुरु ।। १७ ।।
लक्षवर्त्यादिकं चैव लक्षपद्मादिकं तथा ।।
प्रदक्षिणां तु देवस्य नमस्कारं तथैव च ।। १८ ।।
धारणं पारणं चैव कुरु भक्त्या हि कार्तिके ।।
विधवानां व्रतमिदं सधवानां तथैव च ।। १९ ।।
सर्वपापप्रशमनं सर्वोपद्रवनाशनम् ।।
तत्राऽपि कार्तिके मासि दीयतां दीप उत्तमः ।। 2.4.7.२० ।।
दीपो हरेः प्रियकरः कार्तिके मासि निश्चितम् ।।
महापातककृद्वापि दीपदानात्प्रमुच्यते ।। २१ ।।
पुरा कश्चिद्द्विजवरो नाम्ना हरिकरो ह्यभूत् ।।
अधर्मविषयासक्तः शश्वद्वेश्यारतो द्विजः ।। २२ ।।
पितृवित्तक्षयकरो वंशच्छेदे कुठारकः ।।
कदाचित्तेन विधवे द्यूते पितृधनं महत् ।। २३ ।।
हारितं दुष्टसंसर्गात्ततो दुःखी स चाऽभवत् ।।
कदाचित्साधुसंसर्गात्तीर्थयात्राप्रसंगतः ।। २४ ।।
अयोध्यामागतो वत्से महापापकरो द्विजः ।।

कार्तिके मासि संप्राप्तः श्रीमद्द्विजगृहे सदा ।।२५।।

द्यूतव्याजेन तेनाऽऽशु दीपो दत्तो हरेः पुरः ।।

ततः कालांतरे विप्रो मृतो मोक्षमवाप्तवान् ।। २६ ।।

महापातककृद्वाऽपि गतवानभयं हरिम् ।।

तस्मात्त्वं कार्तिके मासि दीपदानं तथा कुरु ।। २७ ।।

तथाऽन्यान्यपि दानानि कुरु भक्तिसमन्विता ।।

इत्यादिश्याथ तां कुत्सो जगामाऽन्यगृहं द्विजः ।। २८ ।।

साऽपि कुत्सवचः श्रुत्वा पश्चात्तापेन संयुता ।।

व्रतं तु कार्तिके मासि करिष्यामीति निश्चिता ।। २९ ।।

पतंगोदयवेलायां कार्तिके स्नानमंभसि ।।

दीपदानं वत चैव मासमेकं चकार सा ।। 2.4.7.३० ।।

ततः कालांतरे चैव गतायुर्मृतिमागता ।।

दीपदानस्य माहात्म्यान्महापापकृदप्यसौ ।। ३१ ।।

स्वर्गमार्गं गता सा स्त्री काले मोक्षमवाप ह ।।

तस्मान्नारद माहात्म्यं दीपदानस्य को वदेत् ।। ३२ ।।

कार्तिके दीपदानं तु महापुण्यफलप्रदम् ।।

कार्तिकव्रतनिष्ठो यो दीपदानादिकृन्नरः ।। ३३ ।।

दीपदानस्येतिहासं शृण्वन्वै मोक्षमाप्नुयात् ।। ३४ ।।

दीपदानस्य माहात्म्यं वक्तुं केनेह शक्यते ।।

परदीपप्रबोधस्य माहात्म्यं शृणु नारद ।। ३५ ।।

स्वस्याऽपि शक्तिराहित्ये परस्याऽपि प्रबोधनम् ।।

यः कुर्याल्लभते सोऽपि नाऽत्र कार्या विचारणा ।। ३६ ।।

दीपार्थं वर्तिकां तैलं पात्रं वा यो ददाति हि ।।

सहायं वाऽथ कुरुते ददतां दीपमुत्तमम् ।। ३७ ।।

स तु मोक्षमवाप्नोति नाऽत्र कार्या विचारणा ।।

कार्तिके दीपदानस्य माहात्म्यं को नु वर्णयेत् ।। ३८ ।।

स्वस्यापि शक्तिराहित्ये परदीपं प्रबोधयेत् ।।

सोऽपि तत्फलमाप्नोति नाऽत्र कार्या विचारणा ।। ३९ ।।

वेश्या चेन्दुमतीनाम तस्या गेहेऽथ मूषिका ।।

परदीपप्रबोधेन मोक्षं प्राप सुदुर्लभम् ।। 2.4.7.४० ।।

तस्मात्सर्वप्रयत्नेन परदीपं प्रबोधयेत् ।।

तेन मोक्षमवाप्नोति मूषिकावन्न संशयः ।। ४१ ।।

परदीपप्रबबोधस्य फलमीदृग्विधं मुने ।।

साक्षाद्दीपप्रदानस्य माहात्म्यं केन वर्ण्यते ।। ४२ ।।

।। नारद उवाच ।। ।।

कार्तिके दीपदानस्य माहात्म्यं च मया श्रुतम् ।।

परदीप प्रबोधस्य माहात्म्यमपि वै श्रुतम् ।।

इदानीं श्रोतुमिच्छामि व्योमदीपस्य वैभवम् ।। ४३ ।।

।। ब्रह्मोवाच ।। ।।

आकाशदीप माहात्म्यं शृणु पुत्र समाहितः ।।

यस्य श्रवणमात्रेण दीपदाने मतिर्भवेत् ।। ४४ ।।

संप्राप्ते कार्तिके मासि प्रातःस्नानपरायणः ।।

आकाशदीपं यो दद्यात्तस्य पुण्यं वदाम्यहम् ।। ४५ ।।

सर्वलोकाधिपो भूत्वा सर्वसंपत्समन्वितः ।।

इह लोके सुखं भुक्त्वा चांते मोक्षमवाप्नुयात् ।। ४६ ।।

स्नानदानक्रियापूर्वं हरिमंदिरमस्तके ।।

आकाशदीपो दातव्यो मासमेकं तु कार्तिके ।।

कार्तिके शुद्धपूर्णायां विधिनोत्सर्जयेच्च तम् ।। ४७ ।।

यः करोति विधानेन कार्तिके व्योम्नि दीपकम् ।।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।। ४८ ।।

अत्र ते वर्णयिष्यामि इतिहासं पुरातनम् ।।

यस्य श्रवणमात्रेण व्योमदीपफलं लभेत् ।। ४९ ।।

पुरा तु निष्ठुरोनाम लुब्धको लोककंटकः ।।

यमुनातीरवासी च कालमृत्युरिवाऽपरः ।। 2.4.7.५० ।।

वने चरन्मृगान्सर्वान्हत्वा वृत्तिमकल्पयत् ।।

पथिकान्बाधते नित्यं चोरवृत्त्या धनुर्धरः ।। ५१ ।।

कंचिद्ग्रामं जगामाशु चौर्यार्थं कार्तिके मुने ।।
तस्मिन्विदर्भनगरे राजा सुकृतिनामकः ।। ५२ ।।
चन्द्रशर्माख्यविप्रस्य वचनात्कार्तिके सुधीः ।।
चकार व्योमदीपं तु हरिमंदिरमस्तके ।। ५३ ।।
दीपं दत्त्वा महाभक्त्या अशृणोच्च कथां निशि ।।
एतस्मिन्नेव काले तु चौर्यार्थं समुपागतः ।।।। ५४ ।।
राज्ञा दत्तं व्योमदीपं पश्यन्क्षणमतिष्ठत ।।
तदानीं दैवयोगेन गृध्रो जवसमन्वितः ।। ५५ ।।
शीघ्रमागत्य जग्राह तैलपात्रं सदीपकम् ।।
स्वमुखेनैव संगृह्य वृक्षाग्रं च समाश्रयत् ।। ५६ ।।
तत्र पीत्वा तु तैलं च दीपं स्थाप्य स पक्षिराट् ।।
वृक्षाग्रं तु समास्थाय क्षणमात्रमतिष्ठत ।। ५७ ।।
तदानीं दैवयोगेन ग्रहीतुं पक्षिसत्तमम् ।।
मार्जारोऽप्यारुहद्वृक्षं पक्षिणाऽधिष्ठितं तु तम् ।। ५८ ।।
तदग्रे मुखदीपं च पश्यन्क्षणमतिष्ठत ।।
आकाशदीपमाहात्म्यं कथितं चन्द्रशर्मणा ।। ५९ ।।
राज्ञे सुकृतिनाम्ने च तौ वै शुश्रुवतुः क्षणम् ।।
खगमार्जारकौ तत्र स्वस्वचामचल्यदोषतः ।। 2.4.7.६० ।।
मार्जारो जगृहे तत्र शाखामतरगतं खगम् ।।
दैवेन चोदितौ वृक्षाच्छिलायां पतितौ तदा ।। ६१ ।।
भग्नगात्रौ मृतौ तत्र पक्षिमार्जारकौ भुवि ।।
दिव्यदेहसमायुक्तौ यानारूढौ दिवं गतौ ।। ६२ ।।
तत्सर्वं लुब्धको दृष्ट्वा चौर्यार्थं समुपागतः ।।
निवृत्तो दुष्टभावेन कथयंतं कथां मुनिम् ।। ६३ ।।
चंद्रशर्माणमाभाष्य इदं वचनमब्रवीत् ।।
चंद्रशर्मन्मया दृष्टं चौर्यार्थं ह्यागतेन च ।।६४।।
राज्ञा सुकृतिना दत्तं व्योमदीपं मनोहरम् ।।
तदानीं दैवयोगेन खगः पात्रं प्रगृह्य च ।। ६५ ।।

तैलं पीत्वा तु तत्पात्रं सदीपं तु मनोहरम् ।।

वृक्षाग्रे स्थापयित्वा च तत्र क्षणमतिष्ठत ।। ६६ ।।

मार्जारोऽप्यागतस्तत्र ग्रहीतुं पक्षिपुंगवम् ।।

दैवेन प्रेरितौ तौ च उभे शाखे समाश्रितौ ।। ।। ६७ ।।

त्वन्मुखात्कथ्यमानां हि कथां शुश्रुवतुः क्षणम् ।।

पश्चाच्चांचल्यदोषेण मार्जारो ह्यग्रहीत्खगम् ।। ६८ ।।

तौ वृक्षात्पतितौ मृत्युं प्राप्तौ च क्षणमात्रतः ।।

उभौ तौ दिव्यरूपौ च यानारूढौ दिवं गतौ ।। ६९ ।।

तदाश्चर्यमहं दृष्ट्वा त्वां प्रष्टुं समुपागतः ।।

तौ कौ पुरा च मार्जारखगौ तद्वद भो द्विज ।। 2.4.7.७० ।।

तिर्यग्योनिसमापन्नौ मुक्तौ केन च कर्मणा ।।

इति लुब्धवचः श्रुत्वा चंद्रशर्माऽब्रवीत्तदा ।। ७१ ।।

शृणु लुब्ध प्रवक्ष्यामि तयोर्वृत्तांतमंजसा ।।

मार्जारोऽपि पुरा पापी तथा श्रीवत्सगोत्रजः ।। ७२ ।।

देवशर्मा इति प्रोक्तो देवद्रव्याऽपहारकः ।।

अहोबलनृसिंहस्य पूजाकर्तृत्वमाप सः।। ७३ ।।

तस्मिन्देवालये प्राप्तं तैलं द्रव्यादिकं तथा ।।

अपहृत्य च तेनैव कुटुंबं पोषयत्यसौ ।। ७४ ।।

आयुर्नीत्वैवमेवाऽसौ ततः पंचत्वमागतः ।।

तस्मात्पापात्कालसूत्रं महारौरवरौरवम् ।। ७५ ।।

निरुच्छवासं तथा प्राप्य असिपत्रवनं क्रमात् ।।

छिद्यमानो महाकायैर्यमदूतैर्भयंकरैः ।। ७६ ।।

अनुभूय च तान्सर्वान्ब्रह्मराक्षसतां गतः ।।

ततस्तु श्वानयोनौ च चंडालोऽभूत्कुकर्मतः ।। ७७ ।।

एवं जन्मशतं प्राप्य भूमौ मार्जारतां गतः ।।

आकाशदीपमाहात्म्यं श्रुत्वेदानीं तु दैवतः ।।

निर्मुक्ताऽखिलपापस्तु अगमद्धरिमंदिरम् ।। ७८ ।।

गृध्रोऽयं तु पुरा विप्रो मिथिले वेदपारगः ।।

शर्यातिरिति विख्यातौ नाम्ना लोके महाप्रभुः ।।।। ७९।।

दासीसंगं चकारासौ वेश्यासंगं तथैव च ।।

तेन दोषेण महता पंचत्वमगमत्तदा ।। 2.4.7.८० ।।

कुंभीपाके महाघोरे स्थित्वा युगचतुष्टयम् ।।

कर्मशेषेण भूमौ च गृध्रत्वमगमत्तदा ।। ८१ ।।

दैवेन चोदितो गृध्रस्तैलपानार्थमागतः ।।८२।।

दत्त्वा चाकाशदीपं च श्रुत्वा चैव हरेः कथाम् ।।

विध्वस्ताऽखिलपापस्तु जगाम हरिमंदिरम् ।। ८३ ।।

इत्येतत्सर्वमाख्यातं लुब्ध गच्छ यथासुखम् ।।

व्याधोऽप्यस्य वचः श्रुत्वा गत्वा चैव स्वमंदिरम् ।। ८४ ।।

व्रतं चाकाशदीपस्य चकार विधिवन्मुने ।।

आयुःशेषं तदा नीत्वा जगाम हरिमंदिरम् ।। ८५ ।।

सुनंदोपि महाराज आश्चर्यं समुपागतः ।।

चकार विधिना मासं चंद्रशर्मोक्तमार्गतः ।। ८६ ।।

प्रातः स्नात्वा शुचिर्भूत्वा कार्तिके मासि वै नृपः ।।

कोमलैस्तुलसीपत्रैः समभ्यर्च्य जनार्दनम् ।। ८७ ।।

रात्रौ दद्याद्व्योमदीपं मंत्रेणानेन वै नृपः।। ८८ ।।

दामोदराय विश्वाय विश्वरूपधराय च ।।

नमस्कृत्वा प्रदास्यामि व्योमदीपं हरिप्रियम् ।।

निर्विघ्नं कुरु देवेश यावन्मासः समाप्यते ।। ८९ ।।

व्रतेनाऽनेन देवेश त्वयि भक्तिः प्रवर्द्धताम् ।।

इति मंत्रेण राजाऽसौ दीपदानं चकार ह ।। 2.4.7.९० ।।

ब्राह्मे मुहूर्ते च पुनर्व्योमदीपं ददाति हि ।।

विष्णोः पूजा कृता प्रातः प्रातःस्नानं चकार ह ।। ९१ ।।

उत्सर्गस्य विधिं कृत्वा व्योम्नि दीपं समाप्य च ।।

ब्राह्मणान्भोजयित्वा च व्रतं विष्णोः समार्पयत् ।। ९२ ।।

तेन पुण्यप्रभावेन स राजा मुनिसत्तम ।।

शरदां शतसाहस्रमिह भोगान्मनोहरान् ।। ९३ ।।

सुपुत्रपौत्रस्वजनैर्बुभुजे सह भार्यया ।।

ततश्चांऽते द्विजवर विमानं सुमनोहरम् ।। ९४ ।।

स्त्रीभिः सह समारुह्य मोक्षमार्गं गतो मुने ।।

चतुर्भुजः पीतवासाः शंखचक्रगदाधरः ।। ९५ ।।

विष्णुलोके विष्णुरिव प्रोच्यमानः सदाऽमरैः ।।

क्रीडयामास राजाऽसौ यथाकामं महामनाः ।। ९६ ।।

तस्मात्तु कार्तिके मासि मानुष्यं प्राप्य दुर्लभम् ।।

आकाशदीपो दातव्यो विधानेन हरेः प्रियः ।।९७।।

दास्यंति ये कार्तिकमासि मर्त्या व्योमप्रदीपं हरितुष्टयेऽत्र ।।

पश्यंति ते नैव कदाऽपि देवं यमं महाक्रूरमुखं मुनींद्र ।। ९८ ।।

अथाऽन्यच्च प्रवक्ष्यामि व्योमदीपस्य वैभवम् ।।

वालखिल्यैः पुरा प्रोक्तं तच्छृणुष्व द्विजोत्तम ।। ९९ ।।

।। वालखिल्या ऊचुः ।। ।।

कृष्णादिमासक्रमतः कार्तिकस्यादिमासतः ।।

आकाशादीपदानं तु कुर्वंतु ऋषिसत्तमाः ।। 2.4.7.१०० ।।

तुलायां तिलतैलेन सायं संध्यासमागमे ।।

आकाशदीपं यो दयान्मासमेकं निरंतरम् ।। १ ।।

सश्रीकाय श्रीपतये श्रिया न स वियुज्यते ।।

आकाशदीपवंशस्तु विंशद्धस्तोत्तमो भवेत् ।। २ ।।

मध्यमो नवहस्तः स्यात्कनिष्ठः पंचहस्तकः ।।

यथा दूरस्थितैर्लोकैर्दृश्यते तत्तथाऽऽचरेत् ।। ३ ।।

तथाऽभ्रादिकरंडेषु दीपदानं विशिष्यते ।।

वंशस्य नवमांशेन लंबा कार्या पताकिका ।। ४ ।।

मयूरपिच्छमुष्टिं वा कलशं चोपरि न्यसेत् ।।

विष्णुप्रीतिकरो दीपः पित्रुद्धारस्य कारकः ।। ५ ।।

एकादश्यास्तुलार्कांद्वा दीपदानमतोऽपि वा ।।

दामोदराय नभसि तुलायां लोलया सह ।।६।।

प्रदीपं ते प्रयच्छामि नमोऽनंताय वेधसे ।।

आकाशदीपसदृशं पितुरुद्धारकं नहि ।। ७ ।।
हेलिकस्य च द्वौ पुत्रौ तत्रैकस्तु पिशाचकः ।।
व्योमदीपपुण्यदानान्मोक्षं प्राप सुदुर्लभम् ।। ८ ।।
नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे ।।
नमो यमाय रुद्राय कांतारपतये नमः ।। ९ ।।
मन्त्रेणाऽनेन ये मर्त्याः पितृभ्यः खे तु दीपकम् ।।
प्रयच्छंति गता ये स्युर्नरके यांति तेऽपि वै ।।
उत्तमां गतिमित्थं ते दीपदानं मयेरितम् ।। 2.4.7.११० ।।
लक्ष्मीसंततिसिद्ध्यर्थमारोग्याय प्रदीपयेत् ।। ११ ।।
कार्तिके कृष्णपक्षे तु द्वादश्यादिषु पंचसु ।।
तिथीषूक्तः पूर्वरात्रे नृणां नीराजनाविधिः ।। १२ ।।
ब्रह्मविष्णुशिवादीनां भवनेषु विशेषतः ।।
कूटागारेषु चैत्येषु सभासु च नदीषु च ।। १३ ।।
प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च ।।
मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ।। १४ ।।
प्रदोषसमये दीपान्दद्यादेवं मनोहरान् ।।
कृतं यैः कार्तिके मासि दीपदानं विधानतः ।। १५ ।।
दृश्यंते ये रत्नभाजस्तेऽत एव प्रकीर्तिताः ।।
दीपदानासमर्थश्चेत्परदीपं तु रक्षयेत् ।। १६ ।।
यो वेदाभ्यासिने दद्याद्दीपार्थं तैलमादरात् ।।
को वा तस्य फलं वक्तुं भुवि तिष्ठति मानवः ।। १७ ।।
दीपान्दद्याद्बहुविधान्कार्तिके विष्णुसंनिधौ ।।
कार्तिके मासि संप्राप्ते गगने स्वच्छताके ।।१८।।
रात्रौ लक्ष्मीः समायाति द्रष्टुं भुवनकौतुकम् ।।
यत्रयत्र च दीपान्सा पश्यत्यब्धिसमुद्भवा ।। १९ ।।
तत्रतत्र रतिं कुर्यान्नांधकारे कदाचन ।।
तस्माद्दीपः स्थापनीयः कार्तिके मासि वै सदा ।। 2.4.7.१२० ।।
लक्ष्मीरूपार्थिनां प्रोक्तं दीपदानं विशेषतः ।।

देवाऽऽलये नदीतीरे राजमार्गे विशेषतः ।। २१ ।।

निद्रास्थले दीपदाता तस्य श्रीः सर्वतोमुखी ।।

दुर्बलस्याऽऽलयं वीक्ष्य दीपशून्यं तु यो ददेत् ।। २२ ।।

 विप्रस्य वाऽन्यवर्णस्य विष्णुलोके महीयते।।

कीटकंटकसंकीर्णे दुर्गमे विषमस्थले ।। २३ ।।

कुर्याद्यो दीपदानानि नरकं स न गच्छति ।।

दद्याद्रात्रौ पंचनदे दीपं यो विधिपूर्वकम् ।। २४ ।।

तस्य वंशे प्रजायन्ते बालकाः कुलदीपकाः ।।

पितृपक्षेऽन्नदानेन ज्येष्ठाऽऽषाढे च वारिणा ।। २५ ।।

कार्तिके तत्फलं तेषां परदीपप्रबोधनात् ।।

बोधनात्परदीपस्य वैष्णवानां च सेवनात् ।।२६।।

कार्तिके फलमाप्नोति राजसूयाश्वमेधयोः ।।

पुरा हरिकरोनाम द्विजः पापरतः सदा ।।२७ ।।

कृतं द्यूतप्रसंगेन दीपदानं हि कार्तिके ।।

तेन पुण्यप्रभावेन स्वर्गं प्राप द्विजोत्तमः ।। २८ ।।

आकाशदीपदानेन पुरा वै धर्मनन्दनः ।।

विमानवरमारुह्य विष्णुलोकं ययौ नृपः ।।२९।।

यः कुर्यात्कार्तिके विष्णोः पुरः कर्पूरदीपकम् ।।

प्रबोधिन्यां विशेषेण तस्य पुण्यं वदाम्यहम् ।।2.4.7.१३०।।

कुले तस्य प्रसूता ये पुरुषास्ते हरिप्रियाः ।।

क्रीडित्वा सुचिरं कालमन्ते मुक्तिं व्रजंति च ।। ३१ ।।

दीपको ज्वलते यस्य दिवा रात्रौ हरेर्गृहे ।।

एकादश्यां विशेषेण स याति हरिमन्दिरम्।।३२।।

लुब्धकोऽपि चतुर्दश्यां दीपं दत्त्वा शिवालये ।।

भक्त्या विना परे लिंगे शिवलोकं जगाम सः ।। ३३ ।।

गोपः कश्चिदमावास्यां दीपं प्रज्वाल्य शार्ङ्गिणः ।।

मुहुर्जयजयेत्युक्त्वा स च राजेश्वरोऽभवत्।। १३४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये दीपदानमाहात्म्यवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/h3e



।। नारद उवाच ।। ।।

भूयः कथय तृप्तिर्हि नास्ति मे कमलासन ।।

त्वद्वागमृतपानेन तृषा भूयः प्रवर्धते ।। १ ।।

।। ब्रह्मोवाच ।। ।।

प्रातः स्नात्वा शुचिर्भूत्वा कार्तिके विष्णुतत्परः ।।

देवं दामोदरं पूज्य कोमलैस्तुलसीदलैः ।।

स तु मोक्षमवाप्नोति नाऽत्र कार्या विचारणा ।। २ ।।

भक्त्या विरहितो यस्तु सुवर्णादिभिरर्चयेत् ।।

तस्य पूजां न गृह्णाति नाऽत्र कार्या विचारणा ।। ३ ।।

सर्वेषामपि वर्णानां भक्तिरेषा परा स्मृता ।।

भक्त्या विरहितं कर्म न विष्णोः प्रियकारणम् ।। ४ ।।

भक्त्या संपूजितो नित्यं तुलस्यास्तु दलार्धतः ।।

स्वयं प्रत्यक्षमायाति भगवान्हरिरीश्वरः ।। ५ ।।

विष्णुदासः पुरा भक्त्या तुलसीपूजनेन च ।।

विष्णुलोकं गतः शीघ्रं चोलो गौणत्वमागतः ।। ६ ।।

तुलस्याः शृणु माहात्म्यं पापघ्नं पुण्यवर्द्धनम् ।।

यत्पुरा विष्णुना प्रोक्तं रमायै तद्वदाम्यहम् ।। ७ ।।

संप्राप्ते कार्तिके मासि तुलस्याः पूजनं हरेः।।

ये कुर्वंति नरा भक्त्या ते यांति परमं पदम् ।।८।।

तस्मात्सर्वप्रयत्नेन तुलस्याः कोमलैर्दलैः ।।

पूजनीयो महाभक्त्या सर्वक्लेशविनाशनः ।। ९ ।।

रोपिता तुलसी यावत्कुरुते मूलविस्तरम् ।।

तावद्युगसहस्राणि ब्रह्मलोके महीयते ।। 2.4.8.१० ।।

तुलसीपत्रसंयुक्तजले स्नानं चरेद्यदि ।।

सर्वपापविनिर्मुक्तो मोदते विष्णुमंदिरे ।। ११ ।।
वृन्दावनं च कुरुते रोपणार्थं महामुने ।।
तावतैव विमुक्ताऽघो ब्रह्मभूयाय कल्पते ।। १२ ।।
तुलसीकाननं ब्रह्मन्गृहे यस्याऽवतिष्ठते ।।
तद्गृहं तीर्थभूतं तु न यांति यमकिंकराः ।। १३ ।।
सर्वपापहरं पुण्यं कामदं तुलसीवनम् ।।
रोपयंति नराः श्रेष्ठास्ते न पश्यंति भास्करिम् ।। १४ ।।
तुलसीकाष्ठसंयुक्तं गन्धं यो धारयेन्नरः ।।
तद्देहं न स्पृशेत्पापं क्रियमाणं तथैव च ।। ।। १५ ।।
तुलसीविपिनच्छाया यत्र चैव भवेद्द्विज ।।
तत्र श्राद्धं प्रकर्तव्यं पितॄणां तृप्तिहेतवे ।। १६ ।।
यत्कृते तुलसीपत्रं कर्णे शिरसि दृश्यते ।।
यमस्तं नेक्षितुं शक्तः किमु दूता भयंकराः ।। १७ ।।
तुलस्या महिमां यस्तु शृणुयान्नित्यमादृतः ।।
सवपापविमुक्तात्मा ब्रह्मलोकं स गच्छति ।। १८ ।।
अत्रैवोदाहरंतीममितिहासं पुरातनम् ।।
तुलस्या विषये ब्रह्मञ्छ्रवणात्पापनाशनम् ।। १९ ।।
पुरा काश्मीरदेशे तु ब्राह्मणौ संबभूवतुः ।।
हरिमेधःसुमेधाख्यौ विष्णुभक्तिपरायणौ ।।2.4.8.२०।।
सर्वभूतदयायुक्तौ सर्वतत्त्वार्थवेदिनौ ।।
कदाचित्तौ द्विजवरौ तीर्थयात्रापरायणौ ।।२१।।
गच्छतावेकतो विप्रौ कांतारे श्रमविह्वलौ ।।
तुलसीकाननं तत्र ददर्शतुररिंदमौ ।। २२ ।।
तयोः सुमेधास्तद्दृष्ट्वा तुलसीकाननं महत् ।।
प्रदक्षिणीकृत्य तदा ववंदे भक्तिसंयुतः ।। २३ ।।
दृष्ट्वैतद्धरिमेधास्तु उवाच परया मुदा ।।
ज्ञातुं तुलस्या माहात्म्यं तत्फलं च पुनःपुनः ।। २४ ।। ।।
।। हरिमेधा उवाच ।। ।।

किमर्थं विप्र देवेषु तीर्थेषु च व्रतेषु च ।।

स्थितेषु विप्रमुख्येषु प्रणामं कृतवानसि ।। २५ ।।

।। सुमेधा उवाच ।। ।।

शृणु विप्र महाभाग साधु वाक्यमुदीरितम् ।।

आतपो बाधते ह्यावां गत्वैतद्वटसन्निधौ ।। २६ ।।

तस्यच्छायां समाश्रित्य वक्ष्यामि ते यथार्थतः ।।

एवमुक्तः सुमेधास्तु हरिमेधेन संयुतः ।। २७ ।।

वटं जगाम धर्मज्ञो महत्कोटरसंयुतम् ।।

तत्र विश्राम्य विप्रोसौ हरिमेधमुवाच ह ।। २८ ।।

श्रूयतां विप्रशार्दूल तुलस्यास्तूत्तमां कथाम् ।।

परमेशप्रसादेन संजाता या पयोनिधौ ।। २९ ।।

पुरा दुर्वाससः शापाद्गतैश्वर्ये पुरंदरे ।।

ममंथुः क्षीरजलधिं ब्रह्माद्याः ससुराऽसुराः ।। 2.4.8.३० ।।

ऐरावतः कल्पतरुश्चन्द्रमाः कमला तथा ।।

उच्चैःश्रवा कौस्तुभश्च तथा धन्वन्तरिर्हरिः ।। ३१ ।।

हरीतक्यादयश्चाऽपि दिव्या ओषधयस्तथा ।।

अजायन्त द्विजश्रेष्ठ लोकश्रेयोविधायकाः ।। ३२ ।।

ततः पीयूषकलशमजरामरदायकम् ।।

कराभ्यां कलशं विष्णुर्धारयन्सुतलं परम् ।।

अवेक्ष्य मनसा सद्यः परां निर्वृतिमाप ह ।। ३३ ।।

तस्मिन्पीयूषकलश आनन्दास्रोदबिन्दवः ।।

व्यपतंस्तुलसी सद्यः समजायत मण्डला ।। ३४ ।।

सर्व लक्षणसंपन्ना सर्वाभरणभूषिता ।। ३५ ।।

तत्रोत्पन्नां तथा लक्ष्मीं तुलसीं च ददुर्हरेः ।।

देवा ब्रह्मादयस्ते हि जगृहे भगवान्हरिः ।। ३६ ।।

ततोऽतीव प्रियकरा तुलसी जगतां पतेः।।३७।।

सा तु देवगणैः सर्वैर्विष्णुवत्पूज्यते प्रिया ।।

नारायणो जगत्त्राता तुलसी तस्य वल्लभा ।।३८।।

तस्मात्तस्या नमस्कारो मया विप्र कृतस्ततः ।।

इत्येवं वदतस्तस्य सुमेधस्य महात्मनः ।। ३९ ।।

आरादद्दश्यत महद्विमानं सूर्यवर्चसम् ।।

तदानीं वटवृक्षस्तु पपात पुरतो मुने ।।2.4.8.४०।।

तथैव तस्माद्वृक्षाच्च पुरुषौ द्वौ विनिर्गतौ ।।

द्योतयंतौ दिशः सर्वास्तेजसा सूर्यसन्निभौ ।। ४१ ।।

प्रणामं चक्रतुस्तौ हि हरिमेधसुमेधयोः ।।

हरिमेधसुमेधौ तौ तौ दृष्ट्वा भयविह्वलौ ।। ४२।।

ऊचतुर्विस्मयाविष्टौ तावुभौ देवसन्निभौ ।।४३।।

हरिमेधसुमेधसावूचतुः ।।

युवां कौ देवसंकाशौ भवंतौ सर्वमंगलौ ।।

मंदारमालां तरुणां धारयंतौ तथाऽमरौ ।।

नमस्कार्यौ तथाऽऽवाभ्यां पूज्यौ च सुररूपिणौ ।। ४४ ।।

इत्युक्तौ ब्राह्मणाभ्यां तावूचतुर्वृक्षनिर्गतौ ।।

युवामेव पिता माता आवयोश्च तथा गुरुः ।।४५।।

बंध्वादयस्तथा चैव युवामेव न संशयः ।।

ज्येष्ठ उवाच ।। ।।

अहं तु देवलोकस्य आस्तीकोनाम नामतः ।। ४६ ।।

अप्सरोगणसंवीतः कदाचिन्नंदन वनम् ।।

क्रीडार्थमगमं चाद्रौ विषयासक्त चेतनः ।। ४७ ।।

रेमिरे देववनिता यथाकामं मया सह ।।

मुक्तामल्लिकमाल्यानि निपेतुस्तानि योषिताम् ।। ४८ ।।

तपतो रोमशस्यैव तद्दृष्ट्वा कुपितो मुनिः ।।

योषितां नाऽपराधोयं यासां वै परतंत्रता ।। ४९ ।।

अयमेव दुराचारः शापार्ह इति चाऽब्रवीत् ।।

त्वं ब्रह्मराक्षसो भूत्वा वटवृक्षे चरेति माम् ।। 2.4.8.५० ।।

प्रसादितो मया सोऽथ विशापमपि दत्तवान् ।।

तुलसीपत्रमाहात्म्यं विष्णोर्नाम तथा द्विजात् ।। ।।५१।।

यदा शृणोषि सद्यस्त्वं विमुक्तिं यास्यसे पराम्।।

इति शप्तस्तु मुनिना चिरकालं सुदुःखितः ।। ५२ ।।

वसाम्यत्र वटे दैवाद्भवद्दर्शनतो ध्रुवम् ।।

मुक्तिर्जाता विप्रशापाद्द्वितीयस्य कथां शृणु ।। ५३ ।।

अयं मुनिवरः पूर्वं गुरुशुश्रूषणे रतः ।।

गुरोराज्ञामनादृत्य ब्रह्मराक्षसतां गतः ।। ।।५४ ।।

युष्मत्प्रसादादधुना ब्रह्मशापाद्विमोचितः ।।

तीर्थयात्राफलं चैव युवाभ्यामिह साधितम् ।।५५।।

उत्तरोत्तरपुण्यानि वर्धंते च दिनेदिने ।।

इत्युक्त्वा तौ मुनिवरौ प्रणम्य च पुनःपुनः ।। ५६ ।।

तावनुज्ञाप्य तौ धाम जग्मतुः परया मुदा ।।

ततस्तौ तीर्थयात्रार्थं परमौ मुनिपुंगवौ ।। ।। ५७ ।।

शंसंतौ तुलसीं पुण्यां जग्मतुर्मुनिपुंगव ।।

एवं नारद माहात्म्यं तुलस्याः को नु वर्णयेत् ।। ५८ ।।

तस्मान्नारद मासेऽस्मिन्कार्तिके हरितुष्टिदे ।।

कर्तव्या तुलसीपूजा नाऽत्र कार्या विचारणा ।। ५९ ।।

एवमंग व्रतान्येव प्रोक्तानि मुनिसत्तम ।।

उपांगानि प्रवक्ष्यामि वालखिल्योदितानि च ।। 2.4.8.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये तुलसीमाहात्म्यवर्णनं नामाऽष्टमोऽध्यायः ।।८।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/h3d



।। वालखिल्या ऊचुः ।। ।।

कृष्णः प्रोवाच धर्माय द्वादशीं वत्ससंज्ञिताम्।।

गोधूलिकालसंयुक्ता द्वादशी वत्सपूजने।।१।।

वत्सपूजा वटे चैव कर्तव्या प्रथमेऽहनि ।।

सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् ।।

चंदनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ।। २ ।।

तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर ।।

गोक्षीरं गोघृतं चैव दधिक्षीरं च वर्जयेत् ।। ३ ।।

दिनांते सूर्यबिंबार्धादुभयत्र घटीदलम् ।।

ततो नीराजनं कार्य्यं निरीक्षेच्च शुभाऽशुभम् ।। ४ ।।

नानादीपान्प्रकल्प्याऽऽदौ स्वर्णपात्रादि संस्थितान् ।।

नीराजयेद्दीपपूर्वं निरीक्षेत शुभाऽशुभम् ।।५।।

लापयित्वा सर्वदीपानुत्तराभिमुखान्न्यसेत् ।।

मुख्या दीपा नव प्रोक्ता अन्यानपि च कल्पयेत् ।। ६ ।।

ज्वाला चेद्दक्षिणासंस्था सतेजस्का शिखान्विता ।।

स्थिरा चेत्सौख्यदा प्रोक्ता विपरीता तु दुःखदा ।। ७ ।।

कार्तिके कृष्णपत्रे तु द्वादश्यादिषु पंचसु ।।

तिथिषूक्तः पूर्वरात्रे नृणां नीराजनाविधिः ।। ८ ।।

पक्षं संसूचयत्यादिर्द्वितीयो मासमेव च ।।

तृतीय ऋतुमेवेह चतुर्थस्त्वयनं तथा ।।

वर्षं तु पंचमो दीपः शुभाशुभं विनिर्णयेत् ।। ९ ।।

सूर्यांशसंभवा दीपा अंधकारविनाशकाः ।।

त्रिकाले मां दीपयंतु दिशंतु च शुभाऽशुभम्।। ।। 2.4.9.१० ।।

अभिमंत्र्य च मंत्रेण ततो नीराजयेत्क्रमात् ।। ११ ।।

आदौ देवांस्ततो विप्रान्हस्तिनश्च तुरंगमान् ।।

ज्येष्ठाञ्च्छ्रेष्ठाञ्जघन्यांश्च मातृमुख्याश्च योषितः ।। १२ ।।

ततो नीराजितान्दीपान्स्वस्वस्थानेषु विन्यसेत् ।।

रूक्षैर्लक्ष्मीविनाशः स्याच्छ्वेतैरन्नक्षयो भवेत् ।।

अतिरक्तेषु युद्धानि मृत्युः कृष्णशिखेषु च ।। १३ ।।

एकांगीनाम गोपाला तयैतच्च व्रतं कृतम् ।।

धनधान्यसमायुक्ता जाता वर्षत्रयेण सा ।। १४ ।।

तस्माद्गोपूजनं कार्यं द्वादश्यां कार्तिकस्य तु ।।

एतद्गोव्रतमाहात्म्यं श्रुत्वा कुर्वंति ये नराः ।। १५ ।।

ते गोव्रतप्रभावेन न गोभिर्विच्युता भुवि ।।

गोऽपराधः कृतो यः स्यात्स व्रताद्विलयं व्रजेत् ।। १६ ।।

।। वालखिल्या ऊचुः ।। ।।

कृष्णपक्षे चतुर्दश्यां मासि चाऽऽश्वयुजे तथा ।।

दीपोत्सव समीपे तु व्रतमेतत्समाचरेत् ।। १७ ।।

प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दंतधावनम्।।

त्रिरात्रनियमं कृत्वा गोविंदे भक्तितत्परः ।। १८ ।।

कार्य एतद्व्रतस्यांते तथा गोवर्द्धनोत्सवः ।।

त्रिमुहूर्ताऽधिका ग्राह्या परवेधो न दोषभाक् ।। १९ ।।

आश्विनस्याऽसिते पक्षे त्रयोदश्यां निशामुखे ।।

यमदीपं बलिं दद्यादपमृत्युर्विनश्यति ।। 2.4.9.२० ।।

पुरा हेमनकस्यैव बालकश्चाऽपमृत्युतः ।।

मुक्तोभूदाश्विने कृष्णत्रयोदश्यां दयावशात् ।। २१ ।। ।।

।। दूता ऊचुः ।। ।।

यथा न जीविताद्भ्रश्येदीदृशे तु महोत्सवे ।।

तथोपायं ब्रूहि यम कृपां कृत्वाऽस्मदग्रतः ।। २२ ।।

।। यम उवाच ।।

आश्विनस्याऽसिते पक्षे त्रयोदश्यां निशामुखे ।।

प्रतिवर्षं तु यो दद्याद्गृहद्वारे सुदीपकम् ।। २३ ।।

मन्त्रेणाऽनेन भो दूताः समानेयः स नोत्सवे ।।

प्राप्तेऽपमृत्यावपि च शासनं क्रियतां मम ।। २४ ।।

मृत्युना पाशदंडाभ्यां कालेन च मया सह ।।

त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति ।। २५ ।।

मन्त्रेणानेन यो दीपं द्वारदेशे प्रयच्छति ।।

उत्सवे चाऽपमृत्योश्च भयं तस्य न जायते ।। २६ ।।

।। वालखिल्या ऊचुः ।। ।।

पूर्वविद्धचतुर्दश्यामाश्विनस्य सितेतरे ।।

पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ।। २७ ।।

अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः ।।

तस्याऽब्दिकभवो धर्मो नश्यत्येव न संशयः ।। २८ ।।

तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदये सुराः ।।

यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते ।। २९ ।।

यदा चतुर्दशी न स्याद्द्विदिने चेद्विधूदये ।।

दिनद्वये भवेच्चाऽपि तदा पूर्वैव गृह्यते ।। 2.4.9.३० ।।

बलात्काराद्धठाद्वाऽपि शिष्टत्वान्न करोति चेत् ।।

तैलाभ्यंगं चतुर्दश्यां रौरवं नरकं व्रजेत् ।।३१।।

तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीम् ।।

प्रातःस्नानं हि यः कुर्याद्यमलोकं न पश्यति ।। ३२ ।।

अपामार्गमथो तुंबीं प्रपुन्नाडमथाऽपरम् ।।

भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ।। ३३ ।।

वारत्रयं त्रिवारं च पठित्वा मन्त्रमुत्तमम् ।। ३४ ।।

सीतालोष्टसमायुक्त सकंटकदलान्वित ।।

हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ।।

अपामार्गं प्रपुन्नाडं भ्रामयेच्छिरसोपरि ।। ३५ ।।

स्नात्वार्द्रवाससा दद्याद्दीपकं मृत्युपुत्रयोः ।।

शुनकौ श्यामशबलौ भ्रातरौ यमसेवकौ ।।

तुष्टौ स्यातां चतुर्दश्यां दीपदानेन मृत्युजौ ।। ३६ ।।

इष्टवंधुजनैः सार्द्धमेतत्स्नानं समाचरेत् ।।

स्नानांगतर्पणं कृत्वा यमं संतर्पयेत्ततः।। ३७ ।।

यमाय धर्मराजाय मृत्यवे चाऽन्तकाय च ।।

वैवस्वताय कालाय सर्वभूतक्षयाय च ।। ३८ ।।

औदुंबराय दध्नाय नीलाय परमेष्ठिने ।।

वृकोदराय चित्राय चित्रगुप्ताय ते नमः ।। ३९ ।।

चतुर्दशैते मन्त्राः स्युः प्रत्येकं च नमोऽन्विताः ।।

एकैकेन तिलैर्मिश्रान्दद्यात्त्रीनुदकाञ्जलीन् ।। 2.4.9.४० ।।

यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽथवा ।।

देवत्वं च पितृत्वं च यमस्याऽस्ति द्विरूपता ।। ४१ ।।

जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।।

नरकाय प्रदातव्यो दीपः संपूज्य देवताः ।। ४२ ।।

अत्रैव लक्ष्मीकामस्य विधिः स्नाने मयोच्यते ।।

इषे भूते च दर्शे च कार्तिके प्रथमे दिने ।। ४३ ।।

यदा स्नाति तदाऽभ्यंगस्नानं कुर्याद्विधूदये।

ऊर्ज्जशुक्लद्वितीयायां तिथौ च स्वातियुग्मगे ।। ४४ ।।

मानवो मंगलस्नायी नैव लक्ष्म्या वियुज्यते ।।

दीपैर्नीराजनादत्र सैषा दीपावलिः स्मृता ।। ४५ ।।

इंदुक्षयेऽपि संक्रातौ रवौ पाते दिनक्षये ।।

अत्राऽभ्यंगो न दोषाय प्रातः पापाऽपनुत्तये ।। ४६ ।।

माषपत्रस्य शाकं वै भुक्त्वा तस्मिन्दिने नरः ।।

प्रेताख्यायां चतुर्दश्यां सर्वपापैः प्रमुच्यते ।।४७।।

इषासितचतुर्दश्यामिन्दुक्षयतिथावपि ।।

दर्शादौ स्वातिसंयुक्ते तदा दीपावलिर्भवेत् ।। ४८ ।।

कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम् ।।

महाराजो बलिः प्रोक्तस्तुष्टेन हरिणा तथा ।। ४९ ।।

वरं याचस्व भद्रं ते यद्यन्मनसि वर्तते ।।

इति विष्णुवचः श्रुत्वा बलिर्वचनमब्रवीत् ।। 2.4.9.५० ।।

आत्मार्थं किं याचनीयं सर्वं दत्तं मया तथा ।।
लोकार्थं याचयिष्यामि शक्तश्चेद्देहि तच्च मे ।। ५१ ।।
मयाऽद्य ते धरा दत्ता वामनच्छद्मरूपिणे ।।
त्रिभिः पदैस्त्रिदिवसैः सा चाऽऽक्रांता यतस्त्वया ।। ५२ ।।
तस्माद्भूमितले राज्यमस्तु घस्रत्रये हरे ।। ५३ ।।
मद्राज्ये ये दीपदानं भुवि कुर्वंति मानवाः ।।
तेषां गृहे तव स्त्रीयं सदा तिष्ठतु सुस्थिरा ।। ५४ ।।
मम राज्ये गृहे यैषामंधकारः पतिष्यति ।।
लक्ष्मीसंतानांधकारः सदा पततु तद्गृहे ।। ५५ ।।
चतुर्दश्यां च ये दीपान्नरकाय ददंति च ।।
तेषां पितृगणाः सर्वे नरके न वसंति च ।। ५६ ।।
बलिराज्यं समासाद्य यैर्न दीपावलिः कृता ।।
तेषां गृहे कथं दीपाः प्रज्वलिष्यंति केशव ।। ५७ ।।
बलिराज्ये तु ये लोकाः शोकाऽनुत्साहकारिणः ।।
तेषां गृहे सदा शोकः पतेदिति न संशयः ।। ५८ ।।
चतुर्दशीत्रये राज्यं बलेरस्त्विति याचयेत् ।।
पुरा वामनरूपेण प्रार्थयित्वा धरामिमाम् ।।
ददावतिथयेंद्राय बलिं पातालवासिनम् ।। ५९ ।।
दत्तं दैत्यपतेरित्थं हरिणा तद्दिनत्रयम् ।।
तस्मान्महोत्सवं चात्र सर्वथैव हि कारयेत् ।। 2.4.9.६० ।।
महारात्रिः समुत्पन्ना चतुर्दश्यां मुनीश्वराः ।।
अतस्तदुत्सवः कार्यः शक्तिपूजापरायणैः ।। ६१ ।।
बलिराज्यं समासाद्य यक्षगंधर्वकिन्नराः ।।
औषध्यश्च पिशाचाश्च मंत्राश्च मणयस्तथा ।। ६२ ।।
सर्व एव प्रहृष्यंति नृत्यंति च निशामुखे ।।
तत्तन्मंत्राश्च सिद्ध्यंति बलिराज्ये न संशयः ।। ६३ ।।
बलिराज्यं समासाद्य यथा लोकाः सुहर्षिताः ।।
तथा तद्दिनमध्ये तु लोकाः स्युर्हर्षिता भृशम् ।। ६४ ।।

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।।

उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ।। ६५ ।।

नरकस्थास्तु ये प्रेतास्ते मार्गं तु व्रतात्सदा ।।

पश्यंत्येव न संदेहः कार्योऽत्र मुनिपुंगवैः ।। ६६ ।।

आश्विने मासि भूतादितिथयः कीर्तितास्त्रयः।।

दीपदानादिकार्येषु ग्राह्या मध्याह्नकालिकाः ।। ६७ ।।

यदि स्युः संगवादर्वागेताश्च तिथयस्त्रयः ।।

दीपदानादिकार्येषु कर्तव्याः पूर्वसंयुताः ।। ६८ ।।

।। ऋषय ऊचुः ।।

कौमोदिन्यास्तु माहात्म्यं प्रष्टुमिच्छामहे द्विजाः ।।

तस्मिन्दिने तु किं भोज्यं कस्य पूजां तु कारयेत् ।। ६९ ।।

किमर्थं क्रियते सा तु तस्याः का देवता भवेत् ।।

किं च तत्र भवेद्देयं किं न देयं विशेषतः।।2.4.9.७०।।

प्रहर्षः कोऽत्र निर्दिष्टः क्रीडा काऽत्र प्रकीर्तिता ।।

दीपावल्याः फलं सर्वं वदन्तु ऋषिसत्तमाः ।। ७१ ।।

।। वालखिल्या ऊचुः ।। ।।

ततः प्रभात समये त्वमायां तु मुनीश्वराः ।।

स्नात्वा देवान्पितॄन्भक्त्या संपूज्याऽथ प्रणम्य च ।। ७२ ।।

कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः ।।

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।। ७३ ।।

ततः प्रदोषसमये पूजयेदिंदिरां शुभाम् ।।

कुर्यान्नानाविधैर्वस्त्रैः स्वच्छं लक्ष्म्याश्च मण्डपम् ।। ७४ ।।

नानापुष्पैः पल्लवैश्च चित्रैश्चाऽपि विचित्रितम् ।।

तत्र संपूजयेल्लक्ष्मीं देवांश्चाऽपि प्रपूजयेत् ।। ७५ ।।

संपूज्या देवनार्योऽपि वहुभिश्चोपचारकैः ।।

पादसंवाहनं कुर्याल्लक्ष्म्यादीनां तु भक्तितः ।। ७६ ।।

अस्मिन्नहनि सर्वेऽपि विष्णुना मोचिताः पुरा ।।

बलिकारागृहाद्देवा लक्ष्मीश्चाऽपि विमोचिता ।। ७७ ।।

लक्ष्म्या सार्द्धं ततो देवा जग्मुः क्षीरोदधौ पुनः ।।
प्रसुप्ता बहुकालं ते सुखं तस्मान्मुनीश्वराः।।७८।।
रचनीयाः सूत्रगर्भाः पर्यंकाश्च सुतूलिकाः ।।
दुग्धफेनोपमैर्वस्त्रैरास्तृताश्च यथादिशम् ।। ७९ ।।
स्थापयेत्तान्सुराँल्लक्ष्मीं वेदघोषसमन्वितः ।।
लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्तांबुजोदरे ।।2.4.9.८०।।
अतोऽत्र विधिवत्कार्या तुष्ट्यै तु सुखसुप्तिका ।।
तदह्नि पद्मशय्यां यः पद्मासौख्यविवृद्धये ।। ८१ ।।
कुर्यात्तस्य गृहं मुक्त्वा तत्पद्मा क्वाऽपि न व्रजेत् ।।
न कुर्वंति नरा इत्थं लक्ष्म्या ये सुखसुप्तिकाम् ।। ८२ ।।
धनचिन्ता विहीनास्ते कथं रात्रौ स्वपंति हि ।।
तस्मात्सर्वप्रयत्नेन लक्ष्मीं संपूजयेन्नरः ।। ८३ ।।
स तु दारिद्र्यनिर्मुक्तः स्वजातौ स्यात्प्रतिष्ठितः ।।
जातिपत्रलंवगैलात्वक्कर्पूरसमन्वितम् ।। ८४ ।।
पाचयित्वा गव्यदुग्धं सितां दत्त्वा यथोचिताम् ।।
लड्डुकांस्तस्य कुर्वीत तांश्च लक्ष्म्यै समर्पयेत् ।। ८५ ।।
अन्यच्चतुर्विधं भक्ष्यं दद्याच्छ्रीः प्रीयतामिति ।।
अप्रबुद्धे हरौ पूर्वं स्त्रीभिर्लक्ष्मीं प्रबोधयेत् ।। ८६ ।।
प्रबोधसमये लक्ष्मीं बोधयित्वा भुनक्ति या ।।
पुमान्वा वत्सरं यावल्लक्ष्मीस्तं नैव मुञ्चति ।। ८७ ।।
अभयं प्राप्य विप्रेभ्यो विष्णुभीताः सुरद्विषः ।।
क्षीराब्धौ तुष्टुवुर्ज्ञात्वा सुप्तां पद्माश्रितां श्रियम् ।। ८८ ।।
त्वं ज्योतिः श्रीरवीन्द्वग्निविद्युत्सौवर्णतारकाः ।।
सर्वेषां ज्योतिषां ज्योतिर्दीपज्योतिःस्थिते नमः ।। ८९ ।।
या लक्ष्मीर्दिवसे पुण्ये दीपावल्यां च भूतले ।।
गवां गोष्ठे तु कार्तिक्यां सा लक्ष्मीर्वरदा मम ।। 2.4.9.९० ।।
दीपदानं ततः कुर्यात्प्रदोषे च तथोल्मुकम् ।।
भ्रामयेत्स्वस्य शिरसि सर्वाऽरिष्टनिवारणम् ।। ९१ ।।

दीपवृक्षास्तथा कार्याः शक्त्या देवगृहादिषु ।।
चतुष्पथे श्मशाने च नदीपर्वतवेश्मसु ।। ९२ ।।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ।।
वस्त्रैः पुष्पैः शोभितव्या राजमार्गस्य भूमयः ।। ९३ ।।
सर्वं पुरमलंकृत्य प्रदोषे तदनन्तरम् ।।
ब्राह्मणान्भोजयित्वाऽऽदौ संभोज्य च बुभुक्षितान्।। ९४ ।।
अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ।।
ततोऽपराह्णसमये घोषयेन्नगरं नृपः ।। ९५।।
अद्य राज्यं बलेर्लोका यथेच्छं क्रीड्यतामिति ।।
यथेच्छं क्रीडतां बाला इत्याज्ञाप्य नृपेण तु ।। ९६ ।।
तेभ्यो दद्यात्क्रीडनकं ततः पश्येच्छुभाशुभ्य ।।
बलिराज्ये प्रकर्तव्यं यद्यन्मनसि वर्तते ।। ९७ ।।
जीवहिंसा सुरापानमगम्यागमनं तथा ।।
चौर्यं विश्वासघातश्च पंचैतानि मुनीश्वराः ।।
बलिराज्ये तु नरकद्वाराण्युक्तानि संत्यजेत् ।। ९८ ।।
ततोऽर्द्धरात्रसमये स्वयं राजा व्रजेत्पुरम् ।।
अवलोकयितुं रम्यं पद्भ्यामेव शनैःशनैः ।।
बलिराज्यप्रमोदं च दृष्ट्वा स्वगृहमाव्रजेत् ।। ९९ ।।
एवं गते निशीथे च जने निद्रार्द्धलोचने ।।
एवं नगरनारीभिः शूर्पडिंडिमवादनैः ।।
निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांऽगणात् ।। 2.4.9.१०० ।।
दंडैकरजनीयोगे दर्शः स्यात्तु परेऽहनि ।।
तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका ।। १०१ ।।
ये वैष्णवाऽवैष्णवाश्च बलिराज्योत्सवं नराः ।।
न कुर्वंति वृथा तेषां धर्माः स्युर्नात्र संशयः ।। १०२ ।।
रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः ।।

द्यूतेन वा हरेरग्रे गीतया वा तथैव च ।।१०३।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये वत्सद्वादशीयमत्रयोदशीनरकचतुर्दशीदीपावलीकृत्यवर्णनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १०

https://sa.wikisource.org/s/h5j
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। ब्रह्मोवाच ।। ।।

प्रतिपद्यथ चाऽभ्यंगं कृत्वा नीराजनं ततः ।।

सुवेषः सत्कथागीतैर्दानैश्च दिवसं नयेत् ।। १ ।।

शंकरस्तु पुरा द्यूतं ससर्ज सुमनोहरम् ।।

कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवत् ।। २ ।।

बलिराज्यदिनस्याऽपि माहात्म्यं शृणु तत्त्वतः ।।

स्नातव्यं तिलतैलेन नरैर्नारीभिरेव च ।। ३ ।।

यदि मोहान्न कुर्वीत स याति यमसादनम् ।।

पुरा कृतयुगस्यादौ दानवेंद्रो बलिर्महान् ।। ४ ।।

तेन दत्ता वामनाय भूमिः स्वमस्तकान्विता ।।

तदानीं भगवान्साक्षात्तुष्टो बलिमुवाच ह ।। ५।।

कार्तिके मासि शुक्लायां प्रतिपद्यां यतो भवान् ।।

भूमिं मे दत्तवान्भक्त्या तेन तुष्टोऽस्मि तेऽनघ ।। ६ ।।

वरं ददामि ते राजन्नित्युक्त्वाऽदाद्वरं तदा ।।

त्वन्नाम्नैव भवेद्राजन्कार्तिकी प्रतिपत्तिथिः।। ७ ।।

एतस्यां ये करिष्यंति तैलस्नानादिकार्चनम् ।।

तदक्षयं भवेद्राजन्नात्र कार्या विचारणा ।। ८ ।।

तदाप्रभृति लोकेऽस्मिन्प्रसिद्धा प्रतिपत्तिथिः ।।

प्रतिपत्पूर्वविद्धा नो कर्तव्या तु कथंचन ।। ९ ।।

तत्राभ्यंगं न कुर्वीत अन्यथा मृतिमाप्नुयात् ।।

प्रतिपद्यां यदा दर्शो मुहूर्तप्रमितो भवेत् ।। । । 2.4.10.१० ।।

मांगल्यं तद्दिने चेत्स्याद्वित्तादिस्तस्य नश्यति ।।

बलेश्च प्रतिपद्दर्शाद्यदि विद्धं भविष्यति ।। ११ ।।

तस्यां यद्यथ चाऽऽर्तिक्यं नारी मोहात्करिष्यति ।।

नारीणां तत्र वैधव्यं प्रजानां मरणं ध्रुवम् ।। १२ ।।

अविद्धा प्रतिपच्चेत्स्यान्मुहूर्तमपरेऽहनि ।।

उत्सवादिककृत्येषु सैव प्रोक्ता मनीषिभिः ।। १३ ।।

प्रतिपत्स्वल्पमात्राऽपि यदि न स्यात्परेऽहनि ।।

पूर्वविद्धा तदा कार्या कृता नो दोषभाग्भवेत् ।। १४ ।।

तद्दिने गृहमध्ये तु कुर्यान्मूर्तिं तदांगणे ।।

गोमयेन च तत्राऽपि दधि तत्पुरतः क्षिपेत् ।। १५ ।।

आर्तिक्यं तत्र संस्थाप्य एवं कुर्याद्विधानतः ।।

अभ्यंगं ये न कुर्वंति तस्यां तु मुनिपुंगव ।। १६ ।।

न मांगल्यं भवेत्तेषां यावत्स्याद्वत्सरं ध्रुवम् ।।

यो यादृशेन रूपेण तस्यां तिष्ठेच्छुभे दिने ।। १७ ।।

आवर्षं तद्भवेत्तस्य तस्मान्मंगलमाचरेत् ।।

यदीच्छेत्स्वशुभान्भोगान्भोक्तुं दिव्यान्मनोहरान् ।। १८ ।।

कुरु दीपोत्सवं रम्यं त्रयोदश्यादिकेषु च ।।

शंकरश्च भवानी च क्रीडया द्यूतमास्थिते ।। १९ ।।

गौर्या जित्वा पुरा शंभुर्नग्नो द्यूते विसर्जितः ।।

अतोऽर्थं शंकरो दुःखी गौरी नित्यं सुखस्थिता ।। 2.4.10.२० ।।

द्यूतं निषिद्धं सर्वत्र हित्वा प्रतिपदं बुधाः ।।

प्रथमं विजयो यस्य तस्य संवत्सरं सुखम् ।। २१ ।।

भवान्याऽभ्यर्थिता लक्ष्मीर्धेनुरूपेण संस्थिता ।।

प्रातर्गोवर्द्धनः पूज्यो द्यूतं रात्रौ समाचरेत् ।। २२ ।।

भूषणीयास्तदा गावो वर्ज्या वहनदोहनात् ।। २३ ।।

गोवर्द्धन धराऽऽधार गोकुलत्राणकारक ।।

विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव ।। २४ ।।

या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता ।।

घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ।। २५ ।।

अग्रतः संतु मे गावो गावो मे संतु पृष्ठतः ।।

गावो मे हृदयं संतु गवां मध्ये वसाम्यहम् ।। २६ ।।

।। इति गोवर्द्धनपूजा ।। ।।

सद्भावेनैव संतोष्य देवान्सत्पुरुषान्नरान् ।।

इतरेषामन्नपानैर्वाक्यदानेन पंडितान् ।। २७ ।।

वस्त्रैस्तांबूलधूपैश्च पुष्पकर्पूरकुंकुमैः ।।

भक्ष्यैरुच्चावचैर्भोज्यैरंतःपुरनिवासिनः ।।२८।।

ग्राम्यान्वृषभदानैश्च सामंतान्नृपतिर्धनैः ।।

पदातिजनसंघांश्च ग्रैवेयैः कटकैः शुभैः ।।

स्वनामांकैश्च तान्राजा तोषयेत्सज्जनान्पृथक् ।। २९ ।।

यथार्थं तोषयित्वा तु ततो मल्लान्नरांस्तथा ।।

वृषभान्महिषांश्चैव युध्यमानान्परैः सह ।। 2.4.10.३० ।।

राज्ञस्तथैव योधांश्च पदातीन्समलंकृतान् ।।

मंचाऽऽरूढः स्वयं पश्येन्नटनर्तकचारणान् ।। ३१ ।।

युद्धापयेद्वासयेच्च गोमहिष्यादिकं च यत् ।।

वत्सानाकर्षयेद्गोभिरुक्तिप्रत्युक्तिवादनात् ।। ३२ ।।

ततोऽपराह्नसमये पूर्वस्यां दिशि सुव्रत ।।

मार्गपालीं प्रबध्नाति दुर्गस्तंभेऽथ पादपे ।।३३।।

कुशकाशमयीं दिव्यां लंबकैर्बहुभिः प्रिये ।।

वीक्षयित्वा गजानश्वान्मार्गपाल्यास्तले नयेत् ।। ३४ ।।

गावो वृषांश्च महिषान्महिषीर्घटकोत्कटान् ।।

कृतहोमैर्द्विजेंद्रैस्तु बध्नीयान्मार्गपालिकाम् ।। ३५ ।।

नमस्कारं ततः कुर्यान्मन्त्रेणानेन सुव्रत ।।

मार्गपालि नमस्तुभ्यं सर्वलोकसुखप्रदे ।।

तले तव सुखेनाश्वा गजा गावश्च संतु मे ।। ३६ ।।

मार्गपालीतले पुत्र यांति गावो महावृषाः ।।

राजानो राजपुत्राश्च ब्राह्मणाश्च विशेषतः ।। ३७ ।।

मार्गपाली समुल्लंघ्य नीरुजः सुखिनो हि ते ।।

कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ।। ३८ ।।

पूजां कुर्यात्ततः साक्षाद्भूमौ मंडलके कृते ।।

बलिमालिख्य दैत्येंद्रं वर्णकैः पंचरंगकैः ।। ३९ ।।

सर्वाभरणसंपूर्णं विंध्यावलिसमन्वितम् ।।

कूष्मांडमयजंभोरुमधुदानवसंवृतम् ।। 2.4.10.४० ।।

संपूर्णं कृष्टवदनं किरीटोत्कटकुण्डलम् ।।

द्विभुजं दैत्यराजानं कारयित्वा स्वके पुनः ।। ४१ ।।

गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ।।

मातृभ्रातृजनैः सार्द्धं संतुष्टो बन्धुभिः सह ।। ४२ ।।

कमलैः कुमुदैः पुष्पैः कह्लारै रक्तकोत्पलैः ।।

गन्धपुष्पान्ननैवेद्यैः सक्षीरैर्गुडपायसैः ।। ४३ ।।

मद्यमांससुरालेह्यचोष्यभक्ष्योपहारकैः ।।

मन्त्रेणाऽनेन राजेंद्र समन्त्री सपुरोहितः ।।

पूजां करिष्यते यो वै सौख्यं स्यात्तस्य वत्सरम् ।। ४४ ।।

बलिराज नमतुभ्यं विरोचनसुत प्रभो ।।

भविष्येंद्र सुराराते पूजेयं प्रतिगृह्यताम् ।। ४५ ।।

एवं पूजाविधानेन रात्रौ जागरणं ततः ।।

कारयेद्वै क्षणं रात्रौ नटनृत्यकथानकैः ।। ४६ ।।

लोकश्चापि गृहस्यांते सपर्यां शुक्लतंदुलैः ।।

संस्थाप्य बलिराजानं फलैः पुष्पैः प्रपूजयेत् ।। ४७ ।।

बलिमुद्दिश्य वै तत्र कार्यं सर्वं च सुव्रत ।।

यानि यान्यक्षयाण्याहुर्मुनयस्तत्त्वदर्शिनः ।। ४८ ।।

यदत्र दीयते दानं स्वल्पं वा यदि वा बहु ।।

तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं शुभम् ।। ।। ४९ ।।

रात्रौ ये न करिष्यंति तव पूजां बले नराः ।।

तेषां च श्रोत्रियो धर्मः सर्वस्त्वामुपतिष्ठतु ।। 2.4.10.५० ।।

विष्णुना च स्वयं वत्स तुष्टेन बलये पुनः ।।

उपकारकरं दत्तमसुराणां महोत्सवम् ।।५१।।

एकमेवमहोरात्रं वर्षेवर्षे च कार्तिके ।।

दत्तं दानवराजस्य आदर्शमिव भूतले ।।५२।।

यः करोति नृपो राज्ये तस्य व्याधिभयं कुतः ।।
सुभिक्षं क्षेममारोग्यं तस्य संपदनुत्तमा ।। ५३ ।।
नीरुजश्च जनाः सर्वे सर्वोपद्रववर्जिताः ।। ।। ५४ ।।
कौमुदी क्रियते यस्माद्भावं कर्तुं महीतले ।।
यो यादृशेन भावेन तिष्ठत्यस्यां च सुव्रत ।।
हर्षदुःखादिभावेन तस्य वर्षं प्रयाति हि ।। ।।५५।।
रुदिते रोदितं वर्षं प्रहृष्टे तु प्रहर्षितम् ।।
भुक्तौ भोग्यं भवेद्वर्षं स्वस्थे स्वस्थं भविष्यति ।। ५६ ।।
वैष्णवी दानवी चेयं तिथिः प्रोक्ता च कार्तिके ।। ५७ ।।
दीपोत्सवं जनितसर्वजनप्रमोदं कुर्वंति ये शुभतया वलिराजपूजाम् ।।
दानोपभोगसुखबुद्धिमतां कुलानां हर्षं प्रयाति सकलं प्रमुदा च वर्षम् ।।५८।।
बलिपूजां विधायैवं पश्चाद्गोक्रीडनं चरेत् ।। ५९ ।।
गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।।
सोमो राजा पशून्हंति सुरभीपूजकांस्तथा ।। 2.4.10.६० ।।
प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् ।।
परविद्धासु यः कुर्यात्पुत्रदारधनक्षयः ।। ६१ ।।
अलंकार्यास्तदा गावो गोग्रासादिभिरर्चिताः ।।
गीतवादित्रनिर्घोषैर्नयेन्नगरबाह्यतः ।।
आनीय च ततः पश्चात्कुर्यान्नीराजनाविधिम् ।। ६२ ।।
अथ चेत्प्रतिपत्स्वल्पा नारी नीराजनं चरेत् ।।
द्वितीयायां ततः कुर्यात्सायं मंगलमालिकाः ।। ६३ ।।
एवं नीराजनं कृत्वा सर्वपापैः प्रमुच्यते ।।
प्रतिपत्पूर्वविद्धैव यष्टिकाकर्षणे भवेत् ।। ६४ ।।
कुशकाशमयीं कुर्याद्यष्टिकां सुदृढां नवाम् ।।
देवद्वारे नृपद्वारेऽथवाऽऽनेया चतुष्पथे ।। ६५ ।।
तामेकतो राजपुत्रा हीनवर्णास्तथैकतः ।।
गृहीत्वा कर्षयेयुस्ते यथासारं मुहुर्मुहुः ।। ६६ ।।
समसंख्या द्वयोः कार्या सर्वेऽपि बलवत्तराः ।।

जयोऽत्र हीनजातीनां जयो राज्ञस्तु वत्सरम् ।। ६७ ।।

उभयोः पृष्ठतः कार्या रेखा तत्कर्षकोपरि ।।

रेखांते यो नयेत्तस्य जयो भवति नाऽन्यथा ।। ६८ ।।

जयचिह्नमिदं राजा निदधीत प्रयत्नतः ।। ६९ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कार्तिकशुक्लप्रतिपन्माहात्म्यवर्णनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ११



।। नारद उवाच ।। ।।

भगवन्प्रष्टुमिच्छामि त्वामहं विनयान्वितः ।।

तद्व्रतं ब्रूहि मे मर्त्यो मृत्युं येन न पश्यति ।। १ ।।

।। ब्रह्मोवाच ।। ।।

यदि पृच्छसि विप्रेन्द्र व्रतानामुत्तमं व्रतम् ।।

व्रतं यमद्वितीयाख्यं शृणु त्वं मृत्युनाशनम् ।। २ ।।

कार्तिके मासि शुद्धायां द्वितीयायां मुनीश्वर ।।

कर्तव्यं तद्विधानेन सर्वमृत्युनिवारणम् ।। ३ ।।

ब्राह्मे मुहूर्ते चोप्थाय द्वितीयायां मुनीश्वर ।।

मनसा चिंतयेदात्महितं नैवाऽहितं स्मरेत् ।। ४ ।।

प्रातःस्नानं ततः कुर्याद्दन्तधावनपूर्वकम् ।। ततः

शुक्लांबरधरः शुक्लमाल्यानुलेपनः ।। ५।।

कृतनित्यक्रियो हृष्टः कुण्डलांगदभूषितः ।।

औदुम्बर तरुं गत्वा कृत्वा मण्डलमुत्तमम् ।। ६ ।।

पद्ममष्टदलं कृत्वा तस्मिन्नौदुम्बरे शुभे।। ।।

विधिं विष्णुं च रुद्रं च वरदां च सरस्वतीम् ।। ७ ।।

वीणापुस्तकसंयुक्तां पूजयेत्स्वस्थमानसः ।।

चन्दनागरुकस्तूरीकुंकुमैर्द्विजसत्तम ।। ८ ।।

पुष्पैर्धूपैश्च नैवेद्यैर्नारिकेलफलादिभिः ।।

ततो मृत्युविनाशाथ सालंकारां पयस्विनीम् ।। ९ ।।

विप्राय वेदविदुषे गां दद्याच्च सवत्सकाम् ।।

अपमृत्युविनाशार्थं संसारार्णवतारकाम् ।। 2.4.11.१० ।।

हे विप्र ते त्विमां सौम्यां धेनुं संप्रददाम्यहम् ।।

इति मंत्रेण गां दद्याद्विप्राय ब्रह्मवादिने ।। ११ ।।

तदलाभे तु विप्राय भक्त्या दद्यादुपानहौ ।।

ततः पूजां समाप्याथ भक्तिमान्पुरुषोत्तमे ।। १२ ।।

ज्ञातिश्रेष्ठान्वयोवृद्धान्सम्यग्भक्त्याऽभिवादयेत् ।।

नानाविधैः फलै रम्यैस्तर्प्पयेत्स्वजनानपि ।।१३।।

ततः सोदरसंपन्ना भगिनी या भवेन्मुने ।।

तस्या गृहं समागत्य सम्यग्भक्त्याऽभिवादयेत् ।। १४ ।।

भगिनि सुभगे भद्रे त्वदंघ्रिसरसीरुहम् ।।

श्रेयसेऽथ नमस्कर्तुमागतोऽस्मि तवालयम् ।। १९ ।।

इत्युक्त्वा भगिनीं तां तु विष्णुबुद्ध्याऽभिवादयेत् ।।

तदा तु भगिनी श्रुत्वा भ्रातुर्वचनमुत्तमम् ।। १६ ।।

भगिन्या भ्रातरं वाक्यं वक्तव्यं प्रति नारद ।।

अद्य भ्रातरहं जाता त्वत्तो धन्याऽस्मि मंगला ।। १७ ।।

भोक्तव्यं तेऽद्य मद्गेहे स्वायुषे कुलदीपक ।।

कार्तिके शुक्लपक्षस्य द्वितीयायां सहोदर ।। १८ ।।

यमो यमुनया पूर्वं भोजितः स्वगृहेर्चितः ।।

अस्मिन्दिने यमेनाऽपि नारकीयाश्च मोचिताः ।।

अपि बद्धाः कर्मपाशैः स्वेच्छया पर्यटंति ते ।। १९ ।।

स्वसुर्नरो वेश्मनि यो न भुंक्ते यमद्वितीयादिनमत्र लब्ध्वा ।।

तं पापिनं प्राप्य वयं सुहृष्टाः प्रभक्षयामोऽद्य च भक्ष्यहीनाः।। 2.4.11.२० ।।

इति पापा रटंतीह ब्रह्महत्यादयस्तथा ।।

तस्माद्भ्रातर्मद्गृहे तु भोजनं कुरु कार्तिके ।। २१ ।।

शुक्लायां तु द्वितीयायां विश्रुतायां जगत्त्रये ।।

अस्यां निजगृहे पुत्र भुज्यते न बुधैरपि ।। २२ ।।

इत्युक्तः स तथेत्युक्त्वा भगिनीं पूजयेद्व्रती ।।

प्रहर्षास्तुमहाभाग वस्त्रालंकारभूषणैः ।। २३ ।।

अग्रजामभिवंद्याऽथ आशिषं च प्रगृह्य च ।।

सर्वा भगिन्यः संतोष्या वस्त्रालंकारदानतः ।। २४ ।।

अभावे स्वस्य तु स्वसुः पितृव्याः स्वपितुः स्वसा ।।

तस्या गृहं समागत्य कुर्याद्भोजनमादरात् ।। २५ ।।

एवं यः कुरुते पुत्र द्वितीयां यमनामिकाम् ।।

अपमृत्युविनिर्मुक्तः पुत्रपौत्रादिभिर्वृतः ।। २६ ।।

इह भुक्त्वा तु विपुलान्भोगानन्यान्यथेप्सितान् ।।

अंते मोक्षमवाप्नोति नान्यथा मद्वचो भवेत् ।। २७ ।।

व्रतान्येतानि सर्वाणि दानानि विविधानि च ।।

गृहस्थस्यैव युज्यंते तस्माद्गार्हस्थ्यमाश्रयेत् ।। २८ ।।

कथां यमद्वितीयाया व्रतस्थः शृणुयान्नरः ।।

तस्य सर्वाणि पापानि नश्यंतीत्याह माधवः ।। २९ ।।

।। सूत उवाच ।। ।।

कार्तिके च द्वितीयायां पूर्वाह्णे यममर्चयेत् ।।

भानुजायां नरः स्नात्वा यमलोकं न पश्यति ।। ।। 2.4.11.३० ।।

कार्तिके शुक्लपक्षे तु द्वितीयायां तु शौनक ।।

यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ।। ३१ ।।

द्वितीयायां महोत्सर्गो नारकीयाश्च तर्पिताः ।।

पापेभ्यो विप्रयुक्तास्ते मुक्ताः सर्वे निबंधनात् ।। ३२ ।।

अत्राऽऽशिताश्च संतुष्टाः स्थिताः सर्वे यदृच्छया ।।

तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः ।। ३३।।

अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।।

तस्मान्निजगृहे विप्र न भोक्तव्यं ततो बुधैः ।। ३४ ।।

स्नेहेन भगिनीहस्ताद्भोक्तव्यं बलवर्धनम् ।।

ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः ।। ३९ ।।

महिषासनमारूढो दंडमुद्गरभृत्प्रभुः ।।

वेष्टितः किंकरैर्हृष्टैस्तस्मै याम्यात्मने नमः ।। ३६ ।।

यैर्भगिन्यः सुवासिन्यो वस्त्रदानादितोषिताः ।।

न तेषां वत्सरं यावत्कलहो न रिपोर्भयम् ।। ३७ ।।

धन्यं यशस्यमायुष्यं धर्मकामार्थसाधनम्।।

व्याख्यातं सकलं पुत्र सरहस्यं मयाऽनघ ।। ३८ ।।

यस्यां तिथौ यमुनया यमराजदेवः संभोजितः प्रतितिथौ स्वसृसौहृदेन ।।

तस्मात्स्वसुः करतलादिह यो भुनक्ति प्राप्नोति वित्तशुभसंपदमुत्तमां सः ।। ३९ ।।

।। सूत उवाच ।। ।।

विशेषश्चात्र संप्रोक्तो वालखिल्यैर्महर्षिभिः ।।

तदहं संप्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।। 2.4.11.४० ।।

।। वालखिल्या ऊचुः ।। ।।

कार्तिकस्य सिते पक्षे द्वितीया यमसंज्ञिता ।।

तत्राऽपराह्णे कर्तव्यं सर्वथैव यमार्चनम् ।। ४१ ।।

प्रत्यहं यमुनाऽऽगत्य यमं संप्रार्थयत्पुरा ।।

भ्रातर्मम गृहे याहि भोजनार्थं गणावृतः ।। ४२ ।।

अद्यश्वो वा परश्वो वा प्रत्यहं वदते यमः ।।

कार्यव्याकुलचित्तानामवकाशो न जायते ।। ४३ ।।

तदैकदा यमुनया बलात्कारान्निमंत्रितः ।।

स गतः कार्तिके मासि द्वितीयायां मुनीश्वराः ।। ४४ ।।

नारकीयजनान्मुक्त्वा गणैः सह रवेः सुतः ।।

कृताऽऽतिथ्यो यमुनया नानापाकाः कृताः खग ।। ४५ ।।

कृताभ्यंगो यमुनया तैलैर्गंधमनोहरैः ।।

उद्वर्तनं लापयित्वा स्नापितः सूर्यनंदनः ।। ४६ ।।

ततोऽलंकारकं दत्तं नानावस्त्राणि चंदनम् ।।

माल्यानि च प्रदत्तानि मंचोपरि उपाविशत् ।। ४७ ।।

पक्वान्नानि विचित्राणि कृत्वा सा स्वर्णभाजने ।।

यमायाभोजयद्देवी यमुना प्रीतमानसा ।।४८।।

भुक्त्वा यमोऽपि भगिनीमलंकारैः समर्चयत् ।।

नानावस्त्रैस्ततः प्राह वरं वरय भामिनि ।।

इति तद्वचनं श्रुत्वा यमुना वाक्यमब्रवीत् ।। ४९ ।।

।।यमुनोवाच ।। ।।

प्रतिवर्षं समागच्छ भोजनार्थं तु मद्गृहे ।। 2.4.11.५० ।।

अद्य सर्वे मोचनीयाः पापिनो नरकाद्यम ।।

येऽद्यैव भगिनीहस्तात्करिष्यंति च भोजनम् ।।

तेषां सौख्यं प्रदेहि त्वमेतदेव वृणोम्यहम् ।। ५१ ।।

।। यम उवाच ।। ।।

यमुनायां तु यः स्नात्वा संतर्प्य पितृदेवताः ।। ५२ ।।

भुंक्ते च भगिनीगेहे भगिनीं पूजयेदपि ।।

कदाचिदपि मद्द्वारं न स पश्यति भानुजे ।। ५३ ।।

वीरेशैशानदिग्भागे यमतीर्थं प्रकीर्तितम् ।।

तत्र स्नात्वा च विधिवत्संतर्प्य पितृदेवताः ।। ५४ ।।

पठेदेतानि नामानि आमध्याह्नं नरोत्तमः ।।

सूर्यस्याभिमुखो मौनी हृतचित्तः स्थिरासनः ।। ५५ ।।

यमो निहंता पितृधर्मराजो वैवस्वतो दंडधरश्च कालः ।।

भूताधिपो दत्तकृतानुसारी कृतांतमेतद्दशभिर्जपंति ।।५६।।

ततो यमेश्वरं पूज्य भगिनीगृहमाव्रजेत् ।।

मंत्रेणाऽनेन च तया भोजितः पूर्वमादरात् ।।५७।।

भ्रातस्तवानुजाताऽहं भुंक्ष्व भक्तमिदं शुभम् ।।

प्रीतये यमराजस्य यमुनाया विशेषतः ।। ५८ ।।

ततः संतोष्य भगिनीं वस्त्रालंकरणादिभिः ।।

स्वप्नेऽपि यमलोकस्य भविष्यति न दर्शनम्।। ५९।।

नृपैः कारागृहे ये च स्थापिता मम वासरे ।।

अवश्यं ते प्रेषणीया भोजनार्थं स्वसुर्गृहे ।। 2.4.11.६० ।।

विमोक्तव्या मया पापा नरकेभ्योऽद्य वासरे ।।

येऽद्य बंदी करिष्यंति ते ताड्या मम सर्वथा ।। ६१ ।।

कनीयसी स्वसा नास्ति तदा ज्येष्ठागृहं व्रजेत्।।

तदभावे सपत्न्यायाः पितृव्यजागृहे ततः ।। ६२।।

तदभावे मातृष्वसुर्मातुलस्याऽऽत्मजा तथा ।।

सापत्नगोत्रसंबंधैः कल्पयेदथवा क्रमम्।। ६३ ।।

सर्वाऽभावे माननीया भगिनी काचिदेव हि ।।

गोनद्याद्यथवा तस्या अभावे सति कारयेत् ।। ६४ ।।

तदभावेप्यरण्यानीं कल्पयित्वा सहोदराम् ।।

अस्यां निजगृहे देवि न भोक्तव्यं कदाचन ।। ६५ ।।

ये भुंजते दुराचारा नरके ते पतंति च ।।

एवमुक्त्वा धर्मराजो ययौ संयमिनीं ततः ।। ६६ ।।

तस्माद्दृषिवराः सर्वे कार्तिकव्रतकारिणः ।।

भुंजते भगिनीहस्तात्सत्यं सत्यं न संशयः ।। ६७ ।।

यमद्वितीयां यः प्राप्य भगिनीगृहभोजनम् ।।

न कुर्याद्वर्षजं पुण्यं नश्यतीति रवेः श्रुतिः ।। ६८ ।।

या तु भोजयते नारी भ्रातरं भ्रातृके तिथौ ।।

अर्चयेच्चाऽपि तांबूलैर्न सा वैधव्यमाप्नुयात् ।। ६९ ।।

भ्रातुरायुःक्षयो नूनं न भवेत्तत्र कर्हिचित् ।।

अपराह्णव्यापिनी सा द्वितीया भ्रातृभोजने ।। 2.4.11.७० ।।

अज्ञानाद्यदि वा मोहान्न भुक्तं भगिनीगृहे ।।

प्रवासिना ह्यभावाद्वा ज्वरितेनाऽथ बंदिना ।। ।। ७१ ।।

एतदाख्यानकं श्रुत्वा भोजनस्य फलं भवेत् ।।

कार्तिके तु विशेषेण धात्रीछायां समाश्रितः ।।७२।।

भोजनं कुरुते यस्तु स वैकुंठमवाप्नुयात् ।। ७३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये यमद्वितीयामाहात्म्यवर्णनं नामैकादशोऽध्यायः ।। ११ ।। छ ।।

टीका

अथ यमद्वितीयाविधानमाह-यदीति ।

यमद्वितीयाख्यायाः प्रयोजनं वक्तुमन्यासामप्याह पाद्मे-

'स्कंदैतास्तिथयो नूनं द्वितीयाद्याश्च विश्रुताः ।।

मासैश्चतुर्भिश्च ततः प्रावृट्काले सुखावहाः ।।

प्रथमा श्रावणे मासि तथा भाद्रपदेऽपरा ।।

तृतीयाऽश्वयुजे मासि चतुर्थी कार्तिके भवेत् ।।

कलुषा श्रावणे मासि तथा भाद्रपदेऽमला ।।

आश्विने प्रेतसंचारा कार्तिके याम्यका मता ।।

पुरा वृत्रवधे वृत्ते प्राप्तराज्ये पुरंदरे ।।

ब्रह्महत्यापनोदार्थमश्वमेधः प्रकीर्तितः ।।

क्रोधादिंद्रेण वज्रेण ब्रह्महत्या निषूदिता ।।

षड्विधा सा क्षितौ क्षिप्ता वृक्षतोयमहीतले ।।

नार्या भ्रूणहने वह्नौ संविभज्य यथाक्रमम् ।।

तत्पापश्रवणात्पूर्वं द्वितीयाया दिनेऽनघ ।।

नारीवृक्षनदीभूमिवह्निभ्रूणहनस्तथा ।।

कलुषीभवनं जाता ह्यतोऽर्थे कलुषा स्मृता ।।

मधुकैटभयो रक्ते पुरा मग्ना तु मेदिनी ।।

अष्टांऽगुला पवित्रा सा नारीणां तु रजो मलम् ।।

नद्यः प्रावृण्मलाः सर्वा वह्नेरूर्ध्वं मषी मलः ।।

निर्यासमलिनो वृक्षाः संगाद्भ्रूणहनो मलाः ।।

कलुषाणि चरंत्यस्यां तेनैषा कलुषा मता ।।

देवर्षिपितृधर्माणां निंदका नास्तिकाः शठाः ।।

तेषां सा वाङ्मलात्पूता द्वितीया तेन निर्मला ।।

अनध्यायेषु शास्त्राणि पाठयंति पठंति च ।।

सांख्यकास्तार्किकाः श्रौतास्तेषां शब्दाऽपशब्दजात् ।।

मलात्पूता द्वितीयायां ततोऽर्थे निर्मला च सा ।।

कृष्णस्य जन्मना वत्स त्रैलोक्यं पावितं भवेत् ।।

नभस्येतेन निर्दिष्टा निर्मला सा तिथिर्बुधैः ।।

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ।।

पितॄन्पितामहान्प्रेतसंचरात्प्रेतसंचरा ।।

प्रेतास्तु पितरः प्रोक्तास्तेषां तस्यां तु संचरः ।।

पुत्रपौत्रैस्तु दौहित्रैः स्वधामंत्रैस्तु पूजिताः ।।

श्राद्धदानमखैस्तृप्ता यांत्यतः प्रेतसंचरा ।।

महालये तु प्रेतानां संचारो भुवि दृश्यते ।।

तेनैषा प्रेतसंचारा कीर्तिता शिखिवाहन ।।

यमस्य क्रियते पूजा यतोऽस्यां पावके नरैः ।।

तेनैषा याम्यका प्रोक्ता सत्यंसत्यं मयोदितम् ।। *इति* /

सनत्कुमारसंहितायाम्-

अस्यां निजगृहे देवि न भोक्तव्यं कदाचन ।।

ये भुंजते दुराचारा नरके ते पतंति च ।।

श्रावणे तु पितृव्यस्य कन्याहस्तेन भोजनम् ।।

मातुलस्य सुताहस्ताद्भोक्तव्यं भाद्रमासके ।।

पितुर्भ्रातुः स्वसुः कन्ये आश्विने तु तयोः क्रमात् ।।

अवश्यं कार्तिके मासि भोक्तव्यं भगिनीकरात् ।।।७ इति ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/h36

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। शौनक उवाच ।। ।।

कार्तिकस्य च माहात्म्यं महत्पुण्यफलप्रदम् ।।

कदा धात्री समुत्पन्ना कथं सा ख्यातिमागता ।। १ ।।

कस्मादियं पवित्रा च कस्मात्पापप्रणाशिनी ।।

आमर्दकी कृता केन कथयस्वात्र विस्तरात् ।। २ ।।

।। सूत उवाच ।। ।।

कथयामि द्विजश्रेष्ठ यथा चेयं हि पुण्यदा ।।

ऊर्जशुक्लचतुर्दश्यां धात्रीपूजां समाचरेत् ।। ३ ।।

आमर्दकीमहावृक्षः सर्वपापप्रणाशनः ।।

वैकुण्ठाख्यचतुर्दश्यां धात्रीछायां गतो नरः ।। ४ ।।

पूजयेत्तत्र देवेशं राधया सहितं हरिम् ।।

प्रदक्षिणां ततः कुर्याच्छतमष्टोत्तरं तथा ।। ५ ।।

सुवर्णरजतैर्वापि फलैरामलकैस्तथा ।।

शतमष्टोत्तरं कुर्यादेकैकेन प्रदक्षिणाम् ।। ६ ।।

साष्टांगं प्रणतो भूत्वा प्रार्थयेत्परमेश्वरम् ।।

धात्रीछायां समाश्रित्य शृणुयाच्च कथामिमाम् ।। ७ ।।

ब्राह्मणान्भोजयेत्पश्चाद्यथाशक्त्या च दक्षिणाम् ।।

ब्राह्मणेषु च तुष्टेषु तुष्टो मोक्षप्रदो हरिः ।। ।।

अत्र ते कथयिष्यामि कथां पुण्यफलप्रदाम् ।।

आमर्दकीफलं वक्तुं ब्रह्मा चाऽपि न पार्यते ।। ९ ।।

एकार्णवे पुरा जाते नष्टे स्थावरजंगमे ।।

नष्टे देवाऽसुरगणे प्रणष्टोरगराक्षसे ।। 2.4.12.१० ।।

तत्र देवाधिदेवेशः परमात्मा सनातनः ।।

जजाप ब्रह्म परममात्मनः परमाव्ययम् ।। ११ ।।

ततोऽस्य ब्रह्म जपतो निरगाच्छ्वसितं पुरः ।।

तद्दर्शनाऽनुरागेण नेत्राभ्यामगमज्जलम् ।। १२ ।।

प्रेमाश्रुभरनिर्भिन्नो भूमौ बिंदुः पपात सः ।।

तस्माद्बिंदो समुत्पन्नः स्वयं धात्री नगो महान् ।। १३ ।।

शाखाप्रशाखाबहुलः फलभारेण पीडितः ।।

सर्वेषामेव वृक्षाणामादिरोहः प्रकीर्तितः ।। १४ ।।

ब्रह्मा तमसृजत्पूर्वं तत्पश्चाच्चाऽसृजत्प्रजाः ।।

देवदानवगन्धर्वयक्षराक्षसपन्नगान् ।। १५ ।।

असृजद्भगवान्देवो मानुषांश्च तथामलान् ।।

आजग्मुस्तत्र देवास्ते यत्र धात्री हरिप्रिया ।। १६ ।।

तां दृष्ट्वा ते महाभागाः परमं विस्मयं गताः ।।

न जानीम इमं वृक्षं चिंतयन्तो मुहुर्मुहुः ।। १७ ।।

एवं चिंतयतां तेषां वागुवाचाऽशरीरिणी ।।

आमर्दकी नगो ह्येष प्रवरो वैष्णवो यतः ।। १८ ।।

अस्य वै स्मरणादेव लभेद्गोदानजं फलम् ।।

दर्शनाद्द्विगुणं पुण्यं त्रिगुणं भक्षणात्तथा ।। १९ ।।

तस्मात्सर्वप्रयत्नेन सेव्या आमर्दकी सदा ।।

सर्वपापहरा प्रोक्ता वैष्णवी पापनाशिनी ।। 2.4.12.२० ।।

तस्या मूले स्थितो विष्णुस्तदूर्ध्वं च पितामहः ।।

स्कन्धे च भगवान्रुद्रः संस्थितः परमेश्वरः ।। २१ ।।

शाखासु सवितारश्च प्रशाखासु च देवताः ।।

पर्णेषु देवताः संति पुष्पेषु मरुतस्तथा ।। २२ ।।

प्रजानां पतयः सर्वे फलेष्वेवं व्यवस्थिताः ।।

सर्वदेवमयी ह्येषा धात्री वै कथिता मया ।। २३ ।।

अतः सा पूजनीया च सर्वकामार्थसिद्धये ।।

एकदा नारदो योगी ब्रह्मणः पुरतः स्थितः ।।

नमस्कृत्वा जगन्नाथं पप्रच्छातीव विस्मितः ।। २४ ।।

।। श्रीनारद उवाच ।। ।।

यथा प्रियं सुतुलसीकाननं सर्वदा हरेः ।।

तथा धात्रीवनं मासे कार्तिके श्रीहरिप्रियम् ।। २५ ।।

।। ब्रह्मोवाच ।। ।।

धात्रीवने हरेः पूजा धात्री छायासु भोजनम् ।।

कार्तिके मासि यः कुर्यात्तस्य पापं विनश्यति ।। २६ ।।

तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके ।।

नित्यं धात्रीं समाश्रित्य तिष्ठंत्यर्के तुलास्थिते ।। २७ ।।

यत्किंचित्कुरुते पुण्यं धात्रीछायासु मानवः ।।

तत्कोटिगुणितं भूयान्नाऽत्र कार्या विचारणा ।। २८ ।।

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।। ।। २९ ।।

अयोध्यानगरे कश्चिद्वैश्यश्चासीद्विजोत्तम ।।

पुत्रदारविहीनश्च दैवाद्दारिद्र्यपीडितः ।। 2.4.12.३० ।।

भिक्षया चोदराग्निं स शमयामास नारद ।।

कदाचिद्वणिजो वैश्यो ययाचे क्षुत्प्रपीडितः ।। ३१ ।।

भिक्षाप्तचणकान्गृह्य धात्रीछायामगात्किल ।।

तत्र तान्भक्षयामास कार्तिके मासि नारद ।। ३२ ।।

केचिदुर्वरितास्तेपु चणकास्तत्र नारद ।।

वैश्येन तेन दत्ता हि क्षुत्क्षामाय द्विजातये ।। ३३ ।।

तेन पुण्यप्रभावेन राजाऽऽसीद्धनिकः क्षितौ ।।

तस्माद्दानं प्रकर्तव्यं कार्तिके मासि सर्वदा ।। ३४ ।।

धात्रीवने मुनिश्रेष्ठ सर्वकामार्थसिद्धये ।।

धात्रीछायां समाश्रित्य कार्तिके च हरेः कथाम् ।।

यः शृणोति स पापेभ्यो मुच्यते द्विजसूनुवत् ।। ३५ ।। ।।

।। नारद उवाच ।। ।।

कोऽभूद्द्विजसुतो ब्रह्मन्किं पापं कृतवान्पुरा ।।

तस्य जाता कथं मुक्तिरेतद्विस्तरतो वद ।। ३६ ।।

।। ब्रह्मोवाच ।। ।।

पुरा द्विजवरश्चासीत्कावेर्या उत्तरे तटे ।। ३७ ।।

देवशर्मेति विख्यातो वेदवेदांगपारगः ।।
तस्य पुत्रो दुराचारस्तमाह च पिता हितम् ।। ३८ ।।
इदानीं कार्तिको मासो वर्तते हरिवल्लभः ।।
तत्र स्नानं च दानं च व्रतानि नियमान्कुरु ।। ३९ ।।
तुलसीपुष्पसहितां कुरुपूजां हरेः सुत ।।
दीपदानं च विविधं नमस्कारं प्रदक्षिणाम् ।। 2.4.12.४० ।।
एवं पितुर्वचः श्रुत्वा पुत्रः क्रोधसमन्वितः।।
पितरं प्राह दुष्टात्मा चलदोष्ठो विनिंदयन् ।। ४१ ।।
।। पुत्र उवाच ।। ।।
न करिष्याम्यहं तात कार्तिके पुण्यसंग्रहम् ।।
इति पुत्रवचः श्रुत्वा सक्रोधः प्राह तं सुतम् ।। ४२ ।।
मूषको भव दुर्बुद्धे वने वृक्षस्य कोटरे ।।
इति शापभयाद्भीतो नत्वा पितरमब्रवीत् ।। ४३ ।।
दुर्योनेर्मम मुक्तिः स्यात्कथं तद्वद मे गुरो ।।
इति प्रसादितो विप्रः प्राह निष्कृतिकारणम् ।। ४४ ।।
यदोर्ज्जव्रतजं पुण्यं शृणोषि हरिवल्लभम् ।।
तदा ते भविता मुक्तिस्तत्कथाश्रवणात्सुत ।। ४५ ।।
स पित्रा चैवमुक्तस्तु तत्क्षणान्मूषकोऽभवत् ।।
बहुवर्षसहस्राणि गह्वरे विपिने वसन् ।। ४६ ।।
एकदा कार्तिके मासि विश्वामित्रः सशिष्यकः ।।
स्नात्वा नद्यां हरिं चार्च्य धात्रीछायां समाश्रितः ।। ४७ ।।
कथयामास माहात्म्यं शिष्येभ्यश्चोर्ज्जसंभवम् ।।
तदा कश्चिद्दुराचारो व्याधोऽगान्मृगयां चरन् ।। ४८ ।।
दृष्ट्वा ऋषिगणान्हंतुं कृतेच्छः प्राणिघातकः ।।
तेषां दर्शनमात्रेण सुबुद्धिरभवत्तदा ।। ४९ ।।
अथोवाच द्विजान्नत्वा भवद्भिः क्रियतेऽत्र किम् ।।
तेनैवमुक्तो विप्रेंद्रो विश्वामित्रस्तमब्रवीत् ।। 2.4.12.५० ।।
।। ।। विश्वामित्र उवाच ।। ।।

सर्वेषामेव मासानां कार्तिकः श्रेष्ठ उच्यते ।।
तस्मिन्यत्क्रियते कर्म वर्धते वटबीजवत् ।। ५१ ।।
कार्तिके मासि यः कुर्यात्स्नानं दानं च पूजनम् ।।
विप्राणां भोजनं चैव तदक्षय्यफलं भवेत् ।। ५२ ।।
व्याधप्रयुक्तमाकर्ण्य धर्मं च ऋषिणा द्विजः ।।
मौषकं देहमुत्सृज्य दिव्यदेहोऽभवत्तदा ।। ५३ ।।
विश्वामित्रं प्रणम्याथ स्ववृत्तांतं निवेद्य च ।।
अनुज्ञातोऽथ ऋषिणा विमानस्थो दिवं ययौ ।। ५४ ।।
विस्मितो गाधिपुत्रस्तु व्याधश्चैव विशेषतः ।।
व्याधोऽप्यूर्जव्रतं कृत्वा जगाम हरिमंदिरम् ।। ५५ ।।
तस्मात्सर्वप्रयत्नेन कार्तिके केशवाऽग्रतः ।।
धात्रीछायां समाश्रित्य कथाश्रवणमाचरेत् ।। ५६ ।।
मूषकोऽपि च दुर्योनेर्मुक्त ऊर्जकथाश्रुतेः ।।
शृणुयाच्छ्रावयेद्यो वा मुक्तिभागी न संशयः ।। ।। ५७ ।।
धात्रीछायां समाश्रित्य वनभोजनमाचरेत् ।।
आदौ कृत्वा तथा स्नानमुदके वनसंस्थिते ।।
कृत्वा कर्माणि नित्यानि माधवं पूजयेत्ततः ।। ५८ ।।
धात्रीछायां समाश्रित्य हरौ भक्तिसमन्वितः ।।
शृणुयाच्च कथां दिव्यां मासमाहात्म्यशंसनीम् ।। ५९ ।।
ततस्तु ब्राह्मणान्भक्त्या भोजयेद्ब्रह्मवित्तमान् ।।
ततो भुंजीत विप्रेंद्र स्वयं हरिमनुस्मरन् ।। 2.4.12.६० ।।
एवंकृते व्रते विप्र कार्तिके हरिवल्लभे ।।
यत्पापं नश्यते पुत्र सावधानमना शृणु ।। ६१ ।।
हरेर्नार्पितभोगाच्च भोजने सूर्यदर्शनात् ।।
रजस्वलावाक्छ्रवणपापाद्भोजनके तथा ।। ६२ ।।
भोजनावसरे चान्यस्पर्शदोषस्तु यद्भवेत् ।।
निषिद्धभोजनात्तस्माद्भोजने चाऽन्नदूषणात् ।। ६३ ।।
शुद्धस्यापि तथा त्यागात्पुण्यकाले हरिप्रिये ।।

एतैर्यत्साधितं पापं तत्सर्वं नश्यति ध्रुवम् ।। ६४ ।।

तस्मात्सर्वप्रयत्नेन धात्र्यां भोजनमाचरेत् ।। ६५ ।।

कार्तिके मासि वै विप्रो धात्रीमालां तु यो वहेत् ।।

तथैव तुलसीमालां तस्य पुण्यमनंतकम् ।। ६६ ।।

धात्रीछायां समाश्रित्य दीपमालार्पणं नरः ।।

करिष्यति विशेषेण तस्य पुण्यमनंतकम् ।। ६७ ।।

राधादामोदरौ पूज्यौ तुलस्यधो विशेषतः ।।

तुलस्यभावे कर्तव्या पूजा धात्रीतले शुभा ।। ६८ ।।

धात्रीछायातले येन सकृद्भुक्तं तु कार्तिके ।।

दंपत्योर्भोजनं दत्तमन्नदोषात्प्रमुच्यते ।। ६९ ।।

संपूर्णे कार्तिके यस्तु संपूज्यामलकीं शुभाम् ।।

राधादामोदरप्रीत्यै भोजयित्वा च दंपती ।।

पश्चात्स्वयं तु भुंजीत न श्रीस्तस्य क्षयं व्रजेत् ।। 2.4.12.७० ।।

यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने ।।

प्रियो भवति देवानां मनुष्याणां च का कथा ।। ७१ ।।

धात्रीफलविलिप्तांगो धात्रीफलसमन्वितः।।

धात्रीफलकृताहारो नरो नारायणो भवेत् ।। ७२ ।।

धात्रीफलानि यो नित्यं वहते करसंपुटे ।।

तस्य नारायणो देवो वरमिष्टं प्रयच्छति ।। ७३ ।।

श्रीकामः सर्वदा स्नानं कुर्यादामलकैर्नरः ।।

तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।। ७४ ।।

नवम्यां दर्शे सप्तम्यां संक्रांतौ रविवासरे ।।

चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत् ।। ७५ ।।

धात्रीछायां समाश्रित्य कुर्य्यात्पिंडं त यो नरः ।।

प्रयांति पितरो मुक्तिं प्रसादान्माधवस्य तु ।। ।। ७६ ।।

मूर्ध्नि पाणौ मुखे चैव बाह्वोः कंठे तु यो नरः ।।

धत्ते धात्रीफलं वत्स धात्रीफलविभूषितः ।।७७ ।।

यावल्लुठति कण्ठस्था धात्रीमाला नरस्य हि ।।

तावत्तस्य शरीरे तु प्रीत्या लुंठति केशवः। ७८ ।।

धात्रीफलं च तुलसी मृत्तिका द्वारकोद्भवा ।।

सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि ।। ७९ ।।

यावद्दिनानि वहते धात्रीमालां कलौ नरः ।।

तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् ।। 2.4.12.८० ।।

मालायुग्मं वहेद्यस्तु धात्रीतुलसिसंभवम् ।।

यो नरः कंठदेशे तु कल्पकोटिं दिवं वसेत् ।। ८१ ।।

धात्रीछायां गतो यस्तु द्वादश्यां पूजयेद्धरिम् ।।

तत्रैव भोजनं यस्तु ब्राह्मणानां च कारयेत् ।। ८२ ।।

स्वयं च तत्र भुंक्ते यः सूपभक्षादिकं तथा ।।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।। ८३ ।।

तुलस्याश्चैव धात्र्याश्च फलैः पत्रैर्हरिं यजेत् ।। ८४ ।।

तुलसी धात्रीयुक्ता हि सिक्ते सति च कार्तिके ।।

विलयं यांति पापानि ब्रह्महत्यादिकानि च ।। ८५ ।।

धर्मदत्तो द्विजः पूर्वं यथा मुक्तिमवाप ह ।। ८६ ।।

।। नारद उवाच ।। ।।

कार्तिके मासि सा सेव्या पूजनीया सदा नरैः ।।

चातुर्मास्ये न सेव्या सा इत्युक्तं भवता पुरा ।।

तस्मात्सर्वमशेषेण कथयस्व ममाग्रतः ।। ८७ ।।

।। ब्रह्मोवाच ।। ।।

कार्तिके मासि विप्रर्षे शुक्ला या दशमी शुभा ।।

तद्दिनाऽऽरभ्य सा सेव्या दैवे पित्र्ये च कर्मणि ।।

दशम्यारभ्य तत्पत्रैः फलकैर्मधुसूदनम् ।। ८८ ।।

पूजयंति नरा ये वै ते वै वैकुण्ठगामिनः ।।

समाप्ते कार्तिकव्रते वनभोजनमाचरेत् ।। ८९ ।।

दशम्यां वाऽथ द्वादश्यां पौर्णमास्यामथाऽपि वा ।।

पंचम्यां वा महाभाग वनभोजनमाचरेत् ।।।। 2.4.12.९० ।।

सर्वोपस्करसंयुक्तो वृद्धबालैश्च संयुतः ।।

वनं प्रवेशयेद्धीमान्धात्रीवृक्षैः सुशोभितम् ।। ९१ ।।

चूतैर्बकैस्तथाऽश्वत्थैः पिचुमंदैः कदंबकैः ।।

न्यग्रोधतिंतिणीवृक्षैः समंतात्परिशोभितम्।। ९२।।

तत्र गत्वा महाप्राज्ञ पुण्याऽहं कारयेत्पुरा।।

वास्तुपीठं तथा पूज्यं धात्रीमूले तु कारयेत् ।। ९३ ।।

वेदिकां चतुरस्रां च हस्तमात्रायतां शुभाम् ।।

तथोपवेदिकां कृत्वा वेदिकाग्रे महामते ।। ९४ ।।

उपवेशाय देवस्य ह्यलं कार्यं तु धातुभिः ।।

वेदिकापश्चिमेभागे कारयेत्कुण्डमंडपम् ।। ९५ ।।

मेखलात्रयसंयुक्तं पिप्पलच्छदसंयुतम् ।।

हस्तमात्रायतं सौम्य एवं कुण्डं तु कारयेत् ।। ९६ ।।

पश्चात्स्नात्वा ततो जप्त्वा देवपूजां समाचरेत् ।।

पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि ।। ९७ ।।

पायसाऽऽज्यगुडसूपपालाशसमिधा तथा ।।

ग्रहाणां वास्तुदेवेभ्यश्चरुं कृत्वा प्रयत्नतः ।। ९८ ।।

धात्री शांतिस्तथा कांतिर्माया प्रकृतिरेव च ।।

विष्णुपत्नी महालक्ष्मी रमा मा कमला तथा ।। ९९ ।।

इंदिरा लोकमाता च कल्याणी कमला तथा ।।

सावित्री च जगद्धात्री गायत्री सुधृतिस्तथा ।। 2.4.12.१०० ।।

अंतज्ञा विश्वरूपा च सुकृपा ह्यब्धिसंभवा ।।

प्रधानदेवताभिस्तु रक्षाहोमं समारभेत् ।।१।।

संसृष्टेति च मंत्रेण ऋषभं मेति मंत्रतः ।।

अपूपं गुडसूपाभ्यां संयुतं जुहुयाद्धविः ।। २ ।।

अष्टोत्तरशतं हुत्वा मूलमंत्रेण पायसम् ।।

ततो ग्रहादि देवांस्तु यथासंख्येन होमयेत् ।। ३ ।।

धात्रीहोमे महाप्राज्ञ रक्षाहोमे तु पायसम् ।।

ततः स्विष्टकृतं हुत्वा बलिदानं समाचरेत् ।। ४ ।।

इंद्रादि लोकपालांश्च रक्षा पूज्या प्रयत्नतः ।।

धात्रीवृक्षस्य सर्वत्र वेदिकासंयुतस्य च ।। ५ ।।

सूपेन गुडमिश्रेण बलिं पश्चान्निवेदयेत् ।।

देवि धात्रि नमस्तुभ्यं गृहाण बलिमुत्तमम्।। ६ ।।

मिश्रितं गुडसूपाभ्यां सर्वमंगलदायिनि ।।

पुत्रान्देहि महाप्राज्ञान्यशो देहि शुभप्रदम् ।। ७ ।।

प्रज्ञां मेधां च सौभाग्यं विष्णुभक्तिं च देहि मे ।।

नीरोगं कुरु मे नित्यं निष्पापं कुरु सर्वदा ।। ८ ।।

वर्चस्कं कुरु मां देवि धनवंतं तथा कुरु ।।

इति तां प्रार्थयेद्देवीं प्रादक्षिण्याद्बलिं न्यसेत् ।। ९ ।।

बलिप्रदानकाले तु ये कुर्वंति प्रदक्षिणम् ।।

ते यांति विष्णुसालोक्यं पितृभिः सार्द्धमेव च ।।2.4.12.१०।।

ततः पूर्णाहुतिं कृत्वा होमशेषं समापयेत् ।। ११ ।।

धात्रीवृक्षस्य मूलस्थं मंदस्मितरमापतिम् ।।

ते यांति विष्णुसायुज्यं ये पश्यंतीह चक्षुषा ।। १२ ।।

वैश्वदेवं ततः कृत्वा पूजयेद्वनदेवताः ।।

गंधाक्षतांस्ततो दत्त्वा विप्रेभ्यः पद्मसंभव ।। १३ ।।

ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः ।।

गृहं प्रवेशयेत्पश्चाद्वृद्धान्बालादिकैः सह ।। १४ ।।

ब्रह्मचारी भवेद्रात्रौ क्षितिशायी भवेत्ततः ।।

ग्रामस्थैश्च मिलित्वा च स्वयं वा कारयेद्बुधः ।। १५ ।।

सर्वपापविमुक्त्यर्थं वनभोजनमुत्तमम् ।।

कृत्वैवं सकलं कर्म कृष्णाय च समर्पयेत् ।। १६ ।।

अश्वमेधसहस्रस्य राजसूयशतस्य च ।।

यत्फलं समवाप्नोति तत्फलं वनभोजने ।। १७ ।।

अतो धात्री महाभाग पवित्रा पापनाशनी ।।

धात्री चैव नृणां धात्री धात्रीवत्कुरुते क्रियाम् ।। १८ ।।

ददात्यायुः पयःपानात्स्नानाद्वै धर्मसंचयम् ।।

अलक्ष्मीनाशनं स्नानमात्रैर्निर्वाणमाप्नुयात् ।।

विघ्नानि नैव जायंते धात्रीस्नानेन वै नृणाम् ।। १९ ।।

तस्मात्त्वं कुरु विप्रेंद्र धात्रीस्नानं हि यत्नतः ।।

प्रयास्यसि हरेर्द्धाम देवत्वं प्राप्य नारद ।। 2.4.12.१२० ।।

यत्रयत्र मुनिश्रेष्ठ धात्रीस्नानं समाचरेत् ।।

तीर्थे वाऽपि गृहे वाऽपि तत्रतत्र हरिः स्थितः ।। २१ ।।

धात्रीस्नानेन विप्रर्षे यस्यास्थीनि कलेवरे ।।

प्रक्षाल्यंते मुनिश्रेष्ठ न स गर्भगृहं वसेत् ।। २२ ।।

धात्रीजलेन विप्रेंद्र येषां केशाश्च रंजिताः ।।

ते नराः केशवं यांति नाशयित्वा कलेर्मलम् ।। २३ ।।

धात्रीफलं महापुण्यं स्नानं पुण्यतमं स्मृतम् ।।

पुण्यात्पुण्यतरं वत्स भक्षणे मुनिसत्तम ।। ।। २४ ।।

न गंगा न गया काशी न वेणी न च पुष्करम् ।।

एकैव हि यथा पुण्या धात्री माधववासरे ।। २५ ।।

धात्रीस्नानं हरेर्नाम तथैवैकादशी सुत ।।

गयाश्राद्धं तथा वत्स समानि मुनयो विदुः ।। २६ ।।

संस्पृशन्यस्तु वै धात्रीमहन्यहनि मानवः ।।

मुच्यते पातकैः सर्वैर्मनोवाक्कायसंभवैः ।। २७ ।।

धात्रीफलैरमावास्यासप्तमीनवमीषु च ।।

रविवारे च संक्रांतौ न स्नायान्मुनिसत्तम ।। २८ ।।

यस्मिन्गृहेमुनिवर धात्री तिष्ठति सर्वदा ।।

तस्मिन्गृहे न गच्छंति प्रेतकूष्मांडराक्षसाः ।। २९ ।।

धात्रीफलकृतां मालां कंठस्थां यो वहेन्नहि ।।

स वैष्णवो न विज्ञेयो विष्णोर्भक्तिपरो यदि ।। 2.4.12.१३० ।।

न त्याज्या तुलसीमाला धात्रीमाला विशेषतः ।।

तथा पद्माक्षमालाऽपि धर्मकामार्थमीप्सुभिः ।। ३१ ।।

यावद्दिनानि वहते धात्रीमालां कलौ नरः ।।

तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् ।। ३२ ।।

सर्वदेवमयी धात्री वासुदेवमनःप्रिया ।।

आरोपणीया सेव्या च पूजनीया सदा नरैः ।। ३३ ।।

एतत्ते सर्वमाख्यातं धात्रीमाहात्म्यमुत्तमम् ।।

श्रोतव्यं च सदा भक्तैश्चतुर्वर्गफलप्रदम् ।। ३४ ।।

धात्रीछायां समाश्रित्य कार्तिकेऽन्नं भुनक्ति यः ।।

अन्नसंसर्गजं पापमावर्षं तस्य नश्यति ।। १३५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धात्रीमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १३

https://sa.wikisource.org/s/h30



।। सूत उवाच ।। ।।

श्रियः पतिमथामंत्र्य गते देवर्षिसत्तमे ।।

हर्षोत्फुल्लाऽऽनना सत्या वासुदेवमथाऽब्रवीत् ।। १ ।।

।। सत्यभामोवाच ।। ।।

धन्यास्मि कृतकृत्याऽस्मि सफलं जीवितं मम ।।

दानं व्रतं तपो वाऽपि किं नु पूर्वं कृतं मया ।। २।।

येनाऽहं मर्त्यजा देव तवांगार्द्धहराऽभवम् ।।

भवांतरे च किंशीला काचाऽहं कस्य कन्यका ।।

तवाऽहं वल्लभा जाता तद्वदस्व ममाऽखिलम् ।। ३ ।।

।। श्रीकृष्ण उवाच ।। ।।

शृणुष्वैकमना कांते यथा त्वं पूर्वजन्मनि ।। ४ ।।

पुण्यव्रतं कृतवती तत्सर्वं कथयामि ते ।।

आसीत्कृतयुगस्यांते मायापुर्यां द्विजोत्तमः ।। ५ ।।

आत्रेयो देवशर्मेति वेदवेदांगपारगः ।।

तस्यातिवयसश्चाऽऽसीन्नाम्ना गुणवती सुता ।। ६ ।।

अपुत्रः स स्वशिष्याय चंद्रनाम्ने ददौ सुताम्।।

तमेव पुत्रवन्मेने स च तं पितृवद्वशी ।। ७।।

तौ कदाचिद्वनं यातौ कुशेध्माहरणार्थिनौ ।।

निहतौ रक्षसा तौ च कृतांतसमरूपिणा ।। ८ ।।

स्वस्वपुण्य प्रभावेन विष्णुलोकं गतावुभौ ।।

ततो गुणवती श्रुत्वा रक्षसा निहतावुभौ ।। ९ ।।

पितृभर्तृजदुःखार्ता कारुण्यं पर्यदेवयत् ।।

सा गृहोपस्करा न्सर्वान्विक्रीयाशु च कर्मं तत् ।।2.4.13.१० ।।

तयोश्चक्रे यथाशक्ति पारलौकीं ततः क्रियाम् ।।

तस्मिन्नेव पुरे चक्रे वासं सा मृतजीविनी ।। ११ ।।

व्रतद्वयं तया सम्यगाजन्ममरणात्कृतम् ।।

एकादशीव्रतं सम्यक्सेवनं कार्तिकस्य च ।। १२ ।।

इत्थं गुणवती सम्यक्प्रत्यब्द व्रतिनी ह्यभूत् ।।

कदाचित्सरुजा साऽथ कृशांगी ज्वरपीडिता ।। १३ ।।

स्नातुं गंगां गता कांते कथंचिच्छनकैस्तदा ।।

यावज्जलांतरगता कंपिता शीतपीडिता ।। ।। १४ ।।

तावत्सा विह्वलाऽपश्यद्विमानं यातमंबरात् ।।

अथ सा तद्विमानस्था वैकुण्ठभुवनं ययौ ।। १५ ।।

कार्तिकव्रतपुण्येन मत्सान्निध्यं गताऽभवत् ।।

अथ ब्रह्मादिदेवानां यदा प्रार्थनया भुवम् ।। १६ ।।

आगतोऽहं गणाः सर्वे यातास्तेऽपि मया सह ।।

एते हि यादवाः सर्वे मद्गणा एव भामिनि ।। १७ ।।

पिता ते देवशर्माऽभूत्सत्राजिदभिधो ह्ययम् ।।

यश्चंद्रनामाऽसोऽक्रूरस्त्वं सा गुणवती शुभा ।। १८ ।।

कार्तिकव्रतपुण्येन बहु मत्प्रीतिदायिनी ।।

मद्द्वारि यत्त्वया पूर्वं तुलसीवाटिका कृता ।। १९ ।।

तस्मादयं कल्पवृक्षस्तवांगणगतः शुभे ।।

आजन्ममरणात्पूर्वं यत्कृतं कार्तिकव्रतम् ।। 2.4.13.२० ।।

कदाचिदपि तेन त्वं मद्वियोगं न यास्यसि ।।

।। सत्योवाच ।। ।।

मासानां तु कथं नाम स मासः कार्तिको वरः ।। २१ ।।

प्रियस्ते देवदेवेश कारणं तत्र कथ्यताम् ।।

।। श्रीकृष्ण उवाच ।। ।।

साधु पृष्टं त्वया कांते शृणुष्वैकाग्रमानसा ।। २२ ।।

पृथोर्वैन्यस्य संवादं महर्षेर्नारदस्य च ।।

एवमेव पुरा पृष्टो नारदः पृथुनाब्रवीत् ।। २३ ।।

।। नारद उवाच ।। ।।

शंखनामाऽभवत्पूर्वमसुरः सागरात्मजः ।।
इन्द्रादिलोकपालानामधिकाराञ्जहार ह ।। २४ ।।
सुवर्णाद्रिगुहादुर्गसंस्थितास्त्रिदशादयः ।।
तद्वीक्षयांबभूवुस्ते तदा दैत्यो व्यचारयत् ।। २५ ।।
हृताधिकारास्त्रिदशा मया यद्यपि निर्जिताः ।।
लक्ष्यंते बलयुक्तास्ते करणीयं मयाऽत्र किम् ।। २६ ।।
ज्ञातं तत्तु मया देवा वेदमन्त्रबलान्विताः ।।
तान्हरिष्ये ततः सर्वे बलहीना भवंति वै ।। २७ ।।
इति मत्वा ततो दैत्यो विष्णुमालक्ष्य निद्रितम्।।
सत्यलोकाज्जहाराशु वेदानादिस्वयंभुवः ।। २८ ।।
नीतास्तु तेन ते वेदास्तद्भयात्ते निराक्रमन् ।।
तोयानि विविशुर्यज्ञमंत्रबीजसमन्विताः ।। २९ ।।
तान्मार्गमाणः शंखोऽपि समुद्रांतर्गतो भ्रमन् ।।
न ददर्श तदा दैत्यः क्वचिदेकत्र संस्थितान् ।।
अथ देवैः स्तुतो विष्णुर्बोधितस्तानुवाच ह ।। ।। 2.4.13.३० ।।
।। विष्णुरुवाच ।। ।।
वरदोऽहं सुरगणा गीतवाद्यादिमंगलैः ।। ३१ ।।
ऊर्जस्य शुक्लैकादश्यां भवद्भिः प्रतिबोधितः ।।
अतश्चैषा तिथिर्मान्या साऽतीव प्रीतिदा मम ।। ३२ ।।
वेदाः शंखहृताः सर्वे तिष्ठंत्युदकसंस्थिताः ।।
तानानयाम्यहं देवा हत्वा सागरनंदनम् ।। ३३ ।।
अद्यप्रभृति वेदास्तु मंत्रबीजसमन्विताः ।।
प्रत्यब्दं कार्तिके मासि विश्रमंत्वप्सु सर्वदा ।। ३४ ।।
कालेऽस्मिन्ये प्रकुर्वंति प्रातःस्नानं नरोत्तमाः ।।
ते सर्वे यज्ञाऽवभृथैः सुस्नाताः स्युर्न संशयः ।। ३५ ।।
अद्यप्रभृत्यहमपि भवामि जलमध्यगः ।।
भवन्तोऽपि मया सार्द्धमायांतु समुनीश्वराः ।। ३६ ।।
कातिकव्रतिनां चेंद्र रक्षा कार्या त्वया सदा ।।

इत्युक्त्वा भगवान्विष्णुः शफरीतुल्यरूपधृक् ।।

खात्पपात जले विंध्यवासिनः कस्य पश्यतः ।। ३७ ।।

हत्वा शंखासुरं विष्णुर्बदरीवनमागमत् ।।

तत्राऽऽहूय ऋषीन्सर्वानिदमाज्ञापयत्प्रभुः ।। ३८ ।।

विष्णुरुवाच ।। ।।

जलांतरविशीर्णांस्तान्यूयं वेदान्प्रमार्गथ ।।

आनयध्वं च त्वरिताः सागरस्य जलांतरात् ।।

तावत्प्रयागं तिष्ठामि देवतागणसंयुतः।। ।। ३९ ।।

।। नारद उवाच ।। ।।

ततस्तैस्सर्वमुनिभिस्तपोबलसमन्वितैः ।। 2.4.13.४० ।।

उद्धृताश्च सबीजास्ते वेदा यज्ञसमन्विताः ।।

तेषु यावन्मितं येन लब्धं तावद्धि तस्य तत् ।। ४१ ।।

स स एव ऋषिर्जातस्तत्तत्प्रभृति पार्थिव ।।

अथ सर्वेऽपि संगम्य प्रयागं मुनयो ययुः ।। ४२ ।।

विष्णवे सविधात्रे ते लब्धान्वेदान्न्यवेदयन् ।।

लब्ध्वा वेदान्समग्रांस्तु ब्रह्मा हर्षसमन्वितः ।। ४३ ।।

अयजद्वाजिमेधेन देवर्षिगणसंयुतः ।।

यज्ञांऽते देवताः सर्वे विज्ञप्तिं चक्रुरंजसा ।। ४४ ।।

।। देवा ऊचुः ।। ।।

देवदेव जगन्नाथ विज्ञप्तिं शृणु नः प्रभो ।।

हर्षकालोऽयमस्माकं तस्मात्त्वं वरदो भव ।। ४५ ।।

स्थानेऽस्मिन्द्रुहिणो वेदान्नष्टान्प्राप पुनस्त्वयम् ।।

यज्ञभागान्वयं प्राप्तास्त्वत्प्रसादाद्रमापते ।। ४६ ।।

स्थानमेतद्धि नः श्रेष्ठं पृथिव्यां पुण्यवर्धनम् ।।

भुक्तिमुक्तिप्रदं चाऽस्तु प्रसादाद्भवतः सदा ।। ४७ ।।

कालोऽप्ययं महापुण्यो ब्रह्मघ्नाऽऽदिविशुद्धिकृत्।।

दत्ताऽक्षयकरं चाऽस्तु वरमेवं ददस्व नः ।। ४८ ।।

।। विष्णुरुवाच ।। ।।

ममाप्येतद्वृतं देवा यद्भवद्भिरुदाहृतम् ।।

तथास्तु सुलभं त्वेतद्ब्रह्मक्षेत्रमितिप्रथम् ।। ४९ ।।

सूर्यवंशोद्भवो राजा गंगामत्रानयिष्यति ।।

सा सूर्यकन्यया चात्र कालिंद्या योगमेष्यति ।। 2.4.13.५० ।।

यूयं च सर्वे ब्रह्माद्या निवसंतु मया सह ।।

तीर्थराजेति विख्यातं तीर्थमेतद्भविष्यति ।। ५१ ।।

सर्वपापानि नश्यंति तीर्थराजस्य दर्शनात् ।।

सूर्ये मकरगे प्राप्ते स्नायिनां पापनाशनः ।। ५२ ।।

कालोऽप्येष महापुण्यफलदोऽस्तु सदा नृणाम् ।।

सालोक्यादिफलं स्नानैर्माघे मकरगे रवौ ।। ५३ ।। ।।

।। नारद उवाच ।। ।।

एवं देवान्देवदेवस्तदुक्त्वा तत्रैवांतर्धानमागात्सवेधाः ।।

देवाः सर्वेप्यंशकैस्तेऽप्यतिष्ठंश्चांतर्धानं प्रापुरिंद्रादयस्ते ।।५४।।

167a

कार्तिके तुलसीमूले योऽर्चयेद्धरिमीश्वरम् ।।

भुक्त्वेह निखिलान्भोगानंते विष्णुपुरं व्रजेत् ।। ५५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये सत्यभामापूर्वजन्मवृत्तांतकथनपूर्वक प्रयागतीर्थप्रशंसाप्रसंगवर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/h5k



।। पृथुरुवाच ।। ।।

यत्त्वया कथितं ब्रह्मन्व्रतमूर्जस्य विस्तरात् ।।

तत्र या तुलसीमूले विष्णोः पूजा त्वयोदिता ।। १ ।।

तेनाऽहं प्रष्टुमिच्छामि माहात्म्यं तुलसीभवम् ।।

कथं साऽतिप्रिया तस्य देवदेवस्य शार्ङ्गिणः ।। २ ।।

कथमेषा समुत्पन्ना कस्मिन्स्थाने च नारद ।।

एवं ब्रूहि समासेन सर्वज्ञोऽसि मतो मम ।। ३ ।।

।। नारद उवाच ।। ।।

शृणु राजन्नवहितो माहात्म्यं तुलसीभवम् ।।

सेतिहासं पुरावृत्तं तत्सर्वं कथयामि ते ।। ४ ।।

पुरा शक्रः शिवं द्रष्टुमगात्कैलासपर्वतम् ।।

सर्वदेवैः परिवृतो ह्यप्सरोगणसेवितः ।। ५ ।।

यावद्गतः शिवगृहं तावत्तत्र स दृष्टवान् ।।

पुरुषं भीमकर्माणं दंष्ट्राऽऽननविभीषणम् ।। ६ ।।

स पृष्टस्तेन कस्त्वं भोः क्व गतो जगदीश्वरः ।।

एवं पुनः पुनः पृष्टः स तदा नोक्तवान्नृप ।। ७ ।।

ततः क्रुद्धो वज्रपाणिस्तं निर्भर्त्स्यं वचोऽब्रवीत् ।।

रे मया पृच्छ्यमानोऽपि नोत्तरं दत्तवानसि ।। ८ ।।

अतस्त्वां हन्मि वज्रेण कस्ते त्राताऽस्ति दुर्मते ।।

इत्युदीर्य ततो वज्री वज्रेणाऽभ्यहनद्दृढम् ।। ९ ।।

तेनास्य कण्ठो नीलत्वमगाद्वज्रं च भस्मताम् ।।

ततो रुद्रः प्रजज्वाल तेजसा प्रदहन्निव ।। 2.4.14.१० ।।

दृष्ट्वा बृहस्पतिस्तूर्णं कृतांजलिपुटोऽभवत् ।।

इन्द्रं च दंडवद्भूमौ कृत्वा स्तोतुं प्रचक्रमे ।। ११ ।।

।। बृहस्पतिरुवाच ।। ।।

नमो देवाधिपतये त्र्यंबकाय कपर्दिने ।।

त्रिपुरघ्नाय शर्वाय नमोऽधंकनिषूदिने ।। १२ ।।

विरूपायाऽतिरूपाय बहुरूपाय शंभवे ।।

यज्ञविध्वंसकर्त्रे च यज्ञानां फलदायिने ।। १३ ।।

कालांतकाय कालाय कालभोगिधराय च ।।

नमो ब्रह्मशिरोहंत्रे ब्राह्मणाय नमो नमः ।। १४ ।।

।। नारद उवाच ।। ।।

एवं स्तुतस्तदा शंभुर्धिषणेन जगाद तम् ।।

संहरन्नयनज्वालां त्रिलोकीदहन क्षमाम्।। १५ ।।

वरं वरय भो ब्रह्मन्प्रीतः स्तुत्याऽनया तव ।।

इन्द्रस्य जीवदानेन जीवेति त्वं प्रथां वज्र ।। १६ ।।

।। बृहस्पतिरुवाच ।। ।।

यदि तुष्टोऽसि देव त्वं पाहींद्रं शरणागतम् ।।

अग्निरेष शमं यातु भालनेत्रसमुद्भवः ।। १७ ।।

।। ।। ईश्वर उवाच ।। ।।

पुनः प्रवेशमायाति भालनेत्रे कथं शिखी ।।

एनं त्यक्ष्याम्यहं दूरे यथेंद्रं नैव पीडयेत् ।। १८ ।।

।। नारद उवाच ।। ।।

इत्युक्त्वा तं करे धृत्वा प्राक्षिपल्लवणार्णवे ।।

सोऽपतत्सिंधुगंगायाः सागरस्य च संगमे ।। १९ ।।

तावत्स बालरूपत्वमगात्तत्र रुरोद च ।।

रुदतस्तस्य शब्देन प्राकंपद्धरणी मुहुः ।। 2.4.14.२० ।।

स्वर्गाद्याः सत्यलोकांतास्तत्स्वनाद्बधिरीकृताः ।।

श्रुत्वा ब्रह्मा ययौ तत्र किमेतदिति विस्मितः ।। ।। २१ ।।

तावत्समुद्रस्योत्संगे तं बालं स ददर्श ह ।।

दृष्ट्वा ब्रह्माणमायातं समुद्रोऽपि कृतांजलिः ।। २२ ।।

प्रणम्य शिरसा बालं तस्योत्संगे न्यवेशयत् ।।

भो ब्रह्मन्सिंधुगंगायां जातोऽयं मम पुत्रकः ।।

जातकर्माऽऽदिसंस्कारान्कुरुष्वाऽद्य जगद्गुरो ।। २३ ।।

।। नारद उवाच ।। ।।

इत्थं वदति पाथोधौ स बालः सागरात्मजः ।।२४ ।।

ब्रह्माणमग्रहीत्कूर्चे विधुन्वंस्तं मुहुर्मुहुः ।।

धुन्वतस्तस्य कूर्चे तु नेत्राभ्यामगमज्जलम् ।।

कथंचिन्मुक्तकूर्चोऽथ ब्रह्मा प्रोवाच सागरम् ।। २५ ।।

।। ब्रह्मोवाच ।। ।।

नेत्राभ्यां विधृतं यस्मादनेनैतज्जलं मम ।।

तस्माज्जलंधर इति ख्यातो नाम्ना भविष्यति ।। २६ ।।

अनेनैवैष तरुणः सर्वशस्त्रास्त्रपारगः ।।

अवध्यः सर्वभूतानां विना रुद्रं भविष्यति ।। २७ ।।

यत एष समुद्भूतस्तत्रैवांतं गमिष्यति ।। २८ ।।

।। नारद उवाच ।। ।।

इत्युक्त्वा शुक्रमाहूय राज्ये तं चाभ्यषेचयत् ।।

आमंत्र्य सरितां नाथं ब्रह्मांतर्धानमागमत् ।। २९ ।।

अथ तद्दर्शनोत्फुल्लनयनः सागरस्तदा ।।

कालनेमिसुतां वृंदां तद्भार्यार्थमयाचत ।। 2.4.14.३० ।।

ते कालनेमिप्रमुखास्ततोऽसुरास्तस्मै सुतां तां प्रददुः प्रहर्षिताः।।

स चाऽपि तां प्राप्य सुहृद्वरां वशां शशास गां शुक्रसहायवान्बली ।। ३१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोत्पत्तिवर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १५

https://sa.wikisource.org/s/h5l



।। नारद उवाच ।। ।।

ये देवैर्निर्जिताः पूर्वं दैत्याः पातालसंस्थिताः ।।

तेऽपि भूमंडलं याता निर्भयास्तमुपाश्रिताः ।।१।।

कदाचिच्छिन्नशिरसं राहुं दृष्ट्वा स दैत्यराट् ।।

पप्रच्छ भार्गवं तत्र तच्छिरश्छेदकारणम् ।। २ ।।

स शशंस समुद्रस्य मथनं देवकारितम् ।।

रत्नापहरणं चैव दैत्यानां च पराभवम् ।। ३ ।।

स श्रुत्वा क्रोधरक्ताक्षः स्वपितुर्मथनं तदा ।।

दूतं संप्रेषयामास घस्मरं शक्रसन्निधौ ।।४।।

दूतस्त्रिविष्टपं गत्वा सुधर्मां प्राविशद्वराम्।।

जगादाखर्वमौलिस्तु देवेंद्रं वाक्यमद्भुतम् ।। ५ ।।

।। घस्मर उवाच ।। ।।

जलंधरोऽब्धितनयः सर्वदैत्यजनेश्वरः ।।

दूतोऽहंप्रेषितस्तेन स यदाह शृणुष्व तत् ।। ६ ।।

कस्मात्त्वया मम पिता मथितः सागरोऽद्रिणा ।।

नीतानि सर्वरत्नानि तानि शीघ्रं प्रयच्छ मे ।। ७ ।।

इति दूतवचः श्रुत्वा विस्मितस्त्रिदशाधिपः।।

उवाच घस्मरं रौद्रं भयरोषसमन्वितः ।। ८ ।।

।। इंद्र उवाच ।। ।।

शृणु दूत मया पूर्वं मथितः सागरो यथा ।।

अद्रयो मद्भयात्त्रस्ताः स्वकुक्षिस्थाः कृतास्तथा ।।९।।

अन्येऽपि मद्द्विषस्तेन रक्षिता दितिजाः पुरा ।।

तस्माद्यत्तत्प्रजातं तु मयाऽप्यपहृतं किल ।।2.4.15.१०।।

शंखोऽप्येवं पुरा देवानद्विषत्सागरात्मजः ।।

ममाऽनुजेन निहतः प्रविष्टः सागरोदरम् ।। ११ ।।

तद्गच्छ कथयस्वाऽस्य सर्वं मथनकारणम् ।।

।। नारद उवाच ।। ।।

इत्थं विसर्जितो दूतस्तदेंद्रेणाऽगमद्द्रुवम् ।।१२।।

तदिदं वचनं सर्वं दैत्यायाकथयत्तदा ।।

तन्निशम्य तदा दैत्यो रोषात्प्रस्फुरिताऽधरः।। १३ ।।

दैत्यसेनासमायुक्तो ययौ योद्धुं त्रिविष्टपम् ।।

ततो युद्धे महाञ्जातो देवदानवसंक्षयः ।। १४ ।।

तत्र युद्धे मृतान्दैत्यान्भार्गवस्तूदतिष्ठपत् ।।

विद्यया मृतजीविन्या मंत्रितैस्तोयबिंदुभिः ।। १५ ।।

देवानपि तथा युद्धे तत्राऽजीवयदंगिराः ।।

दिव्यौषधी समानीय द्रोणाद्रेः स पुनःपुनः ।।१६।।

दृष्ट्वा देवांस्तथा युद्धे पुनरेव समुत्थितान् ।।

जलंधरः क्रोधवशो भार्गवं वाक्यमब्रवीत् ।।१७।।

।। जलंधर उवाच ।। ।।

मया युद्धे हता देवा उत्तिष्ठंति कथं पुनः ।।

तव संजीविनीविद्या न वाऽन्यत्रेति विश्रुतम् ।।१८।।

।। शुक्र उवाच ।। ।।

दिव्यौषधीः समानीय द्रोणाद्रेरंगिराः सुरान्।।

जीवयत्येव तच्छीघ्रं द्रोणाद्रिं त्वमपाहर ।। १९ ।।

।। नारद उवाच ।। ।।

इत्युक्तः स तु दैत्येंद्रो नीत्वा द्रोणाचलं तदा ।।

प्राक्षिपत्सागरे तूर्णं पुनरागान्महाहवम् ।। 2.4.15.२० ।।

अथ देवान्हतान्दृष्ट्वा द्रोणाद्रिमगमद्गुरुः ।।

तावत्तत्र गिरींद्रं तु न ददर्श सुरार्चितः ।। २१ ।।

ज्ञात्वा दैत्यहृतं द्रोणं धिषणो भयविह्वलः ।।

आगत्य दूराद्व्याजह्रे श्वासाऽऽकुलितविग्रहः ।। २२ ।।

पलायध्वं हवाद्देवा नाऽयं जेतुं क्षमो यतः ।।

रुद्रांशसंभवो ह्येष स्मरध्वं शक्रचेष्टितम् ।। २३ ।।

श्रुत्वा तद्वचनं देवा भयविह्वलितास्तदा ।।

दैत्येन वध्यमानास्ते पलायंते दिशो दश ।। २४ ।।

देवान्विद्रावितान्दृष्ट्वा दैत्यैः सागरनंदनः ।।

शंखभेरीजयरवैः प्रविवेशाऽमरावतीम् ।। २५ ।।

प्रविष्टे नगरीं दैत्ये देवाः शक्रपुरोगमाः ।।

सुवर्णाद्रिगुहां प्राप्ता न्यवसन्दैत्यतापिताः।। २६ ।।

ततश्च सर्वेष्वसुरोऽधिकारेष्विंद्रादिकानां विनिवेशयत्तदा ।।

शुंभादिकान्दैत्यवरान्पृथक्पृथक्स्वयं सुवर्णाद्रिगुहामगात्पुनः ।। २७ ।।

इति श्री स्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरविजयप्राप्तिर्नाम पञ्चदशोऽध्यायः ।।१५।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/h5m



।। ।। नारद उवाच ।। ।।

पुनर्दैत्यं समायांतं दृष्ट्वा देवाः सवासवाः ।।

भयप्रकंपिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ।। १ ।।

नमो मत्स्यकूर्मादिनानास्वरूपैः सदाभक्तकार्योद्यतायाऽर्तिहंत्रे ।।

विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदाशंखपद्मारिहस्ताय तेस्तु ।। २ ।।

रमा वल्लभायाऽसुराणां निहंत्रे भुजंगारियानाय पीतांबराय ।।

मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ।। ३ ।।

नमो दैत्यसंतापितामर्त्यदुःखाचलध्वंसदंभोलये विष्णवे ते ।।

भुजंगेशतल्पेशयायार्कचंद्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ।। ४ ।।

।। ।। नारद उवाच ।। ।।

संकष्टनाशनंनाम स्तोत्रमेतत्पठेन्नरः ।।

स कदाचिन्न संकष्टैः पीड्यते कृपया हरेः ।। ५ ।।

इति देवाः स्तुतिं यावत्कुर्वंति दनुजद्विषः ।।

तावत्सुराणामापत्तिर्विज्ञाता विष्णुना तदा ।। ६ ।।

सहसोत्थाय दैत्यारिः सक्रोधः खिन्नमानसः ।।

आरूढो गरुडं वेगाल्लक्ष्मीं वचनमब्रवीत् ।। ७ ।।

।। श्रीभगवानुवाच ।। ।।

जलंधरेण ते भ्रात्रा देवानां कदनं कृतम् ।।

तैराहूतो गमिष्यामि युद्धायाद्य त्वरान्वितः ।। ८ ।।

।। श्रीरुवाच ।। ।।

अहं ते वल्लभा नाथ भक्त्या च यदि सर्वदा ।।

तत्कथं ते मम भ्राता युद्धे वध्यः कृपानिधे ।। ९ ।।

श्रीभगवानुवाच ।। ।।

रुद्रांशसंभवत्वाच्च ब्रह्मणो वचनादपि ।।

प्रीत्या च तव नैवायं मम वध्यो जलंधरः ।। 2.4.16.१० ।।

।। नारद उवाच ।। ।।

इत्युक्त्वा गरुडारूढः शंखचक्रगदासिभृत् ।।

विष्णुर्वेगाद्ययौ योद्धुं यत्र देवाः स्तुवंति ते ।। ११ ।।

अथाऽरुणानुजात्युग्रपक्षवातप्रपीडिताः ।।

वात्या विमर्दिता दैत्या बभ्रमुः खे यथा घनाः ।। १२।।

ततो जलंधरो दृष्ट्वा दैत्यान्वात्याप्रपीडितान् ।।

उद्वृत्तनयनः क्रोधात्ततोविष्णुं समभ्ययात्।। १३ ।।

ततः समभवद्युद्धं विष्णुदैत्येंद्रयोर्महत् ।।

आकाशं कुर्वतोर्बाणैस्तदा निरवकाशवत् ।।१४।।

विष्णुर्दैत्यस्य बाणौघैर्ध्वजं छत्रं धनुर्हयान् ।।

चिच्छेद तं च हृदये बाणेनैकेन ताडयत् ।। १५ ।।

ततो दैत्यः समुत्पत्य गदापाणिस्त्वरान्वितः ।।

आहत्य गरुडं मूर्ध्नि पातयामास भूतले ।। १६ ।।

विष्णुर्गदां स्वखड्गेन चिच्छेद प्रहसन्निव ।।

तावत्स हृदये विष्णुं जघान दृढमुष्टिना ।। १७ ।।

ततस्तौ बाहुयुद्धेन युयुधाते महाबलौ ।।

बाहुभिर्मुष्टिभिश्चैव जानुभिर्नादयन्महीम् ।। १८ ।।

एवं तौ सुचिरं युद्धं कृत्वा विष्णुः प्रतापवान् ।।

उवाच दैत्यराजानं मेघगंभीरनिस्वनः ।। १९ ।।

।। विष्णुरुवाच ।। ।।

वरं वरय दैत्येंद्र प्रीतोऽस्मि तव विक्रमात् ।।

अदेयमपि ते दद्मि यत्ते मनसि वर्तते ।। 2.4.16.२० ।। ।।

।। जलंधर उवाच ।। ।।

यदि भावुक तुष्टोऽसि वरमेनं ददस्व मे ।।

मद्भगिन्या सहाऽद्य त्वं मद्गृहे सगणो वस ।। २१ ।।

।। नारद उवाच ।। ।।

तथेत्युक्ता स भगवान्सर्वदेवगणैः सह ।।

तदा जलंधरपुरमगमद्रमया सह ।। २२ ।।

जलंधरस्तु देवानामधिकारेषु दानवान् ।।

स्थापयित्वा महाबाहुः पुनरागान्महीतलम् ।। २३ ।।

देवगंधर्वसिद्धेषु यत्किंचिद्रत्नसंयुतम् ।।

तदात्मवशगं कृत्वाऽतिष्ठत्सागरनंदनः ।। २४ ।।

पातालभुवने दैत्यं निशुंभं स महाबलम् ।।

स्थापयित्वा स शेषादीनानयद्भूतलं बली ।। २५ ।।

देवगंधर्वसिद्धाऽऽद्यान्सर्पराक्षसमानुषान्।।

स्वपुरे नागरान्कृत्वा शशास भुवनत्रयम् ।। २६ ।।

एवं जलंधरः कृत्वा देवान्स्ववशवर्तिनः ।।

धर्मेण पालयामास प्रजाः पुत्रानिवौरसान्।।२७।।

न कश्चिद्व्याधितो नैव दुःखी नैव कृतस्तथा ।।

न दीनो दृश्यते तस्मिन्धर्माद्राज्यं प्रशासति ।।२८।।

एवं महीं शासति दानवेंद्रे धर्मेण सम्यक्च दिदृक्षयाऽहम् ।।

कदाचिदागामथ तस्य लक्ष्मीं विलोकितुं श्रीरमणं च सेवितुम् ।। २९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरसभायां नारदागमनंनाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १७

https://sa.wikisource.org/s/h5n
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

स मां प्रोवाच विधिवत्संपूज्यातीव भक्तिमान् ।।

संप्रहस्य तदा वाक्यं स्नेहपूर्वं च वै नृप ।। १ ।।

कुत आगम्यते ब्रह्मन्किंचिद्दृष्टं त्वया प्रभो ।।

यदर्थमिह चाऽऽयातस्तदाऽऽज्ञापय मां मुने ।।२।।

।। नारद उवाच ।। ।।

गतः कैलासशिखरं दैत्येंद्राहं यदृच्छया ।।

तत्रोमया समासीनं दृष्टवानस्मि शंकरम्।।३।।

योजनायुतविस्तीर्णे कल्पवृक्षमहावने ।।

कामधेनुशताकीर्णे चिंतामणिसुदीपिते ।।४।।

तद्दृष्ट्वा महदाश्चर्यं विस्मयो मेऽभवत्तदा ।।

क्वाऽपीदृशी भवेदृद्धिस्त्रैलोक्ये वा न वेति च ।।५।।

तदा तवाऽपि दैत्येंद्र समृद्धिः संस्मृता मया ।।

तद्विलोकनकामोऽस्मि त्वत्सान्निध्यमिहाऽऽगतः ।। ६ ।।

त्वत्समृद्धिमिमां पश्यन्स्त्रीरत्नरहितां ध्रुवम् ।।

तर्कयामि शिवादन्यस्त्रिलोक्यां न समृद्धिमान् ।। ७ ।।

अप्सरोनागकन्याद्या यद्यपि त्वद्वशे स्थिताः ।।

तथाऽपि ता न पार्वत्या रूपेण सदृशा ध्रुवम् ।। ८ ।।

यस्या लावण्यजलधौ निमग्नश्चतुराननः ।।

स्वधैर्यममुचत्पूर्वं तया काऽन्योपमीयते ।। ९ ।।

वीतरागोऽपि हि यथा मदनारिः स्वलीलया ।।

सौंदर्यगहनेऽभ्रामि शफरीरूपया पुरा ।। 2.4.17.१० ।।

यस्याः पुनः पुनः पश्यन्रूपं धाताऽपि सर्जने ।।

ससर्जाऽप्सरसस्तासां तत्समैकाऽपि नाभवत् ।। ११ ।।

अतः स्त्रीरत्नसंभोक्तुः समृद्धिस्तस्य सा वरा ।।

तथा न तव दैत्येंद्र सर्वरत्नाऽधिपस्य च ।। १२ ।।

एवमुक्त्वा तमामंत्र्य गते सति स दैत्यराट् ।।

तद्रूप श्रवणादासीदनंगज्वरपीडितः ।। १३ ।।

अथ संप्रेषयामास स दूतं सिंहिकासुतम् ।।

त्र्यंबकायाऽपि च तदा विष्णुमायाविमोहितः ।। १४ ।।

कैलासमगमद्राहुः कुर्वञ्छुक्लेंदुवर्चसम् ।।

कार्ष्ण्येन कृष्णपक्षेन्दुवर्चसं स्वांगजेन तम् ।। १५ ।।

निवेदितस्तदेशाय नंदिना प्रविवेश सः ।।

त्र्यंबकभ्रूलतासंज्ञा प्रेरितो वाक्यमब्रवीत् ।। १६ ।।

।। राहुरुवाच ।। ।।

देवपन्नगसेव्यस्य त्रैलोक्याधिपतेः प्रभोः ।।

सर्वरत्नेश्वरस्य त्वमाज्ञां शृणु वृषध्वज ।। १७ ।।

स्मशानवासिनो नित्यमस्थिभारवहस्य च ।।

दिगंबरस्य ते भार्या कथं हैमवती शुभा ।। १८ ।।

अहं रत्नाधिनाथोऽस्मि सा च स्त्रीरत्नसंज्ञिका ।।

तस्मान्ममैव सा योग्या नैव भिक्षाशिनस्तव ।। १९ ।।

।। नारद उवाच ।। ।।

वदत्येवं तदा राहौ भ्रूमध्याच्छूलपाणिनः ।।

अभवत्पुरुषो रौद्रस्तीव्राशनिसमस्वनः ।। 2.4.17.२० ।।

सिंहास्यः प्रललज्जिह्वः स ज्वलन्नयनो महान् ।।

ऊर्ध्वकेशः शुष्कतनुर्नृसिंह इव चाऽपरः ।। २१ ।।

स तं खादितुमायांतं दृष्ट्वा राहुर्भयातुरः ।।

अधावत स वेगेन बहिः स च दधार तम् ।। २२ ।।

स च राहुर्महाबाहो मेघगम्भीरया गिरा ।।

उवाच देवदेव त्वं पाहि मां शरणागतम् ।।२३।।

ब्राह्मणं मां महादेव खादितुं समुपागतः ।।

महादेवो वचः श्रुत्वा ब्राह्मणस्य तदाऽब्रवीत् ।।२४।।

नैवाऽसौ वध्यतामेति दूतोऽयं परवान्यतः ।।

मुंचेति पुरुषः श्रुत्वा राहुं तत्याज्य सोंऽबरे ।।२५।।

राहुं त्यक्त्वाऽथ पुरुषस्तदा रुद्रं व्यजिज्ञपत् ।।

।। पुरुष उवाच ।। ।।

क्षुधा मां वाधतेऽत्यंतं क्षुत्क्षामश्चाऽस्मि सर्वथा ।। २६ ।।

किं भक्षयामि देवेश तदाज्ञापय मां प्रभो ।।

।। ईश्वर उवाच ।। ।।

भक्षयस्वात्मनः शीघ्रं मांसं त्वं हस्तपादयोः ।। २७ ।।

।। नारद उवाच ।। ।।

स शिवेनैवमाज्ञप्तश्चखाद पुरुषः स्वकम्।।

हस्तपादोद्भवं मांसं शिरःशेषो यथाऽभवत् ।। २८ ।।

दृष्ट्वा शिरोऽवशेषं तं सुप्रसन्नस्तदा शिवः ।।

उवाच भीमकर्माणं पुरुषं जातविस्मयः ।। २९ ।।

।। ईश्वर उवाच ।। ।।

त्वं कीर्तिमुखसंज्ञो हि भव मद्द्वारिगः सदा ।।

त्वदर्चां ये न कुर्वंति नैव ते मे प्रियंकराः ।। 2.4.17.३० ।। *

।। नारद उवाच ।। ।।

तदा प्रभृति देवस्य द्वारि कीर्तिमुखः स्थितः ।।

नार्चयन्तीह ये पूर्वं तेषामर्चा वृथा भवेत् ।।३१।।

राहुर्विमुक्तो यस्तेन सोऽपि तद्बर्बरे स्थले ।।

अतः स बर्बरोद्भूत इति भूमौ प्रथां गतः ।। ३२ ।।

ततः स राहुः पुनरेव जातमात्मानमस्मिन्निति मन्यमानः ।।

समेत्य सर्वं कथयांबभूव जलंधरायैव विचेष्टितं तत् ।। ३३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोपाख्याने दूतवाक्यकथनंनाम सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/h5o



।। नारद उवाच ।। ।।

जलंधरस्तु तच्छ्रुत्वा कोपाकुलितविग्रहः ।।

निर्जगामाऽऽशु दैत्यानां कोटिभिः परिवारितः ।। १ ।।

गच्छतोऽस्याऽग्रतः शुक्रो राहुर्दृष्टिपथेऽभवत् ।।

मुकुटश्चाऽपतद्भूमौ वेगात्प्रस्खलितस्तदा ।। २।।

दैत्यसैन्याऽऽवृतैस्तस्य विमानानां शतैस्तदा ।।

व्यराजत नभःपूर्णं प्रावृषीव यथा घनैः ।। ।। ३ ।।

तस्योद्योगं तदा दृष्ट्वा देवाः शक्रपुरोगमाः ।।

अलक्षितास्तदा जग्मुः शूलिनं तं व्यजिज्ञपुः ।। ४ ।।

।। देवा ऊचुः ।। ।।

न जानासि कथं स्वामिन्देवापतिमिमां विभो ।।

तदस्मद्रक्षणार्थाय जहि सागरनंदनम् ।। ५ ।।

।। नारद उवाच ।।

इति देववचः श्रुत्वा प्रहस्य वृषभध्वजः।।

महाविष्णुं समाहूय वचनं चेदमब्रवीत्।। ६ ।।

।। ईश्वर उवाच ।।

जलंधरः कथं विष्णो न हतः संगरे त्वया ।।

तद्गृहं चाऽपि यातोऽसि त्यक्त्वा वैकुंठमात्मनः ।। ७ ।।

।। विष्णुरुवाच ।। ।।

तवांशसंभवत्वाच्च भ्रातृत्वाच्च तथा श्रियः ।।

न मया निहतः संख्ये त्वमेनं जहि दानवम् ।। ८ ।।

।। ईश्वर उवाच ।।

नायमेभिर्महातेजाः शस्त्रास्त्रैर्वध्यते मया ।।

देवैः सह स्वतेजोंशं शस्त्रार्थं दीयतां मम ।। ९ ।।

।। नारद उवाच ।। ।।

अथ विष्णुमुखा देवाः स्वतेजांसि ददुस्तदा ।।

तान्यैक्यमागतानीशो दृष्ट्वा स्वं चामुचन्महः ।। 2.4.18.१० ।।

तेनाकरोन्महादेवो महसा शस्त्रमुत्तमम् ।।

चक्रं सुदर्शनं नाम ज्वालामालातिभीषणम् ।। ११ ।।

ततः शेषेण च तदा वज्रं च कृतवान्हरिः ।।

तावज्जलंधरो दृष्टः कैलासतलभूमिषु ।। १२ ।।

हस्त्यश्वरथपत्तीनां कोटिभिः परिवारितः ।।

तं दृष्ट्वा लक्षिता जग्मुर्देवाः सर्वे यथागताः ।।१३।।

गणाश्च समसज्जंत युद्धायाऽतित्वरान्विताः ।।

नन्दीभवक्त्रसेनानीमुखाः सर्वे शिवाज्ञया ।। १४ ।।

अवतेरुर्गणा वेगात्कैलासाद्युद्धदुर्मदाः ।।

ततः समभवद्युद्धं कैलासोपत्यकाभुवि ।। १५ ।।

प्रमथाधिपदैत्यानां घोरशस्त्रास्त्रसंकुलम् ।।

भेरीमृदंगशंखौघ निःस्वनैर्वीरहर्षणैः ।। १६ ।।

गजाश्वरथशब्दैश्च नादिता भूर्व्यकंपत ।।

शक्तितोमरबाणौघमुसलप्रासपट्टिशैः ।।१७।।

व्यराजत नभः पूर्णमुल्काभिरिव संवृतम् ।।

निहतैरथनागाश्वपत्तिभिर्भूर्व्यराजत ।। १८ ।।

वज्राहताचलशिरःशकलैरिव संवृता ।।

प्रमथाहतदैत्यौघैर्दैत्याहतगणैस्तथा ।। १९ ।।

वसासृङ्मांसपंकाढ्या भूरगम्याऽभवत्तदा ।।

प्रमथाहतदैत्यौघान्भार्गवः समजीवयत् ।।2.4.18.२०।।

युद्धे पुनः पुनस्तत्र मृतसंजीविनीबलात् ।।

तं दृष्ट्वा व्याकुलीभूता गणाः सर्वे भयान्विताः ।।

शशंसुर्देवदेवाय तत्सर्वं शुक्रचेष्टितम् ।। २१ ।।

अथ रुद्रमुखात्कृत्या बभूवाऽतीवभीषणा ।।

तालजंघा दरीवक्त्रा स्तनापीडितभूरुहा ।।२२।।

सा युद्धभूमिमासाद्य भक्षयंती महासुरान् ।।

भार्गवं स्वभगे धृत्वा जगामांतर्हिता नभः ।।२३।।

विधृतं भार्गवं दृष्ट्वा दैत्यसैन्यं गणास्तदा ।।

अम्लानवदना हर्षान्निजघ्नुर्युद्धदुर्मदाः ।। २४ ।।

अथाभज्यत दैत्यानां सेना गणभयार्दिता ।।

वायुवेगेनाहतेव प्रकीर्णा तृणसंततिः ।।

भग्नां गणभयात्सेनां दृष्ट्वामर्षयुता ययुः ।।

निशुंभशुंभौ सेनान्यौ कालनेमिश्च वीर्यवान् ।।२६ ।।

त्रयस्ते वारयामासुर्गणसेनां महाबलाः ।।

मुञ्चतः शरवर्षाणि प्रावृषीव बलाहकाः ।। २७ ।।

ततो दैत्यशरौघास्ते शलभानामिव व्रजाः ।।

रुरुधुः खं दिशः सर्वा गणसेनामकंपयन् ।। २८ ।।

गणाः शरशतैर्भिन्ना रुधिरासारवर्षिणः ।।

वसंते किंशुकाभासा न प्राज्ञायत किंचन ।। ।। २९ ।।

पतिताः पात्यमानाश्च भिन्नाश्छिन्नास्तदा गणाः ।।

त्यक्त्वा संग्रामभूमिं ते सर्वेपि विमुखाऽभवन् ।। 2.4.18.३० ।।

ततः प्रभग्नं स्वबलं विलोक्य शैलादिलंबोदरकार्तिकेयाः ।।

त्वरान्विता दैत्यवरान्प्रसह्य निवारयामासुरमर्षिणस्ते ।। ३१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोपाख्याने रुद्रसेनापराभवोनामाऽष्टादशोऽध्यायः ।। १८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/h5p



।। नारद उवाच ।। ।।

ते गणाधिपतीन्दृष्ट्वा नंदीभमुखषण्मुखान् ।।

अमर्षादभ्यधावंत द्वंद्वयुद्धाय दानवाः ।। १ ।।

नंदिनं कालनेमिश्च शुम्भो लंबोदरं तथा ।।

निशुम्भः षण्मुखं वेगादभ्यधावत दंशितः ।। २ ।।

निशुम्भः कार्तिकेयस्य मयूरं पंचभिः शरैः ।।

हृदि विव्याध वेगेन मूर्च्छितः स पपात च ।। ३ ।।

ततः शक्तिधरः शक्तिं यावज्जग्राह रोषितः ।।

तावन्निशुंभो वेगेन स्वशक्त्या तमपातयत् ।। ४ ।।

नंदीश्वरः शरव्रातैः कालनेमिमवध्यत ।।

सप्तभिश्च हयान्केतुं त्रिभिः सारथिमच्छिनत् ।। ५ ।।

कालनेमिस्तु संक्रुद्धो धनुश्चिच्छेद नंदिनः ।।

तदपास्य स शूलेन तं वक्षस्यहनद्बली ।। ६ ।।

स शूलभिन्नहृदयो हताश्वो हतसारथिः ।।

अद्रेः शिखरमामुच्य शैलादिं सोऽप्यपातयत् ।।७ ।।

अथ शुम्भो गणेशश्च रथमूषकवाहनौ ।।

युध्यमानौ शरव्रातैः परस्परमविध्यताम् ।। ८ ।।

गणेशस्तु तदा शुम्भं हृदि विव्याध पत्रिणा ।।

सारथिं च त्रिभिर्बाणैः पातयामास भूतले ।। ९ ।।

ततोऽतिक्रुद्धः शुम्भोऽपि बाणषष्ट्या गणाधिपम् ।।

मूषकं च त्रिभिर्विद्ध्वा ननाद जलदस्वनः ।। 2.4.19.१० ।।

मूषकः शरभिन्नांगश्चचाल दृढवेदनः ।।

लंबोदरश्च पतितः पदातिरभवन्नृप ।। ११ ।।

ततो लंबोदरः शुम्भं हत्वा परशुना हृदि ।।

अपातयत्तदा भूमौ मूषकं चारुहत्पुनः ।। १२ ।।
कालनेमिर्निशुंभश्चाऽप्युभौ लंबोदरं शरैः ।।
युगपज्जघ्नतुः क्रोधात्तोत्रैरिव महाद्विपम् ।। १३ ।।
तं पीडयमानमालोक्य वीरभद्रो महाबलः ।।
अभ्यधावत वेगेन भूतकोटियुतस्तदा ।। १४ ।।
कूष्मांडभैरवाश्चाऽपि वेताला योगिनीगणाः ।।
पिशाचयोगिनीसंघा गणाश्चाऽपि तमन्वयुः ।। १५ ।।
ततः किलकिलाशब्दैः सिंहनादैः सुघर्घरैः ।।
भेरीतालमृदंगैश्च पृथिवी समकंपत ।। १६ ।।
ततो भूतान्यधावंत भक्षयंतिस्म दानवान्।।
उत्पतंत्यापतंति स्म ननृतुश्च रणांगणे ।। १७ ।।
नन्दी च कार्तिकेयश्च समाश्वस्य त्वरत्वितौ ।।
निजघ्नतू रणे दैत्यान्निरंतरशरव्रजैः ।। १८ ।।
छिन्नभिन्ना हतैर्दैत्यैः पतितैर्भक्षितैस्तदा ।।
व्याकुला साऽभवत्सेना विषण्णवदना तदा ।। १९ ।।
प्रविध्वस्तां तदा सेनां दृष्ट्वा सागरनंदनः ।।
रथेनाऽतिपताकेन गणानभिययौ बली ।। 2.4.19.२० ।।
हस्त्यश्वरथसंह्रादाः शंखभेरीस्वनास्तथा ।।
अभवन्सिंहनादाश्च सेनयोरुभयोस्तदा ।। २१ ।।
जलंधरशरव्रातैर्नीहारपटलैरिव ।।
द्यावापृथिव्योराच्छिन्नमंतरं समपद्यत ।। २२ ।।
गणेशं पंचभिर्विद्ध्वा शैलादिं नवभिः शरैः ।।
वीरभद्रं च विंशत्या ननाद जलदस्वनः ।। २३ ।।
कार्तिकेयस्तदा दैत्यं शक्त्या विव्याध सत्वरः ।।
युयुधे शक्तिनिर्भिन्नः किंचिद्व्याकुलमानसः ।। २४ ।।
ततः क्रोधपरीताक्षः कार्तिकेयं जलंधरः ।।
गदया ताडयामास स च भूमितलेऽपतत् ।। २५ ।।
तथैव नंदिनं वेगादपातयत भूतले ।।

ततो गणेश्वरः क्रुद्धो गदां परशुनाऽहनत् ।। २६ ।।

वीरभद्रस्त्रिभिर्बाणैर्हृदि विव्याध दानवम् ।।

सप्तभिश्च हयान्केतुं धनुश्छत्रं च चिच्छिदे ।। २७ ।।

ततोऽतिक्रुद्धो दैत्येंद्रः शक्तिमुद्यम्य दारुणाम् ।।

गणेशं पातयामास रथं चाऽन्यमथाऽऽरुहत् ।।२८।।

अभ्ययादथ वेगेन वीरभद्रं रुषान्वितः ।।

ततस्तौ सूर्यसंकाशौ युयुधाते परस्परम् ।। २९ ।।

वीरभद्रः पुनस्तस्य हयान्बाणैरपातयत् ।।

धनुश्चिच्छेद दैत्येंद्रः पुप्लुवे परिघायुधः ।। 2.4.19.३० ।।

स वीरभद्रं त्वरयाऽभिगम्य जघान दैत्यः परिघेण मूर्ध्नि ।।

स चाऽपि वीरः प्रविभिन्नमूर्द्धा पपात भूमौ रुधिरं समुद्गिरन्।। ३१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोपाख्याने वीरभद्रपतननामैकोनविंशोऽध्यायः ।। १९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २०



।। ।। नारद उवाच ।। ।।

पतितं वीरभद्रं तु दृष्ट्वा रुद्रगणा भयात् ।।

अगमंस्ते रणं हित्वा क्रोशमाना महेश्वरम् ।। १ ।।

अथ कोलाहलं श्रुत्वा गणानां चंद्रशेखरः ।।

अभ्ययाद्वृषभारूढः संग्रामं प्रहसन्निव ।। २ ।।

रुद्रमायांतमालोक्य सिंहनादैर्गणाः पुनः ।।

निवृत्ताः संगरे दैत्यान्निर्जघ्नुः शरवृष्टिभिः ।। ३ ।।

दैत्याश्च भीषणं दृष्ट्वा सर्वे चैव विदुद्रुवुः ।।

कार्तिकव्रतिनं दृष्ट्वा पातकानीव तद्भयात् ।।४।।

जलंधरोथ तान्दैत्यान्निवृत्तान्प्रेक्ष्य संगरे ।।

रोषादधावच्चंडीशं मुंचन्बाणान्सहस्रशः ।। ५ ।।

शुंभो निशुंभोऽश्वमुखः कालनेमिर्बलाहकः ।।

खड्गरोमा प्रचंडश्च घस्मराद्याः शिवं ययुः ।। ६ ।।

बाणांधकारसंछन्नं दृष्ट्वा गणबलं शिवः ।।

बाणजालमवाच्छिद्य स्वबाणैरावृणोन्नभः ।। ७ ।।

दैत्यांश्च बाणवात्याभिः पीडितानकरोत्तदा ।।

प्रचंडबाणजालौघैरपातयत भूतले ।। ८ ।।

खड्गरोम्णः शिरः कायात्तदा परशुनाऽच्छिनत् ।।

बलाहकस्य च शिरः खट्वांगेनाऽकरोद्द्विधा ।। ९ ।।

बद्ध्वा च घस्मरं दैत्यं पाशेनाभ्यहनद्भुवि ।।

वृषभेण हताः केचित्केचिद्बाणैर्निपातिताः ।। 2.4.20.१० ।।

न शेकुरसुराः स्थातुं गजाः सिंहार्दिता इव ।।

ततः क्रोधपरीतात्मा वेगाद्रुद्रं जलंधरः ।।११।।

आह्वयामास समरे तीव्राशनिसमस्वनः ।।

।। जलंधर उवाच ।। ।।

युध्यस्व च मया सार्द्धं किमेभिर्निहितैस्तव ।। १२ ।।

यच्च किंचिद्बलं तेऽस्ति तद्दर्शय जटाधर ।।

इत्युक्त्वा बाणसप्तत्या जघान वृषभध्वजम् ।। १३ ।।

तान्प्राप्तान्निशितैर्बाणैश्चिच्छेद प्रहसन्निव।।

ततो हयान्ध्वजं छत्रं धनुश्चिच्छेद शक्तिभिः।।१४।।

स च्छिन्नधन्वा विरथो गदामुद्यम्य वेगवान् ।।

अभ्यधावच्छिवस्तावद्गदां बाणैर्द्विधाऽच्छिनत् ।।१५।।

तथाऽपि मुष्टिमुद्यम्य ययौ रुद्रं जिघांसया ।।

तावच्छिवेन बाणौघैः क्रोशमात्रमपाकृतः।।१६।।

ततो जलंधरो दैत्यो मत्वा रुद्रं बलाधिकम् ।।

ससर्ज मायां गांधर्वीमद्भुतां रुद्रमोहिनीम् ।। १७ ।।

ततो जगुश्च ननृतुर्गंधर्वाप्सरसां गणाः ।।

तालवेणुमृदंगाद्यान्वादयंति स्म चाऽपरे ।। १८ ।।

तद्दृष्ट्वा महदाश्चर्यं रुद्रो नादविमोहितः ।।

पतितान्यपि शस्त्राणि करेभ्यो न विवेद सः ।। ।।१९।।

एकाग्रीभूतमालोक्य रुद्रं दैत्यो जलंधरः ।।

कामार्तः स जगामाशु यत्र गौरी स्थिताऽभवत् ।।2.4.20.२०।।

युद्धे शुंभनिशुंभाख्यौ स्थापयित्वा महाबली ।।

दशदोर्दंडपचास्यस्त्रिनेत्रश्च जटाधरः ।।२१।।

महावृषभमारूढः स बभूव जलंधरः ।।

अथो रुद्रं समायांतमालोक्य भववल्लभा।।२२।।

अभ्यcraनयौ सखीमध्यात्तद्दर्शनपथेऽभवत् ।।

यावद्ददर्श चार्वंगी पार्वती दनुजेश्वरः ।। २३ ।।

तावत्स्ववीर्यं मुमुचे जडांगश्चाऽभवत्तदा ।।

अथ ज्ञात्वा तदा गौरी दानवं भयविह्वला ।। २४ ।।

जगामाऽन्तर्हिता वेगात्सा तदोत्तरमानसे ।।

तामदृष्ट्वा ततो दैत्यः क्षणाद्विद्युल्लतामिव ।। २५ ।।

जवेनाऽऽगात्पुनर्युद्धं यत्र देवो वृषध्वजः ।।

पार्वत्यपि भयाद्विष्णुं सस्मार मनसा तदा ।। २६ ।।

तावद्ददर्श तं देवं सूपविष्टं समीपगम् ।।

।। पार्वत्युवाच।। ।।

विष्णो जलंधरो दैत्यः कृतवान्परमाद्भुतम् ।।२७।।

तत्किं न विदितं तेऽस्ति चेष्टितं तस्य दुर्मतेः ।।

।। विष्णुरुवाच ।। ।।

तेनैव दर्शितः पंथा वयमप्यन्वयामहे ।। २८ ।।

नाऽन्यथा स भवेद्वध्यः पातिव्रत्यसुरक्षित् ।।

।। नारद उवाच ।। ।।

जगाम विष्णुरित्युक्त्वा पुनर्जालंधरं पुरम् ।। २९ ।।

अथ रुद्रश्च गंधर्वाऽनुगतः संगरे स्थितः ।।

अंतर्धानं गतां मायां दृष्ट्वा स बुबुधे तदा ।। 2.4.20.३० ।।

ततो भवो विस्मितमानसः पुनर्जगाम युद्धाय जलंधरं रुषा ।।

स चाऽपि दैत्यः पुनरागतं शिवं दृष्ट्वा शरौघैः समवाकिरद्रणे ।। ३१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोपाख्याने शिवजलंधरयुद्धवर्णनंनाम विंशोऽध्यायः ।।२०।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २१

https://sa.wikisource.org/s/h5w
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

विष्णुर्जलंधरं गत्वा तद्दैत्यपुटभेदनम् ।।

पातिव्रत्यस्य भंगाय वृंदायाश्चाऽकरोन्मतिम् ।। १ ।।

अथ वृंदारका देवी स्वप्नमध्ये ददर्श ह ।।

भर्तारं महिषाऽऽरूढं तैलाभ्यक्तं दिगंम्बरम् ।। २।।

कृष्णप्रसूनभूषाढ्यं क्रव्यादगणसेवितम् ।।

दक्षिणाशागतं मुण्डं तमसाप्याऽऽवृतं तदा ।। ३ ।।

स्वपुरं सागरे मग्नं सहसैवाऽऽत्मना सह ।।

ततः प्रबुद्धा सा बाला तत्स्वप्नं प्रविचिन्वती ।। ४ ।।

ददर्शोदितमादित्यं सच्छिद्रं निष्प्रभं मुहुः ।।

तदनिष्टमिति ज्ञात्वा रुदती भयविह्वला ।। ५ ।।

कुत्रचिन्नाऽलभच्छर्म गोपुराट्टालभूमिषु ।।

ततः सखीद्वययुता नगरोद्यानमागमत् ।। ६ ।।

तत्राऽपि साऽभ्रमद्बाला नाऽलभत्कुत्रचित्सुखम् ।।

वनाद्वनांतरं याता नैव वेदात्मनस्तदा ।। ७ ।।

ततः सा भ्रमती बाला ददर्शाऽतीवभीषणौ ।।

राक्षसौ सिंहवदनौ दंष्ट्राऽऽननविभीषणौ ।। ८ ।।

तौ दृष्ट्वा विह्वलाऽतीव पलायनपराऽभवत् ।।

ददर्श तापसं शांतं सशिष्यं मौनमास्थितम् ।। ९ ।।

ततस्तत्कण्ठमावृत्य निजां बाहुलतां भयात् ।।

मुने मां रक्ष शरणमागताऽस्मीत्यभाषत ।। 2.4.21.१० ।।

मुनिस्तां विह्वलां दृष्ट्वा राक्षसाऽनुगतां तदा ।।

हुंकारेणैव तौ घोरौ चकार विमुखौ रुषा ।। ११ ।।

तौ हुंकारभयत्रस्तौ दृष्ट्वा च विमुखौ गतौ ।।

प्रणम्य दंडवद्भूमौ वृन्दा वचनमब्रवीत् ।। १२ ।।

।। वृन्दोवाच ।। ।।

रक्षिताहं त्वया घोराद्भयादस्मात्कृपानिधे ।।

किंचिद्विज्ञस्तुमिच्छामि कृपया तन्निशामय ।। १३ ।।

जलंधरो हि मद्भर्ता रुद्रं योद्धुं गतः प्रभो ।।

स तत्राऽस्ते कथं युद्धे तन्मे कथय सुव्रत ।। १४ ।।

।। नारद उवाच ।। ।।

मुनिस्तद्वाक्यमाकर्ण्य कृपयोर्ध्वमवैक्षत ।।

तावत्कपी समायातौ प्रणम्य चाग्रतः स्थितौ ।। १५ ।।

ततस्तद्भ्रूलतासंज्ञानियुक्तौ गगनं गतौ ।।

गत्वा क्षणार्द्धादागत्य प्रणतावग्रतः स्थितौ ।।

शिरःकबन्धे हस्तौ च गृहीत्वा समुपस्थितौ ।। १६ ।।

शिरःकबंधे हस्तौ च दृष्ट्वाऽब्धितनयस्य सा ।।

पपात मूर्छिता भूमौ भर्तृव्यसनदुःखिता ।। १७ ।।

कमंडलूदकैः सिक्त्वा मुनिनाऽऽश्वासिता तदा ।।

स्वभर्तृभाले सा भालं कृत्वा दीना रुरोद ह ।। १८ ।।

।। वृन्दोवाच ।। ।।

यः पुरा सुखसंवादे विनोदयसि मां प्रभो ।।

स कथं न वदस्यद्य वल्लभा मामनागसम् ।। १९ ।।

येन देवाः सगंधर्वा निर्जिता विष्णुना सह ।।

स कथं तापसेनाऽद्य त्रैलोक्यविजयी हतः ।। 2.4.21.२० ।।

।। नारद उवाच ।। ।।

रुदित्वेति तदा वृन्दा तं मुनिं वाक्यमब्रवीत् ।।

।। वृन्दोवाच ।। ।।

कृपानिधे मुनिश्रेष्ठ जीवयैनं मम प्रियम् ।।२१।।

त्वमेवास्य मुने शक्तो जीवनाय मतो मम

।। नारद उवाच ।। ।।

इति तद्वाक्यमाकर्ण्य प्रहसन्मुनिरब्रवीत् ।। २२ ।।

।। मुनिरुवाच ।। ।।

नाऽयं जीवयितुं शक्तो रुद्रेण निहतो युधि ।।

तथाऽपि त्वत्कृपाविष्ट एनं संजीवयाम्यहम् ।। २३ ।।

।। नारद उवाच ।। ।।

इत्युक्त्वांतर्दधे विप्रस्तावत्सागरनंदनः ।।

वृंदामालिंग्य तद्वक्त्रं चुचुंब प्रीतमानसः ।। २४ ।।

अथ वृन्दाऽपि भर्तारं दृष्ट्वा हर्षितमानसा ।।

रेमे तद्वनमध्यस्था तद्युक्ता बहुवासरम् ।। २५ ।।

कदाचित्सुरतस्यांते दृष्ट्वा विष्णुं तमेव च ।।

निर्भर्त्स्य क्रोधसंयुक्ता वृन्दा वचनमब्रवीत् ।। २६ ।।

।। वृंदोवाच ।। ।।

धिक्त्वदीयं हरे शीलं परदाराभिगामिनः ।।

ज्ञातोऽसि त्वं मया सम्यङ्मायाप्रच्छन्नतापसः ।। २७ ।।

यौ त्वया मायया द्वाःस्थौ स्वकीयौ दर्शितौ मम ।।

तावेव राक्षसौ भूत्वा भार्यां तव हरिष्यतः ।।२८।।

त्वं चाऽपि भार्यादुःखार्तो वने कपिसहायवान् ।।

भ्रम सर्पेश्वरेणाऽयं यस्ते शिष्यत्वमागतः ।। २९।।

इत्युक्त्वा सा तदा वृन्दा प्राविशद्धव्यवाहनम् ।।

विष्णुना वार्यमाणाऽपि तस्यामासक्तचेतसा ।।2.4.21.३०।।

ततो हरिस्तामनुसंस्मरन्मुहुर्वृंदान्वितोभस्मरजोवगुंठितः ।।

तत्रैव तस्थौ सुरसिद्धसंघैः प्रबोध्यमानोऽपि ययौ न शांतिम् ।।३१।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरोपाख्याने वृन्दाग्निप्रवेशवर्णनंनामैकविंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २२



।। नारद उवाच ।। ।।

ततो जलंधरो दृष्ट्वा रुद्रमद्भुतविक्रमम् ।।

चकार मायया गौरीं त्र्यंबकं मोहयन्निव ।। १ ।।

रथोपरि च तां बद्धां रुदन्तीं पार्वतीं शिवः ।।

निशुंभप्रमुखाद्यैश्च वध्यमानां ददर्श सः ।। २ ।।

गौरीं तथाविधां दृष्ट्वा शिवोऽप्युद्विग्नमानसः ।।

अवाङ्मुखः स्थितस्तूष्णीं विस्मृत्य स्वपराक्रमम् ।। ३ ।।

ततो जलंधरो वेगात्त्रिभिर्विव्याध सायकैः ।।

आपुंखमग्रैस्तं रुद्रं शिरस्युरसि चोदरे ।। ४ ।।

ततो जज्ञे स तां मायां विष्णुना च प्रबोधितः ।।

रौद्ररूपधरो जातो ज्वालामालाऽतिभीषणः ।। ५ ।।

तस्याऽतीव महारौद्रं रूपं दृष्ट्वा महासुराः ।।

न शेकुः संमुखे स्थातुं भेजिरे ते दिशो दश ।।६।।

ततः शापं ददौ रुद्रस्तयोः शुंभनिशुंभयोः ।।

मम युद्धादपक्रांतौ गौर्या बध्यौ भविष्यथः ।। ७ ।।

पुनर्जलंधरो वेगाद्ववर्ष निशितैः शरैः ।।

बाणांधकारैः संछन्नं तदा भूमितलं महत् ।। ८ ।।

यावद्रुद्रश्च चिच्छेद तस्य बाणगणं जवात् ।।

तावत्स परिघेणाऽऽशु जघान वृषभं बली ।। ९ ।।

वृषस्तेन प्रहारेण परावृत्तो रणांगणात् ।।

रुद्रेणाऽऽकृष्यमाणोऽपि न तस्थौ रणभूमिषु ।। 2.4.22.१० ।।

ततः परमसंकुद्धो रुद्रो रौद्रवपुर्धरः ।।

चक्रं सुदर्शनं वेगाच्चिक्षेपाऽऽदित्यवर्चसम् ।। ११ ।।

प्रदहद्रोदसी वेगात्पपात वसुधातले ।।

जहार तच्छिरः कायान्महदायतलोचनम् ।। १२ ।।

रथात्कायः पपाताऽस्य नादयन्वसुधातलम् ।।

तेजश्च निर्गतं देहात्तद्रुद्रे लयमागमत् ।। १३ ।।

वृन्दादेहोद्भवं तेजस्तद्गौर्यां विलयं गतम् ।।

अथ ब्रह्मादयो देवा हर्षादुत्फुल्ललोचनाः ।। १४ ।।

प्रणम्य शिरसा रुद्रं शशंसुर्विष्णुचेष्टितम् ।।

।। देवा ऊचुः ।। ।।

महादेव त्वया देवा रक्षिताः शत्रुजाद्भयात् ।। १५ ।।

किंचिदन्यत्समुद्भूतं तत्र किं करवामहे ।।

वृन्दालावण्यसंभ्रांतो विष्णुस्तिष्ठति मोहितः ।। १६ ।।

।। ईश्वर उवाच ।। ।।

गच्छध्वं शरणं देवा विष्णोर्मोहापनुत्तये ।।

शरण्यां मोहिनीं मायां सा वः कार्यं करिष्यति ।। १७ ।।

।। नारद उवाच ।। ।।

इत्युक्त्वांतर्दधे देवः सर्वभूतगणैस्तदा ।।

देवाश्च तुष्टुवुर्मूलप्रकृतिं भक्तवत्सलाम् ।। १८ ।।

।। देवा ऊचुः ।। ।।

यदुद्भवाः सत्त्वरजस्तमोगुणाः सर्गस्थितिध्वंसनिदानकारिणः ।।

यदिच्छया विश्वमिदं भवाऽभवौ तनोति मूलप्रकृतिं नताः स्म ताम् ।। १९ ।।

या हि त्रयोविंशतिभेदशब्दिता जगत्यशेषे समधिष्ठिता परा ।।

यद्रूपकर्माणि जडास्त्रयोऽपि देवा न विद्युः प्रकृतिं नताः स्म ताम् ।। 2.4.22.२० ।।

यद्भक्तियुक्ताः पुरुषास्तु नित्यं दारिद्र्यभीमोहपराभवादीन् ।।

न प्राप्नुवंत्येव हि भक्तवत्सलां सदैव मूलप्रकृतिं नताः स्म ताम् ।। २१ ।।

।। नारद उवाच ।। ।।

स्तोत्रमेतत्त्रिसंध्यं यः पठेदेकाग्रमानसः ।।

दारिद्यमोहदुःखानि न कदाचित्स्पृशंति तम् ।।२२।।

इत्थं स्तुवंतस्ते देवास्तेजोमण्डलमास्थितम् ।।

ददृशुर्गगनं तत्र ज्वालाव्याप्तदिगंतरम् ।। २३ ।।

तन्मध्याद्भारतीं सर्वे शुश्रुवुर्व्योमचारिणीम् ।।

।। शक्तिरुवाच ।। ।।

अहमेव त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः ।। ।। २४ ।।

गौरी लक्ष्मी स्वरा चेति रजःसत्त्वतमोगुणैः ।।

तत्र गच्छत ताः कार्यं विधास्यति च वः सुराः ।। २५ ।।

।। नारद उवाच ।। ।।

शृण्वतामिति तां वाचमंतर्धानमगान्महः ।।

देवानां विस्मयोत्फुल्लनेत्राणां तत्तदा नृप ।। २६ ।।

ततः सर्वेऽपि ते देवा गत्वा तद्वाक्यनोदिताः ।।

गौरीं लक्ष्मीं स्वरां चैव प्रणेमुर्भक्तितत्पराः ।। २७ ।।

ततस्तास्तान्सुरान्दृष्ट्वा प्रणतान्भक्तवत्सलाः ।।

बीजानि प्रददुस्तेभ्यो वाक्यान्यूचुश्च भूमिप ।। २८ ।।

।। देव्य ऊचुः ।। ।।

इमानि तत्र बीजानि विष्णुर्यत्राऽवतिष्ठते ।।

निर्वपध्वं ततः कार्यं भवतां सिद्धिमेष्यति ।। २९ ।। ।।

।। नारद उवाच ।। ।।

ततस्तु हृष्टाः सुरसिद्धसंघाः प्रगृह्य बीजानि विचिक्षिपुस्ते ।।

वृंदान्वितो भूमितले स यत्र विष्णुः सदा तिष्ठति सौख्यहीनः ।। 2.4.22.३० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये जलंधरमुक्तिकथनं नाम द्वाविंशोऽध्यायः ।। २२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २३

https://sa.wikisource.org/s/h32
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

क्षिप्तेभ्यस्तत्र बीजेभ्यो वनस्पत्यस्त्रयोऽभवन् ।।

धात्री च मालती चैव तुलसी च नृपोत्तम ।। १ ।।

धात्र्युद्भवा स्मृता धात्री माभवा मालती स्मृता ।।

गौरीभवा च तुलसी तमःसत्त्वरजोगुणाः ।। २ ।।

स्त्रीरूपिण्यौ वनस्पत्यौ दृष्ट्वा विष्णुस्तदा नृप ।।

उत्तस्थौ संभ्रमाद्वृंदा रूपातिशयविभ्रमः ।।३।।

दृष्ट्वा च याचते मोहात्कामासक्तेन चेतसा ।।

तं चाऽपि तुलसीधात्र्यौ रागेणैव व्यलोकताम्।।४।।

यच्च लक्ष्म्या पुरा बीजमीर्ष्ययैव समर्पितम् ।।

तस्मात्तदुद्भवा नारी तस्मिन्नीर्ष्यापराऽभवत् ।। ५ ।।

अतः सा बर्बरीत्याख्यामवापाऽध विगर्हिताम् ।।

धात्रीतुलस्यौ तद्रागात्तस्य प्रीतिप्रदे सदा ।। ६ ।।

ततो विस्मृतदुःखोऽसौ विष्णुस्ताभ्यां सहैव तु ।।

वैकुण्ठमगमद्धृष्टः सर्वदेव नमस्कृतः ।। ७ ।।

कार्तिकोद्यापने विष्णोस्तस्मात्पूजा विधीयते ।।

तुलसीमूलदेशेऽस्य प्रीतिदा सा यतः स्मृता ।। ८ ।।

तुलसीकाननं राजन्गृहे यस्याऽवतिष्ठते ।।

तद्गृहं तीर्थरूपं तु नाऽऽयांति यमकिंकराः ।। ९ ।।

सर्वपापहरं नित्यं कामदं तुलसीवनम् ।।

रोपयंति नराः श्रेष्ठास्ते न पश्यंति भास्करिम् ।। 2.4.23.१० ।।

दर्शनं नर्मदायास्तु गंगास्नानं तथैव च ।।

तुलसीवनसंसर्गः सममेव त्रयं स्मृतम् ।। ११ ।।

रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम् ।।

तुलसी दहते पापं वाङ्मनःकायसंचितम् ।। १२ ।।

तुलसीमंजरीभिर्यः कुर्याद्धरिहराऽर्चनम् ।।

न स गर्भगृहं याति मुक्तिभागी न संशयः ।। १३ ।।

पुष्कराद्यानि तीर्थानि गंगाद्याः सरितस्तथा ।।

वासुदेवादयो देवास्तिष्ठंति तुलसीदले ।। १४ ।।

तुलसीमंजरीयुक्तो यस्तु प्राणान्विमुंचति ।।

यमोऽपि नेक्षितुं शक्तो युक्तं पापशतैरपि ।। १५ ।।

विष्णोः सायुज्यमाप्नोति सत्यं सत्यं नृपोत्तम ।।

तुलसीकाष्ठजं यस्तु चंदनं धारयेन्नरः ।। १६ ।।

तद्देहं न स्पृशेत्पापं क्रियमाणमपीह यत् ।।

तुलसीविपिनच्छाया यत्रयत्र भवेन्नृप ।। १७ ।।

तत्र श्राद्धं प्रकर्तव्यं पितॄणां दत्तमक्षयम् ।।

धात्रीफलविमिश्रैश्च तुलसीपत्रमिश्रितैः ।। १८ ।।

जलैः स्नाति नरस्तस्य गंगास्नानफलं स्मृतम् ।।

देवार्चनं नरः कुर्याद्धात्रीपत्रैः फलैस्तथा ।। १९ ।।

सुवर्णमणिमुक्तौघैरर्चनस्याप्नुयात्फलम् ।।

तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके ।। ।। 2.4.23.२० ।।

नित्यं धात्रीं समाश्रित्य तिष्ठंत्यर्के तुलास्थिते ।।

द्वादश्यां तुलसीपत्रं धात्रीपत्रं तु कार्तिके ।। २१ ।।

लुनाति स नरो गच्छेन्निरयानतिगर्हितान्।।

धात्रीतुलस्योर्माहात्म्यमपि देवश्चतुर्मुखः ।।

न समर्थो भवेद्वक्तुं यथा देवस्य शार्ङ्गिणः ।। २२ ।।

धात्रीतुलस्युद्भवकारणं यः शृणोति यः श्रावयते च भक्त्या ।।

विधूतपाप्मा सह पूर्वजैः स्वैः स्वर्गं व्रजत्यग्र्यविमानसंस्थैः ।।२३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धात्रीतुलस्युत्पत्तिवर्णनंनाम त्रयोविंशोऽध्यायः।। २३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २४

https://sa.wikisource.org/s/h5y
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। पृथुरुवाच ।। ।।

यदूर्जव्रतिनः पुंसः फलं महदुदाहृतम् ।।

तत्पुनर्ब्रूहि माहात्म्यं केन चीर्णमिदं शुभम् ।। १ ।।

।। नारद उवाच ।। ।।

आसीत्सह्याद्रिविषये करवीरपुरे पुरा ।।

ब्राह्मणो धर्मवित्कश्चिद्धर्मदत्तेति विश्रुतः ।। २ ।।

विष्णुव्रतकरः सम्यग्विष्णुपूजारतः सदा ।।

कदाचित्कार्तिके मासि हरिजागरणाय सः ।। ३ ।।

रात्र्यां तुर्यावशेषायां जगाम हरिमदिरम्।।

हरिपूजोपकरणान्प्रगृह्य व्रजता तदा ।।४।।

तेन दृष्टा समायाता राक्षसी भीमदर्शना ।।

तां दृष्ट्वा भयवित्रस्तः कंपितावयवस्तदा ।। ५ ।।

पूजोपकरणैः सर्वैः पयोभिश्चाहनद्भयात् ।।

संस्मृत्य तद्धरेर्नाम तुलसीयुक्तवारिणा ।।

तेन वै हतमात्रे तु पापं तस्या ह्यगाल्लयम् ।। ६ ।।

अथ संस्मृत्य सा पूर्वजन्मकर्मविपाकजाम् ।।

स्वां दशामब्रवीद्विप्रं दंडवच्च प्रणम्य वै ।। ७ ।।

।। कलहोवाच ।। ।।

पूर्वकर्मविपाकेन दशामेतां गतास्म्यहम् ।।

तत्कथं नु पुनर्विप्र प्रयास्याम्युत्तमां गतिम् ।। ८ ।।

।। नारद उवाच ।। ।।

तां दृष्ट्वा प्रणतां सम्यग्वदमानां स्वकर्म तत् ।।

अतीव विस्मितो विप्रस्तदा वचनमब्रवीत् ।। ९ ।। ।।

।। धर्मदत्त उवाच ।। ।।

केन कर्मविपाकेन त्वं दशामीदृशीं गता ।।
कुत्रत्या का च किं शीला तत्सर्वं कथयस्व मे ।।2.4.24.१०।।
।। कलहोवाच ।। ।।
सौराष्ट्रनगरे ब्रह्मन्भिक्षुर्नामाऽभवद्द्विजः ।।
तस्याहं गृहिणी पूर्वं कलहाख्याऽतिनिष्ठुरा ।। ११ ।।
न कदाचिन्मया भर्तुर्वचसाऽपि शुभं कृतम् ।।
नाऽर्पितं तस्य मिष्टान्नं भर्तुर्वचनशीलया ।।१२।।
कलहप्रियया नित्यं मयोद्विग्नमना यदा ।।
परिणेतुं यदाऽन्यां स मतिं चक्रे पतिर्मम ।। १३ ।।
ततो गरं समादाय प्राणास्त्यक्ता मया द्विज ।।
अथ बद्ध्वा बध्यमानां मां निन्युर्यमकिंकराः ।। १४ ।।
यमश्च मां तदा दृष्ट्वा चित्रगुप्तमपृच्छत ।। ।। १५ ।।
।। यम उवाच ।। ।।
अनया किं कृतं कर्म चित्रगुप्त विलोकय ।।
प्राप्नोत्वेषा च तत्कर्म शुभं वा यदि वाऽशुभम् ।। १६ ।।
।। ।। कलहोवाच ।। ।।
चित्रगुप्तस्तदा वाक्यं भर्त्सयन्मामुवाच सः ।।
।। चित्रगुप्त उवाच ।। ।।
अनया तु कृतं कर्म शुभं किंचिन्न विद्यते ।। १७ ।।
मिष्टान्नं भुंजमानेयं न भर्तरि तदर्पितम् ।।
अतश्च वल्गुलीयोन्यां स्वविष्ठादाऽवतिष्ठतु ।। १८ ।।
भर्तुर्द्वेषात्तदाप्येषा नित्यं कलहकारिणी ।।
विष्ठादां सूकरीं योनिं तस्मात्तिष्ठत्वियं हरे ।। १९ ।।
पाकभांडे सदा भुंक्ते भुंक्ते चैका यतस्ततः ।।
तस्मादेषा बिडाल्यस्तु स्वजाताऽपत्यभक्षिणी ।। 2.4.24.२० ।।
भर्तारमपि चोद्दिश्य ह्यात्मघातः कृतोऽनया ।।
तस्मात्प्रेतशरीरेऽपि तिष्ठत्वेकाऽतिनिंदिता ।। २१ ।।
अतश्चैषा मरुद्देशं प्रापितव्या भटैरियम् ।।

तत्र प्रेतशरीरस्था चिरं तिष्ठत्वियं ततः ।। २२ ।।

ऊर्ध्वं योनित्रयं चैषा भुनक्त्वशुभकारिणी।।२३।।

।। कलहोवाच ।। ।।

साहं पंचशताब्दानि प्रेतदेहे स्थिता किल।।

क्षुतृड्भ्यां पीडिताऽऽविश्य शरीरं वणिजस्य च।।

आयाता दक्षिणं देशं कृष्णावेण्योश्च संगमम् ।। २४ ।।

तत्तीरं संश्रिता यावत्तावत्तस्य शरीरतः ।।

शिवविष्णुगणैर्दूरमपकृष्टा बलादहम् ।। २५ ।।

ततः क्षुत्क्षामया दृष्टो मया हि त्वं द्विजोत्तम ।।

त्वद्धस्ततुलसीवारिसंसर्गगतपापया ।।२६।।

तत्कृत्यं कुरु विप्रेंद्र कथं मुक्तिमियाम्यहम्।।

योनित्रयादग्रभवादस्माच्च प्रेतदेहतः ।।२७।।

इत्थं विचिंत्य कलहावचनं द्विजाग्र्यस्तत्कर्मपाकभयविस्मयदुःखयुक्तः ।।

तद्ग्लानिदर्शनकृपाचलचित्तवृत्ति ध्यात्वा चिरं स वचनं निजगाद दुःखात् ।। २८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धर्मदत्तेतिहासकथनंनाम चतुर्विंशोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २५

https://sa.wikisource.org/s/h5z
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। धर्मदत्त उवाच ।। ।।

विलयं यांति पापानि तीर्थे दानव्रतादिभिः ।।

प्रेतदेहस्थितायास्ते तेषु नैवाऽधिकारिता ।। १ ।।

त्वद्ग्लानिदर्शनादस्मात्खिन्नं च मम मानसम् ।।

न वै निर्वृतिमायाति त्वामनुद्धृत्य दुःखिताम् ।। २ ।।

तस्मादाजन्मचरितं यन्मया कार्तिकव्रतम् ।।

तत्पुण्यस्यार्द्धभागेन सद्गतिं त्वमवाप्नुहि ।। ३ ।।

।। नारद उवाच ।।

इत्युक्त्वा धर्मदत्तोऽसौ यावत्तामभ्यषेचयत् ।।

तुलसीमिश्रतोयेन श्रावयन्द्वादशाक्षरम् ।। ४ ।।

तावत्प्रेतत्वनिर्मुक्ता ज्वलदग्निशिखोपमा ।।

दिव्यरूपधरा जाता लावण्येन यथेंदिरा ।। ५ ।।

ततः सा दंडवद्भूमौ प्रणनामाथ तं द्विजम् ।।

उवाच सा तदा वाक्यैर्हर्षगद्गदभाषिणी ।। ६ ।।

।। ।। कलहोवाच ।। ।।

त्वत्प्रसादाद्द्विजश्रेष्ठ विमुक्ता निरयादहम् ।।

पापाब्धौ मज्जमानायास्त्वं नौभूतोऽसि मे ध्रुवम् ।। ७ ।।

।। नारद उवाच ।। ।।

इत्थं वदन्ती सा विप्रं ददर्शाऽऽयातमंबरात् ।।

विमानं भास्वरं युक्तं विष्णुरूपधरैर्गणैः ।। ८ ।।

अथ सा तद्विमानाऽग्र्यं द्वाःस्थाभ्यामवरोपिता ।।

पुण्यशीलसुशीलाभ्यामप्सरोगणसेविता ।। ९ ।।

तद्विमानं तदाऽपश्यद्धर्मदत्तः सविस्मयः।।

पपात दण्डवद्भूमौ दृष्ट्वा तौ विष्णुरूपिणौ ।। 2.4.25.१० ।।

पुण्यशीलसुशीलौ च तमुत्थाप्याऽऽनतं द्विजम् ।।
अभिनन्द्य ततो वाक्यमूचतुर्धर्मसंयुतम् ।। ११ ।।
।। गणावूचतुः ।। ।।
साधुसाधु द्विजश्रेष्ठ यस्त्वं विष्णुरतः सदा ।।
दीनाऽनुकम्पी सर्वज्ञो विष्णुव्रतपरायणः ।।१२।।
आ बालत्वाच्छुभं त्वेतद्यत्त्वया कार्तिकव्रतम् ।।
कृतं तस्याऽर्द्धदानेन पुण्यं द्वैगुण्यमागमत्।।१३।।
जन्मांतरशतोद्भूतं पापं तद्विलयं गतम्।।
स्नानैरेव गतं पापं यदस्याः पूर्वकर्मजम् ।।१४।।
हरिजागरणाद्यैश्च विमानमिदमास्थिता।।
वैकुण्ठे नीयते साधो नानाभोगयुता त्वियम् ।।१५।।
दीपदानभवैः पुण्यैस्तेजःसारूप्यमास्थिता ।।
तुलसीपूजनाद्यैश्च कार्तिकव्रतकैः शुभैः ।।
विष्णुसान्निध्यगा जाता त्वया दत्तैः कृपानिधे ।।१६।।
त्वमप्यस्य भवस्यांते भार्याभ्यां सह यास्यसि ।।
वैकुण्ठ भुवनं विष्णोः सान्निध्यं च सरूपताम् ।। १७ ।।
ते धन्याः कृतकृत्यास्ते तेषां च सफलो भवः।।
यैर्भक्त्याराधितो विष्णुर्धर्मदत्त यथा त्वया ।। ।। १८ ।।
सम्यगाराधितो विष्णुः किं न यच्छति देहिनाम् ।।
औत्तानचरणिर्येन ध्रुवत्वे स्थापितः पुरा ।। १९।।
यन्नामस्मरणादेव देहिनो यांति सद्गतिम् ।। 2.4.25.२० ।।
ग्राहग्रस्तो हि नागेंद्रो यन्नामस्मरणात्पुरा ।।
विमुक्तः संनिधिं प्राप्तो जातोऽयं जयसंज्ञकः ।। २१ ।।
यतस्त्वयाऽर्चितो विष्णुस्तत्सान्निध्यं प्रयास्यसि ।।
बहून्यब्दसहस्राणि भार्याद्वययुतः किल ।। २२ ।।
ततः पुण्यक्षयेजाते यदा यास्यसि भूतलम् ।।
सूर्यवंशोद्भवो राजा विख्यातस्त्वं भविष्यसि ।। २३ ।।
नाम्ना दशरथस्तत्र भार्याद्वययुतः पुनः ।।

तृतीययाऽनया चाऽपि या ते पुण्यार्द्धभागिनी ।। २४ ।।

तत्राऽपि तव सान्निध्यं विष्णुर्यास्यति भूतले ।।

आत्मानं तव पुत्रत्वे प्रकल्प्याऽमरकार्यकृत् ।। २५ ।।

तव जन्मव्रतादस्माद्विष्णुसंतुष्टिकारकात् ।।

न यज्ञा न च दानानि न तीर्थान्यधिकानि वै ।। २६ ।।

धन्योऽसि विप्राग्र्य यतस्त्वयैतद्व्रतं कृतं तुष्टिकरं जगद्गुरोः।।

यदर्धभागात्सफला मुरारेः प्रणीयतेऽस्माभिरियं सलोकताम्।।२७।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धर्मदत्तोपाख्याने कलहामोक्षकथनंनाम पञ्चविंशोऽध्यायः ।। २५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २६

https://sa.wikisource.org/s/h60

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। नारद उवाच ।। ।।

इत्थं तद्वचनं श्रुत्वा धर्मदत्तः सविस्मयः ।।

प्रणम्य दण्डवद्भूमौ वाक्यमेतदुवाच ह ।। १ ।। ।।

।। धर्मदत्त उवाच ।। ।।

आराधयंति सर्वेऽपि विष्णुं भक्तार्तिनाशनम् ।।

यज्ञैर्दानैर्व्रतैस्तीर्थैस्तपोभिश्च यथाविधि ।।२।।

विष्णुप्रीतिकरं तेषां किंचित्सान्निध्यकारकम् ।।

यत्कृत्वा तानि चीर्णानि सर्वाण्यपि भवंति हि ।। ३ ।।

।। गणावूचतुः ।। ।।

साधु पृष्टं त्वया विप्र शृणुष्वैकाग्रमानसः ।।

सेतिहासकथां पुण्यां कथ्यमानां पुराभवाम् ।। ४ ।।

कांचिपुर्यां पुरा चोलश्चक्रवर्ती नृपोऽभवत् ।।

यस्याख्ययैव ते देशाश्चोला इति प्रथां गताः ।। ५ ।।

यस्मिञ्छासति भूचक्रं दरिद्रो वाऽपि दुःखितः।।

पापबुद्धिः सरुग्वापि नैव कश्चिदभून्नरः ।।६।।

यस्याप्युन्नतयज्ञस्य ताम्रपर्ण्यास्तटावुभौ ।।

सुवर्णयूपैः शोभाढ्यावास्तां चैत्ररथोपमौ ।। ७ ।।

स कदाचिदगाद्राजा ह्यनंतशयनं द्विज ।।

यत्राऽसौ जगतां नाथो योगनिद्रामुपाश्रितः।। ६ ।।

तत्र श्रीरमणं देवं संपूज्य विधिवन्नृपः ।।

मणिमुक्ताफलैर्दिव्यैः स्वर्णपुष्पैश्च शोभनैः ।। ९ ।।

प्रणम्य दण्डवद्भूमावुपविष्टः स तत्र वै ।।

तावद्ब्राह्मणमायातमपश्यद्देवसन्निधौ ।। 2.4.26.१० ।।

देवार्चनार्थं पाणौ तु तुलस्युदकधारिणम्।।

स्वपुरीवासिनं तत्र विष्णुदासाह्वय द्विजम् ।। ११ ।।

स तत्राभ्येत्य विप्रर्षिर्देवदेवमपूजयत् ।।

विष्णुसूक्तेन संस्नाप्य तुलसीमंजरीदलैः ।। १२ ।।

तुलसीपूजया तस्य रत्नपूजां पुरा कृताम् ।।

आच्छादितां समालोक्य राजा क्रुद्धोऽब्रवीदिदम्।। १३ ।।

।। चोल उवाच ।। ।।

माणिक्यस्वर्णपूजाऽत्र शोभाढ्या या कृता मया ।।

विष्णुदास कथं सेयमाच्छन्ना तुलसीदलैः ।। १४ ।।

विष्णुभक्तिं न जानासि वराकोऽसि मतो मम ।।

यस्त्विमामतिशोभाढ्यां पूजामाच्छादयस्यहो ।। ।। १५ ।।

इति तद्वचनं श्रुत्वा सक्रोधः स द्विजोत्तमः ।।

राज्ञो गौरवमुल्लंघ्य जगाद वचनं तदा ।। १६ ।।

।। विष्णुदास उवाच ।। ।।

राजन्भक्तिं न जानासि गर्वितोऽसि नृपश्रिया ।।

कियद्विष्णुव्रतं पूर्वं त्वया चीर्णं वदस्व तत् ।। १७ ।।

।।गणावूचतुः।।

तद्ब्राह्मणवचः श्रुत्वा प्रहस्य स नृपोत्तमः।।

विष्णुदासं तदा गर्वादुवाच वचनं द्विजम्।। १८।।

।।राजोवाच।।

इत्थं चेद्वदसे विप्र विष्णुभक्त्याऽतिगर्वितः।।

भक्तिस्ते कियती विष्णोर्दरिद्रस्याऽधनस्य च ।।१९।।

यज्ञदानादिकं नैव विष्णोस्तुष्टिकरं कृतम् ।।

नाऽपि देवालयं पूर्वं कृतं विप्र त्वया क्वचित् ।। 2.4.26.२० ।।

ईदृशस्याऽपि ते गर्व एष तिष्ठति भक्तितः ।।

तच्छृण्वंतु वचो मेऽद्य सर्वेऽप्येते द्विजातयः ।। २१ ।।

साक्षात्कारमहं विष्णोरेष वादो गमिष्यति ।।

पश्यंतु सर्वेऽपि ततो भक्तिं ज्ञास्यंति चावयोः ।। २२ ।।

।। गणावूचतुः ।। ।।

इत्युक्त्वा स नृपोऽगच्छन्निजराजगृहं तदा ।।

आरभद्वैष्णवं सत्रं कृत्वाऽऽचार्यं तु मुद्गलम् ।। २३ ।।

ऋषिसंघसमाजुष्टं बह्वन्नं बहुदक्षिणम् ।।

यच्च ब्रह्मकृतं पूर्वं गयाक्षेत्रे समृद्धिमत् ।। २४ ।।

विष्णुदासोऽपि तत्रैव तस्थौ देवालये व्रती ।।

यथोक्तनियमान्कुर्वन्विष्णोस्तुष्टिकरान्सदा ।। २५ ।।

माघोर्जयोर्व्रतं सम्यक्तुलसीवनपालनम् ।।

एकादश्यां हरेर्जाप्यं द्वादशाक्षरविद्यया ।। २६ ।।

उपचारैः षोडशभिर्नृत्यगीतादिमंगलैः ।।

नित्यं विष्णोस्तथा पूजां व्रतान्येतानि सोऽकरोत् ।। २७ ।।

नित्यं संस्मरणं विष्णोर्गच्छन्भुवि स्वपन्नपि ।।

सर्वभूतस्थितं विष्णुमपश्यत्समदर्शनः ।। ।। २८ ।।

माघकार्तिकयोर्नित्यं विशेषनियमानपि ।।

अकरोद्विष्णुतुष्ट्यर्थं सोद्यापनविधिं तथा ।। २९ ।।

एवं समाराधयतोः श्रियः पतिं तयोश्च चोलेश्वरविष्णुदासयोः ।।

अगाद्धि कालः सुमहान्व्रतस्थयोस्तन्निष्ठसर्वेंद्रियकर्मणोस्तदा ।। 2.4.26.३० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये चोलराजविष्णुदासब्राह्मणविवादकथनंनाम षड्विंशोऽध्यायः ।। २६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २७

https://sa.wikisource.org/s/h61



।। नारद उवाच ।। ।।

कदाचिद्विष्णुदासोऽथ कृत्वा नित्यविधिं द्विज ।।

स पाकमकरोत्तावदहरत्कोऽप्यलक्षितः ।। १ ।।

तमदृष्ट्वाऽप्यसौ पाकं पुनर्नैवाऽकरोत्तदा ।।

सायंकालाऽर्चनस्याऽसौ व्रतभंगभयाद्द्विजः ।। २ ।।

द्वितीयेऽह्नि पुनः पाकं कृत्वा यावत्स विष्णवे ।।

उपहारार्पणं कर्तुं गतः कोऽप्यहरत्पुनः ।। ३ ।।

एवं सप्तदिनं तस्य पाकं कोऽप्यहरन्नृप ।।

ततः सविस्मयश्चाथ मनस्येवमधारयत् ।। ४ ।।

अहो नित्यं समभ्येत्य कः पाकं हरते मम ।।

क्षेत्रसंन्यासिनः स्थानं न त्याज्यं मम सर्वथा ।। ५ ।।

पुनः पाकं विधायाऽत्र भुज्यते यदि चेन्मया ।।

सायंकालाऽर्चनं चैव परित्याज्यं कथं भवेत्।।६।।

यदि पाकं विधायैवं भोक्तव्यं तु मया न तत्।।

अनिवेद्य हरौ सर्वं वैष्णवैर्नैव भुज्यते।। ७ ।।

उपोषितोऽहं सप्ताऽहं तिष्ठाम्यत्र व्रतस्थितः ।।

अद्यसंरक्षणं सम्यक्पाकस्याऽत्र करोम्यहम् ।। ८ ।।

इति पाकं विधायाऽसौ तत्रैवाऽलक्षितः स्थितः ।।

तावद्ददर्श चंडालं पाकान्नहरणे स्थितम् ।।९।।

क्षुत्क्षामं दीनवदनमस्थिचर्माऽवशेषितम् ।।

तमालोक्य द्विजाग्र्योऽभूत्कृपयाऽन्वितमानसः ।।2.4.27.१०।।

विलोक्याऽन्नहरं विप्रस्तिष्ठतिष्ठेत्यभाषत।।

कथमश्नासि तद्रूक्षं घृतमेतद्गृहाण भोः।।११।।

इत्थं वदंतं विप्राग्र्यमायांतं स विलोक्य च ।।

वेगादधावत्तद्भीत्या मृच्छितश्च पपात ह ।।१२।।

भीतं संमूर्च्छितं दृष्ट्वा चंडालं स द्विजाग्रणीः ।।

वेगादभ्येत्य कृपया स्ववस्त्रांतैरवीजयत् ।। १३ ।।

अथोत्थितं तमेवासौ विष्णुदासो व्यलोकयत् ।।

साक्षान्नारायणं देवं शंखचक्रगदाधरम् ।।।। १४ ।।

तं दृष्ट्वा सात्त्विकैर्भावैरावृतो द्विजसत्तमः ।।

स्तोतुं चैव नमस्कर्तुं तदा नाऽलं बभूव सः ।। १५ ।।

अथ शक्रादयो देवास्तत्रैवाभ्याययुस्तदा ।।

गंधर्वाप्सरसश्चाऽपि जगुश्च ननृतुर्मुदा ।। १६ ।।

विमानशतसंकीर्णं देवर्षिशतसंकुलम् ।।

गीतवादित्रनिर्घोषं स्थानं तदभवत्तदा ।। ।। १७ ।।

ततो विष्णुः समालिंग्य स्वभक्तं सात्त्विकव्रतम् ।।

सारूप्यमात्मनो दत्त्वाऽनयद्वैकुण्ठमंदिरम् ।। १८ ।।

विमानवरसंस्थं तं गच्छंतं विष्णुसन्निधिम् ।।

दीक्षितश्चोलनृपतिर्विष्णुदासं ददर्श सः ।। १९ ।।

वैकुण्ठभुवनं यांतं विष्णुदासं विलोक्य सः ।।

स्वगुरुं मुद्गलं वेगादाहूयेत्थं वचोऽब्रवीत् ।। 2.4.27.२० ।।

।। चोल उवाच ।। ।।

यत्स्पर्द्धया मया चैव यज्ञदानादिकं कृतम् ।।

स विष्णुरूपधृग्विप्रो याति वैकुण्ठमंदिरम् ।। ।। २१ ।।

दीक्षितेन मया सम्यक्सत्रेऽस्मिन्वैष्णवे त्वया ।।

हुतमग्नौ कृता विप्रा दानाद्यैः पूर्णमानसाः ।। २२ ।।

नैवाऽद्यापि स मे देवः प्रसन्नो जायते ध्रुवम् ।।

विष्णुदासस्य भक्त्यैव साक्षात्कारं ददौ हरिः ।। २३ ।।

तस्माद्दानैश्च यज्ञैश्च नैव विष्णुः प्रसीदति ।।

भक्तिरेव परं तस्य निदानं दर्शने विभोः ।। २४ ।।

।। गणावूचतुः ।। ।।

इत्युक्त्वा भागिनेयं स्वमभ्यषिंचन्नृपासने ।।

आबाल्याद्दीक्षितो यज्ञे ह्यपुत्रत्वमगाद्यतः।। २५ ।।

तस्माद्यद्याऽपि तद्देशे सदा राज्यांऽशभागिनः ।।

स्वस्रेया एव जायंते तत्कृतावधिवर्तिनः ।। २६ ।।

यज्ञवाटं ततोऽभ्येत्य यज्ञकुण्डाग्रतः स्थितः ।।

त्रिरुच्चैर्व्याजहाराऽऽशु विष्णुं संबोधयंस्तदा ।। २७ ।।

विष्णो भक्तिं स्थिरां देहि मनोवाक्काय कर्मभिः ।।

इत्युक्त्वा सोऽपतद्वह्नौ सर्वेषामेव पश्यताम् ।। २८ ।।

मुद्गलस्तु तदा क्रोधाच्छिखामुत्पाटयत्स्वकाम् ।।

ततस्त्वद्यापि तद्गोत्रे मुद्गला विशिखा बभुः ।। २९ ।।

तावदाविरभूद्विष्णुः कुण्डाग्नौ भक्तवत्सलः ।।

तमालिंग्य विमानाग्र्यं समारोहयदच्युतः ।। 2.4.27.३० ।।

तमालिंग्याऽऽत्मसारूप्यं दत्त्वा वैकुण्ठमंदिरम्।।

तेनैव सह देवेशो जगाम त्रिदशैर्वृतः ।। ३१ ।।

।। नारद उवाच ।। ।।

यो विष्णुदासः स तु पुण्यशीलो यश्चोलभूपः स सुशीलनामा ।।

एतावुभौ तत्समरूपभाजौ द्वाःस्थौ कृतौ तेन रमाप्रियेण ।। ३२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये चोलविष्णुदासमुक्तिकथनंनाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/h62

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। धर्मदत्त उवाच ।। ।।

जयश्च विजयश्चैव विष्णोर्द्वास्थौ श्रुतौ मया ।।

किं नु ताभ्यां पुरा चीर्णं तस्मात्तद्रूपधारिणौ ।। १ ।।

।। ।। गणावूचतुः ।। ।।

तृणबिंदोस्तु कन्यायां देवहूत्यां पुरा द्विज ।।

कर्दमस्य तु दृष्ट्यैव पुत्रौ द्वौ संबभूवतुः ।। २ ।।

ज्येष्ठो जयः कनिष्ठोऽभूद्विजयश्चैव नामतः ।।

तस्यामेवाऽभवत्पश्चात्कपिलो योगधर्मवित् ।। ३ ।।

जयश्च विजयश्चैव विष्णुभक्तिरतौ सदा ।।

तौ तन्निष्ठेन्द्रियग्रामौ धर्मशीलौ बभूवतुः ।। ४ ।।

नित्यमष्टाक्षरीजाप्यौ विष्णुव्रतकरावुभौ ।।

साक्षात्कारं ददौ विष्णुस्तयोर्नित्यार्चने सदा ।। ५ ।।

मरुत्तेन कदाचित्तावाहूतौ यज्ञकर्मणि ।।

जग्मतुर्यज्ञकुशलौ देवर्षिगणपूजितौ ।। ६ ।।

जयस्तत्राभवद्ब्रह्मायाजको विजयोऽभवत् ।।

ततो यज्ञविधिं कृत्स्नं परिपूर्णं च चक्रतुः ।। ७ ।।

मरुत्तोऽवभृथस्नातस्ताभ्यां वित्तं ददौ बहु ।।

तत्समादाय तौ वित्तं जग्मतुः स्वाश्रमं प्रति ।। ८ ।।

यजनाय पृथग्विष्णोस्तुष्ट्यर्थं तौ ततो मुनी ।।

तद्धनं विभजंतौ तु पस्पर्धाते परस्परम् ।। ९ ।।

जयोऽब्रवीत्समो भागः क्रियतामिति तत्र सः ।।

विजयश्चाब्रवीन्नैतद्यल्लब्धं येन तस्य तत् ।। 2.4.28.१० ।।

ततोऽशपज्जयः क्रोधाद्विजयं लुब्धमानसम् ।।

गृहीत्वा न ददास्येतत्तस्माद्ग्राहो भवेति तम् ।। ।। ११ ।।

विजयस्तस्य तं शापं श्रुत्वा सोप्यशपच्च तम् ।।
मदभ्रांतोऽशपस्त्वं मां तस्मान्मातंगतां व्रज ।। १२ ।।
ततदाचख्यतुर्विष्णुं दृष्ट्वा नित्यार्चने विभुम् ।।
शापयोश्च निवृत्तिं तौ ययाचाते रमापतिम् ।। १३ ।।
।। जयविजयावूचतुः ।। ।।
भक्तावावां कथं देव ग्राहमातंगयोनिगौ ।।
भविष्यावः कृपासिंधो तच्छापो विनिवर्त्यताम् ।। १४ ।।
।। श्रीभगवानुवाच ।। ।।
मद्भक्तयोर्वचोऽसत्यं न कदाचिद्भविष्यति ।।
मयाऽपि नान्यथा कर्तुं शक्यते तत्कदाचन ।। १५ ।।
प्रह्लादवचसा स्तंभेऽप्याविर्भूतो ह्यहं पुरा ।।
तथांऽबरीषवाक्येन जातो गर्भे स्वयं किल ।। १६ ।।
तस्माद्युवामिमौ शापावनुऽभूय स्वयंकृतौ ।।
लभेथां मत्पदं नित्यमित्युक्त्वांऽतर्दधे हरिः ।। १७ ।। ।।
।। गणावूचतुः ।। ।।
ततस्तौ ग्राहमातंगावभूतां गंडकीतटे ।।
जातिस्मरौ तु तद्योन्यामपि विष्णुव्रते स्थितौ ।। १८ ।।
कदाचित्स गजः स्नातुं कार्तिके गंडकीं गतः ।।
तावज्जग्राह तं ग्राहः संस्मरञ्च्छापकारणम् ।। १९ ।।
ग्राहग्रस्तो ह्यसौ नागः सस्मार श्रीपतिं तदा ।।
तावदाविरभूद्विष्णुश्चक्रशंखगदाधरः ।। 2.4.28.२० ।।
ततस्तौ ग्राहमातंगौ चक्रं क्षिप्त्वा समुद्धृतौ ।।
दत्त्वैव निजसारूप्यं वैकुण्ठमनयद्विभुः ।। २१ ।।
ततःप्रभृति तत्स्थानं हरिक्षेत्रमितिस्मृतम् ।।
चक्रसंघर्षणाद्यस्मिन्ग्रावाणोऽपि हि लांछिताः ।। २२ ।।
तावुभौ विश्रुतौ लोके जयश्च विजयस्तथा ।।
नित्यं विष्णुप्रियौ द्वाःस्थौ पृष्टौ यौ हि त्वया द्विज ।। २३ ।।
अतस्त्वमपि धर्मज्ञ नित्यं विष्णुव्रते स्थितः ।।

त्यक्तमात्सर्यदंभोऽपि भवस्व समदर्शनः ।। ।। २४ ।।

तुलामकरमेषेषु प्रातःस्नायी सदा भव ।।

एकादशीव्रते तिष्ठ तुलसीवनपालकः ।। २५ ।।

ब्राह्मणानथ गाश्चाऽपि वैष्णवांश्च सदा भज ।।

मसूरिकामारनालं वृंताकान्यपि खाद मा ।। २६ ।।

एवं त्वमपि देहांते तद्विष्णोः परमं पदम् ।।

प्राप्नोषि धर्मदत्त त्वं तद्भक्त्यैव यथा वयम् ।। २७ ।।

तावज्जन्म व्रतादस्माद्विष्णुसंतुष्टिकारकात् ।।

न यज्ञा न च दानानि न तीर्थान्यधिकानि वै ।। २८ ।।

धन्योऽसि विप्राग्र्य यतस्त्वयैतद्व्रतं कृतं तुष्टिकरं जगद्गुरोः ।।

यदर्धभागाऽऽप्तफला मुरारेः प्रणीयतेऽस्माभिरियं सलोकताम् ।। २९ ।।

।। नारद उवाच ।। ।।

इत्थं तौ धर्मदत्तं तमुपदिश्य विमानगौ ।।

तया कलहया सार्द्धं वैकुण्ठभवनं गतौ ।। 2.4.28.३० ।।

धर्मदत्तो ह्यसौ जातप्रत्ययस्तदव्रते स्थितः ।।

देहांऽते तद्विभोः स्थानं भार्याभ्यां संयुतोऽभ्ययात् ।। ३१ ।।

इतिहासमिमं पुराभवं शृणुते श्रावयते च यः पुमान् ।।

हरिसन्निधिकारणीं मतिं लभतेऽसौ कृपया जगद्गुरोः ।। ३२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धर्मदत्तमोक्षप्राप्तिकथनंनामाऽष्टाविंशोऽध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः २९

https://sa.wikisource.org/s/h63

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। श्रीकृष्ण उवाच ।।

इति तद्वचनं श्रुत्वा पृथुर्विस्मितमानसः ।।

संपूज्य नारदं सम्यग्विससर्ज तदा प्रिये ।।१।।

पुराऽवंतीपुरे कश्चिद्विप्र आसीद्धनेश्वरः ।।

ब्रह्मकर्मपरिभ्रष्टः पापकर्मा सुदुर्मतिः ।।२।।

देशाद्देशातरं गच्छन्क्रयविक्रयकारणात् ।।

माहिष्मतीपुरीमागात्कदाचित्स धनेश्वरः।।३।।

महिषेण कृता पूर्वं तस्मान्माहिष्मतीति सा ।।

यस्या वप्रगता भाति नर्मदा पापनाशिनी ।। ४ ।।

कार्तिकव्रतिनस्तत्र नानादेशाऽऽगतान्नरान् ।।

स दृष्ट्वा विक्रयं कुर्वन्मासमेकमुवास सः ।। ५ ।।

स नित्यं नर्मदातीरे भ्रमन्विक्रयकारणात् ।।

ददर्श ब्राह्मणान्स्नानजपदेवार्चने स्थितान् ।। ।। ६ ।।

कांश्चित्पुराणं पठतः कांश्चिच्च श्रवणे रतान् ।।

नृत्यगायनवादित्रविष्णुश्रवणतत्परान् ।।७।।

उद्यापनविधौ सक्तान्कांश्चिज्जागरणे रतान् ।।

विप्रगोपूजनरतान्दीपदानरतांस्तथा ।। ८ ।।

ददर्श कौतुकाविष्टस्तत्रतत्र धनेश्वरः ।।

नित्यं परिभ्रमंस्तत्र दर्शनस्पर्शभाषणात् ।। ९ ।।

वैष्णवानां तथा विष्णोर्नामश्रावादि सोऽलभत् ।।

एवं मासं स्थितस्तस्या नर्मदायास्तटे द्विजः ।। 2.4.29.१० ।।

तावत्कृष्णाऽहिना दष्टो विह्वलः स पपात ह ।।

अथ देहपरित्यक्तं तं वद्ध्वा यमकिंकराः ।। ११ ।।

यमाज्ञया कुंभिपाके चिक्षिपुस्तं धनेश्वरम् ।।

यावत्क्षिप्तश्च तत्रासौ तावच्छीतलतां ययौ ।। ।। १२ ।।

कुंभीपाको यथा वह्निः प्रह्लादक्षेपणात्पुरा ।।

यमस्तु कौतुकं दृष्ट्वा पप्रच्छानीय तं ततः ।। १३ ।।

तावदभ्यागतस्तत्र नारदः प्राह सत्वरम् ।।

।। नारद उवाच ।। ।।

नैवाऽयं निरयान्भोक्तुमर्हो ह्यरुणनंदन ।। १४ ।।

यस्मादंतेऽस्य संजातं कर्म यन्निरयापहम् ।।

यः पुण्यकर्मिणां कुर्याद्दर्शनस्पर्शभाषणम् ।। १५ ।।

ततः षडंशमाप्नोति पुण्यस्य नियतं नरः ।।

सख्यं तु तैस्तु संसर्गं कृतवान्वै धनेश्वरः ।। १६ ।।

कार्तिकव्रतिभिर्मासं तेषां पुण्यांशभागयम् ।। १७ ।।

तस्मादकामपुण्यो हि यक्षयोनिस्थितो ह्ययम् ।।

विलोक्य निरयान्सर्वान्पापभोगप्रदर्शकान् ।। १८ ।।

।। ।। श्रीकृष्ण उवाच।। ।।

इत्युक्त्वा गतवति नारदे स सौरिस्तद्वाक्यश्रवणविबुद्धतत्सुकर्मा।।

तं विप्रं पुनरनयत्स्वकिंकरेण तान्सर्वान्निरयगणान्प्रदर्शयिष्यन् ।। १९ ।।

ततो धनेश्वरं नीत्वा निरयान्प्रेतपोऽब्रवीत् ।।

दर्शयिष्यंस्तु तान्सर्वान्यमानुज्ञाकरस्तदा ।। 2.4.29.२० ।।

।। प्रेतप उवाच ।। ।।

पश्येमान्निरयान्घोरान्धनेश्वर महाभयान् ।।

एषु पापकरा नित्यं पच्यंते यमकिंकरैः ।।२१।।

अकामात्पातकं शुष्कं कामादार्द्रमुदाहृतम् ।।

आर्द्रशुष्कादिभिः पापैर्द्विप्रकारानवस्थितान् ।। २२ ।।

चतुराशीतिसंख्याकैः पृथग्भेदैरवस्थितान् ।।

यत्प्रकीर्णमपांक्तेयं मलिनीकरणं तथा ।। २३ ।।

जातिभ्रंशकरं तद्वदुपपातकसंज्ञकम् ।।

अतिपापं महापापं सप्तधा पातकं स्मृतम् ।। २४ ।।

एभिः सप्तसु पच्यंते निरयेषु यथाक्रमम् ।।

कार्तिकव्रतिभिर्यस्मात्संसर्गो ह्यभवत्तव ।। २५ ।।

तत्पुण्योपचयादेते निर्हृता निरयाः खलु ।।

श्रीकृष्ण उवाच ।। ।।

दर्शयित्वेति निरयान्प्रेतपस्तमथाहरत् ।। २६ ।।

धनेश्वरं यक्षलोकं यक्षश्चाऽभूत्स तत्र हि ।।

धनदस्याऽनुगः सोऽयं धनयक्षेति विश्रुतः ।। २७ ।।

।। सूत उवाच ।। ।।

इत्युक्त्वा वासुदेवोऽसौ सत्यभामामतिप्रियम् ।।

सायंसंध्याविधिं कर्तुं जगाम जननीगृहम् ।। २८ ।।

।। ब्रह्मोवाच ।। ।।

एवंप्रभावः खलु कार्तिकोऽयं मुक्तिप्रदो भुक्तिकरश्च यस्मात् ।।

प्रयांत्यनेकाऽर्जितपातकानि व्रतस्य संदर्शयतोऽपि मुक्तिम् ।। २९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये धनेश्वरयक्षजन्मप्राप्तिवर्णनंनामैकोनत्रिंशोऽध्यायः ।। २९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३०

https://sa.wikisource.org/s/h64



।। नारद उवाच ।। ।।

अद्भुतोऽयं त्वया प्रोक्तो महिमा कार्तिकस्य तु ।।

स्वस्य कर्तुमसामर्थ्यं कथमेतत्कृतं भवेत् ।। १ ।।

।। ब्रह्मोवाच ।। ।।

नास्ति कर्तुं स्वसामर्थ्यमुपायात्प्राप्यते फलम् ।।

द्रव्यं दत्त्वा ब्राह्मणाय गृह्णीयात्फलमुत्तमम् ।। २ ।।

शिष्याद्वा भृत्यवर्गाद्वा स्त्रीभ्यो वाऽऽत्माच्च कारयेत् ।।

तस्मादपि फलं गृह्णन्फलभाग्जायते नरः ।। ३ ।।

।। नारद उवाच ।। ।।

अदत्तान्यपि पुण्यानि प्राप्यंते केनचित्क्वचित् ।।

एतदिच्छाम्यहं श्रोतुं कौतुकं मम वर्तते ।। ४ ।।

।। ब्रह्मोवाच ।। ।।

अदत्तान्यपि पुण्यानि लभंते पातकान्यपि ।।

येनोपायेन तद्वच्मि शृणुष्वैकमना द्विज ।। ५ ।।

सुकृतं वा दुष्कृतं वा कृतमेकेन यत्कृते ।।

जायते तस्य तद्राष्ट्रे त्रेतायां तु पुरो भवेत् ।। ६ ।।

द्वापरे वंशमध्ये तु कलौ कर्तैव केवलम्।।

आज्ञानाद्यत्कृतं कर्म बाल्ये स्वप्ने तु तत्फलम् ।। ७ ।।

अज्ञानाद्यच्च तारुण्ये बाल्ये तस्य फलं भवेत् ।।

ज्ञानपूर्वं कृतं कर्म आजन्मांतं च तत्फलम् ।। ८ ।।

षण्मासं पापिसंगेन नरः पापी प्रजायते ।।

पापिनां वा धर्मिणां वा संसर्गाद्दशमासिकम् ।। ९ ।।

भोजनादेकपंक्तौ च विंशांशः पुण्यपापयोः ।।

एकासने द्वयोर्वासात्सहस्रांशेन लिप्यते ।। 2.4.30.१० ।।

यो वै यस्यान्नमश्नाति स भुंक्ते तस्य किल्बिषम् ।।

जपादौ पापिसंसर्गात्षोडशांऽशो विनश्यति ।। ११ ।।

परस्य स्तवनाद्ध्यानादेकपात्रस्थभोजनात् ।।

एकशय्याप्रावरणात्षष्ठांशः पुण्यपापयोः ।। १२ ।।

पुरुषो हरते सर्वं भार्याया औरसस्य च ।।

अर्द्धं शिष्याच्चतुर्थांशं पापं पुण्यं तथैव च ।। १३ ।।

भर्तुराज्ञाकरी नारी भर्तुरर्द्धं वृषं हरेत् ।।

यद्धस्तपक्वं भुजीयाद्दशांशं तदघं हरेत् ।। १४ ।।

वर्षाऽशनं तु यो दत्ते तदर्द्धाघस्य भागयम् ।।

वर्षाशनार्द्धं पुण्यं तु भुंक्ते वर्षाशनी नरः ।। १५ ।।

पुरोहितस्य षष्ठांशं पापं वा पुण्यमेव वा ।।

यजमानो भुनक्त्येव तद्दशांशं पुरोहितः ।। १६ ।।

उद्योगी चानुमन्ता च यश्चोपकरणप्रदः ।।

षष्ठांशं पुण्यपापानामुपद्रष्टा दशांशकम् ।। १७ ।।

यद्धस्तात्कार्यते कर्म नान्नमस्मै प्रयच्छति ।।

विना भृतकशिष्याभ्यां षष्ठांशं पुण्यमाहरेत्।। १८ ।।

व्यवहारात्तथा प्रीत्या नित्यं संभाषणादिभिः ।।

दशांशं पुण्यपापानां लभते नात्र संशयः ।। १९ ।।

संसर्गपुण्ययोगेन एकदन्तो द्विजाधमः ।।

नरकान्विविधान्दृष्ट्वा स्वर्गं प्राप तदैव हि ।। 2.4.30.२० ।।

।। ।। नारद उवाच ।। ।।

ईदृशं कार्तिकव्रतमल्पायासं महत्फलम् ।।

न कुर्वंति जनाः केचित्किमर्थं वै पितामह ।। २१ ।।

।। ब्रह्मोवाच ।। ।।

स्वसृष्टिवृद्धये वेधा धर्माऽधर्मौ ससर्ज ह ।।

धर्ममेवाऽनुतिष्ठंतः प्राप्नुवंति शुभां गतिम् ।। २२ ।।

अधर्ममनुतिष्ठंतो यांति तेऽधोगतिं नराः ।।

पुण्यकर्मफलं नाको नरकस्तद्विपर्ययः ।। २३ ।।

तयोः पालनकर्तारौ द्वावेव विधिना कृतौ ।।
शतक्रतुयमौ तौ च पुण्यपापानुसारिणौ ।। २४ ।।
गुरुतल्पादयः पुत्राः कामस्य प्रथिता भुवि ।।
क्रोधस्य पितृघाताद्या लोभस्य तनयाञ्छृणु ।। २५ ।।
ब्रह्मस्वहरणाद्याश्च एते नरकनायकाः ।।
कृता यमेन तैर्व्याप्ता मनुजा न हि कुर्वते ।। २६ ।।
व्रतादिधर्मकृत्यं यैस्तैर्मुक्तास्ते हि कुर्वते ।। २७ ।।
श्रद्धा मेधा विघातिन्यौ वर्तेते भुवि सर्वदा ।।
ताभ्यां व्याप्तस्तु मनुजः श्रीविष्णोः श्रवणादिकम् ।। २८ ।।
न करोति सुदुर्मेधा येनांधं याति वै तमः ।।
कृष्णेन सत्यभामायै यदुक्तं तद्वदामि ते ।। २९ ।।
अध्यापनाद्याजनाद्वाऽप्येकपंक्त्यशनादपि ।।
तुर्यांश पुण्यपापानां परोक्षं लभते नरः ।। 2.4.30.३० ।।
एकासनादेकयानान्निश्वासस्यांगसंगतः ।।
षडंशं फलभागी स्यान्नियतं पुण्यपापयोः ।। ३१ ।।
स्पर्शनाद्भाषणाद्वाऽपि परस्य स्तवनादपि ।।
दशांशं पुण्यपापानां नित्यं प्राप्नोति मानवः ।। ३२ ।।
दर्शनश्रवणाभ्यां च मनोध्यानात्तथैव च ।।
परस्य पुण्यपापानां शतांशं प्राप्नुयान्नरः ।। ३३ ।।
परस्य निंदां पैशुन्यं धिक्कारं च करोति यः ।।
तत्कृतं पातकं प्राप्य स्वपुण्यं प्रददाति सः ।। ३४ ।।
कुर्वतः पुण्यकर्माणि सेवां यः कुरुते नरः ।।
पत्नीभृतकशिष्येभ्यो यदन्यः कोऽपि मानवः ।। ३५ ।।
तस्य सेवाऽनुरूपं च द्रव्यं किंचिन्न दीयते ।।
सोऽपि सेवानुरूपेण तत्पुण्यफलभाग्भवेत् ।। ३६ ।।
एकपंक्तिस्थितं यस्तु लंघयेत्परिवेषणम् ।।
तत्पुण्यस्य षडंशं च लभेद्यस्तु विलंघितः ।। ३७ ।।
स्नानसंध्यादिकं कुर्वन्यः स्पृशेद्वाऽथ भाषते ।।

स कर्मपुण्यषष्ठांशं दद्यात्तस्मै विनिश्चितम् ।। ३८ ।।

धर्मोद्देशेन यो द्रव्यमपरं याचते नरः ।।

तत्पुण्यकर्मजं तस्य धनदस्त्वाप्नुयात्फलम् ।। ३९ ।।

अपहृत्य परद्रव्यं पुण्यकर्म करोति यः ।।

कर्मकृत्पापभाक्तत्र धनिनस्तद्भवं फलम् ।। 2.4.30.४० ।।

नापकृत्य ऋणं यस्तु परस्य म्रियते नरः ।।

धनी तत्पुण्यमादत्ते तद्धनस्याऽनुरूपतः ।। ४१ ।।

बुद्धिदाताऽनुमन्ता च यश्चोपकरणप्रदः ।।

बलकृच्चापि षष्ठांशं प्राप्नुयात्पुण्यपापयोः ।। ४२ ।।

प्रजाभ्यः पुण्यपापानां राजा षष्ठांशमुद्धरेत् ।।

शिष्याद्गुरुः स्त्रियो भर्ता पिता पुत्रात्तथैव च ।। ४३ ।।

स्वपतेरपि पुण्यस्य योषिदर्धमवाप्नुयात् ।।

चित्तस्याऽनुव्रता शश्वद्वर्तते तुष्टिकारिणी ।। ४४ ।।

परहस्तेन दानादि कुर्वतः पुण्यकर्मणः ।।

विना भृतकपुत्राभ्यां कर्ता षष्ठांशमुद्धरेत् ।।४५।।

वृत्तिदो वृत्तिसंभोक्तुः पुण्यं षष्ठांशमुद्धरेत् ।।

आत्मनो वा परस्याऽपि यदि सेवां न कारयेत् ।। ।। ४६ ।।

इत्थं ह्यदत्तान्यपि पुण्यपापान्यायांति नित्यं परसंचितानि ।।

कलौ त्वयं वै नियमो न कार्यः कर्तैव भोक्ता खलु पुण्यपापयोः ।। ।। ४७ ।।

कलौ ज्ञानं दृढं नास्ति कलौ गर्वेण सत्क्रिया ।।

कलौ दम्भाऽन्वितो योगो नश्यत्येव न संशयः ।।४८।।

तपोनिष्ठः पुरा दम्भी सती शुद्धप्रभावतः ।।

पित्रोः पूजादर्शनेन चोर्जसेवी परं गतः ।। ४९ ।।

।। ।। नारद उवाच ।। ।।

भगवञ्छ्रोतुमिच्छामि व्रतानामुत्तमं व्रतम् ।।

विधिं मासोपवासस्य फलं चास्य यथोचितम् ।।2.4.30.५० ।।

।। ।। ब्रह्मोवाच ।। ।।

साधु नारद सर्वं ते यत्पृष्टं प्रब्रुवेऽनघ ।।

भक्त्या मतिमतां श्रेष्ठ शृणुष्व गदतो मम ।। ५१ ।।

सुराणां च यथा विष्णुस्तपतां च यथा रविः ।।

मेरुः शिखरिणां यद्वद्वैनतेयश्च पक्षिणाम् ।। ५२ ।।

श्रेष्ठं सर्वव्रतानां तु तद्वन्मासोपवासनम् ।।

सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु चैव हि ।। ५३ ।।

सर्वदानोद्भवं चैव यज्ञैश्च भूरिदक्षिणैः ।।

न तत्पुण्यमवाप्नोति यन्मासपरिलंघनात् ।। ५४ ।।

गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासनम् ।।

अतिकृच्छ्रं च पाराकं कृत्वा चांद्रायणं ततः ।। ५५ ।।

मासोपवासं कुर्वीत ज्ञात्वा देहबलाऽबलम् ।।

वानप्रस्थो यतिर्वापि नारी वा विधवा मुने ।। ५६ ।।

मासोपवासं कुर्वीत गुरोर्विप्राज्ञया ततः ।।

आश्विनस्याऽमले पक्षे एकादश्यामुपोषितः ।। ५७ ।।

व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ।।

अच्युतस्याऽऽलये भक्त्या त्रिकालं पूजयेद्धरिम् ।। ५८ ।।

नैवेद्यधूपदीपाद्यैः पुष्पैर्नानाविधैरपि ।।

मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् ।। ५९ ।।

नरः स्वधर्मनिरतः सधवा च जितेन्द्रिया ।।

नारी वा विधवा साध्वी वासुदेवं समर्चयेत् ।। 2.4.30.६० ।।

वस्त्वालोकनगन्धादिस्वादितं परिकीर्तितम् ।।

अन्यस्य वर्जयेद्वासं ग्रासानां संप्रमोक्षणम् ।।६१।।

गात्राभ्यंगं शिरोभ्यंगं तांबूलं सविलेपनम् ।।

व्रतस्थो वर्जयेत्सर्वं यच्चाऽन्यच्च निराकृतम् ।। ६२ ।।

न व्रतस्थः स्पृशेत्कंचिद्विकर्मस्थं न चालपेत्।।

देवतायतने तिष्ठन्गृहस्थश्चाऽऽचरेद्व्रतम् ।।६३।।

कृत्वा मासोपवासं तु यथोक्तविधिना नरः ।।

अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिति ।। ।। ६४ ।।

ततोऽर्चयेदेव पुण्यं द्वादश्यां गरुडध्वजम् ।।

वस्त्रदानादिभिश्चैव भोजयित्वा द्विजोत्तमान् ।।६५।।

दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत्।।

विप्रान्क्षमापयित्वा तुविसृज्याऽभ्यर्च्य पूज्य च ।। ६६ ।।

एवं मासोपवासांते वृत्वा विप्रांस्त्रयोदश ।।

कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः ।। ६७ ।।

ततोऽनुभोजयेद्विप्रान्नमस्कारपुरःसरम् ।।

तांबूलवस्त्रयुग्मानि भोजनाऽऽच्छादनानि च ।। ६८ ।।

योगपट्टानि सूत्राणि शय्यां सोपस्करां तथा ।।

दत्त्वा चैव द्विजाग्र्येभ्यः पूजयित्वा विसर्जयेत् ।। ६९ ।।

विधिर्मासोपवासस्य यथावत्परिकीर्तितः ।।

अतःपरं प्रवक्ष्यामि नवम्यादितिथौ विधि ।। 2.4.30.७० ।।

ऋषिभ्यो वालखिल्यैश्च प्रोक्तं तं शृणु नारद ।। ७१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये दत्तपुण्यपापफलप्राप्तिवर्णनपूर्वक मासोपवासव्रतविधिकथनंनाम त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३१

https://sa.wikisource.org/s/h35



।। वालखिल्या ऊचुः ।। ।।

कार्तिके शुक्लनवमी तत्राऽभूद्द्वापरं युगम् ।।

पूर्वाऽपराह्णगा ग्राह्या क्रमाद्दानोपवासयोः ।। १ ।।

अत्र कूष्मांडकोनाम हतो दैत्यस्तु विष्णुना ।।

तद्रोमभिः समुद्भूता वल्ल्यः कूष्मांडसंभवाः ।।२ ।।

तस्मात्कूष्मांडदानेन फलमाप्नोति निश्चितम् ।।

अस्यामेव नवम्यां तु कुर्यात्कृष्णोत्सवं नरः ।। ३ ।।

स्वशाखोक्तेन विधिना तुलस्याः करपीडनम् ।।

कन्यादानफलं तस्य जायते नात्र संशयः ।। ४ ।।

कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः।।

हरिं विधाय सौवर्णं तुलस्या सहितं शुभम् ।। ५।।

पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम् ।।

एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ।। ६ ।।

ग्राह्यं त्रिरात्रमत्रैव नवम्याद्यनुरोधतः ।।

मध्याह्नव्यापिनी ग्राह्या नवमी पूर्ववेधिता ।। ७ ।।

धात्र्यश्वत्थौ य एकत्र पालयित्वा समुद्वहेत्।।

न नश्यते तस्य पुण्यं कल्पकोटिशतैरपि ।।८।।

कनकस्य सुता पूर्वमेकादश्यां किशोरिका ।।

चकार भक्तितः सायं तुलस्युद्वाहजं विधिम्।।९।।

तेन वैधव्यदोषेण निर्मुक्ताऽऽसीत्सुलोचना।।

तस्मात्सायं प्रकर्तव्यस्तुलस्तुद्वाहजो विधिः ।।2.4.31.१०।।

अवश्यमेव कर्तव्यः प्रतिवर्षं तु वैष्णवैः।।

विधिं तस्य प्रवक्ष्यामि यथा सांगा क्रिया भवेत।११।।

विष्णोस्तु प्रतिमां कुर्यात्पलस्य स्वर्णजां शुभाम्।।

तदर्द्धार्द्धं तदर्द्धार्द्धं यथाशक्त्या प्रकल्पयेत् ।। १२ ।।

प्राणप्रतिष्ठां कृत्वैव तुलसीविष्णुरूपयोः ।।

तत उत्थापयेद्देवं पूर्वोक्तैश्च स्तवादिभिः ।।१३।।

उपचारैः षोडशभिः पूजयेत्पुरुषोक्तिभिः ।।

देशकालौ ततः स्मृत्वा गणेशं तत्र पूजयेत् ।। १४ ।।

पुण्याहं वाचयित्वाथ नांदीश्राद्धं समाचरेत् ।।

वेदवाद्यादिनिर्घोषैर्विष्णुमूर्तिं समानयेत् ।। १५ ।।

तुलसीनिकटे सा तु स्थाप्या चांऽतर्हिता पटैः ।।

आगच्छ भगवन्देव अर्चयिष्यामि केशव ।। ।।१६।।

तुभ्यं दास्यामि तुलसीं सर्वकामप्रदो भव।।

दद्यात्त्रिवारमर्घ्यं च पाद्यं विष्टरमेव च।।१७।।

तत आचमनीयं च त्रिरुक्त्वा च प्रदापयेत्।।

ततो दधि घृतं क्षीरं कांस्यपात्रपुटीकृतम् ।। १८ ।।

मधुपर्कं गृहाण त्वं वासुदेव नमोस्तु ते।।

हरिद्रालेपानाभ्यंगकार्यं सर्वं विधाय च ।। १९ ।।

गोधूलिसमये पूज्यौ तुलसीकेशवौ पुनः।।

पृथक्पृथक्तथा कार्यौ संमुखौ मंगलं पठेत् ।। 2.4.31.२० ।।

ईषद्दृश्ये भास्करे तु संकल्पं तु समुच्चरेत् ।।

स्वगोत्रप्रवरानुक्त्वा तथा त्रिपुरुषादिकम् ।। २१ ।।

अनादिमध्यनिधन त्रैलोक्यप्रतिपालक ।।

इमां गृहाण तुलसीं विवाहविधिनेश्वर ।। २२ ।।

पार्वतीबीजसंभूतां वृंदाभस्मनि संस्थिताम् ।।

अनादिमध्यनिधनां वल्लभां ते ददाम्यहम् ।।२३।।

पयोघटैश्च सेवाभिः कन्यावद्वर्धिता मया ।।

त्वत्प्रियां तुलसीं तुभ्यं ददामि त्वं गृहाण भोः ।। २४ ।।

एवं दत्त्वा च तुलसीं पश्चात्तौ पूजयेत्ततः।।

रात्रौ जागरणं कुर्याद्विवाहोत्सवपूर्वकम् ।।२५।।

ततः प्रभातसमये तुलसीं विष्णुमर्चयेत् ।।

वह्निसंस्थापनं कृत्वा द्वादशाक्षरविद्यया ।। २६ ।।

पायसाऽऽज्यक्षौद्रतिलैर्जुह्यादष्टोत्तरंशतम् ।।

ततः स्विष्टकृतं हुत्वा दद्यात्पूर्णाहुतिं ततः ।।

आचार्यं च समभ्यर्च्य होमशेषं समापयेत् ।। २७ ।।

चतुरो वार्षिकान्मासान्नियमो येन यः कृतः ।।

कथयित्वा द्विजेभ्यस्तत्तथाऽन्यत्परिपूरयेत् ।। २८ ।।

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।।

न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।। २९ ।।

रेवतीतुर्यचरणे द्वादशीसंयुते नरः ।।

न कुर्यात्पारणं कुर्वन्व्रतं निष्फलतां नयेत् ।। 2.4.31.३० ।।

ततो येषां पदार्थानां वर्जनं तु कृतं भवेत् ।।

चातुर्मास्येऽथवा चोर्जे ब्राह्मणेभ्यः समर्पयेत् ।।

ततः सर्वं समश्नीयाद्यद्यत्त्यक्तं व्रते स्थितम् ।। ३१ ।।

दंपतिभ्यां सहैवाऽत्र भोक्तव्यं च द्विजैः सह ।।३२।।

ततो भुक्त्युत्तरं यानि गलितानि दलानि च ।।

तानि भुक्त्वा तुलस्याश्च स्वयं पापैः प्रमुच्यते ।। ३३ ।।

इक्षुदण्डं तथा धात्रीफलं कोलिफलं तथा ।।

भुक्त्वा तु भोजनस्यांऽते तस्योच्छिष्टं विनश्यति ।। ३४ ।।

एषु त्रिषु न भुक्तं चेदेकैकमपि येन तु ।।

ज्ञेय उच्छिष्ट आवर्षं नरोऽसौ नाऽत्र संशयः ।। ३५ ।।

ततः सायं पुनः पूज्याविक्षुदण्डैश्च शोभितैः ।।

तुलसीवासुदेवौ च कृतकृत्यो भवेत्ततः ।। ३६ ।।

ततो विसर्जनं कृत्वा दत्त्वा दायादिकं हरेः ।।

वैकुण्ठं गच्छ भगवँस्तुलसीसहितः प्रभो ।।

मत्कृतं पूजनं गृह्य संतुष्टो भव सर्वदा ।। ३७ ।।

गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।।

यत्र ब्रह्मादयो देवास्तत्र गच्छ जनार्दन ।। ३८ ।।

एवं विसृज्य देवेशमाचार्याय प्रदापयेत् ।।

मूर्त्यादिकं सर्वमेव कृतकृत्यो भवेन्नरः ।। ३९ ।।

प्रतिवर्षं तु यः कुर्यात्तुलसीकरपीडनम् ।।

भक्तिमान्धनधान्यैः स युक्तो भवति निश्चितम् ।।

इहलोके परत्राऽपि विपुलं च यशो लभेत् ।। 2.4.31.४० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कूष्मांडनवमीतुलसीविवाहविधिवर्णनंनामैकत्रिंशोऽध्यायः ।। ३१ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३२

https://sa.wikisource.org/s/h65
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | कार्तिकमासमाहात्म्यम्

।। वालखिल्या ऊचुः ।। ।।

कार्तिके शुक्लनवमी तत्राऽभूद्द्वापरं युगम् ।।

पूर्वाऽपराह्णगा ग्राह्या क्रमाद्दानोपवासयोः ।। १ ।।

अत्र कूष्मांडकोनाम हतो दैत्यस्तु विष्णुना ।।

तद्रोमभिः समुद्भूता वल्ल्यः कूष्मांडसंभवाः ।।२ ।।

तस्मात्कूष्मांडदानेन फलमाप्नोति निश्चितम् ।।

अस्यामेव नवम्यां तु कुर्यात्कृष्णोत्सवं नरः ।। ३ ।।

स्वशाखोक्तेन विधिना तुलस्याः करपीडनम् ।।

कन्यादानफलं तस्य जायते नात्र संशयः ।। ४ ।।

कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः।।

हरिं विधाय सौवर्णं तुलस्या सहितं शुभम् ।। ५।।

पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम् ।।

एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ।। ६ ।।

ग्राह्यं त्रिरात्रमत्रैव नवम्याद्यनुरोधतः ।।

मध्याह्नव्यापिनी ग्राह्या नवमी पूर्ववेधिता ।। ७ ।।

धात्र्यश्वत्थौ य एकत्र पालयित्वा समुद्वहेत्।।

न नश्यते तस्य पुण्यं कल्पकोटिशतैरपि ।।८।।

कनकस्य सुता पूर्वमेकादश्यां किशोरिका ।।

चकार भक्तितः सायं तुलस्युद्वाहजं विधिम्।।९।।

तेन वैधव्यदोषेण निर्मुक्ताऽऽसीत्सुलोचना।।

तस्मात्सायं प्रकर्तव्यस्तुलस्तुद्वाहजो विधिः ।।2.4.31.१०।।

अवश्यमेव कर्तव्यः प्रतिवर्षं तु वैष्णवैः।।

विधिं तस्य प्रवक्ष्यामि यथा सांगा क्रिया भवेत।११।।

विष्णोस्तु प्रतिमां कुर्यात्पलस्य स्वर्णजां शुभाम्।।

तदर्द्धार्द्धं तदर्द्धार्द्धं यथाशक्त्या प्रकल्पयेत् ।। १२ ।।

प्राणप्रतिष्ठां कृत्वैव तुलसीविष्णुरूपयोः ।।

तत उत्थापयेद्देवं पूर्वोक्तैश्च स्तवादिभिः ।।१३।।

उपचारैः षोडशभिः पूजयेत्पुरुषोक्तिभिः ।।

देशकालौ ततः स्मृत्वा गणेशं तत्र पूजयेत् ।। १४ ।।

पुण्याहं वाचयित्वाथ नांदीश्राद्धं समाचरेत् ।।

वेदवाद्यादिनिर्घोषैर्विष्णुमूर्तिं समानयेत् ।। १५ ।।

तुलसीनिकटे सा तु स्थाप्या चांऽतर्हिता पटैः ।।

आगच्छ भगवन्देव अर्चयिष्यामि केशव ।। ।।१६।।

तुभ्यं दास्यामि तुलसीं सर्वकामप्रदो भव।।

दद्यात्त्रिवारमर्घ्यं च पाद्यं विष्टरमेव च।।१७।।

तत आचमनीयं च त्रिरुक्त्वा च प्रदापयेत्।।

ततो दधि घृतं क्षीरं कांस्यपात्रपुटीकृतम् ।। १८ ।।

मधुपर्कं गृहाण त्वं वासुदेव नमोस्तु ते।।

हरिद्रालेपानाभ्यंगकार्यं सर्वं विधाय च ।। १९ ।।

गोधूलिसमये पूज्यौ तुलसीकेशवौ पुनः।।

पृथक्पृथक्तथा कार्यौ संमुखौ मंगलं पठेत् ।। 2.4.31.२० ।।

ईषद्दृश्ये भास्करे तु संकल्पं तु समुच्चरेत् ।।

स्वगोत्रप्रवरानुक्त्वा तथा त्रिपुरुषादिकम् ।। २१ ।।

अनादिमध्यनिधन त्रैलोक्यप्रतिपालक ।।

इमां गृहाण तुलसीं विवाहविधिनेश्वर ।। २२ ।।

पार्वतीबीजसंभूतां वृंदाभस्मनि संस्थिताम् ।।

अनादिमध्यनिधनां वल्लभां ते ददाम्यहम् ।।२३।।

पयोघटैश्च सेवाभिः कन्यावद्वर्धिता मया ।।

त्वत्प्रियां तुलसीं तुभ्यं ददामि त्वं गृहाण भोः ।। २४ ।।

एवं दत्त्वा च तुलसीं पश्चात्तौ पूजयेत्ततः।।

रात्रौ जागरणं कुर्याद्विवाहोत्सवपूर्वकम् ।।२५।।

ततः प्रभातसमये तुलसीं विष्णुमर्चयेत् ।।

वह्निसंस्थापनं कृत्वा द्वादशाक्षरविद्यया ।। २६ ।।

पायसाऽऽज्यक्षौद्रतिलैर्जुह्याद‌ष्टोत्तरंशतम् ।।

ततः स्विष्टकृतं हुत्वा दद्यात्पूर्णाहुतिं ततः ।।

आचार्यं च समभ्यर्च्य होमशेषं समापयेत् ।। २७ ।।

चतुरो वार्षिकान्मासान्नियमो येन यः कृतः ।।

कथयित्वा द्विजेभ्यस्तत्तथाऽन्यत्परिपूरयेत् ।। २८ ।।

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।।

न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।। २९ ।।

रेवतीतुर्यचरणे द्वादशीसंयुते नरः ।।

न कुर्यात्पारणं कुर्वन्व्रतं निष्फलतां नयेत् ।। 2.4.31.३० ।।

ततो येषां पदार्थानां वर्जनं तु कृतं भवेत् ।।

चातुर्मास्येऽथवा चोर्जे ब्राह्मणेभ्यः समर्पयेत् ।।

ततः सर्वं समश्नीयाद्यद्यत्त्यक्तं व्रते स्थितम् ।। ३१ ।।

दंपतिभ्यां सहैवाऽत्र भोक्तव्यं च द्विजैः सह ।।३२।।

ततो भुक्त्युत्तरं यानि गलितानि दलानि च ।।

तानि भुक्त्वा तुलस्याश्च स्वयं पापैः प्रमुच्यते ।। ३३ ।।

इक्षुदण्डं तथा धात्रीफलं कोलिफलं तथा ।।

भुक्त्वा तु भोजनस्यांऽते तस्योच्छिष्टं विनश्यति ।। ३४ ।।

एषु त्रिषु न भुक्तं चेदेकैकमपि येन तु ।।

ज्ञेय उच्छिष्ट आवर्षं नरोऽसौ नाऽत्र संशयः ।। ३५ ।।

ततः सायं पुनः पूज्याविक्षुदण्डैश्च शोभितैः ।।

तुलसीवासुदेवौ च कृतकृत्यो भवेत्ततः ।। ३६ ।।

ततो विसर्जनं कृत्वा दत्त्वा दायादिकं हरेः ।।

वैकुण्ठं गच्छ भगवँस्तुलसीसहितः प्रभो ।।

मत्कृतं पूजनं गृह्य संतुष्टो भव सर्वदा ।। ३७ ।।

गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।।

यत्र ब्रह्मादयो देवास्तत्र गच्छ जनार्दन ।। ३८ ।।

एवं विसृज्य देवेशमाचार्याय प्रदापयेत् ।।

मूर्त्यादिकं सर्वमेव कृतकृत्यो भवेन्नरः ।। ३९ ।।

प्रतिवर्षं तु यः कुर्यात्तुलसीकरपीडनम् ।।

भक्तिमान्धनधान्यैः स युक्तो भवति निश्चितम् ।।

इहलोके परत्राऽपि विपुलं च यशो लभेत् ।। 2.4.31.४० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये कूष्मांडनवमीतुलसीविवाहविधिवर्णनंनामैकत्रिंशोऽध्यायः ।। ३१ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३३

https://sa.wikisource.org/s/h66



।। वालखिल्या ऊचुः ।। ।।

कार्तिकस्याऽमले पक्षे स्नात्वा सम्यग्यतव्रतः ।।

एकादश्यां तु गृह्णीयाद्व्रतं पंचदिनात्मकम् ।। १ ।।

शरपंजरसुप्तेन भीष्मेण तु महात्मना ।।

राजधर्मा मोक्षधर्मा दानधर्मास्ततः परम् ।।

कथिता पांडुदायादैः कृष्णेनाऽपि श्रुतास्तदा ।। २ ।।

ततः प्रीतेन मनसा वासुदेवेन भाषितम् ।।

धन्यधन्योऽसि भीष्म त्वं धर्माः संश्राविताःस्त्वया ।। ३ ।।

एकादश्यां कार्तिकस्य याचितं च जलं त्वया ।।

अर्जुनेन समानीतं गांगं बाणस्य वेगतः ।। ४ ।।

तुष्टानि तव गात्राणि तस्मादद्यदिनावधि ।।

पूर्णांतं सर्वलोकास्त्वां तर्पयंत्वर्घ्यदानतः ।। ५ ।।

तस्मात्सर्वप्रयत्नेन मम संतुष्टिकारकम् ।।

एतद्व्रतं प्रकुर्वंतु भीष्मपंचकसंज्ञितम् ।। ६ ।।

कार्तिकस्य व्रतं कृत्वा न कुर्याद्भीष्मपंचकम् ।।

समग्रं कार्तिकव्रतं वृथा तस्य भविष्यति ।। ७ ।।

अशक्तश्चेन्नरो भूयादसमर्थश्च कार्तिके ।।

भीष्मस्य पंचकं कृत्वा कार्तिकस्य फलं लभेत् ।। ८ ।।

सत्यव्रताय शुचये गांगेयाय महात्मने ।।

भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे ।। ।। ९ ।।

सव्येनाऽनेन मंत्रेण तर्पणं सार्ववर्णिकम् ।। 2.4.32.१० ।।

व्रतांगत्वात्पूर्णिमायां प्रदेयः पापपूरुषः ।।

अपुत्रेण प्रकर्तव्यं सर्वथा भीष्मपञ्चकम् ।। ११ ।।

यः पुत्रार्थं व्रतं कुर्यात्सस्त्रीको भीष्मपञ्चकम् ।।

प्रदत्त्वा पापपुरुषं वर्षमध्ये सुतं लभेत् ।। १२ ।।

अवश्यमेव कर्तव्यं तस्माद्भीष्मस्य पंचकम् ।।

विष्णुप्रीतिकरं प्रोक्तं मया भीष्मस्य पञ्चकम् ।। १३ ।।

।। सूत उवाच ।। ।।

शृण्वंतु ऋषयः सर्वे विशेषो भीष्मपञ्चके ।।

कार्तिकेयाय रुद्रेण पुरा प्रोक्तः सविस्तरात् ।। १४ ।।

।। ईश्वर उवाच ।। ।।

प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर ।।

भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् ।। १५ ।।

सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् ।।

व्रतस्याऽस्य गुणान्वक्तुं कः शक्तः केशवादृते ।। ।। १६ ।।

कार्तिके शुक्लपक्षे तु शृणु धर्मं पुरातनम् ।।

वसिष्ठभृगुगर्गाद्यैश्चीर्णं कृतयुगादिषु ।। १७ ।।

अम्बरीषेण भोगाद्यैश्चीर्णं त्रेतायुगादिषु ।।

ब्राह्मणैर्ब्रह्मचर्येण जपहोमक्रियादिभिः ।। १८ ।।

क्षत्रियैश्च तथा वैश्यैः सत्यशौचपरायणैः ।।

दुष्करं सत्यहीनानामशक्यं बालचेतसाम् ।।१९।।

दुष्करं भीष्ममित्याहुर्न शक्यं प्राकृतैर्नरैः ।।

यस्मात्करोति विप्रेंद्र तेन सर्वं कृतं भवेत् ।। 2.4.32.२० ।।

व्रतं चैतन्महापुण्यं महापातकनाशनम् ।।

अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ।। २१ ।।

कार्तिकस्याऽमले पक्षे स्नात्वा सम्यग्विधानतः ।।

एकादश्यां तु गृह्णीयाद्व्रतं पंचदिनात्मकम् ।। २२ ।।

प्रातः स्नात्वा विशेषेण मध्याह्ने च तथा व्रती ।।

नद्यां निर्झरतोये वा समालभ्य च गोमयम् ।। २३ ।।

यवव्रीहितिलैः सम्यक्पितॄन्संतर्पयेत्क्रमात् ।।

स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः ।। २४ ।।

भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः ।।

पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः ।। २५ ।।

पंचरत्नं विशेषेण दत्त्वा विप्राय यत्नतः ।।

वासुदेवोऽपि संपूज्यो लक्ष्मीयुक्तः सदा प्रभुः ।। २६ ।।

पञ्चके पूजयित्वा तु कोटिजन्मानि तुष्यति ।। २७ ।।

यत्किंचिद्ददते मर्त्यः पंचधातुप्रकल्पितम् ।। संवत्सरव्रतानां स लभते सकलं फलम् ।। ।। २८ ।।

कृत्वा तूदकदानं तु तथाऽर्घ्यस्य च दापनम् ।।

मन्त्रेणानेन यः कुर्यान्मुक्तिभागी भवेन्नरः ।। २९ ।।

वैयाघ्रपादगोत्राय सांकृत्य प्रवराय च ।।

अनपत्याय भीष्माय उदकं भीष्मवर्मणे ।। 2.4.32.३० ।।

वसूनामवताराय शंतनोरात्मजाय च ।।

अर्घ्यं ददामि भीष्माय आजन्मब्रह्मचारिणे ।। ३१ ।।

।। इत्यर्घ्यमंत्रः ।। ।।

अनेन विधिना यस्तु पंचकं तु समापयेत् ।।

अश्वमेधसमं पुण्यं प्राप्नोत्यत्र न संशयः ।। ३२ ।।

पंचाऽहमपि कर्तव्यं नियमं च प्रयत्नतः ।।

नियमेन विना यत्र न भाव्यं वरवर्णिना।। ३३ ।।

उत्तरायणहीनाय भीष्माय प्रददौ हरिः ।।

उत्तरायणहीनेऽपि शुद्धलग्नं सुतोषितः ।। ३४ ।।

ततः संपूजयेद्देवं सर्वपापहरं हरिम्।।

अनंतरं प्रयत्नेन कर्तव्यं भीष्मपंचकम् ।। ३५ ।।

स्नापयेत जलैर्भक्त्या मधुक्षीरघृतेन च ।।

तथैव पंचगव्येन गन्धचंदनवारिणा ।। ३६ ।।

चन्दनेन सुगन्धेन कुमकुमेनाऽथ केशवम्।।

कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् ।। ३७ ।।

अर्चयेद्रुचिरैः पुष्पैर्गंधधूपसमन्वितैः ।।

गुग्गुलुं घृतसंयुक्तं ददेत्कृष्णाय भक्तिमान् ।। ३८ ।।

दीपकं तु दिवा रात्रौ दद्यात्पंच दिनानि तु ।।

नैवेद्यं देवदेवस्य परमान्नं निवेदयेत्।। ३९ ।।

एवमभ्यर्चयेद्देवं संस्मृत्य च प्रणम्य च ।।

ॐ नमो वासुदेवायेति जपेदष्टोत्तरं शतम् ।। 2.4.32.४० ।।

जुहुयाच्च घृताभ्यक्तैस्तिलव्रीहियवादिभिः ।।

षडक्षरेण मन्त्रेण स्वाहाकाराऽन्वितेन च ।। ४१ ।।

उपास्य पश्चिमां संध्यां प्रणम्य गरुडध्वजम् ।।

जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेत्सदा ।।४२।।

सर्वमेतद्विधानं तु कार्यं पञ्च दिनानि तु ।।

विशेषोऽत्र व्रते ह्यस्मिन्यदन्यूनं शृणुष्व तत् ।। ४३ ।।

प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्व्रती ।।

द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् ।।४४।।

ततोऽनुपूजयेच्छीर्षं मालत्या चक्रपाणिनः ।।

कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः ।। ४५ ।।

अर्चित्वा तं हृषीकेशमेकादश्यां समासतः ।।

निःप्राश्य गोमयं सम्यगेकादश्यामुपावसेत् ।। ४६ ।।

गोमूत्रं मन्त्रवद्भूमौ द्वादश्यां प्राशयेद्व्रती ।।

क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि ।। ४७ ।।

संप्राश्य कायशुद्ध्यर्थं लंघयित्वा चतुर्दिनम् ।।

पंचमे दिवसे स्नात्वा विधिवत्पूज्य केशवम् ।।

भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम्।। ४८ ।।

पापबुद्धिं परित्यज्य ब्रह्मचर्येण धीमता ।।

मद्यं मांसं परित्याज्यं मैथुनं पापकारणम् ।। ४९ ।।

शाकाहारेण मुन्यन्नैः कृष्णार्चनपरो नरः ।।

ततो नक्तं समश्नीयात्पंचगव्यपुरःसरम् ।। 2.4.32.५० ।।

एवं सम्यक्समाप्यं स्याद्यथोक्तं फलमाप्नुयात् ।। ५१ ।।

मद्यपो यः पिबेन्मद्यं जन्मनो मरणांऽतिकम् ।।

एतद्भीष्मव्रतं कृत्वा प्राप्नोति परमं पदम् ।। ५२ ।।

स्त्रीभिर्वा भर्तृवाक्येन कर्तव्यं धर्मवर्धनम् ।।

विधवाभिश्च कर्तव्यं मोक्षसौख्याऽतिवृद्धये ।। ५३ ।।

अयोध्यायां पुरा कश्चिदतिथिर्नाम वै नृपः ।।

वसिष्ठवचनात्कृत्वा व्रतमेतत्सुदुर्लभम् ।।

भुक्त्वेह निखिलान्भोगानंते विष्णुपुरं ययौ ।। ५४ ।।

इत्थं कुर्याद्व्रतं नित्यं पञ्चकं भीष्मसंज्ञितम् ।।

नियमेनोपवासेन पञ्चगव्येन वा पुनः ।।

पयोमूलफलाऽऽहारैर्हविष्यैर्व्रततत्परः ।। ५५ ।।

पौर्णमासीदिने प्राप्ते पूजां कृत्वा तु पूर्ववत् ।।

ब्राह्मणान्भोजयेद्भक्त्या गां च दद्यात्सवत्सकाम् ।। ५६ ।।

यद्भीष्मपञ्चकमिति प्रथितं पृथिव्यामेकादशीप्रभृति पंचदशीनिरुद्धम् ।।

उक्तं न भोजनपरस्य तदा निषेधस्तस्मिन्व्रते शुभफलं प्रददाति विष्णुः ।। ५७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये भीष्म पञ्चकव्रतमाहात्म्यवर्णनंनाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३४

https://sa.wikisource.org/s/h67



।। नारद उवाच ।। ।।

व्रतानामपि सर्वेषां ब्रह्मन्नुद्यापनं श्रुतम् ।।

अभावे तूद्यापनस्य फलं नैवाऽऽप्नुयात्क्वचित् ।। १ ।।

कृतव्रतफलाप्त्यर्थं कुर्यादुद्यापनं बुधः ।।

अन्यथा निष्फलं याति कृतं व्रतमनुत्तमम् ।। २ ।।

कार्तिकेऽपि कृतं देव व्रतानामुत्तमं व्रतम् ।।

न तस्योद्यापनाऽभावे व्रतोक्तफलमाप्नुयात् ।। ३ ।।

तस्मात्कार्तिकमासस्य चोद्यापनविधिं प्रभो ।।

वद मे शिष्यवर्याय प्रपन्नायाऽनुवर्तिने ।। ४ ।।

।। ब्रह्मोवाच ।। ।।

अथोर्जोद्यापनं वक्ष्ये सर्वपापप्रणाशनम् ।।

तच्छृणुष्व महाभक्त्या सविधानं समासतः ।। ५ ।।

ऊर्जे शुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती।।

व्रतसंपूरणार्थाय विष्णुप्रीत्यर्थहेतवे ।। ६ ।।

तुलस्या उपरिष्टात्तु कुर्यान्मंडपिकां शुभाम्।।

कदलीस्तंभसंयुक्तां नानाधातुविचित्रिताम् ।।७।।

दीपमाला चतुर्दिक्षु कार्या तत्र सुशोभना ।।

सुतोरणाश्चतुर्द्वारः पुष्पचामरशोभिताः।।८।।

द्वारेषु द्वारपालाश्च पूजयेन्मृन्मयान्पृथक् ।।

जयश्च विजयश्चैव चण्डश्चैव प्रचंडकः ।। ९ ।।

नन्दश्चैव सुनंदश्च कुमुदः कुमुदाक्षकः ।।

एतांश्चतुर्षु द्वारेषु पूजयेद्भक्तिसंयुतः ।। 2.4.34.१० ।।

तुलसीमूलदेशे तु सर्वतोभद्रसंज्ञितम् ।।

चतुर्भिर्वर्णकैः सम्यक्छोभाढ्यं समलंकृतम् ।। ११ ।।

तस्योपरिष्टात्कलशं पूर्णरत्नसमन्वितम् ।।

तत्र संपूजयेद्देवं शंखचक्रगदाधरम् ।। १२ ।।

कौशेयपीतवसनं लक्ष्म्या युक्तं प्रपूजयेत् ।।

इन्द्रादिलोकपालांश्च मंडपे पूजयेद्व्रती ।। ।। १३ ।।

तस्यामुपवसेद्भक्त्या शांतः प्रणतमानसः ।।

रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः ।। १४ ।।

गीतं कुर्वंति ये भक्त्या जागरे चक्रपाणिनः ।।

जन्मांतरशतोद्भूतैस्ते मुक्ताः पापसंचयैः ।।१५।।

ततस्तु पूर्णिमायां तु सपत्नीकान्द्विजोत्तमान् ।।

त्रिंशन्मितानथैकं वा ब्राह्मणांश्च निमंत्रयेत् ।। १६ ।।

प्रातःस्नानं ततः कृत्वा देवपूजां तथैव च ।।

स्थंडिले च ततः कृत्वा समाधायाऽग्निमत्र हि ।। १७ ।।

अतो देवेति मंत्रेण जुहुयात्तिलपायसम् ।।

प्रीत्यर्थं देवदेवस्य देवानां च पृथक्पृथक् ।। १८ ।।

होमशेषं समाप्याथ ब्राह्मणान्पूज्य भक्तितः ।।

ब्राह्मणेभ्यो यथाशक्त्या प्रदद्याद्दक्षिणां नरः ।। १९ ।।

ततो गां कपिलां तत्र पूजयेद्विधिवद्व्रती ।।

सवत्सां गां तथा दद्याद्विप्राय च कुटुम्बिने ।। 2.4.34.२० ।।

गुरुं व्रतोपदेष्टारं वस्त्रालंकारभूषणैः ।।

सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् ।। २१ ।।

युष्मत्प्रसादाद्देवेशः प्रसन्नोऽस्तु सदा मम ।।

व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ।। २२ ।।

तत्सर्वं नाशमायातु स्थिरा मे चाऽस्तु संततिः ।।

मनोरथास्तु सफलाः संतु भक्तिर्हरौ भवेत् ।। २३ ।।

सतां समागमो भूयान्मम जन्मनिजन्मनि ।।

इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् ।। २४ ।।

प्रतिमां तां गुरोर्दद्यात्सवस्त्रां मुनिपुंगव ।।

ततः सुहृद्गुरुयुतः स्वयं भुंजीत भक्तिमान् ।। २५ ।।

द्वादश्यां प्रतिबुद्धोऽसौ त्रयोदश्यां युतः सुरैः ।।

दृष्टोर्च्चितश्चतुर्दश्यां तस्मात्पूज्यस्तिथाविह ।। २६ ।।

पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया ।।

पराऽत्र पौर्णमास्यां तु यात्रा स्यात्पुष्करस्य तु ।। २७ ।।

वरान्दत्त्वा यतो विष्णुर्मत्स्यरूपोऽभवत्ततः ।।

तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं भवेत् ।। २८ ।।

कार्तिके मासि कर्तव्यो विधिरेष हि नारद ।।

एवं यः कुरुते सम्यक्कार्तिकस्य व्रतं नरः ।। २९ ।।

यत्फलं तदवाप्नोति व्रतं कृत्वा तु कार्तिके ।।

ते धन्यास्ते सदा पूज्यास्तेषां वै सफलोदयः ।। 2.4.34.३० ।।

विष्णुभक्तिरता ये स्युः कार्तिके व्रतचारिणः ।।

देहस्थितानि पापानि विलयं यांति तत्क्षणात् ।। ३१ ।।

क्व यामोऽद्य भवत्येष यदूर्जव्रतकृन्नरः ।।

इति सर्वाणि पापानि रटन्तीह पुनःपुनः ।। ३२ ।।

तस्मात्कार्तिकमासस्य सदृशं नहि विद्यते ।।

सर्वपापस्य दहने अग्नेः सदृश उच्यते ।।३३।।

ऊर्जोद्यापनमाहात्म्यं शृणुयाच्छ्रद्धयाऽन्वितः ।।

श्रावयेद्वा पुमान्यस्तु विष्णुसायुज्यमाप्नुयात् ।। ३४ ।।

।। नारद उवाच ।। ।।

ऊर्जे व्रतोद्यापनादावशक्तः सिद्धिभाक्कथम् ।।

कथं विमुच्यते जंतुर्दुःखसंसारसागरात् ।। ३५ ।।

।। ।। ब्रह्मोवाच ।। ।।

शृणुयादूर्जमाहात्म्यं नियमेन शुचिः पुमान् ।।

उद्यापनफलं प्राप्य विष्णुलोके वसेच्च सः ।। ३६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये व्रतोद्यापनविधिकथनंनाम चतुऽस्त्रिंशोऽध्यायः ।। ३४ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३५



।। ब्रह्मोवाच ।। ।।

वैकुण्ठाख्यचतुर्दश्या माहात्म्यं ते वदाम्यहम् ।।

वालखिल्यैः पुरा प्रोक्तं संक्षेपेण शृणुष्व तत् ।। १ ।।

।। वालखिल्या ऊचुः ।। ।।

कार्तिकस्य सिते पक्षे चतुर्दश्यां समागमत् ।।

वैकुण्ठेशस्तु वैकुण्ठाद्वाराणस्यां कृते युगे ।। २ ।।

रात्र्यां तुर्यांशशेषायां स्नात्वाऽसौ मणिकर्णिके ।।

गृहीत्वा हेमपद्मानां सहस्रं वै ततोऽव्रजत् ।। ३ ।।

अतिभक्त्या पूजयितुं शिवया सहितं शिवम् ।।

विधाय पूजां वैश्वेशीं ततः पद्मैरपूजयत् ।। ४ ।।

सहस्रसंख्यां कृत्वादावेकनाम्ना ततः परम् ।।

आरब्धं पूजनं तेन शिवस्तद्भक्तिमैक्षत ।। ५ ।।

एकं पद्मं पद्ममध्यान्निलीयाऽऽत्तं हरेण तु ।।

ततः पूजितवान्विष्णुरेकोनं कमलं त्वभूत् ।। ६ ।।

इतस्ततस्तेन दृष्टं पद्मं तिष्ठति न क्वचित् ।।

कमलेषु भ्रमो जातोऽथवा नामसु मे भ्रमः ।। ७ ।।

क्षणं विचार्य स हरिर्न मे नामभ्रमोऽभवत् ।।

पद्मे चैव भ्रमो जातो विचार्यैवं पुनःपुनः ।। ८ ।।

सहस्रपद्मसंकल्पः पूजार्थं तु कृतो मया ।।

अर्च्यः कथं महादेव एकोनकमलैर्मया ।। ९ ।।

यद्यानेतुं गमिष्यामि भंगः स्यादासनस्य तु ।।

अतः परं किं विधेयं चिन्तोद्विग्नो हरिस्तदा ।। 2.4.35.१० ।।

एकः प्रकार उत्पन्नो हृदयेऽस्य मुनीश्वराः ।।

पुण्डरीकाक्ष इत्येवं मां वदंति मुनीश्वराः ।। ११ ।।

नेत्रं मे पद्मसदृशे पद्मार्थे त्वर्पयाम्यहम् ।।

इति निश्चित्य मनसा दत्त्वा तर्जनिकां स तु ।। १२ ।।

नेत्रमध्यात्तदुत्पाट्य महादेवस्तु पूजितः ।।

ततो महेश्वरस्तुष्टो वाक्यमेतदुवाच ह ।। १३ ।।

।। महादेव उवाच ।। ।।

त्वत्समो नास्ति मद्भक्तस्त्रैलोक्ये सचराचरे ।।

राज्यं दत्तं त्रिलोक्यास्ते भव त्वं लोकपालकः ।। १४ ।।

अन्यं वरय भद्रं ते वरं यन्मनसेप्सितम् ।।

अवश्यमेव दास्यामि नात्र कार्या विचारणा ।। १५ ।।

मद्भक्तिं तु समालंब्य ये द्विषंति जनार्दनम् ।।

ते मद्द्वेष्या नरा विष्णो व्रजेयुर्नरकं ध्रुवम् ।। १६ ।।

।। ।। विष्णुरुवाच ।। ।।

त्रैलोक्यरक्षाकरणं ममादिष्टं महेश्वर ।।

दुमर्दाश्च महासत्त्वा दैत्या मार्याः कथं मया ।।१७।।

।। शिव उवाच ।। ।।

एतत्सुदर्शनं चक्रं महादैत्यनिकृंतनम् ।।

गृहाण भगवन्विष्णो मया तुभ्य निवेदितम् ।।१८।।

अनेन सर्वदैत्यानां भगवन्कदनं कुरु ।।

एवं चक्रं हरेर्दत्त्वा ततो वचनमब्रवीत् ।। १९ ।।

।। शिव उवाच ।। ।।

वर्षे च हेमलंबाख्ये मासे श्रीमति कार्तिके ।।

शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ।।2.4.35.२०।।

महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।।

स्नात्वा वैश्वेश्वरं लिंगं वैकुण्ठादेत्य पूजितम्।।२१।।

सहस्रकमलैस्तस्माद्भविष्यति मम प्रिया ।।

विख्याता सर्वलोकेषु वैकुण्ठाख्या चतुर्दशी ।।२२।।

अन्यं वरं प्रयच्छामि शृणु विष्णो वचो मम ।।

पूर्वरात्रेषु ते पूजा कर्तव्या सर्वजातिभिः ।।२३।।

उपवासं दिवा कुर्यात्सायंकाले तवार्चनम् ।।

पश्चान्ममार्चनं कार्यमन्यथा निष्फलं भवेत् ।। २४ ।।

ग्राह्या तु हरिपूजायां रात्रिव्याप्ता चतुर्दशी ।।

अरुणोदयवेलायां शिवपूजां समाचरेत् ।। २५ ।।

सहस्रकमलैर्विष्णुरादौ यैः पूजितो नरैः।।

पश्चाच्छिवः पूजितश्चेज्जीवन्मुक्तास्त एव हि ।। २६ ।।

सायं स्नात्वा पंचनदे बिंदुमाधवमर्चयेत् ।।

स्नात्वा यो विष्णुकांच्यां वाऽनंतसेनं समर्चयेत् ।। २७ ।।

रुद्रकांच्यां ततः स्नात्वा प्रणवेशं समर्चयेत् ।।

आदौ स्नात्वा वह्नितीर्थे यजेन्नारायणं ततः ।। २८ ।।

रेतोदके ततः स्नात्वा केदारेशं समर्चयेत् ।।

आदौ स्नात्वा सूर्यपुत्र्यां वेणीमाधवमर्चयेत् ।। २९ ।।

जाह्नव्यां च ततः स्नात्वा संगमेशं प्रपूजयेत् ।।

सर्वाः श्रियस्तस्य वश्याः सत्यं विष्णो मयोदितम् ।। 2.4.35.३० ।।

एवं तस्मै वरान्दत्त्वा ह्यंतर्धानं ययौ शिवः ।।

तस्मात्सर्वप्रयत्नेन पूज्यौ हरिहरावुभौ ।। ३१ ।।

कलौ दशसहस्राणि विष्णुस्त्यजति मेदिनीम् ।।

तदर्द्धं जाह्नवीतोयं तदर्द्धं ग्रामदेवताः ।। ३२ ।।

कार्तिक्यां पूर्णिमायां तु कुर्यात्त्रैपुरमुत्सवम् ।।

दीपो देयोऽवश्यमेव सायंकाले शिवालये ।। ३३ ।।

त्रिपुरो नाम दैत्येंद्रः प्रयागे तप आस्थितः ।।

तपसा तस्य संतुष्टो ददौ ब्रह्मा वरं परम्।। ३४ ।।

देवासुरमनुष्येभ्यो न ते मृत्युर्भविष्यति ।।

इति लब्धवरो दैत्यो विश्वकर्मविनिर्मितम् ।। ३५ ।।

त्रिपुराख्यं विमानं तमारुह्य भुवनत्रयम् ।।

यदा वै पीडयामास तदा देवैः स्तुतो हरः ।। ३६ ।।

त्रिपुरं घातयामास बाणेनैकेन शत्रुहा ।।

कार्तिक्यां पूर्णिमायां तु सर्वे देवाः प्रतुष्टुवुः ।। ३७ ।।

तस्मिन्दिने सर्वदेवैर्दीपा दत्ता हराय च ।।

सर्वथैव प्रदेयाश्च दीपास्तु हरतुष्टये ।। ३८ ।।

विंशतिः सप्तशतकाः सहिता दीपवर्तयः ।।

ददद्दीपं पूर्णिमायां सर्वपापैः प्रमुच्यते ।। ३९ ।।

पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः ।।

दद्यादनेन मन्त्रेण प्रदीपांश्च सुरालये ।। 2.4.35.४० ।।

कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरंति जीवाः ।।

दृष्ट्वा प्रदीपं न च जन्मभागिनो भवंतु नित्यं श्वपचा हि विप्राः ।। ४१ ।।

कार्यस्तस्मात्पौर्णमास्यां त्रिपुराय महोत्सवः ।।

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।। ।। ४२ ।।

सप्त जन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।।

अत्र कृत्वा वृषोत्सर्गं नक्ताच्छैवपुरं व्रजेत् ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये वैकुण्ठचतुर्दशी त्रिपुरीपूर्णिमाव्रतविधानकथनंनाम पंचत्रिंशोऽध्यायः ।। ३५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/कार्तिकमासमाहात्म्यम्/अध्यायः ३६

https://sa.wikisource.org/s/h69



।। ।। ब्रह्मोवाच ।। ।।

यास्तिस्रस्तिथयः पुण्या अंतिके शुक्लपक्षके ।।

कार्तिके मासि विप्रेंद्र पूर्णिमांताः शुभवहाः ।। १ ।।

अंतिपुष्करिणी संज्ञा सर्वपापक्षयावहा ।।

कार्त्तिके मासि संपूर्णं यो वै स्नानं करोति ह ।। २ ।।

तिथिष्वेतासु सः स्नानात्पूर्णमेव फलं लभेत् ।।

सर्वे वेदास्त्रयोदश्यां गत्वा जन्तून्पुनंति हि ।। ३ ।।

चतुर्दश्यां सयज्ञाश्च देवा जंतून्पुनंति हि ।।

पूर्णिमायां सुतीर्थानि विष्णुना संस्थितानि हि ।। ४ ।।

ब्रह्मघ्नान्वा सुरापान्वा सर्वाञ्जंतून्पुनंति हि ।।

उष्णोदकेन यः स्नायात्कार्त्तिक्यादिदिनत्रये ।। ५ ।।

रौरवं नरकं याति यावदिंद्राश्चतुर्दश ।।

आमासनियमाशक्तः कुर्यादेतद्दिनत्रये ।। ६ ।।

तेन पूर्णफलं प्राप्य मोदते विष्णुमंदिरे ।।

यो वै देवान्पितॄन्विष्णुं गुरुमुद्दिश्य मानवः ।। ७ ।।

न स्नानादि करोत्यद्धा स याति नरकं ध्रुवम् ।।

कुटुंबभोजन यस्तु गृहस्थस्तु दिनत्रये ।। ।। ८ ।।

सर्वान्पितॄन्समुद्धृत्य स याति परमं पदम् ।।

गीतापाठं तु यः कुर्यादंतिमे च दिनत्रये ।। ९ ।।

दिनेदिनेऽश्वमेधानां फलमेति न संशयः ।।

सहस्रनामपठनं यः कुर्यात्तु दिनत्रये ।। 2.4.36.१० ।।

न पापैर्लिप्यते क्वाऽपि पद्मपत्रमिवांऽभसा ।।

देवत्वं मनुजैः कैश्चित्कैश्चित्सिद्धत्वमेव च ।। ११ ।।

तस्य पुण्यफलं वक्तुं कः शक्तो दिवि वा भुवि ।।

यो वै भागवतं शास्त्रं शृणोति च दिनत्रयम् ।। १२ ।।

कैश्चित्प्राप्तो ब्रह्मभावो दिनत्रयनिषेवणात् ।।

ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।। १३ ।।

अथ वा कार्त्तिके मासि दिनत्रयनिषेवणात् ।।

कार्त्तिके हरिपूजां तु यः करोति दिनत्रये ।। १४ ।।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।।

कार्त्तिके मासि विप्रेंद्र सर्वमंत्यदिनत्रये ।। १५ ।।

पुण्यं तत्राऽपि वैशेष्यं राकायां वर्ततेऽनघ।।

प्रातःकाले समुत्थाय शौचं स्नानादिकं चरेत् ।। १६ ।।

समाप्य सर्वकर्माणि विष्णुपूजां समाचरेत् ।।

उद्याने वा गृहे वाऽपि कार्त्तिक्यां विष्णुतत्परः ।। १७ ।।

मंडपं तत्र कुर्वीत कदलीस्तंभमंडितम् ।।

चूतपल्लवसंवीतमिक्षुदंडैः सुमंडितम्।। १८ ।।

चित्रवस्त्रैः स्वलंकृत्य तत्र देवं प्रपूजयेत् ।।

चूतपल्लवपुष्पाढ्यैः फलाद्यैः पूजयेद्धरिम् ।। १९ ।।

शृणुयादूर्जमाहात्म्यं नियमेन शुचिः पुमान् ।।

संपूर्णमथ वाऽध्यायमेकश्लोकमथाऽपि वा ।। 2.4.36.२० ।।

मुहूर्तं वाऽपि शृणुयात्कथां पुण्यां दिनेदिने ।।

यदि प्रतिदिनं श्रोतुमशक्तः स्यात्तु मानवः ।। २१ ।।

पुण्यमासेऽथवा पुण्यतिथौ संशृणुयादपि ।।

तेन पुण्यप्रभावेन पापान्मुक्तो भवेन्नरः ।। २२ ।।

पुराणज्ञः शुचिर्दक्षः शांतो विगतमत्सरः ।।

साधुः कारुणिको वाग्ग्मी वदेत्पुण्यां कथां सुधीः ।। २३।।

व्यासासनं समारूढो यदा पौराणिको भवेत् ।।

आसमाप्तेः प्रसंगस्य नमस्कुर्यान्न कस्यचित् ।। २४ ।।

न दुर्जनसमाकीर्णे न शूद्रश्वापदावृते ।।

देशे न द्यूतसदने वदेत्पुण्यकथां सुधीः ।।२५।।

श्रद्धाभक्तिसमायुक्ता नाऽन्यकार्येषु लालसा ।।

वाग्यताः शुचयो दक्षाः श्रोतारः पुण्यभागिनः ।। २६ ।।

अभक्ता ये कथां पुण्यां शृण्वंति मनुजाऽधमाः ।।

तेषां पुण्यफलं नाऽस्ति दुःखं स्याजन्मजन्मनि ।। २७ ।।

पौराणिकं च मासांते पूजयेद्भक्तितत्परः ।।

गन्धमाल्यैस्तथा वस्त्रैरलंकारैर्धनेन च ।। २८ ।।

शृण्वंति च कथां भक्त्या न दरिद्रा न पापिनः ।। २९ ।।

कथायां कीर्त्यमानायां ये गच्छंत्यन्यतो नराः ।।

भोगांतरे प्रणश्यंति तेषां दाराश्च संपदः ।। 2.4.36.३० ।।

उच्चासनसमारूढो न नरः प्रणतो भवेत् ।।

विषवृक्षस्तथा स्वापे वने चाऽजगरो भवेत् ।। ३१ ।।

कथायां कीर्त्यमानायां विघ्नं कुर्वंति ये नराः ।।

कोट्यब्दनरकान्भुक्त्वा भवंति ग्रामसूकराः ।। ३२ ।।

ये श्रावयंति मनुजाः कथां पौराणिकीं शुभाम् ।।

कल्पकोटिशतं साग्रं तिष्ठंति ब्रह्मणः पदे ।। ३३ ।।

आसनार्थे प्रयच्छति पुराणज्ञस्य ये नराः ।।

कम्बलाजिनवासांसि मंचं फलकमेव वा ।। ३४ ।।

परिधानीयवस्त्राणि प्रयच्छंति च ये नराः ।।

भूषणादि प्रयच्छंति वसेयुर्ब्रह्मसद्मनि ।। ३५ ।।

वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ।।

अतः संतोषयेद्भक्त्या भक्तिश्रद्धान्वितः पुमान् ।।

तस्य पुण्यफलं पूर्णं भवत्येव न संशयः ।। ३६ ।।

यत्फलं सर्वयज्ञेषु सर्वदानेषु यत्फलम् ।।

सकृत्पुराणश्रवणात्तत्फलं विंदते नरः ।।३७।।

कलौ युगे विशेषेण पुराणश्रवणादृते ।।

नास्ति धर्मः परः पुंसां नास्ति मुक्तिपथः परः ।।

पुराणश्रवणाद्विष्णोर्नास्ति संकीर्तनात्परम् ।। ३८ ।।

य एतदूर्जमाहात्म्यं शृणुयाच्छ्रावयेदपि ।।

स तीर्थराज बदरीगमनस्य फलं लभेत् ।। ३९ ।।

सर्वरोगापहं सर्वपापनाशकरं शुभम् ।। 2.4.36.४० ।।

श्रुत्वा चैकपदे यो वै अगम्यागमने रतः ।।

कन्यास्वस्रोर्विक्रयिणमुभयं तु विमोचयेत् ।। ४१ ।।

माहात्म्यमेतदाकर्ण्य पूजयेद्यस्तु पाठकम् ।।

गोभूहिरण्यवस्त्रैश्च विष्णुतुल्यो यतो हि सः ।। ४२ ।।

धर्मशास्त्रं पुराणं च वेदविद्यादिकं च यत् ।।

पुस्तकं वाचकायैव दातव्यं धर्ममिच्छता ।।

पुराणविद्यादातारो ह्यनंतफलभोगिनः ।। ।। ४३ ।।

इदं यः पठते भक्त्या श्रुत्वा चैवाऽवधारयेत् ।।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।। ४४ ।।

न कस्याऽपीदमाख्येयं श्रद्धाहीनाय दुर्मतेः ।। ४५ ।।

अपूजयित्वा गुरुमग्रबुद्ध्या धर्मप्रवक्तारमनन्यबुद्धिः ।।

भुक्त्वा तु भोगान्नरकेषु चैव ततो हि जन्मान्तर दुःखभोगी ।। ४६ ।।

तस्मात्संपूजयेद्भक्त्या गुरुं तत्त्वावबोधकम् ।।

माहात्म्यस्य च लेशोऽयं तव चोक्तो मयाऽनघ ।। ४७ ।।

न शक्यते हि संपूर्णं वक्तुं वर्षशतैरपि ।।

पुरा कैलासशिखरे पार्वत्यै प्रोक्तवाञ्च्छिवः ।। ४८ ।।

कार्तिकस्य तु माहात्म्यं यावद्वर्षशतं वदन् ।।

तथापि नांतमगमदशक्तो विरराम ह ।। ४९ ।।

पुत्रार्थी च धनार्थी च राज्यार्थी स्वफलं लभेत् ।।

किमत्र बहुनोक्तेन मोक्षार्थी मोक्षमाप्नुयात् ।। 2.4.36.५० ।।

।। सूत उवाच ।। ।।

इत्युक्तो ब्रह्मणा चैव नारदः प्रेमनिर्भरः ।।

भूयोभूयो नमस्कृत्य ययौ यादृच्छिको मुनिः ।। ५१ ।।

कथितं शंकरेणाऽपि पुत्राय हितकाम्यया ।।

पितुस्तद्वाक्यमाकर्ण्य षण्मुखो हर्षनिर्भरः ।। ५२ ।।

कृष्णेन सत्यभामायै कार्तिकस्य च वैभवः ।।

कथितस्तेन संतुष्टा सत्या व्रतमथाऽकरोत् ।।५३।।

ऋषयो वालखिल्येभ्यः श्रुत्वा माहात्म्यमुत्तमम् ।।

ऊर्जव्रतपरा जातास्तस्मादूर्जोऽतिवल्लभः ।। ५४ ।।

अधीत्य सर्वशास्त्राणि पयःसारमिवोद्धृतम् ।।

नाऽनेन सदृशं शास्त्रं विष्णुप्रीतिकरं शुभम् ।। ५५ ।।

।। व्यास उवाच ।। ।।

इत्युक्त्वा तानृषीन्सर्वान्सूतो वै धर्मवित्तमः ।।

विरराम ततस्ते तु पूजां चक्रुस्तदास्य च ।। ५६ ।।

ते पुनः स्वाश्रमं गत्वा हृष्टास्ते परमर्षयः ।।

यथा सूतेनोपदिष्टं तथा चक्रुर्व्रतं शुभम् ।। ५७ ।।

अनेन विधिना ये वै कुर्वंति कार्तिकव्रतम् ।।

ते सर्वपापनिर्मुक्ता गच्छंति विष्णुमंदिरम् ।। ५८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे कार्तिकमासमाहात्म्ये पुष्करिणीसंज्ञिकांतिमतिथित्रयमाहात्म्यकथनपूर्वकपुराण श्रवणमहिमवर्णनंनाम षट्त्रिंशोऽध्यायः ।। ३६ ।।

इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे सटीकं कार्तिकमासमाहात्म्यं समाप्तम् ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०१



।। ।। श्रीगणेशाय नमः ।।

।। अथ मार्गशीर्षमासमाहात्म्यप्रारम्भः ।।

।। सूत उवाच ।। ।।

देवकीनन्दनं कृष्णं जगदानन्दकारकम् ।।

भुक्तिमुक्तिप्रदं वन्दे माधवं भक्तवत्सलम् ।। १ ।।

श्वेतद्वीपे सुखासीनं देवदेवं रमापतिम् ।।

चतुर्वक्त्रो नमस्कृत्य पप्रच्छ पितरं तदा ।। २ ।।

।। ब्रह्मोवाच ।। ।।

हृषीकेश जगद्धातः पुण्यश्रवणकीर्तन ।।

पृष्टं यद्ब्रूहि देवेश सर्वज्ञ सकलेश्वर ।। ३ ।।

मासानां मार्गशीर्षोऽहमित्युक्तं भवता पुरा ।।

तस्य मासस्य माहात्म्यं ज्ञातुमिच्छामि तत्त्वतः ।। ४ ।।

को देवस्तस्य किं दानं कथं स्नानं विधिश्च कः ।।

पुरुषैस्तत्र किं कार्यं भोक्तव्यं किं रमापते ।। ५ ।।

वक्तव्यं किं तथा पूजाध्यानमंत्रादिकं च यत् ।।

तत्र यत्क्रियते कर्म तत्सर्वं ब्रूहि मेऽच्युत ।। ६ ।।

।। श्रीभगवानुवाच ।। ।।

साधु पृष्टं त्वया ब्रह्मन्सर्वलोकोपकारिणा ।।

यस्मिन्कृते कृतं सर्वमिष्टापूर्तादिकं भवेत ।। ७ ।।

सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।।

तत्फलं समवाप्नोति मार्गशीर्षे कृते सुत ।। ८ ।।

तुलापुरुषदानाद्यैर्यत्फलं लभते नरः ।।

तत्फलं प्राप्यते पुत्र माहात्म्यश्रवणात्किल ।। ९ ।।

यज्ञाध्ययनदानाद्यैः सर्वतीर्थावगाहनैः ।।

संन्यासेन च योगेन नाऽहं वश्योऽभवं नृणाम् ।। 2.5.1.१० ।।

स्नानेन दानेन च पूजनेन ध्यानेन मौनेन जपादिभिश्च ।।

वश्यो यथा मार्गशिरे च मासि तथा न चान्येषु च गुह्यमुक्तम् ।। ११ ।।

अन्यैर्धर्मादिभिः कृत्वा गोपितं मार्गशीर्षकम् ।।

मत्प्राप्तेः कारणं मत्वा देवैः स्वर्गनिवासिभिः ।। १२ ।।

ये केचित्पुण्यकर्माणो मम भक्तिपरायणाः ।।

तेषामवश्यं कर्तव्यो मार्गशीर्षो मदापनः ।। १३ ।।

मार्गशीर्षं न कुर्वंति ये नरा भारताऽजिरे ।।

पापरूपाश्च ते ज्ञेयाः कलिकालविमोहिताः ।। १४ ।।

अष्टस्वपि च मासेषु यत्फलं लभते नरः ।।

तत्फलं प्राप्यते वत्स माघे मकरगे रवौ ।। १५ ।।

माघाच्छतगुणं पुण्यं वैशाखे मासि लभ्यते ।।

तस्मात्सहस्रगुणितं तुलासंस्थे दिवाकरे ।। १६ ।।

तस्मात्कोटिगुणं पुण्यं वृश्चिकस्थे दिवाकरे ।।

मार्गशीर्षोऽधिकस्तस्मात्सर्वदा च मम प्रियः ।। १७ ।।

उषस्युत्थाय यो मर्त्यः स्नानं विधिवदाचरेत् ।।

तुष्टोऽहं तस्य यच्छामि स्वात्मानमपि पुत्रक ।। १८ ।।

अत्राप्युदाहरन्तीदं शृणु पुत्र कथानकम् ।।

नन्दगोपो महात्मा वै ख्यातो यो भूतलेऽभवत् ।। १९।।

तस्य वै गोकुले रम्ये गोपकन्याः सहस्रशः ।।

तासां चित्तं च मद्रूपे लग्नमासीत्पुराऽनघ ।। 2.5.1.२० ।।

तासां बुद्धिर्मया दत्ता मागशीर्षाऽवगाहने ।।

ततस्ताभिः कृतं स्नानं प्रातःकाले यथाविधि ।। २१ ।।

पूजा कृता हविष्यान्नं भुक्तं ताभिः कृता नतिः ।।

एवं कृतेन विधिना प्रसन्नोऽहं ततोऽनघ ।। २२ ।।

वरो दत्तो मयाऽऽत्मा हि तासां तुष्टेन वै किल ।।

तस्मान्नरैस्तु कर्तव्यो मार्गशीर्षो यथाविधि ।। २३ ।।

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये गोपीकृतमार्गशीर्षस्नानफलकथनंनाम प्रथमोऽध्यायः ।।।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०२



।। ब्रह्मोवाच ।। ।।

त्वयोक्तो विधिसंयुक्तो मार्गशीर्षो मदापनः ।।

को विधिस्तस्य देवेश सर्वं मे ब्रूहि केशव ।। १ ।।

।। ।। श्रीभगवानुवाच ।। ।।

रात्रावन्ते समुत्थाय उपस्पृश्य यथाविधि ।।

नमस्कृत्या गुरुं स्वीयं संस्मरेन्मामतंद्रितः ।। २।।

सहस्रनामभिर्भक्त्या कीर्तयेद्वाग्यतः शुचिः ।।

बहिर्ग्रामात्समुत्सृज्य मलमूत्रं यथाविधि ।। ३ ।।

शौचं कृत्वा यथान्यायमाचम्य प्रयतः शुचिः ।।

दंतधावनपूर्वं च स्नानं कृत्वा यथाविधि ।। ४ ।।

आदाय तुलसीमूलमृदं तत्पत्रसंयुताम् ।।

मूलमंत्रेणाऽभिमंत्र्य गायत्र्या वा महामते ।। ५ ।।

मंत्रेणैवाऽनुलिप्तांगः स्नायादप्स्वघमर्षणम् ।।

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं विधीयते ।। ६ ।।

तीर्थं प्रकल्पयेद्विद्वान्मन्त्रेणाऽनेन मन्त्रवित् ।।

ॐनमो नारायणायेति मूलमन्त्र उदाहृतः ।। ७ ।।

दर्भपाणिस्तु विधिना आचांतः पुरतः शुचिः ।।

चतुर्हस्तसमायुक्तं चतुरस्रं समंततः ।।

प्रकल्प्याऽऽवाहयेद्गंगामेभिर्मंत्रैर्विचक्षणः ।। ८ ।।

विष्णुपादप्रसूताऽसि वैष्णवी विष्णुदेवता ।।

त्राहि नस्त्वमघादस्मादाजन्ममरणांतिकात् ।। ९ ।।

तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ।।

दिवि भुव्यंतरिक्षे च तानि ते संति जाह्नवि ।। 2.5.2.१० ।।

नंदिनीत्येव ते नाम देवेषु नलिनीति च ।।

दक्षपुत्री च विहगा विश्वगा योगिनां मता ।। ११ ।।
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।।
क्षेमा च जाह्नवी चैव शांता शांतिप्रदायिनी ।।१२।।
एतानि पुण्यनामानि स्नानकाले सदा पठेत् ।।
सदा संनिहिता तत्र गंगा त्रिपथगामिनी ।। १३ ।।
सप्तवाराभिजप्तेन करसंपुटयोजितम् ।।
मूर्ध्नो कृतांजलिर्भूयस्त्रिचतुः पंच सप्त वा ।।
स्नानं कुर्यान्मृदा तद्वदामंत्र्याऽनुविधानतः ।। १४ ।।
अश्वक्रांते रथक्रांते विष्णुक्रांते वसुन्धरे ।।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।। १५ ।।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।।
नमस्ते सर्वभूतानां प्रभवाऽरणि सुव्रते ।। १६ ।।
एवं स्नात्वा ततः पश्चादाचम्य च विधानतः।।
उत्थाय वाससी शुक्ले कूले वै परिधाय च ।। १७ ।।
आचम्य तपयेद्देवान्पितृंश्चैव ऋषींस्तथा ।।
निष्पीड्य वस्त्रमाचम्य धौतवस्त्रेण वेष्टितः ।। १८ ।।
विमलां मृत्तिकां रम्यामादाय द्विजसत्तम ।।
मन्त्रेणैवाऽभिमंत्र्याऽथ ललाटादिषु वैष्णवः ।।
धारयेदूर्ध्वपुण्ड्राणि यथासंख्यमतंद्रितः ।। १९ ।।
ब्रह्मन्द्वादशपुण्ड्राणि ब्राह्मणः सततं वहेत् ।।
चत्वारि भूभृतां पुत्र पुण्ड्राणि द्वे विशां स्मृते ।।
एकं पुंड्रं च नारीणां शूद्राणां च विधीयते ।। 2.5.2.२० ।।
ललाट उदरे चैव वक्षो वै कण्ठकूबरे ।।
कुक्ष्योर्बाह्वोः कर्णयोश्च पृष्ठे त्रिके च वै शिरः ।।
तिलका द्वादश प्रोक्ता ब्राह्मणस्य सदाऽनघ ।।२१।।
ललाटे हृदि बाह्वोश्च क्षात्रः पुंड्राणि धारयेत्।।
ललाटे हृदये वैश्यो भाले वै शूद्रयोषिताम्।।२२।।
ललाटे केशवं ध्यायेन्नारायणमथोदरे।।

वक्षःस्थले माधवं च गोविंदं कण्ठकूबरे।।२३।।

विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् ।।

त्रिविक्रमं कर्णमूले वामनं वामपार्श्वके ।।२४।।

श्रीधरं वामबाहौ च हृषीकेशं च कर्णके ।।

पृष्ठे तु पद्मनाभः स्यात्त्रिके दामोदरं न्यसेत्।।२५।।

तत्प्रक्षालनतोयेन वासुदेवं तु मूर्धनि।।

एवं कार्यं ब्राह्मणस्य क्षत्रियस्योपधारयेत्।।२६।।

ललाटे केशवं ध्यायेद्धृदये माधवं तथा ।।

बाह्वोश्च उभयोर्वत्स स्मरेद्वै मधुसूदनम् ।।२७।।

क्षत्रियस्य विधिः प्रोक्तो वैश्यकृत्यं निशामय ।।

ललाटे केशवं ध्यायेद्धृदये माधवं तथा ।। २८ ।।

योषिच्छूद्रौ स्मरेतां च केशवं भालदेशके ।।

अनेन विधिना कुर्यात्पुंड्राणि मम तुष्टये ।। २९ ।।

श्यामं शांतिकरं प्रोक्तं रक्तं वश्यकरं तथा ।।

श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम्।।2.5.2.३०।।

एकांतिनो महाभागाः सर्वलोकहिते रताः ।।

सांऽतरालं प्रकुर्वंति पुण्ड्रं हरिपदाकृतिम् ।।३१।।

मध्ये छिद्रेण संयुक्तमेतद्धि हरिमंदिरम् ।।

ऊर्ध्वं सौम्यमृजुं सूक्ष्मं सुपार्श्वं सुमनोहरम्।। ३२ ।।

निरंतरालं यः कुर्यादूर्ध्वपुंड्रं द्विजाऽधमः ।।

स हि तत्र स्थितं लक्ष्म्या सह मां च व्यपोहति ।। ३३ ।।

अच्छिद्रमूर्ध्वपुंड्रं तु ये कुर्वंति द्विजाधमाः ।।

तैर्ललाटे शुनः पादं निक्षिप्तं वै न संशयः ।। ३४ ।।

तस्माच्छिद्रान्वितं पुंड्रं महच्छिद्रं शुभान्वितम् ।।

धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ।। ३५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये त्रिपुंड्रधारणविधिकथनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमाससमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h6b



।। ब्रह्मोवाच ।। ।।

पुंड्रं कतिविधं कार्यं प्रब्रूहि मम केशव ।।

पुंड्राणां श्रवणेऽतीव कौतुकं मम जायते ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

शृणु पुत्र प्रवक्ष्यामि पुंड्रं च त्रिविधं स्मृतम् ।।

तुलसीमृत्स्नया सार्धं श्रीगोपीचंदनेन च ।। २ ।।

हरिचंदनतः कार्यं पुंड्रं तत्र विचक्षणैः ।।

श्रीकृष्णतुलसीमूलमृदमादाय भक्तिमान् ।।

धारयेदूर्ध्वपुंड्राणि हरिस्तत्र प्रसीदति ।। ३ ।।

गोपीचंदन माहात्म्यं निबोध गदतो मम ।। ४ ।।

यो मृत्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटपट्टके ।।

करोति नित्यं नर ऊर्ध्वपुंड्रं क्रियाफलं कोटिगुणं तदा भवेत्।। ५।।

क्रियाविहीनं यदि मन्त्रहीनं श्रद्धाविहीनं यदि कालवर्जितम्।।

कृत्वा ललाटे यदि गोपिचंदनं प्राप्नोति तत्कर्मफलं सदाऽव्ययम्।।६।।

गोपीचंदनसंभवं सुरुचिरं पुंड्रं ललाटे द्विजो नित्यं धारयते यदि प्रतिदिनं रात्रौ दिवा सर्वदा।।

यत्पुण्यं कुरुजांगले रविग्रहे माघ प्रयागे तथा तत्प्राप्नोति ततोऽधिकं मम गृहे संतिष्ठते देववत् ।। ७ ।।

यस्मिन्गृहे तिष्ठति गोपिचंदनं भक्त्या ललाटे मनुजो बिभर्ति चेत् ।।

तस्मिन्गृहेऽहं निवसामि सर्वदा श्रियान्वितः कंसनिहा चतुर्मुख ।। ८ ।।

यो धारयेद्द्वारवतीसमुद्भवां मृत्स्नां पवित्रां कलिकल्मषापहाम् ।।

नित्यं ललाटे मम मन्त्रसंयुतां यमं न पश्येदपि पापसंयुतः ।। ९ ।।

यस्यांऽतकाले सुत गोपिचंदनं बाह्वोर्ललाटे हृदि मस्तके च ।।

प्रयाति लोके कमलापतेर्मम गोबालघाती यदि ब्रह्महा स्यात् ।। 2.5.3.१० ।।

ग्रहा न पीड्यंति न रक्षसां गणा यक्षाः पिशाचोरगभूतनायकाः ।।

ललाटपट्टे सुत गोपिचंदनं संतिष्ठते यस्य मम प्रभावात् ।। ११ ।।

ऊर्ध्वपुंड्रमृजुं सौम्यं ललाटे यस्य दृश्यते ।।

स चंडालोऽपि शुद्धात्मा पूज्य एव न संशयः ।।१२।।

अस्नातो यः क्रियाः कुर्यादशुचिः पापसंयुतः ।।

गोपीचंदनसंपर्कात्पूतो भवति तत्क्षणात् ।। १३ ।।

अशुचिर्वाप्यनाचारो महापापं समाचरेत् ।।

शुचिरेव भवेन्नित्यमूर्ध्वपुंड्रांऽकितो नरः ।।१४।।

मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन ।।

मत्पूजाहोमके चैव सायं प्रातः समाहितः।।

मद्भक्तो धारयेन्नित्यमूर्ध्वपुंड्रं भवापहम्।। १५ ।।

ऊर्ध्वपुंड्रधरो मर्त्यो म्रियते यदि कुत्रचित् ।।

श्वपाकोऽपि विमानस्थो मम लोके महीयते ।। १६ ।।

ऊर्ध्वपुंड्रधरो मर्त्यो यदा यस्यान्नमश्नुते ।।

तदा विंशत्कुलं तस्य नरकादुद्धराम्यहम् ।। १७ ।।

वीक्ष्याऽऽदर्शे जले वाऽपि यो विदध्यात्प्रयत्नतः ।।

ऊर्ध्वपुण्ड्रं महाभाग स याति परमां गतिम् ।। १८ ।।

अनामिका शांतिदोक्ता मध्यमाऽऽयुष्करी भवेत् ।।

अंगुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मोक्षदायिनी ।।।। १९ ।।

गोपीचंदनखंडं तु यो ददाति च वैष्णवे ।।

कुलमष्टोत्तरं तेन तारितं वै भवेच्छतम् ।। 2.5.3.२० ।।

यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।।

व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रविनाकृतम् ।। २१ ।।

यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविनाकृतम् ।।

तन्मुखं नैव पश्यामि श्मशानसदृशं हि तत्।। २२ ।।

ऊर्ध्वपुण्ड्रं प्रकुर्वीत मत्स्यकूर्मादिधारणम् ।।

कुर्याद्विष्णुप्रसादार्थं महाविष्णोरतिप्रियम् ।। २३ ।।

यत्पुनः कलिकाले तु मत्पुरीसंभवां मृदम् ।।

मत्स्यकूर्माऽकितं चिह्नं गृहीत्वा कुरुते नरः ।। २४ ।।

देहे तस्य प्रविष्टं मां जानीहि त्रिदशोत्तम ।।

तस्य मे नांतरं किंचित्कर्तव्यं श्रेय इच्छता ।। २५ ।।

ममावतारचिह्नानि दृश्यंते यस्य विग्रहे ।।

मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकी तनुः ।। २६ ।।

पापं सुकृतरूपं तु जायते तस्य देहिनः ।।

ममाऽऽयुधानि दृश्यंते लिखितानि कलौ युगे ।। २७ ।।

उभाभ्यामपि चिह्नाभ्यां योंऽकितो मत्स्यमुद्रया ।।

कूर्मया मामकं तेजो विक्षिप्तं तस्य विग्रहे ।। २८ ।।

शंख च पद्मं च गदां रथांगं मत्स्यं च कूर्मं रचितं स्वदेहे ।।

करोति नित्यं सुकृतस्य वृद्धिं पापक्षयं जन्मशतार्जितस्य ।। २९ ।।

नारायणायुधैर्नित्यं चिह्नितो यस्य विग्रहः ।।

पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः ।। 2.5.3.३० ।।

शंखोद्धारे च यत्प्रोक्तं वसता कोटिजन्मभिः ।।

तत्फलं लभते शंखे प्रत्यहं दक्षिणे भुजे ।। ३१ ।।

यत्फलं पुष्करे प्रोक्तं पुण्डरीकाक्षदर्शनात् ।।

शंखोपरि कृते पद्मे तत्फलं कोटिसंमितम् ।।३२ ।।

वामे भुजे गदा यस्य लिखिता दृश्यते कलौ।।

गदाधरो गयापुण्यं प्रत्यहं तस्य यच्छति।। ३३।।

यच्चानंदपुरे प्रोक्तं चक्रस्वामिसमीपतः ।।

गदाचक्रे च लिखिते तत्फलं लिंगदर्शने ।। ३४ ।।

ममायुधांऽकितं देहं गोपीचन्दनमृत्स्नया ।।

प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ।। ३५ ।।

यदायदा प्रपश्येत देहं शंखादिचिह्नितम् ।।

तदातदा प्रसन्नोहं पापं तस्य दहामि वै ।। ३६ ।।

तिष्ठते यस्य देहे तु अहोरात्रं दिने दिने ।।

शंखचक्रगदापद्मलिखितं स मदात्मकः ।।३७।।

नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे ।।

यत्पुण्यं कर्म कुरुते मेरुतुल्यं न संशयः।।३८।।

शंखायुधांऽकितो भक्त्या यः श्राद्धं कुरुते सुत ।।

विधिहीनं तु संपूर्णं पितॄणां दत्तमक्षयम् ।।३९।।

यथाऽग्निर्दहते काष्ठं वायुना प्रेषितो भृशम् ।।

तथा दह्यंति पापानि दृष्ट्वा म आयुधानि वै ।। 2.5.3.४० ।।

मम नामांकितां मुद्रामष्टाक्षरसमन्विताम् ।।

शंखादिस्वायुधैर्युक्तां स्वर्णरौप्यमयीमपि ।।४१।।

धत्ते भगवतो यस्तु कलिकाले विशेषतः ।।

प्रह्लादस्य समो ज्ञेयो नान्यथा मम वल्लभः ।।४२।।

यस्य नारायणी मुद्रा देहं शंखादिचिह्नितम् ।।

धात्रीफलैः कृता माला तुलसीकाष्ठसंभवा ।।४३।।

द्वादशाक्षरमंत्रस्तु नियुक्तानि कलेवरे ।।

आयुधानि च विप्रस्य मत्समः स च वैष्णवः ।।४४।।

शंखांकिततनुर्विप्रो भुंक्ते वै यस्य वेश्मनि ।।

तदन्नं स्वयमश्नामि पितृभिः सह पुत्रक ।।४५।।

कृष्णायुधांऽकितं दृष्ट्वा सन्मानं न करोति यः ।।

द्वादशाब्दार्जितं पुण्यं बाष्कलेयाय गच्छति ।। ४६ ।।

कृष्णायुधांऽकितो यस्तु श्मशाने म्रियते यदि ।।

प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य मानद ।।४७।।

ममाऽऽयुधैः कलौ नित्यं मंडितो यस्य विग्रहः ।।

तत्राऽऽश्रमं प्रकुर्वंति विबुधा वासवादयः ।। ४८ ।।

यः करोति च मे पूजां मम शस्त्रांकितो नरः ।।

अपराधसहस्राणि नित्यं तस्य हराम्यहम् ।। ४९ ।।

कृत्वा काष्ठमयं बिंबं मम शस्त्रैः सुचिह्नितम् ।।

यो वा अंकयते देहं तत्समो नास्ति वैष्णवः ।। 2.5.3.५० ।।

अष्टाक्षरांऽकिता मुद्रा यस्य धातुमयी करे ।।

शंखपद्मादिभिर्युक्ता पूज्यतेऽसौ सुरासुरैः ।।५१।।

धृता नारायणी मुद्रा प्रह्लादेन पुरा करे ।।

विभीषणेन बलिना ध्रुवेण च शुकेन च ।।

मांधात्रा ह्यंबरीषेण मार्कंडेयमुखैर्द्विजैः ।। ५२ ।।

शंखादिचिह्नितैः शस्त्रैर्देहं कृत्वा च मानद ।।

एवमाराध्य मां प्राप्तं समीहितफलं महत् ।। ५३ ।।

गोपीचंदनमृत्स्नया लिखितो यस्य विग्रहः ।।

शंखचक्रादिपद्मांऽको देहे तस्य वसाम्यहम् ।। ५४ ।।

सौवर्णं राजतं ताम्रं कांस्यमायसमेव च ।।

चक्रं कृत्वा तु मेधावी धारयीत विचक्षणः ।।

द्वादशारं तु षट्कोणं वलित्रयविभूषितम् ।। ५५ ।।

एवं सुदर्शनं चक्रं कारयीत विचक्षणः ।।

उपवीतादिवद्धार्याः शंखचक्रगदाः सदा ।। ५६ ।।

ब्राह्मणैश्च विशेषेण वैष्णवैश्च विशेषतः ।।

उपवीतं शिखा यद्वच्चक्रं लांछन संयुतम् ।। ५७ ।।

चक्रलांछनहीनस्य विप्रस्य विफलं भवेत् ।।

मम चक्रांऽकितो देहः पवित्र इति वै श्रुतिः ।। ५८ ।।

चक्रांऽकिताय दातव्यं हव्यं कव्यं विचक्षणैः ।।

मम चक्रांऽककवचमभेद्यं देवदानवैः ।।

अजेयः सर्वभूतानां शत्रूणां रक्षसामपि ।। ५९ ।।

मम चक्रांऽककवचं शरीरे यस्य तिष्ठति ।।

नाऽशुभं विद्यते तस्य गृहपुत्रादिकस्य हि ।। 2.5.3.६० ।।

दक्षिणे च भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।।

सव्ये च शंखं बिभृयादिति वेदविदो विदुः ।। ६१ ।।

तत्तन्मंत्रेण मंत्रज्ञः प्रतिष्ठाप्य पृथक्पृथक् ।। ६२ ।।

ललाटे च गदा धार्या मूर्ध्नि चापं शरस्तथा ।।

नंदकं चैव हृन्मध्ये शंखचक्रे भुजद्वये ।। ६३ ।।

तस्मात्सर्वप्रयत्नेन चक्रादीन्धारयेत्सदा ।।

धारणानन्तरं ब्रूयात्तत्र चैवं द्विजोत्तमः ।। ६४ ।।

पुत्रमित्रकलत्रादिर्यः कश्चिन्मत्परिग्रहः ।।

सह देहेन सर्वोऽसौ विष्णुप्रीत्यै मयाऽर्पितः ।। ६५ ।।

पश्चात्स्वधर्ममास्थाय तिष्ठेदाजीवनं मम ।।

भक्त्या चाव्यभिचारिण्या सर्वदाऽऽसमनोरथः ।। ६६ ।।

शंखचक्रांकितं दृष्ट्वा ये निंदंति नराधमाः ।।

अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।।

श्रीकृष्णनाम चोच्चार्य शुद्धो भवति नान्यथा ।। ६७ ।।

इति श्रीस्कांदे महापुराण एकाशातिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे गोपीचन्दनादिशंख चक्राद्यायुधधारणतत्तन्मुद्राधारणप्रकारकथनंनाम तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०४



।। ब्रह्मोवाच ।। ।।

तप्तचकांकितं कृत्वा ह्यात्मानमथ दीक्षितम् ।।

पद्माक्षतुलसीमालं किं फलं ब्रूहि केशव ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

तुलसीकाष्ठसंभूतां यो मालां वहते द्विजः ।।

अप्यऽशौचोऽप्यनाचारो मामेवैति न संशयः ।। २ ।।

धात्रीफलकृता माला तुलसीकाष्ठसंभवा ।।

दृश्यते यस्य देहे तु स वै भागवतो नरः ।। ३ ।।

तुलसीदलजां मालां कण्ठस्थां वहते तु यः ।।

ममोत्तीर्णां विशेषेण स नमस्यो दिवौकसाम् ।। ४ ।।

तुलसीदलजां मालां धात्रीफलकृतामपि ।।

ददाति पापिनां मुक्तिं किं पुनर्मम सेविनाम् ।। ५ ।।

तुलसीदलजां मालां ममोत्तीर्णां वहेत्तु यः ।।

पत्रेपत्रेऽश्वमेधानां दशानां लभते फलम् ।। ६ ।।

तुलसीकाष्ठसंभूतां यो मालां वहते नरः।।

फलं यच्छाम्यहं वत्स प्रत्यहं द्वारकोद्भवम् ।। ७ ।।

निवेद्य भक्त्या मां मालां तुलसीकाष्ठसंभवाम् ।।

वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ।। ८ ।।

सदा प्रीतमनास्तस्य अहं प्राणवरो हि सः ।।

तुलसीकाष्ठसंभूतां यो मालां वहते नरः ।।

प्रायश्चित्तं न तस्याऽस्ति नाऽशौचं तस्य विग्रहे ।।९।।

तुलसीकाष्ठसंभूतं शिरसः काष्ठभूषणम् ।।

बाहौ करे च मर्त्यस्य देहे यस्य स मे प्रियः ।। 2.5.4.१० ।।

तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् ।।

पितॄणां देवतानां च पुण्यं कोटिगुणं भवेत् ।। ११ ।।

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ।।

दृष्ट्वा नश्यंति दूरेण वातोद्धूतं यथा दलम् ।। १२ ।।

यद्गृहे तुलसीकाष्ठं पत्रं शुष्कमथाऽऽर्द्रकम् ।।

भवंति तद्गृहे नैव पापं संक्रमते कलौ ।। १३ ।।

तुलसी काष्ठमालाभिर्भूषितो भ्रमते भुवि ।।

दुःस्वप्नं दुर्निमित्तं च न भयं शात्रवं क्वचित् ।।१४।।

धारयंति न ये मालां हैतुकाः पापबुद्धयः ।।

नरकान्न निवर्तंते दग्धाः कोपाग्निना मम ।। १५ ।।

तस्माद्धार्या प्रयत्नेन माला तुलसिसंभवा ।।

पद्माक्षनिर्मिता भक्त्या फलैर्धात्र्या सुपुण्यदा ।। १६ ।।

तदूर्ध्वपुंड्रशंखाद्यैर्युक्तस्तुलसिमूलके ।।

सन्ध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हि मां स्मरन् ।। १७ ।।

कृतसन्ध्यादिको भक्तस्ततः संपूजयेच्च माम् ।।

गुरुश्चेत्तत्र वर्तेत आदौ गत्वा नमेद्गुरुम् ।। १८ ।।

किंचिद्दत्त्वोपायनं च दण्डवत्प्रणमेन्मुदा ।।

आचम्यैकाग्रमनसा पूजामण्डपमाविशेत् ।। १९ ।।

उपविश्याऽऽसने रम्ये कृष्णाजिनकुशोत्तरे ।।

सम्यक्पद्मासनासीनो भूतशुद्धिं समाचरेत् ।। 2.5.4.२० ।।

प्राणायामत्रयं कृत्वा मन्त्रेण च जितेंद्रियः ।।

उदङ्मुखस्ततः कृत्वा हृत्पंकजमनुत्तमम्।।

विकासं तस्य कुर्वीत विज्ञानरविणा हृदि ।। २१ ।।

कर्णिकायां न्यसेच्चार्कं शशिनं चाग्निमेव च ।।

त्रयं त्रयात्मके तस्मिंश्चिंतयेद्वैष्णवो नरः ।।

नानारत्नमयं पीठं तेषामुपरि विन्यसेत् ।। २२ ।।

तस्मिन्मृदुश्लक्ष्णतरं बालार्कसदृशद्युति ।।

अष्टैश्वर्यदलं पद्मं मन्त्राक्षरमयं न्यसेत् ।। २३ ।।

तस्मिन्देवं समासीनं कोटिशीतांशुसन्निभम् ।।

चतुर्भुजं महापद्मशंखचक्रगदाधरम् ।। २४ ।।

पद्मपत्रविशालाक्षं सर्वलक्षणलक्षितम् ।।

श्रीवत्सकौस्तुभोरस्कं पीतवस्त्रान्वितं च माम् ।। २५ ।।

विचित्राभरणैर्युक्तं दिव्यमंडनमंडितम् ।।

दिव्यचन्दनलिप्तांगं दिव्यपुष्पोपशोभितम् ।। २६ ।।

तुलसीकोमलदलवनमालाविभूषितम् ।।

कोटिबालार्कसदृशं कान्तं दिव्यश्रिया सह ।। २७ ।।

सर्वलक्षणलक्षिण्या समाश्लिष्टतनुं शिवम् ।।

एवं ध्यात्वा जपेन्मंत्रं समाहितमनाः शुचिः ।। २८ ।।

सहस्रं शतवारं वा यथाशक्ति जपेन्मनुम् ।।

मनसैवाऽर्चनं कृत्वा ततो विधिवदाचरेत् ।। २९ ।।

संप्रदायाऽनुरोधेन शंखं स्थाप्य ममाग्रतः ।।

दूर्वांकुरैश्च पुष्पैश्च गंधोदेन च पूरितम् ।। 2.5.4.३० ।।

दक्षिणे गंधपुष्पाणां पात्रं स्थाप्य च देशिकैः ।।

वामभागे न्यसेत्कुंभं वस्त्रपूतं सुवासितम् ।। ३१ ।।

पुरतो मम घंटां च दिक्षु दीपान्नियोजयेत् ।।

अन्यत्सर्वं साधनं च यथास्थानेषु विन्यसेत् ।।३२।।

अर्घ्यपाद्याऽऽचमनीयमधुपर्कस्य कारणात् ।।

विन्यसेत्पुरतो मह्यं चत्वार्यमत्रकाणि वै ।। ३३ ।।

सिद्धार्थाऽक्षतपुष्पाणि कुशाग्रं तिलचंदनम् ।।

फलं यवाश्चतुर्वक्त्र अर्घ्यपात्रे विनिःक्षिपेत् ।।३४।।

दूर्वा विष्णुपदी श्यामा पद्मं चैव चतुर्थकम् ।।

पाद्यपात्रे न्यसेत्पुत्र देशिको मम तुष्टये ।। ३५ ।।

कंकोलं च लवंगं च फलं मालतिसंभवम् ।।

कुर्याद्वै श्रद्धया पुत्र पात्र आचमनीयके ।। ३६ ।।

गव्यं पयो दधि मधु घृतं खंड समन्वितम् ।।

मधुपर्कस्य पात्रे वै दद्याद्वै श्रद्धयाऽर्चकः ।। ३७ ।।

उक्तानां द्रव्यजातीनामलाभे पत्रपुष्पयोः ।।

तत्तद्भावनया कुर्यात्सर्वदा विधिकोविदः ।। ३८ ।।

करन्यासं ततः कुर्यादंगन्यासं तथैव च ।।

पंचांगं वा षडंगं वा विन्यसेत्संप्रदायतः ।। ३९ ।।

ममाऽनुस्मरणं कार्यमात्मानं मत्समं स्मरेत् ।।

पूजारंभे चतुर्वक्त्रं मंगलं तु पठेन्नरः ।। 2.5.4.४० ।।

अथ संपूजयेच्छंखं पांचजन्यं मम प्रियम् ।।

यस्य संपूजनाद्वत्स आनंदः परमो मम ।।

शंखस्य पूजने वत्स मंत्रानेतानुदीरयेत् ।। ४१ ।।

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।।

निर्मितः सर्वदेवैश्च पांचजन्य नमोऽस्तु ते ।। ४२ ।।

तव नादेन जीमूता वित्रसंति सुराऽसुराः ।।

शशांकाऽयुतदीप्ताभ पांचजन्य नमोऽस्तु ते ।।४३।।

गर्भा देवारिनारीणां विलीयंते सहस्रधा ।।

तव नादेन पाताले पांचजन्य नमोऽस्तु ते ।। ४४ ।।

दर्शनेनैव शंखस्य किं पुनः स्पर्शने कृते ।।

विलयं यांति पापानि हिमवद्भास्करोदये ।। ४५ ।।

नत्वा शंखं करे धृत्वा मंत्रैरेभिस्तु वैष्णवः ।।

यः स्नापयति मां भक्त्या तस्य पुण्यमनंतकम् ।। ४६ ।।

सुवासितेन तैलेन कुर्यादभ्यंजनं ततः ।।

कस्तूर्या चंदनेनैव कुर्यादुद्वर्तनादिकम्।। ४७।।

सुगंधवासितैस्तोयैः स्नाप्य मंत्रयुतैः शुभैः ।।

अर्घ्यं दत्त्वा ततो वत्स पाद्यमाचमनीयकम् ।।

मधुपर्कं ततो दद्यादथ सर्वोपचारकान् ।। ४८ ।।

वस्त्रैराभरणैर्दिव्यैरलंकृत्य यथाविधि ।।

पुष्पैः संपूजयेत्पीठं तत्र देवं निधाय च ।।४९।।

वस्त्राऽलंकारगंधादीनर्पयेच्छ्रद्धया मम ।।

नैवेद्यं विविधं दद्यात्पायसाऽपूपमिश्रितम् ।।

सकर्पूरं च तांबूलं भक्त्या चैव निवेदयेत् ।। 2.5.4.५० ।।

सुरभीणि च पुष्पाणि भक्त्या सम्यङ्निवेदयेत्।।

धूपं दशांगमष्टांगं दीपं च सुमनोहरम् ।। ५१ ।।

परिणीय प्रणम्याथ स्तुत्वा स्तुतिभिरादरात् ।।

शाययित्वा तु पर्यंके मगलार्घ्यं निवेदयेत्।। ५२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये शंखपूजाविधिकथनंनाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०५

https://sa.wikisource.org/s/h1i
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | मार्गशीर्षमासमाहात्म्यम्

।। ब्रह्मोवाच ।। ।।

पंचामृतस्य स्नपनाद्यत्फलं लभते हरेः।।

शंखोदकेन यत्किंचित्तन्मे ब्रूह्यजिताऽच्युत ।।१।।

।। ।। श्रीभगवानुवाच।। ।।

क्षीरस्नानं प्रकुर्वंति ये नरा मम मूर्द्धनि।।

शताश्वमेधजं पुण्यं बिंदुना बिंदुना स्मृतम्।।२।।

क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम्।।

मधुना तद्दशगुणं सितया तु ततोऽधिकम् ।।

गंधपुष्पोदके मंत्रं सर्वोत्कृष्टं प्रशस्यते ।।३।।

द्वादश्यां पंचदश्यां वा गव्येन पयसा मम ।।

स्नापनं देवशार्दूल महापातकनाशनम्।। ४ ।।

दध्यादीनां विकाराणां क्षीरतः संभवो यथा ।।

तथैव शेषकामानां क्षीरस्नपनतो मम ।। ५ ।।

क्षीरस्नानेन सौभाग्यं दध्ना मिष्टान्नभोजनम्।।

घृतेन स्नापयेद्यो मां नरो मम पुरं व्रजेत् ।। ६ ।।

मधुना सितया यस्तु कारयेन्मार्गशीर्षके ।।

स राजा जायते लोके पुनः स्वर्गादिहागतः ।।७।।

गजाश्वरथसंपूर्णं स राज्यं लभते भुवि ।।

कारयेन्मार्गशीर्षे वै यः क्षीरस्नापनं मम ।। ८ ।।

स्वर्गे लोके स जयति चंद्रेंद्ररुद्रमारुतान् ।।

क्षीरस्नानं परं श्रेष्ठं मार्गशीर्षे च पुत्रक ।। ९ ।।

क्षीरस्नपनमाहात्म्यं वर्चस्कं पुष्टिवर्धनम् ।।

दौर्भाग्यं विलयं याति क्षीरस्नानेन मे सुत ।। 2.5.5.१० ।।

स्नापयेन्मार्गशीर्षे मां यो वै पंचाऽमृतेनतु ।।

स न शोच्यो भवेज्जंतुर्बंधुना भुवि मानद ।। ११ ।।

कपिलाक्षीरमादाय यः स्नापयति मां सुत ।।

कपिलाशतदानस्य फलं प्राप्नोति मानवः ।। १२ ।।

शंखे तीर्थोदकं कृत्वा यः स्नापयति देशिकः ।।

बिंदुनाऽपि सहोमासे स्वकुलं तारयेद्धि सः ।।१३।।

कापिलं क्षीरमादाय शंखे कृत्वा च मानवः ।।

यः स्नापयति मां भक्त्या सर्वतीर्थफलं लभेत् ।।१४।।

शंखे कृत्वा तु पानीयं साक्षतं कुशसंयुतम् ।।

यः स्नापयेत्सहोमासे सर्वतीर्थफलं लभेत् ।। १५ ।।

शंखाष्टकेन यः स्नानं कारयेन्मार्गशीर्षके ।।

भक्त्या भगवतः श्रेष्ठो मम लोके महीयते ।। १६ ।।

शंखषोडशकेनाथ यः स्नापयति मे सुत ।।

स पापमुक्तः सुचिरं स्वर्गलोके महीयते ।। १७ ।।

चतुर्विंशतिसंख्याकैः शंखैर्यः स्नापयेच्च माम् ।।

इंद्रलोके चिरं स्थित्वा स राजा भुवि जायते ।। १८ ।।

शंखाऽष्टोत्तरशतेनैव स्नापयेन्मार्गशीर्षके ।।

शंखेशंखे सुवर्णस्य फलं प्राप्नोति मानवः ।। १९ ।।

मार्गशीर्षे भक्तिमान्यः कृत्वा शंखध्वनिं हि माम् ।।

स्नापयेत्पितरस्तस्य स्वर्गं तावत्प्रतिष्ठिताः ।। 2.5.5.२० ।।

अष्टोत्तरसहस्रं तु शंख स्नानं तु यश्चरेत् ।।

स गणो मुक्तिमाप्नोति यावदाभूतसंप्लवम् ।। २१ ।।

नित्यं संस्नापयेद्यो मां शंखेन सुरसत्तम ।।

गंगास्नानफलं प्राप्य नित्यं नंदति देववत् ।। २२ ।।

शंखेतोयं समादाय यः स्नापयति मां सुत ।।

नमो नारायणेत्युक्त्वा मुच्यते सर्वकिल्बिषैः ।। २३ ।।

कृत्वा पादोदकं शंखे वैष्णवानां महात्मनाम् ।।

यो ददाति तिलोन्मिश्रं चांद्रायणफलं लभेत् ।। २४ ।।

नाद्यं तडागजं वाऽपि वापीकूपादिकं च यत् ।।

गांगेयं जायते सर्वं जलं शंखकृतं च यत् ।।२५।।

गृहीत्वा मम पादांबु शंखे कृत्वा तु वैष्णवः ।।

यो वहेच्छिरसा नित्यं स मुनिस्तपतां वरः ।।२६।।

त्रैलोक्ये यानि तीर्थानि मम चैवाज्ञया सुत ।।

शंखे तानि वसंतीह तस्माच्छंखो वरः स्मृतः ।। २७ ।।

सांबुं शंखं करे धृत्वा मंत्रैरेतैस्तु वैष्णवः ।।

यः स्नापयेन्मार्गशीर्षे तुष्टस्तस्य भवाम्यहम् ।। २८ ।।

शंखादौ चंद्रदैवत्यं कुक्षौ वरुणदेवता ।।

पृष्ठे प्रजापतिश्चैव अग्रे गंगा सरस्वती ।। २९ ।।

तेषामुच्चारपूर्वं तु स्नापयेन्मामतंद्रितः ।।

तस्य पुण्यस्य संख्यां वै कर्तुं नैव सुराः क्षमाः।। 2.5.5.३० ।।

पुरतो मम देवेश सपुष्पः सजलाक्षतः।।

शंखस्त्वभ्यर्चितस्तिष्ठेत्तस्य श्रीः सर्वतोमुखी ।। ३१ ।।

विलेपनेन संपूर्णं शंखं कृत्वा तु मां भजेत् ।।

तदा मे परमा प्रीतिर्भवेद्वै शतवार्षिकी ।। ३२ ।।

शंखे कृत्वा तु पानीयं सपुष्पं सजलाक्षतम् ।।

अर्घ्यं ददाति यो मां वै तस्य पुण्यमनंतकम् ।। ३३ ।।

अर्घ्यं कृत्वा स्वयं शंखे यः करोति प्रदक्षिणाम् ।।

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ।। ३४ ।।

भ्रामयित्वा च मे मूर्ध्नि मंदिरं शंखवारिणा ।।

प्रोक्षयेद्वैष्णवो यस्तु नाशुभं तद्ग्रहे भवेत् ।। ३५ ।।

नाधयो न क्लमस्तस्य नारकं न भयं क्वचित् ।।

यस्य पादोदकं शंखे कृतं मूर्धानमालभेत् ।। ३६ ।।

ग्रहा रक्षांसि कूष्मांडपिशाचोरगदानवाः ।।

दृष्ट्वा शंखोदकं मूर्ध्नि विद्रवंति दिशो दश ।। ३७ ।।

वादित्रनिनदैरुच्चैर्गीतमंगलनिःस्वनैः ।।

यः स्नापयति मां भक्त्या जीवन्मुक्तो भवेद्धि सः ।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां सहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये शंखपूजनफलकथनंनाम पंचमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०६



।। ।। ब्रह्मोवाच ।। ।।

घण्टानादस्य माहात्म्यं चंदनस्य तथाऽच्युत ।।

यत्फलं लभते स्वामिंस्तत्सर्वं ब्रूहि तत्त्वतः ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

स्नानार्चनक्रियाकाले घंटानादं करोति यः ।।

पुरतो मम देवेश तस्य पुण्यफलं शृणु ।। २ ।।

वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।।

वसते मामके लोके अप्सरोगणसेवितः ।। ३ ।।

सर्ववाद्यमयी घण्टा सर्वदेवमयी यतः ।।

तस्मात्सर्वप्रयत्नेन घण्टानादं तु कारयेत् ।। ४ ।।

सर्ववाद्यमयी घण्टा सर्वदा मम वल्लभा ।।

वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ।। ५ ।।

घंटानादः सदा कार्यः पूजाकाले विशेषतः ।।

मन्वंतरसहस्राणि मन्वतरशतानि च ।। ६ ।।

प्रीतो भवामि सततं घंटानादेन पुत्रक ।।

भेरीशंखनिनादेन घंटानादान्वितेन च ।। ७ ।।

मृदंगशंखेन युतं प्रणवेन समन्वितम् ।।

अर्चनं मम देवेश सततं मोक्षदं नृणाम् ।। ८ ।।

यत्र तिष्ठेत पुरतो घंटा नादान्विता मम ।।

अर्चिता वैष्णवैर्यत्र तत्र मां विद्धि पुत्रक ।। ९ ।।

वैनतेयांऽकिता घंटा सुदर्शनयुताऽथवा ।।

ममाग्रे स्थापयेद्यस्तु तस्य पापं हराम्यहम् ।। 2.5.6.१० ।।

मदीयार्चनवेलायां घंटानादं करोति यः ।।

नश्यंति तस्य पापानि शतजन्मार्जितान्यपि ।। ११ ।।

स्वापकाले प्रकुर्वीत घण्टानादं स्वभक्तितः ।।

ममैवार्चनवेलायां फलं कोटिगुणोद्भवम् ।। १२ ।।

ये मामर्चंति देवेश सुपर्णोपरिसंस्थितम् ।।

शंखपद्मगदायुक्तं सचक्रं च श्रिया युतम् ।। १३ ।।

किं करिष्यंति ते तीर्थैर्देवतानां च दर्शनैः ।।

किं यज्ञैः किं व्रतैर्वापि किं दानैः किमुपोषणैः ।।१४।।

मूर्तिर्नारायणी यैश्च मामकी गरुडोपरि ।।

स्थापिता ते कलौ यांति कल्पकोटिं पदं मम ।। १५।।

ममाऽग्रे स्थापयेद्यस्तु प्रासादेऽथ गृहेऽथवा ।।

तीर्थकोटिसहस्राणि तत्र तिष्ठंति देवताः ।। १६ ।।

यस्तु पूजयते धन्यो गरुडोपरिसंस्थितम्।।

एकादश्यां तथा रात्रौ वासनासंयुतो मम ।।

कृत्वा गीतं च नृत्यं च तारयेन्नरकात्पितॄन् ।। १७ ।।

पुनश्च कथयिष्यामि शृणु घंटामहं सुत ।। १८ ।।

मम नामांकिता घण्टा पुरतो या च तिष्ठति ।।

अर्चिता वैष्णवी यत्र तत्र मां विद्धि पुत्रक ।। १९ ।।

यस्तु वादयते घंटां वैनतेयविचिह्निताम्।।

धूपे नीराजने स्नाने पूजाकाले विलेपने ।। 2.5.6.२० ।।

ममाग्रे प्रत्यहं वत्स प्रत्येकं लभते फलम् ।।

मखायुतं गोऽयुतं च चांद्रायणशतोद्भवम्।। २१ ।।

विधिबाह्यकृता पूजा सफला जायते नृणाम् ।।

घण्टानादेन तुष्टोऽहं प्रयच्छामि स्वकं पदम् ।। २२ ।।

नागाऽरिचिह्निता घंटा रथांगेन समन्विता ।।

वादनात्कुरुते नाशं जन्मकोटिभयस्य वै ।। २३ ।।

गरुडेनांऽकितां घंटां दृष्ट्वाहं प्रत्यहं मुदा ।।

प्रीतिं करोमि देवेश लक्ष्मीं प्राप्य यथाऽधनः ।। २४ ।।

घंटादण्डस्य शिरसि सुचक्रं स्थापयेत्तु यः ।।

मत्प्रियं वैनतेयं वा स्थापितं भुवनत्रयम् ।। २५ ।।

घंटानादं सचक्रं च अंतकाले शृणोति यः ।।
पापकोटियुतस्याऽपि नश्यंति यमकिंकराः ।। २६ ।।
सर्वदोषाः प्रणश्यंति घंटानादेन वै सुत ।।
देवतानां सरुद्राणां पितृणामुत्सवो भवेत् ।। २७ ।।
अभावे वैनतेयस्य चक्रस्याऽपि न संशयः ।।
घंटानादेन भक्तानां प्रसादं प्रकरोम्यहम् ।। २८ ।।
गृहे यस्मिन्भवेन्नित्यं घण्टा नागारिसंयुता ।।
सर्पाणां न भयं तत्र नाग्निविद्युत्समुद्भवम् ।। २९ ।।
यस्य घंटा गृहे नास्ति शंखो न पुरतो मम ।।
कथं भागवतो ज्ञेयः कथं भवति वल्लभः ।। 2.5.6.३० ।।
चंदनस्य प्रवक्ष्याम माहात्म्यं तव पुत्रक ।।
यस्मिन्कृते भवेत्प्रीतिर्ममात्यंतं न संशयः ।। ।। ३१ ।।
सचंदनं सकुसुमं कर्पूरागरुमिश्रितम् ।।
मृगनाभिसमायुक्तं जातीफलसमन्वितम् ।। ३२ ।।
तुलसीचंदनोपेतं ममात्यंतसुखावहम् ।।
यो ददाति हि मां नित्यं तुलसीकाष्ठसंभवम्।। ३३ ।।
युगानि वसते स्वर्गे ह्यनंतानि नरोत्तमः ।।
महाविष्णोः कलौ भक्त्या दत्वा तुलसिचंदनम् ।। ।।३४।।
अर्चयेन्मालतीपुष्पैर्न भूयः स्तनपो भवेत् ।।
तुलसीकाष्ठसंभूतं चंदनं यच्छते मम ।।३५।।
दहामि पातकं सर्वं पूर्वजन्मशतैः कृतम् ।।
सर्वेषामेव देवानां तुलसीकाष्ठचंदनम्।।३६।।
पितृणां च विशेषेण सदाऽभीष्टं यथा मम ।।३७।।
श्रीखंडं चंदनं तावच्छ्रेष्ठं कृष्णागुरुं तथा ।।
यावन्न दीयते मह्यं तुलसीकाष्ठचंदनम्।। ३८ ।।
तावत्कस्तूरिकाऽऽमोदः कर्पूरस्य सुगंधिता ।।
यावन्न दीयते मह्यं तुलसीकाष्ठचंदनम् ।।३९।।
कलौ यच्छंति ये मह्यं तुलसीकाष्ठचंदनम्।।

मार्गशीर्षशुभेमासे ते कृतार्था न संशयः ।। 2.5.6.४० ।।

यो हि भागवतो भूत्वा कलौ तुलसिचंदनम् ।।

नार्पयेद्वै सहोमासे नाऽसौ भागवतो नरः ।।४१।।

कुंकुमागुरुश्रीखण्डकर्दमैर्मम विग्रहम् ।।

आलिपेद्वै सहोमासे कल्पकोटिं वसेद्दिवि ।।४२।।

कर्पूरागुरुमिश्रेण चंदनेनाऽनुलिंपयेत् ।।

मृगदर्पं विशेषेण अभीष्टं च सदा मम।।४३।।

विलेपयति यो मां वै शंखे कृत्वा तु चंदनम् ।।

मार्गशीर्षे तदा प्रीतिं करोमि शतवार्षिकीम् ।।४४।।

सेवते तुलसीपत्रैर्नित्यमामलकैश्च यः ।।

मार्गशीर्षे सदा भक्त्या स लभेद्वांछितं फलम् ।। ४५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये भगवते तुलसीकाष्ठचंदनार्पणफलकथनंनाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०७



।। ब्रह्मोवाच ।। ।।

माहात्म्यं वद देवेश पुष्पजातिसमुद्भवम् ।।

येनयेन च पुष्पेण यत्फलं लभते नरः ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

शृणु पुत्र प्रवक्ष्यामि माहात्म्यं पुष्पसंभवम्।।

येन पुष्पेण मे प्रीतिर्भवेत्सम्यङ्न संशयः ।। २ ।।

मल्लिका मालती चैव यूथिका चातिमुक्तका ।।

पाटला करवीरं च जयन्ती विजया तथा ।। ३ ।।

कुब्जकस्तबकश्चैव कर्णिकारं कुरंटकः ।।

चंपकश्चातकः कुन्दो बाणः कर्चूरमल्लिका ।। ४ ।।

अशोकस्तिलकश्चैव तथैवाऽपरयूथिकः ।।

अमी पुष्पप्रकारास्तु शस्ता मे पूजने सुत ।। ५ ।।

केतकीपत्रपुष्पं च भृंगराजस्तथैव च ।।

तुलसीपत्रपुष्पं च सद्यः प्रीतिकरं मम।। ६ ।।

पद्मान्यंबुसमुत्थानि रक्तनीलोत्पले तथा ।।

सितोत्पलं सहोमासे ममाऽत्यन्तं हि वल्लभम् ।। ७ ।।

तान्येव च प्रशस्तानि कुसुमानि च मे सुत ।।

यानि स्युर्वर्णयुक्तानि रसगन्धयुतानि च ।। ८ ।।

निर्गंधान्यपि शस्तानि कुसुमानि मतानि मे ।।

सुरभीणि तथाऽन्यानि वर्जयित्वा तु केतकीम् ।। ९ ।।

बाणं च चंपकाऽशोकं करवीरं च यूथिका ।।

पारिभद्रं पाटला च बकुलं गिरिशालिनी ।। 2.5.7.१० ।।

बिल्वपत्रं शमीपत्रं पत्रं भृंगिरजस्य च ।।

तमालामलकीपत्रं शस्तं मे पूजने सुत ।। ११ ।।

पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसंभवैः ।।

अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जंतुवर्जितैः।। १२ ।।

अथारामोद्भवैर्वापि पुष्पैः संपूजयेच्च माम् ।।

पुष्पजातिविशेषेण भवेत्पुण्यं विशेषतः ।।१३।।

तपःशीलगुणोपेते पात्रे वेदस्य पारगे ।।

दश दत्त्वा सुवर्णानि यत्फलं लभते नरः ।।

तत्फलं लभते मर्त्यः सहे कुसुमदानतः ।। १४ ।।

द्रोणपुष्पे तथैकस्मिन्मह्यं च विनिवेदिते ।।

दश दत्त्वा सुवर्णानि फलं तदधिकं सुत ।। १५ ।।

पुष्पात्पुष्पांतरे भेदो यथाऽऽसीत्तन्निबोध मे ।। १६ ।।

द्रोणपुष्पसहस्रेभ्यः खादिरं तु विशिष्यते ।।

खादिरात्पुष्पसाहस्राच्छमीपुष्पं विशिष्यते ।। १७ ।।

शमीपुष्पसहस्रेभ्यो बिल्वपुष्पं विशिष्यते ।।

बिल्वपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते ।।१८।।

बकपुष्पसहस्रेभ्यो नंद्यावर्तं विशिष्यते ।।

नंद्यावर्तसहस्राद्धि करवीरं विशिष्यते ।। १९ ।।

करवीरसहस्रस्य कुसुमं श्वेतमुत्तमम् ।।

करवीरश्वेतपुष्पात्पालाशं पुष्पमुत्तमम् ।। 2.5.7.२० ।।

पालाशपुष्पसाहस्रात्कुशपुष्पं विशिष्यते ।।

कुशपुष्पसहस्राद्धि वनमाला विशिष्यते ।। २१ ।।

वनमाला सहस्राद्धि चंपकं च विशिष्यते ।।

चंपकस्य पुष्पशतादशोकं पुष्पमुत्तमम् ।। २२ ।।

अशोकपुष्पसाहस्राच्छेवन्तीपुष्पमुत्तमम् ।।

शेवन्तीपुष्पसाहस्रात्कुजकं पुष्पमुत्तमम् ।। २३ ।।

कुजपुष्पसहस्राद्धि मालतीपुष्पमुत्तमम् ।।

मालतीपुष्पसाहस्रात्सन्ध्यापुष्पं विशिष्यते ।। २४ ।।

सन्ध्या पुष्पसहस्राद्धि त्रिसंध्यापुष्पमुत्तमम् ।। २५ ।।

त्रिसंध्यारक्तसाहस्रात्त्रिसंध्याश्वेतमुत्तमम् ।।

त्रिसन्ध्याश्वेतसाहस्रात्कुन्दपुष्पं विशिष्यते ।। ।। २६ ।।

कुन्दपुष्पसहस्राद्धि जातीपुष्पं विशिष्यते ।।

सर्वासां पुष्पजातीनां जातीपुष्पमिहोत्तमम् ।। २७ ।।

जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम् ।।

मह्यं यो विधिवद्दद्यात्तस्य पुण्यफलं शृणु ।। २८ ।।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।।

मत्पुरे वसते नित्यं ममतुल्य पराक्रमः ।। २९ ।।

येषां संति च पुष्पाणि प्रशस्तानि ममाऽर्चने ।।

तेषां पत्राणि शस्तानि तदभावे फलानि च ।। 2.5.7.३० ।।

एतैः पत्रैश्च पुष्पैश्च फलैश्चाऽपि तथाहि माम् ।।

अर्चन्दशसुवर्णस्य प्रत्येकं फलमाप्नुयात् ।। ३१ ।।

एताभिः पुष्पजातीभिः सहोमासेऽर्चयंति ये ।।

भक्तिं ददामि तेषां वै तुष्टः सन्नात्र संशयः ।। ३२ ।।

धनं पुत्रांस्तथा दारान्यत्किंचिद्वांछते हि सः ।।

तत्तद्ददामि देवेश पुष्पैरेभिः प्रतोषितः ।। ३३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये जातीपुष्पश्रैष्ठ्यकथनपूर्वकं विष्णुकण्ठे तत्सहस्रपुष्पांकितमालास्थापनफलयोवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमाससमाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/h1h



।। ब्रह्मोवाच।। ।।

श्रीमत्तुलसिमाहात्म्यं यथावद्वर्णय प्रभो ।।

यस्याः सन्निधिमात्रेण प्रीतिर्भवति तेऽधिका ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

मणिकांचनपुष्पाणि तथा मुक्तामयानि च ।।

तुलसीपत्रदानस्य कलां नार्हंति षोडशीम् ।। २ ।।

तुलसीमंजरीभिर्यः कुर्याद्वै मम पूजनम् ।।

न स गर्भगृहं यायान्मुक्तिभागी भवेन्नरः ।। ३ ।।

आरोप्य तुलसीं वत्स पूजयेत्तद्दलैश्च माम् ।।

दिवि संमोदमानः स श्वेतद्वीपे च मे गृहे ।। ४ ।।

श्रीमत्तुलस्यार्चयते सकृद्धि मां पत्रैः सुगन्धैर्विमलैरखंडितैः ।।

यस्तस्य पापं पटसंस्थितं तदा निरीक्षयित्वा परिमार्जयेद्यमः ।। ५ ।।

तुलसी न येषां मम पूजनार्थं संपादितैकादशिपुण्यवासरे ।।

धिग्यौवनं जीवितमर्थसन्ततिस्तेषां सुखं नेह च दृश्यते परे ।। ६ ।।

लिंगमभ्यर्चितं दृष्ट्वा सहोमासे च मामकम् ।।

तुलसीपत्रनिकरैर्मुच्यते ब्रह्महत्यया ।। ७ ।।

नित्यमभ्यर्चयेद्यो वै तुलस्या मां रमेश्वरम् ।।

महापापानि नश्यंति किं पुनश्चोपपातकम् ।।८।।

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।।

न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ।। ९ ।।

तावद्गर्जंति पुष्पाणि मालत्यादीनि भोः सुत ।।

यावन्न प्राप्यते पुण्या तुलसी मम वल्लभा ।। 2.5.8.१० ।।

सकृदभ्यर्चयेद्यो मां बिल्वपत्रेण मानवः ।।

मुक्तिभागी निरातंको मम पार्श्वगतो भवेत् ।। ११ ।।

बिल्वपत्राच्छमीपत्राज्जातीपत्रात्सरोरुहात् ।।

वल्लभं तुलसीपत्रं कौस्तुभादधिकं मम।।१२।।

अभिन्नपत्रा तुलसी हृद्या मंजरिसंयुता ।।

क्षीरोदार्णवसंभूता पद्मेवेयं सदा मम ।।१३।।

अकृष्णाऽप्यथवा कृष्णा तुलसी मम वल्लभा ।।

सिता वाऽप्यसिता वापि द्वादशी वल्लभा यथा ।।। १४ ।।

गृहीत्वा तुलसीपत्रं भक्त्या यो मां समर्चयेत् ।।

अर्चितं तेन सकलं सदेवासुरमानुषम् ।। ।। १५ ।।

तावद्गर्जंति रत्नानि कौस्तुभादीन्यनन्तशः ।।

यावन्न प्राप्यते कृष्ण तुलसीकृष्णमंजरी ।। १६ ।।

कृष्णं कृष्णतुलस्या हि यो भक्त्या पूजयेन्नरः ।।

स याति भुवनं शुभ्रं यत्र विष्णुः श्रिया सह ।। १७ ।।

ममाऽर्चनार्थं भिक्षूणां यच्छंति तुलसीदलम् ।।

अन्येषामपि भक्तानां यांति ते पदमव्ययम्।। १८ ।।

तुलसी कृष्णगौरा या तया यो मां समर्चयेत् ।।

नरो याति तनुं त्यक्त्वा वैष्णवीं शाश्वतीं गतिम् ।। १९ ।।

।। ब्रह्मोवाच ।। ।।

धूपदानस्य माहात्म्यं दीपस्याऽपि च केशव ।।

यत्फलं लभते मर्त्यस्तन्मे ब्रूहि यथार्थतः ।। 2.5.8.२० ।।

।। श्रीभगवानुवाच ।। ।।

शृणु पुत्र प्रवक्ष्यामि धूपदानस्य यत्फलम् ।।

दीपदानस्य माहात्म्यं मम प्रीतिकरं परम् ।।२१।।

अगुरुं च सकर्पूरं दिव्यचंदनसौरभम् ।।

दत्त्वा मां वै सहोमासे कुलानां तारयेच्छतम् ।। २२ ।।

कृष्णागुरुसमुत्थेन धूपेन च ममाऽलयम् ।।

धूपयेद्वैष्णवो यस्तु स मुक्तो नरकाऽर्णवात् ।। २३ ।।

माहिषं गुग्गुलं यस्तु आज्ययुक्तं सशर्करम् ।।

धूपं ददाति यो वै मां तस्येच्छां प्रददाम्यहम् ।। २४ ।।

गुग्गुलो हंत्यशेषाणि अरिष्टानि च धूपितः ।।

कामान्नानाविधांश्चैव अगुरुः संप्रयच्छति ।। २५ ।।

देहं गेहं पुनात्येव धूपस्त्वगुरुसंभवः ।।

नाशयेद्यक्षरक्षांसि धूपः सर्जरसोद्भवः ।। २६ ।।

जातिपुष्पमथैला च गुग्गुलश्च हरीतकी ।।

कूटः सर्जरसश्चैव गुडःसैलाच्छडस्तथा ।।

नखयुक्तानि चैतानि दशांगो धूप उच्यते ।। २७ ।।

धूपं दशांगं यदि चेत्करोति मासे सहे मे अतिवल्लभे च ।।

ददामि कामानतिदुर्लभानपि बलं च पुष्टिं सुतदारभक्तिम् ।। २८ ।।

मुस्ताधूपे मानुषाणां प्रियत्वं मांगल्यकं वश्यकरं गुडस्य ।।

कुर्यात्सहोमासि ममाग्रतो यो विहाय पापानि स मां समाप्नुयात् ।। २९ ।।

न भयं विद्यते तस्य दिव्यभौमांतरिक्षजम् ।।

मम धूपावशेषेण यस्यांऽगं परिमार्जितम् ।। 2.5.8.३० ।।

न चापद्विद्यते तस्य भवंति संपदोऽखिलाः ।।

धूपे कृते सहोमासे ममाग्रे श्रद्धयाऽनिशम् ।।३१ ।।

धूपः सुरूपतां धत्ते धूपः पावनमुत्तमम् ।।

वनस्पतिरसो दिव्यः परमः पावनः शुचिः ।। ३२ ।।

अतः परं प्रवक्ष्यामि दीपमाहात्म्यमुत्तमम् ।।

यस्मिन्कृते नरो याति वैकुण्ठं नात्र संशयः ।। ३३ ।।

बहुवर्तिसमायुक्तं घृतपूरसमन्वितम् ।।

कुर्यादारार्तिकं यो वै कल्पकोटिं दिवं वसेत् ।। ३४ ।।

नीराजनं तु यः पश्येत्सहोमासे ममाऽग्रतः ।।

सप्तजन्म भवेद्विप्रो ह्यंते च परमं पदम् ।। ३५ ।।

कर्पूरेण तु यः कुर्याद्भक्त्या चैव ममाग्रतः ।।

आरार्तिकं द्विजश्रेष्ठ प्रविशेन्मामनंतकम् ।। ३६ ।।

मन्त्रहीनं क्रियाहीनं यत्कृतं पूजनं मम ।।

सर्वं संपूर्णतामेति कृते नीराजने सुत।। ३७ ।।

यः करोति सहोमासे कर्पूरेण च दीपकम् ।।

अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ।। ३८ ।।

ममाऽग्रे वै द्विजानां च दीपं दद्याच्चतुष्पथे ।।

मेधावी ज्ञानसंपन्नश्चक्षुष्माञ्जायते नरः ।। ३९ ।।

घृतेन वाऽथ तैलेन दीपं प्रज्वालयेन्नरः ।।

सहोमासे ममाऽग्रे च तस्य पुण्यफलं शृणु ।। 2.5.8.४० ।।

विहाय सकलं पापं सहस्रादित्यसन्निभः ।।

ज्योतिष्मता विमानेन मम लोके महीयते ।। ४१ ।।

तस्मात्सर्वप्रयत्नेन दीपं दद्याद्विचक्षणः ।।

तं च दत्त्वा विहिंसेद्यः स पतेन्नरके ध्रुवम् ।। ४२ ।।

दीपं यो वै हरेत्पापी लोभाद्द्वेषाद्द्विजोत्तम ।।

तद्दीपहरणात्सोऽपि मूकोंऽधश्च प्रजायते ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये दीपमाहात्म्यवर्णनंनाम अष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/h6f
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | मार्गशीर्षमासमाहात्म्यम्

।। ब्रह्मोवाच ।। ।।

नैवेद्यस्य विधिं ब्रूहि देव मे तत्त्वतः प्रभो ।।

अन्नं कतिविधं चेष्टं व्यंजनादीन्यशेषतः ।। १ ।।

।।श्रीभगवानुवाच ।। ।।

साधु पृष्टं त्वया वत्स मम प्रीतिकरं परम् ।।

वक्ष्यामि तेऽन्नपानादिव्यंजनादीन्यशेषतः ।। २ ।।

आदौ हिरण्मयं पात्रं तदभावे च राजतम् ।।

तदभावे च पालाशं विस्तीर्णं बहुसुन्दरम् ।। ३ ।।

कचोलाः शतशः कार्याः पात्रे वै परितोऽनघ ।।

तन्मध्ये व्यंजना देया नानाफलमयाः शुभाः ।। ४ ।।

पायसं चन्द्रसंकाशं पात्रे वै शर्करायुतम् ।।

भक्तं कुमुदसंकाशं मुद्गान्काचप्रभाञ्छुभान् ।। ५ ।।

नानाव्यंजनसंरुद्धं त्रिभिः पंक्तिभिरेव च ।।

निंबूरसेन चंद्रेण फलमूलयुतेन च ।। ६ ।।

वैकृताश्च तदा कार्याः शतशो भोजने मम ।।

द्राक्षास्तु मिश्रिताश्चूतकरमर्द कृताः शुभाः ।। ७ ।।

मरीचपिप्पलीसार्द्रकैलाचंद्रकसंयुताः ।।

क्वाथिताः कथिकाः कार्याः शतशो भोजने मम ।। ८ ।।

प्रलेहनास्तथा कार्याः कचोलशतसंकुलाः ।।

नानाकुसुमसंमोदयुक्ताः सहसि मे प्रियाः ।। ९ ।।

मंडका वर्तुला रम्याः समाः सर्वत्र बिंदुवत् ।।

सितया सहितेनाऽथ दुग्धेन क्वथितेन च ।। 2.5.9.१० ।।

मधुवर्णेन गव्येन युक्ते तस्मिन्सुभोजने ।।

कचोले सुप्रभे वत्स स्थितं कांचनसुप्रभम् ।। ११ ।।

घृतं सुवासितं प्रीत्या देयं हि मम भोजने ।।
तत्र गोधूमपात्रेण चंद्रकेण हि चोज्ज्वलम् ।। १२ ।।
सौवाह्निकाः पूरिकास्तु शतच्छिद्राः सवेष्टिकाः ।।
अपूपाश्च तथा क्षीरं प्रकारांस्तु प्रकारयेत् ।। १३ ।।
मणयः सूत्रसंज्ञाश्च मालतीकुसुमादयः ।।
पर्पटा वर्पटा रम्या माषकूष्मांडसंभवाः ।। १४ ।।
वटकान्नवधा रम्यान्कुर्यान्मासे सहे मम ।।
द्विधा जातीमरीचैश्च पूरिता द्रोणके शुभाः ।। १५ ।।
युक्तेन लवणेनाऽतिशुद्धतैलेन पूरिताः ।।
कुंकुमाभाः स्नेहहीनाः सक्षता इव दुर्जनाः ।। १६ ।।
दधिदुग्धयुताः केचिच्चिंचिणीचूतसंभवाः ।।
द्राक्षारसयुताः केचित्तथैवेक्षुरसैर्युताः ।। १७ ।।
राजिका जलमध्यस्थास्तथाऽन्ये सितया सह ।।
रसैश्चतुर्विधैश्चान्यैर्वटका नवधा मताः ।। १८ ।।
वज्रप्रभाऽनुकणिकाचारबीजसुखारिकैः ।।
शकलैर्नारिकेलस्य लवंगशतसंयुताः ।। १९ ।।
घृतक्षीरसिताद्यास्ताः कटाहे सुप्रलोडिताः ।।
लब्धासितादिकृसररम्याः स्निग्धाश्च फेणिकाः ।। 2.5.9.२० ।।
पराकिकासु वै पक्वाः कृताश्चंद्रेण पोलिकाः ।।
मोदकास्तत्र वै कार्याश्चारबीजभवाः परे ।। २१ ।।
सितया सहिताः कार्या अन्ये दुग्धेन निर्मिताः ।।
नारिकेलफलैश्चाऽन्ये वृक्षनिर्यासनिर्मिताः ।। २२ ।।
बदामैश्च शुभाश्चाऽन्ये तिलैश्च कणबीजकैः ।।
ईदृशान्मोदकांश्चान्यांस्तुष्ट्यर्थं मम कारयेत् ।। २३ ।।
अर्शोघ्नं मोचनीकंदं तथाऽऽर्द्रं करमर्दकम् ।।
नारिंगं चिंचिणीकं च कंकोलफलमेव च ।। २४ ।।
दशारं त्रिपुरीजातं शुभं निंबफलं बिसम् ।।
तिंदूफलं लवंगं च श्रीफलं तिलकं लुति ।। २५ ।।

वल्कलं वंशकारीरं तथा कायफलं बलम् ।।

द्राक्षाफलं चूतफलं रम्यं कंटकिनीफलम् ।। २६ ।।

धात्रीफलं शुक्तिभवं फलमंबाडवं तथा ।।

रंभाफलं पिप्पली च मरीचाश्च मनोहराः ।। २७ ।।

शुद्धसर्षपतैलेन लवणेन सुवेधितम् ।।

तथा राजिकया विद्धं त्रिभिर्वर्षैर्घटे स्थितम् ।। २८ ।।

एवंविधानि जातानि व्यंजनानि च मानद ।।

कर्तव्यानि सहोमासे मम प्रीतिकराणि वै ।। २९ ।।

एतादृशे भोजने चेदसामर्थ्यं भवेद्यदि ।।

एवं कार्यं तदा तेन संक्षेपेण शृणुष्व मे ।। 2.5.9.३० ।।

लड्डूकमेकं घृतपूरमेकं फेनद्वयं कोकरसत्रयं च ।।

घृतप्लुतं मंडकषोडशानां वटाष्टदायी नरकं न पश्येत् ।। ३१ ।।

आढकं सुचिरपर्युषितं च दुग्धं खंडस्य षोडशपलानि शशिप्रभस्य ।।

सर्पिष्पलं मधुपलं मरिचं द्विकर्षं शुंठ्याः पलार्धमथवाऽर्धपलं चतुर्णाम् ।। ३२ ।।

श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टां कर्पूरधूलिधवलीकृतभांडसंस्थाम् ।।

एतां शुभां रसवतीं प्रकरोति यो वै कामान्ददामि सकलान्मनुजस्य तस्य ।। ३३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये नैवेद्यविधिकथनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १०

https://sa.wikisource.org/s/h6g
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | मार्गशीर्षमासमाहात्म्यम्

।। ब्रह्मोवाच ।। ।।

नैवेद्यानंतरं तात किं कर्तव्यं नृभिः प्रभो ।।

यत्कर्तव्यं सहोमासे तत्सर्वं ब्रूहि तत्त्वतः ।। १ ।।

श्रीभगवानुवाच ।। ।।

अथ भुक्तवते दत्त्वा जलैः कर्पूरवासितैः ।।

आचमनं च तांबूलं चंदनं करमार्जनम् ।। २ ।।

पुष्पांजलिं ततः कुर्याद्भक्त्याऽऽदर्शं प्रदर्शयेत् ।।

नीराजनं ततः कार्यं कार्पूरं विभवे सति ।। ३ ।।

समर्प्य मुकुटादीनि भूषणानि विचक्षणः ।।

ततः पश्चान्महाभाग प्रकल्प्य च्छत्रचामरे ।।४।।

प्रसादसुमुखं ध्यात्वा श्यामसुंदरविग्रहम् ।।

जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ।।५।।

शंखरौप्यमयी माला कांचनी च विशेषतः ।।

पद्माक्षैश्चैव सुभगैर्विद्रुमैर्मणिमौक्तिकैः ।। ६ ।।

रचितेंद्राक्षकैर्माला तथैवांगुलिपर्वभिः ।।

पुत्रजीवमयी माला शस्ता वै जपकर्मणि ।। ७ ।।

न च क्रमन्न च हसन्न पार्श्वमवलोकयन् ।।

न पदा पदमाक्राम्य करप्राप्तशिरास्तथा ।।८।।

नोत्तिष्ठन्मन्मनं विद्वान्न जपेद्व्यग्रमानसः ।।

जपकाले न भाषेत व्रतहोमार्चनादिषु ।।९।।

गृहेष्वेकगुणंजाप्यं गोष्ठे दशगुणं भवेत् ।।

नदीतीरे शतं विद्यादग्न्यगारे दशाऽधिकम् ।। 2.5.10.१० ।।

तीर्थादिषु सहस्रं स्यादनंतं मम सन्निधौ ।।

एवं कृत्वा सहोमासे यः कुर्याच्च प्रदक्षिणाम् ।। ११ ।।

सप्तद्वीपवतीपुण्यं लभते स पदेपदे ।।

पठन्नामसहस्रं तु अथवा नाम केवलम् ।। १२ ।।

एका प्रदक्षिणा भक्त्या दहेत्पापं सदाऽऽह्निकम् ।।

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।। १३ ।।

दिनसप्तोद्भवं पापं मम तिस्रः प्रदक्षिणाः ।।

तत्क्षणान्नाशयंत्येव पापं देहे दशाऽऽह्निकम् ।। १४ ।।

कृताः प्रदक्षिणा येन एकविंशति भक्तितः ।।

भ्रूणहत्यादिपापानि नाशमायांति तत्क्षणात् ।। १५ ।।

अष्टोत्तरशतं येन कृता भक्त्या प्रदक्षिणाः ।।

तेनेष्टं क्रतुभिः सर्वैः समाप्तवरदक्षिणैः ।। १६ ।।

प्रदक्षिणीकृता तेन तावद्वारं वसुन्धरा ।।

मातुः प्रदक्षिणास्तद्वद्भूतधात्रीप्रदक्षिणाः ।। १७ ।।

शालिग्रामशिलायाश्च सममेतत्त्रयं स्मृतम् ।।

एको दंडप्रपातश्च सहे सप्तप्रदक्षिणाः ।। १८ ।।

सममेतद्द्वयं नो वा दंडपातो विशिष्यते ।।

प्रदक्षिणे दंडपातं यः करोति सदा मम ।। १९ ।।

सहोमासे विशेषेण आकल्पं स वसेद्दिवि ।।

कल्पादनंतरं तात चक्रवर्ती प्रजायते ।। 2.5.10.२० ।।

चिरायुर्धनवान्भोगी दानवान्धर्मवत्सलः ।।

सहस्रनामपठनात्पापं नश्येत्त्रिधा कृतम् ।। २१ ।।

अथ किं बहुनोक्तेन शृणु गुह्यं च मे सुत ।।

दामोदरेति नाम्ना वै भवेत्प्रीतिर्ममाऽतुला ।। २२ ।।

गुणसंबंधि मन्नाम कृतं मात्रा यशोदया ।।

यदा मे दधिभांडस्य स्फोटनं गोकुले कृतम्।। २३ ।।

तदा यशोदया गाढं बद्धो दाम्ना ह्युलूखले ।।

ततः प्रभृति मे नाम ख्यातं दामोदरेति च।।२४।।

नमो दामोदरायेति जपेद्यः सुसमाहितः ।।

सूर्योदये शुचिर्भूत्वा त्रिसहस्रं दिनेदिने ।। २५ ।।

सार्द्धलक्षत्रयं यावत्तत उद्यापयेद्बुधः ।।

तर्पणं हवनं चैव ब्रह्मभोज्यं दशांशतः ।। २६ ।।

एवं यः कुरुते भक्त्या तस्य यच्छामि वांछितम् ।।

धनं धान्यं तथा दारान्पुत्रांश्चान्यच्च वांछितम् ।। २७ ।।

त्रिसत्येन मया चोक्तं श्रद्धत्स्व त्वं महामते ।।

मंत्रराजमिमं पुत्र कृपया मे प्रकाशितम् ।। २८ ।।

दामोदरायेति पठन्नित्यं कुर्यात्प्रदक्षिणम्।।

दंडपातं तथा पुत्र अष्टांगेन समन्वितम् ।। २९ ।।

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा ।।

मनसा वचसा दृष्टवा प्रणामोष्टांग उच्यते ।। 2.5.10.३० ।।

शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्।।

प्रपन्नं पाहि मामीश भीतं मृत्युग्रहाऽर्णवात् ।। ३१ ।।

पश्चाच्छेषां मया दत्तां शिरस्याधाय सादरम् ।।

एवं ब्रूयात्ततो वत्स मम पूजाप्रपूर्त्तये ।। ३२ ।।

मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।।

यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।। ३३ ।।

मृदंगवाद्येन समं प्रणवेन सुसंयुतम् ।।

एवं कार्यं सहोमासे नृत्यं पुण्यप्रदं नृणाम् ।। ३४ ।।

गीतं वाद्यं च नृत्यं च तथा पुस्तकवाचनम् ।।

पूजाकाले चतुर्वक्त्र सर्वदा मम च प्रियम् ।।३५।।

गीतवाद्याद्यभावे च मम नामसहस्रकम् ।।

स्तवराजं तथा पुत्र गजेंद्रस्य च मोक्षणम् ।।३६।।

अनुस्मृतिश्च गीता च स्तवनं पंचधा मतम् ।।

पंचस्तवं महाभाग मम प्रीतिकरं परम्।।३७।।

पादोदकं पिबेद्यो वै शालिग्रामसमुद्भवम् ।।

पंचगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम्।।३८।।

शालिग्रामशिलातोयं यः पिबेद्बिंदुना समम् ।।

मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्नरः।। ३९ ।।

आशौचं नैव विद्येत सूतके मृतकेऽपि च ।।

येषां पादोदकं मूर्ध्नि प्राशनं ये प्रकुर्वते ।। 2.5.10.४० ।।

अंतकालेऽपि यस्येदं दीयते पादयोर्जलम् ।।

सोऽपि सद्गतिमाप्नोति सदाचारबहिष्कृतः ।। ४१ ।।

अपेयं पिबते यस्तु भुंक्ते यद्यप्यभोजनम् ।।

अगम्यागमनो यो वै पापाचारश्च यो नरः ।। ४२ ।।

सोऽपि पूतो भवत्याशु सद्यः पादांबुधारणात् ।।

चांद्रायणात्पादकृच्छ्रादधिकं पादयोर्जलम् ।।४३।।

अगुरुं कुंकुमं वाऽपि कर्पूरं चाऽनुलेपनम् ।।

मम पादांबुसंस्पृष्टं तद्वै पावनपावनम् ।।४४।।

दृष्टिपूतं तु यत्तोयं भवेद्वै विप्रसत्तम ।।

तद्वै पापहरं नृणां किं पुनः पादयोर्जलम् ।। ४५ ।।

प्रियस्त्वं मेऽग्रजः पुत्रो विशेषेण च मत्प्रियः ।।

तदर्थं कथितं सर्वं रहस्यं यच्च मे स्थितम् ।।४६।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखंडे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्ये पूजाविधिसमापनं तदुद्यापनं तत्फलकथनयोगोनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः ११



।। ब्रह्मोवाच ।। ।।

एकादश्याश्च माहात्म्यं मूर्तीनां च विधानकम् ।।

सर्वं ब्रूहि मम स्वामिन्कृपया भूतभावन ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

शृणुष्व द्विजशार्दूल कथां पापप्रणाशिनीम् ।।

यां श्रुत्वा याति विलयं पापं ब्रह्मवधादिकम् ।। २ ।।

कांपिल्ये नगरे राजा वीरबाहुरिति स्मृतः ।।

सत्यवादी जितक्रोधो ब्रह्मज्ञो मम तत्परः ।। ३ ।।

भाववान्स दयाशीलोरूपवान्बलवान्नरः ।।

भक्तो भागवतानां च सदा मम कथारुचिः ।। ४ ।।

सदा मम कथाऽऽसक्तः सदा जागरणप्रियः ।।

दाता विद्वान्क्षमाशीलो विक्रमी विजितेंद्रियः ।। ५ ।।

विजयी रणशीलश्च ऋद्ध्या च धनदोपमः।।

पुत्रवान्पशुमांश्चैव स्वदारनिरतस्तथा ।।६।।

तस्य भार्या कांतिमती रूपेणाऽप्रतिमा भुवि ।।

पतिव्रता महासाध्वी मम भक्तिरता सदा ।। ७ ।।

तया सह विशालाक्षो बुभुजे मेदिनीं युवा ।।

मुक्त्वैकं मां महाबाहो नान्यज्जानाति दैवतम् ।। ।।। ८ ।।

एकस्मिन्दिवसे पुत्र भारद्वाजो महामुनिः ।।

समागतो गृहे तस्य वीरबाहोर्महात्मनः ।। ९ ।।

दृष्ट्वा समागतं दूराद्भारद्वाजं महामुनिम् ।।

स्वागतं कारयामास दत्त्वार्घ्यं विधिवत्तदा ।। 2.5.11.१० ।।

आसनं कल्पयामास स्वयमेव महीपतिः ।।

प्रणम्य परया भक्त्या तस्थौ मुनिवराग्रतः ।।।।। ११ ।।

।। राजोवाच ।। ।।

अद्य मे सफलं जन्म अद्य मे सफलं दिनम् ।।

अद्य मे सफलं राज्यमद्य मे सफलं गृहम् ।। १२ ।।

प्रसन्नो मम विप्रर्षे परमात्मा जनार्दनः ।।

यत्त्वं समागतो ह्यद्य गृहे योगिवरस्तथा ।। १३ ।।

मुक्तोऽहं पापकोट्याद्य यत्त्वयाऽहं निरीक्षितः ।।

राज्यं लक्ष्मीर्गजाऽश्वाश्च मया तुभ्यं निवेदिताः ।। १४ ।।

वैष्णवोऽसि मुनिश्रेष्ठ नास्त्यदेयं मया तव ।।

मेरुतुल्यं भवेत्सर्वं वैष्णवस्य वराटिका ।। ।। १५ ।।

नाऽऽयाति हि गृहे यस्य वैष्णवो वै द्विजोत्तमः ।।

तद्दिनं विफलं तस्य कथितं ब्राह्मणैर्मम ।।१६।।

विष्णुभक्ताश्च ये केचित्सर्वे वर्णा द्विजातयः ।।

कथितं मम गार्ग्येण गौतमेन सुमंतुना ।। १७ ।।

ये त्वभक्ता हृषीकेशे पिशाचास्ते हि मानवाः ।।

महापातकलिप्तास्ते ये भुंजंति हरेर्दिने ।। ।। १८ ।।

शिवव्रतसहस्रैस्तु सौरैर्ब्राह्मैश्च कोटिभिः ।।

यत्फलं कविभिः प्रोक्तं वासरैकेन तद्धरेः ।। १९ ।।

गर्वमुद्वहते तावत्तिथिर्ब्राह्मी च शांकरी ।।

यावन्नायाति विप्रेंद्र द्वादशी च मम प्रिया ।। 2.5.11.२० ।।

तावत्प्रभावस्ताराणां यावन्नोदयते शशी ।।

तिथिस्तथा च विप्रेंद्र यावन्नायाति द्वादशी ।। २१ ।।

नारदेन पुरा प्रोक्तं वसिष्ठेन ममाग्रतः ।।

त्वं वेत्ता सर्वधर्माणां वैष्णवानां महामुने ।। २२ ।।

।। भारद्वाज उवाच ।। ।।

साधु पृष्टं महाभाग यत्त्वं भक्तोऽसि वैष्णवः ।।

सा सुप्रजा मही धन्या यत्त्वं रक्षसि भूमिप ।। २३ ।।

तस्मिन्राष्ट्रे न वस्तव्यं यत्र राजा न वैष्णवः ।।

वरं वासो वने तीर्थे न तु राष्ट्रे त्ववैष्णवे ।। २४ ।।

यत्र भागवतो राजा संप्रशास्ति च मेदिनीम् ।।
वैकुण्ठमिति मंतव्यं तद्राष्ट्रं पापवर्जितम् ।। २५ ।।
चक्षुर्हीनं यथा देहं पतिहीना यथा स्त्रियः ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। २६ ।।
यथा पुत्रो महीपाल मातापित्रोरपोषकः ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। २७ ।।
दानहीनो यथा राजा ब्राह्मणो रसविक्रयी ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। २८ ।।
दंतहीनो यथा हस्ती पक्षहीनो यथा खगः ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। २९ ।।
प्रतिग्रहार्थं वेदादि द्रव्यार्थं सुकृतं यथा ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। 2.5.11.३० ।।
दर्भहीना यथा संध्या यथा श्राद्धमदक्षिणम् ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। ३१ ।।
सशिखश्च यथा शूद्रा कपिलाक्षीरपायकः ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। ३२ ।।
शूद्रश्च ब्राह्मणीगामी हेमघ्नो धर्मदूषकः ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। ३३ ।।
हरिसूर्यादिवृक्षाणां यथा छेदो नरोत्तम ।।
द्वादशी दशमी युक्ता तथा राष्ट्रमवैष्णवम् ।। ३४ ।।
यथाऽऽहुतिर्मंत्रहीना मृतवत्सापयो यथा ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। ३५ ।।
सकेशा विधवा यद्वद्व्रतं स्नानविवर्जितम् ।।
द्वादशी दशमीयुक्ता तथा राष्ट्रमवैष्णवम् ।। ३६ ।।
स राजा प्रोच्यते सद्भिर्यो भक्तो मधुसूदने ।।
तद्राष्ट्रं वर्धते नित्यं सुखी भवति सप्रजः ।। ३७ ।।
दृष्टिर्मे सफला राजन्यन्मया त्वं निरीक्षितः ।।
अद्य मे सफला वाणी जल्पते या त्वया सह ।। ३८ ।।

दूरमेव हि गंतव्यं श्रूयते यत्र वैष्णवः ।।

दर्शनात्तु भवेत्पुण्यं तीर्थस्नानसमुद्भवम् ।। ३९ ।।

स त्वं राजन्मया दृष्टो विष्णुभक्तिरतः शुचिः ।।

स्वस्ति तेऽस्तु गमिष्यामि सुखी भव नराधिप ।। 2.5.11.४० ।।

एतस्मिन्नंतरे राज्ञ्या कांतिमत्या नमस्कृतः ।।

भारद्वाजो मुनिश्रेष्ठः प्रवरः सर्वयोगिनाम् ।। ४१ ।।

अवैधव्यं वरारोहे भक्ता भव स्वभर्तरि ।।

निश्चला केशवे भक्तिः सदा भवतु ते शुभे ।। ४२ ।।

एतस्मिन्नंतरे राजा भारद्वाजं महामुनिम् ।।

उवाच प्रीणयन्वाचा मेघनादगभीरया ।। ४३ ।।

।। राजोवाच ।। ।।

विपुला मे कथं लक्ष्मीः किं कृतं पूर्वजन्मनि ।।

सर्वं ब्रूहि मुनिश्रेष्ठ कृपा यदि ममोपरि ।। ४४ ।।

एतन्मया कथं प्राप्तं राज्यं निहतकण्टकम् ।।

पुत्रो वै गुणवाञ्च्छ्रेष्ठः प्रिया च सुमनोहरा ।। ४५ ।।

मच्चित्ता मद्गतप्राणा चिंतयन्ती जनार्दनम् ।।

कोऽहं मुने कथं चैषा कश्च धर्मो मया कृतः ।। ४६ ।।

किं चाऽनयाऽपि चार्वंग्या मम पत्न्या कृतं मुने ।।

केन पुण्येन मे लक्ष्मीर्मृत्युलोके सुदुर्लभा ।। ४७ ।।

अशेषा भूमिपाला वै वर्तंते यस्य मे वशे ।।

विक्रमं चाऽप्रतिहतं शरीरारोग्यता तथा ।। ४८ ।।

ममाऽपि विपुलं तेजो न कश्चित्सहते मुने ।।

इच्छाम्यद्य प्रतिज्ञातुं यथा चेयमनिंदिता ।। ४९ ।।

मयाऽपि सुकृतं विप्र किं कृतं पूर्वजन्मनि ।।

इति पृष्टो नरेंद्रेण पूर्वजन्मविचेष्टितम् ।। 2.5.11.५० ।।

स्वपत्न्याश्चेष्टितं चैव संपदां चैव कारणम् ।।

योगोत्थं सुचिरं कालं तथाविंदत मानसे ।। ५१ ।।

विज्ञातमेतन्नृपते पूर्वजन्मविचेष्टितम् ।।

तव पत्न्याश्च राजर्षे शृणुष्व कथयाम्यहम् ।। ५२ ।।

।।भारद्वाज उवाच ।। ।।

शृणु भूपाल सकलं यस्येदं कर्मणः फलम् ।।

त्वमासीः शूद्रजातीयो जीवहिंसापरायणः ।। ५३ ।।

नास्तिको दुष्टचारित्रः परदारप्रधर्षकः ।।

कृतघ्नो दुर्विनीतश्च सुष्ठ्वाचारविवर्जितः ।। ५४ ।।

इयं या भवतो भार्या पूर्वमप्यायतेक्षणा ।।

कर्मणा मनसा वाचा नान्यदस्यास्त्वया विना ।। ।। ५५ ।।

पतिव्रता महाभागा भजमाना निरन्तरम् ।।

भावं न कुरुते दुष्टं तवोपरि तथा सति ।। ५६ ।।

सखिभिस्त्वं परित्यक्तो बन्धुभिः पापकर्मकृत् ।।

क्षयं जगाम चाऽर्थो यः सञ्चितस्तव पूर्वजैः ।। ५७ ।।

नष्टे द्रव्ये फलाऽऽकांक्षी त्वमासीर्जगतीपते ।।

पूर्वकर्मविपाकेन कृषिश्च विफला गता ।। ।। ५८ ।।

ततो वित्ते परिक्षीणे परित्यक्तश्च बांधवैः ।।

क्षीयमाणाऽपि साध्वीयमत्यजत्त्वां न भामिनी ।। ५९ ।।

त्वं भग्नः सर्वकामेभ्यो गतवान्निर्जने वने ।।

हत्वा जीवाननेकांश्च चकारात्मविपोषणम् ।।2.5.11.६० ।।

एवं प्रवृत्तस्य तव सह पत्न्या तदा नृप ।।

गतानि बहुवर्षाणि पापवृत्त्या महीतले।।६१।।

अन्यस्मिन्वासरे राजन्मार्गभ्रष्टो महामुनिः ।।

न दिशं विदिशं वेत्ति देवशर्मा द्विजोत्तमः ।। ६२ ।।

क्षुत्तृषापीडितोऽत्यर्थं मध्याह्नगदिवाकरे ।।

पतितो वनमध्ये तु मार्गभ्रष्टो महीपते ।। ६३ ।।

दया जाता च ते भूप दृष्ट्वा दुःखेन पीडितम् ।।

ब्राह्मणं वृद्धमज्ञातं गृहीत्वा तु करेण वै ।। ६४ ।।

उत्थाप्य पतितं भूमौ त्वयोक्तं हि तदा नृप ।।

प्रसादं कुरु विप्रर्ष आगच्छ त्वं ममाऽऽश्रमम् ।। ६५ ।।

जलपूर्णं तडागं च पद्मिनीखण्डमण्डितम् ।।
वृक्षैर्मनोहरैर्युक्तं फलैः पुष्पैर्मनोरमैः ।। ६६ ।।
स्नात्वा सुशीतले तोये कृत्वा कर्म च नैत्यकम् ।।
कुरु विप्र फलाहारं पिब वारि सुशीतलम् ।। ६७ ।।
सुखेन कुरु विश्रामं मया संरक्षितः स्वयम् ।।
विप्रेन्द्र तृप्तिपर्यंतं वस त्वं च ममाश्रमे ।। ६८ ।।
उत्तिष्ठ त्वं द्विजश्रेष्ठ प्रसादं कर्तुमर्हसि ।।
लब्धसंज्ञस्तदा विप्रः श्रुत्वा शूद्रस्य भाषितम् ।। ६९ ।।
करे जग्राह तं शूद्रं गतो यत्र जलाशयः ।।
उपविष्टो महाबाहो छायामाश्रित्य तत्तटे ।। 2.5.11.७० ।।
स्नानं चकार विधिवत्पूजयामास केशवम् ।।
तर्पयित्वा पितॄन्देवान्पपौ नीरं सुशीतलम् ।। ७१ ।।
विश्रांतो वृक्षमूलेऽभूद्देवशर्मा द्विजोत्तमः ।।
साष्टांगं मुनये कृत्वा नमस्कारं सह स्त्रिया ।। ७२ ।।
शूद्रस्तु परया भक्त्या प्रोवाच मुनिसन्निधौ ।।
आवयोस्तरणार्थाय अतिथिस्त्वं समागतः ।। ७३ ।।
दर्शनात्तव विप्रर्षे जातः पापस्य संक्षयः ।।
प्रिये फलानि स्वादूनि प्रयच्छास्मै द्विजातये ।।
मृदूनि रसयुक्तानि सुपक्वानि प्रियाणि च ।। ७४ ।।
।। ।। ब्राह्मण उवाच ।। ।।
त्वामहं नैव जानामि स्वज्ञातिं कथयस्व मे ।।
नाज्ञातस्य हि भोक्तव्यं ब्राह्मणस्याऽपि पुत्रक ।। ७५ ।।
।। शूद्र उवाच ।। ।।
शूद्रोऽहं द्विजशार्दूल न कार्यः संशयस्त्वया ।।
आत्मजैर्दुर्जनैर्विप्र परित्यक्तः स्वबन्धुभिः ।। ७६ ।।
तयोः संवदतोरेवं शूद्रपत्न्या फलानि च ।।
दत्तानि तस्मै विप्राय तेन भुक्तानि तानि वै ।। ७७ ।।
अभूत्प्रीतमना विप्रः पीत्वा नीरं सुशीतलम् ।।

सुखं संप्राप्य स मुनिर्विश्रांतस्तरुमूलके ।। ७८ ।।

स च शूद्रः सपत्नीको भुक्त्वा च पुनरागतः ।।

स्वागतं ते मुनिश्रेष्ठ कुतस्त्वमिह चाऽऽगतः ।। ७९ ।।

शून्याटवीं द्विजश्रेष्ठ दुष्टसत्त्वभयाकुलाम् ।।

निर्मनुष्यां दुःखयुक्तां दिवारात्रं भयानकाम् ।। 2.5.11.८० ।।

।। ब्राह्मण उवाच ।। ।।

ब्राह्मणोऽहं महाभाग प्रयागगमनं प्रति ।।

अहमज्ञातमार्गेण प्रविष्टो दारुणे वने ।। ८१ ।।

मम पुण्यप्रभावेण जातोसि वरबांधवः ।।

जीवितं मे त्वया दत्तं ब्रूहि किं करवाणि ते ।। ६२ ।।

भवानपि कुतः प्राप्तो निर्मनुष्ये वने खलु ।।

को भवान्कारणं किंस्वित्कथयस्व ममाऽग्रतः ।। ८३ ।।

।। शूद्र उवाच ।। ।।

विदर्भनगरी राज्ञा भीमसेनेन रक्षिता ।।

वासो मम महाराष्ट्रे शूद्रोऽहं पापलंपटः ।। ८४ ।।

स्वकर्मविहितो धर्मो मया त्यक्तो द्विजोत्तम ।।

त्यक्तोऽहं बन्धुवर्गेण ततोऽहं वनमागतः ।। ८५ ।।

कृत्वा जीववधं नित्यं जीवेऽहं भार्यया सह ।।

सांप्रतं पातकात्सम्यङ् निर्विण्णोस्मि महामुने ।। ८६ ।।

कुरुष्वाऽनुग्रहं किञ्चित्पापयुक्तस्य मे प्रभो ।।

मम पुण्यप्रभावेण आगतस्त्वं द्विजोत्तम ।। ८७ ।।

न पश्यामि यथा सौरिं पत्न्या सह महामुने ।।

उपदेशप्रभावेण प्रसादं कर्तुमर्हसि ।। ८८ ।।

नान्यदिच्छाम्यहं किञ्चिन्मुक्त्वा देवं जनार्दनम् ।।

कुरुष्वाऽनुग्रहं मेऽद्य प्रसादमृषिसत्तम ।। ८९ ।।

।। भारद्वाज उवाच ।। ।।

इति तेन समापृष्टो देवशर्मा द्विजाग्रणीः ।।

शूद्रेण परया भक्त्या प्रहसन्वाक्यमब्रवीत् ।। 2.5.11.९० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमाहात्म्य एकादश्याख्यानंनामैकादशोऽध्यायः ।। ११ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १२



।। देवशर्मोवाच ।। ।। ।।

तवेदृशी मतिर्जाता सहसा केशवोपरि ।।

एतस्मान्मे गतं पापं पूर्वजन्मशतोद्भवम् ।। १ ।।

विना व्रतैर्विना तीर्थैर्मुक्तस्त्वं पापकोटिभिः ।।

ममातिथ्येन भक्त्या च जातं तव हरेः पदम् ।। २ ।।

तेन पुण्यप्रभावेण मतिर्जाता तवेदृशी ।।

ध्यात्वा संचिंत्य मनसा ज्ञातं पूर्वविचेष्टितम् ।। ३।।

पूर्वजन्मनि विप्रस्त्वमवंत्यां धर्मतत्परः ।।

सदाऽध्ययनशीलश्च सुशीलश्च सदा व्रती ।। ४ ।।

एका तु द्वादशी विष्णोः कृता च दशमीयुता ।।

तत्पापस्य प्रभावेण समस्तं सुकृतं गतम् ।। ५ ।।

सर्वं तद्विफलं जातं यथा शूद्रापतिर्द्विजः ।।

बहुवर्षसहस्राणि प्राप्ता नरकयातनाः।। ६ ।।

तस्मादेवं त्वया पूर्वं कृतं दुष्टं चिरं बहु ।।

कृता तु दशमीमिश्रा तिथिर्विष्णोर्महात्मनः ।। ७ ।।

तेन शूद्रो भवाञ्जातः पापे तव मतिस्तथा ।।

धर्मे न रमते चित्तं दशमीवेधदूषितम्।। ८ ।।

विदर्भनगरे वत्स अस्ति ते पुत्रिकासुतः ।।

कृतं तेन विधानोक्तं हरेरेकादशीव्रतम् ।। ९ ।।

प्रदत्तं तेन तत्पुण्यमखण्डैकाशीव्रतम्।।

धर्मोपरि मतिर्जाता जातः पापस्य संक्षयः ।। 2.5.12.१० ।।

तेन पुण्यप्रभावेण एकादश्या व्रतेन च ।।

दशमीवेधजं पापं यमेन परिमार्जितम् ।। ११ ।।

इह जन्मनि यत्पापं जन्मायुतकृतानि च ।।

मार्जितानि यमेनैव पापानि तव सांप्रतम् ।। १२ ।।

तयोर्विवदतोरेवं विष्वक्सेनः समागतः ।।

वर्णावर स्वागतं ते तुष्टस्तेहं जनार्दनः ।। १३ ।।

विप्रस्याऽऽतिथ्यहेतुत्वाज्जातः पापस्य संक्षयः ।।

परदत्तेन पुण्येन एकादश्या व्रतेन च ।। १४ ।।

दशमीवेधजं पापं तव शूद्र लयं गतम् ।।

व्रतं कृत्वा ददौ पुण्यं दौहित्रस्तेन तारितः ।। १५ ।।

पत्न्या सह महाभाग वैनतेयं समारुह ।।

इत्युक्त्वा देवदेवेन विमाने स्थापितस्तदा ।। १६ ।।

स्वर्गं ततः सपत्नीकः शूद्रत्वेन नृपोत्तम ।।

देवशर्मा तु विप्रो वै तीर्थराजं ययौ पुनः ।। १७।।

एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् ।।

अखण्डैकादशीपुण्यात्प्राप्तस्याऽऽतिथ्यकारणात् ।।

विष्णुभक्तिमती भार्या राज्यं निहतकण्टकम् ।। ।। १८ ।।

।। राजोवाच ।। ।।

ब्रह्मन्नखण्डैकादश्या विधिं सम्यक्समादिश ।।

विष्णोः सम्प्रीणनार्थाय प्रसादं कर्तुमर्हसि ।। १९ ।।

।। ऋषिरुवाच ।। ।।

शृणुष्व नृपशार्दूल एकादश्या विधिं शुभम् ।।

पुराऽऽसीद्भगवान्विष्णुर्नारदाय यदुक्तवान् ।। 2.5.12.२० ।।

तत्तेऽहं संप्रवक्ष्यामि उद्यापनविधिं शुभम् ।।

मार्गशीर्षादिमासेषु द्वादशीषु नरोत्तम ।। २१ ।।

व्रतं शुभमिदं कार्यमखण्डैकादशीव्रतम् ।।

दशम्यां चैव नक्तं च एकादश्यामुपोषणम् ।। ।। २२ ।।

द्वादश्यामेकभुक्तं च अखंडा इति कथ्यते ।।

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।। २३ ।।

तद्धि नक्तं विजानीयान्न नक्तं निशि भोजनम् ।।

कांस्यं मांसं मसूरांश्च चणकान्कोद्रवांस्तथा ।। २४ ।।

शाकं मधु परान्नं च पुनर्भोजनमैथुने ।।
विष्णुभक्तो नरो वाऽपि दशम्यां दश वर्जयेत् ।। २५ ।।
दशम्या विधिरुक्तोऽयमेकादश्यास्तथा शृणु ।।
असकृज्जलपानं च हिंसा शौचमसत्यता ।। २६ ।।
तांबूलं दन्तकाष्ठं च दिवाशयनमैथुने ।। द्यूतं
क्रीडा निशि स्वापः पतितैः सह भाषणम् ।।
एकादश्यां दशैतानि विष्णुभक्तस्तु वर्जयेत् ।। २७ ।।
अद्य मे स्त्रीसुखं नास्ति भोजनं नास्ति केशव ।।
प्रीत्यर्थं तव देवेश नियमस्तु दिवानिशि ।। २८ ।।
सुप्तेन्द्रियैस्तु वैक्लव्यं भोजनं यच्च मैथुनम् ।।
दन्तांतरविलग्नान्नं क्षमस्व पुरुषोत्तम ।। २९ ।।
उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह ।।
उपवासः स विज्ञेयो न शरीरस्य शोषणम् ।। 2.5.12.३० ।।
पूर्वोक्तानि दशैतानि परान्नं च तथा मधु ।।
द्वादश्यां विष्णुभक्तो वै वर्जयेन्मर्दनादिकम् ।।३१।।
अद्य मे द्वादशी पुण्या पवित्रा पापनाशिनी ।।
पारणं च करिष्यामि प्रसीद गरुडध्वज ।। ३२ ।।
विष्णोः संतोषणार्थाय यो मया नियमः कृतः ।।
अद्याहं भोजयिष्यामि त्वत्प्रसादाद्द्विजोत्तमम् ।। ३३ ।।
अनेन विधिना कुर्याद्यावद्वर्षं समाप्यते ।।
संपूर्णे तु ततो वर्षे कुर्यादुद्यापनं बुधः ।। ३४ ।।
आदौ मध्ये तथा चांते व्रतस्योद्यापनं स्मृतम् ।।
उद्यापनं न कुर्याद्यः कुष्ठी चांधश्च जायते ।। ३५ ।।
तस्मादुद्यापनं कुर्याद्यथाविभवसारतः ।।
क्रियते शुक्लपक्षे च मासे मार्गशिरे शुभे ।। ३६ ।।
आमंत्र्य द्वादशमितान्ब्राह्मणान्विधिकोविदान् ।।
त्रयोदशं सपत्नीकमाचार्यं विधिकोविदम् ।। ३७।।
यजमानः शुचिः स्नात्वा श्रद्धायुक्तो जितेन्द्रियः ।।

पादशौचार्धवस्त्राद्यैराचार्यादींस्ततोऽर्चयेत् ।। ३८ ।।

आचार्यस्तु ततः कृत्वा मण्डलं वर्णकैः शुभैः ।।

चक्राब्जं सर्वतोभद्रं श्वेतवस्त्रेण वेष्टितम् ।। ३९ ।।

जलपूर्णं च कुम्भं तु पञ्चरत्नसमन्वितम् ।।

पञ्चपल्लवसंयुक्तं कर्पूरागुरुवासितम् ।। 2.5.12.४० ।।

वेष्टितं रक्तवस्त्रेण ताम्रपात्रेण संयुतम् ।।

वेष्टितं पुष्पमालाभिर्मंडलोपरि विन्यसेत् ।। ४१ ।।

तस्योपरि न्यसेद्देवं लक्ष्मीनारायणं नृप ।।

सौवर्णी प्रतिमा कार्या एककर्षप्रमाणतः ।। ४२ ।।

वाहनाऽऽयुधसंयुक्ता प्रमाणं चतुरंगुलम् ।।

किंवा शक्त्या प्रकुर्वीत वित्तशाठ्यं विवर्जयेत् ।। ४३ ।।

ततः संस्थापयेन्मूर्तिं मंडले द्वादशैव हि ।।

मासानामधिपः पूज्यश्चाखंडव्रतहेतवे ।।४४।।

मंडलात्पूर्वदिग्भागे शंखं संस्थापयेच्छुभम् ।।

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।।

निर्मितः सर्वदेवैस्त्वं पांचजन्य नमोऽस्तु ते ।। ४५ ।।

ततस्तु स्थंडिलं कार्यं मंडलादुत्तरां दिशम् ।।

संकल्प्य हवनं कार्यं मन्त्रैर्वेदोक्तवैष्णवैः ।। ४६ ।।

स्वस्थाने स्थापयेद्विष्णुं स्थापयेच्च हरिं प्रति ।।

पूजयेत्पुरुषसूक्तेन मन्त्रैः पौराणिकैः शुभैः ।। ४७ ।।

नैवेद्यार्थं च वै कार्या मोदका बहवोऽपि च ।।

धूपदीपोपहाराणि कृत्वा नीराजनं ततः ।। ४८ ।।

यक्षकर्दमेन संपूज्य ततः कुर्यात्प्रदक्षिणाम् ।।

स्वस्तिवाचनकैर्विप्रैर्नमस्कारं ततो नृप ।। ४९ ।।

ततस्तु ब्राह्मणैः कार्य आचार्यक्रमशो जपः ।।

जपश्च पावमानीयो मंडलब्राह्मणं मधु ।। 2.5.12.५०।।

तेजोऽसि शुक्रजं वाचं ब्रह्मसामादनंतरम् ।।

पवित्रवंतं सूर्यस्य विष्णोर्महसि संहिताम् ।। ५१ ।।

जपांते कलशे विष्णुं सोपांगमुपरि न्यसेत् ।।
दिवसस्योदये चैव होमं कुर्यादनुक्रमम् ।। ५२ ।।
संस्थाप्य प्रथमं पात्रं पूजयित्वा विधानतः ।।
स्तवनं च ततो होमः कर्तव्यश्चरुपूर्वकः ।। ५३ ।।
स्वगृह्योक्तविधानेन यजनाग्निक्रियापरः ।।
चरुद्वयं च कुर्वीत पायसं वैष्णवं चरुम् ।। ५४ ।।
जुहुयात्पुरुषसूक्तेन चरोः षोडश चाहुतीः ।।
तथा चतुर्गृहीतेन घृतयुक्तावराहुतिम् ।। ५५ ।।
प्रादेशमात्राः पालाशसमिधश्च घृतप्लुताः।।
इदं विष्ण्विति मंत्रेण होतव्याः कर्मसिद्धये ।।५६।।
शतमेकं तु जुहुयाद्द्विगुणाश्च तिलाऽऽहुतीः ।।
कृते च वैष्णवे होमे ग्रहयज्ञं समारभेत् ।। ५७ ।।
समिद्भिश्चरुहोमं च तिलहोमं क्रमेण तु ।।
उभयोः स्वस्तिकं वाच्यं ततः पूजां समाचरेत् ।। ५८ ।।
ऋत्विजां च ततो दद्याद्धेन्वादिग्रहदक्षिणाः ।।
देवस्य तृप्त्यै दद्याच्च ब्राह्मणाय यथाविधि ।। ५९ ।।
गां वै पयस्विनीं दद्याद्वृषभं च सुशोभनम् ।।
ब्राह्मणानां ततो दद्यात्त्रयोदश पदानि च ।।2.5.12.६०।।
आचार्यं तु सपत्नीकं वस्त्रैश्च परितोषयेत् ।।
तोषयित्वा महादानैस्तं सार्थं च समर्पयेत् ।। ६१ ।।
पञ्चविंशतिकुम्भांश्च सोदकान्वस्त्रवेष्टितान् ।।
ब्राह्मणांश्च ततो दद्यात्कृते पारणके निशि ।। ६२ ।।
भूरिदानं च दातव्यं बंधूनामिष्टभोजनम् ।।
पूर्णपात्रं ततो दद्यादाचार्याय सदक्षिणम् ।। ६३ ।।
पूर्णपात्रप्रदानेन कार्यं संपूरितं भवेत् ।।
उपवासव्रतं चैव स्नानं तीर्थफलं भवेत् ।। ६४ ।।
विप्रैः संभाषितं तस्य संपूर्णं तद्भवेत्फलम् ।।
वित्त शक्तिर्गृहे नास्ति कृतं चैकादशीव्रतम् ।। ६५ ।।

स्वशक्त्या चैव कर्तव्यं तथा चोद्यापनादिकम् ।।

एतत्ते सर्वमाख्यातमखण्डैकादशीव्रतम् ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमासमाहात्म्येऽखण्डैकादशीव्रतकथनं नाम द्वादशोऽध्यायः ।। १२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १३



।। श्रीभगवानुवाच ।। ।।

शृणु पुत्र प्रवक्ष्यामि जागरस्य च लक्षणम् ।।

येन विज्ञातमात्रेण सुलभोऽहं सदा कलौ ।। १ ।।

गीतं वाद्यं च नृत्यं च पुराणपठनं तथा ।।

धूपं दीपं च नैवेद्यं पुष्पं गन्धानुलेपनम् ।। २ ।।

फलार्पणं च श्रद्धां च दानमिंद्रियसंयमम् ।।

सत्यान्वितं विनिद्रं च मुदा मद्यजनान्वितम् ।। ३ ।।

साश्चर्यं चैव सोत्साहं पापालस्यादिवर्जनम् ।।

प्रदक्षिणासमायुक्तं नमस्कारपुरःसरम् ।। ४ ।।

नीराजनसमायुक्तमतिहृष्टेन चेतसा ।।

यामेयामे महाभाग कुर्यादारार्तिकं मम ।। ५ ।।

षड्विंशद्गुणसंयुक्तमेकादश्यां च जागरम् ।।

यः करोति नरो भक्त्या न पुनर्जायते भुवि ।। ६ ।।

य एवं कुरुते भक्त्या वित्तशाठ्यविवर्जितः ।।

जागरं परया भक्त्या स लीनो जायते मयि ।। ७ ।।

दष्टाः कलिभुजंगेन स्वपन्ते ये दिने मम ।।

कुर्वंति जागरं नैव मायापाशविमोहिताः ।। ८ ।।

प्राप्ताप्येकादशी येषां कलौ जागरणं विना ।।

ते विनष्टा न संदेहो यस्माज्जीवितमध्रुवम् ।। ९ ।।

उद्धृतं नेत्रयुग्मं च दत्त्वा वै हृदये पदम् ।।

कृतं ये नैव पश्यंति पापिनो मम जागरम् ।। 2.5.13.१० ।।

अभावे वाचकस्याऽथ गीतं नृत्यं च कारयेत् ।।

वाचके सति देवेश पुराणं प्रथमं पठेत् ।। ११ ।।

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।।

पुण्यं कोटिगुणं पुत्र मम जागरणे कृते ।। १२ ।।
पितृपक्षे मातृपक्षे भार्यापक्षे च मानद ।।
कुलान्युद्धरते चैतन्मम जागरणे कृते ।। ।। १३ ।।
उपोषणदिने विघ्ने प्रारब्धे जागरे सति ।।
विहाय स्थानं तत्राहं शापं दत्त्वा व्रजाम्यहम् ।। १४ ।।
अविद्धवासरे ये मे प्रकुर्वंति हि जागरम् ।।
तेषां मध्ये प्रहृष्टः सन्नृत्यं वै प्रकरोम्यहम् ।। १५ ।।
यावद्दिनानि कुरुते जागरं मम सन्निधौ ।।
युगाऽयुतानि तावंति वसते मम वेश्मनि ।।।। १६ ।।
न गयापिंडदानेन न तीर्थैर्बहुभिर्मखैः ।।
पूर्वजा मुक्तिमायांति विनैकादशिजागरात् ।। १७ ।।
यः कुर्याज्जागरे पूजां कुसुमैर्मम वासरे ।
पुष्पेपुष्पेऽश्वमेधस्य फलमाप्नोति मानवः ।।१-।।
यः कुर्याद्दीपदानं च रात्रौ जागरणे मम ।।
निमिषे निमिषे पुत्र लभते गोऽयुतं फलम् ।। १९ ।।
यो दद्याज्जागरे पुत्र हविष्यान्नसमुद्भवम् ।।
नैवेद्यं लभते पुण्यं शालिशैलसमुद्भवम् ।। 2.5.13.२० ।।
पक्वान्नानि च यो दद्यात्फलानि विविधनि च ।।
जागरे मे चतुर्वक्त्र लभते गोशतं फलम् ।। २१ ।।
कर्पूरेण च तांबूलं ददाति मम जागरे ।।
मद्भक्तो मत्प्रसादेन सप्तद्वीपाऽधिपो भवेत्।। २२ ।।
जागरे मम देवेश यः कुर्यात्पुष्पमण्डपम् ।।
स पुष्पकविमानेन क्रीडते मम सद्मनि ।। २३ ।।
जागरे मे तु यो धूपं सकर्पूरं सगुग्गुलम्।।
ददाति दहते पापं जन्मलक्षसमुद्भवम् ।। २४ ।।
स्नापयेज्जागरे यो मां दधिक्षीरघृतांबुकैः ।।
भोगानिह लभेद्वै स ह्यन्ते च परमां गतिम् ।। २५ ।।
दिव्यांऽबराणि यो दद्यात्फलानि विविधानि च ।।

स चिरं वसते स्वर्गे तं तु संख्यासमानि वै ।। २६ ।।

दद्यादाभरणं यो मे हेमजं रत्नसंभवम् ।।

सप्तकल्पानि वसते सोत्संगे मत्प्रियो मम ।। २७ ।।

घृतेन दीपकं यो मे गव्येन च विशेषतः ।।

ज्वालयेज्जागरे रात्रौ निमिषे गोयुतं फलम् ।। २८ ।।

जागरे मे चतुर्वक्त्र कर्पूरेण च दीपकम् ।।

यो ज्वालयेत नीराजं कपिलादानजं फलम्।। २९ ।।

यः पुनः कुरुते दीपं गीतं नृत्यं च पूजनम् ।।

शतक्रतुसमं पुण्यं व्रतैर्दानशतैरपि ।। 2.5.13.३० ।।

स्वयं यः कुरुते गीतं विलज्जो नृत्यते यदि ।।

स लभेन्निमिषार्धेन कोटियज्ञकृतं फलम् ।। ३१ ।।

निवारयति यो गीतं नृत्यं जागरणे मम ।।

षष्टियुगसहस्राणि पच्यते रौरवादिषु ।। ३२ ।।

नृत्यमानस्य मर्त्यस्य ये केचिन्निकटे गताः ।।

विमुक्ता धर्मराजेन मुक्ता यांति च मत्पदम् ।।३३।।

नृत्यमानस्य मर्त्यस्य उपहासं करोति यः ।।

जागरे यांति निरयं यावदिंद्राश्चतुर्दश ।। ।। ३४ ।।

जागरे मम यः कुर्याद्भक्त्या पुस्तकवाचनम् ।।

श्लोकसंख्यायुगान्येव स वसेन्मम सन्निधौ ।। ३५ ।।

प्रदक्षिणाप्रदानेन यत्फलं कथितं बुधैः ।।

न तत्कोटिमखैः पुण्यं युगसंख्यैरवाप्यते ।। ३६ ।।

दीपमाला ममाग्रे वै यः कुर्याज्जागरे सुत ।।

विमानकोटिसंयुक्त आकल्पं वसते दिवि ।।।। ३७ ।।।

मम बालचरित्राणि जागरे पठते हि यः।।

युगकोटिसहस्राणि श्वेतद्वीपे वसेन्नरः।।३८।।

तस्माज्जागरणं कार्यं पक्षयोः शुक्लकृष्णयोः ।। ३९।।

यो गीतां पठते रात्रौ मम नामसहस्रकम्।।

वेदोक्तानां पुराणानां जागरात्पुण्यमाप्नुयात्।। 2.5.13.४०।।

धेनुदानं तु यः कुर्याज्जागरे मम पुत्रक।।

लभते नात्र संदेहः सप्तद्वीपवतीफलम् ।। ४१ ।।

सर्वेषामेव पुण्यानां महत्पुण्यं महीतले ।।

द्वादशीजागरं पुत्र प्रसिद्धं भुवनत्रये ।। ४२ ।।

जागरं ये च कुर्वंति कर्मणा मनसा गिरा ।।

न तेषां पुनरावृत्तिर्मम लोकात्कथंचन ।। ४३ ।।

प्रोत्साहयित्वा लोकान्यः कुरुते जागरं निशि ।।

प्राप्नोति चक्रवर्तित्वं सत्यं मे व्याहृतं सुत ।।४४ ।।

संमानिताः ककुत्स्थेन रात्रौ जागरकारिणः।।

स्वशक्त्या चैव दानेन प्राप्तं राज्यं सुदुर्लभम्।। ४५।।

ये केचिद्गायका विप्रा वादका नर्तकाश्च ये ।।

नर्तकीसहिता यांति मम लोके सनातने।।४६।।

दुर्योनिषु गतैः सर्वैः कृत्वा जागरणं मम।।

संप्राप्तं पृथिवीशत्वं कामुकैर्मुनिसत्तम।।४७।।

निष्कामा मुक्तिमापन्नाः श्वपचाद्याश्च जागरात्।।

विवेको नास्ति वर्णानां मम जागरकारिणाम्।। ।। ४८ ।।

न कलौ पावनं ध्यानं न कलौ जाह्नवीजलम् ।।

न कलौ पावनं जाप्यं मुक्त्वैकं जागरं मम ।। ४९ ।।

द्वादशीदिवसे प्राप्ते ये कुर्वंति हि जागरम् ।।

ते धन्यास्ते कृतार्था वै कलिकाले न संशयः ।। 2.5.13.५० ।।

न भूयान्मानुषे लोके द्वादशीविमुखो नरः ।।

अतीतानागतान्वाऽपि पातयेन्नरके हि सः ।। ५१ ।।

वरमेको गुणैर्युक्तः किं जातैर्बहुभिः सुतैः ।।

द्वादशीजागरात्सर्वांस्तारयेद्यो हि पूर्वजान् ।। ५२ ।।

माहात्म्यं पठते भक्त्या मयोक्तं जागरोद्भवम् ।।

द्वादशीसंभवः पुत्रः कुलानां तारयेच्छतम् ।। ५३ ।।

अगम्यागमने पापमभक्ष्यस्यापि भक्षणे ।।

पापं विलयमायाति कृते जागरणे सुत ।। ५४ ।।

अज्ञानाद्यत्कृतं पापं ज्ञात्वा यत्पातकं कृतम् ।।

पूर्वजन्मार्जितं पापमिह जन्मनि यत्कृतम् ।। ।। ५५ ।।

सिद्ध्यंति सर्वकार्याणि मनसा चिंतितान्यपि ।।

द्वादश्यां वै चतुर्वक्त्र रात्रौ जागरणे कृते ।। ५६ ।।

द्वादशीजागरेणैव मुक्तिं गच्छंति मानवाः ।। ५७ ।।

न तत्पुण्यं कुरुक्षेत्रे प्रयागे वसतां कलौ ।।

माहात्म्यं वसतां पुंसां यत्फलं द्वादशीषु च ।। ५८ ।।

नाऽश्वमेधसहस्रैस्तु तीर्थकोट्यवगाहनात् ।।

तत्फलं प्राप्यते पुत्र द्वादशीजागरे कृते ।। ५९ ।।

पठेद्वा शृणुयाद्वाऽपि माहात्म्यं द्वादशीभवम् ।।

सर्वपापविशुद्धात्मा स लभेच्छाश्वतीं गतिम् ।। 2.5.13.६० ।।

सर्वे दुष्टाः समस्ताश्च सौम्यास्तस्य सदा ग्रहाः ।।

संततेर्न वियोगस्तु द्वादशी यस्य कारणम् ।। ६१ ।।

मम कीर्तिरुचिर्नित्यं न विपद्येत कर्हिचित् ।।

रणे राजकुले चैव सर्वदा विजयी भवेत् ।। ६२ ।।

धर्मोपरि मतिर्नित्यं भक्तिर्मयि सुनिर्मला ।।

पातकं नैव लिप्येत द्वादशीभक्तितो नरम् ।। ६३ ।।

प्रेतत्वं नैव तस्याऽस्ति कृते जागरणे मम ।।

एकादश्या विहीनस्य परलोकगतिर्नहि ।।

तस्मात्सर्वप्रयत्नेन कलौ कार्यं हि तद्दिनम् ।। ६४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णु संवादे मार्गशीर्षमासमाहात्म्य एकादशीव्रतजागरणफलकथनंनाम त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/h1e
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | मार्गशीर्षमासमाहात्म्यम्

।। श्रीभगवानुवाच ।। ।।

ततः प्रभाते द्वादश्यां कार्यो मत्स्योत्सवो बुधैः ।।

मार्गशीर्षे शुक्लपक्षे यथाविध्युपचारतः ।। १ ।।

अथ मार्गशिरे मासे दशम्यां नियतात्मवान् ।।

कृत्वा देवार्चनं धीमानग्निकार्यं यथाविधि ।। २ ।।

शुचिवासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतम् ।।

पक्त्वा पंचपदे गत्वा पुनः शौचं तु पादयोः ।। ३ ।।

कृत्वाऽष्टांगुलमानं तु क्षीरवृक्षे समुद्भवम् ।।

भक्षयेद्दंतकाष्ठं तु ततश्चाचम्य यत्नतः ।। ४ ।।

दृष्ट्वाऽऽकाशानि सर्वाणि ध्यात्वा वै मां गदाधरम् ।।

शंखचक्रगदापाणिकिरीटं पीतवाससम् ।। ५ ।।

प्रसन्नवदनांऽभोजं सर्वलक्षणलक्षितम् ।।

ध्यात्वा पुनर्जलं हस्ते गृहीत्वा भानुमध्यगम् ।। ६ ।।

ध्यात्वाऽर्घ्यं दापयेत्तत्र करतोयेन मानवः ।।

एवमुच्चारयेद्वाचं तस्मिन्काले चतुर्मुख।।७।।

एकादश्यां निराहारः स्थित्वाऽहनि परे ह्यहम् ।।

भोक्ष्यामि पुंडरीकाक्ष शरणं मे भवाऽच्युत ।। ८ ।।

एवमुक्त्वा ततो रात्रौ मम मूर्तेश्च सन्निधौ ।।

जपेन्नारायणायेति स्वयं तत्र विधानतः ।। ९ ।।

ततः प्रभाते विमलां नदीं गत्वा समुद्रगाम् ।।

इतरां वा तडागं वा गृहे वा नियतात्मवान् ।।2.5.14.१०।।

आनीय मृत्तिकां शुद्धां मंत्रेणाऽनेन मानवः।।

वंदयेद्देवदेवेशं तदा शुद्धो भवेन्नरः ।। ११ ।।

धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा ।।

तेन सत्येन मे पापं यावन्मोचय सुव्रते ।।१२।।

ब्रह्मांडोदरतीर्थानि करैः स्पृष्टानि दैवतैः ।।

तेनेमां मृत्तिकां स्पृष्टा माऽऽलभामि त्वयोद्धृताम् ।। १३ ।।

त्वयि नित्यं रसाः सर्वे स्थिता वरुण सर्वदा ।।

तेनेमां मृत्तिकां प्लाव्य पूतां कुरुष्व माचिरम् ।।१४।।

एवं मृदं तथा तोयं प्रसाद्याऽऽत्मानमालभेत् ।।

त्रिःकृत्वाऽशेषमृदया पिंडमालिप्य वै जले ।। १५ ।।

तस्मिन्नरः सदा सम्यङ्नक्रकच्छपदूरतः ।।

स्नात्वा चावश्यकं कृत्वा पुनर्मम गृहं व्रजेत् ।। १६ ।।

तत्राऽऽराध्य महायोगिन्देवं नारायणं हरिम् ।।

केशवाय नमः पादौ कटिं दामोदराय च ।।१७।।

जानुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे ।।

कंठे कौस्तुभनाभाय वक्षः श्रीपतये तथा ।। १८ ।।

त्रैलोक्यविजयायेति बाहुं सर्वात्मने शिरः ।।

रथांगधारिणे वक्त्रं श्रीकरायेति वारिजम् ।। १९।।

गंभीरायेति च गदामंभोजं शांतमूर्तये ।।

एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् ।। 2.5.14.२० ।।

पुनस्तस्याऽग्रतः कुंभांश्चतुरः स्थापयेद्बुधः ।।

जलपूर्णान्समाल्यांश्च सितचंदनलेपितान् ।। २१ ।।

चूतपल्लवसंयुक्तान्सितवस्त्रावगुंठितान् ।।

छादितांस्ताम्रपात्रैश्च तिलपूर्णैः सकांचनैः ।।२२।।

चत्वारस्तु समुद्राश्च कलशाः संप्रकीर्तिताः ।।

तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रगर्भितम् ।।२३।।

तस्मिन्सुवर्णं रौप्यं वा ताम्रं वा दारवं तथा ।।

अलाभे सर्वपात्राणां पालाशं पात्रमिष्यते ।। २४ ।।

तोयपूर्णं च तत्कृत्वा तस्मिन्पात्रे ततो न्यसेत् ।।

सौवर्णं मत्स्यरूपं च कृत्वा देवं जनार्दनम् ।।२५।।

देवदेवांगसंयुक्तं श्रुतिस्मृतिविभूषितम् ।।

तत्राऽनेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम् ।।२६।।

गन्धैर्धूपैश्च वस्त्रैश्च अर्चयित्वा यथाविधि ।।

रसातलगता वेदा यथादेव त्वयोद्धृताः ।। २७ ।।

मत्स्यरूपेण तद्वन्मां भवादुद्धर केशव ।।

एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् ।। ।। २८ ।।

यथाविभवसारेण प्रभाते विमले तथा ।।

चतुर्णां ब्राह्मणानां च चतुरो दापयेद्घटान् ।। २९ ।।

पूर्वं च बह्वृचे दद्याच्छांदोग्ये दक्षिणं तथा ।।

यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम् ।। 2.5.14.३० ।।

उत्तरं कामतो दद्यादेष एव विधिः स्मृतः ।।

ऋग्वेदः प्रीयतां पूर्वं सामवेदस्तुदक्षिणे ।। ३१ ।।

यजुर्वेदः पश्चिमतो ह्यथर्वश्चोत्तरेण तु ।।

अनेन क्रमयोगेन प्रीयतामिति वाचयेत् ।। ३२ ।।

मत्स्यरूपं तु सौवर्णमाचार्याय निवेदयेत् ।।

गन्धधूपादि वस्त्रैस्तु संपूज्य विधिवत्क्रमात् ।। ३३ ।।

यस्त्विमं सरहस्यं च मन्त्रेणैवोपपादयेत् ।।

विधानं विधिवद्दत्त्वा दाता कोटिगुणोत्तरम् ।। ३४ ।।

प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ।।

स जन्मकोटिं नरके पच्यते पुरुषाधमः ।। ३५ ।।

विधानस्य प्रदाता यो गुरुरित्युच्यते बुधैः ।।

एवं दत्वा विधानेन द्वादश्यां मां समर्चयेत् ।। ३६ ।।

विप्राणां भोजनं दद्याद्यथाशक्त्या च दक्षिणाम् ।।

भूरिणा परमान्नेन ततः पश्चात्स्वयं नरः ।। ३७ ।।

भुञ्जीत सहितो विप्रैर्वाग्यतः संयतेन्द्रियः ।।

अनेन विधिना यस्तु कुर्यान्मत्स्योत्सवं नरः ।। ३८ ।।

तस्य पुण्यफलं चाग्रे शृणु सत्यवतां वर ।।

यदि वक्त्र सहस्राणां सहस्राणि भवंति हि ।। ३९ ।।

आयुश्च ब्रह्मणा तुल्यं लभेद्यदि महाव्रत ।।

तदा वै ह्यस्य धर्मस्य फलं कथयितुं भवेत् ।। 2.5.14.४० ।।

य इमं श्रावयेद्भक्त्या द्वादशीकल्पमुत्तमम् ।।

शृणोति वा स पापैस्तु सर्वैरेव विमुच्यते ।। ४१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमासमाहात्म्ये मत्स्योत्सवकथनंनाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १५



।। श्रीभगवानुवाच ।। ।।

ये त्वया वै कृताः प्रश्नाः पूर्वं प्रश्नविदां वर ।।

तान्वर्णयिष्ये क्रमशो निशामय सुनिश्चितम् ।।१ ।।

सहोमासे च देवो वै कीर्तियुक्तो हि केशवः ।।

तस्य पूजा प्रकर्तव्या यथापूर्वं प्रभाषितम् ।। २ ।।

ब्राह्मणं केशवं स्मृत्वा तत्पत्नीं कीर्तिमेव च ।।

दंपती विधिवत्पूज्यौ वस्त्राभरणधेनुभिः ।। ३ ।।

दम्पती पूजितौ वत्स पूजितोऽहं न संशयः।।

तस्मादवश्यं संपूज्यौ दंपती मम तुष्टिदौ ।।४।।

दानं च विविधं कार्यं मम तुष्टिकरं परम् ।।

गोदानं भूमिदानं च स्वर्णदानं विशेषतः ।।५।।

वस्त्रदानं तथा शय्या तथाऽलंकरणानि च ।।

सद्मदानं प्रकर्तव्यं मम सन्तोषकारकम् ।। ६ ।।

सर्वेषामेव दानानां विशेषं च त्रिकं स्मृतम् ।।

वसुन्धरा तथा धेनुर्विद्यादानं तथैव च ।।७।।

दत्ते दानत्रिके वत्स भवेत्प्रीतिर्ममाऽतुला ।।

तस्मान्नरैस्तु कर्तव्यं सहोमासे त्रिकं शुभम् ।। ८ ।।

स्नानस्य च विधिः सम्यक्पुरैवोक्तो मयाऽनघ ।।

पूजास्नानं च दानं च विधिरेष न संशयः ।। ९ ।।

मार्गशीर्षं समग्रं तु एकभक्तेन यः क्षिपेत् ।।

भोजयेद्यो द्विजान्भक्त्या स मुच्येद्व्याधिकिल्विषैः।।2.5.15.१०।।

कृषिभागी बहुधनो बहुधान्यश्च जायते ।।

किमत्र बहुनोक्तेन शृणु गुह्यं पर मम ।। ११ ।।

हुतभुग्ब्राह्मणश्चैव वदनं मम मानद ।।

ब्राह्मणाख्यं मुखं श्रेष्ठं न तथा हव्यवाहनः ।। १२ ।।

ब्राह्मणाख्ये मुखे पुत्र हुतं कोटिगुणं भवेत् ।।

अग्न्याख्यं ब्राह्मणाधीनं स्वतंत्रा ब्राह्मणाः किल ।। १३ ।।

सशर्करं घृतयुतं पायसं शशिसन्निभम् ।।

होतव्यं ब्राह्मणमुखे मम तुष्टिकरं सुत ।। १४ ।।

शुभमंडलमोदककोकरसं सुत फेनिकया घृतपूरयुतम् ।।

यज विप्रमुखे मम तुष्टिकरं यदि चेच्छसि दारसुतादिसुखम् ।।१५।।

कुमुदेन समप्रभसौरभदं शुभभक्तयुतं त्वथ मुद्गयुतम् ।।

सुरभीकृतपुष्कलसर्पिसमं कुरु विप्रमुखे हवनं हि सहे ।। १६ ।।

पयसा सह सर्पिषि च क्वथितं बहुखारिकचारफलैः सितया ।।

सह कर्पुरनारिफलेन समं युतसीकरकं सुत शुभ्रकरम् ।। १७ ।।

व्यंजनानि च शुभ्राणि मनोज्ञानि प्रियाणि च ।।

कर्त्तव्यानि सहोमासे ब्राह्मणार्थे चतुर्मुख ।। १८ ।।

प्रिया शिखरिणी कार्या चान्यत्तेषां प्रियं च यत् ।।

कृत्वैवं भोजयेद्विप्राञ्छ्रद्धया परया सुत ।। १९ ।।

रसास्वादनपूर्वं हि भुञ्जते वै यथायथा ।।

तथातथा मम प्रीतिर्जायते भुवि दुर्लभा ।।2.5.15.२०।।

तस्मात्तत्तथा कार्यं यथा तुष्यंति ब्राह्मणाः ।।

तुष्टैस्तैश्चाप्यहं तुष्टो भवामीह न संशयः ।। २१ ।।

श्रद्धत्स्व त्वं चतुर्वक्त्र न ते मिथ्या ब्रवीम्यहम् ।।

एतद्गुह्यं मया प्रोक्तं श्रेयोर्थं तव मानद ।। २२ ।।

आक्रोशयंति यदि ते अथवा प्रहरंति चेत् ।।

तथापि ते नमस्या वै मम प्रीत्या हि मानद ।। २३ ।।

एवं कार्यं सदा पुत्र मार्गशीर्षे विशेषतः ।।

यदुक्तं भवता ब्रह्मन्भोक्तव्यं किं शृणुष्व तत् ।। २४ ।।

भोक्तव्यं मम चोच्छिष्टं मम भक्तिपरायणैः ।।

पवित्रकरणं पुत्र पापिनामपि मुक्तिदम् ।।२५।।

ममाशनस्य शेषं च यो भुनक्ति दिनेदिने ।।

सिक्थेसिक्थे भवेत्पुण्यं चांद्रायणशतोद्भवम् ।। २६ ।।

अवशिष्टं तथोच्छिष्टं भक्तानां भोजनद्वयम् ।।

नाऽन्यद्वै भोजनं तेषां भुक्त्वा चांद्रायणं चरेत् ।। २७ ।।

अनर्पयित्वा यो भुंक्ते अन्नपानादिकं च यत् ।।

श्वानविष्ठासमं चान्नं पानं च मदिरासमम् ।। ।। २८।।

तस्मान्मामर्पयेत्पुत्र अन्नपानादि चौषधम् ।।

भक्षयेत्परया भक्त्या अशुचेः शुचिकारकम् ।। २९ ।।

तीर्थयज्ञादिकफलं कलिदोषविनाशनम् ।।

ममोच्छिष्टं सुगतिदमपि दुष्कृतकर्मणाम् ।। 2.5.15.३० ।।

अन्येषां दैवतानां च न गृह्णीयाच्च भक्षितम् ।।

अभक्तानां च पक्वान्नं भुक्त्वा च नरकं व्रजेत् ।। ३१ ।।

वक्तव्यमेव यत्प्रोक्तं तच्छृणुष्व समाहितः ।।

कथयिष्ये तव प्रीत्या अपि गुह्यतरं मम ।। ३२ ।।

मम नाम प्रवक्तव्यं सहे चैव विशेषतः ।।

कृष्णकृष्णेति वक्तव्यं मम प्रीतिकरं परम् ।।३३।।

प्रतिज्ञैषा च मे पुत्र न जानंति सुरासुराः ।।

मनसा कर्मणा वाचा यो मे शरणमागतः ।। ।। ३४ ।।

स हि सर्वामवाप्नोति कामनामिह लौकिकीम् ।।

सर्वोत्कृष्टं च वैकुण्ठं मत्प्रियां कमलामपि ।। ३५ ।।

कृष्णकृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।।

जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम्।।३६।।

विनोदेनाऽपि दंभेन मौढ्याल्लोभाच्छलादपि ।।

यो मां भजत्यसौ वत्स मद्भक्तो नाऽवसीदति ।। ३७ ।।

ये वै पठंति कृष्णेति मरणे पर्युपस्थिते ।।

यदि पापयुताः पुत्र न पश्यंति यमं क्वचित् ।। ३८ ।।

पूर्वे वयसि पापानि कृतान्यपि च कृत्स्नशः ।।

अंतकाले च कृष्णेति स्मृत्वा मामेत्यसंशयम् ।। ३९ ।।

नमः कृष्णाय महते विवशोऽपि वदेद्यदि ।।

ध्रुवं पदमवाप्नोति मरणे पर्युपस्थिते ।। 2.5.15.४० ।।

श्रीकृष्णेति कृतोच्चारैः प्राणैर्यदि वियुज्यते ।।

दूरस्थः पश्यति च तं स्वर्गतं प्रेतनायकः ।। ४१ ।।

श्मशाने यदि रथ्यायां कृष्णकृष्णेति जल्पति ।।

म्रियते यदि चेत्पुत्र मामेवैति न संशयः ।। ४२ ।।

दर्शनात्मम भक्तानां मृत्युमाप्नोति यः क्वचित् ।।

विना मत्स्मरणात्पुत्र मुक्तिमेति स मानवः ।। ४३ ।।

पापानलस्य दीप्तस्य भयं मा कुरु पुत्रक ।।

श्रीकृष्णनाममेघोत्थैः सिच्यते नीरबिंदुभिः ।। ४४ ।।

कलिकालभुजंगस्य तीक्ष्णदंष्ट्रस्य किं भयम् ।।

श्रीकृष्णनामदारूत्थवह्निदग्धः स नश्यति ।। ४८ ।।

पापपावकदग्धानां कर्मचेष्टावियोगिनाम् ।।

भेषजं नास्ति मर्त्यानां श्रीकृष्णस्मरणं विना ।।४६।।

प्रयागे वै यथा गंगा शुक्लतीर्थे च नर्मदा ।।

सरस्वती कुरुक्षेत्रे तद्वच्छ्रीकृष्णकीर्तनम् ।।४७।।

भवांभोधिनिमग्नानां महापापोर्मिपातिनाम् ।।

न गतिर्मानवानां च श्रीकृष्णस्मरणं विना ।। ४८ ।।

मृत्युकालेऽपि मर्त्यानां पापिनां तदनिच्छताम् ।।

गच्छतां नाऽस्ति पाथेयं श्रीकृष्णस्मरणं विना ।। ४९ ।।

तत्र पुत्र गया काशी पुष्करं कुरुजांगलम् ।।

प्रत्यहं मंदिरे यस्य कृष्णकृष्णेति कीर्तनम् ।। 2.5.15.५० ।।

जीवितं जन्मसाफल्यं सुखं तस्यैव सार्थकम् ।।

सततं रसना यस्य कृष्णकृष्णेति जल्पति ।। ५१ ।।

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।।

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।। ५२ ।।

नाम्नोऽस्य यावती शक्तिः पापनिर्दहने मम ।।

तावत्कर्तुं न शक्नोति पातकं पातकी जनः ।। ५३ ।।

नाऽपविद्धं भवेत्तस्य शरीरं नैव मानसम् ।।

न पापं न च वैक्लव्यं कृष्णकृष्णेति कीर्तनात् ।। ५४ ।।

श्रीकृष्णेति वचः पथ्यं न त्यजेद्यः कलौ नरः ।।

पापामयो वै न भवेत्कलौ तस्यैव मानसे ।। ५५ ।।

श्रीकृष्णेति प्रजल्पंतं दक्षिणाशापतिर्नरम् ।।

श्रुत्वा मार्जयते पापं तस्य जन्मशतार्जितम् ।। ५६ ।।

चांद्रायणशतैः पापं पराकाणां सहस्रकैः ।।

यन्नापयाति तद्याति कृष्णकृष्णेति कीर्तनात् ।। ।। ५७ ।।

नान्याभिर्नामकोटीभिस्तोषो मम भवेत्क्वचित् ।।

श्रीकृष्णेति कृतोच्चारे प्रीतिरेवाऽधिकाधिका ।। ५८ ।।

चंद्रसूर्योपरागैस्तु कोटीभिर्यत्फलं स्मृतम् ।।

तत्फलं समवाप्नोति कृष्णकृष्णेति कीर्तनात् ।। ५९ ।।

गुरुदाराभिगमनं हेमस्तेयादि पातकम् ।।

श्रीकृष्णकीर्तनाद्याति घर्मतप्तं हिमं यथा ।। 2.5.15.६० ।।

युक्तो यदि महापापैरगम्यागमनादिभिः ।।

मुच्यते चांतकालेऽपि सकृच्छ्रीकृष्णकीर्तनात् ।। ।। ६१ ।।

अविशुद्धमना यस्तु विनाप्याचारवर्तनात् ।।

प्रेतत्वं सोऽपि नाप्नोति अन्ते श्रीकृष्णकीर्तनात् ।। ६२ ।।

मुखे भवतु मा जिह्वाऽसती यातु रसातलम् ।।

न सा चेत्कलिकाले या श्रीकृष्णगुणवादिनी ।। ६३ ।।

स्ववक्त्रे परवक्त्रे च वंद्या जिह्वा प्रयत्नतः ।।

कुरुते या कलौ पुत्र श्रीकृष्ण गुणकीर्तनम् ।। ६४ ।।

पापवल्ली मुखे तस्य जिह्वारूपेण कीर्त्यते ।।

या न वक्ति दिवारात्रौ श्रीकृष्णगुणकीर्तनम् ।। ६५ ।।

पततां शतखण्डा तु सा जिह्वा रोगरूपिणी ।।

श्रीकृष्णकृष्णकृष्णेति श्रीकृष्णेति न जल्पति ।। ६६ ।।

श्रीकृष्णनाममाहात्म्यं प्रातरुत्थाय यः पठेत् ।।

तस्याऽहं श्रेयसां दाता भवाम्येव न संशयः ।। ६७ ।।

श्रीकृष्णनाममाहात्म्यं त्रिसंध्यं हि पठेतु यः ।।

सर्वान्कामानवाप्नोति स मृतः परमां गतिम् ।। ६८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमासमाहात्म्ये श्रीकृष्णनाममाहात्म्यवर्णनंनाम पंचदशोऽध्यायः ।।१५।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १६



।।श्रीभगवानुवाच।। ।।

शृणु ध्यानं चतुर्वक्त्र वक्ष्यामि प्रीतमानसः ।।

श्रुतेनैव च सौभाग्यं लभते मानवो भुवि ।।१।।

अथ श्रीमदुद्यानसंवीतहैमस्थलोद्भासिरत्नस्फुरन्मंडपांतः ।।

लसत्कल्पवृक्षोदितोद्दीप्तरत्नस्थलाधिष्ठितांभोजपीठाऽधिरूढम् ।। २ ।।

महानीलनीलाभमत्यंतबालं गुडस्निग्धवक्त्रांतविस्रस्तकेशम् ।।

अलिव्रातपर्याकुलोत्फुल्लपद्मप्रमुग्धाननं श्रीमदिंदीवराक्षम् ।। ३ ।।

चलत्कुंडलोल्लासितोत्फुल्लगल्लं सुघोणं सुशोणाधरं सुस्मितास्यम् ।।

अनेकोल्लसत्कंठभूषालसंतं वहंतं नखं पौंडरीकं सुनेत्रम् ।। ४ ।।

समुद्धूसरोरःस्थलं धेनुधूल्या सुपुष्टांगमष्टापदाकल्पदीप्तम् ।।

कटीरस्थले चारुजंघोरुयुग्मे पिनद्धं क्वणत्किंकिणीजालदाम्ना ।। ५ ।।

हसंतं लसद्बंधुजीवप्रसूनप्रभापाणिपादांबुजोदारकांत्या ।।

करे दक्षिणे पायसं वामहस्ते दधानं नवं शुद्धहैयंगवीनम् ।। ६ ।।

महीभारभूताऽमरारातियूथाऽनलं पूतनादीन्निहंतुं प्रवृत्तम् ।।

प्रभुं गोपिकागोपवृंदेन वीतं सुरेन्द्रादिभिर्वंदितं देवदेवम् ।। ७ ।।

प्रगे पूजयित्वा त्वनुस्मृत्य कृष्णं भुजंगेंद्रवज्रादिभिर्भक्तिनम्रः ।।

सितांभोजहैयंगवीनैश्च दध्ना विमिश्रेण दुग्धेन संप्रीणयेत्तम् ।। ८ ।।

इति प्रातरेवाऽर्चयेदत्युतं यो नरः प्रत्यहं शश्वदास्तिक्ययुक्तः ।।

लभेत्सोऽचिरेणैव लक्ष्मीं समग्रामिह प्रेत्य शुद्धं परं धाम भूयात् ।। ९ ।।

मन्त्रश्चोक्तः पुरा पुत्र आदौ लोकमनोहरः ।।

श्रीमद्दामोदराख्यो हि शृणु तस्याधिकारिणः ।। 2.5.16.१० ।।

अयोग्याय न दातव्यो मंत्रराजस्त्वया सुत ।।

यत्नेन गोपनीयं च रहस्यं शीघ्रसिद्धिदम् ।। ११ ।।

अलसं मलिनं क्लिष्टं दंभमोहसमन्वितम् ।।

दरिद्रं रोगिणं क्रुद्धं रागिणं भोगलालसम् ।। १२ ।।

असूयामत्सरग्रस्तं शठं परुषवादिनम् ।।

अन्यायेनाऽर्जितधनं परदाररतं सदा ।। १३ ।।

विदुषां वैरिणं नित्यमज्ञं पंडितमानिनम् ।।

भ्रष्टव्रतं क्लिष्टवृत्तिं पिशुनं दुष्टमानसम् ।। १४ ।।

बह्वाशिनं क्रूरचेष्टमग्रगण्यं दुरात्मनाम् ।।

कृपणं पापिनं रौद्रमाश्रितानां भयंकरम् ।। १५ ।।

एवमादिगुणैर्युक्तं शिष्यं नैव परिग्रहेत् ।।

गृह्णीयाद्यदि तद्दोषः प्रायो गुरुमुपस्पृशेत् ।। १६ ।।

अमात्यदोषो राजानं जायादोषः पतिं यथा ।।

तथा शिष्यकृतो दोषो गुरुं प्राप्नोत्यसंशयम् ।। १७ ।।

तस्माच्छिष्यं गुरुर्नित्यं परीक्ष्यैव परिग्रहेत् ।।

कायेन मनसा वाचा गुरुशुश्रूषणे रतम् ।। १८ ।।

अस्तेयवृत्तिमास्तिक्ययुक्तं मोक्षकृतोद्यमम् ।।

ब्रह्मचर्यरतं नित्यं दृढव्रतमकल्मषम् ।। १९ ।।

प्रसन्नहृदयं शुद्धमशठं विमलाशयम् ।।

परोपकारनिरतं स्वार्थे च विगतस्पृहम् ।। 2.5.16.२० ।।

स्वचित्तवित्तदेहैस्तु परितोषकरं गुरोः ।।

आश्रितानां तथा पुत्र परितोषकरं शुचिम् ।। २१ ।।

ईदृग्विधाय शिष्याय मंत्रं दद्याच्च नान्यथा ।।

यद्यन्यथा वदेत्तस्मिन्देवताशाप आपतेत् ।। २२ ।।

शृणु पुत्र प्रवक्ष्यामि गुरोरपि च लक्षणम् ।।

एभिस्तु लक्षणैर्युक्तो गुरुरेव भवेन्नृणाम् ।। २३ ।।

समचेताः प्रशांतात्मा विमन्युश्च सुहृन्नृणाम् ।।

साधुर्महान्समो लोके स गुरुः परिकीर्तितः ।। २४ ।।

मम व्रतधरो नित्यं वैष्णवानां सुसंमतः ।।

मदाश्रयकथासक्तो ममोत्सवरतः सदा ।। २५ ।।

कृपासिन्धुः सुपूर्णार्थः सर्वसत्त्वोपकारकः ।।

निःस्पृहः सर्वतः सिद्धः सर्वविद्याविशारदः ।। २६ ।।

सर्वसंशयसंछेत्ताऽनलसो गुरुरादृतः ।।

ब्राह्मणः सर्वकालज्ञः कुर्यात्सर्वेष्वनुग्रहम् ।। २७ ।।

पूर्वोक्तलक्षणैर्युक्तः शिष्य ईदृग्विधाद्गुरोः ।।

गृह्णीयात्पुत्र तन्मंत्रं मार्गशीर्षे मदायने ।। २८ ।।

वैष्णवानां व्रतानां च कुर्यात्स्वीकरणं बुधः ।।

मत्प्रियं शृणुयाच्छश्वच्छ्रीमद्भागवतं परम् ।।२९।।

श्रीमद्भागवतंनाम पुराणं लोकविश्रुतम् ।।

शृणुयाच्छ्रद्धया युक्तो मम सन्तोषकारणम् ।। 2.5.16.३० ।।

नित्यं भागवतं यस्तु पुराणं पठते नरः ।।

प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ।। ३१ ।।

श्लोकार्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।।

पठते शृणुयाद्यस्तु गोसहस्रफलं लभेत् ।। ३२ ।।

यः पठेत्प्रयतो नित्यं श्लोकं भागवतं सुत ।।

अष्टादशपुराणानां फलमाप्नोति मानवः ।। ३३ ।।

नित्यं मम कथा यत्र तत्र तिष्ठन्ति वैष्णवाः ।।

कलिबाह्या नरास्ते वै येऽर्चयन्ति सदा मम ।। ३४ ।।

वैष्णवानां तु शास्त्राणि येऽर्चयन्ति गृहे नराः ।।

सर्वपापविनिर्मुक्ता भवंति सुरवन्दिताः ।। ३५ ।।

येऽर्चयन्ति गृहे नित्यं शास्त्रं भागवतं कलौ ।।

आस्फोटयंति वल्गन्ति तेषां प्रीतो भवाम्यहम् ।। ३६ ।।

यावद्दिनानि हे पुत्र शास्त्रं भागवतं गृहे ।।

तावत्पिबंति पितरः क्षीरं सर्पिर्मधूदकम् ।। ३७ ।।

यच्छंति वैष्णवे भक्त्या शास्त्रं भागवतं हि ये ।।

कल्पकोटिसहस्राणि मम लोके वसंति ते ।। ३८ ।।

येऽर्चयन्ति सदा गेहे शास्त्रं भागवतं नराः ।।

प्रीणितास्तैश्च विबुधा यावदाऽऽभूतसंप्लवम् ।। ३९ ।।

श्लोकार्धं श्लोकपादं वा वरं भागवतं गृहे ।।

शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः ।। 2.5.16.४० ।।

न यस्य तिष्ठते शास्त्रं गृहे भागवतं कलौ ।।

न तस्य पुनरावृत्तिर्याम्यपाशात्कदाचन ।।४१ ।।

कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ ।।

गृहे न तिष्ठते यस्य श्वपचादधिको हि सः ।। ४२ ।।

सर्वस्वेनाऽपि लोकेश कर्तव्यः शास्त्रसंग्रहः ।।

वैष्णवस्तु सदा भक्त्या तुष्ट्यर्थं मम पुत्रक ।। ४३ ।।

यत्र यत्र भवेत्पुण्यं शास्त्रं भागवतं कलौ ।।

तत्र तत्र सदैवाऽहं भवामि त्रिदशैः सह ।। ४४ ।।

तत्र सर्वाणि तीर्थानि नदीनदसरांसि च ।।

यज्ञाः सप्तपुरी नित्यं पुण्याः सर्वे शिलोच्चयाः ।। ४५ ।।

श्रोतव्यं मम शास्त्रं हि यशोधर्मजयार्थिना ।।

पापक्षयार्थं लोकेश मोक्षार्थं धर्मबुद्धिना ।। ४६ ।।

श्रीमद्भागवतं पुण्यमायुरारोग्यपुष्टिदम् ।।

पठनाच्छ्रवणाद्वाऽपि सर्वपापैः प्रमुच्यते ।। ४७ ।।

न शृण्वंति न हृष्यंति श्रीमद्भागवतं परम् ।।

सत्यंसत्यं हि लोकेश तेषां स्वामी सदा यमः ।। ४८ ।।

न गच्छति यदा मर्त्यः श्रोतुं भागवतं सुत ।।

एकादश्यां विशेषेण नाऽस्ति पापरतस्ततः ।। ४९ ।।

श्लोकं भागवतं चाऽपि श्लोकार्धं पादमेव वा ।।

लिखितं तिष्ठते यस्य गृहे तस्य वसाम्यहम् ।। 2.5.16.५० ।।

सर्वाऽऽश्रमाऽभिगमनं सर्वतीर्थाऽवगाहनम् ।।

न तथा पावनं नृणां श्रीमद्भागवतं यथा ।। ५१ ।।

यत्र यत्र चतुर्वक्त्र श्रीमद्भागवतं भवेत् ।।

गच्छामि तत्रतत्राऽहं गौर्यथा सुतवत्सला ।। ५२ ।।

मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् ।।

मत्कथाप्रीतमनसं नाऽहं त्यक्ष्यामि तं नरम् ।। ५३ ।।

श्रीमद्भागवतं पुण्यं दृष्ट्वा नोत्तिष्ठते हि यः ।।

सांवत्सरं तस्य पुण्यं विलयं याति पुत्रक ।। ५४ ।।

श्रीमद्भागवतं दृष्ट्वा प्रत्युत्थानाभिवादनैः ।।

सन्मानयेत तं दृष्ट्वा भवेत्प्रीतिर्ममाऽतुला ।। ५५ ।।

दृष्ट्वा भागवतं दूरात्प्रक्रमेत्संमुखं हि यः ।।

पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ।। ५६ ।।

उत्थाय प्रणमेद्यो वै श्रीमद्भागवतं नरः ।।

धनं पुत्रांस्तथा दारान्भक्तिं च प्रददाम्यहम् ।। ५७ ।।

महाराजोपचारैस्तु श्रीमद्भागवतं सुत ।।

शृण्वंति ये नरा भक्त्या तेषां वश्यो भवाम्यहम्।। ५८ ।।

ममोत्सवेषु सर्वेपु श्रीमद्भागवतं परम् ।।

शृण्वंति ये नरा भक्त्या मम प्रीत्यै च सुव्रत ।। ५९ ।।

वस्त्रालंकरणैः पुष्पैर्धूपदीपोपहारकैः ।।

वशीकृतो ह्यहं तैश्च सत्स्त्रिया सत्पतिर्यथा ।। 2.5.16.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमासमाहात्म्ये भागवतश्रैष्ठ्यमाहात्म्यवर्णनंनाम पोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/मार्गशीर्षमासमाहात्म्यम्/अध्यायः १७



।। ब्रह्मोवाच ।। ।।

कस्मिन्क्षेत्रे हि देवेश मार्गशीर्षोऽधिकः स्मृतः ।।

किं फलं च भवेत्तस्मिन्नेतत्सर्वं वद प्रभो ।। १ ।।

।। श्रीभगवानुवाच ।। ।।

मधुरेति सुविख्यातमस्ति क्षेत्रं परं मम ।।

सुरम्या च प्रशस्ता च जन्मभूमिः प्रिया मम ।। २ ।।

पदेपदे तीर्थफलं मधुरायां चतुर्मुख ।।

यत्रयत्र नरः स्नातो मुच्यते घोरकिल्बिषात् ।। ३ ।।

सर्वधर्मविहीनानां पुरुषाणां दुरात्मनाम् ।।

नरकार्तिहरा पुत्र मधुरा पापनाशिनी ।। ४ ।।

कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।।

मधुरां प्राप्य मनुजो मुच्यते घोरपातकात् ।। ५ ।।

सूर्योदये तमो नश्येद्यथा वज्रभयान्नगाः ।।

तार्क्ष्यं दृष्ट्वा यथा सर्पा मेघा वातहता यथा ।। ६ ।।

तत्त्वज्ञानाद्यथा दुःखं हरिं दृष्ट्वा यथा गजाः ।।

तथा पापानि नश्यंति मथुरादर्शनात्सुत ।। ७ ।।

श्रद्धया भक्तियुक्तस्तु दृष्ट्वा मधुपुरीं नरः ।।

ब्रह्महाऽपि विशुध्येत किं पुनस्त्वन्यपातकी ।। ८ ।।

मथुरां स्नातुकामस्य गच्छतस्तु पदेपदे ।।

निराशानि व्रजंत्येव पापानि च शरीरतः ।। ९ ।।

अनुषंगेण गच्छंति वाणिज्येनाऽपि सेवया ।।

मधुरास्नानमात्रेण दिवं यांति गतांहसः ।। 2.5.17.१० ।।

नामाऽपि गृह्णतामस्याः सदा मुक्तिर्न संशयः ।।

सदा कृतयुगं तत्र सदा चैवोत्तरायणम् ।। ११ ।।

यः शृणोति चतुर्वक्त्र माधुरं मम मंदिरम् ।।
अन्येनोच्चारिते सद्यः सोऽपि पापात्प्रमुच्यते ।। १२ ।।
त्रिरात्रमपि ये तत्र वसंति मनुजाः सुत ।।
तेषां पुनंति सहृष्टाः स्पृष्टाश्चरणरेणवः ।। १३ ।।
यथा तृणसमूहं तु ज्वलयंति स्फुलिंगकाः ।।
तथा महांति पापानि दहते मथुरा पुरी ।। १४ ।।
स्नानेन सर्वतीर्थानां यः स्यात्सुकृतसंचयः ।।
ततोऽधिकतरं प्रोक्ता मथुरा सर्वमंडले ।। १५ ।।
चतुर्णामपि वेदानां पुण्यमध्ययनाच्च यत् ।।
तत्पुण्यं जायते तत्र मथुरां स्मरतां नृणाम् ।। १६ ।।
अन्यत्र हि कृतं पापं तीर्थमासाद्य नश्यति ।।
तीर्थेषु यत्कृतं पापं वज्रलेपो भविष्यति ।। १७ ।।
मथुरायां कृतं पापं मथुरायां प्रणश्यति ।।
धर्मार्थकाममोक्षाख्यं स्थित्वा तत्र लभेन्नरः ।। १८ ।।
अन्यत्र दशभिर्वर्षैः प्रारब्धं भुज्यते हि यत् ।।
किल्विषं च चतुर्वक्त्र माथुरे दशभिर्दिनैः ।।१९।।
दिवि नैव न पाताले नांतरिक्षे न मानुषे ।।
समं तु मथुरायां हि प्रियं मम सदैव हि ।। 2.5.17.२० ।।
सर्वेषामेव तीर्थानां माथुरं परमं महत् ।।
बालक्रीडनरूपाणि कृतानि सह गोपकैः ।। २१ ।।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।।
यत्फलं भारते वर्षे तत्फलं मथुरां स्मरन् ।। २२ ।।
सन्निहत्यां तु यत्पुण्यं राहुग्रस्ते दिवाकरे ।।
ततोधिकं लभेत्पुत्र मथुरायां दिनेदिने ।। २३ ।।
पूर्णे वर्षसहस्रे तु तीर्थराजे तु यत्फलम् ।।
तत्फलं लभते पुत्र सहोमासे मधोः पुरे ।। २४ ।।
पूर्णे वर्षसहस्रे तु वाराणस्यां च यत्फलम् ।।
तत्फलं लभते पुत्र मथुरायां सहो दिने ।। २५ ।।

गोदावरीद्वारकयोर्नरो यः क्षेत्रे कुरूणां क्षितिदायको यः ।।

षण्मासकात्साधयते गयायां समं भवेन्नो दिनमेकमाथुरम् ।। २६ ।।

न द्वारका काशिकांची न माया गदाधरो यस्य समं न तीर्थम् ।।

संतर्पिता यद्यमुनाजलेन वांछंति नो वै पितरः पिंडदानम् ।। २७ ।।

मथुरायां प्रकुर्वंति पुरीसाधारणीदृशम् ।।

ये नरास्तेऽपि विज्ञेयाः पापराशिभिरन्विताः ।। २८ ।।

न दृष्टा मथुरा येन दिदृक्षा यस्य जायते ।।

यत्र तत्र मृतस्याऽपि माथुरे जन्म जायते ।। २९ ।।

भूमे रजांसि गणयेत्कालेनाऽपि चतुर्मुख ।।

माथुरे यानि तीर्थानि तेषां संख्या न विद्यते ।। 2.5.17.३० ।।

कुरु भोः कुरु भो वासं मथुराख्यां पुरीं प्रति ।।

वसामि सततं तस्यां गोपकन्याभिरावृतः ।। ३१ ।।

रेरे संसारमग्नाश्च शिष्या मे शृणुताऽपरे ।।

यदीच्छथ सुखं सांद्रं वासं कुरुत मत्पुरीम् ।। ३२ ।।

अहो लोको महानंदो नेत्रयुक्तो न पश्यति ।।

माथुरे विद्यमानेऽपि संसृतिं भजते सदा ।। ३३ ।।

मानुषीं योनिमतुलां लब्ध्वा भाग्यस्य योगतः ।।

वृथैवायुर्गतं तेषां न दृष्टा मथुरापुरी ।। ३४ ।।

अहो मतेः सुदौर्बल्यमहो भाग्यस्य दुर्विधिः ।।

अहो मोहस्य महिमा मथुरा नैव सेव्यते ।। ३५ ।।

मथुरां तु परित्यज्य योऽन्यत्र कुरुते मतिम् ।।

मूढो भ्रमति संसारे मोहितो मम मायया ।। ३६ ।।

मथुरामपि संप्राप्य योऽन्यत्र कुरुते स्पृहाम् ।।

दुर्बुद्धेस्तस्य किं ज्ञानं सोऽज्ञानेन विजृंभितः ।। ।। ३७ ।।

मात्रा पित्रा परित्यक्ता ये त्यक्ता निजबंधुभिः ।।

येषां क्वापि गतिर्नास्ति तेषां मम पुरी गतिः ।। ३८ ।।

पापराशिभिराक्रांता ये दारिद्र्य पराजिताः ।।

येषां क्वापि गतिर्नास्ति तेषां मम पुरी गतिः ।। ३९ ।।

सारात्सारतरं स्थानं गुह्याद्गुह्यतरं परम् ।।

गतिमन्वेषमाणानां मथुरा परमा गतिः ।। 2.5.17.४० ।।

न तत्पुण्यैर्न तद्दानैर्न तपोभिर्न तु स्तवैः ।।

न लभ्यं विविधैर्योगैर्लभ्यं मदनुभावतः ।। ४१ ।।

मयि येषां स्थिरा भक्तिर्भूयसी येषु मत्कृपा ।।

तेषामेव हि धन्यानां मथुरायां भवेद्गतिः ।। ४२ ।।

या गतिर्योगयुक्तस्य ब्रह्मज्ञस्य मनीषिणः ।।

सा गतिस्त्यजतः प्राणान्मथुरायां नरस्य च ।। ४३ ।।

काश्यादिपुर्यो यदि संति लोके तासां तु मध्ये मथुरैव धन्या ।।

या जन्ममौंजीव्रतमुक्तिदानैर्नृणां चतुर्धा विदधाति मुक्तिम् ।। ।। ४४ ।।

न योगैर्या गतिर्लभ्या मन्वंतरशतैरपि ।।

अन्यत्र हेलया साऽत्र लभ्यते मत्प्रसादतः ।।४५।।

न पापेभ्यो भयं यत्र न भयं यत्र वै यमात् ।।

न गर्भवासभीर्यत्र तत्क्षेत्रं को न संश्रयेत्।। ४६।।

मथुरायां च यत्पुण्यं तत्पुण्यस्य फलं शृणु ।।

मथुरायां समासाद्य मथुरायां मृता हि ये ।। ४७ ।।

अपि कीटपतंगाद्या जायंते ते चतुर्भुजाः ।।

कूलात्पतंति ये वृक्षास्तेऽपि यांति परां गतिम् ।। ४८ ।।

मूका जडांधबधिरास्तपोनियमवर्जिताः ।।

कालेनैव मृता ये च मम लोकं व्रजंति ते ।। ४९ ।।

सर्पदष्टाः पशुहताः पावकांबुविनाशिताः।।

लब्धाऽपमृत्यवो ये च माथुरे मम लोकगाः ।। 2.5.17.५० ।।

सत्यं सत्यं मुनिश्रेष्ठ ब्रुवे शपथपूर्वकम् ।।

सर्वाऽभीष्टप्रदं नान्यन्मथुरायाः समं क्वचित् ।। ६१ ।।

त्रिवर्गदा कामिनां या मुमुक्षूणां च मुक्तिदा ।।

भक्तीच्छोर्भक्तिदा कस्तां मथुरां नाऽऽश्रयेद्बुधः ।। ५२ ।।

एतादृशी मधुपुरी कर्त्तव्या मार्गशीर्षके ।।

तदभावे पुष्करं हि कर्तव्यं विधिपूर्वकम् ।। ५३ ।।

ज्येष्ठं हि ब्रह्मणः कुण्डं मध्यं कुण्डं च वैष्णवम् ।।

कनिष्ठं रुद्रदैवत्यमिति जानीहि बुद्धिमन् ।।५४।।

एषु स्नानं च दानं च श्राद्धं च विधिपूर्वकम् ।।

पूजा च महती कार्या मम प्रीतिकरा सुत ।। ५५ ।।

पूर्णा या तु भवेत्पुत्र सहोमासे मम प्रिया ।।

तस्यां यत्क्रियते पुण्यं मम प्रीतिकरं भवेत् ।। ५६ ।।

गोदानमन्नदानं च हेमदानं च पुत्रक ।।

धरादानं च कर्तव्यं पूर्णायां विधिपूर्वकम् ।। ५७ ।।

सहोमासे हि पूर्णायां सद्मदानं च कारयेत् ।।

यत्किंचित्क्रियते पूर्णं तदक्षय्यफलं भवेत् ।। ५८ ।।

ब्रह्मभोज्यं हि कर्तव्यं यथाविभवसारतः ।।

पूर्णायामेव कर्तव्य उत्सवो व्रतपूर्त्तये ।। ५९ ।।

यादृशी मथुरा पुत्र सहोमासे मम प्रिया ।।

न तथा तीर्थराजाद्यास्तदभावे च पुष्करम् ।। 2.5.17.६० ।।

पुष्करे मथुरायां वै पूर्णा कार्या विचक्षणैः ।।

यत्र कुत्रापि वा कार्या विधियुक्ता च पूर्णिमा ।। ६१ ।।

स्नानं दानं तथा पूजां पूर्णायां न करोति यः ।।

षष्टिवर्षसहस्राणि पच्यते रौरवादिषु ।। ६२ ।।

तस्मात्सर्वप्रयत्नेन मान्या पूर्णा विचक्षणैः ।।

मार्गशीर्षेण संयुक्ता अनंतफलदायिनी ।। ६३ ।।

यथा ते कथितं वत्स मार्गशीर्षं मम प्रियम् ।।

करोति यो नरो भक्त्या तस्य पुण्यफलं शृणु ।। ६४ ।।

तीर्थायुतेषु यत्पुण्यं यत्पुण्यं व्रतकोटिभिः ।।

सर्वयज्ञेषु यत्पुण्यं तत्पुण्यं समवाप्नुयात् ।। ६५ ।।

अपुत्रो लभते पुत्रं निर्धनो धनमेव च ।।

विद्यार्थी च तथा विद्यां रूपार्थी रूपमाप्नुयात् ।। ६६ ।।

ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत् ।।

वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ।। ६७ ।।

यद्दुर्लभं च दुष्प्राप्यं त्रिषु लोकेषु मानद ।।

तत्सर्वं प्राप्नुयान्मर्त्यः सहोमासे न संशयः ।। ६८ ।।

यद्यप्येतेषु कामेषु सक्ता ये मानवाः सुत ।।

तुष्टा ह्यंते चतुर्वक्त्र न कामार्हा महाभुज ।। ६९ ।।

सुदुर्लभा हि सद्भक्तिर्मम वश्यकरी शुभा ।।

सा वै संप्राप्यते पुत्र सहोमासे श्रुते तथा ।। 2.5.17.७० ।।

मम प्रीतिकरं मासं सर्वदा मम वल्लभम् ।।

सर्वं संप्राप्यतेऽमुष्मान्मत्प्रसादाच्चतुर्मुख ।। ७१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे ब्रह्मविष्णुसंवादे मार्गशीर्षमासमाहात्म्ये मथुरामाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।।

इति श्रीस्कांदे महापुराणे द्वितीये वैष्णवखण्डे पंचमं श्रीमार्गशीर्षमासमाहात्म्यं संपूर्णम् ।। ( २-५) ।।

।। श्रीकृष्णार्पणमस्तु ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/भागवतमाहात्म्यम्/अध्यायः ०१



अथ श्रीमद्भागवतमाहात्म्यं प्रारभ्यते ।।

।। व्यास उवाच ।। ।।

श्रीसच्चिदानन्दघनस्वरूपिणे कृष्णाय चानन्तसुखाभिवर्षिणे ।।

विश्वोद्भवस्थाननिरोधहेतवे नुमो वयं भक्तिरसाप्तयेऽनिशम् ।। १ ।।

नैमिषे सूतमासीनमभिवाद्य महामतिम् ।।

कथामृतरसास्वादकुशला ऋषयोऽब्रुवन् ।। २ ।।

।। ऋषय ऊचुः ।। ।।

वज्रं श्रीमाथुरे देशे स्वपौत्रं हस्तिनापुरे ।।

अभिषिच्य गते राज्ञि तौ कथं किं च चक्रतुः ।। ३ ।।

।। सूत उवाच ।। ।।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।। ४ ।।

महापथं गते राज्ञि परीक्षित्पृथिवीपतिः ।।

जगाम मथुरां विप्रा वज्रनाभदिदृक्षया ।। ५ ।।

पितृव्यमागतं ज्ञात्वा वज्रः प्रेमपरिप्लुतः ।।

अभिगम्याभिवाद्याथ निनाय निजमन्दिरम् ।। ६ ।।

परिष्वज्य स तं वीरः कृष्णैकगतमानसः ।।

रोहिण्याद्या हरेः पत्नीर्ववन्दायतनागतः ।। ७ ।।

ताभिः सम्मानितोऽत्यर्थं परीक्षित्पृथिवीपतिः ।।

विश्रान्तः सुखमासीनो वज्रनाभमुवाच ह ।। ८ ।।

।। श्रीपरीक्षिदुवाच ।। ।।

तात त्वत्पितृभिर्नूनमस्मत्पितृपितामहाः ।।

उद्धृता भूरिदुःखौघादहं च परिरक्षितः ।। ९ ।।

न पारयाम्यहं तात साधु कृत्वोपकारतः।।

त्वामतः प्रार्थयाम्यङ्ग सुखं राज्येऽनुयुज्यताम् ।। 2.6.1.१० ।।

कोशसैन्यादिजा चिन्ता तथारिदमनादिजा ।।

मनागपि न कार्या ते सुसेव्याः किन्तु मातरः ।। ११ ।।

निवेद्य मयि कर्तव्यं सर्वाधिपरिवर्ज्जनम् ।।

श्रुत्वैतत्परमप्रीतो वज्रस्तं प्रत्युवाच ह ।। १२ ।।

।। श्रीवज्रनाभ उवाच ।। ।।

राजन्नुचितमेतत्ते यदस्मासु प्रभाषते ।।

त्वत्पित्रोपकृतश्चाहं धनुर्विद्याप्रदानतः ।। १३ ।।

तस्मान्नाल्पापि मे चिन्ता क्षात्रं दृढमुपेयुषः ।।

किन्त्वेका परमा चिन्ता तत्र किञ्चिद्विचार्य्यताम् ।। १४ ।।

माथुरे त्वभिषिक्तोऽपि स्थितोऽहं निर्जने वने ।।

क्व गता वै प्रजाऽत्रत्या यत्र राज्यं प्ररोचते ।। १५ ।।

इत्युक्तो विष्णुरातस्तु नन्दादीनां पुरोहितम् ।।

शांडिल्यमाजुहावाशु वज्रसंदेहनुत्तये ।। १६ ।।

अथोटजं विहायाशु शांडिल्यः समुपागतः ।।

पूजितो वज्रनाभेन निषसादासनोत्तमे ।। १७ ।।

उपोद्घातं विष्णुरातश्चकाराशु ततस्त्वसौ ।।

उवाच परमप्रीतस्तावुभौ परिसान्त्वयन् ।। १८ ।।

।। श्रीशांडिल्य उवाच ।। ।।

शृणुतं दत्तचित्तौ मे रहस्यं व्रजभूमिजम् ।।

व्रजनं व्याप्तिरित्युक्त्या व्यापनाद्व्रज उच्यते ।। १९ ।।

गुणातीतं परं ब्रह्म व्यापकं व्रज उच्यते ।।

सदानन्दं परं ज्योतिर्मुक्तानां पदमव्ययम् ।। 2.6.1.२० ।।

तस्मिन्नन्दात्मजः कृष्णः सदानन्दांगविग्रहः ।।

आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते ।। २१ ।।

आत्मा तु राधिका तस्य तयैव रमणादसौ ।।

आत्मारामतया प्राज्ञैः प्रोच्यते गूढवेदिभिः ।। २२ ।।

कामास्तु वाञ्छितास्तस्य गावो गोपाश्च गोपिकाः ।।

नित्याः सर्वे विहाराद्या आप्तकामस्ततस्त्वयम् ।। २३ ।।

रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते ।।

प्रकृत्या खेलतस्तस्य लीलाऽन्यैरनुभूयते ।। २४ ।।

213b

सर्गस्थित्यप्यया यत्र रजःसत्त्वतमोगुणैः ।।

लीलैवं द्विविधा तस्य वास्तवी व्यावहारिकी ।। २५ ।।

वास्तवी तत्स्वसंवेद्या जीवानां व्यावहारिकी ।।

आद्यां विना द्वितीया न द्वितीया नाद्यगा क्वचित् ।। २६ ।।

आवयोर्गोचरेयं तु तल्लीला व्यावहारिकी ।।

यत्र भूरादयो लोका भुवि माथुरमण्डलम् ।। २७ ।।

अत्रैव व्रजभूमिः सा यत्र तत्त्वं सुगोपितम् ।।

भासते प्रेमपूर्णानां कदाचिदपि सर्वतः ।। ।। २८ ।।

कदाचिद्द्वापरस्यान्ते रहोलीलाधिकारिणः ।।

समवेता यदाऽत्र स्युर्यथेदानीं तदा हरिः ।। २९ ।।

स्वैः सहावतरेत्स्वेषु समावेशार्थमीप्सिताः ।।

तदा देवादयोऽप्यन्येऽवतरन्ति समन्ततः ।। 2.6.1.३० ।।

सर्वेषां वाञ्छितं कृत्वा हरिरन्तर्हितोऽभवत् ।।

तेनात्र त्रिविधा लोकाः स्थिताः पूर्वं न संशयः ।। ३१ ।।

नित्यास्तल्लिप्सवश्चैव देवाद्याश्चेति भेदतः ।।

देवाद्यास्तेषु कृष्णेन द्वारिकां प्रापिताः पुरा ।। ३२ ।।

पुनर्मौशलमार्गेण स्वाधिकारेषु चापिताः ।।

तल्लिप्सूंश्च सदा कृष्णः प्रेमानन्दैकरूपिणः ।। ३३ ।।

विधाय स्वीयनित्येषु समावेशितवांस्तदा ।।

नित्याः सर्वेऽप्ययोग्येषु दर्शनाभावतां गताः ।। ३४ ।।

व्यावहारिकलीलास्थास्तत्र यन्नाधिकारिणः ।।

पश्यन्त्यत्रागतास्तस्मान्निर्जनत्वं समन्ततः ।। ३५ ।।

तस्माच्चिन्ता न ते कार्या वज्रनाभ मदाज्ञया ।।

वासयात्र बहून्ग्रामान्संसिद्धिस्ते भविष्यति ।। ३६ ।।

कृष्णलीलानुसारेण कृत्वा नामानि सर्वतः ।।

त्वया वासय ता ग्रामान्संसेव्या भूरियं परा ।। ३७ ।।

गोवर्द्धने दीर्घपुरे मथुरायां महावने ।।

नन्दिग्रामे बृहत्सानौ कार्या राज्यस्थितिस्त्वया ।। ३८ ।।

नद्यद्रिद्रोणिकुण्डादिकुञ्जान्संसेवतस्तव ।।

राज्ये प्रजाः सुसंपन्नास्त्वं च प्रीतो भविष्यसि ।। ३९ ।।

सच्चिदानन्दभूरेषा त्वया सेव्या प्रयत्नतः ।।

तव कृष्णस्थलान्यत्र स्फुरन्तु मदनुग्रहात् ।। 2.6.1.४० ।।

वज्र संसेवनादस्या उद्धवस्त्वां मिलिष्यति ।।

ततो रहस्यमेतस्मात्प्राप्स्यसि त्वं समातृकः ।।४१।।

एवमुक्त्वा तु शाण्डिल्यो गतः कृष्णमनुस्मरन् ।।

विष्णुरातोऽथ वज्रश्च परां प्रीतिमवापतुः ।। ४२ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये शाडिल्योपदिष्टव्रजभूमिमाहात्म्यवर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/भागवतमाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h1m



।। श्रीऋषय ऊचुः ।। ।।

शांडिल्ये तौ समादिश्य परावृत्ते स्वमाश्रमम् ।।

कि कथं चक्रतुस्तौ तु राजानौ सूत तद्वद ।। १ ।। ।।

।। श्रीसूत उवाच ।। ।।

ततस्तु विष्णुरातेन श्रेणीमुख्वाः सहस्रशः ।।

इन्द्रप्रस्थात्समानाय्य मथुरास्थानमापिताः ।। २ ।।

माथुरान्ब्राह्मणांस्तत्र वानरांश्च पुरातनान् ।।

विज्ञाय माननीयत्वं तेषु स्थापितवान्स्वराट् ।। ३ ।।

वज्रस्तु तत्सहायेन शाण्डिल्यस्याऽप्यनुग्रहात् ।।

गोविन्दगोपगोपीनां लीलास्थानान्यनुक्रमात् ।। ४ ।।

विज्ञायाऽभिधयाऽऽस्थाप्य ग्रामानावासयद्बहून् ।।

कुण्डकूपादिपूर्तेन शिवादिस्थापनेन च ।। ५ ।।

गोविन्दहरिदेवादिस्वरूपाऽऽरोपणेन च ।।

कृष्णैकभक्तिं स्वे राज्यं ततान च मुमोद ह ।। ६ ।।

प्रजास्तु मुदितास्तस्य कृष्णकीर्तनतत्पराः।।

परमानन्दसम्पन्ना राज्यं तस्यैव तुष्टुवुः ।। ७ ।।

एकदा कृष्णपत्न्यस्तु श्रीकृष्णविरहातुराः ।।

कालिन्दीं मुदिता वीक्ष्य पप्रच्छुर्गतमत्सराः ।। ८ ।।।।

।। श्रीकृष्णपत्न्य ऊचुः ।। ।।

यथा वयं कृष्णपत्न्यस्तथा त्वमपि शोभने ।।

वयं विरहदुःखार्तास्त्वं न कालिन्दि तद्वद ।। ९ ।।

तच्छ्रुत्वा स्मयमाना सा कालिन्दी वाक्यमब्रवीत् ।।

सापत्न्यं वीक्ष्य तत्तासां करुणापरमानसा ।। 2.6.2.१० ।। ।।

श्रीकालिन्द्युवाच ।। ।।

आत्मारामस्य कृष्णस्य ध्रुवमात्मास्ति राधिका ।।
तस्या दास्यप्रभावेण विरहोऽस्मान्न संस्पृशेत् ।। ११ ।।
तस्या एवांशविस्ताराः सर्वाः श्रीकृष्णनायिकाः ।।
नित्यसंभोग एवास्ति तस्याः साम्मुख्ययोगतः ।। १२ ।।
स एव सा स सैवास्ति वशी तत्प्रेमरूपिका ।।
श्रीकृष्णनखचन्द्रालिसंगाच्चन्द्रावली स्मृता ।। १३ ।।
रूपान्तरं च गृह्णाना तयोः सेवातिलालसा ।।
रुक्मिण्यादिसमावेशो मयात्रैव विलोकितः ।। १४ ।।
युष्माकमपि कृष्णेन विरहो नैव सर्वतः ।।
किन्तु एवं न जानीथ तस्माद्व्याकुलतामिताः ।। १५ ।।
एवमेवात्र गोपीनामक्रूरावसरे पुरा ।।
विरहाभास एवासीदुद्धवेन समाहितः ।। १६ ।।
तेनैव भवतीनां चेद्धवेदत्र समागमः ।।
तर्हि नित्यं स्वकान्तेन विहारमपि लप्स्यथ ।। १७ ।।
।। श्रीसूत उवाच ।। ।।
एवमुक्तास्तु ताः पत्न्यः प्रसन्नां पुनरब्रुवन् ।।
उद्धवालोकनेनात्मप्रेष्ठसंगमलालसाः ।। १८ ।।
।। श्रीकृष्णपत्न्य ऊचुः ।। ।।
धन्यासि सखि कान्तेन यस्या नैवास्ति विच्युतिः ।।
यतस्ते स्वार्थसंसिद्धिस्तस्या दास्यो बभूविम ।। १९ ।।
परन्तूद्धवलाभे स्यादस्मत्सर्वार्थसाधनम् ।।
तथा वदस्व कालिन्दि तल्लाभोऽपि यथा भवेत् ।। 2.6.2.२० ।।
।। श्रीसूत उवाच ।। ।।
एवमुक्ता तु कालिन्दी प्रत्युवाचाथ तास्तथा ।।
स्मरन्ती कृष्णचन्द्रस्य कलाषोडशरूपिणी ।। २१ ।।
साधनभूमिर्बदरी व्रजता कृष्णेन मंत्रिणे प्रोक्ता ।।
तत्रास्ते स तु साक्षात्तद्वयुनं ग्राहयँल्लोकान् ।। २२ ।।
फलभूमिर्व्रजभूमिर्दत्ता तस्मै पुरैव सरहस्यम् ।।

फलमिह तिरोहितं सत्तदिहेदानीं स उद्धवोऽलक्ष्यः ।। २३ ।।

गोवर्द्धनगिरिनिकटे सखीस्थले तद्रजःकामः ।।

तत्रत्याङ्कुरवल्लीरूपेणास्ते स उद्धवो नूनम् ।। २४ ।।

आत्मोत्सवरूपत्वं हरिणा तस्मै समर्पितं नियतम् ।।

तस्मात्तत्र स्थित्वा कुसुमसरःपरिसरे सवज्राभिः ।। २५ ।।

वीणावेणुमृदंगैः कीर्तनकाव्यादिसरससंगीतैः ।।

उत्सव आरब्धव्यो हरिरतलोकान्समानाय्य ।। २६ ।।

तत्रोद्धवावलोको भविता नियतं महोत्सवे वितते ।।

यौष्माकीणामभिमतसिद्धिं सविता स एव सवितानाम् ।। २७ ।।

।। श्रीसूत उवाच ।। ।।

इति श्रुत्वा प्रसन्नास्ताः कालिन्दीमभिवन्ध तत् ।।

कथयामासुरागत्य वज्रं प्रति परीक्षितम् ।। २८ ।।

विष्णुरातस्तु तच्छ्रुत्वा प्रसन्नस्तद्युतस्तदा ।।

तत्रैवागत्य तत्सर्वं कारयामास सत्वरम् ।। २९ ।।

गोवर्धनाददूरेण वृन्दारण्ये सखीस्थले ।।

प्रवृत्तः कुसुमाम्भोधौ कृष्णसंकीर्तनोत्सवः ।। 2.6.2.३० ।।

वृषभानुसुताकान्तविहारे कीर्तनश्रिया ।।

साक्षादिव समावृत्ते सर्वेऽनन्यदृशोऽभवन् ।। ३१ ।।

ततः पश्यत्सु सर्वेषु तृणगुल्मलताचयात् ।।

आजगामोद्धवः स्रग्वी श्यामः पीताम्बरावृतः ।। ३२ ।।

गुञ्जामालाधरो गायन्बल्लवीवल्लभं मुहुः ।।

तदागमनतो रेजे भृशं संकीर्तनोत्सवः ।। ३३ ।।

चन्द्रिकागमतो यद्वत्स्फाटिकाट्टालभूमणिः ।।

अथ सर्वे सुखाम्भोधौ मग्नाः सर्वं विसस्मरुः ।। ३४ ।।

क्षणेनागतविज्ञाना दृष्ट्वा श्रीकृष्णरूपिणम् ।।

उद्धवं पूजयांचक्रुः प्रतिलब्धमनोरथाः ।। ३५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये गोवर्द्धनपर्वतसमीपे परीक्षिदादीनामुद्धवदर्शनवर्णनोनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/भागवतमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h6k



।। श्रीसूत उवाच ।। ।।

अथोद्धवस्तु तान्दृष्ट्वा कृष्णकीर्तनतत्परान् ।।

सत्कृत्याथ परिष्वज्य परीक्षितमुवाच ह ।। १ ।।

।। उद्धव उवाच ।। ।।

धन्योऽसि राजन्कृष्णैकभक्त्या पूर्णोऽसि नित्यदा ।।

यस्त्वं निमग्नचित्तोऽसि कृष्णसंकीर्तनोत्सवे ।। २ ।।

कृष्णपत्नीषु वज्रे च दिष्ट्या प्रीतिः प्रवर्तिता ।।

तवोचितमिदं तात कृष्णदत्तांग वैभव ।। ३ ।।

द्वारकास्थेषु सर्वेषु धन्या एते न संशयः ।।

येषां व्रजनिवासाय पार्थमादिष्टवान्प्रभुः ।। ४ ।।

श्रीकृष्णस्य मनश्चंद्रो राधास्यप्रभयान्वितः ।।

तद्विहारवनं गोभिर्मण्डयन्रोचते सदा ।। ५ ।।

कृष्णचन्द्रः सदा पूर्णस्तस्य षोडश याः कलाः ।।

चित्सहस्रप्रभाभिन्ना अत्रास्ते तत्स्वरूपता ।। ६ ।।

एवं वज्रस्तु राजेन्द्र प्रपन्नभयभञ्जकः ।।

श्रीकृष्णदक्षिणे पादे स्थानमेतस्य वर्तते ।। ७ ।।

अवतारेऽत्र कृष्णेन योगमायाऽति भाविता ।।

तद्बलेनात्मविस्मृत्या सीदन्त्येते न संशयः ।। ८ ।।

ऋते कृष्णप्रकाशं तु स्वात्मबोधो न कस्यचित् ।।

तत्प्रकाशस्तु जीवानां मायया पिहितः सदा ।। ९ ।।

अष्टाविंशे द्वापरान्ते स्वयमेव यदा हरिः ।।

उत्सारयेन्निजां मायां तत्प्रकाशो भवेत्तदा ।। 2.6.3.१० ।।

स तु कालो व्यतिक्रांतस्तेनेदमपरं शृणु ।।

अन्यदा तत्प्रकाशस्तु श्रीमद्भागवताद्भवेत् ।। ११ ।।

श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा ।।
कीर्त्यते श्रूयते चापि श्रीकृष्णस्तत्र निश्चितम् ।। १२ ।।
श्रीमद्भागवतं यत्र श्लोकं श्लोकार्द्धमेव च ।।
तत्रापि भगवान्कृष्णो बल्लवीभिर्विराजते ।। १३ ।।
भारते मानवं जन्म प्राप्य भागवतं न यैः ।।
श्रुतं पापपराधीनैरात्मघातस्तु तैः कृतः ।। १४ ।।
श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम् ।।
पितुर्मातुश्च भार्यायाः कुलपंक्तिः सुतारिता ।। १५ ।।
विद्याप्रकाशो विप्राणां राजां शत्रुजयो विशाम् ।।
धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद्भवेत् ।। १६ ।।
योषितामपरेषां च सर्ववांछितपूरणम् ।।
अतो भागवतं नित्यं को न सेवेत भाग्यवान् ।। १७ ।।
अनेकजन्मसंसिद्धः श्रीमद्भागवतं लभेत् ।।
प्रकाशो भगवद्भक्तेरुद्भवस्तत्र जायते ।। १८ ।।
सांख्यायनप्रसादात्तं श्रीमद्भागवतं पुरा ।।
बृहस्पतिर्दत्तवान्मे तेनाहं कृष्णवल्लभः ।। १९ ।।
आख्यायिका च तेनोक्ता विष्णुरात निबोध ताम् ।।
ज्ञायते संप्रदायोऽपि यत्र भागवतश्रुतेः ।। 2.6.3.२० ।। ।।
श्रीबृहस्पतिरुवाच ।। ।।
ईक्षांचक्रे यदा कृष्णो मायापुरुषरूपधृक् ।।
ब्रह्मा विष्णुः शिवश्चापि रजःसत्त्वतमोगुणैः ।।२१।।
पुरुषास्त्रय उत्तस्थुरधिकारांस्तदादिशत् ।।
उत्पत्तौ पालने चैव संहारे प्रक्रमेण तान् ।। २२ ।।
ब्रह्मा तु नाभिकमलादुत्पन्नस्तं व्यजिज्ञपत् ।।
।। श्रीब्रह्मोवाच ।। ।।
नारायणादिपुरुष परमात्मन्नमोऽस्तु ते ।। २३ ।।
त्वया सर्गे नियुक्तोऽस्मि पापीयान्मां रजोगुणः ।।
त्वत्स्मृतौ नैव बाधेत तथैव कृपया प्रभो ।। २४ ।।

।। श्रीबृहस्पतिरुवाच ।। ।।

यदा तु भगवांस्तस्मै श्रीमद्भागवतं पुरा ।।

उपदिश्याब्रवीद्ब्रह्मन्सेवस्वैनत्स्वसिद्धये ।। २५ ।।

ब्रह्मा तु परमप्रीतस्तेन कृष्णाप्तयेऽनिशम् ।।

सप्तावरणभंगाय सप्ताहं समवर्तयत् ।। २६ ।।

श्रीभागवतसप्ताहसेवनाप्तमनोरथः ।।

सृष्टिं वितनुते नित्यं ससप्ताहः पुनःपुनः ।।२७।।

विष्णुरप्यर्थयामास पुमांसं स्वार्थसिद्धये ।।

प्रजानां पालने पुंसा यदनेनापि कल्पितः ।। २८ ।।

।। श्रीविष्णुरुवाच ।। ।।

प्रजानां पालनं देव करिष्यामि यथोचितम् ।।

प्रवृत्त्या च निवृत्त्या च कर्मज्ञानप्रयोजनात् ।।२९।।

यदायदैव कालेन धर्मग्लानिर्भविष्यति ।।

धर्मं संस्थापयिष्यामि ह्यवतारैस्तदा तदा ।। 2.6.3.३० ।।

भोगार्थिभ्यस्तु यज्ञादिफलं दास्यामि निश्चितम् ।।

मोक्षार्थिभ्यो विरक्तेभ्यो मुक्तिं पञ्चविधां तथा ।। ३१ ।।

येऽपि मोक्षं न वाञ्छन्ति तान्कथं पालयाम्यहम् ।।

आत्मानं च श्रियं चापि पालयामि कथं वद ।। ३२ ।।

तस्मा अपि पुमानाद्यः श्रीभागवतमादिशत् ।।

उवाच च पठस्वैनत्तव सर्वार्थसिद्धये ।। ।। ३३ ।।

ततो विष्णुः प्रसन्नात्मा परमार्थकपालने ।।

समर्थोऽभूच्छ्रिया मासिमासि भागवतं स्मरन् ।। ३४ ।।

यदा विष्णुः स्वयं वक्ता लक्ष्मीश्च श्रवणे रता ।।

तदा भागवतश्रावो मासेनैव पुनःपुनः ।। ३५ ।।

यदा लक्ष्मीः स्वयं वक्त्री विष्णुश्च श्रवणे रतः ।।

मासद्वयं रसास्वादस्तदातीव सुशोभते ।। ३६ ।।

अधिकारे स्थितो विष्णुर्लक्ष्मीर्निश्चिन्तमानसा ।।

तेन भागवतास्वादस्तस्या भूरि प्रकाशते ।। ३७ ।।

अथ रुद्रोऽपि तं देवं संहाराधिकृतः पुरा ।।

पुमांसं प्रार्थयामास स्वसामर्थ्यविवृद्धये ।। ३८ ।।

।। श्रीरुद्र उवाच ।। ।।

नित्ये नैमित्तिके चैव संहारे प्राकृते तथा ।।

शक्तयो मम विद्यन्ते देवदेव मम प्रभो ।। ३९ ।।

आत्यंतिके तु संहारे मम शक्तिर्न विद्यते ।।

महद्दुःखं ममैतत्तु तेन त्वां प्रार्थयाम्यहम् ।। 2.6.3.४० ।। ।।

श्रीबृहस्पतिरुवाच ।। ।।

श्रीमद्भागवतं तस्मा अपि नारायणो ददौ ।।

स तु संसेवनादस्य जिग्ये चापि तमोगुणम् ।। ४१ ।।

कथा भागवती तेन सेविता वर्षमात्रतः ।।

लये त्वात्यंतिके तेनावाप शक्तिं सदाशिवः ।। ४२ ।।

।। उद्धव उवाच ।। ।।

श्रीभागवतमाहात्म्य इमामाख्यायिकां गुरोः ।।

श्रुत्वा भागवतं लब्ध्वा मुमुदेऽहं प्रणम्य तम् ।। ४३ ।।

ततस्तु वैष्णवीं रीतिं गृहीत्वा मासमात्रतः ।।

श्रीमद्भागवतास्वादो मया सम्यङ्निषेवितः ।। ४४ ।।

तावतैव बभूवाहं कृष्णस्य दयितः सखा ।।

कृष्णेनाथ नियुक्तोऽहं व्रजे स्वप्रेयसीगणे ।।४५।।

विरहार्त्तासु गोपीषु स्वयं नित्यविहारिणा ।।

श्रीभागवतसंदेशो मन्मुखेन प्रयोजितः ।। ४६ ।।

तं यथामति लब्ध्वा ता आसन्विरहवर्ज्जिताः ।।

नाज्ञासिषं रहस्यं तच्चमत्कारस्तु लोकितः ।। ४७ ।।

स्वर्वासं प्राथ्‍र्य कृष्णं च ब्रह्माद्येषु गतेषु मे ।।

श्रीमद्भागवते कृष्णस्तद्रहस्यं स्वयं ददौ ।।४८।।

पुरतोऽश्वत्थमूलस्य चकार मयि तद्दृढम् ।।

तेनात्र व्रजवल्लीषु वसामि बदरीं गतः ।। ४९ ।।

तस्मान्नारदकुण्डेऽत्र तिष्ठामि स्वेच्छया सदा ।।

कृष्णप्रकाशो भक्तानां श्रीमद्भागवताद्भवेत् ।।2.6.3.५०।।

तदेषामपि कार्य्यार्थं श्रीमद्भागवतं त्वहम् ।।

प्रवक्ष्यामि सहायोऽत्र त्वयैवानुष्ठितो भवेत् ।।५१।।

।। श्रीसूत उवाच ।। ।।

विष्णुरातस्तु श्रुत्वा तदुद्धवं प्रणतोऽब्रवीत्।। ।।

।। श्रीपरीक्षिदुवाच ।। ।।

हरिदास त्वया कार्य्यं श्रीभागवतकीर्तनम् ।।५२।।

आज्ञाप्योऽहं यथाकार्य्यं सहायोऽत्र मया तथा ।।

।।श्रीसूत उवाच ।।

श्रुत्वैतदुद्धवो वाक्यमुवाच प्रीतमानसः ।। ५३ ।।

।। उद्धव उवाच ।। ।।

श्रीकृष्णेन परित्यक्ते भूतले बलवान्कलिः ।।

करिष्यति परं विघ्नं सत्कार्ये समुपस्थिते ।। ५४ ।।

तस्माद्दिग्विजयं याहि कलिनिग्रहमाचर ।।

अहं तु मासमात्रेण वैष्णवीं रीतिमास्थितः ।। ५५ ।।

श्रीमद्भागवतास्वादं प्रचार्य त्वत्सहायतः ।।

एतान्सम्प्रापयिष्यामि नित्यधाम्नि मधुद्विषः ।। ५६ ।।

।। श्रीसूत उवाच ।। ।।

श्रुत्वैवं तद्वचो राजा मुदितश्चिन्तयातुरः ।।

तदा विज्ञापयामास स्वाभिप्रायं तमुद्धवम् ।। ५७ ।।

।। श्रीपरीक्षिदुवाच ।। ।।

कलिं तु निग्रहीष्यामि तात ते वचसि स्थितः ।।

श्रीभागवतसंप्राप्तिः कथं मम भविष्यति ।। ५८ ।।

अहं तु समनुग्राह्यस्तव पादतले श्रितः ।।

।। श्रीसूत उवाच ।। ।।

श्रुत्वैतद्वचनं भूयोऽप्युद्धवस्तमुवाच ह ।। ५९ ।।

।। ।। उद्धव उवाच ।। ।।

राजंश्चिन्ता तु ते काऽपि नैव कार्य्या कथंचन ।।

तवैव भगवच्छास्त्रे यतो मुख्याधिकारिता ।। 2.6.3.६० ।।

एतावत्कालपर्य्यन्तं प्रायो भागवतश्रुतेः ।।

वार्तामपि न जानन्ति मनुष्याः कर्मतत्पराः ।। ६१ ।।

त्वत्प्रसादेन बहवो मनुष्या भारताजिरे ।।

श्रीमद्भागवतप्राप्तौ सुखं प्राप्स्यन्ति शाश्वतम् ।। ६२ ।।

नन्दनन्दनरूपस्तु श्रीशुको भगवानृषिः ।।

श्रीमद्भागवतं तुभ्यं श्रावयिष्यत्यसंशयः ।।६३।।

तेन प्राप्स्यसि राजंस्त्वं नित्यं धाम व्रजेशितुः ।।

श्रीभागवतसंचारस्ततो भुवि भविष्यति ।। ६४ ।।

तस्मात्त्वं गच्छ राजेन्द्र कलिनिग्रहमाचर ।।

।। श्रीसूत उवाच ।। ।।

इत्युक्तस्तं परिक्रम्य गतो राजा दिशां जये ।।६५।।

वज्रस्तु निजराज्येशं प्रतिबाहुं विधाय च ।।

तत्रैव मातृभिः साकं तस्थौ भागवताशया ।।६६।।

अथ वृन्दावने मासं गोवर्द्धनसमीपतः ।।

श्रीमद्भागवतास्वादस्तूद्धवेन प्रवर्तितः ।। ६७।।

तस्मिन्नास्वाद्यमाने तु सच्चिदानन्दरूपिणी ।।

प्रचकाशे हरेर्लीला सर्वतः कृष्ण एव च ।। ६८ ।।

आत्मानं च तदन्तःस्थं सर्वेऽपि ददृशुस्तदा ।।

वज्रस्तु दक्षिणे दृष्ट्वा कृष्णपादसरोरुहे ।। ६९ ।।

स्वात्मानं कृष्णवैधुर्य्यान्मुक्तस्तद्भुव्यशोभत ।।

ताश्च तन्मातरः कृष्णे रासरात्रिप्रकाशिनि ।। 2.6.3.७० ।।

चंद्रे कलाप्रभारूपमात्मानं वीक्ष्य विस्मिताः ।।

स्वप्रेष्ठ विरहव्याधिविमुक्ताः स्वपदं ययुः ।। ७१ ।।

येऽन्ये च तत्र ते सर्वे नित्यलीलान्तरं गताः ।।

व्यावहारिकलोकेभ्यः सद्योऽदर्शनमागताः ।। ७२ ।।

गोवर्द्धननिकुञ्जेषु गोषु वृन्दावनादिषु ।।

नित्यं कृष्णेन मोदन्ते दृश्यन्ते प्रेमतत्परैः ।। ७३ ।।

।। श्रीसूत उवाच ।। ।।

य एतां भगवत्प्राप्तिं शृणुयाच्चापि कीर्तयेत् ।।

तस्य वै भगवत्प्राप्तिर्दुःखहानिश्च जायते ।। ७४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे परीक्षिदुद्धवसंवादे श्रीभागवतमाहात्म्ये तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/भागवतमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/h6l
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | भागवतमाहात्म्यम्

।। श्रीऋषय ऊचुः ।। ।।

साधु सूत चिरं जीव चिरमेवं प्रशाधि नः ।।

श्रीभागवतमाहात्म्यमपूर्वं त्वन्सुखाच्छ्रुतम् ।। १ ।।

तत्स्वरूपप्रमाणं च विधिं च श्रवणे वद ।।

तद्वक्तुर्लक्षणं सूत श्रोतुश्चापि वदाधुना ।। २ ।।

।। श्रीसूत उवाच ।। ।।

श्रीमद्भागवतस्याथ श्रीमद्भगवतः सदा ।।

स्वरूपमेकमेवास्ति सच्चिदानन्दलक्षणम् ।। ३ ।।

श्रीकृष्णासक्तभक्तानां तन्माधुर्य्यप्रकाशकम् ।।

समुज्जृम्भति यद्वाक्यं विद्धि भागवतं हि तत् ।। ४ ।।

ज्ञानविज्ञानभक्त्यङ्गचतुष्टयपरं वचः ।।

मायामर्दन दक्षं च विद्धि भागवतं च तत् ।। ५ ।।

प्रमाणं तस्य को वेद ह्यनंतस्याक्षरात्मनः ।।

ब्रह्मणे हरिणा तद्दिक्चतुःश्लोक्या प्रदर्शिता ।। ६ ।।

तदानंत्यावगाहेन स्वेप्सितावहनक्षमाः ।।

त एव संति भो विप्रा ब्रह्मविष्णुशिवादयः ।। ७ ।।

मितबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय च ।।

परीक्षिच्छुकसंवादो योऽसौ व्यासेन कीर्तितः ।। ८ ।।

ग्रन्थोऽष्टादशसाहस्रो योऽसौ भागवताभिधः ।।

कलिग्राहगृहीतानां स एव परमाश्रयः ।। ९ ।।

श्रोतारो ऽथ निरूप्यन्ते श्रीमद्विष्णुकथाश्रयाः ।।

प्रवरा अवराश्चति श्रोतारो द्विविधा मताः ।। 2.6.4.१० ।।

प्रवराश्चातको हंसः शुको मीनादयस्तथा ।।

अवरा वृकभूरुण्डवृषोष्ट्राद्याः प्रकीर्तिताः ।। ११ ।।

अखिलोपेक्षया यस्तु कृष्णशास्त्रश्रुतौ व्रती ।।

स चातको यथाम्भोदमुक्ते पाथसि चातकः ।। १२ ।।

हंसः स्यात्सारमादत्ते यः श्रोता विविधाच्छ्रुतात् ।।

दुग्धेनैक्यं गतात्तोयाद्यथा हंसोऽमलं पयः ।। १३ ।।

शुकः सुष्टु मितं वक्ति व्यासं श्रोतृंश्च हर्षयन् ।।

सुपाठितः शुको यद्वच्छिक्षकं पार्श्वगानपि ।। १४ ।।

शब्दं नानिमिषो जातु करोत्यास्वादयन्नसम् ।।

श्रोता स्निग्धो भवेन्मीनो मीनः क्षीरनिधौ यथा ।। १५ ।।

यस्तुदन्नसिकाञ्छ्रोतॄन्विरौत्यज्ञो वृको हि सः ।।

वेणुस्वनरसासक्तान्वृकोऽरण्ये मृगान्यथा ।। १६ ।।

भूरुण्डः शिक्षयेदन्याञ्छ्रुत्वा न स्वयमाचरेत् ।।

यथा हिमवतः शृंगे भूरुण्डाख्यो विहंगमः ।। १७ ।। (भारुण्ड)

सर्वं श्रुतमुपादत्ते सारासारान्धधीर्वृषः ।।

स्वादु द्राक्षां खलिं चापि निर्विशेषं यथा वृषः ।। १८ ।।

स उष्ट्रो मधुरं मुञ्चन्विपरीते रमेत यः ।।

यथा निम्बं चरत्युष्ट्रो हित्वाऽऽम्रमपि तद्युतम् ।। १९ ।।

अन्येऽपि बहवो भेदा द्वयोर्भृंगखरादयः ।।

विज्ञेयास्तत्तदाचारैस्तत्तत्प्रकृतिसंभवैः ।। 2.6.4.२० ।।

यः स्थित्वाऽभिमुखं प्रणम्य विधिवत्त्यक्तान्यवादो हरेर्लीलाः श्रोतुमभीप्सतेऽतिनिपुणो नम्रो ऽथ क्लृप्ताञ्जलिः ।।

शिष्यो विश्वसितोऽनुचिन्तनपरः प्रश्नेऽनुरक्तः शुचिर्नित्यं कृष्णजनप्रियो निगदितः श्रोता स वै वक्तृभिः ।। २१ ।।

भगवन्मतिरनपेक्षः सुहृदो दीनेषु सानुकम्पो यः ।।

बहुधाबोधनचतुरो वक्ता संमानितो मुनिभिः ।। २२ ।।

अथ भारतभूस्थाने श्रीभागवतसेवने ।।

विधिं शृणुत भो विप्रा येन स्यात्सुखसंततिः ।। २३ ।।

राजसं सात्त्विकं चापि तामसं निर्गुणं तथा ।।

चतुर्विधं तु विज्ञेयं श्रीभागवत सेवनम् ।। २४ ।।

सप्ताहं यज्ञवद्यत्तु सश्रमं सत्वरं मुदा ।।

सेवितं राजसं तत्तु बहुपूजादिशोभनम् ।।२५।।

मासेन ऋतुना वापि श्रवणं स्वादसंयुतम्।।

सात्त्विकं यदनायासं समस्तानन्दवर्द्धनम् ।। २६ ।।

तामसं यत्तु वर्षेण सालसं श्रद्धयाऽयुतम् ।।

विस्मृतिस्मृतिसंयुक्तं सेवनं तच्च सौख्यदम् ।। २७ ।।

वर्षमासदिनानां तु विमुच्य नियमाग्रहम् ।।

सर्वदा प्रेमभक्त्यैव सेवनं निर्गुणं मतम् ।। २८ ।।

पारीक्षितेऽपि संवादे निर्गुणं तत्प्रकीर्तितम्।।

तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया ।। २९ ।।

अन्यत्र त्रिगुणं चापि निर्गुणं च यथेच्छया ।।

यथा कथंचित्कर्तव्यं सेवनं भगवच्छ्रुतेः ।। 2.6.4.३० ।।

ये श्रीकृष्णविहारैकभजनास्वादलोलुपाः ।।

मुक्तावपि निराकांक्षास्तेषां भागवतं धनम् ।। ३१ ।।

येऽपि संसारसंतापनिर्विण्णा मोक्षकांक्षिणः ।।

तेषां भवौषधं चैतत्कलौ सेव्यं प्रयत्नतः ।। ३२ ।।

ये चापि विषयारामाः सांसारिकसुखस्पृहाः ।।

तेषां तु कर्ममार्गेण या सिद्धिः साऽधुना कलौ ।। ।। ३३ ।।

सामर्थ्यधनविज्ञानाभावादत्यन्तदुर्लभा ।।

तस्मात्तैरपि संसेव्या श्रीमद्भागवती कथा ।। ३४ ।।

धनं पुत्रांस्तथा दारान्वाहनादि यशो गृहान् ।।

असापत्न्यं च राज्यं च दद्याद्भागवती कथा ।। ३५ ।।

इह लोके वरान्भुक्त्वा भोगान्वै मनसेप्सितान् ।।

श्रीभागवतसंगेन यात्यन्ते श्रीहरेः पदम् ।। ३६ ।।

यत्र भागवती वार्ता ये च तच्छ्रवणे रताः ।।

तेषां संसेवनं कुर्याद्देहेन च धनेन च ।। ३७ ।।

तदनुग्रहतोऽस्यापि श्रीभागवतसेवनम् ।।

श्रीकृष्णव्यतिरिक्तं यत्तत्सर्वं धनसंज्ञितम् ।। ३८ ।।

कृष्णार्थीति धनार्थीति श्रोता वक्ता द्विधा मतः ।।

यथा वक्ता तथा श्रोता तत्र सौख्यं विवर्द्धते ।। ३९ ।।

उभयोर्वैपरीत्ये तु रसाभासे फलच्युतिः।।

किन्तु कृष्णार्थिनां सिद्धिर्विलम्बेनापि जायते ।। 2.6.4.४० ।।

धनार्थिनस्तु संसिद्धिर्विधिसंपूर्णतावशात् ।।

कृष्णार्थिनोऽगुणस्यापि प्रेमैव विधिरुत्तमः ।। ४१ ।।

आसमाप्ति सकामेन कर्तव्यो हि विधिः स्वयम् ।।

स्नातो नित्य क्रियां कृत्वा प्राश्य पादोदकं हरेः ।। ४२ ।।

पुस्तकं च गुरुं चैव पूजयित्वोपचारतः ।।

ब्रूयाद्वा शृणुयाद्वापि श्रीमद्भागवतं मुदा ।। ४३ ।।

पयसा वा हविष्येण मौनं भोजनमाचरेत् ।।

ब्रह्मचर्य्यमधःसुप्तिं क्रोधलोभादिवर्ज्जनम् ।। ४४ ।।

कथान्ते कीर्तनं नित्यं समाप्तौ जागरं चरेत् ।।

ब्राह्मणान्भोजयित्वा तु दक्षिणाभिः प्रतोषयेत् ।। ४५ ।।

गुरवे वस्त्रभूषादि दत्त्वा गां च समर्पयेत् ।।

एवं कृते विधाने तु लभते वाञ्छितं फलम् ।। ४६ ।।

दारागारसुतान्राज्यं धनादि च यदीप्सितम् ।।

परन्तु शोभते नात्र सकामत्वं विडम्बनम् ।। ४७ ।।

कृष्णप्राप्तिकरं शश्वत्प्रेमानन्दफलप्रदम् ।।

श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ।। ४८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये चतुर्थोऽध्यायः ।। ४ ।।

इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे श्रीभागवतमहापुराणमाहात्म्यं समाप्तम् ।। २-६।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०१

https://sa.wikisource.org/s/h7z
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। अथ वैशाखमासमाहात्म्य प्रारंभः ।। ।।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।। १ ।।

।। सूत उवाच ।। ।।

भूयोऽप्यंगभुवं राजा ब्रह्मणः परमेष्ठिनः ।।

पुण्यं माधवमाहात्म्यं नारदं पर्यपृच्छत ।। १ ।। ।।

।। अंवरीष उवाच ।। ।।

सर्वेषामपि मासानां त्वत्तो माहात्म्यमंजसा ।।

श्रुतं मया पुरा ब्रह्मन्यदा चोक्तं तदा त्वया ।। २ ।।

वैशाखः प्रवरो मासो मासेष्वेतेषु निश्चितम् ।।

इति तस्माद्विस्तरेण माहात्म्यं माधवस्य च ।। ३ ।।

श्रोतुं कौतूहलं ब्रह्मन्कथं विष्णुप्रियो ह्यसौ ।।

के च विष्णुप्रिया धर्मा मासे माधववल्लभे ।। ४ ।।

तत्राप्यस्य तु कर्तव्याः के धर्मा विष्णुवल्लभाः ।।

किं दानं किं फलं तस्य कमुद्दिश्याऽऽचरेदिमान् ।। ।। ५ ।।

कैर्द्रव्यैः पूजनीयोऽसौ माधवो माधवागमे ।।

एतन्नारद विस्तार्य मह्यं श्रद्धावते वद ।। ६ ।।

।। श्रीनारद उवाच ।। ।।

मया पृष्टः पुरा ब्रह्मा मासधर्मान्पुरातनान् ।।

व्याजहार पुरा प्रोक्तं यच्छ्रियै परमात्मना ।। ७ ।।

ततो मासा विशिष्योक्ताः कार्तिको माघ एव च ।।

माधवस्तेषु वैशाखं मासानामुत्तमं व्यधात् ।। ८ ।।

मातेव सर्वजीवानां सदैवेष्ट प्रदायकः ।।

दानयज्ञव्रतस्नानैः सर्वपापविनाशनः ।। ९ ।।

धर्म यज्ञक्रियासारस्तपःसारः सुरार्चितः ।।

विद्यानां वेदविद्येव मंत्राणां प्रणवो यथा ।। 2.7.1.१० ।।

भूरुहाणां सुरतरुर्धेनूनां कामधेनुवत् ।।

शेषवत्सर्वनागानां पक्षिणां गरुडो यथा ।। ११ ।।

देवानां तु यथा विष्णुर्वर्णानां ब्राह्मणो यथा ।।

प्राणवत्प्रियवस्तूनां भार्येव सुहृदां यथा ।। १२ ।।

आपगानां यथा गंगा तेजसां तु रविर्यथा ।।

आयुधानां यथा चक्रं धातूनां कांचनं यथा ।। १३ ।।

वैष्णवानां यथा रुद्रो रत्नानां कौस्तुभो यथा ।।

मासानां धर्महेतूनां वैशाखश्चोत्तमस्तथा ।। १४ ।।

नानेन सदृशो लोके विष्णुप्रीतिविधायकः ।।

वैशाखस्नाननिरते मेषे प्रागर्यमोदयात् ।। १५ ।।

लक्ष्मीसहायो भगवान्प्रीतिं तस्मिन्करोत्यलम् ।।

जंतूनां प्रीणनं यद्वदन्नेनैव हि जायते ।। १६ ।।

तद्वद्वैशाखस्नानेन विष्णुः प्रीणात्यसंशयम् ।।

वैशाखस्नाननिरताञ्जनान्दृष्ट्वाऽनुमोदते ।। १७ ।।

तावतापि विमुक्तोऽघैर्विष्णुलोके महीयते ।।

सकृत्स्नात्वा मेषसंस्थे सूर्ये प्रातः कृताह्निकः ।। ।। १८ ।।

महापापैर्विमुक्तोऽसौ विष्णोः सायुज्यमाप्नुयात् ।।

स्नानार्थं मासि वैशाखे पादमेकं चरेद्यदि ।। १९ ।।

सोऽश्वमेधायुतानां च फलमाप्नोत्यसंशयम् ।।

अथवा कूटचित्तस्तु कुर्यात्संकल्पमात्रकम् ।। 2.7.1.२० ।।

सोऽपि क्रतुशतं पुण्यं लभेदेव न संशयः ।।

यो गच्छेद्धनुरायामं स्नातुं मेषगते रवौ ।। २१ ।।

सर्वबंधविनिर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ।।

त्रैलोक्ये यानि तीर्थानि ब्रह्मांडांतर्गतानि च ।। २२ ।।

तानि सर्वाणि राजेन्द्र संति बाह्येऽल्पके जले ।।

तावल्लिखितपापानि गर्जंति यमशासने ।। २३ ।।

यावन्न कुरुते जंतुर्वैशाखे स्नानमंभसि ।।

तीर्थादिदेवताः सर्वा वैशाखे मासि भूमिप ।। २४ ।।

बहिर्जलं समाश्रित्य सदा सन्निहिता नृप ।।

सूर्योदयं समारभ्य यावत्षड्घटिकावधि ।। २५ ।।

तिष्ठंति चाऽऽज्ञया विष्णोर्नराणां हितकाम्यया ।।

तावन्नागच्छतां पुंसां शापं दत्वा सुदारुणम् ।।

स्वस्थानं यांति राजेन्द्र तस्मात्स्नानं समाचरेत् ।। ।। २६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे वैशाखमास प्रशंसापूर्वक वैशाखस्नानमाहात्म्यवर्णनं नाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h80
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। ।। नारद उवाच ।। ।।

न माधवसमो मासो न कृतेन युगं समम् ।।

न च वेदसमं शास्त्रं न तीर्थं गंगया समम् ।। १ ।।

न जलेन समं दानं न सुखं भार्यया समम् ।।

न कृषेस्तु समं वित्तं न लाभो जीवितात्परः ।। २ ।।

न तपोऽनशनात्तुल्यं न दानात्परमं सुखम् ।।

न धर्मस्तु दयातुल्यो न ज्योतिश्चक्षुषा समम्।। ३ ।।

न तृप्तिरशनात्तुल्या न वाणिज्यं कृषेः समम् ।।

न धर्मेण समं मित्रं न सत्येन समं यशः ।। ४ ।।

नारोग्यसममुत्थानं न त्राता केशवात्परः ।।

न माधवसमं लोके पवित्रं कवयो विदुः ।। ५ ।।

माधवः परमो मासः शेषशायिप्रियः सदा ।।

अव्रतेन क्षिपेद्यस्तु मासं माधववल्लभम् ।। ६ ।।

तिर्यग्योनिं स यात्याशु सर्वधर्मबहिष्कृतः ।।

अव्रतेन गतो येषां माधवो मर्त्यधर्मिणाम् ।। ७ ।।

इष्टापूर्ते वृथा तेषां धर्मोधर्मभृतां वरः ।।

प्रवृत्तानां तु भक्ष्याणां माधवेऽनियमे कृते ।। ८ ।।

अवश्यं विष्णुसायुज्यं प्राप्नोत्येव न संशयः ।।

संतीह बहुवित्तानि व्रतानि विविधानि च ।। ९ ।।

देहाऽऽयासकराण्येव पुनर्जन्मप्रदानि च ।।

वैशाखस्नानमात्रेण न पुनर्जायते भुवि ।। 2.7.2.१० ।।

सर्व दानेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।।

तत्फलं समवाप्नोति माधवे जलदानतः ।। ११ ।।

जलदानासमर्थेन परस्यापि प्रबोधनम् ।।

कर्तव्यं भूतिकामेन सर्वदानाधिकं हितम् ।। १२ ।।

एकतः सर्वदानानि जलदानं हि चैकतः ।।

तुलामारोपितं पूर्वं जलदानं विशिष्यते ।। १३ ।।

मार्गेऽध्वगानां यो मर्त्यः प्रपादानं करोति हि।।

स कोटिकुलमुद्धृत्य विष्णुलोके महीयते।। १४।।

देवानां च पितॄणां च ऋषीणां राजसत्तम।।

अत्यंत प्रीतिदं सत्यं प्रपादानं न संशयः।। १५।।

प्रपादानेन संतुष्टा येनाऽध्वश्रमकर्षिताः।।

तोषितास्तेन देवाश्च ब्रह्मविष्णुशिवादय ।।१६ ।।

सलिलं सलिलेच्छूनां छत्रं छायामपीच्छताम् ।।

व्यजनं व्यजनेच्छूना वैशाखे मासि भूमिप ।। १७ ।।

जलं छत्रं च व्यजनं दानं येषां विशिष्यते ।।

माधवे मासि संप्राप्ते ब्राह्मणाय कुटुम्बिने ।। १८ ।।

अदत्त्वोदककुम्भं च चातको जायते भुवि ।। १९ ।।

यो दद्याच्छीतलं तोयं तृषार्ताय महात्मने ।।

तावन्मात्रेण राजेंद्र राजसूयायुतं लभेत् ।। 2.7.2.२० ।।

घर्मश्रमार्तविप्राय वीजयेद्व्यजनेन यः ।।

तावन्मात्रेण निष्पापो विहगाधिपतिर्भवेत ।। २१ ।।

अदत्त्वा व्यजनं भूप वैशाखे तु द्विजातये ।।

वातरोगशताकीर्णो नरकानेव विंदति ।। २२ ।।

यो वीजयेत्पटेनाऽपि पथि श्रांतं द्विजोत्तमम् ।।

तावताथ विमुक्तोऽसौ विष्णुसायुज्यमाप्नुयात् ।।२३।।।।

यास्तालव्यजनं वाऽपि दत्त्वा शुद्धेन चेतसा।।

विधूय सर्वपापानि ब्रह्मलोकं स गच्छति।। २४।।

सद्यः श्रमहरं पुण्यं न दद्याद्व्यजनं नरः।।

नारकीं यातनां भुक्त्वा कश्मलो जायते भुवि।। २५।।

आध्यात्मिकादिदुःखानां शांतये मनुजेश्वर ।।

छत्रं दद्यात्प्रयत्नेन वैशाखे मासि वासकृत् ।। २६ ।।

अच्छत्रदो नरो यस्तु वैशाखे माधवप्रिये।।

छायाहीनो महाक्रूरः पिशाचो भुवि जायते ।। २७ ।।

यो दद्यात्पादुके दिव्ये माधवे माधवप्रिये ।।

यमदूतौ तिरस्कृत्य विष्णुलोकं स गच्छति ।। २८ ।।

पादत्राणं तु यो दद्याद्वैशाखे माधवागमे ।।

न तस्य नारको लोको न क्लेशा ऐहिकाश्च ये ।।२९।।

पादुके याचमानाय यो दद्याद्ब्राह्मणाय च ।।

स भूपालो भवेद्भूमौ कोटिजन्मस्वसंशयम्।।2.7.2.३०।।

अनाथमंडपं मार्गे श्रमहारि करोति यः ।।

तस्य पुण्यफलं वक्तुं ब्रह्मणाऽपि न शक्यते ।।३१।।

मध्याह्ने ब्राह्मणं प्राप्तमतिथिं भोजयेद्यदि ।।

न तस्य फलविश्रांतिर्ब्रह्मणाऽपि निरूपिता ।। ३२ ।।

सद्यः स्वाप्यायनं नृणामन्नदानं नराधिप ।।

तस्मान्नान्नेन सदृशं दानं लोकेषु विद्यते । ३३ ।।

मार्गश्रांताय विप्राय प्रश्रयं प्रददाति यः ।।

तस्य पुण्यफलं वक्तुं ब्रह्मणाऽपि न शक्यते ।। ।। ३४ ।।

दारापत्यगृहादीनि वासोऽलंकारभूषणम् ।।

असह्यं नाश्नतः पुंसः सह्यं भुक्तवतो ध्रुवम् ।। ३५ ।।

तस्मादन्नसमं दानं न भूतं न भविष्यति ।।

वैशाखे येन चादत्तं मार्गश्रांते च भूसुरे।।३६।।

स पिशाचो भवेद्भूमौ स्वमांसान्येव खादति ।।

यथाविभूति दातव्यं तस्मादन्नं द्विजातये ।। ३७ ।।

अन्नदो मातृपित्रादीन्विस्मारयति भूमिप ।।

तस्मादन्नं प्रशंसंति लोकास्त्रैलोक्यवर्तिनः ।। ३८ ।।

मातरः पितरश्चापि केवलं जन्महेतवः ।।

अन्नदं पितरं लोके वदन्ति च मनीषिणः ।।३९।।

अन्नदे सर्वतीर्थानि अन्नदे सर्वदेवताः ।।

अन्नदे सर्वधर्माश्च तिष्ठंत्यरिधराजय ।।2.7.2.४०।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे दाननिरूपणंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमाससमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h06



।। नारद उवाच ।। ।।

यो मर्त्यो द्विजवर्याय पर्यंकं तु ददाति हि ।।

यत्र स्वस्थः सुखं शेते शीतानिलनिषेवितः ।। १ ।।

धर्मसाधनभूते हि देहे नैरुज्यमाप्नुते ।।

तं दत्त्वा सकलं तापं निरस्य गतकल्मषः ।। २ ।।

अखण्डपदवीं याति योगिनामपि दुर्लभाम् ।।

वैशाखे घर्मतप्तानां श्रान्तानां तु द्विजन्मनाम् ।।३।।

दत्त्वा श्रमापहं दिव्यं पर्यंकं मनुजेश्वर ।।

न जातु सीदते लोके जन्ममृत्युजरादिभिः।।४।।

गृहीत्वा ब्राह्मणो यत्र शेते चाजीवमास्थितः ।।

आसीने सकलं पापं ज्ञानतोऽज्ञानतः कृतम् ।। ५ ।।

विलयं याति राजेंद्र कर्पूर इव चाग्निना ।।

शयने ब्रह्मनिर्वाणं स नरो याति निश्चितम् ।। ६ ।।

यो दद्यात्कशिपुं मासे वैशाखे स्नानवल्लभे ।।

सर्वभोगसमायुक्तस्तस्मिन्नेव हि जन्मनि ।। ७ ।।

सान्वयो वर्तते नूनं रोगादिभिरनाहतः ।।

आयुष्यं परमारोग्यं यशो धैर्यं च विंदति ।। ८ ।।

नाधार्मिकः कुले तस्य जायते शतपौरुषम् ।।

भुक्त्वा तु सकलान्भोगांस्ततः पञ्चत्वमेष्यति ।। ९ ।।

निर्धूताखिलपापस्तु ब्रह्मनिर्वाणमृच्छति ।। श्रो

त्रियाय द्विजेंद्राय यो दद्यादुपबर्हणम् ।। 2.7.3.१० ।।

सुखं निद्रा विना येन न नृणां जायते क्वचित् ।।

सर्वेषामाश्रयो भूत्वा भुवि साम्राज्यमश्नुते ।। ११ ।।

पुनः सुखी पुनर्भोगी पुनर्धर्मपरायणः ।।

आसप्तजन्म राजेंद्र जायते सर्वतो जयी ।। १२ ।।

पश्चात्सप्तकुलैर्युक्तो ब्रह्मभूयाय कल्पते ।।

तार्णं कटं तु यो दद्यात्कटमन्यदथापि वा ।। १३ ।।

तत्र शेते स्वयं विष्णुर्यत्रस्थः परमेश्वरः ।।

यथा जलगता चोर्णा न जलैर्भिद्यते क्वचित् ।। १४ ।।

तथा संसारगो जन्तुः संसारे न च बध्यते ।।

आसने शयने सक्तः कटदः सर्वतः सुखी ।। १५ ।।

प्रश्रये शयनार्थाय यो दद्यात्कटकंबलम् ।।

तावन्मात्रेण मुक्तः स्यान्नात्र कार्या विचारणा ।। १६ ।।

निद्रया हीयते दुःखं निद्रया हीयते श्रमः ।।

सा निद्रा कटसंस्थस्य सुखं संजायते धुवम् ।। १७ ।।

यो दयात्कंबलं राजन्वैशाखे माधवाऽऽगमे ।।

अपमृत्योः कालमृत्योर्मुक्तो जीवति वै शतम् ।। १८ ।।

दद्याद्वस्त्रं सूक्ष्मतरं द्विजेंद्रे घर्मकर्शिते ।।

पूर्णमायुः समाप्नोति परत्र च परां गतिम् ।। १९ ।।

अतस्तापहरं दिव्यं कर्पूरं तु द्विजातये ।।

दत्त्वा मोक्षमवाप्नोति दुःखशांतिं च विंदति ।। 2.7.3.२० ।।

कुसुमानि च यो दद्यात्कुकुमं च द्विजातये ।।

सार्वभौमो भवेद्राजा सर्वलोकवशंकरः ।। २१ ।।

पुत्रपौत्रादिभोगांश्च भुक्त्वा मोक्षमवाप्नुयात् ।।

त्वगस्थिगतसंतापं सद्यो हरति चन्दनम् ।। २२ ।।

तापत्रयविनिर्मुक्तस्तद्दत्त्वा मोक्षमाप्नुयात् ।।

औशीरं चाषकं कौशं यो दद्याज्जलवासितम् ।। २३ ।।

सर्वभोगेषु राजेंद्र स तु देवसहायवान् ।।

पापहानिं दुःखहानिं प्राप्य निर्वृतिमाप्नुयात् ।। २४ ।।

गोरोचं मृगनाभिं च दद्याद्वैशाखधर्मवित् ।।

तापत्रयविनिर्मुक्तः परं निर्वाणमृच्छति ।। २५ ।।

तांबूलं च सकर्पूरं यो दद्यान्मेषगे रवौ ।।

सार्वभौमसुखं भुक्त्वा परं निर्वाणमृच्छति ।। २६ ।।

शतपत्रीं च यूथीं च मेषमासे ददन्नरः ।।

स सार्वभौमो भवति पश्चान्मोक्षं च विंदति ।।२७।।

केतकीं मल्लिकां वाऽपि यो दद्यान्माधवाऽऽगमे ।।

स तु मोक्षमवाप्नोति मधुशासनशासनात् ।। २८ ।।

पूगीफलं तु यो दद्यात्सुगन्धं तु द्विजातये ।।

नारिकेलफलं राजंस्तस्य पुण्यफलं शृणु ।। ।। २९ ।।

सप्त जन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।।

पश्चात्सप्तकुलैर्युक्तो विष्णुलोकं स गच्छति ।। 2.7.3.३० ।।

विश्राममण्डपं यस्तु कृत्वा दद्याद्द्विजन्मने ।।

तस्य पुण्यफलं वक्तुं नाहं शक्नोमि भूपते ।। ३१ ।।

सुच्छायामण्डपं यस्तु सिकताऽऽकीर्णमञ्जसा ।।

सप्रपं कारयेद्यस्तु स तु लोकाधिपो भवेत् ।। ३२ ।।

मार्गोद्यानं तडागं वा कूपं मण्डपमेव च।।

यः करोति स धर्मात्मा तस्य पुत्रैस्तु किं फलम् ।। ३३ ।।

कूपस्तडागमुद्यानं मण्डपं च प्रपा तथा ।।

सद्धर्मकरणं पुत्रः संतानं सप्तधोच्यते ।। ३४ ।।

एतेष्वन्यतमाभावे नोर्ध्वं गच्छंति मानवाः ।।

सच्छास्त्र श्रवणं तीर्थयात्रा सजनसंगतिः ।। ३५ ।।

जलदानं चान्नदानमश्वत्थारोपणं तथा ।।

पुत्रश्चेति च संतानं सप्तेमेऽतिविदो विदुः ।। ३६ ।।

नासंततिर्लभेल्लोकान्कृत्वा धर्मशतान्यपि ।।

तस्मात्संतानमन्विच्छेत्संतानेष्वेकतो व्रजेत् ।। ३७ ।।

पशूनां पक्षिणां चैव मृगाणां चैव भूरुहाम् ।।

नोर्ध्वलोकं सुखं याति मनुष्याणां तु का कथा ।। ३८ ।।

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।।

कपूरागुरुसंयुक्तं ददत्तांबूलमुत्तमम् ।। ३९ ।।

शारीरैः सकलैः पापैर्मुच्यते नात्र संशयः ।।

तांबूलदो यशो धैर्यं श्रियमाप्नोति निश्चितम् ।। 2.7.3.४० ।।

रोगी दत्त्वा विरोगः स्यादरोगी मोक्षमाप्नुयात् ।।

वैशाखे मासि यो दद्यात्तक्रं तापविनाशनम् ।। ४१ ।।

विद्यावान्धनवान्भूमौ जायते नात्र संशयः ।।

न तक्रसदृशं दानं घर्मकालेषु विद्यते ।। ४२ ।।

तस्मात्तक्रं प्रदातव्यमध्वश्रांतद्विजातये ।।

जंबीरसुरसोपेतं लसल्लवणमिश्रितम्।।४३।।

यस्तक्रमरुचिघ्नं तु दत्त्वा मोक्षमवाप्नुयात् ।।

यो दद्याद्दधिखंडं तु वैशाखे घर्मशांतये ।। ४४ ।।

तस्य पुण्यफलं वक्तुं नाहं शक्नोमि भूमिप ।।

यो दद्यात्तंडुलान्दिव्यान्मधुसूदनवल्लभे ।। ४५ ।।

स लभेत्पूर्णमायुष्यं सर्वयज्ञफलं लभेत् ।।

यो घृतं तेजसो रूपं गव्यं दद्याद्द्विजातये ।।

सोऽश्वमेधफलं प्राप्य मोदते विष्णुमंदिरे ।। ४६ ।।

उर्वारुगुडसंमिश्रं वैशाखे मेषगे रवौ ।।

सर्वपापविनिर्मुक्तः श्वेतद्वीपे वसेद्ध्रुवम् ।। ४७ ।।

यश्चेक्षुदंडं सायाह्ने दिवा तापोपशान्तये ।।

ब्राह्मणाय च यो दद्यात्तस्य पुण्यमनंतकम् ।। ४८ ।।

वैशाखे पानकं दत्त्वा सायाह्ने श्रमशान्तये ।।

सर्वपापविनिर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ।।४९।।

सफलं पानकं मेषमासे सायं द्विजातये ।।

दद्यात्तेन पितृणां तु सुधापानं न संशयः।।2.7.3.५०।।

वैशाखे पानकं चूतसुपक्वफलसंयुतम् ।।

तस्य सर्वाणि पापानि विनाशं यांति निश्चितम् ।। ५१ ।।

यो दद्याच्चैत्रदर्शे तु कुम्भं पूर्णं तु पानकैः ।।

गयाश्राद्धशतं तेन कृतमेव न संशयः ।। ५२ ।।

कस्तूरी कर्पुरोपेतं मल्लिकोशीरसंयुतम् ।।

कलशं पानकैः पूर्णं चैत्रदर्शे तु मानवः ।।

दद्यात्पितॄन्समुद्दिश्य स षण्णवतिदो भवेत् ।। ५३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे दाननिरूपणंनाम तृतीयोऽध्यायः ।। ३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/h81
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। नारद उवाच ।। ।।

तैलाभ्यङ्गं दिवास्वापं तथा वै कांस्य भोजनम् ।।

खट्वा निद्रां गृहे स्नानं निषिद्धस्य च भक्षणम् ।। १ ।।

वैशाखे वर्जयेदष्टौ द्विभुऽक्तं नक्तभोजनम्।।

पद्मपत्रे तु यो भुंक्ते वैशाखे व्रतसंस्थितः ।। २ ।।

स तु पापविनिर्मुक्तो विष्णुलोकं च गच्छति ।।

वैशाखे मासि मध्याह्ने श्रौतानां तु द्विजन्मनाम् ।।

पादावनेजनं कुर्यात्तद्व्रतं सुव्रतोत्तमम् ।। ३ ।।

अध्वश्रान्तं द्विजं यस्तु मध्याह्ने स्वगृहागतम् ।।

उपवेश्यासने रम्ये कृत्वा पादावनेजनम् ।। ५ ।।

धृत्वा शिरसि ताश्चापो विध्वस्ताखिलबंधनः ।।

गंगादिसर्वतीर्थेषु स्नातो भवति निश्चितम्।। ६।।

अस्नायी वाऽप्यपत्राशी वैशाखं तु नयेद्यदि ।।

रासभी योनिमासाद्य पश्चादश्वतरो भवेत् ।। ७ ।।

दृढाङ्गो रोगहीनश्च तथा स्वस्थोऽपि मानवः ।।

वैशाखे तु गृहे स्नात्वा चांडालीं योनिमाप्नुयात् ।। ८ ।।

वैशाखे मासि राजेन्द्र मेषसंस्थे दिवाकरे ।।

न करोति बहिःस्नानं श्वानयोनिशतं व्रजेत् ।। ९ ।।

अस्नात्वा चाप्यदत्त्वा च वैशाखो येन नीयते ।।

स पिशाचो भवेन्नूनमवैशाखादथो व्रजेत् ।। 2.7.4.१० ।।

यो न दद्याज्जलं चान्नं वैशाखे लोभमानसः ।।

पापहानिं दुःखहानिं नैवाप्नोति न संशयः ।। ११ ।।

नदीस्नानं तु यः कुर्याद्वैशाखे विष्णुतत्परः ।।

जन्मत्रयार्जितात्पापान्मुच्यते नात्र संशयः ।। १२ ।।

समुद्रगनदीस्नानं कुर्यात्प्रातर्भगोदये ।।
सप्तजन्मार्जितैः पापैस्तत्क्षणादेव मुच्यते ।। १३ ।।
कुर्यादुषसि यः स्नानं सप्तगङ्गासु मानवः ।।
कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ।। १४ ।।
जाह्नवी वृद्धगङ्गा च कालिंदी च सरस्वती ।।
कावेरी नर्मदा वेणी सप्तगंगाः प्रकीर्तिताः ।। १५ ।।
देवखातेषु यः कुर्यात्प्रातर्वैशाखमज्जनम् ।।
जन्मारभ्य कृतात्पापान्मुच्यते नात्र संशयः ।। १६ ।।
वैशाखे मासि संप्राप्ते यो वापीष्ववगाहनम् ।।
प्रातः कुर्यान्महाराज महापातकनाशनम् ।। १७ ।।
अपि गोष्पदमात्रेषु बहिःस्थेषु जलेषु च ।।
तिष्ठंति सरितः सर्वा गंगाद्या इति निश्चयः ।।
इति जानन्समाप्नोति सर्वतीर्थाधिकं फलम् ।। १८ ।।
क्षीरं रसाधिकं क्षीरादधिकं दधि भूमिप ।।
दध्नोऽधिकं घृतं यद्वदूर्जो मासोऽधिकस्तथा ।। १९ ।।
कार्तिकादधिको माघो माघाद्वैशाख उत्तमः ।।
तस्मिन्मासे कृतो धर्मो वर्द्धते वटबीजवत् ।। 2.7.4.२० ।।
आढ्यो वाऽतिदरिद्रो वा परतंत्रोऽथ वा नरः ।।
यद्वस्तु लभते तेन तद्दातव्यं द्विजातये ।। २१ ।।
कन्दमूलफलं शाकं लवणं गुडमेव च ।।
कोलं पत्रं जलं तक्रमानंत्यायोपकल्पते ।। ।। २२ ।।
नादत्तं लभते क्वापि ब्रह्माद्यैस्त्रिदशैरपि ।। २३ ।।
दानेन हीनो हि भवेदकिंचनो निष्किञ्चनत्वाच्च करोति पापम् ।।
पापादवश्यं नरकं प्रयाति दातव्यमस्मात्सुखमिच्छता तदा ।। २४ ।।
यथा गृहं सर्वगुणोपपन्नं परिच्छदैर्हीनमशोभनं तथा ।।
मासेषु धर्मः सकलेष्वनुष्ठितो वैशाखहीनस्तु वृथैव याति ।। २५ ।।
यथैव कन्या सकलैश्च लक्षणैर्युक्ताऽपि जीवत्पतिलक्षणा न हि ।।
क्रियाऽपि सांगा सकलाऽपि राजन्वैशाखहीना तु वृथैव तां विदुः ।। २६ ।।

दयाविहीनास्तु यथा गुणा वृथा वैशाखधर्मेण विना तथा क्रियाः ।।
शाकं तु यद्वल्लवणेन हीनं न रोचते सर्वगुणोपपन्नम् ।। २७ ।।
वैशाखहीनं तु तथैव पुण्यं न साधुसेव्यं न फलाप्तिहेतुः ।।
यद्वन्न भूषासहिताऽपि शोभते वस्त्रेण हीना ललना सुरूपा ।।
क्रियाकलापः सुकृतोऽपि पुंभिर्न भासते तन्मधुमासहीनम् ।। २८ ।।
तस्मात्सर्वप्रयत्नेन येन केनाऽपि जन्तुना ।।
धर्मो वैशाखमासे तु कर्तव्य इति निश्चयः ।। २९ ।।
मधुसूदनमुद्दिश्य मेषसंस्थे दिवाकरे ।।
प्रातः स्नात्वाऽर्चयद्विष्णुमन्यथा नरकं व्रजेत् ।। 2.7.4.३० ।।
कश्चिन्महीरथो राजा कामासक्तो जितेन्द्रियः ।।
वैशाखस्नानयोगेन वैकुण्ठं गतवान्स्वयम् ।। ३१ ।।
वैशाखः सफलो मासो मधुसूदनदैवतः ।।
तीर्थयात्रातपोयज्ञदानहोमफलाधिकः ।। ३२ ।।
।। ।। प्रार्थनामंत्रः ।। ।।
मधुसूदन देवेश वैशाखे मेषगे रवौ ।।
प्रातः स्नानं करिष्यामि निर्विघ्नं कुरु माधव ।।३३।।
।। अर्घ्यमंत्राः ।। ।।
वैशाखे मेषगे भानौ प्रातःस्नानपरायणः ।।
अर्घ्यं तेऽहं प्रदास्यामि गृहाण मधुसूदन ।। ३४ ।।
गंगाद्याः सरितः सर्वास्तीर्थानि च ह्रदाश्च ये ।।
प्रगृह्णीत मया दत्तमर्घ्यं सम्यक्प्रसीदथ ।। ३५ ।।
ऋषभः पापिनां शास्ता त्वं यमः समदर्शनः ।।
गृहाणार्घ्यं मया दत्तं यथोक्तफलदो भव ।। ३६ ।।
इति चार्घ्यं समर्प्याथ पश्चात्स्नानं समाचरेत् ।।
वाससी परिधायाथ कृत्वा कर्माणि सर्वशः ।। ३७ ।।
मधुसूदनमभ्यर्च्य प्रसूनैर्माधवोद्भवैः ।।
श्रुत्वा विष्णुकथां दिव्यामेतन्मासप्रशंसिनीम् ।। ३८ ।।
कोटिजन्मार्जितात्पापान्मुक्तो मोक्षमवाप्नुयात् ।। ३९ ।।

न जातु खिद्यते भूमौ न स्वर्गे न रसातले ।।

न गर्भे जायते क्वापि न भूयः स्तनपो भवेत् ।। 2.7.4.४० ।।

वैशाखे कांस्यभोजी यस्तथा चाश्रुतसत्कथः ।।

न स्नातो नापि दाता च नरकानेव गच्छति ।। ४१ ।।

ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथंचन ।।

वैशाखे येन न स्नातं तत्पापं नैव गच्छति ।। ४२ ।।

स्वाधीनेन स्वकायेन जले स्वातंत्र्य वर्तिनि ।।

स्वाधीनजिह्वयोच्चार्यं हरिरित्यक्षरद्वयम् ।। ४३ ।।

न कुर्याद्यदि वैशाखे प्रातःस्नानं नराधमः ।।

जीवन्नेव स पंचत्वमागतो नात्र संशयः ।। ४४ ।।

येन केनाप्युपायेन माधवे मधुसूदनम्।।

नार्चयेद्यदि मूढात्मा शौकरीं योनिमाप्नुयात् ।। ४५ ।।

योऽर्चयेत्तुलसीपत्रैर्वैशाखे मधुसूदनम् ।।

नृपो भूत्वा सार्वभौमः कोटिजन्मसु भोगवान् ।।

पश्चात्कोटिकुलैर्युक्तो विष्णोः सायुज्यमाप्नुयात्।। ।। ४६ ।।

विविधैर्भक्तिमार्गैश्च विष्णुं सेवेत यौ व्रतैः ।।

सगुणं निर्गुणं वाऽपि नित्यं ध्यायेदनन्यधीः ।। ४७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे वैशाखधर्मप्रशंसा नाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०५

https://sa.wikisource.org/s/h82



।। ।। अम्बरीष उवाच ।। ।।

वैशाखः सर्वधर्मेभ्यस्तपोधर्मेभ्य एव च ।।

स कथं सर्वमासेभ्यो दानेभ्योऽप्यधिकोऽभवत् ।। १ ।।

।। नारद उवाच ।। ।।

तद्वक्ष्यामि महाप्राज्ञ शृणु चैकमना भव ।।

कल्पांते देवराड्विष्णुः शेषशायी महाप्रभुः ।। २ ।।

कुक्षिस्थ लोकसङ्घोऽयं स शेते प्रलयार्णवे ।।

अनेको ह्येकतां प्राप्य भूतिभिर्योगमायया ।। ३ ।।

निमेषस्यावसाने तु श्रुतिभिर्बोधितस्ततः ।।

कुक्षिस्थजीवसंघानां रक्षां चक्रे दयानिधिः ।। ४ ।।

तत्तत्कर्मफलप्राप्त्यै सृष्टिं स्रष्टुं मनो दधे ।।

तस्य नाभेरभूत्पद्म सौवर्णं भुवनाश्रयम् ।। ५ ।।

ब्रह्माणं जनयामास वैराजं पुरुषाह्वयम् ।।

तस्मिन्ससर्ज भगवान्भुवनानि चतुर्दश ।। ६ ।।

भिन्नकर्माशयान्प्राणिसङ्घांश्च विविधान्बहून् ।।

त्रिगुणान्प्रकृतिं लोके मर्यादाश्चाधिपांस्तथा ।। ७ ।।

वर्णाश्रमविभागांश्च धर्मक्लृप्तिं च सोऽकरोत् ।।

वेदैश्चतुर्भिस्तत्रैश्च सहितान्स्मृतिभिस्तथा ।। ८ ।।

पुराणैरितिहासैश्च स्वाज्ञारूपैर्महेश्वरः ।।

ऋषीन्प्रवर्तकांश्चक्रे धर्मगुप्त्यै महाप्रभुः ।। ९ ।।

तैः प्रवर्तितधर्मास्तु वर्णाश्रमविभागजाः ।।

प्रजाः श्रद्दधिरे सर्वाः स्वोचितान्विष्णुतोषदान् ।। 2.7.5.१० ।।

तांस्तु प्रवर्तमानांस्तु स्वाश्रमान्द्रष्टुमीश्वरः ।।

हृदिस्थोऽप्यव्ययः साक्षाद्विभीषार्थं परीक्षया ।। ११ ।।

अनूनान्कुशलान्यत्र धर्मान्कुर्वंति वै प्रजाः ।।
स कालः को भवेद्विद्वानिति सर्चिंतयत्प्रभुः ।। १२ ।।
वर्षाकालो मया सृष्टः सीदंत्यस्ता इमाः प्रजाः ।।
तत्रानूनान्न कुर्वंति धर्मान्पंकाद्युपद्रुताः ।।१३।।
तान्दृष्ट्वा कोप एव स्यात्तेषु तुष्टिर्न मे भवेत् ।।
मयेक्षिता न सीदंतु तस्मात्तानवलोकये ।।१४।।
शरद्यपि तथा पूर्तिः कर्षणान्नैव जायते ।।
केचित्पक्वफलासक्ताः केचिद्वृष्टिभिरर्दिताः ।।१५।।
केचिच्छीतार्दिताश्चैव तान्दृष्ट्वा रोष एव मे ।।
वैगुण्यं पश्यतश्चैव न मे तोषोऽभिजायते ।। १६ ।।
उत्थापनं तु नेच्छंति प्रातर्हेमंत आगते ।।
कोपो मेऽनुत्थितान्दृष्ट्वा प्रातः सूर्योदये सति ।। ।। १७ ।।
शिशिरेऽपि तथैवार्ताः प्रातःकाल इमाः प्रजाः ।।
तथा पक्वफलादानाशक्ता ह्यनिशमंजसा ।। १८ ।।
पुनः शीतार्दिताः प्रातःस्नानार्थमिति चिंतिताः ।।
तेषां तु कर्मलोपः स्यान्नैव पूर्तिः कथंचन ।। १९ ।।
प्रेक्षायाः समयो नाऽयमिति चिंताऽऽकुलो विभुः ।।
वसंत समयं मेने सर्वापत्तिनिवारकम् ।। 2.7.5.२० ।।
स्नाने दाने तथा यागे क्रियायां भोग एव च ।।
नानाधर्मविधाने च ह्यनुकूलस्त्वयं ह्यृतुः ।। २१ ।।
अप्रयासेन लभ्यानि द्रव्याण्यसुभृतां ध्रुवम् ।।
येन केनापि द्रव्येण तुष्टिस्तनुभृतां भवेत् ।। २२ ।।
विष्णोराधारभूतानां तद्द्रव्यं धर्मसाधनम् ।।
वसंते सकलं द्रव्यं प्राणिनां तु सुखावहम् ।। २३ ।।
दानयोग्यं धर्मयोग्यं भोगयोग्यं तु सर्वशः ।।
निर्धनानां तु पङ्वादि विकलानां महात्मनाम्।। २४ ।।
द्रव्याणि च सुलभ्यानि जलादीनि न संशयः ।।
द्रव्यैरेतैः स्वात्महितं धर्मं कुर्वंति मत्प्रियाः ।। २५ ।।

पत्रैः पुष्पैः फलैरन्यैः शाकैश्चापि प्रियोक्तिभिः ।।

स्रक्तांबूलैश्चन्दनाद्यैः पादप्रक्षालनादिभिः ।। २६ ।।

प्रश्रयाद्यैरहो तेषां वरदोऽहमितीरयन् ।।

संचिंत्य भगवान्विष्णुः प्रतस्थे रमया सह।। २७ ।।

वनानि सर्वतः पश्यन्विकसत्कुसुमानि च ।।

हृष्टपुष्टजनाकीर्णं मत्तालिद्विजसेवितम् ।। २८ ।।

आश्रमाणां महार्हाणां वनग्रामनिवासिनाम्।।

प्रांगणादीनि रम्याणि ह्युद्यानानि स्थलानि च ।। २९ ।।

रमायै दर्शयन्विष्णुः सह देवैर्मुनीश्वरैः ।।

सिद्धचारणगन्धर्वकिन्नरोरगराक्षसैः ।। 2.7.5.३० ।।

स्तूयमानोऽभ्यगाद्गेहान्वर्णाश्रमनिवासिनाम् ।।

मीनादिकर्कटांतं वै स तिष्ठन्रमया सुरैः ।। ३१ ।।

सार्द्धं प्रतीक्ष्य पुरुषान्कृताकृत सपर्यया ।।

तत्र धर्मवतां पुंसां ददातीष्टान्मनोरथान् ।। ३२ ।।

मत्तान्न सहते पुंसो हरत्यायुर्धनादिकम् ।।

यदि कुर्वंति वैशाखे सपर्या परमात्मनः ।। ३३ ।।

तत्रापि चलमूर्तीनां साधूनां यत्र वै विभुः ।।

मासेवन्येषु यज्जातं कर्मलोपं सहिष्यति ।। ३४ ।।

यथा देशागतं भूपं दृष्ट्वा जानपदाः प्रजाः ।।

यदि तं चोपतिष्ठन्ति प्रश्रयाद्यैर्महार्हणैः ।। ३५ ।।

तदा करादिकं न्यूनं पूर्णं जानाति पार्थिवः ।।

पुनरप्यधिकं चेष्टं तुष्टो दास्यति निश्चितम् ।। ३६ ।।

तदा त्वकृतपूजानां दण्डं तेषां करोति च ।।

तथा विष्णुः स्वकीयानां वैशाखे माधवागमे ।। ३७ ।।

सपर्यां कुर्वतां पुंसां ददातीष्टान्मनोरथान् ।।

अकुर्वतां तथा पुंसां धनादीनि हरत्यलम् ।। ३८ ।।

धर्मगोप्तुर्महाविष्णोर्देवदेवस्य शार्ङ्गिणः ।।

परीक्षाकाल एवाऽयं तस्मान्मासोत्तमो ह्ययम् ।। ३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदांवरीषसंवादे वैशाखश्रेष्ठत्वनिरूपणं नाम पञ्चमोध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/h83
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। ।। नारद उवाच ।। ।।

वैशाखेऽध्वगतप्तानां तृषार्तानां महीपते ।।

जलदानमकुर्वाणस्तिर्श्ययोनिमवाप्नुयात् ।। १ ।।

अत्रैवोदाहर न्तीममितिहासं पुरातनम् ।।

विप्रस्य गृहगोधायाः संवादं परमाद्भुतम् ।। २ ।।

पुरा चेक्ष्वाकुवंशेऽभूद्धेमांग इति भूमिपः ।।

ब्रह्मण्यश्च वदान्यश्च जितामित्रो जितेन्द्रियः ।। ३ ।।

यावत्यो भूमिकणिका यावन्तो जलबिंदवः ।।

यावन्त्युडूनि गगने तावतीरददात्स गाः ।। ४ ।।

येनेष्टयज्ञदर्भैश्च भूमिर्बर्हिष्मती शुभा ।।

गोभूतिलहिरण्याद्यैस्तोषिता बहवो द्विजाः ।। ५ ।।

तेनादत्तानि दानानि न विद्यन्त इति श्रुतम्।।

तेनादत्तं जलं चैकं सुखलभ्यधिया नृप ।। ६ ।।

बोधितो ब्रह्मपुत्रेण वसिष्ठेन महात्मना ।।

अमौल्यं सर्वतो लभ्यं तद्दाता किं फलं लभेत् ।।७ ।।

दुर्बुद्ध्या हेतुवादैश्च न जलं दत्तवान्द्विजे ।।

अलभ्यदाने पुण्यं स्यादिति वाक्यं सुयुक्तिमत् ।। ८ ।।

स आनर्च द्विजान्व्यङ्गान्दरिद्रान्वृत्तिकर्शितान् ।।

नार्चयच्छ्रोत्रियान्विप्रांस्तत्त्वज्ञान्ब्रह्मवादिनः ।। ९ ।।

प्रख्यातान्पूजयिष्यंति सर्वे लोका महार्हणाः ।।

अनाथानामविद्यानां व्यंगानां च द्विजन्मनाम् ।।2.7.6.१०।।

दरिद्राणां गतिः का वा तस्मात्ते मे दयास्पदम् ।।

इति दुर्धीरपात्रेषु दत्तवान्किमपि स्वयम् ।। ११ ।।

तेन दोषेण महता चातकत्वं त्रिजन्मसु ।।

एकजन्मनि गृध्रत्वं श्वाऽभवत्सप्तजन्मसु ।।१२।।

पश्चान्नृपगृहे जातो भूपोऽयं गृहगोधिका ।।

श्रुतकीर्त्याख्यभूपस्य मिथिलाधिपतेर्नृप ।।१३।।

गृहद्वारप्रतोल्यां च वर्तते कीटकाशना ।।

सप्ताशीतिषु वर्षेषु स्थितं तेन दुरात्मना ।। १४ ।।

विदेहाधिपतेर्गेहे कदाचिदृषिसत्तमः ।।

श्रुतदेव इति ख्यातः श्रौतो मध्याह्न आगतः ।। १५ ।।

तं दृष्ट्वा सहसोत्थाय जातहर्षो नराधिपः ।।

मधुपर्कादिभिः पूज्य तस्य पादावनेजनीः ।। १६ ।।

अपो मूर्ध्ना वहन्क्षिप्रं तदोत्सिक्तैश्च बिंदुभिः ।।

दैवोपदिष्टकालेन प्रोक्षिता गृहगोधिका ।। १७ ।।

सद्यो जातस्मृतिरभूत्स्मृतकर्मादिदुःखिता ।।

त्राहित्राहीति चुक्रोश ब्राह्मणं गृहमागतम् ।। १८ ।।

तिर्यग्जंतुरवं श्रुत्वा ब्राह्मणो विस्मितोऽवदत् ।।

कुतः क्रोशसि गोधे त्वं दशेयं केन कर्मणा ।। १९ ।।

त्वं देवः पुरुषः कश्चिन्नृपो वाऽथ द्विजोऽथ वा ।।

कस्त्वं ब्रूहि महाभाग त्वामद्याहं समुद्धरे ।। 2.7.6.२० ।।

इत्युक्तः स नृपः प्राह श्रुतदेवं महामतिम् ।।

अहमिक्ष्वाकुकुलजो वेदशास्त्रविशारदः ।। २१ ।।

यावत्यो भूमिकणिका यावन्तस्तोयबिंदवः ।।

यावंत्युडूनि गगने तावतीरददं स्म गाः ।। २२ ।।

सर्वे यज्ञा मया चेष्टाः पूर्तान्याचरितानि मे ।।

दानन्यपि च दत्तानि धर्मराजस्त्वनुष्ठितः ।। २३ ।।

तथापि दुर्गतिर्जाता मम चोर्ध्वगतिं विना ।।

त्रिवारं चातकत्वं मे गृध्रत्वं चैकजन्मनि ।। २४ ।।

सप्तजन्मस्वलर्कत्वं प्राप्तं पूर्वं मया द्विज ।।

सिंचताऽनेन भूपेन त्वपः पादावनेजनीः ।। २५ ।।

बिंदवो दूरमुत्क्षिप्तास्तैः सिक्तोऽहं कथंचन ।।

तेन जन्मस्मृतिरभूत्सर्वपाप्मा हतश्च मे ।। २६ ।।

गोधा जन्मानि भाव्यानि ह्यष्टा विंशतिकानि मे ।

दृश्यन्ते दैवसृष्टानि बिभ्ये तैर्जन्मभिर्भृशम् ।। २७ ।।

न कारणं प्रपश्याभि तन्मे विस्तरतो वद ।।

इत्युक्तः स ऋषिः प्राह ज्ञात्वा विज्ञानचक्षुषा ।।२८।।

शृणु भूप प्रवक्ष्यामि तव दुर्योनिकारणम् ।।

न जलं तु त्वया दत्तं वैशाखे माधवप्रिये ।।२९।।

तज्जलं सुलभं मत्वा ह्यमूल्यमिति निश्चितम् ।।

नाध्वगानां द्विजातीनां घर्मकालेऽप्यजानता ।। 2.7.6.३० ।।

तथा पात्रं समुत्सृज्य ह्यपात्रे प्रतिदत्तवान् ।।

ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ।। ३१ ।।

बहुधा वर्णितस्याऽपि सौगन्ध्यादियुतस्य च ।।

कण्टकान्वितवृक्षस्य न कुर्वंति समर्चनम् ।।३२।।

विशिष्टानां पादपानामश्वत्थः सेव्यतां गतः ।।

तुलसीं तु समुत्सृज्य बृहती पूज्यते नु किम्।। ३३ ।।

अनाथत्वं पूज्यतायां न प्रयोजकतामियात् ।।

पंग्वाद्या येऽप्यनाथा हि दयापात्रं हि केवलम् ।। ३४ ।।

तपोनिष्ठा ज्ञाननिष्ठाः श्रुतिशास्त्रविशारदाः ।।

विष्णुरूपाः सदा पूज्या नेतरे तु कदाचन ।। ३५ ।।

तत्रापि ज्ञानिनोऽत्यर्थं विप्रा विष्णोः सदैव हि ।।

ज्ञानिनामपि भूपाल विष्णुरेव सदा प्रियः ।।

तस्माज्ज्ञानी सदा पूज्यः पूज्यात्पूज्यतरः स्मृतः।। ३६ ।।

अवज्ञा साधुवृत्तानामिहाऽमुत्र च दुःखदा ।।

सेवा वै महतां पुंसां पुमर्थानां हि कारणम् ।। ३७ ।।

कोटयोऽप्यन्धजातीनां न पश्यंति यथाऽयथम् ।।

एवं मन्दायुतानां तु संगतिर्नार्थदा भवेत् ।। ३८ ।।

नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।।

ते पुनंत्युरुकालेन दर्शनादेव साधवः ।। ३९ ।।

न साधुसेवनात्क्वापि सीदन्ते तैः सुशिक्षिताः ।।

जन्ममृत्युजराद्यैर्वा सुधयाऽऽप्यायिता यथा ।। 2.7.6.४० ।।

न जलं तु त्वया दत्तं साधवो वा न सेविताः ।।

तेन ते दुर्गतिश्चेयं प्राप्ता चेक्ष्वाकुनंदन ।। ४१ ।।

वैशाखे मत्कृतं पुण्यं तुभ्यं दास्यामि शान्तये ।।

भूतं भव्यं भवद्येन कर्मजातं विजे ष्यसि ।। ४२ ।।

इत्युक्त्वाऽप उपस्पृश्य ददौ पुण्यमनुत्तमम् ।।४३ ।।

यदा दत्तं ब्राह्मणेन स्नानं चैकदिने कृतम् ।।

तेन ध्वस्ताऽखिलाघस्तु त्यक्त्वा तां गृहगोधिकाम् ।। ४४ ।।

दिव्यं विमानमारुह्य दिव्यस्रग्वस्त्रभूषणः ।।

पश्यतामेव भूतानां मैथिलस्य गृहांतरे ।। ४५ ।।

बद्धाञ्जलिपुटो भूत्वा परिक्रम्य प्रणम्य च ।।

अनुज्ञातो ययौ राजा स्तूयमानोऽमरैर्दिवम् ।। ४६ ।।

तत्र भुक्त्वा महाभोगान्वर्षायुतमतन्द्रितः ।।

स एव चेक्ष्वाकुकुले काकुत्स्थोऽभून्महाप्रभुः ।। ४७ ।।

सप्तद्वीपवतीपालो ब्रह्मण्यः साधुसंमतः ।।

देवेन्द्रस्य सखा विष्णोरंश एव महाप्रभुः ।। ४८ ।।

बोधितस्तु वसिष्ठेन वैशाखोक्तान्मनोरमान् ।।

अनुष्ठायाखिलान्धर्मांस्तेन ध्वस्ताखिलाऽशुभः ।। ४९।।

दिव्यं ज्ञानं समासाद्य विष्णोः सायुज्यमाप्तवान्।।

वैशाखः शुभदस्तस्मात्पुंभिः सर्वैरनुष्ठितः ।।2.7.6.५०।।

आयुर्यशःपुष्टिदोऽयं महापापौघनाशनः ।।

पुमर्थानां निदानं च विष्णुः प्रीणात्यनेन तु ।। ५१ ।।

चातुर्वर्ण्यनरैः सर्वैश्चतुराश्रमवर्तिभिः ।।

अनुष्ठेयो महाधर्मो वैशाखे माधवागमे ।। ५२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्वरीषसंवादे गृहगोधिकाख्यानं नाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/h84
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। नारद उवाच ।। ।।

राजा तदद्भुतं दृष्ट्वा मैथिलो धर्मवित्तमः ।।

कृताञ्जलिः सुखासीनं विस्मितो वाक्यमब्रवीत् ।। ।।१।।

।। मैथिल उवाच ।। ।।

दृष्टमेतन्महाश्चर्यं साधूनां चरितं तथा ।।

येन धर्मेण मुक्तोऽभूद्राजा चेक्ष्वाकुनन्दनः ।।२ ।।

तं धर्मं विस्तरेणैव श्रोतुं कौतूहलं हि मे ।।

मह्यं श्रद्धावते विद्वत्कृपया विस्तराद्वद ।। ३ ।।

इति राज्ञा सुसंपृष्टः श्रुतदेवो महामनाः ।।

साधुसाध्विति संभाष्य व्याजहार नृपोत्तमम् ।। ४ ।।

।। श्रुतदेव उवाच ।। ।।

सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ।।

वासुदेवप्रियान्धर्माञ्छ्रोतुं यस्मान्मतिस्तव ।। ५ ।।

बहुजन्मार्जितं पुण्यं विना कस्यापि देहिनः ।।

वासुदेवकथालापे मतिर्नैवोपजायते ।। ६ ।।

यूने राजाधिराजाय जातेयं मतिरीदृशी ।।

शुद्धं भागवतं मन्ये तेन त्वां साधुसत्तमम् ।। ७ ।।

तस्मात्तुभ्यं ब्रुवे सौम्य धर्मान्भागवताञ्च्छुभान् ।।

याञ्ज्ञात्वा मुच्यते जंतुर्जन्मसंसारबन्धनात्।। ८ ।।

यथा शौचं यथा स्नानं यथा सन्ध्या च तर्पणम् ।।

अग्निहोत्रं यथा श्राद्धं तथा वैशाखसत्क्रियाः ।। ९ ।।

वैशाखे माधवे धर्मानकृत्वा नोर्ध्वगो भवेत् ।।

न वैशाखसमो धर्मो धर्मजातेषु विद्यते ।। 2.7.7.१० ।।

संत्येव बहवो धर्माः प्रजाश्चाराजका इव ।।

उपद्रवैश्च लुप्यंति नात्र कार्या विचारणा ।। ११ ।।

सुलभाः सकला धर्माः कर्तुं वैशाखचोदिताः ।।

उदकुम्भं प्रपादानं पथिच्छायादिनिर्मितिः ।। १२ ।।

उपानत्पादुकादानं छत्रव्यजनयोस्तथा।।

तिलयुक्तमधोर्दानं गोरसानां श्रमापहम्।। १३ ।।

वापीकूपतडागादिकरणं पथिकाश्रयम्।।

नारिकेलेक्षुकर्पूरकस्तूरीदानमेव च ।।१४।।

गन्धानुलेपनं शय्या खट्वा दानं तथैव च ।।

तथा चूतफलं रम्यमुर्वारुक रसायनम् ।। १५ ।।

दानं दमनपुष्पाणां तथा सायं गुडोदकम् ।।

चित्राण्यन्नानि पूर्णायां दध्यन्नं प्रत्यहं तथा ।। १६ ।।

तांबूलस्य सदा दानं चैत्रदर्शे करीरकम् ।।

रवावनुदिते सूर्ये प्रातः स्नानं दिनेदिने ।। १७ ।।

मधुसूदनपूजा च कथायाः श्रवणं तथा ।।

अभ्यंगवर्जने चैव तथा वै पत्रभोजनम् ।।१८।।

मध्येमध्ये श्रमार्तानां वीजनं व्यजनेन च ।।

सुगंधैः कोमलैः पुष्पैः प्रत्यहं पूजनं हरेः ।।१९।।

फलं दध्यन्न नैवेद्यं धूपदीपौ दिनेदिने ।।

गोग्रासं वृषपत्नीनां द्विजपादावनेजनम् ।। 2.7.7.२० ।।

गुडनागरदानं च धात्रीपिष्टप्रदापनम् ।।

पथिकानां प्रश्रयं च दानं तन्दुल शाकयोः ।।

एते धर्माः प्रशस्ता हि वैशाखे माधवप्रिये ।। २१ ।।

तथा च विष्णौः कुसुमार्पणं हरेः पूजा च कालोचित पल्लवाद्यैः ।।

दध्यन्ननैवेद्यनिवेदनं च समस्तपापौघ विनाशहेतुः ।। २२ ।।

नारी पुष्पैर्माधवं नार्चयेद्या कालोत्पन्नैर्मन्दिरे वा गृहे वा ।।

पुत्रं सौख्यं क्वाऽपि नाप्नोति हंति चायुर्भर्तुः स्वात्मनो वा महात्मन् ।। २३ ।।

रमासहाये माधवे मासि विष्णौ परीक्षायै धर्मसेतोः प्रजानाम् ।।

गृहं याते मुनिभिर्दैवतैश्च काले पुष्पैर्नार्चयेद्यस्तु मूढः ।। २४ ।।

स मूढात्मा रौरवं प्राप्य पश्चाद्यायाद्योनिं राक्षसीं पञ्चवारम् ।।

जलं चान्नं सर्वदा देयमस्मिन्क्षुधार्तानां प्राणिनां प्राणहेतुः ।। २५ ।।

तिर्यग्जंतुर्जायते वार्यदानादन्नादानाज्जायते वै पिशाचः ।।

अन्नादाने चानुभूतां कथां ते ह्यहं वक्ष्ये चाद्भुतां भूमिपाल ।।२६।।

रेवातीरे मत्पिताऽभूत्पिशाचः स्वमांसाशी क्षुत्तृषाश्रांतगात्रः ।।

छायाहीने शाल्मलीवृक्षमूले ह्यन्नाभावान्नष्टचैतन्य एषः ।। २७ ।।

क्षुधा तृषा कर्मणा यस्य बह्वी सूक्ष्मं छिद्रं कण्ठनालस्य चाऽसीत् ।।

मांसं चान्तःकण्ठमध्ये निषण्णं कुर्यात्पीडां प्राणपर्यन्तमेव ।। २८ ।।

जलं दृष्ट्वा कालकूटप्रकल्पं कौप्यं शीतं वाऽपि कासारसंस्थम् ।।

तस्यास्तीरे चागतं दैवयोगाद्गङ्गायात्राकारणान्मार्गमध्ये ।। २९ ।।

दृष्ट्वाऽद्भुतं शाल्मली वृक्षमूले त्रुटवा त्रुट्वा भक्षयन्तं स्वमांसम् ।।

क्रोशन्तं तं बहुधा शोचमानं क्षुधातृषाव्याधितं कर्मभिः स्वैः ।। 2.7.7.३० ।।

स मां हन्तुं प्राद्रवत्पापकर्मा मत्तेजसा निहतो दुद्रुवे च ।।

तं चाऽब्रवं कृपया क्लिन्नचित्तो मा भैष्ट त्वं ह्यभयं मे हि दत्तम् ।। ३१ ।।

कस्त्वं तात ब्रूहि सद्योऽत्र हेतुं कृच्छ्रादस्मान्मोचये मा विषीद ।।

इत्युक्तो मां प्राह पुत्रं त्वजानन्पुरानर्ते भूवराख्ये पुरे च ।। ३२ ।।

नाम्ना मैत्रः सांकृतेर्गोत्रजोऽहं तपोविद्यादानयज्ञादिनिष्ठः ।।

मयाऽधीताध्यापिताः सर्वविद्याः कृतो मया सर्वतीर्थाऽवगाहः ।। ३३ ।।

दत्तं नाऽन्नं मासि वैशाखसंज्ञे लोभाद्भिक्षामात्रमप्येव काले ।।

शोचे चाऽहं प्राप्य पैशाचयोनिं नाऽन्यो हेतुः सत्यमेवोक्तमङ्ग ।। ३४ ।।

पुत्रोऽधुना वर्तते मद्गृहे च भूरिख्यातिः श्रुतदेवाऽभिधानः ।।

वाच्या तस्मै मद्दशा चाऽऽत्मजाय वैशाखान्नादानतोऽभूत्पिशाचः ।। ३५ ।।

दृष्टस्तीरे ते पिता नर्मदाया नोर्ध्वं गतो वर्तते वृक्षमूले ।।

खादन्मांसं स्वीयमेवाऽन्वखिद्यत्पितुर्मुक्त्यै मासि वैशाखसंज्ञे ।। ३६ ।।

प्रातः स्नात्वा पूजयित्वा च विष्णुं निर्व्याजान्मां तर्पयित्वा जलैश्च ।।

देयं चाऽन्नं द्विजवर्ये गुणाढ्ये मुक्तो यो वै याति विष्णोः पदं च ।।३७।।

इत्थं चोक्तं त्वत्पुरस्ताद्वदेति दया चैषा मत्कृते नाऽत्र शंका ।।

भद्रं भूयात्सर्वतो मंगलं ते श्रुत्वा चाऽहं भाषितं मे पितुश्च ।। ३८ ।।

दुःखात्कायं दंडवत्पातयित्वा भृशार्तोऽहं पादयोर्भूरिकालम् ।।

निदन्निदन्भूर्यहं बाष्पनेत्रः पुत्रोऽहं ते तात दैवाऽऽगतोऽहम् ।। ३९ ।।

कर्मभ्रष्टो भूसुराणां विनिन्द्यो नाऽभूद्यस्मात्क्लेशमोक्षः पितॄणाम् ।।

आख्याहि त्वं कर्मणा केन मुक्तो भविता वै तत्करोमि द्विजेंद्र ।। 2.7.7.४० ।।

ततः प्राह प्रीतसर्वान्तरात्मा यात्रां कृत्वा शीघ्रमागत्य गेहम् ।।

प्राप्ते मासे मेषसंस्थे च भानौ निवेद्याऽन्नं विष्णवे त्वं गुणाढ्यम् ।। ४१ ।।

दानं देहि द्विजवर्ये महात्मंस्तस्मान्मोक्षो भविता सान्वयस्य ।।

पित्राऽऽदिष्टः कृतयात्रः स्वगेहे प्राप्याऽकरं माधवे चाऽन्नदानम् ।।४२।।

तस्मान्मुक्तो मत्पिता मां समेत्य यानारूढो ह्यभिनंद्याऽऽशिषा च ।।

गतो लोकं श्रीपतेर्दुर्विभाव्यं यस्मिन्गता न निवर्तंति भूयः ।।४३।।

तस्माद्दानं सर्वशास्त्रेषु चोक्तं तुभ्यं प्रोक्तं धर्मसारं सुधर्म्यम् ।।

किमन्यत्ते श्रोतुमिच्छा वदस्व श्रुत्वा सर्वं ते वदामीति सत्यम् ।। ४४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे पिशाचमोक्षप्राप्तिर्नाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/h85



।। मैथिल उवाच ।। ।।

ब्रह्मन्निक्ष्वाकुतनयो जलाऽदानाच्च चातकः ।।

त्रिवारमभवत्पश्चान्मद्गृहे गोधिका तथा ।। १ ।।

कर्मानुगुणमेतद्धि युक्तं तस्याकृतात्मनः ।।

सतामसेवनात्तस्य गृध्रत्वं सारमेयता ।। २ ।।

सप्तवारमिति प्रोक्तं तन्मे भाति च नोचितम् ।।

संतो न दूषितास्तेन न तथा कृपणा अपि ।। ३ ।।

तस्मादसेविनस्तस्य फलाऽभावो भवेद्ध्रुवम् ।।

नानर्थकरणाभावादिदं हि परपीडनम् ।। ४ ।।

अनिमित्तमिदं कस्मात्कुयोनित्वमवाप्तवान् ।।

तदेतं संशयं छिंधि शिष्यस्याऽऽत्मप्रियस्य च ।। ५ ।।

इति राज्ञा सुसंपृष्टः श्रुतदेवो महायशाः ।।

साधुसाध्विति संभाष्य वचो व्याहर्तुमादधे ।। ६ ।।

।। श्रुतदेव उवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि यत्पृष्टं तु त्वयाऽनघ ।।

शिवायै च शिवेनोक्तं कैलासशिखरेऽमले ।। ७ ।।

सृष्ट्वेमान्सकलाँल्लोकान्पश्चात्तेषामवस्थितिम् ।।

आमुष्मिकीमैहिकीं च द्विविधां पर्यकल्पयत् ।। ८ ।।

हेतुत्रयं च प्रत्येकं हेतुस्थित्यै महाप्रभुः ।।

जलसेवा चान्नसेवा सेवा चैवौषधस्य च ।। ९ ।।

यत्र चैते महाभाग ह्यैहिकस्थिति हेतवः ।।

एवमामुष्मिके राजंस्त्रय एवेरिताः श्रुतौ ।। 2.7.8.१० ।।

साधुसेवा विष्णुसेवा सेवा धर्मपथस्य च ।।

पुरा सम्पादिता ह्येते परलोकस्य हेतवः ।। ११ ।।

गृहे संपादितं यद्वत्पाथेयं पद्धतौ यथा ।।

ऐहिका हेतवो राजन्सद्यः सं(?)पादितार्थदाः ।। १२ ।।

किं चेष्टमपि साधूनां मनसो यदि दुस्सहम् ।।

कुतश्चित्कारणाद्राजंस्तच्चानर्थाय कल्पते ।। १३ ।।

अप्रियं किमु वक्तव्यं दुःखहेतुरिति स्फुटम् ।।

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।।१४।।

पापघ्नं महदाश्चर्यं शृण्वतां रोमहर्षणम् ।।

यज्ञदीक्षामुपगतः पुरा दक्षः प्रजापतिः ।। १५ ।।

आह्वानार्थं भूतपतेरगमद्रजताचलम् ।।

तं दृष्ट्वा नोत्थितः शंभुस्तस्यैव हितकाम्यया ।। १६ ।।

सर्वामरगुरुश्चाऽहं छन्दोगम्यः सनातनः ।।

भृत्या ह्येते बलिहराश्चन्द्रेन्द्राद्याः सुरेश्वराः ।। १७ ।।

स्वामी भृत्याय नोत्तिष्ठेत्स्वभार्यायै पतिस्तथा ।।

गुरुः शिष्याय नोत्तिष्ठेदिति शास्त्रविदां मतम् ।।१८ ।।

न संबन्धो गुरुत्वे च कारणं त्विति वै श्रुतिः ।।

बलं ज्ञानं तपः शांतिर्यत्र चैवाऽधिकं भवेत् ।। १९ ।।

स गुरुश्चेतरेषां च नीचा ईयुश्च प्रेष्यताम् ।।

उत्तिष्ठन्ति च स्वाम्याद्या भृत्यादीन्यदि चाऽऽग्रहात् ।। 2.7.8.२० ।।

आयुर्वित्तं यशस्तेषां सद्यो नश्यति सन्ततिः ।।

तस्मादहं तु नोत्तिष्ठे प्रियोऽयं श्वशुरो मम ।। २१ ।।

इति तस्य हितान्वेषी नोच्चचालाऽऽसनाद्विभुः ।।

नोत्थितं तु मृडं दृष्ट्वा कुपितोऽभूत्प्रजापतिः ।। २२ ।।

अनिंदद्बहुधा तस्मै पुरतो गिरिजापतेः ।।

अहो दर्पमहो दर्पं दरिद्रस्याऽकृतात्मनः ।। २३ ।।

यस्य वित्तं बहुवया वृषश्चर्मावशेषितः ।।

अत एव कपालास्थिधरः पाखण्डगोचरः ।। २४ ।।

वृथाऽहंकारिणो दैवं कुतो दास्यति मंगलम् ।।

लोके कृत्येन कर्माणि शुचीनीति विदो विदुः ।। २५ ।।

धत्ते दरिद्रः शीतार्तः पवित्रं च गजाजिनम् ।।
वेश्म श्मशानं यस्य स्याद्भुजंगः किल भूषणम् ।। २६ ।।
न धीरताऽपि च ज्ञानं वृकात्तस्मात्पलायिते ।।
भूतप्रेतपिशाचादि दुर्जनैः संगतोऽनिशम् ।। २७ ।।
न कुलं श्रूयते क्वाऽपि नाऽसौ वै साधुस म्मतः ।।
वृथा विश्रंभितः पूर्वं नारदेन दुरात्मना ।। २८ ।।
येनाऽहं बोधितः प्रादां कन्यां चैतां सतीं मम ।।
पृथग्धर्मगता चैषा सुखं वसतु तद्गृहे ।। २९ ।।
नास्माभिः श्लाघनीयोऽसौ मत्सुताऽपि कथंचन ।।
यथा कुलालकलशश्चंडालस्य वशं गतः ।। 2.7.8.३० ।।
इति दक्षो विमूढात्मा ह्युमां नाहूय तं मृडम्।।
बहुधा तं विनिर्भत्स्र्य तूष्णीमेव गृहं ययौ ।। ३१ ।।
यज्ञवाटं ततो गत्वा ऋत्विग्भिर्मुनिभिः सह।।
ईजे यज्ञविधानेन निंदन्नेव महाप्रभुम् ।। ३२ ।।
ब्रह्मविष्णू विहायैव सर्वे देवाः समागताः ।।
सिद्धचारणगन्धर्वा यक्षराक्षसकिन्नराः ।। ३३ ।।
तदा देवी सती पुण्या स्त्रीचाञ्चल्यात्प्रलोभिता ।।
उत्सुका चोत्सवं द्रष्टुं बन्धूंस्तत्र समागतान् ।। ३४ ।।
निवार्यमाणा रुद्रेण तरला स्त्रीस्वभावतः ।।
प्रत्युक्ताऽपि पुनश्चैव गन्तव्यमिति निश्चिता ।। ३५ ।।
स निन्दति सभामध्ये सदा मां वरवर्णिनि ।।
तच्चासह्यं च त्वं श्रुत्वा कायं सत्यं प्रहास्यसि ।। ३६ ।।
असह्यमपि सोढव्यं मयाऽपि गृहमिच्छता ।।
मया यथा कृतं देवि तथा त्वं नैव वर्तसे ।।३७।
तस्मान्मा गच्छ शालां वै न शुभं तु भवेद्ध्रुवम्।।
इत्येवं बोधिता देवी चापल्यं पुनरागमत् ।। ३८ ।।
निश्चक्राम सती गेहादेकाकी पादचारिणी ।।
तां दृष्ट्वा वृषभस्तूर्ष्णीं पृष्ठे देवीमुवाह सः ।। ३९ ।।

कोटिशो भूतसंघाश्च ह्यनुजग्मुः सतीं तदा ।।
यज्ञवाटं तु सा गत्वा पत्नीशालां ययौ पुरा ।। 2.7.8.४० ।।
तूष्णीमास सतीं दृष्ट्वा खेदात्तस्माद्विनिर्गता ।।
पतिवाक्यं तु संस्मृत्य जगामोत्तरवेदिकाम् ।। ४१ ।।
पिता सभ्याश्च तां दृष्ट्वा स्थितास्तूष्णीं हताशिषः ।।
सा रुद्राहुतिपर्यंतं पश्यन्ती पितृचेष्टितम् ।।
त्यक्त्वा रुद्रं च जुह्वंतमुवाचाऽश्रुकुलेक्षणा ।। ४२ ।।
।। देव्युवाच ।। ।।
महदुल्लंघनं पुंसां न प्रायः श्रेयसे भवेत् ।।
लोककर्ता लोकभर्ता सर्वेषां प्रभुरव्ययः ।। ४३ ।।
एवंभूतस्य रुद्रस्य कथं नो दीयते हविः ।।
जातां न किं ते दुर्बुद्धिं हरंत्यन्ये समागताः ।। ४४ ।।
न चेदृशा महात्मानः किमेषां विमुखो विधिः ।। ४५ ।।
इत्येवं भाषमाणां तां पूषा देवो जहास ह ।।
श्मश्रूणां चालनं चक्रे भृगुर्हतशुभस्तथा ।। ४६ ।।
भुजपादोरुकक्षा णां स्फालनं चक्रिरे परे ।।
बहुधा निन्दनं चक्रे तत्पिता हतभाग्यवान् ।। ४७ ।।
तच्छ्रुत्वा रुद्रभार्या सा कोपाकुलितमानसा ।।
प्रायश्चित्तं श्रुतेः कर्तुं देहं तत्याज सा सती ।।
होमाग्नौ वेदिकामध्ये सर्वेषामेव पश्यताम् ।। ४८ ।।
हाहाकारो महानासीद्दुद्रुवुः प्रमथा द्रुतम् ।।
आचख्युर्देवदेवाय वृत्तान्तमखिलं तदा ।। ४९ ।।
तच्छ्रुत्वा सहसोत्थाय रुद्रः कालांतकोपमः ।।
जटामुत्पाट्य हस्तेन भूतले तामताडयत् ।। 2.7.8.५० ।।
ततोऽभवन्महाकायो वीरभद्रो महाबलः ।।
सहस्रबाहुरभवत्कालांतकसमप्रभः ।। ५१ ।।
बद्धांजलिपुटो भूत्वा व्याजहार हरं तदा ।।
मत्सृष्टिस्तु यदर्थं ते तदर्थं मा नियोजय ।। ५२ ।।

इत्युक्तः प्राह तं क्रुद्धो धूर्जटिश्च पुरः स्थितम् ।। ।।५३।।

हन त्वं निन्दकं दक्षं यदर्थे मत्प्रिया हता ।।

भूतसंघास्तु गच्छन्तु सहैतेन महाबलाः ।। ५४ ।।

इत्यादिष्टा भगवता ययुर्यज्ञसभां तदा ।।

जघ्नुः सर्वान्महावीरान्देवासुरनरादिकान् ।।५५।।

पूष्णश्च हसतो दंताञ्जटाभूश्च बभञ्ज ह ।।

श्मश्रूण्युत्पाटयांचक्रे भृगोस्तस्य दुरात्मनः ।।५६।।

यद्यदास्फालितं पूर्वं तत्तच्चिच्छेद वीर्यवान् ।।

ततो दक्षशिरो हर्तुं बहूद्योगं चकार ह ।। ५७ ।।

मुनिमंत्रप्रगुप्तं तु नैव कृंतति तद्बलात् ।।

हरो ज्ञात्वा तु चिच्छेद स्वयमेत्य दुरात्मनः ।। ५८ ।।

एवं मखगतान्हत्वा साऽनुगः स्वालयं ययौ ।।

हतावशिष्टाः केचित्तु ब्रह्माणं शरणं ययुः ।। ।। ५९ ।।

तैरन्वितो ययौ ब्रह्मा कैलासं तु शिवालयम् ।।

ततो रुद्रं सान्त्वयित्वा वचोभिर्विविधैरपि ।। 2.7.8.६० ।।

तेनैव सहितः प्रागाद्यज्ञवाटं महाप्रभुः ।।

तेनैवोज्जीवयामास सर्वान्यज्ञसमागतान् ।। ६१ ।।

ख्यात्यै प्रादादजमुखं दक्षस्य तु तदा शिवः ।।

अजश्मश्रूण्यदाच्छंभुर्भृगवे तु महात्मने ।। ६२ ।।

पूष्णश्च दंतान्न प्रादात्पिष्टादं च चकार ह ।।

तदङ्गानां व्यतिकरं केषांचिदपि वै शिवः ।। ६३ ।।

शिवमापुश्च ते सर्वे ब्रह्मणा च शिवेन च ।।

पुनः प्रवर्तितो यज्ञो यथापूर्वं महात्मनः ।। ६४ ।।

यज्ञान्ते सर्वदेवाश्च जग्मुस्ते स्वस्वमालयम् ।।

नैष्ठिकं ब्रह्मचर्यं तु कृत्वा रुद्रो महातपाः ।। ६५ ।।

तेपे गंगातटे रुद्रः पुन्नागतरुमूलगः ।।

दक्षात्मजा सती देवी त्यक्तदेहा पतिव्रता ।। ६६ ।।

जज्ञे हिमाद्रेर्मेनक्यां ववृधे तस्य वेश्मनि।।

एतस्मिन्नेव काले तु तारकाख्यो महासुरः ।। ६७ ।।

स तीव्रतपसाऽऽराध्य ब्रह्माणं परमेष्ठिनम् ।।

अवध्यत्वं वरं वव्रे देवासुरनरोरगैः ।। ६८ ।।

आयुधैरस्त्रसंघैश्च सर्वैरेव महाबलैः ।।

रुद्रपुत्रं विना दैत्य ह्यवध्यः सकलैरपि ।। ६९ ।।

इति तस्मै वरं प्रादाद्ब्रह्मा लोकपितामहः ।।

अस्त्रीकत्वादपुत्रत्वाद्रुद्रस्येति तथास्त्विति ।। 2.7.8.७० ।।

वरं गृहीत्वा स्वगृहं प्राप्य लोकान्बबाध ह ।।

दासा देवा मार्जनादौ दास्यो देव्यश्च तद्गृहे ।। ७१ ।।

ततस्तत्पीडिता देवा ब्रह्माणं शरणं ययुः ।।

तैः पीडां वर्णितां श्रुत्वा वेधाः प्राह सुरानिदम् ।। ७२ ।।

वरप्रदानकालेऽहं रुद्रपुत्रं विना सुराः ।।

नख्यैवध्य इति प्रादां वरं तस्मै दुरात्मने ।। ७३ ।।

पुरा सती रुद्रपत्नी सत्रे त्यक्तकलेवरा ।।

जाता हिमवतः पुत्री पार्वतीति च यां विदुः ।।७४।।

रुद्रो हिमवतः पृष्ठे तपश्चरति दुश्चरम् ।।

योजयध्वं च पार्वत्या रुद्रं लोकेश्वरं प्रभुम् ।। ।। ७५ ।।

पुनर्देवेन्द्रसदने संगतैरमरेश्वरैः ।।

धिषणेनाऽपि सम्मंत्र्य देवेंद्रः पाकशासनः ।। ७६ ।।

सस्मार च स कार्यार्थं नारदं स्मरमेव च ।।

तत्राऽऽगतौ ततस्तौ तु बलभिद्वाक्यमब्रवीत् ।। ७७ ।।

हिमवन्तं भवान्गत्वा वचसा तं निबोधय ।।

पुत्री तव प्राग्दक्षस्य हरपत्नी सुता सती ।। ।। ७८ ।।

तपश्चरति ते शृंगे वियुक्ता दशकन्यया ।।

मृडस्तस्य सपर्यायै विनियोजय तत्प्रियाम् ।। ७९ ।।

तस्यैव पत्नी भविता स एव भविता पतिः ।।

इत्याऽऽदिष्टो मघोना च नारदोपेत्य तं गिरिम् ।। 2.7.8.८० ।।

तथैव कारयामास देवेन्द्रेणोदितं यथा ।।

पश्चात्कामं समाहूय मघवानिद माह च ।। ८१ ।।

देवानां च हितार्थाय तथा मृडहिताय च ।।

वसन्तेन समायुक्तो गत्वा रुद्रतपोवनम् ।। ८२ ।।

गुणान्विजृम्भ यित्वा तु वासं तान्हृच्छयावहान् ।।

यदा सन्निहिता देवी पार्वती तु मृडस्य च ।। ८३ ।।

तदा प्रयुज्य त्वं वाणान्मोहयस्व महाप्रभुम् ।।

तयोस्तु संगमे जाते कार्यं नोऽद्धा भविष्यति ।। ८४ ।।

इत्यादिष्टः स्मरस्तूर्णं प्रतस्थे बाढमित्यथ ।।

सवसंतः सरतिकः सानुगस्तद्वनं ययौ ।। ८५ ।।

अकाले तु वसंततुं जृंभयित्वा स्वशक्तितः ।।

तद्वने सर्वतो रम्ये मन्दाऽनिलनिषेविते ।। ८६ ।।

कदाचिद्देवदेवोऽपि पार्वत्याश्च सपर्यया ।।

प्रीतः स्वाङ्कं समारोप्य किंचिद्व्याहर्तुमारभत् ।। ८७ ।।

प्राणप्रिया सङ्गमस्य कालोऽयमिति निश्चितः ।।

पेशलं धनुरादाय स तस्थौ हरपृष्ठतः ।। ।। ८८ ।।

कृत्वा जवनिकां वृक्षं बाणमेकं मुमोच ह ।।

द्वितीयमपि संधाय चक्रे मोक्तुं महोद्यमम् ।। ८९ ।।

अथ क्षुब्धमना भूत्वा मृडश्चिंतामवाप ह ।।

न मे मनश्चलेत्क्वापि केन वा कश्मलीकृतम् ।। 2.7.8.९० ।।

इति चिन्ताकुलो वामे पार्श्वे कामं ददर्श ह ।।

क्रुद्धोन्मील्य ललाटाक्षं स्वाङ्काद्देवीमपास्य च ।। ९१ ।।

तस्याक्ष्णः समभूदग्निस्तीक्ष्णो लोकविभीषणः ।।

तेन दग्धोऽभवत्सद्यो मन्मथः सशरासनः ।। ९२ ।।

कार्यसिद्धिं च पश्यंतो दुद्रुवुश्चामरा दिवम् ।।

शंकमानाः स्वदण्डं च वसन्तो रतिरेव च ।। ९३ ।।

निमील्य लोचने भीता देवी दूरं प्रदुद्रुवे ।।

सन्निधानं स्त्रियो हर्तुं मृडोप्यंतरधीयत ।। ९४ ।।

रुद्रस्येष्टं प्रकुर्वाणो देवश्च मनसो हितम् ।।

लेभेऽनर्थमनिर्वृत्तं विप्रियं कुर्वतस्तु किम् ।। ९५ ।।

तस्मादिक्ष्वाकुतनयः साधूनामप्रियः सदा ।।

तस्मादात्महितां सेवां नाऽकरोन्मन्दधीः सताम् ।। ९६ ।।

अनुभूतं महद्दुःखं तस्माद्दुर्योनिरेव च ।।

तस्मात्कुर्यात्तु साधूनां सेवां सर्वार्थसाधिनीम् ।। ९७ ।।

रुद्रस्याऽप्रियकारित्वात्स्मरो भाविनि जन्मनि ।।

दुःखं तु बहुलं लेभे जन्मकाले महाप्रभुः ।। ९८ ।।

इतिहासमिमं पुण्यं ये शृण्वन्ति दिवानिशम् ।।

जन्ममृत्युजरादिभ्यो मुच्यंतेनाऽत्र संशयः ।। ९९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे दाक्षायण्यपमाने दक्षयज्ञविध्वंसपूर्वकपार्वती जन्मादिकामदहनवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ०९



।। ।। मैथिल उवाच ।। ।।

तस्य दग्धस्य कामस्य कस्माज्जन्माऽभवद्विभो ।।

किं दुःखमभवत्तस्मिन्कर्मणः सह लंघनात् ।। १ ।।

एतदाचक्ष्व मे ब्रह्मञ्च्छ्रोतु कौतूहलं हि मे ।।

।। श्रुतदेव उवाच ।। ।।

कुमारजन्म वक्ष्यामि श्रवणात्पापनाशनम् ।। २ ।।

यशस्यं पुत्रदं धर्म्यं सर्वरोगविनाशनम् ।।

शंभुना तु हते कामे तत्पत्नी रतिसंज्ञिका ।।३।।

मुमोह पुरतो दृष्ट्वा पतिं भस्मावशेषितम्।।

जातसंज्ञा मुहूर्तेन विललाप च चित्रधा ।। ४ ।।

यद्विलापाद्वनं चापि समदुःखमभूत्तदा ।।

तच्चिताग्नौ स्वकायं तु त्यक्तुकामा च माधवम्।। ५ ।।

पत्युः सखायं सस्मार कर्तुं तात्कालिकीं क्रियाम् ।।

स आगतश्चितिं कर्तुं वीरपत्न्या महाप्रभुः ।। ६ ।।

स तु त्रस्तः सखीं दृष्ट्वा क्षणं मूर्च्छापरोऽभवत् ।।

रतिं तु सान्त्वयामास सान्त्वैर्बहुविधैरपि ।। ७ ।।

पुत्रतुल्योऽस्मि ते भद्रे स्थिते मयि च नाऽर्हसि ।।

कायं त्यक्तुं धर्महेतुमित्याद्यैर्बहुधाऽपि सा ।। ८ ।।

नैव स्थातुं मनश्चक्रे तेन संस्तभिता रतिः ।।

दृष्ट्वा दार्ढ्यं वसन्तोऽपि चितिं चक्रे सरित्तटे ।। ९ ।।

साऽवगाह्य द्युनद्यां च कृत्वा कार्याणि सर्वशः ।।

सन्नियम्येन्द्रियग्रामं निवेश्यात्मनि वै मनः ।। 2.7.9.१० ।।

चितिमारोढुमारेभे ततो जाताऽशरीरवाक् ।।

मा प्रवेशय कल्याणि वह्निं पतिपरायणा ।। ।। ११ ।।

भविष्यति च ते पत्युर्हराद्विष्णोश्च यादवात् ।।
जन्मद्वयं क्रमेणैव तत्र चोत्तरजन्मनि ।। १२ ।।
भैष्म्यां कृष्णान्महाविष्णोः प्रद्युम्नाख्यो भविष्यति ।।
वसिष्यसि त्वं च शापाद्ब्रह्मणः शंबरालये ।। १३ ।।
प्रद्युम्नाख्येन ते पत्या संगतिश्च भविष्यति ।।
इत्युक्त्वा विररामाऽथ वाणी चाऽऽकाशगोचरा ।। १४ ।।
श्रुत्वा तां तु निवृत्ताऽभून्मरणे कृतनिश्चया ।।
ततो देवाः समाजग्मुः स्वार्थे कामे हते हरात्।। १५ ।।
रत्या कृतं प्रपश्यन्तो गुर्विन्द्राग्निपुरोगमाः ।।
तां ते निवर्तयामासुर्वरेण महता सतीम् ।। १६ ।।
अनंगोऽपि भवेत्साऽङ्गो मृत एवाऽक्षिगो भवेत् ।।
इति तां तु विनिर्वर्त्य धर्मं चोपदिदेशिरे ।। १७ ।।
पूर्वकल्पे त्वयं राजा सुंदराख्यो महाप्रभुः ।।
त्वमेव पत्नी तत्राऽपि रजःसंकरकारिणी ।। १८ ।।
तेनेयञ्च दशाभूते कुर्विदानीं च निष्कृतीम् ।।
मंदाकिन्यां तु वैशाखे प्रातःस्नानं तदा कुरु ।। १९ ।।
मधुसूदनमभ्यर्च्य कथां दिव्यां तथा शृणु ।।
अशून्यशयनं नाम व्रतमारभ भामिनि ।। 2.7.9.२० ।।
धर्मेणाऽनेन ते भद्रे व्रतेनाऽपि च माधवे ।।
नूनं त भविता पत्युरुपलब्धिर्न संशयः ।। २१ ।।
इति तस्यै वरं दत्त्वा देवा जग्मुर्यथाऽऽगताः ।।
तथा कृच्छ्रान्निवृत्ता सा देवी कामसती तथा ।। २२ ।।
गंगाऽवगाहनं चक्रे मेषसंस्थे दिवाकरे ।।
अशून्यशयनं नाम व्रतं चाऽपि महामनाः ।। २३ ।।
तेन पुण्यप्रभावेन सद्यः कामोऽक्षिगोचरः ।।
अभूत्तस्यै महाराज लोके चावार्य वीर्यवान् ।। २४ ।।
पूर्वकल्पेऽप्ययमपि राजा धर्मपरायणः ।।
वैशाखोक्तान्महाधर्मान्नाकरोत्तेन वै स्मरः ।।२५।।

देहहानिं प्रपेदेऽसौ पुत्रोऽपि परमात्मनः ।।
वृथा नीते तु वैशाखे मेषसंस्थे दिवाकरे ।। २६ ।।
अवस्थेयं च देवानां मनुष्याणां तु का कथा ।।
त्र्यंबकेंऽतर्हिते पश्चान्निराशा गिरिकन्यका ।। २७ ।।
तूष्णीं स्थितां तदा भ्रांतां तां दृष्ट्वा हिमवान्गिरिः ।।
चकितः स्वगृहं निन्ये दोर्भ्यां तां परिरभ्य च ।। २८ ।।
रूपौदार्यगुणान्दृष्ट्वा हरस्यैव महात्मनः ।।
स एव मे पतिर्भूयादिति तन्निष्ठमानसा ।। २९ ।।
गंगोपकूलमापेदे तपस्तप्तुं धृतव्रता ।।
निवारिताऽपि सा देवी पित्रा मात्रा स्वकैर्जनैः ।। 2.7.9.३० ।।
अर्चयन्ती महालिंगं निराहारा जटाधरा ।।
दिव्यवर्षसहस्रान्ते प्रत्यक्षोऽभून्महेश्वरः ।। ३१ ।।
भूत्वा वर्ण्यपि सायाह्ने पर्णशालामुखे विभुः ।।
स्वनिष्ठमनसो दार्ढ्यं वाक्यैर्नानाविधैरपि ।। ३२ ।।
ज्ञात्वा वरादरं भद्रे वरयेति महाप्रभुः ।।
सा वव्रेऽथ पतिं रुद्रं त्वं भवेति वरानना ।।३३।।
स तथैव वरं दत्त्वा ऋषीन्सस्मार सप्त च ।।
आजग्मुस्तेऽपि मुनयः स्थिताः प्राञ्जलयः पुरः ।।३४।।
ऋषीणां ज्ञापयामास कन्यां प्रष्टुं हिमालयम् ।।
तथाऽऽदिष्टा भगवता कन्यार्थं हिमवद्गृहम् ।।३५।।
प्रापुर्विहायसा सर्वे द्योतयन्तो दिशो दश ।।
प्रत्युज्जगाम स गिरिः सप्तैतान्ब्रह्मवित्तमान् ।। ३६ ।।
संपूज्य विधिवत्सर्वान्सुखासीनानपृच्छत ।।
धन्योऽस्मि कृतकृत्योऽस्मि यद्भवतो गृहाऽऽगताः ।। ३७ ।।
भवदागमनं मन्ये मम जन्मफलं त्विति ।।
न कृत्यं विद्यतेऽस्माभिः पूर्णार्थानां महात्मनाम् ।। ३८ ।।
तथाऽपि ब्रूत कार्यं वो यत्कर्तव्यं मयाऽधुना ।।
इत्युक्तास्ते तथा प्रोचुर्हिमवंतं महागिरिम् ।। ३९ ।।

त्वया स्वसदृशं वाक्यमुक्तं गिरिपते दृढम् ।।
अस्मदागमने हेतुं वक्ष्यामस्ते महोदये ।। 2.7.9.४० ।।
कन्या ते पार्वती नाम पूर्वं दक्षात्मजा सती ।।
जाता तव कुमारी या यज्ञे त्यक्तकलेवरा ।। ४१ ।।
अस्याः पाणिग्रहे दक्षः शंभुर्नाऽन्यो जगत्त्रये ।।
देया सा शंभवे देवी भवताऽऽनंत्यमिच्छता ।। ४२ ।।
पूर्वजन्मसहस्रेषु भवता सुकृतं कृतम् ।।
इदानीं तव दिष्ट्या तु परिपाकमुपागतम् ।। ४३ ।।
तेषां तद्वचनं श्रुत्वा संहृष्टाऽऽत्मा महागिरिः ।।
व्याजहार पुनर्वाक्यं पुत्री वल्कलधारिणी ।। ४४ ।।
गंगातीरे निराहारा तपस्तपति दुश्चरम्।।
काङ्क्षमाणा पतिं शंभुं तस्या इष्टमिदं त्विति।।४५।।
दत्ता कन्या मया तस्मै त्र्यंबकाय महात्मने ।।
शीघ्रं गत्वा भवंतस्तु यत्र शम्भुर्महाप्रभुः ।। ४६ ।।
प्रीत्या हिमवता दत्तां गृहाणेति निवेद्य च ।।
भवंत एव कुर्वंतु चैतद्वैवाहिकीं क्रियाम् ।। ४७ ।।
इत्युक्तास्ते हिमवता तमामंत्र्य शिवं ययुः ।।
लक्ष्म्याद्या योषितः सर्वा विष्णवाद्या देवता अपि ।। ४८ ।।
षण्मातरोऽथ मुनयो द्रष्टुं जग्मुर्महोत्सवम् ।।
शिवः सर्वामरगणैर्मुनिभिर्मातृभिस्तथा ।। ४९ ।।
अन्वितो वृषभारूढः प्रमथानां गणैर्वृतः ।।
भेरीशंखमृदंगाद्यैः काहलीपटहादिकैः ।। ।। 2.7.9.५० ।।
ब्रह्मघोषैर्बंदिभिश्च प्राविशद्धिमवत्पुरीम् ।।
सुमुहूर्ते शुभे लग्ने शुभग्रहनिरीक्षिते ।। ५१ ।।
विवाहमकरोच्छैलः प्रहृष्टेनांतरात्मना ।।
महोत्सवस्तदा चाऽऽसीत्त्रिलोक्यां प्राणिनां नृप ।। ५२ ।।
महोत्सवे निवृत्ते तु शंकरो लोकशंकरः ।।
रेमे स्वच्छंदया देव्या लोकधर्माननुव्रतः।। ।। ५३ ।।

ऋद्धिमद्धिमवद्देहे देवेंद्रभवनोपमे ।।
शर्वर्यां नंदिनीतीरे वनराजिषु शंकरः ।। ५४ ।।
मत्तालिद्विजसन्नादमयूररवमंडिते ।।
दिव्यवर्षसहस्राणि रेमे स्वच्छंदया विभुः ।। ५५ ।।
स्त्रीणामिंद्रवराभावात्तस्मिन्काले नृपोत्तम ।।
पुंसः संगात्पुनर्गर्भो नारीणां स्रवति ध्रुवम् ।। ५६ ।।
प्रत्यहं रमणाद्देव्यां नाभूद्गर्भो हराद्व्रत ।।
देवानामभवच्चिन्ता पुत्रालाभाद्वराद्विभो ।। ५७ ।।
सर्वे संगत्य संमंत्र्य मिथ एवं बभाषिरे ।।
कामीवाऽभूद्रतौ नित्यं सक्तो देव्या हरः स्वराट् ।। ५८ ।।
नाऽस्माकं सिद्ध्यते कार्यं नित्यं गर्भस्य संस्रवात् ।।
पुना रतिर्यथा नाऽभूत्तथाऽस्माभिर्विधीयताम् ।। ५९ ।।
मिथ एवं तु संभाष्य व्यचिन्वन्क्षणमत्र ते ।।
अग्निं कृत्ये विनिश्चित्य ह्यूचुर्मानपुरःसरम् ।। 2.7.9.६० ।।
अग्ने मुखं त्वं देवानां त्वं बन्धुर्गतिरेव च ।।
इदानीमपि गच्छ त्वं रमते यत्र वै हरः ।। ६१ ।।
रत्यन्ते दर्शयाऽऽत्मानं पुना रतिर्यथा न वै ।।
त्वां दृष्ट्वा व्रीडिता देवी ततश्चापसरेद्ध्रुवम् ।। ६२ ।।
शिष्यो भूत्वा तु रत्यन्ते पृच्छ तत्त्वं स्मरान्तकम् ।।
तत्त्वसम्प्रश्नव्याजेन कालं बहु नय प्रभो ।। ६३ ।।
बहुकाले गते देवी कुमारं प्रसविष्यति ।।
देवैरेवं प्रार्थितोऽग्निरोमित्युक्त्वा हरं ययौ ।। ६४ ।।
वीर्योत्सर्गात्पूर्वमेव गतो वह्नी रतांतरे ।।
तं दृष्ट्वा व्रीडिता देवी विवस्त्रा विमना ययौ ।। ६५ ।।
रति विहाय त्वरया ततो रुद्रोऽतिकोपितः ।।
वह्निं प्राह गृहाणेदमभिसृष्टं तु दुर्मते ।। ६६ ।।
मद्वीर्यं दुःसहं पाप रतौ विघ्नस्त्वयाऽभवत् ।।
उत्सृजामि च मद्वीर्यं त्वन्मुखे हव्यवाहन ।। ६७ ।।

इत्युक्त्वोत्सृष्टवान्वीर्यं हव्यवाहमुखे हरः ।।

तद्धृत्वा दह्यमानः सन्स्वोदरे वीर्यमुल्बणम् ।। ६८ ।।

चिंतयानो ययौ धाम देवानां यज्ञपूरुषः ।।

कथंचित्प्राणतो मुक्तो देवेभ्यस्तन्न्यवेदयत् ।। ६९ ।।

देवा वह्नीरितं श्रुत्वा हर्षशोकौ समाययुः ।।

स्थितं वीर्यमिति ह्लादं कथं तु प्रसवो भवेत् ।। 2.7.9.७० ।।

इति दुःखं तदा चाऽऽसीद्वह्नेः कुक्षौ तु शांभवम् ।।

ववृधे तेज आक्षिप्तं दश मासा गतास्तदा ।। ७१ ।।

नाऽपश्यत्प्रसवोपायं बहुदुःखपरायणः ।।

देवान्वै शरणं प्राप गर्भमोचनहेतवे ।। ७२ ।।

ते देवा वह्निना साकं प्रापुर्गंगां यशस्विनीम् ।।

गंगा स्तोत्रेण ते स्तुत्या प्रार्थयामासुरंजसा ।। ७३ ।।

त्वं माता सर्वदेवानां त्वमेव जगतां पतिः ।।

देवतार्थं तु त्वं भद्रे धत्स्व तेजस्तु शांभवम् ।।७४।।

तद्वह्नेर्वर्द्धते गर्भो नास्त्रीत्वात्प्रसवोऽस्य च ।।

तस्मादेनं च नः सर्वान्समुद्धर दयां कुरु ।।७५ ।।

इत्येवं प्रार्थिता देवी तथास्त्विवति वचोऽब्रवीत् ।।

देवास्तु वह्नये प्राहुर्मंत्रं गर्भविमोचनम् ।। ७६ ।।

तन्मंत्राद्गर्भमाकृष्य व्यसृजद्धव्यवाहनः ।।

गंगायां शांभवं तेजो भास्वल्लोकसुदुःसहम् ।। ७७ ।।

सा चोढ्वा कतिचिन्मासान्न शशाक ततः परम् ।।

निर्जला तत्प्रभावेण स्फुटद्रक्तकलेवरा ।। ७८ ।।

बहुदुःखाऽऽकुला देवी पातिव्रत्यप्रभावतः ।।

उज्जहार स्वोदरस्थं गर्भं लोकैकपावनी ।। ७९ ।।

शरकांडे तु चिक्षेप दह्यमानं समन्ततः ।।

शरकांडैस्तु संभिन्नः षोढा भिन्नो बभूव ह ।। 2.7.9.८० ।।

षट्कृऽत्तिकाः समाजग्मुर्ब्रह्मणा चोदितास्तदा ।।

शरकांडे विनिर्भिन्नं षोढा संधाय शांभवम् ।। ८१ ।।

षण्मुखं पुरुषं कृत्वा त्वेकदेहमिति स्फुटम् ।।
कृत्तिका विधिनाऽऽज्ञप्तास्तं तथा चक्रिरे दृढम् ।। ८२ ।।
तद्देहं पुरुषाकारं षण्मुखं शरकांडगम् ।।
अरक्ष्यमाणमेवासीच्छरकांडेषु वै चिरम् ।। ८३ ।।
एकदा वृषभाऽरूढौ पार्वतीपरमेश्वरौ ।।
श्रीशैलं गंतुमनसौ तत्स्थलं परिजग्मतुः ।। ८४ ।।
तदासीत्पार्वती देवी सद्यः स्नुतपयोधरा ।।
विस्मिता चावदद्रुद्रं स्नुतौ कस्मात्पयोधरौ ।। ८५ ।।
कारणं ब्रूहि विश्वात्मन्नित्युक्तस्तु हरोऽब्रवीत् ।।
शृणु देवि प्रवक्ष्यामि पुत्रोऽधो वर्तते तव ।। ८६ ।।
त्वयि वीर्यमनुत्सृष्टं प्रागेवाऽऽगाद्धविर्वहः ।।
तं दृष्ट्वा व्रीडिता त्वं वै प्रविष्टा च स्थलान्तरम् ।। ८७ ।।
मया कोपाद्वह्नि मुखे विसृष्टं वीर्यमुल्बणम् ।।
देवानां च प्रसादेन गंगायां व्यसृजद्विभुः ।। ८८ ।।
गंगा च दह्यमाना सा व्यक्षिपञ्च शरान्तरं ।।
तत्र षोढा प्रभिन्नं तु मातृभिश्च दृढीकृतम् ।। ८९ ।।
पुरुषाकृतिमापेदे तं दृष्ट्वा ते स्तनौ सुतौ ।।
पालनीयं महावीर्यं विष्णुना समविक्रमम् ।। 2.7.9.९० ।।
अयमे वौरसः पुत्रस्तव भाति विनिश्चितम् ।।
तस्माद्गृहाण शीघ्रं त्वं तेनाऽऽख्यातिरतीव ते ।। ९१ ।।
इत्याऽऽज्ञप्ता शंभुना सा तमादायाऽर्भकं द्रुतम् ।।
अंकमारोप्य तं देवी पाययामास सा स्तनौ ।। ९२ ।।
देवेन मोहिता देवी पुत्रस्नेहपराऽभवत् ।।
पुनः कैलासमगमत्प्रभुणा सह शांकरी ।। ९३ ।।
लालयंती सुतं देवी संतोषं परमं ययौ ।।
एवं कुमारजननं वर्णितं ते मयाऽद्भुतम् ।। ९४ ।।
य इदं शृणुयान्नित्यं कुमारजननं शुभम् ।।
पुत्रपौत्राभिवृद्धिं तु लभते नाऽत्र संशयः ।। ९५ ।।

महद्दुःखं तु जनने हरस्याऽपि यतोऽभवत् ।।

प्रीत्यानुश्रुतवैशाखधर्मोऽप्यप्रतिमो भवेत् ।। ९६ ।।

तस्माद्वैशाखधर्मो हि सर्वाघौघविनाशनः ।।

अवैधव्यप्रदः पुण्यः सर्वसंपद्विधायकः ।।९७।।

अनंगोपि हि सांगत्वं यत्प्रभावात्समाप्तवान् ।।

अस्नात्वा चाप्यदत्त्वा च वैशाखो यस्य वै गतः ।।९८।।

अपि धर्मकृतो वाऽपि भवेद्दुःखपरंपरा ।।

सर्वधर्मो हितः स्याच्च यद्येकोऽयमनुष्ठितः ।। ९९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदांबरीषसंवादे कुमारोत्पत्तिकथनंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १०

https://sa.wikisource.org/s/h87
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। मैथिल उवाच ।। ।।

यत्कामपत्नीचरितमशून्यशयनं व्रतम् ।।

देवोपदिष्टं तस्याऽस्य विधानं ब्रूहि भूसुर ।। १ ।।

किं दानं को विधिस्तस्य पूजनं किं फलं तथा ।।

एतदाचक्ष्व भूदेव श्रोतुं कौतूहलं हि मे ।। २ ।।

।। श्रुतदेव उवाच ।। ।।

शृणु भूयः प्रवक्ष्यामि व्रतं पापप्रणाशनम् ।।

अशून्यशयनं नाम रमायै हरिणोदितम् ।। ३ ।।

येन चीर्णेन देवेशो जीमूताऽऽभः प्रसीदति ।।

लक्ष्मीभर्ता जगन्नाथः समस्ताऽघौघनाशनः ।। ४ ।।

अकृत्वा यस्त्विदं राजन्व्रतं पातकनाशनम् ।।

गार्हस्थ्यमनुवर्तेत तस्येदं निष्फलं भवेत् ।। ५ ।।

श्रावणे शुक्लपक्षे तु द्वितीयायां महीपते ।।

अशून्यशयनाख्यं तद्ग्राह्यं व्रतमनुत्तमम् ।।६।।

चातुर्मास्ये तु संप्राप्ते हविष्याशी भवेन्नरः ।।

चतुर्भिः पारणं मासैः सम्यङ्निष्पाद्यते प्रभो ।।७।।

लक्ष्मीयुक्तो जगन्नाथः पूजनीयो जनार्दनः ।।

पारणे दिवसे प्राप्ते भक्ष्यं चैव चतुर्विधम्।। ८ ।।

उपायनं च दातव्यं ब्राह्मणाय कुटुंबिने ।।

सौवर्णीं राजतीं चापि मूर्तिं कुर्यान्मनोरमाम् ।। ९ ।।

पीताम्बरधरां दिव्यां वनमालाविभूषिताम् ।।

शुक्लपुष्पैः सुगंधैश्च पूजयेत्पुरुषोत्तमम् ।। 2.7.10.१० ।।

शय्यादानैर्वस्त्रदानैर्विप्राणां भोजनैस्तथा ।।

दम्पत्योर्भोजनैश्चैव दक्षिणाभिः प्रपूजयेत् ।। ११ ।।

एवं तु चतुरो मासान्पूजयित्वा जनार्दनम् ।।
मार्गशीर्षादिमासेषु पूजयेत्पूर्ववद्धरिम्।। १२ ।।
रक्रवर्णं हरिं ध्यायेद्रुक्मिणीसहितं तथा ।।
चैत्रादींश्चतुरो मासानेवं संपूजयेत्ततः ।। १३ ।।
भूम्या सह स्थितं देवमर्चयेद्भक्तिपूर्वकम् ।।
सनंदनाद्यैर्मुनिभिः स्तूयमानमकल्मषम् ।। १४ ।।
आषाढस्य च मासस्य द्वितीयायां समापयेत् ।।
अष्टाक्षरेण मंत्रेण जुहुयादनले शुभे ।। १५ ।।
मार्गशीर्षादिमासानां पारणे भूमिपालक ।।
जुहुयाद्विष्णुगायत्र्या चैत्रादीनां निबोधय ।। १६ ।।
पौरुषेण च मंत्रेण जुहुयादनले शुभे ।।
पञ्चामृतं पायसं च ह्यपूपं घृतपाचितम् ।। १७ ।।
एवं क्रमेण द्रव्याणि प्रतिमासु निबोधय ।।
सौवर्णी प्रतिमां दद्याल्लक्ष्मीनारायणस्य च ।। १८ ।।
सौवर्णी मध्यमे दद्यात्कृष्णस्य परमात्मनः ।।
राजतीं त्वंतिमे दद्याद्वराहस्य महात्मनः ।। १९ ।।
ब्राह्मणान्भोजयेत्पश्चान्नामभिः केशवादिभिः ।।
वस्त्रयुग्मैरलंकारैर्यथावित्तानुसारतः ।। 2.7.10.२० ।।
अर्चयित्वा ततो दद्यादपूपान्घृतपाचितान् ।।
उपायनार्थे विप्रेभ्यो द्वादशभ्यो निवेदयेत् ।। २१ ।।
आचार्याय ततो दद्यात्प्रतिमां पूर्वकल्पिताम् ।।
शय्यां संकल्पितां पूर्णां सर्वालंकारभूषिताम् ।। २२ ।।
तस्यामभ्यर्च्य विधिवल्लक्ष्मीनारायणं परम् ।।
कांस्यपात्रेण सहितामपूपैर्बहुभिस्तथा ।। २३ ।।
वस्त्रालंकारसहितां दक्षिणाभिस्तथैव च ।।
ब्राह्मणाय विशिष्टाय वैष्णवाय कुटुंबिने ।। ।। २४ ।।
दातव्या विधिवत्पूज्य ब्राह्मणांश्चापि भोजयेत् ।।
।। दानमन्त्रः ।। ।।

लक्ष्म्या अशून्यं शयनं यथा तव जनार्दन ।।२५।।

शय्या ममाप्यशून्या स्याद्दानेनाऽनेन केशव ।।

एवं सम्प्रार्थ्य देवेशं स्वयं भोजनमाचरेत् ।। २६ ।।

पुरुषो वा सती वाऽपि विधवा वा समाचरेत् ।।

अशून्यशयनार्थं च कर्तव्यं व्रतमुत्तमम् ।। २७ ।।

एवं तव मया ख्यातं विस्तरान्नृपसत्तम ।।

सुप्रसन्ने जगन्नाथे भवेयुर्विविधाः प्रजाः ।। २८ ।।

तस्मिंस्तुष्टे तु देवेशे देवानामपि दुर्लभाः ।।

तस्मात्सर्वप्रयत्नेन व्रतमेतत्समाचरेत् ।। २९ ।।

अवश्यं गन्तुकामेन तद्विष्णोः परमं पदम् ।।

एवमुक्तं मया सर्वं किमन्यच्छ्रोतुमिच्छसि ।। 2.7.10.३० ।।

इत्युक्तस्तेन राजर्षिः पुनरप्याह तं मुनिम् ।।

वैशाखे छत्रदानस्य माहात्म्यं विस्तराद्वद ।। ३१ ।।

शृण्वतोऽपि न तृप्तिर्मे वैशाखोक्ताञ्च्छुभावहान् ।। ३२ ।।

इति तद्वचनं श्रुत्वा यशस्यं पुण्यवर्द्धनम् ।।

प्रत्युवाच महाभागं श्रुतदेवो महायशाः ।।३३ ।।

।। श्रुतदेव उवाच ।। ।।

वैशाखे घर्मतप्तानां मानवानां महात्मनाम् ।।

ये कुर्वन्त्यातपत्राणं तेषां पुण्यमनंतकम् ।। ३४ ।।

अत्रैवोदाहरन्तीममिति हासं पुरातनम् ।।

वैशाखधर्ममुद्दिश्य पुरा कृतयुगे कृतम् ।। ३५ ।।

वङ्गदेशे पुरा कश्चिद्धेमकान्त इति श्रुतः ।।

कुशकेतोः सुतो धीमान्राजा शस्त्रभृतां वरः ।।

एकदा मृगयाऽऽसक्तो गहनं वनमाविशत् ।। ३६ ।।

तत्र नानाविधान्हत्वा मृगान्क्रोडादिकान्बहून्।।

श्रांतो मध्याह्नवेलायां मुनीनामाश्रमं ययौ ।। ३७ ।।

तदा शतर्चिनोनाम ऋषयः शंसितव्रताः ।।

समाधिस्था न जानन्ति बाह्यकृत्यं च किंचन ।। ३८ ।।

तान्दृष्ट्वा निश्चलान्विप्रान्क्रुद्धो हंतुं मनो दधे ।।

भूपं निवारयामास शिष्याणामयुतं तदा ।। ३९ ।।

दुर्बुद्ध शृणु नो वाक्यं गुरवस्तु समाधिगाः ।।

नो जानन्ति बहिःकृत्यं तस्मात्क्रोधं न चार्हसि ।। 2.7.10.४० ।।

ततः शिष्यानुवाचेदं वचनं क्रोधविह्वलः ।।

यूयं कुरुध्वमातिथ्यमध्वश्रांतस्य मे द्विजाः।। ४१ ।।

एवमुक्ताश्च भूपेन शिष्या ऊचुस्तदा नृपम् ।।

नाऽऽज्ञप्ता गुरुभिर्भूप वयं भिक्षाशिनः पुनः ।। ४२ ।।

गुरुतन्त्राः कथं कर्तुमातिथ्यं ते वयं क्षमाः ।।

प्रत्याख्यातो नृपः शिष्यैस्तान्हंतुं धनुराददे ।। ४३ ।।

मृगदस्युभयादिभ्यो बहुधा रक्षिता मया ।।

ते मामेवोपशिक्षंति मया दत्तप्रतिग्रहाः ।। ४४ ।।

एते मां न विजानंति कृतघ्ना भूरिमानिनः ।।

घ्नतोपि मे न दोषः स्यादेतान्वै ह्याततायिनः ।। ४५ ।।

एवं विक्रुद्धमानः सञ्छरान्मुंचञ्च्छरासनात् ।।

तान्विद्रुताननुद्रुत्य जघ्ने शिष्यशतत्रयम् ।।४६।।

दुद्रुवुर्भयतः सर्वे विहायाऽऽश्रममञ्जसा ।।

विद्रावितेषु शिष्येषु बलादाश्रमसंस्थितान् ।। ४७ ।।

संभाराञ्जगृहुः शीघ्रं सैनिकाः पापबुद्धयः ।।

यथेष्टं भोजनं चक्रुर्नृपेणैवानुमोदिताः ।। ४८ ।।

ततः सेनाऽऽवृतो राजा पुरीमागाद्दिनात्यये ।।

कुशकेतुस्ततः श्रुत्वा तनयस्य विचेष्टितम्।। ४९ ।।

पुरान्निर्यातयामास गर्हयन्गर्हयन्सुतम् ।।

राज्यानर्हं क्षमाहीनं स्वदेशादपि भूमिप ।। 2.7.10.५० ।।

पित्रा त्यक्तस्ततो राजा हेमकांतोऽतिविह्वलः ।।

वनं विवेश गहनं हत्याभिश्च सुपीडितः ।। ५१ ।।

बहुकालमवासीच्च गह्वरे निर्जने वने ।।

आहारं कल्पयामास व्याधधर्ममुपाश्रितः ।। ५२ ।।

न क्वाऽपि स्थितिमापेदे हत्ययाऽभिद्रुतो भृशम् ।।

अष्टाविंशतिवर्षाणि गतान्यस्य दुरात्मनः ।। ५३ ।।

तीर्थयात्राप्रसंगेन त्रितो नाम महामुनिः ।।

तस्मिन्नरण्ये वैशाखे रवौ मध्यंदिने गते ।। ५४ ।।

गच्छन्नातपविक्लांतस्तृषया चाऽपि पीडितः ।।

क्वचिद्वृक्षविहीने तु प्रदेशे मूर्च्छितोऽभवत् ।। ५५ ।।

दैवाद्दृष्ट्वा हेमकांतस्त्रितं नाम महामुनिम् ।।

तृषार्तं मूर्छितं श्रांतं कृपां चक्रे नृपाधमः ।।५६।।

ब्रह्मपत्रैस्तदा छत्रं कृत्वा चाऽऽतपवारणम्।।

मुनेर्जग्राह शिरसि ह्यलाबुस्थं जलं ददौ ।। ५७ ।।

लब्धसंज्ञोऽभवत्तेन ह्युपचारेण वै मुनिः ।।

पत्रच्छत्रं क्षत्रदत्तं गृहीत्वा गतविक्लमः ।। ५८ ।।

ग्रामं क्वचिच्छनैः प्राप्य किञ्चिदाप्यायितेन्द्रियः ।।

तेन पुण्यप्रभावेन ब्रह्महत्याशतत्रयम् ।। ५९ ।।

विनष्टमभवत्तस्य क्षणादेव महात्मनः ।।

ततो विस्मयमापन्नो हेमकान्तो महारथः ।।2.7.10.६०।।

बहुधा पीड्यमानस्य ब्रह्महत्याः कथं गताः ।।

केनाऽपि निष्कृता ह्येताः क्व गताः केन हेतुना ।।६१।।

इत्येवं चिन्तयामास ब्रह्महत्याविमोचनम्।।

एवं चाऽज्ञस्थिते राज्ञि यमदूता अथाऽऽगमन्।।६२।।

नेतुमेनं महात्मानं हेमकांतं वने स्थितम् ।।

ग्रहणीं जनयामासुः प्राणान्हर्तुं महात्मनः।।६३।।

तदा प्राणवियोगार्तः पुरुषांस्त्रीन्ददर्श ह ।।

यमदूतान्महाघोरानूर्ध्वकेशान्भयंकरान् ।। ६४ ।।

चिन्तयानः स्वकर्माणि तूष्णीमासीत्तदा नृपः ।।

छत्रदानप्रभावेन जाता विष्णुस्मृतिर्नृप ।। ६५ ।।

तेन स्मृतो महाविष्णुर्विष्वक्सेन स्वमंत्रिणम् ।।

उवाच तूर्णं त्वं गच्छ यमदूतान्निवारय ।।६६।।

वैशाखधर्मनिरतं हेमकांतं तु पालय ।।
निष्पापमेनं मद्भक्तं पित्रे देहि पुरं गतः ।। ६७ ।।
मदीरितेन वाक्येन कुशकेतुं च बोधय ।।
सर्वधर्म्मोज्झितो वापि ब्रह्मचर्यादिवर्जितः ।। ६८ ।।
वैशाखधर्मनिरतो मत्प्रियः स्यान्न संशयः।।
कृतागाश्चाऽपि त्वत्पुत्रो मुनित्राणपरायणः ।। ६९ ।।
वैशाखे छत्रदानेन निष्पापो नाऽत्र संशयः ।।
तेन पुण्यप्रभावेन शांतो दान्तश्चिरायुषः ।। 2.7.10.७० ।।
शौर्योदार्यगुणोपेतस्त्वत्समोऽयं गुणैरपि ।।
तस्मादेनं राज्यभारे संस्थापय महाबलम् ।। ७१ ।।
विष्णुनैव समाज्ञप्तमित्यादिश्य नृपोत्तमम् ।।
पितुर्वंशे हेमकांतं स्थाप्याऽऽयाहि च मां पुनः ।। ७२ ।।
इत्यादिष्टो भगवता विष्वक्सेनो महाबलः ।।
हेमकान्तं समासाद्य यमदूतान्निवार्य च ।। ७३ ।।
पाणिना शंतमेनैव पस्पर्शांगेषु भूमिपम् ।।
भगवद्भक्तसंस्पर्शाद्धतव्याधिः क्षणादभूत् ।। ७४ ।।
विष्वक्सेनस्ततस्तेन सह तस्य पुरीं ययौ ।।
तं दृष्ट्वा विस्मितो भूत्वा कुशकेतुर्महाप्रभुः ।। ७५ ।।
ननाम शिरसा भक्त्या दण्डवत्पतितो भुवि ।।
गृहं प्रवेशयामास पार्षदं परमात्मनः ।। ७६ ।।
स्तुत्वा च विविधैः स्तोत्रैः पूजयामास वैभवैः ।।
तस्मै प्रीतमनाः प्राह विष्वक्सेनो महाबलः ।। ।। ७७ ।।
हेमकान्तं समुद्दिश्य यदुक्तं विष्णुना पुरा ।।
तच्छ्रुत्वा कुशकेतुश्च पुत्रं राज्ये निवेश्य च ।। ७८ ।।
विष्वक्सेनाभ्यनुज्ञातः सभार्यो वनमाविशत् ।।
विष्वक्सेनो हेमकान्तमनुमंत्र्याभिपूज्य च ।। ७९ ।।
श्वेतद्वीपं ययौ धीमान्विष्णुपार्श्वे महामनाः ।।
हेमकांतस्ततो राजा वैशाखोक्तान्च्छुभावहान।।2.7.10.८०।।

विष्णुप्रीतिकरान्धर्मान्प्रतिवर्षं चकार ह ।।

ब्रह्मण्यो धर्ममार्गस्थः शान्तो दान्तो जितेन्द्रियः ।। ८१ ।।

दयालुः सर्वभूतेषु सर्वयज्ञेषु दीक्षितः ।।

प्रवृद्धः सर्वसम्पद्भिः पुत्रपौत्रादिभिर्वृतः ।। ८२ ।।

भुक्त्वा भोगान्समस्तांश्च विष्णुलोकमवाप्तवान् ।। ८३ ।।

नेक्षे तु वैशाखसमांश्च धर्मान्सुखप्रयत्नान्बहुपुण्यहेतून् ।।

पापेन्धनाद्यग्निनिभान्सुलभ्यान्धर्मादिमोक्षान्तपुमर्थहेतून् ।। ८४ ।।

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां द्वितीये वैष्णवखंडे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे छत्रदानप्रशंसने हेमकांतस्य ब्रह्महत्यादि पापशमनवर्णनं नाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः ११



।। मैथिल उवाच ।। ।।

वैशाखधर्माः सुलभाः पुण्यराशिविधायकाः ।।

विष्णुप्रीतिकराः सद्यः पुमर्थानां तु हेतवः ।। १ ।।

न प्रख्याताः कथं लोके शाश्वताः श्रुतिचोदिताः ।।

प्रख्याता राजसा धर्मास्तामसा अपि भूरिशः ।। २ ।।

दुर्घटा वहुयत्नाश्च वहुद्रव्यव्ययावहाः ।।

केचिन्माघं प्रशंसन्ति चातुर्मास्यान्परे जगुः ।। ३ ।।

व्यतीपातादिधर्माश्च वर्णयन्तीह भूरिशः ।।

एतद्विवेकं विस्तार्य श्रोतुकामाय मे वद ।। ४ ।।

।। श्रुतदेव उवाच ।। ।।

शृणु भूप प्रवक्ष्यामि न प्रख्याता इमे कथम् ।।

इतरेषां च धर्माणां कथं ख्यातिश्च भूतले ।। ५ ।।

राजसास्तामसा भूमौ बहवः कामुका जनाः ।।

इच्छंत्यैहिकभोगांस्ते पुत्रपौत्रादिसंपदः ।। ६ ।।

क्वचित्कथंचन क्वाऽपि जनेष्वेकोऽतिकृच्छ्रतः ।।

स्वर्गाय यतते लोके तस्माद्यज्ञादिसत्क्रियाः ।। ७ ।।

कुरुतेऽतिप्रयत्नेन मोक्षं नोपासते नरः ।।

क्षुद्राशा भूरिकर्माणो जनाः काम्यानुपासते ।। ८ ।।

प्रख्याता राजसा धर्मास्तामसा अपि तेन वै ।।

न ख्याताः सात्त्विका धर्मा हरिप्रीतिकरा इमे ।। ९ ।।

निष्कामिका इमे धर्मा ह्यैहिकाऽऽमुष्मिकप्रदाः ।।

न जानन्ति जना मूढा मोहिता देवमायया ।। 2.7.11.१० ।।

यथाऽऽधिपत्ये संप्राप्ते सर्वसिद्धो मनोरथः ।।

मोहनार्थं स्थलं प्राप्तमाधिपत्येन हीयते ।। ११ ।।

कारणं च प्रवक्ष्यामि गोपने भूतलेंऽजसा ।।
यद्वैशाखोक्तधर्माणां सात्त्विकानां नृणामिह ।। १२ ।।
सार्वभौमः पुरा काश्यामिक्ष्वाकुकुलभूषणः ।।
कीर्तिमानिति विख्यातो नृगपुत्रो महायशाः ।। १३ ।ऽ।
जितेंद्रियो जितक्रोधो ब्रह्मण्यो राजसत्तमः ।।
एकदा मृगयासक्तो वसिष्ठाश्रममाययौ ।। १४ ।।
गच्छन्मार्गे ददर्शाऽसौ वैशाखे घर्मनिष्ठुरे ।।
भूयोभूयः कार्यमाणाञ्चिछष्यांस्तस्य महात्मनः ।। १५ ।।
क्वचित्प्रपां प्रकुर्वन्ति छायामण्डपमेव च ।।
तटप्रपातं निस्तीर्य वापीं कुर्वन्ति निर्मलाम् ।। १६।।
सूपविष्टान्क्वचिद्वृक्षे व्यजनैर्वीजयन्ति च ।।
क्वचिद्दद्युर्हीक्षुदण्डान्क्वचिद्गन्धान्क्वचित्फलम्।।१७।।
मध्याह्ने छत्रदानं च सायाह्ने पानकस्य च ।।
क्वचिद्यच्छंति ताम्बूलं नेत्रे कर्पूरलेपनम् ।। १८ ।।
सुच्छाये च वने केचित्सुसंमृष्टांऽगणेषु च ।।
केचिदास्तरयंत्यद्धा वालुकानि हितानि च।। १९ ।।
कुर्वन्त्यांदोलिकां राजन्वृक्षशाखावलंबिनीम् ।।
के यूयमिति पप्रच्छ वासिष्ठा इति तेऽब्रुवन् ।। 2.7.11.२० ।।
किमेतदिति पप्रच्छ धर्मा वैशाखचोदिताः ।।
पुमर्थहेतव इमे क्रियन्तेऽस्माभिरञ्जसा ।। २१ ।।
वसिष्ठस्याऽऽज्ञया चेति तेऽबुवन्नृपसत्तमम् ।।
एतदाचरणे पुंसां किं फलं कस्तु तुष्यति ।।२२।।
एतद्विस्तार्य मे ब्रूत यूयं सम्यग्यथाश्रुतम् ।।
इति राज्ञा तु संपृष्टाः प्रत्यूचुस्ते महीपतिम् ।। २३ ।।
गुरोराज्ञाक्रमेणैव कुर्वतां पथिसत्क्रियाः ।।
नास्माकमवकाशोऽत्र गुरुं पृच्छ यथोचितम् ।। २४ ।।
स वेत्ति तत्त्वतो नूनं धर्मानेतान्महायशाः ।।
इति शिष्यैर्वसिष्ठस्य प्रत्युक्तस्तु द्रुतं ययौ ।।२५।।

वसिष्ठस्याऽश्रमं पुण्यं विद्यायोगोपबृंहितम् ।।
समायान्तं नृपं वीक्ष्य वसिष्ठः प्रीतमानसः ।।२६।।
आतिथ्यं विधिवच्चक्रे सानुगस्य महात्मनः।।
सूपविष्टः कृताऽतिथ्यः प्रीतः पप्रच्छ तं गुरुम् ।। २७ ।।
।। राजोवाच ।। ।।
मार्गे दृष्टं महाश्चर्यं त्वच्छिष्यैश्च कृतं शुभम् ।।
मया पृष्टं च तैर्नोक्तं क्रियमाणं शुभावहम् ।। २८ ।।
नास्माकमवकाशोऽत्र ह्येतद्धर्मप्रशंसने ।।
कर्तब्या च क्रियाऽस्माभिर्गुरुणा या च चोदिता ।। २९ ।।
गुरुं गच्छेति तैरुक्त आगतोऽहं तवांतिकम् ।।
मृगयाऽऽसक्तचित्तेन श्रांतेनातिथ्यमिच्छता ।। 2.7.11.३० ।।
दृष्टं मार्गे त्विदं पुण्यं तव शिष्यैश्च कारितम् ।।
जिज्ञासाऽऽसीत्ततः श्रोतुं धर्मानेतान्मुनीश्वर ।। ३१ ।।
त्वमादिरादिमान्धर्मान्समाचरसि वै यतः ।।
तान्धर्माञ्च्छ्रोतुकामाय शिष्याय प्रणताय च ।। ३२ ।।
श्रद्दधानाय मे ब्रूहि विस्तरान्मुनिपुंगव ।।
इतीक्ष्वाकुकुलीनेन राज्ञा पृष्टो महायशाः ।। ३३ ।।
मनसा तोषमापेदे सम्यक्पृष्टोऽधुनाऽमुना ।।
अहो व्यवसिता बुद्धी राजस्तेऽद्य सुशिक्षिता ।। ३४ ।।
यस्माद्विष्णुकथायां च तद्धर्माचरणेऽपि च ।।
मतिरात्यंतिकी जाता सुकृतं फलितं तव ।। ३५ ।।
इति संभाष्य राजानं जातहर्षस्तमब्रवीत् ।।
शृणु भूप प्रवक्ष्यामि यत्पृष्टोऽहं त्वयाधुना ।। ३६ ।।
यस्य श्रवणमात्रेण मुच्यते सर्वकिल्बिषैः ।।
सर्वधर्मान्परित्यज्य वर्तते विषयात्मकः ।।३७।।
वैशाखस्नाननिरतः स प्रियो मधुविद्विषः ।।
सांगान्धर्माननुष्ठाय वैशाखो येन नादृतः ।। ३८ ।।
स्नानदानार्चनैः पुण्यैस्तस्य दूरतरो हरिः ।।

अस्नाप्य चाऽप्यदत्त्वा च वैशाखो येन नीयते ।। ३९ ।।

कर्मणा स तु चण्डालो नाऽत्र कार्या विचारणा ।।

वैशाखोक्तैर्महाधर्मैर्येन चाऽऽराधितो हरिः ।। 2.7.11.४० ।।

तैश्च तोषं समायाति प्रददाति समीहितम् ।।

लक्ष्मीभर्त्ता जगन्नाथो ह्यशेषाघौघनाशनः ।। ४१ ।।

धर्मैः सूक्ष्मैश्च प्रीणाति न प्रयासैर्धनैरपि ।।

भक्त्या संपूजितो विष्णुः प्रददाति समीहितम् ।। ४२ ।।

तस्माद्राजन्सदा भक्तिः कर्तव्या मधुविद्विषः ।।

जलेनाऽपि जगन्नाथः पूजितः क्लेशहा हरिः ।। ४३ ।।

परितोषं व्रजत्याशु तृषार्तः सलिलैर्यथा ।।

महदप्यल्पदं कर्म तथा ह्यल्पं च भूरिदम् ।। ४४ ।।

कर्मणाऽल्पत्वभूरित्वे न हेतू महदल्पके ।।

किन्तु कर्मस्वरूपं च गहना कर्मणो गतिः ।। ४५ ।।

वैशाखोक्ता इमे धर्माः स्वल्पाऽऽयासकृता अपि ।।

बहुव्ययविनाशाश्च विष्णोः प्रीतिकरा शुभाः ।। ४६ ।।

तस्मात्त्वमपि भूपाल वैशाखोक्तान्समाचर।।

त्वद्राष्ट्रीयैर्जनैः सर्वैः कारयेमाञ्छुभावहान्।।४७।।

न करोति च यो धर्मान्वैशाखोक्तान्नराधमः ।।

बहुधा शिष्यमाणोऽपि स दण्ड्यस्तव भूपते ।।४८।।

इत्यावश्यकतां सम्यक्छास्त्रैर्व्युत्पाद्य तस्य च ।।

पश्चाद्वैशाखनिर्दिष्टान्धर्मान्प्रोवाच सर्वशः।।४९।।

श्रुत्वा तान्सकलान्धर्मान्गुरुं संपूज्य भक्तितः ।।

स राजा गृहमागत्य सर्वान्धर्मांश्चकार ह ।। 2.7.11.५० ।।

भक्तिमान्केशवे राजन्देवदेवे निरञ्जने ।।

नाऽन्यं पश्यति देवेशात्पद्मनाभान्महीपतिः ।। ५१ ।।

भेरीमुद्वाह्य मातंगं स्वराष्ट्रेऽघोषयद्भटैः ।।

अष्टवर्षाधिको मर्त्यो ह्यशीतिर्नहि पूर्यते ।। ५२ ।।

प्रातर्न स्नाति मेषस्थे सूर्ये सर्वोऽपि यो जनः ।।

स मे दंड्यश्च वध्यश्च निर्यास्यो विषयाद्ध्रुवम् ।। ५३ ।।
पिता वा यदि वा पुत्रो भार्या वाऽथ सुहृज्जनः ।।
वैशाखधर्महीनश्च निर्ग्राह्यो दस्युवन्मया ।। ५४ ।।
दातव्यं विप्रमुख्येभ्यः स्नात्वा प्रातर्जले शुभे ।।
प्रपादानादिधर्मांश्च कुरुध्वं शक्तितोऽनघाः ।। ५५ ।।
विप्रं च धर्मवक्तारं ग्रामेग्रामे न्यवेशयत् ।।
पञ्चानामपि ग्रामाणामकरोदधिकारिणम् ।। ५६ ।।
दण्डार्थं त्यक्तधर्माणां दशवाजिनिषेवितम् ।।
एवं प्रवृत्तः सर्वत्र सार्वभौमस्य शासनात् ।। ५७ ।।
प्रवृद्धो धर्मवृक्षोयं सर्वदेशेषु विस्तरात् ।।
ये केचिन्निधनं यांति भूपालविषये नराः ।। ५८ ।।
प्रमादाच्च नृपश्रेष्ठ ते यांति हरिमन्दिरम् ।।
अवश्यं वैष्णवो लोकः प्राप्यते मानवैर्द्रुतम् ।। ५९ ।।
व्याजेनाऽपि सकृत्स्नातः प्रातर्मेषगते रवौ ।।
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ।। 2.7.11.६० ।।
न प्राप्नोति यमं धर्मं सकृद्वैशाखस्नानतः ।।
वैलेख्यमगमद्राजा रविसूनुस्तदा नृप ।। ६१ ।।
लेख्यकर्मणि विश्रान्तश्चित्रगुप्तोऽभवत्तदा ।।
मार्जितानि च लेख्यानि पुरा पापोद्भवानि च ।। ६२ ।।
गच्छद्भिर्वैष्णवं लोकं स्वकर्मस्थैर्जनैः क्षणात् ।।
शून्यास्तु नरकाः सर्वे पापिप्राणिविवर्जिताः ।। ६३ ।।
भग्नयानोऽभवन्मार्गो वैशाखस्य प्रभावतः ।।
सर्वेऽपि विमलाकारा जना यान्ति हरेः पदम् ।। ६४ ।।
दिवौकसां तु ये लोकाः शून्याः सर्वे तथाऽभवन् ।।
शून्ये त्रिविष्टपे जाते शून्येषु नर केषु च ।। ६५ ।।
नारदो धर्मराजानं गत्वा चेदमुवाच ह ।।
नाक्रन्दः श्रूयते राजन्प्राक्च्छ्रुतो नरके यथा ।। ६६ ।।
तथा न क्रियते लेख्यं किंचिद्दुष्कृतकर्मणाम्।।

चित्रगुप्तो मुनिरिव स्थितोऽयं मौनसंस्थितः ।। ६७ ।।

कारणं ब्रूहि राजेंद्र न यान्ति तव मन्दिरम् ।।

मनुष्याः पापकर्माणो मायादम्भविवर्धिताः ।। ६८ ।।

एवमुक्ते तु वचने नारदेन महात्मना ।।

प्राह वैवस्वतो राजा किंचिद्दैन्यसमन्वितः ।। ६९ ।।

योऽयं नारद भूपालः पृथिव्यां सांप्रतं स्थितः ।।

सोऽतिभक्तो हृषीकेशे पुराणपुरुषोत्तमे ।। 2.7.11.७० ।।

प्रबोधयति वैशाखधर्मे भेरीस्वनेन च ।।

अष्टवर्षाधिको मर्त्यो ह्यशीतिर्न हि पूर्यते ।। ७१ ।।

यो वै ह्यकृतवैशाखः स मे दण्ड्यो न संशयः ।।

तद्भयाद्धि जनाः सर्वे नोल्लंघंति कदाचन ।। ७२ ।।

गच्छंति वैष्णवं धाम कर्मणा तेन नारद ।।

वैशाखसेवनाल्लोका यास्यंति हरिमंदिरम् ।। ७३ ।।

तेन राज्ञा मुनिश्रेष्ठ मार्गो लुप्तो ममाऽधुना ।।

कृता हि नरकाः शून्या लोकाश्चापि दिवौकसाम् ।। ७४ ।।

विश्रांतो लेखको लेखे लिखितं मार्जितं जनैः ।।

वैशाखमासधर्मस्य माहात्म्यं त्वीदृशं मुने ।। ७५ ।।

ब्रह्महत्यादिपापानि विमुक्तानि जनैर्द्विज ।।

कृत्वा वैशाखकृत्यानि यांति विष्णोः परं पदम् ।। ७६ ।।

सोऽहं काष्ठसमो जातो न कश्चिन्मम गोचरः ।।

युद्धं कृत्वा तु तं हन्मि सर्वथाऽद्य महाबलम् ।। ७७ ।।

अकृत्वा स्वामिकार्यं तु निर्व्यापारो यदि स्थितः ।।

तस्य वित्तं समश्नाति स याति नरकं ध्रुवम् ।। ।। ७८ ।।

यदि देवादवध्योऽयं तदा ब्रह्माणमेत्य च ।।

निवेद्य तस्मै तत्सर्वं पश्चात्स्वस्थस्थितिर्भवम् ।। ७९ ।।

इत्युक्त्वा द्विजमामंत्र्य सानुगः प्रययौ भुवम् ।।

स कालो महिषारूढो दण्डमुद्यम्य भीषणम् ।। 2.7.11.८० ।।

मृत्युरोगजराद्यैश्च पार्षदैश्च महोत्कटः ।।

पञ्चाशत्कोटिसंख्याकैर्यमदूतैर्वृतस्ततः ।। ८१ ।।

स तूर्णं तस्य राजर्षे रुरोध सकलां पुरीम् ।।

शंखं दध्मौ महाघोरं सर्वलोकभयंकरम् ।। ८२ ।।

तच्छ्रुत्वा स तु राजर्षि र्ज्ञात्वा वैवस्वतं यमम् ।।

स सज्जीकृतसर्वस्वः पत्तनान्निर्ययौ रुषा ।। ८३ ।।

तयोर्युद्धमभूत्तत्र भीषणं रोमहर्षणम् ।।

मृत्युं कालं तथा रोगं यमं दूतपतिं तथा ।। ८४ ।।

जित्वा क्षणेन राजर्षिर्द्रावयामास रोषतः ।।

ततः क्रुद्धो यमो राजा स्वयमभ्येत्य तं रुषा ।। ८५ ।।

युयोध बहुभिर्बाणैः सिंहनादं चकार ह ।।

चकर्त राजा तस्याऽपि कार्मुकं विशिखैस्त्रिभिः ।। ८६ ।।

पुनश्चर्मासिमादाय यमो हंतुमथाऽऽगमत् ।।

तं दृष्ट्वा तु नृपः क्रुद्धः पुनश्छित्त्वाऽसिचर्मणी ।। ८७ ।।

निचखान ललाटे च शरं कालोरगप्रभम् ।।

यमस्तेनाऽऽहतः क्रुद्धस्ततो दंडमुपाददे ।।

ब्रह्मास्त्रेण च संमंत्र्य दण्डं तस्मै मुमोच ह ।। ८८ ।।

हाहाकारो महानासीज्जनानां पश्यतां तदा ।।

तदा विष्णुः स्वभक्तस्य रक्षायै प्राहिणोदरि ।। ८९ ।।

विष्णुमुक्तं तदा चक्रं शीघ्रमागत्य तद्रणे ।।

यमदण्डेन संयुध्य तद्ब्रह्मास्त्रं निवार्य च ।।2.7.11.९०।।

यमं हंतुमथारेभे सहस्रारं महाद्भुतम् ।।

देवभक्तस्ततो भीतस्तदाऽस्तौच्चक्रमञ्जसा ।।९१।।

सहस्रार नमस्तेऽस्तु विष्णुपाणिविभूषण ।।

त्वं सर्वलोकरक्षायै हरिणा च धृतं पुरा ।। ९२ ।।

त्वां याचेऽद्य यमं त्रातुं विष्णुभक्तं महाबलम् ।। ९३ ।।

नृणां देवद्रुहां कालस्त्वमेव हि न चाऽपरः।।

तस्मादेनं यमं रक्ष कृपां कुरु जगत्पते ।। ९४ ।।

नृपेणैवं स्तुतं चक्रं यमं हित्वा नृपांतिकम् ।।

पुनर्ययौ महाराज देवानां पश्यतां दिवि ।। ९५ ।।

ततो यमोऽतिनिर्विण्णो ब्रह्मणः सदनं ययौ ।।

स ददर्श समासीनं मूर्तामूर्तजनैर्वृतम् ।।९६।।

ध्रुवाश्रयं जगद्बीजं सर्वलोकपितामहम्।।

उपास्यमानं विबुधैर्लोकपालैर्दिगीश्वरैः ।। ९७ ।।

इतिहासपुराणाद्यैर्देवैर्विग्रहसंस्थितैः ।।

मूर्तिमद्भिः समुद्रैश्च नदीभिश्च सरोवरैः ।। ९८ ।।

देहवद्भिस्तथा वृक्षैरश्वत्थाद्यैरशेषितैः ।।

वापीकूपतडागैश्च मूर्तिमद्भिश्च पर्वतैः ।। ९९ ।।

अहोरात्रैस्तथा पक्षैर्मासैः संवत्सरैस्तथा ।।

कलाकाष्ठा निमेषैश्च ऋतुभिश्चाऽयनैर्युगैः ।। 2.7.11.१०० ।।

संकल्पैश्च विकल्पैश्च निमिषोन्मेषणैस्तथा ।।

ऋक्षैर्योगैश्च करणैः पूर्णिमाभिः सुसंक्षयैः ।। १०१ ।।

सुखैर्दुःखैर्भयैश्चैव लाभाऽलाभैर्जयाजयैः।।

सत्त्वेन रजसा चैव तमसा च समन्वितम् ।।१०२।।

शांतमूढाऽतिप्रौढैश्च विकारैः प्राकृतैरपि ।।

वायुना देवदेवेन श्लेष्मपित्तादिभिर्वृतम् ।। १०३ ।।

तेषां मध्येऽविशत्सौरिः सव्रीडा च वधूर्यथा ।।

विलोकयन्धरापृष्ठं म्लानवक्त्रं व्यदर्शयत् ।।१०४।।

संप्रविष्टं यमं दृष्ट्वा सकाशस्थं सहानुगम् ।।

विस्मितास्ते मिथः प्रोचुः किमर्थं भास्करिस्त्विह ।। १०५ ।।

संप्राप्तो लोककर्तारं द्रष्टुं देवं पितामहम् ।।

निर्व्यापारः क्षणमपि योऽयं नास्ति रवेः सुतः ।। १०६ ।।

सोऽयमभ्यागतः कस्मात्कच्चित्क्षेमं दिवौकसाम् ।।

आश्चर्याऽतिशयोऽयं च संमार्जितपटस्त्वयम् ।।१०७।।

लेखकस्तमनुप्राप्तो दैन्येन महताऽन्वितः ।।

न कदाचित्पटो ह्यस्य मार्जितो धर्मभीरुणा ।।१०८।।

यन्न दृष्टं श्रुतं वाऽपि तदिहाऽद्य प्रपद्यते ।।

एवमुच्चरतां तेषां भूतानां भूतशासनः ।।
निष्पपाताऽग्रतो भूमौ ब्रह्मणो रविनंदनः ।।१०९।।
कृत्तमूलो यथा शाखी त्राहित्राहीति वै रुदन्।।
परिभूतोऽस्मि देवेश संमार्जितपटःकृतः ।।2.7.11.११०।।
त्वयि नाथे न विफलं पश्यामि कमलासन ।। १११ ।।
एवमुक्त्वा हि निश्चेष्टो बभूव नृपसत्तम ।।
ततः कोलाहलः शब्दः सभायां समजायत ।। ।। ११२ ।।
यो हि खेदयते मर्त्यान्सर्वान्स्थावरजंगमान् ।।
स वै रुदति दुःखार्तः कस्माद्वैवस्वतो यमः ।। १३४।।
जनसंतापकर्त्ता यः सोचिराद्यात्यशोभनम् ।।
नहि दुष्कृतकर्त्ता हि नरः प्राप्नोति शोभनम् ।। ११४ ।।
ततो निवारयामास वायुस्तेषां वचस्तदा ।।
लोकानां समवेतानां मतं ज्ञात्वा स वेधसः ।। ११५ ।।
निवार्य लोकान्मार्तंडि शनैरुत्थापयन्मरुत् ।।
भुजाभ्यां शालपीनाभ्यां लोकसूत्र उदारधीः ।।११६।।
विह्वलं तं परायत्तमासने संन्यवेशयत् ।।
आसनस्थमुवाचेदं व्योमसूनू रवेः सुतम् ।। ११७ ।।
केन त्वमभिभूतोऽसि केन स्थानान्निवारितः ।।
केनाऽयं मार्जितो देव पटो लेखपटस्तव ।।११८।।
ब्रूहि सर्वमशेषेण कुतो हैतोस्त्वमागतः ।।
यः प्रभुस्तात सर्वेषां स ते कर्ता ममाऽपि च ।।
अपि कस्माच्च मार्तंडे दुःखं हृदयसंस्थितम् ।।११९।।
स एवमुक्तः श्वसनेन सत्यमादित्यसूनुर्वचनं बभाषे ।।
विलोक्य वक्त्रं कुशकेतुसूनोः सगद्गदं चेदमहोऽतिदीनम् ।। 2.7.11.१२० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे कीर्तिमद्विजयवर्णनंनामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/h89
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। यम उवाच ।। ।।

शृणु मे वचनं नाथ लोपितोऽहं पितामह ।।

मरणादधिकं मन्ये मत्पदस्य च खण्डनम् ।। १ ।।

नियोगी न नियोगं हि करोति कमलासन ।।

प्रभोर्वित्तं समश्नाति स भवेत्काष्ठकीटकः ।। २ ।।

योऽश्नाति लोभाद्वित्तानि प्रज्ञावांश्च महीपते ।।

स तिर्यग्योनि नरके याति कल्पशतत्रयम् ।। ३ ।।

निःस्पृहो नाऽऽचरेद्यस्तु नियोगं पद्मसंभव ।।

भुक्त्वा तु नरकान्घोरान्स पुमान्वायसो भवेत् ।। ४ ।।

आत्मकार्यपरो यस्तु स्वामिकार्यं विलुंपति ।।

भवेद्वेश्मनि पापात्मा आखुः कल्पशतत्रयम् ।। ५ ।।

नियोगी यश्च भूत्वा वै तिष्ठन्नित्यं स्ववेश्मनि ।।

शक्तस्तु कार्यकरणे मार्जारो जायते नरः ।। ६ ।।

सोऽहं देव तवादेशात्प्रजा धर्मेण साधये ।।

पुण्येन पुण्यकर्तारं पापं पापेन कर्मणा ।। ७ ।।

सम्यग्विचार्य मुनिभिर्धर्मशास्त्रान्वितैः प्रभो ।।

कल्पादौ वर्तमानस्य यातना दापयन्मम ।। ८ ।।

कर्तुं नियोगमेवं हि त्वदीयो नैव शक्नुयाम् ।।

राज्ञा कीर्तिमता भग्नो नियोगस्तव च क्षितौ ।। ९ ।।

भयादस्य जगन्नाथ पृथिवीं सागराम्बराम् ।।

वैशाखधर्मसहितां पालयन्वर्तते क्वचित् ।। 2.7.12.१० ।।

विहाय सर्वधर्मांश्च विहाय पितृपूजनम् ।।

विहायाऽग्निसपर्यां तु तीर्थं यात्रादिसत्क्रियाः ।। ११ ।।

योगसांख्यावुभौ त्यक्त्वा त्यक्त्वा प्राणनिरोधनम् ।।

त्यक्त्वा होमं च स्वाध्यायं कृत्वा पापानि भूरिशः ।। १२ ।।

प्रयान्ति वैष्णवं लोकं कृत्वा वैशाखसत्क्रियाः ।।

मनुजाः पितृभिः सार्द्धं तथैव च पितामहैः ।।१३।।

तेषामतीतपितरः पितॄणां पितरस्तथा ।।

तथा मातामहा यांति तेषां वै जनकादयः ।। १४ ।।

तेषामपि च नेतारो जनित्रीणां च पूर्वजाः ।।

एतद्दुःखं पुनर्देव मम मस्तकभेदनम् ।।१५।।

प्रियायाः पितरो यान्ति मार्जयित्वा लिपिं मम ।।

पितॄणां बीजजो यस्तु धात्र्या कुक्षौ धृतो विभो ।। १६ ।।

यदंकेन कृतं कर्म तदेकेनैव भुज्यते ।।

तन्निरस्य कृतं सर्वं जानंस्त्वेकः कुले तु यः ।। १७ ।।

तारयेत्तावुभौ पक्षौ षड्विंशोपर्यलं विभो ।।

प्रियायाश्चाऽपि वै तात सर्वे वै कुक्षिसंभवाः ।। १८ ।।

तेऽपि सर्वे जगन्नाथ यान्ति विष्णोः परं पदम् ।।

न मे प्रयोजनं देव नियोगेनेदृशेन वै ।। १९ ।।

वैशाखधर्मनिरतः स मां त्यक्त्वा व्रजेद्धरिम् ।।

त्रिःसप्तकुलमुद्धत्य त्यक्तपापोऽतिशोभनः ।। 2.7.12.२० ।।

स त्यक्त्वा मम मार्गं हि प्रयाति हरिमंदिरम् ।।

न यज्ञैस्तादृशैर्देव गतिं प्राप्नोति मानवः ।। २१ ।।

सर्वतीर्थैर्न दानाद्यैर्न तपोभिश्च न व्रतैः ।।

अपि वा सकलैर्धर्मैर्युक्तो नाऽप्नोति तां गतिम्।। २२ ।। ।

प्रयागपाताद्रणमध्यपाताद्भृगोश्च पातान्मरणाच्च काश्याम् ।।

न तां गतिं यांति जनाश्च सर्वे वैशाखनिष्ठेन च या प्रपद्यते ।। २३ ।।

प्रातः स्नात्वा देवपूजां च कृत्वा श्रुत्वा कथां मासमाहात्म्यसंज्ञाम् ।।

धर्मान्कृत्वा चोचितान्वैष्णवांश्च स वै भवेद्विष्णुलोकैकनाथः ।। २४ ।।

अप्रमाणमहं मन्ये लोकं विष्णोर्जगत्पतेः ।।

यो न पूर्येत कोट्योघैः सर्वतः कमलासन ।। २५ ।।

माधवावसथेनेह समस्तेन पितामहम् ।।

विकर्मस्थाऽविकर्मस्थाः शुचयोऽशुचयस्तथा ।।२६।।

कृत्वा वैशाखकृत्यानि लोका यान्ति नृपाऽऽज्ञया ।।

योऽस्माकं हि महच्छत्रुर्भवतां च विशेषतः।।२७।।

निग्राह्यो जगतां नाथ भवताऽसौ महीपतिः ।।

हित्वा हि सकलान्धर्मान्सकृद्वैशाखस्नानतः ।। २८ ।।

असंस्कृतजना यांति वैकुण्ठं हरिमंदिरम् ।।

अस्माभिस्तु कृतोपेक्षो त्लिणुपादैकसंश्रयः ।। २९ ।।

समस्तं नेष्यते लोकं पार्थिवो नात्र संशयः ।।

एष दण्डपटो ह्यद्य तव पद्भ्यां निवेदितः ।2.7.12.३०।।

लोकपालत्वमतुलमर्जितं तेन भूभुजा।।

किमपत्येन जातेन मातुः क्लेशंकरेण वै।।३१।।

यो न पातयते शत्रुं ज्येष्ठमासीव भास्करः ।।

वृथासुता हि युवतिर्जाता चेद्धि कुपुत्रिणी ।।३२।।

न तस्याः स्फुरते कीर्तिर्घनस्येव शतह्रदा ।।

यत्पितुर्नोद्धरेत्पापाद्विद्यया वा बलेन वा ।।३३।।

मातुर्जठरजो रोगः स प्रसूतो धरातले ।।

धर्मे चाऽर्थे च कामे च यत्प्रतीपो भवेत्सुतः ।। ३४ ।।

मातृहा ह्युच्यते सद्भिः स पुत्रः पुरुषाधमः ।।

तन्माता नृपपत्नी च लोकविख्यातसत्क्रिया ।। ३५ ।।

एकैव वीरसूर्लोके वीरः स नात्र संशयः ।।

यथा वै कीर्तिमाञ्जातो मल्लिपेर्माजनाय वै ।। ।। ३६ ।।

नेदं व्यवसितं देव केनचित्क्षत्रियेण हि ।।

पुराणेषु जगन्नाथ न श्रुतं पटमार्जनम् ।। ३७ ।।

सोऽहं न जानामि जगत्पतीश ऋते क्षितीशं हरितत्परं तम् ।।

प्रचोदयन्तं पटहं सुघोषाद्विलोपयानं मम वेश्ममार्गम् ।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे यमदुःखनिरूपणंनाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १३



।। ।। ब्रह्मोवाच ।। ।।

किमाश्चर्यं त्वया दृष्टं किमर्थं खिद्यते भवान् ।।

सद्गुणेषु कृतस्तापः स तापो मरणांतिकः ।।१।।

तस्योच्चारणमात्रेण प्राप्यते परमं पदम् ।।

न गच्छंति हरेर्लोकं कथं भूपस्य शासनात् ।। २ ।।

एकोऽपि गोविन्दकृतः प्रणामः शताश्वमेधावभृथेन तुल्यः ।।

यज्ञस्य कर्त्ता पुनरेति जन्म हरेः प्रणामो न पुनर्भवाय ।। ३ ।।

कुरुक्षेत्रेण किं तस्य सरस्वत्या च किं तथा ।।

जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ।। ४ ।।

ब्राह्मणः श्वपचीं भुंजन्विशेषेण रजस्वलाम् ।।

यदि विष्णुं स मरणे स्मरेन्नाप्नोति तत्पदम् ।। ५ ।।

अभक्ष्यभक्षणाज्जातं विहायाघस्य संचयम् ।।

प्रयाति विष्णुसायुज्यं यतो विष्णुप्रिया स्मृतिः ।। ६ ।।

एवं विष्णुप्रियो मासो वैशाखो नाम वै यम ।।

यद्धर्मश्रवणादेव मुच्यते सर्वकिल्बिषैः ।। ७ ।।

यातीति किमु वक्तव्यं तस्यानुष्ठानतत्परः ।।

यस्मिन्संगीयते यो हि प्रीयते पुरुषोत्तमः ।। ८ ।।

कथं न याति च गतिं तस्याऽनुष्ठानत त्परः ।।

अस्माकं जगतां नाथो जनिता पुरुषोत्तमः ।। ९ ।।

तस्येष्टान्माधवे मासि धर्मानेतान्करोत्वयम् ।।

तस्य विष्णुः प्रसन्नात्मा सहाये सर्वदा स्थितः ।। 2.7.13.१० ।।

न तस्य भूपतेः सौरे समर्थस्त्वं च शिक्षणे ।।

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।।

जन्ममृत्युजराव्याधि भयं नैवोपजायते ।। ११ ।।

नियोगी स्वामिकार्येषु यावच्छक्ति समीहते ।।
तावता स कृतार्थः स्यान्नरकान्नैव गच्छति ।। १२ ।।
कार्ये शक्ति विनिष्क्रान्ते स्वामिने च निवेदयेत् ।।
अनृणस्तावता भृत्यो नियोगी सुखमश्नुते ।। १३ ।।
तस्मान्निवेदितार्थस्य न ऋणं न च पातकम् ।।
यत्ने कृते स्वकर्तव्ये नापराधोस्ति देहिनः ।। १४ ।।
तस्मादशक्यकार्येऽस्मिन्न विशोचितुमर्हसि ।। १५ ।।
इत्युक्तो ब्रह्मणा सौरिः पुनरत्यंतखिन्नधीः ।।
उवाच दीनया वाचा गलद्बाष्पाऽऽकुलेक्षणः ।। १६ ।।
प्राप्तं तात मया सर्वं त्वदंघ्रिभजनेन वै ।।
नाऽहं यास्ये पुनः कर्तुं नियोगं पद्मसंभव ।। १७ ।।
प्रशासति महावीर्ये भूपेऽस्मिन्भूमिमण्डले ।।
चालयित्वा स्वधर्मांश्च तमेकं भूपतिं विभो ।।१७।।
कृतकृत्योऽस्मि तनयो गयायां पिण्डदो यथा।।
कृपालो तदिदं कार्यं साधयस्व ममाव्ययम् ।। १९ ।।
विज्वरस्तु ततो भूयः शासनं ते करोम्यहम् ।।
श्रुत्वा ब्रह्मा यमेनोक्तं पुनश्चिंतापरायणः ।। ।। 2.7.13.२० ।।
तमुवाच पुनर्ब्रह्मा सांत्वयन्बहुधाप्यमुम् ।।
।। ब्रह्मोवाच ।। ।।
न निर्ग्राह्यस्त्वया राजा विष्णुधर्मपरायणः ।। २१ ।।
यदि च्छलयसे कोपाद्गच्छामो ह्यंतिकं हरेः ।।
निवेद्य सकलं तस्मै कर्म पश्चात्तदीरितम् ।। २२ ।।
स एव कर्ता लोकस्य धर्मस्य परिपालकः ।।
स च दण्डधरोऽस्माकं शास्ता कर्ता नियामकः ।।२३।।
न तदुक्तेऽस्ति प्रत्युक्तिरस्माकं विहिता वृष ।।
न राजोक्तेस्तु प्रत्युक्तिर्दृश्यते क्वाऽपि भूतले।। २४ ।।
इत्याश्वास्य यमं तेन साकं क्षीरांबुधिं ययौ ।।
ब्रह्मा तुष्टाव चिन्मात्रं निर्गुणं परमेश्वरम् ।। २५ ।।

सांख्ययोगैरद्वितीयमेकं तं पुरुषोत्तमम् ।।

आविरासीत्तदा विष्णुर्ब्रह्मणा संस्तुतो हरिः ।। २६ ।।

प्रणामं चक्रतुस्तस्मै यमो ब्रह्मा च सत्वरम् ।।

तावुवाच महाविष्णुर्मेघगंभीरया गिरा ।। ।। २७ ।।

कस्माद्युवामिहाऽऽयातौ किं दुःखं दनुजैरभूत् ।।

म्लानं यममुखं कस्मात्केन वा नतकंधरः ।। २८ ।।

एतद्वदस्व मे ब्रह्मन्नित्युक्तश्चाह कंजजः ।।

त्वद्दासवर्ये भूपाले भूमिं शासति वै नराः ।। २९ ।।

वैशाखधर्मनिरता यांति ते परमव्ययम् ।।

ततो यमपुरी शून्या तेन चाऽतीवदुःखितः ।। 2.7.13.३० ।।

तेन युद्धं चकाराऽसौ हंतुं दंडमथाऽददे ।।

त्वच्चक्रेण पराभूतो ययावद्य ममान्तिकम् ।। ३१ ।।

न च शक्तो वयं दंडं त्वद्भक्तानां महात्मनाम् ।।

तस्मात्त्वामेव शरणं वयं प्राप्ता महाविभो ।। ३२ ।।

तस्माद्भूपं दंडयित्वा पालयैनं यमं स्वकम् ।।

इत्युक्तः प्रहसन्प्राह ब्रह्माणं यममेव च ।। ३३ ।।

लक्ष्मीं वाऽपि परित्यक्ष्ये प्राणान्देहमथाऽपि वा ।।

श्रीवत्सं कौस्तुभं मालां वैजयंतीमथाऽपि वा ।।३४।।

श्वेतद्वीपं च वैकुंठं क्षीरसागरमेव च।।

शेषं च गरुडं चैव न भक्तं त्यक्तुमुत्सहे ।। ३५ ।।

विस्सृज्य सकलान्भोगान्मदर्थे त्यक्तजीवितान् ।।

मदात्मकान्महाभागान्कथं तांस्त्यक्तुमुत्सहे ।। ३६ ।।

तस्मात्त्वद्दुःखशमने ह्युपायं कल्पयाम्यहम् ।।

तस्य चायुर्मया दत्तमयुतं भूपतेर्भुवि ।। ३७ ।।

गतान्यष्टौ सहस्राणि तत्रेदानीं नरांतक ।।

आयुःशेषे तेन नीते मत्सायुज्यं गतेऽपि च।।३८।।

भविष्यति ततो राजा वेनो नाम दुरात्मवान्।।

स लुंपति महाधर्मान्सर्वानेताञ्छ्रुतीरितान् ।।३९।।

तदा वैशाखधर्माश्च विच्छिन्ना स्युर्न संशयः ।।
स्वकृतेनैव पापेन वेनो दग्धो भविष्यति ।।2.7.13.४०।।
पश्चादहं पृथुर्भूत्वा पुनर्धर्मान्प्रवर्तये ।।
तदा जनेषु प्रख्यातान्वैशाखोक्तान्करोम्यहम् ।।४१।।
मद्भक्तो मद्व्रतप्राणो यस्तु विन्यस्तसंग्रहः ।।
एकः सहस्रे भविता तस्य प्रख्यापयेद्धि तान् ।। ४२ ।।
कश्चिदेव हि जानातु धर्मानेतान्क्षितौ मम ।।
ततस्ते भविता कार्यं मा विषीद नरांतक ।। ४३ ।।
दापयिष्यामि ते भागं मासेऽस्मिन्माधवेऽपि च ।।
नरैः सर्वैश्च वैशाखधर्मनिष्ठैर्महात्मभिः ।। ४४ ।।
भूपेनाऽपि च कालेन खेदं शमय तेन च ।।
वीर्यशुल्कं तु ते भागं शत्रोर्भुंक्ते बलाधिकात्।। ४५ ।।
गृह्णन्गृह्णन्स्वकं भागं न भागी दुःखमर्हति ।।
त्वामुद्दिश्य न कुर्वंति प्रत्यहं ये नरा भुवि ।।४६।।
स्नानं चार्घ्यं सोदकुंभं दध्यन्नं चांतिमे दिने ।।
वैशाखे सकलं कर्म तेषां च विफलं भवेत् ।। ४७ ।।
तस्मात्क्रोधं त्यज नृपे भागदे मत्परायणे ।।
ये के चाऽपि च कुर्वंति लोके ते भागदा नराः ।। ४८ ।।
वैशाखोक्ते महाधर्मे तेषां विघ्नं च मा कुरु ।।
मामेव ये यजंत्यद्धा त्वां हित्वा धर्मपालकम् ।। ४९ ।।
मदाज्ञया महाभाग तदा दंडं च त्वं कुरु ।।
नृपाद्भागं दापयितुं सुनंदं प्रेषयामि च ।।2.7.13.५० ।।
मच्छासनात्स वै गत्वा भागं ते दापयिष्यति ।।
तिष्ठत्येवं यमे स्वस्य सन्निधौ गरुडासनः ।। ५१ ।।
सुनन्दं प्रेषयामास नृपं बोधयितुं विभुः ।।
सोऽपि गत्वा बोधयित्वा पार्श्वं च पुनरागमत् ।। ५२ ।।
इत्याश्वास्य यमं विष्णुस्तत्रैवान्तरधीयत ।।
यमं स्वयं सांत्वयित्वा समनुज्ञाप्य वेगतः ।। ५३ ।।

अतिविस्मयमापन्नो ययौ धाम सहानुगैः ।।

यमोऽपि स्वपुरीं प्रायात्किंचित्संहृष्टमानसः ।। ५४ ।।

पश्चाद्विष्णोर्निदेशेन सुनन्दपरिबोधितः ।।

भागदाः सकला लोका ये वैशाखपरायणाः ।। ५५ ।।

धर्मराजं पुरस्कृत्य ये न कुर्वंति मानवाः ।।

तेषां हि स्वयमादत्ते पुण्यं वैशाखसंभवम् ।। ५६ ।।

कुर्याच्च प्रत्यहं स्नानं दद्यादर्घ्यं यमाय वै ।।

वैशाखे सकलं पुण्यमन्यथा विफलं भवेत् ।। ५७ ।।

सोदकुम्भं च दध्यन्नं पौर्णमास्यां च माधवे ।।

धर्मराजं समुद्दिश्य दातव्यं प्रथमं जनैः ।। ५८ ।।

पश्चात्पितॄन्समुद्दिश्य गुरुमुद्दिश्य वै नरः ।।

मधुसूदनमुद्दिश्य पश्चाद्देवं जनार्दनम् ।। ५९ ।।

शीतलोदकदध्यन्नं तांबूलं च सदक्षिणम् ।।

सफलं कांस्यपात्रस्थं ब्राह्मणाय निवेदयेत् ।। 2.7.13.६० ।।

दद्याच्च प्रतिमां दिव्यां मधुसूदनदेवताम् ।।

मासधर्मप्रवक्त्रे च दद्याद्विप्राय सीदते ।। ६१ ।।

तमेव धर्मवक्तारं पूजयेद्विभवैः स्वकैः ।।

इत्यादिष्टः सुनन्देन तथा राजा चकार ह ।। ६२ ।।

स नीत्वा चायुषः शेषं भुक्त्वा भोगान्यथेप्सितान् ।।

पुत्रपौत्रादिभिर्युक्तो जगाम हरिमंदिरम् ।। ६३ ।।

वैकुण्ठस्थे नृपे तस्मिन्वेनो राजाऽधमोऽभवत् ।।

सर्वे धर्माश्च वैशाखधर्मा अपि विशेषतः ।। ६४ ।।

दुरात्मना च तेनैव लुप्ता एव बभूविरे ।।

न प्रख्याताः पुनर्भूमौ भूरिशो मोक्षहेतवः ।। ६५ ।।

यः कश्चिन्नैव जानाति वैशाखोक्तानिमाञ्च्छुभान् ।।

बहुजन्मार्जिते पुण्यपरिपाक उपागते ।। ।। ६६ ।।

वैशाखोक्तेषु धर्मेषु मतिरात्यन्तिकी भवेत् ।।

।। मैथिल उवाच ।। ।।

पूर्वमन्वंतरस्थो हि वेनो राजा दुरात्मवान् ।। ६७ ।।

अयं वैवस्वतस्थो हि राजा चेक्ष्वाकुनंदनः ।।

इति श्रुतं मया पूर्वमिदानीं चोच्यते त्वया ।। ६८ ।।

अयं वैकुण्ठगः पश्चाद्वेनो राजा भविष्यति ।।

इत्येतं संशयं छिंधि श्रुतदेव महामते ।। ६९ ।।

।। श्रुतदेव उवाच ।। ।।

पुराणेषु च वैषम्यं युगकल्पव्यवस्थया ।।

न चाप्रामाण्यशंका ते कथाया व्यत्यये क्वचित् ।। 2.7.13.७० ।।

गते दैनंदिने कल्पे यथैषा शाश्वती शुभा ।।

मार्कण्डेयेन मे प्रोक्ता सा चोक्ता तव भूपते ।। ७१ ।।

तस्मान्न ख्यातिमायान्ति धर्मा वैशाखसंभवाः ।।

कश्चिदेव हि जानाति विरक्तो विष्णुतत्परः ।। ७२ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदांबरीषसंवादे यमदुःखसांत्वनं नाम त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/h8b



।। श्रुतदेव उवाच ।। ।।

यः प्रातः स्नाति वैशाखे मेषसंस्थे दिवाकरे ।।

मधुसूदनमभ्यर्च्य कथां श्रुत्वा हरेरिमाम् ।। १ ।।

स तु पापविनिर्मुक्तो याति विष्णोः परं पदम् ।।

वाच्यमानां कथां हित्वा योऽन्यां सेवेत मूढधीः ।।२ ।।

रौरवं नरकं प्राप्य पैशाचीं योनिमाप्नुयात् ।।

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।। ३ ।।

पापघ्नं पावनं धर्म्यं सद्यो वंद्यं पुरातनम् ।।

पुरा गोदावरीतीरे क्षेत्रे ब्रह्मेश्वरे शुभे ।। ४ ।।

दुर्वासशिष्यौ परमहंसौ ब्रह्मैकनिष्ठितौ ।।

सदैवोपनिषद्विद्यानिष्ठितौ निरपेक्षितौ ।। ५ ।।

भिक्षामात्राशिनौ पुण्यौ तौ गुहावासिनावुभौ ।।

सत्यनिष्ठतपोनिष्ठाविति ख्यातौ जगत्त्रये ।। ६ ।।

तयोर्मध्ये सत्यनिष्ठः सदा विष्णुकथापरः ।।

श्रोतृणामप्यभावे च व्याख्यातृणां तथा नृप ।। ७ ।।

तदा कर्मकला नित्याः करोत्यद्धा मुनीश्वरः ।।

श्रोता चेदस्ति यः कश्चित्तस्मै व्याख्या त्यहर्निशम् ।। ८ ।।

यदि व्याख्याति कश्चिद्वा पुण्यां विष्णुकथां शुभाम् ।।

तदा संकुच्य कर्माणि शृणोति श्रवणे रतः ।। ९ ।।

अतिदूरस्थतीर्थानि देवतायतनानि च ।।

हित्वा कथाविरोधीनि तथा कर्माणि भूरिशः ।। 2.7.14.१० ।।

शृणोति च कथां दिव्यां श्रोतृभ्यो वक्ति वै स्वयम् ।।

विना कथां न जानाति सेव्यमन्यन्नरेश्वर ।। ११ ।।

व्याख्याति च गृहे स्वस्य वक्ता रोगाद्युपद्रुतः ।।

कूपस्नानपरो भूत्वा शृणोत्येव कथां मुनिः ।। १२ ।।

कथायाश्च विरामे तु स्वकृत्यं साधयत्यलम् ।।

कथां वै शृण्वतः पुंसो जन्ममबन्धो न विद्यते ।। १३ ।।

सत्त्वशुद्धिस्ततो विष्णावरतिश्चैव गच्छति ।।

रतिश्च जायते विष्णौ सौहृदं चैव साधुषु ।। १४ ।।

नीरजं निर्गुणं ब्रह्म सद्यो हृद्यवरुध्यते ।।

ज्ञानहीनस्य वै पुंसः कर्म वै निष्फलं भवेत् ।। १५ ।।

बहुधा चरितं चाऽपि यथैवांधकदर्पणम् ।।

कर्माणि क्रियमाणानि बहुधा शोचितात्मभिः ।। १६ ।।

सत्त्वशुद्ध्यै भवंत्येव सत्त्वशुद्ध्या श्रुतिं व्रजेत् ।।

श्रुतेस्तु ज्ञानमासाद्य ज्ञात्वा ध्यानाय कल्पते ।। १७ ।।

बहुधा श्रवणं ध्यानं मननं श्रुतिचोदितम् ।।

यत्र विष्णुकथा नास्ति यत्र साधुजना नहि ।। १८ ।।

साक्षाद्गंगातटं वाऽपि त्याज्यमेव न संशयः ।।

यद्देशे तुलसी नास्ति वैष्णवं धाम वा शुभम्।। १९ ।।

यत्र विष्णुकथा नास्ति मृतस्तत्र तमो व्रजेत् ।।

यद्ग्रामे वैष्णवं धाम नास्ति कृष्णमृगोऽपि वा ।।2.7.14.२०।।

यत्र विष्णुकथा नास्ति साधवो वा तदाश्रयाः ।।

मृतस्तत्र पुमान्क्षिप्रं श्वानयोनिशतं व्रजेत् ।।२१।।

विचार्योपनिषद्विद्यामिति निश्चित्य वै मुनिः ।।

सदा विष्णुकथाऽऽसक्तो विष्णुस्मृतिपरायणः ।। २२ ।।

न किंचिदधिकं जातु मन्यते श्रवणात्परम् ।।

इतरस्तु तपोनिष्ठः कर्मनिष्ठो दुराग्रही ।। २३ ।।

न व्याख्याति स्वयं वाऽपि न शृणोति च सत्कथाम् ।।

वाच्यमानां कथां हित्वा तीर्थस्नानाय गच्छति ।।२४ ।।

तीर्थेऽपि च प्रवृत्तायां कथायां भूमिपालक ।।

कर्मलोपभयाद्दूरं याति चांचल्यशक्तितः ।।२५।।

व्रजंति गृहकृत्यार्थं संगमात्परतो जनाः ।।

न श्रोतारो न वक्तारस्तस्य पार्श्वे तु कर्मिणः ।।२६।।

दुरात्मनस्तु दुर्बुद्धेः काल एवं क्षयं गते ।।

जिह्वां श्रुतिं च न क्वापि संप्राप्ता हि कथा विभोः ।।२७।।

अश्रोतृत्वादवक्तृत्वाद्दुर्बुद्धित्वाद्दुराग्रहात् ।।

पश्चात्पंचत्वमासाद्य सद्यो धर्मेण वै मुनिः ।। २८ ।।

पिशाचोऽभूच्छमीवृक्षे च्छिन्नकर्णाह्वयोऽबलः ।।

निराश्रयो निराहारः शुष्ककण्ठोष्ठतालुकः ।।२९।।

एवं वै खिद्यमानस्य समा दिव्यायुता गताः ।।

नापश्यत्स्वस्य त्रातारं निराहारोऽतिदुःखितः ।। 2.7.14.३० ।।

स्वकृतं चिंतयानश्च मत्तोन्मत्त इवाभ्रमत् ।।

क्षुधया पर्यटन्वाऽपि निर्वृतिं नाप मूढधीः ।। ३१ ।।

कृशानुसदृशो वायुरंगं स्पृष्ट्वा कृतात्मनः ।।

कालाग्नितुल्या आपश्च फलपुष्पादिकं विषम् ।। ३२ ।।

न क्वापि सुखमापेदे कर्मठो दीनधीरयम् ।।

एवं व्यवसिते तस्मिन्नरण्ये जनवर्जिते ।। ३३ ।।

कथया रहिते क्षेत्रे स्वाश्रये साधुवर्जिते ।।

दैवादायात्सत्यनिष्ठस्तदा पैठिनसीं पुरीम् ।। ३४ ।।

गच्छन्मार्गे ददर्शाऽसौ छिन्नकर्णं वहुव्यथम् ।।

दृष्ट्वाऽऽत्मानं द्रावयन्तं रुदंतं क्षुधयाऽऽतुरम् ।। ३५ ।।

मा भैषीरिति चाभाष्य कोऽसीत्याह मुनीश्वरः ।।

दशेदृशी च कस्मात्ते न ते दुःखमतः परम्।। ।। ३६ ।।

इत्याश्वस्तोऽमुना च्छिन्नकर्णः प्राहातिविह्वलः ।।

तपोनिष्ठो यतिरहं शिष्यो दुर्वाससः परम् ।। ३७ ।।

ब्रह्मेश्वरक्षेत्रवासी कर्मनिष्ठो दुराग्रही ।।

कर्मलोपभयान्मौढ्यान्मया दुर्बुद्धिना मुने ।। ३८ ।।

साधुभिर्वाच्यमानाऽपि नादृता विष्णुसत्कथा ।।

न व्याख्याता च श्रोतृभ्यः कथा कर्मनिकृतंनी ।। ३९ ।।

तेन कर्मविपाकेन महताऽहं मृतिं गतः ।।

छिन्नकर्णोऽभवं नाम्ना पिशाचो दुःखविह्वलः ।। 2.7.14.४० ।।

न पश्यामि च त्रातारं दुःखादस्मात्कथंचन ।।

तव दृष्टिपथं यातो दिष्टयाऽहं गतकल्मषः ।। ४१ ।।

अद्य मे देवतास्तुष्टा गुरवः साधवश्च ये ।।

हरिश्च मे प्रसन्नोऽभूद्यतस्ते दर्शनं मम ।। ४२ ।।

पपात पादयोर्भूमौ त्राहित्राहीति वै रुदन् ।।

ततस्तु कृपयाऽऽविष्टः सत्यनिष्ठो महायशाः ।।४३।।

दोर्भ्यामुत्थापयामास शंतमाभ्यां मुनीश्वरः ।।

ततस्त्वप उपस्पृश्य ददौ पुण्यमनुत्तमम् ।।४४।।

वैशाखमासमाहात्म्यश्रवणस्य मुहूर्तजम् ।।

तेन पुण्यप्रभावेन सद्यो ध्वस्ताखिलाशुभः ।। ४५ ।।

पिशाचदेहनिर्मुक्तो दिव्यदेहधरोऽभवत् ।।

दिव्यं विमानमारुह्य तं प्रणम्य महामुनिम् ।।४६।।

आमंत्र्य च परिक्रम्य ययौ विष्णोः परं पदम् ।।

सत्यनिष्ठस्ततो धीमान्ययौ पैठिनसीं पुरीम् ।। ४७ ।।

माहात्म्यश्रवणस्यैवं चिंतयानः पुनःपुनः ।।

।। श्रुतदेव उवाच ।। ।।

यत्र विष्णुकथा पुण्या शुभा लोकमलाऽपहा ।। ४८ ।।

तत्र सर्वाणि तीर्थानि क्षेत्राणि विविधानि च ।।

यत्र प्रवहते पुण्या शुभा विष्णुकथाऽऽपगा ।। ४९ ।।

तद्देशवासिनां मुक्तिः करसंस्था न संशयः ।। 2.7.14.५० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे नारदाम्बरीषसंवादे कथाप्रशंसायां पिशाचमुक्तिप्राप्तिर्नाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १५



।। श्रुतदेव उवाच ।। ।।

भूयः शृणुष्व भूपाल माहात्म्यं पापनाशनम् ।।

वैशाखस्य च मासस्य वल्लभस्य मधुद्विषः ।। १ ।।

पुरा पांचालदेशे तु राजा पुरुयशोऽभवत् ।।

तनयो भूरियशसः पुण्यशीलस्य धीमतः ।। २ ।।

पितर्युपरते भूप राज्यस्थो धर्मलालसः ।।

शौर्यौदार्यगुणोपेतो धनुर्विद्याविशारदः ।। ३ ।।

शशास पृथिवीं सर्वां स्वधर्मेण महामतिः ।।

पूर्वजन्मजलादानाद्दोषेण महता वृतः ।। ४ ।।

संपद्धानिमवापाऽसौ कालेन कियताऽनघ ।।

हया गजा मृतिं याता महद्रोगेण पीडिताः ।। ५ ।।

दुर्भिक्षमतुलं चासीन्निर्मानुष्यविधायकम् ।।

राज्यं कोशं तदा चाऽऽसीद्गजभुक्तकपित्थवत् ।। ६ ।।

बलहीनं नृपं ज्ञात्वा कोशराष्ट्रविवर्जितम् ।।

तं जेतुमेष समय इति निश्चितमानसाः ।। ७ ।।

आजग्मुः शतशो भूपा रिपवस्तस्य भूपतेः ।।

जिग्युर्युद्धेन तं भूपं पांचालविषयाधिपम् ।। ८ ।।

पराजितस्ततो राजा विवेश गिरिगह्वरे ।।

शिखिन्या भार्यया साकं धात्र्यादिगणसंयुतः ।। ९ ।।

अज्ञातपद्धतिश्चान्यैर्बहुदुःखसमाकुलः ।।

त्रिपंचाशत्समाश्चैव नीतास्तेन विलीयता ।। 2.7.15.१० ।।

चिन्तयामास भूपालः किमेतदिति भूरिशः ।।

कर्मणा जन्मशुद्धोऽहं मातृपितृहिते रतः ।। ११ ।।

गुरुभक्तः सदाक्षिण्यो ब्रह्मण्यो धर्मतत्परः ।।

दयावान्सर्वभूतेषु देवभक्तो जितेन्द्रियः।। १२ ।।

न भ्राता मे न पुत्रो मे न च मे सुहृदो हिताः ।।

दयापौरुषविख्याताः कुलीनस्याऽपि मे कुतः ।। १३ ।।

केन वा कर्मणा चाप्तं दारिद्र्यं भूरिदुःखदम् ।।

केन वाऽपजयो मेऽद्य केन वा वनवासिता ।। १४ ।।

इति चिन्ताकुलो राजा गुरुं सस्मार खिन्नधीः।।

याजोपयाजकौ नाम सर्वज्ञौ मुनिसत्तमौ ।। १५ ।।

आजग्मतुर्मुनीद्रौ तौ राज्ञाहूतौ महामती ।।

तौ दृष्ट्वा सहसोत्थाय राजा पांचालवल्लभः ।। १६ ।।

ननाम शिरसा भक्त्या प्रवासेनाऽतिपीडितः ।।

राजचिह्नविहीनश्च केनाप्यज्ञातपद्धतिः ।। १७ ।।

तूष्णीं तस्थौ मुहूर्तं हि पतित्वा भुवि पादयोः ।।

दोर्भ्यामुत्थापितस्ताभ्यां परिमृष्टाऽश्रुलोचनः ।। १८ ।।

विधिवत्पूजयामास वन्यैरेवाऽर्हणैः शुभैः ।।

सूपविष्टौ तु तौ विप्रौ पप्रच्छाऽऽनतकन्धरः ५११ ।।

ब्राह्मणौ वदतं दुःखकारणं च क्षितीशितुः ।।

कर्मणा जन्मशुद्धस्य पितृदेवप्रियस्य च ।। 2.7.15.२० ।।

पापभीरोः कृपालोश्च गुरुभक्तस्य मे कुतः ।।

दारिद्र्यं कोशहानिश्च रिपुभिश्च पराभवः ।। २१ ।।

कस्मादरण्यवासश्च कुत एकाकिता मम ।।

न पुत्रो न च मे भ्राता न हिताः सुहृदश्च मे ।। ।। २२ ।।

दुर्भिक्षं वा कुतश्चासीद्देशे मत्पालितेऽनघे ।।

एतद्विस्तार्य मे ब्रूतं कारणं मुनिपुंगवौ ।। २३ ।।

इत्युक्तौ तौ मुनिश्रेष्ठौ भूतेनात्यन्तदुःखिना ।।

प्रत्यूचतुर्महात्मानौ किंचिद्ध्यानपरायणौ ।। २४ ।।

।। याजोपयाजकावूचतुः ।। ।।

शृणु भूप प्रवक्ष्यावस्तव दुःखस्य कारणम् ।।

पुरा भूप महापापी व्याधस्त्वं दशजन्मसु ।।२५।।

निष्ठुरः सर्वलोकानां सदा हिंसापरायणः ।।

धर्मलेशाकरः क्वापि न दमो न च वै शमः ।।२६।।

न जिह्वा वक्ति नामानि विष्णोर्वापि कथंचन ।।

चेतः स्मरति गोविन्दचरणांबुरुहद्वयम् ।। २७ ।।

न प्रणामः कृतः क्वापि शिरसा परमात्मने ।।

नवजन्मानि ते भूप गतान्येवं दुरात्मनः ।। २८ ।।

दशमे जन्मनि प्राप्ते व्याधस्त्वं सह्य भूधरे ।।

निष्ठुरः सर्वलोकानां नराणां त्वं नरांतकः ।। २९ ।।

दयाहीनः शस्त्रजीवी सदा हिंसापरायणः ।।

निर्गुणः सकलत्रस्त्वं मार्गपीडाकरः शठः।। 2.7.15.३० ।।

प्रजानां गौडदेश्यानां राक्षसो मानुषाशनः ।। एवं चा

ब्दान्यतीतानि नैजं हितमजानतः ।। ३१ ।।

बालापत्यमृगाणां च पक्षिणां च वधात्तव। ।।

दयाहीनस्य दुर्बुद्धेर्जन्मन्यस्मिन्नपुत्रता ।। ३२ ।।

विश्वासघातकत्वेन भ्रातरो नैव सोदराः ।।

मार्गपीडाकरत्वेन सुहृज्जनविवर्जितः ।। ३३ ।।

साधूनां च तिरस्काराच्छत्रुभिस्ते पराजयः ।।

कदाप्यदत्तदोषेण दारिद्यं पतितं गृहे ।। ३४ ।।

सदैवोद्वेगकारित्वात्प्रवासस्ते दुरासदः ।।

सर्वेषामप्रियत्वाच्च दुःखमत्यंतदुःसहम् ।। ३५ ।।

निराहारोप्यतः पूर्वं सदा क्रूरेण कर्मणा ।।

तस्माद्राज्यापहारस्ते जन्मन्यस्मिन्महामते ।। ३६ ।।

अथ ते सत्कुलीनत्वे हेतूंश्चापि ब्रवीम्यहम् ।।

यदाऽभूर्गौडदेशीयो ह्यंतिमे व्याधजन्मनि ।। ३७ ।।

स्वकर्मनिरते क्रूरे विपिने कण्टकाविले ।।

तिष्ठत्येवं दयाहीने सर्वभूतांतके पथि ।। ३८ ।।

वैश्यावाजग्मतुर्दिव्यौ धनाढ्यौ घर्मपीडितौ ।।

मुनिश्च कर्षणोनाम वेदवेदांगपारगः ।। ३९ ।।

जटाचीरधरः पुण्यः कमण्डलुपरिग्रहः ।।

तान्दृष्ट्वा धनुरादाय मार्गं रुद्ध्वा व्यवस्थितः ।। 2.7.15.४० ।।

अनुद्रुत्य शरी वैश्यौ कृत्वा छिन्नशरीरकौ ।।

तयोरेकं च त्वं हत्वा गृहीत्वाऽखिल तत्पणम् ।। ४१ ।।

अपरं हन्तुमुद्युक्ते स दुद्राव भयाद्द्रुतम् ।।

पणं गुल्मे विनिक्षिप्य भीतः प्राणपरीप्सकः ।। ।। ४२ ।।

कर्षणोऽपि मुनिः शीघ्रं व्याधान्मृतिविशंकया ।।

आतपे धावमानः संस्तृषाघर्मप्रपीडितः ।। ४३ ।।

मूर्च्छामाप गलत्स्वेदः संज्ञामात्रावशेषितः ।।

विहायैनं दुद्रुवे च वैश्यो जीवनतत्परः ।। ४४ ।।

त्वं तावनुद्रुतौ दृष्ट्वा मूर्छितं पथि भूसुरम् ।।

पणं कुत्र विनिक्षिप्तं कियद्दूरं गतो वणिक् ।। ४५ ।।

इति पृष्टं द्विजं श्रांतमुज्जीवयितुमुद्यतः ।।

फूत्कृत्वा कर्णयोस्तस्य नागरं स्मृतिकारणम् ।। ४६ ।।

पल्वलस्थोदकेनैव कृमिकर्दमसंयुजा ।।

नेत्रे संमृज्य श्रांतस्य पर्णैः संवीज्य तन्मुखे ।। ४७ ।।

ससंज्ञं च मुनिं कृत्वा त्वमात्थ स्वस्थमानसः ।।

मा शंका ते मुने कार्या मत्तः शस्त्रभृतो वने ।। ४८ ।।

निष्किंचनः सुखी लोके कुतस्ते भयमुल्बणम् ।।

भिन्नपात्रेण जीर्णेन न मे किंचिद्भविष्यति ।। ४९ ।।

एतावद्वद मे विद्वन्वणिक्कुत्र पलायितः ।।

कुत्र गुल्मे धनं क्षिप्तं तेन शीघ्रं पलायता ।। 2.7.15.५० ।।

अन्यथा त्वां हनिष्यामि यदि मिथ्या वदिष्यसि ।। ।।

।। कर्षण उवाच ।। ।।

धनं गुल्मे विनिक्षिप्तं मार्गादस्मात्पलायितः ।।५१।।

इति प्राह भयात्सोपि पृष्टः प्राणपरीप्सया।।

गच्छ विप्र सुखं मार्गं मत्तो भीतिं विहाय व ।। ५२ ।।

इतो विदूरे सलिलं तडागे वर्तते शुभम् ।।

तत्पीत्वा सलिलं पुण्यं गच्छ ग्रामं गतश्रमः ।। ५३ ।।

अधुनैवागमिष्यंति राजकीयाः पथा जनाः ।।

मत्पदान्वेषणे सक्ताः श्रुत्वा रावं वणिक्पतेः ।। ५४ ।।

तृषार्तमनुगंतुं मे न शक्यं त्वां ततो द्विज ।।

वीजयानेन पर्णेन घर्मः किंचिद्गमिष्यति ।। ५५ ।।

तस्मै दत्त्वा पलाशं च त्वमागा विपिनं पुनः ।।

तेन पुण्यप्रभावेन वैशाखे घर्मघर्घरे ।। ५६ ।।

स्वकार्यार्थं कृतेनापि मुनेस्त्राणाय पद्धतौ ।।

जन्मासीत्ते महापुण्ये राजवंशेऽतिविस्तृते ।। ५७ ।।

यदीच्छसि सुखं राज्यं धनधान्यादिसंपदः ।।

स्वर्गापवर्गौ यदि वा सायुज्यं वा हरेः पदम् ।। ५८ ।।

कुरु वैशाखधर्मास्त्वं सर्वसौख्यमवाप्स्यसि ।।

मासोऽयं माधवो नाम तृतीया चाक्षयाह्वया ।। ५९ ।।

गां च सकृत्प्रसूताख्यां देहि विप्राय सीदते ।।

तेन ते कोशपूर्तिः स्याच्छय्यां देहि सुखं भवेत् ।। 2.7.15.६० ।।

कुरु च्छत्रप्रदानं च साम्राज्यं ते भविष्यति ।।

स्नानं कुरु यथान्यायं तथैवार्चय माधवम् ।। ६१ ।।

देहि त्वं प्रतिमां दिव्यां कृत्वा तेन जयो भवेत् ।।

आत्मतुल्यगुणान्पुत्रान्यदि कामयसे नृप ।। ६२ ।।

सर्वभूतहितार्थाय प्रपादानं च त्वं कुरु ।।

वैशाखोक्तानिमान्धर्मान्सम्यगाचर भूमिप ।। ६३ ।।

तेन ते सकला लोका वशं यांति न संशयः ।।

निष्कामकेन चित्तेन यदि धर्मान्करिष्यसि ।। ६४ ।।

वैशाखे पुण्यमासेऽस्मिन्प्रीतये मधुघातिनः ।।

प्रत्यक्षो भविता विष्णुस्तवनिर्मलचेतसः ।। ६५ ।।

येन चाचरिताः पुंसा धर्मा ह्येते शुभावहाः ।।

तेषां च ह्यक्षया लोकाः पुराणे कवयो विदुः।। ।। ६६ ।।

एतत्सर्वं तव प्रोक्तं यथादृष्टं यथाश्रुतम् ।।

इति राजानमामंत्र्य ब्राह्मणौ च पुरोधसौ ।। ६७ ।।

याजोपयाजकौनाम जग्मतुस्तौ यथागतौ ।।

ततो राजा महावीर्यः पुरोधोभ्यां च बोधितः ।। ६८ ।।

वैशाखधर्मात्सकलांश्चकार श्रद्धयाऽन्वितः ।।

यथोपदिष्टं च तथा मधुसूदनमर्चयत् ।। ६९ ।।

ततो लब्धप्रभावः सन्बंधुभिः सकलैर्वृतः ।।

पांचालनगरीं प्राप हतशेषबलान्वितः ।। 2.7.15.७० ।।

ततस्तु शत्रवो भूपा उपश्रुत्य च भूपतेः ।।

प्रवेशं च पुरस्याऽथ पुनराजग्मुरुद्धताः ।। ७१ ।।

तदा पांचालभूपेन नृपाणामभवद्रणम्।।

जिग्ये सर्वान्महाबाहूनेक एव महारथः ।। ७२ ।।

पलायितेषु भूपेषु नानादेशपथिष्वपि ।।

राज्ञां कोशगजानश्वान्स्वयं जग्राह वीर्यवान् ।। ७३ ।।

अश्वानां निर्बुदं चैव गजानां च त्रिकोटिकम् ।।

रथानामर्बुदं चैव दीर्घग्रीवायुतं तथा ।। ७४ ।।

रासभाणां त्रिलक्षाणि प्रापयामास तां पुरीम् ।।

वैशाखधर्ममाहात्म्यात्क्षणात्सर्वे च भूभृतः ।। ७५ ।।

करदा भग्नसंकल्पाः पादाक्रांता बभूविरे ।।

सुभिक्षमतुलं चासीत्पांचालविषयेषु च ।। ७६ ।।

एकच्छत्रमभूद्राज्यं प्रसादान्मधुघातिनः ।।

पुत्राः पंचाऽपि तस्यासञ्च्छौर्य्यौदार्यगुणान्विताः ।। ।। ७७ ।।

धृष्टकीर्तिर्धृष्टकेतुर्धृष्टद्युम्नस्तथाऽपरे ।।

विजयश्चित्रकेतुश्च मयूरध्वजसन्निभाः ।। ७८ ।।

अनुरक्ताः प्रजाश्चासन्धर्मेण प्रतिपालिताः ।।

वैशाखस्य प्रतापेन प्रत्ययस्तत्क्षणादभूत् ।। ७९ ।।

पुनश्चकार तान्धर्मान्पांचालनगरीश्वरः ।।

अकामुकेन चित्तेन प्रीतये मधुघातिनः ।। 2.7.15.८० ।।

धर्मेणानेन संतुष्टो भगवान्मधुसूदनः ।।

अक्षयायां तृतीयायां प्रत्यक्षः समजायत ।। ८१ ।।

तं दृष्ट्वा विस्मितो भूत्वा परमात्मानमच्युतम् ।।

नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ।। ८२ ।।

पीतांबरधरं देवं वनमालाविभूषितम् ।।

सलक्ष्मीकं सानुगं च गरुडोपरि संस्थितम् ।। ८३ ।।

निरीक्ष्य दुःसहं तेजः सद्यो मीलितलोचनः ।।

उत्पतन्संपतन्हर्षान्मत्तोन्मत्त इव भ्रमन् ।। ।। ८४ ।।

पुलकांकितसर्वांगो गलद्बाष्पाकुलेक्षणः ।।

तुष्टाव परया भक्त्या प्रांजलिः प्रणतो भुवि ।। ८५ ।।

इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमास माहात्म्ये नारदाम्बरीषसंवादे पांचालदेशाधिपतेर्जयप्राप्ति दरिद्रनाशवर्णनं नाम पंचदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/h8d
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। ।। श्रुतदेव उवाच ।। ।।

तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम मूर्ध्ना ।।

चिरं निरीक्ष्याऽऽकुललोचनो ह्यमुं विश्वात्मदेवं जगतामधीशम् ।। १ ।।

दधार पादाववनिज्य तज्जलं यत्पादजाऽऽब्रह्म जगत्पुनाति ।।

समर्चयामास महाविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ।। २ ।।

स्रग्धूपदीपामृतभक्षणादिभिस्त्वग्गात्रवित्तात्मसमर्पणेन ।।

तुष्टाव विष्णुं पुरुषं पुराणं नारायणं निर्गुणमद्वितीयम् ।। ३ ।।

निरंजनं विश्वसृजामधीशं वन्दे परं पद्मभवादिवंदितम् ।।

यन्मायया तत्त्वविदुत्तमा जना विमोहिता विश्वसृजामधीश्वरम् ।। ।। ४ ।।

मुह्यंति मायाचरितेषु मूढा गुणेषु चित्रं भगवद्विचेष्टितम् ।।

अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न सज्जतेऽप्यथ ।। ५ ।।

समस्तदेवासुरसौख्यदुःखप्राप्त्यै भवान्पूर्णमनोरथोऽपि ।।

तत्राऽपि काले स्वजनाभिगुप्त्यै बिभर्षि सत्त्वं खलनिग्रहाय ।। ६ ।।

तमोगुणं राक्षस बन्धनाय रजोगुणं निर्गुण विश्वमूर्ते ।।

दिष्ट्या त्वदंघ्रिः प्रणताघनाशनस्तीर्थास्पदं हृदि धृतः सुविपक्वयोगैः ।। ७ ।।

उत्सिक्तभक्त्युपहृताशय जीवभावाः प्रापुर्गतिं तव पदस्मृतिमात्रतो ये ।।

भवाख्यकालोरगपाशबन्धः पुनःपुनर्जन्मजरादिदुःखैः ।। ८ ।।

भ्रमामि योनिष्वहमाखुभक्ष्यवत्प्रवृद्धतर्षस्तव पादविस्मृतेः ।।

नूनं न दत्तं न च ते कथा श्रुता न साधवो जातु मयाऽपि सेविताः ।। ९ ।।

तेनारिभिर्ध्वस्तपराध्र्यलक्ष्मीर्वनं प्रविष्टः स्वगुरुह्यघं स्मरन् ।।

स्मृतौ च तौ मां समुपेत्य दुःखात्संबोधयांचक्रतुरार्तबंधू ।। 2.7.16.१० ।।

वैशाखधर्मैः श्रुतिचोदितैः शुभैः स्वर्गापवर्गादि पुमर्थहेतुभिः ।।

तद्बोधतोऽहं कृतवान्समस्ताञ्छुभावहान्माधवमासधर्मान् ।। ११ ।।

तस्मादभून्मे परमः प्रसादस्तेनाखिलाः संपद ऊर्जिता इमाः ।।

नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।। १२ ।।

उपासितास्तेऽपि हरत्यघं चिराद्विपश्चितो घ्नन्ति मुहूर्तसेवया ।।

यान्मन्यसे त्वं भविनोऽपि भूरिशस्त्यक्तेषणांस्त्वत्पदन्यस्तचित्तान्।। १३ ।।

नमः स्वतंत्राय विचित्रकर्मणे नमः परस्मै सदनुग्रहाय ।।

त्वन्मायया मोहितोऽहं गुणेषु दारार्थरूपेषु भ्रमाम्यनर्थदृक् ।। १४ ।।

त्वत्पादपद्मे सति मूलनाशने समस्तपापापहरं सुनिर्मलम् ।।

सुखेच्छयानर्थनिदानभूतैः सुतात्मदारैर्ममताभियुक्तः ।। १५।।

न क्वापि निद्रां लभते न शर्म प्रवृद्धतर्षः पुनरेव तस्मिन् ।।

लब्ध्वा दुरापं नरदेवजन्म त्वं यत्नतः सर्वपुमर्थहेतुः ।।१६।।

पदारविन्दं न भजामि देव संमूढचेता विषयेषु लालसः ।।

करोमि कर्माणि सुनिष्ठितः सन्प्रवृद्धतर्षस्तदपेक्षया ददत् ।। १७ ।।

पुनश्च भूयामहमद्य भूयामित्येव चिन्ताशतलोलमानसः।।

तदैव जीवस्य भवेत्कृपा विभो दुरंतशक्तेस्तव विश्वमूर्ते ।। १८ ।।

समागमः स्यान्महतां हि पुंसां भवांबुधिर्येन हि गोष्पदायते ।।

सत्संगमो देव यदैव भूयात्तर्हीश देवे त्वयि जायते मतिः ।।१९।।

समस्तराज्यापगमं हि मन्ये ह्यनुग्रहं ते मयि जातमञ्जसा ।।

यथार्य ते ब्रह्मसुरासुराद्यैर्निवृत्ततर्षैरपि हंसयूथैः ।। 2.7.16.२० ।।

इतः स्मराम्यच्युतमेव सादरं भवापहं पादसरोरुहं विभो ।।

अकिंचनप्रार्थ्यममन्दभाग्यदं न कामयेऽन्यत्तव पादपद्मात् ।। ।। २१ ।।

अतो न राज्यं न सुतादिकोशं देहेन शश्वत्पतता रजोभुवा ।।

भजामि नित्यं तदुपासितव्यं पादारविंदं मुनिभिर्विचिन्त्यम् ।। २२ ।।

प्रसीद देवेश जगन्निवास स्मृतिर्यथा स्यात्तव पादपद्मे ।।

सक्तिः सदा गच्छतु दारकोशपुत्रात्मचिह्नेषु गणेषु मे प्रभो।। २३ ।।

भूयान्मनः कृष्णपदारविन्दयोर्वचांसि ते दिव्यकथानुवर्णने ।।

नेत्रे ममेमे तव विग्रहेक्षणे श्रोत्रे कथायां रसना तदर्पिते ।। २४ ।।

घ्राणं च त्वपादसरोजसौरभे त्वद्भक्तगन्धादिविलेपने सकृत् ।।

स्यातां च हस्तौ तव मन्दिरे विभो संमार्ज्जनादौ मम नित्यदैव ।। २५ ।।

पादौ विभो क्षेत्रकथाऽनुसर्पणे मूर्धा च मे स्यात्तव वन्दनेऽनिशम् ।।

कामश्च मे स्यात्तव सत्कथायां बुद्धिश्च मे स्यात्तव चिंतनेऽनिशम् ।। २६ ।।

दिनानि मे स्युस्तव सत्कथोदयैरुद्गीयमानैर्मुनिभिर्गृहागतैः ।।

हीनः प्रसंगस्तव मे न भूयात्क्षणं निमेषार्द्धमथाऽपि विष्णो ।। २७ ।।

न पारमेष्ठ्यं न च सार्वभौमं न चापवर्गं स्पृहयामि विष्णो ।।

त्वत्पादसेवां च सदैव कामये प्राथ्यां श्रिया ब्रह्मभवादिभिः सुरैः ।। २८ ।।

इति राज्ञा स्तुतो विष्णुः प्रसन्नः कमलेक्षणः ।।

मेघगम्भीरया वाचा तमुवाच क्षितीश्वरम् ।। २९ ।।

।। श्रीभगवानुवाच ।। ।।

जाने त्वां दासवर्यं मे निष्कामुकमकल्मषम् ।।

अथाऽपि ते प्रदास्यामि वरं दैवतदुर्लभम् ।। 2.7.16.३० ।।

आयुष्यं चायुतं दिव्यं संपदश्च नरेश्वर ।।

भक्तिर्मयि दृढा भूयादन्ते सायुज्यमेव च ।। ३१ ।।

त्वया कृतेन स्तोत्रेण मां स्तुवन्ति च ये भुवि ।।

तेषां तुष्टः प्रदास्यामि भुक्तिं मुक्तिं न संशयः ।। ३२ ।।

तृतीयैषाऽक्षयानाम भुवि ख्याता भविष्यति ।।

यस्यां तव प्रसन्नोऽहं भुक्तिमुक्तिफलप्रदः ।। ३३ ।।

ये कुर्वंति नरा मूढाः स्नानदानादिकाः क्रिया ।।

व्याजेनाऽपि स्वभावाद्वा यांति मत्पदमव्ययम् ।। ३४ ।।

ये चाऽक्षयतृतीयायां पितॄनुद्दिश्य मानवाः ।।

श्राद्धं कुर्वंति तेषां वै तदानंत्याय कल्पते ।। ३५ ।।

न चानया तिथिर्लोके समा वा नाधिका भुवि।।

अस्यां कृतं स्वल्पमपि तदक्षय्यफलं भवेत् ।। ३६ ।।

यो गां दद्यान्नृपश्रेष्ठ ब्राह्मणाय कुटुंबिने ।।

सर्वसंपत्प्रवर्षाख्या भुक्तिमुक्तिः करे स्थिता ।। ३७ ।।

यो हि दद्यादनड्वाहं सर्वपापविनाशनम् ।।

कालमृत्युविमुक्तः सन्दीर्घायुष्यमवाप्नुयात् ।। ३८ ।।

वैशाखमासे यो धर्मान्कुरुते मत्प्रियावहान् ।।

तेषां मृत्युजराजन्मभयं पापं हराम्यहम् ।। ३९ ।।

यथा वैशाखधर्मैस्तु तुष्टः स्यां सकलैरपि ।।

मासधर्मैर्न तुष्टः स्यां मासो मे माधवः प्रियः ।। ।। 2.7.16.४० ।।

सर्वधमोज्झिता वापि ब्रह्मचर्यविवर्जिताः।।

वैशाखमासनिरता यांति मत्पदमव्ययम् ।।४१।।

यद्दुरापं तपोभिश्च सांख्ययोगैर्मखैरपि ।।

तद्धाम परमं यांति वैशाखनिरता नराः ।। ४२ ।।

अपि पापसहस्रं वा मासोऽयं हरतेऽनघ ।।

प्रायश्चित्तविहीनं वा मत्पादस्मरणं यथा ।।४३।।

गुरूपदिष्टः कांतारे वैशाखे निरतो भवान् ।।

समाराध्य जगन्नाथं तेनाप्तमखिलं नृप ।। ४४ ।।

धर्मेणानेन संप्रीतः प्रत्यक्षोऽहं भवामि ते ।।

भुक्त्वा भोगान्यथाकामान्देवैरपिसुदुर्लभान् ।। ४५ ।।

इति तस्मै वरं दत्त्वा देवदेवो जनार्दनः ।।

पश्यतामेव सर्वेषां तत्रैवांतरधीयत ।। ४६ ।।

ततो भूपालवर्योऽसौ बभूवात्यंतविस्मितः ।।

हृष्टपुष्टतनुर्भूप लब्धनष्टधनो यथा ।। ४७ ।।

ततः शशास पृथिवीं तच्चित्तस्तत्परायणः ।।

महद्भिर्बोधितो नित्यं गुरुभिश्च निरंतरम् ।। ४८ ।।

नान्यं प्रियतमं मेने वासुदेवमृते नृपः ।।

यत्संपर्कात्प्रिया आसन्दारामात्यसुतादयः ।। ४९ ।।

सर्वान्धर्मांश्चकाराऽसौ वैशाखोक्तान्पुनःपुनः ।।

तेन पुण्यप्रभावेन पुत्रपौत्रादिभिर्वृतः ।। 2.7.16.५० ।।

भुक्त्वा मनोरथान्सर्वान्देवानामपि दुर्लभान् ।।

अंते जगाम सायुज्यं विष्णोर्देवस्य चक्रिणः ।। ५१ ।।

य इदं परमाख्यानं शृण्वन्ति श्रावयंति च ।।

ते सर्वे पापनिर्मुक्ता यांति विष्णोः परं पदम् ।।५२।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्वरीषसंवादे पांचालाधिपतेः सायुज्यप्राप्तिर्नाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १७

https://sa.wikisource.org/s/h03



।। श्रुतकीर्तिरुवाच ।। ।।

वैशाखधर्मानखिलानिहामुत्र फलप्रदा।।

भूयोऽपि शृण्वतश्चासीत्तृप्तिर्नाऽद्यापि मानद ।।१।।

यत्र चाकैतवो धर्मो यत्र विष्णुकथा शुभाः ।।

तच्छास्त्रं शृण्वतो नैव तृप्तिः कर्णरसायनम् ।। २ ।।

पूर्वजन्मकृतं पुण्यं दिष्ट्या पारमुपागतम् ।।

आतिथ्यव्यपदेशेन यद्भवान्गृहमागतः ।। ३ ।।

वचोऽमृतं मुखांभोजनिःसृतं परमाद्भुतम् ।।

पीत्वा तृप्तः पारमेष्ठ्यं मोक्षं वा च न कामये ।।४।।

तस्मात्तानेव धर्मान्मे भुक्तिमुक्तिप्रदायकान् ।।

विष्णुप्रीतिकरान्दिव्यान्भूयो विस्तरतो वद ।। ५ ।।

इत्युक्तस्तु पुरा राज्ञा श्रुतदेवो महायशाः।।

संहृष्टाऽऽत्मा शुभान्धर्मान्पुनर्व्याहर्तुमारभत् ।। ६ ।।

।। श्रुतदेव उवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ।।

वैशाखधर्मविषयां भावितां मुनिभिर्मुहुः।।७।।

पंपातीरे द्विजः कश्चिच्छंखोनाम महायशाः ।।

गुरौ सिंहगते चागान्नदीं गोदावरीं शुभाम् ।।८।।

तीर्त्वा भीमरथीं पुण्यां कांतारे कण्टकाचले ।।

निर्जले निर्जने घोरे वैशाखे तपकर्षितः ।। ९ ।।

वृक्षे चोपविवेशाऽसौ मध्याह्नसमये द्विजः ।।

तदा कश्चिद्दुराचारो व्याधश्चापधरः शठः ।।2.7.17.१०।।

निर्घृणः सर्वभूतेषु कालांतक इवाऽपरः ।।

तं कुण्डलधरं विप्रं दीक्षितं भास्करोपमम् ।। ११ ।।

दृष्ट्वा बद्ध्वा स जग्राह कुण्डलादिकमुग्रधीः ।।

उपानहौ च च्छत्रं च अक्षमालां कमण्डलुम् ।। १२ ।।

पश्चाद्विसृज्य तं विप्रं गच्छेत्याह विमूढधीः ।। १३ ।।

ततः स च्छन्पथि शर्कराऽऽविले सूर्यांशुतप्ते जलवर्जिते खरे ।।

संतप्तपादस्तृणछादिते स्थले क्वचिच्चचारोपवसन्नूर्ध्वरेताः ।। १४ ।।

स वै द्रुतं संपतन्क्वापि तुष्यन्हाहेति वादी स जगाम तूर्णम् ।।

दृष्ट्वा मुनिं खिद्यमानं पृथिव्यां मध्यं गते पूष्णि दया बभूव ।। १५ ।।

व्याधस्य धर्मविमुखस्य च पापबुद्धेस्तस्मै ददामि सुखदां खलु पादरक्षाम् ।। १६ ।।

चौर्येणैव स्वधर्मेण या गृहीता वनांतरे ।।

तदीयमेव तत्सर्वं व्याधानां धर्मनिर्णयः ।।

तस्मादुपानहौ दास्ये मुहुर्दुःखापनुत्तये ।। १७ ।।

तेन श्रेयो भवेद्यच्च तद्भवेन्मम पापिनः ।।

जीर्णे चोपानहौ द्वे च वर्तेते पादयोर्मम ।।

न ताभ्यामस्ति मे कृत्यं तस्मात्ते वै ददाम्यहम्।। ।। १८ ।।

इति निश्चित्य मनसि तूर्णं गत्वा ददौ च ते ।।

शर्करातप्तपादाय द्विजवर्याय सीदते ।। १९ ।।

उपानहौ गृहीत्वा ते निर्वृतिं च परां ययौ ।।

सुखी भवेति तं व्याधमाशीर्भिरभिनन्द्य च ।। 2.7.17.२० ।।

नूनं सुपक्वपुण्योऽयं वैशाखे दत्तवानमू ।।

व्याधस्यापि च दुर्बुद्धेः प्रायो विष्णुः प्रसीदति ।। २१ ।।

सर्वस्याऽऽस्या च भूयोऽपि यत्सुखं तदभून्मम ।।

ततोऽभिश्रुत्य तद्वाक्यं किमेतदिति विस्मितः ।। २२ ।।

व्याजहार पुनर्विप्रं ब्रह्मिष्ठं ब्रह्मवादिनम् ।।

त्वदीयं तु मया दत्तं कथं पुण्यं भवेन्मम ।। २३ ।।

प्रशंससि च वैशाखं हरिस्तुष्टो भवेदिति ।।

एतदाचक्ष्व मे ब्रह्मन्को वैशाखस्तु को हरिः ।। २४ ।।

को धर्मः किं फलं तस्य शुश्रूषोर्मे दयानिधे ।।

इति व्याधवचः श्रुत्वा शंखस्तुष्टमना अभूत् ।। २५ ।।

प्रशंसन्स च वैशाखं पुनर्विस्मितमानसः ।।

इदानीं दत्तवान्पादत्राणे मे लुब्धकः शठः ।।२६।।

यद्दुर्बुद्धेश्च वैषम्यं जातं चित्रमहो वत ।।

सर्वेषामेव धर्माणां फलं जन्मांतरेषु वै ।। २७ ।।

वैशाखमासधर्माणां फलं सद्यः क्षणे नृणाम् ।।

पापाचारस्य दुर्बुद्धेर्व्याधस्यापि दुरात्मनः ।। २८ ।।

दैवादुपानहोर्दानात्सत्त्वशुद्धिरभूदहो ।।

यच्च विष्णोः प्रियं कर्म यत्तत्सन्तोषनिर्मलम् ।। २९ ।।

तदेव धर्ममित्या हुर्मन्वाद्या धर्मवित्तमाः ।।

धर्मा माधवमासीयाः प्रिया विष्णोरतीव ते ।। 2.7.17.३० ।।

धर्मैर्माधवमासीयैर्यथा तुष्यति केशवः ।।

न तथा सर्वदानैश्च तपोभिश्च महामखैः ।। ३१ ।।

नानेन सदृशो धर्मः सर्वधर्मेषु विद्यते ।।

मा गयां यांतु मा गंगां मा प्रयागं तु पुष्करम् ।। ३२ ।।

मा केदारं कुरुक्षेत्रं मा प्रभासं स्यमन्तकम् ।।

मा गोदा मा च कृष्णां च मा सेतुं मा मरुद्वृधम् ।। ३३ ।।

वैशाखधर्ममाहात्म्यं शंसंती च कथाऽऽपगा ।।

तत्र स्नातस्य वै विष्णुः सद्यो हृद्यवरुध्यते ।। ३४ ।।

मासे माधवसंज्ञेऽस्मिन्यस्त्वल्पेनैव साध्यते ।।

न तद्बहुव्ययैर्दानैर्न धर्मैर्वाऽपि वै मखैः ।। ।। ३५ ।।

मासोऽयं माधवोनाम व्याध पुण्यविवर्द्धनः ।।

तस्मिन्मह्यं त्वया दत्ते पादुके तापनाशने ।। ३६ ।।

तेन ते पूर्वकालीनं पुण्यं पाकमुपागतम् ।।

तुष्टस्तु भगवान्प्रायः श्रेयो व्याध विधास्यति ।। ३७ ।।

अन्यथा ते कथं भूयाद्बुद्धिरेतादृशी शुभा ।।

मुनावेवं ब्रुवाणे च मृत्युना प्रेरितो बली ।। ३८ ।।

सिंहो व्याघ्रवधार्थाय प्राद्रवत्क्रोधविह्वलः ।।

मध्ये दृष्ट्वा च मातङ्गं दैवाद्देवेन कल्पितम् ।। ३९ ।।

तं हंतुमुद्यतोऽगच्छत्पदाक्रांतं व्यवस्थितम् ।।

तयोर्युद्धमभूद्राजन्सिंहमातंगयोर्वने ।। 2.7.17.४० ।।

श्रांतौ युद्धाच्च विरतौ निरीक्षंतौ च तस्थतुः ।।

व्याधमुद्दिश्य यच्चोक्तं मुनिना च महात्मना ।। ४१ ।।

समस्तपातकध्वंसि दैवाच्छुश्रुवतुश्च तौ ।।

तेनैव मासमाहात्म्यश्रवणेनामलाशयौ ।। ४२ ।।

शापान्मुक्तौ च तौ देहात्सद्यो मुक्तौ दिवं गतौ ।।

दिव्यरूपधरौ दिव्यौ दिव्यगंधानुलेपनौ ।। ४३ ।।

दिव्यं विमानमारूढौ दिव्यनारीनिषेवितौ ।।

सद्योऽवनतमूर्द्धानौ प्रांजली चोपतस्थतुः ।। ४४ ।।

मुनींद्रो धर्मवक्ता च व्याधमुद्दिश्य वै पथि ।।

तौ दृष्ट्वा विस्मितः प्राह कौ युवामिति निश्चलः ।। ४५ ।।

दुर्योनौ तु कुतो जन्म युवयोर्वा कथं मृतिः ।।

अहेतोर्विपिने चाऽस्न्मिपरस्परवधोद्यतौ ।। ४६ ।।

एतत्सर्वं सुविस्तार्य सम्यग्वदत मेऽनघौ ।।

इत्युक्तौ मुनिना तेन वचः प्रत्यूचतुः पुनः ।। ४७ ।।

मतंगस्य मुनेः पुत्रौ दंतिलः कोहलोऽपरः ।।

शापदोषेण तौ जातौ नाम्ना दंतिलकोहलौ ।। ४८ ।।

रूपयौवनसंपन्नौ सर्वविद्याविशारदौ ।।

आवामुद्दिश्य प्रोवाच पिता धर्मार्थकोविदः ।। ४९ ।।

मतंगोनाम ब्रह्मर्षिः सर्वधर्मविदुत्तमः ।।

वैशाखे मासि तनयौ मधुसूदनवल्लभे ।। 2.7.17.५० ।।

प्रपां कुरुत मार्गे च जनान्वीजयतं क्षणम्।।

मार्गे छाया विधत्तां च भूर्यन्नं शीतलांबु च ।। ५१ ।।

कुरुतं स्नानमुषसि तथैवार्चयतं विभुम् ।।

कथां च शृणुतं नित्यं यया बन्धो निवर्तते ।। ५२ ।।

एवं च बहुभिर्वाक्यैर्बोधितावपि दुर्मती ।।

कुद्धोऽभवं दंतिलोऽहं मत्तोऽहं कोहलाह्वयः ।। ५३ ।।

क्रुद्धः शशाप तौ सद्यः पिता धर्मेषु लालसः ।। ५४ ।।

पुत्रं च धर्मविमुखं भार्यां चाऽप्रियवादिनीम् ।।

अब्रह्मण्यं च राजानं त्यजेत्सद्यो न चेत्पतेत् ।। ।। ५५ ।।

दाक्षिण्यादर्थलोभाद्वा संसर्गं ये प्रकुर्वते ।।

ते सर्वे नरकं यांति यावदिंद्राश्चतुर्दश ।।

इति ज्ञात्वा शशापावां मदक्रोधपरिप्लुतौ ।।५६।।

कुद्धोऽयं दंतिलो भूयात्सिंहः क्रोधपरिप्लुतः ।।

मत्तस्तु कोहलो भूयान्मत्तो मातंगयूथपः ।।५७।।

कृतानुतापौ पश्चात्तु प्रार्थयावो विमोचनम्।।

आवाभ्यां प्रार्थितो भूयो विशापं च ददौ पिता ।। ५८ ।।

युवां प्राप्य च दुर्योनिं कियत्कालांतरेऽपि च ।।

संगमो भविता तत्र परस्परवधेषिणोः ।। ५९ ।।

तस्मिन्नेव हि समये संवादो व्याधशंखयोः ।।

वैशाखधर्मविषयो दैवाद्वां श्रवणेऽपि च ।। 2.7.17.६० ।।

गमिष्यति क्षणादेव तस्मान्मुक्तिर्भविष्यति ।।

शापान्मुक्तौ पूर्वमेव रूपमास्थाय पुत्रकौ ।। ६१ ।।

मामेव प्राप्य वसतं नान्यथा मे वचो भवेत्।।

इति शप्तौ च गुरुणा दुर्योनिं प्राप्य दुर्मती ।। ६२ ।।

प्राप्य दैवात्संगतिं च परस्परवधैषिणौ ।।

संवादं युवयोर्दिव्यं शुभं तं शुश्रुवावहे ।। ६३ ।।

तेन सद्यो विमुक्तिश्च क्षणादेवाऽऽवयोरभूत् ।।

इति सर्वं समाख्याय प्रणम्य च मुनीश्वरम् ।। ६४ ।।

समामंत्र्याभ्यनुज्ञातौ जग्मतुः पितुरंतिकम्।।

तदेवं संप्रदृश्याह मुनिर्व्याधं दयानिधिः ।। ६५ ।।

पश्य वैशाखमाहात्म्यश्रवणस्य फलं महत् ।।

मुहूर्तश्रवणादेव तयोर्मुक्तिः करे स्थिता ।। ६६ ।।

इति ब्रुवाणं मुनिपुंगवं तं दयानिधिं निःस्पृहमग्र्यबुद्धिम् ।।

विशुद्धसत्त्वं सुकृतैकपात्रं स न्यस्तशस्त्रः पुनराह व्याधः ।। ६७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे दंतिलकोहलमुक्तिप्राप्तिवृत्तान्तवर्णनं नाम सप्तदशोऽध्यायः ।। १७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १८



।। व्याध उवाच ।। ।।

भवताऽनुगृहीतोऽस्मि मुने पापोऽतिदुष्टधीः ।।

दयालवो महांतो हि स्वभावादेव साधवः ।। १ ।।

क्व व्याधश्चाऽकुलीनोऽहं क्व च वा मतिरीदृशी ।।

केवलं भवतामेव मन्येऽनुग्रहमुत्तमम् ।।२।।

अथ साधो च शिष्योस्मि कृपापात्रोस्मि मानद ।।

अनुग्राह्योऽस्मि पुत्रोऽस्मि कृपां कुरु दयानिधे ।।३।।

यथा मे न पुनर्भूयादसन्मतिरनर्थदा ।।

सद्भिस्तु संगतेः क्वापि नभूयो दुःखमश्नुते ।।४।।

तस्माद्बोधय मां विप्र सूक्तैस्तैर्वृजिनापहैः ।।

येन चाद्धा तरिष्यंति संसाराब्धिं मुमुक्षवः ।।५।।

साधूनां समचित्तानां तथा भूतदयावताम् ।।

न च हीनोत्तमः क्वापि नात्मीयो हि परस्तथा ।।६।।

ऐकाग्र्येण विचिंत्याथ चित्तशुद्धिं च पृच्छति ।।

सर्वदोषयुतो वापि सर्वधर्मोज्झितोऽपि वा ।। ७ ।।

कृतानुतापश्च यदा यदा पृच्छति वै गुरून्।।

तदैवोपदिशंत्यद्धा ज्ञानं संसारमोचकम् ।। ८ ।।

यथा गंगा मनुष्याणां पापनाशस्य भाविनी ।।

तथा मन्दसमुद्धारस्वभावाः साधवः स्मृताः ।। ९ ।।

मा विचारय मां बोद्धुं दयालो भक्तवत्सल ।।

शुश्रूषुत्वान्नतत्वाच्च शुद्धत्वात्तव संगतेः ।। 2.7.18.१० ।।

इति व्याधवचः श्रुत्वा पुनर्विस्मितमानसः ।।

साधुसाध्विति संभाष्य धर्मानेतानुवाच ह ।। ११ ।।

।। शंख उवाच ।। ।।

विष्णुप्रीतिकरान्दिव्यान्संसाराब्धिविमोचकान् ।।
कुरु धर्मांश्च वैशाखे यदि व्याध शमिच्छसि ।। ।। १२ ।।
आतपो बाधते घोरो न च्छाया नांबु चात्र च ।।
तस्मात्स्थलांतरं यावो यत्र च्छाया तु वर्तते ।। १३ ।।
तत्र गत्वा जलं पीत्वा सुच्छायां च समाश्रितः ।।
तत्र ते वर्णयिष्यामि माहात्म्यं पापनाशनम् ।। १४ ।।
विष्णोर्माधवमासस्य यथादृष्टं यथाश्रुतम्।।
इत्युक्तो मुनिना तेन व्याधः प्राह कृताञ्जलिः ।। १५ ।।
इतो विदूरे सलिलं वर्तते च सरोवरे ।।
कपित्थास्तत्र वै संति फलभारेण पीडिताः ।। १६ ।।
गच्छावस्तत्र संतुष्टिर्भविता नात्र संशयः ।।
व्याधेनैवं समादिष्टस्तेन साकं ययौ मुनिः ।। १७ ।।
कियद्दूरं ततो गत्वा ददर्शाग्रे सरोवरम् ।।
बक कारण्डवाकीर्णं चक्रवाकोपशोभितम् ।। १८ ।।
हंससारसक्रौंचाद्यैः समंतात्परिशोभितम् ।।
कीचकैश्च सुघोषैश्च कूजितं भ्रमरैरपि ।।१९।।
नक्रकच्छपमीनाद्यैर्वगाह्यं सुमनोहरम् ।।
कुमुदोत्पलकह्लार पुंडरीकादिभिर्महत् ।। 2.7.18.२० ।।
शतपत्रैः कोकनदैः समन्तात्परिशोभितम् ।।
पक्षिणां च कलारावैर्मुखर नयनोत्सवम् ।। २१ ।।
तटे कीचकगुल्मैश्च तथा वृक्षैश्च शोभितम् ।।
वटैः करंजैर्नीपैश्च चिंचिणीभिस्तथैव च ।। २२ ।।
निम्बप्लक्षप्रियालैश्च चंपकैर्बकुलैः शुभैः ।।
पुन्नागैस्तुंबरैश्चैव कपित्थामलकैरपि ।। २३ ।।
निष्पेषणैश्च जंबूभिः समंतात्परिशोभितम् ।।
वन्यमातंगसारंग वराहमहिषादिभिः ।। २४ ।।
शशैश्च शल्लकैश्चैव गवयैरुपशोभितम् ।।
खड्गनाभिमृगाद्यैश्च व्याघ्रैः सिंहैर्वृकैरपि ।। २५ ।।

खरांतकैश्च शरभैश्च मरीभिः सुमंडितम् ।।

शाखाशाखांतरं शीघ्रं प्लवमानैः प्लवंगमैः ।। २६ ।।

मार्जारैश्चैव भल्लूकैर्भीषणं रुरुभिस्तथा ।।

झिल्लीशब्दैश्च क्रेंकारैः कीचकानां रवैस्तथा ।।२७।।

घोरवायुविनिर्घातदारुभारैः समन्वितम् ।।

एतादृशं सरो दिव्यं व्याधेनैव प्रदर्शितम् ।।२८।।

ददर्श मुनिशार्दूलस्तृषया बाधितो भृशम् ।।

स्नात्वा मध्याह्नवेलायां सरस्यस्मिन्मनोरमे ।।२९।।

वाससी परिधायाऽथ कृत्वा माध्याह्निकीः क्रियाः ।।

देवपूजां ततः कृत्वा भुक्त्वा फलमतन्द्रितः ।। 2.7.18.३० ।।

व्याधोपनीतं सुस्वादु कपित्थं श्रमहारि च ।।

सुखोपविष्टः पप्रच्छ व्याधं धर्मरतं पुनः ।। ३१ ।।

किं वक्तव्यं मया ह्यद्य तवादौ धर्मतत्पर ।।

धर्माश्च बहवः संति नानामार्गाः पृथग्विधाः ।। ३२ ।।

तत्र वैशाखमासोक्ताः सूक्ष्मा अपि महार्थदाः ।।

सर्वेषामेव जंतूनामिहाऽमुत्र फलप्रदाः ।। ३३ ।।

यत्प्रष्टव्यं मनसि ते यच्चादौ तच्च पृच्छताम् ।।

इत्युक्तो मुनिना तेन व्याधः प्रांजलिरब्रवीत् ।। ३४ ।।

।। व्याध उवाच ।। ।।

केन वा कर्मणा चाऽऽसीद्व्याधजन्म तमोमयम् ।।

केन वा चेदृशी बुद्धिः संगतिर्वा महात्मनः ।। ३५ ।।

एतच्चान्यत्समाचक्ष्व यदि मां मन्यसे प्रभो ।।

इत्युक्तः पुनरप्याह शंखो नाम महामुनिः ।। ३६ ।।

मेघगंभीरया वाचा स्मयमानमुखांबुजः ।।

।। शंख उवाच ।। ।।

शाकले नगरे पूर्वं द्विजस्त्वं वेदपारगः ।। ३७ ।।

स्तंबो नाम महातेजास्तथा श्रीवत्सगोत्रजः ।।

तवेष्टा गणिका काचिदासीत्तत्संगदोषतः ।। ३७ ।।

त्यक्त्वा नित्यक्रिया नित्यं शूद्रवद्गृहमागतः ।।
शून्याचारस्य दुष्टस्य परित्यक्तक्रियस्य च ।।३९।।
ब्राह्मणी च तदा चाऽऽसीद्भार्या कांतिमती तव ।।
सा त्वां पर्यचरत्सुभ्रूः सवेश्यं ब्राह्मणाधमम् ।। 2.7.18.४० ।।
उभयोः क्षालयंती च पादांस्त्वत्प्रियकारिणी ।।
उभयोरप्यधः शेते उभयोर्वचने रता ।। ४१ ।।
वेश्यया वार्यमाणाऽपि पातिव्रत्यव्रतस्थिता ।।
एवं शुश्रूषयंत्या हि भर्तारं वेश्यया सह ।। ४२ ।।
जगाम सुमहान्कालो दुःखिताया महीतले ।।
अपरस्मिन्दिने भर्ता माषं च मूलकान्वितम् ।।४३।।
अभक्षयच्छूद्रधर्मान्निपावांस्तिलमिश्रितान् ।।
तदपथ्यमशित्वा तु वमंश्चैव विरेचयन् ।।४४।।
अपथ्याद्दारुणो रोगो व्यजायत भगंदरः ।।
स दह्यमानो रोगेण दिवारात्रं तु भूरिशः ।। ४५ ।।
यावदास्ते गृहे वित्तं तावद्वेश्या च संस्थिता ।।
गृहीत्वा तस्य सा वित्तं पश्चान्नोवास मंदिरे ।। ४६ ।।
अन्यस्य पार्श्वमासाद्य गता घोरा सुनिर्घृणा ।।
ततः स दीनवचनो व्याधिबाधासुपीडितः ।। ४७ ।।
उक्तवान्स रुदन्भार्यां रुजा व्याकुलमानसः ।।
परिपालय मां देवि वेश्याऽऽसक्तं सुनिष्ठुरम् ।। ४८ ।।
न मयोपकृतं किंचित्त्वयि सुंदरि पावनि ।।
को भार्यां प्रणतां पापो नानुमन्येत गर्हितः ।। ४९ ।।
स षंढो भविता भद्रे दश जन्मसु पंचसु ।।
दिवारात्रं महाभागे निमदितः साधुभिर्जनैः ।। ।। 2.7.18.५० ।।
पापयोनिमवाप्स्यामि त्वां साध्वीमवमन्य वै ।।
अहं क्रोधेन दग्धोऽस्मि तवापमानजेन वै ।। ५१ ।।
एवं ब्रुवाणं भर्तारं कृताञ्जलिपुटाऽब्रवीत् ।।
न दैन्यं भवता कार्यं न व्रीडा कांत मां प्रति ।। ५२ ।।

न चाऽपि त्वयि मे क्रोधो येन दग्धो वदस्यथ ।।

पुरा कृतानि पापानि दुःखानीह भवंति हि ।। ५३ ।।

तानि या क्षमते साध्वी पुरुषो वा स उत्तमः ।।

यन्मया पापया पापं कृतं वै पूर्वजन्मनि ।। ५४ ।।

तद्भुंजत्या न मे दुःखं न विषादः कथंचन ।।

इत्येवमुक्त्वा भर्तारं सा सुभ्रूस्तमपालयत् ।। ५५ ।।

आनीय जनकाद्वित्तं बंधुभ्यो वरवर्णिनी ।।

क्षीरोदवासिनं देवं भर्त्तारं सा त्वचिंतयत् ।। ५६ ।।

शोधयन्ती दिवारात्रौ पुरीषं मूत्रमेव च ।।

नखेन कर्षती भर्त्तुः कृमीन्कष्टाच्छनैःशनैः ।। ५७ ।।

न सा स्वपिति रात्रौ तु न दिवा वरवर्णिनी ।।

भर्त्तुर्दुःखेन संतप्ता दुःखितेदमवोचत ।। ५८ ।।

देवाश्च पातु भर्तारं पितरो ये च विश्रुताः ।।

कुर्वंतु रोगहीनं मे भर्त्तारं गतकल्मषम् ।। ५९ ।।

चंडिकायै प्रदास्यामि रक्तमांससमुद्भवम् ।।

सुष्ठवन्नं माहिषोपेतं भर्तुरारोग्यहेतवे ।। 2.7.18.६० ।।

मोदकान्कारयिष्यामि विघ्नेशाय महात्मने ।।

मन्दवारे करिष्यामि चोपवासान्दशैव तु ।। ६१ ।।

नोपभुंजामि मधुरं नोपभुंजामि वै घृतम् ।।

तैलाभ्यंगविहीनाहं स्थास्ये नैवात्र संशयः ।।६२।।

जीवताद्रोगहीनोऽयं भर्त्ता मे शरदां शतम् ।।

एवं सा व्याहरद्देवी वासरे वासरे गते ।।६३।।

तदा चाऽऽगान्मुनिः कश्चिन्महात्मा देवलाह्वयः ।।

वैशाखे मासि घर्मार्तः सायाह्ने तस्य वै गृहम् ।। ६४ ।।

तदा वै भार्यया चोक्तं भिषग्वै गृहमागतः ।।

तेन वै रोगहानिः स्यात्तस्याऽऽतिथ्य करोम्यहम् ।। ६५ ।।

ज्ञात्वा त्वां धर्मविमुखं भिषग्व्याजेन वंचितः ।।

पादावनेजनं कृत्वा तज्जलं मूर्ध्नि साक्षिपत् ।। ६६ ।।

पानकं च ददौ तस्मै घर्मार्ताय महात्मने ।।

त्वयाऽनुमोदिता सायं घर्मतापनिवारकम् ।। ६७ ।।

स प्रातरुदिते सूर्ये मुनिः प्रायाद्यथाऽऽगतः ।।

अथ चाल्पेन कालेन सन्निपातोऽभवत्तव ।।६८।।

त्रिकट्व्यां नीयमानायां भर्त्तांगुलिमखंडयत् ।।

उभयोर्दंतयोः श्लेषः सहसा समपद्यत ।। ६९ ।।

तत्खंडमंगुलेर्वक्त्रे स्थितं भर्तुः सुकोमलम् ।।

खण्डयित्वागुलिं भर्ता पंचत्वमगमत्तदा ।। 2.7.18.७० ।।

शय्यायां सुमनोज्ञायां स्मरंस्तां पुंश्चली शुभाम् ।।

मृतं विज्ञाय भर्त्तारं भार्या कांतिमती तव ।।७१।।

विक्रीय चाऽपि वलयं गृहीत्वा चेंधनं बहु ।।

चक्रे चितिं तेन साध्वी मध्ये कृत्वा पतिं तदा ।। ७२ ।।

अवगुह्य भुजाभ्यां च पादौ चाश्लिष्य पादयोः ।।

मुखे मुखं विनिक्षिप्य हृदयं हृदये तथा ।। ७३ ।।

जघने जघनं देवी ह्यात्मानं सन्निवेश्य च ।।

दाहयामास कल्याणी भर्तृदेहं रुजान्वितम् ।।

आत्मना सह कल्याणी ज्वलिते जातवेदसि ।।७४।।

विमुच्य देहं सहसा जगाम पतिं समालिंग्य मुरारिलोकम् ।।

पानीयदानेन च माधवेऽस्मिन्पादावनेजादपि योगिगम्यम्।।७५।।

त्वमंतकाले गणिकाविचिंतया देहं त्यक्त्वा मुक्तसमस्तकिल्बिषः ।।

जन्म व्याध्यं प्राप्यसे घोररूपं हिंसासक्तः सर्वदोद्वेगकारी ।। ७६ ।।

दत्ता त्वया पानकस्याऽपि दाने मासेऽनुज्ञा माधवे साधुजाने ।।

व्याधो जातस्तेन जाता सुबुद्धिर्धर्मान्प्रष्टुं सर्वसौख्यैकहेतून् ।। ७७ ।।

धृतं मूर्ध्ना पादशौचावशिष्टं जलं मुनेः सर्वपापापहारि ।।

तेनेयं ते संगतिर्मे वनेऽस्मिन्यया भूयः संपदः सन्ततिश्च ।। ७८ ।।

इत्येतत्सर्वमाख्यातं पूर्वजन्मनि यत्कृतम् ।।

कर्म पुण्यं पापकं च दृष्टं दिव्येन चक्षुषा ।। ७९ ।।

गोप्यं वा ते प्रवक्ष्यामि यद्भवाञ्छ्रोतुमिच्छति ।।

जाता ते चित्तशुद्धिर्वै स्वस्ति भूयान्महामते ।। 2.7.18.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदांबरीष संवादे व्याधोपाख्याने व्याधस्य पूर्वजन्मकथनंनामाष्टादशोऽध्यायः ।। १८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/fwq



।। व्याध उवाच ।। ।।

विष्णुमुद्दिश्य कर्तव्या धर्मा भागवताः शुभाः ।।

तत्राऽपि माधवीयाश्च इत्युक्तं तु त्वया पुरा ।। १ ।।

स विष्णुः कीदृशो ब्रह्मन्किं वा तस्य हि लक्षणम् ।।

किं मानं तस्य सद्भावैः कैर्ज्ञेयो भगवान्विभुः ।। २ ।।

कीदृशा वैष्णवा धर्माः केनाऽसौ प्रीयते हरिः ।।

एतदाचक्ष्व मे ब्रह्मन्किंकराय महामते ।।३।।

इति पृष्टस्तु व्याधेन पुनः प्राह स वै द्विजः।।

प्रणम्य जगतामीशं नारायणमनामयम्।। ४।।

शंख उवाच।। ।।

शृणु व्याध प्रवक्ष्यामि विष्णुरूपमकल्मषम् ।।

यदचिन्त्यं विरिंच्याद्यैर्मुनिभिर्भावितात्मभिः ।। ५ ।।

पूर्णशक्तिः पूर्णगुणो निर्दिष्टः सकलेश्वरः ।।

निर्गुणो निष्कलोऽनंतः सच्चिदानन्दविग्रहः ।। ६ ।।

यदेतदखिलं विश्वं चराचरमनीदृशम् ।।

साधिशंसाऽऽश्रयं यच्च यद्वशे नियतं स्थितम् ।। ७ ।।

अथ ते लक्षणं वच्मि ब्रह्मणः परमात्मनः ।।

उत्पत्तिस्थितिसंहारा ह्यावृत्तिर्नियमस्तथा ।। ८ ।।

प्रकाशौ बन्धमोक्षौ च वृत्तिर्यस्माद्भवंत्यमी ।।

स विष्णुर्ब्रह्मसंज्ञोऽसौ कवीनां संमतो विभुः ।। ९ ।।

साक्षाद्ब्रह्मेति तं प्राहुः पश्चाद्ब्रह्मादिकानपि ।।

ब्रह्मशब्दं सोपपदं ब्रह्मादिषु विदो विदुः ।। ।। 2.7.19.१० ।।

नान्येषां ब्रह्मता क्वाऽपि तच्छक्त्येकांशभागिनाम् ।।

तदेतच्छास्त्रगम्यं हि जन्माद्यस्य महाविभोः ।। ११ ।।

शास्त्रं च वेदाः स्मृतयः पुराणं वै तदात्मकम् ।।

इतिहासः पंचरात्रं भारतं च महामते ।। १२ ।।

एतैरेव महाविष्णुर्ज्ञेयो नान्यैः कथंचन ।।

नावेदविदमुं विष्णुं मनुते च नरः क्वचित् ।। १३ ।।

नेंद्रियैर्नानुमानैश्च न तर्कैः शक्यते विभुम् ।।

ज्ञातुं नारायणं देवं वेदवेद्यं सनातनम् ।। १४ ।।

अस्यैव जन्मकर्माणि गुणाञ्ज्ञात्वा यथामति ।।

मुच्यंते जीवसंघाश्च सदा तद्वशवर्तिनः ।। १५ ।।

क्रमाद्विष्णोश्च माहात्म्यं यथा सातिशयं भवेत् ।।

एकैकस्मिन्स्थिता शक्तिर्देवर्षिपितृमातृके ।। १६ ।।

प्रत्यक्षेणाऽऽगमेनापि तथैवाऽनुमयाऽपि च ।।

आदौ नरोत्तमं विद्याद्बले ज्ञाने सुखे तथा ।। १७ ।।

तस्माद्भूतं शतगुणं विद्याज्ज्ञानादिभिर्वृतम् ।।

भूतान्मनुष्यगंधर्वान्विद्याच्छतगुणाधिकान् ।। १८ ।।

तत्त्वाभिमानिनो देवास्तेभ्यो विद्याच्छताधिकान् ।।

तत्त्वाभिमानिदेवेभ्यः सप्तैव ऋषयो वराः ।।१९।।

सप्तर्षिभ्यो वरो ह्यग्निरग्नेः सूर्यादयस्तथा ।।

सूर्याद्गुरुर्गुरोः प्राणः प्राणादिंद्रो महाबलः ।। 2.7.19.२० ।।

इन्द्राच्च गिरिजा देवी देव्याः शंभुर्जगद्गुरुः ।।

शंभोर्बुद्धिर्महादेवी बुद्धेः प्राणो बलाधिकः ।। २१ ।।

न प्राणात्परमं किंचित्प्राणे सर्वं प्रतिष्ठितम् ।।

प्राणाज्जातमिदं विश्वं प्राणात्मकमिदं जगत् ।। २२ ।।

प्राणे प्रोतमिदं सर्वं प्राणादेव हि चेष्टते ।।

सर्वाधारमिमं प्राहुः सूत्रं नीलांबुदप्रभम् ।।२३।।

लक्ष्मीकटाक्षमात्रेण प्राणस्यास्य स्थितिर्भवेत् ।।

सा लक्ष्मीर्देवदेवस्य कृपालेशैकभाजिनी ।। २४ ।।

न विष्णोः परमं किंचिन्न समो वा कथंचन ।।

।। व्याध उवाच ।। ।।

कथं जीवेष्वयं प्राणः सूत्रनामाऽधिकोऽभवत्।।२५।।

निर्णयो वा कथं ह्यस्य प्राणाधिक्यं कथं विभो ।।

एतदाचक्ष्व मे ब्रह्मन्कथं प्राणाद्विभुः परः ।।२६।।

।। शंख उवाच ।।

शृणु व्याध प्रवक्ष्यामि यत्पृष्टो निर्णयस्तथा ।।

प्राणाधिक्यं समुद्दिश्य जीवैश्च सकलैरपि।।२७।।

पुरा नारायणो देवः पद्मसृष्टौ सनातनः ।।

सृष्ट्वा ब्रह्मादिकान्देवानिदं प्राह जनार्दनः ।। २८ ।।

साम्राज्येऽहं स्थापयेयं ब्रह्माणं वः पतिं प्रभुम् ।।

यो युष्मास्वधिको देवो यौवराज्ये सुरेश्वराः ।। ।। २९ ।।

तं स्थापयत शीलाढ्यं शौर्यौदार्यगुणान्वितम् ।।

इत्युक्ता विभुना देवाः सर्वे शक्रपुरोगमाः ।।2.7.19.३०।।

एवं विवदिरेऽन्योन्यमहं भूयामहं त्विति ।।

सर्वे विवदमानाश्च सूर्यं केचित्परं विदुः ।। ३१ ।।

शक्रं केचित्परं कामं केचित्तूष्णीं तु तस्थिरे ।।

ते निर्णयमपश्यंतः प्रष्टुं नारायणं ययुः ।। ३२ ।।

नमस्कृत्य पुनः प्राहुः सर्वे प्रांजलयोऽमराः ।।

विचारितं महाविष्णो सर्वैरस्माभिरंजसा ।। ३३ ।।

अस्मासु देवमधिकं नैव विद्मः कथंचन ।।

त्वमेव निर्णयं ब्रूहि देवाः संशयिनः खलु ।। ३४ ।।

इति पृष्टोऽमरैः सर्वैः प्रहसन्निदमब्रवीत् ।।

देहादस्माच्च वैराजाद्यस्मिन्निष्क्रामति ह्ययम्।। ३५ ।।

पतिष्यति प्रविष्टे तु यस्मिन्वै ह्युत्थितो भवेत् ।।

स देवो ह्यधिको नूनं नापरस्तु कथंचन ।। ३६ ।।

इत्युक्तास्ते ततः सर्वे तथास्त्विवति वचोऽब्रुवन् ।।

निश्चक्राम जयंताह्वः पादात्पूर्वं सुरेश्वरः ।। ३७ ।।

तदा पंगुममुं प्राहुर्न देहः पतितस्तदा ।।

शृण्वन्पिबन्वदञ्जिघ्रन्पश्यन्नास्तेऽचलन्नपि ।। ३८ ।।

पश्चाद्गुह्याद्विनिष्क्रांतो दक्षोनाम प्रजापतिः ।।
तदा षंढममुं प्राहुर्न देहः पतितस्तदा ।। ३९ ।।
शृण्वन्पिबन्वदञ्जिघ्रन्पश्यन्नास्ते चलन्नपि ।।
पश्चाद्धस्ताद्विनिष्क्रांत इन्द्रः सर्वामरेश्वरः ।। 2.7.19.४० ।।
हस्तहीनममुं प्राहुर्न देहः पतितस्तदा ।।
शृण्वन्पिबन्वदञ्जिघ्रन्पश्यन्नास्ते चलन्नपि ।। ४१ ।।
लोचनाभ्यां विनिष्क्रांतः सूर्यस्तेजस्विनां वरः ।।
तदा काणममुं प्राहुर्न देहः पतितस्तदा ।। ४२ ।।
शृण्वन्पिबन्वदञ्जिघ्रन्पश्यन्नास्ते चलन्नपि ।।
प्राणात्पश्चाद्विनिष्क्रांतौ नासत्यौ विश्वभेषजौ ।।
अजिघ्राणममुं प्राहुर्न देहः पतितस्तदा ।। ।। ४३ ।।
शृण्वन्पिबन्वदन्नैव जिघ्रन्नास्तेऽचलन्नपि ।।
श्रोत्राद्दिशो विनिष्क्रांता न देहः पतितस्तदा ।।
तदामुं बधिरं प्राहुर्मृतं नैव कथंचन।।४४।।
पिबन्वदन्नपि तदा ह्यशृण्वन्नचलन्नपि ।।
वरुणो रसनायास्तुविनिष्क्रांतस्ततः परम् ।।
तदाऽरसज्ञमेवाहुर्न देहः पतितस्तदा ।। ४५ ।।
जीवंश्चलन्नदन्नास्ते तथा जानञ्च्छवसन्नपि ।।
ततो वाचो विनिष्क्रांतो वह्निर्वागीश्वरो विभुः ।। ४६ ।।
तदा मूकममुं प्राहुर्न देहः पतितस्तदा ।।
जीवंश्चलन्नदन्नास्ते तथा जानञ्छवसन्नपि ।।४७।।
पश्चाद्रुद्रो विनिष्क्रांतो मनसो बोधनात्मकः।।
तदा जडममुं प्राहुर्न देहः पतितस्तदा ।।४८।।
जीवंश्चलन्नदन्नास्ते तथा जानञ्छवसन्नपि ।।
पश्चात्प्राणो विनिष्क्रांतो मृतमेनं तदा विदुः ।।
पुनरेवं तदा प्राहुर्देवा विस्मितमानसाः ।। ४९ ।।
देहमुत्था पयेद्यस्तु पुनरेवं व्यवस्थितः ।।
स एव ह्यधिकोऽस्मासु युवराजा भविष्यति ।। 2.7.19.५० ।।

इत्येवं तु प्रतिश्रुत्य विविशुश्च यथाक्रमम् ।।

जयंतः प्राविशत्पादौ नोत्तस्थौ तत्कलेवरम् ।। ५१ ।।

गुह्यं च प्राविशद्दक्षो नोत्तस्थौ तत्कलेवरम् ।।

इन्द्रो हस्तौ विवेशाऽथ नोत्तस्थौ तत्कलेवरम् ।। ।। ५२ ।।

चक्षुः सूर्यः प्रविष्टोऽभून्नोत्तस्थौ तत्कलेवरम् ।।

दिशः श्रोत्रे प्रविविशुर्नोत्तस्थौ तत्कलेवरम्।। ५३ ।।

वरुणः प्राविशजिह्वां नोत्तस्थौ तत्कलेवरम् ।।

नासां विविशतुर्दस्रौ नोत्तस्थौ तत्कलेवरम् ।। ५४ ।।

वह्निश्च प्राविशद्वाचं नोत्तस्थौ तत्कलेवरम् ।।

मनश्च प्राविशद्रुद्रो नोत्तस्थौ तत्कलेवरम् ।। ५५ ।।

पश्चात्प्राणो विवेशासौ तदोत्तस्थौ कलेवरम् ।।

तदा देवा विनिश्चित्य प्राणं देवाधिकं विभुम्।। ५६ ।।

बले ज्ञाने च धैर्ये च वैराग्ये प्राणनेऽपि च ।।

ततोऽभिषेचयांचक्रुर्यौवराज्ये महाप्रभुम् ।।५७ ।।

उत्कृष्टस्थितिहेतुत्वादुक्थमेकं तदा जगुः ।।

तस्मात्प्राणात्मकं विश्वं सर्वं स्थावरजंगमम् ।। ५८ ।।

अंशैः पूर्णैर्बलाढ्यैश्च पूर्णोऽयं जगतां पतिः ।।५९।।

न प्राणहीनं जगदस्ति किंचित्प्राणेन हीनं न च वै समेधते ।।

न प्राणहीनं स्थितमत्र किंचित्प्राणेन हीनं न च किंचिदस्ति ।।

तस्मात्प्राणः सर्वजीवाधिकोऽभूद्बलाधिकः सर्वजीवांतरात्मा ।। 2.7.19.६० ।।

प्राणात्कोऽपि ह्यधिको वा समो वा शास्त्रे दृष्टः श्रुतपूर्वो न चाऽऽस्ते ।। ६१ ।।

तत्तत्कार्यानुगः प्राणो ह्येको देवो ह्यनेकधा ।।

तस्मात्प्राणं वरं प्राहुः प्राणोपासनतत्पराः ।।

लीलयैव जगत्स्रष्टुं हन्तुं पालयितुं प्रभुः ।। ६२ ।।

शेषाऽहिशिवशक्राद्याश्चेतनाश्च जडा अपि ।।

वासुदेवादृते कोऽपि नैनं परिभविष्यति ।। ६३ ।।

सर्वदेवात्मकः प्राणः सर्वदेवमयो विभुः ।।

वासुदेवाऽनुगो नित्यं तथा विष्णुवशस्थितः ।। ६४ ।।

वासुदेवप्रतीपं तु न शृणोति न पश्यति ।।

देवाः प्रतीपं कुर्वंति रुद्राद्याः सुरेश्वराः ।। ६५ ।।

प्रतीपं क्वाऽपि कुरुते न प्राणः सर्वगोचरः ।।

तस्मात्प्राणो महाविष्णोर्बलमाहुर्मनीषिणः।।६६।।

एवं ज्ञात्वा महाविष्णोर्माहात्म्यं लक्षणं तथा ।।

पूर्वबन्धानुगं लिंगं जीर्णां त्वचमिवोरगः ।। ६७।।

विसृज्य परमं याति नारायणमनामयम् ।।

श्रुत्वा शंखोदितं वाक्यं पुनर्व्याधः प्रसन्नधीः ।। ६८ ।।

प्रश्रयाऽवनतो भूत्वा पुनः पप्रच्छ तं मुनिम् ।।

ब्रह्मन्महानुभावस्य प्राणस्याऽस्य जगद्गुरोः ।। ६९ ।।

न ख्यातो महिमा लोके कथं सर्वेश्वरस्य वै ।।

देवानां च मुनीनां च भूपानां च महात्मनाम् ।। 2.7.19.७० ।।

महिमा श्रूयते लोके पुराणेषु सहस्रशः ।।

एतदाचक्ष्व मे ब्रह्मञ्छ्रोतुं कौतूहलं हि मे ।। ७१ ।।

।। शंख उवाच ।। ।।

पुरा प्राणो हरिं देवं नारायणमनामयम् ।।

अश्वमेधैर्यष्टुकामो गङ्गातीरं ययौ मुदा ।। ७२ ।।

हलैश्चकार भूशुद्धिं नानामुनिगणैर्युतः ।।

अन्तर्वल्मीकलीनस्तु कण्वो नाम समाधिगः ।। ७३ ।।

हलोत्कृष्टो विनिष्क्रांतः क्रोधादिदमुवाच ह ।।

दृष्ट्वा पुरः स्थितं प्राणं शशाप ह महाविभुम् ।। ७४ ।।

अद्यप्रभृति न ख्यातिं महिमा भुवनत्रये ।।

तव प्राप्नोति देवेश भूलोके तु विशेषतः ।। ७५ ।।

प्रख्यातास्ते भविष्यंति ह्यवतारा जगत्त्रये ।।

इत्युक्तो मुनिना तेन वायुः कोधात्तमब्रवीत् ।। ७६ ।।

विनापराधं शप्तोऽस्मि तितिक्षुं मां निरागसम् ।।

तस्मात्कण्व महाबाहो गुरुद्रोही भवाऽऽशु च ।। ७७ ।।

लोके निन्दितवृत्तिश्च भवेत्याह सदागतिः ।।

ततः प्रभृति लोकेऽस्मिन्प्राणस्याऽस्य महाप्रभो ।। ७८ ।।

न ख्यातो महिमा लोके भूलोके तु विशेषतः ।।

शापात्कण्वो गुरुं जग्ध्वा सूर्यशिष्योऽभवत्तदा ।। ७९ ।।

इत्येतत्कथितं सर्वं यत्पृष्टं तु त्वयाऽधुना ।।

यच्छ्रोतव्यमितो व्याध पृच्छ मां मा विचारय ।। 2.7.19.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे वायुशापकथनंनामैकोनविंशोऽध्यायः ।। १९ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २०



।। व्याध उवाच ।। ।।

किं जीवा विभुना सृष्टाः कोटिशोऽथ सहस्रशः ।।

दृश्यंते भिन्नकर्माणो नानामार्गाः सनातनाः ।। १ ।।

नैकस्वभावा एते हि कुत एव महामते ।।

सर्वं तत्पृच्छते मह्यं विस्तरात्तत्त्वतो वद ।। २ ।।

।। शंख उवाच ।। ।।

त्रिविधा जीवसंघा हि रजःसत्त्वतमोगुणाः ।।

राजसा राजसं कर्म तामसास्तामसं तथा ।। ३ ।।

सात्त्विकाः सात्त्विकं कर्म कुर्वंत्येते यथाक्रमम् ।।

क्वचिच्च गुणवैषम्यमेतेषां संसृतौ भवेत् ।। ४ ।।

तेनैवोच्चावचं कर्म कुर्वंतः फलभागिनः ।।

क्वचित्सुखं क्वचिद्दुःखं क्वचिच्चोभयमेव च।।५।।

गुणानामेव वैषम्यात्प्राप्नुवन्ति नरा इमे।।

प्रकृतिस्था इमे जीवा बद्धा एतैर्गुणैस्त्रिभिः ।। ६ ।।

गुणकर्माऽनुरूपेण कर्मणां व्यत्ययः फलम् ।।

गुणानुगुण्यं भूयस्ते प्रकृतिं यांत्यमी जनाः ।। ।। ७ ।।

प्रकृतिस्थाः प्राकृतिका गुणकर्माऽभिमूर्छिताः ।।

गतिं प्राकृतिकीं यांति व्यत्ययः प्रकृतेर्न हि ।। ८ ।।

तामसा दुःखबहुलाः सदा तामसवृत्तयः ।।

निर्दया निष्ठुरा लोके सदा द्वेषैकजीविनः ।। ९ ।।

राक्षसाद्याः पिशाचांतास्तामसीं यांति वै गतिम् ।।

राजसा मिश्रमतयः कर्तारः पुण्यपापयोः ।। 2.7.20.१० ।।

पुण्यात्स्वर्गं प्राप्नुवन्ति क्वचित्पापाच्च यातनाम् ।।

अत एते मन्दभाग्या आवर्तंते पुनः पुनः ।। ११ ।।

धर्मशीला दयावन्तः श्रद्धावन्तोऽनसूयकाः ।।
सात्त्विकाः सात्त्विकीं वृत्तिमनुतिष्ठंत आसते ।। १२ ।।
ते चोर्ध्वं यांति विमला गुणापाये महौजसः ।।
विभिन्नकर्मणां चातः पृथग्भावाः पृथग्विधाः ।। १३ ।।
गुणकर्मानुरूपेण तेषां विष्णुर्महाप्रभुः ।।
कर्माणि कारयत्यद्धा स्वस्वरूपाप्तये विभुः ।। १४ ।।
विष्णोर्वैषम्यनैर्घृण्ये पूर्णकामस्य वै नहि ।।
सृष्टिं स्थितिं हृतिं चैव समामेव करोत्ययम् ।। १५ ।।
स्वगुणादेव ते सर्वे कर्मणः फलभागिनः ।।
आरामोप्तान्यथा सर्वान्समं वर्षयति द्रुमान् ।। १६ ।।
एककुल्याजला ह्यंग द्रुमाश्च प्रकृतिं गताः ।।
नारामोप्तरि वैषम्यं नैर्घृण्यं वा कथंचन ।। १७ ।।
।। व्याध उवाच ।। ।।
जनानां पूर्णभोगानां कदा मुक्तिर्भवेन्मुने ।।
सृष्टिकालेऽथवा ह्यंतकाले वा स्थापनस्य च ।। १८ ।।
क्वचिच्च सृष्टिकालस्य संहारस्याऽपि वै स्थितेः ।।
एतद्विस्तार्य मे ब्रह्मन्भगवच्चेष्टितं वद ।। १९ ।। ।।
।। शंख उवाच ।। ।।
चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते।।
रात्रिश्च तावती तस्य ह्यहोरात्रं दिनं भवेत् ।। 2.7.20.२० ।।
दशपंचदिनान्याहुः पक्षं मासो द्वयात्मकः ।।
मासद्वयमृतुं प्राहुरयनं च ऋतुत्रयम् ।। २१ ।।
अयने द्वे वत्सरः स्यात्तादृक्च्छतसमा यदि ।।
गच्छंति ब्रह्मणो ह्यस्य ब्रह्मकल्पं तदा विदुः ।। २२ ।।
तावान्हि प्रलयः काल इति वेदविदां मतम् ।।
प्रलयस्त्रिविधः प्रोक्तो मानवो मानवात्यये ।। २३ ।।
दैनंदिनो द्वितीयो हि ब्रह्मणो दिवसात्यये ।।
ब्रह्मणोऽथ लये पश्चाद्ब्राह्मं च प्रलयं विदुः ।। २४ ।।

ब्रह्मणस्तु मुहूर्ते तु मनोस्तु प्रलयं विदुः ।।

प्रलयेषु व्यतीतेषु चतुर्दशसु वै क्रमात् ।। २५ ।।

दैनंदिनलयं प्राहुः प्रलयानां स्थितिं पुनः।।

त्रयाणामेव लोकानां लयो मन्वंतरे भवेत् ।। २६ ।।

चेतनानां तदा नाशो न लोकानां क्षयो भवेत् ।।

उदकैरेव पूर्तिश्च यथा पूर्वं तथा पुनः ।। २७ ।।

मन्वंतरांते भूयात्तु चेतनानां पुनर्भवः ।।

दैनंदिनलये व्याध सर्वस्यापि क्षयो भवेत् ।। २८ ।।

सत्यलोकं विना सर्वे लोका नश्यंति साधिपाः ।।

सचेतनाः साधिभूताः प्रसुप्ते चतुरानने ।। २९ ।।

तत्त्वाभिमानिनो देवाः केचिच्च मुनयस्तथा ।।

शिष्यंति सुप्ताः सर्वेऽपि सत्यलोकव्यवस्थिताः ।। 2.7.20.३० ।।

तिष्ठंति सुप्तिमापन्ना यावत्कल्पमतींद्रियाः ।।

पुनर्निशात्यये ब्रह्मा यथापूर्वमकल्पयत् ।। ३१ ।।

ऋषीन्देवान्पितॄँल्लोकान्धर्मान्वर्णान्पृथक्पृथक् ।।

पुनर्दशावतारा हि विष्णोर्देवस्य चक्रिणः ।। ३२ ।।

नियमेन भवंत्येते तथान्येऽपि च भूरिशः ।।

देवता ऋषयश्चैव आकल्पं च गिरां पतेः ।। ३३ ।।

पुनरेवाऽभिवर्तंते ब्रह्मणा सह मुक्तिगाः ।।

भूपाश्च साधवो ये च सिद्धिं प्राप्ताः परं गताः ।। ३४ ।।

तेनैव चाभिवर्तंते सत्यलोकव्यवस्थिताः ।।

तद्राशिगाः पुनर्यांति तन्नाम्ना श्रुतिसंस्थिताः ।। ३५ ।।

तत्तद्गोत्रेषु जायंते तत्तत्कर्मरताः सदा ।।

दैत्यानामपि सर्वेषां यदा कलियुगात्ययः ।। ३६ ।।

कलिना सह गच्छंति स्वां गतिं निरयालयाः ।।

तेषां च राशिसंस्था ये तन्नामानोऽपरेऽपि च ।।३७।।

जायंते कर्मणा स्वेन तत्तत्कर्मविधायकाः।।

सृष्टिकालं प्रवक्ष्यामि मुक्तिकालं तथैव च ।। ३८ ।।

ब्रह्मादीनां च देवानां समाहितमना भव ।।

निमेषो देवदेवस्य ब्रह्मकल्पसमो मतः ।। ३९ ।।

तस्यावसाने चोन्मेषो देवदेवशिखामणेः ।।

निमेषांऽते भवेदिच्छा स्रष्टुं लोकांश्च कुक्षिगान् ।। 2.7.20.४० ।।

सोऽपश्यत्स्वोदरे सर्वाञ्जीवसंघाननेकशः ।।

सृज्यान्मुक्तानमृन्सर्वाँ लिंगभंगमुपागतान् ।। ४१ ।।

सुप्ताः सृतिस्थाः सर्वेऽपि तमोगा अपि सर्वशः ।।

पूर्वकल्पे लिंगभंगमापन्ना विधिपूर्वकाः ।। ४२ ।।

मानवांता जीवकोशा जीवन्मुक्ताश्च मुक्तिगाः ।।

पूर्वकल्पे विमुक्ताश्च ब्रह्माद्या मानवांतकाः ।। ४३ ।।

ध्यानसंस्था हि तिष्ठंति विष्णुकुक्षिगता अपि ।।

उन्मेषस्यादिमे भागे चतुर्व्यूहात्मको विभुः ।। ४४ ।।

भूत्वा तु पूर्वसाद्गुण्याद्वासुदेवाच्च व्यूहगात् ।।

दत्त्वा तु ब्रह्मणो मुक्तिं सायुज्याख्यां महाविभुः ।। ४५ ।।

दत्त्वा तदनु सायुज्यं तत्त्वज्ञानं महात्मनाम् ।।

सारूप्यं चैव केषांचित्सामीप्यं च तथा विभुः ।। ४६ ।।

सालोक्यं च तथाऽन्येषां दत्त्वा देवो जनार्दनः ।।

अनिरुद्धवशे सर्वान्स्थिताँल्लोकानलोकयत् ।। ४७ ।।

प्रद्युम्नस्य वशे दत्त्वा सृष्टिं कर्तुं मनो दधे ।।

मायां जयां कृतिं शांतिमुपयेमे स्वयं हरिः ।। ४८ ।।

चतुर्व्यूहैः पूर्णगुणैर्वासुदेवादिकैः क्रमात् ।।

ताभिर्युक्तो महाविष्णुश्चतुर्व्यूहात्मको विभुः ।। ४९ ।।

भिन्नकर्माशयं लोकं पूर्णकामो व्यजीजनत् ।।

उन्मेषांते पुनर्विष्णुर्योगमायां समाश्रितः ।। 2.7.20.५० ।।

संकर्षणाद्व्यूहगाच्च हरत्येतच्चराचरम् ।।

तदेतत्सर्वमाख्यातं कार्यं चिंत्यं महात्मनः ।। ५१ ।।

यदचिंत्यं दुर्विभाव्यं ब्रह्माद्यैरपि योगिभिः ।।

।। व्याध उवाच ।। ।।

के वा भागवता धर्माः कैर्विष्णुश्च प्रसीदति ।। ५२ ।।

तानहं श्रोतुमिच्छामि सांप्रतं वद नो मुने ।।

।। शंख उवाच ।। ।।

येन चित्तविशुद्धिः स्याद्यः सतामुपकारकः ।। ५३ ।।

तं विद्धि सात्त्विकं धर्मं यश्च केनाप्य निंदितः ।।

श्रुतिस्मृत्युदितो यस्तु यदि निष्कामिको भवेत् ।। ५४ ।।

यस्तु लोकाऽविरुद्धोऽपि तं धर्मं सात्त्विकं विदुः ।।

चतुर्विधा हि ते धर्मा वर्णाश्रमविभागतः ।। ५५ ।।

नित्यनैमित्तिकाः काम्या इति ते च त्रिधा मताः ।।

ते सर्वे स्वस्वधर्माश्च यदा विष्णोः समर्पिताः ।। ५६ ।।

तदा वै सात्त्विका ज्ञेया धर्मा भागवताः शुभाः ।।

देवतांतरदैवत्याः सकामा राजसा मताः ।। ५७ ।।

यक्षरक्षःपिशाचादिदैवत्या लोकनिष्ठुराः ।।

हिंसात्मका निंदिताश्च धर्मास्ते तामसाः स्मृताः ।। ५८ ।।

सत्त्वस्थाः सात्त्विकान्धर्मान्विष्णुप्रीतिकराञ्च्छुभान् ।।

कुर्वंत्यनीहया नित्यं ते वै भागवताः स्मृताः ।। ५९ ।।

येषां चित्तं सदा विष्णौ जिह्वायां नाम वै विभोः ।।

पादौ च हृदये येषां ते वै भागवताः स्मृताः ।। 2.7.20.६० ।।

सदाचार रता ये च सर्वेषामुपकारकाः ।।

सदैव ममताहीनास्ते वै भागवताः स्मृताः ।। ६१ ।।

येषां च शास्त्रे विश्वासो गुरौ साधुषु कर्मसु ।।

ये विष्णु भक्ताः सततं ते वै भागवताः स्मृताः ।। ६२ ।।

येषां हि संमता धर्माः शाश्वता विष्णुवल्लभाः ।।

श्रुतिस्मृत्युदिता ये च ते धर्माः शाश्वता मताः ।। ६३ ।।

अटनं सर्वदेशेषु वीक्षणं सर्वकर्मणाम् ।।

श्रवणं सर्वधर्माणां विषयाऽऽसक्तचेतसाम् ।। ६४ ।।

अकिंचित्करमेतेषां षंढस्येव वरस्त्रियः ।।

साधूनां दर्शनेनैव मनो द्रवति वै सताम् ।। ६५ ।।

चंद्रस्य कौमुदीसंगाच्चंद्रकांतशिला यथा ।।
क्वचित्सच्छास्त्रश्रवणाद्विषयै रहितं मनः ।। ६६ ।।
तिष्ठत्येव सतां पुंसां तेजोरूपं ह्यकल्मषम् ।।
पद्मबन्धोः प्रभासंगात्सूर्यकांतशिला यथा ।। ६७ ।।
निष्कामैर्हि जनैर्यैस्तु श्रद्धया समुपाश्रितः ।।
यो विष्णुवल्लभो नित्यं धर्मो भागवतो मतः ।। ६८ ।।
तैर्दृष्टा वहवो धर्मा इहाऽमुत्र फलप्रदाः ।।
विष्णुप्रीतिकराः सूक्ष्माः सर्वदुःखविमोचकाः ।। ६९ ।।
दध्नः सारमिवोद्धृत्य धर्मं वैशाखसंभवम् ।।
रमायै भगवानाह क्षीराब्धौ हितकाम्यया ।। 2.7.20.७० ।।
मार्गच्छायाविनिर्माणं प्रपादानं च वै तथा ।।
व्यजनैर्व्यजनं चैव प्रश्रयाणां समर्पणम् ।। ७१ ।।
छत्रस्योपानहोर्दानं दानं कर्पूरगन्धयोः ।।
वापीकूपतडागानां निर्माणं विभवे सति ।। ७२ ।।
सायाह्ने पानकस्यापि दानं तु कुसुमस्य च ।।
तांबूलदानं पापघ्नं गोरसानां विशेषतः ।। ७३ ।।
लवणान्विततक्रस्य दानं श्रांताय वै पथि ।।
अभ्यंगकरणं चैव द्विजपादावनेजनम् ।। ७४ ।।
कटकम्बलपर्यंकदानं गोदानमेव च ।।
मधुयुक्ततिलानां च दानं पापविनाशनम् ।। ७५ ।।
सायाह्ने चेक्षुदण्डानां दानमुर्वारुकस्य च ।।
रसायनप्रदानं च पितृनिर्वापणं तथा ।। ७६ ।।
एते धर्मा पि(?)शिष्योक्ता मासेऽस्मिन्माधवप्रिये ।।
प्रातः सूर्योदये स्नात्वा शृण्वन्द्विजकुलेरितम् ।।७७।।
नित्यकर्माणि कृत्वैवं मधुसूदनमर्चयेत् ।।
कथां माधवमासीयां शृणुयाच्च समाहितः।।७८।।
तैलाभ्यंगं वर्जयेच्च कांस्यपात्रे तु भोजनम् ।।
निषिद्धभक्षणं चैव वृथाऽऽलापं तु वर्जयेत् ।। ७९ ।।

अलाबुं गृंजरं चैव लशुनं तिलपिष्टकम् ।।
आरनालं भिस्सटं च घृतकोशातकीं तथा ।।2.7.20.८०।।
उपोदकीं कलिंगं च शिग्रुशाकं च वर्जयेत् ।।
निष्पावानि कुलित्थानि मसूराणि च वर्जयेत्।। ।। ८१ ।।
वृंताकानि कलिंगानि कोद्रवाणि च वर्जयेत् ।।
तंदुलीयकशाकं च कौसुम्भं मूलकं तथा ।। ८२ ।।
औदुंबरं बिल्वफलं तथा श्लेष्मा तकीफलम् ।।
सर्वथा वर्जयेद्विद्वान्मासेऽस्मिन्माधवप्रिये ।। ८३ ।।
एतेष्वन्यतमं भुक्त्वा स चंडालो भवेद्ध्रुवम् ।।
तिर्यग्योनिशतं याति नात्र कार्या विचारणा ।। ८४ ।।
एवं मासव्रतं कुर्यात्प्रीतये मधुघातिनः ।।
एवं व्रते समाप्ते तु प्रतिमां कारयेद्विभोः ।। ८५ ।।
मधुसूदनदैवत्यां सवस्त्रां च सदक्षिणाम् ।।
स्वर्चितां विभवैः सर्वैर्ब्राह्मणाय निवेदयेत् ।। ८६ ।।
वैशाखसितद्वादश्यां दद्याद्दध्यन्नमंजसा ।।
सोदकुम्भं सतांबूलं सफलं च सदक्षिणम्।।८७।।
ददामि धर्मराजाय तेन प्रीणातु वै यमः।।
अपसव्यात्समुच्चार्य नामगोत्रे पितुस्ततः।।८८।।
दद्याद्दध्यन्नमक्षय्यं पितृणां तृप्तिहेतवे ।।
गुरुभ्यश्च तथा दद्यात्पश्चाद्दद्याच्च विष्णवे।।८९।।
शीतलोदकदध्यन्नं कांस्यपात्रस्थमुत्तमम्।।
सदक्षिणं सतांबूलं सभक्ष्यं च फलान्वितम् ।।2.7.20.९०।।
ददामि विष्णवे तुभ्यं विष्णुलोकजिगीषया ।।
इति दत्त्वा यथाशक्त्या गां च दद्यात्कुटुंबिने ।। ९१ ।।
एवं मासव्रतं कुर्याद्यो दंभेन विवर्जितः ।।
स सर्वैः पातकैर्हीनः कुलमुद्धृत्य वै शतम् ।। ९२ ।।
पश्यतामेव भूतानां भित्त्वा वै सूर्यमंडलम् ।।
याति विष्णोः परं धाम योगिनामपि दुर्लभम्।।९३।।

व्याख्यात्येवं द्विजकुलवरे माधवीयांश्च ।।

धर्मान्विष्ण्वादीष्टानतिमहितरान्व्याधपृष्टान्समस्तान् ।।९४।।

वटः सद्यः पश्यतामेव भूमौ पपाताहो पंचशाखी द्रुमोऽयम् ।।

वृक्षात्तस्मात्कोटरे संस्थितो हि व्यालः कश्चिद्दीर्घदेही करालः ।।

हित्वा देहं पापयोनिं च सद्यः स वै तस्थौ प्रांजलिर्नम्रमूर्धा ।। ९५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखंडे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे भागवतधर्मकथनंनाम विंशोऽध्यायः ।। २० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २१

https://sa.wikisource.org/s/h8g



।। श्रुतदेव उवाच ।। ।।

ततस्तु विस्मितो भूत्वा शंखो व्याधसमन्वितः ।।

को भवानिति तं प्राह दशैषा च कुतस्तव ।। १ ।।

केन वा कर्मणा सौम्य मतिस्तव शुभावहा ।।

अकस्मात्ते कथं मुक्तिरेतदाचक्ष्व विस्तरात् ।। २ ।।

शंखेनैव तदा पृष्टो दण्डवत्पतितो भुवि ।।

प्रश्रयाऽवनतो भूत्वा प्रांजलिर्वाक्यमब्रवीत् ।। ३ ।।

अहं पुरा द्विजः कश्चित्प्रयागे बहुभाषणः ।।

रूपयौवनसंपन्नो विद्यामदसुगर्वितः ।। ४ ।।

धनाढ्यो बहुपुत्राढ्यः सदाऽहंकारदूषितः।।

कुसीदस्य मुनेः पुत्रो नाम्ना रोचन इत्यहम्।। ५ ।।

आसनं शयनं निद्रा व्यवायोऽक्षपरिक्रियाः ।।

लोकवार्ता कुसीदं वा व्यापारास्ते ममाऽभवन् ।। ६ ।।

तंतुमात्राणि कर्माणि लोकनिन्दाविशंकितः ।।

सदंभश्च सदा कुर्वे न श्रद्धा मे कदाचन ।। ७ ।।

दुर्बुद्धेर्मम दुष्टस्य कियत्कालो गतोऽभवत् ।।

तदा वैशाखमासेऽस्मिञ्जयंतोनाम वै द्विजः ।। ८ ।।

श्रावयामास तन्मासधर्मान्भागवतप्रियान् ।।

तत्क्षेत्रे वासिनां पुण्यकर्मणां च द्विजन्मनाम् ।। ९ ।।

नारीनराः क्षत्रियाश्च वैश्याः शूद्राः सहस्रशः ।।

प्रातः स्नात्वा समभ्यर्च्य मधुसूदनमव्ययम् ।। 2.7.21.१० ।।

कथां शृण्वंति सततं जयन्तेन समीरिताम् ।।

शुचिभूत्वा मौनधरा वासुदेवकथारताः ।। ११ ।।

वैशाखधर्मनिरता दंभालस्यविवर्जिताः ।।

तां सभां च प्रविष्टोऽहं कौतुकाच्च दिदृक्षया ।। १२ ।।

सोष्णीषेण मया मूर्ध्ना नमस्कारोऽपि न कृतः ।।

तांबूलं च मुखे कृत्वा कंचुकं च मया धृतम् ।।१३।।

कथाविक्षेपमचरं लोकवार्ताभिरंजनात् ।।

सर्वेषां चित्तचांचल्यमभूद्वै लोकवार्तया ।। १४ ।।

क्वचिद्वासः प्रसार्याहं क्वचिन्निंदन्क्वचिद्धसन् ।।

एवं कालो मयानीतः कथा यावत्समाप्यते ।। १५ ।।

पश्चात्तेनैव दोषेण सद्योऽल्पायुर्विनष्टधीः ।।

सन्निपातेन पञ्चत्वं प्राप्तोऽहं च परे दिने ।।१६।।

तप्तसीसजलैः पूर्णं निरयं च हलाहलम्।।

प्राप्य भुक्त्वा यातनां च मन्वन्तानि चतुर्दश ।।१७।।

युक्तेष्वथ च लक्षेषु तथा चतुरशीतिभिः ।।

क्रमाद्योनिषु जातोऽहमिदानीं चावसन्द्रुमे ।।१८।।

दशयोजनविस्तीर्णे शतयोजनमुन्नते ।।

व्यालोऽहं तामसः क्रूरः सप्तयोजनकोटरे ।।१९।।

भूत्वा वसामि विप्रर्षे कर्मणा बाधितः पुरा ।।

अयुतं च समा याता निराहारस्य कोटरे ।। 2.7.21.२० ।।

दैवात्तव मुखांभोजसमीरितकथामृतम् ।।

श्रुत्वा चक्षुर्द्वयेनाहं सद्यो ध्वस्ताशुभो मुने ।।२१।।

व्यालयोनिं विसृज्याऽहं दिव्यरूपधरः पुमान् ।।

प्रांजलिः प्रणतो भूत्वा पादौ ते शरणं गतः।।२२।।

कस्मिञ्जन्मनि त्वं बधुर्न जाने मुनिसत्तम ।।

न मयोपकृतं क्वाऽपि सानुकम्पः कुतः सताम् ।। २३ ।।

साधूनां समचित्तानां सदा भूतदयावताम् ।।

परोपकारप्रकृतिर्न चैषामन्यथा मतिः ।। २४ ।।

मामद्यानुगृहाण त्वं यथा धर्मे मतिर्भवेत् ।।

न भूयाद्विस्मृतिः क्वाऽपि विष्णोर्देवस्य चक्रिणः ।। २५ ।।

महतां साधुवृत्तानां संग तिश्च सदा भवेत् ।।

दारिद्यमेकमेव स्यान्मदांधपरमांजनम् ।। २६ ।।

इति तं बहुधा स्तुत्वा प्रणम्य च पुनः पुनः ।।

प्रांजलिः प्रणतस्तस्थौ तूष्णीमेव तदग्रतः।।२७।।

शंखो दोर्भ्यां समुत्थाप्य पूर्णप्रेमपरिप्लुतः।।

पस्पर्श पाणिना चांगं शंतमेन गताध्वसः ।। २८ ।।

चक्रे सोऽनुहग्रहं तस्मिन्दिव्यरूपधरे द्विजे ।।

प्राह तं कृपयाऽऽविष्टो भाविवृत्तान्तमञ्जसा ।। ।। २९।।

द्विज त्वं मासमाहात्म्यश्रवणाच्च हरेरपि ।।

माहात्म्यश्रवणात्सद्यो विध्वस्ताऽखिलबंधनः ।। 2.7.21.३० ।।

अतिहाय कलंकं च क्रमाद्गत्वा पुनर्भुवि ।।

दशार्णे विषमे पुण्ये भविता त्वं द्विजोत्तमः ।। ३१ ।।

वेदशर्मेति विख्यातः सर्ववेदविशारदः ।।

तत्र ते भविता जातिस्मृतिरात्यंतिकी शुभा ।।३२।।

तथा स्मृतानुबन्धस्त्वं त्यक्तसर्वेषणः शुभः।।

करोषि सकलान्धर्मान्वैशाखोक्तान्हरिप्रियान् ।। ३३ ।।

निर्द्वन्द्वो निःस्पृहोऽसंगो गुरु भक्तो जितेन्द्रियः ।।

सदा विष्णुकथालापो भविता तत्र जन्मनि ।।३४।।

ततः सिद्धिं समाप्याथ विध्वस्ताऽखिलबन्धनः ।।

प्राप्नोषि परमं धाम योगैरपि दुरासदम् ।।३५।।

मा भैषीः पुत्र भद्रं ते भविता मत्प्रसादतः ।।

हास्याद्भयात्तथा क्रोधाद्द्वेषात्कामादथाऽपि वा।।३६।।

स्नेहाद्वा सकृदुच्चार्य विष्णोर्नामाऽघहारि च।।

पापिष्ठा अपि गच्छन्ति विष्णोर्धाम निरामयम् ।।३७।।

किमु तच्छ्रद्धया युक्ता जितक्रोधा जितेन्द्रियाः ।।

दयावन्तः कथां श्रुत्वा गच्छंतीति द्विजोत्तम ।।३८।।

केचित्केवलया भक्त्या कथालापैकतत्पराः ।।

सर्वधर्म्मोज्झिता वाऽपि यांति विष्णोः परं पदम्।।३९।।

द्वेषादिना च भक्त्या वा केचिद्विष्णुमुपासते ।।

तेऽपि यांति परं धाम पूतनेवासुहारिणी ।। 2.7.21.४० ।।

महद्भिः संगतो नित्यं वाग्विसर्गस्तदाश्रयः ।।

मुमुक्षूणां च कर्तव्यः स विधिः श्रुतिचोदितः ।। ४१ ।।

स वाग्विसर्गो जनताऽघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ।।

नामान्यनंतस्य यशोंकितानि यच्छृण्वन्ति गायन्ति गृणंति साधवः ।। ४२ ।।

यः कष्टसेवां न च कांक्षते विभुर्न वासनं भूरि न रूपयौवने ।।

स्मृतः सकृद्गच्छति धाम भास्वरं कं वा दयालुं शरणं व्रजेत ।। ४३ ।।

तमेव शरणं याहि नारायणमनामयम् ।।

भक्तवत्सलमव्यक्तं चेतोगम्यं दयानिधिम् ।। ४४ ।।

कुरु सर्वानिमान्धमान्वैशाखोक्तान्महामते ।।

तेन तुष्टो जगन्नाथः शर्म ते च विधास्यति ।। ४५ ।।

इत्युक्त्वा विररामाथ व्याधं दृष्ट्वा सुविस्मितः।।

स दिव्यः पुरुषः प्राह पुनस्तं मुनिपुंगवम् ।। ४६ ।।

।। दिव्यपुरुष उवाच ।। ।।

धन्योस्म्यनुगृहीतोऽस्मि त्वया शंख दयालुना ।।

दिष्ट्या गता मे दुर्योनिर्यामि चैव परां गतिम्।।४७।।

इति तं च परिक्रम्य ह्यनुज्ञातो दिवं ययौ।।

ततः सायमभूद्राजञ्च्छंखो व्याधेन तोषितः ।। ४८ ।।

संध्यां सायन्तनीं कृत्वा रात्रिशेषं निनाय च ।।

नानाख्यानेश्च भूपानां देवानां च महात्मनाम् ।। ४९ ।।

लीलाभिरवताराणां दृष्टगो ष्ठिभिरेव च ।।

ब्राह्मे मुहूर्ते चोत्थाय पादौ प्रक्षाल्य वाग्यतः ।। 2.7.21.५० ।।

ध्यायंश्च तारकं ब्रह्म कृत्वा शौचादिसत्क्रियाम् ।।

वैशाखे मेषगे सूर्ये स्नात्वा प्राक्च भगोदयात् ।। ५१ ।।

कृत्वा संध्यादिकं कर्म तथा संतर्प्य चाऽखिलान् ।।

व्याधमाहूय हृष्टात्मा मूर्ध्नि प्रोक्ष्य निरीक्ष्य च ।। ५२ ।।

रामेति द्व्यक्षरं नाम ददौ वेदाधिकं शुभम् ।।

विष्णोरेकैकनामाऽपि सर्ववेदाधिकं मतम् ।। ५३ ।।

तेभ्यश्चाऽनंतनामभ्योऽधिकं नाम्नां सहस्रकम् ।।
तादृङ्नामसहस्रेण रामनाम समं मतम् ।। ५४ ।।
तस्माद्रामेति तन्नाम जप व्याध निरंतरम् ।।
धर्मानेतान्कुरु व्याध यावदामरणांतिकम् ।। ५५ ।।
ततस्ते भविता जन्म वल्मीकस्य ऋषेः कुले ।।
वाल्मीकिरिति नाम्ना च भूमौ ख्यातिमवाप्स्यसि ।। ५६ ।।
इति व्याधं समादिश्य प्रतस्थे दक्षिणां दिशम् ।।
व्याधोऽपि तं परिक्रम्य प्रणम्य च पुनःपुनः ।। ५७ ।।
किंचिद्दूरानुगो भूत्वा स रुदन्विरहातुरः ।।
यावद्दृष्टिपथं तावत्पश्यंस्तस्य गतिं पुनः ।। ५८ ।।
पुनर्निववृते कृच्छ्रात्तमेव हृदि चिंतयन् ।।
वनं निर्माय तन्मार्गे प्रपां कृत्वा सुनिर्मलाम् ।। ५९ ।।
अतियोग्यानिमान्धर्मान्वैशाखोक्तांश्चकार ह ।।
वन्यैः कपित्थपनसैर्जंबूचूतादिभिः फलैः ।। 2.7.21.६० ।।
मार्गानां श्रमार्तानामाहारं परिकल्पयन् ।।
उपानद्भिश्चंदनैश्च छत्रैश्च व्यजनैरपि ।।६१।।
वालुकास्तरणोपेतच्छायाभिश्च क्वचित्क्वचित् ।।
आजहाराथ पांथानां श्रमं स्वेदोद्भवं तथा ।।६२।।
प्रातः स्नात्वा दिवारात्रं जपन्रामेति वै मनुम् ।।
व्याधजन्मनि नामाऽसौ वल्मीकस्य सुतोऽभवत् ।। ६३ ।।
कृणुर्नाम मुनिः कश्चित्तस्मिन्नेव सरोवरे ।।
तपो वै दुस्तरं तेपे बाह्यव्यापारवर्जितः ।। ६४ ।।
वल्मीकमभवद्देहे तस्य कालेन भूयसा ।।
वल्मीक इति तं प्राहुरतो वै मुनिपुंगवम् ।। ६५ ।।
पश्चात्तपोविरामांते कृणौ स्मृतिपथं गते ।।
स्त्रियोऽनुस्मरतो राजन्स्खलितं चेंद्रियं मुनेः ।। ६६ ।।
जग्राह शैलुषी काचित्तस्यां जज्ञे वनेचरः ।।
वाल्मीकिरिति विख्यातो भुवनेषु महायशाः ।। ६७ ।।

यो वै रामकथां दिव्यां स्वैः प्रबंधैर्मनोहरैः ।।

लोके प्रख्यापयामास कर्मबन्धनिकृंतनीम् ।। ६८ ।।

।। श्रुतदेव उवाच ।। ।।

पश्य वैशाखमाहात्म्यं भूपालाद्याऽपि भूतिदम् ।।

व्याधोप्युपानहौ दत्त्वा ऋषित्वं प्राप दुर्लभम् ।। ६९ ।।

य इदं परमाख्यानं पापघ्नं रोमहर्षणम् ।।

शृणुयाच्छ्रावयेद्वाऽपि न भूयः स्तनपो भवेत् ।। ७०।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे व्याधोपाख्याने वाल्मीकेर्जन्मकथनन्नामैकविंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २२



।। मैथिलेय उवाच ।। ।।

का ह्यस्मिंस्तिथयः पुण्या मासे वैशाखसंज्ञके ।।

कानि दानानि शस्तानि तासु तासु विशेषतः ।। १ ।।

काः प्रख्याताश्च वै लोक एतदाचक्ष्व विस्तरात् ।।

।। श्रुतदेव उवाच ।। ।।

त्रिंशच्च तिथयः पुण्या वैशाखे मेषगे रवौ ।। २ ।।

एकादश्यां कृतं पुण्यं कोटिकोटिगुणं भवेत् ।।

सर्वदानेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।। ३ ।।

समवाप्नोति वैशाख एकादश्यां जलाप्लुतः ।।

स्नानं दानं तपो होमो देवतार्चनसत्क्रियाः ।। ४ ।।

कथायाः श्रवणं चैव सद्यो मुक्तिविधायकम् ।।

रोगाद्युपहतो यस्तु दारिद्र्येणाऽपि पीडितः ।। ५ ।।

श्रुत्वा कथामिमां पुण्यां कृतकृत्यो भवेन्नरः ।।

अस्नात्वा चाप्यदत्त्वा च येन नीता इमाः शुभाः ।। ६ ।।

स गोघ्नश्च कृतघ्नश्च पितृघ्नश्च महान्स्मृ तः ।।

जलाशयाश्च स्वाधीनाः स्वाधीनं च कलेवरम् ।।७।।

माधवो मनसा सेव्यः कालश्च सुगुणोत्तमः ।।

साधवश्च दयावंतः को न सेवेत माधवम् ।। ८ ।।

दरिद्रैश्च धनाढ्यैश्च पंगुभिश्चांधकैस्तथा ।।

षंढैश्च विधवाभिश्च नारीभिश्च नरैस्तथा ।। ९ ।।

कुमारयुववृद्धैश्च रोगार्तैरपि भूमिप ।।

अतीवसुखसाध्यो हि धर्मो वैशाखगोचरः ।। 2.7.22.१० ।।

मासमेनमनुप्राप्य धर्मान्कुरु इमाञ्च्छुभान् ।।

को न यत्नं च कुरुते तस्मात्को न्वपरः शुभः ।। ११ ।।

योऽतीव सुलभान्धर्मान्न करोति नराऽधमः ।।

तस्यैव सुलभा लोका नारका नात्र संशयः ।। १२ ।।

अथातः संप्रवक्ष्यामि तस्मिन्मासे च कोत्तमा ।।

तां तिथिं सर्वपापघ्नीं दध्नः सारमिवोद्धृताम् ।।१३।।

चैत्रे मासि महापुण्ये मेषसंस्थे दिवाकरे ।।

पापघ्नी पितृदैवत्या गयाकोटिफलप्रदा ।। १४ ।।

अत्रैव श्रूयते पुण्या पितृगाथा पुरातनी ।।

शृणु तां सत्कथां राजन्सावर्णौ शासति क्षितिम् ।। १५ ।।

त्रिंशत्कलियुगस्यांते सर्वधर्मविवर्जिते ।।

आनर्ते तु द्विजः कश्चिद्धर्मवर्ण इति श्रुतः ।। १६ ।।

दृष्ट्वा कलियुगे राजञ्जनान्पापरतान्मुनिः ।।

तस्यैव प्रथमे पादे वर्णधर्मविवर्जिते ।।१७।।

स कदाचित्सत्रयागं मुनीनां तु महात्मनाम् ।।

अगमत्पुष्करे क्षेत्रे कुर्वतां मौनधारिणाम् ।।१८।।

तत्र चासन्पुण्यकथा ऋषीणां शास्त्रगोचराः।।

तत्र केचित्कलियुगं प्रशशंसुर्धृतव्रताः ।।१९।।

कृते यद्वत्सरात्साध्यं पुण्यं माधवतोषणम् ।।

त्रेतायां मासतः साध्यं द्वापरे पक्षतो नृप ।। 2.7.22.२० ।।

तस्माद्दशगुणं पुण्यं कलौ विष्णुस्मृतेर्भवेत् ।।

अत्यल्पमपि वै पुण्यं कलौ कोटिगुणं भवेत् ।। २१ ।।

दया पुण्यविहीने तु दानधर्मविवर्जिते ।।

दयादानं च कुरुते सकृदुच्चार्य वै हरिम् ।। २२ ।।

स एव चोर्ध्वगो नूनं दुर्भिक्षे चान्नदस्तथा ।।

एतत्प्रसंगावसरे नारदोऽभ्येत्य वै मुनिः ।। २३ ।।

करेणैकेन शिश्नं च जिह्वां चैकेन वै हसन् ।।

प्रगृह्योन्मत्तवत्तत्र ननर्त मुनिसत्तमः ।। २४ ।।

सभ्यास्तदा तमित्यूचुः किमेतदिति नारद ।।

प्रत्युवाच स तान्सर्वान्नृत्यं कुर्वन्हसन्सुधीः ।। २५४

संतोषाद्यदिह प्रोक्तं नृत्यद्भिर्भावितात्मभिः ।।

सिद्धा वयं न संदेहः पुण्योऽयं कलिरागतः ।। २६ ।।

तत्सत्यं न च संदेहो बहु स्वल्पेन साध्यते ।।

स्मरणात्तोषमायाति केशवः क्लेशनाशनः ।। २७ ।।

तथापि वः प्रवक्ष्यामि दुर्घटं च द्वयं ध्रुवम् ।।

शिश्नस्य निग्रहः पुत्रा जिह्वाया अपि नित्यशः ।। २८ ।।

द्वयं यद्धि भवेद्यस्य स एव स्याज्जनार्दनः ।।

भवद्भिर्नात्र स्थातव्यं तस्मात्कलियुगागमे ।। २९ ।।

पाखंडं भारतं हित्वा संचरध्वं यथासुखम् ।।

यत्र कुत्रापि देशेषु मनो यत्र प्रसीदति ।। 2.7.22.३० ।।

इति तद्वचनं श्रुत्वा मुनयः शंसितव्रताः ।।

सत्रं समाप्य सहसा ययुस्ते च यथासुखम् ।। ३१ ।।

धर्मवर्णोऽपि तच्छ्रुत्वा त्यक्तुं भूमिं मनो दधे ।।

स व्रतं चोर्ध्वतेजस्कं धृत्वा दण्डकमडलू ।। ३२ ।।

जटावल्कलधारी च भूत्वा चैवं ययौ पुनः ।।

कलौ युगे त्वनाचारान्द्रष्टुं विस्मितमानसः ।। ३३ ।।

तत्राऽपश्यज्जनान्घोरान्पापाचाररतान्खलान् ।।

पाखण्डिनो द्विजाः सर्वे शूद्राः प्रव्राजिनस्तथा ।। ३४ ।।

भर्तारं द्वेष्टि भार्या च शिष्यो द्वेष्टि गुरुं तथा ।।

भृत्यश्च स्वामिहंता च पुत्रः पितृवधे रतः ।। ३५ ।।

शूद्रप्राया द्विजाः सर्वे बस्तप्रायाश्च धेनवः ।।

गाथाप्रायास्तथा वेदाः क्रियासाम्याः शुभाः क्रियाः ।। ३६ ।।

भूतप्रेतपिशाचाद्याः फलदास्तत्र देवताः ।।

ता एव श्रद्धयाऽर्चंति जनाः पापरताः शिताः ।। ३७ ।।

सर्वे व्यवायनिरतास्तदर्थे त्यक्तजीविताः ।।

कूटसाक्ष्यप्रवक्तारः सदा कैतवमानसाः ।। ३८ ।।

मनस्येकं वचस्येकं कर्मण्येकं सदा कलौ ।।

सर्वेषां हैतुकी विद्या सा पूज्या नृपमंदिरे ।। ३९ ।।

गीताद्याश्च कला विद्या नृपाणां च प्रियावहाः ।।

हीनाश्च पूज्यतां यांति नोत्तमाश्च कलौ युगे ।। 2.7.22.४० ।।

श्रोत्रियाश्च द्विजाः सर्वे दरिद्राः स्युः कलौ युगे ।।

विष्णुभक्तिर्नराणां तु प्रायशो नैव वर्तते ।।४१।।

प्रायः पाखंडभूयिष्ठं पुण्यक्षेत्रं भविष्यति ।।

शूद्रा धर्मप्रवक्तारो जटिलास्तापसाः कलौ ।।४२।।

सर्वे चाल्पायुषो मर्त्या दयाहीना शठा जनाः ।।

सर्वे धर्मप्रवक्तारः सर्वे च ग्रहणोत्सवाः ।। ४३ ।।

स्वार्चनं चाऽपि हीच्छंति वृथा निन्दापरायणाः ।।

असूयानिरताः सर्वे प्रभोः स्वगृहमागते ।। ४४ ।।

भ्राता च भगिनीगंता पिता पुत्रीं च वै कलौ ।।

सर्वेऽपि शूद्रीनिरताः सर्वे वारांगनारताः ।। ४५ ।।

साधून्नैव विजानंति बहुपापांश्च मन्यते ।।

व्यक्तीकुर्वंति साधूनां दोषमेकं दुराग्रहाः ।। ४६ ।।

पापानां दोषजातानि गुणत्वेन वदन्ति हि ।।

दोषमेव प्रगृह्णंति कलौ तु विगुणा जनाः ।।४७।।

जलौका धर्मसंयुक्ता रक्तं पिवति नो पयः ।।

औषध्यः सत्त्वहीना हि ऋतून् व्यत्ययास्तथा ।। ४८ ।।

दुर्भिक्षं सर्वराष्ट्रेषु कन्या काले न सूयते ।।

नटनर्तकविद्यासु प्रीतिमन्तो नराः कलौ ।। ४९ ।।

वेदवेदांतविद्यासु निरता ये गुणाधिकाः ।।

भृत्यान्पश्यंति तान्मूढास्ते भ्रष्टाश्चाखिला नृप ।। 2.7.22.५० ।।

त्यक्तश्राद्धक्रियाः सर्वे त्यक्तवेदोदितक्रियाः ।।

जिह्वायां विष्णुनामानि न वर्तंते कदाचन ।।

शृंगाररस निर्वाणास्तद्गीतान्येव ते जगुः ।।५१।।

न विष्णुसेवा न च शास्त्रवार्ता न यागदीक्षा न विचारलेशः ।।

न तीर्थयात्रा न च दानधर्माः कलौ जने क्वाऽपि बभूव चित्रम् ।। ५२ ।।

तान्दृष्ट्वा घर्मवर्णोऽपि सुभीतोऽत्यन्तविस्मितः ।।

वंशं पापात्क्षयं यांतं दृष्ट्वा द्वीपांतरं ययौ ।। ५३ ।।
स चरन्सर्वद्वीपेषु लोकेष्वेव तु सर्वशः ।।
पितृलोकं ययौ धीमान्कदाचित्कौतुकान्वितः ।। ५४ ।।
तत्राऽपश्यन्महाघोराञ्च्छ्राम्यमाणांश्च कर्मभिः ।।५५।।
धावतो रुदमानांश्च पततः पतितानपि ।।
तत्रापश्यच्चान्धकूपे पतितान्स्वान्पितॄनधः ।। ५६ ।।
दूर्वाग्रलंबिनो दीनान्दूर्वाच्छेदे हि शंकितान् ।।
तदा प्राप्तः कोऽपि चाखुर्दूर्वामूलं तदाश्रयम् ।। ५७ ।।
तेन भागत्रयं चात्तमेको भागोवशेषितः ।।
तं दृष्ट्वा ते क्षीयमाणं मूलं दुःखेन कर्षिणः ।। ।। ५८ ।।
अधो दृष्ट्वा चांऽधकूपं तटपातादिभीषणम् ।।
दुरुत्तारं महाघोरं कर्मणाप्तं सुदुःखिताः ।। ५९ ।।
अग्रे चाऽपि दुरुत्तारमवलंबविवर्जितम् ।।
तान्द्रष्ट्वा विस्मितो भूत्वा दयालुर्वाक्यमब्रवीत् ।।2.7.22.६०।।
के यूयं पतिता ह्यस्मिन्केन दुस्तरकर्मणा ।।
कस्य गोत्रे समुत्पन्नाः कथं वो मुक्तिरूर्जिता ।। ६१ ।।
एतद्यूयं वदध्वं मे शर्म वोऽथ भविष्यति ।।
इत्येवमुदितास्तेन पितरोऽथ सुदुःखिताः ।। ६२ ।।
तमूचुः करुणां वाचं धर्मश्रुति पुरःसराः ।।
।। पितर ऊचुः ।। ।।
वयं श्रीवत्सगोत्रीया भुवि सन्तानवर्जिताः ।। ६३ ।।
पिंडश्राद्धविहीनाश्च तेन पच्यामहे वयम् ।।
निःसन्तानोऽपि नो वंशो जातः पापैः कलौ युगे ।।६४।।
नाऽस्माकं पिंडदश्चास्ति वंशे पापात्क्षयं गते।।
तेनांऽधकूपे पतनं निस्तंतूनां दुरात्मनाम् ।।६५।।
एको हि वर्तते वंशे धर्मवर्णो महायशाः ।।
स विरक्तश्चरन्नेको न गार्हस्थमुपेयिवान् ।। ६६ ।।
तंतुना तेन बिभ्रामो दूर्वानालावलंबिताः ।।

निस्तंतुत्वाच्च तन्मूलमाखुः खादति प्रत्यहम् ।। ६७ ।।

एकस्यैवाऽवशिष्टत्वात्किंचिन्नलोऽवशेषितः ।।

आखुना खाद्यमानश्च वर्तते सौम्य पश्यताम् ।। ।। ६८ ।।

तस्य चाऽऽयुःक्षये तात शेषमाखुर्हरिष्यति ।।

पश्चात्कूपे पतिष्यामो दुरुत्तारेंऽधतामसे ।। ६९ ।।

तस्मात्त्वं च भुवं गत्वा धर्मवर्णं प्रबोधय ।।

अस्मद्वाक्यैर्दयापात्रैर्गार्हस्थ्यं विमुखं मुनिम् ।। 2.7.22.७० ।।

पितरस्ते भृशाऽर्ता हि नरके पतिता मया ।।

अन्धकूपे दुरुत्तारे दृष्टा दूर्वावलंबिताः ।। ७१ ।।

सा दूर्वा वंशरूपा हि तन्मूलं सततं मुने ।।

कालाख्यो मूषकस्तस्य मूलं खादति प्रत्यहम् ।। ७२ ।।

वंशनाशोऽनुक्रमत एकस्त्वं त्ववशेषितः ।।

तेन मूलस्य दूर्वाया नष्टं भागत्रयं मुने ।।७३।।

एको भागोऽवशिष्टोऽत्र यतस्त्वं वर्तसे भुवि ।।

किंचित्खादति वै त्वाऽऽखुस्तव चाऽऽयुःक्षयक्रमात् ।। ७४ ।।

परेते त्वयि चाऽस्माकं तवाऽपि पतनं भवेत् ।।

कूप एवान्धतामिस्रे संतानेऽपि क्षयं गते ।। ७५ ।।

तस्माद्गार्हस्थ्यमासाद्य कुरु संततिवर्धनम्।।

तेनाऽस्माकं तवाऽपि स्याद्गतिरूर्ध्वा न संशयः ।। ७६।।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।।

यजेत वाऽश्वमेधं च नीलं वा वृषमुत्सृजेत् ।। ७७ ।।

यद्येकोऽपि च वैशाखे माघे वा कार्तिकेऽपि च ।।

अस्मानुद्दिश्य वै स्नानं श्राद्धं दानं करिष्यति ।। ७८ ।।

तेन चोर्ध्वगतिर्भूयान्नरकादुद्धृतिश्च नः ।।

एको वा विष्णुभक्तः स्यादेको वा हरिवासरी ।। ७९ ।।

एको वा शृणुयाद्विष्णोः कथां पापविनाशनीम् ।।

तस्यातीतं कुलशतं भावि चाऽपि कुलं शतम् ।। 2.7.22.८० ।।

अपि पापवृतं क्वाऽपि नरकं नैव पश्यति ।।

किमन्यैर्बहुभिः पुत्रैर्दयाधर्मविवर्जितैः ।। ८१ ।।
ये जाता नार्चयंत्यद्धा विष्णुं नारायणं कुले ।।
नाऽपुत्रस्य हि लोकोऽस्ति सर्वमेतज्जना विदुः ।।८२।।
तत्राऽपि च दयायुक्तं तत्संतानं च दुर्लभम् ।।
इति तं बोधयित्वा तु वाक्यैरेतैश्च सूनृतैः ।। ८३ ।।
विरक्तस्योर्ध्वरेतस्य गार्हस्थ्ये त्वं मतिं कुरु ।।
पितृणां वचनं श्रुत्वा धर्मवर्णोऽतिविस्मितः ।।८४।।
प्रणम्य प्रांजलिः प्राह रुदन्वै जातवेपथुः ।।
नाम्नाहं धर्मवर्णश्च युष्मद्वंश्यो दुराग्रही ।। ।। ८५ ।।
सत्रे श्रुत्वा तु वचनं नारदस्य महात्मनः ।।
जिह्वादार्ढ्यं गुह्यदार्ढ्यं न कस्याऽपि कलौ युगे ।। ८६ ।।
दृष्ट्वा भुवि च पापिष्ठांस्ताञ्जनानपि शंकितः ।।
भीतो दुर्जनसंगत्या चरन्द्वीपांतरे वसन् ।। ८७ ।।
पादास्त्रयो गता ह्यस्य कलेः पादेंऽत्यकेऽपि च ।।
गताः सार्द्धत्रयो भागा इदानीं जनका इमे ।। ८८ ।।
नाऽहं वेद्मि भवद्दुःखं वृथा जन्म गतं मम ।।
यस्मिन्कुले त्वहं जात ऋणं पित्रोर्न वै हृतम् ।। ८९ ।।
किं तेन जातमात्रेण भूभारेणाऽत्र शत्रुणा ।।
यो जातो नार्चयेद्विष्णुं पितॄन्देवानृषींस्तथा ।। 2.7.22.९० ।।
युष्मदाज्ञां करिष्यामि मामाऽऽज्ञापयत क्षितौ ।।
यथा न कलिबाधा स्यात्तत्र संसारतोऽपि वा ।। ९१ ।।
कर्तव्यान्यपि कृत्यानि मया पुत्रेण भूतले ।।
इत्युक्तास्तेन वंश्येन धर्मवर्णेन धीमता ।।९२।।
किंचिदाश्वस्तमनस इदमूचुर्महीपते ।।
पुत्र पश्य दशामेतां पितृणां ते महात्मनाम् ।। ९३ ।।
संतत्यभावात्पततां दूर्वामात्रावलंबिनाम् ।।
त्वं गार्हस्थ्यमुपालभ्य संतत्यास्मान्समुद्धर ।। ९४ ।।
ये च विष्णुकथारक्ता ये स्मरंत्यनिशं हरिम् ।।

ये सदाचारनिरता न तान्वै बाधते कलिः ।। ।। ९५ ।।

शालिग्रामशिला यस्य गृहे तिष्ठति मानद ।।

अथवा भारतं गेहे न तं वै बाधते कलिः ।। ९६ ।।

यश्च वैशाखनिरतो माघस्नानपरश्च यः ।।

कार्तिके दीपदाता यो न तं वै बाधते कलिः ।।९७।।

प्रत्यहं शृणुयाद्यस्तु कथां विष्णोर्महात्मनः ।।

पापघ्नीं मोक्षदां दिव्यां न तं वै बाधते कलिः ।।९८।।

यद्गृहे वैश्वदेवश्च यद्गृहे तुलसी शुभा।।

यदंगणे शुभा गौश्च न तं वै बाधते कलिः।।९९।।

तस्मान्नो भीतिरस्तीह युगे पापात्मकेऽपि च ।।

शीघ्रं गच्छ भुवं पुत्र मासोऽयं माधवाह्वयः ।। 2.7.22.१०० ।।

सर्वेषामुपकाराय मेषसंस्थे दिवाकरे ।।

त्रिंशच्च तिथयः पुण्या मेषसंस्थे दिवाकरे ।। १०१ ।।

एकैकस्यां कृतं पुण्यं कोटिकोटिगुणं भवेत् ।।

तत्राऽपि चैत्रबहुलो दर्शो नृणां च मुक्तिदः ।। २ ।।

प्रियश्च पितृदेवानां सद्यो मुक्तिविधायकः ।।

ये वै पितॄन्समुद्दिश्य श्राद्धं कुर्वंति तद्दिने ।।३।।

सोदकुंभं पिंडदानं तदक्षय्यफलं लभेत् ।।

ये च कुर्वंति वै श्राद्धममायां च मधौ सुत ।। ४ ।।

तैः कृतं तु गयाक्षेत्रे श्राद्धं कोटिगुणं भवेत् ।।

यदि श्राद्धं मधौ दर्शे शाकेनाऽपि करोति च।। ५ ।।

कोटिश्राद्धं गयायां तु कृतं तेन न संशयः ।।

कुंभं च पानकैः पूर्णं कर्पूरागुरुवासितम् ।। ६ ।।

यो न दद्यान्मधौ दर्शे स पितृघ्नो न संशयः ।।

यो दद्याच्च मधौ दर्शे सपानीयं करीरकम् ।। ७ ।।

श्राद्धं च भक्तिसंयुक्तः कुरुते च कुलोद्धतिम् ।।

पितॄणां च तथा लोके नदी चाऽमृतवर्षिणी ।। ८ ।।

कुंभदानात्प्रसरति श्राद्धदानादिदायिनाम् ।।

अन्नसूपघृतापूपलेह्यपायसकर्दमान् ।। ९ ।।

तस्माज्झटिति त्वं गच्छ यदा वा ऽमा भविष्यति ।।

कुरु श्राद्धं पिंडदानं सोदकुम्भं महामते ।।2.7.22.११०।।

सर्वेषामुपकाराय गार्हस्थ्यं च समाश्रय ।।

धर्मार्थकामैः संतुष्टः प्राप्य संतानमुत्तमम् ।। ११ ।।

पुनश्च मुनिवृत्तिस्त्वं सुखं द्वीपे सुसंचर ।।

इत्यादिष्टः पितृभिश्च तूर्णं भूमिं ययौ मुनिः ।। १२ ।।

चैत्रे मासे मेषसंस्थे पुण्ये मासि दिवाकरे ।।

प्रातः स्नात्वा च संतर्ज्य पितॄन्देवानृषींस्तथा ।। १३ ।।

सोदकुंभं तथा श्राद्धं कृत्वा पापविनाशनम् ।।

तेन दत्त्वा पितॄणां च मुक्तिमावृत्तिवर्जिताम् ।। १४ ।।

स्वयं विवाहमकरोत्संततिं प्राप्य वै सतीम् ।।

लोके प्रख्यापयामास तां तिथिं पापनाशनीम् ।।१५।।

स्वयं पुनर्मुदा भक्त्या गन्धमादनमाययौ ।। १६ ।।

तस्मात्पुण्यतमा चैषा मधोर्दर्शाह्वया तिथिः।।

नानया सदृशी लोके तिथिर्दृष्टा श्रुताऽपि वा ।। ।। ११७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्वरीषसंवादे कलिधर्मनिरूपणे पितृमुक्तिर्नाम द्वाविंशोऽध्यायः ।। २२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २३



।। ।। श्रुतदेव उवाच ।। ।।

अथातः संप्रवक्ष्यामि माहात्म्यं पापनाशनम् ।।

अक्षय्यायास्तृतीयायाः सिते पक्षे च माधवे ।। १ ।।

ये कुर्वंति च तस्यां वै प्रातः स्नानं भगोदये ।।

ते सर्वे पापनिर्मुक्ता यांति विष्णोः परं पदम् ।। २ ।।

देवान्पितॄन्मुनीन्यस्तु कुर्यादुद्दिश्य तर्पणम् ।।

तेनाऽधीतं च तेनेष्टं तेन श्राद्धशतं कृतम् ।। ३ ।।

मधुसूदनमभ्यर्च्य कथां शृण्वंति ये नराः ।।

अक्षय्यायां तृतीयायां ते नरा मुक्तिभागिनः ।। ।। ४ ।।

ये दानं तत्र कुर्वंति मधुद्विट्प्रीतये शुभम् ।।

तदक्षय्यं फलत्येव मधुशासनशासनात् ।। ५ ।।

देवर्षिपितृदैवत्या तिथिरेषा महाशुभा ।।

त्रयाणां तृप्तिदात्री च कृते धर्मे सनातने ।। ६ ।।

प्रख्यातिश्च तिथेरस्याः केन चास्ति तदप्यहम्।।

वक्ष्यामि नृपशार्दूल सावधानमनाः शृणु ।। ।। ७ ।।

पुरा पुरंदरस्याऽऽसीद्युद्धं च बलिना सह ।।

देवानां चैव दैत्यानां द्वंद्वं युद्धमभूत्ततः ।। ८ ।।

स निर्जित्य बलिं दैत्यं पातालतलवासिनम्।।

पुनर्भुवं समासाद्य चोतथ्यस्याऽऽश्रमं ययौ ।। ९ ।।

तत्रापश्यच्च तत्पत्नीं गुर्विणीं मंदगामिनीम्।।

चलच्छ्रोणितटाबद्ध कांचीदाम्ना सुमंडिताम् ।। 2.7.23.१० ।।

क्वणत्कंकणनिर्घोष जितमत्तालिकोकिलाम् ।।

वल्गुचित्रांबरां रामां मंजुवाचं शुचिस्मिताम् ।। ११ ।।

लसत्कुंभस्थलाभ्यां च कुचाभ्यामुपशोभिताम् ।।

हसत्पद्ममुखां दिव्यां नीलोत्पलसुलोचनाम्।। १२ ।।

केतक्युदरपांडुभ्यां गंडाभ्यां च मनोरमाम् ।।

श्रमोच्छ्वसंतीं दीनाक्षीं पर्णशालामुखे स्थिताम् ।। १३ ।।

स्वपतीं शयने क्वाऽपि तां दृष्ट्वा मोहमागतः ।।

बलात्कारेण बुभुजे गुर्विणीं पाकशासनः।।१४ ।।

गर्भस्थस्तु तदा पिंडः स्वस्य पातविशंकया ।।

छादयामास वै योनिं द्वारे पादेन दुःखितः ।। १५ ।।

ततश्चस्कन्द वीर्यं तद्भूमावेव बलिद्विषः ।।

गर्भस्थाय चुकोपासौ भगवान्पाकशासनः ।। १६ ।।

तं शशाप च गर्भस्थं रुषा ताम्रांतलोचनः ।।

जात्यन्धो भव दुर्बुद्धे माऽवमंस्था यतः पदा ।। १७ ।।

प्रच्छाद्य योनिद्वारं च ततो दीर्घतपाह्वयः ।।

पदा प्रस्कंदिताद्वीर्याज्जालतः समजायत ।। १७ ।।

पश्चादिंद्रो ययौ शीघ्रमृषेः शाप विशंकितः ।।

पलायंतं हरिं दृष्ट्वा जहसुर्बटवोऽखिलाः ।। १९ ।।

ततस्तु व्रीडितो भूत्वा ययौ मेरोर्गुहां शुभाम् ।।

तत्र लीनश्चचाराऽसौ दुस्तरं वै तपो महत् ।। 2.7.23.२० ।।

मेरौ विलीय वसति देवेन्द्रे लज्जयाऽन्विते ।।

गूढैर्विज्ञाय तां वार्तां दैतेया बलिपूर्वकाः ।। २१ ।।

सुरानाक्रम्य बुभुजुर्बलींद्रश्चामरावतीम् ।।

दिक्पालानां विभूतीश्च शंबराद्या बलीयसः ।। २२ ।।

बलाद्बुभुजिरे हीननाथे राष्ट्रे दिवौकसाम् ।।

रक्षितारमजानंतो देवाश्चाग्निपुरोगमाः ।। २३ ।।

पप्रच्छुर्धिषणं देवं देवाचार्यमकल्मषम् ।।

पप्रच्छुरिंद्रवृत्तांतं क्व स्वित्तिष्ठति नः प्रभुः ।। २४ ।।

दैत्याक्रांतमिदं राष्ट्रं हीननाथं दिवौकसाम् ।।

कुतो नाऽऽयाति देवोऽसौ भूयान्कालो गतो विभो ।। २५ ।।

तं यामो यत्र धिषण प्रार्थयामश्च तं विभुम् ।।

इति पृष्टस्तदा देवैर्धिषणस्तानुवाच ह ।। २६ ।।

रसातले बलिं जित्वा चोतथ्यस्याऽऽश्रमं ययौ ।।

भुक्त्वा पत्नीं च दार्ढ्येन तच्छिष्यैरेव निन्दितः ।। २७ ।।

व्रीडितस्तु दिवं यातुं गुहां मेरोर्विवेश ह ।।

तत्रैवाऽऽस्ते शचीयुक्तः स्वकृतं चिन्तयन्विभुः ।। २८ ।।

इति तस्य वचः श्रुत्वा देवा अग्निपुरोगमाः ।।

गुहां मेरोर्ययुः शीघ्रं दृष्ट्वा प्रार्थयितुं विभुम् ।। २९ ।।

तत्र दृष्ट्वा गुहालीनं देवेन्द्रं पाकशासनम् ।।

तुष्टुवुर्विविधैः स्तोत्रैस्तद्वीर्यैर्लोकविश्रुतैः ।। 2.7.23.३० ।।

इंद्र तुभ्यं नमस्तेऽस्तु सर्वदेवाऽधिपाय ते ।।

वयं दैत्यैरर्दिताश्च त्वया हीना भृशार्दिताः ।। ३१ ।।

स्थानभ्रष्टाश्चरामोंऽग नानादेशेषु दुःखिताः ।।

तस्मादागत्य देवेन्द्र जहि शत्रूनरिंदम ।। ३२ ।।

इति स्तुतस्तदा देवैर्निश्चक्राम गुहामुखात् ।।

लज्जया ऽवनतो भूत्वा पश्यन्भूमिं च चक्षुषा ।। ३३ ।।

न किंचिदपि चोवाच दुःखाद्गद्गदभाषणः ।।

तऽऽज्ञात्वा धिषणः प्राह तं सुरेन्द्रं भयानकम् ।।३४।।

मा शंका ते सुरपते कर्माधीनमिदं जगत्।।

मानामानौ सुखं दुःखं लाभालाभौ जयाजयौ।। ३५।।

पूर्वकर्मानुरोधेन भवंत्येते न संशयः।।

जीवः कर्मानुगो दुःखं दिष्टं दैवेन कालतः।। ३६।।

प्राज्ञाः प्रायो न शोचंति न प्रहृष्यंति वै सुखात्।।

तस्मात्प्रारब्धतः प्राप्तं दुःखं चेदं तव प्रभो।। ।। ३७ ।।

तत्प्राप्य मघवन्दुःखं नैव शोचितुमर्हसि ।।

इत्युक्तो गुरुणा चाह मघवानमराधिपान् ।। ३८ ।।

।। इन्द्र उवाच ।।

परस्त्रीसंगदोषेण बलं वीर्यं यशोऽमलम् ।।

मंत्रशक्तिःशास्त्रशक्तिर्विद्याशक्तिश्च मानद ।। ३९ ।।

अभवन्नष्टवीर्यं मे तूष्णीं तेन वसाम्यहम् ।।

पाकशासनवाक्यं तु श्रुत्वा स्वाचार्यसंयुऽताः ।। 2.7.23.४० ।।

मंत्रयामासुरेकान्ते पुनस्तस्य बलाप्तये ।।

तदा गुरुश्च तान्प्राह करुणं च विदुत्तमः ।। ४१ ।।

बृहस्पतिरुवाच।।

मासो वैशाखनामाऽयं प्रियो वै मधुघातिनः।।

सर्वाश्च तिथयः पुण्या मासेऽस्मिन्माधवप्रिये।।४२।।

तत्राऽपि च सिते पक्षे मासेऽस्मिन्नक्षयाह्वया ।।

या तस्यां स्नानदानादि श्रद्धया च करोति वै ।।४३।।

तस्य पापसहस्राणि नश्यंत्येव न संशयः।।

अनवद्यं तथैश्वर्यं बलं धैर्यं भवंति च ।।४४।।

तस्मात्तस्यां तृतीयायां हरिणा बलविद्विषा ।।

स्नानदानादिसद्धर्मान्कारयामो हिताऽऽप्तये ।।४५।।

भविष्यति च सा शक्तिर्विद्याया मन्त्रशास्त्रयोः ।।

बलं धैर्यं यशश्चैव यथापूर्वं भविष्यति ।। ४६ ।।

इत्येवं तु विचार्याथ गुरुर्देवैः समाहितः ।।

इन्द्रेण कारयामास धर्मानेतान्हरिप्रियान्।। ४७ ।।

अक्षय्यायां तृतीयायां भुक्तिमुक्तिफलप्रदान् ।।

तेन पूर्ववदेवाऽऽसीद्बलं धैर्यादिकं विभोः ।। ।। ४८ ।।

परस्त्रीसंगदोषोऽपि सद्य एव व्यलीयत ।।

पश्चाद्गताशुभः शक्रो राहोर्मुक्त इवोडुपः ।। ४९ ।।

देवतानां तथा मध्ये शुशुभे च हरिर्यथा ।।

पश्चाद्देवैः समायुक्तो विनिर्जित्य तथाऽसुरान् ।। 2.7.23.५० ।।

तृतीयायाश्च माहात्म्याद्भाग्ययुक्तोऽमरावतीम् ।।

विवेश विभवैः सार्द्धं शंखतूर्यादिनिःस्वनैः ।। ५१ ।।

अनुज्ञाताश्च शक्रेण स्वधामानि ययुः सुराः ।।

ततस्ते यज्ञभागांश्च लेभिरे च यथा पुरा ।। ५२ ।।

पिंडभागांश्च पितरो यथापूर्वं प्रपेदिरे ।।

स्वाध्याये मुनयस्तुष्टा दैत्यानां च पराजयः ।। ५३ ।।

तदा प्रभृति लोकेऽस्मिंस्तृतीया चाऽक्षयाऽऽह्वया ।।

प्रख्याता सर्वलोकेषु देवर्षिपितृतुष्टिदा ।।५४।।

तस्मात्पुण्यतमा चैषा सर्वकर्मनिकृंतनी ।।

भुक्तिमुक्तिप्रदा नृणां तृतीया चाऽक्षयाऽऽह्वया ।। ५५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादेऽक्षय्यतृतीयायाः श्रेष्ठत्वकथनं नाम त्रयोविंशोऽध्यायः ।।२३।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २४

https://sa.wikisource.org/s/h8i

< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। श्रुतदेव उवाच ।। ।।

तिथिष्वेतासु पुण्यासु द्वादशी सितपक्षिणी ।।

वैशाखमासे राजेंद्र सर्वाघौघविनाशिनी ।।१।।

किं दानैः किं तपोभिश्च किमुपोष्यैर्व्रतैश्च किम् ।।

किमिष्टैश्चैव पूर्तैश्च द्वादशी यैर्न सेविता ।। २ ।।

गंगायामुपरागे तु यो दद्याद्गोसहस्रकम् ।।

तत्फलं समवाप्नोति प्रातः स्नात्वा हरेर्दिने ।। ३ ।।

यद्दत्तं चाऽर्हते चाऽन्नं द्वादश्यां च सिते शुभे ।।

सिक्थेसिक्थे भवेत्तस्य कोटिब्राह्मणभोजनम्।। ।। ४ ।।

यो दद्यात्तिलपात्रं तु द्वादश्यां मधुसंयुतम् ।।

निर्धूताऽखिलबंधस्तु विष्णुलोके महीयते ।। ५ ।।

एकादश्यां सिते पक्षे कुर्य्याज्जागरणं हरेः ।।

स जीवन्नेव मुक्तः स्यात्तुष्टाः स्युः सर्वदेवताः ।। ६ ।।

कोटींदुसूर्यग्रहणे तीर्थान्युत्प्लाव्य यत्फलम् ।।

तत्फलं समवाप्नोति प्रातः स्नात्वा हरेर्दिने। ।।७।।

तुलस्याः कोमलैः पत्रैर्द्वादश्यां विष्णुमर्चयेत् ।।

समस्तकुलमुद्धृत्य विष्णुलोकाऽधिपो भवेत् ।।८।।

( क्षेपकः-तुलसीपत्रपुष्पैश्च वैशाखेऽश्वत्थपूजनम् ।।

पुष्पाद्यभावे धान्यैर्वा पूजयेन्मधुसूदनम् ।।१।।)

यमं पितॄन्गुरून्देवान्विष्णुमुद्दिश्य मानवः ।।

माधवे शुक्लद्वादश्यां सोदकुंभं सदक्षिणम्।। ९ ।।

दध्यन्नं चैव यो दद्यात्तस्य पुण्यफलं शृणु।।

प्रयागे प्रत्यहं चैव कुर्याद्यः कोटिभोजनम् ।। 2.7.24.१० ।।

यावत्संवत्सरं पुण्यं षड्रसान्नैर्मनोरमैः ।।

तत्फलं समवाप्नोति मधुशासनशासनात् ।।११।।

शालिग्रामशिलादानं यः कुर्याद्द्वादशीदिने ।।

वैशाखे शुक्लपक्षे तु सर्वपापैः प्रमुच्यते ।।१२।।

द्वादश्यां पयसा यस्तु स्नापयेन्मधुसूदनम् ।।

राजसूयाऽश्वमेधाभ्यां यत्फलं परिजायते ।। १३ ।।

त्रयोदश्यां यजेद्विष्णुं पयोदधिविमिश्रितैः ।।

शर्करामधुभिर्द्रव्यैर्मधुसूदनप्रीतये ।। १४ ।।

तत्फलं समवाप्नोति गंगायां नाऽत्र संशयः ।।

पंचामृतैश्च यो विष्णुं भक्त्या संस्नापयेद्विभुम् ।। ।। १५ ।।

स सर्वकुलमुद्धृत्य विष्णुलोके महीयते ।।

यो दद्यात्पानकं ह्यस्यां सायाह्ने प्रीतये हरेः ।। १६ ।।

जीर्णपापं जहात्याशु जीर्णां त्वचमिवोरगः ।।

सायाह्ने चैव यो दद्यादुर्वारुकरसायनम् ।।१७।।

भवेन्मुक्तः कर्मबंधादुर्वारुकरसायनात् ।।

इक्षुदण्डं चूतफलं दद्याद्द्राक्षाफलानि च ।।१८।।

न विच्छित्तिः संततेः स्यात्तस्य वै शतपूरुषम् ।।

यो दद्याद्गंधलेपं तु सायाह्ने द्वादशीदिने ।।१९।।

बाह्योपघातैः सकलैर्मुच्यते नाऽत्र संशयः ।।

यत्किंचित्कुरुते पुण्यं द्वादश्यां राजसत्तम।।2.7.24.२०।।

माधवे तु सिते पक्षे तदक्षय्यफलं भवेत् ।।

प्रख्यातिमस्या वक्ष्यामि येन जातेति भूमिप ।। २१ ।।

सर्वेषां सर्वपापघ्नीं सर्वमंगलदायिनीम् ।।

पुरा काश्मीरदेशे तु द्विजो देवव्रताऽऽह्वयः ।। २२ ।।

तस्याऽऽसीन्मालिनी नाम तनया चारुरूपिणी ।।

ददौ तां सत्यशीलाय विप्रवर्याय धीमते ।।२३।।

तामुद्वाह्य ययौ धीमान्स्वदेशं यवनाऽऽह्वयम् ।।

रूपयौवनसंपन्ना तस्य नैव प्रियाऽभवत्।। २४ ।।

सदा विद्वेषसंयुक्तस्तस्यां तिष्ठति निष्ठुरः।।

नाऽन्यस्य कस्यचिद्द्वेष्टि तां विना नृपते पतिः ।। २५ ।।

तस्मिन्सा क्रोधसंयुक्ता वशीकरणलंपटा।।

अपृच्छत्प्रमदा राजन्यास्त्यक्ताः पतिभिः पुरा ।।२६।।

ताभिरुक्ता तु सा भूप वश्यो भर्त्ता भविष्यति।।

अस्माकं प्रत्ययो जातो भर्तृत्यागावमानिनाम् ।।२७।।

प्रयुज्य भेषजं वश्यं नीता हि पतयः पुरा ।।

योगिनीं त्वं तु गच्छाऽद्य दास्यते भेषजं शुभम् ।। ।।२८।।

न विकल्पस्त्वया कार्यो भविता दासवत्पतिः ।।

योगिनीमंदिरे गत्वा तासां वाक्येन भूपते ।। २९ ।।

प्रसादमतुलं तस्या लेभे दुश्चारिणी सती।।

शतस्तंभसमायुक्तां कुटीं भेजे त्वरान्विता ।।2.7.24.३०।।

सुविस्तृतां सुवर्चस्कां तथैवाऽयातयामिकाम् ।।

प्रावृता दीर्घवस्त्रेण सन्निधिं तेन योगिनी ।। ३१ ।।

दीर्घाभिश्च सटाभिस्तु प्रावृता दीप्तिसंयुता ।।

परिचारसमोपेता वीक्षमाणा शनैःशनैः ।। ३२ ।।

अक्षसूत्रकरा सा तु जपंती प्रार्थिता तया ।।

ददौ वश्यकरं मंत्रं क्षोभकं प्रत्ययात्मकम् ।। ३३ ।।

ततः सा प्रणता भूत्वा दद्याद्द्रव्यांऽगुलीयकम् ।।

वज्रमाणिक्यसंयुक्तमतिरक्तप्रभान्वितम् ।।३४।।

मृदुकांचनसंयुक्तं भानुरश्मिसमद्युति ।।

ततो दृष्ट्वा तु संतुष्टा पादस्थं चांगुलीयकम् ।।३५।।

हृदयं च तया ज्ञातं तत्पतेरवमानजम् ।।

तदोक्ता हि तया भूप तापस्याहितयुक्तया।।३६।।

चूर्णो रक्षान्वितो ह्येष सर्वभूतवशंकरः।।

चूर्णं भर्तरि संयुज्य रक्षां ग्रीवाश्रयां कुरु।।३७।।

भविष्यति पतिर्वश्यो नाऽन्यां यास्यति सुन्दरीम्।।

नाऽप्रियं वदति क्वाऽपि दुश्चारिण्यास्तवाऽपि च।।३८।।

चूर्णरक्षां गृहीत्वा सा प्राप भर्तृगृहं पुनः ।।

प्रदोषे पयसा युक्तश्चूर्णो भर्तरि योजितः ।। ३९ ।।

ग्रीवायां हि कृता रक्षा न विचारः कृतस्तया ।।

तदा स पीतचूर्णस्तु भर्त्ता नृपवरोत्तम ।। 2.7.24.४० ।।

तच्चूर्णात्क्षयरोगोऽभूत्पतिः क्षीणो दिनेदिने ।।

गुह्ये तु कृमयो जाता घोरा दुष्टव्रणोद्भवाः ।। ।। ४१ ।।

दिनैः कतिपयै राजन्पत्युर्नैव व्यवस्थितिः ।।

उवास स्वेच्छया साऽपि पुंश्चली दुष्टचारिणी ।। ४२ ।।

हततेजास्ततो भर्ता तामुवाचाऽऽकुलेन्द्रियः ।।

क्रन्दमानो दिवारात्रौ दासोऽस्मि तव शोभने ।। ४३ ।।

त्राहि मां शरणं प्राप्तं नेच्छेऽहमपरां स्त्रियम् ।।

तत्तस्य विदितं ज्ञात्वा भीता सा मेदिनीपते ।। ४४ ।।

अलंकारकृते पत्युर्जीवनेच्छुर्न वै हिता ।।

योगिनीं च ययौ शीघ्रं तस्यै सर्वं न्यवेदयत् ।। ४५ ।।

तया च भेषजं दत्तं द्वितीयं दाहशांतये ।।

दत्ते च भेषजे तस्मिन्स्वस्थोऽभूत्तत्क्षणात्पतिः ।। ४६ ।।

तिष्ठत्युपपतिर्गेहे गृहकृत्याऽपदेशतः ।।

सर्ववर्णसमुद्भूता जारास्तिष्ठंति वै गृहे ।। ४७ ।।

न किंचिद्वचने शक्तिर्भर्तुर्जाता कथंचन ।।

ततस्तेनैव दोषेण सर्वांगेषु च जज्ञिरे ।। ४८ ।।

कृमयश्चास्थिभेत्तारः कालांतकयमोपमाः ।।

तैर्नासाजिह्वयोश्चाऽऽसीच्छेदः कर्णद्वयस्य च ।।४९।।

स्तनयोश्चांगुलीनां च पंगुत्वं चाऽपि चाऽऽगतम् ।।

तेन पंचत्वमापन्ना गता नरकयातनाः ।। 2.7.24.५० ।।

ताम्रभांडे च सा दग्धाऽयुतानि दश पंच च ।।

श्वानयोनिषु संजाता शतवारं पुनःपुनः ।। ।। ५१ ।।

छिन्ननासा छिन्नकर्णा कृमिमूर्द्धा निरंतरम् ।।

छिन्नपुच्छा भग्नपादा ताडिता च गृहेगृहे ।। ५२ ।।

पश्चात्सौवीरदेशेषु पद्मबन्धोर्द्विजस्य च ।।

दास्या गृहे शुनी जाता बहुदुःखसमाकुला ।। ५३ ।।
छिन्नकर्णा छिन्ननासा छिन्नपुच्छांघ्रिरातुरा ।।
कृमिपूर्णशिरा नित्यं कृमियोनिश्च तिष्ठति ।। ५४ ।।
एवं त्रिंशद्गता वर्षा अस्मिञ्जन्मनि भूमिप ।।
दैवात्कर्मविपाकेन वैशाखे मेषगे रवौ ।। ५५ ।।
शुक्लपक्षे तु द्वादश्यां पद्मबंधोस्तनूद्भवः ।।
नद्यां स्नात्वा शुचिर्भूत्वा सार्द्रवस्त्रो गृहं ययौ ।। ५६ ।।
तुलसीवेदिकां प्राप्य पादाववनिजे निजौ ।।
वेदिकायामधो देशे सा शुनी स्वापमागता ।। ५७ ।।
प्राक्सूर्योदयवेलायां पादोदकपरिप्लुता ।।
सद्यो ध्वस्ताऽशुभा जाता जातिस्मृतिरभूत्क्षणात् ।। ५८ ।।
स्मृत्वा कर्म कृतं पूर्वं सा शुनी तापसं सदा ।।
चुक्रोश करुणा दीना मुने त्राहीति वै पुनः ।।५९।।
स्वकर्म च मुनींद्राय स्मृत्वाचख्यौ भयाऽऽकुला।।
भर्तुर्विषप्रयोगं तु स्वस्य दुश्चरितं तथा ।।2.7.24.६०।।
याऽन्यापि युवती ब्रह्मन्भर्तुर्वश्यं समाचरेत् ।।
वृथाधर्मा दुराचारा पच्यते ताम्रभाजने ।।६१।।
भर्ता नाथो गुरुर्भर्ता भर्ता दैवतमुत्तमम् ।।
विक्रियां कृत्य साध्वी सा कथं सुखमवाप्नुयात् ।।६२।।
तिर्यग्योनिशतं याति कृमिकोटिशतानि च ।।
तस्माद्भूसुर कर्तव्यं स्त्रीभिर्भर्तुर्वचः सदा ।। ६३ ।।
साऽहं पश्ये पुनर्योनिं कुत्सितां यातनान्विताम् ।।
यदि नोद्धरसे ब्रह्मन्नद्य त्वद्दृष्टिसंमुखाम् ।।६४।।
तस्मादुद्धर मां ब्रह्मन्दुष्कृतां पापचारिणीम् ।।
सुकृतस्य प्रदानेन वैशाखे शुक्लपक्षके ।। ६५ ।।
या कृता तु त्वया ब्रह्मन्द्वादशी पुण्यवर्द्धिनी ।।
तस्यां त्वया कृतं पुण्यं स्नानदानान्नभोजनैः ।। ६६ ।।
दुश्चारिण्या अपि ब्रह्मंस्तेन मुक्तिर्भविष्यति ।।

यस्यां तु भूसुरः स्नातः स्वगृहे मनुजः किल ।। ६७ ।।

सर्वतीर्थफलावाप्तिं लभते नाऽत्र संशयः ।।

तप्तं दत्तं हुतं यत्र कृतं देवार्चनादि यत् ।।६८।।

तदक्षय्यफलं ज्ञेयं यत्कृतं द्वादशीदिने ।।

एवंविधफलं यत्स्यात्तद्देहि सकलं मम ।। ६९ ।।

द्वादश्यामुपवासेन त्रयोदश्यां तु पारणात् ।।

यत्फलं स्यात्तदप्यद्धा तेन मुक्तिर्भविष्यति।। ।। 2.7.24.७० ।।

दयां कुरु महाभाग दीनायां दीनवत्सल ।।

दीननाथो जगन्नाथो युष्मन्नाथो जनार्दनः ।। ७१ ।।

तदीयास्तादृशा एव यथा राजा तथा प्रजाः ।।

वैवस्वतपदध्वंसिन्परित्राहि सुदुःखिताम् ।। ७२ ।।

त्वद्द्वारवासिनीं दीनां शुनीं मां दीनवत्सल ।।

ब्रह्महत्यासहस्रं वा गोहत्यानां सहस्रकम् ।। ७३ ।।

अगम्यानां च कोटीश्च दहत्येव शुभा तिथिः ।।

तस्यां कृतं महापुण्यं मह्यं दत्त्वा महामुने ।। ७४ ।।

मामुद्धर समुद्विग्नां दीनां नाथ समुद्धर ।।

अन्ते तुभ्यं द्विजेद्राय नमउक्तिं वदाम्यहम् ।। ७५ ।।

इति तस्या वचः श्रुत्वा शुनीमाह मुनेः सुतः ।।

स्वकृतं जंतवोश्नंति सुखदुःखात्मकं शुनि ।। ७६ ।।

तस्मात्किमु त्वया कार्यं क्षुद्रया पापशीलया ।।

यया भर्ता वशं नीतो रक्षाचूर्णादिभिर्द्विजः ।। ७७ ।।

साधुभ्यो यत्कृतं पापं स्वस्य दुःखकरं भवेत् ।।

साधुभ्यो यत्कृत पुण्यं स्वस्य दुःखहरं भवेत् ।। ७८ ।।

उभयं भ्रंशतामेति पापेभ्यो यत्कृतं भवेत् ।।

शर्करामिश्रितं क्षीरं काद्रवेयनिवेदितम्।।७९।।

विषवृद्धिकरं दृष्टमेवं पापकरं भवेत ।।

वदत्येवं मुनिसुते शुनी दुःखैकरूपिणी ।। 2.7.24.८० ।।

पुनश्चुकोशोर्ध्वस्वरं तत्पित्रे बहुभाषिणी ।।

पद्मबन्धो परित्राहि शुनी तद्द्वारवासिनीम् ।। ८१ ।।

त्वदुच्छिष्टाशिनी नित्यं त्वं पाहीति पुनःपुनः ।।

स्वपोष्या ये हि वर्तंते गृहस्थस्य महात्मनः ।। ।। ८२ ।।

तेषामुद्धरणं कार्यमिति वेदविदां मतम् ।।

चण्डाला वायसाश्चैव सारमेयाश्च नित्यशः ।। ८३ ।।

गृहस्थानां दयापात्रं प्रत्यहं बलिभोजिनः ।।

अशक्तं नोद्धरेत्पोष्यं रोगाद्युपहतं यदि ।। ८४ ।।

सोऽधः पतेन्न संदेह इति वेदविदां मतम् ।।८५।।

कर्तारमेकं जगतां हि कर्ता कृत्वात्मना पाति समस्तजंतून् ।।

दारादिरूपव्यपदेशतो हरिस्तस्मात्तदाज्ञा खलु पोष्यरक्षा ।। ८६ ।।

स्वपोष्यरक्षां परिहृत्य जंतुर्दैवेन क्लृप्त्या यदि वर्ततेऽन्यधीः ।।

स देवद्रोग्धा सकलस्य हंता कीनाशलोकाननु संप्रयाति ।। ८७ ।।

कर्तव्यत्वाद्दयालुत्वादेतामुद्धर दुर्मतिम् ।।

इति तस्या वचः श्रुत्वा दुःखार्ताया गृहे सुतः ।।

निश्चक्राम गृहात्तूर्णं पद्मबंधुर्दयानिधिः ।। ८८ ।।

किमेतदिति तां प्राह पुत्रः सर्वं न्यवेदयत् ।।

स तु पुत्रवचः श्रुत्वा तमेवं प्राह विस्मितः ।। ८९ ।।

।। पद्मबन्धुरुवाच ।। ।।

ममात्मज कथं वाक्यमीदृशं व्याहृतं त्वया ।।

न साधूनामिदं वाक्यं भवतीह वरानन ।। 2.7.24.९० ।।

आत्मसौख्यकराः पापा भवंति परिभाविता ।।

पश्य पुत्र जनाः सर्वे परोपकरणाय वै ।। ९१ ।।

शशी सूर्योऽथ पवनो रजनी हुतभुग्जलम् ।।

चंदनं पादपाः संतः परोपकरणे स्थिताः ।। ९२ ।।

अस्थिदानं कृतं पुत्र कृपया हि दधीचिना ।।

देवानामुपकाराय ज्ञात्वा दैत्यान्महाबलान् ।। ९३ ।।

कपोताऽर्थे स्वमांसानि शिबिना भूभुजा पुरा ।।

प्रदत्तानि महाभाग श्येनाय क्षुधितानि वै ।। ९४ ।।

जीमूतवाहनो राजा पुराऽऽसीत्क्षितिमंडले ।।
तेनाऽपि जीवितं दत्तं गरुडाय महात्मने ।। ९५ ।।
तस्माद्दयालुना भाव्यं भूसुरेण विपश्चिता ।।
शुद्धे वर्षति देवस्तु किमशुद्धे न वर्षति ।। ९६ ।।
किन्न दीपयते चन्द्रश्चंडालानां गृहे सदा ।।
तस्मादहं शुनीमेतां याचंतीं च पुनः पुनः ।। ९७ ।।
उद्धरिष्ये निजैः पुण्यैः पंकमग्नां च गां यथा ।।
इति पुत्रं निराकृत्य प्रतिजज्ञे महामतिः ।। ९८ ।।
दत्तं दत्तं महापुण्यं द्वादशीदिनसंभवम् ।।
शुनि गच्छ हरेर्धाम निर्धूताऽखिलकल्मषा ।। ९९ ।।
तद्वाक्यात्सहसा भूप दिव्याऽऽभरणभूषिता ।।
विमुच्य देहं जीर्णं तु दिव्यरूपधरा शुभा ।। 2.7.24.१०० ।।
शताऽऽदित्यप्रभा जाता सावित्रीप्रतिमा यथा ।।
जगामाऽऽमंत्र्य तं विप्रं द्योतयन्ती दिशो दश ।।१।।
भुक्त्वा दिवि महाभोगान्पश्चाजाता महीतले ।।
नरनारायणाद्देवादुर्वशीनाम नामतः ।। २ ।।
वैशाखशुद्धद्वादश्याः प्रभावेण वरांगना ।।
देवानां च प्रिया जाता अप्सरस्त्वं च सा ययौ ।। ३ ।।
यद्योगिगम्यं हुतभुक्प्रकाशं वरं वरेण्यं परमार्थरूपम् ।।
यत्प्राप्य सन्तोऽपि हि यांति मोहं तत्प्राप रूपं च शुनी हि देवी ।।४।।
पश्चात्स पद्मबंधुर्हि तां तिथिं पुण्यवर्द्धिनीम् ।।
लोवेटीं ख्यापयामास मधुद्विट्प्राणवल्लभाम् ।।५।।
कोटींदुसूर्यग्रहणाधिका सा समस्तरूपाधिकपुण्यरूपा ।।
यज्ञैः समस्तैरतिरिच्यमाना द्विजेन ख्याता भुवनत्रये च ।। १०६ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे शुनीमोक्षप्राप्तिर्नाम चतुर्विंशोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वैशाखमासमाहात्म्यम्/अध्यायः २५

https://sa.wikisource.org/s/h8j
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वैशाखमासमाहात्म्यम्

।। श्रुतदेव उवाच ।। ।।

यास्तिस्रस्तिथयः पुण्या अंतिमाः शुक्लपक्षके ।।

वैशाखमासि राजेंद्र पूर्णिमांताः शुभावहाः ।। १ ।।

अन्त्याः पुष्करिणीसंज्ञाः सर्वपापक्षयावहाः ।।

माधवे मासि यः पूर्णं स्नानं कर्तुं न च क्षमः ।। २ ।।

तिथिष्वेतासु स स्नायात्पूर्ण मेव फलं लभेत् ।।

सर्वे देवास्त्रयोदश्यां स्थित्वा जंतून्पुनंति हि ।। ३ ।।

पूर्णायाः पर्वतीर्थैश्च विष्णुना सह संस्थिताः ।।

चतुर्दश्यां सयज्ञाश्च देवा एतान्पुनंति हि ।। ४ ।।

ब्रह्मघ्नं वा सुरापं वा सर्वानेतान्पुनंति हि ।।

एकादश्यां पुरा जज्ञे वैशाख्याममृतं शुभम् ।। ५ ।।

द्वादश्यां पालितं तच्च विष्णुना प्रभविष्णुना ।।

त्रयोदश्यां सुधां देवान्पाययामास वै हरिः ।। ६ ।।

जघान च चतुर्दश्यां दैत्यान्देवविरोधिनः ।।

पूर्णायां सर्वदेवानां साम्राज्याऽऽप्तिर्बभूव ह ।। ७ ।।

ततो देवाः सुसंतुष्टा एतासां च वरं ददुः ।।

तिसृणां च तिथीनां वै प्रीत्योत्फुल्लविलोचनाः ।। ८ ।।

एता वैशाख मासस्य तिस्रश्च तिथयः शुभाः ।।

पुत्रपौत्रादिफलदा नराणां पापहानिदाः ।। ९ ।।

योऽस्मिन्मासे च संपूर्णे न स्नातो मनुजाधमः ।।

तिथित्रये तु स स्नात्वा पूर्णमेव फलं लभेत् ।। 2.7.25.१० ।।

तिथित्रयेप्यकुर्वाणः स्नानदानादिकं नरः ।।

चांडालीं योनिमासाद्य पश्चाद्रौरवमश्नुते ।। ११ ।।

उष्णोदकेन यः स्नाति माधवे च तिथित्रये ।।

रौरवं नरकं याति यावदिंद्राश्चतुर्दश ।।१२।।

पितृन्देवान्समुद्दिश्य दध्यन्नं न ददाति यः ।।

पैशाचीं योनिमासाद्य तिष्ठत्याभूतसंप्लवम् ।। १३ ।।

प्रवृत्तानां च कामानां माधवे नियमे कृते ।।

अवश्यं विष्णुसायुज्यं युज्यते नाऽत्र संशयः ।। १४ ।।

आमासं नियमासक्तः कुर्याद्यदि दिनत्रये ।।

तेन पूर्णफलं प्राप्य मोदते विष्णुमंदिरे ।। १५ ।।

यो वै देवान्पितॄन्विष्णुं गुरुमुद्दिश्य मानवः ।।

न स्नानादि करोत्यद्धाऽमुष्य शापप्रदा वयम् ।। १६ ।।

निःसंतानो निरायुश्च निःश्रेयस्को भवेदिति ।।

इति देवा वरं दत्त्वा स्वधामानि ययुः पुरा ।। १७ ।।

तस्मात्तिथित्रयं पुण्यं सर्वाघौघविनाशनम् ।।

अंत्यं पुष्करिणीसंज्ञं पुत्रपौत्रविवर्द्धनम् ।। १८ ।।

या नारी सुभगाऽऽपूपपायसं पूर्णिमादिने ।।

ब्राह्मणाय सकृद्दद्यात्कीर्तिमंतं सुतं लभेत् ।। १९ ।।

गीतापाठं तु यः कुर्यादंतिमे च दिनत्रये ।।

दिनेदिनेऽश्वमेधानां फलमेति न संशयः ।। 2.7.25.२० ।।

सहस्रनामपठनं यः कुर्य्याच्च दिनत्रये ।।

तस्य पुण्यफलं वक्तुं कः शक्तो दिवि वा भुवि ।। २१ ।।

सहस्रनामभिर्देवं पूर्णायां मधुसूदनम् ।।

पयसा स्नाप्य वै याति विष्णुलोकमकल्मषम् ।। २२ ।।

समस्तविभवैर्यस्तु पूजयेन्मधुसूदनम् ।।

न तस्य लोकाः क्षीयन्ते युग कल्पादि व्यत्यये ।। २३ ।।

अस्नात्वा चाप्यदत्त्वा च वैशाखश्च मतो यदि ।।

स ब्रह्महा गुरुघ्नश्च पितॄणां घातकस्तथा।। २४ ।।

श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।।

वैशाखे च पठन्मर्त्यो ब्रह्मत्वं चोपपद्यते ।। २५ ।।

यो वै भागवतं शास्त्रं शृणोत्येतद्दिनत्रये ।।

न पापैर्लिप्यते क्वाऽपि पद्मपत्रमिवांभसा ।। २६ ।।

देवत्वं मनुजैः प्राप्तं कैश्चित्सिद्धत्वमेव च ।।

कैश्चित्प्राप्तो ब्रह्मभावो दिनत्रयनिषेवणात् ।।२७।।

ब्रह्मज्ञानेन वै मुक्तिः प्रयागमरणेन वा ।।

अथवा मासि वैशाखे नियमेन जलाप्लुतेः ।। २८ ।।

नीलवृषं समुत्सृज्य वैशाख्यां च जलाप्लुतेः ।।

समस्तबंधनिर्मुक्तः पुमान्याति परं पदम् ।। २९ ।।

गां सवत्सां द्विजेंद्राय सीदते च कुटुम्बिने ।।

इहापमृत्युनिर्मुक्तः परत्र च परं व्रजेत् ।। 2.7.25.३० ।।

स्नानदानविहीनस्तु वैशाखी चैव यो नयेत् ।।

श्वानयोनिशतं प्राप्य विष्ठायां जायते कृमिः ।। ३१।।

तिस्रः कोट्योऽर्धकोटिश्च तीर्थानि भुवनत्रये ।।

संभूय मंत्रयांचक्रुः पापसंघातशंकिताः ।। ३२ ।।

जना अस्मासु पापिष्ठा विसृजन्ति स्वकं मलम् ।।

तदस्माकं कथं गच्छेदिति चिंतासमन्विताः ।।३३।।

तीर्थपादं हरिं जग्मुः शरण्यं शरणं विभुम् ।।

स्तुत्वा च बहुभिः स्तोत्रैः प्रार्थयामासुरंजसा ।। ३४ ।।

देवदेव जगन्नाथ सर्वाघौघविनाशन ।।

जना अस्मासु पापिष्ठाः स्नात्वा पापानि सर्वशः ।। ३५ ।।

विसृज्य त्वत्पदं यांति त्वदाज्ञाधारिणो भुवि ।।

अस्माकं चैव तत्पापं कथं गच्छेज्जनार्दन ।। ३६ ।।

तदुपायं वदास्माकं त्वत्पादशरणैषिणाम् ।।

इति तीर्थैः प्रार्थितस्तु भगवान्भूतभावनः ।। ३७ ।।

प्रहसन्प्राह तीर्थानि मेघगम्भीरया गिरा ।।

।। श्रीभगवानुवाच ।। ।।

सिते पक्षे मेषसूर्ये वैशाखान्तेदिनत्रये ।। ३८ ।।

सर्वतीर्थमये पुण्ये ममाऽपि प्राणवल्लभे ।।

यूयं भगोदयात्पूर्वं बहिःसंस्थजलाप्लुताः ।। ३९ ।।

विमुक्ताघाः पुण्यरूपा भवंत्वाशु सुनिर्मलाः ।।

भवद्भिश्च विमुक्ताघैर्ये न स्नाता दिनत्रये ।। 2.7.25.४० ।।

तेषु तिष्ठंतु तत्पापं जनैर्युष्मद्विरेचितम् ।।

इति तीर्थपदो विष्णुस्तीर्थानां च वरं ददौ ।। ४१ ।।

अनुज्ञाप्य च तान्योगात्तत्रैवांतरधीयत ।।

स्वधामानि पुनः प्राप्य तानि तीर्थानि नित्यशः ।। ४२ ।।

प्रतिवर्षं तु वैशाखे तथैवांत्यदिनत्रये ।।

तेनाघौघं विमुच्यैव यांति निर्मलता महो ।। ४३ ।।

ये तु स्नानं न कुर्वंति वैशाखांतदिनत्रये ।।

ते भवन्तु समस्तानां जनानां पातकाऽऽश्रयाः ।।४४।।

इति शापं च तीर्थानि ह्यस्नातानां वदन्ति च ।।

न तेन सदृशः पापो यो न स्नातो दिनत्रये ।। ४५ ।।

विचारितेषु शास्त्रेषु न दृष्टो न च वै श्रुतः ।।

तस्माद्दिनत्रये कार्यं स्नानदानार्चनादिकम् ।। ४६ ।।

अन्यथा नरकं याति यावदिंद्राश्चतुर्दश ।।

इत्येतत्सर्वमाख्यातं श्रुतकीर्ते महामते ।। ४७ ।।

पृष्टं वैशाखमाहात्म्यं यथा दृष्टं यथाश्रुतम् ।।

माहात्म्यस्य च लेखोऽयं माधवस्य च वर्णितः ।। ४८ ।।

कात्स्न्र्याद्वक्तुं च ब्रह्माऽपि नालं वर्षशतैरपि ।।

पुरा कैलासशिखरे पार्वत्यै शंकरः स्वयम् ।।४९।।

आह माधवमाहात्म्यं पृच्छंत्यै शतवत्सरम् ।।

तथापि नांतमगमदशक्तो विरराम ह ।।2.7.25.५०।।

को नु वर्णयितुं शक्तः कात्स्न्र्यान्माहात्म्यमुत्तमम् ।।

विना विष्णुं जगन्नाथं नारायणमनामयम् ।। ५१ ।।

पुरा सर्वेऽपि ऋषयो माहात्म्यं पापनाशनम् ।।

लेशस्य लेशं व्याचख्युर्जनानां हितकाम्यया ।। ५२ ।।

नांतः केनापि व्याख्यातो ह्यशक्तत्वान्महीपते ।।

त्वं च मासे तु वैशाखे कुरु दानादिसत्क्रियाः ।।५३।।

तेन भुक्तिं च मुक्तिं च संप्राप्नोषि न संशयः ।।

इति तं बोधयित्वा च मैथिलं जनकाह्वयम् ।। ५४ ।।

श्रुतदेवस्तमामंत्र्य गन्तुं चक्रे मनस्ततः ।।

जाताह्लादः स राजर्षिर्गलद्बाष्पाकुलेक्षणः ।। ५५ ।।

उत्सवं कारयामास स्वाभिवृद्ध्यै मनोरमम् ।।

ग्रामं प्रदक्षिणीकृत्य शिबिकामधिरोप्य तम् ।। ५६ ।।

चतुरंगबलैर्युक्तः स्वयं पृष्ठमथाऽन्वगात् ।।

पुनश्चांतःपुरं प्राप्य सकलैर्विभवैरपि ।। ५७ ।।

वस्त्रैराभरणैश्चैव गोभूतिलहिरण्यकैः ।।

प्रणम्य च परिक्रम्य तस्थौ प्रांजलिरग्रतः ।। ५८ ।।

ततः स तु महातेजाः श्रुतदेवो महायशाः ।।

सन्तुष्टः परमप्रीतो ययौ धाम स्वकं मुनिः ।। ५९ ।।

त्रयोदश्यां चतुर्दश्यां पौर्णमास्यां च माधवे ।।

स्नानं दानं पूजनं च कथाश्रवणमेव च ।। 2.7.25.६० ।।

वैशाखधर्मनिरतः स वै मोक्षमवाप्नुयात् ।।

धनशर्मा ब्राह्मणश्च प्रेताश्चैव यथा पुरा ।। ६१ ।।

।। नारद उवाच ।। ।।

इत्येतत्परमाख्यानमंबरीष तवोदितम् ।।

श्रवणात्सर्वपापघ्नं सर्वसंपद्विधायकम् ।। ६२ ।।

तेन भुक्तिं च मुक्तिं च ज्ञानं मोक्षं च विंदति ।।

इति तस्य वचः श्रुत्वा अंवरीषो महायशाः ।। ६३ ।।

प्रहृष्टांतरवृत्तिश्च बाह्यव्यापारवर्जितः ।।

प्रणनाम तथा मूर्ध्ना दण्डवत्पतितो भुवि ।। ६४ ।।

विभवैरखिलैश्चाऽपि पूजयामास तं पुनः ।।

संपूजितस्तमामंत्र्य नारदो भगवान्मुनिः ।। ६५ ।।

लोकांतरं ययौ धीमाञ्छापान्नैकत्र संस्थितिः ।।

अम्बरीषोऽपि राजर्षिर्नारदोक्तानिमाञ्छुभान् ।। ६६ ।।

धर्मान्कृत्वा विलीनोऽभूत्परे ब्रह्मणि निर्गुणे ।।

।। सूत उवाच ।। ।।

य इदं परमाख्यानं पापघ्नं पुण्यवर्धनम् ।। ६७ ।।

शृणुयाद्वा पठेद्वाऽपि स याति परमां गतिम् ।।

लिखितं पुस्तकं येषां गृहे तिष्ठति मानदाः ।। ६८ ।।

तेषां मुक्तिः करस्था हि किमु तच्छ्रवणात्मनाम् ।। ६९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्ये नारदाम्बरीषसंवादे फलश्रुतिकथनंनाम पंचविशोऽध्यायः ।। २५ ।। ।। छ ।। ।।

इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे वैशाखमासमाहात्म्यं संपूर्णम् ।।

श्रीसीतारामचंद्रार्पणमस्तु।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०१



।। अयोध्यामाहात्म्यं प्रारभ्यते ।। ।।

जयति पराशरसूनुः सत्यवतीहृदयनंदनो व्यासः ।।

यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ।। १ ।।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।।

देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।। २ ।।

।। व्यास उवाच ।। ।।

हिमवद्वासिनः सर्वे मुनयो वेदपारगाः ।।

त्रिकालज्ञा महात्मानो नैमिषारण्यवासिनः ।। ३ ।।

येऽर्बुदारण्यनिरता दण्डकारण्यवासिनः ।।

महेन्द्राद्रिरता ये वै ये च विन्ध्यनिवासिनः ।। ४ ।।

जंबूवनरता ये च ये गोदावरिवासिनः ।।

वाराणसीश्रिता ये च मथुरावासिनस्तथा ।। ५ ।।

उज्जयिन्यां रता ये च प्रथमाश्रमवासिनः ।।

द्वारावतीश्रिता ये च बदर्य्याश्रयिणस्तथा।। ६ ।।

मायापुरीश्रिता ये च ये च कान्तीनिवासिनः ।।

एते चान्ये च मुनयः सशिष्या बहवोऽमलाः ।। ७ ।।

कुरुक्षेत्रे महाक्षेत्रे सत्रे द्वादशवार्षिके ।।

वर्तमाने च रामस्य क्षितीशस्य महात्मनः ।।

समागताः समाहूताः सर्वे ते मुनयोऽमलाः ।। ८ ।।

सर्वे ते शुद्धमनसो वेदवेदांगपारगाः ।।

तत्र स्नात्वा यथान्यायं कृत्वा कर्म जपादिकम् ।। ९ ।।

भारद्वाजं पुरस्कृत्य वेदवेदांगपारगम् ।।

आसनेषु विचित्रेषु बृष्यादिषु ह्यनुक्रमात् ।। 2.8.1.१० ।।

उपविष्टाः कथाश्चक्रुर्नानातीर्थाश्रितास्तदा ।।

कर्मांतरेषु सत्रस्य सुखासीनाः परस्परम् ।। ११ ।।

कथांतेषु ततस्तेषां मुनीनां भावितात्मनाम् ।।

आजगाम महातेजास्तत्र सूतो महामतिः ।। १२ ।।

व्यासशिष्यः पुराणज्ञो समः हर्षणसंज्ञकः ।।

तान्प्रणम्य यथान्यायं मुनीनुपविवेश सः ।।

उपविष्टो यथान्यायं मुनीनां वचनेन सः ।। १३ ।।

व्यासशिष्यं मुनिवरं सूतं वै रोमहर्षणम् ।।

तं पप्रच्छुर्मुनिवरा भारद्वाजादयोऽमलाः ।। १४ ।।

।। ऋषय ऊचुः ।। ।।

त्वत्तः श्रुता महाभाग नानातीर्थाश्रिताः कथाः ।।

सरहस्यानि सर्वाणि पुराणानि महामते ।। १५ ।।

सांप्रतं श्रोतुमिच्छामः सरहस्यं सनातनम् ।।

अयोध्याया महापुर्या महिमानं गुणोज्ज्वलम् ।। १६ ।।

कीदृशी सा सदा मेध्याऽयोध्या विष्णुप्रियापुरी ।।

आद्या सा गीयते वेदे पुरीणां मुक्तिदायिका ।। १७ ।।

संस्थानं कीदृशं तस्यास्तस्यां के च महीभुजः ।।

कानि तीर्थानि पुण्यानि माहात्म्यं तेषु कीदृशम् ।। १८ ।।

अयोध्यासेवनान्नृणां फलं स्यात्सूत कीदृशम् ।।

किं चरित्रं सूत तस्याः का नद्यः के च संगमाः ।।१९।।

तत्र स्नानेन किं पुण्यं दानेन च महामते ।।

तत्सर्वं श्रोतुमिच्छामस्त्वत्तः सूत गुणाधिक।। 2.8.1.२० ।।

एतत्सर्वं क्रमेणैव तथ्यं त्वं वेत्थ सांप्रतम्।।

अयोध्याया महापुर्य्या माहात्म्यं वक्तुमर्हसि ।। २१ ।।

।। सूत उवाच ।। ।।

व्यासप्रसादाज्जानामि पुराणानि तपोधनाः ।।

सेतिहासानि सर्वाणि सरहस्यानि तत्त्वतः ।। २२ ।।

तं प्रणम्य प्रवक्ष्यामि माहात्म्यं भवदग्रतः ।।

अयोध्याया महापुर्या यथावत्सरहस्यकम् ।। २३ ।।

विद्यावन्तं विपुलमतिदं वेदवेदांगवेद्यं श्रेष्ठं शान्तं शमितविषयं शुद्धतेजोविशालम् ।।

वेदव्यासं सततविनतं विश्ववेद्यैकयोनिं पाराशर्य्यं परमपुरुषं सर्वदाऽहं नमामि ।।२४।।

ॐ नमो भगवते तस्मै व्यासायामिततेजसे ।।

यस्य प्रसादाज्जानामि ह्ययोध्यामहिमामहम् ।।२५।।

शृण्वन्तु मुनयः सर्वे सावधानाः सशिष्यकाः ।।

माहात्म्यं कथयिष्यामि अयोध्याया महोदयम् ।। २६ ।।

उदीरितमगस्त्याय स्कन्देनाश्रावि नारदात् ।।

अगस्त्येन पुरा प्रोक्तं कृष्णद्वैपायनाय तत् ।।२७।।

कृष्णद्वैपायनाच्चैतन्मया प्राप्तं तपोधनाः ।।

तदहं वच्मि युष्मभ्यं श्रोतुकामेभ्य आदरात् ।। २८ ।।

नमामि परमात्मानं रामं राजीवलोचनम्।।

अतसीकुसुमश्यामं रावणांतकमव्ययम् ।।२९।।

अयोध्या सा परा मेध्या पुरी दुष्कृतिदुर्ल्लभा ।।

कस्य सेव्या च नाऽयोध्या यस्यां साक्षाद्धरिः स्वयम् ।। 2.8.1.३० ।।

सरयूतीरमासाद्य दिव्या परमशोभना ।।

अमरावतीनिभा प्रायः श्रिता बहुतपोधनैः ।।३१।।

हस्त्यश्वरथपत्त्याढ्या संपदुच्चा च संस्थिता ।।

प्राकाराढ्यप्रतोलीभिस्तोरणैः कांचनप्रभैः ।। ३२ ।।

सानूपवेषैः सर्वत्र सुविभक्तचतुष्टया ।।

अनेकभूमिप्रासादा बहुभित्तिसुविक्रिया ।।३३।।

पद्मोत्फुल्लशुभोदाभिर्वापीभिरुपशोभिता।।

देवतायतनैर्दिव्यैर्वेदघोषैश्च मण्डिता ।।३४ ।।

वीणावेणुमृदंगादिशब्दैरुत्कृष्टतां गता।

शालैस्तालैर्नालिकेरैः पनसामलकैस्तथा।। ३५।।

तथैवाम्रकपित्थाद्यैरशोकैरुपशोभिता ।।

आरामैर्विविधैर्युक्ता सर्वर्तुफलपादपैः।। ३६ ।।

मालतीजातिबकुलपाटलीनागचंपकैः ।।

करवीरैः कर्णिकारैः केतकीभिरलंकृता ।। ३७ ।।

निम्बजंवीरकदलीमातुलिंगमहाफलैः ।।

लसच्चंदनगंधाढ्यैर्नागरैरुपशोभिता ।।३८।।

देवतुल्यप्रभायुक्तैर्नृपपुत्रैश्च संयुता ।।

सुरूपाभिर्वरस्त्रीभिर्देवस्त्रीभिरिवावृता।। ३९।।

श्रेष्ठैः सत्कविभिर्युक्ता बृहस्पतिसमैर्द्विजैः।।

वणिग्जनैस्तथा पौरैः कल्पवृक्षैरिवावृता।। 2.8.1.४०।।

अश्वैरुच्चैःश्रवस्तुल्यैर्दंतिभिर्दिग्गजैरिव।।

इति नानाविधैर्भावैरुपेतेन्द्रपुरी समा।।४१ ।।

यस्यां जाता महीपालाः सूर्यवंशसमुद्भवाः।।

इक्ष्वाकुप्रमुखाः सर्वे प्रजापालनतत्पराः।। ४२।।

यस्यास्तीरे पुण्यतोया कूजद्भृंगविहंगमा ।।

सरयूर्नाम तटिनी मानसप्रभवोल्लसा ।।४३।।

धर्मद्रवपरीता सा घर्घरोत्तमसंगमा ।।

मुनीश्वराश्रिततटा जागर्ति जगदुच्छ्रिता ।। ४४ ।।

दक्षिणाच्चरणांगुष्ठान्निःसृता जाह्नवी हरेः ।।

वामांगुष्ठान्मुनिवराः सरयूर्निर्गता शुभा ।। ४५ ।।

तस्मादिमे पुण्यतमे नद्यौ देवनमस्कृते ।।

एतयोः स्नानमात्रेण ब्रह्महत्यां व्यपोहति ।। ४६ ।।

तामयोध्यामथ प्राप्तोऽगस्त्यः कुम्भोद्भवो मुनिः ।।

यात्रार्थं तीर्थमाहात्म्यं ज्ञात्वा स्कन्दप्रसादतः ।। ।। ४७ ।।

आगत्य तु इतः सोऽपि कृऽत्वा यात्रां क्रमेण च ।।

यथोक्तेन विधानेन स्नात्वा संतर्प्य तान्पितॄन् ।। ४८ ।।

पूजयित्वा यथान्यायं देवताः सकला अपि ।।

सर्वाण्यपि च तीर्थानि नमस्कृत्य यथाविधि ।।४९।।

कृतकृत्योर्ज्जितानन्दस्तीर्थमाहात्म्यदर्शनात् ।।

अभूदगस्त्यो रूपेण पुलकां चितविग्रहः ।। 2.8.1.५० ।।

स त्रिरात्रं स्थितस्तत्र यात्रां कृत्वा यथाविधि ।।

स्तुवन्नयोध्यामाहात्म्यं प्रतस्थे मुनिसत्तमः ।। ५१ ।।

तमायांतं विलोक्याशु बहुलानन्दसुन्दरम् ।।

कृष्णद्वैपायनो व्यासः पप्रच्छानंदकारणम् ।। ५२ ।।

।। व्यास उवाच ।। ।।

कुतः समागतो ब्रह्मन्सांप्रतं मुनिसत्तमः ।।

परमानंदसंदोहः समभूत्सांप्रतं तव ।। ५३ ।।

कस्मादानंदपोषोऽभूत्तव ब्रह्मन्वदस्व मे ।।

ममापि भवदानंदात्प्रमोदो हृदि जायते ।। ५४ ।। ।।

।। अगस्त्य उवाच ।। ।।

अहो महदथाश्चर्य्यं विस्मयो मुनिसत्तम ।।

दृष्ट्वा प्रभावं मेऽद्याभूदयोध्यायास्तपोधन ।। ५५ ।।

तस्मादानंदसंदोहः समभून्मम सांप्रतम् ।।

तच्छ्रुत्वागस्त्यवचनं व्यासः प्रोवाच तं मुनिम् ।। ५६ ।।

।। व्यास उवाच ।। ।।

भगवन्ब्रूहि तत्त्वेन विस्तरात्सरहस्यकम् ।।

अयोध्याया महापुर्या महिमानं गुणाधिकम् ।। ५७ ।।

कः क्रमस्तीर्थयात्रायाः कानि तीर्थानि को विधिः ।।

कि फलं स्नानतस्तत्र दानस्य च महामुने ।।

एतत्सर्वं समाचक्ष्व विस्तराद्वदतां वर ।। ५८ ।।

।। अगस्त्य उवाच ।। ।।

अहो धन्यतमा बुद्धिस्तव जाता तपोधन ।।

दृश्यते येन पृच्छा ते ह्ययोध्यामहिमाश्रिता ।। ५९ ।।

अकारो ब्रह्म च प्रोक्तं यकारो विष्णुरुच्यते ।।

धकारो रुद्ररूपश्च अयोध्यानाम राजते ।। 2.8.1.६० ।।

सर्वोपपातकैर्युक्तैर्ब्रह्महत्यादिपातकैः ।।

नायोध्या शक्यते यस्मात्तामयोध्यां ततो विदुः ।। ६१ ।।

विष्णोराद्या पुरी येयं क्षितिं न स्पृशति द्विज ।।

विष्णोः सुदर्शने चक्रे स्थिता पुण्यकरी क्षितौ ।। ६२ ।।

केन वर्णयितुं शक्यो महिमाऽस्यास्तपोधन ।।

यत्र साक्षात्स्वयं देवो विष्णुर्वसति सादरः ।। ६३ ।।

सहस्रधारामारभ्य योजनं पूर्वतो दिशि ।।

प्रतीचि दिशि तथैव योजनं समतोवधिः ।। ६४ ।।

दक्षिणोत्तरभागे तु सरयूतमसावधिः ।।

एतत्क्षेत्रस्य संस्थानं हरेरन्तर्गृहं स्थितम् ।।

मत्स्याकृतिरियं विप्र पुरी विष्णोरुदीरिता ।। ६५ ।।

पश्चिमे तस्य मूर्द्धा तु गोप्रतारासिता द्विज ।। ६६ ।।

पूर्वतः पृष्ठभागो हि दक्षिणोत्तरमध्यमः ।।

तस्यां पुर्य्यां महाभाग नाम्ना विष्णुर्हरिः स्वयम् ।।

पूर्वंदृष्टप्रभावोऽसौ प्राधान्येन वसत्यपि ।। ६७ ।।

।। व्यास उवाच ।। ।।

भगवन्किं प्रभावोऽसौ योऽयं विष्णुहरिस्त्वया ।।

कीर्तितो मुनिशार्दूल प्रसिद्धिं गतवान्कथम् ।।

एतत्सर्वं समाचक्ष्व विस्तरेण ममाग्रतः ।। ६८ ।।

।। ।। अगस्त्य उवाच ।। ।।

विष्णुशर्मेति विख्यातः पुराभूद्ब्राह्मणोत्तमः ।।

वेदवेदांगतत्त्वज्ञो धर्मकर्मसमाश्रितः ।। ६९ ।।

योगध्यानरतो नित्यं विष्णुभक्तिपरायणः ।।

स कदाचित्तीर्थयात्रां कुर्वन्वैष्णवसत्तमः ।।

अयोध्यामागतो विष्णुर्विष्णुःसाक्षाद्वसेदिति ।। 2.8.1.७० ।।

चिंतयन्मनसा वीरस्तपः कर्तुं समुद्यतः ।।

स वै तत्र तपस्तेपे शाकमूलफलाशनः ।। ७१ ।।

ग्रीष्मे पंचाग्निमध्यस्थो ह्यतपत्स महातपाः ।।

वार्षिके च निरालम्बो हेमन्ते च सरोवरे ।। ७२ ।।

स्नात्वा यथोक्तविधिना कृत्वा विष्णोस्तथार्चनम् ।।

वशीकृत्येन्द्रियग्रामं विशुद्धेनांतरात्मना ।। ७३ ।।

मनो विष्णौ समावेश्य विधाय प्राणसंयमम् ।।

ॐकारोच्चारणाद्धीमान्हृदि पद्मं विकासयन् ।। ७४ ।।

तन्मध्ये रविसोमाग्निमण्डलानि यथाविधि ।।

कल्पयित्वा हरिं मूर्तं यस्मिन्देशे सनातनम् ।। ७५ ।।

पीतांबरधरं विष्णुं शंखचक्रगदाधरम् ।।

तं च पुष्पैः समभ्यर्च्य मनस्तस्मिन्निवेश्य च ।। ७६ ।।

ब्रह्मरूपं हरिं ध्यायञ्जपन्वै द्वादशाक्षरम् ।।

वायुभक्षः स्थितस्तत्र विप्रस्त्रीन्वत्सरान्वसन् ।। ७७ ।।

ततो द्विजवरो ध्यात्वा स्तुतिं चक्रे हरेरिमाम् ।।

प्रणिपत्य जगन्नाथं चराचरगुरुं हरिम् ।।

विष्णुशर्माथ तुष्टाव नारायणमतंद्रितः ।। ७८ ।।

।। विष्णुशर्म्मोवाच ।। ।।

प्रसीद भगवन्विष्णो प्रसीद पुरुषोत्तम ।।

प्रसीद देवदेवेश प्रसीद कमलेक्षण ।। ७९ ।।

जय कृष्ण जयाचिंत्य जय विष्णो जयाव्यय ।।

जय यज्ञपते नाथ जय विष्णो पते विभो ।। 2.8.1.८० ।।

जय पापहरानंत जय जन्मज्वरापह ।।

नमः कमलनाभाय नमः कमलमालिने ।।८१।।

नमः सर्वेश भूतेश नमः कैटभसूदन ।।

नमस्त्रैलोक्यनाथाय जगन्मूल जगत्पते ।। ८२ ।।

नमो देवाधिदेवाय नमो नारायणाय वै ।।

नमः कृष्णाय रामाय नमश्चक्रायुधाय च ।। ८३ ।।

त्वं माता सर्वलोकानां त्वमेव जगतः पिता ।।

भयार्त्तानां सुहृन्मित्रं त्वं पिता त्वं पितामहः ।। ८४ ।।

त्वं हविस्त्वं वषट्कारस्त्वं प्रभुस्त्वं हुताशनः ।।

करणं कारणं कर्त्ता त्वमेव परमेश्वरः ।। ८५ ।।

शंखचक्रगदापाणे मां समुद्धर माधव ।। ८६ ।।

प्रसीद मंदरधर प्रसीद मधुसूदन ।।

प्रसीद कमलाकान्त प्रसीद भुवनाधिप ।। ८७ ।।

।। अगस्त्य उवाच ।। ।।

इत्येवं स्तुवतस्तस्य मनोभक्त्या महात्मनः ।।

आविर्बभूव विश्वात्मा विष्णुर्गरुडवाहनः ।। ८८ ।।

शंखचक्रगदापाणिः पीतांबरधरोऽच्युतः ।।

उवाच स प्रसन्नात्मा विष्णुशर्माणमव्ययः ।। ८९ ।।

।। श्रीभगवानुवाच ।। ।।

तुष्टोऽस्मि भवतो वत्स महता तपसाऽधुना ।।

स्तोत्रेणानेन सुमते नष्टपापोऽसि सांप्रतम् ।।2.8.1.९०।।

वरं वरय विप्रेन्द्र वरदोऽहं तवाग्रतः ।।

नाऽतप्ततपसा द्रष्टुं शक्यः केनाप्यहं द्विज ।। ९१ ।।

।। विष्णुशर्म्मोवाच ।। ।।

कृतकृत्योऽस्मि देवेश सांप्रतं तव दर्शनात् ।।

त्वद्भक्तिमचलामेकां मम देहि जगत्पते ।। ९२ ।।

।। ।। श्रीभगवानुवाच ।। ।।

भक्तिरस्त्वचला मे वै वैष्णवी मुक्तिदायिनी ।।

अत्रैवास्त्वचला मे वै जाह्नवी मुक्तिदायिनी ।। ९३ ।।

इदं स्थानं महाभाग त्वन्नाम्ना ख्यातिमेष्यति ।। ९४ ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वा देवदेवेशश्चक्रेणोत्खाय तत्स्थलम् ।।

जलं प्रकटयामास गांगं पातालमंडलात् ।। ९५ ।।

जलेन तेन भगवान्पवित्रेण दयांबुधिः ।।

नीरजस्तु भूमितलं क्षणाच्चक्रे कृपावशात् ।। ९६ ।।

चक्रतीर्थमिति ख्यातं ततः प्रभृति तद्द्विज ।।

जातं त्रैलोक्यविख्यातमघौघध्वंसकृच्छुभम् ।। ९७ ।।

तत्र स्नानेन दानेन विष्णुलोकं व्रजेन्नरः ।। ९८ ।।

ततः स भगवान्भूयो विष्णुशर्माणमच्युतः ।।

कृपया परया युक्त उवाच द्विजवत्सलः ।। ९९ ।।

।।श्रीभगवानुवाच ।। ।।

त्वन्नामपूर्विका विप्र मन्मूर्तिरिह तिष्ठतु ।।

विष्णुहरीति विख्याता भक्तानां मुक्तिदायिनी ।।2.8.1.१००।।

।। अगस्त्य उवाच ।। ।।

इति श्रुत्वा वचो विप्रो वासुदेवस्य बुद्धिमान्।।

स्वनामपूर्विकां मूर्तिं स्थापयामास चक्रिणः ।।१०१।।

ततः प्रभति विप्रेश शंखचक्रगदाधरः ।।

पीतवासाश्चतुर्बाहुर्नाम्ना विष्णुहरिः स्थितः।।१०२।।

कार्तिके शुक्लपक्षस्य प्रारभ्य दशमी तिथिम् ।।

पूर्णिमामवधिं कृत्वा यात्रा सांवत्सरी भवेत् ।। १०३ ।।

चक्रतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।।

बहुवर्षसहस्राणि स्वर्गलोके महीयते ।। १०४ ।।

पितॄनुद्दिश्य यस्तत्र पिंडान्निर्वापयिष्यति ।।

तृप्तास्तु पितरो यान्ति विष्णुलोकं न संशयः ।। १०५ ।।

चक्रतीर्थे नरः स्नात्वा दृष्ट्वा विष्णुहरिं विभुम् ।।

सर्वपापक्षयं प्राप्य नाकपृष्ठे महीयते ।। १०६ ।।

स्वशक्त्या तत्र दानानि दत्त्वा निष्कल्मषो नरः ।।

विष्णुलोके वसेद्धीमान्यावदिन्द्राश्चतुर्दश ।। १०७ ।।

अन्यदापि नरस्तत्र चक्रतीथे जितेंद्रियः ।।

दृष्ट्वा सकृद्धरिं देवं सर्वपापैः प्रमुच्यते ।। १०८ ।।

इति सकलगुणाब्धिर्ध्येयमूर्तिश्चिदात्मा हरिरिह परमूर्त्या तस्थिवान्मुक्तिहेतोः ।।

तमिह बहुलभक्त्या चक्रतीर्थाभिषेकी वसति सुकृतिमूर्तिर्योऽर्चयेद्विष्णुलोके ।। ।। १०९ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखंडेऽयोध्यामाहात्म्ये विष्णुहरिमाहात्म्यवर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०२

https://sa.wikisource.org/s/h8l
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | अयोध्यामाहात्म्यम्

।। सूत उवाच ।। ।।

अगस्त्यमुनिरित्युक्त्वा चक्रतीर्थाश्रयां कथाम् ।।

विभोर्विष्णुहरेश्चापि पुनराह द्विजोत्तमाः ।। १ ।।

।। ।। अगस्त्य उवाच ।। ।।

पुरा ब्रह्मा जगत्स्रष्टा विज्ञाय हरिमच्युतम् ।।

अयोध्यावासिनं देवं तत्र चक्रे स्थितिं स्वयम् ।। २ ।।

आगत्य कृतवांस्तत्र यात्रां ब्रह्मा यथाविधि ।।

यज्ञं च विधिवच्चक्रे नानासंभारसंयुतम् ।। ३ ।।

ततः स कृतवांस्तत्र ब्रह्मा लोकपितामहः ।।

कुण्डं स्वनाम्ना विपुलं नानादेवसमन्वितम् ।। ४ ।।

विस्तीर्णजलकल्लोलकलितं कलुषापहम् ।।

कुमुदोत्पलकह्लारपुंडरीककुलाकुलम् ।। ५ ।।

हंससारसचक्राह्व विहंगममनोहरम् ।।

तटांतविटपोल्लासि पतत्त्रिगणसंकुलम् ।। ६ ।।

तत्र कुण्डे सुराः सर्वे स्नाताः शुद्धिसमन्विताः ।।

बभूवुरद्धा विगतरजस्का विमलत्विषः ।। ७ ।।

तदाश्चर्य्यं महद्दृष्ट्वा ते सर्वे सहसा सुराः ।।

ब्रह्माणं प्रणिपत्योचुर्भक्त्या प्रांजलयस्तदा ।। ८ ।।

।। देवा ऊचुः ।। ।।

भगवन्ब्रूहि तत्त्वेन माहात्म्यं कमलासन ।।

अस्य कुण्डस्य सकलं खातस्य विमलत्विषः ।। ९ ।।

अत्र स्नानेन सर्वेषामस्माकं विगतं रजः ।।

महदाश्चर्यमेतस्य दृष्ट्वा कुंडस्य विस्मिताः ।।

सर्वे वयं सुरश्रेष्ठ कृपया त्वमतो वद ।। 2.8.2.१० ।।

।। ब्रह्मोवाच ।। ।।

शृण्वन्तु सर्वे त्रिदशाः सावधानाः सविस्मयाः ।।

कुण्डस्यैतस्य माहात्म्यं नानाफलसमन्वितम् ।। ११ ।।

अत्र स्नानेन विधिवत्पापात्मानोऽपि जंतवः ।।

विमानं हंससंयुक्तमास्थाय रुचिरांबराः ।।

निवसंति ब्रह्मलोके यावदाभूतसंप्लवम् ।। १२ ।।

अत्र दानेन होमेन यथाशक्त्या सुरोत्तमाः ।।

तुलाश्वमेधयोः पुण्यं प्राप्नुयुर्मुनिसत्तम ।। १३ ।।

ममास्मिन्सरसि श्रीमाञ्जायते स्नानतो नरः ।।

तस्मादत्र विधानेन स्नानं दानं जपादिकम् ।। १४ ।।

सर्वयज्ञसमं स्याद्वै महापातकनाशनम्।।

ब्रह्मकुण्डमिति ख्यातिमितो यास्यत्यनुत्तमाम्।।१५।।

अस्मिन्कुण्डे च सांनिध्यं भविष्यति सदा मम ।।

कार्त्तिके शुक्लपक्षस्य चतुर्दश्यां सुरोत्तमाः ।। १६ ।।

यात्रा भविष्यति सदा सुराः सांवत्सरी मम ।।

शुभप्रदा महापापराशिनाशकरी तदा ।। १७ ।।

स्वर्णं चैव सदा देयं वासांसि विविधानि च ।।

निजशक्त्या प्रकर्तव्या सुरास्तृप्तिर्द्विजन्मनाम्।।१८।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वा देवदेवोऽयं ब्रह्मा लोकपितामहः ।।

अन्तर्दधे सुरैः सार्द्धं तीर्थं दृष्ट्वा तपोधन ।। १९ ।।

तदाप्रभृति तत्कुण्डं विख्यातं परमं भुवि ।।

चक्रतीर्थाच्च पूर्वस्यां दिशि कुण्डं स्थितं महत् ।। 2.8.2.२० ।।

।। ।। सूत उवाच ।। ।।

इत्युक्त्वा स तपोराशिरगस्त्यः कुंभसंभवः ।।

पुनः पृष्टो मुनिवरो व्यासायावीवदत्कथाम् ।। २१ ।।

।। अगस्त्य उवाच ।। ।।

अन्यच्छृणु महाभाग तीर्थं दुष्कृतिदुर्ल्लभम् ।।

ऋणमोचनसंज्ञं तु सरयूतीरसंगतम् ।। २२ ।।

ब्रह्मकुण्डान्मुनिवर धनुःसप्तशतेन च ।।

पूर्वोत्तरदिशाभागे संस्थितं सरयूजले ।। २३ ।।

तत्र पूर्वं मुनिवरो लोमशो नाम नामतः ।।

तीर्थयात्राप्रसंगेन स्नानं चक्रे विधानतः ।। २४ ।।

ततः स ऋणनिर्मुक्तो बभूव गतकल्मषः ।।

तदाश्चर्यं महद्दृष्ट्वा मुनीन्सानन्दमब्रवीत् ।। २५ ।।

पश्यन्त्वेतस्य महतो गुणांस्तीर्थवरस्य वै ।।

भुजावूर्ध्वं तथा कृत्वा हर्षेणाहाऽश्रुलोचनः ।। २६ ।।

।। लोमश उवाच ।। ।।

ऋणमोचनसंज्ञं तु तीर्थमेतदनुत्तमम् ।।

यत्र स्नानेन जंतूनामृणनिर्यातनं भवेत् ।। २७ ।।

ऐहिकं पारलौकिक्यं यदृणत्रितयं नृणाम् ।।

तत्सर्वं स्नानमात्रेण तीर्थेऽस्मिन्नश्यति क्षणात् ।।।। २८ ।।

सर्वतीर्थोत्तमं चैतत्सद्यः प्रत्ययकारकम् ।।

मया चास्य फलं सम्यगनुभूतमृणादिह ।। २९ ।।

तस्मादत्र विधानेन स्नानं दानं च शक्तितः ।।

कर्त्तव्यं श्रद्धया युक्तैः सर्वदा फलकांक्षिभिः ।। 2.8.2.३० ।।

स्नातव्यं च सुवर्णं च देयं वस्त्रादि शक्तितः ।। ३१ ।।

।। ।। अगस्त्य उवाच ।। ।।

इत्युक्त्वा तीर्थमाहात्म्यं लोमशो मुनिसत्तमः ।।

अन्तर्दधे मुनिश्रेष्ठः स्तुवंस्तीर्थगुणान्मुदा ।। ३२ ।।

इत्येतत्कथितं विप्र ऋणमोचनसंज्ञकम् ।।

यत्र स्नानेन जन्तूनामृणं नश्यति तत्क्षणात् ।।

ऋणमोचनतीर्थं तु पूर्वतः सरयूजले ।। ३३ ।।

धनुर्द्विशत्या तीर्थं च पापमोचनसंज्ञकम्।।

सर्वपापविशुद्धात्मा तत्र स्नानेन मानवः ।।

जायते तत्क्षणादेव नात्र कार्या विचारणा ।। ३४ ।।

मया तत्र मुनिश्रेष्ठ दृष्टं माहात्म्यमुत्तमम् ।। ३५ ।।

पांचालदेशसंभूतो नाम्ना नरहरिर्द्विजः ।।

असत्संगप्रभावेन पापात्मा समजायत ।। ३६ ।।

नाना विधानि पापानि ब्रह्महत्यादिकानि च ।।

कृतवान्पापिसंगेन त्रयीमार्गविनिन्दकः ।। ३७ ।।

स कदाचित्साधुसंगात्तीर्थयात्राप्रसंगतः ।।

अयोध्यामागतो विप्र महापातककृद्द्विजः ।। ३८ ।।

पापमोचनतीर्थे तु स्नातः सत्संगतो द्विजः ।।

पापराशिर्विनष्टोऽस्य निष्पापः समभूत्क्षणात् ।। ३९ ।।

दिवः पपात तन्मूर्ध्नि पुष्पवृष्टिर्मुनीश्वर ।।

दिव्यं विमानमारुह्य विष्णुलोके गतो द्विजः ।। 2.8.2.४० ।।

तद्दृष्ट्वा महदाश्चर्यं मया च द्विजपुंगव ।।

श्रद्धया परया तत्र कृतं स्नानं विशेषतः ।।४१।।

माघकृष्णचतुर्दश्यां तत्र स्नानं विशेषतः ।।

दानं च मनुजैः कार्य्यं सर्वपापविशुद्धये ।।४२।।

अन्यदा(?) तु कृते स्नाने सर्वपापक्षयो भवेत् ।। ४३ ।।

पापमोचनतीर्थे तु पूर्वं तु सरयूजले ।।

धनुःशतप्रमाणेन वर्त्तते तीर्थमुत्तमम् ।। ४४ ।।

सहस्रधारासंज्ञं तु सर्वकिल्बिषनाशनम् ।।

यस्मिन्रामाज्ञया वीरो लक्ष्मणः परवीरहा ।।

प्राणानुत्सृज्य योगेन ययौ शेषात्मतां पुरा ।। ४५ ।।

सार्द्धहस्तत्रयेणैव प्रमाणं धनुषो विदुः ।।

चतुर्भिर्हस्तकैः संख्या दण्ड इत्यभिधीयते ।। ४६ ।।

।। सूत उवाच ।। ।।

इत्थं तदा समाकर्ण्य कुम्भयोनिमुनेस्तदा ।।

कृष्णद्वैपायनो व्यासः पुनः पप्रच्छ कौतुकात् ।। ४७ ।।

।। व्यास उवाच ।। ।।

सहस्रधारामाहात्म्यं विस्तराद्वद सुव्रत ।।

शृण्वंस्तीर्थस्य माहात्म्यं न तृप्यति मनो मम ।। ४८ ।।

।। अगस्त्य उवाच ।। ।।

सावधानः शृणु मुने कथां कथयतो मम ।।

सहस्रधारातीर्थस्य समुत्पत्तिं महोदयात् ।। ४९ ।।

पुरा रामो रघुपतिर्देवकार्यं विधाय वै ।।

कालेन सह संगम्य मंत्रं चक्रे नरेश्वरः ।। 2.8.2.५० ।।

आवां मन्त्रयमाणौ हि यः पश्येदन्तिकागतः।।४९।।

मया त्याज्यो भवेत्क्षिप्रमित्थं चक्रे स संविदम् ।।५१।।

तस्मिन्मंत्रयमाणे हि द्वारे तिष्ठति लक्ष्मणे ।।

आगतः स तपोराशिर्दुर्वासास्तेजसां निधिः ।। ५२ ।।

आगत्य लक्ष्मणं शीघ्रं प्रीत्योवाच क्षुधाऽऽकुलः।। ५३ ।।

।। दुर्वासा उवाच ।। ।।

सौमित्रे गच्छ शीघ्रं त्वं रामाग्रे मां निवेदय ।।

कार्यार्थिनमिदं वाक्यं नान्यथा कर्तुमर्हसि ।। ५४ ।।

।। अगस्त्य उवाच ।। ।।

शापाद्भीतः स सौमित्रिर्द्रुतं गत्वा तयोः पुरः ।।

मुनिं निवेदयामास रामाग्रे दर्शनार्थिनम् ।।

दुर्वाससं तपोराशिमत्रिनन्दनमागतम् ।। ५५ ।।

रामोऽपि कालमामंत्र्य प्रस्थाप्य च बहिर्ययौ ।।

दृष्ट्वा मुनिं तं प्रणतः संभोज्य प्रभुरादरात् ।। ५६ ।।

दुर्वाससं मुनिवरं प्रस्थाप्य स्वयमादरात् ।।

सत्यभंगभयाद्वीरो लक्ष्मणं त्यक्तवांस्तदा ।। ५७ ।।

लक्ष्मणोऽपि तदा वीरः कुर्वन्नवितथं वचः ।।

भ्रातुर्ज्येष्ठस्य सुमतिः सरयूतीरमाययौ ।। ५८ ।।

तत्र गत्वाथ च स्नात्वा ध्यानमास्थाय सत्वरम् ।।

चिदात्मनि मनः शान्तं संगम्यावस्थितस्तदा ।। ५९ ।।

ततः प्रादुरभूत्तत्र सहस्रफणमण्डितः ।।

शेषश्चक्षुःश्रवाः श्रेष्ठः क्षितिं भित्त्वा सहस्रधा ।।

सुरलोकात्सुरेन्द्रोऽपि समागादमरैः सह ।। 2.8.2.६० ।।

ततः शेषात्मतां यातं लक्ष्मणं सत्यसंगरम् ।।

उवाच मधुरं शक्रः सुराणां तत्र पश्यताम् ।। ६१ ।।

।। ।। इन्द्र उवाच ।। ।।

लक्ष्मणोत्तिष्ठ शीघ्रं त्वमारोह स्वपदं स्वकम् ।।

देवकार्यं कृतं वीर त्वया रिपुनिषूदन ।। ६२ ।।

वैष्णवं परमं स्थानं प्राप्नुहि त्वं सनातनम् ।।

भवन्मूर्तिः समायातः शेषोऽपि विलसत्फणः ।। ६३ ।।

सहस्रधा क्षितिं भित्त्वा सहस्रफणमण्डलैः ।।

क्षितेः सहस्रच्छिद्रेषु यस्माद्भित्त्वा समुद्गताः ।। ६४ ।।

फणसाहस्रमणिभिर्दग्धाः शेषस्य सुव्रत ।।

तस्मादेतन्महातीर्थं सरयूतीरगं शुभम् ।।

ख्यातं सहस्रधारेति भविष्यति न संशयः ।। ६५ ।।

एतत्क्षेत्रप्रमाणं तु धनुषां पञ्चविंशतिः ।।

अत्र स्नानेन दानेन श्राद्धेन श्रद्धयान्वितः ।।

सर्वपापविशुद्धात्मा विष्णुलोकं व्रजेन्नरः ।। ६६ ।।

अत्र स्नातो नरो धीमाञ्छेषं संपूज्य चाव्ययम् ।।

तीर्थं संपूज्य विधिवद्विष्णुलोकमवाप्नुयात् ।। ६७ ।।

तस्मादत्र प्रकर्तव्यं स्नानं विधिपुरःसरम् ।।

शेषरूपाहिवद्ध्येयाः पूज्या विप्रा विशेषतः ।। ६८ ।।

स्वर्णं चान्नं च वासांसि देयानि श्रद्धयान्वितैः ।।

स्नानं दानं हरेः पूजा सर्वमक्षयतां व्रजेत् ।। ६९ ।।

तस्मादेतन्महातीर्थं सर्वकामफलप्रदम् ।।

क्षितौ भविष्यति सदा नात्र कार्या विचारणा ।। 2.8.2.७० ।।

श्रावणे शुद्धपक्षस्य या तिथिः पञ्चमी भवेत् ।।

तस्यामत्र प्रकर्तव्यो नागानुद्दिश्य यत्नतः ।। ७१ ।।

उत्सवो विपुलः सद्भिः शेषपूजापुरःसरम् ।।

उत्सवे तु कृते तत्र तीर्थे महति मानवैः ।। ७२ ।।

सन्तोष्य च द्विजान्भक्त्या नागपूजापुरस्सरम् ।।

सन्तुष्टाः फणिनः सर्वे पीडयन्ति न मानुषान् ।। ७३ ।।

वैशाखमासे ये स्नानं कुर्वंत्यत्र समाहिताः ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। ७४ ।।

तस्मादत्र प्रकर्तव्यं माधवे यत्नतो नरैः ।।

स्नानं दानं हरिः पूज्यो ब्राह्मणाश्च विशेषतः ।।

तीर्थे कृतेऽत्र मनुजैः सर्वकामफलप्रदः ।। ७५ ।।

विष्णुमुद्दिश्य यो दद्यात्सालंकारां पयस्विनीम् ।।

सवत्सामत्र सत्तीर्थे सत्पात्राय द्विजन्मने ।। ७६ ।।

तस्य वासो भवेन्नित्य विष्णुलोके सनातने ।।

अक्षयं स्वर्गमाप्नोति तीर्थ स्नानेन मानवः ।। ७७ ।।

अत्र पूज्यौ विशेषेण नरैः श्रद्धासमन्वितः ।।

वैशाखे मास्यलंकारैर्वस्त्रैश्च द्विजदंपती ।। ७८ ।।

लक्ष्मीनारायणप्रीत्यै लक्ष्मीप्रात्यै विशेषतः ।।

वैशाखे मासि तीर्थानि पृथिवीसंस्थितानि वै ।। ७९ ।।

सर्वाण्यपि च संगत्य स्थास्यंत्यत्र न संशयः ।।

तस्मादत्र विशेषेण वैशाखे स्नानतो नृणाम् ।।

सर्वतीर्थावगाहस्य भविष्यति फलं महत् ।। 2.8.2.८० ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वा मुनिराजेंद्रो लक्ष्मणं सुरसं गतम् ।।

शेषं संस्थाप्य तत्तीर्थे भूभारहरणक्षमम् ।।

लक्ष्मणं यानमारोप्य प्रतस्थे दिवमादरात् ।। ८१ ।।

तदाप्रभृति तत्तीर्थं विख्यातिं परमां ययौ ।।

वैशाखे मासि तीर्थस्य माहात्म्यं परमं स्मृतम् ।। ८२ ।।

पञ्चम्यामपि शुक्लायां श्रावणस्य विशेषतः ।।

अन्यदा पर्वणि श्रेष्ठं विशेषं स्नानमाचरेत् ।।

सहस्रधारातीर्थे च नरः स्वर्गमवाप्नुयात्।। ८३ ।।

विधिवदिह हि धीमान्स्नानदानानि तीर्थे नरवर इह शक्त्या यः करोत्यादरेण ।।

स इह विपुलभोगान्निर्मलात्मा च भक्त्या भजति भुजगशायिश्रीपतेरात्मनैक्यम् ।। ८४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये ब्रह्मकुण्डसहस्रधारातीर्थमाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/h8m



।। सूत उवाच ।। ।।

इति श्रुत्वा वचो धीमानादरात्कुंभजन्मनः ।।

प्रोवाच मधुरं वाक्यं कृष्णद्वैपायनो मुनिः ।। १ ।।

।। व्यास उवाच ।। ।।

भगवन्नद्भुतमिदं तीर्थमाहात्म्यमुत्तमम्।।

श्रुत्वा त्वत्तो मम मनः परमानंदमाययौ ।। २ ।।

अन्यत्तीर्थवरं ब्रूहि तत्त्वेन मम शृण्वतः ।।

न तृप्तिरस्ति मनसः शृण्वतो मम सुव्रत ।। ३ ।।

।। ।। अगस्त्य उवाच ।। ।।

शृणु विप्र प्रवक्ष्यामि तीर्थमन्यदनुत्तमम् ।।

स्वर्गद्वारमिति ख्यातं सर्वपापहरं सदा ।। ४ ।।

स्वर्गद्वारस्य माहात्म्यं विस्तराद्वक्तुमीश्वरः ।।

नहि कश्चिदतो वत्स संक्षेपाच्छृणु सुव्रत ।। ५ ।।

सहस्रधारामारभ्य पूर्वतः सरयूजले ।।

षट्त्रिंशदधिका प्रोक्ता धनुषां षट्शती मितिः ।। ६ ।।

स्वर्गद्वारस्य विस्तारः पुराणज्ञैर्विशारदैः ।।

स्वर्गद्वारसमं तीर्थं न भूतं न भविष्यति ।। ७ ।।

सत्यंसत्यं पुनः सत्यं नासत्यं मम भाषितम्।।

स्वर्गद्वारसमं तीर्थं नास्ति ब्रह्माण्डगोलके ।। ८ ।।

हित्वा दिव्यानि भौमानि तीर्थानि सकलान्यपि ।।

प्रातरागत्य तिष्ठन्ति तत्र संश्रित्य सुव्रत ।। ९ ।।

तस्मादत्र प्रकर्तव्यं प्रातः स्नानं विशेषतः ।।

सर्वतीर्थावगाहस्य फलमात्मन ईप्सता ।। 2.8.3.१० ।।

त्यजंति प्राणिनः प्राणान्स्वर्गद्वारांतरे द्विज ।।

प्रयांति परमं स्थानं विष्णोस्ते नात्र संशयः ।। ११ ।।

मुक्तिद्वारमिदं पश्य स्वर्गप्राप्तिकरं नृणाम् ।।

स्वर्गद्वारमिति ख्यातं तस्मात्तीर्थमनुत्तमम् ।। १२ ।।

स्वर्गद्वारं सुदुष्प्राप्यं देवैरपि न संशयः ।।

यद्यत्कामयते तत्र तत्तदाप्नोति मानवः ।। १३ ।।

स्वर्गद्वारे परा सिद्धिः स्वर्गद्वारे परा गतिः ।।

जप्तं दत्तं हुतं दृष्टं तपस्तप्तं कृतं च यत् ।।

ध्यानमध्ययनं सर्वं दानं भवति चाक्षयम् ।। १४ ।।

जन्मांतरसहस्रेण यत्पापं पूर्वसंचितम्।।

स्वर्गद्वारप्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।। १५ ।।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसंकराः।।

कृमिम्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः।१६।।

कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः।।

कालेन निधनं प्राप्ताः स्वर्गद्वारे शृणु द्विज ।।१७।।

कौमोदकीकराः सर्वे पक्षिणो गरुडध्वजाः ।।

शुभे विष्णुपुरे विष्णुर्जायते तत्र मानवाः ।। १८ ।।

अकामो वा सकामो वा अपि तीर्थगतोपि वा ।।

स्वर्गद्वारे त्यजन्प्राणान्विष्णुलोके महीयते ।। १९ ।।

मुनयो देवताः सिद्धाः साध्या यक्षा मरुद्गणाः ।।

यज्ञोपवीतमात्रेण विभागं चक्रिरे तु ये ।। 2.8.3.२० ।।

मध्याह्नेऽत्र प्रकुर्वंति सान्निध्यं देवतागणाः ।।

तस्मात्तत्र प्रकुर्वंति मध्याह्ने स्नानमादरात् ।। २१ ।।

कुर्वंत्यनशनं ये तु स्वर्गद्वारे जितेंद्रियाः ।।

प्रयांति परमं स्थानं ये च मासोपवासिनः ।। २२ ।।

अन्नदानरता ते च रत्नदा भूमिदा नराः ।।

गोवस्त्रदाश्च विप्रेभ्यो यांति ते भवनं हरेः ।।२३।।

यत्र सिद्धा महात्मानो मुनयः पितरस्तथा ।।

स्वर्गं प्रयांति ते सर्वे स्वर्गद्वारं ततः स्मृतम् ।। २४ ।।

चतुर्द्धा च तनुं कृत्वा देवदेवो हरिः स्वयम् ।।

अत्र वै रमते नित्यं भ्रातृभिः सह राघवः ।। २५ ।।

ब्रह्मलोकं परित्यज्य चतुर्वक्त्रः सनातनः ।।

अत्रैव रमते नित्यं देवैः सह पितामहः ।। २६ ।।

कैलासनिलयावासी शिवस्तत्रैव संस्थितः ।। २७ ।।

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।।

स्वर्गद्वारं समासाद्य स सर्वो व्रजति क्षयम् ।। २८ ।।

या गतिर्ज्ञानतपसां या गतिर्यज्ञयाजिनाम्।।

स्वर्गद्वारे मृतानां तु सा गतिर्विहिता शुभा ।। २९ ।।

ऋषिदेवासुरगणैर्जपहोमपरायणैः ।।

यतिभिर्मोक्षकामैश्च स्वर्गद्वारो निषेव्यते ।। 2.8.3.३० ।।

षष्टिवर्षसहस्राणि काशीवासेषु यत्फलम् ।।

तत्फलं निमिषार्द्धेन कलौ दाशरथीं पुरीम् ।। ३१ ।।

या गतिर्योगयुक्तानां वाराणस्यां तनुत्यजाम्।।

सा गतिः स्नानमात्रेण सरय्वां हरिवासरे ।। ३२ ।।

स्वर्गद्वारे मृतः कश्चिन्नरकं नैव पश्यति ।।

केशवानुगृहीता हि सर्वे यांति परां गतिम् ।। ३३ ।।

भूलोके चांतरिक्षे च दिवि तीर्थानि यानि वै ।।

अतीत्य वर्तते तानि तीर्थान्येतद्द्विजोत्तम ।। ३४ ।।

विष्णुभक्तिं समासाद्य रमन्ते तु सुनिश्चिताः ।।

संहृत्य शक्तितः कामं विषयेषु हि संस्थितम् ।।३५ ।।

शक्तितः सर्वतो युक्त्वा शक्तिस्तपसि संस्थिता ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। ३६ ।।

हन्यमानोऽपि यो विद्वान्वसेच्छस्त्रशतैरपि ।।

स याति परमं स्थानं यत्र गत्वा न शोचति ।।३७।।

स्वर्गद्वारे वियुज्येत स याति परमां गतिम् ।।

उत्तरं दक्षिणं वापि अयनं न विकल्पयेत् ।। ३८ ।।

सर्वस्तेषां शुभः कालः स्वर्गद्वारं श्रयंति ये ।।

स्नानमात्रेण पापानि विलयं यांति देहिनाम् ।। ३९ ।।

यावत्पापानि देहेन ये कुर्वंति जनाः क्षितौ ।।

अयोध्या परमं स्थानं तेषामीरितमादरात् ।। ।। 2.8.3.४० ।।

ज्येष्ठे मासि सिते पक्षे पंचदश्यां विशेषतः ।।

तस्य सांवत्सरी यात्रा देवैश्चन्द्रहरेः स्मृता ।। ४१ ।।

तस्मिन्नुद्यापनं चन्द्रसहस्रं व्रतयोगिभिः ।।

कार्यं प्रयत्नतो विप्र सर्वयज्ञफलाधिकम्।। ४२ ।।

तस्मिन्कृते महापापक्षयात्स्वर्गो भवेन्नृणाम् ।। ४३।।

।। श्रीव्यास उवाच ।। ।।

भगवन्ब्रूहि तत्त्वेन तस्य चन्द्रहरेः शुभाम्।।

उत्पत्तिं च तथा चंद्रव्रतस्योद्यापने विधिम् ।। ४४ ।।

।। अगस्त्य उवाच ।। ।।

अयोध्यानिलयं विष्णुं नत्वा शीतांशुरुत्सुकः ।।

आगच्छत्तीर्थमाहात्म्यं साक्षात्कर्तुं सुधानिधिः ।।

अत्रागत्य च चन्द्रोऽथ तीर्थयात्रां चकार सः ।। ४५ ।।

क्रमेण विधिपूर्वं च नानाश्चर्यसमन्वितः ।।

समाराध्य ततो विष्णुं तपसा दुश्चरेण वै ।। ४६ ।।

तत्प्रसादं समासाद्य स्वाभिधानपुरस्सरम् ।।

हरिं संस्थापयामास तेन चंद्रहरिः स्मृतः ।। ४७ ।।

वासुदेवप्रसादेन तत्स्थानं जातमद्भुतम् ।।

तद्धि गुह्यतमं स्थानं वासुदेवस्य सुव्रत ।। ४८ ।।

सर्वेषामिव भूतानां भर्तुर्मोक्षस्य सर्वदा ।।

अस्मिन्सिद्धाः सदा विप्र गोविंदव्रतमास्थिताः ।। ४९ ।।

नानालिंगधरा नित्यं विष्णुलोकाभिकांक्षिणः ।।

अभ्यस्यंति परं योगं मुक्तात्मानो जितेंद्रियाः ।।2.8.3.५०।।

यथा धर्ममवाप्नोति अन्यत्र न तथा क्वचित् ।।

दानं व्रतं तथा होमः सर्वमक्षयतां व्रजेत ।।५१।।

सर्वकामफलप्राप्तिर्जायते प्राणिनां सदा ।।

तस्मादत्र विधातव्यं प्राणिभिर्यत्नतः क्रमात् ।।

दानादिकं विप्रपूजा दंपत्योश्च विशेषतः ।। ५२ ।।

सर्वयज्ञाधिकफलं सर्वतीर्थावगाहनम् ।।

सर्वदेवावलोकस्य यत्पुण्यं जायते नृणाम् ।। ५३ ।।

तत्सर्वं जायते पुण्यं प्राणिनामस्य दर्शनात् ।।

तस्मादेतन्महाक्षेत्रं पुराणादिषु गीयते ।। ५४ ।।

उद्यापनविधिश्चात्र नृभिर्द्विजपुरस्सरम् ।।

अग्रे चंद्रहरेश्चन्द्र सहस्रव्रतसंज्ञकः ।। ५५ ।।

गते वर्षद्वये सार्द्धे पंचपक्षे दिनद्वये ।।

दिवसस्याऽष्टमे भागे पतत्येकोऽधिमासकः ।। ५६ ।।

त्र्यधिके वा अशीत्यब्दे चतुर्मासयुते ततः ।।

भवेच्चन्द्रसहस्रं तु तावज्जीवति यो नरः ।।

उद्यापनं प्रकर्तव्यं तेन यात्रा प्रयत्नतः ।। ५७ ।।

यत्पुण्यं परमं प्रोक्तं सततं यज्ञयाजिनाम्।।

सत्यवादिषु यत्पुण्यं यत्पुण्यं हेमदायिनि ।।

तत्पुण्यं लभते विप्र सहस्राब्दस्य जीविभिः ।। ५८ ।।

सर्वसौख्यप्रदं तादृक्पुण्यव्रतमिहोच्यते ।। ५९ ।।

चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम् ।।

चरितब्रह्मचर्य्यश्च जितवाक्कायमानसः ।।

पौर्णमास्यां तथा कृत्वा चंद्रपूजां च कारयेत् ।। 2.8.3.६० ।।

पूर्वं च मातरः पूज्या गौर्यादिकक्रमेण च ।।

ऋत्विजः पूजयेद्भक्त्या वृद्धिश्राद्धपुरस्सरम् ।। ६१ ।।

प्रयतैः प्रतिमा कार्या चंद्रमंडलसन्निभा ।।

सहस्रसंख्या ह्यथवा तदर्द्धं वा तदर्द्धकम् ।।

निजवित्तानुमानेन तदर्धेन तदर्द्धिकम् ।। ६२ ।।

ततः श्रद्धानुमानाद्वा कार्या वित्तानुमानतः ।।

अथवा षोडश शुभा विधातव्याः प्रयत्नतः ।। ६३ ।।

चंद्रपूजां ततः कुर्यादागमोक्तविधानतः ।।

माषैः षोडशभिः कार्या प्रत्येकं प्रतिमा शुभा ।। ६४ ।।

सोममंत्रेण होमस्तु कार्यो वित्तानुमानतः ।।

प्रतिमास्थापनं कुर्यात्सोममंत्रमुदीरयेत् ।। ६५ ।।

सोमोत्पत्तिं सोमसूक्तं पाठयेच्च प्रयत्नतः ।।

चंद्रपूजां ततः कुर्यादागमोक्तविधानतः ।। ६६ ।।

चंद्रन्यासं कलान्यासं कारयेन्मंडले जलम् ।।

एकादशेंद्रियन्यासं तथैव विधिपूर्वकम् ।। ६७ ।।

चंद्रबिंबनिभं कार्य्यं मंडलं शुभतंडुलैः।।

मध्ये च कलशः स्थाप्यो गव्येन पयसाप्लुतः ।। ६८ ।।

चतुरस्रेषु संपूर्णान्कलशान्स्थापयेद्बहिः ।।

मंडले चंद्रपूजा च कर्तव्या नामभिः क्रमात् ।। ६९ ।।

हिमांशवे नमश्चैव सोमचंद्राय वै नमः ।। ५४ ।।

चंद्राय विधवे नित्यं नमः कुमुदबंधवे ।। 2.8.3.७० ।।

सुधांशवे च सोमाय ओषधीशाय वै नमः ।।

नमोऽब्जाय मृगांकाय कलानां निधये नमः ।। ७१ ।।

नमो नक्षत्रनाथाय शर्वरीपतये नमः ।।

जैवातृकाय सततं द्विजराजाय वै नमः ।। ७२ ।।

एवं षोडशभिश्चंद्रः स्तोतव्यो नामभिः क्रमात् ।। ७३ ।।

ततो वै प्रयतो दद्याद्विधिवन्मंत्रपूर्वकम् ।।

शंखतोयं समादाय सपुष्पं फलचंदनम् ।। ७४ ।।

नमस्ते मासमासांते जायमान पुनःपुनः ।।

गृहाणार्घ्यं शशांक त्वं रोहिण्या सहितो मम ।।७५।।

एवं संपूज्य विधिवच्छशिनं प्रणतो भवेत् ।।

षोडशान्ये च कलशा दुग्धपूर्णाः सरत्नकाः ।।७६।।

सवस्त्राच्छादनाः शांत्यै दातव्यास्ते द्विजन्मने ।।

अभिषेकं ततः कुर्यात्पायसेन जलेन तु ।। ७७ ।।

ऋत्विजां मनसस्तुष्टिः कार्या वित्तानुमानतः ।।

ब्राह्मणं भोजयेत्तत्र सकुटुंबं विशेषतः ।। ७८ ।।

पूजनीयौ प्रयत्नेन वस्त्रैश्च द्विजदंपती ।।

कर्तव्यं च ततो भूरिदक्षिणादानमुत्तमम् ।। ७९ ।।

प्रतिमाश्च प्रदातव्या द्विजेभ्यो धेनुपूर्विकाः ।।

सुवर्णं रजतं वस्त्रं तथान्नं च विशेषतः ।।

दातव्यं चंद्रसुप्रीत्यै हर्षादेवं द्विजन्मने ।। 2.8.3.८० ।।

उपवासविधानेन दिनशेषं नयेत्सुधीः ।।

अनंतरे च दिवसे कुर्याद्भगवदर्चनम् ।।

बांधवैः सह भुञ्जीत नियमं च विसर्ज्जयेत् ।। ८१ ।।

एवं च कुरुते चंद्रसहस्रं व्रतमुत्तमम् ।।

ब्रह्मघ्नोऽपि सुरापोऽपि स्तेयी च गुरुतल्पगः ।।

व्रतेनानेन शुद्धात्मा चंद्रलोकं व्रजेन्नरः ।। ८२ ।।

यादृशश्च भवेद्विप्र प्रियो नारायणस्य च ।।

एवं करोति नियतं कृतकृत्यो भवेन्नरः ।। ८३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये चन्द्रसहस्रव्रतोद्यापनविधिवर्णनं नाम तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०४



।। अगस्त्य उवाच ।। ।।

तस्माच्चंद्रहरिस्थानादाग्नेय्यां दिशि संस्थितः ।।

देवो धर्महरिर्न्नाम कलिकल्मषनाशकः ।। १ ।।

वेदवेदाङ्गतत्त्वज्ञः स्वकर्मपरिनिष्ठितः ।।

पुरा समागतो धर्मस्तीर्थयात्राचिकीर्षया ।। २ ।।

आगत्य च चकारोच्चैर्यात्रां तत्रादरेण सः ।।

दृष्ट्वा माहात्म्यमतुलमयोध्यायाः सविस्मयः ।। ३ ।।

विधाय स्वभुजावूर्ध्वौ विप्रोऽवोचन्मुदान्वितः ।।

अहो रम्यमिदं तीर्थमहो माहात्म्यमुत्तमम् ।। ४ ।।

अयोध्यासदृशी कापि दृश्यते नापरा पुरी ।।

या न स्पृशति वसुधां विष्णुचक्रस्थिताऽनिशम् ।।।। ५ ।।

यस्यां स्थितो हरिः साक्षात्सेयं केनोपमीयते ।।

अहो तीर्थानि सर्वाणि विष्णुलोकप्रदानि वै ।। ६ ।।

अहो विष्णुरहो तीर्थमयोध्याऽहो महापुरी ।।

अहो माहात्म्यमतुलं किं न श्लाघ्यमिहास्थितम् ।। ७ ।।

इत्युक्त्वा तत्र बहुशो ननर्त प्रमदाकुलः ।।

धर्मो माहात्म्यमालोक्य अयोध्याया विशेषतः ।। ८ ।।

तं तथा नर्तमानं वै धर्मं दृष्ट्वा कृपान्वितः ।।

आविर्बभूव भगवान्पीतवासा हरिः स्वयम् ।।

तं प्रणम्य च धर्मोऽथ तुष्टाव हरिमादरात् ।। ९ ।।

।। धर्म उवाच ।। ।।

नमः क्षीराब्धिवासाय नमः पर्यंकशायिने ।।

नमः शंकरसंस्पृष्टदिव्यपादाय विष्णवे ।। 2.8.4.१० ।।

भक्त्यार्च्चितसुपादाय नमोऽजादिप्रियाय ते ।।

शुभांगाय सुनेत्राय माधवाय नमो नमः ।। ११ ।।

नमोऽरविन्दपादाय पद्मनाभाय वै नमः ।।

नमः क्षीराब्धिकल्लोलस्पृष्टगात्राय शार्ङ्गिणे ।। १२ ।।

ॐ नमो योगनिद्राय योगर्क्षैर्भावितात्मने ।।

तार्क्ष्यासनाय देवाय गोविन्दाय नमोनमः ।। १३ ।।

सुकेशाय सुनासाय सुललाटाय चक्रिणे ।।

सुवस्त्राय सुवर्णाय श्रीधराय नमोनमः ।। १४ ।।

सुबाहवे नमस्तुभ्यं चारुजंघाय ते नमः ।।

सुवासाय सुदिव्याय सुविद्याय गदाभृते ।। १५ ।।

केशवाय च शांताय वामनाय नमोनमः ।।

धर्मप्रियाय देवाय नमस्ते पीतवाससे ।। १६ ।।

।। अगस्त्य उवाच ।। ।।

इति स्तुतो जगन्नाथो धर्मेण श्रीपतिर्मुदा ।।

उवाच स हृषीकेशः प्रीतो धर्ममुदारधीः ।। १७ ।।

।। श्रीभगवानुवाच ।। ।।

तुष्टोऽहं भवतो धर्म स्तोत्रेणानेन सुव्रत ।।

वरं वरय धर्मज्ञ यस्ते स्यान्मनसः प्रियः ।। १८ ।।

स्तोत्रेणानेन यः स्तौति मानवो मामतन्द्रितः ।।

सर्वान्कामानवाप्नोति पूजितः श्रीयुतःसदा।। १९ ।।

।। धर्म उवाच ।। ।।

यदि तुष्टोसि भगवन्देवदेव जगत्पते ।।

त्वामहं स्थापयाम्यत्र निजनाम्ना जगद्गुरो ।। 2.8.4.२० ।।

।। अगस्त्य उवाच ।। ।।

एवमस्त्विति संप्रोच्याभवद्धर्महरिर्विभुः ।।

स्मरणादेव मुच्येत नरो धर्महरेर्विभोः ।। २१ ।।

सरयूसलिले स्नात्वा सुचिंताकुलमानसः ।।

देवं धर्महरिं पश्येत्सर्वपापैः प्रमुच्यते ।। २२ ।।

अत्र दानं तथा होमं जपो ब्राह्मणभोजनम् ।।

सर्वमक्षयतां याति विष्णुलोके निवासकृत् ।। २३ ।।

अज्ञानाज्ज्ञानतो वापि यत्किंचिद्दुष्कृतं भवेत् ।।

प्रायश्चित्तं विधातव्यं तन्नाशाय प्रयत्नतः ।। २४ ।।

प्रायश्चित्तेन विधिना पापं तस्य प्रणश्यति।।

तस्मादत्र प्रकर्त्तव्यं प्रायश्चित्तं विधानतः ।। २५ ।।

अज्ञानाज्ज्ञानतो वापि राजादेर्निग्रहात्तथा ।।

नित्यकर्मनिवृत्तिः स्याद्यस्य पुंसोऽवशात्मनः ।।

तेनाप्यत्र विधातव्यं प्रायश्चित्तं प्रयत्नतः ।। २६ ।।

अत्र साक्षात्स्वयं देवो विष्णुर्वसति सादरः ।।

तस्माद्वर्णयितुं शक्यो महिमा न हि मानवैः ।। २७ ।।

आषाढे शुक्ल पक्षस्य एकादश्यां द्विजोत्तम ।।

तस्य सांवत्सरी यात्रा कर्तव्या तु विधानतः ।। २८ ।।

स्वर्गद्वारे नरः स्नात्वा दृष्ट्वा धर्महरिं विभुम् ।।

सर्वपापविशुद्धात्मा विष्णुलोके वसेत्सदा ।। २९ ।।

तस्माद्दक्षिणदिग्भागे स्वर्णस्य खनिरुत्तमा ।।

यत्र चक्रे स्वर्णदृष्टिं कुबेरो रघुजाद्भयात् ।। 2.8.4.३० ।। ।।

।। व्यास उवाच ।। ।।

भगवन्ब्रूहि तत्त्वज्ञ स्वर्णवृष्टिरभूत्कथम् ।।

कुबेरस्य कथं भीतिरुत्पन्ना रघुभूपतेः ।। ३१ ।।

एतत्सर्वं समाचक्ष्व विस्तरान्मम सुव्रत ।।

श्रुत्वा कथारहस्यानि न तृप्यति मनो मम ।। ३२ ।।

।। अगस्त्य उवाच ।। ।।

शृणु विप्र प्रवक्ष्यामि स्वर्णस्योत्पत्तिमुत्तमाम् ।।

यस्य श्रवणतो नृणां जायते विस्मयो महान् ।। ३३ ।।

आसीत्पुरा रघुपतिरिक्ष्वाकुकुलवर्द्धनः ।।

रघुर्निजभुजोदारवीर्यशासितभूतलः ।। ३४ ।।

प्रतापतापितारातिवर्गव्याख्यातसद्यशाः ।।

प्रजाः पालयता सम्यक्तेननीतिमता सता ।।३५।।

यशःपूरेण समलिप्ता दिशो दश सितत्विषा ।।
स चक्रे प्रौढविभवसाधनां विजयक्रमात् ।। ३६ ।।
नानादेशान्समाक्रम्य चतुरंगबलान्वितः ।।
भूतानि वशमानीय वसु जग्राह दण्डतः।।३७।।
उत्कृष्टान्नृपतीन्वीरो दंडयित्वा बलाधिकान् ।।
रत्नानि विविधान्याशु जग्राहातिबलस्तदा ।।३८।।
स विजित्य दिशः सर्वा गृहीत्वा रत्नसंचयम्।।
अयोध्यामागतो राजा राजधानीं च तां शुभाम्।। ३९ ।।
तत्रागत्य च काकुत्स्थो यज्ञायोत्सुकमानसः ।।
चकार निर्मलां बुद्धिं निजवंशोचितक्रियाम।।2.8.4.४०।।
वसिष्ठं मुनिमाज्ञाय वामदेवं च कश्यपम् ।। ४१ ।।
अन्यानपि मुनिश्रेष्ठान्नानातीर्थसमाश्रितान् ।।
समानयद्विनीतेन द्विजवर्येण भूपतिः ।। ४२ ।।
दृष्ट्वा स्थितान्स तान्सर्वान्प्रदीप्तानिव पावकान् ।।
तानागतान्विदित्वाथ रघुः परपुरंजयः ।।
निश्चक्राम यथान्यायं स्वयमेव महायशाः ।। ४३ ।।
ततो विनीतवत्सर्वान्काकुत्स्थो द्विजसत्तमान् ।।
उवाच धर्मयुक्तं च वचनं यज्ञसिद्धये ।। ४४ ।।
।। रविरुवाच ।।
मुनयः सर्व एवैते यूयं शृणुत मद्वचः ।।
यज्ञं विधातुमिच्छामि तत्राज्ञां दातुमर्हथ ।। ४५ ।।
सांप्रतं मामको यज्ञो युक्तः स्यान्मुनिसत्तमाः ।।
एतद्विचार्य्य तत्त्वेन ब्रूत यूयं मुनीश्वराः ।। ।। ४६ ।।
।। मुनय ऊचुः ।। ।।
राजन्विश्वजिदाख्यातो यज्ञानां यज्ञ उत्तमः ।।
सांप्रतं कुरु तं यत्नान्मा विलंबं वृथा कृथाः ।। ४७ ।। ।।
।। अगस्त्य उवाच ।।
नृपश्चक्रे ततो यज्ञं विश्वदिग्जयसंज्ञितम् ।।

नानासंभारमधुरं कृतसर्वस्वदक्षिणम् ।। ४८ ।।

नानाविधेन दानेन मुनिसंतोषहर्षकृत् ।।

सर्वस्वमेव प्रददौ द्विजेभ्यो बहुमानतः ।।४९।।

तेषु विश्वेषु यातेषु पूजितेषु गृहान्स्वकान् ।।

बन्धुष्वपि च तुष्टेषु मुनिषु प्रणतेषु च ।। 2.8.4.५० ।।

तेन यज्ञेन विधिवद्विहितेन नरेश्वरः ।।

शुशुभे शोभनाचारः स्वर्गे देवेंद्रवत्क्षणात् ।। ५१ ।।

तत्रांतरे समभ्यायान्मुनिर्यमवतां वरः ।।

विश्वामित्रमुनेरंतेवासी कौत्स इति स्मृतः ।। ५२ ।।

दक्षिणार्थं गुरोर्द्धीमान्पावितुं तं नरेश्वरम् ।।

चतुर्दशसुवर्णानां कोटीराहर सत्वरम् ।। ।। ५३ ।।

मद्दक्षिणेति गुरुणा निर्बन्धाद्याचितो रुषा ।।

आगतः स मुनिः कौत्सस्ततो याचितुमादरात् ।।

रघुं भूपालतिलकं दत्तसर्वस्वदक्षिणम् ।। ।। ५४ ।।

तमागतमभिप्रेत्य रघुरादरतस्तदा ।।

उत्थाय पूजयामास विधिवत्स परंतपः ।।

सपर्य्यासीत्तस्य सर्वा मृत्पात्रविहितक्रिया ।। ५५ ।।

पूजासंभारमालोक्य तादृशं तं मुनीश्वरः ।।

विस्मितोऽभून्निरानन्दो दक्षिणाऽऽशां परित्यजन् ।।

उवाच मधुरं वाक्यं वाक्यज्ञानविशारदः ।। ।। ५६ ।।

।। कौत्स उवाच ।। ।।

राजन्नभ्युदयस्तेऽस्तु गच्छाम्यन्यत्र सांप्रतम् ।। ५७ ।।

गुर्वर्थाहरणायैव दत्तसर्वस्वदक्षिणम् ।।

त्वां न याचे धनाभावादतोऽन्यत्र व्रजाम्यहम् ।। ५८ ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्तस्तेन मुनिना रघुः परपुरंजयः ।।

क्षणं ध्यात्वाऽब्रवीदेनं विनयाद्विहितांजलिः ।। ५९ ।।

।। रघुरुवाच ।। ।।

भगवंस्तिष्ठ मे हर्म्ये दिनमेकं मुनिव्रत ।।

यावद्यतिष्ये भगवन्भवदर्थार्थमुच्चकैः ।। 2.8.4.६० ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वा परमोदारवचो मुनिमुदारधीः ।।

प्रतस्थे च रघुस्तत्र कुबेरविजिगीषया ।। ६१ ।।

तमायांतं कुबेरोऽथ विज्ञाप्य वचनोदितैः ।।

प्रसन्नमनसं चक्रे वृष्टिं स्वर्णस्य चाक्षयाम् ।। ६२ ।।

स्वर्णवृष्टिरभूद्यत्र सा स्वर्णखनिरुत्तमा ।।

स मुनिं दर्शयामास खनिं तेन निवेदिताम्।। ६३ ।।

तस्मै समर्पयामास तां रघुः खनिमुत्तमाम् ।।

मुनीन्द्रोऽपि गृहीत्वाशु ततो गुर्वर्थमादरात् ।। ६४ ।।

राज्ञे निवेदयामास सर्वमन्यद्गुणाधिकः ।।

वरानथ ददौ तुष्टः कौत्सो मतिमतां वरः ।। ६५ ।।

।। कौत्स उवाच ।। ।।

राजँल्लभस्व सत्पुत्रं निजवंशगुणान्वितम् ।।

इयं स्वर्णखनिस्तूर्णं मनोभीष्टफलप्रदा ।। ६६ ।।

भूयादत्र परं तीर्थं सर्वपापहरं सदा ।।

अत्र स्नानेन दानेन नृणां लक्ष्मीः प्रजायते ।। ६७ ।।

वैशाखे शुक्लद्वादश्यां यात्रा सांवत्सरी स्मृता ।।

नानाभीष्टफलप्राप्तिर्भूयान्मद्वचसा नृणाम् ।। ६८ ।।

।। अगस्त्य उवाच ।। ।।

इति दत्त्वा वरान्राज्ञे कौत्सः संतुष्टमानसः ।।

प्रतस्थे निजकार्यार्थे गुरोराश्रममुत्सुकः ।। ६९ ।।

राजा स कृतकृत्योऽथ शेषं संगृह्य तद्धनम्।।

द्विजेभ्यो विधिवद्दत्त्वा पालयामास वै प्रजाः ।। 2.8.4.७० ।।

एवं स्वर्णखनेर्जातं माहात्म्यं च मुनीश्वरात् ।। ७१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये धर्महरिस्वर्णखनिमाहात्म्यवर्णनंनाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०५



।। व्यास उवाच ।। ।।

भगवन्ब्रूहि तत्त्वेन कथं निर्बंधतो मुनिः ।।

विश्वामित्रो निजं शिष्यं कौत्सं क्रोधेन तादृशम् ।। १ ।।

दुष्प्राप्यमर्थं यत्नेन बहु प्रार्थितवांस्तदा ।।

एतत्सर्वं च कथय मयि यद्यस्ति ते कृपा ।। २ ।।

।। अगस्त्य उवाच ।। ।।

शृणु द्विज कथामेतां सावधानेंद्रियः स्वयम् ।।

विश्वामित्रो मुनिश्रेष्ठः स दिव्यज्ञानलोचनः ।। ३ ।।

निजाश्रमे तपो दुर्गं चकार प्रयतो व्रती ।।

एकदा तमथो द्रष्टुं दुर्वासा मुनिरागतः ।। ४ ।।

आगत्य च क्षुधाक्रांत उच्चैः प्रोवाच स द्विजः ।।

भोजनं दीयतां मह्यं क्षुधापीडितचेतसे ।।

पायसं शुचि चोष्णं च शीघ्रं क्षुधार्त्तिने द्विज ।। ५ ।।

इति श्रुत्वा वचः क्षिप्रं विश्वामित्रः प्रयत्नतः ।।

स्थाल्यां पायसमादाय तं समर्प्य ततः स्वयम्।। ६ ।।

तदादायोत्थितं दृष्ट्वा दुर्वासास्तं विलोकयन् ।।

उवाच मधुरं वाक्यं मुनिं लक्षणतत्परः ।। ७ ।।

क्षणं सहस्व विप्रेन्द्र यावत्स्नात्वा व्रजाम्यहम् ।।

तिष्ठतिष्ठ क्षणं तिष्ठ आगच्छाम्येष साप्रतम् ।। ८ ।।

इत्युक्त्वा स जगामैव दुर्वासाः स्वाश्रमं तदा ।। ९ ।।

विश्वामित्रस्तपोनिष्ठस्तदा सानुरिवाऽचलः ।।

दिव्यं वर्षसहस्रं स तस्थौ स्थिरमतिस्तदा ।। 2.8.5.१० ।।

तस्य शुश्रूषणपरो मुनिः कौत्सो यतव्रतः ।।

बभूव परमोदारमतिर्विगतमत्सरः ।। ११ ।।

पुनरागत्य स मुनिर्दुर्वासा गतकल्मषः ।।

भुक्त्वा च पायसं सद्यः स जगाम निजाश्रमम् ।। १२ ।।

तस्मिन्गते मुनिवरे विश्वामित्रस्तपोनिधिः ।।

कौत्सं विद्यावतां श्रेष्ठं विससर्ज गृहान्प्रति ।। १३ ।।

स विसृष्टो गुरुं प्राह दक्षिणा प्रार्थ्यतामिति ।।

विश्वामित्रस्तु तं प्राह किं दास्यसि दक्षिणाम् ।।

दक्षिणा तव शुश्रूषा गृहं व्रज यतव्रत ।। १४ ।।

पुनःपुनर्गुरुं प्राह शिष्यो निर्बन्धवान्यदा ।।

तदा गुरुर्गुरुक्रुद्धः शिष्यं प्राह च निष्ठुरम् ।। १५ ।।

सुवर्णस्य सुवर्णस्य चतुर्दश समाहर ।।

कोटीर्मे दक्षिणा विप्र पश्चाद्गच्छ गृहं प्रति ।। १६ ।।

इत्युक्तो गुरुणा कौत्सो विचार्य समुपागमत् ।।

काकुत्स्थं दिग्विजेतारं ययाचे गुरुदक्षिणाम्।। १७ ।।

इत्युक्तं ते मुनिवर त्वया पृष्टं हि यत्पुनः ।।

अतोऽन्यच्छृणु ते वच्मि तीर्थकारणमुत्तमम् ।। १८ ।।

तस्माद्दक्षिणदिग्भागे संभेदः सिद्धसेवितः ।।

तिलोदकीसरय्वोश्च संगत्या भुवि संश्रुतः ।। १९ ।।

तत्र स्नात्वा महाभाग भवन्ति विरजा नराः ।।

दशानामश्वमेधानां कृतानां यत्फलं भवेत् ।।

तदाप्नोति स धर्मात्मा तत्र स्नात्वा यतव्रतः ।। 2.8.5.२० ।।

स्वर्णादिकं च यो दद्याद्ब्राह्मणे वेदपारगे ।।

शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ।। २१ ।।

तिलोदकीसरय्वोश्च संगमे लोकविश्रुते ।।

दत्त्वान्नं च विधानेन न स भूयोऽभिजायते ।। २२ ।।

उपवासं च यः कृत्वा विप्रान्संतर्पयेन्नरः ।।

सौत्रामणेश्च यज्ञस्य फलमाप्नोति मानवः ।। २३ ।।

एकाहारस्तु यस्तिष्ठेन्मासं तत्र यतव्रतः ।।

यावज्जीवकृतं पापं सहसा तस्य नश्यति ।। २४ ।।

नभस्य कृष्णामावस्यां यात्रा सांवत्सरी भवेत् ।।

रामेण निर्मिता पूर्वं नदी सिंधुरिवापरा ।। २५ ।।

सिंधुजानां तुरंगाणां जलपानाय सुव्रत ।।

तिलवच्छ्याममुदकं यतस्तस्यां सदा बभौ ।। २६ ।।

तिलोदकीति विख्याता पुण्यतोया सदा नदी ।।

संगमादन्यतो यस्यां तिलोदक्यां शुचिव्रतः ।।

स्नातो विमुच्यते पापैः सप्तजन्मार्जितैरपि ।। २७ ।।

तस्मात्तिलोदकीस्नानं सर्वपापहरं मुने ।।

कर्त्तव्यं सुप्रयत्नेन प्राणिभिर्धर्मकांक्षिभिः ।।

स्नानं दानं व्रतं होमं सर्वमक्षयतां व्रजेत् ।। २८।।

इति विविधविधानैस्तीर्थयात्रांक्रमेण प्रथितगुणविकासः प्राप्तपुण्योविधाय ।।

हरिमुपहृतभावः पूजयन्सर्वतीर्थं व्रजति परमधाम न्यस्तपापः कथञ्चित् ।। २९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोयामाहात्म्ये तिलोदकीप्रभाववर्णनंनाम पञ्चमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०६



।। अगस्त्य उवाच ।। ।।

तस्मात्संगमतो विप्र पश्चिमे दिक्तटे स्थितम् ।।

सीताकुण्डमितिख्यातं सर्वकामफलप्रदम् ।। १ ।।

यत्र स्नात्वा नरो विप्र सर्वपापैः प्रमुच्यते ।।

सीतया किल तत्कुण्डं स्वयमेव विनिर्मितम् ।।

रामेण वरदानाच्च महाफलनिधीकृतम् ।। २ ।।

।। श्रीराम उवाच ।। ।।

शृणु सीते प्रवक्ष्यामि माहात्म्यं भुवि यादृशम् ।।

त्वत्कुण्डस्यास्य सुभगे त्वत्प्रीत्या कथयाम्यहम्।। ३ ।।

अत्र स्नानं च दानं च जपो होमस्तपोऽथवा।।

सर्वमक्षयतां याति विधानेन शुचिस्मिते ।। ४ ।।

मार्गकृष्णचतुर्दश्यां तत्र स्नानं विशेषतः ।।

सर्वपापहरं देवि सर्वदा स्नायिनां नृणाम् ।। ५ ।।

इति रामो वरं प्रादात्सीतायै च प्रजाप्रियः ।।

तदाप्रभृति सर्वत्र तत्तीर्थं भुवि वर्त्तते ।। ६ ।।

सीताकुण्डमिति ख्यातं जनानां परमाद्भुतम् ।।

तस्मिंस्तीर्थे नरः स्नात्वा नूनं राममवाप्नुयात् ।। ७ ।।

तत्र स्नानेन दानेन तपसा च विशेषतः ।।

गन्धैर्माल्यैर्धूपदीपैर्न्नानाविभवविस्तरैः ।।

रामं संपूज्य सीतां च मुक्तः स्यान्नात्र संशयः ।। ८ ।।

मार्गे मासि च स्नातव्यं गर्भवासो न जायते ।।

अन्यदापि नरः स्नात्वा विष्णुलोकं स गच्छति ।। ९ ।।

विभोर्विष्णुहरेर्विप्र रम्ये पश्चिमदिक्तटे ।।

देवश्चक्रहरिर्नाम सर्वाभीष्टफलप्रदः ।। 2.8.6.१० ।।

तस्य चक्रहरेर्विप्र महिमा न हि मानवैः ।।

शक्यो वर्णयितुं धीरैरपि बुद्धिमतां वरैः।।११।।

ततः पश्चिमदिग्भागे नाम्ना पुण्यं हरिस्मृति ।।

विष्णोरायतनं ख्यातं परमार्थफलप्रदम्।।

यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।। १२ ।।

तयोर्दर्शनतो यांति तेषां पापानि देहिनाम् ।।

तानि पापानि यावंति कुर्वते भुवि ये नराः ।। १३ ।।

पुरा देवासुरे जाते संग्रामे भृशदारुणे ।।

दैत्यैर्वरमदोत्सिक्तैर्देवा युधि पराजिताः ।। १४ ।।

तेषां पलायमानानां देवानामग्रणीर्हरः ।।

संस्तभ्य चैव तान्सर्वान्पुरस्कृत्यांबुजासनम् ।। १५ ।।

क्षीरोदशायिनं विष्णुं शेषपर्य्यंकशायिनम् ।।

लक्ष्म्योपविष्टं पार्श्वे च चरणांबुजहस्तया ।। १६ ।।

नारदाद्यैर्मुनिवरैरुद्गीतगुगौरवम् ।।

गरुडेन पुरःस्थेनानिशमंजलिना स्तुतम् ।। १७ ।।

क्षीराब्धिजलकल्लोलमदबिन्द्वंकिताम्बरम् ।।

तारकोत्करविस्फारतारहारविराजितम् ।। ।। १८ ।।

पीतांबरमतिस्मेरविकाशद्भावभावितम् ।।

बिभ्रतं कुण्डलं स्थूलं कर्णाभ्यां मौक्तिकोज्ज्वलम् ।। १९ ।।

रत्नवल्लीमिव स्वच्छां श्वेतद्वीपनिवासिनीम् ।।

किरीटं पद्मरागाणां वलयं दधतं परम् ।। 2.8.6.२० ।।

मित्रस्य राहुवित्रासनिवर्त्तनमिवापरम् ।।

सकौस्तुभप्रभाचक्रं बिभ्राणं प्रवलारुणम् ।। २१ ।।

परां चतुर्मुखोत्पत्तिकल्पसंकल्पनामिव ।।

शरणं स जगामाशु विनीतात्मा स्तुवन्निति ।। २२ ।।

तस्मिन्नवसरे शंभुः सर्वदेवगणैः सह ।।

तुष्टाव प्रयतो भूत्वा विष्णुं जिष्णुं सुरद्विषाम् ।। २३ ।।

।। ईश्वर उवाच ।। ।।

संसारार्णवसंतारसुपर्णसुखदायिने ।।

मोह तीव्रतमो हारि चन्द्राय हरये नमः ।। २४ ।।

स्फुरत्संविन्मणिशिखां चित्तसंगतिचंद्रिकाम् ।।

प्रपद्ये भगवद्भक्तिमानसोद्यानवाहिनीम् ।। २५ ।।

हेलोल्लसत्समुत्साहशक्तिं व्याप्तजगत्त्रयाम् ।।

या पूर्वकोटिर्भावानां सत्त्वानां वैष्णवीति वा ।। २६ ।।

पवनांदोलितांभोजदलपर्वांतवर्त्तिनाम् ।।

पततामिव जन्तूनां स्थैर्यमेका हरिस्मृतिः ।। २७ ।।

नमः सूर्य्यात्मने तुभ्यं संवित्किरणमालिने ।।

हृत्कुशेशयकोषश्रीसमुन्मेषविधायिने ।। २८ ।।

नमस्तस्मै यमवते योगिनां गतये सदा ।।

परमेशाय वै पारे महसां तमसां तथा ।। २९ ।।

यज्ञाय भुक्तहविष ऋग्यजुःसामरूपिणे ।।

नमः सरस्वतीगीतदिव्यसद्गणशालिने ।। 2.8.6.३० ।।

शांताय धर्मनिधये क्षेत्रज्ञायामृतात्मने ।।

शिष्ययोगप्रतिष्ठाय नमो जीवैकहेतवे ।।

घोराय मायाविधये सहस्रशिरसे नमः ।। ३१ ।।

योगनिद्रात्मने नाभिपद्मोद्भूतजगत्सृजे ।।

नमः सलिलरूपाय कारणाय जगत्स्थितेः ।। ३२ ।।

कार्यमेयाय बलिने जीवाय परमात्मने ।।

गोप्त्रे प्राणाय भूतानां नमो विश्वाय वेधसे ।। ३३ ।।

दृप्ताय सिंहवपुषे दैत्यसंहारकारिणे ।।

वीर्यायानंतमनसे जगद्भावभृते नमः ।। ३४ ।।

संसारकारणाज्ञानमहासंतमसच्छिदे ।।

अचिन्त्यधाम्ने गुह्याय रुद्रायात्युद्विजे नमः ।। ३५ ।।

शान्ताय शान्तकल्लोलकैवल्यपददायिने ।।

सर्वभावातिरिक्ताय नमः सर्वमयात्मने ।। ३६ ।।

इन्दीवरदलश्यामं स्फूर्जत्किंजल्कविभ्रमम्।।

बिभ्राणं कौस्तुभं विष्णुं नौमि नेत्ररसायनम् ।। ३७ ।।

।। अगस्त्य उवाच ।। ।।

इति स्तुतः प्रसन्नात्मा वरदो गरुडध्वजः ।।

ववर्ष दृष्टिसुधया सर्वान्देवान्कृपान्वितः ।।

उवाच मधुरं वाक्यं प्रश्रयावनतान्सुरान् ।। ।। ३८ ।।

।। श्रीभगवानुवाच ।। ।।

जानामि विबुधाः सर्वमभिप्रायं समाधितः ।।

दैतेयैर्विक्रमाक्रान्तं पदं समरदर्पितैः ।। ३९ ।।

सबलैर्बलहीनानां प्रतापो विजितः परैः ।।

सांप्रतं तु विधास्यामि तपो युष्मद्बलाय वै ।। 2.8.6.४० ।।

अयोध्यानगरे गत्वा करिष्ये तप उत्तमम् ।।

गुप्तो भूत्वा भवत्तेजोविवृद्ध्यै दैत्यशान्तये ।। ४१ ।।

भवन्तोऽपि तपस्तीव्रं कुर्वंत्वमलमानसाः ।।

अयोध्यां प्राप्यतां देवा दैत्यनाशाय सत्वरम् ।। ४२ ।। ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वांतर्दधे देवान्देवो गरुडवाहनः ।।

अयोध्यामागतः क्षिप्रं चकार तप उत्तमम् ।। ४३ ।।

गुप्तो भूत्वा यदा विद्वन्सुरतेजोभिवृद्धये ।।

तेन गुप्तहरिर्नाम देवो विख्यातिमागतः ।। ४४ ।।

आगतस्य हरेः पूर्वं यत्र हस्ततलाच्च्युतम् ।।

सुदर्शनाख्यं तच्चक्रं तेन चक्रहरिः स्मृतः ।। ४५ ।।

तयोर्दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।।

हरस्तेन प्रभावेण देवाः प्रबलतेजसः ।। ४६ ।।

जित्वा दैत्यान्रणैः सर्वान्संप्राप्य स्वपदान्यथ ।।

रेजिरे विपुलानंदैरसुरानार्दयंस्ततः ।। ४७ ।।

ततः सर्वे समेत्याशु बृहस्पतिपुरस्सराः ।।

देवाः सर्वेऽनमन्मौलिमालाच्चिर्चित पदाम्बुजम् ।।

हरिं द्रष्टुमथागच्छन्नयोध्यायां समुत्सुकाः ।। ४८ ।।

आगत्य च ततः श्रुत्वा नानाविधगुणादरम् ।।

भावैः पुण्यैः समभ्यर्च्य नत्वा प्रांजलयस्तदा ।।

हरिमेकाग्रमनसा ध्यायन्तो ध्याननिष्ठिताः ।। ४९ ।।

तानागतान्समालोक्य पदभक्त्या कृतानतीन् ।।

प्रसन्नः प्राह विश्वात्मा पीतवासा जनार्दनः ।। 2.8.6.५० ।।

।। श्रीभगवानुवाच ।। ।।

भोभो देवा भवन्तश्च चिराद्दिष्ट्याद्यसंगताः ।।

अधुना भवतामिच्छां कां करोमि सुरा अहम् ।।

तद्ब्रूत त्वरिता मह्यं किं विलंबेन निर्भयाः ।। ५१ ।।

देवा ऊचुः ।। ।।

भगवन्देवदेवेश त्वया संप्रति सर्वशः ।।

सर्वं समभवत्कार्यं निष्पन्नं वै जगत्पते ।। ५२ ।।

तथापि सर्वदा भाव्यं नित्यं देव त्वया विभो ।।

अस्मद्रक्षार्थमत्रैव विजितेन्द्रियवर्त्मना ।।५३।।

एवमेव सदा कार्यं शत्रुपक्षविनाशनम् ।।५४।।

।। श्रीभगवानुवाच ।। ।।

एवमेतत्करिष्यामि भवतामरिसंजयम् ।।

श्रीमतां तेजसो वृद्धिं करिष्यामि सदासुराः ।।

कथेयं च सदा ख्यातिं लोके यास्यति चोत्तमाम् ।। ५५ ।।

अयं नाम्ना गुप्तहरिर्देवो भुवनविश्रुतः ।।

मदीयं परमं गुह्यं स्थानं ख्यातिं समेष्यति ।।५६ ।।

अत्र यः प्राणिनां श्रेष्ठः पूजायज्ञजपादिकम् ।।

करोति परया भक्त्या स याति परमां गतिम्।। ५७।।

अत्र यः कुरुते दानं यथाशक्त्या जितेन्द्रियः ।।

स स्वर्गमतुलं प्राप्य न शोचति कदाचन ।। ५८ ।।

अत्र मत्प्रीतये देवाः प्राणिभिर्धर्मकांक्षिभिः ।।

दातव्या गौः प्रयत्नेन सवत्सा विधिपूर्वकम् ।। ।। ५९ ।।

स्वर्णशृंगी रौप्यखुरी वस्त्रद्वयसमावृता ।।

कांस्योपदोहना ताम्रपृष्ठी बहुगुणान्विता।। 2.8.6.६०।।

रत्नपुच्छा दुग्धवती घंटाभरणभूषिता ।।

अर्चिता गंधपुष्पाद्यैः सुप्रसन्नाऽमृतप्रजा ।। ६१ ।।

द्विजाय वेदविज्ञाय गुणिने निर्मलात्मने ।।

विष्णुभक्ताय विदुषे आनृशंस्यरताय च ।। ६२ ।।

ब्राह्मणाय च गौर्देया सर्वत्रसुखमश्नुते ।।

न देया द्विजमात्राय दातारं सोऽवपातयेत् ।। ६३ ।।

मत्प्रीतयेऽत्र दातव्या निर्मलेनांतरात्मना ।। ६४ ।।

स्नातं यैश्च विशुद्ध्यर्थमत्र मद्भक्तितत्परैः ।।

तेषां स्वर्गतयो नित्यं मुक्तिः करतले स्थिता ।। ६५ ।।

तथा चक्रहरेः पीठे मत्प्रीत्यै दानमुत्तमम् ।।

जपहोमादिकं चापि कर्त्तव्यं यत्नतो नरैः ।। ६६ ।।

भवन्तोऽपि विधानेन यात्रां कुर्वंतु सत्तमाः ।।

अस्माद्गुप्तहरेः स्थानान्निकटे संगमे शुभे ।। ६७ ।।

प्रत्यग्भागे गोप्रताराद्योजनत्रयसंमिते ।।

घर्घरांबुतरंगिण्या सरयूः संगता यतः ।। ६८ ।।

अत्र स्नात्वा विधानेन द्रष्टव्योऽत्र प्रयत्नतः ।।

देवो गुप्तहरिर्नाम सर्वकामार्थसिद्धिदः ।। ६९ ।।

।। अगस्त्य उवाच ।। ।।

इत्युक्त्वांतर्दधे देवः पीताम्बरधरोऽच्युतः ।।

देवा अपि विधानेन कृत्वा यात्रां प्रयत्नतः ।।

अयोध्यायां स्थिता नित्यं हरेर्गुणविमोहिताः ।। 2.8.6.७० ।।

तदाप्रभृति विप्रेंद्र तत्स्थानं भुवि पप्रथे ।।

कार्तिक्यां तु विशेषेण यात्रा सांवत्सरी भवेत् ।। ७१ ।।

विभोर्गुप्तहरेस्तत्र संगमस्नानपूर्विका ।।

गोप्रतारे च तीर्थेऽस्मिन्सरयूघर्घराश्रिते ।।

स्नात्वा देवोऽर्चनीयोऽयं सर्वकामफलप्रदः ।। ७२ ।।

तथा चक्रहरेर्यात्रा कर्त्तव्या सुप्रयत्नतः ।।

मार्गशार्षस्य विशदे पक्षे हरितिथौ नरैः ।। ७३ ।।

एवं यः कुरुते यात्रां विष्णुलोके स मोदते ।।७४ ।।

।। श्रीसूत उवाच ।। ।।

एवमुक्त्वा तु विरते मुनौ कलशजन्मनि ।।

कृष्णद्वैपायनो व्यासः पुनराह सविस्मयः ।। ७५ ।।

।। व्यास उवाच ।। ।।

अत्याश्चर्य्यमयीं ब्रह्मन्कथामेतां तपोधन ।।

उक्तवानसि येनैतत्साश्चर्य्यं मम मानसम् ।। ७६ ।।

विस्तरेण मम ब्रूहि माहात्म्यं परमाद्भुतम् ।। ७७ ।।

शृणु संगममाहात्म्यं विप्रेंद्र परमाद्भुतम् ।।

स्कन्ददेवाच्छ्रुतं सम्यक्कथयामि तथा तव ।। ७८ ।।

दशकोटिसहस्राणि दशकोटिशतानि च ।।

तीर्थानि सरयूनद्या घर्घरोदकसंगमे ।।

निवसंति सदा विप्र स्कन्दादवगतं मया ।।७९ ।।

देवतानां सुराणां च सिद्धानां योगिनां तथा ।।

ब्रह्मविष्णुशिवानां च सान्निध्यं सर्वदा स्थितम् ।। 2.8.6.८० ।।

तस्मिन्संगमसलिले नरः स्नात्वा समाहितः ।।

संतर्प्य पितृदेवांश्च दत्त्वा दानं स्वशक्तितः ।। ८१ ।।

हुत्वा वैष्णवमंत्रेण शुचिर्यत्फलमाप्नुयात् ।।

तदिहैकमना विप्र शृणु यत्कथयामि ते ।। ८२ ।।

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।।

कुरुक्षेत्रे महाक्षेत्रे राहुग्रस्ते दिवाकरे ।। ८३ ।।

सुवर्णदाने यत्पुण्यमहन्यहनि तद्भवेत् ।। ८४ ।।

अमावास्यां पौर्णमास्यां द्वादश्योरुभयोरपि ।।

अयने च व्यतीपाते स्नानं वैष्णवलोकदम् ।। ८५ ।।

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।।

विधिवत्संगमे स्नायात्पौष्यां तदविशेषतः ।। ८६ ।।

लंबतेऽवाक्छिरा यस्तु युगानामयुतं पुमान् ।।

स्नातानां शुचिभिस्तोयैः संगमे प्रयतात्मनाम् ।। ८७ ।।

व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ।। ८८ ।।

पौषे मासि विशेषेण स्नानं बहुफलप्रदम् ।। ८९ ।।

पौषे मासि विशेषेण यः कुर्यात्स्नानमादृतः ।।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा वर्णसंकरः ।।

स याति ब्रह्मणः स्थानं पुनरावृत्तिवर्जितम् ।।2.8.6.९० ।।

पौषे मासे तु यो दद्याद्घृताढ्यं दीपमुत्तमम् ।।

विधिवच्छ्रद्धया विप्र शृणु तस्यापि यत्फलम् ।।९१।।

नानाजन्मार्जितं पापं स्वल्पं बह्वपि वा भवेत् ।।

तत्सर्वं नश्यति क्षिप्रं तोयस्थं लवणं यथा ।। ।। ९२ ।।

आयुरारोग्यमैश्वर्यं संततीः सौख्यमुत्तमम् ।।

प्राप्नोति फलदं नित्यं दीपदः पुण्यभाङ्नरः ।। ९३ ।।

यस्तु शुक्लत्रयोदश्यां पौषेऽत्र प्रयतो व्रती ।।

जागरं कुरुते धीरः स गच्छेद्भवनं हरेः ।। ९४ ।।

जागरं विदधद्रात्रौ दीपं दत्त्वा तु सर्वशः ।।

होमं च कारयेद्विप्रो नियतात्मा शुचिव्रतः ।। ९५ ।।

वैष्णवो विष्णुपूजां च कुर्वञ्छृण्वन्हरेः कथाम् ।।

गीतवादित्रनृत्यैश्च विष्णुतोषणकारकैः ।।

कथाभिः पुण्ययुक्ताभिर्जागृयाच्छर्वरीं नरः ।। ९६ ।।

ततः प्रभाते विमले स्नात्वा विधिवदादरात् ।।

विष्णुं संपूज्य विप्रांश्च देयं स्वर्णादि शक्तितः ।। ९७ ।।

स्वर्णं चान्नं च वासांसि यो दद्याच्छ्रद्धयाऽन्वितः ।।

संगमे विधिवद्विद्वान्स याति परमां गतिम् ।। ९८ ।।

वर्षेवर्षे तु कर्तव्यो जागरः पुण्यतत्परैः ।। ९९ ।।

हरिः पूज्यो द्विजाः सम्यक्संतोष्याः शक्तितो नरैः ।।

तेन विष्णोः परा तुष्टिः पापानि विफलानि च ।।

भवंति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।। ।। 2.8.6.१०० ।।

तत्र स्नातो दिवं याति अत्र स्नातः सुखी भवेत ।। १०१ ।।

त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।।

तर्प्यमाणाः परां तृप्तिं यांति संगमजैर्जलैः ।। १०२ ।।

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।।

गतिमन्वेषमाणानां न संगमसमा गतिः ।। १०३ ।।

सप्तावरान्सप्तपरान्पुरुषश्चात्मनासह ।।

पुंसस्तारयते सर्वान्संगमे स्नानमाचरन् ।। १०४ ।।

जात्यंधैरिह ते तुल्यास्तथा पंगुभिरेव च ।।

समेत्यात्र च न स्नान्ति सरयूघर्घरसंगमे ।। १०५ ।।

वर्णानां ब्राह्मणो यद्वत्तथा तीर्थेषु संगमः ।।

सरयूघर्घरायोगे वैष्णवस्थो नरः सदा ।। १०६ ।।

अत्र स्नानेन दानेन यथा शक्त्या जितेंद्रियः ।।

होमेन विधिपुक्तेन नरः स्वर्गमवाप्नुयात् ।। १०७ ।।

नरो वा यदि वा नारी विधिवत्स्नानमाचरेत् ।।

स्वर्गलोकनिवासो हि भवेत्तस्य न संशयः ।। १०८ ।।

यथा वह्निर्दहेत्सर्वं शुष्कमार्द्रमथापि वा ।।

भस्मीभवंति पापानि तत्समागममज्जनात् ।। १०९ ।।

एकतः सर्वतीर्थानि नानाविधिफलानि वै ।।

सरयूघर्घरोत्पन्नसंगमस्त्वधिको भवेत् ।। 2.8.6.११० ।।

सर्वतीर्थावगाहस्य फलं यादृक्स्मृतं श्रुतौ ।।

तादृक्फलं नृणां सम्यग्भवेत्संगममज्जनात् ।। १११ ।।

गोप्रताराभिधं तीर्थमपरं वर्ततेऽनघ ।।

सन्निधौ संगमस्यैव महापातकनाशनम् ।। ११२ ।।

यत्र स्नानेन दानेन न शोचति नरः क्वचित् ।।

गोप्रतारसमं तीर्थं न भूतं न भविष्यति ।। ११३ ।।

वाराणस्यां यथा विद्वन्वर्त्तते मणिकर्णिका ।।

उज्जयिन्यां यथा विप्र महाकालनिकेतनम् ।। ११४ ।।

नैमिषे चक्रवापी तु यथा तीर्थतमा स्मृता ।।

अयोध्यायां तथा विप्र गोप्रताराभिधं महत् ।। ११५ ।।

यत्र रामाज्ञया विद्वन्साकेतनगरीजनाः ।।
अवापुः स्वर्गमतुलं निमज्ज्य परमांभसि ।। ११६ ।।
।। व्यास उवाच ।। ।।
अवापुस्ते कथं स्वर्गं साकेतनगरीजनाः ।।
कथं च राघवो विद्वन्नेतत्कथय सुव्रत ।। ११७ ।।
।। अगस्त्य उवाच ।। ।।
सावधानः शृणु मुने कथामेतां सुविस्तरात् ।।
यथाजगाम रामोऽसौ स्वर्गं स च पुरीजनः ।। ११८ ।।
पुरा रामो विधायैव देवकार्य्यमतंद्रितः ।।
स्वर्गं गंतुं मनश्चक्रे भ्रातृभ्यां सह वीरधीः ।। ११९ ।।
ततो निशम्य चारेण वानराः कामरूपिणः ।।
ऋक्षगोपुच्छरक्षांसि समुत्पेतुरनेकशः ।। 2.8.6.१२० ।।
देवगंधर्वपुत्राश्च ऋषिपुत्राश्च वानराः ।।
रामक्षयं विदित्वा तु सर्व एव समागताः ।। १२१ ।।
ते राममनुगत्योचुः सर्वे वानरयूथपाः ।।
तवानुगमने राजन्संप्राप्ताः स्म इहानघ ।। १२२ ।।
यदि राम विनास्माभिर्गच्छेस्त्वं पुरुषर्षभ ।।
सर्वे खलु हताः स्याम दण्डेन महता नृप ।। १२३ ।।
श्रुत्वा तु वचनं तेषामृक्षवानररक्षसाम्।।
विभीषणमुवाचाथ राघवस्तत्क्षणं गिरा ।। २२४ ।।
यावत्प्रजा धरिष्यंति तावदेव विभीषण ।।
कारयस्व महद्राज्यं लंकां त्वं पालयिष्यसि ।। १२५ ।।
शाधि राज्यं च खल्वेतन्नान्यथा मे वचः कुरु ।।
प्रजास्त्वं रक्ष धर्मेण नोत्तरं वक्तुमर्हसि ।। १२६।।
एवमुक्त्वा तु काकुत्स्थो हनुमंतमथाब्रवीत् ।।
वायुपुत्र चिरं जीव मा प्रतिज्ञां वृथा कृथाः ।। १२७ ।।
यावल्लोका वदिष्यंति मत्कथां वानरर्षभ ।।
तावत्त्वं धारय प्राणान्प्रतिज्ञां प्रतिपालयन् ।। १२८ ।।

मैन्दश्च द्विविदश्चैव अमृतप्राशनावुभौ ।।
यावल्लोका धरिष्यंति तावदेतौ धरिष्यतः ।। १२९ ।।
पुत्रपौत्राश्च येऽस्माकं तान्रक्षन्त्विह वानराः ।।
एवमुक्त्वा तु काकुत्स्थः सर्वानथ च वानरान् ।।
मया सार्धं प्रयातेति तदा तान्राघवोऽब्रवीत् ।। 2.8.6.१३० ।।
प्रभातायां तु शर्वर्य्यां पृथुवक्षा महाभुजः ।।
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ।। १३१ ।।
अग्निहोत्राणि यांत्वग्रे दीप्यमानानि सर्वशः ।।
वाजपेयातिरात्राणि निर्यातु च ममाग्रतः ।। १३२ ।।
ततो वसिष्ठस्तेजस्वी सर्वं निश्चित्य चेतसा ।।
चकार विधिवत्कर्म महाप्रास्थानिकं विधिम् ।। १३३ ।।
ततः क्षौमाम्बरधरो ब्रह्मचर्यसमन्वितः ।।
कुशानादाय पाणिभ्यां महाप्रस्थानमुद्यतः ।। ।। १३४ ।।
न व्याहरच्छुभं किंचिदशुभं वा नरेश्वरः ।।
निष्क्रम्य नगरात्तस्मात्सागरादिव चंद्रमाः ।। १३५ ।।
रामस्य सव्यपार्श्वे तु सपद्मा श्रीः समाश्रिता ।।
दक्षिणे ह्रीर्विशालाक्षी व्यवसायस्तथाग्रतः ।। १३६ ।।
नानाविधायुधान्यत्र धनुर्ज्याप्रभृतीनि च ।।
अनुव्रजंति काकुत्स्थं सर्वे पुरुष विग्रहाः ।। १३७ ।।
वेदो ब्राह्मणरूपेण सावित्री सव्यदक्षिणे ।।
ॐकारोऽथ वषङ्कारः सर्वे रामं तदाऽव्रजन् ।। १३८ ।।
ऋषयश्च महात्मानः सर्वे चैव महीधराः ।।
अनुगच्छन्ति काकुत्स्थं स्वर्गद्वारमुपस्थितम् ।। १३९ ।।
तथानुयांति काकुत्स्थमंतःपुरगताः स्त्रियः ।।
सवृद्धाबालदासीकाः सपर्षद्द्वाररक्षकाः ।। 2.8.6.१४० ।।
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ।।
रामं व्रजंतमागम्य रघुवंशमनुव्रताः ।। १४१ ।।
ततो विप्रा महात्मानः साग्निहोत्राः समंततः ।।

सपुत्रदाराः काकुत्स्थमनुगच्छति सर्वशः ।। १४२ ।।

मंत्रिणो भृत्ययुक्ताश्च सपुत्राः सहबांधवाः ।।

सर्वे ते सानुगाश्चैव ह्यनु गच्छंति राघवम् ।। १४३ ।।

ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः ।।

गच्छंतमनुगच्छंतिराघवं गुणरंजिताः ।। १४४ ।।

तथा प्रजाश्च सकलाः सपुत्राश्च सवबांधवाः ।।

राघवस्यानुगाश्चासन्दृष्ट्वा विगतकल्मषम् ।। १४५ ।।

स्नाताः शुक्लाम्बरधराः सर्वे प्रयतमानसाः ।।

कृत्वा किलकिलाशब्दमनुयाताश्च राघवम् ।। १४६ ।।

न कश्चित्तत्र दीनोऽभून्न भीतो नातिदुःखितः ।।

प्रहृष्टा मुदिताः सर्वे वभूवुः परमाद्भुताः ।। १४७ ।।

द्रष्टुकामाश्च निर्वाणं राज्ञो जनपदास्तथा ।।

संप्राप्तास्तेऽपि दृष्ट्वैव नभोमार्गेण चक्रिणम् ।। १४८ ।।

ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ।।

आगत्य परया भक्त्या पृष्ठतः समुपाययुः ।। १४९ ।।

तानि भूतानि नगरे ह्यन्तर्धानगतान्यपि ।।

राघवं तेऽप्यनुययुः स्वर्गद्वारमुपस्थितम् ।। 2.8.6.१५० ।।

यानि पश्यंति काकुत्स्थं स्थावराणि चराणि च ।।

सत्त्वानि स्वर्गगमने मतिं कुर्वंति तान्यपि ।। १५१ ।।

नासीत्सत्त्वमयोध्यायां सुसूक्ष्ममपि किंचन ।।

यद्राघवं नानुयाति स्वर्गद्वारमुपस्थितम् ।। १५२ ।।

अथार्द्धयोजनं गत्वा नदीं पश्चान्मुखो ययौ ।।

सरयूं पुण्यसलिलां ददर्श रघुनंदनः।। १५३ ।।

अथ तस्मिन्मुहूर्ते तु ब्रह्मा लोकपितामहः ।।

सर्वैः परिवृतो देवैर्ऋषिभिश्च महात्मभिः ।।

आययौ तत्र काकुत्स्थं स्वर्गद्वारमुपस्थितम् ।। १५४ ।।

विमानशतकोटीभिर्दिव्याभिः सर्वतो वृतः ।।

दीपयन्सर्वतो व्योम ज्योतिर्भूतमनुत्तमम् ।। १५५ ।।

स्वयंप्रभैश्च तेजोभिर्महद्भिः पुण्यकर्मभिः ।।
पुण्या वाता ववुस्तत्र गन्धवंतः सुखप्रदाः ।। १५६ ।।
सपुण्यपुष्पवर्षं च वायुयुक्तं महाजवम् ।।
गन्धर्वैरप्सरोभिश्च तस्मिन्सूर्यउपस्थितः ।।१५७ ।।
शरयूसलिलं रामः पद्भ्यां स समुपास्पृशत् ।।
ततो ब्रह्मा सुरैर्युक्तः स्तोतुं समुपचक्रमे ।।१५८।।
त्वं हि लोकपतिर्देव न त्वां जानाति कश्चन ।।
अहं ते वै विशालाक्ष भूतपूर्वपरिग्रहः ।। १५९ ।।
त्वमचिंत्यं महद्भूतमक्षयं लोकसंग्रहे ।।
यामिच्छसि महावीर्य तां तनुं प्रविश स्वकाम् ।। 2.8.6.१६० ।।
पितामहस्य वचनादिदमेवाविशत्स्वयम् ।।
सुदिव्यं वैष्णवं तेजः संसारं स सहानुजः ।।
ततो विष्णुतनुन्देवाः पूजयन्तः सुरोत्तमम् ।। १६१ ।।
साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः ।।
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसस्तथा ।।
सुपर्णा नागयक्षाश्च दैत्यदानवराक्षसाः ।। १६२ ।।
देवाः प्रहृष्टा मुदिताः सर्वे पूर्णमनोरथाः ।।
साधुसाध्विति ते सर्वे त्रिदिवस्था बभाषिरे ।। १६३ ।।
अथ विष्णुर्महातेजाः पितामहमुवाच ह ।।
एषां लोकं जनौघानां दातुमर्हसि सुव्रत ।। १६४ ।।
इमे तु सर्वे मत्स्नेहादायाताः सर्वमानवाः ।।
भक्ताश्च भक्तिमन्तश्च त्यक्तात्मानोऽपि सर्वशः ।। १६५ ।।
तच्छ्रुत्वा विष्णुकथितं सर्वलोकेश्वरोऽब्रवीत् ।।
लोकं सन्तानिकं नाम संस्थास्यंति हि मानवाः ।। १६६ ।।
स्वर्गद्वारेऽत्र वै तीर्थे राममेवानुचिन्तयन् ।।
प्राणांस्त्यजति भक्त्या वै स संतानं परं लभेत् ।। १६७ ।।
सर्वे संतानिकंनाम ब्रह्मलोकादनन्तरम् ।।
वानराश्च स्वकां योनिं राक्षसाश्चापि राक्षसीम्।।१६८।।

यस्या विनिःसृता ये वै सुरासुरतनूद्भवाः ।।

आदित्यतनयश्चैव सुग्रीवः सूर्यमण्डलम् ।। १६९ ।।

ऋषयो नागयक्षाश्च प्रयास्यन्ति स्वकारणम् ।।

तथा ब्रुवति देवेशे गोप्रतारमुपस्थितम् ।। 2.8.6.१७० ।।

तज्जलं सरयूं भेजे परिपूर्णं ततो जलम् ।।

अवगाह्य जलं सर्वे प्राणांस्त्यक्त्वा प्रहृष्टवत् ।। १७१ ।।

मानुषं देहमुत्सृज्य ते विमानान्यथारुहन् ।।

तिर्यग्योनिगता ये च प्रविश्य सरयूं तदा ।। १७२ ।।

देहत्यागं च ते तत्र कृत्वा दिव्यवपुर्द्धराः ।।

तथान्यान्यपि सत्त्वानि स्थावराणि चराणि च ।। १७३ ।।

प्राप्य चोत्तमदेहं वै देवलोकमुपागमन् ।।

तस्मिंस्तत्र समापन्ने वानरा ऋक्षराक्षसाः ।।

तेऽपि प्रविविशुः सर्वे देहान्निक्षिप्य वै तदा ।। १७४ ।।

तदा स्वर्गं गताः सर्वे स्मृत्वा लोकगुरुं विभुम् ।।

जगाम त्रिदशैः सार्द्धं रामो हृष्टो महामतिः ।। १७५ ।।

अतस्तद्गोप्रताराख्यं तीर्थं विख्यातिमागतम् ।।

गोप्रतारे परो मोक्षो नान्यतीर्थेषु विद्यते ।। १७६ ।।

जन्मान्तरशतैर्विप्र योगोऽयं यदि लभ्यते ।।

मुक्तिर्भवति तत्त्वेकजन्मना लभ्यते न वा ।। १७७ ।।

गोप्रतारे न सन्देहो हरिर्भक्त्या सुनिष्ठितः ।।

एकेन जन्मनान्योऽपि योगमोक्षं च विन्दति ।। १७८ ।।

गोप्रतारे नरो विद्वान्योऽपि स्नाति सुनिश्चितः ।।

विशत्यसौ परं स्थानं योगिनामपि दुर्लभम् ।। ।। १७९ ।।

कार्तिक्यां च विशेषेण स्नातव्यं विजितेन्द्रियैः ।।

कार्तिके मासि विप्रर्षे सर्वे देवाः सवासवाः ।।

स्नातुमायान्त्ययोध्यायां गोप्रतारे विशेषतः ।। 2.8.6.१८० ।।

गोप्रतारसमं तीर्थं न भूतं न भविष्यति ।।

यत्र प्रयागराजोऽपि स्नातुमायाति कार्तिके ।। १८१ ।।

निष्पापः कलुषं त्यक्त्वा शुक्लांगः सितकंचुकः ।।
शुद्ध्यर्थं साधुकामोऽसौ प्रयागे मुनिसत्तमः ।। १८२ ।।
यानि कानि च तीर्थानि भूमौ दिव्यानि सुव्रत ।।
कार्तिक्यां तानि सर्वाणि गोप्रतारे वसन्ति वै ।। १८३ ।।
गोप्रतारे जपो होमः स्नानं दानं च शक्तितः ।।
सर्वमक्षयतां याति श्रद्धया नियमव्रतम् ।। १८४ ।।
कार्तिके प्राप्य तद्यन्ति तीर्थानि सकलान्यपि ।।
गोप्रतारं गमिष्यामः पापं त्यक्तुमितीच्छया ।। १८५ ।।
गोप्रतारे कृतं स्नानं सर्वपापप्रणाशनम् ।।
गोप्रतारे नरः स्नात्वा दृष्ट्वा गुप्तहरिं विभुम् ।।
सर्वपापैः प्रमुच्येत नात्र कार्या विचारणा ।। १८६ ।।
विष्णुमुद्दिश्य विप्राणां पूजनं च विशेषतः ।।
कर्त्तव्यं श्रद्धया युक्तैः स्नानपूर्वं यतव्रतैः ।। १८७ ।।
पयस्विनी च गौर्देया सालंकारा च शक्तितः ।।
विप्राय वेदविदुषे नियमव्रतशालिने ।।
ब्राह्मणायातिशुचये विष्णुप्रीत्यै यतात्मना ।। १६८ ।।
अन्नं बहुविधं हेम वासांसि विविधानि च ।।
दातव्यानि हरेः प्राप्त्यै भक्त्या परमया युतैः ।। १८९ ।।
सूर्यग्रहे कुरुक्षेत्रे नर्मदायां शशिग्रहे ।।
तुलादानस्य यत्पुण्यं तदत्र दीपदानतः ।। 2.8.6.१९० ।।
घृतेन दीपको यस्य तिलतैले न वा पुनः ।।
ज्वलते मुनिशार्दूल हयमेधेन तस्य किम् ।। १९१ ।।
तेनेष्टं क्रतुभिः सर्वैः कृतं तीर्थावगाहनम् ।।
दीपदानं कृतं येन कार्त्तिके केशवाग्रतः ।। १९२ ।।
नानाविधानि तीर्थानि भुक्तिमुक्तिप्रदानि च ।।
गोप्रतारस्य तान्यत्र कलां नार्हति षोडशीम् ।। १९३ ।।
स्वर्णमल्पं च यो दद्याद्ब्राह्मणे वेदपारगे ।।
शुभां गतिमवाप्नोति ह्यग्निवच्चैव दीप्यते ।।१९४।।

गोप्रताराभिधे तीर्थे त्रिलोकीविश्रुते द्विज ।।

दत्त्वान्नं च विधानेन न स भूयोऽभिजायते ।। १९५ ।।

तत्र स्नानं तु यः कुर्याद्विप्रान्संतर्पयेन्नरः ।।

सौत्रामणेश्च यज्ञस्य फलं प्राप्नोति मानवः ।। १९६ ।।

एकाहारस्तु यस्तिष्ठेन्मासं तत्र यतव्रतः ।।

यावज्जीवकृतं पापं सहसा तस्य नश्यति ।। १९७ ।।

अग्निप्रवेशं ये कुर्युर्गोप्रतारे विधानतः ।।

ते विशंति पदं विष्णोर्निःसंदग्धं तपोधन ।। १९८ ।।

कुर्वंत्यनशनं येऽत्र विष्णुभक्त्या सुनिश्चिताः ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। १९९ ।।

अर्चयेद्यस्तु गोविंदं गोप्रतारे हि मानवः ।।

दशसौवर्णिकं पुण्यं गोप्रतारे प्रकथ्यते ।। 2.8.6.२०० ।।

अग्निहोत्रफलो धूपो गोविंदस्य समर्पितः ।।

भूमिदानेन सदृशं गंधदानफलं स्मृतम् ।। २०१ ।।

अत्यद्भुतमिदं विद्वन्स्थानमेतत्प्रकीर्तितम् ।।

कार्तिक्यां तु विशेषेण अत्र स्नात्वा शुचिव्रतः ।। २०२ ।।

स्वर्गद्वारे नरः स्नात्वा दशस्वर्णफलं लभेत् ।।

स्वर्णदः स्वर्गवासी च यो दद्याच्छ्रद्धयान्वितः ।। २०३ ।।

सुतीर्थे पर्वणि श्रेष्ठे दशस्वर्णफलप्रदे ।।

ज्येष्ठशुक्लचतुर्दश्यां रात्रौ जागरणं चरेत् ।। २०४ ।।

उपोषितः शुचिः स्नातो विष्णुपूजनतत्परः ।।

दीपं दद्यात्प्रयत्नेन नानाफलविधायिनम् ।। २०५ ।।

तावद्वर्जंति पुण्यानि स्वर्गे मर्त्ये रसातले ।।

यावद्दद्याज्जले दीपं कार्त्तिके केशवाग्रतः ।। २०६ ।।

पौर्णमास्यां प्रभाते तु स्नात्वा निर्मलमानसः ।।

हरिं संपूज्य विधिवद्विधाय श्राद्धमादरात् ।। २०७ ।।

दत्त्वान्नं च यथाशक्त्या संतोष्य ब्राह्मणांस्ततः ।।

वस्त्रादिभिरलंकारैः संपूज्य द्विजदंपती ।। २०८ ।।

विभुं गुप्तहरिं दृष्ट्वा संपूज्य तु विशेषतः ।।

नमस्कृत्यानु तत्तीर्थं शुचिस्तद्गतमानसः ।। २०९ ।।

स्वर्गद्वारे च विधिवन्मध्याह्ने स्नानमाचरेत् ।।

सर्वपापविशुद्धात्मा विष्णुलोके महीयते ।। 2.8.6.२१० ।।

इति परमविधानैर्गोप्रतारे विधाय प्रथितसुकृतमूर्त्तिः स्नानमुच्चैः प्रयत्नात् ।।

कलितनिखिलपापः पूजयित्वादरेणाच्युतममलविकाशो विष्णुसायुज्यमेति ।। २११ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये स्वर्गद्वारगोप्रतारतीर्थमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/h2y
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | अयोध्यामाहात्म्यम्

।। अगस्त्य उवाच ।। ।।

तीर्थमन्यत्प्रवक्ष्यामि क्षीरोदकमिति स्मृतम् ।।

सीताकुण्डाच्च वायव्ये वर्त्तते गुणसुन्दरम् ।।

पुण्यैकनिचयस्थानं सर्वदुःखविनाशनम् ।। १ ।।

पुरा दशरथो राजा पुत्रेष्टिनाम नामतः ।।

चकार विधिवद्यज्ञं पुत्रार्थं यत्र चादरात् ।। २ ।।

क्रतुं समापयामास सानन्दो भूरिदक्षिणम् ।।

यज्ञान्ते क्रतुभुक्तत्र मूर्तिमान्समदृश्यत ।। ३ ।।

हस्ते कृत्वा हेमपात्रं हविःपूर्णमनुत्तमम् ।।

तस्मिन्हविषि संकीर्णं वैष्णवं तेज उत्तमम् ।।

चतुर्विधं विभज्यैव पत्नीभ्यो दत्तवान्नृपः ।। ४ ।।

यत्र तत्क्षीरसंप्राप्तिर्जाता परमदुर्लभा ।।

क्षीरोदकमिति ख्यातं तत्स्थानं पापनाशनम् ।।

उदकेनाभिव्यक्तं च उत्तमं च फलप्रदम् ।। ५ ।।

तत्र स्नात्वा नरो धीमान्विजितेन्द्रिय आदरात् ।।

सर्वान्कामानवाप्नोति पुत्रांश्च सुबहुश्रुतान् ।। ६ ।।

आश्विने शुक्लपक्षस्य एकादश्यां जितव्रतः ।।

तत्र स्नात्वा विधानेन दत्त्वा शक्त्या द्विजन्मने ।। ७ ।।

विष्णुं संपूज्य विधिवत्सर्वान्कामानवाप्नुयात् ।।

पुत्रानवाप्नुयाद्विद्वि धर्मांश्च विधिवन्नरः ।। ८ ।।

तस्मात्क्षीरोदकस्थानान्नैर्ऋते दिग्दले श्रितम् ।।

ख्यातं बृहस्पतेः कुण्डमुद्दंडाचंडमंडितम् ।। ९ ।।

सर्वपापप्रशमनं पुण्यामृततरंगितम् ।।

यत्र साक्षात्सुरगुरुर्निवासं किल निर्ममे ।। 2.8.7.१० ।।

यज्ञं च विधिवच्चक्रे बृहस्पतिरुदारधीः ।।

नानामुनिगणैर्युक्तं रम्यं बहुफलप्रदम् ।।

सुपर्णच्छायसंपन्नं कुण्डं तत्पापिदुर्ल्लभम् ।। ११ ।।

इन्द्रादयोऽपि विबुधा यत्र स्नात्वा प्रयत्नतः ।।

मनोभीष्टफलं प्राप्ताः सौंदर्यौदार्यतुंदिलाः ।। १२ ।।

यत्र स्नानेन दानेन नरो मुच्येत किल्बिषात् ।। १३ ।।

भाद्रे शुक्ले तु पंचम्यां यात्रा तत्र फलप्रदा ।।

अन्यदापि गुरोर्वारे स्नानं बहुफलप्रदम् ।। १४ ।।

बृहस्पतेस्तथा विष्णोः पूजां तत्र य आचरेत् ।।

सर्वपापविनिर्मुक्तो विष्णुलोके स मोदते ।। १५ ।।

भवेद्बृहस्पतेः पीडा यस्य गोचरवेधतः ।।

तेनात्र विधिवत्स्नानं कार्यं संकल्पपूर्वकम् ।। १६ ।।

होमं कृत्वा गुरोर्मूर्तिः सुवर्णेन विनिर्मिता ।।

स्थित्वा जले प्रदेया वै पीतांबरसमन्विता ।। १७ ।।

वेदज्ञायातिशुचये स्नात्वा पीडापनुत्तये ।।

होमं च कारयेत्तत्र ग्रहजाप्यविधानतः ।। १८ ।।

एवं कृते न संदेहो ग्रहपीडा प्रणश्यति ।। १९ ।।

तद्दक्षिणे मुनिश्रेष्ठ रुक्मिणीकुण्डमुत्तमम् ।।

चकार यत्स्वयं देवी रुक्मिणी कृष्णवल्लभा ।। 2.8.7.२० ।।

तत्र विष्णुः स्वयं चक्रे निवासं सलिले तदा ।।

वरप्रदानात्स्नेहेन भार्यायाः प्रगुणीकृतम् ।। २१ ।।

तत्र स्नानं तथा दानं होमं वैष्णवमंत्रकम् ।।

द्विजपूजां विष्णुपूजां कुर्वीत प्रयतो नरः ।। २२ ।।

तत्र सांवत्सरी यात्रा कर्त्तव्या सुप्रयत्नतः ।।

ऊर्जकृष्णनवम्यां च सर्वपापापनुत्तये ।। ।। २३ ।।

पुत्रवाञ्जायते वन्ध्यो यात्रां कृत्वा न संशयः ।।

नारीभिर्वा नरैर्वापि कर्त्तव्यं स्नानमादरात् ।। २४ ।।

भुक्त्वा भोगान्समग्रांश्च विष्णुलोके स मोदते ।।

लक्ष्मीकामनया तत्र स्नातव्यं च विशेषतः ।। २५ ।।

सर्वकाममवाप्नोति तत्र स्नानेन मानवः ।।

रुक्मिणीश्रीपतिप्रीत्यै दातव्यं च स्वशक्तितः ।। २६ ।।

कर्त्तव्या विधिवत्पूजा ब्राह्मणानां विशेषतः ।।

ध्येयो लक्ष्मीपतिस्तत्र शंखचक्रगदाधरः ।। २७ ।।

पीतांबरधरः स्रग्वी नारदादिभिरीडितः ।।

तार्क्ष्यासनो मुकुटवान्महेन्द्रादिविभूषितः ।। २८ ।।

सर्वकामफलावाप्त्यै वक्षोलक्षितकौस्तुभः ।।

अतसीकुसुमश्यामः कमलामललोचनः ।। २९ ।।

एवं कृते न संदेहः सर्वान्कामानवाप्नुयात् ।।

इह लोके सुखं भुक्त्वा हरिलोके स मोदते ।। 2.8.7.३० ।।

अतः परं प्रवक्ष्यामि तीर्थमन्यदघापहम् ।।

कलिकिल्विषसंहारकारकं प्रत्ययात्मकम् ।। ३१ ।।

परं पवित्रमतुलं सर्वकामार्थसिद्धिदम् ।।

धनयक्षइतिख्यातं परं प्रत्ययकारकम् ।। ३२ ।।

रुक्मिणीकुण्डवायव्यदिग्दले संस्मृतं शुभम् ।।

हरिश्चन्द्रस्य राजर्षेरासीत्तत्र धनं महत् ।। ३३ ।।

तस्य रक्षार्थमत्यर्थं रक्षितो यक्षउच्चकैः ।।

विश्वामित्रो मुनिः पूर्वं यदा चैव पराजयत् ।। ३४ ।।

हरिश्चंद्रं नरपतिं राज्यसूयकरं परम् ।।

राज्यं जग्राह सकलं चतुरंगबलान्वितम् ।। ।। ३५ ।।

तद्वशेऽदाच्च स मुनिर्धनं सकलमुत्तमम् ।।

तद्रक्षायै प्रयत्नेन यक्षं स्थापितवानसौ ।। ३६ ।।

प्रमंथुर इति ख्यातं प्रमोदानन्दमंदिरम् ।।

रक्षां विदधतस्तस्य बहुयत्नेन सर्वशः ।। ३७ ।।

तुतोष स मुनिर्द्धीमान्कदाचिद्विजितेन्द्रियः ।।

उवाच मधुरं वाक्यं प्रीत्या परमया युतः ।। ३८ ।।

।। विश्वामित्र उवाच ।।

वरं वरय धर्मज्ञ क्षिप्रमेव विमत्सरः।।

भक्त्या परमया धीर संतुष्टोऽस्मि विशेषतः।।३९।।

।।यक्ष उवाच ।।।।

वरं प्रयच्छसि यदि विप्रवर्य मदीप्सितम्।।

ममांगमतिदुर्गंधि शापाच्च नृपतेरभूत्।।

सुगन्धयितुं ब्रह्मर्षे तत्प्रसीद मुनीश्वर ।।2.8.7.४०।।

।। अगस्त्य उवाच ।। ।।

एवमुक्ते तु यक्षेण मुनिर्ध्यानस्थलोचनः।।

तं विविच्यानया भक्त्या अभिषेकं चकार सः।।४१।।

तीर्थोदकेन विधिवत्कृत्वा संकल्पमादरात्।।

ततः सोऽभूत्क्षणेनैव सुगन्धोत्तरविग्रहः ।। ४२ ।।

तथाभूतः स मधुरं प्रोवाच प्रांजलिस्ततः ।।

पुनः पुरः स्थितो धीमान्विनयावनतस्तदा ।।४३।।

।। यक्ष उवाच ।। ।।

त्वत्कृपाभिरहं धीर जातः सुरभिविग्रहः।।

एतत्स्थानं यथा ख्यातिं याति सर्वज्ञ तत्कुरु ।। ४४ ।।

त्वत्प्रसादेन विप्रर्षे तथा यत्नं विधेहि वै ।। ४५ ।।

।। अगस्त्य उवाच ।। ।।

एवमुक्तः क्षणं ध्यात्वा मुनिः स्तिमितलोचनः ।।

यक्षं प्रति प्रसन्नात्मा ह्युवाच श्लक्ष्णया गिरा ।। ४६ ।।

।। विश्वामित्र उवाच ।। ।।

प्रसिद्धिमतुलां यक्ष एतत्स्थानं गमिष्यति ।।

धनयक्ष इति ख्यातिमेतत्तीर्थं गमिष्यति ।। ४७ ।।

सौंदर्य्यदं शरीरस्य परं प्रत्ययकारकम् ।।

यत्र स्नात्वा विधानेन दौर्गंध्यं त्यजति क्षणात् ।।

तत्र स्नानं प्रयत्नेन कर्तव्यं पुण्यकांक्षिभिः ।। ४८ ।।

दानं श्रद्धास्वशक्तिभ्यां लक्ष्मीपूजा विशेषतः ।।

तत्र स्नानेन दानेन लक्ष्मीप्रीत्यै विशेषतः ।। ४९ ।।

पूजया तु निधीनां च नवानामपि सुव्रत ।।

इह लोके सुखं भुक्त्वा परलोके स मोदते ।। 2.8.7.५० ।।

महापद्मस्तथा पद्मः शंखो मकरकच्छपौ ।।

मुकुन्दकुंदनीलाश्च खर्वश्च निधयो नव ।। ५१ ।।

एतेषामपि कुण्डेऽत्र संनिधिर्भविताऽनघ ।।

एतेषां तु विशेषेण पूजा बहुफलप्रदा।।५२।।

जलमध्ये प्रकर्त्तव्यं निधिलक्ष्मीप्रपूजनम्।।५३।।

अन्नं बहुविधं देयं वासांसि विविधानि च।।५४।।

सुवर्णादि यथाशक्त्या वित्तशाठ्यं विवर्जयेत् ।।

गुप्तं दानं प्रयत्नेन कर्त्तव्यं सुप्रयत्नतः ।।५५।।

फलानि च सुवर्णानि देयानि च विशेषतः ।।५६।।

कृष्णपक्षे चतुर्दश्यां स्नानं बहुफलप्रदम् ।।

श्रद्धया परया युक्तैः कर्त्तव्यं श्रद्धयाधिकम् ।। ५७ ।।

माघे कृष्णचतुर्दश्यां यात्रा सांवत्सरी भवेत् ।।

तत्र स्नानं पितॄणान्तु तर्पणं च विशेषतः ।। ५८ ।।

आब्रह्मस्तम्बपर्यंतं जगत्तृप्यत्विति ब्रुवन् ।।

अपसव्येन विधिवत्तर्प्पयेदंजलित्रयम् ।। ५९ ।।

एवं कुर्वन्नरो यक्ष न मुह्यति कदाचन ।।

अत्र स्नातो दिवं याति अत्र स्नातः सुखी भवेत् ।।2.8.7.६०।।

अत्र स्नातेन ते यक्ष कर्त्तव्यं पूजनं पुरः ।।

त्वत्पूजनेन विधिवन्नृणां पापक्षयो भवेत् ।। ६१ ।।

नमः प्रमथराजेति पूजामन्त्र उदाहृतः ।।

तीर्थमध्ये प्रकर्त्तव्यं पूजनं श्रवणादिकम् ।। ६२ ।।

निधिलक्ष्म्यो तथा यक्ष तव पूजा विशेषतः ।।

एवं यः कुरुते धीरः सर्वान्कामानवाप्नुयात् ।।६३।।

धनार्थी धनमाप्नोति पुत्रार्थी पुत्रमाप्नुयात् ।।

मोक्षार्थी मोक्षमाप्नोति तत्किं न यदिहाप्यते ।। ६४ ।।

यस्तु मोहान्नरो यक्ष स्नानं न कुरुते किल ।।

तस्य सांवत्सरं पुण्यं त्वं ग्रहीष्यसि सर्वशः ।। ६५ ।।

इति दत्त्वा वरांस्तस्मै विश्वामित्रो मुनीश्वरः।।

अन्तर्दधे मुनिवरस्तदा स च तपोनिधिः ।।६६।।

तदाप्रभृति तत्स्थानं परमां ख्यातिमाययौ ।।

तस्य तीर्थस्य सकला भूमिः स्वर्णविनिर्मिता ।।६७ ।।

दिव्यरत्नौघखचिता समंतादुपशोभिता ।।

एवं यः कुरुते विद्वन्स याति परमां गतिम् ।। ६८ ।।

धनयक्षादुत्तरस्मिन्दिग्भागे संस्थितं द्विज ।।

वसिष्ठकुण्डं विख्यातं सर्वपापापहं सदा ।। ६९ ।।

वसिष्ठस्य सदा तत्र निवासः सुतपोनिधेः ।।

अरुन्धती सदा यस्य वर्तते निर्मलव्रता ।। 2.8.7.७० ।।

अत्र स्नानं विशेषेण श्राद्धपूर्वमतंद्रितः ।।

यः कुर्यात्प्रयतो धीमांस्तस्य पुण्यमनुत्तमम् ।। ७१ ।।

वामदेवस्य तत्रैव संनिधिर्वर्ततेऽनघ ।।

वशिष्ठवामदेवौ तु पूजनीयौ प्रयत्नतः ।। ७२ ।।

पतिव्रता पूजनीयाऽरुन्धती च विशेषतः ।।

स्नातव्यं विधिना सम्यग्दातव्यं च स्वशक्तितः ।। ७३ ।।

सर्वकामफलप्राप्तिर्जायते नात्र संशयः ।।

अत्र यः कुरुते स्नानं स वशिष्ठसमो भवेत् ।। ७४ ।।

भाद्रे मासि सिते पक्षे पंचम्यां नियतव्रतः ।।

तस्य सांवत्सरी यात्रा कर्तव्या विधिपूर्विका ।। ७५ ।।

विष्णुपूजा प्रयत्नेन कर्तव्या श्रद्धयात्र वै ।।

सर्वपापविशुद्धात्मा विष्णुलोके महीयते ।। ७६ ।।

वसिष्ठकुण्डाद्विप्रेंद्र प्रत्यग्दिग्दलमाश्रितम् ।।

विख्यातं सागरं कुण्डं सर्वकामार्थसिद्धिदम् ।।

यत्र स्नानेन दानेन सर्वकामानवाप्नुयात् ।। ७७ ।।

पौर्णमास्यां समुद्रस्य स्नानाद्यत्पुण्यमाप्नुयात् ।।

तत्पुण्यं पर्वणि स्नातो नरश्चाक्षयमाप्नुयात् ।। ७८ ।।

तस्मादत्र विधानेन स्नातव्यं पुत्रकांक्षया ।।

आश्विने पौर्णमास्यां तु विशेषात्स्नानमाचरेत् ।। ७९ ।।

एवं कुर्वन्नरो विद्वान्सर्वपापैः प्रमुच्यते ।।

अत्र स्नात्वा नरो दत्त्वा यथाशक्त्या दिवं व्रजेत् ।। 2.8.7.८० ।।

सागरान्नैर्ऋते भागे योगिनीकुण्डमुत्तमम् ।।

यत्राऽऽसते चतुःषष्टियोगिन्यो जलसंस्थिताः ।। ८१ ।।

सर्वार्थसिद्धिदाः पुंसां स्त्रीणां चैव विशेषतः ।।

परसिद्धिप्रदाः सर्वाः सर्वकामफलप्रदाः ।। ८२ ।।

आश्विने शुक्लपक्षस्य अष्टम्यां च विशेषतः ।।

स्नातव्यं च प्रयत्नेन योगिनीप्रीतये नृभिः ।। ८३ ।।

अत्र स्नानं तथा दानं सर्वं सफलतां व्रजेत् ।।

यक्षिणीप्रभृतयः सिद्धा भवंत्यत्र न संशयः ।। ।। ८४ ।।

योगिनीकुंडतः पूर्वमुर्वशीकुण्डमुत्तमम् ।।

यत्र स्नातो नरो विद्वन्नुर्वशीं दिवि संश्रयेत् ।। ८५ ।।

पुरा किल मुनिर्धीरो रैभ्यो नाम तपोधनः ।।

चचार हिमवत्पार्श्वे निराहारो जितेन्द्रियः ।। ८६ ।।

तत्तपो विपुलं दृष्ट्वा भीतः सुरपतिस्ततः ।।

उर्वशीं प्रेषयामास तपोविघ्नाय चादरात् ।। ८७ ।।

ततः सा प्रेषिता तेनाजगाम गजगामिनी ।।

उवास हिमवत्पार्श्वे रैभ्याश्रममनुत्तमम् ।। ८८ ।।

वनफुल्ललताकुञ्जे मञ्जुकूजद्विहंगमे ।।

किन्नरीकेलिसंगीतस्तिमितांगकुरंगके ।। ८९ ।।

पुन्नागकेशराशोकच्छिन्नकिंजल्कपिंजरे ।।

कल्पिते कांचनगिरौ द्वितीय इव वेधसा ।। 2.8.7.९० ।।

सा बभौ कांतिसर्वस्वकोशः कुसुमधन्वनः ।।

उर्वश्यनल्पसामान्यलावण्यामृतवाहिनी ।। ९१ ।।

अंगप्रभासुवर्णेन सितमौक्तिकशोभिता ।।

तारुण्यरुचिरत्वेन तारुण्येन विभूषिता ।। ९२ ।।

विलोमलोचनापांगतरंगधवलत्विषा ।।

नवपल्लवसच्छायं कल्पयन्ती निजाधरम् ।। ९३ ।।

कर्णोपलम्बिसंघुष्यद्भृङ्गाढ्यचूतमञ्जरी ।।

सुधागर्भसमुद्भूता पारिजातलता यथा ।। ९४ ।।

तनुमध्या पृथुश्रोणिर्वर्णोद्भिन्नपयोधरा ।।

निःशाणितशरस्येव शक्तिः कुसुमधन्वनः ।। ९५ ।।

अपश्यदाश्रमे तस्मिन्मुनिरायतलोचनाम् ।।

नयनानलदाहेन विदग्धेन मनोभुवा ।। ९६ ।।

त्रिनेत्रवंचनायैव कल्पितां ललनातनुम् ।।

तामाश्रमलतापुष्पकांचीरचितकुण्डलाम् ।। ९७ ।।

विलोक्य तां विशालाक्षीं मुनिर्व्याकुलितेन्द्रियः ।।

बभूव रोषसंतप्तः शशाप च बहु ज्वलन् ।।९८।।

।। रैभ्य उवाच ।। ।।

कुरूपतां व्रज क्षिप्रं या त्वं सौंदर्यगर्विता ।।

समागता तपोविघ्नहेतवे मम सन्निधौ ।। ९९ ।।

।। अगस्त्य उवाच ।। ।।

इति शप्ता रुषा तेन मुनिना सा शुभेक्षणा ।।

उवाच वनिता भूत्वा प्रांजलिर्मुनिमादरात् ।।।। 2.8.7.१०० ।।

।। उर्वश्युवाच ।। ।।

भगवन्मे प्रसीद त्वं पराधीना यतस्त्वहम् ।।

त्वच्छापस्य कथं मुक्तिर्भविता नियतव्रत ।। १०१ ।।

।। रैभ्य उवाच ।। ।।

अयोध्यायामस्ति तीर्थं पावनं परमं महत् ।।

तत्र स्नानं कुरुष्वाद्य सौंदर्यं परमाप्नुहि ।। १०२ ।।

त्वन्नाम्नैव च विख्यातिं तोयं यास्यति तद्ध्रुवम् ।। १०३ ।।

।। अगस्त्य उवाच ।। ।।

एवं सा विप्रवचसा विदधे सर्वमादरात् ।।

सुन्दरी साऽभवत्क्षिप्रं तत्स्थानं ख्यातिमाययौ ।।१०४।।

अत्र स्नानं मुनिश्रेष्ठ यः कुर्याद्विधिवज्जनः ।।
सौंदर्यं परमं तस्य भवेत्तत्र न संशयः ।।१०५।।
भाद्रे शुक्लतृतीयायां यात्रा सांवत्सरी भवेत् ।।
विष्णुरत्र जनैः पूज्यः सर्वकामार्थसिद्धये ।। १०६ ।।
एवं कुर्वन्नरो विद्वान्विष्णुलोके वसेत्सदा ।।
नरो वा यदि वा नारी सर्वान्कामानवाप्नुयात् ।। ।।१०७।।
घोषार्ककुंडं परममुर्वशीकुंडदक्षिणे ।।
वर्तते मुनिशार्दूल सर्वपापापहं सदा ।।१०८।।
यत्र स्नानेन दानेन सूर्यलोके महीयते ।।
एतत्तीर्थस्य सदृशं नापरं विद्यते क्वचित् ।। १०९ ।।
व्रणी कुष्ठी दरिद्री वा दुःखाक्रांतोऽपि यो नरः ।।
करोति विधिवत्स्नानं सर्वान्कामानवाप्नुयात् ।। 2.8.7.११० ।।
रविवारे विशेषेण कर्त्तव्यं स्नानमादरात् ।।
भाद्रे मासि तथा माघे शुक्लषष्ठ्यां प्रयत्नतः ।। १११ ।।
कर्त्तव्यं विधिवत्स्नानं सूर्यलोकाभिकांक्षया ।।
पौषे मासि तथा स्नानं सूर्यवारे विशेषतः ।। ११२ ।।
सप्तम्यां रवियुक्तायां स्नानं बहुफलप्रदम् ।।
घोषाभिधोऽभवत्पूर्वं सूर्यवंशे नरेश्वरः ।। ११३ ।।
समुद्रमेखलामेकः पृथिवीं समपालयत् ।।
यस्य कीर्त्या प्रकाशंते त्रिलोकीमंडलानि वै ।। ११४ ।।
यः प्रतापात्स्फुरन्भाति प्रभाकर इवापरः ।।
प्रचंडतरदोर्दंडखंडितारातिमंडलः ।। ११५ ।।
स कदाचित्प्रजापालो मंत्रिविन्यस्तभूतलः ।।
बभ्राम मृगयासक्तो वनेऽतिगहनद्रुमे ।। ११६ ।।
स राजा पूर्वजन्मोत्थपापैरशुभसूचकैः ।।
कृमिव्याप्तकरांभोजः सुन्दरोपि गतस्मयः ।। ११७ ।।
मृगयायामभूदेकः कदाचित्पर्यटन्वने ।।
वराहसिंहहरिणान्निघ्नन्गच्छन्नितस्ततः ।। ११८ ।।

तृषाक्रान्तो म्लानतनुः सरोऽपश्यत्पुरो नृपः ।।

ददर्श तत्र च मुनीन्स्नानसंध्यादितत्परान् ।। ११९ ।।

ततो विधिवदाचम्य स्नानं चक्रे नरेश्वरः ।।

ततो दिव्यशरीरोऽभूदानंदामलमानसः ।। 2.8.7.१२० ।।

मुनिभिस्तीर्थमाज्ञाय चक्रे सूर्य्यस्तुतिं प्रियाम् ।। १२१ ।। ।।

।। राजोवाच ।। ।।

भगवन्देवदेवेश नमस्तुभ्यं चिदात्मने ।।

नमः सवित्रे सूर्याय जगदानंददायिने ।। १२२ ।।

प्रभागेहाय देवाय त्रयीभूताय ते नमः ।।

विवस्वते नमस्तुभ्यं योगज्ञाय सदात्मने ।।१२३।।

पराय परमेशाय त्रिलोकीतिमिरच्छिदे ।।

अचिन्त्याय सदा तुभ्यं नमो भास्करतेजसे ।। ।। १२४ ।।

योगप्रियाय योगाय योगज्ञाय सदा नमः ।।

ॐकाराय वषट्काररूपिणे ज्ञानरूपिणे ।। १२५ ।।

यज्ञाय यज्ञमानाय हविषे ऋत्विजे नमः ।।

रोगघ्नाय स्वरूपाय कमलानंददायिने ।। १२६ ।।

अतिसौम्यातितीक्ष्णाय सुराणां पतये नमः ।।

सत्राशाय नमस्तुभ्यं भक्तत्राय प्रियात्मने ।। १२७ ।।

प्रकाशकाय सततं लोकानां हितकारिणे ।।

प्रसीद प्रणतायाद्य मह्यं भक्तिकृते स्वयम् ।। १२८ ।।

।। अगस्त्य उवाच ।। ।।

इत्येवं ब्रुवतस्तस्य स प्रसन्नो रविः स्वयम् ।।

आविर्बभूव सहसा भक्तस्य प्रियकाम्यया ।।

उवाच मधुरं वाक्यं प्रश्रयानतमूर्द्धजम् ।। १२९ ।। ।।

।। रविरुवाच ।। ।।

वरं वरय राजेंद्र प्रसन्नोऽस्मि तवाग्रतः ।।

ददामि तद्वरं तेऽद्य यत्त्वया मनसेप्सितम् ।। 2.8.7.१३० ।।

।। राजोवाच ।। ।।

भगवन्भास्करानंत प्रयच्छसि वरं यदि ।।

मन्नाम्ना कृतमूर्त्तिस्ते तिष्ठत्वत्र सदा विभो ।। १३१ ।।

।। रविरुवाच ।। ।।

एवमस्तु मनुष्येंद्र तव वांछा मनोहरा ।।

एतत्स्तोत्रं त्वयोक्तं मे ये पठिष्यंति मानवाः ।। १३२ ।।

तेभ्यस्तुष्टः प्रदास्यामि सर्वान्कामान्नरेश्वर ।।

एतत्स्थानं परां ख्यातिं त्वन्नाम्ना यास्यति क्षितौ ।। १३३ ।।

सर्वान्कामानवाप्नोति योऽत्र स्नानं समाचरेत्।।

मद्भक्तेन सदा राजन्कर्त्तव्यं स्नानमत्र वै ।। १३४ ।।

यंयं काममिहेच्छेत तंतं काममवाप्नुयात् ।। १३५ ।।

।। अगस्त्य उवाच ।। ।।

इति दत्त्वा वरं देवः कृपया परया युतः ।।

भास्वान्सहस्रकिरणस्तदान्तर्द्धानमाययौ ।। १३६ ।।

राजा भास्करदेहोत्थां रविमूर्तिमनुत्तमाम् ।।

तत्र संस्थापयामास पूजयामास च स्वयम् ।। १३७ ।।

घोषार्ककुण्डं तन्नाम्ना तत्र ख्यातिं जगाम ह ।।

यत्र स्नानान्नरो राजन्सूर्य्यलोके वसेत्सदा ।। १३८ ।।

इति रुचिरविधानैस्तूर्णमादित्यमूर्त्तिं विमलपरमभक्त्या पूजयित्वाऽऽदरेण ।।

तदमृतमयकुण्डे स्नानमादौ विधाय प्रचुरविमलकीर्तिः सूर्यलोके वसेत्सः ।। १३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये बृहस्पतिकुण्डरुक्मिणीकुण्डधनयक्षतीर्थ वसिष्ठकुण्डसागरकुण्ड योगिनीकुण्डोर्वशीकुण्डघोषार्ककुंड माहात्म्यवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०८



।। अगस्त्य उवाच ।। ।।

घोषार्कतीर्थाद्विप्रर्षे पश्चिमे दिक्तटे स्थितम् ।।

रतिकुण्डमिति ख्यातं सर्वपापहरं सदा ।। १ ।।

यत्र स्नानेन दानेन परां कांतिमवाप्नुयात् ।।

तत्पश्चिमदिशाभागे कुसुमायुधनामकम् ।। २ ।।

कुंडं प्रसिद्धमतुलं सर्वकामार्थसिद्धये ।।

यत्र स्नानेन दानेन कन्दर्पसदृशाकृतिम् ।।

लभते ना विधानेन मुने नास्त्यत्र संशयः ।। ३ ।।

रतिकुंडे तथा विप्र कुसुमायुधकुण्डके ।।

श्रद्धया कुरुते स्नानं स सौख्यपरमो भवेत् ।। ४ ।।

कुण्डद्वयेऽत्र मिथुनं यत्स्नानं कुरुते किल ।।

रतिकामाविव ख्यातौ सदा तौ सुंदरौ तदा ।। ५ ।।

तस्मादत्र विधानेन स्नातव्यं धर्मकांक्षिभिः ।।

दानं देयं यथाशक्त्या रतिकंदर्पतुष्टये ।। ६ ।।

भवेतां नियतं तस्य संतुष्टौ रतिमन्मथौ ।।

माघे विशदपंचम्यां यत्र स्नानं शुभप्रदम् ।। ७ ।।

रतिकुंडे पुरः स्नात्वा पश्चात्कंदर्प्पकुंडके ।।

स्नातव्यं तद्दिने विप्र मिथुनेन प्रयत्नतः ।। ८ ।।

रतिकंदर्प्पयोः पूजा विधातव्या विशेषतः ।।

वस्त्रादिभिरलंकारैः संपूज्यौ द्विजदंपती ।। ९ ।।

सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ।। 2.8.8.१० ।।

चंदनागुरुकर्पूरकस्तूरीकुंकुमादिभिः ।।

वासोभिर्विविधैः पुष्पैः पूजयेद्द्विजदम्पती ।। ११ ।।

एवं कृते न संदेहो रतिकंदर्पतुष्टये ।।

तद्व्रजेन्मिश्रुनं विप्र रतिकंदर्प्पतुल्यताम् ।। १२ ।।

कुसुमायुधकुंडात्तु प्रतीच्यां दिशि संस्थितम् ।।

मन्त्रेश्वर इति ख्यातं तत्स्थानं भुवि दुर्लभम् ।। १३ ।।

तत्र तीर्थे नरः स्नात्वा दृष्ट्वा मन्त्रेश्वरं विभुम् ।।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। १४ ।।

पुरा रामो देवकार्यं विधायामलकर्मकृत् ।।

कालेन सह संगम्य मन्त्रं चक्रे नरेश्वरः ।। १५ ।।

स्वर्गं प्रति प्रयाणाय यत्र स्नातौ जितेंद्रियः ।।

तत्रैव स्थापितं लिंगं मन्त्रेश्वर इति श्रुतम् ।। १६ ।।

तदुत्तरे सरो रम्यं कुमुदोत्पलमंडितम् ।।

तत्र स्नानं तथा दानं नानाफलदमुत्तमम् ।। १७।।

चैत्रशुक्लचतुर्दश्यां यात्रा सांवत्सरी स्मृता ।।

तत्र स्नानेन दानेन ब्राह्मणानां च पूजनात् ।।

अक्षयं स्वर्गमाप्नोति तत्र कार्या विचारणा ।। १६ ।।

मंत्रेश्वरस्य महिमा नहि केनापि शक्यते ।।

सम्यग्वर्णयितुं विप्र य उत्तमफलप्रदः ।।

मंत्रेश्वरसमं लिंगं न भूतं न भविष्यति ।। १९ ।।

सुगंधिपुष्पधूपादिकुसुमाद्यनुलेपनैः ।।

पूजनीयः प्रयत्नेन सर्वकामार्थसिद्धिदः ।। 2.8.8.२० ।।

एवं कृते न संदेहो मुक्तिस्तस्य करे स्थिता ।।

तत्रैवोत्तरभागे तु शीतला वर्ततेऽनघ ।। २१ ।।

तां संपूज्य नरो विद्वान्सर्वपापैः प्रमुच्यते ।।

सर्वदा पूजनं तस्याः सोमवारे विशेषतः ।।

कर्त्तव्यं सुप्रयत्नेन नृभिः सर्वार्थसिद्धये ।। २२ ।।

विस्फोटकादिकभये नरैश्च समुपस्थिते ।।

कर्तव्यं पूजनं सम्यग्रोगादिभयनाशनम् ।। २३ ।।

तदुत्तरे तु तत्रैव देवी वन्दीति विश्रुता ।।

यस्याः स्मरणमात्रेण निगडादिभयं नहि ।।२४।।

राज्ञा क्रुद्धेन ये बद्धाः शृंखलानिगडादिभिः ।।

बन्दी संस्मृत्य देवीं तु मुक्ताः स्युस्तत्क्षणाद्धि ते ।।२५।।

यात्रा तस्याः प्रयत्नेन कर्तव्या यत्नतो नरैः ।।

मंगले हि विशेषेण सर्वकामार्थसिद्धिदा ।।२६।।

गंधैः पुष्पैस्तथा धूपैर्दीपैरपि च सुव्रत ।।

नैवेद्यैर्विविधैर्वापि पूजनीया प्रयत्नतः ।। २७ ।।

बन्दीप्रीत्यै मुनिश्रेष्ठ देयं ब्राह्मणभोजनम् ।।

एवं कृते न संदेहः सर्वान्कामानवाप्नुयात् ।। २८ ।।

तदुत्तरस्मिंस्तत्रैव चुडकी भुवि कीर्तिता ।।

वर्तते परमा सिद्धिरूपिणी स्मरणान्नृणाम् ।। २९ ।।

सुसंदिग्धेषु कार्येषु भये च समुपस्थिते ।।

यस्याः स्मरणतो नृणां सर्वसिद्धिः प्रजायते ।। 2.8.8.३० ।।

अग्रे तस्याः सदा कार्या नृभिरंगुष्ठतो ध्वनिः ।।

दीपदानं प्रयत्नेन कर्त्तव्यं नियतात्मभिः ।। ३१ ।।

सर्वाभीष्टप्रदं नृणां दीपदानं प्रशस्यते ।।

चतुर्दश्यां चतुर्दश्यां तस्या यात्रा विनिर्मिता ।। ३२ ।।

ततः पूर्वदिशाभागे वर्त्तते तीर्थमुत्तमम् ।।

महारत्न इति ख्यातं सर्वतीर्थोत्तमोत्तमम् ।। ३३ ।।

यत्र स्नानेन दानेन पूजया च द्विजन्मनाम् ।।

सर्वकर्मार्थसिद्धिः स्यान्नात्र कार्या विचारणा ।। ३४ ।।

भाद्रे कृष्णचतुर्दश्यां यात्रा सांवत्सरी स्मृता ।।

यात्राऽऽस्ते किल मुख्याऽस्य महारत्ना इति श्रुता ।। ३५ ।।

महारत्न इति ख्यातं तस्मात्तीर्थमनुत्तमम् ।।

तत्र दानं प्रकर्त्तव्यं द्विजसंतोषकारकम् ।। ३६ ।।

नारीभिरपि विप्रर्षे कर्त्तव्यो जागरोत्सवः ।।

वीर्यसौभाग्यसंपन्नसर्वसौख्याय सर्वदा ।।

तत्र स्नानं प्रयत्नेन कर्त्तव्यं श्रद्धया नरैः ।। ३७ ।।

ततो नैऋत्यदिग्भागे दुर्भराख्यं सरा शुभम् ।।

वर्तते सुकृतोदारं महाभरसरस्तथा ।। ३८ ।।

तत्र स्नानादवाप्नोति सदा स्वर्गपदं नरः ।।

धनं बहुविधं देयं वासांसि विविधानि च ।। ।। ३९ ।।

शिवपूजा प्रकर्त्तव्या स्नात्वा कुण्डद्वये नरैः ।।

नानाविधेन भावेन भक्त्या परमया युतैः ।। 2.8.8.४० ।।

गन्धादिभिः शुभैः पुष्पैरर्च्चनीयो महेश्वरः ।।

नीलकंठोंऽधकारातिराराध्यो योगिनामपि ।। ४१ ।।

इति ध्यात्वा शिवं सार्द्धं निष्पापं प्रयतो नरः ।।

सर्वकामानवाप्याशु शिवलोके वसेत्सदा ।। ४२ ।।

एवं कृत्वा नरो विप्र सर्वपापैः प्रमुच्यते ।।

महाभरे वरे तीर्थे तथा दुर्भरसंज्ञके ।। ४३ ।।

भाद्रकृष्णचतुर्दश्यां यः कुर्य्याच्छ्रद्धयाऽन्वितः ।।

शिवपूजां च विधिवद्द्विजपूजां विशेषतः ।। ४४ ।।

यः करोति नरो भक्त्या शिवलोके स संवसेत् ।।

एवं कुर्वन्नरो विद्वान्न मुह्यति कदाचन ।। ४५ ।।

विष्णुरुद्रौ च तस्यातिसुप्रसन्नौ सनातनौ ।।

तयोः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।। ४६ ।।

अतः किं बहुनोक्तेन विप्रतीर्थमनुत्तमम् ।।

सर्वपापौघशमनं सर्वाभीष्टकरं सदा ।। ४७ ।।

अतः परं प्रवक्ष्यामि तीर्थमन्यच्छुभावहम् ।।

यत्र यात्रा तथा दानं विना भाग्यं न संभवेत् ।। ४८ ।।

ईशाने दुर्भरस्थानान्महाविद्याभिधं महत् ।।

तस्य दर्शनतो नृणां सिद्धयः स्युः करे स्थिताः ।। ४९ ।।

तदग्रे सरसि स्नात्वा महाविद्यां तु यो नरः ।।

पश्यति श्रद्धया भक्त्या स याति परमां गतिम् ।। 2.8.8.५० ।।

सिद्धपीठं तथा ख्यातं सम्यक्प्रत्ययकारकम् ।।

तत्र पूजा विधातव्या भक्त्या परमया द्विज ।। ५१ ।।

मंत्रं यः श्रद्धया विप्र शैवं शाक्तमथापि वा ।।

गाणपत्यं वैष्णवं वा तत्र यः प्रयतो नरः ।। ५२ ।।

एकाग्रमानसो विद्वन्नाराध्यावर्तयेत्सदा ।।

तस्य सिद्धिर्भवेन्नित्यं चमत्कारो भवेद्द्विज ।। ५३ ।।

तस्मादत्र प्रकर्तव्यं जपादिकमतंद्रितैः ।।

अष्टम्यां च नवम्यां च यात्रा स्यात्प्रतिमासिकी ।। ५४ ।।

देयान्यन्नानि बहुशो नानाविधफलानि च ।।

क्षीरेण स्नपनं कार्यं पूजनीया प्रयत्नतः ।। ५५ ।।

उच्चाटनादीन्यपि च मोहनादि विशेषतः ।।

अत्र स्थाने विशेषेण दुष्टमन्त्रोऽपि सिध्यति ।। ५६ ।।

सिद्धस्थाने परं मोक्षं वशीकरणमुत्तमम् ।।

जपो होमस्तथा दानं सर्वमक्षयतां व्रजेत् ।। ५७ ।।

आश्विने शुक्लपक्षस्य नवरात्रिषु सुव्रत ।।

यत्र गत्वा नरो विप्र सर्वपापैः प्रमुच्यते ।। ५८ ।।

यदा पूर्वं विनिर्जित्य रावणं लोकरावणम् ।।

समागतो रघुपतिः सीतालक्ष्मणसंयुतः ।। ५९ ।।

यत्र गत्वा पदा वीरो भरतो रामकांक्षया ।।

स्थितः सानुचरः श्रीमाञ्छ्रिया परमया युतः ।। 2.8.8.६० ।।

तत्रागमत्सुरगवी प्रादुर्भूता स्रवत्स्तनी ।।

तत्स्तनेभ्यः प्रसुस्राव दुग्धं बहुगुणाधिकम् ।। ६१ ।।

तद्भूमिपतितं दुग्धं दृष्ट्वा वानरराक्षसाः ।।

विस्मयं परमं जग्मुः प्रपपुस्ते चराचरम् ।। ६२ ।।

किमेतदिति राजेंद्र तानुवाच रघूद्वहः ।।

वसिष्ठो वेत्ति तत्सर्वं पृच्छामस्तं मुनिं वयम् ।। ६३ ।।

इत्युक्तास्तु ततः सर्वे वसिष्ठप्रमुखे स्थिताः ।।

ते पप्रच्छुः प्रांजलयः कृत्वा चाग्रेसरं नृपम् ।। ६४ ।।

वसिष्ठोऽपि क्षणं ध्यात्वा तमुवाच निराकुलम् ।।

राघवं प्रति संबोध्य सर्वेषामग्रतो मुनिः ।। ६५ ।।

।। ।। वसिष्ठ उवाच ।। ।।

शृणु राम महाबाहो कामधेनुरियं शुभा ।।
समागता तव स्नेहात्प्रस्रवंती स्तनात्पयः ।। ६६ ।।
दुग्धमध्ये समुद्भूतो रुद्रस्त्वां द्रष्टुमागतः ।।
निष्पन्नकार्य्यं देवानां निर्जितारातिमुत्तमम् ।। ६७ ।।
इमं संपूजय क्षिप्रमेतत्कुण्डस्य सन्निधौ ।।
शीघ्रं त्वमपि यत्नेन पूजयेमं शिवं शुभम् ।।
दुग्धेश्वरमिति ख्यातं क्षीरकुण्डे पवित्रकम् ।। ६८ ।।
।। अगस्त्य उवाच ।। ।।
ततो रघुपतिः श्रीमान्वसिष्ठोक्तविधानतः ।।
पूजयामास तल्लिंगं दुग्धेश्वरमिति स्मृतम् ।।६९।।
सीतया सत्कृतं यस्मात्तत्कुण्डं क्षीरसंगमम् ।।
सीताकुंडमिति ख्यातिं जगामानुपमां ततः।।2.8.8.७० ।।
सीताकुण्डे नराः स्नात्वा दृष्ट्वा दुग्धेश्वरं प्रभुम् ।।
सर्वपापैः प्रमुच्यंते नात्र कार्या विचारणा ।।७१।।
अत्र स्नानं जपो होमो दानं चाक्षयतां व्रजेत् ।।
सीताकुंडे तु संपूज्य सीतारामौ सलक्ष्मणौ ।।७२।।
दुग्धेश्वरं च संपूज्य सर्वान्कामानवाप्नुयात् ।।
ज्येष्ठे मासि चतुर्दश्यां यात्रा सांवत्सरी स्मृता।।७३।।
एवं यो विधिवत्कुर्याद्दयाधर्मविशारदः ।।
स याति परमं स्थानं यत्र गत्वा न शोचति ।। ७४ ।।
तत्र पूर्वदिशाभागे सुग्रीवरचितं महत् ।।
तीर्थं तपोनिधेस्तत्र वर्तते सन्निधौ शुभम् ।। ७५ ।।
यत्र स्नात्वा च दत्वा च रामं संपूज्य यत्नतः ।।
तस्मिन्नेव दिने तत्र सर्वान्कामानवाप्नुयात् ।। ७६ ।।
तत्प्रत्यग्दिशि वै स्थानं हनुमत्कुण्डमित्यपि ।।
तस्य पश्चिमतो विप्र विभीषणसरः दूरर ।। ७७ ।।
तयोः स्नानेन दानेन रामसंपूजनेन च ।।
सर्वान्कामानवाप्नोति तस्मिन्नेव विधानतः ।।

इयं सा परमा मेध्याऽयोध्या धर्मनिधिः स्मृता ।। ७८ ।।

इत्युक्तास्तु ततः सर्वे वसिष्ठमुनिमादरात् ।।

पप्रच्छुर्विनयात्क्षिप्रं विभीषणपुरःसराः ।।

कथयस्व तपोराशे कथामेतां सुदुर्लभाम् ।। ७९ ।।

अयोध्यायाः परं विप्र माहात्म्यं कथयंति यत् ।।

तत्सर्वं कथय क्षिप्रं श्रुत्वा माहात्म्यमुत्तमम् ।। २.८.८.८० ।।

यथा यात्रां विधास्यामः क्रमेण च विधानतः ।।

तदस्मासु कृपां कृत्वा कथयस्व तपोनिधे ।। ८१ ।।

।। वसिष्ठ उवाच ।। ।।

शृण्वन्तु मुनयः सर्वे अयोध्यामहिमाद्भुतम् ।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशय ।। ।। ८२ ।।

इदं गुह्यतरं क्षेत्रमयोध्याभिधमुत्तमम् ।।

सर्वेषामेव भूतानां हेतुर्मोक्षस्यः सर्वदा ।। ८३ ।।

अस्मिन्सिद्धाः सदा देवा वैष्णवं व्रतमास्थिताः ।।

नानालिंगधरा नित्यं विष्णुलोकाभिकांक्षिणः ।। ८४ ।।

अभ्यस्यंति परं योगं युक्तप्राणा जितेन्द्रियाः ।।

नानावृक्षसमाकीर्णे नानाविहगवासिनि ।। ८५ ।।

कमलोत्पलशोभाढ्ये सरोभिः समलंकृते ।।

अप्सरोगणसंकीर्णे सर्वदा सेविते शुभे ।। ८६ ।।

रोचते हि सदा वासः क्षेत्रे नित्यं हरेरिह ।।

मन्यमाना विष्णुभक्ता विष्णौ सर्वेऽर्पितक्रियाः।।८७।।

यथा मोक्षमिहायांति नान्यत्र हि तथा क्वचित् ।।

अतः श्रेष्ठतमं क्षेत्रं यस्माच्च वसतिर्हरेः ।।

महाक्षेत्रमिदं यस्मादयोध्याभिधमुत्तमम् ।। ८८ ।।

नैमिषे च कुरुक्षेत्रे गंगाद्वारे च पुष्करे ।।

स्नानात्संसेवनाद्वापि न मोक्षः प्राप्यते तथा ।। ८९ ।।

इह संप्राप्यते यद्वत्तत एव विशिष्यते ।।

प्रयागे वा भवेन्मोक्ष इह वा हरिसंश्रयात् ।।

सर्वस्मादपि तीर्थाग्र्यादिदमेव महत्कृतम् ।। 2.8.8.९० ।।

अव्यक्तलिंगैर्मुनिभिः सर्वैः सिद्धैर्महर्षिभिः ।।

इह संप्राप्यते मोक्षो दुर्ल्लभोऽन्यत्र यो मतः ।। ।। ९१ ।।

तेभ्यः प्रयच्छति हरिर्योगमैश्वर्य्यमुत्तमम् ।।

आत्मनश्चैव सायुज्यमीप्सितं स्थानमुत्तमम् ।। ९२ ।।

ब्रह्मा देवर्षिभिः सार्द्धं श्रीश्च वायुर्दिवाकरः ।।

देवराजस्तथा शक्रो ये चान्येऽपि दिवौकसः ।। ९३ ।।

उपासते महात्मानः सर्वत्र हरिमादरात् ।।

अन्येपि योगिनः सिद्धाः क्षेत्ररूपा महाव्रताः ।।

अनन्यमनसो भूत्वा सर्वदोपासते हरिम् ।। ९४ ।।

विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ।।

इह क्षेत्रे मृतः सोपि संसारी न पुनर्भवेत् ।। ९५ ।।

ये पुनर्निगमाधीनाः सत्रस्था विजितेंद्रियाः ।।

व्रतिनश्च निरारंभाः सर्वे ते हरिभाविताः ।। ९६ ।।

देहभंगं समापद्य धीमंतः संगवर्जिताः ।।

गतास्ते च परं मोक्षं प्रसादात्सर्वदा हरेः ।। ९७ ।।

जन्मान्तरसहस्रेषु युञ्जन्योगी न चाप्नुयात् ।।

तमिहैव परं मोक्षं मरणादपि गच्छति ।। ९८ ।।

एतत्संक्षेपतो वच्मि क्षेत्रस्य महिमाद्भुतम् ।।

एतदेव परं स्थानमेतदेव परं पदम् ।।

एतादृङ्नापरं स्थानं पुनरन्यत्र दृश्यते ।। ९९ ।।

अत्र गत्वा प्रयत्नेन यात्रा पुण्याभिकांक्षिभिः ।।

कर्तव्या विधिवद्धीराः क्रमेण श्रद्धयान्वितैः ।। ।। 2.8.8.१०० ।।

प्रथमेऽहनि कर्त्तव्य उपवासो यतात्मभिः ।।

नियमेन ततः स्नानं दानं चैव स्वशक्तितः ।। १०१ ।।

उपावृत्तस्तु पापेभ्यो यस्य वासो गुणैः सह ।।

उपवासः स विज्ञेयः सर्वभोगविवर्जितः ।। १०२ ।।

उपवासं विधायासौ चक्रतीर्थे नरः कृती ।।

उपवासदिने स्नायाद्दद्याच्चैव स्वशक्तितः ।। १०३ ।।

विप्रं संपूज्य विधिवत्पश्येद्विष्णुहरिं विभुम् ।।

स्वर्गद्वारे नरः स्नात्वा विष्णुं संपूज्य यत्नतः ।। १०४ ।।

क्षौरं च कारयेत्तत्र व्रती धर्माभिधे ततः ।।

पापमोचनके स्नानमृणमोचनके ततः ।। १०५ ।।

स्नात्वा सहस्रधारायां शेषं संपूज्य यत्नतः ।।

दृष्ट्वा चंद्रहरिं देवं ततो धर्महरिं विभुम्।। १०६ ।।

ततश्चक्रहरिं दृष्ट्वा दद्याच्चैव स्वशक्तितः ।।

ब्रह्मकुण्डे नरः स्नात्वा सर्वकामार्थसिद्धये ।।

महाविद्यासमीपे तु रात्रौ जागरणं चरेत् ।। १०७ ।।

ततः प्रभाते विमले पुनरुत्थाय सद्व्रती ।।

स्वर्गद्वारे प्रयत्नेन विधिवत्स्नानमाचरेत् ।। १०८ ।।

श्राद्धं च विधिवत्कृत्वा दत्त्वा चैव स्वशक्तितः।।

विष्णुं संपूज्य विधिवद्विप्रानपि पुनःपुनः ।।१०९।।

दंपती च प्रयत्नेन पूज्यौ वस्त्रादिभिस्तथा ।।

श्रद्धया परया युक्तैर्दातव्या भूरिदक्षिणा ।। 2.8.8.११० ।।

विप्रान्संपूज्य विधिवद्भुंजीत प्रयतो नरः ।। १११ ।।

अन्येद्युरपि चोत्थाय श्रद्धया परया युतः ।।

रुक्मिणीप्रभृतीन्यत्र पश्येत्तीर्थानि च क्रमात् ।। ११२ ।।

तत्रतत्र नरः स्नात्वा दत्त्वा चैव स्वशक्तितः ।।

विष्णुं संपूज्य यत्नेन मनोवाक्कायनिर्मलः ।। ११३ ।।

यात्रां समापयेत्सम्यङ्नियतात्मा शुचिव्रतः ।।

यत्र क्वापि मृतो धीरः परं मोक्षमवाप्नुयात् ।। ११४ ।।

।। अगस्त्य उवाच ।। ।।

वसिष्ठोक्तमिति श्रुत्वा कृत्वा चैव यथाविधि ।।

विभीषणपुरोगास्ते बभूवुर्निर्मलास्तदा ।। ११५ ।।

इति बहुलविधानैस्तीर्थयात्रां विधाय प्रचुरसुकृतपूर्णास्ते च सुग्रीवमुख्याः ।।

गतमलिनसुदेहाः स्वर्गचर्याप्रयत्नादुपगुणितगुणौघास्ते बभूवुः समस्ताः ।। ११६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखंडेऽयोध्यामाहात्म्ये महारत्नतीर्थदुर्भरमहाभरतीर्थमहाविद्यातीर्थ सिद्धपीठक्षीरेश्वरसीताकुण्ड सुग्रीवतीर्थहनुमत्कुण्ड विभीषणसरस्तीर्थायोध्यायात्राविधिक्रमवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/h2z
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | अयोध्यामाहात्म्यम्

।। अगस्त्य उवाच ।। ।।

जटाकुण्डत आग्नेयदिग्दल संश्रितं महत् ।।

गयाकूपमिति ख्यातं सर्वाभीष्टफलप्रदम् ।। १ ।।

यत्र स्नात्वा च दत्त्वा च यथाशक्त्या जितेंद्रियः ।।

सर्वकाममवाप्नोति श्राद्धं कृत्वा द्विजोत्तमः ।। २ ।।

नरकस्थाश्च ये केचित्पितरश्च पितामहाः ।।

विष्णुलोके तु गच्छन्ति तस्मिञ्च्छ्राद्धे कृते तु वै ।। ३ ।।

तस्मिञ्छ्राद्धे कृते विप्र पितॄणामनृणो भवेत् ।।

शक्तिभिः पिंडदानं तु सयवैः पायसेन च ।। ४ ।।

कर्त्तव्यमृषिनिर्दिष्टं पिण्याकेन गुडेन वा ।।

श्राद्धं तत्तीर्थके प्रोक्तं पितॄणां तुष्टिकारकम् ।। ५ ।।

तत्र श्राद्धं प्रकर्त्तव्यं नरैः श्रद्धासमन्वितैः ।।

तुष्यंति पितरस्तेषां तुष्टाः स्युः सर्वदेवताः ।। ६ ।।

तुष्टेषु पितृषु श्रीमाञ्जायतेपुत्रवाँस्तथा ।।

श्राद्धेन पितरस्तुष्टाः प्रयच्छंति सुतान्बहून् ।। ७ ।।

श्रियं च विपुलान्भोगाञ्छ्राद्धकृद्धयो न संशयः ।।

तस्मादत्र विधानेन विधातव्यं प्रयत्नतः ।। ८ ।।

श्राद्धं श्रद्धायुतैः सम्यगभीष्टफलकांक्षिभिः ।।

गयाकूपे विशेषेण पितॄणां दत्तमक्षयम् ।। ९ ।।

सोमवारेण संयुक्ता अमावास्या यदा भवेत् ।।

तत्रानंतफलं श्राद्धं पितॄणां दत्तमक्षयम् ।। 2.8.9.१० ।।

अन्यदा सोमवारेण तत्र श्राद्धं विधानतः ।।

पितृसंतोषदं नित्यं तत्र दत्ताक्षयो भवेत् ।। ११ ।।

तत्र पूर्वदिशाभागे तीर्थं सर्वोत्तमोत्तमम् ।।

पिशाचमोचनंनाम विद्यते च फलप्रदम् ।। १२ ।।

तत्र स्नात्वा च दत्त्वा च पिशाचो नैव जायते ।।

तत्र स्नानं तथा दानं श्राद्धं चैव विशेषतः ।।

कर्त्तव्यं च प्रयत्नेन नरैः श्रद्धासमन्वितैः ।। १३ ।।

मार्गशीर्षे शुक्लपक्षे चतुर्दश्यां विशेषतः ।।

स्नानं तत्र प्रकर्त्तव्यं पिशाचत्वविमुक्तये ।। १४ ।।

तत्संनिधौ पूर्वभागे मानसंनाम नामतः ।।

तीर्थं पुण्यनिवासाग्र्यं स्नातव्यं च विशेषतः ।।

तत्र स्नानेन दानेन सर्वान्कामानवाप्नुयात् ।। १५ ।।

नानाविधानि पापानि मेरुतुल्यानि वै पुनः ।।

तत्र स्नानात्क्षयं यांति नात्र कार्या विचारणा ।। १६ ।।

यत्किञ्चिद्विद्यते पापं मानसं कायिकं तथा ।।

वाचिकं च तथा पापं स्नानतो विलयं व्रजेत् ।। १७ ।।

प्रौष्ठपद्यां सदा कार्य्या पौर्णमास्यां विशेषतः ।।

यात्रा तस्य नृभिर्विप्र पुण्यवद्भिः क्रियापरैः ।। १८ ।।

तस्माद्दक्षिणदिग्भागे वर्त्तते सुकृतैकभूः ।।

तमसानाम तटिनी महापातकनाशिनी ।। १९ ।।

यत्र स्नानं तथा दानं सर्वपापहरं सदा ।।

यस्यास्तटे तथा रम्ये सर्वदा फलदायके ।। 2.8.9.२० ।।

नानाविधानि स्थानानि मुनीनां भावितात्मनाम् ।।

माण्डव्यस्य मुनेः स्थानं वर्त्तते पापनाशनम् ।। २१ ।।

यस्यास्तीरे मुनिश्रेष्ठ सर्वत्र सुमनोहरम् ।।

तस्याश्रमपदं रम्यं नानावृक्षमनोहरम् ।। २२ ।।

यस्मात्स्थानात्समुद्भूता तमसा सुतरंगिणी ।।

तद्वनं पुण्यमधिकं पावनं पदमुत्तमम् ।। २३ ।।

यस्य दर्शनतो नृणां सर्वपापक्षयो भवेत् ।। २४ ।।

प्रफुल्लनानाविधगुल्मशोभितं लताप्रतानावनतं मनोहरम् ।।

विरूढपुष्पैः परितः प्रियंगुभिः सुपुष्पितैः कण्टकितैश्च केतकैः ।। २५ ।।

तमालगुल्मैर्निचितं सुगंधिभिः सकर्णिकारैर्बकुलैश्च सर्वतः ।।

अशोकपुन्नागवरैः सुपुष्पितैर्द्विरेफमालाकुल पुष्पसंचयैः ।। २६ ।।

क्वचित्प्रफुल्लांबुजरेणुभूषितैर्विहंगमैश्चारुफलप्रचारिभिः ।।

विनादितं सारसमुत्कुलादिभिः प्रमत्तदात्यूहकुलैश्च वल्गुभिः ।। ।। २७ ।।

क्वचिच्च चक्राह्वरवोपनादितं क्वचिच्च कादम्बकदम्बकैर्युतम् ।।

क्वचिच्च कारण्डवनादनादितं क्वचिच्च मत्तालिकुलाकुलीकृतम् ।। २८ ।।

मदाकुलाभिर्भ्रमरीभिरारान्निषेवितं चारुसुगंधिपुष्पवत् ।।

क्वचिच्च पुष्पैः सहकारवृक्षैर्लतोपगूढैस्तिलकद्रुमैश्च ।। २९ ।।

प्रहृष्टनानाविधपक्षिसेवितं प्रमत्तहारीतकुलोपनादितम् ।।

समंततः सुन्दरदर्शनीयतां समुद्वहत्तद्वनमुल्लसन्महत् ।। 2.8.9.३० ।।

निबिडनिचुलनीलं नीलकण्ठाभिरामं मदमुदितविहंगीवृन्दनादाभिरामम्।।

कुसुमिततरुशाखालीनमत्तद्विरेफंनवकिसलयशोभाशोभितं सत्फलाढ्यम् ।। ३१ ।।

इत्यादिबहुशोभाढ्यं सर्वदिक्षु मनोहरम् ।।

यत्र मांडव्यमुनिना तपस्तप्तं महत्किल ।।

यत्प्रभावादभूत्तीर्थं पावनं तत्सदा महत् ।। ३२ ।।

तत्पूर्वं गौतमस्यर्षेराश्रमं पावनं महत् ।।

तत्पूर्वं च्यवनस्यर्षेः पराशरमुनेरिदम् ।।

प्रथमं ते मुनिश्रेष्ठ पितुः किल तपोनिधेः ।। ३३ ।।

नानाविधानि तीर्थानि चाश्रमाश्चैव सर्वशः ।।

वर्तंते तापसानां च यस्यास्तीरे समंततः ।। ३४ ।।

तमसानाम सा ज्ञेया वर्तते तटिनी शुभा ।।

यज्ञयूपान्समुत्खाय शोभिता बहुशोऽभितः ।। ३५ ।।

तत्र स्नानेन दानेन श्राद्धेन च विशेषतः ।।

सर्वकामार्थसिद्धिः स्यान्नात्र कार्या विचारणा ।। ३६ ।।

मार्गशीर्षे शुक्लपक्षे पञ्चदश्यां विशेषतः ।।

स्नानं तस्य फलप्राप्तिदायकं सर्वदा नृणाम्।। ३७ ।।

तस्मादत्र प्रकर्तव्यं स्नानं निर्मलमानसैः ।।

प्रयत्नतो मुनिश्रेष्ठ सर्वकामार्थसिद्धिदम् ।। ३८ ।।

अतः परं प्रवक्ष्यामि तमसापरमं शुभम् ।।

सीताकुंडमितिख्यातं श्रीदुग्धेश्वरसन्निधौ ।। ३९ ।।

भाद्रे शुक्लचतुर्थ्यां तु तस्य यात्रा शुभावहा ।।

सर्वकामार्थसिद्ध्यर्थं पूज्यो विप्रेश्वरस्तथा ।।

तस्य स्मरणमात्रेण सर्वविघ्नविनाशनम् ।। 2.8.9.४० ।।

तस्माद्दक्षिणदिग्भागे भैरवो नाम नामतः ।।

यं दृष्ट्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। ४१ ।।

रक्षितो वासुदेवेन क्षेत्ररक्षार्थमादरात् ।।

तस्य पूजा विधातव्या प्रयत्नेन यथाविधि ।।

मनोभीष्टफलप्राप्तिर्भैरवस्य सदाऽऽदरात् ।। ४२ ।।

मार्गशीर्षस्य कृष्णायामष्टम्यां तस्य निर्मिता ।।

यात्रा सांवत्सरी तत्र सर्वकामार्थसिद्धये ।। ४३ ।।

पशूपहारसंभूति कर्तव्यं पूजनं जनैः ।।

सर्वकामफलप्राप्तिर्जायते नात्र संशयः ।। ४४ ।।

निर्विघ्नं तीर्थवसतिर्भैरवस्य प्रसादतः ।।

जायते तेन कर्तव्या पूजा तस्य प्रयत्नतः ।। ४५ ।।

एतस्मिन्नुत्तरे भागे रम्यं भरतकुण्डकम् ।।

यत्र स्नात्वा नरः पापैर्मुच्यते नात्र संशयः ।। ४६ ।।

तत्र स्नानं तथा दानं सर्वमक्षयतां व्रजेत् ।।

अन्नं बहुविधं देयं वासांसि विविधान्यपि ।। ४७ ।।

यत्नतो देवताः पूज्या वस्त्रादिभिरलंकृतैः ।।

नंदिग्रामे वसन्पूर्वं भरतो रघुवंशजः ।। ४८ ।।

रामचन्द्रं हृदि ध्यायन्निर्मलात्मा जितेन्द्रियः ।।

ततः स्थित्वा प्रजाः सर्वा ररक्ष क्षितिवल्लभः ।। ४९ ।।

तत्र चक्रे महत्कुण्डं भरतो नाम भूपतिः ।।

राममूर्तिं च संस्थाप्य चचार विजितेन्द्रियः ।। 2.8.9.५० ।।

तत्कुंडे सुमहत्पुण्यं नानापुण्यसमन्वितम् ।।

कुमुदोत्पलकह्लारपुण्डरीकसमन्वितम् ।। ५१ ।।

हंससारसचक्राह्व विहंगमविराजितम् ।।
उद्यानपादपच्छायासच्छायममलं सदा ।। ५२ ।।
तत्र स्नानं महापुण्यं प्रमोदानन्दनिर्मलम् ।।
तत्र स्नानं तथा श्राद्धं पितॄनुद्दिश्य कुर्वतः ।।
पितरस्तस्य तुष्यंति तुष्टाः स्युः सर्वदेवताः ।। ५३ ।।
स्वर्णं चान्नं विधानेन दातव्यं च द्विजन्मने ।।
श्रद्धापूर्वकमेतत्तु कर्तव्यं प्रयतैर्नरैः ।। ५४ ।।
तत्पश्चिमदिशाभागे जटाकुण्डमनुत्तमम् ।।
यत्र रामादिभिः सर्वैर्जटाः परिहृता निजाः ।। ५५ ।।
जटाकुण्डमिति ख्यातं सर्वतीर्थोत्तमोत्तमम्।।
यत्र स्नानेन दानेन सर्वान्कामानवाप्नुयात् ।। ५६।।
पूर्वकुण्डेषु संपूज्यो भरतः श्रीसमन्वितः ।।
जटाकुण्डेषु संपूज्यौ ससीतौ रामलक्ष्मणौ ।।
चैत्रकृष्णचतुर्दश्यां यात्रा सांवत्सरी भवेत् ।। ५७ ।।
इति परमविधानैः पूजयेद्रामसीते तदनु भरतकुण्डे लक्ष्मणं च प्रपूज्य ।।
विधिवदमृतकुण्डे द्वंद्वंसमज्जनेन वसति सुकृतिमूर्तिर्वैष्णवे तत्र लोके ।। ५८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये गयाकूप पिशाचमोचन मानसतीर्थ तमसानदी माण्डव्याद्याश्रम सीताकुण्ड दुग्धेश्वर भैरवभारतकुण्ड जटाकुण्ड माहात्म्यवर्णनंनाम नवमोऽध्यायः ।। ९ ।। ।। छ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/अयोध्यामाहात्म्यम्/अध्यायः १०

https://sa.wikisource.org/s/h8s



।। अगस्त्य उवाच ।। ।।

निराहारो नरो भूत्वा क्षीराहारोऽपि वा पुनः ।।

अजितं पूजयेद्विप्र तस्य सिद्धिः करे स्थिता ।। १ ।।

महोत्सवस्तु कर्तव्यो गीतवादित्रसंयुतः ।।

एवं यः कुरुते धीमान्सर्वान्कामानवाप्नुयात् ।। २ ।।

एतस्मादुत्तरे विद्वन्वीरस्य शुभसूचकम् ।।

स्थानं मत्तगजेन्द्रस्य वर्तते नियतव्रत ।। ३ ।।

तदग्रे सरसि स्नात्वा वसेत्तत्र सुनिश्चितम् ।।

पूर्णा सिद्धिमवाप्नोति यामवाप्य न शोचति ।। ४ ।।

अयोध्यारक्षको वीरः सर्वकामार्थसिद्धिदः ।।

नवरात्रिषु पंचम्यां यात्रा सांवत्सरी भवेत् ।। ५ ।।

गंधपुष्पादिधूपादि नैवेद्यादिविधानतः ।।

पूजनीयः प्रयत्नेन सर्वकामार्थसिद्धिदः ।।

यंयं काममिहेच्छेत तंतं काममवाप्नुयात् ।। ६ ।।

एतस्माद्दक्षिणेभागे सुरसानाम राक्षसी ।।

विष्णुभक्ता सदा विप्र वर्तते सिद्धिदायिका ।। ७ ।।

तां संपूज्य नरो भक्त्या सर्वान्कामानवाप्नुयात् ।। ८ ।।

लंकास्थानादिहानीता रामेणोत्कृष्टकर्मणा ।।

अयोध्यायां स्थापिता सा रक्षार्थं नियतव्रतैः ।। ९ ।।

संपूज्य विधिवत्तस्या दर्शनं कार्यमादरात् ।।

सर्वकामार्थसिद्ध्यर्थमुत्सवोऽपि शुभप्रदः ।।

कर्त्तव्यः सुप्रयत्नेन गीतवादित्रसंयुतैः ।। 2.8.10.१० ।।

नवरात्रे तृतीयायां यात्रा सांवत्सरी भवेत् ।।

सर्वदा सुखसंतानसिद्धये परमार्थदा ।।

नानासंगीतवादित्रनृत्योत्सवमनोहरा ।। ११ ।।

एवं कृते न संदेहः सर्वदा रक्षितो भवेत् ।। १२ ।।

एतत्पश्चिमदिग्भागे वर्तते परमो मुने ।।

पिंडारक इति ख्यातो वीरः परमपौरुषः ।।

पूजनीयः प्रयत्नेन गंधपुष्पाक्षतादिभिः ।। १३ ।।

यस्य पूजावशान्नृणां सिद्धयः करसंश्रिताः ।।

तस्य पूजाविधानेन कर्तव्यं पूजनं नरैः ।। १४ ।।

सरयूसलिले स्नात्वा पिंडारकं च पूजयेत् ।।

पापिनां मोहकर्त्तारं मतिदं कृतिनां सदा ।। १५ ।।

तस्य यात्रा विधातव्या सपुष्या नवरात्रिषु ।।

तत्पश्चिमदिशाभागे विघ्नेशं किल पूजयेत् ।। १६ ।।

यस्य दर्शनतो नृणां विघ्नलेशो न विद्यते ।।

तस्माद्विघ्नेश्वरः पूज्यः सर्वकामफलप्रदः ।। १७ ।।

तस्मात्स्थानत ऐशाने रामजन्म प्रवर्त्तते ।।

जन्मस्थानमिदं प्रोक्तं मोक्षादिफलसाधनम् ।। १८ ।।

विघ्नेश्वरात्पूर्वभागे वासिष्ठादुत्तरे तथा ।।

लौमशात्पश्चिमे भागे जन्मस्थानं ततः स्मृतम् ।। १९ ।।

यद्दृष्ट्वा च मनुष्यस्य गर्भवासजयो भवेत् ।।

विना दानेन तपसा विना तीर्थैर्विना मखैः ।। 2.8.10.२० ।।

नवमीदिवसे प्राप्ते व्रतधारी हि मानवः ।।

स्नानदानप्रभावेण मुच्यते जन्मबन्धनात् ।। २१ ।।

कपिलागोसहस्राणि यो ददाति दिनेदिने ।।

तत्फलं समवाप्नोति जन्मभूमेः प्रदर्शनात् ।। २२ ।।

आश्रमे वसतां पुंसां तापसानां च यत्फलम् ।।

राजसूयसहस्राणि प्रतिवर्षाग्निहोत्रतः ।। २३ ।।

नियमस्थं नरं दृष्ट्वा जन्मस्थाने विशेषतः ।।

मातापित्रोर्गुरूणां च भक्तिमुद्वहतां सताम् ।। २४ ।।

तत्फलं समवाप्नोति जन्मभूमेः प्रदर्शनात् ।। २५ ।।

।। अथ सरयूवर्णनम् ।। ।।

पितॄणामक्षया तृप्तिर्गयाश्राद्धाधिकं फलम् ।। २६ ।।

मन्वंतरसहस्रैस्तु काशीवासेषु यत्फलम् .।।

तत्फलं समवाप्नोति सरयूदर्शने कृते ।। २७ ।।

गयाश्राद्धं च ये कृत्वा पुरुषोत्तम दर्शनम् ।।

कुर्वंति तत्फलं प्रोक्तं कलौ दाशरथीं पुरीम् ।। २८ ।।

मथुरायां कल्पमेकं वसते मानवो यदि ।।

तत्फलं समवाप्नोति सरयूदर्शने कृते ।।।। २९ ।।

पुष्करेषु प्रयागेषु माघे वा कार्त्तिके तथा ।।

तत्फलं समवाप्नोति सरयूदर्शने कृते ।। 2.8.10.३० ।।

कल्पकोटिसहस्राणि ह्यवन्तीवासतो हि यत् ।।

तत्फलं समवाप्नोति सरयूदर्शने कृते ।। ३१ ।।

षष्टिवर्षसहस्राणि भागीरथ्यवगाहजम् ।।

तत्फलं निमिषार्द्धेन कलौ दाशरथीं पुरीम् ।। ।। ३२ ।।

निमिषं निमिषार्द्धं वा प्राणिनां रामचिन्तनम् ।।

संसारकारणाज्ञाननाशकं जायते ध्रुवम् ।। ३३ ।।

यत्र कुत्र स्थितो यस्तु ह्ययोध्यां मनसा स्मरेत्।।

न तस्य पुनरावृत्तिः कल्पांतरशतैरपि ।। ३४ ।।

जलरूपेण ब्रह्मैव सरयूर्मोक्षदा सदा ।।

नैवात्र कर्मणो भोगो रामरूपो भवेन्नरः ।। ।। ३५ ।।

पशुपक्षिमृगाश्चैव ये चान्ये पापयोनयः ।।

तेऽपि मुक्ता दिवं यांति श्रीरामवचनं यथा ।। ३६ ।।

इत्युक्त्वा विरते तस्मिन्मुनौ कलशजन्मनि ।।

कृष्णद्वैपायनव्यासः पुनरूचे तपोधनः ।। ३७ ।।

दुर्लभा सर्वजन्तूनां कथा विस्तरतः क्रमात् ।।

यात्राक्रमोऽपि च मया श्रुत आगच्छतां नृणाम्।। ३८ ।।

इदानीं श्रोतुमिच्छामि क्षेत्रस्थानं यथाविधि ।।

यात्राक्रमं मुनिश्रेष्ठ सम्यक्त्वस्तपोधन ।। ३९ ।।

फलं ब्रूहि क्रमेणैव विस्तरात्पृच्छतो मम ।।
यद्यस्ति मयि ते विद्वन्कृपा कारुणिकोत्तम ।। 2.8.10.४० ।।
यथा श्रुत्वा क्रमेणैव यात्रां विश्वविदां वर ।।
करोमि त्वत्प्रसादेन तथा कुरु यतव्रत ।। ४१ ।।
।। अगस्त्य उवाच ।। ।।
शृणु वक्ष्यामि तत्त्वेन यात्राक्रममथादितः ।।
अयोध्यां सप्ततीर्थानां यथावदनुपूर्वशः ।। ।। ४२ ।।
मनोवाक्कायशुद्धेन निर्दोषेणांतरात्मना ।।
मानसेषु सुतीर्थेषु स्नात्वा किल जितेंद्रियः ।।
यः करोति विधिं सम्यक्स तीर्थफलमश्नुते ।। ।। ४३ ।।
।। व्यास उवाच ।। ।।
मानसान्येव तीर्थानि कथयस्व तपोधन ।।
येषु स्नातवतां नृणां विशुद्धिर्मनसो भवेत् ।। ४४ ।।
।। ।। अगस्त्य उवाच ।। ।।
शृणु तीर्थानि गदतो मानसानि ममानघ ।।
येषु सम्यङ्नरः स्नात्वा प्रयाति परमां गतिम् ।। ४५ ।।
सत्यतीर्थं क्षमातीर्थं तीर्थमिंद्रियनिग्रहः ।।
सर्वभूतदयातीर्थं तीर्थानां सत्यवादिता ।। ४६ ।।
ज्ञानतीर्थं तपस्तीर्थं कथितं तीर्थसप्तकम् ।।
सर्वभूतदयातीर्थे विशुद्धिर्मनसो भवेत्।। ४७ ।।
न तोयपूतदेहस्य स्नानमित्यभिधीयते ।।
स स्नातो यस्य वै पुंसः सुविशुद्धं मनो मतम् ।।
भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ।। ४८ ।।
यथा शरीरस्योद्देशाः केचिन्मध्योत्तमाः स्मृताः ।।
तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ।। ४९ ।।
तस्माद्भौमेषु तीर्थेषु मानसेषु च संवसेत्।।
उभयेषु च यः स्नाति स याति परमां गतिम् ।। 2.8.10.५० ।।
तस्मात्त्वमपि विप्रेंद्र विशुद्धेनांतरात्मना ।।

यात्रां कुरु प्रयत्नेन यात्रा वै नोदिता मया ।।

तं तु वक्ष्यामि विप्रेंद्र तीर्थयात्राविधिं क्रमात् ।। ५१ ।।

जायन्ते च जलेष्वेव म्रियंते च जलौकसः ।।

न च गच्छंति ते स्वर्गमशुद्धमनसो मलाः ।। ५२ ।।

विषयेष्वनिशं रागो मनसो मल उच्यते ।।

तेष्वेव हि न संगम्य नैर्मल्यं समुदाहृतम् ।। ५३ ।।

चित्तमन्तर्गतं दुष्टं तीर्थस्नानं न शुध्यति ।।

शतशोऽपि जलैर्धौते सुराभाण्डमपावनम् ।। ५४ ।।

दानमिज्या तपः शौचं तीर्थसेवा श्रुतिस्तथा ।।

सर्वाण्येतानि तीर्थानि यदि भावेन निर्मलः ।। ५५ ।।

निगृहीतेंद्रियग्रामो यत्रैव वसते नरः ।।

तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्करं तथा ।। ५६ ।।

एतत्ते कथितं विप्र मानसं तीर्थलक्षणम् ।।

स्नाते यस्मिन्क्रियाः सर्वाः सफलाः स्युः क्रियावताम् ।। ५७ ।।

प्रातरुत्थाय मतिमान्संगमे स्नानमाचरेत् ।।

विभुं विष्णुहरिं दृष्ट्वा स्नायाद्वै ब्रह्मकुण्डके ।। ५८ ।।

चक्रतीर्थे नरः स्नात्वा दृष्ट्वा चक्रहरिं विभुम् ।।

ततो धर्महरिं दृष्ट्वा सर्वपापैः प्रमुच्यते ।। ५९ ।।

एकादश्यामेकादश्यामियं यात्रा शुभावहा ।।

प्रातरुत्थाय मतिमान्स्वर्गद्वारजलप्लुतः ।। 2.8.10.६० ।।

विधाय नित्यजं कर्म अयोध्यां च विलोकयेत् ।।

सरयूं तु ततो दृष्ट्वा पश्येन्मत्तगजं ततः ।। ६१ ।।

बंदीं च शीतलां चैव वटुकं च विलोकयेत् ।।

तदग्रसरसि स्नात्वा महाविद्यां विलोकयेत् ।। ६२ ।।

पिण्डारकं ततो दृष्ट्वा ततो भैरवदर्शनम्।।

अष्टम्यां च चतुर्दश्यामेषा यात्रा फलप्रदा ।। ६३।।

अंगारकचतुर्थ्यां तु पूर्वोक्ता देवता अपि ।।

विघ्नेशं च ततः पश्येत्सर्वकामार्थसिद्धये।। ६४ ।।

प्रातरुत्थाय मतिमान्ब्रह्मकुण्डजले प्लुतः ।।

विष्णुं विष्णुहरिं दृष्ट्वा मनोवाक्कायशुद्धिमान्।।।।६५।।

मंत्रेश्वरं ततो दृष्ट्वा महाविद्यां विलोकयेत् ।।

अयोध्यां च ततो दृष्ट्वा सर्वकामार्थसिद्धये।।६६।।

स्वर्गद्वारे नरः स्नात्वा सचैलो विजितेंद्रियः ।।

नानाविधानि पापानि बहुजन्मकृतानि च ।।

सचैलस्नानतो यांति तस्मात्सचैलमाचरेत् ।। ६७ ।।

एषा वै गदिता यात्रा सर्वपापहरा शुभा ।। ।। ६८ ।।

य एवं कुरुते यात्रां नित्यं शुभफलप्रदाम् ।।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।। ६९ ।।

तस्मात्त्वमपि विप्रेंद्र अयोध्यां व्रज मा चिरम् ।।

तत्र गत्वा क्रमेणैव यात्रां कुरु यतेंद्रियः ।। 2.8.10.७० ।।

अयोध्या परमं स्थानमयोध्या परमं महत् ।।

अयोध्यायाः समा काचित्पुरी नैव प्रदृश्यते ।। ७१ ।।

अयोध्या परमं स्थानं विष्णुचक्रे प्रतिष्ठितम् ।। ७२ ।।

इत्येतत्कथितं विप्र मया पृष्टं हि यत्त्वया ।।

समाश्रय मुने तां त्वमनुजानीहि मामतः ।। ७३ ।।

।। सूत उवाच ।। ।।

इत्येतदुक्त्वा विरते मुनौ कलशजन्मनि ।।

उवाच मधुरं वाक्यं व्यासः स तपसां निधिः ।। ७४ ।।

।। ।। व्यास उवाच ।। ।।

धन्योऽस्म्यनुगृहीतोऽस्मि कृतकृत्योऽस्म्यहं मुने ।।

सत्यं शौचं श्रुतं विप्र सुशीलं च क्षमार्जवम् ।।

सर्वं च निष्फलं तस्य अयोध्यां नागतो यदि ।। ७५ ।।

यस्मिन्मयि प्रसन्नेन त्वयोक्तो धर्मनिर्णयः ।।

इदानीमपि गच्छामि ह्ययोध्यां निर्मलां पुरीम्।।

त्वमपि व्रज विप्रेंद्र स्वमाश्रमपदं निजम् ।। ७६ ।।

।। सूत उवाच ।। ।।

इत्यैवमुक्त्वा क्रमशो यात्राविधिमनुत्तमम्।।

जगाम तपसां राशिरगस्त्यः कुंभसंभवः ।। ७७ ।।

स्वमाश्रमपदं धीरो विस्मयोत्फुल्ललोचनः ।।

व्यासोऽपि महसां राशिर्जगाम विजितेन्द्रियः ।। ७८ ।।

अयोध्यामागतो विप्रः सर्वकामार्थसिद्धये ।।

आगत्यैतद्विधानेन कृत्वा यात्रां यथाक्रमम् ।। ७९ ।।

दृष्ट्वा महाश्चर्यकरं कारणं तीर्थमुत्तमम् ।।

आनंदतुंदिलस्तत्र सम्यगाचम्य बुद्धिमान्।। 2.8.10.८० ।।

ततो जगाम विप्रेंद्रः स्वमाश्रमपदं मुनिः ।।

व्यासेन कथितं मह्यं माहात्म्यं क्रमशस्तदा ।। ८१ ।।

मया श्रुत्वा च माहात्म्यं यात्रां कृत्वा विधानतः ।।

कुरुक्षेत्रे समागत्य भवदग्रे निरूपितम् ।। ८२ ।।

इदं माहात्म्यमतुलं यः पठेत्प्रयतो नरः ।।

श्रद्धया यश्च शृणुयात्स याति परमां गतिम् ।। ८३ ।।

तस्मादेतत्प्रयत्नेन श्रोतव्यं च जनैः सदा ।।

द्विजपूजा विष्णुपूजा विधातव्या प्रयत्नतः ।। ८४ ।।

दातव्यं च सुवर्णादि यथाशक्त्या द्विजन्मने ।।

पुत्रार्थी लभते पुत्रान्धर्म्मार्थी धर्ममाप्नुयात् ।। ८५।।

अतिविपुलविधानैर्वर्णितं धर्म्यमाद्यं कलयति परभक्त्या क्षेत्रमाहात्म्यमेतत् ।।

य इह मनुजवर्यः श्रीसनाथः स सम्यग्व्रजति हरिनिवासं सर्वभोगांश्च भुक्त्वा ।। ८६ ।।

यः पाठकस्यापि कदाचिदेव ददाति वित्तं च यथात्मशक्त्या ।।

पात्राणि वस्त्राणि मनोहराणि रौप्यं सुवर्णं च गवीः स मुच्येत् ।। ८७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्येऽगस्त्यव्याससंवादेऽयोध्यायात्राविधिक्रमवर्णनंनाम दशमोऽध्यायः ।। १० ।। ।। छ ।।

इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्यं सम्पूर्णम् ।। ( २-८)

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०१

https://sa.wikisource.org/s/ha8
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

श्रीकृष्णाय नमोनमः ।।

।। अथ श्रीवासुदेवमाहात्म्यं प्रारभ्यते ।।

।। शौनक उवाच ।। ।।

जीवानां श्रेयसे सौते बहुधा साधनानि ते ।।

धर्मो ज्ञानं च वैराग्यं योगादीन्युदितानि नः ।। १ ।।

इतिहासैर्बहुविधैर्विस्पष्टार्थानि तानि च ।।

सर्वाण्यपि महाबुद्धे श्रुतान्यस्माभिरादरात् ।। २ ।।

सर्वेषां मनुजानां तु दुष्कराण्येव तानि तु ।।

बाहुल्याच्चान्तरायाणां तत्सिद्धिरपि दुर्ल्लभा ।। ३ ।।

प्रयत्नेनाति महता पुरुषैर्द्धैर्य्यशालिभिः ।।

साधितान्यपि सिध्यन्ति तानि कालेन भूयसा ।। ४ ।।

अतो भवान्द्विजातीनामाश्रमाणां च सर्वशः ।।

ब्रवीतु सुकरोपायं स्त्रीशूद्रादेरपीह नः ।। ५ ।।

कृतेन येनाप्यल्पेन येन केनापि देहिना ।।

अन्तरायैरविहतं महदेव फलं भवेत् ।। ६ ।।

मोक्षस्य साधनं तादृक्सुविचार्य्य महामते ।।

हिताय सर्वजीवानां कृपया वक्तुमर्हसि ।। ७ ।।

प्रसादाद्बलदेवस्य व्यासस्य जनकस्य च ।।

जानासि सर्वमेव त्वं तन्नो ब्रूहि बुभुत्सतः ।। ८ ।।

सौतिरुवाच ।।

महर्षिरपि सावर्णिरेवमेव हि शौनक ।।

विनीतः स्कन्दमप्राक्षीत्पुनः शङ्करनन्दनम् ।। ९ ।।

सावर्णिरुवाच ।।

श्रुता नानाविधा धर्म्माः साङ्ख्यज्ञानं च नैकधा ।।

योगादीनि त्वदुक्तानि साधनानि मया गुह ।। 2.9.1.१० ।।

सुदुष्कराणि मन्येऽहं तानि त्वस्मादृशां किल ।।

महतामपि चान्येषां कृच्छ्रसाध्यानि वै चिरात् ।। ११ ।।

अतो वर्णाश्रमवतां श्रेयस्कृत्सुकरं च यत् ।।

साधनं तच्छ्रेष्ठतमं वक्तुमर्हसि मेऽधुना ।। १२ ।।

सौतिरुवाच ।।

इति पृष्टो मुनीन्द्रेण तेन जिज्ञासुना गुहः ।।

वासुदेवं हृदि ध्यायन्कार्त्तिकेयः स ऊचिवान् ।। १३ ।।

स्कन्द उवाच ।। शृणु ब्रह्मन्प्रवक्ष्येऽहं श्रुतं पितृमुखान्मया ।।

सर्वेषामपि जीवानां सुकरं मोक्षसाधनम् ।। १४ ।।

देवताप्रीणनसमं स्वेष्टसिद्धिमभीप्सताम् ।।

नास्त्यन्यसाधनं किञ्चिद्वर्णाश्रमवतामिह ।। १५ ।।

अप्यल्पं सुकृतं कर्म्म देवसंबन्धतः कृतम् ।।

फलं ददाति निर्विघ्नं महदेव हि तन्नृणाम् ।। १६ ।।

दैवं पित्र्यं स्वधर्म्मश्च काम्यं कर्म्मापि यच्च तत् ।।

देवतायास्तु संबन्धात्सद्यः स्यादिष्टसिद्धिदम् ।। १७ ।।

साङ्ख्ययोग विरागादि प्रागुक्तं यच्च दुष्करम् ।।

तदपि स्याद्धि सुकरमनेनैवाशु सिद्धिदम् ।। १८ ।।

देवस्याराधनेनैव यतः सिद्ध्यति वाञ्छितम् ।।

अतः सर्वैर्य्यथाशक्ति प्रीत्याराध्यः स मानवैः ।। १९ ।।

सावर्णिरुवाच।।

देवा वहुविधा प्रोक्तास्त्वया षण्मुख मे पुरा ।।

नानाविधा वर्णिताश्च तदाराधनरीतयः।।2.9.1.२०।।

तत्फलानि च सर्वाणि त्वयोक्तानि पृथक्पृथक् ।।

स्वर्गादिप्राप्तिमुख्यानि कालग्रस्तानि तानि तु ।।२१।।

निवृत्तिधर्म्मिणां ब्रह्मा ह्युपास्तेय्योगिनां गुह ।।

जनादिलोकाप्तिफलं द्विपरार्द्धान्तनश्वरम्।।२२।।

दुष्कराणीह संसाध्य कर्म्माणि पुरुकृच्छ्रतः।।

क्षयिष्णुफललाभश्चेत्तर्हि किं तदुपार्जनैः।।२३।।

कालेन नाश्यते येषां वपुः स्थानबलादिकम्।।

तेषां न रोचते मह्यमुपासाऽत्र दिवौकसाम्।।२४।।

यः स्वयं निर्भयोऽन्येषां भयहर्त्ता सनातनः ।।

नित्यधामाऽक्षयफलप्रदाता भक्तवत्सलः ।। २५ ।।

यस्य प्रसादात्सर्वेषां सर्व एव मनोरथाः ।।

सिद्ध्येयुश्चाञ्जसैवाऽत्र तं देवं वद मे गुह ।। २६ ।।

तदाराधनरीतिं च सुकरां शिष्टसंमताम् ।।

ब्रूहि सर्वां विशेषेण जिज्ञासामीदमञ्जसा ।। २७ ।।

सौतिरुवाच ।।

इत्थं महर्षिणा तेन संपृष्टो भगवान्गुहः ।।

सुप्रसन्न उवाचेदं मानयंस्तमुदारधीः ।। २८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये सावर्णिप्रश्नो नाम प्रथमोऽध्यायः ।। १ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०२



।। स्कन्द उवाच ।।

महान्तं प्रश्नवित्प्रश्नं पृच्छसि त्वमि हाऽनघ ।।

नास्योत्तरं वर्षशतैर्वक्तुं शक्यं स्वतर्कतः ।।

ऋते देवप्रसादाद्वै ब्रह्मञ्ज्ञानिवरैरपि ।। १ ।।

वासुदेवप्रसादात्तु मया ज्ञातं वदामि ते ।।

अनाख्येयं न ते किञ्चिद्धर्मनिष्ठाय सन्मते ।। २ ।।

एवमेव हि पप्रच्छ निवृत्ते भारते रणे ।।

अजातशत्रुर्नृपतिर्भीष्मं धर्म्मविदांवरम् ।। ३ ।।

शयितं शरशय्यायां ध्यानप्राप्ताच्युतेन च ।।

प्राप्तमैकात्म्यमव्यग्रं निगमागमपारगम् ।। ४ ।।

युधिष्ठिर उवाच ।।

चतुर्षु तात वर्णेषु चतुर्ष्वप्याश्रमेषु यः ।।

इच्छेच्चतुर्वर्गसिद्धिं देवतां कां यजेत सः।।५।।

निर्विघ्नेन च का सिद्धिः कथं स्यादल्पकालतः ।।

कथं चाप्यल्पसुकृती पदवीं महतीमियात्।।

एतं मे संशयं छिन्धि सर्वज्ञस्त्वं पितामह।।६।।

स्कन्द उवाच ।।

एवं धर्म्मात्मना तेन पृष्टः शान्तनवो मुने।।

किञ्चिज्जहास वीक्ष्यैव श्रीकृष्ण मुखपङ्कजम् ।। ७ ।।

दृशा स प्रेरितस्तेन नरनारायणोदितम् ।।

श्रीवासुदेवमाहात्म्यं पितुः श्रुतमुवाच तम् ।। ८ ।।

ततः श्रुत्वा नारदोपि कुरुक्षेत्रं गतः पुनः ।।

कैलास एत्य तत्प्राह पितरं मे स चापि माम् ।। ९ ।।

तत्तेऽहं संप्रवक्ष्यामि निश्छद्म परिपृच्छते ।।

महासदसि निर्णीतं मुनिवर्याऽपसंशयम्।।2.9.2.१०।।

वासुदेवः परं ब्रह्म श्रीकृष्णः पुरुषोत्तमः ।।

देवोऽकामैः सकामैश्च पूज्यो मुक्तैर्नरैरपि ।। ११ ।।

द्विजातीनां चाश्रमाणां स्त्रीशूद्रादेश्च सर्वथा ।।

स्वस्वधर्मैरेष एव तोषणीयोस्ति भक्तितः ।। १२ ।।

तस्मात्कर्माखिलमपि दैवं पित्र्यं च सर्वदा ।।

तत्प्रीत्या एव कर्त्तव्यं वेदोक्तं च यथोचितम् ।। १३ ।।

सुखाप्तये नृभिर्यद्यत्कर्माऽत्र क्रियते शुभम् ।।

अपि स्वनुष्ठितं तच्चेत्कृष्णसंबन्धवर्जितम् ।।

तदा क्षयिष्ण्वल्पफलं ज्ञेयं तच्च गुणात्मकम्।। १४ ।।

फलवैगुण्यकृत्तच्चाऽशुभदेशादियोगतः ।।

बहुविघ्नं च तन्नृणां नैव वाञ्छितसिद्धिदम् ।। १५ ।।

कर्मैतदेव श्रीकृष्णप्रीणनाय क्रियेत चेत् ।।

तत्संबन्धेन तर्ह्येतद्भवेत्सर्वं हि निर्गुणम् ।। १६ ।।

स्ववाञ्छितादप्यधिकं ददाति फलमक्षयम् ।।

असद्देशादिसंबन्धात्तद्वैगुण्यभवेन्न च ।।१७।।

विघ्नस्तु कोपि ब्रह्मर्षे प्रतापाच्चक्रपाणिनः ।।

तस्मिन्न प्रभवेत्क्वापि तत्स्यादीप्सितसिद्धिदम् ।।१८।।

यद्यप्यल्पं स्वसुकृतं तथापि परमात्मनः ।।

साक्षात्संबन्धतो ब्रह्मन्भवत्येव महत्तरम् ।। १९ ।।

यथा स्फुलिङ्गमात्रोपि वन्यकाष्ठौघयोगतः ।।

अनिवार्यो भवेद्दावस्तथैतद्धरियोगतः ।। 2.9.2.२० ।।

प्रवृत्ते वा निवृत्ते वा तस्माद्धर्मे स्थितैर्न्नरैः ।।

उपास्तव्यो वासुदेवस्तत्सम्यक्सिद्धिमीप्सुभिः ।। २१ ।।

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।।

नारदस्य च संवादमृषेर्नारायणस्य च ।। २२ ।।

यो वासुदेवो भगवान्नित्यं ब्रह्मपुरे स्थितः ।।

दाक्षायण्यामाविरासीद्धर्माल्लोकहिताय सः ।। २३ ।।

कृते युगे द्विजवर पुरा स्वायम्भुवान्तरे ।।
नरो नारायणश्चेति द्विरूपः प्रादुरास सः ।। २४ ।।
धर्माश्रमात्तपस्तप्तुं क्षेमायैव नृणां भुवि ।।
नरनारायणौ तौ च बदर्याश्रममीयतुः ।।२५।।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ।।
तेपाते तेजसा स्वेन दुर्निरीक्ष्यौ सुरैरपि ।। २६ ।।
यस्य प्रसादं कुर्वाते स वै तौ द्रष्टुमर्हति ।।
शक्यते नान्यथा द्रष्टुमपि तद्धामवासिभिः ।। २७ ।।
एकदा नारदो योगी ताभ्यामेव दिदृक्षितः ।।
अन्तरात्मतया चान्तर्हृदयेपि प्रचोदितः ।। २८ ।।
मेरोर्महागिरेः शृङ्गात्सद्यो गगनवर्त्मना ।।
तं देशमागमद्ब्रह्मन्बदर्याश्रमसंज्ञितम् ।। २९ ।।
तयोराह्निकवेलायामागतस्तत्र स द्रुतम् ।।
आद्याश्रमक्रियासक्तौ तौ ददर्श च दूरतः ।। 2.9.2.३० ।।
दृष्ट्वैवेश्वरचर्यां ता तस्य कौतूहलं त्वभूत् ।।
अहो एतौ जगत्पूज्यावीश्वरौ सर्वदेहिनाम् ।।
एतौ हि परमं ब्रह्म काऽनयोराह्निकी क्रिया ।। ३१ ।।
पितरौ सर्वभूतानां देवतानां च दैवतम् ।।
कां देवतां तु यजतः पितॄन्वैतौ महामती ।। ३२ ।।
इति संचिन्त्य मनसा भक्तो नारायणस्य सः ।।
तत्समीपमुपेत्याऽथ तस्थौ नत्वा कृताञ्जलिः ।। ३३ ।।
कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।।
पूजितश्चैव विधिना शास्त्रदृष्टेन सोऽनघ ।। ३४ ।।
तद्दृष्ट्वा महदाश्चर्य्यमपूर्वं विधिविस्तरम्।।
उपोपविष्टः सुप्रीतो नारदोभूच्च विस्मितः ।। ३५ ।।
नारायणं संनिरीक्ष्य प्रयतेनान्तरात्मना ।।

नमस्कृत्य च तं देवमिदं वचनमब्रवीत् ।। ३६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्य आत्यन्तिकश्रेयःसाधननिरूपणे नारायणनारदसमागमो नाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०३



।। नारद उवाच ।।

वेदेषु सपुराणेषु सांगोपांगेषु गीयसे ।।

त्वमेव शाश्वतो धाता नियन्तामृतमच्युत ।।

त्वं विधाता च सततं त्वयि सर्वमिदं जगत् ।। १ ।।

चत्वारो ह्याश्रमा देव सर्वे वर्णाश्च कर्मभिः ।।

यजन्ते त्वामहरहर्न्नानामूर्तिसमास्थितम् ।। २ ।।

पिता माता च सर्वस्य दैवतं त्वं हि शाश्वतम् ।।

कं त्वं च यजसे देवं पितरं वा न विद्महे ।। ३ ।।

श्रीनारायण उवाच ।।

नैतद्रहस्यं वक्तव्यमात्मगुह्यमथापि ते ।।

मयि भक्तिमते ब्रह्मन्प्रवक्ष्यामि यथातथम् ।। ४ ।।

सत्यं ज्ञानमनन्तं यो ब्रह्मेति श्रुतिवर्णितः ।।

त्रिगुणव्यतिरिक्तश्च पुरुषो दिव्यविग्रहः ।।५।।

महापुरुष इत्युक्तो वासुदेवश्च यः प्रभुः ।।

नारायण ऋषिर्विष्णुः कृष्णश्च भगवानिति ।।६।।

एकः स एव देवो नौ पितरौ चेति विद्धि भोः ।।

आवाभ्यां पूज्यतेऽसौ हि दैवे पित्र्ये च कल्पिते ।।७।।

नास्ति तस्मात्परतरः पिता देवोऽथ वा द्विज ।। ]

आत्मा हि नौ स विज्ञेयः कृष्णो ब्रह्मपुरेश्वरः ।।८।।

तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभावनी।।

दैवं पित्र्यं च कर्तव्यमिति लोकहितैषिणा ।। ९।।

प्रवृत्तं च निवृत्तं च द्वेधा कर्मास्ति वैदिकम् ।।

यथाधिकारं विहितं पुरुषार्थोपलब्धये ।।2.9.3.१०।।

तन्त्रवेदोक्तविधिना स्वोचितस्त्रीपरिग्रहः ।।

वित्तार्जनं च न्यायेन द्रव्ययज्ञाः सकामनाः ।। ११ ।।

वासो ग्रामे च नगरे पूर्तमिष्टं च कर्म यत् ।।

प्रवृत्तं तत्तु सकलमशान्तिकृदुदीरितम् ।। १२ ।।

स्त्रीद्रव्ययोः परित्यागः कामलोभक्रुधां तथा ।।

वनवासश्च वैराग्यं तपः क्षान्तिः शमो दमः ।। १३ ।।

ब्रह्मयज्ञा योगयज्ञा ज्ञानयज्ञाश्च सर्वशः ।।

जपयज्ञाश्चेति मुने निवृत्तं कर्म कीर्तितम् ।। १४ ।।

त्रिलोक्यां गतयो धर्मं प्रवृत्तमनुतिष्ठताम् ।।

स्वर्गलोकावधि मुने मनुष्याणां भवन्ति वै।। १५ ।।

इन्द्रचन्द्राग्निलोकादौ स्वस्वपुण्यफलं च ते ।।

भोगैश्वर्यं वहुविधमभीष्टं भुञ्जते खलु ।। १६ ।।

यावत्पुण्यं तावदेव भुक्त्वा तत्ते सुराऽस्ततः ।।

क्षीणे तु सुकृते भूयः पतन्ति विवशा भुवि ।। १७ ।।

भोगैश्वर्यादिनाशो हि कालवेगेन जायते ।।

अनिच्छतामपि मुने तेषां पुण्यक्षये सति ।। १८ ।।

आधिकारिकदेवानामपि ब्रह्मदिने मुहुः ।।

इष्टभोगैश्वर्यनाशो जायते कालरंहसा ।।१९।।

निवृत्तधर्मनिष्ठा ये योगिनश्च तपस्विनः ।।

जनादीन्यान्ति लोकांस्त्रींस्ते तु त्रैलोक्यतो बहिः ।।2.9.3.२०।।

तत्तल्लोकैश्वर्यभोगान्भुञ्जते ते निजेप्सितान् ।।

दैनन्दिनेपि प्रलये वर्त्तन्ते ते यथासुखम् ।। २१ ।।

ब्रह्मणो द्विपरार्द्धान्ते तद्भोगैश्वर्यसंपदः ।।

नश्यन्ति कालशक्त्यैव लोकास्तेषां च नारद ।। २२ ।।

अथैतद्द्विविधं कर्म गुणात्मकमपि द्विज ।।

कृतं चेद्विष्णुसंबद्धं निर्गुणं स्यात्तदा तु तत् ।। २३ ।।

तत्फलं चाक्षयं स्याद्धि स्वेष्टादप्यधिकं नृणाम् ।।

भक्तास्ते भगवद्धाम यान्त्यष्टावृत्तितः परम् ।। २४ ।।

अतो विवेकिनो नित्यं विष्णुभक्त्यन्विताः क्रियाः ।।

प्रवृत्ता वा निवृत्ता वा कुर्वते सकला अपि ।। २५ ।।

ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्द्धर्मस्तथा यमः ।।

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।। २६ ।।

वैभ्राजश्च वसिष्ठश्च विवस्वान्सोम एव च ।।

कश्यपः कर्द्दमाद्याश्च प्रजानां पतयो मुने ।। २७ ।।

देवाश्च ऋषयः सर्वे सर्वे वर्णास्तथाश्रमाः ।।

पूजयन्ति तमेवेशं प्रवृत्तं धर्ममास्थिताः ।। २८ ।।

सनः सनत्सुजातश्च सनकः स सनन्दनः ।।

सनत्कुमारः कपिल आरुणिश्च सनातनः ।। २९ ।।

ऋभुर्यतिश्च हंसाद्या मुनयो नैष्ठिकव्रताः ।।

तमेव पूजयन्तीशं निवृत्तं धर्ममास्थिताः ।। 2.9.3.३० ।।

वासुदेवस्याङ्गतया भावयित्वा सुरान्पितॄन् ।।

अहिंसपूजाविधिना यजन्ते चान्वहं हि ते ।। ३१ ।।

यथाधिकारमेते हि तेन यत्र नियोजिताः ।।

प्रवृत्ते वा निवृत्ते वा धर्मे ते पालयन्ति तम् ।।

तस्य देवस्य मर्यादां न क्रामन्त्युभयेपि ते ।। ३२ ।।

चतुर्वर्गे तेषु यस्य यद्यदिष्टतमं भवेत् ।।

तत्तत्संपूरयत्येव सर्व शक्तिपतिः प्रभुः ।। ३३ ।।

भक्त्या कृतस्याप्यल्पस्य भगवान्पुण्यकर्मणः ।।

प्रीतो ददात्येव फलं महदक्षयमीप्सितम् ।। ३४ ।।

तेषु तद्भक्तितो लोके ये त्वेकान्तित्वमास्थिताः ।।

वासुदेवं विनान्यत्र संक्षीणाशेषवासनाः ।। ३५ ।।

देहान्ते ते तु संप्राप्य तस्य धाम तमःपरम् ।।

देहैरप्राकृतैरेव प्रेम्णा परिचरन्ति तम् ।। ३६ ।।

अन्ये तु भक्ताः कालेन तदुपासनदार्ढ्यतः ।।

वासनानां क्षये जाते यान्त्येकान्तिकवद्धि तम् ।। ३७ ।।

येन केनापि भावेन तेन संबध्यते तु यः ।।

संसृतिं न प्रयात्येव स तु क्वाप्यन्यजीववत् ।। ३८ ।।

कर्मयोगस्य संसिद्धिर्ज्ञानयोगस्य चेप्सिता ।।

तस्याश्रयादेव नृणां निर्विघ्नं भवति द्रुतम्।। ३९ ।।

तस्मात्स एव भगवान्सर्वैरपि जनैरिह ।।

स्वाभीष्टफलसिद्ध्यर्थं प्रीत्योपास्यो यथाविधि ।। 2.9.3.४० ।।

ब्रह्मैक्यमाप्ता निर्विघ्ना अपि ब्रह्मशिवादयः ।।

श्रीविष्णोः कुर्वते भक्तिं सन्तीत्थं तन्महागुणाः ।। ४१ ।।

इति गुह्यसमुद्देशस्तव नारद कीर्त्तितः ।।

अतिप्रेम्णा हि सततं मयि भक्तिमतोऽखिलः ।। ४२ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्रीवासुदेवसर्वोपास्यत्वनिरूपणं नाम तृतीयोऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/hab



।। स्कन्द उवाच ।।

स एवमुक्तोत्मविदां वरिष्ठो नारायणेनोत्तमपूरुषेण ।।

जगाद वाक्यं जगतां गरिष्ठं तमच्युतं लोकहिताधिवासम् ।। १ ।।

नारद उवाच ।।

श्रुतं मया देव समं त्वयोक्तमृष्याकृतिच्छादितभूरिधाम्ना ।।

तवैव लीला सकलेयमीश सर्वेश्वरस्येति विदामि चित्ते ।। २ ।।

त्वद्दर्शनेनैव हि पूर्णकामो भवामि भूमन्स्वहृदीप्सितेन ।।

तथाप्यहं तत्तव पूर्वरूपं प्रभो दिदृक्षामि हि कौतुकं मे ।। ३ ।।

श्रीनारायण उवाच ।।

न तत्स्वरूपं मम दानयज्ञयोगैश्च वैदेस्तपसापि दृश्यम् ।।

एकान्तिकैर्भक्तवरैस्तु भक्त्या ह्यनन्यया नारद दृश्यते तत् ।। ४ ।।

भक्तिस्तव त्वस्ति मयि ह्यनन्या ज्ञानं च वैराग्ययुतं स्वधर्मः ।।

अतश्च तद्दर्शनमाप्स्यसि त्वं सुरेश्वराद्यैरपि यद्दुरापम् ।। ५ ।।

त्वदीयभक्त्याऽतितरा प्रसन्नस्त्वाज्ञापयाम्यद्य तदीक्षणाय ।।

सितान्तरीपं व्रज तत्र तेऽयं मनोरथः सेत्स्यति विप्रवर्य ।। ६ ।।

स्कन्द उवाच ।।

श्रुत्वेति वाचं परमेष्ठिपुत्रः सोप्यचर्चयित्वा तमृषिं पुराणम् ।।

खमुत्पपातोत्तमयोगयुक्तस्ततोधिमेरौ सहसा निपेते ।। ७ ।।

तस्यावतस्थे च मुनिर्मुहूर्तमेकान्तमासाद्य गिरेः स शृंगे ।।

आलोकयन्नुत्तरपश्चिमेन ददर्श चात्यद्भुतमन्तरीपम् ।। ८ ।।

क्षीरोदधेरुत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः ।।

देदीप्यमानो विततेन सर्वतो ज्योतिश्चयेनातिसि तेन नित्यम् ।। ९ ।।

आम्रैरनेकैरसनैरशोकैराम्रातकैर्निम्बकदम्बनीपैः ।।

बिल्वैर्मधूकैः सुरदारुभिश्च प्लक्षैर्वटैः किंशुकचन्दनैश्च ।। 2.9.4.१० ।।

सर्ज्जैश्च शालैः पनसैस्तमालैर्मुनिद्रुमैः केतकचम्पकैश्च ।।
कुन्दैश्च जातीसुरमल्लिकाभिद्रुमैर्वृतः पुष्पफलावनम्रैः ।। ११ ।।
कल्पद्रुमाणां बहुभिश्च वृन्दैः सुवर्णरम्भाक्रमुकालिभिश्च ।।
महद्भिरुद्यानवरैरनेकैः सरित्सरोभिर्विकचाम्बुजैश्च ।।
हंसादिभिः पक्षिवरैः सुशब्दैर्गणैर्मृगाणां रुचिरैश्चलद्भिः ।। १२ ।।
सर्वेपि जीवाः किल यत्र मुक्ता वसन्ति च स्थावरजङ्गमाश्च ।।
तं वीक्षमाणेन च तेन दृष्टा भक्तोत्तमाः श्रीपुरुषोत्तमस्य ।। १३ ।।
अतीन्द्रिया निर्गतसर्वपापा निष्यन्दहीनाश्च सुगन्धिनश्च ।।
द्विबाहवः केपि चतुर्भुजाश्च श्वेताश्च केचिन्नवनीरदाभाः।। ।। १४ ।।
पद्मच्छदाक्षाः सममानगात्राः सुरूपदिव्यावयवाः सुसाराः ।।
विकीर्णकेशाश्च सदा किशोरा सद्भिश्च चिह्नैर्न्निखिलैरुपेताः ।। १५ ।।
सरोजरेखाङ्कितपाणिपादाः षडूर्मिहीना मिहिरातितेजसः ।।
सितांशुका ध्यानपराश्च सौम्याः कालोपि येभ्यो भयमेति नित्यम्।। १६ ।।
सावर्णिरुवाच ।।
अतीन्द्रिया निरातङ्का अनिष्यन्दाः सुगन्धिनः ।। के ते नराः कथं जातास्तादृशाः का च तद्गतिः ।। १७ ।।
श्वेतद्वीपः पयोम्भोधौ वर्त्तते हि धरातले ।। तद्वासिनामपि कथं प्रोक्ताऽतीन्द्रियता त्वया ।।१८।।
ये ब्रह्मण्यक्षरे धाम्नि सच्चिदानन्दरूपिणि।। स्थिताः स्युश्चिन्मया मुक्तास्ते तथा स्युर्न्नहीतरे ।। १९ ।।
एतं मे संशयं छिन्धि परं कौतूहलं हि मे ।। त्वं हि सर्वकथाभिज्ञस्ततस्त्वामाश्रितोस्म्यहम् ।। 2.9.4.२० ।।
स्कन्द उवाच ।।
एकान्तोपासनेनैव प्राक्कल्पेषु रमापतेः ।। ये ब्रह्मभावं संप्राप्ता अजरामरतां गताः ।। २१ ।।
अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्र धामनि ।। सेवितुं वासुदेवं तं स्थिता देवर्षिणेक्षिताः ।।२२ ।।
प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि ।। स्थास्यन्ति ते स्वतन्त्राश्च कालमायाभयोज्झिताः ।। २३ ।।
अत्रापि पुरुषा ये तु मायाजाता अतः क्षराः ।। तेपि सद्भिः साधनैर्वै जायन्ते तादृशाः किल ।। २४ ।।
अहिंसया च तपसा स्वधर्मेण विरागतः ।। वासुदेवस्य माहात्म्यज्ञानेनैवात्मनिष्ठया ।। २५।।
भक्त्या परमया नित्यं प्रसङ्गेन महात्मनाम् ।। हरिसेवाविहीनानां मुक्तीनामप्यनिच्छया ।। २६ ।।
सिद्धीनामणिमादीनां सर्वासां चाप्यकांक्षया ।। अन्योन्यं श्रुतिकीर्तिभ्यां श्रीहरेर्जन्मकर्मणाम् ।।

भवन्ति तादृशा नूनं पुरुषा मुनिसत्तम ।। २७ ।।

जगत्सर्गे जायमानेप्येते कालवशात्क्वचित् ।। न जायन्ते स्वतंत्रत्वान्न नश्यन्ति लयेऽन्यवत् ।। २८ ।।

अत्र ते कथयिष्यामि कथां पौराणिकीं मुने ।। यथात्रत्योपि मनुजस्तथा भावमुपेयिवान्।। २९ ।।

विस्तीर्णैषा कथा ब्रह्मञ्छ्रुता मे पितृसन्निधौ ।। सैषाद्य तव वक्तव्या कथासारो हि स स्मृतः ।। 2.9.4.३० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्वेतद्वीपमुक्तवर्णनं नाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०५

https://sa.wikisource.org/s/hac
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

आसीद्राजोपरिचरो वसुनामा पुरा मुने ।।

भूभर्तुरायोस्तनयः ख्यातश्चासावमावसुः ।।

आखण्डलसखो भक्तिं प्राप्तो नारायणे प्रभौ ।। १ ।।

धार्मिकः पितृभक्तश्च पितॄन्देवांश्च तर्पयन् ।।

सदाचाररतो दक्षः क्षमावाननसूयकः ।। २ ।।

सर्वोपकारकः शान्तो ब्रह्मचर्यरतः शुचिः ।।

अक्रोधनश्च मितभुङ्मृदुर्निर्व्यसनो मुनिः ।। ३ ।।

निर्द्वन्द्वो निर्विकारश्च निर्मानो धीर आत्मवित् ।।

निर्दम्भो मानदो योगी तपस्वी विजितेन्द्रियः ।। ४ ।।

धनपुत्रकलत्रेषु विरक्तः स्वजनादिषु ।।

नारायणमनुं भक्त्या स जजापान्वहं नृपः ।। ५ ।।

तस्मै तुष्टोऽथ भगवान्वासुदेवः स्वयं ददौ ।।

साम्राज्यं सोऽथ नासक्तस्तत्र भेजे तमादरात् ।। ६ ।।

तत्रोक्तेन विधानेन पञ्चकालसमाहितः ।।

पूजयामास देवेशं तच्छेषेण सुरान्पितॄन्।।७।।

तेषां शेषेण विप्राश्च संविभज्याश्रितांश्च सः ।।

शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः।। ।। ८ ।।

भक्षणे दोषमविदत्प्राणिमात्रामिषस्य तु ।।

महापातकवद्राजा स्वप्रजाश्च तथाऽवदत् ।। ९।।

सर्वभावेन भेजेऽसौ देवदेवं जनार्दनम् ।।

अनादिमध्यनिधनं लोककर्त्तारमव्ययम्।।2.9.5.१०।।

श्रीवासुदेवपदयोः स चकार मनः स्थिरम् ।।

श्रोत्रे च नित्यं भगवत्कथायाः श्रवणे नृपः ।।१ १।।

नयने स्वे मुकुन्दस्य तद्भक्तानां च दर्शने।।

गुणगाने हरेर्वाणीं चक्रे भूमिपतिः स तु।।१२।।

नारायणांघ्रिसंस्पृष्ट तुलसीपुष्पसौरभे।।

प्राणं चकार च नृपो नान्यगन्धेषु कर्हिचित्।। १३ ।।

श्रीशोपभुक्तवस्त्रादि स्पर्शने च त्वचं निजाम्।।

चकार रसनामन्ने नारायणनिवेदिते।। १४ ।।

भगवन्मन्दिरक्षेत्रसदन्तिकगतौतथा।।

चकार चरणौ राजा सेवायां च करौ हरेः।।१५।।

उत्तमांगं च चक्रेऽसौ विष्णुपादाभिवन्दने।।

सख्यं चकार परमं महाभागवतेषु सः।।१६।।

एकोपि न क्षणस्तस्य विना भक्तिं रमापतेः ।।

जगाम किल राजर्षेस्तदीय व्रतचारिणः ।।१७ ।।

महद्भिरेव संभारैर्विष्णोर्ज्जन्मदिनोत्सवान् ।।

चक्रे तदर्थमुद्यानमंदिरोपवनानि च ।। १८ ।।

इत्थं नारायणे भक्तिं वहतो ब्राह्मणोत्तम ।।

एकशय्यासनं तस्य दत्तवान्देवराट् स्वयम् ।। १९ ।।

वैजयन्तीं ददौ मालां तस्मा इन्द्रोऽतिशोभनाम् ।।

अम्लानपङ्कजमयीं तथा रत्नानि भूरिशः ।। 2.9.5.२० ।।

आत्मा राज्यं धनं चैव कलत्रं वाहनादि च ।।

यत्तद्भगवतः सर्वमिति तत्प्रेक्षितं सदा ।। २१ ।।

काम्या नैमित्तिकाजस्रं यज्ञियाः परमाः क्रियाः ।।

सर्वाः सात्वतमास्थाय विधिं चक्रे समाहितः ।। २२ ।।

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।।

प्रायणं भगवत्प्रत्तं भुञ्जतेस्माग्रतो द्विजाः ।। २३ ।।

तस्य प्रशासतो राज्यं धर्मेणाऽमित्रघातिनः ।।

नानृता वाक्समभवन्मनो दुष्टं न चाऽभवत् ।।

न च कायेन कृतवान्स पापं परमण्वपि ।। २४ ।।

पञ्चरात्रं महातन्त्रं भगवद्भक्तिपुष्टये ।।

शुश्रावानुदिनं राजा भगवद्भक्तवक्त्रतः ।। २५ ।।

धर्मं संस्थापयञ्छुद्धं रञ्जयन्सकलाः प्रजाः ।।

पालयामास पृथिवीं दिवमाखण्डलो यथा ।। २६ ।।

अपि सप्तविधस्तस्य राज्ये पललभक्षकः ।।

पुमान्कोप्यभवन्नैव न च पाषण्डवेषिणः ।। २७ ।।

असाध्यो योषितश्चैव पुरुषाः पारदारिकाः ।।

न श्रुतास्तस्य राज्ये च धर्मसंकरकारिणः ।। २८ ।।

एकादशविधं मद्यं त्रिविधां च सुरामपि ।।

नाजिघ्रदपि कोपीह तस्मिन्राज्यं प्रशासति ।। २९ ।।

एवंगुणः स तु क्वापि पक्षपाताद्दिवौकसाम् ।।

मिथ्यालापाद्दिवो भ्रष्टः प्रविवेश महीतलम् ।। 2.9.5.३० ।।

अन्तर्भूमिगतश्चासौ सततं धर्मवत्सलः ।।

नारायणपरो भूत्वा तन्मंत्रमजपत्स्थिरः ।। ३१ ।।

तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ।।

दिवं प्राप्य सुखं तत्र मनोभीष्टं समन्वभूत् ।। ३२ ।।

पुनश्चेदिपतिर्भूत्वा भुव्यसौ पितृशापतः ।।

पञ्चरात्रोक्तविधिना भेजे हरिमतन्द्रितः ।। ३३ ।।

स्वर्गलोकं ततः प्रापद्दिव्यदेहेन भूपतिः ।।

उपासनां च तत्रत्यैः परमर्षिगणैः सह ।। ३४।।

दृढीकुर्वन्भगवतः कञ्चित्कालमुवास तत् ।।

परं पदमथ प्रापद्वासुदेवस्य निर्भयम्।।३५।।

।। ।। इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्य उपरिचरवसुसद्गुणवर्णनं नाम पंचमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०६



।। सावर्णिरुवाच ।।

स हि भक्तो भगवत आसीद्राजा महान्वसुः ।।

किं मिथ्याऽभ्यवदद्येन दिवो भूविवरं गतः ।। १ ।।

केनोद्धृतः पुनर्भूमेः शप्तोऽसौ पितृभिः कुतः ।।

कथं मुक्तस्ततो भूप इत्येतत्स्कन्द मे वद् ।। २ ।।

स्कन्द उवाच ।।

शृणु ब्रह्मन्कथामेतां वसोर्वास वरोचिषः ।।

यस्याः श्रवणतः सद्यः सर्वपापक्षयो भवेत् ।। ३ ।।

स्वायम्भुवान्तरे पूर्वमिन्द्रो विश्वजिदाह्वयः ।।

आररम्भे महायज्ञमश्वमेधाभिधं मुने ।। ४ ।।

निबद्धाः पशवोऽजाद्याः क्रोशन्तस्तत्र भूरिशः ।।

सर्वे देवगणाश्चापि रसलुब्धास्तदासत ।। ५ ।।

क्षेमाय सर्वलोकानां विचरन्तो यदृच्छया ।।

महर्षय उपाजग्मुस्तत्र भास्करवर्च्चसः ।। ६।।

संमानिता सुरगणैः पाद्यार्घ्यस्वागतादिभिः ।।

ते बृहन्मुनयोऽपश्यन्मेध्यांस्तान्क्रोशतः पशून् ।। ७ ।।

सात्त्विकानामपि च तं देवानां यज्ञविस्तरम् ।।

हिंसामयं समालोक्य तेऽत्याश्चर्यं हि लेभिरे ।। ८ ।।

धर्मव्यतिक्रमं दृष्ट्वा कृपया ते द्विजोत्तमाः ।।

महेन्द्रप्रमुखानूचुर्देवान्धर्मधियस्ततः ।। ९ ।।

महर्षय ऊचुः ।।

देवैश्च ऋषिभिः साकं महेन्द्राऽस्मद्वचः शृणु ।।

यथास्थितं धर्मतत्त्वं वदामो हि सनातनम् ।। 2.9.6.१० ।।

यूयं जगत्सर्गकाले ब्रह्मणा परमेष्ठिना ।।

सत्त्वेन निर्मिताः स्थो वै चतुष्पाद्धर्मधारकाः ।। ११ ।।
रजसा तमसा चासौ मनूंश्चैव नराधिपान् ।।
असुराणां चाधिपतीनसृजद्धर्मधारिणः ।। १२ ।।
सर्वेषामथ युष्माकं यज्ञादिविधिबोधकम् ।।
ससर्ज श्रेयसे वेदं सर्वाभीष्टफलप्रदम् ।। १३ ।।
अहिंसैव परो धर्मस्तत्र वेदेऽस्ति कीर्त्तितः ।।
साक्षात्पशुवधो यज्ञे नहि वेदस्य संमतः ।। १४ ।।
चतुष्पादस्य धर्मस्य स्थापने ह्येव सर्वथा ।।
तात्पर्यमस्ति वेदस्य न तु नाशेऽस्य हिंसया ।। १५ ।।
रजस्तमोदोषवशात्तथाप्यसुरपा नृपाः ।।
मेध्येनाजेन यष्टव्यमित्यादौ मतिजाड्यतः ।।
छागादिमर्थं बुबुधुर्व्रीह्यादिं तु न ते विदुः ।। १६ ।।
सात्त्विकानां तु युष्माकं वेदस्यार्थो यथा स्थितः ।।
ग्रहीतव्योन्यथा नैव तादृशी च क्रियोचिता ।। १७ ।।
यादृशो हि गुणो यस्य स्वभावस्तस्य तादृशः ।।
स्वस्वभावानुसारेण प्रवृत्तिः स्याच्च कर्मणि ।। १८ ।।
सात्त्विकानां हि वो देवः साक्षाद्विष्णू रमापतिः ।।
अहिंसयज्ञेऽस्ति ततोऽधिकारस्तस्य तुष्टये ।। १९ ।।
प्रत्यक्षपशुमालभ्य यज्ञस्याचरणं तु यत् ।।
धर्मः स विपरीतो वै युष्माकं सुरसत्तमाः ।। 2.9.6.२० ।।
रजस्तमोगुणवशादासुरीं संपदं श्रिताः ।।
युष्माकं याजका ह्येते सन्त्यवेदविदो यथा ।। २१।।
तत्सङ्गादेव युष्माकं साम्प्रतं व्यत्ययो मतेः ।।
जातस्तेनेदृशं कर्म प्रारब्धमिति निश्चितम् ।। २२ ।।
राजसानां तामसानामासुराणां तथा नृणाम् ।।
यथागुणं भैरवाद्या उपास्याः सन्ति देवताः ।। २३ ।।
स्वगुणानुगुणात्मीयदेवतातुष्टये भुवि ।।
हिंस्रयज्ञविधानं यत्तेषामेवोचितं हि तत् ।। २४ ।।

तत्रापि विष्णुभक्ता ये दैत्यरक्षोनरादयः ।।

तेषामप्युचितो नास्ति हिंस्रयज्ञः कुतस्तु वः ।। २५ ।।

यज्ञशेषो हि सर्वेषां यज्ञकर्मानुतिष्ठताम् ।।

अनुज्ञातो भक्षणार्थं निगमेनैव वर्तते ।। २६ ।।

सात्त्विकानां देवतानां सुरामांसाशनं क्वचित् ।।

अस्माभिस्त्वीक्षितं नैव न श्रुतं च सतां मुखात् ।। २७ ।।

तस्माद्व्रीहिभिरेवासौ यज्ञः क्षीरेण सर्पिषा ।।

मेध्यैरन्नरसैश्चाऽन्यैः कार्यो न पशुहिंसया ।। २८ ।।

तत्रापि बीजैर्यष्टव्यमजसंज्ञामुपागतैः ।।

त्रिवर्षकालमुषितैर्न्न येषां पुनरुद्गमः ।। २९ ।।

अद्रोहश्चायलोभश्च दमो भूतदया तपः ।।

ब्रह्मचर्यं तथा सत्यमदम्भश्च क्षमा धृतिः ।। 2.9.6.३० ।।

सनातनस्य धर्मस्य रूपमेतदुदीरितम् ।।

तदतिक्रम्य यो वर्तेद्धर्मघ्नः स पतत्यधः ।। ३१ ।।

।। स्कन्द उवाच ।।

इत्थं वेदरहस्यज्ञैर्महामुनिभिरादरात् ।।

बोधिता अपि सन्नीत्या स्वप्रतिज्ञाविघाततः ।।

तद्वाक्यं जगृहुर्नैव तत्प्रामाण्यविदोपि ते ।। ३२ ।।

महद्व्यतिक्रमात्तर्हि मानक्रोधमदादयः ।।

विविशुस्तेष्वधर्मस्य वंश्याश्छिद्रगवेषिणः ।। ३३ ।।

अजश्छागो न बीजानीत्यादि वादिषु तेष्वथ ।।

विमनस्स्वृषिवर्येषु पुनस्तान्बोधयत्सु च ।। ३४ ।।

राजोपरिचरः श्रीमांस्तत्रैवागाद्यदृच्छया ।।

तेजसा द्योतयन्नाशा इन्द्रस्य परमः सखा ।। ३५ ।।

तं दृष्ट्वा सहसायान्तं वसुं ते त्वन्तरिक्षगम् ।।

ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् ।। ३६ ।।

एष भूमिपतिः पूर्वं महायज्ञान्सहस्रशः ।।

चक्रे सात्वततन्त्रोक्तविधिनारण्यकेन च ।। ३७ ।।

येषु साक्षात्पशुवधः कस्मिंश्चिदपि नाऽभवत् ।।
न दक्षिणानुकल्पश्च नाप्रत्यक्षसुराच्र्चनम् ।। ३८ ।।
अहिंसाधर्मरक्षाभ्यां ख्यातोसौ सर्वतो नृपः ।।
अग्रणीर्विष्णुभक्तानामेकपत्नीमहाव्रतः ।। ३९ ।।
ईदृशो धार्मिकवरः सत्यसन्धश्च वेदवित् ।।
कथंचिन्नान्यथा ब्रूयाद्वाक्यमेष महान्वसुः ।। 2.9.6.४० ।।
एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा ।।
अपृच्छन्सहसाऽभ्येत्य वसुं राजानमुत्सुकाः ।। ४१ ।।
देवमहर्षय ऊचुः ।।
भो राजन्केन यष्टव्यं पशुना होस्विदौषधैः ।।
एतं नः संशयं छिन्धि प्रमाणं नो भवान्मतः ।। ४२ ।।
स्कन्द उवाच ।।
स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः ।।
कस्य वः को मतः पक्षो ब्रूत सत्यं समाहिताः ।। ४३ ।।
महर्षय ऊचुः ।।
धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ।।
देवानां तु पशुः पक्षो मतं राजन्वदात्मनः ।। ४४ ।।
स्कन्द उवाच ।।
देवानां तु मतं ज्ञात्वा वसुस्तत्पक्षसंश्रयात् ।।
छागादिपशुनैवेज्यमित्युवाच वचस्तदा ।। ४५ ।।
एवं हि मानिनां पक्षमसन्तं स उपाश्रितः ।।
धर्मज्ञोप्यवदन्मिथ्या वेदं हिंसापरं नृपः ।।४६।।
तस्मिन्नैव क्षणे राजा वाग्दोषादन्तरिक्षतः ।।
अधः पपात सहसा भूमिं च प्रविवेश सः।।
महतीं विपदं प्राप भूमिमध्यगतो नृपः।।
स्मृतिस्त्वेनं न प्रजहौ तदा नारायणाश्रयात्।।४८।।
मोचयित्वा पशून्त्सर्वांस्ततस्ते त्रिदिवौकसः ।।

हिंसाभीता दिवं जग्मुः स्वाश्रमांश्च महर्षयः।।४९।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव खण्डे श्रीवासुदेवमाहात्म्ये वेदस्यहिंसापरत्वोक्त्या उपरिचरवसोरधःपातवर्णनं नाम षष्ठोऽध्यायः ।।६।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/hae
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

भूमध्यगः स राजाऽथ स्वकृतं कर्म गर्हयन् ।।

अनुतप्यमानश्च भृशं मानयंस्ताबृहन्मुनीन् ।।

जजाप भगवन्मन्त्रं त्र्यक्षरं मनसा सदा ।। १ ।।

तत्रापि परया भक्त्या पञ्चकालं स्वचेतसा ।।

अयजद्धरिं सुरपतिं भूमेर्विवर आदरात् ।। २ ।।

ततोऽस्य तुष्टो भगवान्वासुदेवो जगत्पतिः ।। आपद्यपि यथाकालं यथाशास्त्रं स्वमर्चतः ।। ३ ।।

वरदो भगवान्विष्णुः समीपस्थं द्विजोत्तमम् ।। गरुत्मन्तं महावेगमाबभाषे स्वयं ततः ।। ४ ।।

श्रीभगवानुवाच ।।

द्विजोत्तम महाभाग गम्यतां वचनान्मम ।।

सम्राड्राजा वसुर्नाम धर्मात्मा मां समाश्रितः ।। ५ ।।

ब्रह्मातिक्रमदोषेण प्रविष्टो वसुधातलम् ।।

तन्मानना कृता तेन तद्गच्छाद्य तदन्तिकम् ।। ६ ।।

भूमेर्विवरसंगुप्तं गरुडैनं ममाज्ञया ।।

अधश्चरं नृपश्रेष्ठं खेचरं कुरु मा चिरम् ।। ७ ।।

स्कन्द उवाच ।।

गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।।

विवेश विवरं भूम्या यत्रास्ते वाग्यतो वसुः ।। ८ ।।

तत एनं समुत्क्षिप्य स्वचञ्च्वा विनता सुतः ।।

उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत ।। ९ ।।

तस्मिन्मुहूर्ते संजज्ञे राजोपरिचरः पुनः ।।

सशरीरो गतः स्वर्गं परमं सुखमाप्तवान् ।। 2.9.7.१० ।।

एवं तेनापि ब्रह्मर्षे वाग्दोषात्सदवज्ञया ।।

प्राप्ता गतिरयज्वार्हा धर्मज्ञेन महात्मना ।। ११ ।।

केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।।

ततः शीघ्रं जहौ पापं स्वर्गलोकमवाप च ।। १२ ।।

भुञ्जानो विविधं सौख्यं मनोभीष्टं च तत्र सः ।।

उवासान्यो यथा शक्रो गीयमानयशाः सुरैः ।। १३ ।।

तमेकदा विमानेन चरन्तं सूर्यसन्निभम् ।।

अद्रिकाप्सरसा युक्तमच्छोदा समवैक्षत ।। १४ ।।

सा हि सोमपदस्थानां पितॄणां मानसी सुता ।।

अग्निष्वात्ताभिधानानाममूर्तानां महात्मनाम् ।। १५ ।।

अमूर्तत्वात्पितॄन्स्वान्सा न जानन्ती शुचिस्मिता ।।

तं वसुं पितरं मेने स च तामात्मजामिव ।। १६ ।।

तौ ततः पितरः शेपुर्भावं दृष्ट्वेदृशं तयोः ।।

कन्ये त्वमस्य नृपतेर्भुवि कन्या भविष्यसि ।। १७ ।।

वसो त्वं मानुषो भूत्वा सुतामेनां स्वयोषिति ।।

अस्यामेवाप्सरायां त्वं जनयिष्यसि निश्चितम् ।। १८ ।।

इत्थं तौ पितृभिः शप्तौ शापमोक्षाय तास्ततः ।।

प्रार्थयामासतुर्नत्वा तदोचुस्ते कृपालवः ।। १९ ।।

अवश्यमित्थं भावित्वाद्युवाभ्यामुपलम्भितः ।।

शापोऽयं तत्र युवयोः श्रेय एव भविष्यति ।। 2.9.7.२० ।।

अष्टाविंशे द्वापरे तु वसो त्वं भुवि भूपतेः ।।

कृतयज्ञस्य तनयो भवितासि महात्मनः ।। २१ ।।

तत्रापि च यथेदानीं तथा त्वं सकलैर्गुणैः ।।

जुष्टश्च खचरो भाव्यो महाभागवताग्रणीः ।। २२ ।।

पञ्चरात्रोक्तविधिना विष्णुमभ्यर्च्य भक्तितः ।।

तच्छेषेण सुरांश्चास्मानर्चयिष्यसि सप्रजः ।। २३ ।।

ततस्त्वं दिव्यदेहेन स्वर्गलोकमवाप्स्यसि ।।

दिव्यान्भोगांस्तत्र भुक्त्वा प्राप्स्यसे वैष्णवं पदम् ।। ।। २४ ।।

अच्छोदे त्वमपि क्षोण्यां नाम्ना कालीति विश्रुता ।।

स्वांशेन मत्स्यदेहायामद्रिकायां जनिष्यसे ।। २५ ।।

पराशरात्तत्र सुतं कन्येव प्राप्स्यसे हरिम् ।।

प्रसादादेव तस्य त्वं भुक्तिं मुक्तिं च लप्स्यसे ।। २६ ।।

स्कन्द उवाच ।।

इत्थं स पितृभिः शप्तोऽनुगृहीतश्च भूपतिः ।।

कृतयज्ञादिह जनिं प्राप्याऽभूद्विश्रुतो गुणैः ।। २७ ।।

यथा पूर्वं कृष्णभक्तो दैवपित्र्यविधानवित् ।।

सख्ये तस्मै महेन्द्रश्च प्रादात्प्रचुरसंपदः ।। २८ ।।

श्वेतद्वीपे वासुदेवात्प्राप्तो यो विजयध्वजः ।।

पुरा स्वेनारिनाशार्थं तस्मा इन्द्रस्तमप्यदात् ।।२९।।

अन्तरिक्षगती राजा भौमान्भोगान्सुदुर्लभान् ।।

भुक्त्वान्ते स्वर्गलोकं च दिव्यदेहेन लब्धवान् ।। 2.9.7.३० ।।

प्राक्पुण्यशेषस्य फलं भुञ्जन्स्वमनसेप्सितान्।।

तत्र भोगान्बहुविधांस्तीव्रं वैराग्यमाप्तवान् ।। ३१ ।।

मेरोः शृङ्गेऽथ विजने शुचिः कृतदृढासनः ।।

दध्यौ स्वहृदयाम्भोजे स्वेष्टदेवं रमापतिम् ।। ३२ ।।

त्यक्त्वा देववपुः सोऽथ योगधारणया मुनिः ।।

ततः सूक्ष्मशरीरेण प्राप भास्करमण्डलम् ।।

यदाहुर्नैष्ठिकानां च मुक्तिद्वारं हि योगिनाम् ।। ३३ ।।

तत्तेजोदग्धसूक्ष्माङ्गः सच्चिद्रूपोऽतिनिर्मलः।।

स बभूव महाभागः संक्षीणाशेषवासनः।।३४।।

ततस्तन्मण्डलगतैरातिवाहिकदैवतैः।।

स निन्ये वैष्णवं धाम श्वेतद्वीपाख्यमद्भुतम् ।। ३५ ।।

स हि द्वीपो भुविस्थोपि भवत्यप्राकृतो मुने ।।

हरिभक्तजनावासः प्राप्य एकान्तभक्तिभिः ।। ३६ ।।

स गोलोकब्रह्मपुरवैकुण्ठानां च सुव्रत ।।

द्वारभूतोस्ति भक्तानां तल्लिप्सूनां महात्मनाम् ।। ३७ ।।

यस्य यद्धाम्न इच्छा स्याद्व्रजतस्तं तदेव हि ।।

प्रापयन्ति श्वेतमुक्ता मुने प्रागुक्तलक्षणाः ।। ३८ ।।

दिव्यदेहोऽभवत्तत्र धाम्न्यऽसौ श्वेतमुक्तवत् ।।

प्राप्य गोलोकधामाऽथ परमानन्दमाप्तवान् ।। ३९ ।।

इत्थमेकान्तिकेनैव धर्मेणाराधयन्ति ये ।।

नारायणं परं ब्रह्म श्वेतमुक्ता भवंति ते ।। 2.9.7.४० ।।

एतत्ते सर्वमाख्यातं पृष्टवान्यद्भवान्मुने ।।

स्थितिरेकांतभक्तानां श्वेतधाम्नश्च लक्षणम् ।। ४१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्य उपीरचरवसुमोक्षनिरूपणं नाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/haf
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

सावर्णिरुवाच ।।

महर्षिवारितैर्द्देवैस्त्यक्ते हिंसामये मखे ।।

पुनः कथं संप्रवृत्ता मखाः सर्वत्र तादृशाः ।। १ ।।

देवेष्वृषिषु भूपेषु प्राचीनाधुनिकेषु च ।।

सनातनः शुद्धधर्मो विपर्यासं कथं गतः ।। २ ।।

अत्र मे संशयो भूयान्संजातोऽद्य षडानन ।।

त्वं सर्वशास्त्रतत्त्वज्ञस्तमपाकर्त्तुमर्हसि ।। ३ ।।

स्कन्द उवाच ।।

कालो बलीयान्बलिनां भिद्यन्ते तेन बुद्धयः ।।

कामक्रोधरसास्वादलोभमानवतां मुने ।। ४ ।।

अतिक्रमेण महतां यथार्थहितभाषिणाम् ।।

क्रोधमानवशात्पुंसां नश्यन्त्येव च सद्धियः ।। ५ ।।

अकार्यमपि ते कर्तुं तदानीं तु बुधा अपि ।।

प्रवर्त्तन्तेऽनुतप्यन्ते बम्भ्रम्यन्तेऽथ संसृतौ ।। ६ ।।

कामादिभिर्विहीना ये सात्वताः क्षीणवासनाः ।।

तेषां तु बुद्धिभेदाय क्वापि कालो न शक्नुते ।।७।।

अनाश्रितस्तु सद्धर्मं पुमान्कश्चन कर्हिचित् ।।

संसृतेर्म्मुच्यते नैव सत्यमेतद्वचो मम ।। ८ ।।

प्रवृत्तिं हिंस्रयज्ञादेरथ ते द्विजसत्तम ।।

कथयामि यथा पूर्वं मयाऽश्रावि पितुर्मुखात् ।।९।।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।।

नारायणस्य माहात्म्यं यत्र लक्ष्म्याश्च कीर्तितम् ।। 2.9.8.१० ।।

मुनीनां बृहतां तेषामतिक्रमणदोषतः ।।

इन्द्रस्यासीद्विश्वजितः सद्बुद्धिविलयो मुने ।। ११ ।।

दुर्वासाः शंकरस्यांशस्तपस्वी मुनिरेकदा ।।

चरन्यदृच्छया लोकान्पुष्पभद्रां नदीं ययौ ।। १२ ।।

जलक्रीडार्थमायांतीं स्वर्गात्तत्र सखीवृताम् ।।

विद्याधरस्य सुमतेरङ्गनां स समैक्षत ।। १३ ।।

स्वर्गङ्गाहेमकमलैर्ग्रथितामतिसौरभाम् ।।

दधतीं दक्षिणे पाणौ स्रजं मदकलाभिधाम् ।। १४ ।।

तामवेक्ष्य मुनिस्तस्याः समीपमुपगम्य सः ।।

उन्मत्तवद्ययाचे तां स्रजं विद्याधरीधृताम्।। ।। १५ ।।

सापि प्रणम्य तं सद्यो माहात्म्यं तस्य जानती ।।

तत्कंठे धारयामास मालां तां परमादरात् ।। १६ ।।

ततः प्रीतमना गच्छन्गायन्नुन्मत्तवन्मुनिः ।।

ददर्श पथि देवेन्द्रमायान्तं तां महानदीम् ।। १७ ।।

अप्सरोभिश्च गन्धर्वैः सतालं मधुरस्वरम् ।।

उपगीयमानविजयमधिरूढं गजाधिपम् ।। १८ ।।

रम्भामधुरसंगीतश्रवणानन्दनिर्वृतम् ।।

तन्मुखाब्जस्थिरदृशं छत्रचामरशोभितम् ।। १९ ।।

अनवेक्षमाणमात्मानं तं दृष्ट्वा सोऽत्रिनन्दनः ।।

स्वकण्ठस्थां स्रजं तस्मिंश्चिक्षेपोन्मत्तवद्धसन् ।। 2.9.8.२० ।।

इन्द्रोप्यधर्मसर्गेण समाविष्टः पुरैव यत् ।।

ततस्तदा कामवशस्तां न्यधाद्गजकुम्भयोः ।।

तत्सौरभाकृष्टचेताः करीन्द्रः शुण्डयाऽकृषत् ।। २१ ।।

करात्सा पतिता भूमौ तां च गच्छन्करी पदा ।।

ममर्द्द पश्यतस्तस्य महर्षेस्तपसां निधेः ।। २२ ।।

ततः क्रुद्धः स दुर्वासाः प्रलयाग्न्यरुणेक्षणः ।।

प्राहेन्द्रं मत्त दुष्टात्मन्स्तब्धोसि कामलम्पट ।। २३ ।।

श्रियो धाम स्रजं प्रीत्या मद्दत्तां नाभिनन्दसि ।।

प्रणाममपि रे मूढ न करोषि त्वमुन्मदः ।। २४ ।।

न वीक्षसे मामपि त्वं त्वादृङ्मत्तैकशिक्षकम् ।।

त्रैलोक्यराज्यप्राप्तान्ध्यः सम्यक्त्वां शिक्षयेऽधुना ।।२५।।

यस्याः प्रसादात्त्रैलोक्यराज्यसौख्यं त्वमाप्तवान् ।।

सैव श्रीः सत्रिलोकं त्वां हित्वा लीनाऽस्तु सागरे ।। २६ ।।

वज्रपातोपमं वाक्यं तन्निशम्यैव तत्क्षणम् ।।

गजादुत्प्लुत्य विमदस्तदंघ्र्योर्न्यपतद्धरि ।। २७ ।।

प्रार्थयामास च मुहुः प्रणमंस्तं सवेपथुः ।।

प्रसादं मयि दासे त्वं कृपालो कर्तुमर्हसि ।। २८ ।।

तं प्राहाऽथ स रे शक्र नाहं वै गौतमो मुनिः ।।

अक्षमासारसर्वस्वं दुर्वाससमवेहि माम् ।। २९ ।।

अन्ये ते मुनयो दुष्टास्तावकास्तेऽनुवर्त्तिनः ।।

अहं तु त्वादृशान्कीटान्गणये नैव निःस्पृहः ।। 2.9.8.३० ।।

ज्वलज्जटाकलापाच्च भ्रुकुटीकुटिलेक्षणात् ।।

को वा न बिभियान्मत्तो ब्रह्माण्डे पापकर्मकृत् ।। ३१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये देवेन्द्रशापो नामाऽष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/hag
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

स्कन्द उवाच ।।

भाविधर्मविपर्यासकालवेगवशोऽथ सः ।।

नाहं क्षमिष्य इत्युक्त्वा कैलासं प्रययौ मुने ।। १ ।।

त्रैलोक्याच्छ्रीरपि तदा समुद्रेन्तर्द्धिमाययौ ।।

इन्द्रं विहायाप्सरसः सर्वशः श्रियमन्वयुः ।। २ ।।

तपः शौचं दया सत्यं पादः सद्धर्मऋद्धयः ।।

सिद्धयश्च बलं सत्त्वं सर्वतः श्रियमन्वयुः ।। ३ ।।

गजादीनि च यानानि स्वर्णाद्याभूषणानि च ।।

चिक्षिपुर्मणिरत्नानि धातूपकरणानि च ।। ४ ।।

अन्नान्यौषधयः स्नेहाः कालेनाल्पेन चिक्षियुः ।।

न क्षीरं धेनुमहिषीप्रमुखानां स्तनेष्वऽभूत् ।। ५ ।।

नवापि निधयो नष्टाः कुबेरस्यापि मन्दिरात ।।

इन्द्रः सहामरगणैरासीत्तापससन्निभः ।। ६ ।।

सर्वाणि भोगद्रव्याणि नाशमीयुस्त्रिलोकतः ।।

देवा दैत्या मनुष्याश्च सर्वे दारिद्यपीडिताः ।। ७ ।।

कान्त्या हीनस्ततश्चन्द्रः प्रापाम्बुत्वं महोदधौ।।

अनावृष्टिर्महत्यासीद्धान्यबीजक्षयंकरी ।। ८ ।।

क्वान्नं क्वान्नेति जल्पन्तः क्षुत्क्षामाश्च निरोजसः ।।

त्यक्त्वा ग्रामान्पुरश्चोषुर्वनेषु च नगेषु च ।।९।।

क्षुधार्त्तास्ते पशून्हत्वा ग्राम्यानारण्यकांस्तथा ।।

पक्त्वाऽपक्त्वापि वा केचित्तेषां मांसान्यभुञ्जत ।। 2.9.9.१० ।।

विद्वांसो मुनयश्चाऽथ ये वै सद्धर्मचारिणः ।।

म्रियमाणाः क्षुधाऽथापि नाश्नन्त पललानि तु ।। ११ ।।

तदा तु वृद्धा ऋषयस्तान्दृष्ट्वाऽनशनादृतान् ।।

मनुभिः सह वेदोक्तमापद्धर्ममबोधयन् ।। १२ ।।

मुनयः प्रायशस्तत्र क्षुधा व्याकुलितेन्द्रियाः ।।

परोक्षवादवेदार्थान्विपरीतान्प्रपेदिरे ।। १३ ।।

अर्थं चाजादिशब्दानां मुख्यं छागादिमेव ते ।।

बुबुधुश्चाऽथ ते प्राहुर्यज्ञान् कुरुत भो द्विजाः ।। १४ ।।

या वेदविहिता हिंसा न सा हिंसास्ति दोषदा ।।

उद्दिश्य देवान्पितॄंश्च ततो घ्नत पशूञ्छुभान्।। १५ ।।

प्रोक्षितं देवताभ्यश्च पितृभ्यश्च निवेदितम् ।।

भुञ्जत स्वेप्सितं मांसं स्वार्थं तु घ्नत मा पशून् ।।१६।।

ततो देवर्षिभूपाला नराश्च स्वस्वशक्तितः ।।

चक्रुस्तैर्बोधिता यज्ञानृते ह्येकान्तिकान्हरेः।।१७।।

गोमेधमश्वमेधं च नरमेधमुखान्मखान् ।।

चक्रुर्यज्ञावशिष्टानि मांसानि बुभुजुश्च ते।।१८।।

विनष्टायाः श्रियः प्राप्त्यै केचिद्यज्ञांश्च चक्रिरे ।।

स्त्रीपुत्रमंदिराद्यर्थं केचिच्च स्वीयवृत्तये ।। १९।।

महायज्ञेष्वशक्तास्तु पितॄनुदिश्य भूरिशः ।।

निहत्य श्राद्धेषु पशून्मांसान्यादंस्तथाऽऽदयन् ।। 2.9.9.२० ।।

केचित्सरित्समुद्राणां तीरेष्वेवावसञ्जनाः ।।

मत्स्याञ्जालैरुपादाय तदाहारा बभूविरे ।।२१।।

स्वगृहागतशिष्टेभ्यः पशूनेव निहत्य च ।।

निवेदयामासुरेते गोछागप्रमुखान्मुने ।। २२ ।।

सजातीयविवाहानां नियमश्च तदा क्वचित् ।।

नाभवद्धर्मसांकर्याद्वित्तवेश्माद्यभावतः ।।२३।।।।

ब्राह्मणाः क्षत्रियादीनां क्षत्राद्या ब्रह्मणां सुताः ।।

उपयेमिरे कालगत्या स्वस्ववंशविवृद्धये ।। २४ ।।

इत्थं हिंसामया यज्ञाः संप्रवृत्ता महापदि ।।

धर्मस्त्वाभासमात्रोऽस्थात्स्वयं तु श्रियमन्वगात् ।। २५ ।।

अधर्मः सान्वयो लोकांस्त्रीनपि व्याप्य सर्वतः ।।

अवर्द्धताऽल्पकालेन दुर्निवार्यो बुधैरपि ।। २६ ।।

दरिद्राणामथैतेषामपत्यानि तु भूरिशः ।।

तेषां च वंशविस्तारो महाँल्लोकेष्ववर्द्धत ।। २७ ।।

विद्वांसस्तत्र ये जातास्ते तु धर्मं तमेव हि ।।

मेनिरे मुख्यमेवाऽथ ग्रन्थांश्चक्रुश्च तादृशान् ।। २८ ।।

ते परम्परया ग्रन्थाः प्रामाण्यं प्रतिपेदिरे ।।

आद्ये त्रेतायुगे हीत्थमासीद्धर्मस्य विप्लवः ।। २९ ।।

ततःप्रभृति लोकेषु यज्ञादौ पशुहिंसनम् ।।

बभूव सत्ये तु युगे धर्म आसीत्सनातनः ।। 2.9.9.३० ।।

कालेन महता सोपि सह देवैः सुराधिपः ।।

आराध्य संपदं प्राप वासुदेवं प्रभुं मुने ।। ३१ ।।

ततो धर्मनिकेतस्य श्रीपतेः कृपया हरेः ।।

यथापूर्वं च सद्धर्मस्त्रिलोक्यां संप्रवर्त्तत ।। ३२ ।।

तत्रापि केचिन्मुनयो नृपा देवाश्च मानुषाः ।।

कामक्रोधरसास्वादलोभोपहतसद्धियः ।।

तमापद्धर्ममद्यापि प्राधान्येनैव मन्वते ।। ३३ ।।

एकान्तिनो भागवता जितकामादयस्तु ये ।।

आपद्यपि न तेऽगृह्णंस्तं तदा किमुताऽन्यदा ।। ३४ ।।

इत्थं ब्रह्मन्नादिकल्पे हिंस्रयज्ञप्रवर्त्तनम् ।।

यथासीत्तन्मयाख्यातमापत्कालवशाद्भुवि ।। ३५ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये हिंस्रयज्ञप्रवृत्तिहेतुनिरूपणं नाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १०



सावर्णिरुवाच ।।

कथं प्राप्ता पुनः स्कन्द श्रीरिन्द्रेण गताम्बुधिम् ।। एतां कथय मे सर्वां कथां नारायणाश्रयाम् ।। १ ।।

स्कन्द उवाच ।।

श्रिया विहीनो देवेन्द्रः श्रीहीनैरपि दानवैः ।।

पराजितो हृतस्थानो नष्टाशेषपरिच्छदः ।। २ ।।

गिरिगह्वरकुञ्जेषु काननेषु ततस्ततः ।।

परिबभ्राम सहितो दिगीशैर्वरुणादिभिः ।। ३ ।।

वल्कलाजिन वस्त्राश्च पशुपक्ष्यामिषाशनाः ।।

देवा दैत्या नरा नागास्तुल्याचारपरिच्छदाः ।।४।।

पात्राणि मृन्मयान्येव सर्वेषामपि वेश्मसु ।।

आसन्वराकाः सर्वेपि पिशाच्य इव च स्त्रियः ।। ५ ।।

आदावभूदनावृष्टिर्भुवि द्वादशवार्षिकी ।।

ततो वर्षे क्वचिद्वृष्टिरासीत्स्वल्पा क्वचिन्न च ।। ६ ।।

इत्थं दारिद्र्यदुःखानां तेषां वर्षशतं गतम् ।।

बलिष्ठारब्धकर्माणस्तेऽतिदुःखेपि नो मृताः ।। ७ ।।

अजीवन्त मृतप्राया नरकेष्विव नारकाः ।।

यतन्तोपि श्रियः प्राप्त्यै यज्ञाद्यैर्नाऽलभन्त ताम् ।। ८ ।।

ततः सहस्रवर्षान्ते मेरौ शरणमाययुः ।।

शापाद्दुर्वाससो देवाः सर्वे दुर्वाससो विधिम् ।। ९ ।।

प्रणम्य तस्मै दुःखं स्वं वासवाद्या न्यवेदयन् ।।

आदावेव हि सोऽज्ञासीत्सर्वज्ञत्वात्सुरापदम् ।। 2.9.10.१० ।।

उपालभ्य ततश्चेन्द्रं विरिञ्चः सहशंकरः ।।

तद्दुःखवारणा कल्पो विष्णुमैच्छत्प्रसादितुम् ।। ११ ।।

आराधयिष्यंस्तपसा ततोऽसौ तं तपःप्रियम् ।।

सर्वदेवगणोपेत उपायात्क्षीरसागरम् ।। १२ ।।

तस्योत्तरे तटे रम्ये सर्वे तेऽनशनव्रताः ।।

एकपादस्थिता ऊर्द्ध्वबाहवश्चक्रिरे तपः ।। १३ ।।

केशवं हृदि ते दध्युः सर्वक्लेशविनाशनम् ।।

लक्ष्मीपतिं वासुदेवमेकाग्रकृतमानसाः ।। १४ ।।

शताब्दान्ते ततो विष्णुः श्रीकृष्णो भगवान्स्वयम् ।।

अत्यापन्नेषु दीनेषु कृपां देवेषु सोऽकरोत्।। ।। १५ ।।

अदृश्यमूर्तिरात्मज्ञैरपि भूरितपस्विभिः ।।

तत्राविरासीत्कृपया नियुताहस्करद्युतिः ।। १६ ।।

तेजोमण्डलमेवादौ सहसा स्फुरितं महत् ।।

ददृशुर्विबुधाः सर्वे सितं घनमनौपमम् ।। १७ ।।

ब्रह्मा शिवश्च तन्मध्ये ददृशाते रमापतिम् ।।

घनश्यामं चतुर्बाहुं गदाब्जाब्जारिधारिणम् ।। १८ ।।

किरीटकाञ्चीकटककुण्डलादिविभूषितम् ।।

पीतकौशेयवसनं दिव्यसुन्दरविग्रहम् ।। १९ ।।

हर्षविह्वलितान्मानौ दण्डवत्तौ प्रणेमतुः ।।

तदिच्छयाऽथ देवाश्च दृष्ट्वा तं च मुदाऽऽनमन् ।। 2.9.10.२० ।।

बभूवुरतिहृष्टास्ते निधिं प्राप्याऽधना इव ।।

बद्धाञ्जलिपुटाः सर्वे भक्त्या तं तुष्टुवुः सुराः ।। २१ ।।

देवा ऊचुः ।।

ॐनमो भगवते तुभ्यं वासुदेवाय धीमहि ।।

प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ।। २२ ।।

ॐकारब्रह्मरूपाय त्रेधाविष्कृतमूर्तये ।।

ब्रह्माण्डसर्गस्थित्यन्तहेतवे निर्गुणाय च ।। २३ ।।

नयनानन्दरूपाय प्रणतक्लेशनाशिने ।।

केशवाय नमस्तुभ्यं स्वतंत्रेश्वरमूर्तये ।। २४ ।।

मोदिताशेषभक्ताय कालमायादिमोहिने ।।

सदानंदाय कृष्णाय नमः सद्धर्मवर्त्तिने।। ।। २५ ।।

भवाम्बुधिनिमग्नानामुद्धृतिक्षमकीर्तये ।।

दर्शनीयस्वरूपाय घनश्यामाय ते नमः ।। २६ ।।

गदाब्जदरचक्राणि बिभ्रते दीर्घबाहुभिः ।।

सुरगोविप्रधर्माणां गोप्त्रे तुभ्यं नमोनमः ।। २७ ।।

वरेण्याय प्रपन्नानामभीष्टवरदायिने ।।

निगमागमवेद्याय वेदगर्भाय ते नमः ।।२८ ।।

तेजोमण्डलमध्यस्थ दिव्यसुन्दरमूर्तये ।।

नमामो विष्णवे तुभ्यं परात्परतराय च।।२९।।

वाणीमनोविप्रकृष्टमहिम्नेऽक्षररूपिणे।।

सर्वान्तर्यामिणे तुभ्यं बृहते च नमोनमः ।। 2.9.10.३० ।।

सुखदोसि त्वमेवैकः स्वाश्रितानामतो वयम् ।।

महापदधिकक्लिष्टाः शरणं त्वामुपागताः ।। ३१ ।।

देवाधिदेवभक्तस्य तव दुर्वाससो वयम् ।।

अतिक्रमाच्छ्रिया हीनाः प्राप्ताः स्मो दुर्दशामिमाम् ।। ३२ ।।

वासोन्नपानस्थानादिहीनान्धर्मोपि नः प्रभो ।।

त्यक्त्वा सह श्रिया यातस्तान्पातुं त्वमसीश्वरः ।। ३३ ।।

यतो वयं च धर्मश्च त्वदीया इति विश्रुताः ।।

यथापूर्वं सुखीकर्त्तुं त्वमेवार्हस्यतो हि नः ।। ३४ ।।

स्कन्द उवाच ।।

इति संप्रार्थितो देवैर्भगवान्स दयानिधिः ।।

उवाचानन्दयन्वाचा मेघगम्भीरया सुरान् ।। ३५ ।।

श्रीभगवानुवाच ।।

विदितं मे सुराः सर्वं कष्टं वः सदतिक्रमात् ।।

उपायं कुरुताद्यैव वच्मि यत्तन्निवृत्तये ।। ३६ ।।

ओषधीरम्बुधौ सर्वाः क्षिप्त्वा मन्दरभूभृता ।।

नागराजवरत्रेण मंथध्वमसुरैः सह ।। ३७ ।।

आदौ संधाय दनुजैः कुरुताम्बुधिमन्थनम् ।।

साहाय्यं वः करिष्यामि खेदः कार्यो न तत्र वः ।। ३८ ।।

अमृतं च श्रियो दृष्टिं प्राप्य पूर्वाधिकौजसः ।।

भवितारो मद्विमुखा दैत्यास्तु क्लेशभागिनः ।। ३९ ।।

स्कन्द उवाच ।।

इत्युक्त्वांतर्दधे विष्णुर्भक्तसङ्कटनाशनः ।।

देवास्तस्मै नमस्कृत्य तदुक्तं कर्तुमारभन् ।। 2.9.10.४० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव खण्डे श्रीवासुदेवमाहात्म्ये श्रीवासुदेवप्रसादनिरूपणं नाम दशमोऽध्यायः ।।१०।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ११



।। स्कन्द उवाच ।।

ब्रह्मरुद्रौ महेन्द्रादीन्संधानायाऽसुरैः सह।।

आज्ञाप्य जग्मतुः स्वंस्वं धाम देवा रसां मुने ।। १ ।।

समयोचितभाषाविद्वासवो नीतियुक्तिभिः ।।

प्रलोभ्य फलभागेन सन्धिं चक्रेऽसुरैः सह ।। ।। २ ।।

ततो देवासुरगणा मिलिता वारिधेस्तटे ।।

महौषधीरुपानीय बहुशो निदधुर्द्रुतम् ।। ३ ।।

मन्दराद्रिमुपेत्याऽथ नानौषधिविराजितम् ।।

मूलादुत्पाट्य ते सर्वे नेतुमब्धिं समुद्यताः ।। ४ ।।

एकादशसहस्राणि योजनानां भुवि स्थितम् ।।

नोद्धर्तुमशकंस्ते तं तदानीं तुष्टुवुर्हरिम् ।। ५ ।।

एतद्विदित्वा भगवान्संकर्षणमहीश्वरम् ।।

अजिज्ञपत्तमुद्धर्तुं बद्धमूलं महीधरम् ।। ६ ।।

फूत्कारमात्रेणैकेन स तु सद्यस्तमीश्वरः ।।

बहिश्चिक्षेप तत्स्थानाद्योजनद्वितयान्तरे ।। ७ ।।

अत्याश्चर्यं तदालोक्य हृष्टाः सर्वे सुरासुराः ।।

तदन्तिकमुपाजग्मुर्द्धावन्तश्च कृतारवाः ।। ८ ।।

बलिनो यत्नवन्तोपि परिघोपमबाहवः ।।

उद्धृत्य नेतुं नो शेकुर्विषण्णा विफलश्रमाः ।। ९ ।।

ज्ञात्वा सुरगणान्खिन्नान्भगवान्सर्वदर्शनः ।।

तार्क्ष्यमाज्ञापयामास नेतुं तमुदधिं द्रुतम् ।। 2.9.11.१० ।।

सहावरणमप्यण्डं लीलया धर्त्तुमीश्वरः ।।

मनोवेगः स तत्रेत्य निजत्रोट्यैव तं गिरिम् ।।

उत्पाट्य सागरतटे निधाय हरिमाययौ ।। ११ ।।

ततः संहृष्टमनसः सर्वे कश्यपनन्दनाः ।।

वासुकिं चाह्वयामासुः सुधाभागप्रतिज्ञया ।। १२ ।।

स तत्रागादथो सर्वे तेऽब्धिं मन्थितुमुद्यताः ।।

तानपान्निधिरागत्य मूर्तिमानब्रवीद्वचः ।। १३ ।।

यदि दास्यथ मे यूयममृतांशं सुरासुराः ।।

सोढास्मि विपुलं तर्हि मन्दरभ्रमणार्द्दनम् ।। १४ ।।

तथेति ते प्रतिज्ञाय क्षिप्त्वादावोषधीलताः ।।

परिविव्युर्न्नागराजं तस्मिन्काञ्चनपर्वते ।। १५ ।।

ततो देवा हृदि हरिं सस्मरुः कार्यसिद्धये ।।

स्मृतमात्रः स तत्राऽगादच्युतः सर्वदर्शनः ।। १६ ।।

तमालोक्यामरगणा मुदिताः फणिनां पतेः ।।

पुरोभागं गृहीत्वैव तस्थुस्तेनानुमोदिताः ।। १७ ।।

देवतापक्षपातित्वं सूचयन्स्वस्य च प्रभुः ।।

यत्र देवास्तत्र तस्थौ ततो दैत्यास्तु चुक्रुधुः ।। १८ ।।

तपोविद्यावयोज्येष्ठा अधोभागममङ्गलम् ।।

कथं तिरश्चो गृह्णीमो नेदृङ्मूर्खा वयं त्विति ।। १९ ।।

सह देवैस्ततो विष्णुः स्वयं तान्मानयन्निव ।।

प्रहस्य दत्त्वा प्राग्भागं सुरान्पुच्छमजिग्रहत् ।। 2.9.11.२० ।।

महाहिविषफूत्कारदाहादमररक्षणम् ।।

चरित्रमेतच्छ्रीभर्तुरिति दैत्या न ते विदुः ।। २१ ।।

तत उत्तोलयामासुः स्वर्णसान्वालिभास्वरम् ।।

मन्दरं काश्यपेयास्ते चर्मिकाबद्धकच्छकाः ।। २२ ।।

द्वाविंशतिसहस्राणि योजनानां तमुच्छ्रितम् ।।

अम्भोनिधौ निदधिरे क्रोशन्तोत्यर्थमुत्सुकाः ।। २३ ।।

धार्यमाणोप्यनाधारस्तैरद्रिरतिगौरवात् ।।

ययावधस्तलं सद्यस्तदासंस्तेऽतिविह्वलाः ।। २४ ।।

तदा स भगवान्साक्षात्सर्वथा भक्तकार्यकृत् ।।

स्तूयमानोमरैरद्रिमुद्दध्रे कमठाकृतिः ।। २५ ।।

उत्थितं तमवेक्ष्याशु सर्वे फुल्लहृदाननाः ।।

बभूवुश्च स्थिरः सोऽभूत्कूर्मपृष्ठेतिविस्तृते ।। २६ ।।

ततो ममन्थुस्तरसा यावद्बलमपांनिधिम् ।।

श्रमफूत्कारवदना देवादयोऽदयम् ।। २७ ।।

भ्राम्यमाणात्ततस्त्वद्रेर्बहवोन्यपतन्द्रुमाः ।।

ऊर्द्ध्वद्रुघर्षजो वह्निस्तत्स्थ सिंहादिमादहत् ।। २८ ।।

तत्र नाना जलचरा विनिपिष्टा महाद्रिणा ।।

विलयं समुपाजग्मुः शतशः क्षीरवारिधौ ।। २९ ।।

सांवर्त्तकमहामेघसङ्घगर्ज्जितवन्महान् ।।

आसीन्मंथननादश्च प्रतिध्वनिविवर्द्धितः ।। 2.9.11.३० ।।

अत्याकर्षणखिन्नाङ्गवासुकम्र्मुखकृत्कृतैः ।।

हतौजसोऽतिखिन्नाश्च दैत्या निङ्गालवद्बभुः ।। ३१ ।।

अविषह्यं विषाग्निं च मर्षन्ति बहुधा मुहुः ।।

लम्बन्ते स्माहिराजस्य सहस्रं वदनान्यधः ।। ३२ ।।

दधार सहसा तानि भगवन्प्रेरितो विभुः ।।

संकर्षणो महातेजाः सहमानो विषानलम् ।। ३३ ।।

सहस्रमेकं वर्षाणां मथ्यमानात्पयोनिधेः ।।

हालाहलं विषमभूदुत्सर्पद्विदिशो दिशः ।। ३४ ।।

यदाहुः कालकूटाख्यं सर्वलोकातिदाहकम् ।।

तेन दन्दह्यमानाङ्गास्ते तु चक्रुः पलायनम् ।। ३५ ।।

ततो ब्रह्मा प्रजेशाश्च देवाः सर्वेप्युमापतिम् ।।

प्रार्थयंस्तस्य पानार्थं स्तुवन्तः स्तुतिभिर्मुने ।।३६।।

भगवानथ तं प्राह सुराणामग्रजो भवान् ।।

भवतीत्यग्रजं वार्द्धेर्गृहाणेदं विषं शिव ।। ३७ ।।

देवानां स भयं दृष्ट्वा करुणश्चाज्ञया हरेः ।।

आकर्षद्योगकलया विषं पाणितलेऽखिलम् ।। ३८ ।।

पपौ तत्कण्ठमध्ये च शोषयामास तत्क्षणम् ।।

नीलकण्ठ इति ख्यातः शंकराख्यश्च पऽभवत्।। ३९ ।।

पास्यतस्तस्य पाणेर्ये पतिता भुविबिन्दवः ।।

तान्नागा वृश्चिकाद्याश्च जगृहुः काश्चनौषधीः ।। 2.9.11.४० ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्येऽमृतमन्थने विषोत्पत्तिर्नामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/haj
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

ततो हृष्टाः काश्यपेया मन्थस्थानमुपेत्य ते ।।

पुनर्वर्षसहस्रं च मन्थन्ति स्म पयोनिधिम् ।। १ ।।

मथ्यमानात्तथा सिन्धोः सर्वेस्तैरपि किञ्चन ।।

नासीच्च शिथिला आसन्मंथितारः श्वसन्मुखाः ।। २ ।।

वासुकिश्च महासर्पः प्राणवैक्लव्यमाप्तवान् ।।

मन्थकाले मन्दरोपि नैकत्रासीत्स्थिरस्थितिः ।। ३।।

सर्वान्दृष्ट्वा निरुत्साहान्प्रद्युम्नो विण्वनुज्ञया ।।

देवासुराहिराजेषु प्रविश्य बलमादधौ ।। ४ ।।

अनिरुद्धोपि तर्ह्येव तमाक्रम्य नगाधिपम्।।

सहस्रबाहुभिस्तस्थौ महाचल इवाऽपरः ।। ५ ।।

ततो ममन्थुस्तरसा संप्राप्तपरमोजसः ।।

सविस्मया महाब्धिं ते सुरासुरगणा मुदा ।। ६ ।।

नारायणानुभावेन नापुर्देवादयः श्रमम् ।।

शुशुभे मन्थनं तच्च सममाकर्षणात्तदा ।। ७ ।।

मथ्यमाने महाम्भोधौ सुस्रुवुः परितस्तदा ।।

महाद्रुमाणां निर्यासा बहवश्चौषधीरसाः ।। ८ ।।

तथाभूतादम्बुनिधेराविरासीत्कलानिधिः ।।

कान्त्यौषधीनामध्यक्षः सर्वासां य उदीर्यते ।। ९ ।।

ततो गवामधिष्ठात्री सर्वासामपि कामधुक् ।।

हविर्द्धान्यभवद्धेनुः शीतांशुसदृशद्युतिः ।। 2.9.12.१० ।।

अश्वः श्वेतोऽथाविरासीद्धयानामधिदेवता ।।

ऐरावतश्च नागेन्द्रश्चतुर्द्दन्तः शशिप्रभः ।। ११ ।।

पारिजातो दिव्यतरुस्तरुराजस्ततोऽभवत् ।।

मणिरत्नं कौस्तुभाख्यं पद्मरागमभूत्ततः ।। १२ ।।

ततोऽभवन्नप्सरसो रूपलावण्यभूमयः ।।

सुरा देवी ततो जज्ञे सर्वमादकदेवता ।। १३ ।।

आसीदथ धनुः शार्ङ्गं सर्वशस्त्राधिदैवतम् ।।

वाद्याधिदैवतं शंखः पाञ्चजन्यस्ततोऽभवत् ।। १४ ।।

तत्र चन्द्रः पारिजातस्तथैवाप्सरसां गणः ।।

आदित्यपथमाश्रित्य तस्थुरेते तु तत्क्षणम् ।। १५ ।।

वारुणीमश्वराजं च दैत्येशा जगृहुर्द्रुतम् ।।

ऐरावतं देवराजो जग्राहानुमताद्धरेः ।। १६ ।।

कौस्तुभश्च धनुः शंखो विष्णुमेव प्रपेदिरे ।।

हविर्द्धानीं तु ते सर्वे तापसेभ्यो ददुस्तदा ।। १७ ।।

मथ्यमानात्पुनः सिन्धोः साक्षाच्छ्रीरभवत्स्वयम् ।।

आनन्दयन्ती स्वदृशा त्रिलोकीं हतवर्चसम् ।। १८ ।।

तां ग्रहीतुं तु सर्वेपि सुरासुरनरादयः ।।

ऐच्छंस्तस्याः प्रतापात्तु शेकेन्त्येतुं न कश्चन ।। १९ ।।

ततस्तां पद्महस्तत्वाच्छ्रीं विदित्वैव वासवः ।।

आनन्दं परमं प्राप ब्रह्माद्या ये च तद्विदः ।।2.9.12.२०।।

तावत्तत्राम्बुधिः साक्षादेत्य तां हैम आसने।।

कन्या ममेयमित्युक्त्वा गृहीत्वाङ्क उपाविशत्।।२१।।

पुनरब्धेर्मथ्यमानादधिकं बलिभिश्च तैः ।।

सुधार्थिभिर्द्धैर्यवद्भिरपि नैवाभवत्सुधा ।। २२ ।।

तदा शिथिलयत्नास्ते निराशा अमृतोद्भवे ।।

प्रम्लानवक्त्राः खिन्नाश्च बभूवुः काश्यपा मुने ।। २३ ।।

दृष्ट्वा तथाविधांस्तांश्च भगवान्करुणानिधिः ।।

उद्युक्तोभूत्स्वयं ब्रह्मन्मन्थनाय हसन्विभुः ।। २४ ।।

रत्नकाञ्चीदृढाबद्धकक्षपीताम्बरद्युतिः ।।

द्वाभ्यां द्वाभ्यामहिं मध्ये दोर्भ्यामुभयतोग्रहीत् ।। २५ ।।

धृताहिवदना दैत्यास्तस्थुरेकत एव ते ।।

एकतो धृततत्पुच्छा देवास्तस्थुस्तदाखिलाः ।। २६ ।।

तन्मध्यगश्च भगवान्ममन्थाब्धिं स लीलया ।।

ददानो नयनानन्द चञ्चत्करविभूषणः ।। २७ ।।

ब्रह्मा सहर्षिप्रवरैरन्तरिक्षस्थितस्तदा ।।

अवाकिरत्तं कुसुमैः कुर्वञ्जयजयध्वनिम् ।। २८ ।।

मथ्यमानात्ततः सिन्धोर्ज्जज्ञे धन्वन्तरिः पुमान् ।।

विष्णोरंशेन गौरांगः सुधाकुम्भं करे दधत् ।। २९ ।।

घृतादीनां हि सर्वेषां रसानां सारमुत्तमम् ।।

अमृतं तद्गृहीत्वाऽसौ श्रियोन्तिकमुपाययौ ।। 2.9.12.३० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्येऽमृतमन्थने चतुर्दशरत्नोत्पत्तिर्नाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १३

https://sa.wikisource.org/s/hak



।। स्कन्द उवाच ।।

उत्प्रेक्षन्तो जायमानं मंथितारोऽथ तेऽखिलाः ।।

आयांतं ददृशुर्दूरादन्ति धन्वन्तरिं श्रियः ।। १ ।।

सुधाभृतं हेमकुम्भं दृष्ट्वा चाऽस्य करे धृतम् ।।

असुराः सहसा ब्रह्मन्नुत्प्लुत्य जगृहुश्च तम् ।।२।।

तत्रापि बलिनो ये ते गृहीत्वा दुद्रुवुस्ततः ।।

तान्दुर्बला न्यषेधन्त नीतिवाक्यैरनुद्रुताः ।। ३ ।।

अहो नैवमधर्मो वः कार्यो धर्मपरायणैः ।।

समश्रमेभ्यो देवेभ्यो दत्त्वा पेयं न चान्यथा ।।४।।

अनादृत्येति तद्वाक्यं ययुर्दूरं त्वरान्विताः ।।

तत्रापि तेषामन्योन्यं कराकृष्टिर्महत्यभूत्।।५।।

अहं पूर्वमहं पूर्वं न त्वं न त्वं पिबाम्यहम् ।।

इत्थं विवदमानास्ते नापुस्तत्प्राशनक्षणम् ।। ६ ।।

अथ देवा म्लानवक्त्रा दृष्ट्वा दैत्यैर्हृता सुधाम् ।।

अशक्तास्तत्प्रतीकारे शरणं प्रापुरच्युतम् ।। ७ ।।

पाहिपाहि जगन्नाथ नष्टं सर्वस्वमेव नः ।।

दैत्यैर्हृता सुधा सर्वा का गतिर्न्नो भविष्यति ।।८।।

सुधापानादृतेप्येते हन्तुमस्मानलं क्षमाः ।।

पीतेऽमृते तु तैरद्य किं करिष्यामहे वयम् ।। ९ ।।

स्कन्द उवाच ।।

निशम्य दैन्यं देवानां भगवान्भक्तकार्यकृत् ।।

मा भैष्टेति सुरानुक्त्वा सुधामादित्सदासुरात् ।। 2.9.13.१० ।।

स्त्रीरूपमद्भुतं धृत्वा सर्वलोकविमोहनम् ।।

दैत्यान्तिकमुपागत्य चक्रे कन्दुकखेलनम् ।। ११ ।।

ते तु तद्रूपमालोक्य मोहिताः कामविह्वलाः ।।

त्यक्त्वा परस्परोन्मर्द्दं तामुपेत्याब्रुवन्वचः ।। १२ ।।

सुधाकुम्भमिमं भद्रे गृहीत्वा त्वं विभज्य नः ।।

सर्वान्पायय सुश्रोणि वयं कश्यपसूनवः ।। १३ ।।

इत्युक्त्वा तं ददुस्तस्मै तेऽनिच्छन्त्या अपि स्त्रियै ।।

सा प्राह मम विश्रम्भो न कार्यः स्वैरिणी ह्यहम् ।।१४।।

अकार्यं वः कृतं ह्येतद्विभजिष्ये निजेच्छया।।

इत्युक्ता अपि ते मूढा यथेष्टं कुर्विति ब्रुवन्।।१५।।

ततस्तदाज्ञया सर्वे देवा दैत्याश्च वासुकिः ।।

निषेदुः पंक्तिशस्तत्र स्वस्वमण्डलमाश्रिताः ।। १६ ।।

पंक्तिबंधोद्यतेष्वेषु मोहिनी सा तु दूरतः ।।

सम्मुखं देवपंक्तीनां हेमासन उपाविशत् ।।१७।।

स्वांतिके चामृतघटं निधाय स्त्रैणलीलया ।।

इतस्ततो वीक्षमाणा तस्थौ निःस्पृहवत्क्षणम् ।।१८।।

विप्रचित्तिमुखास्तर्हि ये वै दानवयूथपाः ।।

संदिग्धचित्ता मोहिन्यामासन्देवांतिकस्थितेः ।। १९ ।।

शनैरुपेत्य तद्दृष्टिं वञ्चयित्वा सुधाघटम् ।।

जह्रुः पुनर्दुरात्मानो रहो गत्वा पिपासवः ।। 2.9.13.२० ।।

नरनारायणौ तत्र मुनिभिः सह चागतौ ।।

आस्तां तौ ददृशाते तान्दानवान्हरतोऽमृतम् ।। २१ ।।

नारायणेनेरितोऽथ नरस्तान्सहसारुणत् ।।

बलादाच्छिद्य तत्कुम्भं मोहिन्यै स ददौ द्रुतम् ।। २२ ।।

ततो नरं हन्तुकामा आत्तशस्त्रास्तु दानवाः ।।

आपतन्पंक्तिविक्षेपो ह्यसुराणामभून्महान् ।। २३ ।।

तदा नरोपि भगवान्देवदैत्यनरैरपि ।।

अजेयो निर्भयो ह्येकः साकं तैर्युयुधे बली ।। २४ ।।

एतस्मिन्नन्तरे देवान्पंक्तिस्थान्मोहिनीवपुः ।।

अपाययत्सुधां विष्णुः सर्वशो लघुचङ्क्रमः ।। २५ ।।

तत्रापि दानवो राहुः सूर्याचन्द्रमसान्तरे ।।
प्रविश्य देवतापंक्तावुपाविशदलक्षितः ।। २६ ।।
तत्रागतायां मोहिन्यां सिञ्चन्त्यां तन्मुखे सुधाम् ।।
दृशाऽसूसुचतां तस्यै पुष्पवन्तावुभौ च तम् ।। २७ ।।
स्मृत्यागतेन चक्रेण तर्ह्येवाऽस्य च सामृतम् ।।
शिरश्चिच्छेदातिमहन्मायायोषिद्वपुः प्रभुः ।। २८ ।।
तच्छैलशृङ्गप्रतिमं ग्रसल्लोकान्नदद्भृशम् ।।
ग्रहत्वे स्थापयामास लोकानां शान्तये हरिः ।। २९ ।।
देवान्सुधां पाययित्वा जगृहे पौरुषीं तनुम् ।।
भगवानथ देवास्तु युयुधुः सह दानवैः ।। 2.9.13.३० ।।
उदन्वतस्तटे युद्धं देवानामसुरैः सह ।।
सुधापानातिबलिनामासीद्विष्णुसहायिनाम् ।। ३१ ।।
तस्मिंस्तु तुमुले युद्धे नरेणेन्द्रादिभिश्च ते ।।
निहन्यमाना असुराः पलाय्य विविशू रसाम् ।। ३२ ।।
सूर्यश्चास्तं गतस्तावत्सर्वे देवगणास्ततः ।।
श्रियोन्तिकमुपाजग्मुस्तद्दर्शनमहोत्सवाः ।। ३३ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये देवतामृतपानवर्णनं नाम त्रयोदशोऽध्यायः ।।१३।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/hal
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

ब्रह्मा प्रजेश्वराः शम्भुर्मनवश्च महर्षयः ।।

आदित्यवसुरुद्राश्च सिद्धगन्धर्वचारणाः ।। १ ।।

साध्याश्च मरुतश्चैव विश्वेदेवा दिगीश्वराः ।।

दस्रौ वह्निश्चन्द्रमाश्च स्वयं धर्मः प्रजापतिः ।। २ ।।

सुपर्णः किन्नराश्चैव ये चान्ये गणदेवताः ।।

शेपाद्या वैष्णवा नागा देवपत्न्यश्च सर्वशः ।। ३ ।।

सावित्री पार्वती चैव पृथिवी च सरस्वती ।।

शची गौरी शिवा संज्ञा ऋद्धिः स्वाहा च रोहिणी ।।

धूमोर्णा चादितिर्द्धर्मपत्न्यो मूर्तिदयादयः ।। ४ ।।

अरुन्धती शाण्डिली च लोपामुद्रा तथैव च ।।

अनसूयादयः साध्व्य ऋपिपत्न्यश्च सर्वशः ।। ५ ।।

गङ्गा सरस्वती रेवा यमुना तपती तथा ।।

चन्द्रभागा विपाशा च शतद्रुर्देविका तथा ।। ६ ।।

गोदावरी च सरयूः कावेरी कौशिकी तथा ।।

कृष्णा वेणी भीमरथा ताम्रपर्णी महानदी ।। ७ ।।

कृतमाला वितस्ता च निर्विन्ध्या सुरसा तथा।।

चर्मण्वती पयोष्णी च विश्वाद्या नद्य आययुः ।। ८ ।।

रम्भा घृताची विश्वाची मेनका च तिलोत्तमा ।।

उर्वशीप्रमुखास्तत्र सर्वाप्सरस आययुः ।।९ ।।

वैकुण्ठवासिनः सर्वे तथा गोलोकवासिनः ।।

पार्षदप्रवरा विष्णोस्तत्राजग्मुः प्रहर्षिताः ।। 2.9.14.१० ।।

अणिमाद्याः सिद्धयोऽष्टौ शंखपद्मादयो नव ।।

निधयो मूर्तिमन्तश्च समाजग्मुः श्रियोन्तिके ।। ११ ।।

पूर्णः शारदचन्द्रोपि तदानीं प्रीतये श्रियाः ।।

नैशं तमोऽहरत्सर्वं बभूवुर्निर्मला दिशः ।। १२ ।।

ततोऽभिषेकमारेभे तस्या ब्रह्माज्ञया वृषा ।।

मण्डपं रचयामास सद्यस्त्वष्टातिशोभनम् ।। १३ ।।

रत्नस्तम्भसहस्राणामायताभिश्च पंक्तिभिः ।।

चित्रैरनेकैरुल्लोचैः शोभितं कदलीद्रुमैः ।। १४ ।।

सुगन्धिपुष्पनम्राभिर्दिव्यकल्पद्रुमालिभिः ।।

जुष्टं नानाविधैरङ्गैर्दर्शनीयं मनोहरम् ।। १५ ।।

कोटिशो रत्नदीपानां पंक्तिभिः शुद्धरोचिषाम् ।।

भ्राजमानं तोरणैश्च मुक्ताहारैश्च लम्बिभिः ।। १६ ।।

रत्नसिंहासने तत्र गीतवाद्यपुरस्सरम् ।।

उपावेश्य श्रियं चक्रुरभिषेकं महर्षयः ।। १७ ।।

ऐरावतः पुण्डरीको वामनः कुमुदोञ्जनः ।।

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।। १८ ।।

कुर्वन्तो बृंहितान्येते हेमकुम्भोद्धृतैः शुभैः ।।

चतुःसिन्धुसमानीतैरभ्यषिञ्चन्त वारिभिः ।। १९ ।।

मूर्तिमत्यो महानद्यस्तत्राजहुर्जलानि च ।।

मंत्रानुच्चारयंति स्म मूर्ता वेदाः सहर्षिभिः ।। 2.9.14.२० ।।

जगुः सुकण्ठा गंधर्वा ननृतुश्चाप्सरोगणाः ।।

वाद्यानि वादयामासुरन्ये देवगणास्तदा ।। २१ ।।

महानभूत्तदानंदस्त्रिलोक्यां सर्वदेहिनाम् ।।

श्रीसूक्तादि द्विजाः पेठुर्जगुर्गीतानि च स्त्रियः ।। ।। २२ ।।

कांस्यतालमृदङ्गांश्च पणवानकगोमुखान् ।।

वादयामासुरम्भोदा दिवि दुंदुभयोऽनदन् ।। २३ ।।

आसीत्कुसुमवृष्टिश्च साकं जयरवैस्तदा ।।

आसंस्तत्परिचर्यायां धर्मपत्न्यश्च सिद्धयः ।। २४ ।।

सुस्नातायै ततस्तस्यै कौशेये पीतवाससी ।।

ददावनर्घ्ये जलधी रत्नभूषाश्च भूरिशः ।। २५ ।।

उपवेशोचितं तस्या इंद्र आसनमाहरत् ।।

विश्वकर्मा कङ्कणानि ददौ सद्रत्नमुद्रिकाः ।। २६ ।।

सुधाकरस्तु तद्भ्राता नासाभूषणमुत्तमम् ।।

ददौ तस्यै केशभूषा सद्रत्ननिचिता तथा ।। २७ ।।

पद्मजन्मा ददौ पद्मं मुक्ताहारं सरस्वती ।।

नागाश्च शेषप्रमुखास्तस्यै रत्नेंद्रकुण्डले ।। २८ ।।

अञ्जनं कुङ्कुमं चादाद्दुर्गा सोभाग्यलक्षणम् ।।

ललाटिकां च सावित्री शची ताम्बूलपात्रिकाम् ।। २९ ।।

वसंतः कौसुमान्हारान्कण्ठसूत्रं च शंकरः ।।

वैजयंतीं स्रजं पाशी कुबेरो रत्नदर्पणम् ।। 2.9.14.३० ।।

अनर्घ्यां कंचुकीं वह्निर्यमोऽदाद्व्यजनं शुभम् ।।

ददुस्तस्यै चापरेपि भूषास्तत्समयोचिताः ।। ३१ ।।

ततः स्वलंकृतां कन्यां कस्मै दद्यामिमामिति ।।

सिंधुः पप्रच्छ ब्रह्माणं तदोवाच स सर्ववित् ।।३२ ।।

कन्या तवेयमम्भोधे माता मम शिवस्य च ।।

देवानामथ सर्वेषां लोकानामस्ति निश्चितम् ।। ३३ ।।

नारायणं वासुदेवं परं ब्रह्माखिलेश्वरम् ।।

पुरुषोत्तममेवैकं विनास्या नापरः पतिः ।। ३४ ।।

अतः साक्षाद्भगवते त्रैलोक्यसुखहेतवे ।।

आगतायोपविष्टाय देह्यस्मै विधिनाम्बुधे ।। ३५ ।।

कुरुष्व जन्मसाफल्यं पावयित्वा निजं कुलम् ।।

समुद्धर भवाम्भोधेर्दत्त्वेमां परमात्मने ।।३६।।

एकस्त्वं सप्तभी रूपैः सप्तद्वीप विभागतः ।।

विश्रुतोऽथ विधायैतन्महतीं कीर्त्तिमाप्स्यसि ।।३७।।

इत्युक्तो ब्रह्मणा हृष्टः समुद्रः पुलकाञ्चितः ।।

मन्यमानो निजं धन्यमदित्सद्विष्णवे सुताम् ।।३८।।

ततः सहैव विधिना स संप्रार्थ्य तमीश्वरम् ।।

वाग्दानादि विधायैव चक्रे वैवाहिकं विधिम् ।।३९।।

धन्वंतरिश्चन्द्रमाश्च वासवाद्याश्च देवताः ।।

आसन्समुद्रस्य पक्षे तत्र वैवाहिकोत्सवे ।।2.9.14.४०।।

वस्त्राभरणयानादि दाने भोजनकर्मणि ।।

सन्माननने च जन्यानां मुख्या आसंस्त एव हि ।। ४१ ।।

लक्ष्म्याश्च मांगल्यविधौ मुख्यास्तत्र तु योषितः ।।

आसन्गंगादयो नद्यः शच्याद्याश्च सुरांगनाः ।। ४२ ।।

मेनाद्या नगपत्न्यश्च सिद्धयश्चाणिमादयः ।।

चन्द्रपत्नी तथा कान्तिः सर्वाश्चाप्सरसो मुने ।। ४३ ।।

नारायणस्याथ विभोर्लीलां वैवाहिकीं विधिः ।।

शोभयन्पितरौ चक्रे मूर्तिधर्मौ विचार्य च ।। ४४ ।।

धर्मोऽसौ जगदाधार पूज्यश्चाखिलदेहिनाम् ।।

पिताऽस्य भवितुं योग्यो ह्यस्मिंश्च प्रीतिमान्भृशम् ।। ४५ ।।

इयं च मूर्त्तिः प्रख्याता सर्वसद्गुणजन्मभूः ।।

दाक्षायणी धर्मपत्नी माता भवितुमर्हति ।। ४६ ।।

ततो धर्मस्यापि पक्षे मुख्याः कार्येष्विमेऽभवन् ।।

नन्दीश्वरगणेशाभ्यां सहितः शंकरो मुने ।। ४७ ।।

महर्षयो मरीच्याद्याः प्रजेशा नारदो मुनिः ।।

वैनतेयश्च नन्दाद्याः श्रीदामाद्याश्च पार्षदाः ।। ४८ ।।

दुर्गा च वेदसूर्वाणी स्त्रीषु मुख्या बभूविरे ।।

ऋषिपत्न्योऽनसूयाद्या धर्मपत्न्यश्च सर्वशः ।। ४९ ।।

सह वेदादिभिर्ब्रह्मा त्वासीदुभयपक्षयोः ।।

ब्राह्मणा वैदिका ये च विवाहविधिकोविदाः ।। 2.9.14.५० ।।

अथाब्धिः सर्वसंभाराञ्छ्रिया एव प्रसादतः ।।

सद्यः संपादयामास जनयन्देवविस्मयम् ।। ५१ ।।

यद्यत्संकल्पयामास हृदि तत्तदुपाहृतम् ।।

सद्यः स्वांतिक एवैक्षत्ततोभूदतिहर्षितः ।। ५२ ।।

मध्ये तु मण्डपस्यासावग्निस्थापनवेदिकाम् ।।

कारयामास विधिवद्ब्राह्मणैर्वेदवेदिभिः ।। ५३ ।।

अलंचकार तां वेदिं गन्धपुष्पाक्षतादिभिः ।।

नानाविधैः शुभै रङ्गैः साङ्कुरैः करकैस्तथा ।। ५४ ।।

ततो महामङ्गलवाद्यघोषैः समन्त्रकं संस्नपितो मुनीन्द्रैः ।।

अनर्घ्यवासांसि च रत्नभूषा दधार विष्णुर्मुकुटं च दिव्यम्।। ५५ ।।

वादित्रनिध्वाननिनादिताशं नृत्यत्सुरस्त्रीकलगीतशोभनम् ।।

तं मण्डपं सोऽथ सुरैः स्तुवद्भिः सहेत्य हैमे निषसाद पीठे ।। ५६ ।।

प्रक्षालयामास तदङ्घ्रिपङ्कजं स्वप्रेष्ठपत्न्या जलधिः सगंगया ।।

भृङ्गारसिक्तोत्तमवारिधारया तदम्बु शीर्ष्णा च दधार सान्वयः ।।।। ५७ ।।

ततः पठन्मंगलमुच्चकैः श्रियं प्रादापयच्चाम्बुधिनाऽच्युताय ।।

प्रज्वाल्य वह्निं विधिना विधाता साकं बृहद्भिर्मुनिभिर्जुहाव ।। ५८ ।।

प्रदाय तस्मै तनयां मनोज्ञां तत्पादपद्मैकनिबद्धदृष्टिम् ।।

वासांसि रत्नाभरणानि चादाद्भूयांसि भूम्ने स समं दुहित्रा ।। ५९ ।।

हुतस्य तस्याऽथ हुताशनस्य प्रदक्षिणां चापि सह श्रियैव ।।

चकार चेतांसि निजेक्षकाणां स्त्रीणां च पुंसां च हरन्हरिः सः ।। 2.9.14.६० ।।

एकासने तौ सह सन्निविष्टौ ब्रह्माण्डमातापितरौ मनोज्ञौ ।।

संपूजयामासुरनर्घ्यवस्त्रविभूषणैर्देवगणाः सयोषाः ।। ६१ ।।

तदा च गीतानि सुमंगलानि श्रियश्च विष्णोर्गुणवर्णनानि ।।

दुर्गादयश्चाऽथ पुलोमजाद्या देव्यो जगुः सस्मितचारुवक्त्राः ।। ६२ ।।

द्विधा विभक्तानि सुरांगनानां वृन्दान्युपाविश्य च सम्मुखानि ।।

तद्दम्पतिप्रेक्षणकौतुकानि तथा जगुः प्रेमभरेण तानि ।। ६३ ।।

यथा तदाकर्ण्य सुराः समस्ता महर्षयश्चाऽखिलयोषितोपि ।।

स्वांतस्तमैक्षंत सह श्रियेशं स्फुरंतमासन्ननु चित्रवच्च।।६४ ।।

प्रणम्य भक्त्या च वराक्षतादि समर्प्य ताभ्यां विबुधा मुदैव ।।

पृथक्पृथक्तुष्टुवुरूर्जिताभिर्वाग्भिश्च तौ प्राञ्जलयो विनीताः ।। ६५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये लक्ष्मीनारायणविवाहोत्सवनिरूपणं नाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १५



।। ब्रह्मोवाच ।।

विचार्य्याऽहं वेदान्मुहुरुपगतो निश्चयमिमं रमारामे भक्तिस्त्वयि दृढतरा यर्ह्यसुभृताम् ।।

भवेत्तर्ह्येवैषां क्षयविरहिता भोगनिकरास्तथा स्युर्लोका वै परमपुरुषात्यंतिकगतिः ।। ।। १ ।।

अजानन्तस्त्वित्थं भृतरजतमस्कानपि हरे भजन्त्यस्मान्देवान्बहुविधतपोर्च्चासरणिभिः ।।

त एवोक्ता मूढाः क्षयरहितसौख्यं न कुहचिल्लभन्तेऽतस्त्वां वै निजहृदि दधे केशवमहम् ।।२।।

शंकर उवाच ।।

त्रयी सांख्यवेदांतयोगाः पुराणं तथा पञ्चरात्रं प्रभो धर्मशास्त्रम् ।।

तवैवातिमाहात्म्यमेकस्य नित्यं प्रकारैरनेकैर्हि गायंति भक्त्या ।।३।।

त्वदेवेश शास्त्राणि चैतानि भूम्नो बभूवुस्त्वदेकाश्रयाण्यादिकल्पे।।

रमासेव्यपादाम्बुजं शास्त्रयोनिं तमाद्यं भवन्तं भजे वासुदेवम् ।। ४ ।।

धर्म उवाच ।।

कथा त्वदीया भवपाशमोचनी सुधैव तापत्रयतप्तदेहिनाम् ।।

अनेकजन्माघचयापहारिणी तनोति भक्तिं वयुनं तवाञ्जसा ।। ५ ।।

सदैव सा कर्णपथेन हृद्दरी विशत्वनन्ताभिध सम्मुखोद्गता ।।

मम त्वदन्या हरताच्च वासना दयाब्धये ते प्रभविष्णवे नमः ।। ६ ।।

प्रजापतय ऊचुः ।।

धन्या एते कल्पवृक्षा यदीयां छायामेतामाश्रितस्त्वं सहश्रीः ।।

धन्यः कर्ता मण्डपस्यास्य ते वै धन्यैषा भूर्यत्र पीठं तवेश ।। ७ ।।

धन्यो लोके नूनमेषोम्बुराशिः साक्षात्तुभ्यं येन दत्ता स्वकन्या ।।

धन्याश्चैते त्वां वयं वीक्षमाणा धन्येशानं श्रीपतिं त्वां नताः स्मः ।। ८ ।।

मनव ऊचुः ।।

धर्मः खलु स हि परमो धर्मेभ्यो माधव सकलेभ्योपि ।।

भक्तिर्भवति यतो वै धर्मभुवि त्वयि हि निरवद्या ।। ९ ।।

धर्मात्मानं भगवन्धर्मधुरीणं च धर्मपातारम् ।।

सर्वातिप्रियधर्मं नुमस्त्वां धर्मसंभूतिम् ।। 2.9.15.१० ।।

ऋषय ऊचुः ।।

भक्त्या हीनस्त्वद्विमुखो वयुनार्थी श्राम्यन्भूयोप्यस्य न सिद्धिं समुपैति ।।

तर्ह्यासक्तः कर्मणि काम्ये तु कुतोसौ सौख्यं यायादक्षयमानन्दमहाब्धे ।। ११ ।।

भक्त्या नित्यं त्वामत एव वयं वै श्रद्धायुक्ता धर्मतपोनिगमाद्यैः ।।

मायातीतं कालनियन्तारमुदारं ध्यायामः श्रीकान्तपरात्परमेकम् ।। १२ ।।

इन्द्र उवाच ।।

भगवन्नुरुदुःखिता वयं ननु दुर्वाससस एव हेलनात् ।।

न भवन्तमृतेऽवितुं हि नो विधिरुद्रप्रमुखा इमेऽशकन् ।। १३ ।।

विगताखिलसंपदो निरन्नाः समभावं भुवि पामरैरुपेताः ।।

भवतैव वयं हृतापदः स्मः सपदि श्रीहरये नमोस्तु तुभ्यम् ।। १४ ।।

अग्निरुवाच ।।

गीर्वाणदानवनराद्युपजीवनान्नं यन्निर्मितं हि भवतैव ततो बुधास्तु ।।

यज्ञेषु तेन यजनं तव कुर्वतेऽथो त्वच्छेषमन्यदिविषद्भ्य उपानयन्ति ।। १५ ।।

काम्येषु कर्मसु रता अपि याज्ञिकास्ते तत्कर्मबन्धनत आशु विमुच्य यान्ति ।।

ब्राह्मीं गतिं तदितरे तु भवन्ति चौराः श्रीयज्ञपूरुषमहं प्रणमामि तं त्वाम् ।। १६ ।।

मरुत ऊचुः ।।

भक्ता एकान्तिकास्तेऽक्षरपरमपदे सेवया ते तु हीनं वासैश्वर्यादि नेच्छन्त्यतिशयितसुखं नापि कैवल्यमोक्षम् ।।

तद्युक्तं त्वात्मनोपि श्वपचकुलजनुर्मानयन्त्युत्तमं वै तं त्वामेकान्तधर्माश्रयणमुपगताः श्रीमहापूरुषं स्मः ।। १७ ।।

सिद्धा ऊचुः ।।

नैकब्रह्माण्डसर्गादिकारणं त्वामकारणम् ।।

तत्स्थं तद्व्यतिरिक्तं च नियन्तारं नमामहे।। ।। १८ ।।

रुद्रा ऊचुः ।। मायायाः सर्वमोहिन्या मोहनं मोहवर्जितम् ।।

महाकालस्यापि कालं त्वां नमः पुरुषोत्तमम् ।। १९ ।।

आदित्या ऊचुः ।।

प्रकाशिता येन वयं जगन्ति प्रकाशयामो भवता रमेश ।।

स्वयंप्रकाशं तमुरुप्रकाशं प्रकाशमूर्त्तिं प्रणता भवन्तम् ।। 2.9.15.२० ।।

साध्या ऊचुः ।।

शास्ता नृपाणां च महोरगाणां दैत्याधिपानां च सुराधिपानाम् ।।

त्वं वै मनूनां च प्रजापतीनां राजाधिराजाय नमोस्तु तुभ्यम् ।। ।। २१ ।।

वसव ऊचुः ।।

भवति भुवि यदायदाऽसुरांशैः प्रथितसनातनधर्मधार्मिकाणाम् ।।

कदनमुरु तदातदा स्वयं ते ह्यवतरते प्रणमाम धर्मगोप्त्रे ।। २२ ।।

चारणा ऊचुः ।।

चरित्रं शुभं ते धृतानेकमूर्त्तेः प्रबन्धैरनेकैर्हि गायन्ति भक्ताः ।।

यदु श्रोतृवक्तॄन्पुनात्येव सद्यो वयं तं नताः पुण्यकीर्त्तिं भवन्तम् ।। २३ ।।

गन्धर्वाप्सरस ऊचुः ।।

ये कथास्ते विहायान्यगाथाः प्रभो कीर्त्तयन्तेऽथ शृण्वन्ति वा ते जनाः ।।

दुःखिताः स्युश्च संसारपाशैः सितास्तं नताः स्मः शरण्यं भवन्तं वयम् ।। २४ ।।

समुद्र उवाच ।।

अजित तवाऽथ तावकजनस्य मुदाऽल्पमपि द्रविण जलान्नवस्त्रनमनान्यतमेन सकृत् ।।

चरति ह सेवनं स पदवीं महतीं महतां व्रजति जनोल्पकोपि तमहं प्रणतः करुणम् ।। २५ ।।

पार्षदा ऊचुः ।।

पितरो त्वमसि स्वजनस्त्वमसि त्वमसीष्टगुरुः सुहृदात्मपतिः ।।

त्वमसीश्वर एव च नः परमस्त्वमसि द्रविणं सकलं त्वमसि ।। ।। २६ ।।

मूर्त्तिरुवाच ।।

यत्संबन्धत एव यान्ति पदवीमुच्चां महद्भिर्न्नुतां स्त्रीशूद्रासुरनीचपक्षिपशवः पापात्मजीवा अपि ।।

यद्धीना विबुधेश्वरा अपि भवन्त्यर्च्चोज्झितास्तत्क्षणं गोलोकाधिपतिं तमेव हृदये नित्यं भजे त्वामहम् ।। २७ ।।

सावित्र्युवाच ।।

त्वं सर्गकाले प्रकृतिं च पूरुषं दृष्ट्या स्वयोत्थाप्य ततस्तदात्मना ।।

तत्त्वानि सृष्ट्वा महदादिमानितैर्न्नैकान्विराजो बहुधा ससर्जिथ ।। २८ ।।

वैराजरूपेण जगद्विधातृतां स्वीकृत्य देवासुरमानुषोरगान् ।।

त्वं स्थावरं जंगममीश निर्ममे त्वामादिकर्तारमुपाश्रितास्म्यहम् ।। ।। २९ ।।

दुर्गोवाच ।।

प्रियतयाऽधिकया हृदि चिन्तनं विदधते तव ये भुवि ते विभो ।।

न परमेष्ठिसुखं न दिवः सुखं न कमयन्ति धरैकनरेशताम् ।। 2.9.15.३० ।।

प्रसभमर्पितमप्यतुलं त्वया सुखमिदं समवाप्य च तत्र ते ।।

तदपहाय न शक्तिकृतः क्षणं तमु नमामि च सात्वतनायकम् ।। ३१ ।।

नद्य ऊचुः ।।

वरद नमनमात्रं नामसंकीर्तनं वा विदधति तव ये वै ज्ञानतोऽज्ञानतो वा ।।

जनिमृतियमभीतेस्तानपि त्रायमाणं नरसखमुपयाताः स्मोऽद्य नारायणं त्वाम् ।। ३२ ।।

देवपत्न्य ऊचुः ।।

भुवि धृताकृतेर्जन्म मङ्गलं चरितमद्भुतं लोकपावनम् ।।

भवति निर्गुणं सर्वमेव ते भवसि निर्गुणब्रह्म यत्परम् ।। ३३ ।।

तव समाश्रयात्तामसा जना अपि च राजसाः सात्त्विकाश्च ये ।।

ननु भवन्ति ते निर्गुणास्ततो वयमुपास्महे त्वां हि निर्गुणम् ।। ३४ ।।

ऋषिपत्न्य ऊचुः ।।

आर्तानामुरुवृजिनैस्त्रिधा च तापैः सर्वापत्प्रशमनमेकमेव विष्णोः ।।

पादाब्जं तव भवतीति तद्वयं वै प्राप्ताः स्मः शरणमनन्त देवदेव ।। ३५ ।।

पृथिव्युवाच ।।

पूर्णशारदसुधाकराननं शारदाब्जदलदीर्घलोचनम् ।।

श्रीवियोगबहुधार्तिमोचनं वाऽसुदेवमहमेकमाश्रये ।। ३६ ।।

सरस्वत्युवाच ।।

नयने ममाच्युत तवातिसुन्दरे मुखशीतरोचिषि चकोरतां गते ।।

न हि गच्छतोऽन्यत इतीयमेव मे हृदि मूर्तिरस्तु सततं नहीतरा ।। ३७ ।।

स्कन्द उवाच ।।

इति स्तुतोऽखिलैर्देवैः सोभिनन्द्य दृशैव तान् ।।

प्राह श्रियं शुभे पश्य देवादींस्त्वमिमानिति ।। ३८ ।।

ततः समीक्षिताः प्रीत्या तया मधुरया दृशा ।।

त्रिलोकीवासिनः सर्वे ऋद्धा आसन्यथा पुरा ।। ३९ ।।

लेभिरे स्वस्वऋद्धिं ते गृहिणस्त्यागिनोपि च ।।

धर्मादयश्च सानन्दं प्रचरन्ति स्म पूर्ववत् ।। 2.9.15.४० ।।

तस्याः श्रियश्च भगवान्ददौ स्थानमुरः स्वकम् ।।

तत्र स्थित्वैव सा व्यापत्त्रैलोक्यं संपदात्मना ।। ४१ ।।

ततो रत्नाकरः स्वस्माच्छ्रीजनेरनुभावतः ।।

बभूवान्वर्थसंज्ञो वै संपूर्णक्षयरत्नवान् ।। ४२ ।।

चतुर्विधैर्बहुरसैः सदन्नैरमृतोपमैः ।।

सर्वान्समागतांस्तत्र तर्पयामास सादरम् ।। ४३ ।।

अनर्घ्याणि च वस्त्राणि रत्नभूषाः परिच्छदान् ।।

देवादिभ्यो ददौ प्रीत्या सर्वेभ्योपि पृथक्पृथक् ।। ४४ ।।

जामातुस्तुष्टये स्वस्य तदीयेभ्यस्तदाम्बुधेः ।।

नासीत्किमप्यदेयं वै घनवद्धनवर्षिणः ।। ४५ ।।

भगवानपि तद्दत्तं यौतकं च धनं बहु ।।

ब्राह्मणेभ्यः प्रदायैव श्रिया सह तिरोदधे ।। ४६ ।।

लक्ष्मीनारायणाभ्यां ते भृशमानन्दिताः सुराः ।।

इन्द्रादयो दिवं जग्मुः स्वंस्वं धामाऽपरे ययुः ।। ४७ ।।

अधिकारं च संप्राप्य यथापूर्वं निजंनिजम् ।।

सर्वेपि सुखिनो जाताः प्रसादात्कमलापतेः ।। ४८ ।।

मन्दरं च गिरिं तार्क्ष्यः पुनर्भगवदाज्ञया ।।

स्वस्थानं समुपानीय स्थापयामास लीलया ।। ४९ ।।

एवमिन्द्रेण ब्रह्मर्षे नष्टा ब्राह्मणशापतः ।।

उपलब्धा पुनः संपन्नारायणप्रसादतः ।। 2.9.15.५० ।।

य एतां शृणुयात्पुण्यां कथां भगवतो मुने ।।

कीर्तयेत्प्रयतो वापि संपदं प्राप्नुतो हि तौ ।। ५१ ।।

गृहिणां धनसिद्धिः स्यात्त्यागिनां च यथेप्सिता ।।

भक्तिज्ञानविरागादेर्भवेत्सिद्धिरनेन वै ।। ५२ ।।

इति ते कथितं ब्रह्मन्यथेन्द्रः प्राप संपदम् ।।

नारदोपि यथा श्वेतं द्वीपं स गतवानृषिः ।।

तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकेन चैतसा ।। ५३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये लक्ष्मीनारायणस्तुतिनिरूपणं नाम पञ्चदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/han



।। स्कन्द उवाच ।।

मेरुशृंगं समारूढो नारदो दिव्यया दृशा ।।

श्वेतद्वीपं च तत्रस्थान्पश्यन्मुक्तान्सहस्रशः ।। १ ।।

वासुदेवे भगवति दृष्टिमाबध्य तत्क्षणम् ।।

उत्पपात महायोगी सद्यः प्राप च धाम तत् ।। २ ।।

प्राप्य श्वेतं महाद्वीपं नारदो हृष्टमानसः ।।

ददर्श भक्तांस्तानेव श्वेतांश्चन्द्रप्रभाञ्छुभान् ।। ३ ।।

पूजयामास शिरसा मनसा तैश्च पूजितः ।।

दिदृक्षुर्ब्रह्म परमं स च कृच्छ्रपरः स्थितः ।। ४ ।।

भक्तमेकान्तिकं विष्णोर्बुद्ध्वा भागवतास्तु ते ।।

तमूचुस्तुष्टमनसो जपन्तं द्वादशाक्षरम् ।। ५ ।।

श्वेतमुक्ता ऊचुः ।।

मुनिवर्य भवान्भक्तः कृष्णस्याऽस्ति यतोऽत्र नः ।।

दृष्टवान्देवदुर्दृश्यान्किमिच्छन्नथ तप्यति ।। ६ ।।

नारद उवाच ।।

भगवन्तं परं ब्रह्म साक्षात्कृष्णमहं प्रभुम् ।।

द्रष्टुमुत्कोऽस्मि भक्तेन्द्रास्तं दर्शयत तत्प्रियाः ।।७।।

स्कन्द उवाच ।।

तदैकः श्वेतमुक्तस्तु कृष्णेन प्रेरितो हृदि ।।

एहि ते दर्शये कृष्णमित्युक्त्वा पुरतोभवत् ।।८।।

प्रहृष्टो नारदस्तेन साकमाकाशवर्त्मना ।।

पश्यन्धामानि देवानां तत ऊर्द्ध्वं ययौ मुनिः ।। ९ ।।

सप्तर्षींश्च ध्रुवं दृष्ट्वाऽनासक्तः कुत्रचित्स च ।।

महर्जनतपोलोकान्व्यतीयाय द्विजोत्तम।।2.9.16.१०।।

ब्रह्मलोकं ततो दृष्ट्वा श्वेतमुक्तानुगो मुनिः ।।

कृष्णस्यैवेच्छयाऽध्वानं प्रापाष्टावरणेष्वपि।।११।।

भूम्यप्तेजोनिलाकाशाहम्महत्प्रकृतीः क्रमात् ।।

क्रान्त्वा दशोत्तरगुणाः प्राप गोलोकमद्भुतम् ।।१२।।

धाम तेजोमयं तद्धि प्राप्यमेकान्तिकैर्हरेः।।

गच्छन्ददर्श विततामगाधां विरजां नदीम्।।१३।।

गोपीगोपगणस्नानधौतचन्दनसौरभाम्।।

पुण्डरीकैः कोकनदै रम्यामिन्दीवरैरपि।।१४।।

तस्यास्तटं मनोहारि स्फटिकाश्ममयं महत्।।

प्राप श्वेतहरिद्रक्तपीतसन्मणिराजितम्।।१५।।

कल्पवृक्षालिभिर्ज्जुष्टं प्रवालाङ्कुरशोभितम्।।

स्यमन्तकेन्द्रनीलादिमणीनां खनिमण्डितम् ।। १६ ।।

नानामणीन्द्रनिचितसोपानततिशोभनम् ।।

कूजद्भिर्मधुरं जुष्टं हंसकारण्डवादिभिः ।। १७ ।।

वृन्दैः कामदुघानां च गजेन्द्राणां च वाजिनाम् ।।

पिबद्भिर्न्निर्मलं तोयं राजितं स व्यतिक्रमत् ।। १८ ।।

उत्तीर्याऽथ धुनी दिव्यां तत्क्षणादीश्वरेच्छया ।।

तद्धामपरिखाभूतां शतशृङ्गागमाप सः ।। १९ ।।

हिरण्मयं दर्शनीयं कोटियोजनमुच्छ्रितम् ।।

विस्तारे दशकोट्यस्तु योजनानां मनोहरम् ।। 2.9.16.२० ।।

सहस्रशः कल्पवृक्षैः पारिजातादिभिर्द्रुमैः ।।

मल्लिकायूथिकाभिश्च लवङ्गैलालतादिभिः ।। २१ ।।

स्वर्णरम्भादिभिश्चान्यैः शोभमानं महीरुहैः ।।

दिव्यैर्मृगगणैर्न्नागैः पक्षिभिश्च सुकूजितैः ।। २२ ।।

दुर्गायितस्य तद्धाम्नस्तस्य रम्येषु सानुषु ।।

मनोज्ञान्विततानैक्षद्भगवद्रासमण्डपान् ।। २३ ।।

वृतानुद्यानततिभिः फुल्लपुष्पसुगन्धिभिः ।।

कपाटै रत्ननिचितैश्चतुर्द्वारसुशोभनान् ।। २४ ।।

चित्रतोरणसंपन्नै रत्नस्तम्भैः सहस्रशः ।।
जुष्टांश्च कदलीस्तम्भैर्मुक्तालम्बैर्वितानकैः ।। २५ ।।
दूर्वालाजाक्षतफलैर्युक्तान्माङ्गलिकैरपि ।।
चन्दनागुरुकस्तूरीकेशरोक्षित चत्वरान् ।। २६ ।।
सुश्राव्यवाद्यनिनदैर्हृद्यान्बहुविधैरपि ।।
तेषु यूथानि गोपीनां कोटिशः स ददर्श ह ।। २७ ।।
अनर्घ्यवासोभूषाभिः सद्रत्नमणिकङ्कणैः ।।
काञ्चीनूपुरकेयूरैः शोभितान्यङ्गुलीयकैः ।। २८ ।।
तारुण्यरूपलावण्यैः स्वैरैश्चाऽप्रतिमानि हि ।।
राधालक्ष्मीसवर्णानि शृङ्गारिककराणि च ।। २९ ।।
भोगद्रव्यैर्बहुविधैर्मण्डपेषु युतेषु च ।।
विलसन्ति च गायन्ति मनोज्ञाः कृष्णगीतिकाः ।। 2.9.16.३० ।।
उपत्यकासु तस्याद्रेरथ वृन्दावनाभिधम् ।।
वनं महत्तदद्राक्षीत्सावर्णे नारदो मुनिः ।। ३१ ।।
कृष्णस्य राधिकायाश्च प्रियं तत्क्रीडनस्थलम्।।
कल्पद्रुमालिभी रम्यं सरोभिश्च सपङ्कजैः ।। ३२ ।।
आम्रैराम्रातकैर्नीपैर्बदरीभिश्च दाडिमैः ।।
खर्जूरीपूगनारंगैर्न्नालिकेरैश्च चन्दनैः ।। ३३ ।।
जम्बूजम्बीरपनसैरक्षोदैः सुरदारुभिः ।।
कदलीभिश्चम्पकैश्च द्राक्षाभिः स्वर्णकेतकैः ।। ३४ ।।
फलपुष्पभरानम्रैर्न्नानावृक्षैर्विराजितम् ।।
मल्लिका माधवीकुन्दैर्ल्लवंगैर्यूथिकादिभिः ।। ३५ ।।
मन्दशीतसुगन्धेन सेवितं मातरिश्वना ।।
शतशृङ्गस्नुतैरार्द्रं निर्झरैश्च समन्ततः ।। ३६ ।।
सदा वसन्त शोभाढ्यं रत्नदीपालिमण्डितैः ।।
शृङ्गारिकद्रव्ययुतैः कुञ्जैर्जुष्टमनेकशः ।। ३७ ।।
गोपानां गोपिकानां च कृष्णसंकीर्त्तनैर्मुहुः ।।
गोवत्स पक्षिनिनदैर्न्नानाभूषणनिस्वनैः ।।

दधिमन्थनशब्दैश्च सर्वतो नादितं मुने ।। ३८ ।।

फुल्लपुष्पफलानम्रनानाद्रुमसुशोभनैः ।।

द्वात्रिंशतवनैरन्यैर्युक्तं पश्यमनोहरैः ।। ३९ ।।

तद्वीक्ष्य हृष्टः स प्राप गोलोकपुरमुज्वलम् ।।

वर्तुलं रत्नदुर्गं च राजमार्गोपशोभितम् ।। 2.9.16.४० ।।

राजितं कृष्णभक्तानां विमानैः कोटिभिस्तथा ।।

रथै रत्नेन्द्रखचितैः किंकिणीजालशोभितैः ।। ४१ ।।

महामणीन्द्रनिकरै रत्नस्तम्भालिमण्डितैः ।।

अद्भुतैः कोटिशः सौधैः पंक्तिसंस्थैर्मनोहरम् ।। ४२ ।।

विलासमण्डपै रम्यै रत्नसारविनिर्मितः ।।

रत्नेन्द्रदीपततिभिः शोभनं रत्नवेदिभिः ।। ४३ ।।

केसरागुरुकस्तूरीकुंकुमद्रवचर्चितम् ।।

दधिदूर्वालाजपूगै रम्भाभिः शोभिताङ्गणम् ।। ४४ ।।

वारिपूर्णैर्हेमघटैस्तोरणैः कृतमंगलम् ।।

मणिकुट्टिमराजाध्वचलद्भूरिगजाश्वकम् ।। ४५ ।।

श्रीकृष्णदर्शनायातैर्न्नैकब्रह्माण्डनायकैः ।।

विरिञ्चिशंकराद्यैश्च बलिहस्तैः सुसंकुलम् ।।४६।।

व्रजद्भिः कृष्णवीक्षाथ गोपगोपीकदम्बकैः ।।

सुसंकुलमहामार्गं मुमोदालोक्य तन्मुनिः ।।४७।।

कृष्णमन्दिरमापाऽथ सर्वाश्चर्यं मनोहरम् ।।

नन्दादिवृषभान्वादिगोपसौधालिभिर्वृतम् ।। ४८ ।।

चतुर्द्वारैः षोडशभिर्दुर्गैः सपरिखैर्युतम्।।

कोटिगोपवृतैकैकद्वारपालसुरक्षितैः ।। ४९ ।।

रत्नस्तम्भकपाटेषु द्वार्षु स्वाग्रस्थितेषु सः ।।

उपविष्टान्क्रमेणैव द्वारपालान्ददर्श ह ।।2.9.16.५०।।

वीरभानुं चन्द्रभानुं सूर्यभानुं तृतीयकम् ।।

वसुभानुं देवभानुं शक्रभानुं ततः परम् ।। ५१ ।।

रत्नभानुं सुपार्श्वं च विशालमृषभं ततः ।।

अंशुं बलं च सुबलं देवप्रस्थं वरूथपम् ।। ५२ ।।

श्रीदामानं च नत्वाऽसौ प्रविष्टोंतस्तदाज्ञया ।।

महाचतुष्के वितते तेजोऽपश्यन्महोच्चयम् ।। ५३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये गोलोकवर्णनं नाम षोडशोऽध्यायः ।।१६।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १७

https://sa.wikisource.org/s/hao
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

तत्त्वेककालसंभूतकोटिकोट्यर्कसन्निभम् ।।

स व्यचष्ट महत्तेजो दिव्यं सिततरं मुने ।।१।।

दिशश्च विदिशः सर्वा ऊर्द्ध्वाधो व्याप्नुवच्च यत्।।

अक्षरं ब्रह्म कथितं सच्चिदानन्दलक्षणम् ।। २ ।।

प्रकृतिं पुरुषं चोभौ तत्कार्याण्यपि सर्वशः ।।

व्याप्तं यद्योगसंसिद्धाः षट्चक्राणि निजान्तरे ।।

व्यतीत्य मूर्ध्नि पश्यन्ति वासुदेवप्रसादतः ।। ३ ।।

यद्भासा भासितः सूर्यो वह्निरिन्दुश्च तारकाः ।।

भासयन्ति जगत्सर्वं स्वप्रकाशं तथामृतम् ।। ४ ।।

यद्ब्रह्मपुरमित्याहुर्भगवद्धाम सात्वताः ।।

यस्यान्तिकेषु परितस्तिष्ठन्त्यर्चककोटयः ।। ५ ।।

ब्रह्मशंकर वृन्दानि ह्युपर्युपरि संभ्रमात् ।।

पतन्ति बलिहस्तानि गोपगोपीव्रजाश्च यत् ।। ६ ।।

कृष्णस्यानुग्रहो यस्मिन्स तेजसि तमीक्षते ।।

केवलं तेज एवान्ये पश्यन्ति न तु तं मुने ।। ७ ।।

तस्मिन्ददर्शाद्भुतदिव्यमन्दिरं विचित्ररत्नेन्द्रमयं मनोज्ञम् ।।

रत्नोज्ज्वलस्तम्भसहस्रकान्तं महासभा मण्डपदर्शनीयम् ।। ८ ।।

सौधालिभिर्भूरिभिरुज्ज्वलाभिः स्वोपासकानां परितो विराजितम् ।।

विचित्रसूक्ष्माम्बररत्नभूषाविभूषितानां हि नृणां च योषिताम् ।। ९ ।।

सिंहासनं तत्र मणीन्द्रसारै रत्नेन्द्रसारैश्च विनिर्मितं सः ।।

आश्चर्यकृन्प्रेक्षकमानसानां दिव्य मुनिः प्रैक्षत भूरिहर्षः ।।2.9.17.१०।।

तत्राऽथ कृष्णं भगवन्तमैक्षन्नारायणं निर्गुणमास्थितं सः ।।

सर्वज्ञमीशं पुरुषोत्तमं च यं वासुदेवं च वदन्ति सात्वताः ।। ११ ।।

यं केचिदाहुः परमात्मसंज्ञं केचित्परं ब्रह्म परात्परं च ।।

ब्रह्मेति केचिद्भगवन्तमेके विष्णुं च भक्ताः परमेश्वरं च।।१२।।

कन्दर्पसाहस्रमनोहराङ्गं सदा किशोरं करुणानिधानम् ।।

अतिप्रशांताकृतिदर्शनीयं क्षराक्षरेभ्यश्च परं स्वतन्त्रम् ।। १३ ।।

नैकाण्डसर्गस्थितिनाशलीलाविधायकापांगनिरीक्षणं च ।।

अनेककोट्यण्डमहाधिराजं विश्वैकवन्द्यं नटवर्यवेषम् ।। १४ ।।

अनर्घ्यदिव्योत्तमपीतवाससमनेकसद्रत्नविभूषणाढ्यम् ।।

नवीनजीमूतसमानवर्णं कर्णोल्लसत्सन्मकराभकुण्डलम् ।। १५ ।।

निजांगनिर्यत्सितभूरितेजश्चयावृतत्वात्सितवर्णमुक्तम् ।।

सद्रत्नसारोज्ज्वलसत्किरीटं शरत्सरोजच्छदचारुनेत्रम् ।। १६ ।।

सुगन्धिसच्चन्दनचर्चितांगं श्रीवत्सलक्ष्माङ्कितहृत्कपाटम् ।।

निनादयन्तं मधुरं च वेणुं कृत्वा मुखाग्रेम्बुजचारुदोर्भ्याम् ।। १७।।

जयासुशीलाललितामुखानां वृन्दैः सखीनां सह राधया च ।।

समर्च्यमानं रमया च भामा कलिन्दजा जाम्बवतीमुखानाम् ।।१८।।

धर्मेण वेदैरखिलैर्भगैश्च ज्ञानादिभिः संयतपाणियुग्मैः ।।

निषेव्यमाणं च सुदर्शनाद्यैर्निजायुधैर्मूर्तिधरैरनेकैः ।। १९ ।।

मसारमाणिक्यसुवर्णवर्णैः सितैश्च कैश्चिन्निजपार्षदाग्र्यैः ।।

उपासितं चक्रगदाब्जशङ्खलसद्भुजैर्नन्दसुनन्दमुख्यैः ।। 2.9.17.२० ।।

श्रीदाममुख्यैरथ गोपवेषैर्भक्त्यावनम्रैर्द्विभुजैरनेकैः ।।

उपास्यमानं गरुडेन चाग्रतो विभूतिभिश्चाष्टभिरानताभिः ।। २१ ।।

मूर्त्या च शान्त्या दयया च सेवितं पुष्ट्या च तुष्ट्या ह्यथ मेधया च ।।

श्रद्धाक्रिया ह्युन्नतिभिश्च मैत्र्या तथा तितिक्षास्मृतिबुद्धिभिश्च ।। २२ ।।

दृष्ट्वा तमत्यद्भुतदिव्यमूर्त्तिं तद्रूपसौरभ्यहृताखिलेन्द्रियः ।।

आनन्दवारिप्रतिरुद्धदृष्टिः प्रेम्णोर्द्ध्वरोमा सुखसंभृतोऽभूत् ।। २३ ।।

दण्डवत्तं नमस्कृत्य नारदः प्रेमविह्वलः ।।

बद्धाञ्जलिपुटस्तस्थौ वीक्षमाणस्तदाननम् ।। २४ ।।

तं मानयामास हरिः पृष्ट्वा स्वागतमादरात् ।।

भक्तमेकान्तिकं स्वस्य स्वेनैव च दिदृक्षितम् ।। २५ ।।

भगवद्वाक्यपीयूषास्वादप्राप्तात्मसंस्मृतिः ।।

तद्दर्शनमहानन्दो भक्त्या तुष्टाव तं मुनिः ।। २६ ।।

नारद उवाच ।।

जय श्रीकृष्ण भगवन्नारायण जगत्प्रभो ।।

वासुदेवाऽखिलावास सदैकान्तिकवल्लभ ।। २७ ।।

अप्याश्चर्याचनीयाङ्घ्रे राधिकाकमलादिभिः ।।

त्वमेवात्यन्तिकं श्रेयोऽभीप्सतां परमा गतिः ।। २८ ।।

नित्यानामात्मनां नित्य आत्मा चेतनचेतनः ।।

क्षराक्षरेभ्यश्च परस्त्वं ब्रह्म परमं हरे ।। २९ ।।

यथा विशुद्धिः सिद्धिश्च भक्त्या परमया तव ।।

तथा न स्यान्नृणामन्यैः साधनैस्तप आदिभिः ।। 2.9.17.३० ।।

त्वदङ्घ्रिदिव्यज्योत्स्नैका मुमुक्षूणां हृदि स्थितम् ।।

महत्सन्तमसंहर्तुं सद्यः शक्तास्ति सत्पते ।। ३१ ।।

सर्वैर्वेदैस्त्वमेवेज्य उपास्यो ज्ञेय एव च ।।

निरूपितोसि भगवन्सर्वकारणकारणम् ।। ३२ ।।

एकैकस्मिन्रोमकूपे यत्तवास्ति सितं महः ।।

शान्तमानंदरूपं च तत्कोटीन्दुप्रभाधिकम् ।। ३३ ।।

अस्मिंस्त्वमक्षरे धाम्नि निर्गुणेऽमृतसञ्ज्ञके ।।

महःपुञ्जे सदैवास्से निर्गुणः पुरुषोत्तमः ।। ३४ ।।

ब्रह्माण्डभयदात्कालान्मायायाश्च महाभयात् ।।

मुक्ता भक्ता भवन्त्येव त्वदीयोपासनाबलात् ।। ३५ ।।

तं त्वामहमुपेतोस्मि शरणं जगदीश्वरम् ।।

सर्वात्मानं विभुं ब्रह्म महापुरुषमच्युतम् ।। ३६ ।।

यथा त्वच्चरणाम्भोजे भक्तिर्मे निश्चला सदा ।।

भवेत्तथैव देवेश कर्त्तुमर्हस्यनुग्रहम् ।। ३७ ।।

।। स्कन्द उवाच ।।

इत्थं देवर्षिणा भक्त्या संस्तुतः परमेश्वरः ।।

तमाहानन्दयन्वाचा सुधासंमितया मुनिम् ।। ३८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्रीवासुदेवदर्शनं नाम सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/hap
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। श्रीभगवानुवाच ।।

दर्शनं मम यज्जातं तव तत्तु महामुने ।।

नित्यैकान्तिकभक्तत्वान्निर्दम्भत्वान्मदिच्छया ।। १ ।।

अहिंसा ब्रह्मचर्यं च त्वयि नित्यं च तद्द्वयम् ।।

स्वधर्मोपशमौ चैव वैराग्यं चात्मवेदनम् ।। २ ।।

सत्सङ्गोऽष्टाङ्गयोगश्च सर्वथेन्द्रियनिग्रहः ।।

मुन्यन्नवृत्तिश्च तपः सर्वव्यसनहीनता ।। ३ ।।

मदेकान्तिकभक्तिश्च महात्म्यज्ञानपूर्विका ।।

वर्त्तते तेन मामत्र पश्यसि त्वं हि सुव्रत ।। ४ ।।

ईदृग्लक्षणसंपन्ना ये स्युरन्येपि मानवाः ।।

तेपि मामीदृशं विप्र पश्यन्त्येकान्तिकप्रियम् ।। ५ ।।

असावहमिह ब्रह्मन्नस्मिन्नक्षरधामनि ।।

राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितैः सह ।। ६ ।।

वासुदेवस्वरूपोहं सर्वकर्मफलप्रदः ।।

अन्तर्यामितया वर्त्ते स्वतन्त्रः सर्वदेहिनाम् ।। ७ ।।

वैकुण्ठाख्यं महाधाम्नि लक्ष्म्या सह चतुर्भुजः ।।

वसामि नन्दगरुडमुख्यैः साकं च पार्षदैः ।। ८ ।।

धाम्नि तेजोमये दिव्ये श्वेतद्वीपेऽन्वहं भुवि ।।

ददामि श्वेतमुक्तेभ्यः पञ्चकालं स्वदर्शनम् ।। ९।।

कुर्वेऽनिरुद्धप्रद्युम्नसंकर्षणसमाह्वयैः ।।

स्वरूपैर्नैककोट्यण्डसर्गस्थित्यप्ययानहम् ।।2.9.18.१०।।

सर्गारम्भे मया ब्रह्मा सृष्टो नाभिसरोरुहात् ।।

तपसाराधयामास स मां यज्ञैश्च नारद ।।११।।

ततस्तस्मै प्रसन्नोऽहं प्राददामीप्सितान्वरान् ।।

ब्रह्मन्प्रास्यसि सामर्थ्यं प्रजानां त्वं विसर्जने ।। १२ ।।

आज्ञायामेव ताः सर्वास्तव स्थास्यन्ति मद्वरात् ।।

वेदाश्चापि स्फुरिष्यन्ति तव बुद्धौ सनातनाः ।। १३ ।।

ज्ञानं च मत्स्वरूपस्य यथावत्ते भविष्यति ।।

त्वया कृतां च मर्यादां नातिक्रंस्यति कश्चन ।। १४ ।।

सुरासुरगणानां च मुनीनां च महात्मनाम् ।।

त्वमेव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ।। १५।।

असाध्ये यत्र कार्ये च मोहमेष्यसि तत्त्वहम्।।

प्रादुर्भूय करिष्यमि स्मृतमात्रस्त्वया विधे ।। १६ ।।

सृज्यमाने त्वया विश्वे नष्टां पृथ्वीं महार्णवे ।।

आनयिष्यामि स्वं स्थानं वाराहं रूपमास्थितः ।।

हिरण्याक्षं निहत्यैव दैतेयं बलगर्वितम् ।। १७ ।।

दिनान्ते तव मत्स्योहं भूत्वा क्षोणीं तरीमिव ।।

सहौषधिं धारयिष्ये मन्वादींश्च निशावधि ।। १८ ।।

सुधायै मथ्नतामब्धिं काश्यपानां निराश्रयम् ।।

मन्थानं कूर्मरूपोहं धास्ये पृष्ठे च मन्दरम् ।। १९ ।।

नारसिंहं वपुः कृत्वा हिरण्यकशिपुं विधे ।।

सुरकार्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ।। 2.9.18.२० ।।

विरोचनस्य बलवान्बलिः पुत्रो महासुरः ।।

भविष्यति स शक्रं च स्वाराज्याच्च्यावयिष्यति ।। २१ ।।

त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ ।।

अदित्यां द्वादशः पुत्रः संभविष्यामि कश्यपात् ।। २२ ।।

ततो राज्यं प्रदास्यामि देवेन्द्राय दिवः पुनः ।।

देवताः स्थापयिष्यामि स्वेषु स्थानेष्वहं विधे ।।

बलिं चैव करिष्यामि पातालतलवासिनम् ।।२३।।

कर्दमाद्देवहूत्यां च भूत्वाऽथ कपिलाभिधः ।।

प्रवर्तयिष्ये कालेन नष्टं सांख्यं विरागयुक् ।।२४।।

दत्तो भूत्याऽनसूययामत्रेरान्विक्षिकीं ततः ।।

प्रह्लादायोपदेक्ष्यामि विद्यां च यदवे विधे ।। २५ ।।

मेरुदेव्यां सुतो नाभेर्भूत्वाहमृषभो भुवि ।।

धर्मं पारमहंस्याख्यं वर्तयिष्ये सनातनम् ।। २६ ।।

त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः ।।

क्षत्रं चोत्सादयिष्यामि भग्नसेतुकदध्वगम्।। ।। २७ ।।

सन्धौ तु समनुप्राप्ते त्रेताया द्वापरस्य च ।।

कौशल्यायां भविष्यामि रामो दशरथादहम् ।। २८ ।।

सीताभिधाना लक्ष्मीश्च भवित्री जनकात्मजा ।।

उद्वहिष्यामि तामैशं भंक्त्वा धनुरहं महत् ।।२९।।

ततो रक्षःपतिं घोरं देवर्षिद्रोहकारिणम् ।।

सीतापहारिणं संख्ये हनिष्यामि सहानुजम् ।। 2.9.18.३० ।।

तस्य मे तु चरित्राणि वाल्मीक्याद्या महर्षयः ।।

तदा गास्यन्ति बहुधा यच्छ्रुतेः स्यादघक्षयः ।। ३१ ।।

द्वापरस्य कलेश्चैव सन्धौ पर्यवसानिके ।।

भूभारासुरनाशार्थं पातुं धर्मं च धार्मिकान् ।।

वसुदेवाद्भविष्यामि देवक्यां मथुरापुरे ।। ३२ ।।

कृष्णोहं वासुदेवाख्यस्तथा संकर्षणो बलः ।।

प्रद्युम्नश्चाऽनिरुद्धश्च भविष्यन्ति यदोः कुले ।। ३३ ।।

गोपस्य वृषभानोस्तु सुता राधा भविष्यति ।।

वृन्दावने तया साकं विहरिष्यामि पद्मज ।। ३४ ।।

लक्ष्मीश्च भीष्मकसुता रुक्मिण्याख्या भविष्यति ।।

उद्वहिष्यामि राजन्यान्युद्धे निर्जित्य तामहम् ।। ३५ ।।

धर्मद्रुहोऽसुरान्हत्वा तदाविष्टांश्च भूपतीन् ।।

धर्मं संस्थापयन्नेव करिष्ये निर्भरां भुवम् ।। ३६ ।।

येन केनापि भावेन यस्य कस्यापि मानसम् ।।

मयि संयोक्ष्यते तंतं नेष्ये ब्रह्मगतिं पराम् ।। ३७ ।।

धर्मं भुवि स्थापयित्वा कृत्वा यदुकुलक्षयम् ।।

पश्यतां सर्वदेवानामन्तर्द्धास्ये भुवस्ततः ।। ।। ३८ ।।

कृष्णस्य मम वीर्याणि कृष्णद्वैपायनादयः ।।
गास्यन्ति बहुधा ब्रह्मन्सद्यः पापहराणि हि ।। ३९ ।।
कृष्णद्वैपायनो भूत्वा पराशरमुनेः सुतः ।।
शाखाविभागं वेदस्य करिष्यामि तरोरिव ।। 2.9.18.४० ।।
वैदिकं विधिमाश्रित्य त्रिलोकीपरिपीडकान् ।।
छलेन मोहयिष्यामि भूत्वा बुद्धोऽसुरानहम्।। ४१ ।।
मया कृष्णेन निहताः सार्जुनेन रणेषु ये ।।
प्रवर्तयिष्यन्त्यसुरास्ते त्वधर्मं यदा क्षितौ ।।४२।।
धर्मदेवात्तदा भक्तादहं नारायणो मुनिः।।
जनिष्ये कोशले देशे भूमौ हि सामगो द्विजः।।४३।।
मुनिशापान्नृतां प्राप्तानृषींस्तात तथोद्धवम्।।
ततोऽवितासुरेभ्योऽहं सद्धर्मं स्थापयन्नज।।४४।।
जनान्म्लेच्छमयान्भूमौ कलेरन्ते महैनसः ।।
कल्की भूत्वा हनिष्यामि विचरन्दिव्यवाजिना।। ४५।।
यदा यदा च वेदोक्तो धर्मो नाशिष्यतेऽसुरैः।।
प्रादुर्भावो भविष्यो मे तद्रक्षायै तदा तदा ।। ४६ ।।
तस्माच्चिन्तां विहायैव प्रजाः सृज यथा पुरा ।।
एतान्दत्त्वा वरांस्तस्मा अहमन्तर्हितोऽभवम् ।। ४७ ।।
यथा तस्मै वरा दत्तास्तथैव च मया कृतम् ।।
कुर्वे करिष्ये च मुने निजशक्तिभिरञ्जसा ।। ४८ ।।
एवंविधस्य मे ब्रह्मन्नीशितुः सर्वदेहिनाम् ।।
दर्शनं दुर्लभं जातं तवैकान्तिकभक्तितः ।। ४९ ।।
वरं वरय मत्तस्त्वं स्वाभीष्टं मुनिसत्तम ।।
प्रसन्नोस्मि भृशं तुभ्यं नाफलं मम दर्शनम्।।2.9.18.५०।।
स्कन्द उवाच ।।
श्रुत्वेति भगवद्वाक्यं नारदो मुनिसत्तमः ।।
मन्यमानो निजं धन्यं तमुवाच प्रभुं मुने।।५१।।
दर्शनादेव ते स्वामिन्संपूर्णो मे मनोरथः ।।

इदं हि दुर्लभं मन्ये सर्वेषामपि देहिनाम् ।। ५२ ।।

अतस्ते च त्वदीयानां त्वद्धाम्नोस्याऽमृतस्य च ।।

साक्षात्समीक्षणादन्यत्प्राप्यं मे नास्ति वांछितम् ।। ५३ ।।

इतोन्यद्दुर्लभं क्वापि नास्ति ब्रह्माण्डगोलके ।।

यदहं परितुष्टात्ते प्रार्थयेयमिहाच्युत ।। ५४ ।।

लोकान्तरसुखं यत्तद्वैदिकैरेव कर्मभिः ।।

दैवैः पित्र्यैश्च लभ्येत तच्चाप्यस्ति हि नश्वरम् ।। ५५ ।।

नेच्छामि तदहं किञ्चित्सुखं त्वत्तः परं प्रभो ।।

वरमेकं तु याचे त्वत्स्वेप्सितं वरदर्षभात् ।। ५६ ।।

तवाऽथ तव भक्तानां सदैव गुणगायने ।।

अत्युत्सुकास्तु मे बुद्धिस्त्वयि प्रीतिविवर्द्धिनी ।। ५७ ।।

।। स्कन्द उवाच ।।

तथास्त्विवति प्रतिश्रुत्य कृष्णस्तेनेति याचितम् ।।

गानोपयुक्तां महतीं वीणां दत्त्वाऽब्रवीत्पुनः ।। ५८ ।।

श्रीभगवानुवाच ।।

अधुना गच्छ देवर्षे विशालां बदरीमितः ।।

तत्र धर्मात्मजं भक्त्या मामाराधय सुव्रत ।। ५९ ।।

त्वं ह्येकान्तिकभक्तोसि मम निष्कपटान्तरः ।।

तेन त्वामधिकं मन्ये विधेरपि पितुस्तव ।। 2.9.18.६० ।।

यादृशोऽहं च यद्रूपो यावांश्च महिमा मम ।।

विदुस्तत्सर्वमपि मे भक्ता एकान्तिका मुने ।।।। ६१ ।।

हृदि चिन्त्योहमेवास्मि सतां तेषां च ते मम ।।

तेषामिष्टं न मत्तोऽन्यन्मम तेभ्यो न किञ्चन ।। ६२ ।।

यथा पतिव्रता नार्यो वशीकुर्वन्ति सत्पतिम् ।।

निजैर्गुणैस्तथा भक्ता वशीकुर्वन्ति मामपि ।। ६३ ।।

अनुयामि श्रिया साकं तानहं परवानिव ।।

यत्रयत्र च ते सन्ति तत्रतत्राहमस्मि हि ।। ६४ ।।

सत्संगादेव मत्प्राप्तिर्भवेद्भुवि मुमुक्षताम् ।।

नान्योपायेन देवर्षे सत्यमित्यवधारय ।। ६५ ।।

मामेव यर्हि शरणं मानुषाः प्राप्नुवन्ति ये ।।

तर्ह्येव ते विमुच्यन्ते मायाया जीवबन्धनात् ।। ६६ ।।

मां प्रपन्नस्तु पुरुषो येन केनापि भावतः ।।

यथेष्टं सुखमाप्नोति न तु संसृतिमन्यवत् ।। ६७ ।।

स्कन्द उवाच ।।

एवमुक्तो भगवता प्राप्तोऽनुग्रहमीप्सितम् ।।

प्रणम्य साश्रुनयनः पर्यावर्तत नारदः ।। ६८ ।।

तमेव वीणया गायञ्छ्वेतमुक्तमपश्यत ।।

प्राग्वत्स्वाग्रे चलन्तं तमन्वगच्छद् द्विजर्षभ ।। ६९ ।।

सद्यः श्वेतं महाद्वीपं प्राप्य श्वेतान्प्रणम्य तान् ।।

निवृत्तो नारदो ब्रह्मंस्तरसा मेरुमागमत् ।। 2.9.18.७० ।।

ततो मेरोः प्रचक्राम पर्वतं गन्धमादनम् ।।

निपपात च खात्तूर्णं विशालां बदरीमनु ।।७१।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्रीवासुदेवावतारादिकथनंनामाऽष्टादशोऽध्यायः ।।१८।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/haq



।। स्कन्द उवाच ।।

ततः स ददृशे देवौ पुराणावृषिसत्तमौ ।।

तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ ।।१।।

तेजसाप्यधिकौ सूर्यात्सर्वलोकविरोचनात् ।।

श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ।।२।।

पद्मचिह्नभुजौ तौ च पादयोश्चक्रलक्षणौ।।

व्यूढोरस्कौ दीर्घभुजौ सितसूक्ष्मघनांशुकौ ।। ३ ।।

स्वास्यौ पृथुललाटौ च सुभ्रुवौ शुभनासिकौ ।।

शुभलक्षणसंपन्नौ दिव्यमूर्ती घनप्रभौ ।। ४ ।।

विनयेनान्तिकं प्राप्य तयोः कृत्वा प्रदक्षिणाम् ।।

भक्त्या प्रणम्य साष्टाङ्गं तस्थौ प्राञ्जलिरग्रतः ।। ५ ।।

ततस्तौ तपसां वासौ यशसां तेजसामपि ।।

ऋषी पौर्वाह्णिकस्यान्ते विधेर्मौनं विहाय च ।। ६ ।।

प्रीत्या नारदमव्यग्रौ पाद्यार्घ्याभ्यां समार्चताम् ।।

पीठयोरुपविष्टौ तौ कौशयोर्नारदश्च सः।। ।।७।।

तेषु तत्रोपविष्टेषु स देशोभिव्यराजत ।।

आज्याहुतिमहाज्वालैर्यज्ञवाटोग्निभिर्यथा ।। ८ ।।

अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् ।।

सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुसत्कृतम् ।। ९ ।।

श्रीनारायण उवाच ।।

अपि ब्रह्मन्स भगवान्परमात्मा सनातनः ।।

ब्रह्मधाम्नि त्वया दृष्ट आवयो कारणं परम् ।। 2.9.19.१० ।।

नारद उवाच ।।

भगवंस्त्वत्प्रसादेन तमहं परमेश्वरम् ।।

वासुदेवं समालोके स्थितमक्षरधामनि ।। ११ ।।

इह चैवागतस्तेन विसृष्टो वां निषेवितुम् ।।

आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ।। १२ ।।

श्रीनारायण उवाच ।।

धन्योस्यनुगृहीतोसि यत्ते दृष्टः स्वयं प्रभुः ।।

नहि तं दृष्टवान्ब्रह्मन्कश्चिद्देवोपि वा ऋषिः ।।१३।।

भक्त्यैकान्तिकया तस्य प्राप्ता अक्षरसाम्यताम्।।

ये हि भक्तास्त एवैनं पश्यन्त्यखिलकारणम्।।१४।।

स दिव्यमूर्त्तिर्भगवान्दुर्द्दर्शः पुरुषोत्तमः ।।

नारदैतद्धि मे सत्यं वचनं समुदाहृतम् ।। १५।।

नान्यो भक्तात्प्रियतरो लोके तस्यास्ति कश्चन ।।

ततः स्वयं दर्शितवांस्तवात्मानं द्विजोत्तम ।। १६ ।।

तेजःपुञ्जाभिरुद्धांगो गुणातीताद्भुताकृतिः ।।

अखण्डानन्दरूपश्च सदा शुद्धोऽच्युतोस्ति सः ।। १७ ।।

रूपवर्णवयोवस्थाः प्राकृता नैव तस्य हि ।।

सर्वं तस्यास्ति तद्दिव्यं सर्वोपकरणानि च ।।

एकान्तिकानां भक्तानां स एव परमा गतिः ।। १८ ।।

आत्मब्रह्मैक्यसंपन्नैर्विनिवृत्तगुणैरपि ।।

क्रियते वासुदेवस्य भक्तिरित्थंगुणो हि सः ।। १९।।

माहात्म्यमस्य को वक्तुं शक्नुयात्परमात्मनः ।।

अचिन्त्यानन्तशक्तीनामधिपस्य महामुने ।। 2.9.19.२० ।।

आत्मात्मा चाक्षरात्मा च ह्येष आकाशनिर्मलः ।।

दिव्यदृग्गीक्ष्यः सन्मात्रः पुरुषो वसुदेवजः ।। २१ ।।

समस्तकल्याणगुणो निर्गुणश्चेश्वरेश्वरः ।।

परया विद्यया वेद्य उपास्यो ब्रह्मवित्प्रभुः ।। २२ ।।

दिव्यमूर्त्तिं तमीशानं तपसैकान्तिकेन च ।।

यः प्रीणयति धर्मेण स धन्यतम उच्यते ।। २३ ।।

तस्मात्त्वमपि देवर्षे धर्मेणैकान्तिकेन तम् ।।

आराधयन्निहैवांग कंचित्कालं तपः कुरु ।। २४ ।।

तपसैवाऽतिशुद्धात्मा माहात्म्यं तस्य सत्पतेः ।।

यथावज्ज्ञास्यति भवान्प्रोच्यमानं मयाऽखिलम् ।। २५ ।।

सर्वार्थसाधनं विद्धि तपस्तद्धृदयं मुने ।।

नातप्तभूरितपसा स वशीक्रियते प्रभुः ।। २६ ।।

।। स्कन्द उवाच ।।

एवमुक्तो भगवता नरनारायणेन सः ।।

प्रीतस्तपः कर्तुमिच्छँस्तमुवाच महामतिः ।।२७।।

इति श्रीस्कन्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुऽदेवमाहात्म्ये नारदनरनारायणसमागमो नामैकोनविंशोऽध्यायः ।।१९।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २०

https://sa.wikisource.org/s/har



।। नारद उवाच ।।

भगवन्ब्रूहि मे धर्ममेकान्तं तव संमतम् ।।

प्रीयते येन विश्वात्मा वासुदेवः स सर्वदा ।। १ ।।

श्रीनारायण उवाच ।।

साधु पृष्टं त्वया ब्रह्मन्मतिस्ते विमला किल ।।

मयि स्निग्धाय भक्ताय तुभ्यं गुह्यमपि ब्रुवे ।। ।। २ ।।

धर्म एष मया प्रोक्तः कल्पस्यादौ विवस्वते ।।

तमेव कथये तुभ्यं सनातनमहं मुने ।।३।।

स्वधर्मज्ञानवैराग्यैः सह लक्ष्मीवदीश्वरे ।।

तस्मिन्ननन्या भक्तिर्या धर्म एकान्तिकः स वै ।। ४ ।।

तेनैवातिप्रसन्नः स्याद्गोलोकाधिपतिः स्वयम् ।।

जायते स च भक्तोपि परिपूर्णमनोरथः ।। ५ ।।

।। नारद उवाच ।।

लक्षणानि बुभुत्सामि स्वधर्मादेः पृथक्पृथक् ।।

शास्त्रयोनेरहं त्वत्तो वक्तुं तानि त्वमर्हसि ।। ६ ।।

निगमागमशास्त्राणां सर्वेषामपि सत्पते ।।

मूलं त्वमेक एवासि येषु धर्मः सनातनः ।। ७ ।।

त्वमेव साक्षाद्भगवान्वासुदेवोऽक्षरात्परः ।।

श्रेयसे सर्वभूतानां वर्तसेऽत्र दयानिधिः ।। ८ ।।

त्वत्तोऽन्ये तु स्वस्वभावगुणतन्त्रा ह्यजादयः ।।

यथावन्न विजानीयुर्द्धर्मादींस्त्वमतो वद ।। ९ ।।

स्कन्द उवाच ।।

इति देवर्षिणा पृष्टो भगवान्धर्मनन्दनः ।।

स्वधर्मादीन्क्रमेणैव कथयामास सर्ववित् ।। 2.9.20.१० ।।

श्रीनारायण उवाच ।।

वर्णानामाश्रमाणां च सदाचारः पृथक्पृथक् ।।

सामान्यः सविशेषश्च स्वधर्मः स उदीर्यते ।। ११ ।।

नृणां साधारणं धर्मं सर्वेषामादितः शृणु ।।

अहिंसा परमो धर्मस्तत्रादिम उदाहृतः ।। १२ ।।

स्वमुख्यधर्मवृत्योरप्यद्रोहो मनसापि यः ।।

सति गत्यन्तरे प्राणिमात्रस्यापीति सा मता ।। १३ ।।

सत्या वाग्भूतमात्रस्य द्रोहो न स्याद्यया तथा ।।

तपश्च शास्त्रविहितभोगसंकोचलक्षणम् ।। १४ ।।

बाह्यमाभ्यन्तरं चेति द्विविधं शौचकर्म च ।।

अनादानं परस्वस्य परोक्षं वा छलेन च ।। १५ ।।

यथोचितं ब्रह्मचर्यकामलोभक्रुधां जयः ।।

मुदा वित्तार्पणं पात्रे तुष्टिर्लब्धेन दैवतः ।। १६ ।।

तीर्थे क्षेत्रे च यज्ञादौ चतुर्वर्गाप्तयेपि वा ।।

आत्मनो वा परस्यापि सर्वथा घातवर्जनम् ।। १७।।

जातिभ्रंशकराणां च कर्मणां परिवर्जनम् ।।

पाणिपादोदरोपस्थवाचां संयमनं तथा ।। १८ ।।

सर्वेषां व्यसनानां च वर्जनं मद्यमांसयोः ।।

व्यभिचारान्निवृत्तिश्च कुलसद्धर्मपालनम् ।। १९ ।।

एकादशीनां सर्वासां यमैः साकमुपोषणम् ।।

हरेर्जन्मदिनानां च व्रताचरणमञ्जसा ।। 2.9.20.२० ।।

आर्जवं साधुसेवा च विभज्याऽन्नादिभोजनम् ।।

भक्तिर्भगवतश्चेति धर्माः साधारणा नृणाम् ।। २१ ।।

ब्रह्मक्षत्रविशः शूद्रा वर्णाश्चत्वार ईरिताः ।।

तेषां पृथक्पृथग्धर्मान्विशेषान्वच्मि ते मुने ।।२२।।

शमो दमः क्षमा शौचमास्तिक्यं भक्तिरीशितुः ।।

तपो ज्ञानं च विज्ञानं विप्रधर्मः स्वभावजः ।। २३ ।।

शूरत्वं धैर्यमौदार्यं बलं तेजः शरण्यता।।

गोविप्रसाधुरक्षेज्या धर्माः क्षत्रस्य कीर्त्तिताः ।। २४ ।।

राज्ञस्त्वेतेऽथ नीत्यैव प्रजानां परिपालनम् ।।

धर्मसंस्थापनं भूमौ धर्मा दण्डार्हदण्डनम् ।। २५ ।।

आस्तिक्यं दाननिष्ठा च साधुब्राह्मणसेवनम् ।।

अतुष्टिरर्थोपचये धर्मा वैश्यस्य चोद्यमः ।। २६ ।।

द्विजातीनां च देवानां सेवा निष्कपटं गवाम् ।।

विशेषधर्मः कथितः शूद्रस्य मुनिसत्तम ।। २७ ।।

अध्यापनं याजनं च विशुद्धाच्च प्रतिग्रहः ।।

विप्रस्य जीविका प्रोक्ता तत्रान्त्या त्वापदि स्मृता ।। २८ ।।

याजनेऽध्यापने वापि दोषदर्शी द्विजोत्तमः ।।

यस्तस्याऽन्यापि विहिता वृत्तिरस्ति चतुर्विधा ।। २९ ।।

शिलोञ्छ नित्ययाच्ञा च शालीनं चोचिता कृषिः ।।

श्रेयसी पूर्वपूर्वाऽत्र ज्ञातव्या द्विजसत्तमैः ।। 2.9.20.३० ।।

विप्रो जीवेद्वैश्यवृत्त्या सत्यामापदि नारद ।।

अथ वा क्षत्रवृत्त्यापि श्ववृत्त्या न तु कर्हिचित् ।। ३१ ।।

शस्त्रेण जीवेत्क्षत्रं तु सर्वतो धर्मरक्षया ।।

आपन्नो वैश्यवृत्त्यैव विप्ररूपेण वा चरेत् ।। ३२ ।।

करादानादिनृपतेरविप्राद्वृत्तिरीरिता ।।

देशकालानुसारेण रञ्जयित्वाऽखिलाः प्रजाः ।। ३३ ।।

आपत्कालेपि क्षत्रस्य ब्राह्मणस्येव सर्वथा ।।

विगर्हिता नीचसेवा स्वतेजःक्षयकारिणी ।। ३४ ।।

कृषिवाणिज्यगोरक्षा तुरीया वृद्धिजीवनम् ।।

वैश्यस्य जीविका प्रोक्ता शूद्रवृत्तिस्तथापदि ।। ३५ ।।

शूद्रो जीवेद्द्विजातीनां सेवालब्धधनेन च ।।

आपत्काले तु कार्वादेर्जीविकावृत्तिमाश्रयेत् ।। ३६ ।।

आपन्मुक्तस्तु सर्वोपि प्रायश्चित्तं यथोचितम् ।।

विधाय स्वस्ववृत्त्यैव पुनर्वर्त्तेत मुख्यया ।। ३७ ।।

चातुर्वर्ण्यं सतां संगं कुर्यान्न त्वसतां क्वचित् ।।

मुक्तिप्रदोस्ति सत्संगः कुसंगो निरयप्रदः ।। ३८ ।।

कामं क्रोधं रसास्वादं जित्वा मानं च मत्सरम् ।।

निर्दम्भं विष्णुभक्ता ये ते सन्तः साधवो मताः ।। ३९ ।।

स्त्रियां स्त्रैणे रसास्वादे सक्ताश्च धनगृध्नवः ।।

हिंस्रा दम्भकृताटोपा भक्ताभासा ह्यसाधवः ।। 2.9.20.४० ।।

असाधुष्वासुरी संपद्दैवी संपत्तु साधुषु ।।

सहजास्तीति निश्चित्य सेव्या सन्तः सुखेप्सुभिः ।। ४१ ।।

यादृशां यस्य संगः स्याच्छास्त्राणां वा नृणामपि ।।

बुद्धिः स्यात्तादृशी तस्य कार्योऽतो नासतां हि सः ।। ४२ ।।

ये साधुसेवारुचयः पुरुषा निजशक्तितः ।।

अप्राप्यं नास्ति तेषां वै किमप्यैश्वर्यमूर्जितम् ।। ४३ ।।

स्वधर्मस्था अपि सतां द्रोहिणो ये तु मानवाः ।।

सद्गतिं नैव ते यान्ति क्वापि केनापि कर्मणा ।। ४४ ।।

महापूजारता विष्णोर्भक्ता अपि सतां यदि ।।

द्रोहं कुर्युस्तदा तेषु न प्रसीदति स क्वचित् ।। ४५ ।।

सद्द्रोहिणस्तु देहान्ते यांयां योनिं ब्रजन्ति च ।।

तत्रतत्र क्षुधारोगैः पीड्यन्ते जीविताविधि ।। ४६ ।।

सतामतिक्रमादेव पुण्यानां महतामपि ।।

सद्यः क्षयः स्यात्सर्वेषामायुषः संपदामपि ।। ४७ ।।

तस्मात्सेवा सतां कार्या सर्वैरपि सुखेप्सुभिः ।।

पुण्यतीर्थानि सेव्यानि पूज्या विप्राश्च धेनवः ।। ४८ ।।

तीर्थानि देवप्रतिमा निन्देयुर्ये कुबुद्धयः ।।

तेषां तु जारजातानां वंशोच्छेदो भवेद्ध्रुवम् ।। ४९ ।।

एकस्मिंस्तर्पिते विप्रे सद्भोज्यैर्दक्षिणादिभिः ।।

तर्पितं स्याज्जगत्सर्वं हरिस्तुष्यति च स्वयम् ।। 2.9.20.५० ।।

एकस्मिन्ब्राह्मणे द्रुग्धे द्रुग्धं स्यात्सकलं जगत्।।

तस्माच्छक्त्या पूजनीया ब्राह्मणा विष्णुरूपिणः।।५१।।

गवामंगेषु तिष्ठन्ति सर्वे देवगणा अपि।।

तथा सर्वाणि तीर्थानि तासु तिष्ठन्ति सर्वदा ।। ५२ ।।

गव्यर्च्चितायामेकस्यां सर्वे देवाः समर्च्चिताः ।।

कृतानि स्युश्च सर्वाणि तीर्थान्यपि च नारद ।। ५३ ।।

एकस्या अपि गोर्द्रोहे कृते क्वापि प्रमादतः ।।

द्रुग्धाः स्युर्देवताः सर्वास्तीर्थान्यपि च कृत्स्नशः ।। ५४ ।।

तस्माच्चातुर्वर्ण्य जनैर्यथोक्तविधिसंस्थितैः ।।

भवितव्यं प्रयत्नेन त्रेतव्यं च निषेधतः।।५५।।

चातुर्वर्ण्येतरे ये तु तेषां वृत्तिः कुलोचिता ।।

चौर्यहिंसाद्यधर्मेण रहितैव हितावहा ।। ५६ ।।

वर्णधर्मा इति प्रोक्ताः संक्षेपेण मया मुने ।।

चतुर्णामाश्रमाणां च धर्मानथ वदामि ते ।। ५७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये चातुर्वर्ण्यधर्मनिरूपणं नाम विंशोऽध्यायः ।।२०।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २१

https://sa.wikisource.org/s/has



श्रीनारायण उवाच ।।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।।

एत आश्रमिणः प्रोक्ताश्चत्वारो मुनिसत्तम ।। १ ।।

संस्कारैः संस्कृतो यस्तु शुद्धयोनिर्द्विजातिताम् ।।

प्राप्तः स हि ब्रह्मचारी तद्धर्मानादितो ब्रुवे ।। २ ।।

वर्णी वेदमधीयीत वसन्गुरुगृहे शुचिः ।।

जितेन्द्रियो जितक्रोधो विनीतस्तथ्यभाषणः ।। ३ ।।

सायं प्रातश्चरेद्धोमं भिक्षाचर्यां च संयतः ।।

कुर्यात्त्रिकालं संध्यां च विष्णुपूजां तथान्वहम् ।। ४ ।।

गुर्वाज्ञयैव भुञ्जीत मितमन्नमनाकुलः ।।

गुरुसेवापरो नित्यं भवेद्व्यसनवर्जितः ।। ५ ।।

स्नाने च भोजने होमे जपे मौनमुपाश्रयेत् ।।

छिन्द्यान्न नखरोमाणि दन्तान्नैवातिधावयेत् ।। ६ ।।

नातिधावेच्च वासांसि भवेन्निष्कपटो गुरौ ।।

आहूतोध्ययनं कुर्यादादावन्ते च तं नमेत् ।। ७ ।।

अस्पृश्यान्न स्पृशेच्चासौ नाऽसंभाष्यांश्च भाषयेत् ।।

अभक्ष्यं भक्षयेन्नैव नाऽपेयं च पिबेत्क्वचित् ।। ८ ।।

मेखलामजिनं दण्डं बिभृयाच्च कमण्डलुम् ।।

सिते द्वे वाससी ब्रह्मसूत्रं च जपमालिकाम् ।। ९ ।।

दर्भपाणिश्च जटिलः केशसंस्कारवर्जितः ।।

अङ्गरागं पुष्पहारान्भूषणानि च वर्जयेत् ।। 2.9.21.१० ।।

तैलाभ्यङ्गं न कुर्वीत कज्जले नाञ्जनं तथा ।।

वर्जयेच्च प्रयत्नेन संसर्गं मद्यमांसयोः ।। ११ ।।

स्त्रीणां निरीक्षणं स्पर्शं भाषणं क्रीडनादि च ।।

वर्जयेत्सर्वथा वर्णी स्त्रियाश्चाप्यवलेखनम् ।। १२ ।।

विना च देवप्रतिमां काष्ठचित्रादियोषितम् ।।

अपि नैव स्पृशेद्धीमान्न च बुद्ध्यावलोकयेत् ।। १३ ।।

प्राणिमात्रं च मिथुनीभूतं नेक्षेत कर्हिचित् ।।

स्त्रीणां गुणाश्चाप्यगुणाञ्छृणुयान्नैव नो वदेत् ।। १४ ।।

अस्पृशन्नेव वन्देत गुरुपत्नीमपि स्वकाम् ।।

जनन्यापि न तिष्ठेत रहःस्थाने तु कर्हिचित् ।। १५ ।।

एवंवृत्तो वसेत्तत्र यावद्विद्यासमापनम् ।।

ततो विरक्तो न्यासी स्याद्वर्णी वा नैष्ठिको भवेत् ।।

अनधिकारिता प्रोक्ता नैष्ठिकव्रतिनां कलौ ।। १६ ।।

न संधाविति विज्ञेयं कलीति शब्दसंग्रहात् ।।

वनी स्यादथ वा ब्रह्मन्नविरक्तो भवेद्गृही ।। १७ ।।

प्राजापत्यं च सावित्रं ब्राह्मं नैष्ठिकमेव च ।।

चतुर्विधं ब्रह्मचर्यं तत्रैकं शक्तितः श्रयेत् ।। १८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये ब्रह्मचारिधर्मनिरूपणं नामैकविंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २२

https://sa.wikisource.org/s/hat



।। श्रीनारायण उवाच ।।

गृही बुभूषुर्गुरवे दक्षिणां स्वस्य शक्तितः ।।

दत्त्वा तदाज्ञयैवाऽसौ समावर्त्तनमाचरेत् ।। १ ।।

ततः कुलोचितां योषां वयसोनामरोगिणीम् ।।

पुँल्लक्षणेन रहितामपापां विधिनोद्वहेत् ।। २ ।।

स्वाधिकारानुसारेण कृष्णसंप्रीतयेऽन्वहम् ।।

देवर्षिपितृभूतानि यजेत विधिना ततः।। ।। ३ ।।

स्नानं संध्यां जपं होमं स्वाध्यायं विष्णुपूजनम् ।।

तर्पणं वैश्वदेवं च कुर्याच्चातिथ्यमन्वहम् ।। ४ ।।

कुर्यात्पुण्यं यथाशक्ति न्यायार्जितधनेन च ।।

अनासक्तः पोष्यवर्गं पुष्णीयान्न तु पीडयेत् ।। ५ ।।

देहं च दैहिकान्वासावुद्दिश्य पशुवत्परैः ।।

वैरं न कुर्याद्देहादावहन्तां ममतां त्यजेत् ।।६।।

कुर्याद्भागवतानां च सतां संगमतन्द्रितः ।।

न स्त्रैणानां व्यसनिनां संगं कुर्यान्न लोभिनाम् ।।७।।

कामभावेन नेक्षेत परयोषां तु कर्हिचित् ।।

श्राद्धपर्वव्रताहादौ नोपेयाच्च स्वयोषितम् ।। ८ ।।

प्राप्तोपि पुरुषः सांख्ये योगे च परिपक्वताम्।।

पुत्र्या अपि प्रसंगेन रहःस्थाने तु मुह्यति ।। ९ ।।

अतो मात्रा भगिन्या वा दुहित्रापि रहःस्थले ।।

सह नासीत मतिमान्युवत्या किमुताऽन्यया ।। 2.9.22.१० ।।

अमङ्गलानां सर्वेषां विधवा ह्यत्यमंगलम् ।।

तद्दर्शनं च तत्स्पर्शो नृणां सुकृतहृत्ततः ।।११।।

प्रयाणकाले विधवादर्शनं सन्मुखे यदि ।।

स्यात्तदा नैव गन्तव्यमन्यथा मरणं ध्रुवम् ।। १२ ।।
आशिषो विधवास्त्रीणां समाः कालाहिफूत्कृतैः ।।
ततश्च बिभियात्ताभ्यो राक्षसीभ्यो यथा गृही ।। १३ ।।
मद्यं मांसं मादकं च द्यूतादीन्दूरतस्त्यजेत् ।।
न द्रोहं प्राणिमात्रस्य कुर्याद्वाचापि कर्हिचित् ।। १४ ।।
अवतारचरित्राणि शृणुयादन्वहं हरेः ।।
सर्वा अपि क्रियाः कुर्याद्वासुदेवार्थमास्तिकः ।। १५ ।।
ऊर्जे माघे च वैशाखे चातुर्मास्ये मलिम्लुचे ।।
अन्येषु पुण्यकालेषु विशेषनियमांश्चरेत् ।। १६ ।।
पुण्यदेशे पुण्यकाले सत्पात्रे विधिना गृही।।
दद्याद्दानं यथाशक्ति दयां कुर्वीत जन्तुषु ।। १७ ।।
पुण्यान्देशान्पुण्यकालान्पुण्यपात्राणि चानघ ।।
कथयामि विशेषेण धर्मवृद्धिकराणि ते ।। १८ ।।
देशः सर्वोत्तमस्त्वेष भुवि यो मदधिष्ठितः ।।
महामुनिगणा यत्र तपस्यन्ति महाव्रताः।। ।। १९ ।।
हरितद्भक्तमाहात्म्याद्देशानामस्ति पुण्यता ।।
गंगाद्वारं मधुपुरी नैमिषारण्यमेव च ।। 2.9.22.२० ।।
कुरुक्षेत्रमयोध्या च प्रयागश्च गयाशिरः ।।
पुरी वाराणसी चैव पुण्यश्च पुलहाश्रमः ।।२१ ।।
कपिलाश्रमः श्रीरंगः प्रभासश्च कुशस्थली ।।
क्षेत्रं सिद्धपदाख्यं च पौष्करं च महत्सरः ।। २२ ।।
क्रीडास्थानं भगवतः सश्रियो रैवताचलः ।।
तथा गोवर्द्धनगिरिः पुण्यं वृन्दावनं वनम् ।। २३ ।।
महेन्द्रमलयाद्याश्च सप्तापि कुलपर्वताः ।।
भागीरथी महापुण्या यमुना च सरस्वती ।। २४ ।।
गोदावरी च सरयूः कावेरी गोमतीमुखाः ।।
पुराणप्रथिताः पुण्या महानद्यो नदास्तथा ।। २५ ।।
महोत्सवैर्भवेद्यत्र भगवत्प्रतिमार्चनम् ।।

प्रभोरनन्यभक्ताश्च भवेयुर्यत्रयत्र च ।। २६ ।।
अहिंस्राश्च स्वधर्मस्था यत्र स्युर्ब्राह्मणोत्तमाः ।।
मृगाद्याः पशवो यत्र विचरेयुश्च निर्भयाः ।। २७ ।।
यत्रयत्रावताराश्च हरेर्वासश्च यत्र वा ।।
एते पुण्यतमा देशा भुवि सन्ति विशेषतः ।। २८ ।।
अल्पोप्येषु कृतो धर्मः स्यात्सहस्रगुणो नृणाम् ।।
पुण्यवृद्धिकरान्कालाञ्छृण्वथो वच्मि नारद ।। २९ ।।
अयने द्वे च विषुवं ग्रहणं सूर्यसोमयोः ।।
दिनक्षयो व्यतीपातः श्रवणर्क्षाणि सर्वशः ।। 2.9.22.३० ।।
द्वादश्य एकादश्यश्च मन्वाद्याश्च युगादयः ।।
पुण्याः स्युस्तिथयः सर्वा अमावास्या च वैधृतिः ।। ३१ ।।
मासर्क्षयुक्पौर्णमास्यश्चतस्रोप्यष्टकास्तथा ।।
स्वजन्मर्क्षाणि च हरेर्जन्मोत्सवदिनानि च ।। ३२ ।।
स्वस्य स्त्रियाश्चार्भकाणां संस्कारोभ्युदयस्तथा ।।
सत्पात्रलब्धिश्च यदा कालाः पुण्यतमा इमे ।। ३३ ।।
देवपितृद्विजसतामेषां शक्त्या समर्चनम् ।।
स्नानदानजपादीनि स्युरनन्तफलानि हि ।। ३४ ।।
सत्पात्रं तु स्वयं साक्षाद्भगवानेव नारद ।।
शाखानामिव मूलाम्बु यद्दत्तं सर्वतुष्टिकृत् ।।३५।।
अहिंसा वेदविद्याभिस्तुष्टिः सद्धर्मभक्तिभिः ।।
हृदि विष्णुं दधीरन्ये ते सत्पात्राणि वै द्विजाः ।। ३६ ।।
एकान्तिकाश्च भगवद्भक्ता बद्धविमोचकाः ।।
सत्पात्राणीति जानीहि येष्वास्ते भगवान्स्वयम् ।। ३७ ।।
आढ्यस्तु कारयेद्विष्णोर्मन्दिराणि दृढानि च ।।
पूजाप्रवाहसिद्ध्यर्थं तद्वृत्तीश्चापि कारयेत् ।। ३८ ।।
जलाशयान्वाटिकाश्च विष्ण्वर्थमुपकल्पयेत् ।।
सदन्नैः सुरसैः साधून्ब्राह्मणांश्चैव तर्पयेत् ।। ३९ ।।
अहिंसान्वैष्णवान्यज्ञान्कुर्याच्छक्त्या यथाविधि ।।

व्रतजन्मोत्सवान्विष्णोः संभारेण च भूयसा ।। 2.9.22.४० ।।

प्रौष्ठपदासितेपक्षे क्षयाहे तीर्थपर्वसु ।।

पित्रोः श्राद्धं प्रकुर्वीत तद्बन्धूनां च शक्तितः ।। ४१ ।।

दैवे कर्मणि पित्र्ये च भक्तान्भगवतो द्विजान् ।।

पूजयेत स्वधर्मस्थान्भोजयेद्भगवद्धिया ।। ४२ ।।

दैवे द्वौ भोजयेद्विप्रौ त्रींश्च पित्र्ये यथाविधि ।।

एकैकं वोभयत्रापि नैव श्राद्धे तु विस्तरेत् ।। ४३ ।।

देशकालद्रव्यपात्रपूजोपकरणानि च ।।

विस्तरेण यथाशास्त्रं न स्यादेवेति निश्चितम् ।। ४४ ।।

न श्राद्धे क्वापि मांसं तु दद्यान्नाऽद्याच्च मानवः ।।

मुन्यन्नैः क्षीरसर्पिर्भ्यां तृप्यन्ति पितरो भृशम् ।। ४५ ।।

अहिंसा प्राणिमात्रस्य मनोवाक्तनुभिस्तु या ।।

तयैव पितरः सर्वे तृप्यन्त्यतिदयालवः ।। ४६ ।।

तस्मात्कुसङ्गतः क्वापि शास्त्रहार्दमबुध्य च ।।

श्राद्धे मांसं नैव दद्याद्वासुदेवपरः पुमान् ।। ४७ ।।

व्रतानि कुर्याद्विष्णोश्च ब्रह्मचर्यादिभिर्यमैः ।।

सहैव तत्परो नान्यत्कार्यं कुयाच्च तद्दिने ।। ४८ ।।

स्वसंबन्धिजनानां चाप्याशौचं जनिनाशयोः ।।

यथाशास्त्रं पालयेत ग्रहणे चार्कचन्द्रयोः ।। ४९ ।।

व्यावहारिककार्याणां विवादे निर्णयेपि च ।।

गृहीतरास्त्यागिनो ये ते न कार्या न चाधवाः ।। 2.9.22.५० ।।

यत्रैते स्युर्न्न तत्कार्यं सिध्येत्क्वापि द्विजोत्तम ।।

सर्वस्वनाशस्तत्र स्यादित्येवं त्वस्ति निर्णयः ।। ५१ ।।

धर्मा एते गृहस्थानां मया संक्षेपतोदिताः ।।

यदनुष्ठानतो नृणां स्यात्स्वेष्टसुखमक्षयम् ।। ५२ ।।

शिलादिजीविकावृत्तिभेदेन गृहिणो द्विजाः ।।

चतुर्विधाः प्रकीर्त्यन्ते तत्तन्नाम्ना च नारद ।। ५३ ।।

स्त्रीणामथ प्रवक्ष्यामि धर्मान्धर्मवतां वर ।।

येषु स्थिताः स्त्रियः सर्वाः प्राप्नुवन्तीप्सितं सुखम् ।। ५४ ।।

सुवासिनीभिर्न्नारीभिः स्वपतिर्देववत्सदा ।।

सेवनीयोऽनुवर्त्यश्च जरन्नुग्णोऽधनोपि वा ।। ५५ ।।

तद्वन्धवश्चानुवर्त्याः सेवनेन यथोचितम् ।।

उज्ज्वलानि विधेयानि गृहोपकरणानि च ।। ५६ ।।

गृहं मार्जनसेकाद्यैः स्वच्छं कार्यं दिनेदिने ।।

प्रियं सत्यं च वक्तव्यं स्थेयं शुचितया सदा ।। ५७ ।।

चाञ्चल्यमतिलोभश्च क्रोधः स्तेयं च हिंसनम् ।।

अधार्मिकाणां सङ्गश्च वर्ज्यः स्त्रीणां तथा नृणाम् ।। ५८ ।।

भवितव्यं तत्पराभिर्द्धर्मकार्येषु सर्वदा ।।

त्यक्त्वौद्धत्यं विनीताभिः स्थेयं जित्वेन्द्रियाणि च ।। ५९ ।।

पातिव्रत्ये स्थिताभिश्च धर्मे ताभी रमापतेः ।।

भक्तिः कार्या स्वतन्त्राभिर्भवितव्यं न कुत्रचित् ।। 2.9.22.६० ।।

विधवा तु सदा विष्णुं सेवेत पतिभावतः ।।

कामसंबन्धिनीर्वार्त्ता न शृण्वीत न कीर्तयेत्।। ६१ ।।

आसन्नसंबन्धवतो विनान्यान्पुरुषान्क्वचित् ।।

अनापदि स्पृशेन्नैव पश्येन्नैव च कामतः ।। ६२ ।।

स्तनपस्य तु नुः स्पर्शाद्वृद्धस्य च न दुष्यति ।।

कार्य आवश्यके ताभ्यां भाषणे च विभर्तृका ।। ६३ ।।

व्यावहारिककार्ये च विवादमधिकं नरैः ।।

न कुर्वीतावश्यकार्ये तैर्भाषेत विना रहः ।। ६४ ।।

नेक्षेत मिधुनीभूतं बुद्या पश्वाद्यपि क्वचित् ।।

त्यजेच्च सकलान्भोगान्स्यात्सकृन्मितभुक्तथा ।। ६५ ।।

सधातुसूक्ष्मवासांसि नालंकारांश्च धारयेत् ।।

न दिवा शयनं कुर्यान्न खट्वायामनापदि ।। ६६ ।।

ताम्बूलभक्षणं नैव कुर्यान्नाभ्यङ्गमञ्जनम् ।।

पुम्प्रसंगाच्च बिभियात्कृष्णाहेरिव नित्यदा ।। ६७ ।।

समीक्ष्य पुरुषं नारी या न मोहमुपाव्रजेत् ।।

तादृशी तु विना लक्ष्मीमेकां नान्यास्ति कुत्रचित् ।। ६८ ।।

धर्मनिष्ठा ततो नारी स्वनिःश्रेयसमिच्छती ।।

नेक्षेत पुरुषाकारं बुद्धिपूर्वं च न स्पृशेत् ।। ६९ ।।

कृच्छ्रचान्द्रायणादीनि नैरन्तर्येण भक्तितः ।।

व्रतानि कुर्याच्च सदा भवेन्नियमतत्परा ।। 2.9.22.७० ।।

पित्रा पुत्रादिना वापि तरुणी तरुणेन च ।।

सह तिष्ठेन्न रहसि कुसङ्गं सर्वथा त्यजेत् ।। ७१ ।।

सधवा विधवा वा स्त्री स्वरजोदर्शनं क्वचित् ।।

न गोपयेत्त्रिरात्रं तु मनुष्यादींश्च न स्पृशेत् ।। ७२ ।।

प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ।।

तृतीये रजकी प्रोक्ता सा चतुर्थेऽह्नि शुद्ध्यति ।। ७३ ।।

इति स्त्रीणां मया धर्माः संक्षेपात्कथितास्तव ।।

युक्ता यैर्योषितो यायुरिहामुत्र महत्सुखम् ।। ७४ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये गृहस्थधर्मनिरूपणं नाम द्वाविंशोध्यायः।।२२।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २३



।। श्रीनारायण उवाच ।।

वानप्रस्थस्य वक्ष्यामि नियमानथ ते मुने ।।

तृतीय आयुषो भागे तृतीयाश्रम ईरितः ।।१ ।।

अनुकूला स्वसेवायां विरक्ता च तपःप्रिया ।।

यदि पत्नी भवेत्तर्हि तया सह वनं विशेत् ।। २ ।।

अन्यथा तु सुतादिभ्यस्तस्याः पोषणरक्षणम् ।।

आदिश्य स्वयमेकाकी विरक्तो वनमाविशेत् ।। ३ ।।

निर्भयो निवसेत्तत्र तपोरुचिरतन्द्रितः ।।

कुर्यादुटजमग्न्यर्थं स्वयं तु बहिरावसेत् ।। ४ ।।

भवेत्पञ्चतपा ग्रीष्म उदवासश्च शैशिरे ।।

आसारषाट्च वर्षासु जितक्रोधो जितेन्द्रियः ।। ५ ।।

वासश्च तार्णं पार्णं वा वसीताजिनवल्कलम् ।।

भुञ्जीत ऋषिधान्यानि वन्यं कन्दफलादि वा ।। ६ ।।

अग्निपक्वं वार्कपक्वमपक्वं वापि भक्षयेत् ।।

अभावे त्वेष दन्तानामश्मोलूखलकुट्टितम् ।। ७ ।।

स्वयमेवाहरेदन्नं यथाकालं दिनेदिने ।।

काले पराहृतं वापि गृह्णीयान्नान्यदा क्वचित्।। ८ ।।

कालेपि कृष्टपच्यं तु न गृह्णीयादनापदि ।।

वन्यैरेवाग्निकार्यं च धान्यैः कुर्वीत पूर्ववत् ।। ९ ।।

रक्षेत्कमण्डलुं दण्डमग्निहोत्रपरिच्छदान्।।

केशरोमश्मश्रुनखान्धारयेन्मलिनान्दतः ।। 2.9.23.१० ।।

अंगान्यमर्दयन्स्नायाद्भूतले च शयीत सः ।।

देशकाल बलावस्थानुसारेण तपश्चरेत् ।। ११ ।।

फेनपाश्चौदुम्बराश्च वालखिल्यास्तथैव च ।।

वैखानसेति कथिताश्चतुर्द्धा वनवासिनः ।। १२ ।।

यथाशक्ति द्वादशाब्दानष्टौ वा चतुरो वने ।।

वसेद्द्वावेकमेवापि ततः संन्यासमाश्रयेत् ।। १३ ।।

यदि स्यात्तीव्रवैराग्यं तर्हि न्यासो हितावहः ।।

वसेत्तत्रैवाऽन्यथा तु यावज्जीवं वने द्विजः ।। १४ ।।

यथाविधि कृतत्यागस्तुरीयाश्रममास्थितः ।।

साच्छादनं तु कौपीनं कन्थामेकां च धारयेत्।। ।। १५ ।।

दण्डं कमण्डलुं चाम्बुगालनं बिभृयाच्च सः ।।

सदाचारद्विजगृहे काले भिक्षां समाचरेत् ।। १६ ।।

न कुर्यात्प्रत्यहं भिक्षामेकस्यैव गृहे यतिः ।।

रसलुब्धो भवेन्नेव सकृच्च मितभुग्भवेत् ।। १७ ।।

वनस्थाश्रमिणो भिक्षां प्रायो गृह्णीत भिक्षुकः ।।

तदन्धसातिशुद्धेन शुद्ध्यत्येवाऽस्य यन्मनः ।। १८ ।।

घ्राणेपि मांससुरयोः पाराकं व्रतमाचरेत् ।।

शौचाचारविशुद्धः स्याच्छूद्रादींश्चापि न स्पृशेत् ।। १९ ।।

नित्यं कुर्याद्विष्णुपूजा मद्याद्विष्णोर्न्निवेदितम्।।

द्वादशार्णं जपेद्विष्णोरष्टाक्षरमनुं च वा ।। 2.9.23.२० ।।

असद्वादं न कुर्वीत वृत्त्यर्थं नाचरेत्कथाम् ।।

असच्छास्त्रे न सक्तः स्यान्नोपजीवेच्च जीविकाम् ।। २१ ।।

सच्छास्त्रमभ्यसेच्चासौ बन्धमोक्षानुदर्शनम् ।।

मठादीन्नैव बध्नीयादहन्ताममते त्यजेत् ।। २२ ।।

चातुर्मास्यं विनैकत्र वसेन्नाऽसावनापदि ।।

आत्मनश्च हरे रूपं विद्याज्ज्ञानेन तत्त्वतः ।। २३ ।।

कामं क्रोधं भयं वैरं धनधान्यादिसंग्रहम् ।।

नैव कुर्यात्पालयेत यमांश्च नियमान्यतिः ।। २४ ।।

तीव्रज्ञानविरागाभ्यां संपन्नोपि यतिर्ध्रुवम् ।।

स्त्रीवित्तभूषासद्वस्त्रसंसर्गाद्भ्रष्टतां व्रजेत् ।। २५ ।।

पुष्प चन्दनतैलादिसुगन्धिद्रव्यवर्जनम् ।।

त्यागी कुर्वीतान्यथा तु भवेद्देहात्मधीः स वै ।। २६ ।।
आहारो यस्य यावांस्तं तावान्स्त्रीकाम आविशेत् ।।
अतो मितं नीरसं च भोजनं त्यागिनो हितम् ।। २७ ।।
न श्राव्या ग्राम्यवार्त्ता च मोक्षसिद्धिमभीप्सता ।।
नश्येद्यच्छ्रवणान्नृणां सद्यो विष्णुकथा रुचिः ।। २८ ।।
अपि चित्रमयीं नारीं त्यागी नेक्षेत न स्पृशेत् ।।
स्त्र्याकारदर्शनादेव भ्रष्टा भूरि तपस्विनः ।। २९ ।।
कुटीचको बहूदश्च हंसः परमहंसकः ।।
एवं चतुर्द्धा कथितो यतिर्वैराग्यभेदतः ।। 2.9.23.३० ।।
काषायवाससो ये मे भविष्याः साधवश्च तैः ।।
कार्यं मदर्थपाकादि तुर्याश्रमस्थितैरपि ।। ३१ ।।
श्रीवासुदेवभक्ता ये तीव्रवैराग्यशालिनः ।।
तेषां धर्मस्तु तत्सेवा प्रोक्ताहस्सु च रात्रिषु ।। ३२ ।।
एकोपि च क्षणस्तेषां ज्ञानविज्ञानभूयसाम् ।।
भक्तिं नवविधां विष्णोर्विना व्यर्थो न वै भवेत् ।। ३३ ।।
सर्वैर्गुणैरुपेतोपि भगवद्विमुखो यदि ।।
स्वजनोपि भवेत्तं तु जह्युरेव हि वैष्णवाः ।। ३४ ।।
प्रासादिकं हरेरन्नं प्रोक्षितं तत्पदाम्बुना ।।
भुञ्जीरंस्तुलसीमिश्रं प्रत्यहं सात्वता जनाः ।। ३५ ।।
स्त्रीणां च स्त्रीषु सक्तानां प्रसंगो विष्णुचिन्तकैः ।।
सर्वथैव परित्याज्यो भवेत्तद्ध्यानमन्यथा ।। ३६ ।।
भगवन्तं वासुदेवं विनैकमितरः पुमान् ।।
कोपि नास्त्येव यो नारीं समीक्ष्य न विमुह्यति ।।३७।।
यत्र स्थित्या मुहुः स्त्रीणां स्यातां शब्दश्रुतीक्षणे ।।
त्यागी तत्र वसेन्नैव वसन्धर्मच्युतो भवेत् ।।३८।।
कामो लोभो रसास्वादः स्नेहो मानस्तथा च रुट् ।।
एते त्याज्याः प्रयत्नेन षड्दोषाः संसृतिप्रदाः ।। ३९।।
प्रोक्तेषु धर्मेष्वेतेषु यस्ययस्य च्युतिर्भवेत्।।

यथाशक्ति यथाशास्त्रं कार्या तत्तस्य निष्कृतिः।।2.9.23.४०।।

इत्थं चतुर्णां वर्णानामाश्रमाणां च नारद।।

धर्माः संक्षेपतः प्रोक्ता वैष्णवानां च ते मया।।४१।।

वर्णी यतिश्च धर्मस्थो ब्रह्मलोकमुपैति वै।।

ऋषिलोकं वनस्थश्च गृहस्थः स्वर्गमाप्नुयात् ।। ४२ ।।

भक्त्या सहैताञ्छ्रीविष्णोराचरेयुस्तु ये जनाः ।।

ते तु सर्वेपि देहान्ते विष्णुलोकमवाप्नुयुः ।। ४३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये वनस्थयतिधर्मनिरूपणं नाम त्रयोविंशोऽध्यायः ।। २३ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २४



।। श्रीनारायण उवाच ।।

अथ ज्ञानस्वरूपं ते वच्मि सांख्येन निश्चितम् ।।

क्षेत्रादि ज्ञायते येन तज्ज्ञानं हि निरुच्यते ।। १ ।।

वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि ।।

आदावेकोऽद्वितीयोऽभून्निर्गुणो दिव्यविग्रहः ।। २ ।।

स कार्यमूलप्रकृतिः सकालाऽक्षरतेजसि ।।

प्रकाशेऽर्कस्य रात्रीव तिरोभूता तदाऽभवत् ।। ३ ।।

सिसृक्षाथाभवत्तस्य ब्रह्माण्डानां यदा तदा ।।

सकालाविर्बभूवादौ महामाया ततो हि सा ।। ४ ।।

तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना ।।

सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ।। ५ ।।

तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने ।।

युज्यन्ते स्म प्रधानैस्ते पुरुषाश्चेच्छया प्रभोः ।। ६ ।।

पुमांसो निदधुर्गर्भांस्तेषु तेभ्यश्च जज्ञिरे ।।

ब्रह्माण्डानि ह्यसङ्ख्यानि तत्रैकं तु विविच्यते ।। ७ ।।

आदौ जज्ञे महांस्तस्मात्पुंसो वीर्याद्धिरण्मयात् ।।

अहङ्कारस्ततस्तस्माद्गुणाः सत्त्वादयस्त्रयः ।। ८ ।।

तमसः पञ्च तन्मात्रा महाभूतानि जज्ञिरे ।।

दशेन्द्रियाणि रजसो बुद्ध्या सह महानसुः ।।९।।

सत्त्वादिन्द्रियदेवाश्च जायन्ते स्म मनस्तथा ।।

सामान्यतस्तत्त्वसंज्ञा एते देवाः प्रकीर्त्तिताः ।। 2.9.24.१० ।।

प्रेरिता वासुदेवेन स्वस्वांशैरैश्वरं वपुः ।।

अजीजनन्विराट्सञ्ज्ञं ते चराचरसंश्रयम् ।। ११ ।।

स च वैराजपुरुषः स्वसृष्टास्वप्स्वशेत यत् ।।

तेन नारायण इति प्रोच्यते निगमादिभिः ।। ।। १२ ।।

तन्नाभिपद्माद्ब्रह्मासीद्राजसोऽथ हृदम्बुजात् ।।

जज्ञे विष्णुः सत्त्वगुणो ललाटात्तामसो हरः ।। १३ ।।

एतेभ्य एव स्थानेभ्यस्तिस्र आसंश्च शक्तयः ।।

तत्रासीत्तामसी दुर्गा सावित्री राजसी तथा ।।

सात्त्विकी श्रीश्चेति सर्वा वस्त्रालंकारशोभिताः ।। १४ ।।

ता वैराजाज्ञया त्रींश्च ब्रह्मादीन्प्रतिपेदिरे ।।

दुर्गा रुद्रं च सावित्री ब्रह्माणं विष्णुमन्तिमा ।। १५ ।।

चण्डिकाद्याश्च दुर्गाया अंशेनासन्सहस्रशः ।।

त्रयीमुख्याश्च सावित्र्याः शक्तयोंशेन जज्ञिरे ।।

दुस्सहाप्रमुखाश्चासन्नंशेनैव श्रियो मुने ।। १६ ।।

तत्रादितो यो ब्रह्मासीद्वैराजनाभिपद्मतः ।।

एकार्णवे तदब्जस्थः स कश्चिदपि नैक्षत ।। १७ ।।

विसर्गबुद्धिमप्राप्तो नात्मानं च विवेद सः ।।

कोहं कुत इति ध्यायन्नदिदृक्षत्कजाश्रयम् ।। १८ ।।

नालं प्रविश्याऽधो यातुस्तन्मूलं च विचिन्वतः ।।

संवत्सरशतं यातं तस्य नान्तं तु सोलभत् ।। १९ ।।

ऊर्ध्वं पुनरुपेत्याऽथ श्रान्तश्च निषसाद सः ।।

अदृश्यमूर्तिर्भगवानूचे तपतपेति तम् ।। 2.9.24.२० ।।

तच्छ्रुत्वा तत्प्रवक्तारमदृष्ट्वा च स सर्वतः ।।

गुरूपदिष्टवत्तेपे दिव्यं वर्षसहस्रकम् ।।२१।।

पद्मे तपस्यते तस्मै तपः शुद्धात्मने ततः ।।

समाधौ दर्शयामास धाम वैकुण्ठमच्युतः ।। २२ ।।

प्राधानिका गुणा यत्र त्रयोपि रजआदयः ।।

न भवन्त्यल्पमपि यत्कालमायाभयं न च।।२३।।

सहोदितार्कायुतवद्भास्वरे तत्र तेजसि ।।

वासुदेवं ददर्शाऽसौ रम्यदिव्यासिताकृतिम्।।२४।।

चतुर्भुजं गदापद्मशंखचक्रधरं विभुम् ।।

पीताम्बरं महारत्नकिरीटादिविभूषणम्।। २५ ।।

नन्दताक्ष्यादिभिर्ज्जुष्टं पार्षदैश्च चतुर्भुजैः ।।

सिद्धिभिश्चाष्टभिः षड्भिर्बद्धाञ्जलिपुटैर्भगैः ।।२६।।

सिंहासने श्रिया साकमुपविष्टं तमीश्वरम् ।।

प्रणम्य प्राञ्जलिस्तस्थौ विरिञ्चो हृष्टमानसः ।।२७।।

तं प्राह भगवान्ब्रह्मंस्तुष्टोहं तपसा तव ।।

वरं वरय मत्तस्त्वं स्वाभीष्टं यत्प्रियोसि मे ।। २८ ।।

इत्युक्तस्तेन तं जानंस्तपसि प्रेरकं प्रभुम् ।।

स्वं च विश्वसृजं ब्रह्मा ययाचेऽभिमतं वरम् ।। २९ ।।

प्रजाविसर्गशक्तिं मे देहि तुभ्यं नमः प्रभो ।।

तत्रापि च न बद्ध्येयं यथा कुरु तथा कृपाम् ।। 2.9.24.३० ।।

ततस्तं भगवानूचे सेत्स्यते ते मनोरथः ।।

वैराजेन मयात्मैक्यं भावयित्वा समाधिना ।।

प्रजाः सृजाऽथ स्वासाध्ये कार्ये स्मर्योहमिष्टदः ।। ३१।।

इत्युक्त्वान्तर्दधे विष्णुर्ब्रह्माप्येकसमाधिना ।।

वैराजेनाऽथ लोकान्प्राग्लीनान्सर्वान्स्व ऐक्षत ।। ३२ ।।

विसर्गशक्तिं संप्राप्य स सर्गाय मनो दधे ।।

ब्रह्मज्योतिर्मयस्तावदादित्यः प्रादुरास ह ।। ३३ ।।

स्थापयित्वाण्डमध्ये तं ततः स मनसाऽसृजत् ।।

तपोभक्तिविशुद्धेन मुनीनाद्यांश्चतुःसनान् ।। ३४ ।।

प्रजाः सृजत चेत्यूचे तांस्तदा ते तु तद्वचः ।।

न जगृहुर्न्नैष्ठिकेन्द्रास्तेभ्यश्चुक्रोध विश्वसृट् ।। ३५ ।।

क्रुद्धस्य तस्य भालाच्च रुद्र आसीत्तमोमयः ।।

मन्युं नियम्य मनसा प्रजेशान्सोऽसृजत्ततः ।। ३६ ।।

मरीचिमत्रिं पुलहं पुलस्त्यं च भृगुं क्रतुम् ।।

वसिष्ठं कर्दमं चैव दक्षमंगिरसं तथा ।। ३७ ।।

धर्मं ततः स हृदयादधर्मं पृष्ठतस्तथा ।।

मनसः काममास्याच्च वाणीं क्रोधं भ्रुवोऽसृजत् ।। ३८ ।।

शौचं तपो दया सत्यमिति धर्मपदानि च ।।

चतुर्भ्यो वदनेभ्यश्च चत्वारि ससृजे ततः ।। ३९ ।।

ऋग्वेदं वदनात्पूर्वाद्यजुर्वेदं च दक्षिणात् ।।

ससर्ज पश्चिमात्साम सौम्याच्चाथर्वसंज्ञितम्।।2.9.24.४०।।

इतिहासपुराणानि यज्ञान्विप्रशतं तथा ।।

वस्वादित्यमरुद्विश्वान्साध्यांश्च मुखतोऽसृजत् ।।४१।।

बाहुभ्यः क्षत्रियशतमूरुभ्यां च विशां शतम् ।।

पद्भ्यां शूद्रशतं चैतान्ससर्ज सह वृत्तिभिः ।। ४२ ।।

ब्रह्मचर्यं च हृदयाद्गार्हस्थ्यं जघनस्थलात् ।।

वनाश्रमं तथोरस्तः संन्यासं शिरसोऽसृजत् ।। ४३ ।।

वक्षःस्थलात्पितृगणानसुराञ्जघनस्थलात् ।।

ससर्ज च गुदान्मृत्युं निर्ऋतिं निरयांश्च सः ।। ४४ ।।

गन्धर्वांश्चारणान्सिद्धान्सर्पान्यक्षांश्च राक्षसान् ।।

नगान्मेघान्विद्युतश्च समुद्रान्सरितस्तथा ।। ४५ ।।

वृक्षान्पशून्पक्षिणश्च सर्वान्स्थावरजङ्गमान् ।।

स्वाङ्गेभ्य एव सोस्राक्षीद्ब्रह्मा नारायणात्मकः ।। ४६ ।।

सृष्टिमेतां विलोक्यापि नातिप्रीतो यदा तदा ।।

हरिं ध्यात्वा स ससृजे तपोविद्यासमाधिभिः ।।

ऋषीन्स्वायम्भुवादींश्च मनूंश्च मनुजानपि ।। ४७ ।।

ततः प्रीतः स सर्वेषां निवासाय यथोचितम्।।

स्वर्लोकं च भुवर्लोकं भूर्लोकं समकल्पयत् ।। ४८ ।।

येषां तु यादृशं कर्म प्राक्कालीनं हि तान्विधिः ।।

संस्थाप्य तादृशे स्थाने वृत्तीस्तेषामकल्पयत् ।। ४९ ।।

देवानाममृतं नृणामृषीणां चान्नमोषधीः ।।

यक्षरक्षोसुरव्याघ्रसर्पादीनां सुरामिषम् ।।

चक्लृपे गोमृगादीनां वृत्तिं स यवसादि च ।। 2.9.24.५० ।।

स देवानां तु विश्वेषां हव्यं वृत्तिमकल्पयत् ।।

अमूर्तानां च मूर्तानां पितॄणां कव्यमेव च ।। ५१ ।।

दुर्गोद्भवानां शक्तीनां तदुपासनतत्परैः ।।
दैत्यरक्षःपिशाचाद्यैर्दत्तं मद्यामिषादि च ।। ५२ ।।
तथा सावित्र्युद्भवानां शक्तीनां तदुपासकैः ।।
दत्तमृष्यादिभिर्यज्ञे मुन्यन्नं चान्नमोषधीः ।। ५३ ।।
श्रीजातानां च शक्तीनां तदुपास्तिपरायणैः ।।
दत्तं देवासुरनरैः पायसाज्यसितादि च ।। ५४ ।।
प्रजापतीनां स पतिस्ततः प्राहाऽखिलाः प्रजाः ।।
इज्या देवाश्च पितरो हव्यकव्यात्मकैर्मखैः ।। ५५ ।।
इष्टाः संपूरयिष्यन्ति ह्येते युष्मन्मनोरथान् ।।
एतान्ये नार्चयिष्यन्ति ते वै निरयगामिनः ।। ५६ ।।
इत्थं कृता हि मर्यादा तेन नारायणात्मना ।।
दैवं पित्र्यमतो नित्यं जनैः कार्यं यथाविधि ।। ५७ ।।
ततो ब्रह्मा स सर्वेषां धर्मसेत्ववनाय च ।।
तत्तज्जातिषु ये मुख्यास्तान्मनूंश्चाप्यतिष्ठिपत् ।। ५८ ।।
वासुदेवेच्छयैवेत्थं वैराजाद्ब्रह्मरूपिणः ।।
कल्पेकल्पे भवत्येव सृष्टिर्बहुविधा मुने।।५९।।
प्राक्कल्पे यादृशी संज्ञा वेदाः शास्त्राणि च क्रियाः।।
कल्पेऽन्ये तादृशाः सर्वे धर्माः स्युश्चाऽधिकारिणः।। 2.9.24.६०।।
विष्णुर्यः कथितः सोपि वैराजपुरुषात्मकः।।
पोषयत्यखिलाँल्लोकान्मर्यादाः परिपालयन्।। ६१।।
मन्वादिभिः पाल्यमानाः सेतवस्त्वसुरैर्यदा ।।
कामरूपैर्विभिद्यन्ते वासुदेवस्तदा स्वयम् ।।
ब्रह्मादिभिः प्रार्थ्यमानः प्रादुर्भवति भूतले ।। ६२ ।।
अवतारा भगवतो भूता भाव्याश्च सन्ति ये ।।
कर्तुं न शक्यते तेषां संख्यां संख्याविशारदैः ।। ६३ ।।
सद्धर्मदेवसाधूनां गुप्त्यै तद्द्रोहिमृत्यवे ।।
श्रेयसे सर्वभूतानामाविर्भावोस्ति सत्पतेः ।। ६४ ।।
स वासुदेवः प्रकृतौ पुंसि कार्येषु चैतयोः ।।

अन्वितश्च पृथक्चास्ते सर्वाधीशः स्वधामनि ।। ६५ ।।

व्याप्य स्वांशैरिमाँल्लोकान्यथाग्निवरुणादयः ।।

स्वस्त्यासते स्वस्वलोके तथैष भगवान्मुने ।। ६६ ।।

सर्गात्प्राक्सच्चिदानन्दः शुद्ध एकश्च निर्गुणः ।।

यथासीत्तादृगेवासावन्वितोप्यस्ति निर्मलः ।। ६७ ।।

वायुतेजोजलक्ष्मासु तत्तत्कार्येषु खं यथा ।।

अन्वीयाप्यस्ति निर्लेपं यथा पूर्वं तथैष हि ।। ६८ ।।

सर्वोपास्यो नियन्ता च व्यापकश्चैष कीर्तितः ।।

आत्यन्तिके लयेऽथैष भवत्येव यथा पुरा ।। ६९ ।।

वैराजः पुरुषो योऽत्र प्रोक्तोऽसावीश्वराभिधः ।।

ज्ञेयः स्वतन्त्रः सर्वज्ञो वश्यमायश्च नारद ।। 2.9.24.७० ।।

एतस्यैव स्वरूपाणि ब्रह्मविष्णुशिवास्त्रयः ।।

रजआदिगुणोपेताः स्वगुणानुगुणक्रियाः ।। ७१ ।।

ब्रह्मणो ये समुत्पन्ना देवासुरनरादयः ।।

ते जीवसंज्ञा ह्यल्पज्ञाः परतन्त्रा भवन्ति च ।। ७२ ।।

जीवानामीश्वराणां च तनवः क्षेत्रसञ्ज्ञकाः ।।

महदादितत्त्वमय्यः क्षेत्रज्ञाख्यास्तु तद्विदः ।। ७३ ।।

क्षेत्राणां च क्षेत्रविदां प्रधानपुरुषस्य च ।।

मायायाः कालशक्तेश्चाऽक्षरस्य च परात्मनः ।।

पृथक्पृथग्लक्षणैर्यज्ज्ञानं तज्ज्ञानमुच्यते ।। ७४ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये ज्ञानस्वरूपनिरूपणं नाम चतुर्विंशोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २५

https://sa.wikisource.org/s/haw



।। श्रीनारायण उवाच ।।

वैराग्यस्याथ ते वच्मि लक्षणं मुनिसत्तम ।।

क्षयिष्णुवस्तुष्वरुचिः सर्वथेति तदीरितम् ।। १ ।।

आरभ्य मायापुरुषात्सर्वा ह्याकृतयस्तु याः ।।

कालशक्त्या भगवतो नाश्यन्ते ताश्च तद्वशाः ।। २ ।।

प्रत्यक्षेणानुमानेन शाब्देन च विवेकिभिः ।।

असत्यता कृतीनां च निश्चिता सत्यतात्मनाम् ।। ३ ।।

नित्येन प्रलयेनैष कालो नैमित्तिकेन च ।।

प्राकृतिकेन रूपेण चरत्यात्यन्तिकेन च ।। ४ ।।

देहिदेहा इमे नित्यं क्षीयन्ते परिणामिनः ।।

क्रमेण दृश्यते यत्र बाल्यतारुण्यवार्द्धकम् ।। ५ ।।

सूक्ष्मत्वान्नेक्ष्यते तत्तु गतिर्दीपार्चिषो यथा ।।

फलवृद्धिर्वाऽनुपदं जायमाना द्रुमे यथा ।। ६ ।।

तस्यांतस्यामवस्थायां दुःखं च महदीक्ष्यते ।।

जाग्रदादिष्ववस्थासु दुःखं चैव पुनःपुनः ।। ७ ।।

दुःखमाध्यात्मिकं भूरि दृश्यते चाधिभौतिकम् ।।

आधिदैविकमप्यत्र दुःखमेवास्ति देहिनाम् ।। ८ ।।

हाहा ममार मत्पुत्रो हा पत्नी म्रियते मम ।।

तातं मेऽभक्षयद्व्याघ्रो दष्टा सर्पेण मे वधूः ।। ९ ।।

महासौधोग्निना दग्धो हाहा सोपस्करोऽद्य मे ।।

स्वकुटुम्बं कथं पोक्ष्ये नावर्षत्पाकशासनः ।। 2.9.25.१० ।।

सस्यैः समृद्धं मत्क्षेत्रं हाहा दग्धं हिमाग्निना ।।

ह्रियन्ते तस्करैर्गावः सर्वस्वं मम लुण्ठितम् ।। ११ ।।

नृपेण दण्डितोऽत्यर्थं शत्रुणा हाऽतिताडितः ।।

किं करोमि च कं ब्रूयां माता मे व्यभिचारिणी ।। १२ ।।

विषं पास्यामि हाहाऽद्य मत्पत्नीं शत्रुराकृषत् ।।

हा स्वसा मे हृता म्लेच्छैर्हाहाऽरिः प्राप मर्मभित् ।। १३ ।।

प्रिये ज्वरातिव्यथया यमदूता इमे हहा ।।

इत्थं रोरूयमाणा हि दृश्यन्ते सर्वतो जनाः ।। १४ ।।

अवस्थानां शरीरस्य जन्ममृत्यू प्रतिक्षणम् ।।

कालेन प्राप्नुवद्भिः स्वं प्रारब्धं दुःखमश्यते ।। १५ ।।

प्रारब्धान्ते मृत्युदुःखं भवत्यप्रतिमं हि तत् ।।

मृत्वापि च महद्दुःखं प्राप्यते यमयातनाः ।। १६ ।।

ततो जरायुजोद्भिज्जस्वेदजाण्डजयोनिषु ।।

भूत्वाभूत्वा यथाकर्म म्रियते दुःखितैः पुनः ।। १७ ।।

नित्यः प्रलय एवं ते कीर्त्तितः सूक्ष्मया दृशा ।।

स ज्ञेयोऽथ मुने वच्मि लयं नैमित्तिकाभिधम्।। १८ ।।

निमित्तीकृत्य रजनीं भवेद्विश्वसृजस्तु यः ।।

नैमित्तिकः स कथितो लयो दैनंदिनश्च सः ।। १९ ।।

चतुर्युगानां साहस्रं दिनं विश्वसृजो मुने ।।

निशा च तावती तस्य तद्द्वयं कल्प उच्यते ।। 2.9.25.२० ।।

एकैकस्मिन्दिने तस्य चतुर्दश चतुर्दश ।।

भवन्ति मनवो ब्रह्मन्धर्मसेत्वभिरक्षकाः ।। २१ ।।

आद्यः स्वायम्भुवस्तत्र मनुः स्वारोचिषस्ततः ।।

उत्तमस्तामसश्चाऽथ रैवतश्चाक्षुषस्ततः ।। २२ ।।

श्राद्धदेवश्च सावर्णि भौत्यो रौच्यस्ततः परम् ।।

ब्रह्मसावर्णिनामा च रुद्रसावर्णिरेव च ।। २३ ।।

मेरुसावर्णिसंज्ञोऽथ दक्षसावर्णिरन्तिमः ।।

चतुर्दशैते मनवः प्रोक्ता ब्रह्मैकवासरे ।। २४ ।।

एकैकस्य मनोः कालो युगानां चैकसप्ततिः ।।

दिव्यैर्द्वादशसाहस्रैर्युगकालश्च वत्सरैः ।। २५ ।।

चतुर्दशस्यैव मनोरन्तरेन्तमुपेयुषि ।।

सायंसंध्या विश्वसृजो जायते मुनिसत्तम ।। २६ ।।

दिनावसाने वैराजः शक्तीराकर्षति स्थितेः ।।

वैराजात्मा तदा रुद्रस्त्रिलोकीं हर्तुमीहते ।। २७ ।।

आदौ भवत्यनावृष्टिरत्युग्रा शतवार्षिकी ।।

तदाल्पसारसत्त्वानि क्षीयन्ते सर्वशो भुवि ।।२८।।

सांवर्त्तकस्य चार्कस्य रश्मयोऽत्युल्बणा रसम् ।।

आपातालात्पिबन्त्याशु धरण्यां सर्वमेव हि ।। २९ ।।

सारसं चैव नादेयं सामुद्रं चाम्बु सर्वशः ।।

शोषयित्वाऽखिलाँल्लोकान्सोऽर्को नयति संक्षयम् ।। 2.9.25.३० ।।

ततो भवति निःस्नेहा नष्टस्थावरजङ्गमा ।।

कूर्मपृष्ठोपमा भूमिः शुष्का संकुचिता भृशम् ।। ३१ ।।

कालाग्निरुद्रः शेषस्य मुखादुत्पद्यते ततः ।।

अधोलोकान्सप्तभूमिं भुवः स्वश्च दहत्यसौ ।। ३२ ।।

निर्दग्धलोकदशको ज्वालावर्त्तभयंकरः ।।

उद्वासितमहर्लोकः कालाग्निः परिवर्त्तते ।। ३३ ।।

गताधिकारास्त्रिदशा भुवःस्वर्गनिवासिनः ।।

महर्लोकाज्जनं यान्ति वह्निज्वालाभृशार्दिताः ।। ३४ ।।

निवृत्तिधर्मा ऋषयः प्राप्ताः सिद्धदशां तु ये ।।

भूतलात्तेपि तर्ह्येव ऋषिलोकं प्रयान्ति च ।। ३५ ।।

उत्तिष्ठन्ति ततो घोरा व्योम्नि सांवर्त्तका घनाः ।।

महागजकुलप्रख्यास्तडित्वन्तोऽतिनादिनः ।। ३६ ।।

धूम्रवर्णाः पीतवर्णा केचित्कुमुदसन्निभाः ।।

लाक्षारसनिभाः केचिच्चाषपत्रनिभास्तथा ।। ३७ ।।

शमयित्वा महावह्निं शतं वर्षाण्यहर्न्निशम् ।।

वर्षमाणाः स्थूलधाराः स्तनन्तस्ते घना घनाः ।।

ब्रह्माण्डस्यान्तरालं च पूरयन्ति ध्रुवावधि ।। ३८।।

एकार्णवजले तस्मिन्वैराजपुरुषः स तु।।

अनिरुद्धात्मकः शेते नागेन्द्रशयने प्रभुः ।।३९।।

तदा देवाश्च ऋषयो रजःसत्त्वतमोवशाः ।।
ये ते सह विरिञ्चेन स्वकीयगुणकर्षिताः ।।
प्रविश्य तस्य जठरे शेरते दीर्घनिद्रया ।। 2.9.25.४० ।।
ये तु ब्रह्मात्मैक्यभावा वशीकृतगुणत्रयाः ।।
निवृत्तेनैव धर्मेण वासुदेवमुपासते ।। ४१ ।।
महरादिषु लोकेषु ते चतुर्षु कृतालयाः ।।
तं वैराजं संस्तुवन्तो निवसन्ति यथासुखम् ।। ४२ ।।
नारायणः स भगवान्स्वरूपं परमात्मनः ।।
चिन्तयन्वासुदेवाख्यं शेते वै योगनिद्रया ।। ४३ ।।
निशान्ते ब्रह्मणा साकं सर्वे ते तस्य जाठराः ।।
उत्पद्यन्ते यथापूर्वं यथाकर्माधिकारिणः ।। ४४ ।।
एवं नैमित्तिको नाम त्रिलोकीक्षयलक्षणः ।।
प्रलयः कथितस्तुभ्यं प्राकृतं कीर्त्तयाम्यथ।। ४५।।
य एष कल्पः कथितस्तादृशानां शतत्रयम् ।।
षष्ट्याधिकं च यः कालो वेधसः स तु वत्सरः ।। ४६ ।।
पञ्चाशता तैः परार्द्धो ब्रह्मायुस्तदद्वयं मतम् ।।
पराख्यकाले संपूर्णे महान्भवति संक्षयः ।। ४७ ।।
संहाररुद्ररूपेण संहृत्य स्वं विराड्वपुः ।।
स्वपरं निर्गुणं रूपं वैराजो यातुमिच्छति ।। ४८ ।।
तदा भवत्यनावृष्टिः पूर्ववच्छतवार्षिकी ।।
साङ्कर्षणश्च कालाग्निर्दहत्यण्डमशेषतः ।। ४९ ।।
सांवर्त्तकास्ततो मेघा वर्षन्त्यति भयानकाः ।।
शतं वर्षाणि धाराभिर्मुसलाकृतिभिर्मुने ।। 2.9.25.५० ।।
महदादेर्विकारस्य विशेषान्तस्य संक्षयः ।।
सर्वस्यापि भवत्येव वासुदेवेच्छया ततः ।। ५१ ।।
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम् ।।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ।। ५२ ।।
ग्रसतेम्बुगुणं तेजो रसं तल्लीयते ततः ।।

रूपं तेजोगुणं वायुर्ग्रसते लीयतेऽथ तत् ।। ५३ ।।

वायोरपि गुणं स्पर्शमाकाशो ग्रसते ततः ।।

प्रशाम्यति तदा वायुः खं तु तिष्ठत्यनावृतम् ।। ५४ ।।

भूतादिस्तद्गुणं शब्दं ग्रसते लीयते च खम् ।।

इन्द्रियाणि विलीयन्ते तैजसाहंकृतौ ततः ।। ५५ ।।

अहङ्कारे विलीयन्ते सात्त्विके देवता मनः ।।

यद्यद्यस्मात्समुत्पन्नं तत्तत्तस्मिन्हि लीयते ।। ५६ ।।

अहंकारो महत्तत्त्वे त्रिविधोपि प्रलीयते ।।

तत्प्रधाने च तत्पुंसि स मूलप्रकृतौ ततः ।। ५७ ।।

एष प्राकृतिको नाम प्रलयः परिगीयते ।।

तिरोभवन्ति जीवेशा यत्राऽव्यक्ते हरीच्छया ।। ५८ ।।

यदा च माया पुरुषौ कालोऽत्यक्षरतेजसि ।।

तदिच्छया तिरो यान्ति स त्वेको वर्तते प्रभुः ।।

तदा स प्रलयो ज्ञेयो नारदात्यन्तिकाभिधः ।। ५९ ।।

इत्थं प्रभोः कालशक्त्या लयैरेतैश्चतुर्विधैः ।।

असद्बद्ध्वाऽखिलं तत्राऽरुचिर्वैराग्यमुच्यते ।। 2.9.25.६० ।।

वासुदेवेतरान्देवान्कालमायावशीकृतान् ।।

विदित्वा तेषु च प्रीतिं हित्वा तस्यैव नित्यदा ।।

गाढस्नेहेन या सेवा सा भक्तिरिति गीयते।।६१।।

श्रवणं कीर्तनं तस्य स्मृतिश्चरणसेवनम् ।।

पूजा प्रणामो दास्यं च सख्यं चात्मनिवेदनम् ।।६२।।

इत्येतैर्न्नवभिर्भावैर्यः सेवेत तमादरात्।।

अनन्यया धिषणया स हि भक्त इतीर्यते ।।६३।।

त्रिभिः स्वधर्मप्रमुखैर्युक्ताभक्तिरियं मुने।।

धर्म एकान्तिक इति प्रोक्तो भागवतश्च सः।।६४।।

साक्षाद्भगवतः सङ्गात्तद्भक्तानां च वेदृशाम् ।।

धर्मो ह्येकान्तिकः पुम्भिः प्राप्यते नान्यथा क्वचित् ।। ६५ ।।

नैतादृशं परं किञ्चित्साधनं हि मुमुक्षताम् ।।

निःश्रेयसकरं पुंसां सर्वाभद्रविनाशनम् ।। ६६ ।।

एकान्तधर्मसिद्ध्यर्थं क्रियायोगपरो भवेत् ।।

पुमान्स्याद्येन नैष्कर्म्यं कर्मणां मुनिसत्तम ।। ६७ ।।

एतन्मया वेदपुराणगुह्यं तत्त्वं परं प्रोक्तमघौघनाशम् ।।

एकाग्रया शुद्धधियावधार्य सच्छ्रद्धया चेतसि ते महर्षे ।। ६८ ।।

न वासुदेवात्परमस्ति पावनं न वासुदेवात्परमस्ति मङ्गलम् ।।

न वासुदेवात्परमस्ति दैवतं न वासुदेवात्परमस्ति वाञ्छितम् ।। ६९ ।।

यन्नामधेयं सकृदप्यबुद्ध्या देहावसानेपि गृणाति योऽत्र ।।

स पुष्कसोप्याशु भवप्रवाहाद्विमुच्यते तं भज वासुदेवम् ।।2.9.25.७० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये वैराग्यभक्तिनिरूपणं नाम पञ्चविंशोऽध्यायः ।। २५ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २६

https://sa.wikisource.org/s/hax
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

एकान्तधर्मविवृतिं श्रुत्वा भगवतोदिताम् ।।

प्रहृष्टमानसो भूयस्तं पप्रच्छ स नारदः ।। १ ।।

नारद उवाच ।।

धर्म एकान्तिकः स्वामिंस्त्वया सम्यगुदीरितः ।।

तमाश्रुत्य महान्हर्षो जातोस्ति मम मानसे ।। २ ।।

सिद्धये तस्य भवता क्रियायोगो य उच्यते ।।

तमहं बोद्धुमिच्छामि भगवंस्तव संमतम् ।। ३ ।।

।। श्रीनारायण उवाच ।।

पूजाविधिः क्रियायोगो वासुदेवस्य कीर्त्यते ।।

स तु वेदेषु तन्त्रेषु बहुधैवास्ति वर्णितः ।। ४ ।।

भक्तानां रुचिवैचित्र्यात्तथा बहुविधत्वतः ।।

वासुदेवस्य मूर्तीनां बहुधा सोऽस्ति विस्तृतः ।। ५ ।।

साकल्येनोच्यमानस्य पारो नायाति तस्य वै ।।

अतः संक्षेपतस्तुभ्यं वच्मि भक्तिविवर्द्धनम् ।। ६ ।।

प्राप्ता ये वैष्णवीं दीक्षां वर्णाश्चत्वार आश्रमाः ।।

चातुर्वर्ण्यस्त्रियश्चैते प्रोक्ता अत्राधिकारिणः ।। ७ ।।

वेदतन्त्रपुराणोक्तैर्मन्त्रैर्मूलेन च द्विजाः ।।

पूजेयुर्दीक्षिता योषाः सच्छूद्रा मूलमन्त्रतः ।।

मूलमन्त्रस्तु विज्ञेयः श्रीकृष्णस्य षडक्षरः ।।८।।

स्वस्वधर्मं पालयद्भिः सर्वैरेतैर्यथाविधि ।।

पूजनीयो वासुदेवो भक्त्या निष्कपटान्तरैः ।। ९ ।।

आदौ तु वैष्णवीं दीक्षां गृह्णीयात्सद्गुरोः पुमान् ।।

सदैकान्तिकधर्मस्थाद्ब्रह्मजातेर्दयानिधेः ।। 2.9.26.१० ।।

संपन्नो ज्ञानभक्तिभ्यां स्वधर्मरहितस्तु यः ।।

स गुरुन्नैव कर्तव्यः स्त्रीहृतात्मा च कर्हिचित् ।। ११ ।।

प्राप्ता स्त्रैणाद्गुरोर्दीक्षा ज्ञानं भक्तिं च कर्हिचित् ।।

फलेन्नैव यथाऽपत्यं युवतिः षण्ढसंगिनी ।। १२ ।।

प्राप्यातः सद्गुरोर्दीक्षां तुलसीमालिकां गले ।।

ललाटादौ चोर्द्ध्वपुण्ड्रं गोपीचन्दनतो धरेत् ।।१३।।

विष्णुपूजारुचिर्भक्तो गुरोरेवागमोदितम् ।।

पूजाविधिं सुविज्ञाय ततः पूजनमारभेत् ।।१४।।

रात्र्यन्तयाम उत्थाय भक्तो ब्राह्मेक्षणेऽथ वा ।।

मुहूर्तार्धं हृदि ध्यायेत्केशवं क्लेशनाशनम् ।।१५।।

कीर्तयित्वाऽभिधास्तस्य तदीयानां च नाडिकाम्।।

ततः शौचविधिं कृत्वा दन्तधावनमाचरेत् ।।१६।।

अंगशुद्धिस्नानमादौ कृत्वा स्नायात्समन्त्रकम्।।

गृहीत्वा शुचिमृत्स्नादीन्कुर्यात्स्नानांगतर्पणम्।।१७।।

परिधायांशुके धौते उपविश्यासने शुचौ ।।

कृत्वोर्द्ध्वपुण्ड्रं कुर्वीत संध्यां होमं जपादि च ।। १८ ।।

वस्त्रचन्दनपुष्पादीनुपहारांस्ततोऽखिलान् ।।

आहरेन्मांसमदिराद्यशुचिस्पर्श वर्जितान्।।१९।।

देवेभ्यो वा पितृभ्यश्चाप्यन्येभ्यो न निवेदितान् ।।

अनाघ्रातांश्च मनुजैः केशकीटादिवर्जितान्।।2.9.26.२०।।

संस्थाप्य तान्दक्षपार्श्वे पूजोपकरणानि च ।।

उद्वर्त्य दीपमाज्येन कुर्यात्तैलेन वा ततः ।।२१ ।।

कौशे वौर्णे च वस्त्रादौ विकाष्ठे शुद्ध आसने ।।

उपाविशेद्वासुदेवप्रतिमासन्निधौ ततः ।। २२ ।।

शैली धातुमयी दार्वी लेख्या मणिमयी च वा ।।

प्रतिमा स्यात्सिता रक्ता पीता कृष्णाऽथ वा मुने ।। २३ ।।

कृष्णस्य सा तु कर्तव्या द्विभुजा वा चतुर्भुजा ।।

मुरलीं धारयेत्तत्र द्विभुजायाः करद्वये ।। २४ ।।

अथ वा दक्षहस्तेऽस्याश्चक्रं शंखं तथेतरे ।।

पद्मं वा धारयेद्दक्षे पाणावभयमुत्तरे ।। २५ ।।

द्वितीयायास्तु हस्तेषु दक्षिणाधःकरक्रमात् ।।

गदाब्जदरचक्राणि धारयेन्मुनिसत्तम ।। २६ ।।

द्विविधाया अपि हरेर्मूर्तेर्वामे श्रियं न्यसेत् ।।

मुरलीधरवामे तु राधां रासेश्वरीं न्यसेत् ।। २७ ।।

अप्येषा द्विविधा मूर्त्तिरखण्डा शुभलक्षणा ।।

सर्वावयवसंपन्ना भवेदर्च्चकसिद्धिदा ।। २८ ।।

लक्ष्मीस्तु द्विभुजा कार्या वासुदेवस्य सन्निधौ ।।

दधती पंकजं हस्ते वस्त्रालंकारशोभना ।। २९ ।।

लक्ष्मीवद्राधिकापि स्याद्द्विभुजा चारुहासिनी ।।

पङ्कजं पुष्पमालां वा दधती पाणिपङ्कजे ।। 2.9.26.३० ।।

अचला च चला चेति द्विविधा प्रतिमा हरेः ।।

तत्राद्यायां न कर्तव्यमावाहनविसर्जनम्।।३१।।

तदङ्गदेवतानां च कार्यं नावाहनाद्यपि ।।

न च दिङ्नियमोऽर्चायां तस्याः स्थेयं तु सम्मुखे ।।३२।।

शालग्रामेप्येवमेव कार्यं नावाहनादि च ।।

अन्यत्र चलमूलौ तु कर्तव्यं तत्तदर्चकैः ।। ३३ ।।

तत्रापि दार्व्यां लेख्यायां जलस्पर्शोनुलेपनम् ।।

नैव कार्यं पूजकेन कर्तव्यं परिमार्जनम् ।। ३४ ।।

उदङ्मुखः प्राङ्मुखो वा चलायां सम्मुखोऽथ वा ।।

यथाशक्ति यथालब्धैरुपहारैर्यजेद्धरिम् ।। ।। ३५ ।।

श्रद्धानिश्छद्मभक्तिभ्यामर्पितेनाम्बुनापि सः ।।

प्रीतस्तुष्यति विश्वात्मा किमुताऽखिलपूजया ।। ३६ ।।

पुंसा श्रद्धादिहीनेन रत्नहेमाद्यलंक्रियाः ।।

चतुर्विधं चाप्यन्नाद्यं दत्तं गृह्णाति नो मुदा ।। ३७ ।।

तस्माद्भक्तिमता कार्यं पुंसा स्वश्रेयसे मुने ।।

श्रीकृष्णस्याच्र्चनं नित्यं सर्वाभीष्टाशुदायिनः ।। ३८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये क्रियायोगाधिकारादिनिरूपणं नाम षड्विंशोऽध्यायः ।। २६ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २७

https://sa.wikisource.org/s/hay
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। श्रीनारायण उवाच ।।

खननोक्षणलेपाद्यैः शोधिते धरणीतले ।।

चतुष्पादं न्यसेत्पीठं नानारङ्गसुशोभिते ।। १ ।।

अर्चकः प्राङ्मुखः पीठपादान्कोणेषु कारयेत् ।।

चतुर्षु तेषु धर्मादीन्स्थापयेत्सिंहरूपिणः ।। २।।

अग्नौ धर्मं न्यसेच्छ्वेतं ज्ञानं शोणं च नैर्ऋते ।।

वायौ तु पीतं वैराग्यं श्याममैश्वर्यमैशके ।।३।।

मनोधीचित्ताहङ्कारान्क्रमात्पूर्वादिदिक्ष्वऽथ ।।

विन्यसेत्पीठगात्रेषु हरिद्रक्तसितासितान् ।। ४ ।।

स्थाप्या रक्तसितश्यामा रजःसत्त्वतमोगुणाः ।।

पीठस्य पट्टिकायां तु त्रयोपि मुनिसत्तम।। ।। ५ ।।

अन्तःकरणरूपेषु गात्रेष्वथ चतुर्ष्वपि ।।

विमलाद्या न्यसेच्छक्तीर्द्वेद्वे एकैकगात्रके ।। ६ ।।

विमलोत्कर्षिणीति द्वे गौराङ्ग्यौ पूर्वतो न्यसेत् ।।

वादयन्त्यौ शुभां वीणां हरिद्वस्त्रे स्वलंकृते ।। ७ ।।

ज्ञानाक्रिये न्यसेद्याम्ये पीतवस्त्रेऽरुणद्युती ।।

एका तालं वादयन्ती मृदङ्गमपरा तथा ।। ८ ।।

योगाप्रद्ध्यौ न्यसेत्पश्चाच्छ्यामे अरुणवाससौ ।।

सहेव मुरली चोभे वादयन्त्यौ पृथक्पृथक् ।। ९ ।।

सत्येशाने हेमवर्णे उत्तरस्यां ततो न्यसेत् ।।

श्यामांशुके वादयन्त्यावुभे ते परिवादिनीम् ।। 2.9.27.१० ।।

अनुग्रहाख्या पट्टिकायां स्थाप्यैका च कृताञ्जलिः ।।

सर्वा एतास्तु कर्तव्या द्विभुजाः सुविभूषणाः ।। ११ ।।

पीठोपरि सितद्वीपं कुर्वीत श्वेतवाससा ।।

तन्मध्येऽष्टदलं पद्मं कुर्वीतोज्वलकर्णिकम् ।। १२ ।।

द्वादशांशं परित्यज्य पद्मक्षेत्रस्य बाह्यतः ।।

वृत्तैस्त्रिभिस्तस्य मध्यं विभजेत्समभागतः ।। १३ ।।

तत्राद्यं कर्णिकास्थानं केसराणां तु मध्यमम् ।।

पत्राणां तु तृतीयं स्याद्दलाग्राणि तु बाह्यतः ।। १४ ।।

परितस्तस्य च पुरं चतुर्द्वारं प्रकल्पयेत् ।।

रङ्गद्रव्यैर्बहुविधैर्हरिद्राकुंकुमादिभिः ।। १५ ।।

कुर्वीत तण्डुलैर्वापि तत्र पद्मादि शोभनम् ।।

पद्मस्य कर्णिकां मध्ये हेमवर्णा सुशोभयेत् ।। १६ ।।

शोणवर्णानि पत्राणि परितस्तस्य चार्चकः ।।

कुर्यादष्टाप्यष्टदिक्षु स्वर्णवर्णानि वा मुने ।।१७।।

पूर्वं तु गोपुरं शोणं श्यामं कुर्याच्च दक्षिणम् ।।

पीतवर्णं पश्चिमं च स्फटिकाभं तथोत्तरम् ।।१८।।

अन्तराले च पुष्पाणि चित्राणि पुरपद्मयोः।।

कृत्वा मध्येऽथ श्रीकृष्णं तद्वामे राधिकां न्यसेत्।।१९।।

राधाकृष्णस्यास्य ततः पृष्ठे संकर्षणं न्यसेत्।।

चतुर्बाहुं धृतच्छत्रं गौराङ्गं नीलवाससम् ।। 2.9.27.२० ।।

दक्षे न्यसेद्भगवतः प्रद्युम्नं पीतवाससम् ।।

चतुर्भुजं घनश्यामं धृत्वा चामरमास्थितम् ।। २१ ।।

वामेऽनिरुद्धं च हरेर्न्यसेदरुणवाससम् ।।

इन्द्रनीलमणिश्यामं संस्थितं धृतचामरम् ।। २२ ।।

त्रयोप्येते तु कर्तव्या नानालंकारशोभिताः ।।

अनर्घ्यरत्नमुकुटास्तारुण्येन मनोहराः ।। २३ ।।

ततोऽवतारांस्तु हरेः केसरेष्वष्टसु क्रमात् ।।

एकैकस्मिन्न्यसेद् द्वौद्वावष्टस्वेवं हि षोडश ।। २४ ।।

स्थापयेद्वामनं बुद्धं पूर्वस्मिन्केसरेऽग्रतः ।।

घनश्यामावुभौ ह्येतौ करुणौ ब्रह्मचारिणौ ।। २५ ।।

सितांशुकौ करे दक्षे बिभ्रतौ फुल्लपङ्कजम् ।।

अभयं वामहस्ते च शान्तौ यज्ञोपवीतिनौ ।। २६ ।।

कल्किनं पर्शुरामं च वह्निकोणेऽथ विन्यसेत् ।।

खड्गपाणिस्तत्र कल्की पर्शुपाणिस्तथाऽपरः ।। २७ ।।

उभौ गौरौ च ताम्राक्षौ जटिलौ सितवाससौ ।।

यज्ञोपवीतिनौ कार्यौ त्यक्तक्रोधमहारयौ ।। २८ ।।

हयग्रीववराहौ च स्थापयेद्याम्यकेसरे ।।

हयग्रीवो हयास्यः स्यान्नरांगश्च चतुर्भुजः ।। २९ ।।

शङ्खादिभृत्स्वर्णवर्णो धृतदिव्यसिताम्बरः ।।

वराहस्तु वराहास्यो नरांगः स्याच्चतुर्भुजः ।। 2.9.27.३० ।।

शङ्खचक्रगदाब्जानि दधत्पीताम्बरं तथा ।।

मधुपिंगलवर्णश्च कर्त्तव्यो द्विभुजोऽथ वा ।। ३१ ।।

मत्स्यकूर्म्मौ नैर्ऋते च स्थापयेत्केसरे ततः ।।

कटेरधस्तदाकारावूर्द्ध्वं तौ तु नराकृती ।। ३२ ।।

वामे शंखं गदां दक्षे पाणौ च दधतावुभौ ।।

श्यामसुन्दरदेहौ च कर्त्तव्यौ धृतभूषणौ ।। ३३ ।।

धन्वन्तरिं नृसिंहं च पश्चिमे केसरे न्यसेत् ।।

धन्वन्तरिः शुक्लवासा गौरांगोऽमृतकुम्भधृत् ।। ३४ ।।

सिंहवक्त्रो नृसिंहस्तु नृदेहः केसरान्वितः ।।

नीलोत्पलाभो द्विभुजो गदाचक्रधरो भवेत ।। ३५ ।।

वायौ न्यसेदुभौ हंसदत्तात्रेयौ जटाधरौ ।।

योगिवेषौ सितौ दण्डकमण्डलुकरौ तथा ।। ३६ ।।

उत्तरे केसरे व्यासं न्यसेद्गणपतिं ततः ।।

तत्र व्यासो विशालाक्षः कृष्णवर्णः सिताम्बरः ।। ३७ ।।

द्विभुजो धृतवेदश्च सुपिशंगजटाधरः ।।

सितयज्ञोपवीतश्च कर्त्तव्यः सपवित्रकः ।। ३८ ।।

गजास्य एकदन्तश्च रक्तो गणपतिर्भवेत् ।।

रक्ताम्बरधरश्चैव नागयज्ञोपवीतवान् ।। ३९ ।।

तुन्दिलश्च चतुर्बाहुः पाशाङ्कुशवरान्दधत् ।।

करेणैकेन च दधद्रम्यां पुस्तकलेखिनीम् ।। 2.9.27.४० ।।

न्यसेत्केसर ईशाने कपिलं पूजकस्ततः ।।

सनत्कुमारं च मुनिं नैष्ठिकब्रह्मचारिणम् ।। ४१ ।।

शुक्लांगः कपिलः कार्यो धृतचारुसिताम्बरः ।।

दधत्कराभ्यामम्भोजमभयं शान्तविग्रहम् ।। ४२ ।।

पञ्चवार्षिकबालाभो दिग्वस्त्रोऽल्पजटाधरः ।।

सनत्कुमारश्च मुनिः कर्तव्यः पूजकेन तु ।। ४३ ।।

संस्थाप्य केसरेष्वित्थं देवताः पङ्कजस्य तु ।।

न्यसेच्च दलमध्येषु पार्षदानर्च्चकोऽष्टसु ।। ४४ ।।

विष्वक्सेनं च गरुडं तत्रादौ पूर्वतो न्यसेत् ।।

ततो दक्षक्रमेणैव प्रबलं च बलं न्यसेत् ।। ४५ ।।

कुमुदं कुमुदाक्षं च सुनन्दं नन्दमेव च ।।

श्रुतदेवं जयन्तं च विन्यसेद्विजयं जयम् ।। ४६ ।।

ततः प्रचण्डं चण्डं च पुष्पदन्तं च सात्वतम् ।।

द्वौद्वावेवं क्रमेणैव स्थानेष्वष्टसु विन्यसेत् ।। ४७ ।।

चतुर्भुजाः सर्व एते शङ्खार्यब्जगदाधराः ।।

कार्याः किरिटिनः श्यामाः पीतवस्त्राः सुभूषणाः ।। ४८ ।।

दलमध्यान्तरालेषु सिद्धीरष्टसु विन्यसेत् ।।

नाना मंगलवाद्यानां वादने निपुणाः क्रमात् ।। ४९ ।।

अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।।

ईशिता वशिता चैवाष्टमी कामावसायिता ।। 2.9.27.५० ।।

एताः सुवर्णवर्णाभाः सर्वाभरणभूषिताः ।।

वेणुवीणादिहस्ताश्च कर्तव्याश्चित्रवाससः ।। ५१ ।।

दलाग्रेष्वष्टसु ततो वेदाञ्छास्त्राणि च न्यसेत् ।।

तत्र वेदान्न्यसेद्दिक्षु शास्त्राणि तु विदिक्षु सः ।। ५२ ।।

पूर्वे न्यसेत्तु ऋग्वेदमक्षमालाधरं सितम् ।।

खर्वं लम्बोदरं सौम्यं पद्मनेत्रं सिताम्बरम् ।। ५३ ।।

याम्ये न्यसेद्यजुर्वेदं मध्यमांगं कृशोदरम् ।।

पिंगाक्षं स्थूलकण्ठं च पीतं चारुणवाससम् ।। ५४ ।।
अक्षस्रजं करे वामे दक्षे वज्रं च बिभ्रतम् ।।
पश्चिमे सामवेदं च प्रांशुमादित्यवर्चसम् ।। ५५।।
दक्षेऽक्षमालां वामे च धृतवन्तं करे दरम् ।।
स्वर्णवस्त्रं विशालाक्षं विन्यसेद्गायनोद्यतम् ।। ५६ ।।
अथर्वाणं न्यसेत्सौम्ये सितांगं नीलवाससम् ।।
वामेऽक्षसूत्रं दक्षे च खट्वांगं बिभ्रतं करे ।।
वह्न्योजसं च ताम्राक्षं वयसा स्थविरं तथा ।। ५७ ।।
अग्निकोणे धर्मशास्त्रं न्यसेच्च कमलासनम् ।।
श्वेतं च बिभ्रतं दोर्भ्यां मुक्तामालां तथातुलाम्।। ५८ ।।
दीर्घकेशनखं सांख्यं नैर्ॠते तुन्दिलं न्यसेत् ।३।
जपमालां च दण्डं च कराभ्यां बिभ्रतं सितम् ।। ५९ ।।
न्यसेद्वायौ ततो योगं स्वर्णवर्णं कृशोदरम् ।।
ऊरुन्यस्तकरद्वन्द्वं स्वनासाग्रकृतेक्षणम् ।। 2.9.27.६०।।
पञ्चरात्रं तथेशाने धवलं वनमालिनम्।।
न्यसेत्कराभ्यां दधतमक्षमालां च लांगलम् ।। ६१ ।।
एषां चतुर्णां वासांसि श्वेतसूक्ष्मघनानि च।।
कर्त्तव्यानि तथाक्षीणि पद्मपत्रायतानि च ।। ६२ ।।
अग्राणामन्तरालेषु महर्षींश्च सयोषितः ।।
विन्यसेत्पठतो वेदान्पूर्वाग्नेयाद्यनुक्रमात् ।। ६३ ।।
मरीचिं कलया युक्तमत्रिं चाप्यनसूयया ।।
श्रद्धयांगिरसं साकं पुलस्त्यं च हविर्भुवा ।। ६४ ।।
गत्या युक्तं च पुलहं क्रियया च सह क्रतुम् ।।
ख्यात्या भृगुमरुन्धत्या वशिष्ठं सह विन्यसेत् ।। ६५ ।।
द्विभुजाः सर्व एवैते जटाश्मश्रुधराः कृशाः ।।
कार्यास्तपस्विनो दण्डान्दधतश्च कमण्डलून्।। ६६ ।।
पद्माद्बहिर्न्यसेच्चाऽष्टौ दिशासु विदिशासु च ।।
दिक्पालानिन्द्रप्रमुखान्सहयानान्यथादिशम् ।। ६७ ।।

प्राच्यामैरावतारूढं न्यसेदिन्द्रं चतुर्भुजम्।।

वज्रांकुशाम्बुजवरान्दधतं स्वर्णसन्निभम् ।। ६८ ।।

कौसुम्भरम्यवसनं नानालंकारशोभितम् ।।

शोणापांगं विशालाक्षं सर्वलक्षणलक्षितम् ।। ६९ ।।

अग्निकोणे न्यसेदग्निं ताम्रवर्णं चतुर्भुजम् ।।

दधानं पाणिभिश्चैव शूलं शक्तिं स्रुचं स्रुवम् ।। 2.9.27.७० ।।

चतुःशुके हैमरथे निषण्णं वायुसारथिम् ।।

त्रिनेत्रं धूम्रवसनं पिङ्गश्मश्रुजटेक्षणम् ।। ७१ ।।

यमं न्यसेद्दक्षिणतः श्यामं चामीकराम्बरम्।।

चतुर्भुजं दण्डखड्गपरशुं पाशधारिणम्।।

उन्मत्तमहिषारूढं नानाभूषणभूषितम्।। ७२।।

ऊर्द्ध्वकेशं विरूपाक्षं नैर्ऋतं नैर्ऋते न्यसेत्।।

खड्गं पाशं च दधतं द्विभुजं नरवाहनम्।। ७३।।

हरिश्मश्रुं धूम्रवर्णं परिवीतासिताम्बरम् ।।

हाटकानेकभूषाढ्यमवैष्णवभयंकरम् ।। ७४ ।।

ततः प्रतीच्यां वरुणमिन्द्रनीलमणिप्रभम् ।।

श्वेताम्बरं चतुर्बाहुं मुक्ताहार विभूषितम् ।। ७५ ।।

सप्तहंसरथारूढं दोर्भ्यां पाशं च बिभ्रतम् ।।

अन्याभ्यां रत्नपात्रं च शंखं च दधतं न्यसेत् ।। ७६ ।।

वायौ वायुं हरिद्वर्णं द्विभुजं कृष्णवाससम् ।।

पृषत्स्थं मुक्तकेशं च व्यात्तास्यं ध्वजिनं न्यसेत् ।। ७७ ।।

सौम्ये न्यसेत्कुबेरं च स्वर्णवर्णं चतुर्भुजम् ।।

गदाशक्तित्रिशूलानि रत्नपात्रं च बिभ्रतम् ।। ७८ ।।

नीलाम्बरं श्मश्रुलं च शिबिकायां समास्थितम् ।।

पिशंगवामनयनं नैकभूषं च वर्मिणम् ।।७९।।

ईशानेऽथ मूहारुद्रमर्द्धनारीश्वरं न्यसेत् ।।

वामार्द्धे पार्वती कार्या दक्षार्द्धे तत्र शंकरः ।। 2.9.27.८० ।।

ईश्वरार्द्धे जटाजूटं कर्तव्यं चन्द्रभूषितम् ।।

उमार्द्धे तिलकं कार्यं सीमन्तमलिके तथा ।। ८१ ।।

भस्मनोद्धूलितं चार्द्धमर्द्धं कुंकुमभूषितम् ।।

नागोपवीतं चाप्यर्द्धमर्द्धं हारविभूषितम् ।। ८२ ।।

वामार्द्धे च स्तनः पीनः कर्तव्यः कंचुकीवृतः ।।

कट्यां च रशना हैमी पादे काञ्चननूपुरम् ।। ८३ ।।

कौसुम्भं वसनं चैव करौ कंकणभूषितौ ।।

त्रिशूलमक्षसूत्रं च दधतौ रत्नमुद्रिकौ ।। ८४ ।।

दक्षार्द्धे रशना सार्पी कार्या वस्त्रं गजाजिनम् ।।

करौ च नागवलयौ दर्पणोत्पलधारिणौ ।। ८५ ।।

एवंविधं महादेवं न्यसेद्वृषभवाहनम् ।।

इत्थमष्टदिगीशानां कुर्यात्स्थापनमर्चकः ।। ८६ ।।

पुराद्बहिस्ततश्चाष्टौ स्थापयेदर्चको ग्रहान्।।

स्वस्वदिक्षु स्थितान्स्वस्वान्यारूढान्स्यन्दनानि च ।। ८७ ।।

प्राच्यां दिशि न्यसेत्तत्र भास्करं पीतवाससम् ।।

सिन्दूरवर्णं द्विभुजं पद्महस्तं रथे स्थितम् ।। ८८ ।।

एकं चक्रं द्वादशारं रथस्यास्यातितेजसः ।।

सप्ताश्वाश्च हरिद्वर्णा वामे सन्ति नियोजिताः ।। ८९ ।।

अग्निकोणे ततः स्थाप्यो भृगुः श्वेतः सिताम्बरः ।।

दण्डं कमण्डलुं बिभ्रद्द्विबाहुः सौम्यदर्शनः ।। 2.9.27.९० ।।

चित्रवर्णाश्वदशके स्थितो हेममये रथे ।।

दक्षिणे च न्यसेद्भौमं रक्तं रक्ताम्बरं तथा ।। ९१ ।।

चतुर्भुजं गदाशक्तित्रिशूलवरधारिणम् ।।

तस्य हैमं रथं कुर्यादरुणाष्टहयान्वितम् ।। ९२ ।।

राहुश्च नैर्ऋते कोणे नीलवासाश्चतुर्भुजः ।।

करालास्यस्तमोरूपश्चर्मासिशक्तिशूलधृत् ।। ९३ ।।

भृङ्गवर्णाष्टतुरगे स्थितः कार्यस्त्वयोरथे ।।

सौरिश्च पश्चिमे स्थाप्य इन्द्रनीलसमद्युतिः ।। ९४ ।।

धन्वी त्रिशूली द्विभुजो मन्दाक्षश्चासिताम्बरः ।।

शबलाष्टाश्वसंयुक्ते स्थितः कार्ष्णायसे रथे ।। ९५ ।।

वायुकोणे ततश्चन्द्रं स्थापयेच्च सिताम्बरम् ।।

श्वेतवर्णं गदाहस्तं द्विभुजं च रथे स्थितम् ।। ९६ ।।

शतारचक्रत्रितये स्यन्दने तस्य चाम्मये ।।

कुन्दाभाः सन्त्युभयतो योजितास्तुरगा दश ।।९७।।

उत्तरे द्विभुजः सौम्यो वराभयकरोरुणः ।।

हरिद्वासाष्टपिंगाश्वे कार्यो हैमरथे स्थितः ।।९८।।

ईशाने च गुरुः स्थाप्यो हेमवर्णः सिताम्बरः ।।

द्विभुजः पद्मनयनो धृतदण्डकमण्डलुः ।।

पाण्डुराष्टहये हैमे निषण्णः स्यन्दनोत्तमे ।। ९९ ।।

अंगदेवान्भगवतः स्थापयेदित्थमर्चकः ।।

कर्णिकाद्रिपुरान्तान्तस्थानेषु क्रमशोऽखिलान् ।। 2.9.27.१०० ।।

वासुदेवांगदेवानां न्यसेन्मूर्त्तीस्तु वैभवी ।।

पूगफलानीतरस्तु न्यसेत्पुष्पाक्षतादि वा ।। १०१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये क्रियायोगे पूजामण्डलरचनाविधिनिरूपणं नाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २८



।। श्रीनारायण उवाच ।।

आचम्य प्राणानायम्य ततोसौ स्वस्थमानसः ।।

नमस्कृत्येष्टदेवादीन्देशकालौ च कीर्तयेत् ।। १ ।।

एकान्तधर्मसिद्ध्यर्थं वासुदेवस्य पूजनम् ।।

करिष्य इति संकल्प्य कुर्यान्न्यासविधिं ततः ।। २ ।।

न्यासे मन्त्रा द्वादशार्णो गायत्री वैष्णवी तथा।।

नारायणाष्टाक्षरश्च ज्ञेया विष्णुषडक्षरः ।। ३ ।।

एते द्विजानां विहितास्तदन्येषां त्विह त्रयः ।।

वासुदेवाष्टाक्षरश्च हरिपञ्चाक्षरस्तथा ।।

षडर्णः केशवस्येति न्यासे होमे च संमताः ।। ४ ।।

श्रीविष्णुप्रतिमांगेषु स्वांगेष्विव ततोऽखिलान् ।।

कुर्यान्न्यासांश्च तैर्मन्त्रैस्ततोर्चां वाससाऽऽमृजेत्।।५।।

कलशं वामभागे स्वे संस्थाप्यावाह्य तत्र च।।

तीर्थानि गन्धपुष्पाद्यैरुपचारैस्तमर्चयेत्।।६।।

पूजाद्रव्याणि चात्मानं प्रोक्षयित्वा तदम्बुना।।

शंखं घण्टां च संपूज्य भूतशुद्धिं समाचरेत्।।७।।

आभ्यन्तराग्निवायुभ्यां दग्ध्वा पापात्मकं वपुः ।।

शुद्धस्य स्वात्मनस्त्वैक्यं भावयेद्ब्रह्मणा स्थिरः।।८।।

ततोऽक्षरब्रह्मरूपो राधाकृष्णं हृदि प्रभुम् ।।

ध्यायेदव्यग्रमनसा प्राणायामं समाचरन्।।९।।

अधोमुखं नाभिपद्मं कदलीपुष्पवत्स्थितम्।।

विभाव्यापानपवनं प्राणेनैक्यमुपानयेत्।।2.9.28.१०।।

पद्मनाले तमानीय सह तेन तदम्बुजम्।।

आकर्षेदूर्ध्वमथ तन्नदत्तीव्रमुपैति हृत् ।।

प्रफुल्लति च तत्रैतद्धृदयाकाश उल्लसत् ।। ११ ।।

तेजोराशिमये तत्र ततोप्यधिकतेजसा ।।

दर्शनीयतमं शान्तं ध्यायेच्छ्रीराधिकापतिम् ।। १२ ।।

उपविष्टं स्थितं वा तं दिव्यचिन्मयविग्रहम् ।।

ध्यायेत्किशोरवयसं कोटिकन्दर्पसुन्दरम् ।। १३ ।।

रूपानुरूपसंपूर्णदिव्यावयवलक्षितम् ।।

शरच्चन्द्रावदातांगं दीर्घचारुभुजद्वयम् ।। १४ ।।

आरक्तकोमलतलरम्यांगुलिपदाम्बुजम् ।।

तुंगारुणस्निग्धनखद्युतिलज्जायितोडुपम् ।। १५ ।।

शिञ्जत्किंकिणिमञ्जीरहंसकांघ्रियुगश्रियम् ।।

सुवृत्तजंघायुगलं समजानूरुशोभनम् ।। १६ ।।

सद्रत्नरशनाबद्धपीताम्बरकटिश्रियम् ।।

उत्तुंगकुक्षिनाभ्यन्तर्निम्ननाभिवलित्रयम् ।। १७।।

विततोत्तुंगहृदयं श्रीवत्सावर्त्तशोभितम् ।।

ललन्तीगुच्छगुच्छार्द्धदेवच्छन्दादिभूषितम् ।। १८ ।।

नानासुगन्धिपुष्पस्रक्स्वर्णयज्ञोपवीतिनम् ।।

उन्निद्रशोणपद्माभकरकंकणभूषणम् ।। १९ ।।

सूक्ष्मपर्वांगुलिद्योतन्नैकसद्रत्नमुद्रिकम् ।।

निनादयन्तं मधुरं वेणुं सर्वमनोहरम् ।। 2.9.28.२० ।।

विपुलांसं गूढजत्रुं महाबाह्वंगदद्युतिम् ।।

भ्रमत्सुगन्धलुब्धालिझंकारितवनस्रजम् ।। २१ ।।

कम्बूपमगलभ्राजत्सद्ग्रैवेयककौस्तुभम् ।।

शोभमानहनुं बिम्बीफलशोणाधरद्युतिम् ।। २२ ।।

सितस्मितकलाराजत्पूर्णचन्द्रनिभाननम् ।।

तिलपुष्पसमाकारदर्शनीयसुनासिकम् ।। २३ ।।

समानकर्णविभ्राजन्मकराकृतिकुण्डलम् ।।

कर्णोपरिलसच्चित्रपुष्पगुच्छावतंसकम् ।। २४ ।।

समसूक्ष्मरदज्योत्स्नोल्लसद्गण्डस्थलश्रियम् ।।

पद्मपत्रायतारक्तप्रान्तरम्यविलोचनम् ।। २५ ।।

पृथुतुंगललाटं च कामचापायितभ्रुवम् ।।

वक्रसूक्ष्मासितस्निग्धमनोहरशिरोरुहम् ।। २६ ।।

नानासद्रत्नखचितकिरीटधृतशेखरम् ।।

प्रेम्णा निजं वीक्षमाणं प्रसन्नं स्निग्धया दृशा ।। २७ ।।

ध्यात्वेत्थं कृष्णमथ तद्वामे राधां विचिन्तयेत् ।।

द्विभुजां स्वर्णगौरांगीं कौसुम्भामलवाससम् ।। २८ ।।

समकर्णोल्लसद्रत्नभूषणांशुकनासिकाम् ।।

किशोरीं मृगशावाक्षीं पीनोन्नतघनस्तनीम् ।। २९ ।।

कृशमध्यां पृथुश्रोणिं रत्नकाञ्चीविभूषिताम् ।।

अनेकदिव्याभरणां विकचाब्जाननस्मिताम् ।। 2.9.28.३० ।।

रत्नांगुलीयकेयूरकङ्कणादिलसत्कराम् ।।

शिञ्जद्धंसकमञ्जीरशोभमानांघ्रिपङ्कजाम् ।। ३१ ।।

विशालभालविलसत्सत्काश्मीरललाटिकाम् ।।

बिम्बोष्ठीं सुकपोलां च वेणीग्रथितमालतीम् ।। ३२ ।।

प्रेक्षमाणां प्रभुं प्रेम्णा दधानामम्बुजं करे ।।

ध्यात्वैवं राधिकां तत्र प्रभुमर्चेत्तया सह ।। ३३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये क्रियायोगे श्रीराधाकृष्णस्वरूपध्याननिरूपणं नामाऽष्टाविंशोऽध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः २९



।।श्रीनारायण उवाच ।।

उपचारैर्बहुविधैर्मानसैस्तं प्रपूज्य सः ।।

आवाह्य स्थापयेद्भक्तो मूर्तौ स्थापनमुद्रया ।। १ ।।

ततस्तदंगदेवांश्च तत्तन्मन्त्रैः पृथक्पृथक् ।।

आवाह्य नाममन्त्रैर्वा सुप्रतिष्ठापयेच्च सः ।। २ ।।

घण्टादि वादयेद्वाद्यं कुर्याद्वा तालिकाध्वनिम् ।।

सुप्तोत्थितमिवाऽथैनं कारयेद्दन्तधावनम्।। ३ ।।

श्यामाकविष्णुकान्ताभ्यां दूर्वाब्जाभ्यां सहोदकम् ।।

पाद्यमेतत्प्रभोर्दद्यात्ततोर्घ्याचमनीयके ।। ४ ।।

चन्दनाक्षतपुष्पाणि दर्भाग्रतिलसर्षपान् ।।

यवान्दूर्वा चार्घ्यपात्रे निक्षिपेदम्बुना भृते ।। ५ ।।

जातीफललवंगैलाकङ्कोलोशीरवासितम् ।।

दद्यादाचमनीयाम्बु ततः संस्नपयेद्धरिम् ।। ६ ।।

सुगन्धिपुष्पतैलेन कुर्यादभ्यंगमादितः ।।

सुरभिद्रव्यकल्केन कुर्याच्चोद्वर्तनं ततः ।। ७ ।।

क्षीरेण दध्ना चाज्येन मधुना सितया तथा ।।

स्नपयेद्धरिमव्यग्रस्तत्तन्मन्त्रैः पृथक्पृथक् ।। ८ ।।

सुगन्धिना च शुद्धेन स्नानमुष्णेन चाम्बुना ।।

तं कारयित्वा गन्धाद्यैः स्नानपीठेऽर्चयेल्लघु ।। ९ ।।

निर्माल्यपुष्पादि ततो विसृज्योत्तरतो द्विजः ।।

राजनाद्यैः सामभिर्वा महापुरुषविद्यया ।।

श्रीसूक्तविष्णुसूक्तकाभ्यामभिषेकं समाचरेत् ।। 2.9.29.१० ।।

नाम्नां सहस्रेण हरेरष्टोत्तरशतेन वा ।।

अभिषेकं तु कुर्वीरन्स्त्रियः शूद्राश्च दीक्षिताः ।। ११ ।।

ततः प्रमार्ज्य वस्त्रेण तमनर्घ्यांशुकानि च ।।

परिधापयेदतिप्रेम्णा राधां चान्यांश्च शक्तितः ।। १२ ।।

उपवीतं भगवते दद्यात्सूक्ष्मं सितं शुभम्।।

रत्नहेमाद्यलंकारान्सांगायास्मै च धारयेत् ।। १३ ।।

यथाऋतु यथास्थानं चन्दनेन यथोचितम्।।

तिलकानुलेपनं कुर्यात्सकेशरघनादिना ।। १४ ।।

यथोचितमलंकारान्धारयित्वा च राधिकाम् ।।

पत्रलेखां च तिलकं विदध्यात्कुङ्कुमाक्षतैः ।। १५ ।।

आदर्शं दर्शयित्वाऽथ पुष्पस्रक्छेखरादिभिः ।।

पूजयेत्तं सहस्रेण तुलसीमञ्जरीदलैः ।। १६ ।।

तुलस्या वाऽथ पुष्पेण प्रत्येकं नाम वैष्णवम् ।।

नमः प्रान्तचतुर्थ्यन्तं कीर्त्तयन्नर्चयेत्प्रभुम् ।। १७ ।।

सुगन्धिद्रव्यचूर्णानि ततः सौभाग्यवन्ति च ।।

समर्प्य धूपं कुर्वीत दशांगं वामृतादिकम् ।। १८ ।।

दीपं घृतेन कुर्वीत वर्त्तिकाद्वयदीपितम् ।।

कृतं स्वशक्तितः शुद्धं महानैवेद्यमर्पयेत् ।। १९ ।।

संयावपायसापूपशष्कुलीखण्डलड्डकान्।।

पूरिकाः पोलिका मौद्गमोदनं व्यञ्जनानि च ।।

दधिदुग्धघृतादीनि चतुष्पद्यां निधारयेत् ।। 2.9.29.२० ।।

भोजयेत्तं ततः प्रेम्णा मध्ये पानीयमर्पयन् ।।

मुहूर्त्तार्द्धे गते दद्याद्धस्तप्रक्षालनांबु च ।। २१ ।।

उच्छेषणं भगवतो विष्वक्सेनादिदेवताः ।।

उपकल्प्यान्यतः स्थाप्य स्वार्थं तद्ध्रुवमामृजेत् ।। २२ ।।

मुखवासं ततो दद्यात्कृतां ताम्बूलवीटिकाम् ।।

पूगचूर्णलवङ्गैलाजातीजादिसमन्विताम् ।। २३ ।।

फलं च नालिकेरादि दत्त्वा शक्त्या च दक्षिणाम् ।।

महानीराजनं कुर्याद्गीतवादित्रपूर्वकम्।। २४ ।।

स्तुयात्पुष्पाञ्जलीन्दत्त्वा तत्स्तोत्रेणैव तं ततः ।।

नामसंकीर्तनं कुर्याद्गायन्नृत्यंश्च तत्पुरः ।। २५ ।।

मुहूर्तं स विधायेत्थं कृत्वा चैव प्रदक्षिणाम् ।।

प्रणामं दण्डवत्कुर्यात्तिर्यक्तद्दक्षिणे भुवि ।। २६ ।।

अष्टांगं वापि पञ्चागं प्रणामं पुरुषश्चरेत् ।।

पञ्चांगमेव नारी तु नान्यथा मुनिसत्तम ।। २७ ।।

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।।

वचसा मनसा चेति प्रणामोऽष्टांग ईरितः ।। २८ ।।

बाहुभ्यां चैव मनसा शिरसा वचसा दृशा ।।

पञ्चांगोयं प्रणामः स्यात्पूजासु प्रवराविमौ ।। २९ ।।

भीतं मां संसृतेः पाहि प्रपन्नं त्वां प्रभो इति ।।

ततः संप्रार्थ स्वाध्यायं शक्त्या कुर्वीत नैत्यकम् ।। 2.9.29.३० ।।

ध्यात्वा शेषां च तद्दत्तां गृहीत्वा शिरसादरात् ।।

आवाहितं यथापूर्वं राधाकृष्णं हृदम्बुजे।।

संस्थापयेच्चांगदेवान्स्वस्वस्थानं विसर्जयेत् ।। ३१ ।।

करण्डके वा शय्यायां मन्दिरे प्रतिमां हरेः ।।

शाययित्वा पिधाय द्वार्वैश्वदेवं समाचरेत् ।। ३२ ।।

प्रासादिकं हरेरन्नं स्वपोष्येभ्यो विभज्य सः ।।

स्वयं भुक्त्वा तत्कथाद्यैर्दिनशेषमतिक्रमेत् ।। ३३ ।।

महापूजाविधानेन प्रोक्तेनानेन योन्वहम् ।।

भक्त्या समर्चयेद्विष्णुं स भवेत्तस्य पार्षदः ।। ३४ ।।

दिव्यं विमानमारुह्य भास्वरं देवतेप्सितम् ।।

गोलोकाख्यं हरेर्द्धाम दिव्याङ्गो याति पूजकः ।। ३५ ।।

फलाभिसंधिना वापि यस्तमर्चेद्दिनेदिने ।।

सोपि धर्मं काममर्थं मोक्षं चाप्नोत्यभीप्सितम् ।। ३६ ।।

इत्थं पूजाविधिं कर्तुमशक्तो राधया सह ।।

हरिमेकं यथा लब्धैरर्चेद्भक्त्योपचारकैः ।। ३७ ।।

द्वादशाक्षरमन्त्रेण द्विजोऽन्यो नाममन्त्रतः ।।

श्रीराधाकृष्णमभ्यर्चेद्भक्तिरेवाऽत्र सिद्धिदा ।। ३८ ।।

एकादश्यां हरेर्जन्मोत्सवादौ तु विशेषतः ।।

महापूजैव कर्त्तव्या स्वशक्त्याऽखिलवैष्णवैः ।। ३९ ।।

प्रतिष्ठामात्रमपि यः कुर्यादन्यकृतालये ।।

स सार्वभौम राज्यं वै प्राप्नुयान्नष्टकिल्विषः ।। 2.9.29.४० ।।

कारयेन्मन्दिरं रम्यं धनाढ्यश्च हरेर्दृढम् ।।

यः स तु प्राप्नुयाद्राज्यं त्रैलोक्यस्याप्यकण्टकम्।। ४१ ।।

वृत्तिदानेन पूजायाः प्रवाहं वर्द्धयेत्तु यः ।।

स पुमान्प्राप्नुयान्नूनं विष्णुलोके महत्सुखम् ।। ४२ ।।

प्रतिष्ठां मन्दिरं पूजां कारये त्त्रीण्यपीह यः ।।

समानैश्वर्यमाप्नोति वासुदेवस्य स धुवम् ।। ४३ ।।

हरेर्वृत्तिं हरेद्यस्तु कृतां स्वेन परेण वा ।।

कल्पमेकं स वै भुंक्ते नरके यमयातनाः ।। ४४ ।।

कर्त्ता कारयिता यश्च सहायश्चानुमोदकः ।।

चतुर्णां हि फले भागः सुकृतस्येतरस्य च ।।४५।।

इति क्रियायोगविधिर्मया नारद कीर्त्तितः ।।

येनैकान्तिकधर्मोऽत्र सिद्ध्येत्तत्प्रवणात्मनाम् ।। ४६ ।।

विषयांश्चिन्तयंश्चित्ते बहिः पूजां हरेश्चरन् ।।

संभारेणापि महता न यथोक्तं फलं लभेत्।। ।। ४७ ।।

इतस्ततो ग्राम्यसुखे भ्रमत्स्वीयं मनस्ततः ।।

नियम्य विष्णुपूजायां मुमुक्षुः प्रयतो भवेत् ।। ४८ ।।

महाव्रता भूरितपस्विनोपि स्वधीतवेदा अपि बुद्धिमन्तः ।।

सांख्यं च योगं परिशीलयन्तः सिद्धिं न यान्त्येव विनार्चनं हरेः ।। ४९ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये क्रियायोगे श्रीवासुदेवपूजाविधिनिरूपणं नामैकोनत्रिंशोऽध्यायः ।।२९।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ३०

https://sa.wikisource.org/s/hb1
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

वासुदेवार्चनविधिं निशम्येत्थं स नारदः ।।

प्रसन्नः पुनरप्राक्षीत्तं मुनीनां परं गुरुम् ।। १ ।।

नारद उवाच ।।

सम्यगुक्तो भगवता क्रियायोगो महाफलः ।।

एकेन मनसा योऽसौ कार्यः सिद्धिमभीप्सुभिः ।। २ ।।

मनसो निग्रहस्तत्र ज्ञानिनामपि सद्गुरो ।।

दुष्करः किं पुनस्तर्हि नृणां कर्मात्मनां भुवि ।। ३ ।।

तमृते तु हरेरर्चा नाभीष्टफलदायिनी ।।

अतस्तन्निग्रहोपायमपि मे वक्तुमर्हसि ।। ४ ।।

स्कन्द उवाच ।।

इत्यापृष्टः स मुनिना मुनीन्द्रः सर्वदर्शनः ।।

नारायणो नरसखो नारदं तमभाषत ।। ५ ।।

श्रीनारायण उवाच ।।

सत्यमेव मुने वक्षि मनसोस्ति बलं महत् ।।

जितेपि यस्मिन्विश्वासः शत्रुवन्न विवेकिनाम् ।। ६ ।।

मनसा सदृशोन्यस्तु शत्रुर्न्नास्त्येव देहिनाम् ।।

विष्णुध्यानाभ्यासयोगान्निर्दोषं तद्धि शाम्यति ।। ७ ।।

अदान्ताश्ववदेवैतद्यतोस्ति दुरवग्रहम् ।।

अतो वैराग्ययुक्पुम्भिः सदुपायैर्निगृह्यते ।। ८ ।।

उपायास्तत्र बहवः सन्ति तेष्वपि सन्मते ।।

अष्टांगयोगस्याभ्यासः श्रेष्ठः सद्यः फलप्रदः ।। ९ ।।

यमाश्च नियमा ब्रह्मन्नासनान्यसुसंयमः ।।

प्रत्याहारो धारणा च ध्यानमंगं तु सप्तमम् ।।

समाधिश्चाष्टमं प्रोक्तं योगस्यानुक्रमेण वै ।। 2.9.30.१० ।।

तत्राऽहिंसाब्रह्मचर्य सत्यास्तेयापरिग्रहाः ।।

एते पञ्च यमाः प्रोक्ताः साधनीयाः प्रयत्नतः ।।११ ।।

शौचं तपश्च संतोषः स्वाध्यायो विष्णुपूजनम् ।।

एते च नियमाः पञ्च द्वितीयांगतया मताः ।। १२ ।।

परिहायांगचाञ्चल्यं यथासुखतया स्थितिः ।।

तदासनं स्वस्तिकादिप्रोक्तं द्वन्द्वार्त्तिजिन्मुने ।। १३ ।।

चरतां सर्वतोऽसूनामेकदेशे तु धारणम् ।।

गुरूपदिष्टरीत्यैव प्राणायामः स उच्यते ।। १४ ।।

चले वायौ चलं चित्तं स्थिरे तस्मिन्स्थिरं ततः ।।

सुदेशेऽयं सदाऽभ्यस्यः पूरकुम्भकरेचकैः ।। १५ ।।

मनसेन्द्रियवृत्तीनां तत्तद्विषयतश्च यत् ।।

आकर्षणं प्रतीचीनं प्रत्याहारः स ईरितः ।। १६ ।।

नाभ्याद्यन्यतमे स्थाने प्राणेन सह चेतसः ।।

वासुदेवस्वरूपे यद्धारणं धारणोदिता ।। १७ ।।

एकैकावयवस्यैव चिन्तनं यत्पृथक्पृथक् ।।

पदाब्जादेर्भगवतस्तद्ध्यानमिति कीर्तितम् ।। १८ ।।

निरोधः प्राणमनसोरतिप्रेम्णा हरौ तु यः ।।

स समाधिरिति प्रोक्तो योगिनामभिवाञ्छितः ।। १९ ।।

अंगैरष्टभिरेतैर्हि शिक्षितैः सिद्धसद्गुरोः ।।

योगः सिद्ध्यति वै पुंसां समाधेः पक्वतात्मकः ।। 2.9.30.२० ।।

नैतादृशं परं सम्यङ् मनोनिग्रहसाधनम्।।

पुरुषाणां मुमुक्षूणामिति जानीहि नारद ।। २१ ।।

तपस्विनां महाशत्रोर्ब्रह्माण्डक्षोभकादपि ।।

मदनान्नाभयं किञ्चिद्योगिनस्त्वस्ति कर्हिचित् ।। २२ ।।

आयास्यन्तं विहित्वैव सोन्तकालं च योगवित् ।।

स्वातन्त्र्येणैव देहं स्वं त्यजतीत्थं समाधिना ।। २३ ।।

पार्ष्णिभ्यां गुदमापीड्य वायुं पाददवयस्थितम् ।।

शनैःशनैः समाकृष्य मृत्युस्थानं नयत्यमुम् ।। २४ ।।

मनसा केशवं ध्यायंस्तन्मनुं च षडक्षरम् ।।

जपस्ततोऽमुं नयति वायुं स्थानं प्रजापतेः ।। २५ ।।

ततो नाभिं च हृदयमुरः कण्ठं च योगवित् ।।

नयति भ्रुकुटिवायुं वासुदेवपरायणः ।। २६ ।।

एतेषु षट्सु स्थानेषु त्वेकैकस्मिन्पृथक्पृथक् ।।

योगी प्राणमनोक्षाणां निरोधं च विसर्जनम् ।।

तावदभ्यसति स्वस्य यावत्स्यात्तत्स्वतन्त्रता ।। २७ ।।

जितंजितं विहायैव स्थानं याति परं परम् ।।

प्राप्तस्य स्थानकं षष्ठं तदभ्यासे श्रमो न हि ।। २८ ।।

सप्तच्छिद्राणि रुद्ध्वाऽथ प्राणमक्षमनोयुतम् ।।

प्रापय्य तालु व्रजति ब्रह्मरन्ध्रं स योगवित् ।। २९ ।।

मायामयपदार्थानां ततो हित्वैव वासनाः ।।

स वासुदेवैकमनास्त्यजति स्वकलेवरम्।। 2.9.30.३० ।।

ततो भगवतो धाम श्रीकृष्णस्य तमःपरम् ।।

उपेत्य सेवमानस्तं नन्दते दिव्यविग्रहः ।। ३१ ।।

इति ते कथितो ब्रह्मन्योगशास्त्रस्य संग्रहः ।।

जित्वा तेन मनः स्वीयं तमाराधय सर्वदा ।। ३२ ।।

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्येऽष्टांगयोगनिरूपणं नाम त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ३१

https://sa.wikisource.org/s/hb2
< स्कन्दपुराणम् | खण्डः २ (वैष्णवखण्डः) | वासुदेवमाहात्म्यम्

।। स्कन्द उवाच ।।

श्रुत्वैतत्सकलं धर्म्यं यथावद्भगवद्वचः ।।

निःसंशयो मुनिः प्राह तं प्रणम्य कृताञ्जलिः ।। १ ।।

नारद उवाच ।।

नष्टा मे संशयाः सर्वे प्रसादाद्भगवंस्तव ।।

वासुदेवस्य माहात्म्यं मयाधिगतमञ्जसा ।। २ ।।

कंचित्कालमिहैवाहं तपः कुर्वंस्त्वया सह ।।

शृण्वंश्च नित्यं ज्ञानादि करिष्ये पक्वमात्मनः ।। ३ ।।

स्कन्द उवाच ।।

इत्युक्त्वा नारदस्तत्र तेन चाप्यनुमोदितः ।।

उवास दिव्यवर्षाणां सहस्रं स तपश्चरन् ।। ४ ।।

शुश्राव चानुदिवसं यथाकालं हरेर्मुखात् ।।

धर्मज्ञानाद्यथ प्राप पक्वतां तत्र योगिराट् ।। ५ ।।

स्नेहं च परमं प्राप स श्रीकृष्णेऽखिलात्मनि ।।

गुणगानपरो नित्यमास भागवताग्रणीः ।। ६ ।।

भक्तिनिष्ठां परां प्राप्तमथ तं सिद्धयोगिनम् ।।

उवाच भगवत्प्रीतः श्रेयस्कृत्सर्वदेहिनाम् ।। ७ ।।

श्रीनारायण उवाच ।।

सिद्धोसि त्वं महर्षेऽद्य गच्छ लोकहितं कुरु ।।

एकान्तधर्मं सर्वत्र प्रवर्त्तयितुमर्हसि ।। ८ ।।

स्कन्द उवाच ।।

इत्याज्ञां शिरसा तस्य स आदाय जगद्गुरोः ।।

गच्छंस्ततस्तमस्तौषीत्प्रणम्य प्राञ्जलिः स्थितः ।। ९ ।।

नारद उवाच ।।

नमोनमस्ते भगवञ्जगद्गुरो नारायणाऽप्राकृत दिव्यमूर्ते ।।
अनन्तकल्याणगुणाकरस्त्वं दासे मयि प्रीततरः मदा स्याः ।। 2.9.31.१० ।।
त्वं वासुदेवोसि जगन्निवासः क्षेमाय लोकस्य तपः करोषि ।।
योगेश्वरेशोपशमस्थ आत्मारामाधिपस्त्वं परहंससद्गुरुः ।। ११ ।।
विभुर्ऋषीणामृषभोऽक्षरात्मा जीवेश्वराणां च नियामकोसि ।।
साक्षी महापूरुष आत्मतन्त्रः कालोऽभवद्यद्भ्रुकुटेर्महांश्च ।। १२ ।।
सर्गादिलीला जगतां त्वमीश करोषि मायापुरुषात्मनैव ।।
तथाप्यकर्त्ता ननु निर्गुणोसि भूमा परब्रह्म परात्परश्च।। १३ ।।
सत्यः स्वयंज्योतिरतर्क्यशक्तिस्त्वं ब्रह्मभूतात्मविचिन्त्यमूर्त्तिः ।।
बृहद्व्रताचार्य महामुनीन्द्र कन्दर्पदर्पापहरप्रताप ।।१४।।
तपस्विनां ये रिपवः प्रसिद्धाः क्रोधो रसो मत्सरलोभमुख्याः ।।
अप्याश्रमं तेपि कदापि वेष्टुं नेमं क्षमा ह्येष तव प्रतापः ।। १५ ।।
छन्दोमयो ज्ञानमयोऽमृताध्वा धर्मात्मको धर्मसर्गाभिपोष्टा।।
उन्मूलिताधर्मसर्गो महात्मा त्वमव्ययश्चाक्षयोऽव्यक्तबन्धुः।।१६।।
निर्दोषरूपस्य तवाऽखिलाः क्रिया भवन्ति वै निर्गुणा निर्गुणस्य।।
धर्मार्थकामेप्सुभिरर्चनीयस्त्वमीश्वरो नाथ मुमुक्षुभिश्च ।।
त्वं कालमायायमसंसृतिभ्यो महाभयात्पातुमेकः समर्थः ।।
भक्तापराधाननवेक्षमाणो महादयालुः किल भक्तवत्सलः ।।१८।।
धृतावतारस्य हि नाममात्रं रूपं च वा यः स्मरेदन्तकाले ।।
सोपि प्रभो घोरमहाघसंघात्सद्यो विमुक्तो दिवमाशु याति ।। १९ ।।
तं त्वां विहायाऽत्र तु यो मनुष्यो देहे त्रिधातावपि देहिकेषु ।।
जायात्मजज्ञातिधनेषु सज्जते स मायया वञ्चित एव मूढः ।। 2.9.31.२० ।।
त्वद्भक्तियोग्यो नरदेह एव यं कामयन्तेऽपि च नाकसंस्थाः ।।
त्वद्भक्तिहीनं हि दिवोपि सौख्यमहं तु जाने नरकेण तुल्यम् ।। २१ ।।
तपस्त्रिलोक्याः कुरुषे सुखाय तत्रापि ते भारतवासिपुंसु ।।
अनुग्रहो भूरितरो यदत्र कृतावतारो विचरन्विराजसे ।। ।। २२ ।।
तस्याश्रयं ये तव नात्र कुर्वते त एव शास्त्रेषु मताः कृतघ्नाः ।।

अतस्तवैकाश्रयमेव बाढं कुर्वत्यजस्रं मयि तेऽस्तु तुष्टिः ।।२३।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्रीनरनारायणस्तुतिनिरूपणंनामैकत्रिंशोऽध्यायः ।।३१।।

# स्कन्दपुराणम्/खण्डः २ (वैष्णवखण्डः)/वासुदेवमाहात्म्यम्/अध्यायः ३२

https://sa.wikisource.org/s/hb3



।। स्कन्द उवाच ।।

इति स्तुत्वा तमीशानं नारदः स ययौ ततः ।।

शम्याप्रासाभिधं ब्रह्मन्व्यासस्याश्रममादितः ।।१।।

सादरं मानितस्तेन प्रत्युत्थानासनादिभिः ।।

तस्मा एकान्तिकं धर्म्मं प्राह जिज्ञासवे स च ।।२।।

ततो ब्रह्मसभां गत्वा ब्रह्मणः शृण्वतो मुनिः ।।

देवान्पितॄन्महर्षींश्च तत्रस्थांस्तमुपादिशत् ।। ३ ।।

तत्रस्थितो भास्करश्च धर्म्ममेतं पुनर्म्मुने ।।

शुश्राव नारदात्सर्वं श्रुतं नारायणात्पुरा ।। ४ ।।

स प्राहात्माग्रयायिभ्यो वालखिल्येभ्य आदरात् ।।

मेरौ ते संगतान्देवानिन्द्रादींश्च न्यशामयन् ।। ५ ।।

तेभ्योऽसितो मुनिः श्रुत्वा धर्ममेतं द्विजोत्तम ।।

पितृभ्यः कथयामास पितृलोकं गतः क्वचित् ।। ६ ।।

पितरस्ते त्वर्यमाद्या ऊचिरे शंतनुं नृपम् ।।

स भीष्माय स्वपुत्राय कथयामास तत्त्वतः ।। ७ ।।

सोपि भारतयुद्धान्ते धर्म्मराजाय पृच्छते ।।

शयानः शरशय्यायां प्राह संसदि भूयसि ।। ८ ।।

तत्र श्रुत्वा नारदोपि स्थितः सदसि सादरम् ।।

कैलासे शंकरं प्राह स च मां मुनिसत्तम ।। ९ ।।

मया ते कथितं ब्रह्मन्पृच्छते धर्म्मवर्त्तिने ।।

पात्रायैतत्प्रदातव्यमिति मां हि पिताब्रवीत् ।। 2.9.32.१० ।।

येनयेन श्रुतं ह्येतन्माहात्म्यं सात्वतांपतेः ।।

स स तस्मिन्परां भक्तिं चकार स्वविमुक्तये ।। ११ ।।

युधिष्ठिरोपि राजर्षिः श्रुत्वा भीष्मेण कीर्त्तितम् ।।

माहात्म्यं देवकीसूनोर्म्मुमुदे भ्रातृभिः सह ।। १२ ।।

तमात्मनो मातुलेयं सर्वकारणकारणम् ।।

निशम्याश्चर्य्यजलधौ निममज्ज महामतिः ।। १३ ।।

वासुदेवादिकं व्यूह वाराहादींश्च सर्व्वशः ।।

अवतारानपि नृपो मेनेऽस्यैव रमापतेः ।। १४ ।।

ततः सहानुजो राजा दिव्यमानुषविग्रहे ।।

अत्यन्तं भक्तिमान्कृष्णे बभूव द्विजसत्तम ।। १५ ।।

श्रुत्वेमां च कथां सर्व्वे ब्रह्मराजसुरर्षयः ।।

सभायां तत्र ये चासंस्तेप्यभूवन्सविस्मयाः ।। १६ ।।

कृष्णमेव परं ब्रह्म विदित्वा ते नराकृति ।।

भक्तिं प्रपेदिरे तस्मिन्प्रणमन्तस्तमादरात् ।। १७ ।।

इत्थं तस्यास्ति माहात्म्यमतस्त्वमपि सन्मते ।।

सर्वात्मना वासुदेवं तमेव भज भक्तितः ।। १८ ।।

श्रीवासुदेवमाहात्म्यमेतत्ते कथितं मया ।।

दुर्वासनोपशमनं भगवद्भक्तिवर्द्धनम् ।। १९ ।।

कथितानि पुराणेऽत्र मयाख्यानानि यानि ते ।।

तेषां सार इदं ब्रह्मन्निर्म्मथ्यैव समुद्धृतः ।। 2.9.32.२० ।।

वेदोपनिषदां चैतद्रसो वै सांख्ययोगयोः ।।

पञ्चरात्रस्य कृत्स्नस्य धर्मशास्त्रस्य चानघ ।। २१ ।।

धन्यं यशस्यं चायुष्यमेतत्परममङ्गलम् ।।

साक्षाद्भगवता गीतं सर्वाभद्रविनाशनम् ।। २२ ।।

य एतच्छृणुयात्पुण्यं कीर्तयेदथ यः पठेत् ।।

वासुदेवे भवेत्तेषामचला निर्मला मतिः ।। २३ ।।

भक्ता एकान्तिकास्ते च भवेयुस्तस्य मानवाः ।।

ब्रह्मरूपा व्रजन्त्यन्ते ब्रह्मधाम तमःपरम् ।। २४ ।।

धर्मार्थी लभतेऽनेन धर्मं कामं च कामुकः ।।

धनार्थी धनमाप्नोति मोक्षार्थी मोक्षमुत्तमम् ।। २५ ।।

लभेत विद्यां विद्यार्थी मुच्येद्रुग्णश्च रोगतः ।।

एतच्छ्रवणमात्रेण सर्वपापक्षयो भवेत् ।।२६।।

ब्राह्मं तेजो लभेद्विप्रः क्षत्रियश्च नरेशताम्।।

धनं वैश्यः सुखं शूद्रः श्रवणादस्य चाप्नुयात्।।२७।।

एतच्छ्रुत्वा रणं गच्छन्विजयं चाप्नुयान्नृपः।।

प्राप्नुयात्स्त्री च सौभाग्यं कन्या च स्वेप्सितं वरम् ।।२८।।

एतस्य श्रुतिकीर्त्तिभ्यः शास्त्रजातशिरोमणेः ।।

यं यं यः कामयेत्कामं तंतं प्राप्नोति मानवः ।। ।।२९।।

तस्मात्त्वं सर्वदा भक्त्या पठन्नेतद्द्विजोत्तम।।

कायवाणीमनोभिस्तं भजेथा भक्तवत्सलम् ।।2.9.32.३०।।

सौतिरुवाच।।

एतन्महासेनमुखाब्जनिःसृतं सावर्णिरापीय वचोमृतं सः ।।

चकार भक्तिं वसुदेवनन्दने नराकृतिब्रह्मणि सर्वमङ्गले ।। ३१ ।।

यूयं च सर्वे निगमागमज्ञा ब्रह्मण्यदेवं भजनीयमीशम् ।।

भजध्वमेकं तमुदारकीर्त्तिं श्रीवासुदेवं निजधर्मसंस्थाः ।। ३२ ।।

गोलोकधामपतये प्रकाशचयमूर्त्तये ।। नमोस्तु वासुदेवाय भक्त्यानन्दविवृद्धये ।। ३३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये ग्रन्थसंप्रदायप्रवृत्तिनिरूपणं नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे वासुदेवमाहात्म्यं सम्पूर्णम्।। २-९ ।।

इति श्रीस्कान्दे महापुराणे द्वितीयं वैष्णवखण्डं सम्पूर्णम् ।। २ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०१



अथ ब्राह्मखण्डे प्रथमं सेतुमाहात्म्यम् ।। ( ३-१) ।।

1

।।श्रीगणेशाय नमः ।।

श्रीवेदव्यासायनमः ।।

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये।।१ ।।

नैमिषारण्यनिलया ऋषयः शौनकादयः ।।

अष्टांगयोगनिरता ब्रह्मज्ञानैकतत्पराः ।। १ ।।

मुमुक्षवो महात्मानो निर्ममा ब्रह्मवादिनः ।।

धर्मज्ञा अनसूयाश्च सत्यव्रतपरायणाः ।। २ ।।

जितेंद्रिया जितक्रोधाः सर्वभूतदयालवः ।।

भक्त्या परमया विष्णुमर्चयंतः सनातनम् ।।३ ।।

तपस्तेपुर्महापुण्ये नैमिषे मुक्तिदायिनि ।।

एकदा ते महात्मानः समाजं चक्रुरुत्तमम्।। ४ ।।

कथयंतो महापुण्याः कथाः पापप्रणाशिनी ।।

भुक्तिमुक्त्योरुपायं च जिज्ञासंतः परस्परम् ।। ५ ।।

षड्विंशतिसहस्राणामृषीणां भावितात्मनाम् ।।

तेषां शिष्यप्रशिष्याणां संख्या कर्तुं न शक्यते।। ६ ।।

अत्रांतरे महाविद्वान्व्यासशिष्यो महामुनिः ।।

आगमन्नैमिषारण्यं सूतः पौराणिकोत्तमः ।। ७ ।।

तमागतं मुनिं दृष्ट्वा ज्वलंतमिव पावकम् ।।

अर्घ्याद्यैः पूजयामासुर्मुनयः। शौनकादयः ।। ८ ।।

सुखोपविष्टं तं सूतमासने परमे शुभे ।।

पप्रच्छुः परमं गुह्यं लोकानुग्रहकांक्षया ।। ९ ।।

सूत धर्मार्थतत्त्वज्ञ स्वागतं मुनिपुंगव ।।

श्रुतवांस्त्वं पुराणानि व्यासात्सत्यवतीसुतात् ।। 3.1.1.१० ।।

अतः सर्वपुराणानामर्थज्ञोऽसि महामुने ।।
कानि क्षेत्राणि पुण्यानि कानि तीर्थानि भूतले ।। ११ ।।
कथं वा लप्स्यते मुक्तिर्जीवानां भवसागरात् ।।
कथं हरे हरौ वापि नृणां भक्तिः प्रजायते ।। १२ ।।
केन सिध्येत च फलं कर्मणास्त्रिविधा त्मनः ।।
एतच्चान्यच्च तत्सर्वं कृपया वद सूतज ।। १३ ।।
ब्रूयुः स्निग्धाय शिष्याय गुरवो गुह्यमप्युत ।।
इति पृष्टस्तदा सूतो नैमिषारण्यवासिभिः ।। ।। १४ ।।
वक्तुं प्रचक्रमे नत्वा व्यासं स्वगुरुमादितः ।।
श्रीसूत उवाच ।। ।।
सम्यक्पृष्टमिदं विप्रा युष्माभिर्जगतो हितम् ।। १५ ।।
रहस्यमे तद्युष्माकं वक्ष्यामि शृणुतादरात् ।।
मया नोक्तमिदं पूर्वं कस्यापि मुनिपुंगवाः ।। १६ ।।
मनो नियम्य विप्रेंद्राः शृणुध्वं भक्तिपूर्वकम् ।।
अस्ति रामेश्वरं नाम रामसेतौ पवित्रितम् ।। १७ ।।
क्षेत्राणामपि सर्वेषां तीर्थानामपि चोत्तमम् ।।
दृष्टमात्रे रामसेतौ मुक्तिः संसारसागरात् ।। १८ ।।
हरे हरौ च भक्तिः स्यात्तथा पुण्यसमृद्धिता ।।
कर्मणस्त्रिविधस्यापि सिद्धिः स्यान्नात्र संशयः ।। १९ ।।
यो नरो जन्ममध्ये तु सेतुं भक्त्यावलोकयेत् ।।
तस्य पुण्यफलं वक्ष्ये शृणुध्वं मुनिपुंगवाः ।।3.1.1.२० ।।
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।।
निर्विश्य शंभुना कल्पं ततो मोक्षं समश्नुते।। २१ ।।
गण्यंते पांसवो भूमेर्गण्यंते दिवि तारकाः ।।
सेतुदर्शनजं पुण्यं शेषेणापि न गण्यते ।। २२ ।।
समस्तदेवतारूपः सेतुवंधः प्रकीर्तितः ।।
तद्दर्शनवतः पुंसः कः पुण्यं गणितुं क्षमः ।। २३ ।।
सेतुं दृष्ट्वा नरो विप्राः सर्वयागकरः स्मृतः ।।
स्नातश्च सर्वतीर्थेषु तपोऽतप्यत चाखिलम् ।।२४।। Esoteric aspect of setu
सेतुं गच्छेति यो ब्रूयाद्यं कं वापि नरं द्विजाः ।।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषणः ।। २५ ।।
सेतुस्नानकरो मर्त्यः सप्तकोटिकुलान्वितः ।।
संप्राप्य विष्णुभवनं तत्रैव परिमुच्यते ।। २६ ।।

सेतुं रामेश्वरं लिंगं गंधमादनपर्वतम् ।।
चिंतयन्मनुजः सत्यं सर्वपापैः प्रमुच्यते ।। २७ ।।
मातृतः पितृतश्चैव लक्षकोटिकुलान्वितः ।।
संप्राप्य विष्णुभवनं तत्रैव परिमुच्यते ।।
कल्पत्रयं शंभुपदे स्थित्वा तत्रैव मुच्यते ।। २८ ।।
मूषावस्थां वसाकूपं तथा वैतरणी नदीम् ।।
श्वभक्षं मूत्रपानं च सेतुस्नायी न पश्यति ।। २९ ।।
तप्तशूलं तप्तशिलां पुरी षह्रदमेव च ।।
तथा शोणितकूपं च सेतुस्नायी न पश्यति ।। 3.1.1.३० ।।
शाल्मल्यारोहणं रक्तभोजनं कृमिभोजनम् ।।
स्वमांसभोजनं चैव वह्निज्वालाप्रवेशनम् ।। ३१ ।।
शिलावृष्टिं वह्निवृष्टिं नरकं कालसूत्रकम् ।।
क्षारोदकं चोष्णतोयं नेयात्सेत्ववलोककः ।। ३२ ।।
सेतुस्नायी नरो विप्राः पंचपातकवानपि ।।
मातृतः पितृतश्चैव शतकोटिकुलान्वितः ।। ३३ ।।
कल्पत्रयं विष्णुपदे स्थित्वा तत्रैव मुच्यते ।।
अधःशिरःशोषणं च नरकं क्षारसेवनम् ।। ३४ ।।
पाषाणयन्त्रपीडां च मरुत्प्रपतनं तथा ।।
पुरीषलेपनं चैव तथा क्रकचदारणम् ।। ३५ ।।
पुरीषभोजनं रेतःपानं संधिषु दाहनम् ।।
अंगारशय्याभ्रमणं तथा मुसलमर्द्दनम् ।। ३६ ।।
एतानि नरकाण्यद्धा सेतुस्नायी न पश्यति ।।
सेतु स्नानं करिष्येऽहमिति बुद्ध्या विचिंतयन् ।। ३७ ।।
गच्छेच्छतपदं यस्तु स महापातकोऽपि सन् ।।
बहूनां काष्ठयंत्राणां कर्षणं शस्त्रभेदनम्।। ३८ ।।
पतनोत्पतनं चैव गदादण्डनिपीडनम् ।।
गजदन्तैश्च हननं नानाभुजगदंशनम् ।। ३९ ।।
धूमपानं पाशबन्धं नानाशूलनिपीडनम् ।।
मुखे च नासिकायां च क्षारोदकनिषेचनम् ।। 3.1.1.४० ।।
क्षारांबुपानं नरकं तप्तायः सूचिभक्षणम् ।।
एतानि नरकान्यद्धा न याति गतपातकः ।। ४१ ।।
क्षारांबुपूर्णरंध्राणां प्रवेशं मलभोजनम् ।।
स्नायुच्छेदं स्नायुदाहमस्थिभेदनमेव च ।। ४२ ।।

श्लेष्मादनं पित्तपानं महातिक्तनिषेवणम् ।।
अत्युष्ण तैलपानं च पानं क्षारोदकस्य च ।। ४३ ।।
कषायोदकपानं च तप्तपाषाणभोजनम् ।।
अत्युष्णसिकतास्नानं तथा दशनमर्दनम् ।। ४४ ।।
तप्तायःशयनं चैव संतप्तांबुनिषेचनम् ।।
सूचिप्रक्षेपणं चैव नेत्रयोर्मुखसंधिषु ।। ४५ ।।
शिश्ने सवृषणे चैव ह्ययोभारस्य बन्धनम् ।।
वृक्षाग्रात्पतनं चैव दुर्गंधपरिपूरिते ।। ४६ ।।
तीक्ष्णधारास्त्रशय्यां च रेतःपानादिकं तथा ।।
इत्यादि नरकान्घोरासेतुस्नायी न पश्यति ।। ४७ ।।
सेतुसैकतमध्ये यः शेते तत्पांसुकुंठितः ।।
यावन्तः पांसवो लग्नास्तस्यांगे विप्रसत्तमाः ।। ४८ ।।
तावतां ब्रह्महत्यानां नाशः स्यान्नात्र संशयः ।।
सेतुमध्यस्थ वातेन यस्यांगं स्पृश्यतेऽखिलम् ।। ४९ ।।
सुरापानायुतं तस्य तत्क्षणादेव नश्यति ।।
वर्तंते यस्य केशास्तु वपनात्सेतुमध्यतः ।। 3.1.1.५० ।।
गुरुतल्पा युतं तस्य तत्क्षणादेव नश्यति ।।
यस्यास्थि सेतुमध्ये तु स्थापितं पुत्रपौत्रकैः ।।
स्वर्णस्तेयायुतं तस्य तत्क्षणादेव नश्यति ।। ५१ ।।
स्मृत्वा यं सेतुमध्ये तु स्नानं कुर्याद्द्विजोत्तमाः ।।
महापातकिसंसर्गदोषस्तस्य लयं व्रजेत् ।। ५२ ।।
मार्गभेदी स्वार्थपाकी यतिब्राह्मणदूषकः ।।
अत्याशी वेदविक्रेता पंचैते ब्रह्मघातकाः ।। ५३ ।।
ब्राह्मणान्यः समाहूय दास्यामीति धनादिकम् ।।
पश्चान्नास्तीति यो ब्रूते ब्रह्महा सोपि कीर्तितः ।। ५४ ।।
परिज्ञाय यतो धर्मांस्तस्मै यो द्वेषमाचरेत् ।।
अवजानाति वा विप्रान्ब्रह्महा सोपि कीर्तितः ।। ५५ ।।
जलपानार्थमायातं गोवृन्दं तु जलाशये ।।
निवारयति यो विप्रा ब्रह्महा सोपि कीर्तितः ।। ५६ ।।
सेतुमेत्य तु ते सर्वे मुच्यंते दोषसंचयैः ।।
ब्रह्मघातकतुल्या ये संति चान्ये द्विजोत्तमाः ।। ।। ५७ ।।
ते सर्वे सेतुमागत्य मुच्यंते नात्र संशयः ।।
औपासनपरित्यागी देवतान्नस्य भोजकः ।।५८।।

सुरापयोषित्संसर्गी गणिकान्नाशनस्तथा ।।
गणान्नभोजकश्चैव पतितान्नरतश्च यः ।। ५९ ।।
एते सुरापिनः प्रोक्ताः सर्वकर्मबहिष्कृताः ।।
सेतुस्नानेन मुच्यंते ते सर्वे हतकिल्बिषाः ।। 3.1.1.६० ।।
सुरापतुल्या ये चान्ये मुच्यंते सेतुमज्जनात् ।।
कन्दमूलफलानां च कस्तूरीपट्टवाससाम् ।। ६१ ।।
पयश्चंदनकर्पूरक्रमुकाणां तथैव च ।।
मध्वाज्यता म्रकांस्यानां रुद्राक्षाणां तथैव च ।। ६२ ।।
चोरकास्तु परिज्ञेया सुवर्णस्तेयिनः समाः ।।
ते सेतुक्षेत्रमागत्य मुच्यन्ते नात्र संशयः ।। ६९ ।।
अन्ये च स्तेयिनः सर्वे सेतुस्नानेन वै द्विजाः ।।
मुच्यंते सर्वपापेभ्यो नात्र कार्या विचारणा ।। ६४ ।।
भगिनीं पुत्रभार्यां च तथैव च रजस्वलाम् ।।
भ्रातृभार्यां मित्रभार्यां मद्यपां च परस्त्रियम् ।।६५।।
हीनस्त्रियं च विश्वस्तां योऽभिगच्छति रागतः ।।
गुरुतल्पी स विज्ञेयः सर्वकर्मबहिष्कृतः ।।६६।।
एते चान्ये च ये संति गुरुतल्पगतुल्यकाः ।।
ते सर्वे प्रविमुच्यंते सेतुस्नानेन वै द्विजाः ।। ६७ ।।
एतैः संसर्गिणो विप्रा ये चान्ये संति पापिनः ।।
सेतुस्नानेन महता तेऽपि मोक्षमवाप्नुयुः।।६९।।
यागं विना देवलोके घृताचीमेनकादिभिः।।
संभोगकामिनो विप्राः स्नातुं संतावघापहे ।। ६९ ।।
अनिषेव्य रविं वह्निमनुपास्य परान्सुरान् ।।
शुभकामी जनः सेतौकुर्यात्स्नानं सभक्तिकम् ।।3.1.1.७|।।
तिलान्भूमिं सुवर्णं च धान्यं तंदुलमेव च ।।
अदत्त्वेच्छंति ते स्वर्गं स्नातुं सेतौ तु ते द्विजाः ।।७१।।
उपवासैर्व्रतैः कृत्स्नैरसंताप्य निजां तनुम् ।।
स्वर्गाभिलाषिणः पुंसः स्नांतु सेतौ विमुक्तिदे।।७२।।
सेतुस्नानं मोक्षदं हि मनःशुद्धिप्रदं तथा ।।
जपाद्धोमात्तथा दानाद्यागाच्च तपसोऽपि च ।। ७३ ।।
सेतुस्नानं विशिष्टं हि पुराणे परिपठ्यते ।।
अकामनाकृतं स्नानं सेतौ पापविनाशने ।। ७४ ।।
अपुनर्भवदं प्रोक्तं सत्यमुक्तं द्विजोत्तमाः ।।

यः संपदं समुद्दिश्य स्नाति सेतौ नरो मुदा ।। ७५ ।।
स संपदमवाप्नोति विपुलां द्विजपुंगवाः ।।
शुद्ध्यर्थं स्नाति चेत्सेतौ तदा शुद्धिमवाप्नुयात् ।। ७६ ।।
रत्यर्थं यदि च स्नायादप्सरोभिर्नरो दिवि ।।
तदा रतिमवाप्नोति स्वर्गलोकेऽमरीजनैः ।। ७७ ।।
मुक्त्यर्थं यदि च स्नायात्सेतौ मुक्तिप्रदायिनि ।।
तदा मुक्तिमवाप्नोति पुनरावृत्तिवर्जिताम् ।।७८।।
सेतुस्नानेन धर्मः स्यात्सेतुस्नानादघक्षयः ।।
सेतुस्नानं द्विजश्रेष्ठाः सर्वकामफलप्रदम् ।। ७९ ।।
सर्वव्रताधिकं पुण्यं सर्वयज्ञोत्तरं स्मृतम् ।।
सर्वयोगाधिकं प्रोक्तं सर्व तीर्थाधिकं स्मृतम् ।। 3.1.1.८० ।।
इंद्रादिलोकभोगेषु रागो येषां प्रवर्तते ।।
स्नातव्यं तैर्द्विजश्रेष्ठाः सेतौ रामकृते सकृत् ।। ८१ ।।
ब्रह्मलोके च वैकुण्ठे कैलासेऽपि शिवालये ।।
रंतुमिच्छा भवेद्येषां ते सेतौ स्नांतु सादरम् ।। ८२ ।।
आयुरारोग्यसंपत्तिमतिरूपगुणाढ्यताम् ।।
चतुर्णामपि वेदानां सांगानां पारगामिनाम् ।। ८३ ।।
सर्वशास्त्राधिगंतृत्वं सर्वमंत्रेष्वभिज्ञताम् ।।
समुद्दिश्य तु यः स्नायात्सेतौ सर्वार्थसिद्धिदे ।। ८४ ।।
तत्तत्सिद्धिम वाप्नोति सत्यं स्यान्नात्र संशयः ।।
दारिद्र्यान्नरकाद्ये च मनुजा भुवि बिभ्यति ।। ८५ ।।
स्नानं कुर्वंतु ते सर्वे रामसेतौ विमुक्तिदे ।।
श्रद्धया सहितो मर्त्यः श्रद्धया रहितोऽपि वा ।। ८६ ।।
इहलोके परत्रापि सेतुस्नायी न दुःखभाक् ।।
सेतुस्नानेन सर्वेषां नश्यते पापसंचयः ।। ८७ ।।
वर्द्धते धर्मराशिश्च शुक्लपक्षे यथा शशी ।।
यथा रत्नानि वर्द्धंते समुद्रे विविधान्यपि ।। ८८ ।।
तथा पुण्यानि वर्द्धंते सेतुस्नानेन वै द्विजाः ।।
काम धेनुर्यथा लोके सर्वाकामान्प्रयच्छति ।। ८९ ।।
चिंतामणिर्यथा दद्यात्पुरुषाणां मनोरथान् ।।
यथाऽमरतरुर्दद्यात्पुरुषाणामभीप्सितम् ।। 3.1.1.९० ।।
सेतुस्नानं तथा नृणां सर्वाभीष्टान्प्रदास्यति ।।
अशक्तः सेतुयात्रायां दारिद्र्येण च मानवः ।। ९१ ।।

याचित्वा स धनं शिष्टात्सेतौ स्नानं समाच रेत् ।।
सेतुस्नानसमं पुण्यं तत्र दाता समश्नुते ।। ९२ ।।
तथा प्रतिगृहीतापि प्राप्नोत्यविकलं फलम् ।।
सेतुयात्रां समुद्दिश्य गृह्णीयाद्ब्राह्मणाद्ध नम् ।। ९३ ।।
क्षत्रियादपि गृह्णीयान्न दद्युर्ब्राह्मणा यदि ।।
वैश्याद्वा प्रतिगृह्णीयान्न प्रयच्छंति चेन्नृपाः ।। ९४ ।।
शूद्रान्न प्रतिगृह्णीयात्कथंचिदपि मानवः ।।
यः सेतुं गच्छतः पुंसो धनं वा धान्यमेव वा ।। ९५ ।।
दत्त्वा वस्त्रादिकं वापि प्रवर्तयति मानवः ।।
सोऽश्वमेधादियज्ञानां फलमाप्तो त्यनुत्तमम् ।। ९६ ।।
चतुर्णामपि वेदानां पारायणफलं लभेत् ।।
तुलापुरुषमुख्यानां दानानां फलमश्नुते ।। ९७ ।।
ब्रह्महत्यादिपापानां नाशः स्या न्नात्र संशयः ।।
बहुना किं प्रलापेन सर्वान्कामान्समश्नुते ।। ९८ ।।
एवं प्रतिगृहीतापि तत्तुल्यफलमश्नुते ।।
याचतः सेतुयात्रार्थं न प्रतिग्रहकल्मषम् ।। ९९ ।।
सेतुं गच्छ धनं तेऽहं दास्यामीति प्रलोभ्य यः ।।
पश्चान्नास्तीति च ब्रूयात्तमाहुर्ब्रह्मघातकम् ।। 3.1.1.१०० ।।
लोभेन सेतुयात्रार्थं संपन्नोऽपि दरिद्रवत् ।।
मानवो यदि याचेत तमाहुस्तेयिनं बुधाः ।। १०१ ।।
गमिष्ये सेतुमिति वै यो गृहीत्वा धनं नरः ।।
न याति सेतुं लोभेन तमाहुर्ब्रह्मघा तकम् ।। १०२ ।।
येन केनाप्युपायेन सेतुं गच्छेन्नरो मुदा ।।
अशक्तो दक्षिणां दत्त्वा गमयेद्वा द्विजोत्तमम् ।।१०३।।
याचित्वा यज्ञकरणे यथा दोषो न विद्यते ।।
याचित्वा सेतुयात्रायां तथा दोषो न विद्यते ।। १०४ ।।
याचित्वाप्यन्यतो द्रव्यं सेतुस्नाने प्रवर्तयेत् ।।
सोऽपि तत्फलमाप्नोति सेतु स्नायी नरो यथा ।। १०५ ।।
ज्ञानेन मोक्षमभियांति कृते युगे तु त्रेतायुगे यजनमेव विमुक्तिदायि ।।
श्रेष्ठं तथान्ययुगयोरपि दानमाहुः सर्वत्र सेत्व भिषवो हि वरो नराणाम् ।।१०६।।
इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सेतुगमनफलादिवर्णनं नाम प्रथमोऽध्यायः।।१।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०२



।। ऋषय ऊचुः ।। ।।

कथं सूत महाभाग रामेणाक्लिष्टकर्मणा ।।

सेतुर्बद्धो नदीनाथे ह्यगाधे वरुणालये ।।१।।

सेतौ च कति तीर्थानि गंधमादनपर्वते ।।

एतन्नः श्रद्दधानानां ब्रूहि पौराणिकोत्तम ।। २ ।।

।। श्रीसूत उवाच ।। ।।

रामेण हि यथासेतुर्निबद्धो वरुणालये ।।

तदहं संप्रवक्ष्यामि युष्माकं मुनिपुंगवाः ।। ३ ।।

आज्ञया हि पितू रामो न्यवसद्दंडकानने।।

सीतालक्ष्मणसंयुक्तः पंचवट्यां समाहितः।। ४ ।।

तस्मिन्निव सतस्तस्य राघवस्य महात्मनः ।।

रावणेन हृता भार्या मारीचच्छद्मना द्विजाः ।।५ ।।

मार्गमाणो वने भार्यां रामो दशरथात्मजः।।

पंपातीरे जगा मासौ शोकमोहसमन्वितः ।।६।।

दृष्टवान्वानरं तत्र कंचिद्दशरथात्मजः ।।

वानरेणाथ पृष्टोऽयं को भवानिति राघवः ।। ७ ।।

आदितः स्वस्य वृत्तांतं तस्मै प्रोवाच तत्त्वतः ।।

अथ राघवसंपृष्टो वानरः को भवानिति ।। ८ ।।

सोपि विज्ञापयामास राघवाय महात्मने ।।

अहं सुग्रीवसचिवो हनूमा न्नाम वानरः ।। ९ ।।

तेन च प्रेरितोऽभ्यागां युवाभ्यां सख्यमिच्छता ।।

आगच्छतं तद्भद्रं वां सुग्रीवांतिकमाशु वै ।। 3.1.2.१० ।।

तथास्त्विवति स रामो पि तेन साकं मुनीश्वराः ।।

सुग्रीवांतिकमागप्य सख्यं चक्रेऽग्निसाक्षिकम् ।। ११ ।।

प्रतिजज्ञेऽथ रामोऽपि तस्मै वालिवधं प्रति ।।

सुग्रीवश्चापि वै देह्याः पुनरानयनं द्विजाः ।। १२ ।।

इत्येवं समयं कृत्वा विश्वास्य च परस्परम् ।।

मुदा परमया युक्तौ नरेश्वरकपीश्वरौ ।।१३।।

आसाते ब्राह्मणश्रेष्ठा ऋष्यमूकगिरौ तथा ।।

सुग्रीवप्रत्ययार्थं च दुंदुभेः कायमाशु वै।। १४ ।।

पादांगुष्ठेन चिक्षेप राघवो बहुयोजनम् ।।

सप्तताला विनिर्भिन्ना राघवेण महात्मना ।। १५ ।।

ततः प्रीतमना वीरः सुग्रीवो राममब्रवीत् ।।

इंद्रादिदेवताभ्योऽपि नास्ति राघव मे भयम्।। १६ ।।

भवान्मित्रं मया लब्धो यस्मादति पराक्रमः ।।

अहं लंकेश्वरं हत्वा भार्यामानयितास्मि ते ।। १७ ।।

ततः सुग्रीवसहितो रामचंद्रो महाबलः ।।

सलक्ष्मणो ययौ तूर्णं किष्किंधां वालिपालिताम् ।। १८ ।।

ततो जगर्ज सुग्रीवो वाल्यागमनकांक्षया ।।

अमृष्यमाणो वाली च गर्जितं स्वानुजस्य वै।। ।। १९ ।।

अंतःपुराद्विनिष्क्रम्य युयुधेऽवरजेन सः ।।

वालिमुष्टिप्रहारेण ताडितो भृशविह्वलः ।। 3.1.2.२० ।।

सुग्रीवो निर्गतस्तूर्णं यत्र रामो महाबलः ।।

ततो रामो महाबाहुस्सुग्रीवस्य शिरोधरे ।। २१ ।।

लतामाबध्य चिह्नं तु युद्धायाचोदयत्तदा ।।

गर्जितेन समाहूय सुग्रीवो वालिनं पुनः ।। २२ ।।

रामप्रेरणया तेन बाहुयुद्धमथाकरोत् ।।

ततो वालिनमाजघ्ने शरेणैकेन राघवः ।। २३ ।।

हते वालिनि सुग्रीवः किष्किंधां प्रत्यपद्यत ।।

ततो वर्षास्वतीतासु सुग्रीवो वानराधिपः ।। २४ ।।

सीतामानयितुं तूर्णं वानराणां महाचमूम् ।।

समादाय समागच्छदंतिकं नृपपुत्रयोः ।। २५ ।।

प्रस्थापयामास कपीन्सीतान्वेषणकांक्षया ।।
विदितायां तु वैदेह्या लंकायां वायुसूनुना ।। २६ ।।
दत्ते चूडामणौ चापि राघवो हर्षशोकवान्।।
सुग्रीवेणानुजेनापि वायुपुत्रेण धीमता ।। २७ ।।
तथान्यैः कपिभिश्चैव जांबवन्नलमुख्यकैः ।।
अन्वीयमानो रामोऽसौ मुहूर्तेऽभिजिति द्विजाः ।।२८।।
विलंघ्य विविधा न्देशान्महेंद्रं पर्वतं ययौ ।।
चक्रतीर्थं ततो गत्वा निवासमकरोत्तदा ।। २९ ।।
तत्रैव तु स धर्मात्मा समागच्छद्विभीषणः ।।
भ्राता वै राक्षसेंद्रस्य चतुर्भिः सचिवैः सह ।। 3.1.2.३० ।।
प्रतिजग्राह रामस्तं स्वागतेन महात्मना ।।
सुग्रीवस्य तु शंकाऽभूत्प्रणिधिः स्यादयं त्विति ।। ३१ ।।
राघवस्तस्य चेष्टाभिः सम्यक्स्वचरितैर्हितैः ।।
अदुष्टमेनं दृष्ट्वैव तत एनमपूजयत् ।। ३२ ।।
सर्वराक्षसराज्ये तमभ्यषिंचद्विभीषणम् ।।
चक्रे च मंत्रिप्रवरं सदृशं रविसूनुना ।। ३३ ।।
चक्रतीर्थं समासाद्य निवसद्रघुनंदनः ।।
चिंतयन्राघवः श्रीमान्सुग्रीवादीनभाषत ।। ३४ ।।
मध्ये वानरमु ख्यानां प्राप्तकालमिदं वचः ।।
उपायः को नु भवतामेतत्सागरलंघने ।। ३५ ।।
इयं च महती सेना सागरश्चापि दुस्तरः ।।
अंभोराशिरयं नीलश्चंचलोर्म्मिसमाकुलः ।। ३६ ।।
उद्यन्मत्स्यो महानक्रशंखशुक्तिसमाकुलः ।।
क्वचिदौर्वानलाक्रांतः फेनवानतिभीषणः ।। ।। ३७ ।।
प्रकृष्टपवनाकृष्टनीलमेघसमन्वितः ।।
प्रलयांभोधरारावः सारवाननिलोद्धतः ।। ३८ ।।
कथं सागरमक्षोभ्यं तरामो वरुणा लयम् ।।
सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ।। ३९ ।।

उपायैरधिगच्छामो यथा नदनदीपतिम् ।।

कथं तरामः सहसा ससैन्या वरुणालयम् ।। 3.1.2.४० ।।

शतयोजनमायातं मनसापि दुरासदम् ।।

अतो नु विघ्ना बहवः कथं प्राप्या च मैथिली ।। ४१ ।।

कष्टात्कष्टतरं प्राप्ता वयमद्य निराश्रयाः ।।

महाजले महावाते समुद्रे हि निराश्रये ।। ४२ ।।

उपायं कं विधास्यामस्तरणार्थं वनौकसाम् ।।

राज्याद्भ्रष्टो वनं प्राप्तो हृता सीता मृतः पिता ।। ४३ ।।

इतोऽपि दुःसहं दुःखं यत्सागरविलंघनम् ।।

धिग्धिग्गर्जितमंभोधे धिगेतां वारिराशिताम् ।। ४४ ।।

कथं तद्वचनं मिथ्या महर्षेः कुम्भजन्मनः ।।

हत्वा त्वं रावणं पापं पवित्रे गंधमादने ।।

पापोपशमनायाशु गच्छस्वेति यदीरितम् ।।४५।।

।। श्रीसूत उवाच ।। ।।

इति रामवचः श्रुत्वा सुग्रीवप्रमुखास्तदा ।। ४६ ।।

ऊचुः प्रांजलयः संर्मे राघवं तं महाबलम् ।।

नौभिरेनं तरिष्यामः प्लवैश्च विविधैरिति ।। ४७ ।।

मध्ये वानरकोटीनां तदोवाच विभीषणः ।।

समुद्रं राघवो राजा शरणं गन्तुमर्हति ।। ४८ ।।

खनितः सागरैरेष समुद्रो वरुणालयः ।।

कर्तुमर्हति रामस्य तज्ज्ञातेः कार्यमंबुधिः ।। ४९ ।।

विभीषणेनैवमुक्तो राक्षसेन विपश्चिता ।।

सांत्वयन्राघवः सर्वान्वानरानिदमब्रवीत् ।। 3.1.2.५० ।।

शतयोजन विस्तारमशक्ताः सर्ववानराः ।।

तर्तुं प्लवोडुपैरेनं समुद्रमतिभीषणम् ।। ५१ ।।

नावो न संति सेनाया बह्व्या वानरपुंगवाः ।।

वणिजामुपघातं च कथमस्मद्विधश्चरेत् ।। ५२ ।।

विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेषु वा परः ।।

प्लवोडुपप्रतारोऽतो नैवात्र मम रोचते ।। ५३ ।।

विभीषेणोक्तमे वेदं मोदते मम वानराः ।।

अहं त्विमं जलनिधिमुपास्ये मार्गसिद्धये ।। ५४ ।।

नो चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं तदा ।।

महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ।। ५५ ।।

इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ।।

प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे ।। ५६ ।।

तदा रामः कुशा स्तीर्णे तीरे नदनदीपतेः ।।

संविवेश महाबाहुर्वेद्यामिव हुताशनः ।। ५७ ।।

शेषभोगनिभं बाहुमुपधाय रघूद्वहः ।।

दक्षिणो दक्षिणं बाहुमुपास्ते मकरालयम् ।। ५८ ।।

तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ।।

नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ।। ५९ ।।

स त्रिरात्रोषितस्तत्र नयज्ञो धर्मतत्परः ।।

उपास्तेस्म तदा रामः सागरं मार्गसिद्धये ।। ३.१.२.६० ।।

न च दर्शयते मन्दस्तदा रामस्य सागरः ।।

प्रयतेनापि रामेण यथार्हमपि पूजितः ।। ६१ ।।

तथापि सागरो रामं न दर्शयति चात्मनः ।।

समुद्राय ततः क्रुद्धो रामो रक्तांतलोचनः ।। ६२ ।।

समीपवर्तिनं चेदं लक्ष्मणं प्रत्यभाषत ।।

अद्य मद्बाणनिर्भिन्नैर्मकरैर्वरुणालयम् ।। ६३ ।।

निरुद्धतोयं सौमित्रे करिष्यामि क्षणादहम् ।।

सशंखशुक्ताजालं हि समीनमकरं शनैः ।। ६४ ।।

अद्य बाणैरमोघास्त्रैर्वारिधिं परिशोषये ।।

क्षमया हि समायुक्तं मामयं मकरालयः ।। ६९ ।।

असमर्थं विजानाति धिक्क्षमामीदृशे जने ।।

न दर्शयति साम्ना मे सागरो रूपमात्मनः ।। ६६ ।।

चापमानय सौमित्रे शरांश्चाशीविषोपमान्।।

सागरं शोषयिष्यामि पद्भ्यां यांतु प्लवंगमाः ।। ६७ ।।

एनं लंघितमर्यादं सहस्रोर्मिसमाकुलम् ।।

निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ।। ६८ ।।

महार्णवं शोषयिष्ये महादानवसंकुलम् ।।

महामकरनक्राढ्यं महावीचिसमाकुलम् ।। ६९ ।।

एवमुक्त्वा धनुष्पाणिः क्रोधपर्याकुलेक्षणः ।।

रामो बभूव दुर्धर्षस्त्रिपुरघ्नो यथा शिवः ।। 3.1.2.७० ।।

आकृष्य चापं कोपेन कम्पयित्वा शरैर्जगत् ।।

मुमोच विशिखानुग्रांस्त्रिपुरेषु यथा भवः ।। ७१ ।।

दीप्ता बाणाश्च ये घोरा भासयन्तो दिशो दश ।।

प्राविशन्वारिधेस्तोयं दृप्तदानवसंकुलम् ।।७२।।

समुद्रस्तु ततो भीतो वेपमानः कृतांजलिः ।।

अनन्यशरणो विप्राः पाता लात्स्वयमुत्थितः।।७३।।

शरणं राघवं भेजे कैवल्यपदकारणम् ।।

तुष्टाव राघवं विप्रा भूत्वा शब्दैर्मनोरमैः ।। ७४ ।।

।। समुद्र उवाच।। ।।

नमामि ते राघव पादपंकजं सीतापते सौख्यद पादसेवनात् ।।

नमामि ते गौतमदारमोक्षजं श्रीपादरेणुं सुरवृन्दसेव्यम्।।७६।।

सुन्दप्रियादेहविदारिणे नमो नमोस्तु ते कौशिकयागरक्षिणे ।।

नमो महादेवशरासभेदिने नमो नमो राक्षससंघनाशिने ।। ७६ ।।

रामराम नमस्यामि भक्तानामिष्टदायिनम् ।।

अवतीर्णो रघुकुले देवकार्यचिकीर्षया ।। ७७ ।।

नारायणमनाद्यंतं मोक्षदं शिवमच्युतम् ।।

रामराम महाबाहो रक्ष मां शरणागतम् ।। ७८ ।।

कोपं संहर राजेंद्र क्षमस्व करुणालय ।।

भूमिर्वातो वियच्चापो ज्योतींषि च रघूद्वह ।। ७९ ।।

यत्स्वभावानि सृष्टानि ब्रह्मणा परमेष्ठिना ।।

वर्तंते तत्स्वभा वानि स्वभावो मे ह्यगाधता ।। 3.1.2.८० ।।

विकारस्तु भवेद्राध एतत्सत्यं वदाम्यहम् ।।
लोभात्कामाद्भयाद्वापि रागाद्वापि रघूद्वह ।। ८१ ।।
न वंशजं गुणं हातुमुत्सहेयं कथंचन ।।
तत्करिष्ये च साहाय्यं सेनायास्तरणे तव ।। ८२ ।।
इत्युक्तवन्तं जलधिं रामोऽवादीन्नदीपतिम् ।।
ससैन्योऽहं गमि ष्यामि लंकां रावणपालिताम् ।। ८३ ।।
तच्छोषमुपयाहि त्वं तरणार्थं ममाधुना ।।
इत्युक्तस्तं पुनः प्राह राघवं वरुणालयः ।। ८४ ।।
शृणुष्वाव हितो राम श्रुत्वा कर्तव्यमाचर ।।
यद्याज्ञया ते शुष्यामि ससैन्यस्य यियासतः ।।८५।।
अन्येऽप्याज्ञापयिष्यंति मामेवं धनुषो बलात् ।।
उपायमन्यं वक्ष्यामि तरणार्थं बलस्य ते ।। ८१६ ।।
अस्ति ह्यत्र नलोनाम वानरः शिल्पिसंमतः ।।
त्वष्टुः काकुत्स्थ तनयो बलवान्विश्वकर्मणः ।। ८७ ।।
स यत्काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि ।।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ।। ८८ ।।
सेतुना तेन गच्छ त्वं लंकां रावणपालि ताम् ।।
उक्त्वेत्यंतर्हिते तस्मिन्रामो नलमुवाच ह ।। ८९ ।।
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि महामते ।।
तदाऽब्रवीन्नलो वाक्यं रामं धर्मभृतां वरम् ।। 3.1.2.९० ।।
अहं सेतुं विधास्यामि ह्यगाधे वरुणालये ।।
पित्रा दत्तवरश्चाहं सामर्थ्ये चापि तत्समः ।। ९१ ।।
मातुर्मम वरो दत्तो मन्दरे विश्वक र्मणा ।।
शिल्पकर्मणि मत्तुल्यो भविता ते सुतस्त्विति ।। ९२ ।।
पुत्रोऽहमौरसस्तस्य तुल्यो वै विश्वकर्मणा ।।
अद्यैव कामं बध्नंतु सेतुं वानरपुं गवाः ।। ९३ ।।
ततो रामनिसृष्टास्ते वानरा बलवत्तराः ।।
पर्वतान्गिरिशृंगाणि लतातृणमहीरुहान् ।। ९४ ।।

समाजह्रुर्महाकाया गरुडानिलरंहसः ।।
नलश्चक्रे महासेतुंमध्ये नदनदीपतेः ।। ९५ ।।
दशयोजनविस्तीर्णं शतयोजनमायतम् ।।
जानकीरमणो रामः सेतुमेवमकारयत् ।। ९६ ।।।
नलेन वानरेन्द्रेण विश्वकर्मसुतेन वै ।।
तमेवं सेतुमासाद्य रामचन्द्रेण कारितम् ।। ९७ ।।
सर्वे पातकिनो मर्त्या मुच्यन्ते सर्वपातकैः ।।
व्रतदान तपोहोमैर्न तथा तुष्यते शिवः ।। ९८ ।।
सेतुमज्जनमात्रेण यथा तुष्यति शंकरः ।।
न तुल्यं विद्यते तेजोयथा सौरेण तेजसा ।। ९९ ।।
सेतुस्नानेन च तथा न तुल्यं विद्यते क्वचित् ।।
तत्सेतुमूलं लंकायां यत्ररामो यियासया ।। 3.1.2.१०० ।।
वानरैः सेतुमारेभे पुण्यं पाप प्रणाशनम् ।।
तद्दर्भशयनं नाम्ना पश्चाल्लोकेषु विश्रुतम् ।। १०१।।
एवमुक्तं मया विप्राः समुद्रे सेतुबंधनम् ।।
अत्र तीर्थान्यनेकानि संति पुण्यान्यनेकशः ।। १०२ ।।
न संख्यां नामधेयं वा शेषो गणयितुं क्षमः ।।
किं त्वहं प्रब्रवीम्यद्य तत्र तीर्थानि कानिचित् ।। १०३ ।।
चतुर्विंशति तीर्थानि संति सेतौ प्रधानतः।।
प्रथमं चकतीर्थं स्याद्वेतालवरदं ततः ।। १०४ ।।
ततः पापविनाशार्थं तीर्थं लोकेषु विश्रुतम् ।।
ततः सीतासरः पुण्यं ततो मंगलतीर्थकम्।। ।। १०५ ।।
ततः सकलपापघ्नी नाम्ना चामृतवापिका ।।
ब्रह्मकुण्डं ततस्तीर्थं ततः कुंडं हनूमतः ।। १०६ ।।
आगस्त्यं हि ततस्तीर्थं रामतीर्थ मतः परम् ।।
ततो लक्ष्मणतीर्थं स्याज्जटातीर्थमतः परम् ।। १०७ ।।
ततो लक्ष्म्याः परं तीर्थमग्नितीर्थमतः परम् ।।
चक्रतीर्थं ततः पुण्यं शिवतीर्थमतः परम् ।। १०८ ।।

ततः शंखाभिधं तीर्थं ततो यामुनतीर्थकम् ।।

गंगातीर्थं ततः पश्चाद्गयातीर्थमनन्तरम् ।। १०९ ।।

ततः स्यात्कोटितीर्थाख्यं साध्यानाममृतं ततः ।।

मानसाख्यं ततस्तीर्थं धनुष्कोटिस्ततः परम् ।। 3.1.2.११० ।।

प्रधानतीर्थान्येतानि महापापहराणि च ।।

कथितानि द्विजश्रेष्ठास्सेतुमध्यगतानि वै ।। १११ ।।

यथा सेतुश्च बद्धोऽभूद्रामेण जलधौ महान् ।।

कथितं तच्च विप्रेन्द्राः पुण्यं पापहारं तथा ।। ११२ ।।

यच्छ्रुत्वा च पठित्वा च मुच्यते मानवो भुवि ।। ११३ ।।

अध्यायमेनं पठते मनुष्यः शृणोति वा भक्तियुतो द्विजेंद्राः ।।

सो नंतमाप्नोति जयं परत्र पुनर्भवक्लेशमसौ न गच्छेत् ।। ११४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सेतुनिर्माणादिवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०३

https://sa.wikisource.org/s/fs2
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। ऋषय ऊचुः ।। ।।

चतुर्विंशतितीर्थानि यान्युक्तानि त्वया मुने ।।

तेषां प्रधानतीर्थानां सेतौ पापविनाशने ।। १ ।।

आदिमस्य तु तीर्थस्य चक्रतीर्थमिति प्रथा ।।

कथं समागता सूत वदास्माकं हि पृच्छताम् ।। २ ।।

।। श्रीसूत उवाच ।। ।।

चतुर्विंशतितीर्थानां प्रधानानां द्विजोत्तमाः ।।

यदुक्तमादिमं तीर्थं सर्वलोकेषु विश्रुतम् ।। ।। ३ ।।

स्मरणात्तस्य तीर्थस्य गर्भवासो न विद्यते ।।

विलयं यांति पापानि लक्षजन्मकृतान्यपि ।। ४ ।।

तस्मिंस्तीर्थे सकृत्स्नाना त्स्मरणात्कीर्तनादपि ।।

लोके ततोधिकं तीर्थं तत्तुल्यं वा द्विजोत्तमाः ।। ५ ।।

न विद्यते मुनिश्रेष्ठाः सत्यमुक्तमिदं मया ।।

गंगा सरस्वती रेवा पंपा गोदावरी नदी ।। ६ ।।

कालिंदी चैव कावेरी नर्मदा मणिकर्णिका ।।

अन्यानि यानि तीर्थानि नद्यः पुण्या महीतले ।। ।। ७ ।।

अस्य तीर्थस्य विप्रेंद्राः कोट्यंशेनापि नो समाः ।।

धर्मतीर्थमिति प्राहुस्तत्तीर्थं हि पुराविदः ।। ८ ।।

यथा समागता तस्य चक्रतीर्थमिति प्रथा ।।

तदिदानीं प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः ।। ९ ।।

सेतुमूलं हि तत्प्रोक्तं तद्दर्भशयनं मतम् ।।

तत्रैव चक्रतीर्थं तु महापातकमर्द्दनम् ।। ।।3.1.3.१०।।

पुरा हि गालवोनाम मुनिर्विष्णुपरायणः ।।

दक्षिणांभोनिधेस्तीरे हालास्यादविदूरतः ।।११।।

फुल्लग्रामसमीपे च तथा क्षीरसरोंतिके ।।

धर्म पुष्करिणीतीरे सोऽतप्यत महत्तपः ।। १२ ।।

युगानामयुतं ब्रह्म गृणन्विप्राः सनातनम्।।

दयायुक्तो निराहारः सत्यवान्विजितेंद्रियः ।।१३।।

आत्मवत्सर्वभूतानि पश्यन्विषयनिःस्पृहः ।।

सर्वभूतहितो दांतः सर्वद्वंद्वविवर्जितः ।। १४ ।।

वर्षाणि कतिचित्सोऽयं जीर्णपर्णाशनोऽभवत ।।

किंचित्कालं जलाहारो वायुभक्षः कियत्समाः ।। १५ ।।

एवं पंचसहस्राणि वर्षाणि स महामुनिः ।।

अतप्यत तपो घोरं देवैरपि सुदुष्करम् ।। १६ ।।।

ततः पंचसहस्राणि वर्षाणि मुनिपुंगवः ।।

निराहारो निरालोको निरुच्छ्वासो निरास्पदः ।। १७ ।।

वर्षास्वासारसहनं हेमंतेषु जलेशयः।।

ग्रीष्मे पंचाग्निमध्यस्थो विष्णुध्यानपरायणः।। १८ ।।

जपन्नष्टाक्षरं मंत्रं ध्यायन्हृदि जनार्दनम्।।

ततापं सुमहातेजा गालवो मुनिपुंगवः ।। १९ ।।

एवं त्वयुतव वर्षाणि स समतीतानि वै मुनेः।।

अथ तत्तपसा तुष्टो भगवान्कमलापतिः।।3.1.3.२०।।।

प्रत्यक्षतामगात्तस्य शंखचक्रगदाधरः।।

विकचांबुजपत्राक्षः सूर्यकोटिसमप्रभः।।२१।।

विनतानंदनारूढश्छत्रचामरशोभितः।।

हारकेयूरमुकुटकटकादिविभूषितः।।२२।।

6b

विष्वक्सेनसुनंदादिकिंकरैः परिवारितः ।।

वीणावेणुमृदंगादिवादकैर्नारदादिभिः ।। २३ ।।

उपगीयमानविजयः पीतांबरविराजितः ।।

लक्ष्मीविराजितोरस्को नीलमेघसमच्छविः।। ।। २४ ।।

धुनानः पद्ममेकेन पाणिना मधुसूदनः ।।

सनकादिमहायोगिसेवितः पार्श्वयोर्द्वयोः ।। २५ ।।

मंदस्मितेन सकलं मोहयन्भुवनत्रयम् ।।

स्वभासा भासयन्सर्वान्दिशो दश च भूसुराः ।। २६ ।।

कंठलग्नेन मणिना कौस्तुभेन च शोभितः ।।

सुवर्णवेत्रहस्तैश्च सौविदल्लैरनेकशः ।। ।। २७ ।।

अनन्यदुर्लभाचिंत्यगीयमाननिजाद्भुतः ।।

सुभक्तसुलभो देवो लक्ष्मीकांतो हरिः स्वयम् ।। २८ ।।

सन्न्यधत्त पुरस्तस्य गालवस्य महामुनेः ।।

आविर्भूतं तदा दृष्ट्वा श्रीवत्सांकितवक्षसम् ।। २९ ।।

पीतांबरधरं देवं तुष्टिं प्राप महामुनिः ।।

भक्त्या परमया युक्तस्तुष्टाव जगदीश्वरम्।। ।।3.1.3.३०।

।। गालव उवाच ।।

नमो देवादिदेवाय शंखचक्रगदाभृते ।।

नमो नित्याय शुद्धाय सच्चिदानंदरूपिणे ।।३१।।

नमो भक्तार्ति हंत्रे ते हव्यकव्यस्वरूपिणे।।

नमस्त्रिमूर्तये तुभ्यं सृष्टिस्थित्यंतकारिणे।।३२।।

नमः परेशाय नमो विभूम्ने नमोस्तु लक्ष्मीपतये विधात्रे।।

नमोस्तु सूर्येंदुविलोचनाय नमो विरिंच्याद्यभिवंदिताय ।।३३।।

यो नामजात्यादिविकल्पहीनः समस्तदोषैरपि वर्जितो यः ।।

समस्तसंसारभयापहारिणे तस्मै नमो दैत्यविनाशनाय ।। ३४ ।।

वेदांतवेद्याय रमेश्वराय वैकुण्ठवासाय विधातृपित्रे ।।

नमोनमः सत्यजनार्तिहारिणे नारायणायामितविक्रमाय।। ३५।।

नमस्तुभ्यं भग वते वासुदेवाय शार्ङ्गिणे ।।

भूयोभूयो नमस्तुभ्यं शेषपर्यंकशायिने ।। ३६ ।।

इति स्तुत्वा हरिं विप्रास्तूष्णीमास्ते स गालवः ।।

श्रुत्वा स्तुतिं श्रुति सुखां हरिस्तस्यमहात्मनः ।। ३७ ।।

अवाप परमं तोषं शंखचक्रगदाधरः ।।

अथालिंग्य मुनिं शौरिश्चतुर्भिर्बाहुभिस्तदा ।। ३८ ।।

बभाषे प्रीतिसं युक्तो वरो वै व्रियतामिति ।।

तुष्टोऽस्मि तपसा तेऽद्य स्तोत्रेणापि च गालव ।। ३९ ।।

नमस्कारेण च प्रीतो वरदोऽहं तवागतः ।।

।। गालव उवाच ।। ।।

नारायण रमानाथ पीतांबर जगन्मय ।। 3.1.3.४० ।।

जनार्दन जगद्धामन्गोविंद नरकांतक ।।

त्वद्दर्शनात्कृतार्थोऽस्मि सर्वस्मादधिकस्तथा ।। ४१ ।।

त्वां न पश्यंत्यधर्मिष्ठा यतस्त्वं धर्मपालकः ।।

यन्न वेत्ति भवो ब्रह्मा यन्न वेत्ति त्रयी तथा ।। ४२ ।।

तं वेद्मि परमात्मानं किमस्मा दधिकं वरम्।।

योगिनो यं न पश्यन्ति यं न पश्यंति कर्मठाः ।। ४३ ।।

तं पश्यामि परात्मानं किमस्मादधिकं वरम् ।।

एतेन च कृतार्थोऽस्मि जनार्दन जगत्पते ।। ४४ ।।

यन्नामस्मृतिमात्रेण महापातकिनोऽपिच।।

मुक्तिं प्रयांति मुनयस्तं पश्यामि जनार्दनम्।। ४५ ।।

त्वत्पादपद्मयुगले निश्चला भक्तिरस्तुमे ।।

।। हरिरुवाच ।। ।।

मयि भक्तिर्दृढा तेऽस्तु निष्कामा गालवाधुना।। ४६ ।।

7a

शृणु चाप्यपरं वाक्यमुच्यमानं मया मुने ।।

मदर्थं कर्म कुर्वाणो मद्ध्यानो मत्परायणः ।।४७।।

एतत्प्रारब्धदेहांते मत्स्वरूपमवाप्स्यसि ।।

अस्मिन्नेवाश्रमे वासं कुरुष्व मुनिपुंगव ।।४८।।

धर्मपुष्करिणी चेयं पुण्या पापविनाशिनी ।।

अस्यास्तीरे तपः कुर्वंस्तपःसिद्धिमवाप्नुयात् ।। ४९ ।।

धर्मः पुरा समागत्य दक्षिणस्योदधेस्तटे ।।

तपस्तेपे महादेवं चिंतयन्मनसा तदा ।। 3.1.3.५० ।।

स्नानार्थमेकं तीर्थं च चक्रे धर्मो महामुने ।।

धर्मपुष्करिणी तेन प्रसिद्धा तत्कृता यतः ।। ५१ ।।

त्वया यथा तपस्तप्तमिदानीं मुनिसत्तम ।।

तथा तप्तं तपस्तेन धर्मेण हरसेविना ।। ५२ ।।

तपसा तस्य तुष्टः सञ्छूलपाणिर्महेश्वरः ।।

प्रादुरासीस्त्वया दीप्त्या दिशोदशविभासयन् ।। ५३ ।।

अथाश्रममनुप्राप्तं महादेवं कृपानिधिम् ।।

धर्मः परमसन्तुष्टस्तुष्टाव परमेश्वरम्।। ५४ ।।

।। धर्म उवाच ।। ।।

प्रणमामि जगन्नाथमीशानं प्रणवात्मकम् ।।

समस्तदेवतारूपमादिमध्यांतवर्जितम् ।। ५५ ।।

ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं नमाम्य हम् ।।

समस्तजगदाधारमनन्तमजमव्ययम् ।।५६।।

यमामनन्ति योगीन्द्रास्तं वन्दे पुष्टिवर्धनम् ।।

नमो लोकाधिनाथाय वंचते परिवंचते ।।५७ ।।

नमोऽस्तु नीलकण्ठाय पशूनां पतये नमः ।।

नमः कल्मषनाशाय नमो मीढुष्टमाय च ।। ५८ ।।

नमो रुद्राय देवाय कद्रुद्राय प्रचेतसे ।।

नमः पिनाकहस्ताय शूलहस्ताय ते नमः ।। ५९ ।।

नमश्चैतन्यरूपाय पुष्टीनां पतये नमः ।।

नमः पंचास्यदेवाय क्षेत्राणां पतये नमः ।। 3.1.3.६० ।।

इति स्तुतो महादेवः शंकरोलोकशंकरः ।।

धर्मस्य परमां तुष्टिमापन्नस्तमुवाच वै ।। ६१ ।।

।। महेश्वर उवाच ।। ।।

प्रीतोस्म्यनेन स्तोत्रेण तव धर्म महामते ।।

वरं मत्तो वृणीष्व त्वं मा विलंबं कुरुष्व वै ।। ६२ ।।

ईश्वरेणैवमुक्तस्तु धर्मो देवमथाब्रवीत् ।।

वाहनं ते भविष्यामि सदाहं पार्वतीपते ।।। ।। ६३ ।।

अयमेव वरो मह्यं दातव्यस्त्रिपुरांतक ।।

तवोद्वहनमात्रेण कृतार्थोऽहं भवामि भोः ।। ६४ ।।

इत्थं धर्मेण कथितो देवो धर्ममथाब्रवीत् ।।

।। ईश्वर उवाच ।। ।।

वाहनं भव मे धर्म सर्वदा लोकपूजितः ।। ६५ ।।

मम चोद्वहने शक्तिरमोघा ते भविष्यति ।।

त्वत्सेविनां सदा भक्तिर्मयि स्यान्नात्र संशयः ।। ६६ ।।

इत्युक्ते शंकरेणाथ धर्मोपि वृषरूपधृक् ।।

उवाह परमेशानं तदाप्रभृति गालव ।। ६७ ।।

महादेवस्तमारुह्य धर्मं वै वृषरूपिणम् ।।

शोभमानो भृशं धर्ममुवाच परमामृतम् ।।६८ ।।

।। ईश्वर उवाच ।।

त्वया कृतं हि यत्तीर्थं दक्षिणस्योदधेस्तटे ।।

धर्मपुष्करिणीत्येषा लोके ख्याता भविष्यति ।।६९।।

अस्यास्तीरे जपोहोमो दानं स्वाध्याय एव च ।।

7b

अन्ये च धर्मनिवहाः क्रियमाणा नरैर्मुदा ।। 3.1.3.७।।।

अनंतफलदा ज्ञेया नात्र कार्या विचारणा ।।

इति दत्त्वा वरं तस्मै धर्मतीर्थाय शंकरः ।। ७१ ।।

आरुह्य वृषभं धर्मं कैलासं पर्वतं ययौ ।।

धर्मपुष्करिणीतीरे गालव त्वमतोधुना ।। ७२ ।।

शरीरपातपर्यंतं तपः कुर्वन्समाहितः ।।

वस त्वं मुनि शार्दूल पश्चान्मामाप्स्यसे ध्रुवम् ।। ७३ ।।

यदा ते जायते भीतिस्तदा तां नाशयाम्यहम् ।।

ममायुधेन चक्रेण प्रेरितेन मया क्षणात् ।।७४।।

इत्युक्त्वा भगवान्विष्णुस्तत्रैवांतरधीयत ।।

।। श्रीसूत उवाच ।। ।।

तस्मिन्नंतर्हिते विष्णौ गालवो मुनिपुंगवः ।।७५।।

धर्मपुष्करिणीतीरे विष्णुध्यानपरायणः ।।

त्रिकालमर्चयन्विष्णुं शालग्रामे विमुक्तिदे ।। ७६ ।।

उवास मतिमान्धीरो विरक्तो विजितेंद्रियः ।।

कदाचिन्माघमासे तु शुक्लपक्षे हरेर्दिने ।। ७७ ।।

उपोष्य जागरं कृत्वा रात्रौ विष्णुमपूजयत् ।।

स्नात्वा परेद्युर्द्वादश्यां धर्मपुष्करिणीजले ।। ७८ ।।

संध्यावन्दनपूर्वाणि नित्यकर्माणि चाकरोत् ।।।

ततः पूजां विधातुं स हरेः समुपचक्रमे ।। ७९ ।।

तुलस्यादीनि पुष्पाणि समाहृत्य च गालवः ।।

विधाय पूजां कृष्णस्य स्तोत्रमेतदुदैरयत् ।। ३.१.३.८० ।।

।। गालव उवाच ।। ।।

सहस्रशिरसं विष्णुं मत्स्यरूपधरं हरिम् ।।

नमस्यामि हृषीकेशं कूर्मवाराहरूपिणम् ।। ८१ ।।

नारसिंहं वामनाख्यं जाम दग्न्यं च राघवम् ।।

बलभद्रं च कृष्णं च कल्किं विष्णुं नमाम्यहम् ।। ८२ ।।

वासुदेवमनाधारं प्रणतार्तिविनाशनम् ।।

आधारं सर्वभूतानां प्रणमामि जनार्दनम् ।। ८३ ।।

सर्वज्ञं सर्वकर्तारं सच्चिदानंदविग्रहम् ।।

अप्रतर्क्यमनिर्देश्यं प्रणतोऽस्मि जनार्दनम् ।। ८४ ।।

एवं स्तुवन्महा योगी गालवो मुनिपुंगवः ।।

धर्मपुष्करिणीतीरे तस्थौ ध्यानपरायणः ।। ८५ ।।

एतस्मिन्नंतरे कश्चिद्राक्षसो गालवं मुनिम् ।।

आययौ भक्षितुं घोरः क्षुधया पीडितो भृशम् ।। ८६ ।।

गालवं तरसा सोऽयं राक्षसो जगृहे तदा ।।

गृहीतस्तरसा तेन गालवो नैऋतेन सः ।। ८७ ।।

प्रचुक्रोश दयां भोधिमापन्नानां परायणम् ।।

नारायणं चक्रपाणिं रक्षरक्षेति वै मुहुः ।। ८८ ।।

परेश परमानंद शरणागतपालक ।।

त्राहि मां करुणासिंधो रक्षोवशे मुपागतम् ।। ८९ ।।

लक्ष्मीकांत हरे विष्णो वैकुंठ गरुडध्वज ।।

मां रक्ष रक्षसाक्रांतं ग्राहाक्रांतं गजं यथा ।। 3.1.3.९० ।।

दामोदर जगन्नाथ हिरण्यासुर मर्द्दन ।।

प्रह्लादमिव मां रक्ष राक्षसेनातिपीडितम् ।। ९१ ।।

इत्येवं स्तुवतस्तस्य गालवस्य द्विजोत्तमाः ।।

स्वभक्तस्य भयं ज्ञात्वा चक्रपाणिवृषा कपिः ।। ९२ ।।

स्वचक्रं प्रेषयामास भक्तरक्षणकारणात् ।।

प्रेरितं विष्णुचक्रं तद्विष्णुना प्रभविष्णुना ।। ९३ ।।

आजगामाथ वेगेन धर्मपुष्करिणी तटम् ।।

अनंतादित्यसंकाशमनंताग्निसमप्रभम् ।। ९४ ।।

महाज्वालं महानादं महासुरविमर्दनम् ।।

दृष्ट्वा सुदर्शनं विष्णो राक्षसोऽथ प्रदुद्रुवे ।। ।। ९५ ।।

द्रवमाणस्य तस्याशु राक्षसस्य सुदर्शनम्।।

शिरश्चकर्त सहसा ज्वालामालादुरासदम् ।। ९६ ।।

8a

ततस्तु गालवो दृष्ट्वा राक्षसं पतितं भुवि ।।

मुदा परमया युक्तस्तुष्टाव च सुदर्शनम् ।। ९७ ।।

।। गालव उवाच ।। ।।

विष्णुचक्रं नमस्तेस्तु विश्वरक्षणदीक्षित ।।

नारायणकरांभोजभूषणाय नमोऽस्तु ते ।। ९८ ।।

युद्धेष्वसुरसंहारकुशलाय महारव ।।

सुदर्शन नमस्तुभ्यं भक्तानामार्तिनाशिने ।। ९९ ।।

रक्ष मां भयसंविग्नं सर्वस्मादपि कल्मषात् ।।

स्वामिन्सुदर्शन विभो धर्मतीर्थे सदा भवान् ।। 3.1.3.१०० ।।

संनिधेहि हिताय त्वं जगतो मुक्तिकांक्षिणः ।।

गालवेनैवमुक्तं तद्विष्णुचक्रं मुनीश्वराः ।।

तं प्राह गालवमुनिं प्रीणयन्निव सौहृदात् ।। १०१ ।।

।। सुदर्शन उवाच ।। ।।

गालवैतन्महापुण्यं धर्मतोर्थमनुत्तमम् ।। १०२ ।।

अस्मिन्वसामि सततं लोकानां हितकाम्यया।।

त्वत्पीडां परिचिंत्याह राक्षसेन दुरात्मना ।।१०३।।

प्रेरितो विष्णुना विप्र त्वरया समुपागतः।।

त्वत्पीडकोथ निहतो मयायं राक्षसाधमः ।।१०४।।

मोचितस्त्वं भयादस्मात्त्वं हि भक्तो हरेः सदा ।।

पुष्करिण्यामहं त्वस्यां धर्मस्य मुनिपुंगव ।।१०५।।

सततं लोकरक्षार्थं संनिधानं करोमि वै ।।

अस्यां मत्संनिधानात्ते तथान्येषामपि द्विज ।।१०६।।

इतः परं न पीडा स्याद्भूतराक्षससंभवा ।।

धर्मपुष्करिणी ह्येषा सर्वपापविनाशिनी ।। १०७ ।।

देवीपट्टणपर्यंता कृता धर्मेण वै पुरा ।।

अत्र सर्वत्र वत्स्यामि सर्वदा मुनिपुंगव ।। १०८ ।।

अस्या मत्संनिधा नात्स्याच्चक्रतीर्थमिति प्रथा।।

स्नानं येऽत्र प्रकुर्वंति चक्रतीर्थे विमुक्तिदे ।। १०९. ।।

तेषां पुत्राश्च पौत्राश्च वंशजाः सर्व एव हि ।।

विधूतपापा यास्यंति तद्विष्णोः परमं पदम् ।। 3.1.3.११० ।।

पितॄनुद्दिश्य पिंडानां दातारो येऽत्र गालव ।।

स्वर्गं प्रयांति ते सर्वे पितरश्चापि तर्प्पिताः ।। १११ ।।

इत्युक्त्वा विष्णुचक्रं तद्गालवस्यापि पश्यतः।।

अन्येषामपि विप्राणां पश्यतां सहसा द्विजाः ।। ११२ ।।

धर्मापुष्कारिणीं तां तु प्राविशत्पापनाशिनीम् ।।

श्रीसूत उवाच।।

धर्मतीर्थस्य विप्रंद्राश्चक्रतीर्थमिति प्रथा।।११३।।

प्राप्ता यथा तत्कथितं युष्माकं हि मया मुदा।।

चक्रतीर्थसमं तीर्थं न भूतं न भविष्यति।।११४।।

अत्र स्नाता नरा विप्रा मोक्षभाजो न संशयः।।

कीर्तयेदिममध्यायं शृणुयाद्वा समाहितः।।

चक्र तीर्थाभिषेकस्य प्राप्नोति फलमुत्तमम् ।।

इह लोके सुखं प्राप्य परत्रापिसुखं लभेत् ।। ११६ ।।

यो धर्मतीर्थं च तथैव गालवं कुर्वाणगत्युग्रसमाधियो गम् ।।

सुदर्शनं राक्षसनाशनं च स्मरेत्सकृद्वा न स पापभाग्जनः ।। ११७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे. सेतुमाहात्म्ये गालवाख्याने धर्मतीर्थस्य चक्रतीर्थप्रथावर्णनंनाम तृतीयो ऽध्यायः ।। ३ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०४



।। ऋषय ऊचुः ।। ।।

भगवन्राक्षसः कोऽसौ सूत पौराणिकोत्तम।।

विष्णुभक्तं महात्मानं यो गालवमबाधत।।१।।

श्रीसूत उवाच।।

वक्ष्यामि राक्षसं क्रूरं तं विप्राः शृणुतादरात् ।।

यथा स राक्षसो जातो मुनीनां शापवैभवात् ।। २ ।।

पुरा कैलासशिखरे हालास्ये शिवमंदिरे ।।

चतुर्विंशतिसाहस्रा मुनयो ब्रह्मवादिनः ।। ३ ।।

वसिष्ठात्रिमुखाः सर्वे शिवभक्ता महौजसः ।।

भस्मोद्धूलितसर्वांगास्त्रिपुंड्रांकितमस्तकाः ।। ४ ।।

रुद्राक्ष मालाभरणाः पंचाक्षरजपे रताः ।।

हालास्यनाथं भूतेशं चंद्रचूडमुमापतिम् ।। ५ ।।

उपासांचक्रिरे मुक्त्यै मधुरापुरवासिनः ।।

कदाचित्तत्र गंधर्वो विश्वावसुसुतो बली ।। ६ ।।

दुर्द्दमोनाम विप्रेंद्रा विटगोष्ठीपरायणः ।।

ललनाशतसंयुक्तो विवस्त्रः सलिलाशये ।। ७ ।।

चिक्रीड स विवस्त्राभिः साकं युवतिभिर्मुदा ।।

हालास्यनाथतीर्थं तद्वसिष्ठो मुनिभिः सह ।। ८ ।।

माध्यंदिनं कर्तुमना ययौ शंकरमंदिरात् ।।

तानृषीनवलोक्याथ रामास्ता भयकातराः ।। ९ ।।

वासांस्याच्छादयामासुर्दुर्द्दमो न तु साहसी ।।

ततो वसिष्ठः कुपितः शशापैनं गत त्रपम् ।। 3.1.4.१० ।।

।। वसिष्ठ उवाच ।। ।।

यस्माद्दुर्दम गंधर्व दृष्ट्वास्माँल्लज्जया त्वया ।।

वासो नाच्छादितं शीघ्रं याहि राक्षसतां ततः ।। ११ ।।

इत्युक्त्वा ता स्त्रियः प्राह वसिष्ठो मुनिपुंगवः ।।

यस्मादाच्छादितं वस्त्रं दृष्ट्वास्माँल्ललनोत्तमाः ।। १२ ।।

ततो न युष्मान्छपिष्यामि गन्छध्वं त्रिदिवं ततः ।।

एवमुक्ता वसिष्ठेन रामाः प्रांजलयस्तदा ।। १३ ।।

प्रणिपत्य वसिष्ठं तं भक्तिनम्रेण चेतसा ।।

मुनिमंडलमध्ये तं वसिष्ठमिदमब्रुवन् ।। १४।। ।।

।। रामा ऊचुः ।। ।।

भगवन्सर्वधर्मज्ञ चतुराननानंदन ।।

दयासिंधोऽवलोक्यास्मान्न कोपं कर्तुमर्हसि ।। १५ ।।

पतिरेवहि नारीणां भूषणं परमुच्यते ।।

पतिहीना तु या नारी शतपुत्रापि सा मुने ।।१६।।

विधवेत्युच्यते लोके तत्स्त्रीणां मरणं स्मृतम् ।।

तत्प्रसादं कुरु मुने पत्यावस्माक मादरात् ।। १७ ।।

एकोऽपराधः क्षंतव्यो मुनिभिस्तत्त्वदर्शिभिः ।।

क्षमां कुरु दयासिंधो युष्मच्छिष्येऽत्र दुर्दमे ।। १९ ।।

वसिष्ठः प्रार्थितस्त्वैवं दुर्दम स्यांगनाजनैः ।।

प्रोवाच वचनं भूयः प्रसन्नः स द्विजोत्तमाः ।। १९ ।।

न मे स्याद्वचनं मिथ्या कदाचिदपि सुभ्रुवः ।।

उपायं वः प्रवक्ष्यामि शृणुध्वं श्रद्धया सह ।। 3.1.4.२० ।।

षोडशाब्दावधिः शापो भर्तुर्वो भविता ध्रुवम् ।।

षोडशाब्दावधौ चैष दुर्दमो राक्षसाकृतिः ।। २१ ।।

यदृच्छयाचक्र तीर्थं गमिष्यति सुरांगनाः ।।

आस्ते तत्र महायोगी गालवो विष्णुतत्परः ।।२२।।

भक्ष्यार्थं तं मुनिं सोऽयं राक्षसोभिगमिष्यति ।।

ततो गालवरक्षार्थं प्रेरितं चक्रमुत्तमम्।।२३।।

विष्णुनास्य शिरो रामा हरिष्यति न संशयः।।

ततः स्वरूपमासाद्य शापान्मुक्तः सुदुर्दमः ।।२४।।

पतिर्वस्त्रिदिवं भूयो गंतास्त्यत्र न संशयः ।।
ततस्त्रिदिवमासाद्य दुर्द्दमोऽयं पतिर्हि वः ।। २५ ।।
रमयिष्यति सुन्दर्यो युष्मान्सुन्दरवेषभृत् ।।
।। श्रीसूत उवाच ।। ।।
इत्युक्त्वा तु वसिष्ठस्ता दुर्दमस्य वरांगनाः ।। २६ ।।
स्वाश्रमं प्रययौ तूर्णं हालास्येश्वरभक्तिमान् ।।
अथ रामास्तमालिंग्य दुर्द्दमं पतिमातुराः ।। २७ ।।
रुरुदुः शोकसंविग्ना दुःखसागरमध्यगाः ।। प्र
पश्यंतीषु तास्वेव दुर्दमो राक्षसोऽभवत् ।। २८ ।।
महादंष्ट्रो महाकायो रक्तश्मश्रुशिरोरुहः ।।
तं दृष्ट्वा भयसंविग्ना जग्मू रामास्त्रिविष्टपम् ।। २९ ।।
ततो राक्षसवेषोऽयं दुर्दमो भैरवाकृतिः ।।
भक्षयन्प्राणिनः सर्वान्देशाद्देशं वनाद्वनम्।। 3.1.4.३० ।।
भ्रमन्न निलवेगोऽसौ धर्मतीर्थं ततो ययौ ।।
एवं षोडशवर्षाणि भ्रमतोऽस्य ययुस्तदा ।। ३१ ।।
ततस्तु षोडशाब्दांते राक्षसोयं मुनीश्वराः ।।
भक्षितुं गालवमुनिं धर्मतीर्थनिवासिनम् ।। ३२ ।।
उपाद्रवद्वायुवेगः सचास्तौषीज्जनार्दनम् ।।
गालवेन स्तुतो विष्णुस्तदा चक्रमचोदयत् ।। ३३ ।।
रक्षितुं गाल वमुनिं राक्षसेन प्रपीडितम् ।।
अथागत्य हरेश्चक्रं राक्षसस्य शिरोऽहरत् ।। ३४ ।।
ततोऽयं राक्षसं देहं त्यक्त्वा दिव्यकलेवरः ।।
विमानवरमारुह्य दुर्दमः पुष्पवर्षितः ।। ३५ ।।
प्रांजलिः प्रणतो भूत्वा ववन्दे तं सुदर्शनम् ।।
तुष्टाव श्रुतिरम्याभिर्वाग्भिरग्र्याभिरादरात् ।। ३६ ।।
।। दुर्दम उवाच ।।।
सुदर्शन नमस्तेऽस्तु विष्णुहस्तैकभूषण ।।
नमस्तेऽसुरसंहर्त्रे सहस्रादित्यतेजसे ।। ३७ ।।

कृपालेशेन भवतस्त्यक्त्वाहं राक्षसीं तनुम् ।।

स्वरूपमभजं विष्णोश्चक्रायुध नमोऽस्तु ते ।। ३८ ।।

अनुजानीहि मां गन्तुं त्रिदिवं विष्णुवल्लभ ।।

भार्या मे परिशोचंति विरहातुरचेतसः ।। ३९ ।।

त्वन्मनस्को भविष्यामि यावज्जीवं यथाह्यहम् ।।

तथा कृपां कुरुष्व त्वं मयि चक्र नमोऽस्तु ते ।। 3.1.4.४० ।।

एवं स्तुतं विष्णुचक्रं दुर्दमेन सभक्तिकम् ।।

अनुजग्राह सहसा तथास्त्विति मुनीश्वराः ।। ४१ ।।

चक्रायुधाभ्यनुज्ञातो दुर्दमो गालवं मुनिम् ।।

प्रणम्य तेनानुज्ञातो गन्धर्वस्त्रिदिवं ययौ ।। ४२ ।।।

दुर्दमे तु गते स्वर्गं गालवो मुनिपुंगवः ।।

स चक्रं प्रार्थयामास विष्ण्वायुधमनुत्तमम् ।। ४३ ।।

चक्रायुध नमामि त्वां महासुरविमर्द्दन ।।

देवीपट्टण पर्यंते धर्मतीर्थे ह्यनुत्तमे ।। ४४ ।।

सन्निधानं कुरुष्व त्वं सर्वपापविनाशनम् ।।

त्वत्सन्निधानात्सर्वेषां स्नातानां पापिनामिह ।। ४५ ।।

पापनाशं कुरुष्व त्वं मोक्षं च कुरु शाश्वतम् ।।

चक्रतीर्थमिति ख्यातिं लोकस्य परिकल्पय ।। ४६ ।।

त्वत्सन्निधानादत्रत्यमुनीनां भयनाशनम् ।।

इतः परं भवत्वार्य चक्रायुध नमोऽस्तु ते ।। ४७ ।।

भूतप्रेतपिशाचेभ्यो भयं मा भवतु प्रभो ।।

इति संप्रार्थितं चक्रं गालवेन मुनीश्वराः ।। ४८ ।।

तथैवा स्त्विति सम्भाष्य तस्मिंस्तीर्थे तिरोहितम् ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितो विप्रा राक्षसस्स भवो मया ।। ४९ ।।

माहात्म्यं चक्र तीर्थस्य कथितं च मलापहम्।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ।। 3.1.4.५० ।।

।। ऋषय ऊचुः ।। ।।

व्यासशिष्य महाप्राज्ञ सूत पौराणिकोत्तम ।।

आरभ्य दर्भशयनमादेवीपत्तनावधि ।। ५१ ।।

बहुव्यायामसंयुक्तं चक्रतीर्थमनुत्तमम् ।।

ययौ विच्छिन्नतां मध्ये कथं कथय सांप्रतम् ।। ।। ५२ ।।

एनं मनसि तिष्ठन्तं संशयं छेत्तुमर्हसि ।।

।। श्रीसूत उवाच ।। ।।

पुरा हि पर्वताः सर्वे जातपक्षा मनोजवाः ।। ५३ ।।

पर्यंतपर्वतै सार्द्धं चेरुराकाशमार्गगाः ।।

नगरेषु च राष्ट्रेषु ग्रामेषु च वनेषु च ।। ५४ ।।

आप्लुत्याप्लुत्य तिष्ठंति पर्वताः सर्वतो भुवि ।।

आक्रम्याक्रम्य तिष्ठंति यत्रयत्र महीधराः ।। ५५ ।।

तत्रतत्र नरा गावस्तथान्ये प्राणिसंचयाः ।।

मरणं सहसा प्रापुः पीड्यमाना महीधरैः ।। ५६ ।।

ब्राह्मणादिषु वर्णेषु नष्टेषु समनन्तरम् ।।

यज्ञाद्यभावात्सहसा देवता व्यसनं ययुः ।। ५७ ।।

तत इन्द्रो महाक्रुद्धो वज्रमादाय वेगवान् ।।

चिच्छेद सहसा पक्षान्पर्वतानां तरस्विनाम् ।। ५८ ।।

छिद्यमानच्छदाः सर्वे वासवेन महीधराः ।।

अनन्यशरणा भूत्वा समुद्रं प्राविशन्भयात् ।। ५९ ।।

अचलेषु च सर्वेषु पतत्सु लवणार्णवे ।।

निपेतुरर्णवभ्रांत्या चक्रतीर्थेपि केचन ।। 3.1.4.६० ।।

पतितैः पर्वतैस्तैस्तु मध्यतः पूरितोदरम् ।।

चक्रतीर्थं महापुण्यं मध्ये विच्छेदमाययौ ।। ६१ ।।

यदृच्छया महाशैलाः पार्श्वयोस्तत्र नापतन् ।।

अतो वै दर्भशयने तथा देवीपुरेऽपि च ।। ६२ ।।

विच्छिन्नमध्यं तद्द्वेधा विभक्तमिव दृश्यते ।।

मध्यतः पतितैः शैलैश्चक्रतीर्थं स्थलीकृतम् ।।६३।।

।। श्रीसूत उवाच ।। ।।

युष्माकमेवं कथितं मुनीन्द्रा यन्मध्यतस्तीर्थमिदं स्थली कृतम् ।।

यथा महीध्राः सहसा बिडौजसा विच्छिन्नपक्षा इह पेतुरुन्नताः ।। ६४ ।। ।।

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये दुर्दमगंधर्वशापमोचनंनाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०५

https://sa.wikisource.org/s/fs4
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

प्रस्तुत्य चक्रतीर्थं तु पुण्यं पापविनाशनम् ।।

पुनरप्यद्भुतं किञ्चित्प्रब्रवीमि मुनीश्वराः ।। १ ।।

विधूमनामा हि वसुर्देवस्त्री चाप्यलंबुषा ।।

ब्रह्मशापान्महाघोरात्पुरा प्राप्तौ मनुष्यताम्।। ।। २ ।।

चक्रतीर्थे महापुण्ये स्नात्वा शापाद्विमोचितौ ।।

।। ऋषय ऊचुः ।। ।।

सूतसूत महाप्राज्ञ पुराणार्थविशारद।। ३ ।।

प्राज्ञत्वाद्व्यासशिष्य त्वादज्ञातं ते न किंचन ।।

ब्रह्मा केनापराधेन सहालंबुसया वसुम् ।। ४ ।।

पुरा विधूमनामानं शप्तवांश्चतुराननः ।।

ब्रह्मशापेन घोरेण कयोस्तौ पुत्रतां गतौ ।। ५ ।।

शापस्यान्तः कथमभूद्ब्रह्मणा शप्तयोस्तयोः ।।

एतन्नः श्रद्दधानानां विस्तराद्वक्तुमर्हसि ।। ६ ।।

।। श्रीसूत उवाच ।। ।।

पुरा हि भगवान्ब्रह्मा स्वयम्भूश्चतुराननः ।।

सावित्र्या च सरस्वत्या पार्श्वयोः प्रविराजितः ।। ७ ।।

सनातनेन मुनिना सनकेन च धीमता ।।

सनत्कुमारनाम्ना च नारदेन महात्मना ।। ८ ।।

सनन्दनादिभिश्चान्यैः सेव्यमानो मुनीश्वरैः ।।

सुपर्ववृन्दजुष्टेन स्तूयमानो बिडौजसा ।। ९ ।।

आदित्यादि ग्रहैश्चैव स्तूयमानपदांबुजः ।।

सिद्धैः साध्यैर्मरुद्भिश्च किंनरैश्च समावृतः ।। 3.1.5.१० ।।

गणैः किंपुरुषाणां च वसुभिश्चाष्टभिर्वृतः ।।

उर्वशीप्रमुखानां च स्वर्वेश्यानां मनोरमम् ।। ११ ।।

नृत्यं वादित्रसहितं वीक्ष्यमाणो मुहुर्मुहुः ।।

गोष्ठीं चक्रे सभामध्ये सत्यलोके कदाचन ।। १२ ।।

मेघगर्जितगम्भीरो जनानां नंदयन्मुहुः ।।

वीणावेणुमृदंगानां ध्वनिस्तत्र व्यसर्पत ।। १३ ।।

गंगातरंगमालानां शीकरस्पर्शशीतलः ।।

पवमानः सुखस्पर्शो मन्दं मन्दं ववौ तदा ।। १४ ।।

पर्यायेण तदा सर्वा ननृतुर्देवयोषितः ।।

नृत्यश्रमेण खिन्नासु वेश्यास्वन्यासु सादरम् ।। १५ ।।

अलंबुसा देवनारी रूपयौ वनशालिनी ।।

मदयन्ती जनान्सर्वान्सभामध्ये ननर्त वै ।। १६ ।।

तस्मिन्नवसरे तस्या नृत्यंत्याः संसदि द्विजाः ।।

वस्त्रमाभ्यंतरं वायुर्लीलया समुदक्षिपत् ।। १७ ।।

तत्क्षिप्ते वसने स्पष्टमूरुमूलमदृश्यत ।।

तथाभूतां तु तां दृष्ट्वा सर्वे ब्रह्मादयो ह्रिया ।। १९ ।।

सभामध्ये समासीना निमीलित दृशोऽभवन् ।।

विधूमनामा तु वसुः कामबाणप्रपीडितः ।। १९ ।।

तामेव ब्रह्मभवने दृष्ट्वानिलहृतांशुकाम् ।।

हर्षसंफुल्लनयनो हृष्टरोमा ततोऽभवत् ।। 3.1.5.२० ।।

अलंबुसायां तस्यां तु जातकामं विलोक्य तम् ।।

वसुं विधूमनामानं शशाप चतुराननः ।। २१ ।।

यस्मात्त्वमीदृशं कार्यं विधूम कृतवानसि ।।

तस्माद्धि मर्त्यलोके त्वं मानुषत्वमवाप्स्यसि ।। २२ ।।

इयं च देवयोषित्ते तत्र भार्या भविष्यति ।।

एवं स ब्रह्मणा शप्तो विधूमः खिन्नमानसः ।। २३ ।।

प्रसादयामास वसुर्ब्रह्माणं प्रणिपत्य तु ।।

।। विधूम उवाच ।। ।।

अस्य शापस्य घोरस्य भगवन्भक्तवत्सल ।। २४ ।।

नाहमर्होऽस्मि देवेश रक्ष मां करुणानिधे ।।

एवं प्रसादितस्तेन भारतीपतिरव्ययः ।। २५ ।।

कृपया परया युक्तो विधूमं प्राह सांत्वयन् ।।

।। ब्रह्मोवाच ।। ।।

त्वयि शापोऽप्ययं दत्तो न चासत्यं ब्रवीम्यहम् ।। २६ ।।

ततोऽवधिं कल्पयामि शापस्यास्य तवाधुना ।।

मर्त्यभावं समापन्नः सहालंबुसयाऽनया ।। २७ ।।

तत्र भूत्वा महाराजः शासयित्वा चिरं महीम् ।।

पुत्रमप्रतिमं त्वस्यां जनयित्वा महीपतिम् ।। २८ ।।

अभिषिच्य च राज्ये तं राज्यरक्षाविचक्षणम् ।।

एतच्छापस्य शांत्यर्थं दक्षिणस्योदधेस्तटे ।।

फुल्लग्रामसमीपस्थे चक्रतीर्थे महत्तरे ।। २९ ।।

अनया भार्यया सार्द्धं यदा स्नानं करिष्यसि ।।

तदा त्वं मानुषं भावं जीर्णत्वचमिवोरगः ।। 3.1.5.३० ।।

विसृज्य भार्यया सार्द्धं स्वं लोकं प्रतिपत्स्यसे ।।

चक्रतीर्थे विना स्नानं न नश्येच्छाप ईदृशः।।३१।।

इति ब्रह्मवचः श्रुत्वा विधूमो नातिहृष्टवान् ।।

स्ववेश्म प्राविशत्तूर्णमामंत्र्य चतुराननम्।।३२।।

चिंतयामास तत्रासौ मर्त्यतां यास्यतो मम।।

को वा पिता भवेद्भूमौ का वा माता भविष्यति।।३३।।

बहुधेत्थं समालोच्य विधूमो निश्चिकाय सः।।

कौशांबीनगरे राजा शतानीक इति श्रुतः ।।३४।।

अस्ति वीरो महाभागो भार्या चापि पतिव्रता ।।

तस्य विष्णुमतीनाम विष्णोः श्रीरिव वल्लभा ।।३५।।

तमेव पितरं कृत्वा मातरं च विधाय ताम् ।।

संभविष्यामि भूलोके स्वकर्मपरिपाकतः ।।३६।।

ततः स माल्यवन्तं च पुष्पदंतं बलोत्कटम्।।

त्रीनाहूयात्मनो भृत्यान्वृत्तमेतन्न्यवे दयत् ।। ३७ ।।

भृत्याः शृणुत भद्रं वो ब्रह्मशापान्महाभयात् ।।
जनिष्यामि शतानीकाद्विष्णुमत्यामहं सुतः ।। ३८ ।।
इति श्रुत्वा वचो भृत्यास्तस्या प्राणा बहिश्चराः ।।
वाष्पपूर्णमुखाः सर्वे विधूमं वाक्यमब्रुवन् ।।३९ ।।
।। भृत्या ऊचुः ।। ।।
त्वद्वियोगं वयं सर्वे त्रयोऽपि न सहामहे ।।
तस्मान्मानुष भावत्वमस्माभिः सह यास्यसि ।। 3.1.5.४० ।।
शतानीकस्य राजर्षेर्मंत्री योऽयं युगन्धरः ।।
सेनानीर्विप्रतीकश्च योऽयं प्राग्रसरो रणे ।।४१।।
नर्मकर्मसु हृद्विप्रो वल्लभाख्यो महांश्च यः ।।
तेषां पुत्रास्त्रयोऽप्येते भविष्यामो न संशयः ।। ४२ ।।
शतानीकस्य राजर्षेः पुत्रभावं गतस्य ते ।।
शुश्रूषां संविधास्यामस्तेषु तेषु च कर्मसु ।।
तानेवंवादिनः सोऽयं विधूमो वाक्यमब्रवीत् ।। ४३ ।।
।। विधूम उवाच ।। ।।
जानेऽहं भवतां स्नेहं तादृशं मय्य नुत्तमम् ।। ४४ ।।
तथापि कथयाम्यद्य तच्छृणुध्वं हितं वचः ।।
ब्रह्मशापेन घोरेण स्वेन दुष्कर्मणा कृतम्।। ४५ ।।
कुत्सितं मानुषं भावमहमेकोऽनुवर्तये ।।
विहितं न हि युष्माकमेतच्छापानुवर्तनम् ।। ४६ ।।
जुगुप्सितेऽतो मानुष्ये मा कुरुध्वं मनोऽधुना ।।
अतः शापावधिर्यावन्मद्वियोगो विषह्यताम् ।। ४७ ।।
इत्युक्तवन्तं ते सर्वे माल्यवत्प्रमुखास्तदा ।।
ऊचुः प्रणम्य शिरसा प्रार्थयंतः पुनःपुनः ।। ४८ ।।
रक्षित्वा कृपया ह्यस्मान्मा कुरुष्व च साहसम् ।।
परित्यजसि नः सर्वान्भक्तानद्य निरागसः ।। ४९ ।।
त्वद्वियोगान्महाघोरान्मानुष्यमपि कुत्सितम् ।।
बहु मन्यामहे देव तस्मान्नस्त्राहि सांप्रतम् ।। 3.1.5.५० ।।

एवं स याचमानांस्त्रीनन्वमन्यत भृत्यकान् ।।

तैस्त्रिभिः सहितः सोऽयं कौशांबीं गन्तुमैच्छत ।। ५१ ।।

एतस्मिन्नेव काले तु सोमवंशविवर्द्धनः ।।

अर्जुनाभिजने जातो जनमेजयसंभवः ।। ५२ ।।

शतानीको महीपालः पृथिवीमन्वपालयत् ।।

बुद्धिमान्नीतिमान्वाग्मी प्रजापालनतत्परः ।। ५३ ।।

चतुरंगबलोपेतो विक्रमैकधनो युवा ।।

स कौशांबीं महाराजो नगरीमध्युवास वै ।। ५४ ।।

तस्य मन्त्ररहस्यज्ञो मन्त्री जातो युगंधरः ।।

सेनानीर्विप्रतीकश्च तस्य प्राग्रसरो रणे ।। ५५ ।।

नर्मकर्मसु तस्यासीद्वल्लभाख्यः सखा द्विजः ।।

तस्य विष्णुमती नाम विष्णोः श्रीरिव वल्लभा ।। ५६ ।।

स सर्वगुणसंपन्नः शतानीको महामतिः ।।

पुत्रमात्मसमं तस्यां भार्यायां नान्वविंदत ।। ५७ ।।

आत्मानमसुतं ज्ञात्वा स भृशं पर्यतप्यत ।।

स युगंधरमाहूय मंत्रिणं मन्त्रवित्तमम् ।। ५८ ।।

पुत्रलाभः कथं मे स्यादिति कार्यममन्त्रयत् ।।

युगन्धरो मही पालं पुत्रालाभेन पीडितम् ।।

हर्षयन्वचसा स्वेन वाक्यमेतदभाषत ।। ५९ ।।

।। युगन्धर उवाच ।। ।।

अस्ति शांडिल्यनामा तु महर्षिः सत्यवाक्छुचिः ।। 3.1.5.६० ।।

शत्रुमित्रसमो दांतस्तपःस्वाध्यायतत्परः ।।

तमेव मुनिमासाद्य ज्वलंतमिव पावकम् ।। ६१ ।।

पुत्रमात्मसमं राजन्प्रार्थयेथा विनीतवत् ।।

कृपावान्स महर्षिस्तु पुत्रं ते दास्यति ध्रुवम् ।। ६२ ।।

इति तद्वचनं श्रुत्वा हर्षसंफुल्ललोचनः ।।

मंत्रिणा तेन संयुक्तस्तस्यागादाश्रमं मुनेः ।। ६३ ।।

तमाश्रमे समासीनं प्रणनाम महीपतिः ।।

शांडिल्यस्तु महातेजा राजानं प्राप्तमाश्रमम् ।। ६४ ।।
दृष्ट्वा पाद्यादिभिः पूज्य स्वागतं व्याजहार सः ।।
।। शांडिल्य उवाच ।। ।।
शतानीक किमर्थं त्वमाश्रमं प्राप्तवान्मम ।। ६५ ।।
यत्कर्तव्यभिदानीं ते तद्वदस्व करोम्यहम् ।।
मुनिमेवं वदंतं तं प्रत्यवादीद्युगंधरः ।। ६६ ।।
भगवन्नेष वै राजा पुत्रालाभेन कर्षितः ।।
भवंतं शरणं प्राप्तः सांप्रतं पुत्रकारणात् ।। ६७ ।।
अस्यापुत्रत्वजं दुःखं त्वमपाकर्तुमर्हसि ।।
इति तस्य वचः श्रुत्वा शांडिल्यो मुनिसत्तमः ।।६८।।
पुत्रलाभवरं तस्मै प्रतिजज्ञे नृपाय वै ।।
स राज्ञो वरदः श्रीमान्कौशांबीमेत्य सादरम् ।। ६९ ।।
पुत्रेष्ट्या पुत्रकामस्य याजकोऽभून्महामुनिः ।।
ततो मुनिप्रसादेन राजा दशरथोपमः ।। 3.1.5.७० ।।
यज्वा राममिव प्राप सहस्रानीकमात्मजम् ।।
एवं विधूमः संजज्ञे शतानीकान्नृपोत्तमात् ।। ७१ ।।
अत्रांतरे मंत्रिवरस्सेनानीस्तु महीपतेः ।।
द्विजो नर्मवयस्यश्च पुत्रान्प्रापुः कुलोचितान् ।। ७२ ।।
पुत्रो युगंधरस्यासीन्माल्यवान्नाम भृत्यकः ।।
यौगंधरायणो नाम्ना मन्त्रशास्त्रेषु कोविदः ।। ।। ७३ ।।
विप्रतीकस्य तनयः पुष्पदन्तो बभूव ह ।।
रुमण्वानिति विख्यातः परसैन्यविमर्दनः ।। ७४ ।।
वल्लभस्य तदा जज्ञे तनयो वै बलोत्कटः ।।
वसंतक इति ख्यातो नर्मकर्मसु कोविदः ।। ७५ ।।
अथ ते ववृधुः सर्वे राजपुत्रपुरोगमाः ।।
पञ्चहायनतां तेषु यातेषु तदनंतरम् ।। ७६ ।।
अलंबुसापि स्वर्वेश्या भूपतेः कृतवर्मणः ।।
अयोध्यायां महापुर्यां कन्या जाता मृगावती ।। ७७ ।।

एवं विधूममुख्यास्ते जज्ञिरे क्षितिमण्डले ।।

अत्रांतरे महासत्त्वो दुष्टसानुचरो बली ।। ७८ ।।

अहिदंष्ट्र इति ख्यातो महादैत्यो बलोत्कटः ।।

युक्तः स्थूलशिरोनामा सहायेन दुरात्मना ।।७९।।

रुरोध देवनगरं बबाध विबुधानपि ।।

वर्तमाने दिवि महासमरे सुररक्षसाम् ।। 3.1.5.८० ।।

आनिनाय शतानीकं सहायार्थं पुरंदरः ।।

स यौवराज्ये तनयं विधाय विधिना नृपः ।। ८१ ।।

प्रतस्थे रथमास्थाय युद्धाय दितिजैः सह ।।

नीतो मातलिनाभ्येत्य सादरं स धनुर्धरः ।। ८२ ।।

विधाय प्रेक्षकान्देवाञ्जघान दितिजान्रणे ।।

अथ दैत्याधिपः सोऽपि निहतः समरे दिवि ।। ८३ ।।

ततः शक्रस्य वचसा परेतं नृपपुंगवम् ।।

रथमारोप्य सहसा कौशांबीं मातलिर्ययौ ।। ८४ ।।

नीत्वा महीतलमसौ तत्सुताय न्यवेदयत् ।।

ततः सहस्रानीकोपि विलप्य वहुदुखितः ।। ८५ ।।

मंत्रिभिः सह संभूय प्रेतकार्यं न्यवर्तयत् ।।

मृतं ज्ञात्वा पतिं राज्ञी सहैवानुममार च ।। ८६ ।।

महिष्या सह संप्राप्ते भूपाले कीर्तिशेषताम् ।।

भेजे राज्यं शतानीकतनयो मंत्रिणां गिरा ।। ८७ ।।

युगन्धरे विप्रतीके वल्लभे च मृते सति ।।

यौगन्धरायणमुखास्तत्पुत्राः सर्व एव हि ।। ८८ ।।

शतानीक सुतस्यास्य तत्तत्कार्यमकुर्वत ।।

एवं स पालयामास महीं राजसुतो बली ।। ८९ ।।

याते काले महेन्द्रेण सनन्दनमहोत्सवे ।।

निमंत्रितस्तत्कथितां भाविनीमशृणोत्कथाम् ।। 3.1.5.९० ।।

स्वर्योषिद्ब्रह्मणः शापादयोध्यायायामलंबुसा ।।

जाता मृगावती कन्या भूपतेः कृतवर्मणः ।। ९१ ।।

विधूम नामा च वसुस्त्वं नाकललनां पुरा ।।
तामेव ब्रह्मसदने दृष्ट्वानिलहृतांशुकाम् ।। ९२ ।।
तदैव मादनाक्रांतः शापान्मर्त्यत्वमागतः ।।
सैव ते दयिता राजन्भाविनी न चिरात्सखे ।। ९३ ।।
यदा त्वमात्मनः पुत्रं राज्ये संस्थाप्य भूपते ।।
मृगावत्या स्त्रिया सार्द्धं दक्षिणस्योदधेस्तटे ।। ९४ ।।
चक्रतीर्थे महापुण्ये फुल्लग्रामसमीपतः ।।
स्नानं करिष्यसि तदा शापान्मुक्तो भविष्यसि ।। ९५ ।।
इति प्रोवाच भगवन्सत्यलोके पितामहः ।।
इतींद्रवचनं श्रुत्वा सहस्रानीकभूपतिः ।। ९६ ।।
तथोद्वाहकृतोत्साहः समामंत्र्य शचीपतिम् ।।
कौशांबीं प्रस्थितो हृष्टः स तिलोत्तमया पथि ।। ।। ९७ ।।
स्मरन्किमपि तां कांतां भाषमाणामनन्यधीः ।।
ध्यायञ्छतक्रतुवचो नालुलोके महीपतिः ।। ९८ ।।
सा शशाप नृपं सुभ्रूरनादरतिर स्कृता ।।
आहूयमानोपि मया सहस्रानीक भूपते ।। ९९ ।।
मृगावतीं हृदा ध्यायन्किमर्थं मामुपेक्षसे ।।
सौभाग्यमत्ता मानिन्यो न सहंतेऽवधीर णाम्।। 3.1.5.१०० ।।
मामवज्ञाय यां राजन्हृदा ध्यायसि सांप्रतम् ।।
तया चतुर्दशसमा वियुक्तस्त्वं भविष्यसि ।। १०१ ।।
इति शप्तवतीं राजा तामु वाच तिलोत्तमाम्।।
तामेव यदि लभ्येयं तनुजां कृतवर्मणः ।। १०२ ।।
चतुर्दशसमा दुःखं सहिष्ये तद्वियोगजम्।।
इत्युक्त्वा तद्गतमना नृपः प्राया न्निजां पुरीम् ।। १०३ ।।
ततः कालेन तनया भूपतेः कृतवर्मणः ।।
तमाससाद दयिता सर्वस्वं पुष्पधन्वनः ।। १०४ ।।
मृगावती समासाद्य विला सतरुवल्लरीम्।।
विभ्रमांभोधिलहरीं ननंद मदनद्युतिः ।। १०५ ।।

सा तस्माद्गर्भमाधत्त भवानीवेंदुशेखरात् ।।
पांडिम्ना शशिलेखेव पीपूषक्षालिता बभौ ।। १०६ ।।
सुन्दरी दौर्हृदव्यक्तेरथ पौरंदरीव दिक् ।।
रराज राजमहिषी रजनीकरगर्भिणी ।। १०७ ।।
सा दौर्हृदवशाद्राज्ञी यंयं काममकाम यत् ।।
सुदुर्लभमपिप्रेम्णा तत्तत्सर्वं समाहरत् ।। १०८ ।।
पत्यौ समीहितकरे सा कदाचिन्मृगावती ।।
स्वेच्छया वै मतिं चक्रे रक्तवापीनिमज्जने ।। १०९ ।।
अभिलाषं सविज्ञाय मृगावत्या महीपतिः ।।
कौसुम्भसलिलैः पूर्णां क्षणाद्वापीमकारयत् ।। 3.1.5.११० ।।
तस्मिन्नक्तजले राज्ञी स्नानं सादरमातनोत्।।
ततस्तां रक्ततोयार्द्रां फुल्लकिंशुकसन्निभाम्।।१११।।
राजस्त्रीमामिषधिया सुपर्णकुलसंभवः।।
जहार विकटः पक्षी मुग्धां दग्धविधेर्वशात्।। ।।११२।।
नीत्वा विहायसा दूरं स तामचलसन्निभः।।
तत्याजमोहविवशामुदयाचलकंदरे।।११३।।
लब्धसंज्ञा शनैः कंपविलोलतनुवल्लरी।।
दृग्भ्यामुत्पलतुल्याभ्यां मुहुरश्रूण्यवर्तयत्।।११४।।
हा नाथ मंदभाग्याहं त्वद्वियोगेनपीडिता।।
का गतिः क्व नु गच्छामि द्रक्ष्यामि त्वन्मुखं कदा।।११५।।
इत्युक्त्वा गजसिंहानां पुरोभूद्वधकांक्षिणी ।।
सा सर्वकेसरिगजैस्त्यक्ता न निधनं गता।।११६।।
आपत्काले नृणां नूनं मरणं नैव लभ्यते।।
अतिदीनं समाकर्ण्य तस्याः क्रंदितमुन्मुखाः।।११७।।
मृगा निष्पंदगतयो न तृणान्यप्यभक्षयन्।।
ततस्तां करुणासिंधुर्मुनिपुत्रस्तथास्थिताम्।।११८।।
रुदतीं कृपया राज्ञीं समानीय स्वमाश्रमम् ।।
न्यवेदयच्च तां राज्ञीं गुरवे जमदग्नये ।।

जमदग्निस्तु धर्मात्मा तामाश्वासयदंतिके ।। ११९ ।।

।। जमदग्निरुवाच ।। ।।

तथा जानीहि मां भद्रे कृतवर्मा यथा तव ।। 3.1.5.१२० ।।

एवमाश्वासिता तत्र कृपया जमदग्निना ।।

चक्रे तत्रैव सा वासमाश्रमे मुनिसंकुले ।। १२१ ।। ।

ततस्स्वल्पेन कालेन विशाखमिव पार्वती ।।

असूत तनयं बाला शौर्यधैर्यगुणान्वितम् ।। १२२ ।।

सूतिकागृहकृत्यानि यानि कार्याणि बंधुभिः ।।

चक्रिरे मातृवत्तानि मृगावत्या मुनिस्त्रियः ।। १२३ ।।

तं सुजातं नृपसुतं कापि वागशरीरिणी ।।

उदयाचलजातत्वाच्चकारोदयनाभिधम्।। ।। १२४ ।।

आश्रमे स मुनीन्द्रेण कृतचूडादिकव्रतः ।।

जग्राह सकला विद्या जमदग्नेर्महामुनेः ।।१२५।।

युवा नृपसुतः सोऽयं कदाचिन्मृगयापरः ।।

अपश्यदेकं भुजगं व्याधेन दृढसंयतम् ।। १२६ ।।

उवाच स कृपायुक्तो व्याध मुंच भुजंगमम् ।।

किं करिष्यस्यनेन त्वं नैनं हिंसितुर्महसि ।।१२७।।

तमुवाच ततो व्याधः सर्पेणानेन पूरुष ।।

धनधान्यादिकं लप्स्ये ग्रामेषु नगरेषु च ।। १२८ ।।

अतोहं जीविकामेनं नैव मोक्ष्ये कथंचन ।।

इत्युक्त्वा पेटिकायां तं वबंध शबराधमः ।। १२९ ।।

बद्धमालोक्य भुजगं शबराय धनार्थिने ।।

अमोचयत्स्वजननीदत्तं दत्त्वा स कंकणम् ।। 3.1.5.१३० ।।

मोचितस्तेन सर्पोऽसौ नरो भूत्वा कृतांजलिः ।।

सख्यं कृत्वा च सहसा तं पातालं निनाय वै ।। १३१ ।।

किन्नराख्येन नागेन धृतराष्ट्रसुतेन सः।।

पातालं प्राविशत्तत्र न्यवसत्पूजितस्सुखम् ।। १३२ ।।

धृतराष्ट्रस्य तनयां भगिनीं किन्नरस्य च ।।

ललिताख्यां गुणोपेतां प्रियां भेजे नृपात्मजः ।। ।। १३३ ।।

सा तस्माज्जनयामास पुत्रमप्रतिमौजसम् ।।

ततः सा ललिता प्राह त्वरितोदयनं प्रति ।। १३४ ।।

।। ललितोवाच ।। ।।

अहं विद्या धरी पूर्वं सुकर्णी नाम नामतः ।।

शापात्सर्पत्वमाप्तास्मि शापांतो गर्भ एष मे ।। १३५ ।।

ततोऽमुं प्रतिगृह्णीष्व पुत्रमप्रतिमौजसम् ।।

तांबूलीं स्रजमम्लानां वीणां घोषवतीमपि ।। १३६ ।।

तथेति प्रतिजग्राह तत्सर्वं नृपनंदनः.।।

पश्यतां सर्वसर्पाणां साप्यगच्छद्विहायसम् ।। १३७ ।।

ततः सोऽपि गृहीत्वा तु वीणां मालां च पुत्रकम् ।।

दुःखितामात्मजननीं द्रष्टुकामस्त्वरान्वितः ।। १३८ ।।

श्वशुरादीननुज्ञाप्य सहसा स्वाश्रमं ययौ ।।

जननीं शोकसंतप्तामाश्वस्तां जमदग्निना ।। १३९ ।।

समेत्य तोषयामास वृत्तं चास्यै न्यवेदयत् ।।

तदा प्रहृष्टहृदया सा बभूव मृगावती ।। 3.1.5.१४० ।।

अत्रांतरे स शबरः कौशांब्यां वणिजं ययौ ।।

सहस्रानीकनामांकं विक्रेतुं मणिकंकणम्।।१४१।।

राजमुद्रां समालोक्य कंकणे स वणिग्वरः ।।

शबरेण समं गत्वा सर्वं राज्ञे न्यवेदयत्।।१४२।।

ततः सहस्रानीकोऽयं तत्प्राप्य मणिकंकणम् ।।

मृगावतीविप्रयोगविषाग्निपरिपीडितः ।। १४३ ।।

तद्बाहुसंगपीयूष शीकरासारशीतलम्।।

कंकणं हृदये न्यस्य विललाप सुदुःखितः ।। १४४ ।।

उवाच च कथं लब्धं कंकणं शबर त्वया ।।

स चैवमुक्तस्तत्प्राप्ति क्रमं तस्मै न्यवेदयत् ।। १४५ ।।

शबरस्य वचः श्रुत्वा सहस्रानीकभूपतिः ।।

प्रतस्थे मंत्रिभिः सार्द्धं प्रियालोकनकौतुकी ।। १४६ ।।

यत्रेंदुभास्क रमुखा लभंते सहसोदयम् ।।
तमेव गिरिमुद्दिश्य सहसा सोऽभ्यगच्छत ।। १४७ ।।
किंचिन्मार्गं समुल्लंघ्य तस्थौ विश्रांतसैनिकः ।।
तस्मिन्विनिद्रे दयितासंगमध्यानतत्परे ।। १४८ ।।
वसंतको विचित्रास्तु कथयामास वै कथाः ।।
तत्कथाश्रवणेनैव तां रात्रिं स निनाय वै ।। १४९ ।।
ततः कालेन ककुभं प्राप्य जंभारिपालिताम् ।।
जमदग्न्याश्रमं गत्वा निर्वैरहरिकुंजरम् ।। 3.1.5.१५० ।।
तपस्यंतं मुनिं दृष्ट्वा शिरसा प्रणनाम सः ।।
आशीर्वादेन स मुनिः प्रतिजग्राह तं नृपम् ।। १५१ ।।
विधिवत्पूजयामास पाद्यार्घ्याचमनीयकैः ।।
उवाच च महीपालं धर्मार्थसहितं वचः ।। १५२ ।।
नरनाथ मृगावत्यां जातोऽयं तनयस्तव ।।
यशोनिधिर्महातेजा रामचंद्र इवापरः ।। १९३ ।।
भविष्यति दिशां जेता सिंहसंहननो युवा ।।
पौत्र एष महाभाग तथा ह्युदयनात्मजः ।। १५४ ।।
इयं मृगावती भार्या पाति व्रत्यपरायणा ।।
तदेतांस्त्रीन्महाराज प्रतिगृह्णीष्व मा चिरम् ।। १५५ ।।
उक्त्वैवं मुनिना दत्तांस्तान्गृहीत्वा महीपतिः ।।
प्रियासहायः स्वपुरीं प्रतस्थे मंत्रिभिर्वृतः ।। १५६ ।।
ततः प्रविश्य कौशांबीं नगरीं स नृपोत्तमः ।।
स्मरञ्छक्रस्य वचनं मानुषं जन्म कुत्सयन् ।। १५७ ।।
महीमुदयनायैव ददौ पुत्राय धीमते ।।
तस्मिन्नुदयने पुत्र राज्यपालनदक्षिणे ।।१५८।।
राज्यभारं विनिक्षिप्य स शापविनिवृत्तये।।
वसंतकरुमण्वद्भ्यां मृगावत्या च भार्यया ।। १५९।।
यौगन्धरायणेनापि मंत्रिपुत्रेण संयुतः ।।
चक्रतीर्थे महापुण्ये दक्षिणस्योदधेस्तटे ।। 3.1.5.१६० ।।

स्नानं कर्तुं ययौ तूर्णं सर्वतीर्थोत्त मोत्तमे ।।

वाहनैर्वातरंहोभिरचिराल्लवणोदधिम् ।। १६१ ।।

संप्राप्य चक्रतीर्थं च स्नानं चक्रुर्यथाविधि ।।

तेषु च स्नातमात्रेषु चक्रतीर्थे नृपादिषु ।। ।।१६२।।

विनष्टं तत्क्षणादेव मानुष्यमतिकुत्सितम् ।।

ततो विधूतपापास्ते स्वं रूपं प्रतिपेदिरे ।।१६३।।

दिव्यांबरधराः सर्वे दिव्यमाल्यानुलेपनाः ।।

विमानानि महार्हाणि समारुह्य विभूषिताः ।। १६४ ।।

तत्तीर्थं बहु मन्वानाः स्वशापच्छेदकारणम् ।।

पश्यतां सर्वलोकानां स्वर्गलोकं ययुस्तदा ।। ।।१६५।।

तदाप्रभृति ते सर्वे ज्ञात्वा तत्तीर्थवैभवम् ।।

पावने चक्रतीर्थेऽस्मिन्स्नानं कुर्वंति सर्वदा ।।१६६।।

एवं प्रभावं तत्तीर्थं ये समागत्य मानवाः ।।

स्नानं सकृच्च कुर्वंति ते सर्वे स्वर्गवासिनः ।। १६७ ।।

एवं वः कथितं विप्रा विधूमचरितं महत् ।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।।

यं यं कामयते कामं तं सर्वं शीघ्रमाप्नुयात्।। १६८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीयेब्रह्मखण्डे सेतुमाहात्म्ये चक्रतीर्थप्रशंसायामलंबुसाविधूमशापविमोचनंनाम पञ्चमोऽध्यायः ।। ५ ।। ।। छ ।।

तुलनीय - कथासरित्सागरे उदयनस्य जन्मकथा

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०६



।। ऋषय ऊचुः ।। ।।

द्वैपायनविनेय त्वं सूत पौराणिकोत्तम ।।

देवीपत्तनपर्यंतं चक्रतीर्थमनुत्तमम् ।। १ ।।

इत्यब्रवीः पुरास्माकमतः पृच्छाम किंचन ।।

देवीपुरं हि तत्कुत्र यदन्तं चक्रतीर्थकम् ।। २ ।।

देवीपत्तन मित्याख्या कथं तस्याभवत्तथा ।।

श्रीरामसेतुमूले च स्नातानां पापिनामपिः।। ३ ।।

कीदृशं वा भवेत्पुण्यं चक्रतीर्थे तथैव च ।।

एतच्चान्यान्विशे षांश्च ब्रूहि पौराणिकोत्तम ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

सर्वमेतत्प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः ।।

पठतां शृण्वतां चैतदाख्यानं पापनाश नम् ।। ५ ।।

यत्र पाषाणनवकं स्थापयित्वा रघूद्वहः ।।

बबन्ध प्रथमं सेतुं समुद्रे मैथिलीपतिः ।। ६ ।।

देवीपुरं तु तत्रैव यदन्तं चक्रतीर्थकम् ।।

देवीपत्तनमित्याख्या यथा तस्य समागता ।। ।७ ।।

तदब्रवीमि मुनिश्रेष्ठाः शृणुध्वं श्रद्धया सह ।।

पुरा देवासुरे युद्धे देवैर्नाशितपुत्रिणी ।।

दितिः प्रोवाच तनयामात्मनः शोकमोहिता ।। ८ ।।

।। दितिरुवाच ।। ।।

याहि पुत्रि तपः कर्तुं तपोवनमनुत्तमम्।। ९ ।।

पुत्रार्थं तव सुश्रोणि नियता नियतेन्द्रिया ।।

इन्द्रादयो न शिष्येरन्येन पुत्रेण वै सुराः ।। 3.1.6.१० ।।

उदिता तनया चैवं जनन्या तां प्रणम्य सा ।।

स्वीकृत्य माहिषं रूपं वनं पञ्चाग्निमध्यगा ।। ११ ।।

तपोऽतप्यत सा घोरं तेन लोकाश्चकंपिरे ।।

तस्यां तपः प्रकुर्वंत्यां त्रिलोक्यासीद्भयातुरा ।। १२ ।।

इन्द्रादयः सुर गणा मोहमापुर्द्विजोत्तमाः ।।

सुपार्श्वस्तपसा तस्या मुनिः क्षुब्धोऽवदत्तु ताम् ।। १३ ।।

।। सुपार्श्व उवाच ।। ।।

परितुष्टोऽस्मि सुश्रोणि पुत्रस्तव भविष्यति ।।

मुखेन महिषाकारो वपुषा नररूपवान् ।। १४ ।।

महिषो नामपुत्रस्ते भविष्यत्यतिवीर्यवान् ।।

पीडयिष्यति यः स्वर्गं देवेन्द्रं च ससैनिकम् ।। १५ ।।

सुपार्श्वस्त्वेवमुक्त्वा तां विनिवार्य तपस्तथा ।।

आगच्छदात्मनो लोकमनुनीय तपस्विनीम् ।। १६ ।।

अथ जज्ञे स महिषो यथोक्तं ब्रह्मणा पुरा ।।

व्यवर्द्धत महावीर्यः पर्वणीव महोदधिः ।। १७ ।।

ततः पुत्रो विप्रचित्तेर्विद्युन्माल्यसुराग्रणीः ।।

अन्येऽप्यसुरवर्यास्ते संति ये भूतले द्विजाः ।। १८ ।।

ते सर्वे महिषस्यास्य श्रुत्वा दत्तवरं मुदा ।।

समागम्य मुनिश्रेष्ठाः प्रावदन्महिषासुरम् ।। १९ ।।

स्वर्गाधिपत्यमस्माकं पूर्व मसीन्महामते ।।

देवैर्विष्णुं समाश्रित्य राज्यं नो हृतमोजसा ।। 3.1.6.२० ।।

तद्राज्यमानय वलादस्माकं महिषासुर ।।

वीर्यं प्रकटयस्वाद्य प्रभावमपि चात्मनः ।।२१।।

अतुल्यबलवीर्यस्त्वं ब्रह्मदत्तवरोद्धतः।।

पुलोमजापतिं युद्धे जहि देवगणैः सह।।२२।।

दनुजैरेवमुक्तोऽसौ योद्धुकामोऽमरैः सह।।

महा वीर्योऽथ महिषः प्रययावमरावतीम् ।।२३।।

देवानामसुराणां च संवत्सरशतं रणम् ।।

पुरा बभूव विप्रेंद्रास्तुमुलं रोमहर्षणम्।। २४ ।।

देववृन्दं ततो भी त्या पुरस्कृत्य पुरन्दरम्।।
कांदिशीकमभूद्विप्रा ब्रह्माणं च ययौ तदा ।। २५ ।।
ब्रह्मा तानमरासर्वान्समादाय ययौ पुनः।।
नारायणशिवौ यत्र वर्तेते विश्वपालकौ ।।२६।।
तत्र गत्वा नमस्कृत्य स्तुत्वा स्तोत्रैरनेकशः ।।
ब्रह्मा निवेदयामास महिषासुरचेष्टितम् ।। २७ ।।
सुराणामसुरैः पीडां देवयोः शंभुकृष्णयोः ।।
इंद्राग्नियमसूर्येंदुकुबेरवरुणादिकान् ।। २८ ।।
निराकृत्याधिकारेषु तेषां तिष्ठत्ययं स्वयम् ।।
अन्येषां देववृंदानामधिकारेपि तिष्ठति ।। २९ ।।
निरस्तं देववृंदं तत्स्वर्लोकादवनीतले ।।
मनुष्यवद्विचरते महिषासुरबाधितम् ।। 3.1.6.३० ।।
एतज्ज्ञापयितुं देवौ युवयोरहमागतः।।
सार्द्धं देव गणैरत्र रक्षतं तान्समागतान् ।। ३१ ।।
ब्रह्मणो वचनं श्रुत्वा रमेश्वरमहेश्वरौ ।।
कोपात्करालवदनौ दुष्प्रेक्ष्यौ तौ बभूवतुः ।। ३२ ।।
अत्यन्तकोपज्वलितान्मुखाद्विष्णोरथ द्विजाः ।।
निश्चक्राम महत्तेजः शंभोः स्रष्टुस्तथैव च ।। ३३ ।।
अपरेषां सुराणां च देहादिंद्रशरीरतः ।।
तेजः समुदभूत्क्रूरं तदेकं समजायत ।। ३४ ।।
तेषां तु तेजसां राशिर्ज्वलत्पर्वतसंनिभः ।।
ददृशे देववृंदैस्तैर्ज्वालाव्याप्तदिगंतरः ।। ३५ ।।
तेजसां समुदायोऽसौ नारी काचि दभूत्तदा ।।
शिवतेजो मुखमभूद्विष्णुतेजो भुजौ द्विजाः ।। ३६ ।।
ब्रह्मतेजस्तु चरणौ मध्यमैंद्रेण तेजसा ।।
यमस्य तेजसा केशाः कुचौ चंद्रस्य तेजसा ।। ३७ ।।
जंघोरू कल्पितौ विप्रा वरुणस्य तु तेजसा ।।
नितंबः पृथिवीतेजः पादांगुल्योऽर्कतेजसा ।। ३८ ।।

करांगुल्यो वसूनां च तेजसा कल्पितास्तथा ।।

कुबेरतेजसा विप्रा नासिकापरिकल्पिता ।। ३९ ।।

नवप्रजापतीनां च तेजसा दंतपंक्तयः ।।

चक्षुर्द्वयं समजनि हव्यवाहनतेजसा ।। ।। 3.1.6.४० ।।

उभे संध्ये भ्रुवौ जाते श्रवणे वायुतेजसा ।।

इतरेषां च देवानां तेजोभिरतिदारुणैः ।। ४१ ।।

कृतान्यावयवा नारी दुर्गा परमभास्वरा ।।

बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ।। ४२ ।।

सर्ववृंदारकानीकतेजःसंघसमुद्भवा ।।

तां दृष्ट्वा प्रीतिमापुस्ते देवा महिषबाधिताः ।। ४३ ।।

ततो रुद्रा दयो देवा विनिष्कृष्यायुधान्निजात् ।।

आयुधानि ददुस्तस्यै शूलादीनि द्विजोत्तमाः ।। ४४ ।।

भूषणानि ददुस्तस्यै वस्त्रमाल्यानि चंदनम् ।।

सापि देवी तदा वस्त्रैर्भूषणैश्चंदनादिभिः ।। ४५ ।।

कुसुमैरायुधैर्हारैर्भूषिता परिचारकैः ।।

साट्टहासं प्रमुंचंती भैरवी भैरवस्वना ।। ४६ ।।

ननाद कंपयतीव रोदसी देवसेविता ।।

देव्या भैरवनादेन चचाल सकलं जगत् ।। ४७ ।।

सिंहवाहनमारूढां देवींताममरास्तदा ।।

मुनयः सिद्धगंधर्वास्तुष्टुवुर्जयश ब्दतः ।। ४९ ।।

अतिभीषणनादेन देव्याः क्षुब्धं जगत्त्रयम् ।।

दृष्ट्वा देवारयो दैत्याः समुत्तस्थुरुदायुधाः ।। ४९ ।।

महिषोऽपि महाक्रोधात्समुद्यत महायुधः ।।

तं शब्दमवलक्ष्याथ ययावसुरसंवृतः ।। 3.1.6.५० ।।

व्यलोकयत्ततो देवीं तेजोव्याप्तजगत्त्रयीम् ।।

सायुधानंतबाह्वाढयां नादकंपितभूतलाम् ।। ५१ ।।

क्षोभिताशेषशेषादिमहानागपरंपराम् ।।

विलोक्य देवीमसुराः समनह्यन्नुदायुधाः ।। ५२ ।।

ततो देव्या तया सार्द्धमसुराणामभूद्रणः ।।
अस्त्रैः शस्त्रैः शरैश्चक्रैर्गदाभिर्मुसलैरपि ।। ५३ ।।
गजाश्वरथपादातैरसंख्येयैर्महावलः ।।
महिषो युयुधे तत्र देव्या साकमरिंदमः ।। ५४ ।।
लक्षको टिसहस्राणि प्रधानासुरयूथपाः ।।
एकैकस्य तु सेनायास्तेषां संख्या न विद्यते ।। ५५ ।।
ते सर्वे युगपद्देवीं शस्त्रैराववुरोजसा ।।
सापि देवी ततो भीमा दैत्यमुक्तास्त्रसंचयम् ।। ५६ ।।
बिभेद लीलया बाणैः स्वकार्मुकविनिःसृतैः ।।
ससर्ज दैत्यकायेषु बाणपूगान्यनेकशः ।। ५७ ।।
देव्याश्रयबला द्देवा निर्भया दैत्ययूथपैः ।।
युयुधुः संयुगे शस्त्रैरस्त्रैरप्यायुधांतरैः ।। ५८ ।।
ततो देवा बलोत्सिक्ता देवीशक्त्युपबृंहिताः ।।
निःशेषमसुरान्सर्वानायु धैर्निरमूलयन् ।। ५९ ।।
स्वसैन्ये तु क्षयं याते संक्षुब्धो महिषासुरः ।।
चापमादाय वेगेन विकृष्य च महास्वनम् ।। 3.1.6.६० ।।
संधाय मुमुचे बाणान्देव सैन्येषु भूसुराः ।।
इंद्रे तु दशसाहस्रं यमे पंचसहस्रकम् ।। ६१ ।।
वरुणे चाष्टसाहस्रं कुबेरे षट्सहस्रकम् ।।
सूर्ये चंद्रे च वह्नौ च वायौ वसुषु चाश्विनोः ।। ६२ ।।
अन्येष्वपि च देवेषु महिषो दानवेश्वरः ।।
प्रत्येकमयुतं बाणान्मुमुचे बलिनां वरः ।। ६३ ।।
पलायंते ततो देवा महिषासुरमर्द्दिताः ।।
देवीं शरणमाजग्मुस्त्राहित्राहीतिवादिनः ।। ६४ ।।
ततो देवी गणान्स्वस्य भूतवेतालकादिकान् ।।
यूयं नाशयत क्षिप्रमासुरं बलमित्यशात् ।।। ।। ६५ ।।
अहं तु महिषं युद्धे योधयामि वलोद्धतम् ।।
ततो देव्या गणैः सर्वमासुरं क्षतमाशु वै ।। ६६ ।।।

ततः सैन्यं क्षयं नीते गणै र्देवीप्रचोदितैः ।।

योद्धुकामः स महिषो गणैः साकं व्यतिष्ठत ।। ६७ ।।

अत्रांतरे महानादः सुचक्षुश्च महाहनुः ।।

महाचंडो महाभक्षो महोदरम होत्कटौ ।। ६८ ।।

पञ्चास्यः पादचूडश्च बहुनेत्रः प्रबाहुकः ।।

एकाक्षस्त्वेकपादश्च बहुपादोऽप्यपादकः ।। ६९ ।।

एते चान्ये च बहवो महिषासुर मंत्रिणः ।।

योद्धुकामा रणे देव्याः पुरतस्त्ववतस्थिरे ।। 3.1.6.७० ।।

सिंहं वाहनमारुह्य ततो देवी मनोजवम् ।।

प्रलयांबुदनिर्घोषं चापमादाय भैरवम् ।। ।। ७१ ।।

विस्फोट्य मुमुचे बाणान्वज्रवेगसमान्युधि ।।

दशलक्षगजैश्चापि शतलक्षैश्च वाजिभिः ।। ७२ ।।

शतलक्षै रथैश्चापि लक्षायुतपदातिभिः ।।

युक्तो महाहनुर्दैत्यो देव्या युधि निपातितः ।।७३।।

सैन्ये च तस्य निहता देव्या बाणैर्द्विजोत्तमाः ।।

लक्षकोटिसहस्राणि प्रधानासुरनायकाः ।।७४।।

महिषस्य हि विद्यन्ते महाबलपराक्रमाः ।।

एकैकस्य प्रधानस्य चतुरङ्गबलं तथा ।। ७५ ।।

महाहनोर्यथा विप्रास्तथैवास्ति महद्बलम् ।।

तत्सर्वं निहतं देव्या शरैः कांचनपुंखितैः ।। ७६ ।।

याममात्रेण विप्रेंद्रास्तदद्भुतमिवाभवत् ।। ७७ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये चक्रतीर्थप्रशंसायां देवीपुराभिधानकथने देवीमहिषासुरयुद्धवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०७

https://sa.wikisource.org/s/fs6



।। श्रीसूत उवाच ।। ।।

स्वसैन्यमवलोक्याथ महिषो दानवेश्वरः ।।

हतं देव्या महाक्रोधाच्चंडकोपमथाब्रवीत् ।। १ ।।

।। महिष उवाच ।। ।।

चंडकोप महावीर्य युद्ध्यस्वैनां दुरात्मिकाम् ।।

तथास्त्विवति स चोक्त्वाथ चंडकोपः प्रतापवान् ।। २ ।।

अवाकिरद्बाणवर्षैर्देवीं समरमूर्द्धनि ।।

बाणजालानि तस्याशु चंडकोपस्य लीलया ।। ३ ।।

छित्त्वा जघान शस्त्रेण चंडकोपस्य सांबिका ।।

चकर्त वाजिनोऽप्यस्य सारथिं च ध्वजं धनुः ।। ४ ।।

उन्ममाथ रथं चापि तं बाणैर्हृद्यताडयत् ।।

स भग्नधन्वा विरथो हताश्वो हतसारथिः ।। ५ ।।

चंडकोपस्ततो देवीं खड्गचर्मधरोऽभ्यगात् ।।

खड्गेन सिंहमाजघ्ने देव्या वाहं महासुरः ।। ६ ।।

देवीमपि भुजे सव्ये खड्गेन प्रजघान सः ।।

खङ्गो देव्या भुजे सव्ये व्यशीर्यत सहस्रधा ।। ७ ।।

ततः शूले न महता चंडकोपं तदांबिका ।।

जघान हृदये सोऽपि पपात च ममार च ।। ८ ।।

चंडकोपे हते तस्मिन्महावीर्ये महाबले ।।

चित्रभानुर्गजारूढो देवीं तामभ्यधावत ।। ९ ।।

दिव्यां शक्तिं ससर्जाथ महाघंटारवाकुलाम् ।।

न्यवारयत हुंकारैर्देवी शक्तिं निराकुलाम् ।। 3.1.7.१० ।।

ततः शूलेन सा देवी चित्रभानुं व्यदारयत् ।।

मृते तस्मिंस्ततो युद्धे करालो द्रुतमभ्यगात् ।। ११ ।।

करमुष्टिप्रहारेण सोऽपि देव्या निपातितः ।।

ततो देवी मदोन्मत्तं गदया व्यसुमातनोत् ।। १२ ।।

बाष्कलं पट्टिशेनापि चक्रेणापि तथांतिकम् ।।

प्राहिणोद्यमलोकाय दुर्गा देवी द्विजोत्तमाः ।। १३ ।।

एवमन्यान्महाकायान्मंत्रिणो महिषस्य च ।।

शूलेन प्रोथयित्वाथ प्राहिणोद्यमसादनम् ।। १४ ।।

आत्मसैन्ये हते त्वेवं दुर्गया महिषासुरः ।।

माहिषेणाथ रूपेण गणान्देव्या अभक्षयत् ।। १५ ।।

तुण्डेन निजघानैकान्सुराघातैस्तथापरान् ।।

निश्वासवायुभिश्चान्यान्पातयामास रोषितः ।। १६ ।।

देव्या भूतगणं त्वेवं निहत्य महिषासुरः ।।

सिंहं मारयितुं देव्याश्चुक्रोध च ननाद च ।। १७ ।।

ततः सिंहोऽभवत्क्रुद्धो महावीर्यो महाबलः ।।

सुराभि घातनिर्भिन्नमहीतलमहीधरः ।। १८ ।।

महिषासुरमायांतं नखैरेनं व्यदारयत् ।।

चंडिकापि ततः क्रुद्धा वधे तस्याकरोन्मतिम् ।। १९ ।।

बबन्ध पाशैर्महिषं चंडिका कोपमूर्च्छिता।।

मोचयित्वा ततः पाशांस्त्यक्तमाहिषवेषवान्।।3.1.7.२।।

सिंहवेषोऽभवद्दैत्यो महाबलपराक्रमः।।

देवी तस्य शिरोयावच्छेत्तुं बुद्धिमधारयत्।।२१।।

तावत्स पुरुषो भूत्वा खड्गपाणिरदृश्यत।।

अथ तं पुरुषं देवी खड्गहस्तं शरोत्करैः।।२२।।

जघान तीक्ष्णधाराग्रैः परमर्मविदारणैः ।।

ततः स पुरुषो विप्रा गजोऽभूद्धस्तदन्तवान् ।। २३ ।।

दुर्गाया वाहनं सिंहं करेण विचकर्ष च ।।

ततः सिंहः करं तस्य विचकर्त नखांकुरैः ।। २४ ।।

भूयो महासुरो जातो माहिषं वेषमाश्रितः ।।

ततः क्रुद्धा भद्रकाली महत्पानमसेवत ।। २५ ।।

ततः पानवशा न्मत्ता जहासारुणलोचना ।।
महिषः सोऽपि गर्वेण शृंगाभ्यां पर्वतोत्करान् ।।२६।।
चंडिकां प्रतिं चिक्षेप सा च तानच्छिनच्छरैः ।।
ततो देवी जग न्माता महिषासुरमब्रवीत् ।। २७ ।।
।। देव्युवाच ।। ।।
कुरु गर्वं क्षणं मूढ मधु यावत्पिबाम्यहम् ।।
निवृत्तमधुपानाहं त्वां नयिष्ये यमक्षयम्।। ।।२८।।
हते त्वयि दुराधर्षे मया दैवतकंटके।।
स्वंस्वं स्थानं प्रपद्यंतां सिद्धा साध्या मरुद्गणाः।।२९।।
उक्त्वैवं ताडयामास मुष्टिना महिषासुरम्।।
ताडितोऽयं ततो देव्या महिषो भृशविह्वलः।।3.1.7.३।।
दक्षिणस्योदधेस्तीरेप्रदुद्राव त्वरान्वितः।।
अनुदुद्राव तं देवी सिंहमारुह्य वाहनम्।।३१।।
अनुद्रुतस्ततो देव्या महिषो दानवेश्वरः।।
धर्मपुष्कीरणीतोये दशयोजनमायते।।३२।।
प्रविश्यांतर्हितस्तस्थौ दुर्गाताडनविह्वलः।।
ततो दुर्गा समासाद्य धर्मपुष्करिणीतटम् ।। ।।३३।।
नददर्शासुरं तत्र महिषं चंडिका तदा ।।
अशरीरा ततो वाणी दुर्गा देवीमभाषत।।३४।।
भद्रकालि महादेवि महिषो दानवस्त्वया ।।
ताडितो मुष्टिना भद्रे धर्मपुष्करिणीजले ।।३५।।
अस्मिन्नंतर्हितः शेते भयार्तो मारयस्व तम् ।।
येनकेनाप्युपायेन चैनं प्राणैर्वियोजय ।।३६।।
एवं वाचाऽशरी रिण्या कथिता चंडिका तदा ।।
प्राह स्ववाहनं सिंहमसुरेंद्रवधोद्यता ।।३७।।
मृगेंद्र सिंहविक्रांत महावलपराक्रम ।।
धर्मपुष्कीरणीतोयं निःशेषं पीय तां त्वया ।। ३८ ।।
देव्यैवमुक्तः पंचास्यो धर्मपुष्करिणीजलम् ।।

निःशेषं च पपौ विप्रा यथा पांसुर्भवेत्तथा ।। ३९ ।।

निरगान्महिषो दीनस्ततस्तस्मा ज्जलाशयात् ।।

आयांतमसुरं देवी पादेनाक्रम्य मूर्द्धनि ।। 3.1.7.४० ।।

कंठं शूलेन तीक्ष्णेन पीडयामास कोपिता ।।

ततो देव्यसिमादाय चकर्तास्य शिरो महत् ।। ४१ ।।

एवं स महिषो विप्राः सभृत्यबलवाहनः ।।

दुर्गया निहतो भूमौ पपात च ममार च ।। ४२ ।।

ततो देवाः सगंधर्वाः सिद्धाश्च परमर्षयः ।।

स्तुत्वा देवीं ततः स्तोत्रैस्तुष्टा जहृषिरे तदा ।। ४३ ।।

अनुज्ञातास्ततो देव्या देवा जग्मुर्यथागतम् ।।

ततो देवी जगन्माता स्व नाम्ना पुरमुत्तमम् ।। ४४ ।।

दक्षिणस्य समुद्रस्य तीरे चक्रे तदोत्तरे ।।

ततो देव्यनुशिष्टास्ते देवाः शक्रपुरोगमाः ।। ४५ ।।

पूरयामासुरमृतैर्धर्मपुष्क रिणीं तदा ।।

ततो ह्यमृततीर्थाख्यां लेभे तत्तीर्थमुत्तमम् ।। ४६ ।।

ततो देवी वरमदात्स्वपुरस्य मुदान्विता ।।

पशव्यं चापरोगं च पुरमेतद्भवत्विति ।। ४७ ।।

ददौ तीर्थाय च वरं स्नातानामत्र वै नृणाम् ।।

यथाभिलाषं सिद्धिः स्यादित्युक्त्वा सा दिवं ययौ ।। ४९ ।।

।। श्रीसूत उवाच ।। ।।

यत्स्वनाम्ना चकारेदं देवी पुरमनुत्तमम् ।।

देवीपत्तनमित्युक्तं तेन देव्याः पुरोत्तमम् ।। ४९ ।।

देवीपत्तनमारभ्य सुमुहूर्ते दिने द्विजाः ।।

विघ्नेश्वरं प्रणम्यादौ सलिलस्वामिनं तथा ।। 3.1.7.५० ।।

महादेवाभ्यनुज्ञातो रामचंद्रोऽतिधार्मिकः ।।

स्थापयित्वा स्वहस्तेन पाषाणनवकं मुदा।। ५१ ।।

सेतुमारब्धवान्विप्रा यावल्लंकामतंद्रितः ।।

सिंहासनं समारुह्य रामो नलकृतं शुभम्।। ५२ ।।

वानरैः कारयामास सेतुमब्धौ नलादिभिः ।।
पर्वताञ्छाखिनोवृक्षान्दृषदः काष्ठसंचयान् ।। ५३ ।।
तृणानि च समाजह्रुर्वानरा वनमध्यतः ।। ५४ ।।
नलस्तानि समादाय चक्रे सेतुं महोदधौ ।।
पंचभिर्दिवसैः सेतुर्यावल्लंकासमीपतः ।। ५५ ।।
दशयोजनविस्तीर्णश्शतयोजनमायतः ।।
कृतः सेतुर्नलेनाब्धौ पुण्यः पापविनाशनः ।। ५६ ।।
देवीपुरस्य निकटे नवपाषाणरूपके ।।
सेतुमूले नरः स्नायात्स्वपापपरिशुद्धये ।। ५७ ।।
चक्रतीर्थे तथा स्नायाद्व्रजेत्सेत्वधिपं हरिम्।।
देवीपत्तनमारभ्य यत्कृतं सेतुबंधनम् ।। ५८ ।।
तत्सेतुमूलं विप्रेंद्रा यथार्थं परिकल्पितम् ।।
सेतोस्तु पश्चिमा कोटिर्दर्भशय्या प्रकीर्तिता ।। ५९ ।।
देवीपुरी च प्राक्कोटिरुभयं सेतुमूलकम् ।।
उभयं पुण्यमाख्यातं पवित्रं पापनाशनम् ।। 3.1.7.६० ।।
यत्सेतुमूलं गच्छंति येन मार्गेण वै नराः।।
तत्तन्मार्गगतास्ते ते तस्मिंस्तस्मिन्विमुक्तिदे ।। ६१ ।।
स्नात्वादौ सेतुमूले तु चक्रतीर्थे तथैव च ।।
संकल्पपूर्वकं पश्चाद्गच्छेयुः सेतुबंधनम्।। ६२ ।।
देवीपुरे तथा दर्भशय्यायामपि भूसुराः ।।
चक्रतीर्थे शिवे स्नानं पुण्यपापविनाशनम् ।।६३।।
स्मरणादुभयत्रापि चक्रतीर्थस्य वै द्विजाः ।।
भस्मीभवंति पापानि लक्षजन्मकृतान्यपि ।। ६४ ।।
जन्मापि विलयं यायान्मुक्तिश्चापि करे स्थिता ।।
चक्रतीर्थसमं तीर्थं न भूतं न भविष्यति ।। ६५ ।।
भूलोके यानि तीर्थानि गंगादीनि द्विजोत्तमाः ।।
चक्रतीर्थस्य तान्यद्धा कलां नार्हंति षोडशीम् ।। ६६ ।।
आदौ तु नवपाषाणमध्येऽब्धौ स्नानमाचरेत् ।।

क्षेत्रपिंडे ततः कुर्याच्चक्रतीर्थे तथैव च ।। ६७ ।।

सेतुनाथं हरिं सेवेत्स्वपापपरिशुद्धये ।।

एवं हि दर्भशय्यायां कुर्युस्तन्मार्गतो गताः ।। ६८ ।।

आरूढं रामचंद्रेण यो नमस्कुरुते जनः ।।

सिंहासनं नलकृतं न तस्य नरकाद्भयम्।। ६९ ।।

सेतुमादौ नमस्कुर्याद्रामं ध्यायन्हृदा तदा ।।

रघुवीरपदन्यास पवित्रीकृतपांसवे ।। 3.1.7.७० ।।

दशकंठशिरश्छेदहेतवे सेतवे नमः ।।

केतवे रामचंद्रस्य मोक्षमार्गैकहेतवे ।। ७१ ।।

सीताया मानसांभोजभानवे सेतवे नमः ।। ।।

साष्टांगं प्रणिपत्यादौ मंत्रेणानेन वै द्विजाः ।। ७२ ।।

ततो वेतालवरदं तीर्थं गच्छेन्महाबलम् ।।

तत्र स्नानादवाप्नोति सिद्धिं पारामिकां नरः ।। ७३ ।।

योऽध्यायमेनं पठते मनुष्यः शृणोति वा भक्तियुतो द्विजेंद्राः ।।

स्वर्गादयस्तस्य न दुर्लभाः स्युः कैवल्यमप्यस्य करस्थमेव ।। ७४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये चकतीर्थप्रशंसायां देवीपुराभिधानकथने महिषासुरसंहारवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०८



।। ऋषय ऊचुः ।। ।।

भगवन्सूतसर्वज्ञ कृष्णद्वैपायनप्रिय ।।

त्वन्मुखाद्वै कथाः श्रुत्वा श्रोत्रकामृतवर्षिणीः ।। १ ।।

तृप्तिर्न जायतेऽस्माकं त्वद्वचोमृतपायिनाम् ।।

अतः शुश्रूषमाणानां भूयो ब्रूहि कथाः शुभाः ।। २ ।।

वेतालवरदंनाम चक्रतीर्थस्य दक्षिणे ।।

तीर्थमस्ति महापुण्यमित्यवादीद्भवान्पुरा ।। ३।।

वेतालवरदाभिख्या तीर्थस्यास्यागता कथम् ।।

किंप्रभावं च तत्तीर्थमेतन्नो वक्तुमर्हसि ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

साधुपृष्टं हि युष्माभिरतिगुह्यं मुनीश्वराः ।।

शृणुध्वं मनसा सार्द्धं ब्रवीम्यत्यद्भुतां कथाम् ।। ५ ।।

पामरा अपि मोदन्ते यां वै श्रुत्वा कथां शुभाम् ।।

कथा चेयं महापुण्या पुरा कैलासपर्वते ।। ६ ।।

केलिकालेषु पावत्यै शंभुना कथिता द्विजाः ।।

तां ब्रवीमि कथामेनामत्यद्भुततरां हि वः ।। ७ ।।

पुरा हि गालवोनाम महर्षिः सत्यवाक्छुचिः ।।

चिंतयानः परं ब्रह्म तपस्तेपे निजाश्रमे।। ।। ८ ।।

तस्य कन्या महाभागा रूपयौवनशालिनी ।।

नाम्ना कांतिमती बाला व्यचरत्पितुरंतिके ।। ९ ।।

आहरंती च पुष्पाणि बल्यर्थं तस्य वै मुनेः ।।

वेदिसंमार्जनादीनि समिदाहरणानि च ।। 3.1.8.१० ।।

कुर्वती पितरं बाला सम्यक्परिचचार ह ।।

कदाचित्सा तु वल्यर्थं पुष्पाण्याहर्तुमुद्यता ।। ।। ११ ।।

तस्मिन्वने कांतिमती सुदूरमगमत्तदा ।।
तत्र पुष्पाणि रम्याणि समाहृत्य च पेटके ।। १२ ।।
तूर्णं निववृते बाला पितृशुश्रूषणे रता ।।
निवर्तमानां तां कन्यां विद्याधरकुमारकौ ।। १३ ।।
सुदर्शनसुकर्णाख्यौ विमानस्थौ ददर्शतुः ।।
तां दृष्ट्वा गालवसुतां रूपयौवनशालिनीम् ।।१४।।
कामस्य पत्नीं ललितां रतिं मूर्तिमतीमिव ।।
सुदर्शनाभिधो ज्येष्ठो विद्याधरकुमारकः ।। १५ ।।
हर्षसंफुल्लनयनश्चकमे काममोहितः ।।
पूर्णचन्द्राननां तां वै वीक्षमाणो मुहुर्मुहुः ।। १६ ।।
तया रिरंसुकामोऽसौ विमानाग्रादवातरत् ।।
तामुपेत्य मुनेः कन्यामित्युवाच सुदर्शनः ।। १७ ।। ।।
।। सुदर्शन उवाच ।। ।।
कासि भद्रे सुता कस्य रूपयौवनशालिनी ।।
रूपमप्रतिमं ह्येतदाह्लादयति मे मनः ।। १८ ।।
त्वां दृष्ट्वा रतिसंकाशां बाधते मां मनोभवः ।।
सुकण्ठनामधेयस्य विद्याधरपतेरहम् ।। १९ ।।
आत्मजो रूपसंपन्नो नाम्ना चैव सुदर्शनः ।।
प्रतिगृह्णीष्व मां भद्रे रक्ष मां करुणादृशा ।। 3.1.8.२० ।।
भर्तारं मां समासाद्य सर्वान्भोगानवाप्स्यसि ।।
इत्याकर्ण्य वचस्तस्य विद्याधरसुतस्य सा ।। २१ ।।
तदा कांतिमती वाक्यं धर्मयुक्तमभाषत ।।
सुदर्शन महाभाग विद्याधरपतेः सुत ।।२२ ।।
आत्मजां मां विजानीहि गालवस्य महात्मनः ।।
कन्या चाहमनूढास्मि पितृशु श्रूषणे रता ।। २३ ।।
बल्यर्थं हि पितुश्चाहं पुष्पाण्याहर्तुमागता ।।
आहरंत्याश्च पुष्पाणि याम एको न्यवर्तत ।। २४ ।।
मद्विलंबेन स मुनिर्देव तार्चनतत्परः ।।

कोपं विधास्यते नूनं तपस्वी मुनिपुंगवः ।। २५ ।।

तच्छीघ्रमद्य गच्छामि पुष्पाण्यप्याहृतानि मे ।।

कन्याश्च पितुराधीना न स्वतन्त्राः कदाचन ।।२६।।

यदि मामिच्छति भवान्पितरं मम याचय ।।

इति विद्याधरसुतमुक्त्वा कांतिमती तदा ।। २७ ।।

पितुराशंकिता तूर्णमा श्रमं गन्तुमुद्यता ।।

गच्छन्तीं तां समालोक्य विद्याधरकुमारकः ।। २८ ।।

तूर्णं जग्राह केशेषु धावित्वा मदनार्दितः ।।

अभ्येत्य निजकेशेषु गृह्णन्ते तं विलोक्य सा ।। २९ ।।

उच्चैश्चक्रंद सहसा कुररीव मुनेः सुता ।।

अस्माद्विद्याधरसुताज्जनक त्राहि मां विभो ।। 3.1.8.३० ।।

बलाद्गृह्णाति दुष्टात्मा विद्याधरसुतोऽद्य माम् ।।

इत्थमुच्चैः प्रचुक्रोश स्वाश्रमान्नातिदूरतः ।। ३१ ।।

तदाक्रंदितमाकर्ण्य गन्धमादनवासिनः ।।

मुनयस्तु पुरस्कृत्य गालवं मुनिपुंगवम् ।। ३२ ।।

किमेतदिति विज्ञातुं तं देशं तूर्णमाययुः ।।

तं देशं तु समागत्य सर्वे ते ऋषिपुंगवाः ।। ३३ ।।

विद्याधरगृहीतां तां ददृशुर्मु निकन्यकाम् ।।

विद्याधरसुतं चान्यमंतिके समुपस्थितम् ।। ३४ ।।

एतद्दृष्ट्वा महायोगी गालवो मुनिपुंगवः ।।

गतः कोपवशं किंचिद्दुराप्मानं शशाप तम् ।। ३५ ।।

कृतवानीदृशं कार्यं यत्त्वं विद्याधराधम ।।

तद्याहि मानुषीं योनिं स्वस्य दुष्कर्मणः फलम् ।। ३६ ।।

संप्राप्य मानुषं जन्म बहुदुःखसमाकुलम् ।।

अचिरेण तु कालेन तस्मिन्नेव तु जन्मनि ।। ३७ ।।

मनुष्यैरपि निंद्यं तद्वेतालत्वं प्रयास्यसि ।।

मांसानि शोणितं चैव सर्वदा भक्षयिष्यसि ।। ३८ ।।

वेताला राक्षसप्राया बलाद्गृह्णन्ति योषितः ।।

तस्मात्त्वं मानुषो भूत्वा वेतालत्वमवाप्स्यसि ।। ३९?।।

तव दुष्कर्मणो योऽसावनुमंता कनिष्ठकः ।।

सुकर्ण इति विख्यातो भविता सोपि मानुषः ।। 3.1.8.४० ।।

किंतु साक्षान्न कृतवान्यतोऽसावीदृशीं क्रियाम्।।

तन्मानुषत्व मेवास्य वेतालत्वं तु नो भवेत् ।। ४१ ।।

विज्ञप्तिकौतुकाभिख्यं यदा विद्याधराधिपम् ।।

द्रक्ष्यतेऽसौ कनिष्ठस्ते तदा शापाद्विमोक्ष्यते ।। ४२ ।।

ईदृशस्यतु यः कर्ता महापापस्य कर्मणः ।।

स त्वं संप्राप्य मानुष्यं तस्मिन्नेव तु जन्मनि ।। ४३ ।।

वेतालजन्म संप्राप्य चिरं लोके चरिष्यसि ।।

इत्युक्त्वा गालवः कन्यां गृहीत्वा मुनिभिः सह ।। ४४ ।।

विद्याधरसुतौ शप्त्वा स्वाश्रमं प्रति निर्ययौ ।।

ततस्तस्मिन्महाभागे निर्याते मुनिपुंगवे ।। ।। ४५ ।।

सुदर्शनसुकर्णाख्यौ विद्याधरपतेः सुतौ।।

मुनिशापेन दुःखार्तौ चिंतयामासतुर्भृशम् ।। ४६ ।।

कर्तव्यं तौ विनिश्चित्य सुदर्शनसुकर्णकौ ।।

गोविंदस्वामिनामानं यमुनातटवासिनम् ।। ४७ ।।

ब्राह्मणं शीलसंपन्नं पितृत्वे परिकल्प्य तौ ।।

परित्यज्य स्वकं रूपमजायेतां तदा त्मजौ ।। ४८ ।।

विजयाशोकदत्ताख्यौ तस्य पुत्रौबभूवतुः ।।

सुतो विजयदत्ताख्यो ज्येष्ठो जज्ञे सुदर्शनः ।। ४९ ।।

अशोकदत्तनामा तु सुकर्णश्च कनिष्ठकः ।।

विजयाशोकदत्तौ तु क्रमाद्यौवनमापतुः ।। 3.1.8.५० ।।

एतस्मिन्नेव कालेतु यमुनायास्तटे शुभे ।।

अनावृष्ट्या तु दुर्भिक्षमभूद्द्वादशवार्षि कम् ।। ५१ ।।

गोविंदस्वामिनामा तु ब्राह्मणो वेदपारगः ।।

दुर्भिक्षोपहतां दृष्ट्वा तदानीं स निजां पुरीम् ।। ५२ ।।

प्रययौ काशनिगरं सपुत्रः सह भार्यया ।।

स प्रयागं समासाद्य द्वं दृष्ट्वा महावटम्।। ५३ ।।

कपालमालाभरणं सोऽपश्यद्यतिनं पुरः ।।

गोविंदस्वामिनामा तु नमश्चक्रे स तं मुनिम् ।। ५४ ।।

सपुत्रस्य सभार्यस्य सोऽवादीदाशिषो मुनिः ।।

इदं च वचनं प्राह गोविंदस्वामिनं प्रति ।। ५५ ।।

ज्येष्ठेनानेन पुत्रेण सांप्रतं ब्राह्मणोत्तम ।।

क्षिप्रं विजयदत्तेन वियोगस्ते भविष्यति ।। ५६ ।।

इति तस्य वचः श्रुत्वा गोविंदस्वामिनामकः ।।

सूर्ये चास्तं गते तत्र सांध्यं कर्म समाप्य च ।। ५७ ।।

सभार्यः ससुतो विप्रः सुदूराध्वसमाकुलः ।।

उवास तस्यां शर्वर्य्यां शून्ये वै देवतालये ।। ५८ ।।

तदा त्वशोकदत्तश्च ब्राह्मणी च समाकुलौ ।।

वस्त्रेणास्तीर्य पृथिवीं रात्रौ निद्रां समापतुः ।। ५९।।

ततो विजयदत्तस्तु दूरमार्गविलंघनात् ।।

बभूवात्यंतमलसो भृशं शीतज्वरार्दितः ।। 3.1.8.६० ।।

गोविंदस्वामिना पित्रा शीतवबाधानिवृत्तये ।।

गाढमालिंग्यमानोऽपि शीतबाधां न सोऽत्यजत् ।। ६१ ।।

बाधतेऽत्यर्थमधुना तात मां शीतलो ज्वरः ।।

एतद्बाधानिवृत्त्यर्थं वह्निमानय मा चिरम् ।। ६२ ।।

इति पुत्रवचः श्रुत्वा सर्वत्राग्निं गवेषयन् ।।

अलब्धवह्निः प्रोवाच पुन रभ्येत्य पुत्रकम् ।। ६३ ।।

न वह्निं पुत्र विंदामि मार्गमाणोऽपि सर्वशः ।।

रात्रिमध्ये तु संप्राप्ते द्वारेषु पिहितेषु च ।। ६४ ।।

निद्रापरवशाः पौरा नैव दास्यंति पावकम् ।।

इत्थं विजयदत्तोऽसावुक्तः पित्रा ज्वरातुरः ।। ६५ ।।

ययाचे वह्निमेवासौ पितरं दीनया गिरा ।।

शीतज्वरसमुद्भूतशीतबाधाप्रपीडितम् ।। ६६ ।।

हिमशीकरवान्वायुर्द्विगुणं बाधतेऽद्य माम् ।।

वह्निर्न लब्ध इति वै मिथ्यैवोक्तं पितस्त्वया ।। ६७ ।।

दूरादेष पुरोभागे ज्वालामालासमाकुलः ।।

शिखाभिर्लेलिहानोभ्रं दृश्यते पश्य पावकः ।। ६८ ।।

तं वह्निमानय क्षिप्रं तात शीतनिवृत्तये ।।

इत्युक्तवन्तं तं पुत्रं स पिता प्रत्यभाषत ।। ६९ ।।

नानृतं वच्मि पुत्राद्य सत्यमेव ब्रवीम्यहम् ।।

वह्निमान्योऽयमुद्देशो दूरादेव विलोक्यते ।। 3.1.8.७० ।।

पितृकाननदेशं तं पुत्र जानीहि सांप्रतम् ।।

यद्येषोभ्रंलिहज्वालः पुरस्ताज्ज्वलतेऽनलः ।। ७१ ।।

पुत्र वित्रासजनकं तं जानीहि चितानलम् ।।

अमंगलो न सेव्योऽयं चिताग्निः स्पर्शदूषितः ।। ७२ ।।

तस्य चायुःक्षयं याति सेवते यश्चितानलम् ।।

तस्मात्तवायुर्हानिर्मा भूयादिति मया सुत ।। ७३ ।।

अमंगलस्तथा स्पृश्यो नानीतोऽयं चितानलः ।।

इत्युक्तवंतं पितरं स दीनः प्रत्यभाषत ।। ७४ ।।

अयं शवानलो वा स्यादध्वरानल एव वा ।।

सर्वथानीयतामेष नोचेन्मे मरणं भवेत् ।। ७५ ।।

पुत्रस्नेहाभिभूतोऽथ समाहर्तुं चितानलम् ।।

गोविंदस्वामिनामा तु श्मशानं शीघ्रमभ्यगात् ।। ७६ ।।

गोविंदस्वामिनि गते समाहर्तुं चितानलम्।।

तूर्णं विजयदत्तोऽपि तदा गच्छंतमन्वयात् ।। ७७ ।।

संप्राप्य तापनिकटं विकीर्णास्थि चितानलम् ।।

आलिंगन्निव सोद्वेगं शनैर्निर्वृतिमाप्तवान् ।। ७९ ।।

अथावादीत्स पितरं तदिदं परिवर्तुलम् ।।

अतिदीप्तं विभात्यग्नौ किं रक्तांबुजसन्निभम् ।।७९ ।।

इति तस्य वचः श्रुत्वा पुत्रस्य ब्राह्मणोत्तमः ।।

निपुणं तं निरूप्यैतद्वचनं पुनरब्रवीत् ।। 3.1.8.८० ।।

।। गोविंदस्वाम्युवाच ।। ।।

एतत्कपालमनलज्वालावलयवर्तुलम् ।।

वसाकीकसमांसाढ्यमेतद्रक्तांबुजोपमम् ।। ८१ ।।

द्विजस्य सूनुः श्रुत्वेति काष्ठाग्रेण जघान तत् ।।

येन तत्स्फुटनोद्गीर्णवसासिक्तमुखोऽभवत् ।। ८२ ।।

कपालघट्टनाद्रक्तं यत्संसक्तं मुखे तदा ।।

जिह्वया लेलिहानोऽसौ मुहुस्तद्रक्तमा स्वदत् ।। ८३ ।।

आस्वाद्यैवं समादाय तत्कपालं समाकुलः ।।

पीत्वा वसां महाकायो बभूवातिभयंकरः ।। ८४ ।।

सद्यो वेता लतां प्राप तीक्ष्णदंष्ट्रस्तदा निशि ।।

तस्याट्टहासघोषेण दिशश्च प्रदिशस्तदा ।। ८५ ।।

द्यौरतरिक्षं भूमिश्च स्फुटिता इव सर्वशः ।।

तस्मिन्वेगात्समाकृष्य पितरं हन्तुमुद्यते ।। ८६ ।।

मा कृथाः साहसमिति प्रादुरासीद्वचो दिवि ।।

स दिव्यां गिरमाकर्ण्य वेतालोऽतिभयंकरः ।। ८७ ।।

पितरं तं परित्यज्य महावेगसमन्वितः ।।

तूर्णमाकाशमाविश्य प्रययावस्खलद्गतिः ।।८८।।

स गत्वा दूरमध्वानं वेतालैः सह संगतः ।।

तमागतं समालोक्य वेतोलास्सर्व एव ते ।। ८९ ।।

कपालस्फोटनादेष वेतालत्वं यदाप्तवान् ।।

कपालस्फोटनामानमाह्वयांचक्रिरे ततः ।।3.1.8.९०।।

ततः कपालस्फोटो ऽसौ वेतालैः सर्वतो वृतः।।

नरास्थिभूषणाख्यस्य सद्यो वेतालभूपतेः ।।९१।।

अन्तिकं सहसा प्राप महाबलसमन्वितः।।

नरास्थिभूषणश्चैनं सेनाप तिमकल्पयत् ।। ९२ ।।

तं कदाचित्तु गन्धर्वश्चित्रसेनाभिधो बली ।।

नरास्थिभूषणं संख्ये न्यवधीत्सोऽपि संस्थितः ।। ९३।।

नरास्थिभूषणे तस्मि न्गन्धर्वेण हते युधि ।।

तदा कपालस्फोटोऽसौ तत्पदं समवाप्तवान् ।। ९४ ।।

विद्याधरेन्द्रस्य सुतः सुदर्शनो मनुष्यतां वै प्रथमं स गत्वा ।।

वेतालतां प्राप्य महर्षिशापात्क्रमाच्च वेतालपतिर्बभूव ।। ९५ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतु माहात्म्ये वेतालवरदतीर्थप्रशंसायां सुदर्शनवेतालत्वप्राप्तिवर्णनं नामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ०९



ततः स विप्रः प्रत्यूषे पुत्रशोकेन पीडितः ।।

अशोक दत्तसंयुक्तो भार्यया विललाप ह ।। १ ।।

विलपंतं समालोक्य गोविंदस्वामिनं द्विजाः ।।

वणिक्समुद्रदत्ताख्यः समानिन्ये निजं गृहम् ।। २ ।।

समानीय समाश्वास्य दयायुक्तो वणिग्वरः ।।

स्वधनानां हि सर्वेषां रक्षितारमकल्पयत् ।। ३ ।।

स्मरन्महायतिवचः पुत्रदर्शनलालसः ।।

स तस्थौ वणिजो गेहे पुत्रभार्यासमन्वितः ।। ४ ।।

अशोकदत्तनामा तु द्वितीयो विप्रनंदनः ।।

शस्त्रे चैव तथा शास्त्रे बभूवातिविचक्षणः ।। ५ ।।

तथान्यास्वपि विद्यासु नास्ति तत्सदृशो भुवि ।।

कृतविद्यो द्विजसुतः प्रख्यातो नगरेऽभवत् ।। ६ ।।

अत्रांतरे नरपतिं प्रतापमुकुटाभिधम् ।।

काशीदेशाधिपो मल्लः कश्चिदभ्याययौ बली ।। ७ ।।

प्रतापमुकुटो राजा मल्लस्यास्य जयाय सः ।।

बलिनं द्विजपुत्रं तमाह्वयामास भृत्यकैः ।। ८ ।।

तमागतं समालोक्य प्रतापमुकुटोऽब्रवीत् ।।

अशोकदत्त सहसा मल्लमेनं बलोत्कटम् ।। ९ ।।

दुर्जयं जहि संग्रामे त्वं वै वलवतां वरः ।।

दाक्षिणात्यमहामल्लपतावस्मिञ्जिते त्वया ।। 3.1.9.१० ।।

यदिष्टं तव तत्सर्वं दास्याम्यहं न संशयः ।।

इति तस्य वचः श्रुत्वा वलवान्द्विजनंदनः ।। ११ ।।

दाक्षिणात्यमहामल्लनृपतिं समताडयत् ।।

ताडितो द्विजपुत्रेण मल्लः स बलिना बली ।। १२ ।।

सद्यो विवृत्तनयनः परासुर्न्यपतद्भुवि ।।

द्विज पुत्रस्य तत्कर्म देवैरपि सुदुष्करम् ।। १३ ।।

प्रतापमुकुटो दृष्ट्वा प्रसन्नहृदयोऽभवत् ।।

दत्त्वा वहुधनान्ग्रामान्समीपेऽस्थापयत्तदा ।। १४ ।।

स कदाचिन्महाराज सहितो द्विजसूनुना ।।

संध्यायां विजने देशे चचार तुरगेण वै ।। १५ ।।

द्विजसूनुसखस्तत्र दीनां वाणीमथाशृणोत् ।।

राजन्नल्पापराधोऽहं शत्रुप्रेरणयासकृत् ।। १६ ।।

दण्डपालेन निहितः शूले निर्घृणचेतसा ।।

दिनमद्य चतुर्थं मे शूलस्थस्यैव जीवतः ।। १७ ।।

प्राणाः सुखेन निर्यांति न हि दुष्कृतकर्मणाम् ।।

भृशं मां बाधते तृष्णा तां निवारय भूपते ।।१८ ।।

इति दीनां समाकर्ण्य वाचं राजा द्विजा त्मजम् ।।

अशोकदत्तनामानं धैर्यवंतमभाषत ।। १९ ।।

अस्मै निरपराधाय शूलप्रोताय जंतवे ।।

तृष्णार्दिताय दातव्यं द्विजसूनो त्वया जलम् ।। ।। 3.1.9.२० ।।

इत्यादिष्टो नरेन्द्रेण सहसा द्विजनन्दनः ।।

जलपूर्णं समादाय कलशं वेगवान्ययौ ।। २१ ।।

तच्छमशानं समासाद्य भूतवेतालसंकुलम् ।।

शूलप्रोताय वै तस्मै जलं दातुं समुत्सुकः ।। २२ ।।

ददर्शाथ स्थितां नारीं नवयौवनशालिनीम् ।।

उदैक्षत महाकांतिं मूर्तामिव रतिं द्विजः ।। ।। २३ ।।

तामालोक्य ततः प्राह धैर्यवान्द्विजनंदनः ।।

कासि भद्रे वरारोहे श्मशाने विजने स्थिता ।। २४ ।।

अस्याधस्तात्किमर्थं त्वं शूलप्रोतस्य तिष्ठसि ।।

इति तस्य वचः श्रुत्वा सा प्राह रुचिरानना ।। २५ ।।

पुरुषो वल्लभोऽयं मे शूले राज्ञा समर्पितः ।।

धनं यथा च कृपणः पश्य प्राणान्न मुंचति ।। २६ ।।

आसन्नमरणं चैनमनुयातुमिह स्थिता ।।
तृषितो याचते वारि मामयं व्यथते मुहुः ।। २७ ।।
शूलप्रोतो ह्वतग्रीवं मुमूर्षुं प्राणनायकम्।।
नास्मि पाययितुं शक्ता जलमेनमधःस्थिता।।२८।।
अशोकदत्तस्तच्छ्रुत्वा करुणावरुणालयः ।।
तत्कालसदृशं वाक्यं तां वधूमब्रवीत्तदा ।।२९।।
।। अशोकदत्त उवाच ।। ।।
मातर्मत्स्कंधमारुह्य देह्यस्मै शीतलं जलम्।।
सा तथेति तमाभाष्य तरुणी त्वरयान्विता।।3.1.9.३०।।
आनम्रवपुषस्तस्य स्कंधं पद्भ्यां रुरोह वै ।।
द्विजसूनुर्ददर्शाथ शोणितं नूतनं पतत्।।३१।।
किमेतदिति सोपश्यदुन्नम्य सहसा मुखम् ।।
भक्ष्यमाणं तया तत्स विज्ञाय द्विजनंदनः।।३२।।
अशोकदत्तो जग्राह तस्याः पादं सनूपुरम्।।
ततोऽगान्नूपुरं त्यक्त्वा बद्धरत्नं विहाय तत्।।३३।।
प्रत्युप्तानेकरत्नाढ्यं तदादायच नूपुरम्।।
अशोकदत्तः प्रययौ तच्छमशानान्नृपांतिकम्।।३४।।
स्मशानवृत्तं तत्सर्वं स नृपाय निवेद्य वै।।
महार्घ्यरत्नप्रत्युप्तं नूपुरं च ददौ तदा ।।३५।।
ज्ञात्वा तद्वीरचरितं वीरैरन्यैः सुदुष्करम्।।
ददौ मदनलेखाख्यां सुतां तस्मै महीपतिः।।३६।।
कदाचिदथ ताद्दिव्यं नूपुरं वीक्ष्य भूपतिः।।
अस्य नूपुरवर्यस्य तुल्यं वै नूपुरांतरम्।। ३७ ।।
कुतो वा लभ्यत इति सादरं समचिंतयत् ।।
अशोकदत्तस्तु तदा विज्ञाय नृपकांक्षितम् ।। ३८ ।।
नूपुरांतरसि द्ध्यर्थं चिंतयामास चेतसा ।।
श्मशाने नूपुरमिदं यतः प्राप्तं मया पुरा ।।३९।।
तां नूपुरांतरप्राप्त्यै कुत्र द्रक्ष्यामि सांप्रतम् ।।

इत्थं वितर्क्य बहुधा नि श्चिकाय महामतिः।।3.1.9.४०।।

विक्रेष्यामि महामांसं समेत्य पितृकाननम्।।

तत्र राक्षसवेतालपिशाचादिषु सर्वशः।।४१।।

मंत्रैराहूयमानेषु साप्यायास्य ति राक्षसी ।।

तामागतां बलाद्गृह्य तद्ग्रहीष्यामि नूपुरम्।।४२।।

राक्षसानां सहस्रं वा पिशाचानां तथायुतम् ।।

वेतालानां तथा कोटिर्न लक्ष्यं बलिनो मम ।।४३।।

इति निश्चित्य मनसा श्मशानं सहसा ययौ ।।

विक्रीणानो महामांसं मंत्रैराहूय राक्षसान् ।।४४।।

गृहाणेत्युच्चया वाचा चचार श्रावयन्दि शः ।।

विक्रीयते महामांसं गृह्यतांगृह्यतामिति ।। ४५ ।।

तत्र राक्षसवेतालाः कंकालाश्च पिशाचकाः ।।

अन्ये च भूतनिवहाः समाजग्मुः प्रहर्षिताः ।। ।। ४६ ।।

भक्षयिष्यामहे सर्वे मांसमिष्टतमं त्विति ।।

तत्रागच्छत्सु सर्वेषु रक्षःकन्यासमावृता ।। ४७ ।।

आययौ राक्षसी सापि मांसभक्षणलालसा ।।

गवेषयंस्तदा विप्रस्तां समुद्वीक्ष्य राक्षसीम्।। ४८ ।।

सेयं दृष्टा पुरेत्येष प्रत्यभिज्ञानमाप्तवान् ।।

तामाह द्विजपुत्रोऽन्यद्देहि मे नूपुरं त्विति ।। ४९ ।।

सा तस्य वचनं श्रुत्वा प्रीता वाक्यमथाऽब्रवीत् ।।

ममैव च त्वया नीतं पुरा वीरेंद्र नूपुरम् ।। 3.1.9.५० ।।

गृहाण रत्नरुचिरं द्वितीयमपि नूपुरम् ।।

इत्युक्त्वा नूपुरं तस्मै स्वसुतां च ददौ प्रियाम्।। ५१ ।।

विद्युत्केश्या तदा दत्तां प्रियां विद्युत्प्रभाभिधाम् ।।

विप्रः संप्राप्य मुमुदे रूपयौवनशालि नीम् ।। ५२ ।।

विद्युत्केशी तु जामात्रे हेमाब्जमपि सा ददौ ।।

विद्युत्प्रभां नूपुरं च हेमाब्जमपिलभ्य सः ।। ५३ ।।

श्वश्रूमाभाष्य सहसा पुनः प्रायान्नृपांतिकम्।।

ततः प्रतापमुकुटो नूपुरप्राप्तिनंदितः ।। ५४ ।।

शौर्यधैर्यसमायुक्तं प्रशशंस द्विजात्मजम्।।

अथ विद्युत्प्रभां विप्रः सोऽब्रवीद्रहसि प्रियाम्।।५५।।

मात्रा तव कुतो लब्धमेतद्धेमांबुज प्रिये।।

एतत्तुल्यानि चान्यानि यतः प्राप्स्ये वरानने।।५६।।

द्विजात्मजं ततः प्राह पतिं विद्युत्प्रभा रहः ।।

प्रभो कपालविस्फोटनाम्नो वेतालभूपतेः ।। ५७ ।।

अस्ति दिव्यं सरः किंचिद्धेमांबुजपरिष्कृतम् ।।

तव श्वश्र्वा जलक्रीडां वितन्वं त्येदमाहृतम् ।। ५८ ।।

इति श्रुत्वा वचस्तत्र मां नयेति जगाद सः ।।

ततः सा सहसा विप्रं निन्ये तत्कांचनं सरः ।। ५९ ।।

ततः स हेमपद्मानामाजिहीर्षुर्द्विजात्मजः ।।

तद्विप्रकारिणः सर्वान्वेतालादींस्ततोऽवधीत् ।। 3.1.9.६० ।।

स्वयं कपालविस्फोटं निहताशेषसैनिकम् ।।

ददर्श वेतालपतिं तं च हंतुं प्रचक्रमे ।। ६१ ।।

अत्रांतरे महातेजा नाम्ना विज्ञप्तिकौतुकः ।।

विद्याधरपतिः प्राप्य विमानेनैनमब्रवीत् ।। ६२ ।।

अशोकदत्तं विप्रेंद्र साहसं मा कृथा इति ।।

तदाकर्ण्य द्विजसुतो विमानवरसंस्थितम् ।।६३।।

ददर्श प्रभया युक्तं विद्याधरपतिं दिवि ।।

तस्य दर्शनमात्रेण शापामुक्तो द्विजा त्मजः ।। ६४ ।।

संत्यज्य मानुषं रूपं दिव्यं रूपमवाप्तवान् ।।

विमानवरमारूढं दिव्याभरणभूषितम् ।। ६५ ।।

शापान्मुक्तं सुकर्णं तं प्राह विज्ञप्ति कौतुकः ।।

अयं सुकर्ण ते भ्राता गालवस्य महामुनेः ।। ६६ ।।

शापाद्वेतालतां प्राप तत्कन्यास्पर्शपातकी ।।

त्वं च शप्तः पुरा तेन तत्पापस्यानु मोदकः ।। ६७ ।।

तवायमल्पपापस्य शापो मद्दर्शनावधिः ।।

कल्पिस्ततेन मुनिना शापांतो नास्य कल्पितः ।। ६८।।
तदेहि मुक्तशापोसि सुकर्ण स्वर्गमारुह ।।
ततः सुकर्णस्तं प्राह विद्याधरकुलाधिपम् ।। ६९ ।।
विद्याधरपते भ्रात्रा विना ज्येष्ठेन सांप्रतम् ।।
सर्वभोगयुतं स्वर्गं नैव गंतुं समुत्सहे ।। 3.1.9.७० ।।
शापस्यांतो यथा भूयान्मम भ्रातुस्तथा वद ।।
तमुवाच महातेजास्तथा विज्ञप्तिकौतुकः ।। ७१ ।।
दुर्निवारमिमं शापमन्यः को वा निवारयेत् ।।
किं तु गुह्यतमं किंचित्तव वक्ष्यामि सांप्रतम्।।७२।।
ब्रह्मणा सनकादिभ्यो मुनिभ्यः कथितं पुरा।।
सर्वतीर्थाश्रये पुण्ये दक्षिणस्यो दधेस्तटे।।७३।।
चक्रतीर्थसमीपे तु तीर्थमस्तिमहत्तरम्।।
महापातकसंघाश्च यस्य दर्शनमात्रतः।।७४।।
नश्यंति तत्क्षणादेव न जाने स्नानजं फलम्।।
तत्र गत्वा तव ज्येष्ठो यदि स्नायान्महत्तरे ।।७५।।
वेतालत्वं त्यजेन्नूनं तदा गालवशापजम्।।
सुकर्णस्तद्वचः श्रुत्वा भ्रात्रा वेतालरूपिणा ।।७६।।
सहितः सहसा प्रायाद्दक्षिणस्योदधेस्तटम् ।।
दक्षिणं चक्रतीर्थाख्यादुत्तरं गंधमादनात् ।। ७७ ।।
ब्रह्मणा सनकादिभ्यः कथितं तीर्थमभ्यगात् ।।
तत्तीर्थकूलमासाद्य भ्रातरं चेदमब्रवीत् ।। ७८ ।।
भ्रातर्गालवशापस्य घोरस्यास्य निवृत्तये ।।
तीर्थेऽस्मिन्नचिरात्स्नाहि सर्वतीर्थोत्तमोत्तमे ।। ७९ ।।
तस्मिन्न वसरे विप्रास्तस्य तीर्थस्य शीकराः ।।
न्यपतंस्तस्य गात्रेषु वायुना वै समाहृताः ।। 3.1.9.८० ।।
स तच्छीकरसंस्पर्शात्त्यक्त्वा वेतालतां तदा ।।
तदेव मानुषं भावं द्विजपुत्रत्वमाप्तवान्।। ८१ ।।
ततः संकल्प्य सहसा तस्मिंस्तीर्थोत्तमोत्तमे ।।

मनुष्यत्वनिवृत्त्यर्थं निममज्ज द्विजात्मजः ।। ८२ ।।

उत्तिष्ठन्नेव सहसा दिव्यं रूपमवाप्तवान् ।।

विमानवरमारूढो देवस्त्रीपरिवारितः ।। ८३ ।।

सर्वाभरणसंयुक्तः सह भ्रात्रा सुदर्शनः ।।

श्लाघमानश्च तत्तीर्थं नमस्कृत्य पुनःपुनः ।। ८४ ।।

विज्ञप्तिकौतुकं चापि पुरस्कृत्य दिवं ययौ ।।

तदाप्रभृति तत्तीर्थं वेतालवरदाभिधम्।। ८५ ।।

वेतालत्वं विनष्टं यच्छीकरस्पर्शमात्रतः ।।

य इदं तीर्थमासाद्य चक्रतीर्थस्य दक्षिणे ।। ८६ ।।

स्नानं कदाचित्कुर्वंति जीवन्मुक्ता भवंति ते।।

एतत्तीर्थसमं पुण्यं न भूतं न भविष्यति ।। ८७ ।।

घोरां वेतालतां त्यक्त्वा दिव्यतां स यदाप्तवान् ।। ८८ ।।

अत्र संकल्प्य च स्नात्वा वेतालवरदे शुभे ।।

पितृभ्यः पिंडदानं च कुर्याद्वै नियमान्वितः ।। ८९ ।।

एवं वः कथितं विप्रास्तस्य तीर्थस्य वैभवम् ।।

वेतालवरदाभिख्या यथा चास्य समागता ।।। ।। 3.1.9.९० ।।

यः पठेदिममध्यायं शृणुयाद्वा स मुच्यते ।। ९१ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये वेतालवरदतीर्थप्रशंसायां सुदर्शनसुकर्णशापमोक्षणंनाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १०

https://sa.wikisource.org/s/fs9
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

वेतालवरदे तीर्थे नरः स्नात्वा द्विजोत्तमाः ।।

ततः शनैःशनैर्गच्छेद्गन्धमादनपर्वतम् ।। १ ।।

योंऽबुधौ सेतुरूपेण वर्तते गन्धमादनः ।।

स मार्गो ब्रह्मलोकस्य विश्वकर्त्रा विनिर्मितः ।। २ ।।

लक्षकोटिसहस्राणि सरांसि सरितस्तथा ।।

समुद्राश्च महापुण्या वनान्यप्याश्रमाणि च ।। ३ ।।

पुण्यानि क्षेत्रजातानि वेदारण्या दिकानि च ।।

मुनयश्च वसिष्ठाद्या सिद्धचारणकिन्नराः ।। ४ ।।

लक्ष्म्या सह धरण्या च भगवान्मधुसूदनः ।।

सावित्र्या च सरस्वत्या सहैव चतु राननः ।। ५ ।।

हेरंबः षण्मुखश्चैव देवाश्चेंद्रपुरोगमाः ।।

आदित्यादिग्रहाश्चैव तथाष्टौ वसवो द्विजाः ।। ६ ।।

पितरोलोकपालाश्च तथान्ये देवता गणाः ।।

महापातकसंघानां नाशने लोकपावने ।। ७ ।।

दिवानिशं वसंत्यत्र पर्वते गंधमादने ।।

अत्र गौरी सदा तुष्टा हरेण सह वर्तते ।। ।।

अत्र किन्नरकांतानां क्रीडा जागर्ति नित्यशः ।।

तस्य दर्शनमात्रेण बुद्धिसौख्यं नृणां भवेत् ।। ९ ।।

तन्मूर्धनि कृतावासाः सिद्धचारणयोषितः ।।

पूजयंति सदा कालं शंकरं गिरिजापतिम् ।। 3.1.10.१० ।।

कोटयो ब्रह्महत्यानामगम्यागमकोटयः ।।

अंगलग्नैर्विनश्यंति गन्धमादनमारुतैः ।। ११ ।।

असावुल्लोलकल्लोले तिष्ठन्मध्ये महांबुधौ ।।

आसीन्मुनिगणैः सेव्यः पुरा वै गन्धमादनः ।। १२ ।।

ततो नलेन सेतौ तु बद्धे तन्मध्यगोचरः ।।

रामाज्ञयाखिलैः सेव्यो बभूव मनुजैरपि ।। १३ ।।

सेतुरूपं गिरिं तं तु प्रार्थयेद्गंधमादनम् ।।

क्षमाधर महापुण्य सर्वदेवनमस्कृत ।। १४ ।।

विष्ण्वा दयोऽपि ये देवास्सेवंते श्रद्धया सह ।।

तं भवंतमहं पद्भ्यामाक्रमामि नगोत्तम ।। १५ ।।

क्षमस्व पादघातं मे दयया पापचेतसः ।।

त्वन्मूर्द्धनि कृतावासं शंकरं दर्शयस्व मे ।। १६ ।।

प्रार्थयित्वा नरस्त्वेवं सेतुरूपं नगोत्तमम् ।।

ततो मृदुपदं गच्छेत्पावनं गन्धमादनम् ।। १७ ।।

अब्धौ तत्र नरः स्नात्वा पर्वते गन्धमादने ।।

पिंडदानं ततः कुर्यादपि सर्षपमात्रकम् ।। १८ ।।

तृप्तिं प्रयांति पितरस्तस्य यावद्युगक्षयः ।।

शमीदलसमानान्वा दद्यात्पिंडान्पितॄन्प्रति ।। १९।।

स्वर्गस्था मोक्षमायांति स्वर्गं नरकवासिनः ।।

ततस्तस्योपरि महातीर्थं लोकेषु विश्रुतम् ।।3.1.10.२।।

सर्वतीर्थोत्तमं पुण्यं नाम्ना पापविनाशनम् ।।

अस्ति पुण्यतमं विप्राः पवित्रे गन्धमादने ।।२१।।

यस्य संस्मरणादेव गर्भवासो न विद्यते ।।

तत्प्राप्य तु नरः स्नायात्स्वदे हमलनाशनम् ।।

तत्र स्नानान्नरो याति वैकुण्ठं नात्र संशयः ।।२२।।

।। ऋषय ऊचुः ।। ।।

सूत पापविनाशाख्य तीर्थस्य ब्रूहि वैभवम् ।।

व्यासेन बोधितस्त्वं हि वेत्सि सर्वं महामुने।।२३।।

।।श्रीसूत उवाच।। ।।

ब्रह्माश्रमपदे वृत्तां पार्श्वे हिमवतः शुभे।।

वक्ष्यामि ब्राह्मणश्रेष्ठा युष्माकं तु कथां शुभाम्।।२४।।

अस्याश्रमपदं पुण्यं ब्रह्माश्रमपदे शुभे ।।

नानावृक्षगणाकीर्णं पार्श्वे हिमवतः शुभे ।। २५ ।।

वहुगुल्मलताकीर्णं मृगद्विपनिषेवितम् ।।

सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम् ।। २६ ।।

वृतिभिर्बहुभिः कीर्णं तापसैरुशोभितम् ।।

ब्राह्मणैश्च महाभागैः सूर्यज्वलनसंनिभैः ।। २७ ।।

नियमव्रतसं पन्नैः समाकीर्णं तपस्विभिः ।।

दीक्षितैर्यागहेतोश्च यताहारैः कृतात्मभिः ।। २८ ।।

वेदाध्ययनसंपन्नैर्वैदिकैः परिवेष्टितम् ।।

वर्णिभिश्च गृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ।। २९ ।।

स्वाश्रमाचारनिरतैः स्ववर्णोक्तविधायिभिः ।।

वालखिल्यैश्च मुनिभिः संप्राप्तैश्च मरीचिभिः ।। 3.1.10.३० ।।

तत्राश्रमे पुरा कश्चिच्छूद्रो दृढमतिर्द्विजाः ।।

साहसी ब्राह्मणाभ्याशमाजगाम मुदान्वितः ।। ३१ ।।

आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ।।

नाम्ना दृढमतिः शूद्रः साष्टांगं प्रणनाम वै ।। ३२ ।।

तान्स दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः ।।

कुर्वतो विविधान्यज्ञान्संप्रहृष्य स शूद्रकः ।। ३३ ।।

अथास्य बुद्धिरभवत्तपःकर्तुमनुत्तमम् ।।

ततोऽब्रवीत्कुलपतिं मुनिमागत्य तापसम् ।। ३४ ।।

।। दृढमतिरुवाच ।। ।।

तपोधन नमस्तेऽस्तु रक्ष मां करुणानिधे ।।

तव प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ ।। ३५ ।।

तस्मादभिगतं मां त्वं यागे दीक्षय सुव्रत ।।

ब्रह्मन्नवरवर्णोऽहं शूद्रो जात्यास्मि सत्तम ।। ३६ ।।

शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ।।

एवमुक्ते तु शूद्रेण तमाह ब्राह्मणस्तदा ।। ३७ ।।

।। कुलपतिरुवाच ।।

यागे दीक्षयितुं शक्यो न शूद्रो हीनजन्मभाक् ।।

श्रूयतां यदि ते बुद्धिः शुश्रूषानिरतो भव ।। ३८ ।।

उपदेशो न कर्तव्यो जातिहीनस्य कर्हिचित् ।।

उपदेशे महान्दोष उपाध्यायस्य विद्यते ।। ३९ ।।

नाध्यापयेद्बुधः शूद्रं तथा नैव च याजयेत् ।।

न पाठयेत्तथा शूद्रं शास्त्रं व्याकरणादिकम् ।। 3.1.10.४० ।।

काव्यं वा नाटकं वापि तथालंकारमेव च ।।

पुराणमितिहासं च शूद्रं नैव तु पाठयेत् ।। ४१ ।।

यदि चोपदिशेद्विप्रः शूद्रं चैतानि कर्हिचित् ।।

त्यजेयुर्ब्राह्मणा विप्रं तं ग्रामाद्ब्रह्मसंकुलात् ।। ४२ ।।

शूद्राय चोपदेष्टारं द्विजं चंडालवत्त्यजेत् ।।

शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत् ।।४३ ।।

अतः शुश्रूष भद्रं ते ब्राह्मणाञ्छ्रद्धया सह।।

शूद्रस्य द्विजशुश्रूषा मन्वादिभिरुदीरिता।।४४।।

नहि नैसर्गिकं कर्म परित्यक्तुं त्वमर्हसि ।।

एवमुक्तस्तु मुनिना स शूद्रोऽचिंतयत्तदा ।। ४५ ।।

किं कर्तव्यं मया त्वद्य व्रते श्रद्धा हि मे पुरा ।।

यथा स्यान्मम विज्ञानं यतिष्येऽहं तथाद्य वै ।। ४६ ।।

इति निश्चित्य मनसा शूद्रो दृढमतिस्तदा ।।

गत्वाश्रमपदाद्दूरं कृतवानुटजं शुभम् ।। ४७ ।।

तत्र वै देवतागारं पुण्यान्यायतनानिच ।।

पुष्पारामादिकं चापि तटाकखननादिकम् ।। ४८ ।।

श्रद्धया कारयामास तपःसिद्ध्यर्थमात्मनः ।।

अभिषेकांश्च नियमानुपवासादिकानपि ।। ४९ ।।

बलिं च कृत्वा हुत्वा च दैवतान्यभ्यपूजयत् ।।

संकल्पनियमोपेतः फलाहारो जितेंद्रियः ।। 3.1.10.५० ।।

नित्यं कंदैश्च मूलैश्च पुष्पैरपि तथा फलैः ।।

अतिथीन्पूजयामास यथावत्समुपागतान् ।। ५१ ।।

एवं हि सुमहान्कालो व्यतिचक्राम तस्य वै ।।
अथाश्रममगात्तस्य सुमतिर्नाम नामतः ।। ५२ ।।
द्विजो गर्गकुलोद्भूतः सत्यवादी जितेंद्रियः ।।
स्वागतेन मुनिं पूज्य तोषयित्वा फलादिकैः ।। ५३ ।।
कथयन्वै कथाः पुण्याः कुशलं पर्यपृच्छत ।।
इत्थं सप्रणिपाताद्यैरुपचारैस्तु पूजितः ।। ५४ ।।
आशीर्भिरभिनंद्यैनं प्रतिगृह्य च सत्क्रियाम् ।।
तमापृछ्य प्रहृष्टाप्मा स्वाश्रमं पुनराययौ ।। ५५ ।।
एवं दिनेदिने विप्रः शूद्रेस्मिन्पक्षपातवान् ।।
आगच्छदाश्रमं तस्य द्रष्टुं तं शूद्रयोनिजम् ।। ५६ ।।
बहुकालं द्विजस्याभूत्संसर्गः शूद्रयोनिना।।
स्नेहस्य वशमापन्नः शूद्रोक्तं नातिचक्रमे ।। ५७ ।।
अथागतं द्विजं शूद्रः प्राह स्नेहवशीकृतम् ।।
हव्यकव्यविधानं मे कृत्स्नं ब्रूहि मुनीश्वर ।। ५८ ।।
पितृकार्यविधानार्थं देवकार्यार्थमेव च ।।
मंत्रानुपदिश त्वं मे महालयविधिं तथा ।। ५९ ।।
अष्टकाश्राद्धकृत्यं च वैदिकं यच्च किंचन ।।
सर्वमेतद्रहस्यं मे ब्रूहि त्वं वै गुरुर्मतः।। 3.1.10.६० ।।
एवमुक्तः स शूद्रेण सर्वमेतदुपादिशत् ।।
कारयामास तस्यायं पितृकार्यादिकं तथा ।। ६१ ।।
पितृकार्ये कृते तेन विसृष्टः स द्विजो गतः ।।
अथ दीर्घेण कालेन पोषितः शूद्रयोनिना ।। ६२ ।।
त्यक्तो विप्रगणैः सोऽयं पंचत्वमगमद्द्विजः
वैवस्वतभटैर्नीत्वा पातितो नरकेष्वपि ।। ६३ ।।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।।
भुक्त्वा क्रमेण नरकांस्तदंते स्था वरोऽभवत् ।। ६४ ।।
गर्दभस्तु ततो जज्ञे विड्वराहस्ततः परम् ।।
जज्ञेऽथ सारमेयोऽसौ पश्चाद्वायसतां गतः ।। ६५ ।।

अथ चंडालतां प्राप शूद्रयोनिमगात्ततः ।।
गतवान्वैश्यतां पश्चात्क्षत्रियस्तदनंतरम् ।। ६६ ।।
प्रबलैर्बाध्यमानोऽसौ ब्राह्मणो वै तदाऽभवत् ।।
उपनीतः स पित्रा तु वर्षे गर्भाष्टमे द्विजः ।। ६७ ।।
वर्तमानः पितुर्गेहे स्वाचाराभ्यासतत्परः ।।
गच्छन्कदाचिद्गहने गृहीतो ब्रह्मरक्षसा ।। ६८ ।।
रुदन्भ्रमन्स्खल न्मूढः प्रहसन्विलपन्नसौ ।।
शश्वद्धाहेति च वदन्वैदिकं कर्म सोऽत्यजत् ।। ६९ ।।
दृष्ट्वा सुतं तथाभूतं पिता दुःखेन पीडितः ।।
सुतमादाय च स्नेहा दगस्त्यं शरणं ययौ ।। 3.1.10.७० ।।
भक्त्या मुनिं प्रणम्यासौ पिता तस्य सुतस्य वै ।।
तस्मै निवेदयामास स्वपुत्रस्य विचेष्टितम् ।। ७१ ।।
अब्रवीच्च तदा विप्रः कुम्भजं मुनिपुंगवम्।।
एष मे तनयो ब्रह्मन्गृहीतो ब्रह्मरक्षसा ।। ७२ ।।
सुखं न भजते ब्रह्मन्रक्ष तं करुणादृशा ।।
नास्ति मे तनयोऽ प्यन्यः पितृणामृणमुक्तये ।। ७३ ।।
अस्य पीडाविनाशार्थमुपायं ब्रूहि कुम्भज ।।
त्वत्समस्त्रिषु लोकेषु तपःशीलो न विद्यते ।। ७४ ।।
अग्रणीः शिवभक्तानामुक्तस्त्वं हि महर्षिभिः ।।
त्वां विनास्य परित्राणं न मेपुत्रस्य विद्यते ।। ७५ ।।
पित्रे कृपां कुरुष्व त्वं दयाशीला हि साधवः ।। ।।
।। श्रीसूत उवाच ।। ।।
एवमुक्तस्तदा तेन कुम्भजो ध्यानमास्थितः ।। ७६ ।।
ध्यात्वा तु सुचिरं कालमब्रवीद्ब्राह्मणं ततः ।।
।। अगस्त्य उवाच ।। ।।
पूर्वजन्मनि ते पुत्रो ब्राह्मणोऽयं महामते ।। ७७ ।।
सुमतिर्नाम विप्रोऽयं मतिं शूद्राय वै ददौ ।।
कर्माणि वैदिकान्येष सर्वाण्युपदि देश वै ।। ७८ ।।

अतोऽयं नरकान्भुक्त्वा कल्पकोटिसहस्रकम् ।।
जातो भुवि तदंतेषु स्थावरादिषु योनिषु ।। ७९ ।।
इदानीं ब्राह्मणो जातः कर्मशेषेण ते सुतः ।।
यमेन प्रेषितेनात्र गृहीतो ब्रह्मरक्षसा ।। 3.1.10.८० ।।
क्रूरेण पातकेनाद्धा पूवजन्मकृतेन वै ।।
उपायं ते प्रवक्ष्यामि ब्रह्मरक्षोविनाशने ।। ८१ ।।
शृणुष्व श्रद्धया युक्तः समाधाय च मानसम् ।।
दक्षिणांभोनिधौ विप्र सेतुरूपो महागिरिः ।। ८२ ।।
वर्तते दैवतैः सेव्यः पावनो गन्धमादनः ।।
तस्योपरि महातीर्थं नाम्ना पापविनाशनम् ।। ८३ ।।
अस्ति पुण्यं प्रसिद्धं च महापातकनाशनम् ।।
भूतप्रेतपिशाचानां वेतालब्रह्म रक्षसाम्।। ८४ ।।
महतां चैव रोगाणां तीर्थं तन्नाशकं स्मृतम् ।।
सुतमादाय गच्छ त्वं तत्तीर्थं सेतुमध्यगम् ।। ८५ ।।
प्रयतः स्नापय सुतं तीर्थे पापविनाशने ।।
स्नानेन त्रिदिनं तत्र ब्रह्मरक्षो विनश्यति ।। ८६ ।।
नैवोपायांतरं तस्य विनाशे विद्यते भुवि ।।
तस्माच्छीघ्रं प्रयाहि त्वं रामसेतुं विमुक्तिदम् ।। ८७ ।।
तत्र पापविनाशाख्यतीर्थे स्नापय ते सुतम् ।।
मा विलंबं कुरुष्वात्र त्वरया याहि वै द्विज ।। ८८ ।।
इत्युक्तः स द्विजोऽगस्त्यं प्रणम्य भुवि दण्डवत्।।
अनुज्ञातश्च तेनासौ प्रययौ गंधमादनम् ।। ८९ ।।
सुतेन साकं विप्रेंद्रो गत्वा पापविनाशनम् ।।
संकल्पपूर्वं संस्नाप्य दिनत्रयमसौसुतम्।। 3.1.10.९।।।
सस्नौ स्वयं च विप्रेंद्राः पिता पापविनाशने ।।
अथ तस्य सुतस्तत्र विमुक्तो ब्रह्मरक्षसा ।। ९१ ।।
समजायत नीरोगः स्वस्थः सुन्दररूपधृक् ।।
सर्वसंपत्समृद्धोऽसौ भुक्त्वा भोगाननेकशः ।। ९२ ।।

देहांते प्रययौ मुक्तिं स्नानात्पापविनाशने ।।
पितापि तत्र स्नानेन देहांते मुक्तिमाप्तवान्।। ९३ ।।
तेनोपदिष्टो यः शूद्रः स भुक्त्वा नरकान्क्रमात् ।।
अनेकासु जनित्वा च कुत्सितास्वपियोनिषु ।। ९४ ।।
गृध्रजन्मा भवत्पश्चाद्गंधमादनपर्वते ।।
स कदाचिज्जलं पातुं तीर्थे पापविनाशने ।। ९५ ।।
समागतः पपौ तोयं सिषिचे चात्मनस्तनुम् ।।
तदैव दिव्यदेहः सन्सर्वाभरणभूषितः ।। ९६ ।।
दिव्यमाल्यांबरधरो रक्तचंदनरूषितः ।।
दिव्यं विमानमारुह्य शोभितश्छत्रचामरैः ।। ९७ ।।
उत्तमस्त्रीपरिवृतः प्रययावमरालयम् ।।९८।।
श्रीसूत उवाच ।। ।।
एवं प्रभावमेतद्वै तीर्थं पापविनाशनम् ।।
स्वर्गदं मोक्षदं पुण्यं प्रायश्चित्तकरं तथा ।।
ब्रह्मविष्णुमहे शानैः सेवितं सुरसेवितम् ।। ९९ ।।
पापानां नाशनाद्विप्राः पापनाशाभिधं हि तत् ।।
श्रेयोर्थी पुरुषस्तस्मात्स्नायात्पापविनाशने ।।3.1.10.१।।।।
इत्थं रहस्यं कथितं मुनींद्रास्तद्वैभवं पापविनाशनस्य ।।
यत्राभिषेकात्सहसा विमुक्तौ द्विजश्च शूद्रश्च विनिंद्यकृत्यौ ।।१०१।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतु माहात्म्ये गंधमादनप्रशंसायां पापविनाशप्रभावकथनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ११



।। श्रीसूत उवाच ।। ।।

पापनाशे नरः स्नात्वा सर्वपापनिबर्हणे ।।

ततः सीतासरो गच्छेत्स्नातुं नियमपूर्वकम् ।। १ ।।

यानि कानि च पुण्यानि ब्रह्मांडांतर्गतानि वै ।।

तानि गंगादितीर्थानि स्वपापपरिशुद्धये ।। २ ।।

सीतासरसि वर्तंते महापातकनाशने ।।

क्षेत्राण्यपि महार्हाणि काश्यादीनि दिवानिशम् ।। ३ ।।

सीतासरोत्र सेवंते स्वस्वकल्मषशांतये ।।

तस्याः सरसि संगीतगुणेनाकृष्य बालिशः ।। ४ ।।

पंचाननोऽपि वसते पंचपातकनाशनः ।।

तदेतत्तीर्थमागत्य स्नात्वा वै श्रद्धया सह ।।

पुरंदरः पुरा विप्रा मुमुचे ब्रह्महत्यया ।। ५ ।।

।। ऋषय ऊचुः ।। ।।

ब्रह्महत्या कथमभूद्वासवस्य पुरा मुने ।।

सीतासरसि स्नानात्कथं मुक्तोऽभवत्तया ।। ६।।

।। श्रीसूत उवाच ।। ।।

कपालाभरणोनाम राक्षसोऽभूत्पुरा द्विजाः ।। ।। ७ ।।

अवध्यः सर्वदेवानां सोऽभवद्ब्रह्मणो वरात् ।।

शवभक्षणनामा तु तस्यासीन्मंत्रिसत्तमः ।। ८ ।।

अक्षौहिणीशतं तस्य हयेभरथसंकुलम् ।।

अस्ति तस्य पुरं चापि वैजयंतमिति श्रुतम् ।। ९ ।।

वसत्यस्मिन्पुरे सोऽयं कपालाभरणो बली ।।

शवभक्षं समाहूय बभाषे मंत्रिणं द्विजाः ।। ।। 3.1.11.१० ।।

शवभक्ष महावीर्य मंत्रशास्त्रेषु कोविद ।।

वयं देवपुरीं गत्वा विनिर्जित्य सुरान्रणे ।। ११ ।।

शक्रस्य भवने रम्ये स्थास्यामस्सैनिकैः सह ।।

रमावो नंदने तस्य रंभाद्यप्सरसां गणैः ।। १२ ।।

कपालाभरणस्येदं निशम्य वचनं तदा ।।

शवभक्षोऽब्रवीद्विप्रा वचस्तत्र तथास्त्विति ।। ।। १३ ।।

ततः कपालाभरणः पुत्रं दुर्मेधसं बली ।।

प्रतिष्ठाप्य पुरे शूरं सेनया परिवारितः ।। १४ ।।

युयुत्सुरमरैः साकं प्रययावमरावतीम् ।।

गजाश्वरथपादातैरुद्धतै रेणुसंचयैः ।। १५ ।।

शोषयञ्जलधीन्सिंधूंश्चूर्णयन्पर्वतानपि ।।

निःसाणध्वनिना विप्रा नादयन्रोदसी तथा ।। १६ ।।

अश्वानां हेषितरवैर्गजानामपि बृंहितैः ।।

रथनेमिस्वनैरुग्रैः सिंहनादैः पदातिनाम् ।। १७ ।।

श्रोत्राणि दिग्गजानां च वितन्वन्बधिराणि सः ।।

अगमद्देवनगरीं युयुत्सुरमरैः सह ।। १८ ।।

तत इन्द्रादयो देवाः सेनाकलकलध्वनिम् ।।

श्रुत्वाभिनिर्य्ययुः पुर्या युद्धाभिमनसो द्विजाः ।। १९ ।।

ततो युद्धं समभवद्देवानां राक्षसैः सह ।।

अदृष्टपूर्वं जगति तथैवाश्रुतपूर्वकम् ।। 3.1.11.२० ।।

तत इन्द्रादयो देवा राक्षसाञ्जघ्नुराहवे ।।

राक्षसाश्च सुराञ्जघ्नुः समरे विजिगीषवः ।। २१ ।।

द्वन्द्वयुद्धं च समभूदन्योन्यं सुररक्षसाम् ।।

कपालाभरणेनाजौ युयुधे बलवृत्रहा ।। २२ ।।

यमेन शवभक्षश्च वरुणेन च कौशिकः ।।

कुबेरो रुधिराक्षेण युयुधे ब्राह्मणोत्तमाः ।। २३ ।।

मांसप्रियो मद्यसेवी क्रूरदृष्टिर्भयावहः ।।

चत्वार एते विक्रांताः कपालाभरणानुजाः ।। २४ ।।

अश्विभ्यामग्निवायुभ्यां युद्धे युयुधिरे मिथः ।।

ततो यमो महावीर्यः कालदण्डेन वेगवान् ।। २५ ।।

शवभक्षं निहत्याजावनयद्यमसादनम्।।

तस्य चाक्षौहिणीस्त्रिंशन्निजघ्ने समरे यमः ।। २६ ।।

वरुणः कौशिकस्याजौ प्रासेन प्राहरच्छिरः ।।

कुबेरो रुधिराक्षस्य कुन्तेनाभ्यहरच्छिरः ।। २७ ।।

अश्विभ्यामग्निवायुभ्यां कपालाभरणानुजाः ।।

निहताः समरे विप्राः प्रययुर्यमसादनम् ।। २८ ।।

अक्षौहिणीशतं चापि देवेन्द्रेण मृधे द्विजाः ।।

यामार्द्धेन हतं युद्धे प्रययौ यमसादनम् ।। २९ ।।

ततः कपालाभरणः प्रेक्ष्य सेनां निजां हताम् ।।

चापमादाय निशिताञ्छरांश्चापि महाजवान् ।। 3.1.11.३० ।।

अभ्ययात्समरे शक्रं तिष्ठतिष्ठेति चाब्रवीत् ।।

ततः शक्रस्य शिरसि व्यधमच्छरपंचकैः ।। ३१ ।।

तानप्राप्तान्प्रचिच्छेद शरैर्युद्धे स वृत्रहा ।।

ततः शूलं समादाय कपालाभरणो मृधे ।। ३२ ।।

देवेंद्राय प्रचिक्षेप तं शक्त्या निजघान सः ।।

ततः कपालाभरणः शतहस्तायतां गदाम्।। ३३ ।।

आयसीं पंचसाहस्रतुलाभारेणनिर्मिताम् ।।

आददे समरे शक्रं वक्षोदेशे जघान च ।।३४।।

ततः स मूर्च्छितः शक्रो रथोपस्थ उपाविशत् ।।

मृतसंजीविनीं विद्यां जपित्वाथ बृहस्पतिः ।। ३५ ।।

पुलोमजापतिं युद्धे समजीवयदद्भुतम् ।।

ऐरावतं तदारुह्य कपालाभरणांतिकम्।। ३६ ।।

आजगाम शचीभर्ता प्रहर्तुं कुलिशेन तम् ।।

एकप्रहारेण तदा महेंद्रः पाकशासनः ।। ३७ ।।

कपालाभरणं युद्धे वज्रेण सरथाश्वकम् ।।

सचापं सध्वजं चैव सतूणीरं सवर्मकम् ।।३८।।

चूर्णयामास कुपितस्तिलशः कणशस्तथा ।।

हते तस्मिन्महावीरे कपालाभरणे रणे।।३९।।

सुखं सर्वस्य लोकस्य बभूव चिरदुःखिनः ।।

राक्षसस्य वधोत्पन्ना ब्रह्महत्या पुरंदरम् ।।

अन्वधावत्तदा भीमा नादयंती दिशो दश ।।3.1.11.४०।।

।। ऋषय ऊचुः ।। ।।

न विप्रो राक्षसः सूत कपालाभरणो मुने ।।

तत्कथं ब्रह्महत्येंद्रं तद्वधात्समुपाद्रवत् ।। ४१ ।।

।। श्रीसूत उवाच ।। ।।

वक्ष्यामि परमं गुह्यं मुनींद्राः परमाद्भुतम् ।।४२।।

शृणुत श्रद्धया यूयं समाधाय स्वमानसम् ।।

पुरा विंध्यप्रदेशेषु त्रिवक्रो नाम राक्षसः ।। ४३ ।।

तस्य भार्या गुणोपेता सौंदर्यगुणशालिनी ।।

सुशीला नाम सुश्रोणी सर्वलक्षणलक्षिता ।। ४४ ।।

सा कदाचिन्मनोज्ञांगी सुवेषा चारुहासिनी ।।

विंध्यपादवनोद्देशे विचचार विलासिनी ।। ४५ ।।

तस्मिन्वने शुचिर्नाम वर्ततेस्म महामुनिः ।।

तपसमाधिसंयुक्तो वेदाध्ययनतत्परः ।। ४६ ।।

तस्याश्रमसमीपं तु सा ययौ वरवर्णिनी ।।

तां दृष्ट्वा स मुनिर्धैर्यं मुमोचानंगपीडितः।।

तामासाद्य वरारोहां बभाषे मुनिसत्तमः ।। ४७।।

।। शुचिरुवाच ।। ।।

ललने स्वागतं तेऽस्तु कस्य भार्या शुचिस्मिते ।। ४८ ।।

किमागमनकृत्यं ते वनेऽस्मिन्नतिभीषणे ।।

श्रांतासि त्वं वरारोहे वसास्मिन्नुटजे मम ।। ४९ ।।

तथोक्ता सा तु सुश्रोणी तं मुनिं प्रत्यभाषत ।।

त्रिवक्ररक्षोभार्याहं सुशीला नामतो मुने ।।3.1.11.५०।।

पुष्पावचयकामेन वनमेतत्समागता ।।

अपुत्राहं मुने भर्त्रा प्रेरिता पुत्रमिच्छता ।। ५१ ।।

शुचिं मुनिं समाराध्य तस्मात्पुत्रमवाप्नुहि ।।

इति प्रतिसमादिष्टा पतिना त्वां समागता ।।५२।।

पुत्रमुत्पादय त्वं मे कृपां कुरु मुने मयि ।।

एवमुक्तः स तु शुचिः सुशीलां तामभाषत ।। ५३ ।।

।। शुचिरुवाच ।।।।

त्वां दृष्ट्वा मम च प्रीतिः सुशीले विद्यतेऽधुना।।

मनोरथमहांभोधिं त्वमापूरय मामकम् ।। ५४ ।।

इत्युक्त्वा स मुनिस्तत्र तया रेमे दिनत्रयम् ।।

तामुवाच मुनिः प्रीतः सुशालां सुन्दराकृतिम् ।। ।। ५५ ।।

तवोदरे महावीर्यः कपालाभरणाभिधः ।।

भविष्यति चिरं राज्यं पालयिष्यति मेदिनीम् ।। ५६ ।।

सहस्रं वत्सरान्वत्सस्तपसा प्रीणयन्विधिम् ।।

पुरंदरं विनान्येभ्यो देवेभ्यो नास्य वध्यता।।५७।।

ईदृशस्ते सुतो भूयादिंद्रतुल्यपराक्रमः ।।

इत्युक्त्वा स मुनिर्नारीं काशीं शिवपुरीं ययौ ।।५८।।

सुशीला सापि सुषुवे कपालाभरणं सुतम् ।।

तं जघान मृधे शक्रो वज्रेण मुनिपुंगवाः ।।५९।।

शुचेर्बीजसमुद्भूतं तमिंद्रो न्यवधीद्यतः ।।

ततः पुरंदरः शक्रो जगृहे ब्रह्महत्यया ।।3.1.11.६०।।

धावति स्म तदा शक्रः सर्वांल्लोकान्भयाकुलः।।

धावंतमनुधावंती ब्रह्महत्या तमन्वगात्।।६१।।

अनुद्रुतो हि विप्रेंद्राः शक्रोऽयं ब्रह्महत्यया ।।

पितामहसदः प्राप संतप्तहृदयो भृशम् ।।६२।।

न्यवेदयद्ब्रह्महत्यां ब्रह्मणे स पुरंदरः ।।

भगवँल्लोकनाथेयं ब्रह्महत्याति भीषणा।।६३।।

बाधते मां प्रजानाथ तस्या नाशं ब्रवीहि मे ।।

पुरंदरेणैवमुक्तो ब्रह्मा प्राह दिवस्पतिम्।।६४।।

ब्रह्मोवाच ।।

सीताकुण्डं प्रयाहींद्र गंधमादनपर्वते।।
सीताकुण्डस्य तीरे त्वं इष्ट्वा यागैः सदाशिवम्।। ६५ ।।
तस्मिन्सरसि च स्नायाः सर्वपापहरे शुभे ।।
ततः पूतो भवेश्शक्र बह्महत्याविमोचितः।।६६।।
देवलोकं पुनर्यायाः सर्वदुःखविवर्जितः ।।
सर्वपापहरं पुण्यं सीताकुण्डं विमुक्तिदम् ।।६७।।
महापातकसंघानां नाशकं परमामृतम् ।।
सर्वदुःखप्रशमनं सर्वदारिद्र्यनाशनम् ।। ६९ ।।
धनधान्यप्रदं शुद्धं वैकुण्ठादिपदप्रदम्।।
तस्मात्तत्र कुरुष्वेष्टिं सीतासरसि वृत्रहन् ।। ६९ ।।
इत्युक्तः सुरराजोऽसौ प्रययौ गंधमादनम् ।।
प्राप्य सीतासरो विप्राः स्नात्वेष्ट्वा च तदंतिके ।। 3.1.11.७० ।।
प्रययौ स्वपुरीं भूयो ब्रह्महत्याविमोचितः ।।
एवं प्रभावं तत्तीर्थं सीतायाः कुण्डमुत्तमम् ।। ७१ ।।
राघवप्रत्ययार्थं हि प्रविश्य हुतवाहनम् ।।
संनिधौ सर्वदेवानां मैथिली जनकात्मजा ।। ७२ ।।
विनिर्गता पुनर्वह्नेः स्थिता सर्वांगशोभना ।।
निर्ममे लोकरक्षार्थं स्वनाम्ना तीर्थमुत्तमम् ।। ७३ ।।
तत्र सस्नौ स्वयं सीता तेन सीतासरः स्मृतम् ।।
तत्र यो मानवः स्नाति सर्वान्कामाँल्लभेत सः ।। ७४ ।।
तस्मिन्नुपस्पृश्य नरो द्विजेंद्रा दत्त्वा च दानानि पृथग्विधानि ।।
कृत्वा च यज्ञान्बहुदक्षिणाभिर्लोकं प्रयायात्परमेश्वरस्य ।। ७५ ।।
युष्माकमेवं प्रथितं मुनींद्राः सीतासरो वैभवमेतदुक्तम् ।।
शृण्वन्पठन्वै तदिहैव भोगान्भुक्त्वा परत्रापि सुखं लभेत ।। ७६।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीयेब्रह्मखण्डे सेतुमाहात्म्ये सीतासरःप्रशंसायामिंद्रब्रह्महत्याविमोक्षणनामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १२

https://sa.wikisource.org/s/fsb
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

सीताकुण्डे महापुण्ये नरः स्नात्वा द्विजोत्तमाः ।।

ततस्तु मंगलं तीर्थमभिगच्छेत्समाहितः ।। १ ।।

सन्निधत्ते सदा यत्र कमला विष्णुवल्लभा ।।

अलक्ष्मीपरिहाराय यस्मिन्सरसि वै सुराः ।। २ ।।

शतक्रतुमुखाः सर्वे समागच्छंति नित्यशः ।।

तदेतत्तीर्थमुद्दिश्य ऋषयो लोकपावनम् ।। ३ ।।

इतिहासं प्रवक्ष्यामि पुण्यं पापविनाशनम् ।।

पुरा मनोजवो नाम राजा सोमकुलोद्भवः ।। ४ ।।

पालयामास धर्मेण धरां सागरमेखलाम् ।।

अयष्ट स सुरान्यज्ञै ब्राह्मणानन्नसंचयैः ।। ५ ।।

तर्पयामास कव्येन प्रत्यब्दं पितृदेवताः ।।

त्रयीमध्यैष्ट सततमपाठीच्छास्त्रमर्थवत् । ६ ।।

व्यजेष्ट शत्रून्वीर्येण प्राणं सीदीशकेशवौ ।।

अरंस्त नीतिशास्त्रेषु तथापाठीन्महामनून् ।।७।।

एवं स धर्मतो राजा पालयामास मेदिनीम् ।।

रक्षतस्तस्य राज्ञोऽभूद्राज्यं निहत कंटकम् ।। ८ ।।

अहंकारोऽभवत्तस्य पुत्रसंपद्विनाशनः ।।

अहंकारो भवेद्यत्र तत्र लोभो मदस्तथा ।।९।।

कामः क्रोधश्च हिंसा च तथाऽसूया विमोहिनी ।।

भवंत्येतानि विप्रेंद्राः संपदां नाशहेतवः ।। 3.1.12.१० ।।

एतानि यत्र विद्यंते पुरुषे स विनश्यति ।।

क्षणेन पुत्रपौत्रैश्च सार्द्धं चाखिलसंपदा ।। ।। ११ ।।

बभूव तस्यासूया च जनविद्वेषिणी सदा ।।

असूयाकुलचित्तस्य वृथाहंकारिणस्तथा ।। १२ ।।

लुब्धस्य कामदुष्टस्य मतिरेवं बभूव ह ।।

विप्रग्रामे करादानं करिष्यामीति निश्चितः ।। १३ ।।

अकरोच्च तथा राजा निश्चित्य मनसा तदा ।।

धनं धान्यं च विप्राणां जहार किल लोभतः ।। ।। १४ ।।

शिवविष्णवादिदेवानां वित्तान्यादत्त रागतः ।।

शिवविष्णवादिदेवानां विप्राणां च महात्मनाम् ।। १५ ।।

क्षेत्राण्यपजहारायमहंकार विमूढधीः ।।

एवमन्याययुक्तस्य देवद्विजविरोधिनः ।। १६ ।।

दुष्कर्मपरिपाकेन क्रूरेण द्विजपुंगवाः ।।

पुरं रुरोध बलवान्परदेशाधिपो रिपुः ।। १७ ।।

गोलभोनाम विप्रेंद्राश्चतुरंगबलैर्युतः ।।

षण्मासं युद्धमभवद्गोलभेन दुरात्मनः ।। १९ ।।

मनोजवस्य नृपतेरहंकाररतात्मनः ।।

ततः स गोलभेनाजौ जितो राज्यात्परिच्युतः ।। १९ ।।

वनं सपुत्रदारः सन्प्रपेदे स मनोजवः ।।

गोलभः पालयन्नास्ते मनोजवपुरे चिरम् ।।3.1.12.२०।।

चतुरंगबलोपेतस्तमुद्वास्य रणे बली ।।

मनोजवोपि विप्रेंद्राः शोचन्स्त्रीपुत्रसंयुतः ।। २१ ।।

क्षुत्क्षामः प्रस्खलञ्छ्श्वत्प्रविवेश महावनम् ।।

झिल्लिकागणसंघुष्टं व्याघ्रश्वापद भीषणम् ।। २२ ।।

व्याप्तद्विरदचीत्कारं वराहमहिषाकुलम् ।।

तस्मिन्वने महाघोरे क्षुधया परिपीडितः ।। २३ ।।

अयाचतान्नं पितरं मनोजवसुतः शिशुः ।।

अंब मेन्नं प्रयच्छ त्वं क्षुधा मां बाधते भृशम् ।।२४ ।।

एवं स्वजननीं चापि प्रार्थयामास बालकः ।।

तन्मातापितरौ तत्र श्रुत्वा पुत्रस्य भाषितम् ।। २५ ।।

शोकाभिभूतौ सहसा मोहं समुपजग्मतुः ।।

भार्यामथाब्रवीद्राजा सुमित्रानाम नामतः ।। २६ ।।

मुह्यमानश्च स मुहुः शुष्ककंठौष्ठतालुकः ।।

सुमित्रे किं करिष्यामि कुत्र यास्यामि का गतिः ।। २७ ।।

मरिष्यत्यचिरादेष सुतो मे क्षुधयार्दितः ।।

किमर्थं ससृजे वेधा दुर्भाग्यं मां वृथा प्रिये ।। २८ ।।

को वा मोचयिता दुःखमेतद्दुष्कर्मजं मम ।।

न पूजितो मया शंभुर्हरिर्वा पूर्वजन्मसु ।। २९ ।।

तथान्या देवताः सूर्यविभावसुमुखाः प्रिये ।।

तेन पापेन चाद्याहमस्मिञ्जन्मनि शोभने ।। 3.1.12.३० ।।

अहंकाराभिभूतोऽस्मि विप्रक्षेत्राण्यपाहरम् ।।

शिवविष्ण्वादिदेवानां वित्तं चापहृतं मया ।। ३१ ।।

एवं दुष्कर्मबाहुल्याद्गोलभेन पराजितः ।।

वनं यातोस्मि विजनं त्वया सह सुतेन च ।। ३२ ।।

निरन्नो निर्धनो दुःखी क्षुधितो ऽहं पिपासितः ।।

कथमन्नं प्रदास्यामि क्षुधिताय सुताय मे ।। ३३ ।।

न मयान्नानि दत्तानि ब्राह्मणेभ्यः शुचिस्मिते ।।

न मया पूजितः शंभुर्विष्णुर्वा देवतांतरम् ।। ३४ ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम् ।।

न मयाग्नौ हुतं पूर्वं न तीर्थमपि सेवितम् ।। ३५ ।।

मातृश्राद्धं पितृश्राद्धं मृताह दिवसे तयोः।।

नैकोद्दिष्टविधानेन पार्वणेनापि वै प्रिये ।।३६।।

कृतं न हि मया भद्रे भूरिभोजनमेव वा ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम् ।। ।। ३७ ।।

चैत्रमासे प्रिये चित्रानक्षत्रे पानकं मया ।।

पनसानां फलं स्वादु कदलीफलमेव वा ।। ३८ ।।

तथा छत्रं सदंडं च रम्यं पादुकयोर्द्वयम् ।।

तांबूलानि च पुष्पाणि चंदनं चानुलेपनम् ।। ३९ ।।

न दत्तं वेदविद्भ्यस्तु चित्रगुप्तस्य तुष्टये ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम् ।। 3.1.12.४० ।।

नाश्वत्थश्चूतवृक्षो वा न्यग्रोधस्तिंतिणी तथा ।।

पिचुमंदः कपित्थो वा तथैवामलकीतरुः ।। ४१ ।।

नारिकेलतरुर्वापि स्थापितोऽध्वगशांतये ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम्।। ४२ ।।

सम्मार्जनं च न कृतं शिवविष्ण्वालये मया ।।

न खानितं तटाकं च न कूपोपि ह्रदोऽपिवा ।। ।। ४३ ।।

न रोपितं पुष्पवनं तथैव तुलसीवनम् ।।

शिवविष्ण्वालयौ वापि निर्मितो न मया प्रिये ।। ४४ ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम् ।।

न मया पैतृके मासि पितॄनुद्दिश्य शोभने ।।

महालयं कृतं श्राद्धमष्टकाश्राद्धमेव वा ।। ४५ ।।

नित्यश्राद्धं तथा काम्यं श्राद्धं नैमित्तिकं प्रिये ।।

न कृताः क्रतवश्चापि विधिवद्भूरिदक्षिणाः ।। ४६ ।।

मासोपवासो न कृतः एकादश्यामुपोषणम् ।।

धनुर्मासेप्युषःकाले शंभुविष्ण्वादिदेवताः ।। ४७ ।।

संपूज्य विधिवद्भद्रे नैवेद्यं न कृतं मया ।।

तेन पापेन मे त्वद्य दुःखमेतत्समा गतम् ।। ४८।।

हरिशंकरयोर्नाम्नां कीर्तनं न मया कृतम् ।।

उद्धूलनं त्रिपुण्ड्रं च जाबालोक्तैश्च सप्तभिः ।। ४९ ।।

न धृतं भस्मना भद्रे रुद्राक्षं न धृतं मया ।।

जपश्च रुद्रसूक्तानां पंचाक्षरजपस्तथा ।। 3.1.12.५० ।।

तथा पुरुषसूक्तस्य जपोऽप्यष्टाक्षरस्य च ।।

नैवकारि मया भद्रे नैवान्यो धर्मसंचयः ।। ५१ ।।

तेन पापेन मे त्वद्य दुःखमेतत्समागतम् ।।

एवं स विलपन्राजा भार्यामाभाष्य खिन्नधीः ।। ५२ ।।

मूर्च्छामुपाययौ विप्राः पपात च धरातले ।।

सुमित्रा पतितं दृष्ट्वा भार्या सा पतिमंगना ।। ५३ ।।

आलिंग्य विललापाथ सपुत्रा भृशदुःखिता ।।

मम नाथ महाराज सोमान्वयधुरंधर ।। ५४ ।।

मां विहाय क्व यातोऽसि सपुत्रां विजने वने ।।

अनाथां त्वामनुगतां सिंहत्रस्तां मृगीमिव ।। ५५ ।।

मृतोऽसि यदि राजेंद्र तर्हि त्वामहमप्यरम् ।।

अनुव्रजामि विधवा न स्थास्ये क्षणमप्युत।। ५६ ।।

पितरं पश्य पतितं चन्द्रकांत सुत क्षितौ ।।

इत्युक्तश्चंद्रकांतोऽपि सुतो राज्ञः क्षुधार्दितः ।। ५७ ।।

पितरं परिरभ्याथ निःशब्दं प्ररुरोद सः ।।

एतस्मिन्नंतरे विप्रा जटावल्कलसंवृतः ।। ५८ ।।

भस्मोद्धूलितसर्वांगस्त्रिपुण्ड्रांकितमस्तकः ।।

रुद्राक्षमालाभरणः सितयज्ञोपवीतवान् ।। ५९ ।।

पराशरोनाम मुनिराजगाम यदृच्छया ।।

तं शब्दमभिलक्ष्यासौ साधुसज्जनसंमतः ।। 3.1.12.६० ।।

ततः सुमित्रा तं दृष्ट्वा पराशरमुपागतम् ।।

ववंदे चरणौ तस्य सपुत्रा सा पतिव्रता ।। ६१ ।।

ततः पराशरेणेयं सुमित्रा परिसांत्विता ।।

आश्वासिता च मुनिना मा शोचस्वेति भामिनि ।।

ततः सुमित्रां पप्रच्छ शक्तिपुत्रो महामुनिः ।। ६२ ।।

।। पराशर उवाच ।।

का त्वं सुश्रोणि कश्चासौ यश्चायं पतितोऽग्रतः ।। ६३ ।।

अयं शिशुश्च कस्ते स्याद्वद तत्त्वेन मे शुभे ।।

पृष्टैवं मुनिना साध्वी तमुवाच महामुनिम् ।। ६४ ।।

।। सुमित्रोवाच ।। ।।

पतिर्ममायमस्याहं भार्या वै मुनिसत्तम ।।

आवाभ्यां जनितश्चायं चंद्रकांताभिधः सुतः ।। ६५ ।।

अयं मनोजवो नाम राजा सोमकुलोद्भवः ।।

विक्रमाढ्यस्य तनयः शौर्ये विष्णुसमो बली ।। ६६ ।।

सुमित्रा नाम तस्याहं भार्या पतिमनुव्रता ।।

युद्धे विनिर्जितो राजा गोलभेन मनोजवः ।। ६७ ।।

राज्याद्भ्रष्टो निरालंबो मया पुत्रेण चान्वितः ।।

वनं विवेश ब्रह्मर्षे क्रूरसत्त्वभयानकम् ।।६८।।

क्षुधया पीडितः पुत्रो ह्यावामन्नमयाचत ।।

निरन्नो विधुरो राजा दृष्ट्वा पुत्रं क्षुधार्दितम् ।। ६९ ।।

शोकाकुलमना ब्रह्मन्मूर्च्छितः पतितो भुवि ।।

इति तद्वचनं श्रुत्वा शोकपर्याकुलाक्षरम् ।। 3.1.12.७० ।।

शक्तिपुत्रो मुनिः प्राह सुमित्रां तां पतिव्रताम् ।।

मनोजवस्य नृपतेर्भार्यामग्निशिखोपमाम् ।। ।। ७१ ।।

।। पराशर उवाच ।। ।।

मनोजवस्य भार्ये ते मा भीर्भूयात्कथंचन ।।

युष्माकमशुभं सत्यमचिरान्नाशमेष्यति ।। ७२ ।।

मूर्च्छां विहाय ते भद्रे क्षणादुत्थास्यते पतिः ।।

ततः पराशरो विप्रः पाणिना तं नराधिपम् ।। ७३ ।।

पस्पर्श मंत्रं प्रजपन्ध्यात्वा देवं त्रियंबकम् ।।

ततो मनोजवो राजा करस्पृष्टो महामुनेः ।। ७४ ।।

उत्थितः सहसा तत्र त्यक्त्वा मूर्च्छां तमोमयीम् ।।

ततः पराशरमुनिं प्रणम्य जगतीपतिः ।।

उवाच परमप्रीतः प्रांजलिर्विप्रसत्तमम् ।। ७५ ।।

।। मनोजव उवाच ।। ।।

पराशरमुने त्वद्य त्वत्पादाब्जनिषेवणात् ।। ७६ ।।

मूर्च्छा मे विगता सद्यः पातकं चैव नाशितम् ।।

त्वद्दर्शनमपुण्यानां नैव सिध्येत्कदाचन ।। ७७ ।।

रक्ष मां करुणादृष्ट्या च्यावितं शत्रुभिः पुरात् ।।

इत्युक्तः स मुनिः प्राह राजानं तं मनोजवम् ।। ७८ ।।

।। पराशर उवाच ।। ।।

उपायं ते प्रवक्ष्यामि राजञ्च्छत्रुजयाय वै ।।

रामसेतौ महापुण्ये गंधमादनपर्वते ।। ७९ ।।

विद्यते मंगलं तीर्थं सर्वैश्वर्यप्रदायकम् ।।

सर्वलोकोपकाराय तस्मिन्सरसि राघवः ।। 3.1.12.८० ।।

सन्निधत्ते सदा लक्ष्म्या सीतया राजसत्तम ।।

सपुत्रभार्यस्त्वं तत्र गत्वा स्नात्वा सभक्तिकम् ।। ८१ ।।

क्षेत्रश्राद्धादिकं चापि तत्तीरे कुरु भूपते ।।

एवं कृते त्वया राजन्नलक्ष्मीः क्लेशकारिणी ।। ९२ ।।

वैभवात्तस्य तीर्थस्य नाशं यास्यत्यसंशयम् ।।

मंगलानि च सर्वाणि प्राप्स्यसे न चिरान्नृप ।। ८३ ।।

विजित्य शत्रूंश्च रणे पुनर्भूमिं प्रपत्स्यसे ।।

अतस्त्वं भार्यया सार्द्धं पुत्रेण च मनोजव ।। ८४ ।।

गच्छ मंगलतीर्थं तद्गन्धमादनपर्वते ।।

अहमप्यागमिष्यामि तवानुग्रहकाम्यया ।। ८५ ।।

पराशरस्त्वेवमुक्त्वा राजमुख्यैस्त्रिभिः सह ।।

प्रायात्सेतुं समुद्दिश्य स्नातुं मंगलतीर्थके ।। ८६ ।।

राजादिभिः सह मुनिर्विलंघ्य विविधं वनम् ।।

वनप्रदेशदेशांश्च दस्युग्रामाननेकशः ।। ८७ ।।

प्रययौ मंगलं तीर्थं गन्धमादनपर्वते ।।

तत्र संकल्प्य विधिवत्सस्नौ स मुनिपुंगवः ।। ८८ ।।

तानपि स्नापयामास राजादीन्विधिपूर्वकम् ।।

तत्र श्राद्धं च भूपालश्चकार पितृतृप्तये ।। ८९ ।।

तत्र मासत्रयं सस्नौ राजा पत्नीसुतस्तथा ।।

ततः पराशरमुनिः सस्नौ नियमपूर्वकम् ।।। ।। 3.1.12.९० ।।

एवं मासत्रयं सस्नौ तैः साकं मुनिपुंगवः ।।

मंगलाख्ये महापुण्ये सर्वामंगलनाशने ।। ९१ ।।

ततः पराशरमुनिः सर्वानर्थविनाशनम् ।।

रामस्यैकाक्षरं मंत्रं तदंते समुपादिशत् ।। ९२ ।।

चत्वारिंशद्दिनं तत्र मंत्रमेकाक्षरं नृपः ।।

तत्र तीर्थे जजापासौ मुन्युक्तेनैव वर्त्मना ।। ९३ ।।

एवमभ्यसतस्तस्य मंत्रमेकाक्षरं द्विजाः ।।

मुनिप्रसादात्पुरतो धनुः प्रादुरभूद्दृढम् ।। ९४ ।।

अक्षयाविषुधी चापि खड्गौ च कनकत्सरू ।।

एकं चर्म गदा चैका तथैको मुसलोत्तमः ।। ९५ ।।

एकः शंखो महानादो वाजियुक्तो रथस्तथा ।।

ससारथिः पताका च तीर्थादुत्तस्थुरग्रतः ।। ९६ ।। ।

कवचं कांचनमयं वैश्वानरसमप्रभम् ।।

प्रादुर्बभूव तत्तीर्थात्प्रसादेन मुनेस्तथा ।। ९७ ।।

हारकेयूरमुकुटकटकादिविभूषणम्।।

तीर्थानां प्रवरात्तस्मादुत्थितं नृपतेः पुरः ।। ९८ ।।

दिव्यांबरसहस्रं च तीर्थात्प्रादुरभूत्तदा ।।

माला च वैजयंत्याख्या स्वर्णपंकजशोभिता ।। ९९ ।।

एतत्सर्वं समालोक्य मुनयेऽसौ न्यवेदयत् ।।

ततः पराशरमुनिर्जलमादाय तीर्थतः ।। 3.1.12.१०० ।।

अभ्यषिंचन्नरपतिं मंत्रपूतेनवारिणा ।।

ततोऽभिषिक्तो नृपतिर्मुनिना परिशोभितः ।। १०१ ।।

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।।

हारकेयूरमुकुटकटकादिविभूषितः ।। १०२ ।।

दिव्यांबरधरश्चापि वाजियुक्त रथस्थितः ।।

शुशुभेऽतीव नृपतिर्मध्याह्न इव भास्करः ।। १०३ ।।

तस्मै नृपतये तत्र ब्रह्माद्यस्त्रं महामुनिः ।।

सांगं च सरहस्यं च सोत्सर्गं सोप संहृति ।। १०४ ।।

उपादिशच्छक्तिपुत्रः सुमित्राजानये तदा ।।

मनोजवोऽथ मुनिना ह्याशीर्वादपुरःसरम् ।। १०५ ।।

प्रेरितो रथमास्थाय प्रणम्य मुनिपुंगवम् ।।

प्रदक्षिणीकृत्य तदाभ्यनुज्ञातो महर्षिणा ।। १०६ ।।

सार्द्धं पत्न्या च पुत्रेण प्रययौ विजयाय सः ।।

स गत्वा स्वपुरं राजा प्रदध्मौ जलजं तदा ।। १०७ ।।

ततः शंखरवं श्रुत्वा गोलभस्तु ससैनिकः ।।

युद्धाय निर्ययौ तूर्णं मनोजवनृपेण सः ।। १०८ ।।

दिनत्रयं रणं जज्ञे गोलभेन नृपस्य वै ।।

ततश्चतुर्थे दिवसे गोलभं तु ससैनिकम् ।। १०९ ।।

मनोजवो नृपो युद्धे ब्रह्मास्त्रेण व्यनाशयत् ।।

ततः सपुत्र भार्योऽयं पुरं प्राप्य निजं नृपः ।। 3.1.12.११० ।।

पालयन्पृथिवीं सर्वां बुभुजे भार्यया सह ।।

तदाप्रभृति राजासौ नाहंकारं चकार वै ।। १११ ।।

असूयादींस्तथा दोषान्वर्जयामास भूपतिः ।।

अहिंसानिरतो दांतः सदा धर्मपरोऽभवत् ।। ११२ ।।

सहस्रं वत्सरानेवं ररक्ष स महीपतिः ।।

ततो विरक्तो राजेन्द्रः पुत्रे राज्यं निधाय तु ।। ११३ ।।

जगाम मंगलं तीर्थं गन्धमादनपर्वते ।।

तपश्चचार तत्रासौ ध्यायन्हृदि सदाशिवम् ।। ११४ ।।।

ततोऽचिरेण कालेन त्यक्त्वा देहं मनोजवः ।।

शिवलोकं ययौ राजा तस्य तीर्थस्य वैभवात् ।। ११५ ।।

तस्य भार्या सुमित्रापि तस्यालिंग्य तनुं तदा ।।

अन्वारूढा चितां विप्राः प्राप तल्लोकमेव सा ।। ११६ ।।

।। श्रीसूत उवाच ।। ।।

एवं प्रभावं तत्तीर्थं श्रीमन्मंगलनामकम् ।।

मनोजवो नृपो यत्र स्नात्वा तीर्थे महत्तरे ।। ११७ ।।

शत्रून्विजित्य देहांते शिवलोकं ययौ स्त्रिया ।।

तस्मात्सर्वप्रयत्नेन सेव्यं मंगलतीर्थकम् ।। ११८।।

तीर्थमेतदतिशोभनं शिवं भुक्तिमुक्तिफलदं नृणां सदा ।।

पापराशितृणतूलपावकं सेवत द्विजवरा विमुक्तये ।। ११९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये मंगलतीर्थप्रशंसायां मनोजवालक्ष्मीविनाशवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १३



।। श्रीसूत उवाच ।। ।।

मंगलाख्ये महातीर्थे नरः स्नात्वा विकल्मषः ।।

एकांतरामनाथाख्यं क्षेत्रं गच्छेत्ततः परम् ।। १ ।।

तत्र रामो जगन्नाथो जानक्या लक्ष्मणेन च ।।

हनुमत्प्रमुखैश्चापि वानरैः परिवारितः ।। २ ।।

सन्निधत्ते सदा विप्रा लोकानुग्रहकाम्यया ।।

विद्यते पुण्यदा तत्र नाम्ना ह्यमृतवापिका ।। ३ ।।

तस्यां निमज्जतां नृणां न जरांतकजं भयम् ।।

अस्याममृतवाप्यां यः सश्रद्धं स्नाति मानवः ।। ४ ।।

अमृतत्वं भजत्येष शंकरस्य प्रसादतः ।।

महापातकनाशिन्यामस्यां वाप्यां निमज्जताम् ।। ५ ।।

अमृतत्वं हरो दातुं सन्निधत्ते सदा तटे ।।

।। । ऋषय ऊचुः ।। ।।

इयं ह्यमृतवापीति कुतो हेतोर्निगद्यते ।। ६ ।।

अस्माकमेतदब्रूहि त्वं कृपया व्यासशासित ।।

तथैवामृतनामिन्या वापिकायाश्च वैभवम् ।।

तृप्तिर्न जायतेऽस्माकं त्वद्वचोऽमृतपायिनाम् ।। ।७ ।।

।। श्रीसूत उवाच ।। ।।

अस्या अमृतनामत्वं वैभवं च मनोहरम् ।। ८ ।।

प्रवक्ष्यामि विशेषेण शृणुत द्विजसत्तमाः ।।

पुरा हिमवतः पार्श्वे नानामुनिसमाकुले ।। ९ ।।

सिद्धचारणगंधर्वदेवकिन्नरसेविते ।।

सिंहव्याघ्रवराहेभमहिषादिसमाकुले ।। 3.1.13.१० ।।

तमालतालहिंतालचंपकाशोकसंतते ।।

हंसकोकिलदात्यूहचक्रवाकादिशोभिते ।। ११ ।।

पद्मेंदीवरकह्लारकुमुदाढ्यसरो वृते ।।

सत्यवाञ्छीलवान्वाग्मी वशी कुंभजसोदरः ।। १२ ।।

आस्ते तपश्चरन्नित्यं मोक्षार्थी शंकरप्रियः ।।

त्रिकालमर्चयञ्छंभु वन्यैर्मूलफलादिभिः ।।। १३ ।।

आगतान्स्वाश्रमाभ्याशमतिथीन्वन्यभोजनैः ।।

पूजयन्नर्चयन्नग्निं संध्योपासनतत्परः ।। १४ ।।

गायत्र्यादीन्महामंत्रान्कालेकाले जपन्मुदा ।।

निद्रां परित्यजन्ब्राह्मे मुहूर्ते विष्णुचिंतकः ।। १५ ।।

स्नानं कुर्वन्नुषःकाले नमन्संध्यां प्रसन्नधीः ।।

गायत्रीं प्रजपन्विप्राः पूजयन्हरिशंकरौ ।। १६ ।।

वेदाध्यायी शास्त्रपाठी मध्याह्नेऽतिथिपूजकः ।।

श्रोतापुराणपाठानामग्निकार्येष्वतंद्रितः ।। १७ ।।

पंचयज्ञपरो नित्यं वैश्वदेवबलिप्रदः ।।

प्रत्यब्दं श्राद्धकृत्पित्रोस्तथान्यश्राद्धकृद्द्विजाः ।। १८ ।।

एवं निनाय कालं स नित्यानुष्ठानतत्परः ।।

तस्यैवं वर्तमानस्य तपश्चरत उत्तमम् ।। १९ ।।

सहस्रवर्षाण्यगमञ्च्छंकरासक्तचेतसः ।।

तथापि शंकरो नास्यcraाययौ प्रत्यक्षतां तदा ।। 3.1.13.२० ।।

ततस्त्वगस्त्यभ्रातासौ ग्रीष्मे पंचानिमध्यगः ।।

भास्करं दत्तदृष्टिश्च मौनव्रतसमन्वितः ।। २१ ।।

तिष्ठन्कनिष्ठिकांगुल्यां वामपादस्य निश्चलः ।।

ऊर्ध्वबाहुर्निरालंबस्तपस्तेपेऽतिदारुणम् ।। २२ ।।

अथ तस्य प्रसन्नात्मा महादेवो घृणानिधिः ।।

प्रादुरासीत्स्वया दीप्त्या दिशो दश विभासयन् ।। २३ ।।

ततोऽद्राक्षीन्मुनिः शंभुं सांबं वृषभसंस्थि तम् ।।

दृष्ट्वा प्रणम्य तुष्टाव भवानीपतिमीश्वरम् ।। २४ ।।

।। मुनिरुवाच ।। ।।

नमस्ते पार्वतीनाथ नीलकंठ महेश्वर।।

शिव रुद्र महादेव नम स्ते शंभवे विभो ।। २५ ।।

श्रीकंठोमापते शूलिन्भगनेत्रहराव्यय ।।

गंगाधर विरूपाक्ष नमस्ते रुद्र मन्यवे ।। २६ ।।

अंतकारे कामशत्रो देवदेव जगत्पते ।।

स्वामिन्पशुपते शर्व नमस्ते शतधन्वने ।।

दक्षयक्षविनाशाय स्नायूनां पतये नमः ।।

निचेरवे नमस्तुभ्यं पुष्टानां पतये नमः ।। ।। २८ ।।

भूयोभूयो नमस्तुभ्यं महादेव कृपालय ।।

दुस्तराद्भवसिंधोर्मां तारयस्व त्रिलोचन ।। २९ ।।

अगस्त्यसोदरेणैवं स्तुतः शंभुरभाषत ।।।

प्रीणयन्वचसा स्वेन कुंभजस्यानुजं मुनिम् ।। 3.1.13.३० ।।

।। ईश्वर उवाच ।। ।।

कुंभजानुज वक्ष्यामि मुक्त्युपायं तवानघ ।।

सेतुमध्ये महातीर्थं गंधमादनपर्वते ।। ३१ ।।

मंगलाख्यस्य तीर्थस्य नातिदूरेण वर्तते ।।

तत्र गत्वा कुरु स्नानं ततो मुक्तिमवाप्स्यसि ।।३२।।

तत्तीर्थसेवनान्नान्योमोक्षो पायो लघुस्तव ।।

न हि तत्तीर्थवैशिष्ट्यं वक्तुं शक्यं मयापि च ।। ३३ ।।

संदेहो नात्र कर्तव्यस्त्वयाद्य मुनिसत्तम।।

तस्मात्तत्रैव गच्छ त्वं यदीच्छसि भवक्षयम् ।। ३४ ।।

इत्युक्त्वा भगवानीशस्तत्रैवांतरधीयत ।।

ततो देवस्य वचनादगस्त्यस्य सहोदरः ।। ३५ ।।

गत्वा सेतुं समुद्रे तु गंधमादनपर्वते।।

ईश्वरणैव गदितं तीर्थं तच्छीघ्रमासदत् ।। ३६ ।।

तत्र तीर्थे महापुण्ये स्नातानां मुक्तिदायिनि ।।

एकांतरामनाथाख्ये क्षेत्रालंकरणे शुभे ।। ३७ ।।

सस्नौ नियमपूर्वं स त्रीणि वर्षाणि वै द्विजः ।।

ततश्चतुर्थवर्षे तु समाधिस्थो महामुनिः ।। ३८ ।।

ब्रह्मनाड्या प्राणवायुं मूर्द्धन्यारोप्ययोगतः ।।

प्राणान्निर्गमयामास ब्रह्मरंध्रेण तत्र सः ।। ३९ ।।

ततोऽगस्त्यानुजः सोयं परित्यज्य कलेवरम् ।।

अवाप मुक्तिं परमां तस्य तीर्थस्य वैभवात् ।।3.1.13.४।।।

विनष्टाशेषदुःखस्य तत्तीर्थस्नानवैभवात् ।।

मृतत्वमभूद्यस्मादगस्त्यानुजजन्मनः।।४१।।

ततो ह्यमृतवापीतिप्रथाऽस्यासीन्मुनीश्वराः।।

अत्र तीर्थे नरा ये तु वर्षत्रयमतंद्रिताः।।४२।।

स्नानं कुर्वंति ते सत्यममृतत्वं प्रयांति हि ।।

एवं त्वमृतवापीति प्रथा तद्वैभवं तथा ।।

युष्माकं कथितं विप्राः किंभूयः श्रोतुमिच्छथ ।। ४३ ।।

।। ऋषय ऊचुः ।। ।।

एकांतरामनाथाख्या तस्य क्षेत्रस्य वै मुने ।। ४४ ।।

कथं समागता सूत वक्तुमेतत्त्वमर्हसि ।।

अस्माकं मुनिशार्दूल तच्छुश्रूषातिभूयसी ।। ४५ ।।

।। श्रीसूत उवाच ।। ।।

पुरा दाशरथी रामः ससुग्रीवभिभीषणः ।।

लक्ष्मणेन युतो भ्रात्रा मंत्रज्ञेन हनूमता ।। ४६ ।।

वानरैर्बध्यमाने तु सेतावंबुधिमध्यतः ।।

चिंतयन्मनसा सीतामेकांते सममंत्रयत् ।। ४७ ।।

तेषु मंत्र यमाणेषु रावणादिवधं प्रति ।।

उल्लोलतरकल्लोलो जुघोष जलधिर्भृशम् ।। ४८ ।।

अर्णवस्य महाभीमे जृंभमाणे महाध्वनौ ।।

अन्योन्यकथितां वार्तां नाशृण्वंस्ते परस्परम् ।। ४९ ।।

ततः किंचिदिव क्रुद्धो भृकुटीकुटिलेक्षणः ।।

भ्रूभंगलीलया रामो नियम्य जलधिं तदा ।। ।। 3.1.13.५० ।।

न्यमंत्रयत विप्रेंद्रा राक्षसानां वधं प्रति ।।

एकांतेऽमंत्रयत्तत्र तैः सार्धं राघवो यतः ।। ५१ ।।

एकांतरामनाथाख्यं तत्क्षेत्रमभवद्विजाः ।।

सोयं नियमितो वार्धी रामभ्रूभंगलीलया ।। ५२ ।।

अद्यापि निश्चलजलस्तत्प्रदेशेषु दृश्यते ।।

एकांतरामनाथाख्यं तदेतत्क्षेत्रमुत्तमम् ।। ५३ ।।

आगत्यामृतवाप्यां च स्नात्वा नियमपूर्वकम् ।।

रामादीनपि सेवंते ते सर्वे मुक्तिमाप्नुयुः ।। ५४ ।।

अद्वैतविज्ञानविवेकशून्या विरक्तिहीनाश्च समाधि हीनाः ।।

यागाद्यनुष्ठानविवर्जिताश्च स्नात्वात्र यास्यंत्यमृतं द्विजेंद्राः ।। ५५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये अमृतवापीप्रशंसायाम् अगस्त्यभ्रातृविमुक्तिवर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १४

https://sa.wikisource.org/s/fsd



।। श्रीसूत उवाच ।। ।।

स्नात्वा त्वमृत वाप्यां वै सेवित्वैकांतराघवम् ।।

जितेंद्रियो नरः स्नातुं ब्रह्मकुंडं ततो व्रजेत् ।। १ ।।

सेतुमध्ये महातीर्थं गंधमादनपर्वते ।।

ब्रह्मकुडमिति ख्यातं सर्व दारिद्र्यभेषजम् ।। २ ।।

विद्यते ब्रह्महत्यानामयुतायुतनाशनम् ।।

दर्शनं ब्रह्मकुंडस्य सर्वपापौघनाशनम् ।। ३ ।।

किं तस्य बहुभिस्तीर्थैः किं तपोभिः किमध्वरैः ।।

महादानैश्च किं तस्य ब्रह्मकुंडविलोकिनः ।। ४ ।।

ब्रह्मकुंडे सकृत्स्नानं वैकुंठप्राप्तिकारणम् ।।

ब्रह्मकुंडसमुद्भूतं भस्म येन धृतं द्विजाः।। ।। ५ ।।

तस्यानुगास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।।

ब्रह्मकुंडसमुद्भूतभस्मना यस्त्रिपुंड्रकम् ।। ६ ।।

करोति तस्य कैवल्यं करस्थं नात्र संशयः ।।

तद्भस्मपरमाणुर्वा यो ललाटे धृतो भवेत् ।। ७ ।।

तावदेवास्य मुक्तिः स्यान्नात्र कार्या विचारणा ।।

तत्कुंडभस्मना मर्त्यः कुर्यादुद्धूलनं तु यः ।। ८ ।।

तस्य पुण्यफलं वक्तुं शंकरो वेत्ति वा न वा ।।

ब्रह्मकुंडसमुद्भूतं भस्म यो नैव धारयेत् ।। ९ ।।

रौरवे नरके सोऽयं पतेदाचंद्रतारकम् ।।

उद्धूलनं त्रिपुंड्रं वा ब्रह्मकुंडस्थभस्मना ।। 3.1.14.१० ।।

नराधमो न कुर्याद्यः सुखं नास्य कदाचन ।।

ब्रह्मकुंडसमुद्भूतभस्मनिंदारतस्तु यः ।। ११ ।।

उत्पत्तौ तस्य सांकर्यमनुमेयं विपश्चिता ।।

ब्रह्मकुंडसमुद्भूतं भस्मैतल्लोकपावनम् ।। १२ ।।
अन्यभस्मसमं यस्तु न्यूनं वा वक्ति मानवः ।।
उत्पत्तौ तस्य सांकर्य मनुमेयं विपश्चिता ।। १३ ।।
ब्रह्मकुंडसमुद्भूतेऽप्यस्मिन्भस्मनि जाग्रति ।।
भस्मांतरेण मनुजो धारयेद्यस्त्रिपुंड्रकम् ।। १४ ।।
उत्पत्तौ तस्य सांक र्यमनुमेयं विपश्चिता ।।
कदाचिदपि यो मर्त्यो भस्मैतत्तु न धारयेत् ।। १५ ।।
उत्पत्तौ तस्य सांकर्यमनुमेयं विपश्चिता ।।
ब्रह्मकुंडसमुद्भूतं भस्म दद्याद्द्विजाय यः ।। १६ ।।
चतुरर्णवपर्यंता तेन दत्ता वसुन्धरा ।।
संदेहो नात्र कर्तव्यस्त्रिर्वा शपथयाम्यहम् ।। १७ ।।
सत्यंसत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।।
ब्रह्मकुंडोद्भवं भस्म धारयध्वं द्विजोत्तमाः ।। १८ ।।
एतद्धि पावनं भस्म ब्रह्मयज्ञसमुद्भवम् ।।
पुरा हि भगवान्ब्रह्मा सर्वलोकपितामहः ।। १९ ।।
सन्निधौ सर्वदेवानां पर्वते गंधमादने ।।
ईशशापनिवृत्त्यर्थं क्रतून्सर्वान्समातनोत् ।। 3.1.14.२० ।।
विधाय विधिवत्सर्वानध्वरान्बहुदक्षिणान् ।।
मुमुचे सहसा ब्रह्मा शंभुशापाद्द्विजोत्तमाः ।। २१ ।।
तदेतत्तीर्थमासाद्य स्नानं कुर्वंति ये नराः ।।
ते महादेवसायुज्यं प्राप्नुवंति न संशयः ।। २२ ।। ।।
।। ऋषय ऊचुः ।। ।।
व्यासशिष्य महाप्राज्ञ पुराणार्थविशारद ।।
चतुर्दशानां लोकानां स्रष्टारं चतुराननम् ।। २३ ।।
शंभुः केनापराधेन शप्तवान्भारतीपतिम् ।।
शापश्च कीदृशस्तस्य पुरा दत्तो हरेण वै ।।
एतत्सर्वं मुने ब्रूहि तत्त्वतोऽस्माकमादरात् ।। २४ ।।
।। श्रीसूत उवाच ।।

पुरा बभूव कलहो ब्रह्मविष्ण्वोः परस्परम्।। २५ ।।
कंचिद्धेतुं समुद्दिश्य स्पर्धया श्लाघमानयोः ।।
अहं कर्त्ता न मत्तोऽन्यः कर्तास्ति जगतीतले ।। ।। २६ ।।
एवमाह हरिं ब्रह्मा ब्रह्माणं च हरिस्तथा ।।
एवं विवादः सुमहान्प्रावर्त्तत पुरा तयोः ।। २७ ।।
एतस्मिन्नंतरे विप्राः कुर्वतोः कलहं मिथः ।।
तयोर्गर्वविनाशाय प्रबोधार्थं च देवयोः ।। २८ ।।
मध्ये प्रादुरभूल्लिंगं स्वयंज्योतिरनामयम् ।।
तौ दृष्ट्वा विस्मितौ लिंगं ब्रह्मविष्णु परस्परम् ।। २९ ।।
समयं चक्रतुर्विप्रा देवानां सन्निधौ पुरा ।।
अनाद्यंतं महालिंगं यदेतद्दृश्यते पुरः ।। 3.1.14.३० ।।
अनंतादित्यसंका शमनंताग्निसमप्रभम् ।।
आवयोरस्य लिंगस्य योंऽतमादिं च द्रक्ष्यति ।। ३१ ।।
स भवेदधिको लोके लोककर्ता च स प्रभुः ।।
अहमूर्ध्वं गमिष्यामि लिंगस्यातं गवेषयन् ।। ३२ ।।
गवेषणाय मूलस्य त्वमधस्ताद्व्रे व्रज ।।
इति तस्य वचः श्रुत्वा तथे त्याह रमापतिः ।। ३३ ।।
एवं तौ समयं कृत्वा मार्गणाय विनिर्गतौ ।।
विष्णुर्वराहरूपेण गतोऽधस्ताद्गवेषितुम् ।। ३४ ।।
हंसतां भारतीजानिः स्वीकृत्योपरि निर्ययौ ।।
अधो लोकान्विचित्याथो विष्णुर्वर्षगणान्बहून् ।।
यथास्थानं समागत्य वभाषे देवसन्निधौ ।। ३५ ।।
।। विष्णुरुवाच ।। ।।
अहं लिंगस्य नाद्राक्षमादिमस्येति सत्यवाक्।। ३६ ।।
ऊर्ध्वं गवेषयित्वाथ ब्रह्माप्यागच्छदत्र सः ।।
आगत्य च वचः प्राह छद्मना चतुराननः ।। ।। ३७ ।।
।। ब्रह्मोवाच ।। ।।
अहमद्राक्षमस्यांतं लिंगस्येति मृषा पुनः ।।

तयोस्तद्वचनं श्रुत्वा व्रह्मविष्ण्वोर्महेश्वरः ।।

मिथ्यावादिनमाहेदं प्रहस्य चतुराननम् ।। ३८ ।।

।। ईश्वर उवाच ।। ।।

असत्यं यदवोचस्त्वं चतुरानन मत्पुरः ।। ३९ ।।

तस्मात्पूजा न ते भूयाल्लोके सर्वत्र सर्वदा ।।

अथ विष्णुं पुनः प्राह भगवान्परमेश्वरः ।। 3.1.14.४० ।।

यस्मात्सत्यमवोचस्त्वं कमलायाः पते हरे ।।

तस्मात्ते मत्समा पूजा भविष्यति न संशयः ।। ४१ ।।

ततो ब्रह्मा विषण्णः सञ्छंकरं प्रत्यभाषत ।।

स्वामिन्ममापराधं त्वं क्षमस्व करुणानिधे ।। ४२ ।।

एकोपराधः क्षंतव्यः स्वामि भिर्जगदीश्वरैः ।।

ततो महेश्वरोऽवादीद्ब्रह्माणं परिसांत्वयन् ।। ४३ ।।

।। ईश्वर उवाच ।। ।।

न मिथ्यावचनं मे स्याद्ब्रह्मन्वक्ष्यामि ते शृणु ।।

गच्छ त्वं सहसा वत्स गन्धमादनपर्वतम् ।।४४।।

तत्र क्रतून्कुरुष्व त्वं मिथ्यादोषप्रशांतये ।।

ततो विधूतपापस्त्वं भविष्यसि न संशयः ।। ।।४५।।

तेन श्रौतेषु ते ब्रह्मन्स्मार्तेष्वपि च कर्मसु ।।

पूजा भविष्यति सदा न पूजा प्रतिमासु ते।।४६।।

इत्युक्त्वा भगवानीशस्तत्रैवांतरधीयत ।।

ततो ब्रह्मा ययौ विप्रा गंधमादनपर्वतम् ।। ४७ ।।

ईजे च क्रतुकर्तारं क्रतुभिः पार्वतीपतिम् ।।

अष्टाशीतिसहस्राणि वर्षाणि मुनिपुंगवाः ।। ४८ ।।

पौंडरीकादिभिः सर्वैरध्वरैर्भूरिदक्षिणैः ।।

इन्द्रादिसर्वदेवानां सन्निधावयजच्छिवम् ।।

तेन तुष्टोभवच्छंभुर्वरमस्मै प्रदत्तवान् ।। ४९ ।।

।। ईश्वर उवाच ।। ।।

मिथ्योक्तिदोषस्ते नष्टः कृतैरेतैर्मखैरिह ।। 3.1.14.५० ।।

चतुरानन ते पूजा श्रौतस्मार्तेषु कर्मसु ।।

भविष्यत्यमला ब्रह्मन्न पूजा प्रतिमासु ते ।। ५१ ।।

यागस्थलमिदं तेऽद्य ब्रह्मकुण्डमिति प्रथाम् ।।

गमिष्यति त्रिलोकेस्मिन्पुण्यं पापविनाशनम् ।। ५२ ।।

ब्रह्मकुण्डाभिधे तीर्थे सकृद्यः स्नानमा चरेत् ।।

मुक्तिद्वारार्गलं तस्य भिद्यते तत्क्षणाद्विधे ।। ५३ ।।

ब्रह्मकुण्डसमुद्भूतं ललाटे भस्म धारयन् ।।

मायाकपाटं निर्भिद्य मुक्तिद्वारं प्रया स्यति ।। ५४ ।।

ब्रह्मकुण्डोत्थितं भस्म ललाटे यो न धारयेत् ।।

स्वपितुर्बीजसंभूतो न मातरि सुतस्तु सः ।।५५।।

ब्रह्मकुण्डसमुद्भूतभस्मधारणतो विधे ।।

ब्रह्महत्यायुतं नश्येत्सुरापानायुतं तथा ।। ५६ ।।

गुरुतल्पायुतं नश्येत्स्वर्णस्तेयायुतं तथा ।।

तत्संसर्गायुतं नश्येत्सत्यमुक्तं मया विधे ।। ।। ५७ ।।

ब्रह्मकुण्डसमुद्भूतभस्मधारणवैभवात् ।।

भूतप्रेतपिशाचाद्या नश्यंति क्षणमात्रतः ।। ५८ ।।

इत्युक्त्वा भगवानीशस्तत्रैवांतरधीयत ।।

यज्ञेष्वथ समाप्तेषु मुनयश्च जितेंद्रियाः ।। ५९ ।।

इन्द्रादिदेवताश्चैव सिद्धचारणकिन्नराः ।।

अन्ये च देवनिवहा गंधमादनपर्वते ।। 3.1.14.६० ।।

तां यज्ञभूमिमाश्रित्य स्वयं रुद्रेण सेविताम् ।।

निरंतरमवर्तंत विदित्वा तस्य वैभवम् ।। ६१ ।।

यथाविधि ततो यज्ञान्समाप्य बहुदक्षिणान् ।।

सत्यलोकमगादब्रह्मा शिवाल्लब्धमनोरथः ।। ६२ ।।

28a

तदाप्रभृति देवाश्च मुनयश्च द्विजोत्तमाः ।।

ब्रह्मकुण्डं समासाद्य चक्रुर्यागान्विधानतः ।। ६३ ।।

तस्मादियक्षवो मर्त्याः कुर्युर्यज्ञानिहैव हि ।। ६४ ।।

मनुजदेवमुनीश्वरवंदितं सकलसंसृतिनाशकरं द्विजाः ।।

जलजसंभवकुण्डमिदं शुभं सकल पापहरं सकलार्थदम् ।। ६५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये ब्रह्मकुण्डप्रशंसायां ब्रह्मशापविमोक्षणवर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १५

https://sa.wikisource.org/s/fse
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

ब्रह्मकुण्डे महापुण्ये स्नानं कृत्वा समाहितः ।।

नरो हनूमतः कुण्डमथ गच्छेद्विजोत्तमाः ।। १ ।।

पुरा हतेषु रक्षःसु समाप्ते रणकर्मणि ।।

रामादिषु निवृत्तेषु गंधमादनपर्वते ।। २ ।।

सर्व लोकोपकाराय हनूमान्मारुतात्मजः ।।

सर्वतीर्थोत्तमं चक्रे स्वनाम्ना तीर्थमुत्तमम् ।। ३ ।।

विदित्वा वैभवं यस्य स्वयं रुद्रेण सेव्यते ।।

तस्य तीर्थस्य सदृशं न भूतं न भविष्यति ।। ४ ।।

यत्र स्नाता नरा यांति शिवलोकं सनातनम् ।।

यस्मिंस्तीर्थे महापुण्ये महापातकनाशने ।। ५ ।।

सर्वलोकोपकाराय निर्मिते वायुसूनुना ।।

सर्वाणि नरकाण्यासञ्च्छून्यान्येव चिराय वै ।। ६ ।।

वैभवं तस्य तीर्थस्य शंकरो वेत्ति वा न वा ।।

यत्र धर्मसखोनाम राजा केकयवंशजः ।। ७ ।।

भक्त्या सह पुरा स्नात्वा शतं पुत्रानवाप्त वान् ।।

।। ऋषय ऊचुः ।। ।।

सूत धर्मसखस्याद्य चरितं वक्तुमर्हसि ।।

हनूमत्कुण्डतीर्थे यो लेभे स्नात्वा शतं सुतान् ।। ८ ।। ।।

।। श्रीसूत उवाच ।। ।।

शृणुध्वमृषयो यूयं चरितं तस्य भूपतेः ।। ९ ।।

अद्य धर्मसखस्याहं प्रवक्ष्यामि समासतः ।।

राजा धर्मसखोनाम विजितारिः सुधार्मिकः ।। 3.1.15.१० ।।

बभूव नीतिमान्पूर्वं प्रजापालनतत्परः ।।

तस्य भार्याशतं विप्रा वभूव पतिदैवतम् ।। ११ ।।

स पालयन्महीं राजा सशैलवनकाननाम् ।।

तासु भार्यासु तनयं नाविंदद्वंशवर्द्धनम् ।। १२ ।।

पुत्रार्थं स महीपालो बहूयत्नानथाकरोत् ।।५

अकरोच्च महादानं पुत्रार्थं स महीपतिः ।। १३ ।।

अश्वमेधादिभिर्यज्ञैरयजच्च सुरान्प्रति ।।

तुलापुरुषमुख्यानि ददौ दानानि भूरिशः ।। १४ ।।

आमध्यरात्रमन्नानि सर्वेभ्योऽप्यनिवारितम् ।।

प्रायच्छद्बहुसूपानि सस्योपेतानि भूमिपः ।। १५ ।।

पितॄनुद्दिश्य च श्राद्धमकरोद्विधिपूर्वकम् ।।

संतानदायिनो मंत्राञ्जजाप नियतेद्रियः ।। १६ ।।

एवमादीन्बहून्धर्मान्पुत्रार्थं कृतवान्नृपः ।।

पुत्रमुद्दिश्य सततं कुर्वन्धर्माननुत्तमान् ।। १७ ।।

राजा दीर्घेण कालेन वृद्धतां प्रत्यपद्यत ।।

कदाचित्तस्य वृद्धस्य यतमानस्य भूपतेः ।। १८ ।।

पुत्रस्सुचंद्रनामाभूज्ज्येष्ठपत्न्यां मनोरमः ।।

जातं पुत्रं जनन्यस्ताः सर्वा वैषम्यवर्जिताः ।। १९ ।।

समं संवर्द्धयामासुः क्षीरादिभिरनुत्तमाः ।।

राज्ञश्च सर्वमातॄणां पौराणाम्मंत्रिणां तथा ।। 3.1.15.२० ।।

मनोनयनसंतोषजनकोऽयं सुतोऽभवत् ।।

लालयानः सुतं राजा मुदं लेभे परात्पराम्।।२१।।

आंदोलिकाशयानस्य सूनोस्तस्य कदाचन ।।

वृश्चिकोऽकुट्टयत्पादे पुच्छेनोद्यद्विषाग्निना ।। २२ ।।

कुट्टनाद्वृश्चिकस्यासावरुदत्तनयो भृशम् ।।

ततस्तन्मातरः सर्वाः प्रारुदञ्च्छोककातराः ।। २३ ।।

परिवार्यात्मजं विप्राः सध्वनिः संकुलोऽभवत् ।।

आर्तध्वनिं स शुश्राव राजा धर्मसखस्तदा ।। २४ ।।

उपविष्टः सभामध्ये सहामात्यपुरोहितः ।।

अथ प्रातिष्ठिपद्राजा सौविदल्लं स वेदितुम् ।। २५ ।।

अन्तःपुरबहिर्द्वारं सौविदल्लः समेत्य सः ।।

षंढवृद्धान्समाहूय वाक्यमेतदभाषत ।। २६ ।।

षंढाः किमर्थमधुना रुदत्यन्तःपुर स्त्रियः ।।

तत्परिज्ञायतां तत्र गत्वा रोदनकारणम् ।। २७ ।।

एतदर्थं हि मां राजा प्रेरयामास संसदि ।।

इत्युक्तास्तु परिज्ञाय निदानं रोदनस्य ते ।। २८ ।।

निर्गम्यांतःपुरात्तस्मै यथावृत्तं न्यवेदयत् ।।

स षंढकवचः श्रुत्वा सौविदल्लः सभां गतः ।। २९ ।।

राज्ञे निवेदयामास पुत्रं वृश्चिकपीडितम् ।।

ततो धर्मसखो राजा श्रुत्वा वृत्तांतमीदृशम् ।। 3.1.15.३० ।।

त्वरमाणः समुत्थाय सामात्यः सपुरोहितः ।।

प्रविश्यांतःपुरं सार्द्धं मांत्रिकैर्विषहा रिभिः ।। ३१ ।।

चिकित्सयामास सुतमौषधाद्यैरनेकशः ।।

जातस्वास्थ्यं ततः पुत्रं लालयित्वा स भूपतिः ।। ३२ ।।

मानयित्वा च मंत्रज्ञान्रत्नकां चनमौक्तिकैः ।।

निष्क्रम्यांतःपुराद्राजा भृशं चिंतासमाकुलः ।। ३३ ।।

ऋत्विक्पुरोहितामात्यैस्तां सभां सनुपाविशत् ।।

तत्र धर्मसखो राजा समासीनो वरासने ।।

उवाचेदं वचो युक्तमृत्विजः सपुरोहितान् ।। ३४ ।।

।। धर्मसख उवाच ।। ।।

दुःखायैवैकपुत्रत्वं भवति ब्राह्मणो त्तमाः ।। ३५ ।।

एकपुत्रत्वतो तृणां वरा चैव ह्यपुत्रता ।।

नित्यं व्यपाययुक्तत्वाद्वरमेव ह्यपुत्रता ।।

अहं भार्याशतं विप्रा उदवोढ विचिंत्य तु ।। ३६ ।।

वयश्च समतिक्रांतं सपत्नीकस्य मे द्विजाः ।।

प्राणा मम च भार्याणामस्मिन्पुत्रे व्यवस्थिताः ।। ३७ ।।

तन्नाशे मम भार्याणां सर्वासां च मृतिर्ध्रुवा ।।

ममापि प्राणनाशः स्यादेकपुत्रस्य मारणे ।। ३८ ।।

अतो मे बहुपुत्रत्वं केनोपायेन वै भवेत् ।।

तमुपायं मम ब्रूत ब्राह्मणा वेदवि त्तमाः ।। ३९ ।।

एकैकः शतभार्यासु पुत्रो मे स्याद्यथा गुणी ।।

तत्कर्म व्रत यूयं तु शास्त्रमालोक्य धर्मतः ।। 3.1.15.४० ।।

महता लघुना वापि कर्मणा दुष्करेण वा ।।

फलं यद्यपि तत्साध्यं करिष्येऽहं न संशयः ।। ४१ ।।

युष्माभिरुदितं कर्म करिष्यामि न संशयः ।।

कृतमेव हि तद्वित्त शपेऽहं सुकृतैर्मम ।। ४२ ।।

अस्ति चेदीदृशं कर्म येन पुत्रशतं भवेत् ।।

तत्कर्म कुत्र कर्तव्यं मयेति वदताधुना ।। ४३ ।।

इति पृष्टास्तदा राज्ञा ऋत्विजः सपुरोहिताः ।।

संभूय सर्वे राजानमिदमूचुः सुनिश्चितम् ।। ४४ ।।

।। ऋत्विज ऊचुः ।। ।।

अस्ति राजन्प्रवक्ष्यामो येन पुत्रशतं तव ।।

भवेद्धर्मेण महता शतभार्यासु कैकय ।। ४५ ।।

अस्ति कश्चिन्महापुण्यो गन्धमादनपर्वतः ।।

दक्षिणांबुधिमध्ये यः सेतुरूपेण वर्तते ।। ४६ ।।

सिद्धचारणगंधर्वदेवर्षिगणसंकुलः ।।

दर्शनात्स्पर्शनान्नृणां महापातकनाशनः ।। ४७ ।।

तत्रास्ति हनुमत्कुंडमिति लोकेषु विश्रुतम् ।।

महादुःखप्रशमनं स्वर्गमोक्षफलप्रदम्।। ४८ ।।

नरकक्लेशशमनं तथा दारिद्र्यमोचनम् ।।

पुत्रप्रदमपुत्राणामस्त्रीणां स्त्रीपदं नृणाम् ।। ४९ ।।

तत्र त्वं प्रयतः स्नात्वा सर्वाभीष्टप्रदायिनीम्।।

पुत्रीयेष्टिं च तत्तीरे कुरुष्व सुसमाहितः ।।3.1.15.५० ।।

तेन ते शतभार्यासु प्रत्येकं तनयो नृप ।।

एकैकस्तु भवेच्छीघ्रं मा कुरु ष्वात्र संशयम्।। ५१ ।।

तथोक्तो नृपतिर्विप्रैऋत्विक्भिः सपुरोहितैः ।।
तत्क्षणेनैव ऋत्विक्भिर्भार्याभिश्च पुरोधसा ।। ५२ ।।
वृतोमात्यैश्च भृत्यैश्च यज्ञसंभारसंयुतः ।।
प्रययौ दक्षिणांभोधौ गन्धमादनपर्वतम् ।। ५३ ।।
हनुमत्कुंडमासाद्य तत्र सस्नौ ससैनिकः ।।
मासमात्रं स तत्तीरे न्यवस त्स्नानमाचरन् ।। ५४ ।।
ततो वसंते संप्राप्ते चैत्रमासि नृपोत्तमः ।।
इष्टिमारब्धवांस्तत्र पुत्रीयां सपुरोहितः ।। ५५ ।।
सम्यक्कर्माणि चक्रुस्ते ऋत्विजः सपुरोधसः ।।
सपत्नीकस्य राजर्षेस्तथाधर्मसखस्य तु ।। ५६ ।।
इष्टौ तस्य समाप्तायां हनूमत्कुंडतीरतः ।।
पुरोहितो हुतोच्छिष्टं प्राश यद्राजयोषितः ।। ५७ ।।
ततो धर्मसखो राजा हनूमत्कुंडवारिषु ।।
सम्यक्चकारावभृथस्नानं भार्याशतान्वितः ।। ५८ ।।
ऋत्विक्भ्यो दक्षिणाः प्रादादसंख्यातास्तु भूरिशः ।।
ग्रामांश्च प्रददौ राजा बाह्मणेभ्यो द्विजोत्तमाः ।। ५९ ।।
सामात्यः सपरीवारः सपत्नीकः स धार्म्मिकः ।।
राजा ततो निववृते पुरीं स्वां प्रति नंदितः ।। 3.1.15.६० ।।
ततः कतिपये काले गते दशममामि वै ।।
शतं भार्याः शतं पुत्रान्सुषुवुर्गुणवत्तरान् ।। ६१ ।।
अथ प्रीतमना राजा वीरो धर्मसखो महान् ।।
स्नातः शुद्धश्च संकल्प्य जातकर्माकरोत्तदा।।६२ ।।
गोभूतिलहिरण्यादि ब्राह्मणेभ्यो ददौ बहु ।।
द्वौ पुत्रौ ज्येष्ठभार्यायाः पूर्वजोऽवरजस्तदा ।। ६३ ।।
सर्वे ववृधिरे पुत्रा एकाधिकशतं द्विजाः ।।
प्रौढेषु तेषु राजासौ तेभ्यो राज्यं विभज्य तु ।। ६४ ।।
दत्त्वा च प्रययौ सेतुं सभार्यो गन्धमादनम्।।
हनुमत्कुंडमासाद्य तपोऽतप्यत तत्तटे ।। ६५ ।।

महान्कालो व्यतीयाय राज्ञ स्तस्य तपस्यतः ।।

राज्ञो धर्मसखस्यास्य ध्यायमानस्य शूलिनम् ।। ६६ ।।

ततो बहुतिथे काले गते धर्मसखो नृपः ।।

कालधर्मं ययौ तत्र धार्म्मिकश्शांतमानसः ।। ६७ ।।

पत्न्योपि तस्य राजर्षेरनुजग्मुः पतिं तदा ।।

ज्येष्ठपुत्रः सुचन्द्रोपि संस्कृत्य पितरं ततः ।। ६८ ।।

अकरोच्छ्राद्ध पर्यंतं कर्माणि श्रद्धया सह ।।

राजा सभार्यो वैकुंठं मरणादत्र जग्मिवान् ।। ६९ ।।

सुचन्द्रमुख्यास्ते सर्वे राजपुत्रा महौजसः ।।

स्वस्वराज्यं बुभुजिरे भ्रातरस्त्यक्तमत्सराः ।। 3.1.15.७० ।।

एवं वः कथितं विप्रा हनूमत्कुंडवैभवम् ।।

राज्ञो धर्मसखस्यापि चरित्रं परमाद्भुतम् ।। ७१ ।।

तत्सर्वं कामसि द्ध्यर्थं स्नायात्कुंडे हनूमतः ।। ७२ ।।

अध्यायमेनं पठते मनुष्यः शृणोति वा यः सुसमाहितो द्विजाः ।।

सोऽनंतमाप्नोति सुखं परत्र क्रीडेत सार्द्धं दिवि देववृन्दैः ।। ७३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये हनुमत्कुंडप्रशंसायां धर्मसखशतपुउत्रावाप्तिवर्णनंनाम पञ्चदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १६

https://sa.wikisource.org/s/fsf
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। सूत उवाच ।। ।।

कुंडे हनुमतः स्नात्वा स्वयं रुद्रेण सेविते ।।

अगस्तितीर्थं विप्रेंद्रास्ततो गच्छेत्समाहितः ।। १ ।।

एतद्विनिर्मितं तीर्थं साक्षाद्वै कुम्भयोनिना ।।

प्रवर्तमाने कलहे पुरा वै मेरुविंध्ययोः ।। २ ।।

निरुद्धभुवनाभोगो ववृधे विंध्यपर्वतः ।।

तदा प्राणिषु सर्वेषु निरुच्छ्वासेषु देवताः ।। ३ ।।

कैलासं पर्वतं गत्वा शंभवे तद्व्यजिज्ञपन्।।

तदा स पार्वतीपाणिग्रहणोत्सुककौतुकी ।। ४ ।।

प्रेषयित्वा वसिष्ठादीन्पार्वतीं याचितुं मुनीन्।।

कुंभज त्वं निगृह्णीष्व विंध्याद्रिमिति सोऽन्वशात् ।। ५ ।।

ततः स कुम्भजः प्राह भगवंतं पिनाकिनम् ।।

उद्वाहवेषं ते देव न द्रक्ष्येहं कथं विभो ।। ६ ।।

इति विज्ञापितः शंभुः पुनः कुंभजमब्रवीत्।।

कुंभजोद्वाहवेषं ते पार्वत्या सहितो ह्यहम् ।। ७ ।।

वेदारण्ये महापुण्ये दर्शयिष्याम्यसंशयः ।।

तद्गच्छ शीघ्रं विंध्याद्रिं निग्रहीतुं मुनीश्वर ।। ८ ।।

एवमुक्तस्ततोगस्त्यो विन्ध्याद्रिं स निगृह्य च ।।

पादाक्रमणमात्रेण समीकुर्वन्महीतलम् ।। ९ ।।

चरित्वा दक्षि णान्देशान्गन्धमादनमन्वगात् ।।

स विदित्वा महर्षिस्तु गन्धमादनवैभवम् ।। 3.1.16.१० ।।

तत्र तीर्थं महापुण्यं स्वनाम्ना निर्ममे मुनिः ।।

लोपामुद्रासखस्तत्र वर्ततेऽद्यापि कुंभजः ।। ११ ।।

तत्र स्नात्वा च पीत्वा च न भूयो जन्मभाग्भवेत् ।।

इह लोके त्रिकालेपि तत्तीर्थसदृशं द्विजाः ।। ।। १२ ।।

तीर्थं न विद्यते पुण्यं भुक्तिमुक्तिफलप्रदम् ।।

सर्वाभीष्टप्रदं नृणां यत्तीर्थस्नानवैभवात्।। १३ ।।

सुदीर्घतमसः पुत्रः कक्षीवान्नाम नामतः ।।

लेभे मनोरमां नाम स्वनयस्य सुतां प्रियाम् ।। १४ ।।

कक्षीवतः कथा सेयं पुण्यापापविनाशिनी ।।

तां कथां वः प्रवक्ष्यामि तच्छृणुध्वं मुनीश्वराः ।।। १५ ।।

अस्ति दीर्घतमा नाम मुनिः परमधार्मिकः ।।

तस्य पुत्रः समभवत्कक्षीवानिति विश्रुतः ।। १६ ।।

उपनीतः स कक्षीवान्ब्रह्मचारी जितें द्रियः ।।

वेदाभ्यासाय स गुरोः कुले वासमकल्पयत् ।। १७।।

उदंकस्य गुरोर्गेहे वसन्दीर्घतमःसुतः ।।

सोऽध्येष्ट चतुरो वेदान्सांगाञ्छास्त्राणि षट् तथा ।। १८ ।।

इतिहासपुराणानि तथोपनिषदोऽपिच ।।

उषित्वा षष्टिवर्षाणि कक्षीवान्गुरुसन्निधौ ।। १९ ।।

प्रयास्यन्स्वगृहं विप्रा गुरवे दक्षि णामदात् ।।

उवाच वै गुरुर्विद्वान्कक्षीवान्ब्रह्मवित्तमः ।। 3.1.16.२० ।।

।। कक्षीवानुवाच ।। ।।

अहं गृहं प्रयास्यामि कुर्वनुज्ञां महामुने ।।

अवलोक्य कृपादृष्ट्या मां रक्षोदंक सांप्रतम् ।।

उदंकस्त्वेव मुदितः कक्षीवंतमथाब्रवीत् ।। २१ ।।

।। उदंक उवाच ।।

अनुजानामि कक्षीवन्गच्छ त्वं स्वगृहं प्रति ।। २२ ।।

उद्वाहार्थमुपायं ते वत्स वक्ष्यामि तच्छृणु ।।

रामसेतुं प्रयाहि त्वं गंधमादनपर्वतम्।। २३ ।।

तत्रागस्त्यकृतं तीर्थं सर्वाभीष्टप्रदा यकम् ।।

भुक्तिमुक्तिप्रदं पुंसां सर्वपापनिबर्हणम्।। २४ ।।

विद्यते स्नाहि तत्र त्वं सर्वमंगलसाधने ।।

त्रिवर्षं वस तत्र त्वं नियमाचारसंयुतः ।। २५ ।।

वर्षेषु त्रिषु यातेषु चतुर्थे वत्सरे ततः ।।

निर्गमिष्यति मातंगः कश्चित्तीर्थोत्तमात्ततः ।। २६ ।।

चतुर्दंतो महाकायः शरदभ्रसमच्छविः ।।

तं गजं गिरिसंकाशं स्नात्वा तत्र समारुह ।। २७ ।।

आरुह्य तं गजं वत्स स्वनयस्य पुरीं व्रज ।।

चतुर्दंतगजस्थं त्वां दृष्ट्वा शक्रमिवापरम् ।।२८ ।।

राजर्षिः स्वनयो धीमान्हर्षव्याकुललोचनः ।।

स्वकन्यायाः कृते दुःखं त्यजेदेव हृदिस्थितम् ।। २९ ।।

पुरा हि प्रतिजज्ञे सा तस्य पुत्री मनोरमा ।।

चतुर्दंतं महाकायं गजं सर्वांगपांडुरम् ।। 3.1.16.३० ।।

आरुह्य यः समागच्छेत्स मे भर्ता भवेदिति ।।

स्वकन्यायाः प्रतिज्ञां तां समाकर्ण्य स भूपतिः ।। ।। ३१ ।।

दुःखाकुलमना भूत्वा सततं पर्यचिंतयत् ।।

स्वनये चिंतयत्येवं नारदः समुपागमत् ।। ३२ ।।

तमागतं मुनिं दृष्ट्वा राजर्षिरतिधार्मिकः ।।

प्रत्युद्गम्य मुदा युक्तः पाद्यार्घ्याद्यैरपूजयत् ।। ३३ ।।

प्रणम्य नारदं राजा वचनं चेदमब्रवीत् ।।

कन्येयं मम देवर्षे प्रतिज्ञामकरोत्पुरा ।। ३४ ।।

चतु र्दंतं महाकायं गजं सर्वांगपांडुरम् ।।

आरुह्य यः समागच्छेत्स मे भर्ता भवेदिति ।। ३५ ।।

चतुर्दंतो महाकायो गजः सर्वांगपांडुरः ।।

संभवेदिंद्रभवने भूतले नैव विद्यते ।। ३६ ।।

इयं च दुस्तरामेनां प्रतिज्ञां बालिशाऽकरोत् ।।

इयं प्रतिज्ञातितरां सततं बाधते हि माम् ।। ३७ ।।

अनूढा हि पितुः कन्या सर्वदा शोकमावहेत् ।।

इति तस्य वचः श्रुत्वा स्वनये नारदोऽब्रवीत् ।। ३८ ।।

मा विषीदस्व राजर्षे तस्या ईदृग्विधः पतिः ।।

भविष्यत्यचिरादेव पृथिव्यां ब्राह्मणोत्तमः ।। ३९ ।।
कक्षीवानिति विख्यातो जामाता ते भविष्यति ।।
इत्युक्त्वा नारदमुनिर्ययावाकाशमार्गतः ।। 3.1.16.४० ।।
स्व नयस्तद्वचः श्रुत्वा नारदेन प्रभाषितम् ।।
आकांक्षते दिवारात्रं तादृग्विधसमागमम् ।। ४१ ।।
अतः सौम्य महाभाग कक्षीवन्बालतापस ।।
अगस्त्यतीर्थमद्य त्वं स्नातुं गच्छ त्वरान्वितः ।। ४२ ।।
सर्वमंगलसिद्धिस्ते भविष्यति न संशयः ।।
उदंकेनैवमुक्तोऽथ कक्षीवान्द्विजपुंगवः ।। ४३ ।।
अनु ज्ञातश्च गुरुणा प्रययौ गंधमादनम् ।।
संप्राप्यागस्त्यतीर्थं च तत्र सस्नौ जितेंद्रियः ।। ४४ ।।
क्षेत्रोपवासमकरोद्दिनमेकं मुनीश्वरः ।।
अपरेद्युः पुनः स्नात्वा पारणामकरोद्द्विजः ।। ४५ ।।
रात्रौ तत्रैव सुष्वाप कक्षीवान्धर्मतत्परः ।।
एवं नियमयुक्तस्य तस्य कक्षीवतो मुनेः ।। ४६ ।।
एकेन दिवसे नोनं वर्षत्रयमथागमत् ।।
अथ वर्षत्रयस्यांते तस्मिन्नेव दिने मुनिः ।। ४७ ।।
अन्वास्य पश्चिमां संध्यां सुखं सुष्वाप तत्तटे ।।
याममात्रावशिष्टायां विभावर्यां महाध्वनिः ।। ४८ ।।
उदभूत्प्रलयांभोधिवीचिकोलाहलोपमः ।।
तेन शब्देन महता कक्षीवान्प्रत्यबुध्यत ।। ४९ ।।
ततस्तु स्वनयो नाम राजा सानुचरो बली ।।
मृगयाकौतुकी तत्र मधुरापतिरराययौ ।। 3.1.16.५० ।।
विनिघ्नन्स गजान्सिंहान्वराहान्महिषान्नुरून् ।।
अन्यान्मृगविशेषांश्च स राजा न्यवधीच्छरैः ।। ८५१ ।।
सामात्यो मृगयासक्तो रथवाजिगजैर्युतः ।।
अगस्त्यतीर्थसविधमाससाद भटान्वितः ।। ५२ ।।
स राजा मृगयाश्रांतः श्रांतसैनिकसंवृतः ।।

तत्तीर्थतीरप्रांतेषु निषसाद महीपतिः ।। ५३ ।।

ततः प्रभाते विमले कक्षी वान्मुनिसत्तमः ।।

अगस्त्यतीर्थे स्नात्वाऽसौ संध्यां पूर्वामुपास्य च ।। ५४ ।।

तस्य तीरे जपन्मत्रांस्तस्थौ नियमसंयुतः ।।

अत्रांतरे तीर्थवराद्गज एको विनिर्ययौ ।। ५५ ।।

चतुर्दंतो महाकायः कैलास इव मूर्तिमान् ।।

स समुत्थाय तत्तीर्थादगात्कक्षीवदंतिकम् ।। ५६ ।।

तमागतमुदंकोक्त लक्षणैरुपलक्षितम् ।।

तदा निरीक्ष्य कक्षीवानारोढुं स्नानमातनोत् ।। ५७ ।।

नमस्कृत्य च तत्तीर्थं श्लाघमानो मुहुर्मुहुः ।।

आरुरोह च कक्षीवांश्चतुर्दंतं महागजम् ।। ५८ ।।

आरुह्य तं चतुर्दंतं रजताचलसंनिभम् ।।

स्वनयस्य पुरीमेव कक्षीवान्गंतुमैच्छत ।। ५९ ।।

तमारूढं चतुर्दंतं श्वेतदंतावलोत्तमम् ।।

स वीक्ष्य निश्चिकायैनं कक्षीवानिति भूपतिः ।। 3.1.16.६० ।।

प्रसन्नहृदयो राजा तस्यांतिकमुपागमत् ।।

तदाभ्याशमुपागम्य कक्षीवंतं नृपोऽब्रवीत् ।। ६१ ।।

।। स्वनय उवाच ।। ।।

त्वं ब्रह्मन्कस्य पुत्रोऽसि नाम किं तव मे वद ।।

गजमेनं समारुह्य कुत्र वा गन्तुमिच्छसि ।।

स्वनयेनैवमुक्तस्तु कक्षीवान्वाक्यमब्रवीत् ।। ६२ ।।

।। कक्षीवानुवाच ।। ।।

पुत्रोऽहं दीर्घतमसः कक्षीवानिति विश्रुतः ।। ६३ ।।

स्वनयस्य तु राजर्षेर्गच्छामि नगरं प्रति ।।

अहमुद्वोढुमिच्छामि तस्य कन्या मनोरमाम्।। ६४ ।।

चतुर्दंतगजारूढस्तत्प्रतिज्ञां च पूरयन् ।।

स्वनयस्य सुतापाणिं ग्रहीष्यामि नराधिप ।। ६५ ।।

तद्भाषितं समाकर्ण्य श्रोत्रपीयूषवर्षणम् ।।

हर्षसंफुल्लनयनः स्वनयो वाक्यम ब्रवीत् ।। ६६ ।।
कक्षीवन्भोः कृतार्थोस्मि स एव स्वनयो ह्यहम् ।।
उद्वोढुमिच्छति भवान्यस्य कन्यां मनोरमाम् ।। ६७ ।।
स्वागतं ते मुनिश्रेष्ठ कक्षीवन्बालतापस ।।
मम कन्यां गृहाण त्वं तपोधन मनोरमाम् ।। ६८ ।।
तया सह चरन्धर्मान्गार्हस्थ्यं प्रतिपालय ।।
राज्ञोक्तः स तदोवाच कक्षीवान्धर्मतत्परः ।।
राजानं स्वनयं प्रीतं मधुरापुरवासिनम् ।। ६९ ।।
।। कक्षीवानुवाच ।। ।।
पिता दीर्घतमानाम वेदारण्ये मम प्रभो ।। ।। 3.1.16.७० ।।
आस्ते तपश्चरन्सौम्यो नियमाचारतत्परः ।।
तस्यांतिकं प्रेषय त्वं विप्रमेकं धरापते ।। ७१ ।।
तथोक्तः स तदा राजा स्वनयो हृष्टमा नसः ।।
अनेकसेनया सार्धं प्राहिणोत्स्वपुरोधसम् ।। ७२ ।।
विप्रं सुदर्शनं नाम वेदारण्यस्थलं प्रति ।।
सुदर्शनः समादिष्टः स्वनयेन नृपेण सः ।। ७३ ।।
महत्या सेनया सार्धं प्रययौ वेदकाननम् ।।
तत्रोटजे समासीन तं दीर्घतमसं मुनिम् ।। ७४ ।।
तपश्चरतमासीनं ध्यायन्वेदाटवी पतिम् ।।
पुरोहितो ददर्शाथ जपंतं मंत्रमुत्तमम् ।। ७५ ।।
प्रणाममकरोत्तस्मै मुनये स सुदर्शनः ।।
उवाच दीर्घतमसं मुनिं प्रह्लादयन्निव ।। ७६ ।। ।।
।। सुदर्शन उवाच ।। ।।
कच्चित्ते कुशलं ब्रह्मन्कच्चित्ते वर्धते तपः ।।
आश्रमे कुशलं कच्चित्कच्चिद्धर्मे सुखं वद ।। ७७ ।।
पृष्टः सुदर्शनेनैवं मुनिर्दीर्घतमास्तदा ।।
सुदर्शनमुवाचेदमर्घ्यादिविधिपूर्वकम् ।। ७८ ।।
।। दीर्घतमा उवाच ।। ।।

सर्वत्र कुशलं ब्रह्मन्सुदर्शन महामते ।।
मम वेदाटवीनाथकृपया नाशुभं क्वचित्।। ७९ ।।
तवापि कुशलं ब्रह्मन्किं सुखागमनं तथा ।।
किंवाऽऽगमनकार्यं ते सुदर्शन ममाश्रमे ।। 3.1.16.८० ।।।
स्वनयस्य पुरोधास्त्वं खलु वेदविदांवरः ।।
तं विहाय महाराज मधुरापुरवासिनम् ।। ८१ ।।
महत्या सेनया सार्धं किमर्थं त्वमिहागतः ।।
इत्युक्तो दीर्घतमसा तदानीं स सुदर्शनः ।। ८२ ।।
उवाच तं महात्मानं मुनिं ज्वलिततेजसम् ।।
सर्वत्र मे सुखं ब्रह्मन्भवतः कृपया सदा ।। ८३ ।।
भगवन्स्व नयो राजा साष्टांगं प्रणिपत्य तु।।
त्वां प्राह प्रश्रितं वाक्यं मन्मुखेन शृणुष्व तत् ।। ८४ ।।
।। स्वनय उवाच ।। ।।
कक्षीवांस्ते सुतो ब्रह्म न्गंधमादनपर्वते ।।
स्नानं कुर्वन्नगस्त्यस्य तीर्थे संप्रति वर्तते ।। ८५ ।।
तस्य रूपं तपो धर्ममाचारान्वैदिकांस्तथा ।।
वेदशास्त्रप्रवीणत्वमाभि जात्यं च तादृशम् ।। ८६ ।।
लोकोत्तरमिदं सर्वं विज्ञाय तव नंदने ।।
मनोरमां सुतां तस्मै दातुमिच्छाम्यहं मुने ।। ८७ ।।
मृगयाकौतुकी चाहं गंधमादनपर्वतम् ।।
आगतो मुनिशार्दूल वर्त्ते युष्मत्सुतांतिके ।।८८।।
पित्रनुज्ञां विना नाहमुद्वहेयं सुतां तव ।।
इति ब्रूते तव सुतः कक्षीवान्मुनिस त्तम ।।८९।।
तद्भावां मत्सुतां तस्मै दातुं मेऽनुग्रहं कुरु ।।
प्रैषयं च समीपं ते सेनया च सुदर्शनम् ।। 3.1.16.९० ।।
।। सुदर्शन उवाच ।।।।
इति मां भगवन्राजा प्राहिणोत्तव सन्निधिम्।।
तद्भवाननुमन्यस्व राज्ञस्तस्य चिकीर्षितम् ।। ९१ ।।

।। श्रीसूत उवाच ।। ।।

इत्युक्त्वा विररामाथ स्वनयस्य पुरोहितः ।।

ततो दीर्घतमाः प्राह स्वनयस्य पुरोहितम् ।। ९२ ।।

।। दीर्घतमा उवाच ।। ।।

सुदर्शन भवत्वेवं कथितं स्वनयेन यत् ।।

ममाभीष्टतमं ह्येतत्पाणिग्रहणमंगलम् ।। ९३ ।।

आगमिष्याम्यहं विप्र गन्धमादनपर्वतम् ।।

इत्युक्त्वा स मुनिर्विप्रा महादीर्घतमा मुनिः ।। ९४ ।।

वेदाटवीपतिं नत्वा भक्तिप्रवणचेतसा ।।

सुदर्शनेन सहितः सेतुमुद्दिश्य निर्ययौ ।। ९५ ।।

षट्भिर्दिनैर्मुनिः पुण्यं प्रययौ गन्धमादनम् ।।

अगस्तितीर्थतीरं च गत्वा दीर्घतमा मुनिः ।। ९६ ।।

अथ पुत्रं ददर्शाग्रे कक्षीवंतं महामुनिः ।।

कक्षीवान्पितरं दृष्ट्वा ववन्दे नाम कीर्तयन् ।। ९७ ।।

ततो दीर्घतमा योगी स्वांकमारोप्य तं सुतम् ।।

मूर्ध्न्युपाघ्राय सस्नेहं सस्वजे पुलकाकुलः ।। ९८ ।।

कुशलं परिपप्रच्छ तदा दीर्घतमा ऋषिः ।।

सर्ववेदास्त्वयाधीताः कक्षीवन्किमु वत्सक ।। ९९ ।।

शास्त्राण्यपाठीः किं त्वं वा वत्स सर्वं वदस्व मे ।।

इति पृष्टः स्वपित्रा स सर्वं वृत्तं तमब्रवीत् ।। ।। 3.1.16.१००।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीयेब्रह्मखण्डे सेतुमाहात्म्येऽगस्तितीर्थप्रशंसायां कक्षीवदुद्वाहोद्योगवर्णनंनाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १७

https://sa.wikisource.org/s/fsg
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

पुनरित्याह कक्षीवान्पितरं तं मुनीश्वराः ।।

यथोदंकेन गुरुणा प्रेषितोऽहमिहा धुना ।। १ ।।

समागतोस्मि तीर्थेऽस्मिन्नागस्त्ये मुनिसत्तम ।।

स्वनयस्य सुतोद्वाहसिद्ध्यर्थं गुरुचोदितः ।। २ ।।

उपायं तन्निगदितमत्र कुर्व न्न्यवर्तिषम् ।।

वर्षत्रयावसाने मामुद्वाहोपायसंयुतम् ।। ३ ।।

स्वनयोत्रैव तिष्ठन्तमाससाद यदृच्छया ।।

स च मामेत्य कन्यां ते दास्यामीति वचोऽब्रवीत् ।। ४ ।।

ततोस्मदनुरोधेन त्वामाह्वयदयं नृपः ।।

इतीरयित्वा पितरं कक्षीवान्विरराम सः ।। ५ ।।

सुदर्शनोऽथ विप्रेंद्रः पुरोधाः स्वन यस्य सः ।।

प्रययौ राजसविधं स्वनयाय निवेदितुम् ।। ६ ।।

राजानं तं समासाद्य स्वनयं स सुदर्शनः ।।

प्राप्तं निवेदयामास तं दीर्घतमसं मुनिम्।। ७ !।

ततः स राजा स्वनयो मुनिं प्राप्तं पुरोहितात् ।।

श्रुत्वा विनिर्ययौ द्रष्टुं महसा पटमण्डपात् ।। ८ ।।

अगस्त्यतीर्थतीरे तं सपुत्रमृषि सत्तमम्।।

ददर्श राजा स्वनयो ब्रह्माणमिव देवराट् ।। ९ ।।

ववंदे दीर्घतमसश्चरणौ लोकमंगलौ ।।

उत्थाप्य नृपतिं विप्रास्तदा दीर्घतमा मुनिः ।। ।। 3.1.17.१० ।।

आशिषं प्रयुयोजाथ स्वनयाय नृपाय सः ।।

अत्रांतरे समायात उदंकोऽपि महानृषिः ।। ११ ।।

रामसेतौ धनुष्कोटौ स्नातुं शिष्यगणैर्वृतः ।।

लक्षसंख्यो मुनिगणस्तेन साकं मुनीश्वरः ।। १२ ।।

उदंकोऽगस्त्यतीर्थेस्मिन्स्नातुं संप्राप्तवान्मुनिः ।।

उदंकमागतं दृष्ट्वा कक्षीवान्प्रणनाम तम् ।। १३ ।।

अकरोदाशिषं विप्रः शिष्यायाथ गुरुस्तदा ।।

अथ दीर्घतमा विप्रस्तमुदंकं महामुनिम् ।। १४ ।।

कुशलं परिपप्रच्छ सोऽपि तं मुनि पुंगमम् ।।

उभौ तौ मुनिशार्दूलौ सर्वलोकेषु विश्रुतौ ।। १५ ।।

कथयामासतुस्तत्र कथाः पापप्रणाशिनीः ।।

अथ राजाप्युदंकं तं प्रणनाम मुनीश्व रम् ।। १६ ।।

उदंकोप्याशिषं तस्मै प्रायुंक्त स्वनयाय वै ।।

राजाथ स्वनयः प्रीतस्तत्र वाक्यमभाषत ।। १७ ।।

मुनिं तं दीर्घतमसं विवाहः क्रिय तामिति ।।

तथास्त्वित्यवदत्सोऽपि तदा दीर्घतमा मुनिः ।। १८ ।।

श्व एव क्रियतां राजन्सुमुहूर्ते महामते ।।

अत्रैव पाणिग्रहणं क्रियतां गन्धमा दने ।। १९ ।।

तस्मादिहानय क्षिप्रं कन्यामंतःपुरं तथा ।।

इत्युक्तः स्वनयो राजा गत्वा स्वपटमण्डपम् ।। 3.1.17.२० ।।

आहूय शतसंख्याकान्वृद्धान्वर्ष वरांस्तदा ।।

आनेतुं प्रेषयामास कन्यामंतःपुरं तथा ।। २१ ।।

ते वर्षवरमुख्यास्तु स्वनयेन प्रचोदिताः ।।

मनोजवान्समारुह्य वाजिनो मधुरां ययुः ।। २२ ।।

गत्वा चांतःपुरं तूर्णं वृत्तं सर्वं निवेद्यच ।।

कन्ययांतःपुरेणापि सहिताः पुनराययुः ।। २३ ।।

ततः परस्मिन्दिवसे शुभे दीर्घतमा ऋषिः ।।

गोदानादीनि पुत्रस्य विधिवन्निरवर्तयत् ।। २४ ।।

निर्वृत्तेष्वथ कक्षीवान्गोदानादिषु कर्मसु ।।

उद्वोढुं राजतनयां पित्रा च गुरुणा सह ।। ।। २५ ।।

चतुर्दंतं महाकायं गजं सर्वांगपांडुरम् ।।

आरुह्य हर्षसंयुक्तो द्वितीय इव देवराट् ।। २६ ।।

मनोरमायाः कन्यायाः पूरयंश्च मनोरथम् ।।

ब्राह्मणैर्बहुसाहस्रैः सहितः स्वस्तिवाचकैः ।।२७।।

तोरणालंकृतद्वारं राजर्षे पटमण्डपम् ।।

कृतमंगलकृत्योऽसौ कक्षीवान्मुदितो ययौ ।।२८।।

ततः स्वनयकन्या सा कृतमंगलभूषणा ।।

चतुर्दंतमहाकायश्वेतदंतावलस्थितम्।। २९ ।।

कक्षीवंतं समायांतं दृष्ट्वा स्वोद्वाहनोत्सुकम् ।।

प्रतिज्ञा मत्कृते दानीं निर्वृत्तेति मुदं ययौ ।। 3.1.17.३० ।।

कक्षीवान्दीर्घतमसा तथोदंकेन संयुतः ।।

पटाकारबहिर्द्वारं क्रमाद्राज्ञः समाययौ ।। ३१ ।।

स्वनयस्तु ततो दृष्ट्वा कक्षीवंतं समागतम् ।।

प्रत्युज्जगाम सहितः सुदर्शनपुरोधसा ।। ३२ ।।

कक्षीवतो वरस्याथ कन्यकापरिचारिकाः ।।

राजतैः स्वर्णपात्रैश्च चक्रु र्नीराजनाविधिम् ।। ३३ ।।

स्वनयेन समाहूतो ब्राह्मणैः परिवारितः ।।

प्रविवेशाथ लक्ष्मीवान्कक्षीवान्राजमंदिरम् ।। ३४ ।।

ततो वरेण सहितं तं दीर्घतमसं मुनिम् ।।

सोदंकमनयद्राजा स्वगृहं विनयान्वितः ।। ३५ ।।

उदंकदीर्घतमसोरर्घ्यं च प्रददौ नृपः ।।

अलंकृते प्रपामध्ये वस्त्रचामरतोरणैः ।। ३६ ।।

वरो दीर्घतमाश्चान्ये सोदंका मुनयस्तदा ।।

न्यषीदन्स्वनयश्चापि सामात्यः सपुरोहितः ।। ३७ ।।

ततो दुहितरं कन्यां सुकेशीं तां मनो रमाम् ।।

भूषणालंकृतां गात्रे दिव्यवस्त्रधरां शुभाम् ।। ३८ ।।

बिंबोष्ठीं चारुसर्वांगीं पीनोन्नतपयोधराम् ।।

प्रपायामध्यमनयन्महाजनसमाकुलम् ।। ।। ३९ ।।

ततो वरस्य कंठे सा मालां चंपकनिर्मिताम् ।।

निवेशयामास शुभा जनमध्ये मनोरमा ।। 3.1.17.४० ।।

उदंकस्तत आगत्य प्रतिष्ठाप्यानलं स्थले ।।

कृत्वाग्निमुखपर्यंतं लाजाहोमादिकं तथा ।। ४१ ।।

पाणिमग्राहयत्तस्याः कन्यायाश्च वरेण तु ।।

उदंकः सर्वकर्माणि कारयामास तत्र वै ।। ।। ४२ ।।

वरवध्वोस्तदा विप्राः प्रायुंजत तदाशिषः ।।

ततः स राजा स्वनयो वरं दीर्घतमोमुनिम्।।४३।।

उदंकं वरपक्षीयान्स्वपक्षीयांस्तथाद्विजाः ।।

त्रिलक्षं ब्राह्मणानन्नैर्भोजयामास षड्रसैः ।। ४४ ।।

ततः संभावयामास तांबूलाद्यैरनेकधा ।।

अथामंत्र्य मुनिश्रेष्ठमुदंकः स्वाश्रमं ययौ ।।४५ ।।

अन्ये च ब्राह्मणाः सर्वे स्वदेशान्प्रययुस्तदा ।।

एवं विवाहे निर्वृत्ते कक्षीवद्राजकन्ययोः ।।४६।।

प्रविश्यागस्त्यतीर्थं स तिरोधत्त गजोत्तमः ।।

ततो दीर्घतमा विप्राः पुत्रेण स्नुषया सह ।। ४७ ।।

अगस्त्यस्य महातीर्थे स्नानं कृत्वेष्टदायिनि ।।

श्लाघमानश्च तत्तीर्थं सर्वलोकेषु विश्रुतम् ।। ४८ ।।

प्रयातुं स्वा श्रमं पुण्यं वेदारण्यं मनो दधे ।।

राजानं च तमागंतुमापृच्छन्मुनिसत्तमः ।। ४९ ।।

स्वनयोऽपि तदा राजा स्वदुहित्रे मुदान्वितः ।।

ददौ शतसहस्राणि स्वर्णानि स्त्रीधनं तदा ।। 3.1.17.५० ।।

गवां सहस्रं प्रददौ दासीनां च सहस्रकम् ।।

ग्रामं पंचशतं चापि ददौ दुहितृवत्सलः ।। ५१ ।।

दिव्यवस्त्रा युतं चापि शतं भूषणपेटिकाः ।।

हारमालासहस्रं च ददौ दुहितृसौहृदात् ।। ५२ ।।

एतत्सर्वं समादाय स पुत्रः सस्नुषो मुनिः ।।

राज्ञा च समनुज्ञातः प्रययौ वेदकाननम् ।।५३ ।।

वेदारण्यं समासाद्य तदा दीर्घतमा मुनिः ।।

उवास ससुखं विप्राः पुत्रेण स्नुषया सह ।। ५४ ।।

सेवन्वेदाटवीनाथं भुक्तिमुक्तिफलप्रदम् ।।

न्यवसत्तु चिरं कालं कक्षीवानपि भार्यया ।। ५५ ।।

स्वनयोपि स राजर्षिः स्नात्वा कुंभजनिर्मिते ।।

तत्र तीर्थे महापुण्ये सहितः सर्वसैनिकैः ।। ५६ ।।

अतःपुरं समादाय मुदितः स्वपुरं ययौ ।।

अगस्त्यतीर्थमाहात्म्यादेवं कक्षीवतो मुनेः ।।

अनन्यसुलभो विप्रा विवाहः समजायत ।। ५७ ।।

।। श्रीसूत उवाच ।। ।।

इतिहासस्त्वयं पुण्यो वेदसिद्धो मुनीश्वराः ।। ५८ ।।

धन्यो यशस्य आयुष्यः कीर्तिसौभाग्य वर्द्धनः ।।

श्रोतव्यः पठितव्योऽयं सर्वथा मानवैर्द्विजाः ।। ५९ ।।

पठतां शृण्वतां चेममितिहासं पुरातनम् ।।

नेहामुत्रापि वा क्लेशो दारिद्यं चापि नो भवेत् ।। 3.1.17.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये कक्षीवद्विवाहनिष्पत्तिवर्णनंनाम सप्त दशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १८



।। श्रीसूत उवाच ।। ।।

कुंभसंभवतीर्थेऽस्मिन्विधायाभिषवं नरः ।।

रामकुंडं ततः पुण्यं गच्छेत्पापविमुक्तये ।। १ ।।

रघुनाथसरः पुण्यं द्विजाः पापहरं तथा ।।

रघुनाथसरस्तीरे कृतो यज्ञोऽल्पदक्षिणः ।। २ ।।

संपूर्णफलदो भूयात्स्वाध्यायोऽपि जपस्तथा ।।

रघुनाथ सरस्तीरे मुष्टिमात्रमपि द्विजाः ।। ३ ।।

दत्तं चेद्वेदविदुषे तदनंतगुणं भवेत् ।।

रामतीर्थं समुद्दिश्य वक्ष्यामि मुनिपुंगवाः ।। ४ ।।

इतिहासं महापुण्यं सर्वपातकनाशनम् ।।

सुतीक्ष्णनामा विप्रेंद्रो मुनिर्नियतमानसः ।। ५ ।।

अगस्त्यशिष्यो रामस्य चरणाब्जविचिंतकः ।।

रामचंद्रसरस्तीरे तपस्तेपे सुदुष्करम् ।। ६ ।।

जपन्षडक्षरं मंत्रं रामचंद्राधिदैवतम् ।।

नित्यं स पंचसाहस्रं मत्रराजमतंद्रितः ।।७ ।।

जजाप कुर्वन्स्नानं च रघुनाथसरोजले ।।

भिक्षाशी नियताहारो जितक्रोधो जितेंद्रियः ।। ८ ।।

एवं सुतीक्ष्णो विप्रेंद्रा बहुकालमवर्तत ।।

ततः कदाचित्स मुनीरामं ध्याय न्सदा हृदि ।।

तुष्टाव सीतासहितं रामचंद्रं सभक्तिकम् ।। ९ ।।

।। सुतीक्ष्ण उवाच ।। ।।

नमस्ते जानकीनाथ नमस्ते हनुमत्प्रिय ।। 3.1.18.१० ।।

नमस्ते कौशिकमुनेर्यागरक्षणदीक्षित ।।

नमस्ते कौसलेयाय विश्वामित्रप्रियाय च ।। ११ ।।

नमस्ते हरकोदण्डभंजकामरसेवित ।।
मारीचांतक राजेंद्र ताटकाप्राणनाशन ।। १२ ।।
कबंधारे हरे तुभ्यं नमो दशरथात्मज ।।
जामदग्न्यजिते तुभ्यं खरविध्वंसिने नमः ।। १३ ।।
नमः सुग्रीवनाथाय नमो वालिहराय ते ।।
विभीषणभयक्लेशहारिणे मलहारिणे ।। १४ ।।
अहल्यादुःखसंहर्त्रे नमस्ते भरताग्रज ।।
अंभोधिगर्वसंहर्त्रे तस्मिन्सेतु कृते नमः ।। १५ ।।
तारकब्रह्मणे तुभ्यं लक्ष्मणाग्रज ते नमः ।।
रक्षःसंहारिणे तुभ्यं नमो रावणमर्द्दिने ।। १६ ।।
कोदण्डधारिणे तुभ्यं सर्व रक्षाविधायिने ।।
इति स्तुवन्मुनिः सोऽयं सुतीक्ष्णो राममन्वहम् ।। १७ ।।
निनाय कालमनिशं रामचंद्रनिषण्णधीः ।।
एवमभ्यसतस्तस्य राम मन्त्रं षडक्षरम्।। १८ ।।
स्तुवतो रामचंद्रं च स्तोत्रेणानेन सुव्रताः ।।
तीर्थे च रघुनाथस्य कुर्वतः स्नानमन्वहम् ।। १९ ।।
अभवन्निश्चला भक्ती रामचंद्रेतिनिर्मला ।।
अभूदद्वैतविज्ञानं प्रत्यगात्मैकलक्षणम् ।। 3.1.18.२० ।।
अनधीतत्रयीज्ञानं तथैवाश्रुतवेदनम् ।।
परकायप्रवेशे च सामर्थ्यमभवद्द्विजाः ।।२१ ।।
आकाशगमने शक्तिः कलावैदग्ध्यमेव च ।।
अश्रुतानां च शास्त्राणामभिज्ञानं विना गुरुम् ।। २२ ।।
गमनं सर्वलोकेषु प्रति घातविवर्जितम् ।।
अतींद्रियार्थद्रष्टृत्वं देवैः संभाषणं तथा ।। २३ ।।
पिपीलिकादिजंतूनां वार्ताज्ञानमपि द्विजाः ।।
ब्रह्मविष्णुमहादेवलोकेषु गमनं तथा।।२४ ।।
चतुर्दशसु लोकेषु स्वाधीनगमनं तथा ।।
एतान्यन्यानि सर्वाणि योगिलभ्यानि सत्तमाः ।। २५ ।।

सुतीक्ष्णस्याभवन्विप्रा रामा तीर्थनिषेवणात् ।।

एवंप्रभावं तत्तीर्थं महापातकनाशनम् ।। २६ ।।

महासिद्धिकरं पुण्यमपमृत्युविनाशनम् ।।

भुक्तिमुक्तिप्रदं पुंसां नरकक्लेशना शनम् ।। २७ ।।

रामभक्तिप्रदं नित्यं संसारोच्छेदकारणम् ।।

अस्य तीरे महल्लिंगं स्थापयित्वा रघूद्वहः ।।

पूजयामास तल्लिंगं लोकानुग्रहका म्यया ।। २८ ।।

रामतीर्थे महापुण्ये स्नात्वा तल्लिंगदर्शनात् ।।

नराणां मुक्तिरेव स्यात्किमुतान्या विभूतयः ।। २९ ।।

तत्र स्नात्वा शिवं दृष्ट्वा धर्म पुत्रः पुरा द्विजाः ।।

अनृतोक्तिसमुद्भूतदोषान्मुक्तोऽभवत्क्षणात् ।। 3.1.18.३० ।। ।।

ऋषय ऊचुः ।। ।। असत्यमुदितं कस्माद्धर्मपुत्रेण सूतज ।।

यद्दोषशांतये सस्नौ रामतीर्थेऽतिपावने ।। ३१ ।।

।। श्रीसूत उवाच ।। ।।

युष्माकमृषयो वक्ष्ये यथोक्तमनृतं रणे ।।

छलेन धर्मपुत्रेण यन्नष्टं रामतीर्थके ।। ३२ ।।

अन्योन्यं पांडवा विप्रा धर्मपुत्रादयः पुरा ।।

धृतराष्ट्रस्य पुत्राश्च दुर्योधनमुखास्तदा ।। ३३ ।।

महद्वै वैरमासाद्य राज्यार्थं विप्रसत्तमाः ।।

महत्या सेनया सार्द्धं कुरुक्षेत्रे समेत्य च ।। ३४ ।।

अयुध्यन्समरे वीराः समरेष्वनिवर्तिनः ।।

युद्धं कृत्वा दशदिनं गांगेयः पतितो भुवि ।। ३५ ।।

ततः पंचदिनं भूयो धृष्टद्युम्नेन वीर्यवान् ।।

आचार्यो युयुधे द्रोणो महाबलपराक्रमः ।। ३६ ।।

अनेकास्त्राणि शस्त्राणि द्रोणाचर्यो महाबली ।।

विसृजन्पांडवानीकं पीडयामास वीर्यवान् ।। ३७ ।।

अथ दिव्यास्त्रविच्छूरो धृष्टद्युम्नो महाबलः ।।

अभिनद्बाणवर्षेण द्रोणसेनामनेकधा ।। ३८ ।।

धृष्टद्युम्नं तदा द्रोणः शरवर्षैरवाकिरत् ।।
पार्थसेना तथा द्रोणबाणवर्षातिपीडिता ।। ३९ ।।
दशदिक्षु भयाक्रांता विद्रुता द्विजसत्तमाः ।।
ततोऽर्जुनो रणे द्रोणं युयुधे रथिनां वरः ।। 3.1.18.४० ।।
रणप्रवीणयोस्तत्र विजयद्रोणयो रणे ।।
द्रष्टुं समागतैर्देवैरभूद्व्योमनिरं तरम् ।। ४१ ।।
द्रोणफाल्गुनयोर्विप्रा नास्ति युद्धोपमा भुवि ।।
सामर्षयोस्तदाचार्यशिष्ययोरभवद्रणः ।। ४२ ।।
द्रोणफाल्गुनयोर्युद्धं द्रोणफाल्गुन योरिव ।।
बहु मेनेऽथ मनसा द्रोणोऽर्जुनपराक्रमम् ।। ४३ ।।
ततो द्रोणो महावीर्यं प्रियशिष्यं स फाल्गुनम् ।।
विहाय पांचालबलं समयुध्यत वीर्यवान् ।। ४४ ।।
सविंशतिसहस्राणि दश तत्रायुतानि च ।।
द्रोणाचार्योऽवधीद्राज्ञां युद्धे सगजवाजिनाम् ।। ४५ ।।
धृष्टद्युम्नोऽथ कुपितो द्रोण मभ्यहनच्छरैः ।।
द्रोणश्च पट्टिशं गृह्य धृष्टद्युम्नमताडयत् ।। ४६ ।।
शरैर्विव्याध तं युद्धे तीक्ष्णैरग्निशिखोपमैः ।।
परङ्मुखोऽभवत्तत्र धृष्ट द्युम्नः शराहतः ।। ४७ ।।
ततो विरथमागत्य धृष्टद्युम्नं वृकोदरः ।।
स्वं स्यंदनं समारोप्य द्रोणाचार्यमथाब्रवीत् ।। ४८ ।।
स्वकर्मभिरसंतुष्टाः शिक्षितास्त्रा द्विजाधमाः ।।
न युद्ध्येरन्यदि क्रूरा न नश्येरन्नृपा रणे ।। ४९ ।।
अहिंसा हि परो धर्मो ब्राह्मणानां सदा स्मृतः ।।
हिंसया दारपुत्रादीन्रक्षंते व्याधजातयः ।। 3.1.18.५० ।।
हिंसीस्त्वमेकपुत्रार्थे युद्धे स्थित्वा बहून्नृपान् ।।
स चापि ते सुतो ब्रह्मन्हतः शेते रणाजिरे ।। ५१ ।।
तथापि लज्जा ते नास्ति शोकोऽपीह न जायते ।।
वचनं त्विति भीमस्य सत्यं श्रुत्वा युधिष्ठिरात् ।। ५२ ।।

निजायुधं स तत्याज पपात स्यंदनो परि ।।
योगवित्प्रायमातस्थे द्रोणाचार्यस्तदा द्विजाः ।। ५३ ।।
तदंतरं परिज्ञाय द्रोणाचार्यस्य पार्श्वतः ।।
खड्गपाणिः शिरच्छेत्तुमभ्यधावद्रणा जिरे ।। ५४ ।।
वार्यमाणोऽपि पार्थाद्यैस्तच्छिरश्छेत्तुमुद्ययौ ।।
योगवित्त्वाद्द्रोणमूर्ध्नो ज्योतिरूर्ध्वं दिवं ययौ ।। ५५ ।।
दृष्टं कृष्णार्जुनकृपधर्मपुत्रादि भिर्मृधे ।।
द्रोणस्यास्य गतप्राणाच्छरीरादच्छिनच्छिरः ।। ५६ ।।
भारद्वाजे हते युद्धे कौरवाः प्राद्रवन्भयात् ।।
जहृषुः पांडवा विप्रा धृष्टद्युम्नादय स्तदा ।। ५७ ।।
सेनां तां विद्रुतां दृष्ट्वा द्रौणिरूचे सुयोधनम् ।।
एतदद्रवति कि सैन्यं त्यक्तप्रहरणं नृप ।। ५८ ।।
तदा दुर्योधनो राजा स्वयं वक्तु मशक्नुवन् ।।
युद्धे द्रोणवधं वक्तुं कृपाचार्यमचोदयत् ।।
द्रौणयेऽथ कृपाचार्यो वधमूचे गुरोस्तदा ।। ५९ ।।
।। कृप उवाच ।। ।।
अश्वत्थामंस्तव पिता ब्रह्मास्त्रेण मृधे रिपून् ।।
हत्वा निनाय सदनं यमस्य शतशो बली ।। 3.1.18.६० ।।
दुराधर्षतमं दृष्ट्वा तद्वीर्यं केशवस्तदा ।।
पांडवान्प्राह विप्रेंद्र वाक्यं वाक्यविशारदः ।। ६१ ।।
।। केशव उवाच ।। ।।
द्रोणं जेतुमुपायोऽस्ति पांडवा युधि दुर्जयम् ।। ६२ ।।
अश्वत्थात्मा तव सुतो हतो द्रोण मृधेऽधुना ।।
सत्यवादी वदेदेवं यदि प्रामाणिको जनः ।। ६३ ।।
द्रोणो निवर्तेत रणात्तदा त्यक्त्वायुधं क्षणात् ।।
अत एनां मृषावार्तां धर्मराजोऽधुना वदेत्।। ६४ ।।
नान्यथा शक्यते जेतुं द्रोणो युद्धविशारदः ।।
धर्माज्जेतुमशक्यं चेद्धर्मं त्यक्त्वाऽप्यरिं जयेत् ।। ६५ ।।

इति केशववाक्यं तच्छ्रुत्वा भीमः पृथासतः ।।
पितरं ते समभ्येत्य मिथ्यावाक्यमभाषत ।। ६६ ।।
अश्वत्थामा हतो द्रोण युद्धेऽत्र पतितोऽधुना ।।
द्रोणाचार्योपि तद्वाक्यममन्यत यथार्थतः ।। ६७ ।।
अविश्वस्य पुनः सोऽथ धर्मजं प्राप्य चाब्रवीत् ।।
धर्मात्मज मृधे सूनुरश्वत्थामा ममाधुना ।। ६८ ।।
हतः किं त्वं वदस्वाद्य सत्यवादी भवान्मतः ।।
धर्मपुत्रोऽसत्यभीरुरासीच्चारिजयोत्सुकः ।। ६९ ।।
किं कर्तव्यं मयाद्येति दोलालोलमना अभूत् ।।
स दृष्ट्वा भीमनिहतमश्वत्थामाभिधं गजम् ।।3.1.18.७०।।
अश्वत्थामा हतो युद्धे भीमेनाद्य रणे महान् ।।
इत्थं द्रोणं बभाषेऽसौ धर्मपुत्रश्छलोक्तितः ।। ७१ ।।
तच्छ्रुत्वा त्वत्पिता शस्त्रं त्यक्त्वा युद्धान्न्यवर्त्तत ।।
अथ धर्मसुतः प्राह परं वारण इत्यपि ।। ७२ ।।
त्यक्तं शस्त्रं न गृह्णीयां युद्धे पुनरिति स्म सः ।।
प्रतिजज्ञे तव पिता वत्स द्रोणो बली पुनः ।। ७३ ।।
अतः शस्त्रं न जग्राह प्रतिज्ञाभंगकातरः ।।
धृष्टद्युम्नं तदा दृष्ट्वा पिता ते मृत्युमात्मनः ।। ७४ ।।
मत्वा प्रायोपवेशेन रथोपस्थे स योगवित् ।।
अशयिष्ट समाधिस्थः प्राणानायम्य वाग्यतः ।। ७५ ।।
ततो निर्भिद्य मूर्धानं तत्प्राणा निर्ययुः क्षणात् ।।
तदा मृतस्य द्रोणस्य वत्स खड्गेन तच्छिरः ।। ७६ ।।
केशागृहीत्वा हस्तेन धृष्टद्युम्नोऽच्छिनद्युधि ।।
मावधीरिति पार्थाद्याः प्रोचुः सर्वे च सैनिकाः ।।
सर्वैर्निवार्यमाणोपि त्वत्तातं पार्श्वतोऽवधीत् ।। ७७ ।।
।। श्रीसूत उवाच ।। ।।
पितरं निहतं श्रुत्वा रुदन्द्रौणिश्चिरं द्विजाः ।। ।। ७८ ।।
कोपेन महता तत्र ज्वलन्वाक्यमथाब्रवीत ।।

अनृतं प्रोच्य पितरं न्यस्तशस्त्रं चकार यः ।। ७९ ।।

पितरं मेऽद्य तं पार्थमप्यन्या थ पांडवान् ।।

गृहीत्वा केशपाशं यस्त्यक्तशस्त्रशिरोऽहनत् ।। 3.1.18.८० ।।

छद्मना पार्षतं तं च हनिष्याम्यचिरादहम् ।।

कृष्णेन सह पश्यंतु पाण्डवा मत्पराक्रमम् ।। ८१ ।।

इति द्रौणिर्द्विजास्तत्र प्रतिजज्ञे भयंकरम् ।।

ततोस्तं गत आदित्ये राजानः सर्व एव ते ।। ८२ ।।

उभये निहते द्रोणे प्राविशन्पटमण्डपम् ।।

अष्टादशदिनैरेवं निवृत्तमभवद्रणम् ।। ८३ ।।

शल्यं कर्णं तथान्यांश्च दुर्योधनमुखांस्ततः ।।

धार्तराष्ट्रान्निहत्याजौ धर्मराजो युधिष्ठिरः ।। ८४ ।।

स्वीयानां च परेषां च मृतानां सांपरायिकम् ।।

अकरोद्विधिवद्विप्राः सार्धं धौम्या दिभिर्द्विजैः ।। ८५ ।।

वंदित्वा धृतराष्ट्रं च सर्वे संभूय पाण्डवाः ।।

धृतराष्ट्राभ्यनुज्ञाता हतशिष्टजनैर्वृताः ।। ८६ ।।

संप्राप्य हास्तिनपुरं प्राविशंस्ते स्वमंदिरम्।।

ततः कतिपयाहःसु गतेषु किल नागराः ।। ८७ ।।

धौम्यादिमुनिभिः सार्धं धर्मजस्य महात्मनः ।।

राज्या भिषेचनं कर्तुं प्रारभंत मुनीश्वराः ।। ।।

राज्याभिषेचने तस्य प्रवृत्ते धर्मजस्य तु ।।

अशरीरा ततो वाणी बभाषे धर्मनंदनम् ।। ८९ ।।

धर्म पुत्र महाभाग रिपूणामपि वत्सल ।।

राज्याभिषेकं मा कार्षीर्नार्हस्त्वं राज्यपालने ।। 3.1.18.९० ।।

यतस्त्वं छद्मनाचार्यमुक्त्वा सत्यं द्विजोत्तमम् ।।

न्यस्त शस्त्रं रणे राजन्नघातयदलज्जकः ।। ९१ ।।

अतस्ते पापबाहुल्यं विद्यते धर्मनंदन ।।

प्रायश्चित्तमकृत्वास्य राज्यपालनकर्मणि ।। ९२ ।।

नार्हता विद्यते यस्मात्प्रायश्चित्तमतश्चर ।।

इत्युक्त्वा विररामाथ सा तु वागशरीरिणी ।। ९३ ।।

ततो धर्मसुतो राजा तद्वाक्यं भृशकातरः ।।

मूढोऽहं साहसी क्रूरः पिशुनो लोभमोहितः ।। ९४ ।।

तुच्छराज्याभिलाषेण कृतवान्पापमीदृशम्।।

एतत्पापविशुद्ध्यर्थं किं करिष्यामि का गतिः ।। ९५ ।।

किं वा दानं प्रदास्यामि कुत्र यास्यामि वा पुनः ।।

इति शोकसमाविष्टे तस्मिन्राजनि धर्मजे ।। ९६ ।।

कृष्णद्वैपायनो व्यासस्समायातस्तदंतिकम् ।।

ततोऽभिवंद्य तं व्यासं प्रत्युत्थाय कृतांजलिः ।। ९७ ।।

संपूज्यार्घ्यादिना विप्रा भक्तियुक्तेन चेतसा ।।

अदेहवाचा यत्प्रोक्तं तत्सर्वमखिलेन सः ।। ।। ९८ ।।

व्यासाय श्रावयामास दुःखितो धर्मनंदनः ।।

श्रुत्वा तदखिलं वाक्यं धर्मजस्य महामुनिः ।।

ध्यात्वा तु सुचिरं कालं ततो वक्तुं प्रच क्रमे ।।९९।।

।। व्यास उवाच ।। ।।

मा कार्षीस्त्वं भयं राजन्नुपायं प्रब्रवीमि ते।।

अस्य पापस्य शांत्यर्थं श्रुत्वानुष्ठीयतां त्वया ।। 3.1.18.१०० ।। ।।

युधिष्ठिर उवाच ।। ।।

किं तद्ब्रूहि महायोगिन्पाराशर्य कृपानिधे ।।

येन मे पापनाशः स्यादचिरात्तद्वदाधुना ।। १०१ ।।

।। व्यास उवाच ।। ।।

दक्षिणांभोनिधौ सेतौ गंधमादनपर्वते ।। १०२ ।।

रामसेतौ महाराज रामतीर्थमिति श्रुतम् ।।

अस्ति पुण्यं सरः सिद्धं महापातकनाशनम् ।। ३ ।।

यस्य दर्शनमात्रेण महापातककोटयः ।।

प्रयांति विलयं सद्यस्तमः सूर्योदये यथा ।।४।।

रामतीर्थं यदा पश्येत्स्वयं रामेण निर्मितम् ।।

तदैव ब्रह्महत्याया मुच्यते नात्र संशयः ।। ५ ।।

तत्र गत्वा महाराज रामतीर्थे विमुक्तिदे ।।

स्नाहि ते पापशुद्धिः स्याद्राज्यरक्षार्हतापि च ।। ६ ।।

दानं कुरुष्व तत्तीरे गोभूमितिलवाससाम् ।।

सुवर्णरजतानां च दानं कुरु युधिष्ठिर ।।

अवश्यमेतत्पापानां शुद्धिस्ते न चिराद्भवेत् ।। ७ ।।

।। श्रीसूत उवाच ।।

व्यासेन धर्मपुत्रोऽयमेवमुक्तो द्विजोत्तमाः ।। ९ ।।

तत्क्षणेनैव धौम्येन सहितः सानुजस्तदा ।।

सहदेवं प्रतिष्ठाप्य राज्ये धर्मात्मजस्तदा ।। ९ ।।

रामसेतुं समुद्दिश्य प्रतस्थे वाहनं विना ।।

दिनैः कतिपयैरेव रामसेतुं जगाम सः ।। 3.1.18.११० ।।

रामतीर्थं समासाद्य धौम्येन सह पांडवः ।।

पुरोहितोक्तमार्गेण संकल्प्य विधिपूर्वकम्।। ११ ।।

सस्नौ रामसरस्तीर्थे पुण्ये पापविनाशने ।।

स्नात्वाचम्य विशुद्धात्मा क्षेत्रपिंडं प्रदाय च ।। १२ ।।

व्यासो क्ताखिलदानानि प्रददौ स युधिष्ठिरः ।।

मासमेकं निराहारः सस्नौ तत्र स धर्मजः ।। १३ ।।

प्रत्यहं च ददौ दानं वित्तलोभं विना द्विजाः ।।

एक मासे गते त्वेवं कस्मिंश्चिद्दिवसे ततः ।। १४ ।।

आह धर्मात्मजं वाणी पुनरप्यशरीरिणी ।।

राजंस्ते विलयं यातं सर्वं पापं युधिष्ठिर ।। १५ ।।

छले नासत्यवचनादाचार्यस्य वधेन यः ।।

दोषस्ते समभूत्पूर्वं सोऽपि नष्टः परंतप ।। १६ ।।

याहि स्वनगरं राजन्गत्वा पालय मेदिनीम् ।।

अभिषेचय चात्मानं राज्यरक्षार्हतास्ति ते ।। १७ ।।

इत्युक्त्वा विररामाथ सापि वागशरीरिणी ।।

ततो धर्मात्मजः प्रीतस्तामुद्दिश्य दिशं प्रति ।। १८ ।।

नमस्कृत्वाशरीरिण्यै तस्यै वाचे सहानुजः ।।

प्रययौ हास्तिनपुरं सुप्रीतेनांतरात्मना।। १९ ।।
अभिषिक्तोऽथ राज्येऽसौ पालयामास मेदिनीम् ।।
इत्थं धर्मात्मजो विप्रा रामतीर्थनिमज्जनात् ।। 3.1.18.१२० ।।
गतपापो विशुद्धात्मा योग्योऽभूद्राज्यरक्षणे ।।
एवं वः कथितं चित्रं रामतीर्थस्य वैभवम् ।। २१ ।।
सर्वपापहरं पुण्यं भक्तिमुक्तिप्रदायकम् ।।
यत्र स्नानाद्विमुक्तोऽभून्मिथ्यादोषात्स धर्मजः ।। २२ ।।
पठंति येऽ ध्यायमिदं द्विजोत्तमाः शृण्वंति वा ये मनुजा विपातकाः ।।
यास्यंति कैलासमनन्यलभ्यं गत्वा न संयांति पुनश्च जन्म ।। ।। १२३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां मंहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामतीर्थप्रशंसायां धर्मपुत्रमिथ्या कथनदोषशांतिवर्णनंनामाष्टादशोऽध्यायः ।। १८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः १९



।। श्रीसूत उवाच ।। ।।

तारकब्रह्मणस्तस्य तीर्थे स्नात्वा द्विजोत्तमाः ।।

लक्ष्मणस्य ततस्तीर्थमभिगच्छेत्समाहितः ।। १ ।।

श्रीलक्ष्मणस्य तीर्थे तु स्नात्वा पापैर्विमोचिताः ।।

मुक्तिं प्रयांति विमलामपुनर्भवलक्षणाम्।।२।।

स्नानाल्लक्ष्मणतीर्थे तु दारिद्र्यं नश्यतेखिलम् ।।

आयुष्मान्गुणवान्विद्वान्पुत्रश्चैवास्य जायते ।। ३ ।।

कूले लक्ष्मणतीर्थस्य तन्मन्त्रं जपते तु यः ।।

स सर्वशास्त्रवेत्ता स्याच्चतुर्वेदविदप्यसौ ।। ४ ।।

तस्य कूले महल्लिंगं स्थापयामास लक्ष्मणः ।।

तत्र तीर्थे तु यः स्नात्वा सेवते लक्ष्मणेश्वरम् ।। ५।।

इह दारिद्र्यरोगाभ्यां संसाराच्च विमुच्यते ।।

स्नात्वा लक्ष्मणतीर्थे तु सेवित्वा लक्ष्मणेश्वरम् ।।

बलभद्रः पुरा विप्रा मुमुचे ब्रह्महत्यया ।। ६ ।। ।।

।। ऋषय ऊचुः ।। ।।

ब्रह्महत्या कथमभूद्रौहिणेयस्य सूतज ।।

कथं चात्र विनष्टा सा तन्नो ब्रूहि महामुने ।। ७ ।।

।। श्रीसूत उवाच ।। ।।

शेषावतारो भगवान्बलभद्रः पुरा द्विजाः ।। ८ ।।

कुरूणां पांडवानां च युद्धोद्योगं विलोक्य तु ।।

बंधूनां स वधं सोढुमसमर्थो हलायुधः ।। ९ ।।

विचारमेवमकरोद्बलभद्रो महामतिः ।।

यद्यहं कुरुराजस्य करिष्यामि सहायताम् ।। 3.1.19.१० ।।

कोपः स्यात्पांडुपुत्राणां मय्यवार्यः सुदारुणः ।।

उपकारं करिष्यामि पांडवानामहं यदि ।। ११ ।।

दुर्योधनस्य कोपः स्यादिति बुद्ध्वा हलायुधः ।।

तीर्थयात्राच्छलेनासौ मध्यस्थः प्रययौ तदा ।। १२ ।।

प्रभासमभिगम्याथ स्नात्वा संकल्पपूर्वकम्।।

देवानृषीन्पितृगणांस्तर्पयामास वारिणा ।। १३ ।।

सरस्वतीं ततः प्रायात्प्रतीच्यभिमुखां हली ।।

पृथूदकं बिंदुसरो मुक्तिदं ब्रह्मतीर्थकम्।। १४ ।।

गंगां च यमुनां सिंधुं शतद्रूं च सुदर्शनम् ।।

संप्राप्य बलभद्रोऽयं स्नात्वा तीर्थेषु धर्मतः ।। १५ ।।

प्रपेदे नैमिषारण्यं मुनींद्रैरभिसेवितम् ।।

आगतं तं विलोक्याथ नैमिषीयास्तपस्विनः ।। १६ ।।

दीर्घसत्रे स्थिताः सम्यङ्नियता धर्मतत्पराः ।।

अभ्युद्गम्य यदुश्रेष्ठं प्रणम्योत्थाय चासनात् ।। १७ ।।

अपूजयन्विष्टराद्यैः कंदमूलफलैस्तदा ।।

आसनं परिगृह्यायं पूजितः सपुरःसरः ।। १८ ।।

उच्चासने स्थितं सूतमनमंतमनुत्थितम् ।।

अकृतांजलिमासीनं व्यासशिष्यं विलोक्य सः ।। १९ ।।

विप्रांश्चानमतो दृष्ट्वा विलोक्यात्मानमागतम् ।।

चुक्रोध रोहिणीसूनुः सूतं पौराणिकोत्तमम्।। 3.1.19.२० ।।

मध्ये मुनीनां सूतोऽयं कस्मान्निंद्योऽनुलोमजः ।।

उच्चासने समध्यास्ते न युक्तमिदमंजसा ।। ।। २१ ।।

अवमत्य भृशं चास्मान्धर्मसंरक्षकानयम् ।।

आस्तेऽनुत्थाय निर्भीतिर्न च प्रणमते तथा ।। २२ ।।

पठित्वायं पुराणानि द्वैपायनसकाशतः ।।

सेतिहासानि सर्वाणि धर्मशास्त्राण्यनेकशः ।। २३ ।।

न मां दृष्ट्वा प्रणमते नैव त्यजति चासनम् ।।

द्वैपायनस्य महतः शिष्याः पैलादयो द्विजाः ।। २४ ।।

एवंविधमधर्मं ते नैव कुर्युर्यथा त्वयम् ।।

तस्मादेनं वधिष्यामि दुरात्मानमचेतनम् ।। २५ ।।

दुष्टानां निग्रहार्थं हि भूर्लोकमहमागमम् ।।

मया हतो हि दुष्टात्मा शुद्धिमेष्यत्यसंशयम् ।। २६ ।।

इत्युक्त्वा भगवान्रामो मुसली प्रबलो हली ।।

पाणिस्थेन कुशाग्रेण तच्छिरः प्राच्छिनद्रुषा ।। २७ ।।

तत्रत्या मुनयः सर्वे हा कष्टमिति चुक्रुशुः ।।

अवादिषुस्तदा रामं मुनयो ब्रह्मवादिनः ।। २८ ।।

रामाधर्मः कृतः कष्टस्त्वया संकर्षण प्रभो ।।

अस्य सूतस्य चास्माभिर्दत्तं ब्रह्मासनं महत् ।। २९ ।।

अक्षयं चायुरस्माभिरस्य दत्तं हलायुध ।।

भवताऽऽजानतैवाद्य कृतो ब्रह्मवधो महान् ।। 3.1.19.३० ।।

योगेश्वरस्य भवतो नास्ति कश्चिन्नियामकः ।।

अस्यास्तु ब्रह्महत्याया यत्कर्तव्यं विचार्य तत् ।। ३१ ।।

प्रायश्चित्तं भवानेव लोकसंग्रहणाय तु ।।

कुरुष्व भगवन्राम नान्येन प्रेरितः कुरु ।।

इत्युक्तो भगवान्रामस्तानुवाच मुनीन्प्रति ।। ३२ ।।

।। राम उवाच ।। ।।

प्रायश्चित्तं चरिष्याभि पापशोधकमास्तिकाः ।। ३३ ।।

लोकसंग्रहणार्थाय नान्यकामनयाऽधुना ।।

यादृशो नियमोऽस्माभिः कर्तव्यः पापशांतये ।। ३४ ।।

तादृशं नियमं त्वद्य भवतः प्रब्रुवंतु नः ।।

भवद्भिरस्य सूतस्य यदायुर्दत्तमक्षयम् ।।

इंद्रियाणि च सत्त्वं च करिष्ये योगमायया ।।३५ ।।

।। मुनय ऊचुः ।। ।।

पराक्रमस्य तेस्त्रस्य मृत्योर्नश्च यथा प्रभो ।।

स्यात्सत्यवचनं राम तद्भवान्कर्तुमर्हति ।। ३६ ।। ।।

।। राम उवाच ।। ।।

आत्मा वै पुत्ररूपेण भवतीति श्रुतिस्सदा ।।३७ ।।

उद्घोषयति विप्रेंद्रास्तस्मादस्य शरीरतः ।।
पुत्रो भवतु दीर्घायुः सत्त्वेंद्रिय बलोर्जितः ।। ३९ ।।
कथयिष्यति युष्माकं पुराणादीनि सोऽन्वहम् ।।
संभविष्यति सर्वज्ञो योगमायाबलान्मम ।। ३९ ।।
इत्युक्त्वा रौहिणेयस्तान्पुनः प्रश्रितमब्रवीत् ।।
मनोभिलषितं किं वा युष्माकं करवाण्यहम् ।। 3.1.19.४० ।।
तद्ब्रूत मुनयो यूयं करिष्यामि न संशयः ।।
अज्ञानान्मत्कृतस्यास्य पापस्यापि निवर्तकम् ।।
प्रायश्चित्तं भवन्तो मे प्रब्रूत मुनिसत्तमाः ।। ४१ ।।
।। मुनय ऊचुः ।। ।।
इल्वलस्यात्मजः कश्चिद्दानवो बल्वलाभिधः ।। ४२ ।।
स दूषयति नो यागं रामेहागत्य पर्वणि ।।
दुष्टं तं दानवं पापं जहि लोकैककण्टकम् ।।४३ ।।
अनेन पूजा ह्यस्माकं कृता स्याद्भवताधुना ।।
अस्थिविण्मूत्ररक्तानि सुरामांसानि च क्रतौ ।। ४४ ।।
सदाभिवर्षतेऽस्माकमत्रागत्य स दानवः ।।
अस्मिन्भारतभूभागे यानि तीर्थानि संति हि ।। ४५ ।।
तेषु स्नाह्यब्दमेकं त्वं सर्वेषु सुसमाहितः ।।
तेन ते पापशांतिः स्यान्नात्र कार्या विचारणा ।। ४६ ।।
।। श्रीसूत उवाच ।। ।।
पर्वकाले तु विप्रेंद्राः समावृत्ते मुनिक्रतौ ।।
महाभीमो रजोवर्षो झंझावातश्च भीषणः ।। ४७ ।।
प्रादुर्बभूव विप्रेंद्राः पूयरक्तैश्च वर्षणम् ।।
ततो विष्ठामया वृष्टिर्बल्वलेन कृताप्यभूत् ।। ४९ ।।
असुरं यज्ञशालायां शूलपाणिमथ क्षणात् ।।
अपश्यद्बलभद्रोऽसौ महाबलपराक्रमम् ।। ४९ ।।
तमालोक्य महादेहं दग्धाद्रिप्रतिमं तदा ।।
प्रतप्तताम्रसंकाशश्मश्रुदंष्ट्रोत्कटाननम् ।। 3.1.19.५० ।।

चिंतयामास मुसलं रामः परविदारणम्।।
सीरं च दानवहरं गदां दैत्यविदारिणीम् ।। ५१ ।।
यान्यायुधानि तं रामं चिंतितान्युपतस्थिरे ।।
सीराग्रेण तमाकृष्य बल्वलं खेचरं तदा ।। ५२ ।।
मुसलेन निजघ्ने स कुपितो मूर्ध्नि वेगतः ।।
पपात भुवि संक्षुण्णललाटो रक्तमुद्वमन् ।। ५३ ।।
बल्वलो दीनकथनो गिरिर्वज्रहतो यथा ।।
स्तुत्वाथ मुनयो रामं प्रोच्चार्य विमलाशिषः ।। ९४ ।।
अभ्यषिंचञ्च्छुभैस्तोयैर्वृत्रशत्रुं यथा सुराः ।।
मालां ददुर्वैजयन्तीं श्रीमदंबुज शोभिताम् ।। ५५ ।।
माधवाय शुभे वस्त्रे भूषणानि शुभानि च ।।
धारयंस्तानि सर्वाणि रौहिणेयो महाबलः ।।५६।।
पुष्पितानोकहोपेतः कैलास इव पर्वतः ।।
अनुज्ञातोऽथ मुनिभिः सर्वतीर्थेषु स द्विजाः ।। ५७ ।।
एकमब्दं चरन्सस्नौ नियमाचारसंयुतः ।।
ततः संवत्सरे पूर्णे कालिंदीभेदनो बलः ।। ५८ ।।
समाप्ततीर्थयात्रः सन्पुरीं गन्तुं प्रचक्रमे ।।
ततस्तमोमयीं छायां पृष्ठतोनुगतां कृशाम् ।। ५९ ।।
अपश्यद्बलदेवोयं महानादविराविणीम् ।।
अथ वार्ता स शुश्राव समुद्भूतां तदांबरे ।। 3.1.19.६० ।।
रामराम महाबाहो रौहिणेय सितप्रभ ।।
तीर्थाभिगमनेनाद्य चरितेन त्वयाऽनघ ।। ।। ६१ ।।
न नष्टा ब्रह्महत्या ते निःशेषं रोहिणीसुत ।।
इति वार्तां समाकर्ण्य चिंतयामास वै बलः ।। ६२ ।।
प्रायश्चित्तं मया चीर्णमेकाब्दं तीर्थ सेवया ।।
तथापि ब्रह्महत्या सा न नष्टेति श्रुतं वचः ।। ६३ ।।
किं कुर्म इति संचिंत्य नैमिषारण्यमभ्यगात् ।।
तत्र गत्वा मुनीनां तन्न्यवेदयदरिंदमः ।। ६४ ।।

यच्छ्रुतं गगने वाक्यं या च दृष्टा तमोमयी ।।

न्यवेदयत तत्सर्वं मुनीनां रोहिणीसुतः ।।

तच्छ्रुत्वा मुनयः सर्वे रामं वाक्यमथाब्रुवन् ।। ६५ ।।

।। मुनय ऊचुः ।। ।।

यदि राम न नष्टा ते ब्रह्महत्या तु कृत्स्नशः ।। ६६ ।।

तर्हि गच्छ महाभाग गंधमादनपर्वतम् ।।

महादुःख प्रशमनं महारोगविनाशनम् ।। ६७ ।।

रामसेतौ महापुण्ये गन्धमादनपर्वते ।।

अस्ति लक्ष्मणतीर्थाख्यं सरः पापविनाशनम् ।। ६८ ।।

स्नानं कुरुष्व तत्र त्वं तल्लिंगं च नमस्कुरु ।।

निःशेषं तेन नष्टा स्याद्ब्रह्महत्या न संशयः ।। ६९ ।।

।। श्रीसूत उवाच ।। ।।

एवमुक्तस्तदा रामो गन्धमादनपर्वतम् ।।

गत्वा लक्ष्मणतीर्थं च प्राप्तवान्मुनिपुंगवाः ।। 3.1.19.७० ।।

स्नात्वा संकल्पपूर्वं तु तत्र तीर्थे हलायुधः ।।

ब्राह्मणेभ्यो ददौ वित्तं धान्यं गाश्च वसुन्धराम् ।। ७१ ।।

तस्मिन्नवसरे तत्र राममाहाशरीरवाक् ।।

निःशेषं राम नष्टा ते ब्रह्महत्याधुना त्विह ।। ७२ ।।

संदेहो नात्र कर्तव्यः सुखं याहि पुरीं निजाम् ।।

तच्छ्रुत्वा बलभद्रोऽथ तत्तीर्थं प्रशशंस ह ।। ७३ ।।

ततस्तत्रत्यतीर्थेषु स्नात्वा सर्वेषु माधवः ।।

धनुष्कोटौ तथा स्नात्वा रामनाथं निषेव्य च ।।

द्वारकां स्वपुरीं प्रायान्नष्टपातकसंचयः ।। ७४ ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं विप्राः श्रीलक्ष्मणसरोऽमलम् ।। ७५ ।।

पुण्यं पवित्रं पापघ्नं ब्रह्महत्यादिशोधकम् ।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।। ७६ ।।

स याति मुक्तिं विप्रेंद्राः पुनरावृत्तिवर्जिताम् ।। ७७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये लक्ष्मणतीर्थप्रशंसायां बलभद्रब्रह्महत्याविमोक्षणनामैकोनविंशोऽध्यायः ।। १९ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २०

https://sa.wikisource.org/s/fsj
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

लक्ष्मणस्य महातीर्थे ब्रह्महत्याविनाशने ।।

स्नात्वा स्वचित्तशुद्ध्यर्थं जटातीर्थं ततो व्रजेत् ।। १ ।।

जन्ममृत्युजराक्रांतसंसारातुरचेतसाम् ।।

अज्ञाननाशकं नास्ति जटातीर्थादृते द्विजाः ।। २ ।।

लोके मुमुक्षवः केचिच्चित्तशुद्धिमभीप्सवः ।।

वाचा पठंति वेदांतांस्तूष्णीन्नानुभवंति ते ।। ३ ।।

पूर्वपक्षमहाग्राहे सिद्धांतझषसंकुले ।।

वेदांताब्धाविहाज्ञानं मुह्यंति पतिता द्विजाः ।। ४ ।।

प्रथमं चित्तशुद्ध्यर्थं वेदांतान्संपठंति ये ।।

विवदंते पठित्वा ते कलहं च वितन्वते ।। ५ ।।

चित्तशुद्धिर्न वेदांताद्बहुव्यामोहकारणात् ।।

ततो वयं न वेदांतान्मुनींद्रा बहु मन्महे ।। ६ ।।

चित्तशुद्धिं यदीच्छध्वं लघूपायेन तापसाः ।।

उद्घोषयामि सर्वेषां जटातीर्थं निषेवत ।। ७ ।।

पुरा सर्वोपकारार्थं तीर्थमज्ञाननाशनम् ।।

एतद्विनिर्मितं साक्षाच्छम्भुना गन्धमादने ।। ८ ।।

निहते रावणे विप्रा जटां रामस्तु धार्मिकः ।।

क्षालयामास यत्तोये तज्जटातीर्थमुच्यते ।। ९ ।।

वर्षाणां षष्टिसाहस्रं जाह्नवीजलमज्जनम् ।।

गोदावर्यां सकृत्स्नानं सिंहस्थे च बृहस्पतौ ।। 3.1.20.१० ।।

तावत्सहस्रस्नानानि सिंहं देवगुरौ गते ।।

गोमत्यां लभ्यते वर्षैस्तज्जटातीर्थदर्शनात् ।। ११ ।।

जटातीर्थे मनुष्याणां स्नातानां द्विजपुंगवाः ।।

अन्तःकरणशुद्धिः स्यात्ततोऽज्ञानं विनश्यति ।। १२ ।।
अज्ञाननाशे ज्ञानं स्यात्ततो मुक्तिमवाप्स्यसि ।।
अखण्डसच्चिदानंदसंपूर्णः स्यात्ततः परम् ।। १३ ।।
अत्राप्युदाहरंतीममितिहासं पुरातनम् ।।
पितुः पुत्रस्य संवादं व्यासस्य च शुकस्य च ।। १४ ।।
पुरा मुनिवरं कृष्णं भावि तात्मानमच्युतम् ।।
पारंपर्यविशेषज्ञं सर्वशास्त्रार्थकोविदम् ।।
प्रणम्य शिरसा व्यासं शुकः पप्रच्छ वै द्विजाः ।। १५ ।।
।। श्रीशुक उवाच ।। ।।
भगवंस्तात सर्वज्ञ ब्रूहि गुह्यमनुत्तमम् ।। १६ ।।
अन्तःकरणशुद्धिः स्यात्तथाज्ञानविनाशनम् ।।
ज्ञानोदयश्च येन स्यादंते मुक्तिश्च शाश्वती ।। १७ ।।
तमुपायं वदस्वाद्य स्नेहान्मम महामुने ।।
वेदांताश्चेतिहासाश्च पुराणादीनि कृत्स्नशः ।। १८ ।।
अधीतानि मया त्वत्तः शोधयंति न मानसम् ।।
अतो मे चित्तशुद्धिः स्याद्यथा तात तथा वद ।। १९ ।।
इति पृष्टस्तदा व्यासः शुकेन मुनिसत्तमाः ।।
रहस्यं कथयामास येनाविद्या विन श्यति ।। 3.1.20.२० ।।
।। व्यास उवाच ।। ।।
शुक वक्ष्यामि ते गुह्यमविद्याग्रन्थिभेदनम् ।।
बुद्धिशुद्धिप्रदं पुंसां जन्मादिभयनाशनम् ।। २१ ।।
रामसेतौ महापुण्यं गन्धमादनपर्वते ।।
विद्यते पापसंहारि जटातीर्थमिति श्रुतम् ।। २२ ।।
जटां स्वां शोधयामास यत्र रामो हरिः स्वयम् ।।
रामो दाशरथिः श्रीमांस्तीर्थाय च वरं ददौ ।। २३ ।।
स्नाति येऽत्र समागत्य जटातीर्थेऽतिपावने ।।
अन्तःकरणशुद्धिश्च तेषां भूयादिति स्म सः ।। २४ ।।
विना यज्ञं विना ज्ञानं विना जाप्यमुपोषणम् ।।

स्नानमात्राज्जटातीर्थे बुद्धिशुद्धिर्भवेन्नृणाम् ।। २५ ।।

सर्वदानसमं पुण्यं स्नानादत्र भविष्यति ।।

दुर्गाण्यनेन तरति पुण्यलोकान्समश्नुते ।। २६ ।।

महत्त्वमश्नुते स्नानाज्जटातीर्थे शुभोदके ।।

जटातीर्थं विना नान्यदंतःकरण शुद्धये ।। २७ ।।

विद्यते नियमो वापि जपो वा नान्यदेवता ।।

धन्यं यशस्यमायुष्यं सर्वलोकेषु विश्रुतम् ।। २८ ।।

पवित्राणां पवित्रं च जटातीर्थं शुकाधुना ।।

सर्वपापप्रशमनं मंगलानां च मंगलम् ।। २९ ।।

भृगुर्वै वारुणिः पूर्वं वरुणं पितरं शुक ।।

बुद्धिशुद्धिप्रदोपायमपृच्छत्पावनं शुभम् ।।

प्रोवाच वरुणस्तस्मै बुद्धिशुद्धिप्रदं शुभम् ।। 3.1.20.३० ।।

।। वरुण उवाच ।। ।।

रामसेतौ भृगो पुण्ये गन्धमादनपर्वते ।। ३१ ।।

Esoteric aspect of Jata

Temple details at Jataa Teertha

स्नानमात्राज्जटा तीर्थे बुद्धिशुद्धिर्भवेद्ध्रुवम् ।।

स पितुर्वचनात्सद्यो भृगुर्वै वरुणात्मजः ।। ३२ ।।

गत्वा स्नात्वा जटातीर्थे बुद्धिशुद्धिमवाप्तवान् ।।

विनष्टाज्ञानसंतानस्तया शुद्ध्या तदा भृगुः ।। ३३ ।।

उत्पन्नाद्वैतविज्ञानः स्वपितुर्वरुणादयम् ।।

अखण्डसच्चिदानंदपूर्णाकारोऽभवच्छुक ।। ३४ ।।

शंकरांशोऽपि दुर्वासा जटातीर्थेऽभिषेकतः ।।

मनःशुद्धिमवाप्याशु ब्रह्मानंदमयोऽभवत् ।। ३५ ।।

दत्तात्रेयोऽपि विष्ण्वंशस्तीर्थेऽस्मिन्नभिषेचनात् ।।

शुद्धांतःकरणो भूत्वा ब्रह्माकारोऽभवच्छुक ।। ३६ ।।

इच्छेदज्ञाननाशं यः स स्नायात्तु जटाभिधे ।।

तीर्थे शुद्धतमे पुण्ये सर्वपापविनाशने ।। ३७ ।।

जटातीर्थमतस्त्वं च शुक गच्छ महामते ।।

मनःशुद्धिप्रदं तस्मिन्स्नानं च कुरु पुण्यदे ।। ३८ ।।

पित्रैवमुक्तो व्यासेन शुकः पुत्रस्तदा द्विजाः ।।

रामसेतुं महापुण्यं गन्धमादनपर्वतम् ।। ३९ ।।

अगमत्स्नातुकामः सञ्जटातीर्थे विशुद्धिदे ।।

स्नात्वा संकल्पपूर्वं च जटातीर्थे शुको मुनिः ।। 3.1.20.४० ।।

मनःशुद्धिमनुप्राप्य तेन चाज्ञाननाशने ।।

स्वस्वरूपं समापन्नः परमानंदरूपकम् ।। ४१ ।।

ये चाप्यन्ये मनःशुद्धिकामाः संति द्विजोत्तमाः ।।

जटातीर्थे तु ते सर्वे स्नातुं भक्तिपुरःसरम ।। ४२ ।।

अहो जना जटातीर्थे कामधेनुसमे शुभे ।।

विद्यमानेऽपि किं तुच्छे रमंतेन्यत्र मोहिताः ।। ४३ ।।

भुक्तिकामो लभेद्भुक्तिं मुक्तिकामस्तु तां लभेत् ।।

स्नानमात्राज्जटातीर्थे सत्यमुक्तं मया द्विजाः ।। ४४ ।।

वेदानुवच नात्पुण्याद्यज्ञाद्दानात्तपोव्रतात्।।

उपवासाज्जपाद्योगान्मनःशुद्धिर्नृणां भवेत् ।। ४५ ।।

विनाप्येतानि विप्रेंद्रा जटातीर्थेऽतिपावने ।।

स्नानमात्रान्मनःशुद्धिर्ब्राह्मणानां ध्रुवं भवेत् ।। ४६ ।।

जटातीर्थस्य माहात्म्यं मया वक्तुं न शक्यते ।।

शंकरो वेत्ति तत्तीर्थं हरिर्वेत्ति विधिस्तथा ।। ४७ ।।

जटातीर्थसमंतीर्थं न भूतं न भविष्यति।।

जटातीर्थस्य तीरे यः क्षेत्रपिंडं समाचरेत्।।४८।।

गयाश्राद्धसमंपुण्यंतस्य स्यान्नात्र संशयः।।

जटातीर्थे नरः स्नात्वा न पापेन विलिप्यते।।

दारिद्र्यं न समाप्नोति नेयाच्च नरकार्णवम्।।४९।।

श्रीसूत उवाच।।

एवं वः कथितं विप्रा जटातीर्थस्य वैभवम् ।। 3.1.20.५० ।।

यत्र व्याससुतो योगी स्नात्वा पापविमोचने ।।

अवाप्तवान्मनःशुद्धिमद्वैतज्ञानसाधनाम् ।। ५१ ।।

यस्त्विमं पठतेऽध्यायं शृणुते वा समाहितः ।।

स विधूयेह पापानि लभते वैष्णवं पदम् ।। ५२ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीयेब्रह्मखण्डे सेतुमाहात्म्ये जटातीर्थप्रशंसायां शुकचित्तशुद्धिवर्णनंनाम विंशोऽध्यायः ।। २० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २१

https://sa.wikisource.org/s/fsm
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

जटा तीर्थाभिधे तीर्थे सर्वपातकनाशने ।।

स्नानं कृत्वा विशुद्धात्मा लक्ष्मीतीर्थं ततो व्रजेत् ।। १ ।।

यंयं कामं समुद्दिश्य लक्ष्मीतीर्थे द्विजोत्तमाः ।।

स्नानं समाचरेन्मर्त्यस्तंतं कामं समश्नुते ।। २ ।।

महादारिद्र्यशमनं महाधान्यसमृद्धिदम् ।।

महादुःखप्रशमनं महासंपद्विवर्धनम् ।। ३ ।।

अत्र स्नात्वा धर्मपुत्रो महदैश्वर्यमाप्तवान् ।।

इन्द्रप्रस्थे वसन्पूर्वं श्रीकृष्णेन प्रचोदितः ।। ४ ।।

।। ऋषय ऊचुः ।। ।।

यथैश्वर्यं धर्मपुत्रो लक्ष्मीतीर्थे निमज्जनात् ।।

आप्तवान्कृष्णवचनात्तन्नो ब्रूहि महामुने ।। ५ ।।

।। श्रीसूत उवाच ।। ।।

इन्द्रप्रस्थे पुरा विप्रा धृतराष्ट्रेण चोदिताः ।।

न्यवसन्पांडवाः पंच महाबलपराक्रमाः ।। ६ ।।

इन्द्रप्रस्थं ययौ कृष्णः कदाचित्तान्निरीक्षितुम् ।।

तमागतमेभिप्रेक्ष्य पांडवास्ते समुत्सुकाः ।। ७ ।।

स्वगृहं प्रापयामासुर्मुदा परमया युताः ।।

कञ्चित्कालमसौ कृष्णस्तत्रावात्सीत्पुरोत्तमे ।। ८ ।।

कदाचित्कृष्णमाहूय पूजयित्वा युधिष्ठिरः ।।

पप्रच्छ पुंडरीकाक्षं वासुदेवं जगत्पतिम् ।। ९ ।।

।। युधिष्ठिर उवाच ।। ।।

कृष्णकृष्ण महाप्राज्ञ येन धर्मेण मानवाः ।।

लभंते महदैश्वर्यं तन्नो ब्रूहि महामते ।।

इत्युक्तो धर्मपुत्रेण कृष्णः प्राह युधिष्ठिरम् ।। 3.1.21.१० ।।

।। श्रीकृष्ण उवाच ।। ।।

धर्मपुत्र महाभाग गन्धमादनपर्वते ।। ११ ।।

लक्ष्मी तीर्थमिति ख्यातमस्त्यैश्वर्यैककारणम् ।।

तत्र स्नानं कुरुष्व त्वमैश्वर्यं ते भविष्यति ।। १२ ।।

तत्र स्नानेन वर्धंते धनधान्यसमृद्धयः ।।

सर्वे सपत्ना नश्यंति क्षात्रमेषां विवर्द्धते ।। १३ ।।

तीर्थे सस्नुः पुरा देवा लक्ष्मीनामनि पुण्यदे ।।

अलभन्त्सर्वमैश्वर्यं तेन पुण्येन धर्मज ।। १४ ।।

असुरांश्च महावीर्यान्समरे जघ्नुरंजसा ।।

मही लक्ष्मीश्च धर्मश्च तत्तीर्थस्नायिनां नृणाम् ।। १५ ।।

भविष्यत्यचिरादेव संशयं मा कृथा इह ।।

तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पांडव ।। १६ ।।

ऐश्वर्यं प्राप्यते यद्वल्लक्ष्मीतीर्थनिमज्जनात् ।।

सर्वपापानि नश्यंति विप्रा यांति लयं सदा ।। ।। १७ ।।

व्याधयश्च विनश्यंति लक्ष्मीतीर्थनिषेवणात् ।।

श्रेयः सुविपुलं लोके लभ्यते नात्र संशयः ।। १८ ।।

स्नानमात्रेण वै लक्ष्म्यास्तीर्थेऽस्मि न्धर्मनंदन ।।

रंभामप्सरसां श्रेष्ठां लब्धवानवधो नृपः ।। १९ ।।

स्नात्वात्र तीर्थे पुण्ये तु कुबेरो नरवाहनः ।।

स महापद्ममुख्यानां निधीनां नायकोऽ भवत् ।।3.1.21.२।।

तस्मात्त्वमपि राजेंद्र लक्ष्मीतीर्थे शुभप्रदे ।।

स्नात्वा वृकोदरमुखैरनुजैरपि संवृतः ।।२१।।

लप्स्यसे महतीं लक्ष्मीं जेष्यसे च रिपूनपि।।

संदेहो नात्र कर्तव्यः पैतृष्वसेय धर्मज ।।२२।।

इत्युक्तो धर्मपुत्रोऽयं कृष्णेनाद्भुतदर्शनः ।।

सानुजः प्रययौ शीघ्रं गन्धमादनपर्वतम् ।।२३।।

लक्ष्मी तीर्थं ततो गत्वा महदैश्वर्यकारणम् ।।

सस्नौ युधिष्ठिरस्तत्र सानुजो नियमान्वितः।।२४।।

लक्ष्मतीर्थस्य तोये स सर्वपातकनाशने ।।

सानुजो मासमेकं तु सस्नौ नियमपूर्वकम् ।।२५।।

गोभूतिलहिरण्यादीन्ब्राह्मणेभ्यो ददौ बहून् ।।

सानुजो धर्मपुत्रोऽसाविंद्रप्रस्थं ययौ ततः ।। २६ ।।

राजसूयक्रतुं कर्तुं तत एच्छद्युधिष्ठिरः ।।

कृष्णं समाह्वयामास यियक्षुर्धर्मनंदनं ।। २७ ।।

कृष्णो धर्मजदूतेन समाहूतः ससंभ्रमः ।।

चतुर्भिरश्वैः संयुक्तं रथमा रुह्य वेगिनम् ।। २८ ।।

सत्यभामासहचर इंद्रप्रस्थं समाययौ ।।

तमागतं समालोक्य प्रमोदाद्धर्मनंदनः ।। २९ ।।

न्यवेदयत्स कृष्णाय राजसूयोद्यमं तदा ।।

अन्वमन्यत कृष्णोपि तथैव क्रियतामिति ।। 3.1.21.३० ।।

वाक्यं च युक्तिसंयुक्तं धर्मपुत्रमभाषत ।।

पैतृष्वस्रेय धर्मात्मञ्च्छृणु पथ्यं वचो मम ।। ।। ३१ ।।

दुष्करो राजसूयोऽयं सर्वैरपि महीश्वरैः ।।

अनेकशतपादातरथकुंजरवाजिमान् ।। ३२ ।।

महीपतिरिमं यज्ञं कर्तुमर्हति नेतरः ।।

दिशो दश विजेतव्या प्रथमं वलिना त्वया ।। ३३ ।।

पराजितेभ्यः शत्रुभ्यो गृहीत्वा करमुत्तमम् ।।

तेन कांचनजातेन कर्तव्योऽयं क्रतूत्तमः ।। ३४ ।।

रोचये युक्तिविदहं न हि त्वां भीषयामि भोः ।।

अतः क्रतुसमारंभात्पूर्वं दिग्विजयं कुरु ।। ३५ ।।

ततो धर्मात्मजः श्रुत्वा कृष्णस्य वचनं हितम् ।।

प्रशंसन्देवकीपुत्रमाजुहाव निजानुजान् ।। ३६ ।।

आहूय चतुरो भ्रातॄन्धर्मजः प्राह हर्षयन् ।।

अयि भीम महाबाहो बहुवीर्य धनंजय ।। ३७ ।।

यमौ च सुकुमागंगौ शत्रुसंहारदीक्षितौ ।।

चिकीर्षामि महायज्ञं राजसूयमनुत्तमम् ।। ३८ ।।

स च सर्वान्रणे जित्वा कर्तव्यः पृथिवीपतीन् ।।

अतो विजेतुं भूपालांश्चत्वरोऽपि ससैनिकाः ।। ३९ ।।

दिशश्चतस्रो गच्छंतु भवंतो वीर्यवत्तराः ।।

युष्माभिराहतैर्द्रव्यैः करिष्यामि महाक्रतुम् ।। 3.1.21.४० ।।

इत्युक्ताः सादरं सर्वे वृकोदरमुखास्तदा ।।

प्रसन्नवदना भूत्वा धर्मपुत्रानुजाः पुरात् ।। ४१ ।।

राज्ञां जयाय सर्वासु निर्ययुर्दिक्षु पांडवाः ।।

ते सर्वे नृपतीञ्जित्वा चतुर्दिक्षु स्थितान्बहून् ।। ४२ ।।

स्ववशे स्थापयित्वा तान्नृपतीन्पांडुनंदनाः ।।

तैर्दत्तं बहुधा द्रव्यमसंख्यातमनुत्तमम् ।। ४३ ।।

आदाय स्वपुरं तूर्णमाययुः कृष्णसंश्रयाः ।।

भीमः समाययौ तत्र महाबलपराक्रमः ।। ४४ ।।

शतभारसुवर्णानि समादाय पुरोत्तमम् ।।

सहस्रं भारमादाय सुवर्णानां ततोऽर्जुनः ।। ४५ ।।

शक्रप्रस्थं समायातो महाबलपराक्रमः ।।

शतभारं सुवर्णानां प्रगृह्य नकुलस्तथा ।। ४६ ।।

समागतो महातेजाः शक्रप्रस्थं पुरोत्तमम् ।।

दत्तान्विभीषणेनाथ स्वर्णतालांश्चतुर्दश ।। ४७ ।।

दाक्षिणात्यमहीपानां गृहीत्वा धनसंचयम् ।।

सहदेवोपि सहसा समा यातो निजां पुरीम् ।। ४८ ।।

लक्षकोटिसहस्राणि लक्षकोटिशतान्यपि ।।

सुवर्णानि ददौ कृष्णो धर्मपुत्राय यादवः ।। ४९ ।।

स्वानुजैराहृतैरेवमसं ख्यातैर्महाधनैः ।।

कृष्णदत्तैरसंख्यातैर्धनैरपि युधिष्ठिरः ।। 3.1.21.५० ।।

कृष्णाश्रयोऽयजद्विप्रा राजसूयेन पांडवः ।।

तस्मिन्यागे ददौ द्रव्यं ब्राह्मणेभ्यो यथेष्टतः ।। ५१ ।।

अन्नानि प्रददौ तत्र ब्राह्मणेभ्यो युधिष्ठिरः ।।

वस्त्राणि गाश्च भूमिं च भूषणानि ददौ तथा ।। ५२ ।।

अर्थिनः परितुष्यंति यावता कांचनादिना ।।

ततोपि द्विगुणं तेभ्यो दापयामास धर्मजः ।। ५३ ।।

इयंति दत्तान्यर्थिभ्यो धनानि विविधान्यपि ।।

इतीयत्तां परिच्छेत्तुं न शक्ता ब्रह्मकोटयः ।। ५४ ।।

अर्थिभिर्दीयमानानि दृष्ट्वा तत्र धनानि वै ।।

सर्वस्वमप्यहो राज्ञा दत्तमित्यब्रवीज्जनः ।। ५५ ।।

दृष्ट्वा कोशास्तथा नंताननंतमणिकांचनान् ।। ५ ।।

स्वल्पं हि दत्तमर्थिभ्य इत्यवोचञ्जनास्तदा ।।

इष्ट्वैवं राजसूयेन धर्मपुत्रः सहानुजः ।। ५७ ।।

बहुवित्तसमृद्धः सन्रेमे तत्र पुरोत्तमे ।।

लक्ष्मीतीर्थस्य माहात्म्याद्धर्मपुत्रो युधिष्ठिरः ।। ५८ ।।

लेभे सर्वमिदं विप्रा अहो तीर्थस्य वैभवम् ।।

इदं तीर्थं महापुण्यं महा दारिद्र्यनाशनम् ।। ५९ ।।

धनधान्यप्रदं पुंसां महापातकनाशनम् ।।

महानरकसंहर्तृ महादुःखनिवर्तकम् ।। 3.1.21.६० ।।

मोक्षदं स्वर्गदं नित्यं महाऋ्रण विमोचनम् ।।

सुकलत्रप्रदं पुंसां सुपुत्रप्रदमेव च ।। ६१ ।।

एतत्तीर्थसमं तीर्थं न भूतं न भविष्यति ।।

एतद्वः कथितं विप्रा लक्ष्मीतीर्थस्य वैभवम् ।। ६२।।

दुःस्वप्ननाशनं पुण्यं सर्वाभीष्टप्रसाधकम् ।।

यः पठेदिममध्यायं शृणुते वा सभक्तिकम् ।। ६३ ।।

धनधान्यसमृद्धः स्यात्स नरो नास्ति संशयः ।।

भुक्त्वेह सकलान्भोगान्देहांते मुक्तिमाप्नुयात् ।। ६४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्या संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये लक्ष्मीतीर्थप्रशंसायां धर्मपुत्रनिरतिशयसंपदवाप्तिवर्णनंनामैकविंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २२



।। श्रीसूत उवाच ।। ।।

लक्ष्मीतीर्थे शुभे पुंसां सर्वैश्वर्यैककारणे ।।

स्नात्वा नरस्ततो गच्छेदग्नितीर्थं द्विजोत्तमाः ।। १ ।।

अग्नितीर्थं महापुण्यं महापातकनाशनम् ।।

तीर्थानामुत्तमं तीर्थं सर्वाभीष्टैकसाधनम् ।।

तत्र स्नायान्नरो भक्त्या स्वपापपरिशुद्धये ।। २ ।।

।। ऋषय ऊचुः ।। ।।

अग्निर्तीर्थमितिख्यातिः कथं तस्य मुनीश्वर ।। ।। ३ ।।

कुत्रैदमग्नितीर्थं च कीदृशं तस्य वैभवम् ।।

एतन्नः श्रद्दधानानां विस्तराद्वक्तुमर्हसि ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

सम्यक्पृष्टं हि युष्माभिः शृणुध्वं मुनिपुंगवाः ।।

पुरा हि राघवो हत्वा रावणं सपरिच्छदम् ।। ५ ।।

स्थापयित्वा तु लंकायां भर्तारं च विभीषणम् ।।

सीतासौमित्रिसंयुक्तो रामो दशरथात्मजः ।। ६ ।।

सिद्धचारणगंधर्वैर्देवैरप्सरसां गणैः ।।

स्तूयमानो मुनिगणैः सत्याशीस्तीर्थकौतुकी ।। ७ ।।

धारयँल्लीलया चापं रामोऽसह्यपराक्रमः ।।

आत्मनः शुद्धिमाधातुं जानकीं शोधितु तथा ।। ८ ।।

इंद्रादिदेववृन्दैश्च मुनिभिः पितृभिस्तथा ।।

विभीषणेन सहितः सर्वेरपि च वानरैः।।९।।

आययौ सेतुमार्गेण गंधमादनपर्वतम्।।

लक्ष्मीतीर्थतटे स्थित्वा जानकीशोधनाय सः।।3.1.22.१०।।

अग्निमावाहयामास देवर्षिपितृसन्निधौ।।

अथोत्तस्थौ महांभोधेर्लक्ष्मीतीर्थाद्विदूरतः।।११।।

पश्यत्सु सर्वलोकेषु लिहन्नंभांसि पावकः।।

आताम्रलोचनः पीतवासा धनुर्धरः ।। १२ ।।

सप्तभिश्चैव जिह्वाभिर्लेलिहानो दिशो दश ।।

दृष्ट्वा रघुपतिं शूरं लीलामानुषरूपिणम् ।। १३ ।।

जगाद वचनं रम्यं जानकीशुद्धिकारणात् ।।

रामराम महाबाहो राक्षसानां भयावह ।। १४ ।।

पातिव्रत्येन जानक्या रावणं हतवान्भवान् ।।

सत्यंसत्यं पुनः सत्यं नात्र कार्या विचारणा ।। १५ ।।

कमलेयं जगन्माता लीलामानुषविग्रहा ।।

देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।। १६ ।।

विष्णोर्देहानुरूपां वै करोत्ये षात्मनस्तनुम् ।।

यदायदा जगत्स्वामिन्देवदेव जनार्द्दन ।। १७ ।।

अवतारान्करोषि त्वं तदेयं त्वत्सहायिनी ।।

यदा त्वं भार्गवो रामस्तदाभूद्धरणी त्वियम् ।। १८ ।।

अधुना जानकी जाता भवित्री रुक्मिणी ततः ।।

अन्येषु चावतारेषु विष्णोरेषा सहायिनी ।। १९ ।।

तस्मामद्वचनादेनां प्रति गृह्णीष्व राघव ।।

पावकस्य तु तद्वाक्यं श्रुत्वा देवा महर्षयः ।। 3.1.22.२० ।।

विद्याधराश्च गंधर्वा मानवाः पन्नगास्तथा ।।

अन्ये च भूतनिवहा रामं दश रथात्मजम् ।। २१ ।।

जानकीं मैथिलीं चैव प्रशशंसुः पुनःपुनः ।।

रामोऽग्निवचनात्सीतां प्रतिजग्राह निर्मलाम् ।। २२ ।।

एवं सीताविशुद्ध्यर्थं रामेणाक्लिष्टकर्मणा ।।

आवाहने कृते वह्निर्लक्ष्मीतीर्थाद्विदूरतः ।। २३ ।।

यतः प्रदेशादुत्तस्थावंबुधेर्द्विजसत्तमाः ।।

अग्नितीर्थं विजानीत तं प्रदेशमनुत्तमम् ।। २४ ।।

ततो विनिर्गमादग्नेरग्नितीर्थमितीर्यते ।।

अत्र स्नात्वा नरो भक्त्या वह्नेस्तीर्थे विमुक्तिदे ।। २५ ।।

उपोष्य वेदविदुषो ब्राह्मणा नपि भोजयेत् ।।

तेभ्यो वस्त्रं धनं भूमिं दद्यात्कन्यां च भूषिताम् ।। २६ ।।

सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ।।

अग्नितीर्थस्य कूलेस्मि न्नन्नदानं विशिष्यते ।। २७ ।।

अग्नितीर्थसमं तीर्थं न भूतं न भविष्यति ।।

दुष्पण्योपि महापापो यत्र स्नानात्पिशाचताम् ।। २८ ।।

परित्यज्य महा घोरां दिव्यं रूपमवाप्तवान् ।।

पशुमान्नाम वैश्योऽभूत्पुरा पाटलिपुत्रके ।। २९ ।।

स वै धर्मपरो नित्यं ब्राह्मणाराधने रतः ।।

कृषिं निरंतरं कुर्वन्गो रक्षां चैव सर्वदा ।। 3.1.22.३० ।।

पण्यवीथ्यां च विक्रीणन्कांचनादीनि धर्मतः ।।

पशुमन्नामधेयस्य वणिक्छ्रेष्ठस्य तस्य वै ।। ३१ ।।

बभूव भार्यात्रितयं पतिशुश्रूषणे रतम् ।।

ज्येष्ठा त्रीन्सुषुवे पुत्रान्वैश्यवंशविवर्द्धनान् ।। ३२ ।।

सुपण्यं पण्यवतं च चारुपण्यं तथैव च ।।

मध्यमा सुषुते पुत्रौ सुकोश बहुकोशकौ ।। ३३ ।।

तृतीयायां त्रयः पुत्रास्तस्य वैश्यस्य जज्ञिरे ।।

महापण्यो महाकोशो दुष्पण्य इति विश्रुताः ।। ३४ ।।

एवं पशुमतस्तस्य वैश्यस्य द्विजसत्तमाः ।।

बभूवुरष्टौ तनयास्तासु स्त्रीषु तिसृष्वपि।। ३५ ।।

ते सुपण्यमुखाः सर्वे पुत्रा ववृधिरे क्रमात ।।

धूलिकेलिं वितन्वन्तः पित रौ तोषयंति ते ।। ३६ ।।

पंचहायनतां प्राप्ताः क्रमात्ते वैश्यनंदनाः ।।

पशुमानपि वैश्येंद्रः सर्वानपि च तान्सुतान् ।। ३७ ।।

बाल्यमारभ्य सततं स्वकृत्येषु व्यशिक्षयत्।।

कृषिगोत्राणवाणिज्यकर्मसु क्रमशिक्षिताः ।।३८ ।।

सुपण्यमुख्याः सप्तैव पितृवाक्यमशृण्वत ।।
पशुमान्वक्ति यत्कार्यं तत्क्ष णान्निरवर्तयन्।।३९।।
नैपुण्यं प्रापुरत्यंतं ते सुवर्णक्रियास्वपि।।
दुष्पण्यस्त्वष्टमः पुत्रो बाल्यमारभ्य संततम्।।3.1.22.४०।।
दुर्मार्गनिरतो भूत्वा नाशृणोत्पितृभा षितम्।।
धूलिकेलिं समारभ्य दुर्मार्गनिरतोऽभवत्।।४१।।
स बाल एव सन्पुत्रो बालानन्यानबाधत।।
दुष्कर्मनिरतं दृष्ट्वा तं पिता पशुमांस्तथा।।४२।।
उपेक्षा मेवकृतवान्बालिशोऽयमितीरयन्।।
अथाष्टावपि वैश्यस्य प्रापुर्यौवनमात्मजाः।।४३।।
ततोऽयमष्टमः पुत्रो दुष्णयो बलिनां वरः ।।
गृहीत्वा पाणियु गलेबालान्नगरवर्तिनः ।। ४४ ।।
निचिक्षेप स कूपेषु सरित्सु च सरःस्वपि ।।
न कोऽपि तस्य जानाति दुश्चरित्रमिदं जनः ।। ४५ ।।
यावन्म्रियंते ते बालास्तावन्निक्षिप्तवाञ्जले ।।
तेषां मृतानां बालानां पितरो मातरस्तथा ।।४६।।
गवेषयंति तान्सर्वान्नगरेषु हि सर्वशः ।।
तान् दृष्ट्वा च मृतान्पुत्रान्के वलं प्रारुदञ्जनाः ।। ४७ ।।
जलेष्वथ शवान्दृष्ट्वा जनाश्चक्रुर्यथोचितम् ।।
एवं प्रतिदिनं बालान्दुष्पण्यो मारयन्पुरे ।। ४८ ।।
जनैरप्यपरिज्ञातश्चिरमेवमवर्तत ।।
म्रियमाणेषु बालेषु वैश्यपुत्रस्य कर्मणा ।। ४९ ।।
प्रजानां वृद्धिराहित्याच्छून्यप्रायमभूत्पुरम् ।।
ततः समेत्य पौरास्तद्वृत्तं राज्ञे न्यवेद यन्।। 3.1.22.५० ।।
श्रुत्वा नृपस्तद्वचनमाहूय ग्रामपालकान् ।।
कारणं बालमरणे चिंत्यतामिति सोऽन्वशात् ।। ५१ ।।
ग्रामपालास्तथेत्युक्त्वा तत्र तत्र व्यवस्थिताः ।।
सम्यग्गवेषयामासुः कारणं बालमारणे ।। ५२ ।।

ते वै गवेषंयतोऽपि नाविंदन्बालमारकम् ।।
ते पुनर्नृपमासाद्य भीता वाक्यमथाब्रु वन् ।। ५३ ।।
गवेषयंतोऽपि वयं तन्न विंदामहे नृप ।।
यो बालान्नगरे स्थित्वा सततं मारयत्यपि ।। ५४ ।।
पुनश्च नागराः सर्वे राजानं प्राप्य दुःखिताः ।।
पुनः प्रजानां मरणमब्रुवन्वाष्पसंकुलाः ।। ५५ ।।
राजा तत्कारणाज्ञानात्तूष्णीमास्ते विचिंत्य तु ।।
कदाचिद्वैश्यपुत्रोयं पंचभिर्बा लकैः सह ।।५६ ।।
तटाकांतिकमापेदे पंकजाहरणच्छलात् ।।
बलाद्गृहीत्वा तान्बालान्दुष्पण्यः क्रोशतस्तदा ।। ५७ ।।
क्रूरात्मा मज्जयामास कंठ दघ्ने सरोजले ।।
मृतान्मत्वा च ताञ्छीघ्रं दुष्पण्यः स्वगृहं ययौ ।। ५८ ।।
पञ्चानां पितरस्तेषां मार्गयंतः सुतान्पुरे ।।
तेषु वै मार्गमाणेषु पंच तेना तिबालकाः ।। ५९ ।।
निक्षिप्ता अपि तोयेषु नाम्रियंत यदृच्छया ।।
ते शनैः कूलमासाद्य पंचापि क्लिन्नमौलयः ।। 3.1.22.६० ।।
अशक्ता नगरं गंतुं बाल्यात्तत्रैव बभ्रमुः ।।
दूरादुच्चार्यमाणानि स्वनामानि स्वबंधुभिः ।। ६१ ।।
श्रुत्वा पंचापि ते बालाः प्रतिशब्दमकुर्वत ।।
ततस्तत्पितरः श्रुत्वा तत्रागत्यसरस्तटे ।। ६२ ।।
पुत्रान्दृष्ट्वा तु सप्राणान्प्रहर्षमतुलं गताः ।।
किमेतदिति पित्राद्यैः पृष्टास्ते बालकास्तदा ।। ६३ ।।
दुष्पण्यस्याथ दुष्कृत्यं बन्धुभ्यस्ते न्यवेदयन्।।
ततो विदितवृत्तांता राजानं प्राप्य नागराः ।। ६४ ।।
पंचभिः कथितं वृत्तं दुष्पण्यस्य न्यवेदयन् ।।
ततो राजा समाहूय पशुमंतं वणिग्वरम् ।।
पौरेष्वपि च शृण्वत्सु वाक्यमेतदभाषत ।। ६५ ।।
।। राजोवाच ।। ।।

दुष्पण्यनामा पशुमन्बहुप्रजमिदं पुरम् ।। ६६ ।।
शून्यप्रायं कृतं पश्य त्वत्पुत्रेण दुरात्मना ।।
इदानीं बालिशानेतान्मज्जयामास वै जले ।। ६७ ।।
यदृच्छया च सप्राणाः पुनरप्या गताः पुरम् ।।
अस्मिन्नित्थं गते कार्ये किं कर्तव्यं वदाधुना ।। ६८ ।।
अद्य त्वामेव पृच्छामि यतस्त्वं धर्मतत्परः ।।
इत्युक्तः पशुमान्राज्ञा धर्मज्ञो युक्तमब्रवीत् ।। ६९ ।।
।। पशुमानुवाच ।। ।।
पुरं निःशेषितं येन वधमेवायमर्हति ।।
न ह्यत्र विषये किंचित्प्रष्टव्यं विद्यते नृप ।। 3.1.22.७० ।।
न ह्ययं मम पुत्रः स्याच्छत्रुरेवातिपापकृत् ।।
न ह्यस्य निष्कृतिं पश्ये येन निःशेषितं पुरम् ।। ७१ ।।
वध्यतामेव दुष्टात्मा सत्यमेव ब्रवीम्यहम् ।।
श्रुत्वा पशुमतो वाक्यं नागराः सर्व एव हि ।। ७२ ।।
वणिग्वरं श्लाघमाना राजानमिदमूचिरे ।।
न वध्यतामयं दुष्टस्तूष्णीं निर्वास्यतां पुरात् ।। ७३ ।।
ततः स राजा दुष्पण्यं समाहूयेदमब्रवीत् ।।
अस्माद्देशाद्भवाञ्छीघ्रं दुष्टात्मन्गच्छ सांप्रतम् ।। ७४ ।।
यदि तिष्ठेस्त्वमत्रैव दण्डयेयं वधेन वै ।।
इति राज्ञा विनिर्भर्त्स्य दूतैर्निर्वासितः पुरात् ।। ७५ ।।
दुष्पण्यस्त्वथ तं देशं परित्यज्य भयान्वितः ।।
मुनिमंडलसंबाधं वनमेव ययौ तदा ।। ७६ ।।
तत्राप्येकं मुनिसुतं स तोयेषु न्यमज्जयत् ।।
केल्यर्थमागता दृष्ट्वा मुनिपुत्रा मृतं शिशुम् ।। ७७ ।।
तत्पित्रे कथयामासुरभ्येत्य भृशदुःखिताः ।।
तत उग्रश्रवाः श्रुत्वा तेभ्यः पुत्रं जले मृतम् ।। ७८ ।।
तपोमहिम्ना दुष्प ण्यचरितं तदमन्यत ।।
उग्रश्रवाः शशापैनं दुष्पण्यं वैश्यनंदनम् ।। ७९ ।।

।। उग्रश्रवा उवाच ।। ।।

मत्सुतं पयसि क्षिप्य यत्त्वं मारि तवानसि ।।

तवापि मरणं भूयाज्जल एव निमज्जनात् ।। 3.1.22.८० ।।

मृतश्च सुचिरं कालं पिशाचस्त्वं भविष्यसि ।।

इति शापे श्रुते सद्यो दुष्पण्यः खिन्नमानसः ।। ८१ ।।

तद्वै वनं परित्यज्य घोरमन्यद्वनं ययौ ।।

सिंहादिक्रूरसत्वाढ्यं तस्मिन्प्राप्ते वनांतरम् ।। ८२ ।।

पांसुवर्षं महद्वर्षन्वृक्षानामोटय न्मुहुः ।।

वज्रघातसमस्पर्शो ववौ झंझानिलो महान् ।। ८३ ।।

वेगेन गात्रं भिंदन्ती वृष्टिश्चासीत्सुदुःसहा ।।

तद्दृष्ट्वा स तु दुष्पण्यश्चिंतयन्भृशदुः खितः ।। ८४ ।।

मृतं शुष्कं महाकायं गजमेकमपश्यत ।।

महावातं महावर्षं तदा सोढुमशक्नुवन् ।। ८५ ।।

गजास्यविवरेणैव विवेशोदरगह्वरम् ।।

तस्मिन्प्रविष्टमात्रे तु वृष्टिरासीत्सुभूयसी ।। ८६ ।।

ततो वर्षजलैः सर्वैः प्रवाहः सुमहानभूत् ।।

स प्रवाहो वने तस्मिन्नदी काचिदजायत ।। ८७ ।।

अथ तैर्वर्षसलिलैः स गजः पूरितोदरः ।।

प्लवमानो महापूरे नीरंध्रः समजायत ।। ८८ ।।

ततो निर्विवरस्यास्य जलपूर्णोदरस्य च ।।

गजस्य जठरात्सोऽयं निर्गंतु न शशाक ह ।। ८९ ।।

ततश्च वृष्टितोयानां प्रवाहो भीमवेगवान् ।।

उदरस्थितदुष्पण्यं समुद्रं प्रापयद्गजम् ।। 3.1.22.९० ।।

दुष्पण्यः सलिले मग्नः क्षणात्प्राणैर्व्ययुज्यत ।।

मृत एव स दुष्पण्यः पिशाचत्वमवाप्तवान् ।। ९१ ।।

पीडितः क्षुत्पिपासाभ्यां दुर्गमं वनमाश्रितः ।।

घोरेषु घर्मकालेषु समाक्रोशन्भयानकम् ।। ९२ ।।

अतिष्ठद्गहनेऽरण्ये दुःखान्यनुभवन्बहु ।।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।। ९३ ।।

स पिशाचो महादुःखी न्यवसद्घोरकानने ।।

वनाद्वनांतरं धावन्देशाद्देशाद्देशांतरं तथा ।। ९४ ।।

सर्वत्रानुभवन्दुःखमाययौ दण्डकान्क्रमात् ।।

अगस्त्यादाश्रमात्पुण्यान्नातिदूरे स संचरन् ।। ९५ ।।

नदन्भैरवनादं च वाक्यमुच्चैरभाषत ।।

भोभोस्तपोधनाः सर्वे शृणुध्वं मामकं वचः ।। ९६ ।।

भवन्तो हि कृपावन्तः सर्वभूतहिते रताः ।।

कृपादृष्ट्यानुगृह्णीत मां दुःखैरतिपीडितम् ।। ९७ ।।

पुरा दुष्पण्यनामाहं वैश्यः पाटलिपुत्रके ।।

पुत्रः पशु मतश्चापि बहून्बालानमारयम् ।। ९८ ।।

ततो विवासितो राज्ञा तस्माद्देशाद्वनं गतः ।।

अमारयं जले पुत्रं तत्रोग्रश्रवसो मुनेः ।। ९९ ।।

स मुनिर्दत्त वाञ्छापं ममापि मरणं जले ।।

पिशाचतां च मे घोरां दत्तवान्दुःखभूयसीम् ।। 3.1.22.१०० ।।

कल्पकोटिसहस्राणि कल्पकोटिशतान्यपि ।।

पिशाच तानुभूतेयं शून्यकाननभूमिषु ।। १०१ ।।

नाहं सोढुं समर्थोऽस्मि पिपासां क्षुधमेव च ।।

रक्षध्वं कृपया यूयमतो मां बहुदुःखिनम् ।। १०२ ।।

यथा मुच्येय पैशाच्यात्तथा कुरुत तापसाः ।।

इति श्रुत्वा पिशाचस्य वचनं ते तपोधनाः ।।

लोपामुद्रासहचरमूचिरे कुम्भसंभवम् ।। ।। ।।

।। तापसा ऊचुः ।। ।।

पिशाचस्यास्य भगवन्ब्रूहि निष्कृतिमुत्तमाम् ।। ४ ।।

एवंविधानां पापानां त्वं समर्थो हि रक्षणे ।।

तेषामगस्त्यः श्रुतवान्कृपया परया युतः ।।

प्रियशिष्यं समाहूय सुतीक्ष्णं वाक्यमब्रवीत् ।। ५ ।।

।। अगस्त्य उवाच ।। ।।

सुतीक्ष्ण गच्छ त्वरितं पर्वतं गंधमादनम् ।। ६ ।।

तत्राग्नितीर्थं सुमहद्विद्यते पापनाशनम् ।।

पिशाचमोक्षणार्थाय तत्र स्नाहि महामते ।। ७ ।।

पिशाचार्थं त्वयि स्नाते तत्र संकल्पपूर्वकम् ।।

पिशाचभावमुन्मुच्य दिव्यतामेष यास्यति ।। ८ ।।

निष्कृतिं नास्य पश्यामि विना तत्तीर्थसेवनात ।।

अतः सुतीक्ष्णकृपया रक्षस्वैनं पिशाचकम् ।। ९ ।।

अगस्त्येनैवमुक्तस्तु सुतीक्ष्णो गन्धमादनम् ।।

प्राप्याग्नितीर्थे संकल्प्य पिशाचार्थं कृपानिधिः ।। 3.1.22.११० ।।

सस्नौ तत्र पिशाचार्थं नियमेन दिनत्रयम् ।।

रामनाथादिकं सेव्य तत्तीर्थं प्रतिगृह्य च ।। ११ ।।

स्वाश्रमं प्रति गत्वाथ सुतीक्ष्णो विप्रसत्तमः ।।

तत्तीर्थ प्रोक्षणात्सद्यः सवियुज्य पिशाचताम् ।। १२ ।।

वैभवात्तस्य तीर्थस्य सद्यो दिव्यत्वमाप्तवान् ।।

विमानवरमारूढो दिव्यस्त्रीपरिवारितः ।। १३ ।।

सुतीक्ष्णं चाप्यगस्त्यं च तथान्यांश्च तपोधनान् ।।

पुनःपुनर्नमस्कृत्य तांश्चामंत्र्य प्रहर्षितः ।। १४ ।।

स्वर्गमेवारुहत्तूर्णं देवैरपि स पूजितः ।।

अग्नितीर्थस्य माहात्म्याद्दुष्पण्यो वैश्यनंदनः ।। १५ ।।

पैशाच्यं शापजं त्यक्त्वा दिव्यतामित्थमाप्तवान् ।।

एवं वः कथितं विप्रा अग्नितीर्थस्य वैभवम् ।। १६ ।।

यः पठेदिममध्यायं शृणुयाद्वा सभक्तिकम् ।।

पिशाचमोक्षणाख्यानं मुच्यते सर्वपातकैः ।। १७ ।।

इह भुक्त्वा महाभोगान्परत्रापि सुखं लभेत् ।। ११९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्येऽग्नितीर्थप्रशंसायां दुष्पण्यपैशाच्यमोक्षणंनाम द्वाविंशोऽध्यायः ।। २२ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २३

https://sa.wikisource.org/s/fso
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

अग्नितीर्थाभिधे तीर्थे सर्वपातकनाशने ।।

स्नानं कृत्वा विशुद्धात्मा चक्रतीर्थं ततो व्रजेत् ।। १ ।।

यंयं कामं समुद्दिश्य चक्रतीर्थे द्विजोत्तमाः ।।

स्नानं समाचरेन्मर्त्यस्तंतं कामं समश्नुते ।। २ ।।

पुराहिर्बुध्न्यनामा तु महर्षिः संशित व्रतः ।।

सुदर्शनमुपास्तास्मिंस्तपस्वी गंधमादने ।। ३ ।।

तपस्यंतं मुनिं तत्र राक्षसा घोररूपिणः ।।

अबाधंत सदा विप्रास्तपोविघ्नैकतत्पराः ।। ।। ४ ।।

सुदर्शनं तदागत्य भक्तरक्षणवांछया ।।

यातुधानान्बाधमानान्न्यवधीर्लीलया पुरा ।। ५ ।।

तदाप्रभृति तच्चक्रं भक्तप्रार्थनया द्विजाः ।।

अहिर्बुध्न्यकृते तीर्थे सन्निधानं सदाऽकरोत् ।। ६ ।।

तदाप्रभृति तत्तीर्थं चक्रतीर्थमितीर्यते ।।

सुदर्शनप्रसादेन तत्र तीर्थे निमज्जनात् ।। ७ ।।

रक्षःपिशाचा दिकृता पीडा नास्त्येव कर्हिचित् ।।

स्नात्वास्मिन्पावने तीर्थे छिन्नपाणिः पुरा रविः ।।

स हिरण्यमयौ पाणी लब्धवांस्तीर्थवैभवात् ।। ८ ।। ।।

।। ऋषय ऊचुः ।। ।।

छिन्नपाणिः कथमभूदादित्यः सूतनंदन ।।

यथा च लब्धवान्पाणी सौवर्णौ तद्वदस्व नः ।। ९ ।।

।। श्रीसूत उवाच ।।

इंद्रादयः सुराः पूर्वं संततं दैत्यपीडिताः ।। 3.1.23.१० ।।

किं कुर्म इति संचित्य संभूय सममंत्रयन् ।।

बृहस्पतिं पुरस्कृत्य मंत्रयित्वा चिरं सुराः ।। ११ ।।
तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ।।
ते ब्रह्माणं समासाद्य दृष्ट्वा स्तुत्वा च भक्तितः ।। १२ ।।
ततो व्यजिज्ञपस्तस्मै स्वेषामागमकारणम् ।। ।।
।। सुरा ऊचुः ।। ।।
भगवन्भारतीनाथ दैत्या ह्यस्मान्बलोत्कटाः ।। १३ ।।
बाधंते सततं देव तत्र ब्रूहि प्रतिक्रियाम् ।।
इत्युक्तः स सुरैर्ब्रह्मा तानाह कृपया वचः ।। १४ ।।
।। ब्रह्मोवाच ।। ।।
मा भैष्ट यूयं विबुधास्तत्रोपायं ब्रवीम्यहम् ।।
माहेश्वरं महायज्ञमसुराणां विनाशनम् ।। ।। १५ ।।
प्रारभध्वं सुरा यूयं मुनिभिस्तत्त्वदर्शिभिः ।।
अयं च दैवतैः सर्वैर्विधिलोभं विना कृतः ।। १६ ।।
माहेश्वरो महायज्ञः क्रियतां गंधमादने ।।
यदि ह्यन्यत्र तं यज्ञं कुर्युस्तद्विबुधर्षभाः ।। १७ ।।
यज्ञविघ्नं तदा कुर्युर्दुरात्मानः सुरद्विषः ।।
क्रियते यद्ययं यज्ञो गंधमादनपर्वते ।। १८ ।।
सुदर्शनप्रसादेन नैव विघ्नो भवेत्तदा ।।
अहिर्बुध्न्याभिधानस्य महर्षेर्गंधमादने ।। १९ ।।
अनुग्रहाय तत्तीर्थे सन्निधत्ते सुदर्शनम् ।।
अतः कुरुध्वं भो यूयं तं यज्ञं गंधमादने ।। 3.1.23.२० ।।
नातिदूरे चक्रतीर्थादसुराणां विनाशकम् ।।
ततस्ते ब्रह्मवचसा सहसा गंधमादनम्।। २१ ।।
बृहस्पतिं पुरस्कृत्य जग्मुर्यज्ञचिकीर्षया।।
ते प्रणम्य महात्मानमहिर्बुध्न्यं मुनीश्वरम् ।।२२।।
अकल्पयन्यज्ञवाटन्नातिदूरे तदाश्रमात् ।।
यज्ञकर्मसु निष्णातैः सहितास्ते तपोधनैः ।। २३ ।।
इष्टिमारेभिरे देवा असुराणां विनाशिनीम् ।।

तस्मिन्कर्मणि होतासीत्स्वयमेव बृहस्पतिः ।। २४ ।।

बभूव मैत्रावरुणो जयंतः पाकशासनिः ।।

अच्छावाको बभूवात्र वसूनामष्टमो वसुः ।। २५ ।।

ग्रावस्तुदभवत्तत्र शक्तिपुत्रः पराशरः ।।

अष्टावक्रो महातेजा अध्वर्युधुरमूढवान्।। ।। २६ ।।

तत्र प्रतिप्रस्थाताभूद्विश्वामित्रो महामुनिः ।।

नेष्टा बभूव वरुण उन्नेता च धनेश्वरः ।। २७ ।।

ब्रह्मा बभूव सविता यज्ञस्यार्धधुरं वहन् ।।

बभूव ब्राह्मणाच्छंसी वसिष्ठो ब्रह्मणोत्तमः ।। २८ ।।

आग्नीध्रोऽभूच्छुनःशेपः पोता जातश्च पावकः ।।

उद्गाता वायुरभवत्प्रस्तोता च परेतराट् ।। ।। २९ ।।

प्रतिहर्ता तु तत्रासीदगस्त्यः कुंभसंभवः ।।

सुब्रह्मण्यो मधुच्छंदा विश्वामित्रात्मजो महान्।। 3.1.23.३० ।।

यजमानः स्वयमभूद्देवराजः पुरंदरः।।

उपद्रष्टा बभूवात्र व्यासपुत्रः शुको मुनिः ।। ३१ ।।

ततस्ते ऋत्विजः सर्वे देवराजं पुरंदरम् ।।

विधिवद्दीक्षयांचक्रुस्तत्र माहेश्वरे क्रतौ ।।३२।।

प्रावर्तत महायज्ञ एवं वै गंधमादने ।।

सुदर्शनप्रभावेन दुःसहेनातिपीडिताः ।। ३३ ।।

नाविंदन्नसुरास्तत्र रंध्रं यज्ञे प्रवर्तिते ।।

एवन्निरंतरायोऽसौ प्रावर्तत महा क्रतुः ।। ३४ ।।

भक्षयंश्च हविस्तत्र जज्वाल हुतवाहनः ।।

विधिवत्कर्मजालानि कृत्वाध्वर्युरसंभ्रमात् ।। ३५ ।।

मंत्रपूतं पुरोडाशं जुहवामास पावके ।।

हुतशेषं पुरोडाशं विभज्याध्वर्युरादरात् ।। ३६ ।।

ऋत्विग्भ्यो होतृमुख्येभ्यः प्रददौ पापनाशनम् ।।

सवित्रे ब्रह्मणे चैकमत्युग्रतरतेजसम् ।। ।। ३७ ।।

ददौ तत्र पुरोडाशभागं प्राशित्रनामकम् ।।

प्रतिजग्राह पाणिभ्यां प्राशित्रं सविता तदा ।। ३८ ।।

सवित्रा स्पृष्टमात्रं सत्तत्प्राशित्रं दुरासदम् ।।

तस्य पाणी प्रचिच्छेद पश्यतां सर्वऋत्विजाम् ।। ३९ ।।

ततः संछिन्नपाणिः स प्राशित्रेणोग्रतेजसा ।।

किमेतदिति संत्रस्तो विषण्णवदनोऽभवत् ।। 3.1.23.४० ।।

सविता ऋत्विजः सर्वान्समाहूयेदमब्रवीत् ।।

सवितोवाच ।।

पुरोडाशस्य भागोऽयं मम प्राशित्रनामकः ।। ४१ ।।

दत्तश्चिच्छेद मत्पाणी मिषत्स्वेव भवत्स्वपि ।।

अतो भवंतः संभूय सर्व एव हि ऋत्विजः ।। ४२ ।।

कल्पयंतामिमौ पाणी नोचेद्यज्ञं निहन्म्यमुम् ।।

सवितुर्वाक्यमाकर्ण्य ते सर्वे समचिंतयन् ।। ४३ ।।

तत्र मध्ये मुनींद्राणां देवानां चैव सर्वशः ।।

अष्टावक्रो महातेजा ऋत्विजस्तानभाषत ।। ४४ ।।

।। अष्टावक्र उवाच ।। ।।

शृणुध्वमृत्विजः सर्वे मम वाक्यं समाहिताः ।।

मयि जीवति विप्रेंद्रा विरिंचानां शतं गतम् ।। ४५ ।।

जायंते च म्रियंते च चतुराननकोटयः ।।

पश्यन्नेव च तान्सर्वानहं प्राणानधारयम् ।। ४६ ।।

तत्र लोकेश्वराभिख्ये वर्तमाने प्रजापतौ ।।

विप्रो हरिहरोनाम निवसञ्छ्यामलापुरे ।। ४७ ।।

व्याधेनारण्यवासेन केल्यर्थं लक्ष्यवेधिना ।।

छिन्नपादोऽभवद्बाणैर्लक्ष्य मध्यं समागतः ।। ४८ ।।

स गंधमादनं प्राप्य मुनिभिः प्रेरितस्तदा ।।

स्नात्वा च मुनितीर्थेऽस्मिन्प्राप्तवांश्चरणौ पुरा ।। ४९ ।।

तदा पुण्यमिदं तीर्थं मुनितीर्थमितीरितम् ।।

इदानीं चक्रतीर्थाख्यं चक्रनाम त्वविंदत ।। 3.1.23.५० ।।

तदत्र क्रियतां स्नानं प्राशित्रच्छिन्नपाणिना ।।

मुनितीर्थे सवित्रापि युष्माकं यदि रोचते ।। ५१ ।।

ऋत्विजः कथितास्त्वेवमष्टावक्रमहर्षिणा ।।

सवितारमभाषंत सर्व एव प्रहर्षिताः ।। ५२ ।।

सवितः स्नाहि तीर्थेऽ स्मिंस्तव पाणी भविष्यतः ।।

अष्टावक्रो यथा प्राह तथा कुरु समाहितः ।। ५३ ।।

ततः स सविता गत्वा चक्रतीर्थं महत्तरम् ।।

सस्नौ पाण्योरवाप्त्यर्थमिष्टदायिनि तत्र सः ।। ५४ ।।

उत्तिष्ठन्नेव स तदा तत्र स्नात्वा सभक्तिकम् ।।

युक्तो हिरण्मयाभ्यां तु पाणिभ्यां समदृश्यत ।। ५५ ।।

हिरण्यपाणिं तं दृष्ट्वा जहृषुः सर्वऋत्विजः ।।

ततः समाप्य तं यज्ञं दैत्यसंघान्विजित्य च ।। ५६ ।।

इंद्रादयः सुराः सर्वे सुखिताः स्वर्गमाययुः ।।

तस्मादेतत्समागत्य तीर्थं सर्वैश्च मानवैः ।। ५७ ।।

सेवनीयं प्रयत्नेन स्वस्वाभीष्टस्य सिद्धये ।।

अंधैश्च कुणिभिर्मूकैर्बधिरैः कुब्जकैरपि ।। ५८ ।।।

खंजैः पंगुभिरप्येतदंगहीनैस्तथापरैः ।।

संछिन्नपाणिचरणैः संछिन्नान्यांगसंचयैः ।। ५९ ।।

मनुष्यैश्च तथान्यैश्च विकलांगस्य पूर्तये ।।

सेवनीयमिदं तीर्थं सर्वाभीष्टप्रदायकम् ।। 3.1.23.६० ।।

एवं वः कथितं विप्राश्चक्रतीर्थस्य वैभवम् ।।

यत्र स्नात्वा पुरा छिन्नौ पाणी प्राप प्रभाकरः ।। ६१ ।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।।

अंगानि विकलान्यस्य पूर्णानि स्युर्न संशयः ।। ६२ ।।

मोक्षकामस्य मर्त्यस्य मुक्तिः स्यान्नात्र संशयः ।। ६३ ।।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये चक्रतीर्थप्रशंसायामादित्यहिरण्मयपाण्यवाप्तिवर्णनंनाम त्रयोविंशोऽध्यायः ।। २३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २४



।। श्रीसूत उवाच ।। ।।

चक्रतीर्थे नरः स्नात्वा शिवतीर्थं ततो व्रजेत् ।।

यत्र हि स्नानमात्रेण महापातककोटयः ।। १ ।।

तत्संसर्गाश्च नश्यंति तत्क्षणादेव तापसाः ।।

अत्र स्नात्वा ब्रह्महत्यां मुमुचे कालभैरवः ।। २ ।।

।। ऋषय ऊचुः ।। ।।

कालभैरवरुद्रस्य ब्रह्महत्या महामुने ।।

किमर्थमभवत्सूत तन्नो वक्तुमिहार्हसि ।। ३ ।।

।। श्रीसूत उवाच ।। ।।

वक्ष्यामि मुनयः सर्वे पुरावृत्तं विमुक्तिदम् ।।

यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ।। ४ ।।

प्रजापतेश्च विष्णोश्च बभूव कलहः पुरा ।।

किंचित्कारणमुद्दिश्य समस्तजनसन्निधौ ।। ५ ।।

अहमेव जगत्कर्ता नान्यः कर्तास्ति कश्चन ।।

अहं सर्वप्रपंचानां निग्रहानुग्रहप्रदः ।। ६ ।।

मत्तो नास्त्यधिकः कश्चिन्मत्समो वा सुरेष्वपि ।।

एवं स मनुते ब्रह्मा देवानां सन्निधौ पुरा ।। ७ ।।

तदा नारायणः प्राह प्रहसन्द्विजपुंगवाः ।।

किमर्थमेवं ब्रूषे त्वमहंकारेण सांप्रतम् ।। ८ ।।

वाक्यमेवंविधं भूयो वक्तुं नार्हसि वै विधे ।।

अहमेव जगत्कर्ता यज्ञो नारायणो विभुः ।। ९ ।।

मां विनास्य प्रपञ्चस्य जीवनं दुर्लभं भवेत् ।।

मत्प्रसादाज्जगत्सृष्टं त्वया स्थावरजंगमम् ।। 3.1.24.१० ।।

विवादं कुर्वतोरेवं ब्रह्मविष्ण्वोर्जयैषिणोः ।।

देवानां पुरतस्तत्र वेदाश्चत्वार आगताः ।।

प्रोचुर्वाक्यमिदं तथ्यं परमार्थप्रकाशकम् ।।१ १।।

।। वेदा ऊचुः ।। ।।

त्वं विष्णो न जगत्कर्ता न त्वं ब्रह्मन्प्रजापते ।। १२ ।।

किं त्वीश्वरो जगत्कर्ता परात्परतरो विभुः ।।

तन्मायाशक्तिसंक्लृप्तमिदं स्थावरजंगमम् ।। १३ ।।

सर्वदेवाभिवंद्यो हि सांबः सत्यादिलक्षणः ।।

स्रष्टा च पालको हर्ता स एव जगतां प्रभुः ।।१४।।

एवं समीरितं वेदैः श्रुत्वा वाक्यं शुभाक्षरम्।।

ब्रह्मा विष्णुस्तदा तत्र प्रोचतुर्द्विजपुंगवाः।।१५।।

।।ब्रह्मविष्णू ऊचतुः।। ।।

पार्वत्यालिंगितः शंभुर्मूर्तिमान्प्रमथाधिपः।।

कथं भवेत्परं ब्रह्म सर्वसंगविवर्जितम्।।१६।।

ताभ्यामितीरिते तत्र प्रणवः प्राह तौ तदा ।।

अरूपो रूपमादाय महता ध्वनिना द्विजाः ।।१७।। ।।

।। प्रणव उवाच ।। ।।

असौ शंभुर्महादेवः पार्वत्या स्वातिरिक्तया ।।

संक्रीडते कदाचिन्नो किं तु स्वात्मस्वरूपया ।। १८ ।।

असौ शंभुरनीशानः स्वप्रकाशो निरंजनः ।।

विश्वाधिको महादेवो विश्वाधिक इति श्रुतः ।। १९ ।।

सर्वात्मा सर्वकर्तासौ स्वतन्त्रः सर्वभावनः ।।

ब्रह्मन्नयं सृष्टिकाले त्वां नियुंक्ते रजोगुणैः ।। 3.1.24.२० ।।

सत्त्वेन रक्षणे शंभुस्त्वां प्रेषयति केशव ।।

तमसा कालरुद्राख्यं संप्रेरयति संहृतौ ।। २१ ।।

अतः स्वतन्त्रता विष्णो युवयोर्न कदाचन ।।

नापि प्रजापतेरस्ति किं तु शंभोः स्वतन्त्रता ।। २२ ।।

ब्रह्मन्विष्णो युवाभ्यां तु किमर्थं न महेश्वरः ।।

ज्ञायते सर्वलोकानां कर्ता विश्वाधिकस्तथा ।। २३ ।।

सापि शक्तिरुमा देवी न पृथक्छंकरात्सदा ।।
शंभोरानंदभूता सा देवी नागंतुकी स्मृता ।। ।। २४ ।।
अतो विश्वाधिको रुद्रः स्वतंत्रो निर्विकल्पकः ।।
सर्वदेवैरयं वन्द्यो युवाभ्यामपि शंकरः ।। २५ ।।
कर्ता नास्यास्ति रुद्रस्य नाधिकोऽस्माच्च विद्यते ।।
न तत्समोऽपि लोकेषु विद्यते शतशस्तथा ।। २६ ।।
अतो मोहं न कुरुतं ब्रह्मविष्णो युवां वृथा ।।
इत्युक्तं प्रणवेनाथ श्रुत्वा ब्रह्मा च केशवः ।। २७ ।।
मायया मोहितौ शंभोर्नैवाज्ञानममुंचताम् ।।
एतस्मिन्नंतरे ब्रह्मा प्रददर्श महाद्भुतम् ।। २८ ।।
व्याप्नुवद्गगनं सर्वमनंतादित्य सन्निभम् ।।
तेजोमण्डलमाकाशमध्यगं विश्वतोमुखम् ।। २९ ।।
तन्निरूपयितुं ब्रह्मा ससर्जोर्ध्वगतं मुखम् ।।
तपोबलविसृष्टेन पंचमेन मुखेन सः ।। ।। 3.1.24.३० ।।
निरूपयामास विभुस्तत्तेजोमण्डलं मुहुः ।।
तत्प्रजज्वाल कोपेन मुखं तेजोविलोकनात्।।३१।।
अनंतादित्यसंकाशं ज्वलत्तत्पंचमं शिरः ।।
दिधक्षुः प्रलये लोकान्वडवाग्निरिवाबभौ ।। ३२ ।।
व्यदृश्यत च तत्तेजः पुरुषो नीललोहितः ।।
दृष्ट्वा स्रष्टा तदा ब्रह्मा बभाषे परमेश्वरम् ।। ३३ ।।
वेदाहं त्वां महादेव ललाटान्मे पुरा भवान् ।।
विनिर्गतोऽसि शंभो त्वं रुद्रनामा ममात्मजः ।। ३४ ।।
इति गर्वेण संयुक्तं वचः श्रुत्वा महेश्वरः ।।
कालभैरवनामानं पुरुषं प्राहिणोत्तदा ।। ३५ ।।
अयुद्ध्यत चिरं कालं ब्रह्मणा कालभैरवः ।।
महादेवांशसंभूतः शूलटंकगदाधरः ।। ।। ३६ ।।
युद्ध्वा तु सुचिरं कालं ब्रह्मणा कालभैरवः ।।
वदनं ब्रह्मणः शुभ्रं व्यलोकयत पंचमम् ।। ३७ ।।

विलोक्योर्ध्वगतं वक्त्रं पञ्चमं भारतीपतेः ।।
गर्वेण महता युक्तं प्रजज्वालातिकोपितः ।। ३८ ।।
ततस्तत्पंचमं वक्त्रं भैरवः प्राच्छिनद्रुषा ।।
ततो ममार ब्रह्माऽसौ कालभैरवहिंसितः ।। ।। ३९ ।।
ईश्वरस्य प्रसादेन प्रपेदे जीवितं पुनः ।।
ततो विलोकयामास शंकरं शशिभूषणम् ।। 3.1.24.४० ।।
वासुक्याद्यष्टभोगींद्रविभूषणविभूषितम् ।।
दृष्ट्वा वेधा महादेवं पार्वत्या सह शंकरम् ।। ४१ ।।
लेभे माहेश्वरं ज्ञानं महादेवप्रसादतः ।।
ततस्तुष्टाव गिरिशं वरेण्यं वरदं शिवम् ।। ४२ ।। ।।
।। ब्रह्मोवाच ।। ।।
मह्यं प्रसीद गिरिश शशांककृतशेखर ।।
यन्मयापकृतं शंभो तत्क्षमस्व दयानिधे ।। ४३ ।।
क्षमस्व मम गर्वं त्वं शंकरेति पुनःपुनः ।।
नमश्चकार सोमं तं सोमार्धकृतशेखरम् ।। ४४ ।।
अथ देवः प्रसन्नोऽस्मै ब्रह्मणे स्वांशजाय तु ।।
मा भैरित्यब्रवीच्छंभुर्भैरवं चाभ्यभाषत ।। ४५ ।।
।। ईश्वर उवाच ।। ।।
एष सर्वस्य जगतः पूज्यो ब्रह्मा सनातनः ।।
हतस्यास्य विरिंचस्य धारय त्वं शिरोऽधुना ।। ४६ ।।
ब्रह्महत्याविशुद्ध्यर्थं लोकसंग्रहकाम्यया ।।
भिक्षामट कपालेन भैरव त्वं ममाज्ञया ।। ४७ ।।
उक्त्वैवं शंकरो विप्रास्तत्रैवांतरधीयत ।।
नीलकण्ठो महादेवो गिरिजार्द्धतनुस्ततः ।। ४८ ।।
भैरवं ग्राहयामास वदनं वेधसो द्विजाः ।।
चरस्व पापशुद्ध्यर्थं लोकसंग्रहणाय वै ।। ४९ ।।
कपालधारी हस्तेन भिक्षां गृह्णातु भैरवः ।।
इतीरयित्वा गिरिशः कन्यां कांचिद्भयंकरीम् ।। 3.1.24.५० ।।

ब्रह्महत्याभिधां क्रूरां वडवानलसन्निभाम् ।।

तां प्रेरयित्वा गिरिशो भैरवं पुनरब्रवीत् ।। ५१ ।।

।। ईश्वर उवाच ।। ।।

भैरवैतद्व्रतं त्वब्दं ब्रह्महत्याविशुद्धये ।।

चर त्वं सर्वतीर्थेषु स्नाहि शुद्ध्यर्थमात्मनः ।।५२।।

ततो वाराणसीं गच्छ ब्रह्महत्याप्रशांतये ।।

वाराणसीप्रवेशेन ब्रह्महत्या तवाधमा ।।५३।।

पादशेषा विनष्टा स्याच्चतुर्थांशो न नश्यति ।।

तस्य नाशं प्रवक्ष्यामि तव भैरव तच्छृणु ।।५४।।

दक्षिणांभोनिधेस्तीरे गन्धमादनपर्वते ।।

सर्वप्राण्युपकाराय कृतं तीर्थं मया शुभम् ।।५५।।

शिवसंज्ञं महापुण्यं तत्र याहि त्वमादरात्।।

तत्प्रवेशनमात्रेण ब्रह्महत्या तवाशुभा ।। ५६ ।।

शिवतीर्थस्य माहात्म्यान्निःशेषं नश्यति ध्रुवम् ।।

उक्त्वैवं भैरवं रुद्रः कैलासं प्रययौ क्षणात् ।। ५७ ।।

ततः कपालपाणिस्तु भैरवः शिवचोदितः ।।

देवदानवयक्षादिलोकेषु विचचार सः ।।५८।।

तं यांतमनुयाति स्म ब्रह्महत्यातिभीषणा ।।

भैरवः सर्वतीर्थानि पुण्यान्यायतनानि च ।। ५९ ।।

चरित्वा लीलया देवस्ततो वाराणसीं ययौ ।।

वाराणसीं प्रविष्टे तु भैरवे शंकरांशजे ।। 3.1.24.६० ।।

चतुर्थांशं विना नष्टा ब्रह्महत्यातिकुत्सिता ।।

चतुर्थांशेन दुद्राव भैरवं शंकरांशजम् ।।६१।।

ततः स भैरवो देवः शूलपाणिः कपालधृक् ।।

शिवाज्ञया ययौ पश्चाद्गंधमादनपर्वतम् ।। ६२ ।।

शिवतीर्थं ततो गत्वा भैरवः स्नातवान्द्विजाः ।।

स्नानमात्रेण तत्रास्य शिवतीर्थे महत्तरे ।। ६३ ।।

निःशेषं विलयं याता ब्रह्महत्यातिभीषणा ।।

अस्मिन्नवसरे शंभुः प्रादुरासीत्तदग्रतः ।।

प्रादुर्भूतो महादेवो भैरवं वाक्यमब्रवीत् ।।६४।।

।। ।। ईश्वर उवाच ।। ।।

निःशेषं ब्रह्महत्या ते शिवतीर्थे निमज्जनात् ।। ६५ ।।

नष्टा भैरव नास्त्यत्र संदेहस्तव सुव्रत ।।

इदं कपालं काश्यां त्वं स्थापयस्व क्वचित्स्थले ।। ६६ ।।

इत्युक्त्वा भगवाञ्छंभुस्तत्रैवांतरधीयत ।।

भैरवोऽपि तदा विप्रा ब्रह्महत्याविमोचितः ।। ६७ ।।

शिवतीर्थस्य माहात्म्याद्ययौ वाराणसीं पुरीम् ।।

कपालं स्थापयामास प्रदेशे कुत्रचिद्द्विजाः ।।

कपालतीर्थमित्याख्यामलभत्तत्स्थलं तदा ।। ६८ ।।

।। श्रीसूत उवाच ।। ।।

एवं प्रभावं तत्पुण्यं शिवतीर्थं विमुक्तिदम् ।। ६९ ।।

महादुःखप्रशमनं महापातकनाशनम् ।।

नरकक्लेशशमनं स्वर्गदं मोक्षदं तथा ।। ।। 3.1.24.७० ।।

शिवतीर्थस्य माहात्म्यं मया प्रोक्तं विमुक्तिदम् ।।

इदं पठन्सदा मर्त्यो दुःखग्रामाद्विमुच्यते ।। ७१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये शिवतीर्थप्रशंसायां भैरवब्रह्महत्याविमोक्षणवर्णनंनाम चतुर्विंशोऽध्यायः ।। २४ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २५

https://sa.wikisource.org/s/fsq
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

शिवतीर्थे नरः स्नात्वा ब्रह्महत्याविमोक्षणे ।।

स्वपापजालशांत्यर्थं शंखतीर्थं ततो व्रजेत् ।। १ ।।

यत्र मज्जनमात्रेण कृतघ्नोऽपि विमुच्यते ।।

मातृः पितृन्गुरूंश्चापि ये न मन्यंति मोहिताः ।। २ ।।

ये चाप्यन्ये दुरात्मानः कृतघ्ना निरपत्रपाः ।।

ते सर्वे शंखतीर्थे स्मिञ्छुद्ध्यंति स्नानमात्रतः ।। ३ ।।

शंखनामा मुनिः पूर्वं गंधमादनपर्वते ।।

अवर्तत तपः कुर्वन्विष्णुं ध्यायन्समाहितः।। ४ ।।

स तत्र कल्पयामास स्नानार्थं तीर्थमुत्तमम् ।।

शंखेन निर्मितं तीर्थं शंखतीर्थमितीर्यते ।। ५ ।।

तत्र स्नात्वा सकृन्मर्त्यः कृतघ्नोऽपिविमुच्यते १।

अत्रेतिहासं वक्ष्यामि पुराणं पापनाशनम्।।६।।

यस्य श्रवणमात्रेण नरो मुक्तिमवाप्नुयात्।।

पुरा बभूव विप्रेंद्रो वत्सनाभो महामुनिः।।७।।

सत्यवाञ्छीलवान्वाग्मी सर्वभूतदयापरः।।

शत्रुमित्रसमो दांतस्तपस्वी विजितेंद्रियः।।८।।

परब्रह्मणि निष्णातस्तत्त्वब्रह्मैकसंश्रयः।।

एवं प्रभावः स मुनिस्तपस्तेपे निजाश्रमे ।। ९ ।।

स वै निश्चलसर्वांगस्तिष्ठंस्तत्रैव भूतले ।।

परमाण्वंतरं वापि न स्वस्थानाच्चचाल सः ।। 3.1.25.१० ।।

स्थित्वैकत्र तपस्यंतमनेकशतवत्सरान् ।।

तमाचकाम वल्मीकं छादितांगं चकार च ।। ११ ।।

वल्मीकाक्रांतदेहोपि वत्सनाभो महामुनिः ।।

अकरोत्तप एवासौ वल्मीकं न त्वबुद्ध्यत ।। ।। १२ ।।

तस्मिंश्च तप्यति तपो वासवो मुनिपुंगवाः ।१

विसृज्य मेघजालानि वर्षयामास वेगवान् ।। १३ ।।

एवं दिनानि सप्तायं स ववर्ष निरं तरम् ।।

आसारेणातिमहता वृष्यमाणोपि वै मुनिः ।। १४ ।।

तं वर्षं प्रतिजग्राह निमीलितविलोचनः ।।

महता स्तनितेनाशु तदा बधिरयञ्छ्रुती ।। ।। १५ ।।

वल्मीकस्योपरिष्टाद्वै निपपात महाशनिः ।।

तस्मिन्वर्षति पर्जन्ये शीतवातातिदुःसहे ।। १६ ।।

वल्मीकशिखरं ध्वस्तं बभूवाशनिताडि तम् ।।

विशीर्णशिखरे तस्मिन्वल्मीकेऽशनिताडिते ।। १७ ।।

सेहेतिदुःसहां वृष्टिं वत्सनाभो विचिंतयन् ।।

महर्षौ वर्षधाराभिः पीड्यमाने दिवानि शम् ।। १८ ।।

धर्मस्य चेतसि कृपा संबभूवातिभूयसी ।।

स धर्मश्चिंतयामास वत्सनाभे तपस्यति ।। १९ ।।

पतत्यप्यतिवर्षेऽयं तपसो न निवर्तते ।।

अहोऽस्य वत्सनाभस्य धर्मैकायत्तचित्तता ।। 3.1.25.२० ।।

इति चिंतयतस्तस्य मातिरेवमजायत ।।

अहं वै माहिषं रूपं सुमहांतं मनोहरम् ।। २१ ।।

वर्षधारानिपातानां सोढारं कठिनत्वचम् ।।

स्वीकृत्य माहिषं रूपं स्थास्याम्युपरि योगिनः ।। २२ ।।

न हि बाधिष्यते वर्षं महावेगयुतं त्वपि ।।

धर्म एवं विनिश्चित्य धाराः पृष्ठेन धारयन् ।। २३ ।।

वत्सनाभोपरि तदा गात्रमाच्छाद्य तस्थिवान् ।।

ततः सप्तदिनांते तु तद्वै वर्षमुपारमत् ।। २४ ।।

ततो महिषरूपी स धर्मोऽतिकृपया युतः ।।

तद्वै वल्मीकमुत्सृज्य नातिदूरे ह्यवर्त्तत ।।२५।।

ततो निवृते वर्षे तु वत्सनाभो महामुनिः।।

निवृत्तस्तपसस्तू र्णं दिशः सर्वा व्यलोकयन्।।२६।।

स्थितोऽहं वृष्टिसंपाते कुर्वन्नद्य महत्तपः।।

पृथिवी सलिलाक्लिन्ना दृश्यते सर्वतोदिशम्।।२७।।

शिखराणि गिरीणां च वना न्युपवनानि च ।।

आश्रमाणि महर्षीणामाप्लुतानि जलैर्नवैः ।। २८ ।।

एवमादीनि सर्वाणि दृष्ट्वा प्रमुदितोऽभवत् ।।

चिंतयामास धर्मात्मा वत्सना भो महामुनिः ।। २९ ।।

अहमस्मिन्महावर्षे नूनं केनापि रक्षितः ।।

वर्षत्यस्मिन्महावर्षे जीवितं त्वन्यथा कुतः ।। 3.1.25.३० ।।

विचिंत्यैवं मुनिश्रेष्ठः सर्वत्र समलोकयत् ।।

ततोऽपश्यन्महाकायमदूरादग्रतः स्थितम् ।। ३१ ।।

महिषं नीलवर्णं च वत्सनाभस्तपोधनः ।।

महिषं तं समुद्दिश्य मनसा समचिं तयत् ।। ३२ ।।

तिर्यग्योनिष्वपि कथं दृश्यते धर्मशीलता ।।

यतो ह्यहं महावर्षान्महिषेणाभिरक्षितः ।। ३३ ।।

दीर्घमायुरमुष्यास्तु यन्मां रक्षितवा निह ।।

इत्यादि स विचिंत्यैवं तपसे पुनरुद्ययौ ।। ३४ ।।

तं पुनश्च तपस्यंतं दृष्ट्वा महिषरूपधृक् ।।

रोमांचावृतसर्वांगः प्रमोदमगमद्भृशम् ।। ।। ३५ ।।

वत्सनाभस्य हि मुनेः पुनश्चैव तपस्यतः ।।

मनः पूर्ववदेकाग्रं परब्रह्मणि नाभवत् ।। ३६ ।।

स विषण्णमना भूत्वा वत्सनाभो व्यचिंतयत् ।।

न भवेद्यदि नैर्मल्यं तदा स्याच्चंचलं मनः ।। ३७ ।।

मनश्च पापबाहुल्ये निर्मलं नैव जायते ।।

पापलेशोपि मे नास्ति कथं लोला यते मनः ।। ३८ ।।

अचिंतयद्दोषहेतुं वत्सनाभः पुनःपुनः ।।

स विचिंत्य विनिश्चित्य निनिंदात्मानमंजसा ।। ३९ ।।

धिङ्मामद्य दुरात्मान महो मूढोस्म्यहं भृशम् ।।

कृतघ्नता महादोषो मामद्य समुपागतः ।। 3.1.25.४० ।।

यदीदृशान्महावर्षात्त्रातारं महिषोत्तमम् ।।

तिष्ठाम्यपूजयन्नेव ततो मे भूत्कृतघ्नता ।। ४१ ।।

कृतघ्नता महान्दोषः कृतघ्ने नास्ति निष्कृतिः ।।

कृतघ्नस्य न वै लोकाः कृतघ्नस्य न बांधवाः ।। ४२ ।।

कृतघ्नतादोष वलान्मम चित्तं मलीमसम् ।।

कृतघ्ना नरकं यांति ये च विश्वस्तघातिनः ।। ४३ ।।

निष्कृतिं नैव पश्यामि कृतघ्नानां कथंचन ।।

ऋते प्राणपरित्यागाद्धर्मज्ञानां वचो यथा ।। ४४ ।।

पित्रोरभरणं कृत्वा ह्यदत्त्वा गुरुदक्षिणाम् ।।

कृतघ्नतां च संप्राप्य मरणांता हि निष्कृतिः ।। ४५ ।।

तस्मात्प्राणान्परित्यज्य प्रायश्चित्तं चराम्यहम् ।।

इति निश्चित्य मनसा वत्सनाभो महामुनिः ।। ४६ ।।

तृणीकृत्य निजान्प्राणान्निःसंगेनांतरा त्मना ।।

मेरोः शिखरमारूढः प्रायश्चित्तचिकीर्षया ।। ४७ ।।

सुमेरुशिखरात्तस्मादियेष पतितुं मुनिः ।।

तस्मिन्पतितुमारब्धे मा त्वरिष्ठा इति ब्रुवन् ।।

त्यक्तमाहिषरूपः सन्धर्म एव न्यवारयत् ।। ४८ ।।

।। धर्म उवाच ।। ।।

वत्सनाभ महाप्राज्ञ जीवस्व बहुवत्सरान् ।। ४९ ।।

परितुष्टो ऽस्मि भद्रं ते देहत्यागचिकीर्षया ।।

न हि त्वद्धर्मकक्षायां लोके कश्चित्समोऽस्ति वै ।। 3.1.25.५० ।।

यद्यपि प्राणसंत्यागः कृतघ्ने निष्कृतिर्भवेत् ।।

तथापि धर्मशीलत्वात्तवान्यां निष्कृतिं वदे ।। ५१ ।।

शंखतीर्थाभिधं तीर्थमस्ति वै गंधमादने ।।

शांत्यर्थमस्य पापस्य तत्र स्नाहि समाहितः ।। ।। ५२ ।।

प्राप्स्यसे चित्तशुद्धिं त्वमतो विगतकल्मषः।।

ततश्च लब्धविज्ञानः प्राप्स्यसे शाश्वतं पदम् ।। ५३ ।।

अहं धर्मोस्मि योगीन्द्र सत्य मेव ब्रवीमि ते ।।

इति धर्मवचः श्रुत्वा वत्सनाभो महामुनिः ।। ५४ ।।

स्नातुकामः शंखतीर्थे गंधमादनमन्वगात् ।।

शंखतीर्थं च संप्राप्य तत्र सस्नौ महामुनिः ।। ५५ ।।

ततो विगतपापस्य मनो निर्मलतां गतम् ।।

ततोऽचिरेण कालेन ब्रह्मभूयमगान्मुनिः ।। ५६ ।।

एवं वः कथितं विप्राः शंखतीर्थस्य वैभवम्।।

यत्र हि स्नानमात्रेण कृतघ्नोऽपि विमुच्यते ।। ५७ ।।

मातृद्रोही पितृद्रोही गुरुद्रोही तथैव च ।।

अन्ये कृतघ्ननिवहा मुच्यंतेऽत्र निमज्जनात् ।। ५८ ।।

अतः कृतघ्नैर्मनुजैः सेवनीयमिदं सदा ।।

अहो तीर्थस्य माहात्म्यं यत्कृतघ्नोपि मुच्यते ।। ५९ ।।

अकृत्वा भरणं पित्रोरदत्त्वा गुरुदक्षिणाम्।।

कृतघ्नतां च संप्राप्य मरणांता हि निष्कृतिः ।। 3.1.25.६० ।।

इह तु स्नानमात्रेण कृतघ्नस्यापि निष्कृतिः ।।

कृतघ्नतापि तत्तीर्थे स्नानमात्राद्विनश्यति ।। ६१ ।।

अन्येषां तुच्छपापानां सर्वेषां किमुताधुना ।। ६२ ।।

अध्यायमेनं पठेद्भक्तियुक्तः कृतघ्नोपि मर्त्याः स पापाद्विमुक्तः ।।

विशुद्धांतरात्मा गतः सत्यलोकं समं ब्रह्मणा मोक्षमप्याशु गच्छेत्।। ६३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये शंखतीर्थप्रशंसायां वत्सनाभकृतघ्नदोषशांतिवर्णनंनाम पञ्चविंशोऽध्यायः ।। २५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २६

https://sa.wikisource.org/s/fsk
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

विधायाभिषवं मर्त्याः शंखतीर्थे द्विजोत्तमाः ।।

यमुनां चैव गंगां च गयां चापि क्रमाद्व्रजेत् ।। १ ।।

यमुनाख्यं महातीर्थं गंगातीर्थमनुत्तमम् ।।

गयातीर्थं च मर्त्यानां महापातकनाशनम् ।। २ ।।

एतत्तीर्थत्रयं पुण्यं सर्वलोकेषु विश्रुतम् ।।

सर्वविघ्नप्रशमनं सर्वरोगनिबर्हणम् ।। ३ ।।

एतद्धि तीर्थत्रितयं सकलाज्ञाननाशनम् ।।

अविद्यायां विनष्टायां तथा ज्ञानप्रदं नृणाम् ।। ४ ।।

जानश्रुतिर्महाराज एषु तीर्थेषु वै पुरा ।।

स्नात्वा रैक्वाद्द्विजश्रेष्ठात्प्राप्तवाञ्ज्ञानमुत्तमम्।। ५ ।।

।। ऋषय ऊचुः ।। ।।

सूत सर्वार्थतत्त्वज्ञ व्यासशिष्य महामते ।।

यमुना चैव गंगा च गया चैवेति विश्रुतम् ।। ६ ।।

एतत्तीर्थत्रयं कस्मादागतं गंधमादने ।।

जानश्रुतेश्च राजर्षेः स्नानात्तीर्थत्रयेऽपि च ।।

ज्ञानावाप्तिः कथं रैक्वादस्माकं सूत तद्वद ।। ७ ।।

।। श्रीसूत उवाच ।। ।।

रैक्वनामा महर्षिस्तु पुरा वै गन्धमादने ।। ८ ।।

तपस्सुदुश्चरं कुर्वन्न्यवसत्तपसां निधिः ।।

दीर्घकालं तपः कुर्वन्स वै रैक्वो महामुनिः ।। ९ ।।

तपोबलेन महता दीर्घमायुरवाप्तवान् ।।

जन्मना पंगुरेवासीद्रैक्वनामा महामुनिः ।। 3.1.26.१० ।।

पंगुत्वादसमर्थोऽभूद्गंतुं तीर्थान्यसौ मुनिः ।।
संति यानि तु तीर्थानि गन्धमादनपर्वते ।। ११ ।।
तानि गच्छति सामीप्याच्छकटेनैव संचरन् ।।
स यद्रैक्वो मुनिवरो युग्वेन सह वर्तते ।। १२ ।।
तपस्वी वैदिकैर्लोके सयुग्वैत्यभिधीयते ।।
युग्वेति शकटं प्रोक्तं स तेन सह वर्तते ।। १३ ।।
स खल्वेवं मुनिश्रेष्ठः सयुग्वानाम वै मुनिः ।।
पूर्णज्ञानस्तपस्तेपे गन्धमादनपर्वते ।।१४।।
ग्रीष्मे पञ्चाग्निमध्यस्थः सोऽतप्यत महत्तपः ।।
वर्षायां कण्ठदघ्नेषु जलेषु समवर्तत ।। १५ ।।
तपसा शोषिते गात्रे पामा तस्य व्यजायत ।।
कण्डूयत स पामानं दिवारात्रं मुनीश्वरः ।। १६।।
कण्डूयमान एवायं पामानं न तपोऽत्यजत् ।।
अजायत मनस्त्वेवं तस्य सयुग्वनो मुनेः ।। १७ ।।
यमुनायां च गंगायां गयायां चाधुनैव हि ।।
अस्मिंस्तीर्थे त्रये पुण्ये स्नातव्यं हि मया त्विति ।। १८ ।।
एवं विचिंत्य स मुनिरन्यां चिंतामथाकरोत् ।।
अहं हि जन्मना पंगुरतः स्नानं हि दुर्लभम् ।। १९ ।।
अतिदूरं मया गन्तुं शकटेन न शक्यते ।।
किं करोम्यधुनेत्येवं स वितर्क्य महामतिः ।। 3.1.26.२० ।।
तीर्थत्रयेषु स्नानार्थं कर्तव्यं निश्चिकाय वै ।।
अप्रसह्यमनाधृष्यं विद्यते मे तपोबलम् ।। २१ ।।
तेनैवावाहयिष्यामि तद्धि तीर्थत्रयं त्विह ।।
इति निश्चित्य मनसा प्राङ्मुखो नियतेंद्रियः ।। २२ ।।
त्रिराचम्य च सयुग्वान्दध्यौ क्षणमतंद्रितः ।।
तस्य मंत्रप्रभावेन यमुना सा महानदी ।। २३ ।।
गंगा च जह्नुतनया गया सा पापनाशिनी ।।
भूमिं निर्भिद्य तिस्रोपि पातालात्सहसोत्थिताः ।। २४ ।।

मानुषं रूपमास्थाय सयुग्वानमुपेत्य च ।।

ऊचुः परमसंहृष्टा हर्षयंत्यश्च तं मुनिम् ।। २५ ।।

सयुग्वन्रैक्व भद्रं ते ध्यानादस्मादुपारम ।।

त्वन्मत्रेण समाकृष्टा वयमत्र समागताः ।। २६ ।।

कि कर्तव्यं तवास्माभिस्तद्वदस्व मुनीश्वर ।।

इति तासां वचः श्रुत्वा सयुग्वान्हि महामुनिः ।। २७ ।।

ध्यानादुपारमत्तूर्णं ताश्चापश्यत्पुरः स्थिताः ।।

स ताः संपूज्य विधिवद्रैक्वो वाचमभाषत ।। २८ ।।

यमुने देवि हे गंगे हे गये पापनाशिनि ।।

सन्निधानं कुरुध्वं मे गन्धमादनपर्वते ।। २९ ।।

यत्र भूमिं विनिर्भिद्य भवत्य इह निर्गताः ।।

तानि पुण्यानि तीर्थानि भवेयुर्वोऽभिधानतः ।। 3.1.26.३० ।।

सहसांतरधीयंत तथास्त्वित्येव तत्र ताः ।।

तदाप्रभृति तीर्थानि तानि त्रीण्यपि भूतले ।। ३१ ।।

तेनतेनाभिधानेन गीयन्ते सर्वदा जनैः ।।

यत्र भूमिं विनिर्भिद्य यमुना निर्गता तदा ।। ३२ ।।

यमुनातीर्थमिति वै तज्जनैरभिधीयते ।।

यतो वै पृथिवीरंध्राज्जाह्नवी सहसोत्थिता ।। ३३ ।।

गंगातीर्थमिति ख्यातं तल्लोके पापनाशनम् ।।

गया हि मानुषं रूपं यत आस्थाय निर्ययौ ।। ३४ ।।

तदेव भूमिविवरं गयातीर्थं प्रचक्षते ।।

एवमेतन्महापुण्यं तीर्थत्रयमनुत्तमम् ।। ३५ ।।

रैक्वमंत्रप्रभावेण पृथिव्याः सहसोत्थितम् ।।

अत्र तीर्थत्रये स्नानं ये कुर्वंति नरोत्तमाः ।। ३६ ।।

तेषामज्ञाननाशः स्याज्ज्ञानमप्युदयं लभेत् ।।

स्वमंत्रेण समाकृष्टे तत्र तीर्थत्रये मुनिः ।। ३७ ।।

स्नानं समाचरन्नित्यं स कालानत्यवाहयत् ।।

एतस्मिन्नेव काले तु राजा जानश्रुतिर्महान् ।। ३८ ।।

पुत्रसंज्ञस्य राजर्षेः पौत्रो धर्मैकतत्परः ।।
देयमन्नादि स तदा ह्यर्थिभ्यः श्रद्धयैव यत् ।। ३९ ।।
तस्मादेनं नजालोके श्रद्धादेयं प्रचक्षते ।।
यतो बहुतरं वाक्यमन्नाद्यस्य महीपतेः ।।3.1.26.४० ।।
अर्थिनां क्षुधितानां तु तृप्त्यर्थं वर्तते गृहे ।।
अतोयमर्थिभिः सर्वैर्बहुवाक्य इतीर्यते ।।४१।।
स वै पौत्रायणो राजा जानश्रुतसुतो बली ।।
प्रियातिथिर्बभूवासौ बहुदायी तथाऽभवत् ।। ४२ ।।
नगरेषु च राष्ट्रेषु ग्रामेषु च वनेषु च ।।
चतुष्पथेषु सर्वेषु महामार्गेषु सर्वशः ।। ४३ ।।
बह्वन्नपान संयुक्तं सूपशाकादिसंयुतम् ।।
आतिथ्यं कल्पयामास तृप्तयेऽर्थिजनस्य वै ।।४४।।
अन्नपानादिकं सर्वमुपयुङ्ध्वमिहार्थिनः ।।
इत्यसौ घोषयामास तत्र तत्र जनास्पदे ।।४५।।
तस्य प्रियातिथेरेव नृपस्य बहुदायिनः ।।
अर्थिभ्यो दानशौंडस्य गुणाः सर्वत्र विश्रुताः ।।४६।।
अथ पौत्रायणस्यास्य गुण ग्रामेण वर्ततः ।।
देवर्षयो महाभागास्तस्यानुग्रहकांक्षिणः ।। ४७ ।।
हंसरूपं समास्थाय निदाघसमये निशि ।।
रमणीयां विधायाशु श्रेणीमाकाशमागतः ।। ४९ ।।
सौधवातायनस्थस्य तस्योपरि महीपतेः ।।
उड्डीयोड्डीय वेगेन तरसा जग्मुरुच्चकैः ।। ४९ ।।
तरसा पततां तेषां हंसानां पृष्ठतो व्रजन् ।।
एको हंसस्तु संबोध्य हंसमग्रेसरं तदा ।। 3.1.26.५० ।।
सोपहासमिदं वाक्यं प्राह शृण्वति राजनि ।।
भोभो भल्लाक्ष भल्लाक्ष पुरो गच्छन्मरालक ।। ५१ ।।
सौधमध्ये पुरस्ताद्वै जानश्रुतसुतो नृपः ।।
वर्तते पूजनीयोऽयं न पश्यसि किमंधवत् ।। ५२ ।।

यस्य तेजो दुराधर्षमाब्रह्म भवनादिदम् ।।
अनंतादित्यसंकाशं ज्वलते पुरतो भृशम् ।। ५३ ।।
तमतिक्रम्य राजर्षे मा गास्त्वमुपरि द्रुतम् ।।
यदि गच्छसि तत्तेजस्सांप्रतं त्वां प्रधक्ष्यति ।। ५४ ।।
इत्युक्तवंतं तं हंसमग्रतः प्रत्यभाषत ।।
अहो भवानभिज्ञोऽसि श्लाघनीयोऽसि सूरिभिः ।। ५५ ।।
अश्लाघनीयं कितवं यत्त्वमेनं प्रशंससे ।।
प्रशंससे किमर्थं त्वमल्पं संतमिमं जनम् ।। ५६ ।।
भस्त्रावत्पशुवच्चैव केवलं श्वासधारिणम् ।।
न ह्ययं वेत्ति धर्माणां रहस्यं पृथिवी पतिः ।। ५७ ।।
तत्त्वज्ञानी यथा रैक्वः सयुग्वान्ब्राह्मणोत्तमः ।।
रैक्वस्य हि महज्ज्योतीरहस्यं दैवतैरपि ।। ५८ ।।
न ह्यस्य प्राणमात्रस्य तेजस्तादृशमस्ति वै ।।
रैक्वस्य पुण्यराशीनामियत्ता नैव विद्यते ।। ५९ ।।
गण्यते पांसवो भूमेर्गण्यंते दिवि तारकाः ।।
रैक्वपुण्यमहामेरुसमूहो नैव गण्यते ।। ।। 3.1.26.६० ।।
किं च तिष्ठंत्विमे धर्मा नश्वरास्तस्य वै मुनेः ।।
ब्रह्मज्ञानमबाध्यं यत्तेन स श्लाघ्यते मुनिः ।। ६१ ।।
जानश्रुतेस्तु तादृक्षो धर्म एव न विद्यते ।।
दुर्लभं यत्तु योगीन्द्रैः कुतस्तज्ज्ञानवैभवम् ।। ०६२ ।।
परित्यज्य दुरात्मानं तद्वराकमिमं जनम् ।।
स एव रैक्वः सयुग्वाञ्छलाघ्यतां भवता मुनिः ।। ६३ ।।
जन्मना पंगुरपि यः स्वस्य स्नानचिकीर्षया ।।
गंगां च यमुनां चापि गयामपि मुनीश्वरः ।। ६४ ।।
आह्वयामास मन्त्रेण निजाश्रमसमीपतः ।।
तस्य ब्रह्मविदो रैक्वमहर्षेर्धर्मसंचये ।। ६५ ।।
अंतर्भवंति धर्मौघास्त्रैलोक्योदरवर्तिनाम् ।।
रैक्वस्य धर्मकक्षा तु न हि त्रैलोक्यवर्तिनाम् ।। ६६ ।।

प्राणिनां धर्मकक्षायामन्तर्भवति कर्हिचित ।।
एवमग्रेसरे हंसे कथित्वोपरते सति ।। ६७ ।।
हंसरूपा मुनींद्रास्ते ब्रह्मलोकं ययुः पुनः ।।
अथ पौत्रायणो राजा जानश्रुतिररिंदमः ।। ६८ ।।
रैक्वं चोत्कर्षकाष्ठायां निशम्य परमावधिम् ।।
विषण्णोऽभवदत्यर्थं वराकोऽक्षजितो यथा ।। ६९ ।।
चिंतयामास स नृपः पौनःपुन्येन निःश्वसन् ।।
हंस उत्कर्षयन्रैक्वं निकृष्टं मामिहाब्रवीत् ।। ३.१.२६.७० ।।
अहो रैक्वस्य माहात्म्यं यं प्रशंसंति पक्षिणः ।।
तत्परित्यज्य संसारं सर्वं राज्यमिहाधुना ।। ७१ ।।
सयुग्वानं महात्मानं तमेव शरणं व्रजे ।।
कृपानिधिः स वै रैक्वः शरणं मामु पागतम् ।। ७२ ।।
प्रतिगृह्यात्मविज्ञानं मह्यं समुपदेक्ष्यति ।।
इत्यसौ चिंतयन्नेव कथंकथमपि द्विजाः ।। ७३ ।।
जाग्रन्नेवायमुद्वेलां रात्रिं तामत्यवाह यत् ।।
निशावसाने संप्राप्ते बंदिवृन्दप्रवर्तितम् ।। ७४ ।।
अशृणोन्मंगलरवं तूर्यघोषसमन्वितम् ।।
तदाकर्ण्य महाराजस्तदा तल्पस्थ एव सन् ।। ७५ ।।
सारथिं शीघ्रमाहूय बभाषे सादरं वचः ।।
सारथे सत्वरं गत्वा रथमारुह्य वेगवत् ।। ७६ ।।
आश्रमेषु महर्षीणां पुण्येषु विपिनेषु च ।।
विविक्तेषु प्रदेशेषु सतामावासभूमिषु ।। ७७ ।।
तीर्थानां च नदीनां च कूलेषु पुलिनेषु च ।।
अन्येषु च प्रदेशेषु यत्र संति मुनीश्वराः ।। ।। ७८ ।।
तेषु सर्वेषु योगींद्रं पंगुं शकटसंस्थितम् ।।
रैक्वाभिधानं सर्वेषां धर्माणामेकसंश्रयम् ।। ७९ ।।
ब्रह्मज्ञानैकनिलयं सयुग्वानं गवेषय ।।
अन्विष्य तूर्णं मत्प्रीत्यै पुनरागच्छ सारथे ।। ३.१.२६.८० ।।

स तथेति विनिर्गत्य वेगवद्रथसंस्थितः ।।
सर्वत्रान्वेषयामास रैक्वं ब्रह्मविदं मुनिम् ।। ८१ ।।
गुहासु पर्वतानां च मुनीनामाश्रमेषु च ।।
संचचार महीं कृत्स्नां तत्र तत्र गवेषयन् ।। ८२ ।।
अन्विष्य विविधान्देशान्सारथिस्त्वरया सह ।।
क्रमान्महर्षिसंबाधं गंधमादनमन्वगात् ।। ८३ ।।
मार्गमाणः स तत्रापि तं ददर्श मुनीश्वरम् ।।
कंडूयमानं पामानं शकटीयस्थलस्थि तम् ।। ८४ ।।
अद्वैतनिष्कलं ब्रह्म चिंतयंतं निरन्तरम् ।।
तं दृष्ट्वा सारथिस्तत्र सयुग्वानं महामुनिम् ।। ८५ ।।
रैक्वोऽयमिति संचिंत्य तमासाद्य प्रणम्य च ।।
विनयान्मुनिमप्राक्षीदुपविश्य तदन्तिके ।। ८६ ।।
सयुग्वान्रैक्वनामा च ब्रह्मन्किं वै भवानिति ।।
तस्य वाक्यं समाकर्ण्य स मुनिः प्रत्यभाषत ।। ८७ ।।
अहमेव सयुग्वान्वै रैक्वनामेति वै तदा ।।
इत्याकर्ण्य मुने र्वाक्यमिंगितैर्बहुभिस्तथा ।। ८८ ।।
कुटुम्बभरणार्थाय धनेच्छामवगम्य च ।।
सर्वं न्यवेदयद्राज्ञे निवृत्तो गंधमादनात् ।। ८९ ।।
जानश्रुतिर्निशम्याथ सारथेर्वाक्यमादरात् ।।
षट्शतानि गवां चापि निष्कभारं धनस्य च ।। 3.1.26.९० ।।
रथं चाश्वतरीयुक्तं समादाय त्वरान्वितः ।।
पौत्रायणः स राजर्षिस्तं रैक्वं प्रतिचक्रमे ।। ९१ ।।
गत्वा च वचनं प्राह तं रैक्वं स महीपतिः ।।
भगवन्रैक्व सयुग्वन्मद्दत्तं प्रतिगृह्यताम् ।। ९२ ।।
षट्शतानि गवां चापि निष्कभारं धनस्य च ।।
रथं चाश्वतरीयुक्तं प्रतिगृह्णीष्व मामकम् ।। ९३ ।।
गृहीत्वा सवमेतत्तु भो ब्रह्मन्ननुशाधि माम् ।।
अद्वैतब्रह्मविज्ञानं मह्यं समुपदिश्यताम् ।। ९४ ।।

इति तस्य वचः श्रुत्वा सस्पृहं च संसभ्रम् ।।
रैक्वः प्रत्याह सयुग्वाञ्जानश्रुतिमरिंदमम् ।। ।। ९५ ।।
।। रैक्व उवाच ।। ।।
एता गावस्तवैवास्तु निष्कभारस्तथा रथः ।।
किमल्पेन ममानेन बहुकल्पेषु जीवतः ।। ९६ ।।
न मे कुटुंब निर्वाहे पर्याप्तमिदमंजसा ।।
एवं शतगुणं चापि यदि दत्तं त्वया मम ।। ९७ ।।
नालं तदपि राजेंद्र कुटुंबभरणाय वै ।।
इति रैक्ववचः श्रुत्वा जानश्रुतिरभाषत ।। ९८ ।।
।। जानश्रुतिरुवाच ।। ।।
त्वयोपदिश्यमानस्य ब्रह्मज्ञानस्य वै मुने ।।
न हि मूल्यमिदं ब्रह्मन्गोधनं रथ एव च ।। ।। ९९ ।।
प्रतिगृह्णीष्व वा मा वा ममैतत्तु गवादिकम् ।।
निष्कलाद्वैतविज्ञानं ब्रह्मन्नुपदिशस्व मे ।।
तदाकर्ण्य वचस्तस्य सयुग्वान्वाक्य मब्रवीत् ।। 3.1.26.१०० ।।
।। रैक्व उवाच ।। ।।
निर्वेदो यस्य संसारे तथा वै पुण्यपापयोः ।। १०१ ।।
प्रारब्धयोर्विनाशश्च स वै ज्ञानोपदेशभाक् ।।
तव यद्यपि संसारे निर्वेदः समजायत ।। २ ।।
तथापि पुण्यपापानां न हि नाशो व्याजयत ।।
पुण्यपापौघसंघाश्च पुनर्जन्मनि हेतवः ।। ३ ।।
न हि भोगं विना तेषां नाशो भवति भूपते ।।
तन्नाशोपायमद्याहं तथापि प्रब्रवीमि ते ।। ४ ।।
यतो मां शरणं प्राप्तस्तच्छृणुष्व समाहितः ।।
अत्र तीर्थत्रयं पुण्यं वर्ततेऽभीष्टदायकम् ।। ५ ।।
मुमुक्षूणां हि सर्वेषां सर्वप्रारब्धनाशनम् ।।
एतद्धि यमुनातीर्थं गंगातीर्थं तथैव च ।। ६ ।।
गयातीर्थमिदं चापि तदेषु स्नाहि मा चिरम् ।।

सर्वप्रारब्धनाशः स्यात्तदा नैवात्र संशयः ।। ७ ।।

ततस्ते शुद्धचित्तस्य ज्ञानं चैव दिशाम्यहम् ।।

इत्युक्ते रैक्वमुनिना हर्षसंफुल्ललोचनः ।। ८ ।।

ससंभ्रममुपागम्य सस्नौ तीर्थत्रयेऽपि सः ।।

तत्तीर्थस्नानमात्रेण शुद्धचित्तोऽभवन्नृपः ।। ९ ।।

उपातिष्ठत राजासौ सयुग्वानं गुरुं पुनः ।।

सयुग्वा स च रैक्वोऽपि मुनींद्रैरपि दुर्लभम् ।। 3.1.26.११० ।।

तज्जानश्रुतये ज्ञानं कृपया समुपादिशत् ।।

तेनोपदिष्टमात्रे तु विज्ञाने ब्रह्मरूपिणि ।। ११ ।।

अबाधितानुभववानभवद्राजसत्तमः ।।

ब्रह्मरूपं गतस्यास्य प्रसादाद्रैक्वयोगिनः ।। १२ ।।

घटकुड्यकुसूलात्मा न प्रपंचस्समस्फुरत् ।।

निर्भिद्य सहसा मायामभूद्ब्रह्मैव केवलम् ।। १३ ।।

इत्थं तीर्थत्रये स्नानाज्जानश्रुतिरहो नृपः ।।

दुर्लभं योगिवृंदैश्च ब्रह्मभूयत्वमाप्तवान् ।। १४ ।।

एवं वः कथितं विप्रास्तत्तीर्थत्रयवैभवम् ।।

यस्त्विमं पठतेऽध्यायं तीर्थत्रितयवैभवम् ।। १५ ।।

निर्भिद्याज्ञानतिमिरं ब्रह्मभूयाय कल्पते ।। ११६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये यमुनागंगागयातीर्थप्रशंसायां जानश्रुति ज्ञानावाप्तिवर्णनंनाम षड्विंशोऽध्यायः ।। २६ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २७

https://sa.wikisource.org/s/fsr
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

यमुनायां च गंगायां गयायां च नरो मुदा ।।

स्नानं विधाय विधिवत्कोटितीर्थं ततो व्रजेत् ।। १ ।।

कोटितीर्थं महापुण्यं सर्वलोकेषु विश्रुतम् ।।

सर्वसंपत्करं शुद्धं सर्वपापप्रणाशनम् ।। २ ।।

दुःस्वप्ननाशनं ह्येतन्महापातकनाशनम् ।।

महाविघ्नप्रशमनं महाशांतिकरं नृणाम् ।। ३ ।।

स्मृतिमात्रेण यत्पुंसां सर्वपापनिषूदनम् ।।

लीलया धनुषः कोट्या स्वयं रामेण निर्मितम् ।। ४ ।।

पुरा दाशरथी रामो निहत्य युधि रावणम् ।।

ब्रह्महत्याविमोक्षाय गंधमादनपर्वते ।। ५ ।।

प्रातिष्ठिपल्लिंगमेकं लोकानुग्रहकाम्यया ।।

लिंगस्यास्याभिषेकाय शुद्धं वारि गवेषयन् ।। ६ ।।

नाविंदत जलं तत्र पार्श्वे दशरथात्मजः ।।

लिंगाभिषेकयोग्यं च जलं किमिति चिंतयन् ।। ७ ।।

नवेन वारिणा लिंगं स्नापनीयं मयेति सः ।।

निश्चित्य मनसा तत्र धनुष्कोट्या रघूद्वहः ।। ८ ।।

बिभेद धरणीं शीघ्रं मनसा जाह्नवीं स्मरन् ।।

रामकार्मुककोटिः सा तदा प्राप रसातलम् ।। ९ ।।

तत उद्धारयामास तद्धनुर्धन्विनां वरः ।।

धनुष्युद्ध्रियमाणे तु राघवेण महीतलात् ।। 3.1.27.१० ।।

काकुत्स्थेन स्मृता गंगा निर्ययौ विवरात्ततः ।।

वारिणा तेन तल्लिंगमभ्यषिंचद्रघूद्वहः ।। ११ ।।

रामकार्मु ककोट्यैव यतस्तन्निर्मितं पुरा ।।

अतः कोटिरिति ख्यातं तत्तीर्थं भुवनत्रये ।। १२ ।।

यानि यानीह तीर्थानि संति वै गंधमादने ।।

प्रथमं तेषु तीर्थेषु स्नात्वा विगतकल्मषः ।। १३ ।।

शेषपापविमोक्षाय स्नायात्कोटौ नरस्ततः ।।

तीर्थांतरेषु स्नानेन यः पापौघो न नश्यति ।। १४ ।।

अनेकजन्मकोटीभिरर्जितो ह्यस्थिसंस्थितः ।।

विनश्यति स सर्वोऽपि कोटिस्नानान्न संशयः ।। १५ ।।

यदि हि प्रथमं स्नायादत्र कोटौ नरो द्विजाः ।।

तस्य मुक्तस्य तीर्थानि व्यर्थान्येवापराणि हि ।। १६ ।।

।। ऋषय ऊचुः ।। ।।

सूत सर्वार्थतत्त्वज्ञ व्यासशिष्य मुनीश्वर ।।

अस्माकं संशयं कंचिच्छिंधि पौराणिकोत्तम ।। १७ ।।

कोटौ स्नातस्य मर्त्यस्य यदि तीर्थांतरं वृथा ।।

किमर्थं धर्मतीर्थादि तीर्थेषु स्नांति मानवाः ।।१८।।

तीर्थानि तानि सर्वाणि समतिक्रम्य मानवाः।।

अत्रैव कोटौ किं स्नानं न कुर्वंति हि तद्वद ।। १९ ।।

।। श्रीसूत उवाच ।। ।।

अहो रहस्यं युष्माभिः पृष्टमेतन्मुनीश्वराः ।।

नारदाय पुरा शंभुः पृच्छते यत्किलाब्रवीत् ।। 3.1.27.२० ।।

तद्ब्रवीमि मुनिश्रेष्ठाः शृणुध्वं श्रद्धया सह ।।

गच्छन्यदृच्छया वापि तीर्थयात्रापरोऽपि वा ।। २१ ।।

मार्गमध्ये द्विजश्रेष्ठास्तीर्थं देवालयं तथा ।।

दृष्ट्वा श्रुत्वापि वा मोहान्न सेवेत नराधमः ।। २२ ।।

निष्कृतिस्तस्य नास्तीति प्राब्रुवन्परमर्षयः ।।

सेतुं गच्छंस्ततोऽन्येषु न स्नायाद्यदि मानवः ।। २३ ।।

तीर्थातिक्रमदोषैः स बहिष्कार्योऽत्यवदद्विजैः ।।

अतः स्नातव्यमेवैषु चक्रतीर्थादिषु द्विजाः ।। २४ ।।

स्नात्वा चैतेषु तीर्थेषु शेषपापविमुक्तये ।।

प्रयतैर्मनुजैरत्र स्नातव्यं कोटितीर्थके ।। २५ ।।

कोटौ चाभि षवं कृत्वा न तिष्ठेद्गन्धमादने ।।

निवर्तेत्तत्क्षणादेव निष्पापो गंधमादनात् ।। २६ ।।

रामोऽपि हि पुरा कोटितीर्थसंभूतवारिणा ।।

रामनाथेऽभिषिक्ते तु स्वयं स्नात्वा च तत्र वै ।। २७ ।।

ब्रह्महत्याविमुक्तः संस्तत्क्षणादेव सानुजः ।।

आरूढपुष्पकोऽयोध्यां प्रययौ कपिभिर्वृतः ।। २८ ।।

अतः कोटौ नरः स्नात्वा पापशेषविमोचितः ।।

निवर्तेत्तत्क्षणादेव रामो दाशरथिर्यथा ।। २९ ।।

एतद्धि तीर्थप्रवरं सर्वलोकेषु विश्रुतम् ।।

रामनाथाभिषेकाय निर्मितं राघवेण यत् ।। 3.1.27.३० ।।

स्वयं भगवती यत्र सन्निधत्ते च जाह्नवी ।।

तारकब्रह्मणा यत्र रामेण स्नातमादरात् ।। ३१ ।।

तस्य वै कोटितीर्थस्य महिमा केन कथ्यताम् ।।

यत्र स्नात्वा पुरा कृष्णो लोकसंग्रहणेच्छया ।। ३२ ।।

मातुलस्य तु कंसस्य वधदोषाद्विमोचितः ।।

तस्य वै कोटितीर्थस्य महिमा केन कथ्यते ।। ३३ ।।

।। ऋषय ऊचुः ।। ।।

किमर्थमवधीत्कंसं मातुलं यदुनंदनः ।।

यद्दोषशांतये सूत सस्नौ कोटौ महा मनाः ।। ३४ ।।

।। श्रीसूत उवाच ।। ।।

वसुदेव इति ख्यातः शूरपुत्रो यदोः कुले ।।

आसीत्स देवकसुतां देवकीमिति विश्रुताम् ।। ३५ ।।

उद्वाह्य रथमारूढः स्वपुरं प्रस्थितः पुरा ।।

अथ सूतो बभूवाथ कंसो ह्यानकदुन्दुभेः ।। ३६ ।।

अशरीरा तदा वाणी कंसं सारथिमब्रवीत् ।।

भगिनीं च तथा भामं वाहयंतं रथोत्तमे ।। ३७ ।।

यामिमां वाहयस्यत्र रथेन त्वमरिंदम ।।

अस्यास्त्वामष्टमो गर्भो वधिष्यति न संशयः ।। ३८ ।।

इत्याकर्ण्य वचो दिव्यं कंसः खड्गं प्रगृह्य च ।।

स्वसारं हंतुमुद्योगं चकार द्विजपुंगवाः ।। ३९ ।।

ततः प्रोवाच तं कंसं वसुदेवः स सांत्वयन् ।। ।।

।। वसुदेव उवाच ।। ।।

अस्यां प्रसूतान्दास्यामि तुभ्यं कंस सुतानहम् ।। 3.1.27.४० ।।

एनां स्वसारं मा हिंसीर्नास्यास्ते भीतिरस्ति हि ।।

श्रुत्वा तद्वचनं कंसो निवृत्तस्तद्वधात्तदा ।। ४१ ।।

देवकीवसुदेवाभ्यां सहितः स्वपुरं ययौ ।।

पादावसक्तनिगडौ देवकीवसुदेवकौ ।। ४२ ।।

स्थापयामास दुष्टात्मा कंसः कारागृहे तदा ।।

ततः कालेन महता वसुदेवाद्धि देवकी ।। ४३ ।।

षट्पुत्राञ्जनयामास क्रमेण मुनिपुंगवाः ।।

जातांस्तान्वसुदेवेन दत्तान्कंसोऽपि सोऽवधीत् ।। ४४ ।।

हतेषु षटसु पुत्रेषु देवक्युदरजन्मसु ।।

कंसेन क्रूरमतिना निष्कृपेण द्विजोत्तमाः ।। ४५ ।।

शेषोऽभूत्सप्तमो गर्भो देवक्या जठरे तदा ।।

मायादेवी ततो गर्भं तं वै विष्णुप्रचोदिता ।। ४६ ।।

नंदगोपगृहस्थायां रोहिण्यां समवेशयत् ।।

देवक्याः सप्तमो गर्भः पतितो जठरादिति ।। ४७ ।।

लोके प्रसिद्धिरभवन्महती विष्णुलीलया ।।

देवकीजठरे पश्चाद्विष्णुर्गर्भत्वमाप्तवान् ।। ४८ ।।

ततो दशसु मासेषु गतेषु हरिरव्ययः ।।

देवकीजठराज्जज्ञे कृष्ण इत्यभिविश्रुतः ।। ४९ ।।

शंखचक्रगदाखड्गविराजितचतुर्भुजः ।।

किरीटी वनमाली च पित्रोः शोकविनाशनः ।। 3.1.27.५० ।।

तं दृष्ट्वा हरिमीशानं तुष्टावानकदुंदुभिः ।। ५१ ।।

।। वसुदेव उवाच ।। ।।

विश्वं भवा न्विश्वपतिस्त्वमेव विश्वस्य योनिस्त्वयि विश्वमास्ते ।।

महान्प्रधानश्च विराट स्वराड् च सम्राडसि त्वं भगवन्समस्तम् ।। ५२ ।।

एवं जगत्कारणभूतधाम्ने नारायणायामितविक्रमाय ।।

श्रीशार्ङ्गचक्रासिगदाधराय नमोनमः कृत्रिममानुषाय ।। ५३ ।।

स्तुवन्तमेवं शौरिं तं वसुदेवं हरिस्तदा ।।

अवोचत्प्रीणयंस्तं च देवकीं च द्विजोत्तमाः ।। ५४ ।।

।। हरिरुवाच ।। ।।

अहं कंसं वधिष्यामि मा भीर्वां पितराविति ।।

नन्दगोपस्य गृहिणी यशोदाऽजनयत्सुताम् ।।

मम मायां पूर्वदिने सर्वलोकविमोहिनीम् ।। ५५ ।।

मां तस्याः शयने न्यस्य यशोदायाः सुता तु ताम्।।

आदाय देवकीशय्यां प्रापयस्व यदूत्तम ।। ५६ ।।

एवमुक्तः स कृष्णेन तथैव ह्यकरोद्द्विजाः ।।

रुरोद माया तनया देवकीशयनेस्थिता ।। ५७ ।।

अथ बालध्वनिं श्रुत्वा कंसः संकुलमानसः ।।

सूतिकागृहमागम्य तामादाय च दारिकाम्।।५८।।

शिलायां पोथयामास निर्दयो निरपत्रपः ।।

अथ तद्धस्तमाच्छिद्य सायुधाष्टमहाभुजा ।।

महादेव्यब्रवीत्कंसं समाहूयातिकोपना ।। ५९ ।।

।। मायोवाच ।। ।।

अरे रे कंस पापात्मन्दुर्बुद्धे मूढचेतन ।। 3.1.27.६० ।।

यत्र कुत्रापि शत्रुस्ते वर्तते प्राणहारकः ।।

मार्गयस्वात्मनो मृत्युं तं शत्रुं कंस मा चिरम् ।। ६१ ।।

इतीरयित्वा सा देवी दिव्यस्थानान्यवाप्य च ।।

लब्धपूजा मनुष्येभ्यो बभूवाभीष्टदायिनी ।। ६२ ।।

श्रुत्वा स देवीवचनं कंसो ऽपि भृशमाकुलः ।।

बालग्रहान्पूतनादीन्स्वांतकं बाधितुं रिपुम् ।। ६३ ।।

प्रेषयामास देशेषु शिशूनन्यांश्च बाधितुम्।।

ते च बालग्रहाः सर्वे प्रययु र्नंदगोकुलम् ।। ६४ ।।

हताश्च कृष्णेन तदा प्रययुर्यमसादनम् ।।

ततः कतिपयाहस्सु गतेषु द्विजपुंगवाः ।। ६५ ।।

रामकृष्णौ व्यवर्द्धेतां गोकुले बालकौ तदा ।।

अनेकबालक्रीडाभिश्चिक्रीडतुररिंदमौ ।। ६६ ।।

कंचित्कालं वत्सपालौ वेणुनादमकुर्वताम् ।।

कंचित्कालं च गोपालौ गुंजातापि च्छभूषितौ ।। ६७ ।।

रेमाते बहुकालं तौ गोकुले रामकेशवौ ।।

कंसः कदाचिदक्रूरं गोकुले रामकेशवौ ।। ६८ ।।

प्रेषयामास विप्रेंद्राः समानयितुमं जसा ।।

आनयामास चाक्रूरो रामकृष्णौ स गोकुलात् ।। ६९ ।।

मथुरां कंसनिर्देशात्स्वर्णतोरणराजिताम् ।।3.1.27.७०।।

ततः समानीय स रामकेशवौ ययौ पुरीं गांदिनिजस्तदग्रे ।।

दृष्ट्वा च कंसं विनिवेद्य कार्यं तस्मै स्वगेहं प्रविवेश पश्चात् ।।७१।।

अथापराह्ने वसुदेवपुत्रावन्येद्युरिष्टैः सह गोपपुत्रैः ।।

उपेयतुः सालनिखातयुक्तां संगोपुराट्टां मधुरापुरीं तौ ।। ७२ ।।

स्तोत्राणि शृण्वन्पुरयौवतानां कृष्णस्तु रामेण सहैव गत्वा ।।

धनुर्निवेशं सह सैव तत्र ददर्श चापं च महदृढज्यम् ।। ७३ ।।

विद्राव्य सर्वानपि चापपालान्धनुः समादाय स लीलयाऽऽशु ।।

मौर्व्या नियोक्तुं नमयांचकार तदं तरे भग्नमभूद्विधैव ।। ७४ ।।

कोदंडभंगोत्थितशब्दमाशु श्रुत्वाभियातान्बलिनो निहंतुम् ।।

निजघ्नतुस्तौ प्रतिगृह्य खंडौ चापस्य पालान्बलिनौ द्विजेंद्रा ।। ७५ ।।

ततः कुवलयापीडं गजं द्वारि स्थितं क्षणात् ।।

निहत्य रामकृष्णौ तौ महाबलपराक्रमौ ।। ७६ ।।

तस्य दंतौ समुत्पाट्य दधानौ करयोर्द्वयोः ।।

अंसे निधाय तौ दंतौ रंगं प्रययतुः क्षणात् ।। ७७ ।।

निहत्य मल्लं चाणूरं मुष्टिकं तोशलं तथा ।।

अन्यांश्च मल्लप्रवरान्निन्यतुर्यमसा दनम् ।।७८।।

समारुरुहतुस्तूर्णं तुंगं मंचं च तौ तदा ।।
तत्र तुंगे समासीनमासने कंसमेत्य तौ ।।
तस्थतुस्तं तृणीकृत्य सिंहौ क्षुद्रमृगं यथा ।।७९।।
ततः कंसं समाकृष्य कृष्णो मंचोपरि स्थितम् ।।
पादौ गृहीत्वा वेगेन भ्रामयामास चांबरे ।। 3.1.27.८० ।।
ततस्तं पोथयामास स भूमौ गत जीवितम् ।।
कंसभ्रातॄन्बलोऽप्यष्टौ निजघ्ने मुष्टिना द्विजाः ।। ८१ ।।
एवं निहत्य तं कंसं कृष्णः परबलार्दनः ।।
पितरौ मोचयामास निगडादति दुःखितौ ।। ८२ ।।
सर्वानास्थापयामास बलेन सह माधवः ।।
श्रीकृष्णेन हतं कंसं श्रुत्वा प्रापुः पुरीं तदा ।। ८३ ।।
बांधवा मथुरायां ये पूर्वं कंसे न बाधिताः ।।
उग्रसेनं तथा राज्ये स्थापयामास केशवः ।। ८४ ।।
असहिष्णुर्द्विजाः पित्रोरेवं कंसकृतागसम् ।।
जघान मातुलं कंसं देवब्राह्मणकंट कम् ।। ८५ ।।
ततः कदाचिकृष्णोऽयमात्मानं द्रष्टुमागतान् ।।
नारदादीन्मुनीन्सर्वानिदं पप्रच्छ सत्तमः ।। ८६ ।।
।। श्रीकृष्ण उवाच ।। ।।
मयाऽयं मातुलो विप्रा हतः कंसोऽतिपापकृत् ।।
मातुलस्य वधे दोषः प्रोच्यते शास्त्रवित्तमैः।। ८७ ।।
प्रायश्चित्तमतो ब्रूत तद्दोषविनिवृत्तये ।।
अवोचन्नारदस्तत्र कृष्णमद्भुतविक्रमम् ।।
वाचा मधुरया विप्रा भक्तिप्रणयपूर्वकम् ।। ८८ ।।
।। नारद उवाच ।। ।।
नित्यशुद्धश्च मुक्तश्च भद्रश्चैव भवा न्सदा ।। ८९ ।।
सच्चिदानंदरूपश्च परमात्मा सनातनः ।।
पुण्यं पापं च ते नास्ति कृष्ण यादवनंदन ।। 3.1.27.९० ।।
तथापि लोकशिक्षार्थं भवता गरु डध्वज ।।

प्रायश्चित्तं तु कर्तव्यं विधिनानेन माधव ।। ९१ ।।

लोकसंग्रहणं तावत्कर्तव्यं भवताधुना ।।

रामसेतौ महापुण्ये गंधमादनपर्वते ।। ९२ ।।

रामेण स्थापितं लिंगं रामनाथाभिधं पुरा ।।

तस्याभिषेकतोयार्थं धनुष्कोट्या रघूद्वहः ।। ९३ ।।

गां भित्त्वोत्पादयामास तीर्थं कोटीति विश्रुतम् ।।

तव पूर्वावतारेण रामेणाक्लिष्टकर्मणा ।। ९४ ।।

ब्रह्महत्याविशुद्ध्यर्थं निर्मितं स्वयमेव यत् ।।

तत्र स्नानं कुरुष्व त्वं धर्म्ये पापविनाशने ।। ९५ ।।

तेन ते मातुलवधाद्दोषः शीघ्रं विनंक्ष्यति ।।

कोटितीर्थे हरेः स्नानं ब्रह्महत्यादिशोधकम् ।। ९६ ।।

स्वर्गमोक्षप्रदं पुंसामायुरारोग्यवर्धनम् ।।

इति श्रुत्वा मुनेर्वाक्यं नारदस्य स माधवः ।। ९७ ।।

विसृज्य तानृषीन्सर्वांस्तस्मिन्नेव क्षणे द्विजाः ।।

रामसेतौ ययौ तूर्णं स्वदोषपरि शुद्धये ।। ९८ ।।

दिनैः कतिपयैर्गत्वा कोटितीर्थं यदूद्वहः ।।

स्नात्वा संकल्पपूर्वं च दत्त्वा दानान्यनेकशः ।। ९९ ।।

स मातुलवधोत्पन्नदोषेभ्यो मुमु चे क्षणात् ।।

निषेव्य रामनाथं च स्वपुरं मथुरां ययौ ।। 3.1.27.१०० ।।

।। श्रीसूत उवाच ।। ।।

एवं प्रभावं पुण्यं च कोटितीर्थं मुनीश्वराः ।।

ब्रह्महत्यादिभिः पापैः सद्यो मुच्येत मानवः ।।

नानेन सदृशं तीर्थमन्यदस्ति महीतले ।। १ ।।

अत्र स्नानात्त्रयो देवा ब्रह्मविष्णुशिवा द्विजाः ।।

प्रीताः स्युरन्ये देवाश्च नात्र कार्या विचारणा ।। २ ।।

एवं वः कथितं चित्रं कोटितीर्थस्य वैभवम् ।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ।। ३ ।।

श्रुत्वेमं पुण्यमध्यायं पठित्वा च मुनीश्वराः ।।

ब्रह्महत्यादिभिः सत्यं मुच्यते पातकैर्नरः ।। १०४ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये कोटितीर्थप्रशंसायां कृष्णस्य मातुलवधदोषशांतिवर्णनंनाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २८



।। श्रीसूत उवाच ।। ।।

कोटितीर्थं महापुण्यं सेवित्वा केवलं नरः ।।

स्नातुं जितेंद्रियस्तीर्थं ततः साध्यामृतं व्रजेत् ।। १ ।।

साध्यामृतं महातीर्थ महापुण्यफलप्रदम् ।।

महादुःखप्रशमनं गन्धमादनपर्वते ।। २ ।।

अस्ति पापहरं पुंसां सर्वाभीष्टप्रदायकम् ।।

यत्र स्नात्वा नरो भक्त्या सर्वान्कामानवाप्नुयात् ।। ३ ।।

तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ।।

गतिं तां न लभेन्मर्त्यो यां साध्यामृतमज्जनात् ।। ४ ।।

स्पृष्टानि येषामंगानि साध्यामृतजलैः शुभैः ।।

तेषां देहगतं पापं तत्क्षणादेव नश्यति ।। ५ ।।

साध्यामृतजले यस्तु साघमर्षणकृन्नरः ।।

स विधूयेह पापानि विष्णुलोके महीयते ।। ६ ।।

पूर्वे वयसि पापानि कृत्वा कर्माणि यो नरः ।।

पश्चात्साध्यामृतं सेवेत्पश्चात्तापसमन्वितः ।। ७ ।।

अन्ते वयसि मुक्तः स्यात्स नरो नात्र संशयः ।।

साध्यामृते नरः स्नात्वा देहबंधाद्विमुच्यते ।। ८ ।।

साध्यामृतजले स्नाता मनुष्याः पापक र्मिणः ।।

अनेकक्लेशघोराणि नरकाणि न यांति हि ।। ९ ।।

साध्यामृतजले स्नानात्पुंसां या स्याद्गतिर्द्विजाः ।।

न सा गतिर्भवेद्यज्ञैर्न वेदैः पुण्यकर्मभिः ।। 3.1.28.१० ।।

यावदस्थि मनुष्याणां साध्यामृतजले स्थितम् ।।

तावद्वर्षाणि तिष्ठंति शिवलोके सुपूजिताः ।। ११ ।।

अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।।

तथा साध्यामृतस्नायी भित्त्वा पापानि राजते ।। १२ ।।
वांछिताँल्लभते कामानत्र स्नातो नरः सदा ।।
यत्र स्नात्वा महापुण्ये पुरा राजा पुरूरवाः ।।
विप्रयोगं सहोर्वश्या जहौ तुंबुरुशापजम् ।। १३ ।।
।। ऋषय ऊचुः ।। ।।
कथं सूत महाभाग सहोर्वश्यामरस्त्रिया ।। १४ ।।
प्रथमं लब्धवान्योगं मर्त्यो राजा पुरूरवाः ।।
विप्रयोगं सहोर्वश्या जहौ तुंबुरुशापजम् ।। १५ ।।
हेतुना केन राजानं शशाप तुंबुरुर्मुनिः ।।
एतत्सर्वं समाचक्ष्व विस्तरान्मुनिपुंगव ।। १६ ।।
।। सूत उवाच ।। ।।
आसीत्पुरूरवानाम शक्रतुल्यपराक्रमः ।।
राजराजसमो राजा पुरा ह्यमरपूजितः ।। १७ ।।
धर्मतः पालयामास मेदिनीं स नृपोत्तमः ।।
ईजे च बहुभिर्यज्ञैर्ददौ दानानि सर्वदा ।। १८ ।।
प्रशासति महीं सर्वां राज्ञि तस्मिन्महामतौ ।।
मित्रावरुणशापेन भुवं प्रापोर्वशी द्विजाः ।। १९ ।।
सा चचारोर्वशी तत्र राज्ञस्तस्य पुरांतिके ।।
कोकिलालापमधुरवीणयोपवने जगौ ।। 3.1.28.२० ।।
स राजोपवने रंतुं कदाचिद्धृतकौतुकः ।।
आरूढतुरगः प्रायाल्ललनाशतसंवृतः ।। २१ ।।
तादृशीमुर्वशीं तत्र करसम्मितमध्यमाम् ।।
उवाच चैनां राजासौ भार्या मम भवेति वै ।। २२ ।।
सापि कामातुरा तत्र राजानं प्रत्यभाषत ।।
भवत्वेवं नरश्रेष्ठ समयं यदि मे भवान् ।। २३ ।।
करिष्यति तवाभ्याशे वत्स्यामि धृतकौतुका ।।
करिष्ये समयं सुभ्रु तवाहमिति सोऽब्रवीत् ।। २४ ।।
अथोर्वशी बभाषे तं पुरूरवसमुत्सुका ।।

पुत्रभूतं मम यदि रक्षस्युरणकद्वयम् ।। २५ ।।

न नग्नो दृश्यसे राजन्कदापि यदि वै तथा ।।

नोच्छिष्टं मम दद्याश्चेत्तदा वत्स्ये तवांतिके ।। २६ ।।

घृतमात्राशना चाहं भविष्यामि नृपोत्तम ।।

एवमस्त्विवति राजोक्तां तां निनाय निजं गृहम् ।। २७ ।।

अलकायां स भूपालस्तथा चैत्ररथे वने ।।

रेमे सरस्वतीतीरे पद्मखण्डमनोरमे ।। २८ ।।

एकषष्टिं स वर्षाणि रममाणस्तयानयत् ।।

तेनोर्वशी प्रतिदिनं वर्धमानानुरागिणी ।। २९ ।।

स्पृहां न देवलोकेऽपि चकार तनुमध्यमा ।।

नाभवद्रमणीयोऽसौ देवलोकस्तया विना ।। 3.1.28.३० ।।

अतस्तामानयिष्यामि देवलोकमिति द्विजाः ।।

विश्वावसुर्विचार्यैवं भूर्लोकमगमत्क्षणात् ।। ३१ ।।

उर्वश्याः समयं राज्ञा विश्वावसुरयं सह ।।

विदित्वा सह गन्धर्वैः समवेतो निशांतरे ।। ३२ ।।

उर्वश्याः शयनाभ्याशाज्जग्राहोरणकं जवात् ।।

आकाशे नीयमानस्य तस्य श्रुत्वोर्वशी पतिम् ।।३३।।

अब्रवीन्मत्सुतः केन गृह्यते त्यज्यतामयम् ।।

अनाथा शरणं यामि कं नरं गतचेतना।।३४।।

पुरूरवाः समाकर्ण्य वाक्यं तस्या निशांतरे ।।

मां न नग्नं निरीक्षेत देवीति न ययौ तदा ।। ३५ ।।

अथान्यमप्युरणकं गन्धर्वाः प्रतिगृह्य ते ।।

ययुस्तस्योरणस्यापि शब्दं शुश्राव चोर्वशी ।। ३६ ।।

अनाथाया मम सुतो गृह्यते तस्करैरिति ।।

चुक्रोश देवी परुषं कं यामि शरणं नरम् ।। ३७ ।।

अमर्षवशमापन्नः श्रुत्वा तद्वचनं नृपः ।।

तिमिरेणावृतं सर्वमिति मत्त्वा स खड्गधृक् ।। ३८ ।।

दुष्टदुष्ट कुतो यासीत्यभ्यधावद्वचो वदन् ।।

तावत्सौदामिनी दीप्ता गन्ध वैर्जनिता भृशम् ।। ३९ ।।

तत्प्रभामंडलैर्देवी राजानं विगतांबरम् ।।

दृष्ट्वा निवृत्तसमया तत्क्षणादेव निर्ययौ ।। 3.1.28.४० ।।

त्यक्त्वा ह्युरणकौ तत्र गंधर्वा अपि निर्ययुः ।।

राजा मेषौ समादाय हृष्टः स्वशयनांतिकम् ।। ४१ ।।

आगतो नोर्वशीं तत्र ददर्शायतलोचनाम् ।।

तां चापश्यन्विवस्त्रश्च बभ्रामोन्मत्तवद्भुवि ।। ४२ ।।

कुरुक्षेत्रं गतो राजा तटाके पद्मसंकुले ।।

चतुर्भिरप्सरस्त्रीभिः क्रीडमाना ददर्श ताम्।। ४३ ।।

हे जाये तिष्ठ मनसा घोरेति व्याहरन्मुहुः ।।

एवं बहुप्रकारं वै स सूक्तं प्रालपन्नृपः ।। ४४ ।।

अब्रवीदुर्वशी तं च क्रीडती साप्सरोगणैः ।।

महाराजालमेतेन चेष्टितेन तवानघ ।। ४५ ।।

त्वत्तो गर्भिण्यहं पूर्वमब्दांते भवतात्र वै ।।

आगंतव्यं कुमारस्ते भविष्यत्यतिधार्मिकः ।। ४६ ।।

एकां विभावरीं राजंस्त्वया वत्स्यामि वै तदा ।।

इत्युक्तो नृपतिर्हृष्टः स्वपुरीं प्राविशद्द्विजाः ।। ४७।।

तासामप्सरसां सा तु कथयामास तं नृपम् ।।

अयं स पुरुषश्रेष्ठो येनाहं कामरूपिणा ।। ४८ ।।

एतावंतं महाकालमनुरागवशातुरा ।।

उषितास्मि सहानेन सख्यो नृपतिना चिरम् ।। ४९ ।।

एवमुक्तास्ततः सख्यस्तामूचुः साधुसाध्विति ।।

अनेन साकमास्यामः सर्वकालं वयं सखि ।। 3.1.28.५० ।।

इत्यूचुरुर्वशीं तत्र सखीमप्सरसस्तदा ।।

अब्देऽथ पूर्णे राजापि तटाकांति कमाययौ ।। ५१ ।।

आगतं नृपतिं दृष्ट्वा पुरूरवसमुर्वशी ।।

कुमारमायुषं तस्मै ददौ संप्रीतमानसा ।। ५२ ।।

तेन साकं निशामेकामुषिता सानु रागिणी ।।

पंचपुत्रप्रदं गर्भं तस्मादापाशु सोर्वशी ।। ५३ ।।

उवाच चैनं राजानमुर्वशी परमांगना ।।

वरं दास्यंति गन्धर्वा मत्प्रीत्या तव भूपते ।। ५४ ।।

भवतां प्राथ्र्यतां तेभ्यो वरो राजर्षिसत्तम ।।

इत्युक्तः स तया राजा प्राह गन्धर्वसत्तमान् ।। ५५ ।।

अहं संपूर्णकोशश्च विजिताराति मंडलः ।।

सलोकतां विनोर्वश्याः प्राप्तव्यं नान्यदस्ति मे ।। ५६ ।।

अतस्तया सहोर्वश्या कालं नेतुमहं वृणे ।।

एवमुक्ते नृपेणाथ गन्धर्वास्तुष्ट मानसाः ।।

अग्निस्थालीं प्रदायास्मै प्रोचुश्चैनं नृपं तदा ।। ५७ ।।

।। गन्धर्वा ऊचुः ।। ।।

अग्निं वेदानुसारी त्वं त्रिधा कृत्वा नृपोत्तम ।। ५८ ।।

इष्ट्वा यज्ञेन चोर्वश्याः सालोक्यं याहि भूपते ।।

इतीरितस्तैरादाय स्थालीमग्नेर्ययौ नृपः ।। ५९ ।।

अहो बतातिमूढोहमिति मध्ये वनं नृपः ।।

उर्वशी न मया लब्धा वह्निस्थाल्या तु किं फलम् ।। 3.1.28.६० ।।

निधायैव वने स्थालीं स्वपुरं प्रययौ नृपः ।।

अर्धरात्रे व्यतीतेऽसौ विनिद्रोऽचिंतयत्स्वयम् ।। ६१ ।।

उर्वशीलोकसिद्ध्यर्थं मम गन्धर्वपुंगवैः ।।

अग्निस्थाली संप्रदत्ता सा च त्यक्ता मया वने ।। ६२।।

आहरिष्ये पुनः स्थालीमित्युत्थाय ययौ वनम् ।।

नाग्निस्थालीं ददर्शासौ वने तत्र पुरूरवाः ।। ६३ ।।

शमीगर्भमथाश्वत्थमग्निस्थाने विलोक्य सः ।।

व्यचिंतयन्मया स्थाली निक्षिप्तात्र वने पुरा ।। ६४ ।।

सा चाश्वत्थः शमीगर्भः समभूदधुना त्विह ।।

तस्मादेनं समादाय वह्निरूपमहं पुरम्।। ।। ६५ ।।

गत्वा कृत्वारणीं सम्यक्तदुत्पन्नाग्निमादरात् ।।

उपास्यामीति निश्चित्य स्वपुरं गतवान्नृपः ।। ६६ ।।

रमणीयारणीं चक्रे स्वांगुलैः प्रमिता मसौ ।।

निर्माणसमये राजा गायत्रीमजपद्द्विजाः ।। ६७ ।।

गायत्र्याः पठ्यमानाया यानि संत्यक्षराणि हि ।।

तावदंगुलिमर्यादामकरोदरणीं नृपः ।। ६८ ।।

तत्र निर्मथनादग्नित्रयमुत्पाद्य भूपतिः ।।

उर्वशीलोकसंप्राप्तिफलमुद्दिश्य कांक्षितम् ।। ६९ ।।

वेदानुसारी नृपतिर्जुहावाग्नित्रयं मुदा ।।

तेनैव चाग्निविधिना बहून्यज्ञानथातनोत्।।3.1.28.७०।।।

तेन गन्धर्वलोकांश्च संप्राप्य जगतीपतिः।।

सहोर्वश्या चिरं रेमे देवलोके द्विजोत्तमाः।।७१।।

अथ सर्वामरोपेतः कदाचिद्बलवृत्रहा।।

नृत्यं सुरांगनानां वै व्यलोकयत संसदि।।७२।।

पुरूरवा नृपोप्यायात्तदा देवेंद्रसंसदम् ।।

द्रष्टुं सुरांगनानृत्यं मनोहारि दिवौकसाम् ।। ७३ ।।

एकैकशस्ताः शक्रस्य ननृतुः पुरतोंऽगनाः ।।

अथोर्वशी समागत्य ननर्त पुरतो हरेः ।। ७४ ।।

नृत्ताभिनयसामर्थ्यगर्वयुक्ता तदोर्वशी ।।

तं पुरूरवसं दृष्ट्वा जहासातिमनोहरा ।। ७५ ।।

जहास तत्र राजापि तां विलोक्य तदोर्वशीम् ।।

हाससंकुपितस्तत्र नाट्याचार्योऽथ तुंबुरुः ।।

शशाप तावुभौ कोपादुर्वशीं च नृपोत्तमम् ।। ७६ ।। ।।

।। तुंबुरुरुवाच ।। ।।

अनेकदेवसंपूर्णसभायामत्र यत्कृतम् ।। ७७ ।।

युवाभ्यां हसितं नृत्तमध्ये निष्कारणं वृथा ।।

तस्माज्झटिति राजेंद्र वियोगो युवयोः क्षणात् ।। ७८ ।।

भूयादिति शशापैनं सर्वदैवतसंनिधौ ।।

अथ शप्तो नृपस्तत्र नाट्याचार्येण दुःखितः ।। ७९ ।।

जगाम शरणं तत्र पाहिपाहीति वज्रिणम् ।।

उवाच दीनया वाचा पुरुहूतं पुरूरवाः ।। 3.1.28.८० ।।

उर्वश्या सह सालोक्यसिद्ध्यर्थमहमिष्टवान् ।।

अतस्तस्मा वियोगो मेऽसह्यः स्यात्पाकशासन ।। ८१ ।।

इत्युक्तवंतं तं प्राह सहस्राक्षः शचीपतिः ।।

शापमोक्षं प्रवक्ष्यामि मा भैषीस्त्वं नृपोत्तम ।। ८२ ।।

दक्षिणांभोनिधौ पुण्ये गंधमादनपर्वते ।।

साध्यामृतमिति ख्यातं तीर्थमस्ति महत्तरम् ।। ८३ ।।

सेवितं सर्वदेवैश्च सिद्धचारणकिन्नरैः ।।

सनकादि महायोगिमुनिवृंदनिषेवितम् ।। ८४ ।।

भुक्तिमुक्तिप्रदं पुंसां सर्वशापविमोक्षदम् ।।

अस्ति तीर्थं भवांस्तत्र गच्छस्व त्वरया नृप ।। ८५ ।।

सर्वेषाममृतं स्नानादत्र साध्यं यतस्ततः ।।

साध्यामृतमिति ख्यातं सर्वलोकेषु विश्रुतम् ।। ८६ ।।

तत्र स्नानात्तवोर्वश्याः पुनर्योगो भविष्यति ।।

मम लोके निवासश्च भविष्यति न संशयः ।। ८७ ।।

इति प्रतिसमादिष्टो नृपः संप्रीतमानसः ।।

साध्यामृतं महातीर्थं समुद्दिश्य ययौ क्षणात् ।। ८८ ।।

सस्नौ साध्यामृते तत्र महापातकनाशने ।।

तत्र स्नानान्नृपो विप्राः सद्यः शापेन मोचितः ।। ८९ ।।

स्नानानंतरमेवासावुर्वश्या सह संगतः ।।

तया सह विमानस्थः प्रययावमरावतीम् ।। 3.1.28.९० ।।

रेमे पुनस्तया सार्धं देववद्देवमंदिरे ।।

एवंप्रभावं तत्तीर्थं साध्यामृतमनुत्तमम् ।। ९१ ।।

पुरूरवा सहोर्वश्या यत्र स्नानेन संगतः ।।

अतोऽत्र तीर्थे यः स्नायान्महापातकनाशने ।। ९२।।

वांछिताँल्लभते कामान्यास्यति स्वर्गमुत्तमम् ।।

निष्कामः स्नाति चेद्वि प्रा मोक्षमाप्नोति मानवः ।।९३।।

इमं पवित्रं पापघ्नमध्यायं पठते तु यः।।

शृणुयाद्वा मनुष्योऽसौ वैकुंठे लभते स्थितिम् ।।९४।।

एवं वः कथितं विप्रा वैभवं पापनाशनम् ।।

साध्यामृतस्य तीर्थस्य विस्तराच्छ्रद्धया मया ।। ९५ ।।

यत्पुरा सनकादिभ्यः प्रोक्तवांश्चतुराननः ।। ९६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये साध्यामृततीर्थप्रशंसायां पुरूरवःशापविमोक्षणवर्णनंनामाष्टाविंशो अध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः २९

https://sa.wikisource.org/s/fst
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

स्नात्वा साध्यामृते तीर्थे नृपशापविमोक्षणे ।।

सर्वतीर्थं ततो गच्छेन्मनुजो नियमान्वितः ।। १ ।।

सर्वतीर्थं महापुण्यं महापातकनाशनम् ।।

महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।। २ ।।

शुद्ध्येत तत्क्षणादेव सवर्तीर्थनिमज्जनात् ।।

तावत्सर्वाणि पापानि देहे तिष्ठंति सुव्रताः ।। ३ ।।

न यावत्सर्वतीर्थेस्मिन्निमज्जेत्पापपूरुषः ।१

स्नानार्थं सर्वतीर्थेऽस्मिन्दृष्ट्वा यांतं द्विजा नरम्।। ४ ।।

वेपंते सर्वपापानि नाशोऽस्माकं भवेदिति ।।

गर्भवासादिदुःखानि तावद्याति नरो भुवि ।। ५ ।।

न स्नायात्सर्वतीर्थेऽस्मिन्यावद्ब्राह्मणपुंगवाः।।

अनुष्ठितैर्महायागैस्तथा तीर्थनिषेवणैः ।। ६ ।।

गायत्र्यादिमहामंत्रजपैर्नियमपूर्वकम् ।।

चतुर्णामपि वेदानामावृत्त्या शतसंख्यया ।। ७ ।।

शिवविष्ण्वादिदेवानां पूजया भक्ति पूर्वकम् ।।

एकादश्यादितिथिषु तथैवानशनेन च।।

यत्फलं लभते मर्त्यस्तल्लभेदत्र मज्जनात् ।। ८ ।।

।। ऋषय ऊचुः ।। ।।

सर्वतीर्थमिति ख्यातिः सूतास्य कथमागता ।।

ब्रूह्यस्माकमिदं पुण्यं विस्तराच्छृण्वतां मुने ।। ९ ।।

।। श्रीसूत उवाच ।। ।।

पुरा सुचरितोनाम मुनिर्नियमसंयुतः ।। ।। 3.1.29.१० ।।

भृगुवंशसमुद्भूतो जात्यंधो जरयातुरः ।।

अशक्तस्तीर्थयात्रायां नेत्राभावेन स द्विजाः ।। ११ ।।

सर्वेषामेव तीर्थानां स्नातुकामो महामु निः ।।

दक्षिणांबुनिधौ पुण्यं गंधमादनपर्वतम् ।। १२ ।।

गत्वा शंकरमुद्दिश्य तपस्तेपे सुदुष्करम् ।।

त्रिकालमर्चयञ्छंभुमुपवासी जितेंद्रियः ।।१३।।

तथा त्रिषवणस्नानात्तथैवातिथिपूजकः ।।

शिशिरे जलमध्यस्थो ग्रीष्मे पंचाग्निमध्यगः ।। १४ ।।

वर्षास्वासारसहन अब्भक्षो वायुभोजनः ।।

उद्धूलनं त्रिपुंड्रं च भस्मना धारयन्सदा ।। १५ ।।

जाबालोपनिषद्रीत्या तथा रुद्राक्षधारकः ।।

एवमुग्रं तपश्चक्रे दशसंवत्सरं द्विजः ।। १६ ।।

तपसा तस्य संतुष्टः शंकरश्चंद्रशेखरः ।।

प्रादुरासीन्मुनेस्तस्य द्विजाः सुचरितस्य वै ।। १७ ।।

समारुह्य महोक्षाणं भूतवृंदनिषेवितः ।।

गिरिजार्ध वपुः शूली सूर्यकोटिसमप्रभः ।। १८ ।।

स्वभासा भासयन्सर्वा दिशो वितिमिरास्तदा ।।

भस्मपांडुरसर्वांगो जटामंडलमंडितः ।। १९ ।।

अनंता दिमहानागविभूषणविभूषितः ।।

प्रादुर्भूतस्ततः शंभुः प्रादात्तस्य विलोचने ।। 3.1.29.२० ।।

आत्मावलोकनार्थाय शंकरो गिरिजापतिः ।।

ततः सुचरितो विप्राः शंभुना दत्तदृग्द्वयः ।।

आलोक्य परमेशानं प्रतुष्टाव प्रसन्नधीः ।। २१ ।।

।। सुचरित उवाच ।। ।।

जय देव महेशान जय शंकर धूर्जटे ।। २२ ।।

जय ब्रह्मादिपूज्य त्वं त्रिपुरघ्न यमांतक ।।

जयोमेश महादेव कामांतक जयामल ।। २३ ।।

जय संसारवैद्य त्वं भूतपाल शिवाव्य य ।।

त्रियंबक नमस्तुभ्यं भक्तरक्षणदीक्षित ।। २४ ।।

व्योमकेश नमस्तुभ्यं जय कारुण्यविग्रह ।।

नीलकण्ठ नमस्तुभ्यं जय संसारमोचक।।२५।।

महेश्वर नमस्तुभ्यं परमानंदविग्रह ।।

गंगाधर नमस्तुभ्यं विश्वेश्वर मृडाव्यय ।। २६ ।।

नमस्तुभ्यं भगवते वासुदेवाय शंभवे ।।

शर्वायोग्राय गर्भाय कैलासपतये नमः ।। २७ ।।

रक्ष मां करुणासिंधो कृपादष्ट्यवलोकनात् ।।

मम वृत्तमनालोच्य त्राहि मां कृपया हर।।२८।।

श्रीसूत उवाच।।

इति स्तुतो महादेवस्तमेनमिदमभ्यधात् ।।

मुनिं सुचरितं विप्रा दयोदन्वानुमापतिः ।। २९ ।।

।। महादेव उवाच ।। ।।

मुने सुचरिताद्य त्वं वरं वरय कांक्षितम् ।।

वरं दातुं तवायातः पुण्येस्मिन्नाश्रमे शुभे ।।

इतीरितो मुनिः प्राह महादेवं दयानिधिम् ।। 3.1.29.३० ।। ।।

।। सुचरित उवाच ।। ।।

भगवंस्त्वं प्रसन्नो मे यदि स्याश्चंद्रशेखर ।। ३१ ।।

तर्हि त्वां प्रवृणोम्यद्धा वरं मदभिकांक्षितम् ।।

जरापलितदेहोहं कुत्रचिद्गंतुमक्षमः ।। ३२ ।।

सर्वतीर्थेषु च स्नातुमाकांक्षा मम विद्यते ।।

तस्मात्सर्वेषु तीर्थेषु स्नानेन मनुजो हि यत् ।।

फलं प्राप्नोति मे ब्रूहि तत्फला वाप्तिसाधनम्।। ३३ ।।

।। महादेव उवाच ।। ।।

अहमावाहयिष्यामि तीर्थान्यत्रैव कृत्स्नशः ।। ३४ ।।

रामस्य सेतुना पूते नगेऽस्मिन्गंधमादने ।।

इत्युक्त्वा स महादेवः पर्वते गन्धमादने ।। ३५ ।।

तीर्थान्यावाहयामास मुनिप्रीत्यर्थमुत्तमः ।।

ततस्सुचरितं प्राह शंकरः करुणानिधिः ।। ३६ ।।

मुने सुचरितेदं तु महापातकनाशनम् ।।
सांनिध्यात्सर्वतीर्थानां सर्वतीर्थाभिधं स्मृतम् ।। ३७ ।।
मयात्र सर्वतीर्थानां मनसाकर्षणादिदम् ।।
मानसं तीर्थमित्याख्यां लप्स्यते भुक्तिमुक्तिदम् ।। ३८ ।।
अतः सुचरितात्र त्वं स्नाहि सद्यो विमुक्तये ।।
महापातकसंघानां दावानलसमद्युतौ ।। ।। ३९ ।।
काममोहभयक्रोधलोभरोगादिनाशने ।।
विना वेदांतविज्ञानं सद्योनिर्वाणकारणे ।। 3.1.29.४० ।।
जन्ममृत्य्वादिनक्रौघसंसारार्णवतारणे ।।
कुम्भीपाकादिसकलनरकाग्निविनाशने ।। ४१ ।।
इतीरितः सुचरितः शम्भुना मदनारिणा ।।
सस्नौ विप्राः सर्वतीर्थे महादेवस्य संनिधौ ।। ४२ ।।
स्नात्वोत्थितः सुचरितो ददृशेऽखिलमानवैः ।।
जरापलितनिर्मुक्तस्तरुणोऽतीव सुन्दरः ।। ४३ ।।
दृष्ट्वा स्वदेहसौंदर्यं ततः सुचरितो मुनिः ।।
श्लाघयामास तत्तीर्थं बहुधाऽन्ये च तापसाः ।। ४४ ।।
महादेवः सुचरितं बभाषे तदनंतरम् ।।
अस्य तीर्थस्य तीरे त्वं वसन्सुचरित द्विज ।। ।। ४५ ।।
स्नानं कुरुष्व सततं स्मरन्मां मुक्तिदायकम् ।।
देशांतरीयतीर्थेषु मा व्रज ब्राह्मणोत्तम ।। ४६ ।।
अस्य तीर्थस्य माहात्म्यान्मामंते प्राप्स्यसि ध्रुवम्।।
अन्येऽपि येऽत्र स्नास्यंति तेऽपि मां प्राप्नुयुर्द्विज ।। ४७ ।।
इत्युक्त्वा भगवानीशस्तत्रैवांतरधीयत ।।
तस्मिन्नंतर्हिते रुद्रे ततः सुचरितो मुनिः ।। ४८ ।।
अनेककालं निवसन्सर्वतीर्थस्य तीरतः ।।
स्नानं समाचरंस्तीर्थे मानसे नियमान्वितः ।। ४९ ।।
देहांते शंकरं प्राप सर्वबन्धविमोचितः ।।
सायुज्यं चापि संप्राप सर्वतीर्थस्य वैभवात् ।। 3.1.29.५० ।।

एवं वः कथितं विप्राः सर्वतीर्थस्य वैभवम् ।।

एतत्पठन्वा शृण्वन्वा मुच्यते सर्व पातकैः ।। ५१ ।।

Comments on Koti/Dhanushkoti

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सर्वतीर्थप्रशंसायां सर्वतीर्थस्वरूप कथनंनामैकोनत्रिंशोऽध्यायः ।। २९ ।। ।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३०

https://sa.wikisource.org/s/fsu



।। श्रीसूत उवाच ।। ।।

विहिताभिषवो मर्त्यः सर्वतीर्थेऽतिपावने ।।

ब्रह्महत्यादिपापघ्नीं धनुष्कोटिं ततो व्रजेत् ।। १ ।।

यस्याः स्मरणमात्रेण मुक्तः स्यान्मानवो भुवि ।।

धनुष्कोटिं प्रपश्यंति स्नांति वा कथयंति ये ।। २ ।।

अष्टाविंशतिभेदांस्ते नरकान्नोपभुंजते ।।

तामिस्रमंधतामिस्रं महारौरवरौरवौ ।। ३ ।।

कुम्भीपाकं कालसूत्रमसिपत्रवनं तथा ।।

कृमिभक्षोंऽधकूपश्च संदंशं शाल्मली तथा ।। ४ ।।

सूर्मिर्वैतरणी प्राणरोधो विशसनं तथा ।।

लालाभक्षोऽप्यवीचिश्च सारमेयादनं तथा ।। ५ ।।

तथैव वज्रकणकं क्षारकर्दमपातनम् ।।

रक्षोगणाशनं चापि शूलप्रोतं वितोदनम् ।। ६ ।।

दंदशूकाशनं चापि पर्यावर्तनसंज्ञितम् ।।

तिरोधानाभिधं विप्रास्तथा सूचीमुखाभिधम् ।। ७ ।।

पूयशोणितभक्षं च विषाग्निपरिपीडनम् ।।

अष्टाविंशतिसंख्याकमेवं नरकसंचयम् ।। ८ ।।

न याति मनुजो विप्रा धनुष्कोटौ निमज्जनात् ।।

वित्तापत्यकलत्राणां योऽन्येषामपहारकः ।। ९ ।।

स कालपाशनिर्बद्धो यमदूतैर्भयानकैः ।।

तामिस्रनरके घोरे पात्यते बहुवत्सरम् ।। 3.1.30.१० ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

यो निहत्य तु भर्तारं भुंक्ते तस्य धनादिकान् ।। ११ ।।

पात्यते सोंऽधतामिस्रे महादुःखसमाकुले ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। १२ ।।

भूतद्रोहेण यो मर्त्यः पुष्णाति स्वकुटुंबकम् ।।

स तानिह विहायाशु रौरवे पात्यते ध्रुवम् ।। १३ ।।

विषोल्बणमहासर्पसंकुले यमपूरुषैः ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। ।। १४ ।।

यः स्वदेहंभरो मर्त्यो भार्यापुत्रादिकं विना ।।

स महारौरवे घोरे पात्यते निजमांसभुक् ।। १५ ।।

स्नाति चेद्धनुषः कोटौ तस्मि न्नासौ निपात्यते ।।

यः पशून्पक्षिणो वापि सप्राणान्निरुणद्धि वै ।। १६ ।।

कृपालेशविहीनं तं क्रव्यादैरपि निंदितम् ।।

कुंभीपाके तप्ततैले पात यंति यमानुगाः ।। १७ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

मातरं पितरं विप्रान्यो द्वेष्टि पुरुषाधमः ।। १८ ।।

स कालसूत्र नरके विस्तृतायुतयोजने ।।

अधस्तादग्निसंतप्त उपर्यर्कमरीचिभिः ।। १९ ।।

खले ताम्रमये विप्राः पात्यते क्षुधयार्दितः ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। 3.1.30.२० ।।

यो वेदमार्गमुल्लंघ्य वर्तते कुपथे नरः ।।

सोऽसिपत्रवने घोरे पात्यते यमकिंकरैः ।। २१ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

यो राजा राजभृत्यो वा ह्यदंड्ये दंडमाचरेत् ।। २२ ।।

शरीरदंडं विप्रे वा स शूकरमुखे द्विजाः ।।

पात्यते नरके घोरे इक्षुवद्यंत्रपीडितः ।। ।। २३ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

ईश्वराधीनवृत्तीनां हिंसां यः प्राणिनां चरेत् ।। २४ ।।

तैरेव पीड्यमानोऽयं जंतुभिः स्वेन पीडितैः ।।

अंधकूपे महाभीमे पात्यते यमकिंकरैः ।। २५ ।।

तत्रांधकारबहुले विनिद्रो निर्वृतश्चरेत् ।।

चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। २६ ।।

योऽश्नाति पंक्तिभेदेन सस्यसूपादिकं नरः ।।

अकृत्वा पंचयज्ञं वा भुंक्ते मोहेन स द्विजाः ।। २७ ।।

प्रपात्यते यमभटैर्नरके कृमिभोजने ।।

भक्ष्यमाणः कृमिशतैर्भक्षयन्कृमिसंच यान् ।। २८ ।।

स्वयं च कृमिभूतः संस्तिष्ठेद्यावदघक्षयम्।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। २९ ।।

यो हरेद्विप्रवित्तानि स्तेयेन बलतोऽपि वा ।।

अन्येषामपि वित्तानि राजा तत्पुरुषोऽपि वा ।। 3.1.30.३० ।।

अयस्मयाग्निकुंडेषु संदंशैः सोऽतिपीडितः ।।

संदंशे नरके घोरे पात्यते यमपूरुषैः ।। ३१ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

अगम्यां योभिगच्छेत स्त्रियं वै पुरुषाधमः ।। ३२ ।।

अगम्यं पुरुषं योषिदभिगच्छेत वा द्विजाः ।।

तावयस्मयनारीं च पुरुषं चाप्ययस्मयम् ।।३३ ।।

तप्तावालिंग्य तिष्ठंतौ यावच्चंद्रदिवाकरौ ।।

सूर्म्याख्ये नरके घोरे पात्येते बहुकंटके ।। ३४ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

बाधते सर्वजंतून्यो नानो पायैरुपद्रवैः ।।३५ ।।

शाल्मलीनरके घोरे पात्यते बहुकंटके ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। ३६ ।।

राजा वा राजभृत्यो वा यः पाषंडमनुव्रतः ।।

भेदको धर्मसेतूनां वैतरण्यां निपात्यते ।। ३७ ।।

स्नानि चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

वृषलीसंगदुष्टो यः शौचाद्याचारवर्जितः ।। ३८ ।।

त्यक्तलज्जस्त्यक्तवेदः पशुचर्यारत स्तथा ।।

स पूयविष्ठामूत्रासृक्छलेष्मपित्तादिपूरिते ।। ३९ ।।

अतिबीभत्सनरके पात्यते यमकिंकरैः ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। 3.1.30.४० ।।

अश्मभिर्मृगयुर्हन्याद्बाणै र्वा बाधते मृगान्।।

स विध्यमानो बाणौघैः परत्र यमकिंकरैः ।। ४१ ।।

प्राणरोधाख्यनरके पात्यते यमकिंकरैः ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। ४२ ।।

दांभिको यः पशून्यज्ञे विध्यनुष्ठानवर्जितः ।।

हंत्यसौ परलोकेषु वैशसे नरके द्विजाः ।। ४३ ।।

कृन्त्यमानो यमभटैः पात्यते दुःखसंकुले ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।। ४४ ।।

आत्मभार्यां सवर्णां यो रेतः पाययते तु सः ।।

परत्र रेतःपायी सन्रेतःकुंडे निपात्यते ।। ४५ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

यो दस्युमार्ग माश्रित्य गरदो ग्रामदाहकः ।। ४६ ।।

वणिग्द्रव्यापहारी च स परत्र द्विजोत्तमाः ।।

वज्रदंष्ट्राहिकाभिख्ये नरके पात्यते चिरम् ।। ४७ ।।

स्नाति चेद्धनुषः कोटौ तस्मिन्नासौ निपात्यते ।।

विद्यंते यानि चान्यानि नरकाणि परत्र वै ।। ४८ ।।

तानि नाप्नोति मनुजो धनुष्कोटिनिमज्जनात् ।।

धनुष्कोटौ सकृत्स्ना नादश्वमेधफलं लभेत् ।। ४९ ।।

आत्मविद्या भवेत्साक्षान्मुक्तिश्चापि चतुर्विधा ।।

न पापे रमते बुद्धिर्न भवेद्दुःखमेव वा ।। 3.1.30.५० ।।

बुद्धेः प्रीति र्भवेत्सम्यग्धनुष्कोटौ निमज्जनात् ।।

तुलापुरुषदानेन यत्फलं लभ्यते नरैः ।। ५१ ।।

तत्फलं लभ्यते पुंभिर्धनुष्कोटौ निमज्जनात् ।।

गोसहस्र प्रदानेन यत्पुण्यं हि भवेन्नृणाम् ।। ५२ ।।

तत्पुण्यं लभते मर्त्यो धनष्कोटौ निमज्जनात् ।।

धर्मार्थकाममोक्षेषु यंयमिच्छति पूरुषः ।। ५३ ।।

तंतं सद्यः समाप्नोति धनुष्कोटौ निमज्जनात् ।।

महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।। ५४ ।।

सद्यः पूतो भवेद्विप्रा धनुष्कोटौ निमज्जनात् ।।

प्रज्ञालक्ष्मीर्यशः संपज्ज्ञानं धर्मो विरक्तता ।।५५।।

मनःशुद्धिर्भवेन्नृणां धनुष्कोटिनिमज्जनात्।।

ब्रह्महत्यायुतं चापि सुरापानायुतं तथा।।५६।।

अयुतं गुरुदाराणां गमनं पापकारणम्।।

स्तेयायुतं सुवर्णानां तत्संसर्गश्च कोटिशः।।५७।।

शीघ्रं विलयमाप्नोति धनुष्कोटौ निमज्जनात्।।

ब्रह्महत्यासमानानि सुरापानसमानि च।।५८।।

गुरुस्त्रीगमनेनापि यानि तुल्यानि चास्तिकाः।।

सुवर्णस्तेयतुल्यानि तत्संसर्गसमानि च।।५९।।

तानि सर्वाणि नश्यंति धनुष्को टि निमज्जनात्।।

उक्तेष्वेतेषु संदेहो न कर्तव्यः कदाचन ।।3.1.30.६०।।।

जिह्वाग्रे परशुं तप्तं धारयामि न संशयः ।।

अर्थवादमिमं सर्वं ब्रुवन्वै नारकी भवेत् ।। ।। ६१ ।।

संकरः स हि विज्ञेयः सर्वकर्मबहिष्कृतः।।

अहो मौर्ख्यमहो मौर्ख्यमहो मौर्ख्यं द्विजोत्तमाः ।। ६२ ।।

धनुष्कोट्यभिधे तीर्थे सर्वपातकनाशने ।।

अद्वैतज्ञानदे पुंसां भुक्तिमुक्तिप्रदायिनि ।। ६३ ।।

इष्टकाम्यप्रदे नित्यं तथैवाज्ञाननाशने ।।

स्थितेऽपि तद्विहायायं रमतेऽन्यत्र वै जनः ।।६४।।

अहो मोहस्य माहात्म्यं मया वक्तुं न शक्यते ।।

स्नातस्य धनुषः कोटौ नांतकाद्भयमस्ति वै ।।६५।।

धनुष्कोटिं प्रपश्यंति तत्र स्नांति च ये नराः।।

स्तुवंति च प्रशंसंति स्पृशंति च नमंति च ।।

न पिबंति हि ते स्तन्यं मातॄणां द्विजपुंगवाः ।। ६६ ।।

।। ॠषय ऊचुः ।। ।।

धनुष्कोट्याभिधा तस्य कथं सूत समागता ।। ६७ ।।

तत्सर्वं ब्रूहि तत्त्वेन विस्तरान्मुनिपुंगव ।।

इति पृष्टो नैमिषीयैराह सूतः पुनश्च तान् ।। ६८ ।।

।। श्रीसूत उवाच ।। ।।

रामेण निहते युद्धे रावणे लोककण्टके ।।

बिभीषणे च लंकायां राजनि स्थापिते ततः ।। ६९ ।।

वैदेहीलक्ष्मणयुतो रामो दशरथा त्मजः ।।

सुग्रीवप्रमुखैर्वीरैर्वानरैरपि संवृतः ।। 3.1.30.७० ।।

सिद्धचारणगन्धर्वदेवविद्याधरर्षिभिः ।।

अप्सरोभिश्च सततं स्तूयमाननिजाद्भुतः ।। ७१ ।।

लीलाविधृतकोदण्डस्त्रिपुरघ्नो यथा शिवः ।।

सर्वैः परिवृतो रामो गंधमादनमन्वगात् ।। ७२ ।।

तत्र स्थितं महात्मानं राघवं रावणांतकम् ।।

प्रांजलिः प्रार्थयामास धर्मज्ञोऽथ विभीषणः ।। ७३ ।।

सेतुनानेन ते राम राजानः सर्व एव हि ।।

बलोद्रिक्ताः समभ्येत्य पीडयेयुः पुरीं मम ।। ।। ७४ ।।

अतः सेतुमिमं भिंधि धनुष्कोट्या रघूद्वह ।।

इति संप्रार्थितस्तेन पौलस्त्येन स राघवः ।। ७९ ।।

बिभेद धनुषः कोट्या स्वसेतुं रघुनं दनः ।।

अतो द्विजास्ततस्तीर्थं धनुष्कोटिरितिश्रुतम् ।। ७६ ।।

श्रीरामधनुषः कोट्या यो रेखां पश्यते कृताम्।।

अनेकक्लेशसंयुक्तं गर्भवासं न पश्यति ।। ७७ ।।

धनुष्कोट्यां कृता रेखा रामेण लवणांबुधौ ।।

तद्दर्शनाद्भवेन्मुक्तिर्न जाने स्नानजं फलम् ।। ७८ ।।

नर्मदारोधसि तपो महापातक नाशनम्।।

गंगातीरे तु मरणमपवर्गफलप्रदम्।। ७९ ।।

दानं द्विजाः कुरुक्षेत्रे ब्रह्महत्यादिशोधकम् ।।

तपश्च मरणं दानं धनुष्कोटौ कृतं नरैः ।।3.1.30.८०।।

महापातकनाशाय मुक्त्यै चाभीष्टसिद्धये ।।

भवेत्समर्थं विप्रेंद्रा नात्र कार्या विचारणा ।। ८१ ।।

तावत्संपीड्यते जंतुः पातकैश्चोपपा तकैः ।।

यावन्नालोक्यते राम धनुष्कोटिर्विमुक्तिदा ।। ८२ ।।

भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ।।

क्षीयंते पापकर्माणि धनुष्कोट्यवलो किनः ।। ८३ ।।

दक्षिणांभोनिधौ सेतौ रामचन्द्रेण निर्मिता ।।

या रेखा धनुषः कोट्या विभीषणहिताय वै ।। ८४ ।।

सैव कैलासपदवीं वैकुण्ठब्र ह्मलोकयोः ।।

मार्गः स्वर्गस्य लोकस्य नात्र कार्या विचारणा ।। ८५ ।।

तुल्यं यज्ञफलैः पुण्यैर्धनुष्कोट्यवगाहनम् ।।

सर्वमंत्राधिकं पुण्यं सर्वदा नफलप्रदम् ।। ८६ ।।

कायकलेशकरैः पुंसां किं तपोभिः किमध्वरैः ।।

किं वेदैः किमु वा शास्त्रैर्धनुष्कोट्यवलोकिनः ।। ८७ ।।

रामचंद्रधनुष्कोटौ स्नानं चेल्लभ्यते नृणाम् ।।

सितासितसरित्पुण्यवारिभिः किं प्रयोजनम् ।। ८८ ।।

रामचंद्रधनुष्कोटिदर्शनं लभ्यते यदि ।।

काश्यां तु मरणान्मुक्तिः प्राथ्र्यते किं वृथा नरैः ।। ८९ ।।

अनिमज्ज्य धनुष्कोटावनुपोष्य दिनत्रयम् ।।

अदत्त्वा कांचनं गां च दरिद्रः स्यान्न संशयः ।। 3.1.30.९० ।।

धनुष्कोट्य वगाहेन यत्फलं लभते नरः ।।

अग्निष्टोमादिभिर्यज्ञैरिष्ट्वापि बहुदक्षिणैः ।। ९१ ।।

न तत्फलमवाप्नोति सत्यंसत्यं वदाम्यहम् ।।

धनुष्कोट्यभिधं तीर्थं सर्वतीर्थाधिकं विदुः ।। ९२ ।।

दशकोटिसहस्राणि संति तीर्थानि भूतले ।।

तेषां सान्निध्यमस्त्यत्र धनुष्कोटौ द्विजोत्तमाः ।। ९३ ।।

अष्टौ वसव आदित्या रुद्राश्च मरुतस्तथा ।।

साध्याश्च सह गन्धर्वाः सिद्धविद्याधरास्तथा ।।९४।।

एते चान्ये च ये देवाः सान्निध्यं कुर्वते सदा ।।

तीर्थेऽत्र धनुषः कोटौ नित्यमेव पितामहः ।। ९५ ।।

सन्निधत्ते शिवो विष्णुरुमा मा च सरस्वती ।।

धनुष्कोटौ तपस्तप्त्वा देवाश्च ऋषयस्तथा ।। ९६ ।।

विपुलां सिद्धिमगमंस्तत्फलेन मुनीश्वराः ।।

स्नायात्तत्र नरो यस्तु पितृदेवांश्च तर्पयेत् ।।९७।।

सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ।।

अत्रैकं भोजयेद्विप्रं यो नरो भक्तिसंयुतः।।९८।।

इह लोके परत्रापि सोनंतसुखमश्नुते।।

शाकमूलफले वृत्तिं यो न वर्तयते नरः।।९९।।

स नरो धनुषःकोटौ स्नायात्त त्फलसिद्धये ।।

अश्वमेधक्रतुं कर्तुं शक्तिर्यस्य न विद्यते ।।3.1.30.१००।।

धनुष्कोटौ स हि स्नायात्तेन तत्फलमश्नुते ।।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वापि मुनी श्वराः।।१।।

निंद्ययोनौ न जायंते धनुष्कोट्वगाहनात्।।

मकरस्थे रवौ माघे धनुष्कोटौ तु यो नरः।।२।।

स्नायात्पुण्यं निगदितुं तस्याहं न क्षमो द्विजाः।।

माघमासे धनुष्कोटाववगाहेत यो नरः ।। ३ ।।

स स्नातः सर्वतीर्थेषु गंगादिषु मुनीश्वराः ।।

प्राप्नुयादक्षयाँल्लोकान्मोक्षं चापि लभेत सः ।। ४ ।।

जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा ।।

तत्सर्वं माघमासेऽत्र मज्जनाद्विलयं व्रजेत् ।। ५ ।।

यथा सुराणां सर्वेषामुत्तमो रघुनंदनः ।।

तथैव च धनुष्कोटिः सर्वतीर्थोत्तमा स्मृता ।। ६ ।।

तत्र स्नानं माघमासे सर्वाभीष्टप्रदायकम् ।।

त्रिंशद्दिनं माघमासे नियतोऽपि जितेंद्रियः ।। ७ ।।

धनुष्कोटौ नरः स्नायादपुनर्भवसिद्धये ।।

एकभुक्तो जितक्रोधो माघमासेऽत्र यो नरः ।। ८ ।।

स्नानं करोति विप्रेंद्रा मुच्यते ब्रह्महत्यया ।।

श्रीरामधनुषः कोटी माघमासे नरस्तु यः ।। ९ ।।

स्नात्वांते शिवरात्रौ च निराहारो जितेंद्रियः ।।

कृत्वा जागरणं रात्रौ प्रतियामं विशेषतः।। 3.1.30.११० ।।

राम नाथं महादेवमभ्यर्च्य विधिपूर्वकम् ।।

परेद्युरुदिते सूर्ये धनुष्कोटौ निमज्य च ।। ११ ।।

अन्येष्वपि च तीर्थेषु स्नात्वा नियतमानसः ।।

निर्वर्त्य नित्यकर्माणि रामनाथं निषेव्य च ।। १२ ।।

यथाशक्ति द्विजानन्नैर्भोजयित्वा द्विजोत्तमाः ।।

भूमिं गां च तिलान्धान्यं दत्त्वा वित्तं च शक्तितः ।। ।। १३ ।।

ब्राह्मणैरप्यनुज्ञातः स्वयं भुंजति वाग्यतः ।।

एवं कृतवतः पुंसो रामनाथो महेश्वरः ।। १४ ।।

विमोच्य सर्वपापानि भुक्तिं मुक्तिं प्रयच्छति ।।

अतः सर्वप्रयत्नेन माघमासे मुनीश्वराः ।। १५ ।।

स्नातव्यं हि धनुष्कोटौ नरैरत्र मुमुक्षुभिः ।।

धनुष्कोटौ नरः स्नानं सेतावर्धोदये तु यः। ।। १६ ।।

करोति तस्य पापानि नश्यंत्येव क्षणाद्द्विजाः ।।

स्नानं महोदये चात्र भुक्तिमुक्तिफलप्रदम्।। १७ ।।

यः स्नायाद्धनुषः कोटावर्द्धोदयमहो दये ।।

तस्य वश्यास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।। १८ ।।

धनुष्कोटौ द्विजाः स्नानमर्द्धोदयमहोदये।।

विनाप्यद्वैतविज्ञानं सायुज्यप्राप्तिकारणम्।।। ।। १९ ।।

तत्र स्नानं द्विजाः पुंसामर्द्धोदयमहोदये ।।

मन्वाद्युक्तं विना सत्यं प्रायश्चित्तं हि पापिनाम्।। 3.1.30.१२० ।।

अत्र सेतौ धनुष्कोटावर्धोदयमहो दये ।।

स्नाति चेन्मनुजो विप्राः सत्यं यज्ञं विनाप्ययम् ।। २१ ।।

यज्ञानां फलमाप्नोति संपूर्णं नात्र संशयः ।।

चंद्रसूर्योपरागेषु यः स्नायादत्र मानवः ।। २२ ।।

तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते ।।

चंद्रसूर्योपरागेषु धनुष्कोट्यवगाहनम् ।। २३ ।।

ब्रह्महत्यादिपापानां प्रायश्चित्त मुदीरितम् ।।

श्रीरामधनुषः कोटौ चंद्रसूर्योपरागयोः ।। २४ ।।

स्नानं सायुज्यदं प्रोक्तं सर्वतीर्थफलप्रदम् ।।

चंद्रसूर्योपरागेषु अर्धोदयमहोदये ।। '।। २५ ।।

स्नातव्यमत्र मनुजैर्भुक्तिमुक्तिफलेच्छुभिः ।।

अतः सर्वं परित्यज्य गच्छध्वं मुनिपुंगवाः ।। २६ ।।

धनुष्कोटिं महापुण्यां भुक्तिमुक्तिफल प्रदाम् ।।

तत्र गत्वा पितृभ्यश्च कुरुध्वं पिंडदापनम् ।। २७ ।।

आकल्पं पितृतृप्तिः स्यादत्र पिंडनिवापनात् ।।

पितॄणां तृप्तिदं स्थानत्रयं रामेण निर्मितम् ।। २८ ।।

सेतुमूले धनुष्कोट्यां गंधमादनपर्वते ।।

पिंडं दत्त्वा पितृभ्योऽत्र ऋणान्मुक्तो भविष्यति ।। २९ ।।

सेतुमूलं धनुष्कोटिं गंधमादनमेव च ।।

ऋणमोक्ष इति ख्यातं त्रिस्थानं देवनिर्मितम् ।। 3.1.30.१३० ।।

अतः सर्वप्रयत्नेन धनुष्कोटिर्निषेव्यताम् ।।

अत्रागत्य धनुष्कोटौ स्नात्वा नियमपूर्व कम् ।। ३१ ।।

द्रोणाचार्यसुतः श्रीमानश्वत्थामा मुनीश्वराः ।।

सुप्तमारणदोषेण घोरेण मुमुचे क्षणात् ।। ३२ ।।

एवं वः कथितं विप्रा धनुष्कोटेस्तु वैभवम् ।।

भुक्तिमुक्तिप्रदं नृणां सर्वपापनिबर्हणम् ।। १३३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतु माहात्म्ये धनुष्कोटिप्रशंसायां धनुष्कोटिवैभवकथनवर्णनंनाम त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३१



।। ऋषय ऊचुः ।। ।।

अश्वत्थामा कथं सूत सुप्तमारणमाचरत्।।

कथं च मुक्तस्तत्पापाद्धनुष्कोटौ निमज्जनात् ।। १ ।।

एतन्नः श्रद्दधानानां ब्रूहि पौराणिकोत्तम ।।

तृप्तिर्न जायतेऽ स्माकं त्वद्वचोमृतपायिनाम् ।। २ ।।

इति पृष्टस्तदा सूतो नैमिषारण्यवासिभिः ।।

वक्तुं प्रचक्रमे तत्र व्यासं नत्वा गुरुं मुदा ।। ।।

।। श्रीसूत उवाच ।। ।।

राज्यार्थं कलहे जाते पांडवानां पुरा द्विजाः ।।

धार्तराष्ट्रैर्महायुद्धे महदक्षौहिणीयुते ।। ४ ।।

युद्धं दशदिनं कृत्वा भीष्मे शांतनवे हते ।।

द्रोणे पंचदिनं कृत्वा कर्णे च द्विदिनं तथा ।। ५ ।।

तथैवैकदिनं युद्ध्वा शल्ये च निधनं गते ।।

अष्टादशदिने तत्र रणे दुर्योधने द्विजाः ।। ।। ६ ।।

भग्नोरौ भीमगदया पतिते राजसत्तमे ।।

सर्वे नृपतयो विप्रा निवेशाय कृतत्वराः ।। ७ ।।

ये जीवितास्तु राजानस्ते ययुर्हृष्टमानसाः ।।

धृष्टद्युम्नशिखंडयाद्याः सृञ्जयाः सर्व एव हि ।। ८ ।।

अन्ये चापि महीपाला जग्मुः स्वशिबिराण्यथ ।।

अथ पार्था महावीरा कृष्णसात्यकिसंयुताः ।। ९ ।।

दुर्योधनस्य शिबिरं प्राविशन्निर्जनं द्विजाः ।।

वृद्धैरमात्यैस्तत्रस्थैः षंढैः स्त्रीरक्षकैस्तथा ।। 3.1.31.१० ।।

कृतांजलिपुटैः प्रह्वैः काषायमलिनांबरैः ।।

प्रणम्यमानास्ते पार्थाः कुरुराजस्य वेश्मनि ।। ११ ।।

तत्रत्यद्रव्यजातानि समादाय महा बलाः ।।

सुयोधनस्य शिबिरे न्यवसंत सुखेन ते ।। १२ ।।

अथ तानब्रवीत्पार्थाञ्छ्रीकृष्णः प्रीणयन्निव ।।

मंगलार्थाय चास्माभिर्वस्तव्यं शिबिराद्बहिः ।। १३ ।।

इत्युक्ता वासुदेवेन तथेत्युक्त्वाथ पांडवाः ।।

कृष्णसात्यकिसंयुक्ताः प्रययुः शिबिराद्बहिः ।। १४ ।।

वासुदेवेन सहिता मंगलार्थं हि पांडवाः ।।

ओघवत्याः समासाद्य तीरं नद्या नरोत्तमाः ।। १५ ।।

ऊषुस्तां रजनीं तत्र हतशत्रुगणाः सुखम् ।।

कृतवर्मा कृपो द्रौणिस्तथा दुर्योधनांतिकम्।। १६ ।।

आदित्यास्तमयात्पूर्वमपराह्णे समाययुः ।।

सुयोधनं तदा दृष्ट्वा रणपांसुषु रूषितम् ।। १७ ।।

भग्नोरुदण्डं गदया भीमसेन स्य भीमया ।।

रुधिरासिक्तसर्वांगं चेष्टमानं महीतले ।। १८ ।।

अशोचंत तदा तत्र द्रोणपुत्रादयस्त्रयः ।।

शुशोच सोऽपि तान्दृष्ट्वा रणे दुर्योधनो नृपः ।। १९ ।।

दृष्ट्वा तथा तु राजानं बाष्पव्याकुललोचनम् ।।

अश्वत्थामा तदा कोपाज्ज्वलन्निव महानलः ।। 3.1.31.२० ।।

पाणौ पाणिं विनिष्पिष्य क्रोध विस्फारितेक्षणः ।।

अश्रुविक्लवया वाचा दुर्योधनमभाषत ।। २१ ।।

पिता मे पातितः क्षुद्रैश्छलेनैव रणाजिरे ।।

न तथा तेन शोचामि यथा निष्पातिते त्वयि ।। २२ ।।

शृणु वाक्यं ममाद्य त्वं यथार्थं वदतो नृप ।।

सुकृतेन शपे चाहं सुयोधन महामते ।। २३ ।।

अद्य रात्रौ हनिष्यामि पांडवा न्सह सृंजयैः ।।

पश्यतो वासुदेवस्य त्वमनुज्ञां प्रयच्छ मे ।। २४ ।।

तस्य तद्वचनं श्रुत्वा द्रौणिं राजा तदाऽब्रवीत् ।।

तथास्त्विवति पुनः प्राह कृपं राजा द्विजोत्तमाः ।। २५ ।।

आचार्यैनं द्रोणपुत्रं कलशोत्थेन वारिणा ।।
सैनापत्येऽभिषिंचस्वेत्यथ सोपि तथाऽकरोत् ।। २६ ।।
सोभिषिक्तस्तदा द्रौणिः परिष्वज्य नृपोत्तमम् ।।
कृतवर्मकृपाभ्यां च सहितस्त्वरितं ययौ ।। २७ ।।
ततस्ते तु त्रयो वीराः प्रयाता दक्षिणोन्मुखाः ।।
आदित्यास्तमयात्पूर्वं शिबिरांतिकमासत ।। २८ ।।
पार्थानां भीषणं शब्दं श्रुत्वा तत्र जयैषिणः ।।
पांडवानुद्रुता भीतास्तदा द्रौण्यादयस्त्रयः ।। २९ ।।
प्राङ्मुखा दुद्रुवुर्भीत्या कियद्दूरं श्रमातुराः ।।
मुहुर्तं ते ततो गत्वा क्रोधामर्षवशानुगाः ।। 3.1.31.३० ।।
दुर्योधनवधार्तास्ते क्षणं तत्रावतस्थिरे ।।
ततोऽपश्यन्नरण्यं वै नानातरुलतावृतम् ।। ३१ ।।
अनेकमृगसंबाधं क्रूरपक्षिगणाकुलम् ।।
समृद्धजलसंपूर्णतटाकपरिशोभितम् ।। ३२ ।।
पद्मेंदीवरकह्लारसरसी शतसंकुलम् ।।
तत्र पीत्वा जलं ते तु पाययित्वा हयांस्तथा ।। ३३ ।।
अनेकशाखासंबाधन्यग्रोधं ददृशुस्ततः ।।
संप्राप्य तु महावृक्षं न्यग्रोधं ते त्रयस्तदा ।। ३४ ।।
अवतीर्य रथेभ्यश्च मोचयित्वा तुरंगमान् ।।
उपस्पृश्य जलं तत्र सायंसंध्यामुपासत ।। ३५ ।।
अथ चास्तगिरिं भानुः प्रपेदे च गतप्रभः ।।
ततश्च रजनी घोरा समभूत्तिमिराकुला ।। ३६ ।।
रात्रिचराणि सत्त्वानि संचरंति ततस्ततः ।।
दिवाचराणि सत्त्वानि निद्रावशमुपा ययुः ।। ३७ ।।
कृतवर्मा कृपो द्रौणिः प्रदोषसमये हि ते ।।
न्यग्रोधस्योपविविशुरंतिके शोककर्शिताः ।। ३८ ।।
कृपभोजौ तदा निद्रां भेजातेऽतिप याक्रमौ ।।
सुखोचितास्त्वदुःखार्हा निषेदुर्धरणीतले ।। ३९ ।।

द्रोणपुत्रस्तु कोपेन कलुषीकृतमानसः ।।
ययौ न निद्रां विप्रेंद्रा निश्वसन्नुरगो यथा ।। 3.1.31.४० ।।
ततोऽवलोकयांचक्रे तदरण्यं भयानकम् ।।
न्यग्रोधं च ततोऽपश्यद्वहुवायससंकुलम् ।। ४१ ।।
तत्र वायसवृन्दानि निशायां वासमाय युः ।।
सुखं भिन्नासु शाखासु सुषुपुस्ते पृथक्पृथक् ।। ४२ ।।
काकेषु तेषु सुप्तेषु विश्वस्तेषु समंततः ।।
ततोऽपश्यत्समायांतं भासं द्रौणिर्भयंकरम् ।। ।। ४३ ।।
कूरशब्दं क्रूरकायं बभ्रुपिंगकलेवरम् ।।
स भासोऽथ भृशं शब्दं कृत्वालीयत शाखिनि ।। ४४ ।।
उत्प्लुत्य तस्य शाखायां न्यग्रोधस्य विहंगमः ।।
सुप्तान्काकान्निजघ्नेऽसावनेकान्वायसांतकः ।। ४५ ।।
काकानामभिनत्पक्षान्स केषांचिद्विहंगमः ।।
इतरेषां च चरणाञ्छिरांसि चरणा युधः ।। ४६ ।।
विचकर्त क्षणेनासावुलूको वलवान्द्विजाः ।।
स भिन्नदेहावयवैः काकानां बहुभिस्तदा ।। ४७ ।।
समंतादावृतं सर्वं न्यग्रोधपरि मण्डलम् ।।
वायसांस्तान्निहत्यासावुलूको मुमुदे तदा ।। ४८ ।।
द्रौणिर्दृष्ट्वा तु तत्कर्म भासेनैवं कृतं निशि ।।
करिष्याम्यहमप्येवं शत्रूणां निधनं निशि ।। ४९ ।।
इत्यचिंतयदेकः सन्नुपदेशमिमं स्मरन् ।।
जेतुं न शक्याः पार्था हि ऋजुमार्गेण युद्ध्यता ।। 3.1.31.५० ।।
मया तच्छद्मना तेऽथ हंतव्या जितकाशिनः ।।
सुयोधनसकाशे च प्रतिज्ञातो मया वधः ।। ५१ ।।
ऋजुमार्गेण युद्धे मे प्राणनाशो भविष्यति ।।
छलेन युध्यमानस्य जयश्चास्य रिपुक्षयः ।। ५२ ।।
यच्च निंद्यं भवेत्कार्यं लोके सर्वजनैरपि ।।
कार्यमेव हि तत्कर्म क्षत्रधर्मानुवर्तिना ।। ५३ ।।

पार्थैरपि छलेनैव कृतं कर्म सुयोधने ।।

अस्मिन्नर्थे पुराविद्भिः प्रोक्ताः श्लोका भवंति हि ।। ५४ ।।

परिश्रांते विदीर्णे च भुंजाने च रिपोर्बले ।।

प्रस्थाने च प्रवेशे च प्रहर्तव्यं न संशयः ।। ५५ ।।

निद्रार्तमर्धरात्रे च तथा त्यक्तायुधं रणे ।।

भिन्नयोधं बलं सर्वं प्रहर्तव्यमरातिभिः ।। ५६ ।।

एवं स नियमं कृत्वा सुप्तमारणकर्मणि ।।

प्राबोधयद्भोजकृपौ सुप्तौ रात्रौ स साहसी ।।

द्रौणिर्ध्यात्वा मुहूर्तं तु तावुभावभ्यभाषत ।। ५७ ।। ।।

।। अश्वत्थामोवाच ।। ।।

मृतः सुयोधनो राजा महाबलपराक्रमः ।। ५८ ।।

शुद्धकर्मा हतः पार्थैर्बहुभिः क्षुद्रकर्मभिः ।।

भीमेनातिनृशंसेन शिरो राज्ञः पदा हतम् ।। ५९ ।।

ततोऽद्य रात्रौ पार्थानां समेत्य पटमण्डपम् ।।

सुखसुप्तान्हनिष्यामः शस्त्रैर्नानाविधैर्वयम् ।।

कृपः प्रोवाच तत्रैन मिति श्रुत्वा द्विजोत्तमाः ।। 3.1.31.६० ।।

।। कृप उवाच ।। ।।

सुप्तानां मारणं लोके न धर्मो न च पूज्यते ।। ६१ ।।

तथैव त्यक्तशस्त्राणां संत्यक्तरथवाजि नाम् ।।

शृणु मे वचनं वत्स मुच्यतां साहसं त्वया ।। ६२ ।।

वयं तु धृतराष्टं च गांधारीं च पतिव्रताम् ।।

पृच्छामो विदुरं चापि तदुक्तं करवा महे ।।

इत्युक्तः स तदा द्रौणिः कृपं प्रोवाच वै पुनः ।। ६३ ।।

।।अश्वत्थामोवाच ।। ।।

पांडवैश्च पुरा यन्मे छलाद्युद्धे पिता हतः ।। ६४ ।।

तन्मे सर्वाणि मर्माणि निकृन्तति हि मातुल ।।

द्रोणहंताहमित्येतद्धृष्टद्युमस्य यद्वचः ।। ६५ ।।

कथं जनसमक्षे तद्वचनं संशृणोम्यहम् ।।

तैरेव पांडवैः पूर्वं धर्मसेतुर्निराकृतः ।। ६६ ।।

समक्षमेव युष्माकं सर्वेषामेव भूभृताम् ।।

त्यक्तायुधो मम पिता धृष्टद्युम्नेन पातितः ।। ६७ ।।

तथा शांतनवो भीष्मस्त्यक्तचापो निरायुधः ।।

शिखंडिनं पुरोधाय निहतः सव्यसाचिना ।। ६८ ।।

एवमन्येऽपि भूपालाश्छलेनैव हतास्तु तैः ।।

तथैवाहं करिष्यामि सुप्तानां मारणं निशि ।। ६९ ।।

एवमुक्त्वा तदा द्रौणिः संयुक्ततुरगं रथम्।।

प्रायादभिमुखः शत्रून्समारुह्य क्रुधा ज्वलन् ।। 3.1.31.७०।।

तं यांतम न्वगातां तौ कृतवर्मकृपावुभौ ।।

ययुश्च शिबिरे तेषां संप्रसुप्तजनं तदा ।। ७१ ।।

शिबिरद्वारमासाद्य द्रोणपुत्रो व्यतिष्ठत ।।

रात्रौ तत्र समाराध्य महादेवं घृणानिधिम् ।। ७२ ।।

अवाप विमलं खड्गं महादेवाद्वरप्रदात् ।।

ततो द्रौणिरवस्थाप्य कृतवर्मकृपावुभौ ।। ७३ ।।

द्वारदेशे महावीरः शिबि रांतः प्रविष्टवान् ।।

प्रविष्टे शिबिरे द्रौणौ कृतवर्मकृपावुभौ।। ७४ ।।

द्वारदेशे व्यतिष्ठेतां यत्तौ परमधन्विनौ ।।

अथ द्रौणिः सुसंक्रुद्धस्तेजसा प्रज्वलन्निव ।। ७५ ।।

खड्गं विमलमादाय व्यचरच्छिबिरे निशि ।।

ततस्तु धृष्टद्युम्नस्य शिबिरं मंदमाययौ ।। ७६ ।।

धृष्टद्युम्नादयस्तत्र महायुद्धेन कर्शिताः ।।

सुषुपुर्निशि विश्वस्ताः स्वस्वसैन्यसमावृताः ।। ७७ ।।

धृष्टद्युम्नस्य शिबिरं प्रविश्य द्रौणिरस्त्रवित् ।।

तं सुप्तं शयने शुभ्रे ददर्शारान्महाबलम् ।। ७८ ।।

पादेनाघातयद्रोषात्स्वपंतं द्रोणनंदनः ।।

स बुद्धश्चरणाघातादुत्थाय शयनादथ ।। ७९ ।।

व्यलोकयत्तदा वीरो द्रोणपुत्रं पुरः स्थितम् ।।

तमुत्पतंतं शयनाद्द्रोणाचार्यसुतो बली ।। 3.1.31.८० ।।

केशेष्वाकृष्य बाहुभ्यां निष्पिपेष धरातले ।।

धृष्टद्युम्नस्तदा तेन निष्पिष्टः स भया तुरः ।। ८१ ।।

निद्रांधः पादघातातो न शशाक विचेष्टितुम् ।।

द्रौणिस्त्वाक्रम्य तस्योरः कण्ठं बद्ध्वा धनुर्गुणैः ।। ८२ ।।

नदंतं विस्फुरंतं तं पशुमारममारयत् ।।

तस्य सैन्यानि सर्वाणि न्यवधीच्च तथैव सः ।। ८३ ।।

युधामन्युं महावीर्यममुत्तमौजसमेव च ।।

तथैव द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ।। ८४ ।।

शिखंडिप्रमुखानन्यान्खड्गेनामारयद्बहून् ।।

तद्भयाद्द्वारनिर्यातान्सर्वानेव च सैनिकान् ।। ८५ ।।

प्रापयामासतुर्मृत्युं कृतवर्मकृपा वुभौ ।।

एवं निहतसैन्यं तच्छिबिरं तैर्महाबलैः ।। ८६ ।।

तत्क्षणे शून्यमभवत्त्रिजगत्प्रलये यथा ।।

एवं हत्वा ततः सर्वान्द्रोणपुत्रादयस्त्रयः ।।८७।।

निरगुः शिबिरात्तस्मात्पार्थभीता भयातुराः ।।

सर्वे पृथक्पृथग्देशान्दुद्रुवुः शीघ्रगामिनः ।। ८८ ।।

अथ द्रौणिर्ययौ विप्रा रेवातीरं मनोरमम् ।।

तत्र ह्यनेकसाहस्रा ऋषयो वेदवादिनः ।। ८९ ।।

कथयंतः कथाः पुण्यास्तपश्चक्रुरनुत्तमम् ।।

तत्रायं प्रययौ द्रौणिर्ऋषीणामाश्रमेष्वथ ।। 3.1.31.९० ।।

प्रविष्टमात्रे तस्मिंस्तु मुनयो ब्रह्मवादिनः ।।

द्रौणेर्दुश्चरितं ज्ञात्वा प्राहुर्योगबलेन तम् ।। ९१ ।।

सुप्तमा रणकृत्पापी द्रौणे त्वं ब्राह्मणाधमः ।।

त्वद्दर्शनेन ह्यस्माकं पातित्यं भवति ध्रुवम् ।। ९२ ।।

त्वत्संभाषणमात्रेण ब्रह्महत्यायुतं भ वेत् ।।

अतोऽस्मदाश्रमेभ्यस्त्वं निर्गच्छ पुरुषाधम ।। ९३ ।।

इत्यब्रुवंस्तदा द्रौणिं तत्रत्या मुनयो द्विजाः ।।

इतीरितस्ततो द्रौणिर्मुनिभिर्ब्रह्म वादिभिः ।। ९४ ।।

लज्जितो निलात्तस्मादाश्रमान्मुनिसेवितात् ।।

एवं काश्यादितीर्थेषु पुण्येषु प्रययौ च सः ।। ९५ ।।

तत्रतत्र द्विजैः सर्वै र्निंदितोऽसौ महात्मभिः ।।

व्यासं शरणमापेदे प्रायश्चित्तचिकीर्षया ।। ९६ ।।

ततो बदरिकारण्ये समासीनं महामुनिम् ।।

द्वैपायनं समागम्य प्रणनाम सभक्तिकम् ।। ९७ ।।

ततो व्यासोऽब्रवीदेनं द्रोणाचार्यसुतं मुनिः ।।

त्वमस्मदाश्रमादद्रौणे निर्याहि त्वरया त्विति ।। ९८ ।।

सुप्तमारण दोषेण महापातकवान्भवान् ।।

अतो मे भवतालापान्महत्पापं भविष्यति ।।

इत्युक्तः स तदा द्रौणिः प्रोवाचेदं वचो मुनिः ।। ९९ ।।

।। अश्वत्थामोवाच ।। ।।

भगवन्निंदितः सर्वैस्त्वामस्मि शरणं गतः ।। 3.1.31.१०० ।।

ब्रवीषि चेत्त्वमप्येवं कोऽन्यो मे शरणं भवेत् ।।

कृपां कुरु मयि ब्रह्मन्साधवो दीनवत्सलाः ।। १ ।।

सुप्तमारणदोषस्य शांत्यर्थं भगवन्मम ।।

प्रायश्चित्तं विधेहि त्वं सर्वज्ञोऽसि भवान्यतः ।।

इत्युक्तो द्रौणिना व्यासश्चिरं ध्यात्वा तमब्रवीत् ।। २ ।।

।। व्यास उवाच ।। ।।

एतत्पापस्य शांत्यर्थं प्रायश्चित्तं स्मृतौ न हि ।। ३ ।।

तथाप्युपायं वक्ष्यामि तवैतद्दोष शांतये ।।

दक्षिणांबुनिधौ पुण्ये रामसेतौ विमुक्तिदे ।। ४ ।।

धनुष्कोटिरितिख्यातं तीर्थमस्ति महत्तरम् ।।

अस्ति पुण्यतमं द्रौणे महापात कनाशनम् ।। ५ ।।

स्वर्गमोक्षप्रदं पुंसां ब्रह्महत्यादिशोधकम् ।।

सर्वमंगलमांगल्यं सर्वाभीष्टप्रदायकम् ।। ६ ।।

पवित्राणां पवित्रं च तीर्थानां च तथोत्तमम् ।।

दुःस्वप्ननाशनं पुण्यं नरकक्लेशनाशनम् ।। ७ ।।

अकालमृत्युशमनं पुंसां विजयवर्द्धनम् ।।

दारिद्र्यनाशनं पुंसामायुर्वर्धनकार णम् ।। ८ ।।

चित्तशुद्धिप्रदं नृणां शांतिदांत्यादिकारणम् ।।

तत्र गत्वा धनुष्कोटौ रामसेतौ विमुक्तिदे ।। ९ ।।

स्नानं कुरुष्व द्रौणे त्वं मासमात्रं निरं तरम् ।।

सुप्तमारणदोषात्त्वं सद्यः पूतो भविष्यसि ।। 3.1.31.११० ।।

कुरुष्व वचनं शीघ्रं मम त्वं द्रोणनंदन ।।

एवमुक्तस्तदा द्रौणिर्व्यासेन परमर्षिणा ।। ११ ।।

रामसेतुं समासाद्य धनुष्कोटिं पवित्रदाम् ।।

सस्नौ संकल्पपूर्वं तु मासमेकं निरन्तरम् ।। १२ ।।

त्रिसंध्यं रामनाथं च सिषेवे स दिने दिने ।।

ततस्त्रिंशद्दिने तोयस्नानाद्द्रोणात्मजस्तदा ।। १३ ।।

जजाप च धनुष्कोट्यां मंत्रं पंचाक्षरं तदा ।।

अकार्षीदुपवासं च द्रोणपुत्रस्तु तद्दिने ।। १४ ।।

अकरोज्जागरं रात्रौ रामनाथस्य सन्निधौ ।।

अपरेद्युर्धनुष्कोटौ स्नात्वा संकल्पपूर्वकम् ।। १५ ।।

सिषेवे रामनाथं च स्तुत्वा भक्तिपुरःसरम् ।।

ननर्त पुरतः शंभोरानंदाश्रुपरिप्लुतः ।। १६ ।।

ततः प्रसन्नो भगवान्प्रादुरासीत्तदग्रतः ।।

दृष्ट्वा तत्र महादेवं तुष्टाव परमेश्वरम् ।। ।। १७ ।।

।। द्रौणिरुवाच ।। ।।

नमस्ते देवदेवेश करुणाकर शंकर ।।

आपदंबुधिमग्नानां पोतायितपदांबुज ।। १८ ।।

महादेव कृपामूर्ते धूर्जटे नीललोहित ।।

उमाकांत विरूपाक्ष चंद्रशेखर ते नमः ।। १९ ।।

मृत्युंजय त्रिनेत्र त्वं पाहि मां कृपया दृशा ।।

पार्वतीपतये तुभ्यं त्रिपुरघ्नाय शंभवे ।।3.1.31.१२।।

पिनाकपाणये तुभ्यं त्र्यंबकाय नमोनमः ।।

अनंतादिमहानागहारभूषणभूषित ।। २१ ।।

शूलपाणे नमस्तुभ्यं गंगाधर मृडाव्यय ।।

रक्ष मां कृपया देव पापसंघातपंजरात् ।।

इति स्तुतो महादेवो द्रौणिं प्रोवाच हर्षितः ।। २२ ।।

।। महादेव उवाच ।। ।।

सुप्तमारणदोषस्ते धनुष्कोटौ निमज्जनात् ।। २३ ।।

अश्वत्थामन्विनष्टोऽभूद्वरं वरय सुव्रत ।।

मयि प्रसन्ने लोकेषु किमलभ्यं भवेन्नृणाम् ।। २४ ।।

अतोऽभीष्टं वृणीष्व त्वं मत्तो द्रोणात्मजाधुना ।।

इत्युक्तः शंभुना द्रौणिः प्राह तं परमेश्वरम् ।। २५ ।।

तवाद्य दर्शनेनाहं कृतार्थोस्मि महेश्वरम् ।।

त्वद्दर्शनमपुण्यानामलभ्यं जन्मकोटिभिः ।। २६ ।।

अतो युष्मत्पदांभोजे निश्चला भक्तिरस्तु मे ।।

इममेव वरं देहि मह्यं शंभो नमोऽस्तु ते ।।२७।।

उक्त्वा तथास्त्विति द्रौणिं देवदेवो महेश्वरः ।।

पश्यतो द्रोणपुत्रस्य तत्रैवांतरधीयत ।।२८।।

अश्वत्थामापि विप्रेंद्रा धूतपापो विनिर्मलः ।।

रामचंद्रधनुष्कोटौ स्नानमात्रेण तत्क्षणे ।।२९।।

धूतपापमिमं द्रौणिं सर्वे चापि महर्षयः ।।

शुद्धं प्रत्यग्रहीषुस्ते तदाप्रभृति निर्मलम् ।।3.1.31.१३।।।

एवं वः कथितं विप्रा द्रौणिपापविमोक्षणम् ।।

रामचंद्रधनुष्कोटिस्नानवैभवमात्रतः ।।३१।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।।

स विधूयेह पापानि शिवलोके महीयते ।। १३२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये धनुष्कोटिप्रशंसायामश्वत्थामसुप्तमारणदो षशांतिवर्णनंनामैकत्रिंशोऽध्यायः ।।३१।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३२

https://sa.wikisource.org/s/fsv



श्रीसूत उवाच ।। ।।

भूयोऽपिसंप्रवक्ष्यामि धनुष्कोटेस्तु वैभवम् ।।

युष्माकमादरेणाहं नैमिषारण्यवा सिनः ।।१।।

नंदोनाम महाराजः सोमवंशसमुद्भवः ।।

धर्मेण पालयामास सागरांतां धरामिमाम् ।।२।।

तस्य पुत्रः समभवद्धर्मगुप्त इति श्रुतः ।।

राज्य रक्षाधुरं नंदो निजपुत्रे निधाय सः ।।३।।

जितेंद्रियो जिताहारः प्रविवेश तपोवनम् ।।

ताते तपोवनं याते धर्मगुप्ताभिधो नृपः ।।४।।

मेदिनीं पालया मास धर्मज्ञो नीतितत्परः ।।

ईजे बहुविधैर्यज्ञैर्देवानिंद्रपुरोगमान् ।। ५ ।।

ब्राह्मणेभ्यो ददौ वित्तं क्षेत्राणि च बहूनि सः ।।

सर्वे स्वधर्मनिरतास्तस्मिन्राजनि शासति ।। ६ ।।

बभूवुर्नाभवन्पीडास्तस्मिंश्चोरादिसंभवाः ।।

कदाचिद्धर्मगुप्तोऽयमारूढस्तुरगोत्तमम् ।। ७ ।।

वनं विवेश विप्रेंद्रा मृगयारसकौ तुकी ।।

तमालतालहिंतालकुरवाकुलदिङ्मुखे ।। ८ ।।

विचचार वने तस्मिन्सिंहव्याघ्रभयानके ।।

मत्तालिकुलसंनादसंमूर्छितदिगंतरे ।। ९ ।।

पद्म कल्हारकुमुदनीलोत्पलवनाकुलैः ।।

तटाकैरपि संपूर्णे तपस्विजनमंडिते ।।3.1.32.१०।।

तस्मिन्वने संचरतो धर्मगुप्तस्य भूपतेः ।।

अभूद्विभावरी विप्रास्त मसावृतदिङ्मुखा ।। ११ ।।

राजापि पश्चिमां संध्यामुपास्य नियमान्वितः ।।

जजाप तत्र च वने गायत्रीं वेदमातरम् ।। १२ ।।

सिंहव्याघ्रादिभीत्या स्मिन्वृक्षमेकं समास्थिते ।।

राजपुत्रे तदाभ्यागादृक्षः सिंहभयार्दितः ।। १३ ।।

अन्वधावतं तं ऋक्षमैकः सिंहो वनेचरः ।।

अनुद्रुतः स सिंहेन ऋक्षो वृक्षमुपारुहत् ।। १४ ।।

आरुह्य ऋक्षो वृक्षं तं ददर्श जगतीपतिम् ।।

वृक्षस्थितं महात्मानं महाबलपराक्रमम् ।। १५ ।।

उवाच भूपतिं दृष्ट्वा ऋक्षोयं वनगोचरः ।।

मा भीतिं कुरु राजेंद्र वत्स्यावो रजनीमिह ।। १६ ।।

महासत्त्वो महाकायो महादंष्ट्रासमाकुलः ।।

वृक्षमूलं समायातः सिंहो यमतिभीषणः ।। १७ ।।

रात्र्यर्धं भज निद्रा त्वं रक्ष्यमाणो मयादितः ।।

ततः प्रसुप्तं मां रक्ष शर्वर्यर्धं महामते ।। १८ ।।

इति तद्वाक्यमादाय सुप्ते नंदसुते हरिः ।।

प्रोवाच ऋक्षं सुप्तोऽयं नृपश्च त्यज्यतामिति ।। १९ ।।

तं सिंहमब्रवीदृक्षो धर्मज्ञो द्विजसत्तमाः।।

भवान्धर्मं न जानीषे मृगराज वनेचर ।। 3.1.32.२० ।।

विश्वासघातिनां लोके महाकष्टा भवंति हि ।।

न हि मित्रद्रुहां पापं नश्येयज्ञायुतैरपि ।। २१ ।।

ब्रह्महत्यादिपापानां कथंचिन्निष्कृतिर्भवेत् ।।

विश्वस्तघातिनां पापं न नश्येज्जन्मकोटिभिः ।। २२ ।।

नाहं मेरुं महाभारं मन्ये पंचास्य भूतले ।।

महाभारमिमं मन्ये लोके विश्वासघातकम् ।। २३ ।।

एवमुक्तेऽथ ऋक्षेण सिंहस्तूष्णीमभूत्तदा ।।

धर्मगुप्ते प्रबुद्धे तु ऋक्षः सुष्वाप भूरुहे ।।२४।।

ततः सिंहोऽब्रवीद्भूपमेनमृक्षं त्यजस्व मे ।।

एवमुक्तेऽथ सिंहेन राजा सुप्तमशंकितः ।।२५।।

स्वांकन्यस्तशिरस्कं तमृक्षं तत्याज भूतले ।।

पात्यमानस्ततो राज्ञा नखालंबितपादपः ।।२६।।

ऋक्षः पुण्यवशाद्वृक्षान्न पपात महीतले ।।

स ऋक्षो नृपमभ्येत्य कोपाद्वाक्यमभाषत।।२७।।

कामरूपधरो राजन्नहं भृगुकुलोद्भवः ।।

ध्यानकाष्ठाभिधो नाम्ना ऋक्षरूपमधारयम् ।। २८ ।।

यस्मादनागसं सुप्तमत्याक्षीन्मां भवान्नृप ।।

मच्छापात्त्वमतः शीघ्रमुन्मत्तश्चर भूपते ।। २९ ।।

इति शस्वा मुनिर्भूपं ततः सिंहमभाषत ।।

नृसिंहस्त्वं महायक्षः कुबेरसचिवः पुरा ।।3.1.32.३।।।

हिमवद्गिरिमासाद्य कदाचित्त्वं वधूसखः ।।

अज्ञानाद्गौतमाभ्याशे विहारमतनोर्मुदा ।। ।। ३१ ।।

गौतमोप्युटजाद्दैवात्समिदाहरणाय वै ।।

निर्गतस्त्वां विवसनं दृष्ट्वा शापमुदाहरत् ।। ३२ ।।

यस्मान्ममाश्रमेऽद्य त्वं विवस्त्रः स्थितवानसि ।।

अतः सिंहत्वमद्यैव भविता ते न संशयः ।। ३३ ।।

इति गौतमशापेन सिंहत्वमगमत्पुरा ।।

कुबेरसचिवो यक्षो भद्रनामा भवान्पुरा ।। ।। ३४ ।।

कुबेरो धर्मशीलो हि तद्भृत्याश्च तथैव हि ।।

अतः किमर्थं त्वं हंसि मामृषिं वनगोचरम् ।। ३५ ।।

एतत्सर्वमहं ध्याना ज्जानामीह मृगाधिप ।।

इत्युक्ते ध्यानकाष्ठेन त्यक्त्वा सिंहत्वमाशु सः ।। ३६ ।।

यक्षरूपं गतो दिव्यं कुबेरसचिवात्मकम् ।।

ध्यानकाष्ठमसावाह प्रांजलिः प्रणतो मुनिम् ।। ३७ ।।

अद्य ज्ञातं मया सर्वं पूर्ववृत्तं महामुने ।।

गौतमः शापकाले मे शापांतमपि चोक्तवान् ।। ३८ ।।

ध्यानकाष्ठे न संवाद ऋक्षरूपेण ते यदा ।।

तदा निर्धूय सिंहत्वं यक्षरूपमवाप्स्यसि ।। ३९ ।।

इति मामब्रवीद्ब्रह्मन्गौतमो मुनिपुंगवः ।।

अद्य सिंहत्वनाशान्मे जानामि त्वां महामुने ।। 3.1.32.४० ।।

ध्यानकाष्ठाभिधं शुद्धं कामरूपधरं सदा ।।

इत्युक्त्वा तं प्रणम्याथ ध्यानकाष्ठं स यक्षराट् ।। ४१ ।।

विमानवरमा रुह्य प्रययावलकापुरीम् ।।

तस्मिन्गते तु यक्षेशे ध्यानकाष्ठो महामुनिः ।। ४२ ।।

अव्याहतेष्टगमनो यथेष्टः प्रययौ महीम् ।।

ध्यानकाष्ठे गते तस्मि न्कामरूपधरे मुनौ ।। ४३ ।।

धर्मगुप्तौ मुनेः शापादुन्मत्तः प्रययौ पुरीम् ।।

उन्मत्तरूपं तं दृष्ट्वा मंत्रिणस्तु नृपोत्तमम् ।। ४४ ।।

पितुः सकाशमा निन्यू रेवातीरे मनोरमे ।।

तस्मै निवेदयामासुर्मतिभ्रंशं सुतस्य ते ।। ४५ ।।

ज्ञात्वा तु पुत्रवृत्तांतं नन्दस्तस्य पिता तदा ।।

पुत्रमादाय तरसा जैमिनेरन्तिकं ययौ ।।

तस्मै निवेदयामास पुत्रवृत्तान्तमादितः ।। ४६ ।।

भगवञ्जैमिने पुत्रो ममाद्योन्मत्ततां गतः ।। ४७ ।।

अस्योन्मादविनाशाय ब्रूह्युपायं महामुने ।।

इति पृष्टश्चिरं दध्यौ जैमिनिर्मुनिपुंगवः ।। ४८ ।।

ध्यात्वा तु सुचिरं कालं नृपं नंदमथाब्रवीत् ।।

ध्यानकाष्ठस्य शापेन ह्युन्म त्तस्ते सुतोऽभवत् ।। ४९ ।।

तस्य शापस्य मोक्षार्थमुपायं प्रब्रवीमि ते ।।

दक्षिणांबुनिधौ सेतौ पुण्ये पापविनाशने ।। 3.1.32.५० ।।

धनुष्कोटिरिति ख्यातं तीर्थमस्ति महत्तरम् ।।

पवित्राणां पवित्रं च मंगलानां च मंगलम् ।। ५१ ।।

श्रुतिसिद्धं महापुण्यं ब्रह्महत्यादिशोधकम् ।।

नीत्वा तत्र सुतं तेऽद्य स्नापयस्व महीपते ।। ५२ ।।

उन्मादस्तत्क्षणादेव तस्य नश्येन्न संशयः ।।

इत्युक्तस्तं प्रणम्यासौ जैमिनिं मुनिपुंगवम् ।। ५३ ।।

नंदः पुत्रं समादाय धनुष्कोटिं ययौ तदा ।।

तत्र च स्नापयामास पुत्रं नियमपूर्वकम् ।। ५४ ।।

स्नानमात्रात्ततः सद्यो नष्टोन्मादोऽभवत्सुतः ।।

स्वयं सस्नौ स नन्दोपि धनुष्कोटौ सभक्तिकम् ।। ५५ ।।

उषित्वा दिनमेकं तु सपुत्रस्तु पिता तदा ।।

सेवित्वा रामनाथं च सांबमूर्तिं घृणानिधिम् ।। ५६ ।।

पुत्रमापृच्छ्य नंदस्तं प्रययौ तपसे वनम् ।।

गते पितरि पुत्रोऽपि धर्मगुप्तो नृपो द्विजाः ।। ५७ ।।

प्रददौ रामनाथाय बहुवित्तानि भक्तितः ।।

ब्राह्मणेभ्यो धनं धान्यं क्षेत्राणि च ददौ तदा ।। ५८ ।।

प्रययौ मंत्रिभिः सार्धं स्वां पुरीं तदनंतरम् ।।

धर्मेण पालयामास राज्यं निहतकण्टकम् ।।५९।।

पितृपैतामहं विप्रा धर्मगुप्तोऽतिधार्मिकः ।।

उन्मादैरप्यपस्मारैर्ग्रहैर्दुष्टैश्च ये नराः ।। 3.1.32.६० ।।

ग्रस्ता भवंति विप्रेंद्रास्तेऽपि चात्र निमज्जनात् ।।

धनुष्कोटौ विमुक्ताः स्युः सत्यं सत्यं वदाम्यहम् ।। ६१ ।।

परित्यज्य धनुष्कोटिं तीर्थमन्यद्व्रजेत्तु यः ।।

सिद्धं स गोपयस्त्यक्त्वा स्नुहीक्षीरं प्रयाचते ।। ।। ६२ ।।

धनुष्कोटिर्धनुष्कोटिर्धनुष्कोटिरिति द्विजाः ।।

त्रिः पठन्तो नरा ये तु यत्र क्वापि जलाशये ।। ६३ ।।

स्नांति सर्वे नरास्ते वै यास्यंति ब्रह्मणः पदम् ।।

एवं वः कथिता विप्रा धर्मगुप्तकथा शुभा ।। ६४ ।।

यस्याः श्रवणमात्रेण ब्रह्महत्या विनश्यति ।।

स्वर्णस्तेयादयश्चान्ये नश्येयुः पापसंचयाः ।। ६५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये धनुष्कोटिप्रशंसायां धर्मगुप्तोन्मा दविमोक्षणवर्णनंनाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३३

https://sa.wikisource.org/s/fsx
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।।

भूयोऽप्यहं प्रवक्ष्यामि धनुष्कोटेस्तु वैभवम् ।।

अत्यद्भुततरं गुह्यं सर्वलोकैकपावनम् ।। १ ।।

पुरा परावसुर्नाम ब्राह्मणो वेदवित्तमः ।।

अज्ञानात्पितरं हत्वा ब्रह्महत्यामवाप्तवान् ।।

सोऽपि स्नात्वा धनुष्कोटौ तद्दोषा न्मुमुचे क्षणात् ।। २ ।।

।। ऋषय ऊचुः ।। ।।

पितरं हतवान्पूर्वं कथं सूत परावसुः ।। ३ ।।

कथं वा धनुषः कोटौ मुक्तिस्तस्याप्यभून्मुने ।।

एतन्नः श्रद्दधानानां विस्तराद्वक्तुमर्हसि ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

आसीद्राजा बृहद्द्युम्नश्चक्रवर्ती महाबलः ।।

धर्मेण पालयामास सागरांतां वसुन्धराम् ।। ५ ।।

अयजत्सत्रयागेन देवानिंद्रपुरोगमान् ।।

याजकस्तस्य रैभ्योऽभूद्विद्वान्परमधार्मिकः ।। ६ ।।

आस्तां पुत्रावुभौ तस्याप्यर्वावसु परावसू ।।

षडंगवेदविदुषौ श्रौतस्मार्तेषु कोविदौ ।।७ ।।

काणादे जैमिनीये च सांख्ये वैयासिके तथा ।।

गौतमे योगशास्त्रे च पाणिनीये च कोवि दौ ।।८।।

मन्वादिस्मृतिनिष्णातौ सर्वशास्त्रविशारदौ ।।

सत्रयागे सहायार्थं बृहद्द्युम्नेन याचितौ ।।९।।

भ्रातरौ समनुज्ञातौ पित्रा रैभ्येण जग्मतुः ।।

बृहद्द्युम्नस्य सत्रं तावश्विनाविव रूपिणौ ।।3.1.33.१०।।

अतिष्ठदाश्रमे रैभ्यः स्नुषया ज्येष्ठया सह ।।

तौ गत्वा भ्रातरौ तत्र राज्ञः सत्रमनुत्तमम्।।११।।

याज यामासतुः सत्रे बृहद्द्युम्नं महीपतिम् ।।

नाभवत्स्खलनं भ्रात्रोः सत्रे सांगेषु कर्मसु ।। १२ ।।

सत्रे संतन्यमानेऽस्मिन्बृहद्द्युम्नस्य भूपतेः ।।

मुनयो भ्यागमन्सर्वे राज्ञाहूता निरीक्षितुम् ।।१३।।

वसिष्ठो गौतमश्चात्रिर्जाबालिरथ कश्यपः ।।

क्रतुर्दक्षः पुलस्त्यश्च पुलहो नारदो मुनिः ।। १४ ।।

मार्कंडेयः शतानंदो विश्वामित्रः पराशरः ।।

भृगुः कुत्सोऽथ वाल्मीकिर्व्यासधौम्यादयोऽपरे ।। १५ ।।

शिष्यैः प्रशिष्यैर्बहुभिरसंख्यातैः समावृताः ।।

तानागतान्समालोक्य बृहद्द्युम्नो महीपतिः ।। १६ ।।

अर्घ्यादिना मुनीन्सर्वान्पूजयामास सादरम् ।।

नाना दिग्भ्यः समायाताश्चतुरंगबलैर्युताः ।। १७ ।।

उपदासहिता भूपास्सत्रं वीक्षितुमादरात् ।।

वैश्याः शूद्रास्तथा वर्णाश्चत्वरोऽपि समागताः ।। १८ ।।

वर्णिनोऽथ गृहस्थाश्च वानप्रस्थाश्च भिक्षवः ।।

सत्रं निरीक्षितुं तस्य बृहद्द्युम्नस्य चाययुः ।। १९ ।।

तान्सर्वान्पूजयामास यथार्हं राजसत्तमः ।।

ददौ चान्नानि सर्वेभ्यो घृतसूपादिकांस्तथा ।। 3.1.33.२० ।।

वस्त्राणि च सुवर्णानि हाररत्नान्यनेकशः ।।

एवं सत्कारयामास राजा सत्रे समागतान् ।। २१ ।।

रैभ्यपुत्रो तदा विप्रा अर्वावसुपरावसू ।।

अध्वरादीनि कर्माणि चक्रतुः स्खलितं विना ।। २२ ।।

तद्दृष्ट्वा मुनयस्सर्वे कौशलं रैभ्यपुत्रयोः ।।

श्लाघंते सशिरःकम्पं वसिष्ठप्रमुखास्तदा ।। २३ ।।

कर्माणि कानि चित्तत्र कारयित्वा परावसुः ।।

तृतीयसवनस्यांते गृहकृत्यं निरीक्षितुम् ।। २४ ।।

प्रययौ स्वाश्रमं सायं विनैवार्वावसुं द्विजाः ।।

तस्मिन्नवसरे रैभ्यं कृष्णाजिनसमावृतम् ।। २५ ।।

वने चरंतं पितरं दृष्ट्वा स मृगशंकया ।।

निद्राकलुषितो रात्रावंधे तमसि संकुले ।। २६ ।।

आत्मानं हंतुमायाति मृगोऽयमिति चिंतयन् ।।

जघान पितरं सोऽयं महारण्ये परावसुः ।। २७ ।।

रिरक्षुणा शरीरं स्वं तेनाकामनया पिता ।।

रजन्यां हिंसितो विप्रा महापातककारिणा ।। २८ ।।

अंतिकं स समागत्य व्यलोकयत तं हतम् ।।

ज्ञात्वा स्वपितरं रात्रौ शुशोच व्यथितेंद्रियः ।। ।। २९ ।।

प्रेतकार्यं ततः कृत्वा पितुः सर्वं परावसुः ।।

भूयोपि नृपतेः सत्रं परावसुरुपाययौ ।। 3.1.33.३० ।।

स्वचेष्टितं तु तत्सर्वमनुजाय ततोऽब्रवीत् ।।

मृतं स्वपितरं श्रुत्वा सोऽपि शोकाकुलोऽभवत् ।। ३१ ।।

ज्येष्ठोऽनुजं ततः प्राह वचनं द्विजसत्तमाः ।।

महत्सत्रं समारब्धं बृहद्द्युम्नस्य भूपतेः ।। ।। ३२ ।।

वोढुत्वशक्तिर्नास्त्यस्य कर्मणो बालकस्य ते ।।

जनकश्च हतो रात्रौ मयापि मृगशंकया ।। ३३ ।।

प्रायश्चित्तं च कर्त्तव्यं ब्रह्महत्या विशुद्धये ।।

मदर्थं व्रतचर्यां त्वं चर तात कनिष्ठक ।। ३४ ।।

एकाकी धुरमुद्वोढुं शक्तोऽहं सत्रकर्मणः ।।

अर्वावसुरिति प्रोक्तो ज्येष्ठेन स तमभ्य धात् ।। ३५ ।।

तथा भवत्वहं ज्येष्ठ चरिष्ये व्रतमुत्तमम् ।।

ब्रह्महत्याविशुद्ध्यर्थं त्वं सत्रधुरमावह ।। ३६ ।।

इत्युक्त्वा सोनुऽजो ज्येष्ठं तस्मात्सत्राद्वि निर्ययौ ।।

कारयामास कर्माणि ज्येष्ठस्तस्मिन्गते कतौ ।। ३७ ।।

द्वादशाब्दं कनिष्ठोपि ब्रह्महत्याव्रतं द्विजाः ।।

चरित्वा सत्रयागेऽस्मिन्नाजगाम पुनर्मुदा ।। ३८ ।।

तं दृष्ट्वा भ्रातरं ज्येष्ठो बृहद्द्युम्नमुवाच ह ।।

अयं ते ब्रह्महा सत्रमर्वावसुरुपागतः ।। ३९ ।।

एनमुत्सारयाशु त्वमस्मात्सत्रान्नृपो त्तम ।।

अन्यथा सत्रयागस्य फलहानिर्भविष्यति ।। 3.1.33.४० ।।

इतीरितः स स्वप्रेष्यैर्यागात्तमुदवासयत् ।।

उद्वास्यमानो राजानमर्वावसुरथाब्रवीत् ।। ।। ४१ ।।

न मया ब्रह्महत्येयं बृहद्द्युम्न कृतानघ ।।

किन्तु ज्येष्ठेन मे सा हि ब्रह्महत्या कृता विभो ।। ४२ ।।

ब्रह्महत्याव्रतं चीर्णं तदर्थं च मया धुना ।।

एवमुक्तोपि राजासौ वचसा स परावसोः ।। ४३ ।।

अर्वावसुं निजात्सत्रादुदवासयदाशु वै ।।

धिक्कृतो ब्राह्मणैश्चायं ययौ तूष्णीं वनं तदा ।। ४४ ।।

मुनिवृन्दसमाकीर्णं तपोवनमुपेत्य सः ।।

अर्वावसुस्तपश्चक्रे देवैरपि सुदुष्करम् ।। ४५ ।।

तपः कुर्वंस्तथादित्यमुपतस्थे समा हितः ।।

मूर्तिमांस्तपसा तस्य महताऽदुष्टधीः स्वयम् ।। ४६ ।।

आविरासीत्स्वया दीप्त्या भासयञ्जगतीतलम् ।।

कर्मसाक्षी जगच्चक्षुर्भास्करो देवताग्रणीः ।। ४७ ।।

आविर्बभूवुर्देवाश्च पुरस्कृत्य शचीपतिम् ।।

इन्द्रादयस्ततो देवाः प्रोचुरर्वावसुं द्विजाः ।।४८।।

अर्वावसो त्वं प्रवरस्तपसा ब्रह्म चर्यतः ।।

आचारेण श्रुतेनापि वेदशास्त्रादिशिक्षया ।। ४९ ।।

निराकृतोवमानेन त्वं परावसुना बहु ।।

तथापि क्षमया युक्तो न कुप्यति भवान्यतः ।। 3.1.33.५० ।।

यस्माज्ज्येष्ठोऽवधीत्तातं न हिंसीस्त्वं महामते ।।

ब्रह्महत्याव्रतं यस्मात्तदर्थं चरितं त्वया ।। ५१ ।।

अतः स्वीकुर्म हे त्वां तु पराकुर्मः परावसुम् ।।

उक्त्वैवं बलभिन्मुख्याः सर्वे च त्रिदिवालयाः ।। ५२ ।।

तं ते प्रवरयामासुर्निरासुश्च परावसुम् ।।

पुनरिंद्रादयो देवाः पुरोधाय दिवाकरम् ।। ५३ ।।

अर्वावसुं प्रोचुरिदं वरं त्वं वरयेति वै ।।

स चापि प्रार्थयामास जनकस्योत्थितिं पुन. ।। ५४ ।।

वधे चास्मरणं देवानात्मनो जनकस्य वै ।।

तथास्त्विवति सुराः प्रोचुः पुनरूचुरिदं वचः ।। ५५ ।।

वरं चान्यं प्रदास्यामो वरय त्वं महामते ।।

एवमुक्तः सुरैः सोयमर्वावसुरभाषत ।। ५६ ।।

मम भ्रातुरदुष्टत्वं भवतु त्रिदशालयाः ।।

अर्वावसोर्वचः श्रुत्वा त्रिदशाः पुनरब्रुवन् ।। ५७ ।।

ब्राह्मणस्य पितुर्घातान्महान्दोषः परावसोः ।।

न ह्यन्यकृतपापस्य परेणानुष्ठितेन वै ।।५८।।

प्रायश्चित्तेन शांतिः स्यान्महापातकपंचके ।।

पितुर्ब्राह्मणहंतुस्तु सुतरां नास्ति निष्कृतिः।।५९।।

आत्मनानुष्ठितेनापि व्रतेन न हि दुष्कृतिः।।

परावसोस्तव भ्रातुरतो नैवास्ति निष्कृतिः ।।3.1.33.६०।।

अतोऽस्माभिरदुष्टत्वमस्मै दातुं न शक्यते ।।

अर्वावसुः पुनःप्राह देवानिंद्रपुरोगमान्।।६१।।

तथापि युष्मन्माहात्म्यात्प्रसादाद्भवतां तथा।।

पितुर्ब्राह्मणहंतुर्मे भ्रातुस्त्रिदशसत्तमाः।।६२।।

यथा स्यान्निष्कृतिर्ब्रूत तथैव कृपया युताः ।।

एवमर्वावसोः श्रुत्वा वचस्ते त्रिदशालयाः ।। ६३ ।।

ध्यात्वा तु सुचिरं कालं विनिश्चित्येदमबुवन् ।।

उपायं ते प्रवक्ष्यामस्तत्पातकनिवारणम् ।।६४।।

दक्षिणांबुनिधौ पुण्ये रामसेतौ विमुक्तिदे ।।

धनुष्कोटिरिति ख्यातं तीर्थमस्ति विमुक्तिदम् ।। ६५ ।।

ब्रह्महत्यासुरापानस्वर्णस्तेयविनाशनम्।।

गुरुतल्पगसंसर्गदोषाणामपि नाशनम् ।। ६६ ।।

अकामेनापि यः स्नायादपवर्गफलप्रदम् ।।

दुःस्वप्ननाशनं धन्यं नरकक्लेशनाशनम् ।। ६७ ।।

कैलासादिपदप्राप्तिकारणं परमार्थदम् ।।

सर्वकाममिदं पुंसामृणदारिद्र्यनाशनम् ।। ६८ ।।

धनुष्कोटिर्धनु ष्कोटिर्धनुष्कोटिरितीरणात् ।।

स्वर्गापवर्गदं पुंसां महापुण्यफलप्रदम् ।। ६९ ।।

तत्र गत्वा तव भ्राता स्नायाद्यदि परावसुः ।।

तत्क्षणादेव ते ज्येष्ठो मुच्यते ब्रह्महत्यया ।। 3.1.33.७० ।।

इदं रहस्यं सुमहत्प्रायश्चित्तमुदीरितम् ।।

उक्त्वेत्यर्वावसुं देवाः प्रययुः स्वपुरीं प्रति ।। ७१ ।।

तत अर्वावसुर्ज्येष्ठं समादाय परावसुम् ।।

रामचन्द्रधनुष्कोटिं प्रययौ मुक्तिदायिनीम् ।। ७२ ।।

सेतौ संकल्पमुक्त्वा तु नियमेन परावसुः ।।

सह भ्रात्रा धनुष्कोटौ सस्नौ पातकशुद्धये ।। ७३ ।।

स्नात्वोत्थितं धनुष्कोटौ तं प्रोवाचाशरीरिणी ।।

परावसो विनष्टा ते पितुर्ब्राह्मणघातजा ।। ७४ ।।

ब्रह्महत्या महा घोरा नरकक्लेशकारिणी ।।

इत्युक्त्वा विररामाथ सापि वागशरीरिणी ।। ७५ ।।

परावसुस्तदा विप्राः कनिष्ठेन समन्वितः ।।

रामचन्द्रधनुष्कोटिं प्रणम्य च सभक्तिकम् ।। ७६ ।।

रामनाथं महादेवं नत्वा भक्तिपुरःसरम् ।।

विमुक्तपातको विप्राः प्रययौ पितुराश्रमम् ।। ७७ ।।

मृत्वोत्थितस्तदा रैभ्यो दृष्ट्वा पुत्रौ समागतौ ।।

संतुष्टहृदयो ह्यास्ते पुत्राभ्यां स्वाश्रमे तदा ।। ७८ ।।

रामचन्द्रधनुष्कोटौ स्नानेन हतपातकम् ।।

एनं परावसुं सर्वे स्वीचक्रुर्मुनयस्तदा ।। ७९ ।।

एवं परावसोरुक्तं ब्रह्महत्याविमोक्षणम् ।।

स्नानमात्राद्धनुष्कोटौ युष्माकं मुनिपुंगवाः ।। 3.1.33.८० ।।

सुरा पानादयो विप्रा नश्यंत्येवात्र मज्जनात् ।।

सत्यंसत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।। ९१ ।।

महापातकसंघाश्च नश्येयुर्मज्जनादिह ।।

य इमं पठतेऽध्यायं ब्रह्महत्याविमोक्षणम् ।। ८२ ।।

ब्रह्महत्या विनश्येत तत्क्षणान्नास्ति संशयः ।।

सुरापानादयोऽप्यस्य शांतिं गच्छेयुरंजसा ।। ८३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये धनुष्कोटिप्रशंसायां परावसोर्ब्रह्महत्याविमो क्षणंनाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३४

https://sa.wikisource.org/s/frz
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

इतिहासं पुनर्वक्ष्ये धनुष्कोटिप्रशंसनम् ।।

सृगालस्य च संवादं वानरस्य च सत्तमाः।। ।।१।।

सृगालवानरौ पूर्वमास्तां जातिस्मरावुभौ।।

पुरापि मानुषे भावे सखायौ तौ बभूवतुः।।२।।

अन्यां योनिं समापन्नौ सार्गालीं वानरीं तथा ।।

सख्यं समीयतुरुभौ सृगालो वानरो द्विजाः ।। ३ ।।

कदाचिद्रुद्रभूमिष्ठं सृगालं वानरोऽब्रवीत् ।।

श्मशानमध्ये संप्रेक्ष्य पूर्वजातिमनुस्मरन् ।। ४ ।।

।। वानर उवाच ।। ।।

सृगाल पातकं पूर्वं किमकार्षीः सुदारुणम् ।।

यस्त्वं श्मशाने मृतकान्पूतिगंधांश्च कुत्सितान् ।।

अत्सीत्युक्तोऽथ कपिना सृगालस्तमभाषत ।। ५ ।।

।। सृगाल उवाच ।। ।।

अहं पूर्वभवे ह्यासं ब्राह्मणो वेदपारगः ।। ६ ।।

वेदशर्माभिधो विद्वान्सर्वकर्मकलापवित् ।।

ब्राह्मणाय प्रतिश्रुत्य न मया तत्र जन्मनि ।। ७ ।।

कपे धनं तदा दत्तं सृगालोऽहं ततोऽभवम्।।

तस्मादेवंविधं भक्ष्यं भक्षयाम्यतिकुत्सितम् ।। ८ ।।

प्रतिश्रुत्य दुरात्मानो न प्रयच्छंति ये नराः ।।

कपे सृगालयोनिं ते प्राप्नुवंत्यतिकुत्सिताम् ।। ९ ।।

यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।।

सर्वाशास्तस्य नष्टाः स्युः षंढस्येव प्रजोद्भवः ।। 3.1.34.१० ।।

प्रतिश्रुत्याप्रदाने तु ब्राह्मणाय प्लवंगम ।।

दशजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति ।। ११ ।।

प्रतिश्रुत्याप्रदानेन यत्पापमुपजायते ।।

नाश्वमेधशतेनापितत्पापं परिशुध्यति ।। १२ ।।

न जानेहमिदं पापं कदा नष्टं भवेदिति ।।

तस्मात्प्रतिश्रुतं द्रव्यं दातव्यं विदुषा सदा ।। १३ ।।

प्रतिश्रुत्याप्रदानेन सृगालो भवति ध्रुवम् ।।

तस्मात्प्राज्ञेन विदुषा दातव्यं हि प्रतिश्रुतम् ।। १४ ।।

इत्युक्त्वा स सृगालस्तं वानरं पुनरब्रवीत् ।।

भवता किं कृतं पापं येन वानरतामगात् ।। १५ ।।

अनागसो वनचरान्पक्षिणो हिंसि वानर ।।

तत्पातकं वदस्वाद्य वानरत्वप्रदं मम ।।

इत्युक्तः स सृगालेन सृगालं वानरोऽब्रवीत् ।। १६ ।।

।। वानर उवाच ।। ।।

पुरा जन्मन्यहं विप्रो वेदनाथ इति स्मृतः ।। ।। १७ ।।

विश्वनाथो मम पिता ममांबा कमलालया ।।

सृगाल सख्यमभवदावयोः प्राग्भवेऽपि हि ।। १९ ।।

त्वं न जानासि तत्सर्वं वेद्म्यहं पुण्य गौरवात् ।।

तपसाराध्य गिरिशं तत्प्रसादात्पुरा मम ।। १९ ।।

अतीतभाविविज्ञानमस्ति जन्मांतरेऽपि च ।।

गोमायो तद्भवे शाकं ब्राह्मणस्य हृतं मया ।। 3.1.34.२० ।।

तत्पापाद्वानरो जातो नरकानुभवादनु ।।

नाहर्तव्यं विप्रधनं हरणान्नरकं भवेत् ।। २१ ।।

अनंतरं वानरत्वं भविष्यति न संशयः ।।

तस्मान्न ब्राह्मणस्वं तु हर्तव्यं विदुषा सदा ।। २२ ।।

ब्रह्मस्वहरणात्पापमधिकं नैव विद्यते ।।

पीतवंतं विषं हंति ब्रह्मस्वं सकुलं दहेत् ।। २३ ।।

ब्रह्मस्वहरणात्पापी कुंभीपाकेषु पच्यते ।।

पश्चान्नरकशेषेण वानरीं योनिमश्नुते ।। २४ ।।

विप्रद्रव्यं न हर्तव्यं क्षंतव्यं तेष्वतः सदा ।।
बाला दरिद्राः कृपणा वेदशास्त्रादिवर्जिताः ।। २५ ।।
ब्राह्मणा नावमंतव्याः क्रुद्धाश्चेदनलोपमाः ।।
अतीतानागतं ज्ञानं सृगालाखिलमस्ति मे ।। २६ ।।
ज्ञानमस्ति न मे त्वेकमेतत्पापविशोधनम्।।
जातिस्मरोऽपि हि भवान्भाविकार्यं न बुध्यते ।।२७ ।।
अतीतेष्वपि किंचिज्ज्ञः प्रतिबंधवशाद्भवान् ।।
अतो भवान्न जानीते भाव्यतीतं तथाखिलम् ।। २८ ।।
कियत्कालं सृगालातो भुक्ता व्यसनमीदृशम् ।।
आवयोरस्य पापस्य को वा मोचयिता भवेत् ।। ।। २९ ।।
एवं प्रब्रुवतोस्तत्र प्लवंगमसृगालयोः।।
यदृच्छया दैवयोगात्पूर्वपुण्यवशाद्द्विजाः ।।3.1.34.३०।।
आययौ स महातेजाः सिंधुद्वीपाह्वयो मुनिः।।
भस्मोद्धूलितसर्वांगस्त्रिपुंड्रांकितमस्तकः ।। ३१।।
रुद्राक्षमालाभरणः शिवनामानि कीर्तयन् ।।
सृगालवानरौ दृष्ट्वा सिंधुद्वीपाभिधं मुनिम् ।।
प्रणम्य मुदि तौ भूत्वा पप्रच्छतुरिदं तदा ।। ३२ ।।
।। सृगालवानरावूचतुः ।। ।।
भगवन्सर्वधर्मज्ञ सिंधुद्वीप महामुने ।। ३३ ।।
आवां रक्ष कृपादृष्ट्या विलोकय मुहुर्मुदा ।।
कपित्वं च सृगालत्वमावयोर्येन नश्यति ।। ३४ ।।
तमुपायं वदस्वाद्य त्वं हि पुण्यवतां वरः ।।
अनाथान्कृपणानज्ञान्बालान्रोगातुराञ्जनान् ।। ३५ ।।
रक्षंति साधवो नित्यं कृपया निरपेक्षकाः ।।
ताभ्यामितीरितः प्राज्ञः सिंधुद्वीपो महामुनिः ।।
प्राह तौ कपिगोमायू ध्यात्वा तु मनसा चिरम् ।। ३६ ।।
।। सिंधुद्वीप उवाच ।। ।।
जानाम्यहं युवां सम्यग्घे सृगालप्लवंगमौ ।। ३७ ।।

सृगाल प्राग्भवे त्वं वै वेदशर्माभिधो द्विजः ।।

ब्राह्मणाय प्रतिश्रुत्य धान्यानामाढकं त्वया ।। ३८ ।।

न दत्तं तेन पापेन सार्गालीं योनिमाप्तवान् ।।

त्वं च वानर पूर्वस्मिन्वेदनाथाभिधो द्विजः ।। ३९ ।।

ब्राह्मणस्य गृहाच्छाकं हृतं चौर्यात्त्वया तत ।।

प्राप्तोसि वानरीं योनिं सर्वपक्षिभयंकरीम् ।। 3.1.34.४० ।।

युवयोः पापशांत्यर्थमुपायं प्रवदाम्यहम् ।।

दक्षिणांबुनिधौ रामधनुष्कोटौ युवामरम् ।। ४१ ।।

गत्वात्र कुरुतं स्नानं तेन पापाद्विमोक्ष्यथः ।।

पुरा किरातीसंसर्गात्सुमतिर्ब्राह्मणः सुराम् ।।

पीतवान्त्स धनुष्कोटौ स्नात्वा पापाद्विमोचितः ।। ४२ ।।

।। सृगाल वानरावूचतुः ।। ।।

सुमतिः कस्य पुत्रोऽसौ कथं च स सुरां पपौ ।। ४३ ।।

कथं किरात्यां सक्तोऽभूत्सिंधुद्वीप महामते ।।

आवयोर्विस्तरादेतद्वद त्वं कृपायाधुना ।। ४४ ।।

।। सिंधुद्वीप उवाच ।। ।।

महाराष्ट्राभिधे देशे ब्राह्मणः कश्चिदास्तिकः ।।

यज्ञदेव इति ख्यातो वेदवेदांगपारगः ।। ४५ ।।

दयालुरातिथेयश्च शिवनारायणार्चकः ।।

सुमतिर्नाम पुत्रोऽभूद्यज्ञदेवस्य तस्य वै ।। ४६ ।।

पितरौ स परित्यज्य भार्यामपि पतिव्रताम् ।।

प्रययावुत्कले देशे विटगोष्ठीपरायणः ।। ४७ ।।

काचित्किराती तद्देशे वसन्ती युवमोहिनी ।।

यूनां समस्तद्रव्याणि प्रलोभ्य जगृहे चिरम् ।। ४८ ।।

तस्या गृहं स प्रययौ सुमतिर्ब्राह्मणाधमः ।।

सुमतिं सा न जग्राह किराती निर्धनं द्विजम् ।। ४९ ।।

तया त्यक्तोऽथ सुमतिस्तत्संयोगैकतत्परः ।।

इतस्ततश्चोरयित्वा बहुद्रव्याणि संततम् ।। 3.1.34.५० ।।

दत्वा तया चिरं रेमे तद्ग्रहे बुभुजे च सः ।।
एकेन चषकेणासौ तया सह सुरां पपौ ।। ५१ ।।
एवं स बहुकालं वै रममाणस्तया सह ।।
पितरौ निजपत्नीं च नास्मरद्विषयातुरः ।। ५२ ।।
स कदाचित्किरातैस्तु चौर्यं कर्तुं ययौ सह ।।
द्रव्यं हर्तुं किरातास्ते लाटानां विषयं ययुः ।।५३।।
विप्रस्य कस्यचिद्गेहे सोऽपि कैरातवेषधृक्।।
ययौ चोरयितुं द्रव्यं साहसी खड्गहस्तवान् ।। ५४ ।।
तद्गृहस्वामिनं विप्रं हत्वा खड्गेन साहसी ।।
समादाय बहु द्रव्यं किरातीभवनं ययौ ।। ५५ ।।
तं यांतमनुयाति स्म ब्रह्महत्या भयंकरी ।।
नीलवस्त्रधरा भीमा भृशं रक्तशिरोरुहा ।। ५६ ।।
गर्जंती साट्टहासं सा कंपयन्ती च रोदसी ।।
अनुद्रुतस्तया सोऽयं बभ्राम जगतीतले ।। ५७ ।।
एवं भ्रमन्भुवं सर्वां कदाचित्सुमतिः स्वयम् ।।
स्वं ग्रामं प्रययौ भीत्या हे सृगालप्लवंगमौ ।। ५८ ।।
अनुद्रुतस्तया भीतः प्रययौ स्वगृहं प्रति ।।
ब्रह्महत्याप्यनुद्रुत्य तेन साकं गृहं ययौ ।। ५९ ।।
पितरं रक्ष रक्षेति सुमतिः शरणं ययौ ।।
मा भैषीरिति तं प्रोच्य पिता रक्षितुमुद्यतः ।।
तदानीं ब्रह्महत्येयं तत्तातं प्रत्यभाषत ।। 3.1.34.६० ।। ।
। ब्रह्महत्योवाच ।। ।।
मैनं त्वं प्रतिगृह्णीष्व यज्ञदेव द्विजोत्तम ।। ६१ ।।
असौ सुरापी स्तेयी च ब्रह्महा चातिपातकी ।।
मातृद्रोही पितृद्रोही भार्यात्यागी च पापकृत् ।। ६२ ।।
किरातीसंगदुष्टश्च नैनं मुञ्चाम्यहं द्विज ।।
गृह्णासि चेदिमं विप्र महापातकिनं सुतम् ।। ६३ ।।
त्वद्भार्यामस्य भार्यां च त्वां च पुत्रमिमं द्विज ।।

भक्षयिष्यामि वंशं च तस्मान्मुञ्च सुतं त्विमम् ।। ।। ६४ ।।

इमं त्यजसि चेत्पुत्रं युष्मान्मोक्ष्यामि सांप्रतम् ।।

नैकस्यार्थे कुलं हन्तुमर्हसि त्वं महामते ।।

इत्युक्तः स तया तत्र यज्ञदेवोऽब्रवीच्च ताम् ।। ६५ ।।

।। यज्ञदेव उवाच ।। ।।

बाधते मां सुतस्नेहः कथमेनं परित्यजे ।।

ब्रह्महत्या तदाकर्ण्य द्विजोक्तं तमभाषत ।। ६६ ।।

।। ब्रह्महत्योवाच ।। ।।

अयं हि पतितोऽभूत्ते वर्णाश्रमबहिष्कृतः ।। ६७ ।।

पुत्रेस्मिन्मा कुरु स्नेहं निंदितं तस्य दर्शनम्।।

इत्युक्त्वा ब्रह्महत्या सा यज्ञदेवस्य पश्यतः ।। ६८ ।।

तलेन प्रजहारास्य पुत्रं सुमतिनामकम् ।।

रुरोद तात तातेति पितरं प्रब्रुवन्मुहुः ।। ६९ ।।

रुरुदुर्जनको माता भार्यापि सुमतेस्तदा ।।

एतस्मिन्नंतरे तत्र दुर्वासाः शंकरांशजः ।। 3.1.34.७० ।।

दिष्टवा समाययौ योगी हे सृगालप्लवंगमौ ।।

यज्ञदेवोऽथ तं दृष्ट्वा मुनिं रुद्रावतारकम्।।

श्रुत्वा प्रणम्य शरणं ययाचे पुत्रकारणात् ।। ७१ ।।

।। पितोवाच ।। ।।

दुर्वासस्त्वं महायोगी साक्षाद्वै शंकरांशजः ।। ७२ ।।

त्वद्दर्शनमपुण्यानां भविता न कदाचन ।।

ब्रह्महा च सुरापी च स्तेयी चाभूत्सुतो मम ।। ७३ ।।

एनं प्रहर्तुमायाता ब्रह्महत्या विवर्तते ।।

भूयाद्यथा मे पुत्रोऽयं महापातकमोचितः ।। ७४ ।।

घोरा च ब्रह्महत्येयं यथा शीघ्रं लयं व्रजेत् ।।

तमुपायं वदस्वाद्य मम पुत्रे दयां कुरु ।। ७९ ।।

अयमेव हि पुत्रो मे नान्योऽस्ति तनयो मुने ।।

अस्मिन्मृते तु वंशो मे समुच्छिद्येत्समूलतः ।। ७६ ।।

ततः पितृभ्यः पिंडानां दातापि न भवेद्ध्रुवम् ।।
अतः कृपां कुरुष्व त्वमस्मासु भगवन्मुने ।। ७७ ।।
इत्युक्तः स तदोवाच दुर्वासाः शंकरांशजः ।।
ध्यात्वा तु सुचिरं कालं यज्ञदेवं द्विजोत्तमम् ।। ७८ ।।
।। दुर्वासा उवाच ।। ।।
य़ज्ञदेव कृतं पापमतिक्रूरं सुतेन ते ।।
नास्य पापस्य शांतिः स्यात्प्रायश्चित्तायुतैरपि ।। ७९ ।।
अथापि ते सुतस्याहमस्य पापस्य शांतये ।।
प्रायश्चित्तं वदिष्यामि शृणु नान्यमना द्विज ।। 3.1.34.८० ।।
श्रीरामधनुषः कोटौ दक्षिणे सलिलार्णवे ।।
स्नाति चेत्तव पुत्रोऽयं पातकान्मोक्ष्यते क्षणात् ।। ८१ ।।
दुर्विनीताभिधो विप्रो यत्र स्नानाद्द्विजोत्तम ।।
गुरुस्त्रीगम पापेभ्यस्तत्क्षणादेव मोचितः ।। ८२ ।।
सैषा श्रीधनुषः कोटी राघवस्य स्वयं हरेः ।।
स्नानमात्रेण पापौघं नाशयेत्त्वत्सुतस्य सा ।। ८३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये धनुष्कोटिप्रशंसायां सृगालवानरसंवादे सुमतिमहापातक विमोक्षोपायकथनंनाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३५



।। यज्ञदेव उवाच ।। ।।

दुर्वासर्षे महाप्राज्ञ परापरविचक्षण ।।

दुर्विनीताभिधः कोऽयं योऽसौ गुर्वंगनामगात् ।। १ ।।

कस्य पुत्रो धनुष्कोटौ स्नानेन स कथं द्विजः ।।

तत्क्षणान्मुमुचे पापाद्गुरुस्त्रीगमसंभवात् ।।

एतन्मे श्रद्दधानस्य विस्तराद्वक्तुमर्हसि ।। २ ।।

।। दुर्वासा उवाच ।। ।।

पांड्यदेशे पुरा कश्चिद्ब्राह्मणोभूद्बहुश्रुतः ।। ३ ।।

इध्मवाहाभिधो नाम्ना तस्य भार्या रुचिंस्तथा ।।

बभूव तस्य तनयो दुर्विनीताभिधो द्विजः ।। ४ ।।

बाल्ये वयसि पुत्रस्य ममार जनकोऽस्य ३ ।।

दुर्विनीतः पितुस्तस्य स कृत्वा चौर्ध्वदैहिकम्।। ५ ।।

कंचित्कालं गृहेऽवात्सीन्मात्रा विधवया सह ।।

ततो दुर्भिक्षमभवद्द्वादशाब्दमवर्षणात् ।। ६ ।।

ततो देशांतरमगान्मात्रा साकं द्विजोत्तम ।।

गोकर्णं स समासाद्य सुभिक्षं धान्यसंचयैः ।। ७ ।।

उवास सुचिरं कालं मात्रा विधवया सह ।।

ततो बहुतिथे काले दुर्विनीतो गते सति ।। ८ ।।

पूर्वदुष्कर्मपाकेन मूढबुद्धिरहो बत ।।

अनंगशरविद्धांगो रागाद्विकृतमानसः ।।९।।

मामेति वादिनीमंबां बलादाकृष्य पातकी ।।

बुभुजे काममोहात्मा मैथुनेन द्विजोत्तम ।। 3.1.35.१० ।।

स खिन्नो दुर्विनीतोऽयं रेतःसेकादनंतरम् ।।

मनसा चिंतयन्पापं रुरोदभृशदुःखितः ।। ११ ।।

अहोतिपापकृदहं महापातकिनां वरः ।।
अगमं जननीं यस्मात्कामबाणवशानुगः ।। १२ ।।
इति संचिंत्य मनसा स तत्र मुनिसन्निधौ ।।
जुगुप्समानश्चात्मानं तान्मुनीनिदमब्रवीत्।। १३ ।।
गुरुस्त्रीगमपापस्य प्रायश्चित्तं ममद्विजाः ।।
वदध्वं शास्त्रतत्त्वज्ञाः कृपया मयि केवलम् ।। १४ ।।
मरणान्निष्कृतिः स्याच्चेन्मरिष्यामि न संशयः ।।
भवद्भिरुच्यते यत्तु प्रायश्चित्तं ममाधुना ।। १५ ।।
करिष्ये तद्द्विजाः सत्यं मरणं वान्यदैव वा ।।
तच्छ्रुत्वा वचनं तस्य केचित्तत्रमुनीश्वराः ।। १६ ।।
अनेन साकं वार्ता तु दोषायेति विनिश्चिताः ।।
मौनित्वं भेजिरे केचिन्मुनयः केचिदा भृशम् ।। १७ ।।
दुष्टात्मा मातृगामी त्वं महापातकिनां वरः ।।
गच्छगच्छेतिबहुशो वाचमूचुर्द्विजोत्तमाः ।। १८ ।।
तान्निवार्य कृपाशीलः सर्वज्ञः करुणानिधिः ।।
कृष्णद्वैपायनस्तत्र दुर्विनीतमभाषत ।। १९ ।।
गच्छाशु रामसेतौ त्वं धनुष्कोटौ सहांबया ।।
मकरस्थे रवौ माघे मासमेकं निरंतरम्।। 3.1.35.२० ।।
जितेंद्रियो जितक्रोधः परद्रोहविवर्जितः ।।
एकमासं निराहारः कुरु स्नानं सहांबया ।। २१ ।।
पूतो भविष्यस्यद्धा गुरुस्त्री गमदोषतः ।।
यत्पातकं न नश्येत सेतुस्नानेन तन्नहि ।। २२ ।।
श्रुतिस्मृतिपुराणेषु धनुष्कोटिप्रशंसनम् ।।
बहुधा भण्यते पंचमहापातकनाशनम् ।। ।। २३ ।।
तस्मात्त्वं त्वरया गच्छ धनुष्कोटिं सहांबया ।।
प्रमाणं कुरु मद्वाक्यं वेदवाक्यमिव द्विज ।। २४ ।।
श्रीरामधनुषः कोटौ स्नातस्य द्विज पुत्रक ।।
महापातककोट्योपि नैव लक्ष्या इतीव हि ।। २५ ।।

प्रायश्चित्तांतरं प्रोक्तं मन्वादिस्मृतिभिः स्मृतौ ।।

तद्गच्छत्वं धनुष्कोटिं महापातक नाशिनीम् ।। २६ ।।

इतीरितोऽथ व्यासेन दुर्विनीतोद्विजोत्तमाः ।।

मात्रा साकं धनुष्कोटिं नत्वा व्यासं च निर्ययौ ।। २७ ।।

मकरस्थे रवौ माघे मासमात्रं निरंतरम् ।।

मात्रा सह निराहारो जितक्रोधो जितेंद्रियः ।। २८ ।।

श्रीरामधनुषः कोटौ सस्नौ संकल्पपूर्वकम् ।।

रामनाथं नमस्कुर्वं स्त्रिकालं भक्तिपूर्वकम् ।। २९ ।।

मासांते पारणां कृत्वा मात्रा सह विशुद्धधीः ।।

व्यासांतिकं पुनः प्रायात्तस्मै वृत्तं निवेदितुम् ।। 3.1.35.३० ।।

स प्रणम्य पुनर्व्यासं दुर्विनीतोऽब्रवीद्वचः ।। ३१ ।।

।। दुर्विनीत उवाच ।। ।।

भगवन्करुणासिंधो द्वैपायन महत्तम ।।

भवतः कृपया रामधनुष्कोटौ सहांबया ।।

माघमासे निराहारो मासमात्रमतंद्रितः ।। ३२ ।।

अहं त्वकरवं स्नानं नमस्कुर्वन्महेश्वरम् ।।

इतः परं मया व्यास भगवन्भक्तवत्सल ।। ३३ ।।

यत्कर्त्तव्यं मुने तत्त्वं ममोपदिश तत्त्वतः ।।

इति तस्य वचः श्रुत्वा दुर्विनीतस्य वै मुनिः ।।

बभाषे दुर्विनीतं तं व्यासो नारायणांशकः ।। ३४ ।।

।। व्यास उवाच ।। ।।

दुर्विनीत गतं तेऽद्य पातकं मातृसंगजम् ।। ३५ ।।

मातुश्च पातकं नष्टं त्वत्संगतिनिमि त्तजम् ।।

संदेहो नात्र कर्तव्यः सत्यमुक्तं मया तव ।। ३६ ।।

बांधवाः स्वजनाः सर्वे तथान्ये ब्राह्मणाश्च ये ।।

सर्वे त्वां संग्रहीष्यंति दुर्विनीतां बया सह ।। ३७ ।।

मत्प्रसादाद्धनुष्कोटौ विशुद्धस्त्वं निमज्जनात् ।।

दारसंग्रहणं कृत्वा गार्हस्थ्यं धर्ममाचर ।। ३८ ।।

त्यज त्वं प्राणिहिंसां च धर्मं भज सनातनम् ।।
सेवस्व सज्जनान्नित्यं भक्तियुक्तेन चेतसा ।। ३९ ।।
संध्योपासनमुख्यानि नित्यकर्माणि न त्यज ।।
निगृहीष्वेन्द्रियग्राममर्चयस्व हरं हरिम् ।। 3.1.35.४० ।।
परापवादं मा ब्रूया मासूयां भज कर्हिचित् ।।
अन्यस्याभ्युदयं दृष्ट्वा संतापं कृणु मा वृथा ।। ४१ ।।
मातृवत्परदा रांश्च त्वन्नित्यमवलोकय ।।
अधीतवेदानखिलान्माविस्मर कदाचन ।। ४२ ।।
अतिथीन्मावमन्यस्व श्राद्धं पितृदिने कुरु ।।
पैशून्यं मा वदस्व त्वं स्वप्नेऽप्यन्स्य कर्हिचित् ।। ४३ ।।
इतिहासपुराणानि धर्मशास्त्राणि संततम् ।।
अवलोकय वेदांतं वेदांगानि तथा पुनः ।। ४४ ।।
हरिशंकरना मानि मुक्तलज्जोऽनुकीर्त्तय ।।
जाबालोपनिषन्मंत्रैस्त्रिपुंड्रोद्धूलनं कुरु ।। ४५ ।।
रुद्राक्षान्धारय सदा शौचाचारपरो भव ।।
तुलस्या बिल्वपत्रैश्च नारायणहरावुभौ ।। ४६ ।।
एकं कालं द्विकालं वा त्रिकालं चार्चयस्य भोः ।।
तुलसीदलसंमिश्रं सिक्तं पादोदकेन च ।। ४७ ।।
नैवेद्यान्नं सदा भुंक्ष्व शंभुनारायणाग्रतः ।।
कुरु त्वं वैश्वदेवाख्यं बलिमन्नविशुद्धये ।। ४८ ।।
यतीश्वरान्ब्रह्मनिष्ठान्तर्पयान्नैर्गृहागतान् ।।
वृद्धानन्याननाथांश्च रोगिणो ब्रह्मचारिणः ।। ४९ ।।
कुरु त्वं मातृशुश्रूषामौपासनपरो भव ।।
पंचाक्षरं महामंत्रं प्रणवेन समन्वितम् ।। 3.1.35.५० ।।
तथैवाष्टाक्षरं मंत्रमन्यमंत्रानपि द्विज ।।
जप त्वं प्रयतो भूत्वा ध्यायन्मंत्राधिदेवताः ।। ५१ ।।
एवमन्यांस्तथा धर्मान्स्मृत्युक्तान्त्सर्वदा कुरु ।।
एवं कृतव्रतस्ते स्याद्देहांते मुक्तिरप्यलम् ।। ५२ ।।

इत्युक्तो व्यासमुनिना दुर्विनीतः प्रणम्य तम् ।।
तदुक्तमखिलं कृत्वा देहांते मुक्तिमाप्तवान् ।। ५३ ।।
तन्मातापि मृता काले धनुष्कोटिनिमज्जनात ।।
अवाप परमां मुक्तिमपुनर्भवदायिनीम् ।। ५४ ।।
।। दुर्वासा उवाच ।। ।।
एवं ते दुर्विनीतस्य तन्मातुश्च विमोक्षणम् ।।
धनुष्कोट्यभिषेकेण यज्ञदेव मयेरितम् ।। ५५ ।।
पुत्रमेनं त्वमप्याशु ब्रह्महत्याविशुद्धये ।।
समादाय व्रज ब्रह्मन्धनुष्कोटिं विमुक्तिदाम् ।। ५६ ।।
।। सिंधुद्वीप उवाच ।। ।।
इति दुर्वाससा प्रोक्तो यज्ञदेवो निजं सुतम् ।।
समादाय ययौ राम धनुष्कोटिं विमुक्तिदाम् ।। ५७।। ।।
गत्वा निवासमकरोत्षण्मासं तत्र स द्विजः ।।
पुत्रेण साकं नियतो हे सृगालप्लवंगमौ ।। ५८ ।।
स सस्नौ च धनुष्कोटौ षण्मासं वै स पुत्रकः ।।
षण्मासांते यज्ञदेवं प्राह वागशरीरिणी ।। ५९ ।।
विमुक्ता यज्ञदेवस्य ब्रह्महत्या सुतस्य ते ।।
स्वर्णस्तेयात्सुरापानात्किरातीसंगमात्तथा ।। 3.1.35.६० ।।
अन्येभ्योपि हि पापेभ्यो विमुक्तोयं सुतस्तव ।।
संशयं मा कुरुष्व त्वं यज्ञदेव द्विजोत्तम ।। ६१ ।।
इत्युक्त्वा विररामाथ सा तु वाग शरीरिणी ।।
तदाऽशरीरिणीवाक्यं यज्ञदेवः स शुश्रुवान् ।। ६२ ।।
संतुष्टः पुत्रसहितो रामनाथं निषेव्य च ।।
धनुष्कोटिं नमस्कृत्य पुत्रेण सहि तस्तदा ।। ६३ ।।
स्वदेशं प्रययौ हृष्टः स्वग्रामं स्वगृहं तथा ।।
सपुत्रदारः सुचिरं सुखमास्ते सुनिर्वृतः ।। ६४ ।।
।। सिन्धुद्वीप उवाच ।। ।।
गोमायुवानरावेवं युवयोः कथितं मया ।।

यज्ञदेवसुतस्यास्य सुमतेः परिमोक्षणम् ।।६५।।

पातकेभ्यो महद्भ्यश्च धनुष्कोटौ निमज्जनात् ।।

युवामतो धनुष्कोटिं गच्छतं पापशुद्धये ।।

नान्यथा पापशुद्धिः स्यात्प्रायश्चित्तायुतैरपि ।।६६।।

।। श्रीसूत उवाच ।। ।।

सिन्धुद्वीपस्य वचनमिति श्रुत्वा द्विजो त्तमाः ।।६७।।

सृगालवानरावाशु विलंघितमहापथौ।।

धनुष्कोटिं प्रयासेन गत्वा स्नात्वा च तज्जले।।६८।।

विमुक्तौ सर्वपापेभ्यो विमानवरसंस्थितौ।।

देवैः कुसुमवर्षेण कीर्यमाणौ सुतेजसौ ।।६९।।

हारकेयूरमुकुटकटकादिविभूषितौ ।।

देवस्त्रीधूयमानाभ्यां चामराभ्यां विराजितौ ।।

गत्वा देवपुरीं रम्यामिंद्र स्यार्द्धासनं गतौ ।। 3.1.35.७० ।।

।। श्रीसूत उवाच ।। ।।

युष्माकमेवं कथितं सृगालस्य कपेरपि ।। ७१ ।।

पापाद्विमोक्षणं विप्रा धनुष्कोटौ निमजनात् ।।

भक्त्या य इममध्यायं शृणोति पठतेऽपि वा ।।७२।।

स्नानजं फलमाप्नोति धनुष्कोटौ स मानवः ।।

योगिवृंदैरसुलभां मुक्तिमप्याशु विंदति ।।७३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये धनुष्कोटिप्रशंसायां सृगालवानरविमोक्षणवर्णनंनाम पंचत्रिंशोऽध्यायः ।। ३५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३६



।। श्रीसूत उवाच ।। ।।

धनुष्कोटेस्तु माहात्म्यं भूयोऽपि प्रब्रवीम्यहम् ।।

दुराचाराभिधो यत्र स्नात्वा मुक्तो भवद्द्विजाः।। ।। १ ।।

।। मुनय ऊचुः ।। ।।

दुराचाराभिधः कोऽसौ सूत तत्त्वार्थकोविद ।।

किंच पापं कृतं तेन दुराचारेण वै मुने ।। २ ।।

कथं वा पातका न्मुक्तो धनुष्कोटौ निमज्जनात् ।।

एतच्छुश्रूषमाणानां विस्तराद्वद नो मुने ।। ३ ।।

।। श्रीसूत उवाच ।। ।।

मुनयः श्रूयतां तस्य दुराचारस्य पातकम् ।।

स्नानेन धनुषः कोटौ यथा मुक्तश्च पातकात् ।। ४ ।।

दुराचाराभिधो विप्रो गौतमीतीरमाश्रितः ।।

कश्चिदस्ति द्विजाः पापी क्रूरकर्मरतः सदा ।। ५ ।।

ब्रह्मघ्नैश्च सुरापैश्च स्तेयिभिर्गुरुतल्पगैः ।।

तदा संसर्गदुष्टोऽसौ तैः साकं न्यवसद्द्विजाः ।।६।।

महापातकिसंसर्गं दोषेणास्य द्विजस्य वै ।।

ब्राह्मण्यं सकलं नष्टं निःशेषेण द्विजोत्तमाः ।। ७ ।।

महापातकिभिः सार्द्धं दिनमेकं तु यो द्विजः ।।

निवसेत्सादरं तस्य तत्क्षणाद्वै द्विजन्मनः ।। ।८ ।।

ब्राह्मणस्य तुरीयांशो नश्यत्येव न संशयः ।।

द्विदिनं सेवनात्स्पर्शाद्दर्शनाच्छयनात्तथा ।। ९ ।।

भोजनात्सह पंक्तौ च महापातकिभिर्द्विजाः ।।

द्वितीयभागो नश्येत ब्राह्मणस्य न संशयः ।। 3.1.36.१० ।।

त्रिदिनाच्च तृतीयांशो नश्यत्येव न संशयः ।।

चतुर्दिनाच्चतुर्थांशो विलयं याति हि ध्रुवम् ।। ११ ।।
अतः परं तु तैः साकं शयनासनभोजनैः ।।
तत्तुल्यपातकी भूयान्महापातकसंभवात् ।। १२ ।।
तेन ब्राह्मण्यहीनोऽयं दुराचाराभिधो द्विजाः ।।
ग्रस्तोऽभवद्भीषणेन वेतालेन बलीयसा ।।१३।।
असौ परवशस्तेन वेतालेनातिपीडितः ।।
देशाद्देशं भ्रमन्विप्रा वनाच्चैव वनांतरम् ।।१४।।
पूर्वपुण्यविपाकेन दैवयोगेन स द्विजः ।।
रामचंद्रधनुष्कोटिं महापातकनाशनीम् ।। १५ ।।
अनुद्रुतः पिशाचेन तेनाविष्टो ययौ द्विजाः ।।
न्यमज्जयत्स वेतालो धनुष्कोटिजले त्वमुम् ।। १६ ।।
धनुष्कोटिजले सोऽयं वेतालेन प्रवेशितः ।।
उदतिष्ठत्क्षणादेव वेतालेन विमोचितः ।। १७ ।।
उत्थितोऽसौ द्विजो विप्रा धनुष्कोटिजलात्तदा ।।
स्वस्थो व्यचिंतयत्कोऽयं देशो जलधितीरतः ।। १८ ।।
कथं मयागतमिह गौतमीतीरवासिना ।।
इति चिंताकुलः सोऽयं धनुष्कोटिनिवासिनम् ।। १९ ।।
दत्तात्रेयं महात्मानं योगिप्रवरमुत्तमम् ।।
समागम्य प्रणम्यासौ दुराचारोऽभ्यभाषत ।। 3.1.36.२० ।।
न जाने भगवन्देशः कतमोऽयं वदाधुना ।।
गौतमीतीरनिलयो दुराचाराभिधो ह्यहम् ।। २१ ।।
कृपया ब्रूहि मे ब्रह्मन्मयात्र कथमागतम्।।
इति पृष्टो मुनिस्तेन दुराचारेण सुव्रतः ।। २२ ।।
ध्यात्वा मुहूर्तमवदद्दुराचारं घृणानिधिः ।।
महापातकिसंसर्गे दुराचार कृते पुरा ।। २३ ।।
ब्राह्मण्यं नष्टमभवद्वेतालस्त्वां ततोऽग्रहीत् ।।
तेनाविष्टस्त्वमायातो विवशोऽत्र विमूढधीः ।। २४ ।।
न्यमज्जयत्त्वां वेतालो धनुष्कोटिजलेऽत्र तु ।।

तत्र मज्जनमात्रेण विमुक्तः पातकाद्भवान् ।। २५ ।।

धनुष्कोटौ तु ये स्नानं पुण्ये कुर्वंति मानवाः ।।

तेषां नश्यंति वै सत्यं पंचपातकसंचयाः ।। २६ ।।

रामचंद्रधनुष्कोटावत्र मज्जनमात्रतः ।।

महापातकिसंसर्गदोषस्ते विलयं ययौ ।। २७ ।।

तन्नाशादेव वेतालस्त्वां मुक्त्वा विलयं गतः ।।

त्वामग्रहीद्यो वेतालः पुरायं ब्राह्मणोऽभवत् ।। २८ ।।

सोऽयं भाद्रपदे मासे कृष्णपक्षे महालयम् ।।

पार्वणेन विधानेन पितॄणां नाकरोन्मुदा ।। २९ ।।

तेन स्वपितृभिः शप्तो वेतालत्वमगादयम् ।।

सोपि चास्य धनुष्कोटेरवलोकनमात्रतः ।। 3.1.36.३० ।।

वेतालत्वं विहायेह विष्णुलोकम वाप्तवान् ।।

अतो भाद्रपदे मासे कृष्णपक्षे महालयम् ।। ३१ ।।

उद्दिश्य स्वपितॄन्ये तु न कुर्वन्त्यतिलोभतः ।।

महालोभयुतास्तेऽद्धा वेतालाः स्युर्न संशयः ।। ३२ ।।

तस्माद्भाद्रपदे मासे कृष्णपक्षे महालयम् ।।

पितॄनुद्दिश्य शक्त्या ये ब्राह्मणान्वेदपारगान् ।। ३३ ।।

भोजयेयुर्महान्नेन न ते विंदंति दुर्गतिम् ।।

यस्तु भाद्रपदे मासे कृष्णपक्षे महालयम् ।। ३४ ।।

स्वशक्त्यनुगुणं विप्रमेकं द्वौ त्रीनकिंचनः ।।

भोजयेन्नहि दौर्गत्यं भवेदस्य कदाचन ।। ३५ ।।

अयं भाद्रपदे मासे पितॄणामनुपासनात् ।।

ययौ वेतालतां विप्रो यस्त्वां जग्राह पापिनम् ।। ३६ ।।

कालो भाद्रपदमासमारभ्य वृश्चिकावधि ।।

महालयस्य कथितो मुनिभिस्तत्त्वदर्शिभिः ।। ३७ ।।

मासो भाद्रपदः कालस्तत्रापि हि विशिष्यते ।।

कृष्ण पक्षो विशिष्टः स्याद्दुराचारक तत्र वै ।। ३८ ।।

तस्मिञ्छुभे कृष्णपक्षे प्रथमायां तथा तिथौ ।।

श्राद्धं महालयं कुर्याद्यो नरो भक्तिपूर्वकम्।। ३९ ।।

तस्य प्रीणाति भगवान्पावकः सर्वपावनः ।।

स वह्निलोकमाप्नोति वह्निना सह मोदते ।। 3.1.36.४० ।।

तस्मै च ज्वलनो देवः सर्वैश्वर्यं ददात्यपि ।।

प्रथमायां तिथौ मर्त्यो यो न कुर्यान्महालयम्।। ४१ ।।

वह्निर्गृहं दहेत्तस्य श्रियं क्षेत्रादिकं तथा ।।

वेदज्ञे ब्राह्मणे भुक्ते प्रथमायां महालये ।। ४२ ।।

दश कल्पसहस्राणि पितरो यांति तृप्तताम् ।।

द्वितीयायां तु यो भक्त्या कुर्याच्छ्राद्धं महालयम् ।। ४३ ।।

तस्य प्रीणाति भगवान्भवानीपतिरीश्वरः ।।

स कैलासमवाप्नोति शिवेन सह मोदते।। ४४ ।।

विपुलां संपदं तस्मै प्रीतो दद्यान्महेश्वरः ।।

द्वितीयायां तिथौ मर्त्यो यो न कुर्यान्महालयम् ।। ४५ ।।

तस्य वै कुपितः शंभुर्नाशयेद्ब्रह्मवर्चसम् ।।

रौरवं कालसूत्राख्यं नरकं चास्य दास्यति ।। ४६।।

वेदज्ञे ब्राह्मणे भुक्ते द्वितीयायां महालये ।।

विंशत्कल्प सहस्राणि पितरो यांति तृप्तताम्।। ४७ ।।

अनुग्रहात्पितॄणां च संततिश्चास्य वर्द्धते ।।

तृतीयायां नरो भक्त्या कुर्याच्छ्राद्धं महालयम् ।। ४८ ।।

तस्य प्रीणाति भगवाँल्लोकपालो धनाधिपः ।।

महापद्मादिनिधयो वर्तंते तस्य वै वशे ।। ४९ ।।

तस्यानुगास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।।

तृतीयायां तिथौ मर्त्यो यो न कुर्यान्महालयम् ।। 3.1.36.५० ।।

धनदो भगवांस्तस्य संपदं हरति क्षणात् ।।

दारिद्यं च ददात्यस्मै बहुदुःखसमाकुलम् ।। ।। ५१ ।।

तृतीयायां तिथौ मर्त्यो यः करोति महालयम् ।।

तृप्यंति पितरस्तस्य त्रिंशत्कल्पसहस्रकम् ।। ५२ ।।

चतुर्थ्यां तु नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।।

तस्य प्रीणाति भगवान्हेरंबः पार्वतीसुतः ।। ५३ ।।

तस्य विघ्नाश्च नश्यंति गजवक्त्रप्रसादतः ।।

चतुर्थ्यां तु तिथौ मर्त्यो यो न कुर्यान्महालयम् ।। ५४ ।।

विघ्नेशो भगवांस्तस्य सदा विघ्नं करोति हि ।।

चण्डकोलाहलाभिख्ये नरके च पतत्यथ ।। ५५ ।।

चतुर्थ्यां वै तिथौ मर्त्यो यः करोति महालयम् ।।

पितरः कल्पसाहस्रं चत्वारिंशत्प्रहर्षिताः ।। ५६ ।।

बहून्पुत्रान्प्रदास्यंति श्राद्धकर्तुर्निरंतरम् ।।

पंचम्यां तु तिथौ भक्त्या यो न कुर्यान्महालयम् ।। ५७ ।।

तस्य लक्ष्मीर्भगवती परित्यजति मंदिरम् ।।

अलक्ष्मीः कलहाधारा तस्य प्रादुर्भवेद्गृहे ।। ५८ ।।

पचम्यां तु तिथौ मर्त्यो यः करोति महालयम् ।।

तस्य तृप्यंति पितरः पंचकल्पसहस्रके ।। ५९ ।।

संततिं चाप्यविच्छिन्नामस्मै दास्यंति तर्पिताः ।।

पार्वती च प्रसन्ना स्यान्महदैश्वर्यदायिनी ।। 3.1.36.६० ।।

षष्ठ्यां तिथौ नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।।

तस्य प्रीणाति भगवान्षण्मुखः पार्वती सुतः ।। ६१ ।।

तस्य पुत्राश्च पौत्राश्च षण्मुखस्य प्रसादतः ।।

ग्रहैर्वालग्रहैश्चैव न बाध्यंते कदाचन ।। ६२ ।।

षष्ठ्यां तिथौ नरो भक्त्या यो न कुर्यान्महालयम् ।।

तस्य स्कन्दो महासेनो विमुखः स्यान्न संशयः ।। ६३ ।।

गर्भान्निर्गतमात्रैव प्रजा तस्य विनश्यति ।।

पूतनादिग्रहकुलैर्बाध्यते च निरंतरम् ।। ६४ ।।

वह्निज्वालाप्रवेशाख्ये नरके च पतत्यधः ।।

षष्ठ्यां तिथौ यः श्रद्धावान्कुर्याच्छ्राद्धं महालयम् ।। ६५ ।।

षष्टिकल्पसहस्रं तु पितरो यामति तृप्तताम् ।।

पुत्रानपि प्रदास्यंति संपदं विपुलां तथा ।। ६६ ।।

सप्तम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालयम् ।।

हिरण्यपाणिर्भगवानादित्यस्तस्य तुष्यति ।। ६७ ।।

अरोगो दृढगात्रः स्याद्भास्करस्य प्रसादतः ।।

हिरण्यपाणिर्भगवान्हिरण्यं पाणिना स्वयम् ।। ६८ ।।

महालयश्राद्धकर्त्रे ददाति प्रीतमानसः ।।

सप्तम्यां तु तिथौ भक्त्या यो न कुर्यान्महालयम् ।। ६९ ।।

व्याधिभिः क्षयरोगाद्यै बाध्यते स दिवानिशम् ।।

तीक्ष्णधारास्त्रशय्याख्ये नरके च पतत्यधः ।। 3.1.36.७० ।।

सप्तम्यां यो नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।।

सप्ततिं कल्पसाहस्रं प्रीणंति पितरोऽस्य वै ।। ७१ ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणाः सदा ।।

अष्टम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महाल यम् ।। ७२ ।।

मृत्युंजयः कृत्तिवासास्तस्य प्रीणाति शंकरः ।।

करस्थं तस्य कैवल्यं शंकरस्य प्रसादतः ।। ७३ ।।

महालयेन श्राद्धेन तुष्टे साक्षात्त्रि यंबके ।।

चतुर्दशसु लोकेषु दुर्लभं तस्य किं भवेत् ।। ७४ ।।

महालयं न कुर्याद्वै योऽष्टम्यां मूढचेतनः ।।

संसारसागरे घोरे सदा मज्जति दुःखितः ।। ७५ ।।

कदाचिदपि तस्येष्टं नैव सिद्ध्यति भूतले ।।

वैतरिण्याख्यनरके पतत्याचंद्रतारकम् ।। ७६ ।।

योऽष्टम्यां श्रद्धया श्राद्धं नरः कुर्यान्महालयम् ।।

अशीतिकल्पसाहस्रं तृप्यंति पितरोऽस्य वै ।। ७७ ।।

आशीर्भिर्वर्द्धयंत्येनं विघ्नश्चास्य व्यपोहति ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणाः सदा ।। ७८ ।।

नवम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालयम् ।।

दुर्गादेवी भगवती तस्य प्रीणाति शांभवी ।। ७९ ।।

क्षयापस्मारकुष्ठा दीन्क्षुद्रप्रेतपिशाचकान् ।।

नाशयेत्तस्य सन्तुष्टा दुर्गा महिषमर्दिनी ।।3.1.36.८० ।।

नवम्यां तु तिथौ मर्त्यो यो न कुर्यान्महालयम् ।।

अपस्मारेण पीड्येत तथैव ब्रह्मरक्षसा ।। ८१ ।।

अभिचारार्थकृत्याभिर्वाध्येत च निरन्तरम् ।।

नवम्यां यस्तिथौ मर्त्यः श्राद्धं कुर्यान्महालयम्।। ८२ ।।

नवतिं कल्पसाहस्रं तृप्यन्ति पितरोऽस्य वै ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणाः सदा ।। ८३ ।।

दशम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालयम् ।।

तस्यामृतकलश्चन्द्रः षोडशात्मा प्रसीदति ।। ८४ ।।

औषधीनामधीशेऽस्मिञ्छ्राद्धेनानेन तोषिते ।।

व्रीह्यादीनि तु धान्यानि दद्युरोषधयः सदा।। ।। ८५ ।।

यो न कुर्याद्दशम्यां तु महालयमनुत्तमम् ।।

ओषध्यो निष्फलास्तस्य कृषिश्चाप्यस्य निष्फला ।। ८६ ।।

दशम्यां यस्तिथौ मर्त्यः श्राद्धंकुर्यान्महालयम् ।।

शतकल्पसहस्राणि तृप्यंति पितरोऽस्य वै ।। ८७ ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणाः सदा ।।

एकादश्यां नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।। ८८ ।।

संहर्ता सर्वलोकस्य तस्य रुद्रः प्रसीदति ।।

रुद्रस्य सर्वसंहर्तुः प्रसादेन जगत्पतेः ।। ८९ ।।

शत्रून्पराजय त्येष श्राद्धकर्ता निरन्तरम् ।।

ब्रह्महत्यायुतं चापि तस्य नश्यति तत्क्षणात् ।। 3.1.36.९० ।।

अग्निष्टोमादियज्ञानां फलमाप्नोति पुष्कलम् ।।

एकादश्यां नरो भक्त्या यो न कुर्यान्महालयम् ।। ९१ ।।

तस्य वै विमुखो रुद्रो न प्रसीदति कर्हिचित् ।।

सर्वतो वर्धमानाश्च बाधन्ते शत्रवो ह्यमुम् ।। ९२ ।।

अग्निष्टोमादिका यज्ञाः कृताश्च बहुदक्षिणाः ।।

निष्फला एव तस्य स्युर्भस्मनि न्यस्तहव्यवत् ।। ९३ ।।

ब्रह्मवातकतुल्यः स्याच्छ्राद्धाकरणदोषतः ।।

एकादश्यां तिथौ यस्तु श्राद्धं कुर्यान्महालयम् ।। ९४ ।।

द्विशतं कल्पसाहस्रं तृप्यंति पितरोऽस्य वै ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृ गणाः सदा ।। ९५ ।।

द्वादश्यां तु तिथौ मर्त्यः कुर्याच्छ्राद्धं महालयम् ।

तस्य लक्ष्मीपतिः साक्षात्प्रसीददति जनार्दनः ।। ९६ ।।

प्रसन्ने सति देवेशे देवदेवे जनार्दने ।।

चराचरं जगत्सर्वं प्रीतमेव न संशयः ।। ९७ ।।

भूमिर्हरिप्रिया चास्य सस्यं संवर्द्धयत्यपि ।।

लक्ष्मीश्च वर्द्धते तस्य मंदिरे हरिवल्लभा ।। ९८ ।।

गदा कौमोदकी नाम नारायणकरस्थिता ।।

अपस्मारादिभूतानि नाशयत्येव सर्वदा ।। ९९ ।।

तीक्ष्णधारं तथा चक्रं शत्रूनस्य दहत्यपि ।।

यातुधानपिशाचादीञ्छंखश्चास्य व्यपोहति ।।3.1.36.१००।।

एवं सर्वात्मना पीडां वारयत्यस्य केशवः ।।

महालयं न कुर्याद्यो द्वादश्यां मनुजा धम ।। १ ।।

तस्य क्षेत्राणि संपच्च विनश्यंति न संशयः ।।

अपस्मारादिभूतानि शत्रवश्च महाबलाः ।।२।।

यातुधानाश्च बाधन्ते तं वै विष्णुपराङ्मुखम्।।

पात्यते नरके चापि अस्थिभेदननामके।।३।।

द्वादश्यां भक्तियुक्तो यः श्राद्धं कुर्यान्महालयम् ।।

षट्शतं कल्पसाहस्रं प्रीणंति पितरोऽस्य वै ।।४।।

संततिं चाप्यविच्छिन्नां पितरोऽस्मै ददत्यपि।।

त्रयोदश्यां नरो भक्त्या श्राद्धं कुर्यान्महालयम्।।५।।

प्रसीदत्यस्य भगवान्कंदर्पो रतिनायकः ।।

स्रग्चंदनादयो भोगा ललनाश्च मनोरमाः ।।६।।

कामदेवप्रसादेन तस्य सिद्ध्यंति सर्वदा।।

आजन्ममरणांतं च सुखमेव स विंदते ।।७।।

यो न कुर्यात्त्रयोदश्यां न च श्राद्धं महालयम् ।।

कामदेवोऽस्य विमुखः स्त्रियो भोगांश्च नाशयेत् ।। ८ ।।

अंगारशय्याभ्रमणे नरके पातयत्यमुम् ।।

पितॄनुद्दिश्य यः कुर्यात्त्र योदश्यां महालयम् ।। ९ ।।

सहस्रकल्पसाहस्रं प्रीणंति पितरोऽस्य वै ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणास्तदा ।। 3.1.36.११० ।।

चतुर्दश्यां नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।।

तस्याभीष्टप्रदानाय जागर्ति भगवाच्छिवः ।। ११ ।।

उपदिश्य शिवज्ञानं सायुज्यं च ददात्यपि ।।

सुरापानायुतं चापि स्वर्णस्तेयायुतं तथा ।। १२ ।।

नश्यंति तत्क्षणादेव चतुर्दश्यां महालयात् ।।

चण्डालवृषलस्त्रीणां संगदोषोऽपि नश्यति ।। १३ ।।

अश्वमेधसहस्रस्य पौंडरीकायुतस्य च ।।

पुष्कला फलसिद्धिः स्याच्चतुर्दश्यां महालयात् ।। १४ ।।

यो न कुर्याच्चतुर्दश्यां श्राद्धमेतन्महालयम् ।।

स कल्पकोटिसाहस्रं कल्पकोटिशतं तथा ।। १५ ।।

संसारांधमहाकूपे पतितः स्यादनिष्कृतिः ।।

अचोरयित्वा कनकमपीत्वापि सुरां तथा ।। १६ ।।

सुरापानादिभिर्दोषैर्लिप्यते स विमूढधीः ।।

कृता अपि विधानेन यज्ञाः स्युर्निष्फलास्तथा ।। १७ ।।

चतुर्दश्यां तिथौ यस्तु कुर्याच्छ्राद्धं महालयम् ।।

लक्षकोटिसहस्राणि लक्षकोटिशतानिच ।।१८।।

कल्पानि पितरस्तस्य तृप्यंत्येव न संशयः ।।

नरकस्थाश्च पितरः स्वर्गं यांति प्रहर्षिताः ।। १९ ।।

संततिं चाप्यविच्छिन्नां दद्युः पितृगणास्तदा ।।

अमायां तु नरो भक्त्या श्राद्धं कुर्यान्महालयम् ।। 3.1.36.१२० ।।

पितॄणां तस्य तृप्तिः स्याद नंता नात्र संशयः ।।

सुधामास्वाद्य या तृप्तिर्देवानांदिवि वै भवेत् ।। २१ ।।

अनंता तादृशी तृप्तिरमावास्यां महालयात् ।।

अमावास्या महापुण्या पितृदेवनमस्कृता ।। २२ ।।

शांता ह्येषा तु परमा शिवस्य च महाप्रिया ।।

तस्यां महालये श्राद्धे भोजयेद्वेदवित्तमान् ।। २३ ।।

तेन तृप्तिः पितॄणां स्यादनंता तुष्यते शिवः ।।

ब्रह्महत्यादयः पंच पातका नाशमाप्नुयुः ।। २४ ।।

कृताश्च स्युर्विधानेन सर्वे यज्ञाः सदक्षिणाः ।।

अनुष्ठिताः स्युर्विधिवत्सर्वे धर्माः सनातनाः ।। २५ ।।

अमावास्यादिने येन कृतं श्राद्धं महालयम् ।।

प्रत्यग्ब्रह्मैकतां ज्ञात्वा सायुज्यं यात्यसंशयम्।। ।। २६ ।।

यो न कुर्यादमावास्यां महालयमचेतनः ।।

ब्रह्मलोकगताश्चास्य पितरो यांति नारकम् ।। २७ ।।

संततिश्चास्य मूढस्य विच्छि द्येतैव तत्क्षणात् ।।

स एव हि महानर्थो यदमायां तिथौ नरैः ।। २८ ।।

महालयार्थो विप्रेंद्रा विधिवन्नैव भोजिताः ।।

मासि भाद्रपदे प्राप्ते नृत्यंति पितृदेवताः ।। २९ ।।

अस्मानुद्दिश्य मत्पुत्रा भोजयेयुर्द्विजोत्तमान् ।।

तेन नो नरकक्लेशो न भविष्यति दारुणः ।। 3.1.36.१३० ।।

वासश्च स्वर्गलोके स्याद्यावदाचन्द्रतारकम् ।।

मासि भाद्रपदे प्राप्ते पितॄणां तृप्तिदायिनी ।। ३१ ।।

एकैकं भोजयेद्विप्रं प्रत्यहं भक्तिपूर्वकम् ।।

पितृमातृकुलोद्भूताः पितरस्तृप्तिमाप्नुयुः ।। ३२ ।।

कृष्णपक्षे विशेषेण ब्राह्मणान्भोजयेत्सुधीः ।।

घृतसूपादिसस्यैश्च तैलाभ्यंगपुरःसरम् ।। ३३ ।।

सुधां पास्यंति पितरस्तस्याकल्पं प्रहर्षिताः ।।

सप्तमीं कृष्णपक्षस्य प्रारभ्य प्रत्यहं नराः ।। ३४ ।।

विप्रान्यावदमावास्या त्रींस्त्रीनभ्यर्च्य भोजयेत् ।।

आरभ्य द्वादशीं विप्रांस्त्रीनवश्यं तु भोजयेत् ।। ३५ ।।

अन्यथैश्वर्यहानिः स्यान्महादारिद्र्यभाग्भवेत् ।।

वित्तलोभं परित्यज्य विप्रान्सूपघृतादि भिः ।। ३६ ।।

पयसा पायसान्नेन दध्नापूपादिभिस्तथा ।।

पेयैर्लेह्यैश्च चोष्यैश्च भक्ष्यैश्च विविधैरपि ।। ३७ ।।

भोजयेद्वेदविन्मुख्यांस्तृप्तिस्तेषां यथा भवेत् ।।

तेन ब्रह्मा हरिः शंभुस्तृप्ताः स्युर्नात्र संशयः।।३८।।

अग्निष्वात्तादिपितरस्तथैवेंद्रादिदेवताः ।।

बहुनात्र किमुक्तेन तुष्टं तेन जगत्त्रयम् ।।३९।।

पार्वणेन विधानेन कुर्याच्छ्राद्धे महालयम्।।

नरो महालयश्राद्धे पितृवंश्यान्पितॄनिव ।।3.1.36.१४०।।

मातृवंश्यानपि पितॄन्भोजयेच्छ्रेयसे मुदा ।।

दक्षिणां च यथाशक्ति दद्याद्वित्तानुसारतः ।। ४१ ।।

तस्मिन्महालये श्राद्धे वित्तशाठ्यं न कारयेत् ।।

दक्षिणा खलु यज्ञानां कथितेयं पुरोगवा ।। ४२।।

अनः पुरोगवैर्हीनं करिष्यति यथाध्वनि ।।

अदक्षिणं तथा सोयं पितृयज्ञोऽपि रिष्यति।।४३।।

तस्माद्यज्ञेषु दातव्या दक्षिणाल्पा हि जानता।।

विधवाभिरपि स्त्रीभिरपुत्राभिर्महालयः ।। ४४ ।।

भर्तॄनुद्दिश्य कर्तव्यो भूरिभोजनकर्मणा ।।

अन्यथा धर्महानिः स्यान्नरकं च महद्भवेत् ।। ४५ ।।

मासि भाद्रपदे प्राप्ते यो न कुर्यान्महालयम् ।।

तत्कुलं नाशमाप्नोति ब्रह्महत्यां च विंदति ।। ४६ ।।

महालयं प्रकुर्वंति श्रद्धावंतः पितॄन्प्रति ।।

न तेषां संततिच्छेदो भवेत्संपदभंगुरा ।। ४७ ।।

आलयं ह्यास्पदं प्रोक्तं महः कल्याणमुच्यते ।।

कल्याणानामास्पदत्वान्महालयमुदीर्यते ।। ४८ ।।

तस्मान्महालयं मर्त्यः कुर्यात्कल्याणसिद्धये ।।

अमंगलं भवेत्तस्य न कुर्याच्चेन्महालयम् ।। ४९ ।।

नकुर्याद्यद्यपि श्राद्धं मातापित्रोर्मृतेऽहनि ।।

कुर्यान्महालयश्राद्धमस्मरन्नेव बुद्धिमान् ।।3.1.36.१५०।।

कर्तुं महालयश्राद्धं यदि शक्तिर्न विद्यते ।।

याचित्वापि नरः कुर्यात्पितृणां तन्महालयम् ।।५१।।

ब्राह्मणेभ्यो विशिष्टे भ्यो याचेत धनधान्यकम् ।।

पतितेभ्यो न गृह्णीयाद्धनधान्यं कदाचन ।।५२।।

ब्राह्मणेभ्यो न लभ्येत यदि धान्यधनादिकम् ।।

याचेत क्षत्रियश्रेष्ठा न्महालयचिकीर्षया ।। ५३ ।।

दातारश्चेन्न भूपाला वैश्येभ्योऽपि च याचयेत् ।।

वैश्या अपि हि दातारो यदि लोके न संति वै ।। ५४ ।।

दद्याद्भाद्रपदे मासे गोग्रासं पितृतृप्तये ।।

अथ वा रोदनं कुर्याद्बहिर्निर्गत्य कानने ।। ५५ ।।

पाणिभ्यामुदरं स्वीयमाहत्याश्रूणि वर्तयन् ।।

तेष्वरण्यप्रदेशेषु उच्चैरेवं वदेन्नरः ।। ५६ ।।

शृण्वंतु पितरः सर्वे मत्कुलीना वचो मम ।।

अहं दरिद्रः कृपणो निर्ल्लज्जः क्रूरकर्मकृत् ।। ५७ ।।

प्राप्तो भाद्रपदो मासः पितृणां प्रीतिवर्द्धनः ।।

कर्तुं महालयश्राद्धं न च मे शक्तिरस्ति वै ।। ५८ ।।

भ्रमित्वापि महीं कृत्स्नां न मे किंचन लभ्यते ।।

अतो महालयश्राद्धं न युष्माकं करोम्यहम् ।। ५९ ।।

क्षमध्वं मम तद्यूयं भवंतो हि दयापराः ।।

दरिद्रो रोदनं कुर्यादेवं काननभूमिषु ।। 3.1.36.१६० ।।

तस्य रोदनमाकर्ण्य पितरस्तत्कुलोद्भवाः ।।

हृष्टास्तृप्तिं प्रयांत्येव सुधां पीत्वैव निर्जराः ।। ६१ ।।

महालयार्थे विप्रौघे भुक्ते तृप्तिर्यथा भवेत् ।।

गोग्रासारण्यरुदितैः पितृ तृप्तिस्तथा भवेत्।। ६२ ।।

मासि भाद्रपदे विघ्नो यदि स्यात्सूतकादिना ।।

यातेषु सूतकाहःसु कुर्यादावृश्चिकावधि ।। ६३ ।।

बुधो महालय स्यार्थे ब्राह्मणान्वृणुयान्नव ।।

पित्रर्थमेकं वृणुयात्पितामहकृते तथा ।। ६४ ।।

प्रपितामहमुद्दिश्य तथैकं वृणुयाद्द्विजः ।।

तथा मातामहार्थं तु एकं वै वृणुयाद्द्विजम् ।। ६५ ।।

मातुःपितामहार्थं च वृणुयाद्द्विजमेककम् ।।

वृणुयादेकमुद्दिश्य मातुश्च प्रपितामहम् ।। ६६ ।।

तथैव विश्वेदेवार्थे वृणुयाद्द्वौद्वि जोत्तमौ ।।

विष्णवर्थं ब्राह्मणं त्वेकं वृणुयाद्वेदवित्तमम् ।।६७।।

एवं महालयश्राद्धे ब्राह्मणान्वृणुयान्नव ।।

अथवा पितृवर्गार्थं वरयेद्विप्रमेककम् ।। ६८ ।।

मातामहादीन्वोद्दिश्य वरयेद्विप्रमेककम् ।।

विश्वेदेवार्थमेकं च विष्णवर्थं च तथापरम् ।। ६९ ।।

एवं वै वरयेद्विप्राश्चतुरस्तु महालये ।।

ब्राह्मणान्वेदसंपन्नान्सुशीलान्वरयेत्सुधीः ।। 3.1.36.१७० ।।

दुःशीलान्वरयेद्यस्तु स वै श्राद्धस्य घातकः ।।

मासि भाद्रपदे प्राप्ते कृष्णपक्षे विशेषतः ।। ७१ ।।

कुर्या न्महालयश्राद्धं यो नरः श्रद्धया सह ।।

स स्नातः सर्वतीर्थेषु दुराचार महामते ।। ७२ ।।

अग्निष्टोमादयो यज्ञाः शतमप्यमुना कृताः ।।

तुलापुरुषमुख्यानि दानान्यपि कृतानि वै ।। ७३ ।।

चांद्रायणादिकृच्छ्राणि कृतान्येव न संशयः ।।

चतुर्णां सांगवेदानां पारायणफलं लभेत् ।। ।। ७४ ।।

गायत्र्यादिमहामंत्रजपपुण्यं लभेत्तथा ।।

इतिहासपुराणानां पारायणफलं लभेत् ।। ७५ ।।

महालयसमं पुण्यं वृत्तं नास्ति महीतले ।।

ब्रह्मविष्णुमहेशानलोकप्राप्तिर्महालयात् ।। ७६ ।।

महालयादिकं श्राद्धं नित्यं काम्यमपीष्यते ।।

तस्मादकरणे तस्य प्रत्यवायो महान्भवेत् ।। ७७ ।।

करणादिष्टसिद्धिश्च भविष्यति न संशयः ।।

महालयस्य करणाद्भूतवेतालकादयः ।। ७८ ।।

अपस्मारग्रहाश्चापि शाकिनीडाकिनीगणाः ।।

यातुधानाः पिशाचाश्च वेतालाश्च भयानकाः ।। ७९ ।।

नश्यंति तत्क्षणादेव भूतान्यन्यानि वै तथा ।।

महालयस्यकरणाद्विपुलां श्रियमश्नुते ।। 3.1.36.१८० ।।

पुरा दशरथो राजा वसिष्ठस्योपदेशतः ।।

मासि भाद्रपदे प्राप्ते कृत्वा श्राद्धं महालयम् ।। ८१ ।।

रामादींश्च तुरः पुत्रान्प्राप्तवांल्लोकसंमतान् ।।

विश्वातिशायिनीं लक्ष्मीं प्रपेदे कीर्तिमुत्तमाम् ।। ८२ ।।

महालयस्य करणाद्ययाती राजसत्तमः ।।

यदुमुख्यान्महापुत्रान्प्रपेदे वंशवर्द्धनान् ।। ८३ ।।

अनन्यदुर्लभं स्वर्गं प्रपेदे श्राद्धपुण्यतः ।।

दुष्यंतो भरतं लेभे महालयविधानतः ।। ८४ ।।

महालय विधानेन दमयंतीपतिर्नलः ।।

कृच्छ्रं महत्तरं तीर्त्वा पुनर्लेभे महीमिमाम् ।। ८५ ।।

निजग्राह कलिं घोरं पुष्करं चाप्यरातिनम् ।।

इन्द्रसेनाभिधानं च पुत्रं लेभेऽतिधार्मिकम् ।। ८६ ।।

हरिश्चंद्रो महाराजो महालयविधानतः ।।

विश्वामित्रकृताद्दुःखान्मुक्तः सत्यवतां वरः ।। ८७ ।।

लेभे चंद्रवतीं भार्यां लोहिताश्वं सुतं पुनः ।।

महालयविधानेन कृतवीर्यसुतो बली ।। ८८ ।।

अष्टादशानां द्वीपानामाधिपत्यमवाप्तवान् ।।

रामोऽपि दण्डकारण्ये महालयविधानतः ।। ८९ ।।

हत्वा तु रावणं संख्ये सीतां पुनरवाप्तवान् ।।

महालयस्य करणाद्धर्मपुत्रो युधिष्ठिरः ।। 3.1.36.१९० ।।

दुःखसागरमुत्तीर्य धार्तराष्ट्राञ्जघान च ।।

महालयस्यकरणाद्वसिष्ठो मुनिसत्तमः ।। ९१ ।।

अत्रिर्भृगुश्च कुत्सश्च गौतमश्चांगिरास्तथा ।।

कश्यपश्च भरद्वाजो विश्वा मित्रश्च कुम्भजः ।। ९२ ।।

पराशरो मृकण्डश्च ये चान्ये मुनिसत्तमाः ।।

विधाय विधिवच्छ्राद्धं महालयमनुत्तमम् ।। ९३ ।।

अणिमाद्यष्टसिद्धीनां व्रतानां तपसां तथा ।।

निवासभूता संजातास्तथा विश्वातिशायिनः ।। ९४ ।।

जीवन्मुक्ताश्च ते सर्वे ह्यभवन्मुनिसत्तमाः ।।

अतो महालयश्राद्धं कर्तव्यं भूतिमिच्छता ।। ९५ ।।

अतोऽद्यापि दुराचार न कुर्याद्यो महालयम् ।।

भूतवेतालकादिभ्यो भूयात्तस्य महद्भयम् ।। ९६ ।।

महालयस्या करणाद्वेतालत्वमवाप्नुयात् ।।

त्वयाविष्टमिदं भूतं विप्रः सन्पूर्वजन्मनि ।। ९७ ।।

नाम्ना वेदनिधिः पुण्यो भरद्वाजस्य चात्मनः ।।

कुशस्थल्यभिधाने च वसन्ग्रामे महामनाः ।। ९८ ।।

न चकार विधानेन श्राद्धमेतन्महालयम् ।।

ततोयं पितृणां शापाद्वेतालत्वमवाप्तवान् ।। ९९ ।।

तस्माद्भाद्र पदे मासे दुराचार पितृन्प्रति ।।

ब्राह्मणान्भोजयान्नेन षड्रसेन सभक्तिकम् ।। 3.1.36.२०० ।।

दारिद्र्यं तेन ते न स्यात्सुखीचैव भवान्भवेत् ।।

महापातकि संसर्गं मा कुरु त्वमितः परम् ।। १ ।।

त्वयानुभूतं यद्दुःखं वेतालग्रहणोद्भवम् ।।

गच्छ त्वमनुजानामि स्वदेशं प्रति मा चिरम् ।। २ ।।

इतीरितः स मुनिना दत्तात्रेयेण योगिना ।।

तं प्रणम्य ययौ देशं कृतार्थेनांतरात्मना ।। ३ ।।

गत्वा च स्वगृहं विप्रो दुराचारो द्विजोत्तमाः ।।

विमुक्तवेताल भयो गतपातककंचुकः ।। ४ ।।

दत्तात्रेयेरितेनासौ मार्गेण प्रीतमानसः ।।

त्यक्तपातकिसंसर्गः स्वाश्रमाचारतत्परः ।। ५ ।।

रामचंद्रधनुष्कोटितीर्थ मज्जनगौरवात् ।।

देहांते परमां मुक्तिं दुराचारो ययौ तदा ।। ६ ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं पुण्यं दुराचरविमोक्षणम् ।।

सेयं पुण्या धनुष्कोटिर्महापातकनाशिनी ।। ७ ।।

यत्र हि स्नानमात्रेण दुराचारो विमोचितः ।।

अथवा धनुषः कोटेरियत्ता किं हि वै भवेत् ।। ८ ।।

या निष्कृतिविहीनानि पापान्यपि विनाशयेत् ।।

प्रायश्चित्तविहीनानि यानि पापानि संति वै ।। ९ ।।

तान्यप्यत्र विनश्यंति धनुष्कोटौ निमज्जनात् ।।

शूद्रेण पूजितं लिंगं विष्णुं वा यो नमेद्द्विजः ।। 3.1.36.२१० ।।

प्रायश्चित्तं न तस्योक्तं स्मृतिभिः परमर्षिभिः ।।

नश्येत्तस्यापि तत्पापं धनुष्कोटिनिमज्ज नात् ।। ११ ।।

विप्रनिंदाकृतां नृणां प्रायश्चित्तं न विद्यते ।।

विश्वासघातकानां च कृतघ्नानां न निष्कृतिः ।। १२ ।।

भ्रातृभार्यारतानां च प्रायश्चित्तं न विद्यते ।।

शूद्रान्ने नियतानां च श्रुतिनिंदारतात्मनाम् ।। १३ ।।

कन्याविक्रयिणां विप्रा हयविक्रयिणां तथा ।।

देवविक्रयिणां वेदविक्रये निर तात्मनाम्।।१४।।

धर्मविकयिणां पुंसां व्रतविक्रयिणां तथा ।।

तीर्थविक्रयिणां पुंसां प्रायश्चित्तं न विद्यते ।।१५।।

तेषां पापानि नश्यंति धनुष्कोटौ निम ज्जनात् ।।

मातृद्रोहपितृद्रोहयतिद्रोहरतात्मनाम् ।।१६।।

गुरुनिंदापराणां च शिवनिंदारतात्मनाम् ।।

विष्णुनिंदापराणां च यतिनिंदारतात्मनाम् ।। ।। १७ ।।

सत्कथादूषकाणां च प्रायश्चित्तं न विद्यते ।।

तेषां चात्र धनुष्कोटौ स्नानाच्छुद्धिर्भविष्यति ।। १८ ।।

एवं वः कथितं विप्रा धनुष्कोटेस्तु वैभवम् ।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ।। २१९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतु माहात्म्ये धनुष्कोटिप्रशंसायां दुराचारसंसर्गदोषशांतिवर्णनंनाम षट्त्रिंशोऽध्यायः ।। ३६ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३७



।। श्रीसूत उवाच ।। ।।

भोभोस्तपोधनाः सर्वे नैमिषारण्यवासिनः ।।

यावद्रामधनुष्कोटिचक्रतीर्थमुखानि वः ।। १ ।।

चतुर्विंशतितीर्थानि कथितानि मयाधुना ।।

इतोऽन्यदद्भुतं यूयं किं भूयः श्रोतुमिच्छथ ।। २ ।।

।। मुनय ऊचुः ।। ।।

क्षीरकुंडस्य माहात्म्यं श्रोतुमिच्छामहे मुने ।।

यत्समीपे त्वया चक्रतीर्थमित्युदितं पुरा ।। ३ ।।

क्षीरकुंडं च तत्कुत्र कीदृशं तस्य वैभवम् ।।

क्षीरकुण्डमिति ख्यातिः कथं वास्य समागता ।। ४ ।।

एतन्नः श्रद्दधानानां विस्तराद्वक्तुमर्हसि ।।

।। श्रीसूत उवाच ।। ।।

ब्रवीमि मुनयः सर्वे शृणुध्वं सुसमाहिताः ।। ५ ।।

देवीपुरान्महापुण्यात्प्रतीच्यां दिश्यदूरतः ।।

फुल्लग्राममिति ख्यातं स्थानमस्ति महत्तरम् ।। ६ ।।

यत आरभ्य रामेण सेतुबन्धो महार्णवे ।।

तद्धि पुण्यतमं क्षेत्रं फुल्लग्रामाभिधं पुरम् ।। ७ ।।

क्षीरकुण्डं तु तत्रैव महापातकनाशनम् ।।

दर्शनात्स्पर्शनाद्ध्यानात्कीर्तनाच्चापि मोक्षदम् ।। ८ ।।

तस्य तीर्थस्य पुण्यस्य क्षीरकुण्डमिति प्रथाम् ।।

भवतां सादरं वक्ष्ये शृणुध्वं श्रद्धया सह ।। ९ ।।

पुरा हि मुद्गलोनाम मुनिर्वेदोक्तमार्गकृत् ।।

दक्षिणांबुनिधेस्तीरे फुल्लग्रामेतिपावने ।। 3.1.37.१० ।।

नारायणप्रीतिकरम करोद्यज्ञमुत्तमम् ।।

तस्य विष्णुः प्रसन्नात्मा यागेन परितोषितः ।। ११ ।।

प्रादुर्बभूव पुरतो यज्ञवाटे द्विजोत्तमाः ।।

तं दृष्ट्वा मुद्गलो विष्णुं लक्ष्मीशोभितविग्रहम् ।। १२ ।।

कालमेघतनुं कांत्या पीतांबरविराजितम् ।।

विनतानंदनारूढं कौस्तुभालंकृतोरसम् ।। १३ ।।

शंखचक्रगदापद्मराजद्बाहुचतु ष्टयम् ।।

भक्त्या परवशो दृष्ट्वा पुलकांकुरमंडितः ।।

मुद्गलः परितुष्टाव शब्दैः श्रोत्रसुखावहैः ।। १४ ।।

।। मुद्गल उवाच ।। ।।

प्रथमं जगतः स्रष्ट्रे पालकाय ततः परम् ।। १५ ।।

संहर्त्रे च ततः पश्चान्नमो नारायणाय ते ।।

नमः शफररूपाय कमठाय चिदात्मने ।। १६ ।।

नमो वराहवपुषे नमः पंचास्यरूपिणे ।।

वामनाय नमस्तुभ्यं जमदग्निसुताय ते ।। १७ ।।

राघवाय नमस्तुभ्यं बलभद्राय ते नमः ।।

कृष्णाय कल्कये तुभ्यं नमो विज्ञानरूपिणे ।। १८ ।।

रक्ष मां करुणासिंधो नारायण जगत्पते ।।

निर्लज्जं कृपणं क्रूरं पिशुनं दांभिकं कृशम् ।। १९ ।।

परदारपरद्रव्यपरक्षेत्रैकलो लुपम् ।।

असूयाविष्टमनसं मां रक्ष कृपया हरे ।। 3.1.37.२० ।।

इति स्तुतो हरिः साक्षान्मुद्गलेन द्विजोत्तमाः ।।

तमाह मुद्गलमुनिं मेघगंभीरया गिरा ।। २१

।। श्रीहरिरुवाच ।। ।।

प्रीतोऽस्म्यनेन स्तोत्रेण मुद्गल क्रतुना च ते ।।

प्रत्यक्षेण हविर्भोक्तुमहं ते क्रतुमागतः ।। २२ ।।

इत्युक्तो हरिणा तत्र मुद्गलस्तुष्टमानसः ।।

उवाचाधोक्षजं विप्रो भक्त्या परमया युतः ।। २३ ।।

।। मुद्गल उवाच ।। ।।

कृतार्थोऽस्मि हृषीकेश पत्नी मे धन्यतां ययौ ।।
अद्य मे सफलं जन्म ह्यद्य मे सफलं तपः ।। २४ ।।
अदय मे सफलो वंशो ह्यद्य मे सफलाः सुताः ।।
आश्रमः सफलोऽद्यैव सर्वं सफलमद्य मे ।। २५ ।।
यद्भवान्यज्ञवाटं मे हविर्भोक्तुमिहागतः ।।
योगिनो योगनिरता हृदये मृगयंति यम् ।। २६ ।।
तमद्य साक्षात्त्वां पश्ये सफ लोऽयं मम क्रतुः ।।
इतीरयित्वा तं विष्णुमर्चयित्वाऽऽसनादिभिः ।।२७।।
चंदनैः कुसुमैरन्यैर्दत्त्वा चार्घ्यं स विष्णवे ।।
प्रददौ विष्णवे प्रीत्या पुरो डाशादिकं हविः ।। २८ ।।
स्वयमेव समादाय पाणिना लोकभावनः ।।
हविस्तद्बुभुजे विष्णुर्मुद्गलेन समर्पितम् ।। २९ ।।
तस्मिन्हविषि भुक्ते तु विष्णुना प्रभविष्णुना ।।
साग्नयस्त्रिदशाः सर्वे तृप्ताः समभवन्द्विजाः ।।3.1.37.३०।।
ऋत्विजो यजमानश्च तत्रत्या ब्राह्मणास्तथा ।।
यत्किंचित्प्राणिलोकेऽ स्मिंश्चरं वा यदि वाऽचरम् ।।३१।।
सर्वमेव जगत्तृप्तं भुक्ते हविषि विष्णुना ।।
ततो हरिः प्रसन्नात्मा मुद्गलं प्रत्यभाषत ।।३२।।
प्रीतोऽहं वरदोऽस्म्येष वरं वरय सुव्रत ।।
इत्युक्ते केशवेनाथ महर्षिस्तमभाषत ।। ३३ ।।
।। मुद्गल उवाच ।। ।।
यत्त्वया मे हविर्भुक्तं यागे प्रत्यक्षरूपिणा ।।
अनेनैव कृतार्थोऽस्मि किमस्मादधिकं वरम् ।। ३४ ।।
तथापि भगवन्विष्णो त्वयि मे निश्चला सदा ।।
भक्तिर्निष्कपटा भूयादिदं मे प्रथमं वरम् ।। ३५ ।।
माधवाहं प्रतिदिनं सायंप्रातरिहाग्नये ।।
त्वद्रूपाय तव प्रीत्यै सुरभेः पयसा हरे ।। ३६ ।।
होतुमिच्छामि वरद तन्मे देहि वरांतरम् ।।

पयसा नित्यहोमो हि द्विकालं श्रुतिचोदितः ।। ३७ ।।

न मे सुरभयः संति तापसस्याधनस्य च ।।

इत्युक्ते मुद्गलेनाथ देवो नारायणो हरिः ।। ३८ ।।

आहूय विश्वकर्माणं त्वष्टारममृताशिनम् ।।

एकं सरः कारयित्वा शिल्पिना तेन शोभनम् ।। ३९ ।।

स्फटिकादि शिलाभेदैस्तेनासौ विश्वकर्मणा ।।

समीचकार च पुनस्तत्प्राकाराद्यलंकृतम् ।।

तत आहूय भगवान्सुरभिं वाक्यमब्रवीत् ।। 3.1.37.४०

।। श्रीहरिरुवाच ।।

मुद्गलो मम भक्तोऽयं सुरभे प्रत्यहं मुदा ।। ४१ ।।

मत्प्रीत्यर्थं पयोहोमं कर्तुमिच्छति सांप्रतम् ।।

मत्प्रीत्यर्थमितो देवि त्वमतो मत्प्रचोदिता ।। ।। ४२ ।।

सायंप्रातरिहागत्य प्रत्यहं सुरभे शुभे ।।

पयसा त्वत्प्रसूतेन सर एतत्प्रपूरय ।। ४३ ।।

तेनासौ पयसा नित्यं सायंप्रातश्च होष्यति ।।

ओमित्युक्त्वाथ सुरभिरेवं नारयणेरिता ।। ४४ ।।

अथ नारायणो देवो मुद्गलं प्रत्यभाषत ।।

सुरभेः पयसा नित्यमस्मिन्सरसि तिष्ठता ।। ।। ४५ ।।

सायंप्रातः प्रतिदिनं मत्प्रीत्यर्थमिहाग्नये ।।

जुहुधि त्वं महाभाग तेन प्रीणाम्यहं तव ।। ४६ ।।

मत्प्रीत्या तेऽखिला सिद्धिर्भविष्यति च मुद्गल ।।

इदं क्षीरसरोनाम तीर्थं ख्यातं भविष्यति ।। ४७ ।।

अस्मिन्क्षीरसरस्तीर्थे स्नातानां पंचपातकम् ।।

अन्यान्यपि च पापानि नाशं यास्यंति तत्क्षणात् ।। ४८ ।।

मुद्गल त्वं च मां याहि देहांते मुक्तबंधनः ।।

इत्युक्त्वा भगवान्विष्णुस्तं समालिंग्य मुद्गलम् ।। ४९ ।।

नमस्कृतश्च तेनायं तत्रैवांतरधीयत ।।

मुद्गलोऽपि गते विष्णावनेकशतवत्सरम् ।। 3.1.37.५० ।।

सुरभेः पयसा जुह्वन्नग्नये हरितुष्टये ।।

उवास प्रयतो नित्यं फुल्ल ग्रामे विमुक्तिदे ।।

देहांते मुक्तिमगमद्विष्णुसायुज्यरूपिणीम् ।। ५१ ।।

।। श्रीसूत उवाच ।।

एवमेतद्द्विजवरा युष्माकं कथितं मया ।। ५२ ।।

यथा क्षीरसरो नाम तीर्थस्यास्य पुराऽभवत् ।।

इदं क्षीरसरः पुण्यं सर्वलोकेषु विश्रुतम् ।। ५३ ।।

काश्यपस्य मुनेः पत्नी कद्रूर्यत्र द्विजोत्तमाः ।।

स्नात्वा स्वभर्तृवाक्येन नोदिता नियमान्विता ।। ५४ ।।

छलेन मुमुचे सद्यः सपत्नीजयदोषतः ।।

अतोऽत्र तीर्थे ये स्नांति मानवाः शुदमानसाः ।। ५५ ।।

तेषां विमुक्तबंधानां मुक्तानां पुण्यकर्मिणाम् ।।

किं यागैः किमु वा वेदैः किं वा तीर्थनिषेवणैः ।। ५६ ।।

जपैर्वा नियमैर्वापि क्षीर कुंडविलोकिनाम् ।।

क्षीरकुंडस्य वातेन स्पृष्टदेहो नरो द्विजाः ।। ५७ ।।

ब्रह्मलोकमनुप्राप्य तत्रैव परिमुच्यते ।।

निमग्नाः क्षीरकुंडेऽस्मिन्नवमत्यापि भास्करिम् ।।५८।।

तस्य मूर्द्धनि तिष्ठेयुर्ज्वलतः पावकोपमाः ।।

मग्नानां क्षीरकुंडेस्मिञ्छीता वैतरणी नदी। ।।५९।।

सर्वाणि नरकाण्यद्धा व्यर्थानि च भवंति हि ।।

कामधेनुसमे तस्मिन्क्षीरकुंडे स्थितेप्यहो ।। 3.1.37.६० ।।

योन्यत्र भ्रमते स्नातुं स नरो विप्रसत्तमाः ।।

गोक्षीरे विद्यमानेऽपि ह्यर्कक्षीराय गच्छति ।। ६१ ।।

स्नातानां क्षीरकुंडेऽस्मिन्नालभ्यं किंचिदस्ति हि ।।

करप्राप्तैव मुक्तिः स्यात्किमन्यैर्बहुभाषणैः ।। ६२ ।।

ब्रवीमि भुजमुद्धत्य सत्यंसत्यं ब्रवीमि वः ।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।।

स क्षीरकुंडस्नानस्य लभते फलमुत्तमम् ।। ६३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये क्षीरकुंडप्रशंसायां क्षीरकुंडस्वरूपकथनं नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३८

https://sa.wikisource.org/s/ft1
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। ऋषय ऊचुः ।। ।।

सूत कद्रुः कथं मुक्ता क्षीरकुंडनिमज्जनात् ।।

छलं कथं कृतवती सपत्न्यां पापनिश्चया ।। १ ।।

कस्य पुत्री च सा कद्रूः सपत्नीसा च कस्य वै ।।

किमर्थमजयत्कद्रूः स्वसपत्नीं छलेन तु ।।

एतन्नः श्रद्दधानानां ब्रूहि सूत कृपानिधे ।। २ ।।

।। श्रीसूत उवाच ।। ।।

शृणुध्वं मुनयः सर्वे इतिहासं महाफलम् ।।

पुरा कृतयुगे विप्राः प्रजापतिसुते उभे ।। ३ ।।

कद्रूश्च विनता चेति भगिन्यौ संबभूवतुः ।।

भार्ये ते कश्यपस्यास्तां कद्रूश्च विनता तथा ।। ४ ।।

विनता सुषुवे पुत्रावरुणं गरुडं तथा ।।

भर्तुः सकाशात्कद्रूश्च लेभे सर्पान्बहून्सुतान् ।। ।। ५ ।।

अनंतवासुकिमुखान्विषदर्पसमन्वितान् ।।

एकदा तु भगिन्यौ ते कद्रूश्च विनता तथा ।। ६ ।।

अपश्यतां समायांतमुच्चैःश्रवसमं तिकात् ।।

विलोक्य कद्रूस्तुरगं विनतामिदमब्रवीत् ।। ७ ।।

श्वेतोऽश्ववालो नीलो वा विनते ब्रूहि तत्त्वतः।।

इत्युक्त्वा विनता विप्राः कद्रूं तामिदमब्र वीत् ।।

तुरंगः श्वेतवालो मे प्रतिभाति सुमध्यमे ।।

किं वा त्वं मन्यसे कद्रूरिति तां विनताऽब्रवीत् ।। ९ ।।

पृष्टवैवं विनतां कद्रूर्बभाषे स्वमतं च सा ।।

कृष्णवालमहं मन्ये हयमेनमनिंदिते ।। 3.1.38.१० ।।

ततः पराजये कृत्वा दासीभावं पणं मिथः ।।

व्यतिष्ठेतां महाभागे सपत्न्यौ ते द्विजोत्तमाः ।। ।। ११ ।।
ततः कद्रूर्निजसुतान्वासुकिप्रमुखानहीन् ।।
तस्या नाहं यथा दासी तथा कुरुत पुत्रकाः ।। १२ ।।
तस्याभीप्सितसिद्ध्यर्थमित्यवोचद्भृशा तुरा ।।
युष्माभिरुच्चैःश्रवसो बालः प्रच्छाद्यतामिति ।। १३ ।।
नांगीचक्रुर्मतं तस्या नागाः कद्रू रुषा तदा।।
अशपत्कुपिता पुत्राञ्ज्वलंती रोषमूर्च्छि ता ।। १४ ।।
पारीक्षितस्य सर्वेऽद्धा यूयं सत्रे मरिष्यथ ।।
इति शापे कृते मात्रा त्रस्तः कर्कोटकस्तदा ।। १५ ।।
प्रणम्य पादयोः कद्रूं दीनो वचनम ब्रवीत् ।।
अहमुच्चैःश्रवोवालं विधास्याम्यंजनप्रभम् ।। १६ ।।
मा भीरंब त्वया कार्येत्यवादीच्छापविक्लवः ।।
श्वेतमुच्चैःश्रवोवालं ततः कर्कोटको रगः ।। १७ ।।
छादयित्वा स्वभोगेन व्यतनोदंजनद्युतिम् ।।
अथ ते विनताकद्र्वौ दास्ये कृतपणे उभे ।। १८ ।।
देवराजहयं द्रष्टुं संरंभादभ्यगच्छ ताम् ।।
शशांकशंखमाणिक्यमुक्तैरावतकारणम् ।। १९ ।।
युगांतकालशयनं योगनिद्राकृतो हरेः ।।
अतीत्य कद्रूविनते समुद्रं सरितां पतिम् ।। 3.1.38.२० ।।
ददृशतुर्हयं गत्वा देवराजस्य वाहनम् ।।
कृष्णवालं हयं दृष्ट्वा विनता दुःखिताऽभवत् ।। २१ ।।
दुःखितां विनतां कद्रूर्दासीकृत्ये न्ययुंक्त सा ।।
एतस्मिन्नंतरे ताक्ष्योऽप्यंडमुद्भिद्य वह्निवत् ।। २२ ।।
प्रादुर्बभूव विप्रेंद्रा गिरिमात्रशरीरवान् ।।
दृष्ट्वा तद्देहमाहात्म्यमभूत्त्रस्तं जगत्त्रयम् ।।२३।।
ततस्तं तुष्टुवुर्देवा गरुडं पक्षिणां वरम् ।।
दृष्ट्वा तद्देहमाहात्म्यं त्रस्तं स्याद्भुवनत्रयम् ।। २४ ।।
इत्यालोच्योपसंहृत्य देहमत्यंतभीषणम् ।।

अरुणं पृष्ठमारोप्य मातुरंतिकमभ्यगात् ।। २५ ।।

अथाह विनतां कद्रूः प्रणतामतिविह्वलाम् ।।

चेटि नागालयं गंतुमुद्योगो मम वर्तते ।। २६ ।।

त्वत्पुत्रो गरुडोतो मां मत्पुत्रांश्च वहत्विति ।।

ततश्च विनता पुत्रं गरुडं प्रत्यभाषत ।। २७ ।।

अहं कद्रूमिमां वक्ष्ये त्वं सर्पान्वह तत्सुतान् ।।

तथेति गरुडो मातुः प्रत्यगृह्णद्वचो द्विजाः ।। २८ ।।

अवहद्विनता कद्रूं सर्वांस्तान्गरुडोऽवहत् ।।

रविसामीप्यगाः सर्पास्तत्करैराहतास्तदा ।। २९ ।।

अस्तौषीद्वज्रिणं कद्रूः सुतानां तापशांतये ।।

सर्वतापं जलासारैर्देवराजोऽप्यशामयत ।। 3.1.38.३० ।।

नीयमानास्तदा सर्पा गरुडेन बलीयसा ।।

गत्वा तं देशमचिरादवदन्विनतासुतम् ।। ३१ ।।

वयं द्वीपांतरं गंतुं सर्वे द्रष्टुं कृतत्वराः ।।

वह त्वमस्मान्गरुड चेटीसुत ततः क्षणात् ।। ३२ ।।

ततो मातर मप्राक्षीद्विनतां गरुडो द्विजाः ।।

अहं कस्माद्वहामीमांस्त्वं चेमां वहसे सदा ।। ३३ ।।

चेटीपुत्रेति मामेते कि भणंति सरीसृपाः ।।

सर्वमेतद्वद त्वं मे मातस्तत्त्वेन पृच्छतः ।। ३४ ।।

पृष्टैवं जननी तेन गरुडं प्राब्रवीत्सुतम् ।।

भगिन्या क्रूरया पुत्र च्छलेनाहं पराजिता ।। ३५ ।।

तस्या दासी भवाम्यद्य चेटीपुत्रस्ततो भवान् ।।

अतस्त्वं वहसे सर्पान्वहाम्येनामहं सदा ।। ३६ ।।

इत्यादि सर्ववृत्तांतमादितोऽस्मै न्यवेदयत् ।।

अथ तां गरुडोऽवा दीन्मातरं विनतासुतः ।। ३७ ।।

अस्माद्दास्याद्विमोक्षार्थं किं कार्यं ते मयाधुना ।।

इति पृष्टा सुतेनाथ विनता तमभाषत ।। ३८ ।।

सर्पान्पृच्छस्व गरुड मम मातृविमोक्षणे ।।

युष्माकं मातुः किं कार्यं मयेति वदताधुना ।। ३९ ।।
इति मात्रा समुदितो गरुडः पन्नगान्प्रति ।।
गत्वाऽपृच्छद्द्विज श्रेष्ठास्तेऽप्येनमवदंस्तदा ।। 3.1.38.४० ।।
यदा हरिष्यसे शीघ्रं सुधां त्वममरालयात् ।।
दास्यान्मुक्ता भवेन्माता वैनतेय तवाद्य हि ।। ४१ ।।
ततो मातरमागम्य गरुडः प्रणतोऽब्रवीत् ।।
सुधामंब ममानेतुं गच्छतो भक्ष्यमर्पय ।। ४२ ।।
इतीरिता सुतं प्राह माता तं विनता सुतम् ।।
समुद्रमध्ये वर्तंते शबराः कतिचित्सुत ।। ४३ ।।
तान्भक्षयित्वा शबरानमृतं त्वमिहानय ।।
तत्र कश्चिद्द्विजः कामी शवरीसंगकौतुकी ।। ४४ ।।
त्यज तं ब्राह्मणं कंठं दहंतं ब्रह्मतेजसा ।।
पक्षादीनि तवांगानि पांतु देवा मरुन्मुखाः ।। ४५ ।।
इति स्वमातुराशीर्भिर्गरुडो वर्धितो ययौ ।।
शबरालयमभ्येत्य तस्य भक्षय तो मुखम् ।। ४६ ।।
आवृतं प्राविशन्व्याधा वयांसीव दरीं गिरेः ।।
अथ स ब्राह्मणोऽप्यागात्तत्कंठं मुनिपुंगवाः ।। ४७ ।।
कण्ठं दहन्तं विप्रं तमुवाच विनतासुतः ।।
विप्र पापोऽप्यवध्यो हि निर्याहि त्वमतो बहिः ।। ४८ ।।
एवमुक्तस्तदा विप्रो गरुडं प्रत्यभाषत ।।
किराती मम भार्यापि निर्गंतव्या मया सह ।। ४९ ।।
एवमस्त्विवति तं विप्रमुवाच पतगेश्वरः ।।
ततः स गरुडो विप्रमुज्जगार सभार्यकम् ।। 3.1.38.५० ।।
विप्रोऽप्यभीप्सितान्देशान्निषाद्या सह निर्ययौ ।।
शबरान्भक्षयित्वाऽथ गरुडः पक्षिणां वरः ।। ५१ ।।
आत्मनः पितरं वेगात्कश्यपं समुपेयिवान् ।।
कुत्र यासीति तत्पृष्टो गरुडस्तम भाषत ।। ५२ ।।
मातुर्दास्यविमोक्षाय सुधामाहर्तुमागमम् ।।

बहून्किरातान्जग्ध्वापि तृप्तिर्मम न जायते ।। ५३ ।।

अपर्यंतक्षुधा ब्रह्मन्बाधते मामह र्निशम् ।।

तन्निवृत्तिप्रदं भक्ष्यं ममार्पय तपोधन ।। ५४ ।।

येनाहं शक्नुयां तात सुधामाहर्तुमोजसा ।।

इतीरितः सुतं प्राह कश्यपो विनतोद्भवम् ।। ।। ५५ ।।

।।कश्यप उवाच ।। ।।

मुनिर्विभावसुर्नाम्ना पुरासीत्तस्य सानुजः ।।

सुप्रतीक इति भ्राता तावुभौ वंशवैरिणौ ।। ५६ ।।

अन्योन्यं शेपतुर्विप्रा महाक्रोधसमाकुलौ ।।

गजोऽभवत्सुप्रतीकः कूर्मोऽभूच्च विभावसुः ।। ५७ ।।

एवं वित्तविवादात्तौ शेपतुर्भ्रातरौ मिथः ।।

गजः षड्यो जनोच्छ्रायो द्विगुणायामसंयुतः ।। ५८ ।।

कूर्मस्त्रियोजनोच्छ्रयो दशयोजनविस्तृतः ।।

बद्धवैरावुभावेतौ सरस्यस्मिन्विहंगम ।। ५९ ।।

पूर्ववैरमनुस्मृत्य युध्येते जेतुमिच्छया ।।

उभौ तौ भक्षयित्वा त्वं सुधामाहर तृप्तिमान् ।। 3.1.38.६० ।।

एवं पित्रेरितः पक्षी गत्वा तद्गजकच्छपौ ।।

समुद्धत्य महाकायौ महाबलपराक्रमौ ।। ६१ ।।

वहन्नखाभ्यां संतीर्थं विळंबाभिधमभ्यगात् ।।

तत्रागतं समालोक्य पक्षिराजं द्विजोसमाः ।। ६२ ।।

तत्तीरजो महावृक्षो रोहिणाख्यो महोच्छ्रयः ।।

वैनतेयमिदं प्राह महाबलपराक्रमम् ।। ६३ ।।

एनामारुह मच्छाखां शतयोजनमायताम् ।।

स्थित्वात्र गजकूर्मौ त्वं भक्षयस्व खगोत्तम ।।६४ ।।

इत्युक्तस्तरुणा पक्षी स तत्रास्ते मनोजवः ।।

तद्भारात्सा तरोः शाखा भग्नाऽभूद्द्विजसत्तमाः ।। ६५ ।।

वालखिल्यमुनींस्तस्मिल्लँबमानानधोमुखान् ।।

दृष्ट्वा तत्पातशंकावाँस्तां शाखां गरुडोऽग्रहीत् ।। ६६ ।।

गजकूर्मो च तां शाखां गृहीत्वा यांतमं बरे ।।
पिता तस्याब्रवीत्तत्र गरुडं विनतासुतम् ।। ६७ ।।
त्यजेमां निर्जने शैले शाखां तं विनतोद्भव ।।
इत्युक्तः स तथा गत्वा शाखां निष्पुरुषे नगे ।। ६८ ।।
विन्यस्याभक्षयत्पक्षी तौ तदा गजकच्छपौ ।।
अथोत्पातः समभवत्तस्मिन्नवसरे दिवि ।। ६९ ।।
दृष्ट्वोत्पातं बलारातिः पप्रच्छ स्वपुरोहितम् ।।
उत्पातकारणं जीव किमत्रेति पुनःपुनः ।।
बृहस्पतिस्तदा शक्रं प्रोवाच द्विजसत्तमाः ।। 3.1.38.७० ।।
।। बृहस्पतिरुवाच ।। ।।
काश्यपो हि मुनिः पूर्वमयजत्क्रतुना हरे ।।७१।।
सर्वान्नृषीन्सुरान्सिद्धान्यक्षान्गंधर्वकिन्नरान् ।।
यज्ञसंभारसिद्ध्यर्थं प्रेषयामास स द्विजाः।। ७२ ।।
वालखिल्यान्ससंभारान्ह्रस्वानंगुष्ठमात्रकान् ।।
मज्जतो गोष्पदजले दृष्ट्वा हसितवान्भवान् ।। ७३ ।।
भवतावमताः क्रुद्धा वालखिल्यास्तदा हरे ।।
जुहुवुर्यज्ञवह्नौ ते क्रोधेन ज्वलिताननाः ।। ७४ ।।
देवेंद्रभयदः शत्रुः कश्यपस्य सुतोऽस्त्विति ।।
तस्य पुत्रोऽद्य गरुडः सुधाहरणकौतुकी ।। ७५ ।।
समागच्छति तद्धेतुरयमुत्पात आगतः ।।
इत्युक्तः सोऽब्रवीदिंद्रो देवानग्निपुरोगमान् ।। ७६ ।।
सुधामाहर्तुमायाति पक्षी सा रक्ष्यतामिति ।।
इतींद्रप्रेरिता देवा ररक्षुः सायुधाः सुधाम् ।। ७७ ।।
पक्षिराजस्तदाभ्यागाद्देवानायुधधारिणः ।।
महाबलं ते गरुडं दृष्ट्वाऽकम्पंत वै सुराः ।। ७८ ।।
गरुडस्य सुराणां च ततो युद्धमभून्महत् ।।
अखंडि पक्षितुण्डेन भौवनोऽमृतपालकः ।। ७९ ।।
तदा निजघ्नुर्गरुडं देवाः शस्त्रैरनेकशः ।।

अतीव गरुडो देवैर्बाधितः शस्त्रपाणिभिः ।। 3.1.38.८० ।।

पक्षाभ्यामाक्षिपद्दूरे देवानग्निपुरोगमान् ।।

तत्पक्षविक्षिता देवास्तदा परमकोपनाः ।। ८१ ।।

नाराचान्भिंदि पालांश्च नानाशस्त्राणि चाक्षिपन् ।।

ततस्तु गरुडो वेगाद्देवदृष्टिविलोपिनीम् ।। ८२ ।।

धूलिमुत्थापयामास पक्षाभ्यां विनतासुतः ।। वायुना

शमयामासुस्तान्पांसूंस्त्रिदशोत्तमाः ।। ८३ ।।

रुद्रान्वसूंस्तथादित्यान्मरुतोऽन्यान्सुरांस्तथा ।।

गरुडः पक्षतुंडाभ्यां व्यथितानकरोद्द्विजाः ।। ८४ ।।

पलायितेषु देवेषु सोऽद्राक्षीज्ज्वलनं पुरः ।।

ज्वलंतं परितस्त्वग्निं शमापयितुमुद्ययौ।। ८५ ।।

स सहस्रमुखो भूत्वा तैः पिबञ्छतशो नदीः ।।

तमग्निं नाशयामास तैः पयोभिस्त्वरान्वितः ।। ८६ ।।

सितधारं भ्रमच्चक्रं सुधारक्षकमंतिके ।।

दृष्ट्वा तदरिरंध्रेण संक्षिप्तांगोतराविशत् ।। ८७ ।।

ततो ददर्श द्वौ सर्पो व्यक्तास्यौ भीषणाकृती.।।

याभ्यां दृष्टोपि भस्म स्यात्तौ सर्पौ गरुडस्तदा ।। ८८ ।।

आच्छिद्य पक्षतुंडाभ्यां गृहीत्वाऽमृतमुद्ययौ ।।

यंत्रमुत्पाट्य चोद्यंतं गरुडं प्राह माधवः ।। ८९ ।।

तव तुष्टोऽस्मि पक्षीश वरं वरय सुव्रत ।।

अथ पक्षी तमाह स्म कमलानायकं हरिम् ।। ।। 3.1.38.९० ।।

तवोपरि स्थितिर्मे स्यान्मा भूतां च जरामृती ।।

तथास्त्विति हरिः प्राह वरं मद्व्रियतामिति ।। ९१ ।।

इत्युक्तस्तं हरिः प्राह मम त्वं वाहनं भव ।।

स्यंदनोपरि केतुश्च मम त्वं विनतासुत ।। ९२ ।।

तथास्त्विति खगोप्याह कमलापतिमच्युतम् ।।

हृतामृतं खगं श्रुत्वा तत आखंडलो जवात् ।। ९३ ।।

अभिद्रुत्याशु कुलिशं पक्षे चिक्षेप पक्षिणः ।।

ततो विहस्य गरुडः पाकशासनमब्रवीत् ।। ९४ ।।

कुलिशस्य निपातान्मे न हरे कापि वेदना ।।

सफलो वज्रपातस्ते भूयाच्च सुरनायक ।। ९५ ।।

इतीरयन्पत्रमेकं व्यसृजत्पक्षतस्तदा ।।

शोभनं पर्णमस्येति सुपर्ण इति सोभ वत् ।। ९६ ।।

तस्मिन्सुपर्णे हेमाभे सर्वे विस्मयमाययुः ।।

ततस्तु गरुडः शक्रमब्रवीद्द्विजपुंगवाः ।। ९७ ।।

भवता साकमखिलं जगदेतच्चराचरम् ।।

देवेंद्र सततं वोढुममोघा शक्तिरस्ति मे ।। ९८ ।।

नाखण्डलसहस्रं मे रणे लभ्यं हरे भवेत् ।।

इति ब्रुवाणं गरुडमब्रवीत्पाकशासनः ।।९९।।

किं तेऽमृतेन कार्यं स्याद्दीयताममृतं मम ।।

इमां सुधां भवान्दद्याद्येभ्यो हि विनतोद्भव ।। 3.1.38.१०० ।।

तेऽधुनाऽमृतपानेन जरामरणवर्जिताः ।।

अस्मद्भ्योऽधिकवीर्याः स्युर्बाधेरंस्त्रिदशांस्तथा ।। १ ।।

इति ब्रुवंतं देवेन्द्रं गरुडोऽप्यब्रवीद्द्विजाः ।।

यत्रैतत्स्थापयिष्यामि तत्रागत्य भवानिदम् ।। ।। २ ।।

गृह्णातु झटितीत्युक्तो गरुडं प्राह वृत्रहा ।।

प्रीतोऽहं तव दास्यामि वरं वृणु महामते ।। ३ ।।

इत्युक्तवन्तं गरुडः पाकशासनमब्रवीत् ।।

दास्ये छलप्रयोक्तारो मम मातुः सरीसृपाः ।। ४ ।।

भक्ष्या भवंतु नित्यं मे पाकशासन वृत्रहन् ।।

इति तेनेरितः शकस्तथास्त्वित्यवदच्च तम् ।। ५ ।।

अथायं गरुडो विप्रा धारयन्नमृतं ययौ ।।

यांतं तमनुयाति स्म गरुडं पाकशासनः ।। ६ ।।

वेगेन स द्विजश्रेष्ठाः सुधाहरणकौतुकी ।।

मातुरभ्याशमागत्य सर्पान्प्राह स पक्षिराट् ।। ७ ।।

कुशेषु न्यस्यते सर्पास्सुधैवमधुना मया ।।

स्नात्वा तद्भुङ्ध्वममृतं शुचयः सुसमाहिताः ।। ८ ।।
मोक्षोऽपि मम मातुः स्याद्दासीभावाद्धि पन्नगाः ।।
तथास्त्वित्यवदन्सर्पा गरुडं विनतासुतम् ।।९।।
मुक्ता तदैव विनता दासीभावाद्द्विजोत्तमाः ।।
सर्पास्तेऽमृतभक्षार्थं स्नातुं सर्वे ययुस्तदा ।।3.1.38.११०।।
तस्मिन्नवसरे शक्रस्तामादाय सुधां ययौ ।।
स्नात्वागत्य भुजंगास्ते तत्रादृष्ट्वा तदा सुधाम् ।। ११ ।।
जिह्वाभिर्लिलिहुर्द र्भानेषु न्यस्ता सुधेति हि ।।
तदाप्रभृति सर्पाणां जिह्वा दर्भाग्रपाटिताः ।।१२।।
द्विधाभवन्मुनिश्रेष्ठा द्विजिह्वास्तेन ते स्मृताः।।
सुधासंयोगतो दर्भाः प्रय युश्च पवित्रताम् ।।१३।।
मोचयित्वा च गरुडो दासीभावात्स्वमातरम् ।।
शशापकुपितः कद्रूं छद्मना जितमातरम् ।।१४।।
कद्रूस्त्वं जननीं यन्मे छलेन जितवत्यसि ।।
भर्तुस्त्वं परिचर्यायामतो नार्हा भविष्यसि ।।१५।।
शस्वैवं गरुडः कद्रूं प्रययौ स यथेच्छया ।।
कद्रूश्च विनता चोभे ययतुर्भर्तुरंतिकम् ।। १६ ।।
कश्यपो विमुखस्तत्र कद्रूं कोपादथाब्रवीत् ।।
यस्माच्छलेन विनतां कद्रूर्निर्जितवत्यसि ।। १७ ।।
अतो मत्परिचर्यायां न योग्यासि दुरात्मिके ।।
स्त्रियं वा पुरुषं वापि नारी वा पुरुषोऽपि वा ।। १८ ।।
छलाद्विजयते योऽसौ स महापातकी भवेत् ।।
छलाद्विजयिना सार्धं संभाष्य ब्रह्महा भवेत् ।। १९ ।।
स्तेयी सुरापी विज्ञेयो गुरुदाररतश्च सः ।।
संसर्गदोषदुष्टश्च मुनिभिः परिकीर्त्यते ।। 3.1.38.१२० ।।
त्वया संभाषणाद्दोषो मम स्यान्नरकप्रदः ।।
तस्मात्प्रयाहि कद्रूस्त्वं मत्समीपाद्धि दारुणे ।। २१ ।।
छलजेत्रा सपंक्तौ यो भुंजीत मनुजो भुवि ।।

तेन संभाषणात्सद्यः पतेद्धि नरकार्णवे ।। २२ ।।

विलोक्य च्छलजेतारं तस्य पापस्य शांतये ।।

आदित्यं वा जलं वापि पावकं वा विलोकयेत् ।। २३ ।।

छलजेता यत्र तिष्ठेदाश्रमेऽपि गृहेऽपिवा ।।

वस्तव्यं न हि तत्रान्यैर्वसन्नरकमश्नुते ।। २४ ।।

अतो निर्याहि निर्याहि मम त्वं दृष्टिमार्गतः ।।

स्वाश्रमात्सरलामेनां विनतां जितवत्यसि ।। २५ ।।

इति धिक्कृत्य सहसा कद्रूं तां कश्यपस्तदा ।।

विनतां स्वच्छशीलां तां स्वीचकार महामतिः ।।२६ ।।

कद्रूरित्थं सपरुषं कथिता कश्यपेन सा ।।

रुदंती भृशदुःखार्ता पादयोस्तस्य चापतत् ।। २७ ।।

पतितां पादयोर्दृष्ट्वा कश्यपो मुनिपुंगवः ।।

न जग्राहैव कद्रूं तां स्मरन्पापं तया कृतम् ।। २८ ।।

ततः प्रणम्य विनता कश्यपं वाक्यमब्रवीत् ।।

भगवन्भगिनीमेनां स्वीकुरुष्व कृपानिधे ।। २९ ।।

अज्ञानान्मुग्धया पापं कद्र्वा यदधुना कृतम्।।

क्षंतुमर्हसि तत्सर्वं दयाशीला हि साधवः ।। 3.1.38.१३० ।।

जनन्या गरुडस्यैव कथितः कश्यपो मुनिः ।।

उवाच विनते नैनां विना पापस्य निष्कृतिम् ।। ३१ ।।

ग्रहीष्यामि दुराचारां त्रिस्त्वां शपथयाम्यहम् ।।

कश्यपस्य वचः श्रुत्वा विनता पुनरब्रवीत् ।। ३२ ।।

भगिन्या मम पापस्य ब्रह्मंस्त्वं ब्रूहि निष्कृतिम् ।।

येनेयं परिचर्यायां तव योग्या भविष्यति ।। ३३ ।।

तयैवमुदितो विप्रा मारीचः कश्यपस्तदा ।।

ध्यात्वा मुहूर्तं मनसा पश्चादिदमभाषत ।। ३४ ।।

दक्षिणांबुनिधेस्तीरे फुल्लग्रामे विमुक्तिदे ।।

अस्ति क्षीरसरोनाम तीर्थं पापविनाशनम् ।। ६५ ।।

तत्तीर्थस्नानमात्रेण दोषश्चास्या विनश्यति ।।

प्रायश्चित्तायुतेनापि तत्तीर्थे मज्जनं विना ।। ३६ ।।

न नश्यत्येष दोषो ऽस्यास्तदेषा यातु तत्सरः ।।

भर्त्रैवमुदिते कद्रूस्तं प्रणम्य द्विजोत्तमम् ।। ३७ ।।

तत्क्षणात्प्रययौ क्षीरं सरः पुत्रसहायिनी ।।

सा कद्रूः पुत्र सहिता गत्वा कतिपयैर्दिनैः ।। ३८ ।।

प्राप्य क्षीरसरः पुण्यं प्रयता विजितेंद्रिया ।।

सस्नौ नियमपूर्वं च संकल्प्य क्षीरकुंडके ।। ३९ ।।

उपोष्य त्रिदिनं सस्नौ तस्मिन्क्षीरसरोजले ।।

चतुर्थे दिवसे तस्यां कुर्वत्यां स्नानमादरात् ।।

अदेहा व्योमगावाणी समुत्तस्थौ द्विजोत्तमाः ।। 3.1.38.१४० ।।

अशरीरिण्युवाच ।। ।।

कद्रूस्त्वं मज्जनादत्र च्छलजेतृत्वदोषतः ।। ४१ ।।

विमुक्ता भर्तृशुश्रूषायोग्या चासि न संशयः ।।

शापोपि गरुडोक्तस्ते लयं यातोऽत्र मज्जनात् ।। ४२ ।।

गच्छ भर्तृसकाशं त्वं सोऽपि त्वां स्वीकरिष्यति ।।

इत्युक्त्वा विरराम‍ाथ व्योमवागशरीरिणी ।। ४३ ।।

तस्यै वाचे नमस्कृत्य कद्रूः सा प्रीतमानसा ।।

तीर्थं प्रदक्षिणीकृत्य नत्वा पुत्रसमन्विता ।। ४४ ।।

प्रययौ भर्तुरभ्याशं तच्छुश्रूषणकौतुकात् ।।

आगतातां समालोक्य स्नातां क्षीरसरोजले ।। ४५ ।।

ज्ञात्वा विधूतपापां च कश्यपः स समाधिना ।।

अंगीचकार पत्नीं तामात्मशुश्रूषणोचि ताम् ।। ४६ ।।

एवं वः कथितं विप्राः कद्रूपापविमोक्षणम् ।।

मज्जनान्मुक्तिदं पुंसां पुण्ये क्षीरसरोजले ।। ४७ ।।

यः शृणोतीममध्यायं पठते वापि मानवः ।।

स क्षीरकुंडस्नानस्य लभते फलमुत्तमम्।। ४८ ।।

अश्वमेधादियज्ञानां समग्रं फलमश्नुते ।।

गंगादिसर्वतीर्थेषु स स्नातो भवति ध्रुवम्।। ।। ४९ ।।

यः पठेदिममध्यायं क्षीरकुंडप्रशंसनम् ।।

गोसहस्रप्रदातॄणां प्राप्नोत्यविकलं फलम् ।। ३.१.३८.१५० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये क्षीरकुंडप्रशसायां कद्रूकृतच्छलदोषशांतिकथावर्णनं-नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ३९



श्रीसूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि कपितीर्थस्य वैभवम् ।।

तत्तीर्थं सकलैः पूर्वं गंधमादनपर्वते ।। १ ।।

सर्वेषामुपकाराय कपिभिर्निर्मितं द्विजाः ।।

रावणादिषु रक्षःसु हतेषु तदनंतरम् ।। २ ।।

तीर्थं निर्माय तत्रैव सस्नुस्ते कपयो मुदा ।।

तीर्थाय च वरं प्रादुः कपयः कामरूपिणः ।। ।। ३।।

अस्मिंस्तीर्थे निमग्ना ये भक्तिप्रवणचेतसः ।।

ते सर्वे मुक्तिभाजः स्युर्महापातकमोचिताः ।। ४ ।।

अत्र तीर्थे निमग्नानां न स्यान्नरकजं भयम् ।।

अत्र स्नाता नराः सर्वे दारिद्र्यं नाप्नुवंति हि ।। ५ ।।

अत्र तीर्थे निमग्नानां यमपीडापि नो भवेत् ।।

कपितीर्थं प्रयास्येऽहमिति यः सततं ब्रुवन् ।। ६ ।।

व्रजेच्छतपदं विप्राः स यायात्परमं पदम् ।।

एतत्तीर्थसमं तीर्थं न भूतं न भविष्यति ।। ७ ।।

एवं वरं तु ते दत्त्वा तीर्थायास्मै कपीश्वराः ।।

रामं दाशरथिं सर्वे प्रणम्याथ ययाचिरे ।। ८ ।।

स्वामिंस्त्वयास्मै तीर्थाय दीयतां वरमद्भुतम्।।

कपिभिः प्रार्थितो विप्रा रामचंद्रोऽतिहर्षितः ।। ९।।

तत्तीर्थाय वरं प्रादात्कपीनां प्रीतिकारणात् ।।

अत्र तीर्थे निमग्नानां गंगास्नानफलं लभेत् ।। 3.1.39.१० ।।

प्रयागस्नानजं पुण्यं सर्वतीर्थफलं तथा ।।

अग्निष्टोमादियागानां फलं भूयादनुत्तमम् ।। ११ ।।

गायत्र्यादिमहामंत्रजपपुण्यं तथा भवेत् ।।

गोसहस्रप्रदनृणां प्राप्नोत्यविकलं फलम् ।। १२ ।।

चतुर्णामपि वेदानां पारायणफलं लभेत् ।।

ब्रह्मविष्णुमहेशादिदेवपूजाफलं लभेत् ।। १३ ।।

कपितीर्थाय रामोयं प्रादादेवं वरं द्विजाः ।।

एवं रामेण दत्ते तु वरे तत्र कुतूहलात् ।।१४।।

षडर्धनयनो ब्रह्मा सहस्राक्षो यमस्तथा ।।

वरुणोग्निस्तथा वायुः कुबेरश्चंद्रमा अपि ।।१५।।

आदित्यो निर्ऋतिश्चैव साध्याश्च वसवस्तथा ।।

अन्येऽपि त्रिदशाः सर्वे विश्वेदेवादयस्तथा ।। १६ ।।

अत्रिर्भृगुस्तथा कुत्सो गौतमश्च पराशरः ।।

कण्वोऽगस्त्यः सुतीक्ष्णश्च विश्वामित्रादयोऽपरे ।। १७ ।।

योगिनः सनकाद्याश्च नारदाद्याः सुरर्षयः ।।

रामदत्तवरं तीर्थं श्लाघंते बहुधा तदा ।। १८।।

सस्नुश्च तत्र तीर्थे ते सर्वाभीष्टप्रदायिनि ।।

कपिभिर्निर्मितं यस्मादेतत्तीर्थमनुत्तमम् ।। १९ ।।

कपितीर्थमिति ख्यातिमतो लोके प्रयास्यति।।

इत्यप्यवोचंस्ते सर्वे देवाश्च मुनयस्तथा ।। 3.1.39.२० ।।

तस्मादवश्यं गंतव्यं कपितीर्थं मुमुक्षुभिः ।।

रंभा कौशिकशापेन शिलाभूता पुरा द्विजाः ।। २१।।

तत्र स्नात्वा निजं रूपं प्रपेदे च दिवं ययौ ।।

अस्य तीर्थस्य माहात्म्यं मया वक्तुं न शक्यते ।। २२ ।।

।। मुनय ऊचुः ।। ।।

रंभां किमर्थमशपत्कौशिकः सूतनंदन ।।

कथं गता शिलाभूता कपितीर्थं सुरांगना ।।

एतन्नः सर्वमाचक्ष्व विस्तरान्मुनिसत्तम ।। २३ ।।

।। श्रीसूत उवाच ।। ।।

विश्वामित्राभिधो राजा प्रागभूत्कुशिकान्वये ।। २४ ।।

स कदाचिन्महाराजः सेनापरिवृतो बली ।।

मेदिनीं परिचक्राम राज्यवीक्षणकौतुकी ।। ।। २५ ।।

अटित्वा स बहून्देशान्वसिष्ठस्याश्रमं ययौ ।।

आतिथ्याय वृतः सोऽयं वसिष्ठेन महात्मना ।। २६ ।।

तथास्त्वित्यब्रवीत्सोयं दंडवत्प्रणतो नृपः ।।

कामधेनुप्रभावेन विश्वामित्राय भूभुजे ।। २७ ।।

आतिथ्यमकरोद्विप्रा वसिष्ठो ब्रह्मनंदनः ।।

कामधेनुप्रभावं वै ज्ञात्वा कुशिकनंदनः ।। ।। २८ ।।

वसिष्ठं प्रार्थयामास कामधेनुमभीष्टदाम् ।।

प्रत्याख्यातो वसिष्ठेन प्रचकर्ष च तां बलात् ।। २९ ।।

कामधेनुविसृष्टैस्तु म्लेच्छाद्यैः स पराजितः ।।

महादेवं समाराध्य तस्मादस्त्राण्यवाप्य च ।। 3.1.39.३० ।।

वसिष्ठस्याश्रमं गत्वा व्यसृजच्छरसंचयान् ।।

सर्वाण्यस्त्राणि मुमुचे ब्रह्मास्त्रं च नृपोत्तमः ।। ३१ ।।

तानि सर्वाणि चास्त्राणि वसिष्ठो ब्रह्मनंदनः ।।

एकेन ब्रह्मदंडेन निजघ्न स्वतपोबलात् ।। ३२ ।।

ततः पराजितो विप्रा विश्वामित्रोऽतिलज्जितः ।।

ब्राह्मण्यावाप्तये स्वस्य तपः कर्तुं वनं ययौ ।। ३३ ।।

पूर्वासु पश्चिमांतासु त्रिषु दिक्षु तपोऽचरत् ।।

प्रादुर्भूतमहा विघ्नस्तत्तद्दिक्षु स कौशिकः ।। ३४ ।।

उत्तरां दिशमासाद्य हिमवत्पर्वतेऽमले

कौशिक्यास्सरितस्तीरे पुण्ये पापविनाशिनि ।। ३५ ।।

दिव्यं वर्षसहस्रं तु निराहारो जितेंद्रियः ।।

निरालोको जितश्वासो जितक्रोधः सुनिश्चलः ।। ३६ ।।

ग्रीष्मे पंचाग्निमध्यस्थः शिशिरे वारिषु स्थितः ।।

वर्षास्वाकाशगो नित्यमूर्ध्वबाहुर्निराश्रयः ।। ३७ ।।

ब्राह्मण्यसिद्धयेऽत्युग्रं चचार सुमहत्तपः ।।

उद्विग्नमनसस्तस्य त्रिदशास्त्रिदिवालयाः ।।

जंभारिणा च सहिता रंभां प्रोचुरिदं वचः ।। ३९ ।।

।। देवा ऊचुः ।। ।।

रंभे त्वं हिमवच्छैले कौशिकीतीरगं मुनिम् ।। ३९ ।।

विश्वामित्रं तपस्यंतं विलोभय विचेष्टितैः ।।

यथा तत्तपसो विघ्नो भविष्यति तथा कुरु ।। 3.1.39.४० ।।

एवमुक्ता तदा रंभा देवैरिंद्रपुरोगमैः ।।

प्रत्युवाच सुरान्सर्वान्प्रांजलिः प्रणता तदा ।। ४१ ।।

।। रंभोवाच ।। ।।

अतिक्रूरो महाक्रोधो विश्वामित्रो महामुनिः ।।

स शप्स्यते मां क्रोधेन बिभेम्यस्मादहं सुराः ।। ४२ ।।

त्रायध्वं कृपया यूयं मां युष्मत्परिचारिकाम् ।।

इत्युक्तो रंभया तत्र जंभारिस्ताम भाषत ।। ४३ ।।

।। इन्द्र उवाच ।। ।।

रंभे त्वया न भीः कार्या विश्वामित्रात्तपोधनात् ।।

अहमप्यागमिष्यामि त्वत्सहायः समन्मथः ।। ४४ ।।

कोकिलालापमधुरो वसन्तोऽप्यागमिष्यति ।।

अतिसुंदररूपा त्वं प्रलोभय महामुनिम् ।। ४५ ।।

इतींद्रकथिता रंभा विश्वामित्राश्रमं ययौ ।।

तद्दृष्टिगोचरा स्थित्वा ललितं रूपमास्थिता ।। ४६ ।।

सा मुनिं लोभयामास मनोहरविचेष्टितः ।।

पिकोपि तस्मिन्समये चुकूजानंदयन्मनः ।। ४७ ।।

श्रुत्वा पिकस्वरं रंभां दृष्ट्वा च मुनिपुंगवः ।।

संशयाविष्टहृदयो विदित्वा शक्रकर्म तत् ।।

शशाप रंभां क्रोधेन विश्वामित्रस्तपोधनः ।। ४८ ।। ।।

।। विश्वामित्र उवाच ।। ।।

यस्मात्कोपयसे रंभे मां त्वं कोपजयैषिणम् ।। ४९ ।।

शिला भवात्र तस्मात्त्वं रंभे वर्षशतायुतम् ।।

तदंतरे ब्राह्मणेन रक्षिता मोक्षमाप्स्यसि ।। 3.1.39.५० ।।

विश्वामित्रस्य शापेन तदंते सा शिलाऽभवत् ।।

बहुकालं शिलाभूता तस्थौ तस्याश्रमे द्विजाः ।। ५१ ।।

विश्वामित्रोपि धर्मात्मा पुनस्तप्त्वा महत्तपः ।।

लेभे वसिष्ठवाक्येन ब्राह्मण्यं दुर्लभं नृपैः ।। ५२ ।।

बहुकालं शिलाभूता रंभाप्यासीत्तदाश्रमे ।।

तस्मिन्नेवाश्रमे पुण्ये शिष्योऽगस्त्यस्य संमतः ।। ५३ ।।

श्वेतोनाम मुनिश्चक्रे मुमुक्षुः परमं तपः ।।

चिरकालं तपस्तस्मिन्प्रकुर्वति महामुनौ ।।५४।।

अंगारकेति विख्याता राक्षसी काचिदागता ।।

तस्याश्रममतिक्रूरा मेघस्वनमहास्वना ।। ५५ ।।

मूत्ररक्तपुरीषाद्यैर्दूषयामास भीषणा ।।

उपद्रवैस्तथा चान्यैर्बाधयामास तं मुनिम् ।। ५६ ।।

अथ क्रुद्धो मुनिः श्वेतो वायव्यास्त्रेण योजयन् ।।

शप्तां कुशिकपुत्रेण राक्षस्यै प्राक्षिपच्छिलाम् ।। ५७ ।।

राक्षसी सा प्रदुद्राव वायव्यास्त्रेण योजिता ।।

वायव्यास्त्रप्रयुक्तेन दृषदानुद्रुता च सा ।। ५८ ।।

दक्षिणांबुनिधेस्तीरं धावति स्म भयार्दिता ।।

धावन्तीमनुधावन्ती सा शिलास्त्रप्रयोजिता ।। ५९ ।।

पपातोपरि राक्षस्या मज्जंत्याः कपितीर्थके ।।

मृता सा राक्षसी तत्र शिलापातात्स्वमूर्द्धनि ।। ।। 3.1.39.६० ।।

विश्वामित्रेण शप्ता सा कपितीर्थे निमज्जनात् ।।

शिलारूपं परित्यज्य रंभारूपमुपेयुषी ।। ६१ ।।

देवैः कुसुमधाराभिरभिवृष्टा मनोरमा ।।

दिव्यं विमानमारूढा दिव्यांबरविराजिता ।। ६२ ।।

हारकेयूरकटकनासाभरणभूषिता ।।

उर्वश्याद्यप्सरोभिश्च सखिभिः परिवारिता ।।६३।।

कपितीर्थस्य माहात्म्यं प्रशंसन्ती पुनःपुनः ।।

निषेव्य रामनाथं च शंकरं शशिभूषणम् ।। ६४ ।।

आखण्डलपुरीं रम्यां प्रययावमरावतीम् ।।

राक्षसी सापि शापेन कुम्भजस्य महौजसः ।। ६५ ।।

घृताची देववेश्या हि राक्षसीरूपमागता ।।

साप्यत्र कपितीर्थाप्सु स्नानात्स्वं रूपमाययौ ।। ६६ ।।

एवं रंभाघृताच्यौ ते कपितीर्थे निमज्जनात् ।।

अगस्त्यशिष्यश्वेतस्य प्रसादाद्द्विजसत्तमाः ।। ६७ ।।

राक्षसीत्वं शिलात्वं च हित्वा स्वं रूपमागते ।।

तस्मात्सर्वप्रयत्नेन स्नातव्यं कपितीर्थके ।। ६८ ।।

यः शृणोतीममध्यायं पठते वापि मानवः ।।

प्राप्नोति कपितीर्थस्य स्नानजं फलमुत्तमम् ।। ६९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये कपितीर्थप्रशंसायां रंभाघृताचीशापविमोक्षणवर्णनं नामैकोनचत्वारिंशोऽध्यायः ।।३९।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४०



। श्रीसूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि मुनयो लोकपावनम् ।।

गायत्र्या च सरस्वत्या माहात्म्यं मुक्तिदं नृणाम् ।। १ ।।

शृण्वतां पठतां चैव महापातकनाशनम् ।।

महापुण्यप्रदं पुंसा नरकक्लेशनाशनम् ।। २ ।।

गायत्र्यां च सरस्वत्यां ये स्नांति मनुजा मुदा ।।

न तेषां गर्भवासः स्यात्किं तु मुक्तिर्भवेद्ध्रुवम् ।। ३ ।।

सरस्वत्याश्च गायत्र्या गन्धमादनपर्वते ।।

ब्रह्मपत्न्योः सन्निधानात्तन्नाम्ना कथिते इमे ।। ४ ।।

।। ऋषय ऊचुः ।। ।।

गायत्र्याश्च सरस्वत्या गन्धमादनपर्वते ।।

किमर्थं संनिधानं वै सूताभूत्तद्वदस्व नः ।। ५ ।। ।।

।। सूत उवाच ।। ।।

प्रजापतिः पुरा विप्राः स्वां वै दुहितरं मुदा ।।

वाङ्नाम्नीं कामुको भूत्वा स्पृहयामास मोहनः ।। ६ ।।

अथ प्रजापतेः पुत्री स्वस्मिन्वै तस्य कामिताम्।।

विलोक्य लज्जिता भूत्वा रोहिद्रूप दधार सा ।। ७ ।।

ब्रह्मापि हरिणो भूत्वा तया रन्तुमनास्तदा ।।

गच्छतीमनुयातिस्म हरिणीरूपधारिणीम् ।। ८ ।।

तं दृष्ट्वा देवताः सर्वाः पुत्रीगमनसादरम् ।।

करोत्यकार्यं ब्रह्मायं पुत्रीगमनलक्षणम् ।। ९ ।।

इति निन्दंति तं विप्राः स्रष्टारं जगतां पतिम् ।।

निषिद्धकृत्यनिरतं तं दृष्ट्वा परमेष्ठिनम्।। 3.1.40.१० ।।

हरः पिनाकमादाय व्याधरूपधरः प्रभुः ।।

आकर्णपूर्ण कृष्टेन पिनाकधनुषा शरम् ।। ११ ।।

संयोज्य वेधसं तेन विव्याध निशितेन सः ।।

त्रिपुरांतक बाणेन विद्धोऽसौ न्यपतद्भुवि ।। १२ ।।

तस्य देहादथोत्थाय महज्ज्योतिर्महाप्रभम् ।।

आकाशे मृगशीर्षाख्यं नक्षत्रमभवत्तदा ।। १३ ।।

आर्द्रानक्षत्ररूपी सन्हरोऽप्यनुजगाम तम् ।।

पीडयन्मृगशीर्षाख्यं नक्षत्रं ब्रह्मरूपिणम् ।। १४ ।।

अधुनापि मृगव्याधरूपेण त्रिपुरांतकः ।।

अंबरे दृश्यते स्पष्टं मृगशीर्षांतिके द्विजाः ।। १५ ।।

एवं विनिहते तस्मिञ्च्छंभुना परमेष्ठिनि ।।

अनंतरं तु गायत्रीसरस्वत्यौ शुचार्पिते ।। १६ ।।

भर्तृहीने मुनिश्रेष्ठा भर्तृजीवनकांक्षया ।।

किं करिष्यावहे ह्यावामित्यन्योयं विचार्य तु ।। १७ ।।

स्वपतिप्राणसिद्ध्यर्थं गायत्री च सरस्वती ।।

सर्वोत्कृष्टं शिवस्थानं गन्धमादनपर्वतम् ।। १८ ।।

सर्वाभीष्टप्रदं पुंसां तपः कर्तुं समुद्यते ।।

जग्मतुर्नियमोपेतं तपः कर्तुं शिवं प्रति ।। १९ ।।

स्नानार्थमात्मनो विप्रा गायत्री च सरस्वती ।।

तीर्थद्वयं स्वनाम्ना वै चक्रतुः पापनाशनम् ।। 3.1.40.२० ।।

तत्र त्रिषवणस्नानं प्रत्यहं चक्रतुर्मुदा ।।

बहुकालमनाहारे कामक्रोधादिवर्जिते ।। २१ ।।

अत्युग्रनियमो पेते शिवध्यानपरायणे ।।

पंचाक्षरमहामन्त्रजपैकनियते शुभे ।। २२ ।।

स्वपतेर्जीवनार्थं वै गायत्री च सरस्वती ।।

महादेवं समुद्दिश्य तप एवं प्रचक्रतुः ।। २३ ।।

तयोरथ तपस्तुष्टो महादेवो महेश्वरः ।।

सन्निधत्ते महामूर्तिस्तपसां फलदित्सया ।। २४ ।।

ततः सन्निहितं शंभुं पार्वतीरमणं शिवम् ।।

गणेशकार्त्तिकेयाभ्यां पार्श्वयोः परिसेवितम ।। २५ ।।

दृष्ट्वा संतुष्टचित्ते ते गायत्री च सरस्वती ।।

स्तोत्रैस्तुष्टुवतुः स्तुत्यं महादेवं घृणा निधिम् ।। २६ ।। ।।

गायत्रीसरस्वत्यावूचतुः ।। ।।

नमो दुर्वारसंसारध्वांतध्वंसैकहेतवे ।।

ज्वलज्ज्वालावलीभीमकालकूटविषादिने ।। २७ ।।

जगन्मोहन पंचास्त्रदेहनाथैकहेतवे ।।

जगदंतकरक्रूर यमांतक नमोऽस्तु ते ।। २८ ।।

गंगातरंगसंपृक्तजटामण्डलधारिणे ।।

नमस्तेस्तु विरूपाक्ष बाल शीतांशुधारिणे ।। २९ ।।

पिनाकभीमटंकारत्रासितत्रिपुरौकसे ।।

नमस्ते विविधाकारजगत्स्रष्टृशिरश्छिदे ।। 3.1.40.३० ।।

शांतामलकृपादृष्टिसंरक्षितमृ कण्डुज ।।

नमस्ते गिरिजानाथ रक्षावां शरणागते ।। ३१ ।।

महादेव जगन्नाथ त्रिपुरांतक शंकर ।।

वामदेव महादेव रक्षावां शरणागते ।। ३२ ।।।

इति ताभ्यां स्तुतः शम्भुर्देवदेवो महेश्वरः ।।

अब्रवीत्प्रीतिसंयुक्तो गायत्रीं च सरस्वतीम् ।। ३३ ।।

।। महादेव उवाच ।। ।।

भोः सरस्वति गायत्रि प्रीतोऽस्मि युवयोरहम् ।।

वरं वरयतं मत्तो यद्वा मनसि वर्तते ।। ३४ ।।

इत्युक्ते ते तु गायत्रीसरस्वत्यौ हरेण वै ।।

अब्रूतां पार्वतीकांतं महादेवं घृणानिधिम् ।। ३५ ।।

।। गायत्रीसरस्वत्यावूचतुः ।। ।।

भगन्नावयोर्देव भर्त्तारं चतुराननम् ।।

सप्राणं कुरु सर्वेश कृपया करुणाकर ।। ३६ ।।

त्वमावयोः पिता देव तवाप्यावां सुते उभे ।।

रक्षावां पतिदानेन तस्मात्त्वं त्रिपुरांतक ।। ३७ ।।

स एवं प्रार्थितः शम्भुस्ताभ्यां ब्राह्मणपुंगवाः ।।

एवमस्त्विवति संप्रोच्य गायत्रीं च सरस्वतीम् ।। ३८ ।।

तदेव वेधसः कायं शिरसा योक्तुमुत्सुकः ।।

तत्रैव वेधसः कायं शिरोभिः सहसुव्रताः ।। ३९ ।।

भूतैरानाययामास नंदिभृंगिमुखैस्तदा ।।

शिरांसि तान्यनेकानि कायेन सह शंकरः ।। 3.1.40.४० ।।

क्षणात्संधारयामास वाणीगायत्रिसंनिधौ ।।

संधितोऽथ हरेणासौ चतुर्वक्त्रो जगत्पतिः ।। ४१ ।।

उत्तस्थौ तत्क्षणादेव सुप्तोत्थित इव द्विजाः ।।

ततः प्रजापतिर्दृष्ट्वा शंकरं शशिभूषणम् ।।

तुष्टाव वाग्भिरग्र्याभिर्भार्याभ्यां च समन्वितः ।। ४२ ।।

।। ब्रह्मोवाच ।। ।।

नमस्ते देवदेवेश करुणाकर शंकर ।। ४३ ।।

पाहि मां करुणासिंधो निषिद्धाचरणात्प्रभो ।।

मम त्वत्कृपया शंभो निषिद्धाचरणे क्वचित् ।। ४४ ।।

मा प्रवृत्तिर्भवेद्भूयो रक्ष मां त्वं तथा सदा ।।

तथैवास्त्विवति संप्राह ब्रह्माणं गिरिजापतिः ।। ४५ ।।

इतः परं प्रमादं त्वं मा कुरुष्व विधे पुनः ।।

उत्पथं प्रतिपन्नानां पुंसां शास्तास्मि सर्वदा ।। ४६ ।।

एवमुक्त्वा चतुर्वक्त्रं महादेवो द्विजोत्तमाः ।।

सरस्वतीं च गायत्रीं प्रोवाच प्रीणयन्गिरा ।। ४७ ।। ।।

।। महादेव उवाच ।। ।।

युवयोर्मत्प्रसादेन हे गायत्रि सरस्वति ।।

अयं भर्ता समायातः सप्राणश्चतुराननः ।। ४८ ।।

सहानेन ब्रह्मलोकं यातं मा भूद्विलंबता ।।

युवयोः संनिधानेन सदा कुंडद्वयेऽत्र वै ।। ४९ ।।

भविष्यति नृणां मुक्तिः स्नानात्सायुज्यरूपिणी ।।

युष्मन्नाम्ना च गायत्रीसर स्वत्याविति द्वयम् ।। 3.1.40.५० ।।

इदं तीर्थं सर्वलोके ख्यातिं यास्यति शाश्वतीम् ।।

सर्वेषामपि तीर्थानामिदं तीर्थद्वयं सदा ।। ५१ ।।

शुद्धिप्रदं तथा भूयान्महापातकनाशनम् ।।

महाशांतिकरं पुंसां सर्वाभीष्टप्रदायकम् ।। ५२ ।।

मम प्रसादजननं विष्णुप्रीतिकरं तथा ।।

एतत्तीर्थद्वयसमं न भूतं न भविष्यति ।। ५३ ।।

अत्र स्नानाद्धि सर्वेषां सर्वाभीष्टं भविष्यति ।।

इदं कुंडद्वयं लोके भवतीभ्यां कृतं महत् ।। ५४ ।।

युष्मन्नाम्ना प्रसिद्धं च भविष्यति विमुक्तिदम् ।।

गायत्र्युपास्तिरहिता वेदाभ्यासविवर्जिताः ।। ५५ ।।

औपासनविहीनाश्च पंचयज्ञविवर्जिताः ।।

युष्मत्कुंडद्वये स्नानात्तत्त त्फलमवाप्नुयुः ।। ५६ ।।

अन्ये च ये पातकिनो नित्यानुष्ठानवर्जिताः ।।

स्नात्वा कुंडद्वये तत्र शुद्धाः स्युर्द्विजसत्तमाः ।। ५७।।

सरस्वतीं च गाय त्रीमेवमुक्त्वा महेश्वरः ।।

क्षणादंतरधात्तत्र सर्वेषामेव पश्यताम् ।। ५८ ।।

पतिं लब्ध्वाऽथ गायत्रीसरस्वत्यौ मुदान्विते ।।

तेन साकं ब्रह्मलोकं जग्म तुर्द्विजसत्तमाः ।। ५९ ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं विप्रा गंधमादनपर्वते ।।

संनिधानं सरस्वत्या गायत्र्याश्च सहेतुकम् ।। 3.1.40.६० ।।

यः शृणोतीममध्यायं पठते वा सभक्तिकम् ।।

एतत्तीर्थद्वयस्नानफलमाप्नोत्यसंशयः ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि तायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये गायत्रीसरस्वतीतीर्थप्रशंसायां गंधमादने गायत्रीसरस्वतीसन्निधानकथनं नाम चत्वारिंशोऽध्यायः ।। ४० ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४१

https://sa.wikisource.org/s/ft4



।। श्रीसूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि गायत्रीं च सरस्वतीम् ।।

लक्ष्यीकृत्य कथामेकां पवित्रां द्विजसत्तमाः ।। १ ।।

कश्यपाख्यो द्विजः पूर्वमस्मिंस्तीर्थद्वये शुभे ।।

स्नात्वातिमहतः पापाद्विमुक्तो नरकप्रदात् ।। २ ।।

।। ऋषय ऊचुः ।। ।।

मुने कश्यपनामासावकरोत्किं हि पातकम् ।।

स्नात्वा तीर्थद्वयेप्यत्र यस्मान्मुक्तोऽभवत्क्षणात् ।। ३ ।।

एतन्नः श्रद्दधानानां ब्रूहि सूत कृपाबलात् ।।

त्वद्वचोऽमृततृप्तानां न पिपासापि विद्यते ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

गायत्र्याश्च सरस्वत्या माहात्म्यप्रतिपादकम् ।।

इतिहासं प्रवक्ष्यामि शृण्वतां पापनाशनम् ।। ५ ।।

अभिमन्युसुतो राजा परीक्षिन्नाम नामतः ।।

अध्यास्ते हास्तिनपुरं पालयन्धर्मतो महीम् ।। ६ ।।

स राजा जातु विपिने चचार मृगया रतः ।।

षष्टिवर्षवया भूपः क्षुत्तृष्णापरिपीडितः ।।७ ।।

नष्टमेकं स विपिने मार्गयन्मृगमादरात् ।।

ध्यानारूढं मुनिं दृष्ट्वा प्राह तं चीरवाससम् ।। ८ ।।।

मया बाणेन विपिने मृगो विद्धोऽधुना मुने ।।

दृष्टः स किं त्वया विद्वन्विद्रुतो भयकातरः ।। ९ ।।

समाधिनिष्ठो मौनित्वान्न किं चिदपि सोऽब्रवीत् ।।

ततो धनुरटन्याऽसौ स्कंधे तस्य महामुनेः। 3.1.41.१० ।।

निधाय मृतसर्पं तु कुपितः स्वपुरं ययौ।।

मुनेस्तस्य सुतः कश्चिच्छृंगीनाम बभूव वै ।। ११ ।।
सखा तस्य कृशाख्योऽभूच्छृंगिणो द्विजसत्तमाः ।।
सखायं शृङ्गिणं प्राह कृशाख्यः स सखा ततः ।। १२ ।।
पिता तव मृतं सर्पं स्कंधेन वहतेऽधुना ।।
मा भूद्दर्पस्तव सखे मा कृथास्त्वं मदं वृथा ।। १३ ।।
सोऽवदत्कुपितः शृंगी दित्सुश्शापं नृपाय वै ।।
मत्ताते शवसर्पं यो न्यस्तवान्मूढचेतनः ।। १४ ।।
स सप्तरात्रान्म्रियतां संदष्टस्तक्षकाहिना ।।
शशापैवं मुनिसुतः सौभद्रेयं परीक्षितम् ।। १५ ।।
शमीकाख्यः पिता तस्य श्रुत्वा शप्तं सुतेन तम् ।।
नृपं प्रोवाच तनयं शृंगिणं मुनिपुंगवः ।। १६ ।।
रक्षकं सर्वलोकानां नृपं किं शप्तवानसि ।।
अराजके वयं लोके स्थास्यामः कथमंजसा ।। १७ ।।
क्रोधेन पातकमभून्न त्वया प्राप्यते सुखम् ।।
यः समुत्पादितं कोपं क्षमयैव निरस्यति ।। १८ ।।
इह लोके परत्रासावत्यंतं सुखमेधते ।।
क्षमायुक्ता हि पुरुषा लभंते श्रेय उत्तमम् ।। १९ ।।
ततः शमीकः स्वं शिष्यं प्राह गौरमुखाभिधम् ।।
भो गौ मुख गत्वा त्वं वद भूपं परीक्षितम् ।। 3.1.41.२० ।।
इमं शापं मत्सुतोक्तं तक्षकाहिविदंशनम् ।।
पुनरायाहि शीघ्रं त्वं मत्समीपे महामते ।। २१ ।।
एवमुक्तः शमीकेन ययौ गौरमुखो नृपम् ।।
समेत्य चाब्रवीद्भूपं सौभद्रेयं परीक्षितम् ।। २२ ।।
दृष्ट्वा सर्पं पितुः स्कन्धे त्वया विनिहितं मृतम् ।।
शमीकस्य सुतः शृंगी शशाप त्वां रुषान्वितः ।। २३ ।।
एतद्दिनात्सप्तमेऽह्नि तक्षकेण महाहिना ।।
दष्टो विषाग्निना दग्धो भूयादाश्वभिमन्युजः ।। २४ ।।
एवं शशाप त्वां राजञ्छृंगी तस्य मुनेः सुतः ।।

एतद्वक्तुं पिता तस्य प्राहिणोन्मां त्वदंतिकम् ।। २५ ।।

इतीरयित्वा तं भूपमाशु गौरमुखो ययौ ।।

गते गौरमुखे पश्चाद्राजा शोकपरायणः ।। २६ ।।

अभ्रंलिहमथोत्तुंगमेकस्तंभं सुविस्तृतम् ।।

मध्येगंगं व्यतनुत मंडपं नृपपुंगवः ।। २७ ।।

महागारुडमंत्रज्ञैरौषधज्ञैश्चिकित्सकैः ।।

तक्षकस्य विषं हंतुं यत्नं कुर्वन्समाहितः ।। २८ ।।

अनेकदेवब्रह्मर्षिराजर्षिप्रवरान्वितः ।।

आस्ते तस्मिन्नृपस्तुंगे मंडपे विष्णुभक्तिमान् ।। २९ ।।

तस्मिन्नवसरे विप्रः काश्यपो मांत्रिकोत्तमः ।।

राजानं रक्षितुं प्रायात्तक्षकस्य महाविषात् ।। 3.1.41.३० ।।

सप्तमेऽहनि विप्रेंद्रो दरिद्रो धनकामुकः ।।

अत्रांतरे तक्षकोऽपि विप्ररूपी समाययौ ।। ३१ ।।

मध्येमार्गं विलोक्याथ कश्यपं प्रत्यभाषत ।।

ब्राह्मण त्वं कुत्र यासि वद मेऽद्य महामुने ।। ३२ ।।

इति पृष्टस्तदावादीत्काश्यपस्तक्षकं द्विजाः ।।

परीक्षितं महाराजं तक्षकोऽद्य विषाग्निना ।। ३३ ।।

दक्ष्यते तं शमयितुं तत्समीपमुपैम्यहम् ।।

इत्युक्तवंतं तं विप्रं तक्षकः पुनरब्रवीत् ।। ३४ ।।

तक्षकोहं द्विजश्रेष्ठ मया दष्टश्चिकित्सितुम् ।।

न शक्यो ऽब्दशतेनापि महामंत्रायुतैरपि ।। ३५ ।।

चिकित्सितुं चेन्मद्दष्टं शक्तिरस्ति तवाधुना ।।

अनेकयोजनोच्छ्रायमिमं वटतरुं त्वहम् ।। ३६ ।।

दशाम्युज्जीवयैनं त्वं समर्थोऽस्ति ततो भवान् ।।

इतीरयित्वा तं वृक्षमदशत्तक्षकस्तदा ।। ३७ ।।

अभवद्भस्मसात्सोऽपि वृक्षोऽत्यंतं समूर्च्छितः ।।

पूर्वमेव नरः कश्चित्तं वृक्षमधिरूढवान् ।। ३८ ।।

तक्षकस्य विषोल्काभिः सोऽपि दग्धोऽभवत्तदा ।।

तं नरं न विजिज्ञाते तौ च काश्यपतक्षकौ ।। ।। ३९ ।।

काश्यपः प्रतिजज्ञेऽथ तक्षकस्यापि शृण्वतः ।।

तन्मंत्रशक्तिं पश्यंतु सर्वे विप्रा हि नोऽधुना ।। 3.1.41.४० ।।

इतीरयित्वा तं वृक्षं भस्मीभूतं विषाग्निना ।।

अजीवयन्मन्त्रशक्त्या काश्यपो मांत्रिकोत्तमः ।। ४१ ।।

नरोऽपि तेन वृक्षेण साकमुज्जीवितोऽभवत् ।।

अथाब्रवीत्तक्षकस्तं काश्यपं मंत्रकोविदम् ।। ४२ ।।

यथा न मुनिवाङ्मिथ्या भवेदेवं कुरु द्विज ।।

यत्ते राजा धनं दद्यात्ततोपि द्विगुणं धनम् ।। ।। ४३ ।।

ददाम्यहं निवर्तस्व शीघ्रमेव द्विजोत्तम ।।

इत्युक्त्वानर्घ्यरत्नानि तस्मै दत्त्वा स तक्षकः ।। ४४ ।।

न्यवर्तयत्काश्यपं तं ब्राह्मणं मंत्रको विदम् ।।

अल्पायुषं नृपं मत्वा ज्ञानदृष्ट्या स काश्यपः ।। ४५ ।।

स्वाश्रमं प्रययौ तूष्णीं लब्धरत्नश्च तक्षकात् ।।

सोऽब्रवीत्तक्षकः सर्वान्सर्पानाहूय तत्क्षणे ।। ४६ ।।

यूयं तं नृपतिं प्राप्य मुनीनां वेषधारिणः ।।

उपहारफलान्याशु प्रयच्छत परीक्षिते ।। ४७ ।।

तथेत्युक्त्वा सर्वसर्पा ददू राज्ञे फलान्यमी ।।

तक्षकोपि तदा तत्र कस्मिंश्चिद्बदरीफले ।। ४८ ।।

कृमिवेषधरो भूत्वा व्यतिष्ठद्दंशितुं नृपम् ।।

अथ राजा प्रदत्तानि सर्पैर्ब्राह्मणरूपकैः ।। ४९ ।।

परीक्षिन्मंत्रवृद्धेभ्यो दत्त्वा सर्वफलान्यपि ।।

कौतूहलेन जग्राह स्थूलमेकं फलं करे ।। 3.1.41.५० ।।

अस्मिन्नवसरे सूर्योऽप्यस्ताचलमगाहत ।।

मिथ्या ऋषिवचो मा भूदिति तत्रत्यमानवाः ।। ५१ ।।

अन्योयमवदन्त्सर्वे ब्राह्मणाश्च नृपास्तथा ।।

एवं वदत्सु सर्वेषु फले तस्मिन्नदृश्यत ।। ५२ ।।

फले रक्तकृमिः सर्वे राज्ञा चापि परीक्षिता ।।

अयं किं मां दशेदद्य कृमिरित्युक्त्वा न्नृपः ।। ५३ ।।

निदधे तत्फलं कर्णे सकृमि द्विजसत्तमाः ।।

तक्षकोऽस्मिन्स्थितः पूर्वं कृमिरूपी फले तदा ।। ५४ ।।

निर्गत्य तत्फलादाशु नृपदे हमवेष्टयत् ।।

तक्षकावेष्टिते भूपे पार्श्वस्था दुद्रुवुर्भयात् ।। ५५ ।।

अनंतरं नृपो विप्रास्तक्षकस्य विषाग्निना ।।

दग्धोऽभूद्भस्मसादाशु सप्रासादो बलीयसा ।। ५६ ।।

कृत्वोर्ध्वदैहिकं तस्य नृपस्य सपुरोहिताः ।।

मंत्रिणस्तत्सुतं राज्ये जनमेजयनामकम् ।। ५७ ।।

राजानमभ्यषिंचन्वै गजद्रक्ष णवांछया ।।

तक्षकाद्रक्षितुं भूपमायातः काश्यपाभिधः ।। ५८ ।।

यो ब्राह्मणो मुनिश्रेष्ठाः स सर्वैर्निंदितो जनैः ।।

बभ्राम सकलान्देशाञ्छिष्टैः सर्वैश्च दूषितः ।। ५९ ।।

अवस्थानं न लेभेऽसौ ग्रामे वाप्याश्रमेऽपि वा ।।

यान्यान्देशानसौ यातस्तत्रतत्रमहाजनैः ।। 3.1.41.६० ।।

तत्तद्देशान्निरस्तः स शाकल्यं शरणं ययौ ।।

प्रणम्य शाकल्यमुनिं काश्यपो निन्दितो जनैः ।।

इदं विज्ञापयामास शाकल्याय महात्मने ।। ६१ ।।

।। काश्यप उवाच ।। ।।

भगवन्सर्वधर्मज्ञ शाकल्य हरिवल्लभ ।। ६२ ।।

मुनयो ब्राह्मणाश्चान्ये मां निंदंति सुहृज्जनाः ।।

नास्याहं कारणं जाने किं मां निंदंति मानवाः ।। ६३ ।।

ब्रह्महत्या सुरापानं गुरुस्त्रीगमनं तथा ।।

स्तेयं संसर्गदोषो वा मया नाचरितः क्वचित् ।। ६४ ।।

अन्यान्यपि हि पापानि न कृतानि मया मुने ।।

तथापि निंदंति जना वृथा मां बांधवादयः ।। ६५ ।।

जानासि चेत्त्वं शाकल्य मया दोषं कृतं वद ।।

उक्तोऽथ काश्यपेनैवं शाकल्याख्यो महामुनिः ।।

क्षणं ध्यात्वा बभाषे तं काश्यपं द्विजसत्तमाः ।। ६६ ।।

।। शाकल्य उवाच ।। ।।

परीक्षितं महाराजं तक्षकाद्रक्षितुं भवान् ।। ६७ ।।

अयासीदर्धमार्गे तु तक्षकेण निवारितः ।।

चिकित्सितुं समर्थोऽपि विषरोगादिपीडितम् ।। ६८ ।।

यो न रक्षति लोभेन तमाहुर्ब्रह्मघातकम् ।।

क्रोधात्कामाद्भयाल्लोभान्मात्सर्यान्मोहतोऽपि वा ।। ६९ ।।

यो न रक्षति विप्रेंद्र विषरोगातुरं नरम् ।।

ब्रह्महा स सुरापी च स्तेयी च गुरुतल्पगः ।। 3.1.41.७० ।।

संसर्गदोषदुष्टश्च नापि तस्य हि निष्कृतिः ।।

कन्याविक्रयिणश्चापि हयविक्रयिणस्तथा ।। ७१ ।।

कृतघ्न स्यापि शास्त्रेषु प्रायश्चित्तं हि विद्यते ।।

विषरोगातुरं यस्तु समर्थोपि न रक्षति ।। ७२ ।।

न तस्य निष्कृतिः प्रोक्ता प्रायश्चित्तायुतैरपि ।।

न तेन सह पंक्तौ च भुंजीत सुकृती जनः ।। ७३ ।।

न तेन सह भाषेत न पश्येत्तं नरं क्वचित् ।।

तत्संभाषणमात्रेण महापातकभाग्भवेत् ।। ७४ ।।

परीक्षित्स महाराजः पुण्यश्लोकश्च धार्मिकः ।।

विष्णुभक्तो महायोगी चातुर्वर्ण्यस्य रक्षिता ।। ७५ ।।

व्यासपुत्राद्धरिकथां श्रुतवान्भक्तिपूर्वकम् ।।

अरक्षित्वा नृपं तं त्वं वचसा तक्षकस्य यत् ।। ७६ ।।

निवृत्तस्तेन विप्रेंद्रैर्बांधवैरपि दूष्यसे ।।

स परीक्षिन्महाराजो यद्यपि क्ष णजीवितः ।। ७७ ।।

तथापि यावन्मरणं बुधैः कार्यं चिकित्सनम् ।।

यावत्कण्ठगताः प्राणा मुमूर्षोर्मानवस्य हि ।। ७८ ।।

तावच्चिकित्सा कर्तव्या कालस्य कुटिला गतिः ।।

इति प्राहुः पुरा श्लोकं भिषग्वैद्याब्धिपारगाः ।। ७९ ।।

अतश्चिकित्साशक्तोऽपि यस्मादकृतभेषजः ।।

अर्धमार्गे निवृत्तस्त्वं तेन तं हतवानसि ।।

शाकल्येनैवमुदितः काश्यपः प्रत्यभाषत ।। 3.1.41.८० ।।

।। काश्यप उवाच ।। ।।

ममैतद्दोषशांत्यर्थमुपायं वद सुव्रत ।। ८१ ।।

येन मां प्रतिगृह्णीयुर्बांधवाः ससुहृज्जनाः ।। ८२ ।।

कृपां मयि कुरुष्व त्वं शाकल्य हरिवल्लभ ।।

काश्यपेनैवमुक्तस्तु शाकल्योपि मुनीश्वरः ।।

क्षणं ध्यात्वा जगादैवं काश्यपं कृपया तदा ।। ८३ ।।

।। शाकल्य उवाच ।। ।।

अस्य पापस्य शात्यर्थमुपायं प्रवदामि ते ।। ८४ ।।

तत्कर्त्तव्यं त्वया शीघ्रं विलंबं मा कृथा द्विज ।।

दक्षिणांबुनिधौ सेतौ गंधमादनपर्वते ।। ८५ ।।

अस्ति तीर्थद्वयं विप्रा गायत्री च सरस्वती ।।

तत्र त्वं स्नानमात्रेण शुद्धो भूयाश्च तत्क्षणे ।। ८६ ।।

गायत्र्या च सरस्वत्या जलवात स्पृशो नरः ।।

विधूय सर्वपापानि स्वर्गं यास्यंति निर्मलाः ।। ८७ ।।

तद्याहि शीघ्र विप्र त्वं गायत्रीं च सरस्वतीम् ।।

इत्युक्तः काश्यपस्तेन शाकल्येन द्विजोत्तमाः ।। ८८ ।।

नत्वा मुनिं च शाकल्यं तमापृच्छय मुनीश्वरम् ।।

तेन चैवाभ्यनुज्ञातः प्रययौ गन्धमादनम् ।। ८९ ।।

तत्र गत्वा च गायत्रीसरस्वत्यौ च काश्यपः ।।

नत्वा तीर्थद्वयं भक्त्या दण्डपाणिं च भैरवम् ।। 3.1.41.९० ।।

संकल्पपूर्वं तत्तीर्थे सस्नौ नियमसंयुतः ।।

तीर्थद्वये स्नानमात्रान्मुक्तपापोऽथ काश्यपः ।। ९१ ।।

तीर्थद्वयस्य तीरेऽसौ किंचित्कालं तु तस्थिवान् ।।

तस्मिन्काले च गायत्रीसरस्वत्यौ मुनीश्वराः ।। ।। ९२ ।।

प्रादुर्बभूवतुर्मूर्ते सर्वाभरणभूषिते ।।

देव्यौ ते स नमस्कृत्य काश्यपो भक्तिपूर्वकम् ।। ९३ ।।

के युवां रूपसंपन्ने सर्वालंकारसंयुते ।।

इति पप्रच्छ दृष्ट्वा ते काश्यपो हृष्टमानसः ।।

तेन पृष्टे च गायत्रीसरस्वत्यौ तमूचतुः ।। ९४ ।।

।। गायत्रीसरस्वत्यावूचतुः ।। ।।

काश्यपावां हि गायत्रीसरस्वत्यौ विधिप्रिये ।। ९५ ।।

एतत्तीर्थस्वरूपेण नित्यं वर्तावहे त्वतः ।।

अत्र तीर्थद्वये स्नानादावां तुष्टे तवाधुना ।। ९६ ।।

वरं मत्तो वृणीष्व त्वं यदिष्टं काश्यप द्विज ।।

स्नांति तीर्थद्वये येऽत्र दास्यावस्तदभीप्सितम् ।। ९७ ।।

श्रुत्वा वचस्तद्गायत्रीसरस्वत्योः स काश्यपः ।।

तुष्टाव वाग्भिरग्र्याभिस्ते देव्यौ वेधसः प्रिये ।। ९८ ।।

।। काश्यप उवाच ।। ।।

चतुराननगेहिन्यौ जगद्धात्र्यौ नमाम्यहम् ।।

विद्यास्वरूपे गायत्री सरस्वत्यौ शुभे उभे ।। ९९ ।।

सृष्टिस्थित्यंतकारिण्यौ जगतो वेदमातरौ ।।

हव्यकव्यस्वरूपे च चंद्रादित्यविलोचने ।। 3.1.41.१०० ।।

सर्वदेवाधिपे वाणी गायत्र्यौ सततं भजे ।।

गिरिजा कमला चापि युवामेव जगद्धिते ।। १ ।।

युष्मद्दर्शनमात्रेण जगत्सृष्ट्यादिकल्पनम् ।।

युष्मन्निमेषात्सततं जगतां प्रलयो भवेत् ।। २ ।।

उन्मेषात्सृष्टिरभवद्भोगायत्रि सरस्वति ।।

युवयोर्दर्शनादद्य कृतार्थोऽभवमाशु वै ।। ३ ।।

मामद्य पातकान्मुक्तं स्नानात्तीर्थ द्वयेऽत्र तु ।।

स्वीकुर्वंतु मुनिश्रेष्ठा ब्राह्मणा बांधवास्तथा ।। ४ ।।

इतः परं पापकृत्ये मा मे बुद्धिः प्रवर्तताम् ।।

धर्मे प्रवर्ततां नित्यमयमेव वरो मम ।। ५ ।।

दीयतां भो महादेव्यौ नान्यमिच्छाम्यहं वरम् ।।

इति ते प्रार्थिते तेन काश्यपेन द्विजोत्तमाः ।। ६ ।।

सरस्वती च गायत्री द्वे देव्यौ ब्रह्मणः प्रिये ।।

काश्यपं प्रोचतुः प्रीते जनन्यौ जगतां सदा ।। ७ ।।

काश्यपैतद्वरं सर्वं प्रार्थितं यत्त्वयाऽधुना ।।

अनुग्रहादावयोस्तदचिरेण तवास्तु हि ।। ८ ।।

इत्युक्त्वा तं तु गायत्रीसरस्वत्यौ क्षणेन वै ।।

तिरोधानं गते विप्रास्तस्मिंस्तीर्थद्वये तदा ।। ९ ।।

काश्यपोऽपि कृतार्थः सन्स्व देशं प्रति निर्ययौ ।।

बांधवा ब्राह्मणाः सर्वे काश्यपं गतकिल्बिषम् ।। 3.1.41.११० ।।

प्रत्यगृह्णंश्च गायत्रीसरस्वत्योर्निमज्जनात् ।।

एवं वः कथितं विप्रा काश्यपस्य विमोक्षणम्।। ११ ।।

पातकेभ्यो हि गायत्रीसरस्त्योर्निमजनात् ।।

पठते त्विममध्यायं शृणुते वा समाहितः ।। १२ ।।

यो गायत्र्यां सरस्वत्यां स स्नातफलमश्नुते ।। ११३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये गायत्रीसरस्वतीतीर्थप्रशंसायां काश्यपपापशांतिवर्णनंनामैकचत्वारिंशोऽध्यायः ।। ४१ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४२



।। श्रीसूत उवाच ।। ।।

अथातः सर्वतीर्थानां वैभवं प्रवदाम्यहम् ।।

सेतुमध्यनिविष्टानामनुक्तानां मुनीश्वराः ।। १ ।।

अस्ति तीर्थं महापुण्यं नाम्ना तु ऋणमोचनम् ।।

ऋणानि त्रीणि नश्यंति नराणामत्र मज्जनात् ।। ।। २ ।।

द्विजस्य जायमानस्य ऋणानि त्रीणि संति हि ।।

ऋषीणां देवतानां च पितॄणां च द्विजोत्तमाः ।। ३।।

ब्रह्मचर्याननुष्ठानादृषीणामृणवान्भवेत् ।।

यज्ञादीनामकरणाद्देवानां च ऋणी भवेत् ।। ४ ।।

पुत्रानुत्पादनाच्चैव पितॄणामृणवान्भवेत् ।।

विनापि ब्रह्मचर्येण विना यागं विना सुतम् ।। ५ ।।

ऋणमोक्षाभिधे तीर्थे स्नानमात्रेण मानवाः ।।

ऋषिदेवपितॄणां तु ऋणेभ्यो मुक्तिमाप्नुयुः ।। ६ ।।

ब्रह्मचर्येण यज्ञेन तथा पुत्रोद्भवेन च ।।

नैव तुष्यन्ति ऋषयो देवाः पितृगणास्तथा ।। ७ ।।

ऋणमोक्षे यथा स्नानादतुलां तुष्टिमाप्नुयुः ।।

किं चात्र मज्जनात्तीर्थे दरिद्रा अधमर्णिनः ।। ८ ।।

मुक्ता ऋणेभ्यः सर्वेभ्यो धनिनः स्युर्न संशयः ।।

यदत्र मज्जनात्पुंसामृणमुक्तिः प्रजायते ।। ९ ।।

तस्मादुक्तमिदं तीर्थमृणमोचनसंज्ञया ।।

अतोऽत्र ऋणिभिः सर्वैः स्नातव्यं तद्विमुक्तये ।। 3.1.42.१० ।।

एतत्तीर्थसमं तीर्थं न भूतं न भविष्यति ।।

पांडवैः कृतमप्यत्र तीर्थमस्त्यपरं महत् ।। ११ ।।

यत्रेष्टं धर्मपुत्राद्यैः पांडवैः पंचभिः पुरा ।।

तदेतत्तीर्थमुद्दिश्य भुक्तिमुक्ति फलप्रदम् ।। १२ ।।

दशकोटिसहस्राणि तीर्थान्यनुत्तमानि हि ।।

पंचपांडवतीर्थेस्मिन्सान्निध्यं कुर्वते सदा ।। १३ ।।

आदित्पा वसवो रुद्राः साध्याश्च समरुद्गणाः ।।

पांडवानां महातीर्थे नित्यं सन्निहितास्तथा ।। १४ ।।

अत्राभिषेकं यः कुर्यात्पितृदेवांश्च तर्पयेत् ।।

सर्वपापविनिर्मुक्तो ब्रह्म लोके स पूज्यते ।। १५ ।।

अप्येकं भोजयेद्विप्रमेतत्तीर्थतटेऽमले ।।

तेनासौ कर्मणा त्वत्र परत्रापि च मोदते ।। १६ ।।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्यन्य एव वा ।।

अस्मिंस्तीर्थवरे स्नात्वा वियोनिं न प्रयाति वै ।। १७ ।।

पांडवानां महातीर्थे पुण्ययोगेषु यो नरः ।।

स्नायात्स मनुज श्रेष्ठो नरकं नैव पश्यति ।। १८ ।।

पांडवानां महातीर्थं सायं प्रातश्च यः स्मरेत्।।

स स्नातः सर्वतीर्थेषु गंगादिषु न संशयः ।। १९ ।।

इंद्रादिदेवता भिश्च यत्रेष्टं दैत्यशांतये ।।

तदन्यद्देवतीर्थाख्यं विद्यते गंधमादने ।। 3.1.42.२० ।।

देवतीर्थे नरः स्नात्वा सर्वपापविमोचितः ।।

प्राप्नुयादक्षयाँल्लोकान्सर्व कामसमन्वितान् ।। २१ ।।

जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषेण वा ।।

कृतं तद्देवकुंडेस्मिन्स्नानात्सद्यो विनश्यति ।। २२ ।।

यथा सुराणां सर्वेषा मादिर्वै मधुसूदनः ।।

तथादिः सर्वतीर्थानां देवकुंडमनुत्तमम् ।। २३ ।।

यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ।।

यस्त्वेको देवकुंडेस्मिन्कदाचित्स्नान माचरेत् ।। २४ ।।

सममेव तयोः पुण्यं नात्र संदेहकारणम् ।।

दुर्लभं देवतीर्थेस्मिन्दानं वासश्च दुर्लभः ।। २५ ।।

देवतीर्थाभिगमनं स्नानं चाप्य तिदुर्लभम्।।

देवतीर्थं समासाद्य देवर्षिपितृसेवितम् ।। २६ ।।

अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ।।

द्विदिनं त्रिदिनं चापि पंच वाथ षडेव वा ।। २७ ।।

उषित्वा देवकुंडस्थतीरे नरकनाशने ।।

न मातृयोनिमाप्नोति सिद्धिं चाप्नोत्यनुत्तमाम् ।। २८ ।।

त्रिरात्रस्नानतो ह्यत्र वाजपेयफलं भवेत् ।।

देवतीर्थस्मृतेः सद्यः पापेभ्यो मुच्यते नरः ।। २९ ।।

अर्चयित्वा पितॄन्देवानेतत्तीर्थतटे नरः ।।

सर्वकामसमृद्धिः स्यात्सर्वयज्ञफलं लभेत् ।। 3.1.42.३० ।।

एतत्तीर्थसमं पुण्यं न भूतं न भविष्यति ।।

तस्मादवश्यं स्नातव्यं देवतीर्थे मुमुक्षुभिः ।। ३१ ।।

ऐहिकामुष्मिकफलप्राप्तिकामैश्च मानवैः ।।

देवतीर्थस्य माहात्म्यं संक्षिप्य कथितं द्विजाः ।। ३२ ।।

विस्तरेणास्य माहात्म्यं मया वक्तुं न पार्य्यते ।।

सुग्रीवतीर्थं वक्ष्यामि रामसेतौ विमुक्तिदे ।। ३३ ।।

अत्र स्नात्वा नरो भक्त्या सूर्यलोकं समश्नुते ।।

सुग्रीवतीर्थे स्नानेन हयमेधफलं भवेत् ।। ३४ ।।

ब्रह्महत्यादि पापानां निष्कृतिश्चापि जायते ।।

सुग्रीवतीर्थगमनाद्गोसहस्रफलं लभेत् ।। ३५ ।।

स्मरणात्तस्य वेदानां पारायणफलं लभेत् ।।

दिनोपवासमात्रेण तस्य तीर्थस्य तीरतः.।। ३६ ।।

महापात कनाशः स्यात्प्रायश्चित्तं विना द्विजाः ।।

तत्राभिषेकं कुर्वाणः पितृदेवांश्च तर्पयेत् ।। ३७ ।।

आप्तोर्यामस्य यज्ञस्य फलमष्टगुणं भवेत् ।।

सुग्रीवतीर्थस्नानेन नरमेधफलं लभेत ।। ३९ ।।

सुग्रीवतीर्थस्नानेन नरो जातिस्मरो भवेत् ।।

सुग्रीवतीर्थं भो विप्राः प्रयाताभीष्टसिद्धये ।। ३९ ।।

सुग्रीवतीर्थमा हात्म्यमेवं वः कथितं द्विजाः ।।।

वैभवं नलतीर्थस्य त्विदानीं प्रब्रवीमि वः ।। 3.1.42.४० ।।।

नलतीर्थे नरः स्नानात्स्वर्गलोकं समश्नुते।।

नलतीर्थे सकृत्सनानात्सर्वपापाविमोचितः।।४१।।

अग्निष्टोमातिरात्रादिफलमाप्नोत्यनुत्तमम्।।

त्रिरात्रमुषितस्तस्मिंस्तर्पयन्पितृदेवताः।।४२।।

सूर्यवद्भासते विप्रा वाजिमेधफलं लभेत् ।।

नीलतीर्थं प्रवक्ष्यामि महापातकनाशनम् ।। ४३ ।।

अग्निपुत्रेण नीलेन कृतं सेतौ विमुक्तिदम् ।।

नीलतीर्थे नरः स्नानात्सर्वपापविमोचितः ।। ४४ ।।

बहुवर्ण्यस्य यागस्य फलं शतगुणं लभेत् ।।

नीलतीर्थे नरः स्नात्वा सर्वा भीष्टप्रदायिनि ।। ४५ ।।

अग्निलोकमवाप्नोति सर्वकामसमृद्धिमान् ।।

गवाक्षेण कृतं तीर्थं गंधमादनपर्वते ।। ४६ ।।

विद्यते स्नानमात्रेण नरकं नैव याति सः ।।

अगदेन कृतं तीर्थमस्ति सेतौ विमुक्तिदे ।। ४७ ।।

अत्र स्नानेन मनुजो देवेंद्रत्वं समश्नुते ।।।

गजेन गवयेनात्र शरभेण महौजसा ।। ४८ ।।

कुमुदेन हरेणापि पनसेन बलीयसा ।।

कृतानि यानि तीर्थानि तथाऽन्यैः सर्ववानरैः ।। ४९ ।।।

रामसेतौ महापुण्ये गन्धमादनपर्वते ।।

तेषु तीर्थेषु यः स्नाति सोऽमृतत्वं समश्नुते ।। 3.1.42.५० ।।

विभीषणकृतं तीर्थमस्ति पापविमोचनम् ।।

महादुःखप्रशमनं महारोगनिबर्हणम् ।। ५१ ।।

महापातकसंघानामनलोपममुत्तमम् ।।

कुंभीपाकादिनरकक्लेशनाशनकारणम् ।। ५२ ।।

दुःस्वप्र नाशनं धन्यं महादारिद्र्यबाधनम्।।

तत्र यो मनुजः स्नायात्तस्य नास्तीह पातकम् ।। ५३ ।।

स वैकुंठमवाप्नोति पुनरावृत्तिवर्जितम् ।।

विभीषणस्य सचिवैः कृतं तीर्थचतुष्टयम् ।। ५४ ।।

तत्र स्नानेन मनुजः सर्वपापैः प्रमुच्यते ।।

सरयूश्च नदी विप्रा गंधमादनपर्वते ।। ५५ ।।

रामनाथं महादेवं सेवितुं वर्तते सदा ।।

तत्र स्नात्वा नराः सर्वे सर्वपातकवर्जिताः ।। ५६ ।।

सर्वयज्ञतपस्तीर्थसेवाफलमवाप्नुयुः ।।

दशकोटिसहस्राणि तीर्थानि द्विजसत्तमाः ।। ५७ ।।

वसंत्यस्मिन्महापुण्ये गन्धमादनपर्वते ।।

गंगाद्याः सरितः सर्वास्तथा वै सप्तसागराः ।। ५८ ।।

ऋष्याश्रमाणि पुण्यानि तथा पुण्यवनानि च ।।

अनुत्तमानि क्षेत्राणि हीरशंकरयोस्तथा ।। ५९ ।।

सान्निध्यं कुर्वते नित्यं गन्धमादनपर्वते ।।

उपवीतांतरं तीर्थं प्रोक्तवांश्चतुराननः ।। 3.1.42.६० ।।

त्रयस्त्रिंशत्कोट्योऽत्र देवाः पितृगणैः सह ।।

सर्वैश्च मुनिभिः सार्द्धं यक्षैः सिद्धैश्च किन्नरैः ।।

वसंति सेतौ देवस्य रामच न्द्रस्य चाज्ञया ।। ६१ ।।

।। श्रीसूत उवाच ।। ।।

एवमुक्तं द्विजश्रेष्ठा तीर्थानां वैभवं मया ।। ६२ ।।

इदं पठन्वा शृण्वन्वा दुःखसंघाद्विमुच्यते ।।

कैवल्यं च समाप्नोति पुनरावृत्तिवर्जितम् ।। ६३ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सकलतीर्थप्रशंसायामृणमोचनादितीर्थमाहात्म्यवर्णनं नाम द्विचत्वारिंशोऽध्यायः।।४२।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४३



श्रीसूत उवाच।।

अथेदानीं प्रवक्ष्यामि रामनाथस्य वैभवम्।।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि।।१।।

रामप्रतिष्ठितं लिंगं यः पश्यति नरः सकृत् ।।

स नरो मुक्तिमाप्नोति शिवसायुज्यरूपिणीम् ।। २ ।।

दशवर्षैस्तु यत्पुण्यं क्रियते तु कृते युगे ।।

त्रेतायामेकवर्षेण तत्पुण्यं साध्यते नृभिः ।। ३ ।।

द्वापरे तच्च मासेन तद्दिनेन कलौ युगे ।।

तत्फलं कोटिगुणितं निमिषे निमिषे नृणाम् ।। ४ ।।

निःसंदेहं भवेदेवं रामनाथविलोकिनाम् ।।

रामेश्वर महालिंगे तीर्थानि सकलान्यपि ।।५।।

विद्यंते सर्वदेवाश्च मुनयः पितरस्तथा ।।

एककालद्विकालं वा त्रिकालं सर्वदैव वा ।।६।।

ये स्मरंति महादेवं रामनाथं विमुक्तिदम् ।।

कीर्तयंत्यथवा विप्रास्ते विमुक्ताघपंजराः।।७।।

सच्चिदानंदमद्वैतं सांबं रुद्रं प्रयांति वै ।।

रामेश्वराख्यं यल्लिंगं रामचन्द्रेण पूजि तम् ।।८।।

यस्य स्मरणमात्रेण यमपीडापि नो भवेत् ।।

रामेश्वरमहालिंगं येऽर्चयंति सकृन्नराः ।।९।।

न मानुषास्ते विज्ञेयाः किं तु रुद्रा न संशयः ।।

रामेश्वरमहालिंगं नार्चितं येन भक्तितः ।। 3.1.43.१० ।।

चिरकालं स संसारे संसरेद्दुःखसंकुले ।।

रामेश्वरमहालिंगं ये पश्यंति सकृन्नराः ।। ११ ।।।

किं दानैः किं व्रतैस्तेषां किं तपोभिः किमध्वरैः ।।

रामेश्वरमहालिंगं यो न चिंतयति क्षणम् ।।१२।।

अज्ञानी स च पापी स्यात्स मूको बधिरस्तथा ।।

स जडोंऽधश्च विज्ञेयश्छिद्रं तस्य सदा भवेत् ।। १३ ।।

धनक्षेत्रसुतादीनां तस्य हानिस्तथा भवेत् ।।

रामेश्वरमहालिंगे सकृद्दृष्टे मुनीश्वराः ।। १४ ।।

किं काश्या गयया किं वा प्रयागेणापि किं फलम् ।।

दुर्लभं प्राप्य मानुष्यं मानवा यत्र भूतले ।। १५ ।।

रामनाथमहालिंगं नमस्यंत्यर्चयंति च ।।।

जन्म तेषां हि सफलं ते कृतार्थाश्च नेतरे ।।१६।।

रामेश्वरमहालिंगे पूजिते वा स्मृतेपि वा ।।

विष्णुना ब्रह्मणा किं वा शक्रेणाप्यखिलामरैः ।।१७।।

रामनाथमहालिंगं भक्तियुक्ताश्च ये नराः ।।

तेषां प्रणामस्मरणपूजायुक्तास्तु ये नराः ।। १८ ।।

न ते पश्यंति दुःखानि नैव यांति यमालयम् ।।

ब्रह्महत्यासहस्राणि सुरापानायुतानि च ।।१९।।

दृष्टे रामेश्वरे देवे विलयं यांति कृत्स्नशः ।।

ये वांछंति सदा भोगं राज्यं च त्रिदशालये ।।3.1.43.२०।।

रामे श्वरमहालिंगं ते नमंतु सकृन्मुदा ।।

यानि कानि च पापानि जन्मकोटिकृतान्यपि ।। २१ ।।

तानि रामेश्वरे दृष्टे विलयं यांति सर्वदा ।।

संपर्कात्कौतुकाल्लोभाद्भयाद्वापि च संस्मरन् ।। २२ ।।

रामेश्वरमहालिंगं नेहामुत्र च दुःखभाक् ।।

रामेश्वरमहालिंगं कीर्तयन्नर्चयन्नपि ।। २३ ।।

अवश्यं रुद्रसारूप्यं लभते नात्र संशयः ।।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुते क्षणात् ।। २४ ।।

तथा पापानि सर्वाणि रामेश्वरविलोकनात् ।।

रामेश्वरमहालिंगभक्तिरष्टविधा स्मृता ।। २५ ।।

तद्भक्तजनवात्सल्यं तत्पूजापरितोषणम् ।।

स्वयं तत्पूजनं भक्त्या तदर्थे देहचेष्टितम् ।। २६ ।।

तन्माहात्म्यकथानां च श्रवणेष्वादरस्तथा ।।

स्वरनेत्रशरीरेषु विकारस्फुरणं तथा ।। २७ ।।

रामेश्वरमहालिंगस्मरणं संततं तथा ।।

रामेश्वरमहालिंगमाश्रित्यैवोपजीवनम् ।। २८ ।।

79b

एवमष्टविधा भक्तिर्यस्मिन्म्लेच्छेऽपिविद्यते ।।

स एव मुक्तिक्षेत्राणां दायभाक्परिकीर्त्यते ।। २९ ।।

भक्त्या त्वनन्यया मुक्तिर्ब्रह्मज्ञानेन निश्चिता ।।

वेदांतशास्त्रश्रवणाद्यतीनामूर्ध्वरेतसाम् ।। 3.1.43.३० ।।

सा च मुक्तिर्विना ज्ञानदर्शनश्रवणोद्भवम् ।।

यत्राश्रमं विना विप्रा विरक्तिं च विना तथा ।। ३१ ।।

सर्वेषां चैव वर्णानामखिलाश्रमिणामपि ।।

रामेश्वरमहालिंगदर्शनादेव केवलात् ।। ३२ ।।

अपुनर्भवदा मुक्तिर्भ विष्यत्यविलंबिता ।।

कृमिकीटाश्च देवाश्च मुनयश्च तपोधनाः ।। ३३ ।।

तुल्या रामेश्वरक्षेत्रे रामनाथप्रसादतः ।।

पापं कृतं मयानेकमिति मा क्रियतां भयम् ।। ३४ ।।

मा गर्वः क्रियतां पुण्यं मयाकारीति वा जनैः ।।

रामेश्वरमहालिंगे सांबरुद्रे विलोकिते ।। ३५ ।।

न न्यूना नाधिकाश्च स्युः किं तु सर्वे जनाः समाः ।।

रामेश्वरमहालिंगं यः पश्यति सभक्तिकम् ।। ३६ ।।

न तेन तुल्यतामेति चतुर्वेद्यपि भूतले ।।

रामेश्वरमहालिंगे भक्तो यः श्वपचोऽपि सन् ।। ३७ ।।

तस्मै दानानि देयानि नान्यस्मै च त्रयीविदे ।।

या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् ।। ३८ ।।

सा गतिः सर्वजंतूनां रामेश्वरविलोकिनाम् ।।

रामनाथशिवक्षेत्रे ये वसंति नरा द्विजाः ।। ३९ ।।

ते सर्वे पञ्चवक्त्राः स्युश्चंद्रालंकृतमस्तकाः ।।

नागाभरणसंयुक्तास्तथैव वृषभध्वजाः ।। 3.1.43.४० ।।

त्रिनेत्रा भस्मदिग्धांगाः कपालाकृतिशेखराः ।।

साक्षात्सांबा महादेवा भवेयुर्नात्र संशयः ।।४१ ।।

रामनाथशिवक्षेत्रं ये व्रजंति नरा मुदा ।।

पदेपदेऽश्वमेधानां प्राप्नुयुः सुकृतानि ते ।। ४२ ।।

रामसेतुं समाश्रित्य रामनाथस्य तुष्टये।।

ददाति ग्राममेकं यो ब्राह्मणाय सभक्तिकम् ।।४३।।

तेन भूः सकला दत्ता सशैलवनकानना ।।

पत्रं पुष्पं फलं तोयं रामनाथाय यो नरः ।। ४४ ।।

भक्त्या ददाति तं रक्षेद्रामनाथो ह्यहर्निशम्।।

रामनाथमहालिंगे सांबे कारुणिके शिवे ।। ४५ ।।

अत्यंतदुर्लभा भक्तिस्तत्पूजाप्यतिदुर्लभा ।।

स्तोत्रं च दुर्लभं प्रोक्तं स्मरणं चातिदुर्लभम् ।। ४६ ।।

रामनाथेश्वरं लिंगं महादेवं त्रिलोचनम् ।।

शरणं ये प्रपद्यंते भक्तियुक्तेन चेतसा ।। ४७ ।।

लाभस्तेषां जयस्तेषा मिह लोके परत्र च ।।

रामनाथमहालिंगविषया यस्य शेमुषी ।। ४८ ।।

दिवारात्रं च भवति स वै धन्यतरो भुवि ।।

रामनाथेश्वरं लिंगं यो न पूजयते शिवम्।। ४९ ।।

नायं भुक्तेश्च मुक्तेश्च राज्यानामपि भाजनम् ।।

रामेश्वरमहालिंगं यः पूजयति भक्तितः ।। 3.1.43.५० ।।

भुक्तिमुक्त्योश्च राज्यानामसौ परमभाजनम् ।।

रामनाथार्चनसमं नाधिकं पुण्यमस्ति वै ।। ५१ ।।

रामनाथेश्वरं लिंगं द्वेष्टि यो मोहमास्थितः ।।

ब्रह्महत्यायुतं तेन कृतं नरककारणम् ।। ५२ ।।

तत्संभाषणमात्रेण मानवो नरकं व्रजेत् ।।

रामनाथपरा देवा रामनाथपरा मखाः ।। ५३ ।।

रामनाथपराः सर्वे तस्माद न्यन्न विद्यते ।।

अतः सर्वं परित्यज्य रामनाथं समाश्रयेत् ।। ५४ ।।

रामनाथमहालिंगं शरणं याति चेन्नरः ।।

दौर्मत्यं तस्य नास्त्येव शिवलोकं च यास्यति ।। ५५ ।।

सर्वयज्ञतपोदानतीर्थस्नानेषु यत्फलम् ।।

तत्फलं कोटिगुणितं रामनाथस्य सेवया।।५६।।

रामनाथेश्वरं लिंगं चिंतयन्घटिका द्वयम् ।।

कुलैकवंशमुद्धृत्य शिवलोके महीयते ।। ५७ ।।

दिनमेकं तु यः पश्येद्रामनाथं महेश्वरम् ।।

इहैव धनवान्भूत्वा सोंऽते रुद्रश्च जायते ।। ५८ ।।

यः स्मरेत्प्रातरुत्थाय रामनाथं महेश्वरम् ।।

अनेनैव शरीरेण स शिवो वर्तते भुवि ।। ५९ ।।

रामनाथमहालिंगद्रष्टुर्दर्शनमात्रतः ।।

अन्येषां प्राणिनां पापं तत्क्षणादेव नश्यति ।। 3.1.43.६० ।।

रामनाथेश्वरं लिंगं मध्याह्ने यस्तु पश्यति ।।

सुरापानसहस्राणि तस्य नश्यंति तत्क्षणात् ।। ।। ६१ ।।

सायंकाले पश्यति यो रामनाथं सभक्तिकम् ।।

गुरुस्त्रीगमनोत्पन्नपातकं तस्य नश्यति ।। ६२ ।।

सायंकाले महास्तोत्रैः स्तौति रामेश्वरं तु यः ।।

स्वर्णस्तेयसहस्राणि तस्य नश्यंति तत्क्षणात् ।। ६३ ।।

स्नानं च धनुषः कोटौ रामनाथस्य दर्शनम् ।।

इति लभ्येत वै पुंसां किं गंगाजलसेवया ।। ६४ ।।

रामनाथमहालिंगसेवया यन्न लभ्यते ।।

तदन्यद्धर्मजालेन नैव लभ्येत कर्हिचित् ।। ६५ ।।

रामनाथं महालिगं यः कदापि न पश्यति ।।

संकरः स तु विज्ञेयो न पितुर्बीजसंभवः ।। ६६ ।।

रामनाथेतिशब्दं यस्त्रिः पठेत्प्रातरुत्थितः ।।

तस्य पूर्वदिनोत्पन्नपातकं नश्यति क्षणात् ।। ६७ ।।

रामनाथे महालिंगे भक्तरक्षणदीक्षिते ।।

भोजने विद्यमानेऽपि याचनाः किं प्रयास्यथ ।। ६८ ।।

रामनाथमहालिंगे प्रसन्ने करुणानिधौ ।।

नश्यंति सकलाः क्लेशा यथा सूर्योदये हिमम् ।। ६९ ।।

प्राणोत्क्रमणवेलायां रामनाथं स्मरेद्यदि ।।

जन्मनेऽसौ न कल्पेत भूयः शंकरतामियात् ।। 3.1.43.७० ।।

रामनाथ महादेव मां रक्ष करुणानिधे ।।

इति यः सततं ब्रूयात्कलिनासौ न बाध्यते ।। ७१ ।।

रामनाथ जगन्नाथ धूर्जटे नीललोहित ।।

इति यः सततं ब्रूयाद्बाध्यतेऽसौ न मायया ।। ७२ ।।

नीलकण्ठ महादेव रामेश्वरसदाशिव ।।

इति ब्रुवन्सदा जंतुर्नैव कामेन बाध्यते ।। ७३ ।।

रामेश्वर यमाराते कालकूटविषादन ।।

इतीरयञ्जनो नित्यं न क्रोधेन प्रपीड्यते ।। ७४ ।।

रामनाथालयं यस्तु दारुभिः कुरुते नरः ।।

स पुमान्स्वर्गमाप्नोति त्रिकोटिकुलसंयुतः ।। ७५ ।।

इष्टकाभिस्तु यः कुर्यात्स वैकुण्ठमवाप्नुयात् ।।

शिलाभिः कुरुते यस्तु स गच्छेद्ब्रह्मणः पदम् ।। ७६ ।।

स्फटिकादिशिलाभेदैः कुर्वन्नस्यालयं जनः ।।

शिवलोकमवाप्नोति विमानवरमास्थितः ।। ७७ ।।

रामनाथालयं ताम्रैः कुर्वन्भक्तिपुरःसरम् ।।

शिवसामीप्यमाप्नोति शिवस्यार्द्धासनस्थितः ।। ७८ ।।

रामेश्वरालयं रूप्यैः कुर्वन्वै मानवो मुदा ।।

शिवसारूप्यमाप्नोति शिववन्मोदते सदा ।। ७९ ।।

रामनाथालयं हेम्ना यः करोति सभक्तिकम् ।।

स नरो मुक्तिमाप्नोति शिवसायुज्यरूपिणीम् ।। 3.1.43.८० ।।

रामनाथालयं हेम्ना धनाढ्यः कुरुते नरः ।।

मृदा दरिद्रः कुरुते तयोः पुण्यं समं स्मृतम् ।। ८१ ।।

रामनाथमहालिंगस्नानकाले द्विजोत्तमाः ।।

त्रिसंध्यं गेयनृत्ते च मुखवाद्यैश्च काहलम् ।। ८२ ।।

वाद्यान्यन्यानि कुरुते यः पुमान्भक्तिपूर्वकम् ।।

स महापातकैर्मुक्तो रुद्रलोके महीयते ।। ।। ८३ ।।

योभिषेकस्य समये रामनाथस्य शूलिनः ।।

रुद्राध्यायं च चमकं तथा पुरुषसूक्तकम् ।। ८४ ।।

त्रिसुपर्णं पंचशांतिं पावमान्यादिकं तथा ।।

जपेत्प्रीतियुतो विप्रा नरकं न समश्नुते ।। ८५ ।।

गवां क्षीरेण दध्ना च पंचगव्यैर्घृतैस्तथा ।।

रामनाथमहालिंगस्नानं नरकनाशनम् ।। ।। ८६ ।।

रामनाथमहालिंगं घृतेन स्नापयेच्च यः ।।

कल्पजन्मार्जितं पापं तत्क्षणादेव नश्यति ।। ८७ ।।

रामनाथमहालिंगं गोक्षीरैः स्नापयन्नरः ।।

कुलैकविंशमुत्तार्य शिवलोके महीयते ।। ८८ ।।

रामनाथमहालिंगं दध्ना संस्नापयन्नरः ।।

सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।। ८९ ।।

अभ्यंगं तिलतैलेन रामेश्वरशिवस्य यः ।।

करोति हि सकृद्भक्त्या स कुबेरगृहे वसेत् ।। 3.1.43.९० ।।

रामनाथमहालिंगे स्नानमिक्षुरसेन यः ।।

सकृदप्याचरेद्भ क्त्या चन्द्रलोकं समश्नुते ।। ९१ ।।

लिकुचाम्ररसोत्पन्नसारेण स्नापयन्नरः ।।

रामनाथमहालिंगं पितृलोकं समश्नुते ।। ९२ ।।

नालिकेरजलैः स्नानं रामनाथमहेश्वरे ।।

ब्रह्महत्यादिपापानां नाशनं परिकीर्तितम् ।। ९३ ।।

रामनाथमहालिंगं रंभापक्वैर्विमर्दयन् ।।

विनाश्य सकलं पापं वायुलोके मही यते। ९४ ।।

वस्त्रपूतेन तोयेन रामनाथं महेश्वरम् ।।

स्नापयन्वारुणं लोकमाप्नोति द्विजसत्तमाः ।। ९५ ।।

चंदनोदकधाराभी रामनाथं महेश्वरम् ।।

स्नापयेत्पुरुषो विप्रा गांधर्वं लोकमाप्नुयात् ।। ९६ ।।

पुष्पवासिततोयेन हेमसंपृक्तवारिणा ।।

पद्मवासिततोयेन स्नानाद्रामेश्वरस्य तु ।। ९७ ।।

महेंद्रासनमारुह्य तेनैव सह मोदते।।

पाटलोत्पलकल्हारपुन्नागकरवीरकैः ९८ ।।

वासितैर्वारिभिर्विप्रा रामेश्वरमहेश्वरम् ।।

अभिषिच्य महद्भिश्च पातकैः स विमुच्यते ।। ९९ ।।

यानि चान्यानि पुष्पाणि सुरभीणि महांति च ।।

तद्गंधवासितैस्तोयैरभिषिच्य दयानिधिम् ।। 3.1.43.१०० ।।

रामेश्वरमहालिंगं शिवलोके महीयते ।।

एलाकर्पूरलामज्जवासितैः शुद्धवारिभिः ।। १ ।।

रामेश्वरमहालिंगमभिषिच्य विशुद्धधीः ।।

आग्नेयं लोकमासाद्य सर्वाकामा न्समश्नुते ।। २ ।।

रामनाथाभिषेकार्थं मृद्घटान्यः प्रयच्छति ।।

इह लोके शतायुः स्यात्सर्वकाम समृद्धिमान् ।। ३ ।।

ताम्रकुंभप्रदानेन देवेंद्रत्वमवा प्नुयात् ।।

रौप्यकुंभप्रदानेन ब्रह्मलोकं समश्नुते ।। ४ ।।

हेमकुंभप्रदानेन शिवलोके महीयते ।।

रत्नकुंभप्रदानेन शिवसामीप्यमश्नुते ।।५।।

रामनाथाभिषेकार्थं नैवेद्यार्थमपि द्विजाः ।।

यो गां पयस्विनीं दद्यात्सोऽश्वमेधफलं लभेत् ।। ६ ।।

प्राप्नोति शिववेषं च देहांते शिवलोकभाक्।।

रामसेतौ धनुष्कोटौ रामनाथेत्युदीर्य यः ।। ७ ।।

यत्र क्वाप्याचरेत्स्नानं सेतुस्नानफलं लभेत्।।

सुधाप्रलिप्तं यः कुर्याद्रामनाथशिवालयम् ।। ८ ।।

तत्पुण्यं गदितुं नाहं शक्तो वर्षशतादपि ।।

नवीकरोति यो मर्त्यो रामनाथशिवालयम् ।। ९ ।।

कर्तुः शतगुणं ज्ञेयं तस्य पुण्यफलं द्विजाः ।।

छिन्नं भिन्नं च यः सम्यग्रामनाथशिवालयम् ।। 3.1.43.११० ।।

करोति भक्त्या पुरुषो ब्रह्महत्यायुतं दहेत् ।।

रामनाथस्य पुरतो दीपानारोपयन्मुदा ।। ११ ।।

अविद्यापटलं भित्त्वा याति ब्रह्म सनातनम् ।।

घृतं तैलं तथा मुद्गाञ्छर्करास्तंडुलान्गुडान् ।। १२ ।।

प्रयच्छन्रामनाथाय देवेंद्रपदमश्नुते ।।

रामनाथमहालिंगदर्शनादर्चनात्स्मृतेः ।। १३ ।।

स्पर्शनादपि पापानि विलयं यांति तत्क्षणात्।।

रामनाथाय यो दद्यान्महाघंटां च दर्पणम् ।।१४।।

विमानशतसं भोगैश्चिरं शिवपुरे वसेत् ।।

भेरीमृदंगपटह निःसाणमुरजादिकम् ।। १५ ।।

वंशकांस्यादिवादित्रं तथा वाद्यांतराणि च ।।

प्रयच्छन्रामनाथाय महादे वाय सादरम् ।। १६ ।।

स विमानैर्महाभोगैर्वाद्यघोषसमन्वितैः ।।

अनेकयुगपर्यंतं शिवलोके महीयते ।। १७ ।।

रामनाथं समुद्दिश्य यद्दत्तं स्वल्प मादरात् ।।

तदनंतफलं दातुः परत्र भवति ध्रुवम् ।। १८ ।।

रामेश्वरे महाक्षेत्रे रामनाथस्य सन्निधौ ।।

वसन्मुक्तिमवाप्नोति पुनरावृत्तिवर्जिताम् ।। ।। १९ ।।

आयुः प्रयाति त्वरितं त्वरितं याति यौवनम् ।।

त्वरितं संपदो यांति दारपुत्रादयस्तथा ।। 3.1.43.१२० ।।

राजादिभिर्धनं बाध्यं गृहक्षेत्रादिकं तथा ।।

सर्वं च क्षणिकं विप्रा गृहोपकरणादिकम् ।। २१ ।।

तस्मात्सर्वं परित्यज्य संसारस्योपलालनम् ।।

रामेश्वरमहालिंगमापन्नार्तिहरं नृणाम् ।। ।। २२ ।।

श्रोतव्यं कीर्तितव्यं च स्मर्तव्यं च मनीषिभिः ।।

रामेश्वराय देवाय यो वै ग्रामान्प्रयच्छति ।। २३ ।।

स हि प्रारब्धदेहांते शिव एव प्रजा यते ।।

पात्राणामुत्तमं पात्रं रामनाथो महेश्वरः ।। २४ ।।

तस्मै दत्त्वा द्विजाः सत्यमनंतं सुखमश्नुते ।।

रामनाथमहालिंगदर्शनावधि पातकम् ।। ।। २५ ।।

दत्त्वा तस्मै जनः किंचित्सार्वभौमो भवेद्ध्रुवम् ।।

तालवृंतं ध्वजं छत्रं चंदनं गुग्गुलुं तथा ।। २६ ।।

ताम्रकांस्यादिरजतहेमरत्नमयान्ध टान् ।।

प्रयच्छंत्यभिषेकार्थं रामनाथस्य ये नराः ।। २७ ।।

भूमंडलाधिपतयो जायंते ते भवांतरे ।।

रामनाथस्य पूजार्थं पुष्पाण्युत्पादयंति ये ।। ।। २८ ।।

अश्वमेधादियागानां फलान्यद्धाप्नुवंति ते ।।

रामेश्वरे महालिंगे पूजिते नमिते स्मृते ।। २९ ।।

श्रुते दृष्टे च विप्रेंद्रा दुर्लभं नास्ति किंचन।।

रामनाथमहालिंगं सेवितुं यः पुमान्व्रजेत् ।। 3.1.43.१३० ।।

तं दृष्ट्वा भयमाप्नोति तस्य पापौघ आशु वै ।।

रामनाथो महादेवो दृष्टो यदि भवेन्नृभिः ।। ।।३१।।

किंवेदैः किमु वा शास्त्रैः किं वा तीर्थनिषेवणैः।।

चंदनं कुंकुमं कोष्ठं कस्तूरीं गुग्गुलुं तथा ।। ३२ ।।

मृगनाभिं च सरलं दद्याद्रामेश्वराय यः ।।

स भूमाविह जायेत धनाढ्यो वेदपारगः ।। ३३ ।।

मुक्ताभरणवस्त्राणि महार्हाणि ददाति यः ।।

रामनाथाय देवाय नासौ दौर्गत्यमाप्नुयात् ।। ३४ ।।

रामनाथमहालिंगं गंगातोयैः समाहृतैः ।।

योऽभिषिंचत्यसौ पूज्यः शिवस्यापि न संशयः ।। ३५ ।।

यावन्न याति मरणं यावन्नाक्रमते जरा ।।

यावन्नेंद्रियवैकल्यं तावदेव द्विजोत्तमाः ।।३६।।

तावदेव महादेवो रामनाथो मुमुक्षुभिः ।।

वन्द्यः पूज्यश्च मंतव्यः स्तुत्यश्च सततं शिवः ।। ३७ ।।

रामेश्वरमहालिंगपूजातुल्यो न विद्यते ।।

धर्मः सर्वपुराणेषु सर्वशास्त्रेषु वै तथा ।। ३८ ।।

रामनाथेश्वरं देवं महाकारुणिकं प्रभुम् ।।

भक्त्या भजंति ये नित्यं ते भूलोके सुखान्विताः ।। ३९ ।।

भुक्त्वा भोगान्बहुसुखान्पुत्रदारयुता भृशम् ।।

एतच्छरीरपातांते मुक्तिं यास्यंति शाश्वतीम् ।। 3.1.43.१४० ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं विप्रा रामनाथस्य वै भवम् ।।

यस्त्वेतच्छृणुयान्नित्यं पठते च सभक्तिकम् ।। ४१ ।।

स रामनाथसेवायाः फलमाप्नोत्यनुत्तमम् ।।

धनुष्कोटिमहातीर्थस्नानपुण्यं च यास्यति ।। ४२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामनाथप्रशंसावर्णनंनाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४४

https://sa.wikisource.org/s/ft7
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। ऋषय ऊचुः ।। ।।

सर्ववेदार्थतत्त्वज्ञ पुराणार्णवपारग ।।

व्यासपादांबुजद्वंद्वनमस्कारहृताशुभ ।। १ ।।

पुराणार्थोपदेशेन सर्वप्राण्युपका रक ।।

त्वया ह्यनुगृहीताः स्म पुराणकथनाद्वयम् ।। २ ।।

अधुना सेतुमाहात्म्यकथनात्सुतरां मुने ।।

वयं कृतार्थाः संजाता व्यासशिष्य महामते ।। ।। ३ ।।

यथा प्रातिष्ठिपल्लिंगं रामो दशरथात्मजः ।।

तच्छ्रोतुं वयमिच्छामस्त्वमिदानीं वदस्व नः ।। ४ ।।

।। श्रीसूत उवाच ।। ।।

यदर्थं स्थापितं लिंगं गन्धमादनपर्वते ।।

रामचन्द्रेण विप्रेंद्र तदिदानीं ब्रवीमि वः ।। ५ ।।

हृतभार्यो वनाद्रामो रावणेन बलीयसा ।।

कपिसेनायुतो धीरः ससौमित्रिर्महाबलः ।।६।।

महेंद्रं गिरिमासाद्य व्यलोकयत वारिधिम् ।।

तस्मिन्नपारे जलधौ कृत्वा सेतुं रघूद्वहः ।।७।।

तेन गत्वा पुरीं लंकां रावणेनाभिरक्षि ताम् ।।

अस्तंगते सहस्रांशौ पौर्णमास्यां निशामुखे।।८।।

रामः ससैनिको विप्राः सुवेलगिरिमारुहत् ।।

ततः सौधस्थितं रात्रौ दृष्ट्वा लंकेश्वरं बली। ।। ।। ९ ।।

सूर्यपुत्रोऽस्य मुकुटं पातयास भूतले ।।

राक्षसो भग्नमुकुटः प्रविवेश गृहोदरम् ।। 3.1.44.१० ।।

गृहं प्रविष्टे लंकेशे रामः सुग्रीवसंयुतः ।।

सानुजः सेनया सार्द्धमवरुह्य गिरेस्ततात् ।।११।।

सेनां न्यवेशयद्वीरो रामो लंकासमीपतः ।।

ततो निवेशमानांस्तान्वानरान्नावणानुगाः ।। १२।।

अभिजग्मुर्महाकायाः सायुधाः सहसैनिकाः ।।

पर्वणः पूतनो जृंभः खरः क्रोधवशो हरिः ।।१३।।

प्रारुजश्चारुजश्चैव प्रहस्तश्चेतरे तथा ।।

ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् ।। १४ ।।

अन्तर्धानवधं तत्र चकार स्म विभीषणः ।।

ते दृश्यमाना बलिभिर्हरिभिर्दूरपातिभिः ।। १५ ।।

निहताः सर्वतश्चैते न्यपतन्वै गतासवः ।।

अमृष्यमाणः सबलो रावणो निर्ययावथ ।। १६ ।।

व्यूह्य तान्वानरान्सर्वान्न्यवारयत सायकैः ।।

राघवस्त्वथ निर्याय व्यूढानीको दशाननम् ।। १७ ।।

प्रत्ययुध्यत वेगेन द्वंद्वयुद्धमभूत्तदा ।।

युयुधे लक्ष्मणेनाथ इंद्रजिद्रावणात्मजः ।। १८ ।।

विरूपाक्षेण सुग्रीवस्तारेयेणापि खर्वटः ।।

पौंड्रेण च नलस्तत्र पुटेशः पनसेन च ।। १९ ।।

अन्येपि कपयो वीरा राक्षसैर्द्वंद्वमेत्य तु ।।

चक्रुर्युद्धं सुतुमुलं भीरूणां भयवर्द्धनम् ।। 3.1.44.२० ।।

अथ रक्षांसि भिन्नानि वानरैर्भीमविक्रमैः ।।

प्रदुद्रुवू रणादाशु लंकां रावणपालिताम् ।। २१ ।।

भग्नेषु सर्वसैन्येषु रावणप्रेरितेन वै ।।

पुत्रेणेंद्रजिता युद्धे नागास्त्रैरतिदारुणैः ।। २२ ।।

विद्धौ दाशरथी विप्रा उभौ तौ रामलक्ष्मणौ ।।

मोचितौ वैनतेयेन गरुडेन महात्मना ।। २३ ।।

तत्र प्रहस्तस्तरसा समभ्येत्य विभीषणम् ।।

गदया ताडयामास विनद्य रणकर्कशः ।। २४ ।।

स तयाभिहतो धीमान्गदया भामिवेगया ।।

नाकंपत महाबाहुर्हिमवानिव सुस्थितः ।। २५ ।।

ततः प्रगृह्य विपुलामष्टघंटां विभीषणः ।।

अभिमंत्र्य महाशक्तिं चिक्षे पास्य शिरः प्रति।।२६।।

पतंत्या स तया वेगाद्राक्षसोऽशनिना यथा।

हृतोत्तमांगो ददृशे वातरुग्ण इव द्रुमः।।२७।।

तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम्।।

अभिदुद्राव धूम्राक्षो वेगेन महता कपीन्।।२८।।

कपिसैन्यं समालोक्य विद्रुतं पवनात्मजः।।

धूम्राक्षमाजघानाशु शरेण रणमूर्धनि।।२९।।

धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ।।

सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ।।3.1.44.३०।।

ततः शयानं लंकेशः कुम्भकर्णमबोधयत् ।।

प्रबुद्धं प्रेषयामास युद्धाय स च रावणः ।। ३१ ।।

आगतं कुम्भकर्णं तं ब्रह्मास्त्रेण तु लक्ष्मणः ।।

जघान समरे क्रुद्धो गतासुर्न्यपतच्च सः ।। ३२ ।।

दूषणस्यानुजौ तत्र वत्रवेगप्रमाथिनौ ।।

हनुमन्नीलनिहतौ रावणप्रतिमौ रणे ।। ३३ ।।

वज्रदंष्ट्रं समवधीद्विश्वकर्मसुतो नलः ।।

अकंपनं च न्यहनत्कुमुदो वानरर्षभः ।। ३४ ।।

षष्ठ्यां पराजितो राजा प्राविशच्च पुरीं ततः ।।

अतिकायो लक्ष्मणेन हतश्च त्रिशिरास्तथा ।। ३५ ।।

सुग्रीवेण हतौ युद्धे देवांत कनरांतकौ ।।

हनूमता हतौ युद्धे कुम्भकर्णसुतावुभौ ।। ३६ ।।

विभीषणेन निहतो मकराक्षः खरात्मजः ।।

तत इन्द्रजितं पुत्रं चोदयामास रावणः।।३७।।

इन्द्रजिन्मोहयित्वा तौ भ्रातरौ रामलक्ष्मणौ।।

घोरैः शरैरंगदेन हतवाहो दिवि स्थितः।।३८।।

कुमुदांगदसुग्रीवनलजांबवदादिभिः।।

सहिता वानराः सर्वे न्यपतंस्तेन घातिताः।।३९।।

एवं निहत्य समरे ससैन्यौ रामलक्ष्मणौ।।

अंतर्दधे तदा व्योम्नि मेघनादो महाबलः ।। 3.1.44.४० ।।

ततो विभीषणो राममिक्ष्वाकुकुलभूषणम् ।।

उवाच प्रांजलिर्वाक्यं प्रणम्य च पुनःपुनः ।। ४१ ।।

अयमंभो गृहीत्वा तु राजराजस्य शासनात् ।।

गुह्यकोऽभ्यागतो राम त्वत्सकाशमरिंदम ।। ४२ ।।

इदमंभः कुबेरस्ते महाराज प्रयच्छति ।।

अंतर्हितानां भूतानां दर्शनार्थं परं तप ।। ४३ ।।

अनेन स्पृष्टनयनो भूतान्यंतर्हितान्यपि ।।

भवान्द्रक्ष्यति यस्मै वा भवानेतत्प्रदास्यति ।। ४४ ।।

सोऽपि द्रक्ष्यति भूतानि वियत्यंतर्हितानि वै ।।

तथेति रामस्तद्वारि प्रतिगृह्याथ सत्कृतम् ।। ४५ ।।

चकार नेत्रयोः शौचं लक्ष्मणश्च महाबलः ।

सुग्रीवजांबवन्तौ च हनुमानंगदस्तथा ।। ४६ ।।

मैंदद्विविदनीलाश्च ये चान्ये वानरास्तथा ।।

ते सर्वे रामदत्तेन वारिणा शुद्धचक्षुषः ।। ४७ ।।

आकाशेंतर्हितं वीरमपश्यन्रावणा त्मजम् ।।

ततस्तमभिदुद्राव सौमित्रिर्दृष्टिगोचरम् ।। ४८ ।।

ततो जघान संकुद्धो लक्ष्मणः कृतलक्षणः ।।

कुवेरप्रेषितजलैः पवित्रीकृतलोचनः ।। ।। ४९ ।।

ततः समभवद्युद्धं लक्ष्मणेंद्रजितोर्महत् ।।

अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ।। 3.1.44.५० ।।

ततस्तृतीयदिवसे यत्नेन महता द्विजाः ।।

इंद्रजिन्निहतो युद्धे लक्ष्मणेन बलीयसा ।। ५१ ।।

ततो मूलबलं सर्वं हतं रामेण धीमता ।।

अथ क्रुद्धो दशग्रीवः प्रियपुत्रे निपातिते ।। ५२ ।।

निर्ययौ रथमास्थाय नगराद्बहुसैनिकः ।।

रावणो जानकीं हन्तुमुद्युक्तो विंध्यवारितः ।। ५३ ।।

ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।।

उपतस्थे रणे रामं मातलिः शक्रसारथिः ।। ५४ ।।

ऐन्द्रं रथं समारुह्य रामो धर्मभृतां वरः ।।

शिरांसि राक्षसेन्द्रस्य ब्रह्मास्त्रेणावधीद्रणे ।। ५५ ।।

ततो हतदशग्रीवं रामं दशरथात्मजम् ।।

आशीर्भिर्जययुक्ताभिर्देवाः सर्षिपुरोगमाः ।। ५६ ।।

तुष्टुवुः परिसंतुष्टाः सिद्धविद्याधरास्तथा ।।

रामं कमलपत्राक्षं पुष्प वर्षैरवाकिरन् ।। ५७ ।।

रामस्तैः सुरसंघातैः सहितः सैनिकैर्वृतः ।।

सीतासौमित्रिसहितः समारुह्य च पुष्पकम् ।। ५८ ।।

तथाभिषिच्य राजानं लंकायां च विभीषणम् ।।

कपिसेनावृतो रामो गन्धमादनमन्वगात् ।।५९।।

परिशोध्य च वैदेहीं गंधमादनपर्वते ।।

रामं कमलपत्राक्षं स्थितवानर संवृतम् ।। 3.1.44.६० ।।

हतलंकेश्वरं वीरं सानुजं सविभीषणम् ।।

सभार्यं देववृंदैश्च सेवितं मुनिपुंगवैः ।। ६१ ।।

मुनयोऽभ्यागता द्रष्टुं दंडकारण्य वासिनः ।।

अगस्त्यं ते पुरस्कृत्य तुष्टुवुर्मैथिलीपतिम् ।। ६२ ।।

।। मुनय ऊचुः ।। ।।

नमस्ते रामचंद्राय लोकानुग्रहकारिणे ।।

अरावणं जगत्कर्तुमवतीर्णाय भूतले ।। ६३ ।।

ताटिकादेहसंहर्त्रे गाधिजाध्वररक्षिणे ।।

नमस्ते जितमारीच सुवाहुप्राणहारिणे ।। ६४ ।।

अहल्यामुक्तिसंदायिपादपंकजरेणवे ।।

नमस्ते हरकोदण्डलीलाभञ्जनकारिणे ।। ६५ ।।

नमस्ते मैथिलीपाणिग्रहणोत्सवशालिने ।।

नमस्ते रेणुकापुत्रपराजयविधायिने ।। ६६ ।।

सहलक्ष्मणसीताभ्यां कैकेय्यास्तु वरद्वयात् ।।

सत्यं पितृवचः कर्तुं नमो वनमुपे युषे ।। ६७ ।।

भरतप्रार्थनादत्तपादुकायुगुलाय ते ।।

नमस्ते शरभंगस्य स्वर्गप्रास्यैकहेतवे ।। ६८ ।।

नमो विराधसंहर्त्रे गृधराजस खाय ते ।।

मायामृगमहाक्रूरमारीचांगविदारिणे ।। ६९ ।।

सीतापहारिलोकेशयुद्धत्यक्तकलेवरम् ।।

जटायुषं तु संदह्य तत्कैवल्यप्रदायिने ।। ।। 3.1.44.७० ।।

नमः कबंधसंहर्त्रे शवरीपूजितांघ्रये ।।

प्राप्तसुग्रीवसख्याय कृतवालिवधाय ते ।। ७१ ।।

नमः कृतवते सेतुं समुद्रे वरुणालये ।।

सर्वराक्षससंहर्त्रे रावणप्राणहारिणे ।। ७२ ।।

संसारांबुधिसंतारपोतपादांबुजाय ते ।।

नमो भक्तार्तिसंहर्त्रे सच्चिदानंदरूपिणे ।। ७३ ।।

नमस्ते राम भद्राय जगतामृद्धिहेतवे ।।

रामादिपुण्यनामानि जपतां पापहारिणे ।। ७४ ।।

नमस्ते सर्वलोकानां सृष्टिस्थित्यंतकारिणे ।।

नमस्ते करुणामूर्ते भक्तरक्षणदीक्षित ।। ७८५ ।।

ससीताय नमस्तुभ्यं विभीषणसुखप्रद ।।

लंकेश्वरवधाद्राम पालितं हि जगत्त्वया ।। ७६ ।।

रक्षरक्ष जगन्नाथ पाह्य स्माञ्जानकीपते ।।

स्तुत्वैवं मुनयः सर्वे तूष्णीं तस्थुर्द्विजोत्तमाः ।। ७७ ।।

।। श्रीसूत उवाच ।। ।।

य इदं रामचन्द्रस्य स्तोत्रं मुनिभिरीरितम् ।।

त्रिसंध्यं पठते भक्त्या भुक्तिं मुक्तिं च विंदति ।। ७८ ।।

प्रयाणकाले पठतो न् भीतिरुपजायते ।।

एतत्स्तोत्रस्य पठनाद्भूतवेतालकादयः ।। ।। ७९ ।।

नश्यंति रोगा नश्यंति नश्यते पापसंचयः ।।

पुत्रकामो लभेत्पुत्रं कन्या विंदति सत्पतिम् ।। 3.1.44.८० ।।

मोक्षकामो लभेन्मोक्षं धनकामो धनं लभेत्।।

सर्वान्कामानवाप्नोति पठन्भक्त्या त्विमं स्तवम् ।। ८१ ।।

ततो रामो मुनीन्प्राह प्रणम्य च कृतांजलिः ।।

अहं विशुद्धये प्राप्यः सकलैरपि मानवैः ।। ८२ ।।

मद्दृष्टिगोचरो जन्तुर्नित्यमोक्षस्य भाजनम् ।।

तथापि मुनयो नित्यं भक्तियुक्तेन चेतसा ।। ८३ ।।

स्वात्मलाभेन संतुष्टान्साधून्भूतसुहृत्तमान् ।।

निरहंकारिणः शांतान्नमस्याम्यूर्ध्वरेतसः ।। ८४ ।।

यस्माद्ब्रह्मण्यदेवोऽहमतो विप्रान्भजे सदा ।।

युष्मान्पृच्छाम्यहं किंचित्तद्वदध्वं विचार्य तु ।। ८५ ।।

रावणस्य वधाद्विप्रा यत्पापं मम वर्तते ।।

तस्य मे निष्कृतिं ब्रूत पौलस्त्यवधजस्य हि ।।

यत्कृत्वा तेन पापे न मुच्येऽहं मुनिपुंगवाः ।। ८६ ।।

।। मुनय ऊचुः ।। ।।

सत्यव्रत जगन्नाथ जगद्रक्षाधुरंधर ।। ८७ ।।

सर्वलोकोपकारार्थं कुरु राम शिवार्चनम् ।।

गन्धमादनशृंगेऽस्मिन्महापुण्ये विमुक्तिदे ।। ८८ ।।

शिवलिंगप्रतिष्ठां त्वं लोकसंग्रहकाम्यया ।।

कुरु राम दशग्रीववधदोषापनुत्तये ।। ।।८९।।

लिंगस्थापनजं पुण्यं चतुर्वक्त्रोऽपि भाषितुम्।।

न शक्नोति ततो वक्तुं किं पुनर्मनुजेश्वर।।3.1.44.९।।।

यत्त्वया स्थाप्यते लिगं गन्धमादनपर्वते ।।

अस्य संदर्शनं पुंसां काशीलिंगावलोकनात् ।। ९१ ।।

अधिकं कोटिगुणितं फलवत्स्यान्न संशयः ।।

तव नाम्ना त्विदं लिंगं लोके ख्यातिं समश्नुताम् ।। ९२ ।।

नाशकं पुण्यपापाख्यकाष्ठानां दहनोपमम् ।।

इदं रामेश्वरं लिंगं ख्यातं लोके भविष्यति ।। ९३ ।।

मा विलंबं कुरुष्वातो लिंगस्थापनकर्मणि ।।

रामचंद्र महाभाग करुणापूर्णविग्रह ।। ९४ ।।

।। श्रीसूत उवाच ।। ।।

इति श्रुत्वा वचो रामो मुनीनां तं मुनीश्वराः ।।

पुण्यकालं विचार्याथ द्विमुहूर्तं जगत्पतिः ।। ९५ ।।

कैलासं प्रेषयामास हनुमन्तं शिवालयम् ।।

शिवलिंगं समानेतुं स्थापनार्थं रघूद्वहः ।। ९६ ।।

।। राम उवाच ।। ।।

हनूमन्नंजनीसूनो वायुपुत्र महाबल ।।

कैलासं त्वरितो गत्वा लिंगमानय मा चिरम् ।। ९७ ।।

इत्याज्ञप्तस्स रामेण भुजावास्फाल्य वीर्यवान् ।।

मुहूर्तद्वितयं ज्ञात्वा पुण्यकालं कपीश्वरः ।। ९८ ।।

पश्यतां सर्वदेवानामृषीणां च महात्मनाम् ।।

उत्पपात महावेगश्चालयन्गंधमादनम् ।।९९।।

लंघयन्स वियन्मार्गं कैलासं पर्वतं ययौ ।।

न ददर्श महादेवं लिंगरूपधरं कपिः।।3.1.44.१००।।

कैलासे पर्वते तस्मिन्पुण्ये शंकरपालिते ।।

आंजनेयस्तपस्तेपे लिंगप्राप्त्यर्थमादरात् ।। १ ।।

प्रागग्रेषु समासीनः कुशेषु मुनिपुंगवाः ।।

ऊर्ध्वबाहुर्निरालम्बो निरुच्छ्वासो जितेंद्रियः ।। २ ।।

प्रसादयन्महादेवं लिंगं लेभे स मारुतिः ।।

एतस्मिन्नंतरे विप्रा मुनिभिस्तत्त्वदर्शिभिः ।। ३ ।।

अनागतं हनूमंतं कालं स्वल्पावशेषितम् ।।

ज्ञात्वा प्रकथितं तत्र रामं प्रति महामतिम् ।। ४ ।।

रामराम महाबाहो कालो ह्यत्येति सांप्रतम् ।।

जानक्या यत्कृतं लिंगं सैकतं लीलया विभो ।। ५ ।।

तल्लिंगं स्थापयस्वाद्य महालिंगमनुत्तमम् ।।

श्रुत्वैतद्वचनं रामो जानक्या सह सत्वरम् ।। ६ ।।

मुनिभिः सहितः प्रीत्या कृतकौतुकमंगलः ।।

ज्येष्ठे मासे सिते पक्षे दशम्यां बुधहस्तयोः ।। ७ ।।

गरानंदे व्यतीपाते कन्या चन्द्रे वृषे रवौ ।।

दशयोगे महापुण्ये गन्धमादनपर्वते ।। ८ ।।

सेतुमध्ये महादेवं लिंगरूपधरं हरम् ।।

ईशानं कृत्तिवसनं गंगाचंद्रकलाधरम् ।। ९ ।।

रामो वै स्थापयामास शिवलिंगमनुत्तमम् ।।

लिंगस्थं पूजयामास राघवः सांबमीश्वरम् ।। 3.1.44.११० ।।

लिंगस्थः स महादेवः पार्वत्या सह शंकरः ।।

प्रत्यक्षमेव भगवान्दत्तवान्वरमुत्तमम् ।। ११ ।।

सर्वलोकशरण्याय राघवाय महात्मने ।।

त्वयात्र स्थापितं लिंगं ये पश्यंति रघूद्वह ।। १२ ।।

महापातकयुक्ताश्च तेषां पापं प्रणश्यति ।।

सर्वाण्यपि हि पापानि धनुष्कोटौ निमज्जनात् ।। १३ ।।

दर्शनाद्रामलिंगस्य पातकानि महांत्यपि ।।

विलयं यांति राजेंद्र रामचन्द्र न संशयः ।। १४ ।।

प्रादादेवं हि रामाय वरं देवोंऽबिकापतिः ।।

तदग्रे नंदिकेशं च स्थापयामास राघवः ।। ।। १५ ।।

ईश्वरस्याभिषेकार्थं धनुष्कोट्याथ राघवः ।।

एकं कूपं धरां भित्त्वा जनयामास वै द्विजाः ।। १६ ।।

तस्माज्जलमुपादाय स्नापयामास शंकरम् ।।

कोटितीर्थमिति प्रोक्तं तत्तीर्थं पुण्यमुत्तमम् ।। १७ ।।

उक्तं तद्वैभवं पूर्वमस्माभिर्मुनिपुंगवाः ।।

देवाश्च मुनयो नागा गन्धर्वाप्स रसां गणाः ।।

सर्वेपि वानरा लिंगमेकैकं चक्रुरादरात् ।। १८ ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं विप्रा यथा रामेण धीमत ।।५९ ।।।।

स्थापितं शिवलिंगं वै भुक्तिमुक्तिप्रदायकम् ।।

इमां लिंगप्रतिष्ठां यः शृणोति पठतेऽथवा ।। 3.1.44.१२० ।।

स रामेश्वरलिंगस्य सेवाफलमवाप्नुयात् ।।।।

सायुज्यं च समाप्नोति रामनाथस्य वैभवात् ।। १२१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामनाथलिंगप्रतिष्ठाविधिवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४५

https://sa.wikisource.org/s/ftb
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | सेतुखण्डः

।। श्रीसूत उवाच ।। ।।

एवं प्रतिष्ठिते लिंगे रामेणाक्लिष्टकारिणा ।।

लिंगं वरं समादाय मारुतिः सहसाऽऽययौ ।। १ ।।

रामं दाशरथिं वीरमभिवाद्य स मारुतिः ।।

वैदेहीलक्ष्मणौ पश्चात्सुग्रीवं प्रणनाम च ।। २ ।।

सीता सैकतलिंगं तत्पूजयंतं रघूद्वहम् ।।

दृष्ट्वाथ मुनिभिः सार्द्धं चुकोप पवनात्मजः ।। ३ ।।

अत्यंतं खेदखिन्नः सन्वृथाकृतपरिश्रमः ।।

उवाच रामं धर्मज्ञं हनूमानंजनात्मजः ।। ४ ।।

।। हनूमानुवाच ।। ।।

दुर्जातोऽहं वृथा राम लोके क्लेशाय केवलम् ।।

खिन्नोऽस्मि बहुशो देव राक्षसैः क्रूरकर्मभिः ।। ५ ।।

मा स्म सीमंतिनी काचिज्जनयेन्मादृशं सुतम् ।।

यतोऽनुभूयते दुःखमनंतं भवसागरे ।। ६ ।।

खिन्नोऽस्मि सेवया पूर्वं युद्धेनापि ततोधिकम्।।

अनन्तं दुःखमधुना यतो मामवमन्यसे ।। ७ ।।

सुग्रीवेण च भार्यार्थं राज्यार्थं राक्षसेन च ।।

रावणावरजेन त्वं सेवितो ऽसि रघूद्वह ।। ८ ।।

मया निर्हेतुकं राम सेवितोऽसि महामते ।।

वानराणामनेकेषु त्वयाज्ञप्तोऽहमद्य वै ।। ९ ।।

शिवलिंगं समानेतुं कैलासात्पर्वतो त्तमात् ।।

कैलासं त्वरितो गत्वा न चापश्यं पिनाकिनम् ।। 3.1.45.१० ।।

तपसा प्रीणयित्वा तं सांबं वृषभवाहनम् ।।

प्राप्तलिंगो रघुपते त्वरितः समु पागतः ।। ११ ।।

अन्यलिंगं त्वमधुना प्रतिष्ठाप्य तु सैकतम् ।।

मुनिभिर्देवगन्धर्वैः साकं पूजयसे विभो ।। १२ ।।

मयानीतमिदं लिंगं कैलासा त्पर्वताद्वृथा ।।

अहो भाराय मे देहो मन्दभाग्यस्यजायते ।। १३ ।।

भूतलस्य महाराज जानकीरमण प्रभो ।।

इदं दुःखमहं सोढुं न शक्नोमि रघूद्वह ।। १४

किं करिष्यामि कुत्राहं गमिष्यामि न मे गतिः ।।

अतः शरीरं त्यक्ष्यामि त्वयाहमवमानितः ।। १५ ।।

।। श्रीसूत उवाच ।।

एवं स बहुशो विप्राः क्रुशित्वा पवनात्मजः ।।

दण्डवत्प्रणतो भूमौ क्रोधशोकाकुलोऽभवत् ।। १६ ।।

तं दृष्ट्वा रघुनाथोऽपि प्रहसन्निदमब्रवीत् ।।

पश्यतां सवदेवानां मुनीनां कपिरक्षसाम् ।।

सांत्वयन्मारुतिं तत्र दुःखं चास्य प्रमार्जयन् ।। १७ ।।

।। श्रीराम उवाच ।।

सर्वं जानाम्यहं कार्यमात्मनोऽपि परस्य च ।। १८ ।।

जातस्य जायमानस्य मृतस्यापि सदा कपे ।।

जायते म्रियते जन्तुरेक एव स्वकर्मणा १९ ।।

प्रयाति नरकं चापि परमात्मा तु निर्गुणः ।।

एवं तत्त्वं विनिश्चित्य शोकं मा कुरु वानर ।। 3.1.45.२० ।।

लिंगत्रयविनिर्मुक्तं ज्योतिरेकं निरंजनम् ।।

निराश्रयं निर्विकारमात्मानं पश्य नित्यशः ।। २१ ।।

किमर्थं कुरुषे शोकं तत्त्वज्ञानस्य बाधकम् ।।

तत्त्वज्ञाने सदा निष्ठां कुरु वानरसत्तम ।। २२ ।।

स्वयंप्रकाशमात्मानं ध्यायस्व सततं कपे ।।

देहादौ ममतां मुंच तत्त्वज्ञानविरोधिनीम् ।। २३ ।।

धर्मं भजस्व सततं प्राणिहिंसां परित्यज ।।

सेवस्व साधुपुरुषाञ्जहि सर्वेंद्रियाणि च ।। २४ ।।

परित्यजस्व सततमन्येषां दोषकीर्तनम् ।।
शिवविष्ण्वादिदेवानामर्चां कुरु सदा कपे ।। २५ ।।
सत्यं वदस्व सततं परित्यज शुचं कपे ।।
प्रत्यग्ब्रह्मैकताज्ञानं मोहवस्तुसमुद्गतम् ।। २६ ।।
शोभनाशोभना भ्रांतिः कल्पि तास्मिन्यथार्थवत् ।।
अध्यास्ते शोभनत्वेन पदार्थे मोहवैभवात् ।। २७ ।।
रोगो विजायते नृणां भ्रांतानां कपिसत्तम ।।
रागद्वेषबलाद्बद्धा धर्मा धर्मवशंगताः ।। २८ ।।
देवतिर्यङ्मनुष्याद्या निरयं यांति मानवाः ।।
चंदनागरुकर्पूरप्रमुखा अतिशोभनाः ।। २९ ।।
मलं भवंति यत्स्पर्शात्तच्छरीरं कथं सुखम्।।
भक्ष्यभोज्यादयः सर्वे पदार्था अतिशोभनाः ।।3.1.45.३०।।
विष्ठा भवंति यत्संगात्तच्छरीरं कथं सुखम्।।
सुगंधि शीतलं तोयं मूत्रं यत्संगमाद्भवेत् ।।३१।।
तत्कथं शोभनं पिंडं भवेद्ब्रूहि कपेऽधुना ।।
अतीव धवलाः शुद्धाः पटा यत्संगमेनहि ।।३२।।
भवंति मलिनाः स्वेदात्तत्कथं शोभनं भवेत ।।
श्रूयतां परमार्थो मे हनूमन्वायुनंदन ।। ३३ ।।
अस्मिन्संसारगर्ते तु किंचित्सौख्यं न विद्यते ।।
प्रथमं जंतुराप्नोति जन्म बाल्यं ततः परम् ।। ।।३४।।
पश्चाद्यौवनमाप्नोति ततो वार्धक्यमश्नुते ।।
पश्चान्मृत्युमवाप्नोति पुनर्जन्म तदश्नुते ।।३५।।
अज्ञानवैभवादेव दुःखमाप्नोति मानवः ।।
तदज्ञान निवृत्तौ तु प्राप्नोति सुखमुत्तमम् ।।३६।।
अज्ञानस्य निवृत्तिस्तु ज्ञानादेव न कर्मणा ।।
ज्ञानं नाम परं ब्रह्म ज्ञानं वेदांतवाक्यजम् ।।३७।।
तज्ज्ञानं च विरक्तस्य जायते नेतरस्य हि ।।
मुख्याधिकारिणः सत्यमाचार्यस्य प्रसादतः ।।३९।।

यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः ।।

तदा मर्त्योऽमृतोऽत्रैव परं ब्रह्म समश्नुते ।। ३९ ।।

जाग्रतं च स्वपंतं च भुंजंतं च स्थितं तथा ।।

इमं जनं सदा क्रूरः कृतांतः परिकर्षति ।। 3.1.45.४० ।।

सर्वे क्षयांता निचयाः पतनांताः समुच्छ्रयाः ।।

संयोगा विप्रयोगांता मरणांतं च जीवितम् ।। ४१ ।।

यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।।

यथा नराणां जातानां नान्यत्र पतनाद्भयम् ।। ४२ ।।

यथा गृहं दृढस्तंभं जीर्णं काले विनश्यति ।।

एवं विनश्यंति नरा जरामृत्युवशंगताः ।। ४३ ।।

अहोरात्रस्य गमनान्नृणामायुर्विनश्यति ।।

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।। ४४ ।।

नश्यत्यायुः स्थितस्यापि धावतोऽपि कपीश्वर ।।

सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।। ४५ ।।

चरित्वा दूरदेशं च सह मृत्युर्निवर्तते ।।

शरीरे वलयः प्राप्ताः श्वेता जाताः शिरोरुहाः ।। ४६ ।।

जीर्यते जरया देहः श्वासकासादिना तथा ।।

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।। ४७ ।।

समेत्य च व्यपेयातां कालयोगेन वानर ।।

एवं भार्या च पुत्रश्च वधुक्षेत्रधनानि च ।। ४८ ।।

क्वचित्संभूय गच्छंति पुनरन्यत्र वानर ।।

यथा हि पांथं गच्छंतं पथि कश्चित्पथि स्थितः।। ४९ ।।

अहमप्या गमिष्यामि भवद्भिः साकमित्यथ ।।

कंचित्कालं समेतौ तौ पुनरन्यत्र गच्छतः ।। 3.1.45.५० ।।

एवं भार्यासुतादीनां संगमो नश्वरः कपे ।।

शरीरजन्मना साकं मृत्युः संजायते ध्रुवम् ।। ५१ ।।

अवश्यंभाविमरणे न हि जातु प्रतिक्रिया ।।

एतच्छरीरपाते तु देही कर्मगतिं गतः ।। ५२ ।।

प्राप्य पिंडांतरं वत्स पूर्वपिंडं त्यजत्यसौ ।।

प्राणिनां न सदैकत्र वासो भवति वानर ।। ५३ ।।

स्वस्वकर्मवशात्सर्वे वियुज्यंते पृथक्पृथक् ।।

यथा प्राणिशरीराणि नश्यंति च भवंति च ।। ५४ ।।

आत्मनो जन्ममरणे नैव स्तः कपिसत्तम ।।

अतस्त्वमंजनासूनो विशोकं ज्ञानमद्वयं ।।। ।। ५५ ।।

सद्रूपममलं ब्रह्म चिंतयस्व दिवानिशम् ।।

त्वत्कृतं मत्कृतं कर्म मत्कृतं त्वाकृतं तथा ।। ५६ ।।

मल्लिंगस्थापनं तस्मात्त्वल्लिंग स्थापनं कपे ।।

मुहूर्तातिक्रमाल्लिंगं सैकतं सीतया कृतम् ।। ५७ ।।

मयात्र स्थापितं तस्मात्कोपं दुःखं च मा कुरु ।।

कैलासादागतं लिंगं स्थापयास्मिच्छुभे दिने ।। ५८ ।।

तव नाम्ना त्विदं लिंगं यातु लोकत्रये प्रथाम् ।।

हनूमदीश्वरं दृष्ट्वा द्रष्टव्यो राघवेश्वरः ।। ५९ ।।

ब्रह्मराक्षसयूथानि हतानि भवता कपे ।।

अतः स्वनाम्ना लिंगस्य स्थापनात्त्वं प्रमोक्ष्यसे ।। 3.1.45.६० ।।

स्वयं हरेण दत्तं तु हनूमन्नामकं शिवम् ।।

संपश्यन्रामनाथं च कृतकृत्यो भवेन्नरः ।। ६१ ।।

योजनानां सहस्रेऽपि स्मृत्वा लिंगं हनूमतः ।।

रामनाथेश्वरं चापि स्मृत्वा सायुज्यमाप्नुयात् ।। ६२ ।।

तेनेष्टं सर्वयज्ञैश्च तपश्चाकारि कृत्स्नशः ।।

येन दृष्टौ महादेवौ हनूमद्राघवेश्वरौ ।। ६३ ।।

हनूमता कृतं लिंगं यच्च लिंगं मया कृतम् ।।

जानकीयं च यल्लिंगं यल्लिंगं लक्ष्मणेश्वरम् ।। ६४ ।।

सुग्रीवेण कृतं यच्च सेतुकर्त्रा नलेन च ।।

अंगदेन च नीलेन तथा जांबवता कृतम् ।। ६५ ।।

विभीषणेन यच्चापि रत्नलिंगं प्रतिष्ठितम् ।।

इन्द्राद्यैश्च कृतं लिंगं यच्छेषाद्यैः प्रतिष्ठितम् ।। ६६ ।।

इत्येकादशरूपोऽयं शिवः साक्षाद्विभासते ।।
सदा ह्येतेषु लिंगेषु संनिधत्ते महेश्वरः ।। ६७ ।।
तत्स्वपापौघशुद्ध्यर्थं स्थापयस्व महेश्वरम् ।।
अथ चेत्त्वं महाभाग लिंगमुत्सादयिष्यसि ।। ६८ ।।
मयात्र स्थापितं वत्स सीतया सैकतं कृतम् ।।
स्थापयिष्यामि च ततो लिंगमेतत्त्वया कृतम् ।। ६९ ।।
पातालं सुतलं प्राप्य वितलं च रसातलम् ।।
तलातलं च तदिदं भेदयित्वा तु तिष्ठति ।। 3.1.45.७० ।।
प्रतिष्ठितं मया लिंगं भेत्तुं कस्य बलं भवेत् ।।
उत्तिष्ठ लिंगमुद्वास्य मयैतत्स्थापितं कपे ।। ।। ७१ ।।
त्वया समाहृतं लिंगं स्थापयस्वाशु मा शुचः ।।
इत्युक्तस्तं प्रणम्याथाज्ञातसत्त्वोऽथ वानरः ।। ७२ ।।
उद्वासयामि वेगेन सैकतं लिंगमुत्त मम्।।
संस्थापयामि कैलासादानीतं लिंगमादरात् ।। ७३ ।।
उद्वासने सैकतस्य कियान्भारो भवेन्मम ।।
चेतसैवं विचार्यायं हनूमान्मारुता त्मजः ।। ७४ ।।
पश्यतां सर्वदेवानां मुनीनां कपिरक्षसाम् ।।
पश्यतो रामचन्द्रस्य लक्ष्मणस्यापि पश्यतः ।। ७५ ।।
पश्यंत्या अपि वैदेह्या लिंगं तत्सैकतं बलात् ।।
पाणिना सर्वयत्नेन जग्राह तरसा बली ।। ७६ ।।
यत्नेन महता चायं चालयन्नपि मारुतिः ।।
नालं चालयितुं ह्यासीत्सैकतं लिंगमोजसा ।। ७७ ।।
ततः किलकिलाशब्दं कुर्वन्वानरपुंगवः ।।
पुच्छमुद्यम्य पाणिभ्यां निरास्थत्तन्निजौजसा ।। ७८ ।।
इत्यनेकप्रकारेण चाल यन्नपि वानरः ।।
नैव चालयितुं शक्तो बभूव पवनात्मजः ।। ७९ ।।
तद्वेष्टयित्वा पुच्छेन पाणिभ्यां धरणीं स्पृशन् ।।
उत्पपाताथ तरसा व्योम्नि वायुसुतः कपिः ।। 3.1.45.८० ।।

कंपयन्स धरां सर्वां सप्तद्वीपां सपर्वतम् ।।

लिंगस्य क्रोशमात्रे तु मूर्च्छितो रुधिरं वमन् ।। ८१ ।।

पपात हनुमान्विप्राः कंपितांगो धरातले ।।

पततो वायुपुत्रस्य वक्त्राच्च नयनद्वयात् ।। ८२ ।।

नासापुटाच्छ्रोत्ररंध्रादपानाच्च द्विजोत्तमाः ।।

रुधिरौघः प्रसुस्राव रक्तकुण्ड मभूच्च तत्।। ८३ ।।

ततो हाहाकृतं सर्वं सदेवासुरमानुषम् ।।

धावंतौ कपिभिः सार्द्धमुभौ तौ रामलक्ष्मणौ ।। ८४ ।।

जानकीसहितौ विप्रा ह्यास्तां शोकाकुलौ तदा ।।

सीतया सहितौ वीरौ वानरैश्च महाबलौ ।। ८५ ।।

रुरुचाते तदा विप्रा गन्धमादनपर्वते ।।

यथा तारागणयुतौ रजन्यां शशि भास्करौ ।। ८६ ।।

ददर्शतुर्हनूमंतं चूर्णीकृतकलेवरम्।।

मूर्च्छितं पतितं भूमौ वमन्तं रुधिरं मुखात्।। ८७ ।।

विलोक्य कपयः सर्वे हाहाकृत्वाऽपतन्भुवि ।।

कराभ्यां सदयं सीता हनूमंतं मरुत्सुतम्।। ८८ ।।

तातताततेति पस्पर्श पतितं धरणीतले ।।

रामोऽपि दृष्ट्वा पतितं हनूमंतं कपीश्वरम् ।। । ८९ ।।

आरोप्यांकं स्वपाणिभ्यामाममर्श कलेवरम् ।।

विमुंचन्नेत्रजं वारि वायुजं चाव्रवीद्द्विजाः ।। 3.1.45.९० ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामचन्द्रतत्त्वज्ञानोपदेशवर्णनंनाम पंचचत्वारिंशोऽध्यायः ।। ४५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४६

https://sa.wikisource.org/s/ftc



।। श्रीराम उवाच।।

पंपारण्ये वयं दीनास्त्वया वानरपुंगव।।

आश्वासिताः कारयित्वा सख्यमादित्यसूनुना।।१।।

त्वां दृष्ट्वा पितरं बन्धून्कौसल्यां जननीमपि ।।

न स्मरामो वयं सर्वान्मे त्वयोपकृतं बहु।। २ ।।

मदर्थं सागरस्तीर्णो भवता बहु योजनः ।।

तलप्रहाराभिहतो मैनाकोऽपि नगोत्तमः ।। ३ ।।

नागमाता च सुरसा मदर्थं भवता जिता ।।

छायाग्रहां महाक्रूराम वधीद्राक्षसीं भवान् ।। ४ ।।

सायं सुवेलमासाद्य लंकामाहत्य पाणिना ।।

अयासी रावणगृहं मदर्थं त्वं महाकपे ।। ५ ।।

सीतामन्विष्य लंकायां रात्रौ गतभयो भवान्।।

अदृष्ट्वा जानकीं पश्चादशोकवनिकां ययौ ।। ६ ।।

नमस्कृत्य च वैदेहीमभिज्ञानं प्रदाय च ।।

चूडामणिं समादाय मदर्थं जानकीकरात् ।। ७ ।।

अशोकवनिकावृक्षानभांक्षीस्त्वं महाकपे ।।

ततस्त्वशीतिसाहस्रान्किंकरान्नाम राक्षसान् ।। ८ ।।

रावणप्रतिमान्युद्धे पत्यश्वेभरथाकुलान् ।।

अवधीस्त्वं मदर्थे वै महाबलपराक्रमान् ।। ९ ।।

ततः प्रहस्ततनयं जंबुमालिनमागतम् ।।

अवधीन्मंत्रितनयान्सप्त सप्तार्चिवर्चसः ।। 3.1.46.१० ।।

पंच सेनापतीन्पश्चादनयस्त्वं यमालयम् ।।

कुमारमक्षमवधीस्ततस्त्वं रणमूर्धनि ।। ११ ।।

तत इन्द्रजिता नीतो राक्षसेंद्र सभां शुभाम् ।।

तत्र लंकेश्वरं वाचा तृणीकृत्यावमन्य च ।। १२ ।।

अभांक्षीस्त्वं पुरीं लंकां मदर्थं वायुनंदन ।।

पुनः प्रतिनिवृत्तस्त्वमृष्यमूकं महागिरिम् ।। १३ ।।

एवमादि महादुःखं मदर्थं प्राप्तवानसि ।।

त्वमत्र भूतले शेषे मम शोकमुदीरयन् ।। १४ ।।

अहं प्राणान्परित्यक्ष्ये मृतोऽसि यदि वायुज ।।

सीतया मम किं कार्यं लक्ष्मणेनानुजेन वा ।। १५ ।।

भरतेनापि किं कार्यं शत्रुघ्नेन श्रियापि वा ।।

राज्येनापि न मे कार्यं परेतस्त्वं कपे यदि ।। १६ ।।

उत्तिष्ठ हनुमन्वत्स किं शेषेऽद्य महीतले ।।

शय्यां कुरु महाबाहो निद्रार्थं मम वानर ।। १७ ।।

कन्दमूलफलानि त्वमाहारार्थं ममाहर ।।

स्नातुमद्य गमिष्यामि शीघ्रं कलशमानय ।। १८ ।।

अजिनानि च वासांसि दर्भांश्च समुपाहर ।।

ब्रह्मास्त्रेणावबद्धोऽहं मोचितश्च त्वया हरे ।। १९ ।।

लक्ष्मणेन सह भ्रात्रा ह्यौषधानयनेन वै ।।

लक्ष्मणप्राणदाता त्वं पौलस्त्यमदनाशनः ।। 3.1.46.२० ।।

सहायेन त्वया युद्धे राक्षसा न्रावणादिकान् ।।

निहत्यातिबलान्वीरानवापं मैथिलीमहम् ।। २१ ।।

हनूमन्नंजनासूनो सीताशोकविनाशन ।।

कथमेवं परित्यज्य लक्ष्मणं मां च जानकीम् ।। २२ ।।

अप्रापयित्वायोध्यां त्वं किमर्थं गतवानसि ।।

क्व गतोसि महावीर महाराक्षसकण्टक ।। २३ ।।

इति पश्यन्मुखं तस्य निर्वाक्यं रघुनंदनः ।।

प्ररुदन्नश्रुजालेन सेचयामास वायुजम् ।। २४ ।।

वायुपुत्रस्ततो मूर्च्छामपहाय शनैर्द्विजाः ।।

पौलस्त्यभयसंत्रस्तलोकरक्षार्थमागतम्।।२५।।

आश्रित्य मानुषं भावं नारायणमजं विभुम्।।

जानकीलक्ष्मणयुतं कपिभिः परिवारितम्।।२६।।

कालांभोधरसंकाशं रणधूलिसमुक्षितम् ।।

जटामण्डलशोभाढ्यं पुण्डरीकायतेक्षणम् ।। २७ ।।

खिन्नं च बहुशो युद्धे ददर्श रघुनंदनम् ।।

स्तूयमानममित्रघ्नं देवर्षिपितृकिन्नरैः ।। २८ ।।

दृष्ट्वा दाशरथिं रामं कृपाबहुलचेतसम् ।।

रघुनाथकरस्पर्शपूर्णगात्रः स वानरः ।। २९ ।।

पतित्वा दण्डवद्भूमौ कृतांजलिपुटो द्विजाः ।।

अस्तौषीज्जानकीनाथं स्तोत्रैः श्रुतिमनोहरैः ।। 3.1.46.३० ।।

।। हनूमानुवाच ।। ।।

नमो रामाय हरये विष्णवे प्रभविष्णवे ।।

आदिदेवाय देवाय पुराणाय गदाभृते ।। ३१ ।।

विष्टरे पुष्पकं नित्यं निविष्टाय महात्मने ।।

प्रहृष्टवानरानीकजुष्टपादांबुजाय ते ।। ३२ ।।

निष्पिष्ट राक्षसेंद्राय जगदिष्टविधायिने ।।

नमः सहस्रशिरसे सहस्रचरणाय च ।। ३३ ।।

सहस्राक्षाय शुद्धाय राघवाय च विष्णवे ।।

भक्तार्तिहारिणे तुभ्यं सीतायाः पतये नमः ।। ३४ ।।

हरये नारसिंहाय दैत्यराजविदारिणे ।।

नमस्तुभ्यं वराहाय दंष्ट्रोद्धृतवसुन्धर ।। ३५ ।।

त्रिविक्रमाय भवते बलियज्ञ विभेदिने ।।

नमो वामनरूपाय नमो मंदरधारिणे ।। ३६ ।।

नमस्ते मत्स्यरूपाय त्रयीपालनकारिणे ।।

नमः परशुरामाय क्षत्रियांतकराय ते ।।३७।।

नमस्ते राक्षसघ्नाय नमो राघवरूपिणे ।।

महादेव महाभीम महाकोदण्डभेदिने ।। ३८ ।।

क्षत्रियांतकरक्रूरभार्गवत्रासकारिणे ।।

नमोऽस्त्वहिल्या संतापहारिणे चापहारिणे ।। ३९ ।।

नागायुतवलोपेतताटकादेहहारिणे ।।
शिलाकठिनविस्तारवालिवक्षोविभेदिने ।। 3.1.46.४० ।।
नमो माया मृगोन्माथकारिणेऽज्ञानहारिणे ।।
दशस्यंदनदुःखाब्धिशोषणागस्त्यरूपिणे ।। ४१ ।।
अनेकोर्मिसमाधूतसमुद्रमदहारिणे ।।
मैथिलीमानसां भोजभानवे लोकसाक्षिणे ।। ४२ ।।
राजेंद्राय नमस्तुभ्यं जानकीपतये हरे ।।
तारकब्रह्मणे तुभ्यं नमो राजीवलोचन ।। ४३ ।।
रामाय रामचन्द्राय वरेण्याय सुखात्मने ।।
विश्वामित्रप्रियायेदं नमः खरविदारिणे ।। ४४ ।।
प्रसीद देवदेवेश भक्तानामभयप्रद ।।
रक्ष मां करु णासिंधो रामचन्द्र नमोऽस्तु ते ।। ४५ ।।
रक्ष मां वेदवचसामप्यगोचर राघव ।।
पाहि मां कृपया राम शरणं त्वामुपैम्यहम् ।। ४६ ।।
रघुवीर महामोहमपाकुरु ममाधुना ।।
स्नाने चाचमने भुक्तो जाग्रत्स्वप्नसुषुप्तिषु ।। ४७ ।।
सर्वावस्थासु सर्वत्र पाहि मां रघुनंदन ।।
महिमानं तव स्तोतुं कः समर्थो जगत्त्रये ।। ४८ ।।
त्वमेव त्वन्महत्त्वं वै जानासि रघुनंदन ।।
इति स्तुत्वा वायुपुत्रो रामचंद्रं घृणानिधिम् ।। ४९ ।।
सीतामप्यभितुष्टाव भक्तियुक्तेन चेतसा ।।
जानकि त्वां नमस्यामि सर्वपापप्रणाशिनीम् ।। 3.1.46.५० ।।
दारिद्र्यरणसंहर्त्रीं भक्तानामिष्टदायिनीम् ।।
विदेहराजतनयां राघवानंदकारिणीम् ।। ५१ ।।
भूमेर्दुहितरं विद्यां नमामि प्रकृतिं शिवाम् ।।
पौलस्त्यैश्वर्यसंहर्त्रीं भक्ताभीष्टां सरस्वतीम् ।। ५२ ।।
पतिव्रताधुरीणां त्वां नमामि जनकात्मजाम् ।।
अनुग्रहपरामृद्धिमनघां हरिवल्लभाम् ।। ५३ ।।

आत्मविद्यां त्रयीरूपामुमारूपां नमाम्य हम् ।।

प्रसादाभिमुखीं लक्ष्मीं क्षीराब्धितनयां शुभाम् ।। ५४ ।।

नमामि चन्द्रभगिनीं सीतां सर्वांगसुंदरीम् ।।

नमामि धर्मनिलयां करुणां वेदमातरम् ।। ५५ ।।

पद्मालयां पद्महस्तां विष्णुवक्षस्थलालयाम् ।।

नमामि चन्द्रनिलयां सीतां चन्द्रनिभाननाम् ।। ५६ ।।

आह्लादरूपिणीं सिद्धिं शिवां शिवकरीं सतीम् ।।

नमामि विश्वजननीं रामचन्द्रेष्टवल्लभाम् ।।

सीतां सर्वानवद्यांगीं भजामि सततं हृदा ।। ५७ ।।

।। श्रीसूत उवाच ।। ।।

स्तुत्वैवं हनुमान्सीतारामचन्द्रौ सभक्तिकम् ।। ५८ ।।

आनंदाश्रुपरिक्लिन्नस्तूष्णीमास्ते द्विजोत्तमाः ।।

य इदं वायुपुत्रेण कथितं पापनाशनम् ।। ५९ ।।

स्तोत्रं श्रीरामचंद्रस्य सीतायाः पठतेऽन्वहम् ।।

स नरो महदैश्वर्यमश्नुते वांछितं स दा ।। 3.1.46.६० ।।

अनेकक्षेत्रधान्यानि गाश्च दोग्ध्रीः पयस्विनीः ।।

आयुर्विद्याश्च पुत्रांश्च भार्यामपि मनोरमाम् ।। ६१ ।।

एतत्स्तोत्रं सकृ द्विप्राः पठन्नाप्नोत्यसंशयः ।।

एतत्स्तोत्रस्य पाठेन नरकं नैव यास्यति ।। ६२ ।।

ब्रह्महत्यादिपापानि नश्यंति सुमहांत्यपि ।।

सर्वपापविनिर्मुक्तो देहांते मुक्तिमाप्नुयात् ।। ६३ ।।

इति स्तुतो जगन्नाथो वायुपुत्रेण राघवः ।।

सीतया सहितो विप्रा हनूमंतमथाब्रवीत् ।। ६४ ।।

।। श्रीराम उवाच ।। ।।

अज्ञानाद्वा नरश्रेष्ठ त्वयेदं साहसं कृतम् ।।

ब्रह्मणा विष्णुना वापि शक्रादित्रिदशैरपि ।। ६५ ।।

नेदं लिंगं समुद्धर्तुं शक्यते स्थापितं मया ।।

महादेवापराधेन पतितोऽस्यद्य मूर्च्छितः ।। ६६ ।।

इतः परं मा क्रियतां द्रोहः सांबस्य शूलिनः ।।
अद्यारभ्य त्विदं कुंडं तव नाम्ना जगत्त्रये ।। ६७ ।।
ख्यातिं प्रयातु यत्र त्वं पतितो वानरोत्तम ।।
महापातकसंघानां नाशः स्यादत्र मज्जनात् ।। ६८ ।।
महादेवजटाजाता गौतमी सरितां वरा ।।
अश्वमेधसहस्रस्य फलदा स्नायिनां नृणाम् ।। ६९ ।।
ततः शतगुणा गंगा यमुना च सरस्वती ।।
एतन्नदीत्रयं यत्र स्थले प्रवहते कपे ।। 3.1.46.७० ।।
मिलित्वा तत्र तु स्नानं सहस्रगुणितं स्मृतम् ।।
नदीष्वेतासु यत्स्नानात्फलं पुंसां भवेत्कपे ।। ७१ ।।
तत्फलं तव कुंडेऽस्मिन्स्नानात्प्राप्नोत्यसंशयम् ।।
दुर्लभं प्राप्य मानुष्यं हनूमत्कुंडतीरतः ।। ७२ ।।
श्राद्धं न कुरुते यस्तु भक्तियुक्तेन चेतसा ।।
निराशास्तस्य पितरः प्रयांति कुपिताः कपे ।। ७३ ।।
कुप्यंति मुनयोऽप्यस्मै देवाः सेंद्राः सचारणाः ।।
न दत्तं न हुतं येन हनूमत्कुंडतीरतः ।। ७४ ।।
वृथाजीवित एवासाविहामुत्र च दुःखभाक् ।।
हनूमत्कुंडसविधे येन दत्तं तिलोदकम् ।।
मोदंते पितरस्तस्य घृतकुल्याः पिबंति च ।। ७५ ।।
।। श्रीसूत उवाच ।। ।।
श्रुत्वैतद्वचनं विप्रा रामेणोक्तं स वायुजः ।। ७६ ।।
उत्तरे रामनाथस्य लिंगं स्वेनाहृतं मुदा ।।
आज्ञया रामचन्द्रस्य स्थापयामास वायुजः ।। ७७ ।।
प्रत्यक्षमेव सर्वेषां कपिलांगूलवेष्टितम् ।।
हरोपि तत्पुच्छजा तं बिभर्ति च वलित्रयम् ।।
तदुत्तरायां ककुभि गौरीं संस्थापयन्मुदा ।। ७८ ।।
।। श्रीसूत उवाच ।।
एवं वः कथितं विप्रा यदर्थं राघवेण तु ।।।

लिंगं प्रतिष्ठितं सेतौ भुक्तिमुक्तिप्रदं नृणाम् ।। ७९ ।।

यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।।

स विधूयेह पापानि शिवलोके महीयते ।। 3.1.46.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामनाथलिंगप्रतिष्ठाकारणवर्णनंनाम षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४७



।। ऋषय ऊचुः ।। ।।

राक्षसस्य वधात्सूत रावणस्य महामुने ।।

ब्रह्महत्या कथमभूद्राघवस्य महात्मनः ।। ।। १ ।।

ब्राह्मणस्य वधात्सूत ब्रह्महत्याभिजायते ।।

न ब्राह्मणो दशग्रीवः कथं तद्वद नो मुने ।। २ ।।

ब्रह्महत्या भवेत्क्रूरा रामचंद्रस्य धीमतः ।।

एतन्नः श्रद्दधानानां वद कारुण्यतोऽधुना ।। ३ ।।

इति पृष्टस्ततः सूतो नैमिषारण्यवासिभिः ।।

वक्तुं प्रचक्रमे तेषां प्रश्नस्योत्तरमुत्तमम्।। ४ ।। ।। ।

। श्रीसूत उवाच ।। ।।

ब्रह्मपुत्रो महातेजाः पुलस्त्योनाम वै द्विजाः ।।

बभूव तस्य पुत्रोऽभूद्विश्रवा इति विश्रुतः ।। ५ ।।

तस्य पुत्रः पुलस्त्य स्य विश्रवा मुनिपुंगवाः ।।

चिरकालं तपस्तेपे देवैरपि सुदुष्करम् ।। ६ ।।

तपः कुर्वति तस्मिंस्तु सुमाली नाम राक्षसः ।।

पाताललोकाद्भूलोकं सर्वं वै विचचार ह ।। ७ ।।

हेमनिष्कांगदधरः कालमेघनिभच्छविः ।।

समादाय सुतां कन्यां पद्महीनामिव श्रियम् ।। ८ ।।

विचरन्स महीपृष्ठे कदाचित्पुष्पकस्थितम् ।।

दृष्ट्वा विश्रवसः पुत्रं कुबेरं वै धनेश्वरम् ।। ९ ।।

चिंतयामास विप्रेंद्राः सुमाली स तु राक्षसः ।।

कुबेरसदृशः पुत्रो यद्यस्माकं भविष्यति ।। 3.1.47.१० ।।

वयं वर्द्धामहे सर्वे राक्षसा ह्यकुतोभयाः ।।

विचार्यैवं निजसुतामब्रवीद्राक्षसेश्वरः ।। ११ ।।

सुते प्रदानकालोऽद्य तव कैकसि शोभने ।।

अद्य ते यौवनं प्राप्तं तद्देया त्वं वराय हि ।। १२ ।।

अप्रदानेन पुत्रीणां पितरो दुःखमाप्नुयुः ।।

किं च सर्वगुणोत्कृष्टा लक्ष्मीरिव सुते शुभे ।। १३ ।।

प्रत्याख्यानभयात्पुंभिर्न च त्वं प्रार्थ्यसे शुभे ।।

कन्यापितृत्वं दुःखाय सर्वेषां मानकांक्षिणाम् ।।१४ ।।

न जानेऽहं वरः को वा वरयेदिति कन्यके ।।

सा त्वं पुलस्त्यतनयं मुनिं विश्रवसं द्विजम् ।। १५ ।।

पितामहकुलोद्भूतं वरयस्व स्वयंगता ।।

कुबेरतुल्यास्तनया भवेयुस्ते न संशयः ।। १६ ।।

कैकसी तद्वचः श्रुत्वा सा कन्या पितृगौरवात् ।।

अंगीचकार तद्वाक्यं तथास्त्विवति शुचिस्मिता ।। १७ ।।

पर्णशालां मुनिश्रेष्ठा गत्वा विश्रवसो मुनेः ।।

अतिष्ठदंतिके तस्य लज्जमाना ह्यधोमुखी ।। १८ ।।

तस्मिन्नवसरे विप्राः पुलस्त्यतनयः सुधीः ।।

अग्निहोत्रमुपास्ते स्म ज्वलत्पावकसन्निभः ।। १९ ।।

संध्याकालमतिक्रूरमविचिंत्य तु कैकसी ।।

अभ्येत्य तं मुनिं सुभ्रूः पितुर्वचनगौरवात् ।। 3.1.47.२० ।।

तस्थावधोमुखी भूमिं लिखत्यंगुष्ठकोटिना ।।

विश्रवास्तां विलोक्याथ कैकसीं तनुमध्यमाम् ।।

उवाच सस्मितो विप्राः पूर्णचंद्रनिभाननाम् ।। २१ ।। ।।

।। विश्रवा उवाच ।। ।।

शोभने कस्य पुत्री त्वं कुतो वा त्वमिहागता ।।२२।।

कार्यं किं वा त्वमुद्दिश्य वर्तसेऽत्र शुचिस्मिते ।।

यथार्थतो वदस्वाद्य मम सर्वमनिंदिते ।। २३ ।।

इतीरिता कैकसी सा कन्या बद्धांजलिर्द्विजाः ।।

उवाच तं मुनिं प्रह्वा विनयेन समन्विता ।। २४ ।।

तपः प्रभावेन मुने मदभिप्रायमद्य तु ।।

वेत्तुमर्हसि सम्यक्त्वं पुलस्त्यकुलदीपन ।।२५।।

अहं तु कैकसी नाम सुमालिदुहिता मुने ।।

मत्तातस्याज्ञया ब्रह्मंस्तवांतिकमुपागता ।।२६।।

शेष त्वं ज्ञानदृष्ट्याद्य ज्ञातुमर्हस्यसंशयः।।

क्षणं ध्यात्वा मुनिः प्राह विश्रवाः स तु कैकसीम् ।।२७।।

मया ते विदितं सुभ्रूर्मनोगतमभीप्सितम्।।

पुत्राभिलाषिणी सा त्वं मामगाः सांप्रतं शुभे ।।२८।।

सायंकालेऽधुना क्रूरे यस्मान्मां त्वमुपागता ।।

पुत्राभिलाषिणी भूत्वा तस्मात्त्वां प्रब्रवीम्यहम्।।२९।।

शृणुष्वावहिता रामे कैकसी त्वमनिंदिते ।।

दारुणान्दारुणाकारान्दारुणाभिजनप्रियान्।।3.1.47.३० ।।

जनयिष्यसि पुत्रांस्त्वं राक्षसान्क्रूरकर्मणः ।।

श्रुत्वा तद्वचनं सा तु कैकसी प्रणिपत्य तम् ।। ३१ ।।

पुलस्त्यतनयं प्राह कृतांजलिपुटा द्विजाः ।।

भगवदीदृशाः पुत्रास्त्वत्तः प्राप्तुं न युज्यते ।। ३२ ।।

इत्युक्तः स मुनिः प्राह कैकसीं तां सुमध्यमाम् ।।

मद्वंशानुगुणः पुत्रः पश्चिमस्ते भविष्यति ।। ३३ ।।

धार्मिकः शास्त्रविच्छांतो न तु राक्षसचेष्टितः ।।

इत्युक्ता कैकसी विप्राः काले कतिपये गते ।। ३४ ।।

सुषुवे तनयं क्रूरं रक्षोरूपं भयंकरम् ।।

द्विपंचशीर्षं कुमतिं विंशद्बाहुं भयानकम्।। ३५ ।।

ताम्रोष्ठं कृष्णवदनं रक्तश्मश्रु शिरोरुहम् ।।

महादंष्ट्रं महाकायं लोकत्रासकरं सदा ।। ३६ ।।

दशग्रीवाभिधः सोऽभूत्तथा रावण नामवान्।।

रावणानंतरं जातः कुम्भकर्णाभिधः सुतः ।। ३७ ।।

ततः शूर्पणखा नाम्ना क्रूरा जज्ञे च राक्षसी ।।

ततो बभूव कैकस्या विभीषण इति श्रुतः ।। ३८ ।।

पश्चिमस्तनयो धीमान्धार्मिको वेदशास्त्रवित् ।।

एते विश्रवसः पुत्रा दशग्रीवादयो द्विजाः ।। ३९ ।।

अतो दशग्रीववधात्कुम्भकर्णवधादपि ।।

ब्रह्महत्या समभवद्रामस्याक्लिष्टकर्मणः ।। 3.1.47.४० ।।

अतस्तच्छांतये रामो लिंगं रामेश्वराभिधम् ।।

स्थापयामास विधिना वैदिकेन द्विजोत्तमाः ।। ४१ ।।

एवं रावणघातेन ब्रह्महत्यासमुद्भवः ।।

समभूद्रामचंद्रस्य लोककांतस्य धीमतः ।। ४२ ।।

तत्सहैतुकमाख्यातं भवतां ब्रह्मघातजम्।।

पापं यच्छांतये रामो लिंगं प्रातिष्ठिपत्स्वयम् ।। ४३ ।।

एवं लिंगं प्रतिष्ठाप्य रामचन्द्रोऽतिधार्मिकः ।।

मेने कृतार्थमात्मानं ससीता वरजो द्विजाः ।। ४४ ।।

ब्रह्महत्या गता यत्र रामचंद्रस्य भूपतेः ।।

तत्र तीर्थमभूत्किंचिद्ब्रह्महत्याविमोचनम् ।। ४५ ।।

तत्र स्नानं महापुण्यं ब्रह्महत्याविनाशनम् ।।

दृश्यते रावणोऽद्यापि छायारूपेण तत्र वै ।। ४६ ।।

तदग्रे नागलोकस्य बिलमस्ति महत्तरम् ।।

दशग्रीववधोत्पन्नां ब्रह्महत्यां बलीयसीम् ।। ४७ ।।

तद्बिलं प्रापयामास जानकीरमणो द्विजाः ।।

तस्योपरि बिलस्याथ कृत्वा मण्डपमुत्तमम् ।। ४८ ।।

भैरवं स्थापयामास रक्षार्थं तत्र राघवः ।।

भैरवाज्ञापरित्रस्ता ब्रह्महत्या भयंकरी ।। ४९ ।।

नाशक्नोत्तद्बिलादूर्ध्वं निर्गंतुं द्विजसत्तमाः ।।

तस्मिन्नेव बिले तस्थौ ब्रह्महत्या निरुद्यमा ।। 3.1.47.५० ।।

रामनाथमहालिंगं दक्षिणे गिरिजा मुदा ।।

वर्तते परमानंदशिवस्यार्धशरीरिणी ।। ५१ ।।

आदित्यसोमौ वर्तेते पार्श्वयोस्तत्र शूलिनः ।।

देवस्य पुरतो वह्नी रामनाथस्य वर्तते ।। ५२ ।।

आस्ते शतक्रतुः प्राच्यामाग्नेयां च तथाऽनलः ।।

आस्ते यमो दक्षिणस्यां रामनाथस्य सेवकः ।। ५३ ।।

नैर्ऋते निर्ऋतिर्विप्रा वर्तते शंकरस्य तु ।।

वारुण्यां वरुणो भक्त्या सेवते राघवेश्वरम् ।। ५४ ।।

वायव्ये तु दिशो भागे वायुरास्ते शिवस्य तु ।।

उत्तरस्यां च धनदो रामनाथस्य वर्तते ।। ५५ ।।

ईशान्येऽस्य च दिग्भागे महेशो वर्तते द्विजाः ।।

विनायक कुमारौ च महादेवसुतावुभौ ।। ५६ ।।

यथाप्रदेशं वर्तेते रामनाथालयेऽधुना ।।

वीरभद्रादयः सर्वे महेश्वरगणेश्वराः ।। ५७ ।।

यथाप्रदेशं वर्तंते रामनाथालये सदा ।।

मुनयः पन्नगाः सिद्धा गन्धर्वाप्सरसां गणाः ।। ५८ ।।

संतुष्यमाणहृदया यथेष्टं शिवसन्निधौ ।।

वर्तंते रामनाथस्य सेवार्थं भक्तिपूर्वकम् ।। ५९ ।।

रामनाथस्य पूजार्थं श्रोत्रियान्ब्राह्मणान्बहून् ।।

रामेश्वरे रघुपतिः स्थापयामास पूजकान् ।। 3.1.47.६० ।।

रामप्रतिष्ठितान्विप्रान्हव्यकव्यादिनार्चयेत् ।।

तुष्टास्ते तोषिताः सर्वा पितृभिः सहदेवताः ।। ६१ ।।

तेभ्यो बहुधनान्ग्रामान्प्रददौ जानकीपतिः ।।

रामनाथमहादेव नैवेद्यार्थमपि द्विजाः ।। ६२ ।।

बहून्ग्रामान्बहुधनं प्रददौ लक्ष्मणाग्रजः ।।

हारकेयूरकटकनिष्काद्याभरणानि च ।। ६३ ।।

अनेकपट्ट वस्त्राणि क्षौमाणि विविधानि च ।।

रामनाथाय देवाय ददौ दशरथात्मजः ।। ६४ ।।

गंगा च यमुना पुण्या सरयूश्च सरस्वती ।।

सेतौ रामेश्वरं देवं भजंते स्वाघशांतये ।। ६५ ।।

एतदध्यायपठनाच्छ्रवणादपि मानवः ।।

विमुक्तः सर्वपापेभ्यः सायुज्यं लभते हरेः ।। ६६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामस्य ब्रह्महत्योत्पत्तिहेतुनिरूपणं नाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४८



।। श्रीसूत उवाच ।। ।।

रामनाथं समुद्दिश्य कथां पापविनाशिनीम् ।।

प्रवक्ष्यामि मुनिश्रेष्ठाः शृणुध्वं सुसमाहिताः ।। १ ।।

पांड्यदेशाधिपो राजा पुरासीच्छंकराभिधः ।।

ब्रह्मण्यः सत्यसंधश्च यायजूकश्च धार्मिकः ।। २ ।।

वेदवेदांगतत्त्वज्ञः परसैन्यविदारणः ।।

चतुरोऽप्याश्रमान्वर्णान्धर्मतः परिपालयन्।। ३ ।।

वैदिकाचारनिरतः पुराणस्मृतिपारगः ।।

शिवविष्ण्वर्चको नित्यमन्यदैवतपूजकः ।। ४ ।।

महादानप्रदो नित्यं ब्राह्मणानां महात्मनाम् ।।

मृगयार्थं ययौ धीमान्स कदाचित्तपोवनम् ।। ५ ।।

सिंहव्याघ्रेभमहिष क्रूरसत्वभयंकरम्।।

झिल्लिकाभीषणरवं सरीसृपसमाकुलम्।। ६ ।।

भीमश्वापदसंपूर्णं दावानलभयंकरम् ।।

महारण्यं प्रविश्याथ शंकरो राजशेखरः ।। ।। ७ ।।

अनेकसैनिकोपेत आखेटिकुलसंकुलः ।।

पादुकागूढचरणो रक्तोष्णीषो हरिच्छदः ।। ८ ।।

बद्धगोधांगुलित्राणो धृतकोदण्डसायकः ।।

कक्ष्याबद्धमहाखड्गः श्वेताश्ववरमास्थितः ।। ९ ।।

सुवेषधारी सन्नद्धः पत्तिसंघसमावृतः ।।

कांतारेषु च सर्वेषु पर्वतेषु गुहासु च ।। 3.1.48.१० ।।

समुत्तीर्णं महास्रोता युवा सिंहपराक्रमः ।।

विचचार बलैः साकं दरीषु मृगयन्मृगान् ।। ११ ।।

बध्यतां वध्यतामेष याति वेगान्मृगो वने ।।

एवं वदत्सु सैन्येषु स्वयमुत्प्लुत्य शंकरः ।। १२ ।।

मृगं हंति महाराजो विगाह्य विपिनस्थलीम् ।।

सिंहान्वराहान्महिषान्कुञ्जराच्छरभांस्तथा ।। १३ ।।

विनिघ्नन्स मृगानन्यान्वन्याञ्छंकरभूपतिः ।।

कुत्रचिद्विपिनोद्देशे दरीमध्यनिवासिनम् ।। १४ ।।

व्याघ्रचर्मधरं शांतं मुनिं नियतमानसम् ।।

व्याघ्रबुद्ध्या जघानाशु शरेणानतपर्वणा ।। १५ ।।

अतिवेगेन विप्रेंद्रास्तत्पत्नीं च ससायकः ।।

निजघान पतिप्राणां निविष्टां पत्युरंतिके ।।१६।।

विलोक्य मातापितरौ तत्पुत्रो निहतौ वने ।।

रुरोद भृशदुःखार्तो विललाप च कातरः ।।१७।।

भोस्तात मातर्मां हित्वा युवां यातौ क्व वाधुना ।।

अहं कुत्र गमिष्यामि को वा मे शरणं भवेत् ।। १८ ।।

को मामध्यापयेद्वेदाञ्छास्त्रं वा पाठयेत्पितः ।।

अंब मे भोजनं का वा दास्यते सोपदेशकम् ।। १९ ।।

आचाराञ्छिक्षयेत्को वा तात त्वयि मृतेऽधुना ।।

अंब बालं प्रकुपितं का वा मामुपलाप()येत् ।। 3.1.48.२० ।।

युवां निरागसावद्य केन पापेन सायकैः ।।

निहतौ वै तपोनिष्ठौ मत्प्राणौ मद्गुरू वने ।। २१ ।।

एवं तयोः सुतो विप्रा मुक्तकण्ठं रुरोद वै ।।

अथ प्रलपितं श्रुत्वा शंकरो विपिने चरन् ।। २२ ।।

तच्छब्दाभिमुखः सद्यः प्रययौ स दरीमुखम् ।।

तत्रत्या मुनयोऽप्याशु समागच्छंस्तमाश्रमम् ।। २३ ।।

ते दृष्ट्वा मुनयः सर्वे शरेण निहतं मुनिम्।।

तत्पत्नीं च हतां विप्रा राजानं च धनुर्धरम् ।। २४ ।।

विलपंतं सुतं चापि विलोक्य भृशविह्वलाः ।।

पुत्रमाश्वासयामासुर्मा रोदीरिति कातरम् ।। २५ ।।

।। मुनय ऊचुः ।। ।।

आढ्ये वापि दरिद्रे वा मूर्खे वा पंडितेऽपि वा ।।

पीने वाथ कृशे वापि समवर्ती परेतराट् ।। २६ ।।

वने वा नगरे ग्रामे पर्वते वा स्थलांतरे ।।

मृत्योर्वशे प्रयातव्यं सर्वैरपि हि जंतुभिः ।। २७ ।।

वत्स नित्यं च गर्भस्थैर्जातैरपि च जंतुभिः ।।

युवभिः स्थविरैः सर्वैर्यातव्यं यमपत्तनम् ।। २८ ।।

वर्णिभिश्च गृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ।।

काले प्राप्ते त्वयं देहस्त्यक्तव्यो द्विजपुत्रक ।। २९ ।।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरपि च संकरैः ।।

यातव्यं प्रेतनिलये द्विजपुत्र महामते ।। 3.1.48.३० ।।

देवाश्च मुनयो यक्षा गंधर्वोरगराक्षसाः ।।

अन्ये च जंतवः सर्वे ब्रह्मविष्णुहरादयः ।। ३१ ।।

सर्वे यास्यंति विलयं न त्वं शोचितुमर्हसि ।।

अद्वयं सच्चिदानंदं यद्ब्रह्मोपनिषद्गतम् ।। ३२ ।।

न तस्य विलयो जन्म वर्धनं चापि सत्तम ।।

मलभांडे नवद्वारे पूयासृक्छोणितालये ।। ३३ ।।

देहेऽस्मिन्बुद्बुदाकारे कृमियूथसमाकुले ।।

कामक्रोधभयद्रोहमोहमात्सर्यकारिणि ।। ३४ ।।

परदारपरक्षेत्रपरद्रव्यैकलोलुपे ।।

हिंसासूयाशुचिव्याप्ते विष्ठामूत्रैकभाजने ।। ३५ ।।

यः कुर्याच्छोभनधियं स मूढः स च दुर्मतिः ।।

बहुच्छिद्रघटाकारे देहेऽस्मिन्नशुचौ सदा ।। ३६ ।।

वायोरवस्थितिः किं स्यात्प्राणाख्यस्य चिरं द्विज ।।

अतो मा कुरु शोकं त्वं जननीं पितरं प्रति ।। ३७ ।।

तौ स्वकर्मवशाद्यातौ गृहं त्यक्त्वा त्विदं क्वचित्।।

तव कर्मवशात्त्वं च तिष्ठस्यस्मिन्महीतले ।। ३८ ।।

यदा कर्मक्षयस्ते स्यात्तदा त्वं च मरिष्यसि ।।

मरिष्यमाणप्रेतो हि मृतप्रेतस्य शोचति ।। ३९ ।।

यस्मिन्काले समुत्पन्नौ तव माता पिता तथा ।।

न तस्मिंस्त्वं समुत्पन्नस्ततो भिन्ना गतिर्हि वः ।। 3.1.48.४० ।।

यदि तुल्या गतिस्ते स्यात्ताभ्यां सह महामते ।।।

तर्हि त्वयापि यातव्यं मृतौ यत्र हि तौ गतौ ।।४१।।

मृतानां बांधवा ये तु मुंचंत्यश्रूणि भूतले ।।

पिबंत्यश्रूणि तान्यद्धा मृताः प्रेताः परत्र वै ।। ४२।।

अतः शोकं परित्यज्य धृतिं कृत्वा समाहितः ।।

अनयोः प्रेतकार्याणि कुरु त्वं वैदिकानि तु ।। ४३ ।।

शरघातान्मृतावेतौ यस्मात्ते जननी पिता ।।

अतस्तद्दोषशांत्यर्थमस्थीन्यादाय वै तयोः ।। ४४ ।।

रामनाथशिवक्षेत्रे रामसेतौ विमुक्तिदे ।।

स्थापयस्व तथा श्राद्धं सपिंडीकरणादिकम् ।। ४५ ।।

तत्रैव कुरु शुद्ध्यर्थं तयोर्ब्राह्मणपुत्रक ।।

तेन दुर्मृत्युदोषस्य शांतिर्भवति नान्यथा ।। ४६ ।।

।। श्रीसूत उवाच ।। ।।

एवमुक्तः स मुनिभिः शाकल्यस्य सुतो द्विजाः ।।

जांगलाख्यस्तयोः सर्वं पितृमेधं चकार वै ।। ४७ ।।

अन्येद्युरस्थीन्यादाय हालास्यं प्रययौ च सः ।।

तस्माद्रामेश्वरं सद्यो गत्वाऽयं जांगलो द्विजः।।४८।।

मुनिप्रोक्तप्रकारेण तस्मिन्रामेश्वरस्थले।।

निधाय पित्रोरस्थीनि श्राद्धादीन्यकरोत्तथा।।४९।।

प्रथमाब्दिकपर्यंतं कार्यं तत्राकरोच्च सः।।

स्थित्वाब्दं स मुनेः पुत्र एको जांगलसंज्ञकः।।3.1.48.५।।।

आब्दिकांते दिने विप्रो रात्रौ स्वप्ने विलोक्य तु।।

स्वमातरं च पितरं शंखचक्रगदाधरौ।।५१।।

गरुडोपरि संविष्टौ पद्ममालाविभूषितौ।।

शोभितौ तुलसीदाम्ना स्फुरन्मकरकुंडलौ।।५२।।

कौस्तुभालंकृतोरस्कौ पीतांबरविराजितौ ।।
एवं दृष्ट्वा मुनिसुतो जांगलः सुप्रसन्नधीः ।। ५३ ।।
स्वाश्रमं पुनरागत्य सुखेन न्यवसद्द्विजाः ।।
स्वप्नदृष्टं च वृत्तांतं मातापित्रोः स जांगलः ।। ५४ ।।
तेभ्यो न्यवेदयत्सर्वं ब्राह्मणेभ्योऽतिहर्षितः ।।
श्रुत्वा ते मुनयो वृत्तमासन्संप्रीतमानसाः ।। ५५ ।।
अथ राजानमालोक्य सर्वे तेऽपि महर्षयः ।।
अवदन्कुपिता विप्राः शपंतः शंकरं नृपम् ।। ५६ ।।
पांड्यभूप महामूर्ख क्रौर्याद्ब्राह्मणघातक ।।
स्त्रीहत्या ब्रह्महत्या च कृता यस्मात्त्वयाधुना ।। ५७ ।।
अतः शरीरसंत्यागं कुरु त्वं हव्यवाहने ।।
नोचेत्तव न शुद्धिः स्यात्प्रायश्चित्तशतैरपि ।। ५८ ।।
त्वत्संभाषणमात्रेण ब्रह्महत्यायुतं भवेत् ।।
अस्मत्सकाशाद्गच्छ त्वं पांड्यानां कुलपांसन ।। ५९ ।।
इत्युक्तो मुनिभिः पांड्यः शंकरो द्विजपुंगवाः ।।
तथास्तु देहसंत्यागं करिष्ये हव्यवाहने ।। 3.1.48.६० ।।
ब्रह्महत्याविशुद्ध्यर्थं भवतां सन्निधावहम् ।।
अनुग्रहं मे कुर्वंतु भवंतो मुनिसत्तमाः ।। ६१ ।।
तथा शरीर संत्यागात्पातकं मे लयं व्रजेत् ।।
एवमुक्त्वा मुनीन्सर्वाञ्च्छंकरः पांड्यभूपतिः ।। ६२ ।।
स्वान्मंत्रिणः समाहूय बभाषे वचनं त्विदम् ।।
भो मंत्रिणो ब्रह्महत्या मयाऽकार्यविचारतः ।। ६३ ।।
स्त्रीहत्या च तथा क्रूरा महानरकदायिनी ।।
एतत्पातकशुद्ध्यर्थं मुनीनां वचनादहम् ।। ६४ ।।
प्रदीप्ते ऽग्नौ महाज्वाले परित्यक्ष्ये कलेवरम् ।।
काष्ठान्यानयत क्षिप्रं तैरग्निश्च समिध्यताम् ।। ६५ ।।
मम पुत्रं च सुरुचिं राज्ये स्थापयताचिरात् ।।
मा शोकं कुरुतामात्या दैवतं दुरतिक्रमम् ।। ६६ ।।

इतीरिता नृपतिना मंत्रिणो रुरुदुस्तदा ।।
पांड्यनाथ महाराज रिपूणामपि वत्सल ।। ६७ ।।
वयं हि भवता नित्यं पुत्रवत्परिपालिताः ।।
त्वां विना न प्रवेक्ष्याम पुरीं देवपुरोपमाम् ।। ६८ ।।
हव्यवाहं प्रवेक्ष्यामो महा काष्ठसमेधितम् ।।
तेषां प्रलपितं श्रुत्वा पांड्य शंकरभूपतिः ।।
प्रोवाच मंत्रिणः सर्वान्वचनं सांत्वपूर्वकम् ।। ६९ ।।
।। शंकर उवाच ।।
किं करिष्यथ भोऽमात्या महापातकिना मया ।। 3.1.48.७० ।।
सिंहासनं समारुह्य न कर्तुं युज्यते बत ।।
चतुरर्णवपर्यंतधरापालनमंजसा ।। ७१ ।।
मत्पुत्रं सुरुचिं शीघ्रमतः स्थापयतासने ।।
काष्ठान्यानयत क्षिप्रं प्रवेष्टुं हव्यवाहनम् ।। ७२ ।।
मम मंत्रिवरा यूयं विलंबं त्यजताधुना ।।
इत्युक्ता मंत्रिणः काष्ठं समानिन्युः क्षणेन ते ।। ७३ ।।
अग्निं प्रज्वलितं काष्ठैर्दृष्ट्वा शंकरभूपतिः ।।
स्नात्वाचम्य विशुद्धात्मा मुनीनां संनिधौ तदा ।। ७४ ।।
अग्निं प्रदक्षिणीकृत्य तान्मुनीनपि सत्वरम्।।
अग्निं मुनीन्नमस्कृत्य ध्यात्वा देवमुमापतिम्।।७५।।
अग्नौ पतितुमारेभे धैर्यमालंब्य भूपतिः।।
तस्मिन्नवसरे विप्रा मुनीनामपि शृण्वताम्।।७६।।
अशरीरा समुदभूद्वाणी भैरवनादिनी।।
भोः शंकर महीपाल मानलं प्रविशाधुना।।७७।।
ब्रह्महत्यानिमित्तं ते भयं मा भून्महामते ।।
तवोपदेशं वक्ष्यामि रहस्यं वेदसंमितम् ।। ७८ ।।
शृणुष्वावहितो राजन्मदुक्तं क्रियतां त्वया ।।
दक्षिणांबुनिधेस्तीरे गंधमादनपर्वते ।। ७९ ।।
रामसेतौ महापुण्ये महापातकनाशने ।।

रामप्रतिष्ठितं लिगं रामनाथं महेश्वरम् ।। 3.1.48.८० ।।

सेवस्व वर्षमेकं त्वं त्रिकालं भक्तिपूर्वकम् ।।

प्रदक्षिणप्रक्रमणं नमस्कारं च वै कुरु ।। ८१ ।।

महाभिषेकः क्रियतां रामनाथस्य वै त्वया ।।

नैवेद्यं विविधं राजन्क्रियतां च दिनेदिने ।। ८२ ।।

चन्दनागरुकर्पूरै रामलिंगं प्रपूजय ।।

भारद्वयेन गव्येन ह्याज्येन त्वभिषेचय ।। ८३ ।।

प्रत्यहं च गवां क्षीरैर्द्विभारपरिसंमितैः ।।

मधुद्रोणेन तल्लिंगं प्रत्यहं स्नापय प्रभोः ।। ८४ ।।

प्रत्यहं पायसान्नेन नैवेद्यं कुरु भूपते ।।

प्रत्यहं तिलतैलेन दीपाराधनमाचर ।। ८५ ।।

एतेन तव राजेंद्र रामनाथस्य शूलिनः ।।

स्त्रीहत्या ब्रह्महत्या च तत्क्षणादेव नश्यतः ।। ८६ ।।

दर्शनाद्रामनाथस्य भ्रूणहत्याशतानि च ।।

अयुतं ब्रह्महत्यानां सुरापानायुतं तथा ।। ८७ ।।

स्वर्णस्तेयायुतं राजन्गुरुस्त्रीगमनायुतम् ।।

एतत्संसर्गदोषाश्च विनश्यंति क्षणाद्विभो।।८८।।

महापातकतुल्यानि यानि पापानि संति वै ।।

तानि सर्वाणि नश्यंति रामनाथस्य सेवया ।। ८९ ।।

महती रामनाथस्य सेवा लभ्येत चेन्नृणाम् ।।।

किं गंगया च गयया प्रयागेणाध्वरेण वा ।। 3.1.48.९० ।।

तद्गच्छ रामसेतुं त्वं रामनाथं भजानिशम् ।।

विलंबं मा कुरु विभो गमने च त्वरां कुरु ।।९१।।।

इत्युक्त्वा विररामाथ सापि वागशरीरिणी ।।

तच्छ्रुत्वा मुनयः सर्वे त्वरयंति स्म भूपतिम् ।। ९२ ।।

गच्छ शीघ्रं महाराज रामसेतुं विमुक्तिदम् ।।।

रामनाथस्य माहात्म्यमज्ञात्वास्माभिरीरितम् ।। ९३ ।।

देहत्यागं कुरुष्वेति वह्नौ प्रज्वलितेऽधुना ।।

अनुज्ञातो मुनिवरैरिति राजा स शंकरः ।।।। ।। ९४ ।।

चतुरंगबलं पुर्यां प्रापयित्वा त्वरान्वितः ।।

नमस्कृत्य मुनीन्सर्वान्प्रहृष्टेनांतरात्मना ।। ९५ ।।

वृतः कतिपयैः सैन्यैः समादाय धनं बहु ।।

रामनाथस्य सेवार्थमयासीद्गंधमादनम् ।। ९६ ।।

उवास वर्षमेकं च रामसेतौ विशुद्धिदे ।।

एकभुक्तो जितक्रोधो विजितेंद्रियसंचयः ।। ।। ९७ ।।

त्रिसंध्यं रामनाथं च सेवमानः सभक्तिकम् ।।

प्रददौ रामनाथाय दशभारं धनं मुदा ।। ९८ ।।

प्रत्यहं रामनाथस्य महापूजामकारयत् ।।

अकरोच्च धनुष्कोटौ प्रत्यहं भक्तिपूर्वकम् ।। ९९ ।।

स्नानं प्रतिदिनं चान्नं ब्राह्मणेभ्य ददौ मुदा ।।

अशरीरावचःप्रोक्तमखिलं पूजनं तथा ।। 3.1.48.१०० ।।

एवं कृतवतस्तस्य वर्षमेकं गतं द्विजाः ।।

वर्षांते स शुचिर्भूत्वा शंकरस्तुष्टमानसः ।।

तुष्टाव परमेशानं रामनाथं घृणानिधिम् ।। १ ।।

।।शंकर उवाच ।। ।।

नमामि रुद्रमीशानं रामनाथमुमापतिम् ।। २ ।।

पाहि मां कृपया देव ब्रह्महत्यां दहाशु मे ।।

त्रिपुरघ्न महादेव कालकूटविषादन ।। ३ ।।

रक्ष मां त्वं दयासिंधो स्त्रीहत्यां मे विमोचय ।।

गंगाधर विरूपाक्ष रामनाथ त्रिलोचन ।। ४ ।।

मां पालय कृपादृष्ट्या छिन्धि मत्पातकं विभो ।।

कामारे कामसंदायिन्भक्तानां राघवेश्वर ।। ।। ।। ५ ।।

कटाक्षं पातय मयि शुद्धं मां कुरु धूर्जटे ।।

मार्कंडेयभयत्राण मृत्युंजय शिवाव्यय ।। ६ ।।

नमस्ते गिरिजार्धाय निष्पापं कुरु मां सदा ।।

रुद्राक्षमालाभरण चन्द्रशेखर शंकर ।। ७ ।।

वेदोक्तसम्यगाचारयोग्यं मां कुरु ते नमः ।।
सूर्यदंतभिदे तुभ्यं भारतीनासिकाच्छिदे ।। ८ ।।
रामेश्वराय देवाय नमो मे शुद्धिदो भव ।।
आनंदं सच्चिदानंदं रामनाथं वृषध्वजम् ।। ९ ।।
भूयोभूयो नमस्यामि पातकं मे विनश्यतु ।।
भक्त्यैवं स्तुवतस्तस्य रामनाथं महेश्वरम् ।। 3.1.48.११० ।।
निर्जगाम मुखाद्राज्ञो ब्रह्महत्यातिभीषणा ।।
नीलवस्त्रधरा क्रूरा महारक्तशिरोरुहा ।। ११ ।।
तां ब्रह्महत्यां बीभत्सां नृपवक्त्राद्विनिर्गताम् ।।
निजघान त्रिशूलेन भैरवो रुद्रशासनात् ।। १२ ।।
हतायां ब्रह्महत्यायां भैरवेण शिवाज्ञया ।।
रामनाथो नृपं प्राह स्तुत्या तस्य प्रसन्नधीः ।। १३ ।।
।। श्रीरामनाथ उवाच ।। ।।
पांड्यभूप महाराज स्तोत्रेणानेन तेऽनघ ।।
प्रसन्नोऽहं वरं दास्ये तुभ्यं वरय चेप्सितम् ।। १४ ।।
स्त्रीहत्याब्रह्महत्याभ्यां यस्ते दोषः स निर्गतः ।।
शुद्धो विधूतपापोऽसि राज्यं पालय पूर्ववत् ।। १५ ।।
ये मामत्र निषेवंते भक्तियुक्तेन चेतसा ।।
नाशयामि नृणां तेषां ब्रह्महत्यायुतान्यपि ।। १६ ।।
सुरापानायुतं भूप गुरुस्त्रीगमनायुतम् ।।
स्वर्णस्तेयायुतमपि तत्संसर्गायुतं तथा ।। १७ ।।
अन्यान्यपि च पापानि नाशयामि न संशयः ।।
मत्सेविनो नरा राजन्न भूयः संसरंति ते ।। १८ ।।
किं तु सायुज्यरूपां मे मुक्तिं यास्यन्त्यसंशयम् ।।
स्तुवंत्यनेन स्तोत्रेण ये मां भक्तिपुरःसरम् ।। १९ ।।
नाशयाम्यहमेतेषां महापातकसंचयम् ।।
प्रीतोऽहं तव भक्त्या च स्तोत्रेण मनुजेश्वर ।। 3.1.48.१२० ।।
यथेष्टं प्रार्थय वरं मत्तस्त्वं वरदान्नृप ।।

एवमुक्तः शिवेनाथ शंकरो नृपपुंगवः ।।

रामनाथं बभाषे तं शंकरं करुणानिधिम् ।। २१ ।।

।। नृप उवाच ।। ।।

तव संदर्शनेनाहं कृतार्थोऽस्मि महेश्वर ।। २२ ।।

इतः परं प्रार्थनीयं मम नास्त्यधुनाधिकम् ।।

मृकण्डुसुतसंतापहारि पादयुगं तव ।। २३ ।।

दृष्टं मया महादेव नातः प्रार्थ्यं विभोस्ति वै ।।

त्वत्पादपद्मयुगुले निश्चला भक्तिरस्तु मे ।। २४ ।।

न पुनर्जन्म मे भूयान्मातृणामुदरेऽशुचौ ।।

ये मत्कृतमिदं स्तोत्रं कीर्तयंति तव प्रभो ।।

ते नराः पापनिर्मुक्तास्त्वत्सेवाफलमाप्नुयुः ।।२५।। ।।

।। श्रीसूत उवाच ।। ।।

तथास्त्वित्यनुगृह्यैनं रामनाथो द्विजोत्तमाः ।। २६ ।।

नीलकण्ठो विरूपाक्षो लिंगरूपे तिरोहितः ।।

राजापि रामनाथेन विहितानुग्रहस्ततः ।। २७ ।।

रामनाथं नमस्कृत्य कृतार्थेनांतरात्मना ।।

स सेनासंवृतः प्रीतः प्रययावात्मनः पुरीम् ।। २८ ।।

वृत्तांतमेतमवदन्मुनीनां वनवासिनाम् ।।

तेभ्यषिंचन्नृपं राज्ये मुनयः प्रीतमानसाः ।। २९ ।।

पुत्रदारयुतो राजा प्राप्य राज्यमकण्टकम् ।।

मंत्रिभिः सहितो विप्रा ररक्ष पृथिवीं चिरम् ।। 3.1.48.१३० ।।

ततोंतकाले संप्राप्ते ध्यायन्रामेश्वरं शिवम् ।।

देहांते रामनाथस्य सायुज्यं प्रययौ शुभम् ।। ३१ ।।

एवं वः कथितं विप्रा रामनाथस्य वैभवम् ।।

चरितं पुण्यमाख्यानं शंकराख्य नृपस्य च ।। ३२ ।।

शृण्वन्पठन्वा मनुजस्त्विममध्यायमादरात् ।।

सर्वपापविनिर्मुक्तो रामनाथं समश्नुते ।। १३३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामनाथप्रशंसायां शाकल्यदुर्मरणदोषशांतिपूर्वक शंकरस्त्रीहत्याब्रह्महत्यादोषशांतिवर्णनंनामाष्टचत्वारिंशोऽध्यायः ।। ४८ ।। ।। छ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ४९



।। श्रीसूत उवाच ।। ।।
अथातः संप्रवक्ष्यामि रामनाथस्य शूलिनः ।।
स्तोत्राध्यायं महापुण्यं शृणुत श्रद्धया द्विजाः ।। ।। १ ।।
रामः प्रतिष्ठिते लिंगे तुष्टाव परमेश्वरम् ।।
लक्ष्मणो जानकी सीता सुग्रीवाद्याः कपीश्वराः ।। २ ।।
ब्रह्मप्रभृतयो देवाः कुम्भजाद्या महर्षयः ।।
अस्तुवन्भक्तिसंयुक्ताः प्रत्येकं राघवेश्वरम् ।। ३ ।।
तद्वक्ष्याम्यानुपूर्व्येण शृणुतादरपूर्वकम् ।।
एतच्छ्रवणमात्रेण मुक्तः स्या न्मानवो द्विजाः ।। ४ ।।
।। श्रीराम उवाच ।। ।।
नमो महात्मने तुभ्यं महामायाय शूलिने ।।
स्वपदांबुजभक्तार्तिहारिणे सर्प हारिणे ।। ५ ।।
नमो देवाधिदेवाय रामनाथाय साक्षिणे ।।
नमो वेदांतवेद्याय योगिनां तत्त्वदायिने ।। ६ ।।
सर्वदानंदपूर्णाय विश्वनाथाय शंभवे ।।
नमो भक्तभयच्छेदहेतुपादाब्जरेणवे ।। ७ ।।
नमस्तेऽखिलनाथाय नमः साक्षात्परात्मने ।।
नमस्तेऽद्भुतवीर्याय महापातकनाशिने ।। ।। ८ ।।
कालकालाय कालाय कालातीताय ते नमः ।।
नमोऽविद्यानिहंत्रे ते नमः पापहराय च ।। ९ ।।
नमः संसारतप्तानां तापनाशैकहेतवे ।।
नमो मद्ब्रह्महत्याविनाशिने च विषाशिने ।। 3.1.49.१० ।।
नमस्ते पार्वतीनाथ कैलासनिलयाव्यय ।।
गंगाधर विरूपाक्ष मां रक्ष सकलापदः ।। ११ ।।
तुभ्यं पिनाकहस्ताय नमो मदनहारिणे ।।
भूयोभूयो नमस्तुभ्यं सर्वावस्थासु सर्वदा ।। १२ ।।
।। लक्ष्मण उवाच ।। ।।
नमस्ते रामनाथाय त्रिपुरघ्नाय शंभवे ।।

पार्वतीजीवितेशाय गणेशस्कन्दसूनवे ।। १३ ।।
नमस्ते सूर्यचद्राग्निलोचनाय कपर्दिने ।।
नमः शिवाय सोमाय मार्कंडेय भयच्छिदे ।। १४ ।।
नमः सर्वप्रपंचस्य सृष्टिस्थित्यंतहेतवे ।।
नम उग्राय भीमाय महादेवाय साक्षिणे ।। १५ ।।
सर्वज्ञाय वरेण्याय वरदाय वराय ते ।।
श्रीकण्ठाय नमस्तुभ्यं पंचपातकभेदिने ।। १६ ।।
नमस्तेऽस्तु परानंदसत्यविज्ञानरूपिणे ।।
नमस्ते भवरोगघ्न स्नायूनां पतये नमः ।। ।। १७ ।।
पतये तस्कराणां ते वनानां पतये नमः ।।
गणानां पतये तुभ्यं विश्वरूपायसाक्षिणे ।।१८ ।।
कर्मणा प्रेरितः शम्भो जनिष्ये यत्रयत्र तु ।।
तत्रतत्र पदद्वंद्वे भवतो भक्तिरस्तु मे ।। १९ ।।
असन्मार्गे रतिर्मा भूद्भवतः कृपया मम ।।
वैदिकाचारमार्गे च रतिः स्याद्भवते नमः ।। 3.1.49.२० ।। ।।
।। सीतोवाच ।। ।।
परमकारण शंकर धूर्जटे गिरिसुतास्तनकुंकुमशोभित ।।
मम पतौ परिदेहि मतिं सदा न विषमां परपूरुषगोचराम् ।। ।। २१ ।।
गंगाधर विरूपाक्ष नीललोहित शंकर ।।
रामनाथ नमस्तुभ्यं रक्ष मा करुणाकर ।। २२ ।।
नमस्ते देवदेवेश नमस्ते करुणालय ।।।
नमस्ते भवभीतानां भवभीतिविमर्दन ।। २३ ।।
नाथ त्वदीयचरणांबुजचिंतनेन निर्द्धूय भास्करसुताद्भयमाशु शम्भो ।।
नित्यत्वमाशु गतवान्स मृकंडुपुत्रः किं वा न सिध्यति तवाश्रयणात्परेश ।। २४ ।।
परेशपरमानंद शरणागतपालक ।।
पातिव्रत्यं मम सदा देहि तुभ्यं नमोनमः ।। ।। २५ ।।
।। हनूमानुवाच ।। ।।
देवदेव जगन्नाथ रामनाथ कृपानिधे ।।
त्वत्पादांभोरुहगता निश्चला भक्तिरस्तु मे ।। २६ ।।
यं विना न जगत्सत्ता तद्भानमपि नो भवेत्।।
नमः सद्भानरूपाय रामनाथाय शंभवे ।। २७ ।।
अंगद उवाच ।। ।।
यस्य भासा जगद्भानं यत्प्रकाशं विना जगत् ।।

न भासते नमस्तस्मै रामनाथाय शंभवे ।। २८ ।।

।। जांबुवानुवाच ।। ।।

सर्वानंदो यदानंदो भासते परमार्थतः ।।

नमो रामेश्वरायास्मै परमानंदरूपिणे ।। २९ ।।

।। नील उवाच ।। ।।

यद्देशकालदिग्भेदैरभिन्नं सर्वदा द्वयम् ।।

तस्मै रामेश्वरायास्मै नमोऽभिन्नस्व रूपिणे ।। 3.1.49.३० ।।

।। नल उवाच ।। ।।

ब्रह्मविष्णुमहेशाना यदविद्याविजृंभिताः ।।

नमोऽविद्याविहीनाय तस्मै रामेश्वराय ते ।। ३१ ।।

।। कुमुद उवाच ।। ।।

यस्त्वरूपापरिज्ञानात्प्रधानं कारणत्वतः ।।

कल्पितं कारणायास्मै रामनाथाय शंभवे ।। ३२ ।।

।। पनस उवाच ।। ।।

जाग्रत्स्वप्नसुषुस्त्यादियदविद्याविजृंभितम् ।।

जाग्रदादिविहीनाय नमोऽस्मै ज्ञानरूपिणे ।। ३३ ।।

।। गज उवाच ।। ।।

यत्स्वरूपापरिज्ञानात्कार्याणां परमा णवः ।।

कल्पिताः कारणत्वेन तार्किकापसदैर्वृथा ।। ३४ ।।

तमहं परमानंदं रामनाथं महेश्वरम् ।।

आत्मरूपतया नित्यमुपासे सर्वसाक्षिणम् ।। ।। ३५ ।।

।। गवाक्ष उवाच ।। ।।

अज्ञानपाशबद्धानां पशूनां पाशमोचकम् ।।

रामेश्वरं शिवं शांतमुपैमि शरणं सदा ।। ३६ ।। ।।

।। गवय उवाच ।। ।।

साध्वस्तजगदाधारं चंद्रचूडमुमापतिम् ।।

रामनाथं शिवं वन्दे संसारामयभेषजम् ।। ३७ ।। ।।

शरभ उवाच ।। ।।

अंतःकरणमात्मेति यदज्ञानाद्विमोहितैः ।।

भण्यते रमनाथं तमात्मानं प्रणमाम्यहम् ।। ३८ ।।

।। गन्धमादन उवाच ।। ।।

रामनाथमुमानाथं गणनाथं च त्र्यंबकम् ।।

सर्वपातकशुद्ध्यर्थमुपासे जगदीश्वरम् ।।३९ ।।

।। सुग्रीव उवाच ।। ।।
संसारांभोधि मध्ये मां जन्ममृत्युजले भये ।।
पुत्रदारधनक्षेत्रवीचिमालासमाकुले ।। 3.1.49.४० ।।
मज्जदब्रह्मांडखंडे च पतितं नाप्तपारकम् ।।
क्रोशंतमवशं दीनं विषयव्या लकातरम् ।। ४१ ।।
व्याधिनक्रसमुद्विग्नं तापत्रयझषार्तिदम् ।।
मां रक्ष गिरिजानाथ रामनाथ नमोऽस्तु ते ।। ४२ ।।
।। विभीषण उवाच ।। ।।
संसारवनमध्ये मां विनष्टनिजमार्गके ।।
व्याधिचौरे क्रोधसिंहे जन्मव्याघ्रे लयोरगे ।। ४३ ।।
बाल्ययौवनवार्धक्यमहाभीमांधकूपके ।।
क्रोधेर्ष्या लोभवह्नौ च विषयक्रूरपर्वते ।। ४४ ।।
त्रासभूकंटकाढ्ये च सीदंतमधुनांधकम् ।।
शोभनां पदवीं शंभो नय रामेश्वराधुना ।। ४५ ।।
।। सर्वे वानरा ऊचुः ।। ।।
निंद्यानिंद्येषु सर्वत्र जनित्वा योनिषु प्रभो ।।
कुंभीपाकादिनरके पतित्वा च पुनस्तथा ।। ४६ ।।
जनित्वा च पुनर्योनौ कर्मशेषेण कुत्सिते ।।
संसारे पतितानस्मान्रामनाथ दयानिधे ।। ४७ ।।
अनाथान्विवशान्दीनान्क्रोशतः पाहि शंकर ।।
नमस्तेस्तु दयासिंधो रामनाथ महेश्वर ।। ४८ ।।
।। ब्रह्मोवाच ।। ।।
नमस्ते लोकनाथाय रामनाथाय शंभवे ।।
प्रसीद मम सर्वेश मदविद्यां विनाशय ।। ४९ ।। ।।
।। इंद्र उवाच ।। ।।
यस्य शक्तिरुमा देवी जगन्माता त्रयीमयी ।।
तमहं शंकरं वंदे रामनाथमुमापतिम् ।। 3.1.49.५० ।।
।। यम उवाच ।। ।।
पुत्रौ गणेश्वरस्कंदौ वृषो यस्य च वाहनम् ।।
तं वै रामेश्वरं सेवे सर्वाज्ञाननिवृत्तये ।। ५१ ।।
।। वरुण उवाच ।। ।।
यस्य पूजाप्रभावेन जित मृत्युर्मृकंडुजः।।
मृत्युंजयमुपासेऽहं रामनाथं हृदा तु तम् ।। ५२ ।।

।। कुबेर उवाच ।। ।।
ईश्वराय लसत्कर्णकुंडलाभरणाय ते ।।
लाक्षारुणशरीराय नमो रामेश्वराय वै ।। ५३ ।।
।। आदित्य उवाच ।। ।।
नमस्तेऽस्तु महादेव रामनाथ त्रियंबक ।।
दक्षाध्वरविनाशाय नमस्ते पाहि मां शिव ।। ५४ ।।
।। सोम उवाच ।। ।।
नमस्ते भस्मदिग्धाय शूलिने सर्पमालिने ।।
रामनाथ दयांभोधे स्मशाननिलयाय ते ।। ५५ ।।
।। अग्निरुवाच ।। ।।
इन्द्राद्यखिलदिक्पालसंसेवितपदांबुज ।।
रामनाथाय शुद्धाय नमो दिग्वाससे सदा ।। ५६ ।।
।। वायुरुवाच ।। ।।
हराय हरिरूपाय व्याघ्रचर्मांबराय च ।।
रामनाथ नमस्तुभ्यं ममाभीष्टप्रदो भव ।। ५७ ।।
।। बृहस्पतिरुवाच ।। ।।
अहंतासाक्षिणे नित्यं प्रत्यगद्वयवस्तुने ।।
रामनाथ ममाज्ञानमाशु नाशय ते नमः ।। ५८ ।। ।।
।। शुक्र उवाच ।। ।।
वंचकानामलभ्याय महामंत्रार्थरूपिणे ।।
नमो द्वैतविहीनाय रामनाथाय शंभवे ।। ५९ ।।
।। अश्विनावूचतुः ।। ।।
आत्मरूपतया नित्यं योगिनां भासते हृदि ।।
अनन्य भानवेद्याय नमस्ते राघवेश्वर ।। 3.1.49.६० ।।
।। अगस्त्य उवाच ।। ।।
आदिदेव महादेव विश्वेश्वर शिवाव्यय ।।
रामनाथांबिकानाथ प्रसीद वृष भध्वज ।। ६१ ।।
अपराधसहस्रं मे क्षमस्व विधुशेखर ।।
ममाहमिति पुत्रादावहंतां मम मोचय ।। ६२ ।।
।। सुतीक्ष्ण उवाच ।। ।।
क्षेत्राणि रत्नानि धनानि दारा मित्राणि वस्त्राणि गवाश्वपुत्राः ।।
नैवोपकाराय हि रामनाथ मह्यं प्रयच्छ त्वमतो विरक्तिम् ।। ६३ ।।
।। विश्वामित्र उवाच ।। ।।

श्रुतानि शास्त्राण्यपि निष्फलानि त्रय्यप्यधीता विफलैव नूनम् ।।
त्वयीश्वरे चेन्न भवेद्धि भक्तिः श्रीरामनाथे शिव मानुषस्य ।।६४।। ।।
।। गालव उवाच ।। ।।
दानानि यज्ञा नियमास्तपांसि गंगादितीर्थेषु निमज्जनानि ।।
रामेश्वरं त्वां न नमंति ये तु व्यर्थानि तेषामिति निश्चयोऽत्र ।। ६५ ।।
।। वसिष्ठ उवाच ।। ।।
कृत्वापि पापान्यखिलानि लोकस्त्वामेत्य रामेश्वर भक्तियुक्तः ।।
नमेत चेत्तानि लयं व्रजेयुर्यथांधकारो रवितेजसाऽद्धा ।। ६६ ।।
।। अत्रिरुवाच ।। ।।
दृष्ट्वा तु रामेश्वरमेकदापि स्पृष्ट्वा नमस्कृत्य भवंतमीशम् ।।
पुनर्न गर्भं स नरः प्रयायात्किं त्वद्वयं ते लभतं स्वरूपम् ।। ६७ ।।
अंगिरा उवाच ।।
यो रामनाथं मनुजो भवंतमुपेत्य बंधून्प्रणमन्स्मरेत ।।
संतारयेत्तानपि सर्वपापात्किम द्भुतं तस्य कृतार्थतायाम्।। ६८ ।।
।। गौतम उवाच ।। ।।
श्रीरामनाथेश्वर गूढमेत्तद्रहस्यभूतं परमं विशोकम् ।।
त्वत्पादमूलं भजतां नृणां ये सेवां प्रकुर्वंति हि तेऽपि धन्याः ।। ६९ ।।
।। शतानंद उवाच ।। ।।
वेदांतविज्ञानरहस्यविद्भिर्विज्ञेयमेतद्धि मुमुक्षुभिस्तु ।।
शास्त्राणि सर्वाणि विहाय देव त्वत्सेवनं यद्रघुवीरनाथ ।। 3.1.49.७० ।।
।। भृगुरुवाच ।। ।।
रामनाथ तव पादपंकजं द्वंद्वचिंतनविधूतकल्मषः ।।
निर्भयं व्रजति सत्सुखा द्वयं सुप्रभं त्वथ अमोघचिद्घनम् ।। ७१ ।।
।। कुत्स उवाच ।। ।।
रामनाथ तव पादसेवनं भोगमोक्षवरदं नृणां सदा ।।
रौरवादिनरकप्रणाशनं कः पुमान्न भजते रसग्रहः ।। ७२ ।।
।। काश्यप उवाच ।। ।।
रामनाथ तव पादसेविनां किं व्रतैरुत तपोभिरध्वरैः ।।
वेदशास्त्र जपचिन्तया च किं स्वर्गसिन्धुपयसापि किं फलम् ।। ७३ ।।
श्रीरामनाथ त्वमागत्य शीघ्रं ममोत्क्रांतिकाले भवान्या च साकम् ।।
मां प्रापय स्वात्मपादारविन्दं विशोकं विमोहं सुखं चित्स्वरूपम् ।। ७४ ।।
।। गन्धर्वा ऊचुः ।। ।।
रामनाथ त्वमस्माकं भजतां भवसागरे ।।

अपारे दुःखकल्लोले न त्वत्तोन्या गतिर्हि नः ।। ७५ ।।

।। किन्नरा ऊचुः ।। ।।

रामनाथ भवारण्ये व्याधिव्याघ्रभयानके ।।

त्वामंतरेण नास्माकं पदवीदर्शको भवेत् ।। ७६ ।।

।। यक्षा ऊचुः ।। ।।

रामनाथेंद्रियारातिबाधा नो दुःसहा सदा ।।

तान्विजेतुं सहायस्त्वमस्माकं भव धूर्जटे ।। ७७ ।।

।। नागा ऊचुः ।। ।।

अचिन्त्यमहिमानं त्वा रामनाथ वयं कथम्।।

स्तोतुमल्पधियः शक्ता भविष्यामोंऽबिकापते ।। ।। ७८ ।।

।। किंपुरुषा ऊचुः ।। ।।

नानायोनौ च जननं मरणं चाप्यनेकशः ।।

विनाशय तथाऽज्ञानं रामनाथ नमोऽस्तु ते ।। ७९ ।।

।। विद्याधरा ऊचुः ।। ।।

अंबिकापतये तुभ्यमसंगाय महात्मने।।

नमस्ते रामनाथाय प्रसीद वृषभध्वज ।। 3.1.49.८० ।।

।। वसव ऊचुः ।। ।।

रामनाथगणेशाय गणवृंदार्चितांघ्रये ।।

गंगाधराय गुह्याय नमस्ते पाहि नः सदा ।। ८१ ।।

।। विश्वेदेवा ऊचुः ।। ।।

ज्ञप्तिमात्रैकनिष्ठानां मुक्तिदाय सुयोगिनाम् ।।

रामनाथाय सांबाय नमोऽस्मान्रक्ष शंकर ।। ८२ ।।

।। मरुत ऊचुः ।। ।।

परतत्त्वाय तत्त्वानां तत्त्वभूताय वस्तुतः ।।

नमस्ते रामनाथाय स्वयंभानाय शंभवे ।। ८३ ।।

।। साध्या ऊचुः ।। ।।

स्वातिरिक्तविहीनाय जगत्सत्ताप्रदायिने ।।

रामेश्वराय देवाय नमोऽविद्या विभेदिने ।। ८४ ।।

।। सर्वे देवा ऊचुः ।। ।।

सच्चिदानंदसंपूर्णं द्वैतवस्तुविवर्जितम् ।।

ब्रह्मात्मानं स्वयंभानमादिमध्यांतवर्जितम् ।। ८५ ।।

अविक्रियमसंगं च परिशुद्धं सनातनम् ।।

आकाशादिप्रपंचानां साक्षिभूतं परामृतम्।।८६।।

प्रमातीतं प्रमाणानामपि बोधप्रदायिनम्।।
आविर्भावतिरोभाव संकोचरहितं सदा ।। ८७ ।।
स्वस्मिन्नध्यस्तरूपस्य प्रपंचस्यास्य साक्षिणम् ।।
निर्लेपं परमानंदं निरस्तसकलक्रियम्।। ८८ ।।
भूमानंदं महात्मानं चिद्रूपं भोगवर्जितम् ।।
रामनाथं वयं सर्वे स्वपातकविशुद्धये ।। ८९ ।।
चिन्तयामः सदा चित्ते स्वात्मानंदबुभुत्सवः ।।
रक्षास्मान्करुणासिन्धो राम नाथ नमोऽस्तु ते ।।3.1.49.९।।।
रामनाथाय रुद्राय नमः संसारहारिणे ।।
ब्रह्मविष्ण्वादिरूपेण विभिन्नाय स्वमायया ।। ९१ ।।
विभीषणसचिवा ऊचुः ।।
वरदाय वरेण्याय त्रिनेत्राय त्रिशूलिने ।।
योगिध्येयाय नित्याय रामनाथाय ते नमः ।। ९२ ।।
।। सूत उवाच ।। ।।
इति रामादिभिः सर्वैः स्तुतो रामेश्वरः शिवः ।।
प्राह सर्वान्समाहूय रामादीन्द्विजसत्तमाः ।। ९३ ।।
रामराम महाभाग जानकीरमण प्रभो ।।
सौमित्रे जानकि शुभे हे सुग्रीव मुखास्तथा ।। ९४ ।।
अन्ये ब्रह्ममुखा यूयं शृणुध्वं सुसमास्थिताः ।।
स्तोत्राध्यायमिमं पुण्यं युष्माभिः कृतमादरात् ।। ९५ ।।
ये पठंति च शृण्वंति श्रावयंति च मानवाः ।। ।।
मदर्चनफलं तेषां भविष्यति न संशयः ।। ९६ ।।
रामचंद्रधनुष्कोटिस्नानपुण्यं च वै भवेत् ।।
वर्षमेकं रामसेतौ वासपुण्यं भविष्यति ।। ९७ ।।
गन्धमादनमध्यस्थसर्वतीर्थाभिमज्जनात् ।।
यत्पुण्यं तद्भवेत्तेन नात्र संशयकारणम् ।। ९८ ।।
उक्त्वैवं रामनाथोऽपि स्वात्मलिंगे तिरोदधे ।।
स्तोत्राध्यायमिमं पुण्यं नित्यं संकीर्तयन्नरः ।। ९९ ।।
जरामरणनिर्मुक्तो जन्मदुःखविवर्जितः ।।
रामनाथस्य सायुज्यमुक्तिं प्राप्नोत्यसंशयः ।। 3.1.49.१०० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये रामादिभी रामनाथस्तोत्रकथनंनामैकोनपंचाशत्तमोऽध्यायः ।। ४९ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ५०



।। श्रीसूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि सेतुमाधववैभवम्।।

शृणुध्वं मुनयो भक्त्या पुण्यं पापहरं परम्।। १ ।।

पुरा पुण्यनिधिर्नाम राजा सोमकुलोद्भवः ।।

मधुरां पालयामास हालास्येश्वरभूषिताम् ।। २ ।।

कदाचित्स महीपालश्चतुरंगबलान्वितः ।।

सांऽतःपुरपरीवारो मधुरायां निजं सुतम् ।। ३ ।।

स्थापयित्वा रामसेतुं प्रययौ स्नानकौतुकी ।।

तत्र गत्वा धनुष्कोटौ स्नात्वा संकल्पपूर्वकम् ।। ४ ।।

अन्येष्वपि च तीर्थेषु तत्रत्येषु नृपोत्तमः ।।

सस्नौ रामेश्वरं देवं सिषेवे च सभक्तिकम् ।। ।। ५ ।।

एवं स बहुकालं वै तत्रैव न्यवसत्सुखम् ।।

रामसेतौ वसन्पुण्ये गन्धमादनपर्वते ।। ६ ।।

विष्णुप्रीतिकरं यज्ञं कदाचिदकरोन्नृपः ।।

यज्ञावसाने राजासौ मुदावभृथकौतुकी ।। ७ ।।

सस्नौ रामधनुष्कोटौ सदारः सपरिच्छदः ।।

सेवित्वा रामनाथं च स वेश्म प्रययौ द्विजाः ।। ८ ।।

एवं निवसमानेऽस्मिन्राज्ञि पुण्यनिधौ तदा ।।

कदाचिद्धरिणा लक्ष्मीर्विनोदकलहाकुला ।। ९ ।।

हरिणा समयं कृत्वा नृपभक्तिं परीक्षितुम् ।।

विष्णुना प्रेषिता लक्ष्मीर्वैकुंठात्कमलालया ।। 3.1.50.१० ।।

अष्टवर्षवयोरूपा प्रययौ गंधमादने ।।

तत्रागत्य धनुष्कोटौ तस्थौ सा कमलालया ।। ११ ।।

तस्मिन्नवसरे राजा ययौ गुणनिधिर्द्विजाः ।।

स्नातुं रामधनुष्कोटौ सदारः सहसैनिकः ।। १२ ।।
तत्र गत्वा स राजाऽयं स्नात्वा नियमपूर्वकम्।।
तुलापुरुषमुख्यानि कृत्वा दानानि कृत्स्नशः ।। १३ ।।
प्रयातुकामो भवनं कन्यां कांचिद्ददर्श सः ।।
अतीवरूपसंपन्नामष्टवर्षां शुचिस्मिताम्।। ।। १४ ।।
दृष्ट्वा नृपस्तां पप्रच्छ कन्यां चारुविलोचनाम् ।।
चारुस्मितां चारुदतीं बिंबोष्ठीं तनुमध्यमाम् ।। १५ ।।
।। पुण्यनिधिरुवाच ।। ।।
का त्वं कन्ये सुता कस्य कुतो वा त्वमिहागता ।।
अत्रागमेन किं कार्यं तव वत्से शुचिस्मिते ।। १६ ।।
एवं नृपस्तां पप्रच्छ कन्यामुत्पललोच नाम्।।
एवं पृष्टा तदा कन्या नृपं तमवदद्द्विजाः ।। १७ ।।
न मे माता पिता नास्ति न च मे बांधवास्तथा ।।
अनाथाहं महाराज भविष्यामि च ते सुता ।। १८ ।।
त्वद्गृहेऽहं निवत्स्यामि तात त्वां पश्यतीसदा ।।
हठात्कृष्यति यो वा मां ग्रहीष्यति करेण तम् ।। १९ ।।
यदि शासिष्यसे भूप तदाहं तव मंदिरे ।।
वत्स्यामि ते सुता भूत्वा पितर्गुणनिधे चिरम् ।। 3.1.50.२० ।।
एवमुक्तस्तदा प्राह कन्यां गुणनिधिर्नृपः ।।
अहं सर्वं करिष्यामि त्वदुक्तं कन्यके शुभे ।। २१ ।।
ममापि दुहिता नास्ति पुत्रोऽस्त्येकः कुलोद्वहः ।।
तव यस्मिन्रुचिर्भद्रे त्वां तस्मै प्रददाम्यहम् ।। २२ ।।
आगच्छ मद्गृहं कन्ये मम चांतःपुरे वस ।।
मद्भार्यायाः सुता भूत्वा यथाकाममनिंदिते ।। २३ ।।
इत्युक्ता सा नृपेणाथ कन्या कमललोचना ।।।
तथा स्त्विति नृपं प्रोच्य तेन साकं ययौ गृहम् ।। २४ ।।
राजा स्वभार्याहस्ते तां प्रददौ कन्यकां शुभाम् ।।
अब्रवीच्च स्वकां भार्यां राजा विन्ध्यावलिं तदा ।। २५ ।।

आवयोः कन्यका चेयं राज्ञि विंध्यावले शुभे ।।
रक्षेमां सर्वथा त्वं वै पुरुषांतरतः प्रिये ।। २६ ।।
इतीरिता नृपेणासौ भार्या विंध्या वलिस्तदा ।।
ओमित्युक्त्वाथ तां कन्यां पुत्रीं जग्राह पाणिना ।। २७ ।।
पोषिता पालिता राज्ञा सुतवत्कन्यका च सा ।।
न्यवात्सीत्सुसुखं राज्ञो भवने लालिता सदा ।।२८।।
अथ विष्णुर्जगन्नाथो लक्ष्मीमन्वेष्टुमादरात् ।।
आरूढविनतानन्दो वैकुंठान्निर्ययौ द्विजाः ।।२९।।
विनिर्गत्य स वैकुंठा द्विलंघितवियत्पथः ।।
बभ्राम च बहून्देशाल्लँक्ष्मीं तत्र न दृष्टवान्।।3.1.50.३०।।
रामसेतुमथागच्छद्गंधमादनपर्वते ।।
अन्विष्य सर्वतो रामसेतुं बभ्राम चेंदि राम्।। ३१ ।।
एतस्मिन्नेव काले सा पुष्पावचयकौतुकात् ।।
सखीभिः कन्यकायासीद्भवनोद्यानपादपान् ।। ३२ ।।
पुष्पाण्यवचिनोति स्म सखीभिः सह कानने ।।
तत्रागत्य ततो विष्णुर्विप्ररूपधरो द्विजाः ।। ३३ ।।
गंगांभो विदधत्स्कंधे वहञ्छत्रं करंण च ।।
गंगास्नायिद्विजस्येव रचयन्वेषमात्मनः ।। ३४ ।।
धारयन्दक्षिणे पाणौ कुशाग्रंथिपवित्रकम् ।।
भस्मोद्धूलितसर्वांगस्त्रिपुण्ड्रावलिशोभितः ।। ३५ ।।
प्रजपञ्छिवनामानि धृतरुद्राक्ष मालिकः ।।
सोत्तरीयः शुचिर्विप्राः समायातो जनार्दनः ।। ३६ ।।
तमागतं द्विजं दृष्ट्वा स्तब्धाऽतिष्ठत कन्यका ।।
अपश्यदष्टवर्षां तां वल्लभां पुष्प हारिणीम् ।। ३७ ।।
दृष्ट्वा स त्वरया विप्रः कन्यां मधुरभाषिणीम् ।।
हठात्कृत्य करेणासौ जग्राह गरुडध्वजः ।। ३८ ।।
तदा चुक्रोश सा कन्या सखीभिः सह कानने ।।
तमाक्रोशं समाकर्ण्य राजा स तु समागतः ।। ३९ ।।

प्रययौ भवनोद्यानं वृतः कतिपयैर्भटैः ।।
गत्वा पप्रच्छ तां कन्यां तत्सखीरपि भूपतिः ।। 3.1.50.४० ।।
किमर्थमधुना क्रुष्टं सखीभिः सह कन्यके ।।
त्वया तु भवनोद्याने तत्र कारणमुच्यताम् ।। ४१ ।।
केन त्वं परिभूतासि हठात्कृष्य सुते मम ।।
इति पृष्टा तमाचष्ट कन्या गुणनिधिं नृपम् ।।
बाष्पपूर्णानना खिन्ना रुषिता भृशकातरा ।। ४२ ।।
।। कन्योवाच ।। ।।
अयं विप्रो हठात्कृत्य जगृहे पांड्यनाथ माम् ।। ४३ ।।
तातात्र वृक्षमूलेऽसौ स तिष्ठत्यकुतोभयः ।।
तदाकर्ण्य वचस्तस्या राजा गुणनिधिः सुधीः ।। ४४ ।।
जग्राह तरसा विप्रमविद्वांस्तद्बलं हठात् ।।
रामनाथालयं नीत्वा निगृह्य च हठात्तदा ।। ४५ ।।
बद्ध्वा निगडपाशाभ्या मानयन्मंडपं च तम् ।।
आत्मपुत्रीं समाश्वास्य शुद्धांतमनयन्नृपः ।। ४६ ।।
स्वयं च प्रययौ रम्यं भवनं नृपपुंगवः ।।
ततो रात्रौ स्वपन्राजा स्वप्ने विप्रं ददर्श तम् ।। ४७ ।।
शंखचक्रगदापद्मवनमालाविभूषितम् ।।
कौस्तुभालंकृतोरस्कं पीतांबरधरं हरिम् ।। ४८ ।।
कालमेघच्छविं कांतं गरुडोपरि संस्थितम् ।।
चारुस्मितं चारुदंतं लसन्मकरकुण्डलम् ।। ४९ ।।
विष्वक्सेनप्रभृतिभिः किंकरैरुपसेवितम् ।।
शेषपर्यंकशयनं नारदादि मुनिस्तुतम् ।। 3.1.50.५० ।।
ददर्श च स्वकां कन्यां विकासिकमलस्थिताम् ।।
धृतपंकजहस्तां तां नीलकुञ्चितमूर्धजाम् ।। ५१ ।।
विष्णुवक्षस्थलावासां समुन्नतपयोधराम् ।।
दिग्गजैरभिषिक्तांगीं श्यामां पीतांबरावृताम् ।। ५२ ।।
स्वर्णपंकजसंक्लृप्तमालालंकृतमूर्धजाम् ।।

दिव्याभरणशोभाढ्यां चारुहा रविभूषिताम् ।। ५३ ।।

अनर्घरत्नसंक्लृप्तनासाभरणशोभिताम् ।।

सुवर्णनिष्काभरणां कांचीनूपुरराजिताम् ।। ५४ ।।

महालक्ष्मीं ददर्शासौ राजा रात्रौ स्वकां सुताम् ।।

एवं दृष्ट्वा नृपः स्वप्ने विप्रं तं स्वसुतामपि ।। ५५ ।।

उत्थितः सहसा तल्पात्कन्यागृहमवाप च ।।

तथैव दृष्टवान्कन्यां यथा स्वप्ने ददर्श ताम् ।। ५६ ।।

अथोदिते सवितरि कन्यामादाय भूमिपः ।।

रामनाथालयं प्राप ब्राह्मणं न्यस्तवान्यतः ।। ५७ ।।

स मंडपवरे विप्रं ददर्श हरिरूपिणम् ।।

यथा ददर्श स्वप्ने तं वनमालादिचिह्नितम् ।।

विष्णुं विज्ञाय तुष्टाव नृपतिर्हरिमीश्वरम् ।। ५८ ।।

।। पुण्यनिधिरुवाच ।। ।।

नमस्ते कमलाकांत प्रसीद गरुडध्वज ।। ५९ ।।

शार्ङ्गपाणे नमस्तुभ्यमपराधं क्षमस्व मे ।।

नमस्ते पुण्डरीकाक्ष चक्रपाणे श्रियःपते ।। 3.1.50.६० ।।

कौस्तुभालंकृतांकाय नमः श्रीवत्सलक्ष्मणे ।।

नमस्ते ब्रह्मपुत्राय दैत्यसंघविदारिणे ।। ६१ ।।

अशेषभुवनावासनाभिपंकजशालिने ।।

मधुकैटभसंहर्त्रे रावणांतकराय ते ।।६२।।

प्रह्लादरक्षिणे तुभ्यं धरित्रीपतये नमः ।।

निर्गुणायाप्रमेयाय विष्णवे बुद्धिसाक्षिणे ।।६३।।

नमस्ते श्रीनिवासाय जग द्धात्रे परात्मने।।

नारायणाय देवाय कृष्णाय मधुविद्विषे।।६४।।

नमः पंकजनाभाय नमः पंकजचक्षुषे।।

नमः पंकजहस्तायाः पतये पंकजांघ्रये ।।६५।।

भूयोभूयो जगन्नाथ नमः पंकजमालिने ।।

दयामूर्ते नमस्तुभ्यमपराधं क्षमस्व मे ।। ६६ ।।

मया निगडपाशाभ्यां यः कृतो मधुसूदन ।।

अनयस्त्वत्स्वरूपमविदित्वा कृतः प्रभो ।। ६७ ।।

अतो मदपराधोऽयं क्षंतव्यो मधुसूदन ।।

एवं स्तुत्वा महाविष्णुं राजा पुण्यनिधिर्द्विजाः ।। ६८ ।।

लक्ष्मीं तुष्टाव जननीं सर्वेषां प्राणिनां मुदा ।।

नमो देवि जगद्धात्रि विष्णुवक्षस्थलालये ।। ६९ ।।

नमोब्धिसंभवे तुभ्यं महालक्ष्मि हरिप्रिये ।।

सिद्ध्यै पुष्ट्यै स्वधायै च स्वाहायै सततं नमः ।। 3.1.50.७० ।।

संध्यायै च प्रभायै च धात्र्यै भूत्यै नमोनमः ।।

श्रद्धायै चैव मेधायै सरस्वत्यै नमोनमः ।। ७१ ।।

यज्ञविद्ये महाविद्ये गुह्यविद्येतिशोभने ।।

आत्मविद्ये च देवेशि मुक्तिदे सर्वदेहिनाम् ।। ७२ ।।

त्रयीरूपे जगन्मातर्जगद्रक्षाविधायिनि ।।

रक्ष मां त्वं कृपादृष्ट्या सृष्टिस्थित्यंतकारिणि ।। ७३ ।।

भूयोभूयो नमस्तुभ्यं ब्रह्ममात्रे महेश्वरि ।।

इति स्तुत्वा महालक्ष्मीं प्रार्थयामास माधवम् ।। ७४।।

यदज्ञानान्मया विष्णो त्वयि दोषः कृतोऽधुना ।।

पादे निगडबंधेन स द्रोहः क्षम्यतां त्वया ।। ७६ ।।

लोकास्ते शिशवः सर्वे त्वं पिता जगतां हरे।।

सुताऽपराधः पितृभिः क्षंतव्यो मधुसूदन ।। ७६ ।।

अपराधिनां च दैत्यानां स्वरूपमपि दत्तवान् ।।

भवान्विष्णो ममापीममपराधं क्षमस्व वै ।। ।। ७७ ।।

जिघांसयापि भगवन्नागतां पूतनां पुरा ।।

अनयस्त्वत्पदांभोजं तन्मां रक्ष कृपानिधे ।।

लक्ष्मीकांत कृपादृष्टिं मयि पातय केशव ।। ७८ ।। ।।

।। श्रीसूत उवाच ।। ।।

इति संप्रार्थितो विष्णु राज्ञा तेन द्विजोत्तमाः ।।

प्राह गंभीरया वाचा नृपं पुण्यनिधिं ततः ।। ७९ ।।

।। विष्णुरुवाच ।। ।।

राजन्न भीस्त्वया कार्या मद्बंधननिमित्तजा ।। 3.1.50.८० ।।

भक्तवश्यत्वमधुना तव प्रतिहितं मया ।।

मम प्रीतिकरं यज्ञमकरोद्यद्भवानिह ।। ।। ९१ ।।

अतस्त्वं मम भक्तोसि राजन्पुण्यनिधेऽधुना ।।

तेनाहं तव वश्योऽस्मि भक्तिपाशेन यंत्रितः ।। ८२ ।।

भक्तापराधं सततं क्षमाम्यहमरिं दम ।।

त्वद्भक्तिं ज्ञातुकामेन मया संप्रेरिता त्वियम् ।। ८३ ।।

लक्ष्मीर्मम प्रिया राजंस्त्वयासंरक्षिताऽधुना ।।

तेनाहं तव तुष्टोऽस्मि मत्स्वरूपा त्वियं सदा ।। ८४ ।।

अस्यां यो भक्तिमांल्लोके स मद्भक्तोऽभिधीयते ।।

अस्यां यो विमुखो राजन्स मद्द्वेषी स्मृतः सदा ।। ८५ ।।

त्वमिमां भक्तिसं युक्तो यस्मात्पूजितवानसि ।।

मत्पूजापि कृता तस्मान्मदभिन्ना त्वियं यतः ।। ८६ ।।

अतस्त्वया नापराधः कृतो मयि नरेश्वर ।।

किं तु पूजैव विहिता तां त्वयार्चयता मम ।। ९७ ।।

त्वया मद्भार्यया साकं संकेतोऽकारि यत्पुरा ।।

तत्संकेताभिगुत्यर्थं मां यद्बंधितवानसि ।। ८८ ।।

तेन प्रीतोस्मि ते राजँल्लक्ष्मीः संरक्षिताऽधुना ।।

मत्स्वरूपा च सा लक्ष्मीर्जगन्माता त्रयीमयी ।। ८९ ।।

तद्रक्षां कुर्वता भूप त्वया यद्बंधनं मम ।।

तत्प्रियं मम राजेंद्र मा भयं क्रियतां त्वया ।। 3.1.50.९० ।।

इयं लक्ष्मीस्तव सुता सत्यमेव न संशयः ।।

इतीरितेऽथ हरिणा लक्ष्मीः प्रोवाच भूपतिम् ।। ।। ९१ ।।

।। लक्ष्मीरुवाच ।। ।।

राजन्प्रीतास्मि ते चाहं रक्षिता यद्गृहे त्वया ।।

त्वद्भक्तिशोधनार्थं वा अहं विष्णुरुभावपि ।। ९२ ।।

विनोद कलहव्याजादागताविह भूपते ।।

तव योगेन भक्त्या च तुष्टावावां परंतप ।। ९३ ।।

आवयोः कृपया राजन्सुखं ते भवतात्सदा ।।

सर्वभूमंडलैश्वर्यं सदा ते भवतु ध्रुवम् ।। ९४ ।।

आवयोः पादयुगले भक्तिर्भवतु ते ध्रुवा ।।

देहांते मम सायुज्यं पुनरावृत्तिवर्जितम् ।। ९५ ।।

नित्यं भवतु ते राजन्मा भूत्ते पापधीस्तथा ।।

सदा धर्मे भव धीर्विष्णुभक्तियुता तव ।।९६।।

एवमुक्त्वा नृपं लक्ष्मीर्विष्णोर्वक्षस्थलं ययौ ।।

अथ विष्णुरुवाचेदं राजानं द्विज पुंगवाः ।। ९७ ।।

यथा त्वयात्र बद्धोहं निगडेन नृपोतम ।।

तद्रूपेणैव वत्स्यामि सेतुमाधवसंज्ञितः ।। ९८ ।।

मयैव कारितः सेतुस्तद्रक्षार्थमहं नृप ।।

भूतराक्षससंघेभ्यो भयानामुपशांतये ।।९९।।

ब्रह्मापि सेतुरक्षार्थं वसत्यत्रदिवानिशम्।।

शंकरो रामनाथाख्यो नित्यं सेतौ वसत्यथ।।3.1.50.१००।।

इंद्रादिलोकपालाश्च वसंत्यत्रमुदान्विताः ।।

अतोऽहमत्रवत्स्यामि सेतुमाधवसंज्ञया ।।१।।

सेतुसंरक्षणार्थं वै सर्वोपद्रवशांतये ।।

सर्वेषामिष्टसिद्ध्यर्थं सर्वपापोपशांतये ।। २ ।।

त्वया निगडबद्धं मां सेवते येऽत्र मानवाः ।।

ते यांति मम सायुज्यं सर्वाभीष्टं तथा नृप ।। ३ ।।

मम लक्ष्म्यास्तव तथा चरितं ये पठंति वै।।

न ते यास्यंति दारिद्र्यं किं त्वैश्वर्यं व्रजंति ते ।।४।।

त्वत्कृतं यदिदं स्तोत्रं मम लक्ष्म्या विशांपते ।।

ये पठंति च शृण्वंति लिखंति च मुदान्विताः ।। ५ ।।

न तेषां पुनरावृत्तिर्मम लोकात्कदाचन ।।

इत्युक्त्वा स हरिस्तत्र नृपं पुण्यनिधिं तदा ।। ६ ।।

तत्रैव पूर्णरूपेण संनि धत्ते स्म सर्वदा ।।

नृपः पुण्यनिधिर्विप्राः सेतुमाधवरूपिणम्।। ७ ।।

विष्णुं प्रणम्य भक्त्या तु महापूजां विधाय च ।।

सेवित्वा रामनाथं च स्वमेव भवनं ययौ ।। ८ ।।

यावज्जीवमसौ तत्र सेतौ न्यवसदुत्तमे ।।

मधुरायां निजं पुत्रं स्थापयामास पालकम् ।। ९ ।।

तत्रैव निवसन्राजा देहांते मुक्तिमाप्तवान् ।।

विंध्यावलिश्च तत्पत्नी तमेवानुममार सा ।।

पतिव्रता पतिप्राणा प्रययौ सापि सद्गतिम्।।3.1.50.११०।।

।। श्रीसूत उवाच ।। ।।

येत्र भक्तियुता नित्यं सेवंते सेतुमाधवम् ।। ११ ।।

न तेषां पुनरावृत्तिः कैलासाज्जातु जायते ।।

सेतुमाधवसेवा ये न कुर्वंत्यत्र मानवाः ।। ।। १२ ।।

न तेषां रामनाथस्य सेवा फलवती भवेत् ।।

गृहीत्वा सैकतं सेतोर्गंगायां निक्षिपेद्यदि ।। १३ ।।

विभज्य माधवपुरे वैकुंठे स वसेन्नरः ।।

गंगां जिगमिषुर्विप्राः सेतुमाधवसन्निधौ ।। १४ ।।

संकल्प्य गंगां निर्गच्छेत्सा यात्रा सफला भवेत्।।

आनीय गंगासलिलं रामेशमभि षिच्य च ।। १५ ।।

सेतौ निक्षिप्य तद्भारं ब्रह्म प्राप्नोत्यसंशयः ।।

इति वः कथितं विप्राः सेतुमाधववैभवम् ।। १६ ।।

एतत्पठन्वा शृण्वन्वा वैकुंठे लभते गतिम् ।। ११७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीय ब्रह्मखण्डे सेतुमाहात्म्ये सेतुमाधवप्रशंसायां पुण्य निधिचरितकथनंनाम पंचाशत्तमोऽध्यायः ।। ५० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ५१



।। सूत उवाच ।। ।।

अथातः संप्रवक्ष्यामि सेतुयात्राक्रमं द्विजाः ।।

यं श्रुत्वा सर्वपापेभ्यो मुच्यते मानवः क्षणात् ।। १ ।।

स्नात्वाचम्य विशुद्धात्मा कृतनित्यविधिः सुधीः ।।

रामनाथस्य तुष्ट्यर्थं प्रीत्यर्थं राघवस्य च ।। २ ।।

भोजयित्वा यथाशक्ति ब्राह्मणान्वेदपारगान् ।।

भस्मोद्धूलितसर्वांगस्त्रिपुंड्रांकितमस्तकः ।। ३ ।।

गोपीचन्दनलिप्तो वा स्वभालेऽप्यूर्ध्वपुंड्रकः ।।

रुद्राक्ष मालाभरणः सपवित्रकरः शुचिः ।। ४ ।।

सेतुयात्रां करिष्येऽहमिति संकल्प्य भक्तितः ।।

स्वगृहात्प्रव्रजेन्मौनी जपन्नष्टाक्षरं मनुम् ।। ५ ।।

पंचाक्षरं नाममंत्रं जपेन्नियतमानसः ।।

एकवारं हविष्याशी जितक्रोधो जितेंद्रियः ।। ६ ।।

पादुकाछत्ररहितस्तांबूलपरिवर्जितः ।।

तैलाभ्यंगविहीनश्च स्त्रीसंगादिविवर्जितः ।।७।।

शौचाद्याचारसंयुक्तः सन्ध्योपास्तिपरायणः ।।

गायत्र्युपास्ति कुर्वाणस्त्रिसंध्यं रामचिंतकः ।। ८ ।।

मध्येमार्गं पठन्नित्यं सेतुमाहात्म्यमादरात् ।।

पठन्रामायणं वापि पुराणांतरमेव वा ।। ९ ।।

व्यर्थवाक्यानि संत्यज्य सेतुं गच्छेद्विशुद्धये ।।

प्रतिग्रहं न गृह्णीयान्नाचारांश्च परित्यजेत् ।। 3.1.51.१० ।।

कुर्यान्मार्गे यथाशक्ति शिवविष्ण्वादिपूजनम् ।।

वैश्वदेवादिकर्माणि यथाशक्ति समाचरेत् ।। ११ ।।

ब्रह्मयज्ञमुखान्धर्मा न्प्रकुर्याच्चाग्निपूजनम् ।।

अतिथिभ्योऽन्नपानादि संप्रदद्याद्यथाबलम् ।। १२ ।।

दद्याद्भिक्षां यतिभ्योऽपि वित्तशाठ्यं परित्यजन् ।।

शिवविष्ण्वादि नामानि स्तोत्राणि च पठेत्पथि ।। १३ ।।

धर्ममेव सदा कुर्यान्निषिद्धानि परित्यजेत् ।।

इत्यादिनियमोपेतः सेतुमूलं ततो व्रजेत् ।। १४ ।।

पाषाणं प्रथमं दद्यात्तत्र गत्वा समाहितः ।।

तत्रावाह्य समुद्रं च प्रणमेत्तदनंतरम् ।। १५ ।।

अर्घ्यं दद्यात्समुद्राय प्रार्थयेत्तदनंतरम्।।

अनुज्ञां च ततः कुर्यात्ततः स्नायान्महोदधौ ।। १६ ।।

मुनीनामथ देवानां कपीनां पितृणां तथा ।।

प्रकुर्यात्तर्पणं विप्रा मनसा संस्मरन्हरिम् ।। १७ ।। ।।

।। पाषाणसंख्या ।। ।।

पाषाणसप्तकं दद्यादेकं वा विप्रपुंगवाः ।।

पाषाणदानात्सफलं स्नानं भवति नान्यथा ।। १८ ।।

।। पाषाणदानमंत्रः ।। ।।

पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरे ।।

पाषाणं ते मया दत्तमाहारार्थं प्रकल्प्यताम् ।। १९ ।।

।। सान्निध्यप्रार्थनामन्त्रः ।। ।।

विश्वार्चि त्वं घृताचि त्वं विश्वयाने विशांपते ।।

सान्निध्यं कुरु मे देव सागरे लवणांभसि ।। 3.1.51.२० ।।

।। नमस्कारमन्त्रः ।। ।।

नमस्ते विश्वगुप्ताय नमो विष्णो ह्यपांपते ।।

नमो हिरण्यशृंगाय नदीनां पतये नमः ।।

सूमुद्राय वयूनाय प्रोच्चार्य प्रणमेत्तथा ।। २१ ।।

।। अर्घ्यमन्त्रः ।। ।।

सर्वरत्नमय श्रीमन्सर्वरत्नाकराकर ।।

सर्वरत्नप्रधानस्त्वं गृहाणार्घ्यं महोदधे ।। २२ ।।

।। अनुज्ञापनमंत्रः ।। ।।

अशेषजगदाधार शंखचक्रगदा धर ।।

देहि देव ममानुज्ञां युष्मत्तीर्थनिषेवणे ।। २३ ।।

।। प्रार्थनामंत्रः ।। ।।

प्राच्यां दिशि च सुग्रीवं दक्षिणस्यां नलं स्मरेत् ।। २४ ।।

प्रतीच्यां मैंदनामानमुदीच्यां द्विविदं तथा ।।

रामं च लक्ष्मणं चैव सीतामपि यशस्विनीम् ।। २५ ।।

अंगदं वायुतनयं स्मरेन्मध्ये विभीषणम् ।।

पृथिव्यां यानि तीर्थानि प्राविशंस्त्वा महोदधे ।। २६ ।।

स्नानस्य मे फलं देहि सर्वस्मात्त्राहि मांहसः ।।

हिरण्यशृंगमित्याभ्यां नाभ्यां नारायणं स्मरेत् ।। २७ ।।

ध्यायन्नारायणं देवं स्नानादिषु च कर्मसु ।।

ब्रह्मलोकमवाप्नोति जायते नेह वै पुनः ।। २८ ।।

सर्वेषामपि पापानां प्रायश्चित्तं भवेत्ततः ।।

प्रह्लादं नारदं व्यासमंबरीषं शुकं तथा ।।

अन्यांश्च भगवद्भक्तांश्चिंतयेदेकमानसः ।। २९ ।।

।। स्नानमन्त्रः ।। ।।

वेदादिर्यो वेदवसिष्ठयोनिः सरित्पतिः सागररत्नयोनिः ।।

अग्निश्च तेजश्च इलां च तेजो रेतोधा विष्णुरमृतस्य नाभिः ।। 3.1.51.३० ।।

इदं ते अन्याभिरसमानमद्भिर्याः काश्च सिंधुं प्रविशंत्यापः ।।

सर्पो जीर्णामिव त्वचं जहामि पापं शरीरात्सशिरस्कोऽभ्युपेत्य ।।३१।।

समुद्राय वयूनाय नमस्कुर्यात्पुनर्द्विजाः ।।

सर्वतीर्थमयं शुद्धं नदीनां पतिमंबुधिम् ।। ३२।।

द्वौ समुद्राविति पुनः प्रोच्चार्य स्नानमाचरेत् ।।

ब्रह्मांडोदरतीर्थानि करस्पृष्टानि ते रवे ।। ३३ ।।

तेन सत्येन मे सेतौ तीर्थं देहि दिवाकर ।।

प्राच्यां दिशि च सुग्रीवमित्यादिक्रमयोगतः ।।३४।।

स्मृत्वा भूयो द्विजाः सेतौ तृतीयं स्नानमाचरेत् ।।

देवीपत्तनमारभ्य प्रव्रजेद्यदि मानवः ।। ३५ ।।

तदा तु नवपाषाणमध्ये सेतौ विमुक्तिदे ।।

स्नानमंबुनिधौ कुर्यात्स्वपापौघापनुत्तये ।। ३६ ।।

दर्भशय्यापदव्या चेद्गच्छे त्सेतुं विमुक्तिदम् ।।

तदा तत्रोदधावेव स्नानं कुर्याद्विमुक्तये ।। ३७ ।।

।। तर्पणविधिः ।। ।।

पिप्पलादं कविं कण्वं कृतांतं जीवितेश्वरम् ।।

मन्युं च कालरात्रिं च विद्यां चाहर्गणेश्वरम् ।। ३८ ।।

वसिष्ठं वामदेवं च पराशरमुमापतिम् ।।

वाल्मिकिं नारदं चैव वालखिल्यान्मुनींस्तथा ।। ३९ ।।

नलं नीलं गवाक्षं च गवयं गन्धमादनम् ।।

मैंदं च द्विविदं चैव शरभं चर्षभं तथा ।। 3.1.51.४० ।।

सुग्रीवं च हनूमंतं वेगदर्शनमेव च ।।

रामं च लक्ष्मणं सीतां महाभागां यशस्विनीम् ।। ४१ ।।

त्रिः कृत्वा तर्पयेदेतान्मंत्रानुक्त्वा यथाक्रमम् ।।

विभोश्च तत्तन्नामानि चतुर्थ्यंतानि वै द्विजाः ।।४२।।

देवा नृषीन्पितृंश्चैव विधिवच्च तिलोदकैः।।

द्वितीयांतानि नामानि चोक्त्वा तर्पयेद्द्विजाः ।। ४३।।

तर्पयेत्सपवित्रस्तु जले स्थित्वा प्रसन्नधीः ।।

तर्पणात्सर्वतीर्थेषु स्नानस्य फलमाप्नुयात् ।। ४४ ।।

एवमेतांस्तर्पयित्वा नमस्कृत्योत्तरेज्जलात् ।।

आर्द्रवस्त्रं परित्यज्य शुष्कवासःसमावृतः ।। ४५ ।।

आचम्य सपवित्रश्च विधिवच्छ्राद्धमाचरेत् ।।

पिंडान्पितृभ्यो दद्याच्च तिलतण्डुलकैस्तथा ।। ४६ ।।

एतच्छ्राद्धमशक्तस्य मया प्रोक्तं द्विजोत्तमाः ।।

धनाढ्योऽन्नेन वै श्राद्धं षड्रसेन समाचरेत् ।। ४७ ।।

गोभूतिलहिरण्यादिदानं कुर्यात्समृद्धिमान् ।।

रामचन्द्रधनुष्कोटावेवमेव समाचरेत् ।। ४८ ।।

पाषाणदानपूर्वाणि तर्पणांतानि वै द्विजाः ।।

सेतुमूले यथैतानि विधिवद्व्यतनोद्द्विजाः ।। ४९ ।।

चक्रतीर्थं ततो गत्वा तत्रापि स्नानमाचरेत् ।।

पश्येच्च सेत्वधिपतिं देवं नारायणं हरिम् ।। 3.1.51.५० ।।

गच्छन्पश्चिममार्गेण तत्रत्ये चक्रतीर्थके ।।

स्नात्वा दर्भशयं देवं प्रपश्येद्भक्तिपूर्वकम् ।। ५१ ।।

कपितीर्थं ततः प्राप्य तत्रापि स्नानमाचरेत् ।।

सीताकुंडं ततः प्राप्य तत्रापि स्नानमाचरेत् ।। ५२ ।।

ऋणमोचनतीर्थं तु ततः प्राप्य महाफलम् ।।

स्नात्वा प्रणम्य रामं च जानकीरमणं प्रभुम् ।। ५३ ।।

गच्छेल्लक्ष्मणतीर्थं तु कण्ठादुपरि वापनम् ।।

कृत्वा स्नायाच्च तत्रापि दुष्कृतान्यपि चिन्तयन् ।। ५४ ।।

ततः स्नात्वा रामतीर्थे ततो देवालयं व्रजेत् ।।

स्नात्वा पापविनाशने च गंगायमुनयोस्तथा ।। ५५ ।।

सावित्र्यां च सरस्वत्यां गायत्र्यां च द्विजोत्तमाः ।।

स्नात्वा च हनुमत्कुण्डे ततः स्नायान्महाफले ।।

ब्रह्मकुण्डं ततः प्राप्य स्नायाद्विधिपुरःसरम् ।। ५६ ।।

नागकुण्डं ततः प्राप्य सर्वपापविनाशनम् ।।

स्नानं कुर्यान्नरो विप्रा नरकक्लेशनाशनम् ।।

गंगाद्याः सरितः सर्वास्तीर्थानि सकलान्यपि ।। ५७ ।।

सर्वदा नागकुंडे तु वसंति स्वाघशांतये ।।

अनंतादिमहानागैरष्टाभिरिदमुत्तमम् ।। ५८ ।।

कल्पितं मुक्तिदं तीर्थं रामसेतौ शिवंकरम् ।।

अगस्त्यकुण्डं संप्राप्य ततः स्नायादनुत्तमम् ।। ५९ ।।

अथाग्नितीर्थमासाद्य सर्वदुष्कर्मनाशनम् ।।

स्नात्वा संतर्प्य विधिवच्छ्राद्धं कुर्यात्पितॄन्स्मरन् ।। 3.1.51.६० ।।

गोभूहिरण्य धान्यादि ब्राह्मणेभ्यः स्वशक्तितः ।।

दत्त्वाग्नितीर्थतीरे तु सर्वपापैः प्रमुच्यते ।। ६१ ।।

अथवा यानि तीर्थानि चक्रतीर्थमुखानि वै ।।

अनुक्रांतानि विप्रेंद्राः सर्वपापहराणि तु ।। ६२ ।।

स्नायात्तदनुपूर्वेण स्नायाद्वापि यथारुचि ।।

स्नात्वैवं सर्वतीर्थेषु श्राद्धादीनि समाचरेत् ।। ६३ ।।

पश्चाद्रामेश्वरं प्राप्य निषेव्य परमेश्वरम् ।।

सेतुमाधवमागत्य तथा रामं च लक्ष्मणम् ।। ६४ ।।

सीतां प्रभंजनसुतं तथान्यान्कपिसत्तमान् ।।

तत्रत्य सर्वतीर्थेषु स्नात्वा नियमपूर्वकम् ।। ६५ ।।

प्रणम्य रामनाथं च रामचंद्रं तथापरान् ।।

नमस्कृत्य धनुष्कोटिं ततः स्नातुं व्रजेन्नरः ।। ६६ ।।

तत्र पाषाण दानादिपूर्वोक्तनियमं चरेत् ।।

धनुष्कोटौ च दानानि दद्याद्वित्तानुसारतः ।। ६७ ।।

क्षत्रं गाश्च तथान्यानि वस्त्राण्यन्यानि चादरात् ।।

ब्राह्मणेभ्यो वेदविद्भ्यो दद्याद्वित्तानुसारतः ।। ६८ ।।

कोटितीर्थं ततः प्राप्य स्नायान्नियमपूर्वकम् ।।

ततो रामेश्वरं देवं प्रणमेद्वृषभध्वजम् ।। ६९ ।।

विभवे सति विप्रेभ्यो दद्यात्सौवर्णदक्षिणाम्।।

तिलान्धान्यं च गां क्षेत्रं वस्त्राण्यन्यानि तंडुलान् ।। 3.1.51.७० ।।

दद्याद्वित्तानुसारेण वित्तलोभविवर्जितः ।।

धूपं दीपं च नैवेद्यं पूजोपकरणानिच ।। ७१ ।।

रामेश्वराय देवाय दद्याद्वित्तानुसारतः ।।

स्तुत्वा रामेश्वरं देवं प्रणम्य च सभक्तिकम् ।। ७२ ।।

अनुज्ञाप्य ततो गच्छत्सेतुमाधवसंनिधिम् ।।

तस्मै दत्त्वा च धूपादीननुज्ञाप्य च माधवम् ।। ७३ ।।

पूर्वोक्तनियमोपेतः पुनरायात्स्वकं गृहम् ।।

ब्राह्मणान्भोजयेदन्नैः षड्रसैः परिपूरितैः ।। ७४ ।।

तेनैव रामनाथोऽस्मै प्रीतोऽभीष्टं प्रयच्छति ।।

नारकं चास्य नास्त्येव दारिद्र्यं च विनश्यति ।। ।। ७५ ।।

संततिर्वर्धते तस्य पुरुषस्य द्विजोत्तमाः ।।

संसारमवधूयाशु सायुज्यमपि यास्यति ।। ७६ ।।

अत्रागन्तुमशक्तश्चेच्छ्रुतिस्मृत्यागमेषु यत् ।।

ग्रंथजातं महापुण्यं सेतुमाहात्म्यसूचकम् ।। ७७ ।।

तं ग्रंथं पाठयेद्विप्रा महापातकनाशनम् ।।

इदं वा सेतुमाहात्म्यं पठेद्भक्तिपुरःसरम् ।। ७८ ।।

सेतुस्नानफलं पुण्यं तेनाप्नोति न संशयः ।।

अंधपंग्वादिविषयमेतत्प्रोक्तं मनीषिभिः ।। ७९ ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितो विप्राः सेतुयात्राक्रमो द्विजाः ।।

एतत्पठन्वा शृण्वन्वा सर्वदुःखाद्विमुच्यते ।। 3.1.51.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये यात्राक्रमवर्णनंनामैकपंचाशत्तमोऽध्यायः ।। ५१ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/सेतुखण्डः/अध्यायः ५२



।। श्रीसूत उवाच ।। ।।

भूयोऽप्यहं प्रवक्ष्यामि सेतुमुद्दिश्य वैभवम् ।।

युष्माकमादरेणाहं शृणुध्वं मुनिपुंगवाः ।। १ ।।

स्थानानामपि सर्वेषामेतत्स्थानं महत्तरम् ।।

अत्र जप्तं हुतं तप्तं दत्तं चाक्षय मुच्यते ।। २ ।।

अस्मिन्नेव महास्थाने धनुष्कोटौ निमज्जनात्।।

वाराणस्यां दशसमावासपुण्यफलं भवेत् ।। ३ ।।

तस्मिंस्थले धनुष्कोटौ स्नात्वा रामेश्वरं शिवम् ।।

दृष्ट्वा नरो भक्तियुक्तस्त्रिदिनानि वसेद्द्विजाः ।। ४ ।।

पुण्डरीकपुरे तेन दशवत्सरवासजम् ।।

पुण्यं भवति विप्रेंद्रा महापातकनाश नम् ।।५।।

अष्टोत्तरसहस्रं तु मंत्रमाद्यं षडक्षरम् ।।

अत्र जप्त्वा नरो भक्त्या शिवसायुज्यमाप्नुयात् ।। ६ ।।

मध्यार्जुने कुंभकोणे मायूरे श्वेतकानने ।।

हालास्ये च गजारण्ये वेदारण्ये च नैमिषे ।। ७ ।।

श्रीपर्वते च श्रीरंगे श्रीमद्वृद्धगिरौ तथा ।।

चिदंबरे च वल्मीके शेषाद्रावरुणाचले ।। ८ ।।

श्रीमद्दक्षिणकैलासे वेंकटाद्रौ हरिस्थले ।।

कांचीपुरे ब्रह्मपुरे वैद्येश्वरपुरे तथा ।। ९ ।।

अन्यत्रापि शिवस्थाने विष्णुस्थाने च सत्तमाः ।।

वर्षवासभवं पुण्यं धनुष्कोटौ नरो मुदा ।।3.1.52.१०।।

माघमासे यदि स्नायादाप्नोत्येव न संशयः ।।

इमं सेतुं समुद्दिश्य द्वौ समुद्राविति श्रुतिः ।।११।।

विद्यते ब्राह्मणश्रेष्ठा मातृभूता सनातनी ।।

अदो यद्दारुरित्यन्या यत्रास्ति मुनिपुंगवाः ।। १२ ।।

विष्णोः कर्माणि पश्यंती सेतुवैभवशंसिनी ।।

श्रुतिरस्ति तथान्यापि तद्विष्णोरिति चापरा ।। १३ ।।

इतिहासपुराणानि स्मृतयश्च तपोधनाः ।।

एकवाक्यतया सेतुमाहात्म्यं प्रबुवंति हि ।। १४ ।।

चंद्रसूर्योपरागेषु कुर्व न्सेत्ववगाहनम् ।।

अविमुक्ते दशाब्दं तु गंगास्नानफलं लभेत् ।। १५ ।।

कोटिजन्मकृतं पापं तत्क्षणेनैव नश्यति ।।

अश्वमेधसहस्रस्य फलमाप्नोत्य नुत्तमम् ।।१६।।

विषुवायनसंक्रांतौ शशिवारे च पर्वणि ।।

सेतुदर्शनमात्रेण सप्तजन्मार्जिताशुभम् ।।१७।।

नश्यते स्वर्गतिं चैव प्रयांति द्विजपुंगवाः ।।

मकरस्थे रवौ माघे किंचिदभ्युदिते रवौ ।। १८ ।।

स्नात्वा दिनत्रयं मर्त्यो धनुष्कोटौ विपातकः ।।

गंगादिसर्वतीर्थेषु स्नानपुण्यमवाप्नुयात् ।। ।। १९ ।।

धनुष्कौटौ नरः कुर्यात्स्नानं पंचदिनेषु यः ।।

अश्वमेधादिपुण्यं च प्राप्नुयाद्ब्राह्मणोत्तमाः ।। 3.1.52.२० ।।

चांद्रायणादिकृच्छ्राणामनुष्ठानफलं लभेत् ।।

चतुर्णामपि वेदानां पारायणफलं तथा ।। २१ ।।

माघमासे दशाहःसु धनुष्कोटौ निमज्जनात् ।।

ब्रह्महत्यायुतं नश्येन्नात्र कार्या विचारणा ।। २२ ।।

माघमासे धनुष्कोटौ दशपंचदिनानि यः ।।

स्नानं करोति मनुजः स वैकुंठमवाप्नुयात् ।। २३ ।।

माघमासे रामसैतौ स्नानं विंशद्दि नं चरन् ।।

शिवसामीप्यमाप्नोति शिवेन सह मोदते ।। २४ ।।

पंचविंशद्दिनं स्नानं कुर्वन्सारूप्यमाप्नुयात् ।।

स्नानं त्रिंशद्दिनं कुर्वन्सायुज्यं लभते ध्रुवम् ।। २५ ।।

अतोऽवश्यं रामसेतौ माघमासे द्विजोत्तमाः ।।

स्नानं समाचरेद्विद्वान्किंचिदभ्युदिते रवौ ।। २६ ।।

चंद्रसूर्योपरागे च तथैवार्द्धोदये द्विजाः ।।

महोदये रामसेतौ स्नानं कुर्वन्द्विजोत्तमाः ।। २७ ।।

अनेकक्लेशसंयुक्तं गर्भवासं न पश्यति।।

ब्रह्महत्यादिपापानां नाशकं च प्रकीर्तितम् ।। ।। २८ ।।

सर्वेषां नरकाणां च बाधकं परिकीर्तितम् ।।

संपदामपि सर्वासां निदानं परिकीर्तितम् ।। २९ ।।

इन्द्रादिसर्वलोकानां सालोक्यादिप्रदं तथा ।।

चंद्रसूर्योपरागे च तथैवार्द्धोदये द्विजाः ।। 3.1.52.३० ।।

महोदये धनुष्कोटौ मज्जनं त्वतिनिश्चितम् ।।

रावणस्य विनाशार्थं पुरा रामेण निर्मि तम् ।। ३१ ।।

सिद्धचारणगंधर्वकिन्नरोरगसेवितम् ।।

ब्रह्मदेवर्षिराजर्षिपितृसंघनिषेवितम् ।। ३२ ।।

ब्रह्मादिदेवतावृंदैस्सेवितं भक्तिपूर्वकम् ।।

पुण्यं यो रामसेतुं वै संस्मरन्पुरुषो द्विजाः ।। ३३ ।।

स्नायाच्च यत्र कुत्रापि तटाकादौ जलाशये ।।

न तस्य दुष्कृतं किंचिद्भविष्यति कदाचन ।। ३४ ।।

सेतुमध्यस्थतीर्थेषु मुष्टिमात्रप्रदानतः ।।

नश्यंति सकला रोगा भ्रूणहत्यादयस्तथा ।। ३५ ।।

रामेण धनुषः पुण्यां यो रेखां पश्यते कृताम् ।।

न तस्य पुनरावृत्तिर्वैकुंठात्स्यात्कदाचन ।। ३६ ।।

धनुष्कोटिरिति ख्याता या लोके पापनाशिनी ।।

विभीषणप्रार्थनया कृता रामेण धीमता ।। ।। ३७ ।।

धनुष्कोटिर्महापुण्या तस्यां स्नात्वा सभक्तिकम् ।।

दद्याद्दानानि वित्तानां क्षेत्राणां च गवां तथा ।।३८।।

तिलानां तंडुलानां च धान्यानां पयसां तथा ।।

वस्त्राणां भूषणानां च माषाणामोदनस्य च।।३९।।

दध्नां घृतानां वारीणां शाकानामप्युदश्वितम् ।।

शुद्धानां शर्कराणां च सस्यानां मधुनां तथा ।। 3.1.52.४० ।।

मोदकानामपूपानामन्येषां दानमेवच ।।

रामसेतौ द्विजाः प्रोक्तं सर्वाभीष्टप्रदायकम् ।। ४१ ।।

अतो दद्याद्रामसेतौ वित्तलोभ विवर्जितः ।।

दत्तं हुतं च तप्तं च जपश्च नियमादिकम् ।। ४२ ।।

श्रीरामधनुषः कोटावनंतफलदं भवेत् ।।

तेन वेदाश्च तुष्यंति तुष्यंति पितरस्तथा ।। ।। ४३ ।।

तुष्यंति मुनयः सर्वे ब्रह्माविष्णुः शिवस्तथा ।।

नागाः किंपुरुषा यक्षाः सर्वे तुष्यंति निश्चितम् ।।४४।।

स्वयं च पूतो भवति धनुष्कोट्यवलो कनात्।।

स्ववंशजान्नरान्सर्वान्पावयेच्च पितामहान् ।। ४५ ।।

तारयेच्च कुलं सर्वं धनुष्कोट्यवलोकनात् ।।

रामस्य धनुषः कोट्या कृतरेवावगाहनात् ।। ४६ ।।

पंचपातककोटीनां नाशः स्यात्तत्क्षणे ध्रुवम् ।।

श्रीरामधनुषः कोट्या रेखां यः पश्यते कृताम् ।। ४७ ।।

अनेकक्लेशसंपूर्णं गर्भवासं न पश्यति ।।

यत्र सीताऽनलं प्राप्ता तस्मिन्कुंडे निमज्जनात् ।। ४८ ।।

भ्रूणहत्याशतं विप्रा नश्यति क्षणमात्रतः ।।

यथा रामस्तथा सेतुर्यथा गंगा तथा हरिः ।। ४९ ।।

गंगे हरे रामसेतो त्विति संकीर्तयन्नरः ।।

यत्र क्वापि बहिः स्नायात्तेन याति परां गतिम् ।। 3.1.52.५० ।।

सेतावर्धोदये स्नात्वा गन्धमादनपर्वते ।।

पितॄनुद्दिश्य यः पिंडान्दद्यात्सर्षपमात्रकान् ।। ५१ ।।

पितरस्तृप्तिमायांति यावच्चंद्रदिवाकरौ ।।

शमीपत्रप्रमाणं तु पितॄनुद्दिश्य भक्तितः ।। ५२ ।।

द्विजेन पिण्डं दत्तं चेत्सर्वपापविमोचितः ।।

स्वर्गस्थो मुक्तिमायाति नरकस्थो दिवं व्रजेत् ।। ५३ ।।

सेतौ च पद्मनाभे च गोकर्णे पुरुषोत्तमे ।।

उदन्वदंभसि स्नानं सार्वकालिकमीप्सितम् ।। ५४ ।।

शुक्रांगारकसौरीणां वारेषु लवणांभसि ।।

संतानकामी न स्नाया त्सेतोरन्यत्र कर्हिचित् ।। ५५ ।।

अकृतप्रेतकार्यो वा गर्भिणीपतिरेव वा ।।

न स्नायादुदधौ विद्वान्सेतोरन्यत्र कर्हिचित् ।। ५६ ।।

न कालापेक्षणं सेतोर्नित्यस्नानं प्रशस्यते ।।

वारतिथ्यृक्षनियमाः सेतोरन्यत्र हि द्विजाः ।। ५७ ।।

उद्दिश्य जीवतः स्नायान्न तु स्नायान्मृतान्प्रति ।।

कुशैः प्रतिकृतिं कृत्वा स्नापयेत्तीर्थवारिभिः ।। ५८ ।।

इमं मंत्रं समुच्चार्य प्रसन्नेंद्रियमानसः ।।

कुशोऽसि त्वं पवित्रोऽसि विष्णुना विधृतः पुरा ।। ५९ ।।

त्वयि स्नाते स च स्नातो यस्यैतद्ग्रंधिवन्धनम् ।।

सर्वत्र सागरः पुण्यः सदा पर्वणि पर्वणि ।। 3.1.52.६० ।।

सेतौ सिन्ध्वब्धिसंयोगे गंगासागर संगमे ।।

नित्यस्नानं हि निर्दिष्टं गोकर्णे पुरुषोत्तमे ।। ६१ ।।

नापर्वणि सरिन्नाथं स्पृशेदन्यत्र कर्हिचित् ।।

पितॄणां सर्वदेवानां मुनीनामपि शृण्वताम् ।। ६२ ।।

प्रतिज्ञामकरोद्रामः सीतालक्ष्मणसंयुतः ।।

मया ह्यत्र कृते सेतौ स्नानं कुर्वंति ये नराः ।। ६३ ।।

मत्प्रसादेन ते सर्वे यास्यंति पुनर्भवम् ।।

नश्यंति सर्वपापानि मत्सेतोरवलोकनात् ।। ६४ ।।

रामनाथस्य माहात्म्यं मत्सेतोरपि वैभवम् ।।

नाहं वर्णयितुं शक्तो वर्षकोटिशतैरपि ।। ६५ ।।

इति रामस्य वचनं श्रुत्वा देवमहर्षयः ।।

साधुसाध्विति संतुष्टाः प्रशशंसुश्च तद्वचः ।। ६६ ।।

सेतुमध्ये चतुर्वक्त्रः सर्वदेवसमन्वितः ।।

अध्यास्ते तस्य रक्षार्थमीश्वरस्याज्ञया सदा ।। ६७ ।।

रक्षार्थं रामसेतौ हि सेतुमाधवसंज्ञया ।।

महाविष्णुः समध्यास्ते निबद्धो निगडेन वै ।। ६८ ।।

महर्षयश्च पितरो धर्मशास्त्रप्रवर्तकाः ।।

देवाश्च सहगन्धर्वाः सकिन्नरमहोरगाः ।। ६९ ।।

विद्याधराश्चारणाश्च यक्षाः किंपुरुषास्तथा ।।

अन्यानि सर्वभूतानि वसंत्यस्मिन्नहर्निशम् ।। 3.1.52.७० ।।

सोऽहं दृष्टः श्रुतो वापि स्मृतः स्पृष्टोऽवगाहितः ।।

सर्वस्माद्दुरिता त्पाति रामसेतुर्द्विजोत्तमाः ।। ७१ ।।

सेतावर्धोदये स्नानमानंदप्राप्तिकारणम् ।।

मुक्तिप्रदं महापुण्यं महानरकनाशनम् ।। ७२ ।।

पौषे मासे विष्णुभस्थे दिनेशे भानोर्वारे किंचिदुद्यद्दिनेशे ।।

युक्ताऽमा चेन्नागहीना तु पाते विष्णोर्ऋक्षे पुण्यमर्धोदयं स्यात् ।। ७३ ।।

तस्मिन्नर्धोदये सेतौ स्नानं सायुज्यकारणम्।।

व्यतीपातसहस्रेण दर्शमेकं समं स्मृतम् ।। ७४ ।।

दर्शायुतसमं पुण्यं भानुवारो भवेद्यदि ।।

श्रवणर्क्षं यदि भवे द्भानुवारेण संयुतम् ।। ७५ ।।

पुण्यमेव तु विज्ञेयमन्योन्यस्यैव योगतः ।।

एकैकमप्यमृतदं स्नानदानजपार्चनात् ।। ७६ ।।

पंचस्वपि च युक्तेषु किमु वक्तव्यमत्र हि ।।

श्रवणं ज्योतिषां श्रेष्ठममा श्रेष्ठा तिथिष्वपि ।। ७७ ।।

व्यतीपात तु योगानां वारं वारेषु वै रवेः ।।

चतुर्णामपि यो योगो मकरस्थे रवौ भवेत्।। ७८ ।।

तस्मिन्काले रामसेतौ यदि स्नायात्तु मानवः ।।

गर्भं न मातुराप्नोति किन्तु सायुज्यमाप्नुयात् ।। ७९ ।।

अर्धोदयसमः कालो न भूतो न भविष्यति ।।

एवं महोदयः कालो धर्मकालः प्रकीर्तितः ।। 3.1.52.८० ।।

एतेषु पुण्यकालेषु सेतौ दानं प्रकीर्तितम् ।।

आचारश्च तपो वेदो वेदांतश्रवणं तथा ।। ८१ ।।

शिवविष्ण्वादिपूजापि पुराणार्थप्रवक्तृता ।।

यस्मिन्विप्रे तु विद्यंते दानपात्रं तदुच्यते ।। ८२ ।।

पात्राय तस्मै दानानि सेतौ दद्याद्द्विजातये ।।

यदि पात्रं न लभ्येत सेतावाचारसंयुतम् ।। ८३ ।।

संकल्प्योद्दिश्य सत्पात्रं प्रदद्याद्ग्राममागतः ।।

अतो नाधमपात्राय दातव्यं फलकांक्षिभिः ।।

उत्तमं सेतुमाहात्म्यं वक्तुर्देयं न चान्यतः ।। ८४ ।।

अत्रेतिहासं वक्ष्यामि वसिष्ठोक्तमनुत्तमम् ।।

दिलीपाय महाराज्ञे दानपात्रवि वित्सवे ।। ८५ ।।

।। दिलीप उवाच ।। ।।

दानानि कस्मै देयानि ब्रह्मपुत्र पुरोहित ।।

एतन्मे तत्त्वतो ब्रूहि त्वच्छिष्यस्य महामुने ।। ८६ ।। ।।

।। वसिष्ठ उवाच ।। ।।

पात्राणामुत्तमं पात्रं वेदाचारपरायणम् ।।

तस्मादप्यधिकं पात्रं शूद्रान्नं यस्य नोदरे ।। ८७ ।।

वेदाः पुराणमंत्राश्च शिवविष्ण्वादिपूजनम् ।।

वर्णाश्रमाद्यनुष्ठानं वर्तते यस्य संततम् ।। ८८ ।।

दरिद्रश्च कुटुंबी च तत्पात्रं श्रेष्ठमुच्यते ।।

तस्मिन्पात्रे प्रदत्तं वै धर्म कामार्थमोक्षदम् ।। ८९ ।।

पुण्यस्थले विशेषेण दानं सत्पात्रगर्हितम् ।।

अन्यथा दशजन्मानि कृकलासो भविष्यति ।। 3.1.52.९० ।।

जन्मत्रयं रासभः स्यान्मंडूकश्च द्विजन्मनि ।।

एकजन्मनि चाण्डालस्ततः शूद्रो भविष्यति ।। ९१ ।।

ततश्च क्षत्रियो वैश्यः क्रमाद्विप्रश्च जायते ।।

दरिद्रश्च भवेत्तत्र बहुरोगसमन्वितः ।। ९२ ।।

एवं बहुविधा दोषा दुष्टपात्रप्रदानतः ।।

तस्मात्सर्वप्रयत्नेन सत्पात्रेषु प्रदापयेत् ।। ९३ ।।

न लभ्यते चेत्तत्पात्रं तदा संकल्पपूर्वकम् ।।

एकं सत्पात्रमुद्दिश्य प्रक्षिपेदुदकं भुवि ।। ९४ ।।

उद्दिष्टपात्रस्य मृतौ तत्पुत्राय समर्पयेत् ।।

तस्यापि मरणे प्राप्ते महादेवे समर्प येत्।।

अतोनाधमपात्राय दद्यात्तीर्थे विशेषतः ।। ९५ ।।

।। श्रीसूत उवाच ।। ।।

एवमुक्तो वसिष्ठेन दिलीपः स द्विजोत्तमाः ।। ९६ ।।

तदा प्रभृति सत्पात्रे प्रायच्छद्दानमुत्तमम् ।।

अतः पुण्यस्थले सेतावत्रापि मुनिपुंगवाः ।। ९७ ।।

यदि लभ्येत सत्पात्रं तदा दद्याद्धनादिकम् ।।

नो चेत्संकल्पपूर्वं तु विशिष्टं पात्रमुत्तमम्।। ९८ ।।

समुद्दिश्य जलं भूमौ प्रक्षिपेद्भक्तिसंयुतः ।।

स्वग्राममागतः पश्चात्तस्मिन्पात्रे समर्पयेत् ।। ९९ ।।

पूर्वसंकल्पितं वित्तं धर्मलोपोऽन्यथा भवेत् ।।

न दुःखं पुनराप्नोति किं तु सायुज्यमाप्नुयात् ।। 3.1.52.१०० ।।

अर्धोदयसमः कालो न भूतो न भवि ष्यति ।।

कुम्भकोणं सेतुमूलं गोकर्णं नैमिषे तथा ।। १ ।।

अयोध्या दंडकारण्यं विरूपाक्षं च वेंकटम् ।।

शालिग्रामं प्रयागं च कांची द्वारावती तथा ।। २ ।।

मधुरा पद्मनाभं च काशी विश्वेश्वरालया ।।

नद्यः सर्वाः समुद्राश्च पर्वतं भास्करं स्मृतम् ।। ३ ।।

मुंडनं चोपवासश्च क्षेत्रेष्वेषु प्रकीर्तितम् ।।

लोभान्मोहादकृत्वा यः स्वगृहं याति मानवः ।। ४ ।।

सहैव यांति तद्गेहे पातकानि च तेन वै ।।

चतुर्विंशतितीर्थानि पर्वते गन्ध मादने ।। ५ ।।

तत्र लक्ष्मणतीर्थे तु वपनं मुनिभिः स्मृतम् ।।

तीरे लक्ष्मणतीर्थस्य लोमवर्ज्यं शिवाज्ञया ।। ६ ।।

शिरोमात्रस्य वपनं कृत्वा दत्त्वा च दक्षिणाम् ।।

स्नात्वा लक्ष्मणतीर्थे च दृष्ट्वा लक्ष्मणशंकरम् ।। ७ ।।

सर्वपापविनिर्मुक्तः शंकरं याति मानवः ।।

अर्धोदये सदा स्नानं सेतावेवं समाचरेत् ।। ८ ।।

नास्ति सेतुसमं तीर्थं नास्ति सेतुसमं तपः ।।

नास्ति सेतुसमं पुण्यं नास्ति सेतुसमा गतिः ।। ९ ।।

उपरागसहस्रेण सममर्धोददयं स्मृतम् ।।

अर्धोदयसमः कालो नास्ति संसारमोचकः ।। 3.1.52.११० ।।

तस्मिन्नर्धोदये रामसेतौ स्नानं तु यद्भवेत् ।।

न तत्तुल्यं भवेत्पुण्यं सर्वशास्त्रेषु सर्वदा ।। ११ ।।

षष्टिवर्षसहस्राणि भागीरथ्यवगाहनात् ।।

यत्पुण्यमृषिनिर्दिष्टं तत्पुण्यं मुनिपुंगवाः ।। १२ ।।

एकवारं रामसेतौ स्नानात्सिध्यति निश्चितम् ।।

अर्द्धोदये विशेषेण तथैव च महोदये ।। १३ ।।

मकरस्थे रवौ माघे प्रयागे पापमोचने ।।

माघस्नानसहस्रेण यत्पुण्यं लभते नरः ।। १४ ।।

तस्मिन्नर्धोदये विप्रा रामसेतौ निमज्जनात् ।।

एकवारेण तत्पुण्यं लभते नात्र संशयः ।। १५ ।।

त्रैलोक्यस्थेषु तीर्थेषु स्नातानां यत्फलं भवेत् ।।

सकृदर्द्धोदये सेतौ स्नात्वा तत्पुण्यभाग्भवेत् ।। १६ ।।

ब्रह्मज्ञानविहीनानां कृतघ्नानां दुरा त्मनाम् ।।

पापिनामितरेषां च महापातकिनां तथा ।। १७ ।।

सेतावर्द्धोदये स्नानाद्विशुद्धिरिति निश्चिता ।।

स्थलांतरे कृतघ्नानां निष्कृतिर्नास्ति कर्हिचित् ।। १८ ।।

सेतावर्धोदये स्नानात्तेषामपि हि निष्कृतिः ।।

सेतावर्द्धोदये स्नानं ये न कुर्वंति मोहतः ।। १९ ।।

संसारेषु निमज्जंति ते यथांधाः पतंत्यधः ।।

सेतावर्धोदये स्नात्वा भित्त्वा भास्करमण्डलम् ।। 3.1.52.१२० ।।

ब्रह्मलोकं प्रयास्यंति नात्र कार्या विचारणा ।।

अर्द्धोदये तु संप्राप्ते स्नात्वा सेतौ विमुक्तिदे ।। २१ ।।

स्नात्वा सम्यग्जगन्नाथं राघवं सीतया सह ।।

रामेश्वरं महादेवं सुग्रीवादिमुखान्कपीन् ।। २२ ।।

ध्यात्वा देवानृषींश्चापि तथा पितृगणानपि ।।

तर्पयेदपि तान्सर्वान्स्वदारिद्र्यविमुक्तये ।। २३ ।।

अर्द्धोदयाख्यममलं जगन्नाथं समर्चयेत् ।।

सेतावर्द्धोदये काले तेन प्रीणाति केशवः ।। २४ ।।

दिवाकर नमस्तेऽस्तु तेजोराशे जगत्पते ।।

अत्रिगोत्रसमुत्पन्न लक्ष्मी देव्याः सहोदर ।। २५ ।।

अर्घं गृहाण भगवन्सुधाकुम्भ नमोस्तु ते ।।

व्यतीपातमहायोगिन्महापातकनाशन ।। २६ ।।

सहस्रबाहो सर्वात्म न्गृहाणार्घ्यं नमोऽस्तु ते ।।

तिथिनक्षत्रवाराणामधीश परमेश्वर ।। २७।।

मासरूप गृहणार्घ्यं कालरूप नमोऽस्तु ते ।।

इति दत्त्वा पृथङ्मंत्रैरर्घ्यमर्द्धोदये नरः ।। २८ ।।

उपायनानि विप्रेभ्यो दद्याद्वित्तानुसारतः ।।

चतुर्दश द्वादशाष्टौ सप्त षट् पंच वा द्विजान् ।। २९ ।।

यथाशक्त्यन्नपानाद्यैः पृथङ्मंत्रैः समर्चयेत् ।।

कांस्यपात्रं समादाय नूतनं दारवं तु वा ।। 3.1.52.१३० ।।

विप्राणां पुरतः स्थाप्य पयसा परिपूरितम् ।।

सफलं सगुडं साज्यं सतांबूलं सदक्षिणम् ।। ३१ ।।

दद्याद्यज्ञोपवीतं च गां सवत्सां पयस्विनीम् ।।

अलंकृतेभ्यो विप्रेभ्यो यथाशक्ति वदेदिदम् ।। ३२ ।।

श्रवणर्क्षे जग न्नाथ जन्मर्क्षे तव केशव ।।

यन्मया दत्तमर्थिभ्यस्तदक्षयमिहास्तु मे ।। ३३ ।।

नक्षत्राणामधिपते देवानाममृतप्रद ।।

त्राहि मां रौहिणीकांत कला शेषनमोऽस्तु ते ।। ३४ ।।

दीननाथ जगन्नाथ कलानाथ कृपाकर ।।

त्वत्पादपद्मयुगलभक्तिरस्त्वचला मम ।। ३५ ।।

व्यतीपात नमस्तेऽस्तु सोम सूर्योग्निसंनिभ ।।

यद्दानादिकृतं किंचित्तदक्षयमिहास्तु ते ।। ३६ ।।

अर्थिनां कल्पवृक्षोऽसि वासुदेव जनार्दन ।।

मासर्त्वयनकालेश पापं शमय मे हरे ।। ३७ ।।

इत्यर्चयित्वा विप्रेंद्रास्ततः श्राद्धं समाचरेत् ।।

हिरण्यश्राद्धमामं वा पाकश्राद्धमथापि वा ।। ३८ ।।

पार्वणं च ततः कुर्याद्वित्त शाठयं न कारयेत् ।।

आचार्यं पूजयेत्पश्चाद्वस्त्रभूषणकुण्डलैः ।। ३९ ।।

प्रतिमामर्पयेत्तस्मै गां च छत्रमुपानहम् ।।

एवमर्द्धोदये सेतौ व्रतं कुर्याद्द्वि जोत्तमाः ।। 3.1.52.१४० ।।

तेनैव कृतकृत्यः स्यात्कर्तव्यं नास्ति किंचन ।।

स्थलांतरेऽप्येवमेतद्व्रतमर्धोदये चरेत् ।। ४१ ।।

सेतुः समुद्रे रामेण निर्मितो गन्धमादने ।।

सेतुः सेतुरिति प्राज्ञास्तस्य नात्र प्रकीर्तनात् ।। ४२ ।।

स्नानकाले मनुष्याणां पातकानां तु कोटयः ।।

तत्क्षणादेव नश्यंति यास्यंत्यप्यत्युतं पदम् ।। ४३ ।।

निमिषं निमिषार्द्धं वा सेतौ तिष्ठति यो नरः ।।

तद्दृष्टिगोचरं गंतुं न शक्ता यमकिंकराः ।। ४४ ।।

रामसेतुं धनु ष्कोटिं रामं सीतां च लक्ष्मणम् ।।

रामनाथं हनूमंतं सुग्रीवादिमुखान्कपीन् ।। ४५ ।।

विभीषणं नारदं च विश्वामित्रं घटोद्भवम् ।।

वसिष्ठं वामदेवं च जाबालिमथ काश्यपम्।। ४६।।

रामभक्तास्तथा चान्यांश्चिंतयन्मनसा तदा ।।

सर्वदुःखाद्विमुच्येत प्रयाति परमं पदम् ।। ४७ ।।

सत्य क्षेत्रे हरिक्षेत्रे कृष्णक्षेत्रे च नैमिषे ।।

शालग्रामे बदर्य्यां च हस्तिशैले वृषाचले ।। ४८ ।।

शेषाद्रौ चित्रकूटे च लक्ष्मीक्षेत्रे कुरंगके ।।

कांचिके कुम्भकोणे च मोहिनीपुर एव च ।। ४९ ।।

ऐन्द्रे श्वेताचले पुण्ये पद्मनाभे महास्थले ।।

फुल्लाख्ये घटिकाद्रौ च सारक्षेत्रे हरि स्थले ।।। 3.1.52.१५० ।।

श्रीनिवासे महाक्षेत्रे भक्तनाथमहास्थले ।।

अलिंदाख्ये महाक्षेत्रे शुकक्षेत्रे च वारुणे ।। ५१ ।।

मधुरायां हरिक्षेत्रे श्रीगोष्ठ्यां पुरुषोत्तमे ।।

श्रीरंगे पुण्डरीकाक्षे तथान्यत्र हरिस्थले ।। ५२ ।।

स्नानेन यानि पापानि विनश्यन्ति द्विजोत्तमाः ।।

तानि सर्वाणि नश्यंति सेतुस्नानेन निश्चितम् ।। ५३ ।।

रघुनाथकृते सेतौ महामुनिनिषेविते ।।

न स्नांति ये नरास्तेषां न संसारनिवर्तनम् ।।। ।। ५४ ।।

ये वा नमः शिवायेति मन्त्रं पञ्चाक्षरं शुभम् ।।

न वदन्ति न शृण्वन्ति न स्मरन्ति मुनीश्वराः ।। ५५ ।।

नमो नाराय णायेति प्रणवेन समन्वितम् ।।

मंत्रमष्टाक्षरं वापि न जपंति स्मरंति वा ।। ५६ ।।

एवं श्रीरामचंद्रस्य षडक्षरमनु तथा ।।

न जपंति न शृण्वंति न स्मरंति च सत्तमाः ।। ५७ ।।

तेषां पापानि नश्यंति रामसेतौ निमज्जनात् ।।

उपोषणं न कुर्वंति ये वा हरिदिने शुभे ।। ५८ ।।

न धारयंति ये भस्म त्रिपुंड्रोद्धूलनादिना ।।

जाबालोपनिषन्मंत्रैस्सप्तभिर्मस्तकादिके ।। ५९ ।।

शिवं वा केशवं वापि तथान्यानपि वै सुरान् ।1

न पूजयंति वेदोक्त मार्गेण द्विजपुंगवाः ।। 3.1.52.१६० ।।

तेषां पापानि नश्यंति रामसेतौ निम्जनात् ।।

शिवविष्ण्वादिदेवेभ्यो धूपं दीपं च चंदनम् ।। ६१ ।।

पुष्पाणि न प्र यच्छंति भक्तिपूर्वं द्विजोत्तमाः ।।

शिवविष्ण्वादिदेवानां श्रीरुद्रैश्चमकैस्तथा ।। ६२ ।।

श्रीमत्पुरुषसूक्तेन पावमायादि सूक्तकैः ।।

त्रिमधु त्रिसुपर्णैश्च पंच शांत्यादिना तथा ।। ६३ ।।

नाभिषेकं प्रकुर्वंति ये नराः पापचेतसः ।।

तेषां पापानि नश्यंति धनुष्कोटौ निमज्जनात् ।। ६४ ।।
शिवविष्ण्वादि देवानां नमस्कारप्रदक्षिणे ।।
न प्रकुर्वंति भक्त्या ये पापोपहतबुद्धयः ।। ६५ ।।
धनुर्मासेऽप्युषःकाले न पूजां च प्रकुर्वते ।।
शिवविष्ण्वादिदेवानां महानैवेद्यपूर्वकम् ।। ६६ ।।
तेषां पापानि नश्यंति रामसेतौ निमज्जनात् ।।
कीर्तयंति न ये विष्णोर्नामानि तु हरस्य वा ।। ६७ ।।
शालिग्रामशिला चक्रं शिवनाभं च ये नराः ।।
न पूजयंति मोहेन द्वारकाचक्रमेव वा ।। ६८ ।।
गंगामृदं च तुलसीमृत्तिकां गोपिचंदनम् ।।
न धारयंति ये मूढा ललाटे चोरसि द्विजाः ।। ६९ ।।
दोर्द्वंद्वे च गले सम्यक्सर्वपापौघशांतये ।।
रुद्राक्षं तुलसीकाष्ठं यो न धारयते नरः ।।3.1.52.१७०।।
तस्य पापानि नश्यंति धनुष्कोटौ निमज्जनात् ।।
ब्राह्मे मुहूर्ते संप्राप्ते निद्रां त्यक्त्वा प्रसन्नधीः ।। ७१ ।।
हरिशंकरनामानि तत्स्तोत्राण्यथ वा द्विजाः ।।
यो हि चिंतयते नित्यं विशिष्टं मंत्रमेव वा ।। ७२ ।।
तस्य पापानि नश्यंति धनुष्कोटौ निमज्जनात्।।
प्रातर्जलाशये गत्वा स्नात्वाऽऽचम्य विशुद्धधीः ।। ७३ ।।
प्रसन्नात्मा मुनिश्रेष्ठाः संध्योपासनपूर्वकम् ।।
नोपास्ते च नरो यस्तु गायत्रीं वेदमातरम् ।। ७४ ।।
नौपासनं वा कुर्वंति सायंप्रातरतंद्रिताः ।।
माध्याह्निकं न कुर्वंति ये वा पापहताशयाः ।। ७५ ।।
ब्रह्मयज्ञं वैश्वदेवं मध्याह्नेऽतिथिपूजनम् ।।
नाचरंति च सायं ये पूजामतिथिसंमताम् ।। ७६ ।।
तेषां पापानि नश्यंति धनुष्कोटौ निमज्जनात् ।।
भिक्षां यतीनां मध्याह्ने न प्रयच्छंति ये नराः ।। ७७ ।।
येऽप्यधीतां त्रयीं विप्रा विस्मरंति कुबुद्धयः ।।

नाधीयते त्रयीं वापि वेदांगानि तथा पुनः ।। ७८ ।।

प्रत्याब्दिकं मातृपित्रोः श्राद्धं ये नाचरंति वै ।।

श्राद्धं महालयं नित्यमष्टकाश्राद्ध मेव वा ।। ७९ ।।

अन्यन्नैमित्तिकं श्राद्धं ये न कुर्वंति लोभतः ।।

ये चैत्रे तु पौर्णमास्यां चित्रगुप्तस्य तुष्टये ।। 3.1.52.१८० ।।

पानकं कदलीपक्वं पायसान्नं सशर्करम् ।।

सगुडं साम्रफलकं पनसादिफलैर्युतम् ।। ८१ ।।

तांबूलं पादुके छत्रं वस्त्रपुष्पाणि चंदनम् ।।

विप्रेभ्यो न प्रयच्छंति लोभोपहतबुद्धयः।। ।। ८२ ।।

तेषां पापानि नश्यंति धनुष्कोटौ निमज्जनात् ।।

दुर्वृत्तो वा सुवृत्तो वा यो धनुष्कोटिसेवकः ।।८३ ।।

तस्य संसारविच्छित्तिः पुन र्जन्म विना भवेत् ।।

संसारसागरं तर्तुं य इच्छेन्मुनिपुंगवाः ।। ८४ ।।

रामचन्द्रधनुष्कोटिं स गच्छेदविलंबितम् ।।

सत्यं वच्मि हितं वच्मि सारं वच्मि हितं पुनः ।। ८५ ।।

रामचन्द्रधनुष्कोटिं गच्छध्वं मुक्तिसिद्धये ।।

रामचन्द्रधनुष्कोटौ कुर्यात्स्नानं विमुक्तये ।। ८६ ।।

नास्त्युपायांतरं विप्रा भूयोभूयो वदाम्यहम् ।।

रामचंद्रधनुष्कोटौ स्नानं कुर्वंति ये नराः ।। ८७ ।।

तेषामयत्नतः सिध्येत्संसारभय नाशनम् ।।

सत्यं ज्ञानमनंतं यत्पूर्णं ब्रह्म सनातनम् ।। ८८ ।।

तत्प्राप्तिः स्याद्धनुष्कोटौ मज्जनान्नात्र संशयः ।।

।। श्रीसूत उवाच ।। ।।

एवं वः कथितं विप्राः सेतुमाहात्म्यमुत्तमम् ।। ८९ ।।

महादुःखप्रशमनं महारोगनिबर्हणम् ।।

दुःस्वप्ननाशनं पुण्यमपमृ त्युनिवारणम् ]। 3.1.52.१९० ।।

महाशांतिकरं पुंसां पठतां शृण्वतामपि ।।

स्वर्गापवर्गदं पुण्यं सर्वतीर्थफलप्रदम् ।। ९१ ।।

कीर्तयेद्य इदं पुण्यं शृणु याद्वा समाहितः ।।
सोऽग्निष्टोमादियज्ञानां फलमाप्नोति पुष्कलम् ।। ९२ ।।
चतुर्णां सांगवेदानां शतावृत्या तु यत्फलम् ।।
तत्फलं समवाप्नोति ह्येतन्माहात्म्यकीर्तनात् ।। ९३ ।।
अत्रैकाध्यायपठनाच्छ्रवणाद्वा मुनीश्वराः ।।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ।। ९४ ।।
अध्यायद्वयपाठेन श्रवणेन तथैव च ।।
गोमेधाख्यस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ।। ९५ ।।
दशाध्यायान्पठेद्यस्तु शृणुयाद्वा सभक्तिकम् ।।
स्वर्गलोकमवाप्नोति शक्रेण सह मोदते ।। ९६ ।।
विंशत्यध्यायपठनाच्छ्रवणाच्च मुनीश्वराः ।।
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ।। ९७ ।।
त्रिंशदध्यायपठनाच्छ्रवणाच्च मुनीश्वराः ।।
विष्णुलोकमवाप्नोति विष्णुना सह मोदते ।। ९८ ।।
चत्वारिंशत्तमाध्यायान्पठेद्वा शृषुयादपि ।।
रुद्रलोकमवाप्नोति रुद्रेण सह मोदते ।। ९९ ।।
यः पंचाशत्तमाध्यायान्पठते शृणुतेऽपि वा ।।
स सांबं हरमाप्नोति शिवं चन्द्रार्धशेखरम् ।। 3.1.52.२०० ।।
यः पठेच्छ्रृणुयाच्चेदं कृत्स्नं माहात्म्यमुत्तमम् ।।
स सांबशिवसालोक्यमाप्नोत्येव न संशयः ।। १ ।।
यः पठेच्छ्रृणुयाच्चेदं द्विवारं मुनिसत्तमाः ।।
स याति शिवसामीप्यं विमानवरसंस्थितः ।। २ ।।
यस्त्रिवारं पठेदेतच्छृणुयाद्वा समाहितः ।।
शिवसारूप्यमाप्नोति शिवस्य प्रीतिमावहन् ।।३।।
चतुर्वारं पठेद्यस्तु शृणुयाद्वेदमुत्तमम् ।।
स सायुज्यमवाप्नोति शिवस्य गिरिजापतेः ।। ४ ।।
दिनेदिने पठेन्मर्त्यः श्लोकं श्लोकार्धमेव वा ।।
पादं वा पादमात्रं वा अक्षरं वर्णमेव वा ।। ५ ।।

तत्तद्दिनकृतं पापं तत्क्षणादेव नश्यति ।।

कृत्स्नेऽस्मिन्सेतुमाहात्म्ये पठितेऽपि श्रुतेऽपि वा ।। ।। ६ ।।

श्लोकेष्वत्रैव वर्तंते वर्णा यावंत एव हि ।।

तावत्यो ब्रह्महत्याश्च तावन्मद्यनिषेवणम् ।। ७ ।।

तावत्सुवर्णस्तेयं च तावान्गुर्वंगनागमः ।।

तावत्संसर्गदोषाश्च नश्यंत्येवं हि तत्क्षणात् ।। ८ ।।

यावतोऽस्मिन्महापुण्ये वर्तंते वर्णराशयः ।।

तावत्कृत्वश्चतुर्विंशत्तीर्थेषु स्नानजं फलम् ।। ९ ।।

तथान्येष्वपि तीर्थेषु सेतुमध्यगतेषु वै ।।

तत्फलं समवाप्नोति पाठेन श्रवणेन वा ।। 3.1.52.२१० ।।

येनेदं लिखितं भक्त्या सेतुमाहात्म्यमुत्तमम् ।।

विनष्टाज्ञानसंतानः शिवसायुज्यमाप्नुयात् ।। ११ ।।

यस्येदं वर्तते गेहे माहात्म्यं लिखितं शुभम् ।।

भूतवेतालकादिभ्यो भीतिस्तत्र न विद्यते ।। १२ ।।

व्याधिपीडा न तत्रास्ति नास्ति चोरभयंतथा ।।

शन्यंगारकमुख्यानां ग्रहाणां नास्ति पीडनम् ।। १३ ।।

यद्गृहे वर्तते पुण्यमिदं माहा त्म्यमुत्तमम् ।।

रामसेतुं विजानीत तद्गृहं मुनिपुंगवाः ।। १४ ।।

चतुर्विंशति तीर्थानि तत्रैव निवसंति हि ।।

तत्रैव वर्तते पुण्यो गन्धमादनपर्वतः ।। ।। १५ ।।

ब्रह्मविष्णुमहेशाश्च वर्तंते तत्र सादरम् ।।

लिखित्वा सेतुमाहात्म्यं ब्राह्मणाय निवेदयेत् ।।

चतुःसागरपर्यंता तेन दत्ता वसुंधरा ।। १६ ।। ।।

।। सेतुमाहात्म्यदानमन्त्रः ।। ।।

सेतुमाहात्म्यदानस्य कला नार्हंति षोडशीम् ।।

दानान्यन्यानि सर्वाणि ह्यतः शान्तिं प्रयच्छ मे ।।

किं पुनर्बहु नोक्तेन वसत्यत्र जगत्त्रयम् ।। १७ ।।

श्रावयेच्छ्राद्धकाले यो ह्येकमध्यायमत्र वै ।।

नश्येच्छ्राद्धस्य वैकल्यं पितरोऽप्यतिहर्षिताः ।। १८ ।।

यः पर्वकाले संप्राप्ते ब्राह्मणाञ्छ्रावयेदिदम् ।।

अध्यायमेकं श्लोकं वा गावोस्य निरुपद्रवाः ।।

बहुक्षीरा सवत्साश्च महिष्योऽस्य भवंति हि ।। १९ ।।

पठनीयमिदं पुण्यं मठे देवालयेऽपि वा ।।

नदीतटाकतीरेषु पुण्ये वारण्यभूतले ।।

श्रोत्रियाणां गृहे वापि नैवान्यत्र तु कर्हिचित् ।। 3.1.52.२२० ।।

विषुवायन कालेषु पुण्ये च हरिवासरे ।।

अष्टम्यां च चतुर्दश्यां पठनीयं विशेषतः ।। २१ ।।

इदं हि पाठ्यं श्रावण्यां मासि भाद्रपदे तथा ।।

धनुर्मासे च पाठ्यं स्यात्पाठ्यं चैवोत्तरायणे ।। २२ ।।

नियमेनैव माहात्म्यं पठनीयमिदं द्विजाः ।।

श्रोतारो नियमैर्युक्ताः शृणुयुश्चेदमुत्तमम् ।। २३ ।।

कीर्त्यंते पुण्यतीर्थानि माहात्म्येऽस्मिन्बहूनि वै ।।

कीर्त्यंते पुण्यशीलाश्च तथा राजर्षिसत्तमाः ।। २४ ।।

ऋषयश्च महाभागाः कीर्त्यंतेऽस्मिन्ननुत्तमे ।।

धर्माधर्मौ च कीर्त्येते पुण्येस्मिन्द्विजपुंगवाः ।। २५ ।।

ब्रह्मा विष्णुश्च रुद्रश्च कीर्त्यंतेऽत्र त्रिमूर्तयः ।।

इदं पवित्रं पापघ्नं श्रुत्यर्थैरुपबृंहि तम् ।। २६ ।।

संमतं स्मृतिकर्तॄणां द्वैपायनमुनिप्रियम् ।।

श्रोतव्यं पठितव्यं च आत्मनः श्रेय इच्छता ।। २७ ।।

श्रावकाय च दातव्यं यत्किंचित्कांचनादिकम् ।।

स्वस्वशक्त्यनुरोधेन वित्तशाठ्यं न कारयेत् ।। २८ ।।

वस्त्रं हिरण्यं धान्यं वा भूमिं गां च यथाबलम् ।।

दत्त्वा संभावनीयोऽयं श्रावकः श्रोतृभिर्जनैः ।। २९ ।।

पूजिते श्रावके तस्मिन्पूजिताः स्युस्त्रिमूर्तयः ।।

जगत्त्रयं पूजितं स्यात्पूजितासु त्रिमूर्तिषु ।। 3.1.52.२३० ।।

अवतीर्णो महीं साक्षाद्रामो दाशरथिर्हरिः ।।

ससीतालक्ष्मणो नित्यं श्रोतृभ्यः श्रावकाय च ।। ३१ ।।

दत्वेह लोके भोगांश्च मुक्तिं चांते प्रयच्छति ।।

द्वैपायनमुखांभोजान्निःसृतं शुभदं परम् ।। ३२ ।।

इदं वै सेतुमाहात्म्यं धर्मराजो युधिष्ठिरः ।।

भीमसेनादिभिः सर्वैरनुजैरपि संवृतः ।। ३३ ।।

नियमाचारसंयुक्तः ससैन्यश्च दिनेदिने ।।

शृणोति पठतो धौम्यमहर्षेः स्वपुरोधसः ।। ३४ ।।

।। श्रीसूत उवाच ।। ।।

भोभो स्तपोधनाः सर्वे नैमिषारण्यवासिनः ।।

मत्सकाशादिदं गुह्यं माहात्म्यं श्रुतिसंमितम् ।। ३५ ।।

श्रुतं भवद्भिर्नियतैर्नित्यं पठत सादरम् ।।

पाठयध्वं स्वशिष्येभ्यो नियतेभ्यो निरन्तरम् ।। ३६ ।।

इत्युक्त्वा तान्मुनीन्सूतो रोमांचितकलेवरः ।।

गुरुं हृदा स्मरन्व्यासं ननर्ताश्रूणि वर्तयन् ।। ३७ ।।

अत्रांतरे महाविद्वान्पाराशर्यो महामुनिः ।।

आशु प्रादुरभूत्तत्र शिष्यानुग्रहकांक्षया ।। ३८ ।।

तमागतं विलोक्याथ मुनिं सत्यवतीसुतम् ।।

सूतः सर्वैश्च सहितो नैमिषारण्यवासिभिः ।। ३९ ।।

व्यासस्य चरणांभोजे दंडवत्प्रणिपत्य तु ।।

जलमानंदजं तत्र नेत्राभ्यांपर्यवर्तयत् ।। 3.1.52.२४० ।।

प्रणतं प्रियशिष्यं तं दोर्भ्यामुत्थाप्य वै मुनिः ।।

आशीर्भिरभिनंद्यैनमालिंग्य च मुहुर्मुहुः ।। ४१ ।।

नैमिषारण्यमुनिभिरानीते परमासने ।।

द्वैपायनो महातेजा निषसाद तपोधनः ।। ४२ ।।

मुनिष्वप्युपविष्टेषु सूतेऽपि च निजाज्ञया ।।

शौनकादीन्मुनीन्सर्वाञ्छक्तेः पौत्रोऽभ्यभाषत ।। ४३ ।।

मया ज्ञातमिदं सर्वं नैमिषारण्यवासिनः ।।

मम शिष्येण सूतेन सेतुमाहात्म्यमुत्तमम् ।।

कथितं भवतामद्य महापातकनाशनम् ।। ४४ ।।

श्रुतीनां च स्मृतीनां च पुराणानां तथैव च ।।

शास्त्राणां चेतिहासानामन्येषामपि कृत्स्नशः ।। ४५ ।।

एष पर्यवसन्नोऽर्थो माहात्म्यं यत्त्विदं महत् ।।

सर्वेष्वपि पुराणेषु इदं बहुमतं मम ।। ४६ ।।

शृणोति धर्मजो धौम्यादिदं नित्यं ममाज्ञया ।।

अतो भवंतोऽपि सदा सेतुमाहात्म्यमुत्तमम् ।। ४७ ।।

पठंतु शृण्वंतु तथा शिष्याणां पाठयंतु च ।।

तच्छ्रुत्वा वचनं तस्य ते प्राहुर्बाढमित्यपि ।। ४८ ।।

ततो व्यासोऽपि सूतेन शिष्येण च समन्वितः ।।

अनुज्ञाप्य मुनीन्त्सर्वान्कैलासं पर्वतं ययौ ।। ४९ ।।

ऋषयो नैमिषारण्यनिलयास्तुष्टिमागताः ।।

प्रत्यहं सेतुमाहात्म्यं शृण्वंति च पठंति च ।। ।। 3.1.52.२५० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये द्विपंचाशत्तमोऽध्यायः ।। ५२ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०१



॥ श्रीगणेशाय नमः॥॥।

तर्तुं संहृतिवारिधिं त्रिजगतां नौर्नाम यस्य प्रभोर्येनेदं सकलं विभाति सततं जातं स्थितं संसृतम्॥

यश्चैतन्यघनप्रमाण विधुरो वेदांतवेद्यो विभुस्तं वन्दे सहजप्रकाशममलं श्रीरामचन्द्रं परम् ( ॥१॥ )

दाराः पुत्रा धनं वा परिजनसहितो बंधुवर्गः प्रियो वा माता भ्राता पिता वा श्वशुरकुलजना भृत्यऐश्वर्य्यवित्ते॥

विद्या रूपं विमलभवनं यौवनं यौवतं वा सर्वे व्यर्थं मरणसमये धर्म एकः सहायः (॥२॥)

नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः॥

सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ १ ॥

एकदा सूतमायांतं दृष्ट्वा तं शौनकादयः ॥

परं हर्षं समाविष्टाः पपुर्नेत्रैः सुचेतसा॥

चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ॥ २॥

अथ तेषूपविष्टेषु तपस्विषु महात्मसु॥

निर्दिष्टमासनं भेजे विनयाल्लोमहर्षणिः ॥३॥

सुखासीनं च तं दृष्ट्वा विघ्नांतमुपलक्ष्य च ॥

अथापृच्छंस्त ऋषयः काश्चित्प्रास्ताविकीः कथाः ॥ ४ ॥

पुराणमखिलं तात पुरा तेऽधीतवान्पिता ॥

कच्चित्त्वयापि तत्सर्वमधीतं लोमहर्षणे॥ ५॥

कथयस्व कथां सूत पुण्यां पापनिषूदिनीम्॥

श्रुत्वा यां याति विलयं पापं जन्मशतोद्भवम् ॥ ६ ॥

॥ सूत उवाच ॥ ॥

श्रीभारत्यंघ्रियुगलं गणनाथपदद्वयम् ॥

सर्वेषां चैव देवानां नमस्कृत्य वदाम्यहम् ॥ ७॥

शक्तींश्चैव वसूंश्चैव ग्रहान्यज्ञादिदेवताः ॥

नमस्कृत्य शुभान्विप्रान्कविमुख्यांश्च सर्वशः ॥८॥

अभीष्टदेवताश्चैव प्रणम्य गुरुसत्तमम् ॥

नमस्कृत्य शुभान्देवान्नामादींश्च विशेषतः ॥९॥|

यान्स्मृत्वा विविधैः पापैर्मुच्यते नात्र संशयः ॥

तेषां प्रसादाद्वक्ष्येऽहं तीर्थानां फलमुत्तमम् ॥

सर्वेषां च नियंतारं धर्मात्मानं प्रणम्य च ॥ 3.2.1.१० ॥

धर्म्मारण्यपतिस्त्रिविष्टपपतिर्नित्यं भवानीपतिः पापाद्वः स्थिरभोगयोगसुलभो देवः स धर्मेश्वरः ॥

सर्वेषां हृदयानि जीवकलया व्याप्य स्थितः सर्वदा ध्यात्वा यं न पुनर्विशंति मनुजाः संसारकारागृहम्॥ ११ ॥

॥ सूत उवाच ॥ ॥

एकदा तु स धर्म्मो वै जगाम ब्रह्मसंसदि ॥

तां सभां स समालोक्य ज्ञाननिष्ठोऽभवत्तदा॥ १२ ॥

देवैर्मुनिवरैः क्रांतां सभामालोक्य विस्मितः ॥

देवैर्यक्षैस्तथा नागैः पन्नगैश्च तथाऽसुरैः। ॥ १३॥

ऋषिभिः सिद्धगंधर्वैः समाक्रांतोचितासना ॥

ससुखा सा सभा ब्रह्मन्न शीता न च घर्म्मदा ॥ १४॥

न क्षुधं न पिपासां च न ग्लानिं प्राप्नुवन्त्युत॥

नानारूपैरिव कृता मणिभिः सा सभा वरैः ॥ १९ ॥

स्तंभैश्च विधृता सा तु शाश्वती न च सक्षया ॥

दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभा ॥ १६ ॥

अति चन्द्रं च सूर्य्यं च शिखिनं च स्वयंप्रभा ॥

दीप्यते नाकपृष्ठस्था भर्त्सयंतीव भास्करम् ॥ १७ ॥

तस्याँ स भगवाञ्छास्ति विविधान्देवमानुषान् ॥

स्वयमेकोऽनिशं ब्रह्मा सर्वलोकपितामहः ॥ १८ ॥

उपतिष्ठंति चाप्येनं प्रजानां पतयः प्रभुम्॥

दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः ॥ १९ ॥

भृगुरत्रिर्वसिष्ठश्च गौतमोऽथ तथांगिराः ॥

पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्द्दमस्तथा ॥ 3.2.1.२० ॥

अथर्वांगिरसश्चैव वालखिल्या मरीचिपाः ॥

मनोंऽतरिक्षं विद्याश्च वायुस्तेजो जलं मही ॥ २१ ॥

शब्दस्पर्शौ तथा रूपं रसो गंधस्तथैव च ॥

प्रकृतिश्च विकारश्च सदसत्कारणं तथा ॥ २२ ॥

अगस्त्यश्च महातेजा मार्कंडेयश्च वीर्यवान् ॥

जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा ॥ २३ ॥

दुर्वासाश्च महाभाग ऋष्यश्रृंगश्च धार्मिकः।

सनत्कुमारो भगवान्योगाचार्य्यो महातपाः ॥ २४॥

असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्॥

आयुर्वेदस्तथाष्टांगो गान्धर्वश्चैव तत्र हि ॥ २९ ॥

चंद्रमाः सह् नक्षत्रैरादित्यश्च गभस्तिमान् ॥

वायवस्तंतवश्चैव संकल्पः प्राण एव च ॥ २६ ॥

मूर्तिमंतो महात्मानो महाव्रतपरायणाः ॥

एते चान्ये च बहवो ब्रह्माणं समुपासिरे ॥२७॥

अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तमो दमः ॥

आयांति तस्यां सहिता गंधर्वाप्सरसां गणाः ॥ २८॥

शुक्राद्याश्च ग्रहाश्चैव ये चान्ये तत्समीपगाः ॥

मंत्रा रथंतरं चैव हरिमान्वसुमानपि ॥२९॥

महितो विश्वकर्मा च वसवश्चैव सर्वशः ॥

तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥ 3.2.1.३० ॥

ऋग्वेदः सामवेदश्च यजुर्वेदस्तथैव च ॥

अथर्ववेदश्च तथा सर्वशास्त्राणि चैव ह ॥ ३१ ॥

इतिहासोपवेदाश्च वेदांगानि च सर्वशः॥

मेधा धृतिः स्मृतिश्चैव प्रज्ञा बुद्धिर्यशः समाः॥ ३२ ॥

कालचक्रं च तद्दिव्यं नित्यमक्षयमव्ययम् ॥

यावन्त्यो देवपत्न्यश्च सर्वा एव मनोजवाः ॥३३॥

गार्हपत्या नाकचराः पितरो लोकविश्रुताः ॥

सोमपा एकशृंगाश्च तथा सर्वे तपस्विनः॥ ३१ ।

नागाः सुपर्णाः पशवः पितामहमुपासते ।

स्थावरा जंगमाश्चापि महाभूतास्तथा परे ॥ ३९॥
पुरंदरश्च देवेंद्रो वरुणो धनदस्तथा॥
महादेवः सहोमोऽत्र सदा गच्छति सर्वदः ॥ ३६॥
गच्छंति सर्वदा देवा नारायणस्तथर्षयः॥
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा।॥ ३७॥
यत्किंचित्रिषु लोकेषु दृश्यते स्थाणु जंगमम् ॥
तस्यां सहोपविष्टायां तत्र ज्ञात्वा स धर्मवित् ॥ ३८ ॥
देवैर्मुनिवरैः क्रांतां समालोक्यातिविस्मितः॥
हर्षेण महता युक्तो रोमांचिततनूरुहः ॥ ३९ ॥
तत्र धर्मो महातेजाः कथां पापप्रणाशिनीम् ॥
वाच्यमानां तु शुश्राव व्यासेनामिततेजसा ॥ 3.2.1.४० ॥
धर्मारण्यकथां दिव्यां तथैव सुमनोहराम् ॥
धर्मार्थकाममोक्षाणां फलदात्रीं तथैव च ॥ ४१ ।
पुत्रपौत्रप्रपौत्रादि फलदात्रीं तथैव च ॥
धारणाच्छ्रवणाच्चापि पठनाच्चावलोकनात् ॥४२॥
तां निशम्य सुविस्तीर्णां कथां ब्रह्मांडसंभवाम् ॥ प्र
मोदोत्फुल्लनयनो ब्रह्माणमनुमत्य च ॥ ४३ ॥
कृतकार्योपि धर्मात्मा गंतुकामस्तदाभवत् ॥
नमस्कृत्य तदा धर्मो ब्रह्माणं स पितामहम् ॥ ४४ ॥
अनुज्ञातस्तदा तेन गतोऽसौ यमशासनम् ॥
पितामहप्रसादाच्च श्रुत्वा पुण्यप्रदायिनीम् ॥ ४५ ॥
धर्मारण्यकथां दिव्यां पवित्रां पापनाशिनीम् ॥
स गतोऽनुचरैः सार्द्धं ततः संयमिनीं प्रति ॥ ४६॥
अमात्यानुचरैः सार्धं प्रविष्टः स्वपुरं यमः ॥
तत्रांतरे महातेजा नारदो मुनिपुंगवः॥ ४७॥
दुर्निरीक्ष्यः कृपायुक्तः समदर्शी तपोनिधिः ॥
तपसा दग्धदेहोपि विष्णुभक्तिपरायणः॥ ४८॥
सर्वगः सर्वविच्चैव नारदः सर्वदा शुचिः ॥

वेदाध्ययनशीलश्च त्वागत स्तत्र संसदि ॥४९॥

तं दृष्ट्वा सहसा धर्मो भार्यया सेवकैः सह ॥

संमुखो हर्षसंयुक्तो गच्छन्नेव स सत्वरः॥3.2.1.५०॥

अद्य मे सफलं जन्म अद्य मे सफलं कुलम्॥

अद्य मे सफलो धर्मस्त्वय्यायाते तपोधने ॥५१॥

अर्घ्यपाद्यादिविधिना पूजां कृत्वा विधानतः ॥

दंडवत्तं प्रणम्याथ विधिना चोपवेशितः ॥५२॥

आसने स्वे महादिव्ये रत्नकांचनभूषिते ॥

चित्रार्पिता सभा सर्वा दीपा निर्वातगा इव ॥५३॥

विधाय कुशलप्रश्नं स्वागतेनाभिनंद्य तम् ॥

प्रहर्षमतुलं लेभे धर्मारण्यकथां स्मरन् ॥ ५४ ॥

नारदं पूजयित्वा तु प्रहृष्टेनांतरात्मना ॥

हर्षितं तु यमं दृष्ट्वा नारदो विस्मिताननः ॥ ५५ ॥

चिंतयामास मनसा किमिदं हर्षितो हरिः ॥

अतिहर्षं च तं दृष्ट्वा यमराजस्वरूपिणम् ॥

आश्चर्यमनसं चैव नारदः पृष्टवांस्तदा ॥ ५६ ॥ ॥

॥ नारद उवाच ॥ ॥

किं दृष्टं भवताश्चर्य्यं किं वा लब्धं महत्पदम्॥

दुष्टस्त्वं दुष्टकर्मा च दुष्टात्मा क्रोधरूपधृक् ॥ ५७॥

पापिनां यमनं चैवमेतद्रूपं महत्तरम्॥

सौम्यरूपं कथं जातमेतन्मे संशयः प्रभो ॥ ५८॥

अद्य त्वं हर्षसंयुक्तो दृश्यसे केन हेतुना ॥

कथयस्व महाकाय हर्षस्यैव हि कारणम्॥ ५९॥

॥ धर्मराज उवाच ॥ ॥

श्रूयतां ब्रह्मपुत्रैतत्कथयामि न संशयः ॥

पुराहं ब्रह्मसदनं गतवानभिवंदितुम्॥ 3.2.1.६० ॥

तत्रासीनः सभामध्ये सर्वलोकैकपूजिते।॥

नानाकथाः श्रुतास्तत्र धर्म्मवर्गसमन्विताः ॥ ६१॥

कथाः पुण्या धर्मयुता रम्या व्यासमुखाच्छ्रुताः ॥
धर्मकामार्थसंयुक्ताः सर्वाघौघविनाशिनीः ॥ ६२ ॥
याः श्रुत्वा सर्वपापेभ्यो मुच्यंते ब्रह्महत्यया ।
तारयंति पितृगणाञ्छतमेकोत्तरं मुने ॥ ६३ ॥ ॥
॥ नारद उवाच ॥ ॥
कीदृशी तत्कथा मे तां प्रशंस भवता श्रुताम्॥
कथां यम महाबाहो श्रोतुकामोस्म्यहं च ताम् ॥ ६४ ॥ ॥
॥ यम उवाच ॥ ॥
एकदा ब्रह्मलोकेऽहं नमस्कर्तुं पितामहम् ॥
गतवानस्मि तं देशं कार्याकार्यविचारणे ॥ ६५॥
मया तत्राद्भुतं दृष्टं श्रुतं च मुनिसत्तम ॥
धर्म्मारण्यकथां दिव्यां कृष्णद्वैपायनेरिताम्॥ ६६॥
श्रुत्वा कथां महापुण्यां ब्रह्मन्ब्रह्मांडगां शुभाम् ॥
गुणपूर्णां सत्ययुक्तां तेन हर्षेण हर्षितः ॥ ६७॥
अन्यच्चैव मुनिश्रेष्ठ तवागमनकारणम्॥
शुभाय च सुखायैव क्षेमाय च जयाय हि ॥ ६८॥
आद्यास्मि कृतकृत्योऽहमद्याहं सुकृती मुने।
धर्मोनामाद्य जातोऽहं तव पद्युग्मदर्शनात् ॥ ६९ ।
पूज्योऽहं च कृतार्थोहं धन्योहं चाद्य नारद॥
युष्मत्पादप्रसादाच्च पूज्योऽहं भुवनत्रये ॥ 3.2.1.७० ॥
॥ सूत उवाच ॥ ॥
एवंविधैर्वचोभिश्च तोषितो मुनिसत्तमः।
पप्रच्छ परया भक्त्या धर्मारण्यकथां शुभाम् ॥ ७१ ॥ ॥
॥ नारद उवाच ॥ ॥
श्रुता व्यासमुखाद्धर्म्म धर्मारण्यकथा शुभा॥
तत्सर्वं हि कथय मे विस्तीर्णं च यथातथम् ॥ ७२ ॥
॥ यम उवाच।॥ ॥
व्यग्रोऽहं सततं ब्रह्मन्प्राणिनां सुखदुःखिनाम् ॥

तत्तत्कर्मानुसारेण गतिं दातुं सुखेतराम् ॥ ७३॥

तथापि साधुसंगो हि धर्मायैव प्रजायते ॥

इह लोके परत्रापि क्षेमाय च सुखाय च ॥ ७४ ॥

ब्रह्मणः सन्निधौ यञ्च श्रुतं व्यासमुखेरितम्॥

तत्सर्वं कथयिष्यामि मानुषाणां हिताय वै॥ ७९॥

॥ सूत उवाच ॥ ॥

यमेन कथितं सर्वं यच्छ्रुतं ब्रह्मसंसदि ॥

आदिमध्यावसानं च सर्वं नैवात्र संशयः ॥ ७६ ॥

कलिद्वापरयोर्मध्ये धर्मपुत्रं युधिष्ठिरम् ॥

गतोऽसौ नारदो मर्त्ये राज्यं धर्मसुतस्य वै ॥ ७७॥

आगतः श्रीहरेरंशो नारदः प्रत्यदृश्यत ॥

ज्वलिताग्निप्रतीकाशो बालार्कसदृशेक्षणः ॥ ७८ ॥

सव्यापवृत्तं विपुलं जटामंडलमुद्वहन् ॥

चंद्रांशुशुक्ले वसने वसानो रुक्मभूषणः ॥ ७९ ॥

वीणां गृहीत्वा महतीं कक्षासक्तां सखीमिव ॥

कृष्णाजिनोत्तरासंगो हेमयज्ञोपवीतवान्॥ 3.2.1.८०॥

दण्डी कमंडलुकरः साक्षाद्वह्निरिवापरः ॥

भेत्ता जगति गुह्यानां विग्रहाणां गुहोपमः ॥ ८१ ॥

महर्षिगणसंसिद्धो विद्वान्गांधर्ववेदवित्॥

वैरकेलिकलो विप्रो ब्राह्मः कलिरिवापरः ॥८२॥

देवगंधर्वलोकानामादिवक्ता सुनिग्रहः॥

गाता चतुर्णां वेदानामुद्गाता हरिसद्गुणान् ॥ ८३ ॥

स नारदोऽथ विप्रर्षिर्ब्रह्मलोकचरोऽव्ययः॥

आगतोऽथ पुरीं हर्षाद्धर्मराजेन पालिताम् ॥ ८४ ॥|

अथ तत्रोपविष्टेषु राजन्येषु महात्मसु ॥

महत्सु चोपविष्टेषु गंधर्वेषु च तत्र वै ॥ ८९॥

लोकाननुचरन्सर्वानागतः स महर्षिराट् ॥

नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥८६॥

तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ॥

सिंहासनात्समुत्थाय प्रययौ सन्मुखस्तदा॥८७॥

अभ्यवादयतं प्रीत्या विनयाव नतस्तदा ॥

तदर्हमासनं तस्मै संप्रदाय यथाविधि ॥८८॥

गां चैवं मधुपर्कं च संप्रदायार्धमेव च ॥

अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित्॥८९॥

तुतोष च यथावञ्च पूजां प्राप्य च धर्मवित् ॥

कुशली त्वं महाभाग तपसः कुशलं तव ॥ 3.2.1.९० ॥

न कश्चिद्बाधते दुष्टो दैत्यो हि स्वर्गभूपतिम् ॥

मुने कल्याणरूपस्त्वं नमस्कृतः सुरासुरैः ॥

सर्व्वगः सर्ववेत्ता च ब्रह्मपुत्र कृपानिधे ॥ ९१ ॥

॥ नारद उवाच ॥ ॥

सर्वतः कुशलं मेद्य प्रसादाद्ब्रह्मणः सदा ॥

कुशली त्वं महाभाग धर्मपुत्र युधिष्ठिर ॥ ९२ ॥

भ्रातृभिः सह राजेंद्र धर्मेषु रमते मनः ॥

दारैः पुत्रैश्च भृत्यैश्च कुशलैर्गजवाजिभिः ॥ ९३ ॥

औरसानिव पुत्रांश्च प्रजा धर्मेण धर्मज ॥

पालयसि किमाश्चर्यं त्वया धन्या हि सा प्रजा ॥ ९४ ॥

पालनात्पोषणान्नृणां धर्मो भवति वै ध्रुवम्॥

तत्तद्धर्मस्य भोक्ता त्वमित्येवं मनुरब्रवीत् ॥ ९९ ॥

॥ युधिष्ठिर उवाच ॥ ॥

कुशलं मम राष्ट्रं च भवतामंघ्रिस्पर्शनात्।।

दर्शनेन महाभाग जातोऽहं गतकिल्बिषः।।९६।।

धन्योऽहं कृतकृत्योऽहं सभाग्योऽहं धरातले।।

अद्याहं सुकृती जातो ह्मपुत्रे गृहागते ॥ ९७ ।

कुत आगमनं ब्रह्मन्नद्य ते मुनिसत्तम ॥

अनुग्रहार्थं साधूनां किं वा कार्येण केन च ॥ ९८ ॥

॥ नारद उवाच ॥

आगतोऽहं नृपश्रेष्ठ सकाशाच्छमनस्य च ॥

व्यासेनोक्तां ब्रह्मणोग्रे कथां पौराणिकीं शुभाम् ॥ ९९ ॥

धर्मारण्याश्रितां दिव्यां सर्वसंतापहारिणीम्॥

यां श्रुत्वा सर्वपापेभ्यो मुच्यते ब्रह्महत्यया ॥ 3.2.1.१०० ॥

हत्यायुतप्रशमनीं तापत्रयविनाशिनीम् ॥

यां वै श्रुत्वातिभक्त्या च कठिनो मृदुतां भजेत् ॥ १०१ ।

धर्मराजेन तां श्रुत्वा ममाग्रे च निवेदिताम् ।

तमपृच्छदमेयात्मा कथां धर्मविनोदिनीम्॥ २॥

॥ युधिष्ठिर उवाच ॥ ॥

धर्मारण्याश्रितां पुण्यां कथां मे द्विजसत्तम ॥

कथयस्व प्रसादेन लोकानां हितकाम्यया ॥ ३ ॥

॥ नारद् उवाच ॥ ॥

स्नानकालोयमस्माकं न कथावसरो मम ॥

परंतु श्रूयतां राजन्नुपदेशं ददाम्यहम् ॥ ४ ॥

मासानामुत्तमो माघः स्नानदानादिके तथा ॥

तस्मिन्माघे च यः स्नाति सर्वपापैः प्रमुच्यते।।५।।

स्नानार्थं याहि शीघ्रं त्वं गंगायां नृपतेऽधुना।।

व्यासस्यागमनं चाद्य भविष्यति नृपोत्तम ॥ ६ ॥

तं पृच्छस्व महाभाग श्रावयिष्यति ते शुभम् ॥

तीर्थानां चैव सर्वेषां फलं पुण्यं यदद्भुतम् ॥ ७॥

भूतं भव्यं भविष्यं च उत्तमाधममध्यमाः ॥

वाचयिष्यति तत्सर्वमितिहाससमुद्भवम् ॥ ८ ॥

धर्मारण्यस्य सकलं वृत्तं यद्यत्पुरातनम् ॥

व्यासः सत्यवतीपुत्रो वदिष्यति च तेऽखिलम् ॥ ९ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा विधेः पुत्रस्तत्रैवांतरधीयत ।

तस्मिन्गते स नृपतिः क्रीडते सचिवैः सह।। 3.2.1.११०।।

एतस्मिन्नंतरे तत्र प्राप्तः सत्यवतीसुतः ॥

विज्ञापयामास तदा विदुरः पांडवस्य हि ॥ ११ ॥

॥ सूत उवाच ॥ ॥

आगतं तु मुनिं श्रुत्वा सर्वे हर्षसमाकुलाः ॥

समुत्तस्थुर्हि भीमाद्याः सह् धर्मेण सर्वशः ॥ १२ ॥

तदा हि सन्मुखो भूत्वा मुमुदे नतकन्धरः ॥

दंडवत्तं प्रणम्याथ भ्रातृभिः सहितस्तदा ॥ १३ ॥

मधुपर्केण विधिना पूजां कृत्वा सुशोभनाम्॥

सिंहासने समावेश्य पप्रच्छानामयं तदा ॥११॥

ततः पुण्यां कथां दिव्यां श्रावयामास धर्मवित्॥

कथांते मुनिशार्दूलं वचनं चेदमब्रवीत् ॥ १५ ॥ ॥ .

॥ युधिष्ठिर उवाच ॥ ॥

त्वत्प्रसादान्मया ब्रह्मञ्छ्रुतास्तु प्रवराः कथाः ॥

आपद्धर्म्मा राजधर्मा मोक्षधर्म्मा ह्यनेकशः॥ १६॥

पुराणानां च धर्माश्च व्रतानि बहुशस्तथा ॥

तीर्थान्यनेकरूपाणि सर्वाण्यायतनानि च ॥ १७ ॥

इदानीं श्रोतुमिच्छामि धर्मारण्यकथां शुभाम् ॥

श्रुत्वा यां हि विनश्येत पापं ब्रह्मवधादिकम्॥ १८ ॥

धर्म्मारण्यस्थतीर्थानां श्रोतुमिच्छामि तत्त्वतः ॥

कस्येदं स्थापितं स्थानं कस्मादेतद्विनिर्मितम् ॥ १९ ॥

रक्षितं पालितं केन कस्मिन्कालेऽथ निर्मितम् ॥

किंकिं त्वत्राभवत्पूर्वं शंशैतत्पृच्छतो मम ॥ 3.2.1.१२०॥

भूतं भव्यं भविष्यञ्च तस्मिन्स्थाने च यद्भवेत्॥

तत्सर्वं कथयस्वाद्य तीर्थानां च यथा स्थितिः॥ १२१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्व भागे धर्मारण्यमाहात्म्ये युधिष्ठिरप्रश्नवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०२

https://sa.wikisource.org/s/ftl
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

॥ व्यास उवाच।॥ ॥

पृथ्वीपुरंध्यास्तिलकं ललाटे लक्ष्मीलतायाः स्फुटमालवालम्॥

वाग्देवताया जलकेलिरम्यं नोहेरकं संप्रति वर्णयामि ॥ १ ॥

साधु पृष्टं त्वया राजन्वाराणस्यधिकाधिकम्॥

धर्मारण्यं नृपश्रेष्ठ श्रृणुष्वावहितो भृशम्॥ २॥

सर्वतीर्थानि तत्रैव ऊषरं तेन कथ्यते ॥

ब्रह्मविष्णुमहेशाद्यैरिंद्राद्यैः परिसेवितम् ॥ ३ ॥

लोकपालैश्च दिक्पालैर्मातृभिः शिवशक्तिभिः ॥

गंधर्वैश्चाप्सरोभिश्च सेवितं यज्ञकर्मभिः ॥ ४॥

भूतवेतालशाकिनीग्रहदेवाधिदेवतैः॥

ऋतुभिर्मासपक्षैश्च सेव्यमानं सुरासुरैः । ॥ ९ ।

तदाद्यं च नृपस्थानं सर्वसौख्यप्रदं तथा ॥

यज्ञैश्च बहुभिश्चैव सेवितं मुनिसत्तमैः ॥ ६॥

सिंहव्याघ्रैर्द्विपैश्चैव पक्षिभिर्विविधैस्तथा ॥

गोमहिष्यादिभिश्चैव सारसैर्मृगशूकरैः ॥ ७॥

सेवितं नृपशार्दूल श्वापदैर्विविधैरपि ।

तत्र ये निधनं प्राप्ताः पक्षिणः कीटकादयः ॥ ८ ॥

पशवः श्वापदाश्चैव जलस्थलचराश्च ये ॥

खेचरा भूचराश्चैव डाकिन्यो राक्षसास्तथा ॥ ९ ॥

एकोत्तरशतैः सार्द्धं मुक्तिस्तेषां हि शाश्वती ॥

ते सर्वे विष्णुलोकांश्च प्रयांत्येव न संशयः ॥ 3.2.2.१०॥

संतारयति पूर्वज्ञान्दश पूर्वान्दशापरान् ।

यवव्रीहितिलैः सर्पिर्बिल्वपत्रैश्च दूर्वया ॥ ११ ॥

गुडैश्चैवोदकैर्नाथ तत्र पिंडं करोति यः ॥

उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम्॥ १२ ॥

वृक्षैरनेकधा युंक्ते लतागुल्मैः सुशोभितम् ॥

सदा पुण्यप्रदं तच्च सदा फलसमन्वितम्॥ १३॥

निर्वैरं निर्भयं चैव धर्मारण्यं च भूपते ॥

गोव्याघ्रैः क्रीड्यते तत्र तथा मार्जारमूषकैः ॥ ११ ॥

भेकोऽहिना क्रीडते च मानुषा राक्षसैः सह ॥

निर्भयं वसते तत्र धर्म्मारण्यं च भूतले ॥ १९ ॥

महानंदमयं दिव्यं पावनात्पावनं परम् ॥

कलकंठः कलोत्कंठमनुगुंजति कुंजगः ॥ १६ ।

ध्यानस्थः श्रोष्यति तदा पारावत्येति वार्य्यते ॥

केकः कोकीं परित्यज्य मौनं तिष्ठति तद्भयात् ॥ १७ ॥

चकोरश्चंद्रिकाभोक्ता नक्तव्रतमिवास्थितः॥

पठंति सारिकाः सारं शुकं संबोधयत्यहो ॥ १८॥

अपारवारसंसारसिंधुपारप्रदः शिवः ॥

आलस्येनापि यो यायाद्गृहाद्धर्मवनं प्रति॥ १९ ॥

अश्वमेधाधिको धर्मस्तस्य स्याच्च पदेपदे ॥

शापानुग्रहसंयुक्ता ब्राह्मणास्तत्र संति वै ॥ ३.२.२.२० ॥

अष्टादशसहस्राणि पुण्यकार्येषु निर्मिताः ॥

षट्त्रिंशत्तु सहस्राणि भृत्यास्ते वणिजो भुवि ॥ २१ ॥

द्विजभक्तिसमायुक्ता ब्रह्मण्यास्ते त्वयोनिजाः ॥

पुराणज्ञाः सदाचारा धार्मिकाः शुद्धबुद्धयः ॥

स्वर्गे देवाः प्रशंसंति धर्म्मारण्यनिवासिनः ॥ २२॥

॥ युधिष्ठिर उवाच ॥ ॥

धर्मारण्येति त्रिदशैः कदा नाम प्रतिष्ठितम् ।।

पावनं भूतले जातं कस्मात्तेन विनिर्मितम् ।। २३ ।।

तीर्थभूतं हि कस्माच्च कारणात्तद्वदस्व मे ।।

ब्राह्मणाः कतिसं ख्याकाः केन वै स्थापिताः पुरा ।। २४ ।।

अष्टादशसहस्राणि किमर्थं स्थापितानि वै ।।

कस्मिन्नंशे समुत्पन्ना ब्राह्मणा ब्रह्म सत्तमाः ।। २५ ।।

सर्वविद्यासु निष्णाता वेदवेदांगपारगाः ।।

ऋग्वेदेषु च निष्णाता यजुर्वेदकृतश्रमाः ।। २६ ।।

सामवेदांगपारज्ञास्त्रैविद्या धर्म वित्तमाः ।।

तपोनिष्ठा शुभाचाराः सत्यव्रतपरायणाः ।। २७ ।।

मासोपवासैः कृशितास्तथा चांद्रायणादिभिः ।।

सदाचाराश्च ब्रह्मण्याः केन नित्यो पजीविनः ।।

तत्सर्वमादितः कृत्स्नं ब्रूहि मे वदतां वर ।। २८ ।।

दानवास्तत्र दैतेया भूतवेतालसंभवाः ।।

राक्षसाश्च पिशाचाश्च उद्वेजंते कथं न तान् ।। २९ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वार्धे धर्मारण्यमाहात्म्ये युधिष्ठिरप्रश्नर्णनंनाम द्विती योऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०३



व्यास उवाच ।। ।।

श्रूयतां नृपशार्दूल कथां पौराणिकीं शुभाम् ।।

यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। १ ।।

एकदा धर्मराजो वै तपस्तेपे सुदुष्करम् ।।

ब्रह्मविष्णुमहेशाद्यैर्जलवर्षातपादिषाट् ।। २ ।।

आदौ त्रेतायुगे राजन्वर्षाणामयुतत्रयम् ।।

मध्येवनं तपस्यंतमशोकतरुमूलगम् ।। ३ ।।

शुष्कस्नायुपिनद्धास्थिसंचयं निश्चलाकृतिम् ।।

वल्मीककीटिकाकोटिशोषिताशेषशोणितम् ।। ४ ।।

निर्मांसकीकसचयं स्फटिकोपलनिश्चलम् ।।

शंखकुदेंदुतहिनमहाशंखलसच्छ्रियम् ।। ५ ।।

सत्त्वावलंबितप्राणमायुःशेषेण रक्षितम् ।।

निश्वासोच्छवास पवनवृत्तिसूचितजीवितम् ।। ६ ।।

निमेषोन्मेषसंचारपशुनीकृतजन्तुकम् ।।

पिशंगितस्फुरद्रश्मिनेत्रदीपितदिङ्मुखम् ।। ७ ।।

तत्तपोग्निशिखादाव चुंबितम्लानकाननम् ।।

तच्छांत्युदसुधावर्षसंसिक्ताखिलभूरुहम ।। ८ ।।

साक्षात्तपस्यंतमिव तपो धृत्वा नराकृतिम् ।।

निराकृतिं निराकाशं कृत्वा भक्तिं च कांचनम् ।। ९ ।।

कुरंगशावैर्गणशो भ्रमद्भिः परिवारितम् ।।

निनादभीषणास्यैश्च वनजैः परिरक्षितम् ।। 3.2.3.१० ।।

एतादृशं महाभीमं दृष्ट्वा देवाः सवासवाः ।।

ध्यायंतं च महादेवं सर्वेषां चाभयप्रदम् ।। ११ ।।

ब्रह्माद्या दैवता सर्वे कैलासं प्रति जग्मिरे ।।

पारिजाततरुच्छायामासीनं च सहोमया ।। १२ ।।

नदिर्भृंगिर्महाकालस्तथान्ये च महागणाः ।।

स्कन्दस्वामी च भगवान्गणपश्च तथैव च ।।

तत्र देवाः सब्रह्माद्याः स्वस्वस्थानेषु तस्थिरे ।। १३ ।।

।। ब्रह्मोवाच ।। ।।

नमोस्त्वनंतरूपाय नीलश्च नमोऽस्तु ते ।।

अविज्ञातस्वरूपाय कैवल्यायामृताय च ।। १४ ।।

नांतं देवा विजानंति यस्य तस्मै नमोनमः ।।

यं न वाचः प्रशंसंति नमस्तस्मै चिदात्मने ।। १५ ।।

योगिनो यं हृदः कोशे प्रणिधानेन निश्चलाः ।।

ज्योतीरूपं प्रपश्यति तस्मै श्रीब्रह्मणे नमः ।। १६ ।।

कालात्पराय कालाय स्वेच्छया पुरुषाय च ।।

गुणत्रयस्वरूपाय नमः प्रकृतिरूपिणे ।।१७।।

विष्णवे सत्त्वरूपाय रजोरूपाय वेधसे ।।

तमोरूपाय रुद्राय स्थितिसर्गांतकारिणे ।। १८ ।।

नमो बुद्धिस्वरूपाय त्रिधाहंकाररूपिणे ।।

पंचतन्मात्ररूपाय नमः प्रकृतिरूपिणे ।। १९ ।।

नमो नमः स्वरूपाय पंचबुद्धींद्रियात्मने ।।

क्षित्यादिपंचरूपाय नमस्ते विषयात्मने ।। 3.2.3.२० ।।

नमो ब्रह्मांडरूपाय तदंतर्वर्तिने नमः ।।

अर्वाचीनपराचीनविश्वरूपाय ते नमः ।।२१।।

अनित्यनित्यरूपाय सदसत्पतये नमः ।।

नमस्ते भक्तकृपया स्वेच्छावि ष्कृतविग्रह ।। २२ ।।

तव निश्वसितं वेदास्तव वेदोऽखिलं जगत् ।।

विश्वाभूतानि ते पादः शिरो द्यौः समवर्तत ।। २३ ।।

नाभ्या आसीदंतरिक्षं लोमानि च वनस्पतिः ।।

चंद्रमा मनसो जातश्चक्षोः सूर्यस्तव प्रभो ।। २४ ।।

त्वमेव सर्वं त्वयि देव सर्वं सर्वस्तुति स्तव्य इह त्वमेव ।।

ईश त्वया वास्यमिदं हि सर्वं नमोऽस्तु भूयोऽपि नमो नमस्ते ।। २५ ।।

इति स्तुत्वा महादेवं निपेतुर्दंडवत्क्षितौ ।।

प्रत्युवाच तदा शंभुर्वरदोऽस्मि किमिच्छति ।। २६ ।।

।। महादेव उवाच ।। ।।

कथं व्यग्राः सुराः सर्वे बृहस्पतिपुरोगमाः ।।

तत्समाचक्ष्व मां ब्रह्मन्भवतां दुःखकारणम् ।। २७ ।।

।। ब्रह्मोवाच ।। ।।

नीलकंठ महादेव दुःखनाशाभयप्रद ।।

शृणु त्वं दुःखमस्माकं भवतो यद्वदाम्यहम् ।। २८ ।।

धर्मराजोऽपि धर्मात्मा तपस्तेपे सुदुःसहम् ।।

न जानेऽसौ किमिच्छति देवानां पदमुत्तमम् ।। २९ ।।

तेन त्रस्तास्तत्तपसा सर्व इंद्रपुरोगमाः ।।

भवतोंघ्रौ चिरेणैव मनस्तेन समर्पितम् ।।

तमुत्थापय देवेश किमिच्छति स धर्मराट् ।। ३.२.३.३० ।।

।। ईश्वर उवाच ।। ।।

भवतां नास्ति नु भयं धर्मात्सत्यं ब्रवीम्यहम् ।। ३१ ।।

तत उत्थाय ते सर्वे देवाः सह दिवौकसः ।।

रुद्रं प्रदक्षिणीकृत्य नमस्कृत्वा पुनःपुनः ।। ३२ ।।

इन्द्रेण सहिताः सर्वे कैलात्पुनरागताः ।।

स्वस्वस्थाने तदा शीघ्रं गताः सर्वे दिवौकसः ।। ३३ ।।

इन्द्रोऽपि वै सुधर्मायां गतवान्प्रभुरीश्वरः ।।

न निद्रां लब्धवांस्तत्र न सुखं न च निर्वृतिम् ।। ३४ ।।

मनसा चिंतयामास विघ्नं मे समुपस्थितम् ।।

अवाप महतीं चितां तदा देवः शचीपतिः ।। ३५ ।।

मम स्थानं पराहर्तुं स्तपस्तेपे सुदुश्चरम् ।।

सर्वान्देवान्समाहूय इदं वचनमब्रवीत् ।। ३६ ।। ।।

।। इन्द्र उवाच ।। ।।

शृण्वंतु देवताः सर्वा मम दुःखस्य कारणम् ।।

दुःखेन मम यल्लब्धं तत्किं वा प्रार्थयेद्यमः ।।

बृहस्पतिः समालोक्य सर्वान्दे वानथाब्रवीत् ।। ३७ ।।

बृहस्पतिरुवाच ।। ।।

तपसे नास्ति सामर्थ्यं विघ्नं कर्तुं दिवौकसः ।।

उर्वश्याद्या समाहूय संप्रेष्यंतां च तत्र वै ।।३८।।

तासामाकारणार्थाय प्रतिद्वारं प्रतस्थिवान्।।

स गत्वा ताः समादाय सभायां शीघ्रमाययौ।।३९।।

आगतास्ता हरिः प्राह महत्कार्यमुपस्थितम् ।।

गछन्तु त्वरिताः सर्वा धर्मारण्यं प्रति द्रुतम् ।। ३.२.३.४० ।।

यत्र वै धर्मराजोसौ तपश्चक्रे सुदुष्करम् ।।

हास्यभावकटाक्षैश्च गतिनृत्यादि भिस्तथा ।। ४१ ।।

तं लोभयध्वं यमिनं तपःस्थानाच्च्युतिर्भवेत् ।।

देवस्य वचनं श्रुत्वा तथा अप्सरसां गणाः ।। ४२ ।।

मिथः संरेभिरे कर्तुं विचार्य च परस्परम्।।

धर्मारण्यं प्रतस्थेसावुर्वशी स्वर्वरांगना ।। ४३ ।।

तुष्टुवुः पुष्पवर्षाश्च ससृजुस्तच्छिरस्यमी ।।

ततस्तु देवैर्विप्रैश्च स्तूयमानः समंततः ।। ४४ ।।

निर्ययौ परमप्रीत्या वनं परमपावनम् ।।

बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् ।। ४५ ।।

न सूर्यो भाति तत्रैव महांधकार संयुतम्।।

निर्जनं निर्मनुष्यं च बहुयोजनमायतम् ।। ४६ ।।

मृगैः सिंहैर्वृतं घोरेरन्यैश्चापि वनेचरैः ।।

पुष्पितैः पादपैः कीर्णं सुमनोहरशाद्वलम् ।। ।। ४७ ।।

विपुलं मधुरानादैर्नादितं विहगैस्तथा ।।

पुंस्कोकिलनिनादाढ्यं झिल्लीकगणनादितम् ।। ४८ ।।

प्रवृद्धविकटैर्वृक्षैः सुखच्छायैः समावृतम् ।। ।

वृक्षैराच्छादिततलं लक्ष्म्या परमया युतम् ।।४९।।

नापुष्पः पादपः कश्चिन्नाफलो नापि कंटकी ।।

षट्पदैरप्यनाकीर्णं नास्मिन्वै काननेभवेत् ।।3.2.3.५०।।

विहंगैर्नादितं पुष्पैरलंकृतमतीव हि ।।

सर्वर्तुकुसमैर्वृक्षैः सुखच्छायैः समावृतम् ।। ५१ ।।

मारुताकलितास्तत्र द्रुमाः कुसुमशाखिनः ।।

पुष्पवृष्टिं विचित्रां तु विसृजंति च पादपाः ।। ५२ ।।

दिवस्पृशोऽथ संपुष्टाः पक्षिभिर्मधुरस्वनैः ।।

विरेजुः पादपास्तत्र सुगन्धकुसुमैर्वृताः ।। ५३ ।।

तिष्ठंति च प्रवालेषु पुष्पभारावनादिषु ।।

रुवंति मधुरालापाः षट्पदा मधुलिप्सवः ।। ५४ ।।

तत्र प्रदेशांश्च बहूनामोदांकुरमंडितान् ।।

लतागृह परिक्षिप्तान्मनसः प्रीतिवर्द्धनान् ।। ५५ ।।

संपश्यंती महातेजा बभूव मुदिता तदा ।।

परस्पराश्लिष्टशाखैः पादपैः कुसमाचितैः ।। ५६ ।।

अशोभत वनं तत्तु महेंद्रध्वजसन्निभैः ।।

सुखशीतसुगन्धी च पुष्परेणुवहोऽनिलः ।। ५७ ।।

एवंगुणसमायुक्तं ददर्श सा वनं तदा ।।

तदा सूर्योद्भवां तत्र पवित्रां परिशोभिताम् ।। ५८ ।।

आश्रमप्रवरं तत्र ददर्श च मनोरमम् ।।

पतिभिर्वालखिल्यैश्च वृतं मुनिगणा वृतम् ।। ५९ ।।

अग्न्यगारैश्च बहुभिर्वृक्षशाखावलंबितैः ।।

धूगम्रपानकणैस्तत्र दिग्वासोयतिभिस्तथा ।। 3.2.3.६० ।।

पाल्या वन्या मृगास्तत्र सौम्या भूयो बभूविरे ।।

मार्जारा मूषकैस्तत्र सर्पैश्च नकुलास्तथा ।। ६१ ।।

मृगशावैस्तथा सिंहाः सत्त्वरूपा बभूविरे ।।

परस्परं चिक्रीडुस्ते यथा चैव सहोदराः ।।

दूराद्ददर्श च वनं तत्र देवोऽब्रवीत्तदा ।। ६२ ।।

।। इन्द्र उवाच ।। ।।

अयं च खलु धर्मराड् तपस्तुग्रेवतिष्ठते ।।

मम राज्याभिकांक्षोऽसावतोर्थे यत्यतामिह ।। ६३ ।।

तपोविघ्नं प्रकुर्वंतु ममाज्ञा तत्र गम्यताम्।।

इन्द्रस्य वचनं श्रुत्वा उर्वशी च तिलोत्तमा ।। ६४ ।।

सुकेशी मंजुघोषा च घृताची मेनका तथा ।।

विश्वाची चैव रंभा च प्रम्लोचा चारुभाषिणी ।।६५।।

पूर्वचित्तिः सुरूपा च अनुम्लोचा यशस्विनी ।।

एताश्चान्याश्च बहुशस्तत्र संस्था व्यचिंतयन् ।। ६६ ।।

परस्परं विलोक्यैव शंकमाना भयेन हि ।।

यमश्चैव तथा शक्र उभौ वायतनं हि वः ।।।। ।। ६७ ।।

एवं विचार्य बहुधा वर्द्धनी नाम भारत ।।

सर्वासामप्सरसां श्रेष्ठा सर्वाभरणभूषिता ।। ६८ ।।

उवाचैवोर्वशी तत्र किं खिद्यसि शुभानने।।

देवानां कार्यसिद्ध्यर्थं मायारूपबलेन च ।।

वर्णधर्मो यथा भूयात्करिष्ये पाकशासन ।। ६९ ।।

।। इन्द्र उवाच ।। ।।

साधुसाधु महाभागे वर्द्धनी नाम सुव्रता ।।

शीघ्रं गच्छ स्वयं भद्रे कुरु कार्यं कृशोदरि ।। ३.२.३.७० ।।

धीराणामवने शक्ता नान्या सुभ्रु त्वया विना ।।

वर्द्धनी च तथेत्युक्त्वा गता यत्र स धर्मराट् ।। ७१ ।।

महता भूषणेनैव रूपं कृत्वा मनोरमम् ।।

कुंकुमैः कज्जलैर्वस्त्रैर्भूषणैश्चैव भूषिता ।। ७२ ।।

कुसुमं च तथा वस्त्रं किंकिणीकटिराजिता ।।

झणत्कारैस्तथा कष्टैर्भूषिता च पदद्वये ।। ७३ ।।

नानाभूषणभूषाढ्या नानाचंदनचर्चिता ।।

नानाकुसुम मालाढ्या दुकूलेनावृता शुभा ।। ७४ ।।

प्रगृह्य वीणां संशुद्धां करे सर्वांगसुन्दरी ।।

नर्तनं त्रिविधं तत्र चक्रे लोकमनोरमम् ।। ७५ ।।

तारस्वरेण मधुरैर्वंशनादेन मिश्रितम् ।। ७६ ।।

मूर्च्छनातालसंयुक्तं तंत्रीलयसमन्वितम् ।।

क्षणेन सहसा देवो धर्मराजो जितात्मवान् ।।

विमनाः स तदा जातो धर्मराजो नृपात्मजः ।। ७७ ।।

।। युधिष्ठिर उवाच ।। ।।

आश्चर्यं परमं ब्रह्मञ्जातं मे ब्रह्मसत्तम ।।

कथं ब्रह्मोपपन्नस्य तपश्छेदो बभूव ह ।। ७८ ।।

धर्मे धरा च नाकश्च धर्मे पातालमेव च ।।

धर्मे चंद्रार्कमापश्च धर्मे च पवनोऽनलः ।। ७९ ।।

धर्मे चैवाखिलं विश्वं स धर्मो व्यग्रतां कथम् ।।

गतः स्वामिंस्तद्वैयग्र्यं तथ्यं कथय सुव्रत ।। ३.२.३.८० ।।

।। व्यास उवाच ।। ।।

पतनं साहसानां च नरकस्यैव कारणम् ।।

योनिकुण्डमिदं सृष्टं कुंभीपाकसमं भुवि ।। ८१ ।।

नेत्ररज्ज्वा दृढं बद्ध्वा धर्षयंति मनस्विनः।।

कुचरूपैर्महादंडैस्ताड्यमानमचेतसम् ।। ८२ ।।

कृत्वा वै पातयंत्याशु नरकं नृपसत्तम ।।

मोहनं सर्वभूतानां नारी चैवं विनिर्मिता ।।८३।।

तावद्धंत मनःस्थैर्यं श्रुतं सत्यमनाकुलम् ।।

यावन्मत्तांगनाग्रे न वागुरेव सुचेतसा म् ।।।४।।।

तावत्तपोभिवृद्धिस्तु तावद्दानं दया दमः।।

तावत्स्वाध्यायवृत्तं च तावच्छौचं धृतं व्रतम् ।।८५।।

यावत्त्रस्तमृगीदृष्टिं चपलां न विलोकयेत्।।

तावन्माता पिता तावद्भ्राता तावत्ससुहृज्जनः ।। ८६ ।।

तावल्लज्जा भयं तावत्स्वाचारस्तावदेव हि ।।

ज्ञानमौदार्यमैश्वर्यं तावदेव हि भासते ।।

यावन्मत्तांगनापाशैः पातितो नैव बन्धनैः ।। ८७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे धर्मारण्यमाहात्म्ये इन्द्रभयकथनंनाम तृतीयोऽध्यायः ।। ३ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०४



।। व्यास उवाच ।। ।।

अतः परं प्रवक्ष्यामि धर्मराजस्य चेष्टितम् ।।

यच्छ्रुत्वा यमदूतानां न भयं विद्यते क्वचित् ।।१।।

धर्मराजेन सा दृष्टा वर्द्धनी च वराप्सरा ।।

महत्यरण्ये का ह्येषा सुन्दरांग्यतिसुन्दरी ।।२।।

निर्मानुषवनं चेदं सिंहव्याघ्रभयानकम् ।।

आश्चर्यं परमं ज्ञात्वा धर्मराजोऽब्रवीदिदम् ।। ३ ।।

।। धर्मराज उवाच ।। ।।

कस्मात्त्वं मानिनि ह्येका वने चरसि निर्जने ।।

कस्मात्स्थानात्समायाता कस्य पत्नी सुशोभने ।। ४ ।।

सुता त्वं कस्य वामोरु अतिरूपवती शुभा ।।

मानुषी वाथ गंधर्वी अमरी वाथ किंनरी ।। ५ ।।

अप्सरा पक्षिणी वाथ अथवा वनदेवता ।।

राक्षसी वा खेचरी वा कस्य भार्या च तद्वद ।। ६ ।।

सत्यं च वद मे सुभ्रूरित्याहार्कसुतस्तदा ।।

किमिच्छसि त्वया भद्रे किं कार्यं वा वदात्र वै ।। ७ ।।

यदिच्छसि त्वं वामोरु ददामि तव वांछितम् ।। ८ ।।

।। वर्द्धन्युवाच ।। ।।

धर्मे तिष्ठति सर्वं वै स्थावरं जंगमं विभो ।।

स धर्मो दुष्करं कर्म कस्मात्त्वं कुरुषेऽनघ ।। ९ ।।

।। यम उवाच ।। ।।

ईशानस्य च यद्रूपं द्रष्टुमिच्छामि भामिनि ।।

तेनाहं तपसा युक्तः शिवया सह शंकरम् ।। 3.2.4.१० ।।

यशः प्राप्स्ये सुखं प्राप्स्ये करोमि च सुदुष्करम् ।।

युगेयुगे मम ख्यातिर्भवेदिति मतिर्मम ।। ११ ।।

कल्पे कल्पे महाकल्पे भूयः ख्यातिर्भवेदिति ।।

एतस्मात्कारणात्सुभ्रूस्तप्यते परमं तपः ।। १२ ।।

कस्मात्त्वमागता भद्रे कथयस्व यथातथा ।।

किं कार्यं कस्य हेतुश्च सत्यमाख्यातुमर्हसि ।। १३ ।।

।। वर्द्धन्युवाच ।। ।।

तपसैव त्वया धर्म भयभीतो दिवस्पतिः ।।

तेनाहं नोदिता चात्र तपोवि घ्नस्य कांक्षया ।। १४ ।।

इन्द्रासनभयाद्भीता हरिणा हरिसन्निधौ ।।

प्रेषिताहं महाभाग सत्यं हि प्रवदाम्यहम् ।। १५ ।।

।। सूत उवाच ।। ।।

सत्यवाक्येन च तदा तोषितो रविनंदनः ।।

उवाचैनां महाभाग्यो वरदोहं प्रयच्छ मे ।। १६ ।।

यमोऽहं सर्वभूतानां दुष्टानां कर्मकारिणाम् ।।

धर्म रूपो हि सर्वेषां मनुजानां जितात्मनाम् ।। १७ ।।

स धर्मोऽहं वरारोहे ददामि तव दुर्लभम् ।।

तत्सर्वं प्रार्थय त्वं मे शीघ्रं चाप्सरसां वरे ।। १८ ।। ।।

।। वर्द्धन्युवाच ।। ।।

इन्द्रस्थाने सदा रम्ये सुस्थिरत्वं प्रयच्छ मे ।।

स्वामिन्धर्मभृतां श्रेष्ठ लोकानां च हिताय वै ।। १९ ।।

।। यम उवाच ।। ।।

एवमस्त्विवति तां प्राह चान्यं वरय सत्वरम् ।।

ददामि वरमुत्कृष्टं गानेन तोषितोस्म्यहम् ।। 3.2.4.२० ।।

।। वर्द्धन्युवाच ।। ।।

अस्मिन्स्थाने महाक्षेत्रे मम तीर्थं महामते ।।

भूयाच्च सर्वपापघ्नं मन्नाम्नेति च विश्रुतम् ।। २१ ।।

तत्र दत्तं हुतं तप्तं पठितं वाऽक्षयं भवेत् ।।

पञ्चरात्रं निषेवेत वर्द्धमानं सरोवर म् ।।२२ ।।

पूर्वजास्तस्य तुष्येरंस्तर्प्यमाणा दिनेदिने ।।

तथेत्युक्त्वा तु तां धर्मो मौनमाचष्ट संस्थितः।।

त्रिःपरिक्रम्य तं धर्मं नमस्कृत्य दिवं ययौ ।। २३ ।।

।। वर्द्धन्युवाच ।। ।।

मा भयं कुरु देवेश यमस्यार्कसुतस्य च ।।

अयं स्वार्थपरो धर्म यशसे च समाचरेत् ।। २४ ।।

।। व्यास उवाच ।। ।।

वर्द्धनी पूजिता तेन शक्रेण च शुभानना ।।

साधुसाधु महाभागे देवकार्यं कृतं त्वया ।।२५।।

निर्भयत्वं वरागेहे सुखवासश्च ते सदा ।।

यशः सौख्यं श्रियं रम्यां प्राप्स्यसि त्वं शुभानने ।। २६ ।।

तथेति देवास्तामूचुर्निर्भयानंदचेतसा ।।

नमस्कृत्य च शक्रं सा गता स्थानं स्वकं शुभम् ।। २७ ।।

।। सूत उवाच ।। ।।

गतेप्सरसि राजेन्द्र धर्मस्तस्थौ यथाविधि ।।

तपस्तेपे महाघोरं विश्वस्योद्वेगदायकम् ।। २८ ।।

पंचाग्निसा धनं शुक्रे मासि सूर्येण तापिते ।।

चक्रे सुदुःसहं राजन्देवैरपि दुरासदम् ।। २९ ।।

ततो वर्षशते पूर्णे अन्तको मौनमास्थितः।।

काष्ठभूत इभवातस्थौ वल्मीकशतसंवृतः ।। 3.2.4.३० ।।

नानापक्षिगणैस्तत्र कृतनीडैः स धर्मराट् ।।

उपविष्टे व्रतं राजन्दृश्यते नैव कुत्रचित् ।। ३१ ।।

संस्मरंतोऽथ देवेश मुमापतिमनिंदितम् ।।

ततो देवाः सगन्धर्वा यक्षाश्चोद्विग्नमानसाः ।।

कैलासशिखरं भूय आजग्मुः शिवसन्निधौ ।। ३२ ।।

।। देवा ऊचुः ।।

त्राहित्राहि महादेव श्रीकण्ठ जगतः पते ।।

त्राहि नो भूतभव्येश त्राहि नो वृषभध्वज ।।

दयालुस्त्वं कृपानाथ निर्विघ्नं कुरु शंकर ।। ३३ ।।

।। ईश्वर उवाच ।। ।।

केनापराधिता देवाः केन वा मानमर्द्दिताः ।।

मर्त्ये स्वर्गेऽथवा नागे शीघ्रं कथय ताचिरम् ।। ३४ ।।

अनेनैव त्रिशूलेन खट्वांगेनाथवा पुनः ।।

अथ पाशुपतेनैव निहनिष्यामि तं रणे ।।

शीघ्रं वै वदतास्माक मत्रागमनकारणम् ।। ३५ ।।

।। देवा ऊचुः ।। ।।

कृपासिन्धो हि देवेश जगदानन्दकारक ।।

न भयं मानुषादद्य न ना गाद्देवदानवात् ।। ३६ ।।

मर्त्यलोके महादेव प्रेतनाथो महाकृतिः ।।

आत्मकार्यं महाघोरं क्लेशयेदिति निश्चयः ।। ३७ ।।

उग्रेण तपसा कृत्वा क्लिश्यदात्मानमात्मना ।।

तेनात्र वयमुद्विग्ना देवाः सर्वे सदाशिव ।।

शरणं त्वामनुप्राप्ता यदिच्छसि कुरुष्व तत् ।। ३८ ।।

।। सूत उवाच ।। ।।

देवानां वचनं श्रुत्वा वृषारूढो वृषध्वजः ।।

आयुधान्परिसंगृह्य कवचं सुमनोहरम् ।।

गतवानथ तं देशं यत्र धर्मो व्यवस्थितः ।। ।। ३९ ।।

।। ईश्वर उवाच ।। ।।

अनेन तपसा धर्म संतुष्टं मम मानसम् ।।

वरं ब्रूहि वरं ब्रूहि वरं ब्रूहीत्युवाच ह ।। 3.2.4.४० ।।

इच्छसे त्वं यथा कामा न्यथा ते मनसि स्थितान् ।।

यंयं प्रार्थयसे भद्र ददामि तव सांप्रतम् ।। ४१ ।।

।। सूत उवाच ।। ।।

एवं संभाषमाणं तु दृष्ट्वा देवं महेश्वरम् ।।

वल्मीकादुत्थितो राजन्गृहीत्वा करसंपुटम् ।।

तुष्टाव वचनैः शुद्धैर्लोकनाथमरिंदम् ।। ४२ ।।

।। धर्म उवाच ।। ।।

ईश्वराय नमस्तुभ्यं नमस्ते योगरूपिणे ।।

नमस्ते तेजोरूपाय नीलकंठ नमोऽस्तु ते ।। ४३ ।।

ध्यातॄणामनुरूपाय भक्तिगम्याय ते नमः ।।

नमस्ते ब्रह्मरूपाय विष्णुरूप नमोऽ स्तु ते ।। ४४ ।।

नमः स्थूलाय सूक्ष्माय अणुरूपाय वै नमः ।।

नमस्ते कामरूपाय सृष्टिस्थित्यंतकारिणे ।। ४५ ।।

नमो नित्याय सौम्याय मृडाय हरये नमः ।।

आतपाय नमस्तुभ्यं नमः शीतकराय च ।। ४६ ।।

सृष्टिरूप नमस्तुभ्यं लोकपाल नमोऽस्तु ते ।।

नम उग्राय भीमाय शांत रूपाय ते नमः ।। ४७ ।।

नमश्चानंतरूपाय विश्वरूपाय ते नमः ।।

नमो भस्मांगलिप्ताय नमस्ते चंद्रशेखर ।।

नमोऽस्तु पंचवक्त्राय त्रिनेत्राय नमोऽस्तु ते ।। ४८ ।।

नमस्ते व्यालभूषाय कक्षापटधराय च ।।

नमोंऽधकविनाशाय दक्षपापापहारिणे ।।

कामनिर्द्दाहिने तुभ्यं त्रिपुरारे नमोऽस्तु ते ।। ।। ४९ ।।

चत्वारिंशच्च नामानि मयोक्तानि च यः पठेत् ।।

शुचिर्भूत्वा त्रिकालं तु पठेद्वा शृणुयादपि ।। 3.2.4.५० ।।

गोघ्नश्चैव कृतघ्नश्च सुरापो गुरुत ल्पगः ।।

ब्रह्महा हेमहारी च ह्यथवा वृषलीपतिः ।। ५१ ।।

स्त्रीबालघातकश्चैव पापी चानृतभाषणः ।।

अनाचारी तथा स्तेयी परदाराभिगस्तथा ।।

अकार्यकारी कृत्यघ्नो ब्रह्मद्विड्वाडवाधमः।। ५३।।

।।सूत उवाच।।

इत्येवं बहुभिर्वाक्यैर्धर्मराजेन वै मुहुः।।

ईडितोऽपि महद्भक्त्या प्रणम्य शिरसा स्वयम्।।५४।।

तुष्टः शंभुस्तदा तस्मा उवाचेदं वचः शुभम् ।।

वरं वृणु महाभाग यत्ते मनसि वर्त्तते ।। ५५ ।।

।। यम उवाच ।। ।।

यदि तुष्टोऽसि देवेश दयां कृत्वा ममोपरि।।

तं कुरुष्व महाभाग त्रैलोक्यं सचराचरम् ।। ५६ ।।

मन्नाम्ना स्थानमेतद्धि ख्यातं लोके भवेदिति ।।

अच्छेद्यं चाप्यभेद्यं च पुण्यं पापप्रणाशनम् ।। ।। ५७ ।।

स्थानं कुरु महादेव यदि तुष्टोऽसि मे भव ।।

शिवेन स्थानकं दत्तं काशीतुल्यं तदा नृप ।।

तद्दत्त्वा च पुनः प्राह अन्यं वरय सत्तम ।। ५८ ।।

।। धर्म उवाच ।। ।।

यदि तुष्टोऽसि देवेश दयां कृत्वा ममोपरि ।।

तं कुरुष्व महाभाग त्रैलोक्यं सचराचरम् ।।

वरेणैवं यथा ख्यातिं गमिष्यामि युगेयुगे ।। ५९ ।।

।। ईश्वर उवाच ।। ।।

ब्रूहि कीनाश तत्सर्वं प्रकरोमि तवेप्सितम् ।।

तपसा तोषितोऽहं वै ददामि वरमीप्सितम् ।। ।। 3.2.4.६० ।।

।। यम उवाच ।। ।।

यदि मे वांछितं देव ददासि तर्हि शंकर ।।

अस्मिन्स्थाने महाक्षेत्रे मन्नामा भव सर्वदा ।। ६१ ।।

धर्मारण्यमिति ख्यातिस्त्रैलोक्ये सचराचरे ।।

यथा संजायते देव तथा कुरु महेश्वर ।। ६२ ।।

।। ईश्वर उवाच ।। ।।

धर्मारण्यमिदं ख्यातं सदा भूयाद्युगेयुगे ।।

त्वन्नाम्ना स्थापितं देव ख्यातिमेतद्गमिष्यति ।।

अथान्यदपि यत्किंचित्करोम्येष वदस्व तत ।। ।। ६३ ।।

।। यम उवाच ।। ।।

योजनद्वयविस्तीर्णं मन्नाम्ना तीर्थमुत्तमम् ।।

मुक्तेश्च शाश्वतं स्थानं पावनं सर्वदेहिनाम् ।। ।। ६४ ।।

मक्षिकाः कीटकाश्चैव पशुपक्षिमृगादयः ।।
पतंगा भूतवेताला पिशाचोरगराक्षसाः ।। ६५ ।।
नारी वाथ नरो वाथ मत्क्षेत्रे धर्मसंज्ञके ।।
त्यजते यः प्रियान्प्राणान्मुक्तिर्भवतु शाश्वती ।। ६६ ।।
एवमस्त्विति सर्वोपि देवा ब्रह्मादयस्तथा ।।
पुष्पवृष्टिं प्रकुर्वाणाः परं हर्षमवाप्नुयुः ।।६७।।
देवदुंदुभयो नेदुर्गंधर्वपतयो जगुः।।
ववुः पुण्यास्तथा वाता ननृतुश्चाप्सरो गणाः।।६८।।
।।सूत उवाच।।।।
यमेन तपसा भक्त्या तोषितो हि सदाशिवः ।।
उवाच वचनं देवं रम्यं साधुमनोरमम्।। ६९ ।।
अनुज्ञां देहि मे तात यथा गच्छामि सत्वरम् ।।
कैलासं पर्वतश्रेष्ठं देवानां हितकाम्यया ।। 3.2.4.७० ।।
।। यम उवाच ।। ।।
न मे स्थानं परित्यक्तुं त्वया युक्तं महेश्वर ।।
कैलासादधिकं देव जायते वचनादिदम् ।। ७१ ।।
।। शिव उवाच ।। ।।
साधु प्रोक्तं त्वया युक्तमेकांशेनात्र मे स्थितिः ।।
न मया त्यजितं साधु स्थानं तव सुनिर्मलम् ।। ।। ७२ ।।
विश्वेश्वरं महालिंगं मन्नाम्नात्र भविष्यति ।।
एवमुक्त्वा महादेवस्तत्रैवांतरधीयत ।। ७३ ।।
शिवस्य वचनात्तत्र तदा लिंगं तदद्भुतम् ।।
तं दृष्ट्वा च सुरैस्तत्र यथानामानुकीर्त्तनम् ।। ७४ ।।
स्वंस्वं लिंगं तदा सृष्टं धर्मारण्ये सुरोत्तमैः ।।
यस्य देवस्य यल्लिंगं तन्नाम्ना परिकीर्तितम् ।। ।। ७५ ।।
।। सूत उवाच ।। ।।
धर्मेण स्थापितं लिंगं धर्मेश्वरमुपस्थितम् ।।
स्मरणात्पूजनात्तस्य सर्वपापैः प्रमुच्यते ।। ७६ ।।

यद्ब्रह्म योगिनां गम्यं सर्वेषां हृदये स्थितम् ।।

तिष्ठते यस्य लिंगं तु स्वयंभुवमिति स्थितम् ।। ७७ ।।

भूतनाथं च संपूज्य व्याधिभिर्मुच्यते जनः ।।

धर्मवापीं ततश्चैव चक्रे तत्र मनोरमाम् ।। ७८ ।।

आहत्य कोटितीर्थानां जलं वाप्यां मुमोच ह ।।

यमतीर्थस्वरूपं च स्नानं कृत्वा मनोरमम् ।। ७९ ।।

स्नानार्थं देवतानां च ऋषीणां भावितात्मनाम् ।।

तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते ।। 3.2.4.८० ।।

धर्मवाप्यां नरः स्नात्वा दृष्ट्वा धर्मेश्वरं शिवम् ।।

मुच्यते सर्वपापेभ्यो न मातुर्गर्भमाविशेत् ।। ८१ ।।

तत्र स्नात्वा नरो यस्तु करोति यमतर्पणम् ।।

व्याधिदोषविनाशार्थं क्लेशदोषोप शांतये ।।

यमाय धर्मराजाय मृत्यवे चांतकाय च ।।

वैवस्वताय कालाय दध्नाय परमेष्ठिने ।।८२।।

वृकोदराय वृकाय दक्षिणेशाय ते नमः ।।

नीलाय चित्रगुप्ताय चित्र वैचित्र ते नमः ।। ८३ ।।

यमार्थं तर्पणं यो वै धर्मवाप्यां करिष्यति ।।

साक्षतैर्नामभिश्चैतैस्तस्य नोपद्रवो भवेत्।। ८४ ।।

एकांतरस्तृतीयस्तु ज्वरश्चातुर्थिकस्तथा ।।

वेलायां जायते यस्तु ज्वरः शीतज्वरस्तथा ।। ८५ ।।

पीडयन्ति न चैतस्य यस्यैवो मतिरीदृशी ।।

रेवत्यादिग्रहा दोषा डाकिनी शाकिनी तथा ।। ६६ ।।

धनधान्यसमृद्धिः स्यात्संततिर्वर्धते सदा ।।

भूतेश्वरं तु संपूज्य सुस्नातो विजितेंद्रियः ।। ८७ ।।

सांगं रुद्रजपं कृत्वा व्याधिदोषात्प्रमुच्यते।।

अमावास्यां सोमदिने व्यतीपाते च वैधृतौ।।

संक्रांतौ ग्रहणे चैव तत्र श्राद्धं स्मृतं नृणाम्।।८८।।

श्राद्धं कृतं तेन समाः सहस्रं निरस्य चैतत्पितरस्त्वदंति।।

पानीयमेवापि तिलैर्विमिश्रितं ददाति यो वै प्रथितो मनुष्यः।।८९।।

एकविंशतिवारैस्तु गयायां पिंडदानतः ।।

धर्मेश्वरे सकृद्दत्तं पितॄणां चाक्षयं भवेत् ।। 3.2.4.९० ।।

धर्मेशात्पश्चिमे भागे विश्वेश्वरांतरेपि वा ।।

धर्मवापीति विख्याता स्वर्गसोपानदायिनी ।। ९१ ।।

धर्मेण निर्मिता पूर्वं शिवार्थं धर्मबुद्धिना ।।

तत्र स्नात्वा च पीत्वा च तर्पिताः पितृदेवताः ।। ९२ ।।

शमीपत्रप्रमाणं तु पिंडं दद्याच्च यो नरः ।।

धर्मवाप्यां महापुण्यां गर्भवासं न चाप्नुयात् ।। ९३ ।।

कुम्भीपाकान्महारौद्राद्रौरवान्नरकात्पुनः ।।

अंधतामिस्रकाद्राजन्मुच्यते नात्र संशयः ।। ९४ ।।

।। सूत उवाच ।। ।।

एकवर्षं तर्पणीयं धर्मवाप्यां नरोत्तमः ।।

ऋतौ मासे च पक्षे च विपरीतं च जायते ।। ९५ ।।

बर्हिषदोऽग्निष्वात्ताश्च आज्यपाः सोमपास्तथा ।।

तृप्तिं प्रयांति परमां वाप्यां वै तर्पणेन तु ।। ९६ ।।

कुरुक्षेत्रादि क्षेत्राणि अयोध्यादिपुरस्तथा ।।

पुष्कराद्यानि सर्वाणि मुक्तिनामानि संति वै ।। ९७ ।।

तानि सर्वाणि तुल्यानि धर्मकूपोऽधिको भवेत् ।।

मन्त्रो वेदास्तथा यज्ञा दानानि च व्रतानि च ।। ९८ ।।

अक्षयाणि प्रजायंते दत्त्वा जप्त्वा नरेश्वर ।।

अभिचाराश्च ये चान्ये सुसिद्धाथर्ववेदजाः ।। ९९ ।।

ते सर्वे सिद्धिमायांति तस्मिन्स्थाने कृता अपि ।।

आदितीर्थं नृपश्रेष्ठ काजेशैरुपसेवितम् ।। 3.2.4.१०० ।।

सिद्धिस्थानं सुसौम्यं च ब्रह्माद्यैरपि सेवि तम् ।।

कृते तु युगपर्यंतं त्रेतायां लक्षपञ्चकम् ।। १ ।।

द्वापरे लक्षमेकं तु दिनैकेन फलं कलौ ।।

एतदुक्तं मया ब्रह्मन्धर्मारण्यस्य वर्णनम् ।।

फलं चैवात्र सर्वं हि उक्तं द्वैपायनेन तु ।। २ ।।

।। सूत उवाच ।। ।।

अतः परं प्रवक्ष्यामि धर्मवाक्यं मनोरमम् ।।

देवानां हितकामाय आज्ञाप्य च यदुक्तवान् ।। ३ ।।

।। धर्म उवाच ।। ।।

अस्मिन्क्षेत्रे प्रकुर्वंति विष्णुमायाविमोहिताः ।।

पारदार्यं महादुष्टं स्वर्णस्तेयादिकं तथा ।। ४ ।।

अन्यच्च विकृतं सर्वं कुर्वाणो नरकं व्रजेत् ।।

अन्यक्षेत्रे कृतं पापं धर्मारण्ये विनश्यति ।। ५ ।।

धर्मारण्ये कृतं पापं वज्रलेपो भविष्यति ।।

यथा पुण्यं तथा पापं यत्किंचिच्च शुभाशुभम् ।। ६ ।।

तत्सर्वं वर्द्धते नित्यं वर्षाणि शतमित्युत ।।

कामिनां कामदं पुण्य योगिनां मुक्तिदायकम् ।। ७ ।।

सिद्धानां सिद्धिदं प्रोक्तं धर्मारण्यं तु सर्वदा ।।

अपुत्रो लभते पुत्रान्निर्धनो धनवान्भवेत् ।। ८ ।।

एतदाख्यानकं पुण्यं धर्मेण कथितं पुरा ।।

यः शृणोति नरो भक्त्या नारी वा श्रावयेत्तु यः ।।

गोसहस्रफलं तस्य अंते हरिपुरं ब्रजेत् ।। १०९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये क्षेत्रस्थापनंनाम चतुर्थोऽध्यायः ।। ४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०५



।। व्यास उवाच ।। ।।
अतः परं प्रवक्ष्यामि धर्मारण्यनिवासिना ।।
यत्कार्यं पुरुषेणेह गार्हस्थ्यमनुतिष्ठता ।। १ ।।
धर्मारण्येषु ये जाता ब्राह्मणाः शुद्धवंशजा ।।
अष्टादशसहस्राश्च काजेशैश्च विनिर्मिताः ।। २ ।।
सदाचाराः पवित्राश्च ब्राह्मणा ब्रह्मवित्तमाः ।।
तेषां दर्शनमात्रेण महापापैर्विमुच्यते ।। ३ ।।
।। युधिष्ठिर उवाच ।। ।।
पाराशर्य समाख्याहि सदाचारं च मे प्रभो ।।
आचाराद्धर्ममाप्नोति आचाराल्लभते फलम्।।
आचाराच्छ्रियमाप्नोति तदाचारं वदस्व मे ।। ४ ।।
।। व्यास उवाच ।। ।।
स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।।
क्रमेण धार्मिकास्त्वेत एतेभ्यो धार्मिकाः सुराः ।। ५ ।।
सहस्रभागात्प्रथमे द्वितीयानुक्रमास्तथा ।।
सर्व एते महाभागाः पापान्मुक्तिसमाश्रयाः ।। ६ ।।
चतुर्णामपि भूतानां प्राणिनोतीव चोत्तमाः ।।
प्राणिकेभ्योपि मुनिश्रेष्ठाः सर्वे बुद्ध्युपजीविनः ।। ७ ।।
मतिमद्भ्यो नराः श्रेष्ठास्तेभ्य श्रेष्ठास्तु वाडवाः ।।
विप्रेभ्योऽपि च विद्वांसो विद्वद्भ्यः कृतबुद्धयः ।। ८ ।।
कृतधीभ्योऽपि कर्तारः कर्तृभ्यो ब्रह्मतत्पराः ।।
न तेभ्योऽभ्यधिकः कश्चित्त्रिषु लोकेषु भारत ।। ९ ।।
अन्योन्यपूजकास्ते वै तपो विद्याविशेषतः ।।
ब्राह्मणो ब्रह्मणा सृष्टः सर्वभूतेश्वरो यतः ।। 3.2.5.१० ।।
अतो जगत्स्थितं सर्वं ब्राह्मणोऽर्हति नापरः ।।
सदाचारो हि सर्वार्हो नाचाराद्विच्युतः पुनः ।। ११ ।।
तस्माद्विप्रेण सततं भाव्यमाचारशीलिना ।।
विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने ।। १२ ।।

सद्भि यस्तं सदाचारं धर्ममूलं विदुर्बुधाः ।।
लक्षणैः परिहीनोऽपि सम्यगाचारतत्परः ।। १३ ।।
श्रदालुरनसूयुश्च नरो जीवेत्समाः शतम् ।।।
श्रुतिस्मृतिभ्यामुदितं स्वेषुस्वेषु च कर्मसु ।। १४ ।।
सदाचारं निषेवेत धर्ममूलमतन्द्रितः ।।
दुराचाररतो लोके गर्हणीयः पुमा न्भवेत् ।। १५ ।।
व्याधिभिश्चाभिभूयेत सदाल्पायुः सुदुःखभाक् ।।
त्याज्यं कर्म पराधीनं कार्यमात्मवशं सदा ।। १६ ।।
दुःखी यतः पराधीनः सदैवात्मवशः सुखी ।।
यस्मिन्कर्मण्यंतरात्मा क्रियमाणे प्रसीदति ।। १७ ।।
तदेव कर्म कर्त्तव्यं विपरीतं न च क्वचित् ।।
प्रथमं धर्म्मसर्वस्वं प्रोक्तं यन्नियमा यमाः ।। १६ ।।
अतस्तेष्वेव वै यत्नः कर्तव्यो धर्ममिच्छता ।।
सत्यं क्षमार्तवं ध्यानमानृशंस्यमहिंसनम् ।। १९ ।।
दमः प्रसादो माधुर्यं मृदुतेति यमा दश ।।
शौचं स्नानं तपो दानं मौनेज्याध्ययनं व्रतम् ।। 3.2.5.२० ।।
उपोषणोपस्थदंडो दशैते नियमाः स्मृताः ।।
कामं क्रोधं दमं मोहं मात्सर्यं लोभमेव च ।। २१ ।।
अमून्षड्वैरिणो जित्वा सर्वत्र विजयी भवेत् ।।
शनैः संचिनुयाद्धर्मं वल्मीकं शृंगवान्यथा ।। २२ ।।
परपीडामकुर्वाणः पर लोकसहायिनम् ।।
धर्म एव सहायी स्यादमुत्र परिरक्षितः ।। २३ ।।
पितृमातृसुतभ्रातृयोषिद्बंधुजनाधिकः ।।
जायते चैकलः प्राणी म्रियते च तथै कलः ।। २४ ।।
एकलः सुकृतं भुंक्ते भुंक्ते दुष्कृतमेकलः ।।
देहे पंचत्वमापन्ने त्यक्त्वैकं काष्ठलोष्टवत् ।। २५ ।।
बांधवा विमुखा यांति धर्मो यांतमनु व्रजेत् ।।
अतः संचिनुयाद्धर्म्ममत्राऽमुत्र सहायिनम् ।। २६ ।।
धर्मं सहायिनं लब्ध्वा संतरेद्दुस्तरं तमः ।।
संबंधानाचारेन्नित्यमुत्तमैरुत्तमैः सुधीः ।। ।।२७।।
अधमानधमांस्त्यक्त्वा कुलमुत्कर्षतां नयेत् ।।
उत्तमानुत्तमानेव गच्छेद्धीनांश्च वर्जयेत् ।।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ।। २८ ।।

अनध्ययनशीलं च सदाचारविलंघिनम् ।।
सालसं च दुरन्नादं ब्राह्मणं बाधतेंऽतकः ।। २९ ।।
अतोऽभ्यस्येत्प्रयत्नेन सदाचारं सदा द्विजः ।।
तीर्थान्यप्यभिलष्यंति सदाचारिसमागमम् ।। 3.2.5.३० ।।
रजनीप्रांतयामार्द्धं ब्राह्मः समय उच्यते ।।
स्वहितं चिंतयेत्प्राज्ञस्तस्मिंश्चोत्थाय सर्वदा ।। ।। ३१ ।।
गजास्यं संस्मरेदादौ तत ईशं सहांबया ।।
श्रीरंगं श्रीसमेतं तु ब्रह्माणं कमलोद्भवम्।। ३२।।
इंद्रादीन्सकलान्देवान्वसिष्ठादीन्मुनीनपि ।।
गंगायाः सरितः सर्वाः श्रीशैलायखिलान्गिरीन्।। ३३ ।।
क्षीरोदादीन्समुद्रांश्च मानसादिसरांसि च ।।
वनानि नंदनादीनि धेनूः कामदुघादयः ।। ।। ३४ ।।
कल्पवृक्षादिवृक्षांश्च धातून्कांचनमुख्यतः ।।
दिव्यस्त्रीरुर्वशीमुख्याः प्रह्लादावद्यान्हरेः प्रियान् ।। ३५ ।।
जननीचरणौ स्मृत्वा सर्वतीर्थोक्त मोत्तमौ ।।
पितरं च गुरूंश्चापि हृदि ध्यात्वा प्रसन्नधीः ।। ३६ ।।
ततश्चावश्यकं कर्त्तुं नैर्ऋतीं दिशमाव्रजेत् ।।
ग्रामाद्धनुःशतं गच्छेन्नगराच्च चतुर्गुण म् ।। ३७ ।।
तृणैराच्छाद्य वसुधां शिरः प्रावृत्य वाससा ।।
कर्णोपवीत उदग्वक्त्रो दिवसे संध्ययोरपि ।। ३८ ।।
विण्मूत्रे विसृजेन्मौनी निशायां दक्षिणामुखः ।।
न तिष्ठन्नाशु नो विप्र गोवन्ह्यनिलसंमुखः ।। ३९ ।।
न फालकृष्टे भूभागे न रथ्यासेव्यभूतले ।।
नालोकयेद्दिशो भागञ्ज्यो तिश्चक्रं नभो मलम् ।। 3.2.5.४० ।।
वामेन पाणिना शिश्नं धृत्वोत्तिष्ठेत्प्रयत्नवान् ।।
अथो मृदं समादद्याज्जंतुकर्क्करवर्जिताम् ।। ४१ ।।
विहाय मूषको त्खातां चोच्छिष्टां केशसंकुलाम् ।।
गुह्ये दद्यान्मृदं चैकां प्रक्षाल्य चांबुना ततः ।। ४२ ।।
पुनर्वामकरेणेति पंचधा क्षालयेद्गुदम् ।।
एकैक पादयोर्दद्यात्तिस्रः पाण्योर्मृदस्तथा ।। ४३ ।।
इत्थं शौचं गृही कुर्याद्गंधलेपक्षयावधि ।।
क्रमाद्वैगुण्यतः कुर्याद्ब्रह्मचर्यादिषु त्रिषु ।। ४४ ।।
दिवाविहितशौचाच्च रात्रावर्द्धं समाचरेत् ।।

परग्रामे तदर्धं च पथि तस्यार्धमेव च ।। ४५ ।।
तदर्धं रोगिणां चापि सुस्थे न्यूनं न कार येत् ।।
अपि सर्वनदीतोयैर्मृत्कूटैश्चाप्यगोपमैः ।। ४६ ।।
आपातमाचरेच्छौचं भावदुष्टो न शुद्धिभाक् ।।
आर्द्रधात्रीफलोन्माना मृदः शौचे प्रकीर्तिताः ।। ४७ ।।
सर्वाश्चाहुतयोऽप्येवं ग्रासाश्चांद्रायणेपि च ।।
प्रागास्य उदगास्यो वा सूपविष्टः शुचौ भुवि ।। ४८ ।।
उपस्पृशेद्विहीनाभिस्तुषांगारास्थिभस्मभिः ।।
अतिस्वच्छाभिरद्भिश्च यावद्बुद्बुद्राभिरत्वरः ।। ४९ ।।
ब्राह्मणो ब्रह्मतीर्थेन दृष्टिपूताभिराचमेत् ।।
कण्ठगाभिर्नृपः शुध्येत्तालुगाभिस्तथोरुजः ।। 3.2.5.५० ।।
स्त्रीशूद्रावाथ संस्पर्शमात्रेणापि विशुध्यतः ।।
शिरः शब्दं सकंठं वा जले मुक्तशिखोऽपि वा ।। ५१ ।।
अक्षालितपदद्वद्व आचांतोऽप्यशुचिर्म्मतः ।।
त्रिः पीत्वांबु विशुद्ध्यर्थं ततः खानि विशोधयेत् ।। ५२ ।।
अंगुष्ठमूलदेशेन ह्यधरोष्ठौ परि मृजेत् ।।
स्पृष्ट्वा जलेन हृदयं समस्ताभिः शिरः स्पृशेत् ।। ५३ ।।
अंगुल्यग्रैस्तथा स्कन्धौ सांबु सर्व्वत्र संस्पृशेत् ।।
आचांतः पुनराचामेत्कृत्वा रथ्योपसर्पणम्।। ५४ ।।
स्नात्वा भुक्त्वा पयः पीत्वा प्रारंभे शुभकर्मणाम् ।।
सुस्वा वासः परीधाय दृष्ट्वा तथाप्यमंगलम् ।। ५५ ।।
प्रमादादशुचि स्मृत्वा द्विराचांतः शुचिर्भवेत् ।।
दंतधावनं प्रकुर्वीत यथोक्त धर्मशास्त्रतः ।।
आचांतोऽप्यशुचिर्यस्मादकृत्वा दंतधावनम् ।। ५६ ।।
प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे ।।
दंतानां काष्ठसंयोगो दहेदासप्तमं कुलम् ।। ५७ ।।
अलाभे दंतकाष्ठानां निषिद्धे वाथ वासरे ।।
गंडूषा द्वादश ग्राह्या मुखस्य परिशुद्धये ।। ५८ ।।
कनिष्ठाग्रपरीमाणं सत्वचं निर्व्रणारुजम् ।।
द्वादशांगुलमानं च सार्द्रं स्याद्दंतधावनम् ।। ५९ ।।
एकेकांगुलमानं तच्चर्वयेद्दंतधावनम् ।।
प्रातः स्नानं चरित्वा च शुद्ध्यै तीर्थे विशेषतः ।। 3.2.5.६० ।।
प्रातः स्नानाद्यतः शुद्ध्येत्कायोऽयं मलिनः सदा।।

यन्मलं नवभिश्छिद्रैः स्रवत्येव दिवानिशम् ।। ६१ ।।
उत्साहमेधासौभाग्यरूपसंपत्प्रवर्द्धकम् ।।
प्राजापत्यसमं प्राहुस्तन्महाघविनाशकृत् ।। ६२ ।।
प्रातः स्नानं हरेत्पापमलक्ष्मीं ग्लानिमेव च ।।
अशुचित्वं च दुःस्वप्नं तुष्टिं पुष्टिं प्रयच्छति ।। ६३ ।।
नोपसर्पंति वै दुष्टाः प्रातस्नायिजनं क्वचित् ।।
दृष्टादृष्टफलं यस्मात्प्रातःस्नानं समाचरेत् ।। ६४ ।।
प्रसंगतः स्नानविधिं प्रवक्ष्यामि नृपोत्तमाः ।।
विधिस्नानं यतः प्राहुः स्नाना च्छतगुणोत्तरम् ।। ६५ ।।
विशुद्धां मृदमादाय बर्हिषस्तिलगोमयम् ।।
शुचौ देशे परिस्थाप्य ह्याचम्य स्नानमाचरेत् ।। ६६ ।।
उपग्रही बद्ध शिखो जलमध्ये समाविशेत् ।।
स्वशाखोक्तविधानेन स्नानं कुर्याद्यथाविधि ।। ६७ ।।
स्नात्वेत्थं वस्त्रमापीड्य गृह्णीयाद्धौतवाससी ।।
आचम्य च ततः कुर्यात्प्रातःसंध्यां कुशान्वितः ।। ६८ ।।
प्राणायामांश्चरन्विप्रो नियम्य मानसं दृढम् ।।
अहोरात्रकृतैः पापैर्मुक्तो भवति तत्क्षणात् ।। ।। ६९ ।।
दश द्वादशसंख्या वा प्राणायामाः कृता यदि ।।
नियम्य मानसं तेन तदा तप्तं महत्तपः ।। 3.2.5.७० ।।
सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ।।
अपि भ्रूणहनं मासात्पुनंत्यहरहः कृताः ।। ७१ ।।
यथा पार्थिवधातूनां दह्यते धमनान्मलाः ।।
तथेंद्रियैः कृता दोषा ज्वाल्यंते प्राणसंयमात्।। ७२ ।।
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।।
गायत्र्यास्तु परं नास्ति पावनं च नृपोत्तम ।। ७३ ।।
कर्मणा मनसा वाचा यद्रात्रौ कुरुते त्वघम्।।
उत्तिष्ठन्पूर्वसंध्यायां प्राणायामैर्विशोधयेत् ।। ७४ ।।
यदह्ना कुरुते पापं मनोवाक्कायकर्मभिः ।।
आसीनः पश्चिमां संध्यां प्राणायामैर्व्यपोहति ।।
पश्चिमां तु समासीनो मलं हंति दिवाकृतम् ।। ७५ ।।
नोपतिष्ठेतु यः पूर्व्वां नोपास्ते यस्तु पश्चिमाम् ।।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ।। ७६ ।।
अपां समीपमासाद्य नित्यकर्म समाचरेत् ।।

तत आचमनं कुर्याद्यथाविध्यनु पूर्वशः ।। ७७ ।।
आपोहिष्ठेति तिसृभिर्मार्जनं तु ततश्चरेत् ।।
भूमौ शिरसि चाकाश आकाशे भुवि मस्तके ।। ७८ ।।
मस्तके च तथाकाशं भूमौ च नवधा क्षिपेत् ।।
भूमिशब्देन चरणावाकाशं हृदयं स्मृतम् ।।
शिरस्येव शिरःशब्दो मार्जनं तैरुदाहृतम् ।। ७९ ।।
वारुणादपि चाग्नेयाद्वायव्यादपि चैंद्रतः ।।
मंत्रस्थानादपि परं ब्राह्मं स्नानमिदं परम् ।।
ब्राह्मस्नानेन यः स्नातः स बाह्याभ्यंतरं शुचिः ।। ३.२.५.८० ।।
सर्वत्र चार्हतामेति देवपूजादिकर्मणि ।।
नक्तंदिनं निमज्ज्याप्सु कैवर्ताः किमु पावनाः ।। ८१ ।।
शतशोऽपि तथा स्नाता न शुद्धा भावदूषिताः ।।
अंतःकरणशुद्धांश्च तान्विभूतिः पवित्रयेत् ।। ८२ ।।
किं पावनाः प्रकीर्त्यंते रासभा भस्मधूसराः ।।
स स्नातः सर्वतीर्थेषु मलैः सर्वैर्विवर्जितः ।।८३।।
तेन क्रतुशतैरिष्टं चेतो यस्येह निर्मलम् ।।
तदेव निर्मलं चेतो यथा स्यात्तन्मुने शृणु ।। ८४ ।।
विश्वेशश्चेत्प्रसन्नः स्यात्तदा स्यान्नान्यथा क्वचित् ।।
तस्माच्चेतो विशुद्ध्यर्थं काशीनाथं समाश्रयेत्।।८५।।
इदं शरीरमुत्सृज्य परं ब्रह्माधिगच्छति।।
द्रुपदांतं ततो जप्त्वा जलमादाय पाणिना।।
।। ८६ ।। कुयाद्दतं च मंत्रेण विधिज्ञस्त्वघमर्षणम् ।।
निमज्ज्याप्सु च यो विद्वाञ्जपेत्त्रिरघमर्षणम् ।। ८७ ।।
जले वापि स्थले वापि यः कुर्यादघमर्ष णम् ।।
तस्याघौघो विनश्येत यथा सूर्योदये तमः ।। ८८ ।।
गायत्रीं शिरसा हीनां महाव्याहृतिपूर्व्विकाम् ।।
प्रणवाद्यां जपंस्तिष्ठन्क्षिपेदंभोंजलि त्रयम्।। ८९ ।।
तेन वज्रोदकेनाशु मंदेहा नाम राक्षसाः ।।
सूर्यतेजः प्रलोपंते शैला इव विवस्वतः ।। ३.२.५.९० ।।
सहायार्थं च सूर्यस्य यो द्विजो नांजलि त्रयम्।।
क्षिपेन्मंदेहनाशाय सोपि मंदेहतां व्रजेत् ।।९१।।
प्रातस्तावज्जपंस्तिष्ठेद्यावत्सूर्यस्य दर्शनम् ।।
उपविष्टो जपेत्सायमृक्षाणामाविलोकनात् ।। ।। ९२ ।।

काललोपो न कर्त्तव्यो द्विजेन स्वहितेप्सुना।।
अर्द्धोदयास्तसमये तस्माद्वज्रोदकं क्षिपेत् ।। ९३ ।।
विधिनापि कृता संध्या कालातीता ऽफला भवेत् ।।
अयमेव हि दृष्टांतो वंध्यास्त्रीमैथुनं यथा ।।९४।।
जले वामकरं कृत्वा या संध्याऽऽचरिता द्विजैः ।।
वृषली सा परिज्ञेया रक्षोगणमुदा वहा ।। ९५ ।।
उपस्थानं ततः कुर्याच्छाखोक्तविधिना ततः ।।
सहस्रकृत्वो गायत्र्याः शतकृत्वोथवा पुनः ।। ९६ ।।
दशकृत्वोऽथ देव्यै च कुर्यात्सौ रीमुपस्थितिम् ।।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।। ९७ ।।
गायत्रीं यो जपेद्विप्रो न स पापैः प्रलिप्यते ।।
रक्तचंदनमिश्राभिरद्भिश्च कुसुमैः कुशैः ।। ९८ ।।
वेदोक्तैरागमोक्तैर्वा मंत्रैरर्घं प्रदापयेत् ।।
अर्चितः सविता येन तेन त्रैलोक्यमर्च्चितम् ।। ९९ ।।
अर्चितः सविता दत्ते सुतान्पशुव सूनि च ।।
व्याधीन्हरेद्ददात्यायुः पूरयेद्वांछितान्यपि ।। 3.2.5.१०० ।।
अयं हि रुद्र आदित्यो हरिरेष दिवाकरः ।।
रविर्हिरण्यरूपोऽसौ त्रयीरूपोऽयमर्यमा ।। १०१ ।।
ततस्तु तर्पणं कुर्यात्स्वशाखोक्तविधानतः ।।
ब्रह्मादीनखिलान्देवान्मरीच्यादींस्तथा मुनीन् ।। १०२ ।।
चंदनागुरुकर्प्पूरगंधव त्कुसमैरपि ।।
तर्पयेच्छुचिभिस्तोयैस्तृप्यंत्विति समुच्चरेत् ।। ३ ।।
सनकादीन्मनुष्यांश्च निवीती तर्पयेद्यवैः ।।
अंगुष्ठद्वयमध्ये तु कृत्वा दर्भानृजून्द्विजः ।। ४ ।।
कव्यवाडनलादींश्च पितॄन्दिव्यान्प्रतर्प्पयेत् ।।
प्राचीनावीतिको दर्भैर्द्विगुणैस्तिलमिश्रितैः ।। ५ ।।
रवौ शुक्ले त्रयोदश्यां सप्तम्यां निशि संध्ययोः ।।
श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्प्पणम् ।। ६ ।।
यदि कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृती ।।
चतुर्दश यमान्पश्चात्तर्पयेन्नाम उच्चरन् ।।७।।
ततः स्वगोत्रमुच्चार्य तर्पयेत्स्वान्पितॄन्मुदा ।।
सव्यजानुनिपातेन पितृतीर्थेन वाग्यतः ।।८।।
एकैकमंजलिं देवा द्वौद्वौ तु सनकादिकाः ।।

पितरस्त्रीन्प्रवांछंति स्त्रिय एकैकमंजलिम् ।। ९ ।।
अंगुल्यग्रेण वै दैवमार्षमंगुलिमूलगम् ।।
ब्राह्ममंगुष्ठमूले तु पाणिमध्ये प्रजापतेः ।। ३.२.५.११० ।।
मध्येंगुष्ठप्रदेशिन्योः पित्र्यं तीर्थं प्रचक्षते ।।
आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ।। ११ ।।
तृप्यंतु सर्व्वे पितरो मातृमातामहादयः ।।
अन्ये च मंत्राः प्रोक्ता ये वेदोक्ताः पुराणसंभवाः ।। १२ ।।
सांगं च तर्प्पणं कुर्यात्पितॄणां च सुखप्रदम् ।।
अग्निकार्यं ततः कृत्वा वेदाभ्यासं ततश्चरेत् ।। १३ ।।
श्रुत्यभ्यासः पंचधा स्यात्स्वीकारोऽर्थविचारणम् ।।
अभ्यासश्च तपश्चापि शिष्येभ्यः प्रतिपादनम् ।। १४ ।।
लब्धस्य प्रतिपालार्थमलब्धस्य च लब्धये ।।
प्रातःकृत्यमिदं प्रोक्तं द्विजातीनां नृपोत्तम ।। १५ ।।
अथवा प्रातरुत्थाय कृत्वावश्यकमेव च ।।
शौचाचमनमादाय भक्षयेद्दन्तधावनम् ।। ।। १६ ।।
विशोध्य सर्वगात्राणि प्रातःसंध्यां समाचरेत् ।।
वेदार्थानधिगच्छेद्वै शास्त्राणि विविधान्यपि ।। १७ ।।
अध्यापयेच्छुचीञ्छिष्यान्हितान्मे धासमन्वितान् ।।
उपेयादीश्वरं चापि योगक्षेमादिसिद्धये ।। १८ ।।
ततो मध्याह्नसिद्ध्यर्थं पूर्वोक्तं स्नानमाचरेत् ।।
स्नात्वा माध्याह्निकीं संध्या मुपासीत विचक्षणः ।। १९ ।।
देवतां परिपूज्याथ नैमित्तिकं विधिं चरेत् ।।
पवनाग्निं समुज्ज्वाल्य वैश्वदेवं समाचरेत् ।। ३.२.५.१२० ।।
निष्पावान्को द्रवान्माषान्कलापांश्चणकांस्त्यजेत् ।।
तैलपक्वमपक्वान्नं सर्वं लवणयुक्त्यजेत् ।। २१ ।।
आढक्यन्नं मसूरान्नं वर्तुलधान्यसंभवम् ।।
भुक्तशेषं पर्युषितं वैश्वदेवे विवर्जयेत् औ। २२ ।।
दर्भपाणिः समाचम्य प्राणायामं विधाय च ।।
पृषोदिवीति मंत्रेण पर्य्युक्षणमथाचरेत् ।। २३ ।।
प्रदक्षिणं च पर्युक्ष्य द्विः परिस्तीर्य वै कुशान् ।।
रापोर्द्ध (?) देवमन्त्रेण कुर्याद्वह्निं स्वसंमुखे ।। २४ ।।
वैश्वानरं समभ्यर्च्य गन्धपुष्पाक्षतैस्तथा ।।
स्वशाखोक्तप्रकारेण होमं कुर्याद्विचक्षणः ।। २५ ।।

अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः ।।
यतिश्च ब्रह्मचारी च षडेते धर्मभिक्षकाः ।। २६ ।।
अतिथिः पांथिको ज्ञेयोऽनूचानः श्रुतिपारगः ।।
मान्यावेतौ गृहस्थानां ब्रह्मलोकमभीप्सताम् ।। २७ ।।
अपि श्वपाके शुनि वा नैवान्नं निष्फलं भवेत् ।।
अत्रार्थिनि समायाते पात्रापात्रं न चिंतयेत् ।। २८ ।।
शुनां च पतितानां च श्वपचां पापरोगिणाम् ।।
काकानां च कृमीणां च बहिरन्नं किरेद्भुवि ।। २९ ।।
ऐन्द्रवारुणवायव्याः सौम्या वै नैर्ऋताश्च ये ।।
प्रतिगृह्णंत्विमं पिंडं काका भूमौ मयार्पितम् ।। 3.2.5.१३० ।।
इत्थं भूत बलिं कृत्वा कालं गोदोहमात्रकम् ।।
प्रतीक्ष्यातिथिमायातं विशद्भोज्यगृहं ततः ।। ३१ ।।
अदत्त्वा वायसबलिं नित्यश्राद्धं समाचरेत् ।।
नित्यश्राद्धे स्वसामर्थ्यात्त्रीन्द्वावेकमथापि वा ।। ३२ ।।
भोजयेत्पितृयज्ञार्थं दद्यादुद्धत्य वारि च ।।
नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।। ।। ३३ ।।
दक्षिणारहितं त्वेतद्दातृभोक्तृसुतृप्तिकृत् ।।
पितृयज्ञं विधायेत्थं स्वस्थबुद्धिरनातुरः ।। ३४ ।।
अदुष्टासनमध्यास्य भुंजीत शिशुभिः सह ।।
सुगन्धिः सुमनाः स्रग्वी शुचिवासोद्वयान्वितः ।। ३५ ।।
प्रागास्य उदगास्यो वा भुंजीत पितृसेवितम् ।।
विधायान्नमनग्नं तदुपरिष्टादधस्तथा ।। ३६ ।।
आपोशानविधानेन कृत्वाश्नीयात्सुधीर्द्विजः ।।
भूमौ बलित्रयं कुर्यादपो दद्यात्तदोपरि ।। ३७ ।।
सकृच्चाप उपस्पृश्य प्राणाद्याहुतिपंचकम् ।।
दद्याजठरकुंडाग्नौ दर्भपाणिः प्रसन्नधीः ।। ३८ ।।
दर्भपाणिस्तु यो भुंक्ते तस्य दोषो न विद्यते ।।
केशकीटादिसंभूतस्तदश्नीयात्सदर्भकः ।। ३९ ।।
ततो मौनेन भुञ्जीत न कुर्याद्दंतघर्षणम् ।।
प्रक्षालितव्यहस्तस्य दक्षिणांगुष्ठमूलतः ।। 3.2.5.१४० ।।
रौरवेऽपुण्यनि लये अधोलोकनिवासिनाम् ।।
उच्छिष्टोदकमिच्छूनामक्षय्यमुपतिष्ठताम् ।। ४१ ।।
पुनराचम्य मेधावी शुचिर्भूत्वा प्रयत्नतः ।।

मुखशुद्धिं ततः कृत्वा पुराणश्रवणादिभिः ।। ४२ ।।
अतिवाह्य दिवाशेषं ततः संध्यां समाचरेत् ।।
गृहेषु प्राकृता संध्या गोष्टे दशगुणा स्मृता ।। ४३ ।।
नद्यामयुतसंख्या स्यादनंता शिवसन्निधौ ।।
अनृतं मद्यगन्धं च दिवामैथुनमेव च ।।
पुनाति वृषलस्थानं संध्या बहिरुपासिता ।। ४४ ।।
उद्देशतः समाख्यात एष नित्यतनो विधिः ।।
इत्थं समाचरन्विप्रो नावसीदति कर्हिचित्।।१४५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहरुया संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये सदाचारवर्णनंनाम पंचमोऽध्यायः ।। ५ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०६

https://sa.wikisource.org/s/ftp
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

व्यास उवाच ।। ।।
उपकाराय साधूनां गृहस्थाश्रमवासिनाम् ।।
यथा च क्रियते धर्मो यथावत्कथयामि ते ।। १ ।।
वत्स गार्हस्थ्यमास्थाय नरः सर्वमिदं जगत् ।।
पुष्णाति तेन लोकांश्च स जयत्यभिवांछितान् ।। २ ।।
पितरो मुनयो देवा भूतानि मनुजास्तथा ।।
क्रिमिकीटपतंगाश्च वयांसि पितरोऽसुराः ।। ३ ।।
गृहस्थमुपजीवंति ततस्तृप्तिं प्रयांति च ।।
मुखं वास्य निरीक्षंते अपो नो दास्यतीति च ।। ४ ।।
सर्वस्याधारभूता ये वत्स धेनुस्त्रयीमयी ।।
अस्यां प्रतिष्ठितं विश्वं विश्वहेतुश्च या मता ।। ५ ।।
ऋक्पृष्ठासौ यजुःसंध्या सामकुक्षिपयोधरा ।।
इष्टापूर्तविषाणा च साधुसूक्ततनूरुहा ।। ६ ।।
शांति पुष्टिशकृन्मूत्रा वर्णपादप्रतिष्ठिता ।।
उपजीव्यमाना जगतां पदक्रमजटाघनैः ।। ७ ।।
स्वाहाकारस्वधाकारौ वषट्कारश्च पुत्रक ।।
हन्तकारस्तथै वान्यस्तस्याः स्तनचतुष्टयम् ।। ८ ।।
स्वाहाकारस्तनं देवाः पितरश्च स्वधामयम् ।।
मुनयश्च वषट्कारं देवभूतसुरेश्वराः ।। ९ ।।
हन्तकारं मनुष्याश्च पिबंति सततं स्तनम् ।।
एवमध्यापयेदेव वेदानां प्रत्यहं त्रयीम् ।। 3.2.6.१० ।।
तेषामुच्छेदकर्त्ता यः पुरुषोऽनंतपापकृत् ।।
स तमस्यंधतामिस्रे नरके हि निमज्जति ।। ११ ।।
यस्त्वेनां मानवो धेनुं स्ववर्त्सैरमरादिभिः ।।
पूजयत्युचिते काले स स्वर्गायोपपद्यते ।। १२ ।।
तस्मात्पुत्र मनुष्येण देवर्षि पितृमानवाः ।।
भूतानि चानुदिवसं पोष्याणि स्वतनुर्यथा ।। १३ ।।
तस्मात्स्नातः शुचिर्भूत्वा देवर्षिपितृतर्पणम् ।।

यज्ञस्यांते तथैवाद्भिः काले कुर्यात्समाहितः ।। १४ ।।
सुमनोगन्धपुष्पैश्च देवानभ्यर्च्य मानवः ।।
ततोग्नेस्तर्पणं कुर्याद्द्याच्चापि बलींस्तथा ।। १५ ।।
नक्तंचरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत् ।।
पितॄणां निर्वपेत्तद्वद्दक्षिणाभिमुखस्ततः ।। १६ ।।
गृहस्थस्तत्परो भूत्वा समाहितमानसः ।।
ततस्तोयमुपादाय तेष्वेवार्पण सत्क्रियाम् ।। १७ ।।
स्थानेषु निक्षिपेत्प्राज्ञो नाम्ना तूदिश्य देवताः ।।
एवं बलिं गृहे दत्त्वा गृहे गृहपतिः शुचिः ।। १८ ।।
आचम्य च ततः कुर्यात्प्राज्ञो द्वारावलोकनम् ।।
मुहूर्तस्याष्टमं भागमुदीक्षेतातिथिं ततः ।। १९ ।।
अतिथिं तत्र संप्राप्तमर्घ्यपाद्योदकेन च ।।
बुभुक्षुमागतं श्रांतं याचमानमकिंचनम् ।। ३.२.६.२० ।।
ब्राह्मणं प्राहुरतिथिं संपूज्य शक्तितो बुधैः ।।
न पृछेत्तत्राचरणं स्वाध्यायं चापि पंडितः ।।२१।।
शोभनाशोभनाकारं तं मन्येत प्रजापतिम् ।।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ।। २२ ।।
तस्मै दत्त्वा तु यो भुंक्ते स तु भुंक्तेऽमृतं नरः ।।
अतिथिर्यस्य भग्नाशो गृहात्प्रति निवर्तते ।।२३।।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ।।
अपि वा शाकदानेन यद्वा तोयप्रदानतः ।।
पूजयेत्तं नरः भक्त्या तेनैवातो विमुच्यते ।।२४।।
।। युधिष्ठिर उवाच ।। ।।
विवाहा ब्राह्मदैवार्षाः प्राजापत्यासुरौ तथा ।।
गांधर्वो राक्षसश्चापि पैशाचोष्टम उच्यते ।।२५।।
एतेषां च विधिं ब्रूहि तथा कार्यं च तत्त्वतः ।।
गृहस्थानां तथा धर्मान्ब्रूहि मे त्वं विशेषतः ।। २६ ।।
।। पराशर उवाच ।। ।।
स ब्राह्मो वरमाहूय यत्र कन्या स्वलंकृता ।।
दीयते तत्सुतः पूयात्पुरुषानेकविंशतिम् ।। २७ ।।
यज्ञस्थायर्त्विजे दैवस्तज्जः पाति चतुर्दश ।।
वरादादाय गोद्वन्द्वमार्षस्तज्जः पुनाति षट् ।। २८ ।।
सहोभौ चरतां धर्मं प्राजापत्यः स ईरितः ।।

वरवध्वोः स्वेच्छया च गांधर्वोऽन्योन्यमैत्रतः ।।
प्रसह्य कन्याहरणाद्राक्षसो निन्दितः सताम् ।। २९ ।।
छलेन कन्याहरणात्पैशाचो गर्हितोऽष्टमः ।।
प्रायः क्षत्रविशोरुक्ता गांधर्वासुरराक्षसाः ।। ३.२.६.३० ।।
अष्टमस्त्वेष पापिष्ठः पापिष्ठानां च संभवः ।।
सवर्णया करो ग्राह्यो धार्यः क्षत्रियया शरः ।। ३१ ।।
प्रतोदो वैश्यया धार्यो वासोंतः शूद्रया तथा ।।
असवर्णा स्वेष विधिः स्मृतौ दृष्टश्च वेदने ।। ३२ ।।
सवर्णाभिस्तु सर्वाभिः पाणिर्ग्राह्यस्त्वयं विधिः ।।
धर्म्ये विवाहे जायंते धर्म्याः पुत्राः शतायुषः ।। ३३ ।।
अधर्म्याद्धर्म्मरहिता मंदभाग्यधनायुषः ।।
कृतकालाभिगमने धर्मोयं गृहिणः परः ।।३४।।
स्त्रीणां वरमनुस्मृत्य यथाकाम्यथवा भवेत् ।।
दिवाभिगमनं पुंसामनायुष्यं परं मतम्।। ३५ ।।
श्राद्धार्हः सर्वपर्वाणि न गंतव्यानि धीमता ।।
तत्र गच्छन्स्त्रियं मोहार्द्धर्मात्प्रच्यवते परात् ।। ३६ ।।
ऋतुकालाभिगामी यः स्वदारनिरतश्च यः ।।
स सदा ब्रह्मचारी हि विज्ञेयः स गृहाश्रमी ।। ३७ ।।
आर्षे विवाहे गोद्वंद्वं यदुक्तं तत्र शस्यते ।।
शुल्कमण्वपि कन्यायाः कन्याविक्रयपापकृत् ।। ३८ ।।
अपत्यविक्रयात्कल्पं वसेद्विट्कृमिभोजने ।।
अतो नाण्वपि कन्याया उपजीव्यं नरैर्धनम् ।। ३९ ।।
तत्र तुष्टा महालक्ष्मीर्निवसेद्दानवारिणा ।।
वाणिज्यं नीचसेवा च वेदानध्ययनं तथा ।। ३.२.६.४० ।।
कुविवाहः क्रियालोपः कुले पतनहेतवः ।।
कुर्याद्वैवाहिके चाग्नौ गृह्यकर्म्मान्वहं गृही ।। ४१ ।।
पञ्चयज्ञक्रियां चापि पक्तिं दैनंदिनीमपि ।।
गृहस्थाश्रमिणः पञ्चसूनाकर्म दिनेदिने ।। ४२ ।।
कुण्डनी पेषणी चुल्ली ह्युदकुम्भी तु मार्जनी ।।
तासां च पंचसूनानां निराकरणहेतवः ।।
क्रतवः पंच निर्द्दिष्टा गृहिश्रेयोभिवर्द्धनाः ।। ४३ ।।
पठनं ब्रह्मयज्ञः स्यात्तर्पणं च पितृक्रतुः ।।
होमो दैवो बलिर्भौत आतिथ्यं नृक्रतुः क्रमात् ।। ४४ ।।

वैश्वदेवांतरे प्राप्तः सूर्योढो वातिथिः स्मृतः ।।
अतिथेरादितोप्येते भोज्या नात्र विचारणा ।। ४५ ।।
पितृदेवमनुष्येभ्यो दत्त्वाश्नात्यमृतं गृही ।।
अदत्त्वान्नं च यो भुंक्ते केवलं स्वोदरंभरिः ।। ४६ ।।
वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः ।।
सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ।।४७।।
अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः ।।
इह लोकेन्नहीनाः स्युः काकयोनिं व्रजंत्यथो ।। ४८।।
वेदोक्तं विदितं कर्म्म नित्यं कुर्यादतंद्रितः ।।
यदि कुर्याद्यथाशक्ति प्राप्नुयात्सद्गतिं पराम् ।। ४९ ।।
षष्ठ्यष्टम्योर्वसेत्पापं तैले मांसे सदैव हि ।।
चतुर्दश्यां पञ्चदश्यां तथैव च क्षुरे भगे ।। ३.२.६.५० ।।
उदयन्तं न वीक्षेत नास्तं यंतं न मस्तके ।।
न राहुणोपस्पृष्टं च नांडस्थं वीक्षयेद्रविम् ।।५१।।
न वीक्षेतात्मनो रूपमप्सु धावेन्न कर्दमे ।।
न नग्नां स्त्रियमीक्षेत न नग्नो जलमाविशेत् ।।५२।।
देवतायतनं विप्रं धेनुं मधु मृदं तथा।।
जातिवृद्धं वयोवृद्धं विद्यावृद्धं तथैव च ।।५३।।
अश्वत्थं चैत्यवृक्षं च गुरुं जलभृतं घटम्।।
सिद्धान्नं दधिसिद्धार्थं गच्छन्कुर्यात्प्रदक्षिणम् ।। ५४ ।।
रजस्वलां न सेवेत नाश्नीयात्सह भार्यया ।।
एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने ।। ५५ ।।
नाशुचिं स्त्रियमीक्षेत तेज स्कामो द्विजोत्तमः ।।
असंतर्प्य पितॄन्देवान्नाद्यादन्नं च कुत्रचित् ।।५६।।
पक्वान्नं चापि नो मांसं दीर्घकालं जिजीविषुः ।।
न मूत्रणं व्रजे कुर्यान्न वल्मी के न भस्मनि ।। ५७ ।।
न गर्त्तेषु ससत्त्वेषु न तिष्ठन्न व्रजन्नपि ।।
ब्राह्मणं सूर्यमग्निं च चंद्रमृक्षगुरूनपि ।। ५८ ।।
अभिपश्यन्न कुर्वीत मलमूत्रविसर्ज नम्।।
मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम् ।। ५९ ।।
नांघ्री प्रतापयेदग्नौ न वस्तु अशुचि क्षिपेत् ।।
प्राणिहिंसां न कुर्वीत नाश्नीयात्संध्य योर्द्वयोः ।। ३.२.६.६० ।।
न संविशेच्च संध्यायां प्रातः सायं क्वचिद्बुधः ।।

नाचक्षीत धयंतीं गां नेंद्रचापं प्रदर्शयेत् ।। ६१ ।।
नैकः सुप्यात्क्वचिच्छून्ये न शयानं प्रबोधयेत् ।।
पंथानं नैकलो यायान्न वार्य्यंजलिना पिबेत् ।। ६२ ।।
न दिवोद्धृतसारं च भक्षयेद्दधि नो निशि ।।
स्त्रीधर्मिणी नाभिवदेन्नाद्यादातृप्ति रात्रिषु ।। ६३ ।।
तौर्यत्रिकप्रियो न स्यात्कांस्ये पादौ न धावयेत् ।।
श्राद्धं कृत्वा परश्राद्धे योऽश्नीयाज्ज्ञानवर्जितः ।। ६४ ।।
दातुः श्राद्धफलं नास्ति भोक्ता किल्बिषभुग्भवेत् ।।
न धारयेदन्यभुक्तं वासश्चोपानहावपि ।। ६५ ।।
न भिन्नभाजनेऽश्नीयान्नासीताग्न्यादिदूषिते ।।
आरोहणं गवां पृष्ठे प्रेतधूमं सरित्तटम्।। ६६ ।।
बालातपं दिवास्वापं त्यजेद्दीर्घं जिजीविषुः ।।
स्नात्वा न मार्जयेद्गात्रं विसृजेन्न शिखां पथि ।। ।। ६७ ।।
हस्तौ शिरो न धुनुयान्नाकर्षेदासनं पदा ।।
करेण नो मृजेद्गात्रं स्नानवस्त्रेण वा पुनः ।। ६८ ।।
शुनोच्छिष्टं भवेद्गात्रं पुनः स्नानेन शुध्यति ।।
नोत्पाटयेल्लोमनखं दशनेन कदाचन।।६९।।
करजैः करजच्छेदं विवर्जयेच्छुभाय तु।।
यदायत्यां त्यजेत्तन्न कुर्यात्कर्म प्रयत्नतः।। ३.२.६.७०।।
अद्वारेण न गन्तव्यं स्ववेश्मापि कदाचन।।
क्रीडेन्नाज्ञैः सहासीत न धर्म्मघ्नैर्न रोगिभिः।।७१।।
न शयीत क्वचिन्नग्नः पाणौ भुंजीत नैव च ।।
आर्द्रपादकरास्योऽश्नन्दीर्घकालं न जीवति ।। ७२ ।।
संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् ।।
शयनस्थो न चाश्नीयान्न पिबेच्च जलं द्विजः ।। ७३ ।।
सोपानत्को नोपविशेन्न जलं चोत्थितः पिबेत् ।।
सर्व्वमम्लमयं नाद्यादारोग्यस्याभिलाषुकः ।। ७४ ।।
न निरीक्षेत विण्मूत्रे नोच्छिष्टः संस्पृशेच्छिरः ।।
नाधितिष्ठेत्तुषांगार भस्मकेशकपालिकाः ।। ७५ ।।
पतितैः सह संवासः पतनायैव जायते ।।
दद्यादासनं मंचं न शूद्राय कदाचन ।। ७६ ।।
ब्राह्मण्याद्धीयते विप्रः शूद्रो धर्माच्च हीयते ।।
धर्मोपदेशः शूद्राणां स्वश्रेयः प्रतिघातयेत् ।। ७७ ।।

द्विजशुश्रूषणं धर्म्मः शूद्राणां हि परो मतः ।।
कण्डूयनं हि शिरसः पाणिभ्यां न शुभं मतम् ।। ७८ ।।
आदिशेद्वैदिकं मंत्रं न शूद्राय कदाचन ।।
ब्राह्मण्या दीयते विप्रः शूद्रो धर्म्माच्च हीयते ।। ।७९ ।।
आताडनं कराभ्यां च क्रोशनं केशलुंचनम् ।।
अशास्त्रवर्तनं भूयो लुब्धात्कृत्वा प्रतिग्रहम् ।। ३.२.६.८० ।।
ब्राह्मणः स च वै याति नरकानेकविंशतिम् ।।
अकालमेघस्तनिते वर्षर्तौ पांसुवर्षणे ।। ८१ ।।
महाबालध्वनौ रात्रावनध्यायाः प्रकीर्तिताः ।।
उल्कापाते च भूकंपे दिग्दाहे मध्यरात्रिषु ।। ८२ ।।
मध्ययोर्वृषलोपान्ते राज्यहारे च सूतके ।।
दशाष्टकासु भूतायां श्राद्धाहे प्रतिपद्यपि ।।८३।।
पूर्णिमायां तथाष्टम्यां विड्वरे राष्ट्रविप्लवे ।।
उपाकर्मणि चोत्सर्गे कल्पादिषु युगादिषु ।।८४।।
आरण्यकमधीत्यापि बाणसाम्नोरपि ध्वनौ ।।
अनध्यायेषु चैतेषु चाधीयीत न वै क्वचित् ।।८५।।
भूताष्टम्योः पञ्चदश्योर्ब्रह्मचारी सदा भवेत् ।।
अनायुष्यकरं चेह परदारोपसर्पणम् ।।
तस्मात्तद्दूरतस्त्याज्य वैरिणां चोपसेवनम् ।। ८६ ।।
पूर्वर्द्धिभिः परित्यक्तमात्मानं नावमानयेत् ।।
सदोद्यमवतां यस्माच्छ्रियो विद्या न दुर्लभाः ।। ।। ८७ ।।
सत्यं ब्रूयात्प्रियं बूयान्न ब्रूयात्सत्यमप्रियम् ।।
प्रियं च नानृतं ब्रूयादेष धर्मो विधीयते ।। ८८ ।।
वाचोवेगं मनावेगं जिह्वावेगं च वर्ज येत् ।।
गुह्यजान्यपि लोमानि तत्स्पर्शादशुचिर्भवेत ।। ८९ ।।
पादधौतोदकं मूत्रमुच्छिष्टान्युदकानि च ।।
निष्ठीवनं च श्लेष्माणं दूराद्दूरं विनिः क्षिपेत ।। ३.२.६.९० ।।
अहर्न्निशं श्रुतेर्जाप्याच्छौचाचारनिषेवणात ।।
अद्रोहवत्या बुद्ध्या च पूर्वजन्म म्मरेद्द्विजः ।। ९१ ।।
वृद्धान्प्रयत्नाद्वंदेत दद्यात्तेषां स्वमासनम ।।
विनम्रकन्धरो भूयादनुयायात्ततश्च तान् ।। ९२ ।।
श्रुतिभूदेवदेवानां नृपसाधुतपस्विनाम् ।।
पतिव्रतानां नारीणां निन्दां कुर्यान्न कर्हि चित ।। ९३ ।।

उद्धृत्य पञ्चमृत्पिंडान्स्नायात्परजलाशये ।।
श्रद्धया पात्रमासाद्य यत्किंचिद्दीयते वसु ।। ९४ ।।
देशे काले च विधिना तदानंत्याय कल्पते ।।
भूप्रदो मण्डलाधीशः सर्वत्र सुखितोऽन्नदः ।। ९५ ।।
तोयदाता सुरूपः स्यात्पुष्टश्चान्नप्रदो भवेत ।।
प्रदीपदो निर्मलाक्षो गोदातार्यमलोक भाक् ।।९६।।
स्वर्णदाता च दीर्घायुस्तिलदः स्याच्च सुप्रजः ।।
वेश्मदोऽत्युच्चसौधेशो वस्त्रदश्चन्द्रलोकभाक् ।।९७।।
हयप्रदो दिव्यदेहो लक्ष्मीवान्वृषभ प्रदः।।
सुभार्यः शिबिकादाता सुपर्यंकप्रदोऽपि च ।।९८।।
श्रद्धया प्रतिगृह्णाति श्रद्धया यः प्रयच्छति ।।
स्वर्गिणौ तावुभौ स्यातां पततोऽश्रद्रया त्वधः ।।।९९।।
अनृतेन क्षरेद्यज्ञस्तपो विस्मयतः क्षरेत् ।।
क्षरेत्कीर्तिर्विनादानमायुर्विप्रापमानतः ।।3.2.6.१००।।
गंधं पुष्पं कुशा गावः शाकं मांसं पयो दधि ।।
मणिमत्स्यगहं धान्यं ग्राह्यमेतदुपस्थितम् ।।१०१।।
मधूदकं फलं मूलमेधांस्यभयदक्षिणा ।।
अभ्युद्यतानि ग्राह्याणि त्वेतान्यपि निकृष्टतः।।१०२।।
दासनापितगोपालकुलमित्रार्द्धसीरिणः ।।
भोज्यान्नाः शूद्रवर्गेमी तथात्मविनिवेदकः ।।१०३।।
इत्थमाचारधर्मोयं धर्मारण्यनिवासिनाम् ।।
श्रुतिस्मृत्युक्तधर्मोऽयं युधिष्ठिर निवेदितः ।। १०४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये सदाचारलक्षणवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०७



।। व्यास उवाच ।। ।।

संप्राप्य धर्मवाप्यां च यः कुर्यात्पितृतर्पणम् ।।

तृप्तिं प्रयांति पितरो यावदिंद्राश्चतुर्दश ।। १ ।।

पितरश्चात्र पूज्याश्च स्वर्गता ये च पूर्वजाः ।।

पिंडांश्च निर्वपेत्तेषां प्राप्येमां मुक्तिदायिकाम् ।। २ ।।

त्रेतायां पंच दिवसैर्द्वापरे त्रिदिनेन तु ।।

एकचित्तेन यो विप्राः पिंडं दद्यात्कलौ युगे ।। ३ ।।

लोलुपा मानवा लोके संप्राप्ते तु कलौ युगे ।।

परदाररता लोकाः स्त्रियोऽतिचपलाः पुनः।।४।।

परद्रोहरताः सर्वे नरनारीनपुंसकाः।।

परनिन्दापरा नित्यं परच्छिद्रोपदर्शकाः।।५।।

परोद्वेगकरा नूनं कलहा मित्रभेदिनः।।

सर्वे ते शुद्धतां यांति काजेशाः स्वयमब्रुवन् ।।६।।

एतदुक्तं महाभाग धर्मारण्यस्य वर्णनम् ।।

फलं चैवात्र सर्वं हि यदुक्तं शूलपाणिना ।। ७ ।।

वाङ्मनः कायशुद्धाश्च परदारपराङ्मुखाः ।।

अद्रोहाश्च समाः क्रुद्धा मातापितृपरायणाः ।। ८ ।।

अलौल्या लोभरहिता दानधर्मपरायणाः ।।

आस्तिकाश्चैव धर्मज्ञाः स्वामिभक्तिरताश्च ये ।। ९ ।।

पतिव्रता तु या नारी पतिशुश्रूषणे रता ।।

अहिंसका आतिथेयाः स्वधर्मनिरताः सदा।। 3.2.7.१० ।।

।। शौनक उवाच ।। ।।

शृणु सूत महाभाग सर्वधर्मविदांवर ।।

गृहस्थानां सदाचारः श्रुतश्च त्वन्मुखान्मया ।। ११ ।।

एकं मनेप्सितं मेद्य तत्कथयस्व सूतज ।।

पतिव्रतानां सर्वासां लक्षणं कीदृशं वद ।। १२ ।।

।। सूत उवाच ।। ।।

पतिव्रता गृहे यस्य सफलं तस्य जीवनम् ।।

यस्यांगच्छायया तुल्या यत्कथा पुण्यकारिणी ।। १३ ।।

पतिव्रतास्त्वरुंधत्या सावित्र्याप्यनसूयया ।।

शांडिल्या चैव सत्या च लक्ष्म्या च शतरूपया ।। ।। १४ ।।

मेनया च सुनीत्या च संज्ञया स्वाहया समाः ।।

पतिव्रतानां धर्मा हि मुनिना च प्रकीर्तिताः ।। १५ ।।

भुंक्ते भुक्ते स्वामिनि च तिष्ठ ति त्वनुतिष्ठति ।।

विनिद्रिते या निद्राति प्रथमं परिबुध्यति ।। १६ ।।

अनलंकृतमात्मानं देशांते भर्तरि स्थिते ।।

कार्यार्थं प्रोषिते क्वापि सर्व्वमंड नवर्जिता ।। १७ ।।

भर्तुर्नाम न गृह्णाति ह्यायुषोऽस्य हि वृद्धये ।।

पुरुषांतरनामापि न गृह्णति कदाचन ।। १८ ।।

आकृष्टापि च नाक्रोशेत्ताडितापि प्रसीदति ।।

इदं कुरु कृतं स्वामिन्मन्यतामिति वक्ति च ।। १९ ।।

आहूता गृहकार्याणि त्यक्त्वा गच्छति सत्वरम् ।।

किमर्थं व्याहृता नाथ स प्रसादो विधीयताम् ।। 3.2.7.२० ।।

न चिरं तिष्ठति द्वारि न द्वारमुपसेवते ।।

अदातव्यं स्वयं किंचित्कर्हिचिन्न ददात्यपि।। २१ ।।

पूजोपकरणं सर्वम नुक्ता साधयेत्स्वयम् ।।

नियमोदकबर्हींषि यत्र पुष्पाक्षतादिकम् ।। २२ ।।

प्रतीक्षमाणा च वरं यथाकालोचितं हि यत् ।।

तदुपस्थापयेत्सर्वमनुद्वि ग्नातिहृष्टवत् ।।२३।।

सेवते भर्तुरुच्छिष्टमिष्टमन्नं फलादिकम् ।।

दूरतो वर्ज्जयेदेषा समाजोत्सवदर्शनम् ।। २४ ।।

न गच्छेत्तीर्थयात्रादिविवाहप्रेक्षणा दिषु ।।

सुखसुप्तं सुखासीनं रममाणं यदृच्छया ।। २५ ।।

अंतरायेऽपि कार्येषु पतिं नोत्थापयेत्क्वचित् ।।

स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।। २६ ।।

स्ववाक्यं श्रावयेन्नापि यावत्स्नात्वा न शुध्यति ।।

सुस्नाता भर्तृवदनमीक्षेतान्यस्य न क्वचित् ।।

अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ।।२७।।

हरिद्रां कुकुमं चैव सिंदूरं कज्जलं तथा ।।

कूर्पासकं च तांबूलं मांगल्याभरणं शुभम् ।। २८ ।।

केशसंस्कारकं चैव करकर्णादिभूषणम् ।।

भर्तुरायुष्यमिच्छंती दूरयेन्न पतिव्रता ।। २९ ।।

भर्तृविद्वेषिणीं नारीं नैषा संभाषते क्वचित् ।।

नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति च क्वचित् ।।3.2.7.३०।।

नोलूखले न मुशले न वर्द्धन्यां दृषद्यपि ।।

न यंत्रके न देहल्यां सती चोपविशेत्क्वचित् ।। ३१ ।।

विना व्यवायसमयात्प्रागल्भ्यं न क्वचिच्चरेत ।।

यत्रयत्र रुचिर्भर्तुस्तत्र प्रेमवती सदा ।। ३२ ।।

इदमेव व्रतं स्त्रीणामयमेव परो वृषः ।।

इयमेव च पूजा च भर्तुर्वाक्यं न लंघयेत् ।। ।। ३३ ।।

क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमेव वा ।।

सुस्थिरं दुःस्थिरं वापि पतिमेकं न लंघयेत् ।। ३४ ।।

सर्पिर्लव(?)णहिंग्वादिक्षयेऽपि व पति व्रता ।।

पतिं नास्तीति न ब्रूयादायसीषु न भोजयेत् ।। ३५ ।।

तीर्थस्नानार्थिनी चैव पतिपादोदकं पिबेत् ।।

शंकरादपि वा विष्णोः पतिरेवाधि कः स्त्रियः ।। ३६ ।।

व्रतोपवामनियमं पतिमुल्लंघ्य या चरेत् ।।

आयुष्यं हरते भर्तुर्मृता निरयमृच्छति ।। ३७ ।।

उक्ता प्रत्युत्तरं दद्यान्नारी या क्रोधत त्परा ।।

सरमा जायते ग्रामे शृगाली निर्जने वने ।। ३८ ।।

स्त्रीणां हि परमश्चैको नियमः समुदाहृतः ।।
अभ्यर्च्य चरणौ भर्तुर्भो क्तव्यं कृतनिश्चया ।। ३९ ।।
उच्चासनं न सेवेत न व्रजेत्परवेश्मसु ।।
तत्र पारुष्यवाक्यानि ब्रूयान्नैव कदाचन ।।3.2.7.४०।।
गुरूणां सन्निधौ वापि नोच्चैर्ब्रु यान्नवाहयेत् ।। ४१ ।।
या भर्तारं परित्यज्य रहश्चरति दुर्मतिः ।।
उलूकी जायते क्रूरा वृक्षकोटरशायिनी ।। ४२ ।।
ताडिता ताडयेच्चेत्तं सा व्याघ्री वृषदंशिका ।।
कटाक्षयति याऽन्यं वै केकराक्षी तु सा भवेत् ।। ४३ ।।
या भर्तारं परित्यज्य मिष्टमश्नाति केवलम् ।।
ग्रामे सा सूकरी भूयाद्वल्गुली वाथ विड्भुजा ।। ४४ ।।
हुन्त्वंकृत्याप्रियं ब्रूते मूका सा जायते खलु ।।
या सपत्नीं सदैर्ष्येत दुर्भगा सा पुनःपुनः ।।
दृष्टिं विलुप्य भर्तुर्या कंचिदन्यं समीक्षते ।। ४५ ।।
काणा च विमुखा वापि कुरूपापि च जायते ।।
बाह्यादायांतमालोक्य त्वरिता च जलासनैः ।।
तांबूलैर्व्यजनैश्चैव पादसंवाहनादिभिः ।। ४६ ।।
तथैव चारुवचनैः स्वेदसंनोदनैः परैः ।।
या प्रियं प्रीणयेत्प्रीता त्रिलोकी प्रीणिता तया ।।
मितं ददाति हि पिता मितं भ्राता सुतं सुतः ।। ४७ ।।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ।।
भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च ।।
तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ।। ४८ ।।
जीवहीनो यथा देही क्षणादशुचितां व्रजेत् ।।
भर्तृहीना तथा योषित्सुस्नाताप्य शुचिः सदा ।। ४९ ।।
अमंगलेभ्यः सर्वेभ्यो विधवा स्यादमंगला ।।
विधवादर्शनात्सिद्धिः क्वापि जातु न जायते ।। 3.2.7.५० ।।
विहाय मातरं चैकां सर्वा मंगलवर्जिताः ।।

तदाशिषमपि प्राज्ञस्त्यजेदाशीविषोपमाम् ।। ५१ ।।

कन्याविवाहसमये वाचयेयुरिति द्विजाः ।।

भर्तुः सहचरी भूयाज्जीवतो ऽजीवतोपि वा ।। ५२ ।।

अनुव्रजन्ती भर्तारं गृहात्पितृवनं मुदा ।।

पदेपदेश्वमेधस्य फलं प्राप्नोत्यसंशयम् ।। ५३ ।।

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।।

एवमुत्क्रम्य दूतेभ्यः पतिं स्वर्गं व्रजेत्सती ।। ५४ ।।

यमदूताः पलायंते तामालोक्य पतिव्रताम् ।।

तपनस्तप्यते नूनं दहनोपि च दह्यते ।। ५५ ।।

कंपंते सर्वतेजांसि दृष्ट्वा पातिव्रतं महः ।।

यावत्स्वलोमसंख्यास्ति तावत्कोट्ययुतानि च ।। ५६ ।।

भर्त्रा स्वर्गसुखं भुंक्ते रममाणा पतिव्रता ।।

धन्या सा जननी लोके धन्योऽसौ जनकः पुनः ।। ५७ ।।

धन्यः स च पतिः श्रीमान्येषां गेहे पतिव्रता ।।

पितृवंश्या मातृवंश्याः पतिवंश्यास्त्रयस्त्रयः ।।

पतिव्रतायाः पुण्येन स्वर्गसौख्यानि भुंजते ।। ५८ ।।

शीलभंगेन दुर्वृत्ताः पातयंति कुलत्रयम् ।।

पितुर्मातुस्तथा पत्युरिहारमुत्र च दुःखिताः ।। ५९ ।।

पतिव्रतायाश्चरणो यत्रयत्र स्पृशेद्भुवम् ।।

सा तीर्थभूमिर्म्मान्येति नात्र भारोऽस्ति पावनः ।। 3.2.7.६० ।।

बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि ।।

सोमो गन्धर्व एवापि स्वपावित्र्याय नान्यथा ।। ६१ ।।

आपः पतिव्रतास्पर्शमभिलष्यंति सर्वदा ।।

गायत्र्याघविनाशो नो पातिव्रत्येन साऽघनुत् ।। ६२ ।।

गृहेगृहे न किं नार्य्यो रूपलावण्यगर्विताः ।।

परं विश्वेशभक्त्यैव लभ्यते स्त्री पति व्रता ।। ६३ ।।

भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च ।।

भार्या धर्मफलायैव भार्या संतानवृद्धये ।। ६४ ।।

परलोकस्त्वयं लोको जीयते भार्यया द्वयम् ।।

देवपित्रतिथीनां च तृप्तिः स्याद्भार्यया गृहे ।।

गृहस्थः स तु विज्ञेयो गृहे यस्य पतिव्रता ।। ६५ ।।

यथा गंगावगाहेन शरीरं पावनं भवेत् ।।

तथा पतिव्रतां दृष्ट्वा सदनं पावनं भवेत् ।। ६६ ।।

पर्यंकशायिनी नारी विधवा पातयेत्पतिम्।।

तस्माद्भूशयनं कार्य्यं पतिसौख्यसमीहया ।। ६७ ।।

नैवांगोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् ।।

गन्धद्रव्यस्य संभोगो नैव कार्य्यस्तया क्वचित् ।। ६८ ।।

तर्प्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः।।

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् ।। ६९ ।।

विष्णोः संपूजनं कार्यं पतिबुद्ध्या न चान्यथा ।। ।।

पतिमेव सदा ध्यायेद्विष्णुरूपधरं हरिम् ।। 3.2.7.७० ।।

यद्यदिष्टतमं लोके यद्यत्पत्युः समीहितम् ।।

तत्तद्गुणवते देयं पतिप्रीणनकाम्यया ।। ७१ ।।

वैशाखे कार्त्तिके मासे विशेषनियमांश्चरेत् ।।

स्नानं दानं तीर्थयात्रां पुराणश्रवणं मुहुः ।। ७२ ।।

वैशाखे जलकुम्भाश्च कार्त्तिके घृतदीपिकाः ।।

माघे धान्यतिलोत्सर्गः स्वर्गलोके विशिष्यते ।। ७३ ।।

प्रपा कार्या च वैशाखे देवे देया गलंतिका ।।

उशीरं व्यजनं छत्रं सूक्ष्मवासांसि चंदनम् ।। ।।७४।।

सकर्पूरं च तांबूलं पुष्पदानं तथैव च ।।

जलपात्राण्यनेकानि तथा पुष्पगृहाणि च ।। ७५ ।।

पानानि च विचित्राणि द्राक्षारंभाफलानि च ।।

देयानि द्विजमुख्येभ्यः पतिर्मे प्रीयतामिति ।।७६।।

ऊर्ज्जे यवान्नमश्नीयादेकान्नमथवा पुनः।।

वृन्ताकं सूरणं चैव शूकशिंबीं च वर्जयेत्।।७७।।

कार्त्तिके वर्जयेत्तैलं कांस्यं चापि विवर्जयेत् ।।

कार्त्तिके मौननियमे चारुघण्टां प्रदापयेत् ।। ७८ ।।

पत्रभोजी कांस्यपात्रं घृतपूर्णं प्रयच्छति ।।

भूमिशय्याव्रते देया शय्या श्लक्ष्णा सतूलिका ।।७९।

फलत्यागे फलं देयं रसत्यागे च तद्रसः ।।

धान्यत्यागे च तद्धान्यमथवा शालयः स्मृताः ।।

धेनुं दद्यात्प्रयत्नेन सालंकारा सकांचनाम् ।।।3.2.7.८०।।

एकतः सर्वदानानि दीपदानं तथैकतः ।।

कार्त्तिके दीपदानस्य कलां नार्हति षोडशीम् ।।८१।।

इत्यादिविधवानां च नियमाः संप्रकीर्तिताः ।।

तेषां फलमिदं राजन्नान्येषां च कदाचन ।। ८२ ।।

धर्मवापीं समासाद्य दानं दद्याद्विचक्षणः ।।

कोटिधा वर्द्धते नित्यं ब्रह्मणो वचनं यथा ।। ८३ ।।

तिलधेनुं च यो दयाद्धर्मेश्वरपुरः स्थितः ।।

तिलसंख्यानि वर्षाणि स्वर्गे लोके महीयते ।। ८४ ।।

धर्मक्षेत्रे तु संप्राप्य श्राद्धं कुर्यादतंद्रितः ।।

तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम् ।। ८५ ।।

ये चान्ये पूर्वजाः स्वर्गे ये चान्ये नरकौकसः ।।

ये च तिर्यक्त्वमापन्ना ये च भूतादिसंस्थिताः ।। ८६ ।।

तान्सर्वान्धर्मकूपे वै श्राद्धं कुर्याद्यथाविधि ।।

अत्र प्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।।

तेन ते तृप्तिमायांति ये पिशाचत्वमागताः ।। ८७ ।।

येषां तु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ।।

तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ।। ८८ ।।

या वै यवानां कणिकाः पतंति धरणीतले ।।

ताभिराप्यायनं तेषां ये तु देवत्वमागताः ।। ८९ ।।

उद्धृतेष्वथ पिंडेषु यावान्नकणिका भुवि ।।

ताभिराप्यायनं तेषां ये च पातालमागताः ।। 3.2.7.९० ।।

ये वा वर्णाश्रमाचारक्रियालोपा ह्यसंस्कृताः ।।

विपन्नास्ते भवंत्यत्र संमार्जनजलाशिनः ।। ९१ ।।

भुक्त्वा वाचमनं यच्च जलं पतति भूतले ।।

ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयांति वै ।। ९२ ।।

एवं यो यजमानश्च यच्च तेषां द्विजन्मनाम् ।।

क्वचिज्जलान्नविक्षेपः शुचिरस्पृष्ट एव च ।। ९३ ।।

ये चान्ये नरके जातास्तत्र योन्यंतरं गताः ।।

प्रयांत्याप्यायनं वत्स सम्यक्छ्राद्धक्रियावताम् ।। ।। ९४ ।।

अन्यायोपार्जितैर्द्रव्यैः श्राद्धं यत्क्रियते नरैः ।।

तृप्यंति तेन चण्डालपुल्कसादिषु योनिषु ।। ९५ ।।

एवमाप्यायिता वत्स तेन चानेक

बांधवाः ।। श्राद्धं कर्तुमशक्तिश्चेच्छाकैरपि हि जायते ।। ९६ ।।

तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथाविधि ।।

कुरुते कुर्वतः श्राद्धं कुलं क्वचिन्न सीदति ।। ९७ ।।

पापं यदि कृतं सर्वं पापं च वर्द्धते ध्रुवम् ।।

कुर्वाणो नरके घोरे पच्यते नात्र संशयः ।। ९८ ।।

यथा पुण्यं तथा पापं कृतं कर्म शुभाशुभम् ।।

तत्सर्वं वर्द्धते नूनं धर्मारण्ये नृपोत्तम ।। ९९ ।।

कामिकं कामदं देवं योगिनां मुक्तिदायकम् ।।

सिद्धानां सिद्धिदं प्रोक्तं धर्मारण्यं तु सर्वदा ।। 3.2.7.१०० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्माण्यक्षेत्रमाहात्म्ये धर्माचारवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०८



।। युधिष्ठिर उवाच ।। ।।

धर्मारण्यकथां पुण्यां श्रुत्वा तृप्तिर्न मे विभो ।।

यदायदा कथयसि तदा प्रोत्सहते मनः ।।

अतः परं किमभवत्परं कौतूहलं हि मे ।। १ ।।

।। व्यास उवाच ।। ।।

शृणु पार्थ महापुण्यां कथां स्कंदपुराणजाम् ।।

स्थाणुनोक्तां च स्कंदाय धर्मारण्योद्भवां शुभाम् ।। २ ।।

सर्वतीर्थस्य फलदां सर्वोपद्रवनाशिनीम् ।।

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।।

पंचवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् ।। ३ ।।

कपालखटवांगकरं नागयज्ञोपवीतिनम् ।।

गणैः परिवृतं तत्र सुरासुरनमस्कृतम् ।। ४ ।।

नानारूपगुणैर्गीतं नारदप्रमुखैर्युतम् ।।

गंधर्वैश्चाप्सरोभिश्च सेवितं तमुमापतिम्।।

तत्रस्थं च महादेवं प्रणिपत्याब्रवीत्सुतः ।। ५ ।।

।। स्कंद उवाच ।। ।।

स्वामिन्निंद्रादयो देवा ब्रह्माद्याश्चैव सर्वशः ।।

तव द्वारे समायातान्त्वद्दर्शनैकलालसाः ।।

किमाज्ञापयसे देव करवाणि तवाग्रतः ।। ६ ।।

।। व्यास उवाच ।।

स्कंदस्य वचनं श्रुत्वा आसनादुत्थितो हरः ।।

वृषभं न समारूढो गंतुकामोऽभवत्तदा ।। ७ ।।

गतुकामं शिवं दृष्ट्वा स्कंदो वाक्यमथाब्रवीत् ।। ।। ८ ।।

।। स्कंद उवाच ।। ।।

किं कार्यं देव देवानां यत्त्वमाहूयसे त्वरम् ।।

वृषं त्यक्त्वा कृपासिंधो कृपास्ति यदि मे वद ।। ९ ।।

देवदानव युद्धं वा किं कार्यं वा महत्तरम् ।। ३.२.८.१० ।।

।। शिव उवाच ।। ।।

शृणुष्वैकाग्रमनसा येनाहं व्यग्रचेतसः ।।

अस्ति स्थानं महापुण्यं धर्म्मारण्यं च भूतले ।। ११ ।।

तत्रापि गंतुकामोऽहं देवैः सह षडाननः ।। १२ ।।

।। स्कंद उवाच ।। ।।

तत्र गत्वा महादेव किं करिष्यसि सांप्रतम् ।।

तन्मे ब्रूहि जगन्नाथ कृत्यं सर्वमशेषतः ।। १३ ।।

।। शिव उवाच ।। ।।

श्रूयतां वचनं पुत्र मनसोल्हादकारणम् ।।

आदितः सर्व्ववृत्तानां सृष्टि स्थितिकरं महत् ।। १४ ।।

परंतु प्रलये जाते सर्वतस्तमसा वृतम्।।

आसीदेकं तदा ब्रह्म निर्गुणं बीजमव्ययम् ।। १५ ।।

निर्मितं वै गुणैरादौ मह द्द्रव्यं प्रचक्ष्यते ।। १६ ।।

महाकल्पे च संप्राप्ते चराचरे क्षयं गते ।।

जलरूपी जगन्नाथो रममाणस्तु लीलया ।। १७ ।।

चिरकाले गते सोपि पृथिव्यादिसुतत्त्वकैः ।।

वृक्षमुत्पादयामासायुतशाखामनोरमम् ।। १८ ।।

फलैर्विशालैराकीर्णं स्कंधकांडादिशोभितम् ।।

फलौघाढ्यो जटायुक्तो न्यग्रो धो विटपो महान् ।। १९ ।।

बालभावं ततः कृत्वा वासुदेवो जनार्द्दनः ।।

शेतेऽसौ वटपत्रेषु विश्वं निर्मातुमुत्सुकः ।। ३.२.८.२० ।।

सनाभिकमले विष्णो र्जातो ब्रह्मा हि लोककृत् ।।

सर्वं जलमयं पश्यन्नानाकारमरूपकम्।। २१ ।।

तं दृष्ट्वा सहसोद्वेगाद्ब्रह्मा लोकपितामहः ।।

इदमाह तदा पुत्र किं करो मीति निश्चितम्।। २२ ।।

खे जजान ततो वाणी देवात्सा चाशरीरिणी ।।
तपस्तप विधे धातर्यथा मे दर्शनं भवेत् ।। २३ ।।
तच्छ्रुत्वा वचनं तत्र ब्रह्मा लोकपितामहः ।।
प्रातप्यत तपो घोरं परमं दुष्करं महत् ।। २४ ।।
प्रहसन्स तदा बालरूपेण कमलापतिः ।।
उवाच मधुरां वाचं कृपालुर्बाल लीलया ।। २५ ।।
।। श्रीविष्णुरुवाच ।। ।।
पुत्र त्वं विधिना चाद्य कुरु ब्रह्मांडगोलके ।।
पातालं भूतलं चैव सिंधुसागरकाननम् ।। २६ ।।
वृक्षाश्च गिरयो द्विपदाः पशवस्तथा ।।
पक्षिणश्चैव गंधर्वाः सिद्धा यक्षाश्च राक्षसाः ।। २७ ।।
श्वापदाद्याश्च ये जीवाश्चतुराशीतियोनयः ।।
उद्भिज्जाः स्वेदजाश्चैव जरायुजास्तथांडजाः ।।२८।।
एकविंशतिलक्षाणि एकैकस्य च योनयः ।।
कुरु त्वं सकलं चाशु इत्युक्त्वांतरधीयत ।।
ब्रह्मणा निर्मितं सर्वं ब्रह्मांडं च यथोदितम् ।। २९ ।।
यस्मिन्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।।
स्थाणुः सुरगुरुर्भानुः प्रचेताः परमेष्ठिनः ।। 3.2.8.३० ।।
यथा दक्षो दक्षपुत्रा स्तथा सप्तर्षयश्च ये ।।
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ।। ३१ ।।
पुरुषश्चाप्रमेयश्च एवं वंश्यर्षयो विदुः ।।
विश्वेदेवास्तथादित्या वसव श्चाश्विनावपि ।। ३२ ।।
यक्षाः पिशाचाः साध्याश्च पितरो गुह्यकास्तथा ।।
ततः प्रसूता विद्वांसो ह्यष्टौ ब्रह्मर्षयोऽमलाः ।। ३३ ।।
राजर्षयश्च बहवः सर्वे समुदिता गुणैः ।।
द्यौरापः पृथिवी वायुरंतरिक्षं दिशस्तथा ।। ३४ ।।
संवत्सरार्तवो मासाः पक्षाहोरात्रयः क्रमात् ।।
कलाकाष्ठामुहूर्तादि निमे षादि लवास्तथा ।। ३५।।

ग्रहचक्रं सनक्षत्रं युगा मन्वन्तरादयः ।।

यच्चान्यदपि तत्सर्वं संभूतं लोकसाक्षिकम् ।। ३६ ।।

यदिदं दृश्यते चक्रं किंचि त्स्थावरजंगमम्।।

पुनः संक्षिप्यते पुत्र जगत्प्राप्ते युगक्षये ।। ३७ ।।

यथर्तावृतुलिंगानि नामरूपाणि पर्यये ।।

दृश्यन्ते तानि तान्येव तथा वत्स युगादिकम्।। ३८ ।।

।। शिव उवाच ।। ।।

अतः परं प्रवक्ष्यामि कथां पौराणिकीं शुभाम् ।।

ब्रह्मणश्च तथा पुत्र वंशस्यैवानुकीर्तनम् ।। ३९ ।।

ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।।

मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः ।। 3.2.8.४० ।।

मरीचेः कश्यपः पुत्रः कश्यपाच्चरमाः प्रजाः ।।

प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ।। ४१ ।।

अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ।।

क्रोधा प्रोवा वसिष्ठा च विनता कपिला तथा ।। ४२ ।।

कण्डूश्चैव सुनेत्रा च कश्यपाय ददौ तदा ।।

अदित्यां द्वादशादित्याः संजाता हि शुभाननाः ।। ४३ ।।

सूर्याद्वै धर्मराड् जज्ञे ते नेदं निर्मितं पुरा ।।

धर्मेण निर्मितं दृष्ट्वा धर्मारण्यमनुत्तमम् ।।

धर्मारण्यमिति प्रोक्तं यन्मया स्कन्द पुण्यदम् ।। ४४ ।।

।। स्कन्द उवाच ।। ।।।

धर्मारण्यस्य चाख्यानं परमं पावनं तथा ।।

श्रोतुमिच्छामि तत्सर्वं कथयस्व महेश्वर ।। ४५ ।।

।। ईश्वर उवाच ।। ।।

इन्द्राद्याः सकला देवा अन्वयुर्ब्रह्मणा सह ।।

अहं वै तत्र यास्यामि क्षेत्रं पापनिषूदनम् ।। ४६ ।।

।। स्कन्द उवाच ।। ।।

अहमप्यागमिष्यामि तं द्रष्टुं शशिशे खर ।। ४७ ।।

।। सूत उवाच ।। ।।

ततः स्कन्दस्तथा रुद्रः सूर्यश्चैवानिलोऽनलः ।।

सिद्धाश्चैव सगन्धर्वास्तथैवाप्सरसः शुभाः ।। ४८ ।।

पिशाचा गुह्यकाः सर्व इन्द्रो वरुण एव च ।।

नागाः सर्वाः समाजग्मुः शुक्रो वाचस्पतिस्तथा ।। ४९ ।।

ग्रहाः सर्वे सनक्षत्रा वसवोऽष्टौ ध्रुवा दयः ।।

अंतरिक्षचराः सर्वे ये चान्ये नगवासिनः ।। 3.2.8.५० ।।

ब्रह्मादयः सुराः सर्वे वैकुण्ठं परया मुदा ।।

मन्त्रणार्थं तदा ब्रह्मा विष्णवेऽमितते जसे ।। ५१ ।।

गत्वा तस्मिंश्च वैकुण्ठे ब्रह्मा लोकपितामहः ।।

ध्यात्वा मुहूर्तमाचष्ट विष्णुं प्रति सुहर्षितः ।। ५२ ।।

।। ब्रह्मोवाच ।। ।।

कृष्ण कृष्ण महाबाहो कृपालो परमेश्वर ।।

स्रष्टा त्वं चैव हर्ता त्वं त्वमेव जगतः पिता ।। ५३ ।।

नमस्ते विष्णवे सौम्य नमस्ते गरुडध्वज ।।

नमस्ते कम लाकांत नमस्तेब्रह्मरूपिणे ।। ५४ ।।

नमस्ते मत्स्यरूपाय विश्वरूपाय वै नमः ।।

नमस्ते दैत्यनाशाय भक्तानामभयाय च ।। ५५ ।।

कंसघ्नाय नमस्तेस्तु बलदैत्यजिते नमः ।।

ब्रह्मणैवं स्तुतश्चासीत्प्रत्यक्षोऽसौ जनार्द्दनः ।। ५६ ।।

पीतांबरो घनश्यामो नागारिकृतवाहनः ।।

चतुर्भुजो महा तेजाः शंखचक्रगदाधरः ।। ५७ ।।

स्तूयमानः सुरैः सर्वैः स देवोऽमितविक्रमः ।।

विद्याधरैस्तथा नागैः स्तूयमानश्च सर्वशः ।। ५८ ।।

उत्तस्थौ स तदा देवो भास्करामितदीप्तिमान् ।।

कोटिरत्नप्रभाभास्वन्मुकुटादिविभूषितः ।। ५९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये विष्णुसमागमोनामाष्टमोऽध्यायः ।। ८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ०९

https://sa.wikisource.org/s/ftr
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। व्यास उवाच ।। ।।

श्रूयतां राजशार्दूल पुण्यमाख्यानमुत्तमम् ।।

स्तूयमानो

जगन्नाथ इदं वचनमब्रवीत् ।। १ ।।

।। विष्णुरुवाच ।। ।।

किमर्थमागताः सर्वे ब्रह्माद्याः सुरसत्तमाः।।

पृथिव्यां कुशलं कच्चित्कुतो वो भयमागतम् ।।२।।

ततः प्रोवाच वै हृष्टो ब्रह्मा तं केशवं वचः ।।

न भयं विद्यतेऽस्माकं त्रैलोक्ये सचराचरे ।।३।।

एकविज्ञापनार्थाय आगतोऽहं तवांतिके।।

तदहं संप्रवक्ष्यामि तदेतच्छृणु मे वचः।।४।।

परं तु पूर्वं धर्मेण स्थापितं तीर्थमुत्तमम्।।

तद्द्रष्टुकामोऽहं देव त्वत्प्रसादाज्जनार्दन ।। ५ ।।

तत्र त्वं देवदेवेश गमने कुरु मानसम् ।।

यथा सत्तीर्थतां याति धर्मारण्यमनुत्तमम् ।। ६ ।।

विष्णुरुवाच ।।

साधुसाधु महाभाग त्वर्यतां तत्र मा चिरम् ।।

ममापि चित्तं तत्रैव तद्दर्शनेस्ति लालसम् ।। ७ ।।

।। व्यास उवाच ।। ।।

ताक्ष्र्यमारुह्य गोविंद स्तत्रागाच्छीघ्रमेव हि ।।

ततो धर्मेण ते देवाः सेंद्राः सर्षिगणास्तथा ।। ८ ।।

ब्रह्मविष्णुमहेशाद्या दृष्टा दूरान्मुमोद च ।।

धर्मराजोपि तान्दृष्ट्वा देवा न्विष्णुपुरोगमान् ।। ९ ।।

आगतः स्वाश्रमात्तत्र पूजां प्रगृह्य तत्पुरः ।।

आसनादुत्थितः शीघ्रं सपर्याद्यं प्रगृह्य च ।।

एकैकस्य चकाराथ पूजां चैव पृथक्पृथक् ।। 3.2.9.१० ।।

चकार पूजां विधिवत्तेषां तत्रार्कनंदनः ।।

आसनेषूपवेश्याथ पूजां कृत्वा गरीयसीम् ।। ११ ।।

।। यम उवाच ।। ।।

तीर्थरूपमिदं क्षेत्रं प्रसादाद्देवकीसुत ।।

त्वत्तोषविधिना चाद्य कृपया च शिवस्य च ।। १२ ।।

अद्य मे सफलं जन्म अद्य मे सफलं तपः ।।

अद्य मे सफलं स्थानं काजेशानां समागमात् ।। १३ ।।

।। व्यास उवाच ।। ।।

एवं स्तुतस्तदा विष्णुः प्रोवाच मधुरं वचः ।।

तुष्टोऽस्मि धर्म राजेंद्र अहं स्तोत्रेण ते विभो ।। १४ ।।

किंचित्प्रार्थय मत्तोऽहं करोमि तव वांछितम् ।।

यत्तेऽस्त्यभीप्सितं तुभ्यं तद्ददामि न संशयः ।। १५ ।।

यम उवाच ।। ।।

यदि तुष्टोऽसि देवेश वांछितं कुरुषे यदि ।।

धर्मारण्ये महापुण्ये ऋषीणामाश्रमान्कुरु ।। १६ ।।

वसंति वाडवा यत्र यजंति चैव याज्ञिकाः ।।

वेदनिर्घोषसंयुक्तं भाति तत्तीर्थमुत्तमम् ।। १७ ।।

अब्राह्मणमिदं तीर्थं पीडयिष्यंति जन्तवः ।।

तस्मात्त्वं वाडवाञ्छौरे समानय ऋषी न्बहून् ।।

धर्मारण्यं यथा भाति त्रैलोक्ये सचराचरे ।। १८ ।।

ततो विष्णुः सहस्राक्षः सहस्रशीर्षः सहस्रपात् ।।

सहस्रशस्तदा रूपं कृतवान्धर्मवत्सलः ।।

यस्मिन्स्थाने च ये विप्राः सदाचाराः शुभव्रताः ।। १९ ।।

अशेषधर्मकुशलाः सर्वशास्त्रविशारदाः ।।

तपोज्ञाने महाख्याता ब्रह्मयज्ञपरायणाः ।।

स्थापिता ऋषयः सर्वे सहस्राण्यष्टादशैव तु ।। 3.2.9.२० ।।

नानादेशात्समानीय स्थापितास्तत्र तैः सुरैः ।।
आश्रमांश्च बहूंस्तत्र काजेशैरपि निर्मितान् ।। २१ ।।
धर्मोपदेशात्कृष्णेन ब्रह्मणा च शिवेन च ।।
स्वेस्वे स्थाने यथायोग्ये स्थापयामास केशवः ।। २२ ।।
युधिष्ठिर उवाच ।। ।।
कस्मिन्वंशे समुत्पन्ना ब्राह्मणा वेदपारगाः ।।
स्थापिताः सपरीवाराः पुत्रपौत्रसमावृताः ।।
शिष्यैश्च बहुभिर्युक्ता अग्निहोत्रपरायणाः ।।
तेषां स्थानानि नामानि यथावच्च वदस्व मे ।। २३ ।। ।।
व्यास उवाच ।। ।।
श्रूयतां नृपशार्दूल धर्म्मारण्यनिवासिनाम् ।। २४ ।।
महात्मनां ब्राह्मणानामृषीणामूर्ध्वरेतसाम् ।।
तेषां वै पुत्रपौत्राणां नामानि च वदाम्यहम् ।। २५ ।।
चतुर्विंशतिगोत्राणि द्विजानां पांडवर्षभ ।।
तेषां शाखाः प्रशाखाश्च पुत्रपौत्रादयस्तथा ।। २६ ।।
जज्ञिरे बहवः पुत्राः शतशोऽथ सहस्रशः ।।
चतुर्विंशतिमुख्यानां नामानि प्रवदामि ते ।।
द्विजानामृषयः प्रोक्ताः प्रवराणि तथा शृणु ।। २७ ।।
भारद्वाजस्तथा वत्सः कौशिकः कुश एव च ।।
शांडिल्यः काश्यपश्चैव गौतमश्छांधनस्तथा ।। २८ ।।
जातूकर्ण्यस्तथा वत्सो वसिष्ठो धारणस्तथा ।।
आत्रेयो भांडिलश्चैव लौकिकाश्च इतः परम् ।। २९ ।।
कृष्णायनोपमन्युश्च गार्ग्यमुद्गलमौषकाः ।।
पुण्यासनः पराशरः कौंडिन्यश्च ततः परम् ।। ।। 3.2.9.३० ।।
तथा गान्यासनश्चैव प्रवराणि चतुर्विंशतिः ।।
जामदग्न्यस्य गोत्रस्य प्रवराः पंच एव हि ।। ३१ ।।
भार्गवश्च्यवनाप्नुवानौर्वश्च जमदग्निकः ।।
पंचैते प्रवरा राजन्विख्याता लोकविश्रुताः ।।३२ ।।

एवं गोत्रसमुत्पन्ना वाडवा वेदपारगाः ।।
द्विजपूजाक्रियायुक्ता नानाक्रतुक्रियापराः ।। ३३ ।।
गुणेन संहिता आसन् षट्कर्मनिरताश्च ये ।।
एवंविधा महाभागा नानादेशभवा द्विजाः ।। ३४ ।।
भामेवसं तृतीयं च प्रवराः पंच एव हि ।।
भार्गवच्यावनाप्नुवानौर्वजामदग्न्यसंयुताः ।।
आत्रेयोऽर्चनानसश्च श्यावास्येति तृतीयकः ।। ३५ ।।
अस्मिन्गोत्रे भवा विप्रा दुष्टाः कुटिलगामिनः ।।
धनिनो धर्मनिष्ठाश्च वेदवेदांगपारगाः ।।३६।।
दानभोगरताः सर्वे श्रौतस्मार्तेषु संमताः ।।
मांडव्यगोत्रे विज्ञेयाः प्रवरैः पंचभिर्युताः ।।३७।।
भार्गवश्च्यावनो ऽत्रिश्चाप्नुवानौर्वस्तथैव च ।।
अस्मिन्गोत्रे भवा विप्राः श्रुतिस्मृतिपरायणाः ।। ३८ ।।
रोगिणो लोभिनो दुष्टा यजने याजने रताः ।।
ब्रह्मक्रिया पराः सर्वे मांडव्याः कुरुसत्तम ।। ३९ ।।
गार्ग्यस्य गोत्रे ये जातास्तेषां तु प्रवरास्त्रयः ।।
अंगिराश्चांबरीषश्च यौवनाश्वस्तृतीयकः ।। 3.2.9.४० ।।
अस्मिन्गोत्रे समुत्पन्नाः सद्वृत्ताः सत्यभाषिणः ।।
शांताश्च भिन्नवर्णाश्च निर्द्धनाश्च कुचैलिनः ।। ४१ ।।
संगवात्सल्ययुक्ताश्च वेदशास्त्रेषु निश्चलाः ।।
वत्सगोत्रे द्विजा भूप प्रवराः पंच एव हि ।। ४२ ।।
भार्गवश्च्यवनाप्नुवानौर्वश्च जमदग्निकः ।।
एभिस्तु पंच विख्याता द्विजा ब्रह्मस्वरूपिणः ।। ४३ ।।
शांता दांताः सुशीलाश्च धर्मपुत्रैः सुसंयुता ।।
वेदाध्ययनहीनाश्च कुशलाः सर्वकर्मसु ।। ४४ ।।
सुरूपाश्च सदाचाराः सर्वधर्मेषु निष्ठिताः।।
दानधर्म रताः सर्वे अन्नदा जलदा द्विजाः ।। ४५ ।।
दयालवः सुशीलाश्च सर्वभूतहिते रताः ।।

काश्यपा ब्राह्मणा राजन्प्रवरत्रयसंयुताः ।। ४६ ।।

काश्यपश्चापवत्सारो नैध्रुवश्च तृतीयकः ।।

वेदज्ञा गौरवर्णाश्च नैष्ठिका यज्ञकारकाः ।। ४७ ।।

प्रियवासा महादक्षा गुरुभक्तिरताः सदा ।।

प्रतिष्ठामानव न्तश्च सर्वभूतहिते रताः ।। ४८ ।।

यजंते च महायज्ञान्काश्यपेया द्विजातयः।।

धारीणसगोत्रजाश्च प्रवरैस्त्रिभिरन्विताः ।। ४९ ।।

अगस्तिदर्विश्चेताश्च दध्यवाहनसंज्ञकाः ।।

अस्मिन्गोत्रे च ये जाता धर्मकर्मसमाश्रिताः ।। 3.2.9.५० ।।

कर्मक्रूराश्च ते सर्वे तथैवोदरिणस्तु ते ।।

लंबकर्णा महादंष्ट्रा द्विजा धनपरायणाः ।। ५१ ।।

क्रोधिनो द्वेषिणश्चैव सर्वसत्त्वभयंकराः ।।

लौगाक्षसोद्भवा ये वै वाडवाः सत्यसंश्रिताः ।। ५२ ।।

प्रवराश्च त्रयस्तेषां तत्त्वज्ञानस्वरूपकाः ।।

कश्यपश्चैव वत्सश्च वसिष्ठश्च तृतीयकः ।। ५३ ।।

सदाचारास्तु विख्याता वैष्णवा बहुवृ त्तयः ।।

रोमभिर्बहुभिर्व्याप्ताः कृष्णवर्णास्तु वाडवाः ।। ५४ ।।

शांता दाताः सुशीलाश्च स्वदारनिरताः सदा ।।

कुशिकसगोत्रे ये जाताः प्रवरैस्त्रिभिरन्विताः ।। ५५ ।।

विश्वामित्रो देवरात औदलश्च त्रयश्च ये ।।

अस्मिन्गोत्रे तु ये जाता दुर्बला दीनमानसाः ।। ५६ ।।

असत्यभाषिणो विप्राः सुरूपा नृपसत्तमाः ।।

सर्व्वविद्याकुशलिनो ब्राह्मणा ब्रह्मसत्तमाः ।। ५७ ।।

उपमन्युसगोत्रेयाः प्रवरत्रयसंयुताः ।।

वसिष्ठश्च भरद्वाजस्त्विंद्रप्रमद एव वा ।। ५८ ।।

अस्मिन्गोत्रे तु ये विप्राः क्रूराः कुटिलगामिनः ।।

दूषणा द्वेषिणस्तुच्छाः सर्वसंग्रहतत्पराः ।। ५९ ।।

कलहोत्पादने दक्षा धनिनो मानिनस्तथा ।।

सर्वदैव प्रदुष्टाश्च दुष्टसंगरतास्तथा ।। 3.2.9.६० ।।

रोगिणो दुर्बलाश्चैव वृत्त्युपकल्पवर्जिताः ।।

वात्स्यगोत्रे भवा विप्राः प्रवरैः पंचभिर्युताः ।। ६१ ।।

भार्गवच्यावनाप्नुवानौर्वश्च जमदग्निकः ।।

अस्मिन्गोत्रे भवा विप्राः स्थूलाश्च बहुबुद्धयः।।६२।।

सर्वकर्मरता श्चैव सर्वधर्मेषु निश्चलाः ।।

वेदशास्त्रार्थनिपुणा यजने याजने रताः ।। ६३ ।।

सदाचाराः सुरूपाश्च बुद्धितो दीर्घदर्शिनः ।।

वात्स्यायनसगोत्रेयाः प्रवरैः पंचभिर्युताः ।। ६४ ।।

भार्गवच्यावनाप्नुवानौर्वश्च जमदग्निकः ।।

पूर्वोक्ताः प्रवराश्चास्य कथितास्तव भारत ।। ६५ ।।

अस्मिन्गोत्रे तु ये जाता पाकयज्ञरताः सदा ।।

लोभिनः क्रोधिनश्चैव प्रजायन्ते बहुप्रजाः ।। ६६ ।।

स्नानदानादिनिरताः सर्वदाश्च जितेंद्रियाः ।।

वापीकूपतडागानां कर्तारश्च सहस्रशः ।।

व्रतशीला गुणज्ञाश्च मूर्खा वेदविवर्जिताः ।। ६७ ।।

कौशिकवंशे ये जाताः प्रवरत्रयसंयुताः ।।

विश्वामित्रोऽघर्मषी च कौशिकश्च तृतीयकः ।। ६८ ।।

अस्मिन्गोत्रे च ये जाता ब्राह्मणा ब्रह्मवेदिनः।।

शांता दांताः सुशीलाश्च सर्वधर्मपरायणाः ।। ६९ ।।

अपुत्रिण स्तथा रूक्षास्तेजोहीना द्विजोत्तमाः ।।

भारद्वाजसगोत्रेयाः प्रवरैः पंचभिर्युताः ।। 3.2.9.७० ।।

अंगिरसो बार्हस्पत्यो भारद्वाजस्तु सैन्यसः ।।

गार्ग्यश्चै वेति विज्ञेयाः प्रवराः पंच एव च ।। ७१ ।।

अस्मिन्गोत्रे च ये जाता वाडवा धनिनः शुभाः ।।

वस्त्रालंकरणोपेता द्विजभक्तिपरायणाः ।। ७२ ।।

ब्रह्मभोज्यपराः सर्वे सर्वधर्मपरायणाः ।।

काश्यपगोत्रे यै जाताः प्रवरत्रयसंयुताः ।। ७३ ।।

काश्यपश्चापवत्सारो रैभ्येति विश्रुतास्त्रयः ।।
अस्मिन्गोत्रे भवा विप्रा रक्ताक्षाः क्रूरदृष्टयः ।। ७४ ।।
जिह्वालौल्यरताः सर्वे सर्वे ते पारमार्थिनः ।।
निर्धना रोगिणश्चैते तस्करानृतभाषिणः ।। ७५ ।।
शास्त्रार्थावेदिनः सर्वे वेदस्मृतिविवर्जिताः ।।
शुनकेषु च ये जाता विप्रा ध्यानपरायणाः ।। ७६ ।।
तपस्विनो योगिनश्च वेदवेदांगपारगाः ।।
साधवश्च सदाचारा विष्णुभक्तिपरायणाः ।। ७७ ।।
ह्रस्वकाया भिन्नवर्णा बहुरामा द्विजोत्तमाः ।।
दयालाः सरलाः शांता ब्रह्मभोज्यपरायणाः ।। ।। ७८ ।।
शौनकसेषु ये जाताः प्रवरत्रयसंयुताः ।।
भार्गवशौनहोत्रेति गात्स्र्यप्रमद इति त्रयः ।। ७९ ।।
अस्मिन्देशे समुत्पन्ना वाडवा दुःसहा नृप ।।
महोत्कटा महाकायाः प्रलंबाश्च मदोद्धताः ।। ३.२.९.८० ।।
क्लेशरूपाः कृष्णवर्णाः सर्वशास्त्रविशारदाः ।।
बहुभुजो मानिनो दक्षा राग द्वेषोपवर्जिताः ।। ८१ ।।
सुवस्त्रभूषारूपा वै ब्राह्मणा ब्रह्मवादिनः ।।
वसिष्ठगोत्रे ये जाताः प्रवरत्रयसंयुताः ।। ८२ ।।
वसिष्ठो भारद्वाजश्च इन्द्रप्रमद एव च ।।
अस्मिन्गोत्रे भवा विप्रा वेदवेदांगपारगाः ।। ८३ ।।
याज्ञिका यज्ञशीलाश्च सुस्वराः सुखिनस्तथा ।।
द्वेषिणो धनवंतश्च पुत्रिणो गुणिनस्तथा ।। ८४ ।।
विशालहृदया राजञ्छूराः शत्रुनिबर्हणाः ।।
गौतमसगोत्रे ये जाताः प्रवराः पंच एव हि ।। ८५ ।।
कौत्सगार्ग्योमवाहाश्च असितो देवलस्तथा ।।
अस्मिन्गोत्रे च ये जाता विप्राः परमपावनाः ।। ८६ ।।
परोपकारिणः सर्वे श्रुतिस्मृति परायणाः ।।
बकासनाश्च कुटिलाश्छद्मवृत्तिपरास्तथा ।। ८७ ।।

नानाशास्त्रार्थनिपुणा नानाभरणभूषिताः ।।

वृक्षादिकर्मकुशला दीर्घरोषाश्च रोगिणः ।। ८८ ।।

आंगिरसगोत्रे ये जाताः प्रवरत्रयसंयुताः ।।

आंगिरसोंबरीषश्च यौवनाश्वस्तृतीयकः ।। ८९ ।।

अस्मिन्गोत्रे च ये जाताः सत्य संभाषिणस्तथा ।।

जितेंद्रियाः सुरूपाश्च अल्पाहाराः शुभाननाः ।। 3.2.9.९० ।।

महाव्रताः पुराणज्ञा महादानपरायणाः ।।

निर्द्वेषिणो लोभयुता वेदाध्य यनतत्पराः ।। ९१ ।।

दीर्घदर्शिमहातेजो महामायाविमोहिताः ।।

शांडिलसगोत्रेये प्रवरत्रयसंयुताः ।। ९२ ।।

असितो देवलश्चैव शांडिलस्तु तृतीयकः ।।

अस्मिन्गोत्रे महाभागाः कुब्जाश्च द्विजसत्तमाः ।। ९३ ।।

नेत्ररोगी महादुष्टा महात्यागा अनायुषः ।।

कलहोत्पादने दक्षाः सर्वसंग्रह तत्पराः ।।९४।।

मलिना मानिनश्चैव ज्योतिःशास्त्रविशारदाः ।।

आत्रेयसगोत्रे ये जाताः पंचप्रवरसंयुताः ।। ९५ ।।

आत्रेयोऽर्चनानसश्यावाश्चोंगिर सोऽत्रिश्च ।।

अस्मिन्वंशे च ये जाता द्विजास्ते सूर्यवर्चसः ।। ९६ ।।

चंद्रवच्छीतलाः सर्वे धर्मारण्ये व्यवस्थिताः ।।

सदाचारा महादक्षाः श्रुतिशास्त्र परायणाः ।। ९७ ।।

याज्ञिकाश्च शुभाचाराः सत्यशौचपरायणाः ।।

धर्मज्ञा दानशीलाश्च निर्मलाश्च महोत्सुकाः ।। ९८ ।।

तपःस्वाध्यायनिरता न्यायधर्मपरायणाः ।। ९९ ।। ।।

युधिष्ठिर उवाच ।। ।।

कथयस्व महाबाहो धर्मारण्यकथामृतम् ।।

यच्छ्रुत्वा मुच्यते पापाद्घोरादब्रह्मवधादपि ।। ।। 3.2.9.१०० ।।

।। व्यास उवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि कथामेतां सुदुर्लभाम् ।। १ ।।

यक्षरक्षःपिशाचाद्या उद्वेजयंति वाडवान् ।।

जंभकोनाम यक्षोऽभूद्धर्म्मारण्यसमीपतः ।। २ ।।

उद्वेजयति नित्यं स धर्मारण्यनिवासिनः ।।

ततस्तैश्च द्विजाग्र्यैस्तु देवेभ्यो विनिवेदितम् ।। ३ ।।

यक्षरक्षादिना चैव परिभूता वयं सुराः ।।

त्यक्ष्यामोऽद्य वरं स्थानं तद्भयान्नात्र संशयः ।। ४ ।।

ततो देवैः संगधर्वैः स्थापितास्तत्र भूमिषु ।।

सिद्धाश्च वरयोगिन्यः श्रीमातृप्रभृतयस्तथा ।। ५ ।।

रक्षणार्थं हि विप्राणां लोकानां हितकाम्यया ।।

गोत्रान्प्रति तथैकैका स्थापिता योगिनी तदा ।। ६ ।।

यस्य गोत्रस्य या शक्ती रक्षणे पालने क्षमा ।।

सा तस्य कुलदेवीति साक्षात्तत्र बभूव ह ।। ७ ।।

श्रीमाता तारणी देवी आशापूरी च गोत्रपा ।।

इच्छाऽऽर्तिनाशिनी चैव पिप्पली विकारवशा ।।८।।

जगन्माता महामाता सिद्धा भट्टारिका तथा ।।

कदंबा विकरा मीठा सुपर्णा वसुजा तथा ।।९।।

मातंगी च महादेवी वाणी च मुकुटेश्वरी ।।

भद्री चैव महाशक्तिः संहारी च महाबला।।3.2.9.१०।।

चामुंडा च महादेवी इत्येता गोत्रमातरः ।।

ब्रह्मविष्णुमहेशाद्यैः स्थापितास्तत्र रक्षणे ।।११।।

ताः पूजयंति विप्रेंद्राः स्वधर्मनिरताः सदा ।।

ततः प्रभृति योगिन्यः स्वेस्वे काले सुरक्षिताः ।।१२।।

वाडवाः स्वस्थतां जग्मुः पुत्रपौत्रैः समावृताः ।।

ततो देवाः सगंधर्वा हर्षनिर्भरमानसाः ।।

विमानवरमारूढा जग्मुर्नाकेऽमृताशनाः ।। १३ ।।

गते वर्षशते राजन्ब्रह्मविष्णुमहेश्वराः ।।

स्मृत्वा तु धर्मारण्यस्य प्रेक्षणार्थं कुतूहलात् ।।१४।।

समाजग्मुस्तदा राजन्प्रभाते उदिते रवौ ।।

विमानवरमारुह्य अप्सरोगणसेविताः ।।१५।।

गंधर्वैर् गीयमानास्ते स्तूयमानाः प्रबोधकैः ।।

तत्र स्थाने द्विजा राजन्समित्पुष्पकुशान्बहून् ।।१६।।

आश्रमांस्तान्परित्यज्य गताः सर्वे दिशो दश ।।

तमाश्रमपदं दृष्ट्वा शून्यं चैव महेश्वरः।।१७।।

उवाच वाक्यं धर्मज्ञो वाडवान्क्लिशते विभो ।।

शुशूषार्थं हि शुश्रूषन्कल्पयेदिति मे मतिः ।।१८।।

श्रुत्वा तु वचनं शंभोर्देवदेवो जनार्दनः ।।

सत्यंसत्यमिति प्रोच्य ब्रह्माणमिदमब्रवीत् ।। १९ ।।

भोभो ब्रह्मन्द्विजातीनां शुश्रूषार्थं प्रकल्पय ।।

सृष्टिर्हि शाश्वतीवाद्य द्विजोघोपि सुखी भवेत् ।।

विष्णोर्वाक्यमभिश्रुत्य ब्रह्मा लोकपितामहः।।3.2.9.१२०।।

संस्मरन्कामधेनुं वै स्मरणेनैव तत्क्षणे।।

आगता तत्र सा धेनुर्धर्मारण्ये पवित्रके ।। १२१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वार्धे धर्मारण्यमाहात्म्ये गोत्रप्रवरगोत्रदेवीकथनंनाम नवमोऽध्यायः ।।९।। ।।।छ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १०

https://sa.wikisource.org/s/frl
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

व्यास उवाच ।। ।।

शृणु राजन्यथावृत्तं धर्म्मारण्ये शुभं मतम् ।।

यदिदं कथयिष्यामि अशेषाघौघनाशनम् ।।।१ ।।

अजेशेन तदा राजन्प्रेरितेन स्वयंभुवा ।।

कामधेनुः समाहूता कथयामास तां प्रति ।। २ ।।

विप्रेभ्योऽनुचरान्देहि एकैकस्मै द्विजातये ।।

द्वौ द्वौ शुद्धात्मकौ चैवं देहि मातः प्रसीद मे ।। ३ ।।

तथेत्युक्त्वा महाधेनुः क्षीरेणोल्लेखयद्धराम् ।।

हुंकारात्तस्य निष्क्रांताः शिखासूत्रधरा नराः ।। ४ ।।

षट्त्रिंशच्च सहस्राणि वणिजश्च महाबलाः ।।

सोपवीता महादक्षाः सर्वशास्त्रविशारदाः ।। ५ ।।

द्विजभक्तिसमायुक्ता ब्रह्मण्यास्ते तपोन्विताः ।।

पुराणज्ञाः सदाचारा धार्मिका बह्मभोजकाः ।। ६ ।।

स्वर्गे देवाः प्रशंसंति धर्मारण्यनिवासिनः ।।

तपोऽध्ययनदानेषु सर्वकालेप्यतींद्रियाः ।। ७ ।।

एकैकस्मै द्विजायैव दत्तं जातु चरद्वयम् ।।

वाडवस्य च यद्गोत्रं पुरा प्रोक्तं महीपते ।। ८ ।।

परस्परं च तद्गोत्रं तस्य चानुचरस्य च ।।

इति कृत्वा व्यवस्थां च न्यवसंस्तत्र भूमिषु ।।९।।

ततश्च शिष्यता देवैर्दत्ता चानुचरान्भुवि ।।

ब्रह्मणा कथितं सर्वं तेषामनुहिताय वै ।।3.2.10.१०।।

कुरुध्वं वचनं चैषां ददध्वं च यदिच्छितम् ।।

समित्पुष्पकुशादीनि आनयध्वं दिनेदिने ।। ११ ।।

अनुज्ञयैषां वर्तध्वं मावज्ञां कुरुत क्वचित् ।।

जातकं नामकरणं तथान्नप्राशनं शुभम् ।। १२ ।।

क्षौरं चैवोपनयनं महानाम्न्यादिकं तथा ।।

क्रियाकर्मादिकं यच्च व्रतं दानोपवासकम् ।। १३ ।।

अनुज्ञयैषां कर्तव्यं काजेशा इदमबुवन् ।।

अनुज्ञया विनैषां यः कार्यमारभते यदि ।। १४ ।।

दर्शं वा श्राद्धकार्यं वा शुभं वा यदि वाऽशुभम् ।।

दारिद्र्यं पुत्रशोकं च कीर्तिनाशं तथैव च ।। १५ ।।

रोगैर्निपीड्यते नित्यं न क्वचित्सुखमाप्नुयुः ।।

तथेति च ततो देवाः शक्राद्याः सुरसत्तमाः ।। १६ ।।

स्तुतिं कुर्वंति ते सर्वे काम धेनोः पुरः स्थिताः ।।

कृतकृत्यास्तदा देवा ब्रह्मविष्णुमहेश्वराः ।। १७ ।।

त्वं माता सर्वदेवानां त्वं च यज्ञस्य कारणम् ।।

त्वं तीर्थं सर्वतीर्थानां नम स्तेऽस्तु सदानघे ।। १८ ।।

शशिसूर्यारुणा यस्या ललाटे वृषभध्वजः ।।

सरस्वती च हुंकारे सर्वे नागाश्च कंबले ।। १९ ।।

क्षुरपृष्ठे च गन्धर्वा वेदाश्चत्वार एव च ।।

मुखाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।। 3.2.10.२० ।।

एवंविधैश्च बहुशो वचनैस्तोषिता च सा ।।

सुप्रसन्ना तदा धेनुः किं करोमीति चाब्रवीत् ।। २१ ।।

।। देवा ऊचुः ।। ।।

सृष्टाः सर्वे त्वया मातर्देव्यैतेऽनुचराः शुभाः ।।

त्वत्प्रसादान्महाभागे ब्राह्मणाः सुखिनोऽ भवन् ।। २२ ।।

ततोऽसौ सुरभी राजन्गता नाकं यशस्विनी ।।

ब्रह्मविष्णुमहेशाद्यास्तत्रैवांतरधुस्ततः ।। २३ ।।

।। युधिष्ठिर उवाच ।। ।।

अभार्यास्ते महातेजा गोजा अनुचरास्तथा ।।

उद्वाहिता कथं ब्रह्मन्त्सुतास्तेषां कदाऽभवन् ।। २४ ।।

।। व्यास उवाच ।। ।।

परिग्रहार्थं वे तेषां रुद्रेण च यमेन च ।।

गन्धर्वकन्या आहृत्य दारास्तत्रोपकल्पिताः ।। २५ ।।

।। युधिष्ठिर उवाच ।। ।।

को वा गन्धर्वराजासौ किंनामा कुत्र वा स्थितः ।।

कियन्मात्रास्तस्य कन्याः किमाचारा ब्रवीहि मे ।। २६ ।।

।। व्यास उवाच ।। ।।

विश्वावसुरिति ख्यातो गन्धर्वाधिपतिर्नृप ।।

षष्टिकन्यासहस्राणि आसते तस्य वेश्मनि ।। २७ ।।

अंतरिक्षे गृहं तस्य गधर्वनगरं शुभम् ।।

यौवनस्थाः सुरूपाश्च कन्या गन्धर्वजाः शुभाः ।। २८ ।।

रुद्रस्यानुचरौ राजन्नंदी भृंगी शुभाननौ ।।

पूर्वदृष्टाश्च ताः कन्याः कथयामासतुः शिवम्।। २९ ।।

दृष्टाः पुरा महादेव गन्धर्वनगरे विभो ।।

विश्वावसुगृहे कन्या असंख्याताः सहस्रशः ।। 3.2.10.३० ।।

ता आनीय वलादेव गोभुजेभ्यः प्रयच्छ भो ।।

एवं श्रुत्वा ततो देवस्त्रिपुरघ्नः सदाशिवः ।। ३१ ।।

प्रेषयामास दूतं तु विजयं नाम भारत ।।

स तत्र गत्वा यत्रास्ते विश्वावसुररिंदमः ।। ३२ ।।

उवाच वचनं चैव पथ्यं चैव शिवेरितम् ।।

धर्मारण्ये महाभाग काजेशेन विनिर्मिताः ।। ३३ ।।

स्थापिता वाडवास्तत्र वेदवेदांगपारगाः ।।

तेषां वै परिचर्यार्थं कामधेनुश्च प्रार्थिता ।। ३४ ।।

तया कृताः शुभाचारा वणिजस्ते त्वयोनिजा ।।

षट्त्रिंशच्च सहस्राणि कुमारास्ते महाबलाः ।। ३५ ।।

शिवेन प्रेषितोऽहं वै त्वत्समीपमुपागतः ।।

कन्यार्थं हि महाभाग देहिदेहीत्युवाच ह ।। ३६ ।।

।। गन्धर्व उवाच ।। ।।

देवानां चैव सर्वेषां गन्धर्वाणां महामते ।।

परित्यज्य कथं लोके मानुषाणां ददामि वै ।। ३७ ।।

श्रुत्वा तु वचनं तस्य निवृत्तो विजयस्तदा ।।

कथयामास तत्सर्वं गन्धर्व चरितं महत् ।।३८ ।।

।। व्यास उवाच ।। ।।

ततः कोपसमाविष्टो भगवाँल्लोकशंकरः ।।

वृषभे च समारूढः शूलहस्तः सदाशिवः ।। ३९ ।।

भूतप्रेतपिशाचाद्यैः सहस्रैरावृतः प्रभुः ।।

ततो देवास्तथा नागा भूतवेतालखेचराः ।। 3.2.10.४० ।।

क्रोधेन महताविष्टाः समाजग्मुः सहस्रशः ।।

हाहाकारो महानासीत्तस्मिन्सैन्ये विसर्पति ।। ४१ ।।

प्रकंपिता धरादेवी दिशापाला भयातुराः ।।

घोरा वातास्तदाऽशांताः शब्दं कुर्वंति दिग्गजाः ।। ।। ४२ ।।

।। व्यास उवाच ।। ।।

तदागतं महासैन्यं दृष्ट्वा भयविलोलितम् ।।

गन्धर्वनगरात्सर्वे विनेशुस्ते दिशो दश ।। ४३ ।।

गन्धर्वराजो नगरं त्यक्त्वा मेरुं गतो नृप ।।

ताः कन्या यौवनोपेता रूपौदार्यसमन्विताः ।। ४४ ।।

गृहीत्वा प्रददौ सर्वा वणिग्भ्यश्च तदा नृप ।।

वेदोक्तेन विधानेन तथा वै देवसन्निधौ ।। ४५ ।।

आज्यभागं तदा दत्त्वा गन्धर्वाय गवात्मजाः ।।

देवानां पूर्वजानां च सूर्याचंद्रमसोस्तथा ।। ४६ ।।

यमाय मृत्यवे चैव आज्यभागं तदा ददुः ।।

दत्त्वाज्यभागान्विधिवद्वव्रिरे ते शुभव्रताः ।। ४७ ।।

ततः प्रभृति गान्धर्वविवाहे समुपस्थिते ।।

आज्यभागं प्रगृह्णन्ति अद्यापि सर्वतो भृशम् ।। ४८ ।।

षट्त्रिंशच्च सहस्राणि कुमारा यन्न्यवेदयन् ।।

तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।।

अत एव हि ताः सर्वा दासत्वे हि विनिर्मिताः ।।३

क्षत्रियाश्च महावीरा किंकरत्वे हि निर्मिताः ।। 3.2.10.५० ।।

ततो देवाऽस्तदा राजञ्जग्मुः सर्वे यथातथा।।

गते देवे द्विजाः सर्वे स्थानेऽस्मिन्निवसंति ते।।५१।।

पुत्रपौत्रयुता राजन्निवसंत्यकुतोभयाः।।

पठंति वेदान्वेदज्ञाः क्वचिच्छास्त्रार्थमुद्गिरन्।।५२।।

केचिद्विष्णुं जपंतीह शिवं केचिज्जपंति हि।।

ब्रह्माणं च जपंत्येके यमसूक्तं हि केचन।।

यजंति याजकाश्चैव अग्निहोत्रमुपासते ।।

स्वाहाकारस्वधाकारवषट्कारैश्च सुव्रत ।। ५४ ।।

शब्दैरापूयते सर्वं त्रैलोक्यं सचराचरम् ।।

वणिजश्च महादक्षा द्विजशुश्रूणोत्सुकाः ।। ५५ ।।

धर्मारण्ये शुभे दिव्ये ते वसंति सुनिष्ठिताः ।।

अन्नपानादिकं सर्वं समित्कुशफलादिकम् ।। ५६ ।।

आपूरयन्द्विजातीनां वणिजस्ते गवात्मजाः ।। ५७ ।।

पुष्पोपहारनिचयं स्नानवस्त्रादिधावनम् ।।

उपलादिकनिर्माणं मार्जनादिशुभक्रियाः ।। ५८ ।।

वणिक्स्त्रियः प्रकुर्वंति कंडनं पेषणादिकम् ।।

शुश्रूषंति च तान्विप्रान्काजेशवचनेन हि ।। ५९ ।।

स्वस्था जातास्तदा सर्वे द्विजा हर्षपरायणाः ।।

काजेशादीनुपासंते दिवारात्रौ हि संध्ययोः ।। 3.2.10.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मार ण्यमाहात्म्ये वणिक्परिग्रहवर्णनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ११

https://sa.wikisource.org/s/fts
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

युधिष्ठिर उवाच ।। ।।

अतः परं किमभवद्ब्रवीतु द्विजसत्तम ।।

त्वद्वचनामृतं पीत्वा तृप्तिर्नास्ति मम प्रभो ।। १ ।।

।। व्यास उवाच ।। ।।

अथ किंचिद्गते काले युगांतसमये सति ।।

त्रेतादौ लोलजिह्वाक्ष अभवद्राक्षसेश्वरः ।। २ ।।

तेन विद्रावितं सर्वं त्रैलोक्यं सचराचरम् ।।

जित्वा स सकलाँल्लोकान्धर्मारण्ये समागतः ।। ३ ।।

तद्दृष्ट्वा सकलं पुण्यं रम्यं द्विजनिषे वितम् ।।

ब्रह्मद्वेषाच्च तेनैव दाहितं च पुरं शुभम् ।। ४ ।।

दह्यमानं पुरं दृष्ट्वा प्रणष्टा द्विजसत्तमाः ।।

यथागतं प्रजग्मुस्ते धर्मारण्यनिवासिनः ।। ।।५ ।।

श्रीमाताद्यास्तदा देव्यः कोपिता राक्षसेन वै ।।

घातयंत्येव शब्देन तर्जयित्वा च राक्षसम् ।। ६ ।।

समुच्छ्रितास्तदा देव्यः शतशोऽथ सह स्रशः ।।

त्रिशूलवरधारिण्यः शंखचक्रगदाधराः ।।७।।

कमंडलुधराः काश्चित्कशाखड्गधराः पराः ।।

पाशांकुशधरा काचित्खड्गखेटकधारिणी ।। ८ ।।

काचित्परशुहस्ता च दिव्यायुधधरा परा ।।

नानाभरणभूषाढ्या नानारत्नाभिशोभिता ।। ९ ।।

राक्षसानां विनाशाय ब्राह्मणानां हिताय च ।।

आजग्मुस्तत्र यत्रास्ते लोलजिह्वो हि राक्षसः ।।3.2.11.१०।।

महादंष्ट्रो महाकायो विद्युज्जिह्वो भयंकरः ।।

दृष्ट्वा ता राक्षसो घोरं सिंहनादमथाकरोत् ।।११।।

तेन नादेन महता त्रासितं भुवनत्रयम् ।।
आपूरिता दिशः सर्वाः क्षुभितानेकसागराः ।। १२ ।।
कोलाहलो महानासीद्धर्मारण्ये तदा नृप ।।
तच्छ्रुत्वा वासवेनाथ प्रेषितो नलकूबरः ।। १३ ।।
किमिदं पश्य गत्वा त्वं दृष्ट्वा मह्यं निवेदय ।।
ततस्य वचनं श्रुत्वा गतो वै नलकूबरः ।। १४ ।।
दृष्ट्वा तत्र महायुद्धं श्रीमातालोलजिह्वयोः ।।
यथादृष्टं यथाजातं शक्राग्रे स न्यवेदयत् ।। १५ ।।
उद्वेजयति लोकांस्त्रीन्धर्मारण्यमितो गतः ।।
तच्छ्रुत्वा वासवो विष्णुं निवेद्य क्षितिमागमत्।। १६ ।।
दाहितं तत्पुरं रम्यं देवानामपि दुर्लभम् ।।
न दृष्टा वाडवास्तत्र गताः सर्वे दिशो दश ।। १७ ।।
श्रीमाता योगिनी तत्र कुरुते युद्धमुत्तमम् ।।
हाहाभूता प्रजा सर्वा इतश्चेतश्च धावति ।। १८ ।।
तच्छ्रुत्वा वासुदेवो हि गृहीत्वा च सुदर्शनम् ।।
सत्यलोकात्तदा राजन्समागच्छन्महीतले ।। १९ ।।
धर्मारण्यं ततो गत्वा तच्चक्रं प्रमुमोच ह ।।
लोलजिह्वस्तदा रक्षो मूर्च्छितो निपपात ह ।। 3.2.11.२० ।।
त्रिशूलेन ततो भिन्नः शक्तिभिः क्रोधमूर्च्छितः ।।
हन्यमानस्तदा रक्षः प्राणांस्त्यक्त्वा दिवं गतः ।। २१ ।।
ततो देवाः सगंधर्वा हर्षनिर्भरमानसाः ।।
तुष्टुवुस्तं जगन्नाथं सत्यलोकात्समागताः ।। २२ ।।
उद्वसं तत्समालोक्य विष्णुर्वचनमब्रवीत् ।।
क्व च ते ब्राह्मणाः सर्वे ऋषीणामाश्रमे पुनः ।। २३ ।।
ततो देवाः सगं धर्वा इतस्ततः पलायितान्।।
संशोध्य तरसा राजन्ब्राह्मणानिदमब्रुवन् ।। २४ ।।
श्रूयतां नो वचो विप्रा निहतो राक्षसाधमः ।।
वासुदेवेन देवेन चक्रेण निरकृंतत ।। २५ ।।

तच्छ्रुत्वा वाडवाः सर्वे प्रहर्षोत्फुल्ललोचनाः ।।

समाजग्मुस्तदा राजन्स्वस्वस्थाने समाविशन् ।। २६ ।।

श्रीकांताय तदा राजन्वाक्यमुक्तं मनोरमम् ।।

यस्मात्त्वं सत्यलोकाच्च आगतोऽसि जगत्प्रभुः ।।

स्थापितं च पुरं चेदं हिताय च द्विजात्मनाम् ।। २७ ।।

सत्यमंदिरमिति ख्यातं तदा लोके भविष्यति ।।

कृते युगे धर्मारण्यं त्रेतायां सत्यमंदिरम् ।। २८ ।।

तच्छ्रुत्वा वासुदेवेन तथेति प्रतिपद्य च ।।

ततस्ते वाडवाः सर्वे पुत्रपौत्रसमन्विताः ।। २९ ।।

सपत्नीकाः सानुचरा यथापूर्वं न्यवात्सिषुः ।।

तपोयज्ञक्रियाद्येषु वर्ततेऽध्ययनादिषु ।। 3.2.11.३० ।।

एवं ते सर्वमाख्यातं धर्म वै सत्यमंदिरे ।। ३१ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे धर्मारण्यमाहात्म्ये लोलजिह्वासुरवधपूर्वकं सत्यमंदिरसंस्थापनवर्णनंनामैकादशोऽध्यायः ।। ११ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १२



।। व्यास उवाच ।। ।।

ततो देवैर्नृपश्रेष्ठ रक्षार्थं सत्यमंदिरम् ।।

स्थापितं तत्तदाद्यैव सत्याभिख्या हि सा पुरी ।। १ ।।

पूर्वं धर्मेश्वरो देवो दक्षिणेन गणाधिपः ।।

पश्चिमे स्थापितो भानुरुत्तरे च स्वयंभुवः ।। २ ।।

।। युधिष्ठिर उवाच ।। ।।

गणेशः स्थापितः केन कस्मात्स्थापितवानसौ ।।

किं नामासौ महाभाग तन्मे कथय मा चिरम् ।। ३ ।।

।। व्यास उवाच ।। ।।

अधुनाहं प्रवक्ष्यामि गणेशोत्पत्तिकारणम् ।। ४ ।।

समये मिलिताः सर्वे देवता मातरस्तथा ।।

धर्मारण्ये महाराज स्थापितश्चंडिकासुतः ।। ५ ।।

आदौ देवैर्नृपश्रेष्ठ भूमौ वै सत्ययोषिताम् ।।

प्राकारश्चाभवत्तत्र पताकाध्वजशोभितः ।। ६ ।।

ब्राह्मणायतने तत्र प्राकारमण्डलान्तरे ।।

तन्मध्ये रचितं पीठमिष्टकाभिः सुशोभितम् ।। ७ ।।

प्रतोल्यश्च चतस्रो वै शुद्धा एव सतोरणाः ।।

पूर्वे धर्मेश्वरो देवो दक्षिणे गणनायकः ।। ८ ।।

पश्चिमे स्थापितो भानुरुत्तरे च स्वयंभुवः ।।

धर्मेश्वरोत्पत्तिवृत्तमाख्यातं तत्तवाग्रतः ।। ९ ।।

अधुनाहं प्रवक्ष्यामि गणेशोत्पत्तिहेतुकम् ।।

कदाचित्पार्वती गात्रोद्वर्त्तनं कृतवत्यभूत् ।। 3.2.12.१० ।।

मलं तज्जनितं दृष्ट्वा हस्ते धृत्वा स्वगात्रजम् ।।

प्रतिमां च ततः कृत्वा सुरूपं च ददर्श ह ।। ११ ।।

जीवं तस्यां च संचार्य उदतिष्ठत्तदग्रतः ।।
मातरं स तदोवाच किं करोमि तवाज्ञया ।। १२ ।।
।। पार्वत्युवाच ।। ।।
यावत्स्नानं करिष्यामि तावत्त्वं द्वारि तिष्ठ मे ।।
आयुधानि च सर्वाणि परश्वादीनि यानि तु ।। १३ ।।
त्वयि तिष्ठति मद्द्वारे कोऽपि विघ्नं करोतु न ।।
एवमुक्तो महादेव्या द्वारेऽतिष्ठत्स सायुधः ।। १४ ।।
एतस्मिन्नंतरे देवो महादेवो जगाम ह ।।
आभ्यंतरे प्रवेष्टुं च मतिं दध्रे महेश्वरः ।। १९ ।।
द्वारस्थेन गणेशेन प्रवेशोदायि तस्य न ।।
ततः क्रुद्धो महादेवः परस्परमयुध्यत ।। १६ ।।
युद्धं कृत्वा ततश्चोभौ परस्परवधैषिणौ ।।
परशुं जघ्निवान्देव ललाटे परमे शुभम् ।। १७ ।।
ततो देवो महादेवः शूलमुद्यम्य चाहनत् ।।
शिरश्चिच्छेद शूलेन तद्भूमौ निपपात ह ।। १८ ।।
तं दृष्ट्वा पतितं पुत्रं पार्वती प्ररुरोद ह ।।
हाहाकारो महानासीत्तदा तत्र निपातिते ।। १९ ।।
पार्वतीं विकलां दृष्ट्वा देवदेवो महेश्वरः ।।
चिंतयामास देवोऽपि किं कृतं वा मुधा मया ।। 3.2.12.२० ।।
एतस्मिन्नंतरे तत्र गजासुरमपश्यत ।।
तं दृष्ट्वा च महादैत्यं सर्वलोकैकपूजितः ।। २१ ।।
जघ्निवांस्तच्छिरो गृह्य पार्वत्या कृतमर्भकम् ।।
उत्तस्थौ सगणस्तत्र महादेवस्य सन्निधौ।। २२ ।।
ततो नाम चकारास्य गजानन इति स्फुटम् ।।
सुराः सर्वे च संपृक्ता हर्षिता मुनयस्तथा ।। २३ ।।
स्तुवंति स्तुतिभिः शश्वत्कुटुम्बकुशलंकरम् ।।
विक्रीणाति कुटुम्बं यो मोदकार्थं समर्चके ।। २४ ।।
दक्षिणस्यां प्रतोल्यां तमेकदंतं च पीवरम् ।।

आर्चयच्च महादेवं स्वयंभूः सुरपूजितम् ।। २५ ।।

जटिलं वामनं चैव नागयज्ञोपवीतकम् ।।

त्र्यक्षं चैव महाकायं करध्वजकुठारकम् ।। २६ ।।

दधानं कमलं हस्ते सर्वविप्रविनाशनम् ।।

रक्षणाय च लोकानां नगराद्दक्षिणाश्रितम्।।२७।।

सुप्रसन्नं गणाध्यक्षं सिद्धिबुद्धिनमस्कृतम् ।।

सिंदूराभं सुरश्रेष्ठं तीव्रांकुशधरं शुभम् ।। २८ ।।

शतपुष्पैः शुभैः पुष्पैरर्चितं ह्यमराधिपः ।।

प्रणम्य च महाभक्त्या तुष्टुवु स्तं सुरास्ततः ।। २९ ।।

।। देवा ऊचुः ।। ।।

नमस्तेस्तु सुरेशाय गणानां पतये नमः ।।

गजानन नमस्तुभ्यं महादेवाधिदैवत ।। ३.२.१२.३० ।।

भक्तिप्रियाय देवाय गणाध्यक्ष नमोस्तु ते ।।

इत्येतैश्च शुभैः स्तोत्रैः स्तूयमानो गणाधिपः ।।

सुप्रीतश्च गणाध्यक्षः तदाऽसौ वाक्यमब्रवीत् ।। ।। ३१ ।।

।। गणाध्यक्ष उवाच ।।

तुष्टोऽहं वो सुरा ब्रूत वांछितं च ददामि वः ।। ३२ ।।

।। देवा ऊचुः ।। ।।

त्वमत्रस्थो महाभाग कुरु कार्यं च नः प्रभो ।।

धर्मारण्ये च विप्राणां वणिग्जननिवासिनाम् ।। ३३ ।।

ब्रह्मचर्यादियुक्तानां धार्मिकाणां गणेश्वर ।।

वर्णाश्रमेतराणां च रक्षिता भव सर्वदा ।।। ३४ ।।

त्वत्प्रसादान्महाभाग धनसौख्ययुता द्विजाः ।।

भवंतु सर्वे सततं वणिजश्च महाबलाः ।।३५।।

रक्षितव्यास्त्वया देव यावच्चंद्रार्कमेदिनी ।।

एवमस्त्विति सोवादीद्गणनाथो महेश्वरः ।। ३६ ।।

देवाश्च हर्षमापन्नाः पूजयंति गणाधिपम् ।।

ततो देवा मुदा युक्ताः पुष्पधूपादितर्पणैः ।। ३७ ।।

ये चान्ये मनुजा लोके निर्विघ्नार्थं च पूजयन् ।। ३८ ।।

विवाहोत्सवयज्ञेषु पूर्वमाराधितो भवेत् ।।

धर्मारण्योद्भवानां च प्रसन्नो भव सर्वदा ।। ।। ३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां तृतीये ब्रह्मखण्डे पूर्वभागे गणेशप्रस्थापनावर्णनंनाम द्वादशोऽध्यायः ।। १२ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १३

https://sa.wikisource.org/s/frn
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। व्यास उवाच ।। ।।

शंभोश्च पश्चिमे भागे स्थापितः कश्यपात्मजः ।।

तत्रास्ति तन्महाभाग रविक्षेत्रं तदुच्यते ।। १ ।।

तत्रोत्पन्नौ महादिव्यौ रूपयौवनसंयुतौ ।।

नासत्यावश्विनौ देवौ विख्यातौ गदनाशनौ ।। २ ।।

।। युधिष्ठिर उवाच ।। ।।

पितामह महाभाग कथयस्व प्रसादतः ।।

उत्पत्तिरश्विनोश्चैव मृत्युलोके च तत्कथम् ।। ३ ।।

रविलोकात्कथं सूर्यो धरायामवतारितः ।।

एतत्सर्वं प्रयत्नेन कथयस्व प्रसादतः ।। ४ ।।

यच्छ्रुत्वा हि महाभाग सर्वपापैः प्रमुच्यते ।। ५ ।।

।। व्यास उवाच ।। ।।

साधु पृष्टं त्वया भूप ऊर्ध्वलोककथानकम् ।।

यच्छ्रुत्वा नरशार्दूल सर्वरोगात्प्रमुच्यते ।।

विश्वकर्म्मसुता संज्ञा अंशुमद्रविणा वृता ।। ६ ।।

सूर्यं दृष्ट्वा सदा संज्ञा स्वाक्षिसंयमनं व्यधात् ।।

यतस्ततः सरोषोऽर्कः संज्ञां वचनमब्रवीत् ।। ९७ ।।

।। सूर्य उवाच ।। ।।

मयि दृष्टे सदा यस्मात्कुरुषे स्वाक्षिसंयमम् ।।

तस्माज्जनिष्यते मूढे प्रजासंयमनो यमः ।। ।। ८ ।।

ततः सा चपलं देवी ददर्श च भयाकुलम् ।।

विलोलितदृशं दृष्ट्वा पुनराह च तां रविः ।। ९ ।।

यस्माद्विलोलिता दृष्टिर्मयि दृष्टे त्वया धुना ।।

तस्माद्विलोलितां संज्ञे तनयां प्रसविष्यसि ।। 3.2.13.१० ।।

।। व्यास उवाच ।। ।।

ततस्तस्यास्तु संजज्ञे भर्तृशापेन तेन वै ।।

यमश्च यमुना येयं विख्याता सुमहानदी ।। ११ ।।

सा च संज्ञा रवेस्तेजो महद्दुःखेन भामिनी ।।

असहंतीव सा चित्ते चिंतयामास वै तदा ।। १२ ।।

किं करोमि क्व गच्छामि क्व गतायाश्च निर्वृतिः ।।

भवेन्मम कथं भर्तुः कोपमर्कस्य नश्यति ।।१३।।

इति संचिंत्य बहुधा प्रजापतिसुता तदा ।।

साधु मेने महाभागा पितृसंश्रयमापसा ।।१४।।

ततः पितृगृहं गंतुं कृतबुद्धिर्यशस्विनी ।।

छायामाहूयात्मनस्तु सा देवी दयिता रवेः ।।१५।।

तां चोवाच त्वया स्थेयमत्र भानोर्यथा मया ।।

तथा सम्यगपत्येषु वर्तितव्यं तथा रवौ ।।१६।।

दुष्टमपि न वाच्यं ते यथा बहुमतं मम ।।

सैवास्मि संज्ञाहमिति वाच्यमेवं त्वयानघे ।। १७ ।।

।। छायासंज्ञोवाच ।। ।।

आकेशग्रहणाच्चाहमाशापाच्च वचस्तथा ।।

करिष्ये कथयिष्यामि यावत्केशापकर्षणा त् ।। १८ ।।

इत्युक्ता सा तदा देवी जगाम भवनं पितुः ।।

ददर्श तत्र त्वष्टारं तपसा धूतकिल्बिषम् ।। १९ ।।

बहुमानाच्च तेनापि पूजिता विश्व कर्म्मणा ।।

तत्स्थौ पितृगृहे सा तु किंचित्कालमनिंदिता ।। 3.2.13.२० ।।

ततः प्राह स धर्मज्ञः पिता नातिचिरोषिताम् ।।

विश्वकर्मा सुतां प्रेम्णा बहुमा नपुरस्सरम् ।। २१ ।।

त्वां तु मे पश्यतो वत्से दिनानि सुबहून्यपि ।।

मुहूर्तेन समानि स्युः किंतु धर्मो विलुप्यते ।। २२ ।।

बांधवेषु चिरं वासो न नारीणां यशस्करः ।।

मनोरथो बांधवानां भार्या पितृगृहे स्थिता ।। २३ ।।

स त्वं त्रैलोक्यनाथेन भर्त्रा सूर्येण संगता ।।
पितुर्गृहे चिरं कालं वस्तुं नार्हसि पुत्रिके ।। २४ ।।
अतो भर्तृगृहं गच्छ दृष्टोऽहं पूजिता च मे ।।
पुनरागमनं कार्यं दर्शनाय शुभेक्षणे ।।२५ ।।
।। व्यास उवाच ।। ।।
इत्युक्ता सा तदा क्षिप्रं तथेत्युक्ता च वै मुने ।।
पूजयित्वा तु पितरं सा जगामोत्तरान्कुरून् ।। २६ ।।
सूर्यतापमनिच्छती तेजसस्तस्य बिभ्यती ।।
तपश्चचार तत्रापि वडवारूपधारिणी ।। २७ ।।
संज्ञामित्येव मन्वानो द्वितीयायां दिवस्पतिः ।।
जनयामास तनयौ कन्यां चैकां मनोरमाम् ।। २८ ।।
छाया स्वतनयेष्वेव यथा प्रेष्णाध्यवर्तत ।।
तथा न संज्ञाकन्यायां पुत्रयोश्चाप्यवर्तत ।।
लालनासु च भोज्येषु विशेषमनुवासरम् ।। २९ ।।
मनुस्तत्क्षांतवानस्या यमस्तस्या न चाक्षमत् ।।
ताडनाय ततः कोपात्पादस्तेन समुद्यतः ।।
तस्याः पुनः क्षांतमना न तु देहे न्यपातयत् ।। 3.2.13.३० ।।
ततः शशाप तं कोपाच्छायासंज्ञा यमं नृप ।।
किंचित्प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ।। ३१ ।।
पत्न्यां पितुर्मयि यदि पादमुद्यच्छसे बलात् ।।
भुवि तस्मादयं पादस्तवाद्यैव भविष्यति ।। ३२ ।।
इत्याकर्ण्य यमः शापं मातर्यतिविशंकितः ।।
अभ्येत्य पितरं प्राह प्रणिपातपुरस्सरम्।। ३३ ।।
तातैतन्महदाश्चर्यमदृष्टमिति च क्वचित् ।।
माता वात्सल्यरूपेण शापं पुत्रे प्रयच्छति ।।३४।।
यथा माता ममाचष्ट नेयं माता तथा मम ।।
निर्गुणेष्वपि पुत्रेषु न माता निर्गुणा भवेत् ।। ३५ ।।
यमस्यैतद्वचः श्रुत्वा भगवांस्तिमिरापहः ।।

छायासंज्ञामथाहूय पप्रच्छ क्वगतेति च ।।३६।।

सा चाह तनया त्वष्टुरहं संज्ञा विभावसो ।।

पत्नी तव त्वयापत्यान्येतानि जनितानि मे ।। ३७ ।।

इत्थं विवस्वतस्तां तु बहुशः पृच्छतो यदा ।।

नाचचक्षे तदा क्रुद्धो भास्वांस्तां शप्तुमुद्यतः ।। ३८ ।।

ततः सा कथयामास यथावृत्तं विवस्वते ।।

विदितार्थश्च भगवाञ्जगाम त्वष्टु रालयम् ।। ३९ ।।

ततः संपूजयामास त्वष्टा त्रैलोक्यपूजितम् ।।

भास्वन्किं रहिता शक्त्या निजगेहमुपागतः ।। 3.2.13.४० ।।

संज्ञां पप्रच्छ तं तस्मै कथयामास तत्त्ववित् ।।

आगता सेह मे वेश्म भवतः प्रेषिता रवे ।। ४१ ।।

दिवाकरः समाधिस्थो वडवारूपधारिणीम् ।।

तपश्चरंतीं ददृशे उत्तरेषु कुरुष्वथ ।। ४२ ।।

असह्यमाना सूर्यस्य तेजस्तेनातिपीडिता ।।

वह्न्याभनिजरूपं तु च्छायारूपं विमुच्य च।। ४३ ।।

धर्मारण्ये समागत्य तप स्तेपे सुदुष्करम्।।

छायापुत्रं शनिं दृष्ट्वा यमं चान्यं च भूपते ।। ४४ ।।

तदैव विस्मितः सूर्यो दुष्टपुत्रौ समीक्ष्य च ।।

ज्ञातुं दध्यौ क्षणं ध्यात्वा विदित्वा तच्च कारणम् ।। ४५ ।।

घृण्यौष्ण्याद्दग्धदेहा सा तपस्तेपे पतिव्रता ।।

येन मां तेजसा सह्यं द्रष्टुं नैव शशाक ह ।। ४६ ।।

पञ्चाशद्वायनेतीते गत्वा कौ तप आचरत् ।।

प्रद्योतनो विचार्यैवं गत्वा शीघ्रं मनोजवः ।। ४७ ।।

धर्मारण्ये वरे पुण्ये यत्र संज्ञास्थिता तपः ।।

आगतं तं रविं दृष्ट्वा वडवा समजायत ।। ४८ ।।

सूर्यपत्नी सदा संज्ञा सूर्यश्चाश्वस्ततोऽभवत् ।।

ताभ्यां सहाभूत्संयोगो घ्राणे लिंगं निवेश्य च ।। ४९ ।।

तदा तौ च समुत्पन्नौ युगलावश्विनौ भुवि ।।

प्रादुर्भूतं जलं तत्र दक्षिणेन खुरेण च ।। 3.2.13.५० ।।
विदलिते भूमिभागे तत्र कुंडं समुद्बभौ ।।
द्वितीयं तु पुनः कुंडं पश्चार्धचरणोद्भवम् ।। ५१ ।।
उत्तरवाहिन्याः काश्या कुरुक्षेत्रादि वै तथा ।।
गंगापुरीसमफलं कुण्डेऽत्र मुनिनोदितम् ।। ५२ ।।
तत्फलं समवाप्नोति तप्तकुण्डे न संशयः ।।
स्नानं विधाय तत्रैव सर्वपापैः प्रमुच्यते ।। ५३ ।।
न पुनर्जायते देहः कुष्ठादिव्याधिपीडितः ।।
एतत्ते कथितं भूप दस्रांशोत्पत्तिकारणम् ।। ५४ ।।
तदा ब्रह्मादयो देवा आगतास्तत्र भूपते ।।
दत्त्वा संज्ञावरं शुभ्रं चिंतितादधिकं हि तैः ।। ५५ ।।
स्थापयित्वा रविं तत्र बकुलाख्यवनाधिपम् ।।
आनर्चुस्ते तदा संज्ञां पूर्वरूपाऽभवत्तदा ।। ५६ ।।
स्थापिता तत्र राज्ञी च कुमारौ युगलौ तदा ।।
एतत्तीर्थफलं वक्ष्ये शृणु राजन्महामते ।। ५७ ।।
आदिस्थानं कुरुश्रेष्ठ देवैरपि सुदुर्लभम् ।।
रविकुण्डे नरः स्नात्वा श्रद्धायुक्तो जितेंद्रियः ।। ५८ ।।
तारयेत्स पितॄन्सर्वान्महानरकगानपि ।।
श्रद्धया यः पिबेत्तोयं संतर्प्य पितृदेवताः ।। ५९ ।।
स्वल्पं वापि बहुवापि सर्वं कोटिगुणं भवेत् ।।
सप्तम्यां रविवारेण ग्रहणं चंद्रसूर्ययोः ।। 3.2.13.६० ।।
रविकुण्डे च ये स्नाताः न ते वै गर्भगामिनः ।।
सक्रांतौ च व्यतीपाते वैधृतेषु च पर्वसु ।। ६१ ।।
पूर्णमास्याममावास्यां चतुर्द्दश्यां सितासिते ।।
रविकुंडे च यः स्नातः क्रतुकोटिफलं लभेत् ।। ६२ ।।
पूजयेद्बकुलार्कं च एकचित्तेन मानवः ।।
स याति परमं धाम स यावत्तपते रविः ।। ६३ ।।
तस्य लक्ष्मीः स्थिरा नूनं लभते संततिं सुखम् ।।

अरिवर्गः क्षयं याति प्रसादाच्च दिवस्पतेः ।। ६४ ।।

नाग्नेर्भयं हि तस्य स्यान्न व्याघ्रान्न च दंतिनः ।।

न च सर्प्पभयं क्वापि भूतप्रेतादिभीर्नहि ।। ६५ ।।

बालग्रहाश्च सर्वेऽपि रेवती वृद्धरेवती ।।

ते सर्वे नाशमायांति बकुलार्क नमोस्तु ते ।। ६६ ।।

गावस्तस्य विवर्द्धंते धनं धान्यं तथैव च ।।

अविच्छेदो भवेद्वंशो बकुलार्के नमस्कृते ।। ६७ ।।

काकवन्ध्या च या नारी अनपत्या मृतप्रजा ।।

वन्ध्या विरूपिता चैव विषकन्याश्च याः स्त्रियः ।। ६८ ।।

एवं दोषैः प्रमुच्यंते स्नात्वा कुण्डे च भूपते ।।

सौभाग्यस्त्रीसुतांश्चैव रूपं चाप्नोति सर्वशः ।। ।।६९।।

व्याधिग्रस्तोपि यो मर्त्यः षण्मासाच्चैव मानवः ।।

रविकुण्डे च सुस्नातः सर्वरोगात्प्रमुच्यते ।। 3.2.13.७० ।।

नीलोत्सर्गविधिं यस्तु रविक्षेत्रे करोति वै ।।

पितरस्तृप्तिमायांति यावदाभूतसंप्लवम् ।। ७१ ।।

कन्यादानं च यः कुर्यादस्मिन्क्षेत्रे च पुत्रक ।।

उद्वाहपरिपूतात्मा ब्रह्मलोके महीयते ।। ७२ ।।

धेनुदानं च शय्यां च विद्रुमं च हयं तथा ।।

दासीमहिषीघण्टाश्च तिलं कांचनसंयुतम् ।। ७३ ।।

धेनुं तिलमयीं दद्यादस्मि न्क्षेत्रे च भारत ।।

उपानहौ च छत्रं च शीतत्राणादिकं तथा ।। ७४ ।।

लक्षहोमं तथा रुद्रं रुद्रातिरुद्रमेव च ।।

तस्मिन्स्थाने च यत्किंचिद्ददाति श्रद्धयान्वितः ।। ७५ ।।

एकैकस्य फलं तात वक्ष्यामि शृणु तत्त्वतः ।।

दानेन लभते भोगानिह लोके परत्र च ।। ७६ ।।

राज्यं च लभते मर्त्यः कृत्वोद्वाहं तु मानुषाः ।।

जायातो धर्मकामार्थाः प्राप्यंते नात्र संशयः ।। ७७ ।।

पूजाया लभते सौख्यं भवेज्जन्मनिजन्मनि ।।

सप्तम्यां रवियुक्तायां बकुलार्कं स्मरेत्तु यः ।। ७८ ।।

ज्वरादेः शत्रुतश्चैव व्याधेस्तस्य भयं नहि ।।७९।।

।। युधिष्ठिर उवाच ।। ।।

बकुलार्केति वै नाम कथं जातं रवेर्मुने ।।

एतन्मे वदतां श्रेष्ठ तत्त्वमाख्यातुमर्हसि ।।3.2.13.८०।।

।। व्यास उवाच ।। ।।

यदा संज्ञा च राजेंद्र सूर्यार्थं चैकचेतसा ।।

तेपे बकुलवृक्षाधः पत्युस्तेजः प्रशां तये ।।८१।।

प्रादुर्भावं रवेर्दृष्ट्वा वडवा समजायत ।।

अत्यंतं गोपतिः शांतो बकुलस्य समीपतः ।।८२।।

सुषुवे च तदा राज्ञी सुतौ दिव्यौ मनोहरौ ।।

तेनास्य प्रथितं नाम बकुलार्केति वै रवेः ।।८३।।

यस्तत्र कुरुते स्नानं व्याधिस्तस्य न पीडयेत् ।।

धर्ममर्थं च कामं च लभते नात्र संशयः ।।८४।।

षण्मासात्सिद्धिमाप्नोति मोक्षं च लभते नरः ।।

एतदुक्तं महाराज बकुलार्कस्य वैभवम् ।। ८५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्योपाख्याने बकुलार्कमाहात्म्यकथनंनाम त्रयोदशोऽध्यायः ।। १३ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १४



युधिष्ठिर उवाच ।। ।।

कृपासिंधो महाभाग सर्वव्यापिन्सुरेश्वर ।।

कदा ह्यत्र तपस्तप्तं विष्णुनामिततेजसा ।। १ ।।

स्कंदाय कथितं चैव शर्वेण च महात्मना ।।

आनुपूर्व्येण सर्वं हि कथयस्व त्वमेव हि ।। २ ।।

।। व्यास उवाच ।। ।।

शृणु वत्स प्रवक्ष्यामि धर्म्मारण्ये नृपोत्तम ।।

एकदात्र तपस्तप्तं विष्णुनाऽमिततेजसा ।। ।। ३ ।।

।। स्कंद उवाच ।। ।।

कथं देवसरोनाम पंपा चंपा गया तथा ।।

वाराणस्यधिका चैव कथमश्वमुखो हरिः ।। ४ ।।

।। ईश्वर उवाच ।। ।।

अत्र नारायणो देवस्तपस्तेपे सुदुष्करम् ।।

दिव्यवर्षशतं त्रीणि जातः सुष्ठ्वाननश्च सः ।। ५ ।।

तपस्तेपे महाविष्णुः सुरूपार्थं च पुत्रक ।।

वाजिमुखो हरिस्तत्र सिद्धस्थाने महाद्युते ।। ६ ।।

।। स्कंद उवाच ।। ।।

कारणं ब्रूहि नोद्य त्वमश्वाननः कथं हरिः ।।

महारिपोश्च हंता च देवदेवो जगत्पतिः ।। ।। ७ ।।

यस्य नाम्ना महाभाग पातकानि बहून्यपि ।।

विलीयंते तु वेगेन तमः सूर्योदये यथा ।। ८ ।।

श्रूयंते यस्य कर्माणि अद्भुतान्यद्भुतानि वै ।।

सर्वेषामेव जीवानां कारणं परमेश्वरः ।। ९ ।।

प्राणरूपेण यो देवो हयरूपः कथं भवेत् ।।

सर्वेषामपि तंत्राणामेकरूपः प्रकीर्तितः ।। 3.2.14.१० ।।

भक्तिगम्यो धर्मभाजां सुखरूपः सदा शुचिः ।।

गुणातीतोऽपि नित्योऽसौ सर्वगो निर्गुणस्तथा ।। ११ ।।

स्रष्टासौ पालको हंता अव्यक्तः सर्वदेहिनाम् ।।

अनुकूलो महातेजाः कस्मादश्वमुखोऽभवत् ।। १२ ।।

यस्य रोमोद्भवा देवा वृक्षाद्याः पन्नगा नगाः ।।

कल्पेकल्पे जगत्सर्वं जायते यस्य देहतः ।। ।। १३ ।।

स एव विश्वप्रभवः स एवात्यंतकारणम् ।।

येनानीताः पुनर्विद्या यज्ञाश्च प्रलयं गताः ।।१४।।

घातितो दुष्टदैत्योऽसौ वेदार्थं कृत उद्यमः ।।

एवमासीन्महाविष्णुः कथमश्वमुखोऽभवत् ।। १५ ।।

रत्नगर्भा धृता येन पृष्ठदेशे च लीलया ।।

कृत्या व्यवस्थितं सर्वं जगत्स्थावरजंगमम् ।। ।। १६ ।।

स देवो विश्वरूपो वै कथं वाजिमुखोऽभवत् ।।

हिरण्याक्षस्य हंता यो रूपं कृत्वा वराहजम् ।। १७ ।।

सुपवित्रं महातेजाः प्रविश्य जलसा गरे ।।

उद्धृता च मही सर्वा ससागरमहीधरा ।। १८ ।।

उद्धृता च मही नूनं दंष्ट्राग्रे येन लीलया ।।

कृत्वा रूपं वराहं च कपिलं शोकनाशनम् ।। ।। १९ ।।

स देवः कथमीशानो हयग्रीवत्वमागतः ।।

प्रह्लादार्थे स चेशानो रूपं कृत्वा भयावहम् ।। 3.2.14.२० ।।

नारसिंहं महादेवं सर्वदुष्टनिवारणम् ।।

पर्वताग्निसमुद्रस्थं ररक्ष भक्तसत्तमम् ।। २१ ।।

हिरण्यकशिपुं दुष्टं जघान रजनीमुखे ।।

इंद्रासने च संस्थाप्य प्रह्लादस्य सुखप्रदम् ।। २२ ।।

प्रह्लादार्थे च वै नूनं नृसिंहत्वमुपागतः ।।

विरोचनसुतस्याग्रे याचकोऽसौ भवेत्तदा ।। २३ ।।

यज्ञे चैवाश्वमेधे वै बलिना यः समर्चितः ।।

हृता वसुमती तस्य त्रिपदीकृतरोदसी ।। २४ ।।

विश्वरूपेण वै येन पाताले क्षपितो बलिः ।।

त्रिःसप्तवारं येनैव क्षत्रियानवनीतले ।। २५ ।।

हत्वाऽददाच्च विप्रेभ्यो महीमतिमहौजसा ।।

घातितो हैहयो राजा येनैव जननी हता ।। २६ ।।

येन वै शिशुनोर्व्यां हि घातिता दुष्टचारिणी ।।

राक्षसी ताडका नाम्नी कौशिकस्य प्रसादतः ।। २७ ।।

विश्वामित्रस्य यज्ञे तु येन लीलानृदेहिना ।।

चतुर्दशसहस्राणि घातिता राक्षसा वलात् ।। २८ ।।

हता शूर्पणखा येन त्रिशिराश्च निपातितः ।।

सुग्रीवं वालिनं हत्वा सुग्रीवेण सहायवान् ।। २९ ।।

कृत्वा सेतुं समुद्रस्य रणे हत्वा दशाननम् ।।

धर्म्मारण्यं समासाद्य ब्राह्मणानन्वपूजयत् ।। 3.2.14.३० ।।

शासनं द्विजवर्येभ्यो दत्त्वा ग्रामान्बहूंस्तथा ।।

स्नात्वा चैव धर्म्मवाप्यां सुदानान्यददाद्गवाम् ।। ३१ ।।

साधूनां पालनं कृत्वा निग्रहाय दुरात्मनाम् ।।

एवमन्यानि कर्म्माणि श्रुतानि च धरातले ।।३२।।

स देवो लीलया कृत्वा कथं चाश्वमुखोऽभवत् ।।

यो जातो यादवे वंशे पूतनाशकटादिकम् ।। ३३ ।।

अरिष्टदैत्यः केशी च वृकासुरबकासुरौ ।।

शकटासुरो महासुर स्तृणावर्तश्च धेनुकः ।। ३४ ।।

मल्लश्चैव तथा कंसो जरासंधस्तथैव च ।।

कालयवनस्य हंता च कथं वै स हयाननः ।।

तारकासुरं रणे जित्वा अयुतषट्पुरं तथा ।। ३५ ।।

कन्याश्चोद्वाहिता येन सहस्राणि च षड् दश ।।

अमानुषाणि कृत्वेत्थं कथं सोऽश्वमुखोऽभवत् ।। ३६ ।।

त्राता यः सर्वभक्तानां हंता सर्वदुरात्मनाम् ।।

धर्मस्थापनकृत्सोऽपि कल्किर्विष्णुपदे स्थितः ।। ३७ ।।

एतद्वै महदाश्चर्य्यं भवता यत्प्रकाशितम् ।।

एतदाचक्ष्व मे सर्वं कारणं त्रिपुरांतक ।। ३८ ।।

।। श्रीरुद्र उवाच ।। ।।

साधुपृष्टं महाबाहो कारणं तस्य वच्म्यहम् ।।

हयग्रीवस्य कृष्णस्य शृणुष्वे काग्रमानसः ।। ३९ ।।

।। व्यास उवाच ।। ।।

पुरा देवैः समारब्धो यज्ञो नूनं धरातले ।।

वेदमंत्रैराह्वयितुं सर्वे रुद्रपुरोगमाः ।।3.2.14.४०।।

वैकुण्ठे च गताः सर्वे क्षीराब्धौ च निजालये ।।

पातालेऽपि पुनर्गत्वा न विदुः कृष्णदर्शनम् ।। ४१ ।।

मोहाविष्टास्ततः सर्वे इतश्चेतश्च धाविताः ।।

नैव दृष्टस्तदा तैस्तु ब्रह्मरूपो जनार्दनः ।। ४२ ।।

विचारयंति ते सर्वे देवा इन्द्रपुरोगमाः ।।

क्व गतोऽसौ महाविष्णुः केनोपायेन दृश्यते ।। ४३ ।।

प्रणम्य शिरसा देवं वागीशं प्रोचुरादरात् ।।

देवदेव महाविष्णुं कथयस्व प्रसादतः ।। ४४ ।।

।। बृहस्पतिरुवाच ।। ।।

न जाने केन कार्येण योगारूढो महात्मवान् ।।

योगरूपोऽभवद्विष्णुर्योगीशो हरिरच्युतः ।। ४५ ।।

क्षणं ध्यात्वा स्वमात्मानं धिषणेन ख्यापितो हरिः ।।

तत्र सर्वे गता देवा यत्र देवो जगत्पतिः ।। ४६ ।।

तदा दृष्टो महाविष्णुर्ध्यानस्थोऽसौ जनार्दनः ।।

ध्यात्वा कृत्यसमाकारं सशरं दैत्यसूदनम् ।। ४७ ।।

समास्थानं ततो दृष्ट्वा बोधोपायं प्रचक्रमे ।।

आह तांश्च तदा वम्र्यो धनुर्गुणं प्रयत्नतः ।।

छेत्स्यंति चेत्तच्छब्देन प्रबुध्येत हरिः स्वयम् ।। ४८ ।।

।। देवा ऊचुः ।। ।।

गुणभक्षं कुरुध्वं वै येनासौ बुध्यते हरिः ।।

क्रत्वर्थिनो वयं वम्र्यः प्रभुं विज्ञापयामहे ।। ४९ ।।

।। वम्र्यः ऊचुः ।। ।।

निद्राभंगं कथाच्छेदं दम्पत्योर्मैत्रभेदनम् ।।

शिशुमातृविभेदं वा कुर्वाणो नरकं व्रजेत् ।। 3.2.14.५० ।।

योगारूढो जगन्नाथः समाधिस्थो महाबलः ।।

तस्य श्रीजगदीशस्य विघ्नं नैव तु कुर्महे ।। ५१ ।।

।। ब्रह्मोवाच ।। ।।

भवतां सर्वभक्षत्वं देवकार्यं क्रियेत चेत् ।।

कर्त्तव्यं च ततो वम्र्यो यज्ञसिद्धिर्यथा भवेत् ।।

वम्रीशा सा तदा वत्स पुनरेवमुवाच ह ।। ५२ ।।

।। वम्र्युवाच ।। ।।

दुःखसाध्यो जगन्नाथो मलयानिलसंनिभः ।।

कथं वा बोध्यतां बह्मन्नस्माभिः सुरपूजितः ।। ५३ ।।

नैव यज्ञेन मे कार्यं सुरैश्चैव तथैव च ।।

सर्वेषु यज्ञकार्येषु भागं ददतु मे सुराः ।। ५४ ।। ।।

।। देवा ऊचुः ।। ।।

प्रदास्यामो वयं वम्र्यै भागं यज्ञेषु सर्वदा ।।

यज्ञाय दत्तमस्माभिः कुरुष्वैवं वचो हि नः ।। ५५ ।।

तथेति विधिनाप्युक्तं वम्री चोद्यममाश्रिता ।।

गुणभक्षादिकं कर्म तया सर्वं कृतं नृप ।। ५६ ।।

।। युधिष्ठिर उवाच ।। ।।

अस्य वा बोधने देवा गुणभंगे समाधिषु ।।

एतदाश्चर्यं विप्रर्षे सत्यं सत्यवतीसुत ।। ५७ ।।

।। व्यास उवाच ।। ।।

व्यग्रचित्ताः सुराः सर्वे आकृष्टं हरिकार्मुकम् ।।

न जाने केन कार्येण विष्णुमायाविमोहिताः ।। ५८ ।।

मुदितास्ताः प्रमुञ्चंति वल्मीकं चाग्रतो हरेः ।।

कोटिपार्श्वे ततो नीतं वल्मीकं पर्वतोपमम् ।। ५९ ।।

गुणे च भक्षिते तस्मिंस्तक्षणादेव दूषिते ।।

ज्याघातकोटिभिः सार्द्धं शीर्षं छित्त्वा दिवं गतम् ।। 3.2.14.६० ।।

गते शीर्षे च ते देवा भृशमु द्विग्नमानसाः ।।

धावंति सर्वतः सर्वे शिरआलोकनाय ते ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्व भागे धर्मारण्यमाहात्म्ये विष्णुशिरोनाशोनाम चतुर्दशोऽध्यायः ।। १४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १५



।। व्यास उवाच ।। ।।

न पश्यंति तदा शीर्षं ब्रह्माद्यास्तु सुरास्तदा ।।

किं कुर्म इति हेत्युक्त्वा ज्ञानिनस्ते व्यचिन्तयन् ।। १ ।।

उवाच विश्वकर्माणं तदा ब्रह्मा सुरान्वितः ।।२।।

।। ब्रह्मोवाच ।। ।।

विश्वकर्मस्त्वमेवासि कार्यकर्ता सदा विभो ।।

शीघ्रमेव कुरु त्वं वै वक्त्रं सांद्रं च धन्विनः ।। ३ ।।

नमस्कृत्य तदा तस्मै स्तुतोऽसौ देववर्द्धकिः ।।

उवाच परया भक्त्या ब्रह्माणं कमलोद्भवम् ।। ३ ।।

यज्ञकार्यं निवृत्याशु वदंति विविधाः सुराः ।। ४ ।।

यज्ञभागविहीनं मां किं पुनर्वच्मि ते ऽग्रतः ।।

यज्ञभागमहं देव लभेयैवं सुरैः सह ।। ५ ।।

।। ब्रह्मोवाच ।। ।।

दास्यामि सर्वयज्ञेषु विभागं सुरवर्द्धके ।।

सोमे त्वं प्रथमं वीर पूज्यसे श्रुतिकोविदैः ।। ६ ।।

तद्विष्णोश्च शिरस्तावत्संधत्स्वामरवर्द्धक ।।

विश्वकर्माब्रवीद्देवानानयध्वं शिरस्त्विति ।। ७ ।।

तन्नास्तीति सुराः सर्वे वदंति नृपसत्तम ।।

मध्याह्ने तु समुद्भूते रथस्थो दिवि चांशुमान् ।। ८ ।।

दृष्टं तदा सुरैः सर्वै रथादश्वमथानयन् ।।

छित्त्वा शीर्षं महीपाल कबंधाद्वाजिनो हरेः ।। ९ ।।

कबंधे योजयामास विश्वकर्मातिचातुरः ।।

दृष्ट्वा तं देवदेवेशं सुराः स्तुतिमकुर्वत ।। 3.2.15.१० ।।

।। देवा ऊचुः ।। ।।

नमस्तेऽस्तु जगद्बीज नमस्ते कमलापते ।।

नमस्तेऽस्तु सुरेशान नमस्ते कमलेक्षण ।। ११ ।।

त्वं स्थितिः सर्वभूतानां त्वमेव शरणं सताम् ।।

त्वं हंता सर्वदुष्टानां हयग्रीव नमोऽस्तु ते ।। १२ ।।

त्वमोंकारो वषट्कारः स्वाहा स्वधा चतुर्विधा ।।

आद्यस्त्वं च सुरेशान त्वमेव शरणं सदा ।। १३ ।।

यज्ञो यज्ञपतिर्यज्वा द्रव्यं होता हुतस्तथा ।।

त्वदर्थं हूयते देव त्वमेव शरणं सखा ।। १४ ।।

कालः करालरूपस्त्वं त्वं वार्क्कः शीतदीधितिः ।।

त्वमग्निर्वरुणश्चैव त्वं च कालक्षयंकरः ।। १५ ।।

गुणत्रयं त्वमेवेह गुणहीनस्त्वमेव हि ।।

गुणानामालयस्त्वं च गोप्ता सर्वेषु जंतुषु ।। १६ ।।

स्त्रीपुंसोश्च द्विधा त्वं च पशुपक्ष्यादिमानवैः ।।

चतुर्विधं कुलं त्वं हि चतुराशीतिलक्षणः ।। १७ ।।

दिनांतश्चैव पक्षांतो मासांतो हायनं युगम् ।।

कल्पांतश्च महांतश्च कालांतस्त्वं च वै हरे ।। १८ ।।

एवंविधैर्महादिव्यैः स्तूयमानः सुरैर्नृप ।।

संतुष्टः प्राह सर्वेषां देवानां पुरतः प्रभुः ।। १९ ।।

।। श्रीभगवानुवाच ।।

किमर्थमिह संप्राप्ताः सर्वे देवगणा भुवि ।।

किमेतत्कारणं देवाः कि नु दैत्यप्रपीडिताः ।। 3.2.15.२० ।।

।। देवा ऊचुः ।। ।।

न दैत्यस्य भयं जातं यज्ञ कर्मोत्सुका वयम् ।।

त्वद्दर्शनपराः सर्वे पश्यामो वै दिशो दश ।। २१ ।।

त्वन्मायामोहिताः सर्वे व्यग्रचित्ता भयातुराः ।।

योगारूढस्वरूपं च दृष्टं तेऽस्माभिरुत्तमम्।। २२ ।।

वम्री च नोदितास्माभिर्जागराय तवेश्वर ।।

ततश्चापूर्वमभवच्छिरश्छिन्नं बभूव ते ।। २३ ।।

सूर्याश्वशीर्षमानीय विश्व कर्मातिचातुरः ।।

समधत्त शिरो विष्णो हयग्रीवोऽस्यतः प्रभो ।। २४ ।।

।। विष्णुरुवाच ।। ।।

तुष्टोऽहं नाकिनः सर्वे ददाम्नि वरमीप्सितम् ।।

हयग्रीवोऽस्म्यहं जातो देवदेवो जगत्पतिः ।। २५ ।।

न रौद्रं न विरूपं च सुरैरपि च सेवितम् ।।

जातोऽहं वरदो देवा हयाननेति तोषितः ।। २६ ।। ।।

।। व्यास उवाच ।। ।।

कृते सत्रे ततो वेधा धीमान्सन्तुष्टचेतसा ।।

यज्ञभागं ततो दत्त्वा वम्रीभ्यो विश्वकर्मणे ।। २७ ।।

यज्ञांते च सुरश्रेष्ठं नमस्कृत्य दिवं ययौ ।।

एतच्च कारणं विद्धि हयाननो यतो हरिः ।। २८ ।।

।। युधिष्ठिर उवाच ।। ।।

येनाक्रांता मही सर्वा क्रमेणैकेन तत्त्वतः ।।

विवरे विवरे रोम्णां वर्तंते च पृथक्पृथक् ।।२९।।

ब्रह्मांडानि सहस्राणि दृश्यंते च महाद्युते ।।

न वेत्ति वेदो यत्पारं शीर्षघातो हि वै कथम् ।। 3.2.15.३० ।। ।।

।। व्यास उवाच ।। ।।

शृणु त्वं पांडवश्रेष्ठ कथां पौराणिकीं शुभाम् ।।

ईश्वरस्य चरित्रं हि नैव वेत्ति चराचरे ।।३१।।

एकदा ब्रह्मसभायां गता देवाः सवासवाः।।

भूर्लोकाद्याश्च सर्वे हि स्थावराणि चराणि च।।३२।।

देवा ब्रह्मर्षयः सर्वे नमस्कर्तुं पितामहम् ।।

विष्णुरप्यागतस्तत्र सभायां मंत्रकारणात् ।।३३।।

ब्रह्मा चापि विगर्विष्ठ उवाचेदं वचस्तदा ।।

भोभो देवाः शृणुध्वं कस्त्रयाणां कारणं महत् ।।३४।।

सत्यं ब्रुवंतु वै देवा ब्रह्मेशविष्णुमध्यतः ।।

तां वाचं च समाकर्ण्य देवा विस्मयमागताः।।३५।।

ऊचुश्चैव ततो देवा न जानीमो वयं सुराः ।।

ब्रह्मपत्नी तदोवाच विष्णुं प्रति सुरेश्वरम् ।।

त्रयाणामपि देवानां महांतं च वदस्व मे ।। ३६ ।।

।। विष्णुरुवाच ।। ।।

विष्णुमायाबलेनैव मोहितं भुवनत्रयम् ।।

ततो ब्रह्मोवाच चेदं न त्वं जानासि भो विभोः ।। ३७ ।।

नैव मुह्यति ते मायाबलेन नैवमेव च ।।

गर्वहिंसापरो देवो जगद्धर्ता जगत्प्रभुः ।।३८।।

ज्येष्ठं त्वां न विदुः सर्वे विष्णुमायावृताः खिलाः ।।

ततो ब्रह्मा स रोषेण क्रुद्धः प्रस्फुरिताननः ।। ३९ ।।

उवाच वचनं कोपाद्धे विष्णो शृणु मे वचः ।।

येन वक्त्रेण सभायां वचनं समुदीरितम् ।। 3.2.15.४० ।।

तच्छीर्षं पततादाशु चाल्पकालेन वै पुनः ।।

ततो हाहाकृतं सर्वं सेंद्राः सर्षिपुरोगमाः ।। ४१ ।।

ब्रह्माणं क्षमयामासुर्विष्णुं प्रति सुरोत्तमाः ।।

विष्णुश्च तद्वचः श्रुत्वा सत्यंसत्यं भविष्यति ।। ४२ ।।

ततो विष्णुर्महातेजास्तीर्थस्योत्पादनेन च ।।

तपस्तेपे तु वै तत्र धर्मारण्ये सुरेश्वरः ।।

अश्वशीर्ष मुखं दृष्ट्वा हयग्रीवो जनार्द्दनः ।। ४३ ।।

तपस्तेपे महाभाग विधिना सह भारत ।।

न शक्यं केनचित्कर्तुमात्मनात्मैव तुष्टवान् ।। ४४ ।।

ब्रह्मापि तपसा युक्तस्तेपे वर्षशतत्रयम् ।।

तिष्ठन्नेव पुरो विष्णोर्विष्णुमायाविमोहितः ।। ४५ ।।

यज्ञार्थमवदत्तुष्टो देवदेवो जगत्पतिः ।।

ब्रह्मंस्ते मुक्तताद्यास्ति मम मायाप्यदुःसहा ।। ४६ ।।

ततो लब्धवरो ब्रह्मा हृष्टचित्तो जनार्द्दनः ।।

उवाच मधुरां वाचं सर्वेषां हितकारणात् ।। ४७ ।।

अत्राभवन्महाक्षेत्रं पुण्यं पापप्रणाशनम् ।।

विधिविष्णुमयं चैतद्भवत्वेतन्न संशयः ।। ४८ ।।

तीर्थस्य महिमा राजन्हयशीर्षस्तदा हरिः ।।

शुभाननो हि संजातः पूर्वेणैवा ननेन तु ।। ४९ ।।

कंदर्पकोटिलावण्यो जातः कृष्णस्तदा नृप ।।

ब्रह्मापि तपसा युक्तो दिव्यं वर्षशतत्रयम् ।। 3.2.15.५० ।।

सावित्र्या च कृतं यत्र विष्णुमाया न बाधते ।।

मायया तु कृतं शीर्षं पंचमं शार्दुलस्य वा ।। ५१ ।।

धर्मारण्ये कृतं रम्यं हरेण च्छेदितं पुरा ।।

तस्मै दत्त्वा वरं विष्णुर्जगामादर्शनं ततः ।। ५२ ।।

स्थापयित्वा विधिस्तत्र तीर्थं चैव त्रिलोचनम् ।।

मुक्तेशं नाम देवस्य मोक्षतीर्थमरिंदम ।। ५३ ।।

गतः सोऽपि सुरश्रेष्ठः स्वस्थानं सुरसेवितम् ।।

तत्र प्रेता दिवं यांति तर्पणेन प्रतर्पिताः ।। ५४ ।।

अश्वमेधफलं स्नाने पाने गोदानजं फलम् ।।

पुष्कराद्यानि तीर्थानि गंगाद्याः सरितस्तथा ।। ५५ ।।

स्नानार्थमत्रागच्छंति देवताः पितरस्तथा ।।

कार्त्तिक्यां कृत्तिकायोगे मुक्तेशं पूजयेत्तु यः ।। ५६ ।।

स्नात्वा देवसरे रम्ये नत्वा देवं जनार्द्दनम् ।।

यः करोति नरो भक्त्या सर्वपापैः प्रमुच्यते ।। ५७ ।।

भुक्त्वा भोगा न्यथाकामं विष्णुलोकं स गच्छति ।।

अपुत्रा काकवंध्या च मृतवत्सा मृतप्रजा ।। ५८ ।।

एकांबरेण सुस्नातौ पतिपत्न्यौ यथाविधि ।।

तद्दोषं नाशयेन्नूनं प्रजाप्तिप्रतिबन्धकम् ।। ५९ ।।

मोक्षेश्वरप्रसादेन पुत्रपौत्रादि वर्द्धयेत् ।।

दद्याद्वैकेन चित्तेन फलानि सत्यसंयुता ।। ।। 3.2.15.६० ।।

निधाय वंशपात्रेऽपि नारी दोषात्प्रमुच्यते ।।

प्राप्नुवंति च देवाश्च अग्निष्टोमफलं नृप ।। ६१ ।।

वेधा हरिर्हरश्चैव तप्यंते परमं तपः ।।

धर्मारण्ये त्रिसंध्यं च स्नात्वा देवसरस्यथ ।। ६२ ।।

तत्र मोक्षेश्वरः शंभुः स्थापितो वै ततः सुरैः ।।

तत्र सांगं जपं कृत्वा न भूयः स्तनपो भवेत् ।। ६३ ।।

एवं क्षेत्रं महाराज प्रसिद्धं भुवनत्रये ।।

यस्तत्र कुरुते श्राद्धं पितृणां श्रद्धयान्वितः ।। ६४ ।।

उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ।।

देवसरो महारम्यं नानापुष्पैः समन्वितम् ।।

श्यामं सकलकल्हारैर्विविधैर्जलजंतुभिः ।। ६५ ।।

ब्रह्मविष्णुमहेशाद्यैः सेवितं सुरमानुषैः ।।

सिद्धैर्यक्षैश्च मुनिभिः सेवितं सर्वतः शुभम् ।। ६६ ।।

।। युधिष्ठिर उवाच ।। ।।

कीदृशं तत्सरः ख्यातं तस्मि न्स्थाने द्विजोत्तम ।।

तस्य रूपं प्रकारं च कथयस्व यथातथम् ।। ६७ ।।

।। व्यास उवाच ।। ।।

साधुसाधु महाप्राज्ञ धर्मपुत्र युधिष्ठिर ।।

यस्य संकीर्तनान्नूनं सर्वपापैः प्रमुच्यते ।। ६८ ।।

अतिस्वच्छतरं शीतं गंगोदकसमप्रभम् ।।

पवित्रं मधुरं स्वादु जलं तस्य नृपोत्तम ।। ६९ ।।

महाविशालं गंभीरं देवखातं मनोरमम् ।।

लहर्यादिभिर्गंभीरः फेनावर्तसमाकुलम्।। 3.2.15.७० ।।

झषमंडूककमठैर्मकरैश्च समाकुलम् ।।

शंखशुक्त्यादि भिर्युक्तं राजहंसैः सुशोभितम् ।। ७१ ।।

वटप्लक्षैः समायुक्तमश्वत्थाम्रैश्च वेष्टितम् ।।

चक्रवाकसमोपतं बकसारसटिट्टिभैः ।। ७२ ।।

कमनीय प्रगन्धाच्छच्छत्रपत्रैः सुशोभितम् ।।

सेव्यमानं द्विजैः सर्वैः सारसाद्यैः सुशोभितम् ।। ७३ ।।

सदेवैर्मुनिभिश्चैव विप्रैर्मर्त्यैश्च भूमिप ।।

सेवितं दुःखहं चैव सर्वपापप्रणाशनम् ।। ७४ ।।

अनादिनिधनोदंतं सेवितं सिद्धमंडलैः ।।

स्नानादिभिः सर्वदैव तत्सरो नृपसत्तम ।। ७५ ।।

विधिना कुरुते यस्तु नीलोत्सर्गं च तत्तटे ।।

प्रेता नैव कुले तस्य यावदिंद्राश्चतुर्दश ।। ७६ ।।

कन्यादानं च ये कुर्युर्विधिना तत्र भूपते ।।

ते तिष्ठन्ति ब्रह्मलोके यावदाभूतसंप्लवम् ।। ७७ ।।

महिषीं गृहदासीं च सुरभीं सुतसंयुताम् ।।

हेम विद्यां तथा भूमिं रथांश्च गजवाससी ।। ७८ ।।

ददाति श्रद्धया तत्र सोऽक्षयं स्वर्गमश्नुते ।।

देवखातस्य माहात्म्यं यः पठेच्छिवसन्निधौ ।।

दीर्घमायुस्तथा सौख्यं लभते नात्र संशयः ।। ७९ ।।

यः शृणोति नरो भक्त्या नारी वा त्विदमद्भुतम् ।।

कुले तस्य भवेच्छ्रेयः कल्पांतेऽपि युधिष्ठिर ।। 3.2.15.८० ।।

एतत्सर्वं मयाख्यातं हयग्रीवस्य कारणम् ।।

प्रभास्तस्य तीर्थस्य सर्वपापायनुत्तये ।। ८१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्य माहात्म्ये हयग्रीवस्याख्यानवर्णनंनाम पञ्चदशोऽध्यायः ।। १५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १६

https://sa.wikisource.org/s/ftu



।। युधिष्ठिर उवाच ।। ।।

रक्षसां चैव दैत्यानां यक्षणामथ पक्षिणाम् ।।

भयनाशाय काजेशैर्धर्मारण्यनिवासिनाम् ।। १ ।।

शक्तीः संस्थापिता नूनं नानारूपा ह्यनेकशः ।।

तासां स्थानानि नामा नि यथारूपाणि मे वद ।। २ ।।

।। व्यास उवाच ।। ।।

शृणु पार्थ महाबाहो धर्ममूर्ते नृपोत्तम ।।

स्थाने वै स्थापिता शक्तिः काजेशैश्चैव गोत्रपा ।। ३ ।।

श्रीमाता मदारिकायां शांता नंदापुरे वरे ।।

रक्षार्थं द्विजमुख्यानां चतुर्दिक्षु स्थिताश्च ताः ।। ।। ४ ।।

युक्ताश्चैव सुरैः सर्वैः स्वस्वस्थाने नृपोत्तम ।।

वनमध्ये स्थिताः सर्वा द्विजानां रक्षणाय वै ।। ५ ।।

सा बभूव महाराज सावित्रीति प्रथा शिवा ।।

असुराणां वधार्थाय ज्ञानजा स्थापिता सुरैः ।। ६ ।।

गात्रायी? पक्षिणी देवी छत्रजा द्वारवासिनी ।।

शीहोरी चूटसंज्ञा या पिप्पलाशापुरी तथा ।।

अन्याश्च बहवश्चैव स्थापिता भयरक्षणे ।। ७ ।।

प्रतीच्योदीच्यां याम्यां वै विबुधैः स्थापिता हि सा ।।

नानायुधधरा सा च नानाभरणभूषिता ।। ८ ।।

नानावाहनमारूढा नानारूपधरा च सा ।।

नानाकोपसमायुक्ता नानाभयविना शिनी ।। ९ ।।

स्थाप्या मातर्यथास्थाने यथायोग्या दिशोदिश ।।

गरुडेन समारूढा त्रिशूलवरधारिणी ।। 3.2.16.१० ।।

सिंहारूढा शुद्धरूपा वारुणी पानदर्पिता ।।

खड्गखेटकबाणाढ्यैः करैर्भाति शुभानना ।। ११ ।।

रक्तवस्त्रावृता चैव पीनोन्नतपयोधरा ।।

उद्यदादित्यबिंबाभा मदाघूर्णितलोचना ।। ।। १२ ।।

एवमेषा महादिव्या काजेशैः स्थापिता तदा ।।

रक्षार्थं सर्वजंतूनां सत्यमंदिरवासिनाम् ।। १३ ।।

सा देवी नृपशार्दूल स्तुता संपूजिता सह ।।

ददाति सकलान्कामान्वांछितान्नृपमत्तम ।। १४ ।।

धर्मारण्यात्पश्चिमतः स्थापिता छत्रजा शुभा ।।

तत्रस्था रक्षते विप्रान्कियच्छक्तिसम न्विता ।। १५ ।।

भैरवं रूपमास्थाय राक्षसानां वधाय च ।।

धारयंत्यायुधानीत्थं विप्राणामभयाय च ।। १६ ।।

सरश्चकार तस्याग्रे उत्तमं जल पूरितम् ।।

सरस्यस्मिन्महाभाग कृत्वा स्नानादितर्पणम् ।। १७ ।।

पिंडदानादिकं सर्वमक्षयं चैव जायते ।।

भूमौ क्षिप्तांजलीन्दिव्यान्धूपदीपादिकं सदा ।। १८ ।।

तस्य नो बाधते व्याधिः शत्रूणां नाश एव च ।।

बलिदानादिकं तत्र कुर्याद्भूयः स्वशक्तितः ।। १९ ।।

शत्रवो नाशमायांति धनं धान्यं विवर्धते ।।

आनंदा स्थापिता राजञ्छक्त्यंशा च मनोरमा ।। 3.2.16.२० ।।

रक्षणार्थं द्विजातीनां माहात्म्यं शृणु भूपते ।।

शुक्लांबरधरा दिव्या हेमभूषणभूषिता ।। २१ ।।

सिंहारूढा चतुर्हस्ता शशांककृतशेखरा ।।

मुक्ताहारलतोपेता पीतोन्नतपयोधरा ।। २२ ।।

अक्षमालासिहस्ता च गुण तोमरधारिणी ।।

दिव्यगंधवराधारा दिव्यमालाविभूषिता ।। २३ ।।

सात्त्विकी शक्तिरानंदा स्थिता तस्मिन्पुरे पुरा ।।

पूजयेत्तां च वै राजन्कर्पूरारक्त चंदनैः ।। २४ ।।

भोजयेत्पायसैः शुभ्रैर्मध्वाज्यसितया सह ।।

भवान्याः प्रीतये राजन्कुमार्याः पूजनं तथा ।। २५ ।।

तत्र जप्तं हुतं दत्तं ध्यातं च नृपसत्तम ।।

तत्सर्वं चाक्षयं तत्र जायते नात्र संशयः ।। २६ ।।

त्रिगुणे त्रिगुणा वृद्धिस्तस्मिन्स्थाने नृपोत्तम ।।

साधकस्य भवेन्नूनं धनदारादिसं पदः ।। २७ ।।

न हानिर्न च रोगश्च न शत्रुर्न च दुष्कृतम् ।।

गावस्तस्य विवर्द्धंते धनधान्यादिसंकुलम् ।। २८ ।।

न शाकिन्या भयं तस्य न च राज्ञश्च वैरिणः ।।

न च व्याधिभयं चैव सर्वत्र विजयी भवेत् ।। २९ ।।

विद्याश्चतुर्द्दशास्यैव भासंते पठिता इव ।।

सूर्यवद्द्योतते भूमावानंदमा श्रितो नरः ।। 3.2.16.३० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वार्धे धर्मारण्यमाहात्म्य आनंदास्थापनवर्णनं नाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १७



।। व्यास उवाच ।। ।।

दक्षिणे स्थापिता राजञ्छाँता देवी महाबला ।।

सा विविधाम्बरधरा वनमालाविभूषिता ।। १ ।।

तामसी सा महाराज मधुकैटभनाशिनी ।।

विष्णुना तत्र वै न्यस्ता शिवपत्नी नृपोत्तम ।। २ ।।

सा चैवाष्टभुजा रम्या मेघश्यामा मनोरमा ।।

कृष्णांबरधरा देवी व्याघ्रवाहनसंस्थिता ।। ३ ।।

द्वीपिचर्मपरीधाना दिव्याभरणभूषिता ।।

घंटात्रिशूलाक्षमालाकमंडलुधरा शुभा।। ४।।

अलंकृतभुजा देवी सर्वदेवनमस्कृता ।।

धनं धान्यं सुतान्भोगान्स्वभक्तेभ्यः प्रयच्छति ।। ५ ।।

पूजयेत्कमलै र्दिव्यैः कर्पूरागरुचंदनैः ।।

तदुद्देशेन तत्रैव पूजयेद्द्विजसत्तमान् ।। ६ ।।

कुमारीर्भोजयेदन्नैर्विविधैर्भक्तिभावतः ।।

धूपैर्दीपैः फलैः रम्यैः पूजयेच्च सुरादिभिः ।। ७ ।।

मांसैस्तु विविधैर्दिव्यैरथवा धान्यपिष्टजैः ।।

अन्यैश्च विविधैर्धान्यैः पायसैर्वटकैस्तथा ।। ८ ।।

ओदनैः कृशरापूपैः पूजयेत्सुसमाहितः ।।

स्तुतिपाठेन तत्रैव शक्तिस्तोत्रैर्मनोहरैः ।। ९ ।।

रिपवस्तस्य नश्यंति सर्वत्र विजयी भवेत् ।।

रणे राजकुले द्यूते लभते जयमंगलम् ।। 3.2.17.१० ।।

सौम्या शांता महाराज स्थापिता कुलमातृका ।।

श्रीमाता सा प्रसिद्धा च माहात्म्यं शृणु भूपते ।। ११ ।।

कुलमाता महाशक्तिस्तत्रास्ते नृपसत्तम ।।

कुमारी ब्रह्मपुत्री सा रक्षार्थं विधिना कृता ।। १२ ।।

स्थानमाता च सा देवी श्रीमाता साभिधानतः ।।

त्रिरूपा सा द्विजातीनां निर्मिता रक्षणाय च ।। १३ ।।

कमण्डलुधरा देवी घण्टाभरणभूषिता ।।

अक्षमालायुता राजञ्छुभा सा शुभरूपिणी ।। १४ ।।

कुमारी चादिमाता च स्थानत्राणकरापि च ।।

दैत्यघ्नी कामदा चैव महामोहविनाशिनी ।। १५ ।।

भक्तिगम्या च सा देवी कुमारी ब्रह्मणः सुता ।।

रक्तांबरधरा साधुरक्तचंदनचर्चिता ।। १६ ।।

रक्तमाल्या दशभुजा पंचवक्त्रा सुरेश्वरी ।।

चंद्रावतंसिका माता सुरा सुरनमस्कृता ।। १७ ।।

साक्षात्सरस्वतीरूपा रक्षार्थं विधिना कृता ।।

ॐकारा सा महापुण्या काजेशेन विनिर्मिता ।। १८ ।।

ऋषिभिः सिद्धयक्षा दिसुरपन्नगमानवैः ।।

प्रणम्यांघ्रियुगा तेभ्यो ददाति मनसेप्सितम् ।। १९ ।।

पालयन्ती च संस्थानं द्विजातीनां हिताय वै ।।

यथौरसान्सुतान्माता पालयन्तीह सद्गुणैः ।। 3.2.17.२० ।।

अथ पालयती देवी श्रीमाता कुलदेवता ।।

उपद्रवाणि सर्वाणि नाशयेत्सततं स्तुता ।। २१ ।।

सर्वविघ्नोपशमनी श्रीमाता स्मरणेन हि ।।

विवाहे चोपवीते च सीमंते शुभकर्मणि ।। २२ ।।

सर्वेषु भक्तकार्येषु श्रीमाता पूज्यते सदा ।।

यथा लंबोदरं देवं पूज यित्वा समारभेत् ।। २३ ।।

कार्यं शुभं सर्वमपि श्रीमातरं तथा नृप ।।

यत्किंचिद्भोजनं त्वत्र ब्राह्मणेभ्यः प्रयच्छति ।। २४ ।।

अथवा विनिवेद्यं च क्रियते यत्परस्परम् ।।

अनिवेद्य च तां राजन्कुर्वाणो विघ्नमेष्यति ।। २५ ।।

तस्मात्तस्यै निवेद्याथ ततः कर्म समारभेत् ।।

तद्वरेणाखिलं कर्म अविघ्नेन हि सिद्धति ।।

हेमंते शिशिरे प्राप्ते पूजयेद्धर्मपुत्रिकाम् ।। २६ ।।

हेमपत्रे समालिख्य राजते वाथ कारयेत् ।।

पादुकां चोत्तमां राजञ्छ्रीमातायै निवेदयेत् ।। २७ ।।

स्नात्वा चैव शुचिर्भूत्वा तिलामलकमिश्रितैः।।

वासोभिः सुमनोभिश्च दुकूलैः सुमनोहरैः ।। २८ ।।

लेपयेच्चंदनैः शुभ्रैः कुकुमैः सिंदुरासकैः ।।

कर्पूरागुरुकस्तूरीमिश्रितैः कर्द्दमैस्तथा ।। २९ ।।

कर्णिकारैश्च कह्लारैः करवीरैः सितारुणैः ।।

चंपकैः केतकीभिश्च जपा कुसुमकैस्तथा ।। 3.2.17.३० ।।

यक्षकर्द्दमकैश्चैव विल्वपत्रैरखंडितैः ।।

पालाशजातिपुष्पैश्च वटकैर्माषसंभवैः ।।

पूपभक्तादिदालीभिस्तोषयेच्छाकसंचयैः ।। ।। ३१ ।।

धूपदीपादिपूर्वं तु पूजयेज्जगदंबिकाम् ।।

तद्धियैव कुमारीर्वै विप्रानपि च भोजयेत् ।।

पायसैर्घृतयुक्तैश्च शर्करामिश्रितैर्नृप ।। ३२ ।।

पक्वान्नैर्मोदकाद्यैश्च तर्पयेद्भक्तिभावतः ।।

तर्प्यमाणे द्विजैकस्मिन्सहस्रफलमश्नुते ।।३३।।

दैत्यानां घातकं स्तोत्रं वाचयेच्च पुनः पुनः ।।

एकाग्रमानसो भूत्वा श्रीमातरं स्तुवीय यः ।।३४।।

तस्य तुष्टा वरं दद्यात्स्नापिता पूजिता स्तुता ।।

अनिष्टानि च सर्वाणि नाशयेद्धर्मपुत्रिका ।।३५।।

अपुत्रो लभते पुत्रान्नि र्धनो धनवान्भवेत्।।

राज्यार्थी लभते राज्यं विद्यार्थी लभते च ताम्।।३६।।

श्रियोर्थी लभते लक्ष्मीं भार्यार्थी लभते च ताम् ।।

प्रसादाच्च सरस्वत्या लभते नात्र संशयः ।। ३७ ।।

अन्ते च परमं स्थानं यत्सुरैरपि दुर्लभम् ।।

प्राप्नोति पुरुषो नित्यं सरस्वत्याः प्रसादतः ।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये श्रीमातामाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १८



।। रुद्र उवाच ।। ।।

शृणु स्कन्द महाप्राज्ञ ह्यद्भुतं यत्कृतं मया ।।

धर्मारण्ये महादुष्टो दैत्यः कर्णाटकाभिधः ।। १ ।।

निभृतं हि समागत्य दंपत्योर्विघ्नमाचरत् ।।

तं दृष्ट्वा तद्भयाल्लोकः प्रदुद्राव निरन्तरम् ।। २ ।।

त्यक्त्वा स्थानं गताः सर्वे वणिजो वाडवादयः ।।

मातंगीरूपमास्थाय श्रीमात्रा त्वनया सुत ।। ३ ।।

हतः कर्णाटको नाम राक्षसो द्विजघातकः ।।

तदा सर्वेऽपि वै विप्रा हृष्टास्ते तेन कर्मणा ।। ४ ।।

स्तुवंति पूजयंति स्म वणिजो भक्तितत्पराः ।।

वर्षेवर्षे प्रकुर्वंति श्रीमातापूजनं शुभम् ।। ५ ।।

शुभकार्येषु सर्वेषु प्रथमं पूजयेत्तु ताम् ।।

न स विघ्नं प्रपश्येत तदाप्रभृति पुत्रक ।। ६ ।।

।। युधिष्ठिर उवाच ।। ।।

कोऽसौ दुष्टो महादैत्यः कस्मिन्वंशे समुद्भवः ।।

किं किं तेन कृतं तात सर्वं कथय सुव्रत ।। ७ ।।

।। ।। व्यास उवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि कर्णाटकविचेष्टितम् ।।

देवानां दानवानां यो दुःसहो वीर्यदर्पितः ।। ८ ।।

दुष्टकर्मा दुराचारो महाराष्ट्रो महाभुजः ।।

जित्वा च सकलाँल्लोकांस्त्रैलोक्ये च गतागतः ।। ९ ।।

यत्र देवाश्च ऋषयस्तत्र गत्वा महासुरः ।।

छद्मना वा बलेनैव विघ्नं प्रकुरुते नृप ।।3.2.18.१०।।

न वेदाध्ययनं लोके भवेत्तस्य भयेन च ।।

कुर्वते वाडवा देवा न च संध्याद्युपासनम् ।। ११ ।।

न क्रतुर्वर्तते तत्र न चैव सुरपूजनम् ।।

देशेदेशे च सर्वत्र ग्रामेग्रामे पुरेपुरे ।। १२ ।।

तीर्थेतीर्थे च सर्वत्र विघ्नं प्रकुरुतेऽसुरः ।।

परंतु शक्यते नैव धर्मारण्ये प्रवेशितुम् ।। १३ ।।

भयाच्छक्त्याश्च श्रीमातुर्दानवो विक्लवस्तदा ।।

केनोपायेन तत्रैव गम्यते त्विति चिंतयन् ।। १४ ।।

विघ्नं करिष्ये हि कथं ब्राह्मणानां महात्मनाम् ।।

वेदाध्ययनकर्तॄणां यज्ञे कर्माधितिष्ठताम् ।। १५ ।।

वेदाध्ययनजं शब्दं श्रुत्वा दूरात्स दानवः ।।

विव्यथे स यथा राजन्वज्राहत इव द्विपः ।। १६ ।।

निःश्वासान्मुमुचे रोषाद्दंतैर्दंतांश्च घर्षयन् ।।

दशमानो निजावोष्ठौ पेषयंश्च करावुभौ ।। १७ ।।

उन्मत्तवद्विचरत इतश्चेतश्च मारिष ।।

सन्निपातस्य दोषेण यथा भवति मानवः ।। १८ ।।

तथैव दानवो घोरो धर्मारण्यसमीपगः ।।

भ्रमते दहते चैव दूरादेव भयान्वितः ।। १९ ।।

विवाहकाले विप्राणां रूपं कृत्वा द्विजन्मनः ।।

तत्रागत्य दुराधर्षो नीत्वा दांपत्यमुत्तमम् ।। 3.2.18.२० ।।

उत्पपात महीपृष्ठाद्गगने सोऽसुराधमः ।।

स्वयं च रमते पापो द्वेषाज्जातिस्वभावतः ।। २१ ।।

एवं च बहुशः सोऽथ धर्मारण्याच्च दंपती ।।

गृहीत्वा कुरुते पापं देवानामपि दुःसहम् ।। २२ ।।

विघ्नं करोति दुष्टोऽसौ दंपत्योः सततं भुवि ।।

महाघोरतरं कर्म कुर्वंस्तस्मिन्पुरे वरे ।। २३ ।।

तत्रोद्विग्ना द्विजाः सर्वे पलायंते दिशो दश ।।

गताः सर्वे भूमिदेवा स्त्यक्त्वा स्थानं मनोरमम् ।। २४ ।।

यत्रयत्र महत्तीर्थं तत्रतत्र गता द्विजाः ।।

उद्वसं तत्पुरं जातं तस्मिन्काले नृपोत्तम ।। २५ ।।

न वेदाध्ययनं तत्र न च यज्ञः प्रवर्तते ।।

मनुजास्तत्र तिष्ठंति न कर्णाटभयार्दिताः ।। २६ ।।

द्विजाः सर्वे ततो राजन्वणिजश्च महायशाः ।।

एकत्र मिलिताः सर्वे वक्तुं मंत्रं यथोचितम् ।। २७।।

कर्णाटस्य वधोपायं मंत्रयंति द्विजर्षभाः ।।

विचार्यमाणे तैर्दैवाद्वाग्जाता चाशरीरिणी ।। २८ ।।

आराधयत श्रीमातां सर्वदुःखापहारिणीम् ।।

सर्वदैत्यक्षयकरीं सर्वोपद्रवनाशनीम् ।। २९ ।।

तच्छ्रुत्वा वाडवाः सर्वे हर्षव्याकुललोचनाः ।।

श्रीमातां तु समागत्य गृहीत्वा बलिमुत्तमम् ।। 3.2.18.३० ।।

मधु क्षीरं दधि घृतं शर्करा पञ्चधारया ।।

धूपं दीपं तथा चैव चंदनं कुसुमानि च ।। ३१ ।।

फलानि विविधान्येव गृहीत्वा वाडवा नृप ।।

धान्यं तु विविधं राजन्भक्तापूपा घृताचिताः ।। ३२ ।।

कुल्माषा वटकाश्चैव पायसं घृतमिश्रितम् ।।

सोहालिका दीपिकाश्च सार्द्राश्च वटकास्तथा ।। ३३ ।।

राजिकाभिश्च संलिप्ता नवच्छिद्रसमन्विताः ।।

चंद्रबिंबप्रतीकाशा मण्डकास्तत्र कल्पिताः ।। ३४ ।।

पञ्चामृतेन स्नपनं कृत्वा गन्धोदकेन च ।।

धूपैर्दीपैश्च नैवेद्यैस्तोषयामासुरीश्वरीम् ।। ३५ ।।

नीराजनैः सकर्पूरैः पुष्पैर्दीपैः सुचंदनैः ।।

श्रीमाता तोषिता राजन्सर्वोपद्रवनाशनी ।। ३६ ।।

श्रीमाता च जगन्माता ब्राह्मी सौम्या वरप्रदा ।।

रूपत्रयं समास्थाय पालयेत्सा जगत्त्रयम् ।। ३७ ।।

त्रयीरूपेण धर्मात्मन्रक्षते सत्यमंदिरम्।।

जितेद्रिया जितात्मानो मिलितास्ते द्विजोत्तमाः ।। ३८ ।।

तैः सर्वैरर्चिता माता चंदनाद्येन तोषिता ।।

स्तुतिमारेभिरे तत्र वाङ्मनःकायकर्मभिः ।।

एकचित्तेन भावेन ब्रह्मपुत्र्याः पुरः स्थिताः ।। ३९ ।।

।। विप्रा ऊचुः ।। ।।

नमस्ते ब्रह्मपुत्र्यास्तु नमस्ते ब्रह्मचारिणि ।।

नमस्ते जगतां मातर्नमस्ते सर्वगे सदा ।। 3.2.18.४० ।।

क्षुन्निद्रा त्वं तृषा त्वं च क्रोधतंद्रादयस्तथा ।।

त्वं शांतिस्त्वं रतिश्चैव त्वं जया विजया तथा ।। ४१ ।।

ब्रह्मविष्णुमहेशाद्यैस्त्वं प्रपन्ना सुरेश्वरि ।।

सावित्री श्रीरुमा चैव त्वं च माता व्यवस्थिता ।। ४२ ।।

ब्रह्मविष्णु सुरेशानास्त्वदाधारे व्यवस्थिताः ।।

नमस्तुभ्यं जगन्मातर्धृतिपुष्टिस्वरूपिणि ।। ४३ ।।

रतिः क्रोधा महामाया छाया ज्योतिःस्वरूपिणि ।।

सृष्टि स्थित्यंतकृद्देवि कार्यकारणदा सदा ।।४४।।

धरा तेजस्तथा वायुः सलिलाकाशमेव च ।।

नमस्तेऽस्तु महाविद्ये महाज्ञानमयेऽनघे ।। ४५ ।।

ह्रींकारी देवरूपा त्वं क्लींकारी त्वं महाद्युते ।।

आदिमध्यावसाना त्वं त्राहि चास्मान्महाभयात् ।। ४६ ।।

महापापो हि दुष्टात्मा दैत्योऽयं बाधतेऽधुना ।।

त्राणरूपा त्वमेका च अस्माकं कुलदेवता ।। ४७।।

त्राहित्राहि महादेवि रक्षरक्ष महेश्वरि ।।

हनहन दानवं दुष्टं द्विजातीनां विघ्नकारकम् ।।४८।।

एवं स्तुता तदा देवी महामाया द्विजन्मभिः ।।

कर्णाटस्य वधार्थाय द्विजातीनां हिताय च ।।

प्रत्यक्षा साऽभवत्तत्र वरं ब्रूहीत्युवाच ह ।। ४९ ।। ।।

।। श्रीमातोवाच ।। ।।

केन वै त्रासिता विप्राः केन वोद्वेजिताः पुनः ।।

तस्याहं कुपिता विप्रा नयिष्ये यमसादनम् ।।3.2.18.५०।।

क्षीणायुषं नरं वित्त येन यूयं निपीडिताः ।।

ददामि वो द्विजातिभ्यो यथेष्टं वक्तुमर्हथ ।।५१।।

भक्त्या हि भवतां विप्राः करिष्ये नात्र संशयः ।।५२।।

।। द्विजा ऊचुः।। ।।

कर्णाटाख्यो महारौद्रो दानवो मदगर्वितः ।।

विघ्नं प्रकुरुते नित्यं सत्यमंदिरवासिनाम् ।।५३।।

ब्राह्मणान्सत्यशीलांश्च वेदाध्ययनतत्परान् ।।

द्वेषाद्द्वेष्टि द्वेषणस्तान्नित्यमेव महामते ।।

वेदविद्वेषणो दुष्टो घातयैनं महाद्युते ।। ५४ ।।

।। व्यास उवाच ।। ।।

तथेत्युक्त्वा तु सा देवी प्रहस्य कुलदेवता ।।

वधोपायं विचिंत्यास्य भक्तानां रक्षणाय वै ।। ५५ ।।

ततः कोपपरा जाता श्रीमाता नृपसत्तम ।।

कोपेन भृकुटीं कृत्वा रक्तनेत्रांतलोचनाम् ।। ५६ ।।

कोपेन महताऽऽविष्टा वसंती पावकं यथा ।।

महाज्वाला मुखान्नेत्रान्नासाकर्णाच्च भारत।।५७।।

तत्तेजसा समुद्भूता मातंगी कामरूपिणी ।।

काली करा लवदना दुर्दर्शवदनोज्ज्वला ।।५८।।

रक्तमाल्यांबरधरा मदाघूर्णितलोचना ।।

न्यग्रोधस्य समीपे सा श्रीमाता संश्रिता तदा ।।५९।।

अष्टादशभुजा सा तु शुभा माता सुशोभना ।।

धनुर्बाणधरा देवी खड्गखेटकधारिणी ।। 3.2.18.६० ।।

कुठारं क्षुरिकां बिभ्रत्त्रिशूलं पानपात्रकम् ।।

गदां सर्पं च परिघं पिनाकं चैव पाशकम् ।। ६१ ।।

अक्षमालाधरा राजन्मद्यकुंभानुधारिणी ।।

शक्तिं च मुशलं चोग्रं कर्तरीं खर्परं तथा ।। ६२ ।।

कंटकाढ्यां च बदरीं बिभ्रती तु महानना ।।

तत्राभवन्महायुद्धं तुमुलं लोमहर्षणम् ।। ६३ ।।

मातंग्याः सह कर्णाटदानवेन नृपोत्तम ।। ६४ ।।

।। युधिष्ठिर उवाच ।। ।।

कथं युद्धं समभवत्कथं चैवापवर्तत ।।

जितं केनैव धर्मज्ञ तन्ममाचक्ष्व मारिष ।। ६५ ।।

।। व्यास उवाच ।। ।।

एकदा शृणु राजेंद्र यज्जातं दैत्यसंगरे ।।

तत्सर्वं कथयाम्याशु यथावृत्तं हि तत्पुरा ।। ६६ ।।

प्रणष्टयोषा ये विप्रा वणिजश्चैव भारत ।।

चैत्रमासे तु संप्राप्ते धर्मारण्ये नृपोत्तम ।। ६७ ।।

गौरीमुद्वाहयामासुर्विप्रास्ते संशितव्रताः ।।

स्वस्थानं सुशुभं ज्ञात्वा तीर्थराजं तथोत्तमम् ।। ६८ ।।

विवाहं तत्र कुर्वंतो मिलितास्ते द्विजोत्तमाः ।।

कोटिकन्याकुलं तत्र एकत्रासीन्महोत्सवे ।।

धर्मारण्ये महाप्राज्ञ सत्यं सत्यं वदाम्यहम् ।। ६९ ।।

चतुर्थ्यामपररात्रेऽभ्यंतरतोऽग्निमादधुः ।।

आसनं ब्रह्मणे दत्त्वा अग्निं कृत्वा प्रदक्षिणम् ।। 3.2.18.७० ।।

स्थालीपाकं च कृत्वाथ कृत्वा वेदीः शुभास्तदा ।।

चतुर्हस्ताः सकलशा नागपाश समन्विताः ।। ७१ ।।

वेदमंत्रेण शुभ्रेण मंत्रयंते ततो द्विजाः ।।

चरतां दंपतीनां हि परिवेश्य यथोचितम् ।। ७२ ।।

ब्रह्मणा सहितास्तत्र वाडवा स्ते सुहर्षिताः ।।

कुर्वते वेदनिर्घोषं तारस्वरनिनादितम् ।। ७३ ।।

तेन शब्देन महता कृत्स्नमापूरितं नभः ।।

तं श्रुत्वा दानवो घोरो वेदध्वनिं द्विजे रितम् ।। ७४ ।।

उत्पपातासनात्तूर्णं ससैन्यो गतचेतनः ।।

धावतः सर्वभृत्यास्तं ये चान्ये तानुवाच सः ।। ७५ ।।

श्रूयतां कुत्र शब्दोऽयं वाडवानां समुत्थितः ।।

तस्य तद्वचनं श्रुत्वा दैतेयाः सत्वरं ययुः ।। ७६ ।।

विभ्रांतचेतसः सर्वे इतश्चेतश्च धाविताः ।।

धर्मारण्ये गताः केचित्तत्र दृष्टा द्विजा तयः ।। ७७ ।।

उद्विरंतो हि निगमान्विवाहसमये नृप ।।

सर्वं निवेदयामासुः कर्णाटाय दुरात्मने ।। ७८ ।।

तच्छ्रुत्वा रक्तताम्राक्षो द्विजद्विट् कोपपू रितः ।।

अभ्यधावन्महाभाग यत्र ते दंपती नृप ।। ७९ ।।

खमाश्रित्य तदा दैत्यमायां कुर्वन्स राक्षसः ।।

अहरद्दंपती राजन्सर्वालंकारसंयुतान् ।। ।। 3.2.18.८० ।।

ततस्ते वाडवाः सर्वे संगता भुवनेश्वरीम् ।।

बुंबारवं प्रकुर्वाणास्त्राहित्राहीति चोचिरे ।। ८१ ।।

तच्छ्रुत्वा विश्वजननी मातंगी भुवनेश्वरी ।।

सिंहनादं प्रकुर्वाणा त्रिशूलवरधारिणी ।। ८२ ।।

ततः प्रववृते युद्धं देवीकर्णाटयोस्तथा ।।

ऋषीणां पश्यतां तत्र वणिजां च द्विजन्मनाम् ।। ८३ ।।

पश्यतामभवयुद्धं तुमुलं लोमहर्षणम् ।।

अस्त्रैश्चिच्छेद मातगी मदविह्वलितं रिपुम् ।। ८४ ।।

सोऽपि दैत्यस्ततस्तस्या बाणेनैकेन वक्षसि ।।

असावपि त्रिशूलेन घातितः कश्मलं गतः ।। ८५ ।।

मुष्टिभिश्चैव तां देवीं सोऽपि ताडयतेऽसुरः ।।

सोऽपि देव्या ततः शीघ्रं नागपाशेन यंत्रितः ।। ८६ ।।

ततस्तेनैव दैत्येन गरुडास्त्रं समादधे ।।

तया नारायणास्त्रं तु संदधे शरपातनम्।।८७ ।।

एवमन्योन्यमाकृष्य युध्यमानौ जयेच्छया ।।

ततः परिघमादाय आयसं दैत्यपुंगवः ।। ८८ ।।

मातंगीं प्रति संकुद्धो जघान परवीरहा ।।

देवी क्रुद्धा मुष्टिपातैश्चूर्णयामास दानवम् ।। ८९ ।।

तेन मुष्टिप्रहारेण मूर्च्छितो निपपात ह ।।

ततस्तु सहसोत्थाय शक्तिं धृत्वा करे मुदा ।। 3.2.18.९० ।।

शतघ्नीं पातयामास तस्या उपरि दानवः ।।

शक्तिं चिच्छेद सा देवी मातंगी च शुभानना ।। ९१ ।।

जहासोच्चैस्तु सा सुभ्रूः शतघ्नीं वज्रसन्निभा ।।

एव मन्योन्यशस्त्रौघैरर्दयंतौ परस्परम् ।। ९२ ।।

ततस्त्रिशूलेन हतो हृदये निपपात ह ।।

मूर्छां विहाय दैत्योऽसौ मायां कृत्वा च राक्षसीम् ।। ९३ ।।

पश्यतां तत्र तेषां तु अदृश्योऽभून्महासुरः ।।

पपौ पानं ततो देवी जहासारुणलोचना ।। ९४ ।।

सर्वत्रगं तं सा देवी त्रैलोक्ये सचराचरे ।। ९५ ।।

क्व पास्यस्तीति ब्रूते सा ब्रूहि त्वं सांप्रतं हि मे ।।

कर्णाटक महादुष्ट एहि शीघ्रं हि युध्यताम् ।। ९६ ।।

ततोऽभवन्महायुद्धं दारुणं च भयानकम् ।।

पपौ देवी तु मैरेयं वधार्थं सुमहाबला ।। ९७ ।।

मातंगी च ततः क्रुद्धा वक्त्रे चिक्षेप दानवम् ।।

ततोऽपि दानवो रौद्रो नासारंध्रेण निर्गतः ।।९८।।

युध्यते स पुनर्दैत्यः कर्णाटो मदपूरितः ।।

ततो देवी प्रकुपिता मातंगी मदपूरिता ।। ९९ ।।

दशनैर्मथयित्वा च चर्वयित्वा पुनःपुनः ।।

शवास्थि मे दसा युक्तं मज्जामांसादिपूरितम् ।। 3.2.18.१०० ।।

नखरोमाभिसंयुक्तं प्रक्षिप्य चोदरेऽसुरम् ।।

करेकेण मुखं रुद्धं करेणैकेन नासिकाम् ।। १ ।।

ततो महाबलो दैत्यः कर्णरंध्रेण निर्गतः ।।

ततस्तया महादेव्या नाम चक्रे तदा भुवि ।। २ ।।

कर्णरंध्रप्रसूतोऽयं कर्णाटेति विदुर्बुधाः ।।

पुनर्युद्धार्थमायातो दैत्यो हि बलदर्पितः ।। ३ ।।

गर्जमानोसुरस्तत्र सायुधो युधि संस्थितः ।।

तं दृष्ट्वा दुःसहं दैत्यं विमृश्य च पुनः पुनः ।। ४ ।।

वधोपायं हि मातंगी चिंतयामास भारत ।।

यदा चिंतयते देवी मातंगी मदपूरिता ।। ५ ।।

मायारूपं समास्थाय कर्णाटः कुसुमायुधः ।।

गौरश्चांबुजपत्राक्षं स्तथा षोडशवार्षिकम् ।। ६ ।।

अभ्येत्य देवीं ब्रूते स्म मां त्वं वरय शोभने ।। ७ ।।

।। श्रीमातोवाच ।। ।।

साधु चेदं त्वया प्रोक्तं दैत्यराज सुनिश्चितम्।।

रूपेण सदृशो नान्यो विद्यते भुवनत्रये ।। ८ ।।

प्रतिज्ञा मे कृता पूर्वं श्रुता किमसुरोत्तमं ।।

ममानुजा शुभा श्यामा विवाहे विप्र कांक्षिणी ।। ९ ।।

पित्रा मे स्थापिता दैत्य रक्षार्थं हि द्विजन्मनाम् ।।

केवलं श्यामलांगी सा सर्वलोकहितावहा ।। 3.2.18.११० ।।

न कश्चिद्वरयेत्क न्यामित्युक्त्वा स्थापिता तु सा ।।

कथयाशु तव शुभं श्रुत्वोपायं कथं शुभम् ।। ११ ।।

भगिनी मेऽस्ति दैत्येंद्र श्यामलाह्यपरिग्रहा ।।

तवार्थं रक्षिता शूर तां च पूर्वेण चोद्वह ।।१२।।

स पिता तां महावीर दास्यते वै शुभामिमाम्।।

गच्छ त्वं व्रियतां ह्येव श्यामला कोपसंयुता ।। १३ ।।

ततः कर्णाटकः क्रुद्धो गृहीत्वा शक्तिमूर्जिताम् ।।

अभ्यधावत दुष्टात्मा श्यामलानिधनेच्छया ।।१४।।

आगतं चासुरं दृष्ट्वा श्यामला सुमहामनाः।।

विवाहार्थं परं ज्ञात्वाऽभिप्रायं दुष्टचेतसः ।। १५ ।।

महायुद्धमभूत्तत्र श्यामलाऽसुरवर्ययोः ।।

मासत्रयं ततो राजंश्चाभवत्तुमुलं क्षितौ ।। १६ ।।

माघे कृष्णतृतीयायां धर्मारण्ये महारणे ।।

मध्याह्नसमये भूप कर्णाटाख्यो निपातितः ।। १७ ।।

कार्णाटिः पतितस्तत्र यत्र देव्या निपातितः ।।

तच्छैल शृंगप्रतिमं पपात शिर उत्तमम् ।। १८ ।।

चचाल सकला पृथ्वी साब्धिद्वीपा सपर्वता ।।

ततो विप्राः प्रहृष्टास्ते जय मातरुदैरयन् ।। १९ ।।

जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।।
ततोत्सवं प्रकुर्वन्तो गीतं नृत्यं शुभप्रदम् ।। 3.2.18.१२० ।।
पायसैर्वटकैश्चैव नैवेद्यैर्मोदकैस्तथा ।।
तुष्टवुः शुभवाण्या ते स्थाने मोटेरके वरे ।। २१ ।।
श्रीमती पूजिता सा च सुतसौख्यधनप्रदा ।।
महोत्सवे च संप्राप्ते मातंगीपूजनं हितम् ।। २२ ।।
ये ऽर्चयंति स्थापयित्वा धनपुत्रार्थसिद्धये ।।
सुखं कीर्तिं तथायुष्यं यशः पुण्यं समाप्नुयुः ।। २३ ।।
व्याधयो नाशमायांति चादित्याद्या ग्रहाः शुभाः ।।
भूतवेतालशाकिन्यो जंभाद्याः पीडयन्ति न ।। २४ ।।
न जायते तथा क्वापि प्रेतादीनां प्रपीडनम् ।।
ततो विप्राः प्रहृष्टाश्च स्तुतिं कर्तुं समुद्यताः ।। २५ ।।
श्रीमाता चैव शक्तीश्च मातंगीमस्तुवंस्तदा ।।
श्यामलां च महादेवीं हर्षेण महतायुता ।। २६ ।। ।।
।। विप्रा ऊचुः ।। ।।
मातस्त्वमेवमस्माकं रक्षिका स्थानके भव ।।
दंपतीनां हितार्थाय यथा नोद्विजते द्विजाः ।। २७ ।।
।। मातंग्युवाच ।। ।।
तुष्टाहं वो महाभागाः स्तवेनानेन वो द्विजाः ।।
वरयध्वं वरं यद्वो मनसा समभीप्सितम् ।। २८ ।।
।। ब्राह्मणा ऊचुः ।। ।।
दास्यामहे बलिं देवि यस्ते मनसि वर्तते ।।
अस्माकं चैव दम्पत्यो रक्षार्थं त्वं स्थिरा भव ।। २९ ।।
।। देव्युवाच ।। ।।
स्वस्थाः संतु द्विजाः सर्वे न च पीडा भविष्यति ।।
मयि स्थितायां दुर्धर्षा दैत्या येऽन्ये च राक्षसाः ।।3.2.18.१३०।।
शाकिनीभूतप्रेताश्च जंभाद्याश्च ग्रहास्तथा ।।
शाकिन्यादिग्रहाश्चैव सर्पा व्याघ्रादयस्तथा ।। १३१ ।।

पीडयिष्यंति न क्वापि स्थितायां मयि शासने ।।

महोत्सवं यः कुरुते विवाहे समुपस्थिते ।। ३२ ।।

दंपत्योश्च हितार्थं हि पूजयेन्मां सदा नरः ।।

तस्याहं सकला बाधां नाशयिष्याम्यसंशयम् ।। ३३ ।।

नाधयो व्याधयश्चैव न क्लेशो न च संभ्रमः ।।

प्राप्यते परमं सौख्यं यशः पुण्यं धनं सदा ।।

नाकाले मरणं तस्य वातपित्तादिकं नहि ।। ३४ ।।

।। विप्रा ऊचुः ।। ।।

केन वा विधिना पूजा नैवेद्यं कीदृशं भवेत् ।।

धूपं च कीदृशं मातः कथं पूजां प्रकल्पयेत् ।। ३५ ।।

।। श्रीदेव्युवाच ।। ।।

श्रूयतां मे वचो विप्रा पत्रे चैव हिरण्मये ।।

लिखित्वा पूजयेद्यस्तु चिरायुर्दंपती भवेत् ।। ३६ ।।

अथवा राजते पत्रे कांसपत्रेऽथवा पुनः ।।

अष्टादशभुजा देवी चंदनेन विचर्चिता ।। ३७ ।।

शूर्पं शरैः करे श्वानं पद्मं तु परमं पुनः ।।

कर्त्तरीं कारयेदेकां तूणीरं च धनूंषि च ।। ३८ ।।

चर्म पाशं मुद्गरं च कांसालं तोमरं तथा ।।

शंखं चक्रं गदां शुभ्रां मुशलं परिघं शुभम् ।। ३९ ।।

खट्वांगं बदरीं चैव अंकुशं च मनोरमम् ।।

अष्टादशायुधैरेभिः संयुता भुवनेश्वरी ।। 3.2.18.१४० ।।

लिखेत्सकुंडलां देवीं बाहुनूपुरभूषिताम् ।।

केयूरमुक्तापद्मैश्च मुंडमालाभिरन्विताम् ।। ४१ ।।

मातृकाक्षरपरिवृतामंगुलीय कसंयुताम् ।।

नानाभरणशोभाढ्यां लिखित्वा भुवनेश्वरीम् ।। ४२ ।।

मातंगीमिति विख्यातां प्रतिष्ठार्थं द्विजोत्तमाः ।।

चन्दनेन च हृद्येन पुष्पैश्चैव प्रपूजयेत् ।। ४३ ।।

यक्षकर्दममानीय मातंगीं पूजयेत्सुधीः ।।

घृतेन बोधयेद्दीपं सप्तवर्तियुतं शुभम् ।। ४४ ।।

धूपयेद्गुग्गुलेनाथ साज्येनाति सुगंधिना ।।

नालिकेरेण शुभ्रेण दद्यादर्घं च दंपती ।। ४५ ।।

प्रदक्षिणाः प्रकुर्वीत चतुरः सुमनोरमम् ।।

वस्त्रांशुकं गुंठयित्वा अग्रे कृत्वा च दंपती ।। ४६ ।।

प्रोक्षिणीकृत्य मातंग्याः प्राश्य माध्वीकमुत्तमम् ।।

गीतवादित्रनिर्घोषैर्मातंगीं पूजयेत्सुधीः ।। ४७ ।।

सुवासिनीस्तु तद्रूपा मातंगीसंभवा इति ।।

नृत्यंती दम्पती चाग्रे सर्वोपद्रवशांतये ।। ४८ ।।

नैवेद्यं विविधान्नेन अष्टादशविधं शुभम् ।।

वटकापूपिकाः शुभ्राः क्षीरं शर्करया युतम् ।। ४९ ।।

बल्लाकरं वरं यूपा क्षिप्तकुल्माषकं तथा ।।

सोहालिका भिन्नवटा लाप्सिका पद्मचूर्णकम् ।। 3.2.18.१५० ।।

शैवेया विमलास्तत्र पर्पटाः शालकादयः ।।

पूरणं तस्य मासस्य कुर्याच्छुभ्रं मनोरमम् ।। ५१ ।।

राजमाषाः सूपचिताः कल्पयेत्तत्र दंपती ।।

फेणिका रोपिकास्तत्र कुर्याच्चैव मनोरमाः ।। ५२ ।।

एतान्यष्टादशान्यानि पक्वान्नानि प्रकल्पयेत् ।।

आज्यशर्करायुक्तानि युक्तानि शाकसंचयैः ।। ५३ ।।

रात्रौ जागरणं कार्यं सुवासिनीं च पूजयेत् ।।

मुखावलोकनं चाज्ये कुर्वीयातां च दम्पती ।। ५४ ।।

परस्परं हि कुर्वीत उत्पातपरिशांतये ।।

एवं विधं मयाख्यातं मातंगीपूजनं शुभम् ।। ५५ ।।

न पूजयति यो मूढस्तस्य विप्रं करोति सा ।।

दंपत्योर्मरणं चाथ धननाशं महाभयम् ।। ५६ ।।

क्लेशं रोगं तथा वह्नेः प्रादुर्भावं प्रपश्यति ।।

एतस्मात्कारणाद्विप्रा मातंगीं पूजयेत्सुधीः ।। ५७ ।।

दंपतीनां च सर्वेषां द्विजातीनां च शासने ।।

वणिजां च महादेवी निर्विघ्नं कुरुते सदा ।। ५८ ।।

तथेति चैव तैरुक्ते पुनर्वचनमब्रवीत् ।।

श्रूयतां ब्राह्मणाः सर्वे विवाहादिमहोत्सवम् ।। ५९ ।।

मदीयवचनं श्रुत्वा तथा कुरुत वै विधिम् ।।

विवाहकाले संप्राप्ते दंपत्योः सौख्यहेतवे ।।3.2.18.१६०।।

निर्विघ्नार्थं तु कर्तव्यं निजैश्च सह सेवकैः ।।

अंजनं नयने कुर्यात्सं बंधिनां व सर्वशः ।। ६१ ।।

भ्रूमध्यात्तु प्रकर्त्तव्यमर्द्धचंद्रसमाकृति ।।

बिंदुं तु कारयेद्विप्रास्तस्योपरि मनोहरम् ।। ६२ ।।

एवं कृते तदा विप्राः शांतिर्भवति नान्यथा ।।

पुत्रवृद्धिकरं चैतत्तिलकं चार्द्धबिंबकम् ।।

सर्वविघ्नहरं सर्वदौःस्थ्यव्याधिविनाशनम् ।। ६३ ।।

।। व्यास उवाच ।। ।।

ततः शांताः प्रजाः सर्वा धर्मारण्ये नराधिप ।।

प्रसादाच्चैव मातङ्ग्या देव्या वै सत्यमंदिरे ।।६४।।

ततो हृष्टहृदा विप्राः पुपूजुस्ते विधेः सुताम् ।।

मातंग्याश्च प्रकर्त्तव्यं वर्षेवर्षे च पूजनम् ।। ६५ ।।

माघासिते तृतीयायां भक्ष्यभोज्यादिभिस्तथा ।।

कर्णाटस्य तथोत्पत्तिः पुनर्जाता तु भूतले ।। ६६ ।।

भयाच्चैव हि तत्स्थानं त्यक्त्वा याम्यमगात्ततः ।।

गच्छमानस्तदा दैत्यो यक्ष्मरूपो ह्यभाषत ।।६७।।

श्रूयतां भो द्विजाः सर्वे धर्मारण्यनिवासिनः ।।

वणिजश्च महच्चेदं मद्वाक्यं परिपाल्यताम् ।। ६८ ।।

माघमासे हि मत्प्रीत्या निर्विघ्नार्थं सदा भुवि ।।

त्रिदलेन च धान्येन मूलकेन विशेषतः ।। ६९ ।।

तिल तैलेन वा कुर्यात्पुरुषो नियतव्रतः ।।

एकाशनं हि कुरुते यक्ष्मप्रीत्यै निरंतरम् ।। 3.2.18.१७० ।।

आबालयौवनेनैव वृद्धेनापीह सर्वदा ।।

वर्षेवर्षे प्रकर्त्तव्यं यक्ष्मणो व्रतमुत्तमम् ।। ७१ ।।

यस्मिन्गृहे हि यावच्च पुरुषाकाररूपिणः ।।

तस्याह्वयं प्रकुर्युस्त एकभक्तरताः सदा ।। ७२ ।।

बालस्यार्थे तु जननी कुरुते व्रतमुत्तमम् ।।

पिता वाप्यथवा भ्राता यन्निमित्तं व्रतं चरेत् ।। ७३ ।।

न च तस्य भयं क्वापि न व्याधिर्न च बंधनम् ।।

भर्तुर्निमित्ते स्त्री कुर्यादशक्ते त्वितरेण च ।। ७४ ।।

एवं समादिशन्दैत्यः सत्यमंदिरमुत्सृजन् ।।

गतोऽसौ याम्यदिग्भाग उदधेस्तीर उत्तमे ।। ७५ ।।

विपुलं देह मासाद्य कर्णाटः स नराधिप ।।

स्वनाम्ना चैव तं देशं स्थापयामास चोत्तमम् ।।७६।।

यस्मिंश्च सर्ववस्तूनि धनधान्यानि भूरिशः ।।

कर्णाटदेशं तं राजन्परिवार्य चिरं स्थितः ।।७७।।

धर्मारण्यकथां पुण्यां कथितां नरसत्तम ।।

श्रीमातुश्चैव माहात्म्यं शृण्वंति श्रावयंति ये ।। ७८ ।।

तेषां कुले कदा चित्तु अरिष्टं नैव जायते ।।

अपुत्रो लभते पुत्रान्धनहीनस्तु संपदः ।।

आयुरारोग्यमैश्वर्यं श्रीमातुश्च प्रसादतः ।। १७९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये मातंगीकर्णाटकोपाख्यानवर्णनंनामाष्टादशोऽध्यायः ।। १८ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः १९



।। ।। ।। व्यास उवाच ।। ।।

इन्द्रसरे नरः स्नात्वा दृष्ट्वा चैंद्रेश्वरं शिवम् ।।

सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।। १ ।।

।। युधिष्ठिर उवाच ।। ।।

केन चादौ निर्मितं तत्तीर्थं सर्वोत्तमोत्तमम् ।।

यथावद्वर्णय त्वं मे भगवन्द्विजसत्तम ।। २ ।।

।। व्यास उवाच ।। ।।

इन्द्रेणैव महाराज तपस्तप्तं सुदुष्करम्।।

ग्रामादुत्तरदिग्भागे शतवर्षाणि तत्र वै ।। ३ ।।

शिवोद्देशं महाघोरमेकांगुष्ठेन भारत ।।

उर्द्ध्वबाहुर्महातेजाः सूर्यस्याभिमुखोऽभवत् ।। ।। ४ ।।

वृत्रस्य वधतो ज्ञातं यत्पापं तस्य नुत्तये ।।

एकाग्रः प्रयतो भूत्वा शिवस्याराधने रतः ।। ५ ।।

तपसा च तदा शंभुस्तोषितः शशिशे खरः ।।

तत्राजगाम जटिलो भस्मांगो वृषभध्वजः ।। ६ ।।

खट्वांगी पंचवक्त्रश्च दशबाहुस्त्रिलोचनः ।।

गंगाधरो वृषारूढो भूतप्रेतादिवेष्टितः ।। ७ ।।

सुप्रसन्नः सुरश्रेष्ठः कृपालुर्वरदायकः ।।

तदा हृष्टमना देवो देवेन्द्रमिदमूचिवान् ।। ८ ।।

।। हर उवाच ।। ।।

यत्त्वं याचयसे देव तदहं प्रद दामि ते ।। ९ ।।

।। इन्द्र उवाच ।। ।।

यदि तुष्टोसि देवेश कृपासिंधो महेश्वर ।।

ब्रह्महत्या हि मां देव उद्वेजयति नित्यशः ।। १० ।।

वृत्रासुरस्य हनने जातं पापं सुरोत्तम ।।
तत्पापं नाशय विभो मम दुःखप्रदं सदा ।। ११ ।।
।। हर उवाच ।। ।।
धर्मारण्ये सुरपते ब्रह्महत्या न पीडयेत् ।।
हत्या गवां द्विजातीनां बालस्य योषितामपि ।। १२ ।।
वचनान्मम देवेंद्र ब्रह्मणः केशवस्य च ।।
यमस्य वचनाज्जिष्णो हत्या नैवात्र तिष्ठति ।।
प्रविश्य त्वं महाराज अतोत्र स्नानमाचर ।। १३ ।।
।। इन्द्र उवाच ।। ।।
यदि त्वं मम तुष्टोऽसि कृपासिंधो महेश्वर ।।
मन्नाम्ना च महादेव स्थापितो भव शंकर ।। १४ ।।
तथेत्युक्त्वा महादेवः सुप्रसन्नो हरस्तदा ।।
दर्शयामास तत्रैव लिंगं पापप्रणाशनम् ।। १५ ।।
कूर्मपृष्ठात्समुत्पाद्य आत्मयोगेन शंभुना ।।
स्थितस्तत्रैव श्रीकण्ठः कालत्रयविदो विदुः ।। १६ ।।
वृत्रहत्यासमुत्त्रस्तदेवराजस्य सन्निधौ ।।
इन्द्रेश्वरस्तदा तत्र धर्मा रण्ये स्थितो नृप ।। १७ ।।
सर्वपापविशुद्ध्यर्थं लोकानां हितकाम्यया ।।
इन्द्रेश्वरं तु राजेंद्र पुष्पधूपादिकैः सदा ।। १८ ।।
पूजयेच्च नरो भक्त्या सर्वपापैः प्रमुच्यते ।।
अष्टम्यां च चतुर्दश्यां माघमासे विशेषतः ।। १९ ।।
सर्वपापविशुद्ध्यर्थं शिवलोके महीयते ।।
नीलोत्सर्गं तु यो मर्त्यः करोति च तदग्रतः ।। २० ।।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ।।
सांगरुद्रजपं यस्तु चतुर्द्दश्यां करोति वै ।। २१ ।।
सर्वपाविशुद्धात्मा लभते परमं पदम् ।। २२ ।।
सौवर्णनयनं कृत्वा मध्ये रत्नसमन्वितम् ।।
यो ददाति द्विजातिभ्य इन्द्रतीर्थे तथोत्तमे ।। २३ ।।

अन्धता न भवे त्तस्य जन्मानि षष्टिसंख्यया ।।

निर्मलत्वं सदा तेषां नयनेषु प्रजायते ।।

महारोगास्तथा चान्ये स्नात्वा यांति तदग्रतः ।। २४ ।।

पूजिते चैकचित्ते न सर्वरोगात्प्रमुच्यते ।।

स्नात्वा कुण्डे नरो यस्तु संतर्पयति यः पितॄन् ।। २५ ।।

तस्य तृप्ताः सदा भूप पितरश्च पितामहाः ।।

ये वै ग्रस्ता महारोगैः कुष्ठाद्यैश्चैव देहिनः ।। २६ ।।

स्नानमात्रेण संशुद्धा दिव्यदेहा भवंति ते ।।

ज्वरादिकष्टमापन्ना नराः स्वात्महिताय वै ।। २७।।

स्नान मात्रेण संशुद्धा दिव्यदेहा भवंति ते ।।

स्नात्वा च पूजयेद्देवं मुच्यते ज्वरबन्धनात् ।। २८ ।।

एकाहिकं द्व्याहिकं च चातुर्थं वा तृतीयकम् ।।

विषमज्वरपीडा च मासपक्षादिकं ज्वरम् ।। २९ ।।

इन्द्रेश्वरप्रसादाच्च नश्यते नात्र संशयः ।।

विज्वरो जायते नूनं सत्यंसत्यं च भूपते ।। ३० ।।

वन्ध्या च दुर्भगा नारी काकवन्ध्या मृतप्रजा ।।

मृतवत्सा महादुष्टा स्नात्वा कुण्डे शिवाग्रतः ।।

पूजयेदेकचित्तेन स्नानमात्रेण शुद्ध्यति ।। ३१ ।।

एवंविधाश्च बहुशो वरान्दत्त्वा पिनाकधृक् ।।

गतोऽसौ स्वपुरं पार्थ सेव्यमानः सुरासुरैः ।। ३२ ।।

ततः शक्रो महातेजा गतो वै स्वपुरं प्रति ।।

जयंतेनापि तत्रैव स्थापितं लिंगमुत्तमम् ।। ३३ ।।

जयंतस्य हरस्तुष्टस्तस्मिल्लिंगे स्तुतः सदा ।।

त्रिकालं पुत्रसंयुक्तः पूजनार्थं सुरेश्वरः ।। ३४ ।।

आयाति च महाबाहो त्यक्त्वा स्थानं स्वकं हि वै ।।

एतत्सर्वं समाख्यातं सर्वसौख्यप्रदायकम् ।। ३५ ।।

इन्द्रेश्वरं तु यत्पुण्यं जयंतेशस्य पूज नात् ।।

तदेवाप्नोति राजेन्द्र सत्यंसत्यं न संशयः ।। ३६ ।।

स्नात्वा कुण्डे महाराज संपूज्यैकाग्रमानसः ।।

सर्वपापविशुद्धात्मा इन्द्रलोके महीयते ।। ३७ ।।

यः शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ।।

सर्वान्कामानवाप्नोति जयंतेशप्रमादतः ।। ३८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये इन्द्रेश्वरजयंतेश्वरमहिमवर्णनोनामैकोनविंशोऽध्यायः ।। १९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २०



।। व्यास उवाच ।। ।।

अतः परं प्रवक्ष्यामि शिवतीर्थमनुत्तमम् ।।

यत्रासौ शंकरो देवः पुनर्जन्मधरोऽभवत् ।। १ ।।

कीलितो देवदेवेशः शंकरश्च त्रिलोचनः ।।

गिरिजया महाभाग पातितो भूमिमंडले ।। २ ।।

छलितो मुह्यमानस्तु दिवारात्रिं न वेत्ति च ।।

पुंस्त्रीनपुंसकाश्चैव जडीभूतस्त्रिलोचनः ।। ३ ।।

कल्पांतमिव संजातं तदा तस्मिंश्च कीलिते ।।

पार्वत्या सहसा तस्य कृत कीलनकं तदा ।। ४ ।।

।। युधिष्ठिर उवाच ।। ।।

एतदाश्चर्यमतुलं वचनं यत्त्वयोदितम् ।।

यो गुरुः सर्वदेवानां योगिनां चैव सर्वदा ।। ५ ।।

पार्वत्या कीलितः कस्मा न्नष्टवृत्तिः शिवः कथम् ।।

कारणं कथ्यतां तत्र परं कौतूहलं हि मे ।। ६ ।।

।। व्यास उवाच ।। ।।

मन्त्रौघा विविधा राजञ्छंकरेण प्रकाशिताः ।।

पार्वत्यग्रे महाराज अथर्वणोपवेदजाः ।। ७ ।।

शाकिनी डाकिनी चैव काकिनी हाकिनी तथा ।।

एकिनी लाकिनी ह्येताः षट्भेदास्तत्र कीर्ति ताः ।। ७ ।।

बीजान्युद्धृत्य वै ताभ्यो माला चैकवृता कृता ।।

शंभुना कथिता चैव पार्वत्यग्रे नृपोत्तम ।। ९ ।।

तैश्चैव अष्टा भवति मंत्रोद्धारः कृतस्तु सा ।।

साधयेत्सा महादुष्टा शाकिनी प्रमदानघे ।। १० ।।

।। श्रीपार्वत्युवाच ।। ।।

प्रकाशितास्त्वया नाथ भेदा ह्येते षडेव हि ।।

षड्विधाः शक्तयो नाथ अगम्यायोगमालिनीः ।।

षड्विधोक्तं त्वयैकेन कूटात्कृतं वदस्व माम् ।। ११ ।।

।। श्रीमहादेव उवाच ।। ।।

अप्रकाशो महादेवि देवासुरैस्तु मानवैः ।। १२ ।।

।। पार्वत्युवाच ।। ।।

नमस्ते सर्वरूपाय नमस्ते वृषभध्वज ।।

जटिलेश नमस्तुभ्यं नीलकण्ठ नमोस्तुते ।। ।। १३ ।।

कृपासिंधो नमस्तुभ्यं नमस्ते कालरूपिणे ।।

एतैश्च बहुभिर्वाक्यैः कोमलैः करुणानिधिम् ।। १४ ।।

तोषयित्वाद्रितनया दण्डवत्प्रणिपत्य च ।।

जग्राह पादयुगलं तां प्रोवाच दयापरः ।। १५ ।।

किमर्थं स्तूयसे भद्रे याच्यतां मनसीप्सितम् ।। १६ ।।

।। पार्वत्युवाच ।। ।।

समाहारं च सध्यानं कथयस्व सविस्तरम् ।।

असंदेहमशेषं च यद्यहं वल्लभा तव ।। १७ ।।

।। श्रीरुद्र उवाच ।। ।।

न प्रकाश्यं त्वया देवि समाहारोद्भवं फलम् ।।

सर्वं तत्त्वमहं वक्ष्ये मंत्रकूटाद्यमेव हि ।। १७ ।।

मायाबीजं तु सर्वेषां कूटानां हि वरानने ।।

सर्वेषां मध्यमो वर्णो बिंदुना दादिशोभितः ।। १९ ।।

वह्निबीजं सवातं च कूर्मबीजसमन्वितम् ।।

आदित्यप्रभवं बीजं शक्तिबीजोद्भवं सदा ।। २० ।।

एतत्कूटं चाद्यबीजं द्वितीयं च विभोर्मतम् ।।

तृतीयं चाग्निबीजं तु संयुक्तं बिंदुनेंदुना ।। २१ ।।

चतुर्थं युक्तं शेषेण ब्रह्मबीजमृषिस्तथा ।।

पंचमं कालबीजं च षष्ठं पार्थिव बीजकम् ।। २२ ।।

सप्तमे चाष्टमे बाह्यं नृसिंहेन समन्वितम् ।।

नवमे द्वितीयमेकं च दशमे चाष्टकूटकम् ।। २३ ।।
विपरीतं तयोर्बीजं रुद्राक्षे वर चारिणि ।।
चतुर्दशे चतुर्थ्यर्थं पृथ्वीबीजेन संयुतम् ।। २४ ।।
कूटाः शेषाक्षराः केचिद्रक्षिता मेनकात्मजे ।।
सा पपात यदोर्व्यां हि शिवपत्नी तदा नृप ।। २५ ।।
रामेणाश्वासिता तत्र प्रहसंस्त्रिपुरांतकः ।।
भद्रे यस्मात्त्वया पन्नं जंवशक्तिर्भविष्यति ।। २६ ।।
मारणे मोहने वश्ये आकर्षणे च क्षोभणे ।।
यंयं कामयते नूनं ततत्सिद्धिर्भविष्यति ।। २७ ।।
इति श्रुत्वा तदा देवी दुष्टचित्ता शुचिस्मिता ।।
कूटशेषास्ततो वीराः प्रोक्तास्तस्यै तु शंभु ना ।।२८।।
उवाच च कृपासिंधुः साधयस्व यथाविधि।।
कैलासात्तु हरस्तत्र धर्मारण्यं गतो भृशम् ।।२९।।
ज्ञात्वा देवी ययौ तत्र यत्रासौ वृषभध्वजः ।।
तत्क्षणात्पतितो भूमौ धर्मारण्ये नृपोत्तम ।।३०।।
जटा चंद्रोरगाः शूलं वृषभाद्यायुधानि३ ।।
मुंडमाला च कौपीनं कपालं ब्रह्मणस्तु वै ।।३१।।
गता गणाश्च सर्वत्र भूतप्रेता दिशो दश ।।
विसंज्ञं च स्वमात्मानं ज्ञात्वा देवो महेश्वरः ।। ३२ ।।
स्वेदजास्तु समुत्पन्ना गणाः कूटादयस्तथा ।।
पंचकूटान्समुत्पाद्य तस्मात्तदाधमूलिने ।। ३३ ।।
साधकास्ते महाराज जपहोमपरायणाः ।।
प्रेतासनास्तु ते सर्वे कालकूटोपरि स्थिताः ।। ३४ ।।
कथयंति स्वमात्मानं येन मोक्षः पिनाकिनः ।।
ततः कष्टसमाविष्टा गौरी वह्निभयातुरा ।। ३५।।
सभाजितः शिवस्तैश्च गौरी ह्रीणा त्वधोमुखी ।।
तपस्तेपे च तत्रस्था शंकरादेशकारिणी ।। ३६ ।।
पंचाग्निसेवनं कृत्वा धूम्रपानमधोमुखी ।।

कूटाक्षरैः स्तुतस्तैस्तु तोषितो वृषभध्वजः ।। ३७ ।।

धराक्षेत्रमिदं राजन्पापघ्नं सर्वकामदम् ।।

देवमज्जनकं शुभ्रं स्थानकेऽस्मिन्विराजते ।। ३८ ।।

आश्विने कृष्णपक्षे च चतुर्दश्या दिने नृप ।।

तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते ।। ३९ ।।

पूजयित्वा च देवेशमुपोष्य च विधानतः ।।

शाकिनी डाकिनी चैव वेतालाः पितरो ग्रहाः ।। ४० ।।

ग्रहा धिष्ण्या न पीड्यंते सत्यंसत्यं वरानने ।।

सांगं रुद्रजपं तत्र कृत्वा पापैः प्रमुच्यते ।। ४१ ।।

नश्यंति त्रिविधा रोगाः सत्यंसत्यं च भूपते ।।

एतत्सर्वं मया ख्यातं देवमज्जनकं शृणु ।। ४२ ।।

अश्वमेधसहस्रैस्तु कृतैस्तु भूरिदक्षिणैः ।।

तत्फलं समवाप्नोति श्रोता श्रावयिता नरः।। ४३ ।।

अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् ।।

आयुरारोग्यमैश्वर्यं लभते नात्र संशयः ।। ४४ ।।

मनोवाक्कायजनितं पातकं त्रिविधं च यत् ।।

तत्सर्वं नाशमायाति स्मरणात्कीर्तनान्नृप ।। ४५ ।।

धन्यं यशस्यमायुष्यं सुखसंतानदायकम् ।।

माहात्म्यं शृणुयाद्वत्स सर्वसौख्यान्वितो भवेत् ।।४६।।

सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम्।।

सर्वयज्ञैश्च यत्पुण्यं जायते श्रवणान्नृप ।। ४७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां तृतीये ब्रह्मखण्ड पूर्वभागे धर्माण्यमाहात्म्ये धराक्षेत्रवर्णनं नाम विंशोऽध्यायः ।। २० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २१



।। व्यास उवाच ।। ।।

तया चोत्पादिता राजञ्छरीरा त्कुलदेवताः।। १ ।।

भट्टारिकी १तथा छत्रा २ ओविका ३ ज्ञानजा तथा ४ ।। १ ।।

भद्रकाली च ५ माहेशी ६ सिंहोरी ७ धनमर्द्दनी ८

गात्रा ९ शांता १० शेषदेवी ११ वाराही १२ भद्रयोगिनी १३ ।। २ ।।

योगेश्वरी १४ मोहलज्जा १५ कुलेशी १६ शकुलाचिता १७

तारणी १८ वन कानंदा १९ चामुंडा २० च सुरेश्वरी २१ ।। ३ ।।

दारभट्टारिकेत्या २२ द्या प्रत्येका शतधा पुनः ।।

उत्पन्नाः शक्तयस्तस्मिन्नानारूपान्विताः शुभाः ।।

अतः परं प्रवक्ष्यामि प्रवरण्यथ देवताः ।। ४ ।।

औपमन्यवसगोत्रप्रवर३ गोत्रदेव्यागात्रावसिष्ठ १ भरद्वाज २ इंद्रप्रमदक व्यासंगो? त्रशगोत्रदेव्याज्ञानजा २ प्रवर ३ काश्यपः अवत्सारः २ रैभ्यः ३ मांडव्यसगोत्र ३ गोत्रजा दारभदारिका ३ प्रवर ५ भार्गवच्यव ना अधिअवी जमदग्निः ५ कुशिकसगोत्रऽजातारणी ६ महाबलाप्रवर ३ विश्वामित्रदेवराजउद्दालक ६ शौनकसगोत्र ७ गोत्रदेवी ७ शांता प्रवर ३ भार्गवाणैनहोत्रगार्त्समद ३ कृष्णात्रेयसगोत्रवीगोत्रदेव्याभद्रयोगिनी ८ प्रवर ३ आत्रेयअर्चनानसश्यावाश्व ३ गार्ग्यायणसगोत्र गोत्रजा शांता प्रवर ५ भार्गवच्यवनआप्नवान्अवीजमदग्निः १० गार्गायणगोत्रगोत्रजाज्ञानजा प्रवर ५ काश्यपअवत्सारशांडिलअसितदेवलगांगेयस गोत्रदेवा शांता द्वारवासिनी प्रवर ३ गार्ग्यगार्गि शंख लिखित १२ पैंग्यसगोत्रजाज्ञानजा शेषलउध प्रवर आंगिरसआंबरीषयौवनाश्व १३ वत्ससगोत्रं गोत्रजाज्ञानजाप्रवर ५ भार्गवच्यावनआप्नवान और्वपुरोधसः १४ वात्ससगोत्रगोत्रजाज्ञानजाप्रवर ५ भार्गवच्यावन आप्नवान् और्वपुरोधसः १५ वात्स्यसगोत्रस्य गोत्रजा शीहरीप्रवर ५ भार्गवच्यावन आप्नुवान् और्वपुरोधसः १६ श्यामायनसगोत्रस्य गोत्रजा शीहरी प्रवर भार्गवच्यावनआप्नुवान् अवि जमदग्निः १७ धारणसगोत्रस्य गोत्रजा छत्रजा प्रवर ३ अगस्त्यदार्वच्युतदध्य वाहन १८ काश्यपगोत्रस्य गोत्रजा चामुण्डा प्रवर ३ काश्यपस्यावत्सार नैध्रुव १९ भरद्वाजगोत्रस्य गोत्रजा पक्षिणी प्रवर ३ आंगिरसबार्हस्पत्यभारद्वाज २२ मांडव्यसगोत्रस्य वत्ससवात्स्यसवात्स्यायनस ४

सामान्यलौगाक्षसगोत्रस्य गोत्रजा भद्रयोगिनी प्रवर ३ काश्यपवसिष्ठ अवत्सार २० कौशिकसगोत्रस्य गोत्रजा पक्षिणी प्रवर ३ विश्वामित्र अथर्व भारद्वाज २१ सामान्यप्रवर १ पैमग्यसभरद्वाज २ समानप्रवरा २ लौगाक्षसगार्ग्यायनसकाश्यपकश्यप ४ समानप्रवर ३ कौशिककुशिकसाः २ समानप्रवरः ४ औपमन्युलोगाक्षस २ समानप्रवराः ५ ।।

यावतां प्रवरेष्वेको विश्वामित्रोऽनुवर्तते ।।

न तावतां सगोत्रत्वाद्विवाहः स्यात्परस्परम् ।। ।। ५ ।।

त्यजेत्समानप्रवरां सगोत्रां मातुः सपिंडामचिकित्स्यरोगाम् ।।

अजातलोम्नीं च तथान्यपूर्वां सुतेन हीनस्य सुतां सुकृष्णाम् ।। ।। ६ ।।

एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते ।।

तावत्समानगोत्रत्वमृते भृग्वंगिरोगणात् ।। ७ ।।

पंचसु त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।।

भृग्वगिरोगणेष्वेवं शेषेष्वेकोपि वारयेत् ।। ८ ।।

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।।

तस्यामुत्पाद्य चांडालं ब्राह्मण्यादेव हीयते ।। ९ ।।

कात्यायनः ।।

परिणीय सगोत्रा तु समानप्रवरां तथा ।।

त्यागं कृत्वा द्विजस्तस्यास्ततश्चांद्रायणं चरेत् ।। १० ।।

उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ।। ११ ।।

याज्ञवल्क्यः ।।

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।।

पंचमात्सप्तमार्दूर्ध्वं मातृतः पितृत स्तथा ।। १२ ।।

असमानप्रवरैर्विवाह इति गौतमः ।।

यद्येकं प्रवरं भिन्नं मातृगोत्रवरस्य च ।।

तत्रोद्वाहो न कर्तव्यः सा कन्या भगिनी भवेत् ।। १३ ।।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ।। १४ ।।

सदा पौनर्भवा कन्या वर्ज नीया कुलाधमा ।।

वाचा दत्ता मनोदत्ता कृतकौतुकमंगला ।। १५ ।।

उदकस्पर्शिता याच याच पाणिगृहीतका ।।

अग्निं परिगता या च पुनर्भूः प्रसवा च या ।। १६ ।।

इत्येताः काश्यपेनोक्ता दहंति कुलमग्निवत् ।। १७ ।।

अथावटंकाः कथ्यंते गोत्र १ पात्र २ दात्र ३ त्राशयत्र ४ लडकात्र १५ मंडकीयात्र १६ विडलात्र १७ रहिला १८ भादिल १९ वालूआ २० पोकीया २१ वाकीया २२ मकाल्या २३ लाडआ २४ माणवेदा २५ कालीया २६ ताली २७ वेलीया २८ पांवलन्डीया २९ मूडा ३० पीतूला ३१ धिगमघ ३२ भूतपादवादी ३४ होफोया ३५ शेवार्दत ३६ वपार ३७ वथार ३८ साधका ३९ बहुधिया ४० ।। १८ ।।

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।।

समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेत् ।। १९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्य माहात्म्ये श्रीमाताकथित नामगोत्रप्रवरकृतदेव्यवटंककथननामैकविंशोऽध्यायः ।। २१ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २२



।। युधिष्ठिर उवाच ।। ।।

स्थानवासिन्यो योगिन्यः काजेशेन विनिर्मिताः ।।

कस्मिन्स्थाने हि का देव्यः कीदृश्यस्ता वदस्व मे ।। १ ।।

।। व्यास उवाच ।। ।।

सर्वज्ञोसि कुलीनोसि साधु पृष्टं त्वयानघ ।।

कथयिष्याम्यहं सर्वमखिलेन युधिष्ठिर ।। २ ।।

नानाभरणभूषाढ्या नानारत्नोपशोभिताः ।।

नानावसनसंवीता नानायुवसमन्विताः ।। ३ ।।

नानावाहनसंयुक्ता नानास्वरनिनादिनीः ।।

भयनाशाय विप्राणां काजेशेन विनिर्मिताः ।। ४ ।।

प्राच्यां याम्यामुदीच्यां च प्रतीच्यां स्थापिता हि ताः ।।

आग्नेया नैर्ऋते देशे वायव्येशानयोस्तथा ।। ५ ।।

आशापुरी च गात्राई छत्राई ज्ञानजा तथा ।।

पिप्पलांबा तथा शांता सिद्धा भट्टारिका तथा ।। ६ ।।

कदंबा विकटा मीठा सुपर्णा वसुजा तथा ।।

मातंगी च महादेवी वाराही मुकुटेश्वरी ।। ७ ।।

भद्रा चैव महाशक्तिः सिंहारा च महाबला ।।

एताश्चान्याश्च बहवः कथितुं नैव शक्यते ।। ८ ।।

नानारूपधरा देव्यो नानावेषसमाश्रिताः ।।

स्थानादुत्तरदिग्भागे आशापूर्णासमीपतः ।। ९ ।।

पूर्वे तु विद्यते देवी आनंदानंददायिनी ।।

वसंती चोत्तरे देव्यो नानारूपधरा मुदा ।। १० ।।

इष्टान्कामान्ददात्येता जलदानेन तर्पिताः ।।

स्थाने नैर्ऋतिदिग्भागे शांता शांतिप्रदायिनी ।। ११ ।।

सिंहोपरि समासीना चतुर्हस्ता वरप्रदा ।।
भट्टारी च महाशक्तिः पुनस्तत्रैव तिष्ठति ।। १२ ।।
संस्तुता पूजिता भक्त्या भक्तानां भयनाशिनी ।।
स्थानात्तु सप्तमे क्रोशे क्षेमलाभा व्यव स्थिता ।। १३ ।।
सा विलेपमयी पूज्या चिंतिता सिद्धिदायिनी ।।
पूर्वस्यां दिशि लोकैस्तु बलिदानेन तर्पिता ।।
परिवारेण संयुक्ता भुक्तिमुक्ति प्रदायिनी ।। १४ ।।
अचिंत्यरूपचरिता सर्वशत्रुविनाशनी ।।
संध्यायास्त्रिषु कालेषु प्रत्यक्षैव हि दृश्यते ।। १५ ।।
स्थानात्तु सप्तमे क्रोशे दक्षिणा विन्ध्यवासिनी ।।
सायुधा रूपसंपन्ना भक्तानां भयहारिणी ।। १६ ।।
पश्चिमे निंबजा देवी तावद्भूमिसमाश्रिता ।।
महाबला सा दृष्टापि नयनानन्द दायिनी ।। १७ ।।
स्थानादुत्तरदिग्भागे तावद्भूमिसमाश्रिता ।।
शक्तिर्बहुसुवर्णाक्षा पूजिता सासुवर्णदा ।। १८ ।।
स्थानाद्वायव्यकोणे च क्रोशमात्र मिते श्रिता ।।
क्षेत्रधरा महादेवी समये च्छागधारिणी ।। १९ ।।
पुरादुत्तरदिग्भागे क्रोशमात्रे तु कर्णिका ।।
सर्वोपकारनिरता स्थानोपद्रवनाशनी ।। २० ।।
स्थानान्निर्ऋतिदिग्भागे ब्रह्माणीप्रमुखास्तथा ।।
नानारूपधरा देव्यो विद्यंते जलमातरः ।। २१ ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये देवतास्थापनंनाम द्वाविंशोऽध्यायः ।। २२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २३



।। व्यास उवाच।। ।।

अतः परं प्रवक्ष्यामि ब्रह्मणा यत्कृतं पुरा ।।

तत्सर्वं कथयाम्यद्य शृणुष्वैकाग्रमानसः ।। १ ।।

देवानां दानवानां च वैराद्युद्धं बभूव ह ।।

तस्मिन्युद्धे महादुष्टे देवाः संक्लिष्टमानसाः ।। २ ।।

बभूवुस्तत्र सोद्वेगा ब्रह्माणं शरणं ययुः ।। ३ ।।

।। देवा ऊचुः ।। ।।

ब्रह्मन्केन प्रकारेण दैत्यानां वधमेव च ।।

करोम्यद्य उपायं हि कथ्यतां शीघ्रमेव मे ।।४।।

।। ब्रह्मोवाच ।। ।।

मया हि शंकरेणैव विष्णुना हि तथा पुरा ।।

यमस्य तपसा तुष्टैर्धर्मारण्यं विनिर्मितम् ।। ५ ।।

तत्र यद्दीयते दानं यज्ञं वा तप उत्तमम् ।।

तत्सर्वं कोटिगुणितं भवेदिति न संशयः ।। ६ ।।

पापं वा यदि वा पुण्यं सर्वं कोटि गुणं भवेत् ।।

तस्माद्दैत्यैर्न धर्षितं कदाचिदपि भोः सुराः ।। ७ ।।

श्रुत्वा तु ब्रह्मणो वाक्यं देवाः सर्वे सविस्मयाः ।।

ब्रह्माणं त्वग्रतः कृत्वा धर्मार ण्यमुपाययुः ।। ८ ।।

सत्रं तत्र समारभ्य सहस्राब्दमनुत्तमम् ।।

वृत्वाऽऽचार्यं चांगिरसं मार्कण्डेयं तथैव च ।। ९ ।।

अत्रिं च कश्यपं चैव होता कृत्वा महामतिः ।।

जमदग्निं गौतमं च अध्वर्युत्वं न्यवेदयन् ।। १० ।।

भरद्वाजं वसिष्ठं तु प्रत्यध्वर्युत्वमादिशन् ।।

नारदं चैव वाल्मीकिं नोदना याकरोत्तदा ।। ११ ।।

ब्रह्मासने च ब्रह्माणं स्थापयामासुरादरात् ।।
क्रोशचतुष्कमात्रां च वेदिं कृत्वा सुरैस्ततः ।। १२ ।।
द्विजाः सर्वे समाहूता यज्ञस्यार्थे हि जापकाः ।।
ऋग्यजुःसामाथर्वान्वै वेदानुद्गिरयंति ये ।। १३ ।।
गणनाथं शंभुसुतं कार्त्तिकेयं तथैव च ।।
इन्द्रं वज्रधरं चैव जयंतं चन्द्रसूनुकम् ।। १४ ।।
चत्वारो द्वारपालाश्च देवाः शूरा विनिर्मिताः ।।
ततो राक्षोघ्नमंत्रेण हूयते हव्यवाहनः ।। १५ ।।
तिलांश्च यवमिश्रांश्च मध्वाज्येन च मिश्रितान् ।।
जुहुवुस्ते तदा देवा वेदमंत्रैर्नरेश्वर ।। १६ ।।
आघारावाज्यभागौ च हुत्वा चैव ततः परम् ।।
द्राक्षेक्षुपूगनारिंग जंबीरं बीजपूरकम् ।। १७ ।।
उत्तरतो नालिकेरं दाडिमं च यथाक्रमम् ।।
मध्वाज्यं पयसा युक्तं कृशरशर्करायुतम् ।। १८ ।।
तंडुलैः शतपत्रैश्च यज्ञे वाचं नियम्य च ।।
विचिंत्य च महाभागाः कृत्वा यज्ञं सदक्षिणम् ।। १९ ।।
उत्तमं च शुभं स्तोमं कृत्वा हर्षमुपाययुः ।।
अवारितान्नमददन्दीनांधकृपणेष्वपि ।। २० ।।
ब्राह्मणेभ्यो विशेषेण दत्तमन्नं यथेप्सितम् ।।
पायसं शर्करायुक्तं साज्यशाकसमन्वितम् ।। २१ ।।
मंडका वटकाः पूपास्तथा वै वेष्टिकाः शुभाः ।।
सहस्रमोदकाश्चापि फेणिका घुर्घुरादयः ।। २२ ।।
ओदनश्च तथा दाली आढकीसंभवा शुभा ।।
तथा वै मुद्गदाली च पर्पटा वटिका तथा ।। २३ ।।
प्रलेह्यानि विचित्राणि युक्तास्त्र्यूषणसंचयैः ।।
कुल्माषा वेल्लकाश्चैव कोमला वालकाः शुभाः ।। २४ ।।
कर्कटिकाश्चार्द्रयुता मरिचेन समन्विताः ।।
एवंविधानि चान्नानि शाकानि विविधानि च ।। २५ ।।

भोजयित्वा द्विजान्सर्वान्धर्मारण्य निवासिनः ।।

अष्टादशसहस्राणि सपुत्रांश्च तदा नृप ।। २६ ।।

प्रतिदिनं तदा देवा भोजयंति स्म वाडवान् ।।

एवं वर्षसहस्रं वै कृत्वा यज्ञं तदामराः ।। २७ ।।

कृत्वा दैत्यवधं राजन्निर्भयत्वमवाप्नुयुः ।।

स्वर्गं जग्मुस्ते सहसा देवाः सर्वे मरुद्गणाः ।। २८ ।।

तथैवाप्सरसः सर्वा ब्रह्मवि ष्णुमहेश्वराः ।।

कैलासशिखरं रम्यं वैकुंठं विष्णुवल्लभम् ।। २९ ।।

ब्रह्मलोकं महापुण्यं प्राप्य सर्वे दिवौकसः ।।

परं हर्षमुपाजग्मुः प्राप्य नंदनमुत्तम् ।। ३० ।।

स्वेस्वे स्थाने स्थिरीभूत्वा तस्थुः सर्वे हि निर्भयाः ।। ३१ ।।

ततः कालेन महता कृताख्ययुगपर्यये ।।

लोहासुरो मदोन्मत्तो ब्रह्मवेषधरः सदा ।। ३२ ।।

आगत्य सर्वान्विप्रांश्च धर्षयेद्धर्मवित्तमान् ।।

शूद्रांश्च वणिजश्चैव दंडघातेन ताडयेत् ।। ३३ ।।

विध्वंसयेच्च यज्ञादीन्होमद्रव्याणि भक्षयेत् ।।

वेदिका दीर्घिका दृष्ट्वा कश्मलेन प्रदूषयेत् ।। ३४ ।।

मूत्रोत्सर्गपुरीषेण दूषयेत्पुण्यभूमिकाः ।।

गहनेन तथा राजन्स्त्रियो दूषयते हि सः ।। ३५ ।।

ततस्ते वाडवाः सर्वे लोहासुरभयातुराः ।।

प्रनष्टाः सपरीवारा गतास्ते वै दिशो दश ।। ३६ ।।

वणिजस्ते भयोद्विग्ना विप्राननुययुर्नृप ।।

महाभयेन संभीता दूरं गत्वा विमृश्य च।।३७।।

सह शूद्रैर्द्विजैः सर्व एकीभूत्वा गतास्तदा ।।

मुक्तारण्यं पुण्यतमं निर्जनं हि ययुश्च ते ।। ३८ ।।

निवासं कारयामासुर्नातिदूरे नरेश्वर ।।

वजिङ्नाम्ना हि तद्ग्रामं वासयामासुरेव ते ।। ३९ ।।

लोहासुरभयाद्राजन्विप्र नाम्ना विनिर्मितम् ।।

शंभुना वणिजा यस्मात्तस्मात्तन्नामधारणम् ।। ४० ।।

शंभुग्राममिति ख्यातं लोके विख्यातिमागतम् ।।

अथ केचिद्भयान्नष्टा वणिजः प्रथमं तदा ।। ४१ ।।

ते नातिदूरे गत्वा वै मंडलं चक्रुरुत्तमम् ।।

विप्रागमनकांक्षास्ते तत्र वासमकल्पयन् ।। ४२ ।।

मंडलेति च नाम्ना वै ग्रामं कृत्वा न्यवीवसन् ।।

विप्रसार्थपरिभ्रष्टाः केचित्तु वणिजस्तदा ।। ४३ ।।

अन्यमार्गे गता ये वै लोहासुरभयार्दिताः ।।

धर्मारण्यान्नाति दूरे गत्वा चिंतामुपाययुः ।। ४४ ।।

कस्मिन्मार्गे वयं प्राप्ताः कस्मिन्प्राप्ता द्विजातयः ।।

इति चिंतां परं प्राप्ता वासं तत्र त्वकारयन् ।। ४५ ।।

अन्यमार्गे गता यस्मात्तस्मात्तन्नामसंभवम् ।।

ग्रामं निवासयामासुरडालंजमिति क्षितौ ।। ४६ ।।

यस्मिन्ग्रामे निवासी यो यत्संज्ञश्च वणिग्भवेत् ।।

तस्य ग्रामस्य तन्नाम ह्यभवत्पृथिवीपते ।। ४७ ।।

वणिजश्च तथा विप्रा मोहं प्राप्ता भयार्दिताः ।।

तस्मान्मोहेतिसंज्ञास्ते राजन्सर्वे निरब्रुवन् ।। ।। ४८ ।।

एवं प्रनषणं नष्टास्ते गताश्च दिशो दिश ।।

धर्मारण्ये न तिष्ठंति वाडवा वणिजोऽपि वा ।। ४९ ।।

उद्वसं हि तदा जातं धर्मारण्यं च दुर्लभम् ।।

भूषणं सर्वतीर्थानां कृतं लोहासुरेण तत् ।। ५० ।।

नष्टद्विजं नष्टतीर्थं स्थानं कृत्वा हि दानवः ।।

परां मुदमवाप्यैव जगाम स्वालयं ततः ।। ५१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ज्ञातिभेदवर्णनंनाम त्रयोविंशो ऽध्यायः ।। २३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २४

https://sa.wikisource.org/s/fu1
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। व्यास उवाच ।। ।।

एतत्तीर्थस्य माहात्म्यं मया प्रोक्तं तवाग्रतः ।।

अनेकपूर्वजन्मोत्थपातकघ्नं महीपते ।।१।।

स्थानानामुत्तमं स्थानं परं स्वस्त्ययनं महत् ।।

स्कंदस्याग्रे पुरा प्रोक्तं महारुद्रेण धीमता ।। २ ।।

त्वं पार्थ तत्र स्नात्वा हि मोक्ष्यसे सर्वपात कात् ।।

तच्छ्रुत्वा व्यासवाक्यं हि धर्म्मराजो युधिष्ठिरः ।। ३ ।।

धर्मात्मजस्तदा तात धर्मारण्यं समाविशत् ।।

महापातकनाशाय साधुपालनत त्परः ।। ४ ।।

विगाह्य तत्र तीर्थानि देवतायतनानि च ।।

इष्टापूर्तादिकं सर्वं कृतं तेन यथेप्सितम् ।। ५ ।।

ततः पापविनिर्मुक्तः पुनर्गत्वा स्वकं पुरम् ।।

इद्रप्रस्थं महासेन शशास वसुधातलम् ।। ६ ।।

इदं हि स्थानमासाद्य ये शृण्वंति नरोत्तमाः।।

तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः।। ।। ७ ।।

भुक्त्वा भोगान्पार्थिवांश्च परं निर्वाणमाप्नुयुः ।।

श्राद्धकाले च संप्राप्ते ये पठंति द्विजातयः ।। ८ ।।

उद्धृताः पितरस्तैस्तु यावच्चंद्रार्क्कमेदिनि।।

द्वापरे च युगे भूत्वा व्यासेनोक्तं महात्मना ।। ९ ।।

वारिमात्रे धर्मवाप्यां गयाश्राद्धफलं लभेत् ।।

अत्रागतस्य मर्त्यस्य पापं यमपदे स्थितम् ।। ।। १० ।।

कथितं धर्मपुत्रेण लोकानां हितकाम्यया ।।

विना अन्नैर्विना दर्भैर्विना चासनमेव वा ।। ११ ।।

तोयेन नाशमायाति कोटिजन्मकृतं त्व घम् ।।

सहस्रमुरुशृंगीणां धेनूनां कुरुजांगले ।।

दत्त्वा सूर्यग्रहे पुण्यं धर्मवाप्यां च तर्पणाम् ।। १२ ।।

एतद्वः कथितं सर्वं धर्मारण्यस्य चेष्टितम् ।।

यच्छ्रुत्वा ब्रह्महा गोघ्नो मुच्यते सर्वपातकैः ।। १३ ।।

एकविंशतिवारैस्तु गयायां पिंडपातने ।।

तत्फलं समवाप्नोति सकृदस्मिञ्छ्रुते सति ।। १४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यतीर्थमाहात्म्यप्रभावकथनं नाम चतुर्विंशोऽध्यायः ।। ।। २४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २५

https://sa.wikisource.org/s/fu2
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। सूत उवाच ।। ।।

अथान्यत्संप्रवक्ष्यामि तीर्थमाहात्म्यमुत्तमम् ।।

धर्मारण्ये यथाऽऽनीता सत्यलोकात्सरस्वती ।। १ ।।

मार्कंडेयं सुखासीनं महामुनिनिषेवितम् ।।

तरुणादित्यसंकाशं सर्वशास्त्रविशारदम् ।। २ ।।

सर्वतीर्थमयं दिव्यमृषीणां प्रवरं द्विजम् ।।

आसनस्थं समायुक्तं धन्यं पूज्यं दृढव्रतम् ।। ३ ।।

योगात्मानं परं शांतं कमडलुधरं विभुम् ।।

अक्षसूत्रधरं शांतं तथा कल्पां तवासिनम् ।। ४ ।।

अक्षोभ्यं ज्ञानिनं स्वस्थं पितामहसमुद्युतिम् ।।

एवं दृष्ट्वा समाधिस्थं प्रहर्षोत्फुल्ललोचनम् ।। ५ ।।

प्रणम्य स्तुतिभिर्युक्त्या मार्क्कंडं मुनयोऽब्रुवन् ।।

भगवन्नैमिषारण्ये सत्रे द्वादशवार्षिके ।। ६ ।।

त्वयावतारिता ब्रह्मन्नदी या ब्रह्मणः सुता।।

तथा कृतं च तत्रैव गंगा वतरणं क्षितौ ।। ७ ।।

गीयमाने कुलपतेः शौनकस्य मुनेः पुरः ।।

सूतेन मुनिना ख्यातमन्येषामपि शृण्वताम् ।। ८ ।।

तच्छ्रुत्वा महदाख्यानम स्माकं हृदि संस्थितम् ।।

पापघ्नी पुण्यजननी प्राणिनां दर्शनादपि ।। ९ ।।

।। मार्कण्डेय उवाच ।। ।।

धर्मारण्ये मया विप्राः सत्यलोकात्सरस्वती ।।

समानीता सुरेखाद्रौ शरण्या शरणार्थिनाम् ।।3.2.25.१०।।

भाद्रपदे सिते पक्षे द्वादशी पुण्यसंयुता ।।

तत्र द्वारावतीतीर्थे मुनिगंधर्वसेविते ।। ।। ११ ।।

तस्मिन्दिने च तत्तीर्थे पिंडदानादि कारयेत् ।।

तत्फलं समवाप्नोति पितॄणां दत्तमक्षयम् ।। १२ ।।

महदाख्यानमखिलं पापघ्नं पुण्यदं च यत् ।।

पवित्रं यत्पवित्राणां महापातकनाशनम् ।। १३ ।।

सर्वमंगलमांगल्यं पुण्यं सारस्वतं जलम् ।।

ऊर्ध्वं किं दिवि यत्पुण्यं प्रभासांते व्यवस्थितम् ।। १४ ।।

सारस्वतजलं नृणां ब्रह्महत्यां व्यपोहति ।।

सरस्वत्यां नराः स्नात्वा संतर्प्य पितृदेवताः ।।

पश्चात्पिंडप्रदातारो न भवंति स्तनंधयाः ।। १५ ।।

यथा कामदुघा गावो भवन्तीष्टफलप्रदाः ।।

तथा स्वर्गापवर्गैकहैतुभूता सरस्वती ।। १६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये सरस्वतीमाहात्म्यवर्णनंनाम पञ्चविंशोऽध्यायः ।। २५ ।। ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २६

https://sa.wikisource.org/s/fu3



।। व्यास उवाच ।। ।।

मार्कंडेयोद्घाटितं वै स्वर्गद्वारमपावृतम् ।।

तत्र ये देहसंत्यागं कुर्वंति फलकांक्षया ।। १ ।।

लभंते तत्फलं ह्यंते विष्णोः सायुज्यमाप्नुयुः ।।

अतः किं बहुनोक्तेन द्वारवत्यां सदा नरैः ।। २ ।।

देहत्यागः प्रकर्तव्यो विष्णोर्लोकजिगीषया ।।

अनाशके जले वाग्नौ ये च संति नरोत्तमाः ।।

सर्वपापविनिर्मुक्ता यांति विष्णोः पुरीं सदा ।। ३ ।।

अन्योपि व्याधिरहितो गच्छेदनशनं तु यः ।।

सर्वपाप विनिर्मुक्तो याति विष्णोः पुरीं नरः ।। ४ ।।

शतवर्षसहस्राणां वसेदंते दिवि द्विजः ।।

ब्राह्मणेभ्यः परं नास्ति पवित्रं पावनं भुवि ।। ५ ।।

उपवासै स्तथा तुल्यं तपः कर्म्म न विद्यते ।।

नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरु ।। ६ ।।

न धर्मात्परमस्तीह तपो नानशनात्परम् ।।

स्नात्वा यः कुरुते ऽत्रापि श्राद्धं पिंडोदकक्रियाम् ।। ७ ।।

तृप्यंति पितरस्तस्य यावद्ब्रह्मदिवानिशम् ।।

तत्र तीर्थे नरः स्नात्वा केशवं यस्तु पूजयेत् ।।८ ।।

स मुक्तपातकैः सर्वैर्विष्णुलोकमवाप्नुयात् ।।

तीर्थानामुत्तमं तीर्थं यत्र संनिहितो हरिः ।। ९ ।।

हरते सकलं पापं तस्मिंस्तीर्थे स्थितस्य सः ।।

मुक्तिदं मोक्षकामानां धनदं च धनार्थिनाम् ।।

आयुर्दं सुखद चैव सर्वकामफलप्रदम् ।।3.2.26.१०।।

किमन्येनात्र तीर्थेन यत्र देवो जनार्द्दनः ।।

स्वयं वसति नित्यं हि सर्वेषामनुकम्पया ।। ११ ।।

तत्र यद्दीयते किचिद्दानं श्रद्धासमन्वितम् ।।

अक्षयं तद्भवेत्सर्वमिह लोके परत्र च ।। १२ ।।

यज्ञैर्दानैस्तपो भिश्च यत्फलं प्राप्यते बुधैः ।।

तदत्र स्नानमात्रेण शूद्रैरपि सुसेवकैः ।। १३ ।।

तत्र श्राद्धं च यः कुर्यादेकादश्यामुपोषितः ।।

स पितॄनुद्धरे त्सर्वान्नरकेभ्यो न संशयः ।। १४ ।।

अक्षय्यां तृप्तिमाप्नोति परमात्मा जनार्द्दनः ।।

दीयतेऽत्र यदुद्दिश्य तदक्षय्यमुदाहृतम् ।। १५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये द्वारिकामाहात्म्यवर्णनंनाम षड्विंशोऽध्यायः ।। २६ ।।।छ।।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २७

https://sa.wikisource.org/s/frq



।। ।। सूत उवाच ।। ।।

तत्र तस्य समीपस्थं मार्कंडेनोपलक्षितम् ।।

तीर्थं गोवत्ससंज्ञं तु सर्वत्र भुवि संश्रुतम् ।। १ ।।

तत्रावतीर्य गोवत्सस्वरूपेणांबिकापतिः ।।

स्वयंभूलिंगरूपेण संस्थितो जगतां पतिः ।। २ ।।

आसीद्वलाहकोनाम रुद्रभक्तो महाबलः ।।

आखेटकसमायुक्तो नृपः परपुरंजयः ।। ३ ।।

मृगयूथे स्थितं दृष्ट्वा गोवत्सं तत्पदातिना ।।

उक्तो राजा मया दृष्टं कौतुकं नृपसत्तम ।। ४ ।।

गोवत्सो मृगयूथस्य दृष्टो मध्यस्थितो मया ।।

तेषामेवानुरक्तोऽसौ जनन्या रहितस्तथा ।। ५ ।।

द्रष्टुं तु कौतुकं राजा तं पदातिं पुरः स्थितम् ।।

उवाच दर्शयस्वेति गोवत्सं च समाविशत् ।। ६ ।।

गत्वाटवीं तदा राज्ञो दर्शितः स पदातिना ।।

पदातिभिर्मृगानीकं दुद्राव त्रासितं यदा ।। ७ ।।

पीलुगुल्मं प्रति गतं गोवत्सः प्रस्थितस्तदा ।।

राजा तद्धरणाकांक्षो प्राविशद्गुल्ममादरात् ।। ८ ।।

तत्र स्थितं स गोवत्समपश्यन्नृपतिः स्वयम् ।।

यावद्गृह्णाति तं तावल्लिंगं जातं समुज्वलम् ।। ९ ।।

तं दृष्ट्वा विस्मितो राजा किमेतदित्यचिंतयत् ।।

यावच्चिंतयते ह्येवं देहं त्यक्त्वा दिवं गतः ।। 3.2.27.१० ।।

अत्रांतरे गगनतले समंततः श्रूयते सुरजयकारगर्जितम् ।।

पपात पुष्पवृष्टिरंबराद्राजा गतः शिवभुवनं च तत्क्षणात् ।। ११ ।।

तावत्पश्यति तन्नाभ्यं गोवत्सं बालकं स्थितम् ।।

नूनमेष महादेवो वत्सरूपी महेश्वरः ।। १२ ।।

तमानेतुं समुद्युक्तो राजा तमुज्जहार च ।।

तदा तद्देव लिंगं तु नोत्तिष्ठति कथंचन ।।

तदा देवाः सहानेन प्रार्थयामासुरीश्वरम् ।। १३ ।।

।। देवा ऊचुः ।। ।।

भगवन्सर्वदेवेश स्थातव्यं भवता विभो।।

शुक्लेन लिंगरूपेण सर्वलोकहितैषिणा ।। १४ ।।

।। श्रीमहादेव उवाच ।।

स्थास्याम्यहं सदैवात्र लिंगरूपेण देवताः ।।

यस्माद्भाद्रपदे मासि कृष्णपक्षे कुहू दिने ।। १५ ।।

तथा तद्दिवसे तत्र स्नानं कृत्वा विधानतः ।।

लिंगं ये पूजयिष्यंति न तेषां विद्यते भयम् ।। १६ ।।

ऋते च पिंडदानेन पूर्वजाः शाश्वतीः समाः ।।

रौरवे नरके घोरे कुंभीपाके च ये गताः ।। १७ ।।

अनेकनरकस्थाश्च तिर्यग्योनिगताश्च ये ।।

सकृत्पिंडप्रदानेन स्यात्ते षामक्षया गतिः ।। १८ ।।

ततो बलाहको राजा सर्वदेवसमन्वितः ।।

स्थापयामास तल्लिंगं सर्वदेवसमीपतः ।। १९ ।।

चकार बहुदानानि लोकानां हितकाम्यया ।।

यावदर्चयते ह्येवं रुद्रोऽपि स्वयमागतः ।। 3.2.27.२० ।।

।। रुद्र उवाच ।। ।।

अस्यां रात्रौ तु मनुजाः श्रद्धाभक्तिसमन्विताः ।।

येर्चयिष्यंति देवेशं तेषां पुण्यमनंतकम् ।। २१ ।।

जागरं ये करिष्यंति गीतशास्त्रपुरःसरम् ।।

उद्धरिष्यंति ते मर्त्याः कुलमेकोत्तरं शतम् ।। २२।।

तावद्गर्ज्जंति तीर्थानि नैमिषं पुष्करं गया ।।

प्रयागं च प्रभासं च द्वारका मथुराऽर्बुदः ।। २३ ।।

यावन्न दृश्यते लिंगं गोवत्सं परमाद्भुतम्।।

यदा हि कुरुते भावं गोवत्सगमनं प्रति ।। २४ ।।

स्ववंशजास्तदा सर्वे नृत्यंति हर्षिता ध्रुवम् ।। २५ ।।

।। सूत उवाच ।। ।।

यच्चान्यदद्भुतं तत्र वृत्तांतं शृणु त द्विजा ।।

येन वै श्रुतमात्रेण सर्वपापक्षयो भवेत् ।। २६ ।।

यदा वै स्थापितं लिंगं सर्वदेवैः पुरातनम् ।।

विष्णोः प्रतिष्ठानगुणात्सर्वेषां च दिवौक साम् ।। २७ ।।

अणुमात्रप्रमाणेन प्रत्यहं समवर्द्धत ।।

ततस्ते मनुजा देवा भीतास्तं शरणं ययुः ।। २८ ।।

।। देवा ऊचुः ।। ।।

वृद्धिं संहर देवेश लोका नां स्वस्ति तद्भवेत्।।

एवमुक्ते ततो लिंगाद्वागुवाचाशरीरिणी।।२९।।

।। शिववाण्युवाच ।। ।।

हे लोका मा भयं वोऽस्तु उपायः श्रूयतामयम् ।।

कश्चिच्चंडालमानीय मत्पुरः स्थाप्यतां धुवम् ।।3.2.27.३०।।

चंडालांश्च समानीय दधुर्देवस्य ते पुरः।।

तथापि तस्य वृद्धिस्तु नैव निर्वर्तते पुनः ।।३१।।

वागुवाच ।।

कर्म्मणा यस्तु चंडालः सोऽग्रे मे स्थाप्यतां जनाः ।।

तच्छ्रुत्वा महदाश्चर्यं मतिं चकुर्विलोचने ।। ३२ ।।

मार्गमाणास्तदा ते तु ग्रामाणि च पुराणि च ।।

कञ्चित्कर्मरतं पापं ददृशुर्ब्राह्मणब्रुवम् ।।३३।।

वृषभान्भारसंयुक्तान्मध्याह्नेवाहयत्तु सः ।।

क्षुत्तृट्श्रमपरीतांश्च दुर्बलान्क्रूरमानसः ।।३४।।

अस्नात्वापि पर्युषितं भक्षयंतीह वै द्विजाः ।।

तं समादाय देवेशं जग्मुर्यत्र जगद्गुरुः ।। ३५ ।।

देवालयाग्रभूमौ तं स्थापयासुरादृताः ।।

भस्मी बभूव सहसा गोवत्साग्रे निरूपितः ।। ३६ ।।

चंडालस्थल इत्येष प्रसिद्धोसौऽभवत्क्षितौ ।।
तत्र स्थितैर्न चाद्यापि प्रासादो दृश्यते हि सः ।। ।। ३७ ।।
तदाप्रभृति तल्लिंगं साम्यभावमुपागतम् ।।
धौतपाप्मा गतस्तीर्थं द्विजो लिंगनिरीक्षिणात् ।। ३८ ।।
प्रत्यहं पूजयामास गोवत्सं गत किल्बिषः ।।
विशेषात्कृष्णपक्षस्य चतुर्दश्यां समागतः ।। ३९ ।।
एतत्तदद्भुतं तस्य देवस्य च त्रिशूलिनः ।।
शृणुयाद्यो नरो भक्त्या सर्वपापैः प्रमुच्यते ।। 3.2.27.४० ।।
।। भूत उवाच ।। ।।
गोवत्समिति विख्यातं नराणां पुण्यदं परम् ।।
अनेकजन्मपापघ्नं मार्कंडेयेन भाषितम् ।। ४१ ।।
तत्र तीर्थे सकृत्स्नानं रुद्रलोकप्रदं नृणाम् ।।
पापदेहविशुद्ध्यर्थं पापेनोपहतात्मनाम् ।। ४२ ।।
कूपे तर्पणतश्चैव श्राद्धतश्चैव तृप्तता ।।
भाद्रपदे विशे षेण पक्षस्यांते भवेत्कलौ ।। ४३ ।।
एकविंशतिवारांस्तु गयायां तर्पणे कृते ।।
पितॄणां परमा तृप्तिः सकृद्वै गंगकूपके ।। ४४ ।।
तस्मिन्गोवत्ससामीप्ये तिष्ठते गंगकूपकः ।।
तस्मिंस्तिलोदकेनापि सद्गतिं यांति तर्पिताः ।। ४५ ।।
पितरो नरकाद्वापि सुपुण्येन सुमेधसा ।।
गोप्रदानं प्रशंसंति तस्मिंस्तीर्थे मुनीश्वराः ।। ४६ ।।
विप्राय स्वर्णदानं तु रुद्रलोके नयेन्नरम् ।।
सरस्वतीशिवक्षेत्रे गंगा च गंगकूपके ।। ४७ ।।
एकस्थमेतत्त्रितयं स्वर्गापवर्गकारणम् ।।
सेवितं चर्षिभिः सिद्धैस्तीर्थं सर्वत्र विश्रुतम् ।। ४८ ।।
पीलुयुग्मं स्थितं तत्र तत्तीर्थं मुनिसेवितम् ।।
स्नानात्स्वर्गप्रदं चैव पानात्पापविशुद्धिदम् ।। ४९ ।।
कीर्तनात्पुण्यजननं सेवनान्मुक्तिदं परम् ।।

तद्वै पश्यंति ये भक्त्या ब्रह्महा यदि मातृहा ।। ।। 3.2.27.५० ।।

बालघाती च गोघ्नश्च ये च स्त्रीशूद्रघातकाः ।।

गरदाश्चाग्निदाश्चैव गुरुद्रोहरताश्च ये ।। ५१ ।।

तपस्विनिन्दकाश्चैव कूटसाक्ष्यं करोति यः ।।

वक्ता च परदोषस्य परस्य गुणलोपकः ।। ५२ ।।

सर्वपापमयोऽप्यत्र मुच्यते लिंगदर्शनात् ।। ५३ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पातालखण्डे धर्मारण्यमाहात्म्ये बलाहकोपाख्यानवर्णनंनाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २८



।। व्यास उवाच ।।

गोवत्सान्नैर्ऋते भागे दृश्यते लोहयष्टिका ।।

स्वयंभुलिंगरूपेण रुद्रस्तत्र स्थितः स्वयम् ।।

।। श्रीमार्कण्डेय उवाच ।। ।।

मोक्षतीर्थे सरस्वत्या नभस्ये चंद्रसंक्षये ।।

विप्रान्संपूज्य विधिवत्तेभ्यो दत्त्वा च दक्षिणाम् ।। १ ।।

एकविंशतिवारांस्तु भक्त्या पिंडस्य यत्फलम् ।।

गयायां प्राप्यते पुंसां ध्रुवं तदिह तर्प्पणात् ।। २ ।।

लोहयष्ट्यां कृते श्राद्धे नभस्ये चंद्रसंक्षये ।।

प्रेतयोनिविनिर्मुक्ताः क्रीडंति पितरो दिवि ।। ३ ।।

अपि नः संकुले भूयाद्यो वै दद्यात्तिलोदकम् ।।

पिंडं वाप्युदकं वापि प्रेतपक्षे विधूदये ।। ३ ।।

लोहयष्ट्याममावस्यां कार्यं भाद्रपदे जनैः ।।

श्राद्धं वै मुनयः प्राहुः पितरो यदि वल्लभाः ।। ५ ।।

क्षीरेण तु तिलैः श्वेतैः स्नात्वा सारस्वते जले ।।

पितॄंस्तर्पयते यस्तु तृप्तास्तत्पितरो ध्रुवम् ।। ६ ।।

तत्र श्राद्धानि कुर्वीत सक्तुभिः पयसा सह ।।

अमावास्यादिनं प्राप्य पितॄणां मोक्षमिच्छकैः ।। ७ ।।

रुद्रतीर्थे ततो धेनुं दद्याद्वस्त्रादिभूषिताम् ।।

विष्णुतीर्थे हिरण्यं च प्रदद्यान्मोक्षमिच्छुकः ।। ८ ।।

गयायां पितृरूपेण स्वयमेव जनार्दनः ।।

तं ध्यात्वा पुंडरीकाक्षं मुच्यते च ऋणत्रयात् ।। ९ ।।

प्रार्थयेत्तत्र गत्वा तं देवदेवं जनार्दनम् ।।

आगतोऽस्मि गयां देव पितृभ्यः पिंडदित्सया ।।

एष पिंडो मया दत्तस्तव हस्ते जनार्दन ।। 3.2.28.१० ।।

परलोकगतेभ्यश्च त्वं हि दाता भविष्यसि ।।

अनेनैव च मंत्रेण तत्र दद्याद्धरेः करे ।। ११ ।।

चंद्रे क्षीणे चतुर्दश्यां नभस्ये पिंडमाहरेत् ।।

पितॄणामक्षया तृप्तिर्भविष्यति न संशयः ।। १२ ।।

एकविंशतिवारांश्च गयायां पिंडपातनैः ।।

भक्त्या तृप्तिमवाप्नोति लोहयष्ट्यां पितृतर्प्पणे ।। १३ ।।

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमत्र हि ।।

फलप्रदः सुतान्भक्तानारोग्यमभयप्रदः ।।१४।।

वित्तं न्यायार्जितं दत्तं स्वल्पं तत्र महाफलम् ।।

स्नानेनापि हि तत्तीर्थे रुद्रस्यानुचरो भवेत् ।।१५।।

इति श्रीस्कांदे महापुराणे एकाकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये संक्षेपतस्तीर्थमाहात्म्य वर्णनं नामाष्टविंशोऽध्यायः ।। २८ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः २९



सूत उवाच ।। ।।

अतः परं शृणुध्वं हि लोहासुरविचेष्टितम् ।।

बलेः पुत्रशतस्यापि कथयिष्यामि विश्रुतम् ।। १ ।।

यथा तौ भ्रातरौ वृद्धौ प्रापतुः स्थानमुत्तमम्।।

तदा प्रभृति वैराग्यं दैत्यो लोहासुरे दधौ ।। २ ।।

किं करोमि क्व गच्छामि तपसे स्थानमुत्तमम् ।।

यस्य पारं न जानंति देवता मुनयो नराः ।। ३ ।।

को मयाऽऽराध्यतां देवो हृदि चिंतयते भृशम् ।।

इति चिंतयतस्तस्य मतिर्जाता महात्मनः ।। ४ ।।

दधौ गंगां स्वशीर्षेण पुष्पवंतौ च नेत्रयोः ।।

हृदा नारायणं देवं ब्रह्माणं कटिमंडले ।। ५ ।।

इंद्राद्या देवताः सर्वे यद्देहे प्रतिबिंबिताः ।।

प्रपश्यंति तदात्मानं भास्करः सलिले यथा ।। ६ ।।

तमेवाराधयिष्यामि निरंजनमकल्मषः ।।

एवं कृत्वा मतिं दैत्य स्तपस्तेपे सुदुष्करम् ।।

भीतो जन्मभयाद्घोराद्दुष्करं यन्महात्मभिः ।। ७ ।।

अंबुभक्षो वायुभक्षः शीर्णपर्णाशनस्तथा ।।

दिव्यं वर्षशतं साग्रं यदा तेपे महत्तपः ।।

ततस्तुतोष भगवांस्त्रिशूलवरधारकः ।। ८ ।।

।। ईश्वर उवाच ।। ।।

वरं वृणीष्व भद्रं ते मनसा यदभीप्सितम् ।।

लोहासुर मया देयं तव नास्ति तपोबलात् ।। ९ ।।

इत्युक्तो दानवस्तत्र शंकराग्रे वचोऽब्रवीत् ।। 3.2.29.१० ।।

।। लोहासुर उवाच ।। ।।

यदि तुष्टोसि देवेश वरमेकं वृणोम्यहम् ।।
शरीरस्याजरत्वं च मा मृत्योरपि मे भयम् ।। ११ ।।
जन्मन्यस्मिन्प्रभो भूयात्स्थातव्यं हृदये मम ।।
एवमस्तु शिवः प्राह तत्र तं दानवेश्वरम् ।। १२ ।।
शर्वलब्धवरो दैवात्पुनस्तेपे महत्तपः ।।
रम्ये सरस्वतीतीरे तरणाय भवार्णवात् ।। १३ ।।
वत्सराणां सहस्राणि प्रयुतान्यर्बुदानि च ।।
शंकते भगवानिंद्रो भीतस्तस्य तपोबलात् ।। १४ ।।
मा मे पदच्युतिर्भूयाद्दैत्यल्लोहासुरात्क्वचित् ।।
मघवान्गुप्तरूपेण समेत्याश्रमकाननम् ।। १५ ।।
तपोभंगं प्रकुरुते कंपयित्वा महासुरम् ।।
ताडयंति शरीरे तं मुष्टिभिस्तीक्ष्णकर्कशैः ।। १६ ।।
अथ तेन च दैत्येन ध्यानमुत्सृज्य वीक्षितम् ।।
इंद्रेण तत्कृतं सर्वं तपोबलविनाशनम् ।। १७ ।।
तस्य तैरभवद्युद्धमिंद्राद्यैरथ कर्क्कशैः ।।
एकस्य बहुभिः सार्द्धं देवास्ते तेन संयुगे ।। १८ ।।
रुधिराक्लिन्नदेहा वै प्रहारैर्जर्जरीकृताः ।।
केशवं शरणं प्राप्ता त्राहि त्राहीति भाषिणः ।। १९ ।। ।।
।। सूत उवाच ।। ।।
देवानां वाक्यमाकर्ण्य वासुदेवो जनार्दनः ।।
युयुधे केशवस्तेन युद्धे वर्षशतं किल ।। 3.2.29.२० ।।
ततो नारायणं तत्र जिगाय स वरोर्जितः ।।
अथ नारायणो देवो जितो लोहासुरेण तु ।। २१ ।।
मंत्रयामास रुद्रेण ब्रह्मणा च पुनःपुनः ।।
मीमांसित्वा त्रयो देवाः पुनर्युद्धसमुद्यमम् ।। २२ ।।
लोहासुरस्य दैत्यस्य वपुर्दृष्ट्वा पुनर्नवम् ।।
महदासीत्पुनर्युद्धं दैत्यकेशवयोस्ततः ।। २३ ।।
न ममार यदा दैत्यो विष्णुना प्रभविष्णुना ।।

तरसा तं केशवोऽपि पातयामास भूतले ।। २४ ।।

उत्तानं पतितं दृष्ट्वा पिनाकी परमेश्वरः ।।

दधार हृदये तस्य स्वरूपं रूपवर्जितः ।। २५ ।।

कण्ठे तस्थौ ततो ब्रह्मा तस्य लोहासुरस्य च ।।

चरणौ पीडयामास स्वस्थित्या पुरुषोत्तमः ।। २६ ।।

अथ दैत्यः समुत्तस्थौ भृशं बद्धोपि भूतले ।।

दृष्ट्वोत्थितं ततो दैत्यं पातयंतं सुरोत्तमान् ।। २७ ।।

उवाच दिव्यया वाचा विरंचिः कमलासनः ।। २८ ।। ।।

।। ब्रह्मोवाच ।। ।।

लोहासुर सदा रक्ष वाचोधर्ममभीक्ष्णशः ।।

त्वया यत्प्रार्थितं रुद्रात्तदेव समुपस्थितम् ।। २९ ।।

अहं विष्णुश्च रुद्रश्च त्रयोऽमी सुरसत्तमाः ।।

त्वद्देहमुपवेक्ष्यामो यावदाभूतसंप्लवम् ।। 3.2.29.३० ।।

दानवेश शिवप्राप्तिर्भावभक्त्यैव जायते ।।

शिवं चालयितुं बुद्धिः कथं तव भविष्यति ।। ३१ ।।

अचलांश्चालयेद्यस्तु प्रासादान्ब्राह्मणान्पुरान् ।।

अचिरेणैव कालेन पातकेनैव लिप्यते ।। ३२ ।।

श्मशानवत्परित्याज्यः सत्यधर्मबहिष्कृतः ।।

सत्यवागसि भद्रं ते मा विचालय देवताः ।। ३३ ।।

येन यातास्तु पितरो येन याताः पितामहाः ।।

तेन मार्गेण गंतव्यं न चोल्लंघ्या सतां गतिः ।। ३४ ।।

दानवेश पिता ते हि ददौ लोकत्रयं हरेः ।।

वाक्पाशबद्धः पाताले राज्यं चक्रे महीपतिः ।। ३५ ।।

तथा त्वमसि वाक्पाशाच्छिवभक्तिसमन्वितः ।।

भूतले तिष्ठ दैत्येंद्र मा वाग्वैकल्प्यमाप्नुहि ।। ३६ ।।

वरांस्ते च प्रदास्यामो मा विचाल्या हि देवताः ।। ३७ ।। ।।

।। व्यास उवाच ।। ।।

तच्छ्रुत्वा ब्रह्मणो वाक्यं संतुष्टो दानवेश्वरः ।।

प्राह प्रसन्नया वाचा ब्रह्माणं केशवं हरम् ।। ३८ ।।

।। लोहासुर उवाच ।। ।।

वाक्पाशबद्धस्तिष्ठामि न पुनर्भवतां बले ।।

ब्रह्मा विष्णुश्च रुद्रश्च त्रयोऽमी सुरसत्तमाः ।। ३९ ।।

स्थास्यंति चेच्छरीरे मे किं न लब्धं मया ततः ।।

इदं कलेवरं मे हि समारूढं त्रिभिः सुरैः ।। 3.2.29.४० ।।

भूम्यां भवतु विख्यातं मत्प्रभावात्सुरोत्तमाः ।। ४१ ।।

लोहासुरस्य वाक्येन हर्षिता स्त्रिदशास्त्रयः ।।

ददुः प्रत्युत्तरं तस्मै ब्रह्मविष्णुमहेश्वराः ।। ४२ ।।

सत्यवाक्पाशतो दैत्यो न सत्याच्चलितो यतः ।।

तेन सत्येन संतुष्टा दास्या मस्ते मनीप्सितम् ।। ४३ ।।

।। ब्रह्मोवाच ।। ।।

यथा स्नानं ब्रह्मज्ञानं देहत्यागो गयातले ।।

धर्मारण्ये तथा दैत्य धर्म्मेश्वरपुरः स्थिते ।। ४४ ।।

कूपे तर्प्पणकं श्राद्धं शंसंति पितरो दिवि ।।

संतुष्टा पिंडदानेन गयायां पितरो यथा ।। ४५ ।।

वांछंति तर्प्पणं कूपे धर्मारण्ये विशुद्धये ।।

दानवेन्द्र शरीरं तु तीर्थं तव भविष्यति ।। ४६ ।।

एकविंशतिवारांस्तु गयायां तर्प्पणे कृते ।।

पितॄणां या परा तृप्तिर्जायते दानवाधिप ।। ४७ ।।

धर्मेश्वर पुरस्तात्सा त्वेकदा पितृतर्पणात् ।।

स्याद्वै दशगुणा तृप्तिः सत्यमेव न संशयः ।। ४८ ।।

पितॄणां पिंडदानेन अक्षय्या तृप्तिरस्त्विह ।।

शिवरूपांतराले वै धर्मारण्ये धरातले ।।४९।।

श्रद्धयैव हि कर्त्तव्याः श्राद्धपिंडोदकक्रियाः ।।

तथांतराले चास्माकं श्राद्धपिंडौ विशेषतः ।। 3.2.29.५० ।।

तथा शरीरे क्वापिस्तांचिंता सत्योऽसि सुव्रत।।

त्रिषु लोकेषु दुष्प्रापं सत्यं ते दिवि संस्थितम् ।।५१।।

अस्मद्वाक्येन सत्येन तत्तथाऽसुरसत्तम ।।

गयासमधिकं तीर्थं तव जातं धरातले।।५२।।

अस्माकं स्थितिरव्यग्रा तव देहे न संशयः ।।

सत्यपाशेन बद्धाः स्म दृढमेव त्वयाऽनघ।।५३।।

।। विष्णुरुवाच ।। ।।

गयाप्रयाग कस्याऽपि फलं समधिकं स्मृतम् ।।

चतुर्द्दश्याममावास्यां लोहयष्ट्यां पिंडदानतः ।। ५४ ।।

बलिपुत्रस्य सत्येन महती तृप्तिरत्र हि ।।

मा कुरुष्वात्र संदेहं तव देहे स्थिता स्वयम् ।। ५५ ।।

सरस्वती पुण्यतोया ब्रह्मलोकात्प्रयात्युत ।।

प्लावयिष्यंति देहांगं मया सह सुसंगता ।।५६।।

यथो वै द्वारका वासो देवस्तत्र महेश्वरः ।।

विरंचिर्यत्र तीर्थानि त्रीण्येतानि धरातले ।। ५७ ।।

भविष्यति च पाताले स्वर्गलोके यमक्षये ।।

विख्यातान्यसुरश्रेष्ठ पि तॄणां तृप्तिहेतवे ।।५८।।

अथान्यत्संप्रवक्ष्यामि गाथां पितृकृतां पराम् ।।

आज्ञारूपां हि पुत्राणां तां शृणुष्व ममानघ ।।५९।।

पितर ऊचुः।।

शंकरस्याग्रतः स्थानं रुद्रलोकप्रदं नृणाम् ।।

पापदेहविशुद्ध्यर्थं पापेनोपहतात्मनाम् ।।3.2.29.६०।।

तस्मिंस्तिलोदकेनापि सद्गतिं यांति तर्पिताः ।।

पितरो नरकाद्वा पि सुपुत्रेण सुमेधसा ।। ६१ ।।

गोप्रदानं प्रशंसंति तत्तत्र पितृमुक्तये ।।

पित्रादिकान्समुद्दिश्य दृष्ट्वा रुद्रं च केशवम् ।।६२।।

तिलपिण्याकपिंडेन तृप्तिं यास्यामहे पराम् ।।

चतुर्द्दश्याममावास्यां तथा च पितृतर्पणम् ।। ६३ ।।

अज्ञातगोत्रजन्मानस्तेभ्यः पिंडांस्तु निर्वपेत् ।।

तेऽपि यांति दिवं सर्वे ये दत्त इति श्रुतिः ।। ६४ ।।

सर्वकार्याणि संत्यज्य मानवैः पुण्यमीप्सुभिः ।।
प्राप्ते भाद्रपदे मासे गंतव्या लोहयिष्टका ।।
अज्ञातगोत्रनाम्ना तु पिंड मंत्रमिमं शृणु ।। ६५ ।।
पितृवंशे मृता ये च मातृवंशे तथैव च ।।
अतीतगोत्रजास्तेभ्यः पिंडोऽयमुपतिष्ठतु ।। ६६ ।।
।। विष्णुरुवाच ।। ।।
अनेनैव तु मंत्रेण ममाग्रे सुरसत्तम ।।
क्षीणे चंद्रे चतुर्द्दश्यां नभस्ये पिंडमाहरेत् ।। ६७ ।।
पितृणामक्षया तृप्तिर्भविष्यति न संशयः ।।
तिलपिण्याकपिंडेन पितरो मोक्षमाप्नुयुः ।। ६८ ।।
क्षणत्रयविनिर्मुक्ता मानवा जगतीतले ।।
भविष्यंति न संदेहो लोहयष्ट्या तिलतर्पणे ।। ६९ ।।
स्नात्वा यः कुरुते चात्र पितृपिंडोदकक्रियाः ।।
पितरस्तस्य तृप्यंति यावद्ब्रह्मदिवानिशम् ।। 3.2.29.७० ।।
अमावास्यादिनं प्राप्य मासि भाद्रपदे सरः ।।
ब्रह्मणो यष्टिकायां तु यः कुर्यात्पितृतर्पणम् ।। ७१ ।।
पितरस्तस्य तृप्ताः स्युर्यावदाभूतसंप्लवम् ।।
तेषां प्रसन्नो भगवानादिदेवो महेश्वरः ।। ७२ ।।
अस्य तीर्थस्य यात्रायां मतिर्येषां भविष्यति ।।
गोक्षीरेण तिलैः श्वेतैः स्नात्वा सारस्वते जले ।। ७३ ।।
तर्पयेदक्षया तृप्तिः पितृणां तस्य जायते ।।
श्राद्धं चैव प्रकु र्वीत सक्तुभिः पयसा सह ।। ७४ ।।
अमावास्यादिनं प्राप्य पितृणां मोदमिच्छुकः ।।
रुद्रतीर्थे ततो धेनुं दयाद्वस्त्राणि यमतीर्थके ।। ७५ ।।
विष्णुतीर्थे हिरण्यं च पितृणां मोक्षमिच्छुकः ।।
विनाक्षतैर्विना दर्भैर्विना चासनमेव च ।।
वारिमात्राल्लोहयष्ट्यां गयाश्राद्धफलं लभेत् ।। ७६ ।।
।। सूत उवाच ।। ।।

एतद्वः कथितं विप्रा लोहासुरविचेष्टितम् ।।

यच्छ्रुत्वा ब्रह्महा गोघ्नो मुच्यते सर्वपातकैः ।। ७७ ।।

एकविंशतिवारन्तु गयायां पिंड पातने ।।

तत्फलं समवाप्नोति सकृदस्मिञ्छ्रुते सति ।। ७८ ।।

चतुःष्कोटि द्विलक्षं च सहस्रं शतमेव च ।।

धेनवस्तेन दत्ताः स्युर्माहात्म्यं शृणु यातु यः ।। ७९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये लोहासुरमाहात्म्यसंपूर्तिर्नामैकोनत्रिंशोऽध्यायः ।। २९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३०



।। व्यास उवाच ।। ।।

पुरा त्रेतायुगे प्राप्ते वैष्णवांशो रघूद्वहः ।।

सूर्यवंशे समुत्पन्नो रामो राजीवलोचनः ।। १ ।।

स रामो लक्ष्मणश्चैव काकपक्षधरावुभौ ।।

तातस्य वचनात्तौ तु विश्वामित्रमनुव्रतौ ।। २ ।।

यज्ञसंरक्षणार्थाय राज्ञा दत्तौ कुमारकौ ।।

धनुःशरधरौ वीरौ पितुर्वचनपालकौ ।। ३ ।।

पथि प्रव्रजतो यावत्ताडकानाम राक्षसी ।।

तावदागम्य पुरतस्तस्थौ वै विघ्नकारणात् ।। ।। ४ ।।

ऋषेरनुज्ञया रामस्ताडकां समघातयत्।।

प्रादिशच्च धनुर्वेदविद्यां रामाय गाधिजः ।।५।।

तस्य पादतलस्पर्शाच्छिला वासवयोगतः ।।

अहल्या गौतमवधूः पुनर्जाता स्वरूपिणी ।। ६ ।।

विश्वामित्रस्य यज्ञे तु संप्रवृत्ते रघूत्तमः ।।

मारीचं च सुबाहुं च जघान परमेषुभिः ।।७।।

ईश्वरस्य धनुर्भग्नं जनकस्य गृहे स्थितम् ।।

रामः पंचदशे वर्षे षड्वर्षां चैव मैथिलीम् ।। ८ ।।

उपयेमे तदा राजन्रम्यां सीतामयोनिजाम् ।।

कृतकृत्यस्तदा जातः सीतां संप्राप्य राघवः ।। ९ ।।

अयोध्यामगमन्मार्गे जामदग्न्यमवेक्ष्य च ।।

संग्रामोऽभूत्तदा राजन्देवानामपि दुःसहः ।। 3.2.30.१० ।।

ततो रामं पराजित्य सीतया गृहमागतः ।।

ततो द्वादशवर्षाणि रेमे रामस्तया सह ।। ११ ।।

एकविंशतिमे वर्षे यौवराज्यप्रदायकम् ।।

राजानमथ कैकेयी वरद्वयमयाच त ।। १२ ।।

तयोरेकेन रामस्तु ससीतः सहलक्ष्मणः ।।

जटाधरः प्रव्रजतां वर्षाणीह चतुर्दश ।। १३ ।।

भरतस्तु द्वितीयेन यौवराज्याधिपोस्तु मे ।।

मंथरावचनान्मूढा वरमेतमयाचत ।। १४ ।।

जानकीलक्ष्मणसखं रामं प्राव्राजयन्नृपः ।।

त्रिरात्रमुदकाहारश्चतुर्थेह्नि फलाशनः ।। १५ ।।

पञ्चमे चित्रकूटे तु रामो वासमकल्पयत् ।।

तदा दशरथः स्वर्गं गतो राम इति ब्रुवन् ।। १६ ।।

ब्रह्मशापं तु सफलं कृत्वा स्वर्गं जगाम किम् ।।

ततो भरत शत्रुघ्नौ चित्रकूटे समागतौ ।। १७ ।।

स्वर्गतं पितरं राजन्रामाय विनिवेद्य च ।।

सांत्वनं भरतस्यास्य कृत्वा निवर्तनं प्रति ।। १८ ।।

ततो भरत शत्रुघ्नौ नंदिग्रामं समागतौ ।।

पादुकापूजनरतौ तत्र राज्यधरावुभौ ।। १९ ।।

अत्रिं दृष्ट्वा महात्मानं दण्डकारण्यमागमत ।।

रक्षोगणवधारम्भे विराधे विनिपातिते ।। ३.२.३०.२० ।।

अर्द्धत्रयोदशे वर्षे पंचवट्यामुवास ह ।।

ततो विरूपयामास शूर्पणखां निशाचरीम् ।।

वने विचरतरतस्य जानकीसहितस्य च ।। २१ ।।

आगतो राक्षसो घोरः सीतापहरणाय सः ।।

ततो माघासिताष्टम्यां मुहूर्ते वृन्दसंज्ञके ।। २२ ।।

राघवाभ्यां विना सीतां जहार दश कन्धरः ।।

मारीचस्याश्रमं गत्वा मृगरूपेण तेन च ।। २३ ।।

नीत्वा दूरं राघवं च लक्ष्मणेन समन्वितम् ।।

ततो रामो जघानाशु मारीचं मृगरू पिणम् ।। २४ ।।

पुनः प्राप्याश्रमं रामो विना सीतां ददर्श ह ।।

तत्रैव ह्रियमाणा सा चक्रंद कुररी यथा ।। २५ ।।

रामरामेति मां रक्ष रक्ष मां रक्षसा हृताम्।।

यथा श्येनः क्षुधायुक्तः क्रन्दंतीं वर्तिकां नयेत् ।। २६ ।।

तथा कामवशं प्राप्तो राक्षसो जनकात्मजाम् ।।

नयत्येष जनकजां तच्छ्रुत्वा पक्षिराट् तदा ।। २७ ।।

युयुधे राक्षसेंद्रेण रावणेन हतोऽपतत् ।।

माघासितनवम्यां तु वसंतीं रावणालये ।। २८ ।।

मार्गमाणौ तदा तौ तु भ्रातरौ रामलक्ष्मणौ ।। २९ ।।

जटायुषं तु दृष्ट्वैव ज्ञात्वा राक्षससंहृताम् ।।

सीतां ज्ञात्वा ततः पक्षी संस्कृतस्तेन भक्तितः ।। 3.2.30.३० ।।

अग्रतः प्रययौ रामो लक्ष्मणस्तत्पदानुगः ।।

पंपाभ्याशमनुप्राप्य शबरीमनुगृह्य च ।।३१।।

तज्जलं समुपस्पृश्य हनुमद्दर्शनं कृतम् ।।

ततो रामो हनुमता सह सख्यं चकार ह ।। ३२ ।।

ततः सुग्रीवमभ्येत्य अहनद्वालिवानरम् ।।

प्रेषिता रामदेवेन हनुमत्प्रमुखाः प्रियाम् ।। ३३ ।।

अंगुलीयकमादाय वायुसूनुस्तदागतः ।।

संपातिर्दशमे मासि आचख्यौ वानराय ताम् ।।३४।।

ततस्तद्वचनादब्धिं पुप्लुवे शतयोजनम् ।।

हनुमान्निशि तस्यां तु लंकायां परितोऽचिनोत्।।३५।।

तद्रात्रिशेषे सीताया दर्शनं तु हनूमतः ।।

द्वादश्यां शिंशपावृक्षे हनुमान्पर्यवस्थितः ।। ३६ ।।

तस्यां निशायां जानक्या विश्वासायाह संकथाम् ।।

अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्त्तत ।। ३७ ।।

ब्रह्मास्त्रेण त्रयोदश्यां बद्धः शक्रजिता कपिः ।।

दारुणानि च रूक्षाणि वाक्यानि राक्षसाधिपम् ।। ।। ३८ ।।

अब्रवीद्वायुसूनुस्तं बद्धो ब्रह्मास्त्रसंयुतः ।।

वह्निना पुच्छयुक्तेन लंकाया दहनं कृतम् ।। ३९ ।।

पूर्णिमायां महेंद्राद्रौ पुनरागमनं कपेः ।।

मार्गशीर्षप्रतिपदः पंचभिः पथि वासरैः ।। ३.२.३०.४० ।।

पुनरागत्य वर्षेह्नि ध्वस्तं मधुवनं किल ।।

सप्तम्यां प्रत्यभिज्ञानदानं सर्वनिवेदनम् ।। ४१ ।।

मणिप्रदानं सीतायाः सर्वं रामाय शंसयत् ।।

अष्टम्युत्तरफाल्गुन्यां मुहूर्ते विजयाभिधे ।। ४२ ।।

मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य च ।।

रामः कृत्वा प्रतिज्ञां हि प्रयातुं दक्षिणां दिशम्।। ४३ ।।

तीर्त्वाहं सागरमपि हनिष्ये राक्षसेश्वरम् ।।

दक्षिणाशां प्रयातस्य सुग्रीवोऽथाभव त्सखा ।। ४४ ।।

वासरैः सप्तभिः सिंधोस्तीरे सैन्यनिवेशनम् ।।

पौषशुक्लप्रतिपदस्तृतीयां यावदंबुधौ ।।

उपस्थानं ससैन्यस्य राघवस्य बभूव ह।।४५।।

विभीषणश्चतुर्थ्यां तु रामेण सह संगतः ।।

समुद्रतरणार्थाय पंचम्यां मंत्र उद्यतेः ।। ४६ ।।

प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम् ।।

समुद्राद्वरलाभश्च सहोपायप्रदर्शनः ।। ४७ ।।

सेतोर्दशम्यामारंभस्त्रयोदश्यां समापनम् ।।

चतुर्दश्यां सुवेलाद्रौ रामः सेनां न्यवे शयत् ।। ४८ ।।

पूर्णिमास्या द्वितीयायां त्रिदिनैः सैन्यतारणम् ।।

तीर्त्वा तोयनिधिं रामः शूरवानरसैन्यवान् ।। ४९ ।।

रुरोध च पुरीं लंकां सीतार्थं शुभलक्षणः ।।

तृतीयादिदशम्यंतं निवेशश्च दिनाष्टकः ।। ३.२.३०.५० ।।

शुकसारणयोस्तत्र प्राप्तिरेकादशीदिने ।।

पौषासिते च द्वादश्यां सैन्यसंख्यानमेव च ।। ५१ ।।

शार्दूलेन कपींद्राणां सारासारोपवर्णनम् ।।

त्रयोदश्याद्यमांते च लंकायां दिवसैस्त्रिभिः ।। ५२ ।।

रावणः सैन्यसं ख्यानं रणोत्साहं तदाऽकरोत् ।।

प्रययावंगदो दौत्ये माघशुक्लाद्यवासरे ।। ५३ ।।

सीतायाश्च तदा भर्तुर्मायामूर्धादिदर्शनम् ।।

माघशुक्लद्वितीया यां दिनैः सप्तभिरष्टमीम् ।। ५४ ।।

रक्षसां वानराणां च युद्धमासीच्च संकुलम् ।।

माघशुक्लनवम्यां तु रात्राविंद्रजिता रणे ।। ५५ ।।

रामलक्ष्मणयोर्ना गपाशबंधः कृतः किल ।।

आकुलेषु कपीशेषु हताशेषु च सर्वशः ।। ५६ ।।

वायूपदेशाद्गरुडं सस्मार राघवस्तदा ।।

नागपाशविमोक्षार्थं दशम्यां गरु डोऽभ्यगात् ।। ५७ ।।

अवहारो माघशुक्लैस्यैकादश्यां दिनद्वयम् ।।

द्वादश्यामांजनेयेन धूम्राक्षस्य वधः कृतः ।। ५८ ।।

त्रयोदश्यां तु तेनैव निहतोऽकंपनो रणे ।।

मायासीतां दर्शयित्वा रामाय दशकंधरः ।। ५९ ।।

त्रासयामास च तदा सर्वान्सैन्यगतानपि ।।

माघशुक्लचतुर्द्दश्यां यावत्कृष्णादिवासरम् ।। ३.२.३०.६० ।।

त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः ।।

माघकृष्णद्वितीयायाश्चतुर्थ्यंतं त्रिभिर्दिनैः ।। ६१ ।।

रामेण तुमुले युद्धे रावणो द्रावितो रणात् ।।

पञ्चम्या अष्टमी यावद्रावणेन प्रबोधितः ।। ६२ ।।

कुंभकर्णस्तदा चक्रेऽभ्यवहारं चतुर्दिनम् ।।

कुम्भकर्णोकरोद्युद्धं नवम्यादिचतुर्दिनैः ।। ६३ ।।

रामेण निहतो युद्धे बहुवानरभक्षकः ।।

अमावास्यादिने शोकाऽभ्यवहारो बभूव ह ।। ६४ ।।

फाल्गुनप्रतिपदादौ चतुर्थ्यंतैश्चतुर्दिनैः ।।

नरांतकप्रभृतयो निहताः पञ्च राक्षसाः ।। ६५ ।।

पंचम्याः सप्तमीं यावदतिकायवधस्त्र्यहात् ।।

अष्टम्या द्वादशीं यावन्निहतो दिनपंचकात् ।। ६६ ।।

निकुम्भकुम्भौ द्वावेतौ मकराक्षश्चतुर्दिनैः ।।

फाल्गुनासितद्वितीयाया दिने वै शक्रजिज्जितः ।। ६७ ।।

तृतीयादौ सप्तम्यंतदिनपञ्चकमेव च ।।

ओषध्यानयवैयग्र्यादवहारो बभूव ह ।। ६८ ।।

अष्टम्यां रावणो मायामैथिलीं हतवान्कुधीः।।

शोकावेगात्तदा रामश्चक्रे सैन्यावधारणम् ।। ६९ ।।

ततस्त्रयोदशीं यावद्दिनैः पंचभिरिंद्रजित् ।।

लक्ष्मणेन हतो युद्धे विख्यातबलपौरुषः ।। 3.2.30.७० ।।

चतुर्द्दश्यां दशग्रीवो दीक्षामापावहारतः ।।

अमावास्यादिने प्रागाद्युद्धाय दशकंधरः ।। ७१ ।।

चैत्रशुक्लप्रतिपदः पंचमीदिनपंचके ।।

रावणो युध्यमानोऽभूत्प्रचुरो रक्षसां वधः ।। ७२ ।।

चैत्रशुक्लाष्टमीं यावत्स्यंदनाश्वादिसूदनम् ।।

चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदने ।। ७३ ।।

कोपाविष्टेन रामेण द्रावितो दशकंधरः ।।

विभीषणोपदेशेन हनुमद्युद्धमेव च ।। ७४ ।।

द्रोणाद्रेरोषधीं नेतुं लक्ष्मणार्थमुपागतः ।।

विशल्यां तु समादाय लक्ष्मणं तामपाययत् ।। ७५ ।।

दशम्यामवहारोऽभूद्रात्रौ युद्धं तु रक्षसाम् ।।

एकादश्यां तु रामाय रथो मातलिसारथिः ।। ७६ ।।

प्राप्तो युद्धाय द्वादश्यां यावत्कृष्णां चतुर्दशीम् ।।

अष्टादशदिने रामो रावणं द्वैरथेऽवधीत् ।। ७७ ।।

संस्कारा रावणादीनाममावा स्यादिनेऽभवन् ।।

संग्रामे तुमुले जाते रामो जयमवाप्तवान् ।। ७८ ।।

माघशुक्लद्वितीयादिचैत्रकृष्णचतुर्द्दशीम् ।।

सप्ताशीतिदिनान्येवं मध्ये पंवदशा हकम् ।। ७९ ।।

युद्धावहारः संग्रामो द्वासप्ततिदिनान्यभूत् ।।

वैशाखादि तिथौ राम उवास रणभूमिषु ।।

अभिषिक्तो द्वितीयायां लंकाराज्ये विभी षणः ।। 3.2.30.८० ।।

सीताशुद्धिस्तृतीयायां देवेभ्यो वरलंभनम् ।।
दशरथस्यागमनं तत्र चैवानुमोदनम् ।। ८१ ।।
हत्वा त्वरेण लंकेशं लक्ष्मणस्याग्रजो विभुः।।।
गृहीत्वा जानकीं पुण्यां दुःखितां राक्षसेन तु ।। ८२ ।।
आदाय परया प्रीत्या जानकीं स न्यवर्तत ।।
वैशाखस्य चतुर्थ्यां तु रामः पुष्पकमा श्रितः ।। ८३ ।।
विहायसा निवृत्तस्तु भूयोऽयोध्यां पुरीं प्रति ।।
पूर्णे चतुर्दशे वर्षे पंचम्यां माधवस्य च ।। ८४ ।।
भारद्वाजाश्रमे रामः सगणः समु पाविशत् ।।
नंदिग्रामे तु षष्ठ्यां स पुष्पकेण समागतः ।। ८५ ।।
सप्तम्यामभिषिक्तोऽसौ भूयोऽयोध्यायां रघूद्वहः ।।
दशाहाधिकमासांश्च चतुर्दश हि मैथिली ।। ८५ ।।
उवास रामरहिता रावणस्य निवेशने ।।
द्वाचत्वारिंशके वर्षे रामो राज्यमकारयत् ।। ८७ ।।
सीतायास्तु त्रयस्त्रिंशद्वर्षाणि तु तदा भवन् ।।
स चतुर्दशवर्षांते प्रविष्टः स्वां पुरीं प्रभुः ।। ८८ ।।
अयोध्यां नाम मुदितो रामो रावणदर्पहा ।।
भ्रातृभिः सहितस्तत्र रामो राज्यमकार यत् ।। ८९ ।।
दशवर्षसहस्राणि दशवर्षशतानि च ।।
रामो राज्यं पालयित्वा जगाम त्रिदिवालयम् ।। 3.2.30.९० ।।
रामराज्ये तदा लोका हर्षनिर्भरमा नसाः ।।
बभूवुर्धनधान्याढ्याः पुत्रपौत्रयुता नराः ।। ९१ ।।
कामवर्षी च पर्जन्यः सस्यानि गुणवंति च ।।
गावस्तु घटदोहिन्यः पादपाश्च सदा फलाः ।। ९२ ।।
नाधयो व्याधयश्चैव रामराज्ये नराधिप ।।
नार्यः पतिव्रताश्चासन्पितृभक्तिपरा नराः ।। ९३ ।।
द्विजा वेदपरा नित्यं क्षत्रिया द्विज सेविनः ।।
कुर्वते वैश्यवर्णाश्च भक्तिं द्विजगवां सदा ।। ९४ ।।

न योनिसंकरश्चासीत्तत्र नाचारसंकरः ।।

न वंध्या दुर्भगा नारी काकवंध्या मृत प्रजा ।। ९५ ।।

विधवा नैव काप्यासीत्सभर्तृका न लप्यते ।।

नावज्ञां कुर्वते केपि मातापित्रोर्गुरोस्तथा ।। ९६ ।।

न च वाक्यं हि वृद्धानामुल्लं घयति पुण्यकृत् ।।

न भूमिहरणं तत्र परनारीपराङ्मुखाः ।। ९७ ।।

नापवादपरो लोको न दरिद्रो न रोगभाक् ।।

न स्तेयो द्यूतकारी च मैरेयी पापिनो नहि ।। ९८ ।।

न हेमहारी ब्रह्मघ्नो न चैव गुरुतल्पगः ।।

न स्त्रीघ्नो न च बालघ्नो न चैवानृतभाषणः ।। ९९ ।।

न वृत्तिलोपकश्चासीत्कूट साक्षी न चैव हि ।।

न शठो न कृतघ्नश्च मलिनो नैव दृश्यते ।। 3.2.30.१०० ।।

सदा सर्वत्र पूज्यंते ब्राह्मणा वेदपारगाः ।।

नावैष्णवोऽव्रती राजन्नाम राज्येऽतिविश्रुते ।। १०१ ।।

राज्यं प्रकुर्वतस्तस्य पुरोधा वदतां वरः ।।

वसिष्ठो मुनिभिः सार्द्धं कृत्वा तीर्थान्यनेकशः ।। २ ।।

आजगाम ब्रह्मपुत्रो महाभागस्तपोनिधिः ।।

रामस्तं पूजयामास मुनिभिः सहितं गुरुम् ।। ३ ।।

अभ्युत्थानार्घपाद्यैश्च मधुपर्कादिपूजया ।।

प्रपच्छ कुशलं रामं वसिष्ठो मुनिपुंगवः ।। ४ ।।

राज्ये चाश्वे गजे कोशे देशे सद्भ्रातृभृत्ययोः ।।

कुशलं वर्त्तते राम इति पृष्टे मुनेस्तदा ।। ५ ।।

।। राम उवाच ।। ।।

सर्वत्र कुशलं मेऽद्य प्रसादाद्भवतः सदा ।।

पप्रच्छ कुशलं रामो वसिष्ठं मुनिपुंगवम् ।। ६ ।।

सर्वतः कुशली त्वं हि भार्यापुत्रसमन्वितः ।।

स सर्वं कथयामास यथा तीर्थान्यशेषतः ।। ७ ।।

सेवितानि धरापृष्ठे क्षेत्राण्यायतनानि च ।।

रामाय कथयामास सर्वत्र कुशलं तदा ।। ८ ।।

ततः स विस्मयाविष्टो रामो राजीवलोचनः ।।

पप्रच्छ तीर्थमाहात्म्यं यत्तीर्थेषूत्तमोत्तमम् ।। १०९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये रामचरित्रवर्णनंनाम त्रिंशोऽध्यायः ।। ३० ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३१

https://sa.wikisource.org/s/fu6
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

श्रीराम उवाच ।। ।।

भगवन्यानि तीर्थानि सेवितानि त्वया विभो ।।

एतेषां परमं तीर्थं तन्ममाचक्ष्व मानद ।। १ ।।

मया तु सीताहरणे निहता ब्रह्मराक्षसाः ।।

तत्पापस्य विशुदयर्थं वद तीर्थोत्तमोत्तमम् ।। २ ।।

वसिष्ठ उवाच ।। ।।

गंगा च नर्मदा तापी यमुना च सरस्वती ।।

गंडकी गोमती पूर्णा एता नद्यः सुपावनाः ।। ३ ।।

एतासां नर्मदा श्रेष्ठा गंगा त्रिपथगामिनी ।।

दहते किल्बिषं सर्वं दर्शनादेव राघव ।। ४ ।।

दृष्ट्वा जन्मशतं पापं गत्वा जन्मशतत्रयम् ।।

स्नात्वा जन्मसहस्रं च हंति रेवा कलौ युगे ।। ५ ।।

नर्मदातीरमाश्रित्य शाकमूलफलैरपि ।।

एकस्मिन्भोजिते विप्रे कोटि भोजफलं लभेत ।। ६ ।।

गंगा गंगेति यो ब्रूयाद्योजनानां शतैरपि ।।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।। ७ ।।

फाल्गुनांते कुहूं प्राप्य तथा प्रौष्ठपदेऽसिते ।।

पक्षे गंगामधि प्राप्य स्नानं च पितृतर्पणम् ।। ८ ।।

कुरुते पिंडदानानि सोऽक्षयं फलमश्नुते ।।

शुचौ मासे च संप्राप्ते स्नानं वाप्यां करोति यः ।। ९ ।।

चतुरशीतिनरकान्न पश्यति नरो नृप ।।

तपत्याः स्मरणे राम महापातकिनामपि ।। 3.2.31.१० ।।

उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ।।

यमुनायां नरः स्नात्वा सर्वपापैः प्रमुच्यते ।। ११ ।।

महापातकयुक्तोऽपि स गच्छेत्परमां गतिम् ।।

कार्त्तिक्यां कृत्तिकायोगे सरस्वत्यां निमज्जयेत् ।। १२ ।।

गच्छेत्स गरुडारूढः स्तूयमानः सुरोत्तमैः ।।

स्नात्वा यः कार्तिके मासि यत्र प्राची सरस्वती ।। १३ ।।

प्राचीं माधवमास्तूय स गच्छेत्परमां गतिम् ।।

गंडकीपुण्यतीर्थे हि स्नानं यः कुरुते नरः ।। १४ ।।

शालग्राममशिलामर्च्य न भूयः स्तनपो भवेत् ।।

गोमतीजलकल्लोलैर्मज्जयेत्कृष्णसन्निधौ ।। १५ ।।

चतुर्भुजो नरो भूत्वा वैकुण्ठे मोदते चिरम् ।।

चर्मण्वतीं नमस्कृत्य अपः स्पृशति यो नरः ।। १६ ।।

स तारयति पूर्वजान्दश पूर्वान्दशापरान् ।।

द्वयोश्च संगमं दृष्ट्वा श्रुत्वा वा सागरध्वनिम् ।। १७ ।।

ब्रह्महत्यायुतो वापि पूतो गच्छेत्परां गतिम् ।।

माघमासे प्रयागे तु मज्जनं कुरुते नरः ।। १८ ।।

इह लोके सुखं भुक्त्वा अन्ते विष्णुपदं व्रजेत् ।।

प्रभासे ये नरा राम त्रिरात्रं ब्रह्मचारिणः ।। १९ ।।

यमलोकं न पश्येयुः कुंभीपाकादिकं तथा ।।

नैमिषारण्यवासी यो नरो देवत्वमाप्नुयात् ।। 3.2.31.२० ।।

देवानामालयं यस्मात्तदेव भुवि दुर्लभम् ।।

कुरुक्षेत्रे नरो राम ग्रहणे चन्द्रसूर्ययोः ।। २१ ।।

हेमदानाच्च राजेंद्र न भूयः स्तनपो भवेत् ।।

श्रीस्थले दर्शनं कृत्वा नरः पापात्प्रमुच्यते ।। २२ ।।

सर्वदुःखविनाशे च विष्णुलोके महीयते ।।

काश्यपीं स्पर्शयेद्यो गां मानवो भुवि राघव ।। ।। २३ ।।

सर्वकामदुघावासमृषिलोकं स गच्छति ।।

उज्जयिन्यां तु वैशाखे शिप्रायां स्नानमाचरेत् ।। २४ ।।

मोचयेद्रौरवाद्धोरात्पूर्वजांश्च सहस्रशः ।।

सिंधुस्नानं नरो राम प्रकरोति दिनत्रयम् ।। २५ ।।

सर्वपापविशुद्धात्मा कैलासे मोदते नरः ।।

कोटितीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरं शिवम् ।। २६ ।।

ब्रह्महत्यादिभिः पापैर्लिप्यते न च स क्वचित् ।।

अज्ञानामपि जंतूनां महाऽमेध्ये तु गच्छताम् ।। ।। २७ ।।

पादोद्भूतं पयः पीत्वा सर्वपापं प्रणश्यति ।।

वेदवत्यां नरो यस्तु स्नाति सूर्योदये शुभे ।। २८ ।।

सर्वरोगात्प्रमुच्येत परं सुखमवाप्नुयात् ।।

तीर्थानि राम सर्वत्र स्नानपानावगाहनैः ।। २९ ।।

नाशयंति मनुष्याणां सर्वपापानि लीलया ।।

तीर्थानां परमं तीर्थं धर्मारण्यं प्रचक्षते ।। 3.2.31.३० ।।

ब्रह्मविष्णुशिवाद्यैर्यदादौ संस्थापितं पुरा ।।

अरण्यानां च सर्वेषां तीर्थानां च विशेषतः ।। ३१ ।।

धर्मारण्यात्परं नास्ति भुक्तिमुक्तिप्रदायकम् ।।

स्वर्गे देवाः प्रशंसंति धर्मारण्यनिवासिनः ।। ३२ ।।

ते पुण्यास्ते पुण्यकृतो ये वसंति कलौ नराः ।।

धर्मारण्ये रामदेव सर्वकिल्बिषनाशने ।। ३३ ।।

ब्रह्महत्यादिपापानि सर्वस्तेयकृतानि च ।।

परदारप्रसंगादि अभक्ष्यभक्षणादि वै ।। ३४ ।।

अगम्यागमना यानि अस्पर्शस्पर्शनादि च ।।

भस्मीभवंति लोकानां धर्मारण्यावगाहनात् ।। ३५ ।।

ब्रह्मघ्नश्च कृतघ्नश्च बालघ्नोऽनृतभाषणः ।।

स्त्रीगोघ्नश्चैव ग्रामघ्नो धर्मारण्ये विमुच्यते ।। ३६ ।।

नातः परं पावनं हि पापिनां प्राणिनां भुवि ।।

स्वर्ग्यं यशस्यमायुष्यं वांछितार्थप्रदं शुभम् ।। ३७ ।।

कामिनां कामदं क्षेत्रं यतीनां मुक्तिदायकम् ।।

सिद्धानां सिद्धिदं प्रोक्तं धर्मारण्यं युगेयुगे ।। ३८ ।।

।। ब्रह्मोवाच ।। ।।

वसिष्ठवचनं श्रुत्वा रामो धर्मभृतां वरः ।।

परं हर्षमनुप्राप्य हृदयानंदकारकम् ।। ३९ ।।

प्रोत्फुल्लहृदयो रामो रोमाचिंततनूरुहः ।।

गमनाय मतिं चक्रे धर्मारण्ये शुभव्रतः ।। ।। 3.2.31.४० ।।

यस्मिन्कीटपतंगादिमानुषाः पशवस्तथा ।।

त्रिरात्रसेवनेनैव मुच्यन्ते सर्वपातकैः ।। ४१ ।।

कुशस्थली यथा काशी शूलपाणिश्च भैरवः ।।

यथा वै मुक्तिदो राम धर्मारण्यं तथोत्तमम् ।। ४२ ।।

ततो रामो महेष्वासो मुदा परमया युतः ।।

प्रस्थितस्तीर्थयात्रायां सीतया भ्रातृभिः सह ।। ४३ ।।

अनुजग्मुस्तदा रामं हनुमांश्च कपीश्वरः ।।

कौशल्या च सुमित्रा च कैकेयी च मुदान्विता ।। ४४ ।।

लक्ष्मणो लक्षणोपेतो भरतश्च महामतिः ।।

शत्रुघ्नः सैन्यसहितोप्ययोध्यावासिनस्तथा ।। ४५ ।।

प्रकृतयो नरव्याघ्र धर्मारण्ये विनिर्ययुः ।।

अनुजग्मुस्तदा रामं मुदा परमया युताः ।। ४६ ।।

तीर्थयात्राविधिं कर्तुं गृहात्प्रचलितो नृपः ।।

वसिष्ठं स्वकुलाचार्यमिदमाह महीपते ।। ४७ ।।

।। श्रीराम उवाच ।। ।।

एतदाश्चर्यमतुलं किमादि द्वारकाभवत् ।।

कियत्कालसमुत्पन्ना वसिष्ठेदं वदस्व मे ।। ४८ ।।

।। वसिष्ठ उवाच ।। ।।

न जानामि महाराज कियत्कालादभूदिदम् ।।

लोमशो जांबवांश्चैव जानातीति च कारणम् ।। ४९ ।।

शरीरे यत्कृतं पापं नानाजन्मांतरेष्वपि ।।

प्रायश्चितं हि सर्वेषामेतत्क्षेत्र परं स्मृतम् ।। 3.2.31.५० ।।

श्रुत्वेति वचनं तस्य रामं ज्ञानवतां वरः ।।

गन्तुं कृतमतिस्तीर्थं यात्राविधिमथाचरत् ।। ५१ ।।

वसिष्ठं चाग्रतः कृत्वा महामांडलिकैर्नृपैः ।।

पुनश्चरविधिं कृत्वा प्रस्थितश्चोत्तरां दिशम् ।। ५२ ।।

वसिष्ठं चाग्रतः कृत्वा प्रतस्थे पश्चिमां दिशम् ।।

ग्रामाद्ग्राममतिक्रम्य देशाद्देशं वनाद्वनम् ।।५३।।

विमुच्य निर्ययौ रामः ससैन्यः सपरिच्छदः ।।

गजवाजिसहस्रौघै रथैर्यानैश्च कोटिभिः।। ।। ५४ ।।

शिबिकाभिश्चासंख्याभिः प्रययौ राघवस्तदा ।।

गजारूढः प्रपश्यंश्च देशान्विविधसौहृदान् ।। ५५ ।।

श्वेतातपत्रं विधृत्य चामरेण शुभेन च ।।

वीजितश्च जनौघेन रामस्तत्र समभ्यगात् ।। ५६ ।।

वादित्राणां स्वनैघोरैर्नृत्यगीतपुरःसरैः ।।

स्तूयमानोपि सूतैश्च ययौ रामो मुदान्वितः ।। ५७ ।।

दशमेऽहनि संप्राप्तं धर्मारण्यमनुत्तमम् ।।

अदूरे हि ततो रामो दृष्ट्वा मांडलिकं पुरम् ।। ५८ ।।

तत्र स्थित्वा ससैन्यस्तु उवास निशि तां पुरीम् ।।

श्रुत्वा तु निर्जनं क्षेत्रमुद्वसं च भयानकम् ।। ५९ ।।

व्याघ्रसिंहाकुलं तत्र यक्षराक्षससेवितम् ।।

श्रुत्वा जनमुखाद्रामो धर्मारण्यमरण्यकम् ।।

तच्छ्रुत्वा रामदेवस्तु न चिंता क्रियतामिति ।। 3.2.31.६० ।।

तत्रस्थान्वणिजः शूरान्दक्षान्स्वव्यवसायके ।। ६१ ।।

समर्थान्हि महाकायान्महाबलपराक्रमान् ।।

समाहूय तदा काले वाक्यमेतदथाब्रवीत् ।। ६२ ।।

शिबिकां सुसुवर्णां मे शीघ्रं वाहयताचिरम् ।।

यथा क्षणेन चैकेन धर्मरण्यं व्रजाम्यहम् ।। ६३ ।।

तत्र स्नात्वा च पीत्वा च सर्वपापात्प्रमुच्यते ।।

एवं ते वणिजः सर्वै रामेण प्रेरितास्तदा ।। ६४ ।।

तथेत्युक्त्वा च ते सर्वे ऊहुस्तच्छिबिकां तदा ।।

क्षेत्रमध्ये यदा रामः प्रविष्टः सहसैनिकः ।। ।। ६५ ।।

तद्यानस्य गतिर्मंदा संजाता किल भारत ।।

मंदशब्दानि वाद्यानि मातंगा मंदगामिनः ।। ६६ ।।

हयाश्च तादृशा जाता रामो विस्मय मागतः ।।

गुरुं पप्रच्छ विनयाद्वशिष्ठं मुनिपुंगवम् ।। ६७ ।।

किमेतन्मंदगतयश्चित्रं हृदि मुनीश्वर ।।

त्रिकालज्ञो मुनिः प्राह धर्मक्षेत्रमुपागतम् ।। ।। ६८ ।।

तीर्थे पुरातने राम पादचारेण गम्यते ।।

एवं कृते ततः पश्चात्सैन्यसौख्यं भविष्यति ।। ६९ ।।

पादचारी ततौ रामः सैन्येन सह संयुतः ।।

मधुवासनके ग्रामे प्राप्तः परमभावनः ।। 3.2.31.७० ।।

गुरुणा चोक्तमार्गेण मातृणां पूजनं कृतम् ।।

नानोपहारैर्विविधैः प्रतिष्ठाविधिपूर्वकम् ।। ७३ ।।

ततो रामो हरिक्षेत्रं सुवर्णादक्षिणे तटे ।।

निरीक्ष्य यज्ञयोग्याश्च भूमीर्वै बहुशस्तथा ।। ७२ ।।

कृतकृत्यं तदात्मानं मेने रामो रघूद्वहः ।।

धर्मस्थानं निरीक्ष्याथ सुवर्णाक्षोत्तरे तटे ।। ७३ ।।

सैन्यसंघं समुत्तीर्य्य बभ्राम क्षेत्रमध्यतः ।।

तत्र तीर्थेषु सर्वेषु देवतायतनेषु च ।।७४।।

यथोक्तानि च कर्माणि रामश्चक्रे विधानतः ।।

श्राद्धानि विधिवच्चक्रे श्रद्धया परया युतः ।। ७५ ।।

स्थापयामास रामेशं तथा कामेश्वरं पुनः ।।

स्थानाद्वायुप्रदेशे तु सुवर्णो भयतस्तटे ।। ७६ ।।

कृत्वैवं कृतकृत्योऽभूद्रामो दशरथात्मजः ।।

कृत्वा सर्वविधिं चैव सभायां समुपाविशत् ।। ७७ ।।

तां निशां स नदीतीरे सुष्वाप रघुनंदनः ।।

ततोऽर्द्धरात्रे संजाते रामो राजीवलोचनः ।। ७८ ।।

जागृतस्तु तदा काल एकाकी धर्मवत्सलः ।।

अश्रौषीच्च क्षणे तस्मिन्रामो नारीविरोदनम् ।। ७९ ।।

निशायां करुणैर्वाक्यै रुदंतीं कुररीमिव ।।

चारैर्विलोकयामास रामस्तामतिसंभ्रमात् ।। 3.2.31.८० ।।

दृष्ट्वातिविह्वलां नारीं क्रंदन्तीं करुणैः स्वरैः ।।

पृष्टा सा दुःखिता नारी रामदूतैस्तदानघ ।। ८१ ।।

।। दूता ऊचुः ।। ।।

कासि त्वं सुभगे नारि देवी वा दानवी नु किम् ।।

केन वा त्रासितासि त्वं मुष्टं केन धनं तव ।।८२।।

विकला दारुणाञ्छब्दानुद्गिरंती मुहुर्मुहुः ।।

कथयस्व यथातथ्यं रामो राजाभिपृच्छति।। ।। ८३ ।।

तयोक्तं स्वामिनं दूताः प्रेषयध्वं ममांतिकम् ।।

यथाहं मानसं दुःखं शांत्यै तस्मै निवेदये ।। ८४ ।।

तथेत्युक्त्वा ततो दूता राममागत्य चाब्रुवन् ।। ८५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये दूतागमनंनामैकत्रिंशो ऽध्यायः ।। ३१ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३२



।। व्यास उवाच ।। ।।

ततश्च रामदूतास्ते नत्वा राममथाब्रुवन् ।।

रामराम महाबाहो वरनारी शुभानना ।। १ ।।

सुवस्त्रभूषाभरणां मृदुवाक्यपरायणाम् ।।

एकाकिनीं क्रदमानाम दृष्ट्वा तां विस्मिता वयम् ।। २ ।।

समीपवर्तिनो भूत्वा पृष्टा सा सुरसुन्दरी ।।

का त्वं देवि वरारोहे देवी वा दानवी नु किम् ।। ३ ।।

रामः पृच्छति देवि त्वां ब्रूहि सर्वं यथातथम् ।।

तच्छ्रुत्वा वचनं रामा सोवाच मधुरं वचः ।। ४ ।।

रामं प्रेषयत भद्रं वो मम दुःखापहं परम् ।। ५ ।।

तदाकर्ण्य ततो रामः संभ्रमात्त्वरितो ययौ ।।

दृष्ट्वा तां दुःखसंतप्तां स्वयं दुःखमवाप सः ।।

उवाच वचनं रामः कृतांजलिपुटस्तदा ।। ६ ।।

।। श्रीराम उवाच ।। ।।

का त्वं शुभे कस्य परिग्रहो वा केनावधूता विजने निरस्ता ।।

मुष्टं धनं केन च तावकीनमाचक्ष्व मातः सकलं ममाग्रे ।। ७ ।।

इत्युक्त्वा चातिदुःखार्तो रामो मतिमतां वरः ।।

प्रणामं दंडवच्चक्रे चक्रपाणिरिवापरः ।।८।।

तयाभिवंदितो रामः प्रगम्य च पुनःपुनः ।।

तुष्टया परया प्रीत्या स्तुतो मधुरया गिरा ।। ९ ।।

परमात्मन्परेशान दुःखहारिन्सनातन ।।

यदर्थमवतारस्ते तच्च कार्यं त्वया कृतम् ।। 3.2.32.१० ।।

रावणः कुम्भकर्णश्च शक्रजित्प्रमुखास्तथा ।।

खरदूषणत्रिशिरोमारीचाक्षकुमारकाः ।। ११ ।।

असंख्या निर्जिता रौद्रा राक्षसाः समरांगणे ।। १२ ।।

किं वच्मि लोकेश सुकीर्त्तिमद्य ते वेधास्त्वदीयांगजपद्मसंभवः ।।

विश्वं निविष्टं च ततो ददर्श वटस्य पत्रे हि यथो वटो मतः ।। १३ ।।

धन्यो दशरथो लोके कौशल्या जननी तव ।।

ययोर्जातोसि गोविंद जगदीश परः पुमान् ।। १४ ।।

धन्यं च तत्कुलं राम यत्र त्वमागतः स्वयम् ।।

धन्याऽयोध्यापुरी राम धन्यो लोकस्त्वदाश्रयः ।। १५ ।।

धन्यः सोऽपि हि वाल्मीकिर्येन रामायणं कृतम् ।।

कविना विप्रमुख्येभ्य आत्मबुद्ध्या ह्यनागतम् ।। १६ ।।

त्वत्तोऽभवत्कुलं चेदं त्वया देव सुपावितम् ।।१७।।

नरपतिरिति लोकैः स्मर्यते वैष्णवांशः स्वयमसि रमणीयैस्त्वं गुणैर्विष्णुरेव ।।

किमपि भुवनकार्यं यद्विचिंत्यावतीर्य तदिह घटयतस्ते वत्स निर्विघ्नमस्तु ।।१८।।

स्तुत्वा वाचाथ रामं हि त्वयि नाथे नु सांप्रतम् ।।

शून्या वर्ते चिरं कालं यथा दोषस्तथैव हि ।। १९ ।।

धर्मारण्यस्य क्षेत्रस्य विद्धि मामधिदेवताम् ।।

वर्षाणि द्वादशैहैव जातानि दुःखि तास्म्यहम् ।। 3.2.32.२० ।।

निर्जनत्वं ममाद्य त्वमुद्धरस्व महामते ।।

लोहासुरभयाद्राम विप्राः सर्वे दिशो दश ।। २१ ।।

गताश्च वणिजः सर्वे यथास्थानं सुदुःखिताः ।।

स दैत्यो घातितो राम देवैः सुरभयंकरः ।। २२ ।।

आक्रम्यात्र महामायो दुराधर्षो दुरत्ययः ।।

न ते जनाः समायांति तद्भयादति शंकिताः ।। २३ ।।

अद्य वै द्वादश समाः शून्यागारमनाथवत् ।।

यस्माच्च दीर्घिकायां मे स्नानदानोद्यतो जनः ।। २४ ।।

राम तस्यां दीर्घिकायां निपतंति च शूकराः ।।

यत्रांगना भर्तृयुता जलक्रीडापरायणाः ।। २५ ।।

चिक्रीडुस्तत्र महिषा निपतंति जलाशये ।।

यत्र स्थाने सुपुष्पाणां प्रकरः प्रचुरोऽभवत् ।। २६ ।।

तद्रुद्धं कंटकैर्वृक्षैः सिंहव्याघ्रसमाकुलैः ।।

संचिक्रीडुः कुमाराश्च यस्यां भूमौ निरंतरम् ।।२७।।

कुमार्यश्चित्रकाणां च तत्र क्रीडं ति हर्षिताः ।।

अकुर्वन्वाडवा यत्र वेदगानं तिरंतरम् ।।२८।।

शिवानां तत्र फेत्काराः श्रूयंतेऽतिभयंकराः ।।

यत्र धूमोऽग्निहोत्राणां दृश्यते वै गृहेगृहे ।। २९ ।।

तत्र दावाः सधूमाश्च दृश्यंतेऽत्युल्बणा भृशम् ।।

नृत्यंते नर्त्तका यत्र हर्षिता हि द्विजाग्रतः ।। 3.2.32.३० ।।

तत्रैव भूतवेताला प्रेताः नृत्यंति मोहिताः ।।

नृपा यत्र सभायां तु न्यषीदन्मंत्रतत्पराः ।। ३१ ।।

तस्मिन्स्थाने निषीदंति गवया ऋक्षशल्लकाः ।।

आवासा यत्र दृश्यन्ते द्विजानां वणिजां तथा ।।३२।।

कुट्टिमप्रतिमा राम दृश्यंतेत्र बिलानि वै ।।

कोटराणीह वृक्षाणां गवाक्षाणीह सर्वतः ।। ३३ ।।

चतुष्का यज्ञवेदिर्हि सोच्छ्राया ह्यभवत्पुरा ।।

तेऽत्र वल्मीकनिचयैर्दृश्यंते परिवेष्टिताः ।। ३४ ।।

एवंविधं निवासं मे विद्धि राम नृपोत्तम ।।

शून्यं तु सर्वतो यस्मान्निवासाय द्विजा गताः ।। ३५ ।।

तेन मे सुमहद्दुःखं तस्मात्त्राहि नरेश्वर ।।

एतच्छ्रुत्वा वचो राम उवाच वदतां वरः ।। ३६ ।।

।। श्रीराम उवाच ।। ।।

न जाने तावकान्विप्रांश्चतुर्दिक्षु समाश्रितान् ।।

न तेषां वेद्म्यहं संख्यां नामगोत्रे द्विजन्मनाम् ।। ३७ ।।

यथा ज्ञातिर्यथा गोत्रं याथातथ्यं निवेदय ।।

तत आनीय तान्सर्वान्स्वस्थाने वासयाम्यहम् ।। ३८ ।।

।। श्रीमातोवाच ।। ।।

ब्रह्मविष्णुमहेशैश्च स्थापिता ये नरेश्वर ।।

अष्टादश सहस्राणि ब्राह्मणा वेदपारगाः ।। ३९ ।।

त्रयीविद्यासु विख्याता लोकेऽस्मिन्नमितद्युते ।।
चतुष्षष्टिकगोत्राणां वाडवा ये प्रतिष्ठिताः ।। ।। ३.२.३२.४० ।।
श्रीमातादात्त्रयीविद्यां लोके सर्वे द्विजोत्तमाः ।।
षट्त्रिंशच्च सहस्राणि वैश्या धर्मपरायणाः ।। ४१ ।।
आर्यवृत्तास्तु विज्ञेया द्विजशुश्रूषणे रताः ।।
बहुलार्को नृपो यत्र संज्ञया सह राजते ।। ४२ ।।
कुमारावश्विनौ देवौ धनदो व्ययपूरकः ।।
अधिष्ठात्री त्वहं राम नाम्ना भट्टारिका स्मृता ।। ४३ ।।
।। श्रीसूत उवाच ।। ।।
स्थानाचाराश्च ये केचित्कुलाचारास्तथैव च ।।
श्रीमात्रा कथितं सर्वं रामस्याग्रे पुरातनम् ।। ४४ ।।
तस्यास्तु वचनं श्रुत्वा रामो मुदमवाप ह ।।
सत्यंसत्यं पुनः सत्यं सत्यं हि भाषितं त्वया ।। ४५ ।।
यस्मात्सत्यं त्वया प्रोक्तं तन्नाम्ना नगरं शुभम् ।।
वासयामि जगन्मातः सत्यमंदिरमेव च ।। ४६ ।।
त्रैलोक्ये ख्यातिमाप्नोतु सत्यमंदिरमु त्तमम् ।। ४७ ।।
एतदुक्त्वा ततो रामः सहस्रशतसंख्यया ।।
स्वभृत्यान्प्रेषयामास विप्रानयनहेतवे ।। ४८ ।।
यस्मिन्देशे प्रदेशे वा वने वा सरि तस्तटे ।।
पर्यंते वा यथास्थाने ग्रामे वा तत्रतत्र च ।। ४९ ।।
धर्मारण्यनिवासाश्च याता यत्र द्विजोत्तमाः ।।
अर्घपाद्यैः पूजयित्वा शीघ्रमानयतात्र तान् ।। ३.२.३२.५० ।।
अहमत्र तदा भोक्ष्ये यदा द्रक्ष्ये द्विजोत्तमान् ।। ५१ ।।
विमान्य च द्विजानेतानागमिष्यति यो नरः ।।
स मे वध्यश्च दंड्यश्च निर्वास्यो विषयाद्बहिः ।। ५२ ।।
तच्छ्रुत्वा दारुणं वाक्यं दुःसहं दुःप्रधर्षणम् ।।
रामाज्ञाकारिणो दूता गताः सर्वे दिशो दश ।। ५३ ।।
शोधिता वाडवाः सर्वे लब्धाः सर्वे सुहर्षिताः ।।

यथोक्तेन विधानेन अर्घपाद्यैरपूजयन् ।। ५४ ।।

स्तुतिं चक्रुश्च विधिवद्विनयाचारपूर्वकम् ।।

आमंत्र्य च द्विजान्सर्वान्रामवाक्यं प्रकाशयन् ।। ५५ ।।

ततस्ते वाडवाः सर्वे द्विजाः सेवकसंयुताः ।।

गमनायोद्यताः सर्वे वेदशास्त्रपरायणाः ।। ५६ ।।

आगता रामपार्श्वं च बहुमानपुरःसराः ।।

समागतान्द्विजान्दृष्ट्वा रोमांचिततनूरुहः ।। ५७ ।।

कृतकृत्यमिवात्मानं मेने दाशरथिर्नृपः ।।

स संभ्रमात्समुत्थाय पदातिः प्रययौ पुरः ।। ५८ ।।

करसंपुटकं कृत्वा हर्षाश्रु प्रतिमुञ्चयन् ।।

जानुभ्यामवनिं गत्वा इदं वचनमब्रवीत् ।। ५९ ।।

विप्रप्रसादात्कमलावरोऽहं विप्रप्रसादाद्धरणीधरोऽहम् ।।

विप्रप्रसादाज्जगतीपतिश्च विप्रप्रसादान्मम रामनाम ।। 3.2.32.६० ।।

इत्येवमुक्ता रामेण वाड वास्ते प्रहर्षिताः ।।

जयाशीर्भिः प्रपूज्याथ दीर्घायुरिति चाब्रुवन् ।। ६१ ।।

आवर्जितास्ते रामेण पाद्यार्घ्यविष्टरादिभिः ।।

स्तुतिं चकार विप्राणां दण्डवत्प्रणिपत्य च ।। ६२ ।।

कृतांजलिपुटः स्थित्वा चक्रे पादाभिवंदनम् ।।

आसनानि विचित्राणि हैमान्याभरणानि च ।। ६३ ।।

समर्पयामास ततो रामो दशरथात्मजः ।।

अंगुलीयकवासांसि उपवीतानि कर्णकान् ।। ६४ ।।

प्रददौ विप्रमुख्येभ्यो नानावर्णाश्च धेनवः ।।

एकैकशत संख्याका घटोध्नीश्च सवत्सकाः ।। ६५ ।।

सवस्त्रा बद्धघंटाश्च हेमशृंगविभूषिताः ।।

रूप्यखुरास्ताम्रपृष्ठीः कांस्यपात्रसमन्विताः ।। ६६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां। संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ब्रह्मनारदसंवादे सत्यमंदिरस्थापन वर्णनोनाम द्वात्रिंशोऽध्यायः ।। ३२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३३



।। राम उवाच ।। ।।

जीर्णोद्धारं करिष्यामि श्रीमातुर्वचनादहम् ।।

आज्ञा प्रदीयतां मह्यं यथादानं ददामि वः ।। १ ।।

पात्रे दानं प्रदातव्यं कृत्वा यज्ञवरं द्विजाः ।।

नापात्रे दीयते किंचिद्दत्तं न तु सुखावहम् ।। २ ।।

सुपात्रं नौरिव सदा तारयेदुभयोरपि ।।

लोहपिंडोपमं ज्ञेयं कुपात्रं भञ्जनात्मकम् ।। ३ ।।

जातिमात्रेण विप्रत्वं जायते न हि भो द्विजाः ।।

क्रिया बलवती लोके क्रियाहीने कुतः फलम् ।। ४ ।।

पूज्यास्तस्मात्पूज्यतमा ब्राह्मणाः सत्यवादिनः ।।

यज्ञकार्ये समुत्पन्ने कृपां कुर्वंतु सर्वदा ।। ५ ।।

।। ब्रह्मोवाच ।। ।।

ततस्तु मिलिताः सर्वे विमृश्य च परस्परम् ।।

केचिदूचुस्तदा रामं वयं शिलोंछजीविकाः ।। ६ ।।

संतोषं परमास्थाय स्थिता धर्मपरायणाः ।।

प्रतिग्रहप्रयोगेण न चास्माकं प्रयोजनम् ।। ७ ।।

दशसूनासमश्चक्री दशचक्रिसमो ध्वजः ।।

दशध्वजसमा वेश्या दशवेश्यासमो नृपः ।। ८ ।।

राजप्रतिग्रहो घोरो राम सत्यं न संशयः ।।

तस्माद्वयं न चेच्छामः प्रतिग्रहं भया वहम् ।। ९ ।।

एकाहिका द्विजाः केचित्केचित्स्वामृतवृत्तयः ।।

कुम्भीधान्या द्विजाः केचित्केचित्षट्कर्मतत्पराः ।। 3.2.33.१० ।।

त्रिमूर्तिस्थापिताः सर्वे पृथग्भावाः पृथग्गुणाः ।।

केचिदेवं वदंति स्म त्रिमूर्त्याज्ञां विना वयम् ।। ११ ।।

प्रतिग्रहस्य स्वीकारं कथं कुर्याम ह द्विजाः ।।
न तांबूलं स्त्रीकृतं नो ह्यद्मो दानेन भषितम् ।। १२ ।।
विमृश्य स तदा रामो वसिष्ठेन महात्मना ।।
ब्रह्मविष्णुशिवादीनां सस्मार गुरुणा सह ।।
स्मृतमात्रास्ततो देवास्तं देशं समुपागमन्।।
सूर्यकोटिप्रतीकाशीवमानावलिसंवृताः ।। १४ ।।
रामेण ते यथान्यायं पूजिताः परया मुदा ।। १३ ।।
निवेदितं तु तत्सर्वं रामेणातिसुबुद्धिना ।। १५ ।।
अधिदेव्या वचनतो जीर्णोद्धारं करोम्यहम् ।।
धर्मारण्ये हरिक्षेत्रे धर्मकूपसमीपतः ।। १६ ।।
ततस्ते वाडवाः सर्वे त्रिमूर्त्तीः प्रणिपत्य च ।।
महता हर्षवृंदेन पूर्णाः प्राप्तमनोरथाः ।। १७ ।।
अर्घ्यपाद्यादिविधिना श्रद्धया तानपूजयन् ।।
क्षणं विश्रम्य ते देवा ब्रह्मविष्णुशिवादयः ।। १८ ।।
ऊचू रामं महाशक्तिं विनयात्कृतसंपुटम् ।। १९ ।।
।। देवा ऊचुः ।। ।।
देवद्रुहस्त्वया राम ये हता रावणादयः ।।
तेन तुष्टा वयं सर्वे भानुवंशविभूषण ।। 3.2.33.२० ।।
उद्धरस्व महास्थानं महतीं कीर्तिमाप्नुहि ।। २१ ।।
लब्ध्वा स तेषामाज्ञां तु प्रीतो दशरथात्मजः ।।
जीर्णोद्धारेऽनंतगुणं फलमिच्छन्निलापतिः ।। २२ ।।
देवानां संनिधौ तेषां कार्यारंभमथाकरोत् ।।
स्थंडिलं पूर्वतः कृत्वा महागिरि समं शुभम्।।२३।।
तस्योपरि बहिःशाला गृहशाला ह्यनेकशः ।।
ब्रह्मशालाश्च बहुशो निर्ममे शोभनाकृतीः ।।२४।।
निधानैश्च समायुक्ता गृहोपकरणै र्वृताः ।।
सुवर्णकोटिसंपूर्णा रसवस्त्रादिपूरिताः ।। २५ ।।
धनधान्यसमृद्धाश्च सर्वधातुयुतास्तथा ।।

एतत्सर्वं कारयित्वा ब्राह्मणेभ्यस्तदा ददौ ।।२६।।

एकैकशो दशदश ददौ धेनूः पयस्विनीः ।।

चत्वारिंशच्छतं प्रादाद्ग्रामाणां चतुराधिकम् ।। २७ ।।

त्रैविद्यद्विजविप्रेभ्यो रामो दशरथात्मजः ।।

काजेशेन त्रयेणैव स्थापिता द्विजसत्तमाः ।। २८ ।।

तस्मात्त्रयीविद्य इति ख्यातिर्लोके बभूव ह ।।

एवंविधं द्विजेभ्यः स दत्त्वा दानं महाद्भुतम् ।। ।। २९ ।।

आत्मानं चापि मेने स कृतकृत्यं नरेश्वरः ।।

ब्रह्मणा स्थापिताः पूर्वं विष्णुना शंकरेण ये ।। 3.2.33.३० ।।

ते पूजिता राघवेण जीर्णोद्धारे कृते सति ।।

षट्त्रिंशच्च सहस्राणि गोभुजा ये वणिग्वराः ।। ३१ ।।

शुश्रूषार्थं प्रदत्ता वै देवैर्हरिहरादिभिः।।

संतुष्टेन तु शर्वेण तेभ्यो दत्तं तु चेत नम्।। ३२ ।।

श्वेताश्वचामरौ दत्तौ खङ्गं दत्तं सुनिर्मलम् ।।

तदा प्रबोधितास्ते च द्विजशुश्रूषणाय वै ।। ३३ ।।

विवाहादौ सदा भाव्यं चामरै मंगलं वरम् ।।

खङ्गं शुभं तदा धार्य्यं मम चिह्नं करे स्थितम् ।। ३४ ।।

गुरुपूजा सदा कार्या कुलदेव्याः पुनःपुनः ।।

वृद्ध्यागमेषु प्राप्तेषु वृद्धि दायकदक्षिणा ।। ३५ ।।

एकादश्यां शनेर्वारे दानं देयं द्विजन्मने ।।

प्रदेयं बालवृद्धेभ्यो मम रामस्य शासनात् ।। ३६ ।।

मंडलेषु च ये शुद्धा वणिग्वृत्तिरताः पराः ।।

सपादलक्षास्ते दत्ता रामशासनपालकाः ।। ३७ ।।

मांडलीकास्तु ते ज्ञेया राजानो मंडलेश्वराः ।।

द्विज शुश्रूषणे दत्ता रामेण वणिजां वराः ।। ३८ ।।

चामरद्वितयं रामो दत्तवान्खड्गमेव च ।।

कुलस्य स्वामिनं सूर्यं प्रतिष्ठाविधिपूर्वकम् ।। ।। ३९ ।।

ब्रह्माणं स्थापयामास चतुर्वेदसमन्वितम् ।।

श्रीमातरं महाशक्तिं शून्यस्वामिहरिं तथा ।। ३.२.३३.४० ।।

विघ्नापध्वंसनार्थाय दक्षिणद्वारसंस्थितम् ।।

गणं संस्थापयामास तथान्याश्चैव देवताः ।। ४१ ।।

कारितास्तेन वीरेण प्रासादाः सप्तभूमिकाः ।।

यत्किं चित्कुरुते कार्यं शुभं मांगल्यरूपकम् ।। ४२ ।।

पुत्रे जाते जातके वान्नाशने मुंडनेऽपि वा ।।

लक्षहोमे कोटिहोमे तथा यज्ञक्रियासु च ।। ४३ ।।

वास्तुपूजाग्रहशांत्योः प्राप्ते चैव महोत्सवे ।।

यत्किंचित्कुरुते दानं द्रव्यं वा धान्यमुत्तमम् ।। ४४ ।।

वस्त्रं वा धेनवो नाथ हेम रूप्यं तथैव च ।।

विप्राणामथ शूद्राणां दीनानाथांधकेषु च ।। ४५ ।।

प्रथमं बकुलार्कस्य श्रीमातुश्चैव मानवः ।।

भागं दद्याच्च निर्विघ्नकार्यसिद्ध्यै निरन्तरम् ।। ४६ ।।

वचनं मे समुल्लंघ्य कुरुते योऽन्यथा नरः ।।

तस्य तत्कर्मणो विघ्नं भविष्यति न संशयः ।। ४७ ।।

एवमुक्त्वा ततो रामः प्रहृष्टेनांतरात्मना ।।

देवानामथ वापीश्च प्राकारांस्तु सुशोभनान् ।। ४८ ।।

दुर्गोपकरणैर्युक्तान्प्रतोलीश्च सुविस्तृताः ।।

निर्ममे चैव कुंडानि सरांसि सरसीस्तथा ।। ४९ ।।

धर्मवापीश्च कूपांश्च तथान्यान्देवनिर्मितान् ।।

एतत्सर्वं च विस्तार्य धर्मारण्ये मनोरमे ।। ३.२.३३.५० ।।

ददौ त्रैविद्यमुख्येभ्यः श्रद्धया परया पुनः ।।

ताम्रपट्टस्थितं रामशासनं लोपयेत्तु यः ।।५१।।

पूर्वजास्तस्य नरके पतंत्यग्रे न संततिः ।।

वायुपुत्रं समाहूय ततो रामोऽब्रवीद्वचः ।। ।। ५२ ।।

वायुपुत्र महावीर तव पूजा भविष्यति ।।

अस्य क्षेत्रस्य रक्षायै त्वमत्र स्थितिमाचर ।। ५३ ।।

आंजनेयस्तु तद्वाक्यं प्रणम्य शिरसादधौ ।।

जीर्णोद्धारं तदा कृत्वा कृतकृत्यो बभूव ह ।। ५४ ।।

श्रीमातरं तदाभ्यर्च्य प्रसन्नेनांतरात्मना ।।

श्रीमातरं नमस्कृत्य तीर्थान्यन्यानि राघवः ।।५५।।

तेऽपि देवाः स्वकं स्थानं ययुर्ब्रह्मपुरोगमाः ।।५६।।

दत्त्वाशिषं तु रामाय वांछितं ते भविष्यति ।।

रम्यं कृतं त्वया राम विप्राणां स्थापनादिकम् ।। ।। ५७ ।।

अस्माकमपि वात्सल्यं कृतं पुण्यवता त्वया ।।

इति स्तुवंतस्ते देवाः स्वानि स्थानानि भेजिरे ।। ५८ ।।

इति श्रीस्कान्दे महापुराण एका शीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वार्धे धर्मारण्यमाहात्म्ये श्रीरामचन्द्रस्य पुरप्रत्यागमनवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३४

https://sa.wikisource.org/s/fu7
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। ।। व्यास उवाच ।। ।।

एवं रामेण धर्मज्ञ जीर्णोद्धारः पुरा कृतः ।।

द्विजानां च हितार्थाय श्रीमातुर्वचनेन च ।। १ ।।

।। युधिष्ठिर उवाच ।। ।।

कीदृशं शासनं ब्रह्मन्रामेण लिखितं पुरा ।।

कथयस्व प्रसादेन त्रेतायां सत्यमंदिरे ।। २ ।।

।। व्यास उवाच ।। ।।

धर्मारण्ये वरे दिव्ये बकुलार्के स्वधिष्ठिते ।।

शून्यस्वामिनि विप्रेंद्र स्थिते नारायणे प्रभौ ।। ३ ।।

रक्षणाधिपतौ देवे सर्वज्ञे गुणनायके ।।

भवसागर मग्नानां तारिणी यत्र योगिनी ।। ४ ।।

शासनं तत्र रामस्य राघवस्य च नामतः ।।

शृणु ताम्राश्रयं तत्र लिखितं धर्मशास्त्रतः ।। ५ ।।

महाश्चर्यकरं तच्च ह्यनेकयुगसंस्थितम्।।

सर्वो धातुः क्षयं याति सुवर्णं क्षयमेति च ।। ६ ।।

प्रत्यक्षं दृश्यते पुत्र द्विजशासनमक्षयम् ।।

अविनाशो हि ताम्रस्य कारणं तत्र विद्यते ।। ७ ।।

वेदोक्तं सकलं यस्माद्विष्णुरेव हि कथ्यते ।।

पुराणेषु च वेदेषु धर्मशास्त्रेषु भारत ।। ८ ।।

सर्वत्र गीयते विष्णुर्नाना भावसमाश्रयः ।।

नानादेशेषु धर्मेषु नानाधर्मनिषेविभिः ।। ९ ।।

नानाभेदैस्तु सर्वत्र विष्णुरेवेति चिंत्यते ।।

अवतीर्णः स वै साक्षात्पुराणपुरुषो त्तमः ।। 3.2.34.१० ।।

देववैरिविनाशाय धर्मसंरक्षणाय च ।।

तेनेदं शासनं दत्तमविनाशात्मकं सुत ।। ११ ।।

यस्य प्रतापाद्दृषद(य)स्तारिता जलमध्यतः ।।

वानरैर्वेष्टिता लंका हेलया राक्षसा हताः ।। १२ ।।

मुनिपुत्रं मृतं रामो यमलोकादुपानयत् ।।

दुंदुभिर्निहतो येन कबंधोऽभिहतस्तथा ।। १३ ।।

निहता ताडका चैव सप्तताला विभेदिताः ।।

खरश्च दूषणश्चैव त्रिशिराश्च महासुरः ।। १४ ।।

चतुर्दशसहस्राणि जवेन निहता रणे ।।

तेनेदं शासनं दत्तमक्षयं न कथं भवेत् ।। १५ ।।

स्ववंशवर्णनं तत्र लिखित्वा स्वयमेव तु ।।

देशकालादिकं सर्वं लिलेख विधिपूर्वकम् ।। १६ ।।

स्वमुद्राचिह्नितं तत्र त्रैविद्येभ्यस्तथा ददौ।।

चतुश्चत्वारिंशवर्षो रामो दशरथात्मजः ।। १७ ।।

तस्मिन्काले महाश्चर्यं संदत्तं किल भारत।।

तत्र स्वर्णोपमं चापि रौप्योपमम थापि च ।। १८ ।।

उवाह सलिलं तीर्थे देवर्षिपितृतृप्तिदम् ।।

स्ववंशनायकस्याग्रे सूर्येण कृतमेव तत् ।। १९ ।।

तद्दृष्ट्वा महदाश्चर्यं रामो विष्णुं प्रपूज्य च ।।

रामलेखविचित्रैस्तु लिखितं धर्मशासनम् ।। 3.2.34.२० ।।

यद्दृष्ट्वाथ द्विजाः सर्वे संसारभयबंधनम् ।।

कुर्वते नैव यस्माच्च तस्मान्निखिलरक्षकम् ।। ।। २१ ।।

ये पापिष्ठा दुराचारा मित्रद्रोहरताश्च ये ।।

तेषां प्रबोधनार्थाय प्रसिद्धिमकरोत्पुरा ।। २२ ।।

रामलेखविचित्रैस्तु विचित्रे ताम्रपट्टके ।।

वाक्यानीमानि श्रूयंते शासने किल नारद ।। २३ ।।

आस्फोटयंति पितरः कथयंति पितामहाः ।।

भूमिदोऽस्मत्कुले जातः सोऽस्मान्संतारयिष्यति ।। २४ ।।

बहुभिर्बहुधा भुक्ता राजभिः पृथिवी त्वियम् ।।

यस्ययस्य यदा भूमिस्तस्यतस्य तदा फलम् ।। २५ ।।

षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः ।।

आच्छेत्ता चानुमंता च तान्येव नरकं व्रजेत् ।। २६ ।।

संदंशैस्तुद्यमानस्तु मुद्गरैर्विनिहत्य च ।।

पाशैः सुबध्यमानस्तु रोरवीति महास्वरम् ।। २७ ।।

ताड्यमानः शिरे दंडैः समालिंग्य विभावसुम् ।।

क्षुरिकया छिद्यमानो रोरवीति महास्वनम् ।। २८ ।।

यमदूतैर्महाघोरैर्ब्रह्मवृत्तिविलोपकः ।।

एवंविधैर्महादुष्टैः पीड्यंते ते महागणैः ।। २९ ।।

ततस्तिर्यक्त्वमाप्नोति योनिं वा राक्षसीं शुनीम् ।।

व्यालीं शृगालीं पैशाचीं महाभूतभयंकरीम् ।। 3.2.34.३० ।।

भूमेरंगुलहर्ता हि स कथं पापमाचरेत् ।।

भूमेरंगुलदाता च स कथं पुण्यमाचरेत् ।। ३१ ।।

अश्वमेधसहस्राणां राजसूयशतस्य च ।।

कन्याशतप्रदानस्य फलं प्राप्नोति भूमिदः ।। ३२ ।।

आयुर्यशः सुखं प्रज्ञा धर्मो धान्यं धनं जयः ।।

संतानं वर्द्धते नित्यं भूमिदः सुखमश्नुते ।। ३३ ।।

भूमेरंगुलमेकं तु ये हरंति खला नराः ।।

वंध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।।

कृष्णसर्पाः प्रजायंते दत्तदायापहारकाः ।। ३४ ।।

तडागानां सहस्रेण अश्वमेधशतेन वा ।।

गवां कोटिप्रदानेन भूमिहर्त्ता विशुध्यति ।। ३५ ।।

यानीह दत्तानि पुनर्धनानि दानानि धर्मार्थयशस्कराणि ।।

औदार्यतो विप्रनिवेदितानि को नाम साधुः पुनराददीत ।। ३६ ।।

चलदलदललीलाचंचले जीवलोके तृणलवलघुसारे सर्वसंसारसौख्ये ।।

अपहरति दुराशः शासनं ब्राह्मणानां नरकगहनगर्त्तावर्तपातोत्सुको यः ।।३७ ।।

ये पास्यंति महीभुजः क्षितिमिमां यास्यंति भुक्त्वाखिलां नो याता न तु याति यास्यति न वा केनापि सार्द्धं धरा।।

यत्किंचिद्भुवि तद्विनाशि सकलं कीर्तिः परं स्थायिनी त्वेवं वै वसुधापि यैरुपकृता लोप्या न सत्कीर्तयः ।। ३८ ।।

एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।।

न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा ।। ३९ ।।

दत्त्वा भूमिं भाविनः पार्थिवेशान्भूयोभूयो याचते रामचन्द्रः ।।

सामान्योऽयं धर्मसेतुर्नृपाणां स्वे स्वे काले पालनीयो भवद्भिः ।।3.2.34.४०।।

अस्मिन्वंशे क्षितौ कोपि राजा यदि भविष्यति ।।

तस्याहं करलग्नोस्मि मद्दत्तं यदि पाल्यते।।४१।।

लिखित्वा शासनं रामश्चातुर्वेद्यद्विजोत्तमान्।।

संपूज्य प्रददौ धीमान्वसिष्ठस्य च सन्निधौ।।४२।।

ते वाडवा गृहीत्वा तं पट्टं रामाज्ञया शुभम्।।

ताम्रं हैमाक्षरयुतं धर्म्यं धर्मविभूषणम्।।४३।।

पूजार्थं भक्तिकामार्थास्तद्रक्षणमकुर्वत।।

चंदनेन च दिव्येन पुष्पेण च सुगन्धिना।।४४।।

तथा सुवर्णपुष्पेण रूप्यपुष्पेण वा पुनः।।

अहन्यहनि पूजां ते कुर्वते वाडवाः शुभाम्।।४५।।

तदग्रे दीपकं चैव घृतेन विमलेन हि।।

सप्तवर्तियुतं राजन्नघर्य्यं प्रकुर्वते द्विजाः।।४६।।

नैवेद्यं कुर्वते नित्यं भक्तिपूर्वं द्विजोत्तमाः।।

रामरामेति रामेति मन्त्रमप्युच्चरंति हि।।४७।।

अशने शयने पाने गमने चोपवेशने ।।

सुखे वाप्यथवा दुःखे राममन्त्रं समुच्चरेत् ।। ४८ ।।

न तस्य दुःखदौर्भाग्यं नाधिव्याधिभयं भवेत् ।।

आयुः श्रियं बलं तस्य वर्द्धयंति दिने दिने ।। ४९ ।।

रामेति नाम्ना मुच्येत पापाद्वै दारुणादपि ।।

नरकं नहि गच्छेत गतिं प्राप्नोति शाश्वतीम् ।। 3.2.34.५० ।। ।।

।। व्यास उवाच ।। ।।

इति कृत्वा ततो रामः कृतकृत्यममन्यत ।।

प्रदक्षिणीकृत्य तदा प्रणम्य च द्विजान्बहून् ।। ५१ ।।

दत्त्वा दानं भूरितरं गवाश्वमहिषीरथम् ।।

ततः सर्वान्निजांस्तांश्च वाक्यमेतदुवाच ह ।। ५२ ।।

अत्रैव स्थीयतां सर्वैर्यावच्चंद्रदिवाकरौ ।।

यावन्मेरुर्महीपृष्ठे सागराः सप्त एव च ।। ५३ ।।

तावदत्रैव स्थातव्यं भवद्भिर्हि न संशयः ।।

यदा हि शासनं विप्रा न मन्यंते नृपा भुवि ।। ५४ ।।

अथवा वणिजः शूरा मदमायाविमोहिताः ।।

मदाज्ञां न प्रकुर्वंति मन्यंते वा न ते जनाः ।। ५५ ।।

तदा वै वायुपुत्रस्य स्मरणं क्रियतां द्विजाः ।।

स्मृतमात्रो हनूमान्वै समागत्य करिष्यति ।। ५६ ।।

सहसा भस्म तान्सत्यं वचनान्मे न संशयः ।।

य इदं शासनं रम्यं पालयिष्यति भूपतिः ।। ।। ५७ ।।

वायुपुत्रः सदा तस्य सौख्यमृद्धिं प्रदास्यति ।।

ददाति पुत्रान्पौत्रांश्च साध्वीं पत्नीं यशो जयम् ।। ५८ ।।

इत्येवं कथयित्वा च हनुमंतं प्रबोध्य च ।।

निवर्तितो रामदेवः ससैन्यः सपरिच्छदः ।। ५९ ।।

वादित्राणां स्वनैर्विष्वक्सूच्यमानशुभागमः ।।

श्वेतातपत्रयुक्तोऽसौ चामरैर्वीजितो नरैः ।।

अयोध्यां नगरीं प्राप्य चिरं राज्यं चकार ह ।। 3.2.34.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ब्रह्मनारदसंवादे श्रीरामेण ब्राह्मणेभ्यः शासनपट्टप्रदानवर्णनंनाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३५



।। नारद उवाच ।। ।।

भगवन्देवदेवेश सृष्टिसंहारकारक ।।

गुणातीतो गुणैर्युक्तो मुक्तीनां साधनं परम् ।। १ ।।

संस्थाप्य वेदभवनं विधिवद्द्विज सत्तमान् ।।

किं चक्रे रघुनाथस्तु भूयोऽयोध्यां गतस्तदा ।। २ ।।

स्वस्थाने ब्राह्मणास्तत्र कानि कर्माणि चक्रिरे ।।

।। ब्रह्मोवाच ।। ।।

इष्टापूर्तरताः शांताः प्रतिग्रहपराङ्मुखाः ।। ३ ।।

राज्यं चक्रुर्वनस्यास्य पुरोधा द्विजसत्तमः ।।

उवाच रामपुरतस्तीर्थमाहात्म्यमुत्तमम् ।। ४ ।।

प्रयागस्य च माहात्म्यं त्रिवेणीफलमुत्तमम् ।।

प्रयागतीर्थमहिमा शुक्लतीर्थस्य चैव हि ।। ५ ।।

सिद्धक्षेत्रस्य काश्याश्च गंगाया महिमा तथा ।।

वसिष्ठः कथया मास तीर्थान्यन्यानि नारद ।। ६ ।।

धर्मारण्यसुवर्णाया हरिक्षेत्रस्य तस्य च ।।

स्नानदानादिकं सर्वं वाराणस्या यवाधिकम् ।। ७ ।।

एतच्छ्रुत्वा रामदेवः स चमत्कृतमानसः ।।

धर्मारण्ये पुनर्यात्रां कर्तुकामः समभ्यगात् ।। ८ ।।

सीतया सह धर्मज्ञो गुरुसैन्यपुरःसरः ।।

लक्ष्मणेन सह भ्रात्रा भरतेन सहायवान् ।। ९ ।।

शत्रुघ्नेन परिवृतो गतो मोहेरके पुरे ।।

तत्र गत्वा वसिष्ठं तु पृच्छतेऽसौ महामनाः ।। 3.2.35.१० ।।

।। राम उवाच ।। ।।

धर्मारण्ये महाक्षेत्रे किं कर्तव्यं द्विजोत्तम ।।

दानं वा नियमो वाथ स्नानं वा तप उत्तमम् ।। ११ ।।

ध्यानं वाथ क्रतुं वाथ होमं वा जपमुत्तमम् ।।

दानं वा नियमं वाथ स्नानं वा तप उत्तमम्।। १२ ।।

येन वै क्रियमाणेन तीर्थेऽस्मिन्द्विजसत्तम ।।

ब्रह्महत्यादिपापेभ्यो मुच्यते तद्ब्रवीहि मे ।। १३ ।।

।। वसिष्ठ उवाच ।। ।।

यज्ञं कुरु महाभाग धर्मारण्ये त्वमुत्तमम् ।।

दिनेदिने कोटिगुणं यावद्वर्षशतं भवेत् ।। १४ ।।

तच्छ्रुत्वा चैव गुरुतो यज्ञारंभं चकार सः ।।

तस्मिन्नवसरे सीता रामं व्यज्ञापयन्मुदा ।। १५ ।।

स्वामिन्पूर्वं त्वया विप्रा वृता ये वेदपारगाः ।।

ब्रह्मविष्णुमहेशेन निर्मिता ये पुरा द्विजाः ।। १६ ।।

कृते त्रेतायुगे चैव धर्मारण्यनिवासिनः ।।

विप्रांस्तान्वै वृणुष्व त्वं तैरेव साधकोऽध्वरः ।। १७ ।।

तच्छ्रुत्वा रामदेवेन आहूता ब्राह्मणास्तदा ।।

स्थापिताश्च यथापूर्वमस्मिन्मोहे रके पुरे ।। १८ ।।

तैस्त्वष्टादशसंख्याकैस्त्रैविद्यैर्मेहिवाडवैः ।।

यज्ञं चकार विधिवत्तैरेवायतबुद्धिभिः ।। १९ ।।

कुशिकः कौशिको वत्स उपमन्युश्च काश्यपः।।

कृष्णात्रेयो भरद्वाजो धारिणः शौनको वरः।।3.2.35.२०।।

मांडव्यो भार्गवः पैंग्यो वात्स्यो लौगाक्ष एव च।।

गांगायनोथ गांगेयः शुनकः शौनकस्तथा।। २१।।

।।ब्रह्मोवाच।।

एभिर्विप्रैः क्रतुं रामः समाप्य विधिवन्नृपः।।

चकारावभृथं रामो विप्रान्संपूज्य भक्तितः।।२२।।

यज्ञांते सीतया रामो विज्ञप्तः सुविनीतया।।

अस्याध्वरस्य संपत्ती दक्षिणां देहि सुव्रत।।२३।।

मन्नाम्ना च पुरं तत्र स्थाप्यतां शीघ्रमेव च ।।

सीताया वचनं श्रुत्वा तथा चक्रे नृपोत्तमः ।। २४ ।।

तेषां च ब्राह्मणानां च स्थानमेकं सुनिर्भयम् ।।

दत्तं रामेण सीतायाः संतोषाय महीभृता ।। २५ ।।

सीतापुरमिति ख्यातं नाम चक्रे तदा किल ।।

तस्याधिदेव्यौ वर्त्तेते शांता चैव सुमंगला ।। २६ ।।

मोहेरकस्य पुरतो ग्रामद्वादशकं पुरः ।।

ददौ विप्राय विदुषे समुत्थाय प्रहर्षितः ।। २७ ।।

तीर्थांतरं जगामाशु काश्यपीसरितस्तटे ।।

वाडवाः केऽपि नीतास्ते रामेण सह धर्मवित् ।। २८ ।।

धर्मालये गतः सद्यो यत्र माला कमंडलुः ।।

पुरा धर्मेण सुमहत्कृतं यत्र तपो मुने ।। २९ ।।

तदारभ्य सुविख्यातं धर्मालयमिति

श्रुतम् ।। ददौ दाशरथिस्तत्र महादानानि षोडश । 3.2.35.३० ।।

पंचाशत्तदा ग्रामाः सीतापुरसमन्विताः ।।

सत्यमंदिरपर्यंता रघुना थेन वै तदा ।। ३१ ।।

सीताया वचनात्तत्र गुरुवाक्येन चैव हि ।।

आत्मनो वंशवृद्ध्यर्थं द्विजेभ्योऽदाद्रघूत्तमः ।। ३२ ।।

अष्टादशसहस्राणां द्विजानामभवत्कुलम् ।।

वात्स्यायन उपमन्युर्जातूकर्ण्योऽथ पिंगलः ।। ३३ ।।

भारद्वाजस्तथा वत्सः कौशिकः कुश एव च ।।

शांडिल्यः कश्यपश्चैव गौतमश्छांधनस्तथा ।। ३४ ।।

कृष्णात्रेयस्तथा वत्सो वसिष्ठो धारणस्तथा ।।

भांडिलश्चैव विज्ञेयो यौवनाश्वस्ततः परम् ।। ३५ ।।

कृष्णायनोपमन्यू च गार्ग्यमुद्गलमौखकाः ।।

पुशिः पराशरश्चैव कौंडिन्यश्च ततः परम् ।। ३६ ।।

पंचपंचाशद्ग्रामाणां नामान्येवं यथाक्रमम् ।।

सीतापुरं श्रीक्षेत्रं च मुशली मुद्गली तथा ।। ३७ ।।

ज्येष्ठला श्रेयस्थानं च दंताली वटपत्रका ।।

राज्ञः पुरं कृष्णवाटं देहं लोहं चनस्थनम् ।। ३८ ।।

कोहेचं चंदनक्षेत्रं थलं च हस्तिनापुरम् ।।

कर्पटं कंनजह्नवी वनोडफनफावली ।। ३९ ।।

मोहोधं शमोहोरली गोविंदणं थलत्यजम् ।।

चारणसिद्धं सोद्गीत्राभाज्यजं वटमालिका ।।3.2.35.४०।।

गोधरं मारणजं चैव मात्रमध्यं च मातरम् ।।

बलवती गंधवती ईआम्ली च राज्यजम् ।।४१।।

रूपावली बहुधनं छत्रीटं वंशंजं तथा ।।

जायासंरणं गोतिकी च चित्रलेखं तथैव च ।। ४२ ।।

दुग्धावली हंसावली च वैहोलं चैल्लजं तथा ।।

नालावली आसावली सुहाली कामतः परम् ।।४३।।

रामेण पंचपंचाशद्ग्रामाणि वसनाय च ।।

स्वयं निर्माय दत्तानि द्विजेभ्यस्तेभ्य एव च ।। ४४ ।।

तेषां शुश्रूषणार्थाय वैश्यान्रामो न्यवे दयत् ।।

षट्त्रिंशच्च सहस्राणि शूद्रास्तेभ्यश्चतुर्गुणान् ।।४५।।

तेभ्यो दत्तानि दानानि गवाश्ववसनानि च ।।

हिरण्यं रजतं ताम्रं श्रद्धया परया मुदा ।। ४६ ।।

नारद उवाच ।।

अष्टादशसहस्रास्ते ब्राह्मणा वेदपारगाः ।।

कथं ते व्यभजन्ग्रामान्द्रामो()त्पन्नं तथा वसु ।।

वस्त्राद्यं भूषणाद्यं च तन्मे कथय सुव्र तम् ।।४७। ।।

ब्रह्मोवाच ।। ।।

यज्ञांते दक्षिणा यावत्सर्त्विग्भिः स्वीकृता सुत ।।

महादानादिकं सर्वं तेभ्य एव समर्पितम् ।।४८।।

ग्रामाः साधारणा दत्ता महास्थानानि वै तदा ।।

ये वसंति च यत्रैव तानि तेषां भवंत्विति ।। ४९ ।।

वशिष्ठवचनात्तत्र ग्रामास्ते विप्रसात्कृताः ।।

रघूद्वहेन धीरेण नोद्व संति यथा द्विजाः ।।3.2.35.५०।।

धान्यं तेषां प्रदत्तं हि विप्राणां चामितं वसु ।।

कृतांजलिस्ततो रामो ब्राह्मणानिदमब्रवीत् ।।५१।।

यथा कृतयुगे विप्रास्त्रेतायां च यथा पुरा ।।

तथा चाद्यैव वर्त्तव्यं मम राज्ये न संशयः ।। ५२ ।।

यत्किंचिद्धनधान्यं वा यानं वा वसनानि वा ।।

मणयः कांचनादींश्च हेमादींश्च तथा वसु ।। ५३ ।।

ताम्राद्यं रजतादींश्च प्रार्थयध्वं ममाधुना ।।

अधुना वा भविष्ये वाभ्यर्थनीयं यथोचितम् ।। ५४ ।।

प्रेषणीयं वाचिकं मे सर्वदा द्विजसत्तमाः ।।

यंयं कामं प्रार्थयध्वं तं तं दास्याम्यहं विभो ।। ५५।।

ततो रामः सेवकादीनादरात्प्रत्यभाषत ।।

विप्राज्ञा नोल्लंघनीया सेव नीया प्रयत्नतः ।। ५६ ।।

यंयं कामं प्रार्थयंते कारयध्वं ततस्ततः ।।

एवं नत्वा च विप्राणां सेवनं कुरुते तु यः ।। ५७ ।।

स शूद्रः स्वर्गमाप्नोति धनवान्पुत्रवान्भवेत् ।।

अन्यथा निर्धनत्वं हि लभते नात्र संशयः ।। ५८ ।।

यवनो म्लेच्छजातीयो दैत्यो वा राक्षसोपि वा।।

योत्र विघ्नं करोत्येव भस्मीभवति तत्क्षणात् ।। ५९ ।।

।। ब्रह्मोवाच ।। ।।

ततः प्रदक्षिणीकृत्य द्विजान्रामोऽतिहर्षितः ।।

प्रस्थानाभिमुखो विप्रैराशीर्भिरभिनंदितः ।। 3.2.35.६० ।।

आसीमांतमनुव्रज्य स्नेहव्याकुललोचनाः ।।

द्विजाः सर्वे विनिर्वृत्ता धर्मारण्ये विमोहिताः ।। ६१ ।।

एवं कृत्वा ततो रामः प्रतस्थे स्वां पुरीं प्रति ।।

काश्यपाश्चैव गर्गाश्च कृतकृत्या दृढव्रताः ।। ६२ ।।

गुर्वासनसमाविष्टाः सभार्या ससुहृत्सुताः ।।

राजधानीं तदा प्राप रामोऽयोध्यां गुणान्विताम् ।। ६३ ।।

दृष्ट्वा प्रमुदिताः सर्वे लोकाः श्रीरघुनन्दनम् ।।

ततो रामः स धर्मात्मा प्रजापालनतत्परः ।। ६४ ।।

सीतया सह धर्मात्मा राज्यं कुर्वंस्तदा सुधीः ।।

जानक्या गर्भमाधत्त रविवंशोद्भवाय च ।। ६५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये श्रीरामरुद्रकृतधर्मारण्यतीर्थक्षेत्रजीर्णोद्धारवर्णनं नाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३६

https://sa.wikisource.org/s/fu9



।। नारद उवाच ।। ।।

अतः परं किमभवत्तन्मे कथय सुव्रत ।।

पूर्वं च तदशेषेण शंस मे वदताम्बर ।। १ ।।

स्थिरीभूतं च तत्स्थानं कियत्कालं वदस्व मे ।।

केन वै रक्ष्यमाणं च कस्याज्ञा वर्तते प्रभो ।। २ ।।

।। ब्रह्मोवाच ।। ।।

त्रेतातो द्वापरांतं च यावत्कलिसमागमः ।।

तावत्संरक्षणे चैको हनूमान्पवनात्मजः ।। ३ ।।

समर्थो नान्यथा कोपि विना हनुमता सुत ।।

लंका विध्वंसिता येन राक्षसाः प्रबला हताः ।।४।।

स एव रक्षते तत्र रामादेशेन पुत्रक ।।

द्विजस्याज्ञा प्रवर्तेत श्रीमातायास्तथैव च ।। ५ ।।

दिनेदिने प्रहर्षोभूज्जनानां तत्र वासिनाः ।।

पठंति स्म द्विजास्तत्र ऋग्युजुःसामलक्षणान् ।। ६ ।।

अथर्वणमपि तत्र पठंति स्म दिवानिशम् ।।

वेदनिर्घोषजः शब्दस्त्रैलोक्ये सचराचरे ।। ७ ।।

उत्सवास्तत्र जायंते ग्रामेग्रामे पुरेपुरे ।।

नाना यज्ञाः प्रवर्तंते नानाधर्मसमाश्रिताः ।। ८ ।।

।। युधिष्ठिर उवाच ।। ।।

कदापि तस्य स्थानस्य भंगो जातोथ वा न वा ।।

दैत्यैर्जितं कदा स्थानमथवा दुष्टराक्षसैः ।। ९ ।।

।। व्यास उवाच ।। ।।

साधु पृष्टं त्वया राजन्धर्मज्ञस्त्वं सदा शुचिः ।।

आदौ कलियुगे प्राप्ते यद्वृत्तं तच्छृणुष्व भोः ।। 3.2.36.१० ।।

लोकानां च हितार्थाय कामाय च सुखाय च ।।

यज्ञं च कथयिष्यामि तत्सर्वं शृणु भूपते ।।११।।

इदानीं च कलौ प्राप्त आमो नामा वभूव ह ।।

कान्यकुब्जाधिपः श्रीमान्धर्मज्ञो नीतितत्परः ।। १२ ।।

शांतो दांतः सुशीलश्च सत्यधर्मपरायणः ।।

द्वापरांते नृपश्रेष्ठ अनागमे() कलौ युगे ।। १३ ।।

भयात्कलिविशेषेण अधर्मस्य भयादिभिः ।।

सर्वे देवाः क्षितिं त्यक्त्वा नैमिषारण्यमाश्रिताः ।। १४ ।।

रामोपि सेतुबंधं हि ससहायो गतो नृप ।। १५ ।।

।। युधिष्ठिर उवाच ।। ।।

कीदृशं हि कलौ प्राप्ते भयं लोके सुदुस्तरम् ।।

यस्मिन्सुरैः परित्यक्ता रत्नगर्भा वसुन्धरा ।। १६ ।।

।। व्यास उवाच ।। ।।

शृणुष्व कलिधर्मास्त्वं भविष्यंति यथा नृप ।।

असत्यवादिनो लोकाः साधुनिन्दापरायणाः ।। १७ ।।

दस्युकर्मरताः सर्वे पितृभक्तिविवर्जिताः ।।

स्वगोत्रदाराभिरता लौल्यध्यानपरायणाः ।। १८ ।।

ब्रह्मविद्वेषिणः सर्वे परस्परविरोधिनः ।।

शरणागतहंतारो भविष्यंति कलौ युगे ।। १९ ।।

वैश्याचाररता विप्रा वेदभ्रष्टाश्च मानिनः ।।

भविष्यंति कलौ प्राप्ते संध्यालोपकरा द्विजाः ।। 3.2.36.२० ।।

शांतौ शूरा भये दीनाः श्राद्धतर्पणवर्जिताः ।।

असुराचारनिरता विष्णुभक्तिविवर्जिताः ।। २१ ।।

परवित्ताभिलाषाश्च उत्कोच ग्रहणे रताः ।।

अस्नातभोजिनो विप्राः क्षत्रिया रणवर्जिताः ।। २२ ।।

भविष्यंति कलौ प्राप्ते मलिना दुष्टवृत्तयः ।।

मद्यपानरताः सर्वेप्ययया ज्यानां हि याजकाः ।। २३ ।।

भर्तृद्वेषकरा रामाः पितृद्वेषकराः सुताः ।।

भ्रातृद्वेषकराः क्षुद्रा भविष्यंति कलौ युगे ।। २४ ।।

गव्यविक्रयिणस्ते वै ब्राह्मणा वित्ततत्पराः ।।

गावो दुग्धं न दुह्यंते संप्राप्ते हि कलौ युगे ।। २५ ।।

फलंते नैव वृक्षाश्च कदाचिदपि भारत ।।

कन्याविक्रय कर्त्तारो गोजाविक्रयकारकाः ।। २६ ।।

विषविक्रयकर्त्तारो रसविक्रयकारकाः ।।

वेदविक्रयकर्त्तारो भविष्यंति कलौ युगे ।। २७ ।।

नारी गर्भं समाधत्ते हायनैकादशेन हि ।।

एकादश्युपवासस्य विरताः सर्वतो जनाः ।। २८ ।।

न तीर्थसेवनरता भविष्यंति च वाडवाः ।।

बह्वाहारा भविष्यंति बहुनिद्रासमाकुलाः ।। २९ ।।

जिह्मवृत्तिपराः सर्वे वेदनिंदापरायणाः ।।

यतिनिंदापराश्चैव च्छद्मकाराः परस्परम् ।। 3.2.36.३० ।।

स्पर्शदोषभयं नैव भविष्यति कलौ युगे ।।

क्षत्रिया राज्यहीनाश्च म्लेच्छो राजा भविष्यति ।। ३१ ।।

विश्वासघातिनः सर्वे गुरुद्रोहरतास्तथा ।।

मित्रद्रोहरता राजञ्छिश्नोदरपरायणाः ।। ३२ ।।

एकवर्णा भविष्यंति वर्णाश्चत्वार एव च ।।

कलौ प्राप्ते महाराज नान्यथा वचनं मम ।। ३३ ।।

एतच्छ्रुत्वा गुरोरेव कान्यकुब्जाधिपो बली ।।

राज्यं प्रकुरुते तत्र आमो नाम्ना हि भूतले ।। ३४ ।।

सार्वभौमत्वमापन्नः प्रजापालनतत्परः ।।

प्रजानां कलिना तत्र पापे बुद्धिरजायत ।। ३५ ।।

वैष्णवं धर्ममुत्सज्य वौद्धधर्ममुपागताः ।।

प्रजास्तमनुवर्तिन्यः क्षपणैः प्रतिबोधिताः ।।३६।।

तस्य राज्ञो महादेवी मामानाम्न्यतिविश्रुता ।।

गर्भं दधार सा राज्ञो सर्वलक्षणसंयुता ।। ३७ ।।

संपूर्णे दशमे मासि जाता तस्याः सुरूपिणी ।।

दुहिता समये राज्याः पूर्णचन्द्रनिभानना ।। ३८ ।।

रत्नगंगेति नाम्ना सा मणिमाणिक्यभूषिता ।।

एकदा दैवयोगेन देशांतरादुपागतः ।। ३९ ।।

नाम्ना चैवेंद्रसूरिर्वै देशेस्मिन्कान्यकुब्जके ।।

षोडशाब्दा च सा कन्या नोपनीता नृपात्मजा ।।3.2.36.४०।।

दास्यांतरेण मिलिता इन्द्रसूरिश्च जीविकः ।।

शाबरीं मंत्रविद्यां च कथयामास भारत ।।४१।।

एकचित्ताभवत्सा तु शूलिकर्मविमोहिता ।।

ततः सा मोहमापन्ना तत्तद्वाक्यपरायणा।।४२।।

क्षपणैर्बोधिता वत्स जैनधर्मपरायणा ।।

ब्रह्मावर्ताधिपतये कुंभीपालाय धीमते ।।४३।।

रत्नगंगां महादेवीं ददौ तामिति विक्रमी।।

मोहेरेकं ददौ तस्मै विवाहे दैवमोहितः ।। ४४ ।।

धर्मारण्यं समागत्य राजधानी कृता तदा ।।

देवांश्च स्थापयामास जैनधर्मप्रणीतकान् ।। ४५ ।।

सर्वे वर्णास्तथाभूता जैन धर्मसमाश्रिताः ।।

ब्राह्मणा नैव पूज्यंते न च शांतिकपौष्टिकम् ।। ४६ ।।

न ददाति कदा दानमेवं कालः प्रवर्तते ।।

लब्धशासनका विप्रा लुप्तस्वाम्या अहर्निशम् ।। ४७ ।।

समाकुलितचित्तास्ते नृपमामं समाययुः ।।

कान्यकुब्जस्थितं शूरं पाखण्डैः परिवेष्टितम् ।। ४८ ।।

कान्यकुब्जपुरं प्राप्य कतिभिर्वासरैर्नृप ।।

गंगोपकण्ठे न्यवसञ्छ्रांतास्ते मोढवाडवाः ।। ४९ ।।

चारैश्च कथितास्ते च नृपस्याग्रे समागताः ।।

प्रातराकारिता विप्रा आगता नृपसंसदि ।। 3.2.36.५० ।।

प्रत्युत्थानाभिवादादीन्न चक्रे सादरं नृपः ।।

तिष्ठतो ब्राह्मणान्सर्वान्पर्यपृच्छदसौ ततः ।। ५१ ।।

किमर्थमागता विप्राः किंस्वित्कार्यं ब्रुवंतु तत् ।। ५२ ।।

।। विप्रा ऊचुः ।। ।।

धर्मारण्यादिहायातास्त्वत्समीपं नराधिप ।।

राजंस्तव सुतायास्तु भर्ता कुमारपालकः ।। ५३ ।।

तेन प्रलुप्तं विप्राणां शासनं महदद्भुतम् ।।

वर्तता जैनधर्मेण प्रेरितेनेंद्रसूरिणा ।। ५४ ।।

।। राजोवाच ।। ।।

केन वै स्थापिता यूयमस्मिन्मोहेरके पुरे ।।

एतद्धि वाडवाः सर्वं ब्रूत वृत्तं यथातथम् ।। ५५ ।।

।। विप्रा ऊचुः ।। ।।

काजेशैः स्थापिताः पूर्वं धर्मराजेन धीमता ।।

कृता चात्र शुभे स्थाने रामेण च ततः पुरी ।। ५६ ।।

शासनं रामचंद्रस्य दृष्ट्वाऽन्यैश्चैव राजभिः ।।

पालितं धर्मतो ह्यत्र शासनं नृपसत्तम ।। ५७ ।।

इदानीं तव जामाता विप्रान्पालयते न हि ।।

तच्छ्रुत्वा विप्रवाक्यं तु राजा विप्रानथाब्रवीत् ।। ५८ ।।

यांतु शीघ्रं हि भो विप्राः कथयंतु ममाज्ञया ।।

राज्ञे कुमारपालाय देहि त्वं ब्राह्मणालयम् ।। ५९ ।।

श्रुत्वा वाक्यं ततो विप्राः परं हर्षमुपागताः ।।

जग्मुस्ततोऽतिमुदिता वाक्यं तत्र निवेदितम् ।। 3.2.36.६० ।।

श्वशुरस्य वचः श्रुत्वा राजा वचनमब्रवीत् ।।

।। कुमारपाल उवाच ।। ।।

रामस्य शासनं विप्राः पालयिष्याम्यहं नहि ।। ६१ ।।

त्यजामि ब्राह्मणान्यज्ञे पशुहिंसापरायणान् ।।

तस्माद्धि हिंसकानां तु न मे भक्तिर्भवेद्द्विजाः ।। ६२ ।। ।।

।। ब्राह्मणा ऊचुः ।। ।।

कथं पाखंडधर्मेण लुप्तशासनको भवान् ।।

पालयस्व नृपश्रेष्ठ मा स्म पापे मनः कृथाः ।। ६३ ।।

।। राजोवाच ।। ।।

अहिंसा परमो धर्मो अहिंसा च परं तपः ।।
अहिंसा परमं ज्ञानमहिंसा परमं फलम् ।। ६४ ।।
तृणेषु चैव वृक्षेषु पतंगेषु नरेषु च ।।
कीटेषु मत्कुणाद्येषु अजाश्वेषु गजेषु च ।। ६५।।
लूतासु चैव सर्पेषु महिष्यादिषु वै तथा ।।
जंतवः सदृशा विप्राः सूक्ष्मेषु च महत्सु च ।। ६६ ।।
कथं यूयं प्रवर्तध्वे विप्रा हिंसापरायणाः ।।
तच्छ्रुत्वा वज्रतुल्यं हि वचनं च द्विजोत्तमाः ।। ६७ ।।
प्रत्यूचुर्वाडवाः सर्वे क्रोधरक्तेक्षणा दृशा ।। ६८ ।। ।।
।। ब्राह्मणा ऊचुः ।। ।।
अहिंसा परमो धर्मः सत्यमेतत्त्वयोदितम् ।।
परं तथापि धर्मोऽस्ति शृणुष्वैकाग्रमानसः ।। ६९ ।।
या वेदविहिता हिंसा सा न हिंसेति निर्णयः ।।
शस्त्रेणाहन्यते यच्च पीडा जंतुषु जायते ।। 3.2.36.७० ।।
स एवाधर्म एवास्ति लोके धर्मविदां वर ।।
वेदमंत्रैर्विहन्यंते विना शस्त्रेण जंतवः ।। ७१ ।।
जंतुपीडाकरा नैव सा हिंसा सुखदायिनी ।।
परोपकारः पुण्याय पापाय परपीडनम् ।। ७२ ।।
वेदोदितां विधायापि हिंसां पापैर्न लिप्यते ।।
विप्राणां वचनं श्रुत्वा पुनर्वचनमब्रवीत् ।। ७३ ।।
।। राजोवाच ।। ।।
ब्रह्मादीनां परं क्षेत्रं धर्मारण्यमनुत्तमम् ।।
ब्रह्मविष्णु महेशाद्या नेदानीमत्र संति ते ।। ७४ ।।
न धर्मो विद्यते वात्र उक्तो रामः स मानुषः ।।
क्व वापि लंबपुच्छोऽसौ यो मुक्तो रक्षणाय वः ।। ७५ ।।
शासनं चेन्न दृष्टं वो नैव तत्पालयाम्यहम् ।।
द्विजाः कोपसमाविष्टा ददुः प्रत्युत्तरं तदा ।। ७६ ।।
।। द्विजा ऊचुः ।। ।।

रे मूढ त्वं कथं वेत्थ भाषसे मदलोलुपः ।।
स दैत्यानां विनाशाय धर्मसंरक्षणाय च ।। ७७ ।।
रामश्चतुर्भुजः साक्षान्मानुषत्वं गतो भुवि ।।
अगतीनां च गतिदः स वै धर्मपरायणः ।।
दयालुश्च कृपालुश्च जंतूनां परिपालकः ।। ७८ ।।
।। राजोवाच ।। ।।
कुतोऽद्य वर्त्तते रामः कुतो वै वायुनंदनः ।।
भ्रष्टाभ्रमिव ते सर्वे क्व रामो हनुमानिति ।। ७९ ।।
परंतु रामो हनुमान्यदि वर्त्तेत सर्वतः ।।
इदानीं विप्रसाहाय्य आगमिष्यति मे मतिः ।। 3.2.36.८० ।।
दर्शयध्वं हनूमंतं रामं वा लक्ष्मणं तथा ।।
यद्यस्ति प्रत्ययः कश्चित्स नो विप्राः प्रदर्श्यताम् ।।८१।।
उक्तं तै रामदेवेन दूतं कृत्वांजनीसुतम् ।।
चतुश्चत्वारिंशदधिकं दत्तं ग्रामशतं नृप ।। ६२ ।।
पुनरागत्य स्थानेऽस्मिन्दत्ता ग्रामास्त्रयोदश ।।
काश्यप्यां चैव गंगायां महादानानि षोडश ।। ८३ ।।
दत्तानि विप्रमुख्येभ्यो दत्ता ग्रामाः सुशोभनाः ।।
पुनः संकल्पिता वीर षट्पंचाशकसंख्यया ।। ८४ ।।
षट्त्रिंशच्च सहस्राणि गोभुजा जज्ञिरे वराः ।।
सपादलक्षा वणिजो दत्ता मांडलिकाभिधाः ।। ८५ ।।
तेनोक्तं वाडवाः सर्वे दर्शयध्वं हि मारुतिम् ।।
यस्याभिज्ञानमात्रेण स्थितिं पूर्वां ददाम्यहम् ।। ८६ ।।
विप्रवाक्यं करिष्यामि प्रत्ययो दर्श्यते यदि ।।
ततः सर्वे भविष्यंति वेदधर्मपरायणाः ।। ८७ ।।
अन्यथा जैनधर्मेण वर्त्तयध्वं हि सर्वशः ।।
नृपवाक्यं तु ते श्रुत्वा स्वेस्वे स्थाने समागताः ।। ८८ ।।
वाडवः खिन्नमनसः क्रोधेनांधीकृता भुवि ।।
निश्वासान्मुंचमानास्ते हाहेति प्रवदंति च ।।८९।।

दंतान्प्राघर्षयन्सर्वान्न्यपीडंश्च करैः करान् ।।

परस्परं भाषमाणाः कथं कुर्मो वयं त्वितः ।।3.2.36.९०।।

मिलित्वा वाडवाः सर्वे चक्रुस्ते मंत्रमुत्तमम् ।।

रामवाक्यं हृदि ध्यात्वा ध्यात्वा चैवांजनीसुतम्।।९१।।

द्विजमेलापकं चक्रुर्बाला वृद्धतमा अपि ।।

तेषां वृद्धतमो विप्रो वाक्यमूचे शुभं तदा ।। ९२ ।।

चतुःषष्टिश्च गोत्राणामस्माकं ये द्विसप्ततिः ।।

स्वस्वगोत्रस्यावटंका एकग्रामाभिभाषिणः ।। ९३ ।।

प्रयातु स्वस्ववर्गस्य एको ह्येको द्विजः सुधीः ।।

रामेश्वरं सेतु बंधं हनूमांस्तत्र विद्यते ।। ९४ ।।

सर्वे प्रयांतु तत्रैव रामपार्श्वे निरामयाः ।।

निराहारा जितक्रोधा मायया वर्जिताः पुनः ।। ९५ ।।

एकाग्रमानसाः सर्वे स्तुत्वा ध्यात्वा जपंतु तम् ।।

ततो दाशरथी रामो दयां कृत्वा द्विजन्मसु ।।९६।।

शासनं च प्रदास्यति अचलं च युगेयुगे ।।

महता तपसा तुष्टः प्रदास्यति समीहितम् ।। ९७ ।।

यस्य वर्गस्य यो विप्रो न प्रयास्यति तत्र वै ।।

स च वर्गात्परित्याज्यः स्थानधर्मान्न संशयः ।।९८।।

वणिग्वृत्ते न संबंधे न विवाहे कदाचन ।।

ग्रामवृत्ते न संबंधः सर्वस्थाने बहिष्कृताः ।। ९९ ।।

सभावाक्यं च तच्छ्रुत्वा तन्मध्ये वाडवः शुचिः ।।

वाग्मी दक्षः सुशब्दश्च त्रिरवैः श्रावयन्द्विजान् ।। 3.2.36.१०० ।।

प्रतिवाक्यं दत्ततालं तिष्ठन्नेतद्वचोऽब्रवीत् ।।

असत्यवादिनां यच्च पातकं परिनिंदके ।।

परदाराभिगमने परद्रोहरते नरे ।। १ ।।

मद्यपेषु च यत्पापं यत्पापं हेमहारिषु ।।

तत्पापं च भवेत्तस्य गमने यः पराङ्मुखः ।।

अथ किं बहुनोक्तेन यांतु सत्यं द्विजोत्तमाः ।। २ ।।

तच्छ्रुत्वा दारुणं वाक्यं गमनाय मनो दधे ।।

गच्छतस्तान्द्विजाञ्छ्रुत्वा राजा कुमारपालकः ।। ३ ।।

समाहूय कृषेः कर्म भिक्षाटनमथापि वा ।।

नानागोत्रेभ्यो ब्राह्मणेभ्यः प्रापयिष्ये न संशयः ।। ४ ।।

तच्छ्रुत्वा व्यथिताः सर्वे किं भविष्यत्यतः परम् ।।

तथा त्रीणि सहस्राणि प्रबंधं चक्रिरे तदा ।। ५ ।।

गमिष्यामो वयं सर्वे रामं प्रति न संशयः ।।

हस्ताक्षरप्रदानं वै अन्योन्यं तु कृतं द्विजैः ।। ६ ।।

कृतांजलिपुटा विप्रा वाक्यमेतदथाब्रुवन् ।।

नश्यतेऽत्र त्रयी विद्या त्रयीमूर्तिः प्रकुप्यति ।। ७ ।।

तस्मात्तत्रैव गंतव्यमष्टादशसहस्रकैः ।।

ततः स वणिजः सर्वान्समाहूय च गोभुजान् ।। ८ ।।

वाक्यमूचे नृपश्रेष्ठो वारयध्वं द्विजानिति ।। ९ ।।

।। व्यास उवाच ।।

न जैनधर्मे ये लिप्ता गोभुजा वणिगुत्तमाः ।।

वृत्तिभंगभयात्तत्र मौनमेव समाचरन् ।। 3.2.36.११० ।।

वारयाम कथं विप्रान्वह्निरूपान्दहंति ते ।।

शापाग्निना नरपते द्विजा मृत्युपरायणाः ।। ११ ।।

अडालयेषु ये जाताः शूद्रा आहूय तान्नृपः ।।

निवार्यंतामिति प्राह वाडवा गमनोद्यताः ।। ।। १२ ।।

तेषां मध्ये कतिपया जैनधर्मसमाश्रिताः ।।

गता वाडवपुंजेषु राजादेशान्निवारणे ।। १३ ।।

।। केचिच्छूद्रा ऊचुः ।। ।।

क्व रामो लक्ष्मणोपेतः क्व च वायुसुतो बली ।।

वर्तमानेन कालेन वक्तव्यं द्विजसत्तमाः ।। १४ ।।

व्याघ्रसिंहाकुले दुर्गे वने वनगजाश्रिते ।।

परित्यज्य प्रियान्प्राणान्पुत्रान्दारान्निकेतनान्।। १५ ।।

किमर्थं गम्यते विप्रा राज्ये वै दुष्टशासने ।।

तच्छ्रुत्वा वाडवाः केचिद्वाक्येन मनसाऽस्मरन् ।। १६ ।।

पंचदशसहस्रास्ते वाडवा नृपसत्तमात् ।।

भयाल्लोभाच्च दानाच्च तत्सर्वं भवतामिति ।। १७ ।।

वृत्तोपकल्पनेनैव करिष्यामः कदाचन ।।

कृषि कर्म करिष्यामो भिक्षाटनमथापि वा ।। १८ ।।

ततश्च ते पंचदशसहस्रा द्विजसत्तमाः ।।

दारुणं वाक्यमूचुस्तान्यांतु चान्ये यथोचितम् ।। १९ ।।

शासनं भवतामस्तु रामदत्तं न संशयः ।।

त्रयीविद्यास्तु विख्याताः सर्वे वाडवपुंगवाः ।। 3.2.36.१२० ।।

सहस्राणि च त्रीण्येव त्रैविद्या अभवन्ध्रुवम्।।।। २१ ।।

।। राजोवाच ।। ।।

चतुर्धांशेन राज्यं च किंचिद्दत्ता वसुन्धरा ।।

तस्माच्चतुर्विधेत्येवं ज्ञातिबन्धमतः परम् ।। २२ ।।

च्यवनो दास्यते कन्यां यूयं कन्यामवाप्नुत ।।

न वृत्तिर्न च संबंधो भवतां स्यात्कदापि वा ।। २३ ।।

इति तस्य वचः श्रुत्वा त्रयीविद्याश्च वाडवाः ।।

स्वेस्वे स्थाने गताः सर्वे संकेतादनिवृत्त्य च ।। २४ ।।

पंचदश सहस्राणि ततस्तु द्विजपुंगवाः ।।

यथागतं गताः सर्वे चातुर्विद्या द्विजोत्तमाः ।। २५ ।।

तद्दिने अतिवाह्याथ चिंताविष्टेन चेतसा ।।

वार्यमाणाः स्वपुत्रैस्ते दारैश्च विनयान्वितैः ।। २६ ।।

एकाग्रमानसा सर्वे न निद्रामुपलेभिरे ।।

ब्राह्मे मुहूर्ते चोत्थाय मायां त्यक्ता हि लौकिकीम् ।। २७ ।।

परित्यज्य प्रियान्पुत्रान्दारान्सनिलयानपि ।।

ग्रामोपांतेषु मिलिताः सर्वे वाडवपुंगवाः ।। २८ ।।

सहस्राणि तदा त्रीणि कृतनित्याह्निकक्रियाः ।।

विप्रेभ्यो दक्षिणां दत्त्वा संपूज्य कुलमातरम् ।। २९ ।।

विप्रसंघविनाशाय दक्षिणद्वारसंस्थितः ।।

सिंदूरपुष्पमालाभिः पूजितो गणनायकः।।3.2.36.१३०।।

पूजितो बकुलस्वामी सूर्य- सर्वार्थसाधकः।।

आदराच्च महाशक्तिः श्रीमाता पूजिता तथा।।३१।।

शांतां चैव नमस्कृत्य ज्ञानजां गोत्रमातरम्।।

गमनेनोद्यमानास्ते परं हर्षमुपाययुः।।३२।।

चातुर्विद्या द्विजाश्चैव पुनरामंत्र्य तान्प्रति।।

पप्रच्छुश्च मुहुः सर्वं समागमनकारणम् ।। ३३ ।।

।। विप्रा ऊचुः ।। ।।

न गंतव्यं भवद्भिर्वै गत्वा वाऽऽयांतु सत्वराः ।। ३४ ।।

यथा रामप्रदत्तं हि उपकल्पयसेऽचिरात् ।।

श्रुत्वा पुनरथोचुस्ते चातुर्विद्या द्विजोत्तमाः ।। ३५ ।।

न स्थानेन द्विजैर्वापि न च वृत्त्यां कथंचन ।।

वयं नैवागमिष्यामः कथनीयं न वै पुनः ।। ३६ ।।

रघूद्वहेन दत्ता वै वृत्तिर्वो द्विजसत्तमाः ।।

तां वृत्तिं प्रति यास्यामो जपहोमार्चनादिभिः ।। ३७ ।।

ते पंचदशसाहस्राः पुनस्तानूचुरादरात् ।।

अस्माभिरत्र स्थातव्यमग्निसेवार्थतत्परैः ।। ३८ ।।

युष्माभिस्तत्र गंतव्यं सर्वेषां कार्यसिद्धये ।।

अन्योन्यं सर्वसाहाया वृत्तिं याम न संशयः ।। ३९ ।।

त्यक्तस्वकीयवचना वृत्तिहीना भविष्यथ ।।

ततस्तन्मध्यतः कश्चिच्चातुर्विद्य उवाच ह।।3.2.36.१४०।।

चातुर्विद्य उवाच।।

पूर्वं हि वृत्तिमस्माकं रामो वै दत्तवान्द्विजाः।।

चातुर्विद्या महासत्त्वाः स्वधर्मप्रतिपालकाः ।। ४१ ।।

याजनाध्ययनायुक्ताः काजेशेन विनिर्मिताः ।।

दानं दत्त्वा तु रामेण उक्तं हि भवतां पुनः ।। ४२ ।।

स्थानं त्यक्त्वा न गंतव्यमित्थं हि नियमः कृतः ।।

आपत्काले तु स्मर्तव्यो वायुपुत्रो महाबलः ।। ४३ ।।

इति रामेण पूर्वं हि स्वे स्थाने स्थापितास्तदा ।।

राम वाक्यमन्यथा तत्कृत्वा गच्छेत्कथं पुनः ।। ४४ ।।

तस्माद्युष्मान्वयं ब्रूमो गच्छत कार्यसिद्धये ।।

भवतां कार्यसिद्ध्यर्थं वयं होमार्चनादिभिः ।। ४५ ।।

झटिति कार्यसिद्धिः स्यात्सत्यं सत्यं न संशयः ।।

इति वाक्यं ततः श्रुत्वा ते द्विजा गमनं प्रति ।। ४६ ।।

प्रस्थानं च विधायादौ गमनाय मनो दधुः ।।

त्रिसाहस्रास्तदा तस्मात्प्रस्थिता द्विजसत्तमाः ।। ४७ ।।

देशाद्देशांतरं गत्वा वनाच्चैव वनांतरम् ।।

तीर्थेतीर्थे कृतश्राद्धाः सुसंत सत्यव्रतपरायणाः ।।

ते गता दूरमध्वानं हनुमद्दर्शनार्थिनः।।3.2.36.१५०।।

संध्यामुपासते नित्यं त्रिकालं चैकमानसाः।।

एवं तु गच्छतां तेषां शकुना अभवच्छुभाः ।। ५१ ।।

एवं तु गच्छतां तेषां पाथेयं त्रुटितं तदा ।।

श्रांता ग्लानिं गताः सर्वे पदं परममास्थिताः ।। ५२ ।।

क्रमित्वा कियती भूमिं पदं गंतुं न तु क्षमाः ।।

मनसा निश्चयं कृत्वा दृढीकृत्य स्वमानसम् ।। ५३ ।।

हनtमंतमदृष्ट्वैव न यास्यामो वयं गृहान् ।। त्रै

विद्यास्तु गतास्तत्र यत्र रामेश्वरो हरिः ।। ५४ ।।

दृढव्रताः सत्यपराः कन्दमूलफलाशनाः ।।

ध्यायंतो रामरामेति हनूमंतेति वै पुनः ।। ५५ ।।

गृहीत्वा नियमं तेऽपि त्यक्त्वा चान्नं तथोदकम् ।।

तृषार्ताश्च क्षुधार्ताश्च ययुर्व्रतपरायणाः ।। ५६ ।।

एवं तु क्लिश्यमानानां द्विजानां भक्तिभाजनः ।।

उद्विग्नमानसो रामो हनूमंतमथाब्रवीत् ।। ५७ ।।

शीघ्रं गच्छ द्विजार्थे त्वं पवनात्मज धर्मवित् ।।

क्लिश्यंते वाडवाः सर्वे धर्मारण्यनिवासिनः ।। ५८ ।।

दह्यते मानसं मेऽद्य नान्यथा शान्तिरस्ति मे ।।

विप्राणां दुःखकर्त्ता च शास्तव्यो नात्र संशयः ।। ५९ ।।

येन वै दुःखिता विप्रास्तेनाहं दुःखितः कपे ।।3.2.36.१६०।।

रामस्य वचनं श्रुत्वा नमस्कृत्य च राघवम्।।

कृपया परयाविष्टः प्रादुरासीद्धरीश्वरः।। ।।६१।।

वृद्धब्राह्मणरूपेण परीक्षार्थं द्विजन्मनाम्।।

उवाच परया भक्त्या ब्राह्मणाञ्छ्रमदुर्बलान्।।६२।।

कृतांजलिपुटो भूत्वा करान्मुक्त्वा कमंडलुम् ।।

सर्वान्प्रत्यभिवाद्याथ वचनं चेदमब्रवीत् ।। ६३ ।।

कुतः स्थानादिह प्राप्ता गंतुकामाश्च वै कुतः ।।

किमर्थं वै भवद्भिश्च गम्यते दारुणं वनम् ।। ६४।।

।। विप्रा ऊचुः ।। ।।

धर्मारण्यात्समायाता निजदुःखं निवेदितुम् ।।

रामस्य दर्शनार्थं हि गंतुकामा वयं द्विजाः ।। ६५ ।।

सेतुबंधं महातीर्थं सर्वकामप्रदायकम्।।

नियमस्थाः क्षीणदेहा रामं द्रष्टुं समुत्सुकाः ।। ६६ ।।

यत्र रामेश्वरो देवः साक्षाद्वायुसुतः कपिः ।।

तच्छ्रुत्वा स द्विजः प्राह क्व रामः क्व च वायुजः ।। ६७ ।।

क्व सेतुबंधरामेशो दूराद्दूरतरो द्विजाः ।।

व्याघ्रसिंहाकुलं चोग्रं वनं घोरतरं महत्।।

गत्वा यस्मान्न वर्तंते तदुग्रमनुजीविनः ।।

निवर्तध्वं महाभागा यदि कार्यं हि मद्वचः ।। ६९ ।।

अथवा गम्यतां विप्राश्चिरं जीव सुखी भव ।।

वृद्धस्य वाक्यं तच्छ्रुत्वा वाडवाश्चैकमानसाः ।।3.2.36.१७०।।

विप्र गच्छामहे सर्वे रामपार्श्वमसंशयः ।।

म्रियेत यदि मार्गेऽस्मिन्रामलोक मवाप्नुयात् ।। ७१ ।।

जीवन्वृत्तिमवाप्नोति रामदेव न संशयः ।।

अन्यथा शरणं नास्ति अस्माकं राघवं विना ।। ७२ ।।

इत्युक्त्वा निर्गताः सर्वे रामदर्शनतत्पराः ।।

दिनांतमतिवाह्याथ प्रभाते विमले पुनः ।। ७३ ।।

हनुमान्ब्रह्मरूपी स वृद्धः पूर्वगुणान्वितः ।।

कमंडलुधरो धीमानभिवादनत त्परः ।। ७४ ।।

कुत्रस्थानादिह प्राप्ताः सर्वे यूयं हि वाडवाः ।।

कुत्रास्ति वा महालाभो विवाहोत्सव एव वा ।। ७५ ।।

इति तस्य वचः श्रुत्वा वाडवा विस्मयं गताः ।।

प्रणामपूर्वां विज्ञप्तिं कथयामासुरादृताः ।। ७६ ।।

अस्माकं तु पुरा वृत्तं महदाश्चर्यकारकम् ।।

भूमिदेव शृणुष्व त्वं दयालुर्दृश्यसे यतः ।। ७७ ।।

आदौ सृष्टिसमारंभे स्थापिता केशवेन च ।।

शिवेन ब्रह्मणा चैव त्रिमूर्तिस्थापिता वयम् ।। ७८ ।।

श्री रामेण ततः पश्चाज्जीर्णोद्धारेण स्थापिताः ।।

ग्रामाणां वेतनं दत्तं हरिराजेन चादरात्।।७९।।

चतुश्चत्वारिंशदधिकचतुःशतमितात्मनाम् ।।

ग्रामास्त्रयोदशार्चार्थं सीतापुरसमन्विताः।।। ।।3.2.36.१८०।।

षट्त्रिंशच्च सहस्राणि वणिजो द्विजपालने ।।

गोभूजसंज्ञास्ते शूद्रास्तेभ्यः सपादलक्षकाः ।। ८१ ।।

ते च जातास्त्रिधा तात गोभूजाडालजा स्तथा ।।

मांडलीयास्तथा चैते त्रिविधाश्च मनोरमाः ।।८२।।

वृत्त्यर्थं तेन दत्ता वै ह्यनर्घ्या रत्नकोटयः ।।

तदा ते मोढ १८००० गोभूजा१८० ०० ।

मांडलीया १२५००० अडालजाः १८००० ।।८३।।

अधुना वाडवश्रेष्ठ आमोनाम महीपतिः ।।

शासनं रामचंद्रस्य न मानयति दुर्मतिः ।।८४।।।

जामाता तस्य दुष्टो वै नाम्ना कुमारपालकः ।।

पाषंडैर्वेष्टितो नित्यं कलिधर्मेण संमतः ।। ८५ ।।

इन्द्रसूत्रेण जैनेन प्रेरितो बौद्धधर्मिणा ।।

शासनं तेन लुप्तं हि रामदत्तं न संशयः ।। ८६ ।।

वाणिजस्तादृशाः केऽपि तन्मनस्का बभूविरे ।।
निषेधयंति रामं ते हनुमंतं महामतिम् ।।८७।।
प्रत्ययं तु विना विप्रा न दास्यामीति निश्चितम् ।।
तं ज्ञात्वा तु इमे विप्रा रामं शरणमाययुः ।।८८।।
हनुमंतं महावीरं रामशासनपालकम् ।।
तस्माद्गच्छामहे सर्वे रामं प्रति महामते ।। ८९ ।।
आंजनेयो यदास्माकं न दास्यति समीहितम् ।।
अनाहारव्रतेनैव प्राणांस्त्यक्ष्यामहे वयम् ।। 3.2.36.१९० ।।
अस्माभिस्ते विशेषेण कथितं परिपृच्छते ।।
स्नेहभावं विचिंत्याशु निजवृत्तिं प्रकाशय ।।९१।।
हनुमानुवाच ।।
प्राप्ते कलियुगे विप्राः क्व देवदर्शनं भवेत् ।।
निवर्त्तध्वं हि विप्रेन्द्रा यदीच्छथ सुखं महत् ।। ९२ ।।
व्याघ्रसिंहाकुले शून्ये वने वनगजाश्रिते ।।
बहुदावसमाविष्टे प्रवेष्टुं नैव शक्यते ।। ९३ ।।
।। विप्रा ऊचुः ।। ।
अतीते दिवसे विप्र एकं कथितवानिदम् ।।
अद्यैव त्वं समागम्य एवमेव प्रभाषसे ।। ९४ ।।
कस्त्वं वाडवरूपेण रामो वाप्यथ वायुजः ।।
सत्यं कथय नः स्वास्मिन्दयां कृत्वा महाद्विज ।। ९५ ।।
हनुमान्कथयामास गोपितं यद्द्विजाग्रतः ।।
हनुमानित्यहं विप्रा बुध्यध्वं निश्चिता हि माम् ।। ९६ ।।
स्वरूपं प्रकटीकृत्य लांगूलं दर्शयन्महत् ।। ९७ ।। ।।
हनुमानुवाच ।। ।।
अयमंभोनिधिः साक्षात्सेतुबंधो मनोरमः ।।
अयं रामेश्वरो देवो गर्भवासविनाशकृत् ।। ९८ ।।
इयं तु नगरी श्रेष्ठा लंकानामेति विश्रुता ।।
यत्र सीता मया प्राप्ता रामशोकापहारिणी ।। ९९ ।।

तर्जन्यग्रे द्विजश्रेष्ठा अगम्या मां विना परैः ।।

सा सुवर्णमयी भाति यस्यां राज्ये विभीषणः ।। 3.2.36.२०० ।।

स्थापितो रामदेवेन सेयं लंका महापुरी ।।

नियमस्थैः साधुवृंदैस्तीर्थयात्राप्रसंगतः ।। २०१ ।।

आनीय गंगासलिलं रामेशमभिषिच्य च ।।

क्षिप्ता एते महाभारा दृश्यंते सागरांतरे ।।२०२।।

निष्पापास्तेन संजाताः साधवस्ते दृढव्रताः ।।

नूनं पुण्योदये वृद्धिः पापे हानिश्च जायते ।। २०३ ।।

स्थानभ्रष्टाः कृताः पूर्वं चातुर्विद्या द्विजातयः ।।

जीर्णोद्धारेण रामेण स्थापिताः पुनरेव हि ।।

पूर्वजन्मनि भो विप्रा हरिपूजा कृता मया ।। २०४ ।।

सांप्रतं निश्चला भक्तिर्भवत्सेवा हि दृश्यते ।।

तेन पुण्यप्रभावेण तुष्टो दास्यामि वो वरम् ।। २०५ ।।

धन्योहं कृतकृत्योहं सुभाग्योहं धरातले ।।

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।। २०६ ।।

यदहं ब्राह्मणानां च प्राप्तवांश्चरणांतिकम् ।। २०७ ।।

।। व्यास उवाच ।। ।।

दृष्ट्वैव हनुमन्तं ते पुलकांकितविग्रहाः ।।

सगद्गदं यथोचुस्ते वाक्यं वाक्यविशारदाः ।। २०८ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे धर्मारण्य माहात्म्ये हनुमत्समागमो नाम षट्त्रिंशोऽध्यायः।।३६।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३७



।।व्यास उवाच।।

ततस्ते ब्राह्मणाः सर्वे प्रत्यूचुः पवनात्मजम्।।

अधुना सफलं जन्म जीवितं च सुजीवितम् ।। १ ।।

अद्य नो मोढलोकानां धन्यो धर्मश्च वै गृहाः।।

धन्या च सकला पृथ्वी यज्ञधर्मा ह्यनेकशः ।। २ ।।

नमः श्रीराम भक्ताय अक्षविध्वंसनाय च ।।

नमो रक्षःपुरीदाहकारिणे वज्रधारिणे ।। ३ ।।

जानकीहृदयत्राणकारिणे करुणात्मने ।।

सीताविरह तप्तस्य श्रीरामस्य प्रियाय च ।। ४ ।।

नमोऽस्तु ते महावीर रक्षास्मान्मज्जतः क्षितौ ।।

नमो ब्राह्मणदेवाय वायुपुत्राय ते नमः ।। ५ ।।

नमोऽस्तु राम भक्ताय गोब्राह्मणहिताय च ।।

नमोस्तु रुद्ररूपाय कृष्णवक्त्राय ते तमः ।। ६ ।।

अंजनीसूनवे नित्यं सर्वव्याधिहराय च ।।

नागयज्ञोपवीताय प्रबलाय नमोऽस्तु ते ।। ७ ।।

स्वयं समुद्रतीर्णाय सेतुबंधनकारिणे ।। ८ ।।

।। व्यास उवाच ।। ।।

स्तोत्रेणैवामुना तुष्टो वायुपुत्रोऽब्रवीद्वचः ।।

शृणुध्वं हि वरं विप्रा यद्वो मनसि रोचते ।। ९ ।।

।। विप्रा ऊचुः ।। ।।

यदि तुष्टोऽसि देवेश रामाज्ञापालक प्रभो ।।

स्वरूपं दर्शयस्वाद्य लंकायां यत्कृतं हरे ।। 3.2.37.१० ।।

तथा विध्वंसवाद्य त्वं राजानं पापकारिणम् ।।

दुष्टं कुमारपालं हि आमं चैव न संशयः ।। ११ ।।

वृत्तिलोपफलं सद्यः प्राप्नुयात्वं तथा कुरु ।।

प्रतीत्यर्थं महाबाहो किं विलंबं वदस्व नः ।।१२।।

त्वयि चित्तेन दत्तेन स राजा पुण्यभाग्भवेत् ।।

प्रत्यये दर्शिते वीर शासनं पालयिष्यति ।। १३ ।।

त्रयीधर्म्मः पृथिव्यां तु विस्तारं प्रापयिष्यति ।।

धर्मधीर महावीर स्वरूपं दर्शयस्व नः ।। १४ ।।

।। हनुमानुवाच ।। ।।

मत्स्वरूपं महाकायं न चक्षुर्विषयं कलौ ।।

तेजोराशिमयं दिव्यमिति जानंतु वाडवाः ।। १५ ।।

तथापि परया भक्त्या प्रसन्नोऽहं स्तवादिभिः ।।

वसनांतरितं रूपं दर्शयिष्यामि पश्यत ।। १६ ।।

एवमुक्तास्तदा विप्राः सर्वकार्यसमुत्सुकाः ।।

महारूपं महाकायं महापुच्छसमाकुलम् ।। १७ ।।

दृष्ट्वा दिव्यस्वरूपं तं हनुमंतं जहर्षिरे ।।

कथंचिद्धैर्यमालंब्य विप्राः प्रोचुः शनैः शनैः ।। १८ ।।

यथोक्तं तु पुराणेषु तत्तथैव हि दृश्यते ।।

उवाच स हि तान्सर्वांश्चक्षुः प्रच्छाद्य संस्थितान् ।। १९ ।।

फलानीमानि गृह्णीध्वं भक्षणार्थमृषीश्वराः ।।

एभिस्तु भक्षितैर्विप्रा ह्यतितृप्तिर्भविष्यति ।। 3.2.37.२० ।।

धर्मारण्यं विना वाद्य क्षुधा वः शाम्यति ध्रुवम् ।। २१ ।।

।। व्यास उवाच ।। ।।

क्षुधाक्रांतैस्तदा विप्रैः कृतं वै फलभक्षणम् ।।

अमृतप्राशनमिव तृप्तिस्तेषामजायत ।। २२ ।।

न तृषा नैव क्षुच्चैव विप्राः संक्लिष्टमानसाः ।।

अभवन्सहसा राजन्विस्मयाविष्टचेतसः ।।२३।।

ततः प्राहांजनीपुत्रः संप्राप्ते हि कलौ द्विजाः ।।

नागमिष्याम्यहं तत्र मुक्त्वा रामेश्वरं शिवम् ।। २४ ।।

अभिज्ञानं मया दत्तं गृहीत्वा तत्र गच्छत ।।

तथ्यमेतत्प्रतीयेत तस्य राज्ञो न संशयः ।। २५ ।।
इत्युक्त्वा बाहुमुद्धृत्य भुजयोरुभयोरपि ।।
पृथग्रोमाणि संगृह्य चकार पुटिकाद्वयम् ।। २६ ।।
भूर्जपत्रेण संवेष्ट्य ते अदाद्विप्रकक्षयोः ।।
वामे तु वामकक्षोत्थां दक्षिणोत्थां तु दक्षिणे ।। २७ ।।
कामदां रामभक्तस्य अन्येषां क्षयकारिणीम् ।।
उवाच च यदा राजा ब्रूते चिह्नं प्रदीयताम् ।। २८ ।।
तदा प्रदीयतां शीघ्रं वामकक्षोद्भवा पुटी ।।
अथवा तस्य राज्ञस्तु द्वारे तु पुटिकां क्षिप ।। २९ ।।
ज्वालयति च तत्सैन्यं गृहं कोशं तथैव च ।।
महिष्यः पुत्रकाः सर्वं ज्वलमानं भविष्यति ।। 3.2.37.३० ।।
यदा तु वृत्तिं ग्रामांश्च वणिजानां बलिं तथा ।।
पूर्वं स्थितं तु यत्किंचित्तत्तद्दास्यति वाडवाः ।। ३१ ।।
लिखित्वा निश्चयं कृत्वाप्यथ दद्यात्स पूर्ववत् ।।
करसंपुटकं कृत्वा प्रणमेच्च यदा नृपः ।। ३२ ।।
संप्राप्य च पुरा वृत्तिं रामदत्तां द्विजोत्तमाः ।।
ततो दक्षिणकक्षास्थकेशानां पुटिका त्वियम् ।। ३३ ।।
प्रक्षिप्यतां तदा सैन्यं पुरावच्च भविष्यति ।।।
गृहाणि च तथा कोशः पुत्रपौत्रादयस्तथा ।। ३४ ।।
वह्निना मुच्यमानास्ते दृश्यंते तत्क्षणादिति ।।
श्रुत्वाऽमृतमयं वाक्यं हनुमंतोदितं परम् ।।३५।।
अलभन्त मुदं विप्रा ननृतुः प्रजगुर्भृशम् ।।
जयं चोदैरयन्केऽपि प्रहसन्ति परस्परम् ।। ३६ ।।
पुलकांकितसर्वाङ्गाः स्तुवन्ति च मुहुर्मुहुः ।।
पुच्छं तस्य च संगृह्य चुचुंबुः केचिदुत्सुकाः ।। ३७ ।।
ब्रूतेऽन्यो मम यत्नेन कार्यं नियतमेव हि ।।
अन्यो ब्रूते महाभाग मयेदं कृतमित्युत ।।।६८।।।
ततः प्रोवाच हनुमांस्त्रिरात्रं स्थीयतामिह ।।

रामतीर्थस्य च फलं यथा प्राप्स्यथ वाडवाः ।। ३९ ।।
तथेत्युक्त्वाथ ते विप्रा ब्रह्मयज्ञं प्रचक्रिरे ।।
ब्रह्मघोषेण महता तद्वनं बधिरं कृतम् ।। 3.2.37.४० ।।
स्थित्वा त्रिरात्रं ते विप्रा गमने कृतबुद्धयः ।।
रात्रौ हनुमतोऽग्रे त इदमूचुः सुभक्तितः ।। ४१।। ।।
।। ब्राह्मणा ऊचुः ।। ।।
वयं प्रातर्गमिष्यामो धर्मारण्यं सुनिर्मलम् ।।
न विस्मार्या वयं तात क्षम्यतां क्षम्यतामिति ।। ४२ ।।
ततो वायुसुतो राजन्पर्वतान्महतीं शिलाम् ।।
बृहतीं च चतुःशालां दशयोजनमायतीम् ।। ४३ ।।
आस्तीर्य प्राह तान्विप्राञ्छिलायां द्विजसत्तमाः ।।
रक्ष्यमाणा मया विप्राः शयीध्वं विगतज्वराः ।। ४४ ।।
इति श्रुत्वा ततः सर्वे निद्रामापुः सुखप्रदाम् ।।
एवं ते कृतकृत्यास्तु भूत्वा सुप्ता निशामुखे ।। ।। ४५ ।।
कृपालुः स च रुद्रात्मा रामशासनपालकः ।।
रक्षणार्थं हि विप्राणामतिष्ठच्च धरातले ।। ४६ ।।
।। व्यास उवाच ।। ।।
अर्द्धरात्रे तु संप्राप्ते सर्वे निद्रामुपागताः ।।
तातं संप्रार्थयामास कृतानुग्रहको भवान् ।। ४७ ।।
समीरण द्विजानेतान्स्थानं स्वं प्रापयस्व भोः ।।
ततो निद्राभिभूतांस्तान्वायुपुत्रप्रणोदितः ।। ४८ ।।
समुद्धृत्य शिलां तां तु पिता पुत्रेण भारत ।।
विशिष्टो यापयामास स्वस्थानं द्विजसत्तमान् ।। ४९ ।।
षड्भिर्मासैश्च यः पन्था अतिक्रांतो द्विजातिभिः ।।
त्रिभिरेव मुहूर्तैस्तु धर्मारण्यमवाप्तवान् ।। 3.2.37.५० ।।
भ्रममाणां शिलां ज्ञात्वा विप्र एको द्विजाग्रतः ।।
वात्स्यगोत्रसमुत्पन्नो लोकान्संगीतवान्कलम् ।। ५१ ।।
गीतानि गायनोक्तानि श्रुत्वा विस्मयमाययुः ।।

प्रभाते सुप्रसन्ने तु उदतिष्ठन्परस्परम् ।। ५२ ।।

ऊचुस्ते विस्मिताः सर्वे स्वप्नोऽयं वाथ विभ्रमः ।।

ससंभ्रमाः समुत्थाय ददृशुः सत्यमंदिरम् ।। ५३ ।।

अंतर्बुद्ध्या समालोक्य प्रभावो वायुजस्य च ।।

श्रुत्वा वेदध्वनिं विप्राः परं हर्षमुपागताः ।। ५४ ।।

ग्रामीणाश्च ततो लोका दृष्ट्वा तु महतीं शिलाम् ।।

अद्भुतं मेनिरे सर्वे किमिदं किमिदं त्विति ।। ५५ ।।

गृहेगृहे हि ते लोकाः प्रवदंति तथाद्भुतम् ।।

ब्राह्मणैः पूर्यमाणा सा शिला च महती शुभा ।। ५६ ।।

अशुभा वा शुभा वापि न जानीमो वयं किल ।।

संवदंते ततो लोकाः परस्परमिदं वचः ।। ५७ ।।

।। व्यास उवाच ।। ।।

ततो द्विजानां ते पुत्राः पौत्राश्चैव समागताः ।।

ऊचुस्ते दिष्ट्या भो विप्रा आगताः पथिका द्विजाः ।। ५८ ।।

ते तु संतुष्टमनसा सन्मुखाः प्रययुर्मुदा ।।

प्रत्युत्थानाभिवादाभ्यां परिरंभणकं तथा ।। ५९ ।।

आघ्राणकादींश्च कृत्वा यथायोग्यं प्रपूज्य च ।।

सर्वं विस्तार्य कथितं शीघ्रमागममात्मनः ।। 3.2.37.६० ।।

ततः संपूज्य तत्सर्वान्गंधतांबूलकुंकुमैः ।।

शांतिपाठं पठंतस्ते हृष्टा निजगृहान्ययुः ।। ६१ ।।

आनंदाया महापीठे प्रातः पांथाः समुत्थिताः ।।

ददृशुस्ते महास्थानं सोत्कंठा हर्षपूरिताः ।। ६० ।।

आश्चर्यं परमं प्रापुः किमेतत्स्थानमुत्तमम् ।।

अयं तु दक्षिण द्वारे शांतिपाठोऽत्र पठ्यते ।। ६३ ।।

गृहा रम्याः प्रदृश्यंते शचीपतिगृहोपमाः ।।

प्रासादाः कुलमातॄणां दृश्यंते चाग्निशोभनाः ।। ६४ ।।

एवं ब्रुवत्सु विप्रेषु महाशक्तिप्रपूजने ।।

आगतो ब्राह्मणोऽपश्यत्तत्र विप्रकदंबकम् ।। ६५ ।।

हर्षितो भावितस्तत्र यत्र विप्राः सभासदः ।।

उवाव दिष्ट्या भो विप्रा ह्यागताः पथिका द्विजाः ।। ६६ ।।

प्रत्युत्तस्थुस्ततो विप्राः पूजां गृहीत्वा समागताः ।।

प्रत्युत्थानाभिवादौ चाकुर्वंस्ते च परस्परम् ।। ६७ ।।

तेते संपूज्य वेगात्तु यथायोग्यं यथाविधि ।।

हरीश्वरस्य यद्वृत्तं विप्राग्रे संप्रकाशितम् ।। ६८ ।।

पथिकानां वचः श्रुत्वा हर्षपूर्णा द्विजोत्तमाः ।।

शांतिपाठं पठन्तस्ते हृष्टा निजगृहान्ययुः ।। ६९ ।।

विमृश्य मिलिताः प्रातर्ज्योतिर्विद्भिः प्रतिष्ठिताः ।।

ब्राह्मे मूहूर्ते चोत्थाय कान्यकुब्जं गता द्विजाः ।।3.2.37.७०।।

दोलाभिर्वाहिताः केचित्केचिदश्वै रथैस्तथा ।।

केचित्तु शिबिकारूढा नानावाहनगाश्च ते ।।७१।।

तत्पुरं तु समासाद्य गंगायाः शोभने तटे ।।

अकुर्वन्वसतिं वीराः स्नानदानादिकर्म्मं च ।। ७२ ।।

चरेण केनचिद्दृष्टाः कथिता नृपसन्निधौ ।।

अश्वाश्च बहुशो दोला रथाश्च बहुशो वृषाः ।। ७३ ।।

विप्राणामिह दृश्यंते धर्मारण्यनिवासिनाम् ।।

नूनं ते च समायाता नृपेणोक्तं ममाग्रतः ।। ७४ ।।

अभिज्ञापय मे पूर्वं प्रेषिताः कपिसंनिधौ ।। ७५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ब्राह्मणानां प्रत्यागमन वर्णनं नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३८

https://sa.wikisource.org/s/frt
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। व्यास उवाच ।। ।।

ततः प्रभाते विमले कृतपूर्वाह्निकक्रियाः ।।

शुभवस्त्रपरीधानाः फल हस्ताः पृथक्पृथक् ।। १ ।।

रत्नांगदाढ्यदोर्दंडा अंगुलीयकभूषिताः ।।

कर्णाभरणसंयुक्ताः समाजग्मुः प्रहर्षिताः ।। २ ।।

राजद्वारं तु संप्राप्य संत स्थुर्ब्रह्मवादिनः ।।

तान्दृष्ट्वा राजपुत्रस्तु ईषत्प्रहसितो बली ।। ३ ।।

रामं च हनुमंतं च गत्वा विप्राः समागताः ।।

श्रूयतां मंत्रिणः सर्वे दृश्यंतो द्विज सत्तमान् ।। ४ ।

एतदुक्त्वा तु वचनं तूष्णीं भूत्वा स्थितो नृपः ।।

ततो द्वित्रा द्विजाः सर्वे उपविष्टाः क्रमात्ततः ।। ५ ।।

क्षेमं पप्रच्छुर्नृपतिं हस्तिरथपदातिषु ।।

ततः प्रोवाच नृपतिर्विप्रान्प्रति महामनाः ।। ६ ।।

अरिहंतप्रसादेन सर्वत्र कुशलं मम ।।

सा जिह्वा या जिनं स्तौ ति तौ करौ यौ जिनार्चनौ ।। ७ ।।

सा दृष्टिर्या जिने लीना तन्मनो यज्जिने रतम् ।।

दया सर्वत्र कर्तव्या जीवात्मा पूज्यते सदा ।। ८ ।।

योगशाला हि गंतव्या कर्त्तव्यं गुरुवंदनम् ।।

न चकारं महामंत्रं जपितव्यमहर्निशम् ।। ९ ।।

पंचूषणं हि कर्त्तव्यं दातव्यं श्रमणे सदा ।।

श्रुत्वा वाक्यं ततो विप्रास्तस्य दंतानपीडयन् ।। 3.2.38.१० ।।

विमुच्य दीर्घनिश्वासमूचुस्ते नृपतिं प्रति ।।

रामेण कथितं राजन्धीमता च हनूमता ।। ११।।

दीयतां विप्रवृत्तिं च धर्मिष्ठोऽसि धरातले ।।

ज्ञायते तव दत्ता स्यान्मदत्ता नैव नैव च ।।१२।।

रक्षस्व रामवाक्यं त्वं यत्कृत्वा त्वं सुखी भव ।।१३।। ।।

।। राजोवाच ।। ।।

यत्र रामहनूमंतौ यांतु सर्वेऽपि तत्र वै ।।

रामो दास्यति सर्वस्वं किं प्राप्ता इह वै द्विजाः ।। १४ ।।

न दास्यामि न दास्यामि एकां चैव वराटिकाम् ।।

न ग्रामं नैव वृत्तिं च गच्छध्वं यत्र रोचते ।। १५ ।।

तच्छ्रुत्वा दारुणं वाक्यं द्विजाः कोपाकुलास्तदा ।।

सहस्व रामकोपं हि साम्प्रतञ्च हनूमतः ।। १६ ।।

इत्युक्त्वा हनुमद्दत्ता वामकक्षोद्भवा पुटी ।।

प्रक्षिप्ता चास्य निलये व्यावृत्ता द्विजसत्तमाः ।। १७ ।।

गते तदा विप्रसंघे ज्वालामालाकुलं त्वभूत् ।।

अग्निज्वालाकुलं सर्वं संजातं चैव तत्र हि ।। १८ ।।

दह्यंते राजवस्तूनिच्छत्राणि चामराणि च ।।

कोशागाराणि सर्वाणि आयुधागारमेव च ।।१९।।

महिष्यो राजपुत्राश्च गजा अश्वा ह्यनेकशः ।।

विमानानि च दह्यंते दह्यंते वाहनानि च ।।3.2.38.२०।।

शिबिकाश्च विचित्रा वै रथाश्चैव सहस्रशः ।।

सर्वत्र दह्यमानं च दृष्ट्वा राजापि विव्यथे ।। २१ ।।

न कोपि त्राता तस्यास्ति मानवा भयविक्लवाः ।।

न मंत्रयंत्रैर्वह्निः स साध्यते न च मूलिकैः ।। २२ ।।

कौटिल्यकोटिनाशी च यत्र रामः प्रकुप्यते ।।

तत्र सर्वे प्रणश्यंति किं तत्कुमारपालकः ।। २३ ।।

सर्वं तज्जवलितं दृष्ट्वा नग्नक्षपणकास्तदा ।।

धृत्वा करेण पात्राणि नीत्वा दंडाञ्छुभानपि ।। २४ ।।

रक्तकंबलिका गृह्य वेपमाना मुहुर्मुहुः ।।

अनुपानहिकाश्चैव नष्टाः सर्वे दिशो दश ।। २६ ।।

कोलाहलं प्रकुर्वाणाः पलायध्वमिति ब्रुवन् ।।

दाहिता विप्रमुख्यैश्च वयं सर्वे न संशयः ।। २६ ।।

केचिच्च भग्नपात्रास्ते भग्नदं ण्डास्तथापरे ।।

प्रनष्टाश्च विवस्त्रास्ते वीतरागमिति ब्रुवन् ।। २७ ।।

अर्हतमेव केचिच्च पलायनपरायणाः ।।

ततो वायुः समभवद्वह्निमांदोलयन्निव ।। ।। २८ ।।

प्रेषितो वै हनुमता विप्राणां प्रियकाम्यया ।।

धावन्स नृपतिः पश्चादितश्चेतश्च वै तदा ।। २९ ।।

पदातिरेकः प्ररुदन्क्व विप्रा इति जल्पकः ।।

लोकाच्छ्रुत्वा ततो राजा गतस्तत्र यतो द्विजाः ।। 3.2.38.३० ।।

गत्वा तु सहसा राजन्गृहीत्वा चरणौ तदा ।।

विप्राणां नृपतिर्भूमौ मूर्च्छितो न्यपत त्तदा ।। ३१ ।।

उवाच वचनं राजा विप्रान्विनयतत्परः ।।

जपन्दाशरथिं रामं रामरामेति वै पुनः ।। ३२ ।।

तस्य दासस्य दासोहं रामस्य च द्विज स्य च ।।

अज्ञानतिमिरांधेन जातोस्म्यंधो हि संप्रति ।। ३३ ।।

अंजनं च मया लब्धं रामनाममहौषधम् ।।

रामं मुक्त्वा हि ये मर्त्या ह्यन्यं देव मुपासते ।।

दह्यंते तेऽग्निना स्वामिन्यथाहं मूढचेतनः ।। ३४ ।।

हरिर्भागीरथी विप्रा विप्रा भागीरथी हरिः ।।

भागीरथी हरिर्विप्राः सारमेकं जगत्त्रये।। ।। ३५ ।।

स्वर्गस्य चैत्र सोपानं विप्रा भागीरथी हरिः ।।

रामनाममहारज्ज्वा वैकुंठे येन नीयते ।। ३६ ।।

इत्येवं प्रणमन्राजा प्रांजलिर्वाक्यमब्रवीत्।।

वह्निः प्रशाम्यतां विप्राः शासनं वो ददाम्यहम् ।। ३७ ।।

दासोऽस्मि सांप्रतं विप्रा न मे वागन्यथा भवेत् ।।

यत्पापं ब्रह्महत्यायाः पर दाराभिगामिनाम्।। ३८।।

यत्पापं मद्यपानां च सुवर्णस्तेयिनां तथा ।।

यत्पापं गुरुघातानां तत्पापं वा भवेन्मम ।। ३९ ।।

यंयं चिंतयते कामं तं तं दास्याम्यहं पुनः ।।
विप्रभक्तिः सदा कार्या रामभक्तिस्तथैव च ।। ३.२.३८.४० ।।
अन्यथा करणीयं मे न कदाचि द्द्विजोत्तमाः ।। ४१ ।।
।। व्यास उवाच ।। ।।
तस्मिन्नवसरे विप्रा जाता भूप दयालवः ।।
अन्या या पुटिका चासीत्सा दत्ता शापशांतये ।। ४२ ।।
जीवितं चैव तत्सैन्यं जातं क्षिप्तेषु रोमसु ।।
दिशः प्रसन्नाः संजाताः शांता दिग्जनितस्वनाः ।। ४३ ।।
प्रजा स्वस्था ऽभवत्तत्र हर्षनिर्भरमानसा ।।
अवतस्थे यथापूर्वं पुत्रपौत्रादिकं तथा ।। ४४ ।।
विप्राज्ञाकारिणो लोकाः संजाताश्च यथा पुरा ।।
विष्णुधर्मं परित्यज्य नान्यं जानंति ते वृषम् ।। ४५ ।।
नवीनं शासनं कृत्वा पूर्ववद्विधिपूर्वकम् ।।
निष्कासितास्तु पाषंडाः कृतशास्त्रप्रयोजकाः ।। ४६ ।।
वेदबाह्याः प्रनष्टास्ते उत्तमाधममध्यमाः ।।
षट्त्रिंशच्च सहस्राणि येऽभूवन्गोभुजाः पुरा ।। ४७ ।।
तेषां मध्यात्तु संजाता अढवीजा वणिग्जनाः ।।
शुश्रूषार्थं ब्राह्मणानां राज्ञा सर्वे निरूपिताः ।। ४८ ।।
सदाचाराः सुनिपुणा देवब्राह्मणपूजकाः ।।
त्यक्त्वा पाखण्डमार्गं तु विष्णुभक्तिपरास्तु ते ।। ४९ ।।
जाह्नवीतीरमासाद्य त्रैविद्येभ्यो ददौ नृपः ।।
शासनं तु यदा दत्तं तेषां वै भक्तिपूर्वकम् ।। ३.२.३८.५० ।।
स्थानधर्मात्प्रचलिता वाडवास्ते समागताः ।।
नृपो विज्ञापितो विप्रैस्तैरेवं क्लेशकारिभिः ।। ५१ ।।
ये त्यक्तवाचो विप्रेंद्रास्तान्निःसारय भूपते ।।
परस्परं विवादास्तु संजाता दत्तवृत्तये ।। ५२ ।।
न्याय प्रदशनार्थं च कारितास्तु सभासदः ।।
हस्ताक्षरेषु दृष्टेषु पृथक्पृथक्प्रपादितम् ।। ५३ ।।

एतच्छ्रुत्वा ततो राजा तुलादानं चकार ह ।।
दीयमाने तदा दाने चातुर्विद्या बभाषिरे ।। ५४ ।।
अस्माभिर्हारिता जातिः कथं कुर्मः प्रतिग्रहम् ।।
निवारितास्तु ते सर्वे स्थानान्मोहेरका द्विजाः ।।५५।।
दशपंच सहस्राणि वेदवेदांगपारगाः ।।
ततस्तेन तदा राजन्राज्ञा रामानुवर्तिना ।। ५६ ।।
आहूता वाडवांस्तास्तु ज्ञातिभेदं चकार सः ।।
त्रयीविद्या वाडवा ये सेतुबंधं प्रति प्रभुम् ।। ५७ ।।
गतास्ते वृत्तिभाजः स्युर्नान्ये वृत्त्यभिभागिनः ।।
तत्र नैव गता ये वै चातुर्विद्यत्वमागताः ।। ५८ ।।
वणिग्भिर्न च संबंधो न विवाहश्च तैः सह ।।
ग्रामवृत्तौ न संबंधो ज्ञातिभेदे कृते सति ।।५९।।
द्विजभक्तिपराः शूद्राः ये पाखंडैर्न लोपिताः।।
जैन धर्मात्परावृत्तास्ते गोभूजास्तथोत्तमाः ।। 3.2.38.६० ।।
ये च पाखंडनिरता रामशासनलोपकाः ।।
सर्वे विप्रास्तथा शूद्रा प्रतिबंधेन योजिताः ।। ६१ ।।
सत्यप्रतिज्ञां कुर्वाणास्तत्रस्थाः सुखिनोऽभवन् ।।
चातुर्विद्या बहिर्ग्रामे राज्ञा तेन निवासिताः ।।६२।।
यथा रामो न कुप्येत तथा कार्यं मया ध्रुवम।।
पराङ्मुखा ये रामस्य सन्मुखानुगताः किल ।। ६३ ।।
चातुर्विद्यास्ते विज्ञेया वृत्तिबाह्याः कृतास्तदा ।।
कृतकृत्यस्तदा जातो राजा कुमारपालकः ।। ६४ ।।
विप्राणां पुरतः प्राह प्रश्रयेण वचस्तदा ।।
ग्रामवृत्तिर्न मे लुप्ता एतद्वै देवनिर्मितम् ।। ६५ ।।
स्वयं कृतापराधानां दोषो कस्य न दीयते ।।
यथा वने काष्ठवर्षाद्वह्निः स्याद्दैवयोगतः ।। ६६ ।।
भवद्भिस्तु पणः प्रोक्तो ह्यभिज्ञानस्य हेतवे ।।
रामस्य शासनं कृत्वा वायुपुत्रस्य हेतवे ।। ६७ ।।

व्यावृत्ता वाडवा यूयं स दोषः कस्य दीयते ।।
अवसाने हरिं स्मृत्वा महापापयुतोऽपि वा ।। ६८ ।।
विष्णुलोकं व्रजत्याशु संशयस्तु कथं भवेत् ।।
महत्पुण्योदये नृणां बुद्धिः श्रेयसि जायते ।। ६९ ।।
पापस्योदयकाले च विपरीता हि सा भवेत् ।।
सकृत्पालयते यस्तु धर्मेणैतज्जगत्त्रयम् ।। ।। ३.२.३८.७० ।।
योंतरात्मा च भूतानां संशयस्तत्र नो हितः ।।
इंद्रादयोऽमराः सर्वे सनकाद्यास्तपोधनाः ।। ७१ ।।
मुक्त्यर्थमर्चयंतीह संशयस्तत्र नो हितः ।।
सहस्रनाम तत्तुल्यं रामनामेति गीयते ।। ७२ ।।
तस्मिन्ननिश्चयं कृत्वा कथं सिद्धिर्भवेदिह ।।
मम जन्मकृतात्पुण्यादभिज्ञानं ददौ हरिः ।। ७३ ।।
पाखंडाद्यत्कृतं पापं मृष्टं तद्वः प्रणामतः ।।
प्रसीदंतु भवंतश्च त्यक्त्वा क्रोधं ममाधुना ।। ७४ ।।
।। ब्राह्मणा ऊचुः ।। ।।
राजन्धर्मो विलुप्तस्ते प्रापितानां तथा पुनः ।।
अवश्यं भाविनो भावा भवंति महतामपि ।। ७५ ।।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ।।
एतद्दैवकृतं सर्वं प्रभुर्यः सुखदुःखयोः ।। ७६ ।।
सत्यप्रतिज्ञास्त्रैविद्या भजंतु रामशासनम् ।।
अस्माकं तु परं देहि स्थानं यत्र वसामहे ।। ७७ ।।
तेषां तु वचनं श्रुत्वा सुखमिच्छुर्द्विजन्मनाम् ।।
तेषां स्थानं तु दत्तं वै सुखवासं तु नामतः ।। ७८ ।।
हिरण्यं पुष्पवासांसि गावः कामदुघा नृप ।।
स्वर्णालंकरणं सर्वं नानावस्तुचयं तथा ।। ७९ ।।
श्रद्धया परया दत्त्वा मुदं लेभे नराधिपः ।।
त्रयीविद्यास्तु ते ज्ञेयाः स्थापिता ये त्रिमूर्तिभिः ।। ।। ३.२.३८.८० ।।
चतुर्थेनैव भूपेन स्थापिताः सुखवासने ।।

ते बभूबुर्द्विजश्रेष्ठाश्चातुर्विद्याः कलौ युगे ।। ८१ ।।

चातुर्विद्याश्च ते सर्वे धर्मारण्ये प्रतिष्ठिताः ।।

वेदोक्ता आशिषो दत्त्वा तस्मै राज्ञे महात्मने ।। ८२ ।।

रथैरश्वैरुह्यमानाः कृतकृत्या द्विजातयः ।।

महत्प्रमोदयुक्तास्ते प्रापुर्मोहेरकं महत् ।। ८३ ।।

पौषशुक्लत्रयोदश्यां लब्धं शासनकं द्विजैः ।।

बलिप्रदानं तु कृतमुद्दिश्य कुलदेवताम् ।। ८४ ।।

वर्षेवर्षे प्रकर्त्तव्यं बलिदानं यथाविधि ।।

कार्यं च मंगलस्नानं पुरुषेण महात्मना ।। ८५ ।।

गीतं नृत्यं तथा वाद्यं कुर्वीत तद्दिने धुवम् ।।

तन्मासे तद्दिने नैव वृत्तिनाशो भवेद्यथा ।। ८६।।

दैवादतीतकाले चेत्वृद्धिरापद्यते यदा ।।

तदा प्रथमतः कृत्वा पश्चाद्वृद्धिर्विधीयते ।। ८७ ।।

ये च भिन्नप्रपाप्रायास्त्रैविद्या मोढवंशजाः ।।

तथा चातुर्वेदिनश्च कुर्वंति गोत्रपूजनम् ।। ८८ ।।

वर्षमध्ये प्रकुर्वीत तथा सुप्ते जनार्द्दने ।।

पौषे च लुप्तं कृत्वा च श्रौतं स्मार्त्तं करोति यः ।। ८९ ।।

तत्र क्रोधसमाविष्टा निघ्नंति कुलदेवताः ।।

विवाहोत्सवकाले च मौंजीबंधादिकर्मणि ।। 3.2.38.९० ।।

मुहूर्तं गणनाथस्य ततः प्रभृति शोभनम् ।। ९१ ।।

निर्वासितास्तु ये विप्रा आमराज्ञा स्वशासनात् ।।

पंचदशसहस्राणि ययुस्ते सुखवासकन् ।। ९२ ।।

पंचपञ्चाशतो ग्रामान्ददौ रामः पुरा स्वयम् ।।

तत्रस्था वणिजश्चैव तेषां वृत्तिमकल्पयन् ।। ९३ ।।

अडालजा माण्डलीया गोभूजाश्च पवित्रकाः ।।

ब्राह्मणानां वृत्तिदास्ते ब्रह्मसेवासु तत्पराः ।। ९४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ब्राह्मणानां शासनवृत्तिप्राप्तिवर्णनं नामाष्टत्रिंशोऽध्यायः ।। ३८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ३९



।। ब्रह्मोवाच ।। ।।

शृणु पुत्र प्रवक्ष्यामि रहस्यं परमं मतम् ।।

एते ब्रह्मविदः प्रोक्ताश्चातुर्विद्या महा द्विजाः ।। १ ।।

स्वाध्यायाश्च वषट्काराः स्वधाकाराश्च नित्यशः ।।

रामाज्ञापालकाश्चैव हनुमद्भक्तितत्पराः ।। २ ।।

एकदा तु ततो देवा ब्रह्माणं समुपागताः ।।

ब्राह्मणान्द्रष्टुकामास्ते ब्रह्मविष्णुपुरोगमाः ।। ३ ।।

तान्देवानागतान्दृष्ट्वा स्वस्थानाच्चलितास्तु ते ।।

अर्घपाद्यं पुरस्कृत्य मधुपर्कं तथैव च ।। ४ ।।

पूजयित्वा ततो विप्रा देवान्ब्रह्मपुरोगमान्।।

ब्रह्मात्र उपविष्टास्ते वेदानुच्चारयन्ति हि ।। ५ ।।

संहितां च पदं चैव क्रमं घनं तथैव च ।।

उच्चैः स्वरेण कुर्वीत ऋचामृग्वेदसंहिताम् ।। ६ ।।

सामगाश्च प्रकुर्वंति स्तोत्राणि विविधानि च ।।

शास्त्राणि च तथा याज्यापुरोनुवाक्या स्तथा ।। ७ ।।

चतुरक्षरं परं चैव चतुरक्षरमेव च ।।

द्व्यक्षरं च तथा पंचाक्षरं द्वयक्षरमेव च ।।

एतद्यज्ञस्वरूपं च यो जपेज्ज्ञानपूर्वकम् ।।८।।

अंते ब्रह्म पदप्राप्तिः सत्यंसत्यं वदाम्यहम् ।।

एकाग्रमानसाः सर्वे वेदपाठरता द्विजाः ।। ९ ।।

तेषामंगणदेशेषु कण्डूयन्ते कचान्मृगाः ।।

ब्राह्मणा वेदमातां च जपंति विधिपूर्वकम्।।3.2.39.१०।।

हस्ते धृतांश्च तैर्दर्भान्भक्षंते मृगपोतकाः।।

निर्वैरं तं तदा दृष्ट्वा आश्रमं गृहमेधिनाम् ।।११।।

तुतुषुः परमं देवा ऊचुस्ते च परस्परम्।।

त्रेतायुगमिदानीं च सर्वे धर्मपरायणाः।।१२।।

कलिर्दुष्टस्तथा प्रोक्तः किं करिष्यति पापकः।।

चातुर्विद्यान्समाहूय ऊचुस्ते त्रय एव च।।१३।।

वृत्त्यर्थं भवतां चैव त्रैविद्यानां तथैव च ।।

विभागं वः प्रदास्यामो यथावत्प्रतिपाल्यताम्।।१४।।

ये वणिजः पुरा प्रोक्ताः षट्त्रिंशच्च सहस्रकाः ।।

त्रिसहस्रास्तु त्रैविद्या दशपंचसहस्रकाः ।। १५ ।।

चातुर्विद्यास्तथा प्रोक्ता अन्योन्यं वृत्तिमाश्रिताः ।।

सत्रिभागास्तु त्रैविद्याश्चतुर्भागास्तु चात्रिणः ।।१६।।

वणिजां गृहमागत्य पौरोहित्यस्य नित्यशः ।।

भागं विभज्य संप्रापुः काजेशेन विनिर्मिताः ।। १७ ।।

परस्परं न विवाहश्चातुर्विद्यत्रिविद्ययोः ।।

चातुर्विद्या मया प्रोक्तास्त्रिविद्यास्तु तथैव च ।। १८ ।।

त्रैविभागेन त्रैविद्याश्चतुर्भागेन चात्रिणः ।।

एवं ज्ञातिविभागस्तु काजेशेन विनिर्मितः ।। ।। १९ ।।

कृतकृत्यास्तु ते विप्राः प्रणेमुस्तान्सुरोत्तमान् ।।

वृत्तिं दत्त्वा ततो देवाः स्वस्थानं च प्रतस्थिरे ।। 3.2.39.२० ।।

पंचपंचाशद्ग्रामाणां ते द्विजाश्च निवासिनः ।।

चतुर्विद्यास्तु ते प्रोक्तास्तदादि तु त्रिविद्यकाः ।। २१ ।।

चातुर्विद्यस्य गोत्राणि दशपंच तथैव च ।।

भारद्वाजस्तथा वत्सः कौशिकः ८ कुश एव च ।। २२ ।।

शांडिल्यः ५ कश्यपश्चैव गौतमश्छादनस्तथा ८ ।।

जातूकर्ण्यस्तथा कुंतो वशिष्ठो ११ धारणस्तथा ।। २३ ।।

आत्रेयो मांडिलश्चैव १४ लौगाक्षश्च १५ ततः परम् ।।

स्वस्थानानां च नामानि प्रवक्ष्याम्यनुपूर्वशः ।। २४ ।।

सीतापूरं च श्रीक्षेत्रं २ मगोडी च ३ तथा स्मृता ।।

ज्येठलोजस्तथा चैव शेरथा च ततः परम् ।। २५ ।।

छेदे ताली वनोडी च गोव्यंदली तथैव च ।।
कंटाचोषली चैव कोहेचं चंदनस्तथा ।।२६।।
थलग्रामश्च सोहं च हाथंजं कपडवाणकम् ।।
व्रजन्होरी च वनोडी च फीणां वगोलं दृणस्तथा (?)।। ।।२७।।
थलजा चारणं सिद्धा भालजाश्च ततः परम् ।।
महोवी आईया मलीआ गोधरी आमतः परम् ।। २८ ।।
वाठसुहाली तथा चैव माणजा सानदीयास्तथा ।।
आनन्दीया पाटडीअ टीकोलीया ततः परम् ।। २९ ।।
गंभी धणीआ मात्रा च नातमोरास्तथैव च ।।
वलोला रांत्यजाश्चैव रूपोला बोधणीच वै ।। 3.2.39.३० ।।
छत्रोटा अलु एवा च वासतडीआमतः परम् ।।
जाषासणा गोतीया च चरणीया दुधीयास्तथा ।। ३१ ।।
हालोला वैहोला च असाला नालाडास्तथा ।।
देहोलो सौहासीया च संहालीयास्तथैव च ।। ३२ ।।
स्वस्थानं पंचपत्ताशद्ग्रामा एते ह्यनुक्रमात् ।।
दत्ता रामेण विधिवत्कृत्वा विप्रेभ्य एव च ।। ३३ ।।
अतः परं प्रवक्ष्यामि स्वस्थानस्य च गोत्रजान्।।
तथा हि प्रवरांश्चैव यथावद्विधिपूर्वकम् ।। ३४ ।।
ज्ञात्वा तु गोत्रदेवीं च तथा प्रवरमेव च ।।
स्वस्थानं जायते चैव द्विजाः स्वस्थानवासिनः ।। ३५ ।।
।। नारद उवाच ।। ।।
कथं च जायते गोत्रं कथं तु ज्ञायते कुलम् ।।
कथं वा ज्ञायते देवी तद्वदस्व यथार्थतः ।। ३६ ।।
।। ब्रह्मोवाच ।। ।।
सीतापुरं तु प्रथमं प्रवरद्वयमेव च ।।
कुशवत्सौ तथा चात्र मया ते परिकीर्त्तितौ ।। ३७ ।।
१ श्रीक्षेत्रे द्वितीयं चैव गोत्राणां त्रयमेव च ।।
छांदनसस्तथा वत्सस्तृतीयं कुशमेव च ।। ३८ ।।

तृतीये मुद्गलं चैव कुशभारद्वाजमेव च ३।।

शोहोली च चतुर्थं वै कुशप्रवरमेव च।। ३९।।

ज्येष्ठला पंचमश्चैव वत्सकुशौ प्रकीर्त्तितौ ५।।

श्रेयस्थानं हि षष्ठं वै भारद्वाजः कुशस्तथा।।3.2.39.४०।।

दंताली सप्तमं चैव भारद्वाजः कुशस्तथा १।।

वटस्थानमष्टमं च निबोध सुतसत्तम।।४१।।

तत्र गोत्रं कुशं कुत्सं भारद्वाजं तथैव च ।।

राज्ञः पुरं नवमं च भारद्वाजप्रवरमेव च ९ ।। ४२ ।।

कृष्णवाटं दशमं चैव कुशप्रवरमेव च ।।

दहलोडमेकादशं वत्सप्रवरमेव हि ।। ४३ ।।

चेखलीद्वादशं पौककुशप्रवरमेव च ।। ४४ ।।

चांचोदखे १२ देहोलोडी आत्रयश्च वत्सकुत्सकश्चैव ।।

भारद्वाजीकोणाया च भारद्वाजगोलंदृणाशकुस्तथा ।। ४५ ।।

थलत्यजाद्वये चैव कुशधारणमेव च ।।

नारणसिद्धा च स्वस्थानं कुत्सं गोत्रं प्रकीर्तितम् ।। ४६ ।।

भालजां कुत्सवत्सौ च मोहोवी आकुशस्तथा ।।

ईयाक्षीआ शांडिलश्च गोधरीपात्रमेव च ।। ४७ ।।

आनंदीया द्वे चैव भारद्वाजशांडिलश्चैव पाटडीआ कुशमेव च ।। ४८ ।।

वांसडीआश्चैव जास्वा कौत्समणा वत्सआत्रेयौ गीता आकुशगौतमौ ।। ।। ४९ ।।

चरणीआ भारद्वाजः दुधीआधारणसा हि अहो सोन्नामांडिल्यस्तथा ।। 3.2.39.५० ।।

वेलोला हुराश्चैवा असाला कुशश्चैव धारणा च द्वितीय कम् ।। ५१ ।।

नालोला वत्सधारणीया च देलोला कुत्समेव च ।।

सोहासीया भारद्वाजकुशवत्समेव च ।। ५२ ।।

सुहालीआ वत्सं वै प्रोक्तं गोत्राणि यथाक्रमम् ।।

मया प्रोक्तानि चैवात्र स्वस्थानानि यथाक्रमम्।। ५३ ।।

शीतवाडिया ये प्रोक्ताः कुशो वत्सस्तथैव च ।।

विश्वामित्रो देवरातस्तृतीयो दलमेव च ।। ५४ ।।

भार्गवच्यावनाप्नवानौर्वजमदग्निरेव हि ।।

वचार्द्दशेषाबुटला गोत्रदेव्यः प्रकीर्तिताः ।। ५५ ।।

इति प्रथमं गोत्रम् ।। १ ।।

श्रीक्षेत्रं द्वितीयं प्रोक्तं गोत्रद्वितयमेव च ।।

छांदनसस्तथा वत्सं देवी द्वितयमेव च ।। ५६ ।।

आंगिरसांबरीषश्च यौवनाश्वस्तथैव च ।।

भृगुच्यवनआप्नवानौ र्वजमदग्निमेव च ।। ५७ ।।

देवी भट्टारिका प्रोक्ता द्वितीया शेपला तथा ।।

एतद्वंशोद्भवा ये च शृणु तान्मुनिसत्तम ।। ५८ ।।

सक्रोधनाः सदाचाराः श्रौतस्मार्तक्रियापराः ।।

पंचयज्ञरता नित्यं संबंधसंमाश्रिताः ।।

क्षतज्ञाः क्रतुजाश्चैव ते सर्वे नृपसत्तमाः ।। ५९ ।।

इति द्वितीयगोत्रम् ।। २ ।।

तृतीयं मगोडोआ वै गोत्रद्वितयमेव च ।।

भारद्वाजस्तथा कुत्सं देवी द्वितयमेव च ।। 3.2.39.६० ।।

आंगिरसबार्हस्पत्यभारद्वाजस्तथैव च ।।

विश्वामित्रदेव रातौप्रवरत्रयमेव च ।।६१।।

शेषला बुधला प्रोक्ताधारशांतिस्तथैव च ।।

अस्मिन्ग्रामे च ये जाता ब्राह्मणाः सत्यवादिनः ।। ६२ ।।

द्विजपूजाक्रिया युक्ता नानायज्ञक्रियापराः ।।

अस्मिन्गोत्रे समुत्पन्ना द्विजाः सर्वे मुनीश्वराः ।। ६३ ।।

इति तृतीयगोत्रम् ।। ३ ।।

चतुर्थं शीहोलियाग्रामं गोत्रद्वित यमेव च।।

विश्वामित्रदेवराततृतीयौदलमेव च ।।६४।।

देवी चचाई वै तेषां गोत्रदेवी प्रकीर्तिता।।

अस्मिन्गोत्रे तुये जाता दुर्बला दीनमा नसाः।।६५।।

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम।।

सर्व्वविद्याप्रवीणाश्च ब्राह्मणा ब्रह्मसत्तम।।६६।।

इति चतुर्थं स्थानम्।।४।।

ज्येष्ठलोजा पंचमं च स्वस्थानं प्रतिकीर्तितम्।।

वत्सशीया कुत्सशीया प्रवरद्वितयं स्मृतम्।।६७।।

आवरिवृवाप्रः यौवनाश्वभृगुच्यवनआप्नोर्वजमदग्निस्तथैव हि ।।६८।।

चचाई वत्सगोत्रस्य शांता च कुत्सगोत्रजा ।।

एतैस्त्रिभिः पंचभिश्च द्विजा ब्रह्मस्वरूपिणः ।।६९।।

शांता दांताः सुशीलाश्च धन पुत्रैश्च संयुताः ।।

वेदाध्ययनहीनाश्च कुशलाः सर्वकर्मसु।।3.2.39.७०।।

सुरूपाश्च सदाचाराः सर्वधर्मेषु निष्ठिताः ।।

दानधर्म्मरताः सर्वे अत्रजा जलदा द्विजाः ।।७१।।

इति पंचमं स्थानम्।।५।।

शेरथाग्रामेषु वै जाताः प्रवरद्वयसंयुताः ।।

कुशभारद्वाजाश्चैव देवीद्वयं तथैव च ।।७२।।

विश्वामित्रो देवरातस्तृतीयौ दल एव च ।।

आंगिरसबार्हस्पत्यभारद्वाजास्तथैव च।।७३।।

कमला च महालक्ष्मीर्द्वितीया यक्षिणी तथा।।

अस्मिन्गोत्रे च ये जाताः श्रौतस्मार्त्तरता बुधाः।।७४।।

वेदाध्ययनशीलाश्च तापसाश्चारिमर्द्दनाः।।

रोषिणो लोभिनो दुष्टा यजने याजने रताः।।

ब्रह्मक्रियापराः सर्वे ब्राह्मणास्ते मयोदिताः।।

इति षष्ठं स्थानम्।।६।।

दंतालीया भारद्वाजकुत्सशायास्तथैव च।।

आंगिरसबार्हस्पत्यभारद्वाजास्तथैव च।।७६।।

देवी च यक्षिणी प्रोक्ता द्वितीया कर्मला तथा ।।

अस्मिन्गोत्रे च ये जाता वाडवा धनिनः शुभाः ।।७७।।

वस्त्रालंकरणोपेता द्विजभक्तिपरायणाः ।।

ब्रह्मभोज्यपराः सर्वे सर्वे धर्मपरायणाः ।। ।। ७८ ।।

इति सप्तमं स्थानम्।।७।।

वडोद्रीयान्वये जाताश्चत्वारः प्रवराः स्मृताः ।।

कुशः कुत्सश्च वत्सश्च भारद्वाजस्तथैव च ।।७९।।

तत्प्रवराण्यहं वक्ष्ये तथा गोत्राण्यनुक्रमात्।।

विश्वामित्रो देवरातस्तृतीयौदल एव च ।। 3.2.39.८० ।।

आंगिरसांबरीषश्च यौवनाश्वस्तृतीयकः ।।

भार्गवश्च्यावनाप्नवानौर्वजमदग्निस्तथैव च।।८१।।

आंगिरसबार्हस्पत्यभारद्वाजास्तथैव च।।

कर्मला क्षेमला चैव धारभट्टारिका तथा।।८२।।

चतुर्थी क्षेमला प्रोक्ता गोत्रमाता अनुक्रमात्।।

अस्मिन्गोत्रे तु ये जाताः पंचयज्ञरताः सदा ।। ८३ ।।

लोभिनः क्रोधिनश्चैव प्रजायंते बहुप्रजाः ।।

स्नानदानादि निरताः सदा विनिर्जितेंद्रियाः ।। ८४ ।।

वापीकूपतडागानां कर्तारश्च सहस्रशः ।।

व्रतशीला गुणज्ञाश्च मूर्खा वेदविवर्जिताः ।। ८५ ।।

इत्यष्टमं स्थानम् ।। ८ ।।

गोदणीयाभिधे ग्रामे गोत्रौ द्वौ तत्र संस्थितौ ।।

वत्सगोत्रं प्रथमकं भारद्वाजं द्वितीयकम् ।। ८६ ।।

भृगुच्यवनाप्नवानौर्वपुरोध समेव च ।।

शीहरी प्रथमा ज्ञेया द्वितीया यक्षिणी तथा ।। ८७ ।।

अस्मिन्गोत्रोद्भवा विप्रा धनधान्यसमन्विताः ।।

सामर्षा लौल्यहीनाश्च द्वेषिणः कुटिलास्तथा ।। ८८ ।।

हिंसिनो धनलुब्धाश्च मया प्रोक्तास्तु भूपते ।। ८९ ।।

इति नवमं स्थानम् ।। ९ ।।

कण्टवाडीआ ग्रामे विप्राः कुशगोत्र

शुक्लशुश्च समुद्भ`वाः ।।

प्रवरं तस्य वक्ष्यामि शृणु त्वं च नृपोत्तम ।। 3.2.39.९० ।।

विश्वमित्रो देवरात उदलश्च त्रयः स्मृताः ।।

चचाई देवी सा प्रोक्ता शृणु त्वं नृप सत्तम ।। ९१ ।।

यजंते क्रतुभिस्तत्र हृष्टचित्तैकमानसाः ।।

सर्वविद्यासु कुशला ब्राह्मणाः सत्यवादिनः ।। ९२ ।।

इति दशमं स्थानम् ।। १० ।।

वेखलोया मया प्रोक्ता कुत्सवंशे समुद्भवाः ।।

प्रवरत्रयसंयुक्ताः शृणुत्वं च नृपोत्तम ।। ९३ ।।

विश्वामित्रो देवराजौदलश्चेति त्रयः स्मृताः ।।

चचाई देवी तेषां वै कुलरक्षाकरी स्मृता ।। ९४ ।।

ब्राह्मणाश्च महात्मानः सत्त्ववंतो गुणान्विताः ।।

तपस्वियोगिनश्चैव वेदवेदांगपारगाः ।। ९५ ।।

साधवश्च सदाचारा विष्णुभक्तिपरायणाः ।।

स्नानसंध्यापरा नित्यं ब्रह्मभोज्यपरायणाः ।। ९६ ।।

अस्मिन्वंशे मया प्रोक्ताः शृणुत्वं च अतः परम् ।। ९७ ।।

इत्येकादशस्थानम्।। ११ ।।

देहलोडीआ ये प्रोक्ताः कुत्सप्रवरसंयुताः ।।

आंगिरस आंबरीषो युवनाश्वस्तृतीयकः ।। ९८ ।।

गोत्रदेवी मया प्रोक्ता श्रीशेषदुर्बलेति च ।।

कुत्सवंशे च ये जाताः सद्वृत्ताः सत्यभाषिणः ।। ९९ ।।

वेदाध्ययनशीलाश्च परच्छिद्रैकदर्शिनः ।।

सामर्षा लौल्यतो हीना द्वेषिणः कुटिलास्तथा ।। 3.2.39.१०० ।।

हिंसिनो धनलुब्धाश्च ये च कुत्ससमुद्भवाः ।। १ ।।

इति द्वादशं स्थानम् ।। १२ ।।

कोहे च ब्राह्मणाः प्रोक्ता गोत्रत्रितयसंयुताः ।।

भारद्वाजस्तथा वत्सस्तृतीयः कुश एव च ।। २ ।।

प्रवराण्यहं तथा वक्ष्ये यथा गोत्रक्रमेण हि ।।

भार्गवच्यवनाप्नवानौर्वजमदग्निस्तथैव च ।। ३ ।।

कुशप्रवरं तृतीयं तु प्रवरत्रयमेव च ।।

विश्वामित्रो देवरातस्तृतीयौदलमेव च ।। ४ ।।

यक्षिणी प्रथमा प्रोक्ता द्वितीया शीहुरी तथा ।।

तृतीया चचाई प्रोक्ता यथानुक्रमगोत्रजा ।। ५ ।।

अस्मिन्गोत्रे भवा विप्राः श्रौतस्मार्त्तरता बुधाः ।।

वेदाध्ययनशीलाश्च तापसाश्चारिमर्द्दनाः ।। ६ ।।

रोषिणो लोभिनो दुष्टा यजने याजने रताः ।।

ब्रह्मकर्मपराः सर्वे मया प्रोक्ता द्विजोत्तमाः ।। ।। ७ ।।

इति त्रयोदशं स्थानम्।।१३।।

चांदणखेडे ये जाता भारद्वाजसमुद्भवाः।।

आंगिरसो बार्हस्पत्यस्तृतीयो भारद्वाजस्तथा ।।८।।

यक्षिणी चास्य वै देवी प्रोक्ता व्यासेन धीमता ।।

भारद्वाजास्तु ये जाता द्विजा ब्रह्मस्वरूपिणः ।। ९ ।।

शांता दांता सुशीलाश्च धनपुत्रसमन्विताः ।।

धर्मारण्ये द्विजाः श्रेष्ठाः क्रतुकर्मणि कोविदाः ।।3.2.39.११०।।

गुरुभक्तिरताः सर्वे भासयंति स्वकं कुलम् ।।११।।

इति चतुर्द्दशस्थानम् ।।१४।।

थलग्रामे च ये जाता भारद्वाजसमुद्भवाः ।।

आंगिरसो बार्हस्पत्यो भारद्वाजस्तृतीयकः ।। १२ ।।

अस्मिन्गोत्रे च ये जाता वाडवा धनिनः शुभाः ।।

वस्त्रालंकरणोपेता द्विजभक्तिपरायणाः ।। १३ ।।

ब्रह्मभोज्यपराः सर्वे सर्वे धर्मपरायणाः ।।

गोत्रदेवी मया ख्याता यक्षिणी नाम रक्षिणी ।। १४ ।।

इति पंचदश स्थानम्।।१५।।

मोऊत्रीयाश्च ये जाता द्वौ गोत्रौ तत्र कीर्तितौ ।।

भारद्वाजः कश्यपश्च देवीद्वितयमेव च ।। १५ ।।

चामुण्डा यक्षिणी चैव देवी चात्र प्रकीर्त्तिता ।।

कश्यपाऽवत्सारश्चैव नैध्रुवश्च तृतीयकः ।। १६ ।।

आंगिरसो बार्हस्पत्यो भारद्वाजस्तृतीयकः ।।

प्रियवाक्या महादक्षा गुरु भक्ति रताः सदा ।। १७ ।।

सदा प्रतिष्ठावंतश्च सर्वभूतहिते रताः ।।

यजंति ते महायज्ञान्काश्यपा ये द्विजातयः ।। १८ ।।

सर्वेषां याजनकरा याज्ञिकाः परमाः स्मृताः ।। १९ ।।

इति षोडशं स्थानम् ।। १६ ।।

हाथीजणे च ये जाता वत्सा भारद्वाजास्तथा ।।

ज्ञानजा यक्षिणी चैव गोत्रदेव्यौ प्रकी र्तिते ।। 3.2.39.१२० ।।

अस्मिन्गोत्रे च ये जाताः पंचयज्ञरताः सदा ।।

लोभिनः क्रोधिनश्चैव प्रजावंतो बहुश्रुताः ।। २१ ।।

स्नानदानादिनिरता विष्णुभक्तिपरायणाः ।।

व्रतशीला गुणज्ञानमूर्खा वेदविवर्जिताः ।। २२ ।।

इति सप्तदशं स्थानम् ।। १७ ।।

कपड्वाणजा ब्राह्मणास्तु भारद्वाजा कुशास्तथा ।।

देवी च यक्षिणी प्रोक्ता द्वितीया चचाई तथा ।। २३ ।।

आंगिरसबार्हस्पत्यौ भारद्वाजस्तृतीयकः ।।

विश्वामित्रो देवरातस्तृतीयौदल मेव च ।। २४ ।।

अस्मिन्गोत्रे च ये जाताः सत्यवादिजितव्रताः ।।

जितेंद्रियाः सुरूपाश्च अल्पाहाराः शुभाननाः ।। २५ ।।

सदोद्यताः पुराणज्ञा महादानपरायणाः ।।

निर्द्वेषिणो लोभयुता वेदाध्ययनतत्पराः ।। २६ ।।

दीर्घदर्शिनो महातेजा महामायाविमोहिताः ।। २७ ।।

इत्यष्टादशं स्थानम् ।। १८ ।।

जन्होरी वाडवाः प्रोक्ताः कुशप्रवरसंयुताः ।।

विश्वामित्रो देवरातस्तृतीयौदल एव च ।। २८ ।।

तारणी च महामाया गोत्रदेवी प्रकीर्त्तिता ।।

अस्मिन्वंशे ससुत्पन्ना वाडवा दुःसहा नृप ।। २९ ।।

महोत्कटा महाकायाः प्रलंबाश्च महोद्धताः ।।

क्लेशरूपाः कृष्णवर्णाः सर्वशास्त्र विशारदाः ।। 3.2.39.१३० ।।

बहुभुग्धनिनो दक्षा द्वेषपापविवर्जिताः ।।

सुवस्त्रभूषा वैरूपा ब्राह्मणा ब्रह्मवादिनः ।। ३१ ।।

इत्येकोनविशतितमं स्थानम् ।। ।। १९ ।।

वनोडीयाश्च ये जाता गोत्राणां त्रयमेव च ।।

कुशकुत्सौ च प्रवरौ तृतीयो भारद्वाजस्तथा ।। ३२ ।।

विश्वामित्रो देवरातस्तृतीयौदल मेव च ।।

आंगिरस आंबरीषो युवनाश्वस्तृतीयकः ।। ३३ ।।

आंगिरसबार्हस्पत्यभारद्वाजास्तथैव च ।।

शेषला प्रथमा प्रोक्ता तथा शांता द्वितीयका ।। ३४ ।।

तृतीया धारशांतिश्च गोत्रदेव्यो ह्यनुक्रमात् ।।

अस्मिन्गोत्रे तु ये जाता दुर्बला दीनमानसाः ।। ३५ ।।

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम ।।

सर्वविद्याकुशलिनो ब्राह्मणा ब्रह्मवित्तमाः ।। ३६ ।।

इति विंशतितमं स्थानम् ।। २० ।।

कीणावाचनकं स्थानं यदेकाधि कविंशति ।।

भारद्वाजाश्च विप्रेंद्राः कथिता ब्राह्मणाः शुभाः ।। ३७ ।।

आंगिरसवार्हस्पत्यभारद्वाजास्तथैव च ।।

यक्षिणी च तथा देवी गोत्रदेवी प्रकी र्तिता ।। ३८ ।।

अस्मिन्गोत्रे च ये जाता वाडवा धनिनः शुभाः ।।

वस्त्रालंकरणोपेता द्विजभक्तिपरायणाः ।। ३९ ।।

ब्रह्मभोज्यपराः सर्वे सर्वे धर्म्मे परायणाः ।। 3.2.39.१४० ।।

इत्येकविंशतितमं स्थानम् ।। २१ ।।

गोविंदणाः च स्वस्थाने ये जाता ब्रह्मसत्तमाः ।।

कुशगोत्रं च वै प्रोक्तं प्रवरत्रयमेव च ।। ।।४१।।

विश्वामित्रो देवरातौदलप्रवरमेव च।।

चचई च महादेवी गोत्रदेवी प्रकीर्तिता ।। ४२ ।।

अस्मिन्गोत्रे च ये जाता ब्राह्मणा ब्रह्मवेदिनः ।।

यजंते क्रतुभिस्तत्र हृष्टचित्तैकमानसाः ।। ४३ ।।

सर्वविद्यासु कुशला ब्रह्मण्या ब्रह्मवित्तमाः ।। ४४ ।।

इति द्वाविंशतितमं स्थानम् ।। २२ ।।

थलत्यजा हि विप्रेंद्रा द्वौ गोत्रौ चाप्यधिष्ठितौ ।।

धारणं संकुशं चैव गोत्रद्वितयमेव च ।। ४५ ।।

अगस्त्यो दार्ढ्यच्च्युतश्च रथ्यवाहनमेव च ।।

विश्वामित्रो देवरात स्तृतीयौदल एव च ।। ४६ ।।

देवी च छत्रजा प्रोक्ता द्वितीया थलजा तथा ।।

धारणसगोत्रे ये जाता ब्रह्मण्या ब्रह्मवित्तमाः ।। ४७ ।।

त्रिप्रवराश्चैव विख्याता सत्त्ववंतो गुणान्विताः ।

तदन्वये च ये जाता धर्मकर्म्मसमाश्रिताः ।। ४८ ।।

धनिनो ज्ञाननिष्ठाश्च तपोयज्ञक्रियादिषु ।।

त्रयोविंशं प्रोक्तमेतत्स्थानं मोढकजातिनाम् ।। ४९ ।।

इति त्रयोविंशतितमं स्थानम् ।। २३ ।।

वारणसिद्धाश्च ये प्रोक्ता ब्राह्मणा ज्ञानवित्तमाः ।।

अस्मिन्गोत्रे च ये विप्राः सत्यवादिजितव्रताः ।। 3.2.39.१५० ।।

जितेंद्रियाः सुरूपाश्च अल्पाहाराः शुभाननाः ।।

सदोद्यताः पुराणज्ञा महादानपरायणाः ।। ।। ५१ ।।

निर्द्वेषिणोऽलोभयुता वेदाध्ययनतत्पराः ।।

दीर्घदर्शिनो महातेजा महामायाविमोहिताः ।। ५२ ।।

चतुर्विंशतितमं प्रोक्तं स्वस्थानं परमं मतम् ।। ५३ ।।

इति चतुर्विंशतितमं स्थानम् ।। २४ ।।

भालजाश्चात्र वै प्रोक्ता ब्राह्मणाः सत्यवादिनः ।। ५४ ।।

वत्सगोत्रं कुशं चैव गोत्रद्वितयमेव च ।।

तेषां प्रवराण्यहं वक्ष्ये पंचत्रितयमेव च ।।

भृगुश्चयवनाप्नवानौर्वजमदग्निस्तथैव च ।। ५५ ।।

आंगिरसौंबरीषश्च यौवनाश्वस्तृतीयकः ।।

शांता च शेषला चात्र देवीद्वितयमेव च ।। ५६ ।।

अस्मिन्वंशे समुत्पन्ना सद्वृत्ताः सत्यभाषिणः ।।

शांताश्च भिन्नवर्णाश्च निर्धनाश्च कुचैलिनः ।। ।। ५७ ।।

सगर्वा लौल्ययुक्ताश्च वेदशास्त्रेषु निश्चलाः ।।

पंचविंशतिमं प्रोक्तं स्वस्थानं मोढज्ञातिनाम् ।। ५८ ।।

इति पंचविंशतितमं स्थानम् ।। ।। २५ ।।

महोवीआश्च ये संति ब्राह्मणा ब्रह्मवित्तमाः ।।

एकमेव च वै गोत्रं कुशसंज्ञं पवित्रकम् ।। ५९ ।।

विश्वामित्रो देवरातस्तृतीयौदल एव च ।।

देवी चवाई चैवात्र रक्षारूपा व्यवस्थिता ।। 3.2.39.१६० ।।

अस्मिन्गोत्रे च ये जाताः सत्यवादि जितेद्रियाः ।।

सत्यव्रताः सुरूपाश्च अल्पाहाराः शुभा ननाः ।। ६१ ।।

दयालवः कृपालवः सर्वभूतहिते रताः ।।

षड्विंशतितमं प्रोक्तं स्वस्थानं त्रह्मवादिनाम् ।। ६२ ।।

रामेण संस्तुताश्चैव सानुजेन तथैव च ।। ६३ ।।

इति षड्विंशतितमं स्थानम् ।। २६ ।।

तियाश्रीयामथोवक्ष्ये स्वस्थानं सप्तविंशकम् ।।

अस्मिन्स्थाने च ये जाता ब्राह्मणा वेदपारगाः ।। ६४ ।।

शांडिल्यगोत्रं चैवात्र कथितं वेदसत्तमैः ।।

पंचप्रवरमथो प्रोक्तं ज्ञानजा चात्र देवता ।। ६५ ।।

काश्यपावत्सारश्चैव शांडि लोसित एव च ।।

पंचमो देवलश्चैव प्रवराणि तथा क्रमात् ।।

ज्ञानजा च तथा देवी कथिता स्थानदेवता ।। ६६ ।।

अस्मिन्वंशे च ये जातास्ते द्विजाः सूर्यवर्चसः ।।

चंद्रवच्छीतलाः सर्वे धर्मारण्ये व्यवस्थिताः ।। ६७ ।।

सदाचारा महाराज वेदशास्त्रपरायणाः ।।

याज्ञिकाश्च शुभाचाराः सत्यशौचपरायणाः ।। ६८ ।।

धर्मज्ञा दानशीलाश्च निर्मला हि मदोत्सुकाः ।।

तपःस्वाध्यायनिरता न्यायधर्मपरायणाः ।।

सप्तविंशतिमं स्थानं कथितं ब्रह्मवित्तमैः ।। ६९ ।।

इति सप्तविंशं स्थानम् ।। २७ ।।

गोधरीयाश्च ये जाता ब्राह्मणा ज्ञानसत्तमाः ।।

गोत्रत्रयमथो वक्ष्ये यथा चैवाप्यनुक्रमात्।। 3.2.39.१७० ।।

प्रथमं धारणसं चैव जातूकर्णं द्वितीयकम् ।।
तृतीयं कौशिकं चैव यथा चैवाप्यनुक्रमात् ।।७१।।
धारणसगोत्रे ये जाताः प्रवरैस्त्रिभिः संयुताः ।।
अगस्तिश्च दार्ढच्युत इध्मवाहनसंज्ञकः ।। ७२ ।।
वसिष्ठश्च तथात्रेयो जातूकर्णस्तृतीयकः ।।
विश्वामित्रो माधुच्छंदस अघमषणस्तृतीयकः ।। ७३ ।।
महाबला च मालेया द्वितीया चैव यक्षिणी ।।
तृतीया च महायोगी गोत्रदेव्यः प्रकीर्तिताः ।। ७४ ।।
अस्मिन्वंशे च ये जाता ब्राह्मणाः सत्यवादिनः ।।
अलौल्याश्च महायज्ञा वेदाज्ञाप्रतिपालकाः ।। ७५ ।।
इत्यष्टाविंशं स्थानम् ।। २८ ।।
वाटस्त्रहाले ये जाता गोत्रत्रितयमेव च ।।
धारणं प्रथमं ज्ञेयं वत्ससंज्ञं द्वितीयकम् ।। ७६ ।।
तृतीयं कुत्ससंज्ञं च गोत्रदेव्यस्तथैव च ।।
प्रथमं धारणसगोत्रं प्रवरत्रयमेव च ।। ७७ ।।
अगस्तिदार्ढच्युतश्चैव इध्मवाहन एव च ।।
द्वितीयं वत्ससंज्ञं हि प्रवराणि च पंच वै ।। ७८ ।।
भृगु च्यवनाप्नवानौर्वजमदग्निस्तथैव च ।।
तृतीयं कुत्ससंज्ञं हि प्रवरत्रयमेव च ।। ७९ ।।
आंगिरसांबरीषौ च यौवनाश्वस्तृतीयकः ।।
देवी चच्छत्रजा चैव द्वितीया शेषला तथा ।। 3.2.39.१८० ।।
ज्ञानजा चैव देवी च गोत्रदेव्यो ह्यनुक्रमात् ।।
अस्मिन्गोत्रे च ये विप्राः सत्यवादिजितेंद्रियाः ।। ८१ ।।
सुरूपाश्चाल्पाहाराश्च महादानपरायणाः ।।
निर्द्वेषिणो लोभयुता वेदाध्ययनतत्पराः ।। ८२ ।।
दीर्घदर्शिनो महातेजा महोत्काः सत्यवादिनः ।। ।। ८३।।
इत्येकोनत्रिंशं स्थानम् ।। २९ ।।
माणजा च महास्थानं गोत्रद्वितयमेव च ।।

शांडिल्यश्च कुशश्चैव गोत्रद्वयमितीरितम् ।। ८४ ।।

काश्यपोऽवत्सारश्च शांडिल्योऽसित एव च ।।

पंचमो देवलश्चैव एकगोत्रं प्रकीर्तितम् ।।८५।।

ज्ञानजा च तथा देवी कथिता चात्र सैव च ।।

द्वितीयं च कुशं गोत्रं प्रवरत्रयमेव च ।। ८६ ।।

विश्वामित्रो देवराजस्तृतीयोदलमेव च ॥

ज्ञानदा चात्र वै देवी द्वितीया संप्रकीर्तिता ॥ ८७॥

अस्मिन्गोत्रे तु ये जाता दुर्बला दीनमानसाः ॥

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम ॥ ८८ ॥

सर्वविद्याकुशलिनो ब्राह्मणा ब्रह्मसत्तमाः ॥ ८९ ॥

इति त्रिंशं स्थानम् ॥३०॥

साणदां च परं स्थानं पवित्रं परमं मतम् ॥

कुशप्रवरजा विप्रास्तत्रस्थाः पावनाः स्मृताः ॥ 3.2.39.१९० ॥

विश्वामित्रो देवरातस्तृतीयोदल एव च ॥

ज्ञानदा च महादेवी गोत्रदेवी प्रकीर्तिता ॥ ९१ ॥

अस्मिन्गोत्रे तु ये जाता दुर्बला दीनमानसाः ॥

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम॥९२॥

सर्वविद्याकुशिलिनो ब्राह्मणा ब्रह्मवित्तमाः ॥९३॥

इत्येकत्रिंशं स्थानम् ॥ ३१ ॥

आनन्दीया च संस्थानं गोत्रद्वितयमेव च ।।

भारद्वाजं नाम चैकं शांडिल्यं च द्वितीयकम् ।।९४ ।।

आंगिरसो बार्हस्पत्यो भारद्वाजस्तृतीयकः ।।

चचाई चात्र या देवी गोत्रदेवी प्रकीर्तिता ।। ९५ ।।

काश्यपावत्सारश्च शांडिल्योऽसित एव च ।।

पंचमो देवलश्चैव प्रवराणि यथाक्रमम् ।। ९६ ।।

ज्ञानजा च तथा देवी कथिता गोत्रदेवता ।।

अस्मिन्गोत्रे च ये जाता निर्लोभाः शुद्धमानसाः ।।९७।।

यदृच्छालाभसंतुष्टा ब्राह्मणा ब्रह्मवित्तमाः ।।९८।।

इति द्वात्रिंशं स्थानम् ।।३२।।

पाटडीया परं स्थानं पवित्रं परिकीर्तितम्।

कुशगोत्रं भवेदत्र प्रवरत्रयसंयुतम् ।।९९।।

विश्वामित्रो देवरातस्तृतीयौदलमेव हि ।।

अस्मिन्गोत्रे च ये जाता वेदशास्त्र परायणाः ।।3.2.39.२० ०।।

मदोद्धुराश्च ते विप्रा न्यायमार्गप्रवर्तकाः ।।१।।

इति त्रयस्त्रिंशं स्थानम् ।। ३३ ।।

टीकोलिया परं स्थानं कुशगोत्रं तथैव च ।।

विश्वामित्रो देवरातस्तृतीयौदलमेव च ।।२।।

चचाई चात्र वै देवी गोत्रदेवी प्रकीर्तिता ।।

अस्मिन्गोत्रे भवा विप्राः श्रुतिस्मृतिपरायणाः ।।३।।

रोगिणो लोभिनो दुष्टा यजने याजने रताः ।।

ब्रह्मक्रियापराः सर्वे मोढाः प्रोक्ता मयात्र वै ।।४।।

इति चतुस्त्रिंशं स्थानम् ।।३४।।

गमीधाणीयं परमं स्थानं प्रोक्तं वै पचत्रिंशकम्।।

योत्र धारणसं चैव देवी चात्र महाबला।।५।।

अगस्तिदार्ढच्युतइध्मवाहनसंज्ञकाः।।

अस्मिन्वंशे च ये जाता ब्राह्मणा ब्रह्मतत्पराः ।। ६ ।।

अलौल्याश्च महाप्राज्ञा वेदाज्ञाप्रतिपालकाः ।। ७ ।।

इति पंचत्रिंशं स्थानम् ।।३५।।

मात्रा च परमं स्थानं पवित्रं सर्वदेहिनाम् ।।

कुशगोत्रं पवित्रं तु परमं चात्र धिष्ठितम् ।। ८ ।।

विश्वामित्रो देवरातो दलश्चैव तृतीयकः ।।

ज्ञानदा च महादेवी सर्वलोकैकरक्षिणी ।। ९ ।।

अस्मिन्वंशे समुद्भूता ब्राह्मणा देवतत्पराः ।।

सस्वाधायवषट्कारा वेदशास्त्रप्रवर्तकाः ।। 3.2.39.२१० ।।

इति षट्त्रिशं स्थानम् ।। ३६ ।।

नातमोरा परं स्थानं पवित्रं परमं शुभम् ।।

कुशगोत्रं च तत्रास्ति प्रवरत्रयसंयुतम् ।। ११ ।।

विश्वामित्रो देवरातस्तृतीयौदलमेव च ।।

ज्ञानजा चात्र वै देवी गोत्रदेवी प्रकीर्तिता ।। १२ ।।

अस्मिन्वंशे भवा ये च ब्राह्मणा ब्रह्मवित्तमाः ।।

धर्मज्ञाः सत्यवक्तारो व्रतदानपरायणाः ।। १३ ।।

इति सप्तत्रिंशं स्थानम् ।। ३७ ।।

बलोला च महास्थानं पवित्रं परमाद्भुतम् ।।

कुशगोत्रं समाख्यातं प्रवरत्रयमेव च ।। १४ ।।

पूर्वोक्तं प्रवरं चैव देवी चैवात्र मानदा ।।

वंशेस्मिन्परमाः प्रोक्ताः काजेशेन विनिर्मिताः।।। १५ ।।

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम ।।

सर्वविद्याकुशलिनो ब्राह्मणा ब्रह्मसत्तमाः ।। १६ ।।

इत्यष्टत्रिंशं स्थानम् ।। ३८ ।।

राज्यजा च महास्थानं लौगाक्षाप्रवरं तथा ।।

काश्यपावत्सारवाशिष्ठं प्रवरत्रयमेव च ।। १७ ।।

भद्रा च योगिनी चैव गोत्रदेवी प्रकीर्तिता ।।

अस्मिन्वंशे समुद्भूता ब्राह्मणा वेदतत्पराः ।। १८ ।।

नित्यस्नाननित्यहोमनित्यदानपरायणाः ।।

नित्यधर्मरताश्चैव नित्यनैमित्ततत्पराः ।। १९ ।।

इत्येकोनचत्वारिंशं स्थानम ।। ३९ ।।

रूपोला परमं स्थानं पवित्रमतिपुण्यदम् ।।

अस्मिन्गोत्रत्रये चैव देवीत्रितयमेव च ।।3.2.39.२२०।।

प्रथमं कुत्सवत्साख्यौ भारद्वाजस्तृतीयकः ।।

आंगिरसोंबरीषश्च यौवनाश्वस्तृतीयकः ।। २१ ।।

भृगुच्यवनाप्नवानौर्वजगदग्निस्तथैव च ।।

आंगिरसवार्हस्पत्यभारद्वाजस्तथैव च ।।२२।।

क्षेमला चैव वै देवी धारभट्टारिका तथा ।।

तृतीया क्षेमला प्रोक्ता गोत्रमाता ह्यनुक्रमात् ।।२३।।

अस्मिन्गोत्रे च ये जाता पंचयज्ञरताः सदा ।।

लोभिनः क्रोधिनश्चैव प्रजायन्ते बहुप्रजाः ।। २४ ।।

स्नानदानादिनिरताः सदा च विजितेंद्रियाः ।।

वापीकूपतडागानां कर्त्तारश्च सहस्रशः ।। २५ ।।

इति चत्वारिंशं स्थानम् ।। ४० ।।

बोधणी परमं स्थानं पवित्रं पापनाशनम् ।।

कुशं च कौशिकं चैव गोत्रद्वितयमेव च ।। २६ ।।

विश्वामित्रश्च प्रथमो देवरातोदलेति च ।।

विश्वामित्राघमर्षणकौशिकेति तथैव च ।। २७ ।।

यक्षिणी प्रथमा चैव द्वितीया तारणी तथा ।।

अस्मिन्गोत्रे तु ये जाता दुर्बला दीनमानसाः ।। २८ ।।

असत्यभाषिणो विप्रा लोभिनो नृपसत्तम ।।

सर्वविद्याकुशलिनो ब्राह्मणा ब्रह्मसत्तमाः । २९ ।।

इत्येकचत्वारिशं स्थानम् ।। ४१ ।।

छत्रोटा च परं स्थानं सर्वलोकैकपूजितम् ।।

कुशगोत्रं समाख्यातं प्रवरत्रयमेव हि ।। 3.2.39.२३० ।।

विश्वामित्रो देवरातस्तृतीयो दलमेव वै ।।

चचाई चात्र वै देवी गोत्रदेवी प्रकीर्तिता ।। ३१ ।।

अस्मिन्वंशे भवाश्चैव वेदशास्त्रपरायणाः ।।

महोदयाश्च ते विप्रा न्यायमार्गप्रवर्तकाः । ३२ ।।

इति द्विचत्वारिंशं स्थानम् ।। ४२ ।।

खल एवात्र संस्थानं त्रयश्चत्वारिंशमेव हि ।।

वत्सगोत्रोद्भवा विप्राः कृषिकर्मप्रवर्तकाः ।। ३३ ।।

गोत्रजा ज्ञानजा देवी प्रवराः पंच एव हि ।।

भार्गावच्या वनाप्नवानौर्वजामदग्न्येति चैव हि ।। ३४ ।।

अस्मिन्गोत्रे भवा विप्राः श्रौताग्नि सुनिषेवकाः ।।

वेदाध्ययनशीलाश्च तापसाश्चारिमर्दनाः ।। ३५ ।।

रोषिणो लोभिनो हृष्टा यजने याजने रताः ।।

सर्वभूतदयाविष्टास्तथा परोपकारिणः ।।३६ ।।

इति त्रयश्चत्वारिंश स्थानम् ।। ४३ ।।

वासंतड्यां च विप्राणां कुशगोत्रमुदाहृतम् ।।

विश्वामित्रो देवारातस्तृतीयौदलमेव हि ।।३७।।

चचाई चात्र वै देवी गोत्रदेवी प्रकीर्तिता ।।

अस्मिन्वंशे च ये जाताः पूर्वोक्ता ब्रह्मतत्पराः ।। ३८ ।।

परोपकारिणश्चैव परचित्तानुवर्तिनः ।।

परस्वविमुखाश्चैव परमार्गप्रवर्त्तकाः ।। ३९ ।।

इति चतुश्चत्वारिंशं स्थानम् ।। ।। ४४ ।।

अतः परं च संस्थानं जाखासणमुदाहृतम् ।।

गोत्रं वै वात्स्यसंज्ञं तु गोत्रजा शीहुरी तथा ।।

प्रवराणि च पंचैव मया तव प्रकाशितम् ।। 3.2.39.२४० ।।

भार्गवच्यावनाप्नवानौर्वपुरोधसः स्मृतः ।।

अस्मिन्वंशे च ये जाता वाडवाः सुखवासिनः ।।

विप्राः स्थूलाश्च ज्ञातारः सर्वकर्म रताश्च वै ।। ४१ ।।

सर्वे धर्मैकविश्वासाः सर्वलोकैकपूजिताः ।।

वेदशास्त्रार्थनिपुणा यजने याजने रताः ।। ४२ ।।

सदाचाराः सुरूपाश्च तुंदिला दीर्घ दर्शिनः ।।

शीहुरी चात्र वै देवी कुलदेवी प्रकीर्तिता ।। ४३ ।।

इति पंचचत्वारिंशं स्थानम् ।। ४५ ।।

षट्चत्वारिंशकं स्थानं मोटानां तु प्रकाशितम्।।

गोतीआनामसंज्ञा तु कुशगोत्रमिहास्ति च ।।४४।।

विश्वामित्रं प्रथमं चैव द्वितीयं देवरातकम्।।

तृतीयमौदलं चैव प्रवरत्रितयं त्विदम्।।४५।।

यक्षिणी चात्र वै देवी राक्षसानां प्रभंजनी।।

अस्मिन्वंशे च ये जाता ब्राह्मणा ब्रह्मतत्पराः।।४६।।

धर्मे मतिप्रवृत्ताश्च धर्मशास्त्रेषु निष्ठिताः ।। ४७ ।।

इति षटचत्वारिंशस्थानम् ।। ४६ ।।

सप्तचत्वारिंशकं च संस्थानं परिकीर्तितम् ।।

वरलीयाख्यसंस्थानं पवित्रं परमं मतम् ।। ४८ ।।

भारद्वाजं तथा गोत्रं प्रवराणि तथैव च ।।

यक्षिणी चात्र वै देवी कुलदेवी प्रकीर्तिता ।। ४९ ।।

आंगिरसं बार्हस्पत्यं भारद्वाजं तृतीयकम् ।।

अस्मिन्वंशे च ये जाताः ब्राह्मणा पूतमूर्तयः।। ३.२.३९.२५० ।।

येषां वाक्योदकेनैव शुध्यंति पापिनो नराः ।। ५१ ।।

इति सप्तचत्वारिंशकं स्थानम् ।। ४७ ।।

दुधीयाख्यं परं स्थानं गोत्रद्वितयमेव च ।।

धारणसं तथा गोत्रमांगिरकसमेव च ।। ५२ ।।

अगस्तिदार्ढच्युतइध्मवाहनसंज्ञकम् ।।

छत्राइ च महादेवी द्वितीयं प्रवरं शृणु ।। ५३ ।।

आंगिरसांबरीषौ च यौवनाश्वस्तृतीयकः ।।

ज्ञानदा शेषला चैव ज्ञानदा सर्वदेहिनाम् ।। ५४ ।।

अस्मिन्वंशे समुत्पन्ना वाडवा दुःसहा नृप ।।

मदोत्कटा महाकायाः प्रलंभाश्च मदोद्धताः ।। ५५ ।।

क्लेशरूपाः कृष्णवर्णाः सर्वशस्त्रविशारदाः ।।

बहुभुग्धनिनो दक्षा द्वेषपापविवर्जिताः ।। ५६ ।।

इत्यष्टाचत्वारिशकं स्थानम् ।। ४८ ।।

हासोलासं प्रवक्ष्यामि स्वस्थानं चात्र संश्रुतम् ।।

शांडिल्यगोत्रं चैवात्र प्रवरैः पंचभिर्युतम् ।। ५७ ।।

भार्गवच्यावनाप्नवानौर्वं वै जामदग्न्यकम् ।।

यक्षिणी चात्र वै देवी पवित्रा पापनाशिनी ।। ५८ ।।

अस्मिन्वंशे च ये जाता ब्राह्मणाः स्थूलदेहिनः ।।

लंबोदरा लंबकर्णा लंबहस्ता महाद्विजाः ।। ५९ ।।

अरोगिणः सदा देवाः सत्यव्रतपरायणाः ।। ।। ३.२.३९.२६० ।।

इत्येकोनपञ्चाशत्तमं स्थानम् ।। ४९ ।।

वैहालाख्यं च संस्थानं पचाशत्तममेव हि ।।

कुशगोत्रं तथा चैव देवी चात्र महाबला ।। ६१ ।।

अस्मिन्गोत्रे भवा विप्रा दुष्टाः कुटिलगामिनः ।।

धनिनो धर्मनिष्ठाश्च वेदवेदांगपारगाः ।। ६२ ।।

दानभोगरताः सर्वे श्रौते च कृत बुद्धयः ।। ६३ ।।

इति पञ्चाशत्तमं स्थानम् ।। ५० ।।

असाला परमं स्थानं प्रवरद्वयमेव हि ।।

कुशं च धारणं चैव प्रवराणि क्रमेण तु ।।६४।।

विश्वामित्रो देवरातो देवलस्तु तृतीयकः ।।

ज्ञानजा च तथा देवी गोत्रदेवी प्रकीर्तिता ।। ६५ ।।

इत्येकपंचाशत्तमं स्थानम् ।। ५१ ।।

नालोला परमं स्थानं द्विपंचाशत्तमं किल ।।

वत्सगोत्रं तथा ख्यातं द्वितीयं धारणसं तथा ।। ६६ ।।

प्रवराश्चैव पूर्वोक्ता देव्युक्ता पूर्वमेव हि ।।

अस्मिन्वंशे च ये जाताः पवित्राः परमा मताः ।। ६७

बहुनोक्तेन किं विप्राः सर्व एवात्र सत्तमाः ।।

सर्वे शुद्धा महात्मानः सर्वे कुलपरंपराः।।६८।।

इति द्वापञ्चाश त्तमं स्थानम्।।५२।।

देहोलं परमं स्थानं ब्राह्मणानां परंतप ।।

कुशवंशोद्भवा विप्रास्तत्र जाता नृसत्तम ।।

पूर्वोक्तप्रवराण्येव देवी पूर्वोदिता मया।।६९।।

तस्मिन्गोत्रे द्विजा जाताः पूर्वोक्तगुणशालिनः ।।3.2.39.२७०।।

इति त्रिपंचाशत्तमं स्थानम् ।। ५३ ।।

सोहासीयापुरं स्थानं गोत्रत्रितयमेव हि ।।

भारद्वाजस्तथा ख्यातं गोत्रं वत्सं तथैव च ।।७१।।

यक्षिणी ज्ञानजा चैव सिहोली च यथाक्रमम्।।

एतद्वंशपरीक्षा च पूर्वोक्ता नृपसत्तम ।।७२।।

इति चतुःपंचाशत्तमं स्थानम् ।।५४।।

पंचपंचाशकं स्थानं प्रवक्ष्यामि तवाधुना ।।

नाम्ना संहालियास्थानं दत्तं रामेण वै पुरा ।।७३।।

तत्र वै कुत्सगोत्रस्था ब्राह्मणां ब्रह्मवर्चसः।।

स्वधर्मनिरता नित्याः स्वकर्म्मनिरताश्च ते ।।७४ ।।

आंगिरसांबरीषेच यौवनाश्वमतः परम् ।।

शांता चैवात्र वै देवी शांतिकर्म्मणि शा तिदा ।। ७५ ।।

इति पंचपंचाशत्तमं स्थानम् ।। ५५ ।।

एवं मया ते गोत्राणि स्थानान्यपि तथैव च ।।

प्रवराणि तथैवात्र ब्राह्मणानां परंतप ।।७६।।

अतः परं प्रवक्ष्यामि त्रैविद्यानां परंतप ।।

स्वस्थानं च मया प्रोक्तं यथानुक्रमेण तु ।। ७७ ।।

शीलायाः प्रथमं स्थानं मंडोरा च द्वितीयकम् ।।

एवडी च तृतीय हि गुंदराणा चतुर्थकम् ।।७८।।

पंचमं कल्याणीया देगामा षष्ठकं तथा ।।

नायकपुरा सप्तमं च डलीआ चाष्टमं तथा ।। ७९ ।।

कडोव्या नवमं चैव कोहाटोया दशमं तथा।।

हरडीयैकादशं चैव भदुकीया द्वादशं तथा ।।3.2.39.२८०।।

संप्राणावा तथा चात्र कंदरावा प्रकीर्तितम् ।।

वासरोवा त्रयोदशं शरंडावा चतुर्दशम् ।। ८१ ।।

लोलासणा पंचदशं वारोला षोडशं तथा ।।

नागलपुरा मया चात्र उक्तं सप्तदशं तथा ।। ८२ ।।

।। ब्रह्मोवाच ।। ।।

चातुर्विद्यास्तु ये विप्रा नागताः पुनरागताः ।।

वसतिं तत्र रम्ये च चक्रिरे ते द्विजोत्तमाः ।। ८३ ।।

चतुर्विंशतिसंख्याका रामशासनलिप्सया ।।

हनुमंतं प्रति गता व्यावृत्ताः पुनरागताः ।।८४।।

तेषां दोषात्समस्तास्ते स्थानभ्रंशत्वमागताः।।

कियत्काले गते तेषां विरोधः समपद्यत ।। ८५ ।।

भिन्नाचारा भिन्नभाषा वेशसंशयमागताः ।।

पंचदशसहस्राणि मध्ये ये के च वाडवाः।।८६।।

कृषिकर्मरता आसन्केचिद्यज्ञपरायणाः।।

केचिन्मल्लाश्च संजा ताः केचिद्वै वेदपाठकाः ।।८७।।

आयुर्वेदरताः केचित्केचिद्रजकयाजकाः ।।

संध्यास्नानपराः केचिन्नीलीकर्तृप्रयाजकाः ।। ८८ ।।

तंतुकृद्याचनरतास्तंतुवायादियाचकाः ।।

कलौ प्राप्ते द्विजाः भ्रष्टा भविष्यंति न संशयः ।। ८९ ।।

शूद्रेषु जातिभेदः स्यात्कलौ प्राप्ते नराधिप ।।

भ्रष्टाचाराः परं ज्ञात्वा ज्ञातिबंधेन पीडिताः ।। 3.2.39.२९० ।।

भोजनाच्छादने राजन्परित्यक्ता निजैर्जनैः ।।

न कोऽपि कन्यां विवहेत्संसर्गेण कदाचन ।।

ततस्ते वणिजो राजं स्तैलकाराः कलौ किल ।। ९१ ।।

केचिच्च कलकाराश्च केचित्तंदुलकारिणः ।।

राजपुत्राश्रिताः केचिन्नानावर्णसमाश्रिताः ।।

कलौ प्राप्ते तु वणिजो भ्रष्टाः केपि महीतले ।। ९२ ।।

तेषां तु पृथगाचाराः सम्बन्धाश्च पृथक्कृता ।।

सीतापुरे च वसतिः केषांचित्समजायत ।। ९३ ।।

साभ्रमत्यास्तटे केचिद्यत्र कुत्र व्यवस्थिताः ।।

सीतापुरात्तु ये पूर्वं भयभीता समागताः ।। ९४ ।।

साभ्रमत्युत्तरे कूले श्रीक्षेत्रे ये व्यवस्थिताः ।।

यदा तेषां पदं स्थानं दत्तं वै सुखवासकम् ।।९५।।

पुनस्तेऽपि गताः सद्यस्तस्मिन्सीतापुरे स्वयम्।।

पंचपञ्चाशद्ग्रामाश्च दत्तास्तु प्रुनरागमे ।। ९६ ।।

रामेण मोढविप्राणां निवासांस्तेषु चक्रिरे ।।

वृत्तिबाह्यास्तु ये विप्रा धर्मारण्यांतरस्थिताः ।। ९७ ।।

नास्माकं वणिजां वृत्तौ ग्रामवृत्तौ न किंचन ।।

प्रयोजनं हि विप्रेंद्रा वासोऽस्माकं तु रोचते ।। ९८ ।।

इत्युक्ते समनुज्ञातास्त्रैविद्यैस्तैर्द्विजोत्तमैः ।।

तेषु ग्रामेषु ते विप्राश्चातुर्विद्या द्विजोत्तमाः ।। ९९ ।।

स्वकर्मनिरताः शांताः कृषिकर्मपरायणाः ।।

धर्मारण्यान्नातिदूरे धेनूः संचारयंति ते ।।3.2.39.३००।।

बहवस्तत्र गोपाला वभूवुर्द्विजबालकाः ।।

चातुर्विद्यास्तु शिशवस्तेषां धेनूरचारयन् ।।

तेषां भोजनकामाय अन्नपानादिसत्कृतम् ।। १ ।।

अनयन्वै युवतयो विधवा अपि बालकाः ।। २ ।।

कालेन कियता राजंस्तेषां प्रीतिरभून्मिथः ।।

गोपाला बुभुजुः प्रेम्णा कुमार्यो द्विजबालिकाः ।। ३ ।।

जाताः सगर्भास्ताः सर्वा दृष्टास्तैर्द्विजसत्तमैः ।।

परित्यक्ताश्च सदनाद्धिक्कृताः पापकर्मणा ।। ४ ।।

तेभ्यो जाता कुमारा ये कातीभा गोलकास्तथा ।।

धेनुजास्ते धरालोके ख्यातिं जग्मुर्द्विजोत्तमाः ।। ५ ।।

वृत्ति बाह्यास्तु ते विप्रा भिक्षां कुर्वंति नित्यशः ।।

अन्यच्च श्रूयतां राजंस्त्रैविद्यानां द्विजन्मनाम् ।। ६ ।।

कुष्ठी कोऽपि तथा पंगुर्मूर्खो वा बधिरोऽपि वा ।।

काणो वाप्यथ कुब्जो वा बद्धवागथवा पुनः ।। ७ ।।

अप्राप्तकन्यका ह्येते चातुर्विद्यान्समाश्रिताः ।।

वित्तेन महता राजन्सुतांस्तेषां कुमारिकाः ।। ८ ।।

उद्वाहितास्तदा राजंस्तस्माज्जातार्भकास्तु ये ।।

त्रिदलजास्ते विख्याताः क्षितिलोकेऽभवंस्ततः ।। ९ ।।

वृत्तिं चक्रुर्ब्राह्मणास्तेऽ न्योन्यं मिश्रसमुद्भवाः ।।

अन्यच्च श्रूयतां राजंस्त्रैविद्यानां द्विजन्मनाम् ।। 3.2.39.३१० ।।

रामदत्तेन ग्रामेण करग्रहणहेतवे ।।

एकीभूय द्विजैः सर्वैर्ग्रामं प्रदाय तं बलिम् ।। ११ ।।

अर्द्धं निवेदयामासुरर्द्धं चैवोपरक्षितम् ।।

एतल्लब्धं हि मन्वानास्ते द्विजा लौल्यभागिनः ।। १२ ।।

महास्थानगता ये च ते हि विस्मयमाययुः ।।

तन्मध्ये कोऽपि विप्रस्तानुवाच कुपितो वचः ।। १३ ।।

।। विप्र उवाच ।। ।।

अनृतं चैव भाषंते लौल्येन महता वृताः ।।

पुत्रपौत्रविनाशाय ब्रह्मस्वेष्वतिलोलुपाः ।। १४ ।।

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।।

विषमेकाकिनं हंति ब्रह्मस्वं पुत्रपौत्रकम् ।। १५ ।।

ब्रह्मस्वेन च दग्धेषु पुत्रदारगृहादिषु ।।

न च तेऽपि तिष्ठंति ब्रह्मस्वेन विनाशिताः ।। १६ ।।

न नाकं लभते सोऽथ सदा ब्रह्मस्वहारकः ।।

यदा वराटिकां चैव ब्राह्मणस्य हरंति ये ।। १७ ।।

ततो जन्मत्रयाण्येव हर्त्ता निरयमाव्रजेत् ।।

पूर्वजा नोपभुंजंति तत्प्रदत्तं जलं क्वचित् ।। १८ ।।

क्षयाहे नोपभुंजंति तस्य पिंडोदकक्रियाः ।।

संततिं नैव लभते लभ्यमाना न जीवति ।। १९ ।।

यदि जीवति दैवाच्चेद्भ्रष्टाचारा भवेदिति ।। 3.2.39.३२० ।।

एकादशविप्रा ऊचुः ।।

नासत्यं भाषितं विप्राः कथं दूषयसे हि नः ।।

अपराधं विना कस्य कटूक्तिर्युज्यते किल ।। २१ ।।

तच्छ्रुत्वा तैर्द्विजैः पार्थ ग्रामग्राहयिता वणिक् ।।

परिपृष्टः स तत्सर्वं कथयामास कारणम् ।। २२ ।।

वणिजैरेव मे दत्तो बलिश्च द्विजसत्तमाः ।।

तत्सर्वं शुद्धभावेन कथितं तु द्विजन्मसु ।। २३ ।।

ततोऽर्द्धदलं ज्ञात्वा ते कुपिता द्विजपुत्रकाः ।।

वृत्तेर्बहिष्कृतास्ते वै एकादश द्विजास्ततः ।। २४ ।।

एकादशसमा ज्ञातिर्विख्याता भुवनत्रये ।।

न तेषां सहसंबन्धो न विवाहश्च जायते ।। २५ ।।

एकादशसमा ये च बहिर्ग्रामे वसंति ते ।।

एवं भेदाः समभवन्नाना मोढद्विजन्मनाम् ।।

युगानुसारात्कालेन ज्ञातीनां च वृषस्य वा ।। ३२६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये ज्ञातिभेदवर्णनंनामैकोनचत्वारिंशोऽध्यायः ।। ।। ३९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/धर्मारण्य खण्डः/अध्यायः ४०

https://sa.wikisource.org/s/fuc

< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | धर्मारण्य खण्डः

।। नारद उवाच ।। ।।

ज्ञातिभेदे तु संजाते तस्मिन्मोहेरके पुरे ।।

त्रैविद्यैः किं कृतं ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ।। १ ।।। ।।

।। ब्रह्मोवाच ।। ।।

स्वस्थाने वाडवाः सर्वे हर्षनिर्भरमानसाः ।।

अग्निहोत्रपरा केऽपि केऽपि यज्ञपरायणाः ।। २ ।।

केऽपि चाग्निसमाधानाः केऽपि स्मार्ता निरंतरम् ।।

पुराणन्यायवेत्तारो वेदवेदांगवादिनः ।। ३ ।।

सुखेन स्वान्सदाचारान्कुर्वन्तो ब्रह्मवादिनः ।।

एवं धर्मसमाचारान्कुर्वतां कुशलात्मनाम् ।। ४ ।।

स्थानाचारान्कुलाचारानधिदेव्याश्च भाषितान् ।।

धर्मशास्त्रस्थितं सर्वं काजेशैरुदितं च यत् ।। ५ ।।

परंपरागतं धर्म मूचुस्ते वाडवोत्तमाः ।। ६ ।।

।। ब्राह्मणा ऊचुः ।। ।।

उपास्ते यश्च लिखितं रक्तपादैस्तु वाडवाः ।।

ज्ञातिश्रेष्ठः स विज्ञेयो वलिर्देयस्ततः परम् ।। ७ ।।

रक्तचंदनं प्रसाध्याथ प्रसिद्धं स्वकुलं तथा ।।

कुंकुमारक्तपादैस्तैर्गंधपुष्पादिचर्चितैः ।। ८ ।।

संभूय लिखितं तच्च रक्तपादं तदुच्यते ।।

रामस्य लेख्यं ते सर्वे पूजयंतु समाहिताः ।। ९ ।।

रामस्य करमुद्रां च पूजयंतु द्विजाः सदा ।।

येषां दोषाः सदाचारे व्यभिचारादयो यदि ।। ।। 3.2.40.१० ।।

तेषां दण्डो विधेयस्तु य उक्तो विधिवद्द्विजैः ।।

चिह्नं न राममुद्राया यावद्दंडं ददाति न ।। ११ ।।

विना दण्डप्रदानेन मुद्राचिह्नं न धार्यते ।।
मुद्राहस्ताश्च विज्ञेया वाडवा नृपसत्तम ।। १२ ।।
पुत्रे जाते पिता दद्याच्छ्रीमात्रे तु बलिं सदा ।।
पलानि विंशतिः सर्प्पिर्गुडः पंचप लानि च ।। १३ ।।
कुंकुमादिभिरभ्यर्च्य जातमात्रः सुतस्तदा ।।
षष्ठे च दिवसे राजन्षष्ठीं पूजयते सदा ।। १४ ।।
दद्यात्तत्र बलिं साज्यं कुर्याद्धि बलिपंचकम् ।।
पंचप्रस्थान्बलीन्दद्यात्सवस्त्राञ्छ्रीफलैर्युतान् ।। १५ ।।
कुंकुमादिभिरभ्यर्च्य श्रीमात्रे भक्तिपूर्वकम् ।।
वितशाठ्यं न कुर्वीत कुले संततिवृद्धये ।। १६ ।।
तद्धि चार्पयता द्रव्यं वृद्धौ यद्धीणितं पुनः ।।
जन्मनो नंतरं कार्यं जातकर्म यथाविधि ।। १७ ।।
विप्रानुकीर्तिता याश्च वृत्तिः सापि विभज्यते ।।
प्रथमा लभ्यमाना च वृत्तिर्वै यावती पुनः ।। १८।।
तस्या वृत्तेरर्द्धभागो गोत्रदेव्यै तु कल्प्यताम् ।।
द्विगुणं वणिजा चैव पुत्रं जाते भवेदिति ।। १९ ।।
मांडलीयाश्च ये शूद्रास्तेषामर्ककरं त्विदम् ।।
अडालजानां त्रिगुणं गोभुजानां चतुर्गुणम् ।। 3.2.40.२० ।।
इत्येतत्कथितं सर्वमन्यच्च शूद्रजातिषु ।।
यस्य दोषस्तु हत्यायाः समुद्भूतो विधेर्वशात् ।। २१ ।।
दण्डस्तु विधिवत्तस्य कर्त्तव्यो वेदशास्त्रिभिः ।।
अन्यायो न्यायवादी स्यान्निर्द्दोषे दोषदायकः ।। २२ ।।
पंक्तिभेदस्य कर्ता च गोसहस्रवधः स्मृतः ।।
वृत्तिभागविभजनं तथा न्यायविचारणम् ।।
श्रीरामदूतकस्याग्रे कर्त्तव्यमिति निश्चयः ।। २३ ।।
तस्य पूजां प्रकुर्वीत तदा कालेऽथवा सदा।।
तैलेन लेपयेत्तस्य देहे वै विघ्नशांतये ।। २४ ।।
धूपं दीपं फलं दद्यात्पुष्पैर्नानाविधैः किल ।।

पूजितो हनुमानेव ददाति तस्य वांछितम् ।। २५ ।।

प्रतिपुत्रं तु तस्याग्रे कुर्यान्नान्यत्र कुत्रचित् ।।

श्रीमाताबकुलस्वामिभागधेयं तु पूर्वतः ।। २६ ।।

पश्चात्प्रतिग्रहं विप्रैः कर्त्तव्यमिति निश्चितम् ।।

समागमेषु विप्राणां न्यायान्यायविनिर्णये ।। ।। २७ ।।

निर्णयं हृदये धृत्वा तत्रस्थं श्रावयेद्द्विजान् ।।

केवलं धर्मबुद्ध्या च पक्षपातं विवर्जयेत् ।। २८ ।।

सर्वेषां संमतं कार्यं तदध्यविकृतमेव च ।।

आकारितस्ततो विप्रः सभायां भयमेति चेत् ।। २९ ।।

न तस्य वाक्यं श्रोतव्यं निर्णीतार्थनिवारणे ।।

यस्य वर्जस्तु क्रियते मिलित्वा सर्व वाडवैः ।। 3.2.40.३० ।।

खानपानादिकं सर्वं कार्यं तेन विवर्जयेत् ।।

तस्य कन्या न दातव्या तत्संसर्गी च तादृशः ।। ३१ ।।

ततो दंडं प्रकुर्वीत सर्वैरेव द्विजोत्तमैः ।।

भोजनं कन्यकादानमिति दाशरथेर्मतम् ।। ३२ ।।

यत्किंचित्कुरुते पापं लब्धुं स्थलमथापि वा ।।

शुष्कार्द्रं वसते चान्ने तस्मादन्नं परि त्यजेत् ।। ३३ ।।

कुर्वंस्तत्पापभागी स्यात्तस्य दंडो यथाविधि ।।

न्यायं न पश्यते यस्तु शक्तौ सत्यां सदा यतः ।।३४।।

पापभागी स विज्ञेय इति सत्यं न संशयः ।।

उत्कोचं यस्तु गृह्णाति पापिनां दुष्टकर्मिणाम् ।।

सकलं च भवेत्तस्य पापं नैवात्र सशयः ।।३५।।

तस्यान्नं गृह्यते नैव कन्यापि न कदाचन ।।

हितमाचरते यस्तु पुत्राणामपि वै नरः ।। ३६ ।।

स एतान्नियमान्सर्वान्पालयेन्नात्र संशयः ।।

एवं पत्रं लिखित्वा तु वाडवास्ते प्रह र्षिताः ।। ३७ ।।

प्राप्ते कलियुगे घोरे यथा पापं न कुर्वते ।।

इति ज्ञात्वा तु सर्वे ते न्यायधर्मं प्रचक्रिरे ।। ३८ ।।

।। व्यास उवाच ।। ।।

कलौ प्राप्ते द्विजाः सर्वे स्थानभ्रष्टा यतस्ततः।।

पक्षमुत्कलं ग्रहीष्यंति तथा स्युः पक्षपातिनः ।। ३९ ।।

भोक्ष्यंते म्लेच्छकग्रामान्कोलाविध्वंसिभिः किल ।।

वेदभ्रष्टाश्च ते विप्रा भविष्यंति कलौ युगे॥ 3.2.40.४० ॥

॥ युधिष्ठिर उवाच॥ ॥

देशेदेशे गमिष्यंति ते विप्रा वणिजस्तथा॥

कथं वै ज्ञायते सर्वै केन चिह्नेन मारिष।॥११॥

यस्मिन्गोत्रे समुत्पन्ना वाडवा ये महाबलाः ॥४२॥

व्यास उवाच।॥

ज्ञायते गोत्रसंज्ञाऽथ केचिच्चैव पराक्रमैः ॥

यस्ययस्य च यत्कर्म तस्य तस्यावटंककः॥४३॥

अवटंकैर्हि ज्ञायंते नान्यथा ज्ञायते क्वचित्॥

गोत्रैश्च प्रवरैश्चैव अवटंकैर्नृपात्मज॥४४॥

ज्ञायंते हि द्विजा राजन्मोढ ब्राह्मणसत्तमाः॥१९॥

॥ युधिष्ठिर उवाच ॥ ॥

गोत्रैश्च प्रवरैश्चैव श्रुता एते तवाननात् ॥

कां वा शाखामधीयानास्तन्मे ब्रूहि पितामह ॥ १६॥ ॥

॥ व्यास उवाच ॥ ॥

ज्ञायंते यत्रयत्रस्था माध्यंदिनीया महाबलाः ॥

कौथमीं च समाश्रित्य केचिद्विप्रा गुणान्विताः ॥४७॥

ऋगथर्वणजा शाखा नष्टा सा च महामते॥

एवं वै वर्तमानास्ते वाडवा धर्मसंभवाः॥४८॥

धर्मारण्ये महाभागाः पुत्रपौत्रान्विताऽभवन् ॥

शूद्राः सर्वे महाभागाः पुत्रपौत्र समावृताः ॥ ४९॥

धर्मारण्ये महातीर्थे सर्वे ते द्विजसेवकाः ॥

अभवन्रामभक्ताश्च रामाज्ञां पालयंति च ॥ 3.2.40.५० ॥

आज्ञामत्याऽऽदरेणेह हनूमंतश्च वीर्यवान् ॥

पालयेत्सोऽपि चेदानीं सुप्राप्ते वै कलौ युगे ॥ ५१ ।

अदृष्टरूपी हनुमांस्तत्र भ्रमति नित्यशः॥

त्रैविद्या वाडवा यत्र चातुर्विद्यास्तथैव च ॥ ५२ ॥

सभायामुपविष्टा येऽन्यायात्पापं प्रकुर्वते ॥

जयो हि न्यायकर्तृणामजयोऽन्यायकारिणाम् ॥ ५३ ॥

सापराधे यस्तु पुत्रे ताते भ्रातरि चापि वा ।।

पक्षपातं प्रकुर्वीत तस्य कुप्यति वायुजः॥ ५४॥

कुपितो हनुमानेष धननाशं करोति वै॥

पुत्रनाशं करोत्येव धामनाशं तथैव च ॥ ५५ ॥

सेवार्थं निर्मितः शूद्रो न विप्रान्परिषेवते ॥

वृत्तिं वा न ददात्येव हनुमांस्तस्य कुप्यति ॥ ५६ ॥

अर्थनाशं पुत्रनाशं स्थाननाशं महा भयम् ॥

कुरुते वायुपुत्रो हि रामवाक्यमनुस्मरन् ॥ ५७॥

यत्र कुत्र स्थिता विप्राः शूद्रा वा नृपसत्तम ॥

न निर्द्धना भवेयुस्ते प्रसादाद्राघवस्य च ॥५८॥

यो मूढश्चाप्यधर्मात्मा पापपाषंडमाश्रितः ।

निजान्विप्रान्परित्यज्य परज्ञातींश्च मन्यते ॥ ५९॥

तस्य पूर्वकृतं पुण्यं भस्मीभवति नान्यथा ॥

अन्येषां दीयते दानं स्वल्पं वा यदि वा बहु ॥ 3.2.40.६० ॥

यथा भवति वै पूर्वं ब्रह्मविष्णुशिवैः कृतम् ॥

तस्य देवा न गृह्णंति हव्यं कव्यं च पूर्वजाः ॥ ६१॥

वंचयित्वा निजान्विप्रानन्येभ्यः प्रददेत्तु यः ॥

तस्य जन्मार्जितं पुण्यं भस्मीभवति तत्क्षणात् ॥६२॥

ब्रह्मविष्णुशिवैश्चैव पूजिता ये द्विजोत्तमाः।। ते

षां ये विमुखाः शूद्रा रौरवे निवसंति ते।। ६३।।

यो लौल्याच्च कुलाचारं गोत्राचारं प्रलोपयेत्।।

स्वाचारं यो न कुर्वीत कदाचिद्वै विमोहितः।।६४।।

सर्वनाशो भवेत्तस्य भस्मीभवति तत्क्षणात् ॥

तस्मात्सर्वः कुलाचारः स्थानाचारस्तथैव च ॥ ६५॥

गोत्राचारः पालनीयो यथावित्तानुसारतः ॥

एवं ते कथितं राजन्धर्मारण्यं पुरातनम्॥ ६६॥

स्थापितं देवदेवैश्च ब्रह्मविष्णुशिवादिभिः ॥

धर्मारण्यं कृतयुगे त्रेतायां सत्यमंदिरम्॥

द्वापरे वेदभवनं कालौ मोहेरकं स्मृतम् ॥ ६७ । । !

ब्रह्मोवाच ॥ ॥

य इदं शृणुयात्पुत्र श्रद्धया परया युतः॥

धर्मारण्यस्य माहात्म्यं सर्वकिल्बिषनाशनम् ॥ ६८॥

मनोवाक्कायजनितं पातकं त्रिविधं च यत्॥

तत्सर्वं नाशमायाति श्रवणात्कीर्तनात्सुकृत् ॥ ६९॥

धन्यं यशस्यमायुष्यं सुखसंतानदायकम्॥

माहात्म्यं शृणुयाद्वत्स सर्वसौख्याप्तये नरः ॥ 3.2.40.७० ॥

सर्वतीर्थेषु यत्पुण्यं सर्वक्षेत्रेषु यत्फलम्॥

तत्फलं समवाप्नोति धर्मारण्यस्य सेवनात् ॥ ७१ ॥

॥ नारद उवाच ॥ ॥

धर्मारण्यस्य माहात्म्यं यच्छ्रुतं त्वन्मुखांबुजात् ॥

धर्मवाप्यां यत्र धर्म्मस्तपस्तेपे सुदुष्कुरम् ॥ ७२॥

तस्य क्षेत्रस्य महिमा मया त्वत्तोऽवधारितः ॥

स्वस्ति तेऽस्तु गमिष्यामि धर्मारण्यदिदृक्षया ॥७३।।

तत्र वाक्यजलौघेन पावितोऽहं चतुर्मुख ॥ ७४ । ।

व्यास उवाच ॥ ॥

इदमाख्यानकं सर्वं कथितं पांडुनंदन ॥

यच्छ्रुत्वा गोसहस्रस्य फलं प्राप्नोति मानवः ॥ ॥७५॥

अपुत्रो लभते पुत्रान्निर्द्धनो धनवान्भवेत् ॥

रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बंधनात् ॥ ७६ ॥

विद्यार्थी लभते विद्यामुत्तमां कर्मसाधनाम् ॥

तीर्थयात्राफलं तस्य कोटिकन्याफलं लभेत् ॥ ७७ ॥

यः श्रृणोति नरो भक्त्या नारी वाथ नरोत्तम ॥

निरयं नैव पश्यंति एकोत्तरशतैः सह ॥ ७८॥

शुभे देशे निवेश्याथ क्षौमवस्त्रादिभिस्तथा ॥

पुराणपुस्तकं राजन्प्रयतः शिष्टसंमतः ॥ ७९॥

अर्चयेच्च यथा न्यायं गंधमाल्यैः पृथक्पृथक् ॥

समाप्तौ नृप ग्रंथस्य वाचकस्यानुपूजनम् ॥ 3.2.40.८० ॥

दानादिभिर्यथान्यायं संपूर्णफलहेतवे ॥

मुद्रिकां कुंडले चैव ब्रह्मसूत्रं हिरण्मयम् ॥ ८१ ॥

वस्त्राणि च विचित्राणि गंधमाल्यानुलेपनैः ॥

देववत्पूजनं कृत्वा गां च दद्यात्पयस्विनीम् ॥ ८२ ॥

एवं विधानतः श्रुत्वा धर्मारण्यकथानकम्॥

धर्मारण्यनिवासस्य फलमाप्नोत्यसंशयम् ॥ ८३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे पूर्वभागे धर्मारण्यमाहात्म्ये धर्मारण्यनिवासिव्यवस्थावर्णनपूर्वक धर्मारण्यपुराणश्रवणमाहात्म्यवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १



॥श्रीगणेशाय नमः॥।॥

श्रीगुरुभ्यो नमः ॥ ॥

अथ ब्रह्मोत्तरखंडमारंभः ॥

॥ ॐ नमः शिवाय ॥ ॥

ज्योतिर्मात्रस्वरूपाय निर्मलज्ञानचक्षुषे ॥

नमः शिवाय शांताय ब्रह्मणे लिंगमूर्त्तये ॥ १ ॥

॥ ऋषय ऊचुः ॥ ॥

आख्यातं भवता सूत विष्णोर्माहात्म्यमुत्तमम्॥

समस्ताघहरं पुण्यं समसेन श्रुतं च नः॥ २॥

इदानीं श्रोतुमिच्छामो माहात्म्यं त्रिपुरद्विषः ॥

तद्भक्तानां च माहात्म्यमशेषाघहरं परम्॥ ३॥

तन्मंत्राणां च माहात्म्यं तथैव द्विजसत्तम ॥

तत्कथायाश्च तद्भक्तेः प्रभावमनुवर्णय॥ ४॥

॥ सूत उवाच ॥ ॥

एतावदेव मर्त्यानां परं श्रेयः सनातनम्॥

यदीश्वरकथायां वै जाता भक्तिरहैतुकी ॥ ५॥

अतस्तद्भक्तिलेशस्य माहात्म्यं वर्ण्यते मया ॥

अपि कल्पायुषा नालं वक्तुं विस्तरतः क्वचित्॥ ६॥

सर्वेषामपि पुण्यानां सर्वेषां श्रेयसामपि ॥

सर्वेषामपि यज्ञानां जपयज्ञः परः स्मृतः॥ ७॥

तत्रादौ जपयज्ञस्य फलं स्वस्त्ययनं महत् ॥

शैवं षडक्षरं दिव्यं मंत्रमाहुर्महर्षयः॥ ८॥

देवानां परमो देवो यथा वै त्रिपुरांतकः ॥

मंत्राणां परमो मंत्रस्तथा शैवः षडक्षरः ॥ ९॥

एष पंचाक्षरो मंत्रो जसृणां मुक्तिदायकः॥

संसेव्यते मुनिश्रेष्ठैरशेषैः सिद्धिकांक्षिभिः॥३.३.१.१०

१० ॥ अस्यैवाक्षरमाहात्म्यं नालं वक्तुं चतुर्मुखः॥

श्रुतयो यत्र सिद्धांतं गताः परमनिर्वृताः॥ ११ ॥
सर्वज्ञः परिपूर्णश्च सच्चिदानंदलक्षणः ॥
स शिवो यत्र रमते शैवे पंचाक्षरे शुभे ॥ १२ ॥
एतेन मंत्रराजेन सर्वोपनिषदात्मना ॥
लेभिरे मुनयः सर्वे परं ब्रह्म निरामयम्॥१३॥
नमस्कारेण जीवत्वं शिवेऽत्र परमात्मनि ॥
ऐक्यं गतमतो मंत्रः परब्रह्ममयो ह्यसौ ॥ १४ ॥
भवपाशनिबद्धानां देहिनां हितकाम्यया ॥
आहोंनमः शिवायेति मंत्रमाद्यं शिवः स्वयम् ॥ १५॥
किं तस्य बहुभिर्मंत्रैः किं तीर्थैः किं तपोऽध्वरैः ॥
यस्योंनमः शिवायेति मंत्रो हृदयगोचरः॥ १६ ॥
तावद्भ्रमंति संसारे दारुणे दुःखसंकुले ॥
यावन्नोच्चारयंतीमं मंत्रं देहभृतः सकृत् ॥ १७ ॥
मंत्राधिराजराजोऽयं सर्ववेदांतशेखरः ॥
सर्वज्ञाननिधानं च सोऽयं चैव षडक्षरः ॥ १८ ॥
कैवल्यमार्गदीपोऽयमविद्यासिंधुवाडवः ॥
महापातकदावाग्निः सोऽयं मंत्रः षडक्षरः ! ॥ १९ ॥
तस्मात्सर्वप्रदो मंत्रः सोऽयं पञ्चाक्षरः स्मृतः ॥
स्त्रीभिः शूद्रैश्च संकीर्णैर्धार्यते मुक्तिकांक्षिभिः।।३.३.१२० ॥
नास्य दीक्षा न होमश्च न संस्कारो न तर्पणम् ॥
न कालो नोपदेशश्च सदा शुचिरयं मनुः ॥ २१ ॥
महापातकविच्छित्त्यै शिव इत्यक्षरद्वयम् ॥
अलं नमस्क्रियायुक्तो मुक्तये परिकल्पते ॥ २२॥
उपदिष्टः सद्गुरुणा जप्तः क्षेत्रे च पावने ॥
सद्यो यथेप्सितां सिद्धिं ददातीति किमद्भुतम् ॥ २३ ॥
अतः सद्गुरुमाश्रित्य ग्राह्योऽयं मंत्रनायकः॥
पुण्यक्षेत्रेषु जप्तव्यः सद्यः सिद्धिं प्रयच्छति ॥ २४॥
गुरवो निर्मलाः शांताः साधवो मितभाषिणः ॥
कामक्रोधविनिर्मुक्ताः सदाचारा जितेंद्रियाः ॥ २५ ॥
एतैः कारुण्यतो दत्तो मंत्रः क्षिप्रं प्रसिद्ध्यति ॥
क्षेत्राणि जपयोग्यानि समासात्कथयाम्यहम् ॥ २६ ॥
प्रयागं पुष्करं रम्यं केदारं सेतुबंधनम् ॥

गोकर्णं नैमिषारण्यं सद्यः सिद्धिकरं नृणाम् ॥२७॥
अत्रानुवर्ण्यते सद्भिरितिहासः पुरातनः॥
असकृद्वा सकृद्वापि शृण्वतां मंगलप्रदः॥ २८॥
मथुरायां यदुश्रेष्ठो दाशार्ह इति विश्रुतः ॥
बभूव राजा मतिमान्महोत्साहो महाबलः ॥ २९ ॥
शास्त्रज्ञो नयवाक्छूरो धैर्यवानमितद्युतिः ॥
अप्रधृष्यः सुगंभीरः संग्रामेष्वनिवर्त्तितः ॥ ३.३.१.३०॥
महारथो महेष्वासो नानाशास्त्रार्थकोविदः॥
वदान्यो रूपसंपन्नो युवा लक्ष णसंयुतः ॥ ३१ ॥
स काशिराजतनयामुपयेमे वराननाम् ॥
कांतां कलावतीं नाम रूपशीलगुणान्विताम् ॥ ३२ ॥
कृतोद्वाहः स राजेंद्रः संप्राप्य निजमंदिरम्॥
रात्रौ तां शयनारूढां संगमाय समाह्वयत् ॥ ३३ ॥
सा स्वभर्त्रा समाहूता बहुशः प्रार्थिता सती ॥
न बबंध मनस्तस्मिन्न चागच्छ तदंतिकम्॥ ३४॥
संगमाय यदाहूता नागता निजवल्लभा ॥
बलादाहर्तुकामस्तामुदतिष्ठन्महीपतिः ॥ ३५ ॥.
।। राज्न्युवाच ॥ ॥
मा मां स्पृश महाराज कारणज्ञां व्रते स्थिताम् ॥
धर्माधर्मौ विजानासि मा कार्षीः साहसं मयि ॥ ३६ ॥
क्वचित्प्रियेण भुक्तं यद्रोचते तु मनीषिणाम् ॥
दंपत्योः प्रीतियोगेन संगमः प्रीतिवर्द्धनः ॥ ३७ ॥
प्रियं यदा मे जायेत तदा संगस्तु ते मयि ॥
का प्रीतिः किं सुखं पुंसां बलाद्भोगेन योषिताम् ॥ ३८ ॥
अप्रीतां रोगिणीं नारीमंतर्वत्नीं धृतव्रताम् ॥
रजस्वलामकामां च न कामेत बलात्पुमान् ॥ ३९ ॥
प्रीणनं लालनं पोषं रंजनं मार्दवं दयाम्॥
कृत्वा वधूमुपगमेद्युवतीं प्रेमवान्पतिः ॥
युवतौ कुसुमे चैव विधेयं सुखमिच्छता ॥ ३.३.१.४० ।
इत्युक्तोऽपि तया साध्व्या स राजा स्मरविह्वलः ॥
बलादाकृष्य तां हस्ते परिरेभे रिरंसया ॥ ४१ ॥
तां स्पृष्टमात्रां सहसा तप्तायःपिंडसन्निभाम् ॥

निर्दहंतीमिवात्मानं तत्याज भयविह्वलः ॥ ४२ ॥
॥ राजोवाच ॥ ॥
अहो सुमहदाश्चर्यमिदं दृष्टं तव प्रिये ॥
कथमग्निसमं जातं वपुः पल्लवकोमलम्॥ ॥ ४३ ॥
इत्थं सुविस्मितो राजा भीतः सा राजवल्लभा ॥
प्रत्युवाच विहस्यैनं विनयेन शुचिस्मिता ॥ ४४ ॥
॥ राज्ञ्युवाच ॥ ॥
राजन्मम पुरा बाल्ये दुर्वासा मुनिपुंगवः॥
शैवीं पंचाक्षरीं विद्यां कारुण्येनोपदिष्टवान् ॥४५॥
तेन मंत्रानुभावेन ममांगं कलुषोज्झितम् ॥
स्प्रष्टुं न शक्यते पुंभिः सपापैर्दैववर्जितैः॥ ४६॥
त्वया राजन्प्रकृतिना कुलटागणिकादयः ॥
मदिरास्वादनिरता निषेव्यंते सदा स्त्रियः ॥४७॥
न स्नानं क्रियते नित्यं न मंत्रो जप्यते शुचिः ॥
नाराध्यते त्वयेशानः कथं मां स्प्रष्टुमर्हसि ॥ ४८॥
॥ राजोवाच।॥ ॥
तां समाख्याहि सुश्रोणि शैवीं पंचाक्षरीं शुभाम् ॥
विद्याविध्वस्तपापोऽहं त्वयीच्छामि रतिं प्रिये ॥ ४९ ॥
॥ राज्ञ्युवाच ॥ ॥
नाहं तवोपदेशं वै कुर्यां मम गुरुर्भवान् ॥
उपातिष्ठ गुरुं राजन्गर्गं मंत्र विदांवरम् ॥ ३.३.१.५० ॥
॥ सूत उवाच ॥ ॥
इति संभाषमाणौ तौ दंपती गर्गसन्निधिम् ॥
प्राप्य तच्चरणौ मूर्ध्ना ववंदाते कृताञ्जली ॥ ५१ ॥
अथ राजा गुरुं प्रीतमभिपूज्य पुनःपुनः ॥
समाचष्ट विनीतात्मा रहस्यात्ममनोरथम् ॥ ५२॥
॥ राजोवाच ॥ ॥
कृतार्थं मां कुरु गुरो संप्राप्तं करुणार्द्रधीः ॥
शैवीं पंचाक्षरीं विद्यामुपदेष्टुं त्वमर्हसि ॥ ५३॥
अनाज्ञातं यदाज्ञातं यत्कृतं राजकर्मणा ॥
तत्पापं येन शुद्ध्येत तन्मंत्रं देहि मे गुरो ॥ ५४॥
एवमभ्यर्थितो राज्ञा गर्गो ब्राह्मणपुंगवः ॥

तौ निनाय महापुण्यं कालिंद्यास्तटमुत्तमम् ॥ ५५ ॥
तत्र पुण्यतरोर्मूले निषण्णोऽथ गुरुः स्वयम् ॥
पुण्यतीर्थजले स्नातं राजानं समुपोषितम्॥ ५६ ॥
प्राङ्मुखं चोपवेश्याथ नत्वा शिवपदाम्बुजम् ॥
तन्मस्तके करं न्यस्य ददौ मंत्रं शिवात्मकम् ॥ ॥ ५७॥
तन्मंत्रधारणादेव तद्गुरोर्हस्तसंगमात्॥
निर्ययुस्तस्य वपुषो वायसाः शतकोटयः ॥ ५८॥
ते दग्धपक्षाः क्रोशंतो निपतंतो महीतले ॥
भस्मीभूतास्ततः सर्वे दृश्यंते स्म सहस्रशः ॥ ५९॥
दृष्ट्वा तद्वायसकुलं दह्यमानं सुविस्मितौ ॥
राजा च राजमहिषी तं गुरुं पर्यपृच्छताम् ॥ ३.३.१.६० ॥
भगवन्निदमाश्चर्यं कथं जातं शरीरतः ॥
वायसानां कुलं दृष्टं किमेतत्साधु भण्यताम् ॥ ६१ ॥
॥ श्रीगुरुरुवाच ॥ राजन्भवसहस्रेषु भवता परिधावता ॥
संचितानि दुरन्तानि संति पापान्यनेकशः ॥ ६२॥
तेषु जन्मसहस्रेषु यानि पुण्यानि संति ते ॥
तेषामाधिक्यतः क्वापि जायते पुण्ययोनिषु ॥ ६३॥
तथा पापीयसीं योनिं क्वचित्पापेन गच्छति ॥
साम्ये पुण्यान्ययोश्चैव मानुषीं योनिमाप्तवान् ॥ ६४ ॥
शैवी पंचाक्षरी विद्या यदा ते हृदयं गता।
अघानां कोटयस्त्वत्तः काकरूपेण निर्गताः ॥ ६९॥
कोटयो ब्रह्महत्यानामगम्यागम्यकोटयः॥
स्वर्णस्तेयसुरापानभ्रूणहत्या दिकोटयः ॥
भवकोटिसहस्रेषु येऽन्ये पातकराशयः ॥ ६६॥
क्षणाद्भस्मीभवंत्येव शैवे पंचाक्षरे धृते ॥
आसंस्तवाद्य राजेंद्र दग्धाः पातककोटयः ॥ ॥ ६७ ॥
अनया सह पूतात्मा विहरस्व यथासुखम् ॥
इत्याभाष्य मुनिश्रेष्ठस्तं मंत्रमुपदिश्य च ॥६८॥
ताभ्यां विस्मितचित्ताभ्यां सहितः स्वगृहे ययौ ॥
गुरुवर्यमनुज्ञाप्य मुदितौ तौ च दंपती ॥ ६९॥
ततः स्वभवनं प्राप्य रेजतुःस्म महाद्युती।॥
राजा दृढं समाश्लिष्य पत्नीं चन्दनशीतलाम्॥

संतोषं परमं लेभे निःस्वः प्राप्य यथा धनम् ॥ ३.३.१.७० ॥

अशेषवेदोपनिषत्पुराणशास्त्रावतंसोऽयमघांतकारी ॥

पंचाक्षरस्यैव महाप्रभावो मया समासात्कथितो वरिष्ठः ॥७१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे पंचाक्षरमन्त्रमाहात्म्यवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः २



॥ सूत उवाच ॥ ॥
अथान्यदपि वक्ष्यामि माहात्म्यं त्रिपुरद्विषः ॥
श्रुतमात्रेण येनाशु च्छिद्यंते सर्वसंशयाः ॥ १ ॥
अतः परतरं नास्ति किंचित्पापविशोधनम् ॥
सर्वानंदकरं श्रीमत्सर्वकामार्थसाधम् ॥ २ ॥
दीर्घायुर्विजयारोग्यभुक्तिमुक्तिफलप्रदम् ॥
यदनन्येन भावेन महे शाराधनं परम् ॥ ३॥
आर्द्राणामपि शुष्काणामल्पानां महतामपि ॥
एतदेव विनिर्दिष्टं प्रायश्चितमथोत्तमम् ॥ ४ ॥
सर्वकालेऽप्यभेद्यानामघानां क्षयकारणम् ॥
महामुनिविनिर्दिष्टैः प्रायश्चित्तैरथोत्तमैः ॥ ५॥
इयमेव परं श्रेयः सर्वशास्त्रविनिश्चितम्॥
यद्भक्त्या परमेशस्य पूजनं परमो दयम्॥ ६॥
जानताऽजानता वापि येन केनापि हेतुना ॥
यत्किंचिपि देवाय कृतं कर्म विमुक्तिदम् ॥ ७ ॥
माघे कृष्णचतुर्द्दश्यामुपवासोऽति दुर्लभः॥
तत्रापि दुर्लभं मन्ये रात्रौ जागरणं नृणाम् ॥ ८॥
अतीव दुर्लभं मन्ये शिवलिंगस्य दर्शनम् ॥
सुदुर्लभतरं मन्ये पूजनं परमेशितुः ॥ ॥ ९॥
भवकोटिशतोत्पन्नषुण्यराशिविपाकतः॥
लभ्यते वा पुनस्तत्र बिल्वपत्रार्चनं विभोः ॥ ३.३.२.१० ॥
वर्षाणामयुतं येन स्नातं गंगासरिज्जले ।
सकृद्बिल्वार्चनेनैव तत्फलं लभते नरः॥११॥
यानियानि तु पुण्यानि लीनानीह युगेयुगे ॥
माघेऽसितचतुर्दश्यां तानि तिष्ठंति कृत्स्नशः ॥ १२ ॥
एतामेव प्रशंसंति लोके ब्रह्मादयः सुराः ॥
मुनयश्च वशिष्ठाद्या माघेऽसितचतुर्दशीम् ॥ १३ ॥

अत्रोपवासः केनापि कृतः क्रतुशताधिकैः ॥
रात्रौ जागरणं पुण्यं कल्पकोटितपोऽधिकम् ॥ १४॥
एकेन बिल्वपत्रेण शिवलिंगार्चनं कृतम् ॥
त्रैलोक्ये तस्य पुण्यस्य को वा सादृश्यमिच्छति ॥ १५ ॥
अत्रानुवर्ण्यते गाथा पुण्या परमशोभना ॥
गोपनीयापि कारुण्याद्गौतमेन प्रकाशिता ॥ १६ ॥
इक्ष्वाकुवंशजः श्रीमान्राजा परम धार्मिकः॥
आसीन्मित्रसहोनाम श्रेष्ठः सर्वधनुर्भृताम्॥ १७॥
स राजा सकलास्त्रज्ञः शास्त्रज्ञः श्रुतिपारगः ॥
वीरोऽत्यंतबलोत्साहो नित्योद्योगी दयानिधिः॥ १८॥
पुण्यानामिव संघातस्तेजसामिव पंजरः ॥
आश्चर्याणामिव क्षेत्रं यस्य मूर्तिर्विराजते ॥ १९ ॥
हृदयं दययाक्रांतं श्रियाक्रांतं च तद्वपुः ।।
चरणौ यस्य सामंतचूडामणिमरीचिभिः ।। ३.३.२.२० ।।
एकदा मृगयाकेलिलोलुपः स महीपतिः ।।
विवेश गह्वरं घोरं बलेन महतावृतः ।। ।। २१ ।।
तत्र विव्याध विशिखैः शार्दूलान्गवयान्मृगान् ।।
रुरून्वराहान्महिषान्मृगेंद्रानपि भूरिशः ।। २२ ।।
स रथी मृगयासक्तो गहनं दंशित श्चरन् ।।
कमपि ज्वलनाकारं निजघान निशाचरम् ।। २३ ।।
तस्यानुजः शुचाविष्टो दृष्ट्वा दूरे तिरोहितः ।।
भ्रातरं निहतं दृष्ट्वा चिंतयामास चेतसा ।। २४ ।।
नन्वेष राजा दुर्द्धर्षो देवानां रक्षसामपि ।।
छद्मनैव प्रजेतव्यो मम शत्रुर्न चान्यथा ।। २५ ।।
इति व्यवसितः पापो राक्षसो मनुजाकृतिः ।।
आससाद नृपश्रेष्ठमुत्पात इव मूर्तिमान् ।। २६ ।।
तं विनम्राकृतिं दृष्ट्वा भृत्यतां कर्तुमागतम् ।।
चक्रे महानसाध्यक्षमज्ञानात्स महीपतिः ।। २७ ।।
अथ तस्मिन्वने राजा किंचित्कालं विहृत्य सः ।।
निवृत्तो मृगयां हित्वा स्वपुरीं पुनराययौ ।। २८ ।।
तस्य राजेंद्रमुख्यस्य मदयंतीतिनामतः ।।
दमयन्ती नलस्येव विदिता वल्लभा सती ।। २९ ।।

एतस्मिन्समये राजा निमंत्र्य मुनिपुंगवम् ।।
वशिष्ठं गृहमानिन्ये संप्राप्ते पितृवासरे ।। ३.३.२.३० ।।
रक्षसा सूदरूपेण संमिश्रितनरामिषम् ।।
शाकामिषं पुरः क्षिप्तं दृष्ट्वा गुरुरथाब्रवीत् ।। ३१ ।।
धिग्धिङ्नरामिषं राजं स्त्वयैतच्छद्मकारिणा ।।
खलेनोपहृतं मेऽद्य अतो रक्षो भविष्यसि ।। ३२ ।।
रक्षःकृतमविज्ञाय शस्वैवं स गुरुस्ततः ।।
पुनर्विमृश्य तं शापं चकार द्वादशाब्दिकम् ।। ३३ ।।
राजापि कोपितः प्राह यदिदं मे न चेष्टितम् ।।
न ज्ञातं च वृथा शप्तो गुरुं चैव शपाम्यहम् ।। ३४ ।।
इत्यपोंजलिनादाय गुरुं शप्तुं समुद्यतः ।।
पतित्वा पादयोस्तस्य मदयन्ती न्यवारयत् ।।३५।।
ततो निवृत्तः शापाच्च तस्या वचनगौरवात् ।।
तत्याज पादयोरंभः पादौ कल्मषतां गतौ ।।३६।।
कल्मषांघ्रिरिति ख्यातस्ततः प्रभृति पार्थिवः ।।
बभूव गुरुशापेन राक्षसो वनगोचरः ।।३७।।
स बिभ्रद्राक्षसं रूपं घोरं कालां तकोपमम् ।।
चखाद विविधाञ्जंतून्मानुषादीन्वनेचरः ।।३८।।
स कदाचिद्वने क्वापि रममाणौ किशोरकौ ।।
अपश्यदंतकाकारो नवोढौ मुनिदंपती ।। ।।३९।।
राक्षसो मानुषाहारः किशोरमुनिनंदनम् ।।
जग्धुं जग्राह शापार्तो व्याघ्रो मृगशिशुं यथा ।।३.३.२.४०।।
रक्षोगृहीतं भर्तारं दृष्ट्वा भीताथ तत्प्रिया ।।
उवाच करुणं बाला क्रंदंती भृशवेपिता ।। ४१ ।।
भोभो मामा कृथाः पापं सूर्यवंशयशोधर ।।
मदयंतीपतिस्त्वं हि राजेंद्रो न तु राक्षसः ।।४२।।
न खाद मम भर्त्तारं प्राणात्प्रियतमं प्रभो ।।
आर्त्तानां शरणार्त्तानां त्वमेव हि यतो गतिः ।। ४३ ।।
पापानामिव संघातैः किं मे दुष्टैर्जडासुभिः ।।
देहेन चातिभारेण विना भर्त्रा महात्मना ।। ४४ ।।
मलीमसेन पापेन पांचभौतेन किं सुखम् ।।
बालोयं वेदविच्छांतस्तपस्वी बहुशास्त्रवित् ।। ४५ ।।

अतोऽस्य प्राणदानेन जगद्रक्षा त्वया कृता।
कृपां कुरु महाराज बालायां ब्राह्मणस्त्रियाम् ॥ ४६ ॥
अनाथकृपणार्तेषु सघृणाः खलु साधवः ॥ ||
इत्थमभ्यर्थितः सोऽपि पुरुषादः स निर्घृणः ॥ ४७॥
चखाद शिर उत्कृत्य विप्रपुत्रं दुराशयः॥
अथ साध्वी कृशा दीना विलप्य भृशदुःखिता। ॥ ४८ ॥
आहृत्य भर्तुरस्थीनि चितां चक्रे तथोल्बणाम् ॥
भर्तारमनुगच्छंती संविशंती हुताशनम् ॥ ४९ ॥
राजानं राक्षसाकारं शापास्त्रेण जघान तम् ॥
रेरे पार्थिव पापात्मंस्त्वया मे भक्षितः पतिः ॥ ३.३.२.५० ॥
अतः पतिव्रतायास्त्वं शापं भुंक्ष्व यथोल्बणम्॥
अद्यप्रभृति नारीषु यदा त्वमपि संगतः ।
तदा मृतिस्तवेत्युक्त्वा विवेश ज्वलनं सती ॥ ५१ ॥
सोऽपि राजा गुरोः शापमुपभुज्य कृतावधिम् ॥
पुनः स्वरूपमादाय स्वगृहं मुदितो ययौ ॥ ५२ ॥
ज्ञात्वा विप्रसतीशापं तत्पत्नी रतिलालसम् ॥
पतिं निवारयामास वैधव्यातिबिभ्यती ॥ ५३॥
अनपत्यः स निर्विण्णो राज्यभोगेषु पार्थिवः ॥
विसृज्य सकलं लक्ष्मीं ययौ भूयोऽपि काननम् ॥ ५४ ॥
सूर्यवंशप्रतिष्ठित्यै वशिष्ठो मुनिसत्तमः ॥
तस्यामुत्पादयामास मदयंत्यां सुतोत्तमम् ॥ ५५ ॥
विसृष्टराज्यो राजापि विचरन्सकलां महीम् ॥
आयांतीं पृष्ठतोऽपश्यत्पिशाचीं घोररूपिणीम् ॥ ५६ ॥
सा हि मूर्तिमती घोरा ब्रह्महत्या दुरत्यया ॥
यदासौ शापविभ्रष्टो मुनिपुत्रमभक्षयत् ॥ ५७ ॥
तेनात्मकर्मणा. यांतीं ब्रह्महत्यां स पृष्ठतः ॥
बुबुधे मुनिवर्याणामुपदेशेन भूपतिः॥ ५८ ॥
तस्या निर्वेशमन्विच्छन्राजा निर्विण्णमानसः ॥
नानाक्षेत्राणि तीर्थानि चचार बहुवत्सरम् ॥ ॥ ५९ ॥
यदा सर्वेषु तीर्थेषु स्नात्वापि च मुहुर्मुहुः ॥
न निवृत्ता ब्रह्महत्या मिथिलामाययौ तदा ॥
बाह्योद्यानगतस्तस्याश्चिंतया परयार्दितः। ॥ ३.३.२.६० ॥

ददर्श मुनिमायांतं गौतमं विमलाशयम्॥
हुताशनमिवाशेषतपस्विजनसेवितम् ॥ ६१ ॥
विवस्वंतमिवात्यंतं घनदोषतमोनुदम् ॥
शशांकमिव निःशंकमवदातगुणोदयम् ॥ ६२ ॥
महेश्वरमिव श्रीमद्द्विजराजकलाधरम् ॥
शांतं शिष्यगणोपेतं तपसामेकभाजनम् ॥ ६३ ॥
उपसृत्य स राजेंद्रः प्रणनाम मुहुर्मुहुः ॥
गौतमोऽपि मुनिश्रेष्ठो राजानं रविवंशजम् ॥ ६१ ॥
अभिनंद्य मुनिः प्रीत्या संस्मितं समभाषत ॥ ॥ ६९॥ .
॥ गौतम उवाच ।।
कच्चित्ते कुशलं राजन्कच्चित्ते पदमव्ययम् ॥ ६६॥
कुशलिन्यः प्रजाः कच्चिदवरोधजनोपि वा ॥
किमर्थमिह संप्राप्तो विसृज्य सकलां श्रियम् ॥ ६७ ॥
किं च ध्यायसि भो राजन्दीर्घमुष्णं च निःश्वसन् ॥ ६८॥
ll राजोवाच ॥ ॥
सर्वे कुशलिनो ब्रह्मन्वयं त्वदनुकंपया।॥
राज्ञामुत्तमवंश्यानां ब्रह्मायत्ता हि संपदः ॥
किं नु मां बाधते त्वेषा पिशाची घोररूपिणी ॥ ६९॥
अलक्षिता मदपरैर्भर्त्सयंती पदेपदे ।।
यन्मया शापदग्धेन कृतमहो दुरत्ययम् ।।
न शांतिर्जायते तस्य प्रायश्चित्तसहस्रकैः ।। ३.३.२.७० ।।
इष्टाश्च विविधा यज्ञाः कोशसर्वस्वदक्षिणाः ।।
सरित्सरांसि स्नातानि यानि पूज्यानि भूतले ।।
निषेवितानि सर्वाणि क्षेत्राणि भ्रमता मया ।। ७१ ।।
जप्तान्यखिलमंत्राणि ध्याताः सकलदेवताः ।।
महाव्रतानि चीर्णानि पर्णमूलफलाशिना ।। ७२ ।।
तानि सर्वाणि कुर्वंति स्वस्थं मां न कदाचन ।।
अद्य मे जन्मसाफल्यं संप्राप्तमिव लक्ष्यते ।। ७३ ।।
यतस्त्वद्दर्शनादेव ममात्मानंदभागभूत् ।।
अन्विच्छँल्लभते क्वापि वर्षपूगैर्मनोरथम् ।। ७४ ।।
इत्येवं जनवादोऽपि संप्राप्तो मयि सत्यताम् ।।
आजन्मसंचितानां तु पुण्यानामुदयोदये ।। ७५ ।।

यद्भवान्भवभीतानां त्राता नयनगोचरः ।।
कस्माद्देशादिहायातो भवान्भवभयापहः ।। ७६ ।।
दूरभ्रमणविश्रांतं शंके त्वामिह चागतम् ।।
दृष्ट्वाश्चर्यमिवात्यर्थं मुदितोसि मुखश्रिया ।। ७७ ।।
आनंदयसि मे चेतः प्रेम्णा संभाषणादिव ।।
अद्य मे तव पादाब्जशरणस्य कृतैनसः ।।
शांतिं कुरु महाभाग येनाहं सुखमाप्नुयाम् ।।७८।।
इति तेन समादिष्टो गौतमः करुणानिधिः ।।
समादिदेश घोराणामघानां साधु निष्कृतिम् ।। ७९ ।।
।। गौतम उवाच ।। ।।
साधु राजेंद्र धन्योऽसि महा घेभ्यो भयं त्यज ।।३.३.२.८०।।
शिवे त्रातरि भक्तानां क्व भयं शरणैषिणाम् ।।
शृणु राजन्महाभाग क्षेत्रमन्यत्प्रतिष्ठितम् ।।८१।।
महापातकसंहारि गोकर्णाख्यं मनोरमम्।।
यत्र स्थितिर्न पापानां महद्भ्यो महतामपि ।। ८२ ।।
स्मृतो ह्यशेषपापघ्नो यत्र संनिहितः शिवः ।।
यथा कैलासशिखरे यथा मंदारमूर्द्धनि ।। ८३ ।।
निवासो निश्चितः शंभोस्तथा गोकर्णमण्डले ।।
नाग्निना न शशांकेन न ताराग्रहनायकैः ।। ८४ ।।
तमो निस्तीर्यते सम्य ग्यथा सवितृदर्शनात् ।।
तथैव नेतरैस्तीर्थैर्न च क्षेत्रैर्मनोरमैः ।। ८५ ।।
सद्यः पापविशुद्धिः स्याद्यथा गोकर्णदर्शनात् ।।
अपि पापशतं कृत्वा ब्रह्म हत्यादि मानवः ।। ८६ ।।
सकृत्प्रविश्य गोकर्णं न बिभेति ह्यघात्क्वचित् ।।
तत्र सर्वे महात्मानस्तपसा शांतिमागताः ।।८७।।
इन्द्रोपेंद्रविरिंच्याद्यैः सेव्यते सिद्धिकांक्षिभिः ।।
तत्रैकेन दिनेनापि यत्कृतं व्रतमुत्तमम् ।। ८८ ।।
तदन्यत्राब्दलक्षेण कृतं भवति तत्समम् ।।
यत्रेंद्रब्रह्मविष्ण्वादिदेवानां हितकाम्यया ।। ८९ ।।
महाबलाभिधानेन देवः संनिहितः स्वयम् ।।
घोरेण तपसा लब्धं रावणाख्येन रक्षसा ।। ३.३.२.९० ।।
तल्लिंगं स्थापयामास गोकर्णे गणनायकः ।।

इन्द्रो ब्रह्मा मुकुन्दश्च विश्वेदेवा मरुद्गणाः ।। ९१ ।।
आदित्या वसवो दस्रौ शशांकश्च दिवाकरः ।।
एते विमानगतयो देवास्ते सह पार्षदैः ।। ९२ ।।
पूर्वद्वारं निषेवन्ते देवदेवस्य शूलिनः ।।
योन्यो मृत्युः स्वयं साक्षाच्चित्रगुप्तश्च पावकः ।। ९३ ।।
पितृभिः सह रुद्रैश्च दक्षिणद्वारमाश्रितः ।।
वरुणः सरितां नाथो गंगादिसरितां गणैः ।। ९४ ।।
आसेवते महादेवं पश्चिमद्वारमाश्रितः ।।
तथा वायुः कुबेरश्च देवेशी भद्रकर्णिका ।। ९५ ।।
मातृभिश्चंडिकाद्याभिरुत्तरद्वारमाश्रिता ।।
विश्वावसुश्चित्ररथश्चित्रसेनो महाबलः ।। ९६ ।।
सह गन्धर्ववर्गैश्च पूजयंति महाबलम् ।।
रंभा घृताची मेना च पूर्वचित्तिस्तिलोत्तमा ।। ९७ ।।
नृत्यंति पुरतः शम्भोरुर्वश्याद्याः सुरस्त्रियः ।।
वशिष्ठः कश्यपः कण्वो विश्वामित्रो महा तपाः ।। ९८ ।।
जैमिनिश्च भरद्वाजो जाबालिः क्रतुरंगिराः ।।
एते वयं च राजेंद्र सर्वे ब्रह्मर्षयोऽमलाः ।। ९९ ।।
देवं महाबलं भक्त्या समंतात्पर्यु पास्महे ।।
मरीचिना सहात्रिश्च दक्षाद्याश्च मुनीश्वराः ।। ३.३.२.१०० ।।
सनकाद्या महात्मान उपविष्टा उपासते ।।
तथैव मुनयः साध्या अजिनांबर धारिणः ।। १ ।।
दंडिनो व्रतमुण्डाश्च स्नातका ब्रह्मचारिणः ।।
त्वगस्थिमात्रावयवास्तपसा दग्धकिल्बिषाः ।। २ ।।
सेवन्ते परया भक्त्या देवदेवं पिनाकिनम् ।।
तथा देवाः सगन्धर्वाः पितरः सिद्धचारणाः ।। ३ ।।
विद्याधराः किंपुरुषाः किन्नरा गुह्यकाः खगाः ।।
नागाः पिशाचा वेताला दैतेयाश्च महाबलाः ।। ४ ।।
नानाविभवसंपन्ना नानाभूषणवाहनाः ।।
विमानैः सूर्यसंकाशैरग्निवर्णैः शशिप्रभैः ।। ५ ।।
विद्युत्पुंजनिभैरन्यैः समं तात्परिवारितम् ।।
प्रस्तुवंति प्रगायंति पठंति प्रणमंति च ।। ६ ।।
प्रनृत्यंति प्रहृष्यंति गोकर्णे पृथिवीपते ।।

लभंतेऽभीप्सितान्कामान्नमंते च यथा सुखम् ।। ७ ।।
गोकर्णसदृशं क्षेत्रं नास्ति ब्रह्मांडगोलके ।।
तत्र घोरं तपस्तप्तमगस्त्येन महात्मना ।। ८ ।।
तथा सनत्कुमारेण प्रियव्रतसुतैरपि ।।
अग्निना देववर्येण कन्दर्पेण च पार्थिव ।। ९ ।।
तथा देव्या भद्रकाल्या शिशुमारेण धीमता ।।
दुर्मुखेन फणींद्रेण मणिनागाह्वयेन च ।। ३.३.२.११० ।।
इलावर्तादिभिर्नागैर्गरुडेन बलीयसा ।।
रक्षसा रावणेनापि कुम्भकर्णाह्वयेन तु ।। ११ ।।
विभीषणेन पुण्येन तपस्तप्तं महात्मना ।।
एते चान्ये च गीर्वाणाः सिद्धदानवमानवाः ।। १२ ।।
गोकर्णे देवदेवेशं शिवमाराध्य भक्तितः ।।
स्वनामांकानि लिंगानि स्थापयित्वा सहस्रशः ।। १३ ।।
लेभिरे परमां सिद्धिं तथा तीर्थानि चक्रिरे ।।
अत्र स्थानानि सर्वेषां देवानां संति पार्थिव ।। १४ ।।
विष्णोश्च देवदेवस्य ब्रह्मणः परमेष्ठिनः ।।
कार्त्तिकेयस्य वीरस्य गजवक्त्रस्य चानघ ।। १५ ।।
धर्मस्य क्षेत्रपालस्य दुर्गायाश्च महामते ।।
गोकर्णे शिवलिंगानि विद्यंते कोटिकोटिशः ।। ।। १६ ।।
असंख्यातानि तीर्थानि तिष्ठंति च पदेपदे ।।
बहुनात्र किमुक्तेन गोकर्णस्थानि पार्थिव ।। १७ ।।
सर्वाण्यश्मानि लिंगानि तीर्थान्यंभांसि सर्वशः ।।
गोकर्णे शिवलिंगानां तीर्थानामपि भूरिशः ।। १८ ।।
गीयते महिमा राजन्पुराणेषु महर्षिभिः ।।
गोकर्णे कोटितीर्थं च तीर्थानां मुख्यतां गतम् ।। १९ ।।
सर्वेषां शिवलिंगानां सार्वभौमो महाबलः ।।
कृते महाबलः श्वेतस्त्रेतायामतिलोहितः ।। ३.३.२.१२० ।।
द्वापरे पीत वर्णश्च कलौ श्यामो भविष्यति ।।
आक्रांतं सप्तपातालं कुर्वन्नपि महाबलः ।। २१ ।।
प्राप्ते कलियुगे घोरे मृदुतामुपयास्यति ।।
पश्चिमांबुधितीरस्थं गोकर्णक्षेत्रमुत्तमम् ।। २२ ।।
ब्रह्महत्यादिपापानि दहतीति किमद्भुतम् ।।

ये चात्र ब्रह्महंतारो ये च भूतद्रुहः शठाः ।। २३ ।।
ये सर्वगुणहीनाश्च परदाररताश्च ये ।।
ये दुर्वृत्ता दुराचारा दुःशीलाः कृपणाश्च ये ।। २४ ।।
लुब्धाः क्रूराः खला मूढाः स्ते नाश्चैवातिकामिनः ।।
ते सर्वे प्राप्य गोकर्णं स्नात्वा तीर्थजलेषु च ।। १२५ ।।
देवं महाबलं दृष्ट्वा प्रयाताः शांकरं पदम् ।।
तत्र पुण्यासु तिथिषु पुण्य र्क्षे पुण्यवासरे ।। २६ ।।
येऽर्चयंति महेशानं ते रुद्राः स्युर्न संशयः ।।
यदा कदाचिद्गोकर्णं यो वा को वापि मानवः ।। २७ ।।
प्रविश्य पूजयेदीशं स गच्छेद्ब्रह्मणः पदम् ।।
रवींदुसौम्यवारेषु यदा दर्शो भविष्यति ।। २८ ।।
तदा जलनिधौ स्नानं दानं च पितृतर्पणम् ।।
शिवपूजा जपो होमो व्रतचर्या द्विजार्चनम् ।। २९ ।।
यत्किंचिद्वा कृतं कर्म तदनंतफलप्रदम् ।।
व्यतीपातादियोगेषु रविसंक्रमणेषु च ।। ३.३.२.१३० ।।
महाप्रदोषवेलासु शिव पूजा विमुक्तिदा ।।
अथैकां ते प्रवक्ष्यामि तिथिं पार्थिव मुक्तिदाम् ।। ३१ ।।
यस्यां किल महाव्याधो लेभे शंभोः परं पदम् ।।
माघमासे महापुण्या या सा कृष्णचतुर्दशी ।। ३२ ।।
शिवलिंगं बिल्वपत्रं दुर्लभं हि चतुष्टयम् ।।
अहो बलवती माया यया शैवी महातिथिः ।। ३३ ।।
नोपोष्यते जनैर्मूढैर्महामूकैरिव त्रयी ।।
उपवासो जागरणं सन्निधिः परमेशितुः ।। ३४ ।।
गोकर्णं शिवलोकस्य नृणां सोपानपद्धतिः ।।
शृणु राजन्नहमपि गोकर्णा दधुनागतः ।। १३५ ।।
उपास्यैनां शिवतिथिं विलोक्य च महोत्सवम् ।।
अस्यां शिवतिथौ सर्वे महोत्सवदिदृक्षवः ।। ३६ ।।
आगताः सर्वदेशेभ्यश्चातुर्वर्णा महाजनाः ।।
स्त्रियो वृद्धाश्च बालाश्च चतुराश्रमवासिनः ।। ३७ ।।
आगत्य दृष्ट्वा देवेशं लेभिरे कृतकृत्यताम् ।।
अथाहमप्यमी शिष्या ऋषयश्च तथाऽपरे ।। ३८ ।।
राजर्षयश्च राजेंद्र सनकाद्याः सुरर्षयः ।।

स्नात्वा सर्वेषु तीर्थेषु समुपास्य महाबलम् ।। ३९ ।।
लब्ध्वा च जन्मसाफल्यं प्रयाताः सर्वतोदिशम् ।।
अमुनाद्य नरेंद्रेण जनकेन यियक्षुणा ।।३.३.२.१४० ।।
निमंत्रितोऽहं संप्राप्तो गोकर्णाच्छिवमंदिरात् ।।
प्रत्यागमं किमप्यंग दृष्ट्वाश्चर्यमहं पथि ।।
महानंदेन मनसा कृतार्थोऽस्मि महीपते ।। १४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तर खंडे गोकर्णमहिमानुवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ३



।। राजोवाच ।। ।।

किं दृष्टं भवता ब्रह्मन्नाश्चर्यं पथि कुत्र वा ।।

तन्ममाख्याहि येनाहं कृतकृत्यत्वमाप्नुयाम्।। १ ।।

।। गौतम उवाच ।। ।।

गोकर्णादहमागच्छन्क्वापि देशे विशांपते ।।

जाते मध्याह्नसमये लब्ध वान्विमलं सरः ।। २ ।।

तत्रोपस्पृश्य सलिलं विनीय च पथिश्रमम् ।।

सुस्निग्धशीतलच्छायं न्यग्रोधं समुपाश्रयम् ।। ३ ।।

अथाविदूरे चांडालीं वृद्धामंधां कृशाकृतिम् ।।

शुष्यन्मुखीं निराहारां बहुरोगनिपीडिताम् ।। ४ ।।

कुष्ठव्रणपरीतांगीमुद्यत्कृमिकुलाकुलाम् ।।

पूयशोणितसंसक्तजरत्पटल सत्कटीम्।। ५ ।।

महायक्ष्मगलस्थेन कंठसंरोधविह्वलाम् ।।

विनष्टदंतामव्यक्तां विलुठंतीं मुहुर्मुहुः ।। ६ ।।

चंडार्ककिरणस्पृष्टखरोष्णरजसाप्लुताम्।।

विण्मूत्रपूयदिग्धांगीमसृग्गंधदुरासदाम् ।। ७ ।।

कफरोगबहुश्वासश्लथन्नाडीबहुव्यथाम् ।।

विध्वस्तकेशावयवामपश्यं मरणोन्मुखीम् ।। ८ ।।

तादृग्व्यथां च तां वीक्ष्य कृपयाहं परिप्लुतः ।।

प्रतीक्षन्मरणं तस्याः क्षणं तत्रैव संस्थितः ।। ९ ।।

अथांतरिक्षपदवीं सिंचंतमिव रश्मिभिः ।।

दिव्यं विमानमानीतमद्राक्षं शिवकिंकरैः ।। ३.३.३.१० ।।

तस्मिन्नर्वीदुवह्नीनां तेजसामिव पंजरे ।।

विमाने सूर्यसंकाशानपश्यं शिवकिंकरान् ।। ११ ।।

ते वै त्रिशूलखट्वांगटंकचर्मासिपाणयः ।।

चंद्रार्धभूषणाः सांद्रचंद्रकुंदोरुवर्चसः ।। १२ ।।

किरीटकुंडलभ्राजन्महाहिवलयोज्ज्वलाः ।।

शिवानुगा मया दृष्टा श्चत्वारः शुभलक्षणाः ।। १३ ।।
तानापतत आलोक्य विमानस्थान्सुविस्मितः ।।
उपसृत्यांतिके वेगादपृच्छं गगने स्थितान् ।। १४ ।।
नमोनमो वस्त्रिदशोत्तमेभ्यस्त्रिलोचनश्रीचरणानुगेभ्यः ।।
त्रिलोकरक्षाविधिमावहद्भ्यस्त्रिशूलचर्मासिगदाधरेभ्यः ।। १५ ।।
विदिता हि मया यूयं महेश्वरपदा नुगाः ।।
इयं वो लोकरक्षार्था गतिराहो विनोदजा ।। ।६ ।।
उत सर्वजनाघौघविजयाय कृतोद्यमाः ।।
ब्रूत कारुण्यतो मह्यं यस्माद्यूयमिहागताः ।। १७ ।।
।। शिवदूता ऊचुः ।। ।।
एषाग्रे दृश्यते वृद्धा चांडाली मरणोन्मुखी ।।
एतामानेतुमायाताः संदिष्टा प्रभुणा वयम् ।। १८ ।।
इत्युक्ते शिवदूतैस्तैरपृच्छं पुनरप्यहम् ।।
विस्मयाविष्टचित्तस्तान्कृतांजलिरवस्थितः ।। १९ ।।
अहो पापीयसी घोरा चांडाली कथमर्हति ।।
दिव्यं विमानमारोढुं शुनीवाध्वरमंडलम् ।। ३.३.३.२० ।।
आजन्मतोऽशुचिप्राया पापां पापा नुगामिनीम् ।।
कथमेनां दुराचारां शिवलोकं निनीषथ ।। २१ ।।
अस्या नास्ति शिवज्ञानं नास्ति घोरतरं तपः ।।
सत्यं नास्ति दया नास्ति कथमेनां निनीषथ ।। २२ ।।
पशुमांसकृताहारा वारुणीपूरितोदराम् ।।
जीवहिंसारतां नित्यं कथमेनां निनीषथ ।। २३ ।।
न च पंचाक्षरी जप्ता न कृतं शिवपूजनम्।।
न ध्यातो भगवाञ्छंभुः कथमेनां निनीषथ ।। २४ ।।
नोपोषिता शिवतिथिर्न कृतं शिवपूजनम् ।।
भूतसौहृदं न जानाति न च बिल्वशिवार्पणम्।।
नेष्टापूर्तादिकं वापि कथमेनां निनीषथ ।। २५ ।।
न च स्नातानि तीर्थानि न दानानि कृतानि च ।।
न च व्रतानि चीर्णानि कथमेनां निनीषथ ।। २६ ।।
ईक्षणे परिहर्त्तव्या किमु संभाषणादिषु ।।
सत्संगरहितां चंडां कथमेनां निनीषथ ।। २७ ।।
जन्मांतरार्जितं किंचिदस्याः सुकृतमस्ति वा ।।

तत्कथं कुष्ठरोगण कृमिभिः परिभूयते ।। २८ ।।
अहो ईश्वरचर्येयं दुर्विभाव्या शरीरिणाम् ।।
पापात्मानोऽपि नीयंते कारुण्यात्परमं पदम् ।। २९ ।।
इत्युक्तास्ते मया दूता देवदेवस्य शूलिनः ।।
प्रत्यूचुर्मामथ प्रीत्या सर्वसंशयभेदिनः ।। ३.३.३.३० ।।
।। शिवदूता ऊचुः ।। ।।
ब्रह्मन्सुमहदाश्चर्यं शृणु कौतूहलं यदि ।।
इमामुद्दिश्य चांडालीं यदुक्तं भवताधुना ।। ३१ ।।
आसीदियं पूर्वभवे काचिद्ब्राह्मणकन्यका ।।
सुमित्रानाम संपूर्णसोमबिम्बसमानना ।। ३२ ।।
उत्फुल्लमल्लिकादामसुकुमारांगलक्षणा ।।
कैकेयद्विजमुख्यस्य कस्यचित्तनया सती ।। ३३ ।।
तां सर्वलक्षणोपेतां रतेर्मूर्तिमिवापराम्।।
वर्द्धमानां पितुर्गेहे वीक्ष्यासन्विस्मिता जनाः ।। ३४ ।।
दिनेदिने वर्धमाना बंधुभिर्लालिता भृशम् ।।
सा शनैर्यौवनं भेजे स्मरस्येव महाधनुः ।। ३५ ।।
अथ सा बंधुवर्गैश्च समेतेन कुमारिका ।।
पित्रा प्रदत्ता कस्मैचिद्विधिना द्विजसूनवे।। ३६ ।।
सा भर्त्तारमनुप्राप्य नवयौवनशालिनी ।।
कंचित्कालं शुभाचारा रेमे बंधुभिरावृता ।। ३७ ।।
अथ कालवशात्तस्याः पतिस्तीव्र रुजार्दितः ।।
रूपयौवनकांतोपि पंचत्वमगमन्मुने ।। ३८ ।।
मृते भर्त्तरि दुःखेन विदग्धहृदया सती ।।
उवास कतिचिन्मासान्सुशीला विजितें द्रिया ।। ३९ ।।
अथ यौवनभारेण जृंभमाणेन नित्यशः ।।
बभूव हृदयं तस्याः कंदपर्परिकंपितम् ।। ३.३.३.४० ।।
सा गुप्ता बन्धुवर्गेण शासितापि महोत्तमैः ।।
न शशाक मनो रोद्धुं मदनाकृष्टमंगना ।। ४१ ।।
सा तीव्रमन्मथाविष्टा रूपयौवनशालिनी ।।
विधवापि विशेषेण जारमार्गरताभवत् ।। ४२ ।।
न ज्ञाता केनचिदपि जारिणीति विचक्षणा ।।
जुगूहात्मदुराचारं कंचित्कालमसत्तमा ।। ४३ ।।

तां दोहदसमाक्रांतां घननीलमुखस्तनीम् ।।
कालेन बंधुवर्गोपि बुबोध विटदूषिताम् ।। ४४ ।।
इति भीतो महाक्लेशाच्चिंता लेभे दुरत्ययाम् ।।
स्त्रियः कामेन नश्यंति ब्राह्मणा हीनसेवया।।।४५।।
राजानो ब्रह्मदंडेन यतयो भोगसंग्रहात्।।
लीढं शुना तथैवान्नं सुरया वार्पितं पयः।।४६।।
रूपं कुष्ठरुजाविष्टं कुलं नश्यति कुस्त्रिया।।
इति सर्वे समालोच्य समेताः पतिसोदराः ॥ ४७॥
तत्यजुर्गोत्रतो दूरं गृहीत्वा सकचग्रहम् ॥
सघटोत्सर्गमुत्सृष्टा सा नारी सर्वबन्धुभिः॥ ४८
विचरंती च शूद्रेण रममाणा रतिप्रिया ॥
सा ययौ स्त्री बहिर्यामा दृष्टा शूद्रेण केनचित् ॥ ४९ ॥
स तां दृष्ट्वा वरारोहाँ पीनोन्नतपयोधराम् ॥
गृहं निनाय साम्ना च विधवां शूद्रनायकः ॥
सा नारी तस्य महिषी भूत्वा तेन दिवानिशम् ॥ ३.३.३.५०॥
रममाणा क्वचिद्देशे न्यवसद्गृहवल्लभा ॥
तत्र सा पिशिताहारा नित्यमापीतवारुणी।।५१।।
लेभे सुतं च शूद्रेण रममाणा रतिप्रिया ॥
कदाचिद्भर्त्तरि क्वापि याते पीतसुरा तु सा।।५२।।
इयेष पिशिताहारं मदिरामदविह्वला ॥
अथ मेषेषु बद्धेषु गोभिः सह बहिर्व्रजे ॥ ५३ ॥
ययौ कृपाणमादाय सा तमींधे निशामुखे ॥
अविमृश्य मदावेशान्मेषबुद्ध्यामिषप्रिया ॥ ५४ ॥
एकं जघानं गोवत्सं क्रोशंतं निशि दुर्भगा ॥
निहतं गृहमानीय ज्ञात्वा गोवत्समंगना ॥ ५५ ॥
भीता शिवशिवेत्याह केनचित्पुण्यकर्मणा ॥
सा मुहूर्तमिति ध्यात्वा पिशितासवलालसा ॥ ५६ ॥
छित्त्वा तमेव गोवत्सं चकाराहारमीप्सितम् ॥
गोवत्सार्धशरीरेण कृताहाराथ सा पुनः ॥ ५७ ॥
तदर्धदेहं निक्षिप्य बहिश्चुक्रोश कैतवात् ॥
अहो व्याघ्रेण भग्नोऽयं जग्धो गोवत्सको व्रजे ॥ ५८॥
इति तस्याः समाक्रंदः सर्वगेहेषु शुश्रुवे ।

अथ सर्वे शूद्रजनाः समागम्यांतिके स्थिताः ॥ ५९॥
हतं गोवत्समालोक्य व्याघ्रेणेति शुचं ययुः ॥
गतेषु तेषु सर्वेषु व्युष्टायां च ततो निशि ॥ ३.३.३.६० ॥
तद्भर्ता गृहमागत्य दृष्टवान्गृहविड्वरम् ।
एवं बहुतिथे काले गते सा शूद्रवल्लभा ॥ ६१ ।
कालस्य वशमापन्ना जगाम यममंदिरम् ।
यमोपि धर्ममालोक्य तस्याः कर्म च पौर्विकम् ॥ ६२ ॥
निर्वत्र्य निरयावासाञ्चक्रे चंडालजातिकाम् ॥
सापि भ्रष्टा यमपुराच्चांडालीगर्भमाश्रिता ॥ ६३ ॥
ततो बभूव जात्यंधा प्रशांतांगारमेचका ॥
तत्पिता कोपि चांडालो देशे कुत्रचिदास्थितः ॥ ६४ ॥
तां तादृशीमपि सुतां कृपया पर्यपोषयत् ॥
अभोज्येन कदन्नेन शुना लीढेन पूतिना ॥ ६५ ॥
अपेयैश्च रसैर्मात्रा पोषिता सा दिनेदिने ॥
जात्यंधा सापि कालेन बाल्ये कुष्ठरुजार्दिता ॥ ६६ ॥
ऊढा न केनचिद्वापि चांडालेनातिदुर्भगा ॥
अतीतबाल्ये सा काले विध्वस्तपितृमातृका ॥ ६७ ॥
दुर्भगेति परित्यक्ता बंधुभिश्च सहोदरैः ॥
ततः क्षुधार्दिता दीना शोचन्ती विगतेक्षणा ॥ ६८ ॥
गृहीतयष्टिः कृच्छ्रेण संचचाल सलोष्टिका ॥
पत्तनेष्वपि सर्वेषु याचमाना दिनेदिने ॥ ६९ ॥
चांडालोच्छिष्टपिंडेन जठराग्निमतर्पयत्॥
एवं कृच्छ्रेण महता नीत्वा सुबहुलं वयः ॥ ३.३.३.७० ॥
जरया ग्रस्तसर्वांगी दुःखमाप दुरत्ययम् ॥
निरन्नपानवसना सा कदाचिन्महाजनान्।। ७१ ।।
आयास्यंत्यां शिवतिथौ गच्छतो बुबुधेऽध्वगान्।।
तस्यां तु देवयात्रायां देशदेशांतयायिनाम् ।। ७२ ।।
विप्राणां साग्निहोत्राणां सस्त्रीकाणां महात्मनाम्।।
राज्ञां च सावरोधानां सहस्तिरथवाजिनाम् ।। ७३ ।।
सपरीवारघोषाणां यानच्छत्रादिशोभिनाम् ।।
तथान्येषां च विट्शूद्रसंकीर्णानां सहस्रशः ।। ७४ ।।
हसतां गायतां क्वापि नृत्यतामथ धावताम् ।।

जिघ्रतां पिबतां कामाद्गच्छतां प्रतिगर्जताम् ।। ७५ ।।।
संप्रयाणे मनुष्याणां संभ्रमः सुमहानभूत् ।।
इति सर्वेषु गच्छत्सु गोकर्णं शिवमंदिरम् ।। ७६ ।।
पश्यंति दिविजाः सर्वे विमानस्थाः सकौतुकाः ।।
अथेयमपि चांडाली वसनाशनतृष्णया ।। ७७ ।।
महाजनान्याचयितुं चचाल च शनैःशनैः ।।
करावलंबेनान्यस्याः प्राग्जन्मार्जितकर्मणा ।।
दिनैः कतिपयैर्याती गोकर्णं क्षेत्रमाययौ ।। ७८ ।।
ततो विदूरे मार्गस्य निषण्णा विवृतांजलिः ।।
याचमाना मुहुः पांथान्बभाषे कृपणं वचः ।। ७९ ।।
प्राग्जन्मार्जितपापौघैः पीडितायाश्चिरं मम ।।
आहारमात्रदानेन दयां कुरुत भो जनाः ।। ३.३.३.८० ।।
त्रातारः परमार्तानां दातारः परमाशिषाम् ।।
कर्तारो बहुपुण्यानां दयां कुरुत भो जनाः ।। र१ ।।
वसनाशनहीनायां स्वपितायां महीतले ।।
महापांसुनिमग्नायां दयां कुरुत भो जनाः ।। ८२ ।।
महाशीतातपार्त्तायां पीडितायां महारुजा ।।
अन्धायां मयि वृद्धायां दयां कुरुत भो जनाः ।। ८३ ।।
चिरोपवासदीप्तायां जठराग्निविवर्धनैः ।।
संदह्यमानसर्वाग्यां दयां कुरुत भो जनाः ।। ८४ ।।
अनुपार्जितपुण्यायां जन्मांतरशतेष्वपि ।।
पापायां मंदभाग्यायां दयां कुरुत भो जनाः ।।८५।।
एवमभ्यर्थयंत्यास्तु चांडाल्याः प्रसृतेंऽजलौ ।।
एकः पुण्यतमः पांथः प्राक्षिपद्बिल्वमंजरीम् ।। ८६ ।।
तामंचलौ निपतितां सा विमृश्य पुनः पुनः ।।
अभक्ष्येत्येव मत्वाथ दूरे प्राक्षिपदातुरा ।। ८७ ।।
तस्याः करेण निर्मुक्ता रात्रौ सा बिल्वमंजरी ।।
पपात कस्यचिद्दिष्ट्या शिवलिंगस्य मस्तके ।। ८८ ।।
सैवं शिवचतुर्दश्यां रात्रौ पांथजनान्मुहुः ।।
याचमानापि यत्किंचिन्न लेभे दैवयोगतः ।। ८९ ।।
तत्रोषितानया रात्रिर्भद्रकाल्यास्तु पृष्ठतः ।।
किंचिदुत्तरतः स्थानं तदर्धेनातिदूरतः ।। ३.३.३.९० ।।

ततः प्रभाते भ्रष्टाशा शोकेन महताप्लुता ।।
शनैर्निववृते दीना स्वदेशायैव केवला ।। ९१ ।।
श्रांता चिरोपवासेन निपतन्ती पदेपदे ।।
क्रंदंती वहुरोगार्ता वेपमाना भृशातुरा ।। ९२ ।।
दह्यमानार्कतापेन नग्नदेहा सयष्टिका।।
अतीत्यैतावतीं भूमिं निपपात विचेतना।।९३।।
अथ विश्वेश्वरः शंभुः करुणामृतवारिधिः।।
एनामानयतेत्यस्मान्युयुजे सविमानकान्।।९४।।
एषा प्रवृत्तिश्चांडाल्यास्तवेह परिकीर्त्तिता।।
तथा संदर्शिता शंभोः कृपणेषु कृपालुता।।
कर्मणः परिपाकोत्थां गतिं पश्य महामते ।।
अधमापि परं स्थानमारोहति निरामयम् ।। ९६ ।।
यदेतया पूर्वभवे नान्नदानादिकं कृतम् ।।
क्षुत्पिपासादिभिः क्लेशैस्तस्मादिह निपीड्यते ।। ९७ ।।
यदेषा मदवेगांधा चक्रे पापं महोल्बणम्।।
कर्मणा तेन जात्यंधा बभूवात्रैव जन्मनि ।। ९८ ।।
अपि विज्ञाय गोवत्सं यदेषाऽभक्षयत्पुरा ।।
कर्मणा तेन चांडाली बभूवेह विगर्हिता ।। ९९ ।।
यदेषार्यपथं हित्वा जारमार्गरता पुरा ।।
तेन पापेन केनापि दुर्वृत्ता दुर्भगापि वा ।। ।। ३.३.३.१०० ।।
यदाश्लिष्य मदाविष्टा जारेण विधवा पुरा ।।
तेन पापेन महता बहुकुष्ठव्रणान्विता ।। १०१ ।।
कामार्त्ता यदियं स्वैरं शूद्रेण रमिता पुरा ।।
महासृक्पूयकृमिभिः पीड्यते तेन पाप्मना ।। २ ।।
सुव्रतानि न चीर्णानि नेष्टापूतार्दिकं कृतम् ।।
सर्वभोगविहीनेयं दूयते तेन पाप्मना ।। ।। ३ ।।
यदेतया पूर्वभवे सुरा पीता विमूढया ।।
महायक्ष्मार्तिहृच्छूलैः पीड्यते तेन पाप्मना ।। ४ ।।
अत्रैव सर्वमर्त्येषु पापचिह्नानि कृत्स्नशः ।।
लक्ष्यते मुनिशार्दूल सविवेकैर्महात्मभिः ।। ५ ।।
अत्र ये बहुरोगार्त्ता ये पुत्रधनवर्जिताः ।। ६ ।।
ये च दुर्लक्षणक्लिष्टा याचका विगतह्रियः ।।

वासोन्नपानशयनभूषणाभ्यंजनादिभिः ।। ७ ।।
हीना विरूपा निर्विद्या विकलांगाः कुभोजनाः ।।
ये दुर्भाग्या निंदिताश्च ये चान्ये परसेवकाः ।। ।। ८ ।।
एते पूर्वभवे सर्वे सुमहत्पापकारिणः ।।
एवं विमृश्य यत्नेन दृष्ट्वा लोकजनस्थितिम् ।। ९ ।।
बुधो न कुरुते पापं यदि कुर्यात्स आत्महा ।।
देहोऽयं मानुषो जंतोर्बहुकर्मैकभाजनम् ।। ३.३.३.११० ।।
सदा सत्कर्म सेवेत दुष्कर्म सततं त्यजेत् ।।
पुण्यं सुखार्थी कुर्वीत दुःखार्थी पापमाचरेत् ।। ।। ११ ।।
द्वयोरेकतरे लोके गृहीते कुशलो जनः ।।
इमं मानुषमाश्रित्य देहं परमदुर्लभम् ।। १२ ।।
य आत्महितवान्कश्चिद्देवमेकं समाश्रयेत् ।।
अथ पापानि सर्वाणि कुर्वन्नपि सदा नरः ।। १३ ।।
शिवमेकमतिर्ध्यायेत्स संतरति पातकम् ।।
मृता पूर्वभवे त्वेषा यदा प्राप्ता यमालये ।। १४ ।।
तदा वितर्कः सुमहानासीद्यमसभासदाम् ।।
यद्यपि ब्राह्मणी त्वेषा सत्कुलाचारदूषिता ।। १५ ।।
अतोऽस्माभिरिहानीता निरयं यातु वा न वा ।।
अनया साधितो बाल्ये पुण्यलेशोऽस्ति वा न वा ।। १६ ।।
अथापि सुविमृश्यैवं धार्यो दंडोऽत्र नान्यथा ।।
बहुजन्मसहस्रेषु कृतपुण्यविपाकतः।। ।। १७ ।।
नृणां ब्रह्मकुले जन्म लभ्यते हि कथंचन ।।
अतोस्याः पूर्वपूर्वेषु कृताघं नास्ति जन्मसु।।१८।।
अन्यथा सत्कुले जन्म कथमेषा प्रपद्यते।।
अत्रैव जन्मन्यनया कृतमंहो दुरत्ययम् ।। १९ ।।
अथापि नरकावासं प्रायशो नेयमर्हति ।।
किंतु गोवत्सकं हत्वा विमृश्यागतसाध्वसा ।। ३.३.३.१२० ।।
एषा शिवशिवेत्याह प्राग्जन्मार्जितकर्मणा ।।
यदेषा पापविच्छित्त्यै सकृदप्युरुमंगलम् ।। २१ ।।
शिवनाम वदेद्भक्त्या तर्हि गच्छेत्परं पदम् ।।
एकजन्मकृतस्यास्य दारुणस्यापि यत्फलम् ।। २२ ।।
क्रमेणानुभवत्वेषा भूत्वा चांडालजातिका ।।

अस्मादन्यतमः को वा नरकोऽस्ति नृणा मिह ।। २३ ।।
अनेकक्लेशसंघातैर्यन्मुहुः परिपीडनम् ।।
दुष्कुले जन्म दारिद्र्यं महाव्याधिर्विमूढता ।। २४ ।।
एकैक एव नरकः सर्वे वा चाथ किं पुनः ।।
प्राग्जन्मपुण्यभारेण यन्नाम विवशाऽब्रवीत् ।। २५ ।।
तेनैषान्यभवे भूरि पुण्यमंते करिष्यति ।।
तेन पुण्येन महता निस्तीर्याघौघया तनाः ।। २६ ।।
नीता तत्पुरुषैरंते प्रयास्यति परं पदम् ।।
एतादृशानां मर्त्यानां शास्तारो न वयं क्वचित् ।।
विचार्य स्वयमेवेशो यद्युक्तं तत्करोतु सः ।। २७ ।।
एवं वैवस्वतपुरे सर्वैर्यमपुरोगमैः ।।
विमृश्य चित्रगुप्ताद्यैरियं मुक्ताऽपतद्भुवि ।। २८ ।।
आदौ यदेषा शिवनाम नारी प्रमादतो वाप्य सती जगाद ।।
तेनेह भूयः सुकृतेन शंभोर्बिल्वांकुराराधनपुण्यमाप ।। २९ ।।
श्रीगोकर्णे शिवतिथावुपोष्य शिवमस्तके ।।
कृत्वा जागरणं ह्येषा चक्रे बिल्वार्पणं निशि ।। ३.३.३.१३० ।।
अकामतः कृतस्यास्य पुण्यस्यैव च यत्फलम् ।।
अद्यैव भोक्ष्यते सेयं पश्यतस्तव नो मृषा ।। ३१ ।। ।।
।। गौतम उवाच ।। ।।
इत्युक्त्वा शिवदूतास्ते तस्याश्चांडालयोनितः ।।
जीवलेशं समाकृष्य युयुजुर्दिव्यतेजसा ।। ३२ ।।
तां दिव्यदेहसंक्रांतां तेजोराशिसमुज्ज्वलाम्।।
विमाने स्थापयामासुः प्रीतास्ते शिवकिंकराः ।। ३३ ।।
अथ सा परमोदाररूपलावण्यशालिनी ।।
दिव्यभूषणदीप्तांगी दिव्यांबरविधारिणी ।। ३४ ।।
देहेन दिव्यगंधेन दिव्यतेजोविकाशिना ।।
दिव्यमाल्यावतंसेन विरराज विमानगा ।। ३५ ।।
रत्नच्छत्रपताकाद्यैर्गीतवादित्रनिस्वनैः ।।
मध्ये सा शिवदूतानां मोदमाना वरानना ।। ३६ ।।
अनुभूतानि जन्मानि स्मृत्वास्मृत्वा पुनःपुनः ।।
भीता त्रस्ता दृढा श्चर्यं दृष्ट्वा स्वप्नमिवोत्थिता ।। ३७ ।।
काहं केऽमी महासिद्धाः कोयं लोको मनोरमः ।।

क्व गतं मे वपुः कष्टं चंडचांडालगोत्रजम् ।। ३८ ।।
अहो सुमहदाश्चर्यं दृष्टं मायाविलासजम् ।।
यन्मे भवसहस्रेषु भ्रातंभ्रांतं पुनःपुनः ।। ३९ ।।
अहो ईश्वरपूजाया माहात्म्यं विस्मयावहम् ।।
पत्रमात्रेण संतुष्टो यो ददाति निजं पदम् ।। ३.३.३.१४० ।।
इति तां जातनिर्वेदां स्मरन्तीं भगवत्पदम् ।।
दिव्यं विमानमारोप्य ते महेश्वरकिंकराः ।। ।। ४१ ।।
आलोकयत्सु सर्वेषु लोकेशेषु सविस्मयम् ।।
आमंत्र्य तामथानिन्युः परमेश्वरसन्निधिम् ।। ४२ ।।
राजन्सुमहदाश्चर्यमाख्यातं गिरिजा पतेः ।।
माहात्म्यं भक्तिलेशस्य सर्वाघौघविनाशनम् ।। ४३ ।।
।। राजोवाच ।। ।।
भगवन्परमेशस्य कीदृशो लोक उत्तमः ।।
तस्य मे लक्षणं ब्रूहि यद्यस्ति मयि ते दया ।। ४४ ।।
।। गौतम उवाच ।। ।।
ब्रह्मादिसुरनाथानां लोकेष्वपि सुदुर्लभः ।।
य आनंदः सदा यत्र स लोकः पारमेश्वरः ।। ४५ ।।
सर्वातिगमनं यत्र ज्योतिर्यत्र प्रतिष्ठितम् ।।
क्वापि नास्ति तमोयोगः स लोकः पारमेश्वरः ।। ४६ ।।
गुणवृत्ति विनिस्तीर्य संप्राप्ता यत्र योगिनः ।।
न पतेयुः पुनः सर्वे स लोकः पारमेश्वरः ।। ४७ ।।
यत्र वासं न कुर्वंति क्रोधलोभमदादयः ।।
यत्रावस्था न जन्माद्याः स लोकः पारमेश्वरः ।। ४८ ।।
सर्वेषां निगमानां च यदेकं क्षेत्रमुच्यते ।।
यस्मान्नास्ति परं वित्तं तत्पदं पारमेश्वरम् ।। ४९ ।।
प्रत्याहारासन ध्यानप्राणसंयमनादिभिः ।।
यत्र योगपथैः प्राप्तुं यतते योगिनः सदा ।। ३.३.३.१५० ।।
यत्र देवः सदानंदनिर्मलज्ञानरूपया ।।
अस्ति देव्या सह क्रीडन्स लोकः पारमेश्वरः ।। ५१ ।।
जन्मानेकसहस्रेषु संभृतैः पुण्यराशिभिः ।।
आरूढाः पुरुषा नार्यः क्रीडन्ते यत्र संगताः ।। ५२ ।।
तेजो राशौ समालीना दुर्विभाव्ये मनोरमे ।।

अहोरात्रादिसंस्थानं न विंदंति कदाचन ।। ५३ ।।
स लोकः परमेशस्य दुर्लभो हि कुयोगिनः ।।
एतद्भक्ति सुपूर्णा ये तैरेव प्रतिपद्यते ।। ५४ ।।
ये तत्कथाश्रवणकीर्तनजातहर्षा ये सर्वभूतसुहृदः प्रशमैकनिष्ठाः ।।
संसारचक्रमतिवाह्य निरस्तमोहास्ते शांकरं पदमवाप्य सुखं रमन्ते ।। ५५ ।।
तथा त्वमपि राजेंद्र गोकर्णं गिरिशालयम् ।।
गत्वा प्रशमिताघौघः कृतकृत्यत्वमाप्नुहि ।। ५६ ।।
तत्र सर्वेषु कालेषु स्नात्वाभ्यर्च्य महाबलम् ।।
कृत्वा शिवचतुर्दश्यामुपवासं समाहितः ।। ५७ ।।
कृत्वा जागरणं रात्रौ बिल्वैरभ्यर्च्य शंकरम् ।।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्स्यसि ।। ५८ ।।
एष ते विमलो राजन्नुपदेशो मया कृतः ।।
स्वस्ति तेऽस्तु गमिष्यामि मिथिलाधिपतेः पुरीम् ।। ५९ ।।
इत्यामन्त्र्य मुनिः प्रीत्या गौतमो मिथिलां ययौ ।।
सोऽपि हृष्टमना राजा गोकर्णं प्रत्यपद्यत ।। ३.३.३.१६० ।।
तत्र दृष्ट्वा महादेवं स्नात्वाभ्यर्च्य महाबलम् ।।
निर्धूताशेषपापौघो लेभे शम्भोः परं पदम् ।। ६१ ।।
य इमां शृणुयान्नित्यं कथां शैवीं मनोहराम् ।।
श्रावयेद्वा जनो भक्त्या स याति परमां गतिम् ।। ६२ ।।
श्रद्दधानः सकृद्वापि य इमां शृणुयात्कथाम् ।।
त्रिःसप्तकुलजैः सार्धं शिवलोकमवाप्नुयात् ।। ६३ ।।
इति कथितमशेषं श्रेयसामादिबीजं भवशतदुरितघ्नं ध्वस्तमोहांधकारम् ।।
चरितममरगेयं मन्मथारेरुदारं सततमपि निषेव्यं स्वस्तिमद्भिश्च लोकैः ।। ।।१६४।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे शिवचतुर्दशीगोकर्णमाहात्म्यवर्णनंनाम तृतीयोऽध्यायः ।। ।। ३ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ४



।। सूत उवाच ।। ।।
भूयोपि शिवमाहात्म्यं वक्ष्यामि परमाद्भुतम् ।।
शृण्वतां सर्वपापघ्नं भवपाशविमोचनम् ।। ।। १ ।।
दुस्तरे दुरितांभोधौ मज्जतां विषयात्मनाम् ।।
शिवपूजां विना कश्चित्प्लवो नास्ति निरूपितः ।। २ ।।
शिवपूजां सदा कुर्याद्बुद्धिमानिह मानवः ।।
अशक्तश्चेत्कृता पूजां पश्येद्भक्तिविनम्रधीः ।। ३ ।।
अश्रद्धयापि यः कुर्याच्छिवपूजां विमुक्तिदाम् ।।
पश्येद्वा सोपि कालेन प्रयाति परमं पदम् ।। ४ ।।
आसीत्किरातदेशेषु नाम्ना राजा विमर्दनः ।।
शूरः परमदुर्द्धर्षो जितशत्रुः प्रतापवान् ।। ५ ।।
सर्वदा मृगयासक्तः कृपणो निर्घृणो बली ।।
सर्वमांसाशनः क्रूरः सर्ववर्णांगनावृतः ।। ६ ।।
तथापि कुरुते शंभोः पूजां नित्यमतंद्रितः ।।
चतुर्दश्यां विशेषेण पक्षयोः शुक्लकृष्णयोः ।। ।। ७ ।।
महाविभवसंपन्नां पूजां कृत्वा स मोदते ।।
हर्षेण महताविष्टो नृत्यति स्तौति गायति ।। ८ ।।
तस्यैवं वर्तमानस्य नृपतेः सर्वभक्षिणः ।।
दुराचारस्य महिषी चेष्टितेनान्वतप्यत ।। ९ ।।
सा वै कुमुद्वतीनाम राज्ञी शीलगुणान्विता ।।
एकदा पतिमासाद्य रहस्ये तदपृच्छत ।। ३.३.४.१० ।।
एतत्ते चरितं राजन्महदाश्चर्यकारणम् ।।
क्व ते महादुराचारः क्व भक्तिः परमेश्वरे ।। ११ ।।
सर्वदा सर्वभक्षस्त्वं सर्वस्त्रीजनलालसः ।।
सर्वहिंसापरः क्रूरः कथं भक्तिस्तवेश्वरे ।। १२ ।।
इति पृष्टः स भूपालो विमृश्य सुचिरं ततः ।।
त्रिकालज्ञः प्रहस्यैनां प्रोवाच सुकुतूहलः ।। १३ ।। ।।

।। राजोवाच ।। ।।

अहं पूर्वभवे कश्चित्सारमेयो वरानने ।।

पंपानगरमाश्रित्य पर्यटामि समंततः ।। १४ ।।

एवं कालेषु गच्छत्सु तत्रैव नगरोत्तमे ।।

कदाचिदागतः सोहं मनोज्ञं शिवमंदिरम् ।। १५ ।।

पूजायां वर्तमानायां चतुर्दश्यां महातिथौ ।।

अपश्यमुत्सवं दूराद्बहिर्द्वारं समाश्रितः ।। १६ ।।

अथाहं परमक्रुद्धैर्दंडहस्तैः प्रधावितः ।।

तस्माद्देशादपक्रांतः प्राणरक्षापरायणः ।। १७ ।।

ततः प्रदक्षिणीकृत्य मनोज्ञं शिवमंदिरम् ।।

द्वारदेशं पुनः प्राप्य पुनश्चैव निवारितः ।। १८ ।।

पुनः प्रदक्षिणीकृत्य तदेव शिवमन्दिरम् ।।

बलिपिंडादिलोभेन पुनर्द्वारमुपागतः ।। १९ ।।

एवं पुनःपुनस्तत्र कृत्वा कृत्वा प्रदक्षिणाम् ।।

द्वारदेशे समासीनं निजघ्नुर्निशितैः शरैः ।। ३.३.४.२० ।।

स विद्धगात्रः सहसा शिवद्वारि गतासुकः ।।

जातोऽस्म्यहं कुले राज्ञां प्रभावाच्छिवसन्निधेः ।। २१ ।।

दृष्ट्वा चतुर्दशीपूजां दीपमाला विलोकिताः ।।

तेन पुण्येन महता त्रिकालज्ञोऽस्मि भामिनि ।। २२ ।।

प्राग्जन्मवासनाभिश्च सर्वभक्षोऽस्मि निर्घृणः ।।

विदुषामपि दुर्लंघ्या प्रकृतिर्वासनामयी ।। २३ ।।

अतोऽहमर्चयामीशं चतुर्दश्यां जगद्गुरुम् ।।

त्वमपि श्रद्धया भद्रे भज देवं पिनाकिनम् ।। २४ ।।

।। राज्न्युवाच ।। ।।

त्रिकालज्ञोऽसि राजेन्द्र प्रसादाद्गिरिजापतेः ।।

मत्पूर्वजन्मचरितं वक्तुमर्हसि तत्त्वतः ।। २५ ।।

।। राजोवाच ।। ।।

त्वं तु पूर्वभवे काचित्कपोती व्योमचारिणी ।।

क्वापि लब्धवती किंचिन्मांं सपिंडं यदृच्छया ॥ २६॥

त्वद्गृहीतमथालोक्य गृध्रः कोप्यामिषं बली ।

निरामिषः स्वयं वेगाभिदुद्राव भीषणः ॥ २७॥

ततस्तं वीक्ष्य वित्रस्ता विद्रुतासि वरानने ॥

तेनानुयाता घोरेण मांसपिंडजिघृक्षया ॥ २८ ॥
दिष्ट्या श्रीगिरिमासाद्य श्रांता तत्र शिवालयम् ॥
प्रदक्षिणं परिक्रम्य ध्वजाग्रे समुपस्थिता ॥ २९॥
अथानुसृत्य सहसा तीक्ष्णतुंडो विहंगमः ॥
त्वां निहत्य निपात्याधो मांसमादाय जग्मिवान् ॥ ३.३.४.३० ॥
प्रदक्षिणप्रक्रमणाद्देवदेवस्य शूलिनः॥
तस्याग्रे मरणाच्चैव जातासीह नृपांगना ॥ ३१ ॥
॥ राज्न्युवाच ॥ ॥
श्रुतं सर्वमशेषेण प्राग्जन्मचरितं मया ॥
जातं च महदाश्चर्यं भक्तिश्च मम चेतसि ॥
अथान्यच्छ्रोतुमिच्छामि त्रिकालज्ञ महामते ॥
इदं शरीरमुत्सृज्य यास्यावः कां गतिं पुनः । |॥ ३२ ॥
॥ राजोवाच ॥ ॥
अतो भवे जनिष्येऽहं द्वितीये सैंधवो नृपः ॥ ३३ ॥
सृंजयेशसुता त्वं हि मामेव प्रतिपत्स्यसे ॥
तृतीये तु भवे राजा सौराष्ट्रे भविताऽस्म्यहम् ॥ ३४ ॥
कलिंगराजतनया त्वं मे पत्नी भविष्यसि ॥
चतुर्थे तु भविष्यामि भवे गांधारभूमिपः ॥ ३५ ॥
मागधी राजतनया तत्र त्वं मम गेहिनी ॥
पंचमेऽवंतिनाथोऽहं भविष्यामि भवांतरे ॥ ३६ ॥
दाशार्हराजतनया त्वमेव मम वल्लभा॥
अस्माज् जन्मनि षष्ठेऽहमानर्ते भविता नृपः ॥ ३७॥
ययातिवंशजा कन्या भूत्वा मामेव यास्यसि ॥
पांड्यराजकुमारोऽहँ सप्तमे भविता भवे ॥ ३८ ॥
तत्र मत्सदृशो नान्यो रूपौदार्यगुणादिभिः ॥
सर्वशास्त्रार्थतत्त्वज्ञो बलवान्दृढविक्रमः ॥ ३९ ॥
सर्वलक्षणसंपन्नः सर्वलोकमनोरमः ॥
पद्मवर्ण इति ख्यातः पद्ममित्रसमद्युतिः ॥ ३.३.४.४०॥
भविता त्वं च वैदर्भी रूपेणाप्रतिमा भुवि ॥
नाम्ना वसुमती ख्याता रूपावयवशोभिनी ॥ ४१ ॥
सर्व राजकुमाराणां मनोनयननंदिनी ॥
सा त्वं स्वयंवरे सर्वान्विहाय नृपनंदनान् ॥ ४२ ॥

वरं प्राप्स्यसि मामेव दमयंतीव नैषधम् ॥
सोऽहं जित्वा नृपान्सर्वान्प्राप्य त्वां वरवर्णिनीम् ॥४३॥
स्वराष्ट्रस्थोऽखिलान्भोगान्भोक्ष्ये वर्षगणान्बहून् ॥
इष्ट्वा च विविधैर्यज्ञैर्वाजिमेधादिभिः शुभैः ॥ ४४ ॥
संतर्प्य पितृदेवर्षीन्दानैश्च द्विजसत्तमान् ॥
संपूज्य देवदेवेशं शंकरं लोकशंकरम् ॥ ४५ ॥
पुत्रे राज्यधुरं न्यस्य गंतास्मि तपसे वनम् ॥
तत्रागस्त्यान्मुनिवराद्ब्रह्मज्ञानमवाप्य च ॥ ४६ ॥
त्वया सह गमिष्यामि शिवस्य परमं पदम् ।
चतुर्दश्यां चतुर्दश्यामेवं संपूज्य शंकरम् ॥ ४७ ॥
सप्तजन्मसु राजस्त्वं भविष्यति वरानने ॥
इत्येतत्सुकृतं लब्धं पूज़ादर्शनमात्रतः ॥
क्व सारमेयो दुष्टात्मा क्वेदृशी बत सङ्गतिः॥ ४८ ।
।। सूत उवाच॥
इत्युक्तो निजनाथेन सा राज्ञी शुभलक्षणा ॥ ४९ ॥
परं विस्मयमापन्ना पूजयामास तं मुदा ॥
सोऽपि राजा तया सार्द्धं भुक्त्वा भोगान्यथेप्सितान् ।। ३.३.४.५० ।।
जगाम सप्तजन्मांते शंभोस्तत्परमं पदम् ।।
य एतच्छिवपूजाया माहात्म्यं परमाद्भुतम् ।।
शृणुयात्कीर्तयेद्वापि स गच्छेत्परमं पदम्।। ५१ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे चतुर्दशीमाहात्म्यवर्णनं नाम चतुर्थो ऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ५



।। सूत उवाच ।। ।।

शिवो गुरुः शिवो देवः शिवो बंधुः शरीरिणाम् ।।

शिव आत्मा शिवो जीवःशिवादन्यन्न किञ्चन ।।१।।

शिवमुद्दिश्य यत्किंचिद्दत्तं जप्तं हुतं कृतम् ।।

तदनंतफलं प्रोक्तं सर्वागमविनिश्चितम् ।। २ ।।

भक्त्या निवेदितं शंभोः पत्रं पुष्पं फलं जलम् ।।

अल्पादल्पतरं वापि तदानंत्याय कल्पते ।। ३ ।।

विहाय सकलान्धर्मान्सकलागमनिश्चितान् ।।

शिवमेकं भजेद्यस्तु मुच्यते सर्वबन्धनात् ।। ४ ।।

या प्रीतिरात्मनः पुत्रे या कलत्रे धनेपि सा ।।

कृता चेच्छिवपूजायां त्रायतीति किमद्भुतम् ।। ५ ।।

तस्मात्केचिन्महात्मानः सकलान्विषयासवान् ।।

त्यजंति शिवपूजार्थे स्वदेहमपि दुस्त्यजम् ।। ६ ।।

सा जिह्वा या शिवं स्तौति तन्मनो ध्यायते शिवम् ।।

तौ कर्णौ तत्कथालोलौ तौ हस्तौ तस्य पूजकौ ।। ७ ।।

ते नेत्रे पश्यतः पूजां तच्छिरः प्रणतं शिवे ।।

तौ पादौ यौ शिवक्षेत्रं भक्त्या पर्यटतः सदा ।। ८ ।।

यस्येन्द्रियाणि सर्वाणि वर्तंते शिवकर्मसु ।।

स निस्तरति संसारं भुक्तिं मुक्तिं च विंदति ।। ९ ।।

शिवभक्तियुतो मर्त्यश्चांडालः पुल्कसोपि च ।।

नारी नरो वा षंढो वा सद्यो मुच्येत संसृतेः ।। ३.३.५.१० ।।

किं कुलेन किमाचारैः किंशीलेन गुणेन वा ।।

भक्तिलेशयुतः शंभोः स वंद्यः सर्वदेहिनाम् ।। ११ ।।

उज्जयिन्यामभूद्राजा चन्द्रसेनसमाह्वयः ।।

जातो मानवरूपेण द्वितीय इव वासवः ।। १२ ।।
तस्मिन्पुरे महाकालं वसंतं परमेश्वरम् ।।
संपूजयत्यसौ भक्त्या चन्द्रसेनो नृपोत्तमः ।। १३ ।।
तस्याभवत्सखा राज्ञः शिवपारिषदाग्रणीः ।।
मणिभद्रो जिताभद्रः सर्वलोकनमस्कृतः ।। १४ ।।
तस्यै कदा महीभर्तुः प्रसन्नः शंकरानुगः ।।
चिन्तामणिं ददौ दिव्यं मणिभद्रो महामतिः ।। १५ ।।
स मणिः कौस्तुभ इव द्योतमानोर्कसन्निभः ।।
दृष्टः श्रुतो वा ध्यातो वा नृणां यच्छति चिंतितम् ।। १६ ।।
तस्य कांतिलवस्पृष्टं कांस्यं ताम्रमयस्त्रपु ।।
पाषाणादिकमन्यद्वा सद्यो भवति कांचनम् ।। ।। १७ ।।
स तं चिन्तामणिं कंठे बिभ्रद्राजासनं गतः ।।
रराज राजा देवानां मध्ये भानुरिव स्वयम् ।। १८ ।।
सदा चिन्तामणिग्रीवं तं श्रुत्वा राजसत्तमम् ।।
प्रवृद्धतर्षा राजानः सर्वे क्षुब्धहृदोऽभवन् ।। १९ ।।
स्नेहात्केचिदयाचंत धार्ष्ट्यात्केचन दुर्मदाः ।।
दैवलब्धमजानंतो मणिं मत्सरिणो नृपाः।३.३.५.२०।।
सर्वेषां भूभृतां याञ्चा यदा व्यर्थीकृतामुना।।
राजानः सर्वदेशानां संरंभं चक्रिरे तदा।।२१।।
सौराष्ट्राः कैकयाः शाल्वाः कलिंगशकमद्रकाः ।।
पांचालावंतिसौवीरा मागधा मत्स्यसृंजयाः ।। २२ ।।
एते चान्ये च राजानः सहाश्वरथकुमजराः ।।
चन्द्रसेनं मृधे जेतुमुद्यमं चक्रुरोजसा ।। २३ ।।
ते तु सर्वे सुसंरब्धाः कंपयंतो वसुन्धराम् ।।
उज्जयिन्याश्चतुर्द्वारं रुरुधुर्बहुसैनिकाः ।। २४ ।।
संरुध्यमानो स्वपुरीं दृष्ट्वा राजभिरुद्धतैः ।।
चंद्रसेनो महाकालं तमेव शरणं ययौ ।। २५ ।।
निर्विकल्पो निराहारः स राजा दृढनिश्चयः ।।

अर्चयामास गौरीशं दिवा नक्त मनन्यधीः ।। २६ ।।

एतस्मिन्नंतरे गोपी काचित्तत्पुरवासिनी ।।

एकपुत्रा भर्तृहीना तत्रैवासीच्चिरंतना ।। २७ ।।

सा पंचहायनं बालं वहंती गत भर्तृका ।।

राज्ञा कृतां महापूजां ददर्श गिरिजापतेः ।। २८ ।।

सा दृष्ट्वा सर्वमाश्चर्यं शिवपूजामहोदयम् ।।

प्रणिपत्य स्वशिबिरं पुनरेवाभ्यपद्यत ।। ।। २९ ।।

एतत्सर्वमशेषेण स दृष्ट्वा बल्लवीसुतः ।।

कुतूहलेन विदधे शिवपूजां विरक्तिदाम्।। ३.३.५.३० ।।

आनीय हृद्यं पाषाणं शून्ये तु शिबिरोत्तमे ।।

नातिदूरे स्वशिबिराच्छिवलिंगमकल्पयत् ।। ३१ ।।

यानि कानि च पुष्पाणि हस्तलभ्यानि चात्मनः ।।

आनीय स्नाप्य तल्लिंगं पूजयामास भक्तितः ।। ३२ ।।

गंधालंकारवासांसि धूपदीपाक्षतादिकम् ।।

विधाय कृत्रिमैर्दिव्यैर्नैवेद्यं चाप्यकल्पयत् ।। ३३ ।।

भूयोभूयः समभ्यर्च्य पत्रैः पुष्पैर्मनोरमैः ।।

नृत्यं च विविधं कृत्वा प्रणनाम पुनःपुनः ।।३४।।

एवं पूजां प्रकुर्वाणं शिवस्यानन्यमानसम् ।।

सा पुत्रं प्रणयाद्गोपी भोजनाय समा ह्वयत्।।३५।।

मात्राहूतोपि बहुशः स पूजासक्तमानसः ।।

बालोपि भोजनं नच्छत्तदा माता स्वयं ययौ।। ३६।।

तं विलोक्य शिवस्याग्रे निषण्णं मी लितेक्षणम्।।

चकर्ष पाणिं संगृह्य कोपेन समताडयत्।। ३७ ।।

आकृष्टस्ताडितो वापि नागच्छत्स्वसुतो यदा ।।

तां पूजां नाशयामास क्षिप्त्वा लिंगं विदूरतः ।। ३८ ।।

हाहेति रुदमानं तं निर्भर्त्स्य स्वसुतं तदा ।।

पुनर्विवेश स्वगृहं गोपी रोषसमन्विता ।। ३९ ।।

मात्रा विनाशितां पूजां दृष्ट्वा देवस्य शूलिनः ।।

देवदेवेति चुक्रोश निपपात स बालकः ।। ३.३.५.४० ।।

प्रनष्टसंज्ञः सहसा बाष्पपूरपरिप्लुतः ।।

लब्धसंज्ञो मुहूर्तेन चक्षुषी उदमीलयत्।। ।। ४१ ।।

ततो मणिस्तंभविराजमानं हिरण्मयद्वारकपाटतोरणम् ।।

महार्हनीलामलवज्रवेदिकं तदेव जातं शिबिरं शिवालयम् ।। ४२ ।।

संतप्तहेम कलशैर्बहुभिर्विचित्रैः प्रोद्भासितस्फटिकसौधतलाभिरामम् ।।

रम्यं च तच्छिवपुरं वरपीठमध्ये लिंगं च रत्नसहितं स ददर्श बालः ।। ४३ ।।

स दृष्ट्वा सहसोत्थाय भीतविस्मितमानसः ।।

निमग्न इव संतोषात्परमानंदसागरे ।। ४४ ।।

विज्ञाय शिवपूजाया माहात्म्यं तत्प्रभावतः ।।

ननाम दंडवद्भूमौ स्वमातुरघशांतये ।। ४५ ।।

देव क्षमस्व दुरितं मम मातुरुमापते ।।

मूढायास्त्वामजानंत्याः प्रसन्नो भव शंकर ।। ४६ ।।

यद्यस्ति मयि यत्किंचित्पुण्यं त्वद्भक्तिसंभवम् ।।

तेनापि शिव मे माता तव कारुण्यमाप्नुयात् ।। ४७ ।।

इति प्रसाद्य गिरिशं भूयोभूयः प्रणम्य च ।।

सूर्ये चास्तं गते बालो निर्जगाम शिवालयात् ।। ४८ ।।

अथापश्यत्स्वशिबिरं पुरंदरपुरोपमम् ।।

सद्यो हिरण्मयीभूतं विचित्रविभवोज्ज्वलम् ।। ४९ ।।

सोंतः प्रविश्य भवनं मोदमानो निशामुखे ।।

महामणिगणाकीर्णं हेमराशिसमुज्ज्वलम् ।। ३.३.५.५० ।।

तत्रापश्यत्स्वजननीं स्मरंतीमकुतोभयाम् ।।

महार्हरत्न पर्यंके सितशय्यामधिश्रिताम् ।। ५१ ।।

रत्नालंकारदीप्तांगीं दिव्यांबरविराजिनीम् ।।

दिव्यलक्षणसंपन्नां साक्षात्सुरवधूमिव ।। ५२ ।।

जवेनोत्थापयामास संभ्रमोत्फुल्ललोचनः ।।

अंब जागृहि भद्रं ते पश्येदं महदद्भुतम्।। ५३ ।।

इति प्रबोधिता गोपी स्वपुत्रेण महात्मना ।।

ततोऽपश्यत्स्वजननी स्मयन्ती मुकुटोज्ज्वला ।। ५४ ।।

ससंभ्रमं समुत्थाय तत्सर्वं प्रत्यवेक्षत ।।

अपूर्वमिव चात्मानमपूर्वमिव बालकम् ।। ५५ ।।

अपूर्वं च स्वसदनं दृष्ट्वा सीत्सुखविह्वला ।।

श्रुत्वा पुत्रमुखात्सर्वं प्रसादं गिरिजापतेः ।। ५६ ।।

राज्ञे विज्ञापयामास यो भजत्यनिशं शिवम् ।।

स राजा सहसागत्य समाप्त नियमो निशि ।। ५७ ।।

ददर्श गोपिकासूनोः प्रभावं शिवतोषजम् ।।

हिरण्मयं शिवस्थानं लिंगं मणिमयं तथा ।। ५८ ।।

गोपवध्वाश्च सदनं माणि क्यवरकोज्ज्वलम्।।

दृष्ट्वा महीपतिः सर्वं सामात्यः सपुरोहितः ।।५९ ।।

मुहूर्तं विस्मितधृतिः परमानंदनिर्भरः ।।

प्रेम्णा वाष्पजलं मुंचन्परिरेभे तम र्भकम् ।। ३.३.५.६० ।।

एवमत्यद्भुताकाराच्छिवमाहात्म्यकीर्तनात् ।।

पौराणां संभ्रमाच्चैव सा रात्रिः क्षणतामगात् ।। ६१ ।।

अथ प्रभाते युद्धाय पुरं संरुध्य संस्थिताः ।।

राजानश्चारवक्त्रेभ्यः शुश्रुवुः परमाद्भुतम् ।। ६२ ।।

ते त्यक्तवैराः सहसा राजानश्चकिता भृशम् ।।

न्यस्तशस्त्रा निविविशुश्चंद्रसेनानुमोदिताः ।। ६३ ।।

तां प्रविश्य पुरीं रम्यां महाकालं प्रणम्य च ।।

तद्गोपवनितागेहमाजग्मुः सर्वभूभृतः ।। ६४ ।।

ते तत्र चंद्रसेनेन प्रत्युद्गम्याभि पूजिताः ।।

महार्हविष्टरगताः प्रीत्यानंदन्सुविस्मिताः ।। ६५ ।।

गोपसूनोः प्रसादाय प्रादुर्भूतं शिवालयम् ।।

लिंगं च वीक्ष्य सुमहच्छिवे चक्रुः परां मतिम् ।। ६६ ।।

तस्मै गोपकुमाराय प्रीतास्ते सर्वभूभुजः ।।

वासोहिरण्यरत्नानि गोमहिष्यादिकं धनम् ।। ६७ ।।

गजानश्वान्रथान्रौक्माञ्छत्र यानपरिच्छदान् ।।

दासान्दासीरनेकाश्च ददुः शिवकृपार्थिनः ।। ६८ ।।

येये सर्वेषु देशेषु गोपास्तिष्ठंति भूरिशः ।।

तेषां तमेव राजानं चक्रिरे सर्व पार्थिवाः ।।६९।।

अथास्मिन्नंतरे सर्वैस्त्रिदशैरभिपूजितः ।।

प्रादुर्बभूव तेजस्वी हनूमान्वानरेश्वरः ।।३.३.५.७०।।

तस्याभिगमनादेव राजानो जातसंभ्रमाः ।।

प्रत्युत्थाय नमश्चक्रुर्भक्तिनम्रात्ममूर्तयः ।। ७१ ।।

तेषां मध्ये समासीनः पूजितः प्लवगेश्वरः ।।

गोपात्मजं समाश्लिष्य राज्ञो वीक्ष्येदमब्रवीत् ।। ।। ७२ ।।

सर्वे शृणुत भद्रं वो राजानो ये च देहिनः ।।

शिवपूजामृते नान्या गतिरस्ति शरीरिणाम ।। ७३ ।।

एष गोपसुतो दिष्ट्या प्रदोषे मंदवा सरे ।।

अमंत्रेणापि संपूज्य शिवं शिवमवाप्तवान् ।। ७४ ।।

मंदवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम् ।।

तत्रापि दुर्लभतरः कृष्णपक्षे समागते ।। ।। ७५ ।।

एष पुण्यतमो लोके गोपानां कीर्तिवर्धनः ।।

अस्य वंशेऽष्टमो भावी नंदोनाम महायशाः ।।

प्राप्स्यते तस्य पुत्रत्वं कृष्णो नारा यणः स्वयम् ।। ७६ ।।

अद्यप्रभृति लोकेस्मिन्नेष गोपालनंदनः ।।

नाम्ना श्रीकर इत्युच्चैर्लोके ख्यातिं गमिष्यति ।। ७७ ।।

।। सूत उवाच ।।

एवमुक्त्वांजनीसूनुस्तस्मै गोपकसूनवे ।।

उपदिश्य शिवाचारं तत्रैवांतरधीयत ।। ७८ ।।

ते च सर्वे महीपालाः संहृष्टाः प्रतिपूजिताः ।।

चन्द्रसेनं समामंत्र्य प्रतिजग्मुर्यथागतम् ।। ७९ ।।

श्रीकरोऽपि महातेजा उपदिष्टो हनूमता ।।

ब्राह्मणैः सह धर्मज्ञैश्चक्रे शम्भोः समर्हणम् ।। ३.३.५.८० ।।

कालेन श्रीकरः सोऽपि चंद्रसेनश्च भूपतिः ।।

समाराध्य शिवं भक्त्या प्रापतुः परमं पदम् ।। ८१ ।।

इदं रहस्यं परमं पवित्रं यशस्करं पुण्यमहर्द्धिवर्धनम् ।।

आख्यानमाख्यातमघौघनाशनं गौरीशपादांबुजभक्तिवर्धनम् ।। ८२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तर खण्डे गोपकुमारचरितवर्णनं नाम पञ्चमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ६

https://sa.wikisource.org/s/fx6
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | ब्रह्मोत्तर खण्डः

।। ऋषय ऊचुः ।। ।।

यदुक्तं भवता सूत महदाख्यानमद्भुतम् ।।

शम्भोर्माहात्म्यकथनमशेषाघहरं परम् ।। १ ।।

भूयोपि श्रोतुमिच्छामस्तदेव सुसमाहिताः ।।

प्रदोषे भगवाञ्छंभुः पूजितस्तु महात्मभिः ।। २ ।।

संप्रयच्छति कां सिद्धिमेतन्नो ब्रूहि सुव्रत ।।

श्रुतमप्यसकृत्सूत भूयस्तृष्णा प्रवर्धते ।। ३ ।।

।। सूत उवाच ।। ।।

साधु पृष्टं महाप्राज्ञा भवद्भिर्लोकविश्रुतैः ।।

अतोऽहं संप्रवक्ष्यामि शिवपूजाफलं महत् ।। ४ ।।

त्रयोदश्यां तिथौ सायं प्रदोषः परिकीर्तितः ।।

तत्र पूज्यो महादेवो नान्यो देवः फलार्थिभिः ।। ५ ।।

प्रदोषपूजामाहात्म्यं को नु वर्णयितुं क्षमः ।।

यत्र सर्वेऽपि विबुधास्तिष्ठंति गिरिशांतिके ।। ६ ।।

प्रदोषसमये देवः कैलासे रजतालये ।।

करोति नृत्यं विबुधैरभिष्टुतगुणोदयः ।। ७ ।।

अतः पूजा जपो होमस्तत्कथास्तद्गुणस्तवः ।।

कर्त्तव्यो नियतं मर्त्यैश्चतुर्वर्गफला र्थिभिः ।। ८ ।।

दारिद्यतिमिरांधानां मर्त्यानां भवभीरुणाम् ।।

भवसागरमग्नानां प्लवोऽयं पारदर्शनः ।। ९ ।।

दुःखशोकभयार्त्तानां क्लेशनिर्वाणमिच्छताम् ।।

प्रदोषे पार्वतीशस्य पूजनं मंगलायनम् ।। ३.३.६.१० ।।

दुर्बुद्धिरपि नीचोपि मन्दभाग्यः शठोऽपि वा ।।

प्रदोषे पूज्य देवेशं विपद्भ्यः स प्रमुच्यते ।। ११ ।।

शत्रुभिर्हन्यमानोऽपि दश्यमानोपि पन्नगैः ।।

शैलैराक्रम्यमाणोऽपि पतितोऽपि महांबुधौ ।। १२ ।।

आविद्धकालदण्डोऽपि नानारोगहतोऽपि वा ।।

न विनश्यति मर्त्योऽसौ प्रदोषे गिरिशार्चनात् ।। १३ ।।

दारिद्र्यं मरणं दुःखमृणभारं नगोपमम् ।।

सद्यो विधूय संपद्भिः पूज्यते शिवपूजनात् ।। १४ ।।

अत्र वक्ष्ये महापुण्यमितिहासं पुरातनम् ।।

यं श्रुत्वा मनुजाः सर्वे प्रयांति कृतकृत्यताम् ।। १५ ।।

आसीद्विदर्भविषये नाम्ना सत्यरथो नृपः ।।

सर्वधर्मरतो धीरः सुशीलः सत्यसंगरः ।। १६ ।।

तस्य पालयतो भूमिं धर्मेण मुनिपुंगवाः ।।

व्यतीयाय महान्कालः सुखेनैव महामतेः ।। १७ ।।

अथ तस्य महीभर्तुर्बभूवुः शाल्वभूभुजः ।।

शत्रवश्चोद्धतबला दुर्मर्षणपुरोगमाः ।। १८ ।।

कदाचिदथ ते शाल्वाः संनद्धबहुसैनिकाः ।।

विदर्भनगरीं प्राप्य रुरुधुर्विजिगीषवः ।। १९ ।।

दृष्ट्वा निरुद्ध्यमानां तां विदर्भाधिपतिः पुरीम् ।।

योद्धुमभ्याययौ तूर्णं बलेन महता वृतः ।। ३.३.६.२० ।।

तस्य तैरभवयुद्धं शाल्वैरपि बलोद्धतैः ।।

पाताले पन्नगेन्द्रस्य गन्धर्वैरिव दुर्मदैः ।। २१ ।।

विदर्भनृपतिः सोऽथ कृत्वा युद्धं सुदारुणम् ।।

प्रनष्टोरुबलैः शाल्वैर्निहतो रणमूर्धनि ।। २२ ।।

तस्मिन्महारथे वीरे निहते मंत्रिभिः सह ।।

दुद्रुवुः समरे भग्ना हतशेषाश्च सैनिकाः ।। २३ ।।

अथ युद्धेभिविरते नदत्सु रिपुमंत्रिषु ।।

नगर्यां युद्ध्यमानायां जाते कोलाहले रवे ।। २४ ।।

तस्य सत्यरथस्यैका विदर्भाधिपतेः सती ।।

भूरिशोकसमाविष्टा क्वचिद्यत्नाद्विनिर्ययौ ।। २५ ।।

सा निशासमये यत्नादंतर्वत्नी नृपांगना ।।
निर्गता शोक संतप्ता प्रतीचीं प्रययौ दिशम् ।। २६ ।।
अथ प्रभाते मार्गेण गच्छन्ती शनकैः सती ।।
अतीत्य दूरमध्वानं ददर्श विमलं सरः ।। २७ ।।
तत्रागत्य वरारोहा तप्ता तापेन भूयसा ।।
विलसंतं सरस्तीरे छायावृक्षं समाश्रयत् ।। २८ ।।
तत्र दैववशाद्राज्ञी विजने तरुकुट्टिमे ।।
असूत तनयं साध्वी मूहूर्ते सद्गुणान्विते ।। २९ ।।
अथ सा राजमहिषी पिपासाभिहता भृशम् ।।
सरोऽवतीर्णा चार्वंगी ग्रस्ता ग्राहेण भूयसा ।। ३.३.६.३० ।।
जातमात्रः कुमारोऽपि विनष्टपितृमातृकः ।।
रुरोदोच्चैः सरस्तीरे क्षुत्पिपासार्दितोऽबलः ।। ३१ ।।
तस्मिन्नेवं क्रन्दमाने जातमात्रे कुमारके ।।
काचिदभ्याययौ शीघ्रं दिष्ट्या विप्रवरांगना ।। ३२ ।।
साप्येकहायनं बालमुद्वहन्ती निजात्मजम् ।।
अधना भर्तृरहिता याचमाना गृहेगृहे ।। ३३ ।।
एकात्मजा बंधुहीना याञ्चामार्गवशंगता।।
उमानाम द्विजसतीददर्श नृपनंदनम्।। ३४ ।।
सा दृष्ट्वा राजतनयं सूर्यबिंवमिव च्युतम्।।
अनाथमेनं क्रंदंतं चिंतयामास भूरिशः ॥ ३५॥
अहो सुमहदाश्चर्यमिदं दृष्टं मयाधुना ॥
अच्छिन्ननाभिसूत्रोऽयं शिशुर्माता क्व वा गता ॥ ३६ ॥
पिता नास्ति न चान्योस्ति नास्ति बंधुजनोऽपि वा ॥
अनाथः कृपणो बालः शेते केवल भूतले ॥ ३७ ॥
एष चांडालजो वापि शूद्रजो वैश्यजोपि वा ॥
विप्रात्मजो वा नृपजो ज्ञायते कथमर्भकः ॥ ३८॥
शिशुमेनं समुद्धृत्य पुष्णाम्यौरसवद्ध्रुवम् ॥
किं त्वविज्ञातकुलजं नोत्सहे स्प्रष्टुमुत्तमम् ॥ ३९ ॥

इति मीमांसमानायां तस्यां विप्रवरस्त्रियाम् ॥ ३.३.६.४० ॥

कश्चित्समाययौ भिक्षुः साक्षाद्देवः शिवः स्वयम् ॥

तामाह भिक्षुवर्योथ विप्रभामिनि मा खिदः ॥ ४१ ॥

रक्षैनं बालकं सुभ्रुर्विसृज्य हृदि संशयम्॥

अनेन परमं श्रेयः प्राप्स्यसे ह्यचिरादिह ॥ ४२ ॥

एतावदुक्त्वा त्वरितो भिक्षुः कारुणिको ययौ ॥

अथ तस्मिन्गते भिक्षौ विश्रब्धा विप्रभामिनी ॥ ४३ ॥

तमर्भकं समादाय निजमेव गृहं ययौ ॥

भिक्षुवाक्येन विश्रब्धा सा राज तनयं सती ॥ ४४ ॥

आत्मपुत्रेण सदृशं कृपया पर्यपोषयत्॥

एकचक्राह्वये रम्ये ग्रामे कृतनिकेतना ॥ ४५ ॥

स्वपुत्रं राजपुत्रं च भिक्षान्नेन व्यवर्धयत् ॥

ब्राह्मणीतनयश्चैव स राजतनयस्तथा ॥ ४६ ॥

ब्राह्मणैः कृतसंस्कारौ ववृधाते सुपूजितौ।॥

कृतोपनयनौ काले बालकौ नियमे स्थितौ ॥ ॥ ४७ ॥

भिक्षार्थं चेरतुस्तत्र मात्रा सह दिनेदिने ॥

ताभ्यां कदाचिद्बालाभ्यां सा विप्रवनिता सह ॥ ४८ ॥

भैक्ष्यं चरंती दैवेन प्रविष्टा देवतालयम्॥

तत्र वृद्धैः समाकीर्णे मुनिभिर्देवतालये ॥ ४९ ॥

तौ दृष्ट्वा बालकौ धीमाञ्छांडिल्यो मुनिरब्रवीत् ॥

अहो दैवबलं चित्रमहो कर्म दुरत्ययम् ॥ ३.३.६.५० ॥

एष बालोऽन्यजननीं श्रितो भैक्ष्येण जीवति ॥

इमामेव द्विजवधूं प्राप्य मातरमुत्तमाम् ॥ ५१ ॥

सहैव द्विजपुत्रेण द्विजभावं समाश्रितः ॥

इति श्रुत्वा मुनेर्वाक्यं शांडिल्यस्य द्विजांगना ॥ ५२॥

सा प्रणम्य सभामध्ये पर्यपृच्छत्सविस्मया ॥

ब्रह्मन्नेषोर्भको नीतो मया भिक्षोर्गिरा गृहम् ॥ ५३ ॥

अविज्ञातकुलोद्यापि सुतवत्परिपोष्यते ॥

कस्मिन्कुले प्रसूतोऽयं का माता जनकोस्य कः ॥ ५४ ॥

सर्वं विज्ञातुमिच्छामि भवतो ज्ञानचक्षुषः ॥.५५ ।॥

इति पृष्टो मुनिः सोथ ज्ञानदृष्टिर्द्विजस्त्रियां ॥

आचख्यौ तस्य बालस्य जन्म कर्म च पौर्विकम् ॥ ५६ ॥

विदर्भराजपुत्रस्तु तत्पितुः समरे मृतिम्॥

तन्मातुर्नक्रहरणं साकल्येन न्यवेदयत् ॥ ५७ ॥

अथ सा विस्मिता नारी पुनः प्रपच्छ तं मुनिम् ॥

स राजा सकलान्भोगान्हित्वा युद्धे कथं मृतः ॥ ५८ ॥

दारिद्र्यमस्य बालस्य कथं प्राप्तं महामुने ॥

दारिद्र्यं पुनरुद्धूय कथं राज्यमवाप्स्यति ॥ ॥ ५९ ॥

अस्यापि मम पुत्रस्य भिक्षान्नेनैव जीवतः ।

दारिद्र्यशमनोपायमुपदेष्टुं त्वमर्हसि ॥३.३.६.६०॥

॥ शांडिल्य उवाच ॥॥

अमुष्य बालस्य पिता स विदर्भमहीपतिः ।।

पूर्वजन्मनि पांड्येशो बभूव नृपसत्तमः ।। ६१ ।।

स राजा सर्वधर्मज्ञः पालयन्सकलां महीम् ।।

प्रदोषसमये शंभुं कदा चित्प्रत्यपूजयत् ।। ६२ ।।

तस्य पूजयतो भक्त्या देवं त्रिभुवनेश्वरम् ।।

आसीत्कलकलारावः सर्वत्र नगरे महान् ।। ६३ ।।

श्रुत्वा तमुत्कटं शब्दं राजा त्यक्तशिवार्चनः ।।

निर्ययौ राजभवनान्नगरक्षोभशंकया ।। ६४ ।।

एतस्मिन्नेव समये तस्यामात्यो महाबलः ।।

शत्रुं गृहीत्वा सामंतं राजांतिकमुपागमत् ।। ६५ ।।

अमात्येन समानीतं शत्रुं सामंतमुद्धतम् ।।

दृष्ट्वा क्रोधेन नृपतिः शिरच्छेदमकारयत् ।। ६६ ।।

स तथैव महीपालो विसृज्य शिवपूजनम् ।।

असमाप्तात्मनियमश्चकार निशि भोजनम् ।। ६७ ।।

तत्पुत्रोपि तथा चक्रे प्रदोषसमये शिवम् ।।

अनर्चयित्वा मूढात्मा भुक्त्वा सुष्वाप दुर्मदः ।। ६८ ।।

जन्मांतरे स नृपतिर्विदर्भक्षितिपोऽभवत् ।।

शिवार्चनांतरायेण परैर्भोगांतरे हतः ।। ६९ ।।

तत्पुत्रो यः पूर्वभवे सोस्मिञ्जन्मनि तत्सुतः ।।

भूत्वा दारिद्र्यमापन्नः शिवपूजाव्यतिक्रमात् ।। ३.३.६.७० ।।

अस्य माता पूर्वभवे सपत्नीं छद्मनाहनत् ।।

तेन पापेन महता ग्राहेणास्मिन्भवे हता ।। ७१ ।।

एषा प्रवृत्तिरेतेषां भवत्यै समुदाहृता ।।

अनर्चितशिवा मर्त्याः प्राप्नुवंति दरिद्रताम् ।। ।। ७२ ।।

सत्यं ब्रवीमि परलोकहितं ब्रवीमि सारं ब्रवीम्युपनिषद्धृदयं ब्रवीमि ।।

संसारमुल्बणमसारमवाप्य जंतोः सारो यमीश्वरपदांबुरुहस्य सेवा ।। ७३ ।।

ये नार्चयंति गिरिशं समये प्रदोषे ये नार्चितं शिवमपि प्रणमंति चान्ये ।।

एतत्कथां श्रुतिपुटैर्न पिबंति मूढास्ते जन्मजन्मसु भवंति नरा दरिद्राः ।। ७४ ।।

ये वै प्रदोषसमये परमेश्वरस्य कुर्वंत्यनन्यमनसोंऽघ्रिसरोजपूजाम् ।।

नित्यं प्रवृद्धधन धान्यकलत्रपुत्रसौभाग्यसंपदधिकास्त इहैव लोके ।। ७५ ।।

कैलासशैलभवने त्रिजगजनित्रीं गौरीं निवेश्य कनकांचितरत्नपीठे ।।

नृत्यं विधातु मभिवाञ्छति शूलपाणौ देवाः प्रदोषसमयेऽनुभजंति सर्वे ।। ७६ ।।

वाग्देवी धृतवल्लकी शतमखो वेणुं दधत्पद्मजस्तालोन्निद्रकरो रमा भगवती गेयप्रयोगान्विता ।।

विष्णुः सांद्रमृदंगवादनपटुर्देवाः समंतात्स्थिताः सेवंते तमनु प्रदोषसमये देवं मृडानीपतिम् ।। ७७ ।।

गंधर्वयक्षपतगोरगसिद्ध साध्या विद्याधरामरवराप्सरसां गणाश्च ।।

येऽन्ये त्रिलोकनिलयाः सह भूतवर्गाः प्राप्ते प्रदोषसमये हरपार्श्वसंस्थाः ।। ७८ ।।

अतः प्रदोषे शिव एक एव पूज्योऽथ नान्ये हरिपद्मजाद्याः ।।

तस्मिन्महेशे विधिनेज्यमाने सर्वे प्रसीदंति सुराधिनाथाः ।। ७९ ।।

एष ते तनयः पूर्वजन्मनि ब्राह्मणोत्तमः ।।

प्रतिग्रहैर्वयो निन्ये न यज्ञाद्यैः सुकर्मभिः।।३.३.६.८०।।

अतो दारिद्र्यमापन्नः पुत्रस्ते द्विजभामिनि।।

तद्दोष परिहारार्थं शरणं यातु शंकरम् ।। ८१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे प्रदोषमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ७



।। सूत उवाच ।। ।।

इत्युक्ता मुनिना साध्वी सा विप्रवनिता पुनः ।।

तं प्रणम्याथ पप्रच्छ शिवपूजाविधेः क्रमम् ।। १ ।।

।। शांडिल्य उवाच ।। ।।

पक्षद्वये त्रयोदश्यां निराहारो भवेद्यदा ।।

घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् ।। २ ।।

शुक्लांबरधरो धीरो वाग्यतो नियमान्वितः।।

कृतसंध्याजपविधिः शिवपूजां समारभेत् ।। ३ ।।

देवस्य पुरतः सम्यगुपलिप्य नवांभसा ।।

विधाय मंडलं रम्यं धौतवस्त्रादिभिर्बुधः ।। ४।।

वितानाद्यैरलंकृत्य फलपुष्पनवांकुरैः ।।

विचित्रपद्ममुद्धृत्य वर्णपंचकसंयुतम् ।। ५ ।।

तत्रोपविश्य सुशुभे भक्तियुक्तः स्थिरासने ।।

सम्यक्संपादिताशेष पूजोपकरणः शुचिः ।। ६ ।।

आगमोक्तेन मंत्रेण पीठमामंत्रयेत्सुधीः ।।

ततः कृत्वात्मशुद्धिं च भूतशुद्ध्यादिकं क्रमात् ।। ७ ।।

प्राणायामत्रयं कृत्वा बीजवर्णैः सबिंदुकैः ।।

मातृका न्यस्य विधिवद्ध्यात्वा तां देवतां पराम् ।। ८ ।।

समाप्य मातृका भूयो ध्यात्वा चैव परं शिवम् ।।

वामभागे गुरुं नत्वा दक्षिणे गणपं नमेत् ।। ९ ।।

अंसोरुयुग्मे धर्मादीन्न्यस्य नाभौ च पार्श्वयोः ।।

अधर्मादीननंतादीन्हृदि पीठे मनुं न्यसेत् ।। ।। 3.3.7.१० ।।

आधारशक्तिमारभ्य ज्ञानात्मानमनुक्रमात् ।।

उक्तक्रमेण विन्यस्य हृत्पद्मे साधुभाविते ।। ११ ।।

नवशक्तिमये रम्ये ध्यायेद्देवमुमापतिम्।।

चन्द्रकोटिप्रतीकाशं त्रिनेत्रं चन्द्रशेखरम् ।। १२ ।।

आपिंगलजटाजूटं रत्नमौलिविराजितम् ।।

नीलग्रीवमुदारांगं नागहारोपशोभितम् ।। १३ ।।
वरदाभयहस्तं च धारिणं च परश्वधम् ।।
दधानं नागवलयकेयूरांगदमुद्रिकम् ।। १४ ।।
व्याघ्रचर्मपरीधानं रत्नसिंहासने स्थितम् ।।
ध्यात्वा तद्वाम भागे च चिंतयेद्गिरिकन्यकाम् ।। १५ ।।
भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभाम् ।।
विद्युत्पुंजनिभां तन्वीं मनोनयननंदिनीम् ।। १६ ।।
बालेंदु शेखरां स्निग्धां नीलकुंचितकुन्तलाम् ।।
भृंगसंघातरुचिरां नीलालकविराजिताम् ।। १७ ।।
मणिकुंडलविद्योतन्मुखमंडलविभ्रमाम् ।।
नवकुम्कुमपंकांक कपोलदलदर्पणाम् ।।१८।।
मधुरस्मितविभ्राजदरुणाधरपल्लवाम् ।।
कंबुकंठीं शिवामुद्यत्कुचपंकजकुड्मलाम् ।। १९ ।।
पाशांकुशाभयाभीष्टविल सत्सु चतुर्भुजाम् ।।
अनेकरत्नविलसत्कंकणांकितमुद्रिकाम् ।। 3.3.7.२० ।।
वलित्रयेण विलसद्धेमकांचीगुणान्विताम् ।।
रक्तमाल्यांबरधरां दिव्यचंदनच र्चिताम् ।। २१ ।।
दिक्पालवनितामौलिसन्नतांघ्रिसरोरुहाम् ।।
रत्नसिंहासनारूढां सर्पराजपरिच्छदाम् ।। २१ ।।
एवं ध्यात्वा महादेवं देवीं च गिरि कन्यकाम् ।।
न्यासक्रमेण संपूज्य देवं गंधादिभिः क्रमात् ।। २३ ।।
पंचभिर्ब्रह्मभिः कुर्यात्प्रोक्तस्थानेषु वा हृदि ।।
पृथक्पुष्पांजलिं देहे मूलेन च हदि त्रिधा ।। २४ ।।
पुनः स्वयं शिवो भूत्वा मूलमंत्रेण साधकः ।।
ततः संपूजयेद्देवं बाह्यपीठे पुनः क्रमात् ।। २५ ।।
संकल्पं प्रवदेत्तत्र पूजारंभे समाहितः ।।
कृतांजलिपुटो भूत्वा चिंतयेद्धृदि शंकरम् ।। २६ ।।
ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये ।।
अशेषाघविनाशाय प्रसीद मम शंकर ।। २७ ।।
दुःखशोकाग्निसंतप्तं संसारभयपीडितम् ।।
बहुरोगाकुलं दीनं त्राहि मां वृषवाहन ।। २८ ।।
आगच्छ देवदेवेश महादेवाभयंकर ।।

गृहाण सह पार्वत्या तव पूजां मया कृताम् ।। २९।।
इति संकल्प्य विधिवद्ब्राह्मपूजां समाचरेत् ।।
गुरुं गणपतिं चैव यजेत्सव्यापसव्ययोः ।। 3.3.7.३० ।।
क्षेत्रेशमीशकोणे तु यजेद्वास्तोष्पतिं क्रमात् ।।
वाग्देवीं च यजेत्तत्र ततः कात्यायनीं यजेत् ।। ३१ ।।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च नमोंऽतकैः ।।
स्वरैरीशादिकोणेषु पीठपादाननुक्रमात् ।।
आभ्यां बिंदुविसर्गाभ्यामधर्मादीन्प्रपूजयेत् ।। ३२ ।।
सत्त्वरूपैश्चतुर्दिक्षु मध्येऽनंतं सतारकम् ।।
सत्त्वादींस्त्रिगुणांस्तं तु रूपान्पीठेषु विन्यसेत् ।। ३३ ।।
अत ऊर्ध्वच्छदे मायां सह लक्ष्म्या शिवेन च ।। ३४ ।।
तदंते चांबुजं भूयः सकलं मंडलत्रयम् ।।
पत्रकेसरकिंजल्कव्याप्तं ताराक्षरैः क्रमात् ।। ३५ ।।
पद्मत्रयं तथाभ्यर्च्य मध्ये मंडलमादरात् ।।
वामां ज्येष्ठां च रौद्रीं च भागाद्यैर्दिक्षु पूजयेत् ।। ।। ३६ ।।
वामाद्या नव शक्तीश्च नवस्वरयुता यजेत् ।।
हृदि बीजत्रयाद्येन पीठमंत्रेण चार्चयेत् ।।३७।।
आवृतैः प्रथमांगैश्च पंचभिर्मूर्त्तिशक्तिभिः ।।
त्रिशक्तिमूर्त्तिभिश्चान्यैर्निधिद्वयसमन्वितैः ।। ३८ ।।
अनंताद्यैः परीताश्च मातृभिश्च वृषादिभिः ।।
सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्च सहायुधैः ।। ।। ३९ ।।
वृषभक्षेत्रचंडेशदुर्गाश्च स्कंदनंदिनौ ।।
गणेशः सैन्यपश्चैव स्वस्वलक्षणलक्षिताः ।। 3.3.7.४० ।।
अणिमा महिमा चैव गरिमा लघिमा तथा ।।
ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च ।। ४१ ।।
अष्टैश्वर्याणि चोक्तानि तेजोरूपाणि केवलम् ।।
पंचभिर्ब्रह्मभिः पूर्वं हृल्लेखाद्यादिभिः क्रमात ।। ४२ ।।
अंगैरुमाद्यैरिंद्राद्यैः पूजोक्ता मुनिभिस्तु तैः ।।
उमाचंडेश्वरादींश्च पूजयेदुत्तरादितः ।। ४३ ।।
एवमावरणैर्युक्तं तेजोरूपं सदाशिवम् ।।
उमया सहितं देवमुपचारैः प्रपूजयेत् ।। ४४ ।।
सुप्रतिष्ठितशंखस्य तीर्थैः पंचामृतैरपि ।।

अभिषिच्य महादेवं रुद्रसूक्तैः समाहितः ।। ४५ ।।
कल्पयेद्विविधैर्मंत्रैरासनाद्युपचारकान्।।
आसनं कल्पयेद्धैमं दिव्यवस्त्रसमन्वितम् ।। ४६ ।।
अर्घ्यमष्टगुणोपेतं पाद्यशुद्धोदकेन च ।।
तेनैवाचमनं दद्यान्मधुपर्कं मधूत्तरम् ।। ४७ ।।
पुनराचमनं दत्त्वा स्नानं मंत्रै प्रकल्पयेत् ।।
उपवीतं तथा वासो भूषणानि निवेदयेत् ।।
गंधमष्टांगसंयुक्तं सुपूतं विनिवेदयेत् ।। ।। ४८ ।।
ततश्च बिल्वमंदारकह्लारसरसीरुहम् ।।
धत्तूरकं कर्णिकारं शणपुष्पं च मल्लिकाम् ।। ४९ ।।
कुशापामार्गतुलसीमाधवीचंपकादिकम् ।।
बृहतीकरवीराणि यथालब्धानि साधकः ।। 3.3.7.५० ।।
निवेदयेत्सुगंधीनि माल्यानि विविधानि च ।।
धूपं कालागरूत्पन्नं दीपं च विमलं शुभम् ।। ।।५१।।
विशेषकम् ।।
अथ पायसनैवेद्यं सघृतं सोपदंशकम् ।।
मोदकापूपसंयुक्तं शर्करागुडसंयुतम् ।। ५२ ।।
मधुनाक्तं दधियुतं जलपानसमन्वितम् ।।
तेनैव हविषा वह्नौ जुहुयान्मंत्रभाविते ।। ५३ ।।
आगमोक्तेन विधिना गुरुवाक्यनियंत्रितः ।।
नैवेद्यं शंभवे भूयो दत्त्वा तांबूलमुत्तमम् ।। ५४ ।।।
धूपं नीराजनं रम्यं छत्रं दर्पणमुत्तमम् ।।
समर्पयित्वा विधिवन्मंत्रैर्वैदिकतांत्रिकैः ।। ५५ ।।
यद्यशक्तः स्वयं निःस्वो यथाविभवमर्चयेत् ।।
भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति ।। ५६ ।।
अथांगभूतान्सकलान्गणेशादीन्प्रपूजयेत् ।।
स्तवैर्नानाविधैः स्तुत्वा साष्टांगं प्रणमेद्बुधः ।। ५७ ।।
ततः प्रदक्षिणीकृत्य वृषचंडेश्वरादिकान् ।।
पूजां समर्प्य विधिवत्प्रार्थयेद्गिरिजापतिम् ।। ५८ ।।
जय देव जगन्नाथ जय शंकर शाश्वत ।।
जय सर्व सुराध्यक्ष जय सर्वसुरार्चित ।। ५९ ।।
जय सर्वगुणातीत जय सर्ववरप्रद ।।

जय नित्य निराधार जय विश्वंभराव्यय ।। 3.3.7.६० ।।
जय विश्वैकवेद्येश जय नागेंद्रभूषण ।।
जय गौरीपते शंभो जय चंद्रार्धशेखर ।। ६१ ।।
जय कोट्यर्कसंकाश जयानंतगुणाश्रय ।। ६२ ।।
जय रुद्र विरूपाक्ष जयाचिंत्य निरंजन ।।
जय नाथ कृपासिंधो जय भक्तार्तिभञ्जन ।।
जय दुस्तरसंसारसागरोत्तारण प्रभो ।। ६३ ।।
प्रसीद मे महादेव संसारार्तस्य खिद्यतः ।।
सर्वपापभयं हृत्वा रक्ष मां परमेश्वर ।। ६४ ।।
महादारिद्र्यमग्नस्य महापापहतस्य च ।।
महाशोकविनष्टस्य महारोगातुरस्य च ।। ६५ ।।
ऋणभारपरीतस्य दह्यमानस्य कर्मभिः ।।
ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर ।। ६६ ।।
दरिद्रः प्रार्थयेदेवं पूजांते गिरिजापतिम् ।।
अर्थाढ्यो वापि राजा वा प्रार्थयेद्देवमीश्वरम् ।। ६७ ।।
दीर्घमायुः सदारोग्यं कोशवृद्धिर्बलोन्नतिः ।।
ममास्तु नित्यमानन्दः प्रसादात्तव शंकर ।। ६८ ।।
शत्रवः संक्षयं यांतु प्रसीदन्तु मम ग्रहाः ।।
नश्यन्तु दस्यवो राष्ट्रे जनाः संतु निरापदः ।। ६९ ।।
दुर्भिक्षमारीसंतापाः शमं यांतु महीतले ।।
सर्वसस्यसमृद्धिश्च भूयात्सुखमया दिशः ।। 3.3.7.७० ।।
एवमाराधयेद्देवं प्रदोषे गिरिजापतिम् ।।
ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ।। ७१ ।।
सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी ।।
शिवपूजा मया ख्याता सर्वाभीष्टवरप्रदा ।। ७२ ।।
महापातकसंघातमधिकं चोपपातकम् ।।
शिवद्रव्यापहरणादन्यत्सर्वं निवारयेत् ।। ७३ ।।
ब्रह्महत्यादिपापानां पुराणेषु स्मृतिष्वपि ।।
प्रायश्चित्तानि दृष्टानि न शिवद्रव्यहारिणाम् ।। ७४ ।।
बहुनात्र किमुक्तेन श्लोकार्धेन ब्रवीम्यहम् ।।
ब्रह्महत्याशतं वापि शिवपूजा विनाशयेत् ।। ७५ ।।
मया कथितमेतत्ते प्रदोषे शिवपूजनम् ।।

रहस्यं सर्वजंतूनामत्र नास्त्येव संशयः ।। ७६ ।।
एताभ्यामपि बालाभ्यामेवं पूजा विधीयताम् ।।
अतः संवत्सरादेव परां सिद्धिमवाप्स्यथ ।। ७७ ।।
इति शांडिल्यवचनमाकर्ण्य द्विजभामिनी ।।
ताभ्यां तु सह बालाभ्यां प्रणनाम मुनेः पदम् ।। ७८ ।। ।।
।। विप्रस्त्र्युवाच ।। ।।
अहमद्य कृतार्थास्मि तव दर्शनमात्रतः ।।
एतौ कुमारौ भगवंस्त्वामेव शरणं गतौ ।। ७९ ।।
एष मे तनयो ब्रह्मञ्छुचिव्रत इतीरितः ।।
एष राजसुतो नाम्ना धर्मगुप्तः कृतो मया ।। 3.3.7.८० ।।
एतावहं च भगवन्भवच्चरणकिंकराः ।।
समुद्धरास्मिन्पतितान्घोरे दारिद्र्यसागरे ।। ८१ ।।
इति प्रपन्नां शरणं द्विजांगनामाश्वास्य वाक्यैरमृतोपमानैः ।।
उपादिदेशाथ तयोः कुमारयोर्मुनिः शिवाराधनमंत्र विद्याम् ।। ८२ ।।
अथोपदिष्टौ मुनिना कुमारौ ब्राह्मणी च सा ।।
तं प्रणम्य समामंत्र्य जग्मुस्ते शिवमंदिरात् ।। ८३ ।।
ततः प्रभृति तौ बालौ मुनिवर्योपदेशतः ।।
प्रदोषे पार्वतीशस्य पूजां चक्रतुरंजसा ।। ८४ ।।
एवं पूजयतोर्देवं द्विजराजकुमारयोः ।।
सुखेनैव व्यतीयाय तयोर्मासचतुष्टयम् ।। ८५ ।।
कदाचिद्राजपुत्रेण विनासौ द्विजनंदनः ।।
स्नातुं गतो नदीतीरे चचार बहुलीलया ।। ८६ ।।
तत्र निर्झरनिर्घातनिर्भिन्ने वप्र कुट्टिमे ।।
निधानकलशं स्थूलं प्रस्फुरंतं ददर्श ह ।। ८७ ।।
तं दृष्ट्वा सहसागत्य हर्षकौतुकविह्वलः ।।
दैवोपपन्नं मन्वानो गृहीत्वा शिरसा ययौ ।। ।। ८८ ।।
ससंभ्रमं समानीय निधाय कलशं बलात् ।।
निधाय भवनस्यांते मातरं समभाषत ।। ८९ ।।
मातर्मातरिमं पश्य प्रसादं गिरिजापतेः ।।
निधानं कुम्भरूपेण दर्शितं करुणात्मना ।। 3.3.7.९० ।।
अथ सा विस्मिता साध्वी समाहूय नृपात्मजम् ।।
स्वपुत्रं प्रतिनंद्याह मानयन्ती शिवार्चनम् ।। ।। ९१ ।।

शृणुतां मे वचः पुत्रौ निधानकलशीमिमाम् ।।
समं विभज्य गृह्णीतं मम शासनगौरवात् ।। ९२ ।।
इति मातुर्वचः श्रुत्वा तुतोष द्विज नंदनः ।।
प्रत्याह राजपुत्रस्तां विस्रब्धः शंकरार्चने ।। ९३ ।।
मातस्तव सुतस्यैव सुकृतेन समागतम् ।।
नाहं ग्रहीतुमिच्छामि विभक्तं धनसंच यम् ।। ९४ ।।
आत्मनः सुकृताल्लब्धं स्वयमेव भुनक्त्वसौ ।।
स एव भगवानीशः करिष्यति कृपां मयि ।। ९५ ।।
एवमर्चयतोः शंभुं भूयोपि परया मुदा ।।
संवत्सरो व्यतीयाय तस्मिन्नेव गृहे तयोः ।। ९६ ।।
अथैकदा राजसूनुः सह तेन द्विजन्मना ।।
वसंतसमये प्राप्ते विजहार वनां तरे ।। ९७ ।।
अथ दूरं गतौ क्वापि वने द्विजनृपात्मजौ ।।
गन्धर्वकन्याः क्रीडंती शतशस्तावपश्यताम् ।। ९८ ।।
ताः सर्वाश्चारुसर्वांग्यो विहरंत्यो मनोहरम् ॥
दृष्ट्वा द्विजात्मजो दूरादुवाच नृपनंदनम् ॥ ९९ ॥
इतः पुरो न गंतव्यं विहरंत्यग्रतः स्त्रियः॥
स्त्रीसंन्निधानं विबुधास्त्यजंति विमलाशयाः॥ ३.३.७.१०० ॥
एताः कैतवकारिण्यो धनयौवनदुर्मदाः ।
मोहयन्त्यो जनं दृष्ट्वा वाचानुनयकोविदाः ॥ १ ॥
अतः परित्यजेत्स्त्रीणां सन्निधिं सहभाषणम् ।
निज़धर्मरतो विद्वन्ब्रह्मचारी विशेषतः ॥ ३॥
अतोहं नोत्सहे गन्तुं क्रीडास्थानं मृगीदृशाम् ॥
इत्युक्त्वा द्विजपुत्रस्तु निवृत्तो दूरतः स्थितः ॥ ३ ॥
अथासौ राजपुत्रस्तु कौतुकाविष्टमानसः ॥
तासां विहारपदवीमेक एवाभयो ययौ ॥ १ ॥
तत्र गंधर्वकन्यानां मध्ये त्वेका वरानना ॥
दृष्ट्वाऽऽयांतं राजपुत्रं चिंतयामास चेतसा ॥ ९ ॥
अहो कोयमुदारांगो युवा सर्वांगसुन्दरः ॥
मत्तमातंग गमनो लावण्यामृतवारिधिः ॥ ६॥
लीलालोलविशालाक्षी मधुरस्मितपेशलः ॥
मदनोपमरूपश्रीः सुकुमारांगलक्षणः ॥ ७॥

इत्याश्चर्ययुता बाला दूराद्दृष्ट्वा नृपात्मजम् ॥
सर्वाः सखीः समालोक्य वचनं चेदमब्रवीत् ॥ ८ ॥
इतो विदूरे हे सख्यो वनमस्त्येकमुत्तमम् ॥
विचित्रचंपकाशोकपुन्नागबकुलैर्युतम् ॥ ९॥
तत्र गत्वा वनं सर्वाः संचीय कुसुमोत्करम् ॥
भवत्यः पुनरायांतु तावत्तिष्ठाम्यहं त्विह ॥ 3.3.7.११० ॥
इत्यादिष्टः सखीवर्गो जगाम विपिनांतरम् ॥
सापि गंधर्वजा तस्थौ न्यस्तदृष्टिर्नृपात्मजे ॥ ११ ॥
तां समालोक्य तन्वंगीं नवयौवनशालिनीम् ॥
बालां स्वरूपसंपत्त्या परिभूततिलोत्तमाम् ॥ १२ ॥
राजपुत्रः समागम्य कौतुकोत्फुल्ललोचनः ॥
अवाप दैवयोगेन मदनस्य शरव्यथाम् ॥ १३ ॥
गन्धर्वतनया सापि प्राप्ताय नृपसूनवे ॥
उत्थाय तरसा तस्मै प्रददौ पल्लवासनम् ॥ १४ ॥
कृतोपचारमासीनं तमासाद्य सुमध्यमा ॥
पप्रच्छ तद्रूपगुणैर्ध्वस्तधैर्याकुलेंद्रिया ॥ १९ ।
कस्त्वं कमलपत्राक्ष कस्माद्देशादिहागतः ॥
कस्य पुत्र इति प्रेम्णा पृष्टः सर्वं न्यवेदयत् ॥ १६ ॥
विदर्भ राजतनयं विध्वस्तपितृमातृकम् ॥
शत्रुभिश्च हृतस्थानमात्मानं परराष्ट्रगम् ॥ १७ ॥
सर्वमावेद्य भूयस्तां पप्रच्छ नृपनंदनः ॥
का त्वं वामोरु किं चात्र कार्यं ते कस्य चात्मजा ॥ १८ ॥
किमवध्यायसि हृदा किं वा वक्तुमिहेच्छसि ॥
इत्युक्ता सा पुनः प्राह शृणु राजेंद्रसत्तम ॥ १९ ॥
अस्त्येको द्रविकोनाम गंधर्वाणां कुलाग्रणीः ॥
तस्याहमस्मि तनया नाम्ना चांशुमती स्मृता ॥ 3.3.7.१२० ॥
त्वामायांतं विलोक्याहं त्वत्संभाषण लालसा ॥
त्यक्त्वा सखीजनं सर्वमेकैवास्मि महामते ॥ २१ ॥
सर्वसंगीतविद्यासु न मत्तोऽन्यास्ति काचन ॥
मम योगेन तुष्यंति सर्वा अपि सुरस्त्रियः ॥ २२ ॥
साहं सर्वकलाभिज्ञा ज्ञातसर्वजनेंगिता ॥
तवाहमीप्सितं वेद्मि मयि ते संगतं मनः ॥ २३ ॥

तथा ममापि चौत्सुक्यं दैवेन प्रतिपादितम्।।
आवयोः स्नेहभेदोऽत्र नाभिभूयादितः परम् ।। २४ ।।
इति संभाष्य तेनाशु प्रेम्णा गन्धर्वनंदिनी ।।
मुक्ताहारं ददौ तस्मै स्वकुचांतरभूषणम्।। २५ ।।
तमादायाद्भुतं हारं स तस्याः प्रणयाकुलः ।।
गाढहर्षभरोत्सिक्तामिदमाह नृपात्मजः ।। २६ ।।
सत्यमुक्तं त्वया भीरु तथाप्येकं वदाम्यहम् ।।
त्यक्तराज्यस्य निःस्वस्य कथं मे भवसि प्रिया ।। २७ ।।
सा त्वं पितृमती बाला विलंघ्य पितृशासनम् ।।
स्वच्छंदा चरणं कर्तुं मूढेव कथमर्हसि ।। २८ ।।
इति तस्य वचः श्रुत्वा तं प्रत्याह शुचिस्मिता ।।
अस्तु नाम तथैवाहं करिष्ये पश्य कौतुकम् ।। २९ ।।
गच्छ स्वभवनं कांत परश्वः प्रातरेव तु ।।
आगच्छ पुनरत्रैव कार्यमस्ति च नो मृषा ।। 3.3.7.१३० ।।
इत्युक्त्वा तं नृपसुतं सा संगतसखीजना ।।
अपाक्रामत चार्वंगी स चापि नृपनन्दनः ।। ३१ ।।
स समभ्येत्य हर्षेण द्विजपुत्रस्य सन्निधिम् ।।
सर्वमाख्याय तेनैव सार्धं स्वभवनं ययौ ।। ।। ३२ ।।
तां च विप्रसतीं भूयो हर्षयित्वा नृपात्मजः ।।
परश्वो द्विजपुत्रेण सार्धं तेन वनं ययौ ।। ३३ ।।
स तया पूर्वनिर्दिष्टं स्थानं प्राप्य नृपात्मजः ।।
गन्धर्वराजमद्राक्षीत्स्वदुहित्रा समन्वितम् ।। ३४ ।।
स गंधर्वपतिः प्राप्तावभिनंद्य कुमारकौ ।।
उपवेश्यासने रम्ये राजपुत्रमभाषत ।। ।। ३५ ।।
।। गंधर्व उवाच ।। ।।
राजेंद्रपुत्र पूर्वेद्युः कैलासं गतवानहम् ।।
तत्रापश्यं महादेवं पार्वत्या सहितं प्रभुम् ।। ३६ ।।
आहूय मां स देवेशः सर्वेषां त्रिदिवौकसाम् ।।
सन्निधावाह भगवान्करुणामृतवारिधिः । ३७ ।।
धर्मगुप्ताह्वयः कश्चिद्राजपुत्रोऽस्ति भूतले ।।
अकिञ्चनो भ्रष्टराज्यो हृतदेशश्च शत्रुभिः ।। ३८ ।।
स बालो गुरुवाक्येन मदर्च्चायां रतः सदा ।।

अद्य तत्पितरः सर्वे मां प्राप्तास्तत्प्रभावतः ।। ३९ ।।
तस्य त्वमपि साहाय्यं कुरु गन्धर्वसत्तम ।।
अथासौ निजराज्यस्थो हतशत्रुर्भविष्यति ।। 3.3.7.१४० ।।
इत्याज्ञप्तो महेशेन संप्राप्तो निजमदिरम् ।।
अनया मद्दुहित्रा च बहुशोऽभ्यर्थितस्तथा ।। ४१ ।।
ज्ञात्वेमं सकलं शंभोर्नियोगं करुणात्मनः ।।
आदायेमां दुहितरं प्राप्तोऽस्मीदं वनांतरम् ।।४२।।
अत एनां प्रयच्छामि कन्यामंशुमतीं तव ।।
हत्वा शत्रून्स्वराष्ट्रे त्वां स्थापयामि शिवाज्ञया ।। ४३ ।।
तस्मिन्पुरे त्वमनया भुक्त्वा भोगान्यथेप्सितान्।।
दशवर्षसहस्रान्ते गन्तासि गिरिशालयम् ।।
तत्रापि मम कन्येयं त्वामेव प्रतिपत्स्यते ।।
अनेनैव स्वदेहेन दिव्येन शिवसन्निधौ ।। ४५ ।।
इति गन्धर्वराजस्तमाभाष्य नृपनन्दनम् ।।
तस्मिन्वने स्वदुहितुः पाणिग्रहमकारयत् ।। ४६ ।।
पारिबर्हमदात्तस्मै रत्नभारान्महोज्ज्वलान् ।।
चूडामणिं चन्द्रनिभं मुक्ताहारांश्च भासुरान्।।४७।।
दिव्यालंकारवासांसि कार्त्तस्वरपरिच्छदान् ।।
गजानामयुतं भूयो नियुतं नीलवाजिनाम्।।४८।।
स्यन्दनानां सहस्राणि सौवर्णानि महांति च ।।
पुनरेकं रथं दिव्यं धनुश्चेन्द्रायुधोपमम् ।। ४९ ।।
अस्त्राणां च सहस्राणि तूणी चाक्षय्यसायकौ ।।
अभेद्यं वर्म सौवर्णं शक्तिं च रिपुमर्दिनीम् ।। 3.3.7.१५० ।।
दुहितुः परिचर्यार्थं दासीपञ्चसहस्रकम् ।।
ददौ प्रीतमनास्तस्मै धनानि विविधानि च ।। ।। ५१ ।।
गंधर्वसैन्यमत्युग्रं चतुरंगसमन्वितम् ।।
पुनश्च तत्सहायार्थे गन्धर्वाधिपतिर्ददौ ।। ५२ ।।
इत्थं राजेन्द्रतनयः संप्राप्तः श्रियमुत्तमाम् ।।
अभीष्टजायासहितो मुमुदे निजसंपदा ।। ५३ ।।
कारयित्वा स्वदुहितुर्विवाहं समयोचितम् ।।
ययौ विमानमारुह्य गंधर्वाधिपतिर्दिवम् ।। ५४ ।।
धर्मगुप्तः कृतोद्वाहः सह गंधर्वसेनया ।।

पुनः स्वनगरं प्राप्य जघान रिपुवाहिनीम् ।। ५५ ।।
दुर्धर्षणं रणे हत्वा शक्त्या गंधर्वसेनया ।।
निः शेषितारातिबलः प्रविवेश निजं पुरम् ।। ५६ ।।
ततोभिषिक्तः सचिवैर्ब्राह्मणैश्च महोत्तमैः ।।
रत्नसिंहासनारूढश्चक्रे राज्यमकण्टकम् ।। ५७ ।।
या विप्रवनिता पूर्वं तमपुष्णात्स्वपुत्रवत् ।।
सैव माताभवत्तस्य स भ्राता द्विजनन्दनः ।। ५८ ।।
गंधर्वतनया जाया विदर्भनगरेश्वरः ।।
आराध्य देवं गिरिशं धर्मगुप्तो नृपोऽभवत् ।। ५९ ।।
एवमन्ये समाराध्य प्रदोषे गिरिजापतिम् ।।
लभंतेभीप्सितान्कामान्देहांते तु परां गतिम् ।। 3.3.7.१६० ।।
।। सूत उवाच ।। ।।
एतन्महाव्रतं पुण्यं प्रदोषे शंकरार्चनम् ।।
धर्मार्थकाममोक्षाणां यदेतत्साधनं परम् ।। ६१ ।।
य एतच्छृणुयात्पुण्यं माहात्म्यं परमाद्भुतम् ।।
प्रदोषे शिवपूजांते कथयेद्वा समाहितः ।। ६२ ।।
भवेन्न तस्य दारिद्र्यं जन्मान्तरशतेष्वपि ।।
ज्ञानैश्वर्यसमायुक्तः सोन्ते शिवपुरं व्रजेत् ।। ६३ ।।
ये प्राप्य दुर्लभतरं मनुजाः शरीरं कुर्वंति हंत परमेश्वरपादपूजाम् ।।
धन्यास्त एव निजपुण्यजितत्रिलोकास्तेषां पदांबुजरजो भुवनं पुनाति ।। १६४ ।। ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे प्रदोषमहिमावर्णनं नाम सप्तमो ऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ८



।। सूत उवाच ।। ।।
नित्यानंदमयं शांतं निर्विकल्पं निरामयम् ।।
शिवतत्त्वमनाद्यंतं ये विदुस्ते परं गताः ।। १ ।।
विरक्ताः कामभोगेभ्यो ये प्रकुर्वंत्यहैतुकीम् ।।
भक्तिं परां शिवे धीरास्तेषां मुक्तिर्न संसृतिः ।।२।।
विषयानभिसंधाय ये कुर्वंति शिवे रतिम् ।।
विषयैर्नाभिभूयंते भुंजानास्तत्फलान्यपि ।। ३ ।।
येन केनापि भावेन शिवभक्तियुतो नरः ।।
न विनश्यति कालेन स याति परमां गतिम् ।। ४ ।।
आरुरुक्षुः परं स्थानं विषयासक्तमानसः ।।
पूजयेत्कर्मणा शंभुं भोगांते शिवमाप्नुयात् ।। ५ ।।
अशक्तः कश्चिदुत्स्रष्टुं प्रायो विषयवासनाम् ।।
अतः कर्ममयी पूजा कामधेनुः शरीरिणाम् ।।६।।
मायामयेपि संसारे ये विहृत्य चिरं सुखम् ।।
मुक्तिमिच्छन्ति देहांते तेषां धर्मोयमीरितः ।। ७।।
शिवपूजा सदा लोके हेतुः स्वर्गापवर्गयोः ।।
सोमवारे विशेषेण प्रदोषादिगुणान्विते ।। ८ ।।
केवलेनापि ये कुर्युः सोमवारे शिवार्चनम् ।।
न तेषां विद्यते किंचिदिहामुत्र च दुर्लभम् ।। ९ ।।
उपोषितः शुचिर्भूत्वा सोमवारे जितेंद्रियः ।।
वैदिकैर्लौकिकैर्वापि विधिवत्पूजयेच्छिवम् ।।3.3.8.१०।।
ब्रह्मचारी गृहस्थो वा कन्या वापि सभर्तृका।।
विभर्तृका वा संपूज्य लभते वरमीप्सितम्।।११।।
अत्राहं कथयिष्यामि कथां श्रोतृमनोहराम्।।
श्रुत्वा मुक्तिं प्रयांत्येव भर्तिर्भवति शांभवी।।१२।।
आर्यावर्ते नृपः कश्चिदासीद्धर्मभृतां वरः।।
चित्रवर्मेति विख्यातो धर्मराजो दुरात्मनाम्।। ।। १३ ।।

स गोप्ता धर्मसेतूनां शास्ता दुष्पथगामिनाम् ।।
यष्टा समस्तयज्ञानां त्राता शरणमिच्छताम्।।१४।।
कर्त्ता सकलपुण्यानां दाता सकलसंपदाम् ।।
जेता सपत्नवृंदानां भक्तः शिवमुकुन्दयोः ।। १५ ।।
सोनुकूलासु पत्नीषु लब्ध्वा पुत्रान्महौजसः ।।
चिरेण प्रार्थितां लेभे कन्यामेकां वराननाम् ।। १६ ।।
स लब्ध्वा तनयां दिष्ट्या हिमवानिव पार्वतीम् ।।
आत्मानं देवसदृशं मेने पूर्णमनोरथम् ।। १७ ।।
स एकदा जातकलक्षणज्ञानाहूय साधून्द्विजमुख्यवृंदान् ।।
कुतूहलेनाभिनिविष्टचेताः पप्रच्छ कन्याजनने फलानि ।। १८ ।।
अथ तत्राब्रवीदेको बहुज्ञो द्विजसत्तमः ।।
एषा सीमंतिनी नाम्ना कन्या तव महीपते ।। १९ ।।
उमेव मांगल्यवती दमयंतीव रूपिणी ।।
भारतीव कलाभिज्ञा लक्ष्मीरिव महागुणा ।। ।। 3.3.8.२० ।।
सुप्रजा देवमातेव जानकीव धृतव्रता ।।
रविप्रभेव सत्कांतिश्चंद्रिकेव मनोरमा ।। २१ ।।
दशवर्षसहस्राणि सह भर्त्रा प्रमोदते ।।
प्रसूय तनयानष्टौ परं सुखमवाप्स्यति।। २२ ।।
इत्युक्तवंतं नृपतिर्धनैः संपूज्य तं द्विजम् ।।
अवाप परमां प्रीतिं तद्वागमृतसेवया ।। २३ ।।
अथान्योऽपि द्विजः प्राह धैर्यवानमितद्युतिः ।।
एषा चतुर्दशे वर्षे वैधव्यं प्रतिपत्स्यति ।। २४ ।।
इत्याकर्ण्य वचस्तस्य वज्रनिर्घातनिष्ठुरम् ।।
मुहूर्तमभवद्राजा चिंताव्याकुलमानसः ।। २५ ।।
अथ सर्वान्समुत्सृज्य ब्राह्मणान्ब्रह्मवत्सलः ।।
सर्वं दैवकृतं मत्त्वा निश्चिंतः पार्थिवोऽभवत् ।। २६ ।।
सापि सीमंतिनी बाला क्रमेण गतशैशवा ।।
वैधव्यमात्मनो भावि शुश्रावात्मसखीमुखात् ।। २७ ।।
परं निर्वेदमापन्ना चिंतयामास बालिका ।।
याज्ञवल्क्यमुनेः पत्नीं मैत्रेयीं पर्यपृच्छत।।२८।।
मातस्त्वच्चरणांभोजं प्रपन्नास्मि भयाकुला।।
सौभाग्यवर्धनं कर्म मम शंसितुमर्हसि।।२९।।

इति प्रपन्नां नृपतेः कन्यां प्राह मुनेः सती।।
शरणं व्रज तन्वंगि पार्वतीं शिवसंयुताम्।।3.3.8.३०।।
सोमवारे शिवं गौरीं पूजयस्व समाहिता।।
उपोषिता वा सुस्नाता विरजाम्बरधारिणी ।। ३१ ।।
यतवाङ्निश्चलमनाः पूजां कृत्वा यथोचिताम् ।।
ब्राह्मणान्भोजयित्वाथ शिवं सम्यक्प्रसादयत् ।।३२।।
पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात् ।।
सौभाग्यमखिलं सौख्यं गंधमाल्याक्षतार्पणात् ।। ३३ ।।
धूपदानेन सौगंध्यं कांतिर्दीपप्रदानतः ।।
नैवेद्यैश्च महाभोगो लक्ष्मीस्तांबूलदानतः ।। ३४ ।।
धर्मार्थकाममोक्षाश्च नमस्कारप्रदानतः ।।
अष्टैश्वर्यादिसिद्धीनां जप एव हि कारणम् ।। ३५ ।।
होमेन सर्वकामानां समृद्धिरुपजायते ।।
सर्वेषामेव देवानां तुष्टिर्ब्राह्मणभोजनात् ।। ३६ ।।
इत्थमाराधय शिवं सोमवारे शिवामपि ।।
अत्यापदमपि प्राप्ता निस्तीर्णाभिभवा भवेः ।। ३७ ।।
घोराद्घोरं प्रपन्नापि महाक्लेशं भयानकम् ।।
शिवपूजाप्रभावेण तरिष्यसि महद्भयम् ।। ३८ ।।
इत्थं सीमंतिनीं सम्यगनुशास्य पुनः सती ।।
ययौ सापि वरारोहा राजपुत्री तथाऽकरोत् ।। ३९ ।।
दमयंत्यां नलस्यासीदिंद्रसेनाभिधः सुतः ।।
तस्य चंद्रांगदो नाम पुत्रोभू च्चंद्रसन्निभः ।। 3.3.8.४० ।।
चित्रवर्मा नृपश्रेष्ठस्तमाहूय नृपात्मजम् ।।
कन्यां सीमंतिनीं तस्मै प्रायच्छद्गुर्वनुज्ञया ।। ४१ ।।
सोऽभून्महोत्सवस्तत्र तस्या उद्वाहकर्मणि ।।
यत्र सर्वमहीपानां समवायो महानभूत् ।। ४२ ।।
तस्याः पाणिग्रहं काले कृत्वा चंद्रांगदः कृती ।।
उवास कतिचिन्मासांस्तत्रैव श्वशुरालये ।। ४३ ।।
एकदा यमुनां तर्तुं स राजतनयो बली ।।
आरुरोह तरीं कैश्चिद्वयस्यैः सह लीलया ।। ४४ ।।
तस्मिंस्तरति कालिंदीं राजपुत्रे विधेर्वशात् ।।
ममज्ज सह कैवतैरावर्त्ताभिहता तरी ।। ४५ ।।

हा हेति शब्दः सुमहानासीत्तस्यास्तटद्वये ।।
पश्यतां सर्वसैन्यानां प्रलापो दिवम स्पृशत् ।। ४६ ।।
मज्जंतो मम्रिरे केचित्केचिद्ग्राहोदरं गताः ।।
राजपुत्रादयः केचिन्नादृश्यंत महाजले ।। ४७ ।।
तदुपश्रुत्य राजापि चित्रवर्मातिवि ह्वलः ।।
यमुनायास्तटं प्राप्य विचेष्टः समजायत ।।४८।।
श्रुत्वाथ राजपत्न्यश्च वभूबुर्गतचेतनाः ।।
सा च सीमंतिनी श्रुत्वा पपाप डूवि मूर्च्छिता ।। ४९ ।।
तथान्ये मंत्रिमुख्याश्च नायकाः सपुरोहिताः।।
विह्वलाः शोकसंतप्ता विलेपुर्मुक्तमूर्धजाः ।।3.3.8.५०।।
इंद्रसेनोपि राजेद्रः पुत्रवार्त्तां सुदुःखितः।।
आकर्ण्य सह पत्नीभिर्नष्टसंज्ञः पपात ह ।। ५१ ।।
तन्मंत्रिणश्च तत्पौरास्तथा तद्देशवासिनः ।।
आबालवृद्धवनिताश्चुक्रुशुः शोकविह्वलाः ।। ५२ ।।
शोकात्केचिदुरो जघ्नुः शिरो जघ्नुश्च केचन ।।
हा राजपुत्र हा तात क्वासि क्वासीति बभ्रमुः ।।५३।।
एवं शोकाकुलं दीनमिंद्रसेनमहीपतेः ।।
नगरं सहसा क्षुब्धं चित्रवर्मपुरं तथा ।। ५४ ।।
अथ वृद्धैः समाश्वस्तश्चित्रवर्मा महीपतिः ।।
शनैर्नगरमागत्य सान्त्वयामास चात्मजाम् ।। ५५ ।।
स राजांभसिमग्नस्य जामातुस्तस्य बांधवैः ।।
आगतैः कारयामास साकल्यादौर्ध्वदैहिकम् ।।५६।।
सा च सीमंतिनी साध्वी भर्तृलोकमतिः सती ।।
पित्रा निषिद्धा स्नेहेन वैधव्यं प्रत्यपद्यत ।। ५७ ।।
मुनेः पत्न्योऽपदिष्टं यत्सोमवारव्रतं शुभम् ।।
न तत्याज शुभाचारा वैधव्यं प्राप्तवत्यपि ।। ५८ ।।
एवं चतुर्दशे वर्षे दुःखं प्राप्य सुदारुणम् ।।
ध्यायन्ती शिवपादाब्जं वत्सरत्रयमत्यगात् ।। ५९ ।।
पुत्रशोकादिवोन्मत्तमिंद्रसेनं महीपतिम् ।।
प्रसह्य तस्य दायादाः सप्तांगं जह्रुरोजसा ।। 3.3.8.६० ।।
हृतसिंहासनः शूरैर्दायादैः सोऽप्रजो नृपः ।।
निगृह्य काराभवने सपत्नीको निवेशितः ।। ।। ६१ ।।

चंद्रागदोऽपि तत्पुत्रो निमग्नो यमुनाजले ।।
अधोधोमज्जमानोऽसौ ददर्शोरगकामिनीः ।। ६२ ।।
जलक्रीडासु सक्तास्ता दृष्ट्वा राजकुमार कम् ।।
विस्मितास्तमथो निन्युः पातालं पन्नगालयम् ।। ६३ ।।
स नीयमानस्तरसा पन्नगीभिर्नृपात्मजः ।।
तक्षकस्य पुरं रम्यं विवेश परमाद्भुतम् ।। ।। ६४ ।।
सोऽपश्यद्राजतनयो महेंद्रभवनोपमम् ।।
महारत्नपरिभ्राजन्मयूखपरिदीपितम् ।। ६५।।
वज्रवैडूर्यपाचादिप्रासादशतसंकुलम् ।।
माणिक्य गोपुरद्वारं मुक्तादामभिरुज्ज्वलम् ।। ६६ ।।
चंद्रकांतस्थलं रम्यं हेमद्वारकपाटकम् ।।
अनेकशतसाहस्रमणिदीपविराजितम् ।। ६७ ।।
तत्रापश्यत्सभा मध्ये निषण्णं रत्नविष्टरे ।।
तक्षकं पन्नगाधीशं फणानेकशतोज्ज्वलम् ।। ६८ ।।
दिव्यांबरधरं दीप्तं रत्नकुण्डलराजितम् ।।
नानारत्नपरिक्षिप्तमुकुट द्युतिरंजितम् ।। ६९ ।।
फणामणिमयूखाढ्यैरसंख्यैः पन्नगोत्तमैः ।।
उपासितं प्रांजलिभिश्चित्ररत्नविभूषितैः ।। 3.3.8.७० ।।
रूपयौवनमाधुर्यविलासगति शोभिना ।।
नागकन्यासहस्रेण समंतात्परिवारितम् ।। ७१ ।।
दिव्याभरणदीप्तांगं दिव्यचंदनचर्चितम् ।।
कालाग्निमिव दुर्धर्षं तेजसादित्यसन्निभम् ।। ।। ७२ ।।
दृष्ट्वा राजसुतो धीरः प्रणिपत्य सभास्थले ।।
उत्थितः प्रांजलिस्तस्य तेजसाक्षिप्तलोचनः ।। ७३ ।।
नागराजोपि तं दृष्ट्वा राजपुत्रं मनोरमम् ।।
कोऽयं कस्मादिहायात इति पप्रच्छ पन्नगीः ।। ७४ ।।
ता ऊचुर्यमुनातोये दृष्टोऽस्माभिर्यदृच्छया ।।
अज्ञातकुलनामायमानीतस्तव सन्निधिम् ।। ७५ ।।
अथ पृष्टो राजपुत्रस्तक्षकेण महात्मना ।।
कस्यासि तनयः कस्त्वं को देशः कथमागतः ।। ७६ ।।
राजपुत्रो वचः श्रुत्वा तक्षकं वाक्यमब्रवीत् ।। ७७ ।।
।। राजपुत्र उवाच ।। ।।

अस्ति भूमंडले कश्चिद्देशो निषधसंज्ञकः ।।
तस्याधिपोऽभवद्राजा नलो नाम महा यशाः ।।
स पुण्यकीर्तिः क्षितिपो दमयन्तीपतिः शुभः ।। ७८ ।।
तस्मादपींद्रसेनाख्यस्तस्य पुत्रो महाबलः ।।
चंद्रांगदोस्मि नाम्नाहं नवोढः श्वशुरालये ।।
विहरन्यमुनातोये निमग्नो देवचोदितः ।। ७९ ।।
एताभिः पन्नगस्त्रीभिरानीतोस्मि तवांतिकम् ।।
दृष्ट्वाहं तव पादाब्जं पुण्यैर्जन्मांतरार्जितैः ॥ ३.३.८.८० ॥
अद्य धन्योऽस्मि धन्योऽस्मि कृतार्थौ पितरौ मम ॥
यत्प्रेक्षितोऽहं कारुण्यात्त्वया संभाषितोपि च ॥ ८१ ॥
॥ सूत उवाच ॥ ॥
इत्युदारमसंभ्रांतं वचः श्रुत्वातिपेशलम् ॥
तक्षकः पुनरौत्सुक्याद्बभाषे राजनंदनम् ॥ ८२ ॥
॥ तक्षक उवाच ॥ ॥
भोभो नरेंद्रदायाद मा भैषीर्धीरतां व्रज ॥
सर्वदेवेषु को देवो युष्माभिः पूज्यते सदा ॥ ८३ ॥
॥ राजपुत्र उवाच ॥ ॥
यो देवः सर्वेदेवेषु महादेवं इति स्मृतः ॥
पूज्यते स हि विश्वात्मा शिवोऽस्माभिरुमापतिः ॥ ८४ ॥
यस्य तेजोंशलेशेन रजसा च प्रजापतिः ॥
कृतरूपोऽसृजद्विश्वं स नः पूज्यो महेश्वरः ॥ ८५ ॥
यस्यांशात्सात्विकं दिव्यं बिभ्रद्विष्णुः सनातनः ॥
विश्वं बिभर्त्ति भूतात्मा शिवोऽस्माभिः स पूज्यते ॥ ॥ ८६ ॥
यस्यांशात्तामसाज्जातो रुद्रः कालाग्निसन्निभः ॥
विश्वमेतद्धरत्यंते स पूज्योऽस्माभिरीश्वरः ॥ ८७ ॥
यो विधाता विधातुश्च कारणस्यापि कारणम् ॥
तेजसां परमं तेजः स शिवो नः परा गतिः ॥ ८८ ॥
योंतिकस्थोऽपि दूरस्थः पापोपहृतचेतसाम् ॥
अपरिच्छेद्य धामासौ शिवो नः परमा गतिः ॥ ८९ ॥
योऽग्नौ तिष्ठति यो भूमौ यो वायौ सलिले च यः ॥
य आकाशे च विश्वात्मा स पूज्यो नः सदाशिवः॥ ३.३.८.९० ।
यः साक्षी सर्वभूतानां य आत्मस्थो निरंजनः ॥

यस्येच्छावशगो लोकः सोऽस्माभिः पूज्यते शिवः ॥ ९१ ॥
यमेकमाद्यं पुरुषं पुराणं वदंति भिन्नं गुणवैकृतेन ॥
क्षेत्रज्ञमेकेथ तुरीयमन्ये कूटस्थमन्ये स शिवो गतिर्नः ॥ ९२ ॥
यं नास्पृशंश्चैत्यमचिंत्यतत्त्वं दुरंतधामानमतत्स्वरूपम् ॥
मनोवचोवृत्तय आत्मभाजां स एष पूज्यः परमः शिवो नः ॥ ९३॥
यस्य प्रसादं प्रतिलभ्य संतो वांछंति नैंद्रं पदमुज्ज्वलं वा ॥
निस्तीर्णकर्मार्गलकालचक्राश्चरंत्यभीताः स शिवो गतिर्नः ॥ ९४॥
यस्य स्मृतिः सकलपापरुजां विघातं सद्यः करोत्यपि चु पुल्कसजन्मभाजाम् ॥
यस्य स्वरूपमखिलं श्रुतिभिर्विमृग्यं तस्मै शिवाय सततं करवाम पूजाम् ॥ ९५ ॥
यन्मूर्ध्नि लब्धनिलया सुरलोकसिंधुर्यस्यांगगाँ भगवती जगदंबिका च ॥
यत्कुंडले त्वहह तक्षकवासुकी द्वौ सोऽस्माकमेव गतिरर्धशशांकमौलिः ॥ ९६ ॥
जयति निगमचूडाग्रेषु यस्यांघ्रिपद्मं जयति च हृदि नित्यं योगिनां यस्य मूर्तिः ॥
जयति सकलतत्त्वोद्भासनं यस्य मूर्तिः स विजितगुणसर्गः पूज्यतेऽस्माभिरीशः ॥ ९७ ॥
॥ सूत उवाच ॥ ॥
इत्याकर्ण्य वचस्तस्य तक्षकः प्रीतमानसः ॥
जातभक्तिर्महादेवे राजपुत्रमभाषत ॥ ९८ ॥
॥ तक्षक उवाच ॥ ॥
परितुष्टोऽस्मि भद्रं स्तात्तव राजेद्रनंदन ।।
बालोपि यत्परं तत्त्वं वेत्सि शैवं परात्परम् ।। ९९ ।।
एष रत्नमयो लोक एताश्चारुदृशोऽबलाः ।।
एते कल्पद्रुमाः सर्वे वाप्योमृतरसांभसः ।। 3.3.8.१०० ।।
नात्र मृत्युभयं घोरं न जरारोगपीडनम् ।।
यथेष्टं विहरात्रैव भुंक्ष्व भोगान्यथोचितान् ।। १०१ ।।
इत्युक्तो नागराजेन स राजेंद्रकुमारकः ।।
प्रत्युवाच परं प्रीत्या कृतांजलिरुदारधीः ।। २ ।।
कृतदारोऽस्म्यहं काले सुव्रता गृहिणी मम ।।
शिव पूजापरा नित्यं पितरावेकपुत्रकौ ।। ३ ।।
ते त्वद्य मां मृतं मत्त्वा शोकेन महतावृताः ।।
प्रायः प्राणैर्वियुज्यंते दैवात्प्राणान्वहंति वा ।। ४ ।।
अतो मया बहुतिथं नात्र स्थेयं कथंचन ।।
तमेव लोकं कृपया मां प्रापयितुमर्हसि ।। ५ ।।
इत्युक्तवंतं नरदेवपुत्रं दिव्यैर्वरान्नैः सुरपादपोत्थैः ।।

आप्यायित्वा वरगंधवासः स्रग्रत्नदिव्याभरणैर्विचित्रैः ।। ६ ।।
संतोषयित्वा विविधैश्च भोगैः पुनर्बभाषे भुजगाधिराजः ।।
यदायदा त्वं स्मरसि त्वदग्रे तदा तदाविष्क्रियते मयेति ।। ७ ।।
पुनश्च राजपुत्राय तक्षकोश्वं च कामगम् ।।
नानाद्वीपसमुद्रेषु लोकेषु च निरर्गलम् ।। ८ ।।
दत्तवान्रत्नाभरण दिव्याभरणवाससाम् ।।
वाहनाय ददावेकं राक्षसं पन्नगेश्वरः ।। ९ ।।
तत्सहायार्थमेकं च पन्नगेंद्रकुमारकम् ।।
नियुज्य तक्षकः प्रीत्या गच्छेति विससर्ज तम् ।। 3.3.8.११० ।।
इति चंद्रांगदः सोऽथ संगृह्य विविधं धनम् ।।
अश्वं कामगमारुह्य ताभ्यां सह विनिर्ययौ ।।११।।
स मूहूर्तादिवोन्मज्ज्य तस्मा देव सरिज्जलात् ।।
विजहार तटे रम्ये दिव्यमारुह्य वाजिनम् ।। १२ ।।
अथास्मिन्समये तन्वी सा च सीमंतिनी सती ।।
स्नातुं समाययौ तत्र सखी भिः परिवारिता ।। १३ ।।
सा ददर्श नदीतीरे विहरंतं नृपात्मजम् ।।
रक्षसा नररूपेण नागपुत्रेण चान्वितम् ।। १४ ।।
दिव्यरत्नसमाकीर्णं दिव्य माल्यावतंसकम् ।।
देहेन दिव्यगंधेन व्याक्षिप्तदशयोजनम् ।। १५ ।।
तमपूर्वाकृतिं वीक्ष्य दिव्याश्वमधिसंस्थितम् ।।
जडोन्मत्तेव भीतेव तस्थौ तन्न्यस्तलोचना ।। १६ ।।
तां च राजेंद्रपुत्रोऽसौ दृष्टपूर्वामिति स्मरन् ।।
निर्मुक्तकंठाभरणां कंठसूत्रविवर्जिताम् ।। १७ ।।
असंयोजितधम्मिल्लामंगरागविवर्जिताम् ।।
त्यक्तनीलांजनापांगीं कृशांगीं शोकदूषिताम् ।। १८ ।।
दृष्ट्वाऽवतीर्य तुरगादुपविष्टः सरित्तटे ।।
तामाहूय वरारोहामुपवेश्येदम ब्रवीत् ।। १९ ।।
का त्वं कस्य कलत्रं वा कस्यासि तनया सती ।।
किमिदं तेंगने बाल्ये दुःसहं शोकलक्षणम् ।। 3.3.8.१२० ।।
इति स्नेहेन संपृष्टा सा वधूरश्रुलोचना ।।
लज्जिता स्वयमाख्यातुं तत्सखी सर्वमब्रवीत् ।। २१ ।।
इयं सीमंतिनी नाम्ना स्नुषा निषधभूपतेः ।।

चंद्रांगदस्य महिषी तनया चित्रवर्मणः ।। २२ ।।
अस्याः पतिर्दैवयोगान्निमग्नोऽस्मिन्महाजले ।।
तेनेयं प्राप्तवैधव्या बाला दुःखेन शोषिता ।। २३ ।।
एवं वर्षत्रयं नीतं शोकेनातिबलीयसा ।।
अद्येंदुवारे संप्राप्ते स्नातुमत्र समागता ।। २४ ।।
श्वशुरोऽस्याश्च राजेंद्रो हृतराज्यश्च शत्रु भिः ।।
बलाद्गृहीतो बद्धश्च सभार्यस्तद्वशे स्थितः ।। २५ ।।
तथाप्येषा शुभाचारा सोमवारे महेश्वरम् ।।
सांबिकं परया भक्त्या पूजयत्यमलाशया ।। २६ ।।
।। सूत उवाच ।। ।।
इत्थं सखीमुखेनैव सर्वमावेद्य सुव्रता ।।
ततः सीमंतिनी प्राह स्वयमेव नृपात्मजम् ।। २७ ।।
कस्त्वं कंदर्पसंकाशः काविमौ तव पार्श्वगौ ।।
देवो नरेंद्रः सिद्धो वा गंधर्वो वाथ किन्नरः ।। २८ ।।
किमर्थं मम वृत्तांतं स्नेहवानिव पृच्छसि ।।
किं मां वेत्सि महाबाहो दृष्टवान्किमु कुत्रचित् ।। २९ ।।
दृष्टपूर्व इवाभासि मया च स्वजनो यथा ।।
सर्वं कथय तत्त्वेन सत्यसारा हि साधवः ।। 3.3.8.१३० ।।
।। सूत उवाच ।।
एतावदुक्त्वा नरदेवपुत्री सबाष्पकंठं सुचिरं रुरोद ।।
मुमोह भूमौ पतिता सखीभिर्वृता न किंचित्कथितुं शशाक ।। ३१ ।।
श्रुत्वा चंद्रांगदः सर्वं प्रियायाः शोककारणम् ।।
मुहूर्तमभवत्तूष्णीं स्वयं शोकसमाकुलः ।। ३२ ।।
अथाश्वास्य प्रियां तन्वीं विविधैर्वाक्यनैपुणैः ।।
सिद्धा नाम वयं देवाः कामगा इति सोऽब्रवीत् ।। ३३ ।।
ततो बलादिवाकृष्य पाणिग्रहणशंकिताम् ।।
पुलकांचितसर्वांगीं तां कर्णे त्विदमब्रवीत् ।। ३४ ।।
क्वापि लोके मया दृष्टस्तव भर्त्ता वरानने ।।
त्वद्व्रताचरणात्प्रीतः सद्य एवागमिष्यति ।। ।। ३५ ।।
अपनेष्यति ते शोकं द्वित्रैरेव दिनैर्ध्रुवम् ।।
एतच्छंसितुमायातस्तव भर्त्तुः सखाऽस्म्यहम् ।। ३६ ।।
अत्र कार्यो न संदेहः शपामि शिवपादयोः ।।

तावत्त्वद्धृदये स्थेयं न प्रकाश्यं च कुत्रचित् ।। ३७ ।।
सा तु तद्वचनं श्रुत्वा सुधाधाराशताधिकम् ।।
संभ्रमोद्भ्रांतनयना तमेव मुहुरैक्षत ।। ।। ३८ ।।
प्रेमबंधानुगुणितं वाक्यं चाह रसायनम् ।।
विभ्रमोदारसहितं मधुरापांगवीक्षणम् ।। ३९ ।।
स्वपाणिस्पर्शनोद्भिन्नपुलकांचितविग्रहम्।।
पूर्व दृष्टानि चांगेषु लक्षणानि स्वरादिषु ।।
वयःप्रमाणं वर्णं च परीक्ष्यैनमतर्कयत् ।। 3.3.8.१४० ।।
एष एव पतिर्मे स्याद्ध्रुवं नान्यो भविष्यति ।।
अस्मिन्नेव प्रसक्तं मे हृदयं प्रेमकातरम् ।। १४१ ।।
परलोकादिहायातः कथमेवं स्वरूपधृक् ।।
दुर्भाग्यायाः कथं मे स्याद्भर्तुर्नष्टस्य दर्शनम् ।। १४२ ।।
स्वप्नोयं किमु न स्वप्नो भ्रमोऽयं किं तु न भ्रमः ।।
एष धूर्तोऽथवा कश्चिद्यक्षो गंधर्व एव वा ।। १४३ ।।
मुनिपत्न्या यदुक्तं मे परमापद्गतापि च ।।
व्रतमेतत्कुरुष्वेति तस्य वा फलमेव वा।।४४।।
यो वर्षायुत सौभाग्यं ममेत्याह द्विजोत्तमः।।
नूनं तस्य वचः सत्यं को विद्यादीश्वरं विना।।४५।।
निमित्तानि च दृश्यंते मंगलानि दिनेदिने।।
प्रसन्ने पार्वतीनाथे किमसाध्यं शरीरिणाम्।। ४६।।
इत्थं विमृश्य बहुधा तां पुनर्मुक्तसंशयाम्।।
लज्जानम्रमुखीं कर्णे शशंसात्मप्रयोजनम् ।। ४७ ।।
इमं वृत्तांतमाख्यातुं तत्पित्रोः शोकतप्तयोः ।।
गच्छामः स्वस्ति ते भद्रे सद्यः पतिमवाप्स्यसि ।। ४८ ।।
इत्युक्त्वाश्वं समारुह्य जगाम नृपनंदनः ।।
ताभ्यां सह निजं राष्ट्रं प्रत्यपद्यत तत्क्षणात् ।। ४९ ।।
स पुरोपवनाभ्याशे स्थित्वा तं फणि पुत्रकम् ।।
विससर्जात्मदायादान्नृपासनगतान्प्रति ।।3.3.8.१५०।।
स गत्वोवाच ताञ्छीघ्रमिंद्रसेनो विमुच्यताम् ।।
चंद्रांगदस्तस्य सुतः प्राप्तोऽयं पन्नगाल यात् ।। १५१ ।।
नृपासनं विमुंचंतु भवंतो न विचार्यताम् ।।
नो चेच्चंद्रागदस्याशु बाणाः प्राणान्हरंति वः ।। १५२ ।।

स मग्नो यमुनातोये गत्वा तक्षकमंदिरम् ।।
लब्ध्वा च तस्य साहाय्यं पुनर्लोकादिहागतः ।। १५३ ।।
इत्याख्यातमशेषेण तद्वृत्तांतं निशम्य ते ।।
साधुसाध्विति संभ्रांताः शशंसुः परिपंथिनः ।। ५४ ।।
अथेंद्रसेनाय निवेद्य सत्वरं नष्टस्य पुत्रस्य पुनः समागमम् ।।
प्रसाद्य तं प्राप्तनरेश्वरासनं दायादमुख्यास्तु भयं प्रपेदिरे ।। ५५ ।।
अथ पौरजनाः सर्वे पुरोद्याने नृपात्मजम् ।।
दृष्ट्वा राज्ञे द्रुतं प्रोचुर्लेभिरे च महाधनम् ।। ५६ ।।
आकर्ण्य पुत्रमायांतं राजानंदजलाप्लुतः ।।
न व्यजानादिमं लोकं राज्ञी च परया मुदा ।। ५७ ।।
अथ नागरिकाः सर्वे मंत्रिवृद्धाः पुरोधसः ।।
प्रत्युद्गम्य परिष्वज्य तमानिन्युर्नृपांति कम् ।। ५८ ।।
अथोत्सवेन महता प्रविश्य निजमंदिरम् ।।
राजपुत्रः स्वपितरौ ववंदे बाष्पमुत्सृजन् ।। ५९ ।।
तं पादमूले पतितं स्वपुत्रं विवेद नासौ पृथिवीपतिः क्षणम् ।।
प्रबोधितोऽमात्यजनैः कथंचिदुत्थाय क्लिन्नेन हृदालिलिंग ।। 3.3.8.१६० ।।
क्रमेण मातृरभिवंद्य ताभिः प्रवर्धिताशीः प्रणयाकु लाभिः ।।
आलिंगितः पौरजनानशेषान्संभावयामास स राजसूनुः ।।६१।।
तेषां मध्ये समासीनः स्ववृत्तांतमशेषतः ।।
पित्रे निवेदयामास तक्षकस्य च मित्रताम्।।६२।।
दत्तं भुजंगराजेन रत्नादिधनसंचयम् ।।
दिव्यं तद्राक्षसानीतं पित्रे सर्वं न्यवेदयत् ।।६३।।
राजपुत्रस्य चरितं दृष्ट्वा श्रुत्वा च विह्वलः ।। ।
मेने स्नुषायाः सौभाग्यं महेशाराधनार्जितम् ।।६४।।
सौमांगल्यमयीं वार्तामिमां निषधभूपतिः।।
चारैर्निवेदयामास चित्रवर्ममहीपतेः ।।६५।।
श्रुत्वाऽमृतमयीं वार्तां स समुत्थाय संभ्रमात् ।।
तेभ्यो दत्त्वा धनं भूरि ननर्तानंदविह्वलः।।६६।।
अथाहूय स्वतनयां परिष्वज्याश्रुलोचनः ।।
भूषणैर्भूषयामास त्यक्तवैधव्यलक्षणाम् ।। ६७ ।।
अथोत्सवो महानासीद्राष्ट्रग्रामपुरादिषु ।।
सीमंतिन्याः शुभाचारं शशंसुः सर्वतो जनाः ।। ६८ ।।

चित्रवर्माथ नृपतिः समाहूयेंद्रसेनजम् ।।
पुनर्विवाहविधिना सुतां तस्मै न्यवेदयत् ।। ६९ ।।
चन्द्रांगदोऽपि रत्नाद्यैरानीतैस्तक्षकालयात् ।।
स्वां पत्नीं भूषयां चक्रे मर्त्यानामतिदुर्लभैः ।। ३.३.८.१७० ।।
अंगरागेण दिव्येन तप्तकांचनशोभिना ।।
शुशुभे सा सुगंधेन दशयोजनगामिना ।। ७१ ।।
अम्लानमालया शश्वत्पद्मकिंजल्कवर्णया ।।
कल्पद्रुमोत्थया बाला भूषिता शुशुभे सती ।। ७२ ।।
एवं चंद्रांगदः पत्नीमवाप्य समये शुभे ।।
ययौ स्वनगरीं भूयः श्वशुरेणानुमोदितः ।। ७३ ।।
इन्द्रसेनोऽपि राजेंद्रो राज्ये स्थाप्य निजात्मजम् ।।
तपसा शिवमाराध्य लेभे संयमिनां गतिम् ।। ७४ ।।
दशवर्ष सहस्राणि सीमंतिन्या स्वभार्यया ।।
सार्धं चन्द्रांगदो राजा बुभुजे विषयान्बहून् ।। ७५ ।।
प्रासूत तनयानष्टौ कन्यामेकां वराननाम् ।।
रेमे सीमंतिनी भर्त्रा पूजयती महेश्वरम् ।।
दिनेदिने च सौभाग्यं प्राप्तं चैवेन्दुवासरात् ।। ७६ ।।
।। सूत उवाच ।। ।।
विचित्रमिदमाख्यानं मया समनुवर्णितम् ।।
भूयोऽपि वक्ष्ये माहात्म्यं सोमवारव्रतोदितम् ।। १७७ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां ब्रह्मोत्तरखण्डे सोमवारव्रतवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ९



।। ऋषय ऊचुः ।। ।।

साधुसाधु महाभाग त्वया कथितमुत्तमम् ।।

आख्यानं पुनरन्यत्र विचित्रं वक्तुमर्हसि ।। १ ।।

।। सूत उवाच ।। ।।

विदर्भविषये पूर्वमासीदेको द्विजोत्तमः ।।

वेदमित्र इति ख्यातो वेद शास्त्रार्थवित्सुधीः ।। २ ।।

तस्यासीदपरो विप्रः सखा सारस्वताह्वयः ।।

तावुभौ परमस्निग्धावेकदेशनिवासिनौ ।। ३ ।।

वेदमित्रस्य पुत्रोऽभूत्सुमेधा नाम सुव्रतः ।।

सारस्वतस्य तनयः सोमवानिति विश्रुतः ।। ४ ।।

उभौ सवयसौ बालौ समवेषौ समस्थिती ।।

समं च कृतसंस्कारौ सम विद्यौ बभूवतुः ।। ५ ।।

सांगानधीत्य तौ वेदांस्तर्कव्याकरणानि च ।।

इतिहासपुराणानि धर्मशास्त्राणि कृत्स्नशः ।। ६ ।।

सर्वविद्याकुशलिनौ बाल्य एव मनीषिणौ ।।

प्रहर्षमतुलं पित्रोर्ददतुः सकलैर्गुणैः ।। ७ ।।

तावेकदा स्वतनयौ तावुभौ ब्राह्मणोत्तमौ ।।

आहूयावोचतां प्रीत्या षोड शाब्दौ शुभाकृती ।। ८ ।।

हे पुत्रकौ युवां बाल्ये कृतविद्यौ सुवर्चसौ ।।

वैवाहिकोयं समयो वर्तते युवयोः समम् ।। ९ ।।

इमं प्रसाद्य राजानं विदर्भेशं स्वविद्यया ।।

ततः प्राप्य धनं भूरि कृतोद्वाहौ भविष्यथः ।। ३.३.९.१० ।।

एवमुक्तौ सुतौ ताभ्यां तावुभौ द्विजनंदनौ ।।

विदर्भराजमासाद्य समतोषयतां गुणैः ।। ११ ।।

विद्यया परितुष्टाय तस्मै द्विजकुमारकौ ।।

विवाहार्थं कृतोद्योगौ धनहीनावशंसताम् ।। १२ ।।

तयोरपि मतं ज्ञात्वा स विदर्भमहीपतिः ।।

प्रहस्य किंचित्प्रोवाच लोकतत्त्वविवित्सया ।। १३ ।।

आस्ते निषधराजस्य राज्ञी सीमंतिनी सती ।।

सोमवारे महादेवं पूजयत्यंबिकायुतम्।।१४।।

तस्मिन्दिने सपत्नीकान्द्विजाग्र्यान्वेदवित्तमान्।।

संपूज्य परया भक्त्या धनं भूरि ददाति च।।१५।।

अतोऽत्र युवयोरैको नारीविभ्रमवेषधृक्।।

एकस्तस्या पतिर्भूत्वा जायेतां विप्रदंपती।।१६।।

युवां वधूवरौ भूत्वा प्राप्य सीमंतिनीगृहम्।।

भुक्त्वा भूरि धनं लब्ध्वा पुनर्यातं ममांमतिकम् ।। १७ ।।

इति राज्ञा समादिष्टौ भीतौ द्विजकुमारकौ ।।

प्रत्यूचतुरिदं कर्म कर्तुं नौ जायते भयम् ।। १८ ।।

देवतासु गुरौ पित्रोस्तथा राजकुलेषु च ।।

कौटिल्यमाचरन्मोहात्सद्यो नश्यति सान्वयः ।। १९ ।।

कथमंतर्गृहं राज्ञां छद्मना प्रविशेत्पुमान् ।।

गोप्यमानमपिच्छद्म कदाचित्ख्यातिमेष्यति ।। ३.३.९.२० ।।

ये गुणाः साधिताः पूर्वं शीलाचारश्रुतादिभिः ।।

सद्यस्ते नाशमायांति कौटिल्य पथगामिनः ।। २१ ।।

पापं निंदा भयं वैरं चत्वार्येतानि देहिनाम् ।।

छद्ममार्गप्रपन्नानां तिष्ठंत्येव हि सर्वदा ।। २२ ।।

अत आवां शुभाचारौ जातौ च शुचिनां कुले ।।

वृत्तं धूर्तजनश्लाघ्यं नाश्रयावः कदाचन ।। २३ ।।

।। राजोवाच ।। ।।

दैवतानां गुरूणां च पित्रोश्च पृथिवीपतेः ।।

शासनस्याप्यलंघ्यत्वात्प्रत्यादेशो न कर्हिचित् ।। २४ ।।

एतैर्यद्यत्समादिष्टं शुभं वा यदि वाऽशुभम् ।।

कर्तव्यं नियतं भीतैरप्रमत्तैर्बुभूषुभिः ।। ।। २५ ।।
अहो वयं हि राजानः प्रजा यूयं हि संमताः ।।
राजाज्ञया प्रवृत्तानां श्रेयः स्यादन्यथा भयम् ।। २६ ।।
अतो मच्छासनं कार्यं भव द्भ्यामविलंबितम् ।।
इत्युक्तौ नरदेवेन तौ तथेत्यूचतुर्भयात् ।। २७ ।।
सारस्वतस्य तनयं सामवन्तं नराधिपः ।।
स्त्रीरूपधारिणं चक्रे वस्त्राकल्पां जनादिभिः ।। २८ ।।
स कृत्रिमोद्भूतकलत्रभावः प्रयुक्तकर्णाभरणांगरागः ।।
स्निग्धाञ्जनाक्षः स्पृहणीयरूपो बभूव सद्यः प्रमदोत्तमाभः ।। २९ ।।
तावुभौ दंपती भूत्वा द्विजपुत्रौ नृपाज्ञया ।।
जग्मतुर्नैषधं देशं यद्वा तद्वा भवत्विति ।। ३.३.९.३० ।।
उपेत्य राजसदनं सोमवारे द्विजोत्तमैः ।।
सपत्नीकैः कृतातिथ्यौ धौतपादौ बभूवतुः ।। ३१ ।।
सा राज्ञी ब्राह्मणान्सर्वानुपविष्टान्वरासने ।।
प्रत्येकमर्चयांचक्रे सपत्नीकान्द्विजोत्तमान्।। ३२ ।।
तौ च विप्रसुतौ दृष्ट्वा प्राप्तौ कृतकदंपती ।।
ज्ञात्वा किंचिद्विहस्याथ मेने गौरीमहेश्वरौ ।। ३३ ।।
आवाह्य द्विजमुख्येषु देवदेवं सदाशिवम् ।।
पत्नीष्वावाहयामास सा देवीं जगदंबिकाम् ।। ३४ ।।
गन्धैर्माल्यैः सुरभिभिर्धूपैर्नीराजनैरपि ।।
अर्चयित्वा द्विजश्रेष्ठान्नमश्चक्रे समाहिता ।। ३५ ।।
हिरण्मयेषु पात्रेषु पायसं घृतसंयुतम् ।।
शर्करामधुसंयुक्तं शाकैर्जुष्टं मनोरमैः ।। ३६ ।।
गंधशाल्योदनैर्हृद्यैर्मोदकापूपराशिभिः ।।
शष्कुलीभिश्च संयावैः कृसरैर्माषपक्वकैः ।। ३७ ।।
तथान्यैरप्यसंख्यातैर्भक्ष्यैर्भोज्यैर्मनोरमैः ।।
सुगन्धैः स्वादुभिः सूपैः पानीयैरपि शीतलैः ।। ३८ ।।
क्लृप्तमन्नं द्विजा -ग्र्येभ्यः सा भक्त्या पर्यवेषयत् ।।

दध्योदनं निरुपमं निवेद्य समतोषयत् ।। ३९ ।।

भुक्तवत्सु द्विजाग्र्येषु स्वाचांतेषु नृपांगना ।।

प्रणम्य दत्त्वा तांबूलं दक्षिणां च यथार्हतः ।। ३.३.९.४० ।।

धेनूर्हिरण्यवासांसि रत्नस्रग्भूषणानि च ।।

दत्त्वा भूयो नमस्कृत्य विससर्ज द्विजोत्तमान् ।। ४१ ।।

तयोर्द्वयोर्भूसुरवर्यपुत्रयोरेकस्तया हैमवतीधियार्चितः ।।

एको महादेवधियाभिपूजितः कृतप्रणामौ ययतुस्तदाज्ञया ।। ४२ ।।

सा तु विस्मृतपुंभावा तस्मिन्नेव द्विजोत्तमे ।।

जातस्पृहा मदोत्सिक्ता कन्दर्पविवशाब्रवीत् ।। ४३ ।।

अंयि नाथ विशालाक्ष सर्वावयवसुन्दर ।।

तिष्ठतिष्ठ क्व वा यासि मां न पश्यसि ते प्रियाम् ।। ४४ ।।

इदमग्रे वनं रम्यं सुपुष्पितमहाद्रुमम् ।।

अस्मिन्विहर्तुमिच्छामि त्वया सह यथासुखम् ।। ४५ ।।

इत्थं तयोक्तमाकर्ण्य पुरोऽगच्छद्द्विजात्मजः ।।

विचिंत्य परिहासोक्तिं गच्छति स्म यथा पुरा ।। ४६ ।।

पुनरप्याह सा बाला तिष्ठतिष्ठ क्व यास्यसि।।

दुरुत्सहस्मरावेशां परिभोक्तुमुपेत्य माम् ।। ४७ ।।

परिष्वजस्व मां कांतां पाययस्व तवाधरम् ।।

नाहं गंतुं समर्थास्मि स्मरबाणप्रपीडिता ।। ।। ४८ ।।

इत्थमश्रुतपूर्वां तां निशम्य परिशंकितः ।।

आयांतीं पृष्ठतो वीक्ष्य सहसा विस्मयं गतः ।।४९।।

कैषा पद्मपलाशाक्षी पीनोन्नतपयोधरा ।।

कृशोदरी बृहच्छ्रोणी नवपल्लवकोमला ।। ३.३.९.५० ।।

स एव मे सखा किन्नु जात एव वरांगना ।।

पृच्छाम्येनमतः सर्वमिति संचिन्त्य सोऽब्रवीत् ।।५१।।

किमपूर्व इवाभाषि सखे रूपगुणादिभिः ।।

अपूर्वं भाषसे वाक्यं कामिनीव समाकुला ।। ५२ ।।

यस्त्वं वेदपुराणज्ञो ब्रह्मचारी जितेंद्रियः ।।

सारस्वतात्मजः शांतः कथमेवं प्रभाषसे ।। ५३ ।।

इत्युक्ता सा पुनः प्राह नाहमस्मि पुमान्प्रभो ।।

नाम्ना सामवती बाला तवास्मि रतिदायिनी।। ५४ ।।

यदि ते संशयः कांत ममांगानि विलोकय ।।

इत्युक्तः सहसा मार्गे रहस्येनां व्यलोकयत् ।।५५।।

तामकृत्रिमधम्मिल्लां जवनस्तनशोभिनीम् ।।

सुरूपां वीक्ष्य कामेन किंचिद्व्याकुलतामगात् ।। ५६ ।।

पुनः संस्तभ्य यत्नेन चेतसो विकृतिं बुधः ।।

मुहूर्तं विस्मयाविष्टो न किंचित्प्रत्यभाषत ।। ५७ ।।

।। सामवत्युवाच ।। ।।

गतस्ते संशयः कश्चित्तर्ह्यागच्छ भजस्व माम् ।।

पश्येदं विपिनं कांत परस्त्रीसुरतोचितम् ।। ५८ ।।

।। सुमेधा उवाच ।। ।।

मैवं कथय मर्यादां मा हिंसीर्मदमत्तवत् ।।

आवां विज्ञातशास्त्रार्थौ त्वमेवं भाषसे कथम् ।।५९।।

अधीतस्य च शास्त्रस्य विवेकस्य कुलस्य च ।।

किमेष सदृशो धर्मो जारधर्मनिषेवणम् ।। ३.३.९.६० ।।

न त्वं स्त्री पुरुषो विद्वाञ्जानीह्यात्मानमात्मना ।।

अयं स्वयंकृतोऽनर्थ आवाभ्यां यद्विचेष्टितम् ।। ६१ ।।

वंचयित्वात्मपितरौ धूर्तराजानुशासनात् ।।

कृत्वा चानुचितं कर्म तस्यैतद्भुज्यते फलम् ।। ६२ ।।

सर्वं त्वनुचितं कर्म नृणां श्रेयोविनाशनम् ।।

यस्त्वं विप्रात्मजो विद्वान्गतः स्त्रीत्वं विगर्हितम् ।। ६३ ।।

मार्गं त्यक्त्वा गतोऽरण्यं नरो विध्येत कण्टकैः ।।

बलाद्भिस्येत वा हिंस्रैर्यदा त्यक्तसमा गमः ।। ६४ ।।

एवं विवेकमाश्रित्य तूष्णीमेहि स्वयं गृहम् ।।

देवद्विजप्रसादेन स्त्रीत्वं तव विलीयते ।। ६५ ।।

अथवा दैवयोगेन स्त्रीत्वमेव भवेत्तव ।।

पित्रा दत्ता मया साकं रंस्यसे वरवर्णिनि ।। ६६ ।।

अहो चित्रमहो दुःखमहो पापबलं महत् ।।

अहो राज्ञः प्रभावोयं शिवाराधनसंभृतः ।। ६७ ।।

इत्युक्ताप्यसकृत्तेन सा वधूरतिविह्वला ।।

बलेन तं समालिंग्य चुचुंबाधरपल्लवम् ।। ६८ ।।

धर्षितोपि तया धीरः सुमेधा नूतनस्त्रियम् ।।

यत्नादानीय सदनं कृत्स्नं तत्र न्यवेदयत् ।। ६९ ।।

तदाकर्ण्याथ तौ विप्रौ कुपितौ शोकविह्वलौ ।।

ताभ्यां सह कुमाराभ्यां वैदर्भीतिकमीयतुः ।। ३.३.९.७० ।।

ततः सारस्वतः प्राह राजानं धूर्तचेष्टितम् ।।

राजन्ममात्मजं पश्य तव शासनयंत्रितम् ।। ७१ ।।

एतौ तवाज्ञावशगौ चक्रतुः कर्म गर्हितम् ।।

मत्पुत्रस्तत्फलं भुंक्ते स्त्रीत्वं प्राप्य जुगुप्सितम्।। ७२ ।।

अद्य मे संततिर्नष्टा निराशाः पितरो मम ।।

नापुत्रस्य हि लोकोस्ति लुप्तपिंडादिसंस्कृतेः ।। ७३ ।।

शिखोपवीतमजिनं मौजीं दंडं कमंडलुम् ।।

ब्रह्मचर्योचितं चिह्नं विहायेमां दशां गतः ।। ७४ ।।

ब्रह्मसूत्रं च सावित्रीं स्नानं संध्यां जपार्चनम् ।।

विसृज्य स्त्रीत्वमाप्तोस्य का गतिर्वद पार्थिव ।। ७५ ।।

त्वया मे संततिर्नष्टा नष्टो वेदपथश्च मे ।।

एकात्मजस्य मे राजन्का गतिर्वद शाश्वती ।। ७६ ।।

इति सारस्वतेनोक्तं वाक्यमाकर्ण्य भूपतिः ।।

सीमंतिन्याः प्रभावेण विस्मयं परमं गतः ।। ७७ ।।

अथ सर्वान्समाहूय महर्षीनमितद्युतीन्।।

प्रसाद्य प्रार्थयामास तस्य पुंस्त्वं महीपतिः ।। ७८ ।।

तेऽब्रुवन्नथ पार्वत्याः शिवस्य च समीहितम् ।।

तद्भक्तानां च माहात्म्यं कोन्यथा कर्तुमीश्वरः ।। ७९ ।।

अथ राजा भरद्वाजमादाय मुनिपुंगवम् ।।

ताभ्यां सह द्विजाग्र्याभ्यां तत्सुताभ्यां समन्वितः ।। ३.३.९.८० ।।

अंबिकाभवनं प्राप्य भरद्वाजोपदेशतः ।।

तां देवीं नियमैस्तीव्रैरुपास्ते स्म महानिशि ।। ८१ ।।

एवं त्रिरात्रं सुविसृष्टभोजनः स पार्वतीध्यान रतो महीपतिः ।।

सम्यक्प्रणामैर्विविधैश्च संस्तवैर्गौरीं प्रपन्नार्तिहरामतोषयत् ।। ८२ ।।

ततः प्रसन्ना सा देवी भक्तस्य पृथिवीपतेः ।।

स्वरूपं दर्शयामास चंद्रकोटिसमप्रभम् ।। ८३ ।।

अथाह गौरी राजानं किं ते ब्रूहि समीहितम् ।।

सोऽप्याह पुंस्त्वमेतस्य कृपया दीयतामिति ।। ८४ ।।

भूयोप्याह महादेवी मद्भक्तैः कर्म यत्कृतम् ।।

शक्यते नान्यथा कर्तुं वर्षायुतशतैरपि ।। ८५ ।।

।। राजोवाच ।। ।।

एकात्मजो हि विप्रोयं कर्मणा नष्टसंततिः ।।

कथं सुखं प्रपद्येत विना पुत्रेण तादृशः ।। ८६ ।।

।। देव्युवाच ।। ।।

तस्यान्यो मत्प्रसादेन भविष्यति सुतोत्तमः ।।

विद्या विनयसंपन्नो दीर्घायुरमलाशयः ।। ८७ ।।

एषा सामवती नाम सुता तस्य द्विजन्मनः ।।

भूत्वा सुमेधसः पत्नी कामभोगेन युज्यताम् ।। ८८ ।।

इत्युक्त्वांतर्हिता देवी ते च राजपुरोगमाः ।।

गताः स्वंस्वं गृहं सर्वे चक्रुस्तच्छासने स्थितिम् ।। ८९ ।।

सोपि सारस्वतो विप्रः पुत्रं पूर्वसुतो त्तमम् ।।

लेभे देव्याः प्रसादेन ह्यचिरादेव कालतः ।। ३.३.९.९० ।।

तां च सामवतीं कन्यां ददौ तस्मै सुमेधसे ।।

तौ दंपती चिरं कालं बुभुजाते परं सुखम् ।। ९१ ।।

।। सूत उवाच ।। ।।

इत्येष शिवभक्तायाः सीमंतिन्या नृपस्त्रियाः ।।

प्रभावः कथितः शंभोर्माहात्म्यमपि वर्णितम् ।। ९२ ।।

भूयोपि शिवभक्तानां प्रभावं विस्मयावहम् ।।

समासाद्वर्णयिष्यामि श्रोतृणां मंगलायनम् ।। ९३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे सीमंतिन्याः प्रभाववर्णनं नाम नवमोऽध्यायः ।। ९ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १०



।। सूत उवाच ।। ।।

विचित्रं शिवनिर्माणं विचित्र शिवचेष्टितम् ।।

विचित्रं शिवमाहात्म्यं विचित्रं शिवभाषितम् ।। १ ।।

विचित्रं शिवभक्तानां चरितं पापनाशनम् ।।

स्वर्गापवर्गयोः सत्यं साधनं तद्ब्रवीम्यहम् ।। २ ।।

अवंतीविषये कश्चिद्ब्राह्मणो मंदराह्वयः ।।

बभूव विषयारामः स्त्रीजितो धनसंग्रही ।। ३ ।।

संध्यास्नापरित्यक्तो गंधमाल्यांबरप्रियः ।।

कुस्त्रीसक्तः कुमार्गस्थो यथा पूर्वमजामिलः ।। ४ ।।

स वेश्यां पिंगलां नाम रममाणो दिवानिशम् ।।

तस्या एव गृहे नित्यमासीदविजितेंद्रियः ।। ५ ।।

कदाचित्सदने तस्यास्तस्मिन्निवसति द्विजे ।।

ऋषभो नाम धर्मात्मा शिवयोगी समाययौ ।। ।। ६ ।।

तमागतमभिप्रेक्ष्य मत्वा स्वं पुण्यमूर्जितम् ।।

सा वेश्या स च विप्रश्च पर्यपूजयतामुभौ ।। ७ ।।

तमारोप्य महापीठे कंबलांबरसंभृते ।।

प्रक्षाल्य चरणौ भक्त्या तज्जलं दधतुः शिरः ।। ८ ।।

स्वागतार्घ्यनमस्कारैर्गंधपुष्पाक्षतादिभिः ।।

उपचारैः समभ्यर्च्य भोजयामासतुर्मुदा ।। ९ ।।

तं भुक्तवंतमाचांतं पर्यंके सुखसंस्तरे ।।

उपवेश्य मुदा युक्तौ तांबूलं प्रत्ययच्छताम् ।। ३.३.१०.१० ।।

पादसंवाहनं भक्त्या कुर्वंतौ दैवचो दितौ ।।

कल्पयित्वा तु शुश्रूषां प्रीणयामासतुश्चिरम् ।। ११ ।।

एवं समर्चितस्ताभ्यां शिवयोगी महाद्युतिः ।।

अतिवाह्य निशामेकां ययौ प्रातस्तदादृतः ।। १२ ।।
एवं काले गतप्राये स विप्रो निधनं गतः ।।
सा च वेश्या मृता काले ययौ कर्मार्जितां गतिम् ।। १३ ।।
स विप्रः कर्मणा नीतो दशार्णधरणीपतेः ।।
वज्रबाहुकुटुंबिन्याः सुमत्या गर्भमास्थितः ।। १४ ।।
तां ज्येष्ठपत्नीं नृपतेर्गर्भसंपदमाश्रिताम् ।।
अवेक्ष्य तस्यै गरलं सपत्न्यश्छद्मना ददुः ।। १५ ।।
सा भुक्त्वा गरलं घोरं न मृता दैवयोगतः ।।
क्लेशमेव परं प्राप मरणादतिदुःसहम् ।। १६ ।।
अथ काले समायाते पुत्रमे कमजीजनत् ।।
क्लेशेन महता साध्वी पीडिता वरवर्णिनी ।। १७ ।।
स निर्दशो राजपुत्रः स्पृष्टपूर्वो गरेण यत् ।।
तेनावाप महाक्लेशं क्रंदमानो दिवानिशम् ।। १८ ।।
तस्य बालस्य माता च सर्वांगव्रणपीडिता ।।
बभूवतुरतिक्लिष्टौ गरयोगप्रभावतः ।। १९ ।।
तौ राज्ञा च समानीतौ वैद्यैश्च कृतभेषजौ ।।
न स्वास्थ्यमापतुर्यत्नैरनेकैर्योजितैरपि ।। ३.३.१०.२० ।।
न रात्रौ लभते निद्रां सा राज्ञी विपुलव्यथा ।।
स्वपुत्रस्य च दुःखेन दुःखिता नितरां कृशा ।। २१ ।।
नीत्वैवं कतिचिन्मासान्स राजा मातृपुत्रकौ ।।
जीवंतौ च मृतप्रायौ विलोक्यात्मन्यचिंतयत् ।। २२ ।।
एतौ मे गृहिणीपुत्रौ निरयादागताविह ।।
अश्रांतरोगौ क्रंदंतौ निद्राभंगविधायिनौ ।। २३ ।।
अत्रोपायं करिष्यामि पापयोर्ध्रुवमेतयोः ।।
मर्तुं वा जीवितुं वापि न क्षमौ पापभोगिनौ ।। २४ ।।
इत्थं विनिश्चित्य च भूमिपालः सक्तः सपत्नीषु तदात्मजेषु ।।
आहूय सूतं निजदारपुत्रौ निर्वापयामास रथेन दूरम्।। २५ ।।
तौ सूतेन परित्यक्तौ कुत्रचिद्विजने वने ।।

अवापतुः परां पीडां क्षुत्तृड्भ्यां भृशविह्वलौ ।। २६ ।।

सोद्वहंती निजं बालं निपतंती पदे पदे ।।

निःश्वसंती निजं कर्म निंदंती चकिता भृशम् ।। २७ ।।

क्वचित्कंटकभिन्नांगी मुक्तकेशी भयातुरा ।।

क्वचिद्व्याघ्रस्वनैर्भीता क्वचिद्व्यालैरनुद्रुता ।। २८ ।।

भत्स्र्यमाना पिशाचैश्च वेतालैर्ब्रह्मराक्षसैः ।।

महागुल्मेषु धावंती भिन्नपादा क्षुराश्मभिः ।। २९ ।।

सैवं घोरे महारण्ये भ्रमंती नृपगे हिनी ।।

दैवात्प्राप्ता वणिङ्मार्गं गोवाजिनरसेवितम् ।। ३.३.१०.३० ।।

गच्छंती तेन मार्गेण सुदूरमतियत्नतः ।।

ददर्श वैश्यनगरं वहुस्त्रीनरसेवितम् ।। ३१ ।।

तस्य गोप्ता महावैश्यो नगरस्य महाजनः ।।

अस्ति पद्माकरो नाम राजराज इवापरः ।। ३२ ।।

तस्य वैश्यपतेः काचिद्गृहदासी नृपांगनाम् ।।

आयांती दूरतो दृष्ट्वा तदंतिकमुपाययौ ।।३३ ।।

सा दासी नृपतेः कांतां सपुत्रां भृशपीडिताम् ।।

स्वयं विदितवृत्तांता स्वामिने प्रत्यदर्शयत् ।। ।। ३४ ।।

स तां दृष्ट्वा विशां नाथो रुजार्त्तां क्लिष्टपुत्रकाम् ।।

नीत्वा रहसि सुव्यक्तं तद्वृत्तांतमपृच्छत ।। ३५ ।।

तया निवेदिताशेषवृत्तांतः स वणिक्पतिः ।।

अहोकष्टमिति ज्ञात्वा निशश्वास मुहुर्मुहुः ।। ३६ ।।

तामंतिके स्वगेहस्य संनिवेश्य रहोगृहे ।।

वासोन्नपानशयनैर्मातृसाम्यमपूजयत् ।। ।। ३७ ।।

तस्मिन्गृहे नृपवधूर्निवसंती सुरक्षिता ।।

व्रणयक्ष्मादिरोगाणां न शांतिं प्रत्यपद्यत ।। ३८ ।।

ततो दिनैः कतिपयैः स बालो व्रणपीडितः ।।

विलंघितभिषक्सत्त्वो ममार च विधेर्वशात् ।। ३९ ।।

मृते स्वतनये राज्ञी शोकेन महतावृता ।।

मूर्च्छिता चापतद्भूमौ गजभग्नेव वल्लरी ।। ३.३.१०.४० ।।

दैवात्संज्ञामवाप्याथ वाष्पक्लिन्नपयोधरा ।।

सांत्विताऽपि वणिक्स्त्रीभिर्विललाप सुदुःखिता ।। ४१ ।।

हा ताततात हा पुत्र हा मम प्राणरक्षक ।।

हा राजकुलपूर्णेन्दो हा ममानंदवर्धन ।। ४२ ।।

इमामनाथां कृपणां त्वत्प्राणां त्यक्तवबांधवाम् ।।

मातरं ते परित्यज्य क्व यातोऽसि नृपात्मज ।। ।। ४३ ।।

इत्येभिरुदितैर्वाक्यैः शोकचिंताविवर्धकैः ।।

विलपंतीं मृतापत्यां को नु सांत्वयितुं क्षमः ।। ४४ ।।

एतस्मिन्समये तस्या दुःखशोकचिकित्सकः।।

ऋषभः पूर्वमाख्यातः शिवयोगी समाययौ।।४५।।

स योगी वैश्यनाथेन सार्धहस्तेन पूजितः।।

तस्याः सकाशमगमच्छोचन्त्या इदमब्रवीत् ।। ४६ ।।

।। ऋषभ उवाच ।। ।।

अकस्मात्किमहो वत्से रोरवीषि विमूढधीः ।।

को जातः कतमो लोके को मृतो वद सांप्रतम् ।। ।। ४७ ।।

अमी देहादयो भावास्तोयफेनसधर्मकाः ।।

क्वचिद्भ्रांतिः क्वचिच्छांतिः स्थितिर्भवति वा पुनः ।। ४८ ।।

अतोऽस्मिन्फेनसदृशे देहे पञ्चत्वमागते ।।

शोकस्यानवकाशत्वान्न शोचंति विपश्चितः ।। ४९ ।।

गुणैर्भूतानि सृज्यंते भ्राम्यंते निजकर्मभिः ।।

कालेनाथ विकृष्यंते वासनायां च शेरते ।। ३.३.१०.५० ।।

माययोत्पत्तिमायांति गुणाः सत्त्वादयस्त्रयः ।।

तैरेव देहा जायंते जातास्तल्लक्षणाश्रयाः ।। ५१ ।।

देवत्वं यानि सत्त्वेन रजसा च मनुष्यताम् ।।

तिर्यक्त्वं तमसा जंतुर्वासनानुगतोवशः ।। ५२ ।।

संसारे वर्तमानेस्मिञ्जंतुः कर्मानुबन्धनात् ।।

दुर्विभाव्यां गतिं याति सुखदुःखमयीं मुहुः ।। ५३ ।।

अपि कल्पायुषां तेषां देवानां तु विपर्ययः ।।

अनेकामयबद्धानां का कथा नरदेहिनाम् ।। ५४ ।।

केचिद्वदंति देहस्य कालमेव हि कारणम् ।।

कर्म केचिद्गुणान्केचिद्देहः साधारणो ह्ययम् ।। ५५ ।।

कालकर्मगुणाधानं पञ्चात्मकमिदं वपुः ।।

जातं दृष्ट्वा न हृष्यंति न शोचंति मृतं बुधाः ।। ५६ ।।

अव्यक्ते जायते जंतुरव्यक्ते च प्रलीयते ।।

मध्ये व्यक्तवदाभाति जलबुद्बुदसन्निभः ।। ५७ ।।

यदा गर्भगतो देही विनाशः कल्पितस्तदा ।।

दैवाज्जीवति वा जातो म्रियते सहसैव वा ।। ५८ ।।

गर्भस्था एव नश्यंति जातमात्रास्तथा परे ।।

क्वचिद्युवानो नश्यंति म्रियंते केपि वार्धके ।। ५९ ।।

यादृशं प्राक्तनं कर्म तादृशं विंदते वपुः ।।

भुंक्ते तदनुरूपाणि सुखदुःखानि वै ह्यसौ ।। ३.३.१०.६० ।।

मायानुभावेरितयोः पित्रोः सुरतसंभ्रमात् ।।

देह उत्पद्यते कोपि पुंयोषित्क्लीबलक्षणः ।। ६१ ।।

आयुः सुखं च दुःख च पुण्यं पापं श्रुतं धनम् ।।

ललाटे लिखितं धात्रा वहञ्जंतुः प्रजायते ।। ६२ ।।

कर्मणामविलंघ्यत्वात्कालस्याप्यनतिक्रमात् ।।

अनित्यत्वाच्च भावानां न शोकं कर्तुमर्हसि ।। ६३ ।।

क्व स्वप्ने नियतं स्थैर्यमिंद्रजाले क्व सत्यता ।।

क्व नित्यता शरन्मेघे क्व शश्वत्त्वं कलेवरे ।। ६४ ।।

तव जन्मान्यतीतानि शतकोट्ययुतानि च ।।

अजानंत्याः परं तत्त्वं संप्राप्तोऽयं महाश्रमः।। ६५ ।।

कस्यकस्यासि तनया जननी कस्यकस्य वा ।।

कस्यकस्यासि गृहिणी भवकोटिषु वर्त्तिनी ।। ।। ६६ ।।

पञ्चभूतात्मको देहस्त्वगसृङ्मांसबन्धनः ।।

मेदोमज्जास्थिनिचितो विण्मूत्रश्लेष्मभाजनम् ।। ६७ ।।

शरीरांतरमप्येतन्निजदेहोद्भवं मलम् ।।
मत्त्वा स्वतनयं मूढे मा शोकं कर्तुमर्हसि ।। ६८ ।।
यदि नाम जनः कश्चिन्मृत्युं तरति यत्नतः ।।
कथं तर्हि विपद्येरन्सर्वे पूर्वे विपश्चितः।। ।। ६९ ।।
तपसा विद्यया बुद्ध्या मन्त्रौषधिरसायनैः ।।
अतियाति परं मृत्युं न कश्चिदपि पंडितः ।। ३.३.१०.७० ।।
एकस्याद्य मृतिर्जंतोः श्वश्चान्यस्य वरानने ।।
तस्मादनित्यावयवे न त्वं शोचितुमर्हसि ।। ७१ ।।
नित्यं सन्निहितो मृत्युः किं सुखं वद देहिनाम् ।।
व्याघ्रे पुरः स्थिते ग्रासः पशूनां किं नु रोचते ।। ७२ ।।
अतो जन्मजरां जेतुं यदीच्छसि वरानने ।।
शरणं व्रज सर्वेशं मृत्युंजयमुमापतिम् ।। ७३ ।।
तावन्मृत्युभयं घोरं तावज्जन्मजराभयम् ।।
यावन्नो याति शरणं देही शिवपदांबुजम् ।। ७४ ।।
अनुभूयेह दुःखानि संसारे भृशदारुणे ।।
मनो यदा वियुज्येत तदा ध्येयो महेश्वरः ।। ७५ ।।
मनसा पिबतः पुंसः शिवध्यानरसामृतम् ।।
भूयस्तृष्णा न जायेत संसारविषयासवे ।। ७६ ।।
विमुक्तं सर्वसंगैश्च मनो वैराग्ययंत्रितम् ।।
यदा शिवपदे मग्नं तदा नास्ति पुनर्भवः ।। ७७ ।।
तस्मादिदं मनो भद्रे शिवध्यानैकसाधनम् ।।
शोकमोहसमाविष्टं मा कुरुष्व शिवं भज ।। ७८ ।।
।। सूत उवाच ।। ।।
इत्थं सानुनयं राज्ञी बोधिता शिवयोगिना ।।
प्रत्याचष्ट गुरोस्तस्य प्रणम्य चरणां बुजम् ।। ७९ ।।
।। राज्न्युवाच ।। ।।
भगवन्मृतपुत्रायास्त्यक्तायाः प्रियबन्धुभिः ।।
महारोगातुराया मे का गतिर्मरणं विना ।। ३.३.१०.८० ।।

अतोऽहं मर्तुमिच्छामि सहैव शिशुनाऽमुना ।।
कृतार्थाहं यदद्य त्वामपश्यं मरणोन्मुखी ।। ८१ ।।
।। सूत उवाच ।। ।।
इति तस्या वचः श्रुत्वा शिवयोगी दयानिधिः ।।
पूर्वोपकारं संस्मृत्य मृतस्यांतिकमाययौ ।। ८२ ।।
स तदा भस्म संगृह्य शिवमन्त्राभिमंत्रितम् ।।
विदीर्णे तन्मुखे क्षिप्त्वा मृतं प्राणैरयोजयत् ।। ८३ ।।
स बालः संगतः प्राणैः शनैरुन्मील्य लोचने ।।
प्राप्तपूर्वेन्द्रियबलो रुरोद स्तन्यकांक्षया ।। ८४ ।।
मृतस्य पुनरुत्थानं वीक्ष्य बालस्य विस्मिताः ।।
जना मुमुदिरे सर्वे नगरेषु पुरोगमाः ।।८५।।
अथानंदभरा राज्ञी विह्वलोन्मत्तलोचना ।।
जग्राह तनयं शीघ्रं बाष्पव्याकुललोचना ।।८६।।
उपगुह्य तदा तन्वी परमानंदनिर्वृता ।।
न वेदात्मानमन्यं वा सुषुप्तेव परिश्रमात् ।। ८७ ।।
पुनश्च ऋषभो योगी तयोर्मातृकुमारयोः ।।
विषव्रणयुतं देहं भस्मनैव परामृशत् ।। ८८ ।।
तौ च तद्भस्मना स्पृष्टौ प्राप्तदिव्यकलेवरौ ।।
देवानां सदृशं रूपं दधतुः कांतिभूषितम्।। ८९ ।।
संप्राप्ते त्रिदिवैश्वर्ये यत्सुखं पुण्यकर्मणाम् ।।
तस्माच्छतगुणं प्राप सा राज्ञी सुखमुत्तमम् ।। ३.३.१०.९० ।।
तां पादयोर्निपतितामृषभः प्रेमविह्वलः ।।
उत्थाप्याश्वासयामास दुःखैर्मुक्तामुवाच ह ।। ९१ ।।
अयि वत्से महाराज्ञि जीवत्वं शाश्वतीः समाः ।।
यावज्जीवसि लोकेस्मिन्न तावत्प्राप्स्यसे जराम् ।। ९२ ।।
एष ते तनयः साध्वि भद्रायुरिति नामतः ।।
ख्यातिं यास्यति लोकेषु निजं राज्यमवाप्स्यति ।। ।। ९३ ।।
अस्य वैश्यस्य सदने तावत्तिष्ठ शुचिस्मिते ।।

यावदेष कुमारस्ते प्राप्तविद्यो भविष्यति ।। ९४ ।।

सूत उवाच।। ।। ।।

इति तामृषभो योगी तं च राजकुमारकम् ।।

संजीव्य भस्मवीर्येण ययौ देशान्यथेप्सितान्।। ९५ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे भद्राय्वाख्याने ऋषभयोगिना भद्रायुजीवनं नाम दशमोऽध्यायः ।। ।। १० ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः ११



।। सूत उवाच ।। ।।

पिंगला नाम या वेश्या मया पूर्वमुदाहृता ।।

शिवभक्तार्चनात्पुण्यात्यक्त्वा पूर्वकलेवरम् ।। १ ।।

चन्द्रांगदस्य सा भूयः सीमंतिन्यामजायत ।।

रूपौदार्यगुणोपेता नाम्ना वै कीर्तिमालिनी ।। २ ।।

भद्रायुरपि तत्रैव राजपुत्रो वणिक्पतेः ।।

ववृधे सदने भानुः शुचाविव महातपाः ।। ३ ।।

तस्यापि वैश्यनाथस्य कुमारस्त्वेक उत्तमः ।।

स नाम्ना सुनयः प्रोक्तो राजसूनोः सखाऽभवत् ।। ४ ।।

तावुभौ परमस्निग्धौ राजवैश्यकुमारकौ।।

चित्रक्रीडावुदारांगौ रत्नाभरणमंडितौ ।। ५ ।।

तस्य राजकुमारस्य ब्राह्मणैः स वणिक्पतिः ।।

संस्कारान्कारयामास स्वपुत्रस्यापि विस्तरात् ।। ६ ।।

काले कृतोपनयनौ गुरुशुश्रूषणे रतौ ।।

चक्रतुः सर्वविद्यानां संग्रहं विनयान्वितौ ।। ७ ।।

अथ राजकुमारस्य प्राप्ते षोडशहायने ।।

स एव ऋषभो योगी तस्य वेश्मन्युपाययौ ।। ८ ।।

सा राज्ञी स कुमारश्च शिवयोगिनमागतम् ।।

मुहुर्मुहुः प्रणम्योभौ पूजयामासतुर्मुदा ।। ९ ।।

ताभ्यां च पूजितः सोऽथ योगीशो हृष्टमानसः ।।

तं राजपुत्रमुद्दिश्य बभाषे करुणार्द्रधीः ।। ३.३.११.१० ।।

।। शिवयोग्युवाच ।। ।।

कच्चित्ते कुशलं तात त्वन्मातुश्चाप्यनामयम् ।।

कच्चित्त्वं सर्वविद्यानामकार्षीश्च प्रतिग्रहम् ।। ११ ।।

कच्चिद्गुरूणां सततं शुश्रूषातत्परो भवान् ।।

कच्चित्स्मरसि मां तात तव प्राणप्रदं गुरुम् ।। १२ ।।

एवं वदति योगीशे राज्ञी सा विनयान्विता ।।

स्वपुत्रं पादयोस्तस्य निपात्यैनमभाषत ।। १३ ।।

एष पुत्रस्तव गुरो त्वमस्य प्राणदः पिता ।।

एष शिष्यस्तु संग्राह्यो भवता करुणात्मना ।। १४ ।।

अतो बन्धुभिरुत्सृष्टमनाथं परिपालय ।।

अस्मै सम्यक्सतां मार्गमुपदेष्टुं त्वमर्हसि ।। १५ ।।

इति प्रसादितो राज्ञ्या शिवयोगी महामतिः ।।

तस्मै राजकुमाराय सन्मार्गमुपदिष्टवान् ।। १६ ।।

।। ऋषभ उवाच ।। ।।

श्रुतिस्मृतिपुराणेषु प्रोक्तो धर्मः सनातनः ।।

वर्णाश्रमानुरूपेण निषेव्यः सर्वदा जनैः ।। १७ ।।

भज वत्स सतां मार्गं सदेव चरितं चर ।।

न देवाज्ञां विलंघेथा मा कार्षीर्देवहेलनम् ।। १८ ।।

गोदेवगुरुविप्रेषु भक्तिमान्भव सर्वदा ।।

चांडालमपि संप्राप्तं सदा संभावयातिथिम् ।। १९ ।।

सत्यं न त्यज सर्वत्र प्राप्तेऽपि प्राणसंकटे ।।

गोब्राह्मणानां रक्षार्थमसत्यं त्वं वद क्वचित् ।। ३.३.११.२० ।।

परस्वेषु परस्त्रीषु देवब्राह्मण वस्तुषु ।।

तृष्णां त्यज महाबाहो दुर्लभेष्वपि वस्तुषु ।। २१ ।।

सत्कथायां सदाचारे सद्व्रते च सदागमे ।।

धर्मादिसंग्रहे नित्यं तृष्णां कुरु महामते ।। २२ ।।

स्नाने जपे च होमे च स्वाध्याये पितृतर्पणे ।।

गोदेवातिथिपूजासु निरालस्यो भवानघ ।। २३ ।।

क्रोधं द्वेषं भयं शाठ्यं पैशुन्य मसदाग्रहम् ।।

कौटिल्यं दंभमुद्वेगं यत्नेन परिवर्जय ।। २४ ।।

क्षात्रधर्मरतोऽपि त्वं वृथा हिंसां परित्यज ।।

शुष्कवैरं वृथालापं परनिदां च वर्जय ।। २५ ।।

मृगया द्यूतपानेषु स्त्रीषु स्त्रीविजितेषु च ।।

अत्याहारमतिक्रोधमतिनिद्रामतिश्रमम् ।। २६ ।।

अत्यालापमतिक्रीडां सर्वदा परिवर्जय ।। ।। २७ ।।

अतिविद्यामतिश्रद्धामतिपुण्यमतिस्मृतिम् ।।

अत्युत्साहमतिख्यातिमतिधैर्यं च साधय ।। २८ ।।

सकामो निजदारेषु सक्रोधो निज शत्रुषु ।।

सलोभः पुण्यनिचये साभ्यसूयो ह्यधर्मिषु ।। २९ ।।

सद्वेषो भव पाखण्डे सरागः सज्जनेषु च ।।

दुर्बोधो भव दुर्मंत्रे बधिरः पिशुनोक्तिषु ।। ३.३.११.३० ।।

धूर्तं चंडं शठं क्रूरं कितवं चपलं खलम् ।।

पतितं नास्तिकं जिह्मं दूरतः परिवर्जय ।। ३१ ।।

आत्मप्रशंसा मा कार्षीः परिज्ञातेंगितो भव ।।

धने सर्वकुटुंबे च नात्यासक्तः सदा भव ।। ३२ ।।

पत्न्याः पतिव्रतायाश्च जनन्याः श्वशुरस्य च ।।

सतां गुरोश्च वचने विश्वासं कुरु सर्वदा ।। ३३ ।।

आत्मरक्षापरो नित्यमप्रमत्तो दृढव्रतः ।।

विश्वासं नैव कुर्वीथाः स्वभृत्येष्वपि कुत्र चित् ।। ३४ ।।

विश्वस्तं मा वधीः कंचिदपि चोरं महामते ।।

अपापेषु न शंकेथाः सत्यान्न चलितो भव ।। ३५ ।।

अनाथं कृपणं वृद्धं स्त्रियं बालं निरागसम् ।।

परिरक्ष धनैः प्राणैर्बुद्ध्या शक्त्या बलेन च ।। ३६ ।।

अपि शत्रुं वधस्यार्हं मा वधीः शरणागतम् ।।

अप्यपात्रं सुपात्रं वा नीचो वापि महत्तमः ।। ३७ ।।

यो वा को वापि याचेत तस्मै देहि शिरोपि च ।।

अपि यत्नेन महता कीर्तिमेव सदार्जय ।। ३८ ।।

राज्ञां च विदुषां चैव कीर्तिरेव हि भूषणम् ।।

सत्कीर्तिप्रभवा लक्ष्मीः पुण्यं सत्कीर्तिसंभवम् ।। ३९ ।।

सत्कीर्त्या राजते लोकश्चंद्रश्चंद्रिकया न्यथा ।।

गजाश्वहेमनिचयं रत्नराशिं नगोपमम् ।। ३.३.११.४० ।।

अकीर्त्योपहतं सर्वं तृणवन्मुंच सत्वरम् ।।

मातुः कोपं पितुः कोपं गुरोः कोपं धनव्य यम् ।। ४१ ।।

पुत्राणामपराधं च ब्राह्मणानां क्षमस्व भोः ।।

यथा द्विजप्रसादः स्यात्तथा तेषां हितं चर ।। ४२ ।।

राजानं संकटे मग्नमुद्धरेयुर्द्विजोत्तमा ।।

आयुर्यशो बलं सौख्यं धनं पुण्यं प्रजोन्नतिः ।। ४३ ।।

कर्मणा येन जायेत तत्सेव्यं भवता सदा ।।

देशं कालं च शक्तिं च कार्यं चा कार्यमेव च ।। ४४ ।।

सम्यग्विचार्य यत्नेन कुरु कार्यं च सर्वदा ।।

न कुर्याः कस्यचिद्बाधां परबाधां निवारय ।। ४५ ।।

चोरान्दुष्टांश्च बाधेथाः सुनीत्या शक्तिमत्तया ।।

स्नाने जपे च होमे च दैवे पित्र्ये च कर्मणि ।। ४६ ।।

अत्वरो भव निद्रायां भोजने भव सत्वरः ।।

दाक्षिण्ययुक्तमशठं सत्यं जनमनोहरम् ।। ४७ ।।

अल्पाक्षरमनंतार्थं वाक्यं ब्रूहि महामते।।

अभीतो भव सर्वत्र विपक्षेषु विपत्सु च ।। ४८ ।।

भीतो भव ब्रह्मकुले न पापे गुरुशासने ।।

ज्ञातिबंधुषु विप्रेषु भार्यासु तनयेषु च ।। ४९ ।।

समभावेन वर्तेथास्तथा भोजनपंक्तिषु ।।

सतां हितोपदेशेषु तथा पुण्य कथासु च ।। ३.३.११.५० ।।

विद्यागोष्ठीषु धर्म्यासु क्वचिन्मा भूः पराङ्मुखः ।।

शुचौ पुण्यजलस्यांते प्रख्याते ब्रह्मसंकुले ।। ५१।।

महादेशे शिवमये वस्तव्यं भवता सदा ।।

कुलटा गणिका यत्र यत्र तिष्ठति कामुकः ।। ५२ ।।

दुर्देशे नीचसंबाधे कदाचिदपि मा वस ।।

एकमेवाश्रितोपि त्वं शिवं त्रिभुवनेश्वरम् ।। ५३ ।।

सर्वान्देवानुपासीथास्तद्दिनानि च मानयन् ।।

सदा शुचिः सदा दक्षः सदा शांतः सदा स्थिरः ।। ५४ ।।

सदा विजित षड्वर्गः सदैकांतो भवानघ ।।

विप्रान्वेदविदः शांतान्यतींश्च नियतोज्वलान्।। ५५ ।।

युग्मम् ।।

पुण्यवृक्षान्पुण्यनदीः पुण्यतीर्थं महत्सरः ।।

धेनुं च वृषभं रत्नं युवतीं च पतिव्रताम्।। ५६ ।।

आत्मनो गृहदेवांश्च सहसैव नमस्कुरु ।।

उत्थाय समये ब्राह्मे स्वाचम्य विमलाशयः ।।५७ ।।

नमस्कृत्यात्मगुरुवे ध्यात्वा देवमुमापतिम्।।

नारायणं च लक्ष्मीशं ब्रह्माणं च विनायकम्।। ५८ ।।

स्कन्दं कात्यायनीं देवीं महालक्ष्मीं सरस्वतीम् ।।

इन्द्रादीनथ लोकेशान्पुण्यश्लोकानृषीनपि ।। ५९ ।।

चिंतयित्वाथ मार्तंडमुद्यंतं प्रणमेत्सदा ।।

गंधं पुष्पं च तांबूलं शाकं पक्वफलादिकम् ।। ३.३.११.६० ।।

शिवाय दत्त्वोपभुंक्ष्व भक्ष्यं भोज्यं प्रियं नवम् ।।

यद्दत्तं यत्कृतं जप्तं यत्स्नातं यद्धुतं स्मृतम् ।। ६१ ।।

यच्च तप्तं तपः सर्वं तच्छिवाय निवेदय।।

भुंजानश्च पठन्वापि शयानो विहरन्नपि ।।

पश्यञ्छृण्वन्वदन्गृह्णञ्छिवमेवानुचिंतय ।। ६२ ।।

रुद्राक्षकंकणलसत्करदंडयुग्मो मालांतरालधृतभस्म सितत्रिपुंड्रः ।।

पंचाक्षरं परिपठन्परमंत्रराजं ध्यायन्सदा पशुपतेश्चरणं रमेथाः ।।६३ ।।

इति संक्षेपतो वत्स कथितो धर्मसंग्रहः ।।

अन्येषु च पुराणेषु विस्तरेण प्रकीर्तितः ।।६४।।

अथापरं सर्वपुराणगुह्यं निःशेषपापौघहरं पवित्रम्।।

जयप्रदं सर्वविपद्विमोचनं वक्ष्यामि शैवं कवचं हिताय ते ।।६५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे भद्रायुं प्रति ऋषभोपदेशवर्णनं नामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १२



।। ऋषभ उवाच ।। ।।

नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम् ।।

वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ।। १ ।।

शुचौ देशे समासीनो यथावत्कल्पितासनः ।।

जितेंद्रियो जितप्राणश्चिंतयेच्छिवमव्ययम् ।। २।।

हृत्पुंडरीकांतरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम् ।।

अतींद्रियं सूक्ष्ममनंतमाद्यं ध्यायेत्परानंदमयं महेशम् ।। ३ ।।

ध्यानावधूताखिलकर्मबंधश्चिरं चिदानंदनिमग्नचेताः ।।

षडक्षरन्याससमाहितात्मा शैवेन कुर्या त्कवचेन रक्षाम् ।। ४ ।।

मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे ।।

तन्नाम दिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ।। ५ ।।

सर्वत्र मां रक्षतु विश्वमूर्त्तिर्ज्योतिर्मयानंदघनश्चिदात्मा ।।

अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ।। ६ ।।

यो भूस्वरूपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः ।।

योऽपां स्वरूपेण नृणां करोति संजीनं सोऽवतु मां जलेभ्यः ।। ७ ।।

कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः ।।

स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ।। ८ ।।

प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः।।

चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ।। ९ ।।

कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः ।।

चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ।। ३.३.१२.१० ।।

कुंदेन्दुशंखस्फटिकावभासो वेदाक्षमालावरदाभयांकः ।।

त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योधिजातोवतु मां प्रतीच्याम् ।। ११ ।।

वराक्षमालाभयटंकहस्तः सरोजकिंजल्कसमानवर्णः ।।

त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ।। १२ ।।

वेदाभयेष्टांकुशटंकपाशकपालढक्काक्षकशूलपाणिः ।।

सितद्युतिः पंचमुखोऽवतान्मामीशान ऊर्द्ध्वं परमप्रकाशः ।। १३ ।।

मूर्धानमव्यान्मम चंद्रमौ लिर्भालं ममाव्यादथ भालनेत्रः ।।

नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ।। १४ ।।

पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्या त्सततं कपाली ।।

वक्त्रं सदा रक्षतु पंचवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ।। १५ ।।

कंठं गिरीशोऽवतु नीलकंठः पाणिद्वयं पातु पिनाकपाणिः ।।

दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखांतकोऽव्यात् ।। १६ ।।

ममोदरं पातु गिरींद्रधन्वा मध्यं ममाव्यान्मदनान्तकारी ।।

हेरंबतातो मम पातु नाभिं पायात्कटी धूर्जटिरीश्वरो मे ।। १७ ।।

ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् ।।

जंघायुगं पुंगवकेतुरव्यात्पादौ ममाव्या त्सुरवंद्यपादः ।। १८ ।।

महेश्वरः पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः ।।

त्रियंबकः पातु तृतीययामे वृषध्वजः पातु दिनांत्ययामे ।। ।। १९ ।।

पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीथे ।।

गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ।। ३.३.१२.२० ।।

अंतःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु बहिःस्थितं माम् ।।

तदंतरे पातु पतिः पशूनां सदा शिवो रक्षतु मां समंतात् ।। २१ ।।

तिष्ठंतमव्या द्भुवनैकनाथः पायाद्व्रजंतं प्रमथाधिनाथः ।।

वेदांतवेद्योऽवतु मान्निषण्णं मामव्ययः पातु शिवः शयानम् ।। २२।।

मार्गेषु मां रक्षतु नीलकंठः शैलादिदुर्गेषु पुरत्रयारिः ।।

अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ।। २३ ।।

कल्पांतकाटोपपटुप्रकोपः स्फुटाट्टहासोच्चलितांडकोशः ।।

घोरारिसेनार्णवदुर्निवारमहाभयाद्रक्षतु वीरभद्रः।।२४।।

पत्त्यश्वमातंगघटावरूथसहस्रलक्षायुतकोटिभीषणम् ।।

अक्षौहिणीनां शतमाततायिनां छिंद्या न्मूढो घोरकुठारधारया ।। २५ ।।

निहंतु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरांतकस्य ।।

शार्दूलसिंहर्क्षवृकादिहिंस्रान्संत्रासयत्वीशधनुःपिनाकम्।। ।।२६।।

दुःस्वप्नदुःशकुनदुर्गतिदौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि।

उत्पाततापविषभीतिमसद्ग्रहार्तिव्याधींश्च नाशयतु मे जगतामधीशः।।२७।।

ओंनमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सकलतत्त्वविहाराय सकललोकैककर्त्रे सकललौकैकभर्त्रे सकललोकैकहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे सकलनिगमगुह्याय सकलवरप्रदाय सकलदुरितार्तिभंजनाय सकलजगदभयंकराय सकललोकैकशंकराय शशांकशेखराय शाश्वतनिजाभासाय निर्गुणाय निरुपमाय नीरूपाय निराभासाय निरामयाय निष्प्रपंचाय निष्कलंकाय निर्द्वंद्वाय निःसंगाय निर्मलाय निर्गमाय नित्यरूपविभवाय निरुपमविभवाय निराधाराय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानंदाद्वयाय परमशांतप्रकाशतेजोरूपाय जयजय महारुद्र महारौद्र भद्रावतार दुःखदावदारण महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वांगखड्गचर्मपाशांकुशडमरुशूलचापबाणगदाशक्तिभिं डिपालतोमरमुसलमुद्गरपट्टिशपरशुपरिघभुशुंडीशतघ्नीचक्राद्यायुधभीषणकरसहस्र मुखदंष्ट्राकराल विकटाट्टहासविस्फारितब्रह्मामण्डल नागेंद्र कुण्डल नागेंद्रहार नागेंद्रवलय नागेंद्रचर्मधर मृत्युंजय त्र्यंबक त्रिपुरांतक विरूपाक्ष विश्वेश्वर विश्वरूप वृषभवाहन विषभूषण विश्वतोमुख सर्वतो रक्षरक्ष मां ज्वलज्वल महामृत्युभयमपमृत्युभयं नाशयनाशय रोगभयमुत्सादयोत्सादय विषसर्पभयं शमयशमय चोरभयं मारयमारय मम शत्रूनुच्चा टयोच्चाटय शूलेन विदारयविदारय कुठारेण भिंधिभिंधि खड्गेन छिंधिछिंधि खट्वांगेन विपोथयविपोथय मुसलेन निष्पेषयनिष्पेषय बाणैः संताडय संताडय रक्षांसि भीषयभीषय भूतानि विद्रावयविद्रावय कूष्मांडवेतालमारीगणब्रह्मराक्षसान्संत्रासयसंत्रासय ममाभयं कुरुकुरु वित्रस्तं मामाश्वास याश्वासय नरकभयान्मामुद्धारयोद्धारय संजीवयसंजीवय क्षुत्तृड्भ्यां मामाप्याययाप्यायय दुःखातुरं मामानन्दयानंदय शिवकवचेन मामाच्छादया च्छादय त्र्यंबक सदाशिव नमस्तेनमस्तेनमस्ते ।।

।। ऋषभ उवाच ।। ।।

इत्येतत्कवचं शैवं वरदं व्याहृतं मया ।।

सर्वबाधाप्रशमनं रहस्यं सर्व देहिनाम् ।। २८ ।।

यः सदा धारयेन्मर्त्यः शैवं कवचमुत्तमम् ।।

न तस्य जायते क्वापि भयं शम्भोरनुग्रहात् ।। २९ ।।

क्षीणायुर्मृत्युमापन्नो महारोगहतोऽपि वा ।।

सद्यः सुखमवाप्नोति दीर्घमायुश्च विंदति ।। ३.३.१२.३० ।।

सर्वदारिद्र्यशमनं सौमंगल्यविवर्धनम् ।।

यो धत्ते कवचं शैवं स देवैरपि पूज्यते ।। ३१ ।।

महापातकसंघातैर्मुच्यते चोपपातकैः ।।

देहांते शिवमाप्नोति शिववर्मानुभावतः ।। ३२ ।।

त्वमपि श्रद्धया वत्स शैवं कवच मुत्तमम्।।

धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि ।। ३३ ।।

।। सूत उवाच ।। ।।

इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे ।।

ददौ शंखं महारावं खड्गं चारिनिषूदनम् ।। ३४ ।।

पुनश्च भस्म संमंत्र्य तदंगं सर्वतोऽस्पृशत् ।।

गजानां षट्सहस्रस्य द्विगुणं च बलं ददौ ।। ३५ ।।

भस्मप्रभावात्संप्राप्य बलैश्वर्यधृतिस्मृतीः ।।

स राजपुत्रः शुशुभे शरदर्क इव श्रिया ।। ३६ ।।

तमाह प्रांजलिं भूयः स योगी राजनंदनम् ।।

एष खड्गो मया दत्तस्तपोमंत्रानुभावतः ।। ३७ ।।

शितधारमिमं खड्गं यस्मै दर्शयसि स्फुटम् ।।

स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम् ।। ।। ३८ ।।

अस्य शंखस्य निह्रादं ये शृण्वंति तवाहिताः.।।

ते मूर्च्छिताः पतिष्यंति न्यस्तशस्त्रा विचेतना ।। ३९ ।।

खड्गशंखाविमौ दिव्यौ परसैन्यविनाशिनौ ।।

आत्मसैन्यस्वपक्षाणां शौर्यतेजोविवर्धनौ ।। ३.३.१२.४० ।।

एतयोश्च प्रभावेन शैवेन कवचेन च ।।

द्विषट्सहस्रनागानां बलेन महतापि च ।।४१।।

भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि ।।

प्राप्य सिंहासनं पैत्र्यं गोप्तासि पृथिवीमिमाम् ।।४२।।

इति भद्रायुषं सम्यगनुशास्य समातृकम्।।

ताभ्यां संपूजितः सोऽथ योगी स्वैरगतिर्ययौ ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तर खंडे सीमंतिनीमाहात्म्ये भद्रायूपाख्याने शिवकवचकथनं नाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १३



।। सूत उवाच ।। ।।

दशार्णाधिपतेस्तस्य वज्रबाहोर्महाभुजः ।।

बभूव शत्रुर्बलवान्राजा मगधराट् ततः ।। १ ।।

स वै हेमरथो नाम बाहुशाली रणोत्कटः ।।

बलेन महतावृत्य दशार्णं न्यरुधद्बली ।। २ ।।

चमूपास्तस्य दुर्धर्षाः प्राप्य देशं दशार्णकम् ।।

व्यलुंपन्वसुरत्नानि गृहाणि ददहुः परे ।।३।।

केचिद्धनानि जगृहुः केचिद्बालान्स्त्रियोऽपरे ।।

गोधनान्यपरेऽगृह्णन्केचिद्धान्यपरिच्छदान् ।।

केचिदारामसस्यानि गृहोद्यानान्यनाशयत् ।।४।।

एवं विनाश्य तद्राज्यं स्त्रीगोधनजिघृक्षवः ।।

आवृत्य तस्य नगरीं वज्रबाहोस्तु मागधः ।। ५ ।।

एवं पर्याकुलं वीक्ष्य राजा नगरमेव च ।।

युद्धाय निर्जगामाशु वज्रबाहुः ससैनिकः ।। ६ ।।

वज्रबाहुश्च भूपालस्तथा मंत्रिपुरःसराः ।।

युयुधुर्मागधैः सार्धं निजघ्नुः शत्रुवाहिनीम् ।।७।।

वज्रबाहुर्महेष्वासो दंशितो रथमास्थितः।।

विकिरन्बाणवर्षाणि चकार कदनं महत् ।।८।।

दशार्णराजं युध्यंतं दृष्ट्वा युद्धे सुदुःसहम् ।।

तमेव तरसा वव्रुः सर्वे मागधसैनिकाः ।। ९ ।।

कृत्वा तु सुचिरं युद्धं मागधा दृढविक्रमाः ।।

तत्सैन्यं नाशयामासुर्लेभिरे च जयश्रियम् ।।३.३.१३.१०।।

केचित्तस्य रथं जघ्नुः केचित्तद्धनुराच्छिनम् ।।

सूतं तस्य जघानैकस्त्वपरः खड्गमाच्छिनत् ।। ११।।

संछिन्नखड्गधन्वानं विरथं हतसारथिम् ।।
बलाद्गृहीत्वा बलिनो बबंधुर्नृपतिं रुषा ।।१२।।
तस्य मंत्रिगणं सर्वं तत्सैन्यं च विजित्य ते ।।
मागधास्तस्य नगरीं विविशुर्जयकाशिनः ।। १३ ।।
अश्वान्नरान्गजानुष्ट्रान्पशूंश्चैव धनानि च ।।
जगृहुर्युवतीः सर्वाश्चार्वंगीश्चैव कन्यकाः ।। १४ ।।
राज्ञो बबंधुर्महिषीर्दासीश्चैव सहस्रशः ।।
कोशं च रत्नसंपूर्णं जह्रुस्तेऽप्याततायिनः ।। १५ ।।
एवं विनाश्य नगरीं हृत्वा स्त्रीगोधनादिकम् ।।
वज्रबाहुं बलाद्बद्ध्वा रथे स्थाप्य विनिर्ययुः ।। १६ ।।
एवं कोलाहले जाते राष्ट्रनाशे च दारुणे ।।
राजपुत्रोऽथ भद्रायुस्तद्वार्तामशृणोद्बली ।। १७ ।।
पितरं शत्रुनिर्बद्धं पितृपत्नीस्तथा हृताः ।।
नष्टं दशार्णराष्ट्रं च श्रुत्वा चुक्रोश सिंहवत् ।। १८ ।।
स खड्गशंखावादाय वैश्यपुत्रसहायवान् ।।
दंशितो हयमारुह्य कुमारो विजिगीषया ।। १९ ।।
जवेनागत्य तं देशं मागधैरभिपूरितम् ।।
दह्यमानं क्रंदमानं हृतस्त्रीसुतगोधनम् ।। ३.३.१३.२० ।।
दृष्ट्वा राजजनं सर्वं राज्यं शून्यं भयाकुलम् ।।
क्रोधाध्मातमनास्तूर्णं प्रविश्य रिपुवाहिनीम् ।।
आकर्णाकृष्टकोदंडो ववर्ष शरसंततीः ।। २१ ।।
ते हन्यमाना रिपवो राजपुत्रेण सायकैः ।।
तमभिद्रुत्य वेगेन शरैर्विव्यधुरुल्बणैः ।। २२ ।।
हन्यमानोऽस्त्रपूगेन रिपुभिर्युद्धदुर्मदैः ।।
न चचाल रणे धीरः शिववर्माभिरक्षितः ।। २३ ।।
सोऽस्त्रकर्षं प्रसह्याशु प्रविश्य गजलीलया ।।
जघानाशु रथान्नागान्पदातीनपि भूरिशः ।। २४ ।।
तत्रैकं रथिनं हत्वा ससूतं नृपनंदनः ।।

तमेव रथमास्थाय वैश्यनंदनसारथिः ।।
विचचार रणे धीरः सिंहो मृगकुलं यथा ।। २५ ।।
अथ सर्वे सुसंरब्धाः शूराः प्रोद्यतकार्मुकाः ।।
अभिसस्रुस्तमेवैकं चमूपा बलशालिनः ।। २६ ।।
तेषामापततामग्रे खड्गमुद्यम्य दारुणम् ।।
अभ्युद्ययौ महावीरान्दर्शयन्निव पौरुषम् ।। २७ ।।
करालांतकजिह्वाभं तस्य खड्गं महोज्ज्वलम् ।।
दृष्ट्वैव सहसा मम्रुश्च मूपास्तत्प्रभावतः ।। २८ ।।
येये पश्यंति तं खड्गं प्रस्फुरंतं रणांगणे ।।
ते सर्वे निधनं जग्मुर्वज्रं प्राप्येव कीटकः ।। २९ ।।
अथासौ सर्वसैन्यानां विनाशाय महाभुजः ।।
शंखं दध्मौ महारावं पूरयन्निव रोदसी ।। ३.३.१३.३० ।।
तेन शंखनिनादेन विषाक्तेनैव भूयसा ।।
श्रुतमात्रेण रिपवो मूर्च्छिताः पतिता भुवि ।।३१ ।।
येऽश्वपृष्ठे रथे ये च ये च दंतिषु संस्थिताः।।
ते विसंज्ञाः क्षणात्पेतुः शंखनादहतौजसः।।३२।।
तान्भूमौ पतितान्सर्वान्नष्टसंज्ञा न्निरायुधान्।।
विगणय्य शवप्रायाननावधीद्धर्मशास्त्रवित्।।३३।।
आत्मनः पितरं बद्धं मोचयित्वा रणाजिरे।।
तत्पत्नीः शत्रुवशगाः सर्वाः सद्यो व्यमोचयत् ।। ३४ ।।
पत्नीश्च मंत्रिमुख्यानां तथान्येषां पुरौकसाम् ।।
स्त्रियो बालांश्च कन्याश्च गोधनादीन्यनेकशः ।। ३५ ।।
मोचयित्वा रिपुभयात्तमाश्वासयदाकुलः ।।
अथारिसैन्येषु चरंस्तेषां जग्राह योषितः ।। ३६ ।।
मरुन्मनोजवानश्वान्मातंगान्गिरिसन्निभान् ।।
स्यंदनानि च रौक्माणि दासीश्च रुचिराननाः ।। ३७ ।।
युग्मम् ।।
सर्वमाहृत्य वेगेन गृहीत्वा तद्धनं बहु ।।

मागधेशं हेमरथं निर्बबंध पराजितम् ।। ३८ ।।

तन्मंत्रिणश्च भूपांश्च तत्र मुख्यांश्च नायकान्।।

गृहीत्वा तरसा बद्ध्वा पुरीं प्रावेशयदद्रुतम् ।। ३९ ।।

पूर्वं ये समरे भग्ना विवृत्ताः सर्वतोदिशम् ।।

ते मंत्रिमुख्या विश्वस्ता नायकाश्च समाययुः ।। ३.३.१३.४० ।।

कुमारविक्रमं दृष्ट्वा सर्वे विस्मितमानसाः ।।

तं मेनिरे सुरश्रेष्ठं कारणादागतं भुवम् ।। ।। ४१ ।।

अहो नः सुमहाभाग्यमहो नस्तपसः फलम् ।।

केनाप्यनेन वीरेण मृताः संजीविताः खलु ।। ४२ ।।

एष किं योगसिद्धो वा तपःसिद्धो ऽथवाऽमरः ।।

अमानुषमिद कर्म यदनेन कृतं महत् ।। ४३ ।।

नूनमस्य भवेन्माता सा गौरीति शिवः पिता ।।

अक्षौहिणीनां नवकं जिगायानंतशक्तिधृक् ।। ४४ ।।

इत्याश्चर्ययुतैर्हृष्टैः प्रशंसद्भिः परस्परम् ।।

पृष्टोऽमात्यजनेनासावात्मानं प्राह तत्त्वतः ।। ४५ ।।

समागतं स्वपितरं विस्मयाह्लादविप्लुतम् ।।

मुंचंतमानंदजलं ववंदे प्रेमविह्वलः ।। ४६ ।।

स राजा निजपुत्रेण प्रणयादभिवंदितः ।।

आश्लिष्य गाढं तरसा बभाषे प्रेमकातरः ।। ४७ ।।

कस्त्वं देवो मनुष्यो वा गन्धर्वो वा महामते ।।

का माता जनकः को वा को देशस्तव नाम किम् ।। ४८ ।।

कस्मान्न शत्रुभिर्बद्धान्मृतानिव हतौजसः ।।

कारुण्यादिह संप्राप्य सपत्नीकान्मुमोच यः ।। ४९ ।।

कुतो लब्धमिदं शौर्यं धैर्यं तेजो बलोन्नतिः ।।

जिगीषसीव लोकांस्त्रीन्सदेवासुरमानुषान् ।। ३.३.१३.५० ।।

अपि जन्मसहस्रेण तवानृण्यं महौजसः ।।

कर्तुं नाहं समर्थोस्मि सहैभिर्दारबांधवैः ।।५१।।

इमान्पुत्रानिमाः पत्नीरिदं राज्यमिदं पुरम् ।।

सर्वं विहाय मच्चित्तं त्वय्येव प्रेमबंधनम् ।।५२।।

सर्वं कथय मे तात मत्प्राणपरिरक्षक ।।

एतासां मम पत्नीनां त्वदधीनं हि जीवितम् ।। ५३ ।।

।। सूत उवाच ।। ।।

इति पृष्टः स भद्रायुः स्वपित्रा तमभाषत ।।

एष वैश्यसुतो राजन्सुनयो नाम मत्सखा ।। ५४ ।।

अहमस्य गृहे रम्ये वसामि सहमातृकः ।।

भद्रायुर्नाम मद्वृत्तं पश्चाद्विज्ञापयामि ते ।। ५५ ।।

पुरं प्रविश्य भद्रं ते सदारः ससुहृज्जनः ।।

त्यक्त्वा भयमरातिभ्यो विहरस्व यथासुखम् ।। ५६ ।।

नैतान्मुंच रिपूंस्तावद्यावदागमनं मम ।।

अहमद्य गमिष्यामि शीघ्रमात्मनिवेशनम् ।। ५७ ।।

इत्युक्त्वा नृपमामंत्र्य भद्रायुर्नृपनंदनः ।।

आजगाम स्वभवनं मात्रे सर्वं न्यवेदयत् ।। ५८।।

सापि हृष्टा स्वतनयं परिरेभेऽश्रुलोचना ।।

स च वैश्यपतिः प्रेम्णा परिष्वज्याभ्यपूजयत् ।। ५९ ।।

वज्रबाहुश्च राजेंद्रः प्रविष्टो निजमंदिरम् ।।

स्त्रीपुत्रामात्य सहितः प्रहर्षमतुलं ययौ ।। ३.३.१३.६० ।।

तस्यां निशायां व्युष्टायामृषभो योगिनां वरः ।।

चंद्रांगदं समागत्य सीमंतिन्याः पतिं नृपम् ।। ६१ ।।

भद्रायुषः समुत्पत्तिं तस्य कर्माप्यमानुषम् ।।

आवेद्य रहसि प्रेम्णा त्वत्सुतां कीर्तिमालिनीम् ।। ६२ ।।

भद्रायुषे प्रयच्छेति बोधयित्वा च नैषधम् ।।

ऋषभो निर्जगामाथ देशकालार्थतत्त्ववित् ।। ६३ ।।

विशेषकम् ।।

अथ चंद्रांगदो राजा मुहूर्ते मंगलोचिते ।।

भद्रायुषं समाहूय प्रायच्छत्कीर्तिमालिनीम् ।। ६४ ।।

कृतोद्वाहः स राजेंद्रतनयः सह भार्यया ।।

हेमासनस्थः शुशुभे रोहिण्येव निशाकरः ।। ६५ ।।
वज्रबाहुं तत्पितरं समाहूय स नैषधः ।।
पुरं प्रवेश्य सामात्यः प्रत्युद्गम्याभ्यपूजयत् ।। ६६ ।।
तत्रापश्यत्कृतोद्वाहं भद्रायुषमरिंदमम् ।।
पादयोः पतितं प्रेम्णा हर्षात्तं परिषस्वजे ।। ।। ६७ ।।
एष मे प्राणदो वीर एष शत्रुनिषूदनः ।।
अथाप्यज्ञातवंशोऽयं मयानंतपराक्रमः ।। ६८ ।।
एष ते नृप जामाता चंद्रांगद महाबलः ।।
अस्य वंशमथोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ।। ६९ ।।
इत्थं दशार्णराजेन प्रार्थितो निषधाधिपः ।।
विविक्त उपसंगम्य प्रहसन्निदमब्रवीत् ।। ३.३.१३.७० ।।
एष ते तनयो राजञ्छैशवे रोगपीडितः ।।
त्वया वने परित्यक्तः सह मात्रा रुजार्तया ।। ७१ ।।
परिभ्रमंती विपिने सा नारी शिशुनामुना ।।
दैवाद्वैश्यगृहं प्राप्ता तेन वैश्येन रक्षिता ।। ७२ ।।
अथासौ बहुरोगार्तो मृतस्तव कुमारकः ।।
केनापि योगिराजेन मृतः संजीवितः पुनः ।। ७३ ।।
ऋषभाख्यस्य तस्यैव प्रभावाच्छिवयोगिनः ।।
रूपं च देवसदृशं प्राप्तौ मातृकुमारकौ ।। ७४ ।।
तेन दत्तेन खड्गेन शंखेन रिपुघातिना ।।
जिगाय समरे शत्रूञ्छिववर्माभिरक्षितः ।। ७५ ।।
द्विषट्सहस्रनागानां बलमेको बिभर्त्यसौ ।।
सर्वविद्यासु निष्णातो मम जामातृतां गतः ।। ७६ ।।
अत एनं समादाय मातरं चास्य सुव्रताम्।।
गच्छस्व नगरीं राजन्प्राप्स्यसि श्रेय उत्तमम् ।। ७७ ।।
इति चंद्रांगदः सर्वमाख्यायांतर्गृहे स्थिताम् ।।
तस्याग्र पत्नीमाहूय दर्शयामास भूषिताम् ।। ७८ ।।
इत्यादि सर्वमाकर्ण्य दृष्ट्वा च स महीपतिः ।।

व्रीडितो नितरां मौढ्यात्स्वकृतं कर्म गर्हयन् ।। ७९ !।

प्राप्तश्च परमानन्दं तयोर्दर्शनकौतुकात् ।।

पुलकांकितसर्वांगस्तावुभौ परिषस्वजे ।। ३.३.१३.८० ।।

युग्मम् ।।

एवं निषधराजेन पूजितश्चाभिनन्दितः ।।

स भोजयित्वा तं सम्यक्स्वयं च सह मंत्रिभिः ।। ८१ ।।

तामात्मनोग्रमहिषीं पुत्रं तमपि तां स्नुषाम् ।।

आदाय सपरीवारो वज्रबाहुः पुरीं ययौ ।।८२।।

स संभ्रमेण महता भद्रायुः पितृमंदिरम्।।

संप्राप्य परमानंदं चक्रे सर्वपुरौकसाम्।।८३।।

कालेन दिवमारूढे पितरि प्राप्तयौवनः।।

भद्रायुः पृथिवीं सर्वां शशासाद्भुतविक्रमः ।। ८४ ।।

मागधेशं हेमरथं मोचयामास बंधनात् ।।

संधाय मैत्रीं परमां ब्रह्मर्षीणां च सन्निधौ।। ८५।।

इत्थं त्रिलोकमहितां शिवयोगिपूजां कृत्वा पुरातनभवेऽपि स राजसूनुः ।।

निस्तीर्य दुःसहविपद्गणमाप्तराज्यश्चंद्रांगदस्य सुतया सह साधु रेमे ।। ८६ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखंडे भद्रायुविवाहकथनं नाम त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १४

https://sa.wikisource.org/s/g6b



।। सूत उवाच ।। ।।

प्राप्तसिंहासनो वीरो भद्रायुः स महीपतिः ।।

प्रविवेश वनं रम्यं कदाचिद्भार्यया सह ।। १ ।।

तस्मिन्विकसिताशोकप्रसूननवपल्लवे।।

प्रोत्फुल्लमल्लिकाखंडकूजद्भ्रमरसंकुले।।२।।

नवकेसरसौरभ्यबद्धरागिजनोत्सवे।।

सद्यः कोरकिताशोकतमालगहनांतरे ।।३।।

प्रसूनप्रकरानम्र माधवीवनमंडपे।।

प्रवालकुसुमोद्योतचूतशाखिभिरञ्चिते ।।४।।

पुन्नागवनविभ्रांतपुंस्कोकिलविराविणि।।

वसन्तसमये रम्ये विजहार स्त्रिया सह ।।५।।

अथाविदूरे क्रोशंतौ धावंतौ द्विजदंपती ।।

अन्वीयमानौ व्याघ्रेण ददर्श नृपसत्तमः ।। ६ ।।

पाहि पाहि महाराज हा राजन्करुणानिधे ।।

एष धावति शार्दूलो जग्धुमावां महारयः ।। ७ ।।

एष पर्वतसंकाशः सर्वप्राणिभयंकरः ।।

यावन्न खादति प्राप्य तावन्नौ रक्ष भूपते ।। ८ ।।

इत्थमाक्रंदितं श्रुत्वा स राजा धनुराददे ।।

तावदागत्य शार्दूलो मध्ये जग्राह तां वधूम् ।। ९ ।।

हा नाथ नाथ हा कांत हा शंभो जगतः पते ।।

इति रोरूयमाणां तां यावज्जग्राह भीषणः ।। ३.३.१४.१० ।।

तावत्स राजा निशितैर्भल्लैर्व्याघ्रमताडयत् ।।

न च तैर्विव्यथे किंचिद्गिरींद्र इव वृष्टिभिः ।।११।।

स शार्दूलो महासत्त्वो राज्ञोस्त्रैरकृतव्यथः ।।

बलादाकृष्य तां नारीमपाक्रामत सत्वरः ।। १२ ।।

व्याघ्रेणापहृतां पत्नीं वीक्ष्य विप्रोऽतिदुःखितः ।।

रुरोद हा प्रिये बाले हा कांते हा पतिव्रते ।। १३ ।।

एकं मामिह संत्यज्य कथं लोकांतरं गता ।।

प्राणेभ्योपि प्रियां त्यक्त्वा कथं जीवितुमुत्सहे ।। १४ ।।

राजन्क्व ते महास्त्राणि क्व ते श्लाघ्यं महद्धनुः ।।

क्व ते द्वादशसाहस्रमहानागातिगं बलम् ।। १५ ।।

किं ते शंखेन खड्गेन किं ते मंत्रास्त्रविद्यया ।।

किं च तेन प्रयत्नेन किं प्रभावेण भूयसा ।। १६ ।।

तत्सर्वं विफलं जातं यच्चान्यत्त्वयि तिष्ठति ।।

यस्त्वं वनौकसं जंतुं निवारयितुमक्षमः ।। १७ ।।

क्षात्त्रस्यायं परो धर्मः क्षताद्यत्परिरक्षणम् ।।

तस्मात्कुलोचिते धर्मे नष्टे त्वज्जीवितेन किम् ।।१८।।

आर्तानां शरणार्तानां त्राणं कुर्वंति पार्थिवाः ।।

प्राणैरर्थैश्च धर्मज्ञास्तद्विहीना मृतोपमाः ।। १९ ।।

धनिनां दानहीनानां गार्हस्थ्याद्भिक्षुता वरा ।।

आर्तत्राणविहीनानां जीवितान्मरणं वरम् ।। ३.३.१४.२० ।।

वरं विषादनं राज्ञो वरमग्नौ प्रवेशनम् ।।

अनाथानां प्रपन्नानां कृपणानामरक्षणात् ।। २१ ।।

इत्थं विलपितं तस्य स्ववीर्यस्य च गर्हणम् ।।

निशम्य नृपतिः शोकादात्मन्येवमचिंतयत् ।। २२ ।।

अहो मे पौरुषं नष्टमद्य दैवविपर्ययात् ।।

अद्य कीर्तिश्च मे नष्टा पातकं प्राप्तमुत्क टम् ।। २३ ।।

धर्मः कालोचितो नष्टो मन्दभाग्यस्य दुर्मतेः ।।

नूनं मे संपदो राज्यमायुष्यं क्षयमेष्यति ।।२४।।

अपुंसां संपदो भोगाः पुत्रदारधनानि च ।।

दैवेन क्षणमुद्यंति क्षणादस्तं व्रजंति च ।।२५।।

अत एनं द्विजन्मानं हतदारं शुचार्दितम् ।।

गतशोकं करिष्यामि दत्त्वा प्राणानपि प्रियान् ।। ।। २६ ।।

इति निश्चित्य मनसा भद्रायुर्नृपसत्तमः ।।

पतित्वा पादयोस्त्वस्य बभाषे परिसांत्वयन् ।। २७ ।।

कृपां कुरु मयि ब्रह्मन्क्षत्रबंधौ हतौजसि ।।

शोकं त्यज महाबुद्धे दास्याम्यर्थं तवेप्सितम् ।। २८ ।।

इदं राज्यमियं राज्ञी ममेदं च कलेवरम् ।।

त्वधीनमिदं सर्वं किं तेऽभिलषितं वद ।। ।। २९ ।।

।। ब्राह्मण उवाच ।। ।।

किमादर्शेन चांधस्य किं गृहैर्भैक्ष्यजीविनः ।।

किं पुस्तकेन मूर्खस्य ह्यस्त्रीकस्य धनेन किम् ।। ३.३.१४.३० ।।

अतोऽहं गतपत्नीको भुक्तभोगो न कर्हिचित् ।।

इमां तवाग्रमहिषीं कामार्थं दीयतां मम ।। ३१ ।।

।। राजोवाच ।। ।।

ब्रह्मन्किमेष धर्मस्ते किमेतद्गुरुशासनम् ।।

अस्वर्ग्यमयशस्यं च परदाराभिमर्शनम् ।। ३२ ।।

दातारः संति वित्तस्य राज्यस्य गजवाजिनाम् ।।

आत्मदेहस्य वा क्वापि न कलत्रस्य कर्हिचित् ।।३३।।

परदारोपभोगेन यत्पापं समुपार्जितम् ।।

न तत्क्षालयितुं शक्यं प्रायश्चित्तशतैरपि ।।३४।।

।। ब्राह्मण उवाच ।।

अपि ब्रह्मवधं घोरमपि मद्यनिषेवणम् ।।

तपसा नाशयिष्यामि कि पुनः पारदारिकम् ।।

तस्मात्प्रयच्छ मे भार्यामिमां त्वं ध्रुवमन्यथा ।। ३५ ।।

अरक्षणाद्भयार्तानां गंतासि निरयं ध्रुवम् ।।

इति विप्रगिरा भीतश्चिंतयामास पार्थिवः ।।

अरक्षणान्महत्पापं पत्नीदानं ततो वरम् ।। ३६ ।।

अतः पत्नीं द्विजाग्र्याय दत्त्वा निर्मुक्तकिल्विषः ।।

सद्यो वह्निं प्रवेक्ष्यामि कीर्तिश्च निहिता भवेत् ।। ३७ ।।

इति निश्चित्य मनसा समुज्ज्वाल्य हुताशनम् ।।

तं ब्राह्मणं समाहूय ददौ पत्नीं सहोदकाम् ।। ३८ ।।

स्वयं स्नातः शुचिर्भूत्वा प्रणम्य विबुधेश्वरान् ।।

तमग्निं द्विः परिक्रम्य शिवं दध्यौ समाहितः ।। ३९ ।।

तमथाग्नौ पतिष्यंतं स्वपदासक्तचेतसम् ।।

प्रत्यदृश्यत विश्वेशः प्रादुर्भूतो जगत्पतिः ।। ३.३.१४.४० ।।

तमीश्वरं पंचवक्त्रं त्रिनेत्रं पिनाकिनं चन्द्रकलावतंसम् ।।

आलंबितापिंगजटाकलापं मध्यंगतं भास्करकोटितेजसम् ।। ४१ ।।

मृणालगौरं गजचर्मवाससं गंगातरंगो क्षितमौलिदेशम् ।।

नागेंद्रहारावलिकंकणोर्मिकाकिरीटकोट्यंगदकुंडलोज्ज्वलम् ।। ४२ ।।

त्रिशूलखट्वांगकुठारचर्ममृगाभयेष्टार्थपिनाकहस्तम् ।।

वृषोपरिस्थं शितिकंठमीशं प्रोद्भूतमग्रे नृपतिर्ददर्श ।। ४३ ।।

अथांबराद्द्रुतं पेतुर्दिव्याः कुसुमवृष्टयः ।।

प्रणेदुर्देवतूर्याणि देवाश्च ननृतुर्जगुः ।। ४४ ।।

तत्राजग्मुर्नारदाद्याः सनकाद्या सुरर्षयः ।।

इन्द्रादयश्च लोकेशास्तथाब्रह्मर्षयोऽमलाः ।। ४५ ।।

तेषां मध्ये समासीनो महादेवः सहोमया ।।

ववर्ष करुणासारं भक्तिनम्रे महीपतौ ।। ४६ ।।

तद्दर्शनानंदविजृंभिताशयः प्रवृद्धबाष्पांबुपरिप्लुतांगः ।।

प्रहृष्टरोमा गलगद्गदाक्षरं तुष्टाव गीर्भिर्मुकुलीकृतांजलिः ।। ४७ ।।

।। राजोवाच ।। ।।

नतोस्म्यहं देवमनाथमव्ययं प्रधानमव्यक्तगुणं महांतम् ।।

अकारणं कारणकारणं परं शिवं चिदानंदमयं प्रशांतम् ।। ४८ ।।

त्वं विश्वसाक्षी जगतोऽस्यकर्त्ता विरूढधामा हृदि सन्निविष्टः ।।

अतो विचिन्वंति विधौ विपश्चितो योगैरनेकैः कृतचित्तरोधैः ।। ४९ ।।

एकात्मतां भावयतां त्वमेको नानाधियां यस्त्वमनेकरूपः ।।

अतींद्रियं साक्ष्युदयास्तविभ्रमं मनःपथात्संह्रियते पदं ते ।। ३.३.१४.५० ।।

तं त्वां दुरापं वचसो धियाश्च व्यपेतमोहं परमात्मरूपम् ।।

गुणैकनिष्ठाः प्रकृतौ विलीनाः कथं वपुः स्तोतुमलंगिरो मे ।। ५१ ।।

तथापि भक्त्याश्रयतामुपेयुस्तवांघ्रिपद्मं प्रणतार्तिभंजनम् ।।

सुघोरसंसारदवाग्निपीडितो भजामि नित्यं भवभीतिशांतये ।। ५२ ।।

नमस्ते देव देवाय महादेवाय शंभवे ।।

नमस्त्रिमूर्तिरूपाय सर्गस्थित्यंतकारिणे ।। ५३ ।।

नमो विश्वादिरूपाय विश्वप्रथमसाक्षिणे ।।

नमः सन्मात्रतत्त्वाय बोधानंदघनाय च ।। ५४ ।।

सर्वक्षेत्रनिवासाय क्षेत्रभिन्नात्मशक्तये ।।

अशक्ताय नमस्तुभ्यं शक्ताभासाय भूयसे ।। ५५ ।।

निराभासाय नित्याय सत्यज्ञानांतरात्मने ।।

विशुद्धाय विदूराय विमुक्ताशेषकर्मणे ।। ५६ ।।

नमो वेदांतवेद्याय वेदमूलनिवासिने ।।

नमो विविक्तचेष्टाय निवृत्तगुण वृत्तये ।। ५७ ।।

नमः कल्याणवीर्याय कल्याणफलदायिने ।।

नमोऽनंताय महते शांताय शिवरूपिणे ।। ५८ ।।

अघोराय सुघोराय घोराघौघ विदारिणे ।।

भर्गाय भवबीजानां भंजनाय गरीयसे ।।

नमो विध्वस्तमोहाय विशदात्मगुणाय च ।। ५९ ।।

पाहि मां जगतां नाथ पाहि शंकर शाश्वत ।।

पाहि रुद्र विरूपाक्ष पाहि मृत्युंजयाव्यय ।। ३.३.१४.६० ।।

शम्भो शशांककृतशेखर शांतमूर्ते गौरीश गोपतिनिशापहुताशनेत्र ।।

गंगाधरांधकविदारण पुण्यकीर्ते भूतेश भूधरनिवास सदा नमस्ते ।। ६१ ।।

।। सूत उवाच ।। ।।

एवं स्तुतः स भगवान्राज्ञा देवो महेश्वरः ।।

प्रसन्नः सह पार्वत्या प्रत्युवाच दयानिधिः ।। ६२ ।।

।। ईश्वर उवाच ।। ।।

राजंस्ते परितुष्टोऽस्मि भक्त्या पुण्यस्तवेन च ।।

अनन्यचेता यो नित्यं सदा मां पर्यपूजयः ।। ६३ ।।

तव भावपरीक्षार्थं द्विजो भूत्वाहमागतः ।।

व्याघ्रेण या परिग्रस्ता सैषा दैवी गिरींद्रजा ।। ६४ ।।

व्याघ्रो मायामयो यस्ते शरैरक्षतविग्रहः ।।

धीरतां द्रष्टुकामस्ते पत्नीं याचितवानहम् ।। ६५ ।।

अस्याश्च कीर्तिमालिन्यास्तव भक्त्या च मानद ।।

तुष्टोऽहं संप्रयच्छामि वरं वरय दुर्लभम् ।। ६६ ।।

।। राजोवाच ।। ।।

एष एव वरो देव यद्भवान्परमेश्वरः ।।

भवतापपरीतस्य मम प्रत्यक्षतां गतः ।। ६७ ।।

नान्यं वरं वृणे देव भवतो वरदर्षभात् ।।

अहं च सेयं सा राज्ञी मम माता च मत्पिता ।। ६८ ।।

वैश्यः पद्माकरो नाम तत्पुत्रः सुनयाभिधः ।।

सर्वानेतान्महादेव सदा त्वत्पार्श्वगान्कुरु ।। ६९ ।।

।। सूत उवाच ।। ।।

अथ राज्ञी महाभागा प्रणता कीर्तिमालिनी ।।

भक्त्या प्रसाद्य गिरिशं ययाचे वरमुत्तमम् ।। ३.३.१४.७० ।।

।। राज्ञ्युवाच ।। ।।

चंद्रांगदो मम पिता माता सीमंतिनी च मे ।।

तयोर्याचे महादेव त्वत्पार्श्वे सन्निधिं सदा ।। ७१ ।।

एवमस्त्विवति गौरीशः प्रसन्नो भक्तवत्सलः ।।

तयोः कामवरं दत्त्वा क्षणादंतर्हितोऽभवत् ।। ७२ ।।

सोपि राजा सुरैः सार्धं प्रसादं प्राप्य शूलिनः ।।

सहितः कीर्तिमालिन्या बुभुजे विषयान्प्रियान् ।। ७३ ।।

कृत्वा वर्षायुतं राज्यमव्याहतबलोन्नतिः ।।

राज्यं पुत्रेषु विन्यस्य भेजे शंभोः परं पदम् ।। ७४ ।।

चंद्रांगदोपि राजेंद्रो राज्ञी सीमंतिनी च सा ।।

भक्त्या संपूज्य गिरिशं जग्मतुः शांभवं पदम् ।। ७५ ।।

एतत्पवित्रमघनाशकरं विचित्रं शम्भोर्गुणानुकथनं परमं रहस्यम् ।।

यः श्रावयेद्बुधजनान्प्रयतः पठेद्वा संप्राप्य भोगविभवं शिव मेति सोंते ।। ७६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे भद्रायुशिवप्रसादकथनं नाम चतुर्दशोऽध्यायः ।। ।। १४ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १५



।। सूत उवाच ।। ।।
ऋषभस्यानुभावोयं वर्णितः शिवयोगिनः ।।
अथान्यस्यापि वक्ष्यामि प्रभावं शिवयोगिनः ।। १ ।।
भस्मनश्चापि माहात्म्यं वर्णयामि समासतः ।।
कृतकृत्या भविष्यंति यच्छ्रुत्वा पापिनो जनाः ।। २ ।।
अस्त्येको वामदेवाख्यः शिवयोगी महा तपाः ।।
निर्द्वंद्वो निर्गुणः शांतो निःसंगः समदर्शनः ।। ३ ।।
आत्मारामो जितक्रोधो गृहदारविवर्जितः ।।
अतर्कितगतिर्मौनी संतुष्टो निष्प रिग्रहः ।। ४ ।।
भस्मोद्धूलितसर्वांगो जटामंडलमंडितः ।।
वल्कलाजिनसंवीतो भिक्षामात्रपरिग्रहः ।। ५ ।।
स एकदा चरंल्लोके सर्वानुग्रहतत्परः ।।
क्रौंचारण्यं महाघोरं प्रविवेश यदृच्छया ।। ६ ।।
तस्मिन्निर्मनुजेऽरण्ये तिष्ठत्येकोऽतिभीषणः ।।
क्षुत्तृषाकुलितो नित्यं यः कश्चिद्ब्रह्मराक्षसः ।। ७ ।।
तं प्रविष्टं शिवात्मानं स दृष्ट्वा ब्रह्मराक्षसः ।।
अभिदुद्राव वेगेन जग्धंु क्षुत्परिपीडितः ।। ८ ।।
व्यात्ताननं महाकायं भीमदंष्ट्रं भयानकम् ।।
तमायांतमभिप्रेक्ष्य योगीशो न चचाल सः ।। ९ ।।
अथाभिद्रुत्य तरसा स घोरो वनगोचरः ।।
दोर्भ्यां निष्पीड्य जग्राह निष्कंपं शिवयोगिनम्।।3.3.15.१०।।
तदंगस्पर्शनादेव सद्यो विध्वस्तकिल्बिषः ।।
स ब्रह्मराक्षसो घोरो विषण्णः स्मृतिमाययौ ।। ११ ।।
यथा चिंतामणिं स्पृष्ट्वा लोहं कांचनतां व्रजेत् ।।
यथा जंबूनदीं प्राप्य मृत्तिका स्वर्णतां व्रजेत् ।। १२ ।।
यथा मानसमभ्येत्य वायसा यांति हंसताम् ।।

यथामृतं सकृत्पीत्वा नरो देवत्वमाप्नुयात् ।। ।। १३ ।।
तथैव हि महात्मानो दर्शनस्पर्शनादिभिः ।।
सद्यः पुनंत्यघोपेतान्सत्संगो दुर्लभो ह्यतः ।। १४ ।।
यः पूर्वं क्षुत्पिपासार्तो घोरात्मा विपिने चरः ।।
स सद्यस्तृप्तिमायातः पूर्णानंदो बभूव ह ।। १५ ।।
तद्गात्रलग्नसितभस्मकणानुविद्धः सद्यो विधूतघनपापतमःस्वभावः ।।
संप्राप्तपूर्वभव संस्मृतिरुग्रकार्यस्तत्पादपद्मयुगले प्रणतो बभाषे ।। १६ ।।
।। राक्षस उवाच ।। ।।
प्रसीद मे महायोगिन्प्रसीद करुणानिधे ।।
प्रसीद भवतप्तानामानंदामृवारिधे ।। १७ ।।
क्वाहं पापमतिर्घोरः सर्वप्राणिभयंकरः ।।
क्व ते महानुभावस्य दर्शनं करुणात्मनः ।। १८ ।।
उद्धरोद्धर मां घोरे पतितं दुःखसागरे ।।
तव सन्निधिमात्रेण महानंदोऽभिवर्धते ।। १९ ।।
।। वामदेव उवाच ।। ।।
कस्त्वं वनेचरो घोरो राक्षसोऽत्र किमास्थितः ।।
कथमेतां महाघोरां कष्टां गतिमवाप्तवान् ।। 3.3.15.२० ।।
।। राक्षस उवाच ।। ।।
राक्षसोऽहमितः पूर्वं पंचविंशतिमे भवे ।।
गोप्ता यवनराष्ट्रस्य दुर्जयो नाम वीर्यवान् ।। २१ ।।
सोऽहं दुरात्मा पापीयान्स्वैरचारी मदोत्कटः ।।
दंडधारी दुराचारः प्रचंडो निर्घृणः खलः ।। २२ ।।
युवा बहुकलत्रोऽपि कामासक्तोऽजितेंद्रियः ।।
इमां पापीयसीं चेष्टां पुनरेकां गतोऽस्म्यहम् ।। २३ ।।
प्रत्यहं नूतनामन्या नारीं भोक्तुमनाः सदा ।।
आहृताः सर्वदेशेभ्यो नार्यो भृत्यैर्मदाज्ञया ।। २४ ।।
भुक्त्वाभुक्त्वा परित्यक्तामेकामेकां दिनेदिने ।।
अन्तर्गृहेषु संस्थाप्य पुनरन्याः स्त्रियो धृताः ।। २५ ।।
एवं स्वराष्ट्रात्परराष्ट्रतश्च देशाकरग्रामपुरव्रजेभ्यः ।।
आहृत्य नार्यो रमिता दिनेदिने भुक्वा पुनः कापि न भुज्यते मया ।। २६ ।।
अथान्यैश्च न भुज्यंते मया भुक्तास्तथा स्त्रियः ।।
अन्तर्गृहेषु निहिताः शोचंते च दिवानिशम् ।। २७ ।।

ब्रह्मविट्क्षत्रशूद्राणां यदा नार्यो मया हृताः ।।
मम राज्ये स्थिता विप्राः सह दारैः प्रदुद्रुवुः।। २८ ।।
सभर्तृकाश्च कन्याश्च विधवाश्च रजस्वलाः ।।
आहृत्य नार्यो रमिता मया कामहतात्मना ।।२९।।
त्रिशतं द्विजनारीणां राजस्त्रीणां चतुःशतम् ।।
षट्शतं वैश्यनारीणां सहस्रं शूद्रयोषिताम् ।। 3.3.15.३० ।।
शतं चांडालनद्रीर्णा पुलिंदीनां सहस्रकम् ।।
शैलूषीणां पंचशतं रजकीनां चतुःशतम्।।३१।।
असंख्या वारमुख्याश्च मया भुक्ता दुरात्मना।।
तथापि मयि कामस्य न तृप्तिः समजायत ।। ३२ ।।
एवं दुर्विषयासक्तं मत्तं पानरतं सदा ।।
यौवनेपि महारोगा विविशुर्यक्ष्मकादयः ।। ३३ ।।
रोगार्दितोऽनपत्यश्च शत्रुभिश्चापि पीडितः ।।
त्यक्तोमात्यैश्च भृत्यैश्च मृतोऽहं स्वेन कर्मणा ।। ३४ ।।
आयुर्विनश्यत्ययशो विवर्धते भाग्यं क्षयं यात्यतिदुर्गतिं व्रजेत् ।।
स्वर्गाच्च्यवंते पितरः पुरातना धर्मव्यपेतस्य नरस्य निश्चितम् ।। ३५ ।।
अथाहं किंकरैर्याम्यैर्नीतो वैवस्वतालयम् ।।
ततोऽहं नरके घोरे तत्कुण्डे विनिपातितः ।। ३६ ।।
तत्राहं नरके घोरे वर्षाणामयुतत्रयम् ।।
रेतः पिबन्पीड्यमानो न्यवसं यमकिंकरैः ।। ३७ ।।
ततः पापावशेषेण पिशाचो निर्जने वने ।।
सहस्रशिश्नः संजातो नित्यं क्षुत्तृषयाकुलः ।। ३८ ।।
पैशाचीं गतिमाश्रित्य नीतं दिव्यं शरच्छतम् ।।
द्वितीयेहं भवे जातो व्याघ्रः प्राणिभयंकरः ।। ३९ ।।
तृतीयेऽजगरो घोरश्चतुर्थेऽहं भवे वृकः ।।
पंचमे विड्वराहश्च षष्ठेऽहं कृकलासकः ।। 3.3.15.४० ।।
सप्तमेऽहं सारमेयः सृगालश्चाष्टमे भवे ।।
नवमे गवयो भीमो मृगोऽहं दशमे भवे ।। ४१ ।।
एकादशे मर्कटश्च गृध्रोऽहं द्वादशे भवे ।।
त्रयोदशेऽहं नकुलो वायसश्च चतु र्दशे ।। ४२ ।।
अच्छभल्लः पंचदशे षोडशे वनकुक्कुटः।।
गर्दभोऽहं सप्तदशे मार्जारोष्टादशे भवे ।।४३।।

एकोनविंशे मण्डूकः कूर्मो विंशतिमे भवे ।।
एकविंशे भवे मत्स्यो द्वाविंशे मूषकोऽभवम् ।। ४४ ।।
उलूकोहं त्रयोविंशे चतुर्विंशे वनद्विपः ।।
पंचविंशे भवे चास्मिञ्जातोहं ब्रह्मराक्षसः ।। ४५ ।।
क्षुत्परीतो निराहारो वसाम्यत्र महावने ।।
इदानीमागतं दृष्ट्वा भवंतं जग्धुमुत्सुकः ।।
त्वद्देहस्पर्शमात्रेण जाता पूर्वभवस्मृतिः ।। ४६ ।।
गतजन्म सहस्राणि स्मराम्यद्य त्वदंतिके ।।
निर्वेदश्च परो जातः प्रसन्नं हृदयं च मे ।। ४७ ।।
ईदृशोऽयं प्रभावस्ते कथं लब्धो महामते ।।
तपसा वापि तीव्रेण किमु तीर्थनिषेवणात् ।। ४८ ।।
योगेन देवशक्त्या वा मंत्रैर्वानंतशक्तिभिः ।।
तत्त्वतो ब्रूहि भगवंस्त्वामहं शरणं गतः ।। ४९ ।।
।। वामदेव उवाच ।। ।।
एष मद्गात्रलग्नस्य प्रभावो भस्मनो महान् ।।
यत्संपर्कात्तमोवृत्तेस्तवेयं मतिरुत्तमा ।। 3.3.15.५० ।।
को वेद भस्मसामर्थ्यं महादेवा दृते परः ।।
दुर्विभाव्यं यथा शंभोर्माहात्म्यं भस्मनस्तथा ।। ५१ ।।
पुरा भवादृशः कश्चिद्ब्राह्मणो धर्मवर्जितः ।।
द्राविडेषु स्थितो मूढः कर्मणा शूद्रतां गतः ।। ५२ ।।
चौर्यवृत्तिर्नैष्कृतिको वृषलीरतिलालसः।।
कदाचिज्जारतां प्राप्तः शूद्रेण निहतो निशि ।। ५३ ।।
तच्छवस्य बहिर्ग्रामा त्क्षिप्तस्य प्रेतकर्मणः ।।
चचार सारमेयोंऽगे भस्मपादो यदृच्छया ।। ५४ ।।
अथ तं नरके घोरे पतितं शिवकिंकराः।।
निन्युर्विमानमारोप्य प्रसह्य यमकिंकरान् ।। ५५ ।।
शिवदूतान्समभ्येत्य यमोपि परिपृष्टवान् ।।
महापातककर्त्तारं कथमेनं निनीषथ ।। ५६ ।।
अथोचुः शिवदूतास्ते पश्यास्य शवविग्रहम् ।।
वक्षोललाटदोर्मूलान्यंकितानि सुभस्मना ।। ५७ ।।
अत एनं समानेतुमागताः शिवशासनात् ।।
नास्मान्निषेद्धुं शक्तोसि मास्त्वत्र तव संशयः ।। ५८ ।।

इत्याभाष्य यमं शंभोर्दूतास्तं ब्राह्मणं ततः ।।
पश्यतां सर्वलोकानां निन्युर्लोकमनामयम् ।। ५९ ।।
तस्मादशेषपापानां सद्यः संशोधनं परम् ।।
शंभोर्विभूषणं भस्म सततं ध्रियते मया ।। 3.3.15.६० ।।
इत्थं निशम्य माहात्म्यं भस्मनो ब्रह्मराक्षसः ।।
विस्तरेण पुनः श्रोतु मौत्कंठ्यादित्यभाषत ।। ६१ ।।
साधुसाधु महायोगिन्धन्योस्मि तव दर्शनात् ।।
मां विमोचय धर्मात्मन्घोरादस्मात्कुजन्मनः ।। ६२ ।।
किंचिदस्तीह मे भाति मया पुण्यं पुराकृतम् ।।
अतोहं त्वत्प्रसादेन मुक्तोस्म्यद्य द्विजोत्तम ।। ६३ ।।
एकस्मै शिवभक्ताय तस्मिन्पार्थिवजन्मनि ।।
भूमिर्वृत्तिकरी दत्ता सस्यारामान्विता मया ।। ९९ ।।
यमेनापि तदैवोक्तं पंचविंशतिमे भवे ।।
कस्यचिद्योगिनः संगान्मोक्ष्यसे संसृतेरिति ।। ६५ ।।
तदद्य फलितं पुण्यं यत्किंचित्प्राग्भवार्जितम् ।।
अतो निर्मनुजारण्ये संप्राप्तस्तव संगमः ।। ६६ ।।
अतो मां घोरपाप्मानं संसरंतं कुजन्मनि ।।
समुद्धर कृपासिन्धो दत्त्वा भस्म समंत्रकम् ।। ६७ ।।
कथं धार्यमिदं भस्म को मंत्रः को विधिः शुभः ।।
कः कालः कश्च वा देशः सर्वं कथय मे गुरो ।। ६८ ।।
भवादृशा महात्मानः सदा लोकहिते रताः ।।
नात्मनो हितमिच्छंति कल्पवृक्षसधर्मिणः ।। ६९ ।।
।। सूत उवाच ।। ।।
इत्युक्तस्तेन योगीशो घोरेण वनचारिणा ।।
भूयोपि भस्ममाहात्म्यं वर्णयामास तत्त्ववित् ।। 3.3.15.७० ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे भस्ममाहात्म्यकथनं नाम पंचदशोऽध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १६

https://sa.wikisource.org/s/g5y
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | ब्रह्मोत्तर खण्डः

।। सूत उवाच । ।।
शृणुध्वं मुनयः श्रेष्ठा वामदेवस्य भाषितम् ।। १ ।।
।। वामदेव उवाच ।। ।।
पुरा मंदरशैलेंद्रे नानाधातुविचित्रिते ।।
नानासत्वसमाकीर्णे नानाद्रुमलताकुले ।। २ ।।
कालाग्निरुद्रो भगवान्कदाचिद्विश्ववंदितः ।।
समाससाद भूतेशः स्वेच्छया परमेश्वरः ।।३ ।।
समंतात्समुपातिष्ठन्रुद्राणां शतकोटयः ।।
तेषां मध्ये समासीनो देवदेवस्त्रिलोचनः ।। ४ ।।
तत्रागच्छत्सुरश्रेष्ठो देवैः सह पुरंदरः ।।
तथाग्निर्वरुणो वायुर्यमो वैवस्वतस्तथा ।। ५ ।।
गंधर्वाश्चित्रसेनाद्याः खेचराः पन्नगादयः ।।
विद्याधराः किंपुरुषाः सिद्धाः साध्याश्च गुह्यकाः ।। ६ ।।
ब्रह्मर्षयो वसिष्ठाद्या नारदाद्याः सुरर्षयः ।।
पितरश्च महात्मानो दक्षाद्याश्च प्रजेश्वराः ।। ७ ।।
उर्वश्याद्याश्चाप्सरसश्चंडिकाद्याश्च मातरः ।।
आदित्या वसवो दस्रौ विश्वेदेवा महौजसः ।। ८ ।।
अथान्ये भूतपतयो लोकसंहरणे क्षमाः ।।
महाकालश्च नंदी च तथा वै शंखपालकौ ।। ९ ।।
वीरभद्रो महातेजाः शंकुकर्णो महाबलः ।।
घंटाकर्णश्च दुर्धर्षो मणिभद्रो वृकोदरः ।। 3.3.16.१० ।।
कुंडोदरश्च विकटास्तथा कुभोदरो बली ।।
मंदोदरः कर्णधारः केतुर्भृंगीरिटिस्तथा ।। ११ ।।
भूतनाथास्तथान्ये च महाकाया महौजसः ।।
कृष्णवर्णास्तथा श्वेताः केचिन्मंडूकसप्रभाः ।। १२ ।।
हरिता धूसरा धूम्राः कर्बुरा पीतलोहिताः।।

चित्रवर्णा विचित्रांगाश्चित्रलीला मदोत्कटाः ।। १३ ।।
नानायुधोद्यतकरा नानावाहनभूषणाः ।।
केचिद्व्याघ्रमुखाः केचित्सूकरास्या मृगा ननाः ।। १४ ।।
केचिच्च नक्रवदनाः सारमेयमुखाः परे ।।
सृगालवदनाश्चान्य उष्ट्राभवदनाः परे ।। १५ ।।
केचिच्छरभभेरुंडसिंहाश्चोष्ट्रबकाननाः ।।
एकवक्त्रा द्विवक्त्राश्च त्रिमुखाश्चैव निर्मुखाः ।। १६ ।।
एकहस्तास्त्रिहस्ताश्च पंचहस्तास्त्वहस्तकाः ।।
अपादा बहुपादाश्च बहुकर्णैककर्णकाः ।।१७।।
एकनेत्राश्चतुर्नेत्रा दीर्घाः केचन वामनाः ।।
समंतात्परिवार्येशं भूतनाथमुपासते ।। १८ ।।
अथागच्छन्महातेजा मुनीनां प्रवरः सुधीः ।।
सनत्कुमारो धर्मात्मा तं द्रष्टुं जगदीश्वरम् ।। १९ ।।
तं देवदेवं विश्वेशं सूर्यकोटिसमप्रभम् ।।
महाप्रलयसंक्षुब्धसप्तार्णवघनस्वनम् ।। 3.3.16.२० ।।
संवर्त्ताग्निसमाटोपं जटामंडलशोभितम् ।।
अक्षीणभालनयनं ज्वालाम्लानमुखत्विषम् ।। २१ ।।
प्रदीप्तचूडामणिना शशिखंडेन शोभितम् ।।
तक्षकं वामकर्णेन दक्षिणेन च वासुकिम् ।। २२ ।।
बिभ्राणं कुंडलयुगं नीलरत्नमहाहनुम् ।।
नीलग्रीवं महाबाहुं नागहारविराजितम् ।। २३ ।।
फणिराजपरिभ्राजत्कंक णांगदमुद्रिकम् ।।
अनंतगुणसाहस्रमणिरंजितमेखलम् ।। २४ ।।
व्याघ्रचर्मपरीधानं घंटादर्पणभूषितम् ।।
कर्कोटकमहापद्मधृतराष्ट्रधनंजयैः ।।२५।।
कूजन्नूपुरसंघुष्टपादपद्मविराजितम् ।।
प्रासतोमरखट्वाङ्गशूलटंकधनुर्धरम् ।। २६ ।।
अप्रधृष्यमनिर्देश्यमचिंत्याकारमीश्वरम् ।।
रत्नसिंहासनारूढं प्रण नाम महामुनिः ।। २७ ।।
तं भक्तिभारोच्छ्वसितांतरात्मा संस्तूय वाग्भिः श्रुतिसंमिताभिः ।।
कृतांजलिः प्रश्रयनम्रकंधरः पप्रच्छ धर्मानखिलाञ्छु भप्रदान् ।। २८ ।।
यान्यानपृच्छत मुनिस्तांस्तान्धर्मानशेषतः ।।

प्रोवाच भगवान्रुद्रो भूयो मुनिरपृच्छत ।। २९ ।।

।। सनत्कुमार उवाच ।। ।।

श्रुतास्ते भगवन्धर्मास्त्वन्मुखान्मुक्तिहेतवः ।।

यैर्मुक्तपापा मनुजास्तरिष्यंति भवार्णवम् ।। 3.3.16.३० ।।

अथापरं विभो धर्ममल्पायासं महाफलम् ।।

ब्रूहि कारुण्यतो मह्यं सद्यो मुक्तिप्रदं नृणाम् ।। ३१ ।।

अभ्यासबहुला धर्माः शास्त्रदृष्टाः सहस्रशः ।।

सम्यक्संसेविताः कालात्सिद्धिं यच्छंति वा न वा ।। ३२ ।।

अतो लोकहितं गुह्यं भुक्तिमुक्त्योश्च साधनम् ।।

धर्मं विज्ञातुमिच्छामि त्वत्प्रसादान्महेश्वर ।। ३३ ।।

।। श्रीरुद्र उवाच ।। ।।

सर्वेषामपि धर्माणामुत्तमं श्रुतिचोदितम् ।।

रहस्यं सर्वजंतूनां यत्त्रिपुंड्रस्य धारणम् ।। ३४ ।।

।। सनत्कुमार उवाच।। ।।

त्रिपुंड्रस्य विधिं ब्रूहि भगवञ्जगतां पते ।।

तत्त्वतो ज्ञातुमिच्छामि त्वत्प्रसादान्महेश्वर ।। ३५ ।।

कति स्थानानि किं द्रव्यं का शक्तिः का च देवता ।।

किं प्रमाणं च कः कर्त्ता के मंत्रास्तस्य किं फलम् ।। ३६ ।।

एतत्सर्वमशेषेण त्रिपुंड्रस्य च लक्षणम् ।।

ब्रूहि मे जगतां नाथ लोकानुग्रहकाम्यया ।। ३७ ।।

।। श्रीरुद्र उवाच ।। ।।

आग्नेयमुच्यते भस्म दग्धगोमयसंभवम् ।।

तदेव द्रव्यमित्युक्तं त्रिपुंड्रस्य महामुने ।। ३८ ।।

सद्योजातादिभिर्ब्रह्ममयैर्मंत्रैश्च पंचभिः।।

परिगृह्याग्निरित्यादिमंत्रैर्भस्माभिमंत्रयेत् ।। ३९ ।।

मानस्तोकेति संमृज्य शिरो लिंपेच्च त्र्यंबकम् ।।

त्रियायुषादिभिर्मंत्रैर्ललाटे च भुजद्वये ।।

स्कंधे च लेपयेद्भस्म सजलं मंत्रभावितम् ।। 3.3.16.४० ।।

तिस्रो रेखा भवंत्येषु स्थानेषु मुनिपुंगव ।।

भ्रुवोर्मध्यं समारभ्य यावदंतो भ्रुवोर्भवेत् ।। ४१ ।।

मध्यमानामिकांगुल्योर्मध्ये तु प्रतिलोमतः ।।

अंगुष्ठेन कृता रेखा त्रिपुंड्रस्याभिधीयते ।। ४२ ।।

तिसृणामपि रेखाणां प्रत्येकं नव देवताः ।।
अकारो गार्हपत्यश्च ऋग्भूर्लोको रजस्तथा ।। ४३ ।।
आत्मा चैव क्रियाशक्तिः प्रातः सवनमेव च ।।
महादेवस्तु रेखायाः प्रथमायास्तु देवता ।। ४४ ।।
उकारो दक्षिणाग्निश्च नभः सत्त्वं यजुस्तथा ।।
मध्यंदिनं च सवनमिच्छाशक्त्यंतरात्मकौ ।। ४५ ।।
महेश्वरश्च रेखाया द्वितीयायाश्च देवता ।।
मकाराहवनीयौ च परमात्मा तमो दिवः ।। ४६ ।।
ज्ञानशक्तिः सामवेदस्तृतीयसवनं तथा ।।
शिवश्चेति तृतीयाया रेखायाश्चाधिदेवता ।। ४७ ।।
एता नित्यं नमस्कृत्य त्रिपुंड्रं धारयेत्सुधीः ।।
महेश्वरव्रतमिदं सर्ववेदेषु कीर्तितम् ।।४८।।
मुक्तिकामैर्नरैः सेव्यं पुनस्तेषां न संभवः ।।
त्रिपुंड्रं कुरुते यस्तु भस्मना विधिपूर्वकम् ।।४९।।
ब्रह्मचारी गृहस्थो वा वनस्थो यतिरेव वा।।
महापातकसंघातैर्मुच्यते चोपपातकैः।।3.3.16.५०।।
तथान्यैः क्षत्रविट्शूद्रस्त्रीगोहत्या दिपातकैः।।
वीरहत्याश्वहत्याभ्यां मुच्यते नात्र संशयः।।५१।।
अमंत्रेणापि यः कुर्यादज्ञात्वा महिमोन्नतिम्।।
त्रिपुंड्रं भालपटले मुच्यते सर्वपातकैः ।।५२।।
परद्रव्यापहरणं परदाराभिमर्शनम्।।
परनिंदा परक्षेत्रहरणं परपीडनम्।।५३।।
सस्यारामादिहरणं गृहदाहादिकर्म च ।।
असत्यवादं पैशुन्यं पारुष्यं वेदविक्र यः।।
कूटसाक्ष्यं व्रतत्यागः कैतवं नीचसेवनम् ।।५४।।
गोभूहिरण्यमहिषी तिलकंबलवाससाम्।।
अन्नधान्यजलादीनां नीचेभ्यश्च परिग्रहः।।५५।।
दासी वेश्याभुजंगेषु वृषलीषु नटीषु च ।।
रजस्वलासु कन्यासु विधवासु च संगमः ।। ५६ ।।
मांसचर्मरसादीनां लवणस्य च विक्रयः ।।
एवमादीन्य संख्यानि पापानि विविधानि च ।। ५७ ।।
सद्य एव विनश्यंति त्रिपुंड्रस्य च धारणात् ।।

शिवद्रव्यापहरणं शिवनिंदा च कुत्रचित् ।। ५८ ।।
निंदा च शिवभक्तानां प्रायश्चितैर्न शुद्ध्यति ।।
रुद्राक्षा यस्य गात्रेषु ललाटे च त्रिपुंड्रकम् ।।५९।।
स चांडालोऽपि संपूज्यः सर्ववर्णोत्तमो भवेत् ।।
यानि तीर्थानि लोकेऽस्मिन्गंगायाः सरितश्च याः ।। 3.3.16.६० ।।
स्नातो भवति सर्वत्र ललाटे यस्त्रिपुंड्रधृक् ।।
सप्तकोटिमहामंत्राः पंचाक्षरपुरःसराः ।। ।। ६१ ।।
तथान्ये कोटिशो मंत्राः शैवाः कैवल्यहेतवः ।।
ते सर्वे येन जप्ताः स्युर्यो बिभर्ति त्रिपुंड्रकम् ।। ६२ ।।
सहस्रं पूर्वजातानां सहस्रं च जनिष्यताम् ।।
स्ववंशजानां मर्त्यानामुद्धरेद्यस्त्रिपुंड्रधृक्।। ६३ ।।
इह भुक्त्वाखिलान्भोगान्दीर्घायुर्व्याधिवर्जितः ।।
जीवितांते च मरणं सुखनैवं प्रपद्यते ।। ६४ ।।
अष्टैश्वर्यगुणोपेतं प्राप्य दिव्यं वपुः शुभम् ।।
दिव्यं विमानमारुह्य दिव्यस्त्रीशतसेवितः ।। ६५ ।।
विद्याधराणां सिद्धानां गंधर्वाणां महौजसाम् ।।
इंद्रादिलोकपालानां लोकेषु च यथाक्रमम् ।। ६६ ।।
भुक्त्वा भोगान्सुविपुलान्प्रजेशानां पुरेषु च ।।
ब्रह्मणः पदमासाद्य तत्र कल्पशतं रमेत् ।। ६७ ।।
विष्णोर्लोके च रमते यावद्ब्रह्मशतत्रयम् ।। ६८ ।।
शिवलोकं ततः प्राप्य रमते कालमक्षयम् ।।
शिवसायुज्यमाप्नोति न स भूयोऽभिजायते ।। ६९ ।।
सर्वोपनिषदां सारं समालोच्य मुहुर्मुहुः ।।
इदमेव हि निर्णीतं परं श्रेयस्त्रिपुंड्रकम् ।। 3.3.16.७० ।।
एतत्त्रिपुंड्रमाहात्म्यं समासात्कथितं मया ।।
रहस्यं सर्वभूतानां गोपनीयमिदं त्वया ।। ७१ ।।
इत्युक्त्वा भगवान्रुद्रस्तत्रैवांतरधीयत ।।
सनत्कुमारोऽपि मुनिर्जगाम ब्रह्मणः पदम् ।। ७२ ।।
तवापि भस्मसंपर्कात्संजाता विमला मतिः ।।
त्वमपि श्रद्धया पुण्यं धारयस्व त्रिपुंड्रकम् ।। ७३ ।।
।। सूत उवाच ।। ।।
इत्युक्त्वा वामदेवस्तु शिवयोगी महातपाः ।।

अभिमंत्र्य ददौ भस्म घोराय ब्रह्मरक्षसे ।। ७४ ।।
तेनासौ भालपटले चक्रे तिर्य क्त्रिपुंड्रकम् ।।
ब्रह्मराक्षसतां सद्यो जहौ तस्यानुभावतः ।। ७५ ।।
स बभौ सूर्यसंकाशस्तेजोमण्डलमंडितः ।।
दिव्यावयवरूपैश्च दिव्यमाल्यांबरो ज्ज्वलः ।। ७६ ।।
भक्त्या प्रदक्षिणीकृत्य तं गुरुं शिवयोगिनम् ।।
दिव्यं विमानमारुह्य पुण्यलोकान्जगाम सः ।। ७७ ।।
वामदेवो महायोगी दत्त्वा तस्मै परां गतिम् ।।
चचार लोके मूढात्मा साक्षादिव शिवः स्वयम् ।। ७८ ।।
य एतद्भस्ममाहात्म्यं त्रिपुंड्रं शृणुयान्नरः ।।
श्रावयेद्वा पठेद्वापि स हि याति परां गतिम् ।। ७९ ।।
कथयति शिवकीर्तिं संसृतेर्मुक्तिहेतुं प्रणमति शिवयोगिध्येयमीशांघ्रिपद्मम् ।।
रचयति शिवभक्तोद्भासि भाले त्रिपुंड्रं न पुनरिह जनन्या गर्भवासं भजेत्सः ।। 3.3.16.८० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तर खण्डे भस्ममाहात्म्यकथनं नाम षोडशोऽध्यायः ।। १६ ।। ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १७

https://sa.wikisource.org/s/g7p



।। ऋषय ऊचुः ।। ।।

वेदवेदांगतत्त्वज्ञैर्गुरुभिर्ब्रह्मवादिभिः ।।

नृणां कृतोपदेशानां सद्यः सिद्धिर्हि जायते।।१।।

अथान्यजनसामान्यैर्गुरुभिर्नीतिकोविदैः।।

नृणां कृतोपदेशानां सिद्धिर्भवति कीदृशी ।। २ ।।

।। ।। सूत उवाच ।। ।।

श्रद्धैव सर्वधर्मस्य चातीव हितकारिणी ।।

श्रद्धयैव नृणां सिद्धिर्जायते लोकयोर्द्वयोः ।। ३ ।।

श्रद्धया भजतः पुंसः शिलापि फलदायिनी ।।

मूर्खोऽपि पूजितो भक्त्या गुरुर्भवति सिद्धिदः ।। ४ ।।

श्रद्धया पठितो मन्त्रस्त्वबद्धोपि फलप्रदः ।।

श्रद्धया पूजितो देवो नीचस्यापि फलप्रदः ।। ६. ।।

अश्रद्धया कृता पूजा दानं यज्ञस्तपो व्रतम् ।।

सर्वं निष्फलतां याति पुष्पं वन्ध्यत रोरिव ।। ६ ।।

सर्वत्र संशयाविष्टः श्रद्धाहीनोऽतिचंचलः ।।

परमार्थात्परिभ्रष्टः संसृतेर्न हि मुच्यते ।। ७ ।।

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।।

यादृशी भावना यत्र सिद्धिर्भवति तादृशी ।। ८ ।।

अतो भावमयं विश्वं पुण्यं पापं च भावतः ।।

ते उभे भावहीनस्य न भवेतां कदाचन ।। ९ ।।

अत्रेदं परमाश्चर्यमाख्यानमनुवर्ण्यते ।।

अश्रद्धा सर्वमर्त्यानां येन सद्यो निवर्तते ।। ३.३.१७.१० ।।

आसीत्पांचालराजस्य सिंहकेतुरिति श्रुतः ।।

पुत्रः सर्वगुणोपेतः क्षात्रधर्मरतः सदा ।। ११ ।।

स एकदा कतिपयैर्भृत्यैर्युक्तो महाबलः ।।
जगाम मृगयाहेतोर्बहु सत्त्वान्वितं वनम् ।। १२ ।।
तद्भृत्यः शबरः कश्चिद्विचरन्मृगयां वने ।।
ददर्श जीर्णं स्फुटितं पतितं देवतालयम् ।। १३ ।।
तत्रापश्यद्भिन्नपीठं पतितं स्थंडिलोपरि ।।
शिवलिङ्गमृजुं सूक्ष्मं मूर्तं भाग्यमिवात्मनः ।। १४ ।।
स समादाय वेगेन पूर्वकर्मप्रचोदितः ।।
तस्मै संदर्शयामास राज पुत्राय धीमते ।। १५ ।।
पश्येदं रुचिरं लिंगं मया दृष्टमिह प्रभो ।।
तदेतत्पूजयिष्यामि यथाविभवमादरात् ।। १६ ।।
अस्य पूजाविधिं ब्रूहि यथा देवो महेश्वरः ।।
अमंत्रज्ञैश्च मन्त्रज्ञैः प्रीतो भवति पूजितः ।। १७ ।।
इति तेन निषादेन पृष्टः पार्थिवनंदनः ।।
प्रत्युवाच प्रहस्यैनं परिहास विचक्षणः ।। १८ ।।
संकल्पेन सदा कुर्यादभिषेकं नवांभसा ।।
उपवेश्यासने शुद्धे शुभैर्गंधाक्षतैर्नवैः ।।
वन्यैः पत्रैश्च कुसुमैर्धूपैर्दीपैश्च पूजयेत ।। ।। १९ ।।
चिताभस्मोपहारं च प्रथमं परिकल्पयेत् ।।
आत्मोपभोग्येनान्नेन नैवद्यं कल्पयेद्बुधः ।। ३.३.१७.२० ।।
पुनश्च धूपदीपादीनुपचारान्प्रकल्पेत् ।।
नृत्यवादित्रगीतादीन्यथावत्परिकल्पयेत् ।। २१ ।।
नमस्कृत्वा तु विधिवत्प्रसादं धारयेद्बुधः ।।
एष साधारणः प्रोक्तः शिवपूजाविधिस्तव ।। ।। २२ ।।
चिताभस्मोपहारेण सद्यस्तुष्यति शंकरः ।। २३ ।।
।। सूत उवाच ।। ।।
परिहासरसेनेत्थं शासितः स्वामिनाऽमुना ।।
स चंडकाख्यः शबरो मूर्ध्ना जग्राह तद्वचः ।। २४ ।।
ततः स्वभवनं प्राप्य लिंगमूर्तिं महेश्वरम् ।।

प्रत्यहं पूजयामास चिताभस्मोपहारकृत् ।। २५ ।।

यच्चात्मनः प्रियं वस्तु गन्धपुष्पाक्षतादिकम् ।।

निवेद्य शंभवे नित्यमुपायुंक्त ततः स्वयम् ।। २६ ।।

एवं महेश्वरं भक्त्या सह पत्न्याभ्यपूजयत् ।।

शबरः सुखमासाद्य निनाय कतिचित्समाः ।। २७ ।।

एकदा शिवपूजायै प्रवृत्तः शबरोत्तमः ।।

न ददर्श चिताभस्म पात्रे पूरितमण्वपि ।। २८ ।।

अथासौ त्वरितो दूरमन्विष्यन्परितो भ्रमन् ।।

न लब्धवांश्चिताभस्म श्रांतो गृहमगात्पुनः ।। २९ ।।

तत आहूय पत्नीं स्वां शबरो वाक्यमब्रवीत् ।।

न लब्धं मे चिताभस्म किं करोमि वद प्रिये ।।३.३.१७.३०।।

शिवपूजांतरायो मे जातोद्य बत पाप्मनः ।।

पूजां विना क्षणमपि नाहं जीवितुमुत्सहे ।।३१।।

उपायं नात्र पश्यामि पूजोपकरणे हते ।।

न गुरोश्च विहन्येत शासनं सकलार्थदम् ।। ३२ ।।

इति व्याकुलितं दृष्ट्वा भर्त्तारं शबरांगना ।।

प्रत्यभाषत मा भैस्त्वमुपायं प्रवदामि ते ।। ३३ ।।

इदमेव गृहं दग्ध्वा बहुकालोपबृंहितम् ।।

अहमग्निं प्रवेक्ष्यामि चिताभस्म भवेत्ततः ।। ३४ ।।

।। शबर उवाच ।। ।।

धर्मार्थकाममोक्षाणां देहः परमसाधनम् ।।

कथं त्यजसि तं देहं सुखार्थं नवयौवनम् ।। ३५ ।।

अधुना त्वनपत्या त्वमभुक्तविषयासवा ।।

भोगयोग्यमिमं देहं कथं दग्धुमिहेच्छसि ।। ३६ ।।

।। शबर्युवाच ।। ।।

एतावदेव साफल्यं जीवितस्य च जन्मनः ।।

परार्थे यस्त्यजेत्प्राणाञ्छिवार्थे किमुत स्वयम् ।। ३७ ।।

किं नु तप्तं तपो घोरं किं वा दत्तं मया पुरा ।।

किं वार्चनं कृतं शंभोः पूर्वजन्मशतांतरे ।। ३८ ।।
किं वा पुण्यं मम पितुः का वा मातुः कृतार्थता ।।
यच्छिवार्थे समिद्धेऽग्नौ त्यजाम्येतत्कलेवरम् ।। ३९ ।।
इत्थं स्थिरां मतिं दृष्ट्वा तस्या भक्तिं च शंकरे ।।
तथेति दृढसंकल्पः शबरः प्रत्यपूजयत् ।। ३.३.१७.४० ।।
सा भर्त्तारमनुप्राप्य स्नात्वा शुचिरलंकृता ।।
गृहमादीप्य तं वह्निं भक्त्या चक्रे प्रदक्षिणम् ।। ४१ ।।
नमस्कृत्वात्मगुरवे ध्यात्वा हृदि सदाशिवम् ।।
अग्निप्रवेशाभिमुखी कृतांजलिरिदं जगौ ।। ४२ ।।
।। शबर्युवाच ।। ।।
पुष्पाणि संतु तव देव ममेंद्रियाणि धूपोऽगुरुर्वपुरिदं हृदयं प्रदीपः ।।
प्राणा हवींषि करणानि तवाक्षताश्च पूजाफलं व्रजतु सांप्रतमेष जीवः ।। ४३ ।।
वांछामि नाहमपि सर्वधनाधिपत्यं न स्वर्गभूमिमचलां न पदं विधातुः ।।
भूयो भवामि यदि जन्मनिजन्मनि स्यां त्वत्पादपंकजलसन्मकरंदभृंगी ।। ४४ ।।
जन्मानि संतु मम देव शताधिकानि माया न मे वि शतु चित्तमबोधहेतुः ।।
किंचित्क्षणार्धमपि ते चरणारविन्दान्नापैतु मे हृदयमीश नमोनमस्ते ।।४५।।
इति प्रसाद्य देवेशं शबरी दृढनिश्चया ।।
विवेश ज्वलितं वह्निं भस्मसादभवत्क्षणात् ।। ४६ ।।
शबरोपि च तद्भस्म यत्नेन परिगृह्य सः ।।
चक्रे दग्धगृहोपान्ते शिवपूजां समाहितः ।। ४६ ।।
अथ सस्मार पूजांते प्रसादग्रहणोचिताम् ।।
दयितां नित्यमायांतीं प्रांजलिं विनयान्विताम् ।। ४८ ।।
स्मृतमात्रां तदापश्यदागतां पृष्ठतः स्थिताम् ।।
पूर्वेणावयवेनैव भक्तिनम्रां शुचिस्मिताम् ।। ४९ ।।
तां वीक्ष्य शबरः पत्नीं पूर्ववत्प्रांजलिं स्थिताम् ।।
भस्मावशेषितगृहं यथापूर्वमवस्थितम् ।।। ।। ३.३.१७.५० ।।
अग्निर्दहति तेजोभिः सूर्यो दहति रश्मिभिः ।।
राजा दहति दंडेन ब्राह्मणो मनसा दहेत् ।। ५१ ।।

किमयं स्वप्न आहोस्वित्किं वा माया भ्रमात्मिका ।।

इति विस्मयसंभ्रातस्तां भूयः पर्यपृच्छत ।। ५२ ।।

अपि त्वं च कथं प्राप्ता भस्मभूतासि पावके ।।

दग्धं च भवनं भूयः कथं पूर्व वदास्थितम् ।। ५३ ।।

।। शबर्युवाच ।। ।।

यदा गृहं समुद्दीप्य प्रविष्टाहं हुताशने ।।

तदात्मानं न जानामि न पश्यामि हुताशनम् ।। ५४ ।।

न तापलेशोप्यासीन्मे प्रविष्टाया इवोदकम् ।।

सुषुप्तेव क्षणार्धेन प्रबुद्धास्मि पुनः क्षणात् ।। ५५ ।।

तावद्भवनमद्राक्षमदग्धमिव सुस्थितम् ।।

अधुना देवपूजांते प्रसादं लब्धुमागता ।। ५६ ।।

एवं परस्परं प्रेम्णा दंपत्योर्भाषमाणयोः ।।

प्रादुरासीत्तयोरग्रे विमानं दिव्यमद्भुतम् ।। ५७ ।।

तस्मिन्विमाने शतचन्द्रभास्वरे चत्वार ईशानुचराः पुरःसराः ।।

हस्ते गृहीत्वाथ निषाददंपती आरोपयामासुरमुक्तविग्रहौ ।। ५८ ।।

तयोर्निषाददंपत्योस्तत्क्षणादेव तद्वपुः ।।

शिवदूतकरस्पर्शात्तत्सारूप्यमवाप ह ।। ५९ ।।

तस्माच्छ्रद्धैव सर्वेषु विधेया पुण्यकर्मसु ।।

नीचोपि शबरः प्राप श्रद्धया योगिनां गतिम् ।। ३.३.१७.६० ।।

किं जन्मना सकलवर्णजनोत्तमेन किं विद्यया सकलशास्त्रविचारवत्या ।।

यस्यास्ति चेतसि सदा परमेशभक्तिः कोऽन्यस्ततस्त्रिभुवने पुरुषोस्ति धन्यः ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे भस्ममाहात्म्यवर्णनं नाम सप्तदशोऽध्यायः ।। १७ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १८

https://sa.wikisource.org/s/gae
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | ब्रह्मोत्तर खण्डः

।। सूत उवाच ।। ।।

अथाहं संप्रवक्ष्यामि सर्वधर्मोत्तमोत्तमम् ।।

उमामहेश्वरं नाम व्रतं सर्वार्थसिद्धिदम् ।। १ ।।

आनर्त्त संभवः कश्चिन्नाम्ना वेदरथो द्विजः ।।

कलत्रपुत्रसंपन्नो विद्वानुत्तमवंशजः ।। २ ।।

तस्यैवं वर्तमानस्य ब्राह्मणस्य गृहाश्रमे ।।

बभूव शारदानाम कन्या कमललोचना ।।३।।

तां रूपलक्षणोपेतां बालां द्वादशहायनाम् ।।

ययाचे पद्मनाभाख्यो मृतदारश्च स द्विजः ।। ४ ।।

महाधनस्य शांतस्य सदा राजसखस्य च ।।

याञ्चाभंगभयात्तस्य तां कन्यां प्रददौ पिता ।। ५ ।।

मध्यंदिने कृतोद्वाहः स विप्रः श्वशुरालये ।।

संध्यामुपासितुं सायं सरस्तटमुपाययौ ।।६।।

उपास्य संध्यां विधिवत्प्रत्यागच्छत्तमोवृते ।।

मार्गे दष्टो भुजंगेन ममार निजकर्मणा ।।७।।

तस्मिन्मृते कृतोद्वाहे सहसा तस्य बांधवाः ।।

चुक्रुशुः शोकसंतप्तौ श्वशुरावस्य कन्यका ।। ८ ।।

निर्हृत्य तं बंधुजना जग्मुः स्वं स्वं निवेशनम् ।।

शारदा प्राप्तवैधव्या पितुरेवालये स्थिता ।।९।।

भूताच्छादनभोज्येन भर्त्रा विरहिता सती।।

निनाय कतिचिन्मासान्सा बाला पितृमंदिरे।।३.३.१८.१०।।

एकदा नैध्रुवो नाम कश्चिद्वृद्धतरो मुनिः।।

अन्धः शिष्यकरग्राही तन्मंदिरमुपाययौ ।। ११ ।।

तस्मिन्वृद्धे गृहं प्राप्ते क्वापि यातेषु बंधुषु ।।

साक्षादिवात्मनो दैवं सा बाला समुपागमत् ।। ।। १२ ।।

स्वागतं ते महाभाग पीठेस्मिन्नुपविश्यताम् ।।

नमस्ते मुनिनाथाय प्रियं ते करवाणि किम् ।। १३ ।।

इत्युक्त्वा भक्तिमास्थाय कृत्वा पादावनेजनम् ।।

वीजयित्वा परिश्रांतं तं मुनिं पर्यतोषयत् ।। १४ ।।

श्रांतं पीठे समावेश्य कृत्वाभ्यंगं स्वपाणिना ।।

कृतस्नानं च विधिवत्कृतदेवार्चनं मुनिम् ।। १५ ।।

सुखासनोपविष्टं तं धूपमाल्यानुलेपनैः ।।

अर्चयित्वा वरान्नेन भोजयामास सादरम् ।। १६ ।।

भुक्त्वा च सम्यक्छनकैस्तृप्तश्चानंदनिर्भरः ।।

चकारांधमुनिस्तस्यै सुप्रीतः परमाशिषम् ।। १७ ।।

विहृत्य भर्त्रा सहसा च तेन लब्ध्वा सुतं सर्वगुणैर्वरिष्ठम् ।।

कीर्तिं च लोके महतीमवाप्य प्रसादयोग्या भव देवतानाम् ।। १८ ।।

इत्यभिव्याहृतं तेन मुनिना गतचक्षुषा ।।

निशम्य विस्मिता बाला प्रत्युवाच कृतांजलिः ।। १९ ।।

ब्रह्मंस्त्वद्वचनं सत्यं कदाचिन्न मृषा भवेत् ।।

तदेतन्मंदभाग्यायाः कथमेतत्फलिष्यति ।। ३.३.१८.२० ।।

शिलाग्र्यामिव सद्दृष्टिः शुनक्यामिव सत्क्रिया ।।

विफला मंदभाग्यायामाशीर्ब्रह्मविदामपि ।। २१ ।।

सैषाहं विधवा ब्रह्मन्दुष्कर्मफलभागिनी ।।

त्वदाशीर्वचनस्यास्य कथं यास्यामि पात्रताम् ।। २२ ।।

।। मुनिरुवाच ।। ।।

त्वामनालक्ष्य यत्प्रोक्तमंधेनापि मयाऽधुना ।।

तदेतत्साधयिष्यामि कुरु मच्छासनं शुभे ।। २३ ।।

उमामहेश्वरं नाम व्रतं यदि चरिष्यसि ।।

तेन व्रतानुभावेन सद्यः श्रेयोऽनुभोक्ष्यसे ।। २४ ।।

।। शारदोवाच ।। ।।

त्वयोपदिष्टं यत्नेन चरिष्याम्यपि दुश्चरम् ।।

तद्व्रतं ब्रूहि मे ब्रह्मन्विधानं वद विस्तरात् ।। २५ ।।

।। मुनिरुवाच ।। ।।

चैत्रे वा मार्गशीर्षे वा शुक्लपक्षे शुभे दिने ।।

व्रतारंभं प्रकुर्वीत यथावद्गुर्वनुज्ञया ।। २६ ।।

अष्टम्यां च चतुर्दश्यामुभयोरपि पर्वणोः ।।

संकल्पं विधिवत्कृत्वा प्रातःस्नानं समाचरेत् ।। २७ ।।

सन्तर्प्य पितृदेवादीन्गत्वा स्वभवनं प्रति ।।

मंडपं रचयेद्दिव्यं वितानाद्यैरलंकृतम् ।। २८ ।।

फलपल्लवपुष्पाद्यैस्तोरणैश्च समन्वितम् ।।

पंचवर्णैश्च तन्मध्ये रजोभिः पद्ममुद्धरेत् ।। २९ ।।

चतुर्दशदलैर्बाह्ये द्वाविंशद्भिस्तदंतरे ।।

तदंतरं षोडशभिरष्टभिश्च तदंतरे ।। ३.३.१८.३० ।।

एवं पद्मं समुद्धृत्य पंचवर्णैर्मनोरमम् ।।

चतुरस्रं ततः कुर्यादंतर्वर्तुलमुत्तमम् ।। ३१ ।।

व्रीहितंडुलराशिं च तन्मध्ये च सकूर्चकम् ।।

कूर्चोपरि सुसंस्थाप्य कलशं वारिपूरितम् ।। ३२ ।।

कलशोपरि विन्यस्य वस्त्रं वर्णसमन्वितम् ।।

तस्योपरिष्टात्सौवर्ण्यौ प्रतिमे शिवयोः शुभे ।।

निधाय पूजयेद्भक्त्या यथाविभवविस्तरम् ।। ३३ ।।

पंचामृतैस्तु संस्नाप्य तथा शुद्धोदकेन च ।।

रुद्रैकादशकं जप्त्वा पंचाक्षरशताष्टकम् ।। ३४ ।।

अभिमंत्र्य पुनः स्थाप्य पीठं मध्ये तथार्चयेत् ।।

स्वयं शुद्धासनासीनो धौतशुक्लांबरः सुधीः ।। ३५ ।।

पीठमामंत्र्य मंत्रेण प्राणायामान्समाचरेत् ।।

संकल्पं प्रवदेत्तत्र शिवाग्रे विहितांजलिः ।। ३६ ।।

यानि पापानि घोराणि जन्मांतरशतेषु मे ।।

तेषां सर्वविनाशाय शिवपूजां समारभे ।। ३७ ।।

सौभाग्यविजयारोग्यधर्मैश्वर्याभिवृद्धये ।।

स्वर्गापवर्गसिद्ध्यर्थं करिष्ये शिवपूजनम् ।। ३८ ।।
इति संकल्पमुच्चार्य यथावत्सुसमाहितः ।।
अंगन्यासं ततः कृत्वा ध्यायेदीशं च पार्वतीम् ।। ३९ ।।
कुंदेंदुधवलाकारं नागाभरणभूषितम् ।।
वरदाभयहस्तं च बिभ्राणं परशुं मृगम् ।। ३.३.१८.४० ।।
सूर्यकोटिप्रतीकाशं जगदानंदकारणम् ।।
जाह्नवीजलसंपर्काद्दीर्घपिंगजटाधरम् ।। ४१ ।।
उरगेंद्रफणोद्भूतमहामुकुटमंडितम् ।।
शीतांशुखंडविलसत्कोटीरांगदभूषणम् ।। ४२ ।।
उन्मीलद्भालनयनं तथा सूर्येंदुलोचनम् ।।
नीलकंठं चतुर्बाहुं गजेंद्राजिनवाससम् ।। ४३ ।।
रत्नसिंहासनारूढं नागाभरणभूषितम् ।।
देवीं च दिव्यवसनां बालसूर्यायुतद्युतिम् ।। ४४ ।।
बालवेषां च तन्वंगीं बालशीतांशुशेखराम् ।।
पाशांकुशवराभीतिं बिभ्रतीं च चतुर्भुजाम् ।। ४५ ।।
प्रसादसुमुखीमंबां लीलारसविहारिणीम् ।।
लसत्कुरबकाशोकपुन्नागनवचंपकैः ।। ४६ ।।
कृतावतंसामुत्फुल्लमल्लिकोत्कलितालकाम् ।।
कांचीकलापपर्यस्तजघनाभोगशालिनीम् ।। ४७ ।।
उदारकिंकिणीश्रेणीनूपुराढ्यपदद्वयाम् ।।
गंडमंडलसंसक्तरत्नकुंडलशोभिताम् ।। ४८ ।।
बिंबाधरानुरक्तांशुलसद्दशन कुड्मलाम् ।।
महार्हरत्नग्रेवेयतारहारविराजिताम् ।।४९।।
नवमाणिक्यरुचिरकंकणांगदमुद्रिकाम् ।।
रक्तांशुकपरीधानां रत्नमाल्यानुलेपनाम् ।। ३.३.१८.५० ।। ।
उद्यत्पीनकुचद्वंद्वनिंदितांभोजकुड्मलाम् ।।
लीलालोलासितापांगीं भक्तानुग्रहदायिनीम् ।। ५१ ।।
एवं ध्यात्वा तु हृत्पद्मे जगतः पितरौ शिवौ ।।

जप्त्वा तदात्मकं मंत्रं तदंते बहिरर्चयेत् ।। ५२ ।।

आवाह्य प्रतिमायुग्मे कल्पयेदासनादिकम् ।।

अर्घ्यं च दद्याच्छिवयोर्मंत्रेणानेन मंत्रवित् ।। ५३ ।।

नमस्ते पार्वतीनाथ त्रैलोक्यवरदर्षभ ।।

त्र्यंबकेश महादेव गृहाणार्घ्यं नमोऽस्तु ते ।। ५४ ।।

नमस्ते देवदेवेशि प्रपन्नभयहारिणि ।।

अंबिके वरदे देवि गृहाणार्घ्यं शिवप्रिये ।। ५५ ।।

इति त्रिवारमुच्चार्य दद्यादर्घ्यं समाहितः ।।

गन्धपुष्पाक्षतान्सम्यग्धूपदीपान्प्रकल्पयेत् ।। ५६ ।।

नैवेद्यं पायसान्नेन घृताक्तं परिकल्पयेत् ।।

जुहुयान्मूलमंत्रेण हविरष्टोत्तरं शतम् ।। ५७ ।।

तत उद्वास्य नैवेद्यं धूपनीराजनादिकम् ।।

कृत्वा निवेद्य तांबूलं नमस्कुर्यात्समाहितः ।। ५८ ।।

अथाभ्यर्च्योपचारेण भोजयेद्विप्रदंपती ।। ५९ ।।

एवं सायंतनीं पूजां कृत्वा विप्रानुमोदितः ।।

भुंजीत वाग्यतो रात्रौ हविष्यं क्षीरभावितम् ।। ३.३.१८.६० ।।

एवं संवत्सरं कुर्याद्व्रतं पक्षद्वये बुधः ।।

ततः संवत्सरे पूर्णे व्रतोद्यापनमाचरेत् ।। ६१ ।।

शतरुद्राभिजप्तेन स्नापयेत्प्रतिमे जलैः ।।

आगमोक्तेन मन्त्रेण संपूज्य गिरिजाशिवौ ।। ६२ ।।

सवस्त्रं ससुवर्णं च कलशं प्रति मान्वितम्।।

दत्त्वाचार्याय महते सदाचाररताय च ।।

ब्राह्मणान्भोजयेद्भक्त्या यथाशक्त्याभिपूज्य च ।। ६३ ।।

दद्याच्च दक्षिणां तेभ्यो गोहिरण्यांबरादिकम् ।।

भुंजीत तदनुज्ञातः सहेष्टजनबंधुभिः ।। ६४ ।।

एवं यः कुरुते भक्त्या व्रतं त्रैलोक्यविश्रुतम् ।।

त्रिःसप्तकुलमुद्धृत्य भुक्त्वा भोगान्यथेप्सि तान् ।। ६५ ।।

इन्द्रादिलोकपालानां स्थानेषु रमते ध्रुवम् ।।

ब्रह्मलोके च रमते विष्णुलोके च शाश्वते ।। ६६ ।।
शिवलोकमथ प्राप्य तत्र कल्पशतं पुनः ।।
भुक्त्वा भोगान्सुविपुलाञ्छिवमेव प्रपद्यते ।। ६७ ।।
महाव्रतमिदं प्रोक्तं त्वमपि श्रद्धया चर ।।
अत्यंतदुर्लभं वापि लप्स्यसे च मनोरथम् ।। ।। ६८ ।।
इत्यादिष्टा मुनींद्रेण सा बाला मुदिता भृशम् ।।
प्रत्यग्रहीत्सुविश्रब्धा तद्वाक्यं सुमनोहरम् ।। ६९ ।।
अथ तस्याः समायाताः पितृमातृ सहोदराः ।।
तं मुनिं सुखमासीनं ददृशुः कृतभोजनम् ।। ३.३.१८.७० ।।
सहसागत्य ते सर्वे नमश्चक्रुर्महात्मने ।।
प्रसीद नः प्रसीदेति गृणतः पर्यपूज यन् ।। ७१ ।।
श्रुत्वा च ते तया साध्व्या पूजितं परमं मुनिम् ।।
अनुग्रहवतं तस्यै श्रुत्वा हर्षं परं ययुः ।। ७२ ।।
ते कृतांजलयः सर्वे तमूचुर्मुनि पुंगवम् ।। ७३ ।।
अद्य धन्या वयं सर्वे तवागमनमात्रतः ।।
पावितं नः कुलं सर्वं गृहं च सफलीकृतम् ।। ७४ ।।
इयं च शारदा नाम कन्या वैधव्यमागता ।।
केनापि कर्मयोगेन दुर्विलंघ्येन भूयसा ।। ७५ ।।
सैषाद्य तव पादाब्जं प्रपन्ना शरणं सती ।।
इमां समुद्धरासह्यात्सुघोराद्दुःख सागरात् ।। ७६ ।।
त्वयापि तावदत्रैव स्थातव्यं नो गृहांतिके ।।
अस्मद्गृहमठेऽप्यस्मिन्स्नानपूजाजपोचिते ।। ७७ ।।
एषा बालापि भगवन्कुर्वंती त्वत्पदार्चनम् ।।
व्रतं त्वत्सन्निधावेव चरिष्यति महामुने ।। ७८ ।।
यावत्समाप्तिमायाति व्रतमस्यास्त्वदंतिके ।।
उषित्वा तावदत्रैव कृतार्थान्कुरु नो गुरो ।। ७९ ।।
एवमभ्यर्थितः सर्वैस्तस्या भ्रातृजनादिभिः ।।
तथेति स मुनिश्रेष्ठस्तत्रोवास मठे शुभे ।। ३.३.१८.८० ।।

साপि तेनोपदिष्टेन मार्गेण गिरिजाशिवौ ।।
अर्चयंती व्रतं सम्यक्चचार विमला सती ।। ८१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे उमामहेश्वरव्रताचरणं नामाष्टादशोऽध्यायः ।। १८ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः १९

https://sa.wikisource.org/s/gaf
< स्कन्दपुराणम् | खण्डः ३ (ब्रह्मखण्डः) | ब्रह्मोत्तर खण्डः

।। सूत उवाच ।। ।।

एवं महाव्रतं तस्याश्चरंत्या गुरुसन्निधौ ।।

संवत्सरो व्यतीयाय नियमासक्तचेतसः ।। १ ।।

संवत्सरांते सा बाला तत्रैव पितृमंदिरे ।।

चकारोद्यापनं सम्यग्विप्रभोजनपूर्वकम् ।। २ ।।

दत्त्वा च दक्षिणां तेभ्यो ब्राह्मणेभ्यो यथार्हतः ।।

विसृज्य तान्नमस्कृत्य पितृभ्यामभिनंदिता ।। ३ ।।

उपोषिता स्वयं तस्मिन्दिने नियममाश्रिता ।।

जजाप परमं मंत्रमुपदिष्टं महात्मना ।। ४ ।।

अथ प्रदोषसमये प्राप्ते संपूज्य शंकरम् ।।

तस्मिन्गृहांतिकमठे गुरोस्तस्य च सन्निधौ ।। ५ ।।

जपार्चनरता साध्वी ध्यायती परमेश्वरम् ।।

तस्मिञ्जागरणे रात्रावुपविष्टा शिवांतिके ।। ६ ।।

युग्मम् ।।

तस्यां रात्रौ तया सार्धं स मुनिर्जगदंबिकाम् ।।

जपध्यान तपोभिश्च तोषयामास पार्वतीम्।। ७ ।।

तस्याश्च भक्त्या व्रतभाविताया मुनेस्तपोयोगसमाधिना च ।।

तुष्टा भवानी जगदेकमाता प्रादुर्बभूवा कृतसांद्रमूर्तिः ।। ८ ।।

प्रादुर्भूता यदा गौरी तयोरग्रे जगन्मयी ।।

अन्धोऽपि तत्क्षणादेव मुनिः प्राप दृशोर्द्वयम् ।। ९ ।।

तां वीक्ष्य जगतां धात्रीमाविर्भूतां पुरःस्थिताम् ।।

निपेततुस्तत्पदयोः स मुनिः सा च कन्यका ।। ३.३.१९.१० ।।

तौ भक्तिभावोच्छ्वसितामलाशयावानंदबाष्पोक्षित सर्वगात्रौ ।।

उत्थाप्य देवी कृपया परिप्लुता प्रेम्णा बभाषे मृदुवल्गुभाषिणी ।। ११ ।।

।। देव्युवाच ।। ।।

प्रीतास्मि ते मुनिश्रेष्ठ वत्से प्रीतास्मि तेऽनघे ।।

किं वा ददाम्यभिमतं देवानामपि दुर्लभम् ।। १२ ।।

।। मुनिरुवाच ।। ।।

एषा तु शारदा नाम कन्या तु गतभतृका ।।

मया प्रतिश्रुतं चास्यै तुष्टेन गतचक्षुषा ।। १३ ।।

सह भर्त्रा चिरं कालं विहृत्य सुतमुत्तमम् ।।

लभस्वेति मया प्रोक्तं सत्यं कुरु नमोऽस्तु ते ।। १४ ।।

।। श्रीदेव्युवाच ।। ।।

एषा पूर्वभवे बाला द्राविडस्य द्विजन्मनः ।।

आसीद्द्वितीया दयिता भामिनी नाम विश्रुता ।। १५ ।।

सा भर्तृप्रेयसी नित्यं रूपमाधुर्यपेशला ।।

भर्तारं वशमानिन्ये रूपवश्यादिकैतवैः । १६ ।।

अस्यां चासक्तहृदयः स विप्रो मोहयंत्रितः ।।

कदाचिदपि नैवागाज्ज्येष्ठपत्नीं पतिव्रताम् ।। १७ ।।

अनभ्यागमनाद्भर्तुः सा नारी पुत्रवर्जिता ।।

सदा शोकेन संतप्ता कालेन निधनं गता ।। १८ ।।

अस्या गृहसमीपस्थो यः कश्चिद्ब्राह्मणो युवा ।।

इमां वीक्ष्याथ चार्वंगीं कामार्तः करमग्रहीत् ।। १९ ।।

अनया रोषताम्राक्ष्या स विप्रस्तु निवारितः ।।

इमां स्मरन्दिवानक्तं निधनं प्रत्यपद्यत ।। ३.३.१९.२० ।।

एषा संमोह्य भर्तारं ज्येष्ठपत्न्यां पराङ्मुखम् ।।

चकार तेन पापेन भवेस्मिन्विधवाऽभवत् ।। २१ ।।

याः कुर्वंति स्त्रियो लोके जायापत्योश्च विप्रियम् ।।

तासां कौमारवैधव्यमेकविंशतिजन्मसु ।। २२ ।।

यदेतया पूर्वभवे मत्पूजा महती कृता ।।

तेन पुण्येन तत्पापं नष्टं सर्वं तदैव हि ।। २३ ।।

यो विप्रो विरहार्तः सन्मृतः कामविमोहितः ।।

सोऽस्याः पाणिग्रहं कृत्वा भवेस्मिन्निधनं गतः ।। २४ ।।

प्राग्जन्मपतिरेतस्याः पांड्यराष्ट्रेषु सोऽधुना ।।

जातो विप्रवरः श्रीमान्सदारः सपरिच्छदः ।। २५ ।।

तेन भर्त्रा प्रतिनिशं सैषा प्रेम्णाभिसंगता ।।

स्वप्ने रतिसुखं यातु श्रेष्ठं जागरणादपि ।।२६।।

षष्ट्युत्तरत्रिशतयोजनदूरसंस्थो देशादितो द्विजवरः स च कर्मगत्या ।।

एनां वधूं प्रतिनिशं मनसोभिरामां स्वप्नेषु पश्यति चिरं रतिमादधानः ।। २७ ।।

सैषा वै स्वप्नसंगत्या पत्युः प्रतिनिशं सती ।।

कालेन लप्स्यते पुत्रं वेदवेदांगपारगम् ।। २८ ।।

एतस्यां तनयं जातमात्मनश्चिरसंगमात् ।।

सोऽपि विप्रोऽनिशं स्वप्ने द्रक्ष्यति प्रेमभावितम् ।। २९ ।।

अनयाराधिता पूर्वे भवे साहं महामुने ।।

अस्यैव वरदानाय प्रादुर्भूतास्मि सांप्रतम् ।। ३.३.१९.३० ।।

।। सूत उवाच ।। ।।

अथोवाच महादेवी तां बालां प्रति सादरम् ।।

अयि वत्से महाभागे शृणु मे परमं वचः ।। ३१ ।।

यदा कदापि भर्त्तारं क्वापि देशे पुरातनम् ।।

द्रक्ष्यसि स्वप्नदृष्टं प्राक्ज्ञास्यसे त्वं विचक्षणा ।। ३२ ।।

त्वां द्रक्ष्यति स विप्रोपि सुनयां स्वप्नलक्षणाम् ।।

तदा परस्परालापो युवयोः संभविष्यति ।। ३३ ।।

तदा स्वतनयं भद्रे तस्मै देहि बहुश्रुतम् ।।

फलमस्य व्रतस्याग्र्यं तस्य हस्ते समर्पय ।। ३४ ।।

ततः प्रभृति तस्यैव वशे तिष्ठ सुमध्यमे ।।

युवयोदैहिकः संगो माभूत्स्वप्नरतादृते ।। ३५ ।।

कालात्पंचत्वमापन्ने तस्मिन्ब्राह्मणसत्तमे ।।

अग्निं प्रविश्य तेनैव सह यास्यसि मत्पदम् ।। ३६ ।।

पुत्रस्ते भविता सुभ्रु सर्वलोकमनोरमः ।।

संपदश्च भविष्यंति प्राप्स्यते परमं पदम् ।। ३७ ।।

।। सूत उवाच ।। ।।

इत्युक्त्वा त्रिजगन्माता दत्त्वा तस्यै मनोरथम् ।।

तयोः संपश्यतोरेव क्षणेनादर्शनं गता ।। ३८ ।।

सापि बाला वरं लब्ध्वा पार्वत्याः करुणानिधेः ।।

अवाप परमानंदं पूजयामास तं गुरुम् ।। ३९ ।।

तस्यां रात्र्यां व्यतीतायां स मुनिर्लब्धलोचनः ।।

तस्याः पित्रोश्च तत्सर्वं रहस्याचष्ट धर्मवित् ।। ३.३.१९.४० ।।

अथ सर्वानुपामंत्र्य शारदां च यशस्विनीम् ।।

विधायानुग्रहं तेषां ययौ स्वैरगतिर्मुनिः ।। ४१ ।।

एवं दिनेषु गच्छत्सु सा बाला च प्रतिक्षणम् ।।

भर्तुः समागमं लेभे स्वप्ने सुख विवर्धनम् ।। ४२ ।।

गौर्या वरप्रदानेन शारदा विशदव्रता ।।

दधार गर्भं स्वप्नेपि भर्तुः संगानुभावतः ।। ४३ ।।

तां श्रुत्वा भर्तृरहितां शारदां गर्भिणी सतीम्।।

सर्वे धिगिति प्रोचुस्तां जारिणीति जगुर्जनाः ।। ४४ ।।

संपरेतस्य तद्भर्तुर्ये जातिकुलबांधवाः ।।

तां वार्तां दुःसहां श्रुत्वा ययुस्तत्पितृमंदिरम् ।। ४५ ।।

अथ सर्वे समायाता ग्रामवृद्धाश्च पंडिताः ।।

समाजं चक्रिरे तत्र कुलवृद्धैः समन्वितम् ।। ४६ ।।

अन्तर्वत्नीं समाहूय शारदां विनताननाम् ।।

अतर्जयन्सुसंक्रुद्धाः केचिदासन्पराङ्मुखाः ।। ४७ ।।

अयि जारिणि दुर्बुद्धे किमेतत्ते विचेष्टितम् ।।

अस्मत्कुले सुदुष्कीर्त्तिं कृतवत्यसि बालिशे ।। ४८ ।।

इति संतर्जयंतस्ते ग्रामवृद्धा मनीषिणः ।।

सर्वे संमंत्रयामासुः किं कुर्म इति भाषिणः ।। ४९ ।।

तत्रोचुः के च वृद्धास्तां बालां प्रति विनिर्दयाः ।।

एषा पापमतिर्बाला कुलद्वयविनाशिनी। ।। ३.३.१९.५० ।।

कृत्वास्याः केशवपनं छित्त्वा कर्णौ च नासिकाम् ।।

निर्वास्यतां बहिर्ग्रामात्परित्यज्य स्वगोत्रतः ।। ५१ ।।

इति सर्वे समालोच्य तां तथा कर्तुमुद्यताः ।।

अथांतरिक्षे संभूता शुश्रुवे वागगोचरा ।। ५२ ।।

अनया न कृतं पापं न चैव कुलदूषणम् ।।

व्रतभंगो न चैतस्यास्सुचरित्रेयमंगना ।। ५३ ।।

इतः परमियं नारी जारिणीति वदंति ये ।।

तेषां दोषविमूढानां सद्यो जिह्वा विदीर्यते ।। ५४ ।।

इत्यंतरिक्षे जनितां वाणीं श्रुत्वाऽशरीरिणीम् ।।

सर्वे प्रजहृषुस्तस्या जननीजनकादयः ।।५५।।

ततः ससंभ्रमाः सर्वे ग्रामवृद्धाः सभाजनाः ।।

मुहूर्तं मौनमालंब्य भीतास्तस्थुरधोमुखाः ।।५६।।

तत्र केचिदविश्वस्ता मिथ्यावाणीत्यवादिषुः।।

तेषां जिह्वा द्विधा भिन्ना ववमुस्ते कृमीन्क्षणात् ।। ५७ ।।

ततः संपूजयामासुस्तां बालां ज्ञातिबांधवाः ।।

बांधवाश्च स्त्रियो वृद्धाः शशंसुः साधुसाध्विति ।। ५८ ।।

मुमुचुः केचिदानंदबाष्पबिंदून्कुलोत्तमाः।।

कुलस्त्रियः प्रमुदितास्तामुद्दिश्य समाश्वसन् ।। ५९ ।।

अथ तत्रापरे प्रोचुर्देवो वदति नानृतम् ।।

कथमेषां दधौ गर्भं शीलान्न चलिता ध्रुवम् ।। ३.३.१९.६० ।।

इति सर्वान्सभ्यजना न्संशयाविष्टचेतसः ।।

विलोक्य वृद्धस्तत्रैको सर्वज्ञो लोकतत्त्ववित् ।। ६१ ।।

मायामयमिदं विश्वं दृश्यते श्रूयते च यत् ।।

किं भाव्यं किमभाव्यं वा संसारेऽस्मिन्क्षणात्मके ।। ६२ ।।

अनिरूप्यमभूतार्थं मायया जायते स्फुटम् ।।

ईश्वरस्य वशे माया तस्य को वेद चेष्टितम् ।। २३ ।।

यूपकेतोश्च राजर्षेः शुक्रं निपतितं जले ।।

सशुक्रं तज्जलं पीत्वा वेश्या गर्भं दधौ किल ।। ६४ ।।

मुनेर्विभांडकस्यापि शुक्रं पीत्वा सहांभसा ।।

हरिणी गर्भिणी भूत्वा ऋष्यशृंगमसूयत ।। ६५ ।।

सुराष्ट्रस्य तथा राज्ञः करं स्पृष्ट्वा मृगांगना।।

तत्क्षणाद्गर्भिणी भूत्वा मुनिं प्रासूत तापसम् ।। ६६ ।।

तथा सत्यवती नारी शफरीगर्भसंभवा ।।

तथैव महिषीगर्भो जातश्च महिषासुरः।। ६७ ।।

तथा संति पुरा नार्यः कारुण्याद्गर्भसंभवाः।।

तथा हि वसुदेवेन रोहिण्या स्तनयोऽभवत् ।। ६८ ।।

देवतानां महर्षीणां शापेन च वरेण च ।।

अयुक्तमपि यत्कर्म युज्यते नात्र संशयः ।। ६९ ।।

सांबस्य जठराज्जातं मुसलं मुनिशापतः ।।

युवनाश्वस्य गर्भोऽभून्मुनीनां मंत्रगौरवात् ।। ३.३.१९.७० ।।

नूनमेषापि कल्याणी महर्षेः पादसेवनात् ।।

महाव्रतानुभावाच्च धत्ते गर्भमनिं दिता ।। ७१ ।।

अस्मिन्नर्थे रहस्येनां सत्यं पृच्छंतु योषितः ।।

ततो निवृत्तसंदेहो भविष्यति महाजनः ।। ७२ ।।

ततस्तद्वचनादेव तामपृच्छन्स्त्रियो मिथः ।।

ताभ्यः शशंस तत्सर्वं सा स्ववृत्तं महाद्भुतम् ।। ७३ ।।

विजानंतस्ततः सर्वे मानयित्वा च तां सतीम् ।।

मोदमानाः प्रशंसंतः प्रययुः स्वं स्वमालयम्।। ७४ ।।

अथ काले शुभे प्राप्ते शारदा विमलाशया ।।

असूत तनयं बाला बालार्कसमतेजसम् ।। ७५ ।।

स कुमारो महोदारलक्षणः कमलेक्षणः ।।

अवाप्य महतीं विद्यां बाल्य एव महामतिः ।। ७६ ।।

अथोपनीतो गुरुणा काले लोकमनोरमः ।।

स शारदेय एवेति लोके ख्याति मवाप ह ।। ७७ ।।

ऋग्वेदमष्टमे वर्षे नवमे यजुषां गणम् ।

दशमे सामवेदं च लीलयाध्यगमत्सुधीः ।। ७८ ।।

अथ त्रिलोकमहिते संप्राप्ते शिवपर्वणि ।।

गोकर्णं प्रययुः सर्वे जनाः सर्वनिवासिनः ।। ७९ ।।

शारदापि स्वपुत्रेण गोकर्णं प्रययौ सती ।। ३.३.१९.८० ।।

तत्रापश्यत्समायातं सदा स्वप्नेषु लक्षितम् ।।

पूर्वजन्मनि भर्त्तारं द्विजबंधुजनावृतम् ।। ८१ ।।

तं दृष्ट्वा प्रेमनिर्विण्णा पुलकांकितविग्रहा ।।

निरुद्धबाष्पप्रसरा तस्थौ तन्न्यस्तलोचना ।। ८२ ।।

स च विप्रोऽपि तां दृष्ट्वा रूपलक्षणलक्षिताम्।।

स्वप्ने सदा भुज्यमानामात्मनो रतिदायिनीम् । ८३ ।।

तं कुमारमपि स्वप्ने दृष्ट्वा चात्म शरीरजम् ।।

विलोक्य विस्मयाविष्टस्तदंतिकमुपाययौ ।। ८४ ।।

भद्रे त्वां प्रष्टुमिच्छामि यत्किंचिन्मनसि स्थितम् ।।

इति प्रथममाभाष्य रहः स्थानं निनाय ताम्।। ८५।।

का त्वं कथय वामोरु कस्य भार्यासि सुव्रते ।।

को देशः कस्य वा पुत्री किन्नामेत्यब्रवीच्च ताम् ।। ८६ ।।

इति तेन समापृष्टा सा नारी बाष्पलोचना ।।

व्याजहारात्मनोवृत्तं बाल्ये वैधव्यकारणम् ।। ८७ ।।

पुनः पप्रच्छ तां बालां पुत्रः कस्यायमुत्तमः ।।

कथं धृतो वा जठरे बालोऽयं चंद्रसन्निभः ।। ८८ ।।

। शारदोवाच ।। ।।

एष मे तनयः स्वामिन्सर्वविद्याविशारदः।।

शारदेय इति प्रोक्तो मम नाम्नैव कल्पितः ।। ६९ ।।

इति तस्या वचः श्रुत्वा विहस्य ब्राह्मणोत्तमः ।।

प्रोवाच कष्टात्कष्टं हि चरितं तव भामिनि ।। ३.३.१९.९० ।।

पाणिग्रहणमात्रं ते कृत्वा भर्त्ता मृतः किल ।।

कथं चायं सुतो जातस्तस्य कारणमुच्यताम् ।। ९१ ।।

इति तेनोदितां वाणीमाकर्ण्यातीव लज्जिता ।।

क्षणं चाश्रुमुखी भूत्वा धैर्यादित्थमभाषत ।। ९२ ।।

।। शारदोवाच ।। ।।

तदलं परिहासोक्त्या त्वं मां वेत्सि महामते ।।

त्वामहं वेद्मि चार्थेऽस्मिन्प्रमाणं मन आवयोः ।। ९३ ।।

इत्युक्त्वा सर्वमावेद्य देव्या दत्तं वरादिकम् ।।

व्रतस्यार्धं कुमारं तं ददौ तस्मै धृतव्रतम् ।। ९४ ।।

सोऽपि प्रमुदितो विप्रः कुमारं प्रतिगृह्य तम्।।

पित्रोरनुमतेनैव तां निनाय निजालयम् ।। ९५ ।।

सापि स्थित्वा बहून्मासांस्तस्य विप्रस्य मंदिरे ।।

तस्मिन्कालवशं प्राप्ते प्रविश्याग्निं तमन्वगात् ।। ९६ ।।

ततस्तौ दंपती भूत्वा विमानं दिव्यमास्थितौ ।।

दिव्यभोगसमायुक्तौ जग्मतुः शिवमंदिरम् ।। ९७ ।।

इत्येततत्पुण्यमाख्यानं मया समनुवर्णितम् ।।

पठतां शृण्वतां सम्यग्भुक्तिमुक्तिफलप्रदम् ।। ९८ ।।

आयुरारोग्यसंपत्तिधनधत्यविवर्द्धनम् ।।

स्त्रीणां मंगलसौभाग्यसंतानसुखसाधनम् ।। ९९ ।।

एतन्महाख्यानमघौघनाशनं गौरीमहेशव्रतपुण्यकीर्तनम् ।।

भक्त्या सकृद्यः शृणुयाच्च कीर्त्तयेद्भुक्त्वा स भोगान्पदमेति शाश्वतम् ।। ३.३.१९.१०० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे शारदाख्यानवर्णनं नामैकोनविंशोऽध्यायः ।। १९ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः २०



।। सूत उवाच ।। ।।

अथ रुद्राक्षमाहात्म्यं वर्णयामि समासतः ।।

सर्वपापक्षयकरं शृण्वतां पठतामपि ।। ।। १ ।।

अभक्तो वापि भक्तो वा नीचो नीचतरोपि वा ।।

रुद्राक्षान्धारयेद्यस्तु मुच्यते सर्वपातकैः ।। २ ।।

रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् ।।

महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिनः ।। ३ ।।

सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः ।।

तं नमंति सुराः सर्वे यथा रुद्रस्तथैव सः ।। ४ ।।

अभावे तु सहस्रस्य बाह्वोः षोडश षोडश ।।

एकं शिखायां करयोर्द्वादश द्वादशैव हि ।। ५ ।।

द्वात्रिंशत्कंठदेशे तु चत्वारिंशत्तु मस्तके ।।

एकैक कर्णयोः षट् षट् वक्षस्यष्टोत्तरं शतम् ।।

यो धारयति रुद्राक्षान्रुद्रवत्सोपि पूज्यते ।। ६ ।।

मुक्ताप्रवालस्फटिकरौप्यवैदूर्यकांचनैः ।।

समेतान्धारयेद्यस्तु रुद्राक्षान्स शिवो भवेत् ।। ७ ।।

केवलानपि रुद्राक्षान्यथालाभं बिभर्ति यः ।।

तं न स्पृशंति पापानि तमांसीव विभावसुम् ।। ८ ।।

रुद्राक्षमालया जप्तो मंत्रोऽनंतफलप्रदः ।।

अरुद्राक्षो जपः पुंसां तावन्मात्रफलप्रदः ।। ९ ।।

यस्यांगे नास्ति रुद्राक्ष एकोपि बहुपुण्यदः ।।

तस्य जन्म निरर्थं स्यात्त्रिपुंड्ररहितं यदि ।। ३.३.२०.१० ।।

रुद्राक्षं मस्तके बद्ध्वा शिरःस्नानं करोति यः ।।

गंगास्नानफलं तस्य जायते नात्र संशयः ।। ११ ।।

रुद्राक्षं पूजयेद्यस्तु विना तोयाभिषेचनम् ।।

यत्फलं लिंगपूजायास्तदेवाप्नोति निश्चितम् ।। १२ ।।

एकवक्त्राः पंचवक्त्रा एकादशमुखाः परे ।।

चतुर्दशमुखाः केचिद्रुद्राक्षा लोकपूजिताः ।। १३ ।।

भक्त्या संपूजितो नित्यं रुद्राक्षः शंकरात्मकः ।।

दरिद्रं वापि कुरुते राजराजश्रियान्वितम् ।। १४ ।।

अत्रेदं पुण्यमाख्यानं वर्णयंति मनीषिणः ।

महापापक्षयकरं श्रवणात्कीर्तनादपि ।। १५ ।।

राजा काश्मीरदेशस्य भद्रसेन इति श्रुतः ।।

तस्य पुत्रो ऽभवद्धीमान्सुधर्मानाम वीर्यवान् ।। १६ ।।

तस्यामात्यसुतः कश्चित्तारको नाम सद्गुणः ।।

बभूव राजपुत्रस्य सखा परमशोभनः ।। १७ ।।

तावुभौ परमस्निग्धौ कुमारौ रूपसुन्दरौ ।।

विद्याभ्यासपरौ बाल्ये सह क्रीडां प्रचक्रतुः ।। १८ ।।

तौ सदा सर्वगात्रेषु रुद्राक्षकृतभूषणौ ।।

विचेरतुरुदारांगौ सततं भस्मधारिणौ ।। १९ ।।

हारकेयूरकटककुंडलादिविभूषणम् ।।

हेमरत्नमयं त्यक्त्वा रुद्राक्षान्दधतुश्च तौ ।। ३.३.२०.२० ।।

रुद्राक्षमालितौ नित्यं रुद्राक्षकरकंकणौ ।।

रुद्राक्षकंठाभरणौ सदा रुद्राक्षकुंडलौ ।। २१ ।।

हेमरत्नाद्यलंकारे लोष्टपाषाणदर्शनौ ।।

बोध्यमानावपि जनैर्न रुद्राक्षान्व्यमुंचताम् ।। २२ ।।

तस्य काश्मीरराजस्य गृहं प्राप्तो यदृच्छया ।।

पराशरो मुनिवरः साक्षादिव पितामहः ।। २३ ।।

तमर्चयित्वा विधिवद्राजा धर्मभृतां वरः ।।

प्रपच्छ सुखमासीनं त्रिकालज्ञं महामुनिम् ।। २४ ।।

।। राजोवाच ।। ।।

भगवन्नेष पुत्रो मे सोपि मंत्रिसुतश्च मे ।।

रुद्राक्षधारिणौ नित्यं रत्नाभरणनिःस्पृहौ ।। २५ ।।

शास्यमानावपि सदा रत्नाकल्पपरिग्रहे ।।

विलंघितास्मद्वचनौ रुद्राक्षेष्वेव तत्परौ ।। २६ ।।

नोपदिष्टाविमौ बालौ कदाचिदपि केनचित् ।।

एषा स्वाभाविकी वृत्तिः कथमासीत्कुमारयोः ।। २७ ।।

।। पराशर उवाच ।। ।।

शृणु राजन्प्रवक्ष्यामि तव पुत्रस्य धीमतः ।।

यथा त्वं मंत्रिपुत्रस्य प्राग्वृत्तं विस्मयावहम् ।।२८।।

नंदिग्रामे पुरा काचिन्महानंदेति विश्रुता।।

बभूव वारवनिता शृंगारललिताकृतिः ।।२९।।

छत्रं पूर्णेदुसंकाशं यानं स्वर्णविराजितम् ।।

चामराणि सुदंडानि पादुके च हिरण्मये।।३.३.२०.३०।।

अंबराणि विचित्राणि महार्हाणि द्युमंति च ।।

चंद्ररश्मिनिभाः शय्या पर्यंकाश्च हिरण्मयाः ।। ३१ ।।

गावो महिष्यः शतशो दासाश्च शतशस्तथा ।। ३२ ।।

सर्वाभरणदीप्तांग्यो दास्यश्च नवयौवना ।।

भूषणानि पराध्र्याणि नवरत्नोज्ज्वलानि च ।। ३३ ।।

गन्धकुंकुमकस्तूरीकर्पूरागुरुलेपनम् ।।

चित्रमाल्यावतंसश्च यथेष्टं मृष्टभोजनम् ।।३४।।

नानाचित्रवितानाढ्यं नानाधान्यमयं गृहम् ।।

बहुरत्नसहस्राढ्यं कोटिसंख्याधिकं धनम् ।। ३५ ।।

एवं विभवसंपन्ना वेश्या कामविहारिणी ।।

शिवपूजारता नित्यं सत्यधर्मपरायणा ।। ३६ ।।

सदाशिवकथासक्ता शिवनामकथोत्सुका ।।

शिवभक्तांघ्र्यवनता शिवभक्तिरतानिशम् ।। ३७ ।।

विनोदहेतोः सा वेश्या नाट्यमण्डपमध्यतः।।

रुद्राक्षैर्भूषयित्वैकं मर्कटं चैव कुक्कुटम् ।।३८।।

करतालैश्च गीतैश्च सदा नर्तयति स्वयम् ।।

पुनश्च विहसंत्युच्चैः सखीभिः परिवारिता ।। ३९ ।।

युग्मम् ।।

रुद्राक्षैः कृतकेयूरकर्णाभरणभूषणः ।।

मर्कटः शिक्षया तस्याः सदा नृत्यति बालवत् ।। ३.३.२०.४० ।।

शिखायां बद्धरुद्राक्षः कुक्कुटः कपिना सह ।।

चिरं नृत्यति नृत्यज्ञः पश्यतां चित्रमावहन् ।।४१।।

एकदा भवनं तस्याः कश्चिद्वैश्यः शिवव्रती।।

आजगाम सरुद्राक्षस्त्रिपुंड्री निर्ममः कृती ।। ४२ ।।

स बिभ्रद्भस्म विशदे प्रकोष्ठे वरकंकणम् ।।

महारत्नपरिस्तीर्णं ज्वलंतं तरुणार्कवत् ।।४३।।

तमागतं सा गणिका संपूज्य परया मुदा।

तत्प्रकोष्ठगतं वीक्ष्य कंकणं प्राह विस्मिता ।। ४४ ।।

महारत्नमयः सोऽयं कंकणस्त्वत्करे स्थितः ।।

मनो हरति मे साधौ दिव्यस्त्रीभूषणोचितः ।। ४५ ।।

इति तां वररत्नाढ्य सस्पृहां करभूषणे ।।

वाक्ष्योदारमतिर्वैश्यः सस्मितं समभाषत ।। ४६ ।। ।।

।। वैश्य उवाच ।। ।।

अस्मिन्रत्नवरे दिव्ये यदि ते सस्पृहं मनः ।।

तमेवादत्स्व सुप्रीता मौल्यमस्य ददासि किम् ।। ४७ ।।

।। वेश्यो वाच ।। ।।

वयं तु स्वैरचारिण्यो वेश्यास्तु न पतिव्रताः ।।

अस्मत्कुलोचितो धर्मो व्यभिचारो न संशयः ।। ४८ ।।

यद्येतद्रत्नखचितं ददासि करभूषणम्।।

दिनत्रयमहोरात्रं तव पत्नी भवाम्यहम् ।। ४९ ।।

।। वैश्य उवाच ।। ।।

तथास्तु यदि ते सत्यं वचनं वारवल्लभे ।।

ददामि रत्नवलयं त्रिरात्रं भव मद्वधूः ।। ३.३.२०.५० ।।

एतस्मिन्व्यवहारे तु प्रमाणं शशिभास्करौ ।।

त्रिवारं सत्यमित्युक्त्वा हृदयं मे स्पृश प्रिये ।। ५१ ।। ।।

।। वेश्योवाच ।। ।।

दिनत्रयमहोरात्रं पत्नी भूत्वा तव प्रभो ।।

सहधर्मं चरामीति सा तद्धृदयमस्पृशत् ।। ५२ ।।

अथ तस्यै स वैश्यस्तु प्रददौ रत्नकङ्कणम् ।।

लिंगं रत्नमयं चास्या हस्ते दत्त्वेदमब्रवीत् ।। ५३ ।।

इदं रत्नमयं शैवं लिंगं मत्प्राणसंनिभम् ।।

रक्षणीयं त्वया कांते तस्य हानिर्मृतिर्मम ।। ५४ ।।

एवमस्त्विवति सा कांता लिंगमादाय रत्नजम् ।।

नाट्यमण्डपिकास्तंभे निधाय प्राविशद्गृहम् ।। ५५ ।।

सा तेन संगता रात्रौ वैश्येन विटधर्मिणा ।।

सुखं सुष्वाप पर्यंके मृदुतल्पोपशोभिते ।। ५६ ।।

ततो निशीथसमये नाट्यमण्डपिकांतरे ।।

अकस्मादुत्थितो वह्निस्तमेव सहसावृणोत् ।। ५७ ।।

मण्डपे दह्यमाने तु सहसोत्थाय संभ्रमात् ।।

सा वेश्या मर्कटं तत्र मोचयामास बंधनात् ।। ५८ ।।

स मर्कटो मुक्तबंधः कुक्कुटेन सहामुना ।।

भीतो दूरं प्रदुद्राव विधूयाग्निकणान्बहून् ।। ५९ ।।

स्तंभेन सह निर्दग्धं तल्लिंगं शकलीकृतम् ।।

दृष्ट्वा वेश्या च वैश्यश्च दुरंतं दुःखमापतुः ।। ३.३.२०.६० ।।

दृष्ट्वा प्राणसमं लिंगं दग्धं वैश्यपतिस्तथा ।।

स्वयमप्यात्तनिर्वेदो मरणाय मतिं दधौ ।। ६१ ।।

निर्वेददान्नितरां खेदाद्वैश्यस्तामाह दुःखिताम् ।।

शिवलिंगे तु निर्भिन्ने नाहं जीवितुमुत्सहे ।। ६२ ।।

चितां कारय मे भद्रे तव भृत्यैर्बलाधिकैः ।।

शिवे मनः समावेश्य प्रविशामि हुताशनम् ।। ६३ ।।

यदि ब्रह्मेंद्रविष्ण्वाद्या वारयेयुः समेत्य माम् ।।

तथाप्यस्मिन्क्षणे धीरः प्रविश्याग्निं त्यजाम्यसून् ।। ६४ ।।

तमेवं दृढबंधं सा विज्ञाय बहुदुःखिता ।।

स्वभृत्यैः कारयामास चितां स्वनगराद्बहिः ।। ६५ ।।

ततः स वैश्यः शिवभक्तिपूतः प्रदक्षिणीकृत्य समिद्धमग्निम् ।।

विवेश पश्यत्सु जनेषु धीरः सा चानुतापं युवती प्रपेदे ।। ६६ ।।

अथ सा दुःखिता नारी स्मृत्वा धर्मं सुनिर्मलम् ।।

सर्वान्बन्धून्समीक्ष्यैव बभाषे करुणं वचः ।। ६७ ।।

रत्नकंकणमादाय मया सत्यमुदाहृतम् ।।

दिनत्रयमहं पत्नी वैश्यस्यामुष्य संमता।। ६८।।

कर्मणा मत्कृतेनायं मृतो वैश्यः शिवव्रती।

तस्मादहं प्रवेक्ष्यामि सहानेन हुताशनम् ।।

सधर्मचारिणीत्युक्तं सत्यमेतद्धि पश्यथ ।। ६९ ।।

सत्येन प्रीतिमायांति देवास्त्रिभुवनेश्वराः ।।

सत्यासक्तिः परो धर्मः सत्ये सर्वं प्रतिष्ठितम् ।। ३.३.२०.७० ।।

सत्येन स्वर्गमोक्षौ च नासत्येन परा गतिः ।।

तस्मासत्यं समाश्रित्य प्रवेक्ष्यामि हुताशनम् ।। ७१ ।।

इति सा दृढनिर्बंधा वार्यमाणापि बंधुभिः ।।

सत्यलोपभयान्नारी प्राणांस्त्यक्तुं मनो दधे ।। ७२ ।।

सर्वस्वं शिवभक्तेभ्यो दत्त्वा ध्यात्वा सदाशिवम् ।।

तमग्निं त्रिः परिक्रम्य प्रदेशाभिमुखी स्थिता ।। ७३ ।।

तां पतंतीं समिद्धेऽग्नौ स्वपदार्पितमानसाम् ।।

वारयामास विश्वात्मा प्रादुर्भूतः शिवः स्वयम् ।। ७४ ।।

सा तं विलोक्याखिलदेव देवं त्रिलोचनं चन्द्रकलावतंसम् ।।

शशांकसूर्यानलकोटिभासं स्तब्धेव भीतेव तथैव तस्थौ ।। ७५ ।।

तां विह्वलां परित्रस्तां वेपमानां जडी कृताम् ।।

समाश्वास्य गलद्बाष्पां करे गृह्याब्रवीद्वचः ।। ७६ ।।

।। शिव उवाच ।। ।।

सत्यं धर्मं च ते धैर्यं भक्तिं च मयि निश्चलाम् ।।

निरीक्षितुं त्वत्सकाशं वैश्यो भूत्वाहमागतः ।। ७७ ।।

माययाग्निं समुत्थाप्य दग्धवान्नाट्यमंडपम् ।।

दग्धं कृत्वा रत्नलिंगं प्रवृष्टोस्मि हुताशनम् ।। ।। ७८ ।।

वेश्याः कैतवकारिण्यः स्वैरिण्यो जनवंचकाः ।।

सा त्वं सत्यमनुस्मृत्य प्रविष्टाग्निं मया सह ।। ७९ ।।

अतस्ते संप्रदास्यामि भोगांस्त्रिदशदुर्लभान् ।।

आयुश्च परमं दीर्घमारोग्यं च प्रजोन्नतिम् ।।

यद्यदिच्छसि सुश्रोणि तत्तदेव ददामि ते ।। ३.३.२०.८० ।।

।। सूत उवाच ।। ।।

इति ब्रुवति गौरीशे सा वेश्या प्रत्यभाषत ।। ८१ ।।

।। वेश्योवाच ।। ।।

न मे वांछास्ति भोगेषु भूमौ स्वर्गे रसातले ।।

तव पादांबुजस्पर्शादन्यत्किंचिन्न वै वृणे ।। ८२ ।।

एते भृत्याश्च दास्यश्च ये चान्ये मम बांधवाः ।।

सर्वे त्वदर्चनपरास्त्वयि संन्यस्तवृत्तयः ।। ८३ ।।

सर्वानेतान्मया सार्धं नीत्वा तव परं पदम् ।।

पुनर्जन्मभयं घोरं विमोचय नमोस्तु ते ।। ८४ ।।

तथेति तस्या वचनं प्रतिनंद्य महेश्वरः ।।

तान्सर्वांश्च तया सार्धं निनाय परमं पदम् ।। ८५ ।।

।। पराशर उवाच ।। ।।

नाट्यमंडपिकादाहे यौ दूरं विद्रुतौ पुरा ।।

तत्रावशिष्टौ तावेव कुक्कुटो मर्कटस्तथा ।। ८६ ।।

कालेन निधनं यातो यस्तस्या नाट्यमर्कटः ।।

सोभूतव कुमारोऽसौ कुक्कुटो मंत्रिणः सुतः ।। ८७ ।।

रुद्राक्षधारणोद्भूतात्पुण्यात्पूर्वभवार्जितात् ।।

कुले महति संजातौ वर्तेते बालकाविमौ ।। ८८ ।।

पूर्वाभ्यासेन रुद्राक्षान्दधाते शुद्धमानसौ ।।

अस्मिञ्जन्मनि तं लोकं शिवं संपूज्य यास्य तः ।। ८९ ।।

एषा प्रवृत्तिस्त्वनयोर्बालयोः समुदाहृता ।।

कथा च शिवभक्ताया किमन्यत्प्रष्टुमिच्छसि ।। ९० ।।

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखण्डे रुद्राक्षमहिमवर्णनं नाम विंशोऽध्यायः ।। २० ।। ।। अ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः २१

https://sa.wikisource.org/s/ge2



।। सूत उवाच ।। ।।

एवं ब्रह्मर्षिणा प्रोक्तां वाणीं पीयूषसन्निभाम् ।।

आकर्ण्य मुदितो राजा प्रांजलिः पुनरब्रवीत् ।। १ ।।

।। राजोवाच ।। ।।

अहो सत्संगमः पुंसामशेषाघप्रशोधनः ।।

कामक्रोधनिहंता च इष्टदोग्धा जनस्य हि ।। २ ।।

मम मायातमो नष्टं ज्ञानदृष्टिः प्रकाशिता ।।

तव दर्शनमात्रेण प्रायोहममरोत्तमः ।। ।। ३ ।।

श्रुतं च पूर्वचरितं बालयोः सम्यगेतयोः ।।

भविष्यदपि पृच्छामि मत्पुत्राचरणं मुने ।। ४ ।।

अस्यायुः कति वर्षाणि भाग्यं वद च कीदृ शम् ।।

विद्या कीर्तिश्च शक्तिश्च श्रद्धा भक्तिश्च कीदृशी ।। ५ ।।

एतत्सर्वमशेषेण मुने त्वं वक्तुमर्हसि ।।

तव शिष्योस्मि भृत्योस्मि शरणं त्वां गतोस्मयहम् ।। ६ ।।

।। पराशर उवाच ।। ।।

अत्रावाच्यं हि यत्किंचित्कथं शक्तोस्मि शंसितुम् ।।

यच्छ्रुत्वा धृतिमंतोपि विषादं प्राप्नुयुर्जनाः ।। ।। ७ ।।

तथापि निर्व्यलीकेन भावेन परिपृच्छतः ।।

अवाच्यमपि वक्ष्यामि तव स्नेहान्महीपते ।। ८ ।।

अमुष्य त्वत्कुमारस्य वर्षाणि द्वादशात्ययुः ।।

इतः परं प्रपद्येत सप्तमे दिवसे मृतिम् ।। ९ ।।

इति तस्य वचः श्रुत्वा कालकूटमिवोदितम् ।।

मूर्च्छितः सहसा भूमौ पतितो नृपतिः शुचा ।। ३.३.२१.१० ।।

तमुत्थाप्य समाश्वास्य स मुनिः करुणार्द्रधीः ।।

उवाच मा भैर्नृपते पुनर्वक्ष्यामि ते हितम् ।। ११ ।।

सर्गात्पुरा निरालोकं यदेकं निष्कलं परम् ।।

चिदानंदमयं ज्योतिः स आद्यः केवलः शिवः ।। १२ ।।

स एवादौ रजोरूपं सृष्ट्वा ब्रह्माणमात्मना ।।

सृष्टिकर्मनियुक्ताय तस्मै वेदांश्च दत्तवान् ।। १३ ।।

पुनश्च दत्तवानीश आत्मतत्त्वैकसंग्रहम् ।।

सर्वोपनिषदां सारं रुद्राध्यायं च दत्तवान् ।। १४ ।।

यदेकमव्ययं साक्षाद्ब्रह्मज्योतिः सनातनम् ।।

शिवात्मकं परं तत्त्वं रुद्राध्याये प्रतिष्ठितम् ।। १५ ।।

स आत्मभूः सृजद्विश्वं चतुर्भिर्वदनैर्विराट् ।।

ससर्ज वेदांश्चतुरो लोकानां स्थितिहेतवे ।। १६ ।।

तत्रायं यजुषां मध्ये ब्रह्मणो दक्षिणान्मुखात् ।।

अशेषोपनिषत्सारो रुद्राध्यायः समुद्गतः ।। १७ ।।

स एष मुनिभिः सर्वैर्मरीच्यत्रिपुरोगमैः ।।

सह देवैर्धृतस्तेभ्यस्तच्छिष्या जगृहुश्च तम् ।। १८ ।।

तच्छिष्यशिष्यैस्तत्पुत्रैस्तत्पुत्रैश्च क्रमागतैः ।।

धृतो रुद्रात्मकः सोऽयं वेदसारः प्रसादितः ।। १९ ।।

एष एव परो मन्त्र एष एव परं तपः ।।

रुद्राध्यायजपः पुंसां परं कैवल्यसाधनम् ।। ३.३.२१.२० ।।

महापातकिनः प्रोक्ता उपपातकिनश्च ये ।।

रुद्राध्यायजपात्सद्यस्तेऽपि यांति परां गतिम् ।। २१ ।।

भूयोपि ब्रह्मणा सृष्टाः सदसन्मिश्रयोनयः ।।

देवतिर्यङ्मनुष्याद्यास्ततः संपूरितं जगत् ।। २२ ।।

तेषां कर्माणि सृष्टानि स्वजन्मानुगुणानि च ।।

लोकास्तेषु प्रवर्तंते भुंजते चैव तत्फलम् ।। २३ ।।

लोकसृष्टिप्रवाहार्थं स्वयमेव प्रजापतिः।।

धर्माधर्मौ ससर्जाग्रे स्ववक्षःपृष्ठभागतः ।। २४ ।।

धर्ममेवानुतिष्ठंतः पुण्यं विंदंति तत्फलम् ।।

अधर्ममनुतिष्ठंतस्ते पापफलभोगिनः ।। २५ ।।

पुण्यकर्मफल स्वर्गो नरकस्तद्विपर्ययः ।।

तयोर्द्वावधिपौ धात्रा कृतौ शतमखांतकौ ।। २६ ।।

कामः क्रोधश्च लोभश्च मदमानादयः परे ।।

अधर्मस्य सुता आसन्सर्वे नरकनायकाः ।। २७ ।।

गुरुतल्पः सुरापानं तथान्यः पुल्कसीगमः ।।

कामस्य तनया ह्येते प्रधानाः परिकीर्तिताः ।। २८ ।।

क्रोधात्पितृवधो जातस्तथा मातृवधः परः ।।

ब्रह्महत्या च कन्यैका क्रोधस्य तनया अमी ।। २९ ।।

देवस्वहरणश्चैव ब्रह्मस्वहरणस्तथा ।।

स्वर्णस्तेय इति त्वेते लोभस्य तनयाः स्मृताः ।। ३.३.२१.३० ।।

एतानाहूय चांडालान्यमः पातकनायकान् ।।

नरकस्य विवृद्ध्यर्थमाधिपत्यं चकार ह ।। ३१ ।।

ते यमेन समादिष्टा नव पातकनायकाः ।।

ते सर्वे संगता भूयो घोराः पातकनायकाः ।। ३२ ।।

नरकान्पालयामासुः स्वभृत्यैश्चोपपातकैः ।।

रुद्राध्याये भुवि प्राप्ते साक्षात्कैवल्यसाधने ।। ३३ ।।

भीताः प्रदुद्रुवुः सर्वे तेऽमी पातकनायकाः ।।

यमं विज्ञापयामासुः सहान्यैरुपपातकैः ।। ३४ ।।

जय देव महाराज वयं हि तव किंकराः ।।

नरकस्य विवृद्ध्यर्थं साधिकाराः कृतास्त्वया ।। ३५ ।।

अधुना वर्तितुं लोके न शक्ताः स्मो वयं प्रभो ।।

रुद्राध्यायानुभावेन निर्दग्धाश्चैव विद्रुताः ।। ३६ ।।

ग्रामेग्रामे नदीकूले पुण्येष्वायतनेषु च ।।

रुद्रजाप्ये तु पर्याप्ते कथं लोके चरेमहि ।। ३७ ।।

प्रायश्चित्तसहस्रं वै गणयामो न किंचन ।।

रुद्रजाप्याक्षराण्येव सोढुं बत न शक्नुमः ।। ३८ ।।

महापातकमुख्यानामस्माकं लोकघातिनाम् ।।

रुद्रजाप्यं भयं घोरं रुद्रजाप्यं महद्विषम् ।। ३९ ।।

अतो दुर्विषहं घोरमस्माक व्यसनं महत् ।।

रुद्रजाप्येन संप्राप्तमपनेतुं त्वमर्हसि ।। ३.३.२१.४० ।।

इति विज्ञापितः साक्षाद्यमः पातकनायकैः ।।

ब्रह्मणोऽतिकमासाद्य तस्मै सर्वं न्यवेदयत् ।। ४१ ।।

देवदेव जगन्नाथ त्वामेव शरणं गतः ।।

त्वया नियुक्तो मर्त्यानां निग्रहे पापकारिणाम् ।। ४२ ।।

अधुना पापिनो मर्त्या न संति पृथिवीतले ।।

रुद्राध्यायेन निहतं पातकानां महत्कुलम् ।। ४३ ।।

पातकानां कुले नष्टे नरकाः शून्यतां गताः ।।

नरके शून्यतां याते मम राज्यं हि निष्फलम् ।। ४४ ।।

तस्मात्त्वयैव भगवन्नुपायः परिचिन्त्यताम् ।।

यथा मे न विहन्येत स्वामित्वं मर्त्यदेहिनाम् ।। ४५ ।।

इति विज्ञापितो धाता यमेन परिखिद्यता ।।

रुद्रजाप्यविघातार्थमुपायं पर्यकल्पयत् ।।४६।।

अश्रद्धां चैव दुर्मेधामविद्यायाः सुते उभे ।।

श्रद्धामेधाविघातिन्यौ मर्त्येषु पर्यचोदयत् ।। ४७ ।।

ताभ्यां विमोहिते लोके रुद्राध्यायपराङ्मुखे ।।

यमः स्वस्थानमासाद्य कृतार्थ इव सोऽभवत् ।। ४८ ।।

पूर्वजन्मकृतैः पापैर्जायंतेऽल्पायुषो जनाः ।।

तानि पापानि नश्यंति रुद्रं जप्तवतां नृणाम् ।। ४९ ।।

क्षीणेषु सर्वपापेषु दीर्घमायुर्बलं धृतिः ।।

आरोग्यं ज्ञानमैश्वर्यं वर्धते सर्वदेहिनाम् ।। ३.३.२१.५० ।।

रुद्राध्यायेन ये देवं स्नापयंति महेश्वरम् ।।

तज्जलैः कुर्वतः स्नानं ते मृत्युं संतरंति च ।। ५१ ।।

रुद्राध्यायाभिजप्तेन स्नानं कुर्वंति येऽभसा ।।

तेषां मृत्युभयं नास्ति शिवलो के महीयते ।। ५२ ।।

शतरुद्राभिषेकेण शतायुर्जायते नरः ।।

अशेषपापनिर्मुक्तः शिवस्य दयितो भवेत् ।। ५३ ।।

एष रुद्रायुतस्नानं करोतु तव पुत्रकः ।।

दशवर्षसहस्राणि मोदते भुवि शक्रवत् ।। ९४ ।।

अव्याहतबलैश्वर्यो हतशत्रुर्निरामयः ।।

निर्धूताखिलपापौघः शास्ता राज्यमकंटकम् ।। ५५ ।।

विप्रा वेदविदः शांताः कृतिनः शंसितव्रताः ।।

ज्ञानयज्ञतपोनिष्ठाः शिवभक्तिपरायणाः ।। ५६ ।।

रुद्राध्याय जपं सम्यक्कुर्वंतु विमलाशयाः ।।

तेषां जपानुभावेन सद्यः श्रेयो भविष्यति ।। ५७ ।।

इत्युक्तवंतं नृपतिर्महामुनिं तमेव वव्रे प्रथमं क्रियागुरुम् ।।

अथापरांस्त्यक्तधनाशयान्मुनीनावाहयामास सहस्रशः क्षणात् ।। ५८ ।।

ते विप्राः शांतमनसः सहस्रपरिसंमिताः ।।

कलशानां शतं स्थाप्य पुण्य वृक्षरसैर्युतम् ।। ५९ ।।

रुद्राध्यायेन संस्नाप्य तमुर्वीपतिपुत्रकम् ।।

विधिवत्स्नापयामासुः संप्राप्ते सप्तमे दिने ।। ३.३.२१.६० ।।

स्नाप्यमानो मुनिजनैः स राजन्यकुमारकः ।।

अकस्मादेव संत्रस्तः क्षणं मूर्च्छामवाप ह ।। ६१ ।।

सहसैव प्रबुद्धोऽसौ मुनिभिः कृतरक्षणः ।।

प्रोवाच कश्चित्पुरुषो दंडहस्तः समागतः ।। ६२ ।।

मां प्रहर्तुं कृतमतिर्भीमदण्डो भयानकः ।।

सोऽपि चान्यैर्महावीरै पुरुषैरभिताडितः ।। ६३ ।।

बद्ध्वा पाशेन महता दूरं नीत इवाभवत् ।।

एतावदहमद्राक्षं भवद्भिः कृतरक्षणः ।। ६४ ।।

इत्युक्तवंतं नृपतेस्तनूजं द्विजसत्तमाः ।।

आशीर्भिः पूजयामासुर्भयं राज्ञे न्यवेदयन् ।। ।। ६५ ।।

अथ सर्वानृषीञ्छ्रेष्ठान्दक्षिणाभिर्नृपोत्तमः ।।

पूजयित्वा वरान्नेन भोजयित्वा च भक्तितः ।। ६६ ।।

प्रतिगृह्याशिषस्तेषां मुनीनां ब्रह्मवादि नाम् ।।

भक्त्या बंधुजनैः सार्धं सभायां समुपाविशत् ।। ६७ ।।

तस्मिन्समागते वीरे मुनिभिः सह पार्थिवे ।।

आजगाम महायोगी देवर्षिर्नारदः स्वयम् ।। ६८ ।।

तमागतं प्रेक्ष्य गुरुं मुनीनां सार्धं सदस्यैरखिलैर्मुनींद्रैः ।।

प्रणम्य भक्त्या विनिवेश्य पीठे कृतोपचारं नृपतिर्बभाषे ।। ६९ ।। ।।

।। राजोवाच ।। ।।

दृष्टं किमस्ति ते ब्रह्मस्त्रिलोक्यां किंचिदद्भुतम् ।।

तन्नो ब्रूहि वयं सर्वे त्वद्वाक्यामृतलालसाः ।। ३.३.२१.७० ।।

।। नारद उवाच ।। ।।

अद्य चित्रं महद्दृष्टं व्योम्नोवतरता मया ।।

तच्छृणुष्व महाराज सहैभिर्मुनिपुंगवैः ।। ७१ ।।

अद्य मृत्युरिहायातो निहंतुं तव पुत्रकम्।।

दंडहस्तो दुराधर्षो लोकमुद्बाधयन्सदा ।। ७२ ।।

ईश्वरोपि विदित्वैनं त्वत्पुत्रं हंतुमागतम् ।।

सहैव पार्षदैः कंचिद्वीरभद्रमचोदयत् ।। ७३ ।।

स आगत्य हठान्मृत्युं त्वत्पुत्रं हंतुमागतम् ।।

गृहीत्वा सुदृढं बद्ध्वा दंडेनाभ्यहनद्रुषा ।। ७४ ।।

तं नीयमानं जगदीशसन्निधिं शीघ्रं विदित्वा भगवान्यमः स्वयम् ।।

कृतांजलिर्देव जयेत्युदीरयन्प्रणम्य मूर्ध्ना निजगाद शूलिनम् ।। ७५ ।।

।। यम उवाच ।। ।।

देवदेव महारुद्र वीरभद्र नमोऽस्तु ते ।।

निरागसि कथं मृत्यौ कोपस्तव समुत्थितः।।७६।।

निजकर्मानुबंधेन राजपुत्रं गतायुषम्।।

प्रहर्तुमुद्यते मृत्यौ कोपराधो वद प्रभो।।७७।।

।।वीरभद्र उवाच।।

दशवर्षसहस्रायुः स राजतनयः कथम्।।

विपत्तिमंतरायाति रुद्रस्नानहताशुभः।।७८।।

अस्ति चेत्तव संदेहो मद्वाक्येऽप्यनिवारिते ।।

चित्रगुप्तं समाहूय प्रष्टव्योऽद्यैव मा चिरम्।। ७९ ।।

।। नारद उवाच ।। ।।

अथाहूतश्चित्रगुप्तो यमेन सहसागतः ।।

आयुःप्रमाण त्वत्सूनोः परिपृष्टः स चाब्रवीत् ।। ३.३.२१.८० ।।

द्वादशाब्दं च तस्यायुरित्युक्त्वाथ विमृश्य च ।।

पुनर्लेख्यगतं प्राह स वर्षायुतजीवितम् ।।८१।।

अथ भीतो यमो राजा वीरभद्रं प्रणम्य च ।।

कथंचिन्मोचयामास मृत्युं दुर्वारबंधनात् ।। ८२ ।।

वीरभद्रेण मुक्तोऽथ यमोऽगान्निजमंदिरम् ।।

वीरभद्रश्च कैलासमहं प्राप्तस्तवांतिकम् ।। ८३ ।।

अतस्तव कुमारोऽयं रुद्रजाप्यानुभावतः ।।

मृत्योर्भयं समुत्तीर्य सुखी जातोऽयुतं समाः ।। ८४ ।।

इत्युक्त्वा नृपमामंत्र्य नारदे त्रिदिवं गते ।।

विप्राः सर्वे प्रमुदिताः स्वस्वजग्मुरथाश्रमम् ।। ८५ ।।

इत्थं काश्मीरनृपती रुद्राध्यायप्रभावतः ।।

निस्तीर्याशेषदुः खानि कृतार्थोभूत्सपुत्रकः।।८६।।

ये कीर्तयंति मनुजाः परमेश्वरस्य माहात्म्यमेतदथ कर्णपुटैः पिबंति ।।

ते जन्मकोटिकृतपापगणैर्विमुक्ताः शांताः प्रयांति परमं पदमिंदुमौलेः ।। ८७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोत्तरखंडे रुद्राध्यायमहिमवर्णनंनामैक विंशोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः ३ (ब्रह्मखण्डः)/ब्रह्मोत्तर खण्डः/अध्यायः २२

https://sa.wikisource.org/s/ge3



।। सूत उवाच ।। ।।

एवं शिवतमः पंथाः शिवेनैव प्रदर्शितः ।।

नृणां संसृतिबद्धानां सद्योमुक्तिकरः परः ।। १ ।।

अथ दुर्मेधसां पुंसां वेदेष्वनधिकारिणाम् ।।

स्त्रीणां द्विजातिबंधूनां सर्वेषां च शरीरिणाम् ।। २ ।।

एष साधारणः पंथाः साक्षात्कैवल्यसाधनः ।।

महामुनिजनैः सेव्यो देवैरपि सुपूजितः ।।३।।

यत्कथाश्रवणं शंभोः संसारभयनाशनम् ।।

सद्योमुक्तिकरं श्लाघ्यं पवित्रं सर्वदेहिनाम् ।।४।।

अज्ञानतिमिरांधानां दीपोऽयं ज्ञानसिद्धिदः ।।

भवरोगनिबद्धानां सुसेव्यं परमौषधम् ।। ५ ।।

महापातकशैलानां वज्रघातसुदारुणम् ।।

भर्जनं कर्मबीजानां साधनं सर्व संपदाम् ।। ६ ।।

ये शृण्वंति सदा शम्भोः कथां भुवनपावनीम् ।।

ते वै मनुष्या लोकेस्मिन्रुद्रा एव न संशयः ।। ७ ।।

शृण्वतां शूलिनो गाथां तथा कीर्तयतां सताम् ।।

तेषां पादरजांस्येव तीर्थानि मुनयो जगुः ।। ८ ।।

तस्मान्निश्रेयसं गन्तुं येभिवांछंति देहिनः ।।

ते शृण्वंतु सदा भक्त्या शैवीं पौराणिकीं कथाम् ।। ९ ।।

यद्यशक्तः सदा श्रोतुं कथां पौराणिकीं नरः ।।

मुहूर्तं वापि शृणुयान्नियतात्मा दिनेदिने ।। ३.३.२२.१० ।।

अथ प्रतिदिनं श्रोतुमशक्तो यदि मानवः ।।

पुण्यमासेषु वा पुण्ये दिने पुण्यतिथिष्वपि ।। ११ ।।

यः शृणोति कथां रम्यां पुराणैः समुदीरिताम् ।।

स निस्तरति संसारं दग्ध्वा कर्ममहाटवीम् ।। १२ ।।

मुहूर्तं वा तदर्द्धं वा क्षणं वा पावनीं कथाम् ।।

ये शृण्वंति सदा भक्त्या न तेषामस्ति दुर्गतिः ।। १३ ।।

यत्फलं सर्वयज्ञेषु सर्वदानेषु यत्फलम् ।।

सकृत्पुराणश्रवणात्तत्फलं विंदते नरः ।। १४ ।।

कलौ युगे विशेषेण पुराणश्रवणादृते ।।

नास्ति धर्मः परः पुंसां नास्ति मुक्तिपथः परः ।। १५ ।।

पुराणश्रवणाच्छंभोर्नास्ति संकीर्तनं परम् ।।

अत एव मनुष्याणां कल्पद्रुममहाफलम् ।। १६ ।।

कलौ हीनायुषो मर्त्या दुर्बलाः श्रमपीडिताः ।।

दुर्मेधसो दुःखभाजो धर्माचारविवर्जिताः ।। १७ ।।

इति संचिंत्य कृपया भगवान्बादरायणः ।।

हिताय तेषां विदधे पुराणाख्यं सुधारसम् ।। १८ ।।

पिबन्नेवामृतं यत्रादेतत्स्यादजरामरः ।।

शम्भोः कथामृतं कुर्यात्कुलमेवाजरामरम् ।। १९ ।।

बालो युवा दरिद्रो वा वृद्धो वा दुर्बलोऽपि वा ।।

पुराणज्ञः सदा वन्द्यः पूज्यश्च सुकृतार्थिभिः ।। ३.३.२२.२० ।।

नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।।

यस्य वक्त्रांबुजाद्वाणी कामधेनुः शरीरिणाम् ।। २१ ।।

गुरवः संति लोकेषु जन्मतो गुणतस्तथा ।।

तेषामपि च सर्वेषां पुराणज्ञः परो गुरुः ।। २२ ।।

भवकोटिसहस्रेषु भूत्वाभूत्वावसीदति ।।

यो ददात्यपुनर्वृत्तिं कोऽन्यस्तस्मात्परो गुरुः ।। २३ ।।

पुराणज्ञः शुचिर्दांतः शांतो विजितमत्सरः ।।

साधुः कारुण्यवान्वाग्मी वदेत्पुण्यकथां सुधी ।। २४ ।।

व्यासासनं समारूढो यदा पौराणिको द्विजः ।।

असमाप्तप्रसंगश्च नमस्कुर्यान्न कस्य चित् ।। २५ ।।

ये धूर्ता ये च दुर्वृत्ता ये चान्ये विजिगीषवः ।।

तेषां कुटिलवृत्तीनामग्रे नैव वदेत्कथाम् ।। २६ ।।

न दुर्जनसमाकीर्णे न शूद्रश्वापदावृते ।।

देशे न द्यूतसदने वदेत्पुण्यकथां सुधीः ।। २७ ।।

सद्ग्रामे सुजनाकीर्णे सुक्षेत्रे देवतालये ।।

पुण्ये नदनदीतीरे वदेत्पुण्यकथां सुधीः ।। २८ ।।

शिवभक्तिसमायुक्ता नान्यकार्येषु लालसा ।।

वाग्यताः सुश्रवोऽव्यग्राः श्रोतारः पुण्यभागिनः ।। २९ ।।

अभक्ता ये कथां पुण्यां शृण्वंति मनुजाधमाः ।।

तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ।। ३.३.२२.३० ।।

पुराणं ये त्वसंपूज्य तांबूलाद्यैरुपायनैः ।।

शृण्वंति च कथां भक्त्या दरिद्राः स्युर्न पापिनः ।। ३१ ।।

कथायां कीर्त्यमानायां ये गच्छंत्यन्यतो नराः ।।

भोगांतरे प्रणश्यंति तेषां दाराश्च संपदः ।। ३२ ।।

सोष्णीषमस्तका ये च कथां शृण्वंति पावनीम् ।।

ते बलाकाः प्रजायन्ते पापिनो मनुजाधमाः ।। ३३ ।।

तांबूलं भक्षयन्तो ये कथां शृण्वंति पावनीम् ।।

स्वविष्ठां खादयंत्येतान्नरके यमकिंकराः ।। ३४ ।।

ये च तुंगासनारूढाः कथां शृण्वंति दांभिकाः ।।

अक्षयान्नरकान्भुक्त्वा ते भवंत्येव वायसाः ।। ३५ ।।

ये च वीरासनारूढा ये च मंचकसंस्थिताः ।।

शृण्वंति सत्कथां ते वै भवंत्यनृजुपादपाः ।। ३६ ।।

असंप्रणम्य शृण्वंतो विषवृक्षा भवंति ते ।।

कथां शयानाः शृण्वन्तो भवंत्यजगरा नराः ।।३७।।

यः शृणोति कथां वक्तुः समानासनमाश्रितः ।।

गुरुतल्पसमं पापं संप्राप्य नरकं व्रजेत् ।। ३८ ।।

ये निंदंति पुराणज्ञं कथां वा पापहारिणीम् ।।

ते वै जन्मशतं मर्त्याः शुनका संभवंति च ।। ३९ ।।

कथायां वर्तमानायां ये वदंति नराधमाः ।।

ते गर्दभाः प्रजायन्ते कृकलासास्ततः परम् ।। ३.३.२२.४० ।।

कदाचिदपि ये पुण्यां न शृण्वंति कथां नराः ।।

ते भुक्त्वा नरकान्घोरान्भ वंति वनसूकराः ।। ४१ ।।

ये कथामनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।।

अशृण्वंतोऽपि ते यांति शाश्वतं परमं पदम् ।। ४२ ।।

कथायां कीर्त्यमानायां विघ्नं कुर्वंति ये शठाः ।।

कोट्यब्दान्नरकान्भुक्त्वा भवंति ग्रामसूकराः ।। ४३ ।।

ये श्रावयंति मनुजान्पुण्यां पौराणिकीं कथाम् ।।

कल्पकोटिशतं साग्रं तिष्ठंति ब्रह्मणः पदम् ।। ४४ ।।

आसनार्थं प्रयच्छंति पुराणज्ञस्य ये नराः ।।

कम्बलाजिनवासांसि मञ्चं फलकमेव च ।। ४५ ।।

स्वर्गलोकं समासाद्य भुक्त्वा भोगान्यथेप्सितान् ।।

स्थित्वा ब्रह्मादिलोकेषु पदं यांति निरामयम् ।। ४६ ।।

पुराणज्ञस्य यच्छंति ये सूत्रवसनं नवम् ।।

भोगिनो ज्ञानसंपन्नास्ते भवंति भवेभवे ।। ४७ ।।

ये महापातकैर्युक्ता उपपातकिनश्च ये ।।

पुराणश्रवणादेव ते यांति परमं पदम् ।। ४८ ।।

अत्र वक्ष्ये महापुण्यमितिहासं द्विजोत्तमाः ।।

शृण्वतां सर्वपापघ्नं विचित्रं सुमनोहरम् ।। ४९ ।।

दक्षिणापथमध्ये वै ग्रामो बाष्कलसंज्ञितः ।।

तत्र संति जनाः सर्वे मूढाः कर्मविवर्जिताः ।। ३.३.२२.५० ।।

न तत्र ब्राह्मणाचाराः श्रुतिस्मृतिपराङ्मुखाः ।।

जपस्वाध्यायरहिताः परस्त्री विषयातुराः ।। ५१ ।।

कृषीवलाः शस्त्रधरा निर्देवा जिह्मवृत्तयः ।।

न जानंति परं धर्मं ज्ञानवैराग्यलक्षणम् ।। ५२ ।।

स्त्रियश्च पापनिरताः स्वैरि ण्यः कामलालसाः।।

दुर्बुद्धयः कुटिलगाः सद्वृताचारवर्जिताः ।। ५३ ।।

तत्रैको विदुरो नाम दुरात्मा ब्राह्मणाधमः ।।

आसीद्वेश्यापतिर्योऽसौ सदारोऽपि कुमार्गगः ।। ५४ ।।

स्वपत्नीं बंदुलां नाम हित्वा प्रतिनिशं तथा ।।

वेश्याभवनमासाद्य रमते स्मरपीडितः ।। ५५ ।।

सापि तस्यांगना रात्रौ वियुक्ता नवयौवना ।।

असहंती स्मरावेशं रेमे जारेण संगता ।। ५६ ।।

तां कदाचिद्दुराचारां जारेण सह संगताम् ।।

दृष्ट्वा तस्याः पतिः क्रोधादभि दुद्राव सत्वरः ।। ५७ ।।

जारे पलायिते पत्नीं गृहीत्वा स दुराशयः ।।

संताड्य मुष्टिबंधेन मुहुर्मुहुरताडयत् ।। ५८ ।।

सा नारी पीडिता भर्त्रा कुपिता प्राह निर्भया ।।

भवान्प्रतिनिशं वेश्यां रमते का गतिर्मम ।। ५९ ।।

अहं रूपवती योषा नवयौवनशालिनी ।।

कथं सहिष्ये कामार्ता तव संगतिवर्जिता ।। ३.३.२२.६० ।।

इत्युक्तः स तया तन्व्या प्रोवाच ब्राह्मणाधमः ।।

युक्तमेव त्वयोक्तं हि तस्माद्वक्ष्यामि ते हितम् ।। ६१ ।।

जारेभ्यो धनमाकृष्य तेभ्यो देहि परां रतिम् ।।

तद्धनं देहि मे सर्वं पण्यस्त्रीणां ददामि तत् ।। ६२ ।।

एवं संपूर्यते कामो ममापि च वरानने ।।

तथेति भर्तृवचनं प्रतिजग्राह सा वधूः ।। ६३ ।।

एवं तयोस्तु दंपत्योर्दुराचारप्रवृत्तयोः ।।

कालेन निधनंप्राप्तः स विप्रो वृषलीपतिः ।। ६४ ।।

मृते भर्तरि सा नारी पुत्रैः सह निजालये ।।

उवास सुचिरं कालं किंचिदुत्क्रांतयौवना ।। ६५ ।।

एकदा दैवयोगेन संप्राप्ते पुण्यपर्वणि ।।

सा नारी बंधुभिः सार्धं गोकर्णं क्षेत्र माययौ ।। ६६ ।।

तत्र तीर्थजले स्नात्वा कस्मिंश्चिद्देवतालये ।।

शुश्राव देवमुख्यानां पुण्यां पौराणिकीं कथाम् ।। ६७ ।।

योषितां जारसक्तानां नरके यमकिंकराः ।।

संतप्तलोहपरिघं क्षिपंति स्मरमंदिरे ।। ६८ ।।

इति पौराणिकेनोक्तां सा श्रुत्वा धर्मसंहिताम् ।।

तमुवाच रहस्येषा भीता ब्राह्मणपुंगवम् ।। ६९ ।।

ब्रह्मन्पापमजानंत्या मयाचरितमुल्बणम् ।।

यौवने कामचारेण कौटिल्येन प्रवर्तितम् ।। ३.३.२२.७० ।।

इदं त्वद्वचनं श्रुत्वापुराणार्थविजृंभि तम् ।।

भीतिर्मे महती जाता शरीरं वेपते मुहुः ।। ७१ ।।

धिङ्मां दुरिंद्रियासक्तां पापां स्मरविमोहिताम् ।।

अल्पस्य यत्सुखस्यार्थे घोरां यास्यामि दुर्गतिम् ।। ७२ ।।

कथं पश्यामि मरणे यमदूतान्भयंकरान् ।।

कथं पाशैर्बलात्कंठे बध्यमाना धृतिं लभे ।। ७३ ।।

कथं सहिष्ये नरके खंडशो देहकृंतनम ।।

पुनः कथं पतिष्यामि संतप्ता क्षारकर्दमे ।। ७४ ।।

कथं च योनिलक्षेषु क्रिमिकीटखगादिषु ।।

परिभ्रमामि दुःखौघात्पीड्यमाना निरंतरम् ।। ७५ ।।

कथं च रोचते मह्यमद्यप्रभृति भोजनम् ।।

रात्रौ कथं च सेविष्ये निद्रां दुःखपरिप्लुता ।। ७६ ।।

हाहा हतास्मि दग्धास्मि विदीर्णहृदयास्मि च ।।

हा विधे मां महापापे दत्त्वा बुद्धिमपातयः ।। ७७ ।।

पततस्तुंगशैलाग्राच्छूलाक्रांतस्य देहिनः ।।

यद्दुःखं जायते घोरं तस्मात्कोटिगुणं मम ।। ७८ ।।

अश्वमेधायुतं कृत्वा गंगां स्नात्वा शतं समाः ।।

न शुद्धिर्जायते प्रायो मत्पापस्य गरीयसः ।। ७९ ।।

किं करोमि क्व गच्छामि कं वा शरणमाश्रये ।।

को वा मां त्रायते लोके पतंती नरकार्णवे ।। ३.३.२२.८० ।।

त्वमेव मे गुरुर्ब्रह्मंस्त्वं माता त्वं पितासि च ।।

उद्धरोद्धर मां दीनां त्वामेव शरणं गताम् ।।८१।।

इति तां जातनिर्वेदां पतितां चरणद्वये ।।

उत्थाप्य कृपया धीमान्बभाषे द्विजपुंगवः ।। ८२ ।।

।। ब्राह्मण उवाच ।। ।।

दिष्ट्या काले प्रबुद्धासि श्रुत्वेमां महतीं कथाम् ।।

मा भैषीस्तव वक्ष्यामि गतिं चैव सुखावहाम् ।।८३।।

सत्कथाश्रवणादेव जाता ते मतिरीदृशी ।।

इंद्रियार्थेषु वैराग्यं पश्चात्तापो महानभूत् ।। ८४ ।।

पश्चात्तापो हि सर्वेषामघानां निष्कृतिः परा ।।

तेनैव कुरुते सद्यः प्रायश्चित्तं सुधीर्नरः ।। ८५ ।।

प्रायश्चित्तानि सर्वाणि कृत्वा च विधिवत्पुनः ।।

अपश्चात्तापिनो नार्या न यांति गतिमुत्तमाम् ।। ८६ ।।

सत्कथाश्रवणान्नित्यं संयाति परमां गतिम् ।।

पुण्यक्षेत्रनिवासाच्च चित्तशुद्धिः प्रजायते ।।८७।।

यथा सत्कथया नित्यं संयाति परमां गतिम् ।।

तथान्यैः सद्व्रतैर्जंतोर्नभवेन्मतिरुत्तमा ।। ८८।।

यथा मुहुः शोध्यमानो दर्पणो निर्मलो भवेत् ।।

तथा सत्कथया चेतो विशुद्धिं परमां व्रजेत् ।। ८९ ।।

विशुद्धे चेतसि नृणां ध्यानं सिध्यत्युमापतेः ।।

ध्यानेन सर्वं मलिनं मनोवाक्कायसंभृतम् ।। ३.३.२२.९० ।।

सद्यो विधूय कृतिनो यांति शम्भोः परं पदम् ।।

अतः संन्यस्तपुण्यानां सत्कथा साधनं परम् ।। ९१ ।।

कथया सिध्यति ध्यानं ध्यानात्कैवल्यमुत्तमम् ।।

असिद्धपरमध्यानः कथामेतां शृणोति यः ।।

सोऽन्यजन्मनि संप्राप्य ध्यानं याति परां गतिम् ।। ९२ ।।

नामोच्चारणमात्रेण जप्त्वा मंत्रमजामिलः ।।

पश्चात्तापसमायुक्तस्त्ववाप परमां गतिम् ।। ९३ ।।

सर्वेषां श्रेयसां बीजं सत्कथाश्रवणं नृणाम् ।।

यस्तद्विहीनः स पशुः कथं मुच्येत बन्धनात् ।। ९४ ।।

अतस्त्वमपि सर्वेभ्यो विषयेभ्यो निवृत्तधीः ।।

भक्तिं परां समाधाय सत्कथां शृणु सर्वदा ।।

शृण्वंत्याः सत्कथां नित्यं चेतस्ते शुद्धिमेष्यति ।। ९५ ।।

तेन ध्यायसि विश्वेशं ततो मुक्तिमवाप्स्यसि ।।

ध्यायतः शिवपादाब्जं मुक्तिरेकेन जन्मना ।। ९६ ।।

भविष्यति न सन्देहः सत्यं सत्यं वदाम्यहम् ।।

इत्युक्ता तेन विप्रेण सा नारी बाष्पसंकुला ।। ९७ ।।

पतित्वा पादयोस्तस्य कृतार्थास्मीत्यभाषत ।।

तस्मिन्नेव महाक्षेत्रे तस्मादेव द्विजोत्तमात् ।। ९८ ।।

शुश्राव सत्कथां साध्वीं कैवल्यफल दायिनी।।

स उवाच द्विजस्तस्यै कथां वैराग्यबृंहिताम् ।। ९९ ।।

यां श्रुत्वा मनुजः सद्यस्त्यजेद्विषयवासनाम् ।।

तस्याश्चित्तं यथा शुद्धं वैराग्यरसगं यथा ।। ३.३.२२.१०० ।।

तथोवाच द्विजः शैवीं कथां भक्तिसमन्विताम् ।।

यथायथा मनस्तस्याः प्रसादमभिगच्छति ।।

तथातथा शनैः शंभोर्ध्यानयोगमुपादिशत् ।। १ ।।

शनैः शनैर्ध्वस्तरजस्तमोमलं विमुक्तसर्वेन्द्रियभोगविग्रहम् ।।

विशुद्धतत्त्वं हृदयं द्विजस्त्रिया विवेश विश्वेश्वर रूपचिंतनम्।। २ ।।

इत्थं सद्गुरुमाश्रित्य सा नारी प्राप्तसन्मतिः ।।

दध्यौ मुहुर्मुहुः शंभोश्चिदानंदमयं वपुः ।। ३ ।।

नित्यं तीर्थजले स्नात्वा जटावल्कलधारिणी ।।

भस्मोद्धूलितसर्वांगी रुद्राक्षकृतभूषणा ।। ४ ।।

शिवनामजपासक्ता वाग्यता मितभोजना ।।

बद्धपद्मासनाऽव्यग्रा सत्कथा श्रवणोत्सुका ।। ५ ।।

गुरुशुश्रूषणरता त्यक्तापत्यसुहृजना ।।

गुरूपदिष्टयोगेन शिवमेवमतोषयत् ।। ६ ।।

विश्वेश विश्वविलयस्थितिजन्महेतो विश्वैकवंद्य शिव शाश्वत विश्वरूप ।।

विध्वस्तकालविपरीतगुणावभास श्रीमन्महेश मयि धेहि कृपाकटाक्षम् ।। ७ ।।

शंभो शशांककृतशेखर शांतमूर्ते गंगाधरामरवरार्चितपादपद्म ।।

नागेंद्रभूषण नगेंद्रनिकेतनेश भक्तार्तिहन्मयि निधेहि कृपाकटाक्षम् ।।।८।।।

श्रीविश्वनाथ करुणाकर शूलपाणे भूतेश भर्ग भुवनत्रयगीतकीर्ते ।।

श्रीनीलकण्ठ मदनान्तक विश्वमूर्ते गौरीपते मयि निधेहि कृपाकटाक्षम् ।। ९ ।।

इत्थं प्रतिदिनं भक्त्या प्रार्थयंती महेश्वरम्।।

शृण्वंती सत्कथां सम्यक्कर्मबंधं समाच्छिनत् ।। ३.३.२२.११० ।।

अथ कालेन सा नारी समुत्सृज्य कलेवरम् ।।

महेशानुचरैर्नीता संप्राप्ता शिव मंदिरम् ।। ११ ।।

तत्र देवैर्महादेवं सेव्यमानं सहोमया ।।

गणेशनंदिभृंग्याद्यैर्वीरभद्रेश्वरादिभिः ।। १२ ।।

उपास्यमानं गौरीशं कोटिसूर्यसमप्रभम् ।।

त्रिलोचनं पंचमुखं नीलग्रीवं सदाशिवम् ।। १३ ।।

वामांके बिभ्रतं गौरीं विद्युच्चंद्रसमप्रभाम् ।।

दृष्ट्वा ससंभ्रमं नारी सा प्रणम्य पुनःपुनः ।। १४ ।।

आनन्दाश्रुजलोत्सिक्ता रोमहर्षसमाकुला ।।

संमानिता करुणया पार्वत्या शंकरेण च ।।१५।।

तस्मिँल्लोके परानन्दघनज्योतिषि शाश्वते ।।

लब्ध्वा निवासमचलं लेभे सुखमनाहतम् ।। १६ ।।

सा कदाचिदुमां देवीमुपसृत्य प्रणम्य च ।।

पर्यपृच्छत मे भर्त्ता कां गतिं गतवानिति ।।१७।।

तामुवाच महादेवी स ते भर्त्ता दुराशयः ।।

भुक्त्वा नरकदुःखानि विंध्ये जातः पिशाचकः ।। १८ ।।

पुनः प्रपच्छ सा नारी देवीं त्रिभुवनेश्वरीम् ।।

केनोपायेन मे भर्त्ता सद्गतिं प्राप्नुयादिति ।। १९ ।।

।। देव्युवाच ।। ।।

सोऽस्मत्कथां महापुण्यां कदाचिच्छृणुयाद्यदि ।।

निस्तीर्य दुर्गतिं सर्वामिमं लोकं प्रयास्यति ।। ३.३.२२.१२० ।।

इति गौर्या वचः श्रुत्वा सा नारी विहितांजलिः ।।

प्रार्थयामास तां देवीं भर्तुः पापविशोधने ।।२१।।

तया मुहुः प्रार्थ्यमाना पार्वतीकरुणायुता ।।
तुंबुरुं नाम गंधर्वमाहूयेदमथाब्रवीत् ।। २२ ।।
तुंबुरो गच्छ भद्रं ते विंध्यशैलं सहानया ।।
आस्ते पिशाचकस्तत्र योऽस्याः पतिरसन्मतिः ।। २३ ।।
तस्याग्रे परमां पुण्यां कथामस्मद्गुणैर्युताम् ।।
आख्याय दुर्गतेर्मुक्तं तमानय शिवांतिकम् ।। २४ ।।
इति देव्या समादिष्टस्तुंबुरुस्तां प्रणम्य च ।।
तया सह विमानेन विंध्याद्रिं सहसा ययौ ।। २५ ।।
तत्रापश्यन्महाकायं रक्तनेत्रं महाहनुम् ।।
प्रहसंतं रुदंतं च वल्गंतं च पिशाचकम्।। २६ ।।
बलाद्गृहीत्वा तं पाशैर्बद्ध्वा वै संनिवेश्य च ।।
तुंबुरुर्वल्लकीहस्तो जगौ गौरीपतेः कथाम् ।। २७ ।।
स पिशाचो महापुण्यां कथां श्रुत्वा पुरद्विषः ।।
विधूय कलुषं सर्वं सप्ताहात्प्राप संस्मृतिम् ।। २८ ।।
स पैशाचं वपुस्त्यक्त्वा स्वरूपं दिव्यमाप्य च ।।
जगौ स्वयमपि श्रीमच्चरितं पार्वतीपतेः ।। २९ ।।
विमानमारुह्य स दिव्यरूपधृक्स तुंबुरुः पार्श्वगतः स्वकांतया ।।
गायन्महेशस्य गुणान्मनोरमाञ्जगाम कैवल्यपदं सनातनम् ।। ३.३.२२.१३० ।। ।।
सूत उवाच ।। ।।
इत्येतत्कथितं पुण्यमाख्यानं दुरितापहम् ।।
महेश्वरप्रीतिकरं निर्मलज्ञानसाधनम् ।। ।। ३१ ।।
य इदं शृणुयान्मर्त्यः कीर्तयेद्वा समाहितः ।।
शंभोर्गुणानुकथनं विचित्रं पापनाशनम् ।। ३२ ।।
परमानन्दजनकं भवरोगमहौषधम् ।। ।
भुक्त्वेह विविधान्भोगान्मुक्तो याति परां गतिम् ।। ३३ ।।
।। सूत उवाच ।। ।।
यूयं खलु महाभागाः कृतार्था मुनिसत्तमाः ।।
ये सेवंते सदा शंभोः कथामृतरसं नवम् ।। ३४ ।।

ते जन्मभाजः खलु जीवलोके येषां मनो ध्यायति विश्वनाथम् ।।

वाणी गुणान्स्तौति कथां शृणोति श्रोत्रद्वयं ते भवमुत्तरंति ।। ३५ ।।

विविधगुणविभेदैर्नित्यमस्पृष्टरूपं जगति च बहिरंतर्वा समानं महिम्ना ।।

स्वमहसि विहरंतं वाङ्मनोवृत्तिदूरं परमशिवमनंतानंदसांद्रं प्रपद्ये ।। १३६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मोतरखण्डे पुराणश्रवणमहिमवर्णनंनाम द्वाविंशो ऽध्यायः।। २२।।

इति स्कान्दे तृतीयं ब्राह्मखण्डं संपूर्णम्।।३।।

श्रीगणेशाय नमः ।। ।।
तं मन्महे महेशानं महेशानप्रियार्भकम् ।।
गणेशानं करिगणेशानाननमनामयम् ।। १ ।।
भूमिष्ठापि न यात्रभूस्त्रिदिवतोप्युच्चैरधःस्थापि या या बद्धा भुवि मुक्तिदास्युरमृतं यस्यां मृता जंतवः ।।
या नित्यं त्रिजगत्पवित्रतटिनी तीरे सुरैः सेव्यते सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ।। २ ।।
नमस्तस्मै महेशाय यस्य संध्यात्त्रयच्छलात् ।।
यातायातं प्रकुर्वंति त्रिजगत्पतयोऽनिशम् ।। ३ ।।
अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः ।।
सूताग्रे कथयामास कथां पापापनोदिनीम् ।। ४ ।।
श्रीव्यास उवाच ।। ।।
कदाचिन्नारदः श्रीमान्स्नात्वा श्रीनर्मदांभसि ।।
श्रीमदोंकारमभ्यर्च्य सर्वदं सर्वदेहिनाम् ।। ५ ।।
व्रजन्विलोकयांचक्रे पुरोविंध्यं धराधरम् ।।
संसारतापसंहारि रेवावारिपरिष्कृतम् ।। ६ ।।
द्वैरूप्येणापि कुर्वंतं स्थावरेण चरेण च ।।
साभिख्येन यथार्थाख्यामुच्चैर्वसु मतीमिमाम् ।। ७ ।।
रसालयं रसालैस्तैरशोकैः शोकहारिणाम् ।।
तालैस्तमालेर्हिंतालैः सालैः सर्वत्रशालितम् ।। ८।।
खपुरैः खपुराकारं श्रीफलं श्रीफलैः किल ।।
गुरुश्रियंत्वगुरुभिः कपिपिंगं कपित्थकैः ।। ९ ।।
वनश्रियः कुचाकारैर्लकुचैश्च मनोहरम् ।।
सुधाफलसमारंभि रंभाभिः परिभासितम् ।।4.1.1.१०।।
सुरंगैश्चापि नारंगैरंगमंडपवच्छ्रियः ।।
वानीरैश्चापि जंबीरैर्बीजपूरैः प्रपूरितम् ।। ११ ।।
अनिलालोल कंकोल वल्लीहल्ली सकायितम् ।।
लवलीलवलीलाभिर्लास्यलीलालयं किल ।। १२ ।।
मंदांदोलितकर्पूर कदलीदल संज्ञया ।।
विश्रमाय श्रमापन्नानाहूयंतमिवाध्वगान् ।। १३ ।।
पुन्नागमिव पुन्नागपल्लवैःकरपल्लवैः ।।
कलयंतमिवाऽलोलैर्मल्लिकास्तबकस्तनम् ।। १४ ।।
विदीर्णदाडिमैः स्वांतं दर्शयंतं तु रागवत् ।।
माधवीं धवरूपेण श्लिष्यंतमिव कानने ।। १५ ।।

उदुंबरैरंबरगैरनंतफलमालितैः ।।
ब्रह्मांडकोटीर्बिभ्रंतमनंतमिव सर्वतः ।। १६ ।।
पनसैर्वनासाभैः शुकनासैः पलाशकैः।।
पलाशनाद्विरहिणां पत्रत्यक्तैरिवावृतम्।।१७।।
कदंबवादिनो नीपान्दृष्ट्वा कंटकितैरिव।।
समंततो भ्राजमानं कदंबककदंबकैः ।। १८ ।।
नमेरुभिश्च मेरूच्चशिखरैरिव राजितम् ।।
राजादनैश्च मदनैः सदनैरिव कामिनाम् ।। १९ ।।
तटेतटेपटुवटैरुच्चैःपटकुटी वृतम् ।।
कुटजस्तबकैर्भांतमधिष्ठितबकैरिव ।। 4.1.1.२० ।।
करमर्दैः करीरैश्च करजैश्चकरंबकैः ।।
सहस्रकरवद्भांतमर्थिप्रत्युद्गतैः करैः ।। २१ ।।
नीराजितमिवोद्दीपैराजचंपककोरकैः ।।
सपुष्पशाल्मलीभिश्च जितपद्माकरश्रियम् ।। २२ ।।
क्वचिच्चलदलैरुच्चैः क्वचित्कांचनकेतकैः ।।
कृतमालैर्न क्तमालैः शोभमानं क्वचित्क्वचित् ।। २३ ।।
कर्कंधु बंधुजीवैश्च पुत्रजीवैर्विराजितम् ।।
सतिंदुकेंगुदीभिश्च करुणैःकरुणालयम् ।। २४ !।
गलन्मधू ककुसुमैर्धरारूपधरंहरम् ।।
स्वहस्तमुक्तमुक्ताभिरर्चयंतमिवानिशम् ।। २५ ।।
सर्जार्जुनांजनैर्बीजैर्व्यजनैर्वीज्यमानवत् ।।
नारिकेलैः सखर्जूरैर्धृतच्छत्रमिवांबरे ।। २६ ।।
अमंदैः पिचुमंदैश्च मंदारैः कोविदारकैः ।।
पाटलातिंतिणीघोंटाशाखोटैः करहाटकैः ।। २७ ।।
उद्दंडैश्चापि शेहुंडैरेरंडैर्गुडपुष्पकैः ।।
बकुलैस्तिलकैश्चैव तिलकांकितमस्तकम् ।। २८ ।।
अक्षैः प्लक्षैः शल्लकीभिर्देवदारुहरिद्रुमैः ।।
सदाफलसदापुष्प वृक्षवल्लीविराजितम् ।। २९ ।।
एलालवंग मरिचकुलुं जनवनावृतम् ।।
जंब्वाम्रातकभल्लातशेलुश्रीपर्णिवर्णितम् ।। 4.1.1.३० ।।
शाकशंखवनैरम्यं चदनैरक्तचंदनैः ।।
हरीतकीकर्णिकार धात्रीवनविभूषणम् ।। ३१ ।।
द्राक्षावल्लीनागवल्लीकणावल्लीशतावृतम् ।।

मल्लिकायूथिकाकुंदम दयंती सुगंधिनम् ।।३२।।
भ्रमद्भ्रमरमालाभिर्मालतीभिरलंकृतम् ।।
अलिच्छलागतंकृष्णं गोपीरंतुमनेकशः ।।३३।।
नानामृगगणाकीर्णं नानापक्षिविनादितम् ।।
नानासरित्सरः स्रोतः पल्वलैः परितो वृतम् ।।३४।।
तुच्छश्रियः स्वर्गभूमीः परिहायागतैरिव ।।
नानासुरनिकायैश्च विष्वग्भोगेच्छयोषितम् ।।३५।।
उत्सृजंतमिवार्घ्यं वै पत्रपुष्पैरितस्ततः ।।
केकिकेकारवैर्दूरात्कुर्वंतं स्वागतं किल ।। ३६ ।।
अथ सूर्यशताभासं नभसि द्योतितांबरम् ।।
नारदं दृष्टवाञ्छैलो दूरात्प्रत्युज्जगाम तम् ।। ३७ ।।
ब्रह्मसूनुवपुस्तेजो दूरीकृतदरीतमाः ।।
तमागच्छंतमालोक्य मानसं तम उज्जहौ ।। ३८ ।।
ब्रह्मतेजःसमुद्भूत साध्वसः साधुस त्क्रियः ।।
कठिनोपि परित्यज्य धत्ते मृदुलतां किल ।। ३९ ।।
दृष्ट्वा मृदुलतां तस्य द्वैरूप्येपि स नारदः ।।
मुमुदे सुतरां संतः प्रश्रयग्राह्यमानसाः ।। 4.1.1.४० ।।
गृहानायांतमालोक्य गुरुंवाऽगुरुमेव वा ।।
योऽगुरुर्नम्रतां धत्ते स गुरुर्न गुरुर्गुरुः ।। ४१ ।।
तं प्रत्युच्चैः शिराःसोपि विनम्रतरकंधरः ।।
शैलस्त्विलामिलन्मौलिः प्रणनाम महामुनिम्।।४२।।
तमुत्थाप्य कराग्राभ्यामाशीर्भिरभिनंद्य च ।।
तदुद्दिष्टासनं भेजे मनसोपि समुच्छ्रितम् ।।४३।।
स दध्नामधुनाज्येन नीरार्द्राक्षतदूर्व या ।।
तिलैः कुशैः प्रसूनैस्तमष्टांगार्घ्यैरपूजयत् ।। ४४ ।।
गृहीतार्घ्यंकिल श्रांतं पादसंवाहनादिभिः ।।
गतश्रममथालोक्य बभाषे ऽवनतो गिरिः ।। ४५ ।।
अद्य सद्यः परिहृतं त्वदंघ्रिरजसारजः ।।
त्वदंगसंगिमहसा सहसाऽप्यांतरंतमः ।। ४६ ।।
सफलर्धिरहं चाद्य सुदिवाद्यच मे मुने ।।
प्राक्कृतैः सुकृतैरद्य फलितं मे चिरार्जितैः ।। ४७ ।।
धराधरत्वं कुलिषुमान्यं मेऽद्य भविष्यति ।।
इति श्रुत्वा तदा किंचिदुच्छुस्य स्थितवान्मुनिः ।। ४८ ।।

पुनरूचे कुलिवरः संभ्रमाप न्नमानसः ।।
उच्छ्वासकारणं ब्रह्मन्ब्रूहि सर्वार्थकोविद ।। ४९ ।।
अदृष्टं तव नोदृष्टं यदिष्टंविष्टपत्रये ।।
अनुक्रोशोत्र मयिचेदुच्यतां प्रणतोस्म्यहम् ।। 4.1.1.५० ।।
त्वदागमनजानन्दसंदोहैर्मे दुरारवः ।।
अलं न वक्तुमसकृत्तथाप्येकं वदाम्यहम् ।। ५१ ।।
धराधरणसामर्थ्यं मेर्वादौ पूर्वपूरुषैः ।।
वर्ण्यते समुदायात्तदहमेको दधे धराम् ।। ५२ ।।
गौरीगुरुत्वाद्धिमवानादिपत्याच्च भूभृताम् ।।
संबंधित्वात्पशुपतेः स एको मान्यभृत्सताम्।। ५३ ।।
नमेरुः स्वर्णपूर्णत्वाद्रत्नसा नुतयाथवा ।।
सुरसद्मतयावापि क्वापि मान्यो मतो मम ।। ५४ ।।
परं शतं न किंशैला इलाकलनकेलयः ।।
इह संति सतां मान्या मान्यास्ते तु स्वभूमिषु ।। ।।५५ ।।
मन्देहदेहसंदेहादुदयैकदयाश्रितः ।।
निषधोनौषधिधरोऽप्यस्तोप्यस्तमितप्रभः ।। ५६ ।।
नीलश्च नीलीनिलयो मन्दरो मन्दलोचनः ।।
सर्पालयः समलयो रायं नावैति रैवतः ।। ५७ ।।
हेमकूटत्रिकूटाद्याः कृटोत्तरपदास्तुते ।।
किष्किंधक्रौंचसह्याद्या भारसह्या न ते भुवः ।। ५८ ।।
इति विंध्यवचः श्रुत्वा नारदोऽचिन्तयद्धृदि ।।
अखर्वगर्वसंसर्गो न महत्त्वाय कल्पते ।। ५९ ।।
श्रीशैलमुख्याः किंशैलानेह संत्यमलश्रियः ।।
येषां शिखरमात्रादि दर्शनं मुक्तये सताम् ।। 4.1.1.६० ।।
अद्यास्य बलमालोक्यमिति ध्यात्वाब्रवीन्मुनिः ।।
सत्यमुक्तं हि भवता गि रिसारंविवृण्वता ।। ६१ ।।
परं शैलेषु शैलेंद्रो मेरुस्त्वामवमन्यते ।।
मया निःश्वसितं चैतत्त्वयि चापि निवेदितम् ।। ६२ ।।
अथवा मद्विधानां हि केयं चिंता महात्मनाम् ।।
स्वस्त्यस्तु तुभ्यमित्युक्त्वा ययौ स व्योमवर्त्मनि ।। ६३ ।।
गते मुनौ निनिंदस्वमतीवोद्विग्नमानसः ।।
चिन्तामवाप महतीं विंध्यो वंध्यमनोरथः ।। ६४ ।।
विंध्य उवाच ।। ।।

धिग्जीवितंशास्त्रकलोज्झितस्य धिग्जीवितं चोद्यमवर्जितस्य ।।
धिग्जीवितं ज्ञातिपराजितस्य धिग्जीवितं व्यथर्मनोरथस्य ।। ६५ ।।
कथं भुनक्ति स दिवा कथं रात्रौ स्वपित्यहो ।।
रहः शर्म कथं तस्य यस्याभिभवनं रिपोः ।। ६६ ।।
अहोदवाग्निदवथुस्तथामां न स बाधते ।।
बाधते तु यथा चित्ते चिन्तासंतापसंततिः ।। ६७ ।।
युक्तमुक्तं पुराविद्भिश्चिन्तामूर्तिः सुदारुणा ।।
न भेषजैर्लंघनैर्वा न चान्यैरुपशाम्यति ।।६८।।
चिन्ताज्वरो मनुष्याणां क्षुधांनिद्रांबलं हरेत् ।।
रूपमुत्साहबुद्धिं श्री जीवितं च न संशयः ।। ६९ ।।
ज्वरो व्यतीते षडहे जीर्णज्वर इहोच्यते ।।
असौ चिन्ताज्वरस्तीव्रः प्रत्यहं नवतां व्रजेत् ।। 4.1.1.७० ।।
धन्यो धन्वतरिर्नात्र चरकश्चरतीह न ।।
नासत्यावपिनाऽ सत्यावत्र चिन्ताज्वरे किल ।। ७१ ।।
किं करोमि क्व गच्छामि कथं मेरुं जयाम्यहम् ।।
उत्प्लुत्य तस्य शिरसि पतामि न पताम्यतः ।। ७२ ।।
शक्रं कोपयता पूर्वमस्मद्गोत्रेण केनचित् ।।
पक्षहीनः कृतो यत्र धिगपक्षस्यचेष्टितम् ।। ७३ ।।
अथवा स कथं मेरुस्तथोच्चैः स्पर्द्धते मया ।।
भूमेर्भारभृतःप्रायो भवंति भ्रांति भूमयः ।। ७४ ।।
अलीकवाक्त्वमथवा संभाव्यं नारदे कथम् ।।
ब्रह्मचारिणि वेदज्ञे सत्यलोकनिवासिनि ।। ७५।।
युक्तायुक्तविचारोथ मादृशेनोपयुज्यते ।।
पराक्रमेष्वशक्तानां विचारं गाहते मनः ।। ७६ ।।
अथवा चिन्तनैरेतैः किंव्यर्थैर्विश्वकारकम् ।।
विश्वेशं शरणं यायां समे बुद्धिं प्रदास्यति ।। ७७।।
अनाथनाथः सर्वेषां विश्वनाथो हि गीयते ।।
क्षणं मनसि संचित्य भवेदित्थमसंशयम् ।। ७८ ।।
एतदेव करिष्यामि नेष्टं कालविलंबनम् ।।
विचक्षणैरुपेक्ष्यौ न वर्द्धमानौ परामयौ ।।७९।।
मेरुं प्रदक्षिणीकुर्यान्नित्यमेव दिवाकरः ।।
सग्रहर्क्षगणो नूनं मन्यमानो बलाधिकम् ।। 4.1.1.८० ।।
इति निश्चित्य विन्ध्याद्रिर्ववृधे स मृधेक्षणः ।।

अनंतगगनस्यांतं कुर्वद्भिः शिखरैरिव ।। ८१ ।।
कैश्चित्सार्द्धं विरोधो न कर्तव्यः केनचित्क्वचित् ।।
कर्तव्यश्चेत्प्रयत्नेन यथा नोपहसेज्जनः ।। ८२ ।।
निरुध्य ब्राध्नमध्वानं कृतकृत्य इवाद्रिराट् ।।
स्वस्थोऽभवद्भवाधीना प्राणिनां हि भविष्यता ।। ८३ ।।
यमद्ययमकर्तासौ दक्षिणं प्रक्रमिष्यति ।।
सकुलीनः स च श्रीमान्समहान्महितः स च ।। ८४ ।।
यावत्स्वश क्तिं शक्तोपि न दर्शयति कर्हिचित् ।।
तावत्स लंघ्यः सर्वेषां ज्वलनो दारुगो यथा ।। ८५ ।।
इति चिंतामहाभारं त्यक्त्वा तस्थौ स्थिरोद्यमः ।।
आकांक्षमाणस्तरणे रुदयं ब्राह्मणो यथा ।। ८६ ।।
इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्धे विन्ध्यवर्धनंनाम प्रथमोऽध्यायः ।। १ ।।

व्यास उवाच ।।
सूर्य आत्मास्य जगतस्तस्थुषस्तमसोरिपुः ।।
उदियायोदयगिरौ शुचिप्रसृमरैः करैः ।। १ ।।
संवर्धयन्सतां धर्मान्त्यक्कुर्वंस्तामसीं स्थितिम् ।।
पद्मिनीं बोधयंस्त्विष्टां रात्रौ मुकुलिताननाम् ।। २ ।।
हव्यं कव्यं भूतबलिं देवादीनां प्रवर्तयन् ।।
प्राह्णापराह्णमध्याह्न क्रियाकालं विजृंभयन् ।। ३ ।।
असतां हृदि वक्त्रेषु निर्दिशंस्तमसः स्थितिम् ।।
यामिनीकालकलितं जगदुज्जीवयन्पुनः ।। ४ ।।
यस्मिन्नभ्युदिते जातः सम्यक्पुण्यजनोदयः ।।
अहो परोपकरणं सद्यः फलति नेति चेत् ।। ५ ।।
सायमस्तमितः प्रातः कथं जीवेद्रविः पुनः ।।
सानुरागकरस्पर्शैः प्राचीमाश्वास्य खंडिताम् ।। ६ ।।
यामं भुक्त्वा तथाग्नेयीं ज्वलंतीं विरहादिव ।।
लवंगैलामृगमदचंद्रचंदनचर्चिताम ।। ७ ।।
तांबूलीरागरक्तौष्ठीं द्राक्षास्तबकसुस्तनीम् ।।
लवलीवल्लिदोर्वल्ली कंको ली पल्लवांगुलिम् ।। ८ ।।
मलयानिल निःश्वासां क्षीरोदकवरांबराम् ।।
त्रिकूटस्वर्णरत्नांगीं सुवेलाद्रि नितंबिनीम ।। ९ ।।
कावेरीगौतमीजंघां चोलचोलां शुकावृताम् ।।
सह्यदर्दुरवक्षोजां कांतीकांचीविभूषणाम ।। 4.1.2.१० ।।
सुकोमलमहाराष्ट्रीवाग्विलासमनोहराम् ।।
अद्यापि न महालक्ष्मीर्या विमुंचति सद्गुणाम् ।।११।।
सुदक्षदक्षिणामाशामाशानाथः प्रतस्थिवान् ।।
क्रमतः सर्वमर्वन्तो हेलया हेलिकस्य खम् ।।१२।।
न शेकुरग्रतो गंतुं ततोऽनूरुर्व्यजिज्ञपत् ।।१३।।
अनूरुरुवाच ।। ।।
भानो मानोन्नतो विन्ध्यो निद्ध्यय गगनं स्थितः ।।
स्पर्धते मेरुणाप्रेप्सु स्त्वद्दत्तां तु प्रदक्षिणाम् ।।१४।।
अन्नूरुवाक्यमाकर्ण्य सविता हृद्यचिन्तयत् ।।
अहो गगनमार्गोपि रुध्यते चातिविस्मयः ।। १५ ।।
व्यास उवाच ।। ।।
सूरः शूरोपि किं कुर्यात्प्रांतरे वर्त्मनिस्थितः ।।

त्वरावानपि को रुद्धं मागर्मेको विलंघयेत् ।। १६ ।।
गृह्यत्राप्रत्यूष्टेः क्षणं नावतिष्ठति ।।
शून्यमार्गे निरुद्धः स किंकरोतु विधिर्बली ।। १७ ।।
योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ।।
योजनस्य निमेषार्धाद्याति सोपि चिरं स्थितः ।। १८ ।।
गते बहुतिथेकाले प्राच्यौदीच्यां भृशार्दिताः ।।
चण्डरश्मेः करव्रातपातसन्तापतापिताः ।। १९ ।।
पाश्चात्या दक्षिणात्याश्च निद्रामुद्रितलोचनाः ।।
शयिता एव वीक्षन्ते सतारग्रहमंबरम् ।।4.1.2.२०।।
अहोनाहस्कराभावान्निशानैवाऽनिशाकरात्।।
अस्तंगतर्क्षान्नभसः कः कालस्त्वेप नेक्ष्यते ।।२१।।
ब्रह्मांडं किमकांडे वै लयमेष्यति तत्कथम् ।।
परापतंति नाद्यापि पारावारा इतस्ततः ।। २२ ।।
स्वाहास्वधावषट्कारवर्जिते जगतीतले ।।
पंचयज्ञक्रियालोपाच्चकंपे भुवनत्रयम् ।। २३ ।।
सूर्योदयात्प्रवर्तंते यज्ञाद्याः सकलाः क्रियाः ।।
ताभिर्यज्ञभुजांतृप्तिः सविता तत्र कारणम् ।। २४ ।।
चित्रगुप्तादयः सर्वे कालं जानंति सूर्यतः ।।
स्थितिसर्गविसर्गाणां कारणं केवलं रविः ।। २५ ।।
तत्सूर्यस्य गतिस्तंभात्स्तंभितं भुवनत्रयम् ।।
यद्यत्रतत्स्थितं तत्र चित्रन्यस्तमिवा खिलम् ।। २६ ।।
एकतस्तिमिरान्नैशादेकतस्तु दिवातपात् ।।
बहूनां प्रलयो जातः कांदिशीकमभूज्जगत् ।। २७ ।।
इति व्याकुलिते लोके सुरासुरनरोरगे ।।
आःकिमेतदकांडेभूद्रुरुदुर्दुद्रुवुः प्रजाः ।।२८।।
ततः सर्वे समालोक्य ब्रह्माणं शरणं ययुः ।।
स्तुवंतो विविधैः स्तोत्रै रक्षरक्षेति चाब्रुवन् ।।२९।।
।। देवा ऊचुः।।
नमो हिरण्यरूपाय ब्रह्मणे ब्रह्मरूपिणे ।।
अविज्ञातस्वरूपाय कैवल्यायामृताय च ।। 4.1.2.३० ।।
यन्न देवा विजानंति मनो यत्रापि कुंठितम्।।
न यत्र वाक्प्रसरति नमस्तस्मै चिदात्मने ।। ३१ ।।
योगिनो यं हृदाकाशे प्रणिधानेन निश्चलाः ।।

ज्योतीरूपं प्रपश्यंति तस्मै श्रीब्रह्मणे नमः ।। ३२ ।।
कालात्पराय कालाय स्वेच्छयापुरुषाय च ।।
गुणत्रय स्वरूपाय नमः प्रकृतिरूपिणे ।। ३३ ।।
विष्णवे सत्त्वरूपाय रजोरूपाय वेधसे ।।
तमसे रुद्ररूपाय स्थितिसर्गांतकारिणे ।। ३४ ।।
नमो बुद्धिस्वरूपाय त्रिधाहंकृतये नमः ।।
पंचतन्मात्र रूपाय पंचकर्मेंद्रियात्मने ।। ३५ ।।
नमो मनःस्वरूपाय पंचबुद्धींद्रियात्मने ।।
क्षित्यादि पंचरूपाय नमस्ते विषयात्मने ।। ३५ ।।
नमो ब्रह्मांडरूपाय तदंतर्वर्तिने नमः ।।
अर्वाचीनपराची न विश्वरूपाय ते नमः ।। ३७ ।।
अनित्यनित्यरूपाय सदसत्पतये नमः ।।
समस्तभक्तकृपया स्वेच्छाविष्कृतविग्रह ।। ३६ ।।
तव निःश्वसितं वेदास्तव स्वे दोखिलं जगत् ।।
विश्वा भूतानि ते पादः शीर्ष्णो द्यौः समवर्तत ।। ३९ ।।
नाभ्या आसीदंतरिक्षं लोमानि च वनस्पतिः ।।
चन्द्रमा मनसो जातश्चक्षोः सूर्यस्तव प्रभो ।। 4.1.2.४० ।।
त्वमेव सर्वं त्वयि देव सर्वं स्तोता स्तुतिः स्तव्य इह त्वमेव ।।
ईश त्वयाऽवास्यमिदं हि सर्वं नमोस्तु भूयोपि नमो नमस्ते ।। ४१ ।।
इति स्तुत्वा विधिं देवा निपेतुर्दंडवत्क्षितौ ।।
परितुष्टस्तदा ब्रह्मा प्रत्युवाच दिवौकसः ।। ४२ ।।
।। ब्रह्मोवाच ।। ।।
यथार्थयाऽनया स्तुत्या तुष्टोस्मि प्रणताः सुराः ।।
उत्तिष्ठत प्रसन्नोस्मि वृणुध्वं वरमुत्तमम् ।। ४३ ।।
यः स्तोष्यत्यनया स्तुत्या श्रद्धावान्प्रत्यहं शुचिः ।।
मां वा हरं वा विष्णुं वा तस्य तुष्टाः सदा वयम् ।। ४४ ।।
दास्यामः सकलान्कामान्पुत्रान्पौत्रान्पशून्वसु ।।
सौभाग्यमायुरारोग्यं निर्भयत्वं रणे जयम् ।। ४५ ।।
ऐहिकामुष्मिकान्भोगानपवर्गं तथाऽक्षयम् ।।
यद्यदिष्टतमं तस्य तत्तत्सर्वं भविष्यति ।।४६।।
तस्मात्सर्वप्रयत्नेन पठितव्यः स्तवोत्तमः ।।
अभीष्टद इति ख्यातः स्तवोयं सर्वसिद्धिदः।।४७।।
पुनः प्रोवाच तान्वेधाः प्रणिपत्योत्थितान्सुरान् ।।

स्वस्थास्तिष्ठत भो यूयं किमत्रापि समाकुलाः ।। ४८ ।।
एते वेदा मूर्तिधरा इमा विद्यास्तथाखिलाः ।।
सदक्षिणा अमी यज्ञाः सत्यं धर्मस्तपो दमः ।। ४९ ।।
ब्रह्मचर्यमिदं चैषा करुणा भारतीत्वियम् ।।
श्रुतिस्मृतीतिहासार्थ चरितार्था अमीजनाः ।। 4.1.2.५० ।।
नेह क्रोधो न मात्सर्यं लोभः कामोऽधृतिर्भयम् ।।
हिंसा कुटिलता गर्वो निंदासूयाऽशुचिः क्वचित् ।। ५१ ।।
ये ब्राह्मणा ब्रह्मरतास्तपोनिष्ठास्तपोधनाः ।।
मासोपवासषण्मासचातुर्मास्यादि सद्व्रताः ।। ५२ ।।
पातिव्रत्यरता नार्यो ये चान्ये ब्रह्मचारिणः ।।
ते चामीपश्यत सुरा ये षंढाः परयोषिति ।। ५३ ।।
मातापित्रोरमी भक्ता अमी गोग्रहणे हताः ।।
व्रते दाने जपे यज्ञे स्वाध्याये द्विजतर्पणे ।। ५४ ।।
तीर्थे तपस्युपकृतौ सदाचारादिकर्मणि ।।
फलाभिलाषिणीबुद्धिर्न येषां ते जना अमी ।। ५५ ।।
गायत्री जाप्यनिरता अग्निहोत्र परायणाः ।।
द्विमुखी गो प्रदातारः कपिलादान तत्पराः ।। ५६ ।।
निस्पृहाः सोमपा ये वै द्विजपादोदपाश्च ये ।।
मृताः सारस्वते तीर्थे द्विजशुश्रूषकाश्च ये ।। ५७ ।।
प्रतिग्रहे समर्था हि ये प्रतिग्रहवर्जिताः ।।
त एते मत्प्रिया विप्रास्त्यक्ततीर्थ प्रतिग्रहाः ।। ५८ ।।
प्रयागे माघ मासो यैरुषः स्नातोऽमलात्मभिः ।।
मकरस्थे रवौ शुद्धास्त इमे सूर्यवर्चसः ।। ५९ ।।
वाराणस्यां पांचनदे त्र्यहं स्नातास्तु कार्तिके ।।
अमी ते शुद्धवपुषः पुण्यभाजोतिनिर्मलाः ।। 4.1.2.६० ।।
स्नात्वा तु मणिकर्णिक्यां प्रीणिता ब्राह्मणा धनैः ।।
त एते सर्वभोगाढ्याः कल्पं स्थास्यंति मत्पुरे ।। ६१ ।।
ततः काशीं समासाद्य तेन पुण्येन नोदिताः ।।
विश्वेश्वरप्रसादेन मोक्षमेष्यंत्यसंशयम् ।। ६२ ।।
अविमुक्ते कृतं कर्म यदल्पमपि मानवैः ।।
श्रेयोरूपं तद्विपाको मोक्षो जन्मांतरेष्वपि ।। ६३ ।।
अहो वैश्वेश्वरे क्षेत्रे मरणादपिनोभयम् ।।
यत्र सर्वे प्रतीक्षंते मृत्युं प्रियमिवाति थिम् ।। ६४ ।।

ब्राह्मणेभ्यः कुरुक्षेत्रे यैर्दत्तं वसु निर्मलम् ।।
निर्मलांगास्त एते वै तिष्ठंति मम संनिधा ।।६५ ।।
पितामहं समासाद्य गयायां यैः पितामहाः ।।
तर्पिता ब्राह्मणमुखे तेषामेते पितामहाः ।।६६।।
न स्नानेन न दानेन न जपेन न पूजया ।।
मल्लोकः प्राप्यते देवाः प्राप्यते द्विज तर्पणात् ।।६७।।
सोपस्कराणिवेश्मानिमु सलोलूखलादिभिः ।।
यैर्दत्तानि सशय्यानि तेषां हर्म्याण्यमूनि वै ।। ६८ ।।
ब्रह्मशालां कारयंति वेदमध्यापयंति च ।।
विद्यादानं च ये कुर्युः पुराणं श्रावयंति च ।। ६९ ।।
पुराणानि च ये दद्युः पुस्तकानि ददत्यपि ।।
धर्मशास्त्राणि ये दद्युस्तेषां वासोत्र मे पुरे ।। 4.1.2.७० ।।
यज्ञार्थं च विवाहार्थं व्रतार्थं ब्राह्मणाय वै ।।
अखंडं वसु ये दद्युस्तेत्र स्युर्वसुवर्चसः ।। ७१ ।।
आरोग्यशालां यः कुर्याद्वैद्यपोषणतत्परः ।।
आकल्पमत्र वसति सर्वभोग समन्वितः ।। ७२ ।।
मुक्ती कुर्वंति तीर्थानि ये च दुष्टावरोधतः ।।
ममावरोधे ते मान्या औरसास्तनया इव ।। ७३ ।।
विष्णोर्वाममवाशंभोर्ब्राह्मणा एव सुप्रियाः ।।
तेषां मूर्त्या वयं साक्षाद्विचरामो महीतले ।। ७४ ।।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ।।
एकत्र मंत्रास्तिष्ठंति हविरेकत्र तिष्ठति ।। ७५ ।।
ब्राह्मणा जंगमं तीर्थं निर्मितं सार्वभौमिकम् ।।
येषां वाक्योदकेनैव शुद्ध्यंति मलिना जनाः ।। ७६ ।।
गावः पवित्रमतुलं गावो मंगलमुत्तमम् ।।
यासां खुरोत्थितो रेणुर्गंगावारिसमो भवेत् ।। ७७ ।।
शृंगाग्रे सर्वतीर्थानि खुराग्रे सर्व पर्वताः ।।
शृंगयोरंतरे यस्याः साक्षाद्गौरीमहेश्वरी ।। ७८ ।।
दीयमानां च गां दृष्ट्वा नृत्यंति प्रपितामहाः ।।
प्रीयंते ऋषयः सर्वे तुष्यामो दैवतैः सह ।। ७९ ।।
रोरूयंते च पापानि दारिद्र्यं व्याधिभिः सह ।।
धात्र्यः सर्वस्य लोकस्य गावो मातेव सर्वथा ।। 4.1.2.८० ।।
गवां स्तुत्वा नमस्कृत्य कृत्वा चैव प्र दक्षिणाम्।।

प्रदक्षिणीकृतातेन सप्तद्वीपा वसुंधरा ।। ८१ ।।
या लक्ष्मीः सवर्भूतानां या देवेषु व्यवस्थिता ।।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।। ८२ ।।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः ।।
स्वधा या पितृमुख्यानां सा धेनुर्वरदा सदा ।। ८३ ।।
गोमयं यमुना साक्षाद्गोमूत्रं नर्मदा शुभा ।।
गंगा क्षीरं तु यासां वै किं पवित्रमतः परम् ।। ८४ ।।
गवामंगेषु तिष्ठंति भुवनानि चतुर्दश ।।
यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च ।। ८५ ।।
इति मंत्रं समुच्चार्य धेनूर्वाधेनु मेव वा ।।
यो दद्याद्द्विजवर्याय स सर्वेभ्यो विशिष्यते ।। ८६ ।।
मया च विष्णुना सार्धं शिवेन च महर्षिभिः ।
विचार्य गोगुणान्नित्यं प्रार्थनेति विधीयते ।। ८७ ।।
गावो मे पुरतः संतु गावो मे संतु पृष्ठतः ।।
गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ।। ८८ ।।
नीराजयति योंगानि गवां पुच्छेन भाग्यवान् ।।
अलक्ष्मीः कलहो रोगास्तस्यांगाद्यांति दूरतः।।८९।।
गोभिर्विप्रश्च वेदैश्च सतीभिः सत्यवादिभिः।।
अलुब्धैर्दा नशीलैश्च सप्तभिर्धार्यते मही।।4.1.2.९०।
मम लोकात्परोलोको वैकुंठ इति गीयते।।
तस्योपरिष्टात्कौमार उमालोकस्ततः परम्।।९१।।
शिवलोकस्तदुपरि गोलो कस्तत्समीपतः ।।
गोमातरः सुशीलाद्यास्तत्र संति शिवप्रियाः ।। ९२ ।।
गवां शुश्रूषकाये च गोप्रदाये च मानवाः ।।
एषामन्यतमे लोके ते स्युः सर्वसमृद्धयः ।। ९३ ।।
यत्र क्षीरवहा नद्यो यत्र पायस कर्दमाः ।।
न जरा बाधते यत्र तत्र गच्छंति गोप्रदाः ।। ९४ ।।
श्रुतिस्मृतिपुराणज्ञा ब्राह्मणाः परिकीर्तिताः।।
तदुक्ताचारचरणा इतरे नामधारकाः।।९५।।
श्रुतिस्मृती तु नेत्रे द्वे पुराणं हृदयं स्मृतम् ।।
श्रुतिस्मृतिभ्यां हीनोंधः काणः स्यादेकया विना।।
पुराणहीनाद्धृच्छून्यात्काणां धावपि तौ वरौ ।।
श्रुतिस्मृत्युदितोधर्मः पुराणे परिगीयते।।९७।।

तद्ब्राह्मणाय गोर्देया सर्वत्र सुखमिच्छता ।।
न देया द्विजमात्राय दातारं सोप्यधो नयेत्।।९८।।
यस्य धर्मेऽस्ति जिज्ञासा यस्य पापाद्भयं महत्।।
श्रोतव्यानि पुराणानि धमर्मूलानि तेन वै।।९९।।
चतुर्दशसु विद्यासु पुराणं दीप उत्तमः।।
अंधोपि न तदा लोकात्सं साराब्धौ क्वचित्पतेत् ।।4.1.2.१००।।
श्रोतव्यानि पुराणानि वस्तव्यं जाह्नवी तटे ।।
तर्पणीया द्विजा नित्यं ममलोकेप्सुभिः सदा ।। १ ।।
इत्युद्देशान्मयाख्याता स त्यलोकव्यवस्थितिः ।।
अभयं यद्भयार्तानां न भेतव्यं च हे सुराः ।।२।।
स्पर्धते मेरुणा विंध्यो ब्रध्नाध्व परिरोधकृत ।।
तदर्थमागता यूयं तदुपायं दिशामि वः।।३।।
अस्त्यगस्त्यस्तप्यमानस्तप उग्रं महातपाः ।।
मैत्रावरुणिराधाय चित्तं विश्वेश्वरे विभौ ।। ४ ।।
अविमुक्तमहाक्षेत्रे सर्वेषां मुक्तिहेतुके ।।
तारकस्योपदेशार्थं विश्वेशाऽधिष्ठिते स्वयम् ।। ५ ।।
याचध्वं तत्र गत्वा तं स वः कार्यं विधास्यति ।।
तेनैकदाविता लोका वातापील्वलभक्षणात् ।। ६ ।।
अतिमित्रं तत्र तेजो मित्रावरुणजे मुनौ।।
तदाप्रभृति लोकेषु कोगस्त्यान्नैव बिभ्यति ।।७।।
इत्युक्त्वांतर्दधे वेधास्तेपि प्रमुदिताननाः ।।
देवाः परस्परं प्रोचुरहोधन्य तमा वयम् ।। ८ ।।
प्रसंगतोपि द्रष्टव्यौ काशीकाशीपती शिवौ।।।
अहो अहोभिर्बहुभिः फलितो नो मनोरथः।। ९ ।।
उत्फुल्लपद्मनयना निर्मिताः सुकृतार्थिनः।।
तावेव चरणौ धन्यौ काशीमभिप्रयायिनौ ।। 4.1.2.११० ।।
येयं कथा श्रुतास्माभिर्वेधसा समुदीरिता ।।
तस्याः श्रवणजात्पुण्यात्प्राप्नुमस्त्वद्य काशिकाम्।। ११ ।।
एका क्रिया द्व्यर्थकरी प्राप्यते पुण्यगौरवात् ।।
एवं वदंतो हृष्टास्याः सुराः काशीं समाययुः ।।१२।।
व्यास उवाच ।।
इदं पुण्यतमाख्यानं ये श्रोष्यंतीह मानवाः ।।
विधूय सर्वपापानि पुत्रदारसमन्विताः ।। १३ ।।

इह वंशं परिस्थाप्य भुक्त्वा सर्व सुखानि च ।।
सत्यलोके चिरं स्थित्वा ततो यास्यंति शाश्वतम् ।। ११४ ।।
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्धे सत्यलोकवर्णनंनाम द्वितीयोऽध्यायः ।।२ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००३



सूत उवाच ।।

भगवन्भूतभव्येश सर्वज्ञानमहानिधे ।।

अवाप्य काशीं गीर्वाणैः किमकारि वदाच्युत ।। १ ।।

अधीत्येमां कथां दिव्यां न तृप्तिमधियाम्यहम् ।।

शेवधिस्तपसां देवैरगस्तिः प्रार्थितः कथम् ।। २ ।।

कथं विंध्योप्यवाप स्वां प्रकृतिं तादृगुन्नतः ।।

तववागमृतांभोधौ मनो मे स्नातुमुत्सुकम् ।। ३ ।।

इति कृत्स्नं समाकर्ण्य व्यासः पाराशरो मुनिः ।।

श्रद्धावते स्वशिष्याय वक्तुं समुपचक्रमे ।। ४ ।।

पाराशर उवाच ।।

शृणु सूत महाबुद्धे भक्तिश्रद्धासमन्वितः ।।

शुकवैशंपायनाद्याः शृण्वंत्वेते च बालकाः ।।५ ।।

ततो वाराणसीं प्राप्य गीर्वाणाः समहर्षयः ।।

अविलंबं प्रथमतो म णिकर्ण्यां विधानतः ।। ६ ।।

सचैलमभिमज्ज्याथ कृतसंध्यादिसत्क्रियाः ।।

संतर्प्य तर्प्यादिपितॄन्कुशगंधतिलोदकैः ।। ७ ।।

तीर्थवासार्थिनः सर्वान्संतर्प्य च पृथक्पृथक् ।।

रत्नैर्हिरण्यवासोभिरश्वाभरणधेनुभिः ।। ८ ।।

विचित्रैश्च तथा पात्रैः स्वर्णरौप्यादि निर्मितैः ।।

अमृतस्वादुपक्वान्नैः पायसै श्च सशर्करैः ।। ९ ।।

सगोरसैरन्नदानैर्धान्यदानैरनेकधा ।।

गंधचंदनकर्पूरैस्तांबूलैश्चारुचामरैः ।। ।। 4.1.3.१० ।।

सतूलैर्मृदुपर्यंकैर्दीपिकादर्पणासनैः ।।

शिबिकादासदासीभिर्विमानैःपशुभिर्गृहैः ।। ११ ।।

चित्रध्वजपताकाभिरुल्लोचैश्चंद्रचारुभिः ।।

वर्षाशनप्रदानैश्च गृहोपस्करसंयुतैः ।। १२ ।।

उपानत्पादुकाभिश्च यतिनश्च तपस्विनः ।।

योग्यैः पट्टदुकूलैश्च विविधैश्चित्ररल्लकैः ।। १३ ।।

दंडैः कमंडलुयुतैरजिनैर्मृगसंभवैः ।।

कौपीनैरुच्चमंचैश्च परिचारककांचनैः ।। १४ ।।

मठैर्विद्यार्थिनामन्नैरतिथ्यर्थं महाधनैः ।।

महापुस्तकसंभारैर्लेखकानां च जीवनैः।।१५।।

बहुधौषधदानैश्च सत्रदानैरनेकशः ।।

ग्रीष्मे प्रपार्थद्रविणैर्हेमंतेग्निष्टिकेंधनैः।।१६।।

छत्राच्छादनिकाद्यर्थे वर्षाकालोचितैर्बहु।।

रात्रौ पाठप्रदीपैश्च पादाभ्यंजनकादिभिः ।।१७।।

पुराणपाठकांश्चापि प्रतिदेवालयं धनैः ।।

देवालये नृत्यगीतकरणार्थैरनेकशः।।१८।।

देवालय सुधाकार्यैर्जीर्णोद्धारैरनेकधा ।।

चित्रलेखनमूल्यैश्च रंगमालादिमंडनैः ।। १९ ।।

नीराजनैर्गुग्गुलुभिर्दशां गादि सुधूपकैः ।।

कर्पूरवर्तिकाद्यैश्च देवार्चार्थैरनेकशः ।। 4.1.3.२० ।।

पंचामृतानां स्नपनैः सुगंध स्नपनैरपि ।।

देवार्थं मुखवासैश्च देवोद्यानैरनेकशः ।। २१ ।।

महापूजार्थमाल्यादि गुंफनार्थैस्त्रिकालतः ।।

शंखभेरीमृदंगादिवाद्यनादैः शिवालये ।। २२ ।।

घंटागुडुककुंभादि स्नानोपस्करभाजनैः ।।

श्वेतैर्मार्जनवस्त्रैश्च सुगंधैर्यक्षकर्दमैः ।। २३ ।।

जपहोमैः स्तोत्रपाठैः शिवनामोच्चभाषणैः ।।

रासक्रीडादिसंयुक्तैश्चलनैः सप्रदक्षिणैः ।। २४ ।।

एवमादिभिरुद्दंडैः क्रियाकांडैरनेकशः ।।

पंचरात्रमुषित्वा तु कृत्वा तीर्थान्यनेकशः ।। २५ ।।

दीनानाथांश्च संतर्प्य नत्वा विश्वेश्वरं विभुम् ।।

ब्रह्मचर्यादिनियमैस्तीर्थमेवं प्रसाध्य च ।। २६ ।।

पुनः पुनर्विश्वनाथं दृष्ट्वा स्तुत्वा प्रणम्य च ।।

जग्मुः परोपकारार्थमगस्तिर्यत्र तिष्ठति ।। २७ ।।

स्वनाम्ना लिंगमास्थाप्य कुंडं कृत्वा तदग्रतः ।।

शतरुद्रियसूक्तेन जपन्निश्चलमानसः ।। २८ ।।

तं दृष्ट्वा दूरतो देवा द्वितीयमिव भास्करम् ।।

ज्वलज्ज्वलनसंकाशैरंगैः सर्वत्रसोज्ज्वलम् ।। २९ ।।

साक्षात्किंवाडवाग्निर्वा मूर्त्या वै तप्यते तपः ।।

स्थाणुवन्निश्चलतरं निर्मलं सन्मनो यथा ।। 4.1.3.३० ।।

अथवा सर्व तेजांसि श्रित्वेमां ब्राह्मणीं तनुम् ।।

शीलयंति परं धाम शातंशांत पदाप्तये ।। ३१ ।।

तपनस्तप्यतेऽत्यर्थं दहनोपि हि दह्यते ।।

यत्तीव्रतपसाद्यापि चपलाऽचपलाभवत् ।। ३२ ।।

यस्याश्रमे ऽत्र दृश्यंते हिंस्रा अपि समंततः ।।

सत्त्वरूपा अमी सत्त्वास्त्यक्त्वा वैरं स्वभावजम् ।। ३३ ।।

शुंडादंडेन करटिः सिंहं कंडूयतेऽभयः ।।

अष्टापदांके स्वपिति केसरी केसरोद्भटः ।। ३४ ।।

सूकरः स्तब्धरोमापि विहाय निजयूथकम् ।।

चरेद्वनशुनां मध्ये मुस्तान्यस्तेक्षणोबली ।। ३५ ।।

भूदारोपि न भूदारं तथाकुर्याद्यथाऽन्यतः ।।

सर्वा लिंगमयी काशी यतस्तद्भीतियंत्रितः ।। ३६ ।।

क्रोडीकृत्य क्रोडपोतं तरक्षुः क्रीडयत्यहो ।।

शार्दूलबालानुत्सार्य शार्दूलीमेणपोतकः ।। ३७ ।।

चलत्पुच्छोथ पिबति फेनिलेनाननेन वै ।।

स्वपंतं लोमशं भल्लं वानरश्चलदंगुलिः।।३८।।

यूका संवीक्ष्यवीक्ष्यैव भक्षयेद्दंतकोटिभिः ।।

गोलांगूलारक्तमुखानीलां गा यूथथनायकाः।।३९।।

जातिस्वभावमात्सर्यं त्यक्त्वैकत्र रमंति च ।।

शशाः क्रीडंति च वृकैस्तैः पृष्ठलुंठनैर्मुहुः।।4.1.3.४०।।

आखुश्चाखुभुजः कर्णं कंडूयेत चलाननः ।।

मयूरपुच्छपुटगो निद्रात्योतुः सुखाधिकम् ।। ४१ ।।

स्वकंठं घर्षयत्येव केकिकंठे भुजंगमः ।।

भुजंगमफणापृष्ठे नकुलः स्वकुलोचितम् ।। ४२ ।।

वैरं परित्यज्य लुठेदुत्प्लुत्योत्प्लुत्य लीलया ।।

आलोक्य मूषकं सर्पश्चरंतं वदनाग्रतः ।। ४३ ।।

क्षुधांधोपि न गृह्णाति सोपि तस्माद्बिभेति नो ।।

प्रसूयमानां हरिणीं दृष्ट्वा कारुण्यपूर्णदृक् ।। ४४ ।।

तद्दृष्टिपातं मुंचन्वै व्याघ्रो दूरं व्रजत्यहो ।।

व्याघ्री व्याघ्रस्य चरितं मृगी मृगविचेष्टितम् ।।

उभे कथयतो ऽन्योन्यं सख्याविवमुदान्विते ।।४५।।

दृष्ट्वाप्युद्दंडकोदंडं शबरं शंबरोमृगः ।।

धृष्टो न वर्त्म त्यजति सोपि कंडूयतेपि तम् ।। ४६ ।।

रोहितोऽरण्यमहिषमुद्धर्षति निराकुलः।।

चमरीशबरीकेशैः संमिमीते स्ववालधिम् ।।४७।।

गवयः शल्यकश्चाऽयमुभावेकत्रतिष्ठतः ।।

तीव्रमात्सर्यमुत्सृज्य मुनितेजोनियंत्रितौ ।। ४५ ।।

हुंडौ च मुंड युद्धाय न सज्जेते जयैषिणौ ।।

एणशावं सृगालोपि मृदुस्पृशति पाणिना।।४९।।

तृण्वंति तृणगुल्मादीन्श्वापदास्त्वापदास्पदम्।।

लोकद्वये दुःखहंहि धिक्तन्मांसस्य भक्षणम्।। 4.1.3.५० ।।

यः स्वार्थं मांसपचनं कुरुते पापमोहितः ।।

यावंत्यस्य तु रोमाणि तावत्स नरके वसेत् ।।५१।।

परप्राणैस्तु ये प्राणान्स्वान्पुष्णं ति हि दुर्धियः ।।

आकल्पं नरकान्भुक्त्वा ते भुज्यंतेत्र तैः पुनः।।५२ ।।

जातुमांसं न भोक्तव्यं प्राणैः कंठगतैरपि ।।

भोक्तव्यं तर्हि भोक्तव्यं स्वमांसं नेतरस्य च ।। ५३ ।।

वरमेतेश्वापदा वै मैत्रावरुणि सेवया ।।
येषां न हिंसने बुद्धिर्नतु हिंसापरा नराः ।।५४ ।।
बकोपि पल्वले मत्स्यान्नाश्नात्यग्रेचरानपि ।।
न महांतोप्यमहतो मत्स्या मत्स्यानदंति वै ।। ५५ ।।
एकतः सर्वमांसानि मत्स्यमांसं तथकैतः।।
स्मृतिः स्मृतेति किंत्वेभिरतोमत्स्याञ्जहत्यमी ।। ५६ ।।
श्येनोपि वर्तिकां दृष्ट्वा भवत्येष पराङ्मुखः ।।
चित्रमत्रापि मधुपा भ्रमंति मलिनाशयाः ।। ५७ ।।
सुचिरं नरकान्भुक्त्वा मदिरापानलंपटाः ।।
मधुपा एव गायंते भ्रांतिभाजः पुनः पुनः ।। ५८ ।।
अतएव पुराणेषु गाथेति परिगीयते ।।
स्फुटार्थात्र पुराणज्ञैर्ज्ञात्वा तत्त्वं पिनाकिनः ।। ५९ ।।
क्व मांसं क्व शिवे भक्तिः क्व मद्यं क्व शिवार्चनम् ।।
मद्यमांसरतानां च दूरे तिष्ठति शंकरः ।। 4.1.3.६० ।।
विना शिवप्रसादं हि भ्रांतिः क्वापि न नश्यति ।।
अतएव भ्रमंत्येते भ्रमराः शिववर्जिताः ।। ६१ ।।
इत्याश्रमचरान्दृष्ट्वा तिर्यञ्चोपि मुनीनिव ।।
अबोधिविबुधैरित्थं प्रभावः क्षेत्रजस्त्वयम् ।। ६२ ।।
यतो विश्वेश्वरेणैते तिर्यञ्चोप्यत्रवासिनः ।।
निधनावसरे मोच्यास्तारक स्योपदेशतः ।। ६३ ।।
ज्ञात्वा क्षेत्रस्य माहात्म्यं यो वसेत्कृतनिश्चयः ।।
तं तारयति विश्वेशो जीवंतमथवा मृतम् ।। ६४ ।।
अविमुक्तरहस्यज्ञा मुच्यंते ज्ञानि नो नराः।।
अज्ञानिनोपि तिर्यञ्चो मुच्यंते गतकिल्बिषाः ।। ६५ ।।
इत्याश्चर्यपरा देवा यावद्यांत्याश्रमं मुनेः ।।
तावत्पक्षिकुलं दृष्ट्वा भृशं मुमुदिरे पुनः ।। ६६ ।।
सारसो लक्ष्मणाकंठे कंठमाधाय निश्चलः ।।
मन्यामहे न निद्रातिध्यायेद्विश्वेश्वरं किल ।। ६७

कंडूयमाना वरटा स्वचंचुपुटकोटिभिः ।।
हंसं कामयमानं तु वारयेत्पक्षधूननैः ।। ६८ ।।
निरुद्ध्यमान चक्रेण चक्रीक्रेंकितभाषणैः।।
वदतीति किमत्रापि कामिता कामिनां वर ।। ६९ ।।
कलकंठः किलोत्कंठं मंजुगुंजति कुंजगः।।
ध्यानस्थः श्रोष्यति मुनिः पारावत्येति वार्यते।।4.1.3.७०।।
केकीकेकां परित्यज्य मौनं तिष्ठति तद्भयात्।।
चकोरश्चंद्रिका भोक्ता नक्तव्रतमिवास्थितः।।७१।।
पठंती सारिकासारं शुकंसंबोधयत्यहो ।।
अपारावारसंसारसिंधुपारप्रदः शिवः ।। ७२ ।।
कोकिलः कोमलालापैः कलयन्किलकाकलीम् ।।
कलिकालौ कलयतः काशीस्थान्नेतिभाषते ।। ७३ ।।
मृगाणां पक्षिणामित्थं दृष्ट्वा चेष्टां त्रिविष्टपम् ।।
अकांडपातसंकष्टं निनिंदुस्त्रिदशा बहु ।। ।। ७४ ।।
वरमेतेपक्षिमृगाः पशवः काशिवासिनः ।।
येषां न पुनरावृत्तिर्नदेवानपुनर्भवाः ।। ७५ ।।
काशीस्थैः पतितैस्तुल्या न वयं स्वर्गिणः क्वचित् ।।
काश्यां पाताद्भयं नास्ति स्वर्गेपाताद्भयं महत् ।। ७६ ।।
वरं काशीपुरी वासो मासोपवसनादिभिः ।।
विचित्रच्छत्रसंछायं राज्यं नान्यत्र नीरिपु ।। ७७ ।।
शशकैर्मशकैः काश्यां यत्पदं हेलयाप्यते ।।
तत्पदं नाप्यतेऽन्यत्र योगयुक्त्यापि योगिभिः ।। ७८ ।।
वरं वाराणसीरंको निःशंकोयो यमादपि ।।
न वयं त्रिदशायेषां गिरितोपीदृशी दशा ।। ७९ ।।
ब्रह्मणो दिवसाष्टांशेषपदमैंद्रं विनश्यति ।।
सलोकपाल सार्कं च सचंद्रग्रहतारकम् ।। 4.1.3.८० ।।
परार्धद्वयनाशेपि काशीस्थो यो न नश्यति ।।
तस्मात्सर्वप्रयत्नेन काश्यां श्रेयः समाचरेत् ।। ८१ ।।

यत्सुखं काशिवासेत्र न तद्ब्रह्मांडमंडपे ।।

अस्ति चेत्तत्कथं सर्वे काशीवासाभिलाषुकाः ।। ८२ ।।

जन्मांतरसहस्रेषु यत्पुण्यं समुपार्जितम् ।।

तत्पुण्यपरिवर्तेन काश्यां वासोऽत्र लभ्यते ।। ८३ ।।

लब्धोपि सिद्धिं नो यायाद्यदि कुद्ध्येत्त्रिलोचनः ।।

तस्माद्विश्वेश्वरं नित्यं शरण्यं शरणं व्रजेत् ।। ८४ ।।

धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयम् ।।

अखंडं हि यथा काश्यां न तथा न्यत्र कुत्रचित् ।। ८५।।

आलस्येनापि यो यायाद्गृहाद्विश्वेश्वरालयम् ।।

अश्वमेधाधिको धर्मस्तस्य स्याच्च पदेपदे ।। ८६ ।।

यः स्नात्वोत्तरवाहिन्यां याति विश्वे शदर्शने ।।

श्रद्धया परया तस्य श्रेयसोंतो न विद्यते ।। ८७ ।।

स्वर्धुनी दर्शनात्स्पर्शात्स्नानादाचमनादपि ।।

संध्योपासनतो जप्यात्तर्पणाद्देवपूजनात् ।।८८।।

पंचतीर्थावलोकाच्च ततो विश्वेश्वरेक्षणात् ।।

श्रद्धास्पर्शनपूजाभ्यां धूपदीपादिदानतः ।। ८९ ।।

प्रदक्षिणैः स्तोत्रजपैर्नमस्कारैस्तु नर्त्तनैः ।।

देवदेवमहादेव शंभो शिवशिवेति च ।। 4.1.3.९० ।।

धूर्जटे नीलकंठेश पिनाकिञ्शशिशेखर ।।

त्रिशूलपाणे विश्वेश रक्षरक्षेतिभाषणैः ।। ९१ ।।

मुक्तिमंडपिकायां च निमेषार्धो पवेशनात् ।।

तत्र धर्मकथालापात्पुराणश्रवणादपि ।। ९२ ।।

नित्यादिकर्मकरणात्तथातिथिसमर्चनैः ।।

परोपकरणाद्यैश्च धर्मस्स्यादुत्तरोत्तरः ।। ९३ ।।

शुक्लपक्षे यथा चंद्रः कलया कलयैधते ।।

एवं काश्यां निवसतां धर्मराशिः पदेपदे ।। ९४ ।।

श्रद्धाबीजो विप्रपादांबुसिक्तः शाखाविद्यास्ताश्चतस्रो दशापि ।।

पुष्पाण्यर्था द्वे फले स्थूलसूक्ष्मे मोक्षःकामो धर्मवृक्षोयमीड्यः ।। ९५ ।।

सर्वार्थानामत्रदात्री भवानी सर्वान्कामान्पूरयेदत्र ढुंढिः ।।
सर्वाञ्जंतून्मोचयेदंतकाले विश्वेशोत्रश्रोत्रमंत्रोपदेशात् ।। ९६ ।।
काश्यां धर्मस्तच्चतुष्पादरूपः काश्यामर्थः सोप्यनेकप्रकारः ।।
काश्यां कामः सर्वसौख्यैकभूमिः काश्यां श्रेयस्तत्तु किंनात्र यच्च ।। ९७ ।।
विश्वेश्वरो यत्र न तत्र चित्रं धर्मार्थकामामृतरूपरूपः ।।
स्वरूपरूपः स हि विश्वरूपस्तस्मान्न काशी सदृशी त्रिलोकी ।। ९८ ।।
इति ब्रुवाणा गीर्वाणा ददृशुस्तूटजं मुनेः ।।
होमधूमसुगंधाढ्यं बटुभिर्बहुभिर्वृतम् ।। ९९ ।।
श्यामाकांजलियाञ्चार्थमृषिकन्यानुयायिभिः ।।
धृतोपग्रहदर्भास्यैर्मृगशावैरलंकृतम् ।। 4.1.3.१०० ।।
सार्द्रवल्कलकौपीनैर्वृक्षशाखावलंबिभिः ।।
बद्धुं विघ्नमृगान्दिक्षु वागुराभिरिवावृतम् ।। १ ।।
पतिव्रता शिरोरत्नलोपामुद्रांघ्रिमुद्रया ।।
मुद्रितं वीक्ष्य सन्नेमुः पर्णशालांऽगणं सुराः ।। २ ।।
विसर्जितसमाधिं च धृतकर्णाक्षमालिकम् ।।
अधिष्ठितं बृसीपृष्ठं परमेष्ठिवदुत्कटम् ।। ३ ।।
पुरोगस्त्यं समालोक्य सर्वे देवाः सवासवाः ।।
प्रहृष्टवदनाः प्रोचुः प्रोच्चैर्जयजयेति च ।। ४ ।।
मुनिरुत्थाय तान्सर्वानुपावेश्य यथोचितम् ।।
आशीर्भिरभिनंद्याथ पप्रच्छागमकारणम् ।। ५ ।।
व्यास उवाच ।।
इदं पुण्यतमाख्यानं श्रुत्वा भक्तिसमन्वितः ।।
पठित्वा पाठयित्वा च व्रतश्रद्धावतां पुरः ।। ६ ।।
विधूय सर्व पापानि ज्ञात्वाऽज्ञात्वा कृतान्यपि ।।
हंसवर्णेन यानेन गच्छेच्छिवपुरं ध्रुवम् ।। १०७ ।।
इति श्रीस्कान्दे महापुराण एकाशीति साहरुयां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे अगस्त्याश्रमवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००४

https://sa.wikisource.org/s/fuh
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। सूत उवाच ।। ।।

मुनिपृष्टास्तदा देवा भगवंस्ते किमब्रुवन्।।

सर्वलोकहितार्थाय तदाख्याहि महामुने ।।१।।

।। श्रीव्यास उवाच ।। ।।

अगस्तिवचनं श्रुत्वा बहुमानपुरस्सरम् ।।

धिषणाधिपतेरास्यं विबुधा व्यालुलोकिरे ।। २ ।।

वाक्पतिरुवाच ।।

शृण्वगस्ते महाभाग देवागमनकारणम् ।।

धन्योसि कृतकृत्योसि मान्योसि महता मपि ।। ३ ।।

प्रत्याश्रमं प्रतिनगं प्रत्यरण्यं तपोधनाः ।।

किं न संति मुनिश्रेष्ठ काचिदन्यैव ते स्थितिः ।।४।।

तपोलक्ष्मीस्त्वयीहास्ति ब्राह्मतेजस्त्वयि स्थिरम्।।

पुण्यलक्ष्मीस्त्वयि परा त्वय्यौदार्यं मनस्त्वयि ।। ५ ।।

पतिव्रतेयं कल्याणी लोपामुद्रा सधर्मिणी।।

तवांगच्छायया तुल्या यत्कथापुण्यकारिणी ।। ६ ।।

पतिव्रतास्वरुंधत्या सावित्र्याप्यनसूयया ।।

शांडिल्यया च सत्या च लक्ष्म्या च शतरूपया ।। ७ ।।

मेनया च सुनीत्या च संज्ञया स्वाहया तथा ।।

यथैषा वर्ण्यते श्रेष्ठा न तथान्येति निश्चितम ।। ८ ।।

भुंक्ते भुक्ते त्वयि मुने तिष्ठति त्वयि तिष्ठति ।।

विनिद्रिते च निद्राति प्रथमं प्रतिबुध्यते ।। ९।।

अनलंकृतमात्मानं तव नो दर्शयेत्क्वचित्।।

कार्यार्थं प्रोषिते क्वापि सर्वमंडनवर्जिता ।।4.1.4.१०।।

न च ते नाम गृह्णीयात्तवायुष्यविवृद्धये ।।

पुरुषांतरनामापि न गृह्णाति कदाचन ।। ११ ।।

आक्रुष्टापि न चाक्रोशेत्ताडितापि प्रसीदति ।।
इदं कुरु कृतं स्वामिन्मन्यतामिति वक्ति च ।। १२ ।।
आहूता गृहकार्याणि त्यक्त्वा गच्छति सत्वरम् ।।
किमर्थं व्याहृता नाथ सप्रसादो विधीयताम् ।। १३ ।।
न चिरं तिष्ठति द्वारि न द्वारमुपसेवते ।।
अदापितं त्वया किंचित्कस्मैचिन्न ददात्यपि ।। १४ ।।
पूजोपकरणं सर्वमनुक्ता साधयेत्स्वयम् ।।
नियमोदकबर्हींषि पत्रपुष्पाक्षतादिकम् ।। १५ ।।
प्रतीक्षमाणावसरं यथाकालोचितं हि यत् ।।
तदुपस्थापयेत्सर्वमनुद्विग्नातिहृष्टवत् ।। १६ ।।
सेवते भर्तुरुच्छिष्टमिष्टमन्नं फलादिकम् ।।
महाप्रसाद इत्युक्त्वा परिदत्तं प्रतीच्छति ।। १७ ।।
अविभज्य न चाश्नीयाद्देवपित्रतिथिष्वपि ।।
परिचारकवर्गेषु गोषु भिक्षुकुलेषु च ।। १८ ।।
संयतोपस्करादक्षा हृष्टा व्यय पराङ्मुखी ।।
कुर्यात्त्वयाननुज्ञाता नोपवासव्रतादिकम् ।। १९ ।।
दूरतो वर्जयेदेषा समाजोत्सवदर्शनम् ।।
न गच्छेत्तीर्थयात्रादि विवाहप्रेक्षणादिषु ।।4.1.4.२० ।।
सुखसुप्तं सुखासीनं रममाणं यदृच्छया ।।
आंतरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित्।।२१ ।।
स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्श येत् ।।
स्ववाक्यं श्रावयेन्नापि यावत्स्नाता न शुद्धितः ।।२२।।
सुस्नाता भर्तृवदनमीहतेन्यस्य न क्वचित् ।।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत्।।२३।।
हरिद्रां कुंकुमं चैव सिंदूर कज्जलं तथा ।।
कूर्पासकं च तांबूलं मांगल्याभरणं शुभम् ।।२४।।
केशसंस्कारकबरी करकर्णादिभूषणम् ।।
भर्तुरायुष्यमिच्छंती दूरये न्न पतिव्रता।। २५ ।।

न रजक्या न हैतुक्या तथा श्रमणया न च ।।

न च दुर्भगया क्वापि सखित्वं कुरुते सती ।। २६ ।।

भर्तृविद्वेषिणीं नारीं नैषा संभाषते क्वचित् ।।

नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति च क्वचित् ।। २७ ।।

नोलूखले न मुसले न वर्द्धन्यां दृषद्यपि ।।

न यंत्रकेन देहल्यां सती चोपविशेत्क्वचित् ।।२८।।

विना व्यवायसमयं प्रागल्भ्यं न क्वचिच्चरेत् ।।

यत्रयत्ररुचिर्भर्तुस्तत्र प्रेमवती सदा ।। २९ ।।

इदमेव व्रतं स्त्रीणामयमेवपरो वृषः ।।

इयमेको देवपूजा भर्तुर्वाक्यं न लंघयेत ।। 4.1.4.३० ।।

क्लीबं वा दुरवस्थंवा व्याधितं वृद्धमेव वा ।।

सुस्थितं दुःस्थितं वापि पतिमेकं न लंघयेत ।। ३१ ।।

हृष्टाहृष्टेविषण्णास्या विषण्णास्ये प्रिये सदा ।।

एकरूपा भवेत्पुण्या संपत्सु च विपत्सु च ।। ३२ ।।

सर्पिर्लवणतैलादि क्षयेपि च पतिव्रता ।।

पतिं नास्तीति न ब्रूयादायासेषु न योजयेत्।।३३।।

तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।।

शंकरादपि विष्णोर्वा पतिरेकोधिकः स्त्रियाः ।। ३४ ।।

व्रतोपवासनियमं पतिमुल्लंघ्य या चरेत् ।।

आयुष्यं हरते भर्तुर्मृता निरयमृच्छति।।३५।।

उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा ।।

सरमा जायते ग्रामे सृगाली निर्जने वने।।३६।।

स्त्रीणां हि परमश्चैको नियमः समुदाहृतः ।।ऽ

अभ्यर्च्य चरणौ भर्तुर्भोक्तव्यं कृतनिश्चयम् ।।३७।।

उच्चासनं न सेवेत न व्रजेत्परवेश्मसु ।।

न त्रपाकर वाक्यानि वक्तव्यानि कदाचन ।। ३८ ।।

अपवादो न वक्तव्यः कलहं दूरतस्त्यजेत् ।।

गुरूणां सन्निधौ क्वापि नोच्चैर्ब्रूयान्न वा हसेत् ।। ३९ ।।

या भर्तारं परित्यज्य रहश्चरति दुर्मतिः ।।
उलूकी जायते क्रूरा वृक्षकोटरशायिनी ।। 4.1.4.४० ।।
ताडिता ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिका ।।
कटाक्षयतियाऽन्यं वै केकराक्षी तु सा भवेत ।। ४१ ।।
या भर्तारं परित्यज्य मिष्टमऽश्नाति केवलम् ।।
ग्रामे वासकरी भूयाद्वल्गुर्वापि श्वविट्भुजा ।। ४२ ।।
या त्वं(हुं) कृत्याऽप्रियं ब्रूते मूका सा जायते खलु ।।
या सपत्नीं सदेर्ष्येत दुर्भगा सा पुनःपुन् ः ।। ४३ ।।
दृष्टिं विलुप्य भर्तुर्या कंचिदन्यं समीक्षते ।।
काणा च विमुखी चापि कुरूपा चापि जायते ।। ४४ ।।
बाह्यादायांतमालोक्य त्वरिता च जलाशनैः ।।
तांबूलैर्व्यजनैश्चैव पादसंवाहनादिभिः ।। ४५ ।।
तथैव चाटुवचनैः खेदसंनोदनैः परैः ।।
या प्रियं प्रीणयेत्प्रीता त्रिलोकी प्रीणिता तया ।। ४६ ।।
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।।
अमितस्य हि दातारं भर्त्तारं पूजये त्सदा ।। ४७ ।।
भर्ता देवो गुरुर्भर्ता धर्म तीर्थ व्रतानि च ।।
तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत ।। ४८ ।।
जीवहीनो यथा देहः क्षणादशुचितां व्रजेत् ।।
भर्तृहीना तथा योषित्सुस्नाताप्यशुचिः सदा ।। ४९ ।।
अमंगलेभ्यः सर्वेभ्यो विधवा त्यक्तमंगला ।।
विधवा दर्शनात्सिद्धिः क्वापि जातु न जायते ।। 4.1.4.५० ।।
विहाय मातरं चैकां सर्वमंगलवर्जिताम ।।
तदाशिषमपि प्राज्ञस्त्यजेदाशीविषोपमाम ।। ५१ ।।
कन्याविवाहसमये वाचयेयुरिति द्विजाः ।।
भर्तुः सहचरी भूयाज्जीवतोऽजीवतोपिवा ।। ५२ ।।
भर्ता सदानुयातव्यो देहवच्छायया स्त्रिया ।।
चंद्रमा ज्योत्स्नया यद्वद्विद्युत्वान्विद्युता यथा ।। ५३ ।।

अनुव्रजति भर्तारं गृहात्पितृवनं मुदा ।।
पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम ।। ५४ ।।
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात ।।
एवमुत्क्रम्य दूतेभ्यः पतिं स्वर्गं नयेत्सती ।। ५५ ।।
यमदूताः पलायंते सतीमालोक्य दूरतः ।।
अपि दुष्कृतकर्माणं समुत्सृज्य च तत्पतिम् ।। ५६ ।।
न तथा बिभीमो वह्नेर्नतथा विद्युतो यथा ।।
आपतंतीं समालोक्य वयं दूताः पतिव्रताम् ।। ५७ ।।
तपनस्तप्यतेत्यंतं दहनोपि च दह्यते ।।
कंपंते सर्व तेजांसि दृष्ट्वा पातिव्रतं महः ।। ५८ ।।
यावत्स्वलोमसंख्यास्ति तावत्कोट्ययुतानि च ।।
भर्त्रा स्वर्गसुखं भुंक्ते रममाणा पतिव्रता ।। ५९ ।।
धन्या सा जननी लोके धन्योसौ जनकः पुनः ।।
धन्यः स च पतिः श्रीमान्येषां गेहे पतिव्रता ।। 4.1.4.६० ।।
पितृवंश्यामातृवंश्याःपतिवंश्यास्त्रयस्त्रयः ।।
पतिव्रतायाः पुण्येन स्वर्गसौख्यानि भुंजते ।। ६१ ।।
शीलभंगेन दुर्वृत्ताः पातयंति कुलत्रयम् ।।
पितुर्मातुस्तथापत्युरिहामुत्र च दुःखिताः ।। ६२ ।।
पतिव्रतायाश्चरणो यत्र यत्र स्पृशेद्भुवम् ।।
तत्रेति भूमिर्मन्येत नात्र भारोस्तिपावनी ।। ६३ ।।
बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि ।।
सोमो गंधवहश्चापि स्वपावित्र्याय नान्यथा ।। ६४ ।।
आपः पतिव्रता स्पर्शमभिलष्यंति सर्वदा ।।
अद्य जाड्यविनाशो नो जातास्त्वद्याऽन्यपावनाः ।। ६५ ।।
गृहेगृहे न किं नार्यो रूपलावण्यगर्विताः ।।
परं विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता ।। ६६ ।।
भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च ।।
भार्या धर्मफला भार्या सं तानवृद्धये ।। ६७ ।।

परलोकस्त्वयं लोको जीयते भार्यया द्वयम् ।।

देवपित्रतिथीज्यादि नाभार्यः कर्म चार्हति ।। ६८ ।।

गृहस्थः स हि विज्ञेयो यस्य गेहे पतिव्रता ।।

ग्रसतेऽन्या प्रतिपदं राक्षस्या जरयाथवा ।। ६९ ।।

यथा गंगाऽवगाहेन शरीरं पावनं भवेत् ।।

तथा पतिव्रता दृष्ट्या शुभया पावनं भवेत् ।। 4.1.4.७० ।।

अनुयाति न भर्तारं यदि दैवात्कथंचन ।।

तत्रापि शीलं संरक्ष्यं शीलभंगात्पतत्यधः ।। ७१ ।।

तद्वैगुण्यादपिस्वर्गात्पतिः पतति नान्यथा ।।

तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ।। ७२ ।।

पत्यौ मृते च यायोषिद्वैधव्यं पालयेत्क्वचित् ।।

सा पुनः प्राप्य भर्तारं स्वर्गभोगान्समश्नुते ।। ७३ ।। ।

विधवा कबरीबंधो भर्तृबंधाय जायते ।।

शिरसो वपनं तस्मात्कार्यं विधवया सदा ।। ७४ ।।

एकाहारः सदा कार्यो न द्वितीयं कदाचन ।।

त्रिरात्रं पंचरात्रं वा पक्षव्रतमथापि वा ।। ७५ ।।

मासोपवासं वा कुर्याच्चांद्रायणमथापि वा ।।

कृच्छ्रं वराकं वा कुर्यात्तप्तकृच्छ्रमथापि वा ।। ७६ ।।

यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः ।।

प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ।। ७७ ।।

पर्यंकशायिनी नारी वि धवा पातयेत्पतिम् ।।

तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ।। ७८ ।।

न चांगोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ।।

गंधद्रव्यस्य संयोगो नैव कार्यस्तया पुनः ।। ७९ ।।

तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ।।

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम ।। 4.1.4.८० ।।

विष्णोस्तु पूजनं कार्यं पति बुद्ध्या न चान्यथा ।।

पतिमेव सदा ध्यायेद्विष्णुरूपधरं हरिम् ।। ८१ ।।

यद्यदिष्टतमं लोके यच्च पत्युः समीहितम् ।।

तत्तद्गुणवते देयं पतिप्रीणनकाम्यया ।। ८२ ।।

वैशाखे कार्तिके माघे विशेषनियमांश्चरेत् ।।

स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ।। ८३ ।।

वैशाखे जलकुंभांश्च कार्तिके घृतदीपकाः ।।

माघे धान्य तिलोत्सर्गः स्वर्गलोके विशिष्यते ।। ८४ ।।

प्रपा कार्या च वैशाखे देवे देया गलंतिका ।।

उपानद्व्यजनं छत्रं सूक्ष्मवासांसि चन्दनम् ।। ८५ ।।

सकर्पूरं च तांबूलं पुष्पदानं तथैव च ।।

जलपात्राण्यनेकानि तथा पुष्प गृहाणि च ।। ८६ ।।

पानानि च विचित्राणि द्राक्षा रंभा फलानि च ।।

देयानि द्विजमुख्येभ्यः पतिर्मे प्रीयतामिति ।। ८७ ।।

ऊर्जे यवान्नमश्नीयादेकान्नमथवा पुनः ।।

वृंताकं सूरणं चैव शूकशिंबिं च वर्जयेत् ।। ८८ ।।

कार्तिके वर्जयेत्तैलं कार्तिके वर्जये न्मधु ।।

कार्तिके वर्जयेत्कांस्यं कार्तिके चापिसंधितम् ।। ८९ ।।

कार्तिके मौननियमे घंटां चारु प्रदापयेत ।।

पत्रभोजी कांस्यपात्रं घृतपूर्णं प्रयच्छति ।।4.1.4.९०।।

भूमिशय्याव्रते देया शय्या श्लक्ष्णा सतूलिका ।।

फलत्यागे फलं देयं रसत्यागे च तद्रसम् ।। ९१ ।।

धान्यत्यागे च तद्धान्यमथवा शालयः स्मृताः ।।

धेनूर्दद्यात्प्रयत्नेन सालंकाराः सकांचनाः ।। ९२ ।।

एकतः सर्वदानानि दीपदानं तथैकतः ।।

कार्तिके दीपदानस्य कलां नार्हति षोडशीम् ।। ९३ ।।

किंचिदभ्युदिते सूर्ये माघस्नानं समाचरेत् ।।

यथाशक्त्या च नियमान्माघस्नायी समाचरेत् ।। ९४ ।।

पक्वान्नैर्भो जयेद्विप्रान्यतिनोपि तपस्विनः ।।

लड्डुकैः फेणिकाभिश्च वटकेंडरिकादिभिः ।। ९५ ।।

घृतपक्वैः समीरचैः शुचिकर्पूरवासितैः ।।
गर्भे शर्करया पूर्णैर्नेत्रानं दैः सुगंधिभिः ।। ९६ ।।
शुष्केंधनानां भारांश्च दद्याच्छीतापनुत्तये ।।
कंचुकं तूलगर्भं च तूलिकां सूपवीतिकाम् ।। ९७ ।।
मंजिष्ठा रक्तवासांसि तथा तूलवतीं पटीम् ।।
जातीफल लवंगैश्च तांबूलानि बहून्यपि ।। ९८ ।।
कंबलानि विचित्राणि निर्वातानि गृहाणि च ।।
मृदुलाः पादरक्षाश्च सुगंध्युद्वर्त्तनानि च।।९९।।
घृतकंबलपूजाभिर्महास्नानपुरःसरम् ।।
कृष्णागुरुप्रभृतिभिर्गर्भागारे प्रधूपनैः ।। 4.1.4.१०० ।।
स्थूलवर्तिप्रदीपैश्च नैवेद्यैर्विविधैस्तथा ।।
भर्तृस्वरूपो भगवान्प्रीयतामिति चोच्चरेत् ।। १ ।।
एवंविधैश्च विधवा विविधैर्नियमैर्व्रतैः ।।
वैशाखान्कार्तिकान्माघानेवमेवातिवाहयेत् ।। २ ।।
नाधिरोहेदनड्वाहं प्राणैः कंठगतैरपि ।।
कंचुकं न परीदध्याद्वासो न विकृतं न्यसेत्।।३।।
अपृष्ट्वा तु सुतान्किंचिन्न कुर्याद्भर्तृतत्परा ।।
एवं चर्यापरा नित्यं विधवापि शुभा मता ।। ४ ।।
एवं धर्मसमायुक्ता विधवापि पतिव्रता ।।
पतिलोकानवाप्नोति नभवेत्क्वापि दुःखभाक् ।।५।।
न गंगया तया भेदो या नारी पतिदेवता ।।
उमाशिवसमा साक्षात्त स्मात्तां पूजयेद्बुधः ।।६।।
बृहस्पतिरुवाच ।।
गंगास्नानफलं त्वेतद्यज्जातं तव दर्शनम् ।।
लोपामुद्रे महामातर्भर्तृपादांबुजेक्षणे ।। ७ ।।
इति स्तुत्वा महाभागां राजपुत्रीं पतिव्रताम् ।।
प्रणम्य च गुरुः प्राह मुनिं सर्वार्थकोविदः ।। ८. ।।
प्रणवस्त्वं श्रुतिरियं क्षमैषा त्वं स्वयं तपः ।।

सत्क्रियेयं फलं त्वं हि धन्योसीति महामुने ।। ९ ।।

इदं पातिव्रतं तेजो ब्रह्मतेजो भवान्परम् ।।

तत्राप्येतत्तपस्तेजः किमसाध्यतमं तव ।। 4.1.4.११० ।।

तव नाविदितं किंचित्तथापि च वदाम्यहम् ।।

यदर्थमागता देवास्तन्मुनेत्र निशामय ।। ११ ।।

अयं शतमखः श्रीमान्वृत्रहा कुलिशायुधः ।।

सिद्ध्यष्टकं हि यद्द्वारि दृक्प्रसादं समीक्षते ।। १२ ।।

यस्यपुर्याः परिसरे कामधेनु व्रजश्चरेत् ।।

यत्पौराः कल्पवृक्षाणां नित्यं छायासु शेरते ।। १३ ।।

यद्रथ्यासु च तिष्ठंति ते चिंतामणिकर्कराः ।।

अयमग्निर्जगद्योनिर्धर्मराजस्त्वयं पुनः ।। १४ ।।

निर्ऋतिर्वरुणोवायुःश्रीदरुद्रादयस्त्वमी ।।

आराध्यंते च चारित्रैः सर्वकामार्थ मीश्वराः ।। १५ ।।

ममभ्यर्थयितारोमी त्वं याच्यस्तु जगत्कृते ।।

वाङ्मात्रोद्यमसाध्यं तत्तवविश्वोपकारकम् । १६ ।

कश्चिच्छैलो विंध्यनामा भानुमार्गावरोधकः ।।

वर्धितः स्पर्धया मेरोस्तद्वृद्धिं त्वं निवारय ।।१७।।

ये च स्वभावकठिना ये च मार्गावरोधकाः ।।

ये स्पर्द्धया वृद्धिमंतस्तद्वृद्धिर्वर्धिताऽशुभा ।। १८।।

इति श्रुत्वा गुरोर्वाक्यमविचार्य महामुनिः ।।

क्षणं मुनिःसमाधाय तथेति प्रत्युवाच ह ।। १९ ।।

साधयिष्यामि वः कार्यं विसर्ज्येति दिवौकसः ।।

पुनश्चिंतापरो भूत्वाऽगस्तिर्ध्यानपरोभवत् ।। 4.1.4.१२० ।।

वेदव्यास उवाच ।। ।।

इमं पतिव्रताध्यायं श्रुत्वा स्त्रीपुरुषोपिवा ।।

पापकंचुकमुत्सृज्य शक्रलोकं प्रयास्यति ।। १२१ ।।

इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे पतिव्रताख्यानंनाम चतुर्थोऽध्यायः ।। ४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००५

https://sa.wikisource.org/s/fui
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

पराशर उवाच ।। ।।

ततो ध्यानेन विश्वेशमालोक्य स मुनीश्वरः ।।

सूत प्रोवाच तां पुण्यां लोपामुद्रामिदं वचः ।। १ ।।

अयि पश्य वरारोहे किमेतत्समुपस्थितम् ।।

क्व तत्कार्यं क्व च वयं मुनिमार्गानुसारिणः ।। २ ।।

येन गोत्रभिदा गोत्रा विपक्षा हेलया कृताः ।।

भवेत्कुंठितसामर्थ्यः स कथं गिरिमात्रके ।। ३ ।।

कल्पवृक्षोंऽगणे यस्य कुलिशं यस्य चायुधम् ।।

सिद्ध्यष्टकं हि यद्द्वारि स सिद्ध्यै प्रार्थयेद्द्विजम्।। ४ ।।

क्रियंते व्याकुलाः शैला अहो दावाग्निना प्रिये ।।

तद्वृद्धिस्तंभने शक्तिः क्व गतासाऽऽशुशुक्षणेः ।।५।।

नियन्ता सर्वभूतानां योसौ दण्डधरः प्रभुः ।।

स किं दंडयितुं नालमेकं तं ग्रावमात्रकम् ।। ६ ।।

आदित्या वसवो रुद्रास्तुषिताः स मरुद्गणाः ।।

विश्वेदेवास्तथा दस्रौ ये चान्येपि दिवौकसः ।। ७ ।।

येषां दृक्पातमात्रेण पतंति भुवनान्यपि।।

ते किं समर्था नो कांते नगवृद्धिनिषेधने ।।८।।

आज्ञातं कारणं तच्च स्मृतं वाक्यं सुभाषितम्।।

काशीमुद्दिश्य यद्गीतं मुनिभिस्तत्त्वदर्शिभिः ।।९।।

अविमुक्तं न मोक्तव्यं सर्वथैव मुमुक्षुभिः ।।

किंतु विघ्ना भविष्यंति काश्यां निवसतां सताम् ।। 4.1.5.१० ।।

उपस्थितोयं कल्याणि सोंऽतरायो महानिह ।।

न शक्यतेऽन्यथाकर्तुं विश्वेशो विमुखो यतः ।। ११ ।।

काशीद्विजाशीर्भिरहो यदाप्ता कस्तां मुमुक्षुर्यदिवामुमुक्षुः ।।

ग्रासं करस्थं स विसृज्य हृद्यं स्वकूर्परं लेढि विमूढचेताः ।। १२ ।।

अहो जना बालिशवत्किमेतां काशीं त्यजेयुः सुकृतैकराशिम् ।।
शालूककंदः प्रतिमज्जनं किं लभेत तद्वत्सुलभा किमेषा ।। १३ ।।
भवांतरा वर्जित पुण्यराशिं कृच्छ्रैर्महद्भिर्ह्यवगम् यकाशीम् ।।
प्राप्यापि किं मूढधियोन्यतो वै यियासवो दुर्गतिमुद्यियासवः ।। १४ ।।
क्व काशिका विश्वपदप्रकाशिका क्व कार्यमन्यत्परितोतिदुःखम् ।।
तत्पंडितोन्यत्र कुतः प्रयाति किं याति कूष्मांडफलं ह्यजास्ये ।। १५ ।।
काशीं प्रकाशीं कृतपुण्यराशिं हा शीघ्रनाशी विसृजेन्नरः किम् ।।
नूनं स्वनूनं सुकृतं तदीयं मदीयमेवं विवृणोति चेतः ।। १६ ।।
नरो न रोगी यदिहाविहाय सहायभूतां सकलस्य जंतोः।।।
काशीमनाशी सुकृतैकराशिमन्यत्र यातुं यततां न चान्यः ।। १७ ।।
वित्रस्तपापां त्रिदशैर्दुरापां गंगां सदापां भवपाशशापाम् ।।
शिवाविमुक्तामममृतैकशुक्तिं भुक्ताविमुक्तानपरित्यजन्ति ।। १८ ।।
हंहो किमंहो निचिताः प्रलब्धा बंहीयसायास भरेण काशीम् ।।
प्रभूतपुण्यद्रविणैकपण्यां प्राप्यापि हित्वा क्व च गंतुमुद्यताः ।। १९ ।।
अहो जनानां जडता विहाय काशीं यदन्यत्र न यंति चेतः ।।
परिस्फुरद्गांगजलाभिरामां कामारिशूलाग्रधृतां लयेपि ।। 4.1.5.२० ।।
रेरे भवे शोकजलैकपूर्णे पापेस्मलोकाः पतिताब्धिमध्ये।।
विद्राणनिद्राणविरोधिपापां काशीं परित्यज्यतरिं किमर्थम्।।२१।।
न सत्पथेनापि न योगयुक्त्या दानैर्नवा नैव तपोभिरुग्रैः ।।
काशी द्विजाशीर्भिरहो सुलभ्या किंवा प्रसादेन च विश्वभर्तुः ।।२२।।
धर्मस्तु संपत्तिभरैः किलोह्यतेप्यर्थो हि कामैर्बहुदानभोगकैः।।
अन्यत्रसर्वं स च मोक्ष एकः काश्यां न चान्यत्र तथायथात्र।।२३।।
क्षेत्रं पवित्रं हि यथाऽविमुक्तं नान्यत्तथायच्छ्रुतिभिः प्रयुक्तम्।।
न धर्मशास्त्रैर्न च तैःपुराणैस्तस्माच्छरण्यं हि सदाऽविमुक्तम्।।२४।।
सहोवाचेति जाबालिरारुणेसिरिडामता।।
वरणापिंगला नाडी तदंतस्त्वविमुक्तकम्।।२५।।
सा सुषुम्णा परानाडी त्रयं वाराणसीत्वसौ।।
तदत्रोत्क्रमणे सर्वजंतूनां हि श्रुतौ हरः।।२६।।

तारकं ब्रह्मव्याचष्टे तेन ब्रह्म भवंति हि।।

एवं श्लोको भवत्येष आहुर्वै वेदवादिनः।।२७।।

भगवानंतकालेऽत्र तारकस्योपदेशतः।।

अविमुक्तेस्थिताञ्जन्तून्मोचयेन्नात्र संशयः।।२८।।

नाविमुक्तसमंक्षेत्रं नाविमुक्तसमा गतिः ।।

नाविमुक्तसमं लिंगं सत्यं सत्यं पुनःपुनः ।। २९ ।।

अविमुक्तं परित्यज्य योन्यत्र कुरुते रतिम् ।।

मुक्तिं करतलान्मुक्त्वा सोन्यां सिद्धिं गवेषयेत् ।।4.1.5.३०।।

इत्थं सुनिश्चित्य मुनिर्महात्मा क्षेत्रप्रभावं श्रुतितः पुराणात्।।

श्रीविश्वनाथेन समं न लिंगं पुरी न काशी सदृशी त्रिकोट्याम्।।३१।।

श्रीकालराजं च ततः प्रणम्य विज्ञापयामास मुनीशवर्यः ।।

आपृच्छनायाहमिहागतोस्मि श्रीकाशिपुर्यास्तु यतः प्रभुस्त्वम् ।।३२ ।।

हा कालराजप्रति भूतमत्र प्रत्यष्टमिप्रत्यवनीसुतार्कम् ।।

नाराधये मूलफलप्रसूनैः किं मय्यनागस्यपराधदृक्स्याः ।। ३३ ।।

हा कालभैरव भवानभितो भयार्तान्माभैष्ट चे तिभणनैः स्वकरं प्रसार्य ।।

मूर्तिं विधाय विकटां कटुपापभोक्त्रीं वाराणसीस्थितजनान्परिपाति किं न ।।३४ ।।

हे यक्षराज रजनीकर चारुमूर्ते श्रीपूर्णभद्रसुतनायक दंडपाणे ।।

त्वं वै तपोजनितदुःखमवैपि सर्वं किं मां बहिर्नयसि काशिनिवासिरक्षिन् ।। ३५ ।।

त्वमन्नदस्त्वं किल जीवदाता त्वं ज्ञानदस्त्वं किल मोक्षदोपि ।।

त्वमंत्यभूषां कुरुषे जनानां जटाकलापैरुरगेंद्रहारैः ।। ३६ ।।

गणौ त्वदीयौ किल संभ्रमोद्भ्रमावत्रस्थवृत्तांत विचारकोविदौ ।।

संभ्रांतिमुत्पाद्यपरामसाधून्क्षेत्रात्क्षणं दूरयतस्त्वमुष्मात् ।। ३७ ।।

शृणु प्रभो ढुंढिविनायक त्वं वाचं मदीयां तुरटाम्यनाथवत् ।।

त्वत्स्थाः समस्ताः किल विघ्नपूगाः किमत्र दुर्वृत्तवदास्थितोहम् । ३८ ।।

शृण्वंत्वमी पंच विनायकाश्च चिंतामणिश्चापि कपर्दिनामा ।।

आशागजाख्यौ च विनायकौ तौ शृणोत्वसौ सिद्धिविनायकश्च।।३९।।

परापवादो न मया किलोक्तः परापकारोपि मया कृतो न ।।

परस्वबुद्धिः परदारबुद्धिः कृता मया नात्र क एष पाकः ।।4.1.5.४०।।

गंगा त्रिकालं परिसेविता मया श्रीविश्वनाथोपि सदा विलोकितः ।।
यात्राः कृतास्ताः प्रतिपर्वसर्वतः कोयंविपाको मम विघ्नहेतुः ।। ४१ ।।
मातर्विशालाक्षि भवानिमंगले ज्येष्ठेशिसौभाग्यविधानसुंदरि।।
विश्वेविधे विश्वभुजे नमोस्तु ते श्रीचित्रघंटे विकटे च दुर्गिके ।। ४२ ।।
साक्षिण्य एता किलकाशिदेवताः शृण्वंतु न स्वार्थमहं व्रजाम्यतः ।।
अभ्यर्थितो देवगणैः करो मि किं परोपकाराय न किं विधीयते ।। ४३ ।।
दधीचिरस्थीनि न किं पुरा ददौ जगत्त्रयं किं न ददेऽर्थिने बलिः ।।
दत्तः स्म किं नो मधुकैटभौ शिरो बभूव तार्क्ष्योपि च विष्णुवाहनम् ।। ४४ ।।
आपृच्छ्य सर्वान्समुनीन्मुनीश्वरः सबालवृद्धानपि तत्रवासिनः ।।
तृणानि वृक्षांश्चलताः समस्ताः पुरीं परिक्रम्य च निर्ययौ च।।४५।।
प्रोषितस्य परितोपि लक्षणैर्नीचवर्त्मपरिवर्तिनोपि वा ।।
चंद्रमौलिमवलोक्य यास्यतः कस्य सिद्धिरिह नो परिस्फुरेत् ।।४६।।
वरं हि काश्यां तृणवृक्षगुल्मकाश्चरंति पापं न चरंति नान्यतः ।।
वयं चराणां प्रथमा धिगस्तु नो वाराणसींहाद्य विहाय गच्छतः ।। ४७ ।।
असिं ह्युपस्पृश्य पुनःपुनर्मुनिः प्रासादमालाः परितो विलोकयन् ।।
उवाच नेत्रे सरले प्रपश्यतं काशीं युवां क्वक्व पुरी त्वियं बत ।। ४८ ।।
स्वैरं हसंत्वद्य विधाय तालिकां मिथःकरेणापि करं प्रगृह्य ।।
सीमाचरा भूतगणा व्रजाम्यहं विहाय काशीं सुकृतैकराशिम् ।। ४९ ।।
इत्थं विलप्य बहुशः स मुनिस्त्वगस्त्यस्तत्क्रौंचयुग्मवदहो अबलासहायः ।।
मूर्च्छामवाप महतीं विरही वजल्पन्हाकाशिकाशि पुनरेहि च देहि दृष्टिम्।। 4.1.5.५० ।।
स्थित्वा क्षणं शिवशिवेति शिवेति चोक्त्वा यावःप्रियेति कठिनाहि दिवौकसस्ते।।
किं न स्मरेस्त्रिजगती सुखदानदक्षं त्र्यक्षं प्रहित्यमदनं यदकारितैस्तु ।। ५१ ।।
यावद्व्रजेत्त्रिचतुराणि पदानि खेदात्स्वेदोदबिंदुकणिकांचितभालदेशः ।।
प्रत्युद्गमाऽकरणतः किल मे विनाशस्तावद्धराभयवरादिव संचुकोच ।। ५२ ।।
तपोयानमिवारुह्य निमेषार्धेन वै मुनिः ।।
अग्रे ददर्श तं विंध्यं रुद्धांबरमथोन्नतम् ।। ५३।।
चकंपे चाचलस्तूर्णं दृष्ट्वैवाग्रस्थितम मुनिम् ।।
तमगस्त्यं सपत्नीकं वातापील्वल वैरिणम् ।। ५४ ।।

तपःक्रोधसमुत्थाभ्यां काशीविरहजन्मना ।।

प्रलयानलवत्तीव्रं ज्वलंतं त्रिभिरग्निभिः ।।५५ ।।

गिरिः खर्वतरो भूत्वा विविक्षुरवनीमिव ।।

आज्ञाप्रसादः क्रियतां किंकरोस्मीति चाब्रवीत।। ५६ ।।

।। अगस्त्य उवाच ।। ।।

विंध्य साधुरसि प्राज्ञ मां च जानासि तत्त्वतः ।।

पुनरागमनं चेन्मे तावत्खर्वतरो भव ।। ५७ ।।

इत्युक्त्वा दक्षिणामाशां सनाथामकरोन्मुनिः ।।

निजैश्चरणविन्यासैस्तया साध्व्या तपोनिधिः ।। ५८ ।।

गते तस्मिन्मुनिवरे वेपमानस्तदा गिरिः ।।

पश्यत्युत्कंठमिव च गतश्चेत्साध्वभूत्ततः ।। ५९ ।।

अद्याजातः पुनरहं न शप्तो यदगस्तिना ।।

न मया सदृशो धन्य इति मेने स वै गिरिः ।। 4.1.5.६० ।।

अरुणोपि च तत्काले कालज्ञो ऽश्वानकालयत् ।।

जगत्स्वास्थ्यमवापोच्चैः पूर्ववद्भानुसंचरैः ।। ६१ ।।

अद्य श्वो वा परश्वो वाप्यागमिष्यति वै मुनिः ।।

इति चिंतामहाभारैर्गिरिराक्रांतवत्स्थितः ।। ६२ ।।

नाद्यापि मुनिरायाति नाद्यापिगिरिरेधते ।।

यथा खलजनानां हि मनोरथमहीरुहः ।। ६३ ।।

विवर्धिषति यो नीचः परासूयां समुद्वहन् ।।

दूरे तद्वृद्धिवार्ताऽस्तां प्राग्वृद्धेरपि संशयः ।। ६४ ।।

मनोरथा न सिद्ध्येयुः सिद्धा नश्यंत्यपि ध्रुवम् ।।

खलानां तेन कुशलि विश्वं विश्वेशरक्षितम् ।। ६५ ।।

विधवानां स्तना यद्वद्वृद्ध्येव विलयंति च ।।

उन्नम्योन्नम्य तत्रोच्चैस्तद्वत्खलमनोरथाः ।। ६६ ।।

भवेत्कूलंकपा यद्वदल्पवर्षेणकन्नदी ।।

खलर्धिरल्पवर्षेण तद्वत्स्यात्स्वकुलंकपा ।। ६७ ।।

अविज्ञायान्य सामर्थ्यं स्वसामर्थ्यं प्रदर्शयेत ।।

उपहासमवाप्नोति तथैवायमिहाचलः ।। ६८ ।।

।। व्यास उवाच ।। ।।

गोदावरीतटं रम्यं विचरन्नपि वै मुनिः ।।

न तत्याज च तं तापं काशीविरहजं परम् ।। ६९ ।।

उदीची दिक्स्पृशमपि स मुनिर्मातरिश्वनम् ।।

प्रसार्य बाहू संश्लिष्य काश्याः पृच्छेदनामयम् ।। 4.1.5.७० ।।

लोपामुद्रे न सा मुद्रा कापीह जगतीतले ।।

वाराणस्याः प्रदृश्येत तत्कर्ता न यतो विधिः ।। ७१ ।।

क्वचित्तिष्ठन्क्वचिज्जल्पन्क्वचिद्धावन्क्वचित्स्खलन् ।।

क्वच्चिचोपविशंश्चेति बभ्रामेतस्ततो मुनिः ।।७२ ।।

ततो व्रजन्ददर्शाग्रे पुण्यराशिस्तपोधनः।।

चंचच्चंद्रगताभासां भाग्यवानिव सुश्रियम् ।। ७३ ।।

विजित्यभानु नाभानुं दिवापि समुदित्वराम् ।।

निर्वापयंतीमिव तां स्वचेतस्तापसंततिम् ।। ७४ ।।

तत्रागस्त्यो महालक्ष्मीं ददृशे सुचिरं स्थिताम्।। ७५।।

रात्रावब्जेषु संकोचो दर्शेष्वब्जः क्वचिद्व्रजेत्।।

क्षीरोदे मंदरत्रासात्तदत्राध्युषितामिव।। ७६।।

यदारभ्य दधारैनां माधवो मानतः किल ।।

तदारभ्य स्थितां नूनं सपत्नीर्ष्यावशादिव ।।७७।।

त्रैलोक्यं कोलरूपेण त्रासयंतं महासुरम्।।

विनिहत्य स्थितां तत्र रम्ये कोलापुरे पुरे ।।७८।।

संप्राप्याथ महालक्ष्मीं मुनिवर्यः प्रणम्य च।।

तुष्टाव वाग्भिरिष्टाभिरिष्टदां हृष्टमानसः ।। ७९ ।।

अगस्तिरुवाच।।

मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः ।।

क्षीरोदजे कमलकोमलगर्भ गौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये ।। 4.1.5.८० ।।

त्वं श्रीरुपेंद्रसदने मदनैकमातर्ज्योत्स्नासि चंद्रमसि चंद्रमनोहरास्ये।

सूर्ये प्रभासि च जगत्त्रितये प्रभासि लक्ष्मि प्रसीद सततं नमतां शरण्ये।। ८१ ।।

त्वं जातवेदसि सदा दह्नात्मशक्तिर्वेधास्त्वया जगदिदं विविधं विदध्यात् ।।
विश्वंभरोपि बिभृयादखिलं भवत्या लक्ष्मि प्रसीद सततं नमतां शरण्ये ।। ८२ ।।
त्वत्त्यक्तमेतदमले हरते हरोपि त्वं पासि हंसि विदधासि परावरासि ।।
ईड्यो बभूव हरिरप्यमले त्वदास्या लक्ष्मि प्रसीद सततं नमतां शरण्ये ।। ८३ ।।
शूरः स एव स गुणी , बुधः धन्यो मान्यः स एव कुलशील कलाकलापैः ।।
एकः शुचिः स हि पुमान्सकलेपि लोके यत्रापतेत्तव शुभे करुणाकटाक्षः ।। ८४ ।।
यस्मिन्वसेः क्षणमहोपुरुषे गजेऽश्वे स्त्रैणे तृणे सरसि देवकुले गृहेऽन्ने।।
रत्ने पतत्त्रिणि पशौ शयने धरायां सश्रीकमेव सकले तदिहास्तिनान्यत् ।। ८५ ।।
त्वत्स्पृष्टमेव सकलं शुचितां लभेत त्वत्त्यक्तमेव सकलं त्वशुचीह लक्ष्मि ।।
त्वन्नाम यत्र च सुमंगलमेव तत्र श्रीविष्णुपत्नि कमले कमलालयेऽपि ।। ८६ ।।
लक्ष्मीं श्रियं च कमलां कमलालयां च पद्मां रमां नलिनयुग्मकरां च मां च।
क्षीरोदजाममृतकुंभकरामिरां च विष्णुप्रियामिति सदाजपतां क्व दुःखम् ।। ८७ ।।
इति स्तुत्वा भगवतीं महालक्ष्मीं हरिप्रियाम् ।।
प्रणनाम सपत्नीकः साष्टांगं दंडवन्मुनिः।।८८।।
श्रीरुवाच।।
उत्तिष्ठोत्तिष्ठ भद्रं ते मित्रावरुणसंभव ।।
पतिव्रते त्वमुत्तिष्ठ लोपामुद्रे शुभव्रते ।। ८९ ।।
स्तुत्यानया प्रसन्नोहं व्रियतां यद्धृदीप्सितम् ।।
राजपुत्रि महाभागे त्वमिहोपविशामले ।। 4.1.5.९० ।।
त्वदंगलक्षणैरेभिः सुपवित्रैश्च ते व्रतैः।।
निर्वापयितुमिच्छामि दैत्यास्त्रैस्तापितां तनुम्।।९१।।
इत्युक्त्वा मुनिपत्नीं तां समालिंग्य हरिप्रिया।।
अलंचकार च प्रीत्या बहुसौभाग्यमंडनैः ।। ९२ ।।
पुनराह मुने जाने तव हृत्तापकारणम् ।।
सचेतनं दुनोत्येव काशीविश्लेषजोऽनलः ।। ९३ ।।
यदा स देवो विश्वेशो मंदरं गतवान्पुरा।।
तदा काशीवियोगेन जाता तस्येदृशी दशा।।९४।।
तत्प्रवृत्तिं पुनर्ज्ञातुं ब्रह्माणं केशवं गणान्।।

गणेश्वरं च देवांश्च प्रेषयामास शूलधृक्।।९५।।

ते च काशीगुणान्सर्वे विचार्य च पुनःपुनः।।

व्रजंत्यद्यापि न क्वापि तादृगस्ति क्व वा पुरी।।९६।।

इति श्रुत्वाथ स मुनिः प्रत्युवाच श्रियं ततः।।

प्रणिपत्य महाभागो भक्तिगर्भमिदं वचः ।। ९७ ।।

यदि देयो वरो मह्यं वरयोग्योस्म्यहं यदि ।।

तदा वाराणसी प्राप्तिः पुनरस्त्वेष मे वरः ।। ९८ ।।

ये पठिष्यंति च स्तोत्रं त्वद्भक्त्या मत्कृतं सदा।।

तेषां कदाचित्संतापो मास्तु मास्तु दरिद्रता।।९९।।

मास्तु चेष्टवियोगश्च मास्तु संपत्ति संक्षयः।।

सर्वत्र विजयश्चास्तु विच्छेदो मास्तु संततेः ।। 4.1.5.१०० ।।

।। श्रीरुवाच ।। ।।

एवमस्तु मुने सर्वं यत्त्वया परिभाषितम् ।।

एतत्स्तोत्रस्य पठनं मम सान्निध्य कारणम् ।। १ ।।

अलक्ष्मीः कालकर्णी च तद्गेहे न विशेत्क्वचित् ।।

गजाश्वपशुशांत्यर्थमेतत्स्तोत्रं सदा जपेत् ।। २ ।।

बालग्रहाभिभूतानां वालानांशांतिकृत्परम् ।।

भूर्जपत्रे लिखित्वा तु बध्नीयात्कंठदेशतः ।।३।।

इदं बीजरहस्यं मे रक्षणीयं प्रयत्नतः ।।

श्रद्धाहीने न दातव्यं न देयं चाशुचौ क्वचित् ।। ४ ।।

अन्यच्च शृणु विप्रेंद्र भविष्ये द्वापरे भवान् ।।

एकोनत्रिंशके ब्रह्मन्सत्यव्यासो भविष्यति ।। ५ ।।

तदा वाराणसीं प्राप्य सिद्धिं प्राप्स्यस्यभीप्सिताम् ।।

व्यस्य वेदान्पुराणानि धर्मा न्समुपदिश्य च ।। ६ ।।

हितं च ते वदाम्येकं सांप्रतं तत्समाचर ।।

पश्य किंचिदितो गत्वा स्कंदमग्रे स्थितं प्रभुम् ।। ७ ।।

वाराणस्या रहस्यं च यथाव च्छिवभाषितम् ।।

तव तुष्टिकरं ब्रह्मन्कथयिष्यति षण्मुखः ।। ८ ।।

इति लब्ध्वा वरं सोथ महालक्ष्मीं प्रणम्य च ।।

ययावगस्तिर्यत्रास्ति कुमारशिखिवाहनः ।। १०९ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहरुयां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे अगस्त्यप्रस्थानं नाम पंचमो ऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००६



पाराशर्य उवाच ।।

शृणु सूत महाभाग कथां श्रुतिसहोदराम् ।।

यां वै हृदि निधायेह पुरुषः पुरुषार्थभाक् ।। १ ।।

ततः श्रीदर्श नानंद सुधाधाराधुनीं मुनिः ।।

अवगाह्य सपत्नीकः परां मुदमवाप सः ।। २ ।।

वह्निकुंडसमुद्भूत सूतनिर्मलमानस ।।

शृणुष्वैकं पुरा विद्भिर्भाषितं यत्सुभा षितम् ।। ३ ।।

परोपकरणं येषां जागर्ति हृदये सताम्।।

नश्यंति विपदस्तेषां संपदः स्युः पदेपदे ।। ४ ।।

तीर्थस्नानैर्न सा शुद्धिर्बहुदानैर्न तत्फलम् ।।

तपोभिरुग्रैस्तन्नाप्यमुपकृत्याय दाप्यते ।। ५ ।।

परोपकृत्या यो धर्मो धर्मो दानादिसंभवः ।।

एकत्र तुलितौ धात्रा तत्र पूर्वो भवद्गुरुः ।। ६ ।।

परिनिर्मथ्य वाग्जालं निर्णीतमिदमेव हि ।।

नोपकारात्परो धर्मो नापकारादवं परम् ।। ७ ।।

उपकर्तुरगस्त्यस्य जातमेतन्निदर्शनम् ।।

क्व तादृक्काशिजं दुःखं क्व तादृक्श्रीमुखेक्षणम् ।। ८ ।।

करिकर्णाग्रचपलं जीवितं विविधं वसु ।।

तस्मात्परोपकरणं कार्यमेकं विपश्चिता ।। ९ ।।

यल्लक्ष्मीनाममात्राप्त्या नरो नो माति कुत्रचित् ।।

साक्षात्समीक्ष्यतां लक्ष्मीं कृतकृत्यो भवन्मुनिः ।। 4.1.6.१० ।।

गच्छन्यदृच्छयासोथ दूराच्छ्रीशैलमैक्षत ।।

यत्र साक्षान्निवसति देवः श्रीत्रिपुरांतकः ।।११।।

उवाच वचनं पत्नीं तदा प्रीतमना मुनिः। ।।

इहस्थितैव पश्य त्वं कांते कांततरं परम्।। १२ ।।

श्रीशैल शिखरं श्रीमदिदंतद्यद्विलोकनात् ।।

पुनर्भवो मनुष्याणां भवेत्र नभवेत्क्वचित् ।। १३ ।।

गिरि श्चतुरशीत्यायं योजनानां हि विस्मृतः ।।

सर्वलिंगमयो यस्मादतः कुर्यात्प्रदक्षिणम् ।। १४ ।।

।। लोपामुद्रोवाच ।। ।।

किंचिद्विज्ञप्तुमिच्छामि यद्याज्ञा स्वामिनो भवेत् ।।

ब्रूते हि याऽनुज्ञाता पत्या सा पतिता भवेत् ।। १५ ।।

अगस्त्य उवाच ।। ।।

किं वक्तुकामा देवि त्वं ब्रूहि तत्त्वमशंकिता।।

न त्वादृशीनां वाक्यं हि पत्युः खेदाय जायते ।। १६ ।।

ततः पप्रच्छ सा देवी प्रणम्य मुनिमानता ।।

सर्वेषां च हितार्थाय स्वसंदेहापनुत्तये ।। १७ ।।

लोपामुद्रोवाच ।।

श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते ।।

इदमेव हि सत्यं चेत्किमर्थं काशिरिष्यते ।। १८ ।।

अगस्तिरुवाच ।। ।।

आकर्णय वरारोहे सत्यं पृष्टं त्वयामले ।।

निर्णीतमसकृच्चैतन्मुनिभिस्तत्त्वचिंतकैः ।। १९ ।।

मुक्तिस्थानान्यनेकानि कृतस्तत्रापिनिर्णयः ।।

तानि ते कथयाम्यत्र दत्तचित्ता भव क्षणम् ।। 4.1.6.२० ।।

प्रथमं तीर्थराजं तु प्रयागाख्यं सुविश्रुतम् ।।

कामिकं सर्वतीर्थानां धर्मकामार्थमोक्षदम् ।। २१ ।।

नैमिषं च कुरुक्षेत्रं गंगाद्वारमवंतिका ।।

अयोध्या मथुरा चैव द्वारकाप्यमरावती ।। २२ ।।

सरस्वती सिंधुसंगो गंगासागरसंगमः ।।

कांती च त्र्यंबकं चापि सप्तगोदावरीतटम् ।। २३ ।।

कालंजरं प्रभासश्च तथा बद रिकाश्रमः ।।

महालयस्तथोंकारक्षेत्रं वै पौरुषोत्तमम् ।। २४ ।।

गोकर्णो भृगुकच्छश्च भृगुतुंगश्च पुष्करम् ।।
श्रीपर्वतादि तीर्थानि धारातीर्थं तथैव च ।। २५ ।।
मानसान्यपि तीर्थानि सत्यादीनि च वै प्रिये ।।
एतानि मुक्तिदान्येव नात्र कार्या विचारणा ।। २६ ।।
गया तीर्थं च यत्प्रोक्तं पितॄणां हि मुक्तिदम् ।।
पितामहानामृणतो मुक्तास्तत्तनया अपि ।। २७ ।।
सधर्मिण्युवाच ।। ।।
मानसान्यपि तीर्थानि यान्युक्तानि महामते ।।
कानि कानि च तानीह ह्येतदाख्यातुमर्हसि ।। २८ ।।
।। अगस्त्य उवाच ।। ।।
शृणु तीर्थानि गदतो मानसानि ममानघे ।।
येषु सम्यङ्नरः स्नात्वा प्रयाति परमां गतिम् ।। २९ ।।
सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः ।।
सर्वभूतदयातीर्थं तीर्थमार्जवमेव च ।। 4.1.6.३० ।।
दानं तीर्थं दमस्तीर्थं संतोषस्तीर्थमुच्यते ।।
ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ।। ३१ ।।
ज्ञानं तीर्थं धृतिस्तीर्थं तपस्तीर्थमुदाहृतम् ।।
तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ।। ३२ ।।
न जलाप्लुतदेहस्य स्नानमित्यभिधीयते ।।
स स्नातो यो दमस्नातः शुचिः शुद्धमनोमलः ।।३३।।
यो लुब्धः पिशुनः क्रूरो दांभिको विषयात्मकः।।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ।। ३४ ।।
न शरीर मल त्यागान्नरो भवति निर्मलः ।।
मानसे तु मले त्यक्ते भवत्यंतः सुनिर्मलः।।३५।।
जायंते च म्रियंते च जलेष्वेव जलौकसः ।।
न च गच्छंति ते स्वर्गमविशुद्धमनोमलाः ।। ३६ ।।
विषयेष्वति संरागो मानसो मल उच्यते ।।
तेष्वेव हि विरागो स्य नैर्मल्यं समुदाहृतम् ।। ३७ ।।

चित्तमंतर्गतं दुष्टं तीर्थस्नानान्न शुद्ध्यति ।।
शतशोथ जलैर्धौतं सुराभांडमिवाशुचि ।। ३८ ।।
दानमिज्यातपःशौचं तीर्थसेवा श्रुतं तथा ।।
सर्वाण्येतान्यतीर्थानि यदि भावो न निर्मलः ।। ३९ ।।
निगृहीतेंद्रियग्रामो यत्रैव च वसेन्नरः ।।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च ।। 4.1.6.४० ।।
ज्ञानपूते ज्ञानजले रागद्वेषमलापहे ।।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ।। ४१ ।।
एतत्ते कथितं देवि मानसं तीर्थलक्षणम् ।।
भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ।। ४२ ।।
यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।।
तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ।।४३।।
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः ।।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ।। ४४ ।।
तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः ।।
उभयेष्वपि यः स्नाति स याति परमां गतिम ।। ४५ ।।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च।।
अदत्त्वा कांचनं गाश्च दरिद्रो नाम जायते।। ४६।।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः।।
न तत्फलमवाप्नोति तीर्थभिगमनेन यत् ।। ४७ ।।
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ।। ४८ ।।
प्रतिग्रहादुपावृत्तः संतुष्टो येनकेनचित् ।।
अहंकार विमुक्तश्च स तीर्थफलमश्नुते ।। ४९ ।।
अदंभको निरारंभो लघ्वाहारो जितेंद्रियः ।।
विमुक्तसर्वसंगैर्यः स तीर्थफलमश्नुते ।। 4.1.6.५०।।
अकोपनोऽमलमतिः सत्यवादी दृढव्रतः।।
आत्मोपमश्च भूतेषु सतीर्थफलमश्नुते।।

तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः।।

कृतपापो विशुद्ध्येत किं पुनः शुद्धकर्मकृत् ।। ५२ ।।

तिर्यग्योनि न वै गच्छेत्कुदेशे नैव जायते ।।

न दुःखी स्यात्स्वर्गभाक्च मोक्षोपायं च विंदति ।। ५३ ।।

अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः।।

हेतुनिष्ठश्च पंचैते न तीर्थफलभागिनः।।५४।।

तीर्थानि च यथोक्तेन विधिना संचरंति ये।।

सर्वद्वंद्वसहा धीरास्ते नराः स्वर्गभागिनः ।। ५५ ।।

तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे ।।

गणेशं च पितॄन्विप्रान्साधूञ्छक्त्या प्रपूज्य च ।। ५६ ।।

कृतपारणको हृष्टो गच्छेन्नियमधृक्पुनः।।

आगत्याभ्यर्च्य पितॄन्यथोक्तफलभाग्भवेत्।।५७।।

न परीक्ष्यो द्विजस्तीर्थेष्वन्नार्थी भोज्य एव च।।

सक्तुभिः पिंडदानं च चरुणा पायसेन च।।५८।।

कर्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च।।

श्राद्धं तत्र प्रकर्तव्यमर्घ्यावाहनवर्जितम्।।५९।।

अकालेप्यथवा काले तीर्थे श्राद्धं च तर्पणम्।।

अविलंबेन कर्तव्यं नैव विघ्नं समाचरेत्।।4.1.6.६०।।

तीर्थं प्राप्य प्रसंगेन स्नानं तीर्थे समाचरेत्।।

स्नानजं फलमाप्नोति तीर्थयात्राश्रितं स च ।।६१।।

नृणां पापकृतां तीर्थे पापस्य शमनं भवेत्।।

यथोक्तं फलदं तीर्थं भवेच्छ्रद्धात्मनां नृणाम्।।६२।।

षोडशांशं स लभते यः परार्थं च गच्छति।।

अर्धं तीर्थफलं तस्य यः प्रसंगेन गच्छति।।६३।।

कुश प्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत्।

मज्जयेच्च यमुद्दिश्य सोष्टमांशं लभेत वै।।६४।।

तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा।

शिरोगतानि पापानि यांति मुंडनतो यतः।।६५।।

यदह्नि तीर्थप्राप्तिः स्यात्ततोह्नः पूर्ववासरे।।

उपवासस्तु कर्तव्यः प्राप्ताह्नि श्राद्धदो भवेत्।।६६।।

तीर्थप्रसंगात्तीर्थांगमप्युक्तं त्वत्पुरोमया।।

स्वर्गसाधनमेवैतन्मोक्षोपायश्च वै भवेत्।।६७।।

काशीकांती च मायाख्या त्वयोध्याद्वारवत्यपि।।

मथुरावंतिका चैताः सप्त पुर्योत्र मोक्षदाः।। ६८।।

श्रीशैलो मोक्षदः सर्वः केदारोपि ततोऽधिकः।।

श्रीशैलाच्चापि केदारात्प्रयागं मोक्षदं परम्।।६९।।

प्रयागादपि तीर्थाग्र्यादविमुक्तं विशिष्यते।।

यथाविमुक्ते निर्वाणं न तथाक्वाप्यसंशयम्।।4.1.6.७०।।

अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि च।।

काशीं ध्यायमिमं श्रुत्वा नरो नियतमानसः।।

श्रावयित्वा द्विजांश्चापि श्रद्धाभक्तिसमन्वितान्।। ७३।।

क्षत्रियान्धर्मनिरतान्वैश्यान्सन्मार्गवर्तिनः।।

शूद्रान्द्विजेषु भक्तांश्च निष्पापो जायते द्विजः।। ७४।।

इति श्रीस्कान्देमहापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखण्डे तीर्थाध्यायोनाम षष्ठोऽध्यायः।।६।।

अगस्तिरुवाच।।
मथुरायां द्विजः कश्चिदभूद्भूदेवसत्तमः।।
तस्य पुत्रो महातेजाः शिवशर्मेति विश्रुतः।। १ ।।
अधीत्यवेदान्विधिवदर्थं विज्ञाय तत्त्वतः।.
पठित्वा धर्मशास्त्राणि पुराणान्यधिगम्य च।।२।।
अंगान्यभ्यस्य तर्कांश्च परिलोड्य समंततः।।
मीमांसाद्वयमालोक्य धनुर्वेदं विगाह्य च।।३।।
आयुर्वेदं विचार्यापि नाट्यवेदे कृतश्रमः ।।
अर्थशास्त्राण्यनेकानि प्राप्याश्वगजचेष्टितम् ।। ४ ।।
कलासु च कृताभ्यासो मन्त्रशास्त्रविचक्षणः ।।
भाषाश्च नाना देशानां लिपीर्ज्ञात्वा विदेशजाः ।। ५ ।।
अर्थानुपार्ज्य धर्मेण भुक्त्वा भोगान्यदृच्छया ।।
उत्पाद्य पुत्रान्सुगुणांस्तेभ्यो ह्यर्थं विभज्य च ।। ६ ।।
यौवनं गत्वरं ज्ञात्वा जरां दृष्ट्वाश्रितां श्रुतिम् ।।
चिन्तामवाप महती शिवशर्मा द्विजोत्तमः ।। ७ ।।
पठतो मे गतः कालस्तथोपार्जयतो धनम् ।।
नाराधितो महेशानः कर्मनिर्मूलनक्षमः ।। ८ ।।
न मया तोषितो विष्णुः सर्वपापहरो हरिः ।।
सर्वकामप्रदो नृणां गणेशो नार्चितो मया ।। ९ ।।
तमस्तोमहरः सूर्यो नार्चि तो वै मया क्वचित् ।।
महामाया जगद्धात्री न ध्याता भवबंधहृत् ।। 4.1.7.१० ।।
न प्रीणिता मया देवा यज्ञैः सर्वैः समृद्धिदाः ।।
तुलसीवन शुश्रूषा न कृता पापशांतये ।। ११ ।।
न मया तर्पिता विप्रा मृष्टान्नैर्मधुरै रसैः ।।
इहापि च परत्रापि विपदामनुतारकाः ।। १२ ।।
बहुपुष्पफलोपेताः सुच्छायाः स्निग्धपल्लवाः ।।
पथि नारोपिता वृक्षा इहामुत्रफलप्रदाः ।। १३ ।।
दुकूलैः स्वानुकूलैश्च चोलैः प्रत्यंगभूषणैः ।।
नालंकृताः सुवासिन्य इहामुत्रसुवासदाः ।। १४ ।।
द्विजाय नोर्वरा दत्ता यमलोकनिवारिणी ।।
सुवर्णं न सुवर्णाय दत्तं दुरितहृत्परम्।।१५।।
नालंकृता सवत्सा गौः पात्राय प्रतिपादिता ।।
इह पापापहंत्र्याशु सप्तजन्मसुखावहा ।। १६ ।।

ऋणापनुत्तये मातुः कारितो न जलाशयः ।।
नातिथिस्तोषितः क्वापि स्वर्गमार्गप्रदर्शकः ।। १७ ।।
छत्रोपानत्कुंडिकाश्च नाध्वगाय समर्पिताः ।।
यास्यतः संयमिन्यां हि स्वर्गमार्गसुखप्रदाः ।। १८ ।।
न च कन्याविवाहार्थं वसु क्वापि मयार्पितम् ।।
इह सौख्यसमृद्ध्यर्थं दिव्यकन्यार्पकं दिवि ।। १९ ।।
न वाजपेयावभृथे स्नातो लोभवशादहम् ।।
इह जन्मनि चान्यस्मिन्बहुमृष्टान्नपानदे ।। 4.1.7.२० ।।
न मया स्थापितं लिंगं कृत्वा देवालयं शुभम ।।
यस्मिन्संस्थापिते लिंगो विश्वं संस्थापितं भवेत् ।। २१ ।।
विष्णोरायतनं नैव कृतं सर्वसमृद्धिदम् ।।
न च सूर्यगणेशानां प्रतिमाः कारिता मया ।। २२ ।।
न गौरी न महालक्ष्मीश्चित्रेपि परिलेखिते ।।
प्रतिमाकरणे चैषां न कुरूपो न दुर्भगः ।। २३ ।।
सुसूक्ष्माणि विचित्राणि नोज्ज्वलान्यंबराण्यपि ।।
समर्पितानि विप्रेभ्यो दिव्यांबर समृद्धये ।। २४ ।।
न तिलाश्च घृतेनाक्ताः सुसमिद्धे हुताशने ।।
हुता वै मन्त्रपूताश्च सर्वपापापनुत्तये ।।२५।।
श्रीसूक्तं पावमानी च ब्राह्मणो मंडलानि च।।
जप्तं पुरुषसूक्तं न पापारि शतरुद्रियम्।।२६।।
अश्वत्थ सेवा न कृता त्यक्त्वा चार्कं त्रयोदशीम्।।
सद्यः पापहरा सा हि न रात्रौ न भृगोर्दिने ।। २७ ।।
शयनीयं न चोत्सृष्टं मृदुला च प्रतूलिका ।।
दीपीदर्पणसंयुक्तं सर्वभोगसमृद्धिदम् ।। २८ ।।
अजाश्वमहिषी मेषी दासी कृष्णाजिनं तिलाः ।।
सकरंभास्तोयकुंभा नासनं मृदुपादुके ।। २९ ।।
पादाभ्यंगं दीपदानं प्रपादानं विशेषतः ।।
व्यजनं वस्त्रतांबूलं तथान्यन्मुखवासकृत ।। 4.1.7.३० ।।
नित्यश्राद्धं भूतबलिं तथाऽतिथि समर्चनम् ।।
विशन्त्यन्यानि दत्त्वा च प्रशस्यानि यमालये ।। ३१ ।।
न यमं यमदूतांश्च नयामीरपि यातनाः।।
पश्यन्ति ते पुणयभाजो नैतच्चापि कृतं मया।।३२।।
कृच्छ्रचांद्रायणादीनि तथा नक्तव्रतानि च।।

शरीरशुद्धिकारीणि न कृतानि क्वचिन्मया।।३३।।
गवाह्निकं च नोदत्तं कोकंडूतिर्न वै कृता।।
नोद्धृता पंकमग्ना गौर्गोलोकसुखदायिनी।। ३४।।
नार्थिनः प्रार्थितैरर्थैः कृतार्था हि मया कृताः।।
देहिदेहीति जल्पाको भविष्याम्यन्यजन्मनि।। ३५।।
न वेदा न च शास्त्राणि नार्थो दारा न नो सुतः।।
न क्षेत्रं न च हर्म्यादि मायांतमनुयास्यति।।३६।।
शिवशर्मेति संचिंत्य बुद्धिं संधाय सर्वतः।।
निश्चिकाय मनस्येवं भवेत्क्षेमतरं मम ।।३७।।
यावत्स्वस्थोस्ति मे देहो यावन्नेंद्रियविक्लवः।।
तावत्स्वश्रेयसां हेतुं तीर्थयात्रां करोम्यहम्।। ३८।।
दिनानि पंचपाण्येवमतिवाह्य गृहो द्विजः।।
शुभे तिथौ शुभे वारे शुभलग्नबले द्विजः।।३९।।
उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च।।
गणेशान्ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सुधीः।।4.1.7.४०।।
इति निश्चित्य निर्वाणपदनिःश्रेणिकां पराम्।।
सर्वेषामेव जंतूनां तत्र संस्थितिकारिणाम्।।४१।।
अथ पंथानमाक्रम्य कियंतमपि स द्विजः।।
मुहूर्तं पथि विश्रम्याचिंतयत्प्राक्क्व याम्यहम्।।४२।।
भुवि तीर्थान्यनेकानि लोलमायुश्चलं मनः।।
ततः सप्तपुरीर्यायां सर्वतीर्थानि तत्र यत्।। ४३।।
अयोध्यां च पुरीं गत्वा सरयूमवगाह्य च ।।
तत्तत्तीर्थेषु संतर्प्य पितॄन्पिंडप्रदानतः।।४४।।
पंचरात्रमुषित्वा तु ब्राह्मणान्परिभोज्य च ।।
प्रयागमगमद्विप्रस्तीर्थराजं सुहृष्टवत् ।। ४५ ।।
सिताऽसिते सरिच्छ्रेष्ठे यत्रास्तां सुरदुर्लभे ।।
यत्राप्लुतो नरः पापः परं ब्रह्माधिगच्छति ।। ४६ ।।
क्षेत्रं प्रजापतेः पुण्यं सर्वेषामेव दुर्लभम् ।।
लभ्यते पुण्यसंभारैर्नान्यथार्थस्य राशिभिः ।। ४७ ।।
दमयंतीं कलिं कालं कलिंदतनयां शुभाम् ।।
आगत्य मिलिता यत्र पुण्या स्वर्गतरंगिणी ।। ४८ ।।
प्रकृष्टं सर्वयागेभ्यः प्रयागमिति गीयते ।।
यज्वनां पुनरावृत्तिर्न प्रयागार्द्रवर्ष्मणाम्।।४९।।

यत्र स्थितः स्वयं साक्षाच्छूलटंको महेश्वरः ।।
तत्राप्लुतानां जंतूनां मोक्षवर्त्मोपदेशकः।।4.1.7.५०।।
तत्राऽक्षय्यवटोऽप्यस्ति सप्तपातालमूलवान्।।
प्रलयेपि यमारुह्य मृकंडतनयोऽवसत् ।। ५१ ।।
हिरण्यगर्भो विज्ञेयः स साक्षाद्वटरूपधृक् ।।
तत्समीपे द्विजान्भक्त्या संभोज्याक्षय पुण्यभाक् ।। ५२ ।।
यत्र लक्ष्मीपतिः साक्षाद्वैकुंठादेत्य मानवान्।।
श्रीमाधवस्वरूपेण नयेद्विष्णोः परं पदम्।।५३।।
श्रुतिभिः परिपठ्यते सिताऽसित सरिद्वरे।।
तत्राप्लुतां गाह्यमृतं भवंतीति विनिश्चितम्।। ५४।।
शिवलोकाद्ब्रह्मलोकादुमालोकवरात्पुनः।।
कुमारलोकाद्वैकुंठात्सत्यलोकात्समंततः।।
तपोजनमहर्भ्यश्च सर्वे स्वर्लोकवासिनः।।
भुवोलोकाच्च भूर्लोकान्नागलोकात्तथाऽखिलात्।।५६।।
अचला हिमवन्मुख्याः कल्पवृक्षादयो नगाः।।
स्नातुं माघे समायांति प्रयागमरुणोदये ।। ५७ ।।
दिगंगनाः प्रार्थयंति यत्प्रयागानिलानपि ।।
तेपि नः पावयिष्यंति किं कुर्मः पंगवो वयम् ।। ५८ ।।
अश्वमेधादियागाश्च प्रयागस्य रजः पुनः ।।
तुलितं ब्रह्मणा पूर्वं न ते तद्रजसा समाः ।। ५९ ।।
मज्जागतानि पापानि बहुजन्मार्जितान्यपि ।।
प्रयागनामश्रवणात्क्षीयंतेऽतीव विह्वलम् ।। 4.1.7.६० ।।
धर्मतीर्थमिदं सम्यगर्थतीर्थमिदं परम् ।।
कामिकं तीर्थमेतच्च मोक्षतीर्थमिदं ध्रुवम् ।। ६१ ।।
ब्रह्महत्यादि पापानि तावद्गर्जंति देहिषु ।।
यावन्मज्जंति नो माघे प्रयागे पापहारिणि ।। ६२ ।।
तद्विष्णोः परमं पदं सदा पश्यंति सूरयः।।
एतद्यत्पठ्यते वेदे तत्प्रयागं पुनः पुनः।।६३।।
सरस्वती रजो रूपा तमोरूपा कलिंदजा।।
सत्त्वरूपा च गंगात्र नयंति ब्रह्मनिर्गुणम्।।६४।।
इयं वेणीहि निःश्रेणी ब्रह्मणो वर्त्मयास्यतः।।
जंतोर्विशुद्धदेहस्य श्रद्धाऽश्रद्धाप्लुतस्य च ।।६५।।
काशीति काचिदबला भुवनेषु रूढा लोलार्क केशवविलोलविलोचना । ।।

तद्दोर्युगं च वरणासिरियं तदीया वेणीति याऽत्र गदिताऽक्षयशर्मभूमिः।। ६६।।
अगस्तिरुवाच।।
सुधर्मिणि गुणांस्तस्य कोत्र वर्णयितुं क्षमः।।
तीर्थराजप्रयागस्य तीर्थैः संसेवितस्य च ।।६७।।
पापिनां यानि पापानि प्रसह्य क्षालितान्यहो।।
तच्छुद्ध्यै सेव्यते तीर्थैः प्रयागमधिकं ततः।। ६८।।
प्रयागस्य गुणान्ज्ञात्वा शिवशर्मा द्विजः सुधीः।।
तत्र माघमुष्त्वाऽथ प्राप वाराणसीं पुरीम्।।६९।।
प्रवेश एव संवीक्ष्य स देहलिविनायकम्।।
अन्वलिंपत्ततो भक्त्या साज्यसिंदूरकर्दमैः।। 4.1.7.७०।।
निवेद्यमोदकान्पंच वंचयंतं निजं जनम्।।
महोपसर्गवर्गेभ्यस्ततोंऽतः क्षेत्रमाविशत्।।७१।।
आगत्य दृष्ट्वा मणिकर्णिकायामुदग्वहां स्वर्गतरंगिणीं सः।।
संक्षीणपुण्येतरपुण्यकर्मणां नृणां गणैः स्थाणुगणैरिवावृताम्।।७२।।
सचैलमाप्लुत्य जलेऽमलेऽमलेऽविलंबमालंबित शुद्धबुद्धिः ।।
संतर्प्य देर्वीषमनुष्यदिव्यपितॄन्पितॄन्स्वान्सहि कर्मकांडवित् ।। ७३ ।।
विधाय च द्राक्स हि पंचतीर्थिकां विश्वेशमाराध्य ततो यथास्वम् ।।
पुनःपुनर्वीक्ष्यपुरीं पुरारेरिदं मयालोकिनवेति विस्मितः ।।७४ ।
न स्वः पुरी सा त्वनया पुरासमं समंजसापि प्रतिसाम्यमावहेत ।।
प्रबंधभेदाद्व्यतिरिक्तपुस्तकप्रतिर्यथा सल्लिपिभेदभंगतः।। ७५ ।।
पयोपि यत्रत्यमचिंत्यवैभवं दिविस्थिता साधुसुधाप्यतोमुधा।।
तथा प्रसूतेस्तु पयोधरे पयो न पीयते पीतमिदं यदि क्वचित्।। ७६ ।।
अनामयाश्चिंतनया न येशितुर्जनामनाग्यत्र विना पिनाकिना ।।
न कर्मसत्कर्मकृतोपि कुर्वतेऽनुकुर्वते शर्वगणांश्च सर्वतः।।७७।
न वर्ण्यते कैः किल काशिकेयं जंतोः स्थितस्यात्र यतोंतकाले ।।
पचेलिमैः प्राक्कृतपुण्यभारैरोंकारमोंकारयतींदुमौलिः।। ७८।।
संसारिचिंतामणिरत्र यस्मात्तं तारकं सज्जनकर्णिकायाम्।।
शिवोभिधत्ते सहसांऽतकाले तद्गीयतेसौ मणि कर्णिकेति ।। ७९ ।।
मुक्तिलक्ष्मी महापीठ मणिस्तच्चरणाब्जयोः ।।
कर्णिकेयं ततः प्राहुर्यां जना मणिकर्णिकाम् ।। 4.1.7.८० ।।
जरायुजांडजोद्भिज्जाः स्वेदजाह्यत्र वासिनः ।।
न समा मोक्षभाजस्ते त्रिदशैर्मुक्तिदुर्दशैः ।। ८१ ।।
मम जन्म वृथाजातं दुर्वृत्तस्य जडात्मनः ।।

नाद्ययावन्मयै क्षिष्ट काशिका मुक्तिकाशिका ।। ८२ ।।
पुनःपुनश्च तत्क्षेत्रमतिथीकृत्यनेत्रयोः ।।
विचित्रं च पवित्रं च तृप्तिं नाधिजगाम ह ।। ८३ ।।
सप्तानां च पुरीणां हि धुरी णामवयाम्यहम् ।।
वाराणसीं सुनिर्वाणविश्राणनविचक्षणाम्।। ८४ ।।
तथापि न चतस्रोन्या मया दृग्गोचरीकृताः ।।
तासां प्रभावं विज्ञायाप्यागमिष्याम्य हं पुनः ।। ८५ ।।
तीर्थयात्रां प्रतिदिनं कुर्वन्नूनं सवत्सरम् ।।
न प्राप सर्वतीर्थानि तीर्थं काश्यां तिलेतिले ।। ८६ ।।
।। अगस्तिरुवाच ।। ।।
जानन्न पि गुणान्देवि क्षेत्रस्यास्य परान्द्विजः ।।
नाना प्रमाणैः प्रवणो निरगात्स तथाप्यहो ।। ८७ ।।
किं कुर्वंति हि शास्त्राणि सप्रमाणानि सुंदरि ।।
महामायां भवित्री तां को निवारयितुं क्षमः ।। ८८ ।।
कः समुच्चलितं चेतस्तोयंवा संप्रतीपयेत् ।।
प्रोच्चथानस्थितमपि स्वभावोयच्चलस्तयोः ।। ८९ ।।
शिवशर्मा व्रजन्सोथ देशाद्देशांतरं क्रमात् ।।
महाकाल पुरीं प्राप कलिकालविवर्जिताम् ।। 4.1.7.९० ।।
कल्पेकल्पेखिलंविश्वं कालयेद्यः स्वलीलया ।।
तं कालं कलयित्वा यो महाकालो भवत्किल ।। ९१ ।।
पापादवंती सा विश्वमवंतीति निगद्यते ।।
युगेयुगेन्यनाम्नी सा कलावुज्जयिनीति च ।। ९२ ।।
विपन्नो यत्र वै जंतुः प्राप्यापि शवतां स्फुटम् ।।
न पूतिगंधमाप्नो ति समुच्छ्रयति न क्वचित् ।। ९३ ।।
यमदूता न यस्यां हि प्रविशंति कदाचन ।।
परःकोटीनि लिंगानि तस्यां संति पदेपदे ।। ९४ ।।
हाटकेशो महाकालस्तारके शस्तथैव च ।।
एकलिंगं त्रिधा भूत्वा त्रिलोकीं व्याप्य संस्थितम् ।। ९५ ।।
ज्योतिः सिद्धवटे ज्योतिस्ते पश्यंतीह ये द्विजाः ।।
अथवाश्रीमहाकालद्रष्टारः पुण्यराशयः ।। ९६ ।।
महाकालस्य तल्लिंगं यैर्दृष्टं कष्टिभिः क्वचित ।।
न स्पृष्टास्ते महापापैर्न दृष्टास्ते यमोद्भटैः ।। ९७।।
महाकालपताकाग्रैः स्पृष्टपृष्ठास्तुरंगमाः ।।

अरुणस्य कशाघातं क्षणं विश्रमयंति खे ।। ९८ ।।
महाकालमहाकालमहाकालेतिसंततम् ।।
स्मरतःस्मरतो नित्यं स्मरकर्तृस्मरांतकौ ।। ९९ ।।
एवमाराध्य भूतेशं महाकालं ततो द्विजः ।।
जगाम नगरीं कांतीं कांतां त्रिभुवनादपि ।। 4.1.7.१०० ।।
लक्ष्मीकांतः स्वयं साक्षाज्जंतूंस्तत्रनिवासिनः ।।
श्रीकांतानेव कुरुते परत्रेह च निश्चितम् ।। १ ।।
दृष्ट्वा कांतीं कांतिमतीं कांतिमद्भिर्निषेविताम् ।।
कांतिमानभवत्सोपि नाकांतिस्तत्र कस्यचित्।।२।।
तत्र कृत्यं च यत्कृत्यं तत्कृत्वा सर्वकृत्यवित् ।।
सप्तरात्रमुषित्वा तु ययौ द्वारवतीं पुरीम् ।। ३ ।।
चतुर्णामपि वर्गाणां यत्र द्वाराणि सर्वतः ।।
अतो द्वारवतीत्युक्ता विद्वद्भिस्तत्त्ववेदिभिः ।। ४ ।।
अस्थीन्यपि च जंतूनां यत्र चक्रांकितान्यहो ।।
किं चित्रं तत्र यत्र स्युः शंखचक्रांकितैः करैः ।। ५ ।।
अंतकः शिक्षयत्येव निजदूतान्मुहुर्मुहुः ।।
ते त्याज्या यैर्द्वारवत्या नामापि परिगृह्यते ।। ६ ।।
श्रीखंडे क्व स आमोदः स्वर्णे वर्णः क्व तादृशः ।।
तत्पावित्र्यं क्व वै तीर्थे तद्गोपीचंदने यथा ।। ७ ।।
दूताः शृण्वंतु यद्भालं गोपचंदनलांछितम् ।।
ज्वलदिंगलवत्सोपि दूरे त्याज्यः प्रयत्नतः ।। ८ ।।
तुलस्यलंकृता ये ये तुलसी नामजापकाः ।।
तुलसीवनपाला ये ते त्याज्या दूरतो भटाः ।। ९ ।।
युगेयुगे द्वारवत्या रत्नानि परितो मुषन् ।।
अब्धीरत्नाकरोद्यापि लोकेषु परिगीयते ।। 4.1.7.११० ।।
द्वारवत्यां म्रियंते ये जंतवः कालनोदिताः ।।
चतुर्भुजाः स्युर्वैकुंठे ते पीतांबरधारिणः।।११।।
तत्रापि संतर्प्य पितॄन्ससदेवर्षिमानवान्।।
तत्र तेषु च तीर्थेषु सस्नौ सर्वेष्वतंद्रितः।।१२।।
ततो मायापुरीं प्राप्तो दुष्प्रापां पापकारिभिः।।
यत्र सा वैष्णवी माया मायापाशैर्नपाशयेत्।।१३।।
केचिदूचुर्हरिद्वारं मोक्षद्वारं ततः परे ।।
गंगाद्वारं च केप्याहुः केचिन्मायापुरं पुनः।।१४।।

यतो विनिर्गता गंगा ख्याता भागीरथी भुवि।।
यन्नामोच्चारणात्पुंसां पापं या ति सहस्रधा ।।१५।।
वैकुंठस्यैकसोपानं हरिद्वारं जगुर्जनाः ।।
अत्राप्लुता नरा यांति तद्विष्णोःपरमं पदम् ।। १६ ।।
तीर्थोपवासकं कृत्वा निशाजागरणं तथा ।।
प्रातः स्नात्वा च गंगायां तर्प्यान्संतर्पप्य सर्वतः ।। १७ ।।
यावत्स पारणं कर्तुमियेष द्विजसत्तमः ।।
तावच्छीतज्वराक्रांतश्चकंपेऽत्यर्थमातुरः ।। १८।।।
वैदेशिकस्तथैकाकी तथाऽतिज्वरपीडितः ।।
चिंतामवाप महती किमेतत्समुपस्थितम् ।। १९ ।।
चिंतार्णवे निमग्नोभूत्त्यक्ताशो जीविते धने ।।
सांयात्रिक इवागाधे भिन्नपोतो महार्णवे ।। 4.1.7.१२० ।।
क्वक्षेत्रं क्व कलत्रं मे क्व पुत्राः क्व च तद्वसु ।।
क्व तद्विचित्रं वै हर्म्यं क्व सा पुस्तकसंभृतिः ।। २१ ।।
अद्यापि नायुः पर्याप्तं प लितं न तथा मयि ।।
ज्वरोयं दारुणः प्राप्तः कालज्ञश्चातिदारुणः।।२२।।
मृत्युर्मूर्ध्निकृतावासो वासो दूरे व्यवस्थितः ।।
अग्नौ गृहोपरि प्राप्ते कूपं तु खनयेदिह।।२३।।
किमेभिश्चिंतनैर्व्यर्थैरतितापकरैर्मम ।।
चिंतयामि हृषीकेशं शिवदं शिवमेव च ।। २४ ।।
अथवा मुक्त्युपायो वै मयैकः सदनुष्ठितः ।।
मुक्तिपुर्यस्तु सप्तैताः स्वनेत्रविषयीकृताः ।। २५ ।।
स्वर्गापवर्गयोरेकः साध्यो हि विदुषा ध्रुवम् ।।
तयोरसाधने पश्चात्संतापेन च तप्यते ।। २६ ।।
अथवा चिंतया किं मे त्वनया दुरवस्थया ।।
रणे वा मरणं श्रेयस्तीर्थेवात्र यथा मम ।। २७ ।।
किमहं मंदभागीव रथ्यां क्वापि म्रियेधुना ।।
भागीरथ्यां म्रिये चाद्य का चिंता मम मूढवत् ।। २८ ।।
चर्मास्थि संचयेनाहमनेन वपुषा ध्रुवम् ।।
प्राप्स्यामि निधनादत्र सिद्धिं नैःश्रेयसीं ध्रुवम् ।। २९ ।।
एवं चिंतयतस्तस्य पीडासीदतिदारुणा ।।
कोटि वृश्चिकदष्टस्य यावस्था तामवाप सः ।। 4.1.7.१३० ।।
स्मर्तव्यं विस्मृतं सर्वं क्वाहं कोहं न वेत्ति च ।।

दिनानि सप्तसप्तेति स्थित्वा पंचत्वमागतः ।। ३१ ।।
तावद्वैकुठभुवनाद् विमानं समुपस्थितम् ।।
ताक्ष्योपलक्षितो यत्र ध्वजश्चातिसमुच्छ्रितः ।। ३२ ।।
अधिष्ठितं सुकन्यानां स्वर्णकौशेयवाससाम् ।।
चामरव्यग्रहस्तानां सहस्रेणातिविस्तृतम् ।।३३।।
पुण्यशीलसुशीलाभ्यां गणाभ्यां च विराजितम् ।।
चतुर्भुजाभ्यां स्वास्याभ्यां किंकिणीजालमालितम् ।।३४।।
तद्विमानमथारुह्य पीतवासाश्चतुर्भुजः ।।
अलंचक्रे नभोवर्त्म स द्विजो दिव्यभूषणः ।। १३५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां सहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सप्तपुरीवर्णनं नाम सप्तमोऽध्यायः ।। ७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००८

https://sa.wikisource.org/s/ful
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। लोपामुद्रोवाच ।। ।।

जीवितेश कथामेतां पुण्यां पुण्यपुरीश्रिताम् ।।

न तृप्तिमधिगच्छामि श्रुत्वा त्वच्छ्रीमुखेरिताम् ।। १ ।।

मायापुर्यां मुक्तिपुर्यां शिवशर्मा द्विजोत्तमः ।।

मृतोपि मोक्षं नैवाप ब्रूहि तत्कारणं विभो ।। २ ।।

।। अगस्त्य उवाच ।। ।।

साक्षन्मोक्षो न चैतासु पुरीषु प्रियभाषिणि ।।

पुरोद्दिश्यामुमेवार्थमितिहासो मयाश्रुतः ।। ३ ।।

शृणु कांते विचित्रार्थां कथां पापप्रणाशिनीम् ।।

पुण्यशीलसुशीलाभ्यां कथितां शिवशर्मणे ।।४।।

शिवशर्मोवाच ।।

अयि विष्णुगणौ पुण्यौ पुंडरीकदलेक्षणौ ।।

किंचिद्विज्ञप्तुकामोहं प्रवृद्धकरसंपुटः ।। ५ ।।

न नाम युवयोर्वेद्मि वेद्म्याकृत्या च किंचन ।।

पुण्यशीलसुशीलाख्यौ युवां भवितुमर्हथः ।। ६ ।।

।। गणा वूचतुः ।। ।।

भगवद्भक्तियुक्तानां किमज्ञातं भवादृशाम् ।।

एतदेव हि नौ नाम यदुक्तं श्रीमता त्वया ।। ७ ।।

यदन्यदपि ते चित्ते प्रष्टव्यं तदशंकितम् ।।

संपृच्छस्व महाप्राज्ञ प्रीत्या तत्प्रब्रवावहे ।। ८ ।।

इति श्रुत्वा स वचनं भगवद्गणभाषितम् ।।

अतिप्रीतिकरं हृद्यं ततस्तौ प्रत्युवाच ह ।। ९ ।।

।। दिव्य द्विज उवाच ।। ।।

क एष लोको ऽल्पश्रीकः स्वल्पपुण्यजनाकृतिः ।।

क इमे विकृताकारा ब्रूतमेतन्ममाग्रतः ।। 4.1.8.१० ।। ।।

।। गणावूचतुः ।। ।।

अयं पिशाचलोकोत्र वसंति पिशिताशनाः ।।

दत्वानुतापभाजो ये नोनो कृत्वा ददत्यपि ।।११।।

शिवं प्रसंगतोभ्यर्च्य सकृत्त्वशुचिचेतसः ।।

अल्पपुण्याल्पलक्ष्मी काः पिशाचास्त इमे सखे ।। १२ ।।

ततो गच्छन्ददर्शाग्रे हृष्टपुष्टजनावृतम् ।।

पिचंडिलैः स्थूलवक्त्रैर्मेघगंभीरनिःस्वनैः ।। १३ ।।

लोकैरप्युषितं लोकं श्यामलांगैश्च लोमशैः ।।

गणौ कथयतां केमी को लोकः पुण्यतः कुतः ।। १४ ।। ।।

।। गणावूचतुः ।। ।।

गुह्यकानामयं लोकस्त्वेते वै गुह्यकाः स्मृताः ।।

न्यायेनोपार्ज्य वित्तानि गूहयंति च ये भुवि ।। १५ ।।

स्वमार्गगाधनाढ्याश्च शूद्रप्रायाः कुटुंबिनः ।।

संविभज्य च भोक्तारः क्रोधासूयाविवर्जिताः ।। १६ ।।

न तिथिं नैव वारं च संक्रात्यादि न पर्व च ।।

नाधर्मं न च धर्मं च विदंत्येते सदा सुखाः ।।१७।।

एकमेव हि जानंति कुलपूज्यो हि यो द्विजः ।।

तस्मै गाः संप्रयच्छंति मन्यंते तद्वचःस्फुटम् ।।१८ ।।

समृद्धिभाजोह्यत्रापि तेन पुण्येन गुह्यकाः ।।

भुंजते स्वर्गसौख्यानि देववच्चाकुतोभयाः ।। १९ ।।

ततो विलोकयामास लोकं लोचनशर्मदम् ।।

केऽमी जनास्त्वसौ लोकः किंनामा वदतां गणौ ।। 4.1.8.२० ।।

।। गणावूचतुः ।। ।।

गांधर्वस्त्वेषलोकोऽमी गंधर्वाश्च शुभव्रताः।।

देवानां गायनाद्येते चारणाः स्तुतिपाठकाः ।। २१ ।।

गीतज्ञा अतिगीतेन तोषयंति नराधिपान् ।।

स्तुवंति च धनाढ्यांश्च धनलोभेन मोहिता. ।। २२ ।।

राज्ञां प्रसादलब्धानि सुवासांसि धनान्यपि।।

द्रव्याण्यपि सुगंधीनि कर्पूरादीन्यनेकशः ।। २३ ।।

ब्राह्मणेभ्यः प्रयच्छंति गीतं गायंत्यहर्निशम् ।।

श्रुतावेव मनस्तेषां नाट्यशास्त्रकृतश्रमाः ।। २४ ।।

तेन पुण्येन गांधर्वो लोकस्त्वेषां विशिष्यते ।।

ब्राह्मणास्तोषिता यद्वै गीतविद्यार्जितैर्धनैः ।। २५ ।।

गीतविद्याप्रभावेन देवर्षिर्नारदो महान् ।।

मान्यो वैष्णवलोके वै श्रीशंभोश्चातिवल्लभः ।। २६ ।।

तुंबुरुर्ना रदश्चोभौ देवानामतिदुर्लभौ ।।

नादरूपी शिवः साक्षान्नादतत्त्वविदौ हि तौ ।। २७ ।।

यदि गीतं क्वचिद्गीतं श्रीमद्धरिहरांतिके ।।

मोक्षस्तु तत्फलं प्राहुः सा न्निध्यमथवा तयोः ।। २८ ।।

गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।।

रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ।। २९ ।।

अस्मिँल्लोके सदा कालं स्मृतिरे षा प्रगीयते ।।

तद्गीतमालया पूज्यौ देवौ हरिहरौ सदा ।। 4.1.8.३० ।।

इति शृण्वन्क्षणात्प्राप पुनरन्यन्मनोहरम् ।।

शिवशर्माथ पप्रच्छ किं संज्ञं नगरं त्विदम् ।। ३१ ।।

गणावूचतुः ।। ।।

असौ वैद्याधरो लोको नाना विद्या विशारदाः ।।

एते विद्यार्थिनामन्नमुपानद्वस्त्रकंबलम् ।। ३२ ।।

औषधान्यपि यच्छं ति तत्पीडाशमनानि हि ।।

नानाकलाः शिक्षयंति विद्यागर्वविवर्जिताः ।। ३३ ।।

शिष्यं पुत्रेण पश्यंति वस्त्र तांबूल भोजनैः ।।

अलंकृताश्च सत्कन्या धर्मा दुद्वाहयंति च ।। ३४ ।।

अभिलाषधिया नित्यं पूजयंतीष्टदेवताः ।।

एतः पुण्यैर्वसंतीह विद्याधर वरा इमे ।।३५।।

यावदित्थं कथां चक्रुस्तावत्संयमिनीपतिः ।।

धर्मराजोभिसंप्राप्तो देवदुंदुभि निःस्वनैः ।।३६।।

सोम्यमूर्तिर्विमानस्थो धर्मज्ञैः परिवारितः ।।

सेवाकर्मसु चतुरैर्भृत्यैस्त्रिचतुरैः सह ।।३७।।

धर्मराज उवाच ।।

साधुसाधु महाबुद्धे शिवशर्मन्द्विजोत्तम ।।

कुलोचितं ब्राह्मणानां भवता प्रतिपादितम् ।। ३८ ।।

वेदाभ्यासः कृतः पूर्वं गुरवश्चापि तोषिताः ।।

धर्मशास्त्रपुराणे षु दृष्टो धर्मस्त्वयाऽऽदृतः ।। ३९ ।।

क्षालितं मुक्तिपुर्यद्भिराशुगंतृशरीरकम् ।।

कोविदोऽस्ति भवानेव जीविते जीवितेतरे ।। 4.1.8.४० ।।

कलेवरं पूतिगंधि सदैवाशुचिभाजनम् ।।

सुतीर्थपुण्य पण्येन सम्यग्विनिमितं त्वया ।। ४१ ।।

अतएवाहि पांडित्यमाद्रियंते विचक्षणाः ।।

अहःक्षेपं न क्षिपंति क्षणमेकं हि ते बुधाः ।। ४२ ।।

निमेषान्पंचपान्मर्त्ये प्राणंति प्राणिनो ध्रुवम् ।।

तत्रापि न प्रवर्तेयुरघकर्मणि गर्हिते ।। ४३ ।।

स्थिरापायः सदा कायो न धनं निधनेऽवति ।।

तन्मूढः प्रौढकार्ये किं न यतेत भवानिव ।।४४।।

सत्वरं गत्वरं चायुर्लोकः शोकसमाकुलः ।।

तस्माद्धर्मे मतिः कार्या भवतेव सुधार्मिकैः।।४५।।

सत्कर्मणो विपाकोऽयं तव वंद्यौ ममाप्यहो ।।

यदेतौ भगवद्भक्तौ सखित्वं भवतो गतौ ।। ४६ ।।

ममाज्ञा दीयतां तस्मात्साहाय्यं करवाणि किम् ।।

यत्कर्तव्यं मादृशैस्ते तत्कृतं भवतैवहि ।। ४७ ।।

अद्य धन्यतरोस्मीह यद्दृष्टौ भगवद्गणौ ।।

सेवा सदैव मे ज्ञाप्या श्रीमच्चरणसन्निधौ ।। ४८ ।।

ततः प्रस्थापितस्ताभ्यां प्राविशत्स्वपुरीं यमः ।।

अप्राक्षीच्च ततो विप्रस्तौ गणौ प्रस्थिते यमे ।।४९ ।।

।। शिवशर्मोवाच ।। ।।

साक्षादयं धर्मराजो ननु सौम्यतराकृतिः ।।

धर्म्याण्येव वचांस्यस्य मनः प्रीतिकराणि च ।। 4.1.8.५० ।।

पुरी संयमनी सेयमतीव शुभलक्षणा ।।

आकर्ण्य यस्य नामापि पापिनोऽतीव बिभ्यति ।। ५१ ।।

यमरूपं वर्ण यंति मर्त्यलोकेऽन्यथा जनाः ।।

अन्यथाऽयं मया दृष्टो ब्रूतं तत्कारणं गणौ ।। ५२ ।।

केन पश्यंत्यमुं लोकं निवसंति तथात्र के ।।

इदमेवास्य किं रूपं किं चान्यच्च निवेद्यताम् ।।५३।।

।। गणावूचतुः ।। ।।

शृणु सौम्य सुसौम्योऽसौ दृश्यतेत्र भवादृशैः।।

धर्ममूर्तिः प्रकृत्यैव निःशंकैः पुण्यराशिभिः ।।५४।।

अयमेव हि पिंगाक्षः क्रोधरक्तांतलोचनः ।।

दंष्ट्राकरालवदनो विद्युल्ललनभीषणः ।। ५५ ।।

ऊर्ध्वकेशोऽतिकृष्णांगः प्रलयांबुदनिःस्वनः ।।

कालदंडोद्यतकरो भ्रुकुटी कुटिलाननः ।। ५६ ।।

आनयैनं पातयैनं बधानामुंच दुर्दम ।।

घातयैनं सुदुर्वृत्तं मूर्ध्नि तीव्रमयोघनैः ।। ५७ ।।

आताडयैनं दुर्वृत्तं धृत्वा पादौ शिलातले ।।

उत्पाटयास्य नेत्रे त्वं निधाय चरणं गले ।। ५८ ।।

एतस्य गल्लावुत्फुल्लौ क्षुरेणाशुवि पाटय ।।

पाशेन कंठं बद्धास्य समुल्लंबय भूरुहे ।। ५९ ।।

विदारयास्य मूर्धानं करपत्रेण दारुवत् ।।

पार्ष्णिघातैर्घ्नतास्यास्यं समुच्चूर्णय दारुणैः ।। 4.1.8.६० ।।

परदारप्रसृमरं करं छिंध्यस्य पापिनः ।।

परदारगृहं यातुः पादौ चास्य विखंडय ।। ६१ ।।

सूचीभी रोमकूपेषु तनुं व्यधिहि सर्वतः ।।

दातुः परकलत्रांगे नखपंक्ती दुरात्मनः ।। ६२ ।।

परदारमुखाघ्रातुर्मुखे निष्ठीवयास्य हि ।।

वक्तुः परापवादस्य कीलं तीक्ष्णं मुखे क्षिप ।। ६३ ।।

भर्जयैनं चणकवत्तप्तवालुक कर्परैः ।।

भ्राष्ट्रे विकटवक्त्रत्वं परसंतापकारिणम् ।। ६४ ।।

दोषारोपं सदाकर्तुरदोषे क्रूरलोचन ।।

निमज्जयास्य वदनं पूयशोणितकर्दमे ।। ६५ ।।

अदत्तपरवस्तूनां गृह्णतः करपल्लवम् ।।

आप्लुत्याप्लुत्य तैलेन तप्तांगारे पचोत्कट ।। ६६ ।।

अपवादं गुरोर्वक्तुर्निंदाकर्तुः सुपर्वणाम् ।।

तप्तलोहशलाकाश्च मुखे भीषण निक्षिप ।।६७।।

परमर्म स्पृशश्चास्य परच्छिद्रप्रकाशितुः।।

सुतप्तायोमयाञ्च्छंकून्सर्वसंधिषु रोपय ।। ६८ ।।

अन्ये न दीयमाने स्वे निषेद्धुःपापकारिणः ।।

आच्छेत्तुः परवृत्तीनां जिह्वां छिंध्यस्य दुर्मुख ।।६९।।

देवस्वभोक्तुः क्रोडास्य ब्राह्मणस्वस्यभोजिनः ।।

विदार्योदरमस्याशु विट्कीटैः परिपूरय ।। 4.1.8.७० ।।

न देवार्थे न विप्रार्थे नातिथ्यर्थे पचेत्क्वचित् ।।

तममुं स्वार्थपक्तारं कुंभीपाके पचांधक ।। ७१ ।।

उग्रास्य शिशुहंतारममुं विश्रंभघातिनम् ।।

कृतघ्नं नय वेगेन महारौरव रौरवम् ।। ७२ ।।

ब्रह्मघ्नं चांधतामिस्रे सुरापं पूयशोणिते ।।

कालसूत्रे हेमचौरमवीचौ गुरुतल्पगम् ।।७३।।

तत्संसर्गिणमावर्षमसिपत्रवने तथा ।।

एतान्महापातकिनस्तप्ततैलकटाहके ।। ७४ ।।

आप्लुत्याप्लुत्य दुर्दंष्ट्रकाकोलैर्लोहतुंडकैः ।।

संतोद्यमानान्पापिष्ठान्नित्यं कल्पं निवासय ।। ७५ ।।

स्त्रीघ्नं गोघ्नं च मित्रघ्नं कूटशाल्मलिपादपे।।

उल्लंबय चिरंकालमूर्ध्वपादमधोमुखम् ।।७६।।

त्वचमस्य च संदंशैस्त्रोटय त्वं महाभुज।।

आश्लेषितुर्मित्रपत्न्या भुजावुत्पाटया शुच ।।७७।।
ज्वालाकीले महाघोरे नरकेऽमुं नि पातय ।।
यो वह्निना दाहयति परक्षेत्रं परालयम् ।। ७८ ।।
कालकूटे च गरदं कूटसाक्ष्याभिवादिनम्।।
मानकूटं तुलाकूटं कंठमोटे निपातय ।। ७९ ।।
लालापिबेच दुष्प्रेक्ष्य तीर्थासुष्ठीविनं(?) नय ।।
आमपाके च गर्भघ्नं शूलपाकेऽन्यतापिनम् ।। 4.1.8.८० ।।
रसविक्रयिणं विप्रमिक्षुयंत्रे प्रपीडय ।।
प्रजापीडाकरं भूपमंधकूपे निपातय ।। ८१ ।।
गोतिलांश्च तुरंगांश्च विक्रेतारं द्विजाधमम् ।।
मातुलान्याः सुरायाश्च विक्रेतारं हलायुध ।। ८२ ।।
मुसलोलूखले वैश्यं कंडयैनं पुनःपुनः ।।
शूद्रं द्विजावमंतारं द्विजाग्रे मंचसेविनम् ।। ८३ ।।
अधोमुखे च नरके दीर्घग्रीवप्रपीड्य ।।८४।।
शूद्रं ब्राह्मणजेतारं वैश्यं बाह्मणमानिनम् ।।
क्षत्रियं याजकं चापि विप्रं वेदविवर्जितम् ।। ८५ ।।
लाक्षालवणमांसानां सतैलविषसर्पिषाम् ।।
आयुधेक्षुविकाराणां विक्रेतारं द्विजाधमम् ।। ८६ ।।
पाशपाणेकशापाणे बद्ध्वैतांश्चरणेदृढम् ।।
घातयंतौ कशाघातैर्नयतं तप्तकर्दमे ।। ८७ ।।
इमां स्त्रियं श्लेषयाशु पुंश्चलीं कुलकल्मषाम् ।।
तेनोपपतिना सार्धं तप्तायसमयेन च ।। ८८ ।।
स्वयं गृहीत्वा नियमं यस्त्यजेदजितेंद्रियः ।।
तं प्रापय दुराधर्षं बहुभ्रमरदंशके ।। ८९ ।।
इत्यादिजल्पन्दुर्वृत्तैः श्रूयते दूरतो यमः ।।
स्वकर्मशंकितैः पापै र्दृश्यतेति भयंकरः ।। 4.1.8.९० ।।
ये प्रजाः पालयंतीह पुत्रानेव निजौरसान् ।।
दंडयंति च धर्मेण भूपास्तेऽस्य सभासदः ।। ९१ ।।

वर्णाश्रमाश्च यद्राष्ट्रे ऽनुतिष्ठंति निजां क्रियाम् ।।
कालेनापन्ननिधना भूपास्तेऽस्य सभासदः ।। ९२ ।।
नैव दीनो न दुर्वृत्तो नापद्ग्रस्तो न शोकभाक् ।।
येषां राष्ट्रे प्रदृश्यंते भूपास्तेऽस्य सभासदः ।। ९३ ।।
ब्राह्मणाः क्षत्रिया वैश्याः स्वधर्म निरताः सदा ।।
अन्येपि ये संयमिनः संयमिन्यां वसंति ते ।। ९४ ।।
उशीनरः सुधन्वा च वृषपर्वा जयद्रथः ।।
रजिः सहस्रजित्कुक्षिर्दृढधन्वा रिपुंजयः ।। ९५ ।।
युवनाश्वो दंतवक्त्रो नाभागो रिपुमंगलः ।।
करंधमो धर्मसेनः परमर्दः परांतकः ।। ९६ ।।
एते चान्ये च बहवो राजानो नीतिवर्तिनः ।।
धर्माधर्मविचारज्ञाः सुधर्मायां समासते ।। ९७ ।।
अन्यच्च ते प्रवक्ष्यावो येन पश्यंति भास्करिम् ।।
दंडपाशोद्यतकरान्दूतानुग्राननान्क्वचित् ।।९।।।।
गोविंदमाधवमुकुंद हरेमुरारे शंभो शिवेश शशिशेखर शूलपाणे ।।
दामोदराच्युत जनार्दन वासुदेव त्याज्या भटाय इति संततमामनंति।।९९।।
गंगाधरांधकरिपो हरनीलकंठ वैकुंठ कैटभरिपो कमठाब्जपाणे।।
भूतेशखंडपरशोमृडचंडिकेश त्याज्या भटाय इति संततमामनंति।। 4.1.8.१००।।
विष्णोनृसिंहमधुसूदनचक्रपाणे गौरीपते गिरिश शंकर चंद्रचूड ।।
नारायणासुरनिबर्हणशार्ङ्गपाणे त्याज्या भटाय इति संततमामनंति ।। १ ।।
मृत्युंजयोग्रविषमेक्षणकामशत्रो श्रीकांतपीतवसनांबुद नीलशौरे ।।
ईशानकृत्तिवसनत्रिदशैकनाथ त्याज्या भटाय इति संततमामनंति ।। २ ।।
लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्यश्रीकंठदिग्वसन शांतपिनाकपाणे ।।
आनंदकंद धरणीधर पद्मनाभ त्याज्या भटाय इति संततमामनति ।। ३ ।।
सर्वेश्वर त्रिपुरसूदन देवदेव ब्रह्मण्यदेवगरुडध्वज शंखपाणे ।।
त्र्यक्षोरगाभरणबालमृगांकमौले त्यज्या भटाय इति संततमामनंति ।। ४ ।।
श्रीरामराघवरमेश्वररावणारे भूतेशमन्मथरिपो प्रमथाधिनाथ ।।
चाणूरमर्दनहृषीकपतेमुरारे त्याज्या भटाय इति संततमामनति ।। ५ ।।

शूलिन्गिरीश रजनीश कलावतं सकंसप्रणाशन सनातनकेशिनाश ।।
भर्गत्रिनेत्रभवभूतपते पुरारे त्याज्या भटाय इति संततमामनंति ।। ६ ।।
गोपीपते यदुपते वसुदेवसूनो कर्पूरगौरवृषभध्वजभालनेत्र ।।
गोवर्धनोद्धरणधर्मधुरीणगोप त्याज्या भटाय इति संततमामनंति ।। ७ ।।
स्थाणो त्रिलोचन पिनाकधरस्मरारे कृष्णानिरुद्धकमलाकरकल्मषारे ।।
विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या भटाय इति संततमामनंति ।। ८ ।।
अष्टोत्तराधिकशतेनसुचारुनाम्नां संदर्भितां ललितरत्नकदंबकेन ।।
सन्नायकां दृढगुणां द्विजकंठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ।। ९ ।।
इत्थं द्विजेंद्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः ।।
अन्येपि ये हरिहरांकधरा धरायां ते दूरतः पुनरहो परिवर्जनीयाः ।। 4.1.8.११० ।।
अगस्तिरुवाच ।।
यो धर्मराजरचितां ललितप्रबंधां नामावलिं सकलकल्मषबीजहंत्रीम् ।।
धीरोत्र कौस्तुभभृतः शशिभूषणस्य नित्यं जपेत्स्तनरसं स पिबेन्न मातुः ।। ११ ।।
इति शृण्वन्कथां रम्यां शिवशर्माप्रियेऽनघाम ।।
प्रहृष्टवक्त्रः पुरतो ददर्शाप्सरसापुरीम् ।। ११२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्या संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे यमलोकवर्णनंनामाऽष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ००९

https://sa.wikisource.org/s/fum
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। शिवशर्मोवाच ।।

का इमा रूपलावण्य सौभाग्यनिधयः स्त्रियः ।।

दिव्यालंकारधारिण्यो दिव्यभोगसमन्विताः ।। १ ।।

।। गणावूचतुः ।। ।।

एता वारविलासिन्यो यज्ञभाजां प्रियंकराः ।।

गीतज्ञा नृत्यकुशला वाद्यविद्या विचक्षणाः ।।२।।

कामकेलिकलाभिज्ञा द्यूतविद्याविशारदाः ।।

रसज्ञा भाववेदिन्यश्चतुराश्चोचितोक्तिषु ।। ३ ।।

नानादेश विशेषज्ञा नानाभाषा सुकोविदाः ।।

संकेतोदंतनिपुणा नैकास्वैरचरा मुदा ।। ४ ।।

लीलानर्मसुसाभिज्ञाः सुप्रलापेषु पंडिताः ।।

यूनां मनांसि सततं स्वैर्हावै रमयंत्यमूः ।।५।।

निर्मथ्यमानात्क्षीरोदात्पूर्वमप्सरसस्त्वमूः ।।

निःसृतास्त्रिजगज्जेतुर्मोहनास्त्रमनोभुवः ।। ६ ।।

उर्वशी मेनका रंभा चंद्रलेखा तिलोत्तमा ।।

वपुष्मतीकांतिमती लीलावत्युत्पलावती ।। ७ ।।

अलंबुषा गुणवती स्थूलकेशी कलावती ।।

कलानिधिर्गुणनिधिः कर्पूरतिलकोर्वरा ।। ८ ।।

अनंगलतिका चापि तथा मदनमोहिनी ।।

चकोराक्षी चंद्रकला तथा मुनिमनोहरा ।। ९ ।।

ग्रावद्रावा तपोद्वेष्टी चारुनासा सुकर्णिका ।।

दारुसंजीविनी सुश्रीः क्रतुशुल्का शुभानना ।। 4.1.9.१० ।।

तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती ।।

पंचाश्वमेधिका चैव राजसूयार्थिनी तथा ।। ११ ।।

अष्टाग्निहोमिका तद्वद्वाजपेयशतोद्भवा ।।

इत्याद्यप्सरसां श्रेष्ठं सहस्रं षष्टिसंमितम् ।। १२ ।।
एतस्मिन्नप्सरोलोके वसंत्यन्या अपिस्त्रियः ।।
सदा स्खलितलावण्याः सदास्खलितयौवनाः ।। १३ ।।
दिव्यांबरा दिव्यमाल्या दिव्यगंधानुलेपनाः ।।
दिव्यभोगैः सुसंपन्नाः स्वेच्छाविधृतविग्रहाः ।।१४।।
कृत्वा मासोपवासानि स्खलंति ब्रह्मचर्यतः ।।
सकृदेव द्विकृत्वो वा त्रिःकृत्वो दैवयोगतः ।।१५।।
ता इमा दिव्यभोगिन्यो रूपलावण्यसंपदः।।
निवसंत्यप्सरोलोके सर्वकामसमन्विताः ।।१६।।
कृत्वा व्रतानि सांगानि कामिकानि विधानतः ।।
भवंति स्वैरचारिण्यो देवभोग्या इहागताः ।। १७ ।।
पतिव्रतधृता नार्यो बलेन बलिना धृताः ।।
भर्तबुद्ध्यारमंतेतं(?) कदाचित्ता इमा द्विज ।।१८ ।।
भर्तरि प्रोषिते याश्च ब्रह्मचर्यव्रताः सदा ।।
विप्लवं ते सकृद्दैवात्ता एता वामलोचनाः।।१९।।
कुसुमानि सुगंधीनि सुवासं चंदनं तथा ।।
सुगौरं चापि कर्पूरं सुसूक्ष्माण्यंबराणि च ।। 4.1.9.२० ।।
पर्णानि ॠजुताराणि जीर्णानि कठिनानि च ।।
साग्राणि स्वर्णवर्णानि स्थूलनीलशिराणि च ।। २१ ।।
सुवासोपस्कराढ्यानि नागवल्ल्या द्विजोत्तम ।।
शय्याविचित्राभरणा रतिशालोचितानि च ।। २२ ।।
बहुकौतुकवस्तूनि समर्च्यद्विजदंपती ।।
भोगदानमिदं काम्यं प्रतिसंक्रमणं रवेः ।। २३ ।।
किंवा प्रतिव्यतीपातमेकसंवत्सरावधि।।
कोदादिति च मंत्रेण या दद्याद्वरवर्णिनी।।२४।।
कामरूपधरो देवः प्रीयतामिति वादिनी ।।
सा श्रेष्ठाऽप्सरसां मध्ये वसेत्कल्पमिहांगना ।।२५।।
कन्यारूपधराकाचिद्याभुक्ता केनचित्क्वचित् ।।

देवरूपेण तं कालमारभ्य ब्रह्मचारिणी ।। २६ ।।

तदेव वृत्तं ध्यायंती निधनं याति कालतः ।।

दिव्यरूपधरा सेह जायते दिव्य भोगभाक् ।। २७ ।।

निदानमप्सरोलोकस्येतिशृण्वन्द्विजाग्रणीः ।।

सौरं लोकमथ प्राप्य क्षणेन स विमानगः ।। २८ ।।

यथा कदंबकुसुमं किंजल्कैः सर्वतोवृतम् ।।

देदीप्यमानं हि तथा समंताद्भानुभानुभिः ।। २९ ।।

दूराद्रविं स विज्ञाय धृततामरसद्वयम् ।।

नवभिर्योजनानां च सहस्रैः संमितेन ह ।। 4.1.9.३० ।।

विचित्रेणैकचक्रेण सप्तसप्तियुतेन च ।।

अनूरुणाधिष्ठितेन पुरतोधृतरश्मिना ।। ३१ ।।

अप्सरोमुनिगंधर्व सर्पग्रामणि नैर्ऋतैः ।।

स्यंदनेनातिजविना प्रणनाम कृतांजलिः ।। ३२ ।।

तस्य प्रणामंदेवोपि भ्रूभंगेनानुमन्य च।।

अतिदूरं नभोवर्त्म व्यतिचक्राम सक्षणात् ।। ३३ ।।

प्रक्रांते द्युमणौ दूरं शिवशर्मातिशर्मवान् ।।

प्रोवाच भगवद्भक्तौ कथं लभ्यं रवेः पदम् ।। ३४ ।।

एतदिच्छाम्यहं श्रोतुमाचक्षाथां ममाग्रतः ।।

सतां साप्तपदी मैत्री तन्मे मैत्र्या प्रणोदितौ ।। ३५ ।।

।। गणावूचतुः ।।

शृणु द्विज महाप्राज्ञ त्वय्यकथ्यं न किंचन ।।

सत्संगादेव साधूनां सत्कथा संप्रवर्तते ।। ३६ ।।

नियंता सर्वभूतानां य एकःकारणं परम् ।।

अनामा गोत्ररहितो रूपादि परिवर्जितः ।। ३७ ।।

आविर्भाव तिरोभावौ यद्भ्रूनर्तनवर्तिनौ ।।

स एव वक्ति सततं सर्वात्मा वेदपूरुषः ।। ३८ ।।

योसावादित्यपुरुषः सोसावहमिति स्फुटम् ।।

अंधतमः प्रविशंति ये चैवान्यमुपासते ।। ३९ ।।

निश्चितार्थां श्रुतिमिमां ब्राह्मणासो द्विजोत्तम ।।

तमेकमुपतिष्ठंते निश्चित्येति पुनःपुनः ।। 4.1.9.४० ।।

उपलभ्य च सावित्रीं नोपतिष्ठेत यः पराम् ।।

काले त्रिकालं सप्ताहात्स पतेन्नात्र संशयः ।।४१।।

तावत्प्रातर्जपंस्तिष्ठेद्यावदर्धोदयो रवेः ।।

आसनस्थो जपेन्मौनी प्रत्यगातारकोदयात् ।। ४२ ।।

सादित्यां मध्यमां संध्यां जपेदादित्यसंमुखः ।।

काललोपो न कर्तव्यस्ततः कालं प्रतीक्षयेत् ।। ४३ ।।

काले फलंत्योषधयः काले पुष्पंति पादपाः ।।

वर्षंति तोयदाः काले तस्मात्कालं न लंघयेत् ।। ४४ ।।

मंदेहदेहनाशार्थमुदयास्तमये रविः ।।

समीहते द्विजोत्सृष्टं मंत्रतोयांजलित्रयम् ।। ४५ ।।

गायत्रीमंत्रतोयाढ्यं दत्तं येनांजलित्रयम् ।।

काले सवित्रे किं न स्यात्तेन दत्तं जगत्त्रयम् ।। ४६ ।।

किं किं न सविता सूते काले सम्यगुपासितः ।।

आयुरारोग्यमैश्वर्यं वसूनि सपशूनि च ।। ४७ ।।

मित्रपुत्र कलत्राणि क्षेत्राणि विविधानि च ।।

भोगानष्टविधांश्चापि स्वर्गं चाप्यपवर्गकम् ।। ४८ ।।

अष्टादश सुविद्यासु मीमांसातिगरीयसी ।।

ततोपि तर्कशास्त्राणि पुराणं तेभ्य एव च ।। ४९ ।।

ततोपि धर्मशास्त्राणि तेभ्यो गुर्वी श्रुतिर्द्विज ।।

ततोप्युपनिषच्छ्रेष्ठा गायत्री च ततोधिका ।। 4.1.9.५० ।।

दुर्लभा सर्वमंत्रेषु गायत्री प्रणवान्विता ।।

न गायत्र्याधिकं किंचित्त्रयीषु परिगीयते ।। ५१ ।।

न गायत्री समो मंत्रो न काशी सदृशी पुरी ।।

न विश्वेश समं लिंगं सत्यंसत्यं पुनःपुनः ।। ५२ ।।

गायत्री वेदजननी गायत्री ब्राह्मणप्रसूः ।।

गातारं त्रायते यस्माद्गायत्री तेन गीयते ।। ५३ ।।

वाच्यवाचकसंबंधो गायत्र्याः सवितुर्द्वयोः ।।
वाच्योसौ सविता साक्षाद्गायत्रीवाचिकापरा ।। ५४ ।।
प्रभावेणैव गायत्र्याः क्षत्रियः कौशिको वशी ।।
राजर्षित्वं परित्यज्य ब्रह्मर्षिपदमीयिवान्।।५५।।
सामर्थ्यं प्राप चात्युच्चैरन्यद्भुवनसर्जने ।।
किं किं न दद्याद्गायत्री सम्यगेवमुपासिता ।। ५६ ।।
न ब्राह्मणो वेदपाठान्न शास्त्रपठनादपि ।।
देव्यास्त्रिकालमभ्यासाद्ब्राह्मणः स्याद्धि नान्यथा ।। ५७ ।।
गायत्र्येव परं विष्णुर्गायत्र्येव परःशिवः ।।
गायत्र्येव परोब्रह्मा गायत्र्येव त्रयी ततः ।। ५८ ।।
देवत्रयं स भगवानंशुमाली दिवाकरः ।।
सर्वेषां महसां राशिः कालकालप्रवर्तकः ।। ५९ ।।
अर्कमुद्दिश्य सततमस्मल्लोकनिवासिनः ।।
श्रुतिं ह्युदाहरंतीमां सारासारविवेकिनः ।।4.1.9.६०।।
एषो ह देवः प्रदिशोनु सर्वाः पूर्वो ह जातः स उ गर्भे अंतः ।।
स एव जातः स जनिष्यमाणः प्रत्यङ्जानास्तिष्ठति सर्वतोमुखः ।। ६१ ।।
सदैवमुपतिष्ठेरन्सौरसूक्तैरतंद्रिताः ।।
ये नमंत्यत्र ते विप्रा विप्रा भास्करसन्निभाः ।। ६२ ।।
पुष्यार्केप्यथ हस्तार्के मूलार्केप्यथवा द्विज ।।
उत्तरार्केऽथ यत्कार्यं तत्फलत्येव नान्यथा ।। ६३ ।।
पौषे मास्यर्कदिवसे यः स्नात्वा भास्करोदये ।।
दानहोमंजपंकुर्यादर्चामर्कस्य सुव्रत ।। ६४ ।।
श्रद्धावानेकभक्तश्च कामक्रोधविवर्जितः ।।
सहाप्सरोभिर्द्युतिमान्स वसेदत्र भोगवान् ।। ६५ ।।
अयने विषुवे चापि षडशीतिमुखेषु वा ।।
विष्णुपद्यां च ये दद्युर्महादानानि सुव्रताः ।। ६६ ।।
तिलाञ्जुह्वति साज्यांश्च ब्राह्मणान्भोजयंति च ।।
पितॄनुद्दिश्य च श्राद्धं ये कुर्वंति विपश्चितः ।। ६७ ।।

महापूजां च ये कुर्युर्महामंत्राञ्जपंति च ।।

तेऽत्र वैकर्तने लोके विकर्तनसमप्रभा ।।६८।।

न दरिद्रा न च दुःखार्ता न व्याधि परिपीडिताः ।।

संक्रमेष्वर्कभक्ता ये न विरूपा न दुर्भगाः ।।६९।।

संक्रमेषु न यैर्दत्तं न स्नातं तीर्थवारिषु।।

विशेषहोमो न कृतः कपिलाज्याप्लुतैस्तिलैः ।। 4.1.9.७० ।।

ते दृश्यंते प्रतिद्वारं विहीन नयनाननाः ।।

देहिदेहीति जल्पंतो देहिनः सपटच्चराः ।। ७१ ।।

समं कृष्णलकेनापि यो दद्यात्कांचनं कृती ।।

सूर्यग्रहे कुरुक्षेत्रे स वसेदत्र पुण्यभाक् ।। ७२ ।।

सर्वं गंगासमं तोयं सर्वे ब्रह्मसमा द्विजाः ।।

सर्वं देयं स्वर्णसमं राहुग्रस्ते दिवाकरे ।। ७३ ।।

दत्तं जप्तं हुतं स्नातं यत्किंचित्सदनुष्ठितम्।।

भानूपरागे श्राद्धादि तद्धेतुर्ब्रध्न संनिधे ।।७४।।

रविवारे संक्रमश्चेदुपरागोऽथवाभवेत् ।।

तदा यदर्जितं पुण्यं तदिहाक्षयमाप्यते ।। ७५ ।।

भानुवारो यदा षष्ठ्यां सप्तम्यामथ जायते ।।

तदा यत्सुकृतं कर्म कृतं तदिह भुज्यते ।। ७६ ।।

हंसो भानुः सहस्रांशुस्तपनस्तापनो रवि ।।

विकर्तनो विवस्वांश्च विश्वकर्मा विभावसुः ।। ७७ ।।

विश्वरूपो विश्वकर्ता मार्तंडो मिहिरोंऽशुमान् ।।

आदित्यश्चोष्णगुः सूर्योऽर्यमा ब्रध्नो दिवाकरः ।। ७८ ।।

द्वादशात्मा सप्तहयो भास्करो हस्करः खगः ।।

सुरः प्रभाकरः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ।। ७९ ।।

त्रिलोकेशो लोकसाक्षीतमोरिः शाश्वतः शुचिः ।।

गभस्तिहस्तस्तीव्रांशुस्तरणिः सुमहोरणिः ।।4.1.9.८०।।

द्युमणिर्हरिदश्वोर्को भानुमान्भयनाशनः।।

छन्दोश्वो वेदवेद्यश्च भास्वान्पूषा वृषाकपिः ।। ८१ ।।

एकचक्ररथो मित्रो मंदेहारिस्तमिस्रहा ।।

दैत्यहा पापहर्ता च धर्मोधर्म प्रकाशकः ।। ८२ ।।

हेलिकश्चित्रभानुश्च कलिघ्नस्ताक्ष्र्यवाहनः ।।

दिक्पतिः पद्मिनीनाथः कुशेशयकरो हरिः ।। ८३ ।।

घर्मरश्मिर्दुर्निरीक्ष्यश्चंडांशुः कश्यपात्मजः ।।

एभिः सप्ततिसंख्याकैः पुण्यैः सूर्यस्य नामभिः ।। ८४ ।।

प्रणवादि चतुर्थ्यंतैर्नमस्कार समन्वितैः ।।

प्रत्येकमुच्चरन्नाम दृष्ट्वादृष्ट्वा दिवाकरम्।। ८५ ।।

विगृह्य पाणियुग्मेन ताम्रपात्रं सुनिर्मलम् ।।

जानुभ्यामवनिं गत्वा परिपूर्य जलेन च ।। ८६ ।।

करवीरादि कुसुमै रक्तचंदनमिश्रितैः ।।

दूर्वांकुरैरक्षतैश्च निक्षिप्तैः पात्रमध्यतः ।। ८७ ।।

दद्यादर्घ्यमनर्घ्याय सवित्रे ध्यानपूर्वकम् ।।

उपमौलि समानीय तत्पात्रं नान्यदृङ्मनाः ।। ८८ ।।

प्रतिमंत्रं नमस्कुर्यादुदयास्तमये रविम् ।।

अनया नामसप्तत्या महामंत्ररहस्यया ।। ८९ ।।

एवं कुर्वन्नरो जातु न दरिद्रो न दुःखभाक् ।।

व्याधिभिर्मुच्यते घोरैरपिजन्मांतरार्जितैः ।। 4.1.9.९० ।।

विनौषधैर्विना वैद्यैर्विनापथ्यपरिग्रहैः ।।

कालेन निधनं प्राप्तः सूर्यलोके महीयते ।। ९१ ।।

इत्येकदेशः कथितो भानुलोकस्य सत्तम ।।

महातेजोनिधेरस्य कोविशेषमवैत्यहो ।। ९२ ।।

स्वकर्णविषयीकुर्वन्नितिपुण्यकथामिमाम् ।।

क्षणादालोकयांचक्रे महेंद्रस्य महापुरीम् ।। ९३ ।।

।। अगस्तिरुवाच ।। ।।

श्रुत्वा सौरीं कथमेतामप्सरोलोकसंयुताम् ।।

न दरिद्रो भवेत्क्वापि नाधर्मेषु प्रवर्तते ।। ९४ ।।

ब्राह्मणैः सततं श्राव्यमिदमाख्यानमुत्तमम् ।।

वेदपाठेन यत्पुण्यं तत्पुण्यफलदायकम् ।। ९५ ।।

ब्राह्मणाः क्षत्रिया वैश्याः शृण्वंतोऽध्यायमुत्तमम् ।।

पातकानि विसृज्येह गतिं यास्यंत्यनुत्तमाम् ।। ९६ ।।

इति श्रीस्कांदमहापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्धे अप्सरःसूर्यलोकवर्णनंनामनवमोऽध्यायः ।। ।।।९।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१०



।। शिवशर्मोवाच ।। ।।

रमयंती मनोतीव केयं कस्येयमीशितुः ।।

नयनानंदसंदोहदायिनीपूरनुत्तमा ।। १ ।।

गणावूचतुः ।। ।।

शिवशर्मन्महाभागसुतीर्थफलितद्रुम ।।

लोकोऽत्र रमते विप्र सहसाक्षपुरी त्वियम् ।। २ ।।

तपोबलेन महता विहिता विश्वकमर्णा ।।

दिवापि कौमुदी यस्याः सौधश्रेणीश्रियं श्रयेत् ।। ३ ।।

यदाकलानिधिः क्वापि दर्शे ऽदृश्यत्वमावहेत् ।।

तदा स्वप्रेयसीं ज्योत्स्नां सौधेष्वेषु निगूहयेत् ।। ४ ।।

यदच्छभित्तौ वीक्ष्य स्वमन्ययोपिद्विशंकिता ।।

मुग्धानाशुविशेच्चित्रमपिस्वांचित्रशालिकाम् ।। ५ ।।

हर्म्येषु नीलमणिभिर्निर्मितेष्वत्रनिर्भयम् ।।

स्वनीलिमानमाधाय तमोहःस्वपि तिष्ठति ।। ६ ।।

चंद्रकांतशिलाजालस्रुतमात्रामलंजलम् ।।

तत्र चादाय कलशैर्नेच्छंत्यन्यज्जलं जनाः ।। ७ ।।

कुविंदा न च संत्यत्र न च ते पश्यतो हराः ।।

चैलान्यलंकृतीरत्र यतः कल्पद्रुमोर्पयेत् ।। ८ ।।

गणका नात्र विद्यंते चिंताविद्याविशारदाः ।।

यतश्चिकेति सर्वेषां चिंता चिंतामणिर्द्रुतम् ।। ९ ।।

सूपकारा न संत्यत्र रसकर्म विचक्षणाः।।

दुग्धे सर्वरसानेका कामधेनुरतोयतः ।। 4.1.10.१० ।।

कीर्तिरुच्चैःश्रवा यस्य सर्वतो वाजिराजिषु ।।

रत्नमुच्चैःश्रवाः सोत्र हयानां पौरुषाधिकः ।। ११ ।।

ऐरावतो दंतिवरश्चतुर्दंतोत्र राजते ।।

द्वितीय इव कैलासो जंगमस्फटिकोज्ज्वलः ।। १२ ।।

तरुरत्नंपारिजातः स्त्रीरत्नं सोर्वशी त्विह ।।

नंदनं वनरत्नं च रत्नं मंदाकिनी ह्यपाम् ।। १३ ।।

त्रयस्त्रिंशत्सुराणां या कोटिः श्रुति समीरिता ।।

प्रतीक्षते साऽवसरं सेवायै प्रत्यहंत्विह ।। १४ ।।

स्वर्गेष्विंद्रपदादन्यन्न विशिष्येत किंचन ।।

यद्यत्त्रिलोक्यामैश्वर्यं न तत्तुल्यमनेन हि ।। १५ ।।

अश्वमेधसहस्रस्य लभ्यं विनिमयेन यत् ।।

किं तेन तुल्यमन्यत्स्यात्पवित्रमथवा महत ।। १६ ।।

अर्चिष्मती संयमिनी पुण्यवत्यमलावती ।।

गंधवत्यलकेशी च नैतत्तुल्या महर्धिभिः ।। १७।।

अयमेव सहस्राक्षस्त्वयमेव दिवस्पतिः ।।

शतमन्युरयं देवो नामान्येतानि नामतः ।। १८ ।।

सप्तापि लोकपाला ये त एनं समुपासते ।।

नारदाद्यैर्मुनिवरैरयमाशीर्भिरीड्यते ।। १९ ।।

एतत्स्थैर्येण सर्वेषां लोकानां स्थैर्यमिष्यते ।।

पराजयान्महेंद्रस्य त्रैलोक्यं स्यात्पराजितम् ।। 4.1.10.२० ।।

दनुजा मनुजा दैत्यास्तपस्यंत्युग्रसंयमाः ।।

गंधर्व यक्षरक्षांसि महेंद्रपदलिप्सवः ।। २१ ।।

सगराद्या महीपाला वाजिमेधविधायकाः ।।

कृतवंतो महायत्नं शक्रैश्वर्यजिघृक्षवः ।। २२ ।।

निष्प्रत्यूहं क्रतुशतं यः कश्चित्कुरुतेऽवनौ ।।

जितेंद्रियोमरावत्यां स प्राप्नोति पुलोमजाम् ।। २३ ।।

असमाप्तक्रतुशता वसंत्यत्र महीभुजः ।।

ज्योतिष्टोमादिभिर्यागैर्ये यजंत्यपि ते द्विजाः ।।२४।।

तुलापुरुषदानादि महादानानि षोडश ।।

ये यच्छंत्यमलात्मानस्ते लभंतेऽमरावतीम् ।। २५ ।।

अक्लीबवादिनो धीराः संग्रामेष्वपराङ्मुखाः ।।

विक्रांता वीरशयने तेऽत्र तिष्ठंति भूभुजः ।।२६।।

इत्युद्देशात्समाख्याता महेंद्रनगरी स्थितिः ।।

यायजूका वसंत्यत्र यज्ञविद्याविशारदाः ।। २७ ।।

इमामर्चिष्मतीं पश्य वीतिहोत्रपुरीं शुभाम् ।।

जातवेदसि ये भक्तास्ते वसंत्यत्र सुव्रताः ।। २८ ।।

अग्निप्रवेशं ये कुर्युर्दृढसत्त्वा जितेंद्रियाः ।।

स्त्रियो वा सत्त्वसंपन्नास्ते सर्वे अग्नितेजसः ।। २९ ।।

अग्निहोत्ररता विप्रास्तथाग्निब्रह्मचारिणः ।।

पंचाग्निव्रतिनो ये वै तेऽग्निलोकेग्नितेजसः ।। 4.1.10.३० ।।

शीते शीतापनुत्यै यस्त्विध्मभारान्प्रयच्छति ।।

कुर्यादग्निष्टिकां वाऽथ स वसेदग्निसन्निधौ ।। ३१ ।।

अनाथस्याग्निसंस्कारं यः कुर्याच्छ्रद्धयान्वितः ।।

अशक्तः प्रेरयेदन्यं सोग्निलोके महीयते ।।३२।।

जठराग्निविवृद्ध्यै यो दद्यादाग्नेयमौषधम् ।।

मंदाग्नये स पुण्यात्मा वह्निलोके वसेच्चिरम् ।। ३३ ।।

यज्ञोपस्कर वस्तूनि यज्ञार्थं द्रविणं तु वा ।।

यथाशक्ति प्रदद्याद्यो ह्यर्चिष्मत्यांवसेत्स वै ।। ३४ ।।

अग्निरेको द्विजातीनां निःश्रेयसकरः परः ।।

गुरुर्देवो व्रतं तीर्थं सर्वमग्निर्विनिश्चितम् ।। ३५ ।।

अपावनानि सर्वाणि वह्निसंसर्गतः क्षणात् ।।

पावनानि भवंत्येव तस्माद्यः पावकः स्मृतः ।। ३६ ।।

अपि वेदं विदित्वा यस्त्यक्त्वा वै जातवेदसम् ।।

अन्यत्र बध्नाति रतिं ब्राह्मणो न स वेदवित् ।।३७।।

अंतरात्मा ह्ययं साक्षान्निश्चितो ह्याशुशुक्षणिः ।।

मांसग्रासान्पचेत्कुक्षौ स्त्रीणां नो मांसपेशिकाम् ।।३८।।

तैजसी शांभवी मूर्तिः प्रत्यक्षा दहनात्मिका ।।

कर्त्री हंत्री पालयित्री विनैनां किं विलोक्यते ।। ३९ ।।

चित्रभानुरयं साक्षान्नेत्रं त्रिभुवनेशितुः ।।

अंधं तमोमये लोके विनैनं कः प्रकाशकः ।। 4.1.10.४० ।।

धूपप्रदीपनैवेद्य पयो दधि घृतैक्षवम् ।।

एतद्भुक्तं निषेवंते सर्वे दिवि दिवौकसः ।। ४१ ।।

शिवशर्मोवाच ।। ।।

कोयं कृशानुः कस्यायं सूनुः कथमिदं पदम् ।।

आग्नेयं लब्धमेतेन ब्रूतमेतन्ममाग्रतः ।। ४२ ।।

।। गणावूचतुः ।। ।।

आकर्णय महाप्राज्ञ वर्णयावो यथातथम् ।।

योयं यस्य यथाऽनेन प्रापि ज्योतिष्मतीपुरी ।। ४३ ।।

नर्मदायास्तटे रम्ये पुरे नर्मपुरे पुरा ।।

पुरारिभक्तः पुण्यात्माऽभवद्विश्वानरो मुनिः ।।४४।।

ब्रह्मचर्याश्रमे निष्ठो ब्रह्मयज्ञरतःसदा ।।

शांडिल्यगोत्रः शुचिमान्ब्रह्मतेजो निधिर्वशी ।। ४५ ।।

विज्ञाताखिलशास्त्रार्थो लौकिकाचारचंचुरः ।।

कदाचिच्चिंतयामास हृदि ध्यात्वा महेश्वरम् ।। ४६ ।।

चतुर्णामप्याश्रमाणां कोतीव श्रेयसे सताम् ।।

यस्मिन्प्राप्नोति संक्षुण्णे परत्रेह च वा सुखम् ।।४७।।

इदं श्रेयस्त्विदं श्रेयस्त्विदं तु सुकरं भवेत् ।।

इत्थं सर्वं समालोड्य गार्हस्थ्यं प्रशशंस ह ।। ४८ ।।

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।।

एषामाधारभूतोसौ गृहस्थो नान्यथेति च ।। ४९ ।।

देवैर्मनुष्यैः पितृभिस्तिर्यग्भिश्चोपजीव्यते ।।

गृहस्थः प्रत्यहं यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी ।।4.1.10.५० ।।

अस्नात्वा चाप्यहुत्वा वाऽदत्त्वा वाश्नाति यो गृही ।।

देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ।। ५१ ।।

अस्नाताशी मलं भुंक्ते त्वजपी पूयशोणितम् ।।

अहुताशी कृमीन्भुंक्तेप्यदत्त्वाविड्विभोजनः ।। ५२ ।।

ब्रह्मचर्यं हि गार्हस्थ्ये यादृक्कल्पनयोज्झितम् ।।

स्वभावचपले चित्ते क्व तादृग्ब्रह्मचारिणि ।। ५३ ।।

हठाद्वा लोकभीत्या वा स्वार्थाद्वा ब्रह्मचर्यभाक् ।।

संकल्पयति चित्ते चेत्कृतमप्यकृतं तदा ।। ५४ ।।

परदारपरित्यागात्स्वदारपरितुष्टितः ।।

ऋतुकालाभिगामित्वाद्ब्रह्मचारी गृहीरितः ।। ५५ ।।

विमुक्तरागद्वेषो यः कामक्रोधविवर्जितः ।।

साग्निः सदारः स गृही वानप्रस्थाद्विशिष्यते ।। ५६ ।।

वैराग्याद्गृहमुत्सृज्य गृहधर्मान्हृदि स्मरेत् ।।

स भवेदुभयभ्रष्टो वानप्रस्थो न वा गृही ।। ५७ ।।

अयाचितोपस्थितया यो वृत्त्या वर्तते गृही ।।

येन केनापि संतुष्टो भिक्षुकात्स विशिष्यते ।। ५८ ।।

प्रार्थयेद्यत्क्वचित्किंचिद्दुष्प्रापं वा भविष्यति ।।

अशनेषु न संतुष्टः स यतिः पतितो भवेत् ।। ५९ ।।

गुणागुणविचार्येत्थं स वै विश्वानरो द्विजः ।।

उद्ववाह विधानेन स्वोचितां कुलकन्यकाम् ।। 4.1.10.६० ।।

अग्निशुश्रूषणरतः पंचयज्ञपरायणः ।।

षट्कर्मनिरतो नित्यं देवपित्रतिथिप्रियः ।। ६१ ।।

धर्मार्थकामान्युक्तात्मा सोर्जयन्स्वस्वकालतः ।।

परस्परमसंकोचं दंपत्योरानुकूल्यतः ।। ६२ ।।

पूर्वाह्णे दैविकं कर्म सोकरोत्कर्मकांडवित् ।।

मध्यंदिने मनुष्याणां पितृणामपराह्णके ।।६३।।

एवं बहुतिथे काले गते तस्याग्रजन्मनः ।।

भार्या शुचिष्मती नाम कामपत्नी वसुव्रता ।। ६४ ।।

अपश्यंत्यंकुरमपि संततेः स्वर्गसाधनम् ।।

विज्ञाय शंकरं कांतं प्रणिपत्य व्यजिज्ञपत् ।। ६५ ।।

शुचिष्मत्युवाच।।

आर्यपुत्रार्यधिषण प्राणनाथ प्रियव्रत ।।

न दुर्लभं ममास्तीह किंचित्त्वच्चरणार्चनात् ।। ६६ ।।

ये वै भोगाः समुचिताः स्त्रीणां ते त्वत्प्रसादतः ।।
अलंकृत्य मया भुक्ताः प्रसंगाद्वच्मि तान्यपि ।।६७।।
सुवासांसि सुवासाश्च सुशय्या सुनितंबिनी।।
स्रक्तांबूलान्नपानाश्च अष्टौ भोगाः स्वधर्मिणाम् ।। ६८ ।।
एकं मे प्रार्थितं नाथ चिराय हृदिसंस्थितम् ।।
गृहस्थानां समुचितं तत्त्वं दातुमिहार्हसि ।। ६९ ।।
विश्वानर उवाच ।।
किमदेयं हि सुश्रोणि तव प्रियहितैषिणि ।।
तत्प्रार्थय महाभागे प्रयच्छाम्यविलंबितम् ।।4.1.10.७०।।
महेशितुः प्रसादेन मम किंचिन्न दुर्ल्भम् ।।
इहामुत्र च कल्याणि सर्वकल्याणकारिणः ।। ७१ ।।
इति श्रुत्वा वचः पत्युस्तस्य सा पतिदेवता ।।
उवाच हृष्टवदना यदि देयो वरो मम ।।७२।।
वरयोग्यास्मि चेन्नाथ नान्यं वरमहं वृणे ।।
महेशसदृशं पुत्रं देहि माहेश्वरानव ।। ७३ ।।
इति तस्या वचः श्रुत्वा शुचिष्मत्याः शुचिव्रतः ।।
क्षणं समाधिमाधाय हृ(?)द्येतत्समचिंतयत् ।।७४।।
अहो किमेतया तन्व्या प्रार्थितं ह्यतिदुर्लभम् ।।
मनोरथपथाद्दूरमस्तुवा स हि सर्वकृत् ।।७५।।
तेनैवास्या मुखे स्थित्वा वाक्स्वरूपेण शंभुना ।।
व्याहृतं कोऽन्यथाकर्तुमुत्सहेत भवेदिदम् ।।७६।।
ततः प्रोवाच तां पत्नीमेकपत्निव्रते स्थितः ।।
विश्वानरमुनिः श्रीमानिति कांते भविष्यति ।। ७७ ।।
इत्थमाश्वास्य तां पत्नीं जगाम तपसे मुनिः ।।
यत्र विश्वेश्वरः साक्षात्काशीनाथोधितिष्ठति ।। ७८ ।।
प्राप्य वाराणसीं तूर्णं दृष्ट्वाथ मणिकर्णिकाम् ।।
तत्याज तापत्रितयमपिजन्मशतार्जितम् ।। ७९ ।।
दृष्ट्वा सर्वाणि लिंगानि विश्वेश प्रमुखानि च ।।

स्नात्वा सर्वेषु कुंडेषु वापीकूटसरःसु च ।। 4.1.10.८० ।।

नत्वा विनायकान्सर्वान्गौरीः सर्वाः प्रणम्य च ।।

संपूज्य कालराजं च भैरवं पापभक्षणम् ।। ८१ ।।

दण्डनायकमुख्यांश्च गणान्स्तुत्वा प्रयत्नतः ।।

आदिकेशवमुख्यांश्च केशवान्परितोष्य च ।। ८२ ।।

लोलार्कमुख्य सूर्यांश्च प्रणम्य च पुनः पुनः ।।

कृत्वा पिण्डप्रदानानि सर्वतीर्थेष्वतंद्रितः ।। ८३ ।।

सहस्रभोजनाद्यैश्च यतीन्विप्रान्प्रतर्प्य च ।।

महापूजोपचारैश्च लिंगान्यभ्यर्च्य भक्तितः ।। ८४ ।।

असकृच्चिन्तयामास किं लिंगं क्षिप्रसिद्धिदम् ।।

यत्र निश्चलतामेति तपस्तनयकाम्यया ।। ८५ ।।

श्रीमदोंकारनाथं वा कृत्तिवासेश्वरं किमु ।।

कालेशं वृद्धकालेशं कलशेश्वरमेव च ।। ८६ ।।

केदारेशं तु कामेशं चन्द्रेशं वा त्रिलोचनम् ।।

ज्येष्ठेशं जंबुकेशं वा जैगीषव्येश्वरं तु वा ।। ८७ ।।

दशाश्वमेधमीशानं द्रुमि चंडेशमेव च ।।

दृक्केशं गरुडेशं च गोकर्णेशं गणेश्वरम् ।। ८८ ।।

ढुंढ्याशागजसिद्धाख्यं धर्मेशं तारकेश्वरम् ।।

नन्दिकेशं निवासेशं पत्रीशं प्रीतिकेश्वरम् ।। ८९ ।।

पर्वतेशं पशुपतिं ब्रह्मेशं मध्यमेश्वरम् ।।

बृहस्पतीश्वरं वाथ विभांडेश्वरमेव च ।। 4.1.10.९० ।।

भारभूतेश्वरं किं वा महालक्ष्मीश्वरं तु वा ।।

मरुत्तेशं तु मोक्षेशं गंगेशं नर्मदेश्वरम् ।। ९१ ।।

मार्कंडं मणिकर्णीश रत्नेश्वरमथापि वा ।।

अथवा योगिनीपीठं साधकस्यैव सिद्धिदम् ।। ९२ ।।

यामुनेशं लांगलीशं श्रीमद्विश्वेश्वरं विभुम् ।।

अविमुक्तेश्वरं वाथ विशालाक्षीशमेव च ।। ९३ ।।

व्याघ्रेश्वरं वराहेशं व्यासेशं वृषभध्वजम् ।।

वरुणेशं विधीशं वा वसिष्ठेशं शनीश्वरम् ।। ९४ ।।

सोमेश्वरं किमिन्द्रेशं स्वर्लीनं संगमेश्वरम् ।।

हरिश्चंद्रेश्वरं किं वा हरिकेशेश्वरं तु वा।।९५।।

त्रिसंध्येशं महादेवमुपशांति शिवं तथा।।

भवानीशं कपर्दीशं कंदुकेशं मखेश्वरम् ।। ९६ ।।

मित्रावरुणसंज्ञं वा किमेषामाशुपुत्रदम् ।।

क्षणं विचार्य स मुनिरिति विश्वानरः सुधीः ।। ९७ ।।

आज्ञातं विस्मृतं तावत्फलितो मे मनोरथः ।।

सिद्धैः संसेवितं लिंगं सर्वसिद्धिकरं परम् ।। ९८ ।।

दर्शनात्स्पर्शनाद्यस्य मनो निर्वृतिभाग्भवेत् ।।

उद्घाटितं सदैवास्ते स्वर्गद्वारं हि यत्र वै ।। ९९ ।।

दिवानिशं पूजनार्थं विज्ञाप्य त्रिदशेश्वरम् ।।

पञ्चमुद्रे महापीठे सिद्धिदे सर्वजंतुषु ।। 4.1.10.१०० ।।

यत्र सा विकटा देवी प्रकटा सिद्धिरूपिणी ।।

यत्र स्थितानां भक्तानां साक्षात्सिद्धिविनायकः ।। १ ।।

निर्धूय विघ्नजालानि सर्वाः सिद्धीः प्रयच्छति ।।

अविमुक्ते महाक्षेत्रे सिद्धिक्षेत्रं हि तत्परम् ।। २ ।।

यत्र वीरेश्वरं लिंगं महागुह्यतमं मतम् ।।

तिलांतरापि नो काश्यां भूमिर्लिंगं विना क्वचित् ।। ३ ।।

परं वीरेश सदृशं न लिंगं त्वाशुसिद्धिदम् ।।

धर्मदं चार्थदं सम्यक्कामदं मोक्षदं तथा ।।४।।

यथा वीरेश्वरं लिंगं काश्यां नान्यत्तथा ध्रुवम् ।।

पंचस्वरोत्र गंधर्वः परां सिद्धिमगात्पुरा।।५।।

विद्याधरः स्वच्छविद्यो वसुपूर्णश्च यक्षराट् ।।

नृत्यंती निजभावेन पुराह्यत्राप्सरोवरा ।। ६ ।।

सदेहा कोकिलालापा लिंगमध्ये लयं गता ।।

ऋषिर्वेदशिरा नाम जपन्वै शतरुद्रियम् ।। ७ ।।

मन्त्रज्योतिर्मये लिंगे सशरीरो विशत्पुरा ।।

चन्द्रमौलि भरद्वाजावुभौ पाशुपतोत्तमौ ।। ८ ।।

वीरेश्वरं समभ्यर्च्य गायमानौ लयं गतौ ।।

शंखचूडो हि नागेंद्रः स्वफणामणिभिर्निशि ।। ९ ।।

षण्मासात्सिद्धिमगमद्वहुनीराजनैरिह ।।

किन्नरी हंसपद्यत्र भर्त्रा वेणुप्रियेण वै ।। 4.1.10.११० ।।

गायंती सुस्वरं याता परां निर्वाणभूमिकाम् ।।

असंख्याताः सहस्राणि सिद्धाः सिद्धिमिहागताः ।। ११ ।।

सिद्धलिंगमिहाख्यातं तस्माद्वीरेश्वरं परम् ।। १२ ।।

वीरेश्वरं समाराध्य भ्रष्टराज्यो जयद्रथः ।।

हत्वा रिपूनस्खलितं राज्यं प्राप विदेहजः ।। १३ ।।

विदूरथोऽथ नृपतिरपुत्रः पुत्रवानभूत् ।।

वीरेश्वरप्रसादेन मगधाधिपतिर्वशी ।। १४ ।।

वसुदत्तोत्र च वणिक्सुतां वसुसुतोपमाम् ।।

अब्दमभ्यर्च्य वीरेशं रत्नदत्तोप्यवाप्तवान् ।। १५ ।।

अहमप्यत्र वीरेशं समाराध्यत्रिकालतः ।।

आशु पुत्रमवाप्स्यामि यथाभिलषितं स्त्रिया ।। १६ ।।

इति कृत्वा मतिं धीरो विप्रो विश्वानरः कृती ।।

चन्द्रकूपजलैः स्नात्वा जग्राह नियमं व्रती ।। १७ ।।

एकाहारोभवन्मासं मासं नक्ताशनोभवत ।।

अयाचिताशनो मासं मासं त्यक्ताशनः पुनः ।। १८ ।।

पयोव्रतोभवन्मासं मासं शाकफलाशनः ।।

मासं मुष्टितिलाहारो मासं पानीयभोजनः ।। १९ ।।

पंचगव्याशनो मासं मासं चांद्रायणव्रती ।।

मासं कुशाग्रजलभुङ्मासं श्वसनभक्षणः ।। 4.1.10.१२० ।।

अथ त्रयोदशे मासि स्नात्वा त्रिपथगांभसि ।।

प्रत्यूष एव वीरेशं यावदायाति स द्विजः ।। २१ ।।

तावद्विलोकयांचक्रे मध्ये लिंगं तपोधनः ।।

विभूतिभूषितं बालमष्टवर्षाकृतिं शुभम् ।।२२।।

आकर्णपूर्णनेत्रं च सुरक्तदशनच्छदम् ।।

चारुपिंगजटामौलिं नग्नं प्रहसिताननम् ।। २३ ।।

शैशवोचितनेपथ्यधारिणं चित्तहारिणम् ।।

पठंतं श्रुतिसूक्तानि हसंतं च स्वलीलया ।। २४ ।।

तमालोक्य स्तुतिं चक्रे रोमकंचुकितो मुदा ।।

प्रोच्चरद्गद्गदालापो नमोस्त्विवति पुनः पुनः ।। २५ ।।

विश्वानर उवाच ।। ।।

एकब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेहनानास्ति किंचित् ।।

एको रुद्रो न द्वितीयोवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ।। २६ ।।

एकः कर्ता त्वं हि सर्वस्य शंभो नानारूपेष्वेकरूपोस्य रूपः ।।

यद्वत्प्रत्यप्स्वर्क एकोप्यनेकस्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ।।२७।।

रज्जौ सर्पः शुक्तिकायां च रूप्यंनैरःपूरस्तन्मृगाख्ये मरीचौ ।।

यद्वत्तद्वद्विष्वगेष प्रपंचो यस्मिन्ज्ञाते तं प्रपद्ये महेशम् ।। २८ ।।

तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीत भानौप्रसादः ।।

पुष्पे गंधो दुग्धमध्येपि सर्पिर्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ।। २९ ।।

शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रेरघ्राणस्त्वं व्यंघ्रिरायासि दूरात् ।।

व्यक्षः पश्येस्त्वं रसज्ञोप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ।। 4.1.10.१३० ।।

नोवेदस्त्वामीश साक्षाद्धिवेदनो वा विष्णुर्नोविधाताऽखिलस्य ।।

नो योगींद्रानेंद्रमुख्याश्च देवा भक्तो वेद त्वामतस्त्वां प्रपद्ये ।। ३१ ।।

नो ते गोत्रं नेशजन्मापिनाख्यानो वा रूपं नैव शीलं न देशः ।।

इत्थंभूतोपीश्वरस्त्वं त्रिलोक्याः सर्वान्कामान्पूरयेस्तद्भजे त्वाम् ।। ३२ ।।

त्वत्तः सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च नग्नोऽतिशांतः ।।

त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्त्वं यत्किंनास्यतस्त्वां नतोस्मि ।। ३३ ।।

स्तुत्वेति भूमौ निपपात विप्रः स दंडवद्यावदतीव हृष्टः ।।

तावत्स बालोखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ।। ३४ ।।

तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती ।।

प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ।। ३५ ।।

सर्वांतरात्मा भगवान्सर्वः सर्वप्रदो भवान् ।।

याच्ञां प्रतिनियुंक्ते मां किमीशो दैन्यकारिणीम् ।। ३६ ।।

इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ।।

शुचेः शुचिव्रतस्याशु शुचिस्मित्वाब्रवीच्छिशुः ।। ३७ ।।

बाल उवाच ।।

त्वया शुचे शुचिष्मत्यां योभिलाषः कृतो हृदि ।।

अचिरेणैवकालेन स भविष्यत्यसंशयः ।। ३८ ।।

तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते ।।

ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ।। ३९ ।।

अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ।।

अब्दं त्रिकालपठनात्कामदं शिवसंनिधौ ।। 4.1.10.१४० ।।

एतत्स्तोत्रस्य पठनं पुत्र पौत्र धनप्रदम् ।।

सर्वशांतिकरं चापि सर्वापत्परिनाशनम् ।। ४१ ।।

स्वर्गापवर्ग संपत्तिकारकं नात्र संशयः ।।

प्रातरुत्थाय सुस्नातो लिंगमभ्यर्च्य शांभवम् ।। ४२ ।।

वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेत् ।।

वैशाखे कार्तिके माघे विशेषनियमैर्युतः ।। ४३ ।।

यः पठेत्स्नानसमये स लभेत्सकलं फलम् ।।

कार्तिकस्य तु मासस्य प्रसादादहमव्ययः ।। ४४ ।।

तव पुत्रत्वमेष्यामि यस्त्वन्यस्तत्पठिष्यति ।।

अभिलाषाष्टकमिदं न देयं यस्य कस्यचित् ।। ४५ ।।

गोपनीयं प्रयत्नेन महावंध्याप्रसूतिकृत् ।।

स्त्रिया वा पुरुषेणापि नियमाल्लिंग संनिधौ ।। ४६ ।।

अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः ।।

इत्युक्त्वांतर्दधे बालः सोपि विप्रो गृहं गतः ।। १४७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां चतुर्थे काशीखण्डे पूवार्द्धे इंद्राग्निलोकवर्णनंनाम दशमोऽध्यायः ।। १० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०११

https://sa.wikisource.org/s/fup
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

अगस्तिरुवाच ।। ।।

शृणु सुश्रोणि सुभगे वैश्वानरसमुद्भवम् ।।

पुण्यशीलसुशीलाभ्यां यथोक्तं शिवशर्मणे ।। १ ।।

अथ कालेन तद्योषिदंतर्वत्नी बभूव ह ।।

विधिवद्विहिते तेन गर्भाधानाख्य कर्मणि ।। २ ।।

ततः पुंसवनं तेन स्पंदनात्प्राग्विपश्चिता ।।

गृह्योक्तविधिना सम्यक्कृतं पुंस्त्वविवृद्धये ।। ३ ।।

सीमन्तोथाष्टमे मासि गर्भरूपसमृद्धिकृत् ।।

सुखप्रसव सिद्ध्यै च तेनाकारि क्रियाविदा ।। ४ ।।

अथातः सत्सुतारासु ताराधिप वराननः ।।

कैंद्रे गुरौ शुभे लग्ने सुग्रहेष्वयुगेषु च ।।५।।

अरिष्टं दीपयन्दीस्या सर्वारिष्टविनाशकृत् ।।

तनयो नाम तस्यां तु शुचिष्मत्यां बभूव ह ।।६।।

सद्यः समस्तसुखदो भूर्भुवःस्वर्निवासिनाम् ।।

गंधवाहागन्धवाहादिग्वधूमुखवासनाः ।। ७ ।।

इष्टगन्धप्रसूनौघैर्ववर्षुस्ते घनाघनाः ।।

देवदुन्दुभयो नेदुः प्रसेदुः सर्वतोदिशः ।।८।।

परितः सरितः स्वच्छा भूतानां मानसैः सह ९ ।।

तमोऽताम्यत्तु नितरां रजोपि विरजोभवत् ।। ९ ।।

सत्त्वाः सत्त्वसमायुक्ता वसुधासीच्छुभा तदा ।।

कल्याणी सर्वतो वाणी प्राणिनः प्रीणयंत्यभूत् ।। 4.1.11.१० ।।

तिलोत्तमोर्वशीरंभा प्रभा विद्युत्प्रभा शुभा ।।

सुमंगला शुभालापा सुशीलाड्या(?) वरांगनाः ।।११।।

क्वणत्कंकण पात्राणि कृत्वा करतलं मुदा ।।

मुक्तमुक्ताफलाढ्यानि यक्षकर्दमवंति च ।। १२ ।।

वज्रवैदूर्य दीपानि हरिद्रा लेपनानि च ।।

गारुत्मतैकरूपाणि शंखशुक्तिदधीनि च ।। १३ ।।

पद्मरागप्रवालाख्यरत्नकुंकुमवंति च ।।

गोमेदपुष्परागेंद्र नीलसन्माल्यभांजि च ।। १४ ।।

विद्याधर्यश्च किन्नर्यस्तथाऽमर्यः सहस्रशः ।।

चामर व्यग्रहस्ताग्र मंगलद्रव्यपाणयः ।। १५ ।।

गंधर्वोरगयक्षाणां सुवासिन्यः शुभस्वराः ।।

गायंत्यो ललितं गीतं तत्राजग्मुरनेकशः ।। १६ ।।

मरीचिरत्रि पुलहः पुलस्त्यः क्रतुरंगिराः ।।

वसिष्ठः कश्यपश्चाहं विभांडो मांडवीसुतः ।। १७ ।।

लोमशो लोमचरणो भरद्वाजोथ गौतमः ।।

भृगुस्तु गालवो गर्गो जातूकर्ण्यः पराशरः ।। १८ ।।

आपस्तंबो याज्ञवल्क्य दक्षवाल्मीकिमुद्गलाः ।।

शातातपश्च लिखितः शिलादः शंखउंछभुक् ।। १५ ।।

जमदग्निश्च संवर्तो मतंगो भरतोंशुमान् ।।

व्यासः कात्यायनः कुत्सः शौनकः सुश्रुतः शुकः ।।4.1.11.२० ।।

ऋष्यशृंगोथ दुर्वासा रुचिर्नारदतुंबुरू ।।

उत्तंको वामदेवश्च च्यवनोसितदेवलौ ।।२१ ।।

शालंकायनहारीतौ विश्वामित्रोथभार्गवः ।।

मृकंडः सह पुत्रेण दाल्भ्य उद्दालकस्तथा ।। २२ ।।

धौम्योपमन्युवत्साद्या मुनयो मुनिकन्यकाः ।

तच्छांत्यर्थं समाजग्मुर्धन्यं विश्वानराश्रमम् ।। २३ ।।

ब्रह्मा बृहस्पतियुतो देवो गरुडवाहनः ।।

नंदि भृंगि समायुक्तो गौर्या सह वृषध्वजः ।। २४ ।।

महेंद्रमुख्या गीर्वाणा नागाः पातालवासिनः ।।

रत्नान्यादाय बहुशः ससरित्का महाब्धयः ।। २५ ।।

स्थावरा जंगमं रूपं धृत्वा याताः सहस्रशः ।।

महामहोत्सवे तस्मिन्बभूवाकालकौमुदी ।। २६।।

जातकर्म स्वयं चक्रे तस्य देवः पितामहः ।।

श्रुतिं विचार्य तद्रूपां नाम्ना गृहपतिस्त्वयम् ।।२७।।

इति नाम ददौ तस्मै देयमेकादशेहनि ।।

नामकर्मविधानेन तदर्थं श्रुतिमुच्चरन् ।। २८ ।।

अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।।

अग्ने गृहपतेभिद्युम्नमभि सह आयच्छस्व ।। २९ ।।

अग्ने गृहपते स्थित्या परामपि निदर्शयन् ।।

चतुर्निगममंत्रोक्तैराशीर्भिरभिनंद्य च ।। 4.1.11.३० ।।

कृत्वा बालोचितां रक्षां हरेण हरिणा सह ।।

निर्ययौ हंसमारुह्य सर्वेषां प्रपितामहः ।। ३१ ।।

अहोरूपमहो तेजस्त्वहो सर्वांगलक्षणम् ।।

अहो शुचिष्मतीभाग्यमाविरासीत्स्वयं हरः ।। ३२ ।।

अथवा किमिदं चित्रं शर्वभक्तजनेष्वहो ।।

आविर्भवेत्स्वयं रुद्रो यतोरुद्रास्तदर्चकाः ।। ३३ ।।

इति स्तुवंतस्त्वन्योन्यं जग्मुः सर्वे यथागतम् ।।

विश्वानरं समापृच्छ्य संप्रहृष्टतनूरुहाः ।। ३४ ।।

अतः पुत्रं समीहंते गृहस्थाश्रमवासिनः ।।

पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ।। ३५ ।।

अपुत्रस्य गृहं शून्यमपुत्रस्यार्जनं वृथा ।।

अपुत्रस्यान्वयश्छिन्नो नापवित्रं ह्यपुत्रतः ।। ३६ ।।

न पुत्रात्परमो लाभो न पुत्रात्परमं सुखम् ।।

न पुत्रात्परमं मित्रं परत्रेह च कुत्रचित् ।। ३७ ।।

औरसः क्षेत्रजः क्रीतो दत्तः प्राप्तः सुतासुतः ।।

आपत्सुरक्षितश्चान्यः पुत्राः सप्तात्र कीर्तिताः ।। ३८ ।।

एषामन्यतमः कार्यो गृहस्थेन विपश्चिता ।।

पूर्वपूर्वः सुतः श्रेयान्हीनःस्यादुत्तरोत्तरः ।। ३९ ।।

।। गणावूचतुः ।। ।।

निष्क्रमोथ चतुर्थेऽस्य मासि पित्राकृतो गृहात् ।।

अन्नप्राशनमब्दार्धे चूडाब्दे चार्थवत्कृता ।। 4.1.11.४० ।।

कर्णवेधं ततः कृत्वा श्रवणर्क्षे सकर्मवित् ।।

ब्रह्मतेजोभिवृद्ध्यर्थं पंचमेऽब्दे व्रतं ददौ ।। ४१ ।।

उपाकर्म ततः कृत्वा वेदानध्यापयत्सुधीः ।।

त्र्यब्दं वेदान्सविधिनाऽध्यैष्ट सांगपदक्रमान् ।। ४२ ।।

विद्याजातं समस्तं च साक्षिमात्राद्गुरोर्मुखात् ।।

विनयादिगुणानाविष्कुर्वञ्जग्राह शक्तिमान् ।। ४३ ।।

ततोथ नवमे वर्षे पित्रोः शुश्रूषणे रतम् ।।

वैश्वानरं गृहपतिं दृष्ट्वा कामचरो मुनिः ।। ४४ ।।

विश्वानरोटजं प्राप्य देवर्षिर्नारदः सुधीः ।।

पप्रच्छ कुशलं तत्र गृहीतार्घासनः क्रमात् ।। ४५ ।।

।। नारद उवाच ।। ।।

विश्वानर महाभाग शुचिष्मति शुभव्रते ।।

कुरुते युवयोर्वाक्यमयं गृहपतिः शिशुः ।। ४६ ।।

नान्यत्तीर्थं न वा देवो न गुरुर्न च सत्क्रिया ।।

विहाय पित्रोर्वचनं नान्यो धर्मः सुतस्य हि ।। ४७ ।।

न पित्रोरधिकं किंचित्त्रिलोक्यां तनयस्य हि ।।

गर्भधारणपोषाभ्यां पितुर्माता गरीयसी ।। ४८ ।।

अंभोभिरभिषिच्यस्वं जननीचरणच्युतैः ।।

प्राप्नुयात्स्वर्धुनीशुद्ध कबंधाधिकशुद्धताम् ।। ४९ ।।

संन्यस्ताखिलकर्मापि पितुर्वंद्यो हिमस्करी ।।

सर्ववंद्येन यतिना प्रसूर्वंद्या प्रयत्नतः ।। 4.1.11.५० ।।

इदमेव तपोत्युग्रमिदमेवपरं व्रतम् ।।

अयमेव परो धर्मो यत्पित्रोः परितोषणम् ।। ५१ ।।

मन्येमान्यो नाधमस्य तथान्यस्य यथा युवाम् ।।

सुखाकारैर्विनीतस्य शिशोर्गृहपतेरहम् ।। ५२ ।।

वैश्वानरसमभ्येहि ममोत्संगे निषीद भो ।।

लक्षणानि परीक्षेहं पाणिं दर्शय दक्षिणम् ।। ५३ ।।

इत्युक्तो मुनिना बालः पित्रोराज्ञामवाप्य सः ।।

प्रणम्य नारदं श्रीमान्भक्त्याप्रह्व उपाविशत् ।। ५४ ।।

ततो दृष्ट्वास्य सर्वांगं तालुजिह्वाद्विजानपि ।।

आनीय कुंकुमारक्तं सूत्रं च त्रिगुणीकृतम् ।। ५५ ।।

स्मृत्वा शिवौ गणाध्यक्षमूर्ध्वीभूतमुदङ्मुखम् ।।

मुनिः परिममौ बालमापादतलमस्तकम् ।। ५६ ।।

तिर्यगूर्ध्वं समो माने योष्टोत्तरशतांगुलः ।।

स भवेत्पृथिवीपालो बालोऽयं ते यथा द्विज ।। ५७ ।।

पंचसूक्ष्मः पंचदीर्घः सप्तरक्तः षडुन्नतः ।।

त्रिपृथुर्लघुगंभीरो द्वात्रिंशल्लक्षणस्त्विवति ।। ५८ ।।

पंचदीर्घाणि शस्यानि यथादीर्घायुषोस्य वै ।।

भुजौ नेत्रे हनुर्जानु नासाऽस्य तनयस्य ते ।। ५९ ।।

ग्रीवाजंघा मेहनैश्च त्रिभिर्ह्रस्वोयमीडितः ।।

स्वरेण सत्त्वनाभिभ्यां त्रिगंभीरः शिशुः शुभः ।। 4.1.11.६० ।।

त्वक्केशांगुलिदशनाः पर्वाण्यंगुलिजान्यपि ।।

तथास्य पंचसूक्ष्माणि दिक्पालपदभाग्यथा ।। ६१ ।।

वक्षः कुक्ष्यलकं स्कंध करं वक्त्रं षडुन्नतम् ।।

तथाऽत्र दृश्यते बाले महदैश्वर्यभाग्यथा ।। ६२ ।।

पाण्योस्तले च नेत्रांते तालुजिह्वाधरौष्ठकम् ।।

सप्तारुणं च सनखमस्मिन्राज्यसुखप्रदम् ।। ६३ ।।

ललाटकटिवक्षोभिस्त्रिविस्तीर्णो यथाह्यसौ ।।

सर्वतेजोतिरैश्वर्यं तथा प्राप्स्यति नान्यथा ।। ६४ ।।

कमठीपृष्ठकठिनावकर्मकरणौ करौ ।।

राज्यहेतू शिशोरस्य पादौ चाध्वनि कोमलौ ।।६५।।

अच्छिन्ना तर्जनीं व्याप्य तथा रेखास्य दृश्यते ।।

कनिष्ठा पृष्ठनिर्याता दीर्घायुष्यं यथार्पयेत् ।। ६६ ।।

पादौ सुमांसलौ रक्तौ समौ सूक्ष्मौ सुशौभनौ ।।

समगुल्फौ स्वेदहीनौ स्निग्धावैश्वर्यसूचकौ ।।६७।।

स्वल्पाभिः कररेखाभिरारक्ताभिः सदासुखी ।।

लिंगेन कृशह्रस्वेन राजराजो भविष्यति ।। ६८ ।।

उत्कंटासनगुल्फास्फिग्नाभिरस्यापि वर्तुला ।।

दक्षिणावर्तमरुणं महदैश्वर्यसूचिका ।। ६९।।

धारैका मूत्रयत्यस्मिन्दक्षिणावर्तिनी यदि ।।

गंधश्च मीनमधुनोर्यदि वीर्ये तदा नृपः ।। 4.1.11.७० ।।

विस्तीर्णौ मांसलौ स्निग्धौ स्फिचावस्य सुखोचितौ ।।

वामावर्तौ सुप्रलंबौ दोषौ दिग्रक्षणोचितौ ।।७१।।

श्रीवत्सवज्रचक्राब्ज मत्स्यकोदंडदंडभृत् ।।

तथास्य करगा रेखा यथा स्यात्त्रिदिवस्पतिः ।। ७२ ।।

द्वात्रिंशद्दशनश्चायं करकंबु शिरोधरः ।।

कौंचदुंदुभिहंसाभ्र स्वरः सर्वेश्वराधिकः ।। ७३ ।।

मधुपिंगलनेत्रोऽसौ नैनं श्रीस्त्यजति क्वचित् ।।

पंचरेखललाटस्तु तथा सिंहोदरः शुभः।।।७४।।

ऊर्ध्वरेखांकितपदो निःश्वसन्पद्मगंधवान् ।।

अच्छिद्रपाणिः सुनखो महालक्षणवानयम् ।। ७५ ।।

किंतु सर्वगुणोपेतं सर्वलक्षणलक्षितम् ।।

संपूर्णनिर्मलकलं पातयेद्विधुवद्विधिः ।। ७६ ।।

तस्मात्सर्वप्रयत्नेन रक्षणीयस्त्वसौ शिशुः ।।

गुणोपि दोषतां याति वक्रीभूते विधातरि ।। ७७ ।।

शंकेऽस्य द्वादशेवर्षे प्रत्यूहो विद्युदग्नितः ।।

इत्युक्त्वा नारदो धीमान्स जगाम यथागतम् ।। ७८ ।।

विश्वानरः सपत्नीकस्तच्छ्रुत्वा नारदेरितम् ।।

तदैव मन्यमानोभूद्वज्रपातं सुदारुणम् ।। ७९ ।।

हाहतोस्मीति वचसा हृदयं समताडयत् ।।

मूर्च्छामवाप महतीं पुत्रशोकसमाकुलः ।। 4.1.11.८० ।।

शुचिष्मत्यपि दुःखार्ता रुरोदातीव दुःसहम् ।।

आर्तस्वरेण हारावैरत्यंत व्याकुलेद्रिया ।। ८१ ।।

हाशिशो हागुणनिधे हा पितुर्वाक्यकारक ।।
हा कुतो मंदभाग्याया जठरे मे समागतः ।। ८२ ।।
त्वदेकपुत्रां हापुत्रकोऽत्र मां त्रायते पुरा ।।
त्वदृते त्वद्गुणोर्म्याढ्ये पतितां शोकसागरे ।। ८३ ।।
हा बाल हा विमल हा कमलायताक्ष हा लोकलोचनचकोर कुरंगलक्ष्मन् ।।
हा तात तात नयनाब्ज मयूखमालिन्हा मातुरुत्सवसहस्रसुखैकहेतो ।। ८४ ।।
हा पूर्णचंद्रमुख हा सुनखांगुलीक हा चाटुकारवचनामृतवीचिपूर ।।
दुःखैः कियद्भिरहहां गमयात्वमाप्तः किं किं कृतं गृहपते न मया त्वदास्यै ।। ८५ ।।
नोप्तो बलिर्न बत कासु च देवता सुतीर्थानि कानि न मयाध्युषितानि वत्स ।।
के के मया न नियमौषधमंत्रयंत्राः संसाधितास्तव कृते सुकृतैकलभ्य ।। ८६ ।।
संसारसागरतरे हर दुःखभारं सारं मुखेंदुमभिदर्शय सौख्यसिंधो ।।
पुन्नामतीव्रनरकार्णव वाडवाग्नेस्संजीवयस्व पितरं निजवाक्सुधोक्षैः ।। ८७ ।।
किंदेवता अहह जन्ममहोत्सवेऽस्य ज्ञात्वेति भाविमिलिता युगपत्समस्ताः ।।
एकस्थ सर्वगुण शील कलाकलाप सौंदर्यलक्षणपरीक्षणपूर्णहर्षाः ।। ८८ ।।
शंभो महेश करुणाकर शूलपाणे मृत्युंजयस्त्वमिति वेदविदो वदंति ।।
त्वद्भत्त बालतनये यदि कालकालः स्यादेवमत्र वद कस्य भवेन्न पातः ।। ८९ ।।
हा हंतहंतभवता भव तापहारी कस्माद्विधेऽत्र विदधे बहुभिः प्रयत्नैः ।।
बालो विशालगुणसिंधुमगाधमध्यं सद्रत्नसारमखिलं सविधं विधाय ।। 4.1.11.९० ।।
हा कालबालकवती किमुतेन राज्ञी त्वत्कालतां न हृतवान्नसुताननेंदुः ।।
बालेति कोमलमृणाल लतांगलीलं दंभोलिनिष्ठुरकठोरकुठारदंष्ट्रः ।। ९१ ।।
इत्थं विलप्य बहुशो नयनांबुधारासंपातजात तटिनी शतमुत्तरंगम् ।।
सा तोकशोकजनितानल तापतप्ता प्रोच्छवस्यदीर्घविपुलोष्णमहो शुशोष।। ९२ ।।
आकर्ण्य तत्करुणवत्परिदेवितानि तानि द्रुमा व्रततयः कुसुमाश्रुपातैः ।।
प्रायो रुदंति पततां विरुतार्तरावैरालोल्यमौलिमसकृत्पवनच्छलेन ।। ९३ ।।
रुण्णं तया किल तथा बहुमुक्तकंठमार्तस्वरैः प्रतिरवच्छलतो यथोच्चैः ।।
तद्दुःखतोनुरुरुदुर्गिरिकंदरास्याः सर्वा दिशः स्थगितपत्रिमृगागमा हि ।। ९४ ।।
श्रुत्वार्तनादमिति विश्वनरोपि मोहं हित्वोत्थितः किमिति किंत्विति किंकिमेतत् ।।
उच्चैर्वदन्गृहपतिः क्व समे बहिस्थः प्राणोंतरात्मनिलयः सकलेंद्रियेशः ।। ९५ ।।

अगस्त्य उवाच ।। ।।

ततो दृष्ट्वा स पितरौ बहुशोकसमावृतौ ।।

स्मित्वोवाच ततो मातस्त्रासस्त्वीदृक्कुतो हि वाम् ।।९६।।

न मांकृत वपुस्त्राणं भवच्चरणरेणुभिः ।।

कालः कलयितुं शक्तो वराकी चंचलाल्पिका ।। ९७ ।।

प्रतिज्ञां शृणुतं तातौ यदि वां तनयो ह्यहम् ।।

करिष्येहं तथा तेन विद्युन्मत्तस्त्रसिष्यति ।। ९८ ।।

मृत्युंजयं समाराध्य सर्वज्ञं सर्वदं सताम् ।।

कालकालं महाकालं कालकूटविषादिनम् ।। ९९ ।।

इति श्रुत्वा वचस्तस्य जरितौ द्विजदंपती ।।

अकालामृतवर्षौघ शांततापौ तदोचतुः ।। 4.1.11.१०० ।।

अपयोदपयोवृष्टिरदुग्धाब्धिः सुधोदयः ।।

अनिंदुः कौमुदीकांतिः कुतो नौ सुखयत्यलम् ।। १ ।।

पुनर्ब्रूहिपुनर्ब्रूहि कीदृक्कीदृक्पुनःपुनः ।।

कालः कलयितुं नालं वराकी चंचलाल्पिका ।।२।।

आवयोस्तापनाशाय महोपायस्त्वयेरितः ।।

मृत्युंजयस्य देवस्य समाराधनलक्षणः।। ।।३ ।।

तद्गच्छ शरणं तात नातः परतरं हितम् ।।

मनोरथपथातीत कारिणः कालहारिणः ।। ४ ।।

किं न श्रुतं त्वया तात श्वेतकेतु यथा पुरा ।।

पाशितं कालपाशेन ररक्ष त्रिपुरांतकः ।। ५ ।।

शिलादतनयं मृत्युग्रस्तमष्टाब्दमर्भकम् ।।

शिवो निजजनं चक्रे नंदिनं विश्वनंदिनम् ।। ६ ।।

क्षीरोदमथनोद्भूतप्रलयानलसंनिभम् ।।

पीत्वा हालाहलं घोरमरक्षद्भुवनत्रयम् ।। ७ ।।

जालंधरं महादर्पं हृतत्रैलोक्यसंपदम् ।।

चरणांगुष्ठरेखोत्थचक्रेणनिजघानयः ।। ८ ।।

य एकेषु निपातोत्थ ज्वलनैस्त्रिपुरं पुरा ।।

विधाय पत्रिणं विष्णुं ज्वालयामास धूर्जटिः ।। ९ ।।

अंधकं यस्त्रिशूलाग्रप्रोतं वर्षायुतं पुरा ।।

त्रैलोक्यैश्वर्यसंमूढं शोषयामास भानुना।। 4.1.11.११० ।।

कामं दृष्टिनिपातेन त्रैलोक्यविजयोर्जितम् ।।

निनायानंगपदवीं वीक्षमाणेष्वजादिषु ।। ११ ।।

तं ब्रह्माद्येककर्तारं मेघवाहनमच्युतम् ।।

प्रयाहि पुत्र शरणं विश्वरक्षामणिं शिवम् ।। १२ ।।

पित्रोरनुज्ञां प्राप्येति प्रणम्य चरणौ तयोः ।।

प्रदक्षिणमुपावृत्य बह्वाश्वास्य विनिर्ययौ ।। १३ ।।

स प्राप्य काशीं दुष्प्रापां ब्रह्मनारायणादिभिः ।।

महासंवर्तसंवृत्त तापाद्विश्वेशपालिताम् ।। १४ ।।

फिरस्वर्धुन्या हारयष्ट्येव राजितां कंठभूमिषु ।।

विचित्रगुणशालिन्याहारनीहारगौरया ।। १५ ।।

बहुसंसारसंतापसंतप्तजनतोद्धवम् ।।

वारयंतीं वरणया छिंदंतीमसिधारया ।। १६ ।।

यल्लभ्यते च कैवल्यं सुदृढाष्टांगयोगतः ।।

विकासयंतीं तत्सम्यक्काशिकांयांजगुर्बुधाः ।। ।। १७ ।।

संसारतापतप्ताभ्यां लोचनाभ्यां स दृष्टवान् ।।

कर्णाकर्णप्रकीर्णाभ्यां प्राग्ययौ मणिकर्णिकाम् ।। १८ ।।

तत्र स्नात्वा विधानेन दृष्ट्वा विश्वेश्वरं विभुम् ।।

त्रैलोक्यप्राणिसंत्राणकारिणं प्रणनाम ह ।। १९ ।।

आलोक्यालोक्य तल्लिंगं तुतोष हृदये बहु ।।

परमानंदकंदाख्यं स्फुटमेतन्न संशयः ।। 4.1.11.१२० ।।

अहो न मत्तो धन्योस्ति त्रैलोक्ये सचराचरे ।।

यदद्राक्षिषमद्याहं श्रीमद्विश्वेश्वरं विभुम् ।।२१।।

त्रिलोकीसारसर्वस्वं पिंडीभूतमिदं किल ।।

किं वा पीयूषपिंडोयमुद्गतः क्षीरनीरधेः ।।२२ ।।

आत्मावबोधमहसः किमसौ प्रथमांकुरः ।।

ब्रह्मानंद सुकंदो वा किमु ब्रह्मरसायनम् ।। २३ ।।

योगिहृत्पद्मनिलयं यदनाकारमुच्यते ।।

तदाकारत्वमापेदे किमिदं लिंगकैतवात् ।। २४ ।।

ब्रह्मांडभांडमथवा नाना रत्नौघपूरितम् ।।

अथवा मोक्षवृक्षस्य फलमेतन्नसंशयः ।। २५ ।।

निर्वाणलक्ष्म्याः किमथ केशपाशः सुपुष्पयुक ।।

कैवल्यमल्लीवल्ल्याः किंस्तबकः स्तावकार्थदः ।। २६ ।।

निःश्रेयसश्रियः किंवाऽऽनंदक्रीडनकंदुकः ।।

अपवर्गो दयाद्रेः किमुदियाय सुधाकरः ।। २७ ।।

संसारमोहतिमिरभिदुरःकिमसौ रविः ।।

किमु कल्याणरमणीरम्यशृंगारदर्पणः ।। २८ ।।

आज्ञातं नभवेदन्यत्सर्वेषां देहधारिणाम् ।।

अनेककर्मबीजानां बीजपूरोऽयमद्भुतः ।।२९।।

विश्वेषां विश्वबीजानां कर्माख्यानां लयो यतः ।।

अस्मिन्निर्वाणदे लिंगे विश्वलिंगमिदं ततः ।। 4.1.11.१३० ।।

मम भाग्योदयेनैव नारदेन महर्षिणा ।।

तदागत्य तथोक्तं यत्कृतकृत्योस्म्यहं ततः ।। ३१ ।।

इत्यानंदामृतरसैर्विधायसहि पारणम् ।।

ततःशुभेऽह्नि संस्थाप्य लिंगं सर्वहितप्रदम् ।। ३२ ।।

जग्राह नियमान्घोरान्दुष्करानकृतात्मनाम् ।।

अष्टोत्तरशतैः कुंभैः पूर्णैर्गंगामृतोद्रवैः ।। ३३ ।।

संस्नाप्य वाससा पूतैः पूतात्मा प्रत्यहं शिवम् ।।

नीलोत्पलमयीं मालां समर्पयति सोऽन्वहम् ।। ३४ ।।

अष्टाधिकसहस्रैस्तु सुमनोभिर्विनिर्मिताम् ।।

सपक्षार्धेन षण्मासं कंदमूलफलाशनः।।३५।।

शीर्णपर्णाशनः पक्षे त्वाषण्मासं बभूव सः ।।

षण्मासं वायुभक्षोभूत्षण्मासं जलबिंदुभुक् ।।३६।।

एवं वर्षद्वयं तस्य व्यतिक्रांतं तथा सतः ।।

जन्मतो द्वादशे वर्षे तद्वचो नारदेरितम् ।। ३७ ।।

सत्यं करिष्यन्निवतमभ्यगात्कुलिशायुधः ।।

उवाच च वरं ब्रूहि दद्मि तन्मनसि स्थितम् ।।३८।।

अहं शतक्रतुर्विप्र प्रसन्नोस्मि शुभव्रतैः ।।

इत्याकर्ण्य महेंद्रस्य वाक्यं मुनिकुमारकः।।३९।।

उवाच मधुरं धीरः कीरवन्मधुराक्षरम्।।

मघवन्वृत्रशत्रो त्वां जाने कुलिशपाणिनम् ।। 4.1.11.१४० ।।

नाहं वृणे वरं त्वत्तः शंकरो वरदोस्ति मे ।। ४१ ।।

इंद्र उवाच ।।

न मत्तः शंकरोस्त्वन्यो देवदेवोस्म्यहं शिशो ।।

विहाय बालिशत्वं त्वं वरयाचस्व मां वरम् ।। ४२ ।।

ब्राह्मण उवाच ।।

गच्छाहल्यापतेऽसाधो गोत्रारे पाकशासन ।।

न प्रार्थये पशुपतेरन्यदेवांतरं स्फुटम् ।।४३।।

इति तस्य वचः श्रुत्वा क्रोधसंरक्तलोचनः ।।

उद्यम्य कुलिशं घोरं भीषयामास बालकम् ।।४४।।

स दृष्ट्वा बालको वज्रं विद्युज्ज्वालाशताकुलम् ।।

स्मरन्नारदवाक्यं च मुमूर्च्छ भयविह्वलः ।। ४५ ।।

अथ गौरीपतिः शंभुराविरासीत्तमोनुदः ।।

उत्तिष्ठोत्तिष्ठ भद्रं ते स्पर्शैः संजीवयन्निव ।। ४६ ।।

उन्मील्य नेत्रकमले सुप्ते इव दिवाक्षये ।।

अपश्यदग्रे चोत्थाय शंभुमर्कशताधिकम् ।। ४७ ।।

भाले लोचनमालोक्य कंठे कालं वृषध्वजम् ।।

वामांगसंनिविष्टाद्रितनयं चं द्रशेखरम् ।। ४८ ।।

कपर्देन विराजंतं त्रिशूलाजगवायुधम् ।।

स्फुरत्कर्पूरगौरांगं परिणद्ध गजाजिनम् ।।४९।।

परिज्ञाय महादेवं गुरुवाक्यत आगमात् ।।

हर्ष बाष्पाकुलः सन्न कठो रोमांचकंचुकः ।। 4.1.11.१५० ।।

क्षणंस्थगितवत्तस्थौ चित्रकृत्रिमपुत्रकः ।।

यथातथा सुसंपन्नो विस्मृत्यात्मानमेव च ।। ५१ ।।

न स्तोतुं न नमस्कर्तुं किंचिद्विज्ञसुमेव च ।।

यदासनशशाकालं तदा स्मित्वाऽऽह शंकरः ।। ५२ ।।

ईश्वर उवाच ।।

शिशो गृहपते शक्राद्वज्रोद्यतपरादहो ।।

ज्ञातो भीतोसि मा भैषीर्जिज्ञासा ते कृता मया ।। ५३ ।।

मम भक्तस्य नो शक्रो न वज्रं नांतकोपि वा ।।

प्रभवेदिंद्ररूपेण मयैव त्वं हि भाषितः ।। ५४ ।।

वरं ददामि ते भद्र त्वमग्निपदभाग्भव ।।

सर्वेषामेव देवानां वदनं त्वं भविष्यसि ।।५५।।

सर्वेषामेव भूतानां त्वमग्नेंऽतश्चरो भव ।।

धर्मराजेंद्रयोर्मध्ये दिगीशो राज्यमाप्नुहि ।।५६ ।।

त्वयेदं स्थापितं लिंगं तव नाम्ना भविष्यति ।।

अग्नीश्वरं इति ख्यातं सर्वतेजोभिबृंहणम् ।। ५७ ।।

अग्नीश्वरस्य भक्तानां न भयं विद्युदग्निजम् ।।

अग्निमांद्य भयं नैव नाकालमरणं क्वचित् ।। ५८ ।।

अग्नीश्वरं समभ्यर्च्य काश्यां सर्वसमृद्धिदम् ।।

अन्यत्रापि मृतो दैवादग्निलोके महीयते ।।५९।।

ततः काशीं पुनः प्राप्य कल्पांते मोक्षमाप्नुयात् ।।

वीरेश्वरस्य पूर्वेण गंगायाः पश्चिमे तटे ।। 4.1.11.१६० ।।

अग्नीश्वरं समाराध्य वह्निलोके वसेन्नरः ।।

पितृभ्यां स्वजनैः सार्धं मित्रबंधुसमायुतः ।। ६१ ।।

विमानमिदमारुह्य प्रयाह्येव दिशःपते ।।

इत्युक्त्वानीय तद्बंधून् पित्रोश्च परिपश्यतोः ।।

दिक्पतित्वेऽभिषिच्याग्निं तत्र लिंगे शिवोविशत् ।। ६२ ।।

गणावूचतुः ।। ।।

इत्थमग्निस्वरूपं ते शिवशर्मन्प्रवर्णितम् ।।

किमन्यच्छ्रोतुकामोसि कथयावस्तदीरय ।। १६३ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे वह्निलोकवर्णनं नामैकादशोऽध्यायः ।। ११ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१२



शिवशर्मोवाच ।।

नैर्ऋतादीन् क्रमाल्लोकानाख्यातं पुरुषोत्तमौ ।।

पुरुषोत्तमपादाब्जपरागोद्धूसरालकौ ।। १ ।।

गणावूचतुः ।।

आकर्णय महाभाग संयमिन्याः पुरीं पराम् ।।

दिक्पतेर्निर्ऋतस्यासौ पुण्यापुण्यजनोषिता ।। २ ।।

राक्षसानिवसंत्यस्यामपरद्रोहिणः सदा ।।

जातिमात्रेण रक्षांसि वृत्तैः पुण्यजना इमे ।। ३ ।।

स्मृत्युक्तश्रुतिवर्त्मानो जातवर्णावरेष्वपि ।।

नाद्रियंतेऽन्नपानानामस्मृत्युक्तं कदाचन ।। ४ ।।

परदार परद्रव्य परद्रोहपराङ्मुखाः ।।

जाताजातौ निकृष्टायामपिपुण्यानुसारिणः ।। ५ ।।

द्विजातिभक्त्युत्पन्नार्थैरात्मानं पोषयंति ये ।।

सदा संकुचितांगाश्च द्विजसंभाषणादिषु ।। ६ ।।

आहूता वस्त्रवदना वदंति द्विजसंनिधौ ।।

जयजीवभगोनाथ स्वामिन्निति हि वादिनः ।। ७ ।।

तीर्थस्नानपरानित्यं नित्यं देवपरायणाः ।।

द्विजेषु नित्यं प्रणताः स्वनामाख्यानपूर्वकम् ।। ८ ।।

दम दान दया क्षांति शौचेंद्रिय विनिग्रहाः ।।

अस्तेय सत्याहिंसाश्च सर्वेषां धर्महेतवः ।। ९ ।।

आवश्येषु सदोद्युक्ता ये जाता यत्रकुत्रचित् ।।

सर्वभोगसमृद्धास्ते वसंत्यत्र पुरोत्तमे ।।4.1.12.१०।।

म्लेच्छा अपि सुतीर्थेषु ये मृतानात्मघातकाः ।।

विहाय काशीं निर्वाण विश्राणांतेऽत्र भोगिनः ।। ।। ११ ।।

अंधं तमो विशेयुस्ते ये चैवात्महनो जनाः ।।

भुक्त्वा निरयसाहस्रं ते च स्युर्ग्रामसूकराः ।। १२ ।।
आत्मघातो न कर्तव्यस्तस्मात्क्वापि विपश्चिता ।।
इहापि च परत्रापि न शुभान्यात्मघातिनाम् ।। १३ ।।
यथेष्टमरणं केचिदाहुस्तत्त्वावबोधकाः ।।
प्रयागे सर्वतीर्थानां राज्ञिसर्वाभिलाषदे ।। १४ ।।
अंत्यजा अपि ये केचिद्दयाधर्मानुसारिणः ।।
परोपकृतिनिष्ठास्ते वसंत्यत्र तु सत्तमाः ।। १५ ।।
अस्य स्वरूपं वक्ष्यावो दिक्पतेः क्षणतः शृणु ।।
मध्ये विंध्याटवि पुरा पक्कणस्थजनाग्रणीः ।। १५ ।।
पल्लीपतिरभूदुग्रः पिंगाक्ष इति विश्रुतः ।।
निर्विंध्यायास्तटे शूरः क्रूरकर्मपराङ्मुखः ।। १७ ।।
घातयेद्दूरसंस्थोपि यः पांथपरिपंथिनः ।।
व्याघ्रादीन् दुष्टसत्त्वांश्च स हिनस्ति प्रयत्नतः ।। १८ ।।
जीवेन्मृगयु धर्मेण तत्रापि करुणापरः ।।
न विश्वस्तान्पक्षिमृगान्न सुप्तान्न व्यवायिनः ।। १९ ।।
न तोयगृध्नून्न शिशून्नांतर्वर्त्नित्वलक्षणान् ।।
स घातयति धर्मज्ञो जातिधर्मपराङ्मुखः ।। 4.1.12.२० ।।
श्रमातुरेभ्यः पांथेभ्यः स विश्रामं प्रयच्छति ।।
हरेत्क्षुधा क्षुधार्तानामुपानद्धोऽनुपानहे ।। २१ ।।
मृगत्त्वचोतिमृदुला विवस्त्रेभ्यातिसर्जति ।।
अनुव्रजति कांतारे प्रांतरे पथिकान्पथि ।। २२ ।।
न जिघृक्षति तेभ्योर्थमभयं चेति यच्छति ।।
आविंध्याटवि मे नाम ग्राह्यं दुष्टभयापहम् ।। २३ ।।
नित्यं कार्पटिकान्सर्वान् स पुत्रेण प्रपश्यति ।।
तेपि च प्रतितीर्थं हि तमाशीर्वादयं ति वै ।।२४।।
इति तिष्ठति पिंगाक्षे साटवी नगरायिता ।।
अध्वनीने ऽध्वगान्कोपि न रुणद्धिससाध्वसः ।।२५।।
कदाचित्तत्पितृव्येण समीप ग्रामवासिना ।।

श्रुतः कार्पटिकानां हि सार्थः सार्थो महास्वनः ।। २०५ ।।

लुब्धकस्तद्वने लुब्धः क्षुद्रस्तन्निधनोद्यतः ।।

स रुरोध तमध्वानमग्रे गत्वाऽतिगूढवत् ।। २७ ।।

तदा युप्यस्यशेषेण पिंगाक्षो मृगयां गतः ।।

तस्मिन्नरण्ये तन्मार्गं निकषाध्युषितो निशि ।। २८ ।।

परप्राणद्रुहां पुंसां न सिद्ध्येयुर्मनोरथाः ।।

विश्वं कुशलितेनैतद्विश्वेशपरिरक्षितम् ।। २९ ।।

न चिंतयेदनिष्टानि तस्मात्कृष्टिः कदाचन ।।

विधिदृष्टं यतो भावि कलुषंभावि केवलम् ।।4.1.12.३०।।

तस्मादात्मसुखंप्रेप्सु रिष्टानिष्टं न चिंतयेत् ।।

चिंतयेच्चेत्तदाचिंत्यो मोक्षोपायो न चेतरः ।।३१।।

व्युष्टायामथयामिन्यामभूत्कोलाहलो महान् ।।

घातयध्वं पातयध्वं नग्नयध्वं द्रुतं भटाः ।।३२।।

मा मारयध्वं त्रायध्वं भटाः कार्पटिका वयम् ।।

अनायासं लुंठयध्वं नयध्वं च यदस्ति नः ।। ३३ ।।

वयं पांथा अनाथाः स्मो विश्वनाथपरायणाः ।।

सनाथास्ते न दूरं सनाथतां पथिकोऽपरः ।। ३४ ।।

वयं पिंगाक्षविश्वासादस्मिन्मार्गेऽकुतोभयाः ।।

यातायातं सदा कुर्मः स च दूर इतो वनात् ।।३५।।

इति श्रुत्वाऽथ पिंगाक्षो भटः कार्पटिकेरितम ।।

दूरान्मा भैष्ट माभैष्ट ब्रुवन्निति समागतः ।। ३६ ।।

तत्कर्मसूत्रैराकृष्टो भिल्लःकार्पटिकप्रियः ।।

तूर्णं तदायुष्यमिव तत्रोपस्थितवान् क्षणात् ।। ३७ ।।

कोयंकोयं दुराचारः पिंगाक्षे मयि जीवति ।।

उल्लुलुंठयिषुः पांथान्प्राणलिंगसमान्मम ।। ३८ ।।

इति तद्वाक्यमाकर्ण्य ताराक्षस्तत्पितृव्यकः ।।

धनलोभेन पिंगाक्षे पापं पापो व्यचिंतयत् ।।३९।।

कुलधर्मं व्यपास्यैष वर्तते कुलपांसनः ।।

चिरं चिंतितमद्यामुं घातयिष्याम्यसंशयम् ।। 4.1.12.४० ।।

विचार्येति स दुष्टात्मा भृत्यानाज्ञापयत्क्रुधा ।।

आदावेनं घातयंतु ततः कार्पटिकानिमान् ।। ४१ ।।

ततो ऽयुध्यन्दुराचारास्तेनैकेन च तेऽखिलाः ।।

यथाकथंचित्ताननयत्स च स्वावसथांतिकम् ।। ४२ ।।

आच्छिन्नं हि धनुर्बाणं छिन्नं सन्नहनं शरैः ।।

असूदयिष्यमेतांस्तदभविष्यं यदीश्वरः ।। ४३ ।।

अभिलप्यन्निति प्राणानत्याक्षीत्स परार्थतः ।।

तेपि कार्पटिकाः प्राप्तास्तत्पल्लीं गतसाध्वसाः ।। ४४ ।।

या मतिस्त्वंतकाले स्याद्गतिस्तदनुरूपतः ।।

दिगीशत्वमतः प्राप्तो निर्ऋत्यां नैर्ऋतेश्वरः ।। ४५ ।।

इत्थमस्य स्वरूपं ते आवाभ्यां समुदीरितम् ।।

एतस्योत्तरतो लोको वरुणस्यायमद्भुतः ।।४६।।

कूपवापीतडागानां कर्तारो निर्मलैर्धनैः ।।

इह लोके महीयंते वारुणे वरुणप्रभाः ।।४७।।

निर्जले जलदातारः परसंतापहारिणः ।।

अर्थिभ्यो ये प्रयच्छंति चित्रच्छत्रकमंडलून् ।।४८।।

पानीयशालिकाः कुर्युर्नानोपस्करसंयुताः ।।

दद्युर्धर्मघटांश्चापि सुगंधोदकपूरितान् ।।४९।।

अश्वत्थसेकं ये कुर्युः पथि पादपरोपकाः ।।

विश्रामशालाकर्तारः श्रांतसंतापनोदकाः ।।4.1.12.५०।।

ग्रीष्मोष्प्रहंति मायूरपिच्छादि रचितान्यपि ।।

चित्राणि तालवृंतानि वितरंति तपागमे ।।५१।।

रसवंति सुगंधीनि हिमवंति तपर्तुषु ।।

विश्राणयंति वा तृप्ति पानकानि प्रयत्नतः ।। ५२ ।।

इक्षुक्षेत्राणि संकल्प्य ब्राह्मणेभ्यो ददत्यपि ।।

तथा नानाप्रकारांश्च विकारानैक्षवान्बहून् ।। ५३ ।।

गोरसानां प्रदातारस्तथा गोमहिषीप्रदाः ।।

धारामंडपकर्तारश्छायामंडपकारिणः ।।५४।।

देवालयेषु ये दद्युर्बहुधारागलंतिकाः ।।

तीर्थे वा करहर्तारस्तीर्थमार्गावनेजका. ।। ५५ ।।

अभयं ये प्रयच्छंति भयार्तोद्यत पाणयः ।।

निर्भया वारुणे लोके ते वसंति लसंति च ।। ५६ ।।

विपाशयंति ये पुण्या दुर्वृतैः कंठपाशितान् ।।

ते पाशपाणे लोकेस्मिन्निवसंत्यकुतोभयाः ।। ५७ ।।

नौकाद्युपायैर्न द्यादौ पांथान्ये तारयंत्यपि ।।

तारयंत्यपि दुःखाब्धेस्तत्र नागरिका द्विज ।।५८ ।।

घट्टान्पुण्यतटिन्यादेर्बंधयंति शिलादिभिः ।।

तोयार्थिसुखसिद्ध्यर्थं ये नरास्तेत्र भोगिनः ।। ५९ ।।

वितर्पयंति ये पुण्यास्तृषिताञ्शीतलैर्जलैः ।।

तेऽत्र वै वारुणे लोके सुखसंततिभागिनः ।। 4.1.12.६० ।।

जलाशयानां सर्वेषामयमेकतमः पतिः ।।

प्रचेता यादसांनाथः साक्षी सर्वेषुकर्मसु ।। ६१ ।।

अस्योत्पत्तिं शृणु पतेर्वरुणस्यमहात्मनः ।।

आसीन्मुनिरमेयात्मा कर्दमस्य प्रजापतेः ।। ६२।।

शुचिष्मानिति विख्यातस्तनयो विनयोचितः ।।

स्थैर्य माधुर्य धैर्याद्यैर्गुणैरुपचितोहितः ।। ६३ ।।

अच्छोदे सरसि स्नातुं स गतो बालकैः सह ।।

जलक्रीडनसंसक्तं शिशुमारो हरच्च तम् ।।६४।।

ततस्तस्मिन्मुनिसुते हृतेऽत्याहितशंसिभिः ।।

तैः समागत्य शिशुभिः कथितं तत्पितुः पुरः ।। ६५ ।।

हरार्चनोपविष्टस्य समाधौ निश्चलात्मनः ।।

श्रुतबालविपत्तेश्च चचाल न मनोहरात् ।। ६६ ।।

अधिकं शीलयामास स सर्वज्ञं त्रिलोचनम् ।।

पश्यञ्शंभोः समीपे स भुवनानि चतुर्दश ।। ६७ ।।

नाना भूतानि भूतानि ब्रह्मांडांतर्गतानि च ।।

चंद्रसूर्यर्क्षताराश्च पर्वतान्सरितो द्रुमान् ।। ६८ ।।

समुद्रानंतरीयाणि ह्यरण्यानीस्सरांसि च ।।

नाना देवनिकायांश्च बह्वीर्दिविषदां पुरीः ।। ६९ ।।

वापीकूपतडागानि कुल्याः पुष्करिणीर्बहु ।।

एकस्मिन्क्वापि सरसि जलक्रीडापरायणान् ।। 4.1.12.७० ।।

बहून्मुनिकुमारांश्च मज्जनोन्मज्जनादिभिः ।।

करयंत्रविनिर्मुक्ततोयधाराभिषेचनैः ।। ७१ ।।

करताडितपानीयशब्ददिङ्मुखनादिभिः ।।

जलखेलनकैरित्थं संसक्तान्बहुबालकान् ।।७२।।

तेषां मध्ये ददर्शाथ समाधिस्थः स कर्दमः ।।

स्वं शिशुं शिशुमारेण नीयमानं सुविह्वलम् ।। ७३ ।।

कयाचिज्जलदेव्याथ तस्माच्चक्रूरयादसः ।।

प्रसह्य नीत्वोदधये दृष्टवांस्तं समर्पितम् ।। ७४ ।।

निर्भर्त्स्र्य सरितांनाथं केनचिद्रुद्ररूपिणा ।।

त्रिशूलपाणिनेत्युक्तं क्रोधताम्राननेनच ।। ७५ ।।

कुतो जलानामधिप शिवभक्तस्य बालकः ।।

प्रजापतेः कर्दमस्य महाभागस्य धीमतः ।। ७६।।

अज्ञात्वा शिवसामर्थ्यं भवताचिरमासितः ।।

भयत्रस्तेन तद्वाक्यश्रवणात्तमुदन्वता ।।७७।।

बालं रत्नैरलंकृत्य बद्ध्वा तं शिशुमारकम् ।।

समर्पितं समानीय शंभुपादाब्जसंनिधौ ।। ।। ७८ ।।

नत्वा विज्ञापयत्तं च नापराध्याम्यहं विभो ।।

अनाथनाथविश्वेश भक्तापत्तिविनाशन ।। ७९ ।।

भक्तकल्पतरो शंभोऽनेनायं दुष्टयादसा ।।

अनायिन मया नाथ भवद्भक्तजनार्भकः ।। 4.1.12.८० ।।

गणेन तेन विज्ञाय शंभोरथ मनोगतम् ।।

पाशेन बद्ध्वा तद्यादः शिशुहस्ते समर्पितम् ।। ८१ ।।

गृहाणेमं स्वतनयं पार्षदे शंकराज्ञया ।।

याहि स्वभवनं वत्स ब्रुवतीति स कर्दमः ।। ८२।।
समाधिसमये सर्वमिति शृण्वन्नुदारधीः।।
उन्मील्य नयने यावत्प्रणिधानं विसृज्य च।।८३।।
संपश्यते शिशुं तावत्पुरतः समवैक्षत ।।
गृहीतशिशुमारं च पार्श्वेऽलंकृतकर्णिकम् ।। ८४ ।।
तोयार्द्रकाकपक्षाग्रं कषायनयनांचलम् ।।
किंचिद्विरूक्षं त्वक्क्षोभं संभ्रमापन्नमानसम् ।। ८५ ।।
कृतप्रणाममालिंग्य जिघ्रंस्तन्मुखपंकजम् ।।
पुनर्जातमिवामंस्त पश्यंश्चापि मुहुर्मुहुः ।। ८६ ।।
शतानिपंचवर्षाणि प्रणिधानस्थितस्य हि ।।
कर्दमस्य व्यतीतानि शंभुमर्चयतस्तदा ।। ८७ ।।
कर्दमोपि च तत्कालमज्ञासीत्क्षणसंगतम् ।।
यतो न प्रभवेत्कालो महाकालस्य संनिधौ ।। ८८ ।।
ततस्तं तनयः पृष्ट्वा पितरं प्रणिपत्य च ।।
जगाम तूर्णं तपसे श्रीमद्वाराणसीं पुरीम् ।। ८९ ।।
तत्र तस्वा तपो घोरं लिंगं संस्थाप्य शांभवम् ।।
पंचवर्षसहस्राणि स्थितः पाषाणनिश्चलः ।। 4.1.12.९० ।।
आविरासीन्महादेवस्तुष्टस्तत्तपसा ततः ।।
उवाच कार्दमे ब्रूहि कं ददामि वरोत्तमम् ।। ९१ ।।
कार्दमिरुवाच ।। ।।
यदि नाथ प्रसन्नोसि भक्तानामनुकंपक ।।
सर्वासामाधिपत्यं मे देह्यपां यादसामपि ।। ९२ ।।
इति श्रुत्वा महेशानः सर्वचिंतितदः प्रभुः ।।
अभ्यषिंचत तं तत्र वारुणे परमे पदे ।। ९३ ।।
रत्नानामब्धिजातानामब्धीनां सरितामपि ।।
सरसां पल्वलानां च वाप्यंबु स्रोतसा पुनः ।। ९४ ।।
जलाशयानां सर्वेषां प्रतीच्याश्चापि वैदिशः ।।
अधीश्वरः पाशपाणिर्भव सर्वामरप्रियः ।। ९५ ।।

ददामि वरमन्यं च सर्वेषां हितकारकम् ।।
त्वयैतत्स्थापितं लिंगं तव नाम्ना भविष्यति ।। ९६ ।।
वरुणेशमिति ख्यातं वाराणस्यां सुसिद्धिदम् ।।
मणिकर्णेश लिंगस्य नैर्ऋत्यां दिशि संस्थितम् ।। ९७ ।।
आराधितं सदा पुंसां सर्वजाड्यविनाशकृत् ।।
वरुणेशस्य ये भक्ता न तेषामब्भयं क्वचित् ।। ९८ ।।
न संतापभयं तेषां नापायमरणं क्वचित् ।।
जलोदरभयं नैव न भयं वै तृषः क्वचित् ।। ९९ ।।
नीरसान्यन्नपानानि वरुणेश्वर संस्मृतेः ।।
सरसानि भविष्यंति नात्र कार्या विचारणा ।। 4.1.12.१०० ।।
इत्युक्त्वांतर्दधे शंभुर्वरुणोपि स्वबंधुभिः ।।
इमं लोकमलंकुर्वंस्तदारभ्य स्थितो द्विजः ।। १ ।।
इदं वरुणलोकस्य स्वरूपं ते निरूपितम् ।।
यच्छ्रुत्वा न नरः क्वापि दुरपायैः प्रबाध्यते ।। १०२ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे निर्ऋतिवरुणलोकवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१३



गणावूचतुः ।। ।।

इमां गंधवतीं पुण्यां पुरीं वायोर्विलोकय ।।

वारुण्या उत्तरे भागे महाभाग्यनिधे द्विज ।। १ ।।

अस्यां प्रभंजनो नाम जगत्प्राणोदिगीश्वरः ।।

आराध्य श्रीमहादेवं दिक्पालत्वमवाप्तवान् ।। २ ।।

पुरा कश्यपदायादः पूतात्मेति च विश्रुतः ।।

धूर्जटे राजधान्यां स चचार विपुलं तपः ।। ३ ।।

वाराणस्यां महाभागो वर्षाणामयुतं शतम् ।।

स्थापयित्वा महालिंगं पावनं पवनेश्वरम् ।। ४ ।।

यस्य दर्शनमात्रेण पूतात्मा जायते नरः ।।

पापकंचुकमुत्सृज्य स वसेत्पावने पुरे ।। ५ ।।

ततस्तस्योग्रतपसा तपसाफलदः शिवः ।।

आविरासीत्ततो लिंगाज्ज्योतीरूपो महेश्वरः ।। ५ ।।

उवाच च प्रसन्नात्मा करुणामृतसागरः ।।

उत्तिष्ठोत्तिष्ठ पूतात्मन्वरं वरय सुव्रत ।। ७ ।।

अनेन तपसोग्रेण लिंगस्याराधनेन च ।।

तवादेयं न पूतात्मंस्त्रैलोक्ये सचराचरे ।।८।।

।। पूतात्मोवाच ।।

देवदेवमहादेव देवानामभयप्रद ।।

ब्रह्मनारायणेंद्रादि सर्वदेवपदप्रद ।। ९ ।।

वेदास्त्वां न च विंदंति किमात्मक इति प्रभो।।

प्राप्ताः शतपथत्वं च नेतिनेतीतिवादिनः ।।4.1.13.१०।।

ब्रह्मविष्ण्वोपि गिरां गोचरो न च वाक्पतेः।।

प्रमथेशं कथं स्तोतुं मादृशः प्रभवेत्प्रभो ।।११।।

प्रसह्य प्रमिमीतेश भक्तिर्मास्तुतिकर्मणि ।।

करोमि किं जगन्नाथ न वश्यानींद्रियाणि मे ।। १२ ।।

विश्वं त्वं नास्ति वै भेदस्त्वमेकः सर्वगो यतः ।।

स्तुत्यं स्तोता स्तुतिस्त्वं च सगुणो निर्गुणो भवान् ।।१३।।

सर्गात्पुरा भवानेको रूपनाम विवर्जितः ।।

योगिनोपि न ते तत्त्वं विंदंति परमार्थतः ।। १४ ।।

यदैकलो न शक्नोषि रंतुं स्वैरचर प्रभो ।।

तदिच्छा तवयोत्पन्ना सेव्या शक्तिरभूत्तव ।। १५ ।।

त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः ।।

त्वं ज्ञानरूपो भगवान्स्वेच्छा शक्तिस्वरूपिणी ।। १६ ।।

उभाभ्यां शिवशक्तिभ्या युवाभ्यां निजलीलया ।।

उत्पादिता क्रियाशक्तिस्ततः सर्वमिदं जगत् ।। १७ ।।

ज्ञानशक्तिर्भवानीश इच्छाशक्तिरुमा स्मृता ।।

क्रियाशक्तिरिदं विश्वमस्य त्वं कारणं ततः ।। १८ ।।

दक्षिणांगं तव विधिर्वामांगं तव चाच्युतः ।।

चंद्रसूर्याग्निनेत्रस्त्वं त्वन्निःश्वासः श्रुतित्रयम् ।। १९ ।।

त्वत्स्वेदादंबुनिधयस्तव श्रोत्रं समीरणः ।।

बाहवस्ते दशदिशो मुखं ते ब्राह्मणाः स्मृताः ।। 4.1.13.२० ।।

राजन्यवर्यास्ते बाहु वैश्या ऊरुसमुद्भवाः ।।

पद्भ्यां शूद्रस्तवेशान केशास्ते जलदाः प्रभो ।। २१ ।।

त्वं पुं प्रकृतिरूपेण ब्रह्मांडमसृजः पुरा।।

मध्ये ब्रह्मांडमखिलं विश्वमेतच्चराचरम्।। २२ ।।

अतस्त्वत्तो न मन्येऽहं किंचिद्भिन्नं जगन्मय ।।

त्वयि सर्वाणि भूतानि सर्वभूतमयो भवान् ।। २३ ।।

नमस्तुभ्यं नमस्तुभ्यं नमस्तुऽभ्यं नमोनमः ।।

अयमेव वरो नाथ त्वयि मेऽस्तु स्थिरा मतिः ।। २४ ।।

इत्युक्तवति देवेश स्तस्मिन्पूतात्मनि प्रभुः ।।

स्वमूर्तित्वं समारोप्य दिक्पालपदमादधे ।। २५ ।।

सर्वगो मम रूपेण सर्वतत्त्वावबोधकः ।।

सर्वेषामायुषोरूपं भवानेव भविष्यति ।। २६ ।।

तव लिंगमिदं दिव्यं ये द्रक्ष्यंतीह मानवाः ।।

सर्वभोगसमृद्धास्ते त्वल्लोकसुखभागिनः ।। २७ ।।

पवमानेश्वरं लिंगं मध्ये जन्मसकृन्नरः ।।

यथोक्तविधिना पूज्य सुगंधस्नपनादिभिः ।। २८ ।।

सुगंधचंदनैः पुष्पैर्मम लोके महीयते ।।

ज्येष्ठेशात्पश्चिमेभागे वायुकुंडोत्तरेण तु ।। २९ ।।

पावमानं समाराध्य पूतो भवति तत्क्षणात् ।।

इति दत्त्वा वरान्देवस्तस्मिँल्लिंगे लयं ययौ ।।4.1.13.३०।।

गणावूचतुः ।।

इति गंधवती पुर्याः स्वरूपं ते निरूपितम् ।।

तस्याः प्राच्यां कुबेरस्य श्रीमत्येषालकापुरी ।। ३१ ।।

शंभोः सखित्वमापेदे नाथोस्या भक्तियोगतः ।।

निधीनां पद्ममुख्यानां दाता भोक्ता हरार्चनात् ।। ३२ ।।

।। शिवशर्मोवाच ।। ।।

कोसौ कस्य पुनः कीदृग्भक्तिरस्य सदाशिवे ।।

यया सखित्वमापन्नो देवदेवस्यधूर्जटेः ।। ३३ ।।

इति श्रोतुं मम मनः श्रुतिगोचरतां गतम् ।।

युवयोर्वाक्सुधास्वाद मेदुरोदरमंथरम् ।। ३४ ।।

गणावूचतुः ।। ।।

शिवशर्मन्महाप्राज्ञ परिशुद्धेंद्रियेश्वर ।।

सुतीर्थक्षालिताशेषजन्मजातमहामल ।। ३५ ।।

सुहृदि प्रेमसंपन्ने त्वय्यनुद्यं न किंचन ।।

साधुभिः सह संवादः सर्वश्रेयोऽभिवृद्धये ।। ३६ ।।

आसीत्कांपिल्यनगरे सोमयाजिकुलोद्भवः ।।

दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदः ।। ३७ ।।

वेदवेदांगवेदार्थान्वेदोक्ताचारचंचुरः ।।

राजमान्यो बहुधनो वदान्यः कीर्तिभाजनम् ।। ३८ ।।

अग्निशुश्रूषणरतो वेदाध्ययनतत्परः ।।

तस्य पुत्रो गुणनिधिश्चंद्रबिंबसमाकृतिः ।। ३९ ।।

कृतोपनयनः सोथ विद्यां जग्राह भूरिशः ।।

अथ पित्रानभिज्ञातो द्यूतकर्मरतोऽभवत् ।। 4.1.13.४० ।।

आदायादाय बहुशो धनं मातुः सकाशतः ।।

ददाति द्यूतकारेभ्यो मैत्री तैश्च चकार सः ।। ४१ ।।

संत्यक्त ब्राह्मणाचारः संध्यास्नानपराङ्मुखः ।।

निंदको वेदशास्त्राणां देवब्राह्मणनिंदकः ।।।४२।।।

स्मृत्याचारविहीनस्तु गीतवाद्यविनोदभाक् ।।

नटपाखंडिभंडैश्च बद्धप्रेमपरंपरः ।। ४३ ।।

प्रेरितोपि जनन्या स न याति पितुरंतिकम् ।।

गृहकार्यांतरव्यग्रो दीक्षितो दीक्षितायिनीम् ।। ४४ ।।

यदा यदैव तां पृच्छेदयेगुणनिधिः सुतः ।।

न दृश्यते मया गेहे क्व याति विदधाति किम् ।। ४५ ।।

तदा तदेति सा ब्रूयादिदानीं स बहिर्गतः ।।

स्नात्वा समर्च्य वै देवानेतावंतमनेहसम् ।। ४६ ।।

अधीत्याध्ययनार्थं स द्वित्रैर्मित्रैः समं ययौ ।।

एकपुत्रेति तन्माता प्रतारयति दीक्षितम् ।। ४७ ।।

न तत्कर्म च तद्वृत्तं किंचिद्वेत्ति स दीक्षितः ।।

स च केशांतकर्मास्य कृत्वा वर्षेऽथ षोडशे ।। ४८ ।।

गृह्योक्तेन विधानेन पाणिग्राहमकारयत् ।।

प्रत्यहं तस्य जननी सुतं गुणनिधिं मृदु ।। ४९ ।।

शास्ति स्नेहार्द्रहृदया क्रोधनस्ते पितेत्यलम् ।।

यदि ज्ञास्यति ते वृत्तं त्वां च मां ताडयिष्यति ।।4.1.13.५०।।

आच्छादयामि ते नित्यं पितुरग्रे कुचेष्टितम् ।।

लोकमान्योस्ति ते तातः सदाचारैर्न वै धनैः ।। ५१ ।।

ब्राह्मणानां धनं पुत्र सद्विद्या साधुसंगमः ।।

सच्छ्रोत्रियास्त्वनूचाना दीक्षिताः सोमयाजिनः ।। ।। ५२ ।।

इति रूढिमिह प्राप्तास्तव पूर्वपितामहाः ।।
त्यक्त्वा दुर्वृत्तसंसर्गं साधुसंगरतो भव ।। ५३ ।।
सद्विद्या सुमनो धेहि ब्राह्मणाचारमाचर ।।
तवानुरूपारूपेण वयसाकुलशीलतः ।। ५४ ।।
ऊनविंशतिकोऽसि त्वमेषा षोडशवार्षिकी ।।
तव पत्नी गुणनिधे साध्वी मधुरभाषिणी ।। ५५ ।।
एतां संवृणु सद्वृत्तां पितृभक्तियुता भव ।।
श्वशुरोपि हि ते मान्यः सर्वत्र गुणशीलतः ।। ५६ ।।
ततोऽपत्रपसे किं न त्यज दुर्वृत्ततां शिशो ।।
मातुलास्तेऽतुलाः पुत्र विद्याशीलकुलादिभिः।। ।। ५७ ।।
तेभ्योपि न बिभेषि त्वं शुद्धोस्युभय वंशतः ।।
पश्यैतान्प्रतिवेश्मस्थान्ब्राह्मणानां कुमारकान् ।। ५८ ।।
गृहेपि शिष्यान्पश्यैतान्पितुस्ते विनयोचितान् ।।
राजापि श्रोष्यति यदा तव दुश्चेष्टितं सुत ।। ५९ ।।
श्रद्धां विहाय ते ताते वृत्तिलोपं करिष्यति ।।
बालचेष्टितमेवैतद्वदंत्यद्यापि ते जनाः ।। 4.1.13.६० ।।
अनंतरं हसिष्यंति युक्तं दीक्षिततास्त्विति ।।
सर्वेप्याक्षारयिष्यंति तव विप्रं च मां च वै ।।६१।।
मातुश्चरित्रं तनयो धत्ते दुर्भाषणैरिति ।।
पिता पितेन पापीयाञ्च्छ्रुतिस्मृतिपथीनकिम् ।। ६२ ।।
तदंघ्रिलीनमनसो मम साक्षी महेश्वरः ।।
न चर्तुस्नातयापीह मुखं दुष्टस्य वीक्षितम् ।।६३।।
अहो बलीयान्सविधिर्येन जाता भवानिति ।।
प्रतिक्षणं जनन्येति शिक्ष्यमाणोतिदुर्मदः ।। ६४ ।।
न तत्याज च तद्धर्मं दुर्बोधो व्यसनी यतः ।।
मृगया मद्य पैशुन्य वेश्याचौर्यदुरोदरैः ।। ६५ ।।
सपारदारैर्व्यसनैरेभिः कोत्र न खंडितः ।।
यद्यन्मध्ये गृहे पश्येत्तत्तन्नीत्वा सुदुर्मतिः ।। ६६ ।।

अर्पयेद्द्यूतकाराणां सकुप्यं वसनादिकम् ।।

नवरत्नमयीं मातुः करतः पितुरूर्मिकाम ।। ६७ ।।

स्वपंत्यास्त्वेकदाऽऽदाय दुरोदरिकरेऽर्पयत् ।।

एकदा गच्छता राजभवनान्निजमुद्रिका ।। ६८ ।।

दीक्षितेन परिज्ञाता दैवाद्द्यूतकृतः करे ।।

उवाच दीक्षितस्तं च कुतो लब्धा त्वयोर्मिका ।।

पृष्टस्तेनाथ निर्बंधादसकृत्प्रत्युवाच किम् ।। ६९ ।।

ममाक्षिपसि विप्रोच्चैः किं मया चौर्य कर्मणा ।।

लब्धा मुद्रा त्वदीयेन पुत्रेणैषा ममार्पिता ।। 4.1.13.७० ।।

मम मातुर्हि पूर्वे द्युर्जित्वानीतो हि शाटकः ।।

न केवलं ममाप्येतदंगुलीयं समर्पितम् ।। ७१ ।।

अन्येषां द्यूतकर्तृणां भूरि तेनार्पितं वसु ।।

रत्नकुप्यदुकूलानि भृंगारुप्रभृतीनि च ।। ७२ ।।

भाजनानि विचित्राणि कांस्य ताम्रमयानि च ।।

नग्नीकृत्यप्रति दिनं बद्ध्यंते द्यूतकारिभिः ।। ७३ ।।

न तेन सदृशः कश्चिदाक्षिको भूमिमंडले ।।

अद्य यावत्त्वया विप्र दुरोदरशिरोमणिः ।। ७४ ।।

कथं नाज्ञायि तनयो ऽविनयानयकोविदः ।।

इति श्रुत्वा त्रपाभार विनम्रतरकंधरः ।। ७५ ।।

प्रावृत्य वाससा मौलिं प्राविशन्निजमंदिरम् ।।

महापतिव्रतामास्य पत्नीं प्रोवाच तामथ ।। ७६ ।।

दीक्षितायिनि कुत्रासि क्व ते गुणनिधिः सुतः ।।

अथ तिष्ठतु किं तेन क्व सा मम शुभोर्मिका ।। ७७ ।।

अंगोद्वर्तन काले या त्वया मेंऽगुलितो हृता ।।

नवरत्नमयीं शीघ्रं तामानीय प्रयच्छ मे ।। ७८ ।।

इति श्रुत्वाथ तद्वाक्यं भीता सा दीक्षितायिनी ।।

प्रोवाच सा तु माध्याह्नीं क्रियां निष्पादयत्वथ ।। ७९ ।।

व्यग्रास्मि देवपूजार्थमुपहारादि कर्मणि ।।

समयोयमतिक्रामेदतिथीनां प्रियातिथे ।। 4.1.13.८० ।।

इदानीमेव पक्वान्नकरणव्यग्रया मया ।।

स्थापिता भाजने क्वापि विस्मृतेति न वेद्म्यहम् ।। ८१ ।।

दीक्षित उवाच ।। ।।

हंहो सत्पुत्रजननि नित्यं सत्यप्रभाषिणि ।।

यदायदा त्वां संपृच्छे तनयः क्व गतस्त्विति ।। ८२ ।।

तदातदेति त्वं ब्रूया नाथेदानीं स निर्गतः ।।

अधीत्याध्ययनार्थं च द्वित्रैर्मित्रैः सयुग्बहिः ।। ८३ ।।

कुतस्त्वच्छाटकः पत्नि मांजिष्ठो यो मयाऽर्पितः ।।

लंबते वस्त्रधान्यांयस्तथ्यं ब्रूहि भयं त्यज ।। ८४ ।।

सांप्रतं नेक्ष्यते सोपि भृंगारुर्मणिमंडितः ।।

पट्टसूत्रमयीसापि त्रिपटी क्व नृपार्पिता ।। ८५ ।।

क्व दाक्षिणात्यं तत्कांस्यं गौडी ताम्रघटी क्व सा ।।

नागदंतमयी सा क्व सुखकौतुकमंचिका ।। ८६ ।।

क्व सा पर्वतदेशीया चंद्रकांतशिलोद्भवा ।।

दीपिका व्यग्रहस्ताग्रा सालंकृच्छालभंजिका ।। ८७ ।।

किं बहूक्तेन कुलजे तुभ्यं कुप्याम्यहं वृथा ।।

तदाभ्यवहरिष्येहमुपयंस्याम्यहं यदा ।। ८८ ।।

अनपत्योस्मि तेनाहं दुष्टेन कुलदूषिणा ।।

उत्तिष्ठानय दर्भांबु तस्मै दद्यां तिलांजलिम् ।। ८९ ।।

अपुत्रत्वं वरं नृणां कुपुत्रात्कुलपांसनात् ।।

त्यजेदेकं कुलस्यार्थे नीतिरेषा सनातनी ।। 4.1.13.९० ।।

स्नात्वा नित्यविधिं कृत्वा तस्मिन्नेवाह्निकस्यचित् ।।

श्रोत्रियस्य सुतां प्राप्य पाणिं जग्राह दीक्षितः ।। ९१ ।।

श्रुत्वा तथा स वृत्तांतं प्राक्तनं स्वं विनिंद्य च ।।

कांचिद्दिशं समालोच्य निर्ययौ दीक्षितांगजः ।।९२।।

चिंतामवाप महतीं क्व यामि करवाणि किम् ।।

नाहमभ्यस्तविद्योस्मि न चैवास्ति धनोस्म्यहम् ।। ९३ ।।

देशांतरे ह्यस्ति धनः सद्विद्यः सुखमेधते ।।
भयमस्ति धने चौरात्सविद्यः सर्वतोऽभयः ।। ९४ ।।
यायजूके कुले जन्म क्वक्व मे व्यसनं तथा ।।
अहो बलीयान्स विधिर्भाविकर्मानुसंधयेत् ।।९५।।
भिक्षितुं नाधिगच्छामि न मे परिचितः क्वचित् ।।
न च पार्श्वे धनं किंचित्किमत्र शरणं भवेत् ।। ९६ ।।
सदाभ्युदिते भानौ प्रसूर्मे मृष्टभोजनम्।।
दद्यादद्यात्र कं याचे याचेह जननी न मे ।।९७।।
इति चिंतयतस्तस्य भानुरस्ताचलं गतः ।।
एतस्मिन्नेव समये कश्चिन्माहेश्वरो नरः।।९८।।
महोपहारानादाय नगराद्बहिरभ्यगात् ।।
समभ्यर्चितुमीशानं शिवरात्रावुपोषितः ।। ९९ ।।
पक्वान्नगंधमाघ्राय क्षुधितः स तमन्वगात् ।।
इदमन्नं मया ग्राह्यं शिवायोपस्कृतं निशि ।। 4.1.13.१०० ।।
इत्याशामवलंब्याथ द्वारि शंभोरुपाविशत् ।।
ददर्श च महापूजां तेन भक्तेन निर्मिताम् ।। १ ।।
विधाय नृत्यगीतादि भक्ताः सुप्ताः क्षणं यदा ।।
नैवेद्यं स तदाऽऽदातुं गर्भागारं विवेश ह ।। २ ।।
दीपं मंदप्रभं दृष्ट्वा पक्वान्नावेक्षणाय सः ।।
निजचैलांचलाद्वर्तिं दत्त्वा समुददीपयत् ।। ३ ।।
ततः पक्कान्नमादाय त्वरितं गच्छतो बहिः ।।
तस्य पादतलाघातात्प्रसुप्तः कोप्यबुध्यत ।। ४ ।।
कोयंकोयं त्वरापन्नश्चोरोयं गृह्यतामिति ।।
यावद्ब्रूयात्समागत्य तावत्स पुररक्षकैः ।। ५ ।।
पलायमानो निहतः क्षणात्पंचत्वमागतः ।।
अभक्षयच्च नैवेद्यं भाविपुण्यबलान्न सः ।। ६ ।।
अथ बद्धः समागत्य पाशमुद्गरपाणिभिः ।।
निनीषुभिः सयमिनीं यामैः स विकटैर्भटैः ।। ७ ।।

तावत्पारिषदाः प्राप्ताः किंकिणीजालमालितम् ।।

दिव्यंविमानमादाय तं नेतुं शूलपाणयः ।। ८ ।।

शंभोर्गणान्समालोक्य भीतैस्तैर्यमकिंकरैः ।।

अवादिप्रणतैरित्थं दुर्वृत्तोयं गणा द्विजः ।। ९ ।।

कुलाचारप्रतीपोयं पित्रोर्वाक्यपराङ्मुखः ।।

सत्यशौचपरिभ्रष्टःसंध्यास्नानविवर्जितः ।। 4.1.13.११० ।।

आस्तां दूरेऽस्य कर्माणि शिवनिर्माल्यहारकः ।।

प्रत्यक्षतोऽत्र वीक्षध्वमस्पृश्योयं भवादृशाम् ।। ११ ।।

शिवनिर्माल्यभोक्तारः शिवनिर्माल्यलंघकाः(?) ।।

शिवनिर्माल्यदातारः स्पर्शस्तेषां ह्यपुण्यकृत् ।।१२।।

विषमालोड्य वापे यं श्रेयोवाऽनशनं परम् ।।

सेवितव्यं शिवस्वं न प्राणः कंठगतैरपि ।। १३ ।।

यूयं प्रमाणं धर्मेषु यथा न च तथा वयम् ।।

अस्ति चेद्धर्मलेशोस्य गणास्तच्छृणुमो वयम् ।। १४ ।।

इत्थं तद्वाक्यमाकर्ण्य प्रोचुः पारिषदास्ततः ।।

किंकराः शिवधर्मा ये सूक्ष्मास्ते वै भवादृशैः ।। १५ ।।

स्थूललक्ष्यैः कथं लक्ष्या लक्ष्या ये सूक्ष्मदृष्टिभिः ।।

अनेनानेन सा कर्म यत्कृतं शृणुतेह तत् ।। १६ ।।

पतंती लिंगशिरसि दीपच्छाया निवारिता ।।

स्वचैलांचलतोऽनेन दत्त्वादीपे दशां निशि ।।१७।।

अपरोपि परो धर्मो जातस्तत्रास्य किंकराः ।।

शृण्वता शिवनामानि प्रसंगादपिगृह्णतः ।। १८ ।।

भक्तेन विधिना पूजा क्रियमाणा निरीक्षिता ।।

उपोषिते न भूतायामनेन स्थिरचेतसा ।। १९ ।।

कलिंगराजोभविताऽधुनाविधुतकल्मषः ।।

एष द्विजवरो दूता यूयं यात यथागताः ।। 4.1.13.१२० ।।

पार्षदैर्यमदूतेभ्यो मोचितस्त्विति स द्विजः ।।

अरिंदमस्य तनयः कलिंगाधितेर्दमः ।। २१ ।।

क्रमाद्राज्यमवाप्याथ पितर्युपरते युवा ।।
नान्यं धर्मं विजानाति दुर्दमो भूपतिर्दमः ।।२२।।
शिवालयेषु सर्वेषु दीपदानादृते द्विज।।
ग्रामाधीशान्समाहूय सर्वान्त्स्वविषयस्थितान् ।।२३।।
इत्थमाज्ञापयामास स मे दंड्यो भविष्यति ।।
यस्य यस्याभितो ग्रामं यावंतश्च शिवालयाः ।। २४ ।।
तत्र तत्र सदा दीपो द्योतनीयोऽविचारितम् ।।
ममाज्ञाभंगदोषेण शिरश्छेत्स्याम्यसंशयम् ।। २५ ।।
इति तद्भयतो दीप्ता दीपाः प्रति शिवालयम् ।।
अनेनैव स धर्मेण यावज्जीवं दमो नृपः ।। २६ ।।
धर्मर्द्धिं महतीं प्राप्य कालधर्मवशं गतः ।।
सदीपवासनायागोद्वहून्दीपान्प्रदीप्य वै ।। २७ ।।
अलकायाः पतिरभूद्रत्नदीपशिखाश्रयः ।।
एवं फलति कालेन शिवेऽल्पमपि यत्कृतम् ।। २८ ।।
इति ज्ञात्वा शिवे कार्यं भजनं स्वसुखार्थिभिः ।।
क्व स दीक्षितदायादः सर्वधर्म पराङ्मुखः ।। २९ ।।
स्वार्थदीपदशोद्योत लिंगमौलि तमोहरः ।।
कलिंगविषये राज्यं प्राप्तो धर्मरतिः सदा ।। 4.1.13.१३० ।।
शिवालये समुद्दीप्य दीपान्प्राग्वासनोदयात् ।।
क्वैषा दिक्पालपदवी शिवशर्मन्विलोकय ।।
मनुष्यधर्मणानेन सांप्रतं येह भुज्यते ।। ३१ ।।
गणावूचतुः ।। ।।
सर्वदैव शिवेनासौ सखित्वं च यथेयिवान् ।।
तदप्येकमना विप्र संशृणुष्व ब्रवावहै ।। ३२ ।।
पाद्मे कल्पे पुरा विप्र ब्रह्मणो मानसात्सुतात् ।।
पुलस्त्याद्विश्रवा जज्ञे तस्य वैश्रवणः सुतः।।३३।।
तेनेयमलका भुक्ता पुरी विश्वकृता कृता ।।
आराध्यं त्र्यंबकं देवमत्युग्रतपसा पुरा ।। ३४ ।।

व्यतीते तत्र कल्पे वै प्रवृत्ते मेघवाहने ।।

याज्ञदत्तिरसौश्रीदस्तपस्तेपे सुदुःसहम् ।। ३५ ।।

भक्तिप्रभावं विज्ञाय शंभोस्तद्दीपमात्रतः ।।

पुरीं पुरारेः संप्राप्य काशिकां चित्प्रकाशिकाम् ।। ३६ ।।

शिवैकदशमुद्बोध्य चित्ररत्नप्रदीपकम् ।।

अनन्यभक्तिस्नेहाढ्यं तन्महोध्याननिश्चलम् ।। ३७ ।।

शिवैक्यसुमहापात्रं तपोग्निपरिबृंहितम् ।।

कामक्रोधमहाविघ्नपतंगाघातवर्जितम् ।। ३८ ।।

प्राणसंरोधनिर्वातं निर्मलं निर्मलेक्षणात्।।

संस्थाप्य शांभवं लिंगं सद्भावकुसुमार्चितम् ।।३९।।

तावत्तताप स तपस्त्वगस्थिपरिशेषितम्।।

यावद्बभूव तद्वर्ष्म वर्षाणामयुतं शतम्।।4.1.13.१४०।।

ततः सह विशालाक्ष्या देवो विश्वेश्वरः स्वयम् ।।

अलकापतिमालोक्य प्रसन्नेनांतरात्मना ।। ४१ ।।

लिंगे मनः समाधाय स्थितं स्थाणुस्वरूपिणम् ।।

उवाच वरदोस्मीति तस्वालमलकापते ।। ४२ ।।

उन्मील्य नयने यावत्स पश्यति तपोधनः ।।

तावदुद्यत्सहस्रांशु सहस्राधिक तेजसम् ।। ४३ ।।

पुरो ददर्श श्रीकंठं चंद्रचूडमुमाधवम् ।।

तत्तेजः परिभूताक्षितेजाः संमील्य लोचने ।। ४४ ।।

उवाच देवदेवेशं मनोरथपथातिगम् ।।

निजांघ्रिदर्शनेनाथ दृक्सामर्थ्यं प्रयच्छ मे ।।४५।।

अयमेव वरो नाथ यत्त्वं साक्षान्निरीक्ष्यसे ।।

किमन्येन वरेणेश नमस्ते शशिशेखर ।। ४६ ।।

इति तद्वचनं श्रुत्वा देवदेव उमापतिः ।।

ददौ दर्शनसामर्थ्यं स्पृष्ट्वा पाणितलेन तम् ।। ४७ ।।

प्रसार्य नयने पूर्वमुमामेव व्यलोकयत् ।।

शंभोः समीपे कायोषिदेषा सर्वांगसुंदरी ।। ४८ ।।

अनया किंतपस्तप्तं ममापि तपसोधिकम् ।।

अहो रूपमहो प्रेम सौभाग्यश्रीरहो भृशम् ।। ४९ ।।

क्रूरदृग्वीक्षते यावत्पुनःपुनरिदं वदन् ।।

तावत्पुस्फोट तन्नेत्रं वामं वामा विलोकनात ।। 4.1.13.१५० ।।

अथ देव्यब्रवीद्देवं किमसौ दुष्टतापसः ।।

असकृद्वीक्ष्य मां वक्ति न्यक्कुर्वन्मे तपःप्रभाम् ।। ५१ ।।

असकृद्दक्षिणेनाक्ष्णा पुनर्मामेवपश्यति ।।

असूयमानो मे रूपं प्रेमसौभाग्यसंपदः ।। ५२ ।।

इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः ।।

उमे त्वदीयः पुत्रोयं न च क्रूरेण चक्षुषा ।। ५३ ।।

संपश्यते तपो लक्ष्मीं तव किं त्वधिवर्णयेत् ।।

इति देवीं समाभाष्य तमीशः पुनरब्रवीत् ।। ५४ ।।

वरान्ददामि ते वत्स तपसानेन तोषितः ।।

निधीनामधिनाथस्त्वं गुह्यकानां भवेश्वरः ।। ५५ ।।

यक्षाणां किन्नराणां च राजा राज्ञां च सुव्रत ।।

पतिः पुण्यजनानां च सर्वेषां धनदो भव ।। ५६ ।।

मया सख्यं च ते नित्यं वत्स्यामि च तवांतिके ।।

अलकां निकषामित्र तव प्रीतिविवृद्धये ।। ५७ ।।

आगच्छ पादयोरस्याः पत ते जननी त्वियम् ।।

इति दत्त्वा वरान्देवः पुनराह शिवां शिवः ।।

प्रसादं कुरु देवेशि तपस्विन्यंगजेऽत्र वै ।। ५८ ।।

देव्युवाच ।। ।।

वत्स ते निश्चला भक्तिर्भवे भवतु सर्वदा ।।

भवैकांषेंगो(?)गोनेत्रेण वामेन स्फुटितेन ह ।। ५९ ।।

देवेन दत्ता ये तुभ्यं वराः संतु तथैव ते ।।

कुबेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत ।। 4.1.13.१६० ।।

त्वयेदं स्थापितं लिंगं तव नाम्ना भविष्यति ।।

सिद्धिदं साधकानां च सर्वपापहरं परम् ।। ६१ ।।

न धनेन वियुज्येत न सख्या न च बांधवैः ।।

कुबेरेश्वरलिंगस्य कुर्याद्यो दर्शनं नरः ।। ६२ ।।

विश्वेशाद्दक्षिणेभागे कुबेरेशं समर्चयेत् ।।

नरो लिप्येत नो पापैर्न दारिद्र्येण नोऽसुखैः ।। ६३ ।।

इति दत्त्वा वरान्देवो देव्या सह महेश्वरः ।।

धनदाया विवेशाथ धाम वैश्वेश्वरं परम् ।। ६४ ।।

।। गणावूचतुः ।।

इत्थं सखित्वं श्रीशंभोः प्रापैष धनदः परम् ।।

अलकां निकषाचैष कैलासः शंकरालयः ।। ६५ ।।

पुर्यां यक्षेश्वराणां ते स्वरूपमिति वर्णितम् ।।

यच्छ्रुत्वा सर्वपापेभ्यो नरो मुच्येदसंशयम् ।।१६६।। ।।

इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे गंधवत्यलकावर्णनं नाम त्रयोदशोध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१४

https://sa.wikisource.org/s/fus



।। गणावूचतुः ।।

अलकायाः पुरोभागे पूरैशानीमहोदया ।।

अस्यां वसंति सततं रुद्रभक्तास्तपोधनाः ।।१।।

शिवस्मरणसंसक्ताः शिवव्रतपरायणाः ।।

शिवसात्कृतकर्माणः शिवपूजारताः सदा ।।२।।

साभिलाषास्तपस्यंति स्वर्गभोगोस्त्विवतीह नः ।।

तेऽत्र रुद्रपुरे रम्ये रुद्ररूपधरा नराः ।। ३ ।।

अजैकपादहिर्बुध्न्य मुख्या एकादशापि वै ।।

रुद्राः परिवृढाश्चात्र त्रिशूलोद्यतपाणयः ।। ४ ।।

पुर्यष्टकं च दुष्टेभ्यो देवध्रुग्भ्यो ह्यवंति ते ।।

प्रयच्छंति वरान्नित्यं शिवभक्तजने वराः ।। ५ ।।

एतैरपि तपस्तप्तं प्राप्य वाराणसीं पुरीम् ।।

ईशानेशं महालिंगं परिस्थाप्य शुभप्रदम् ।। ६ ।।

ईशानेश प्रसादेन दिश्यैश्यां हि दिगीश्वराः ।।

एकादशाप्येकचरा जटामुकुटमंडिताः ।। ७ ।।

भालनेत्रा नीलगलाः शुद्धांगा वृषभध्वजाः ।।

असंख्याताः सहस्राणि ये रुद्रा अधिभूतलम् ।। ८ ।।

तेऽस्यां पुरि वसंत्यैश्यां सर्वभोगसमृद्धयः ।।

ईशानेशं समभ्यर्च्य काश्यां देशांतरेष्वपि ।। ९ ।।

विपन्नास्तेन पुण्येन जायंते ऽत्रपुरोहिताः ।।

अष्टम्यां च चतुर्दश्यामीशानेशं यजंति ये ।। 4.1.14.१० ।।

त एव रुद्रा विज्ञेया इहामुत्राप्यसंशयम् ।।

कृत्वा जागरणं रात्रावीशानेश्वर संनिधौ ।।११।।

उपोष्यभूतांयांकांचिन्न नरो गर्भभाक्पुनः ।।

स्वर्गमार्गे कथामित्थं शृण्वन्विष्णुगणोदिताम् ।। १२ ।।

शिवशर्मा दिवाप्युच्चैरपश्यच्चंद्रचंद्रिकाम् ।।
आह्लादयंतीं बहुशः समं सर्वेंद्रियैर्मनः ।। १३ ।।
चमत्कृत्य चमत्कृत्य कोयं लोको हरेर्गणौ ।।
पप्रच्छ शिवशर्मा तौ प्रोचतुस्तं च तौ द्विजम् ।। १४ ।।
गणावूचतुः ।। ।।
शिवशर्मन्महाभाग लोक एष कलानिधेः ।।
पीयूषवर्षिभिर्यस्य करैराप्याय्यते जगत् ।। १५ ।।
पिता सोमस्य भो विप्र जज्ञेऽत्रिर्भगवानृषिः ।।
ब्रह्मणो मानसात्पूर्वं प्रजासर्गं विधित्सतः ।। १६ ।।
अनुत्तरं नाम तपो येन तप्तं हि तत्पुरा ।।
त्रीणिवर्षसहस्राणि दिव्यानीतीह नौ श्रुतम् ।। १७ ।।
ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् ।।
नेत्राभ्यां तच्च सुस्राव दशधा द्योतयद्दिशः ।। १८ ।।
तं गर्भं विधिना दिष्टा दश देव्यो दधुस्ततः ।।
समेत्य धारयामासुर्नैव ताः समशक्नुवन् ।। १९ ।।
यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ।।
ततस्ताभिः सजूः सोमो निपपात वसुंधराम् ।।4.1.14.२०।।
पतितं सोममालोक्य ब्रह्मा लो कपितामहः ।।
रथमारोपयामास लोकानां हितकाम्यया ।।२१।।
स तेन रथमुख्येन सागरांतां वसुंधराम् ।।
त्रिःसप्तकृत्वो द्रुहिणश्चकारामुं प्रदक्षिणम् ।।२२।।
तस्य यत्प्लवितं तेजः पृथिवीमन्वपद्यत ।।
तथौषध्यः समुद्भूता याभिः संधार्यते जगत् ।। २३ ।।
सलब्धतेजा भगवान्ब्रह्मणा वर्धितः स्वयम् ।।
तपस्तेपे महाभाग पद्मानां दशतीर्दश ।। २४ ।।
अविमुक्तं समासाद्य क्षेत्रं परमपावनम् ।।
संस्थाप्य लिंगममृतं चंद्रेशाख्यं स्वनामतः ।। २५ ।।
बीजौषधीनां तोयानां राजाभूदग्रजन्मनाम् ।।

प्रसादाद्देवदेवस्य विश्वेशस्य पिनाकिनः ।। २६ ।।

तत्र कूपं विधायैकममृतोदमिति स्मृतम् ।।

यस्यांबुपानस्नानाभ्यां नरोऽज्ञातात्प्रमुच्यते ।। २७ ।।

तुष्टेनदेवदेवेन स्वमौलौ यो धृतः स्वयम् ।।

आदाय तां कलामेकां जगत्संजविनीं पराम् ।।२८।।

पश्चाद्दक्षेण शप्तोपि मासोने क्षयमाप्य च ।।

आप्यायतेसौ कलया पुनरेव तया शशी ।। २९ ।।

स तत्प्राप्य महाराज्यं सोमः सोमवतां वरः ।।

राजसूयं समाजह्रे सहस्रशतदक्षिणम् ।। 4.1.14.३० ।।

दक्षिणामददत्सोमस्त्रींल्लोकानिति नौ श्रुतम् ।।

तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भो द्विज ।। ३१ ।।

हिरण्यगर्भो ब्रह्माऽत्रिर्भृगुर्यत्रर्त्विजोभवन् ।।

सदस्योभूद्धरिस्तत्र मुनिभिर्बहुभिर्युतः ।। ३२ ।।

तंसिनी च कुहूश्चैव द्युतिः पुष्टिः प्रभावसुः ।।

कीर्तिर्धृतिश्च लक्ष्मीश्च नवदेव्यः सिषेविरे ।। ३३ ।।

उमया सहितं रुद्रं संतर्प्याध्वरकर्मणा ।।

प्राप सोम इति ख्यातिं दत्तां सोमेन शंभुना ।। ३४ ।।

तत्रैव तप्तवान्सोमस्तपः परमदुष्करम् ।।

तत्रैव राजसूयं च चक्रे चंद्रेश्वराग्रतः ।। ३५ ।।

तत्रैव ब्राह्मणैः प्रीतैरित्युक्तोसौ कलानिधिः ।।

सोमोस्माकं ब्राह्मणानां राजा त्रैलोक्यदक्षिणः ।। ३६ ।।

तत्रैव देवदेवस्य विलोचनपदं गतः ।।

देवेन प्रीतमनसा त्रैलोक्याह्लादहेतवे ।। ३७ ।।

त्वं ममास्य परामूर्तिरित्युक्तस्तत्तपोबलात् ।।

जगत्तवोदयं प्राप्य भविष्यति सुखोदयम् ।। ३८ ।।

त्वत्पीयूषमयैर्हस्तैः स्पृष्टमेतच्चराचरम् ।।

भानुतापपरीतं च परा ग्लानिं विहास्यति ।। ३९ ।।

एतदुक्त्वा महेशानो वरानन्यानदान्मुदा ।।

द्विजराजतपस्तप्तं यदत्युग्रं त्वयात्र वै ।। 4.1.14.४० ।।

यच्च क्रतु क्रियोत्सर्गस्त्वया मह्यं निवेदितः ।।

स्थापितं यत्त्विदं लिंगं मम चंद्रेश्वराभिधम् ।। ४१ ।।

ततोत्र लिंगे त्वन्नाम्नि सोमसोमार्धरूपधृक् ।।

प्रतिमासं पंचदश्यां शुक्लायां सर्वगोप्यहम् ।। ।। ४२ ।।

अहोरात्रं वसिष्यामि त्रैलोक्यैश्वर्यसंयुतः ।।

ततोत्र पूर्णिमायां तु कृता स्वल्पापि सत्क्रिया ।। ४३ ।।

जपहोमार्चनध्यानदानब्राह्मणभोजनम् ।।

महापूजा च सा नूनं मम प्रीत्यै भविष्यति ।। ४४ ।।

जीर्णोद्धारादिकरणं नृत्यवाद्यादिकार्पणम् ।।

ध्वजारोपणकर्मादि तपस्वियतितपर्णम् ।। ४५ ।।

चंद्रेश्वरे कृतं सर्वं तदानंत्याय जायते ।।

अन्यच्च ते प्रवक्ष्यामि शृणु गुह्यं कलानिधे ।। ४६ ।।

अभक्ताय च नाख्येयं नास्तिकाय श्रुतिद्रुहे ।।

अमावास्या यदा सोम जायते सोमवासरे ।। ४७ ।।

तदोपवासः कर्तव्यो भूतायां सद्भिरादरात् ।।

कृतनित्यक्रियः सोम त्रयोदश्यां निशामय ।। ४८ ।।

शनिप्रदोषे संपूज्य लिंगं चंद्रेश्वराह्वयम् ।।

नक्तं कृत्वा त्रयोदश्यां नियमं परिगृह्य च ।। ४९ ।।

उपोष्य च चतुर्दश्यां कृत्वा जागरणं निशि ।।

प्रातः सोमकुहूयोगे स्नात्वा चंद्रोदवारिभिः ।।4.1.14.५०।।

उपास्य संध्यां विधिवत्कृतसर्वोदक क्रियः ।।

उपचंद्रोदतीर्थेषु श्राद्धं विधिवदाचरेत् ।।५१।।

आवाहनार्घ्यरहितं पिंडान्दद्यात्प्रयत्नतः ।।

वसुरुद्रादितिसुतस्वरूपपुरुषत्रयम् ।।५२।।

मातामहांस्तथोद्दिश्य तथान्यानपि गोत्रजान् ।।

गुरुश्वशुरबंधूनां नामान्युच्चार्य पिंडदः ।। ५३ ।।

कुर्वञ्छ्राद्धं च तीर्थेस्मिञ्छ्रद्धयोद्धरतेखिलान् ।।

गयायां पिंडदानेन यथा तुप्यंति पूर्वजाः ।। ५४ ।।

तथा चंद्रोदकुंडेऽत्र श्राद्धैस्तृप्यंति पूर्वजाः ।।

गयायां च यथा मुच्येत्सर्वर्णात्पितृजान्नरः ।। ५५ ।।

तथा प्रमुच्यते चर्णाच्चंद्रोदे पिण्डदानतः ।।

यदा चंद्रेश्वरं द्रष्टुं यायात्कोपि नरोत्तमः।।५६।।

तदा नृत्यंति मुदितास्तत्पूर्वप्रपितामहाः।।

अयं चंद्रोदतीर्थेस्मिंस्तर्पणं नः करिष्यति ।। ५७।।

अस्माकं मंदभाग्यत्वाद्यदि नैव करिष्यति।।

तदातत्तीर्थ संस्पर्शादस्मत्तृप्तिर्भविष्यति।। ५८।।

स्पृशेन्नापि यदा मंदस्तदा द्रक्ष्यति तृप्तये।।

एवं श्राद्धं विधायाथ स्पृष्ट्वा चंद्रेश्वरं व्रती।।

संतर्प्य विप्रांश्च यतीन्कुर्याद्वै पारणं ततः।।५९।।

एवं व्रते कृते काश्यां सदर्शे सोमवासरे।।

भवेदृणत्रयान्मुक्तो मृगांकमदनुग्रहात् ।। 4.1.14.६० ।।

अत्र यात्रा महाचैत्र्यां कार्या क्षेत्रनिवासिभिः ।।

तारकज्ञानलाभाय क्षेत्रविघ्ननिवर्तिनी ।। ६१ ।।

चंद्रेश्वरं समभ्यचर्य यद्यन्यत्रापि संस्थितः ।।

अघौघपटलीं भित्त्वा सोमलोकमवाप्स्यति ।।६२।।

कलौ चंद्रेशमहिमा नाभाग्यैरवगम्यते।।

अन्यच्च ते प्रवक्ष्यामि परं गुह्यं निशापते ।। ६३।।

सिद्धयोगीश्वरं पीठमेतत्साधकसिद्धिदम् ।।

सुरासुरेषु गंधर्व नागविद्याधरेष्वपि ।। ६४ ।।

रक्षोगुह्यकयक्षेषु किंनरेषु नरेषु च ।।

सप्तकोट्यस्तु सिद्धानामत्र सिद्धा ममाग्रतः ६५।।

षण्मासं नियताहारो ध्यायन्विश्वेश्वरीमिह।।

चंद्रेश्वरार्चनायातान्सिद्धान्पश्यति सोऽग्रगान्।।६६।।

सिद्धयोगीश्वरी साक्षाद्वरदा तस्य जायते ।।

तवापि महती सिद्धिः सिद्धयोगीश्वरीक्षणात्।। ६७।।

संति पाठान्यनेकानि क्षितौ साधकसिद्धये।।

परं योगीश्वरी पीठाद्भूपृष्ठेनाशु सिद्धिदम्।। ६८ ।।

यत्र चंद्रेश्वरं लिंगं त्वयेदं स्थापितं शशिन्।।

इदमेव हि तत्पीठमदृश्यमकृतात्मभिः।। ६९।।

जितकामा जितक्रोधा जितलोभस्पृहास्मिताः।।

योगीश्वरीं प्रपश्यंति मम शक्तिपरां हिताम् ।। 4.1.14.७० ।।

ये तु प्रत्यष्टमि जनास्तथा प्रति चतुर्दशि ।।

सिद्धयोगीश्वरीपीठे पूजयिष्यंति भाविताः ।। ७१ ।।

अदृष्टरूपां सुभगां पिंगलां सर्वसिद्धिदाम् ।।

धूपनैवेद्यदीपाद्यैस्तेषामाविर्भविष्यति ।। ७२ ।।

इति दत्त्वा वराञ्छंभुस्तस्मै चंद्रमसे द्विज ।।

अंतर्हितो महेशानस्तत्र वैश्वेश्वरे पुरे ।। ७३ ।।

तदारभ्य च लोकेऽस्मिन्द्विजराजोधिपोभवत् ।।

दिशोवितिमिराः कुर्वन्निजैः प्रसृमरैः करैः ।। ७४ ।।

सोमवारव्रतकृतः सोमपानरता नराः ।।

सोमप्रभेणयानेन सोमलोकं व्रजंति हि ।। ।। ७५ ।।

चंद्रेश्वरसमुत्पत्तिं तथा चांद्रमसं तपः ।।

यः श्रोष्यति नरो भक्त्या चंद्रलोके स इज्यते ।। ७६ ।।

अगस्तिरुवाच ।। ।।

शिवशर्मणि शर्मकारिणीं प थि दिव्ये श्रमहारिणीं गणौ ।।

कथयंतौ तु कथामिमां शुभामुडुलोकं परिजग्मतुस्ततः ।। ७७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सोमलोकवर्णनं नाम चतुर्दशोऽध्यायः ।।१४।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१५

https://sa.wikisource.org/s/fut
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

अगस्तिरुवाच ।।

शृणु पत्नि महाभागे लोपामुद्रे सधर्मिणि ।।

कथा विष्णुगणाभ्यां च कथितां शिवशर्मणे ।। १ ।।

शिवशर्मोवाच ।।

अहो गणौ विचित्रेयं श्रुता चांद्रमसी कथा ।।

उडुलोककथां ख्यातं विष्वगाख्यानकोविदौ ।। २ ।।

गणावूचतुः ।।

पुरा सिसृक्षतः सृष्टिं स्रष्टुरंगुष्ठपृष्ठतः ।।

दक्षः प्रजाविनिर्माणे दक्षो जातः प्रजापतिः।।

षष्टिर्दुहितरस्तस्य तपोलावण्यभूषणाः ।।

सर्वलावण्यरोहिण्यो रोहिणीप्रमुखाः शुभाः ।। ४ ।।

ताभिस्तस्वा तपस्तीव्रं प्राप्य वैश्वेश्वरीं पुरीम् ।।

आराधितो महादेवः सोमः सोमविभूपणः ।। ५ ।।

यदा तुष्टोयमीशानो दातुं वरमथाययौ ।।

उवाच च प्रसन्नात्मा याचध्वं वरमुत्तमम् ।। ६ ।।

शंभोर्वाक्यमथाकर्ण्य ऊचुस्ताश्च कुमारिकाः ।।

यदि देयो वरोऽस्माकं वरयोग्याः स्म शंकर ।। ७ ।।

भवतोपि महादेव भवतापहरो हि यः ।।

रूपेण भवता तुल्यः स नो भर्ता भवत्विति ।। ८ ।।

लिंगं संस्थाप्य सुमहन्नक्षत्रेश्वर संज्ञितम् ।।

वारणायास्तटे रम्ये संगमेश्वरसन्निधौ। ।। ९ ।।

दिव्यं वर्ष सहस्रं तु पुरुषायितसंज्ञितम् ।।

तपस्तप्तं महत्ताभिः पुरुषैरपि दुष्करम् ।। 4.1.15.१० ।।

ततस्तुष्टो हि विश्वेशो व्यतरद्वरमुत्तमम् ।।

सर्वासामेकपत्नीनामकत्रे(?) स्थिरचेतसाम् ।। ११ ।।

श्री विश्वेश्वर उवाच ।। ।।

न क्षांतं हि तपोत्युग्रमेतदन्याभिरीदृशम् ।।

पुराऽबलाभिस्तस्माद्वो नाम नक्षत्रमत्र वै ।। १२ ।।

पुरुषायितसंज्ञेन तप्तं यत्तपसाधुना ।।

भवतीभिस्ततः पुंस्त्वमिच्छया वो भविष्यति ।। १३ ।।

ज्योतिश्चक्रे समस्तेऽस्मिन्नग्रगण्या भविष्यथ ।।

मेषादीनां च राशीनां योनयो यूयमुत्तमाः ।। १४ ।।

ओषधीनां सुधायाश्च ब्राह्मणानां च यः पतिः ।।

पतिमत्यो भवत्योपि तेन पत्या शुभाननाः।। १५ ।।

भवतीनामिदं लिंगं नक्षत्रेश्वर संज्ञितम् ।।

पूजयित्वा नरो गंता भवतीलोकमुत्तमम् ।। १६ ।।

उपरिष्टान्मृगांकस्य लोको वस्तु भविष्यति ।।

सर्वासां तारकाणां च मध्ये मान्या भविष्यथ ।। १७ ।।

नक्षत्रपूजका ये च नक्षत्रव्रतचारिणः ।।

ते वो लोके वसिष्यंति नक्षत्र सदृशप्रभाः ।। १८ ।।

नक्षत्रग्रहराशीनां बाधास्तेषां कदाचन ।।

न भविष्यंति ये काश्यां नक्षत्रेश्वरवीक्षकाः ।। १९ ।।

अगस्त्य उवाच ।। ।।

अतिथित्वमवाप नेत्रयोर्बुधलोकः शिवशर्मणस्त्वथ ।।

गणयोर्भगणस्य संकथां कथयित्रो रिति विष्णुचेतसोः ।। 4.1.15.२० ।।

शिवशर्मोवाच ।। ।।

कस्य लोकोयमतुलो ब्रूतं श्रीभगवद्गणौ ।।

पीयूषभानोरिव मे मनः प्रीणयतेतराम् ।। २१ ।।

।। गणावूचतुः ।। ।।

शिवशर्मञ्छृणु कथामेतां पापापहारिणीम्।।

स्वर्गमार्गविनोदाय तापत्रयविनाशिनीम् ।। २२ ।।

योसौ पूर्वं महाकांतिरावाभ्यां परिवर्णितः ।।

साम्राज्यपदमापन्नो द्विजराजस्तवाग्रतः ।। २३ ।।

दक्षिणा राजसूयस्य येन त्रिभुवनं कृता ।।
तपस्तताप योत्युग्रं पद्मानां दशतीर्दश ।।२४।।
अत्रिनेत्रसमुद्भूतः पौत्रो वै द्रुहिणस्य यः ।।
नाथः सर्वौषधीनां च ज्योतिषां पतिरेव च ।। २५ ।।
निर्मलानां कलानां च शेवधिर्यश्च गीयते ।।
उद्यन्परोपतापं यः स्वकरैर्गलहस्तयेत् ।। २६ ।।
मुदंकुमुदिनीनांयस्तनोति जगता सह ।।
दिग्वधू चारु शृंगारदर्शनादर्शमंडलः ।। २७ ।।
किमन्यैर्गुणसंभारैरतोपि न समं विधोः ।।
निजोत्तमांगे सर्वज्ञः कलां यस्यावतंसयेत् ।। २८ ।।
बृहस्पतेस्स वै भार्यामैश्वर्यमदमोहितः ।।
पुरोहितस्यापिगुरोर्भ्रातुरांगिरसस्य वै ।। २९ ।।
जहार तरसा तारां रूपवान्रूपशालिनीम्।।
वार्यमाणोपि गीर्वाणैर्बहुदेवर्षिभिः पुनः ।। 4.1.15.३० ।।
नायं कलानिधेर्दोषो द्विजराजस्य तस्य वै ।।
हित्वा त्रिनेत्रं कामेन कस्य नो खडितं मनः ।।३१।।
ध्वांतमेतदभितः प्रसारियत्तच्छमाय विधिनाविनिर्मितम्।।
दीपभास्करकरामहौषधं नाधिपत्य तमसस्तुकिंचन ।। ३२ ।।
आधिपत्यमदमोहितं हितं शंसितं स्पृशति नो हरेर्हितम् ।।
दुर्जनविहिततीर्थमज्जनैः शुद्धधीरिव विरुद्धमानसम्।। ३३ ।।
धिग्धिगेतदधिकर्द्धि चेष्टितं चंक्रमेक्षणविलक्षितं यतः ।।
वीक्षते क्षणमचारुचक्षुषा घातितेन विपदःपदेन च ।। ३४ ।।
कः कामेन न निर्जितस्त्रिजगतां पुष्पायुधेनाप्यहो कः क्रोधस्यवशंगतो ननच को लोभेन संमोहितः ।।
योषिल्लोचनभल्लभिन्नहृदयः को नाप्तवानापदं को राज्यश्रियमाप्यनांधपदवीं यातोपि सल्लोचनः ।। ३५ ।।
आधिपत्यकमलातिचंचला प्राप्यतां च यदिहार्जितं किल ।।
निश्चलं सदसदुच्चकैर्हितं कार्यमार्यचरितैः सदैव तत् ।। ३६ ।।
न यदांगिरसे तारां स व्यसर्जयदुल्बणः ।।

रुद्रोथ पार्ष्णिं जग्राह गृहीत्वाजगवं धनुः ।। ३७ ।।

तेन ब्रह्मशिरोनाम परमास्त्रं महात्मना ।।

उत्सृष्टं देवदेवायतेन तन्नाशितं ततः ।। ३८ ।।

तयोस्तद्युद्धमभवद्धोरं वै तारकामयम् ।।

ततस्त्वकांड ब्रह्मांड भंगाद्भीतोभवद्विधिः ।।३९।।

निवार्य रुद्रं समरात्संवर्तानलवर्चसम् ।।

ददावांगिरसे तारां स्वयमेव पितामहः ।।4.1.15.४०।।

अथांतर्गर्भमालोक्य तारां प्राह बृहस्पतिः ।।

मदीयायां न ते योनौ गर्भो धार्यः कथंचन ।।४१।।

इषीकास्तंबमासाद्य गर्भं सा चोत्ससर्ज ह ।।

जातमात्रः स भगवान्देवानामाक्षिपद्वपुः ।। ४२ ।।

ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः ।।

सत्यं बूहि सुतः कस्य सोमस्याथ बृहस्पतेः ।। ४३ ।।

पृच्छमाना यदा देवै र्नाह ताराऽतिसत्रपा ।।

तदा सा शप्तुमारब्धा कुमारेणातितेजसा ।। ४४ ।।

तं निवार्य तदा ब्रह्मा तारां पप्रच्छ संशयम्।।

प्रोवाच प्रांजलिः सा तं सोमस्येति पितामहम् ।। ४५ ।।

तदा स मूर्ध्न्युपाघ्राय राजा गर्भं प्रजापतिः ।।

बुध इत्यकरोन्नाम तस्य बालस्य धीमतः ।। ४६ ।।

ततश्च सर्वदेवेभ्यस्तेजोरूपबलाधिकः ।।

बुधः सोमं समापृच्छ्य तपसे कृतनिश्चयः ।।४७।।

जगाम काशीं निर्वाणराशिं विश्वेशपालिताम् ।।

तत्र लिगं प्रतिष्ठाप्य स स्वनाम्ना बुधेश्वरम् ।। ४८ ।।

तपश्चचार चात्युग्रमुग्रं संशीलयन्हृदि ।।

वर्षाणामयुतं बालो बालेंदुतिलकं शिवम् ।। ४९ ।।

ततो विश्वपतिः श्रीमान्विश्वेशो विश्वभावनः ।।

बुधेश्वरान्महालिंगादाविरासीन्महोदयः ।। 4.1.15.५० ।।

उवाच च प्रसन्नात्मा ज्योतीरूपो महेश्वरः ।।

वरं ब्रूहि महाबुद्धे बुधान्य विबुधोत्तमः ।। ५१ ।।

तवानेनाति तपसा लिंगसंशीलनेन च ।।

प्रसन्नोस्मि महासौम्य नादेयं त्वयि विद्यते ।। ५२ ।।

इति श्रुत्वा वचः सोथ मेघगंभीर निःस्वनम्।।

अवग्रहपरिम्लान सस्यसंजीवनोपमम्।। ५३ ।।

उन्मील्यलोचने यावत्पुरः पश्यति बालकः ।।

तावल्लिंगे ददर्शाथ त्र्यंबकं शशिशेखरम्।।५४।।

बुध उवाच ।। ।।

नमः पूतात्मने तुभ्यं ज्योतीरूप नमोस्तु ते ।।

विश्वरूप नमस्तुभ्यं रूपातीताय ते नमः ।।५५ ।।

नमः सर्वार्ति नाशाय प्रणतानां शिवात्मने ।।

सर्वज्ञाय नमस्तुभ्यं सर्वकर्त्रे नमोस्तु ते ।। ५६ ।।

कृपालवे नमस्तुभ्यं भक्तिगम्याय ते नमः ।।

फलदात्रे च तपसां तपोरूपाय ते नमः ।। ५७ ।।

शंभो शिवशिवाकांत शांतश्री कंठशूलभृत् ।।

शशिशेखरशर्वेश शंकरेश्वर धूर्जटे ।। ५८ ।।

पिनाकपाणे गिरिश शितिकंठ सदाशिव ।।

महादेव नमस्तुभ्यं देवदेव नमोस्तु ते ।। ५९ ।।

स्तुतिकर्तुं न जानामि स्तुतिप्रिय महेश्वर ।।

तव पादांबुजद्वंद्वे निर्द्वंद्वा भक्तिरस्तु मे ।। 4.1.15.६० ।।

अयमेव वरो नाथ प्रसन्नोसि यदीश्वर ।।

नान्यं वरं वृणे त्वत्तः करुणामृतवारिधे ।। ६१ ।।

ततः प्राह महेशानस्तत्स्तुत्या परितोषितः ।।

रौहिणेय महाभाग सौम्यसौम्यवचोनिधे ।। ६२ ।।

नक्षत्रलोकादुपरि तव लोको भविष्यति ।।

मध्ये सर्वग्रहाणां च सपर्यां लप्स्यसे पराम् ।। ६३ ।।

त्वयेदं स्थापितं लिंगं सर्वेषां बुद्धिदायकम् ।।

दुर्बुद्धिहरणं सौम्य त्वल्लोकवसतिप्रदम् ।। ६४ ।।

इत्युक्त्वा भगवाञ्छंभुस्तत्रैवांतरधीयत ।।

बुधः स्वर्लोकमगमद्देवदेवप्रसादतः ।। ६५ ।।

गणावूचतुः ।। ।।

काश्यां बुधेश्वरसमर्चनलब्धबुद्धिः संसारसिंधुमधिगम्य नरो ह्यगाधम् ।।

मज्जेन्न सज्जनविलोचन चंद्रकांतिः कांताननस्त्वधिवसेच्च बुधेऽत्र लोके ।। ६६ ।।

चंद्रेश्वरात्पूर्वभागे दृष्ट्वा लिंगं बुधेश्वरम् ।।

न बुद्ध्या हीयते जंतुरंतकालेपि जातुचित् ।।६७।।

गणौ यावत्कथामित्थं चक्राते बुधलोकगाम् ।।

तावद्विमानं संप्राप्तं शुक्रलोकमनुत्तमम् ।। ६८ ।। ।।

इति श्री स्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे नक्षत्रबुधलोकयोर्वर्णनं नाम पंचदशोध्यायः ।। १५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१६

https://sa.wikisource.org/s/fuu
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। गणावूचतुः ।।

शिवशर्मन्महाबुद्धे शुक्रलोकोयमद्भुतः ।।

दानवानां च दैत्यानां गुरुरत्र वसेत्कविः ।। १ ।।

पीत्वा वर्षसहस्रं वै कणधूमं सुदुःसहम् ।।

यः प्राप्तवान्महाविद्यां मृत्युसंजीविनीं हरात् ।। २ ।।

इमां विद्यां न जानाति देवाचार्योति दुष्कराम् ।।

ऋते मृत्युंजयात्स्कंदात्पार्वत्या गजवक्त्रतः ।। ३ ।।

शिवशर्मोवाच ।। ।।

कोसौ शुक्र इति ख्यातो यस्यायं लोक उत्तमः ।।

कथं तेन च विद्याप्ता मृत्युसंजीवनी हरात् ।। ४ ।

आचक्षाथामिदं देवौ यदि प्रीतिर्मयि प्रभू ।।

ततस्तौ स्माहतुर्देवौ शुक्रस्य परमां कथाम् ।। ५।।

यां श्रुत्वा चापमृत्युभ्यो हीयंते श्रद्धयायुताः ।।

भूतप्रेतपिशाचेभ्यो न भयं चापि जायते ।। ६ ।।

आजौ प्रवर्तमानायामंधकांधकवैरिणोः ।।

अनिर्भेद्य गिरिव्यूह वज्रव्यूहाधिनाथयोः ।।७।।

अपसृत्य ततो युद्धादंधकः शुक्रसंनिधिम् ।।

अधिगम्य बभाषेदमवरुह्य रथात्ततः ।। ८ ।।

भगवंस्त्वामुपाश्रित्य वयं देवांश्च सानुगान् ।।

मन्यामहे तृणैस्तुल्यान्रुद्रोपेंद्रादिकानपि ।। ९ ।।

कुंजरा इव सिंहेभ्यो गरुडेभ्य इवोरगाः ।।

अस्मत्तो बिभ्यति सुरा गुरो युष्मदनुग्रहात् ।। 4.1.16.१० ।।

वज्रव्यूहमनिर्भेद्यं विविशुर्दैत्यदानवाः ।।

विधूय प्रमथानीकं ह्रदं तापार्दिता इव ।। ११ ।।

वयं त्वच्छरणं भूत्वा पर्वता इव निश्चलाः ।।

स्थित्वा चराम निःशंका ब्राह्मणेंद्र महाहवे ।। १२ ।।

आप्तभावेन च वयं पादौ तव सुखप्रदौ ।।

सदाराः ससुताश्चैव शुश्रूषामो दिवानिशम् ।। १३ ।।

अभिरक्षाभितो विप्र प्रसन्नः शरणागतान् ।।

पश्य हुंडं तुहुंडं च कुजंभं जंभमेव च ।। १४ ।।

पाकं कार्तस्वनं चैव विपाकं पाकहारिणम् ।।

तं चन्द्रदमनं शूरं शूरामरविदारणम् ।।१५।।

प्रमथैर्भीमविक्रांतैः क्रांतं मृत्युप्रमाथिभिः ।।

सूदितान्पतितांश्चैव द्राविडैरिव चंदनान्।। १६।।

या पीत्वा कणधूमं वै सहस्रं शरदां पुरा ।।

वरा विद्या त्वया प्राप्ता तस्याः कालोयमागतः ।।१७।।

अथ विद्याफलं तत्ते दैत्यान्संजीवयिष्यतः ।।

पश्यंतु प्रमथाः सर्वे त्वया संजीवितानिमान्।।१८।।

इत्यंधकवचः श्रुत्वा स्थिरधीर्भार्गवोमुनिः ।।

किंचित्स्मितं तदा कृत्वा दानवाधिपमब्रवीत् ।। १९ ।।

दानवाधिपते सर्वं तथ्यं यद्भाषितं त्वया ।।

विद्योपार्जनमेतद्धि दानवार्थं मया कृतम् ।। 4.1.16.२० ।।

पीत्वा वर्षसहस्रं वै कणधूमं सुदुःसहम् ।।

एषा प्राप्तेश्वराद्विद्या बांधवानां सुखावहा ।। २१ ।।

एतया विद्यया सोहं प्रमथैर्मथितान्रणे ।।

उत्थापयिष्ये ग्लानानि धान्यन्यंबुधरो यथा ।।२२।।

निर्व्रणान्नीरुजः स्वस्थान्सुप्त्वेव पुनरुत्थितान्।।

अस्मिन्मुहूर्ते द्रष्टासि दानवानुत्थितान्नृप ।। २३ ।।

इत्युक्त्वा दानवपतिं विद्यामावर्तयत्कविः ।।

एकैकं दैत्यमुद्दिश्य त उत्तस्थुर्धृतायुधाः ।। २४ ।।

वेदा इव सदभ्यस्ताः समये वा यथांबुदाः ।।

ब्राह्मणेभ्यो यथा दत्ताः श्रद्धयार्था महापदि ।। २५।।

उज्जीवितांस्तु तान्दृष्ट्वा तुहुंडाद्यान्महासुरान् ।।

विनेदुः पूर्वदेवास्ते जलपूर्णा इवांबुदाः ।। २६ ।।

शुक्रेणोजीवितान्दृष्ट्वा दानवांस्तान्गणेश्वराः ।।

विज्ञाप्यमेव देवेशे ह्येवं तेऽन्योन्यमब्रुवन् ।। २७ ।।

आश्चर्यरूपे प्रमथेश्वराणां तस्मिंस्तथा वर्तति युद्धयज्ञे ।।

अमर्षितो भार्गवकर्मदृष्ट्वा शिलादपुत्रोभ्यगमन्महेशम् ।। २८ ।।

जयेति चोक्त्वा जय योनिमुग्रमुवाच नंदी कनकावदातम्।।

गणेश्वराणां रणकर्म देव देवैश्च सेंद्रैरपि दुष्करं यत् ।। २९ ।।

तद्भार्गवेणाद्य कृतं वृथा नः संजीव्य तानाजिमृतान्विपक्षान् ।।

आवर्त्य विद्यां मृतजीवदात्रीमेकैकमुद्दिश्य सहेलमीश ।। 4.1.16.३० ।।

तुहुंडहुंडादिकजंभजंभविपाकपाकादि महासुरेंद्राः ।।

यमालयादद्य पुनर्निवृत्ता विद्रावयंतः प्रमथाश्चरंति ।। ३१ ।।

यदि ह्यसौ दैत्यवरान्निरस्तान्संजीवयेदत्र पुनःपुनस्तान् ।।

जयः कुतो नो भविता महेश गणेश्वराणां कुत एव शांतिः ।। ३२ ।।

इत्येवमुक्तः प्रमथेश्वरेण स नंदिना वै प्रमथेश्वरेशः ।।

उवाच देवः प्रहसंस्तदानीं तं नंदिनं सर्वगणेशराजम्।। ३३ ।।

नंदिन्प्रयाहि त्वरितोतिमात्रं द्विजेंद्रवर्यं दितिनंदनानाम् ।।

मध्यात्समुद्धृत्य तथानयाशु श्येनो यथा लावकमंडजातम् ।। ३४ ।।

स एव मुक्तो वृषभध्वजेन ननाद नंदी वृषसिंहनादः ।।

जगाम तूर्णं च विगाह्य सेनां यत्राभवद्भार्गववंशदीपः ।। ३५ ।।

तं रक्ष्यमाणं दितिजैः समस्तैः पाशासिवृक्षोपलशैलहस्तैः ।।

विक्षोभ्य दैत्यान्बलवान्जहार काव्यं स नंदी शरभो यथेभम्।। ३६ ।।

स्रस्तांबरं विच्युतभूषणं च विमुक्तकेशं बलिना गृहीतम् ।।

विमोचयिष्यंत इवानुजग्मुः सुरारयः सिंहरवान्सृजंतः ।। ३७ ।।

दंभोलि शूलासिपरश्वधानामुद्दंडचक्रोपल कंपनानाम् ।।

नंदीश्वरस्योपरि दानवेंद्रा वर्षं ववर्षुर्जलदा इवोग्रम् ।। ३८ ।।

तं भार्गवं प्राप्य गणाधिराजो मुखाग्निना शस्त्रशतानि दग्ध्वा ।।

आयात्प्रवृद्धेऽसुरदेवयुद्धे भवस्य पार्श्वे व्यथितारिसैन्यः ।। ३९ ।।

अयं स शुक्रो भगवन्नितीदं निवेदयामास भवाय शीघ्रम् ।।

जग्राह शुक्रं स च देवदेवो यथोपहारं शुचिना प्रदत्तम् ।। 4.1.16.४० ।।

न किंचिदुक्त्वा स हि भूतगोप्ता चिक्षेप वक्त्रे फलवत्कवींद्रम् ।।

हाहारवस्तैरसुरैः समस्तैरुच्चैर्विमुक्तो हहहेति भूरि ।। ४१ ।।

काव्ये निगीर्णे गिरिजेश्वरेण दैत्या जयाशा रहिता बभूवुः ।।

हस्तैर्विमुक्ता इव वारणेंद्राः शृंगैर्विहीना इव गोवृषाश्च ।। ४२ ।।

शरीर हीना इव जीवसंघा द्विजा यथा चाध्ययनेन हीनाः ।।

निरुद्यमाः सत्त्वगुणा यथा वै यथोद्यमा भाग्यविवर्जिताश्च ।। ४३ ।।

पत्या विहीनाश्च यथैव योषा यथा विपक्षा इव मार्गणौघाः ।।

आयूंषि हीनानि यथैव पुण्यैर्वृत्तेन हीनानि यथा श्रुतानि ।। ४४ ।।

विना यथा वैभवशक्तिमेकां भवंति हीनाः स्वफलैः क्रियौघाः ।।

तथा विना तं द्विजवर्यमेकं दैत्या जयाशा विमुखा बभूवुः ।। ४५ ।।

नंदिनापहृते शुक्रे गिलिते च विषादिना ।।

विषादमगमन्दैत्या हीयमानरणोत्सवाः ।। ४६ ।।

तान्वीक्ष्य विगतोत्साहानंधकः प्रत्यभाषत ।।

कविं विक्रम्य नयता नंदिना वंचिता वयम् ।। ४७।।

तनूर्विना हृताः प्राणाः सर्वेषामद्य तेन नः ।।

धैर्यं वीर्यं गतिः कीर्तिः सत्त्वं तेजः पराक्रमः ।।४८।।

युगपन्नो हृतं सर्वमेकस्मिन्भार्गवे हृते ।।

धिगस्मान्कुलपूज्यो यैरेकोपि कुलसत्तमः ।।

गुरुः सर्वसमर्थश्च त्राता त्रातो न चापदि ।। ४९ ।।

तद्धैर्यमवलंब्येह युध्यध्वमरिभिः सह ।।

सूदयिष्याम्यहं सर्वान्प्रमथान्सह नंदिना ।। 4.1.16.५० ।।

अद्यैतान्विवशान्हत्वा सह देवैः सवासवैः ।।

भार्गवं मोचयिष्यामि जीवं योगीव कर्मतः ।। ५१ ।।

स चापि योगी योगेन यदि नाम स्वयं प्रभुः ।।

शरीरात्तस्य निर्गच्छेदस्माकं रोषपालिता ।। ५२ ।।

इत्यंधकवचः श्रुत्वा दानवा मेघनिःस्वनाः ।।

प्रमथा नर्दयामासुर्मर्तव्ये कृत निश्चयाः ।। ५३ ।।

सत्यायुपि न नो जातु शक्ताः स्युः प्रमथाबलात् ।।

असत्यायुषि किं गत्वा त्यक्त्वा स्वामिनमाहवे ।। ।। ५४ ।।

ये स्वामिनं विहायाजौ बहुमानधना जनाः ।।

यांति ते यांति नियतमंधतामिस्रमालयम् ।। ५५ ।।

अयशस्तमसा ख्यातिं मलिनीकृत्यभूरिशः ।।

इहामुत्रापि सुखिनो न स्युर्भग्ना रणाजिरात् ।। ५६।।

किं दानैः किं तपोभिश्च किं तीर्थपरिमज्जनैः ।।

धरातीर्थे यदि स्नातं पुनर्भव मलापहे ।। ५७ ।।

संप्रधार्येति तेऽन्योन्यं दैत्यास्ते दनुजास्तथा ।।

ममंथुः प्रमथानाजौ रणभेरीर्निनाद्य च ।। ५८ ।।

तत्र वाणासिवज्रौघैः कटंकटशिलामयैः ।।

भुशुंडीभिंदिपालैश्च शक्तिभल्ल परश्वधैः ।। ५९ ।।

खट्वांगैः पट्टिशैः शूलैर्लकुटैर्मुसलैरलम् ।।

परस्परमभिघ्नंतः प्रचक्रुः कदनं महत् ।। 4.1.16.६० ।।

कार्मुकाणां विकृष्टानां पततां च पतत्रिणाम् ।।

भिंदिपालभुशुंडीनां क्ष्वेडितानां रवोऽभवत् ।। ६१ ।।

रणतूर्यनिनादैश्च गजानां बहुबृंहितैः ।।

हेषारवैर्हयानां च महान्कोलाहलोऽभवत् ।।६२।।

प्रतिस्वनैरवापूरि द्यावाभूम्योर्यदंतरम् ।।

अभीरूणां च भीरूणां महारोमोद्गमोऽभवत् ।। ६३ ।।

गजवाजिमहाराव स्फुटच्छब्दग्रहाणि च ।।

भग्नध्वजपताकानि क्षीणप्रहरणानि च ।। ६४ ।।

रुधिरोद्गार चित्राणि व्यश्वहस्तिरथानि च ।।

पिपासितानि सैन्यानि मुमूर्छुरुभयत्र वै ।। ६५ ।।

दृष्ट्वा सैन्यं च प्रमथैर्भज्यमानमितस्ततः ।।

दुद्राव रथमास्थाय स्वयमेवांधको गणान् ।। ६६ ।।

शरवज्रप्रहारैस्तैर्वज्राघातैर्नगा इव ।।

प्रमथानेशिरे वातैर्निस्तोया इव तोयदाः ।। ६७ ।।

यांतमायांतमालोक्य दूरस्थं निकटस्थितम् ।।
प्रत्येकं रोमसंख्याभिर्व्यधाद्बाणैस्तदांधकः ।। ६८ ।।
विनायकेन स्कंदेन नंदिना सोमनंदिना ।।
नैगमेयेन शाखेन विशाखेन बलीयसा ।। ६९ ।।
इत्याद्यैस्तु गणैरुग्रैरंधकोप्यंधकीकृतः ।।
त्रिशूल शक्तिबाणौघ धारासंपातपातिभिः ।। 4.1.16.७० ।।
ततः कोलाहलो जातः प्रमथासुरसैन्ययोः ।।
तेन शब्देन महता शुक्रः शंभूदरे स्थितः ।। ७१ ।।
छिद्रान्वेषी भ्रमन्सोथ विनिःकेतो यथानिलः ।।
सप्तलोकान् सपालान्स रुद्रदेहे व्यलोकयत् ।।७२।।
ब्रह्मनारायणेंद्राणामादित्याप्यरसां तथा ।।
भुवनानि विचित्राणि युद्धं च प्रमथासुरम् ।। ७३ ।।
सवर्षाणां शतं कुक्षौ भवस्य परितो भ्रमन् ।।
न तस्य ददृशे रंध्रं शुचे रंध्रं खलो यथा ।। ७४ ।।
शांभवेनाथयोगेन शुक्ररूपेण भार्गवः ।।
चस्कंदाथ ननामापि ततो देवेन भाषितः ।। ७५ ।।
शुक्रवन्निःसृतोयस्मात्तस्मात्त्वं भृगुनंदन ।।
कर्मणानेन शुक्रस्त्वं मम पुत्रोसि गम्यताम् ।। ७६ ।।
जठरान्निर्गते शुक्रे देवोपि मुमुदेतराम् ।।
भ्रमञ्छ्रेयोभवद्यन्मे न मृतो जठरे द्विजः ।। ७७ ।।
इत्येवमुक्तो देवेन शुक्रोर्कसदृश द्युतिः ।।
विवेश दानवानीकं मेघमालां यथा शशी ।। ७८ ।।
शुक्रोदयान्मुदं लेभे स दानव महार्णवः ।।
यथा चंद्रोदये हर्षमूर्मिमाली महोदधिः ।। ७९ ।।
अंधकांधकहंत्रोर्वै वर्तमाने महाहवे ।।
इत्थं नाम्नाभवच्छुक्रः स वै भार्गवनंदनः ।। 4.1.16.८० ।।
यथा च विद्यां तां प्राप मृतसंजीवनीं पराम् ।।
शंभोरनुग्रहात्काव्यस्तन्निशामय सुव्रत ।। ८१ ।।

।। गणावूचतुः ।। ।।

पुराऽसौ भृगुदायादो गत्वा वाराणसीं पुरीम् ।।

अंडजस्वेदजोद्भिज्जजरायुज गतिप्रदाम् ।। ८२ ।।

संस्थाप्य लिंगं श्रीशंभोः कूपं कृत्वा तदग्रतः ।।

बहुकालं तपस्तेपे ध्यायन्विश्वेश्वरं प्रभुम् ।। ८३ ।।

राजचंपकधत्तूर करवीरकुशेशयैः ।।

मालती कर्णिकारैश्च कदंबैर्बकुलोत्पलैः ।। ८४ ।।

मल्लिकाशतपत्रीभिः सिंदुवारैः सकिंशुकैः ।।

अशोकैः करुणैः पुष्पैः पुन्नागैर्नागकेसरैः ।। ८५ ।।

क्षुद्राभिर्माधवीभिश्च पाटला बिल्वचंपकैः ।।

नवमल्लीविचिकिलैः कुंदैः समुचुकुंदकैः ।। ८६ ।।

मंदारैर्बिल्वपत्रैश्च द्रोणैर्मरुबकैर्बकैः ।।

ग्रंथिपर्णैर्दमनकैः सुरभूचूतपल्लवैः ।। ८७ ।।

तुलसी देवगंधारी बृहत्पत्री कुशांकुरैः ।।

नद्यावर्तैरगस्त्यैश्च सशालैर्देवदारुभिः ।। ८८ ।।

कांचनारैः कुरबकैर्दूर्वांकुर कुरंटकैः ।।

प्रत्येकमेभिः कुसुमैः पल्लवैरपरैरपि ।।८९।।

पत्रैः शतसहस्रैश्च स समानर्च शंकरम्।।

पंचामृतैर्द्रोणमितैर्लक्षकृत्वः प्रयत्नतः ।।4.1.16.९०।।

स्नपयामास देवेशं सुगंधस्नपनैर्बहु ।।

सहस्रकृत्वो देवेशं चंदनैर्यक्षकर्दमैः ।।९१।।

समालिलिंप देवेशं सुगंधोद्वर्तनान्यनु ।।

गीतनृत्योपहारैश्च श्रुत्युक्तस्तुतिभिर्बहुः ।।९२।।

नाम्नां सहस्रैरन्यैश्च स्तोत्रैस्तुष्टाव शंकरम् ।।

सहस्रं पंचशरदामित्थं शुक्रः समर्चयन् ।। ९३ ।।

यदा देवं नालुलोके मनागपि वरोन्मुखम्।।

तदान्यं नियमं घोरं जग्राहातीवदुःसहम्।। ९४।।

प्रक्षाल्य चेतसो त्यंतं चांचल्याख्यं महामलम् ।।

भावनावार्भि रसकृदिंद्रियैः सहितस्य च ।। ९५ ।।

निर्मलीकृत्य तच्चेतो रत्नं दत्त्वा पिनाकिने ।।

प्रपपौ कणधूमौघं सहस्रं शरदां कविः ।।९६।।

प्रससाद तदा देवो भार्गवाय महात्मने ।।

तस्माल्लिंगाद्विनिर्गत्य सहस्रार्काधिकद्युतिः ।। ९७ ।।

उवाच च विरूपाक्षः साक्षाद्दाक्षायणीपतिः ।।

तपोनिधे प्रसन्नोस्मि वरं वरय भार्गव ।। ९८ ।।

निशम्येति वचः शंभोरंभोजनयनो द्विजः ।।

उद्यदानंदसंदोह रोमांचांचित विग्रहः ।। ९९ ।।

तुष्टावाष्टतनुं तुष्टः प्रफु ल्ल नयनांचलः ।।

मौलावंजलिमाधाय वदञ्जयजयेति च ।। 4.1.16.१०० ।।

भार्गव उवाच ।। ।।

त्वं भाभिराभिरभिभूय तमः समस्तमस्तं नयस्यभिमतानि निशाचराणाम् ।।

देदीप्यसे मणेगगनेहिताय लोकत्रयस्य जगदीश्वर तन्नमस्ते ।। १०१ ।।

लोकेतिवेलमतिवेलमहामहोभिर्निर्मासि कौमुदमुदं च समुत्समुद्रम् ।।

विद्रावितारिवलतमाः सुतमोहिमांशो पीयूषपूरपरिपूरित तन्नमस्ते ।। २ ।।

त्वं पावने पथि सदागतिरस्युपास्यः कस्त्वां विना भुवनजीवनजीवतीह ।।

स्तब्धप्रभंजन विवर्धित सर्वजंतोसंतोषिताहि कुलसर्वगतन्नमस्ते ।। ३ ।।

विश्वैकपावकनतावकपावकैक शक्तेर्ऋतेऽमृतवतामृतदिव्यकार्यम् ।।

प्राणित्यदो जगदहो जगदंतरात्मंस्तत्पावक प्रतिपदं शमदं नमस्ते ।। ४ ।।

पानीयरूप परमेश जगत्पवित्र चित्रं विचित्रसुचरित्र करोषि नूनम् ।।

विश्वपवित्रममलं किल विश्वनाथ पानावगाहनत एतदतो नतोस्मि ।। ५ ।।

आकाशरूप बहिरंतरुतावकाश दानाद्विकस्वरमिहेश्वर विश्वमैतत् ।।

त्वत्तः सदा सदयसंश्वसिति स्वभावात्संकोचमेति भवतोस्मि नतस्ततस्त्वाम् ।। ६ ।।

विश्वंभरात्मक बिभर्ति विभोऽत्रविश्वं को विश्वनाथ भवतोन्य तमस्तमोरे ।।

तत्त्वां विना न शमिनां हिमजाहिभूषस्तव्योऽपरः परपरप्रणतस्ततस्त्वाम् ।। ७ ।।

आत्मस्वरूप तव रूप परंपराभिराभिस्ततं हर चराचर रूपमेतत् ।।

सर्वांतरात्मनिलयप्रतिरूपरूपनित्यंनतोस्मि परमात्मतनोऽष्टमूर्ते ।। ८ ।।

इत्यष्टमूर्तिभि रिमाभिरुमाभिवंद्यवंद्यातिवंद्य भव विश्वजनीनमूर्ते ।।

एतत्ततं सुविततं प्रणतप्रणीत सर्वार्थसार्थपरमार्थ ततो नतोस्मि ।। ९ ।।

अष्टमूर्त्यष्टकेनेष्टं परिष्टूयेति भार्गवः ।।

भर्गभूमिमिलन्मौलिः प्रणनाम पुनःपुनः ।। 4.1.16.११० ।।

इति स्तुतो महादेवो भार्गवेणातितेजसा ।।

उत्थाप्य भूमेर्बाहुभ्यां धृत्वा तं प्रणतं द्विजम् ।। ११ ।।

उवाच दशनज्योत्स्ना प्रद्योतित दिगंतरः ।।

अनेनात्युग्रतपसा ह्यनन्याचरितेन च ।। १२ ।।

लिंगस्थापनपुण्येन लिंगस्याराधनेन च ।।

चित्तरत्नोपहारेण शुचिना निश्चलेन च ।।१३।।

अविमुक्त महाक्षेत्रे पवित्राचरणेन च ।।

त्वां सुताभ्यां प्रपश्यामि तवादेयं न किंचन ।। १४ ।।

अनेनैव शरीरेण ममोदरदरीं गतः ।।

मद्वरेंद्रियमार्गेण पुत्र जन्मत्वमेष्यसि ।। ।५ ।।

अन्यं वरं प्रयच्छामि दुष्प्रापं पार्षदैरपि ।।

हरौ हिरण्यगर्भेपि प्रायशोऽहं जुगोपयाम् ।। १६ ।।

मृतसंजीवनी नाम विद्या या मम निर्मला ।।

तपोबलेन महता मयैव परिनिर्मिता ।। १७ ।।

त्वां तां तु प्रापयाम्यद्य मंत्ररूपां महाशुचे ।।

योग्यता तेऽस्ति विद्यायास्तस्याः शुचितपोनिधे ।। १८ ।।

यंयमुद्दिश्यनियतमेतामावर्तयिष्यसि ।।

विद्यां विद्येश्वरश्रेष्ठ स स प्राणिष्यति ध्रुवम् ।।१९।।

अत्यर्कमत्यग्निं(?) च ते तेजो व्योम्न्यतितारकम् ।।

देदीप्यमानं भविता ग्रहाणां प्रवरो भव ।।4.1.16.१२०।।

अभि त्वां ये करिष्यंति यात्रां नार्यो नरोपि वा ।।

तेषां त्वद्दृष्टिपातेन सर्वं कार्यं प्रणंक्ष्यति ।। २१ ।।

तवोदये भविष्यंति विवाहादीनि सुव्रत ।।

सर्वाणि धर्मकार्याणि फलवंति नृणामिह ।। २२ ।।

सर्वाश्च तिथयो मंदास्तव संयोगतः शुभाः ।।
तव भक्ता भविष्यंति बहुशुक्रा बहुप्रजाः ।। २३ ।।
त्वयेदं स्थापितं लिंगं शुक्रेशमिति संज्ञितम् ।।
येऽर्चयिष्यंति मनुजास्तेषां सिद्धिर्भविष्यति ।। २४ ।।
आवर्षं प्रतिशुक्रं ये नक्तव्रतपरा नराः ।।
त्वद्दिने शुक्रकूपे ये कृतसर्वोदकक्रियाः ।। २५ ।।
शुक्रेशमर्चयिष्यंति शृणु तेषां तु यत्फलम् ।।
अवंध्यशुक्रास्ते मर्त्याः पुत्रवंतोऽतिरेतसः ।। २६ ।।
पुंस्त्वसौभाग्यसंपन्ना भविष्यंति न संशयः ।।
व्यपेतविघ्नास्ते सर्वे जनाः स्युः सुखवासिनः ।।
इति दत्त्वा वरान्देवस्तत्र लिंगे लयं ययौ ।।२७।।
गणावूचतुः ।। ।।
शुक्रेश्वरस्य ये भक्ताः शुक्रलोके वसंति ते ।।
विश्वेश्वराद्दक्षिणतः शुक्रेशोस्ति परंतप ।। २८ ।।
तस्य दर्शनमात्रेण शुक्रलोके महीयते ।।
इत्येषा शुक्रलोकस्य स्थितिरुक्ता महामते ।।२९ ।।
अगस्त्य उवाच ।। ।।
इत्थं सधर्मिणि कथां शुक्रलोकस्य सुव्रते ।।
शृण्वन्नांगारकं लोकमालुलोकेऽथ स द्विजः ।। 4.1.16.१३० ।।
इति श्रीस्कांदे महापुराणे चतुर्थे काशीखंडे पूर्वार्धे शुक्रलोकवर्णनं नाम षोडशोऽध्यायः ।।१६।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१७

https://sa.wikisource.org/s/fuv

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। शिवशर्मोवाच ।। ।।

शुक्रसंबंधिनी देवौ कथा श्रावि मया शुभा ।।

यस्याः श्रवणमात्रेण प्रीणिते श्रवणे मम ।। १ ।।

कस्य पुण्यनिधेर्लोकः शोकहृत्त्वेष निर्मलः ।।

एतदाख्यातुमुद्युक्तौ भवंतौ भवतां मम ।। २ ।।

धयित्वा श्रोत्रपात्राभ्यां वाणीममृतरूपिणीम् ।।

न तृप्तिमधिगच्छामि भवन्मुखसुखोद्गताम् ।।३।।

।। गणावूचतुः ।। ।।

लोहितांगस्य लोकोयं शिवशर्मन्निबोध ह ।।

उत्पत्तिं चास्य वक्ष्यावो भूसुतोयं यथाभवत् ।। ४ ।।

पुरा तपस्यतः शंभोर्दाक्षायण्या वियोगतः ।।

भालस्थलात्पपातैकः स्वेदबिंदुर्महीतले ।। ५ ।।

ततः कुमारः संजज्ञे लोहितांगो महीतलात् ।।

स्नेहसंवर्धितः सोथ धात्र्या धात्रीस्वरूपया ।। ६ ।।

माहेय इत्यतः ख्यातिं परामेष गतः सदा ।।

ततस्तेपे तपोत्युग्रमुग्रपुर्यां पुरानघ ।। ७ ।।

असिश्च वरणा चापि सरितौ यत्र शोभने ।।

द्युनद्योत्तरवाहिन्या मिलितेऽत्र जगद्धिते ।। ८ ।।

सर्वगोपि हि विश्वेशो यत्र नित्यं प्रकाशते ।।

मुक्तये सर्वजंतूनां कालोज्झित स्ववर्ष्मणाम् ।। ९ ।।

अमृतं हि भवंत्येव मृता यत्र शरीरिणः ।।

अनुग्रहं समासाद्य परं विश्वेश्वरस्य ह ।। 4.1.17.१० ।।

अपुनर्भवदेहास्ते येऽविमुक्रेतनुत्यजः ।।

विना सांख्येन योगेन विना नानाव्रतादिभिः ।। ११ ।।

संस्थाप्य लिंगं विधिना स्वनाम्नांगारकेश्वरम् ।।

पांचमुद्रे महास्थाने कंबलाश्वतरोत्तरे ।। १२ ।।
ज्वलदंगारवत्तेजो यावत्तस्यशरीरतः ।।
विनिर्ययौ तपस्तावत्तेन तप्तं महात्मना ।। १३ ।।
ततोंगारक नाम्ना स सर्वलोकेषु गीयते ।।
तस्य तुष्टो महादेवो ददौ ग्रहपदं महत् ।। १४ ।।
अंगारक चतुर्थ्यां ये स्नात्वोत्तरवहांभसि ।।
अभ्यर्च्यांगारकेशानं नमस्यंति नरोत्तमाः ।।१५ ।।
न तेषां ग्रहपीडा च कदाचित्क्वापि जायते ।।
अंगांरकेन संयुक्ता चतुर्थी लभ्यते यदि ।।१६।।
उपरागसमं पर्व तदुक्तं कालवेदिभिः ।।
तस्यां दत्तं हुतं जप्तं सर्वं भवति चाक्षयम् ।।१७।।
श्रद्धया श्राद्धदा ये वै चतुर्थ्यंगारयोगतः ।।
तेषां पितॄणां भविता तृप्तिर्द्वादशवार्षिकी ।। १८ ।।
अंगारकचतुर्थ्यां तु पुरा जज्ञे गणेश्वरः ।।
अतएव तु तत्पर्व प्रोक्तं पुण्यसमृद्धये ।। १९।।
एकभक्तव्रती तत्र संपूज्य गणनायकम्।।
किंचिद्दत्त्वा तमुद्दिश्य न विघ्नैरभिभूयते ।। 4.1.17.२० ।।
अंगारेश्वर भक्ता ये वाराणस्यां नरोत्तमाः ।।
तेऽस्मिन्नंगारके लोके वसंति परमर्द्धयः ।।२१।।
अगस्त्य उवाच ।। ।।
इत्थं कथयतोरेव रम्यां पुण्यवतीं कथाम् ।।
भगवद्गणयोः प्राप नेत्रातिथ्यं गुरोः पुरी ।। २२ ।।
नेत्रानंदकरीं दृष्ट्वा शिवशर्माऽथ तां पुरीम् ।।
पप्रच्छाचार्यवर्यस्य कस्येयं पूरनुत्तमा ।। २३ ।।
।। गणावूचतुः ।। ।।
सखे सुखं समाख्यावो नानाख्येयं तवाग्रतः ।।
अध्वखेदापनोदाय पुनरस्याः पुरः कथाम्।। २४ ।।
विधेर्विधित्सतः पूर्वं त्रिलोकीरचनां मुदा ।।

आविरासुः सुताः सप्त मानसाः स्वस्यसंनिभाः ।। २५ ।।

मरीच्यत्र्यंगिरो मुख्याः सर्वे सृष्टिप्रवर्तकाः ।।

प्रजापतेरंगिरसस्तेष्वभूद्देवसत्तमः ।। २६ ।।

सुतश्चांगिरसो नाम बुद्ध्या विबुधसत्तमः ।।

शांतो दांतो जितक्रोधो मृदुवाङ्निर्मलाशयः ।। २७ ।।

वेदवेदार्थतत्त्वज्ञः कलासु कुशलोऽमलः ।।

पारदृश्वा तु सर्वेषां शास्त्राणां नीतिवित्तमः ।। २८ ।।

हितोपदेष्टा हितकृदहितात्यहितः सदा ।।

रूपवाञ्छीलसंपन्नो गुणवान्देशकालवित् ।। २९ ।।

सर्वलक्षणसंभार संभृतो गुरुवत्सलः ।।

ततापं तापसीं वृत्तिं काश्यां स महतीं दधत ।। 4.1.17.३० ।।

महल्लिंगं प्रतिष्ठाप्य शांभवं भूरिभावनः ।।

अयुतं शरदां दिव्यं दिव्यतेजा महातपाः ।।३१।।

ततः प्रसन्नो भगवान्विश्वेशो विश्वभावनः ।।

आविर्भूय ततो लिंगान्महसां राशिरब्रवीत् ।।३२।।

प्रसन्नोस्मि वरं ब्रूहि यत्ते मनसि वर्तते ।।

इति शंभुं समालोक्य तुष्टावेति स हृष्टवान् ।। ३३ ।।

।। आंगिरस उवाच ।। ।।

जय शंकर शांत शशांकरुचे रुचिरार्थद सर्वद सर्वशुचे ।।

शुचिदत्त गृहीत महोपहृते हृतभक्तजनोद्धततापतते ।। ३४ ।।

ततसर्वहृदंबर वरदनते नतवृजिनमहावन दाहकृते ।।

कृतविविधचरित्रतनोसुतनो तनुविशिखविशोषणधैर्यनिधे ।। ३५ ।।

निधनादि विवर्जितकृतनतिकृत्कृतिविहितमनोरथपन्नगभृत् ।।

नगभर्तृसुतार्पितवामवपुः स्ववपुःपरिपूरितसर्वजगत् ।। ३६ ।।

त्रिजगन्मयरूपविरूपसुदृग्दृगुदंचनकुंचन कृतहुतभुक् ।।

भवभूतपतेप्रमथैकपते पतितेष्वपिदत्तकरप्रसृते ।। ३७ ।।

प्रसूताखिलभूतलसंवरणप्रणवध्वनिसौधसुधांशुधर ।।

वरराजकुमारिकया परया परितः परितुष्ट नतोस्मि शिव ।। ३८ ।।

शिवदेव गिरीश महेश विभो विभवप्रद गिरिश शिवेशमृड ।।
मृडयोडुपतिध्र जगत्त्रितयं कृतयंत्रणभक्तिविघातकृताम् ।। ३९ ।।
न कृतांत त एष बिभेभि हरप्रहराशु महाघममोघमते ।।
नमतांतरमन्यदवैनि शिवं शिवपादनतेः प्रणतोस्मि ततः ।। 4.1.17.४० ।।
विततेऽत्र जगत्यखिलेऽघहरं हर तोषणमेव परं गुणवन् ।।
गुणहीनमहीन महावलयं प्रलयांतकमीश नतोस्मि ततः ।। ४१ ।।
इति स्तुत्वा महादेवं विररामांगिरः सुतः ।।
व्यतरच्च महेशानः स्तुत्या तुष्टो वरान्बहून् ।।४२।।
।। श्रीमहादेव उवाच ।। ।।
बृहता तपसानेन बृहतां पतिरेध्यहो ।।
नाम्ना बृहस्पतिरिति ग्रहेष्वर्च्योभव द्विज ।। ४३ ।।
अस्माल्लिंगार्चनान्नित्यं जीवभूतोसि मे यतः ।।
अतो जीव इति ख्यातिं त्रिषु लोकेषु यास्यसि ।।४४।।
वाचां प्रपंचैश्चतुरैर्निष्प्रपंचो यतः स्तुतः ।।
अतो वाचां प्रपंचस्य पतिर्वाचस्पतिर्भव ।।४५।।
अस्य स्तोत्रस्य पठनादपि वागुदियाच्च यम् ।।
तस्य स्यात्संस्कृता वाणी त्रिभिर्वर्षैस्त्रिकालतः ।। ४६ ।।
समुत्पन्ने महाकार्ये न स बुद्ध्या प्रहीयते ।।
यः पठिष्यत्यदः स्तोत्रं वायव्याख्यं दिनेदिने ।। ४७ ।।
अस्यस्तोत्रस्य पठनान्नियतं मम संनिधौ ।।
न दुर्वृत्तौ प्रवृत्तिः स्यादविवेकवतां नृणाम् ।। ४८ ।।
अदः स्तोत्रं पठञ्जंतुर्जातुपीडां ग्रहोद्भवाम् ।।
न प्राप्स्यति ततो जप्यमिदं स्तोत्रं ममाग्रतः ।। ४९ ।।
नित्यं प्रातः समुत्थाय यः पठिष्यति मानवः ।।
इमां स्तुतिं हरिष्येऽहं तस्य बाधाः सुदारुणाः ।। 4.1.17.५० ।।
त्वत्प्रतिष्ठितलिंगस्य पूजां कृत्वा प्रयत्नतः ।।
इमां स्तुतिमधीयानो मनोवांछामवाप्स्यति ।। ५१ ।।
इति दत्त्वा वराञ्छंभुः पुनर्ब्रह्माणमाह्वयत् ।।

सेंद्रान्देवगणान्सर्वान्सयक्षोरगकिन्नरान् ।। ५२ ।।

तानागतान्समालोक्य शिवो व्रह्माणमब्रवीत् ।।

विधेविधेहि मद्वाक्यादमुं वाचस्पतिं मुनिम् ।। ५३ ।।

गुरुं सर्वसुरेंद्राणां परितः स्वगुणैर्गुरुम् ।।

अभिषिंच विधानेन देवाचार्य पदे मुदे ।। ५४ ।।

अतीव धिषणाधीशो ममप्रीतोभविष्यति ।।

महाप्रसाद इत्याज्ञां शिरस्याधाय तत्क्षणात् ।। ५५ ।।

सुरज्येष्ठः सुराचार्यं चकारांगिरसं तदा ।।

देवदुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः ।। ५६ ।।

गुरुपूजां व्यधुः सर्वे गीर्वाणा मुदिताननाः ।।

अभिषिक्तो वसिष्ठाद्यैर्मंत्रपूतेन वारिणा ।। ५७ ।।

पुनरन्यं वरं प्रादाद्गिरीशः पतये गिराम् ।।

शृण्वांगिरस धर्मात्मन् देवेज्यकुलनंदन ।। ५८ ।।

भवतास्थापितं लिंगं सुबुद्धिपरिवर्धनम् ।।

बृहस्पतीश्वर इति ख्यातं काश्यां भविष्यति ।। ५९ ।।

गुरुपुष्यसमायोगे लिंगमेतत्समर्च्य च ।।

यत्करिष्यंति मनुजास्तत्सिद्धिमधियास्यति ।। 4.1.17.६० ।।

बृहस्पतीश्वरं लिंगं मया गोप्यं कलौ युगे ।।

अस्य संदर्शनादेव प्रतिभा प्रतिलभ्यते ।।६१।।

चंद्रेश्वराद्दक्षिणतो वीरेशान्नैर्ऋते स्थितम् ।।

आराध्य धिषणेशं वै गुरुलोके महीयते ।।६२।।

गुर्वंगना गमनजं पापं षण्मास सेवनात् ।।

अवश्यं विलयं याति तमः सूर्योदयाद्यथा ।। ६३ ।।

अतएव हि गोप्तव्यं महापातकनाशनम् ।।

बृहस्पतीश्वरं लिंगं नाख्येयं यस्यकस्यचित् ।।६४ ।।

इति दत्त्वा वरान्देवस्तत्रैवांतर्हितो भवत् ।।

द्रुहिणो गुरुणा सार्धं सेंद्रोपेंद्रो बृहस्पतिम् ।। ६५ ।।

अस्मिन्पुरेभिषिच्याथ विसृज्येंद्रादिकान्सुरान् ।।

अलंचकार स्वं लोकं विष्णुनाऽनुमतो द्विज ।। ६६ ।।

।। अगस्त्य उवाच ।। ।।

अतिक्रम्य गुरोर्लोकं लोपामुद्रे ददर्श सः ।।

शिवशर्मा पुरी सौरेः प्रभामंडल मंडिताम् ।। ६७ ।।

पृष्टौ तेन च तौ तत्र तां पुरीं प्रददर्शतुः ।।

द्विजेन द्विजवर्याय गणवर्यौ शुचिस्मिते ।।६८।।

गणावूचतुः ।। ।।

मारीचेः कश्यपाज्जज्ञे दाक्षायण्यां द्विजोष्णगुः ।।

तस्यभार्याभवत्संज्ञा पुत्री त्वष्टुः प्रजापतेः ।। ६९ ।।

भर्तुरिष्टा ततस्तस्माद्रूपयौवनशालिनी ।।

संज्ञा बभूव तपसा सुदीप्तेन समन्विता ।। 4.1.17.७० ।।

आदित्यस्य हि तद्रूपं मंडलस्य तु तेजसा ।।

गात्रेषु परिदध्यौ वै नातिकांतमिवाभवत् ।। ७१ ।।

न खल्वयमृतोऽडस्थ इति स्नेहादभाषत ।।

तदा प्रभृति लोकेयं मार्तंड इति चोच्यते ।। ७२ ।।

तेजस्त्वभ्यधिकं तस्य साऽसहिष्णुर्विवस्वतः ।।

येनातितापयामास त्रैलोक्यं तिग्मरश्मिभृत् ।। ७३ ।।

त्रीण्यपत्यानि भो ब्रह्मन्संज्ञायां महसां निधिः ।।

आदित्यो जनयामास कन्यां द्वौ च प्रजापती ।। ७४ ।।

वैवस्वतं मनुं ज्येष्ठं यमं च यमुनां ततः ।।

नातितेजोमयं रूपं सोढुं साऽलं विवस्वतः ।। ७५ ।।

मायामयीं ततश्छायां सवर्णां निर्ममे स्वतः ।।

प्रांजलिः प्रणता भूत्वा संज्ञां छाया तदाब्रवीत् ।। ७६ ।।

तवाज्ञाकारिणीं देवि शाधि मां करवाणि किम् ।।

संज्ञोवाच ततश्छायां सवर्णे शृणु सुंदरि ।। ७७ ।।

अहं यास्यामि सदनं त्वष्टुस्त्वं पुनरत्र मे ।।

भवने वस कल्याणि निर्विशंकं ममाज्ञया ।। ७८ ।।

मनुरेष यमावेतौ यमुना यम संज्ञकौ ।।

स्वापत्यदृष्ट्या द्रष्टव्यमेतद्बालत्रयं त्वया ।। ७९ ।।

अनाख्येयमिदं वृत्तं त्वया पत्यौ शुचिस्मिते ।।

इत्याकर्ण्याथ सा त्वाष्ट्रीं देवीं छाया जगाद ह ।। 4.1.17.८० ।।

आकचग्रहणान्नाहमाशापाच्च कदाचन ।।

आख्यास्यामि चरित्रं ते याहि देवि यथासुखम् ।। ८१ ।।

इत्यादिश्य सवर्णां सा तथेत्युक्ता सवर्णया ।।

पितुरंतिकमासाद्य नत्वा त्वष्टारमब्रवीत् ।।।। ८२ ।।

पितः सोढुं न शक्नोमि तेजस्तेजोनिधेरहम् ।।

तीव्रं तस्यार्यपुत्रस्य काश्यपस्य महात्मनः ।। ।। ८३ ।।

निशम्योदीरितं तस्याः पित्रानिर्भर्त्सिता बहु ।।

भर्तुः समीपं याहीति नियुक्ता सा पुनःपुनः ।। ८४ ।।

चिंतामवाप महतीं स्त्रीणां धिक्चेष्टितं त्विति ।।

निनिंद बहुधात्मानं स्त्रीत्वं चाति निनिंद सा ।।८५।।

स्वातंत्र्यं न क्वचित्स्त्रीणां धिगस्वातंत्र्यजीवितम् ।।

शैशवे यौवने प्रांते पितृभर्तृसुताद्भयम् ।।८६।।

त्यक्तं भर्तृगृहं मौग्ध्याद्धंत दुवृत्तया मया ।।

अविज्ञातापि चेद्यायामथ पत्युर्निकेतनम् ।।८७ ।।

तत्रास्ति सा सवर्णा वै परिपूर्णमनोरथा ।।

अथावतिष्ठे सात्रैव पित्रा निर्भर्त्सिताप्यहम् ।। ८८ ।।

ततोति चंडश्चंडांशुः पित्रोरतिभयंकरः ।।

अहो यदुच्यते लोकैरुपाख्यानमिदं हि तत् ।। ८९ ।।

स्फुटं दृष्टं मयाद्येति स्वकरांगारकर्ष(र्प?)णम् ।।

नष्टं भर्तृगृहं मौग्ध्याच्छ्रेयो वा न पितुर्गृहम् ।।।। 4.1.17.९० ।।

वयश्च प्रथमं चारु रूपं त्रैलोक्यकांक्षितम् ।।

सर्वाभिभवनं स्त्रीत्वं कुलं चातीव निर्मलम् ।। ९१ ।।

पतिश्च तादृक्सर्वज्ञो लोकचक्षुस्तमोपहः ।।

सर्वेषां कर्मणां साक्षी सर्वः सर्वत्रसंचरः ।। ९२ ।।

मह्यं श्रेयः कथं वा स्यादिति सा परिचिंत्य च ।।

अगच्छद्वडवा भूत्वा तपसे पर्यनिंदिता ।। ९३ ।।

उत्तरांश्च कुरून्प्राप चरंती नीरसंतृणम् ।।

व्युत्तेपे च तपस्तीव्रं पतिमाधाय चेतसि ।।

तपोबलेन तत्पत्युः सहिष्ये तेज इत्यलम् ।। ९४ ।।

मन्यमानोथ तां संज्ञां सवर्णायां तदा रविः ।।

सावर्णिं जनयामास मनुमष्टममुत्तमम् ।। ९५ ।।

शनैश्चरं द्वितीयं च सुतां भद्रां तृतीयिकाम् ।।

सवर्णा स्वेष्वपत्येषु सापत्न्यात्स्त्रीस्वभावतः ।। ९६।।

चकाराभ्यधिकं स्नेहं न तथा पूर्वजेष्वथ ।।

मनुस्तत्क्षांतवाञ्ज्येष्ठो भक्ष्यालंकारलालने ।। ९७ ।।

कनिष्ठेष्वधिकं दृष्ट्वा सावर्ण्यादिषु नो यमः ।।

कदाचिद्रोषतो बाल्याद्भाविनोर्थस्य गौरवात् ।। ९८ ।।

पदा संतर्जयामास यमः संज्ञासरूपिणीम् ।।

तं शशाप च सा क्रोधात्सावर्णेजननी तदा ।। ९९ ।।

जिघांसता त्वया पाप मां यदंघ्रिः समुद्यतः।।

अचिरात्तत्पतत्वेष तवेति भृशदुःखिता ।। 4.1.17.१०० ।।

मातृशाप परित्रस्तो यमोपि पितुरग्रतः ।।

शशंस सर्वं तद्वृत्तं रक्षरक्षेत्युवाच च ।। १ ।।

मात्रासु तेषु सर्वेषु वर्तनीयं समं यतः ।।

तस्यां मयोद्यतः पादो न देहे परिपातितः ।। २ ।।

बाल्याद्वा यदि वा मोहात्तद्भवान्क्षंतुमर्हसि ।।

गोपते शापतो मातुर्मा पतत्वंघ्रिरेष मे ।।३।।

।। विवस्वानुवाच ।। ।।

अपराधसहस्रेपि जननी न शपेत्सुतम् ।।

तस्मात्किमपि भो बाल भविष्यत्यत्र कारणम् ।। ४ ।।

येन त्वां साऽशपत्क्रोधाद्धर्मज्ञं सत्यवादिनम् ।।

मातृशापोन्यथाकर्तुं न शक्यः केनचित्क्वचित् ।। ५ ।।

कृमयो मांसमादाय यास्यंत्यस्मान्महीतलम् ।।

इत्थं तु चरितार्थः स्याच्छापस्त्रातो भवानपि ।। ६ ।।

इति पुत्रं समाश्वास्य रविरंतःपुरं ययौ ।।

चिरमालोक्य तां भार्यामुवाच सविता वचः ।। ७ ।।

अयि भामिनि बालेषु समेष्वपि कुतस्त्वया ।।

विधीयतेऽधिकः स्नेहः सावर्ण्यादिष्वनादिषु ।। ८ ।।

नाचचक्षे यदासाऽथ भास्वते परिपृच्छते ।।

तदात्मानं समाधाय सोज्ञासीत्सर्वमेव हि ।। ९ ।।

ततो भगवते शप्तुमुद्यते सा शशंस ह ।।

यथावृत्तं तथा तथ्यं तुतोष भगवानपि ।। 4.1.17.११० ।।

तथ्यभाषणतस्तां तु रविर्ज्ञात्वा निरागसम् ।।

न शशाप च संक्रुद्धो ययौ च त्वष्टुरंतिकम् ।।११।।

त्वष्टापि च यथान्यायं सान्वयं तिग्मतेजसम्।।

निर्दग्धुकामं कोपेन प्रागानर्च मुदा तदा ।।

विज्ञाय तदभिप्रायं त्वष्टोवाचाऽशु तं रविम् ।। १२ ।।

त्वष्टोवाच ।। ।।

तवातितेजसो भीता प्राप्योत्तरकुरून् रवे ।।

वडवारूपमास्थाय वने चरति शाद्वले।। १३ ।।

द्रष्टा हि तां भवानद्य स्वां भार्यामार्यचारिणीम् ।।

अधृष्यां सर्वभूतानां तेजसा नियमेन च ।। १४ ।।

त्वष्ट्रा यत्तक्षितः सूर्यस्तस्यैवानुमतेन च ।।

भ्रमिमारोप्य यत्नेन सोतिकांततरोऽभवत् ।। १५ ।।

लब्धानुज्ञोऽथ सविता गत्वोत्तरकुरूनरम् ।।

साक्षात्तपोमयीं लक्ष्मीं चरंतीं च तपो महत् ।। १६ ।।

ददर्श वडवारूपां वाडवानलतेजसम् ।।

नीरसा नितृणान्येव वृण्वंतीं योगमायया ।। १७ ।।

अनेनसं स विज्ञाय तां त्वाष्ट्रीमश्वरूपिणीम् ।।

सहरिर्हरिरूपेण मुखेन समभावयद् ।। १८ ।।

त्वरमाणा च परितः परपूरुषशंकया ।।

सा तन्निरवमच्छुक्रं नासिकाभ्यां विवस्वतः ।। १९ ।।
देवौ तस्मादजायेतामश्विनौ भिषजांवरौ ।।
स्वरूपमनुरूपं च द्युमणिस्तामदर्शयत ।। 4.1.17.१२० ।।
तुतोष सापि तं दृष्ट्वा मित्रं नेत्रमुदावहम् ।।
पतिं पतिव्रता कां तं स्वांतसंतापहारिणम् ।। २१ ।।
निर्वृत्तिं च परां प्राप दुष्प्रापं तपसाथ किम् ।।
तप एव परं श्रेयस्तप एव परं धनम् ।। २२ ।।
तप एव हि देवत्वे कारणं परमं मतम् ।।
शिवशर्मन्यदेतद्वै दृश्यते चातिदीप्तिमत् ।। २३ ।।
ज्योतिश्चक्रस्वरूपं च व्योम्न्युपर्यध एव च ।।
तत्सर्वमिह जानीहि सुमहत्तापसं महः ।।२४।।
एवं शनैश्चरो जज्ञे सवर्णायां विवस्वतः ।।
सोऽथ वाराणसीं गत्वा सर्वत्रिदशवंदिताम् ।। २५ ।।
तस्वा तपोऽतिविपुलं लिंगं संस्थाप्य शांकरम् ।।
इमं लोकमवापोच्चैर्ग्रहत्वं च हरार्चनात ।।२६।।
शनैश्चरेश्वरं दृष्ट्वा वाराणस्यां सुशोभनम् ।।
शनिबाधा न जायेत शनिवारे तदर्चनात् ।।२७।।
विश्वेशाद्दक्षिणेभागे शुक्रेशादुत्तरेण हि ।।
शनैश्चरेशमभ्यर्च्य लोकेऽत्र परिमोदते ।। २८ ।।
श्रुत्वाऽध्यायमिमं पुण्यं ग्रहपीडा न जायते ।।
नोपसर्गभयं तस्य काश्यां निवसतः सतः ।। १२९ ।।
इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे भौमगुरुशनिलोकवर्णनं नाम सप्तदशोऽध्यायः ।। १७ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१८



अगस्तिरुवाच ।। ।।

इति शृण्वन्कथां रम्यां शिवशर्माऽथ माथुरः ।।

मुक्तिपुर्यां सुसंस्नातो मायापुर्यां गतासुकः ।।१।।

नेत्रयोः प्राघुणी चक्रे ततः सप्तर्षिमंडलम् ।।

व्रजन्स वैष्णवं लोकमंते विष्णुपुरीक्षणात् ।। २ ।।

उवाच च प्रसन्नात्मा स्तुतश्चारणमागधैः ।।

प्रार्थितो देवकन्याभिस्तिष्ठ तिष्ठेति चक्षणम् ।।३।।

स्थिता सुतासु निःश्वसस्य मंदभाग्या वयं त्विति ।।

गतः पुण्यतमाँल्लोकानसौ यत्पुण्यवत्तमः ।। ४ ।।

इति शृणवन्मुखात्तासां वचनानि विमानगः ।।

देवौ कस्यायमतुलो लोकस्तेजोमयः शुभः ।। ५ ।।

इति द्विजवचः श्रुत्वा प्रोचतुर्गणसत्तमौ ।।

शिवशर्मञ्छिवमते सदा सप्तर्षयोमलाः ।।६।।

वसंतीह प्रजाः स्रष्टुं विनियुक्ताः प्रजासृजा ।।

मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ।। ७ ।।

वसिष्ठश्च महाभागो ब्रह्मणो मानसाः सुताः ।।

सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।। ८ ।।

संभूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः ।।

स्मृतिरूर्जा क्रमादेषां पत्न्यो लोकस्य मातरः ।।९।।

एतेषां तपसा चैतद्धार्यते भुवनत्रयम् ।।

उत्पाद्य ब्रह्मणा पूर्वमेते प्रोक्ता महर्षयः ।।4.1.18.१०।।

प्रजाः सृजत रे पुत्रा नानारूपाः प्रयत्नतः।।

ततः प्रणम्य ब्रह्माणं तपसे कृतनिश्चयाः ।। ११ ।।

अविमुक्तं समासाद्य क्षेत्रंक्षेत्रज्ञधिष्ठितम् ।।

मुक्तये सर्वजंतूनामविमुक्तं शिवेन यत् ।। १२ ।।

प्रतिष्ठाप्य च लिंगानि ते स्वनाम्नांकितानि च ।।

शिवेति परया भक्त्या तेपुरुग्रं तपो भृशम।।१३।।

तुष्टस्तत्तपसा शंभुः प्राजापत्यपदं ददौ ।।

लिंगान्यत्रीश्वरादीनि दृष्ट्वा काश्यां प्रयत्नतः ।। ४ ।।

प्राजापत्येऽत्र ते लोके वसंत्युज्ज्वलतेजसः ।।

गोकर्णेशस्य सरसः प्रत्यक्तीरे प्रतिष्ठितम् ।। १५ ।।

लिंगमत्रीश्वरं दृष्ट्वा ब्रह्मतेजोभिवर्धते ।।

कर्कोट वाप्या ईशाने मरीचेः कुंडमुत्तमम् ।। १६ ।।

तत्र स्नात्वा नरो भक्त्या भ्राजते भास्करो यथा ।।

मरीचीश्वर संज्ञं तु तत्र लिंगं प्रतिष्ठितम् ।। १७ ।।

तल्लिंगदर्शनाद्विप्र मारीचं लोकमाप्नुयात् ।।

कांत्या मरीचिमालीव शोभते पुरुषर्षभः ।। १८ ।।

पुलहेश पुलस्त्येशौ स्वर्गद्वारस्य पश्चिमे ।।

तौ दृष्ट्वा मनुजो लोके प्राजापत्ये महीयते ।। १९ ।।

हरिकेशवने रम्ये दृष्ट्वैवांगिरसेश्वरम् ।।

इह लोके वसेद्विप्र तेजसापरिबृंहितः ।। 4.1.18.२० ।।

वरणायास्तटे रम्ये दृष्ट्वा वासिष्ठमीश्वम् ।।

क्रत्वीश्वरं च तत्रैव लभते वसतिं त्विह ।। २१ ।।

काश्यामेतानि लिंगानि सेवितानि शुभैषिभिः।।

मनोभिवांछितं दद्युरिह लोके परत्र च।।२२।।

गणावूचतुः ।। ।।

शिवशर्मन्महाभाग तिष्ठते सात्र सुंदरी ।।

अरुंधती महापुण्या पतिव्रतपरायणा ।। २३ ।।

यस्याः स्मरणमात्रेण गंगास्नान फलं लभेत् ।।

अंतःपुरचरैर्द्वित्रैः पवित्रैः सहितो विभुः ।। २४ ।।

सदा नारायणो देवो यस्याश्चक्रे कथां मुदा ।।

कमलायाः पुरोभागे पातिव्रत्य सुतोषितः ।। २५ ।।

पतिव्रतास्वरुंधत्याः कमले विमलाशयः ।।

यथास्ति न तथाऽन्यस्याः कस्याश्चित्कापि भामिनि ।।२६।।

न तद्रूपं न तच्छीलं न तत्कौलीन्यमेव च ।।

न तत्कलासुकौशल्यं पत्युः शुश्रूषणं न तत् ।। २७ ।।

न माधुर्यं न गांभीर्यं न चार्यपरितोषणम् ।।

अरुंधत्या यथा देवि तथाऽन्यासां क्वचित्प्रिये ।। २८ ।।

धन्यास्ता योषितो लोके सभाग्याः शुद्धबुद्धयः ।।

अरुंधत्याः प्रसंगे या नामापि परिगृह्णते ।। २९ ।।

यदा पतिव्रतानां तु कथास्मद्भवने भवेत् ।।

तदा प्राथमिकीं रेखामेषाऽलंकुरुते सती ।। 4.1.18.३० !।

ब्रुवतोरिति संकथां तथा गणयोर्वैष्णवयोर्मुदावहाम् ।।

ध्रुवलोकउपागतस्ततो नयनातिथ्यमतथ्यवर्जितः ।। ३१ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सप्तर्षिलोकवर्णनंनामाष्टादशोऽध्यायः ।।१८।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०१९

https://sa.wikisource.org/s/fux

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

शिवशर्मोवाच ।।

तिष्ठन्नेकेन पादेन कोयं भ्रमति सत्तमौ ।।

अनेकरशनाव्यग्र हस्ताग्रो व्यग्रलोचनः ।।१।।

त्रिलोकीमंडपस्तंभ सन्निभोभाभिरावृतः ।।

अतुलं ज्योतिषां राशिं तुलया तुलयन्निव।।२।।

सूत्रधार इव व्योम व्यायामपरिमापकः ।।

त्रैविक्रमोंघ्रिदंडो वा प्रोद्दंडो गगनांगणे ।। ३ ।।

अथवांबरकासारसारयूपस्वरूपधृक् ।।

कोयं कथय तं देवौ कृपया परया मम ।। ४ ।।

निशम्येति वचस्तस्य वयस्यस्य विमानगौ।।

प्रणयादाहतुस्तस्मै ध्रुवां ध्रुवकथां गणौ ।।५।।

।। गणावूचतुः ।। ।।

मनोः स्वायंभुवस्यासीदुत्तानचरणः सुतः ।।

तस्य क्षितिपतेर्विप्र द्वौ सुतौ संबभूवतुः ।। ६ ।।

सुरुच्यामुत्तमो ज्येष्ठः सुनीत्यां तु ध्रुवो परः ।।

मध्ये सभं नरपतेरुपविष्टस्य चैकदा ।। ७ ।।

सुनीत्या राजसेवायै नियुक्तोऽलंकृतोर्भकः ।।

ध्रुवो धात्रेयिकापुत्रैः समं विनयतत्परः ।। ८ ।।

स गत्वोत्तानचरणं क्षोणीशं प्रणनाम ह ।।

दृष्ट्वोत्तमं तदुत्संगे निविष्टं जनकस्य वै ।। ९ ।।

प्रोच्चसिंहासनस्थस्य नृपतेर्बाल्यचापलात् ।।

आरोढुकामस्त्वभवत्सौनीतेयस्तदा ध्रुवः ।। 4.1.19.१० ।।

आरुरुक्षुमवेक्ष्यामुं सुरुचिर्ध्रुवमब्रवीत् ।।

दौर्भगेय किमारोढुमिच्छेरंकं महीपतेः ।। ११ ।।

बालबालिशबुद्धित्वादभाग्या जठरोद्भव ।।

अस्मिन्सिंहासने स्थातुं न त्वया सुकृतं कृतम् ।। ।। १२ ।।

यदि स्यात्सुकृतं तत्किं दुर्भगोदरगोऽभवः ।।

अनेनैवानुमानेन बुध्यस्व स्वाल्पपुण्यताम् ।। १३ ।।

भूत्वा राजकुमारोपि नालंकुर्या ममोदरम् ।।

सुकुक्षिजममुं पश्य त्वमुत्तममनुत्तमम् ।। १४ ।।

अधिजानुधराजानेर्मानेन परिबृंहितम् ।।

प्रांशोः सिंहासनस्यास्य रुचिश्चेदधिरोहणे ।। १५ ।।

कुक्षिं हित्वा किमवसः सुरुचेश्च सुरोचिषम् ।।

मध्ये भूपसभं बालस्तयेति परिभर्त्सितः ।। १६ ।।

पतन्निपीतबाष्पांबुर्धैर्यात्किंचिन्न चोक्तवान् ।।

उचिताऽनुचितं किंचिन्नोचिवान्सोपि पार्थिवः ।। १७ ।।

नियंत्रितो महिष्याश्च तस्याः सौभाग्यगौरवात् ।।

विमृज्य च सभालोकं शोकं संमृज्य चेष्टितैः ।। १८ ।।

शैशवैः स शिशुर्नत्वा नृपं स्वसदनं ययौ ।।

सुनीतिर्नीतिनिलयमवलोक्याथ बालकम् ।। १९ ।।

सुखलक्ष्म्यैवचाज्ञासीद्ध्रुवं समवमानितम् ।।

अभिसृत्य च तं बालं मूर्ध्न्युपाघ्राय सा सकृत् ।। 4.1.19.२० ।।

किंचित्परिम्लानमिव ससांत्वं परिषस्वजे ।।

अथ दृष्ट्वा सुनीतिं स रहोंतः पुरवासिनीम् ।।२१।।

दीर्घं निःश्वस्य बहुशो मातुरग्रे रुरोद ह ।।

सांत्वयित्वाश्रुनयना वदनं परिमार्ज्य च ।। २२ ।।

दुकूलांचल संपर्कैर्मृदुलैर्मृदुपाणिना ।।

पप्रच्छ तनयं माता वद रोदनकारणम् ।।

विद्यमाने नरपतौ शिशो केनापमानितः ।। २३ ।।

अपोथसमुपस्पृश्य तांबूलं परिगृह्य च ।।

मात्रा पृष्टः सोपरोधं ध्रुवस्तां पर्यभाषत ।।२४ ।।

संपृच्छे जननि त्वाहं सम्यक्शंस ममाग्रतः ।।

भार्यात्वेपि च सामान्ये कथं सा सुरुचिः प्रिया ।। २५ ।।

कथं न भवती मातः प्रिया क्षितिपतेरसि ।।
कथमुत्तमतां प्राप्त उत्तमः सुरुचेः सुतः ।। २६ ।।
कुमारत्वेपि सामान्ये कथं त्वहमनुत्तमः ।।
कथं त्वं मंदभाग्यासि सुकुक्षिः सुरुचिः कथम् ।।२७।।
कथं नृपासनं योग्यमुत्तमस्य कथं न मे ।।
कथं मे सुकृतं तुच्छमुत्तमस्योत्तमं कथम् ।। २८ ।।
इति श्रुत्वा वचस्तस्य सुनीतिर्नीतिमच्छिशोः ।।
किंचिदुच्छवस्य शनकैः शिशुकोपोपशांतये ।। २९ ।।
स्वभावमधुरां वाणीं वक्तुं समुपचक्रमे ।।
सापत्नं प्रतिघं त्यक्त्वा राजनीतिविदांवरा ।।4.1.19.३०।।
।। सुनीतिरुवाच ।। ।।
अयि तात महाबुद्धे विशुद्धेनांतरात्मना ।।
निवेदयामि ते सर्वं माऽपमाने मतिं कृथाः ।। ३१ ।।
तया यदुक्तं तत्सर्वं तथ्यमेव न चान्यथा ।।
सापत्युर्महिषीराज्ञो राज्ञीनामति वल्लभा ।। ३२ ।।
तया जन्मांतरे तात यत्पुण्यं समुपार्जितम् ।।
तत्पुण्योपचयाद्राजा सुरुच्यां सुरुचिर्भृशम् ।। ३३ ।।
मादृश्यो मंदभाग्यायाः प्रमदासु प्रतिष्ठिताः ।।
केवलं राजपत्नीत्ववादस्तासु न तद्रुचिः ।। ३४ ।।
महा सुकृतसंभारैरुत्तमश्चोत्तमोदरे ।।
उवास तस्याः पुण्या या नृपसिंहासनोचितः ।। ३५ ।।
आतपत्रं च चंद्राभं शुभे चापि च चामरे ।।
भद्रासनं तथोच्चं च सिंधुराश्च मदोद्धुराः ।। ३६ ।।
तुरंगमाश्च तुरगास्त्वनाधिव्याधिजीवितम् ।।
निःसपत्नं शुभं राज्यं प्राज्यं हरिहरार्चनम् ।। ३७ ।।
विपुलं च कलाज्ञानमधीतमपराजितम् ।।
तथा जयोरिषड्वर्गे स्वभावात्सात्त्विकी मतिः ।। ३८ ।।
दृष्टिः कारुण्यसंपूर्णा वाणी मधुरभाषिणी ।।

अनालस्यं च कार्येषु तथा गुरुजने नतिः ।। ३९ ।।

सर्वत्र शुचिता तात सा परोपकृतिः सदा ।।

और्जस्वला मनोवृत्तिः सदैवादीनवादिता ।। ।। 4.1.19.४० ।।

सदोजिरे च पांडित्यं प्रागल्भ्यं चरणांगणे ।।

आर्जवं बंधुवर्गेषु काठिन्यं क्रयविक्रये ।। ४१ ।।

मार्दवं स्त्रीप्रयोगेषु वत्सलत्वं प्रजासु च ।।

ब्राह्मणेभ्यो भयं नित्यं वृद्धवृत्त्युपजीवनम् ।। ४२ ।।

वासो भागीरथीतीरे तीर्थे वा मरणं रणे ।।

अपराङ्मुखताऽर्थिभ्यः प्रत्यर्थिभ्यो विशेषतः ।। ४३ ।।

भोगः परिजनैः सार्धं दानावंध्यदिनागमः ।।

विद्याव्यसनिता नित्यं नित्यं पित्रोरुपस्थितिः ।। ४४ ।।

यशसः संचयो नित्यं नित्यं धर्मस्य संचयः ।।

स्वर्गापवर्गयोः सिद्धिः सदा शीलस्य मंडनम् ।। ४५ ।।

सद्भिश्च संगतिर्नित्यं मैत्री च पितृमित्रकैः ।।

इतिहासपुराणानामुत्कंठा श्रवणे सदा ।। ४६ ।।

विपद्यपि परं धैर्यं स्थैर्यं संपत्समागमे ।।

गांभीर्यं वाग्विलासेषु औदार्यं पात्रपाणिषु ।। ४७ ।।

देहे परैका कृशता तपोभिर्नियमैर्यमैः ।।

एतैर्मनोरथफलैः फलत्येव तपोद्रुमाः ।। ४८ ।।

तस्मादल्पतपस्त्वाद्वै त्वं चाहं च महामते ।।

प्राप्यापि राजसांनिध्यं राजलक्ष्म्या न भाजनम् ।। ४९ ।।

मानापमानयोस्तस्मात्स्वकृतं कारणं परम् ।।

स्रष्टापि नापमार्ष्टुं तत्परीष्टे स्वकृतां कृतिम् ।।

मा शोचस्त्वमतः पुत्र दिष्टमिष्टं समर्पयेत् ।।4.1.19.५० ।।

इत्याकर्ण्य सुनीत्यास्तन्महावाक्यं सुनीतिमत् ।।

सौनीते यो ध्रुवोवाचमाददे वक्तुमुत्तरम् ।। ५१ ।।

ध्रुव उवाच ।। ।।

जनयित्रि सुनीते मे शृणु वाक्यमनाकुलम् ।।

मा बाल इति मत्वा मामवमंस्थास्तपस्विनि ।। ५२ ।।

यद्यहं मानवे वंशे जातोस्म्यत्यंत पावने ।।

उत्तानपादतनयस्त्वदीयोदर संभवः ।।५३।।

तप एव हि चेन्मातः कारणं सर्वसंपदाम् ।।

तत्तदासादितं विद्धिपदमन्यैर्दुरासदम् ।। ५४ ।।

एकमेव हि साहाय्यं कुरु मातरतंद्रिता ।।

अनुज्ञा दानमात्रं च आशीर्भिरभिनंदय ।। ।। ५५ ।।

सापि ज्ञात्वा महावीर्यं कुमारं कुक्षिसंभवम् ।।

महत्योत्साहसं पत्त्या राजमानमुवाच तम् ।। ५६ ।।

अनुज्ञातुं न शक्ताऽहं त्वामुत्तानशयांगज ।।

साष्टैकवर्षदेशीयन्तथापि कथयाम्यहम् ।। ५७ ।।

सपत्नीवाक्यभल्लीभिर्भिन्ने महति मे हृदि ।।

तव बाष्पौघवारीणि न तिष्ठंति करोमि किम् ।। ५८ ।।

तानि मन्येऽत्र मार्गेण स्रवंत्यविरतं शिशो ।।

स्रवंतीश्च चिकीर्षंति प्रतिकूल जलाः किल ।। ५९ ।।

त्वदेकतनया तात त्वदाधारैकजीविता ।।

त्वमंगयष्टिरसि मे त्वन्मुखासक्तलोचना ।। 4.1.19.६० ।।

लब्धोसि कतिभिः कष्टैरिष्टाः संप्रार्थ्य देवताः ।।

त्वन्मुखेंदूदये तात मन्मनः क्षीरनीरधिः ।। ६१ ।।

आनन्दपयसापूर्य कुचावुद्वेलितो भवेत् ।।

त्वदंगसंगसंभूत सुखसन्दोह शीतला ।। ६२ ।।

सुखंशये सुशयने प्रावृत्य पुलकांबरम् ।।

अपोऽथ समुपस्पृश्य तांबूलं परिगृह्य च ।।६३।।

त्वदास्यस्यौष्ठपुटक दुग्धवार्धि विवर्धिताम् ।।

सुधासुधांशुवदनधयत्यपि धिनोमि न ।। ६४ ।।

त्वदीयः शीतलालापः प्राप श्रुतिपथं यदा ।।

सपत्नीवाक्यदवथुस्तदैवत्यात्स वेपथुः ।।६५।।

यदंग निद्रासिचिरं ध्यायंत्यस्मि तदेत्यहम् ।।

कदा निद्रा दरिद्रोसौ भवितार्कोदयेऽब्जवत् ।।६६।।

यदोपेया गृहान्वत्स खेलित्वा बालखेलनैः ।।

तदानर्घ्यार्घ्यमुत्स्रष्टुं स्तनौस्यातामिवोन्मुखौ ।। ।। ६७ ।।

यदा सौधाद्विनिर्यायाः पद्मरेखांकितं पदम् ।।

प्राणानां ते यियासूनां तदा तदवलंबनम् ।। ६८ ।।

यदायदा बहिर्यासि पुत्र त्रिचतुरं पदम् ।।

तदातदा मम प्राणः कंठप्राघुणिकी भवेत् ।। ६९ ।।

चित्रं पुत्र त्वरयति यातुं मे मानसांडजः ।।

सुधाधाराधर इव बहिश्चिरयति त्वयि ।। 4.1.19.७० ।।

अथ तिष्ठंतु कठिनाः प्राणाः कंठाटवीतटे ।।

तपस्यंतोतिसंतप्तास्तपसे त्वयि यास्यति ।। ७१ ।।

इत्यनुज्ञामनुप्राप्य जननी चरणांबुजौ ।।

क्षणं मौलिजजंबाल जडौ कृत्वा ध्रुवो ययौ ।। ७२ ।।

तयापि धैर्यसूत्रेण सुनीत्या परिगुंफ्य च ।।

नेत्रेंदीवरजामाला ध्रुवस्योपायनीकृता ।। ७३ ।।

मात्रातन्मार्गरक्षार्थं तदा तदनुगीकृताः ।।

परैरवार्यप्रसराः स्वाशीर्वादाः परःशताः ।। ७४ ।।

स्वसौधात्स विनिर्गत्य बालोऽबालपराक्रमः ।।

अनुकूलेन मरुता दर्शिताध्वाऽविशद्वनम् ।। ७५ ।।

समरुत्तरुशाखाग्र प्रसारणमिषेण सः ।।

कृताहूतिरिव प्रेम्णा वनेन वनमाविशत् ।। ७६ ।।

समातृदैवतोभिज्ञः केवलं राजवर्त्मनि ।।

न वेद काननाध्वानं क्षणं दध्यौ नृपात्मजः ।। ७७ ।।

यावदुन्मील्य नयने पुरः पश्यति स ध्रुवः ।।

तावद्ददर्श सप्तर्षीनतर्कित गतीन्वने ।। ७८ ।।

वालिशेष्वसहायेषु भवेद्भाग्यं सहायकृत् ।।

अरण्यान्यां रणे गेहे ततो भाग्यं हि कारणम् ।। ।।७९।।

क्व राजतनयो बालो गहनं क्व च तद्वनम् ।।

बलात्स्वसात्प्रत्कुर्वत्यै नमस्ते भवितव्य ते ।।4.1.19.८०।।

यत्र यस्य हि यद्भाव्यं शुभं वाऽशुभमेव च ।।

आकृष्यभाविनी रज्जुस्तत्र तस्य हि दापयेत ।। ८१ ।।

अन्यथा विदधात्येष मानवो बुद्धिवैभवात् ।।

भगवत्या भवित्र्याऽसौ विदध्याद्विधिरन्यथा ।। ८२ ।।

नवयो न च वै चित्र्यं न चित्रं विदधेहितम् ।।

न बलं नोद्यमः पुंसां कारणं प्राक्कृतं कृतम् ।।८३ ।।

अथ दृष्ट्वा स सप्तर्षीन्सप्तसस्यतितेजसः ।।

भाग्यसूत्रैरिवाकृष्योपनीतान्प्रमुमोद ह ।। ८४ ।।

तिलकांकित सद्भालान्कुशोपग्रहितांगुलीन् ।।

कृष्णाजिनोपविष्टांश्च यज्ञसूत्रैरलंकृतान् ।। ८५ ।।

साक्षसूत्रकरान्किंचिद्विनिमीलितलो चनान् ।।

सुधौतसूक्ष्मकाषायवासः प्रावरणान्वितान ।। ८६ ।।

अकांडेपि महाभागान्मिलितान्सप्तनीरधीन् ।।

चित्रं विपद्विनिर्मग्नानुद्दिधीर्षूनिव प्रजाः ।। ८७ ।।

उपगम्य विनम्रः स प्रबद्धकरसंपुटः ।।

ध्रुवो विज्ञापयांचक्रे प्रणम्य ललितं वचः ।। ८८ ।।

।। ध्रुव उवाच ।। ।।

अवैत मां मुनिवराः सुनीत्युदरसंभवम्।।

उत्तानपादतनयं ध्रुवं निर्विण्णमानसम् ।। ८९ ।।

इदं वनमनुप्राप्तं सनाथं युष्मदंघ्रिभिः ।।

प्रायोनभिज्ञं सर्वत्र महर्द्ध्युषितमानसम् ।।4.1.19.९०।।

ते दृष्ट्वोर्जस्वलं बालं स्वभाव मधुराकृतिम् ।।

अनर्घ्यनयनेपथ्यं मृदुगंभीरभाषिणम् ।। ९१ ।।

उपोपवेश्य शिशुकं प्रोचुर्वै विस्मिता भृशम् ।।

अहोबालविशालाक्ष महाराज कुमारक ।। ९२ ।।

विचार्यापि न जानीमो वद निर्वेदकारणम् ।।

अद्य ते ह्यर्थचिंता नो क्वापमानः प्रसूर्गृहे ।। ९३ ।।

नीरुक्छरीरसंपत्तिर्निवेदे किं नु कारणम् ।।

अनवाप्ताभिलाषाणां वैराग्यं जायते नृणाम् ।। ९४ ।।

सप्तद्वीपपतेराज्ञः कुमारस्त्वं तथा कथम् ।।

स्वभावभिन्नप्रकृतौ लोकेस्मिन्न मनोगतम् ।। ९५ ।।

अवगंतुं हि शक्येत यूनो वृद्धस्य वा शिशोः ।।

इति श्रुत्वा वचस्तेषां सहजप्रेमनिर्भरम् ।। ९६ ।।

वाचं जग्राह स तदा शिशुः प्रांशुमनोरथः

।।ध्रुव उवाच ।। ।।

प्रेषितो राजसेवार्थं जनन्याऽहं मुनीश्वराः ।। ९७ ।।

राजांकमारुरुक्षुर्हि सुरुच्या परिभर्त्सितः ।।

उत्तमं चोत्तमीकृत्य मां च मन्मातरं तथा ।।९८।।

धिक्कृत्य प्रशशंस स्वं निर्वेदे कारणं त्विदम् ।।

निशम्येति शिशोर्वाक्यं परस्परमवेक्ष्य ते ।।९९।।

क्षात्रमेव शशंसुस्तदहो बालेपि न क्षमा।। 4.1.19.१०० ।।

ऋषय ऊचुः ।। ।।

किमस्माभिरहो कार्यं कस्तवास्ति मनोरथः ।।

ज्ञातो भवतु तावत्स नः श्रवो गोचरी कुरु ।। १ ।।

।। ध्रुव उवाच ।। ।।

मुनयो मम यो बंधुरुत्तमश्चोत्तमोत्तमः ।।

पित्रा दत्तं च सोऽध्यास्तां तद्भद्रासनमुत्तमम् ।। २ ।।

भवत्कृतं हि साहाय्यमेतदिच्छामि सुव्रताः ।।

प्रायो जाने न बालत्वादुपदेशस्तदुच्यताम् ।। ३ ।।

अनन्यनृपभुक्तं यद्यदन्येभ्यः समुच्छ्रितम् ।।

इंद्रादिदुरवापं यत्कथं लभ्यं दुरासदम् ।। ४ ।।

पित्रोत्सृष्टं न कांक्षामि कांक्षामि स्वभुजाजितम् ।।

मनोरथपथातीतं भवेद्यत्पितुरप्यहो ।। ५ ।।

पितृसंपत्तिभोक्तारः प्रायशो न यशोधनाः ।।

नरोत्तमास्तु ते ज्ञेया ये पित्राधिक्यदर्शिनः ।। ६ ।।

उपार्जितं हि पित्रा ये नाशयंति यशःश्रुतम् ।।

धनं निधनमेवास्तु तेषां दुर्वृत्तचेतसाम् ।। ७ ।।

इति श्रुत्वा वचस्तस्य मुनयः सुनयोर्जितम् ।।

यथार्थमेव प्रत्यूचुर्मरीच्याद्यास्तथा ध्रुवम् ।। ८ ।।

मरीचिरुवाच ।। ।।

अनर्चिताच्युतपदः पदमापद्यते कथम् ।।

यथातथात्वमात्थांग नातथ्यं कथयाम्यहम् ।। ९ ।।

अत्रिरुवाच ।। अनास्वादितगोविंदपदांबुजरजोरसः ।।

मनोरथपथातीतं स्फीतं नाकलयेत्पदम् ।। 4.1.19.११० ।।

अंगिरा उवाच ।। ।।

अदवीयः पदं तस्य सर्वासां संपदामिह ।।

कमलाकांतकांतांघ्रि कमले यः सुशीलयेत् ।। ११ ।।

।। पुलस्त्य उवाच ।। ।।

यस्य स्मरणमात्रेण महापातकसंततिः ।।

परमांतमवाप्नोति स विष्णुः सर्वदो ध्रुव ।। १२ ।।

।। पुलह उवाच ।। ।।

यदाहुः परमं ब्रह्म प्रधान पुरुषात्परम् ।।

यन्मायया ततं सर्वं सर्वं दास्यति सोच्युतः ।। १३ ।।

।। क्रतुरुवाच ।। ।।

यो यज्ञपुरुषो विष्णुर्वेदवेद्यो जनार्दनः ।।

अंतरात्माऽस्य जगतः तुष्टः किं न यच्छति ।। १४ ।।

।। वसिष्ठ उवाच ।। ।।

यद्भ्रूनर्तनवर्तिन्यः सिद्धयोऽष्टौ नृपात्मज ।।

तमाराध्य हृषीकेशमपवर्गोप्यदूरतः ।। १५ ।।

ध्रुव उवाच ।। ।।

सत्यमुक्तं मुनीशाना विष्णोराराधनं प्रति ।।

कथं वा भगवानीज्यः सविधिश्चोपदिश्यताम् ।।१६।।

।। मुनय ऊचुः ।। ।।

तिष्ठता गच्छता वापि स्वपता जाग्रता तथा ।।
शयानेनोपविष्टेन जप्यो नारायणः सदा ।।१७।।
द्वादशाक्षरमंत्रेण वासुदेवात्मकेन च।।
ध्यायंश्चतुर्भुजं विष्णुं जप्त्वा सिद्धिं न को गतः ।। १८ ।।
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।।
क्षणं सर्वात्मकं पश्यन्को न सिध्यति भूतले ।।१९।।
पुत्रान्कलत्रमित्राणि राज्यं स्वर्गापवर्गकम् ।।
वासुदेवं जपन्मर्त्यः सर्वं प्राप्नोत्यसंशयम् ।। 4.1.19.१२० ।।
वासुदेव जपासक्तानपिपापकृतो जनान् ।।
नोपस्पृशंति वै विघ्ना यमदूताश्च दारुणाः ।। २१ ।।
पितामहेन तेप्प्येष महामंत्र उपासितः ।।
मनुना राज्यकामेन वैष्णवेन महर्द्धिना ।। २२ ।।
त्वमप्प्येतेन मंत्रेण वासुदेवपरो भव ।।
यथाभिलषितामृद्धिं क्षिप्रमाप्नुहि सत्तम ।। २३ ।।
इत्युक्त्वांऽतर्हिताः सर्वे महात्मानो मुनीश्वराः ।।
वासुदेवमना भूत्वा ध्रुवोपि तपसे गतः ।। १२४ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां चतुर्थे काशीखंडे पूवार्द्धे ध्रुवलोकवर्णने ध्रुवोपदेशोनामैकोनविंशतितमोऽध्यायः ।। १९ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२०

https://sa.wikisource.org/s/fuy

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। गणावूचतुः ।। ।।

औत्तानपादिर्निर्गत्य ततः कानननतो द्विज ।।

रम्यं मधुवनं प्राप यमुनायास्तटे महत ।। १ ।।

आद्यं भगवतः स्थानं तत्पुण्यं हरिमेधसः ।।

पापोपि जंतुस्तत्प्राप्य निष्पापो जायते ध्रुवम् ।। २ ।।

जपन्स वासुदेवाख्यं परंब्रह्म निरामयम् ।।

अपश्यत्तन्मयं विश्वं ध्यानस्तिमितलोचनः ।। ३ ।।

हरिर्हरित्सु सर्वासु हरिर्हरिमरीचिषु ।।

शिवामृगमृगेंद्रादि रूपः काननगो हरिः ।। ४ ।।

जले शालूरकूर्मादि रूपेण भगवान्हरिः ।।

हरिरश्वादिरूपेण मंदुरास्वपि भूभुजाम् ।। ५ ।।

अनंतरूपः पाताले गगनेऽनंतसंज्ञकः ।।

एकोप्यनंततां यातो रूपभेदैरनंतकैः ।। ६ ।।

देवेषु यो वसेन्नित्यं देवानां वसतिर्हि यः ।।

स वासुदेवः सर्वत्र दीव्येद्यद्वासनावशात् ।। ७ ।।

विप्लृव्याप्तावयंधातुर्यत्रसार्थकतां गतः।।

ते विष्णुनाम स्वरूपे हि सर्वव्यापनशीलिनि ।। ८ ।।

सर्वेषां च हृषीकाणामीशनात्परमेश्वरः ।।

हृषीकेश इति ख्यातो यः स सर्वत्रसंस्थितः ।। ९ ।।

न च्यवंतेपि यद्भक्ता महति प्रलये सति ।।

अतोऽच्युतोऽखिले लोके स एकः सर्वगोऽव्ययः ।। 4.1.20.१० ।।

इदं चराचरं विश्वं यो बभार स्वलीलया ।।

भृत्यास्वरूपसंपत्त्या सोऽत्र विश्वंभरोऽखिलम् ।। ११ ।।

तस्येक्षणे समीक्षेते नान्यद्विष्णुपदादृते ।।

निरीक्ष्यः पुंडरीकाक्षो नान्यो नियमतो ह्यतः ।। १२ ।।

नान्य शब्दग्रहौ तस्य जातौ शब्दग्रहावपि ।।

विना मुकुंद गोविंद दामोदर चतुर्भुज ।। १३ ।।

गोविंदचरणार्थार्चां तत्प्रियंकर्मवै विना ।।

शंखचक्रांकितौ तस्य नान्यकर्मकरौकरौ ।। १४ ।।

निर्द्वंद्वचरणद्वंद्वं तन्मनो मनुते हरेः ।।

हित्वान्यन्मननं सर्वं निश्चलत्वमवाप ह ।। १५ ।।

चरणौ विष्णुशरणौ हित्वा नारायणांगणम् ।।

तस्य नो चरतोन्यत्र चरतो विपुलं तपः ।। १६ ।।

वाणीप्रमाणी क्रियते गोविंदगुणवर्णने ।।

जोषं समासता तेन महासारं तपस्यता ।। १७ ।।

नितांतकमलाकांत नामधेयसुधारसम् ।।

रसयंती न रसना तस्यान्यरसस्पृहा ।। १८ ।।

श्रीमुकुंद पदद्वंद्व पद्मामोदप्रमोदितम् ।।

गंधांतरं न तद्घ्राणं परिजिघ्रत्यशीघ्रगम् ।। १९ ।।

त्वगिंद्रियं मधुरिपोः परिस्पृश्य पदद्वयम् ।।

सर्वस्पर्शसुखं प्राप तस्य भूजानिजन्मनः ।। 4.1.20.२० ।।

शब्दादिविषयाधारं सारं दामोदरं परम् ।।

ध्रुवेंद्रियाणि संप्राप्य कृतार्थान्यभवंस्तदा ।। २१ ।।

लुप्तानि सर्वतेजांसि तत्तपस्तपनोदये ।।

चंद्रसूर्यानलर्क्षाणां प्रदीपित जगत्त्रये ।। २२ ।।

इंद्र चंद्राग्नि वरुण समीरण धनाधिपाः ।।

यम नैर्ऋतमुख्याश्च जाताः स्वपदशंकिताः ।। २३ ।।

वैमानिकास्तथाऽन्येपि वसुमुख्या दिवौकसः ।।

ततो धुवात्समुत्त्रेसुः स्वाधिकारैधिताधयः ।।२४।।

यत्र यत्र ध्रुवः पादं मिनोति पृथिवीतले ।।

धरा तस्य भराक्रांता विनमेत्तत्र तत्र वै ।।२५।।

अहो तदंगसंगीनि त्यक्त्वा जाड्यं जलान्यपि ।।

रसवंति पदस्थानि स्फुरंत्यन्यत्र तद्भयात् ।। २६ ।।

यावंति विष्वक्तेजांसि सिद्धरूपगुणानि च ।।
नेत्रातिथीनि तावंति तत्तपस्तेजसाऽभवन् ।। २७ ।।
अहो निजगुणस्पर्शः सततं मातरिश्वना ।।
दूरदेशांतरस्थोपि तत्त्वचो विषयीकृतः ।। २८ ।।
व्योम्नापि शब्दगुणिना ध्रुवाराधनबुद्धिना ।।
शब्दजातस्त्वशेषोपि तत्कर्ण शरणीकृतः ।।२९।।
आराधितोऽनुदिवसं सभूतैरपि पंचभिः ।।
तप एव परं मेने गोविंदार्पित मानसः ।। 4.1.20.३० ।।
कौस्तुभोद्भासितहृदः पीतकौशेयवाससः ।।
ध्यानात्तेजोमयं विश्वं तेनैक्षि नृपसूनुना ।। ३१ ।।
मरुत्वतातिमहती चिंताऽप्ता तत्तपोभयात् ।।
मत्पदं चेदकांक्षिष्यदहरिष्यद्ध्रुवं ध्रुवः ।। ३२ ।।
समर्थस्त्वप्सरोवर्गो नियंतुं यमिनां यमान् ।।
स तु यूनि प्रभवति नात्र बाले करोमि किम् ।। ३३ ।।
तपस्विनां तपो हंतुं द्वौ मत्साहाय्यकारिणौ ।।
कामक्रौधौ न तावस्मिन्प्रभवेतां शिशौ ध्रुवे ।। ३४ ।।
एक एव किलोपायो बाले मे प्रभविष्यति ।।
भूतालिं भीषणाकारां प्रहिणोमीह तद्भिये ।। ३५ ।।
बालत्वाद्भीषितो भूतैस्तपस्त्यक्ष्यत्यसौ ध्रुवम् ।।
इति निश्चित्य भूतालिं प्रेषयामास वासवः ।। ३६ ।।
भल्लूकाकारसर्वांग उष्ट्रलंबशिरोधरः ।।
कश्चिद्दुर्दर्शदशनस्त्वभ्यधावत्तमर्भकम् ।। ३७ ।।
तं व्याघ्रवदनः कश्चिद्व्यादाय विकटाननम् ।।
द्विपोच्च देहसंस्थानो मुहुर्गर्जन्समभ्यगात् ।। ३८ ।।
रयात्तु मांसकं भुंजन्कश्चिद्विकटदंष्ट्रकः ।।
रोषात्तमभिदुद्राव दृष्ट्वा संतर्जयन्निव ।। ३९ ।।
अतितीक्ष्णैर्विषाणाग्रैस्तटानुच्चान्विदारयन् ।।
खुराग्रैर्दलयन्भूमिं महोक्षोऽभिजगर्जतम् ।। 4.1.20.४० ।।

कश्चिद्धि पन्नगी भूय फटाटोपभयानकः ।।
अतिलोलद्विरसनः पुस्फूर्जनिकषाचितम् ।। ४१ ।।
कश्चिच्च महिषाकारः क्षिपञ्शृंगाग्रतो गिरोन् ।।
लांगूलताडितधरः श्वसन्वेगात्तमाप्तवान्।। ४२ ।।
कश्चिद्दावानलालीढ खर्जूरद्रुमसन्निभम् ।।
बिभ्रदूरुद्वयंभूतो व्यात्तास्यस्तमभीषयत् ।। ४३ ।।
मौलिजैरभ्रसंघर्षं कुर्वन्दीर्घकृशोदरः ।।
निमग्नपिंगनयनः कश्चिद्भीषयति स्म तम् ।। ४४ ।।
कृपाणपाणिर्भग्नास्यो वामहस्तकपालधृत् ।।
प्रचंडं क्ष्वेडयन्कश्चिदभ्यधावत्तमर्भकम् ।। ४५ ।।
विशाल सालमादाय कुर्वन्किल किलारवम् ।।
कश्चित्तमभितो याति कालो दंडधरो यथा ।। ४६ ।।
तमः संकेतसदनं व्याघ्रं वै वदनं महत्।।
कृतांतकं दराकारं बिभ्रत्कश्चित्तमभ्यगात्।। ४७ ।।
उलूकाकारतां धृत्वा फूत्कारैरतिदारुणैः ।।
हृदयाकंपनैः कश्चिद्भीषयामास तं ध्रुवम् ।। ४८ ।।
यक्षिणी काचिदानीय रुदंतं कस्यचिच्छिशुम् ।।
अपिबद्रुधिरं कोष्ठाच्चखादास्थि मृणालवत् ।। ४९ ।।
पिपासिताद्य रुधिरं तेपि पास्याम्यहं धुव ।।
यथास्य बालस्य तथा चर्वित्वास्थीनि वादिनी ।। 4.1.20.५० ।।
अनीय तृणदारूणि परिस्तीर्य समंततः ।।
दावाग्निं ज्वालयामास काचिद्वात्याविवर्धितम् ।। ५१ ।।
वेताली रूपमास्थाय भंक्त्वा काचित्तरून्गिरीन् ।।
रुरोध गगनाध्वानं कंपयंती च तं भृशम् ।। ५२ ।।
अन्या सुनीतिरूपेण तमभिप्रेक्ष्य दूरतः ।।
रुरोदातीवदुःखार्ता वक्षोघातं मुहुर्मुहुः ।। ५३ ।।
उवाच च वचश्चाटु बहुमाया विनिर्मितम् ।।
कारुण्यपूर्ण वात्सल्यमतीवातन्वती सती ।। ५४ ।।

त्वदेकशरणां वत्स बत मृत्युर्जिघांसति ।।
रक्षरक्ष गतासुं मां शरणागतवत्सल ।। ५५ ।।
प्रतिग्रामं प्रतिपुरं प्रत्यध्वं प्रतिकाननम् ।।
प्रत्याश्रमं प्रतिगिरिं श्रांता त्वद्वीक्षणातुरा ।। ५६ ।।
यदा प्रभृति रे बाल निरगात्तपसे भवान् ।।
तदेव दिनमारभ्य निर्गताऽहं त्वदीक्षणे ।। ५७ ।।
तैस्तैः सपत्नीदुर्वाक्यैर्दुनोपि त्वं यथार्भक ।।
तथाऽहमपि दूनास्मि नितरां तद्वचोऽग्निना ।। ५८ ।।
न निद्रामि न जागर्मि नाश्नामि न पिबाम्यहम् ।।
ध्यायामि केवलं त्वाऽहं योगिनीव वियोगिनी ।।५९।।
निद्रादरिद्रनयना स्वप्नेपि न तवाननम् ।।
आनंदि सर्वथा यन्मे मंदभाग्या विलोकये ।। 4.1.20.६० ।।
त्वदाननप्रतिनिधिर्विधुर्विधुरया मया ।।
उदित्वरोपिनालोकि तापं वै त्यक्तुकामया ।। ६१ ।।
त्वदालापसमालापं कलयन्किलकाकलीम् ।।
कोकिलोपि मयाकर्णि नालकाकीर्णकर्णया ।।६२।।
त्वदंगसंगमधुरो ध्रुवधूपितयामया ।।
नानिलोपि मयालिंगि क्वचिद्विश्रांतया भृशम् ।। ६३ ।।
के देशाः काश्च सरितः के शैलास्त्वत्कृते ध्रुव ।।
मया चरणचारिण्या राजपत्न्या न लंघिताः ।। ६४ ।।
अध्रुवं सर्वमेवैतत्पश्यंत्यंधीकृतास्म्यहम् ।।
धात्रीं त्रायस्व मां पुत्र प्राप्य त्वंमेंऽधयष्टिताम् ।। ६५ ।।
मृदुलानि तवांगानि क्वेमानि क्व तपस्त्विदम् ।।
परुषं पुरुषैः साध्यं परुषांगैर्नरर्षभ ।। ६६ ।।
अनेन तपसा वत्स त्वयाऽऽप्यं किमनेनसा ।।
धराधीशतनूजत्वादधिकं तद्वदाधुना ।। ६७ ।।
अनेन वयसा बाल खेलनीयं त्वयाऽनिशम् ।।
बालक्रीडनकैरन्यैः सवयः शिशुभिः समम् ।। ६८ ।।

ततः कौमारमासाद्य वयोऽभिध्यानशीलिना ।।
भवता सर्वविद्यानां भाव्यं वै पारदृश्वना ।। ६९ ।।
वयोथ चतुरं प्राप्य योषास्रक्चंदनादिकान् ।।
निर्वेक्ष्यसि बहून्भोगानिंद्रियार्थान्कृतार्थयन् ।। 4.1.20.७० ।।
उत्पाद्याथ बहून्पुत्रान्गुणिनो धर्मवत्सलान् ।।
परिसंक्रामितश्रीकस्तेष्वथो त्वं तपश्चर ।। ७१ ।।
इदानीमेव तपसि बाल्ये वयसि कः श्रमः ।।
पादांगुष्ठकरीषाग्निः कदा मौलिमवाप्स्यति ।। ७२ ।।
विपक्षपरिभूतेन हृतमानेन केनचित् ।।
परिभ्रष्टश्रिया वापि तप्तव्यं तेषु को भवान् ।। ७३ ।।
हृतमानेन तप्तव्यं निशम्येति वचो ध्रुवः ।।
दीर्घमुष्णं हि निःश्वस्य पुनर्दध्यौ हरिं हृदि ।। ७४ ।।
जनयित्रीमनाभाष्य भूतभीतिं विहाय च ।।
ध्रुवोऽच्युतध्यानपरः पुनरेव बभूव ह ।। ७५ ।।
सापि भूतावली भीतिंबहुभीषणभूषणा ।।
दर्शयंती तमभितोऽद्राक्षीच्चक्रं सुदर्शनम् ।। ७६ ।।
परितः परिवेषाभं सूर्यस्योच्चैः स्फुरत्प्रभम् ।।
रक्षणाय च रक्षोभ्यस्तस्याधोक्षज निर्मितम् ।। ७७ ।।
भूतावली तमालोक्य स्फुरच्चक्रसुदर्शनम् ।।
ज्वालामालाकुलं तीव्रं रक्षंतं परितो ध्रुवम् ।। ७८ ।।
अतीव निष्कंपहृदं गोविदार्पितचेतसम् ।।
तपोंकुरमिवोद्भिद्य मेदिनीं समुदित्वरम् ।। ७९ ।।
सापि प्रत्युतभीतातं ध्रुवं ध्रुवविनिश्चयम् ।।
नमस्कृत्य यथायातं याताव्यर्थमनोरथा ।। 4.1.20.८० ।।
गर्जत्कादंबिनीजालं व्योम्नि वै व्याकुलं यथा ।।
वृथा भवति संप्राप्य मनागनिललोलताम् ।। ८१ ।।
अथ जंभारिणा सार्धं भीताः सर्वे दिवौकसः ।।
संमंत्र्य त्वरिता जग्मुर्ब्रह्माणं शरणं द्विज ।। ८२ ।।

नत्वा विज्ञापयामासुः परिष्टुत्या पितामहम् ।।
वच्रोऽवसरमालोक्य पृष्टागमनकारणाः ।। ८३ ।।
।। देवा ऊचुः ।। ।।
धातरुत्तानपादस्य तनयेन सुवर्चसा ।।
तपता तापिताः सर्वे त्रिलोकी तलवासिनः ।। ८४ ।।
सम्यक्संविद्महे तात धुवस्य न मनीषितम् ।।
पदं परिजिहीर्षुः स कस्यास्मासु महातपाः ।। ८५ ।।
इति विज्ञापितो देवैर्विहस्य चतुराननः ।।
प्रत्युवाचाथ तान्सर्वान्ध्रुवतो भीतमानसान् ।। ८६ ।।
।। ब्रह्मोवाच ।। ।।
न भेतव्यं सुरास्तस्माद्ध्रुवाद्ध्रुवपदैषिणः ।।
व्रजंतु विज्वराः सर्वे न स वः पदमिच्छति ।। ८७ ।।
न तस्माद्भगवद्भक्ताद्भेतव्यं केनचित्क्वचित् ।।
निश्चितं विष्णुभक्ता ये न ते स्युः परतापिनः ।। ८८ ।।
आराध्य विष्णुं देवेशं लब्ध्वा तस्मात्स्वकांक्षितम् ।।
भवतामपि सर्वेषां पदानि स्थिरयिष्यति ।। ८९ ।।
निशम्येति च गीर्वाणाः प्रणीतं ब्रह्मणो वचः ।।
प्रणिपत्य स्वधिष्ण्यानि प्रहृष्टाः परिवव्रजुः ।। 4.1.20.९० ।।
अथ नारायणो देवस्तं दृष्ट्वा दृढमानसम् ।।
अनन्यशरणं बालं गत्वा ताक्ष्र्यरथोऽब्रवीत् ।। ९१ ।।
श्रीविष्णुरुवाच ।। ।।
प्रसन्नोस्मि महाभाग वरं वरय सुव्रत ।।
तपसोऽस्मान्निवर्तस्व चिरं खिन्नोसि बालक ।। ९२ ।।
वचोऽमृतं समाकर्ण्य पर्युन्मील्य विलोचने ।।
इंद्रनीलमणिज्योतिः पटलीं पर्यलोकयत् ।। ९३ ।।
प्रत्यग्रविकसन्नीलोत्पलानां निकुरंबकैः ।।
प्रोत्फुल्लितां समंताच्च रोदसी सरसीमिव ।। ९४ ।।
लक्ष्मीदेवीकटाक्षोघैः कटाक्षितमिवाखिलम् ।।

धुवस्तदानिरैक्षिष्ट द्यावाभूम्योर्यदंतरम् ।। ९५ ।।

प्रोद्यत्कादंबिनीमध्य विद्युद्दामसमानरुक् ।।

पुरः पीतांबरः कृष्णस्तेन नेत्रातिथीकृतः ।। ९६ ।।

नभो निकष पाषाणो मेरुकांचन रेखितः ।।

यथातथा ध्रुवेणैक्षि तदा गरुडवाहनः ।। ९७ ।।

सुनीलगगनं यद्वद्भूषितं तु कलावता ।।

पीतेन वाससा युक्तं स ददर्श हरिं तदा ।। ९८ ।।

दंडवत्प्रणिपत्याथ परितः परिलुठ्य च ।।

रुरोद दृष्ट्वेव चिरं पितरं दुःखितः शिशुः ।।९९।।

नारदेन सनंदेन सनकेन सुसंस्तुतः ।।

अन्यैः सनत्कुमाराद्यैर्योगिभिर्योगिनां वरः ।।4.1.20.१००।।

कारुण्यवाष्पनीरार्द्र पुंडरीकविलोचनः।।

ध्रुवमुत्थापयांचक्रे चक्री धृत्वा करेण तम्।।१।।

हरिस्तु परिपस्पर्श तदंगं धूलिधूसरम् ।।

कराभ्यां सुकठोराभ्यां नित्यं शास्त्रपरिग्रहात्।।।२।।

स्पर्शनाद्देवदेवस्य सुसंस्कृतमयी शुभा ।।

वाणी प्रवृत्ता तस्यास्यात्तुष्टावाथ ध्रुवो हरिम् ।। १०३ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ध्रुवाख्याने भगवद्दर्शननाम विंशतितमोऽध्यायः ।। २० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२१

https://sa.wikisource.org/s/fv2



।। ध्रुव उवाच ।। ।।

नमो हिरण्यगर्भाय सर्वसृष्टिविधायिने ।।

हिरण्यरेतसे तुभ्यं सुहिरण्यप्रदायिने ।। १ ।।

नमो हरस्वरूपाय भूतसंहारकारिणे ।।

महाभूतात्मभूताय भूतानां पतये नमः ।। २ ।।

नमः स्थितिकृते तुभ्यं विष्णवे प्रभविष्णवे ।।

तृष्णाहराय कृष्णाय महाभार सहिष्णवे ।। ३ ।।

नमो दैत्यमहारण्य दाववह्निस्वरूपिणे ।।

दैत्यद्रुमकुठाराय नमस्ते शार्ङ्गपाणये ।।४।।

नमः कौमोदकीव्यग्र कराग्राय गदाधर ।।

महादनुजनाशाय नमो नंदकधारिणे ।। ५ ।।

नमः श्रीपतये तुभ्यं नमश्चक्रधराय च ।।

धराधराय वाराह रूपिणे परमात्मने ।। ६ ।।

नमः कमलहस्ताय कमलावल्लभाय ते ।।

नमो मत्स्यादिरूपाय नमः कौस्तुभवक्षसे ।। ७ ।।

नमो वेदांतवेद्याय नमः श्रीवत्सधारिणे ।।

नमो गुणस्वरूपाय गुणिने गुणवर्जिते ।। ८ ।।

नमस्ते पद्मनाभाय पांचजन्यधराय च ।।

वासुदेव नमस्तुभ्यं देवकीनंदनाय च ।। ९ ।।

प्रद्युम्नाय नमस्तुभ्यमनिरुद्धाय ते नमः ।।

नमः कंसविनाशाय नमश्चाणूरमर्दिने ।। 4.1.21.१० ।।

दामोदरहृषीकेश गोविंदाच्युतमाधव ।।

उपेंद्रकैटभाऽराते मधुहंतरधोक्षज ।। ११ ।।

नारायणाय नरकहारिणे पापहारिणे ।।

वामनाय नमस्तुभ्यं हरये शौरये नमः ।। १२ ।।

अनंताय नमस्तुभ्यमनंतशयनाय च ।।

रुक्मिणीपतये तुभ्यं रुक्मिप्रमथनाय च ।। १३ ।।

चैद्यहंत्रे नमस्तुभ्यं दानवारेसुरारये ।।

मुकुंदपरमानंद नंदगोपप्रियाय च ।। १४ ।।

नमस्ते पुंडरीकाक्ष दनुजेंद्र निषूदिने ।।

नमो गोपालरूपाय वेणुवादनकारिणे ।। १५ ।।

गोपीप्रियाय केशिघ्ने गोवर्धनधराय च ।।

रामाय रघुनाथाय राघवाय नमोनमः ।। १६ ।।

रावणारे नमस्तुभ्यं विभीषणशरण्यद ।।

अजाय जयरूपाय रणांगणविचक्षण ।।१७।।

क्षणादि कालरूपाय नानारूपाय शार्ङ्गिणे ।।

गदिने चक्रिणे तुभ्यं दैत्यचक्रविमर्दिने ।।१८।।

बलाय बलभद्राय बलारातिप्रियाय च ।।

बलियज्ञप्रमथन नमो भक्तवरप्रद ।। १९ ।।

हिरण्यकशिपोर्वक्षो विदारण रणप्रिय ।।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।। 4.1.21.२० ।।

नमस्ते धर्मरूपाय नमः सत्त्वगुणाय च ।।

नमः सहस्रशिरसे पुरुषाय पराय च ।। २१ ।।

सहस्राक्ष सहस्रांघ्रे सहस्रकिरणाय च ।।

सहस्रमूर्ते श्रीकांत नमस्ते यज्ञपूरुष ।।२२।।

वेदवेद्यस्वरूपाय नमो वेदप्रियाय च।।

वेदाय वेदगदिने सदाचाराध्वगामिने ।।२३।।

वैकुंठाय नमस्तुभ्यं नमो वैकुंठवासिने।।

विष्टरश्रवसे तुभ्यं नमो गरुडगामिने ।।२४।।

विष्वक्सेन नमस्तुभ्यं जगन्मय जनार्दन।।

त्रिविक्रमाय सत्याय नमः सत्यप्रियाय च।।२५।।

केशवाय नमस्तुभ्यं मायिने ब्रह्मागायिने।।

तपोरूपाय तपसां नमस्ते फलदायिने ।। २६ ।।

स्तुत्याय स्तुतिरूपाय भक्तस्तुतिरताय च ।।
नमस्ते श्रुतिरूपाय श्रुत्याचार प्रियाय च ।। २७ ।।
अंडजाय नमस्तुभ्यं स्वेदजाय नमोस्तु ते ।।
जरायुज स्वरूपाय नम उद्भिज्जरूपिणे ।। २८ ।।
देवानामिंद्ररूपोसि ग्रहाणामसि भानुमान् ।।
लोकानां सत्यलोकोऽसि सिंधूनां क्षीरसागरः ।। २९ ।।
सुरापगाऽसि सरितां सरसां मानसं सरः ।।
हिमवानसि शैलानां धेनूनां कामधुग्भवान् ।। 4.1.21.३० ।।
धातूनां हाटकमसि स्फटिकश्चोपलेष्वसि ।।
नीलोत्पलं प्रसूनेषु वृक्षेषु तुलसी भवान् ।। ३१ ।।
सर्वपूज्यशिलानां वै शालग्राम शिला भवान् ।।
मुक्तिक्षेत्रेषु काशी त्वं प्रयागस्तीर्थपंक्तिषु ।।३२।।
वर्णेषु श्वेतवर्णोऽसि द्विपदां ब्राह्मणो भवान् ।।
गरुडोस्यंडजेष्वीश व्यवहारेषु वाग्भवान् ।। ३३ ।।
वेदेषूपनिषद्रूपा मंत्राणां प्रणवोह्यसि ।।
अक्षराणामकारोसि यज्वनां सोमरूपधृक् ।। ३४ ।।
प्रतापिनामग्निरसि क्षमाऽसि त्वं क्षमावताम् ।।
दातॄणामसि पर्जन्यः पवित्राणां परोह्यसि ।। ३५ ।।
चापोसि सर्वशस्त्राणां वातो वेगवतामसि ।।
मनोसींद्रियवर्गेषु निर्भयाणां करोह्यसि ।। ३६ ।।
व्योमव्याप्तिमतां त्वं वै परमात्माऽसि चात्मनाम् ।।
संध्योपास्तिर्भवान्देव सर्वनित्येषु कर्मसु।। ३७ ।।
क्रतूनामश्वमेधोसि दानानामभयं भवान् ।।
लाभानां पुत्रलाभोसि वसंतस्त्वमृतुष्वहो ।।३८।।
युगानां प्रथमोसि त्वं तिथीनां त्वं कुहूर्ह्यसि ।।
पुष्योसि नक्षत्रगणे संक्रमः सर्वपर्वसु ।। ३९ ।।
योगेषु व्यतिपातस्त्वं तृणेषु हि कुशो भवान् ।।
उद्यमानां हि सर्वेषां निर्वाणं त्वमसि प्रभो ।। 4.1.21.४० ।।

सर्वासामिह बुद्धीनां धर्मबुद्धिर्भवानज ।।
अश्वत्थः सर्ववृक्षेषु सोमवल्ली लतासु च ।। ४१ ।।
प्राणायामोसि सर्वेपु साधनेषु शुचिष्वहो ।।
सर्वदः सर्वलिंगेषु श्रीमान्विश्वेश्वरो भवान् ।। ४२ ।।
मित्राणां हि कलत्रं त्वं धर्मस्त्वं सर्वबंधुषु ।।
त्वत्तो नान्यज्जगत्यस्मिन्नारायण चराचरे ।। ४३ ।।
त्वमेव माता त्वं तातस्त्वं सुतस्त्वं महाधनम् ।।
त्वमेव सौख्यसंपत्तिस्त्वमायुर्जीवनेश्वरः ।। ४४ ।।
सा कथा यत्र ते नाम तन्मनो यत्त्वदर्पितम् ।।
तत्कर्म यत्त्वदर्थं वै तत्तपो यद्भवत्स्मृतिः ।।४५।।
तद्धनं धनिनां शुद्धं यत्त्वदर्थे व्ययीकृतम् ।।
स एव सकलः कालो यस्मिञ्जिष्णो त्वमर्च्यसे ।। ४६ ।।
तावच्च जीवितं श्रेयो यावत्त्वं हृदि वर्तसे ।।
रोगाः प्रशममायांति त्वत्पादोदक सेवनात् ।। ४७ ।।
महापापानि गोविंद बहुजन्मार्जितान्यपि ।।
सद्यो विलयमायांति वासुदेवेति कीर्तनात् ।। ४८ ।।
अहो पुंसां महामोहस्त्वहो पुंसां प्रमादता ।।
वासुदेवमनादृत्य यदन्यत्र कृतश्रमाः ।। ४९ ।।
इदमेव हि मांगल्यमिदमेव धनार्जनम् ।।
जीवितस्य फलं चैतद्यद्दामोदरकीर्तनम् ।। 4.1.21.५० ।।
अधोक्षजात्परोधर्मो नार्थो नारायणात्परः ।।
न कामः केशवादन्यो नापवर्गो हरिं विना ।। ५१ ।।
इयमेव परा हानिरुपसर्गो यमेवहि ।।
अभाग्यं परमं चैतद्वासुदेवं न यत्स्मरेत् ।। ५२ ।।
हरेराराधनं पुंसां किं किं न कुरुते बत ।।
पुत्रमित्रकलत्रार्थ राज्यस्वर्गापवर्गदम् ।। ५३ ।।
हरत्यघं ध्वंसयति व्याधीनाधीन्नियच्छति ।।
धर्मं विवर्धयेत्क्षिप्रं प्रयच्छति मनोरथम् ।। ५४ ।।

भगवच्चरणद्वंद्वं निर्द्वंद्व ध्यानमुत्तमम् ।।
पापिनापि प्रसंगेन विहितं स्वहितं परम् ।। ५५ ।।
पापिनां यानि पापानि महोपपदभांज्यपि ।।
सुलीनध्यानसंपन्नो नामोच्चारो हरेर्हरेत् ।।५६।।
प्रमादादपि संस्पृष्टो यथाऽनलकणो दहेत् ।।
तथौष्ठपुटसंस्पृष्ट हरिनाम हरेदघम् ।। ५७ ।।
नितांतं कमलाकांते शांतचित्तं विधाय यः ।।
संशीलयेत्क्षणं नूनं कमला तत्र निश्चला ।।५८।।
अयमेव परोधर्मस्त्विदमेव परं तपः ।।
इदमेव परं तीर्थं विष्णुपादांबु यत्पिबेत ।। ५९ ।।
तवोपहारं भक्त्याय सेवते यजपूरुष ।।
सेवितस्तेन नियतं पुरोडाशो महाधिया ।। 4.1.21.६० ।।
स चैवावभृथस्नातः स च गंगाजलाप्लुतः ।।
विष्णुपादोदकं कृत्वा शंखे यः स्नाति मानवः ।। ६१ ।।
शालग्राम शिला येन पूजिता तुलसी दलैः ।।
स पारिजातमालाभिः पूज्यते सुरसद्मनि ।। ६२ ।।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः ।।
विष्णुभक्ति समायुक्तो ज्ञेयः सर्वोत्तमश्च सः ।। ६३ ।।
शंखचक्रांकिततनुः शिरसां मंजरीधरः ।।
गोपीचंदनलिप्तांगो दृष्टश्चेत्तदघं कुतः ।। ६४ ।।
प्रत्यहं द्वादशशिलाः शालग्रामस्य योऽर्चयेत् ।।
द्वारवत्याः शिलायुक्तः स वैकुंठे महीयते ।। ६५ ।।
तुलसी यस्य भवने प्रत्यहं परिपूज्यते ।।
तद्गृहं नोपसर्पंति कदाचिद्यमकिंकराः ।। ६६ ।।
हरिनामाक्षरमुखं भाले गोपीमृदांकितम् ।।
तुलसीमालितोरस्कं स्पृशेयुर्नयमानुगाः ।। ६७ ।।
गोपीमृत्तुलसी शंखः शालग्रामः सचक्रकः ।।
गृहेपि यस्य पंचैते तस्य पापभयं कुत. ।। ६८ ।।

ये मुहूर्ताः क्षणा ये च या काष्ठा ये निमेषकाः ।।

ऋते विष्णुस्मृतेर्यातास्तेषु मुष्टो यमेन सः ।। ६९ ।।

क्व द्वयक्षरं हरेर्नाम स्फुलिंगसदृशं ज्वलेत ।।

महती पातकानां च राशिस्तूलोपमा क्व च ।। 4.1.21.७० ।।

गोविंद परमानंदं मुकुंदं मधुसूदनम ।।

त्यक्त्वान्यं नैव जानामि न भजामि स्मरामि न ।। ७१ ।।

न नमामि न च स्तौमि न पश्यामीह चक्षुषा ।।

न स्पृशामि न वायामि गायामि न न हरिं विना ।। ७२ ।।

जले स्थले च पातालेप्यनिले चानलेऽचले ।।

विद्याधरासुरसुरे किं नरे वानरे नरे ।। ७३ ।।

तृणेस्त्रैणे च पाषाणे तरुगुल्मलतासु च ।।

सर्वत्र श्यामलतनुं वीक्षे श्रीवत्सवक्षसम् ।। ७४ ।।

सर्वेषां हृदयावासः साक्षात्साक्षी त्वमेव हि ।।

बहिरंतर्विना त्वां तु नह्यन्यं वेद्मि सर्वगम् ।। ७५ ।।

इत्युक्त्वा विररामासौ शिवशर्मन्ध्रुवस्तदा ।।

देवोपि भगवान्विष्णुस्तमुवाच प्रसन्नदृक् ।। ७६ ।।

।। श्रीभगवानुवाच ।। ।।

अपि बाल विशालाक्ष ध्रुव ध्रुवमतेऽनघ ।।

परिज्ञातो मया सम्यक्तवहृत्स्थो मनोरथः ।। ७७ ।।

अन्नाद्भवंति भूतानि वृष्टेरन्नसमुद्भवः ।।

तद्वृष्टेः कारणं सूर्यः सूर्याधारो ध्रुवैधि भोः ।।७८।।

ज्योतिश्चक्रस्य सर्वस्य ग्रहर्क्षादेः समंततः ।।

गगने भ्रमतो नित्यं त्वमाधारो भविष्यसि ।। ७९ ।।

मेढीभूतस्तु वै सर्वान्वायुपाशैर्नियंत्रितान् ।।

आकल्पं तत्पदं तिष्ठ भ्रामयञ्ज्योतिषांगणान् ।। 4.1.21.८० ।।

आराध्य श्री महादेवं पुरापदमिदं मया ।।

आसादियत्तदेतत्ते तपसा प्रतिपादितम् ।। ८१ ।।

केचिच्चतुर्युगं यावत्केचिन्मन्वंतरं ध्रुव ।।

तिष्ठंति त्वं तु वै कल्पं पदमेतत्प्रशास्यसि ।। ८२ ।।

मनुनापि न यत्प्रापि किमन्यैर्मानवैर्ध्रुव ।।

तत्पदं विहितं त्वत्साच्छक्राद्यैरपि दुर्लभम् ।। ८३ ।।

अन्यान्वरान्प्रयच्छामि स्तवेनानेन तोषितः ।।

सुनीतिरपि ते माता त्वत्समीपे चरिष्यति ।। ८४ ।।

इदं स्तोत्रवरं यस्तु पठिष्यति समाहितः ।।

त्रिसंध्यं मनुजस्तस्य पापं यास्यति संक्षयम्।।८५।।

न तस्य सदनं लक्ष्मीः परित्यक्ष्यत्यसंशयम् ।।

न जनन्या वियोगश्च न बंधुकलहोदयः ।। ८६ ।।

ध्रुवस्तुतिरियं पुण्या महापातकनाशिनी ।।

ब्रह्महापि विशुद्ध्येत का कथेतर पापिनाम् ।। ८७ ।।

महापुण्यस्य जननी महासंपत्तिदायिनी ।।

महोपसर्गशमनी महाव्याधिविनाशिनी ।। ८८ !।

यस्याऽस्तिपरमा भक्तिर्मयि निर्मलचेतसः ।।

ध्रुवस्तुतिरियं तेन जप्या मत्प्रीतिकारिणी ।। ८९ ।।

समस्त तीर्थस्नानेन यत्फलं लभते नरः ।।

तत्फलं सम्यगाप्नोति जपन्स्तुत्यानया मुदा ।। 4.1.21.९० ।।

संति स्तोत्राण्यनेकानि मम प्रीतिकराणि च ।।

ध्रुवस्तुतेर्न चैतस्याः कलामर्हंति षोडशीम् ।। ९१ ।।

श्रुत्वापीमां स्तुतिं मर्त्यः श्रद्धया परया मुदा ।।

पातकैर्मुच्यते सद्यो महत्पुण्यमवाप्नुयात् ।। ९२ ।।

अपुत्रः पुत्रमाप्नोति निर्धनो धनमाप्नुयात् ।।

अभक्तो भक्तिमाप्नोति कीर्तनाच्च ध्रुवस्तुतेः ।। ।। ९३ ।।

दत्त्वा दानान्यनेकानि कृत्वा नाना व्रतानि च ।।

यथालाभानवाप्नोति तथा स्तुत्याऽनया नरः ।। ९४ ।।

त्यक्त्वा सर्वाणि कार्याणि त्यक्त्वा जप्यान्यनेकशः ।।

ध्रुवस्तुतिरियं जप्या सर्वकामप्रदायिनी ।। ९५ ।।

श्रीभगवानुवाच ।। ।।

ध्रुवावधेहि वक्ष्यामि हितं तव महामते ।।

येन ते निश्चलं सम्यक्पदमेतद्भविष्यति ।। ९६ ।।

अहं जिगमिषुस्त्वासं पुरीं वाराणसीं शुभाम् ।।

साक्षाद्विश्वेश्वरो यत्र तिष्ठते मोक्षकारणम् ।। ९७ ।।

विपन्नानां च जंतूनां यत्र विश्वेश्वरः स्वयम् ।।

कर्णे जापं प्रकुरुते कर्मनिर्मूलन क्षमम् ।। ९८ ।।

अस्य संसारदुःखस्य सर्वोपद्रवदायिनः ।।

उपाय एक एवास्ति काशिकानंदभूमिका ।। ९९ ।।

इदं रम्यमिदं नेति बीजं दुःखमहातरोः ।।

तस्मिन्काश्यग्निना दग्धे दुःखस्यावसरः कुतः ।।4.1.21.१००।।

प्राप्य संप्राप्यते येन न भूयो येन शोच्यते ।।

परायानिर्वृतेः स्थानं यत्तदानंदकाननम् ।। १ ।।

अमृतायनमुत्सृज्य पुरुषोन्यत्र यो वसेत् ।।

आनंदकाननं शंभोः कुतस्तस्य सुखोदयः ।। २ ।।

वरं शरावहस्तस्य चांडालागारवीथिषु ।।

भिक्षार्थमटनं काश्यां राज्यं नान्यत्र नीरिषु ।। ३ ।।

वैकुंठनगरात्काशीं नित्यं विश्वेशमर्चितुम् ।।

अहमायामि नियमाज्जगदर्च्यं तदर्चिताम् ।। ४ ।।

मयि या परमा शक्तिस्त्रिलोक्या रक्षणक्षमा ।।

तत्र हेतुर्महेशानः स सुदर्शनचक्रदः ।। ५ ।।

पुरा जालंधरं दैत्यं ममापि परिकंपनम् ।।

पादांगुष्ठाग्ररेखोत्थं चक्रं सृष्ट्वा हरोऽहरत् ।। ६ ।।

तच्च चक्रं मया लब्धं नेत्रपद्मार्चनाद्विभोः ।।

एतत्सुदर्शनाख्यं वै दैत्यचक्रप्रमर्दनम् ।। ७ ।।

तन्मया तव रक्षार्थं भूतविद्रावणं परम् ।।

तावत्प्रणुन्नं पुरतस्ततश्चाहमिहागतः ।।८।।

काशीमिदानीं यास्यामि विश्वेश्वर विलोकने।।

अद्य यात्राऽस्ति महती कार्तिक्यां बहुपुण्यदा ।। ९ ।।

कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः ।। 4.1.21.११० ।।
इत्युक्त्वा ताक्ष्र्यमारोप्य ध्रुवमानंदमेदुरम् ।।
क्षणाद्वाराणसीं प्राप हरिः स्मरहरोषिताम् ।। ११ ।।
पंचक्रोश्याश्च सीमानं प्राप्य देवो जनार्दनः ।।
वैनतेयादवारुह्य करे धृत्वा ध्रुवं ततः ।। १२ ।।
मणिकर्ण्यां परिस्नाय विश्वेशमभिपूज्य च ।।
ध्रुवं बभाषे भगवान्हितं तस्य चिकीर्षयन् ।। १३ ।।
लिंगं स्थापय यत्नेन क्षेत्रेऽत्रैवाविमुक्तके ।।
त्रैलोक्यस्थापनं पुण्यं यथा भवति तेऽक्षयम् ।। १४ ।।
नियुतं यत्परिस्थाप्य लिंगानि फलमाप्यते ।।
अन्यत्र तदिहैकेन लिंगेन परिलभ्यते ।। १५ ।।
कालेन भंगमापन्नं जीर्णोद्धारं करोति यः ।।
इह तस्य फलस्यांतः प्रलयेपि न जायते ।। १६ ।।
वित्तशाठ्यं परित्यज्य प्रासादं योऽत्र कारयेत् ।।
तेन दत्तो भवेत्सर्वो मेरुर्नियुतयोजनः ।। १७ ।।
कूपवापीतडागानि शक्त्या योऽत्र तु कारयेत् ।।
अन्यत्र करणात्तस्य पुण्यं कोटिगुणाधिकम् ।। १८ ।।
इज्यार्थमत्र यः कुर्यात्सुरम्यां पुष्पवाटिकाम् ।।
पुष्पेपुष्पे फलं तस्य सुवर्णकुसुमाधिकम् ।। १९ ।।
अत्र ब्रह्मपुरीं कृत्वा यो विप्रेभ्यः प्रयच्छति ।।
वर्षाशनेन संयुक्तां तस्य पुण्यफलं शृणु ।। 4.1.21.१२० ।।
क्षीयंते सलिलान्यब्धेर्भौमाश्च त्रसरेणवः ।।
क्षयो न तस्य पुण्यस्य शिवलोके समासतः ।। २१ ।।
मठानपि तपस्विभ्यः कारयित्वाऽत्र योर्पयेत् ।।
जीवनोपायसंयुक्तान्सोपि पूर्वफलाश्रयः ।। २२ ।।
कृत्वा महांति पुण्यानि योऽत्र विश्वेश्वरेऽर्पयेत् ।।
न तस्य पुनरावृत्ति घोरे संसारसागरे ।।२३।।

अनंत इति वादोयं मयिलोकेऽत्र गीयते ।।
परं काशी गुणानां हि मयाप्यंतो न लभ्यते ।।२४।।
तस्मात्प्रयत्नतः काश्यां धुव श्रेयः समाश्रयेत् ।।
काशी श्रेयः फलं पुंसामक्षया योपजायते ।।२५।।
गणावूचतुः ।। ।।
ध्रुवमित्युपदिश्याथ जगाम गरुडध्वजः ।।
ध्रुवोपि लिंगं संस्थाप्य वैद्यनाथसमीपतः ।। २६ ।।
प्रासादं सुमहत्कृत्वा कृत्वा कुंडं तदग्रतः ।।
विश्वेश्वरं समभ्यर्च्य कृतकृत्यो गृहं ययौ ।। २७ ।।
ध्रुवेश्वरं समभ्यर्च्य ध्रुवकुंडे कृतोदकः ।।
ध्रुवलोकमवाप्नोति नरो भोगसमन्वितः ।। २८ ।।
ध्रुवस्य परमाख्यानं यः पठेत्पाठयेदपि ।।
स विष्णुलोकमासाद्य जायते विष्णुवल्लभः ।। २९ ।।
नरो ध्रुवस्य चरितं प्रसंगेन स्मरन्नपि ।।
न पापैरभिभूयेत महत्पुण्यमवाप्नुयात् ।। 4.1.21.१३० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ध्रुवस्तुतिर्नामैकविंशतितमोऽध्यायः ।। २१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२२

https://sa.wikisource.org/s/fv3
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। शिवशर्मोवाच ।।

ध्रुवाख्यानमिदं रम्यं महापातकनाशनम् ।।

महाश्चर्यकरं पुण्यं श्रुत्वा तृप्तोस्मि भो गणौ ।। १ ।।

।। अगस्त्य उवाच ।। ।।

इत्थं यावद्द्विजो ब्रूते विमानं वायुवेगगम् ।।

तावत्प्राप महर्लोकं स्वर्लोकात्परमाद्भुतम् ।। २ ।।

द्विजोऽथ लोकं संवीक्ष्य सर्वतो महसा वृतम् ।।

तौ गणौ प्रत्युवाचेदं कोयं लोको मनोहरः ।। ३ ।।

तावूचतुस्ततो विप्रं निशामय महामते ।।

अयं स हि महर्लोकः स्वर्लोकात्परमाद्भुतः ।। ४ ।।

कल्पायुषो वसंत्यत्र तपसा धूतकल्मषाः ।।

विष्णुस्मरण संक्षीण समस्तक्लेशसंचयाः ।।५।।

निर्व्याजप्रणिधानेन दृष्ट्वा तेजोमयं जगत् ।।

महायोगसमायुक्ता वसंत्यत्र सुरोत्तमाः ।। ६ ।।

इत्थं कथां कथयतोर्भगवद्गणयोः प्रिये ।।

क्षणार्धेन विमानं तज्जनलोकं निनायतान् ।। ७ ।।

निवसंत्यमला यत्र मानसा ब्रह्मणः सुताः ।।

सनंदनाद्या योगींद्राः सर्वे ते ह्यूर्ध्वरेतसः ।। ८ ।।

अन्ये तु योगिनो ये वै ह्यस्खलद्ब्रह्मचारिणः ।।

सर्वद्वंद्वविनिर्मुक्तास्ते वसंत्यतिनिर्मलाः ।।९।।

जनलोकात्तपोलोकस्तेषां लोचनगोचरः ।।

कृतस्तेन विमानेन मनोवेगेन गच्छता ।। 4.1.22.१० ।।

वैराजा यत्र ते देवा वसेयुर्दाहवर्जिताः ।।

वासुदेवे मनो येषां वासुदेवार्पितक्रियाः ।। ११ ।।

तपसा तोष्य गोविंदमभिलाषविवर्जिताः।।

तपोलोकमिमं प्राप्य वसंति विजितेंद्रियाः ।।१२।।

शिलोंछ वृत्तया ये वै दंतोलूखलिकाश्च ये ।।

अश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये ।। १३ ।।

ग्रीष्मे पंचाग्नितपसो वर्षासु स्थंडिलेशयाः ।।

हेमंतशिशिरार्धे ये क्षपंति सलिले क्षपाः ।।१४।।

कुशाग्रनीरविप्रूषस्तृषिता यतयोऽपिबन्।।

वाताशिनोतिक्षुधिताः पादाग्रांगुष्ठ भूस्पृशः ।। १५ ।।

ऊर्ध्वदोषो रविदृशस्त्वेकांघ्रि स्थाणु निश्चलाः ।।

ये वै दिवा निरुच्छवासा मासोच्छवासाश्च ये पुनः ।।१६।।

मासोपवासव्रतिनश्चातुर्मास्य व्रताश्च ये ।।

ऋत्वंततोयपाना ये षण्मासोपवासकाः ।। १७ ।।

ये च वर्षनिमेषा वै वर्षधारांबु तर्षकाः ।।

ये च स्थाणूपमां प्राप्ता मृगकंडूति सौख्यदाः ।। १८ ।।

जटाटवी कोटरांतः कृतनीडांडजाश्च ये ।।

प्ररूढवामलूरांगाः स्नायुनद्धास्थिसंचयाः ।। १९ ।।

लताप्रतानैः परितो वेष्टितावयवाश्च ये ।।

सस्यानि च प्ररूढानि यदंगेषु चिरस्थिति ।। 4.1.22.२० ।।

इत्यादि सुतपः क्लिष्टवर्ष्माणो ये तपोधनाः ।।

ब्रह्मायुषस्तपोलोके ते वसंत्यकुतोभयाः ।।२१।।

यावदित्थं स पुण्यात्मा शृणोति गणयोर्मुखात् ।।

तावन्नेत्रातिथीभूतः सत्यलोको महोज्ज्वलः ।। २२ ।।

त्वरावंतौ गणौ तत्र विमानादवरुह्य तौ ।।

स्रष्टारं सर्वलोकानां तेन सार्धं प्रणेमतुः ।। २३ ।।

ब्रह्मोवाच ।।

गणावसौ द्विजो धीमान्वेदवेदांगपारगः ।।

स्मृत्युक्ताचारचंचुश्च प्रतीपः पापकर्मसु ।। २४ ।।

अयि द्विज महाप्राज्ञ जाने त्वां शिवशर्मक ।।

साधूकृतं त्वया वत्स सुतीर्थप्राणमोक्षणात् ।। २५ ।।

सत्वरं गत्वरं सर्वं यच्चैतद्भवतेक्षितम् ।।

दैनंदिनप्रलयतः सृजामि च पुनः पुनः ।। २६ ।।

आ वैराजं प्रतिपदमुपसंहरते हरः ।।

का कथा मशकाभानां नृणां मरणधर्मिणाम् ।। २७ ।।

चतुर्षु भूतग्रामेषु ह्येक एव गुणो नृणाम् ।।

तस्मिन्वै भारते वर्षे कर्मभूमौ महीयसि ।। २८ ।।

चपलानि विनिर्जित्येंद्रियाणि मनसा सह ।।

विहाय वैरिणं लोभं विष्वग्गुणगणस्य च ।। २९ ।।

धर्मवंशहरं काममर्थसंचयहारिणम् ।।

जरापलितकर्तारं विनिष्कृत्य विचारतः ।।4.1.22.३०।।

जित्वा क्रोधरिपुं धैर्यात्तपसो यशसः श्रियः ।।

शरीरस्यापि हर्तारं नेतारं तामसीं गतिम् ।। ३१ ।।

सदा मदं परित्यज्य प्रमादैकपदप्रदम् ।।

प्रमादैकशरण्यं च संपदां विनिवर्तकम् ।। ३२ ।।

सर्वत्र लघुता हेतुमहंकारं विहाय च ।।

दूषणारोपणे यत्नं कुर्वाणं सज्जनेष्वपि ।। ३३ ।।

हित्वा मोहं महाद्रोहरोपणं मतिघातिनम् ।।

अत्यंतमंधीकरणमंधतामिस्रदर्शकम् ।। ३४ ।।

श्रुतिस्मृतिपुराणोक्तं परिक्षुण्णं महाजनैः ।।

धर्मसोपानमारुह्य यदिहायांति हेलया ।। ३५ ।।

कर्मभूमिं समीहंते सर्वे स्वर्गौकसो द्विज ।।

यत्तत्रार्जितभोक्तारः पदेषूच्चावचेष्वमी ।। ३६ ।।

नार्यावर्तसुमो देशो न काशी सदृशी पुरी ।।

न विश्वेश समं लिंगं क्वापि बह्मांडमंडले ।।३७।।

संति स्वर्गा बहुविधाः सुखेतर विवर्जिता।।

सुकृतैकफलाः सर्वे युक्ताः सर्वसमृद्धिभिः।। ।। ३८ ।।

स्वर्लोकादधिकं रम्यं नहि ब्रह्मांडगोलके ।।

सर्वे यतंते स्वर्गाय तपोदानव्रतादिभिः ।। ३९ ।।

स्वर्लोकादपिरम्याणि पातालानीति नारदः ।।
प्राह स्वर्गसदां मध्ये पातालेभ्यः समागतः ।। 4.1.22.४० ।।
आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ।।
नागांगाभरणप्रोताः पातालं केन तत्समम् ।। ४१ ।।
दैत्यदानवकन्याभिरितश्चेतश्च शोभिते ।।
पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ।। ४२ ।।
दिवार्करश्मयस्तत्र प्रभां तन्वंति नातपम्।।
शशिनश्च न शीताय निशि द्योताय केवलम् ।। ४३ ।।
यत्र न ज्ञायते कालो गतोपि दनुजादिभिः ।।
वनानि नद्यो रम्याणि सदंभांसि सरांसि च ।। ४४ ।।
कलाः पुंस्को किलालापाः सुचैलानि शुचीनि च ।।
भूषणान्यतिरम्याणि गंधाद्यमनुलेपनम् ।। ४५ ।।
वीणावेणुमृदंगादि निस्वनाः श्रुतिहारिणः ।।
हाटकेशं महालिंगं यत्र वै सर्वकामदम् ।। ४६ ।।
एतान्यन्यानि रम्याणि भोग्योग्यानि दानवैः ।।
दैत्योरगैश्च भुज्यंते पातालांतरगोचरैः ।। ४७ ।।
पातालेभ्योपि वै रम्यं द्विज वर्षमिलावृतम्।।
रत्नसानुं समाश्रित्य परितः परिसंस्थितम्।।४८।।
सदा सुकृतिनो यत्र सर्वभोगभुजो द्विज।।
नवयौवनसंपन्ना नित्यं यत्र मृगीदृशः ।।४९।।
भोगभूमिरियं प्रोक्ता श्रेयो विनिमयार्जिता ।।
भुज्यते त्वद्विधैर्लोकैस्तीर्थाभित्यक्त देहकैः ।। 4.1.22.५० ।।
अक्लीबभाषिभिश्चापि पुत्रक्षेत्राद्यहीनकैः ।।
परोपकारसंक्षीणसुखायुर्धनसंचयैः ।। ५१ ।।
संति द्वीपा ह्यनेका वै पारावारांतरस्थिताः ।।
जंबूद्वीपसमो द्वीपो न क्वापि जगतीतले ।। ५२ ।।
तत्रापि नववर्षाणि भारतं तत्र चोत्तमम् ।।
कर्मभूमिरियं प्रोक्ता देवानामपिदुर्लभा ।।५३।।

अष्टौ किंपुरुषादीनि देवभोग्यानि तानि तु ।।

तेषु स्वर्गात्समागत्य रमंते त्रिदिवौकसः ।। ५४ ।।

योजनानां सहस्राणि नवविस्तारतस्त्विदम् ।।

भारतं प्रथमं वर्षं मेरोर्दक्षिणतः स्थितम् ।। ५५ ।।

तत्रापि हिमविंध्याद्रेरंतरं पुण्यदं परम् ।।

गंगायमुनयोर्मध्ये ह्यंतर्वेदी भुवः पराः ।। ५६ ।।

कुरुक्षेत्रं हि सर्वेषां क्षेत्राणामधिकं ततः ।।

ततोपि नैमिषारण्यं स्वर्गसाधनमुत्तमम् ।। ५७ ।।

नैमिषारण्यतोपीह सर्वस्मिन्क्षितिमंडले ।।

सर्वेभ्योपि हि तीर्थेभ्यस्तीर्थराजो विशिष्यते ।। ५८ ।।

स्वर्गदोमोक्षदश्चैव सर्वकामफलप्रदः ।।

प्रयागस्तन्महत्क्षेत्रं तीर्थराज इति स्मृतः ।। ६९ ।।

यागाः सर्वे मया पूर्वं तुलया विधृता द्विज ।।

तच्च तीर्थवरं रम्यं कामिकं कामपूरणात ।। 4.1.22.६० ।।

दृष्ट्वा प्रकृष्टयागेभ्यः पुष्टेभ्यो दक्षिणादिभिः ।।

प्रयागमिति तन्नाम कृतं हरिहरादिभिः ।। ६१ ।।

नाममात्रस्मृतेर्यस्य प्रयागस्य त्रिकालतः ।।

स्मर्तुः शरीरे नो जातु पापं वसति कुत्रचित् ।। ६२ ।।

संति तीर्थान्यनेकानि पापत्राणकराणि च ।।

न शक्तान्यधिकं दातुं कृतैनः परिशुद्धितः ।। ६३ ।।

जन्मांतरेष्वसंख्येषु यः कृतः पापसंचयः ।।

दुष्प्रणोद्यो हि नितरां व्रतैर्दानैस्तपोजपैः ।। ६४ ।।

स तीर्थराजगमनोद्यतस्य शुभजन्मनः ।।

अंगेषु वेपतेऽत्यंतं द्रुमो वातहतो यथा ।। ६५ ।।

ततः क्रांतार्धमार्गस्य प्रयाग दृढचेतसः ।।

पुंसः शरीरान्निर्यातुमपेक्षेत पदांतरम् ।। ।। ६६।।

भाग्यान्नेत्रातिथीभूते तीर्थराजे महात्मनः ।।

पलायते द्रुततरं तमः सूर्योदये यथा ।। ६७ ।।

सप्तधातुमयी भूततनौ पापानि यानि वै ।।
केशेषु तानि तिष्ठंति वपनाद्यांति तान्यपि ।। ६८ ।।
एवं निष्कलुषीभूय ततः स्नायात्सितासिते ।।
यंयं काममभिध्यायंस्तं तमाप्नोति नान्यथा ।। ६९ ।।
पुण्यराशिं च विपुलं पुण्यान्भोगान्यथेप्सितान् ।।
स्वर्गं प्राप्नोति तत्पुण्यान्निष्कामो मोक्षमाप्नुयात् ।। 4.1.22.७० ।।
स्नायाद्योभिलषन्मोक्षं कामानन्यान्विहाय च ।।
सोपि मोक्षमवाप्नोति कामदात्तीर्थराजतः ।। ७१ ।।
तीर्थराजं परित्यज्य योऽन्यस्मात्काममिच्छति ।।
भारताख्ये महावर्षे स कामं नाप्नुयात्स्फुटम् ।। ७२ ।।
सत्यलोके प्रयागे च नांतरं वेद्म्यहं द्विज ।।
तत्र ये शुभकर्माणस्ते मल्लोकनिवासिनः ।। ७३ ।।
तीर्थाभिलाषिभिर्मर्त्यैस्सेव्यं तीर्थांतरं नहि ।।
अन्यत्र भूमिवलये तीर्थराजात्प्रया गतः ।।७४।।
यथांतरं द्विजश्रेष्ठ भूपेत्वितरसेवके ।।
दृष्टांतमात्रं कथितं प्रयागेतर तीर्थयोः ।।७५।।
यथाकथंचित्तीर्थेऽस्मिन्प्राणत्यागं करोति यः ।।
तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ।। ७६ ।।
यस्य भाग्यवतश्चात्र तिष्ठंत्यस्थीन्यपि द्विज ।।
न तस्य दुःखलेशोपि क्वापि जन्मनि जायते ।। ७७ ।।
ब्रह्महत्यादि पापानां प्रायश्चित्तं चिकीर्षुणा ।।
प्रयागं विधिवत्सेव्यं द्विजवाक्यान्न संशयः ।। ७८ ।।
किं बहूक्तेन विप्रेंद्र महोदयमभीप्सुना ।।
सेव्यं सितासितं तीर्थं प्रकृष्टं जगतीतले ।। ७९ ।।
प्रयागतोपि तीर्थेशात्सर्वेषु भुवनेष्वपि ।।
अनायासेन वै मुक्तिः काश्यां देहावसानतः ।।4.1.22.८०।।
प्रयागादपि वै रम्यमविमुक्तं न संशयः ।।
यत्र विश्वेश्वरः साक्षात्स्वयं समधितिष्ठति ।। ८१ ।।

अविमुक्तान्महाक्षेत्राद्विश्वेश समधिष्ठितात् ।।

न च किंचित्क्वचिद्रम्यमिह ब्रह्मांडगोलके ।। ८२ ।।

अविमुक्तमिदं क्षेत्रमपि ब्रह्मांडमध्यगम् ।।

ब्रह्मांडमध्ये न भवेत्पंचक्रोशप्रमाणतः ।। ८३ ।।

यथायथा हि वर्धेत जलमेकार्णवस्य च ।।

तथातथोन्नयेदीशस्तत्क्षेत्रं प्रलयादपि ।। ८४ ।।

क्षेत्रमेतत्त्रिशूलाग्रे शूलिनस्तिष्ठति द्विज ।।

अंतरिक्षेन भूमिष्ठं नेक्षंते मूढबुद्धयः।। ८५ ।।

सदा कृतयुगं चात्र महापर्वसदाऽत्र वै ।।

न ग्रहाऽस्तोदयकृतो दोषो विश्वेश्वराश्रमे ।।८६।।

सदा सौम्यायनं तत्र सदा तत्र महोदयः ।।

सदैव मंगलं तत्र यत्र विश्वेश्वरस्थितिः।।८७।।

यथाभूमितले विप्र पुर्यः संति सहस्रशः ।।

तथा काशी न मंतव्या क्वापि लोकोत्तरात्वियम् ।। ८८ ।।

मया सृष्टानि विप्रेंद्र भुवनानि चतुर्दश ।।

अस्याः पुर्या विनिर्माता स्वयं विश्वेश्वरः प्रभुः ।। ८९ ।।

पुरा यमस्तपस्तप्त्वा बहुकालं सुदुष्करम् ।।

त्रैलोक्याधिकृतिं प्राप्तस्त्यक्त्वा वाराणसीं पुरीम् ।। 4.1.22.९० ।।

चराचरस्य सर्वस्य यानि कर्माणि तानि वै ।।

गोचरे चित्रगुप्तस्य काशीवासिकृतादृते ।। ९१ ।।

प्रवेशो यमदूतानां न कदाचिद्द्विजोत्तम ।।

मध्ये काशीपुरी क्वापि रक्षिणस्तत्र तद्गणाः ।। ९२ ।।

स्वयं नियंता विश्वेशस्तत्र काश्यां तनुत्यजाम् ।।

तत्रापि कृतपापानां नियंता कालभैरवः ।। ९३ ।।

तत्र पापं न कर्तव्यं दारुणा रुद्रयातना ।।

अहो रुद्रपिशाचत्वं नरकेभ्योपि दुःसहम् ।। ९४ ।।

पापमेव हि कर्तव्यं मतिरस्ति यदीदृशी ।।

सुखेनान्यत्र कर्तव्यं मही ह्यस्ति महीयसी ।। ९५ ।।

अपि कामातुरो जंतुरेकां रक्षति मातरम् ।।

अपि पापकृता काशी रक्ष्या मोक्षार्थिनैकिका ।। ९६ ।।

परापवादशीलेन परदाराभिलाषिणा ।।

तेन काशी न संसेव्या क्व काशी निरयः क्व सः ।। ९७ ।।

अभिलष्यंति ये नित्यं धनं चात्र प्रतिग्रहैः ।।

परस्वं कपटैर्वापि काशी सेव्या न तैर्नरैः ।। ९८ ।।

परपीडाकरं कर्म काश्यां नित्यं विवर्जयेत् ।।

तदेव चेत्किमत्र स्यात्काशीवासो दुरात्मनाम् ।। ।। ९९ ।।

त्यक्त्वा वैश्वेश्वरीं भक्तिं येऽन्यदेवपरायणाः ।।

सर्वथा तैर्न वस्तव्या राजधानी पिनाकिनः ।। 4.1.22.१०० ।।

अर्थार्थिनस्तु ये विप्र ये च कामार्थिनो नराः ।।

अविमुक्तं न तैः सेव्यं मोक्षक्षेत्रमिदं यतः ।। १ ।।

शिवनिंदापरा ये च वेदनिंदा पराश्च ये ।।

वेदाचारप्रतीपा ये सेव्या वाराणसी न तैः ।। २ ।।

परद्रोहधियो ये च परेर्ष्याकारिणश्च ये ।।

परोपतापिनो ये वै तेषां काशी न सिद्धये ।। ३ ।।

मनसापि न ये काशीमभिनंदंति दुर्धियः ।।

तेषां निर्वाणवार्तापि दूरे दुर्वृत्तचेतसाम् ।। ४ ।।

ज्ञानेन न विना मोक्षः क्वचिदस्तीह भूतले ।।

तज्ज्ञानं न व्रतैर्लभ्यमपि चांद्रायणादिभिः ।। ५ ।।

तुलापुरुषमुख्यैश्च दानैश्च श्रद्धयान्वितैः ।।

देशकाले च विधिना पात्रेभ्यः प्रतिपादितैः ।। ६ ।।

न यमैर्ब्रह्मचर्याद्यैर्नियमैर्नार्चनादिभि. ।।

शरीरशोषणैरुग्रैर्न तपोभिर्द्विजोत्तम ।। ७ ।।

न महामंत्रजप्यैश्च गुरुभिः प्रतिपादितैः ।।

न स्वाध्यायैर्यथोक्तैश्च नाग्निशुश्रूषणैः परैः ।। ८ ।।

न सेवया गुरूणां च न श्राद्धैर्देवतार्चनैः ।।

न नानातीर्थयात्राभिर्ज्ञानं समधिगम्यते ।। ।। ९ ।।

न योगेन विना ज्ञानं योगस्तत्त्वार्थशीलनम् ।।

गुरूपदिष्टमार्गेण सदाभ्यासवशेन च ।। 4.1.22.११० ।।

तस्यांतराया बहवः सुदूरश्रवणादयः ।।

अतो न प्राप्यते ज्ञानं योगादेकेन जन्मना ।। ११ ।।

विना तपो जपाद्यैश्च विना योगेन सुव्रत ।।

निःश्रेयो लभ्यते काश्यामिहैकेनैव जन्मना ।।१२।।

त्वया शुद्धधिया काश्यां यच्छ्रेयः समुपार्जितम् ।।

तच्छ्रेयसोप्युदर्कस्ते महानस्ति द्विजोत्तम ।। १३ ।।

उक्तेति विररामाजः शृण्वतोर्गणयोस्तयोः ।।

सोपि प्रमुदितश्चाभूच्छिवशर्मा महामनाः ।। ११४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ब्रह्मकृतकाशीप्रशंसानाम द्वाविंशतितमोऽध्यायः ।। २२ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२३



शिवशर्मोवाच ।। ।।

सत्यलोकेश्वर विधे सर्वेषां प्रपितामह ।।

किंचिद्विज्ञप्तुकामोस्मि न भयाद्वक्तुमुत्सहे ।। १ ।।

।। ब्रह्मोवाच ।। ।।

यत्त्वं प्रष्टुमना विप्र ज्ञातं ते तन्मनोगतम् ।।

पिपृच्छिषुस्त्वं निर्वाणं गणौ तत्कथयिष्यतः ।।२।।

नेतयोर्विष्णुगणयोरगोचरमिहास्ति हि ।।

सर्वमेतौ विजानीतो यत्किंचिद्ब्रह्मगो लके ।। ३ ।।

इत्युक्त्वा सत्कृतास्ते वै ब्रह्मणा भगवद्गणाः ।।

प्रणम्य लोककर्तारं तेऽपि हृष्टाः प्रतस्थिरे ।। ४ ।।

पुनः स्वयानमारुह्य वैकुंठमभितो ययुः ।।

गच्छतापि पुनस्तत्र द्विजेनापृच्छितौ गणौ ।। ५ ।।

।। शिवशर्मोवाच ।। ।।

कियद्दूरे वयं प्राप्ता गंतव्यं च कियत्पुनः ।।

पृच्छाम्यन्यच्च वां भद्रौ ब्रूतं प्रीत्या तदप्यहो ।। ।। ६ ।।

कांच्यवंती द्वारवती काश्ययोध्या च पंचमी ।।

मायापुरी च मथुरा पुर्यः सप्त विमुक्तिदाः ।। ७ ।।

विहाय षट्पुरीश्चान्याः काश्यामेवप्रतिष्ठिता ।।

मुक्तिर्विश्वसृजा तत्किं मम मुक्तिर्न संप्रति ।। ८ ।।

इति सर्वं मम पुरः प्रसादाद्वक्तुमर्हतम् ।।

इति तद्वाक्यमाकर्ण्य गणावूचतुरादरात् ।। ९ ।।

।। गणावूचतुः ।।

यथार्थं कथयावस्ते यत्पृष्टं भवतानघ ।।

विष्णुप्रसादाज्जानीवो भूतंभाविभवत्तथा ।। 4.1.23.१० ।।

विप्रावभासते यावत्किरणैः पुष्पवंतयोः ।।

तावतीभूः समुद्दिष्टा ससमुद्राद्रि कानना ।। ११ ।।

वियच्च तावदुपरि विस्तारपरिमंडलम् ।।

योजनानां च नियुते भूमेर्भानुर्व्यवस्थितः ।। १२ ।।

भानोः सकाशादुपरि लक्षे लक्ष्यः क्षपाकरः ।।

नक्षत्रधं(मं?)डलं सोमाल्लक्षयोजनमुच्छ्रितम् ।। १३।।

उडुमंडलतः सौम्य उपरिष्टाद्द्विलक्षतः ।।

द्विलक्षे तु बुधाच्छुक्रः शुक्राद्भौमो द्विलक्षके ।। १४ ।।

माहेयादुपरिष्टाच्च सुरेज्यो नियुतद्वये ।।

द्विलक्षयोजनोत्सेधः सौरिर्देवपुरोहितात् ।। १५ ।।

दशायुतसमुच्छ्रायं सौरेः सप्तर्षिमंडलम् ।।

सप्तर्षिभ्यः सहस्राणां शतादूर्ध्वं ध्रुवस्थितः ।। ।। १६ ।।

पादगम्यं हि यत्किंचिद्वस्त्वस्ति धरणीतले ।।

तद्भूर्लोक इति ख्यातः साब्धिद्वीपाद्रिकाननम् ।। १७ ।।

भूर्लोकाच्च भुवर्लोको ब्रध्नावधिरुदाहृतः ।।

आदित्यादाध्रुवं विप्र स्वर्लोक इति गीयते ।। ।१८ ।।

महर्लोकः क्षितेरूर्ध्वमेककोटिप्रमाणतः ।।

कोटिद्वये तु संख्यातो जनो भूर्लोकतो जनैः ।। १९ ।।

चतुष्कोटिप्रमाणस्तु तपोलोकोऽस्ति भूतलात् ।।

उपरिष्टात्क्षितेरष्टौ कोटयः सत्यमीरितम् ।। 4.1.23.२० ।।

सत्यादुपरि वैकुंठो योजनानां प्रमाणतः ।।

भूर्लोकात्परिसंख्यातः कोटिषोडशसंमितः ।। २१ ।।

यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ।।

ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः ।। २२ ।।

पार्वत्या सहितः शंभुर्गजास्य स्कंद नंदिभिः ।।

यत्र तिष्ठति विश्वेशः सकलः स परः स्मृतः ।। २३ ।।

तस्य देवस्य खेलोऽयं स्वलीला मूर्तिधारिणः ।।

स विश्वेश इति ख्यात स्तस्याज्ञाकृदिदं जगत् ।। २४ ।।

सर्वेषां शासकश्चासौ तस्य शास्ता न चापरः ।।

स्वयं सृजति भूतानि स्वयं पाति तथात्ति च ।। २५ ।।

सर्वज्ञ एकः स प्रोक्तः स्वेच्छाधीन विचेष्टितः ।।

तस्य प्रवतर्कः कोपि नहि नैव निवर्तकः ।। २६ ।।

अमूर्तं यत्परं ब्रह्म समूर्तं श्रुतिचोदितम् ।।

सर्वव्यापि सदा नित्यं सत्यं द्वैतविवर्जितम् ।। २७ ।।

सर्वेभ्यः कारणेभ्यश्च परात्परतरं परम् ।।

आनंदं ब्रह्मणो रूपं श्रुतयो यत्प्रचक्षते ।। २८ ।।

संविदं तेन यं वेदा विष्णुर्वेद न वै विधिः ।।

यतो वाचो निवर्तंते ह्यप्राप्य मनसा सह ।। २९ ।।

स्वयंवेद्यः परं ज्योतिः सर्वस्य हृदि संस्थितः ।।

योगिगम्यस्त्वनाख्येयो यः प्रमाणैकगोचरः ।। 4.1.23.३० ।।

नानारूपोप्यरूपो यः सर्वगोपि न गोचरः ।।

अनंतोप्यंतक वपुः सर्ववित्कर्मवर्जितः ।।३१।।

तस्येदमैश्वरं रूपं खंडचंद्रावतंसकम् ।।

तमालश्यामलगलं स्फुरद्भालविलोचनम् ।। ३२ ।।

लसद्वामार्धनारीकं कृतशेषशुभांगदम् ।।

गंगातरंगसत्संग सदाधौतजटातटम् ।। ३३ ।।

स्मरांगरजःपुंज पूजितावयवोज्ज्वलम् ।।

विचित्रगात्रविधृतमहाव्यालविभूषणम् ।। ३४ ।।

महोक्षस्यंदनगमं विरुताजगवायुधम्।।

गजाजिनोत्तरासंगं दशार्धवदनं शुभम् ।। ३५ ।।

उत्त्रासित महामृत्यु महाबलगणावृतम् ।।

शरणार्थिकृतत्राणं नत निर्वाणकारणम् ।।

मनोरथपथातीतं वरदानपरायणम् ।। ३६ ।।

तस्य तत्त्वस्वरूपस्य रूपातीतस्य भो द्विज ।।

परावरे रुद्ररूपे सर्वेव्याप्यावतिष्ठत ।। ३७ ।।

निराकारोपि साकारः शिव एव हि कारणम ।।

मुक्तये भुक्तये वापि न शिवान्मोक्षदो परः ।। ३८ ।।

यथा तेनाखिलं ह्येतत्पार्वतीपतिसात्कृतम ।।

इदं चराचरं सर्वं दृश्यादृश्यमरूपिणा ।। ३९ ।।

तथा मृडानीकांतेन विष्णुसादखिलंजगत ।।

विधाय क्रीड्यते विप्र नित्यं स्वच्छंद लीलया ।। 4.1.23.४० ।।

यथाशिवस्तथा विष्णुर्यथाविष्णुस्तथा शिवः ।।

अंतरं शिवविष्ण्वोश्च मनागपि न विद्यते ।। ४१ ।।

आहूय पूर्वं ब्रह्मादीन्समस्तान्देवतागणान् ।।

विद्याधरोरगादींश्च सिद्धगंधर्वचारणान् ।। ४२ ।।

निजसिंहासनसमं कृत्वा सिंहासनं शुभम् ।।

उपवेश्य हरिं तत्र च्छत्रं कृत्वा मनोहरम् ।।४३।।

श्लक्ष्णं कोटिशलाकं च विश्वकर्मविनिर्मितम् ।।

पांडुरं रत्नदंडं च स्थूलमुक्तावलंबितम् ।। ४४ ।।

कलशेन विचित्रेण ह्युपरिष्टाद्विराजितम् ।।

सहस्रयोजनायामं सर्वरत्नमयं शुभम् ।।४५।।

पट्टसूत्रमयैरम्यैश्चामरैश्च परिष्कृतम् ।।

राजाभिषेकयोग्यैश्च द्रव्यैः सर्वौषधादिभिः ।। ४६ ।।

प्रत्यक्षतीर्थपाथोभिः पंचकुंभैर्मनोहरैः ।।

सिद्धार्थाक्षतदूर्वाभिर्मंत्रैः स्वयमुपस्थितैः ।। ४७ ।।

देवानां च तथर्षीणां सिद्धानां फणिनामपि ।।

आनीय मंगलकराः कन्याः षोडशषोडश ।। ४८ ।।

वीणामृदंगाब्जभेरी मरु डिंडिमझर्झरैः ।।

आनकैः कांस्यतालाद्यै र्वाद्यैर्ललितगायनैः ।।४९।।

ब्रह्मघोषमहारावैरापूरितनभोंगणे ।।

शुभे तिथौ शुभे लग्ने ताराचंद्रबलान्विते ।।4.1.23.५० ।।

आबद्धमुकुटं रम्यं कृतकौतुकमंगलम् ।।

मृडानीकृतशृंगारं सुश्रिया सुश्रियायुतम् ।।५१।।

अभिषिच्य महेशेन स्वयं ब्रह्मांडमंडपे ।।

दत्तं समस्तमैश्वर्यं यन्निजं नान्यगामि च ।। ५२ ।।

ततस्तुष्टाव देवेशः प्रमथैः सह शार्ङ्गिणम् ।।
ब्रह्माणं लोककर्तारमुवाच च वचस्त्विदम् ।। ५३ ।।
मम वंद्यस्त्वयं विष्णुः प्रणमत्वममुं हरिम् ।।
इत्युक्त्वाथ स्वयं रुद्रो ननाम गरुडध्वजम् ।। ५४ ।।
ततो गणेश्वरैः सर्वैर्ब्रह्मणा च मरुद्गणैः ।।
योगिभिः सनकाद्यैश्च सिद्धैर्देवर्षिभिस्तथा ।। ५५ ।।
विद्याधरैः सगंधर्वैर्यक्षरक्षोप्सरोगणैः ।।
गुह्यकैश्चारणैर्भूतैः शेष वासुकि तक्षकैः ।। ५६ ।।
पतत्रिभिः किंनरैश्च सर्वैः स्थावरजंगमैः ।।
ततो जयजयेत्युक्त्वा नमोस्त्विति नमोस्त्विति ।। ५७ ।।
ततोहरिर्महेशेन संसदि द्युसदां तदा ।।
एतैर्महारवै रम्यैश्चानर्चि परमार्चिषा ।। ५८ ।।
त्वं कर्ता सर्वभूतानां पाता हर्ता त्वमेव च ।।
त्वमेव जगतां पूज्यस्त्वमेव जगदीश्वरः ।। ५९ ।।
दाता धर्मार्थकामानां शास्ता दुर्नयकारिणाम् ।।
अजेयस्त्वं च संग्रामे ममापि हि भविष्यसि ।। 4.1.23.६० ।।
इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्तथोत्तमा ।।
शक्तित्रयमिदं विष्णो गृहाण प्रापितं मया ।। ६१ ।।
त्वद्द्वेष्टारो हरे नूनं मया शास्याः प्रयत्नतः ।।
त्वद्भक्तानां मया विष्णो देयं निर्वाणमुत्तमम् ।। ६२ ।।
मायां चापि गृहाणेमां दुष्प्रणोद्यां सुरासुरैः ।।
यया संमोहितं विश्वमकिंचिज्ज्ञं भविष्यति ।। ६३ ।।
वामबाहुर्मदीयस्त्वं दक्षिणोसौ पितामहः ।।
अस्यापि हि विधेः पाता जनितापि भविष्यसि ।। ६४ ।।
वैकुंठैश्वर्यमासाद्य हरेरित्थं हरः स्वयम् ।।
कैलासे प्रमथैः सार्धं स्वैरं क्रीडत्युमापतिः ।। ६५ ।।
तदा प्रभृति देवोसौ शार्ङ्गधन्वा गदाधरः ।।
त्रैलोक्यमखिलं शास्ति दानवांतकरो हरिः ।।६६।।

इति ते कथिता विप्र लोकानां च परिस्थितिः ।।

इदानीं कथयिष्यावस्तवनिर्वाण कारणम् ।। ६७ ।।

इदं तु परमाख्यानं शृणुयाद्यः समाहितः ।।

स्वर्लोकमभिगम्याथ काश्यां निर्वाणमाप्नुयात् ।। ६८ ।।

यज्ञोत्सवे विवाहे च मंगलेष्वखिलेष्वपि ।।

राज्याभिषेक समये देवस्थापनकर्मणि ।। ६९ ।।

सर्वाधिकारदानेषु नववेश्मप्रवेशने ।।

पठितव्यं प्रयत्नेन तत्कार्य परिसिद्धये ।।4.1.23.७०।।

अपुत्रो लभते पुत्रमधनो धनवान्भवेत् ।।

व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बंधनात्।।७१।।

जप्यमेतत्प्रयत्नेन सततं मंगलार्थिना ।।

अमंगलानां शमनं हरनारायणप्रियम ।।७२।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे चतुर्भुजाभिषेको नाम त्रयोविंशतितमोऽध्यायः ।। २३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२४

https://sa.wikisource.org/s/fv5
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

गणावूचतुः ।। ।।

शिवशर्मन्नुदर्कं ते कथयावो निशामय ।।

त्वमत्र वैष्णवे लोके भुक्त्वा भोगान्सुपुष्कलान् ।। १ ।।

ब्रह्मणो वत्सरं पूर्णं रममाणोऽप्सरोगणैः ।।

सुतीर्थमरणोपात्त पुण्यशेषेण वै पुनः ।। २ ।।

भविष्यसि महीपालो नगरे नंदिवर्धने ।।

राज्यं प्राप्यासपत्नं च समृद्धबलवाहनम् ।।३।।

कृष्टिभिर्हृष्टपुष्टैश्च रम्यहाटकभूषणैः ।।

संजुष्टमिष्टापूर्तानां धर्माणां नित्यकर्तृभिः।।४।।

सदासंपन्नसस्यं च सूर्वरक्षेत्रसंकुलम्।।

सुदेशं सुप्रजं सुस्थं सुतृणं बहुगोधनम् ।। ५ ।।

देवतायतनानां च राजिभिः परिराजितम् ।।

सुयूपा यत्र वै ग्रामाः सुवित्तर्द्धि विराजिताः ।। ६ ।।

सुपुष्प कृत्रिमोद्यानाः ससदाफलपादपाः ।।

सपद्मिनीककासारा यत्र राजंति भूमयः ।। ७ ।।

सदंभा निम्नगाराजिर्न यत्र जनता क्वचित् ।।

कुलान्येव कुलीनानि न चान्यायधनानि च ।। ८ ।।

विभ्रमो यत्र नारीषु नविद्वत्सु च कर्हिचित् ।।

नद्यः कुटिलगामिन्यो न यत्र विषये प्रजाः ।। ९ ।।

तमोयुक्ताः क्षपा यत्र बहुलेषु न मानवाः ।।

रजोयुजः स्त्रियो यत्र न धर्मबहुला नराः ।। 4.1.24.१० ।।

धनैरनंधो यत्रास्ति मनो नैव च भोजनम् ।।

अनयः स्यंदनं यत्र न च वै राजपूरुषः ।। ११ ।।

दंडः परशुकुद्दाल वालव्य जनराजिषु ।।

आतपत्रेषु नान्यत्र क्वचित्क्रोधापराधजः ।।१२।।

अन्यत्राक्षिकवृंदेभ्यः क्वचिन्न परिदेवनम् ।।

आक्षिका एव दृश्यंते यत्र पाशकपाणयः ।। १३ ।।

जाड्यवार्ता जलेष्वेव स्त्रीमध्या एव दुर्बलाः ।।

कठोरहृदया यत्र सीमंतिन्यो न मानवाः ।। १४ ।।

औषधेष्वेव यत्रास्ति कुष्ठयोगो न मानवे ।।

वेधोप्यंतःसुरत्नेषु शूलं मूर्तिकरेषु वै ।। १५ ।।

कंपःसात्त्विकभावोत्थो न भयात्क्वापि कस्यचित् ।।

संज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च ।। १६ ।।

दुर्लभत्वं सदा कस्य सुकृतेन च वस्तुनः ।।

इभा एव प्रमत्ता वै युद्धं वीच्योर्जलाशये ।। १७ ।।

दानहानिर्गजेष्वेव द्रुमेष्वेव हि कंटकाः ।।

जनेष्वेव विहारा हि न कस्यचिदुरःस्थली ।। १८ ।।

बाणेषु गुणविश्लेषो बंधोक्तिः पुस्तके दृढा ।।

स्नेहत्यागः सदैवास्ति यत्र पाशुपते जने ।। १९ ।।

दंडवार्ता सदा यत्र कृतसंन्यासकर्मणाम् ।।

मार्गणाश्चापकेष्वेव भिक्षुका ब्रह्मचारिणः ।। 4.1.24.२० ।।

यत्र क्षपणका एव दृश्यंते मलधारिणः ।।

प्रायो मधुव्रता एव यत्र चंचलवृत्तयः ।। २१ ।।

इत्यादि गुणवद्देशे त्वयिराज्यं प्रशासति ।।

धर्मेण राजधर्मज्ञ शौंडीर्यगुणशालिनि ।। २२ ।।

सौभाग्यभाजि रूपाढ्ये शौर्यौदार्यगुणान्विते ।।

सीमंतिनीनां रम्याणां लावण्यवर्जित सुश्रियाम् ।। २३ ।।

राज्ञीनामयुतंभावि कुमाराणां शतत्रयम् ।।

वृद्धकाल इति ख्यात उग्रः परपुरंजयः ।। २४ ।।

विजितानेकसमरः श्रीसंतर्पितमार्गणः ।।

अनेकगुणसंपूर्णः पूर्णचंद्रनिभद्युतिः ।। २५ ।।

संततावभृथक्लिन्न मूर्धजः क्षितिषर्षभः ।।

प्रजापालनसंपन्नः कोशप्रीणितभूसुरः ।। २६ ।।

पदारविंदं गौविंदं हृदि ध्यायन्नतंद्रितः ।।

वासुदेवकथालापपरिक्षिप्त दिनक्षपः ।। २७ ।।

कदाचिदुपविष्टःसन्मध्ये राजसभं द्विज ।।

दूरात्कार्पटिकैर्दृष्टो वाराणस्याः समागतैः ।। २८ ।।

तत्कर्मभाविसदृशैस्तदात्वमभिनंदितः ।।

तैः सर्वै राजशार्दूलस्याशीर्वादैरनेकशः ।। २९ ।।

श्रीमद्विश्वेश्वरो देवो विश्वेषां जगतां गुरुः ।।

काशीनाथस्तुते कुर्यात्कुमतेरपवर्जनम् ।। 4.1.24.३० ।।

नैःश्रेयसीं च संपत्तिं यो देयात्स्मरणादपि ।।

काशीनाथः स ते दिश्याज्ज्ञानं मलविवर्जितम् ।। ३१ ।।

येन पुण्येन ते प्राप्तं राज्यं प्राज्यमकंटकम् ।।

तत्पुण्यशेषतोभूयाद्विश्वनाथे मतिस्तव ।। ३२ ।।

यस्य प्रसादात्सुलभमायुः पुत्रांबरागनाः ।।

समृद्धयः स्वर्गमोक्षौ स विश्वेशः प्रसीदतु ।। ३३ ।।

नामश्रवणमात्रेण यस्य विश्वेशितुर्विभोः ।।

महापातकविच्छेदः स विश्वेशोऽस्तु ते हृदि ।। ३४ ।।

त्वं वृद्धकालो भूपालः श्रुत्वेत्याशीः परंपराम् ।।

स्मरिष्यसीदं वृत्तांतं पुलकांकवपुस्तदा ।। ३५ ।।

आकारगोपनं कृत्वा तेभ्यो दत्त्वा धनं बहु ।।

सुमुहूर्तमनुप्राप्य सुते राज्यं विधाय च ।। ३६।।

अनंगलेखया राज्ञ्या ततः काशीं गमिष्यसि ।।

दत्त्वा दानानि भूरीणि प्रीणयित्वाऽर्थिनो जनान् ।। ३७ ।।

स्वनाम्ना तत्र संस्थाप्य लिंगं निर्वाणकारणम् ।।

प्रासादं तत्र कृत्वोच्चैस्तदग्रे कूपमुत्तमम् ।। ३८ ।।

विधाय विधिवत्तत्र कलशारोपणादिकम् ।।

मणिमाणिक्य चांपेय दुकूलेभाश्वगोधनम् ।। ३९ ।।

महाध्वजपताकाश्च च्छत्रचामरदर्पणम् ।।

देवोपकरणं भूरि विश्राण्य श्रमवर्जितः ।। 4.1.24.४० ।।

व्रतोपवासनियमैः परिक्षीणकलेवरः ।।
मध्याह्ने निर्जने तत्र द्रक्ष्यस्येकं तपोधनम् ।। ४१ ।।
अतीवजीर्णवपुषं परिपिंगजटान्वितम् ।।
मूर्तिमंतमिव प्रांशुं धर्मं जनमनोहरम्।। ४२।।
भारं शरीरयष्टेश्च दृढयष्ट्यां समर्प्य च ।।
गर्भागाराद्विनिष्क्रम्याभ्यायांतरंगमंडपे ।।४३।।
उपविश्य समीपे ते प्रक्ष्यत्येवमनुक्रमात् ।।
कोसि त्वं किमिहासि त्वं द्वितीय इव कस्त्वयम् ।। ४४ ।।
प्रासादः कारितः केन जानास्येष ततो वद ।।
अस्य लिंगस्य किं नाम प्रायो जाने न वार्धकात् ।। ४५ ।।
पृष्टस्त्वमिति ते नाथ तदा वृद्ध तपस्विना ।।
कथयिष्यस्यहं राजा वृद्धकाल इति श्रुतः ।। ४६ ।।
दाक्षिणात्य इह प्राप्तस्त्वेतया सह कांतया ।।
ध्यायामि लिंगमेतच्च प्रार्थयामि न किंचन ।। ४७ ।।
प्रासादस्यास्य जटिल स्वयंकारयिता शिवः ।।
विशेषतोऽस्यलिंगस्य नाम नो वेद्मि निश्चितम्।। ४८ ।।
इति श्रुत्वा नरपतेर्वाक्यंप्राह जटाधरः ।।
सत्यमुक्तं त्वयैकं हि लिंगनाम न वेत्सि यत् ।। ४९ ।।
पश्येयं त्वामहं नित्यमुपविष्टं सुनिश्चलम् ।।
श्रुतो भविष्यति तव प्रासादो येन कारितः ।। 4.1.24.५० ।।
ममाग्रे तत्समाचक्ष्व यदि जानासि तत्त्वतः ।।
आकर्ण्येति वचस्तस्य पुनः प्राह भवानिति ।।। ५१ ।।
कर्ता कारयिता शंभुः किमतथ्यं ब्रवीम्यहम् ।।
अथवा चिंतया किं मे तपस्विन्ननया विभो ।। ५२ ।।
इति त्वयि स्थिते जोषं स पुनर्वृद्धतापसः ।।
पिपासुरस्मि पानीयमानीयाशु प्रयच्छ मे ।। ५३ ।।
इति तेन च नुन्नस्त्वं वार्यानीय च कूपतः ।।
पाययिष्यसि तं वृद्धं तापसं तत्क्षणाच्च सः ।। ५४ ।।

तदंबुपानतो भूयात्सुपार्वण शशिप्रभः ।।

तरुणो रूपसंपन्नः कोशोन्मुक्तोरगो यथा ।। ५५ ।।

जाताश्चर्येण भवता पुनरेवाभ्यभाषि सः ।।

कः प्रभावो हि भगवन्नेष येन भवान्पुनः ।। ५६ ।।

परित्यज्यात्र जरसं न वो भ्राजसि सांप्रतम् ।।

अस्ति चेदवकाशस्ते ततो ब्रूहि तपोधन ।। ५७ ।।

तपोधन उवाच ।। ।।

वृद्धकालक्षितिपते जाने त्वां सुमहामते ।।

इमामपि च जानेऽहं तव पत्नीं पतिव्रताम्।। ५८ ।।

जन्मनोऽस्मादियं राजन्नासीद्विप्रस्य कन्यका ।।

तुर्वसोर्वेदवपुषः शुभाचारा शुभानना ।। ५९ ।।

तेन दत्ता विवाहार्थं नैध्रुवाय महात्मने ।।

स च कालवशं प्राप्तो नैध्रुवोऽप्राप्तयौवनः ।। 4.1.24.६० ।।

वैधव्यं पालयंत्येषा मृताऽवंत्यां शुभव्रता ।।

तेन पुण्येन संजाता पांड्यस्य नृपतेः सुता ।। ६१ ।।

परिणीता त्वया राजन्पतिव्रतरता सदा ।।

त्वया सहेह संप्राप्ता मुक्तिं प्राप्स्यत्यनुत्तमाम् ।। ६२ ।।

अयोध्यायामथावंत्यां मथुरायामथापि वा ।।

द्वारवत्यां च कांच्यां वा मायापुर्यामथो नृप ।। ६३ ।।

अपि पातकिनो ये च कालेन निधनं गताः ।।

ते हि स्वर्गादिहागत्य काश्यां मोक्षमवाप्नुयुः ।। ६४ ।।

अवैमि त्वामपि नृपद्विजोऽभूः पूर्वजन्मनि ।।

माथुरः शिवशर्माख्यो मायापुर्यां भवान्मृतः ।। ६५ ।।

तत्पुण्यात्प्राप्य वैकुंठं भुक्त्वा भोगान्मनोरमान् ।।

तत्पुण्यशेषात्क्षितिपो जातस्त्वं नंदिवर्धने ।। ६६ ।।

वृद्धकालावनीपाल तेनैव सुकृतेन च ।।

मोक्षक्षेत्रमिदं प्राप्तो मुक्तिं प्राप्स्यस्यनुत्तमाम् ।। ६७ ।।

अन्यच्च शृणु राजेंद्र त्वया यत्समुदीरितम् ।।

कर्ता कारयिता शंभुः प्रासादस्येति तत्स्फुटम् ।। ६८ ।।

सुकृतं नैव सततमाख्यातव्यं कदाचन ।।

कृतं मयेति कथनात्पुण्यं क्षयति तत्क्षणात् ।। ६९ ।।

तस्मात्सर्वप्रयत्नेन गोपनीयं निधानवत् ।।

सुकृतं कीर्तनाद्व्यर्थं भवेद्भस्महुतं तथा।। 4.1.24.७० ।।

निश्चितं विश्वनाथेन प्रेरितेन त्वयाऽनघ ।।

कृतं हि कृतकृत्येन प्रासादादिह वेद्म्यहम् ।। ७१ ।।

वृद्धकालेश्वरं नाम लिंगमेतन्महीपते ।।

जानीह्यनादिसंसिद्धं निमित्तं किंतु वै भवान् ।। ७२ ।।

दर्शनात्स्पर्शनात्तस्य पूजनाच्छ्रवणान्नतेः ।।

वृद्धकालेशलिंगस्य सर्वं प्राप्नोति वांछितम् ।। ७३ ।।

कूपः कालोदको नाम जराव्याधिविघातकृत् ।।

यदीय जलपानेन मातुःस्तन्यमपानवान् ।। ७४ ।।

कृतकूपोदकस्नानः कृतैतल्लिंगपूजनः ।।

वर्षेण सिद्धिमाप्नोति मनोभिलषितां नरः ।। ७५ ।।

न कुष्ठं न च विस्फोटा नरंघा न विचर्चिका ।।

पीतात्स्पृष्टात्प्रतिष्ठंति कफः कालतमोदकात् ।। ७६ ।।

नाग्निमांद्यं नैव शूलं न मेहो न प्रवाहिका ।।

न मूत्रकृच्छ्रं ना पामा पानायस्यास्य सेवनात् ।। ७७ ।।

भूतज्वराश्च ये केचिद्ये केचिद्विषमज्वराः ।।

ते क्षिप्रमुपशाम्यंति ह्येतत्कूपोदसेवनात् ।। ७८ ।।

तवाग्रतो मम जरा पलितं च यथाविधि ।।

एतत्कूपोदपानेन क्षणान्नष्टं नवोऽभवम् ।। ७९ ।।

वृद्धकालेश्वरे लिंगे सेवितेन दरिद्रता ।।

नोपसर्गा न वा रोगा न पापं नाघजं फलम् ।। 4.1.24.८० ।।

उत्तरे कृत्तिवासस्य वाराणस्यां प्रयत्नतः ।।

वृद्धकालेश्वरं लिंगं द्रष्टव्यं सिद्धिकामुकैः ।। ८१ ।।

इत्युक्त्वा तं महीपालं हस्ते धृत्वा तपोधनः ।।

सानंगलेखा राज्ञीकं तस्मिँल्लिंगे लयं ययौ ।। ८२ ।।

महाकाल महाकाल महाकालेति कीर्तनात् ।।

शतधा मुच्यते पापैर्नात्र कार्या विचारणा ।। ८३ ।।

इत्थं भवित्री ते मुक्तिः कैटभारातिदर्शनात् ।।

भोगान्भुक्त्वा बहुविधान्वैकुंठ नगरे शुभे ।। ८४ ।।

इति संहृष्टतनूरुहः स विप्रो भगवत्तद्गणवक्त्रतो निशम्य ।।

स्वमुदर्कमथार्ककोटिरम्यं हरिलोकं परिलोकयांचकार ।। ८५ ।।

।। मैत्रावरुणिरुवाच ।। ।।

लोपामुद्रे स विप्रेंद्रो भोगान्भुक्त्वा मनोरमान् ।।

मायापुर्यां कृतप्राणत्याग पुण्यबलेन च ।। ८६ ।।

वैकुंठलोकादागत्य पत्तने नंदिवर्धने ।।

भौमानि भुक्त्वा सौख्यानि पुत्रानुत्पाद्य सुंदरान् ।। ।। ८७ ।।

तेषु राज्यं विनिक्षिप्य प्राप्य वाराणसीं पुरीम् ।।

विश्वेश्वरं समाराध्य निर्वाणपदमीयिवान् ।। ८८ ।।

एतत्पुण्यतमाख्यानं विप्रस्य शिवशर्मणः ।।

श्रुत्वा पापविनिर्मुक्तो ज्ञानं परममृच्छति।। ।। ८९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे शिवशर्मनिर्वाणप्रापणं नाम चतुर्विंशोध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२५

https://sa.wikisource.org/s/fv6
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। व्यास उवाच ।। ।।

शृणु सूत प्रवक्ष्यामि कथां कलशजन्मनः ।।

यामाकर्ण्य नरो भूयाद्विरजा ज्ञानभाजनम् ।। १ ।।

गिरिं प्रदक्षिणीकृत्य श्रीसंज्ञं कलशोद्भवः ।।

सपत्नीको ददर्शाथ रम्यं स्कंदवनं महत् ।। २ ।।

सर्वर्तु कुसुमाढ्यं च रसवत्फलपादपम् ।।

सुसेव्य कंदमूलाढ्यं सुवल्कलमहीरुहम्।। ३ ।।

निवीतश्वापदगणं ससरित्पल्वलावृतम् ।।

स्वच्छ गंभीरकासारं सारं सर्वभुवः परम् ।। ४ ।।

नानापतत्रिसंघुष्टं नानामुनिजनोषितम् ।।

तपःसंकेतनिलयमिवैकं संपदां पदम् ।। ५ ।।

लोहितो नाम तत्रास्ति गिरिः स्वर्णगिरिप्रभः ।।

सुकंदरप्रस्रवणः स्वसानु शिखरप्रभः ।।६।।

कैलासस्यैकशकलं कर्मभूमाविहागतम् ।।

तपस्तमुमिव प्रोच्चैर्नानाश्चर्यसमन्वितम्।। ७ ।।

तत्राद्राक्षीन्मुनिश्रेष्ठोऽगस्त्यः साक्षात्षडाननम् ।।

प्रणम्य दंडवद्भूमौ सपत्नीको महातपाः ।। ८ ।।

तुष्टाव गिरिजासूनुं सूक्तैः श्रुतिसमुद्भवैः ।।

तथा स्वकृतया स्तुत्या प्रबद्ध करसंपुटः ।। ९ ।।

अगस्तिरुवाच ।। ।।

नमोस्तु वृंदारकवृंदवंद्य पादारविंदाय सुधाकराय ।।

षडाननायामितविक्रमाय गौरीहृदानंदसमुद्भवाय ।।4.1.25.१०।।

नमोस्तु तुभ्यं प्रणतार्तिहंत्रे कर्त्रे समस्तस्य मनोरथानाम् ।।

दात्रे रथानां परतारकस्य हंत्रे प्रचंडासुर तारकस्य ।। ११ ।।

अमूर्तमूर्ताय सहस्रमूर्तये गुणाय गुण्याय परात्पराय ।।

अपारपाराय परापराय नमोस्तु तुभ्यं शिखिवाहनाय ।। १२ ।।

नमोस्तु ते ब्रह्मविदांवराय दिगंबरायांबर संस्थिताय ।।

हिरण्यवर्णाय हिरण्यबाहवे नमो हिरण्याय हिरण्यरेतसे ।। १३ ।।

तपःस्वरूपाय तपोधनाय तपःफलानां प्रतिपादकाय ।।

सदा कुमाराय हिमारमारिणे तणीकृतैश्वर्य विरागिणे नमः ।। १४ ।।

नमोस्तु तुभ्यं शरजन्मने विभो प्रभातसूर्यारुणदंतपंक्तये ।।

बालाय चाबालपराक्रमाय षाण्मातुरायालमनातुराय ।। १५ ।।

मीढुष्टमायोत्तरमीढुषे नमो नमो गणानां पतये गणाय ।।

नमोस्तु ते जन्मजरातिगाय नमो विशाखाय सुशक्तिपाणये ।। १६ ।।

सर्वस्य नाथस्य कुमारकाय क्रौंचारये तारकमारकाय ।।

स्वाहेय गांगेय च कार्तिकेय शैवेय तुभ्यं सततं नमोऽस्तु ।। १७ ।।

इत्थं परिष्टुत्य स कार्तिकेयं नमो नमस्त्वित्यभिभाषमाणः ।।

द्विस्त्रिःपरिक्रम्य पुरो विवेश स्थितो मुनीशोपविशेति चोक्तः ।। १८ ।।

।। कार्तिकेय उवाच ।। ।।

क्षेमोस्ति कुंभज मुने त्रिदशैकसहायकृत् ।।

जाने त्वामिह संप्राप्तं तथा विंध्याचलोन्नतिम् ।। १९ ।।

अविमुक्ते महाक्षेत्रे क्षेमं त्र्यक्षेण रक्षिते ।।

यत्र क्षीणायुषां साक्षाद्विरूपाक्षोऽस्ति मोक्षदः ।। 4.1.25.२० ।।

भूर्भुवः स्वस्तले वापि न पातालतले मलम् ।।

नोर्ध्वलोके मया दृष्टं तादृक्क्षेत्रं क्वचिन्मुने ।। २१ ।।

अहमेकचरोप्यत्र तत्क्षेत्रप्राप्तये मुने ।।

तप्ये तपांसिनाद्यापि फलेयुर्मे मनोरथाः ।। २२ ।।

न तत्पुण्यैर्न तद्दानैर्न तपोभिर्न तज्जपैः ।।

न लभ्यं विविधैर्यज्ञैर्लभ्यमैशादनुग्रहात् ।। २३ ।।

ईश्वरानुग्रहादेव काशीवासः सुदुर्लभः ।।

सुलभः स्यान्मुने नूनं न वै सुकृतकोटिभिः ।। २४ ।।

अन्यैव काचित्सा सृष्टिर्विधातुर्याऽतिरेकिणी ।।

न तत्क्षेत्रगुणान्वक्तुमीश्वरोऽपीश्वरो यतः ।। २५ ।।

अहो मतेः सुदौर्बल्यमहोभाग्यस्य दौर्विधम् ।।

अहो मोहस्य माहात्म्यं यत्काशीह न सेव्यते ।।२६।।

शरीरं जीर्यते नित्यं संजीर्यंतींद्रियाण्यपि ।।

आयुर्मृगो मृगयुना कृतलक्ष्यो हि मृत्युना ।। २७ ।।

सापदं संपदं ज्ञात्वा सापायं कायमुच्चकैः ।।

चपला चपलं चायुर्मत्वा काशीं समाश्रयेत् ।। २८ ।।

यावन्नैत्यायुषश्चांतस्तावत्काशी न मुच्यते ।।

कालः कलालवस्यापि संख्यातुं नैव विस्मरेत् ।। २९ ।।

जरानिकटनिक्षिप्ता बाधंते व्याधयो भृशम् ।।

तथापि देहो नानेहो नाहो काशीं समीहते ।। 4.1.25.३० ।।

तीर्थस्नानेन जप्येन परोपकरणोक्तिभिः ।।

विनार्थं लभ्यते धर्मो धर्मादर्थः स्वयं भवेत् ।। ३१ ।।

विनैवार्थार्जनोपायं धर्मादर्थो भवेद्ध्रुवम् ।।

अतोऽर्थचिंतामुत्सृज्य धर्ममेकं समाश्रयेत् ।। ३२ ।।

धर्मादर्थोऽर्थतः कामः कामात्सर्वसुखोदयः ।।

स्वर्गोपि सुलभो धर्मात्काश्ये का दुर्लभा परम् ।। ३३ ।।

उपायत्रयमेवात्र स्थाणुर्निर्वाणकारणम्।।

शर्वाण्यग्रेव भाणाद्धा परिनिर्णीय सर्वतः ।। ३४ ।।

पूर्वं पाशुपतो योगस्ततस्तीर्थं सितासितम् ।।

ततोप्येकमनायासमविमुक्तं विमुक्तिदम् ।। ३५ ।।

श्रीशैल हिमशैलाद्या नानान्यायतनानि च ।।

त्रिदंडधारणंचापि संन्यासः सर्वकर्मणाम् ।। ३६ ।।

तपांसि नानारूपाणि व्रतानि नियमा यमाः ।।

सिंधूनामपि संभेदा अरण्यानि बहून्यपि ।। ३७ ।।

मानसान्यपि भौमानि धारातीर्थादिकानि च ।।

ऊषराश्चापि पीठानि ह्यच्छिन्नाम्नायपाठनम्।। ३८ ।।

जपश्चापि मनूनां च तथाऽग्निहवनानि च ।।

दानानि नानाक्रतवो देवतोपासनानि च ।। ३९ ।।

त्रिरात्रं पंचरात्राणि सांख्ययोगादयस्तथा ।।

विष्णोराराधनं श्रेष्ठं मुक्तयेऽभिहितं किल ।। 4.1.25.४० ।।

पुर्यश्चापि समाख्यातानृतजंतु विमुक्तिदा ।।

कैवल्यसाधनानीह भवंत्येव विनिश्चितम् ।। ४१ ।।

एतानि यानि प्रोक्तानि काशीप्राप्तिकराणि च ।।

प्राप्य काशीं भवेन्मुक्तो जंतुर्नान्यत्रकुत्रचित् ।। ४२ ।।

अतएव हि तत्क्षेत्रं पवित्रमतिचित्रकृत् ।।

विश्वेशितुः प्रियनित्यं विष्वग्ब्रह्माण्डमंडले ।। ४३ ।।

इदमेव हि तत्क्षेत्रं कुशलप्रश्नकारणम् ।।

एह्येहि देहि मे स्पर्शं निजगात्रस्य सुव्रत ।। ४४ ।।

अपि काश्याः समागच्छत्स्पर्शवत्स्पर्श इष्यते ।।

मयात्र तिष्ठता नित्यं किंतु त्वं तत आगतः ।। ४५८ ।।

त्रिरात्रमपिये काश्यां वसंति नियतेंद्रियाः ।।

तेषां पुनंति नियतं स्पृष्टाश्चरणरेणवः ।। ४६ ।।

त्वं तु तत्र कृतावासः कृतपुण्यमहोच्चयः ।।

उत्तरप्रवहा स्नान जातपिंगलमूर्धजः ।। ४७ ।।

तव तत्र तु यत्कुंडमगस्तीश्वरसन्निधौ ।।

तत्र स्नात्वा च पीत्वा च कृतसर्वोदकक्रियः ।। ४८ ।।

पितॄन्पिंडैः समभ्यर्च्य श्रद्धाश्राद्धविधानतः ।।

कृत्यकृत्यो भवेज्जंतुर्वाराणस्याः फलं लभेत् ।। ४९ ।।

इत्युक्त्वा सर्वगात्राणि स्पष्ट्वा कुंभोद्भवस्य च ।।

स्कंदोऽमृतसरोवारि विगाह्य सुखमास्तवान् ।।4.1.25.५०।।

जय विश्वेश नेत्राणि विनिमील्य वदन्नपि ।।

ततः किंचित्क्षणं दध्यौ गुहः स्थाणुसुनिश्चलः ।। ५१ ।।

स्कंदे विसर्जितध्याने सुप्रसन्नमनोमुखे ।।

प्रतीक्ष्य वागवसरं पप्रच्छाथ मुनिर्गुहम् ।। ५२ ।।

।। अगस्तिरुवाच ।। ।।

स्वामिन्यथा भगवता भगवत्यै पुराऽकथि ।।

वाराणस्यास्तु महिमा हिमशैलभुवे मुदा ।। ५३ ।।

त्वया यथा समाकर्णि तदुत्संगनिवासिना ।।

तथा कथय षड्वक्त्र तत्क्षेत्रं मेऽतिरोचते ।। ५४ ।।

।। स्कंद उवाच ।। ।।

शृणुष्व मैत्रावरुणे यथा भगवताऽकथि ।।

तत्क्षेत्रस्याविमुक्तस्य मम मातुः पुरः पुरा ।। ५५ ।।

श्रुतं च यत्तदुत्संगे स्थितेन स्थिरचेतसा ।।

माहात्म्यं तच्छृणु मुने कथ्यमानं मयाऽनघ ।। ५६ ।।

गुह्यानां परमं गुह्यमविमुक्तमिहेरितम् ।।

तत्र संनिहिता सिद्धिस्तत्र नित्यं स्थितो विभुः ।। ५७ ।।

भूर्लोके नैव संलग्नं तत्क्षेत्रं त्वंतरिक्षगम् ।।

अयोगिनो न वीक्षंते पश्यंत्येव च योगिनः ।। ।। ५८ ।।

यस्तत्र निवसेद्विप्र संयतात्मा समाहितः ।।

त्रिकालमपि भुंजानो वायुभक्षसमो भवेत् ।। ५९ ।।

निमेषमात्रमपि यो ह्यविमुक्तेऽतिभक्तिभाक् ।।

ब्रह्मचर्यसमायुक्तं तेन तप्तं महत्तपः ।। 4.1.25.६० ।।

यस्तु मासं वसेद्धीरो लघ्वाहारो जितेंद्रियः ।।

सर्वं तेन व्रतं चीर्णं दिव्यं पाशुपतं भवेत् ।। ६१ ।।

संवत्सरं वसंस्तत्र जितक्रोधो जितेंद्रियः ।।

अपरस्वविपुष्टांगः परान्नपरिवर्जकः ।। ६२ ।।

परापवादरहितः किंचिद्दानपरायणः ।।

समाः सहस्रमन्यत्र तेन तप्तं महत्तपः ।। ६३ ।।

यावज्जीवं वसेद्यस्तु क्षेत्रमाहात्म्यविन्नरः ।।

जन्ममृत्यु भयं हित्वा स याति परमां गतिम् ।। ६४ ।।

न योगैर्या गतिर्लभ्या जन्मांतरशतैरपि ।।

अन्यत्रहेलया साऽत्र लभ्येशस्य प्रसादतः ।।६५।।

ब्रह्महा योऽभिगच्छेद्वै दैवाद्वाराणसीं पुरीम् ।।

तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्तते ।। ६६ ।।

आदेहपतनं यावद्योविमुक्तं न मुंचति ।।

न केवलं ब्रह्महत्या प्रकृतिश्च निवर्तते ।। ६७ ।।

अनन्यमानसो भूत्वा तत्क्षेत्रं यो न मुंचति ।।

स मुंचति जरामृत्युं गर्भवासं सुदुःसहम् ।। ६८ ।।

अविमुक्तं निषेवेत देवर्षिगणसेवितम् ।।

यदीच्छेन्मानवो धीमान्न पुनर्जननं भुवि ।। ६९ ।।

अविमुक्तं न मुंचेत संसारभयमोचनम् ।।

प्राप्य विश्वेश्वरं देवं न स भूयोऽभिजायते ।। 4.1.25.७० ।।

कृत्वा पापसहस्राणि पिशाचत्वं वरंत्विह ।।

न तु क्रतुशतप्राप्यः स्वर्गः काशीपुरीं विना ।। ७१ ।।

अंतकाले मनुष्याणां भिद्यमानेषु मर्मसु ।।

वातेनातुद्यमानानां स्मृतिर्नैवोपजायते ।। ७२ ।।

तत्रोत्क्रमणकाले तु साक्षाद्विश्वेश्वरः स्वयम् ।।

व्याचष्टे तारकं ब्रह्म येनासौ तन्मयो भवेत् ।। ७३ ।।

अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् ।।

अविमुक्तं निषेवेत संसारभयनाशनम् ।। ७४ ।

विघ्नैरालोड्यमानोपि योऽविमुक्तं न मुंचति ।।

नैःश्रेयसी श्रियं प्राप्य दुःखांतं सोधिगच्छति ।। ७५ ।।

महापापौघशमनीं पुण्योपचयकारिणीम् ।।

भुक्तिमुक्तिप्रदामंते को न काशीं सुधीः श्रयेत् ।। ७६ ।।

एवं ज्ञात्वा तु मेधावी नाविमुक्तं त्यजेन्नरः ।।

अविमुक्तप्रसादेन विमुक्तो जायते यतः ।। ७७ ।।

अविमुक्तस्य माहात्म्यं षड्भिर्वक्त्रैः कथं मया ।।

वक्तुं शक्यं न शक्नोति सहस्रास्योपि यत्परम् ।। ७८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे स्कंदागस्त्यदर्शनं नाम पंचविशतितमोऽध्यायः ।। २५ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२६



अगस्तिरुवाच ।। ।।

प्रसन्नोसि यदि स्कंद मयि प्रीतिरनुत्तमा ।।

तत्समाचक्ष्व भगवंश्चिरं यन्मे हृदिस्थितम् ।। १ ।।

अविमुक्तमिदं क्षेत्रं कदारभ्य भुवस्तले ।।

परां प्रथितिमापन्नं मोक्षदं चाभवत्कथम् ।। २ ।।

कथमेषा त्रिलोकीड्या गीयते मणिकर्णिका ।।

तत्रासीत्किं पुरास्वामिन्यदा नामरनिम्नगा ।। ३ ।।

वाराणसीति काशीति रुद्रावास इति प्रभो ।।

अवाप नामधेयानि कथमेतानि सा पुरी ।।

आनंदकाननं रम्यमविमुक्तमनंतरम् ।। ४ ।।

महाश्मशान इति च कथं ख्यातं शिखिध्वज ।।

एतदिच्छाम्यहं श्रोतुं संदेहं मेऽपनोदय ।। ५ ।।

।। स्कंद उवाच ।।

प्रश्नभारोयमतुलस्त्वया यः समुदाहृतः ।।

कुंभयोनेऽमुमेवार्थमप्राक्षीदंबिका हरम् ।। ६ ।।

यथा च देवदेवेन सर्वज्ञेन निवेदितम् ।।

जगन्मातुः पुरस्ताच्च तथैव कथयामि ते ।। ७ ।।

महाप्रलय काले च नष्टे स्थावरजंगमे ।।

आसीत्तमोमयं सर्वमनर्कग्रहतारकम् ।। ८ ।।

अचंद्रमनहोरात्रमनग्न्यनिलभूतलम् ।।

अप्रधानं वियच्छून्यमन्यतेजोविवर्धितम् ।। ९ ।।

द्रष्टृत्वादि विहीनं च शब्दस्पर्शसमुज्झितम् ।।

व्यपेतगंधरूपं च रसत्यक्तमदिङ्मुखम् ।। 4.1.26.१० ।।

इत्थं सत्यंधतमसि सूचीभेद्ये निरंतरे ।।

तत्सद्ब्रह्मेति यच्छ्रुत्या सदैकं प्रतिपाद्यते ।। ११ ।।

अमनोगोचरोवाचां विषयं न कथंचन ।।
अनामरूपवर्णं च न स्थूलं न च यत्कृशम् ।। १२ ।।
अह्रस्वदीर्घमलघुगुरुत्वपरिवर्जितम् ।।
न यत्रोपचयः कश्चित्तथा चापचयोपि च ।। १३ ।।
अभिधत्ते स चकितं यदस्तीति श्रुतिः पुनः ।।
सत्यं ज्ञानमनंतं च यदानंदं परं महः ।। १४ ।।
अप्रमेयमनाधारमविकारमनाकृति ।।
निर्गुणं योगिगम्यं च सर्वव्याप्येककारणम् ।। १५ ।।
निर्विकल्पं निरारंभं निर्मायं निरुपद्रवम् ।।
यस्येत्थं संविकल्प्यंते संज्ञाः संज्ञोदितस्य वै ।। १६ ।।
तस्यैकलस्य चरतो द्वितीयेच्छा भवत्किल ।।
अमूर्तेन स्वमूर्तिश्च तेनाकल्पि स्वलीलया ।। १७ ।।
सर्वैश्वर्यगुणोपेता सर्वज्ञानमयी शुभा ।।
सर्वगा सर्वरूपा च सर्वदृक्सर्वकारिणी ।। १८ ।।
सर्वैकवंद्या सर्वाद्या सर्वदा सर्वसंकृतिः ।।
परिकल्प्येति तां मूर्तिमीश्वरीं शुद्धरूपिणीम् ।। १९ ।।
अंतर्दधे पराख्यं यद्ब्रह्मसर्वंगमव्ययम् ।। 4.1.26.२० ।।
अमूर्तं यत्पराख्यं वै तस्य मूर्तिरहं प्रिये ।।
अर्वाचीनपराचीना ईश्वरं मां जगुर्बुधाः ।।२१।।
ततस्तदैकलेनापि स्वैरं विहरतामया ।।
स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी ।। २२ ।।
प्रधानं प्रकृतिं त्वां च मायां गुणवतीं पराम् ।।
बुद्धि तत्त्वस्य जननीमाहुर्विकृतिवर्जिताम् ।। २३ ।।
युगपच्च त्वया शक्त्या साकं कालस्वरूपिणा।।
मयाऽऽद्य पुरुषेणैतत्क्षेत्रं चापि विनिर्मितम्।।२४।।
सा शक्तिः प्रकृतिः प्रोक्ता स पुमानीश्वरः परः ।।
ताभ्यां च रममाणाभ्यां तस्मिन्क्षेत्रे घटोद्भव ।।२५।।
परमानंदरूपाभ्यां परमानंदरूपिणी ।।

पंचक्रोशपरीमाणे स्वपादतलनिर्मिते।।२६ ।।
मुने प्रलयकालेपि न तत्क्षेत्रं कदाचन।।
विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः ।। २७ ।।
न यदा भूमिवलयं न यदाऽपां समुद्भवः ।।
तदा विहर्तुमीशेन क्षेत्रमेतद्विनि र्मितम्।। २८ ।।
इदं रहस्यं क्षेत्रस्य वेद कोपि न कुंभज।।
नास्तिकाय न वक्तव्यं कदाचिच्चर्मचक्षुषे ।। २९ ।।
श्रद्धालवे विनीताय त्रिकालज्ञानचक्षुषे ।।
शिवभक्ताय शांताय वक्तव्यं च मुमुक्षवे ।। 4.1.26.३० ।।
अविमुक्तं तदरभ्य क्षेत्रमेतदुदीर्यते ।।
पर्यंक(?)भूतं शिवयोर्निरंतरसुखास्पदम् ।। ३१ ।। (पर्यंक)
अभावः कल्प्यते मूढैर्यदा च शिवयोस्तयोः।।
क्षेत्रस्यास्य तदाभावः कल्प्यो निर्वाणकारिणः।। ३२ ।।
अनाराध्य महेशानमनवाप्य च काशिकाम्।।
योगाद्युपायविज्ञोपि न निर्वाणमवाप्नुयात् ।।३३।।
अस्यानंदवनं नाम पुरा कारि पिनाकिना ।।
क्षेत्रस्यानंदहेतुत्वादविमुक्तमंनतरम् ।। ३४ ।।
आनंदकंदबीजानामंकुराणि यतस्ततः ।।
ज्ञेयानि सर्वलिंगानि तस्मिन्नानंदकानने ।। ३५ ।।
अविमुक्तमिति ख्यातमासीदित्थं घटोद्भव ।।
तथा चाख्याम्यथ मुने यथासीन्मणिकर्णिका ।। ३६ ।।
प्रागानंदवने तत्र शिवयो रममाणयोः ।।
इच्छेत्यभूत्कलशज सृज्यः कोप्यपरः किल ।। ३७ ।।
यस्मिन्न्यस्ते महाभारे आवां स्वः स्वैरचारिणौ ।।
निर्वाणश्राणनं कुर्वः केवलं काशिशायिनाम् ।। ३८ ।।
स एव सर्वं कुरुते स एव परिपाति च ।।
स एव संवृणोत्यंते सर्वैश्वर्यनिधिः स च ।। ३९ ।।
चेतःसमुद्रमाकुंच्य चिंताकल्लोलदोलितम् ।।

सत्त्वरत्नं तमोग्राहं रजोविद्रुमवल्लितम् ।। 4.1.26.४० ।।

यस्य प्रसादात्तिष्ठावः सुखमानंदकानने ।।

परिक्षिप्त मनोवृत्तौ क्व हि चिंतातुरे सुखम् ।। ४१ ।।

संप्रधार्येति स विभुः सर्वतश्चित्स्वरूपया ।।

तया सह जगद्धात्र्या जगद्धाताऽथ धूर्जटिः ।। ४२ ।।

सव्ये व्यापारयांचक्रे दृशमंगे सुधामुचम् ।।

ततः पुमानाविरासीदेकस्त्रैलोक्यसुंदरः ।। ४३ ।।

शांतः सत्त्वगुणोद्रिक्तो गांभीर्य जितसागरः ।।

तथा च क्षमया युक्तो मुनेऽलब्धोपमोऽभवत् ।। ४४ ।।

इंद्रनीलद्युतिःश्रीमान्पुंडरीकोत्तमेक्षणः ।।

सुवर्णाकृति सुच्छाय दुकूलयुगलावृतः ।। ४५ ।।

लसत्प्रचंडदोर्दंड युगलद्वयराजितः ।।

उल्लसत्परमामोदनाभीह्रदकुशेशयः ।। ४६ ।।

एकः सर्वगुणावासस्त्वेकः सर्वकलानिधिः ।।

एकः सर्वोत्तमो यस्मात्ततो यः पुरुषोत्तमः ।। ४७ ।।

ततो महांतं तं वीक्ष्य महामहिमभूषणम् ।।

महादेव उवाचेदं महाविष्णुर्भवाच्युत ।। ४८ ।।

तव निःश्वसितं वेदास्तेभ्यः सर्वमवैष्यसि ।।

वेददृष्टेन मार्गेण कुरु सर्वं यथोचितम्।। ४९ ।।

इत्युक्त्वा तं महेशानो बुद्धितत्त्वस्वरूपिणम् ।।

शिवया सहितो रुद्रो विवेशानंदकाननम् ।। 4.1.26.५० ।।

ततः स भगवान्विष्णुर्मौलावाज्ञां निधाय च ।।

क्षणं ध्यानपरो भूत्वा तपस्येव मनो दधौ ।। ५१ ।।

खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः ।।

निजांगस्वेदसंदोह सलिलैस्तामपूरयत् ।। ५२ ।।

समाः सहस्रं पंचाशत्तप उग्रं चचार सः ।।

चक्रपुष्कीरणी तीरे तत्र स्थाणुसमाकृतिः ।। ५३ ।।

ततः स भगवानीशो मृडान्या सहितो मृडः ।।

दृष्ट्वा ज्वलंतं तपसा निश्चलं मीलितेक्षणम्।। ५४ ।।

तमुवाच हृषीकेशं मौलिमांदोलयन्मुहुः ।।

अहो महत्त्वं तपसस्त्वहो धैर्यं च चेतसः ।। ५५ ।।

अहो अनिंधनो वह्निर्ज्वलत्येष निरंतरम्।।

अलं तप्त्वा महाविष्णो वरं वरय सत्तम ।। ५६ ।।

मृडस्याम्रेडितमिदं प्रत्यभिज्ञाय भाषितम् ।।

उन्मीलित दृगंभोजः समुत्तस्थौ चतुर्भुजः ।। ५७ ।।

श्रीविष्णुरुवाच ।। ।।

यदि प्रसन्नो देवेश देवदेव महेश्वर ।।

भवान्या सहितं त्वां तु द्रष्टुमिच्छामि सर्वदा ।। ५८ ।।

सर्वकर्मसु सर्वत्र त्वामेव शशिशेखर ।।

पुरश्चरं तं पश्यामि यथा तन्मे वरस्तथा ।। ५९ ।।

त्वदीय चरणांभोज मकरंदमधूत्सुकः ।।

मच्चेतो भ्रमरो भ्रांतिं विहायास्तु सुनिश्चलः ।।4.1.26.६०।।

।। श्रीशिव उवाच ।।

एवमस्तु हृषीकेश यत्त्वयोक्तं जनार्दन ।।

अन्यं वरं प्रयच्छामि तमाकर्णय सुव्रत ।। ६१ ।।

त्वदीयस्यास्य तपसो महोपचय दर्शनात् ।।

यन्मयांदोलितो मौलिरहिश्रवणभूषणः ।। ६२ ।।

तदांदोलनतः कर्णात्पपात मणिकर्णिका ।।

मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका ।। ६३ ।।

चक्रपुष्करिणी तीर्थं पुराख्यातमिदं शुभम् ।।

त्वया चक्रेण खननाच्छंखचक्रगदाधर ।। ६४ ।।

मम कर्णात्पपातेयं यदा च मणिकर्णिका ।।

तदाप्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका ।।६५।।

।। श्रीविष्णुरुवाच ।। ।।

मुक्ताकुंडलपातेन तवाद्रितनयाप्रिय ।।

तीर्थानां परमं तीर्थं मुक्तिक्षेत्रमिहास्तु वै ।।६६।।

काशतेऽत्र यतो ज्योतिस्तदनाख्येयमीश्वरः ।।
अतो नामापरं चास्तु काशीति प्रथितं विभो ।। ६७ ।।
अन्यं वरं वरे देव देयः सोप्यविचारितम् ।।
स ते परोपकारार्थं जगद्रक्षामणे शिव ।। ६८ ।।
आब्रह्मस्तंबपर्यंतं यत्किंचिज्जंतुसंज्ञितम् ।।
चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्स्यतु ।।६९।।
अस्मिंस्तीर्थवरे शंभो मणिश्रव णभूषणे ।।
संध्यां स्नानं जपं होमं वेदाध्ययनमुत्तमम् ।।
तर्पण पिंडदानं च देवतानां च पूजनम् ।। 4.1.26.७० ।।
गोभूतिलहिरण्याश्वदीपान्नांबरभूषणम् ।।
कन्यादानं प्रयत्नेन सप्ततंतूननेकशः ।। ७१ ।।
व्रतोत्सर्गं वृषोत्सर्गं लिंगादि स्थापनं तथा ।।
करोति यो महाप्राज्ञो ज्ञात्वायुःक्षणगत्वरम् ।। ७२ ।।
विपत्तिं विपुलां चापि संपत्तिमतिभंगुराम् ।।
अक्षया मुक्तिरेकास्तु विपाकस्तस्य कर्मणः ।।७३।।
अन्यच्चापि शुभं कर्म यदत्र श्रद्धयायुतम् ।।
विनात्मघातमीशान त्यक्त्वा प्रायोपवेशनम्।।७४।।
नैःश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर ।।
नानुशोचति नाख्याति कृत्वा कालांतरेपि यत् ।।७५।।
तदिहाक्षयतामेतु तस्येश त्वदनुग्रहात्।।
तव प्रसादात्तस्येश सर्वमक्षयमस्तु तत् ।। ७६ ।।
यदस्ति यद्भविष्यच्च यद्भूतं च सदाशिव ।।
तस्मादेतच्च सर्वस्मात्क्षेत्रमस्तु शुभोदयम् ।। ७७ ।।
यथा सदाशिव त्वत्तो न किंचिदधिकं शिवम् ।।
तथानंदवनादस्मात्किंचिन्मास्त्वधिकं क्वचित् ।। ७८ ।।
विना सांख्येन योगेन विना स्वात्मावलोकनम्।।
विना व्रत तपो दानैः श्रेयोऽस्तु प्राणिनामिह ।। ७९ ।।
शशका मशका कीटाः पतं गास्तुरगोरगाः ।।

पंचक्रोश्यां मृताः काश्यां संतु निर्वाणदीक्षिताः ।। 4.1.26.८० ।।

नामापि गृह्णतां काश्याः सदैवास्त्वेनसः क्षयः ।। ८१ ।।

सदा कृतयुगं चास्तु सदाचास्तूत्तरायणम्।।

सदा महोदयश्चास्तु काश्यां निवसतां सताम् ।। ८२ ।।

यानि कानि पवित्राणि श्रुत्युक्तानि सदाशिव ।।

तेभ्योऽधिकतरं चास्तु क्षेत्रमेतत्त्रिलोचन ।। ८३ ।।

चतुर्णामपि वेदानां पुण्यमध्ययनाच्च यत् ।।

तत्पुण्यं जायतां काश्यां गायत्रीलक्ष जाप्यतः ।। ८४ ।।

अष्टांगयोगाभ्यासेन यत्पुण्यमपि जायतेः ।।

तत्पुण्यं साधिकं भूयाच्छ्रद्धाकाशीनिषेवणात् ।। ८५ ।।

कृच्छ्रचांद्रायणाद्यैश्च यच्छ्रेयः समुपार्ज्यते ।।

तदेकेनोपवासेन भवत्वानंदकानने ।। ८६ ।।

अन्यत्र यत्तपस्तस्त्वा श्रेयः स्याच्छरदां शतम् ।।

तदस्तु काश्यां वर्षेण भूमिशय्या व्रतेन हि ।। ८७ ।।

आजन्म मौनव्रततो यदन्यत्रफलं स्मृतम् ।।

तदस्तु काश्यां पक्षाहः सत्यवाक्परिभाषणात् ।। ८८ ।।

अन्यत्र दत्त्वा सर्वस्वं सुकृतं यत्समीरितम् ।।

सहस्रभोजनात्काश्यां तद्भूयादयुताधिकम् ।। ८९ ।।

मुक्तिक्षेत्राणि सर्वाणि यत्संसेव्योदितं फलम् ।।

पंचरात्रात्तदत्रास्तु निषेव्य मणिकर्णिकाम् ।। 4.1.26.९० ।।

प्रयागस्नानपुण्येन यत्पुण्यं स्याच्छिवप्रदम् ।।

काशीदर्शनमात्रेण तत्पुण्यं श्रद्धयास्त्विह ।। ९१ ।।

यत्पुण्यमश्वमेधेन यत्पुण्यं राजसूयतः ।।

काश्यां तत्पुण्यमाप्नोतु त्रिरात्रशयनाद्यमी ।। ९२ ।।

तुलापुरुषदानेन यत्पुण्यं सम्यगाप्यते ।।

काशीदर्शनमात्रेण तत्पुण्यं श्रद्धयास्तु वै ।। ९३ ।।

इति विष्णोर्वरं श्रुत्वा देवदेवो जगत्पतिः ।।

उवाच च प्रसन्नात्मा तथाऽस्तु मधुसूदन ।। ९४ ।।

।। श्रीमहादेव उवाच ।। ।।

शृणु विष्णो महाबाहो जगतः प्रभवाप्यय ।।

विधेहि सृष्टिं विविधां यथावत्त्वं श्रुतीरिताम् ।। ९५ ।।

पितेव सर्वभूतानां धर्मतः पालको भव ।।

विध्वंसनीया विविधा धर्मध्वंसविधायिनः ।। ९६ ।।

धर्मेतरपथस्थानामुपसंहृतये हरे ।।

हेतुमात्रं भवान्यस्मात्स्वकर्मनिहता हि ते ।। ९७ ।।

यथा परिणतं सस्यं पतेत्प्रसवबंधनात् ।।

ते परीणतपाप्मानः पतिष्यंति तथा स्वयम् ।। ९८ ।।

ये च त्वामवमन्यंते दर्पिताः स्वतपोबलैः ।।

तेषां चैवोपसंहृत्यै प्रभविष्याम्यहं हरे ।। ९९ ।।

उपपातकिनो ये च महापातकिनश्च ये ।।

तेपि काशीं समासाद्य भविष्यंति गतैनसः ।। 4.1.26.१०० ।।

इदं मम प्रियं क्षेत्रं पंचक्रोशीपरीमितम् ।।

ममाज्ञा प्रभवेदत्र नान्याज्ञा प्रभवेदिह ।। १ ।।

पुनर्विष्णुर्मया प्रोक्तो मृडानि शुभलोचने ।।

अत्युग्रतेजसा तेजो भ्रमंस्त्रैलोक्यविभ्रमः ।। २ ।।

पापिनामपि जंतूनामविमुक्तनिवासिनाम् ।।

नान्यः शासयिता विप्णो तेषां शास्ताऽहमेव हि ।। ३ ।।

योजनानां शतस्थोपि यो(?)ऽविमुक्तं स्मरेद्धृदि ।।

बहुपातकपूर्णोपि न स पापैः प्रबाध्यते ।।४।।

मम प्रियस्य क्षेत्रस्य योऽविमुक्तस्य संस्मरेत् ।।

प्राण प्रयाणसमये दूरगोप्यघवानपि ।।५।।

स पापपूगमुत्सृज्य स्वर्गभोगान्समश्नुते ।।

काशीस्मरणपुण्येन स्वर्गाद्भ्रष्टो हि जायते।।६।।

पृथिव्यामेकराड्भूत्वा भुक्त्वा भोगाननेकशः ।।

प्राप्याविमुक्तं तत्पुण्यान्निर्वाणपदभाग्भवेत् ।। ७ ।।

बहुकालमुषित्वाऽत्र नियतेंद्रियमानसः ।।

यद्यन्यत्र विपद्येत दैवयोगाच्छुचिस्मिते ।। ८ ।।

सोपि स्वर्गसुखं भुक्त्वा भूत्वा क्षितिपतीश्वरः ।।

पुनः काशीमवाप्याथ विंदेन्नैःश्रेयसीं श्रियम् ।। ९ ।।

विष्णोऽविमुक्ते संवासः कर्मनिर्मूलनक्षमः ।।

द्वित्राणां हि पवित्राणां निर्वाणा येह जायते ।। 4.1.26.११० ।।

विष्णुरुवाच ।। ।।

देवेशक्षेत्रमाहात्म्यं यो न जानाति तत्त्वतः ।।

न श्रद्दधाति म्रियते मृते तस्येह का गतिः ।।११।।

।। शिव उवाच ।। ।।

अन्यत्र कृत्वा पापानि बहूनि सुमहांति च ।।

अश्रद्दधानोऽतत्त्वज्ञो यद्यत्र च विपद्यते ।। १२ ।।

महिमन्यनभिज्ञोपि क्षेत्रस्यास्य जनार्दन।।

तस्य या गतिरुद्दिष्टा तां निशामय सुव्रत ।। १३ ।।

पंचक्रोशीं प्रविशतस्तस्य पातकसंततिः ।।

बहिरेव प्रतिष्ठेत नांतर्निर्विशते क्वचित् ।। १४ ।।

भयाद्बहिः स्थितायां च तस्य पातकसंततौ ।।

त्रिशूलपाशपाणीनां गणानां सीमचारिणाम् ।। १५ ।।

प्रवेशमात्रादनघ सर्वैरेनोभिरुज्झितः ।।

संस्नाय मणिकर्णिक्यां पुण्यं प्राप्नोत्यनुत्तमम् ।। १६ ।।

सर्वतीर्थेषुसंस्नानाद्यत्पुण्यं समवाप्यते ।।

तत्पुण्यमाप्यते सम्यङ्मणिकर्ण्येक मज्जनात् ।। १७ ।।

विधिना तत्र संस्नाय मृद्गोमयकुशादिभिः ।।

स्वशाखावारुणैर्मंत्रैर्दूर्वापामार्गदर्भकैः ।। १८ ।।

सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।।

मणिकर्ण्यां विधिस्नातः श्रद्धया तदवाप्नुयात् ।। १९ ।।

अश्रद्धयापि यः स्नातो मणिकर्ण्यां विधानतः ।।

सोपि पुण्यमवाप्नोति स्वर्गप्राप्तिकरं परम् ।। 4.1.26.१२० ।।

श्रद्धया विधिवत्स्नात्वा कृत्वा देवादितर्पणम् ।।

तिलबर्हिर्यवैः सम्यक्सर्वयज्ञफलं लभेत् ।। २१ ।।

श्रद्दधानो विधिस्नातः कृत सर्वोदकक्रियः ।।

जपन्देवान्समभ्यर्च्य सर्वमंत्रफलं लभेत् ।। २२ ।।

स्नात्वा मौनेन विश्वेश दर्शना न्नियतेंद्रियः ।।

सर्वव्रतकृतं श्रेयो लभेद्वाचंयमः शिवे ।। २३ ।।

स्नाने देवार्चने जप्ये मलमूत्रविसर्जने ।।

मौनं कुर्यात्प्रयत्नेन दंतधावनहोमयोः ।। २४ ।।

विश्वेश्वरं समभ्यर्च्य सूपचारैर्विधानतः ।।

यावज्जीवं शिवार्चायाः फलमाप्नोति वै सकृत् ।। २५ ।।

दत्त्वाल्पमपि देवेशि न्यायेनोपार्जितं धनम् ।।

अविमुक्ते मम क्षेत्रे न दरिद्रो भवेत्क्वचित् ।। २६ ।।

विविधं धनमावर्ज्य योऽविमुक्ते न यच्छति ।।

संप्राप्य निधनं मूढोऽन्यत्र शोचति सर्वदा ।। २७ ।।

रम्याणि यानि रत्नानि गोगजाश्वांबराण्यपि ।।

कृतानि तानि श्रेयोर्थमविमुक्तनिवासिनाम् ।। २८ ।।

विश्वेशप्रीणनार्थाय धनं निधनमेव वा ।।

न्यायेन काश्यां यः कुर्यात्स धन्यः स च धर्मवित् ।। २९ ।।

योसौ विश्वेश्वरो देवः काशीपुर्यामुमे स्थितः ।।

लिंगरूपधरः साक्षान्मम श्रेयास्पदं हि तत् ।। 4.1.26.१३० ।।

अविमुक्तं महत्क्षेत्रं पंचक्रोशपरीमितम् ।।

ज्योतिर्लिंगं तदेकं हि ज्ञेयं विश्वेश्वराभिधम् ।। ३१ ।।

एकदेशस्थितमपि यथा मार्तंडमंडलम् ।।

दृश्यते सर्वगं सर्वैः काश्यां विश्वेश्वरस्तथा ।। ३२ ।।

निष्प्रत्यूहेन योगेन नानाजन्मार्जितेन च ।।

यत्फलं लभ्यतेऽन्यत्र तत्काश्यां त्यजतस्तनुम ।। ३३ ।।

तप्त्वा तपांसि सर्वाणि बहुकालं जितेंद्रियैः ।।

यत्फलं लभ्यतेऽन्यत्र तत्काश्यामेकरात्रतः ।। ३४ ।।

अक्षेत्रमहिमज्ञोपि श्रद्धाहीनोपि कालतः ।।

काशीप्रवेशादनघोऽमृतत्वं लभतेमृतः ।। ३५ ।।

कृत्वाप्येनांसि चोग्राणि कालात्प्राप्याथ काशिकाम् ।।

त्यक्त्वा तनुं प्रसादान्मे मामेव प्रतिपद्यते ।। ३६ ।।

विना मम प्रसादं वै कः काशीं प्रतिपद्यते ।।

विना ब्रध्नं विशालाक्षि दिनकृत्क इहोच्यते ।। ३७ ।।

अप्राप्य काशीं को देवि निरंतर सुखं लभेत् ।।

बह्माद्याः प्राकृतैः पाशैर्यतो बद्धा निरंतरम् ।। ३८ ।।

चतुर्विंशतिभिः पाशैस्त्रिगुणैः क्रियया दृढैः ।।

कंठे बद्धा विमुच्यंते कथं काशीं विना जनाः ।। ।। ३९ ।।

बहूपसर्गो योगोयं कृच्छ्रसाध्यं तपो हि यत् ।।

योगाद्भ्रष्टस्तपोभ्रष्टो गर्भक्लेशसहःपुनः ।। 4.1.26.१४० ।।

कृत्वापि काश्यां पापानि काश्यामेव म्रियेत चेत् ।।

भूत्वा रुद्रपिशाचोपि पुनर्मुक्तिमवाप्स्यति ।। ४१ ।।

काश्यां मृतानां जंतूनां दैवात्पापकृतामपि ।।

न पातो नरके तेषां तेषां शास्ताहमेव यत् ।। ४२ ।।

कायं विज्ञाय सापायं स्मृत्वा गर्भस्य वेदनाम् ।।

त्यक्त्वा राज्यमपि प्राज्यं सेव्या काशी निरंतरम् ।। ४३ ।।

अतर्कितं समभ्येत्य यमदूताः सुदारुणाः ।।

बद्ध्वा पाशैर्हनिष्यंति क्षिप्रं काशीं ततः श्रयेत ।। ४४ ।।

न पापेभ्यो भयं यत्र न भयं यत्र वै यमात् ।।

न गर्भवासभीर्यत्र तां काशीं को न संश्रयेत् ।। ४५ ।।

अद्य प्रातः परश्वो वा मरणं प्राप्यमेव च ।।

यावत्कालविलंबोस्ति तावत्काशीं समाश्रयेत् ।। ४६ ।।

प्राप्ते तु मरणे पुंसां पुनर्जन्म पुनर्मृतिः ।।

अपुनर्भवभूमिं च तस्मात्काशीं श्रयेद्बुधः ।। ४७ ।।

पुत्रक्षेत्रकलत्राख्यां त्यक्त्वा मायां हि वैष्णवीम् ।।

भवांतरेनेकरूपां भवघ्नीं काशिकां श्रयेत् ।।४८।।

।। स्कंद उवाच ।।

दूरं मे मरणंयुवाहमधुना धार्यं न चित्तेत्विति श्रोतव्यो निभृतं कृतांत महिषग्रैवेयघंटारवः ।।
नैकट्यात्प्रकटोत्कटश्रमघटामप्राप्य हित्वा द्रुतं जीर्णां पर्णकुटीं ततः पटुमतिर्गच्छेत्पुरीं धूर्जटेः ।। ४९ ।।

व्यास उवाच ।।

अगस्त्यस्य पुरः सूत कथयित्वा कथामिमाम् ।।

सर्वपापप्रशमनीं पुनः स्कंद उवाच ह ।। 4.1.26.१५० ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे मणिकर्णिकाख्यानं नाम षड्विंशोऽध्यायः ।। २६ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२७

https://sa.wikisource.org/s/fv8
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।।

वाराणसीति प्रथितं यथा चानंदकाननम् ।।

तथा च कथयामीह देवदेवेनभाषितम् ।। १ ।।

।। ईश्वर उवाच ।। ।।

निशामय महाबाहो विष्णो त्रैलोक्यसुंदर ।।

प्राप्तं वाराणसीत्याख्यामविमुक्तं यथा तथा ।। २ ।।

निर्दग्धान्सागराञ्छ्रुत्वा कपिलक्रोधवह्निना ।।

अश्वमेधाश्वसंयुक्तान्पूर्वजान्स्वान्भगीरथः ।। ३ ।।

सूर्यवंशे महातेजा राजा परमधार्मिकः ।।

आरिराधयिषुर्गंगां तपसे कृतनिश्चयः ।।४।।

हिमवंतं नगश्रेष्ठममात्य न्यस्तराज्यधूः ।।

जगाम यशसां राशिरुद्दिधीर्षुः पितामहान् ।। ५ ।।

ब्रह्मशापाग्निनिर्दग्धान्महादुर्गतिगानपि ।।

विना त्रिमार्गगां विष्णो को जंतूंस्त्रिदिवं नयेत् ।। ६ ।।

ममैव सा परामूर्तिस्तोयरूपा शिवात्मिका ।।

ब्रह्मांडानामनेकानामाधारः प्रकृतिः परा ।। ७ ।।

शुद्धविद्यास्वरूपा च त्रिशक्तिः करुणात्मिका ।।

आनंदामृतरूपा च शुद्धधर्मस्वरूपिणी ।। ८ ।।

यामेतां जगतां धात्रीं धारयामि स्वलीलया ।।

विश्वस्य रक्षणार्थाय परब्रह्मस्वरूपिणीम् ।। ९ ।।

त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राणि यानि च ।।

सर्वत्र सर्वे ये धर्माः सर्वयज्ञाः सदक्षिणाः ।। 4.1.27.१० ।।

तपांसि विष्णो सर्वाणि श्रुतिः सांगा चतुर्विधा ।।

अहं च त्वं च कश्चापि देवतानां गणाश्च ये ।। ।। ११ ।।

पुरुषार्थाश्च सर्वे वै शक्तयो विविधाश्च याः ।।

गंगायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः ।। १२ ।।

स स्नातः सर्वतीर्थेषु सर्वक्रतुषु दीक्षितः ।।

चीर्णसर्वव्रतः सोपि यस्तु गंगां निषेवते ।। १३ ।।

तपांसि तेन तप्तानि सर्वदानप्रदः स च ।।

स प्राप्त योगनियमो यस्तु गंगां निषेवते ।।१४।।

सर्ववर्णाश्रमेभ्यश्च वेदविद्भ्यश्च वै तथा ।।

शास्त्रार्थपारगेभ्यश्च गंगास्नायी विशिष्यते ।। १५ ।।

मनोवाक्कायजैर्दोषैर्दुष्टो बहुविधैरपि ।।

वीक्ष्य गंगां भवेत्पूतः पुरुषो नात्र संशयः ।।१६।।

कृते सर्वत्र तीर्थानि त्रेतायां पुष्करं परम् ।।

द्वापरे तु कुरुक्षेत्रं कलौ गंगैव केवलम् ।। १७ ।।

पूर्वजन्मांतराभ्यास वासनावशतो हरे ।।

गंगातीरे निवासः स्यान्मदनुग्रहतः परात् ।। १८ ।।

ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः ।।

द्वापरे तद्द्वयं यज्ञाः कलौ गंगैव केवलम् ।। १९ ।।

यो देहपतनाद्यावद्गंगातीरं न मुंचति ।।

स हि वेदांतविद्योगी ब्रह्मचर्यव्रती सदा ।। 4.1.27.२० ।।

कलौ कलुषचित्तानां परद्रव्यरतात्मनाम् ।।

विधिहीनक्रियाणां च गतिर्गंगा विना नहि ।। २१ ।।

अलक्ष्मीः कालकर्णी च दुःस्वप्नो दुर्विचिंतितम् ।।

गंगागंगेति जपनात्तानि नोपविशंति हि ।। २२ ।।

गंगा हि सर्वभूतानामिहामुत्र फलप्रदा ।।

भावानुरूपतो विष्णो सदा सर्वजगद्धिता ।। २३ ।।

यज्ञ दान तपो योग जपाः सनियमा यमाः ।।

गंगासेवासहस्रांशं न लभंते कलौ हरे ।। २४ ।।

किमष्टांगेन योगेन किं तपोभिः किमध्वरैः ।।

वास एव हि गंगायां ब्रह्मज्ञानस्य कारणम् ।। २५ ।।

अपि दूरस्थितस्यापि गंगामाहात्म्यवेदिनः ।।

अयोग्यस्यापि गोविंदभक्त्या गंगा प्रसीदति ।। २६ ।।

श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं परं तपः ।।

श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धया सा प्रसीदति ।। २७ ।।

अज्ञानरागलोभाद्यैः पुंसां संमूढचेतसाम् ।।

श्रद्धा न जायते धर्मे गंगायां च विशेषतः ।। २८ ।।

बहिः स्थितं जलंयद्वन्नारिकेलांतरे स्थितम् ।।

तथा ब्रह्मांडबाह्यस्थं परब्रह्मांबु जाह्नवी ।। २९ ।।

गंगालाभात्परो लाभः क्वचिदन्यो न विद्यते ।।

तस्माद्गंगामुपासीत गंगैव परमः पुमान् ।।4.1.27.३०।।

शक्तस्य पंडितस्यापि गुणिनो दानशीलिनः ।।

गंगास्नानविहीनस्य हरे जन्म निरर्थकम् ।। ३१ ।।

वृथा कुल वृथा विद्या वृथा यज्ञा वृथातपः ।।

वृथा दानानि तस्येह कलौ गंगां न यो भजेत् ।। ३२ ।।

गुणवत्पात्रपूजायां न स्याद्वै तादृशं फलम् ।।

यथा गंगाजलस्नान पूजने विधिना फलम् ।। ३३ ।।

ममतेजोग्निगर्भेयं ममवीर्यातिसंवृता ।।

दाहिका सर्वदोषाणां सर्वपापविनाशिनी ।। ३४ ।।

स्मरणादेव गंगायाः पापसंघातपंजरम् ।।

शतधा भेदमायाति गिरिर्वज्रहतो यथा ।। ३५ ।।

गंगां गच्छति यस्त्वेको यस्तु भक्त्यानुमोदयेत् ।।

तयोस्तुल्यफलं प्राहुर्भक्तिरेवात्र कारणम्।। ।। ३६ ।।

गच्छंस्तिष्ठञ्जपन्ध्यान्भुंजञ्जाग्रत्स्वपन्वदन् ।।

यः स्मरेत्सततं गंगां स हि मुच्येत बंधनात् ।। ३७ ।।

पितॄनुद्दिश्य योभक्त्या पायसं मधुसंयुतम् ।।

गुडसर्पिस्तिलैःसार्धं गंगांभसि विनिक्षिपेत् ।। ३८ ।।

तृप्ता भवंति पितरस्तस्य वर्षशतं हरे ।।

यच्छंति विविधान्कामान्परितुष्टाः पितामहाः ।। ।। ३९ ।।

लिंगे संपूजिते सर्वमर्चितं स्याज्जगद्यथा ।।

गंगास्नानेन लभते सर्वतीर्थफलं तथा ।। 4.1.27.४० ।।

गंगायां तु नरः स्नात्वा यो लिंगं नित्यमर्चति ।।

एकेन जन्मना मुक्तिं परां प्राप्नोति स ध्रुवम् ।। ४१ ।।

अग्निहोत्रं च यज्ञाश्च व्रतदानतपांसि च ।।

गंगायां लिंगपूजायाः कोट्यंशेनापि नो समाः ।। ४२ ।।

गंगां गंतुं विनिश्चित्य कृत्वा श्राद्धादिकं गृहे ।।

स्थितस्य सम्यक्संकल्पात्तस्य नंदंति पूर्वजाः ।। ४३ ।।

पापानि च रुदंत्याशु हा क्व यास्याम इत्यलम् ।।

लोभमोहादिभिः सार्धं मंत्रयंति पुनःपुनः ।। ४४ ।।

यथा न गंगां यात्येष तथा विघ्नं प्रकुर्महे ।।

गंगां गतो यथा चैष न उच्छित्तिं विधास्यति ।। ४५ ।।

गृहाद्गंगावगाहार्थं गच्छतस्तु पदेपदे ।।

निराशानि व्रजंत्येव पापान्यस्य शरीरतः ।। ४६।।

पूर्वजन्मकृतैः पुण्यैस्त्यक्त्वा लोभादिकं हरे ।।

व्युदस्य सर्वविघ्नौघान्गंगां प्राप्नोति पुण्यवान् ।। ४७ ।।

अनुषंगेण मौल्येन वाणिज्येनापि सेवया ।।

कामासक्तोपि वा मर्त्यो गंगास्नातो दिवं व्रजेत् ।। ४८ ।।

अनिच्छयापि संस्पृष्टो दहनो हि यथा दहेत् ।।

अनिच्छयापि संस्नाता गंगा पापं तथा दहेत् ।। ४९ ।।

तावद्भ्रमति संसारे यावद्गंगां न सेवते ।।

संसेव्य गंगां नो जंतुर्भवक्लेशं प्रपश्यति ।। 4.1.27.५० ।।

यो गंगांभसि निस्नातो भक्त्या संत्यक्तसंशयः ।।

मनुष्यचर्मणा नद्धः स देवो नात्र संशयः ।। ५१ ।।

गंगास्नानार्थमुद्युक्तो मध्येमार्गं मृतो यदि ।।

गंगास्नानफलं सोपि तदाप्नोति न संशयः ।। ५२ ।।

माहात्म्यं ये च गंगायाः शृण्वंति च पठंति च ।।

तेप्यशेषैर्महापापैर्मुच्यंते नात्र संशयः ।। ५३ ।।

दुर्बुद्धयो दुराचारा हैतुका बहुसंशयाः ।।

पश्यंति मोहिता विष्णो गंगामन्य नदीमिव ।। ५४ ।।

जन्मांतरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः ।।

इह जन्मनि गंगायां नृणां भक्तिः प्रजायते ।। ५५ ।।

गंगाभक्तिमतामर्थे महेंद्रादि पुरेषु च ।।

हर्म्याणि रम्यभोगानि निर्मितानि स्वयंभुवा ।। ५६ ।।

सिद्धयः सिद्धिलिंगानि स्पर्शलिंगान्यनेकशः ।।

प्रासादा रत्नरचिताश्चिंतामणिगणा अपि ।। ५७ ।।

गंगाजलांतस्तिष्ठंति कलिकल्मषभीतितः ।।

अतएव हि संसेव्या कलौ गंगेष्टसिद्धिदा ।। ५८ ।।

सूर्योदये तमांसीव वज्रपातभयान्नगाः ।।

ताक्ष्यैक्षणाद्यथासर्पा मेघा वाताहता इव ।। ५९ ।।

तत्त्वज्ञानाद्यथा मोहः सिंहं दृष्ट्वा यथा मृगाः ।।

तथा सर्वाणि पापानि यांति गंगेक्षणात्क्षयम् ।। 4.1.27.६० ।।

दिव्यौषधैर्यथा रोगा लोभेन च यथा गुणाः ।।

यथा ग्रीष्मोष्मसंपत्तिरगाधह्रद मज्जनात् ।। ६१ ।।

तूलशैलः स्फुलिंगेन यथा नश्यति तत्क्षणात् ।।

तथा दोषाः प्रणश्यंति गंगांभः स्पर्शनाद्ध्रुवम् ।। ६२ ।।

क्रोधेन च तपो यद्वत्कामेन च यथा मतिः ।।

अनयेन यथा लक्ष्मीर्विद्या मानेन वै यथा ।। ६३ ।।

दंभ कौटिल्य मायाभिर्यथाधर्मो विनश्यति ।।

तथा नश्यंति पापानि गंगाया दर्शनेन तु ।। ६४ ।।

मानुष्यं दुर्लभं प्राप्य विद्युत्संपातचंचलम् ।।

गंगां यः सेवते सोत्र बुद्धेः पारं परं गतः ।। ६५ ।।

विधूतपापा ये मर्त्याः परं ज्योतिःस्वरूपिणीम् ।।

सहस्रसूर्यप्रतिमां गंगां पश्यंति ते भुवि ।। ६६ ।।

साधारणांभसा पूर्णां साधारण नदीमिव।।

पश्यंति नास्तिका गंगां पापोपहतलोचनाः ।। ६७ ।।

संसारमोचकश्चाहं जनानामनुकंपया ।।

गंगातरंगरूपेण सोपानं निर्ममे दिवः ।। ६८ ।।

सर्व एव शुभः कालः सर्वो देशस्तथा शुभः ।।

सर्वो जनो दानपात्रं श्रीमती जाह्नवी तटे ।। ६९ ।।

यथाश्वमेधो यज्ञानां नगानां हिमवान्यथा ।।

व्रतानां च यथा सत्यं दानानामभयं यथा ।। 4.1.27.७० ।।

प्राणायामश्च तपसां मंत्राणां प्रणवो यथा ।।

धर्माणामप्यहिंसा च काम्यानां श्रीर्यथा वरा ।। ७१ ।।

यथात्मविद्या विद्यानां स्त्रीणां गौरी यथोत्तमा ।।

सर्वर्देवेगणानां च यथा त्वं पुरुषोत्तम ।।। ७२ ।।

सर्वषामेव पात्राणां शिवभक्तो यथा वरः ।।

तथा सर्वेषु तीर्थेषु गंगातीर्थं विशिष्यते ।। ७३ ।।

हरेयश्चावयोर्भेदं न करोति महामतिः ।।

शिवभक्तः स विज्ञेयो महापाशुपतश्च सः ।। ७४ ।।

पापपांसुमहावात्या पापद्रुमकुठारिका ।।

पापेंधनदवाग्निश्च गंगेयं पुण्यवाहिनी ।। ७५ ।।

नानारूपाश्च पितरो गाथा गायंति सर्वदा ।।

अपि कश्चित्कुलेस्माकं गंगास्नायी भविष्यति ।। ७६ ।।

देवर्षीन्परिसंतर्प्य दीनानाथांश्च दुःखितान् ।।

श्रद्धया विधिना स्नात्वा दास्यते सलिलांजलिम् ।। ७७ ।।

अपि नः स कुले भूयाच्छिवे विष्णौ च साम्यदृक् ।।

तदालयकरो भक्त्या तस्य संमार्जनादिकृत् ।। ७८ ।।

अकामो वा सकामो वा तिर्यग्योनिगतोपि वा ।।

गंगायां यो मृतो मर्त्यो नरकं स न पश्यति ।।७९।।

तीर्थमन्यत्प्रशंसंति गंगातीरे स्थिताश्च ये ।।

गंगां न बहु मन्यंते ते स्युर्निरयगामिनः ।।4.1.27.८०।।

मां च त्वां चैव यो द्वेष्टि गंगां च पुरुषाधमः।।

स्वकीयैः पुरुषैः सार्धं स घोरं नरकं व्रजेत् ।। ८१ ।।

षष्टिर्गणसहस्राणि गंगां रक्षंति सर्वदा ।।

अभक्तानां च पापानां वासे विघ्नं प्रकुर्वते ।। ८२ ।।

कामक्रोधमहामोहलोभादि निशितैः शरैः ।।

घ्नंति तेषां मनस्तत्र स्थितिं चापनयंति च ।। ८३ ।।

गंगां समाश्रयेद्यस्तु स मुनिः स च पंडितः ।।

कृतकृत्यः स विज्ञेयः पुरुषार्थचतुष्टये ।। ८४ ।।

गंगायां च सकृत्स्नातो हयमेधफलं लभेत् ।।

तर्पयंश्च पितृंस्तत्र तारयेन्नरकार्णवात् ।। ८५ ।।

नैरंतर्येण गंगायां मासं यः स्नाति पुण्यवान् ।।

शक्रलोके स वसति यावच्छक्रः सपूर्वजः ।। ८६ ।।

अब्दं यः स्नाति गंगायां नैरंतर्येण पुण्यभाक् ।।

विष्णोर्लोकं समासाद्य स सुखं संवसेन्नरः ।। ८७ ।।

गंगायां स्नाति यो मर्त्यो यावज्जीवं दिनेदिने ।।

जीवन्मुक्तः स विज्ञेयो देहांते मुक्त एव सः ।। ।।८८ ।।

तिथिनक्षत्रपर्वादि नापेक्ष्यं जाह्नवी जले ।।

स्नानमात्रेण गंगायां संचिताघं विनश्यति ।। ८९ ।।

पंडितोपि स मूर्खः स्याच्छक्तियुक्तोप्यशक्तिकः ।।

यस्तु भागीरथीतीरं सुखसेव्यं न संश्रयेत् ।। 4.1.27.९० ।।

किंवायुपाप्यरोगेण विकासिन्याथ किं श्रिया ।।

किं वा बुद्ध्या विमलया यदि गंगां न सेवते ।। ९१ ।।

यः कारयेदायतनं गंगाप्रतिकृतेर्नरः ।।

भुक्त्वा स भोगान्प्रेत्यापि याति गंगा सलोकताम् ।। ९२।।

शृण्वंति महिमानं ये गंगाया नित्यमादरात् ।।

गंगास्नानफलं तेषां वाचकप्रीणनाद्धनैः ।।९३।।

पितॄनुद्दिश्य यो लिंगं स्नपयेद्गांग वारिणा ।।

तृप्ताः स्युस्तस्य पितरो महानिरयगा अपि ।। ९४ ।।

अष्टकृत्वो मंत्रजप्तैर्वस्त्रपूतैः सुगंधिभिः ।।

प्रोचुर्गांगजलैः स्नानं घृतस्नानाधिकं बुधाः ।। ९५ ।।

अष्टद्रव्यविमिश्रेण गंगातोयेन यः सकृत् ।।

मागधप्रस्थमात्रेण ताम्रपात्रस्थितेन च ।। ९६ ।।

भानवेऽर्घं प्रदद्याच्च स्वकीय पितृभिः सह ।।

सोतितेजो विमानेन सूर्यलोके महीयते ।। ९७ ।।

आपः क्षीरं कुशाग्राणि घृतं मधुगवांदधि ।।

रक्तानि करवीराणि रक्तचंदनमित्यपि ।। ९८ ।।

अष्टांगार्घो यमुद्दिष्टस्त्वतीव रवितोषणः ।।

गांगैर्वार्भिः कोटिगुणो ज्ञेयो विष्णोऽन्यवारितः ।। ९९ ।।

गंगातीरे स्वशक्त्या यः कुर्याद्देवालयं सुधीः ।।

अन्यतीर्थप्रतिष्ठातो भवेत्कोटिगुणं फलं ।। 4.1.27.१०० ।।

अश्वत्थवटचूतादि वृक्षारोपेण यत्फलम् ।।

कूपवापीतडागादि प्रपा सत्रादिभिस्तथा ।। १ ।।

अन्यत्र यद्भवेत्पुण्यं तद्गंगादर्शनाद्भवेत् ।।

पुष्पवाट्यादिभिश्चापि गंगास्पर्शं ततोऽधिकम् ।।२।।

कन्यादानेन यत्पुण्यं यत्पुण्यं गोऽन्नदानतः ।।

तत्पुण्यं स्याच्छतगुणं गंगागंडूषपानतः ।। ३ ।।

चांद्रायणसहस्रेण यत्पुण्यं स्याज्जनार्दन ।।

ततोऽधिकफलं गंगाऽमृतपानादवाप्नुयात् ।। ४ ।।

भक्त्या गंगावगाहस्य किमन्यत्फलमुच्यते ।।

अक्षयः स्वर्गवासोपि निर्वाणमथवा हरे ।। ५ ।।

गंगायाः पादुकायुग्मं नित्यमर्चति यो नरः ।।

आयुः पुण्यं धनं पुत्रान्स्वर्गमोक्षौ च विंदति ।। ६ ।।

नास्ति गंगासमं तीर्थं कलिकल्मषनाशनम् ।।

नास्ति मुक्तिप्रदं क्षेत्रमविमुक्तसमं हरे ।। ७ ।।

गंगास्नानरतं मर्त्यं दृष्ट्वैव यमकिंकराः ।।

दिशो दश पलायंते सिंहं दृष्ट्वा यथा मृगाः ।। ८ ।।

गंगाभजनशीलस्य गंगातटनिवासिनः ।।

अर्चां कृत्वा यथान्यायमश्वमेधफलं लभेत् ।। ९ ।।

गोभूहिरण्यदानेन भक्त्या गंगातटे शुभे ।।

नरो न जायते भूयः संसारे दुःखकंटके ।।4.1.27.११० ।।

दीर्घायुष्यं च वासोभिर्ज्ञानं पुस्तकदानतः ।।

अन्नदानेन संपत्तिं कीर्तिं कन्याप्रदानतः ।। ११ ।।

अन्यत्र यत्कृतं कर्म व्रतं दानं जपस्तपः ।।

गंगातटे तु तत्सर्वं हरे कोटिगुणं भवेत् ।। १२ ।।

धेनुं सवत्सा यो दद्याद् गंगातीरे विधानतः ।।

गोरोमसंख्यया विष्णो युगान्सर्वसमृद्धिमान् ।। १३ ।।

गोलोके मम लोके वा कामधेनुप्रदानतः ।।

भुंजानः सर्वकामांस्तु दिव्यान्नानाविधान्बहून् ।। १४ ।।

देवानामप्यलभ्यांश्च भुक्त्वा तु सह बांधवैः ।।

पितृभिश्च सुहृद्भिश्च सर्वरत्नविभूषितः ।। १५ ।।

जायते सत्कुले पश्चाद्धनधान्यसमाकुले ।।

रत्नकांचनसंपन्ने शीलविद्यासमन्विते ।। १६ ।।

भुक्त्वा स विपुलान्भोगान्पुत्रपौत्रसमन्वितः ।।

पुनर्गंगां समासाद्य काश्यामुत्तरवाहिनीम् ।। १७ ।।

विश्वेश्वरं समाराध्य प्राग्जनुर्वासनावशात् ।।

कालाद्देहांतमासाद्य ब्रह्म संपद्यते ततः ।। १८ ।।

विवर्तनद्वयमपि भूमेर्भागीरथीतटे ।।

नरो ददाति यो भक्त्या तस्य पुण्यफलं शृणु ।। १९ ।।

तद्भूमित्रसरेणूनां संख्यया युगमानया ।।

महेंद्र चंद्रलोकेषु भुक्त्वा भोगान्मनःप्रियान् ।। 4.1.27.१२० ।।

सप्तद्वीपपतिर्भूत्वा महाधर्मपरायणः ।।

नरकस्थान्पितॄन्सर्वान्प्रापयेत्त्रिदिवं हरे ।।२१।।

स्वर्गस्थांश्च पितॄन्सर्वान्मोचयित्वा महाद्युतिः ।।

अंते ज्ञानासिना छित्त्वा ह्यविद्यां पांचभौतिकीम् ।। २२ ।।

परवैराग्यमापन्नो युंजानो योगमुत्तमम् ।।

प्राप्याथवा विमुक्तं च परं ब्रह्माधिगच्छति ।। ।। २३ ।।

सुवर्णमात्रमपि यः सुवर्णं संप्रयच्छति ।।

सुवर्णाय सुवर्णं च हरे भागीरथीतटे ।। २४ ।।

स हेमरत्नखचिते विमाने सर्वगे शुभे ।।

सर्वैश्वर्यसमायुक्तः सर्वलोकेषु पूजितः ।। २५ ।।

ब्रह्मांडांतरसंस्थेषु भुंजन्भोगान्मनोरमान् ।।

सर्वैः संपूजितो विष्णो यावदाभूतसंप्लवम् ।। २०५ ।।

एकराट्च ततो भूत्वा जंबूद्वीपे प्रतापवान् ।।

ततोऽविमुक्तमासाद्य पदं निर्वाणमृच्छति ।। २७ ।।

जन्मर्क्षे तु कृते स्नाने गंगायां भक्तिपूर्वकम् ।।

जन्मप्रभृतिपापौघात्संचितान्मुच्यते क्षणात् ।। २८ ।।

वैशाखे कार्तिके माघे गंगास्नानं सुदुर्लभम् ।।

दर्शे शतगुणं पुण्यं संक्रातौ च सहस्रकम् ।।२९।।

चंद्रसूर्यग्रहे लक्षं व्यतीपातेत्वनंतकम् ।।

अयुतं विषुवे चैव नियुतं त्वयनद्वये ।। 4.1.27.१३० ।।

सोमग्रहः सोमदिने रविवाररवग्रहः ।।

तच्चूडामणिपर्वाख्यं तत्रस्नानमसंख्यकम् ।। ३१ ।।

स्नानं दानं जपो होमो यद्यच्चूडामणौ कृतम् ।।

तदक्षयं सर्वमिह विष्णो भागीरथीतटे ।। ३२ ।।

श्रद्धया भक्तियुक्तस्तु गंगां स्नात्वा विधानतः ।।

ब्रह्महापि विशुद्ध्येत किंपुनस्त्वन्य पातकी ।। ३३ ।।

कृमिकीटपतंगाद्या ये मृता जाह्नवीतटे ।।

कूलात्पतंति ये वृक्षास्तेपि यांति परां गतिम् ।। ३४ ।।

ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।।

गंगातीरे तु पुरुषो नारी वा भक्तिभावतः ।।. ३५ ।।

निशायां जागरं कुयाद्गंगां दशविधैर्हरे ।।

पुष्पैः सुगंधैर्नैवेद्यैः फलैर्दशदशोन्मितैः ।।३६।।

प्रदीपैर्दशभिर्धूपैर्दशांगैर्गरुडध्वज ।।

पूजयेच्छ्रद्धया धीमान्दशकृत्वो विधानतः ।। ३७ ।।

साज्यांस्तिलान्क्षिपेत्तोये गंगायाः प्रसृतीर्दश ।।

गुडसक्तुमयान्पिंडान्दद्याच्च दशमंत्रतः ।। ३८ ।।

नमः शिवायै प्रथमं नारायण्यै पदं ततः ।।

दशहरायै पदमिति गंगायै मंत्र एष वै ।। ३९ ।।

स्वाहांतः प्रणावादिश्च भवेद्विंशाक्षरो मनुः ।।

पूजादानं जपो होमो ऽनेनैव मनुना स्मृतः ।। 4.1.27.१४० ।।

हेम्ना रूप्येण वा शक्त्या गंगामूर्तिं विधाय च ।।

वस्त्राच्छादितवक्त्रस्य पूर्णकुंभस्य चोपरि ।। ४१ ।।

प्रतिष्ठाप्यार्चयेद्देवीं पंचामृतविशोधिताम् ।।

चतुर्भुजां त्रिनेत्रां च नदीनदनिषेविताम् ।। ४२ ।।

लावण्यामृतनिष्पंद संशीलद्गात्रयष्टिकाम् ।।

पूर्णकुंभसितांभोज वरदाभयसत्कराम् ।। ४३ ।।

ततो ध्यायेत्सुसौम्या च चंद्रायुतसमप्रभाम् ।।

चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम ।। ४४ ।।

सुधाप्लावितभूपृष्ठां दिव्यगंधानुलेपनाम् ।।

त्रैलौक्यपूजितपदां देवर्षिभिरभिष्टुताम् ।। ४५ ।।

ध्यात्वा समर्च्य मंत्रेण धूपदीपोपहारतः ।।

मां च त्वां च विधिं ब्रध्नं हिमवंतं भगीरथम् ।। ४६ ।।

प्रतिमाग्रे समभ्यर्च्य चंदनाक्षतनिर्मितान् ।।

दशप्रस्थतिलान्दद्याद्दशविप्रेभ्य आदरात् ।। ४७ ।।

पलं च कुडवः प्रस्थ आढको द्रोण एव च ।।

धान्यमानेन बोद्धव्याः क्रमशोमी चतुर्गुणाः ।। ४८ ।।

मत्स्य कच्छप मंडूक मकरादि जलेचरान् ।।

हंसकारंडव बक चक्रटिट्टिभसारसान् ।। ४९ ।।

यथाशक्ति स्वर्णरूप्य ताम्रपृष्ठविनिर्मितान् ।।

अभ्यर्च्य गंधकुसुमैर्गंगायां प्रक्षिपेद्व्रती ।। 4.1.27.१५० ।।

एवं कृत्वा विधानेन वित्तशाठ्यं विवर्जितः ।।

उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ।। ५१ ।।

अदत्तानामुपादानं हिंसाचैवाविधानतः ।।

परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ।। ५२ ।।

पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः ।।

असंबद्ध प्रलापश्च वाङ्मयंस्याच्चतुर्विधम् ।। ५३ ।।

परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम् ।।

वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।। ।। ५४ ।।

एतैर्दशविधैः पापैर्दशजन्मसमुद्भवैः ।।

मुच्यते नात्र संदेहः सत्यं सत्यं गदाधर ।। ५५ ।।

उत्तरेन्नरकात्पूर्वान्दशघोराद्दशावरान् ।।

वक्ष्यमाणमिदं स्तोत्रं गंगाग्रे श्रद्धया जपेत् ।। ५६ ।।

ॐ नमः शिवायै गंगायै शिवदायै नमोनमः ।।

नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोस्तु ते ।। ५७ ।।

नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमोनमः ।।

सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ।। ५८ ।।

सर्वस्यसर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोस्तु ते ।।

स्थास्नुजंगमसंभूत विषहंत्र्यै नमोस्तु ते ।। ५९ ।।

संसारविषनाशिन्यै जीवनायै नमोस्तु ते ।।

तापत्रितय संहंत्र्यै प्राणेश्यै ते नमोनमः ।। 4.1.27.१६० ।।

शांति संतानकारिण्यै नमस्ते शुद्धमूर्तये ।।

सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्तये ।।६१।।

भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमोनमः ।।

भोगोपभोगदायिन्यै भोगवत्यै नमोस्तु ते ।। ६२ ।।

मंदाकिन्यै नमस्तेस्तु स्वर्गदायै नमोनमः ।।

नमस्त्रैलोक्यभूषायै त्रिपथायै नमोनमः ।। ६३ ।।

नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमोनमः ।।

त्रिहुताशनसंस्थायै तेजोवत्यै नमोनमः ।। ६४ ।।

नंदायै लिंगधारिण्यै सुधाधारात्मने नमः ।।

नमस्ते विश्वमुख्यायै रेवत्यै ते नमोनमः ।। ६५ ।।

बृहत्यै ते नमस्तेस्तु लोकधात्र्यै नमोस्तु ते ।।

नमस्ते विश्वमित्रायै नंदिन्यै ते नमोनमः ।। ६६ ।।

पृथ्व्यै शिवामृतायै च सुवृषायै नमोनमः ।।

परापरशताढ्यायै तारायै ते नमोनमः ।। ६७ ।।

पाशजालनिकृंतिन्यै अभिन्नायै नमोस्तु ते ।।

शांतायै च वरिष्ठायै वरदायै नमोनमः ।।६८।।

उग्रायै सुखजग्ध्यै च संजीविन्यै नमोस्तु ते ।।

ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमोनमः ।। ६९ ।।

प्रणतार्ति प्रभंजिन्यै जगन्मात्रे नमोस्तुते ।।

सर्वापत्प्रतिपक्षायै मंगलायै नमोनमः ।। 4.1.27.१७० ।।

शरणागतदीनार्त परित्राणपरायणे ।।

सर्वस्यार्ति हरे देवि नारायणि नमोस्तु ते ।। ७१ ।।

निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमोनमः ।।

परापरपरायै च गंगे निर्वाणदायिनि ।। ७२ ।।

गंगे ममाग्रतो भूया गंगे मे तिष्ठ पृष्ठतः ।।

गंगे मे पार्श्वयोरेधि गंगे त्वय्यस्तु मे स्थितिः ।। ७३ ।।

आदौ त्वमंते मध्ये च सर्वं त्वं गां गते शिवे ।।

त्वमेव मूलप्रकृतिस्त्वं पुमान्पर एव हि ।।

गंगे त्वं परमात्मा च शिवस्त्वतुभ्यं नमः शिवे ।। ७४ ।।

य इदं पठते स्तोत्रं शृणुयाच्छ्रद्धयापि यः ।।

दशधा मुच्यते पापैः कायवाक्चित्तसंभवैः ।। ।। ७५ ।।

रोगस्थो रोगतो मुच्येद्विपद्भ्यश्च विपद्युतः ।।

मुच्यते बंधनाद्बद्धो भीतो भीतः प्रमुच्यते ।। ७६ ।।

सर्वान्कामानवाप्नोति प्रेत्य च त्रिदिवं व्रजेत् ।।

दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितः ।। ७७ ।।

गृहेपि लिखितं यस्य सदा तिष्ठति धारितम ।।

नाग्निचोरभयं तस्य न सर्पादि भयं क्वचित ।। ७८ ।।

ज्येष्ठे मासे सिते पक्षे दशमी हस्तसंयुता ।।

संहरेत्त्रिविधं पापं बुधवारेण संयुता ।। ७९ ।।

तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः ।।

यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ।। 4.1.27.१८० ।।

सोपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः ।।

पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम ।। ८१ ।।

यथा गौरी तथा गंगा तस्माद्गौर्यास्तु पूजने ।।

यो विधिर्विहितः सम्यक्सोपि गंगाप्रपूजने ।। ८२ ।।

यथाऽहं त्वं तथा विष्णो यथा त्वं तु तथाह्युमा ।।

उमा यथा तथा गंगा चतूरूपं न भिद्यते ।। ८३ ।।

विष्णुरुद्रां तरं चैव श्रीगौर्योरंतरं तथा ।।

गंगागौर्यंतरं चैव यो ब्रूते मूढधीस्तु सः ।। ८४ ।।

इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे गंगामहिमवर्णनपूर्वक दशहरा स्तोत्रकथनंनाम सप्तविंशतितमोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२८

https://sa.wikisource.org/s/fv9
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

उमोवाच ।। ।।

किंचित्प्रष्टुमना नाथ स्वसंदेहापनुत्तये ।।

वद खेदो यदि न ते त्रिकालज्ञानकोविद ।। १ ।।

तदा भगीरथो राजा क्व क्व भागीरथी तदा ।।

यदा विष्णुस्तपस्तेपे चक्रपुष्करिणी तटे ।। २ ।।

।। शिव उवाच ।। ।।

संदेहोऽत्र न कर्तव्यो विशालाक्षि सदामले ।।

श्रुतौ स्मृतौ पुराणेषु कालत्रयमुदीर्यते ।। ।। ३ ।।

भूतं भावि भवच्चापि संशयं मा वृथा कृथाः ।।

इत्युक्त्वा पुनराहेशो गंगामाहात्म्यमुत्तमम् ।।४।।

।। अगस्त्य उवाच ।।

पार्वतीनंदन पुनर्द्युनद्याः परितो वद ।।

महिमोक्तो हरौ यद्वद्देवदेवेन वै तदा ।। ५ ।।

स्कंद उवाच ।।

**मुन**ऽत्र मैत्रावरुणे यथा देवेन भाषितम् ।।

शृणु त्रिपथगामिन्या माहात्म्यं पातकापहम् ।।६।।

त्रिस्रोतसं समासाद्य सकृत्पिंडान्ददाति यः ।।

उद्धृताः पितरस्तेन भवांभोधेस्तिलोदकैः ।। ७ ।।

यावंतश्च तिला मर्त्यैर्गृहीता पितृकर्मणि।।

तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ।। ८ ।।

देवाः सपितरो यस्माद्गंगायां सर्वदा स्थिताः ।।

आवाहनं विसर्गं च तेषां तत्र ततो नहि ।। ९ ।।

पितृवंशे मृता ये च मातृवंशे तथैव च ।।

गुरु श्वशुर बंधूनां ये चान्ये बांधवा मृताः ।। 4.1.28.१० ।।

अजातदंता ये केचिद्ये च गर्भे प्रपीडिताः ।।

अग्निविद्युच्चोरहता व्याघ्रदंष्ट्रिभिरेव च ।।११ ।।

उद्बंधन मृता ये च पतिता आत्मघातकाः ।।

आत्मविक्रयिणश्चोरा ये तथाऽयाज्ययाजकाः ।। १२ ।।

रसविक्रयिणो ये च ये चान्ये पापरोगिणः ।।

अग्निदा गरदाश्चैव गोघ्नाश्चैव स्ववंशजाः ।। १३ ।।

असिपत्रवने ये च कुंभीपाके च ये गताः ।।

रौरवेप्यंधतामिस्रे कालसूत्रे च ये गताः ।।१४।।

जात्यंतरसहस्रेषु भ्राम्यंते ये स्वकर्मभिः ।।

ये तु पक्षिमृगादीनां कीटवृक्षादि वीरुधाम् ।। १५ ।।

योनिं गतास्त्वसंख्याताः संख्यातानामशोभनाः ।।

प्रापिता यमलोकं तु सुघोरैर्यमकिंकरैः ।। १६ ।।

येऽबांधवा बांधवा वा येऽन्यजन्मनि बांधवाः ।।

येपि चाज्ञातनामानो ये चापुत्राः स्वगोत्रजाः ।। १७ ।।

विषेण च मृता वै ये ये वै शृंगिभिराहताः ।।

कृतघ्नाश्च गुरुघ्नाश्च ये च मित्रद्रुहस्तथा ।। १८ ।।

स्त्री बालघातका ये च ये च विश्वासघातकाः ।।

असत्यहिंसानिरता सदा पापरताश्च ये ।। १९ ।।

अश्वविक्रयिणो ये च परद्रव्यहराश्च ये ।।

अनाथाः कृपणा दीना मानुष्यं प्राप्तुमक्षमाः ।। 4.1.28.२० ।।

तर्पिता जाह्नवीतोयैर्नरेण विधिना सकृत् ।।

प्रयांति स्वर्गतिं तेपि स्वर्गिणो मुक्तिमाप्नुयुः ।।२१।।

एतान्मंत्रान्समुच्चार्य यः कुर्यात्पितृतर्पणम् ।।

श्राद्धं पिंडप्रदानं च स विधिज्ञ इहोच्यते ।। २२।।

कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानिचित् ।।

तानि सर्वाणि सेवंते काश्यामुत्तरवाहिनीम् ।। २३ ।।

स्वःसिंधुः सर्वतः पुण्या ब्रह्महत्यापहारिणी ।।

काश्यां विशेषतो विष्णो यत्र चोत्तरवाहिनी ।। २४ ।।

गायंति गाथामेतां वै दैवर्षिपितरोगणाः ।।

अपि दृग्गोचरा नः स्यात्काश्यामुत्तरवाहिनी ।।२५।।

यत्रत्यामृतसंतृप्तास्तापत्रितयवर्जिताः ।।

स्याम त्वमृतमेवाद्धा विश्वनाथप्रसादतः ।। २६ ।।

गंगैव केवला मुक्त्यै निर्णीता परितो हरे ।।

अविमुक्ते विशेषेण ममाधिष्ठानगौरवात् ।। २७ ।।

ज्ञात्वा कलियुगं घोरं गंगाभक्तिः सुगोपिता ।।

न विंदतिं जना गंगां मुक्तिमागैर्कदायिकाम् ।। २८ ।।

अनेकजन्मनियुतं भ्राम्यमाणस्तु योनिषु ।।

निर्वृतिं प्राप्नुयात्कोत्र जाह्नवीभजनं विना ।। २९ ।।

नराणामल्पबुद्धीनामेनो विक्षिप्तचेतसाम् ।।

गंगेव परमं विष्णो भेषजं भवरोगिणाम् ।। 4.1.28.३० ।।

खंडस्फुटितसंस्कारं गंगातीरे करोति यः ।।

मम लोके चिरं कालं तस्याक्षय सुखं हरे।। ३१।।

गंतुमुद्दिश्य यो गंगां परार्थस्वार्थमेव वा ।।

न गच्छति परं मोहात्स पतेत्पितृभिः सह ।। ३२ ।।

सर्वाणि येषां गांगेयैस्तोयैः कृत्यानि देहिनाम् ।।

भूमिस्था अपि ते मर्त्या अमर्त्या एव वै हरे ।। ३३ ।।

चरमेपि वयोभागे स्वःसिंधुं यो निषेवते ।।

कृत्वाप्येनांसि बहुशः सोपि यायाच्छुभां गतिम् ।।३४।।

यावदस्थि मनुष्याणां गंगातोयेषु तिष्ठति ।।

तावदब्दसहस्राणि स्वर्गलोके महीयते।।३५।।

विष्णुरुवाच ।। ।।

देवदेवजगन्नाथ जगतां हितकृत्प्रभो ।।

कीकसं चेत्पतेद्दैवाद्दुर्वृत्तस्य दुरात्मनः ।।३६।।

जले द्युनद्या निष्पापे कथं तस्य परा गतिः ।।

अपमृत्यु विपन्नस्य तदीश विनिवेद्यताम् ।। ३७ ।।

।। महेश्वर उवाच ।। ।।

अत्रार्थे कथयिष्यामि पुरावृत्तमधोक्षज ।।

शृणुष्वैकमना विष्णो वाहीकस्य द्विजन्मनः ।। ३८ ।।

पुरा कलिंगविषये द्विजो लवणविक्रयी ।।

संध्यास्नानविहीनश्च वेदाक्षरविवर्जितः ।। ३९ ।।

वाहीको नामतो यज्ञसूत्रमात्रपरिग्रहः ।।

परिग्रहश्च तस्यासीत्कौविंदी विधवा नवा ।। 4.1.28.४० ।।

दुर्भिक्षपीडितेनाथ वृषलीपतिना विना ।।

प्राणाधारं तदा तेन देशाद्देशांतरं ययौ ।। ४१ ।।

मध्येऽथ दंडकारण्यं क्षुत्क्षामः संगवर्जितः ।।

व्याघ्रेण घातितस्तत्र नरमांसप्रियेण सः ।। ४२ ।।

तस्य वामपदं गृध्रो गृहीत्वोदपतत्ततः ।।

मांसाशिनाऽन्य गृध्रेण तस्य युद्धमभूद्दिवि ।। ४३ ।।

गृध्रयोरामिषं गृध्न्वोः परस्परजयैषिणोः ।।

अवापतत्पादगुल्फं कंकचंचुपुटात्तदा ।। ४४ ।।

तस्य वाहीक विप्रस्य व्याघ्रव्यापादितस्य ह ।।

मध्ये गंगं दैवयोगादपतद्द्वंद्वकारिणोः ।। ४५ ।।

यदैव हतवान्द्वीपी तं वाहीकमरण्यगम् ।।

तस्मिन्नेव क्षणे बद्धः स पाशैः क्रूरकिंकरैः ।। ४६ ।।

कशाभिर्घातितोत्यंतमाराभिः परितोदितः ।।

वमन्रुधिरमास्येन नीतस्तैः स यमाग्रतः ।। ४७।।

आपृच्छि धर्मराजेन चित्रगुप्तोथ मापते ।।

धर्माधर्मं विचार्यास्य कथयाशु द्विजन्मनः ।। ४८ ।।

वैवस्वतेन पृष्टोथ चित्रगुप्तो विचित्रधीः ।।

सर्वदा सर्वजंतूनां वेदिता सर्वकर्मणाम् ।। ४९ ।।

जगाद यमुनाबंधुं वाहीकस्य द्विजन्मनः ।।

जन्मकर्मदिनारभ्य दुर्वृत्तस्य शुभेतरम् ।। 4.1.28.५० ।।

चित्रगुप्त उवाच ।। ।।

गर्भाधानादिकं कर्म प्राक्कृतं नास्य केनचित् ।।

जातकर्मकृतं नास्य पित्राऽज्ञानवता हरे ।। ५१ ।।

गर्भैनः शमने हेतुः समस्तायुः सुखप्रदम् ।।
एकादशेह्नि नामास्य न कृतं विधिपूर्वकम् ।।५२।।
ख्यातः स्याद्येन विधिना सर्वत्र विधिपावनम् ।।
नाकार्षीन्निर्गमं चास्य चतुर्थे मासि मंदधीः ।।५३।।
जनकः शुभतिथ्यादौ विदेशगमनापहम् ।।
षष्ठेऽन्नप्राशनंमासि न कृतं विधिपूर्वकम् ।। ५४ ।।
सर्वदा मिष्टमश्नाति कर्मणा येन भास्करे ।।
न चूडाकरणं चास्य कृतमब्दे यथाकुलम् ।। ५५ ।।
कर्मणा येन केशाः स्युः स्निग्धाः कुसुमवर्षिणः ।।
नाकारि कर्णवेधोस्य जनित्रा समये शुभे ।। ५६ ।।
सुवर्णग्राहिणौ येन कर्णौ स्यातां च सुश्रुती ।।
मौंजीबंधोप्यभूदस्य व्यतीतेब्देऽष्टमे हरे ।।
ब्रह्मचर्याभिवृद्ध्यै यो ब्रह्मग्रहणहेतुकः ।। ५७ ।।
मौंजीमोक्षणवार्तापि कृता नास्य जनुःकृता ।।
गार्हस्थ्यं प्राप्यते यस्मात्कर्मणोऽनंतरं वरम् ।। ५८ ।।
यथाकथंचिदूढाऽथ पत्नी त्यक्तकुलाध्वगा ।।
वृषलीपतिना तेन परदारापहारिणा ।।५९।।
आरभ्य पंचमाद्वर्षात्परस्वस्यापहारकः ।।
अभूदेष दुराचारो दुरोदरपरायणः ।। 4.1.28.६० ।।
रुमायां[1] वसताऽनेन हतागौरेकवार्षिकी ।। 1.लवणाकरे भूप्रदेशे
एकदा दृढदंडेन लिहंती लवणं मृता ।। ६१ ।।
जननीं पादपातेन बहुशोऽसावताडयत् ।।
कदाचिदपि नो वाक्यं पितुः कृतमनेन वै ।। ६२ ।।
विषं भक्षितवानेष बहुशः कलहप्रियः ।।
जनोपतापशीलोसौ कृतोदरविदारणः ।। ५३ ।।
धत्तूरकरवीरादि बहुधोपविषाणि च ।।
क्रीडाकलहमात्रेण भक्षयच्चैष दुर्मतिः ।। ६४ ।।
दग्धोसावग्निना सौरे श्वभिश्च कवलीकृतः ।।

शृंगिभिः परितः प्रोतो विषाणाग्रैरसौ बहु ।। ६५ ।।

दंदशूकैर्भृशं दष्टो दुष्टः शिष्टैर्विगर्हितः ।।

काष्ठेष्टलोष्टैः पापिष्ठः कृतानिष्टः सदात्मनः ।। ६६ ।।

आस्फालितं शिरोनेनासकृच्चापि दुरात्मना ।।

यदर्च्यते सदा सद्भिरुत्तमांगमनेकधा ।। ६७ ।।

असौ हि ब्राह्मणो मंदो गायत्रीमपिवेदन ।।

कामतो मत्स्यमांसानि जग्धान्येतेन दुर्धिया ।। ६८ ।।

आत्मार्थं पायसमसौ पर्यपाक्षीदनेकधा ।।

लाक्षालवणमांसानां सपयोदधिसर्पिषाम् ।।६९।।

विषलोहायुधानां च दासीगोवाजिनामपि ।।

विक्रेताऽसौ सदा मूढस्तथा वै केशचर्मणाम् ।। 4.1.28.७० ।।

शूद्रान्न परिपुष्टांगः पर्वण्यहनि मैथुनी ।।

पराङ्मुखो दैवपित्र्यकर्मण्येष दुरात्मवान् ।। ७१ ।।

पक्षिणो घातितानेन मृगाश्चापि परः शतम् ।।

अकारण द्रुमच्छेदी सदा निर्दयमानसः ।। ७२ ।।

उद्वेगजनको नित्यं निजबंधुजनेष्वपि ।।

असत्यवादी सततं सदा हिंसापरायणः ।। ७२ ।।

अदत्तदानः पिशुनः शिश्नोदरपरायणः ।।

किं बहूक्तेन रविज साक्षात्पातक मूर्तिमान् ।। ७४ ।।

रौरवेप्यंधतामिस्रे कुंभीपाकेऽतिरौरवे ।।

कालसूत्रे कृमिभुजि पूयशोणितकर्दमे ।। ७५ ।।

असिपत्रवने घोरे यंत्रपीडे सुदंष्ट्रके ।।

अधोमुखे पूतिगंधे विष्ठागर्त्तेष्वभोजने ।।७६।।

सूचीभेद्येऽथ संदंशे लालापे क्षुरधारके ।।

प्रत्येकं नरके त्वेष पात्यतां कल्पसंख्यया ।। ७७ ।।

धर्मराजः समाकर्ण्य चित्रगुप्तमुखादिति ।।

निर्भर्त्स्य तं दुराचारं किंकरानादिदेश ह ।। ७८ ।।

भ्रू संज्ञया हृतैर्नीतः स बद्ध्वा निरयालयम् ।।

आक्रंदरावो यत्रोच्चैः पापिनां रोमहर्षणः ।। ७९ ।।

।। ईश्वर उवाच ।। ।।

यातनास्वतितीव्रासु वाहीके संस्थिते तदा ।।

तत्कालपुण्यफलदे गाङ्गेयांभसि निर्मले ।। 4.1.28.८० ।।

पतितं तद्धि गृध्रास्याद्वाहीकस्य द्विजन्मनः ।।

हरे विमानं तत्कालमापन्नं सुरसद्मतः ।। ८१ ।।

घंटावलंबितं दिव्यं दिव्यस्त्रीशतसंकुलम् ।।

आरुह्य देवयानं स दिव्यवेषधरो द्विजः ।। ८२ ।।

वीज्यमानोऽप्सरोवृंदैर्दिव्यगंधानुलेपनः ।।

जगाम स्वर्गभुवनं गंगास्थिपतनाद्धरे ।। ८३ ।।

स्कंद उवाच ।। ।।

वस्तुशक्तिविचारोयमद्भुतः कोपि कुंभज ।।

द्रवरूपेण काप्येषा शक्तिः सादाशिवी परा ।। ८४ ।।

करुणामृतपूर्णेन देवदेवेन शंभुना ।।

एषा प्रवर्तिता गंगा जगदुद्धरणाय वै ।। ८५ ।।

यथान्याः सरितो लोके वारिपूर्णाः सहस्रशः ।।

तथैषानानुमंतव्या सद्भिस्त्रिपथगामिनी।।८६।।

श्रुत्यक्षराणि निश्चित्य कारुण्याच्छंभुना मुने ।।

निर्मिता तदद्रवैरेषा गंगा गंगाधरेण वै ।। ८७ ।।

योगोपनिषदामेतं सारमाकृष्य शंकरः ।।

कृपया सर्वजंतूनां चकार सरितां वराम् ।। ८८ ।।

अकलानिधयो रात्र्यो विपुष्पाश्चैव पादपाः ।।

यथा तथैव ते देशा यत्र नास्त्यमरापगा ।। ८९ ।।

अनयाः संपदो यद्वन्मखा यद्वददक्षिणाः ।।

तद्वद्देशा दिशः सर्वा हीना गंगांभसा हरे ।। 4.1.28.९० ।।

व्योमांगणमनर्कं च नक्तेऽदीपं यथा गृहम ।।

अवेदा ब्राह्मणा यद्वद्गंगाहीनास्तथा दिशः ।। ९१ ।।

चांद्रायणसहस्रं तु यः कुर्याद्देहशोधनम् ।।

गंगामृतं पिबेद्यस्तु तयोर्गंगाबुपोऽधिकः ।। ९२ ।।

पादेनैकेन यस्तिष्ठेत्सहस्रं शरदां शतम् ।।

अब्दं गंगांबुपो यस्तु तयोर्गंगांबुपोऽधिकः ।। ९३ ।।

अवाक्छिराः प्रलंबेद्यः शतसंवत्सरान्नरः ।।

भीष्मसूवालुकातल्पशयस्तस्माद्वरो हरे ।। ९४ ।।

पापतापाभितप्तानां भूतानामिह जाह्नवी ।।

पापतापहरा यद्वद्गंगा नान्यत्तथा कलौ ।। ९५ ।।

तार्क्ष्यवीक्षणमात्रेण फणिनौ निर्विषा यथा ।।

निष्प्रभाणि तथैनांसि भागीरथ्यवलोकनात् ।। ९६ ।।

गंगातटोद्भवां मृत्स्नां यो मौलौ बिभृयान्नरः ।।

बिभर्ति सोऽर्कबिंबं वै तमोनाशाय निश्चितम् ।। ९७ ।।

व्यसनैरभिभूतस्य धनहीनस्य पापिनः ।।

गंगैव केवलं तस्य गतिरुक्ता न चान्यथा ।। ९८ ।।

श्रुताभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ।।

पुंसां वंशद्वयं गंगा तारयेन्नात्र संशयः ।। ९९ ।।

कीर्तनाद्दर्शनात्स्पर्शाद्गंगापानावगाहनात् ।।

दशोत्तरगुणा ज्ञेया पुण्यापुण्यर्द्धिनाशयोः ।। 4.1.28.१०० ।।

न सुतैर्न च वा वित्तैर्नान्येनापि सुकर्मणा ।।

तत्फलं प्राप्यते मर्त्यै गंगामाप्य यदाप्यते ।। १ ।।

जात्यंधाः पंगवस्ते वै जीवंतोप्यथ ते मृताः ।।

समर्था अपि ये गंगां न स्नायुर्मोक्षगर्भिणीम् ।। २ ।।

श्रुतिं निशामय हरे गंगामाहात्म्यभाषिणीम् ।।

विनिश्चितार्थां यां श्रुत्वा श्रयेद्गंगां नरोत्तमः ।। ३ ।।

इरावतीं मधुमतीं पयस्विनीममृतरूपामूर्जस्वतीम् ।।

त्रिदिवप्रसूतां गंगां श्रितासस्त्रिदिवं व्रजंति ।। ४ ।।

ऋषिजुष्टां विष्णुपदीं पुराणां सुपुण्यधारां मनसा हि लोके ।।

सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं संप्रयांति ।।५।।

लोकानिमान्नयति या जननीव पुत्रान्स्वर्गं सदा सर्वगुणोपपन्ना ।।

स्थानमिष्टं ब्राह्ममभीप्समानैर्गंगा सदैवात्मवशैरुपास्या ।।६।।

उस्रैर्जुष्टामिषतीं विश्वरूपामिरावतीं जनयित्रीं गुहस्य ।।

शिष्टैः सेव्याममृतां ब्रह्मकांतां गंगां श्रयेदात्मविशुद्धिकामः ।। ७ ।।

गंगायां तु नरः स्नात्वा ब्रह्मचारी समाहितः ।।

विधूतपापो भवति वाजपेयं च विंदति ।। ८ ।।

अशुभैः कर्मभिर्ग्रस्तान्मज्जमानान्महार्णवे ।।

पततो निरये गंगा संश्रितानुद्धरेत्सदा ।। ९ ।।

ब्रह्मलोकस्तु लोकानां सर्वेषामुत्तमो यथा ।।

सरितां सरसां वापि वरिष्ठा जाह्नवी तथा ।। 4.1.28.११० ।।

अन्यत्र सम्यक्संकल्प्य तपः कृत्वा समा त्रयम् ।।

यत्फलं तद्भवेद्भक्त्या गंगायां घटिकाऽर्धतः ।। ११ ।।

स्वर्गस्थस्य न सा प्रीतिर्भुंजतः सुखमक्षयम् ।।

या स्याद्गंगातटे पुंसां रात्रौ चंद्रोदये सति ।। १२ ।।

जरारोगाभिपन्नं तु कुणपं जाह्नवी जले।।

धैर्येण तृणवत्त्यक्त्वा प्रविशेदमरावतीम्।। १३।।

वार्योघैः सततं यस्याः प्लाव्यते शशिमंडलम्।।

भूयोधिकतरां शोभां बिभर्ति तदहः क्षये।। १४ ।।

आहुतस्य जले यस्याः सद्यो नश्यंति पातकम् ।।

महतः श्रेयसः प्राप्तिस्तत्क्षणादेव जायते ।।१५।।

पितृभ्यः श्रद्धया यत्र दत्तास्त्वापः स्ववंशजैः।।

प्रयच्छंति परां तृप्तिं शरदां त्रयमच्युत।। १६।।

तारयेत्क्षितियान्मर्त्यानधःस्थांश्च सरीसृपान्।।

स्वर्गे स्वर्गसदो विष्णोर्गं(?)गा त्रिपथगा ततः।। १७।।

तीर्थानामुत्तमं तीर्थं सरितामुत्तमा सरित् ।।

स्वर्गदा सर्वजंतूनां महापातकिनामपि ।। १८ ।।

अध्युष्टाः कोटयो विष्णो संति तीर्थानि सर्वतः ।।

दिवि भुव्यंतरिक्षे च जाह्नव्यां तानि कृत्स्नशः ।। १९ ।।

ज्ञात्वाज्ञात्वा च गंगायां यः पंचत्वमवाप्नुयात् ।।

अनात्मघाती स्वर्गी स्यान्नरकान्स न पश्यति ।। 4.1.28.१२० ।।

गंगैव सर्वतीर्थानि गंगैव च तपोवनम् ।।

गंगैव सिद्धिक्षेत्रं हि नात्र कार्या विचारणा ।। २१ ।।

यत्र कामफला वृक्षा मही यत्र हिरण्मयी ।।

जाह्नवी स्नायिनस्तत्र निवसंति घटोद्भव ।। २२ ।।

धेनुं भागीरथी तीरे सुशीलां च पयस्विनीम् ।।

वासोरत्नैरलंकृत्वा ब्राह्मणाय ददाति यः ।। २३ ।।

यावंति तस्या लोमानि मुने तत्संततेरपि ।।

तावद्वर्षसहस्राणि स स्वर्गसुखभुग्भवेत् ।। १२४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे गंगामहिमानामाष्टाविंशतितमोऽध्याय ।।२८।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०२९



।।। अगस्त्य उवाच ।। ।।

विना स्नानेन गंगाया नृणां जन्मनिरर्थकम् ।।

उपायांतरमस्त्यन्यद्येन स्नानफलं लभेत् ।।१।।

अशक्तानां च पंगूनामालस्योपहतात्मनाम् ।।

दूरदेशांतरस्थानां गंगास्नानं कथं भवेत् ।। २ ।।

दानं वाऽथ व्रतंवाऽथ मंत्रःस्तोत्रजपोऽथवा ।।

तीर्थांतराभिषेको वा देवतोपासनं तु वा ।। ३ ।।

यद्यस्तिकिंचित्षड्वक्त्र गंगास्नानफलप्रदम् ।।

विधानांतरमात्रेण तद्वद प्रणताय मे ।। ४ ।।

त्वत्तो न वेदस्कंदान्यो गंगागर्भ समुद्भव ।।

परं स्वर्गतरंगिण्या महिमानं महामते ।। ५ ।।

।। स्कंद उवाच ।। ।।

संति पुण्यजलानीह सरांसि सरितो मुने ।।

स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ।।६।।

दृष्टप्रत्ययकारीणि महामहिम भांज्यपि ।।

परं स्वर्गतरंगिण्याः कोट्यंशोपि न तत्र वै ।।७ ।।

अनेनैवानुमानेन बुद्ध्यस्व कलशोद्भव ।।

दध्रे गंगोत्तमांगेन देवदेवेन शंभुना।।८।।

स्नानकालेऽन्य तीर्थेषु जप्यते जाह्नवी जनैः ।।

विना विष्णुपदीं क्वान्यत्समर्थमघमोचने।।९।।

गंगास्नानफलं ब्रह्मन्गंगायामेव लभ्यते।।

यथा द्राक्षाफलस्वादो द्राक्षायामेव नान्यतः ।।4.1.29.१०।।

अस्त्युपाय इह त्वेकः स्याद्येनाविकलं फलम्।।

स्नानस्य देवसरितो महागुह्यतमो मुने।। ११।।

शिवभक्ताय शांताय विष्णुभक्तिपराय च ।।

श्रद्धालवे त्वास्तिकाय गर्भवासमुपुक्षवे ।। १२ ।।

कथनीयं न चान्यस्य कस्यचित्केनचित्क्वचित् ।।

इदं रहस्यं परमं महापातकनाशनम् ।। १३ ।।

महाश्रेयस्करं पुण्यं मनोरथकरं परम् ।।

द्युनदीप्रीतिजनकं शिवसंतोषसंतति ।। १४ ।।

नाम्नां सहस्रगंगायाः स्तवराजेषुशो भनम् ।।

जप्यानां परमं जप्यं वेदोपनिषदासमम् ।। १५ ।।

जपनीयं प्रयन्नेन मौनिना वाचकं विना ।।

शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ।। १६ ।।

स्कंद उवाच ।। ।।

ॐनमो गंगादेव्यै ।।

ॐकाररूपिण्यजराऽतुलाऽनमताऽमृतस्रवा ।।

अत्युदाराऽभयाऽशोकाऽलकनंदाऽमृताऽमला ।। १७ ।।

अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा ।।

अव्यक्तलक्षणाऽक्षोभ्या ऽनवच्छिन्नाऽपराजिता ।। १८ ।।

अनाथनाथाऽभीष्टार्थसिद्धिदाऽनंगवर्धिनी ।।

अणिमादिगुणाऽधाराग्रगण्याऽलीकहारिणी ।। १९ ।।

अचिंत्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी ।।

अद्रिराजसुताऽष्टांगयोगसिद्धिप्रदाऽच्युता ।। 4.1.29.२० ।।

अक्षुण्णशक्तिरसुदाऽनंततीर्थाऽमृतोदका ।।

अनंतमहिमाऽपाराऽनंतसौख्यप्रदाऽन्नदा ।। २१ ।।

अशेषदेवतामूर्तिरघोराऽमृतरूपिणी ।।

अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ।। २२ ।।

अशेषविघ्नसंहर्त्री त्वशेषगुणगुंफिता ।।

अज्ञानतिमिरज्योतिरनुग्रहपरायणा ।। २३ ।।

अभिरामाऽनवद्यांग्यनंतसाराऽकलंकिनी ।।

आरोग्यदाऽऽनंदवल्ली त्वापन्नार्तिविनाशिनी ।। २४ ।।

आश्चर्यमूर्तिरायुष्या ह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता ।।

आप्यायिन्याप्तविद्याऽऽख्यात्वानंदाऽऽश्वासदायिनी ।। २५ ।।

आलस्यघ्न्यापदां हंत्री ह्यानंदामृतवर्षिणी ।।

इरावतीष्टदात्रीष्टा त्विष्टापूर्तफलप्रदा ।। २६ ।।

इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा।। ।।

इज्याशीलसमिज्येष्ठा त्विंद्रादिपरिवंदिता ।। २७।।

इलालंकारमालेद्धा त्विंदिरारम्यमंदिरा ।।

इदिंदिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ।। २८ ।।

ईतिभीतिहरेड्या च त्वीडनीय चरित्रभृत् ।।

उत्कृष्टशक्तिरुत्कृष्टोडुपमंडलचारिणी ।।२९।।

उदितांबरमार्गोस्रोरगलोकविहारिणी ।।

उक्षोर्वरोत्पलोत्कुंभा उपेंद्रचरणद्रवा ।।4.1.29.३०।।

उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ।।

उद्वेगघ्न्युष्णशमनी उष्णरश्मिसुता प्रिया ।।३१।।

उत्पत्ति स्थिति संहारकारिण्युपरिचारिणी ।।

ऊर्जं वहंत्यूर्जधरोर्जावती चोर्मिमालिनी ।। ३२ ।।

ऊर्ध्वरेतःप्रियोर्ध्वाध्वा ह्यूर्मिलोर्ध्वगतिप्रदा ।।

ऋषिवृंदस्तुतर्द्धिश्च ऋणत्रयविनाशिनी ।। ३३ ।।

ऋतंभरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।।

ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी ।। ३४ ।।

एधिताऽखिलधर्मार्थात्वेकैकामृतदायिनी ।।

एधनीयस्वभावैज्या त्वेजिता शेषपातका ।। ३५ ।।

ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैंदवी द्युतिः ।।

ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ।। ३६ ।।

ओष्ठामृतौन्नत्यदात्री त्वौषधं भवरोगिणाम् ।।

औदार्यचंचुरौपेंद्री त्वौग्रीह्यौमेयरूपिणी ।। ३७ ।।

अंबराध्ववहांऽवष्ठां वरमालांबुजेक्षणा ।।

अंबिकांबुमहायोनिरंधोदांधकहारिणी ।। ३८ ।।

अंशुमालाह्यंशुमती त्वंगीकृतषडानना ।।

अंधतामिस्रहंत्र्यंधुरं जनाह्यंजनावती ।। ३९ ।।

कल्याणकारिणी काम्या कमलोत्पलगंधिनी ।।

कुमुद्वती कमलिनी कांतिः कल्पितदायिनी ।। 4.1.29.४० ।।

कांचनाक्षी कामधेनुः कीर्तिकृत्क्लेशनाशिनी ।।

क्रतुश्रेष्ठा क्रतुफला कर्मबंधविभेदिनी ।। ४१ ।।

कमलाक्षी क्लमहरा कृशानुतपनद्युतिः ।।

करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ।। ४२ ।

कामरूपाक्रियाशक्तिः कमलोत्पलमालिनी ।।

कूटस्था करुणाकांता कर्मयाना कलावती ।। ४३ ।।

कमलाकल्पलतिका कालीकलुषवैरिणी ।।

कमनीयजलाकम्रा कपर्दिसुकपर्दगा ।। ४४ ।।

कालकूटप्रशमनी कदंबकुसुमप्रिया ।।

कालिंदी केलिललिता कलकल्लोलमालिका ।। ४५ ।।

क्रांतलोकत्रयाकंडूः कंडूतनयवत्सला ।।

खड्गिनी खड्गधाराभा खगा खंडेंदुधारिणी ।। ४६ ।।

खेखेलगामिनी खस्था खंडेंदुतिलकप्रिया।।

खेचरीखेचरीवंद्या ख्यातिः ख्यातिप्रदायिनी ।।४७।।

खंडितप्रणताघौघा खलबुद्धिविनाशिनी ।।

खातैनः कंदसंदोहा खड्गखट्वांग(?) खेटिनी।। ।। ४८ ।।

खरसंतापशमनी खनिः पीयूषपाथसाम् ।।

गंगा गंधवती गौरी गंधर्वनगरप्रिया ।। ४९ ।।

गंभीरांगी गुणमयी गतातंका गतिप्रिया ।।

गणनाथांबिका गीता गद्यपद्यपरिष्टुता ।। 4.1.29.५० ।।

गांधारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।।

गोमती गुह्यविद्यागौर्गोप्त्री गगनगामिनी ।। ५१ ।।

गोत्रप्रवर्धिनी गुण्या गुणातीता गुणाग्रणीः ।।

गुहांबिका गिरिसुता गोविंदांघ्रिसमुद्भवा ।। ५२ ।।

गुणनीयचरित्रा च गायत्री गिरिशप्रिया ।।

गूढरूपा गुणवती गुर्वी गौरववर्धिनी ।। ५३ ।।

ग्रहपीडाहरा गुंद्रा गरघ्नी गानवत्सला ।।

घर्महंत्री घृतवती घृततुष्टिप्रदायिनी ।। ५४ ।।

घंटारवप्रिया घोराऽघौघविध्वंसकारिणी ।।

घ्राणतुष्टिकरी घोषा घनानंदा घनप्रिया ।।५५।।

घातुका घूर्णितजला घृष्टपातकसंततिः ।।

घटकोटिप्रपीतापा घटिताशेषमंगला ।। ५६ ।।

घृणावती घृणनिधिर्घस्मरा घूकनादिनी ।।

घुसृणा पिंजरतनुर्घर्घरा घर्घरस्वना ।।५७।।

चंद्रिका चंद्रकांतांबुश्चंचदापा चलद्युतिः।।

चिन्मयी चितिरूपा च चंद्रायुतशनानना ।। ५८ ।।

चांपेयलोचना चारुश्चार्वंगी चारुगामिनी ।।

चार्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ।। ५९ ।।

चंपश्चंदनशुच्यंबुश्चर्चनीया चिरस्थिरा ।।

चारुचंपकमालाढ्या चमिताशेष दुष्कृता ।। 4.1.29.६० ।।

चिदाकाशवहाचिंत्या चंचच्चामरवीजिता ।।

चोरिताशेषवृजिना चरिताशेषमंडला ।। ६१ ।।

छेदिताखिलपापौघा छद्मघ्नी छलहारिणी ।।

छन्नत्रिविष्टप तला छोटिताशेषबंधना ।। ६२ ।।

छुरितामृतधारौघा छिन्नैनाश्छंदगामिनी ।।

छत्रीकृतमरालौघा छटीकृतनिजामृता ।।६३।।

जाह्नवी ज्या जगन्माता जप्या जंघालवीचिका ।।

जया जनार्दनप्रीता जुषणीया जगद्धिता ।।६४।।

जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी ।।

जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी ।। ।। ६५ ।।

जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।।

जगदानंदजननी जलजा जलजेक्षणा ।। ६६ ।।

जनलोचनपीयूषा जटातटविहारिणी ।।

जयंती जंजपूकघ्नी जनितज्ञानविग्रहा ।। ६७ ।।

झल्लरी वाद्यकुशला झलज्झालजलावृता ।।

झिंटीशवंद्या झांकारकारिणी झर्झरावती ।। ६८ ।।

टीकिताशेषपाताला टंकिकैनोद्रिपाटने ।।

टंकारनृत्यत्कल्लोला टीकनीयमहातटा ।।६९।।

डंबरप्रवहाडीन राजहंसकुलाकुला।।

डमड्डमरुहस्ता च डामरोक्त महांडका ।।4.1.29.७०।।

ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ।।

ढुंढिविघ्नेशजननी ढणड्ढुणितपातका ।।७१।।

तर्पणीतीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ।।

त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवंदिता।। ७२।।

तापत्रितयसंहर्त्री तेजोबलविवर्धिनी ।।

त्रिलक्ष्या तारणी तारा तारापतिकरार्चिता ।। ७३ ।।

त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।।

तृष्णाछेत्त्री तीर्थमाता त्त्रिविक्रमपदोद्भवा।। ७४ ।।

तपोमयी तपोरूपा तपःस्तोम फलप्रदा ।।

त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ।। ७५ ।।

त्रैलोक्यसुंदरी तुर्या तुर्यातीतपदप्रदा ।।

त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्यातिमिरचंद्रिका ।। ७६ ।।

तेजोगर्भा तपःसारा त्रिपुरारि शिरोगृहा ।।

त्रयीस्वरूपिणी तन्वी तपनांगजभीतिनुत् ।।७७।।

तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा ।।

तुलाविरहिता तीव्रपापतूलतनूनपात् ।। ।। ७८ ।।

दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमंडना ।।

दीक्षावतीदुरावाप्या द्राक्षामधुरवारिभृत् ।। ७९ ।।

दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत् ।।

दैन्यहृद्दुरितघ्नी च दानवारि पदाब्जजा ।। 4.1.29.८० ।।

दंदशूकविषघ्नी च दारिताघौघसंततिः ।।

द्रुतादेव द्रुमच्छन्ना दुर्वाराघविघातिनी ।। ८१ ।।

दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।।

देवदेवप्रियादेवी दिक्पालपददायिनी ।। ८२ ।।

दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्जिता ।।

दुग्धांबुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ।। ८३ ।।

द्युनदी दीनशरणं देहिदेहनिवारिणी ।।

द्राघीयसी दाघहंत्री दितपातकसंततिः ।। ८४ ।।

दूरदेशांतरचरी दुर्गमा देववल्लभा।।

दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ।। ८५ ।।

दुरासदा दानशीला द्राविणी द्रुहिणस्तुता ।।

दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ।।८६।।

दानसारा दयासारा द्यावाभूमिविगाहिनी।।

दृष्टादृष्टफलप्राप्तिर्देवतावृंदवंदिता।।।। ८७ ।।

दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा ।।

दंडयित्री दंडनीतिर्दुष्टदंडधरार्चिता ।। ८८ ।।

दुरोदरघ्नी दावार्चिर्द्रवद्रव्यैकशेवधिः ।।

दीनसंतापशमनी दात्री दवथुवैरिणी ।। ८९ ।।

दरीविदारणपरा दांता दांतजनप्रिया ।।

दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी ।। 4.1.29.९० ।।

धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा ।।

धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ।। ९१ ।।

धर्मोर्मिवाहिनी धुर्या धात्री धात्रीविभूषणम् ।।

धर्मिणी धर्मशीला च धन्विकोटिकृतावना ।। ९२ ।।

ध्यातृपापहरा ध्येया धावनी धूतकल्मषा ।।

धर्मधारा धर्मसारा धनदा धनवर्धिनी ।। ९३ ।।

धर्माधर्मगुणच्छेत्त्री धत्तूरकुसुमप्रिया ।।

धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ।। ९४ ।।

धर्मलभ्या धर्मजला धर्मप्रसवधर्मिणी ।।

ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ।। ९५ ।। ?

धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती।।

नंदा निर्वाणजननी नंदिनी नुन्नपातका ।। ।। ९६ ।।

निषिद्धविघ्ननिचया निजानंदप्रकाशिनी ।।

नभोंगणचरी नूतिर्नम्या नारायणीनुता ।। ९७ ।।

निर्मला निर्मलाख्याना नाशिनीतापसंपदाम् ।।

नियता नित्यसुखदा नानाश्चर्यमहानिधिः ।। ९८ ।।

नदीनदसरोमाता नायिका नाकदीर्घिका ।।

नष्टोद्धरणधीरा च नंदनानंददायिनी ।। ९९ ।।

निर्णिक्ताशेषभुवना निःसंगा निरुपद्रवा ।।

निरालंबा निष्प्रपंचा निर्णाशितमहामला ।। 4.1.29.१०० ।।

निर्मलज्ञानजननी निःशेषप्राणितापहृत् ।।

नित्योत्सवा नित्यतृप्ता नमस्कार्या निरंजना ।। १ ।।

निष्ठावती निरातंका निर्लेपा निश्चलात्मिका ।।

निरवद्या निरीहा च नीललोहितमूर्धगा ।। २ ।।

नंदिभृंगिगणस्तुत्या नागानंदा नगात्मजा ।।

निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ।। ३ ।।

पुण्यप्रदा पुण्यगर्भा पुण्या पुण्यतरंगिणी ।।

पृथुः पृथुफला पूर्णा प्रणतार्तिप्रभंजिनी ।। ४ ।।

प्राणदा प्राणिजननी प्राणेशी प्राणरूपिणी ।।

पद्मालया पराशक्तिः पुरजित्परमप्रिया ।। ५ ।।

परापरफलप्राप्तिः पावनी च पयस्विनी ।।

परानंदा प्रकृष्टार्था प्रतिष्ठापालनी परा ।। ६ ।।

पुराणपठिता प्रीता प्रणवाक्षररूपिणी ।।

पार्वतीप्रेमसंपन्ना पशुपाशविमोचनी ।। ७ ।।

परमात्मस्वरूपा च परब्रह्मप्रकाशिनी ।।

परमानंदनिष्पंदा प्रायश्चित्तस्वरूपिणी ।। ८ ।।

पानीयरूपनिर्वाणा परित्राणपरायणा ।।

पापेंधनदवज्वाला पापारिः पापनामनुत् ।। ९ ।।

परमैश्वर्यजननी प्रज्ञा प्राज्ञा परापरा ।।

प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतस्रवा ।। 4.1.29.११० ।।

प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता ।।

पिनाकिपरमप्रीता पग्मेष्ठिकमंडलुः ।। ११ ।।

पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी ।।

परर्द्धिदा पुष्टिकरी पथ्या पूर्तिः प्रभावती ।। १२ ।।

पुनाना पीतगर्भघ्नी पापपर्वतनाशिनी ।।

फलिनी फलहस्ता च फुल्लांबुजविलोचना ।। १३ ।।

फालितैनोमहाक्षेत्रा फणिलोकविभूषणम् ।।

फेनच्छलप्रणुन्नैनाः फुल्लकैरवगंधिनी ।। १४ ।।

फेनिलाच्छांबुधाराभा फुडुच्चाटितपातका ।।

फाणितस्वादुसलिला फांटपथ्यजलाविला ।। १५ ।।

विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया ।।

ब्रह्मण्या ब्रह्मकृद्ब्राह्मी ब्रह्मिष्ठा विमलोदका ।। १६ ।।

विभावरी च विरजा विक्रांतानेकविष्टपा ।।

विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया ।। १७ ।।

विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी ।।

विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा ।। १८ ।।

विद्यावेगवती वंद्या बृंहणी ब्रह्मवादिनी ।।

वरदा विप्रकृष्टा च वरिष्ठा च विशोधनी ।। १९ ।।

विद्याधरी विशोका च वयोवृंदनिषेविता ।।

बहूदका बलवती व्योमस्था विबुधप्रिया ।। 4.1.29.१२० ।।

वाणी वेदवती वित्ता ब्रह्मविद्यातरंगिणी ।।

ब्रह्मांडकोटिव्याप्तांबुर्ब्रह्महत्यापहारिणी ।। २१ ।।

ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्धिनी ।।

विलासिसुखदा वैश्या व्यापिनी च वृषारणिः ।। २२ ।।

वृषांकमौलिनिलया विपन्नार्तिप्रभंजिनी ।।

विनीता विनता ब्रध्नतनया विनयान्विता ।। २३ ।।

विपंचीवाद्यकुशला वेणुश्रुतिविचक्षणा ।।

वर्चस्करी बलकरी वलोन्मूलितकल्मषा ।। २४ ।।

विपाप्मा विगतातंका विकल्पपरिवर्जिता ।।

वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबंधना ।। २५ ।।

व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत् ।।

वसुधारा वसुमती विचित्रांगी विभावसुः ।। २६ ।।

विजया विश्वबीजं च वामदेवी वरप्रदा ।।

वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी ।।२७ ।।

भव्या भोगवती भद्रा भवानी भूतभाविनी ।।

भूतधात्री भयहरा भक्तदारिद्र्यघातिनी ।। २८ ।।

भुक्तिमुक्तिप्रदाभेशी भक्तस्वर्गापवर्गदा ।।

भागीरथी भानुमती भाग्यभोगवती भृतिः ।। २९ ।।

भवप्रिया भवद्वेष्टी भूतिदा भूतिभूषणा ।।

भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ।। 4.1.29.१३० ।।

भ्रांतिज्ञानप्रशमनी भिन्नब्रह्मांडमंडपा ।।

भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरी ।। ३१ ।।

भंजितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।।

भिक्षणीया भिक्षुमाता भावाभावस्वरूपिणी ।। ।। ३२ ।।

मंदाकिनी महानंदा माता मुक्तितंरगिणी ।।

महोदया मधुमती महापुण्या मुदाकरी ।। ३३ ।।

मुनिस्तुता मोहहंत्री महातीर्था मधुस्रवा ।।

माधवी मानिनी मान्या मनोरथपथातिगा ।। ३४ ।।

मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता ।।

महावेगवतीमेध्या महामहिमभूषणा ।। ३५ ।।

महाप्रभावा महती मीनचंचललोचना ।।

महाकारुण्यसंपूर्णा महर्द्धिश्च महोत्पला ।। ३६ ।।

मूर्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा ।।

मुक्ताकलापनेपथ्या मनोनयननंदिनी ।। ३७ ।।

महापातकराशिघ्नी महादेवार्धहारिणी ।।

महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी ।। ३८।।

महापुण्योदयप्राप्या मायातिमिरचंद्रिका।।

महाविद्या महामाया महामेधा महौषधम् ।। ३९ ।।

मालाधरी महोपाया महोरगविभूषणा ।।

महामोहप्रशमनी महामंगलमंगलम्।। 4.1.29.१४०।।

मार्तंडमंडलचरी महालक्ष्मीर्मदोज्झिता ।।

यशस्विनी यशोदा च योग्या युक्तात्मसेविता ।। ४१ ।।

योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता ।।

यज्ञेशी यज्ञफलदा यजनीया यशस्करी ।।४२।।

यमिसेव्या योगयोनिर्योगिनी युक्तबुद्धिदा ।।

योगज्ञानप्रदा युक्ता यमाद्यष्टांगयोगयुक् ।।४३।।

यंत्रिताघौघसंचारा यमलोकनिवारिणी।।

यातायातप्रशमनी यातनानामकृंतनी ।।४४।।

यामिनीशहिमाच्छोदा युगधर्मविवर्जिता ।।

रेवतीरतिकृद्रम्या रत्नगर्भा रमा रतिः ।।४५।।

रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी।।

रत्नप्रासादगर्भा च रमणीयतरंगिणी।।४६।।

रत्नार्ची रुद्ररमणी रागद्वेषविनाशिनी।।

रमा रामा रम्यरूपा रोगिजीवातुरूपिणी।।४७।।

रुचिकृद्रोचनी रम्या रुचिरा रोगहारिणी ।।

राजहंसा रत्नवती राजत्कल्लोलराजिका ।।४८।।

रामणीयकरेखा च रुजारी रोगरोषिणी।।

राकारंकार्तिशमनी रम्या रोलंबराविणी ।। ४९ ।।

रागिणीरंजितशिवा रूपलावण्यशेवधिः ।।

लोकप्रसूर्लोकवंद्या लोलत्कल्लोलमालिनी ।। 4.1.29.१५० ।।

लीलावती लोकभूमिर्लोकलोचनचंद्रिका ।।

लेखस्रवंती लटभा लघुवेगा लघुत्वहृत् ।। ५१ ।।

लास्यत्तरंगहस्ता च ललिता लयभंगिगा ।।

लोकबंधुर्लोकधात्री लोकोत्तरगुणोर्जिता ।। ५२ ।।.

लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता ।।

लीलालक्षितनिर्वाणा लावण्यामृतवर्षिणी ।। ५३ ।।

वैश्वानरी वासवेड्या वंध्यत्वपरिहारिणी ।।

वासुदेवांघ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ।। ५४ ।।

शुभावती शुभफला शांतिः शांतनुवल्लभा ।।

शूलिनी शैशववयाः शीतलाऽमृतवाहिनी ।। ५५ ।।

शोभावती शीलवती शोषिताशेषकिल्बिषा ।।

शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ।। ५६ ।।

शक्तिः शशांकविमला शमनस्वसृसंमता ।।

शमा शमनमार्गघ्नी शितिकंठमहाप्रिया ।।५७।।

शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।।

श्रीनिवास श्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता ।। ।। ५८ ।।

शुद्धविद्या शुभावर्ता श्रुतानंदा श्रुतिस्तुतिः ।।

शिवेतरघ्नी शबरी शांबरीरूपधारिणी ।। ५९ ।।

श्मशानशोधनी शांता शश्वच्छतधृतिष्टुता ।।

शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ।। 4.1.29.१६० ।।

शंसनीयचरित्रा च शातिताशेषपातका ।।

षड्गुणैश्वर्यसंपन्ना षडंगश्रुतिरूपिणी ।। ६१ ।।

षंढताहारि सलिलाष्ट्यायन्नदनदीशता ।।

सरिद्वरा च सुरसा सुप्रभा सुरदीर्घिका ।। ६२ ।।

स्वःसिंधुः सर्वदुःखघ्नी सर्वव्याधिमहौषधम् ।।

सेव्यासिद्धिः सती सूक्तिः स्कंदसूश्च सरस्वती ।।६३।।

संपत्तरंगिणी स्तुत्या स्थाणुमौलिकृतालया ।।

स्थैर्यदा सुभगा सौख्या स्त्रीषु सौभाग्यदायिनी ।। ६४ ।।

स्वर्गनिःश्रेणिका सूक्ष्मा स्वधा स्वाहा सुधाजला ।।

समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी ।। ६५ ।।

स्मृताघहारिणी सीता संसाराब्धितरंडिका ।।

सौभाग्यसुंदरी संध्या सर्वसारसमन्विता ।। ६६ ।।

हरप्रिया हृपीकेशी हंसरूपा हिरण्मयी ।।

हृताघसंघा हितकृद्धेला हेलाघगर्वहृत् ।।६७।।

क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा ।।

इति नामसहस्रं हि गंगायाः कलशोद्भव ।।

कीर्तयित्वा नरः सम्यग्गंगास्नानफलं लभेत् ।।६८।।

सर्वपापप्रशमनं सर्वविघ्न विनाशनम् ।।

सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ।।६९।।

श्रद्धयाभीष्टफलदं चतुर्वर्गसमृद्धिकृत् ।।

सकृज्जपादवाप्नोति ह्येकक्रतुफलंमुने ।।4.1.29.१७०।।

सर्वतीर्थेषु यः स्नातः सर्वयज्ञेषु दीक्षितः ।।

तस्य यत्फलमुद्दिष्टं त्रिकालपठनाच्च तत् ।।७१।।

सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषु वाडव ।।

तत्फलं समवाप्नोति त्रिसंध्यं नियतः पठन् ।। ७२ ।।

स्नानकाले पठेद्यस्तु यत्रकुत्र जलाशये ।।

तत्र सन्निहिता नूनं गंगा त्रिपथगा मुने ।। ७३ ।।

श्रेयोर्थी लभते श्रेयो धनार्थी लभते धनम् ।।

कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ।।७४।।

वर्षं त्रिकालपठनाच्छ्रद्धया शुचिमानसः ।।

ऋतुकालाभिगमनादपुत्रः पुत्रवान्भवेत् ।। ७५ ।।

नाकालमरणं तस्य नाग्निचोराहि साध्वसम् ।।

नाम्नां सहस्रं गंगाया यो जपेच्छ्रद्धया मुने ।। ७६ ।।

गंगा नाम सहस्रं तु जप्त्वा ग्रामांतरं व्रजेत् ।।

कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाविशेत् ।।७७।।

तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा ।।

यदा जप्त्वा व्रजेदेतत्स्तोत्रं ग्रामांतरं नरः ।। ७८।।

आयुरारोग्यजननं सर्वोपद्रवनाशनम्।।

सर्वसिद्धिकरं पुंसां गंगानामसहस्रकम् ।। ७९ ।।

जन्मांतर सहस्रेषु यत्पापं सम्यगर्जितम् ।।

गंगानामसहस्रस्य जपनात्तत्क्षयं व्रजेत् ।। 4.1.29.१८० ।।

ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।।

तत्संयोगी भ्रूणहंता मातृहा पितृहा मुने ।। ८१ ।।

विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।।

अग्निदो गोवधकरो गुरुद्रव्यापहारकः ।। ८२ ।।

महापातकयुक्तोपि संयुक्तोप्युपपातकैः ।।

मुच्यते श्रद्धया जप्त्वा गंगा नाम सहस्रकम् ।। ८३ ।।

आधिव्याधिपरिक्षिप्तो घोर ताप परिप्लुतः ।।

मुच्यते सर्वदुःखेभ्यः स्तवस्यास्यानुकीर्तनात् ।। ८४ ।।

संवत्सरेण युक्तात्मा पठन्भक्तिपरायणः ।।

अभीप्सितां लभेत्सिद्धिं सर्वैः पापैः प्रमुच्यते ।। ८५ ।।

संशयाविष्टचित्तस्य धर्मविद्वेषिणोपि च ।।

दांभिकस्यापि हिंस्रस्य चेतो धर्मपरं भवेत् ।।८६।।

वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः ।।

यत्फलं लभते ज्ञानी तदाप्नोत्यस्य कीर्तनात् ।। ८७ ।।

गायत्र्ययुतजप्येन यत्फलं समुपार्जितम् ।।

सकृत्पठनतः सम्यक्तदशेषमवाप्नुयात् ।।८८।।

गां दत्त्वा वेदविदुषे यत्फलं लभते कृती ।।

तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ।।८९।।

गुरुशुश्रूषणं कुर्वन्यावज्जीवं नरोत्तमः।।

यत्पुण्यमर्जयेत्तद्भाग्वर्षं त्रिषवणं जपन् ।।4.1.29.१९०।।

वेदपारायणात्पुण्यं यदत्र परिपठ्यते ।।

तत्षण्मासेन लभते त्रिसंध्यं परिकीर्तनात् ।। ९१ ।।

गंगायाः स्तवराजस्य प्रत्यहं परिशीलनात् ।।

शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ।। ९२ ।।

यः कीर्तयेदनुदिनं गंगानामसहस्रकम् ।।

तत्समीपे सहचरी गंगादेवी सदा भवेत् ।। ९३ ।।

सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत् ।।

सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ।। ९४ ।।

सदाचारी स विज्ञेयः सशुचिस्तु सदैव हि ।।

कृतसर्वसुरार्चः स कीर्तयेद्य इमां स्तुतिम् ।।९५।।

तस्मिंस्तृप्ते भवेत्तृप्ता जाह्नवी नात्र संशयः ।।

तस्मात्सर्वप्रयत्नेन गंगाभक्तं समर्चयेत् ।। ९६ ।।

स्तवराजमिमं गांगं शृणुयाद्यश्च वै पठेत् ।।

श्रावयेदथ तद्भक्तान्दंभलोभ विवर्जितः ।।९७।।

मुच्यते त्रिविधैः पापैर्मनोवाक्काय संभवैः ।।

क्षणान्निष्पापतामेति पितॄणां च प्रियो भवेत् ।।९८।।

सर्वदेवप्रियश्चापि सर्वर्षिगणसंमतः ।।

अंते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ।। ९९ ।।

दिव्याभरणसंपन्नो दिव्यभोगसमन्वितः ।।

नंदनादिवने स्वैरं देववत्स प्रमोदते ।। 4.1.29.२०० ।।

भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः ।।

जपन्निदं महास्तोत्रं पितॄणां तृप्तिकारकम् ।। १ ।।

यावंति तत्र सिक्थानि यावंतोऽबुकणाः स्थिताः ।।

तावंत्येव हि वर्षाणि मोदंते स्वः पितामहाः ।। २ ।।

यथा प्रीणंति पितरो गंगायां पिंडदानतः ।।

तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात् ।। ३ ।।

एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ।।

तत्र पापभयं नास्ति शुचि तद्भवनं सदा ।। ४ ।।

अगस्ते किंबहूक्तेन शृणु मे निश्चितं वचः ।।

संशयो नात्र कर्तव्यः संदिग्धे(?)रफलं नहि।।५।। (संदेग्धरि)

यावंति मर्त्ये स्तोत्राणि मंत्रजालान्यनेकशः ।।

तावंति स्तवराजस्य गांगेयस्य समानि न।।६।।

यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम्।।

स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत् ।।७।।

नित्यं नियमवानेतद्यो जपेत्स्तोत्रमुत्तमम् ।।

अन्यत्रापि विपन्नः स गंगातीरे मृतो भवेत् ।। ८ ।।

एतत्स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना ।।

विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम्।। ९ ।।

गंगास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम्।।

सिस्नासुर्जाह्नवीं तस्मादेतत्स्तोत्रं जपेत्सुधीः ।। २१० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे गंगासहस्रनामकथनंनामैकोनत्रिंशत्तमोऽध्यायः ।। २९ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३०

https://sa.wikisource.org/s/fvb
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

शृण्वगस्त्यमहाभाग स च राजा भगीरथः ।।

आराध्य श्रीमहादेवमुद्दिधीर्षुः पितामहान् ।।१।।

ब्रह्मशाप विनिर्दग्धान्सर्वान्राजर्षिसत्तमः ।।

महता तपसा भूमिमानिनाय त्रिवर्त्मगाम् ।। २ ।।

त्रयाणामपि लोकानां हिताय महते नृपः ।।

समानैषीत्ततो गंगां यत्रासीन्मणिकर्णिका ।। ३ ।।

आनंदकाननं शंभोश्चक्रपुष्करिणी हरेः ।।

परब्रह्मैकसुक्षेत्रं लीलामोक्षसमर्पकम् ।। ४ ।।

प्रापयामास तां गंगां दैलीपिः पुरतश्चरन् ।।

निर्वाणकाशनाद्यत्र काशीति प्रथिता पुरी ।। ५ ।।

अविमुक्तं महाक्षेत्रं न मुक्तं शंभुना क्वचित ।।

प्रागेव हि मुनेऽनर्घ्यं जात्यं जांबूनदं स्वयम् ।। ६ ।।

पुनर्वारितरेणापि हीरेणयदि संगतम् ।।

चक्रपुष्करणीतीर्थं प्रागेव श्रेयसांपदम् ।।७।।

ततः श्रेष्ठतरं शंभोर्मणिश्रवणभूषणात् ।।

आनंदकानने तस्मिन्नविमुक्ते शिवालये।। ।। ८ ।।

प्रागेव मुक्तिः संसिद्धा गंगासंगात्ततोधिका ।।

यदा प्रभृति सा गंगा मणिकर्ण्यां समागता ।। ९ ।।

तदाप्रभृति तत्क्षेत्रं दुष्प्रापं त्रिदशैरपि ।।

कृत्वा कर्माण्यनेकानि कल्याणानीतराणि वा ।। 4.1.30.१० ।।

तानि क्षणात्समुत्क्षिप्य काशीसंस्थोऽमृतोभवेत् ।।

तस्यां वेदांतवेद्यस्य निदिध्यासनतो विना ।। ११ ।।

विना सांख्येन योगेन काश्यां संस्थोऽमृतो भवेत् ।।

कर्मनिर्मूलनवता विना ज्ञानेन कुंभज ।। १२ ।।

शशिमौलिप्रसादेन काशीसंस्थोऽमृतो भवेत् ।।

यत्नतोऽयत्नतो वापि कालात्त्यक्त्वा कलेवरम् ।। १३ ।।

तारकस्योपदेशेन काशीसंस्थोऽमृतो भवेत् ।।

अनेकजन्मसंसिद्धैर्बद्धोऽपि प्राकृतैर्गुणैः ।। १४ ।।

असिसंभेद योगेन काशीसंस्थोऽमृतो भवेत् ।।

देहत्यागोऽत्र वै दानं देहत्यागोत्र वै तपः ।। १५८ ।।

देहत्यागोऽत्र वै योगः काश्यां निर्वाणसौख्यकृत् ।।

प्राप्योत्तरवहां काश्यामतिदुष्कृतवानपि ।। १६ ।।

यायात्स्वं हेलया त्यक्त्वा तद्विष्णोः परमं पदम् ।।

यमेंद्राग्निमुखा देवा दृष्ट्वा मुक्तिपथोन्मुखान् ।। १७ ।।

सर्वान्सर्वे समालोक्य रक्षां चक्रुः पुरापुरः ।।

असिं महासिरूपां च पाप्यसन्मतिखंडनीम् ।। १८ ।।

दुष्टप्रवेशं धुन्वानां धुनीं देवा विनिर्ममुः ।।

वरणां च व्यधुस्तत्र क्षेत्रविघ्ननिवारिणीम् ।। १९ ।।

दुर्वृत्तसुप्रवृत्तेश्च निवृत्तिकरणीं सुराः ।।

दक्षिणोत्तरदिग्भागे कृत्वाऽसिं वरणां सुराः ।। 4.1.30.२० ।।

क्षेत्रस्य मोक्षनिक्षेप रक्षां निर्वृतिमाप्नुयुः ।।

क्षेत्रस्य पश्चाद्दिग्भागे तं देहलिविनायकम् ।। २१ ।।

स्वयं व्यापारयामास रक्षार्थं शशिशेखरः ।।

अनुज्ञातप्रवेशानां विश्वेशेन कृपावता ।। २२ ।।

ते प्रवेशं प्रयच्छंति नान्येषां हि कदाचन ।।

इत्यर्थे कथयिष्येऽहमितिहासं पुरातनम् ।।

आश्चर्यकारिपरमं काशीभक्तिप्रवर्धनम् ।। २३ ।।

।। स्कंद उवाच ।। ।।

दक्षिणाब्धितटे कश्चित्सेतुबंधसमीपतः ।।

वणिग्धनंजयो नाम मातृभक्तिसमन्वितः ।। २४ ।।

पुण्यमार्गार्जित धनो धनतोषितमार्गणः ।।

मार्गणस्फारितयशा यशोदातनयार्चकः ।। २५ ।।

समुन्नतोपि संपत्त्या विनयानतकंधरः ।।

आकरोपि गुणानां हि गुणिष्वाकारगोपकः ।। २६ ।।

रूपसंपदुदारोपि परदारपराङ्मुखः ।।

ससंपूर्णकलोप्यासीन्निष्कलंकोदयः सदा ।। २७ ।।

ससत्यानृतवृत्तिश्च प्रायः सत्यप्रियो मुने ।।

वर्णेतरोप्यभूल्लोके सुवर्णकृतवर्णनः ।। २८ ।।

सदाचरणगोप्येष सुखयानचरः कृती ।।

अदरिद्रोपि मेधावी सोभूत्पापदरिद्रधीः ।। २९ ।।

तस्यैवं वर्तमानस्य कदाचित्कालपर्ययात् ।।

जननी निधनं प्राप्ता व्याधिताऽतिजरातुरा ।।4.1.30.३० ।।

तया च यौवनं प्राप्य मेघच्छायातिचंचलम् ।।

प्रावृण्नदीपूरसमं स्वपतिः परिवंचितः ।। ३१ ।।

दिन त्रिचतुरस्थायि या नारी प्राप्य यौवनम्।।

भर्तारं वंचयेन्मोहात्साऽक्षयं नरकं व्रजेत् ।। ३२ ।।

शीलभंगेन नारीणां भर्ताधर्मपरोपि हि ।।

पतेद्दुःखार्जितात्स्वर्गाच्छीलं रक्ष्यं ततः स्त्रिया ।। ३३ ।।

विष्ठागर्ते च निरये स्वयं पतति दुर्मतिः ।।

आभूतसंप्लवं यावत्ततः स्याद्ग्रामसूकरी ।।३४।।

स्वविष्ठापायिनी चाथ वल्गुली वृक्षलंबिनी।।

उलूकी वा दिवांधा स्याद्वृक्षकोटरवासिनी ।। ।। ३५ ।।

रक्षणीयं महायत्नादिदं सुकृतभाजनम् ।।

वपुः परस्य दुःस्पर्शात्सुखाभासात्मकात्स्त्रिया ।। ३६ ।।

अनेनैव शरीरेण भर्तृसाद्विहितेन हि ।।

किं सती न च तस्तंभ भानुमुद्यंतमाज्ञया ।। ३७ ।।

अत्रिपत्न्यनसूया किं भर्तृभक्तिप्रभावतः ।।

दधार न त्रयीं गर्भे पतिव्रत परायणा ।। ३८ ।।

इह कीर्तिश्च विपुला स्वर्गेवासस्तथाऽक्षयः ।।

पातिव्रत्यात्स्त्रिया लभ्यं सखित्वं च श्रिया सह ।। ३९ ।।

सादुर्वृत्त्या परित्यज्य पतिधर्मं सनातनम् ।।

स्वच्छंदचारिणी भूत्वामृतानिरयमुद्ययौ ।। 4.1.30.४० ।।

धनंजयोपि च मुने केनचिच्छिवयोगिना ।।

सार्धं तपोदयादित्थं सोऽभवद्धर्मतत्परः ।।४१।।

धनंजयोपि धर्मात्मा मातृभक्तिपरायणः ।।

आदायास्थीन्यथो मातुर्गंगा मार्गस्थितोऽभवत् ।।४२।।

पंचगव्येन संस्नाप्य ततः पंचामृतेन वै ।।

यक्षकर्दमलेपेन लिप्त्वा पुष्पैः प्रपूज्य च ।। ४३ ।।

आवेष्ट्य नेत्रवस्त्रेण ततः पट्टांबरेण वै ।।

ततः सुरसवस्त्रेण ततो मांजिष्ठवाससा ।।४४।।

नेपालकंबलेनाथ मृदाचाऽथ विशुद्धया ।।

ताम्रसंपुटके कृत्वा मातुरंगान्यहो वणिक् ।। ४५ ।।

अस्पृष्टहीनजातिः स शुचिष्मान्स्थंडिलेशयः ।।

आनयञ्ज्वरितोप्यासीन्मध्ये मार्गं धनंजयः ।।४६।।

भारवाहः कृतस्तेन कश्चिद्दत्त्वोचितां भृतिम् ।।

किं बहूक्तेन घटज काशी प्राप्ताऽथ तेन वै ।। ४७ ।।

धृत्वा संभृतिरक्षार्थं भारवाहं धनंजयः ।।

जगामापणमानेतुं किंचिद्वस्त्वशनादिकम् ।। ४८ ।।

भारवाह्यंतरं प्राप्य तस्य संभृतिमध्यतः ।।

ताम्रसंपुटमादाय धनं ज्ञात्वा गृहं ययौ ।। ४९ ।।

वासस्थानमथागत्य तमदृष्ट्वा धनंजयः ।।

त्वरावान्संभृतिं वीक्ष्य ताम्रसंपुटवर्जिताम् ।। 4.1.30.५० ।।

हाहेत्याताड्य हृदयं चक्रंद बहुशो भृशम् ।।

इतस्ततस्तमालोक्य गतस्तदनुसारतः ।। ५१ ।।

अकृत्वा जाह्नवीस्नानमनवेक्ष्य जगत्पतिम् ।।

तस्य संवसथं प्राप्तो भारवोढुर्धनंजयः ।। ५२ ।।

भारवाडप्यरण्यान्यां ताम्रसंपुटमध्यतः।।

दृष्ट्वास्थीनि विनिःश्वस्य तानि त्यक्त्वा गृहं ययौ। ।।५३।।

वणिक्च तद्गृहं प्राप्य शुष्ककंठोष्ठतालुकः ।।

दृष्ट्वाऽथ चैलशकलं तृणकुट्यंतरे तदा ।।५४।।

आशया किंचिदाश्वस्य तत्पत्नीं परिपृष्टवान् ।।

सत्यं ब्रूहि न भेतव्यं दास्याम्यन्यदपि ध्रुवम् ।। ५५ ।।

वसु क्व ते गतो भर्ता मातुरस्थीनिमेऽर्पय ।।

वयं कार्पटिका भद्रे भवामो न च दुःखदाः ।। ५६ ।।

अज्ञात्वा लोभवशतस्तेन नीतोऽस्थिसंपुटः ।।

तस्यैष दोषो नो भद्रे मातुर्मे कर्म तादृशम् ।।५७।।

अथवा न प्रसू दोषो मंदभाग्योऽस्मि तत्सुतः ।।

सुतेनकृत्यं यत्कृत्यं तत्प्राप्तिर्नास्ति भिल्लि मे ।।५८।।

उद्यमं कृतवानस्मि न सिद्ध्येन्मंदभाग्यतः ।।

आयातु सत्यवाक्यान्मे मा बिभेतु वनेचरः ।। ।। ५९ ।।

अस्थीनि दर्शयत्वाशु धनं दास्येऽधिकं ततः ।।

इत्युक्ता तेन सा भिल्ली व्याजहार निजं पतिम् ।। 4.1.30.६० ।।

लज्जानम्रशिराःसोऽथ वृत्तांतं विनिवेद्य च ।।

निनाय तामरण्यानीं शबरस्तं धनंजयम् ।।६१।।

वनेचरोऽथ तत्स्थानं दैवाद्विस्मृतवान्मुने ।।

दिग्भ्रांतिं समवाप्याथ परिबभ्राम कानने ।।६२।।

इतोरण्यात्ततो याति ततोरण्यादितो व्रजेत् ।।

वनाद्वनांतरं भ्रांत्वा खिन्नः सोपि वनेचरः ।। ६३ ।।

विहाय मध्येऽरण्यानि तं ययौ च स्वपक्कणम् ।।

द्वित्राण्यहानि संभ्रम्य स कार्पटिकसत्तमः ।। ६४ ।।

क्षुत्क्षामः शुष्ककंठोष्ठो हाहेति परिदेवयन् ।।

पुनः काशीपुरीं प्राप्तः परिम्लानमुखो वणिक् ।।८ ६५ ।।

तन्मंदभाग्यतां श्रुत्वा लोकात्कार्पटिको मुने ।।

कृत्वा गयां प्रयागं च ततः स्वविषयं ययौ ।। ६६ ।।

काश्यां प्रवेशं प्राप्यापि तदस्थीनि घटोद्भव ।।

विना वैश्वेश्वरीमाज्ञां बहिर्यातानि तत्क्षणात् ।। ।। ६७ ।।

एवं काश्यां प्रविश्यापि पापी धर्मानुषंगतः ।।

न क्षेत्रफलमाप्नोति बहिर्भवति तत्क्षणात् ।। ६८ ।।

तस्माद्विश्वेश्वराज्ञैव काशीवासेऽत्र कारणम् ।।

असिश्च वरणा यत्र क्षेत्ररक्षाकृतौ कृते ।। ६९ ।।

वाराणसीति विख्याता तदारभ्य महामुने ।।

असेश्च वरणायाश्च संगमं प्राप्य काशिका ।। 4.1.30.७० ।।

वाराणसीह करुणामयदिव्यमूर्तिरुत्सृज्य यत्र तु तनुं तनुभृत्सुखेन ।।

विश्वेशदृङ्महसि यत्सहसा प्रविश्य रूपेण तां वितनुतां पदवीं दधाति ।। ७१ ।।

जातो मृतो बहुषु तीर्थवरेषु रे त्वं जंतो न जातु तव शांतिरभून्निमज्य ।।

वाराणसी निगदतीह मृतोऽमृतत्वं प्राप्याधुना मम बलात्स्मरशासनः स्याः ।। ७२ ।।

अन्यत्र तीर्थ सलिले पतितोद्विजन्मा देवादिभावमयते न तथा तु काश्याम् ।।

चित्रं यदत्र पतितः पुनरुत्थितिं न प्राप्नोति पुल्कसजनोपि किमग्र जन्मा ।। ७३ ।।

नैषा पुरी संसृतिरूपपारावारस्य पारं पुरहा पुरारिः ।।

यस्यां परं पौरुषमर्थमिच्छन्सिद्धिं नयेत्पौरपरंपरांसः ।। ७४ ।।

तीर्थांतराणि मनुजः परितोऽवगाह्य हित्वा तनुं कलुषितां दिवि दैवतं स्यात् ।।

वाराणसीपरिसरे तु विसृज्य देहं संदेहभाग्भवति देहदशात्ययेपि ।। ७५ ।।

वाराणसी समरसीकरणाद्दतेपि योगादयोगिजनतां जनतापहंत्री ।।

तत्तारकं श्रवणगोचरतां नयंती तद्ब्रह्मदर्शयति येन पुनर्भवो न ।। ७६ ।।

वाराणसी परिसरे तनुमिष्टदात्रीं धर्मार्थकामनिलयामहहाविसृज्य ।।

इष्टं पदं किमपि हृष्टतरोभिलष्य लाभोस्तुमूलमपि नो यदवाप शून्यम् ।। ७७ ।।

आःकाशिवासिजनता ननु वंचिताभूद्भाले विलोचनवतावनितार्धभाजा ।।

आदाय यत्सन्ध्यकृतभाजनमिष्टदेहं निर्वाणमात्रमपवर्जयतापुनर्भु ।। ७८ ।।

वाराणसी स्फुरदसीमगुणैकभूमिर्यत्र स्थितास्तनुभृतःशशिभृत्प्रभावात् ।।

सर्वे गले गरलिनोऽक्षियुजो ललाटे वामार्धवामतनवोऽतनवस्ततोंऽते ।। ७९ ।।

आनंदकाननमिदं सुखदं पुरैव तत्त्रापि चक्रसरसी मणिकर्णिकाऽथ।।

स्वः सिंधुसंगतिरथो परमास्पदं च विश्वेशितुः किमिह तन्न विमुक्तये यत्।। 4.1.30.८०।।

वाराणसीह वरणासि सरिद्वरिष्ठा संभेदखेदजननी द्युनदी लसच्छ्रीः ।।

विश्रामभूमिरचलाऽमलमोक्षलक्ष्म्याहैनां विहाय किमुसीदति मूढजंतुः ।। ८१ ।।

किं विस्मृतं त्वहहगर्भजमामनस्यं कार्तांतदूतकृतबंधन ताडनं च ।।
शंभोरनुग्रह परिग्रह लभ्य काशीं मूढो विहाय किमु याति करस्थ मुक्तिम् ।। ८२ ।।
तीर्थांतराणि कलुषाणि हरति सद्यः श्रेयो ददत्यपि बहु त्रिदिवं नयंति ।।
पानावगाहनविधानतनुप्रहाणैर्वाराणसी तु कुरुते बत मूलनाशम्।।८३ ।।
काशीपुरी परिसरे मणिकर्णिकायां त्यक्त्वा तनुं तनुभृतस्तनुमाप्नुवंति ।।
भाले विलोचनवतीं गलनीललक्ष्मीं वामार्धबंधुरवधूं विधुरावरोधाः ।। ८४ ।।
ज्ञात्वा प्रभावमतुलं मणिकर्णिकायां यः पुद्गलं त्यजति चाशुचिपूयगंधि ।।
स्वात्मावबोधमहसा सहसा मिलित्वा कल्पांतरेष्वपि स नैव पृथक्त्वमेति ।। ८५ ।।
रागादिदोषपरिपूर मनो हृषीकाः काशीपुरीमतुलदिव्यमहाप्रभावाम् ।।
ये कल्पयंत्यपरतीर्थसमां समंतात्ते पापिनो न सह तैः परिभाषणीयम् ।। ८६ ।।
वाराणसीं स्मरहरप्रियराजधानीं त्यक्त्वा कुतो व्रजसि मूढ दिगंतरेषु ।।
प्राप्याप्यजाद्यसुलभांस्थिरमोक्षलक्ष्मीं लक्ष्मीं स्वभावचपलां किमु कामयेथाः ।। ८७ ।।
विद्या धनानि सदनानि गजाश्वभृत्याः स्रक्चंदनानि वनिताश्च नितांत रम्याः ।।
स्वर्गोप्यगम्य इह नोद्यमभाजिपुंसि वाराणसीत्वसुलभा शलभादिमुक्तिः।
धात्रा धृतानि तुलया तुलनामवैतुं वैकुंठमुख्यभुवनानि च काशिका च ।।
तान्युद्ययुर्लघुतयान्यगियं गुरुत्वात्तस्थौ पुरीह पुरुषार्थचतुष्टयस्य ।। ८९ ।।
काशी पुरीमधिवसन्द्रिनरोनरोपिह्यारोप्यमाणइहमान्यहवैकरुद्रः ।।
नानोपसर्गजनिसर्गजदुःखभारैःकर्मापनुद्यसविशेत्परमेशधाम्नि ।। 4.1.30.९० ।।
स्थिरापायं कायं जननमरणक्लेशनिलयं विहायास्यां काश्यामहहपरिगृह्णीत न कुतः ।।
वपुस्तेजोरूपं स्थिरतरपरानंदसदनं विमूढोऽसौ जंतुः स्फुटितमिवकांम्यं विनिमयन् ।। ९१ ।।
अहो लोकः शोकं किमिह सहते हंतहतधीर्विपद्द्वारैः सारैर्नियतनिधनैर्ध्वसित धनैः ।।
क्षितौ सत्यां काश्यां कथयति शिवो यत्र निधने श्रुतौ किंचिद्भूयः प्रविशति न येनोदरदरीम् ।। ९२ ।।
काशिवासिनिजने वनेचरेद्वित्रिभुज्यपि समीरभोजने ।।
स्वैरचारिणि जितेंद्रियेप्यहो काशिवासिनि जने विशिष्टता ।। ९३ ।।
नास्तीह दुष्कृतकृतां सुकृतात्मनां वा काचिद्विशेषगतिरंतकृतां हि काश्याम् ।।
बीजानि कर्मजनितानि यदूषरायां नांकूरंयति हरदृग्ज्वलितानितेषाम् ।। ९४ ।।
शशका मशका बकाः शुकाः कलविंकाश्च वृकाः सजंबुकाः ।।
तुरगोरग वानरानरा गिरिजे काशिमृताः परामृतम् ।। ९५ ।।

अरुद्ररुद्राक्षफणींद्रभूषणास्त्रिपुंड्रचंद्रार्धधराधरागताः ।।

निरंतरं काशिनिवासिनोजना गिरींद्रजे पारिषदा मता मम ।। ९६ ।।

यावंत एव निवसंति च जंतवोऽत्र काश्यां जलस्थलचरा झषजंबुकाद्याः ।।

तावंत एव मदनुग्रह रुद्रदेहा देहावसानमधिगम्य मयि प्रविष्टाः ।। ९७ ।।

ये तु वर्षेषवोरुद्रा दिवि देवि प्रकीर्तिताः ।।

वातेषवोंऽतरिक्षे ये ये भुव्यन्नेषवः प्रिये ।। ९८ ।।

रुद्रा दश दश प्राच्यवाची प्रत्यगुदक्स्थिताः ।।

ऊर्ध्वदिक्स्थाश्च ये रुद्राः पठ्यंते वेदवादिभिः ।। ९९ ।।

असंख्याताः सहस्राणि ये रुद्रा अधिभूतले ।।

तत्सर्वेभ्योऽधिका काश्यां जंतवो रुद्ररूपिणः ।।4.1.30.१००।।

रुद्रावासस्ततः प्रोक्तमविमुक्तं घटोद्भव ।।

तस्मात्समर्च्य काशिस्थान्वर्णान्वर्णेतराश्रमान्।। १ ।।

श्रद्धयेश्वरबुद्ध्या च रुद्रार्चा फलभाङ्नरः ।। २ ।।

श्म शब्देन शवः प्रोक्तः शानं शयनमुच्यते।।

निर्वचंति श्मशानार्थं मुने शब्दार्थकोविदाः ।। ३ ।।

महांत्यपि च भूतानि प्रलये समुपस्थिते ।।

शेरतेऽत्र शवा भूत्वा श्मशानं तु ततो महत् ।। ४ ।।

अप्सु भूरिह लये लयं व्रजेदाप और्ववदनोग्रकंदरे ।।

मातरिश्वनि महातनूनपाद्व्योम्नि संक्षयति वै सदागतिः ।। ५ ।।

व्योम चापि लयमेत्यहंकृतौ सापि षोडशविकारसंयुता ।।

लीयते महति बुद्धिसंज्ञकेहा महान्प्रकृतिमध्यगो भवेत् ।। ६।।

सा गुणत्रयमयी च निर्गुणं तं पुमांसमवगुह्य तिष्ठति ।।

पंचविंशतितमः परः पुमान्देहगेहपतिरेष जीवकः ।। ७ ।।

प्राकृतः प्रलय एष उच्यते हंसयान हरि रुद्रवर्जितः ।।

कालमूर्तिरथ तं च पूरुषं हेलया कलयतीश्वरः परः ।। ८ ।।

स वै महाविष्णुरितीर्यते बुधैस्तं वै महादेवमुदाहरंति ।।

सोंऽतादिमध्यैः परिवर्जितः शिवः स श्रीपतिः सोपि हि पार्वतीपतिः ।। ९ ।।

दैनंदिनेऽथ प्रलये त्रिशूलकोटौ समुत्क्षिप्य पुरीं हरः स्वाम् ।।

बिभर्ति संवर्त महास्थिभूषणस्ततो हि काशी कलिकालवर्जिता ।। 4.1.30.११० ।।

।। स्कंद उवाच ।। ।।

वाराणसीति काशीति रुद्रावास इति द्विज ।।

महाश्मशानमित्येवं प्रोक्तमानंदकाननम् ।।११।।

इति देवीपुरः प्रोक्तं देवदेवेन शंभुना ।।

यथाविष्णोः पुराख्यातं तथैव च मया श्रुतम् ।।

तच्च त्वदग्रे कथितं रहस्यं काशिजं महत् ।।१२।।

जस्वाध्यायमिमं पुण्यं महापातकनाशनम् ।।

श्रावयित्वा द्विजान्सम्यक्छिवलोके महीयते ।। १३ ।।

अतः परं कलशज किं शुश्रूषसि तद्वद ।।

काशीकथा कथ्यमाना ममापि परितोषकृत् ।। ११४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे वाराणसीमहिमवर्णनं नाम त्रिंशत्तमोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३१



।। अगस्त्य उवाच ।। ।।

सर्वज्ञ हृदयानंद स्कंदस्कंदित तारक ।।

न तृप्तिमधिगच्छामि शृण्वन्वाराणसीकथाम् ।। १ ।।

अनुग्रहो यदि मयि योग्योस्मि श्रवणे यदि ।।

तदा कथय मे नाथ काश्यां भैरव संकथाम् ।। २ ।।

कोसौ भैरवनामात्र काशिपुर्यां व्यवस्थितः ।।

किं रूपमस्य किं कर्म कानि नामानि चास्य वै ।।३।।

कथमाराधितश्चैव सिद्धिदः साधकस्य वै ।।

आराधितः कुत्र काले क्षिप्रं सिद्ध्यति भैरवः ।। ४ ।।

।। स्कंद उवाच ।। ।।

वाराणस्यां महाभाग यथा ते प्रेम वर्तते ।।

तथा न कस्यचिन्मन्ये ततो वक्ष्याम्यशेषतः ।। ५ ।।

प्रादुर्भावं भैरवस्य महापातकनाशनम् ।।

यच्छ्रुत्वा काशिवासस्य फलं निर्विघ्नमाप्नुयात् ।। ६ ।।

पाणिभ्यां परितः प्रपीड्य सुदृढं निश्चोत्य निश्चोत्य च ब्रह्मांडं सकलं पचेलिमरसालोच्चैः फलाभं मुहुः ।।

पायंपायमपायतस्त्रिजगतीमुन्मत्तवत्तै रसैर्नृत्यंस्तांडवडंबरेण विधिनापायान्महाभैरवः ।। ७ ।।

कुंभयोने न वेत्त्येव महिमानं महेशितुः ।।

चतुर्भजोपि वैकुंठश्चतुर्वक्त्रोपि विश्वकृत् ।। ८ ।।

न चित्रमत्र भूदेव भवमाया दुरत्यया ।।

तया संमोहिताः सर्वे नावयंत्यपि तं परम् ।। ९ ।।

वेदयेद्यदिचात्मानं स एव परमेश्वरः ।।

तदा विंदंति ब्रह्माद्याः स्वेच्छयैव न तं विदुः ।। 4.1.31.१० ।।

स सर्वगोपि नेक्ष्येत स्वात्मारामो महेश्वरः ।।

देववद्बुध्यते मूढैरतीतो यो मनोगिराम् ।। ११ ।।

पुरा पितामहं विप्र मेरुशृंगे महर्षयः ।।

प्रोचुः प्रणम्य लोकेशं किमेकं तत्त्वमव्ययम् ।। १२ ।।

समा यया महेशस्य मोहितो लोकसंभवः ।।

अविज्ञाय परं भावमात्मानं प्राह वर्पिणम् ।। १३ ।।

जगद्योनिरहं धाता स्वयंभूरेक ईश्वरः ।।

अनादिमदहं ब्रह्म मामनर्च्य न मु च्यते ।। १४ ।।

प्रवर्तको हि जगतामहमेको निवर्तकः ।।

नान्यो मदधिकः सत्यं कश्चित्कोपि सुरोत्तमाः ।। १५ ।।

तस्यैवं ब्रुवतो धातुः क्रतुर्नारायणांशजः ।।

प्रोवाच प्रहसन्वाक्यं रोषताम्रविलोचनः ।। १६ ।।

अविज्ञाय परं तत्त्वं किमेतत्प्रतिपाद्यते ।।

अज्ञानं योगयुक्तस्य न चैतदुचितं तव ।। १७ ।।

अहं कर्ता हि लोकानां यज्ञो नारायणः परः ।।

न मामनादृत्य विधे जीवनं जगतामज ।। १८ ।।

अहमेव परं ज्योतिरहमेव परा गतिः ।।

मत्प्रेरितेन भवता सृष्टिरेषा विधीयते ।। ।। १९ ।।

एवं विप्र कृतौ मोहात्परस्परजयैषिणौ ।।

पप्रच्छतुः प्रमाणज्ञानागमांश्चतुरोपि तौ ।। 4.1.31.२० ।।

।। विधिक्रतू ऊचतुः ।। ।।

वेदाः प्रमाणं सर्वत्र प्रतिष्ठां परमामिताः ।।

यूयमेव न संदेहः किं तत्त्वं प्रतितिष्ठत ।। २१ ।।

श्रुतय ऊचुः ।। ।।

यदि मान्या वयं देवौ सृष्टिस्थितिकरौ विभू ।।

तदा प्रमाणं वक्ष्यामो भवत्संदेहभेदकम् ।। २२ ।।

श्रुत्युक्तमिदमाकर्ण्य प्रोचतुस्तौ श्रुतीः प्रति ।।

युष्मदुक्तं प्रमाणं नौ किं तत्त्वं सम्यगुच्यताम् ।। २३ ।।

ऋगुवाच ।। ।।

यदंतःस्थानि भूतानि यतः सर्वं प्रवर्तते ।।

यदाहुस्तत्परं तत्त्वं स रुद्रस्त्वेक एव हि ।। २४ ।।

।। यजुरुवाच ।। ।।

यो यज्ञैरखिलैरीशो योगेन च समिज्यते ।।

येन प्रमाणं हि वयं स एकः सर्वदृक्छिवः ।।२५।।

।। सामोवाच ।। ।।

येनेदं भ्रश्यते विश्वं योगिभिर्यो विचिंत्यते ।।

यद्भासा भासते विश्वं स एकस्त्र्यंबकः परः ।। २६ ।।

।। अथर्वोवाच ।। ।।

यं प्रपश्यंति देवेशं भक्त्यानुग्रहिणो जनाः ।।

तमाहुरेकं कैवल्यं शंकरं दुःखतस्करम् ।। २७ ।।

श्रुतीरितं निशम्येत्थं तावतीव विमोहितौ ।।

स्मित्वाहतुः क्रतु विधीमोहाध्येनांकितौ मुने ।। २८ ।।

कथं प्रमथनाथोसौ रममाणो निरंतरम्।।

दिगंबरः पितृवने शिवया धूलिधूसरः ।। २९ ।।

विटंकवेशो जटिलो वृषगोव्यालभूषणः ।।

परं ब्रह्मत्वमापन्नः क्व च तत्संगवर्जितम्।। 4.1.31.३० ।।

तदुदीरितमाकर्ण्य प्रणवात्मा सनातनः ।।

अमूर्तो मूर्तिमान्भूत्वा हसमान उवाच तौ ।। ३१ ।।

प्रणव उवाच ।।

न ह्येष भगवाञ्छक्त्या स्वात्मनो व्यतिरिक्तया ।।

कदाचिद्रमते रुद्रो लीलारूपधरो हरः ।। ३२ ।।

असौ हि भगवानीशः स्वयंज्योतिः सनातनः ।।

आनंदरूपा तस्यैषा शक्तिर्नागंतुकी शिवा ।। ३३ ।।

इत्येवमुक्तेपि तदा मखमूर्तेरजस्य हि ।।

नाज्ञानमगमन्नाशं श्रीकंठस्यैव मायया ।। ३४ ।।

प्रादुरासीत्ततो ज्योतिरुभयोरंतरे महत् ।।

पूरयन्निजया भासा द्यावाभूम्योर्यदंतरम्।। ३५ ।।

ज्योतिर्मंडलमध्यस्थो ददृशे पुरुषाकृतिः ।।

प्रजज्वालाथ कोपेन ब्रह्मणः पंचमं शिरः ।। ३६ ।।

आवयोरंतरं कोसौ बिभृयात्पुरुषाकृतिम् ।।

विधिः संभावयेद्यावत्तावत्स हि विलोकितः ।। ३७ ।।

स्रष्टा क्षणेन च महान्पुरुषो नीललोहितः ।।

त्रिशूलपाणिर्भालाक्षो नागोडुपविभूषणः ।। ३८ ।।

हिरण्यगर्भस्तं प्राह जाने त्वां चंद्रशेखरम् ।।

भालस्थलान्ममपुरा रुद्रः प्रादुरभूद्भवान् ।। ३९ ।।

रोदनाद्रुद्रनामापि योजितोसि मया पुरा ।।

मामेव शरणं याहि पुत्र रक्षां करोमि ते ।। 4.1.31.४० ।।

अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम्।।

सकोपतः समुत्पाद्य पुरुषं भैरवाकृतिम् ।। ४१ ।।

प्राह पंकजजन्मासौ शास्यस्ते कालभैरव ।।

कालवद्राजसे साक्षात्कालराजस्ततो भवान् ।। ४२ ।।

विश्वं भर्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः ।।

त्वत्तो भेष्यति कालोपि ततस्त्वं कालभैरवः ।। ४३ ।।

आमर्दयिष्यति भवांस्तुष्टो दुष्टात्मनो यतः ।।

आमर्दक इति ख्याति ततः सर्वत्र यास्यति ।। ४४ ।।

यतः पापानि भक्तानां भक्षयिष्यति तत्क्षणात् ।।

पापभक्षण इत्येव तव नाम भविष्यति ।। ४५ ।।

या मे मुक्तिपुरी काशी सर्वाभ्योपि गरीयसी ।।

आधिपत्यं च तस्यास्ते कालराज सदैव हि ।।४६।।

तत्र ये पापकर्तारस्तेषां शास्ता त्वमेव हि ।।

शुभाशुभं न तत्कर्म चित्रगुप्तो लिखिष्यति ।। ४७ ।।

एतान्वरान्प्रगृह्याऽथ तत्क्षणात्कालभैरवः ।।

वामांगुलिनखाग्रेण चकर्त च शिरो विधेः ।। ४८ ।।

यदंगमपराध्नोति कार्यं तस्यैव शासनम् ।।

अतो येन कृता निंदा तच्छिन्नं पचमं शिरः ।। ४९ ।।

यज्ञमूर्तिधरो विष्णुस्ततस्तुष्टाव शंकरम् ।।

भीतो हिरण्यगर्भोपि जजाप शतरुद्रियम् ।। 4.1.31.५० ।।

आश्वास्य तौ महादेवः प्रीतः प्रणतवत्सलः ।।

प्राह स्वां मूर्तिमपरां भैरवं तं कपर्दिनम् ।। ५१ ।।

मान्योऽध्वरोसौ भवता तथा शतधृतिस्त्वयम् ।।

कपालं वैधसं चापि नीललोहित धारय ।। ५२ ।।

ब्रह्महत्यापनोदाय व्रतं लोकाय दर्शयन्।।

चर त्वं सततं भिक्षां कापालव्रतमास्थितः ।।

इत्युक्त्वांऽतर्हितो देवस्तेजोरूपस्तदा शिवः ।। ५३ ।।

उत्पाद्य कन्यामेकां तु ब्रह्महत्येति विश्रुताम् ।।

रक्तांबरधरां रक्तां रक्तस्रग्गंधलेपनाम्।। ५४ ।।

दंष्टाकरालवदनां ललज्जिह्वातिभीषणाम् ।।

अंतरिक्षैकपादाग्रां पिबंतीं रुधिरं बहु ।।५५।।

कर्त्रीं कर्परहस्ताग्रां स्फुरत्पिंगोग्रतारकाम् ।।

गर्जयंतीं महावेगां भैरवस्यापिभीषणाम् ।। ५६ ।।

यावद्वाराणसीं दिव्यां पुरीमेष गमिष्यति ।।

तावत्त्वं भीषणे कालमनुगच्छोग्ररूपिणि ।। ५७ ।।

सर्वत्र ते प्रवेशोस्ति त्यक्त्वा वाराणसीं पुरीम्।।

नियोज्यतामिति शिवोप्यंतर्धानं गतस्ततः ।। ५८ ।।

तत्सान्निध्याद्भैरवोपि कालोभूत्कालकालतः ।।

स देवदेववाक्येन बिभ्रत्कापालिकं व्रतम्।। ५९ ।।

कपालपाणिर्विश्वात्मा चचार भुवनत्रयम्।।

नात्याक्षीच्चापि तं देवं ब्रह्महत्या सुदारुणा ।। 4.1.31.६० ।।

सत्यलोकेपि वैकुंठे महेंद्रादि पुरीष्वपि ।।

त्रिजगत्पतिरुग्रोपि व्रती त्रिजगतीश्वरः ।।६१।।

प्रतितीर्थं भ्रमन्नापि विमुक्तो ब्रह्महत्यया ।।६२।।

अनेनैवानुमानेन महिमा त्ववगम्यताम् ।।

ब्रह्महत्यापनोदिन्याः काश्याः कलशसंभव ।। ६३ ।।

संति तीर्थान्यनेकानि बहून्यायतनानि च ।।

अधि त्रिलोकिनो काश्याः कलामर्हंति षोडशीम् ।। ६४ ।।

तावद्गर्जंति पापानि ब्रहत्यादिकान्यलम् ।।
यावन्नाम न शृण्वंति काश्याः पापाचलाशनेः ।। ६५ ।।
प्रमथैः सेव्यमानोऽयं त्रिलोकीं विचरन्हरः ।।
कापालिको ययौ देवो नारायणनिकेतनम् ।। ६६ ।।
अथायांतं महाकालं त्रिनेत्रं सर्पकुंडलम् ।।
महादेवांशसंभूतं भैरवं भीषणाकृतिम् ।। ६७ ।।
पपात दंडवद्भूमौ दृष्ट्वा तं गरुडध्वजः ।।
देवाश्च मुनयश्चैव देवनार्यः समंततः ।। ६८ ।।
निपेतुः प्रणिपत्यैनं प्रणतः कमलापतिः ।।
शिरस्यंजलिमारोप्य स्तुत्वा बहुविधैः स्तवैः ।।६९।।
क्षीरोदमथनो तां प्राह पद्मालयां हरिः ।।
प्रिये पश्याऽब्जनयने धन्याऽसि सुभगेनघे ।। 4.1.31.७० ।।
धन्योऽहं देवि सुश्रोणि यत्पश्यावो जगत्पतिम् ।।
अयं धाता विधाता च लोकानां प्रभुरीश्वरः ।। ७१ ।।
अनादिः शरणः शांतः परः षड्विंशसंमितः ।।
सर्वज्ञः सर्वयोगीशः सर्वभूतैकनायकः ।।७२।।
सर्वभूतांतरात्माऽयं सर्वेषां सर्वदः सदा ।।
यं विनिद्रा विनिःश्वासाः शांता ध्यानपरायणाः ।। ७३ ।।
धिया पश्यंति हृदये सोयमद्य समीक्ष्यताम्।।
यं विदुर्वेदतत्त्वज्ञा योगिनो यतमानसाः ।। ७४ ।।
अरूपो रूपवान्भूत्वा सोयमायाति सर्वगः ।।
अहो विचित्रं देवस्य चेष्टितं परमेष्ठिनः ।।७४।।।
यस्याख्यां ब्रुवतां नित्यं न देहः सोपि देहधृक्।।
यं दृष्ट्वा न पुनर्जन्म लभ्यते मानवैर्भुवि।।७६।।
सोयमायाति भगवांस्त्र्यंबकः शशिभूषणः ।।
पुंडरीकदलायामे धन्येमेऽद्य विलोचने ।। ७७ ।।
धिग्धिक्पदं तु देवानां परं दृष्ट्वाऽत्र शंकरम् ।।
लभ्यते यन्न निर्वाणं सर्वदुःखांतकृत्तु यत् ।। ७८ ।।

देवत्वादशुभं किंचिद्देवलोके न विद्यते ।।

दृष्ट्वापि सर्वदेवेशं यन्मुक्तिं न लभामहे ।। ७९ ।।

एवमुक्त्वा हृषीकेशः संप्रहृष्टतनूरुहः ।।

प्रणिपत्य महादेवमिदमाह वृषध्वजम् ।। 4.1.31.८० ।।

किमिदं देवदेवेन सर्वज्ञेन त्वया विभो ।।

क्रियते जगतां धात्रा सर्वपापहराऽव्यय ।। ८१ ।।

क्रीडेयं तव देवेश त्रिलोचन महामते ।।

किं कारणं विरूपाक्ष चेष्टितं ते स्मरार्दन ।।८२ ।।

किमर्थं भगवञ्छंभो भिक्षां चरसि शक्तिप ।।

संशयो मे जगन्नाथ नतत्रैलोक्यराज्यद ।। ८३ ।।

एवमुक्तस्ततः शंभुर्विष्णुमेतदुदाहरत् ।।

ब्रह्मणस्तु शिरश्छिन्नमंगुल्यग्रनखेन ह ।। ८४ ।।

तदघप्रतिघं विष्णो चराम्येतद्व्रतं शुभम् ।।

एवमुक्तो महेशेन पुंडरीकविलोचनः ।। ८५ ।।

स्मित्वा किंचिन्नतशिराः पुनरेवं व्यजिज्ञपत् ।।

यथेच्छसि तथा क्रीड सर्वविष्टपनायक ।। ८६ ।।

मायया मां महादेव नच्छादयितुमर्हसि ।।

नाभीकमलकोशात्तु कोटिशः कमलासनान् ।। ८७ ।।

कल्पे कल्पे सृजामीश त्वन्नियोगबलाद्विभो ।।

त्यज मायामिमां देव दुस्तरामकृतात्मभिः ।। ८८ ।।

मदाद्यो महादेव मायया तव मोहिताः ।।

यथावदवगच्छामि चेष्टितं ते शिवापते ।। ८९।।

संहारकाले संप्राप्ते सदेवानखिलान्मुनीन् ।।

लोकान्वर्णाश्रमवतो हरिष्यसि यदा हर ।। 4.1.31.९० ।।

तदा क्व ते महादेव पाप ब्रह्मवधादिकम् ।।

पारतंत्र्यं न ते शंभो स्वैरं क्रीडेत्ततो भवान् ।। ९१ ।।

अतीतब्रह्मणामस्थ्नां स्रक्कंठे तव भासते ।।

तदातदा क्वानुगता ब्रह्महत्या तवानघ ।। ९२ ।।

कृत्वापि सुमहत्पापं त्वां यः स्मरति भावतः ।।
आधारं जगतामीशं तस्य पापं विलीयते ।। ९३ ।।
यथा तमो न तिष्ठेत संनिधावंशुमालिनः ।।
तथा न भवभक्तस्य पापं तस्य व्रजेत्क्षयम् ।। ९४ ।।
यश्चिंतयति पुण्यात्मा तव पादांबुजद्वयम् ।।
ब्रह्महत्यादिकमपि पापं तस्य व्रजेत्क्षयम् ।। ९५ ।।
तव नामानुरक्ता वाग्यस्य पुंसो जगत्पते ।।
अप्यद्रिकूटतुलितं नैनस्तमनुबाधते ।। ९६ ।।
रजसा तमसा विवर्धितं क्व नु पापं परितापदायकम् ।।
क्व च ते शिव नाम मंगलं जनजीवातु जगद्रुजापहम् ।। ९७ ।।
यदि जातुचिदंधकद्विषस्तवनामौष्ठपुटाद्विनिःसृतम् ।।
शिवशंकर चंद्रशेखरेत्यसकृत्तस्य न संसृतिः पुनः ।। ९८ ।।
परमात्मन्परंधाम स्वेच्छा विधृत विग्रह ।।
कुतूहलं तवेशेदं क्व पराधीनतेश्वरे ।। ९९ ।।
अद्य धन्योस्मि देवेश यं न पश्यति योगिनः ।।
पश्यामि तं जगन्मूलं परमेश्वरमक्षयम् ।। 4.1.31.१०० ।।
अद्य मे परमो लाभस्त्वद्य मे मंगलं परम् ।।
त्वद्दृष्ट्यमृततृप्तस्य तृणं स्वर्गापवर्गदम् ।। १ ।।
इत्थं वदति गोविंदे विमला पद्मया तया ।।
मनोरथवती नाम भिक्षापात्रे समर्पिता ।। २ ।।
भिक्षाटनाय देवोपि निरगात्परया मुदा ।।
दृष्ट्वाऽनुयायिनीं तां तु समाहूय जनार्दनः ।।
संप्रार्थयद्ब्रह्महत्यां विमुंच त्वं त्रिशूलिनम्।। ३ ।।
।। ब्रह्महत्योवाच ।। ।।
अनेनापि मिषेणाऽहं संसेव्यामुं वृषध्वजम् ।।
आत्मानं पावयिष्यामि क्व पुनर्भवदर्शनम् ।। ४ ।।
सा तत्याज न तत्पार्श्वं व्याहृतापि मुरारिणा ।।
तमूचेऽथ हरिं शंभुः स्मेरास्यो वचनं शुभम् ।। ५ ।।

त्वद्वाक्पीयूषपानेन तृप्तोस्मि बहुमानद ।।
वरं वृणीष्व गोविंद वरदोऽस्मि तवानघ ।। ६ ।।
न माद्यंति यथा भैक्षैर्भिक्षवोप्यतिसंस्कृतैः ।।
यथामानसुधापानैर्नुन्न भिक्षाटनज्वराः ।। ७ ।।
महाविष्णुरुवाच ।। ।।
एष एव वरः श्लाघ्यो यदहं देवताधिपम् ।।
पश्यामि त्वां देवदेवं मनोरथपथातिगम् ।। ८ ।।
अनभ्रेयं सुधावृष्टिरनायासो महोत्सवः ।।
अयत्नो निधिलाभो यद्वीक्षणं हरते सताम् ।। ९ ।।
अवियोगोऽस्तु मे देव त्वदंघ्रियुगलेन वै ।।
एष एव वरः शंभो नान्यं कंचिद्वरं वृणे ।। 4.1.31.११० ।।
ईश्वर उवाच ।। ।।
एवं भवतु तेऽनंत यत्त्वयोक्तं महामते ।।
सर्वेषामपि देवानां वरदस्त्वं भविष्यसि ।। ११ ।।
अनुगृह्येति दैत्यारिं केंद्रादि भुवने चरन् ।।
भेजे विमुक्तिजननीं नाम्ना वाराणसीं पुरीम् ।। १२ ।।
यत्र स्थितानां जंतूनां कलां नार्हंति षोडशीम्।।
अपि ब्रह्मादि देवानां पदानि विपदां पदम् ।। १३ ।।
वरं वाराणसी वासी जटी मुंडी दिगंबरः ।।
नान्यत्रच्छत्रसंछन्न वसुधामंडलेश्वरः ।। १४ ।।
वरं वाराणसी भिक्षा न लक्षाधिपतान्यतः ।।
लक्षाधीशो विशेद्गर्भं तद्भिक्षाशी न गर्भभाक् ।। १५ ।।
भिक्षापि यत्र भिक्षुभ्यो दत्तामलकसंमिता ।।
सुमेरुणापि तुलिता वाराणस्यां गुरुर्भवेत् ।। १६।।
वर्षाशनं हि यो दद्यात्काश्यां सीदत्कुटुंबिने ।।
यावंत्यब्दानि तावंति युगानि स दिवीज्यते ।। १७ ।।
वाराणस्यां वर्षभोज्यं यो दद्यान्निरुपायिने ।।
स कदाचितृट्क्षुधा नो दुःखं भुंक्ते नरर्षभः ।। १८ ।।

वाराणस्यां निवसतां यत्पुण्यमुपजायते ।।
तदेव संवासयितुः फलं त्वविकलं भवेत् ।। १९ ।।
ब्रह्महत्यादि पापानि यस्या नाम्नोपि कीर्तनात् ।।
त्यजंति पापिनं काशी सा केनेहोपमीयते ।। 4.1.31.१२० ।।
क्षेत्रे प्रविष्टमात्रेऽथ भैरवे भीषणाकृतौ ।।
हाहेत्युक्त्वा ब्रह्महत्या पातालतलमाविशत् ।। २१ ।।
कपालब्रह्मणो रुद्रः सर्वेषामेव पश्यताम्।।
हस्तात्पतितमालोक्य ननर्त परया मुदा ।। २२ ।।
विधेः कपालं नामुंचत्करमत्यंतदुःसहम्।।
हरस्य भ्रमतः क्वापि तत्काश्यां क्षणतोऽपतत् ।। २३ ।।
शूलिनो ब्रह्मणो हत्या नापैति स्म च या क्वचित् ।।
सा काश्यां क्षणतो नष्टा कथं काशी न दुर्लभा ।।२४।।
अतः प्रदक्षिणीकार्या पूजनीया पुरी त्वियम् ।। २५ ।।
वाराणसीति काशीति महामंत्रमिमं जपम् ।।
यावज्जीवं त्रिसंध्यं तु जंतुर्जातु न जायते ।। २६ ।।
अविमुक्तं महाक्षेत्रं स्मरन्प्राणांस्तु यस्त्वजेत् ।।
दूरदेशांतरस्थोपि सोपि जातु न जायते ।। २७ ।।
आनंदकानने यस्य चित्तं संस्मरते सदा ।।
तत्क्षेत्रनामश्रवणान्न स भूयोऽभिजायते ।। २८ ।।
रुद्रावासे वसेन्नित्यं नरो नियतमानसः ।।
एनसामपि संभारं कृत्वा कालाद्विमुच्यते ।। २९ ।।
महाश्मशानमासाद्य यदि देवाद्विपद्यते ।।
पुनः श्मशानशयनं न क्वापि लभते पुमान् ।। 4.1.31.१३० ।।
कपालमोचनं काश्यां ये स्मरिष्यंति मानवाः ।।
तेषां विनंक्ष्यति क्षिप्रमिहान्यत्रापि पातकम् ।। ३१ ।।
आगत्य तीर्थप्रवरे स्नानं कृत्वा विधानतः ।।
तर्पयित्वा पितॄन्देवान्मुच्यते ब्रह्महत्यया ।। ३२ ।।
अशाश्वतमिदं ज्ञात्वा वाराणस्यां वसंति ये ।।

देहांते तत्परं ज्ञानं तेषां दास्यति शंकरः ।। ३३ ।।

इयं काशीपुरी विप्र साक्षाद्रुद्रतनुः परा ।।

अनिर्वाच्या परानंदा दुष्प्राप्येशविरोधिभिः ।। ३४ ।।

अस्यास्तत्त्वमहं जाने शिवभक्तिपरोपि वा ।।

मुच्यंते जंतवोऽत्रैव यथा योगेन योगिनः ।। ३५ ।।

परंपदमियं काशी परानंद इयं पुरी ।।

इयमेव परं ज्ञानं सेव्याऽसौ मोक्षकांक्षिभिः ।। ३६ ।।

अत्रोषित्वापीशभक्तान्विरुणद्धि तु यः कुधीः ।।

पुर्यैद्रुह्यति वा मूढस्तस्यान्यत्रात्र नो गतिः ।। ३७ ।।

कपालमोचनं तीर्थं पुरस्कृत्वा तु भैरवः ।।

तत्रैव तस्थौ भक्तानां भक्षयन्नघसंततिम् ।। ३८ ।।

पापभक्षणमासाद्य कृत्वापापशतान्यपि ।।

कुतो बिभेति पापेभ्यः कालभैरवसेवकः ।। ३९ ।।

आमर्दयति पापानि दुष्टानां च मनोरथान् ।।

आमर्दक इति ख्यातस्ततोऽसौ कालभैरवः।। 4.1.31.४० ।।

कलिकालं कलयति सदा काशी निवासिनाम्।।

अतः ख्यातिं परां प्राप्तः कालभैरवसंज्ञिताम् ।। ४१ ।।

सदैव यस्य भक्तेभ्यो यमदूताः सुदारुणाः ।।

परमां भीरुतां प्राप्तास्ततोसौ भैरवः स्मृतः ।। ४२ ।।

मार्गशीर्षासिताष्टम्यां कालभैरवसंनिधौ ।।

उपोष्य जागरं कुर्वन्महापापैः प्रमुच्यते ।। ४३ ।।

यत्किंचिदशुभं कर्म कृतं मानुषबुद्धितः ।।

तत्सर्वं विलयं याति कालभैरव दर्शनात् ।।४४।।

अनेकजन्मनियुतैर्यत्कृतं जंतुभिस्त्वघम्।।

तत्सर्वं विलयत्याशु कालभैरव दर्शनात् ।। ४५।।

कृत्वा च विविधां पूजां महासंभारविस्तरैः ।।

नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ।। ४६ ।।

अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे ।।

यात्रां च भैरवीं कृत्वा कृतैः पापैः प्रमुच्यते ।। ४७ ।।

कालभैरव भक्तानां सदा काशीनिवासिनाम् ।।

विघ्नं यः कुरुते मूढः स दुर्गतिमवाप्नुयात् ।। ४८ ।।

विश्वेश्वरेपि ये भक्ता नो भक्ताः कालभैरवे ।।

काश्यां ते विघ्नसंघातं लभंते तु पदे पदे ।। ४९ ।।

तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः ।।

विलोक्य कालराजं च निरयादुद्धरेत्पितॄन् ।। 4.1.31.१५० ।।

अष्टौ प्रदक्षिणीकृत्य प्रत्यहं पापभक्षणम् ।।

नरो न पापैर्लिप्येत मनोवाक्कायसंभवैः ।।५१।।

तस्मिन्नामर्दके पीठे जप्त्वास्वाभीष्टदेवताम् ।।

षण्मासं सिद्धिमाप्नोति साधको भैरवाज्ञया ।। ५२ ।।

वाराणस्यामुषित्वा यो भैरवं न भजेन्नरः ।।

तस्य पापानि वर्धंते शुक्लपक्षे यथा शशी ।।५३।।

यं यं संचितयेत्कामं पापभक्षणसेवया ।।

बलिपूजोपहारैश्च तं तं स समवाप्नुयात् ।। ५४ ।।

कालराजं न यः काश्यां प्रतिभूताष्टमीकुजम् ।।

भजेत्तस्यक्षयेत्पुण्यं कृष्णपक्षे यथा शशी ।। ५५ ।।

श्रुत्वाध्यायमिमं पुण्यं ब्रह्महत्यापनोदकम् ।।

भैरवोत्पत्तिसंज्ञं च सर्वपापैः प्रमुच्यते ।। ५६ ।।

बंधनागारसंस्थोपि प्राप्तोपि विपदं पराम् ।।

प्रादुर्भावं भैरवस्य श्रुत्वा मुच्येत संकटात् ।। ५७ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे भैरवप्रादुर्भावोनामेकत्रिंशोध्यायः ।। ३१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३२



।। अगस्त्य उवाच ।। ।।

बर्हियान समाचक्ष्व हरिकेशसमुद्भवम् ।।

कोसौ कस्य सुतः श्रीमान्कीदृगस्य तपो महत् ।। १ ।।

कथं च देवदेवस्य प्रियत्वं समुपेयिवान् ।।

काशीवासिजनीनोभूत्कथं वा दंडनायकः ।। २ ।।

एतदिच्छाम्यहं श्रोतुं प्रसादं कुरु मे विभो ।।

अन्नदत्वं च संप्राप्तः कथमेष महामतिः ।। ३ ।।

संभ्रमो विभ्रमश्चोभौ कथं तदनुगामिनौ ।।

विभ्रांतिकारिणौ क्षेत्रवैरिणां सर्वदा नृणाम् ।। ४ ।।

।। स्कंद उवाच ।। ।।

सम्यगापृच्छि भवता काशीवासिसमाहितम् ।।

कुंभसंभव विप्रर्षे दंडपाणि कथानकम् ।। ५ ।।

यदाकर्ण्य नरः प्राज्ञ काशीवासस्य यत्फलम् ।।

निष्प्रत्यूहं तदाप्नोति विश्वभर्तुरनुग्रहात् ।। ६ ।।

रत्नभद्र इति ख्यातः पर्वते गंधमादने ।।

यक्षः सुकृतलक्षश्रीः पुरा परम धार्मिकः ।। ७ ।।

पूर्णभद्रं सुतं प्राप्य सोऽभूत्पूर्णमनोरथः ।।

वयश्चरममासाद्य भुक्त्वा भोगाननेकशः ।। ८ ।।

शांभवेनाथ योगेन देहमुत्सृज्य पार्थिवम् ।।

आससादाशवं शांतं शांतसर्वेंद्रियार्थकः ।। ९ ।।

पितर्युपरतेसोऽथ पूर्णभद्रो महायशाः ।।

सुकृतोपात्तविभव भवसंभोगभुक्तिभाक् ।। 4.1.32.१० ।।

सर्वान्मनोरथाँल्लेभे विना स्वर्गैकसाधनम् ।।

गार्हस्थ्याश्रम नेपथ्यं पथ्यं पैतामहं महत् ।। ११ ।।

संसारतापसंतप्तावयवामृतसीकरम् ।।

अपत्यं पततां पोतं बहुक्लेशमहार्णवे ।। १२ ।।

पूर्णभद्रोऽथ संवीक्ष्य मंदिरं सर्वसुंदरम् ।।

तद्बालकोमलालाप विकलं त्यक्तमंगलम्।। १३ ।।

शून्यं दरिद्रहृदिव जीर्णारण्यमिवाथवा ।।

पांथवत्प्रांतरमिव खिन्नोऽतीवानपत्यवान् ।। १४ ।।

आहूय गृहिणी सोऽथ यक्षः कनककुंडलाम् ।।

उवाच यक्षिणीं श्रेष्ठां पूर्णभद्रो घटोद्भव ।। १५ ।।

न हर्म्यं सुखदं कांते दर्पणोदरसुंदरम् ।।

मुक्ता गवाक्षसुभगं चंद्रकांतशिलाजिरम् ।। १६ ।।

पद्मरागेंद्रनीलार्चिरर्चिताट्टालकं क्वणत् ।।

विद्रुमस्तंभशोभाढ्यं स्फुरत्स्फटिककुड्यवत् ।। १७ ।।

प्रेंखत्पताकानिकरं मणिमाणिक्यमालितम्।।

कृष्णागुरुमहाधूप बहुलामोदमोदितम् ।। १८ ।।

अनर्घ्यासनसंयुक्तं चारुपर्यंकभूषितम् ।।

रम्यार्गलकपाटाढ्यं दुकूलच्छन्नमंडपम् ।। १९ ।।

सुरम्यरतिशालाढ्यं वाजिराजिविराजितम् ।।

दासदासीशताकीर्णं किंकिणीनादनादितम् ।। 4.1.32.२० ।।

नूपुरारावसोत्कंठ केकिकेकारवाकुलम् ।।

कूजत्पारावत कुलं गुरुसारीकथावरम् ।। २१ ।।

खेलन्मरालयुगलं जीवं जीवककांतिमत् ।।

माल्याहूत द्विरेफाणां मंजुगुंजारवावृतम् ।। २२ ।।

कर्पूरैण मदामोद सोदरानिलवीजितम् ।।

क्रीडामर्कटदंष्ट्राग्री कृतमाणिक्यदाडिमम् ।। २३ ।।

दाडिमीबीजसंभ्रांतशुकतुंडात्तमौक्तिकम् ।।

धनधान्यसमृद्धं च पद्मालयमिवापरम् ।। २४ ।।

कमलामोदगर्भं च गर्भरूपं विना प्रिये ।।

गर्भरूपमुखं प्रेक्ष्ये कथं कनककुडले ।। २५ ।।

यद्युपायोऽस्ति तद्ब्रूहि धिगपुत्रस्य जीवितम् ।।

सर्वशून्यमिवाभाति गृहमेतदनंगजम् ।। २६ ।।

धिगेतत्सौधसौंदर्यं धिगेतद्धनसंचयम् ।।

विनापत्यं प्रियतमे जीवितं च धिगावयोः ।। २१७ ।।

प्रलपंतमिव प्रोच्चैः प्रियं कनककुंडला ।।

बभाषेंऽतर्विनिःश्वस्य यक्षिणी सा पतिव्रता ।। २८ ।।

।। कनककुंडलोवाच ।। ।।

किमर्थं खिद्यसे कांत ज्ञानवानसि यद्भवान् ।।

अत्रोपायोऽस्त्यपत्यास्यै विस्रब्धमवधारय ।। २९ ।।

किमुद्यमवतां पुंसां दुर्लभं हि चराचरे ।।

ईश्वरार्पितबुद्धीनां स्फुरंत्यग्रे मनोरथाः ।। 4.1.32.३० ।।

दैवं हेतुं वदंत्येवं भृशं कापुरुषाः पते ।।

स्वयं पुराकृतं कर्म दैवं तच्च न हीतरत् ।।३१।।

ततः पौरुषमालंब्य तत्कर्म परिशांतये ।।

ईश्वरं शरणं यायात्सर्वकारणकारणम् ।। ३२ ।।

अपत्यं द्रविणं दारा हारा हर्म्यं हया गजाः ।।

सुखानि स्वर्गमोक्षौ च न दूरे शिवभक्तितः ।। ३३ ।।

विधातुः शांभवीं भक्तिं प्रिय सर्वे मनोरथाः ।।

सिद्धयोष्टौ गृहद्वारं सेवंते नात्र संशयः ।। ३४ ।।

नारायणोपि भगवानंतरात्मा जगत्पतिः ।।

चराचराणामविता जातः श्रीकंठसेवया ।। ३५ ।।

ब्रह्मणः सृष्टिकर्तृत्वं दत्तं तेनैव शंभुना ।।

इंद्रादयो लोकपाला जाता शंभोरनुग्रहात् ।। ३६ ।।

मृत्युंजयं सुतं लेभे शिलादोप्यनपत्यवान् ।।

श्वेतकेतुरपि प्राप जीवितं कालपाशतः ।। ३७ ।।

क्षीरार्णवाधिपतितामुपमन्युरवाप्तवान् ।।

अंधकोप्यभवद्भृंगी गाणपत्यपदोर्जितः ।। ३८ ।।

जिगाय शार्ङ्गिणं संख्ये दधीचिः शंभुसेवया ।।

प्राजापत्यपदं प्राप दक्षः संशील्य शंकरम्।। ३९ ।।

मनोरथपथातीतं यच्च वाचामगोचरम्।।
गोचरो गोचरीकुर्यात्तत्पदं क्षणतो मृडः ।। 4.1.32.४० ।।
अनाराध्य महेशानं सर्वदं सर्वदेहिनाम् ।।
कोपि क्वापि किमप्यत्र न लभेतेति निश्चितम् ।। ४१ ।।
तस्मात्सर्वप्रयत्नेन शंकरं शरणं व्रज ।।
यदिच्छसि प्रियं पुत्रं प्रियसर्वजनीनकम् ।। ४२ ।।
इति श्रुत्वा वचः पत्न्याः पूर्णभद्रः स यक्षराट् ।।
आराध्य श्रीमहादेवं गीतज्ञो गीतविद्यया ।। ४३ ।।
दिनैः कतिपयैरेव परिपूर्णमनोरथः ।।
पुत्रकाममवापोच्चैस्तस्यां पत्न्यां दृढव्रतः ।। ४४ ।।
नादेश्वरं समभ्यर्च्य कैः कैर्नापि स्वचिंतितम् ।।
तस्मात्काश्यां प्रयत्नेन सेव्यो नादेश्वरो नृभिः ।। ४५ ।।
अंतर्वत्न्यथ कालने तत्पत्नी सुषुवे सुतम् ।।
तस्य नाम पिता चक्रे हरिकेश इति द्विज ।। ४६ ।।
प्रीतिदायं ददौ चाथ भूरिपुत्राननेक्षणात् ।।
पूर्णभद्रस्तथागस्त्य हृष्टा कनककुंडला ।। ४७ ।।
बालोऽपि पूर्णचंद्राभ वदनो मदनोपमः ।।
वृद्धिं प्रतिक्षणं प्राप शुक्लपक्ष इवोडुराट् ।। ४८ ।।
यदाष्टवर्षदेशीयो हरिकेशोऽभवच्छिशुः ।।
नित्यं तदाप्रभृत्येवं शिवमेकममन्यत ।। ४९ ।।
पांसुक्रीडनसक्तोपि कुर्याल्लिंगं रजोमयम् ।।
शाद्वलैः कोमलतृणैः पूजयेच्च स कौतुकम् ।। 4.1.32.५० ।।
आकारयति मित्राणि शिवनाम्नाऽखिलानि सः ।।
चंद्रशेखरभूतेश मृत्युंजय मृडेश्वरः ।। ५१ ।।
धूर्जटे खंडपरशो मृडानीश त्रिलोचन ।।
भर्गशंभोपशुपते पिनाकिन्नुग्रशंकर ।। ५२ ।।
श्रीकंठनीलकंठेश स्मरारे पार्वतीपते ।।
कपालिन्भालनयन शूलपाणे महेश्वर ।। ५7३ ।।

अजिनांबरदिग्वासः स्वर्धुनी क्लिन्नमौलिज ।।
विरूपाक्षाहिनेपथ्य गृणन्नामावलीमिमाम् ।। ५४ ।।
सवयस्कानिति मुहुः समाह्वयति लालयन् ।।
शब्दग्रहौ न गृह्णीतस्तस्यान्याख्यां हरादृते ।। ५५ ।।
पद्भ्यां न पद्यते चान्यदृते भूतेश्वराजिरात् ।।
द्रष्टुं रूपांतरं तस्य वीक्षणेन विचक्षणे ।। ५६ ।।
रसयेत्तस्य रसना हरनामाक्षरामृतम्।।
शिवांघ्रिकमलामोदाद्घ्राणं नैव जिघृक्षति ।। ५७ ।।
करौ तत्कौतुककरौ मनो मनति नापरम् ।।
शिवसात्कृत्यपेयानि पीयते तेन सद्धिया ।। ५८ ।।
भक्ष्यते सर्वभक्ष्याणि त्र्यक्षप्रत्यक्षगान्यपि ।।
सर्वावस्थासु सर्वत्र न स पश्येच्छिवं विना ।। ५९ ।।
गच्छन्गायन्स्वपंस्तिष्ठञ्च्छयानोऽदन्पिबन्नपि ।।
परितस्त्र्यक्षमैक्षिष्ट नान्यं भावं चिकेति सः ।। 4.1.32.६० ।।
क्षणदासु प्रसुप्तोपि क्व यासीति वदन्मुहुः ।।
क्षणं त्र्यक्ष प्रतीक्षस्व बुध्यतीति स बालकः ।। ६१ ।।
स्पष्टां चेष्टां विलोक्येति हरिकेशस्य तत्पिता ।।
अशिक्षयत्सुतं सोऽथ गृहकर्मरतो भव ।। ६२ ।।
एते तुरंगमा वत्स तवैतेऽश्वकिशो रकाः ।।
चित्राणीमानि वासांसि सुदुकूलान्यमूनि च ।। ६३ ।।
रत्नान्याकरशुद्धानि नानाजातीन्यनेकशः ।।
कुप्यं बहुविधं चैतद्गोधनानि महांति च ।।६४।।
अमत्राणि महार्हाणि रौप्य कांस्यमयानि च ।।
पणनीयानि वस्तूनि नानादेशोद्भवान्यपि ।। ६५ ।।
चामराणि विचित्राणि गंधद्रव्याण्यनेकशः ।।
एतान्यन्यानि बहुशस्त्वनेके धान्यराशयः ।। ६६ ।।
एतत्त्वदीयं सकलंवस्तुजातं समंततः ।।
अर्थोपार्जनविद्याश्च सर्वाः शिक्षस्व पुत्रक ।। ६७ ।।

चेष्टास्त्यज दरिद्राणां धूलिधूसरिणाममूः ।।
अभ्यस्यविद्याः सकला भोगान्निर्विश्य चोत्तमान् ।। ६८ ।।
तां दशां चरमां प्राप्य भक्तियोगं ततश्चर ।।
असकृच्छिक्षितः पित्रेत्यवमन्य गुरोर्गिरम्।। ६९ ।।
रुष्टदृष्टिं च जनकं कदाचिदवलोक्य सः ।।
निर्जगाम गृहाद्भीतो हरिकेश उदारधीः ।। 4.1.32.७० ।।
ततश्चिंतामवापोच्चैर्दिग्भ्रांतिमपि चाप्तवान् ।।
अहो बालिशबुद्धित्वात्कुतस्त्यक्तं गृहं मया ।। ७१ ।।
क्व यामि क्व स्थिते शंभो मम श्रेयो भविष्यति ।।
पित्रा निर्वासितश्चाहं न च वेद्म्यथ किंचन ।। ७२ ।।
इति श्रुतं मया पूर्वं पितुरुत्संगवर्तिना ।।
गदतस्तातपुरतः कस्यचिद्वचनं स्फुटम् ।। ७३ ।।
मात्रा पित्रा परित्यक्ता ये त्यक्ता निजबंधुभिः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। ७४ ।।
जरया परिभूता ये ये व्याधिविकलीकृताः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। ७५ ।।
पदे पदे समाक्रांता ये विपद्भिरहर्निशम् ।।
येषां क्वापि गतिर्नास्ति तेषांवाराणसी गतिः ।। ७६ ।।
पापराशिभिराक्रांता ये दारिद्र्य पराजिताः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। ७७ ।।
संसार भयभीताय ये ये बद्धाः कर्मबंधनैः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। ७८ ।।
श्रुतिस्मृतिविहीना ये शौचाचारविवर्जिताः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। ७९ ।।
ये च योगपरिभ्रष्टास्तपो दान विवर्जिताः ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ।। 4.1.32.८० ।।
मध्ये बंधुजने येषामपमानं पदे पदे ।।
तेषामानंददं चैकं शंभोरानंदकाननम् ।।८१।।

आनंदकानने येषां रुचिर्वै वसतां सताम् ।।
विश्वेशानुगृहीतानां तेषामानंदजोदयः ।। ८२ ।।
भर्ज्यते कर्मबीजानि यत्र विश्वेशवह्निना ।।
अतो महाश्मशानं तदगतीनां परा गतिः ।। ८३ ।।
हरिकेशो विचार्येति यातो वाराणसीं पुरीम् ।।
यत्राविमुक्ते जंतूनां त्यजतां पार्थिवीं तनुम् ।। ८४ ।।
पुनर्नो तनुसंबंधस्तनुद्वेषिप्रसादतः ।।
आनंदवनमासाद्य स तपः शरणं गतः ।। ८५ ।।
अथ कालांतरे शंभुः प्रविश्यानंदकानमम् ।।
पार्वत्यै दर्शयामास निजमाक्रीडकाननम् ।। ८६ ।।
अमंदामोदमंदारं कोविदारपरिष्कृतम् ।।
चारुचंपकचूताढ्यं प्रोत्फुल्लनवमल्लिकम् ।। ८७ ।।
विकसन्मालतीजालं करवीरविराजितम् ।।
प्रस्फुटत्केतकिवनं प्रोद्यत्कुरबकोर्जितम् ।। ८८ ।।
जृंभद्विचकिलामोदं लसत्कंकेलिपल्लवम्।।
नवमल्लीपरिमलाकृष्टषट्पदनादितम् ।। ८९ ।।
पुष्प्यपुन्नागनिकरं बकुलामोदमोदितम् ।।
मेदस्विपाटलामोद सदामोदित दिङ्मुखम् ।। 4.1.32.९० ।।
बहुशोलंबिरोलंब मालामालितभूतलम् ।।
चलच्चंदनशाखाग्र रममाणपि काकुलम् ।। ९१ ।।
गुरुणाऽगुरुणामत्त भद्रजातिविहंगमम् ।।
नागकेसरशाखास्थ शालभंजि विनोदितम् ।। ९२ ।।
मेरुतुंग नमेरुस्थच्छायाक्रीडितकिंनरम् ।।
किंनरीमिथुनोद्गीतं गानवच्छुककिंशुकम् ।। ९३ ।।
कदंबानां कदंबेषु गुंजद्रोलंबयुग्मकम् ।।
जितसौवर्णवर्णोच्च कर्णिकारविराजितम् ।। ९४ ।।
शालतालतमालाली हिंताली लकुचावृतम् ।।
लसत्सप्तच्छदामोदं खर्जूरीराजिराजितम् ।।

नारिकेल तरुच्छन्न नारंगीरागरंजितम् ।। ९५ ।।

फलिजंबीरनिकरं मधूकमधुपाकुलम् ।।

शाल्मली शीतलच्छायं पिचुमंद महावनम्।। ९६ ।।

मधुरामोद दमनच्छन्नं मरुबनोदितम् ।।

लवलीलोललीलाभृन्मंदमारुतलोलितम् ।। ९७ ।।

भिल्ली हल्लीसकप्रीति झिल्लीरावविराविणम् ।।

क्वचित्सरः परिसरक्रीडत्क्रोडकदंबकम् ।। ९८ ।।

मरालीगलनालीस्थ बिसासक्तसितच्छदम् ।।

विशोककोकमिथुनक्रीडाक्रेंकारसुंदरम् ।। ९९ ।।

बकशावकसंचारं लक्ष्मणासक्त सारसम् ।।

मत्तबर्हिणसंघुष्टं कपिंजलकुलाकुलम् ।। 4.1.32.१०० ।।

जीवंजीवलसज्जीवं क्वणत्कारंडवोत्कटम् ।।

दीर्घिकावारिसंचारि शीतमारुत वीजितम्।। १ ।।

मदांदोलितकह्लार परागपरिपिंगलम् ।।

उल्लसत्पंकजमुखं नीलेंदीवरलोचनम् ।। २ ।।

तमालकबरीभारं विलसद्दाडिमीरदम् ।।

भ्रमरालीलसद्भ्रूकं शुकनासाविराजितम् ।। ३ ।।

महांधुश्रवणं दूर्वा श्मश्रुभिः परिशोभितम् ।।

कमलामोदनिःश्वासं बिंबीफल रदच्छदम् ।। ४ ।।

सुपद्मपत्रवसनं कर्णिकारविभूषणम् ।।

कम्रकंबु लसत्कंठं शंकरस्कंध बंधुरम् ।। ५ ।।

गंधसारसमासक्ता हीन दोर्दंडमंडितम् ।।

अशोकपल्लवांगुष्ठं केतकीनखरोज्ज्वलम् ।। ६ ।।

लसत्कंठीरवोरस्कं गंडशैलपृथूदरम् ।।

जलावर्तलसन्नाभि तरुजंघा युगान्वितम् ।। ७ ।।

स्थलभाक्पद्मचरणं मत्तमातंगगामिनम् ।।

लसत्कदलिकेदारदलच्चीनांशुकावृतम् ।। ८ ।।

नानासुकुममालाभिर्मालितं च समंततः ।।

अकंटकितरुच्छन्नं महिष श्वापदावृतम् ।। ९ ।।

चंद्रकांतशिलासुप्तकृष्णैणहरितोडुपम् ।।

तरुप्रकीर्णकुसुम जितस्वर्लोकतारकम् ।।

दर्शयन्नित्थमाक्रीडं देव्यै देवोविशद्वनम् ।। 4.1.32.११० ।।

।। देवदेव उवाच ।। ।।

यथाप्रियतमा देवि मम त्वं सर्वसुंदरि ।।

तथा प्रियतरं चैतन्मे सदानंदकाननम् ।। ११ ।।

अत्रानंदवने देवि मृतानां मदनुग्रहात् ।।

वपुस्त्वमृततां प्राप्तमपुनर्भविनस्तु ते ।। १२ ।।

भविनो ये विपद्यंते वाराणस्यां ममाज्ञया ।।

तेषां बीजानि दग्धानि श्मशानज्वलदग्निना ।। १३ ।।

महाश्मशाने ये प्राप्ता दीर्घनिद्रां गिरींद्रजे ।।

न पुनर्गर्भशयने ते स्वपंति कदाचन ।। १४ ।।

ब्रह्मज्ञानेन मुच्यंते नान्यथा जंतवः क्वचित् ।।

ब्रह्मज्ञानमये क्षेत्रे प्रयागे वा तनुत्यजः ।। १५ ।।

ब्रह्मज्ञानं तदेवाहं काशीसंस्थितिभागिनाम् ।।

दिशामि तारकं प्रांते मुच्यंते ते तु तत्क्षणात् ।। १६ ।।

गृह्णीयुः पापकर्माणि काशीमृतविनिंदकाः ।।

सुकृतानि स्तुतिकृतो मुच्यंते तेऽत्र जंतवः ।। १७ ।।

ब्रह्मज्ञानं कुतो देवि कलिनोपहतात्मनाम् ।।

स्वभावचंचलाक्षाणां तद्ब्रह्मेह दिशाम्यहम् ।। १८ ।।

योगिनो योगविभ्रष्टाः पतंत्यैश्वर्यमोहिताः ।।

काश्यां पतित्वा न पुनः पतंत्यपि महालये ।। १९ ।।

ब्रह्मज्ञानं न विंदंति योगैरेकेन जन्मना ।।

जन्मनैकेन मुच्यंते काश्यामंतकृतो जनाः ।। 4.1.32.१२० ।।

यथेह मुच्यते जंतुर्गिरिजे मदनुग्रहात् ।।

अविमुक्ते महाक्षेत्रे न तथान्यत्र कुत्रचित् ।। २१ ।।

बहुजन्मसमभ्यासाद्योगी मुच्येत वा न वा ।।

मृतमात्रो विमुच्येत काश्यामेकेन जन्मना ।। २२ ।।

न सिध्यति कलौ योगो न सिध्यति कलौ तपः ।।

न्यायार्जितधनोत्सर्गः सद्यः सिध्येत्कलौ नरः ।। २३ ।।

न व्रतं न तपो नेज्या न जपो न सुरार्चनम् ।।

दानमेव कलौ मुक्त्यै काशीदानैरवाप्यते ।। २४ ।।

कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।।

कलौ भागीरथी गंगा कलौ दानं विशिष्यते ।। २५ ।।

गंगोत्तरवहाकाश्यां लिंगं विश्वेश्वरं मम ।।

उभे विमुक्तिदे पुंसां प्राप्ये दानबलात्कलौ ।। २६ ।।

पुण्यवानितरो वापि मम क्षेत्रस्य सेवया ।।

मुक्तो भवति देवेशि नात्र कार्या विचारणा ।। २७ ।।

अविमुक्तस्य माहात्म्यात्पुण्यपापेन कर्मणा ।।

देवि प्रभवतः पुंसामपिजन्मशतार्जिते ।। २८ ।।

अविमुक्तं न मोक्तव्यं तस्माद्देवि मुमुक्षुणा ।।

हन्यमानेन बहुधा ह्युपसर्गशतैरपि ।। २९ ।।

विधाय क्षेत्रसंन्यासं ये वसंतीह मानवाः ।।

जीवन्मुक्तास्तु ते देवि तेषां विघ्नं हराम्यहम् ।। 4.1.32.१३० ।।

न योगिनां हृदाकाशे न कैलासे न मंदरे ।।

तथा वासरतिर्मेऽस्ति यथा काश्यां रतिर्मम ।। ३१ ।।

काशीवासि जनो देवि मम गर्भे वसेत्सदा ।।

अतस्तं मोचयाम्यंते प्रतिज्ञेयं यतो मम ।। ३२ ।।

तामसीं प्रकृतिं प्राप्य कालो भूत्वा चराचरम् ।।

ग्रसामि लीलया देवि काशीं रक्षामि यत्नतः ।। ३३ ।।

प्रेमपात्रद्वयं देवि नितरां नेतरन्मम ।।

त्वं वा तपोधने गौरि काशी वानंदभूमिका ।। ३४ ।।

विना काशी न मे स्थानं विना काशी न मे रतिः ।।

विना काशी न निर्वाणं सत्यं सत्यं वदाम्यहम् ।। ३५ ।।

ब्रह्मांडगोलके यद्वन्मुक्तिः काश्यां व्यवस्थिता ।।

अष्टांगयोगयुक्त्या वा न तथा हेलयाऽन्यतः ।। ३६ ।।

इति ब्रुवाणो देवेशो हरिकेशमवैक्षत ।।

मध्ये वनं तपस्यंतमशोकतरुमूलगम्।। ३७ ।।

शुष्कस्नायुपिनद्धास्थि संचयं निश्चलाकृतिम् ।।

वल्मीककीटकाकोटिशोषितासृगसृग्धरम् ।।३८।।

निर्मांसकीकसचयं स्फटिकोपलनिश्चलम् ।।

शंखकुंदेंदुतुहिन महाशंखलसच्छ्रियम्।। ३९ ।।

सत्वावलंबितप्राणमायुःशेषेणरक्षितम् ।।

निःश्वासोच्छ्वासपवनवृत्तिसूचितजीवितम् ।। 4.1.32.१४० ।।

निमेषोन्मेषसंचार पिशुनीकृतजंतुकम् ।।

पिंगतारस्फुरद्रश्मि नेत्रदीपित दिङ्मुखम् ।। ४१ ।।

तत्तपोग्निशिखादाव चुंबितम्लानकाननम्।।

तत्सौम्यदृक्सुधावर्ष संसिक्ताऽखिलभूरुहम् ।। ४२ ।।

साक्षात्तपस्यंतमिव तपो धृत्वा नराकृतिम् ।।

निराकृतिं निराकांक्षं कृत्वा भक्तिं च कांचन ।।४३।।

कुरंगशावैर्गणशो भ्रमद्भिः परिवारितम् ।।

नितांतभीषणास्यैश्च पंचास्यैः परिरक्षितम् ।। ४४ ।।

तं तथाभूतमालोक्य देवी देवं व्यजिज्ञपत् ।।

वरेणच्छंदयेशामुं निजभक्तं तपस्विनम् ।। ४५ ।।

त्वदेकचित्तं त्वदधीनजीवितं त्वदेककर्माणममुं त्वदाश्रयम् ।।

तीव्रैस्तपोभिः परिशुष्कविग्रहं कुरुष्व यक्षस्य वैररनुग्रहम् ।। ४६ ।।

देवो वृषेंद्रादवरुह्य देव्या शैलादिना दत्तकरावलंबः ।।

समाधिसंकोचितनेत्रपत्रं पस्पर्श हस्तेन दयार्द्रचेताः ।। ४७ ।।

ततः स यक्षो विनिमील्य चक्षुषी त्र्यक्षं पुरो वीक्ष्य समक्षमात्मनः ।।

उद्यत्सहस्रांशु सहस्रतेजसं जगाद हर्षाकुल गद्गदाक्षरम् ।। ४८ ।।

जयेश शंभो गिरिजेश शंकर त्रिशूलपाणे शशिखंडशेखर ।।

स्पर्शत्कृपालो तव पाणिपंकजं प्राप्यामृतीभूततनूलतोऽभवम् ।। ४९ ।।

श्रुत्वोदितां तस्य महेश्वरो गिरं मृद्वीकया साम्यमुपेयुषीं मृदु ।।

भक्तस्य धीरस्य महातपोनिधे ददौ वराणां निकर तदा मुदा ।। 4.1.32.१५० ।।

क्षेत्रस्य यक्षास्य मम प्रियस्य मे भवाधुना दंडधरो वरान्मम ।।

स्थिरस्त्वमद्यादि दुरात्मदंडकः सुपालकः पुण्यकृतां च मत्प्रियः ।। ५१ ।।

त्वं दंडपाणिर्भव नामतोऽधुना सर्वान्गणाञ्छाधि ममाज्ञयोत्कटान् ।।

गणाविमौ त्वामनुयायिनौ सदा नाम्ना यथार्थौ नृषु संभ्रमोद्भ्रमौ ।। ५२ ।।

त्वमंत्यभूषां कुरु काशिवासिनां गले सुनीलां भुजगेंद्र कंकणाम् ।।

भालेसु नेत्रां करिकृत्तिवाससं वामेक्षणालक्षित वामभागाम् ।। ५३ ।।

मौलौ लसत्पिंगकपर्दभारिणी विभूतिसंक्षालित पुण्यविग्रहाम् ।।

अहोहिमांशोः कलया लसच्छ्रियं वृषेंद्रलीला गतिमंदगामिनीम् ।। ५४ ।।

त्वमन्नदः काशिनिवासिनां सदा त्वं प्राणदो ज्ञानद एक एव हि ।।

त्वं मोक्षदो मन्मुखसूपदेशतस्त्वं निश्चलां सद्वसतिं विधास्यसि ।। ५५ ।।

त्वं विघ्नपूगैः परिपीड्य पापिनः संभ्रातिमुत्पाद्य विनेष्यसे बहिः ।।

आनीय भक्तान्क्षणतोपिदूरतो मुक्तिं परां दापयितासि पिंगल ।। ५६ ।।

त्वत्सात्कृते क्षेत्रवरे हि यक्षराट्कस्त्वामनाराध्य विमुक्तिभाजनम् ।।

सभाजनं पूर्वत एव ते चरेत्ततः समर्चां मम भक्त आचरेत् ।। ५७ ।।

त्वं ग्रामवासप्रद एव मे पुरेऽध्यक्षस्त्वमेधीह च दंडनायकः ।।

दुष्टान्समुद्घाटय काशिवैरिणः काशीं पुरीं रक्ष सदा मुदान्वितः ।। ५८ ।।

पूर्णभद्रसुतदंडनायक त्र्यक्षयक्षहरिकेश पिंगल ।।

काशिवास वसतां सदान्नदज्ञानमोक्षदगणाग्रणीर्भव ।। ५९ ।।

मद्भक्तियुक्तोपि विना त्वदीयां भक्तिं न काशी वसतिं लभेत ।।

गणेषु देवेषु हि मानवेषु तदग्रमान्यो भव दंडपाणे ।। 4.1.32.१६० ।।

ज्ञानोदतीर्थे विहितोदकक्रियो यस्त्वां समाराधयिता गणेशम् ।।

स एव लोके कृतकृत्यतामगान्ममातुलानुग्रहतोऽत्र पुण्यवान् ।। ६१ ।।

त्वं दक्षिणस्यां दिशि दंडपाणे सदैव मे नेत्रसमक्षमत्र ।।

त्वं दंडयन्प्राणभृतो दुरीहानिहास्वनॄन्स्वानभयं दिशन्वै ।। ६२ ।।

।। स्कंद उवाच ।। ।।

इति दत्त्वा वरान्विप्र गिरीशो दंडपाणये ।।

वृषेंद्रमधिरुह्याथ विवेशानंदकाननम् ।। ६३ ।।

कुंभोद्भव तदारभ्य यक्षराड्दंडनायकः ।।

पुरीं वाराणसीं सम्यगनुशास्ति निदेशतः ।। ६४ ।।

अहमप्यत्र वसतिं चक्रे तदनुसूयया ।।

वसन्नपि मया काश्यां यतः संभावितो न सः ।। ६९ ।।

मुने क्षेत्रं यदत्याक्षीस्त्वमप्येवंविधो वशी ।।

शंके तत्राहमेवाद्धा कामं तस्यैव विक्रियाम् ।। ६६ ।।

मनाग्विरुद्धाचरणं यदि द्विज विलक्षयेत् ।।

हरिकेशस्तदा काश्यां क्व स्थितिः क्व च निर्वृतिः ।। ६७ ।।

दंडपाणिमनाराध्य कः काश्यां सुखमाप्नुयात् ।।

प्रविविक्षुरहं काशीं दूरगोपि भजामि तम् ।। ६८ ।।

रत्नभद्रांगजोद्भूतं पूर्णभद्रसुतो त्तम ।।

निर्विघ्नं कुरु मे यक्ष काशीवासं शिवाप्तये ।। ६९ ।।

धन्यो यक्षः पूर्णभद्रो धन्या कांचनकुंडला ।।

ययोर्जठरपीठेभूर्दंडपाणे महामते ।। 4.1.32.१७० ।।

जय यक्षपते धीर जय पिंगललोचन ।।

जय पिंगजटाभार जय दंड महायुध ।। ७१ ।।

अविमुक्त महाक्षेत्र सूत्रधारोग्रतापस ।।

दंडनायक भीमास्य जय विश्वेश्वरप्रिय ।। ७२ ।।

सौम्यानां सौम्यवदन भीषणानां भयानक ।।

क्षेत्रपापधियां काल महाकालमहाप्रिय ।। ७३ ।।

जयप्राणद यक्षेंद्र काशीवासान्नमोक्षद ।।

महारत्नस्फुरद्रश्मि चयचर्चित विग्रह ।। ७४ ।।

महासंभ्रातिजनक महोद्भ्रांति प्रदायक ।।

अभक्तानां च भक्तानां संभ्रात्युद्भ्रांति नाशक ।। ७५ ।।

प्रांतनेपथ्यचतुर जयज्ञाननिधिप्रद ।।

जयगौरीपदाब्जाले मोक्षेक्षणविचक्षण ।। ७६ ।।

यक्षराजाष्टकं पुण्यमिदं नित्यं त्रिकालतः ।।

जपामि मैत्रावरुणे वाराणस्याप्तिकारणम् ।। ७७ ।।

दंडपाण्यष्टकं धीमाञ्जपन्विघ्नैर्न जातुचित् ।।

श्रद्धया परिभूयेत काशीवासफलं लभेत ।। ७८ ।।

प्रादुर्भावं दंडपाणेः शृण्वन्तोत्रमिदं गृणन् ।।

विपत्तिमन्यतः प्राप्य काशीं जन्मांतरे लभेत् ।। ७९ ।।

श्रुत्वाध्यायमिमं पुण्यं दंडपाणिसमुद्भवम् ।।

पठित्वा पाठयित्वापि न विघ्नैरभिभूयतै ।। 4.1.32.८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे दंडपाणिप्रादुर्भावो नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३३



।। अगस्त्य उवाच ।। ।।

स्कंदज्ञानोदतीर्थस्य माहात्म्यं वद सांप्रतम् ।।

ज्ञानवापीं प्रशंसंति यतः स्वर्गौकसोप्यलम् ।।१।।

।। स्कंद उवाच ।। ।।

घटोद्भव महाप्राज्ञ शृणु पापप्रणोदिनीम् ।।

ज्ञानवाप्याः समुत्पत्तिं कथ्यमानां मयाधुना ।।२।।

अनादिसिद्धे संसारे पुरा देवयुगे मुने ।।

प्राप्तः कुतश्चिदीशानश्चरन्स्वैरमितस्ततः ।। ३ ।।

न वर्षंति यदाभ्राणि न प्रावर्तंत निम्नगाः ।।

जलाभिलाषो न यदा स्नानपानादि कर्मणि ।। ४ ।।

क्षारस्वादूदयोरेव यदासीज्जलदर्शनम् ।।

प्रथिव्यां नरसंचारे वतर्माने क्वचित्क्वचित् ।। ५ ।।

निर्वाणकमलाक्षेत्रं श्रीमदानंदकाननम् ।।

महाश्मशानं सर्वेषां बीजानां परमूषरम् ।। ६ ।।

महाशयनसुप्तानां जंतूनां प्रतिबोधकम् ।।

संसारसागरावर्त पतज्जंतुतरंडकम् ।। ७ ।।

यातायातातिसंखिन्न जंतुविश्राममंडपम ।।

अनेकजन्मगुणित कर्मसूत्रच्छिदाक्षुरम् ।। ८।।

सच्चिदानंदनिलयं परब्रह्मरसायनम् ।।

सुखसंतानजनकं मोक्षसाधनसिद्धिदम् ।। ९ ।।

प्रविश्य क्षेत्रमेतत्स ईशानो जटिलस्तदा ।।

लसत्त्रिशूलविमलरश्मिजालसमाकुलः ।। 4.1.33.१० ।।

आलुलोके महालिंगं वैकुंठपरमेष्ठिनोः ।।

महाहमहमिकायां प्रादुरास यदादितः ।। ११ ।।

ज्योतिर्मयीभिर्मालाभिः परितः परिवेष्टितम् ।।

वृंदैर्वृंदारकर्षीणां गणानां च निरंतरम् ।। १२ ।।

सिद्धानां योगिनां स्तोमैरर्च्यमानं निरंतरम् ।।

गीयमानं च गंधर्वैः स्तूयमानं च चारणैः ।। १३ ।।

अंगहारैरप्सरोभिः सेव्यमानमनेकधा ।।

नीराज्यमानं सततं नागीभिर्मणिदीपकैः ।। १४ ।।

विद्याधरीकिन्नरीभिस्त्रिकालं कृतमंडनम् ।।

अमरीचमरीराजि वीज्यमानमितस्ततः ।। १५ ।।

अस्येशानस्य तल्लिंगं दृष्ट्वेच्छेत्यभवत्तदा ।।

स्नपयामि महल्लिंगं कलशैः शीतलैर्जलैः ।। १६ ।।

चखान च त्रिशूलेन दक्षिणाशोपकंठतः ।।

कुंडं प्रचंडवेगेन रुद्रोरुद्रवपुर्धरः ।। १७ ।।

पृथिव्यावरणांभांसि निष्क्रांतानि तदा मुने ।।

भूप्रमाणाद्दशगुणैर्यैरियं वसुधावृता ।। १८ ।।

तैर्जलैः स्नापयांचक्रे त्वत्स्पृष्टैरन्यदेहिभिः

तुषारैर्जाड्यविधुरैर्जंजपूकौघहारिभिः ।। १९ ।।

सन्मनोभिरिवात्यच्छैरनच्छैर्व्योमवर्त्मवत् ।।

ज्योत्स्नावदुज्ज्वलच्छायैः पावनैः शंभुनामवत् ।। 4.1.33.२० ।।

पीयूषवत्स्वादुतरैः सुखस्पर्शैर्गवांगवत् ।।

निष्पापधीवद्गंभीरैस्तरलैः पापिशर्मवत् ।। २१ ।।

विजिताब्जमहागंधैः पाटलामोदमोदिभिः ।।

अदृष्टपूर्वलोकानां मनोनयनहारिभिः ।। २२ ।।

अज्ञानतापसंतप्त प्राणिप्राणैकरक्षिभिः ।।

पंचामृतानां कलशैः स्नपनातिफलप्रदैः ।। २३ ।।

श्रद्धोपस्पर्शि दृदयलिंग त्रितयहेतुभिः ।।

अज्ञानतिमिरार्काभैर्ज्ञानदान निदायकैः।।२४।।

विश्वभर्तुरुमास्पर्शसुखातिसुखकारिभिः ।।

महावभृथसुस्नान महाशुद्धिविधायिभिः ।। २५ ।।

सहस्रधारैः कलशैः स ईशानो घटोद्भव ।।

सहस्रकृत्वः स्नपयामास संहृष्टमानसः ।। २६।।
ततः प्रसन्नो भगवान्विश्वात्मा विश्वलोचनः ।।
तमुवाच तदेशानं रुद्रं रुद्रवपुर्धरम् ।। २७ ।।
तव प्रसन्नोस्मीशान कर्मणानेन सुव्रत ।।
गुरुणानन्यपूर्वेण ममातिप्रीतिकारिणा ।। २८ ।।
ततस्त्वं जटिलेशान वरं ब्रूहि तपोधन ।।
अदेयं न तवास्त्यद्य महोद्यमपरायण ।। २९ ।।
।। ईशान उवाच ।। ।।
यदि प्रसन्नो देवेश वरयोग्योस्म्यहं यदि ।।
तदेतदतुलं तीर्थं तव नाम्नास्तु शंकर ।। 4.1.33.३० ।।
।।विश्वेश्वर उवाच ।।
त्रिलोक्यां यानि तीर्थानि भूर्भुवःस्वः स्थितान्यपि ।।
तेभ्योखिलेभ्यस्तीर्थेभ्यः शिवतीर्थमिदं परम् ।। ३१ ।।
शिवज्ञानमिति ब्रूयुः शिवशब्दार्थचिंतकाः ।।
तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात् ।। ३२ ।।
अतो ज्ञानोद नामैतत्तीर्थं त्रैलोक्यविश्रुतम् ।।
अस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते। ।। ३३ ।।
ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलं लभेत् ।।
स्पर्शनाचमनाभ्यां च राजसूयाश्वमेधयोः ।। ३४ ।।
फल्गुतीर्थे नरः स्नात्वा संतर्प्य च पितामहान् ।।
यत्फलं समवाप्नोति तदत्र श्राद्धकर्मणा ।। ३५ ।।
गुरुपुष्यासिताष्टम्यां व्यतीपातो यदा भवेत् ।।
तदात्र श्राद्धकरणाद्गयाकोटिगुणं भवेत् ।। ३६ ।।
यत्फलं समवाप्नोति पितॄन्संतर्प्य पुष्करे ।।
तत्फलं कोटिगुणितं ज्ञानतीर्थे तिलोदकैः ।। ३७ ।।
सन्निहत्यां कुरुक्षेत्रे तमोग्रस्ते विवस्वति ।।
यत्फलं पिंडदानेन तज्ज्ञानोदे दिने दिने।।३८।।
पिंडनिर्वपणं येषां ज्ञानतीर्थे सुतैः कृतम्।।

मोदंते शिवलोके ते यावदाभूतसंप्लवम् ।। ३९ ।।

अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः ।।

प्रातः स्नात्वाथ पीतांभस्त्वंतर्लिंगमयो भवेत् ।। 4.1.33.४० ।।

एकादश्यामुपोष्यात्र प्राश्नाति चुलुकत्रयम् ।।

हृदये तस्य जायंते त्रीणि लिंगान्यसंशयम् ।।४१।।

ईशानतीर्थे यः स्नात्वा विशेषात्सोमवासरे ।।।

संतर्प्य देवर्षि पितॄन्दत्त्वा दानम स्वशक्तितः ।। ४२ ।।

ततः समर्च्य श्रीलिंगं महासंभारविस्तरैः ।।

अत्रापि दत्त्वा नानार्थान्कृतकृत्योभवेन्नरः ।। ४३ ।।

उपास्य संध्यां ज्ञानोदे यत्पापं काललोपजम् ।

क्षणेन तदपाकृत्य ज्ञानवाञ्जायते द्विजः ।। ४४ ।।

शिवतीर्थमिदं प्रोक्तं ज्ञानतीर्थमिदं शुभम् ।।

तारकाख्यमिदं तीर्थं मोक्षतीर्थमिदं धुवम् ।। ४५ ।।

स्मरणादपि पापौघो ज्ञानोदस्य क्षयेद्ध्रुवम् ।।

दर्शनात्स्पर्शनात्स्नानात्पानाद्धर्मादिसंभवः ।। ४६ ।।

डाकिनीशाकिनी भूतप्रेतवेतालराक्षसाः ।।

ग्रहाः कूष्मांडझोटिंगाः कालकर्णी शिशुग्रहाः ।। ४७ ।।

ज्वरापस्मारविस्फोटद्वितीयकचतुर्थकाः ।।

सर्वे प्रशममायांति शिवतीर्थजलेक्षणात्।। ।। ४८ ।।

ज्ञानोदतीर्थपानीयैर्लिंगं यः स्नापयेत्सुधीः ।।

सर्वतीर्थोदकैस्तेन ध्रुवं संस्नापितं भवेत् ।। ४९ ।।

ज्ञानरूपोह मेवात्र द्रवमूर्तिं विधाय च ।।

जाड्यविध्वंसनं कुर्यां कुर्यां ज्ञानोपदेशनम् ।। 4.1.33.५० ।।

इति दत्त्वा वराञ्छंभुस्तत्रैवांतरधीयत ।।

कृतकृत्यमिवात्मानं सोप्यमंस्तत्रिशूलभृत् ।। ५१ ।।

ईशानो जटिलो रुद्रस्तत्प्राश्य परमोदकम्।।

अवाप्तवान्परं ज्ञानं येन निर्वृतिमाप्तवान्।। ५२ ।।

।। स्कंद उवाच ।। ।।

कलशोद्भव चित्रार्थमितिहासं पुरातनम् ।।
ज्ञानवाप्यां हि यद्वृत्तं तदाख्यामि निशामय ।। ५३ ।।
हरिस्वामीति विख्यातः काश्यामासीद्विजः पुरा ।।
तस्यैका तनया जाता रूपेणाऽप्रतिमा भुवि ।। ५४ ।।
न समा शीलसंपत्त्या तस्या काचन भूतले ।।
कलाकलापकुशला स्वरेणजितकोकिला ।। ५५ ।।
न नारी तादृगस्तीह ना भरी किन्नरी न च [।।
विद्याधरी न नो नागी गंधर्वी नासुरी न च ।। ५६ ।।
सर्वसौंदर्यनिलया सर्वलक्षणसत्खनिः ।।
अधिशेते ध्रुवं ध्वांतं तन्मौलिं ब्रध्न साध्वसात् ।।९७।।
तदास्य शरणं यातो मन्ये दर्शभयाच्छशी ।।
दिवापि न त्यजेत्तां तु त्रस्तश्चंडमरीचितः ।। ५८ ।।
तद्भ्रूर्भ्रमरराजीव गंडपत्रलतांतरे ।।
उदंचन्न्यंचदुड्डीन गतेरभ्यासभाजिनी ।। ५९ ।।
तच्चारुलोचनक्षेत्रे विचरंतौ च खंजनौ ।।
सदैव शारदीं प्रीतिं निर्विशेते निजेच्छया ।। 4.1.33.६० ।।
सुदत्या रदनश्रेणी छेदेषु विषमेषुणा ।।
विहिता कांचनी रेखा क्वेंदावेतावती कला ।। ६१ ।।
प्रायो मदन भूपाल हर्म्य रत्नांतरे शुभे ।।
जितप्रवालसुच्छाये तस्या रदनवाससी ।।६२।।
स्वर्गे मर्त्ये च पाताले नैषा रेखा क्वचित्स्त्रियाम्।।
तत्कंठरेखात्रितय व्याजेन शपते स्मरः ।। ६३ ।।
शंके चित्त भुवो राज्ञो लसत्पटकुटीद्वयम् ।।
अनर्घ्यरत्नकोशाढ्यं तम्या वक्षोरुहद्वयम् ।। ६४ ।।
अनंगभू नियमतोऽदृश्ये मध्ये नतभ्रुवः ।।
रोमालीलक्षिकामूर्ध्वामिव यष्टिं विधिर्व्यधात् ।। ६५ ।।
तस्या नाभीदरीं प्राप्य कंदर्पोऽनंगता गतः ।।
पुनः प्राप्तुमिवांगानि तप्यते परमं तपः ।। ६६ ।।

गुरुणैतन्नितंबेन महामन्मथ दीक्षया ।।

भुवि के के युवानो न स्वाधीना प्रापिताद्दशाम् ।। ६७ ।।

ऊरुस्तंभेन चैतस्याः स्तंभवत्कस्यनो मनः ।।

तस्तंभेन मुने वापि सुवृत्तेन सुवर्तनम् ।। ६८ ।।

पादांगुष्ठनखज्योतिः प्रभया कस्य न प्रभा ।।

विवेकजनिताऽध्वंसि मुने तस्या मृगीदृशः ।। ।। ६९ ।।

सा प्रत्यहं ज्ञानवाप्यां स्नायं स्नायं शिवालये ।।

संमार्जनादि कर्माणि कुरुतेऽनन्यमानसा ।। 4.1.33.७० ।।

तत्पादप्रतिबिंबेषु रेखा शष्पांकुरं चरन् ।।

नान्यद्वनांतरं याति काश्यां यूनां मनोमृगः ।। ७१ ।।

तदास्य पंकजं हित्वा यूनां नेत्रालिमालया ।।

न लतांतरमासेवि अप्यामोदप्रसूनयुक् ।। ७२ ।।

सुलोचनापि सा कन्या प्रेक्षेतास्यं न कस्यचित् ।।

सुश्रवा अपि सा बाला नादत्ते कस्यचिद्वचः ।। ७३ ।।

सुशीला शीलसंपन्ना रहस्तद्विरहातुरैः ।।

प्रार्थितापि सुरूपाढ्यैर्नाभिलाषं बबंध सा ।। ७४ ।।

धनैस्तस्याजनेतापि युवभिः प्रार्थितो बहु ।।

नाशकत्तां सुलीलां सदातुं शीलोर्जितश्रियम् ।। ७५ ।।

ज्ञानोदतीर्थभजनात्सा सुशीला कुमाग्कि ।।

बहिरंतस्तदाऽद्राक्षीत्सर्वलिंगमयं जगत ।। ७६ ।।

कदाचिदेकदा तां तु प्रसुप्तां सदनांगणे ।।

मोहितो रूपसंपत्त्या कश्चिद्विद्याधरोऽहरत् ।। ७७ ।।

व्योमवर्त्मनितां रात्रौ यावन्मलयपर्वतम् ।।

स निनीषति तावच्च विद्युन्माली समागतः ।। ७८ ।।

राक्षसो भीषणवपुः कपालकृतकुंडलः ।।

वसारुधिरलिप्तांगः श्मश्रुलः पिंगलोचनः ।। ७९ ।।

राक्षस उवाच ।। ।।

ममदृग्गोचरं यातो विद्याधरकुमारक ।।

अद्य त्वामेतया सार्धं प्रेषयामि यमालयम्।।4.1.33.८०।।

इति श्रुत्वाथ सा वाक्यं व्याघ्राघ्राता मृगी यथा ।।

चकंपेऽतीव संभीता कदलीदलवन्मुहुः ।। ८१ ।।

निजघान त्रिशूलेन रक्षो विद्याधरं च तम् ।।

विद्याधरकुमारोपि नितरां मधुराकृतिः ।। ८२ ।।

तद्भीषणत्रिशूलेन भिन्नोरस्को महाबलः ।।

जघान मुष्टिघातेन वज्रपातोपमेन तम् ।। ८३ ।।

नरमांसवसामत्तं विद्युन्मालिनमाहवे ।।

चूर्णितो मुष्टिपातेन सोऽपतद्वसुधातले ।। ८४ ।।

राक्षसो मृत्युवशगो वज्रेणेव महीधरः ।।

विद्याधरोपि तच्छूलघातेन विकलीकृतः ।। ८५ ।।

उवाच गद्गदं वाक्यं विघूर्णित विलोचनः ।।

प्रिये मुधा समानीता सुशित्यर्धोक्तिमुच्चरन् ।। ८६ ।।

जहौ प्राणान्रणे वीरस्तां प्रियां परितः स्मरन् ।। ८७ ।।

अनन्यपूर्वसंस्पर्श सुखं समनुभूय सा ।।

तमेव च पतिं मत्वा चक्रे शोकाग्निसात्तनुम् ।। ८८ ।।

लिंगत्रयशरीरिण्यास्तस्याः सान्निध्यतः स हि ।।

दिव्यं वपुः समासाद्य राक्षसस्त्रिदिवं ययौ ।। ८९ ।।

रणे पणीकृतप्राणो विद्याधरसुतोपि सः ।।

अंते प्रियां स्मरन्प्राप जनुर्मलयकेतुतः ।। 4.1.33.९० ।।

ध्यायंती सापि तं बाला विद्याधरकुमारकम्।।

विरहाग्नौ विसृष्टासुः कर्णाटे जन्मभागभूत् ।।९१।।

सुतो मलयकेतोस्तां कालेन परिणीतवान् ।।

माल्यकेतुरनंगश्रीः पित्रा दत्तां कलावतीम् ।। ९२ ।।

सापि प्राग्वासनायोगाल्लिंगार्चनरता सती ।।

हित्वा मलयजक्षोदं विभूतिं बह्वमंस्त वै।। ।। ९३ ।।

मुक्ता वैदूर्य माणिक्य पुष्परागेभ्य एव सा ।।

मेने रुद्राक्षनेपध्यमनर्घ्यं गर्भसुंदरी ।। ९४ ।।

कलावती माल्यकेतुं पतिं प्राप्य पतिव्रता ।।
अपत्यत्रितयं लेभे दिव्यभोगसमृद्धिभाक् ।। ९५ ।।
एकदा कश्चिदौदीच्यो माल्यकेतुं नरेश्वरम् ।।
चित्रकृच्चित्रपटिकां चित्रां दर्शितवानथ ।। ९६ ।।
तां तु चित्रपटीं राजा कलावत्यै समर्पयत् ।।
साथ चित्रपटीं रम्यां संप्रहृष्टतनूरुहा ।। ९७ ।।
मुहुर्मुहुः प्रपश्यंती रहसि प्राणदेवताम् ।।
विसस्मार स्वमपि च समाधिस्थेव योगिनी ।। ९८ ।।
क्षणमुन्मील्य नयने कृत्वा नेत्रातिथिं पटीम् ।।
तर्जन्यग्रमथोत्क्षिप्य स्वात्मानं समबोधयत् ।।९९।।
संभेदोयमसे रम्य उपलोलार्कमग्रतः ।।
उपश्रीकेशवपदं वरणैषा सरिद्वरा ।।4.1.33.१००।।
स्वर्गे प्रार्थितसंस्पर्शा सैषा स्वर्गतरंगिणी ।।
उदग्वहाभिलष्यंति यां दिवोद्युसदः सदा ।।१।।
अलक्ष्यामोक्षलक्ष्मी र्या वेदांते परिपठ्यते ।।
विमुक्तये सतां सैषा श्रीमती मणिकर्णिका ।। २ ।।
मरणं मंगलं यत्र सफलं यत्र जीवितम् ।।
स्वर्गस्तृणायते यत्र सैषा श्रीमणिकर्णिका।। ।। ३ ।।
यत्र संपत्तिसंभारान्विश्राण्य निधनेच्छया ।।
यतिव्रतं समालंब्य तिष्ठते मूलकंदभुक् ।। ४ ।।
यत्र त्रिमार्गं गांगं गां मार्गमाणोमृतान्हरः ।।
स्वमौलिबालचंद्रेण मुक्तिमार्गं प्रदर्शयन् ।। ५ ।।
संसारं यत्र दुर्वारं प्रतारयति शंकरः ।।
मृता अप्यमृतायंते कर्णधाराद्यतो नराः ।। ६ ।।
संसारासारपदवी यत्र स्याददवीयसी ।।
कर्णे जपान्महेशानात्करुणा वरुणालयात् ।। ७ ।।
अनेक भवसंभूत प्रभूत सुकृतैर्नराः ।।
कर्णे जपं भवं यत्र लभंते ते भवापहम् ।। ८ ।।

स्वीकृत्य क्षेत्रसंन्यासं यद्बलेन महाधियः ।।
तृणं कृतातं मन्यंते सेयं श्रीमणिकर्णिका ।। ९ ।।
तृणीकृत्य निजं देहं यत्र राजर्षिसत्तमः ।।
हरिश्चंद्रः सपत्नीको व्यक्रीणाद्भूरयं हि सा ।। 4.1.33.११० ।।
अभिलष्यंति यत्रत्यमपि वैकुण्ठवासिनः ।।
सैकतं मृदुलं तल्पं सैषा श्रीमणिकर्णिका ।। ।। ११ ।।
अनेक जन्म जनित कर्मसूत्रनियंत्रणम् ।।
उन्मुच्य यत्र मुक्ताः स्युः सैषा श्रीमणिकर्णिका ।। १२ ।।
सत्यलोकेऽपि ये लोकास्तेऽर्थयंति निरंतरम् ।।
यामहो दीर्घनिद्रायै सेयं श्रीमणिकर्णिका ।। १३ ।।
अयं हि स कुलस्तंभो यत्र श्रीकालभैरवः ।।
क्षेत्रपापकृतः शास्ति दर्शयंस्तीव्रयातनाम् ।। १४ ।।
अन्यत्र विहितं पापं नश्येत्काशीनिरीक्षणात् ।।
काश्यां कृतानां पापानां दारुणेयं तु यातना ।।१५।।
कपालमोचनं तीर्थमेतत्तदपि पावनम् ।।
कपालं पतितं यत्र विधेर्भैरवपाणितः ।। १६ ।।
ऋणत्रयाद्विमुच्यंते यत्र स्नाता नरोतमाः ।।
तीर्थं विशुद्धिजनकं तदेतदृणमोचनम् ।। १७ ।।
प्रणवाख्यं परंब्रह्म यत्र नित्यं प्रकाशते ।।
सपंचायतनोपेत ॐकारेशोयमद्भुतः ।। १८ ।।
अश्च उश्च मकारश्च नादोबिंदुश्च पंचमः ।।
पंचात्मकं परंब्रह्म यत्र नित्यं प्रकाशते ।।१९।।
एषा मत्स्योदरी रम्या यत्स्नातो मानवोत्तमः ।।
मातुर्जातूदरदरीं न विशेदेष निश्चयः ।।4.1.33.१२०।।
त्रिलोचनोयं भगवान्कुर्यादेव त्रिलोचनम्।।
निजभक्तं कृपायुक्तस्त्वपि देशातंर स्थितम् ।। २१ ।।
असौ कामेश्वरो देवो यः कामान्पूरयेत्सताम् ।।
दुर्वासा अपि यत्राप निजकाममहोदयम् ।। २२ ।।

स्वयं लीनो महेशोत्र भक्तकामसमृद्धये ।।

तस्मात्स्वर्लीनसंज्ञास्य देवदेवस्य शूलिनः ।। २३ ।।

वाराणस्यां महादेवो यः पुराणेषु पठ्यते ।।

क्षेत्राभिमानी भगवांस्तत्प्रासादोयमद्भुतः ।। २४ ।।

असौ स्कंदेश्वरो देवः श्रद्धया यद्विलोकनात् ।।

आजन्मब्रह्मचर्यस्य फलमाप्नोति मानवः ।। २५ ।।

विनायकेश्वरश्चायं सर्वसिद्धि प्रदायकः ।।

यत्सेवया प्रणश्यंति नृणां सर्वे विनायकाः ।।२६।।

इयं वाराणसी देवी साक्षान्मूर्त्तिमयी शुभा ।।

यस्या विलोकनात्पुंसां भूयो नो गर्भसंभवः।। ।।२७।।

पार्वतीश्वरलिंगस्य महदायतनं त्विदम् ।।

यत्र नित्यं महेशानो गौर्या सह विमुक्तिदः ।।२८।।

एष भृंगीश्वरः श्रीमान्महापातकनाशनः ।।

जीवन्मुक्तोऽभवद्भृंगी यस्य लिंगस्य सेवया ।। २९ ।।

चतुर्वेदेश्वरश्चैष चतुर्वेदधरो विधिः ।।

लभेद्यद्वीक्षणाद्विप्रो वेदाध्ययनजं फलम् ।। 4.1.33.१३० ।।

यज्ञैः संस्थापितं चैतल्लिंगं यज्ञेश्वराभिधम् ।।

यदर्चनाल्लभेन्मर्त्यः सर्वयागफलं महत् ।। ३१ ।।

पुराणेश्वर नामैतल्लिंगमष्टादशांगुलम् ।।

अष्टादशानां विद्यानां स्यादाधारो यदीक्षणात् ।। ३२ ।।

धर्मशास्त्रेश्वरश्चायं स्मृतिभिश्च प्रतिष्ठितः ।।

स्मृत्यध्ययनजं पुण्यं यद्विलोकनतो भवेत् ।। ३३ ।।

सारस्वतमिदं लिंगं सर्वजाड्यविनाशकृत् ।।

सर्वतीर्थेश्वरं लिंगमेतत्सद्यो विशुद्धिदम् ।।३४।।

शैलेश्वरस्य लिंगस्य मंडपोयं महाद्भुतः ।।

सर्वेषां रत्नजातानां यो बिभर्ति परां श्रियम् ।। ३५ ।।

सप्तसागरसंज्ञं वै लिंगमेतन्मनोहरम् ।।

यद्वीक्षणाल्लभेन्मर्त्यः सप्ताब्धिस्नानजं फलम् ।। ३६ ।।

असौ मंत्रेश्वरः श्रीमान्मंत्रजाप्यफलप्रदः ।।

सप्तकोटिमहामंत्रैः स्थापितो यः पुरा युगे ।।३७।।

त्रिपुरेशस्य लिंगस्य पुरः कुंडमिदं महत् ।।

त्रिपुरैः खानितं पूर्वं त्रिपुरारिप्रियं परम् ।।३८।।

इदं वाणेश्वरं लिंगं सहस्रभुजपूजितम् ।।

द्विभुजस्यापि बाणस्य सहस्रभुजहेतुकम् ।। ३९ ।।

वैरोचनेश्वरश्चैष पुरः प्रह्लादकेशवात् ।।

बलिकेशवनामासावेष नारदकेशवः ।। 4.1.33.१४० ।।

आदिकेशव पूर्वेण त्वयमादित्यकेशवः ।।

भीष्मकेशवनामासौ दत्तात्रेयेश्वरस्त्वयम् ।। ४१ ।।

दत्तात्रेयेश्वरात्पूर्वमेष आदि गदाधरः ।।

भृगुकेशवनामासावेष वामनकेशवः ।। ४२ ।।

नरनारायणावेतौ यज्ञवाराहकेशवः ।।

विदारनारसिंहोयं गोपीगोविंद एष ह ।। ४३ ।।

एष लक्ष्मीनृसिंहस्य प्रासादो रत्नकेतनः ।।

यस्य प्रसादात्प्रह्लादः पदमैंद्रमवाप्तवान् ।। ४४ ।।

अखर्वसिद्धिदः पुंसामेष खर्वविनायकः ।।

शेषमाधवनामासौ शेषेण स्थापितः पुरा ।।४५।।

यस्य भक्ता न दह्यंते त्वपि संवर्तवह्निना ।।

शंखमाधवनामासौ शंखं हत्वात्र संस्थितः ।।४६।।

इदं सारस्वतं स्रोतः परं ब्रह्मरसायनम् ।।

सरस्वत्या महानद्याः संगमो यत्र गंगया ।। ४७ ।।

यत्राप्लुता नरा भूयः संभवंति न भूतले ।।

श्रीबिंदुमाधवस्त्वेष साक्षाल्लक्ष्मीपतिः परः ।। ४८ ।।

श्रद्धया यं नमन्मर्त्यो न वसेद्गर्भवेश्मनि ।।

न दारिद्र्यमवाप्नोति व्याधिभिर्नाभिभूयते ।। ४९ ।।

बिंदुमाधवभक्तो यस्तं यमोपि नमस्यति ।।

प्रणवात्मा य एकोऽस्ति नादबिंदु स्वरूपधृक् ।।4.1.33.१५०।।

अमूर्तं यत्परं ब्रह्म बिंदुमाधव एव सः ।।

एतत्पंचनदं तीर्थं पंचब्रह्मात्मसंज्ञकम् ।।५१।।

यत्र स्नातो न गृह्णीयाच्छरीरं पांचभौतिकम् ।।

एषा सा मंगलागौरी काश्यां परममंगलम् ।। ५२ ।।

यत्प्रसादादवाप्नोति नरोऽत्र च परत्र च ।।

मयूखादित्यसंज्ञोयं रश्मिमाली तमोपहः ।। ५३ ।।

गभस्तीशो महालिंगमेतद्दिव्यमहःप्रदम् ।।

मृकंडुसूनुनाप्यत्र तपस्तप्तं पुरा महत् ।। ५४ ।।

लिंगं संस्थाप्य परमं स्वनाम्नायुःप्रदं परम् ।।

किरणेश्वरनामैतल्लिंगं त्रैलोक्यविश्रुतम् ।। ५५ ।।

सकृन्न तमिदं लोकं नयेत्किरणमालिनः ।।

धौतपापेश्वरं लिंगमेतत्पातकधावनम् ।। ५६ ।।

निर्वाणनरसिंहोयं भक्तनिर्वाणकारणम् ।।

मणिप्रदीपनागोयं महामणिविभूषणः ।। ५७ ।।

यदर्चनान्नरो जातु न नागैः परिभूयते ।।

कपिलेशमिदं लिंगं कपिलेन प्रतिष्ठितम्।। ।। ५८ ।।

मुच्यंते कपयोप्यस्य दर्शनात्किमु मानवाः ।।

प्रियव्रतेश्वरं लिंगं महदेतत्प्रकाशते ।।५९ ।।

यस्यार्चनाल्लभेज्जंतुः प्रियत्वं सर्वजन्तुषु ।।

इदमायतनं श्रेष्ठं मणिमाणिक्यनिर्मितम् ।। 4.1.33.१६० ।।

श्रीमतः कालराजस्य कलिकालार्तिहारिणः ।।

निजभक्तं जनं पाति यः पापात्पापभक्षणः ।। ६१ ।।

क्षेत्रविघ्नकरान्पापान्यातयन्यातना शतैः ।।

इयं मंदाकिनी रम्या तपस्तप्तुमिहागता ।। ६२ ।।

काशीवाससुखं प्राप्य नाद्यापि दिवमीहते ।।

स्नात्वात्र संतर्प्य पितॄञ्छ्राद्धं कृत्वा विधानतः ।। ६३ ।।

नरो न नरकं पश्येदपि दुष्कृतकर्मकृत् ।।

यानि कानि च लिंगानि काश्यां संति सहस्रशः ।। ६४ ।।

रत्नभूतमिदं तेषु लिंगं रत्नेश्वराभिधम् ।।
रत्नेश्वरप्रसादेन भुक्त्वा रत्नान्यनेकशः ।। ६५ ।।
पुरुषार्थमहारत्नं निर्वाणं को न लब्धवान् ।।
कृत्तिवासेश्वरस्यैषा महाप्रासादनिर्मितिः ।। ।। ६६ ।।
यां दृष्ट्वापि नरो दूरात्कृत्तिवासः पदं लभेत् ।।
सर्वेषामपि लिंगानां मौलित्वं कृत्तिवाससः ।। ६७ ।।
ॐकारेशः शिखा ज्ञेया लोचनानि त्रिलोचनः ।।
गोकर्णभारभूतेशौ तत्कर्णौ परिकीर्तितौ ।।६८।।
विश्वेश्वराविमुक्तौ च द्वावेतौ दक्षिणौ करौ ।।
धर्मेशमणिकर्णेशौ द्वौ करौ दक्षिणेतरौ ।। ६९ ।।
कालेश्वरकपर्दीशौ चरणावतिनिर्मलौ ।।
ज्येष्ठेश्वरो नितंबश्च नाभिर्वै मध्यमेश्वरः ।। 4.1.33.१७० ।।
कपर्दोस्य महादेवः शिरोभूषा श्रुतीश्वरः ।।
चंद्रेशो हृदयं तस्य आत्मा वीरेश्वरः परः ।। ७१ ।।
लिंगं तस्य तु केदारः शुक्रं शुक्रेश्वरं विदुः ।।
अन्यानि यानि लिंगानि परः कोटि शतानि च ।। ७२ ।।
ज्ञेयानि नखलोमानि वपुषो भूषणान्यपि ।।
यावेतौ दक्षिणौ हस्तौ नित्यनिर्वाणदौ हि तौ ।। ७३ ।।
जंतूनामभयं दत्त्वा पततां मोहसागरे ।।
इयं दुर्गा भगवती पितृलिंगमिदं परम् ।। ७४ ।।
इयं हि चित्रघंटेशी घंटाकर्ण ह्रदस्त्वयम् ।।
इयं सा ललिता गौरी विशालाक्षीयमद्भुता ।। ७५ ।।
आशाविनायकस्त्वेष धर्मकूपोयमद्भुतः ।।
यत्र पिंडान्नरो दत्त्वा पितॄन्ब्रह्मपदं नयेत् ।। ७६ ।।
एषा विश्वभुजा देवी विश्वैकजननी परा ।।
असौ बंदी महादेवी नित्यं त्रैलोक्यवंदिता ।। ७७ ।।
निगडस्थानपि जनान्पाशान्मोचयति स्मृता।।
दशाश्वमेधिकं तीर्थमेतत्त्रैलोक्यवंदितम् ।। ७८ ।।

यत्राहुतित्रयेणापि अग्निहोत्रफलं लभेत् ।।

प्रयागाख्यमिदं स्रोतः सर्वतीर्थोत्तमोत्तमम्।।७९।।

अशोकाख्यमिदं तीर्थं गंगाकेशव एष वै।।

मोक्षद्वारमिदं श्रेष्ठं स्वर्ग द्वारमिदं विदुः ।। 4.1.33.१८० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ज्ञानवापीवर्णनं नाम त्रयस्त्रिंशत्तमोऽध्यायः ।।३३।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३४

https://sa.wikisource.org/s/fvg
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

पुनर्ददर्श तन्वंगी चित्रपट्यां घटोद्भव ।।

स्वर्गद्वारात्पुरोभागे श्रीमतीं मणिकर्णिकाम् ।। १ ।।

संसारसर्पदष्टानां जंतूनां यत्र शंकरः ।।

अपसव्येन हस्तेन ब्रूते ब्रह्मस्पृशङ्छुतिम् ।। २ ।।

न कापिलेन योगेन न सांख्येन न च व्रतैः ।।

या गतिः प्राप्यते पुंभिस्तां दद्यान्मोक्षभूरियम् ।। ३ ।।

वैकुंठे विष्णुभवने विष्णुभक्तिपरायणाः ।।

जपेयुः सततं मुक्त्यै श्रीमतीं मणिकर्णिकाम् ।।४।।

हुत्वाग्निहोत्रमपि च यावज्जीवं द्विजोत्तमाः ।।

अंते श्रयंते मुक्त्यै यां सेयं श्रीमणिकर्णिका ।। ५ ।।

वेदान्पठित्वा विधिवद्ब्रह्मयज्ञरता भुवि ।।

यां श्रयंति द्विजा मुक्त्यै सेयं श्रीमणिकर्णिका ।। ६ ।।

इष्ट्वा क्रतूनपि नृपा बहून्पर्याप्तदक्षिणान् ।।

श्रयंते श्रेयसे धन्याः प्रांतेऽधिमणिकर्णिकम् ।। ७ ।।

सीमंतिन्योपि सततं पतिव्रतपरायणाः ।।

मुक्त्यै पतिमनुव्रज्य श्रयंति मणिकर्णिकाम् ।। ८ ।।

वैश्या अपि च सेवंते न्यायोपार्जितसंपदः ।।

धनानि साधुसात्कृत्वा प्रांते श्रीमणिकर्णिकाम्।। ९ ।।

त्यक्त्वा पुत्रकलत्रादि सच्छूद्रा न्यायमार्गगाः ।।

निर्वाणप्राप्तये चैनां भजेयुर्मणिकर्णिकाम् ।। 4.1.34.१० ।।

यावज्जीवं चरंतोपि ब्रह्मचर्यं जितेंद्रियाः ।।

निःश्रेयसे श्रयंत्येनां श्रीमतीं मणिकार्णकाम् ।। ११ ।।

अतिथीनपि संतर्प्य पंचयज्ञरता अपि ।।

गृहस्थाश्रमिणो नेमां त्यजेयुर्मणिकर्णिकाम् ।।१२।।

वानप्रस्थाश्रमयुजो ज्ञात्वा निर्वाणसाधनम् ।।
सन्नियम्यैंद्रियग्रामं मणिकर्णीमुपासते ।। १३ ।।
अनन्यसाधनां मुक्तिं ज्ञात्वा शास्त्रैरनेकधा ।।
मुमुक्षुभिस्त्वेकदंडैः सेव्यते मणिकर्णिका ।। १४ ।।
दंडयित्वा मनोवाचं कायं नित्यं त्रिदंडिनः ।।
नैःश्रेयसीं श्रियं प्राप्तुं श्रयंते मणिकर्णिकाम् ।। १५ ।।
संन्यस्ताखिलकर्माणो दंडयित्वा चलं मनः ।।
एकदंडव्रता मुक्त्यै भजेयुर्मणिकर्णिकाम् ।। १५ ।।
शिखी मुंडी जटी वापि कौपीनी वा दिगंबरः ।।
मुमुक्षुः को न सेवेत मुक्तिदां मणिकर्णिकाम् ।।१७।। ।
तपःकर्तुं न शक्ता ये दानं वा दातुमक्षमाः ।।
योगाभ्यास विहीना ये तेषामेषा विमुक्तिदा ।। १- ।।
संत्युपायाः सहस्रं तु मुक्तये न तथा मुने ।।
हेलयैषा यथा दद्यान्निर्वाणं मणिकर्णिका ।। १९ ।।
अनशनव्रतभृते त्रिकालाभ्यवहारिणे ।।
प्रांते दद्यात्समां मुक्तिमुभाभ्यां मणिकर्णिका ।। 4.1.34.२० ।।
यथोक्तमाचरेदेको निष्ठा पाशुपतंव्रतम् ।।
निरंतरं स्मरेदेको हृद्येनां मणिकर्णिकाम् ।। २१ ।।
दृष्टात्र वपुषः पाते द्वयोश्च सदृशी गतिः ।।
तस्मात्सर्वविहायाशु सेव्यैषा मणिकर्णिका ।। ।। २२ ।।
स्वर्गद्वारे विशेयुर्ये विगाह्य मणिकर्णिकाम् ।।
तेषां विधूतपापानां क्वापि स्वर्गो न दूरतः ।। २३ ।।
स्वर्गद्वाः स्वर्गभूरेषा मोक्षभूर्मणिकर्णिका ।।
स्वर्गापवर्गावत्रैव नोपरिष्टान्न चाप्यधः ।।२४।।
दत्त्वा दानान्यनेकानि विगाह्य मणिकर्णिकाम् ।।
स्वर्गद्वारं प्रविष्टा ये न ते निरयगामिनः ।।२५।।
स्वर्गापवर्गयोरर्थः कोविदैश्च निरूपितः ।।
स्वर्गः सुखं समुद्दिष्टमपवर्गो महासुखम् ।। २६ ।।

मणिकर्ण्युपविष्टस्य यत्सुखं जायते सतः ।।

सिंहासनोपविष्टस्य तत्सुखं क्व शतक्रतोः ।। २७ ।।

महासुखं यदुद्दिष्टं समाधौ विस्मृतात्मनाम् ।।

श्रीमत्यां मणिकर्ण्यां तत्सहजेनैव जायते ।। २८ ।।

स्वर्गद्वारात्पुरोभागे देवनद्याश्च पश्चिमे ।।

सौभाग्यभाग्यैकनिधिः काचिदेका महास्थली ।। २९ ।।

यावंतो भास्वतः स्पर्शाद्भासंते सैकताः कणाः ।।

तावंतो द्रुहिणा जग्मुर्नैत्येषा मणिकर्णिका ।। 4.1.34.३० ।।

संति तीर्थानि तावंति परितो मणिकर्णिकाम् ।।

यावद्भिस्तिलमात्रापि न भूमिर्विरलीकृता ।। ३१ ।।

यदन्वये कोपि मुक्तः संप्राप्य मणिकर्णिकाम् ।।

तद्वंश्यास्तत्प्रभावेण मान्याः स्वर्गौकसामपि ।। ३२।।

तर्पिताः पितरो येन संप्राप्य मणिकर्णिकाम्।।

सप्तसप्त तथा सप्त पूर्वजास्तेन तारिताः ।। ३३ ।।

आमध्याद्देवसरित आ हरिश्चंद्रमडपात् ।।

आ गंगा केशवादा च स्वर्द्वारान्मणिकर्णिका ।। ।। ३४ ।।

एतद्रजःकणतुलां त्रिलोक्यपि न गच्छति ।।

एतत्प्राप्त्यै प्रयतते त्रिलोकस्थोऽखिलो भवी ।।३५।।

कलावती चित्रपटीं पश्यंतीत्थं मुहुर्मुहुः ।।

ज्ञानवापीं ददर्शाथ श्रीविश्वेश्वरदक्षिणे ।। ३६ ।।

यदंबुसततं रक्षेद्दुर्वृत्ताद्दंडनायकः ।।

संभ्रमो विभ्रमश्चासौ दत्त्वा भ्रांतिं गरीयसीम् ।। ३७ ।।

योष्टमूर्तिर्महादेवः पुराणे परिपठ्यते ।।

तस्यैषांबुमयी मूर्तिर्ज्ञानदा ज्ञानवापिका।। ३८ ।।

नेत्रयोरतिथीकृत्य ज्ञानवापी कलावती ।।

कदंबकुसुमाकारां बभार क्षणतस्तनुम् ।। ।। ३९ ।।

अंगानि वेपथुं प्रापुः स्विन्ना भालस्थली भृशम् ।।

हर्षवाष्पांबुकलिले जाते तस्या विलोचने ।। 4.1.34.४० ।।

तस्तंभ गात्रलतिका मुखवैवर्ण्यमाप च ।।

स्वरोथ गद्गदो जातो व्यभ्रंशत्तत्करात्पटी ।। ४१ ।।

साक्षणं स्वं विसस्मार काहं क्वाहं न वेत्ति च ।।

सौषुप्तायां दशायां च परमात्मेव निश्चला ।। ४२ ।।

अथ तत्परिचारिण्यस्त्वरमाणा इतस्ततः ।।

किं किं किमेतदेतत्किं पृच्छंति स्म परस्परम् ।। ४३ ।।

तदवस्थां समालोक्य तां ताश्चतुरचेतसः ।।

विज्ञाय सात्त्विकैर्भावैरिदमूचूः परस्परम् ।। ४४ ।।

भवांतरे प्रेमपात्रमेतयैक्षितु किंचन ।।

चिरात्तेन च संगत्य सुखमूर्च्छामवाप ह ।। ४५ ।।

अथनेत्थं कथमियमकांडात्पर्यमूमुहत् ।।

प्रेक्षमाणा रहश्चित्रपटीमति पटीयसीम्।।४६।।

तन्मोहस्य निदानं ताःसम्यगेव विचार्य च ।।

उपचेरुर्महाशांतैरुपचारैरनाकुलम् ।। ४७ ।।

काचित्तां वीजयांचक्रे कदलीतालवृंतकैः ।।

बिसिनीवलयैरन्या धन्यां तां पर्यभूषयत् ।। ४८ ।।

अमंदैश्चंदनरसैरभ्यषिंचदमुं परा ।।

अशोकपल्लवैरस्याः काचिच्छोकमनीनशत् ।। ४९ ।।

धारामंडपधारांबुसीकरैस्तत्तनूलताम् ।।

इष्टार्थविरहग्लानां सिंचयामास काचन ।। 4.1.34.५० ।।

जलार्द्रवाससा काचिदेतस्यास्तनुमावृणोत् ।।

कर्पूरक्षोदजालेपैरन्यास्तामन्वलेपयन् ।। ५१ ।।

पद्मिनीदलशय्या च काचित्यरचयन्मृदुम् ।।

काचित्कुलिशनेपथ्यं दूरीकृत्य तदंगतः ।। ५२ ।।

मुक्ताकलापं रचयांचक्रे वक्षोजमंडले ।।

काचिच्छशिमुखी तां तु चंद्रकांतशिलातले ।। ५३ ।।

स्वापयामास तन्वंगीं स्रवच्छीतांबुशीतले ।।

दृष्ट्वोपचार्यमाणां तामित्थं बुद्धिशरीरिणी ।। ५४ ।।

अतितापपरीतांगी ताः सखीः प्रत्यभाषत ।।

एतस्यास्तापशांत्यर्थं जानेहं परमौषधम् ।। ५५ ।।

उपचारानिमान्सवार्न्दूरी कुरुत मा चिरम् ।।

अपतापां करोम्येनां सद्यः पश्यत कौतुकम् ।।५६।।

दृष्ट्वा चित्रपटीमेषा सद्यो विह्वलतामगात् ।।

अत्रैव काचिदेतस्याः प्रेमभूरस्ति निश्चितम् ।।५७।।

अतश्चित्रपटीस्पर्शात्परितापं विहास्यति ।।

वाक्याद्बुद्धिशरीरिण्यास्ततस्तत्परिचारिकाः ।। ५८ ।।

निधाय तत्पुरः प्रोचुः पटीं पश्य कलावति ।।

तवानंदकरी यत्र काचिदस्तीष्टदेवता ।। ।। ५९ ।।

सापीष्टदेवतानाम्ना तत्पटीदर्शनेन च ।।

सुधासेकमिव प्राप्य मूर्छां हित्वोत्थिता द्रुतम् ।। 4.1.34.६० ।।

अवग्रहपरिम्लाना वर्षासारैरिवौषधीः ।।

पुनरालोकयांचक्रे ज्ञानदां ज्ञानवापिकाम् ।। ६१ ।।

स्पृष्ट्वा कलावती तां तु वापीं चित्रगतामपि ।।

लेभे भवांतरज्ञानं यथासीत्पूर्वजन्मनि ।। ६२ ।।

पुनर्विचारयांचक्रे वापी माहात्म्यमुत्तमम्।।

अहो चित्रगतापीयं संस्पृष्टा ज्ञानवापिका ।। ६३ ।।

ज्ञानं मे जनयामास भवांतर समुद्भवम् ।।

अथ तासां पुरो हृष्टा कथयामास सुंदरी ।।६४।।

निजं प्राग्भव वृत्तांतं ज्ञानवापीप्रभावजम् ।।

।। कलावत्युवाच ।। ।।

एतस्माज्जन्मनः पूर्वमहं ब्राह्मणकन्यका ।। ६५ ।।

उपविश्वेश्वरं काश्यां ज्ञानवाप्यां रमे मुदा ।।

जनको मे हरिस्वामी जनयित्री प्रियंवदा ।। ६६ ।।

आख्या मम सुशीलेति मां च विद्याधरोऽहरत् ।।

मध्येमार्गं निशीथेथ तदोप मलयाचलम् ।। ६७ ।।

रक्षसा सहतो वीरो राक्षसं स जघानह ।।

रक्षोपि मुक्तं शापात्तु दिव्यवपुरवाप ह ।। ६८ ।।

अवाप जन्मगंधर्वस्त्वसौ मलयकेतुतः ।।

कर्णाटनृपतेः कन्या बभूवाहं कलावती ।। ६९ ।।

इति ज्ञानं ममोद्भूतं ज्ञानवापीक्षणात्क्षणात् ।।

इति तस्या वचः श्रुत्वा सापि बुद्धिशरीरिणी ।। 4.1.34.७० ।।

ताश्च तत्परिचारिण्यः प्रहृष्टास्यास्तदाऽभवन् ।।

प्रोचुस्तां प्रणिपत्याथ पुण्यशीलां कलावतीम् ।। ७१ ।।

अहो कथं हि सा लभ्या यत्प्रभावोयमीदृशः ।।

धिग्जन्म तेषां मर्त्येऽस्मिन्यैर्नैक्षि ज्ञानवापिका ।। ७२ ।।

कलावति नमस्तुभ्यं कुरुनोपि समीहितम् ।।

जनिं सफलयास्माकं नय नः प्रार्थ्य भूपतिम् ।। ७३ ।।

अयं च नियमोस्माकमद्यारभ्य कलावति ।।

निर्वेक्ष्यामो महाभोगान्दृष्ट्वा तां ज्ञानवापिकाम् ।। ७४ ।।

अवश्यं ज्ञानवापी सा नाम्ना भवितुमर्हति ।।

चित्रं चित्रगतापीह या तव ज्ञानदायिनी ।। ७५ ।।

ॐकृत्य तासां वाक्यं सा स्वाकारं परिगोप्य च ।।

प्रियाणि कृत्वा भूभर्तुः प्रस्तावज्ञा व्यजिज्ञपत् ।। ७६ ।।

कलावत्युवाच ।।

जीवितेश न मे त्वत्तः किंचित्प्रियतरं क्वचित् ।।

त्वामासाद्य पतिं राजन्प्राप्ताः सर्वे मनोरथाः ।। ७७ ।।

एको मनोरथः प्राथ्यो ममास्त्यत्रार्यपुत्रक ।।

विचारपथमापन्नस्तवापि स महाहितः ।। ७८ ।।

मम तु त्वदधीनायाः सुदुष्प्रापतरो महान् ।।

तव स्वाधीनवृत्तेस्तु सिद्धप्रायो मनोरथः ।। ७९ ।।

प्राणेश किं बहूक्तेन यदि प्राणैः प्रयोजनम् ।।

तदाभिलषितं देहि प्राणा यास्यंत्यथान्यथा ।। 4.1.34.८० ।।

प्राणेभ्योपि गरीयस्यास्तस्या वाक्यं निशम्य सः ।।

उवाच वचनं राजा तस्याः स्वस्यापि च प्रियम् ।। ८१ ।।

राजोवाच ।। ।।

नाहं प्रिये तवादेयमिह पश्यामि भामिनि ।।

प्राणा अपि मम क्रीतास्त्वया शीलकलागुणैः ।। ८२ ।।

अविलंबितमाचक्ष्व कृतं विद्धि कलावति ।।

भवद्विधानां साध्वीनामन्येऽप्राप्यं न किंचन।। ८३ ।।

कः प्राथ्यर्ः प्रार्थनीयं किं को वा प्रार्थयिता प्रिये।।

न पृथग्जनवत्किंचिद्वर्तनं नौ कलावति ।। ८४ ।।

देशः कोशो बलं दुर्गं यदन्यदपि भामिनि ।।

तत्त्वदीयं न मे किंचित्स्वाम्यमात्रमिहास्ति मे ।। ८५ ।।

तच्च स्वाम्यं ममान्यत्र त्वदृते जीवितेश्वरि ।।

राज्यं त्यजेयं त्वद्वाक्यात्तृणीकृत्यापि मानिनि ।। ८६ ।।

माल्पकेतोर्महीजानेरिति वाक्यं निशम्य सा ।।

प्राह गंभीरया वाचा वचश्चारु कलावती ।। ८७ ।।

कलावत्युवाच ।।

नाथ प्रजासृजापूर्वं सृष्टा नानाविधाः प्रजाः ।।

प्रजाहिताय संसृष्टं पुरुषार्थचतुष्टयम् ।। ८८ ।।

तद्विहीनाजनिरपि जल बुद्बुदवन्मुधा ।।

तस्मादेकोपि संसाध्यः परत्रेह च शर्मणे ।। ८९ ।।

यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते ।।

यदुच्यते पुराविद्भिरिति तत्तथ्यमीक्षितम् ।।4.1.34.९०।।

मद्विधाना तु दासीनां शतं तेऽस्तीह मंदिरे ।।

तथापि नितरां प्रेम स्वामिनो मयि दृश्यते ।। ९१ ।।

तव दास्यपि भोगाढ्या किमुतांकस्थलीचरी ।।

तत्राप्यनन्यसंपत्तिस्तत्र स्वाधीनभर्तृता ।। ९२ ।।

विपश्चित्संचयेदर्थानिष्टापूर्ताय कर्मणे ।।

तपोर्थमायुर्निर्विघ्नं दारांश्चापत्यलब्धये ।। ९३ ।।

तवैतत्सर्वमस्तीह विश्वेशानुग्रहात्प्रिय ।।

पूरणीयोऽभिलाषो मे यदि तद्वचम्यहं शृणु ।। ९४ ।।

तूर्णं प्रहिणु मां नाथ विश्वनाथपुरीं प्रति ।।
प्राणाः प्रयाता प्रागेव वपुः शेषास्मि केवलम् ।। ९५ ।।
माल्यकेतुः कलावत्या इत्याकर्ण्य वचः स्फुटम् ।।
क्षणं विचार्य स्वहृदि राजा प्रोवाच तां प्रियाम् ।। ९६ ।।
प्रिये कलावति यदि तव गंतव्यमेव हि ।।
राज्यलक्ष्म्यानया किं मे चलया त्वद्विहीनया ।। ९७ ।।
न राज्यं राज्यमित्याहू राज्यश्रीः प्रेयसी ध्रुवम् ।।
सप्तांगमपि तद्राज्यं तया हीनं तृणायते ।। ९८ ।।
निःसपत्नं कृतं राज्यं भुक्त्वा भोगान्निरंतरम् ।।
हृषीकार्थाः कृतार्थाश्च विधृता आधृतिः प्रिये ।। ९९ ।।
अपत्यान्यपि जातानि किं कर्तव्यमिहास्ति मे ।।
अवश्यमेव गंतव्याऽऽवाभ्यां वाराणसी पुरी ।। 4.1.34.१०० ।।
माल्यकेतुः प्रियामित्थमाश्वास्य कृतनिश्चयः ।।
समाहूय च देवज्ञान्प्रकृतीः परिपूज्य च ।। १ ।।
पुत्रे राज्यं निधायाथ राजा काशीं प्रतस्थिवान् ।।
रत्नजातं कियदपि पुत्रादर्थं प्रगृह्य च ।। २ ।।
दृष्ट्वा विश्वेश्वरपुरीं हृष्टरोमा नरेश्वरः ।।
मेने कृतार्थमात्मानं संसारांबुधिपारगम् ।। ३ ।
प्राग्जन्मवासनायोगात्सापि राज्ञी कलावती ।।
ग्रामांतरादागतेव पुरीमार्गानवैत्स्वयम ।। ४ ।।
मणिकर्ण्यामथस्नात्वा भूरि दत्त्वा ततो वसु ।।
विश्वेशमर्चयित्वाथ रत्नजातैरनेकशः ।। ५ ।।
दत्त्वा तत्रापि रत्नानि गजानश्वान्गवां व्रजम् ।।
दुकूलानि विचित्राणि पूजोपकरणानि च ।। ५ ।।
सुवर्णरूप्यकलशान्दीपी दर्पण चामरान् ।।
ध्वजस्तंभ पताकाश्च विचित्रोल्लोचकानि च ।। ७ ।।
अथ प्रदक्षिणीकृत्य मुक्तिमंडपमाविशत् ।।
तत्र धर्मकथां श्रुत्वा दत्त्वा तत्रापि सद्धनम् ।। ८ ।।

सायंतनीं महापूजां पुनः कृत्वा क्षितीश्वरः ।।

तत्र जागरणं कृत्वा तौर्यत्रिक महोत्सवैः ।।९।।

अथ प्रातः समुत्थाय कृत्वा शौचाचमक्रियाम् ।।

राज्ञ्या विनिर्दिष्टपथा ज्ञानवापीं नृपो ययौ ।।4.1.34.११०।।

नृपः सार्धं कलावत्या तत्र सस्नौ प्रहृष्टवत् ।।

अथ पिंडान्सनिर्वाप्य संतर्प्य श्रद्धया पितॄन् ।। ११ ।।

तत्र रूप्य सुवर्णादि पात्रेभ्यः प्रतिपाद्य च ।।

दीनांध कृपणानाथान्महार्है रत्नजातकैः ।। १२ ।।

प्रीणयित्वा नरपतिः पारणां कृतवांस्ततः ।।

संस्कार्य रत्नसोपानैर्ज्ञानवापी कलावती ।। १३ ।।

आबबंध रतिं तत्र सह भर्त्रा तपस्विनी ।।

एकांतरोपवासैश्च कदाचिच्च त्र्यहोव्रतैः ।। १४ ।।

षडहोभोजनैश्चापि पक्षार्धनियमैरथ ।।

पक्षांतरोपवासैश्च मासोपवसनादिभिः ।। १५ ।।

चांद्रायणव्रतैः कृच्छ्रैर्भर्तुः शुश्रूषणैरपि ।।

निनाय क्षणवत्कालमायुःशेषस्य सानघा ।। १६ ।।

एकदा ज्ञानवाप्यां तु प्रातः स्नात्वोपविष्टयोः ।।

आगत्य जटिलः कश्चिद्विभूतिं दत्तवान्करे ।। १७ ।।

उवाच च प्रसन्नास्य आशीर्भिरभिनद्य च ।।

उत्तिष्ठतं प्रकुरुतं महानेपथ्यमद्य वै ।। १८ ।।

तारकोदय संप्राप्तिर्भवित्री वां क्षणादिह ।।

यावदित्थं समाचष्ट जटिलोऽग्रे तयोर्वचः ।। १९ ।।

तावद्विमानमापन्नं सक्वणत्किंकिणीगणम् ।।

पश्यतां सर्वलोकानां चन्द्रमौलिरथोरथात् ।। 4.1.34.१२० ।।

उत्तीर्य तच्छ्रुतिपुटे किमपि स्वयमादिशत् ।।

अनाख्यं यत्परंज्योतिरुच्चक्राम च तत्क्षणात् ।। २१ ।।

उद्योतयन्नभोवर्त्म देवोपि स्वालयं ययौ ।।

।। स्कन्द उवाच ।। ।।

तदा प्रभृति लोकेऽत्र ज्ञानवापी विशिष्यते ।। २२ ।।

सर्वेभ्यस्तीर्थमुख्येभ्यः प्रत्यक्ष ज्ञानदा मुने ।।

सर्वज्ञानमयी चैषा सर्वलिंगमयी शुभा ।। २३ ।।

साक्षाच्छिवमयी मूर्तिर्ज्ञानकृज्ज्ञानवापिका ।।

सन्ति तीर्थान्यनेकानि सद्यः शुचिकराण्यपि ।। २४ ।।

परंतु ज्ञानवाप्या हि कलां नार्हंति षोडशीम् ।।

ज्ञानवाप्याः समुत्पत्तिं यः श्रोष्यति समाहितः ।।

न तस्य ज्ञानविभ्रंशो मरणे जायते क्वचित् ।। २५ ।।

महाख्यानमिदं पुण्यं महापातकनाशनम्।।

महादेवस्य गौर्याश्च महाप्रीतिविवर्धनम् ।। २६ ।।

पठित्वा पाठयित्वा वा श्रुत्वा वा श्रद्धयान्वितः ।।

ज्ञानवाप्याः शुभाख्यानं शिवलोके महीयते ।। १२७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ज्ञानवापीप्रशंसनं नाम चतुस्त्रिंशत्तमोऽध्यायः ।। ३४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३५



।। कुंभयोनिरुवाच ।। ।।

अविमुक्तं महाक्षेत्रं परनिर्वाणकारणम् ।।

क्षेत्राणां परमं क्षेत्रं मंगलानां च मंगलम् ।। १ ।।

श्मशानानां च सर्वेषां श्मशानं परमं महत् ।।

पीठानां परमं पीठमूषराणां महोषरम् ।। २ ।।

धर्माभिलाषिबुद्धीनां धर्मराशिकरं परम् ।।

अर्थार्थिनां शिखिरथ परमार्थ प्रकाशकम् ।। ३ ।।

कामिनां कामजननं मुमुक्षूणां च मोक्षदम् ।।

श्रूयते यत्र यत्रैतत्तत्र तत्र परामृतम् ।। ४ ।।

क्षेत्रैकदेशवर्तिन्या ज्ञानवाप्याः कथां पराम् ।।

श्रुत्वेमामिति मन्येहं गौरीहृदयनंदन ।। ५ ।।

अणुप्रमाणमपि या मध्ये काशिविकासिनी ।।

मही महीयसी ज्ञेया सा सिद्ध्यै न मुधा क्वचित् ।। ६ ।।

कियंति संति तीर्थानि नेह क्षोणीतलेऽखिले ।।

परं काशीरजोमात्र तुलासाम्यं क्व तेष्वपि ।। ७ ।।

कियंत्यो न स्रवंत्योत्र रत्नाकर मुदावहाः ।।

परं स्वर्गतरंगिण्याः काश्यां का साम्यमुद्वहेत् ।। ८ ।।

कियंति संति नो भूम्यां मोक्षक्षेत्राणि षण्मुख ।।

परं मन्येऽविमुक्तस्य कोट्यंशोपि न तेष्वहो ।। ९ ।।

गंगा विश्वेश्वरः काशी जागर्ति त्रितयं यतः ।।

तत्र नैःश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् ।। 4.1.35.१० ।।

कथमेषा त्रयी स्कंद प्राप्यते नियतं नरैः ।।

तिष्ये युगे विशेषेण नितरां चंचलेंद्रियैः ।। ११ ।।

तपस्तादृक्क्व वा तिष्ये तिष्ये योगः क्व तादृशः ।।

क्व वा व्रतं क्व वा दानं तिष्ये मोक्षस्त्वतः कुतः ।। १२।।

विनापि तपसा स्कंद विनायोगेन षण्मुख ।।

विना व्रतैर्विना दानैः काश्यां मोक्षस्त्वयेरितः ।। १३ ।।

किं किमाचरता स्कंद काशी प्राप्येत तद्वद ।।

मन्ये विना सदाचारं न सिद्ध्येयुर्मनोरथाः ।। १४ ।।

आचारः परमो धर्म आचारः परमं तपः ।।

आचाराद्वर्धते ह्यायुराचारात्पापसंक्षयः ।। १५ ।।

आचारमेव प्रथमं तस्मादाचक्ष्व षण्मुख ।।

देवदेवो यथा प्राह तवाग्रे त्वं तथा वद ।। १६ ।।

।। स्कंद उवाच।। ।।

मित्रावरुणजाख्यामि सदाचारं सतां हितम् ।।

यदाचरन्नरो नित्यं सर्वान्कामानवाप्नुयात् ।।१७।।

स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।।

क्रमेण धार्मिकास्त्वेते ह्येतेभ्यो धार्मिकाः सुराः ।। १८ ।।

सहस्रभागः प्रथमा द्वितीयोनुक्रमात्तथा ।।

सर्व एते महाभागा यावन्मुक्ति समाश्रयाः ।। १९ ।।

चतुर्णामपि भूतानां प्राणिनोऽतीव चोत्तमाः ।।

प्राणिभ्यामपि मुने श्रेष्ठाः सर्वे बुद्ध्युपजीविनः ।। 4.1.35.२० ।।

मतिमद्भ्यो नराः श्रेष्ठास्तेभ्यः श्रेष्ठास्तु वाडवाः ।।

विप्रेभ्योपि च विद्वांसो विद्वद्भ्यः कृतबुद्धयः ।। २१ ।।

कृतधीभ्योपि कर्तारः कर्तृभ्यो ब्रह्मतत्पराः ।।

न तेषामर्चनीयोऽन्यस्त्रिषु लोकेषु कुंभज ।। २२ ।।

अन्योन्यमर्चकास्ते वै तपोविद्याऽविशेषतः ।।

ब्राह्मणो ब्रह्मणा सृष्टः सर्वभूतेश्वरो यतः ।। २३ ।।

अतो जगत्स्थितं सर्वं ब्राह्मणोऽर्हति नापरः ।।

सदाचारो हि सर्वार्हो नाचाराद्विच्युतः पुनः ।।

तस्माद्विप्रेण सततं भाव्यमाचारशीलिना ।। २४ ।।

विद्वेष रागरहिता अनुतिष्ठंति यं मुने ।।

विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ।।२५।।

लक्षणैः परिहीनोपि सम्यगाचारतत्परः ।।

श्रद्धालुरनसूयुश्च नरो जीवेत्समाः शतम ।। २६ ।।

श्रुतिस्मृतिभ्यामुदितं स्वेषु स्वेषु च कर्मसु ।।

सदाचारं निषेवेत धर्ममूलमतंद्रितः ।। २७ ।।

दुराचाररतो लोके गर्हणीयः पुमान्भवेत् ।।

व्याधिभिश्चाभिभूयेत सदाल्पायुः सुदुःखभाक् ।। २८ ।।

त्याज्यं कर्म पराधीनं कायमात्मवशं सदा ।।

दुःखी यतः पराधीनः सदैवात्मवशः सुखी ।। २९ ।।

यस्मिन्कर्मण्यंतरात्मा क्रियमाणे प्रसीदति ।।

तदेव कर्म कर्तव्यं विपरीतं न च क्वचित् ।। 4.1.35.३० ।।

प्रथमं धर्मसर्वस्वं प्रोक्ता यन्नियमा यमाः ।।

अतस्तेष्वेव वै यत्नः कर्तव्यो धर्ममिच्छता ।। ३१ ।।

सत्यं क्षमार्जवं ध्यानमानृशंस्यमहिंसनम् ।।

दमः प्रसादो माधुर्यं मृदुतेति यमा दश ।। ३२ ।।

शौचं स्नानं तपो दानं मौनेज्याध्ययनं व्रतम् ।।

उपोषणोपस्थ दंडौ दशैते नियमाः स्मृताः ।। ३३ ।।

कामं क्रोधं मदं मोहं मात्सर्यं लोभमेव च ।।

अमून्षड्वै(?)रिणो जित्वा सर्वत्र विजयी भवेत् ।। ३४ ।।

शनैः शनैः स चिनुयाद्धर्मं वल्मीक शृंगवत् ।।

परपीडामकुर्वाणः परलोकसहायिनम् ।। ३५ ।।

धर्म एव सहायी स्यादमुत्र न परिच्छदः ।।

पितृ मातृ सुत भ्रातृ योषिद्बंधुजनादिकः ।। ३६ ।।

जायते चैकलः प्राणी प्रम्रियेत तथैकलः ।।

एकलः सुकृतं भुंक्ते भुंक्ते दुष्कृतमेकलः ।। ३७ ।।

देहं पंचत्वमापन्नं त्यक्त्वा कौ काष्ठलोष्ठवत् ।।

बांधवा विमुखा यांति धर्मो यांतमनुव्रजेत् ।।३८।।

कृती संचिनुयाद्धर्मं ततोऽमुत्र सहायिनम् ।।

धर्मं सहायिनं लब्द्ध्वा संतरेद्दुस्तरं तमः ।। ३९ ।।

संबंधानाचरेन्नित्यमुत्तमैरुत्तमैः सुधीः ।।
अधमानधमांस्त्यक्त्वा कुलमुत्कर्षतां नयेत्।। 4.1.35.४० ।।
उत्तमानुत्तमानेव गच्छन्हीनांश्च वर्जयन् ।।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवाये न शूद्रताम् ।। ४१ ।।
अनध्ययनशीलं च सदाचारविलंघिनम्।।
सालसं च दुरन्नादं ब्राह्मणं बाधतेंऽतकः ।। ४२ ।।
ततोऽभ्यसेत्प्रयत्नेन सदाचारं सदा द्विजः ।।
तीर्थान्यप्यभिलष्यंति सदाचारिसमागमम्।। ४३ ।।
रजनीप्रांतयामार्धं ब्राह्मः समय उच्यते ।।
स्वहितं चिंतयेत्प्राज्ञस्तस्मिंश्चोत्थाय सवर्दा ।। ४४ ।।
गजास्यं संस्मरेदादौ तत ईशं सहांबया।।
श्रीरंगं श्रीसमेतं तु ब्रह्माण्या कमलोद्भवम्।। ४५ ।।
इंद्रादीन्सकलान्देवान्वसिष्ठादीन्मुनीनपि ।।
गंगाद्याः सरितः सर्वाः श्रीशैलाद्यखिलान्गिरीन् ।। ४६ ।।
क्षीरोदादीन्समुद्रांश्च मानसादि सरांसि च ।।
वनानि नंदनादीनि धेनूः कामदुघादिकाः ।। ४७ ।।
कल्पवृक्षादि वृक्षांश्च धातून्कांचनमुख्यतः ।।
दिव्यस्त्रीरुर्वशीमुख्या गरुडादीन्पतत्त्रिणः ।। ४८ ।।
नागाश्च शेषप्रमुखान्गजानैरावतादिकान्।।
अश्वानुच्चैःश्रवो मुख्यान्कौस्तुभादीन्मणीञ्छुभान् ।। ४९ ।।
स्मरेदरुंधतीमुख्याः पतिव्रतवतीर्वधूः ।।
नैमिषादीन्यरण्यानि पुरीः काशीपुरीमुखाः ।। 4.1.35.५० ।।
विश्वेशादीनि लिंगानि वेदानृक्प्रमुखानपि ।।
गायत्रीप्रमुखान्मंत्रान्योगिनः सनकादिकान् ।। ५१ ।।
प्रणवादिमहाबीजं नारदादींश्च वैष्णवान् ।।
शिवभक्तांश्च बाणादीन्प्रह्लादादीन्दृढव्रतान् ।। ५२ ।।
वदान्यांश्च दधीच्यादीन्हरिश्चंद्रादि भूपतीन् ।।
जननी चरणौ स्मृत्वा सर्वतीर्थोत्तमोत्तमौ ।। ५३ ।।

पितरं च गुरूंश्चापि हृदि ध्यात्वा प्रसन्नधीः ।।
ततश्चावश्यकं कर्तुं नैर्ऋतीं दिशमाश्रयेत् ।। ५४ ।।
ग्रामाद्धनुःशतं गच्छेन्नगराच्च चतुर्गुणम् ।।
तृणैराच्छाद्य वसुधां शिरः प्रावृत्य वाससा ।।५५ ।।
कर्णोपवीत्युदग्वक्त्रो दिवसे संध्ययोरपि ।।
विण्मूत्रे विसृजेन्मौनी निशायां दक्षिणामुखः ।। ५६ ।।
न तिष्ठन्नाप्सु नो विप्र गो वह्न्यनिल संमुखः ।।
न फालकृष्टे भूभागे न रथ्यासेव्यभूतले ।। ५७ ।।
नालोकयेद्दिशोभागाञ्ज्योतिश्चक्रं नभोमलम् ।।
वामेन पाणिना शिश्नं धृत्वोत्तिष्ठेत्प्रयत्नवान् ।। ५८ ।।
अथो मृदं समादाय जंतुकर्करवर्जिताम् ।।
विहाय मूषकोत्खातां शौचोच्छिष्टां च नाकुलाम् ।। ५९ ।।
गुह्ये दद्यान्मृदं चैकां पायौ पंचांबुसां तराः ।।
दश वामकरे चापि सप्त पाणिद्वये मृदः ।। 4.1.35.६० ।।
एकैकां पादयोर्दद्यात्तिस्रः पाण्योर्मृदस्तथा ।।
इत्थं शौचं गृही कुर्याद्गंधलेपक्षयावधि ।। ६१ ।।
क्रमाद्द्वैगुण्यमेतस्माद्ब्रह्मचर्यादिषु त्रिषु ।।
दिवाविहित शौचस्य रात्रावर्धं समाचरेत् ।। ६२ ।।
रुज्यर्धं च तदर्धं च पथि चौरादि बाधिते ।।
तदर्धं योषितां चापि सुस्थे न्यूनं न कारयेत् ।।६३।।
अपि सर्वनदीतोयैर्मृत्कूटैश्चापि गोमयैः ।।
आपादमाचरच्छौचं भावदुष्टो न शुद्धिभाक् ।।६४।।
आर्द्रधात्रीफलोन्माना मृदः शौचे प्रकीर्तिताः।।
सर्वाश्चाहुतयोप्येवं ग्रासाश्चांद्रायणेपि च ।।
प्रागास्य उदगास्योवा सूपविष्टः शुचौ भुवि।।
उपस्पृशेद्विहीनायां तुषांगारास्थिभस्मभिः ।। ६६।।
अनुष्णाभिरफेनाभिरद्भिर्हृद्गाभिरत्वरः ।।
ब्राह्मणो ब्राह्मतीर्थेन दृष्टिपूताभिराचमेत् ।। ६७।।

कंठगाभिर्नृपः शुद्ध्येत्तालुगाभिस्तथोरुजः ।।

स्त्रीशूद्रावास्य संस्पर्शमात्रेणापि विशुद्ध्यतः ।। ६८ ।।

शिरः प्रावृत्य कंठं वा जले मुक्तशिखोऽपि च ।।

अक्षालितपदद्वंद्व आचांतोप्यशुचिर्मतः ।। ६९ ।।

त्रिः पीत्वांबु विशुद्ध्यर्थं ततः खानि विशोधयेत् ।।

अंगुष्ठमूलदेशेन द्विर्द्विरोष्ठाधरौ स्पृशेत् ।। 4.1.35.७० ।।

अंगुलीभिस्त्रिभिः पश्चात्पुनरास्यं स्पृशेत्सुधीः ।।

तर्जन्यंगुष्ठकोट्या च घ्राणरंध्रे पुनः पुनः ।। ७१ ।।

अंगुष्ठानामिकाग्राभ्यां चक्षुः श्रोत्रे पुनः पुनः ।।

कनिष्ठांगुष्ठयोगेन नाभिरंध्रमुपस्पृशेत् ।। ७२ ।।

स्पृष्ट्वा तलेन हृदयं समस्ताभिः शिरः स्पृशेत् ।।

अंगुल्यग्रैस्तथा स्कंधौ सांबु सर्वत्र संस्पृशेत् ।। ७३ ।।

आचांतः पुनराचामेत्कृते रथ्योपसर्पणे ।।

स्नात्वा भुक्त्वा पयः पीत्वा प्रारंभे शुभकर्मणाम् ।। ७४ ।।

सुप्त्वा वासः परीधाय तथा दृष्ट्वाप्यमंगलम् ।।

प्रमादादशुचिं स्पृष्ट्वा द्विराचांतः शुचिर्भवेत् ।। ७५ ।।

अथो मुखविशुद्ध्यर्थं गृह्णीयाद्दंतधावनम् ।।

आचांतोप्यशुचिर्यस्मादकृत्वा दंतधावनम्।। ७६ ।।

प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे ।।

दंतानां काष्ठसंयोगो दहेदासप्तमं कुलम् ।। ७७।।

अलाभे दंतकाष्ठानां निषिद्धे वाथ वासरे ।।

गंडूषा द्वादश ग्राह्या मुखस्य परिशुद्धये ।। ७८ ।।

कनिष्ठाग्र परीमाणं सत्वचं निर्व्रणं ऋजुम् ।।

द्वादशांगुलमानं च सार्धं स्याद्दंतधावनम् ।। ७९ ।।

एकैकांगुलह्रासेन वर्णेष्वन्येषु कीर्तितम् ।।

आम्राम्रातक धात्रीणां कंकोल खदिरोद्भवम् ।। 4.1.35.८० ।।

शम्यपामार्गखर्जूरीशेलुश्रीपर्णिपीलुजम्।।

राजादनं च नारंगं कषायकटुकंटकम्।।८१।।

क्षीरवृक्षोद्भवं वापि प्रशस्तं दंतधावनम्।।

जिह्वोल्लेखनिकां चापि कुर्याच्चापाकृतिं शुभाम्।। ८२।।

अन्नाद्याय व्यूहध्वं सोमोराजाय मा गमत् ।।

समे मुखं प्रमाक्ष्र्यते यशसा च भगेन च ।। ८३ ।।

आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च ।।

ब्रह्म प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ।। ८४ ।।

मंत्रावेतौ समुच्चार्य यः कुर्याद्दंतधावनम् ।।

वनस्पतिगतः सोमस्तस्य नित्यं प्रसीदति ।। ८५ ।।

मुखे पर्युषिते यस्माद्भवेदशुचिभाग्नरः ।।

ततः कुर्यात्प्रयत्नेन शुद्ध्यर्थं दंतधावनम् ।। ८६ ।।

उपवासेपि नो दुष्येद्दंतधावनमंजनम् ।।

गंधालंकारसद्वस्त्रपुष्पमालानुलेपनम् ।। ८७ ।।

प्रातःसंध्यां ततः कुर्याद्दंतधावनपूर्विकाम् ।।

प्रातःस्नानं चरित्वा च शुद्धे तीर्थे विशेषतः ।। ८८ ।।

प्रातःस्नानाद्यतःशुद्ध्येत्कायोयं मलिनः सदा ।।

छिद्रितो नवभिश्छिद्रैः स्रवत्येव दिवानिशम् ।। ८९ ।।

उत्साह मेधा सौभाग्य रूप संपत्प्रवर्तकम् ।।

मनः प्रसन्नताहेतुः प्रातःस्नानं प्रशस्यते ।। 4.1.35.९० ।।

प्रस्वेद लालाद्याक्लिन्नो निद्राधीनो यतो नरः ।।

प्रातःस्नानात्ततोर्हः स्यान्मंत्रस्तोत्रजपादिषु।।९१।।

प्रातःप्रातस्तु यत्स्नानं संजाते चारुणोदये ।।

प्राजापत्यसमं प्राहुस्तन्महाघविघातकृत् ।। ९२ ।।

प्रातःस्नानं हरेत्पापमलक्ष्मीं ग्लानिमेव च ।।

अशुचित्वं च दुःस्वप्नं तुष्टिं पुष्टिं प्रयच्छति ।। ९३ ।।

नोपसर्पंति वै दुष्टाः प्रातःस्नायिजन क्वचित् ।।

दृष्टादृष्टफलं यस्मात्प्रातःस्नानं समाचरेत् ।। ९४ ।।

प्रसंगतः स्नानविधिं वक्ष्यामि कलशोद्भव ।।

विधिस्नानं यतः प्राहुः स्नानाच्छतगुणोत्तरम् ।। ९५ ।।

विशुद्धां मृदमादाय बर्हींषि तिल गोमयम् ।।
शुचौ देशे परिस्थाप्य त्वाचम्य स्नानमाचरेत् ।। ९६ ।।
उपग्रही बद्धशिखो जलमध्ये समाविशेत् ।।
उरुँ हीति मंत्रेण तोयमावर्त्य सृष्टितः ।। ९७ ।।
ये ते शतं ततो जप्त्वा तोयस्यामंत्रणाय च ।।
सुमित्रिया नो मंत्रेण पूर्वं कृत्वा जलांजलिम् ।।
क्षिपेद्द्वेष्यं समुद्दिश्य जपन्दुर्मित्रिया इति ।। ९८ ।।
इदं विष्णुरिमं जप्त्वा लिंपेदंगानि मृत्स्नया ।।
मृदैकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि ।। ९९ ।।
नाभेरधस्तु तिसृभिः पादौ षड्भिर्विशोधयेत् ।। ।।
मज्जेत्प्रवाहाभिमुख आपो अस्मानिमं जपन् ।।4.1.35.१००।।
उदिदाभ्यः शुचिरिति मंत्र उन्मज्जने मतः ।।
मानस्तोक इमं जप्त्वा लिंपेद्गात्राणि गोमयैः ।। १ ।।
इमं मे वरुणेत्यादि मंत्रः स्वात्माभिषेचनम् ।।
तत्त्वायामि तथात्वन्नः सत्वं नश्चाप्युदुत्तमम् ।। २ ।।
धाम्नोधाम्नस्तथा मापो मौषधीरिति संजपेत् ।।
यदाहुरघ्न्या मुंचंतु मेति चावभृथेति च ।। ३ ।।
अब्दैवता इमे मंत्राः प्रोक्ताः स्वात्माभिषेचने ।।
प्रणवेन ततो विप्रो महाव्याहृतिभिस्ततः ।। ४ ।।
आत्मानं पावयेद्विद्वान्गायत्र्या च ततः कृती ।।
आपो हिष्ठेति तिसृभिः प्रत्यृचं पावनं स्मृतम् ।। ५ ।।
एतेपि पावना मंत्रा इदमापो हविष्मतीः ।।
देवीराप अपो देवा द्रुपदादिव संज्ञकाः ।। ६ ।।
शन्नो देवीरपोदेवीस्तथापाँरसमित्यपि ।।
पुनंतु मेति च नव पावमान्यः प्रकीर्तिताः ।। ७ ।।
ततोऽघमर्षणं जप्त्वा द्रुपदां च ततो जपेत् ।।
प्राणायामं च विधिवदथवांतर्जले जपेत् ।। ८ ।।
प्रणवं त्रिर्जपेद्वापि विष्णुं वा संस्मरेत्सुधीः।।

स्नात्वेत्थं वस्त्रमापीड्य गृह्णीयाद्धौतवाससी ।।

आचम्य च ततः कुर्यात्प्रातःसंध्यां कुशान्विताम्।।

यो न संध्यामुपासीत ब्राह्मणो हि विशेषतः ।। 4.1.35.११० ।।

स जीवन्नेव शूद्रस्तु मृतः श्वा जायते ध्रुवम् ।।

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।। ११ ।।

यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ।।

प्रणवं प्राग्दिशि स्मृत्वा ततो दत्त्वा कुशासनम् ।। १२ ।।

चतुःस्रक्तिरिमं मंत्रं पठित्वा नान्यदृङ्मनाः ।। १३ ।।

प्राङ्मुखो बद्धचूडो वाप्युपविष्ट उदङ्मुखः ।।

प्रदक्षिणं स्वमभ्युक्ष्य प्राणायामं समाचरेत् ।। १४ ।।

गायत्रीं शिरसा सार्धं सप्तव्याहृतिपूर्विकाम् ।।

त्रिर्जपेत्सदशोंकारः प्राणायामोयमुच्यते ।।१५।।

प्राणायामांश्चरन्विप्रो नियतेंद्रिय मानसः ।।

अहोरात्रकृतैः पापैर्मुक्तो भवति तत्क्षणात् ।।१६।।

दशद्वादश संख्या वा प्राणायामाः कृता यदि ।।

नियम्य मानसं तेन तदा तप्तं महत्तपः ।। १७ ।।

सव्याहृति प्रणवकाः प्राणायामास्तु षोडश ।।

अपि भ्रूणहनं मासात्पुनंत्यहरहः कृताः ।। १८ ।।

यथा पार्थिवधातूनां दह्यंते धमनान्मलाः ।।

तथैंद्रियैः कृता दोषा ज्वाल्यंते प्राणसंयमात् ।। १९ ।।

एकं संभोज्य विधिवद्ब्राह्मणं यत्फलं लभेत् ।।

प्राणायामैर्द्वादशभिस्तत्फलं श्रद्धयाप्यते ।। 4.1.35.१२० ।।

वेदादि वाङ्मयं सर्वं प्रणवे यत्प्रतिष्ठितम्।।

ततः प्रणवमभ्यस्येद्वेदादिं वेदजापकः ।। २१ ।।

प्रणवे नित्ययुक्तस्य सप्तसु व्याहृतिष्वपि ।।

त्रिपदायां तु गायत्र्यां न भयं जायते क्वचित् ।।२२।।

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।।

गायत्र्यास्तु परं नास्ति पावनं कलशोद्भव ।। २३ ।।

कर्मणा मनसा वाचा यद्रात्रौ कुरुतेत्वघम् ।।

उत्तिष्ठन्पूर्वसंध्यायां प्राणायामैर्विशोधयेत्।। २४।।

यदह्ना कुरुते पापं मनोवाक्कायकर्मभिः ।।

आसीनः पश्चिमां संध्यां तत्प्राणायामतो हरेत् ।। २५ ।।

पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।।

पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ।। २६ ।।

पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।।

पश्चिमां तु समासीनो मलं हंति दिवाकृतम् ।। २७ ।।

नोपतिष्ठेत्तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।।

स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ।। २८ ।।

अपां समीपमासाद्य नित्यकर्म समाचरेत् ।।

गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ।। २९ ।।

गृहाद्बहुगुणा यस्मात्संध्या बहिरुपासिता ।।

गायत्र्यभ्यासमात्रोपि वरं विप्रो जितेंद्रियः ।। 4.1.35.१३० ।।

त्रिवेद्यपि च नो मान्यः सर्वभुक्सर्वविक्रयी ।।

सविता देवता यस्या मुखमग्निस्त्रिपाच्च या ।। ३१ ।।

विश्वामित्रे ऋषिश्छंदो गायत्री सा विशिष्यते ।।

गायत्रीमुषसि ध्यायेल्लोहितां ब्रह्मदैवताम् ।। ३२ ।।

हंसारूढामष्टवर्षां रक्तस्रगनुलेपनाम् ।।

ऋक्स्वरूपामभयदामक्षमालावलंबिनीम् ।। ३३ ।।

व्यासर्षिणा स्तूयमानां छंदसानुष्टुभायुताम् ।।

एतद्ध्यानादुषर्देव्या नैशमेनो व्यपोहति ।। ३४ ।।

सूर्यश्चेति च मंत्रेण स्यादाचमनमुत्तमम् ।।

आपोहिष्ठेति तिसृभिर्मार्जनं तु ततश्चरेत् ।। ३५ ।।

भूमौ शिरसि चाकाश आकाशे भुवि मस्तके ।।

मस्तके च तथाकाशे भूमौ च नवधा क्षिपेत् ।। ३६ ।।

भूमिशब्देन चरणावाकाशं हृदयं स्मृतम् ।।

शिरस्येव शिरः शब्दो मार्जनज्ञैरुदाहृतः ।। ३७ ।।

वारुणादपि चाग्नेयाद्वायव्यादपि चैंद्रतः ।।

मंत्रस्नानादपि परं ब्राह्मं स्नानमिदं परम् ।। ३८ ।।

ब्राह्मस्नानेन यः स्नातः स बाह्याभ्यंतरे शुचिः ।।

सर्वत्र चार्हतामेति देवपूजादिकर्मणि ।।३९ ।।

नक्तं दिनं निमज्ज्याप्सु कैवर्ताः किमु पावनाः ।।

शतशोपि तथा स्नाता न शुद्धा भावदूषिता ।। 4.1.35.१४० ।।

अंतःकरणशुद्धा ये तान्विभूतिः पवित्रयेत् ।।

किं पावनाः प्रकीर्त्यंते रासभा भस्मधूसराः ।। ४१ ।।

स स्नातः सर्वतीर्थेषु स सर्वमलवर्जितः ।।

तेन क्रतुशतैरिष्टं चेतो यस्येह निर्मलम् ।। ४२ ।।

तदेव निर्मलं चेतो यथास्यात्तन्मुने शृणु ।।

विश्वेशश्चेत्प्रसन्नः स्यात्तदा स्यान्नान्यथा क्वचित् ।। ४३ ।।

तस्माच्चेतोविशुद्ध्यर्थं काशीनाथं समाश्रयेत् ।।

तदाश्रयेण नियतं संक्षीयंते मनोमलाः ।। ४४ ।।

संक्षीणमान स मलो विश्वेशानु ग्रहात्परात् ।।

इदं शरीरमुत्सृज्य परं ब्रह्माधिगच्छति ।। ४५ ।।

विश्वेशानुग्रहे हेतुः सदाचारो मतो नृणाम् ।।

श्रुतिस्मृतिभ्यामुदितं तस्मात्तमनु संश्रयेत् ।। ।। ४६ ।।

द्रुपदां तु ततो जप्त्वा जलमादाय पाणिना ।।

कुर्यादृतं च मंत्रेण विधिज्ञस्त्वघमर्षणम् ।। ४७ ।।

निमज्ज्याप्सु च यो विद्वाञ्जपेत्त्रिरघमर्षणम् ।।

यथाश्वमेधावभृथस्तस्य स्यात्तत्तथा ध्रुवम् ।। ४८ ।।

जले वापि स्थले वापि यः कुयार्दघमषर्णम् ।।

तस्याघौघो विनश्येत यथा सूर्योदये तमः ।। ४९ ।।

इमं मंत्रं ततश्चोक्त्वा कुर्यादाचमनं द्विजः ।।

आचार्याः केचिदिच्छंति शाखाभेदेन चापरे ।। 4.1.35.१५० ।।

अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः ।।

त्वं यज्ञस्त्वं वषट्कार आपो ज्योतीरसोऽमृतम् ।। ५१ ।।

गायत्रीं शिरसा हीनां महाव्याहृतिपूर्विकाम् ।।

प्रणवाद्यां जपंस्तिष्ठन्क्षिपेदंभोंजलि त्रयम् ।। ५२ ।।

तेन वज्रोदकेनाशु मंदेहा नाम राक्षसाः ।।

सूर्यारयः प्रलीयंते शैला वज्रहता इव ।।५३।।

विवस्वतः सहायार्थं यो द्विजो नांजलित्रयम् ।।

क्षिपेन्मंदेहनाशाय सोपि मंदेहतां व्रजेत्।।५४।।

प्रातस्तावज्जपंस्तिष्ठेद्यावत्सूर्यस्य दर्शनम्।।

उपविष्टो जपेत्सायमृक्षाणामाविलोकनात्।।५५।।

काललोपो न कर्तव्यो द्विजेन स्वहितेप्सुना।।

अर्धोदयास्त समये तस्माद्वज्रोदकं क्षिपेत् ।।५६ ।।

विधिनापि कृता संध्या कालातीताऽफला भवेत् ।।

अयमेव हि दृष्टांतो वंध्या स्त्री मैथुनं यथा ।।५७।।

जलं वामकरे कृत्वा यासंध्या चरिता द्विजैः ।।

वृषली सा परिज्ञेया रक्षोगण मुदावहा ।।५८।।

उद्वयं तमुदुत्यं च चित्रं देवेति तत्परम् ।।

तच्चक्षुरित्युपस्थानमंत्रा ब्रध्नस्य सिद्धिदाः ।।५९।।

सहस्रकृत्वो गायत्र्याः शतकृत्वोथवा पुनः ।।

दशकृत्वोथ देव्यैव कुर्यात्सौरीमुपस्थितिम् ।। 4.1.35.१६० ।।

सहस्रपरमां देवीं शतमध्यां दशावराम् ।।

गायत्रीं यो जपेद्विप्रो न स पापैः प्रलिप्यते ।। ६१ ।।

विभ्राडित्यनुवाकं वा सूक्तं वा पौरुषं जपेत् ।।

शिवसंकल्पमथवा ब्राह्मणं मंडलं तु वा ।। ६२ ।।

एतानि चोपस्थानानि रविप्रीतिकराणि च ।।

रक्तचंदनमिश्राद्भिरक्षतैः कुसुमैः कुशैः ।।६३।।

वेदोक्तैरागमोक्तैर्वा मंत्रैरर्घं प्रदापयेत् ।।

अर्चितः सविता येन तेन त्रैलोक्यमर्चितम्।।६४।।

अर्चितः सविता सूते सुतान्पशु वसूनि च ।।

व्याधीन्हरेद्ददात्यायुः पूरयेद्वांछितान्यपि ।। ६५ ।।

अयं हि रुद्र आदित्यो हरिरेष दिवाकरः ।।

रविर्हिरण्यगर्भोसौ त्रयीरूपोयमर्यमा ।। ६६ ।।

रवेस्तु तोषणात्तुष्टा ब्रह्मविष्णुमहेश्वराः ।।

इंद्रादयोखिला देवा मरीच्याद्या महर्षयः ।। ६७ ।।

मानवा मनुमुख्याश्च सोमपाद्याः पितामहाः ।।

रवेरर्चां विधायेत्थं ततस्तर्पणमारभेत् ।। ६८ ।।

दर्भानगर्भानादाय नव सप्त च पंच वा ।।

साग्रान्समूलानच्छिन्नान्द्विजो दक्षिणपाणिना ।। ६९ ।।

अन्वारब्धेन सव्येन तर्पयेत्षड्विनायकान् ।।

ब्रह्मादीनखिलान्देवान्मरीच्यादींस्तथा मुनीन् ।। 4.1.35.१७० ।।

चंदनागुरुकस्तूरी गंधवत्कुसुमैरपि ।।

तर्पयेच्छुचिभिस्तोयैस्तृप्यंत्विति समुच्चरन् ।। ७१ ।।

सनकादीन्मनुष्याँश्च निवीती तर्पयेद्यवैः ।।

अंगुष्ठद्वयमध्ये तु कृत्वा दर्भानृजून्द्विजः ।। ७२ ।।

कव्यवाडनलादींश्च पितृन्दिव्यान्प्रतर्पयेत् ।।

प्राचीनावीतिको दर्भैर्द्विगुणैस्तिलमिश्रितैः ।। ७३ ।।

रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि संध्ययोः ।।

श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणम् ।। ७४ ।।

यदि कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृती ।।

चतुर्दश यमान्पश्चात्तर्पयेन्नाम उच्चरन् ।। ७५ ।।

ततः स्वगोत्रमुच्चार्य तर्पयेत्स्वपितॄन्मुदा ।।

सव्यजानुनिपातेन पितृतीर्थेन वाग्यतः ।। ७६ ।।

एकैकमंजलिं देवा द्वौ द्वौ तु सनकादिकाः ।।

पितरस्त्रीन्प्रवांछंति स्त्रिय एकैकमंजलिम् ।। ७७ ।।

अंगुल्यग्रे भवेद्दैवमार्षमंगुलि मूलगम् ।।

ब्राह्ममंगुष्ठमूले तु पाणिमध्ये प्रजापतेः ।। ७८ ।।

मध्येंगुष्ठप्रदेशिन्योः पित्र्यं तीर्थं प्रचक्षते ।।

नवर्चमुच्चरन्विद्वान्विदध्यात्पितृतर्पणम् ।। ७९ ।।

उदीरतामगिंरस आयंतुन इतीष्यते ।।
ऊर्जं वहंती पितृभ्यः स्वधायिभ्यस्ततः पठेत् ।। 4.1.35.१८० ।।
ये चेह पितरस्तद्वन्मधुवाता इति तृचम् ।।
नमो वः पितरश्चोक्त्वा पठन्सिंचेज्जलं भुवि ।। ८१ ।।
आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ।।
तृप्यंतु पितरः सर्वे मातृमातामहादयः ।।८२ ।।
अतीतकुलकोटीनां सप्तद्वीप निवासिनाम् ।।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ।। ८३ ।।
ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।।
सर्वे ते तृप्तिमायांतु वस्त्रनिष्पीडनोदकैः ।।८४ ।।
अग्निकार्यं ततः कृत्वा वेदाभ्यासं ततश्चरेत् ।।
श्रुत्यभ्यासः पंचधा स्यात्स्वीकारोर्थविचारणम् ।। ८५ ।।
अभ्यासश्च जपश्चापि शिष्येभ्यः प्रतिपादनम् ।।
लब्धस्य प्रतिपालार्थमलब्धस्य च लब्धये ।। ८६ ।।
दातारं समुपेयाद्वै स्वगुरुत्वं च वर्धयेत् ।।
प्रातःकृत्यमिदं प्रोक्तं द्विजातीनां द्विजोत्तम ।। ८७ ।।
अथवा प्रातरुत्थाय कृत्वावश्यकमेव च ।।
शौचाचमनमादाय भक्षयेद्दंतधावनम् ।। ८८ ।।
विशोध्य सर्वगात्राणि प्रातःसंध्यां समाचरेत् ।।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधान्यपि ।। ८९ ।।
अध्यापयेच्छुचीञ्शिष्यान्हितान्मेधासमन्वितान् ।।
उपेयादीश्वरं चैव योगक्षेमादि सिद्धये ।। 4.1.35.१९० ।।
ततो मध्याह्नसिद्ध्यर्थं पूर्वोक्तं स्नानमाचरेत् ।।
स्नात्वा माध्याह्निका संध्यामुपासीत विचक्षणः ।। ९१ ।।
नवयौवनभिन्नांगीं शुद्धस्फटिकनिर्मलाम् ।।
त्रिष्टुप्छंदः समायुक्तां सावित्रीं रुद्रदैवताम् ।। ९२ ।।
कश्यपर्षिसमायुक्तां यजुर्वेदस्वरूपिणीम् ।।
त्र्यक्षरां वृषभारूढां भक्ताभयकरां पराम् ।। ९३ ।।

देवतां परिपूज्याथ नैत्यिकं विधिमाचरेत् ।।
पचनाग्निं समुज्ज्वाल्य वैश्वदेवं समाचरेत् ।। ९४ ।।
निष्पावान्कोद्रवान्माषान्कलायांश्चणकांस्त्यजेत् ।।
तैलपक्वं च पक्वान्नं सर्वं लवणयुक्त्यजेत् ।। ९५ ।।
आढकीश्च मसूरांश्च वर्तुलान्वरटांस्तथा ।।
भुक्तशेषं पर्युषितं वैश्वदेवे विवर्जयेत् ।। ९६ ।।
दर्भपाणिः समाचम्य प्राणायामं विधाय च ।।
पृष्ठो दिवीति मंत्रेण पर्युक्षणमथाचरेत् ।। ९७ ।।
प्रदक्षिणं च पर्युक्ष्य त्रिःपरिस्तीर्य वै कुशान् ।।
एषो ह देव मंत्रेण कुर्याद्वह्निं सुसंमुखम् ।। ९८ ।।
वैश्वानरं समभ्यर्च्य साज्यपुष्पाक्षतैरथ ।।
भूराद्याश्चाहुतीस्तिस्रः स्वाहांताः प्रणवादिकाः ।। ९९ ।।
ॐभूर्भुवःस्वःस्वाहेति विप्रो दद्यात्तथाहुतिम् ।।
तथा देवकृतस्याद्या जुहुयाच्च षडाहुतीः ।। 4.1.35.२०० ।।
यमाय तूष्णीमेकां च तथा स्विष्टकृतीद्वयम् ।।
विश्वेभ्यश्चापि देवेभ्यो भूमौ दद्यात्ततो बलिम् ।। १ ।।
सर्वेभ्यश्चापि भूतेभ्यो नमो दद्यात्तदुत्तरे ।।
तद्दक्षिणे पितृभ्यश्च प्राचीनावीतिको ददेत् ।। २ ।।
निर्णेजनोदकान्नं चैशान्यां वै यक्ष्मणेऽर्पयेत् ।।
ततो ब्रह्मादि देवेभ्यो नमो दद्यात्तदुत्तरे ।। ३ ।।
निवीती सनकादिभ्यः पितृभ्यस्त्वपसव्यवान् ।।
हंतः षोडशभिर्ग्रासश्चतुर्भिः पुष्कलं स्मृतम् ।। ४ ।।
ग्रासमात्राभवेद्भिक्षा गृहस्थसुकृतप्रदा ।।
अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः ।। ५ ।।
यतिश्च ब्रह्मचारी च षडेते धर्मभिक्षुकाः ।।
अतिथिः पथिको ज्ञेयो ऽनूचानः श्रुतिपारगः ।। ६ ।।
मान्यावेतौ गृहस्थानां ब्रह्मलोकमभीप्सताम् ।।
अपि श्वपाके शुनि वा नैवान्नं निष्फलं भवेत् ।। ७ ।।

अन्नार्थिनि समायाते पात्रापात्रं न चिंतयेत् ।।

शुनां च पतितानां च श्वपचां पापरोगिणाम्।। ८ ।।

काकानां च कृमीणां च बहिरन्नं किरेद्भुवि ।।

ऐंद्रवारुणवायव्याः सौम्या वै नैर्ऋताश्च ये ।। ९ ।।

प्रतिगृह्णंत्विमं पिंडं काका भूमौ मयार्पितम् ।।

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।। 4.1.35.२१० ।।

ताभ्यां पिंडं प्रदास्यामि स्यातामेतावहिंसकौ ।।

देवा मनुष्याः पशवो रक्षो यक्षोरगाः खगाः ।। ११ ।।

दैत्याः सिद्धाः पिशाचाश्च प्रेता भूताश्च दानवाः ।।

तृणानि तरवश्चापि मद्दत्तान्नाभिलाषुकाः ।। १२ ।।

कृमि कीट पतंगाद्याः कर्मबद्धा बुभुक्षिताः ।।

तृप्त्यर्थमन्नं हि मया दत्तं तेषां मुदेस्तु वै ।। १३ ।।

इत्थं भूतबलिं दत्त्वा कालं गोदोहमात्रकम् ।।

प्रतीक्ष्यातिथिमायांतं विशेद्भोज्यगृहं ततः ।। १४ ।।

अदत्त्वा वायसबलिं नित्यश्राद्धं समाचरेत् ।।

नित्यश्राद्धे स्वसामर्थ्यात्त्रीन्द्वावेकमथापि वा ।। १५ ।।

भोजयेत्पितृयज्ञार्थं दद्यादुद्धृत्य दुर्बलः ।।

नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।। १६ ।।

दक्षिणारहितं त्वेतद्दातृभोक्तृ व्रतोज्झितम् ।।

पितृयज्ञं विधायेत्थं स्वस्थबुद्धिरनातुरः ।। १७ ।।

अदुष्टासनमध्यास्य भुंजीत शिशुभिः सह ।।

सुगंधिः सुमनाः स्रग्वी शुचिवासो द्वयान्वितः ।। १८ ।।

प्रागास्य उदगास्यो वा भुंजीत पितृसेवितम् ।। १९ ।।

विधायान्नमनग्नं तदुपरिष्टादधस्तथा ।।

आपोशनविधानेन कृत्वाश्नीयात्सुधीर्द्विजः ।।4.1.35.२२०।।

प्रदद्याद्भुवःपतये भुवनपतये तथा।।

भूतानांपतये स्वाहेत्युक्त्वा भूमौ बलित्रयम् ।।२१।।

सकृच्चाप उपस्पृश्य प्राणाद्याहुतिपंचकम् ।।

दद्याज्जठरकुंडाग्नौ दर्भपाणिः प्रसन्नधीः ।। २२ ।।

दर्भपाणिस्तु यो भुंक्ते तस्य दोषो न विद्यते ।।

केशकीटादि संभूतस्तदश्नीयात्सदर्भकः ।। २३ ।।

यावद्रुच्यन्नमश्नीयान्न ब्रूयात्तद्गुणागुणान् ।।

भुंजते पितरस्तावद्यावन्नोक्ता गुणागुणाः ।। २४ ।।

अतो मौनेन यो भुंक्ते स भुंक्ते केवलामृतम् ।।

अनुपीय ततः क्षीरं तक्रं पानीयमेव वा ।। २५ ।।

अमृतापिधानमसीत्येवं प्राश्योदकं सकृत् ।।

पीतशेषं क्षिपेद्भूमौ तोयं मंत्रमिमं पठन्।। २६ ।।

अप्रक्षालितहस्तस्य दक्षिणांगुष्ठमूलतः ।।

रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् ।। २७ ।।

उच्छिष्टोदकमिच्छूनामक्षय्यमुपतिष्ठताम् ।। ।। २८ ।।

पुनराचम्य मेधावी शुचिर्भूत्वा प्रयत्नतः ।।

हस्तेनोदकमादाय मंत्रमेतमुदीरयेत्।।२९।।

अंगुष्ठमात्रः पुरुषस्त्वंगुष्ठं च समाश्रितः ।।

ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ।। 4.1.35.२३० ।।

इत्यन्नं परिसंकल्प्य प्रक्षाल्य चरणौ करौ ।।

ततोन्नपरिणामार्थं मंत्रानेतानुदीरयेत् ।। ३१ ।।

अग्निराप्याययन्धातून्पार्थिवान्पवनेरितः ।।

दत्तावकाशो नभसा जरयत्वस्तु मे सुखम् ।।३२।।

प्राणापानसमानानामुदानव्यानयोस्तथा।।

अन्नपुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम् ।। ३३।।

समुद्रो वडवाग्निश्च ब्रध्नो ब्रध्नस्यनंदनः ।।

मयाभ्यवहृतं यत्तदशेषं जरयंत्विमे ।। ३४ ।।

मुखशुद्धिं ततः कृत्वा पुराणश्रवणादिभिः ।।

अतिवाह्य दिवाशेषं ततः संध्यां समारभेत् ।। ३५।।

गृहे गोष्ठे नदीतीरे संध्या दशगुणा क्रमात् ।।

संभेदे स्याच्छतगुणा ह्यनंता शिवसन्निधौ ।। ३६ ।।

उपासिता बहिः संध्या दिवामैथुनपातकम् ।।

शमयेदनृतोक्ताघं मद्यगंधजमेव च ।। ३७ ।।

सामवेदस्वरूपां च वसिष्ठर्षि समायुताम् ।।

कृष्णांगीं कृष्णवसनां मनाक्स्खलित यौवनाम् ।। ३८ ।।

सरस्वतीं ताक्ष्र्यंयानां विघ्नघ्नीं विष्णुदैवताम् ।।

जगतीच्छंदसा युक्तां ध्यायेदेकाक्षरां पराम् ।। ३९ ।।

अग्निश्चेति च मंत्रेण विधायाचमने सुधीः ।।

पश्चिमास्यो जपेत्तावद्यावन्नक्षत्रदर्शनम् ।। 4.1.35.२४० ।।

अतिथिं सायमायांतमपिवाग्भूतृणोदकैः ।।

संभाव्य परिकल्प्येत्थं निशःप्राक्प्रहरं सुधीः ।। ४१ ।।

इत्थं दिवाकर्म कृत्वा श्रुतेः पठनपाठनैः ।।

एककाष्ठमयीं शय्यां नातितृप्तोथ संविशेत् ।। ४२ ।।

उद्देशतः समाख्यातो ह्येष नित्यतमो विधिः ।।

इत्थं समाचरन्विप्रो नावसीदति कर्हिचित् ।। २४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सदाचारो नाम पंचत्रिंशोऽध्यायः ।। ३५ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३६



स्कंद उवाच ।। ।।

पुनर्विशेषं वक्ष्यामि सदाचारस्य कुंभज ।।

यं श्रुत्वापि नरो धीमान्नाज्ञानतिमिरं विशेत् ।। १ ।।

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजाः स्मृताः ।।

प्रथमं मातृतो जाता द्वितीयं चोपनायनात् ।। २ ।।

एषां क्रियानिषेकादि श्मशानांता च वैदिकी।।

आदधीत सुधीर्गर्भमृतौमूलं मघां त्यजेत् ।। ३ ।।

स्पंदनात्प्राक्पुंसवनं सीमंतोन्नयनं ततः ।।

मासि षष्ठेऽष्टमे वापि जातेथो जातकर्म च ।। ४ ।।

नामाहन्येकादशे गेहाच्चतुर्थेमासि निष्क्रमः ।।

मासेन्नप्राशनं षष्ठे चूडाब्दे वा यथाकुलम् ।। ५ ।।

शममेनो व्रजेदेवं बैजं गर्भजमवे च ।।

स्त्रीणामेताः क्रियास्तूष्णीं पाणिग्राहस्तु मंत्रवान् ।। ६ ।।

सप्तमेथाष्टमेवाब्दे सावित्रीं ब्राह्मणोर्हति ।।

नृपस्त्वेकादशे वैश्यो द्वादशे वा यथाकुलम् ।। ७ ।।

ब्रह्मतेजोभिवृद्ध्यर्थं विप्रोब्देपंचमेर्हति ।।

षष्ठे बलार्थी नृपतिर्मौंजीं वैश्योष्टमे ध्रियेत् ।। ८ ।।

महाव्याहृतिपूर्वं च वेदमध्यापयेद्गुरुः ।।

उपनीय च तं शिष्यं शौचाचारे च योजयेत् ।।९।।

पूर्वोक्तविधिना शौचं कुर्यादाचमनं तथा ।।

दंताञ्जिह्वां विशोध्याथ कृत्वा मलविशोधनम् ।।4.1.36.१०।।

स्नात्वांबुदैवतैर्मंत्रैः प्राणानायम्य यत्नतः ।।

उपस्थानं रवेः कृत्वा संध्ययोरुभयोरपि ।। ११ ।।

अग्निकार्यं ततः कृत्वा ब्राह्मणानभिवादयेत् ।।

ब्रुवन्नमुक गोत्रोहमभिवादय इत्यपि ।। १२ ।।

अभिवादनशीलस्य वृद्धसेवारतस्य च ।।

आयुर्यशोबलं बुद्धिर्वर्धतेऽहरहोधिकम् ।। १३ ।।

अधीते गुरुणा हूतः प्राप्तं तस्मै निवेदयेत् ।।

कर्मणा मनसा वाचा हितं तस्याचरेत्सदा ।। १४ ।।

अध्याप्याधर्मतोनार्थात्साध्वाप्तज्ञानवित्तदाः ।।

शक्ताः कृतज्ञाः शुचयोऽद्रोहकाश्चानसूयकाः ।। १५ ।।

धारयेन्मेखलादंडोपवीताजिनमेव च ।।

अनिंद्येषु चरेद्भैक्ष्यं ब्राह्मणेष्वात्मवृत्तये ।। १६ ।।

ब्राह्मणक्षत्रियविशामादिमध्यावसानतः ।।

भैक्ष्यचर्या क्रमेण स्याद्भवच्छब्दोपलक्षिता ।। १७ ।।

वाग्यतो गुर्वनुज्ञातो भुंजीतान्नमकुत्सयन् ।।

एकान्नं न समश्नीयाच्छ्राद्धेऽश्नीयात्तथापदि ।। १८ ।।

अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ।।

अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ।। १९ ।।

न द्विर्भुंजीत चैकस्मिन्दिवा क्वापि द्विजोत्तमः ।।

सायंप्रातर्द्विजोऽश्नीयादग्निहोत्रविधानवित् ।। 4.1.36.२० ।।

मधुमांसं प्राणिहिंसां भास्करालोकनांजने ।।

स्त्रियं पर्युषितोच्छिष्टंपरिवादं विवजर्येत् ।। २१ ।।

औपनायनिकः कालो ब्रह्मक्षत्र विशां परः ।।

आ षोडशादाद्वाविंशादा चतुर्विंशदब्दतः ।। २२ ।।

इतोप्यूर्ध्वं न संस्कार्याः पतिता धर्मवर्जिताः ।।

व्रात्यस्तोमेन यज्ञेन तत्पातित्यं परिव्रजेत् ।। २३ ।।

सावित्रीपतितैः सार्धं संबंधं न समाचरेत् ।।

ऐणं च रौरवं वास्तं क्रमाच्चर्म द्विजन्मनाम् ।।२४।।

वसीरन्नानुपूर्व्येण शाण क्षौमाविकानि च।।

द्विजस्य मेखला मौंजी मौर्वी च भुजजन्मनः ।।

भवेत्त्रिवृत्समाश्लक्ष्णा विशस्तु शणतांतवी ।। २५ ।।

मुंजाभावे विधातव्या कुशाश्मंतकबल्वजैः ।।

ग्रंथिनैकेन संयुक्ता त्रिभिः पंचभिरेव वा ।। २६ ।।

उपवीतक्रमेण स्यात्कार्पासं शाणमाविकम् ।।

त्रिवृदूर्ध्ववृतं तच्च भवेदायुर्विवृद्धये ।। २७ ।।

बिल्वपालाशयोर्दंडो ब्राह्मणस्य नृपस्य तु ।।

न्यग्रोधबालदलयोः पीलूदुंबरयोर्विशः ।। २८ ।।

आमौलिं वाऽऽललाटंवाऽऽनासमूर्ध्वप्रमाणतः ।।

ब्रह्मक्षत्रविशां दंडस्त्वगाढ्योनाग्निदूषितः ।। २९ ।।

प्रदक्षिणं परीत्याग्निमुपस्थाय दिवाकरम् ।।

दंडाजिनोपवीताढ्यश्चरेद्भैक्ष्यं यथोदितम् ।। 4.1.36.३० ।।

मातृमातृष्वसृस्वसृपितृस्वसृपुरःसराः ।।

प्रथमं भिक्षणीयाः स्युरेतायाचन नो वदेत्।। ३१ ।।

यावद्वेदमधीते च चरन्वेदव्रतानि च ।।

ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत् ।। ३२ ।।

प्रोक्तोसावुपकुर्वाणो द्वितीयस्तत्र नैष्ठिकः ।।

तिष्ठेत्तावद्गुरुकुले यावत्स्यादायुषः क्षयः ।। ३३ ।।

गृहाश्रमं समाश्रित्य यः पुनर्ब्रह्मचर्यभाक्।।

नासौ यतिर्वनस्थो वा स्यात्सर्वाश्रमवर्जितः ।। ३४ ।।

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।।

आश्रमं तु विना तिष्ठन्प्रायश्चित्ती यतो हि सः ।।३५।।

जपं होमं व्रतं दानं स्वाध्यायं पितृतर्पणम्।।

कुर्वाणोथाश्रमभ्रष्टो नासौ तत्फलमाप्नुयात् ।। ।। ३६।।

मेखलाजिनदंडाश्च लिंगं स्याद्ब्रह्मचारिणः ।।

गृहिणो वेदयज्ञादि नखलोमवनस्थितेः ।। ३७ ।।

त्रिदंडादि यतेरुक्तमुपलक्षणमत्र वै ।।

एतल्लक्षणहीनस्तु प्रायश्चित्ती दिने दिने ।। ३८ ।।

जीर्णं कमंडलुं दंडमुपवीताजिने अपि ।।

अप्स्वेव तानि निक्षिप्य गृह्णीतान्यच्च मंत्रवत् ।। ३९ ।।

विदध्यात्षोडशे वर्षे केशांतकर्म च क्रमात् ।।

द्वाविंशे च चतुर्विंशे गार्हस्थ्य प्रतिपत्तये ।। 4.1.36.४० ।।

तपो यज्ञ व्रतेभ्यश्च सर्वस्माच्छुभकर्मणः ।।

द्विजातीनां श्रुतिर्ह्येका हेतुर्निश्रेयस श्रियः ।। ४१ ।।

वेदारंभे विसर्गे च विदध्यात्प्रणवं सदा ।।

अफलोऽनोंकृतो यस्मात्पठितोपि न सिद्धये ।। ४२ ।।

वेदस्य वदनं प्रोक्तं गायत्री त्रिपदा परा ।।

तिसृभिः प्रणवाद्याभिर्महाव्याहृतिभिः सह ।। ४३ ।।

सहस्रं साधिकं किंचित्त्रिकमैतज्जपन्यमी ।।

मासं बहिः प्रतिदिनं महाघादपि मुच्यते ।। ४४ ।।

अत्यब्दमिति योभ्यस्येत्प्रतिघस्रमनन्यधीः ।।

स व्योममूर्तिः शुद्धात्मा परं ब्रह्माधिगच्छति ।। ४५ ।।

त्रिवर्णमयमोंकारं भूर्भुवःस्वरिति त्रयम् ।।

पादत्रयं च सावित्र्यास्त्रयोवेदा अदूदुहन् ।। ४६ ।।

एतदक्षरमेनां च जपेद्व्याहृतिपूर्विकाम् ।।

संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ।। ४७ ।।

विधिक्रतोर्दशगुणं जपस्यफलमश्नुते ।।

विधिक्रतोर्दशगुणो जपक्रतुरुदीरितः ।। ४८ ।।

उपांशुस्तच्छतगुणः सहस्रो मानसस्ततः ।। ४९ ।।

अधीत्यवेदान्वेदौ वा वेदं वा शक्तितो द्विजः ।।

सुवर्णपूर्ण धरणी दानस्य फलमश्नुते ।। 4.1.36.५० ।।

श्रुतिमेव सदाभ्यस्येत्तपस्तप्तुं द्विजोत्तमः ।।

श्रुत्यभ्यासो हि विप्रस्य परमं तप उच्यते ।। ५१ ।।

हित्वा श्रुतेरध्ययनं योन्यत्पठितुमिच्छति ।।

स दोग्ध्रीं धेनुमुत्सृज्य ग्रामक्रोडीं दुधुक्षति ।। ५२ ।।

उपनीय च वै शिष्यं वेदमध्यापयेद्द्विजः ।।

सकल्पं सरहस्यं च तमाचार्यं विदुर्बुधाः ।। ५३ ।।

योध्यापयेदेकदेशं श्रुतेरंगान्यथापि वा ।।

वृत्त्यर्थं स उपाध्यायो विद्वद्भिः परिगीयते ।। ५४ ।।

यथाविधि निषेकादि यः कर्म कुरुते द्विजः ।।
संभावयेत्तथान्नेन गुरुः स इह कीर्त्यते ।। ५९ ।।
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ।। ५६ ।।
उपाध्यायाद्दशाचार्य आचार्यात्तु शतं पिता ।।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ।। ५७ ।।
विप्राणां ज्ञानतो ज्यैष्ठ्यं बाहुजानां तु वीर्यतः ।।
वैश्यानां धान्यधनतः पज्जातानां तु जन्मतः ।। ५८ ।।
यथा दारुमयो हस्ती यथा कृत्तिमयो मृगः ।।
तथा विप्रोऽनधीयानस्त्रयोऽमी नामधारिणः ।। ५९ ।।
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ।। 4.1.36.६० ।।
स्वधर्मनिरतानां च वेदयज्ञक्रियावताम् ।।
ब्रह्मचारी चरेद्भैक्ष्यं वेश्मसुप्रयतोऽन्वहम् ।। ६१ ।।
अकृत्वा भैक्ष्यचरणमसमिध्य हुताशनम् ।।
अनातुरः सप्तरात्रमवकीर्णि व्रतं चरेत् ।। ६२ ।।
यथेष्टचेष्टो नभवेद्गुरोर्नयनगोचरे ।।
न नामपरिगृह्णीयात्परोक्षेप्यविशेषणम् ।। ६३ ।।
गुरुनिंदाभवेद्यत्र परिवादस्तु यत्र च ।।
श्रुती पिधाय वास्थेयं यातव्यं वा ततोन्यतः ।। ६४ ।।
खरो गुरोः परीवादाच्छ्वा भवेद्गुरुनिंदकः ।।
मत्सरी क्षुद्रकीटःस्यात्परिभोक्ता भवेत्कृमिः ।। ६५ ।।
नाभिवाद्या गुरोः पत्नी स्पृष्ट्वांघ्री युवती सती ।।
क्वापि विंशतिवर्षेण ज्ञातृणा गुणदोषयोः ।। ६६ ।।
स्वभावश्चंचलः स्त्रीणां दोषः पुंसामतः स्मृतः ।।
प्रमदासु प्रमाद्यंति क्वचिन्नैव विपश्चितः ।। ६७ ।।
विद्वांसमप्यविद्वांसं यतस्ताधर्षयंत्यलम् ।।
स्ववशं वापि कुर्वंति सूत्रबद्धशकुंतवत् ।। ६८ ।।

न मात्रा न दुहित्रा वा न स्वस्रैकांतशीलता ।।
बलवंतीद्रियाण्यत्र मोहयंत्यपि कोविदान् ।। ६९ ।।
प्रयत्नेन खनन्यद्वद्भूमेर्वार्यधिगच्छति ।।
शुश्रूषया गुरोस्तद्वद्विद्या शिष्योधिगच्छति।।4.1.36.७०।।
शयानमभ्युदयते ब्रध्नश्चेद्ब्रह्मचारिणम् ।।
प्रमादादथ निम्लोचेज्जपन्नपवसेद्दिनम् ।। ७१ ।।
सुतस्य संभवे क्लेशं सहेते पितरौ च यत् ।।
शक्या वर्षशतेनापि नो कर्तुं तस्य निष्कृतिः ।। ७२ ।।
अतस्तयोः प्रियं कुर्याद्गुरोरपि च सर्वदा ।।
त्रिषु तेषु सुतुष्टेषु तपः सर्वं समाप्यते ।। ७३ ।।
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।।
तानतिक्रम्य यः कुर्यात्तन्नसिद्ध्येत्कदाचन ।। ७४ ।।
त्रीनेवामून्समाराध्य त्रीँल्लोकान्स जयेत्सुधीः ।।
देववद्दिवि दीव्येत तेषां तोषं विवर्धयन् ।। ७५ ।।
भूर्लोकं जननी भक्त्या भुवर्लोकं तथा पितुः ।।
गुरोः शुश्रूषणात्तद्वत्स्वर्लोकं च जयेत्कृती ।। ७६ ।।
एतदेव नृणां प्रोक्तं पुरुषार्थचतुष्टयम् ।।
यदेतेषां हि संतोष उपधर्मोन्य उच्यते ।। ७७ ।।
अधीत्य वेदान्वेदौ वा वेदं वापि क्रमाद्द्विजः ।।
अप्रस्खलद्ब्रह्मचर्यो गृहाश्रममथाश्रयेत् ।। ७८ ।।
अविप्लुत ब्रह्मचर्यो विश्वेशानुग्रहाद्भवेत् ।।
अनुग्रहश्च वैश्वेशः काशीप्राप्तिकरः परः ।। ७९ ।।
काशीप्रास्या भवेज्ज्ञानं ज्ञानान्निर्वाणमृच्छति ।।
निर्वाणार्थं प्रयत्नो हि सदाचारस्य धीमताम् ।। 4.1.36.८० ।।
सदाचारो गृहे यद्वन्न तथास्त्याश्रमांतरे ।।
विद्याजातं पठित्वांते गृहस्थाश्रममाश्रयेत् ।। ८१ ।।
गृहाश्रमात्परं नास्ति यदि पत्नीवशंवदा ।।
आनुकूल्यं हि दंपत्योस्त्रिवर्गोदय हेतवे ।। ८२ ।।

आनुकूल्यं कलत्रं चेत्त्रिदिवेनापि किं ततः ।।

प्रातिकूल्यं कलत्रं चेन्नरकेणापि किं ततः ।। ८३ ।।

गृहाश्रमः सुखार्थाय भार्यामूलं च तत्सुखम् ।।

सा च भार्या विनीताया त्रिवर्गो विनयो ध्रुवम् ।। ८४ ।।

जलौकयोपमीयंते प्रमदा मंदबुद्धिभिः ।।

मृगीदृशां जलौकानां विचारान्महदतंरम् ।। ८५ ।।

जलौका केवलं रक्तमाददाना तपस्विनी ।।

प्रमदा सर्वदा दत्ते चित्तं वित्तं बलं सुखम् ।। ८६ ।।

दक्षा प्रजावती साध्वी प्रियवाक्च वशंवदा ।।

गुणैरमीभिः संयुक्ता सा श्रीः स्त्रीरूपधारिणी ।। ८७।।

गुरोरनुज्ञया स्नात्वा व्रतं वेदं समाप्य च ।।

उद्वहेत ततो भार्यां सवर्णां साधुलक्षणाम् ।। ८८ ।।

जने तु रसगोत्राया मातुर्याप्यसपिंडका ।।

दारकर्मणि योग्या सा द्विजानां धर्मवृद्धये ।।८९।।

स्त्रीसंबंधेप्यपस्मारि क्षयि श्वित्रि कुलं त्यजेत् ।।

अभिशस्तिसमायुक्तं तथा कन्याप्रसूं त्यजेत् ।।4.1.36.९०।।

रोगहीनां भ्रातृमतीं स्वस्मात्किंचिल्लघीयसीम् ।।

उद्वहेत द्विजो भार्यां सौम्यास्यां मृदुभाषिणीम् ।।९१।।

न पर्वतर्क्षवृक्षाह्वां न नदीसर्पनामिकाम् ।।

न पक्ष्यहिप्रेष्यनाम्नीं सौम्याख्यामुद्वहेत्सुधीः ।।९२।।

न चातिरिक्तहीनांगीं नातिदीर्घां न वा कृशाम् ।।

नालोमिकां नातिलोमां नास्निग्धस्थूलमौलिजाम् ।। ९३ ।।

मोहात्समुपयच्छेत कुलहीनां न कन्यकाम् ।।

हीनोपयमनाद्याति संतानमपि हीनताम् ।।९४।।

लक्षणानि परीक्ष्यादौ ततः कन्यां समुद्वहेत् ।।

सुलक्षणा सदाचारा पत्युरायुर्विवर्धयेत् ।।९५।।

ब्रह्मचारि समाचार इति ते समुदी रितः ।।

घटोद्भव प्रसंगेन स्त्रीलक्षणमथ ब्रुवे।।९६।।

इति श्री स्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे षट्त्रिंशत्तमोऽध्यायः ।।

३६।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३७

https://sa.wikisource.org/s/fvi
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।। ।।

सदा गृही सुखं भुंक्ते स्त्री लक्षणवती यदि ।।

अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् ।। १ ।।

वपुरावर्तगंधाश्वच्छाया सत्वं स्वरो गतिः ।।

वर्णश्चेत्यष्टधा प्रोक्ता बुधैर्लक्षणभूमिका ।। २ ।।

आपादतलमारभ्य यावन्मौलिरुहं क्रमात् ।।

शुभाशुभानि वक्ष्यामि लक्षणानि मुने शृणु ।। ३ ।।

आदौ पादतलं रेखास्ततोंगुष्ठांगुली नखाः ।।

पृष्ठगुल्फद्वयं पार्ष्णी जंघे रोमाणि जानुनी ।। ४ ।।

ऊरू कटी नितंबस्फिग्भगो जघन बस्तिके ।।

नाभिः कुक्षिद्वयं पार्श्वोदरमध्य वलित्रयम् ।। ५ ।।

रोमाली हृदयं वक्षो वक्षोजद्वयचूचुकम् ।।

जत्रुस्कंधां सकक्षादोर्मणिबंध करद्वयम् । ६ ।।

पाणिपृष्ठं पाणितलं रेखांगुष्ठांगुली नखाः ।।

पृष्ठिः कृकाटिका कंठे चिबुकं च हनुद्वयम् ।। ७ ।।

कपोलौ वक्त्रमधरोत्तरोष्ठौ द्विजजिह्विकाः ।।

घंटिका तालुहसितं नासिकाक्षुतमक्षिणी ।। ८ ।।

पक्ष्म भ्रूकर्णभालानि मौलि सीमंतमौलिजाः ।।

षष्टिः षडुत्तरायोषिदंगलक्षणसत्खनिः ।। ९ ।।

स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् ।।

अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् ।। 4.1.37.१० ।।

रूक्षं विवर्णं परुषं खंडितप्रतिबिंबकम् ।।

शूर्पाकारं विशुष्कं च दुःखदौर्भाग्यसूचकम् ।। ११ ।।

चक्र स्वस्तिक शंखाब्ज ध्वजमीनातपत्रवत् ।।

यस्याः पादतले रेखा सा भवेत्क्षितिपांगना ।। १२ ।।

भवेदखंडभोगायोर्द्ध्वामध्यांगुलिसंगता ।।

रेखाखु सर्पकाकाभा दुःखदारिद्र्यसूचिका ।। १३ ।।

उन्नतो मांसलोंगुष्ठो वर्तुलोतुलभोगदः ।।

वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभंजकः ।। १४ ।।

विधवा विपुलेन स्याद्दीर्घांगुष्ठेन दुर्भगा ।।

मृदवोंगुलयः शस्ता घनावृत्ताः समुन्नताः ।।१५।।

दीर्घांगुलीभिः कुलटा कृशाभिरतिनिर्धना ।।

ह्रस्वायुष्या च ह्रस्वाभिर्भुग्नाभिर्भुग्नवर्तिनी ।। १६ ।।

चिपिटाभिर्भवेद्दासी विरलाभिर्दरिद्रिणी ।।

परस्परं समारूढाः पादांगुल्यो भवंति हि ।। १७ ।।

हत्वा बहूनपि पतीन्परप्रेष्या तदा भवेत् ।।

यस्याः पथि समायांत्या रजोभूमेः समुच्छलेत् ।। १८ ।।

सा पांसुला प्रजायेत कुलत्रयविनाशिनी ।।

यस्याः कनिष्ठिका भूमिं न गच्छंत्याः परिस्पृशेत् ।। १९ ।।

सा निहत्य पतिं योषा द्वितीयं कुरुते पतिम् ।।

अनामिका च मध्या च यस्या भूमिं न संस्पृशेत् ।। 4.1.37.२० ।।

पतिद्वयं निहंत्याद्या द्वितीया च पतित्रयम् ।।

पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि ।। २१ ।।

प्रदेशिनी भवेद्यस्या अंगुष्ठाव्यतिरेकिणी ।।

कन्यैव कुलटा सा स्यादेष एव विनिश्चयः ।। २२ ।।

स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः ।। २३ ।।

राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् ।।

अस्वेदमशिराढ्यं च मसृणं मृदुमांसलम् ।। २४ ।।

दरिद्रा मध्यनम्रेण शिरालेन सदाध्वगा ।।

रोमाढ्येन भवेद्दासी निर्मांसेन च दुर्भगा ।। २५ ।।

गूढौ गुल्फौ शिवायोक्तावशिरालौ सुवर्तुलौ ।।

स्थपुटौ शिथिलौ दृश्यौ स्यातां दौर्भाग्यसूचकौ ।। २६ ।।

समपार्ष्णिः शुभा नारी पृथुपार्ष्णिश्च दुर्भगा ।।

कुलटोन्नतपार्ष्णि स्याद्दीर्घपार्ष्णिश्च दुःखभाक् ।। २७ ।।

रोमहीने समे स्निग्धे यज्जंघे क्रमवर्तुले ।।

सा राजपत्नी भवति विशिरेसुमनोहरे ।। २८ ।।

एकरोमा राजपत्नी द्विरोमा च सुखावहा ।।

त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् ।। २९ ।।

वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते ।।

निर्मांसं स्वैरचारिण्या दरिद्रा याश्च विश्लथम् ।। 4.1.37.३० ।।

विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ।।

सुवृत्तैरोमरहितैर्भवेयुर्भूपवल्लभाः ।। ३१ ।।

वैधव्यं रोमशैरुक्तं दौर्भाग्यं चिपिटैरपि ।।

मध्यच्छिद्रैर्महादुःखं दारिद्र्यं कठिनत्वचैः ।। ३२ ।।

चतुर्भिरंगुलैः शस्ता कटिर्विंशतिसंयुतैः ।।

समुन्नतनितंबाढ्या चतुरस्रा मृगीदृशाम् ।। ३३ ।।

विनता चिपिटा दीर्घा निर्मांसासंकटाकटिः ।।

ह्रस्वा रोमयुता नार्या दुःखवैधव्यसूचिका ।। ३४ ।।

नितंबबिंबो नारीणामुन्नतो मांसलः पृथुः ।।

महाभोगाय संप्रोक्तस्तदन्योऽशर्मणे मतः ।। ३५ ।।

कपित्थफलवद्वृत्तौ मृदुलौ मांसलौ घनौ ।।

स्फिचौ वलिविनिर्मुक्तौ रतिसौख्यविवर्धनौ।। ३६ ।।

शुभः कमठपृष्ठाभो गजस्कंधोपमो भगः ।।

वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः ।।३७।।

आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः ।।

तुंगः कमलपर्णाभः शुभोश्वत्थदलाकृतिः ।। ३८ ।।

कुरंगखुररूपोयश्चुल्लिकोदरसन्निभः ।।

रोमशो विवृतास्यश्च दृश्यनासोतिदुर्भगः ।। ३९ ।।

शंखावर्तो भगो यस्याः सा गर्भमिह नेच्छति ।।

चिपिटः खर्पराकारः किंकरी पददो भगः ।।4.1.37.४०।।

वंशवेतसपत्राभो गजरोमोच्चनासिकः ।।

विकटः कुटिलाकारो लंबगल्लस्तथाऽशुभः ।।४१।।

भगस्य भालं जघनं विस्तीर्णं तुंगमांसलम् ।।

मृदुलं मृदुलोमाढ्यं दक्षिणावर्तमीडितम् ।। ४२ ।।

वामावर्तं च निर्मांसं भुग्नवैधव्यसूचकम् ।।

संकटस्थपुटं रूक्षं जघनं दुःखदं सदा ।। ४३ ।।

बस्तिः प्रशस्ता विपुला मृद्वीस्तोकसमुन्नता ।।

रोमशा च शिराला च रेखांका नैव शोभना ।। ४४ ।।

गंभीरा दक्षिणावर्ता नाभी स्यात्सुखसंपदे ।।

वामावर्ता समुत्ताना व्यक्तग्रंथिर्न शोभना ।। ४५ ।।

सूते सुतान्बहून्नारी पृथुकुक्षिः सुखास्पदम् ।।

क्षितीशं जनयेत्पुत्रं मंडूकाभेन कुक्षिणा ।। ४६ ।।

उन्नतेन वलीभाजा सावर्तेनापि कुक्षिणा ।।

वंध्या प्रव्रजिता दासी क्रमाद्योषा भवेदिह ।। ४७ ।।

समैः समांसैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः ।।

पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसंशयम् ।। ४८ ।।

यस्यादृश्य शिरे पार्श्वे उन्नते रोमसंयुते ।।

निरपत्या च दुःशीला सा भवेद्दुःखशेवधिः ।। ४९ ।।

उदरेणातितुच्छेन विशिरेण मृदुत्वचा ।।

योषिद्भवति भोगाढ्या नित्यं मिष्टान्नसेविनी ।। 4.1.37.५० ।।

कुंभाकारं दरिद्राया जठरं च मृदंगवत् ।।

कूष्मांडाभं यवाभं च दुष्पूरं जायते स्त्रियाः ।। ५१ ।।

सुविशालोदरी नारी निरपत्या च दुर्भगा ।।

प्रलंबजठरा हंति श्वशुरं चापि देवरम् ।। ५२ ।।

मध्यक्षामा च सुभगा भोगाढ्या सवलित्रया ।।

ऋज्वी तन्वी च रोमाली यस्याः सा शर्मनर्मभूः ।। ५३ ।।

कपिला कुटिला स्थूला विच्छिन्ना रोमराजिका ।।

चौर वैधव्य दौर्भाग्यं विदध्यादिह योषिताम् ।। ५४ ।।

निर्लोमहृदयं यस्याः समं निम्नत्व वर्जितम् ।।

ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् ।। ५५ ।।

विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा ।।

उद्भिन्नरोमहृदया पतिं हंति विनिश्चितम् ।। ५६ ।।

अष्टादशांगुलततमुरः पीवरमुन्नतम् ।।

सुखाय दुःखाय भवेद्रोमशं विषमं पृथु ।। ५७ ।।

घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ ।।

स्थूलाग्रौ विरलौ शुष्कौ वामोरूणां न शर्मदौ ।। ५८ ।।

दक्षिणोन्नत वक्षोजा पुत्रिणी त्वग्रणीर्मता ।।

वामोन्नतकुचा सूते कन्यां सौभाग्यसुंदरीम् ।। ५९ ।।

अरघट्टघटीतुल्यौ कुचौ दौःशील्यसूचकौ ।।

पीवरास्यौ सांतरालौ पृथूपांतौ न शोभनौ ।। 4.1.37.६० ।।

मूले स्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ ।।

सुखदौ पूर्वकाले तु पश्चादत्यंत दुःखदौ ।।६१।।

सुदृढं चूचुकयुगं शस्तं श्यामं सुवर्तुलम् ।।

अंतर्मग्नं च दीर्घं च कृशं क्लेशाय जायते ।। ६२ ।।

पीवराभ्यां च जत्रुभ्यां धनधान्यनिधिर्वधूः ।।

श्लथास्थिभ्यां च निम्नाभ्यां विषमाभ्यां दरिद्रिणी ।। ६३ ।।

अबद्धावनतौ स्कंधावदीर्घावकृशौ शुभौ ।।

वक्रौ स्थूलौ च रोमाढ्यौ प्रेष्य वैधव्यसूचकौ ।। ६४ ।।

निगूढसंधी स्रस्ताग्रौ शुभावंसौ सुसंहतौ ।।

वैधव्यदौ समुच्चाग्रौ निर्मांसावतिदुःखदौ ।। ६५ ।।

कक्षेसु सूक्ष्मरोमे तु तुंगे स्निग्धे च मांसले ।।

शस्तेन शस्ते गंभीरे शिराले स्वेदमेदुरे ।। ६६ ।।

स्यातां दोषौ सुनिर्दोषौ गूढास्थि ग्रंथिकोमलौ ।।

विशिरौ च विरोमाणौ सरलौ हरिणीदृशाम् ।। ६७ ।।

वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ ।।

परिक्लेशाय नारीणां परिदृश्यशिरौ भुजौ ।। ६८ ।।

अंभोज मुकुलाकारमंगुष्ठांगुलिसंमुखम् ।।

हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ।। ६९ ।।

मृदुमध्योन्नतं रक्तं तलं पाण्योररंध्रकम् ।।

प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभश्रियम् ।। 4.1.37.७० ।।

विधवा बहुरेखेण विरेखेण दरिद्रिणी ।।

भिक्षुकी सुशिराढ्येन नारी करतलेन वै ।। ७१ ।।

विरोम विशिरं शस्तं पाणिपृष्ठंसमुन्नतम् ।।

वैधव्यहेतुरोमाढ्यं निर्मांसं स्नायुमत्त्यजेत् ।। ७२ ।।

रक्ता व्यक्ता गभीरा च स्निग्धा पूर्णा च वर्तुला ।।

कररेखांगना याः स्याच्छुभा भाग्यानुसारतः ।। ७३ ।।

मत्स्येन सुभगा नारी स्वस्तिकेन वसुप्रदा।।

पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् ।। ७४ ।।

चक्रवर्तिस्त्रियाः पाणौ नंद्यावर्तः प्रदक्षिणः ।।

शंखातपत्रक मठा नृपमातृत्वसूचकाः ।। ७५ ।।

तुलामानाकृतीरेखे वणिक्पत्नीत्वहेतुके ।।

गजवाजिवृषाकाराः करे वामे मृगीदृशाम् ।। ७६ ।।

रेखा प्रासादवज्राभा ब्रूयुस्तीर्थकरं सुतम् ।।

कृषीवलस्य पत्नी स्याच्छकटेन युगेन वा ।। ७७ ।।

चामरांकुशकोदंडै राजपत्नी भवेद्ध्रुवम् ।।

अंगुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम्।। ७८ ।।

यदि सा पतिहंत्री स्याद्दूरतस्तां त्यजेत्सुधीः ।।

त्रिशूलासिगदाशक्ति दुंदुभ्याकृति रेखया ।।

नितंबिनी कीर्तिमती त्यागेन पृथिवीतले ।। ७९ ।।

कंक जंबूक मंडूक वृक वृश्चिक भोगिनः ।।

रासभोष्ट्र बिडालाः स्युः करस्था दुःखदाः स्त्रियाः ।। 4.1.37.८० ।।

शुभदः सरलोंगुष्ठो वृत्तो वृत्तनखो मृदुः ।। ८१ ।।

अंगुल्यश्च सुपर्वाणो दीर्घावृत्ताः क्रमात्कृशाः ।।

चिपिटाःस्थपुटा रूक्षाः पृष्ठरोमयुजोऽशुभाः।।८२ ।।

अतिह्रस्वाः कृशा वक्रा विरला रोगहेतुकाः ।।

दुःखायांगुलयः स्त्रीणां बहुपर्वसमन्विताः ।। ८३ ।।
अरुणाः सशिखास्तुंगाः करजाः सुदृशांशुभाः ।।
निम्ना विवर्णाः शुक्त्याभाः पीता दारिद्र्यदायकाः ।। ८४ ।।
नखेषु बिंदवः श्वेताः प्रायः स्युः स्वैरिणी स्त्रियाः ।।
पुरुषा अपि जायंते दुःखिनः पुष्पितैर्नखैः ।। ८५ ।।
अंतर्निमग्नवंशास्थिः पृष्ठिः स्यान्मांसला शुभा ।।
पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ।। ८६ ।।
भुग्नेन विनतेनापि सशिरेणापि दुःखिता ।।
ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता।। ८७ ।।
शुष्का शिराला रोमाढ्या विशाला कुटिलाशुभा।।
मांसलो वर्तुलः कंठः प्रशस्तश्चतुरंगुलः ।। ८८ ।।
शस्ता ग्रीवा त्रिरेखांका त्वव्यक्तास्थिः सुसंहता ।।
निर्मांसा चिपिटा दीर्घास्थपुटा न शुभप्रदा ।। ८९ ।।
स्थूलग्रीवा च विधवा वक्रग्रीवा च किंकरी ।।
वंध्या द्विचिपिटग्रीवा ह्रस्वग्रीवा च निःसुता ।।4.1.37.९० ।।
चिबुकंद्वयंगुलं शस्तं वृत्तं पीनं सुकोमलम् ।।
स्थूलं द्विधा संविभक्तमायतं रोमशं त्यजेत् ।। ९१ ।।
हनुश्चिबुकसंलग्ना निर्लोमा सुघनाशुभा ।।
वक्रा स्थूला कृशा ह्रस्वा रोमशा न शुभप्रदा ।। ९२ ।।
शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ।।
रोमशौ परुषौ निम्नौ निर्मांसौ परिवर्जयेत् ।। ९३ ।।
समं समांसं सुस्निग्धं स्वामोदं वर्तुलं मुखम् ।।
जनेतृवदनच्छायं धन्यानामिह जायते ।। ९४ ।।
पाटलो वर्तुलः स्निग्धो लेखाभूषितमध्यभूः ।।
सीमंतिनी नामधरो धराजानि प्रियो भवेत् ।। ९५ ।।
कृशः प्रलंबः स्फुटितो रूक्षो दौर्भाग्यसूचकः ।।
श्यावः स्थूलोऽधरोष्ठः स्याद्वैधव्य कलहप्रदः ।। ९६ ।।
मसृणो मत्तकाशिन्याश्चोत्तरोष्ठः सुभोगदः ।।

किंचिन्मध्योन्नतोऽरोमा विपरीतो विरुद्धकृत् ।। ९७ ।।

गोक्षीरसन्निभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः ।।

अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ।। ९८ ।।

पीताः श्यावाश्च दशनाः स्थूलादीर्घाद्विपंक्तयः ।।

शुक्त्याकाराश्च विरला दुःखदौर्भाग्यकारणम् ।। ९९ ।।

अधस्तादधिकैर्दंतैर्मातरं भक्षयेत्स्फुटम् ।।

पतिहीना च विकटैः कुलटा विरलैर्भवेत् ।। 4.1.37.१०० ।।

जिह्वेष्टमिष्टभोक्त्री स्याच्छोणामृद्वी तथासिता ।।

दुःखाय मध्यसंकीर्णा पुरोभागसविस्तरा ।। १ ।।

सितया तोयमरणं श्यामया कलहप्रिया ।

दरिद्रिणी मांसलया लंबयाऽभक्ष्यभक्षिणी ।। २ ।।

विशालया रसनया प्रमदातिप्रमादभाक् ।।

स्निग्धं कोकनदाभासं प्रशस्तं तालुकोमलम् ।। ३ ।।

सिते तालुनि वैधव्यं पीते प्रव्रजिता भवेत्।।

कृष्णेऽपत्यवियोगार्ता रूक्षे भूरिकुटुंबिनी ।। ४ ।।

कंठे स्थूला सुवृत्ता च क्रमतीक्ष्णा सुलोहिता ।।

अप्रलंबा शुभा घंटी स्थूला कृष्णा च दुःखदा ।। ५ ।।

अलक्षितद्विजं किंचित्किंचित्फुल्ल कपोलकम् ।।

स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ।। ६ ।।

समवृत्तपुटानासा लघुच्छिद्रा शुभावहा ।।

स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता ।। ७ ।।

आकुंचितारुणाग्रा च वैधव्यक्लेशदायिनी ।।

परप्रेष्या च चिपिटा ह्रस्वा दीर्घा कलिप्रिया ।। ८ ।।

दीर्घायुः कृत्क्षुतं दीर्घं युगपद्द्वित्रिपिंडितम् ।।

ललना लोचने शस्ते रक्तांते कृष्णतारके ।। ९।।

गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी ।।

उन्नताक्षी न दीर्घायुर्वृत्ताक्षी कुलटा भवेत् ।। 4.1.37.११० ।।

मेषाक्षीमहिषाक्षी च केकराक्षी न शोभना ।।

कामगृहीला नितरां गोपिंगाक्षी सुदुर्वृता ।। ११ ।।

पारावताक्षी दुःशीला रक्ताक्षी भर्तृघातिनी ।।

कोटरा नयना दुष्टा गजनेत्रा न शोभना ।। १२ ।।

पुंश्चली वामकाणाक्षी वंध्या दक्षिणकाणिका ।।

मधुपिंगाक्षी रमणी धनधान्यसमृद्धिभाक् ।। १३ ।।

पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुभाग्यभाक् ।।

कपिलैर्विरलैः स्थूलैर्निंद्या भवति भामिनी ।। १४ ।।

भ्रुवौ सुवर्तुले तन्व्याः स्निग्धे कृष्णे असंहते ।।

प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ।। १५ ।।

खररोमा च पृथुला विकीर्णा सरला स्त्रियाः ।।

न भ्रूः प्रशस्ता मिलिता दीर्घरोमा च पिंगला ।। १६ ।।

लंबौ कर्णौ शुभावर्तौ सुखदौ च शुभप्रदौ ।।

शष्कुलीरहितौ निंद्यौ शिरालौ कुटिलौ कृशौ ।। १७ ।।

भालः शिराविरहितो निर्लोमार्धेंदु सन्निभः ।।

अनिम्नस्त्र्यंगुलो नार्याः सौभाग्यारोग्यकारणम् ।। १८ ।।

व्यक्त स्वस्तिकरेखं च ललाटं राज्यसंपदे ।।

प्रलंबं मस्तकं यस्या देवरं हन्ति सा ध्रुवम् ।। १९ ।।

रोमशेन शिरालेन प्रांशुना रोगिणी मता ।। 4.1.37.१२० ।।

सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः ।।

गजकुंभनिभावृत्तैः सौभाग्यैश्वर्यसूचकैः ।। २१ ।।

स्थूलमूर्धा च विधवा दीर्घशीर्षा च बंधकी ।।

विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् ।। २२ ।।

केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः ।।

किंचिदाकुंचिताग्राश्च कुटिलाश्चातिशोभनाः ।। २३ ।।

परुषाः स्फुटिताग्राश्च विरलाश्च शिरोरुहाः ।।

पिंगला लघवो रूक्षा दुःखदारिद्र्यबंधदाः ।। २४ ।।

भ्रुवोरन्तर्ललाटे वा मशको राज्यसूचकः ।।

वामे कपोले मशकः शोणो मिष्टान्नदः स्त्रियाः ।। २५ ।।

तिलकं लांछनं वापि हृदि सौभाग्यकारणम् ।।

यस्या दक्षिणवक्षोजे शोणे तिलकलांछने ।। २६ ।।

कन्या चतुष्टयं सूते सूते सा च सुतत्रयम् ।।

तिलकं लांछनं शोणं यस्या वामे कुचे भवेत् ।। २७ ।।

एकं पुत्रं प्रसूयादौ ततः सा विधवा भवेत् ।।

गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः ।। २८ ।।

तदा क्षितिपतेः पत्नी सूते वा क्षितिपं सुतम् ।।

नासाग्रे मशकः शोणो महिष्या एव जायते।। २९ ।।

कृष्णः स एव भर्तृघ्न्याः पुंश्चल्याश्च प्रकीर्तितः ।।

नाभेरधस्तात्तिलकं मशको लांछनं शुभम् ।। 4.1.37.१३० ।।

मशकस्तिलकं चिह्नं गुल्फदेशे दरिद्रकृत ।।

करे कर्णे कपोले वा कण्ठे वामे भवेद्यदि ।। ३१ ।।

एषां त्रयाणामेकं तु प्राग्गर्भे पुत्रदं भवेत् ।।

भालगेन त्रिशूलेन निर्मितेन स्वयंभुवा ।। ३२ ।।

नितंबिनी सहस्राणां स्वामित्वं योषिदाप्नुयात् ।।

सुप्ता परस्परं यातु दंतान्किटिकिटायते ।। ३३ ।।

सुलक्ष्मापि न सा शस्ता या किंचित्प्रलपेत्तथा ।।

पाणौ प्रदक्षिणावर्तो धर्म्यो वामो न शोभनः ।। ३४ ।।

नाभौ श्रुतावुरसि वा दक्षिणावर्त ईडितः ।।

सुखाय दक्षिणावर्तः पृष्ठवंशस्य दक्षिणे ।। ३५ ।।

अन्तःपृष्ठं नाभिसमो बह्वायुः पुत्रवर्धनः ।।

राजपत्न्याः प्रदृश्येत भगमौलौ प्रदक्षिणः ।। ३६ ।।

सचेच्छकटभंगःस्याद्बह्वपत्यसुखप्रदः ।।

कटिगो गुह्यवेधेन पत्यपत्यनिपातनः ।। ३७ ।।

स्यातामुदरवेधेन पृष्ठावर्तौ न शोभनौ ।।

एकेन हंति भर्तारं भवेदन्येन पुं श्चली ।। ३८ ।।

कण्ठगो दक्षिणावर्तो दुःखवैधव्यहेतुकः ।।

सीमन्तेथ ललाटे वा त्याज्यो दूरात्प्रयत्नतः ।। ३९ ।।

सा पतिं हंति वर्षेण यस्या मध्ये कृकाटिकम्।।

प्रदक्षिणो वा वामो वा रोम्णामावर्त्तकः स्त्रियाः ।। 4.1.37.१४० ।।

एको वा मूर्धनि द्वौ वा वामे वामगती यदि ।।

आदशाहं पतिघ्नौ तौ त्याज्यौ दूरात्सुबुद्धिना ।। ४१ ।।

कट्यावर्ता च कुलटा नाभ्यावर्ता पतिव्रता ।।

पृष्ठावर्ता च भर्तृघ्नी कुलटा वाथ जायते ।। ४२ ।।

स्कंद उवाच ।।

सुलक्षणापि दुःशीला कुलक्षण शिरोमणिः ।।

अलक्षणापि सा साध्वी सर्वलक्षणभूस्तु सा।। ४३ ।।

सुलक्षणा सुचारित्रा स्वाधीना पतिदेवता ।।

विश्वेशानुग्रहादेव गृहे योषिदवाप्यते ।। ४४ ।।

अलकृताः स्ववासिन्यो याभिः प्राक्तनजन्मनि ।।

नानाविधैरलंकारैस्ताः सुरूपा भवंति हि ।। ४५ ।।

सुतीर्थेषु वपुर्याभिः क्षयितं वा विहायितम् ।।

ता लावण्यतरंगिण्यो भवंतीह सुलक्षणाः ।। ४६ ।।

अर्चिता जगतां माता याभिर्मृडवधूरिव ।।

ता भवंति सुचारित्रा योषाः स्वाधीनभ र्तृकाः ।। ४७।।

स्वाधीन पतिकानां च सुशीलानां मृगीदृशाम् ।।

स्वर्गापवर्गावत्रैव सुलक्षण फलं हि तत् ।। ४८ ।।

सुलक्षणैः सुचरितैरपि मंदायुषं पतिम् ।।

दीर्घायुषं प्रकुर्वंति प्रमदाः प्रमदास्पदम् ।। ४९ ।।

अतः सुलक्षणा योषा परिणेया विचक्षणैः ।।

लक्षणानि परीक्ष्यादौ हित्वा दुर्लक्षणान्यपि ।। 4.1.37.१५० ।।

लक्षणानि मयोक्तानि सुखाय गृहमेधिनाम्।।

विवाहानपि वक्ष्यामि तन्निबोध घटोद्भव ।। १५१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे स्त्रीलक्षणवर्णनंनाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३८

https://sa.wikisource.org/s/fvj
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।।

विवाहा ब्राह्म दैवार्षाः प्राजापत्यासुरौ तथा ।।

गांधर्वो राक्षसश्चापि पैशाचोऽष्टम उच्यते ।। १ ।।

स ब्राह्मो वरमाहूय यत्र कन्या स्वलंकृता ।।

दीयते तत्सुतः पूयात्पुरुषानेकविंशतिम् ।। २ ।।

यज्ञस्थायर्त्विजे दैवस्तज्जःपाति चतुर्दश ।।

वरादादाय गोद्वंद्वमार्षस्तज्जः पुनाति षट् ।। ३ ।।

सहोभौ चरतां धर्ममित्युक्त्वा दीयतेर्थिने ।।

यत्र कन्या प्राजापत्यस्तज्जो वंशान्पुनाति षट् ।। ४ ।।

चत्वार एते विप्राणां धर्म्याः पाणिग्रहाः स्मृताः ।।

आसुरः क्रयणाद्द्रव्यैर्गांधर्वोन्योन्य मैत्रतः ।। ५ ।।

प्रसह्यकन्याहरणाद्राक्षसो निंदितः सताम् ।।

छलेन कन्याहरणात्पैशाचो गर्हितोऽष्टमः ।। ६ ।।

प्रायः क्षत्रविशोरुक्ता गांधर्वासुरराक्षसाः ।।

अष्टमस्त्वेष पापिष्ठः पापिष्ठानां च संभवेत् ।। ७ ।।

सवर्णया करो ग्राह्यो धार्यः क्षत्रियया शरः ।।

प्रतोदो वैश्यया धार्यो वासोंतः पज्जया तथा ।। ८ ।।

असवर्णस्त्वेष विधिः स्मृतो दृष्टश्च वेदने ।।

सवर्णाभिस्तु सर्वाभिः पाणिर्ग्राह्यस्त्वयं विधिः ।। ९ ।।

धर्म्यैर्विवाहैर्जायंते धर्म्या एव शतायुषः ।।

अधर्म्यैर्धर्मरहिता मंदभाग्यधनायुषः ।। 4.1.38.१० ।।

ऋतुकालाभिगमनं धर्मोयं गृहिणः परः ।।

स्त्रीणां वरमनुस्मृत्य यथाकाम्यथवा भवेत् ।। ११ ।।

दिवाभिगमनं पुंसामनायुष्यं परं मतम् ।।

श्राद्धाहः सर्वपर्वाणि यत्नात्त्याज्यानि धीमता ।। १२ ।।

तत्र गच्छन्स्त्रियं मोहाद्धर्मात्प्रच्यवते परात् ।। १३ ।।

ऋतुकालाभिगामी यः स्वदारनिरतश्च यः ।।

स सदा ब्रह्मचारी च विज्ञेयः सद्गृहाश्रमी ।। १४।।

ऋतुः षोडशयामिन्यश्चतस्रस्ता सुगर्हिताः ।।

पुत्रास्तास्वपि या युग्मा अयुग्माः कन्यका प्रजाः ।। १५ ।।

त्यक्त्वा चंद्रमसं दुःस्थं मघां पौष्णं विहाय च ।।

शुचिः सन्निर्विशेत्पत्नीं पुन्नामर्क्षे विशेषतः ।।

शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधकम् ।। १६ ।।

आर्षे विवाहे गोद्वंद्वं यदुक्तं तन्न शस्यते ।।

शुल्कमण्वपि कन्यायाः कन्या विक्रयपापकृत् ।। १७ ।।

अपत्यविक्रयी कल्पं वसेद्विट्कृमिभोजने ।।

अतो नाण्वपि कन्याया उपजीवेत्पिता धनम् ।। १८ ।।

स्त्रीधनान्युपजीवंति ये मोहादिह बांधवाः ।।

न केवलं निरयगास्तेषामपि हि पूर्वजाः ।। १९ ।।

पत्या तुष्यति यत्र स्त्री तुष्येद्यत्र स्त्रिया पतिः ।।

तत्र तुष्टा महालक्ष्मीर्निवसेद्दानवाऽरिणा ।। 4.1.38.२० ।।

वाणिज्यं नृपतेः सेवा वेदानध्यापनं तथा ।।

कुविवाहः क्रियालोपः कुले पतनहेतवः ।। २१ ।।

कुर्याद्वैवाहिके वह्नौ गृह्यकर्मान्वहं गृही ।।

पंचयज्ञक्रियां चापि पक्तिं दैनंदिनीमपि ।। २२ ।।

गृहस्थाश्रमिणः पंच सूना कर्म दिने दिने ।।

कंडनी पेषणी चुल्ली ह्युदकुंभस्तु मार्जनी ।। २३ ।।

तासां च पंचसूनानां निराकरणहेतवः ।।

क्रतवः पंच निर्दिष्टा गृहि श्रेयोभिवर्धनाः ।। २४ ।।

पाठनं ब्रह्मयज्ञः स्यात्तर्पणं च पितृ क्रतुः ।।

होमो दैवो बलिर्भौतोऽतिथ्यर्चा नृक्रतुः क्रमात् ।। २५ ।।

पितृप्रीतिं प्रकुर्वाणः कुर्वीत श्राद्धमन्वहम् ।।

अन्नोदकपयोमूलैः फलैर्वापि गृहाश्रमी।।२६।।

गोदानेन च यत्पुण्यं पात्राय विधिपूर्वकम् ।।
सत्कृत्य भिक्षवे भिक्षां दत्त्वा तत्फलमाप्नुयात् ।। २७ ।।
तपोविद्यासमिद्दीप्ते हुतं विप्रास्य पावके ।।
तारयेद्विघ्नसंघेभ्यः पापाब्धेरपि दुस्तरात् ।। २८ ।।
अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति ।।
आजन्मसंचितात्पुण्यात्क्षणात्स हि बहिर्भवेत् ।। २९ ।।
सांत्वपूर्वाणि वाक्यानि शय्यार्थे भूस्तृणोदके ।।
एतान्यपि प्रदेयानि सदाभ्यागत तुष्टये ।। 4.1.38.३० ।।
गृहस्थः परपाकादी प्रेत्य तत्पशुतां व्रजेत् ।।
श्रेयः परान्नपुष्टस्य गृह्णीयादन्नदो यतः ।। ३१ ।।
आदित्योढोऽतिथिः सायं सत्कर्तव्यः प्रयत्नतः ।।
असत्कृतोन्यतो गच्छन्दुष्कृतं भूरि यच्छति ।। ३२ ।।
भुंजानोऽतिथिशेषान्नमिहायुर्धनभाग्भवेत् ।।
प्रणोद्यातिथिमन्नाशी किल्बिषी च गृहाश्रमी ।। ३३ ।।
वैश्वदेवांत संप्राप्तः सूर्योढो वातिथिः स्मृतः।।
न पूर्वकाल आयातो न च दृष्टचरः क्वचित् ।। ३४ ।।
बलिपात्रकरे विप्रे यद्यन्योतिथिरागतः ।।
अदत्त्वा तं बलिं तस्मै यथाशक्त्यान्नमर्पयेत् ।। ३५ ।।
कुमाराश्च स्ववासिन्यो गर्भिण्योऽतिरुजान्विताः ।।
अतिथेरादितोप्येते भोज्या नात्र विचारणा ।। ३६ ।।
पितृदेवमनुष्येभ्यो दत्त्वाश्नात्यमृतं गृही ।।
स्वार्थं पचन्नघं भुंक्ते केवलं स्वोदरंभरिः ।। ३७ ।।
माध्याह्निकं वैश्वदेवं गृहस्थः स्वयमाचरेत् ।।
पत्नी सायं बलिं दद्यात्सिद्धान्नैर्मंत्रवर्जितम् ।। ३८ ।।
एतत्सायंतनं नाम वैश्वदेवं गृहाश्रमे ।।
सायंप्रातर्भवेदेव वैश्वदेवं प्रयत्नतः ।। ३९ ।।
वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः ।।
सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ।। 4.1.38.४० ।।

अकृत्वा वैश्वदेवं तु भुंजते ये द्विजाधमाः ।।

इह लोकेन्नहीनाः स्युः काकयोनिं व्रजंत्यथ ।। ४१ ।।

वेदोदितं स्वकं कर्म नित्यं कुर्यादतंद्रितः ।।

तद्धि कुर्वन्यथाशक्ति प्राप्नुयात्सद्गतिं पराम् ।। ४२ ।।

षष्ठ्यष्टम्योर्वसेत्पापं तैले मांसे सदैव हि ।।

पंचदश्यां चतुर्दश्यां तथैव च भगेक्षुरे ।। ४३ ।।

उदयं तं न चेक्षेत नास्तं यंतं न मध्यगम् ।।

न राहुणोपसृष्टं च नांबुसंस्थं दिवाकरम्।। ४४ ।।

न वीक्षेतात्ममनोरूपमाशुधावेन्न वर्षति ।।

नोल्लंघयेद्वत्सतंत्रीं न नग्नो जलमाविशेत् ।। ४५ ।।

देवतायतनं विप्रं धेनुं मधुमृदं घृतम् ।।

जातिवृद्धं वयोवृद्धं विद्यावृद्धं तपस्विनम् ।। ४६ ।।

अश्वत्थं चैत्यवृक्षं च गुरुं जलभृतं घटम् ।।

सिद्धान्नं दधिसिद्धार्थं गच्छन्कुर्यात्प्रदक्षिणम् ।। ४७ ।।

रजस्वलां न सेवेत नाश्नीयात्सह भार्यया।।

एकवासा न भुंजीत न भुंजीतोत्कटासने।। ४८ ।।

नाश्नंतीं स्त्रीं समीक्षेत तेजस्कामो द्विजोत्तमः ।।

असंतर्प्य पितॄन्देवान्नाद्यादन्नं नवं क्वचित् ।। ४९ ।।

पक्वान्नं चापि नो मांसं दीर्घकालं जिजीविषुः ।।

न मूत्रं गोव्रजे कुर्यान्न वल्मीके न भस्मनि ।। 4.1.38.५० ।।

न गर्तेषु ससत्वेषु न तिष्ठन्न व्रजन्नपि ।।

गोविप्रसूर्यवाय्वग्नि चंद्रर्क्षांबु गुरूनपि ।। ५१ ।।

अभिपश्यन्न कुर्वीत मलमूत्रविसर्जनम्।।

तिरस्कृत्यावनिं लोष्टकाष्ठपर्णतृणादिभिः ।। ५२ ।।

प्रावृत्य वाससा मौलिं मौनी विण्मूत्रमुत्सृजेत् ।।

यथासुखमुखो रात्रौ दिनेच्छायांधकारयोः ।। ५३ ।।

भीतिषु प्राणबाधायां कुर्यान्मलविसर्जनम् ।।

मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम् ।। ५४ ।।

नांघ्री प्रतापयेदग्नौ न वस्त्वशुचि निक्षिपेत्।।
प्राणिहिंसां न कुर्वीत नाश्नीयात्सँध्ययोर्द्वयोः।।५५।।
न संविशेत संध्यायां प्रत्यक्सौम्यशिरा अपि।।
विण्मूत्रष्ठीवनं नाप्सु कुर्याद्दीर्घजिजीविषुः।। ५६।।
नाचक्षीत धयंतीं गां नेंद्रचापं प्रदर्शयेत्।।
नैकः सुप्यात्क्वचिच्छून्ये न शयानं प्रबोधयेत्।। ५७।।
पंथानं नैकलो यायान्न वार्यंजलिना पिबेत् ।।
न दिवोद्धृत सारं च भक्षयेद्दधिनो निशि ।। ५८ ।।
स्त्रीधर्मिण्या नाभिवदेन्नाद्यादातृप्ति रात्रिषु ।।
तौर्यत्रिक प्रियो न स्यात्कांस्ये पादौ न धावयेत् ।। ५९ ।।
श्राद्धं कृत्वा पर श्राद्धे योऽश्नीयाज्ज्ञानवर्जितः ।।
दातुः श्राद्धफलं नास्ति भोक्ता किल्बिषभुग्भवेत् ।। 4.1.38.६० ।।
न धारयेदन्यभुक्तं वासश्चो पानहावपि ।।
न भिन्न भाजनेश्नीयान्नासीताग्न्यादि दूषिते।। ६१।।
आरोहणं गवां पृष्ठे प्रेतधूमं सरित्तरम्।।
बालातपं दिवास्वापं त्यजेद्दीर्घं जिजीविषुः।। ६२।।
स्नात्वा न मार्जयेद्गात्रं विसृजेन्न शिखां पथि।।
हस्तौ शिरो न धुनुयान्नाकर्षेदासनं पदा।। ६३।।
नोत्पाटयेल्लोमनखं दशनेन कदाचन।।
करजैः करजच्छेदं तृणच्छेदं विवर्जयेत्।।६४।।
शुभायन यदायत्यां त्यजेत्तत्कर्म यत्नतः।।
अद्वारेण न गंतव्यं स्ववेश्मपरवेश्मनोः।। ६५।।
क्रीडेन्नाक्षैः सहासीत न धर्मघ्नैर्न रोगिभिः ।।
न शयीत क्वचिन्नग्नः पाणौ भुंजीत नैव च ।। ६६ ।।
आर्द्रपादकरास्योश्नन्दीर्घकालं च जीवति ।।
संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् ।। ६७ ।।
शयनस्थो न चाश्नीयान्नपिबेन्न जपेद्द्विजः ।।
सोपानत्कश्चनाचामेन्न तिष्ठन्धारया पिबेत् ।। ६८ ।।

सर्वं तिलमयं नाद्यात्सायं शर्माभिलाषुकः ।।
न निरीक्षेत विण्मूत्रे नोच्छिष्टः संस्पृशेच्छिरः ।। ६९ ।।
नाधितिष्ठेत्तुषांगार भस्मकेशकपालिकाः ।।
पतितैः सह संवासः पतनायैव जायते ।। 4.1.38.७० ।।
श्रावयेद्वैदिकं मंत्रं न शूद्राय कदाचन ।।
ब्राह्मण्याद्धीयते विप्रः शूद्रो धर्माच्च हीयते ।। ७१ ।।
धर्मोपदेशः शूद्राणां स्वश्रेयः प्रतिघातयेत् ।।
द्विजशुश्रूषणं धर्मः शूद्राणां हि परो मतः ।। ७२ ।।
कंडूयनं हि शिरसः पाणिभ्यां न शुभं मतम् ।।
आताडनं कराभ्यां च क्रोशनं केशलुंचनम् ।।७३ ।।
अशास्त्रवर्तिनो भूपाल्लुब्धात्कृत्वा प्रतिग्रहम् ।।
ब्राह्मणः सान्वयो याति नरकानेकविंशतिम् ।। ७४ ।।
अकालविद्युत्स्तनिते वर्षर्तौ पांसुवर्षणे ।।
महावातध्वनौ रात्रावनध्यायाः प्रकीर्तिताः ।। ७५ ।।
उल्कापाते च भूकंपे दिग्दाहे मध्यरात्रिषु ।।
संध्ययोर्वृषलोपांते राज्ञोराहोश्च सूतके ।। ७६ ।।
दर्शाष्टकासु भूतायां श्राद्धिकं प्रतिगृह्य च ।।
प्रतिपद्यपि पूर्णायां गजोष्ट्राभ्यां कृतांतरे ।। ७७ ।।
खरोष्ट्रक्रोष्ट्र विरुते समवाये रुदत्यपि ।।
उपाकर्मणि चोत्सर्गे नाविमार्गे तरौ जले ।। ७८ ।।
आरण्यकमधीत्यापि बाणसाम्नोरपि ध्वनौ ।।
अनध्यायेषु चैतेषु नाधीयीत द्विजः क्वचित् ।। ७९ ।।
कृतांतरायो न पठेद्भेकाखु श्वाहि बभ्रुभिः ।।
भूताष्टम्योः पंचदश्योर्ब्रह्मचारी सदा भवेत् ।। 4.1.38.८० ।।
अनायुष्यकरं चैव परदारोपसर्पणम् ।।
तस्मात्तद्दूरतस्त्याज्यं वैरिणां चोपसेवनम् ।। ८१ ।।
पूर्वर्द्धिभिः परित्यक्तमात्मानं नावमानयेत् ।।
सदोद्यमवतां यस्माच्छ्रियो विद्या न दुर्लभाः ।। ८२ ।।

सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमप्रियम् ।।
प्रियं च नानृतं ब्रूयादेष धर्मो घटोद्भव ।। ८३ ।।
भद्रमेव वदेन्नित्यं भद्रमेव विचिंतयेत् ।।
भद्रैरेवेह संसर्गो नाभद्रैश्च कदाचन ।। ८४ ।।
रूपवित्तकुलैर्हीनान्सुधीर्नाधिक्षिपेन्नरान् ।।
पुष्पवंतौ न चेक्षेत त्वशुचिर्ज्योतिषां गणम् ।। ८५ ।।
वाचोवेगं मनोवेगं जिह्वावेगं च वर्जयेत् ।।
उत्कोच द्यूत दौत्यार्त द्रव्यं दूरात्परित्यजेत् ।।८६।।
गोब्राह्मणाग्नीनुच्छिष्ट पाणिना नैव संस्पृशेत्।।
न स्पृशेदनिमित्ते नखानि स्वानि त्वनातुरः ।। ८७ ।।
गुह्यजान्यपि लोमानि तत्स्पर्शादशुचिर्भवेत् ।।
पादधौतोदकं मूत्रमुच्छिष्टान्नोदकानि च।। ८८।।
निष्ठीवनं च श्लेष्माणं गृहाद्दूरं विनिक्षिपेत् ।।
अहर्निशं श्रुतेर्जाप्याच्छौचाचारनिषेवणात् ।।
अद्रोहवत्या बुद्ध्या च पूर्वं जन्म स्मरेद्द्विजः ।। ८९ ।।
वृद्धान्प्रयत्नाद्वंदेत दद्यात्तेषां स्वमासनम् ।।
विनम्रधमनिस्तस्मादनुयायात्ततश्च तान् ।।4.1.38.९० ।।
श्रुति भूदेव देवानां नृप साधु तपस्विनाम्।।
पतिव्रतानां नारीणां निंदां कुर्यान्न कर्हिचित्।। ९१ ।।
न मनुष्यस्तुतिं कुर्यान्नात्मानमपमानयेत् ।।
अभ्युद्यतं न प्रणुदेत्परमर्माणि नोच्चरेत् ।। ९२।।
अधर्मादेधते पूर्वं विद्वेष्टॄनपि संजयेत्।।
सर्वतोभद्रमाप्यापि ततो नश्येच्च सान्वयः ।। ९३ ।।
उद्धृत्य पंच मृत्पिंडान्स्नायात्परजलाशये ।।
अनुद्धृत्य च तत्कर्तुरेनसः स्यात्तुरीयभाक् ।। ९४ ।।
श्रद्धया पात्रमासाद्य यत्किंचिद्दीयते वसु ।।
देशे काले च विधिना तदानंत्याय कल्पते ।। ९५ ।।
भूप्रदो मंडलाधीशः सर्वत्रसुखिनोन्नदाः ।।

तोयदाता सदा तृप्तो रूपवान्रूप्यदो भवेत् ।। ९६ ।।

प्रदीपदो निर्मलाक्षो गोदाताऽर्यमलोकभाक् ।।

स्वर्णदाता च दीर्घायुस्तिलदः स्यात्तु सुप्रजाः ।। ९७ ।।

वेश्मदो ऽत्युच्चसौधेशो वस्त्रदश्चंद्रलो कभाक् ।।

हयप्रदो दिव्ययानो लक्ष्मीवान्वृषभप्रदः ।। ९८।।

सुभार्यः शिबिका दाता सुपर्यंक प्रदोपि च ।।

धान्यैः समृद्धिमान्नित्यमभयप्रद ईशिता ।।९९।।

ब्रह्मदो ब्रह्मलोकेज्यो ब्रह्मदः सर्वदो मतः ।।

उपायेनापि यो ब्रह्म दापयेत्सोपि तत्समः ।। 4.1.38.१०० ।।

श्रद्धया प्रतिगृह्णाति श्रद्धया यः प्रयच्छति ।।

स्वर्गिणौ तावुभौ स्यातां पततोऽश्रद्धयात्यधः ।। १ ।।

अनृतेन क्षरेद्यज्ञस्तपो विस्मयतः क्षरेत् ।।

क्षरेत्कीर्तनतोदानमायुर्विप्रापवादतः ।। २ ।।

गंधपुष्पकुशाञ्छय्यां शाकं मांसं पयो दधि ।।

मणि मत्स्य गृहं धान्यं ग्राह्यमेतदुपस्थितम् ।। ३ ।।

मधूदकं फलं मूलमेधांस्यभयदक्षिणा ।।

अभ्युद्यतानि ग्राह्याणि त्वेतान्यपिनिकृष्टतः ।। ४ ।।

दास नापित गोपाल कुलमित्रार्धसीरिणः ।।

भोज्यान्नाः शूद्रवर्गेमी तथात्मविनिवेदकः ।। ५ ।।

इत्थमानृण्यमासाद्य देवर्षिपितृजादृणात् ।।

माध्यस्थ्यमाश्रयेद्गेहे सुते विष्वग्विसृज्य च ।। ६ ।।

गेहेपि ज्ञानमभ्यस्येत्काशीं वाथ समाश्रयेत् ।।

सम्यग्ज्ञानेन वा मुक्तिः किंवा विश्वेशवेश्मनि ।। ७ ।।

सम्यग्ज्ञानं भवेत्पुंसां कुत एकेन जन्मना ।।

वाराणस्यां ध्रुवा मुक्तिः शरीरत्यागमात्रतः ।। ८ ।।

अद्य श्वो वा परश्वो वा कालाद्वाथ परःशतात् ।।

सत्वरो गत्वरो देहः काश्यां चेदमृती भवेत् ।। ९ ।।

सा च वाराणसी लभ्या सदाचारवता सदा ।।

मनसापि सदाचारमतो विद्वान्न लंघयेत् ।। 4.1.38.११० ।।

आकर्ण्येति ततोगस्त्यः पुनः प्राह षडाननम् ।।

पुनः काशीं समाचक्ष्व सदाचारेण याप्यते ।। ।। ११ ।।

कानि कानि च लिंगानि स्कंद ज्ञानप्रदानि च ।।

वाराणस्यां परिब्रूहि तानि मे परिपृच्छतः ।। १२ ।।

विना काशीं न मे प्रीतिर्विनाकाशीं न मे रतिः ।।

चित्रपुत्रकवच्चास्मि विना काशी षडानन ।। १३ ।।

न निद्रामि न जागर्मि नाश्नामि न पिबाम्यपः ।।

काशीं द्व्यक्षरपीयूषं पिबामि हि च केवलम् ।। १४ ।।

इति श्रुत्वा वचः स्कंदो मैत्रावरुणिभाषितम् ।।

अविमुक्तस्य माहात्म्यं वक्तुं समुपचक्रमे ।। ११५ ।।

इति श्री स्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां काशीखंडे पूर्वार्द्धे सदाचारवर्णनं नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०३९

https://sa.wikisource.org/s/fvk
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।।

शृण्वगस्त्य महाभाग कथां पापप्रणाशिनीम् ।।

नैःश्रेयस्याः श्रियोहेतुमविमुक्त समाश्रयाम् ।। १ ।।

परं ब्रह्म यदाम्नातं निष्प्रपंचं निरात्मकम् ।।

निर्विकल्पं निराकारमव्यक्तं स्थूलसूक्ष्मवत् ।। २ ।।

तदेतत्क्षेत्रमापूर्य स्थितं सर्वगमप्यहो ।।

किमन्यत्र न शक्तोसौ जंतून्मोचयितुं भवात् ।। ३ ।।

भवो ध्रुवं यदत्रैव मोचयेत्तं निशामय ।।

महत्या योगयुक्त्या वा महादानैरकामिकैः ।। ४ ।।

सुमहद्भिस्तपोभिर्वा शिवोन्यत्र विमोचयेत् ।।

योगयुक्तिं न महतीं न दानानि महांति च ।। ५ ।।

न तपांस्यतिदीर्घाणि काश्यां मुक्त्यै शिवोर्थयेत् ।।

वियुनक्ति न यत्काश्या उपसर्गे महत्यपि ।। ६ ।।

अयमेव महायोग उपयोगस्त्विहा परः ।।

नियमेन तु विश्वेशे पुष्पं पत्रं फलं जलम् ।। ७ ।।

यद्दत्तं सुमनोवृत्त्या महादानं तदत्र वै ।।

मुक्तिमंडपिकायां च क्षणं यत्स्थिरमास्यते ।। ८ ।।

स्नात्वा गंगामृते शुद्धे तप एतदिहोत्तमम् ।।

सत्कृत्य भिक्षवे भिक्षा यत्काश्यां परिदीयते ।।

तुला पुरुष एतस्याः कलां नार्हति षोडशीम् ।। ९ ।।

हृदि संचिंत्य विश्वेशं क्षणं यद्विनिमील्यते।।

देवस्य दक्षिणे भागे महायोगोयमुत्तमः ।। 4.1.39.१० ।।

इदमेव तपोत्युग्रं यदिंद्रिय विलोलताम् ।।

निषिध्य स्थीयते काश्यां क्षुत्तापाद्यवमन्य च ।। ११ ।।

मासि मासि यदाप्येत व्रताच्चांद्रायणात्फलम् ।।

अन्यत्र तदिहाप्येत भूतायां नक्तभोजनात् ।। १२ ।।

मासोपवासादन्यत्र यत्फलं समुपार्ज्यते ।।

श्रद्धयैकोपवासेन तत्काश्यां स्यादसंशयम्।।१३।।

चातुर्मास्य व्रतात्प्रोक्तं यदन्यत्र महाफलम् ।।

एकादश्युपवासेन तत्काश्यां स्यादसंशयम् ।। १४ ।।

षण्मासान्न परित्यागाद्यदन्यत्र फलं लभेत्।।

शिवरात्र्युपवासेन तत्काश्यां जायते ध्रुवम् ।। १५ ।।

वर्षं कृत्वोपवासानि लभेदन्यत्र यद्व्रती ।।

तत्फलं स्यात्त्रिरात्रेण काश्यामविकलं मुने ।। १६ ।।

मासिमासि कुशाग्रांबु पानादन्यत्र यत्फलम् ।।

काश्यामुत्तरवाहिन्यामेकेन चुलुकेन तत् ।। १७ ।।

अनंतो महिमा काश्याः कस्तं वर्णयितुं प्रभुः ।।

विपत्तिमिच्छतो जंतोर्यत्रकर्णे जपः शिवः ।। १८ ।।

शंभुस्तत्किंचिदाचष्टे म्रियमाणस्य जन्मिनः ।।

कर्णेऽक्षरं यदाकर्ण्य मृतोप्यमृततां व्रजेत् ।। १९ ।।

स्मारं स्मारं स्मररिपोः पुरीं त्वमिव शंकरः ।।

अदुनोन्मंदरं यातो बहुशस्तदवाप्तये ।।4.1.39.२०।।

अगस्त्य उवाच ।।

स्वकार्यनिपुणैः स्वामिन्गीर्वाणैरतिदारुणैः ।।

त्याजितोहं पुरीं काशीं हरो त्याक्षीत्कुतः प्रभुः ।। २१ ।।

पराधीनोहमिव किं देवदेवः पिनाकवान् ।।

काशिकां सोऽत्यजत्कस्मान्निर्वाणमणिराशिकाम् ।। २२ ।।

।। स्कंद उवाच ।। ।।

मित्रावरुणसंभूत कथयामि कथामिमाम् ।।

तत्याज च यथा स्थाणुः काशीं विध्युपरोधतः ।। २३ ।।

प्रार्थितस्त्वं यथा लेखैः परोपकृतये मुने ।।

द्रुहिणेन तथा रुद्रः स्वरक्षण विचक्षणः ।। २४ ।।

।। अगस्त्य उवाच ।। ।।

कथं स भगवान्रुद्रो द्रुहिणेन कृपांबुधिः ।।

प्रार्थितोभूत्किमर्थं च तन्मे ब्रूहि षडानन ।। २५ ।।

।। स्कंद उवाच ।। ।।

पाद्मेकल्पे पुरावृत्ते मनोः स्वायंभुवेंतरे ।।

अनावृष्टिरभूद्विप्र सर्वभूतप्रकंपिनी ।। २६ ।।

तया तु षष्टिहायिन्या पीडिताः प्राणिनोऽखिलाः ।।

केचिदंबुधितीरेषु गिरिद्रोणीषु केचन ।। २७ ।।

महानिम्नेषु कच्छेषु मुनिवृत्त्या जनाः स्थिताः ।।

अरण्यान्यवनिर्जाता ग्रामखर्वट वर्जिता ।। २८ ।।

क्रव्यादा एव सर्वेषु नगरेषु पुरेषु च ।।

आसन्नभ्रंलिहो वृक्षाः सर्वत्र क्षोणिमंडले ।। २९ ।।

चौरा एव महाचौरैरुल्लुठ्यंत इतस्ततः ।।

मांसवृत्त्योपजीवंति प्राणिनः प्राणरक्षिणः ।। 4.1.39.३० ।।

अराजके समुत्पन्ने लोकेऽत्याहितशंसिनि ।।

प्रयत्नो विफलस्त्वासीत्सृष्टेः सृष्टिकृतस्तदा ।। ३१ ।।

चिंतामवाप महती जगद्योनिः प्रजाक्षयात् ।।

प्रजासु क्षीयमाणासु क्षीणा यज्ञादिकाः क्रियाः ।। ३२।।

तासु क्षीणासु संक्षीणाः सर्वे यज्ञभुजोऽभवन् ।।

ततश्चिंतयता स्रष्ट्रा दृष्टो राजर्षिसत्तमः ।। ३३ ।।

अविमुक्ते महाक्षेत्रे तपस्यन्निश्चलेंद्रियः ।।

मनोरन्वयजो वीरः क्षात्रो धर्म इवोदितः ।। ३४ ।।

रिपुंजय इति ख्यातो राजा परपुरंजयः ।।

अथ ब्रह्मा तमासाद्य बहुगौरवपूर्वकम् ।। ३५ ।।

उवाच वचनं राजन्रिपुंजय महामते ।।

इलां पालय भूपाल ससमुद्राद्रिकाननाम् ।। ३६ ।।

नागकन्यां नागराजः पत्न्यर्थं ते प्रदास्यति ।।

अनंगमोहिनीं नाम्ना वासुकिः शीलभूषणाम् ।। ३७ ।।

दिवोपि देवा दास्यंति रत्नानि कुसुमानि च ।।

प्रजापालनसंतुष्टा महाराज प्रतिक्षणम् ।। ३८ ।।

दिवोदास इति ख्यातमतो नाम त्वमाप्स्यसि ।।

मत्प्रभावाच्च नृपते दिव्यं सामर्थ्यमस्तु ते ।। ३९ ।।

परमेष्ठिवचः श्रुत्वा ततोसौ राजसत्तमः ।।

वेधसं बहुशः स्तुत्वा वाक्यं चेदमुवाच ह ।। 4.1.39.४० ।।

।।राजोवाच ।। ।।

पितामह महाप्राज्ञ जनाकीर्णे महीतले ।।

कथं नान्ये च राजानो मां कथं कथ्यते त्वया ।। ४१ ।।

।। ब्रह्मोवाच ।। ।।

त्वयि राज्यं प्रकुर्वाणे देवो वृष्टिं विधास्यति।।

पापनिष्ठे च वै राज्ञि न देवो वर्षते पुनः ।। ४२ ।।

।। राजोवाच ।। ।।

पितामह महामान्य त्रिलोकी करणक्षम।।

महाप्रसाद इत्याज्ञां त्वदीयां मूर्ध्न्युपाददे ।। ४३ ।।

किंचिद्विज्ञप्तुकामोहं तन्मदर्थं करोषि चेत् ।।

ततः करोम्यहं राज्यं पृथिव्यामसपत्नवत् ।। ४४ ।।

।। ब्रह्मोवाच ।।

अविलंबेन तद्ब्रूहि कृतं मन्यस्व पार्थिव ।।

यत्ते हृदि महाबाहो तवादेयं न किंचन ।। ४५ ।।

।। राजोवाच ।। ।।

यद्यहं पृथिवीनाथः सर्वलोकपितामह ।।

तदादिविष(प?)दो देवा दिवि तिष्ठंतु मा भुवि ।। ४६ ।।

देवेषु दिवितिष्ठत्सु मयि तिष्ठति भूतले ।।

असपत्नेन राज्येन प्रजासौख्यमवाप्स्यति ।। ४७ ।।

तथेति विश्वसृक्प्रोक्तो दिवोदासो नरेश्वरः ।।

पटहं घोषयांचक्रे दिवं देवा व्रजंत्विति ।। ४८ ।।

मा गच्छंत्विह वै नागा नराः स्वस्था भवंत्वितः ।।

मयि प्रशासति क्षोणीं सुराः स्वस्था भवंत्विति ।। ४९ ।।

एतस्मिन्नंतरे ब्रह्मा विश्वेशं प्रणिपत्य ह ।।

यावद्विज्ञप्तुकामोभूत्तावदीशोब्रवीद्विधिम् ।। 4.1.39.५० ।।

लोकेश्वर समायाहि मंदरो नाम भूधरः ।।

कुशद्वीपादिहागत्य तपस्तप्येत दुष्करम् ।। ५१ ।।

यावस्तस्मै वरं दातुं बहुकालं तपस्यते ।।

इत्युक्त्वा पार्वतीनाथो नंदिभृंगिपुरोगमः ।। ५२ ।।

जगाम वृषमारुह्य मंदरो यत्र तिष्ठति ।।

उवाच च प्रसन्नात्मा देवदेवो वृषध्वज ।।५३।।

उत्तिष्ठोत्तिष्ठ भद्रं ते वरं ब्रूहि धरोत्तम ।।

सोथ श्रुत्वा महेशानं देवदेवं त्रिलोचनम्।। ।। ५४ ।।

प्रणम्य बहुशो भूमावद्रिरेतद्व्यजिज्ञपत् ।।

लीलाविग्रहभृच्छंभो प्रणतैक कृपानिधे ।। ५५ ।।

सर्वज्ञोपि कथं नाम न वेत्थ मम वांछितम् ।।

शरणागतसंत्राण सर्ववृत्तांतकोविद ।। ५६ ।।

सर्वेषां हृदयानंद शर्वसर्वगसर्वकृत् ।।

यदि देयो वरो मह्यं स्वभावादृषदात्मने ।।५७ ।।

याचकायातिशोच्याय प्रणतार्तिप्रभंजक ।।

ततोऽविमुक्तक्षेत्रस्य साम्यं ह्यभिलषाम्यहम् ।। ५८ ।।

कुशद्वीप उमा सार्धं नाथाद्य सपरिच्छदः ।।

मन्मौलौ विहितावासः प्रयात्वेष वरो मम ।। ५९ ।।

सर्वेषां सर्वदः शंभुः क्षणं यावद्विचिंतयेत् ।।

विज्ञातावसरो ब्रह्मा तावच्छंभुं व्यजिज्ञपत्।।

प्रणम्याग्रेसरो भूत्वा मौलौ बद्धकरद्वयः ।। 4.1.39.६० ।।

।। ब्रह्मोवाच ।। ।।

विश्वेश जगतांनाथ पत्या व्यापारितोस्म्यहम् ।।

कृतप्रसादेन विभो सृष्टिं कर्तुं चतुर्विधाम् ।। ६१ ।।

प्रयत्नेन मया सृष्टा सा सृष्टिस्त्वदनुज्ञया ।।

अवृष्ट्या षष्टिहायिन्या तत्र नष्टाऽप्रजा भुवि ।। ६२ ।।

अराजकं महच्चासीद्दुरवस्थमभूज्जगत् ।।
ततो रिपुंजयो नाम राजर्षिर्मनुवंशजः ।। ६३ ।।
मयाभिषिक्तो राजर्षिः प्रजाः पातुं नरेश्वरः ।।
चकार समयं सोपि महावीर्यो महातपाः ।।६४।।
तवाज्ञया चेत्स्थास्यंति सर्वे दिविषदो दिवि ।।
नागलोके तथा नागास्ततो राज्यं करोम्यहम् ।। ।। ६५ ।।
तथेति च मया प्रोक्तं प्रमाणीक्रियतां तु तत् ।।
मंदराय वरो दत्तो भवेदेवं कृपानिधे ।। ६६ ।।
तस्य राज्ञः प्रजास्त्रातुं भूयाच्चैष मनोरथः ।।
मम नाडीद्वयं राज्यं तस्यापि च शतक्रतोः ।। ६७ ।।
मर्त्यानां गणना क्वेह निमेषार्ध निमेषिणाम्।।
देवोपि निर्मलं मत्वा मंदरं चारुकंदरम् ।।६८।।
विधेश्च गौरवं रक्षंस्तथोरी कृतवान्हरः ।।
जंबूद्वीपे यथा काशी निर्वाणपददा सदा ।।६९।।
तथा बहुतिथं कालं द्वीपोभूत्सोपि मंदरः ।।
यियासुना च देवेन मंदरं चित्रकंदरम् ।।4.1.39.७०।।
निजमूर्तिमयं लिंगमविज्ञातं विधेरपि ।।
स्थापितं सर्वसिद्धीनां स्थापकेभ्यः समर्पितुम् ।। ७१ ।।
विपन्नानां च जंतूनां दातुं नैःश्रेयसीं श्रियम् ।।
सर्वेषामिह संस्थानां क्षेत्रं चैवाभिरक्षितुम्।। ७२ ।।
मंदराद्रिगतेनापि क्षेत्रं नैतत्पिनाकिना ।।
विमुक्तं लिंगरूपेण अविमुक्तमतः स्मृतम् ।। ७३ ।।
पुरा नंदवनं नाम क्षेत्रमेतत्प्रकीर्तितम्।।
अविमुक्तं तदारभ्य नामास्य प्रथितं भुवि ।। ७४ ।।
नामाविमुक्तमभवदुभयोः क्षेत्रलिंगयोः ।।
एतदद्वयं समासाद्य न भूयो गर्भभाग्भवेत् ।। ७५ ।।
अविमुक्तेश्वरं लिंगं दृष्ट्वा क्षेत्रेऽविमुक्तके ।।
विमुक्त एव भवति सर्वस्मात्कर्मबंधनात् ।। ७६ ।।

अर्चंति विश्वे विश्वेशं विश्वेशोर्चति विश्वकृत् ।।

अविमुक्तेश्वरं लिंगं भुविमुक्तिप्रदायकम् ।। ७७ ।।

पुरा न स्थापितं लिंगं कस्यचित्केनचित्क्वचित् ।।

किमाकृति भवेल्लिंगं नैतद्वेत्त्यपि कश्चन ।। ७८ ।।

आकारमविमुक्तस्य दृष्ट्वा ब्रह्माच्युतादयः ।।

लिंगं संस्थापयामासुर्वसिष्ठाद्यास्तथर्षयः ।। ७९ ।।

आदिलिंगमिदं प्रोक्तमविमुक्तेश्वरं महत् ।।

ततो लिंगांतराण्यत्र जातानि क्षितिमंडले ।। 4.1.39.८० ।।

अविमुक्तेश नामापि श्रुत्वा जन्मार्जितादघात् ।।

क्षणान्मुक्तो भवेन्मर्त्यो नात्र कार्या विचारणा ।।८१ ।।

अविमुक्तेश्वरं लिंगं स्मृत्वा दूरगतोपि च ।।

जन्मद्वयकृतात्पापात्क्षणादेव विमुच्यते ।।८२।।

अविमुक्ते महाक्षेत्रेऽविमुक्तमवलोक्य च ।।

त्रिजन्मजनितं पापं हित्वा पुण्यमयो भवेत् ।। ८३ ।।

यत्कृतं ज्ञानविभ्रंशादेनः पंचसु जन्मसु ।।

अविमुक्तेश संस्पर्शात्तत्क्षयेदेव नान्यथा ।। ८४ ।।

अर्चयित्वा महालिंगमविमुक्तेश्वरं नरः ।।

कृतकृत्यो भवेदत्र न च स्याज्जन्मभाक्कुतः ।। ८५ ।।

स्तुत्वा नत्वार्चयित्वा च यथाशक्ति यथामति ।।

अविमुक्ते विमुक्तेशं स्तूयते नम्यतेऽर्च्यते ।।८६।।

अनादिमदिदं लिंगं स्वयं विश्वेश्वरार्चितम् ।।

काश्यां प्रयत्नतः सेव्यमविमुक्तं विमुक्तये ।। ८७ ।।

संति लिंगान्यनेकानि पुण्येष्वायतनेषु च ।।

आयांति तानि लिंगानि माघीं प्राप्य चतुदर्शीम्।। ८८ ।।

कृष्णायां माघभूतायामविमुक्तेश जागरात् ।।

सदा विगतनिद्रस्य योगिनो गतिभाग्भवेत् ।। ८९ ।।

नानायतनलिंगानि चतुर्वर्गप्रदान्यपि ।।

माघकृष्णचतुर्दश्यामविमुक्तमुपासते ।। 4.1.39.९० ।।

किं बिभेति नरो धीरः कृतादघशिलोच्चयात् ।।

अविमुक्तेश लिंगस्य भक्ति वज्रधरो यदि ।। ९१ ।।

क्वाविमुक्तं महालिंगं चतुर्वर्गफलोदयम् ।।

क्व पापि पापशैलोऽल्पो यःक्षयेन्नामसंभृतः ।। ९२ ।।

अविमुक्ते महाक्षेत्रे विश्वेशसमधिष्ठिते ।।

यैर्न दृष्टं विमूढास्तेऽविमुक्तं लिंगमुत्तमम् ।। ९३ ।।

द्रष्टारमविमुक्तस्य दृष्ट्वा दंडधरो यमः ।।

दूरादेव प्रणमति प्रबद्धकरसंपुटः ।। ९४ ।।

धन्यं तन्नेत्रनिर्माणं कृतकृत्यौ तु तौ करौ ।।

अविमुक्तेश्वरं येन याभ्यामैक्षिष्ट यः स्पृशेत् ।। ९५ ।।

त्रिसंध्यमविमुक्तेशं यो जपेन्नियतः शुचिः ।।

दूरदेशविपन्नोपि काशीमृतफलं लभेत् ।। ९६ ।।

अविमुक्तं महालिंगं दृष्ट्वा ग्रामांतरं व्रजेत्।।

लब्धाशुकार्यसंसिद्धिं क्षेमेण प्रविशेद्गृहम्।।९७।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशी खंडे पूर्वार्द्धे अविमुक्तेशाविर्भावोनामैकोनचत्वारिंशोध्यायः ।।३९।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४०

https://sa.wikisource.org/s/fvl



।। स्कंद उवाच ।। ।।

अविमुक्तेश माहात्म्यं वर्णितं तेग्रतो मया ।।

अथो किमसि शुश्रूषुः कथयिष्यामि तत्पुनः ।। १ ।।

।। अगस्त्य उवाच ।। ।।

अविमुक्तेश माहात्म्यं श्रावं श्रावं श्रुती मम ।।

अतीव सुश्रुते जाते तथापि न धिनोम्यहम् ।। २ ।।

अविमुक्तेश्वरं लिंगं क्षेत्रं चाप्यविमुक्तकम् ।।

एतयोस्तु कथं प्राप्तिर्भवेत्षण्मुख तद्वद ।। ३ ।।

।। स्कंद उवाच ।। ।।

शृणु कुं भज वक्ष्यामि यथा प्राप्तिर्भवेदिह ।।

स्वश्रेयो दातुरेतस्या विमुक्तस्य महामते ।। ४ ।।

समीहितार्थ संसिद्धिर्लभ्यते पुण्यभारतः ।।

तच्च पुण्यं भवेद्विप्र श्रुतिवर्त्मसभाजनात् ।।५।।

श्रुतिवर्त्मजुषः पुंसः संस्पर्शान्नश्यतो मुने ।।

कलिकालावपि सदा छिद्रं प्राप्य जिघांसतः ।।६।।

वर्जितस्य विधानेन प्रोक्तस्याकरणेन वै ।।

कलिकालावपि हतो ब्राह्मणं रंध्रदर्शनात् ।। ७ ।।

निषिद्धाचरणं तस्मात्कथयिष्ये तवाग्रतः ।।

तद्दूरतः परित्यज्य नरो न निरयी भवेत् ।। ८ ।।

पलांडुं विड्वराहं च शेलुं लशुन गृंजने ।।

गोपीयूषं तंडुलीयं वर्ज्यं च कवकं सदा ।। ९ ।।

व्रश्चनान्वृक्षनिर्यासान्पायसापूपशष्कुलीः ।।

अदेवपित्र्यं पललमवत्सागोपयस्त्यजेत् ।। 4.1.40.१० ।।

पय ऐकशफं हेयं तथा क्रामेलकाविकम् ।।

रात्रौ न दधि भोक्तव्यं दिवा न नवनीतकम् ।। ११ ।।

टिट्टिभं कलविंकं च हंसं चक्रं प्लवंबकम् ।।

त्यजेन्मांसाशिनः सर्वान्सारसं कुक्कुटं शुकम् ।। १२ ।।

जालपादान्खंजरीटान्बुडित्वा मत्स्यभक्षकान् ।।

मत्स्याशी सर्वमांसाशी तन्मत्स्यान्सर्वथा त्यजेत्।। १३ ।।

हव्यकव्यनियुक्तौ तु भक्ष्यौ पाठीनरोहितौ।।

मांसाशिभिस्त्वमी भक्ष्याः शश शल्लक कच्छपाः ।।१४।।

श्वाविद्गोधे प्रशस्ते च ज्ञाताश्च मृगपक्षिणः ।।

आयुष्कामैः स्वर्गकामैस्त्याज्यं मांसं प्रयत्नतः ।। १५ ।।

यज्ञार्थं पशुहिंसा या सा स्वर्ग्या नेतरा क्वचित् ।।

त्यजेत्पर्युषितं सर्वमखंडस्नेह वर्जितम्।। १६ ।।

प्राणात्यये क्रतौ श्राद्धे भैषजे विप्रकाम्यया।।

अलौल्यमित्थं पललं भक्षयन्नैव दोषभाक् ।। १७ ।।

न तादृशं भवेत्पापं मृगयावृत्तिकांक्षिणः ।।

यादृशं भवति प्रेत्य लौल्यान्मांसोपसेविनः ।। १८ ।।

मखार्थं ब्रह्मणा सृष्टाः पशु द्रुम मृगौषधीः ।।

निघ्नन्नहिंसको विप्रस्तासामपि शुभा गतिः ।। १९ ।।

पितृदेवक्रतुकृते मधुपर्कार्थमेव च ।।

तत्र हिंसाप्यहिंसा स्याद्धिंसान्यत्र सुदुस्तरा ।। 4.1.40.२० ।।

यो जंतूनात्मपुष्ट्यर्थं हिनस्ति ज्ञानदुर्बलः ।।

दुराचारस्य तस्येह नामुत्रापि सुखं क्वचित्।। २१ ।।

भोक्तानुमंता संस्कर्ता क्रयिविक्रयि हिंसकाः ।।

उपहर्ता घातयिता हिंसकाश्चाष्टधा स्मृताः ।। २२ ।।

प्रत्यब्दमश्वमेधेन शतं वर्षाणि यो यजेत् ।।

अमांसभक्षको यश्च तयोरंत्यो विशिष्यते ।। २३ ।।

यथैवात्मा परस्तद्वदद्रष्टव्यः सुखमिच्छता ।।

सुखदुःखानि तुल्यानि यथात्मनि तथा परे ।। २४ ।।

सुखं वा यदि वा चान्यद्यत्किंचित्क्रियते परे।।

तत्कृतं हि पुनः पश्चात्सर्वमात्मनि संभवेत् ।। २५ ।।

न क्लेशेन विना द्रव्यमर्थहीने कुतः क्रियाः ।।

क्रियाहीने कुतो धर्मो धर्महीने कुतः सुखम् ।। ।। २६ ।।

सुखं हि सर्वैराकांक्ष्यं तच्च धर्मसमुद्भवम्।।

तस्माद्धर्मोत्र कर्तव्यश्चातुर्वर्ण्येन यत्नतः ।। २७ ।।

न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् ।।

दानं च विधिना देयं काले पात्रे च भावतः ।। २८ ।।

विधिहीनं तथाऽपात्रे यो ददाति प्रतिग्रहम् ।।

न केवलं हि तद्याति शेषं तस्य च नश्यति ।। २९ ।।

व्यसनार्थे कुटुंबार्थे यद्दणार्थे च दीयते ।।

तदक्षयं भवेदत्र परत्र च न संशयः ।।4.1.40.३०।।

मातापितृविहीनं यो मौंजीपाणिग्रहादिभिः ।।

संस्कारयेन्निजैरर्थैस्तस्य श्रेयस्त्वनंतकम् ।। ।।३१ ।।

अग्निहोत्रैर्न तच्छ्रेयो नाग्निष्टोमादिभिर्मखैः ।।

यच्छ्रेयः प्राप्यते मर्त्यैर्द्विजे चैके प्रतिष्ठिते ।। ३२ ।।

यो ह्यनाथस्य विप्रस्य पाणिं ग्राहयते कृती ।।

इह सौख्यमवाप्नोति सोक्षयं स्वर्गमाप्नुयात् ।। ३३ ।।

पितृगेहे तु या कन्या रजः पश्येदसंस्कृता ।।

भ्रूणहा तत्पिता ज्ञेयो वृषली सापि कन्यका ।। ३४ ।।

यस्तां परिणयेन्मोहात्स भवेद्वृषलीपतिः ।।

तेन संभाषणं त्याज्यमपाङ्क्तेयेन सर्वदा ।। ३५ ।।

विज्ञाय दोषमुभयोः कन्यायाश्च वरस्य च ।।

संबंधं रचयेत्पश्चादन्यथा दोषभाक्पिता ।। ३६ ।।

स्त्रियः पवित्राः सततं नैता दुष्यंति केनचित् ।।

मासिमासि रजस्तासां दुष्कृतान्यपकर्षति ।। ३७ ।।

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगंधर्व वह्निभिः ।।

भुंजते मानुषाः पश्चान्नैतादुष्यं ति केनचित् ।। ३८ ।।

स्त्रीणां शौचं ददौ सोमः पावकः सर्वमेध्यताम् ।।

कल्याणवाणीं गंधर्वास्तेन मेध्याः सदा स्त्रियः ।। ३९ ।।

कन्यां भुंक्ते रजःकालेऽग्निः शशी लोमदर्शने ।।

स्तनोद्भेदेषु गंधर्वास्तत्प्रागेव प्रदीयते ।।4.1.40.४०।।

दृश्यरोमात्वपत्यघ्नी कुलघ्न्युद्गतयौवना ।।

पितृघ्न्याविष्कृतरजास्ततस्ताः परिवर्जयेत् ।।४१।।

कन्यादानफलप्रेप्सुस्तस्माद्द द्यादनग्निकाम् ।।

अन्यथा न फलं दातुः प्रतिग्राही पतेदधः ।।४२।।

कन्यामभुक्तां सोमाद्यैर्ददद्दानफलं लभेत्।।

देवभुक्तां ददद्दाता न स्वर्गमधिगच्छति ।।४३।।

शयनासनयानानि कुणपं स्त्रीमुखं कुशाः।।

यज्ञपात्राणि सर्वाणि न दुष्यंति बुधाः क्वचित् ।। ४४ ।।

वत्सः प्रस्रवणे मध्ये शकुनिः फलपातने ।।

नार्यो रतिप्रयोगेषु श्वा मृग ग्रहणे शुचिः ।। ४१।

अजाश्वयोर्मुखं मेध्यं गावो मेध्यास्तु पृष्ठतः ।।

पादतो ब्राह्मणा मेध्याः स्त्रियो मेध्यास्तु सर्वतः ।। ४५ ।।

बलात्कारोपभुक्ता वा चोरहस्तगतापि वा ।।

न त्याज्या दयिता नारी नास्यास्त्यागो विधीयते ।। ४७ ।।

आम्लेन ताम्रशुद्धिः स्याच्छुद्धिः कांस्यस्य भस्मना ।।

संशुद्धी रजसा नार्यास्तटिन्या वेगतः शुचिः ।।४८।।

मनसापि हि या नेह चिंतयेत्पुरुषांतरम् ।।

सोमया सह सौख्यानि भुंक्ते चात्रापि कीर्तिभाक्।।४९।।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।।

कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परःपरः ।। 4.1.40.५० ।।

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।।

स्वयं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम्।। ।। ५१ ।।

हृताधिकारां मलिनां पिंडमात्रोपजीविनीम्।।

परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ।। ५२ ।।

व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।।

गर्भभर्तृवधादौ तु महत्यपि च कल्मषे ।। ५३ ।।

शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृते ।।
ते च स्वा चैव राज्ञस्तु ताश्च स्वाचाग्रजन्मनः ।। ५४ ।।
आरोप्य शूद्रां शयने विप्रो गच्छेदधोगतिम्।।
उत्पाद्य पुत्रं शूद्रायां ब्राह्मण्यादेव हीयते।। ५५ ।।
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।।
देवाद्यास्तन्न चाश्नंति स च स्वर्गं न गच्छति ।। ५६ ।।
जामयो यानि गेहानि शपंत्यप्रतिपूजिताः ।।
कृत्याभिर्निहतानीव नश्येयुस्तान्यसंशयम् ।। ५७ ।।
तदभ्यर्च्याः सुवासिन्यो भूषणाच्छादनाशनैः ।।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ।।५८।।
यत्र नार्यः प्रमुदिता भूषणाच्छादनाशनैः ।।
रमंते देवतास्तत्र स्युस्तत्र सफलाः क्रियाः ।। ५९ ।।
यत्र तुष्यति भर्त्रा स्त्री स्त्रिया भर्ता च तुष्यति ।।
तत्र वेश्मनि कल्याणं संपद्येत पदे पदे ।।4.1.40.६०।।
अहुतं च हुतं चैव प्रहुतं प्राशितं तथा ।।
ब्राह्मं हुतं पंचमं च पंचयज्ञा इमे शुभाः ।। ६१ ।।
जपोऽहुतोहुतो होमः प्रहुतो भौतिको बलिः ।।
प्राशितं पितृसंतृप्तिर्हुतं ब्राह्मं द्विजार्चनम् ।। ६२ ।।
पंचयज्ञानिमान्कुर्वन्ब्राह्मणो नावसीदति ।।
एतेषामननुष्ठानात्पंचसूना अवाप्नुयात् ।। ६३ ।।
ब्राह्मणं कुशलं पृच्छेद्बाहुजातमनामयम्।।
वैश्यं सुखं समागम्य शूद्रं संतोषमेव च ।। ६४ ।।
जातमात्रः शिशुस्तावद्यावदष्टौ समाः स्मृताः ।।
भक्ष्याभक्ष्येषु नो दुष्येद्यावन्नैवोपनीयते ।। ६५ ।।
भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम् ।।
प्रत्यवायो ह्यभरणे भर्तव्यस्तत्प्रयत्नतः ।। ६६ ।।
मातापितागुरुपत्नीः त्वपत्यानि समाश्रिताः ।।
अभ्यागतोतिथिश्चाग्निः पोष्यवर्गा अमी नव ।। ६७ ।।

स जीवति पुमान्योऽत्र बहुभिश्चोपजीव्यते ।।
जीवन्मृतोथ विज्ञेयः पुरुषः स्वोदरंभरिः ।। ६८ ।।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिकाम्यया ।।
अदत्तदाना जायंते परभाग्योपजीविनः ।।६९।।
विभागशीलसंयुक्तो दयावांश्च क्षमायुतः ।।
देवतातिथिभक्तस्तु गृहस्थो धार्मिकः स्मृतः ।।4.1.40.७०।।
शर्वरीमध्य यामौ यौ हुतशेषं च यद्धविः ।।
तत्र स्वपंस्तदश्नंश्च ब्राह्मणो नावसीदति ।। ७१ ।।
नवैतानि गृहस्थस्य कार्याण्यभ्यागते सदा ।।
सुधा व्ययानि यत्सौम्यं वाक्यं चक्षुर्मनोमुखम् ।। ७२ ।।
अभ्युत्थानमिहायात सस्नेहं पूर्वभाषणम्।।
उपासनमनुव्रज्या गृहस्थोन्नति हेतवे ।। ७३ ।।
तथेषद्व्यययुक्तानि कार्याण्येतानि वै नव ।।
आसनं पादशौचं च यथाशक्त्याशनं क्षितिः ।। ७४ ।।
शय्यातृणजलाभ्यंग दीपा गार्हस्थ्य सिद्धिदाः ।।
तथा नव विकर्माणि त्याज्यानि गृहमेधिनाम्।।७५।।
पैशुन्यं परदाराश्च द्रोहः क्रोधानृताप्रियम् ।।
द्वेषो दंभश्च माया च स्वर्गमार्गार्गलानि हि ।। ७६ ।।
नवावश्यककर्माणि कार्याणि प्रतिवासरम् ।।
स्नानं संध्या जपो होमः स्वाध्यायो देवतार्चनम् ।। ७७ ।।
वेश्वदेवं तथातिथ्यं नवमं पितृतर्पणम् ।।
नव गोप्यानि यान्यत्र मुने तानि निशामय ।। ७८ ।।
जन्मर्क्षं मैथुनं मंत्रो गृहच्छिद्रं च वंचनम् ।।
आयुर्धनापमानं स्त्री न प्रकाश्यानि सर्वथा ।। ७९ ।।
नवैतानि प्रकाश्यानि रहः पापमकुत्सितम् ।।
प्रायोग्यमृणशुद्धिश्च सान्वयः क्रयविक्रयौ ।।
कन्यादानं गुणोत्कर्षो नान्यत्केनापि कुत्रचित् ।। 4.1.40.८० ।।
पात्र मित्र विनीतेषु दीनानाथोपकारिषु ।।

मातापितुगुरूष्वेतन्नवकं दत्तमक्षयम् ।। ८१ ।।

निष्फलं नवसूत्सृष्टं चाटचारणतस्करे ।।

कुवैद्ये कितवे धूर्ते शठे मल्ले च बंदिनि ।। ८२ ।।

आपस्त्वपि न देयानि नववस्तूनि सर्वथा ।।

अन्वये सति सर्वस्वं दारांश्च शरणागतान् ।। ८३ ।।

न्यासाधीकुलवृत्तिं च निक्षेपं स्त्रीधनं सुतम्।।

यो ददाति स मूढात्मा प्रायश्चित्तैर्विशुध्यति ।। ८४ ।।

एतन्नवानां नवकं ज्ञात्वा प्रियमवाप्नुयात् ।।

अन्यच्च नवकं वच्मि सर्वेषां स्वर्गमार्गदम् ।। ८५ ।।

सत्यं शौचमहिंसा च क्षांतिर्दानं दया दमः ।।

अस्तेयमिंद्रियाकोचः सर्वेषां धर्मसाधनम् ।। ८६ ।।

अभ्यस्य नवतिं चैतां स्वर्गमार्गप्रदीपिकाम्।।

सतामभिमतां पुण्यां गृहस्थो नावसीदति ।। ८७ ।।

जिह्वा भार्या सुतो भ्राता मित्र दास समाश्रिताः ।।

यस्यैते विनयाढ्याश्च तस्य सर्वत्र गौरवम्।। ८८ ।।

पानं दुर्जन संसर्गः पत्या च विरहोटनम् ।।

स्वप्नोन्यगृहवासश्च नारीणां दूषणानि षट् ।।८९।।

समर्घं धान्यमुद्धृत्य महर्घं यः प्रयच्छति।।

स हि वार्धुषिको नाम तस्यान्नं नैव भक्षयेत् ।। ।।4.1.40.९०।।

अग्रे माहिषिकं दृष्ट्वा मध्ये च वृषलीपतिम्।।

अंते वार्धुषिकं चैव निराशाः पितरो गताः ।। ९१ ।।

महिषीत्युच्यते नारी या च स्याद्व्यभिचारिणी ।।

तां दुष्टां कामयेद्यस्तु स वै माहिषिकः स्मृतः ।।९२।।

स्व वृषं या परित्यज्य परवृषे वृषायते।।

वृषली सा हि विज्ञेया न शूद्री वृषली भवेत् ।। ९३ ।।

यावदुष्णं भवत्यन्नं यावन्मौनेन भुज्यते ।।

तावदश्नंति पितरो यावन्नोक्ता हविर्गुणाः ।। ९४ ।।

विद्याविनयसंपन्ने श्रोत्रिये गृहमागते ।।

क्रीडंत्यौषधयः सर्वा यास्यामः परमां गतिम् ।। ९५।।

भ्रष्टशौचवताचारे विप्रे वेदविवर्जिते ।।

रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ।। ९६ ।।

यस्य कोष्ठगतं चान्नं वेदाभ्यासेन जीर्यति ।।

स तारयति दातारं दशपूर्वान्दशापरान् ।। ९७ ।।

न स्त्रीणां वपनं कार्यं न च गाः समनुव्रजेत् ।।

न च रात्रौ वसेद्गोष्ठे न कुर्याद्वैदिकीं श्रुतिम् ।। ९८ ।।

सर्वान्केशान्समुद्धृत्य च्छेदयेदंगुलद्वयम् ।।

एवमेव तु नारीणां शिरसो मुंडनं भवेत् ।। ९९ ।।

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।।

अकारयित्वा वपनं प्रायश्चित्तं विनिर्दिशेत् ।। ।। 4.1.40.१०० ।।

केशानां रक्षणार्थाय द्विगुणं व्रतमादिशेत् ।।

द्विगुणा दक्षिणा देया ब्राह्मणे वेदपारगे ।। १ ।।

योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।।

अन्नं तस्य न भोक्तव्यं वृथा पाको हि स स्मृतः ।। २ ।।

दाराग्निहोत्र दीक्षां च कुरुते योऽग्रजे स्थिते ।।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ।। ३ ।।

परिवित्तिः परिवेत्ता यया च परिविद्यते ।।

सर्वे ते नरकं यांति दातृयाजकपंचमाः ।। ४ ।।

क्लीबे देशांतरस्थे च मूके प्रव्रजिते जडे ।।

कुब्जे खर्वे च पतिते न दोषः परिवेदने ।। ५ ।।

वेदाक्षरणि यावंति नियुंज्यादर्थकारणे ।।

तावतीर्वै भ्रूणहत्या वेदविक्रयकृल्लभेत् ।। ६ ।।

यस्तु प्रव्रजितो भूत्वा सेवते मैथुनं पुनः ।।

षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ।। ७ ।।

शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम् ।।

शूद्राद्विद्यागमः कश्चिज्ज्वलंतमपि पातयेत् ।। ८ ।।

शूद्रादाहृत्य निर्वापं ये पचंत्यबुधा द्विजाः ।।

ते यांति नरकं घोरं ब्रह्मतेजोविवर्जिताः ।। ९ ।।

माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् ।।

हस्तदत्तानि भुक्तानि दिनमेकमभोजनम् ।। ।। 4.1.40.११० ।।

हस्तदत्ताश्च ये स्नेहा लवणं व्यजनानि च ।।

दातारं नोपतिष्ठंते भोक्ता भुंक्ते तु किल्बिषम् ।। ११ ।।

आयसेनैव पात्रेण यदन्नमुपदीयते ।।

भोक्ता तद्विट्समं भुंक्ते दाता च नरकं व्रजेत् ।। १२ ।।

अंगुल्या दंतकाष्ठं च प्रत्यक्षलवणं च यत् ।।

मृत्तिकाभक्षणं यच्च समं गोमांसभक्षणैः ।। १३ ।।

पानीयं पायसं भैक्षं घृतं लवणमेव च ।।

हस्तदत्तं न गृह्णीयात्तुल्यगोमांसभक्षणैः ।। १४ ।।

अग्रतो निवसेन्मूर्खो दूरतश्च गुणान्वितः ।।

गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ।।१५।।

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।।

ज्वलंतमग्निमुत्सृज्य नहि भस्मनि हूयते ।। १६ ।।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।।

भोजने चैव दाने च दहेदासप्तमं कुलम् ।। १७ ।।

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।।

प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत् ।।१८।।

देवद्रव्यविभागेन ब्रह्मस्व हरणेन च ।।

कुलान्याशु विनश्यंति ब्राह्मणातिक्रमेण च ।। १९ ।।

मा देहीति च यो ब्रूयाद्गवाग्निब्राह्मणेषु च ।।

तिर्यग्योनिशतं गत्वा चांडालेष्वभिजायते ।। 4.1.40.१२० ।।

वाचा यच्च प्रतिज्ञातं कर्मणानोपपादितम् ।।

ऋणं तद्धर्मसंयुक्तमिहलोके परत्र च ।। २१ ।।

विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।।

यज्ञशेषोऽमृतंभुक्तशेषं तु विघसं विदुः ।। २२ ।।

सव्यादंसात्परिभ्रष्टे नाभिदेशे व्यवस्थिते ।।

वस्त्रे स एकवासास्तं देवे पित्र्ये च वर्जयेत् ।। २३ ।।

यदेव तर्पयत्यद्भिः पितॄन्स्नात्वा द्विजोत्तमः ।।

तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ।। २४ ।।

हस्तौ प्रक्षाल्य गंडूषं यः पिबेद्भोजनोत्तरम्।।

दैवं पित्र्यं तथात्मानं त्रयं स उपघातयेत् ।। १५ ।।

गणान्नं गणिकान्नं च यदन्नं ग्रामयाजके ।।

स्त्रीणां प्रथमगर्भेषु भुक्त्वा चांद्रायणं चरेत ।। २६ ।।

पक्षे वा यदि वा मासे यस्य गेहेत्ति न द्विजः ।।

भुक्त्वा दुरात्मनस्तस्य चरेच्चांद्रायणव्रतम्।। २७ ।।

सत्रिणां दीक्षितानां च यतीनां ब्रह्मचारिणाम् ।।

एतेषां सूतकं नास्ति ऋत्विजां कर्मकुर्वताम् ।। २८ ।।

अजीर्णेऽभ्युदिते वाते श्मश्रुकर्मणि मैथुने ।।

दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ।। २९ ।।

चैत्यवृक्षं चितिं यूपं शिवनिर्माल्यभोजिनम् ।।

वेदविक्रयिणं स्पृष्ट्वा सचैलो जलमाविशेत् ।। 4.1.40.१३० ।।

अग्न्यगारे गवां गोष्ठे देव ब्राह्मणसन्निधौ ।।

स्वाध्याये भोजने पाने पादुके वै विसर्जयेत् ।। ३१ ।।

खलक्षेत्रगतं धान्यं कूपवापीषु यज्जलम् ।।

अग्राह्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ।। ३२ ।।

यद्वेष्टितशिरा भुंक्ते यो भुंक्ते दक्षिणामुखः ।।

सोपानत्कश्च यद्भुंक्ते तद्वै रक्षांसि भुंजते ।। ३३ ।।

यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः ।।

हरंति रसमन्नस्य मंडलेन विवर्जितम् ।।३४।।

ब्रह्माद्याश्च सुराः सर्वे वसिष्ठाद्या महर्षयः ।।

मंडलं चोपजीवंति ततः कुर्वीत मंडलम् ।। ३५ ।।

ब्राह्मणे चतुरस्रं स्यात्त्र्यस्रं वै बाहुजन्मनः ।।

वर्तुलं च विशः प्रोक्तं शूद्रस्याभ्युक्षणं स्मृतम् ।। ३६ ।।

नोत्संगे भोजनं कृत्वा नो पाणौ नैव कर्पटे ।।

नासनेन च शय्यायां भुंजीत न मलार्दितः ।। ३७ ।।

धर्मशास्त्र रथारूढा वेदखड्गधरा द्विजाः ।।

क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ।। ३८ ।।

रात्रौ धाना दधियुतं धर्मकामो न भक्षयेत् ।।

अश्नतो धर्महानिः स्याद्व्याधिभिश्चोपपीड्यते ।। ३९ ।।

फाणितं गोरसं तोयं लवणं मधुकांजिकम् ।।

हस्तेन ब्राह्मणो दत्त्वा कृच्छ्रं चांद्रायणं चरेत् ।। 4.1.40.१४० ।।

गंधाभरणमाल्यानि यः प्रयच्छति धर्मवित् ।।

ससुगंधिः सदा हृष्टो यत्रयत्रोपजायते ।। ४१ ।।

नीलीरक्तं तु यद्वस्त्रं दूरतः परिवर्जयेत् ।।

स्त्रीणां क्रीडार्थसंयोगे शयनीयेन दुष्यति ।। ४२ ।।

पालनाद्विक्रयाच्चैव तद्वृत्तेरुपजीवनात् ।।

अपवित्रो भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ।। ४३ ।।

स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।।

वृथा तस्य महायज्ञा नीली वासो बिभर्ति यः ।। ४४ ।।

नीलीरक्तं यदावस्त्रं विप्रः स्वांगेषु धारयेत् ।।

तं तु संततिसंख्याके नरके स वसेद्ध्रुवम् ।। ४५ ।।

अहोरात्रोषितो भूत्वा पंचगव्येन शुध्यति ।। ४६ ।।

नीलीरक्तेन वस्त्रेण यदन्नमुपकल्पयेत् ।।

भोक्ता विष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ।। ४७ ।।

अमृतं ब्राह्मणस्यान्नं क्षत्त्रियान्नं पयः स्मृतम् ।।

वैश्यस्य चान्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ।। ४८ ।।

वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ।।

अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् ।। ४९ ।।

व्यवहारानुरूपेण न्यायेन तु यदर्जनम् ।।

क्षत्रियस्य पयस्तेन प्रजापालनतो भवेत् ।। 4.1.40.१५०

प्रहरानद्धवाहाद्यदन्नमुत्पाद्य यच्छति ।।

सीतायज्ञविधानेन वैश्यान्नं तेन संस्कृतम् ।। ५१ ।।

अज्ञानतिमिरांधस्य मद्यपानरतस्य च ।।
रुधिरं तेन शूद्रान्नं वेदमंत्रविवर्जितम् ।। ५२ ।।
न वृथा शपथं कुर्यात्स्वल्पेप्यर्थे नरोत्तमः ।।
वृथा हि शपथं कुर्वन्प्रेत्य चेह विनश्यति ।। ५३ ।।
कामिनीषु विवाहे च गवां भुक्ते धनक्षये ।।
ब्राह्मणाभ्युपपत्तौ च शपथैर्नास्ति पातकम् ।।५४।।
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।।
गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ।।५५।।
अग्निं वा हारयेदेनमप्सु चैनं निमज्जयेत् ।।
स्पर्शयेत्पुत्रदाराणां शिरांस्येनं च वा पृथक् ।। ५६ ।।
न यमं यममित्याहुरात्मा वै यम उच्यत ।।
आत्मा संयमितो येन तं यमः किं करिष्यति ।। ५७ ।।
न निस्त्रिंशस्तथा तीक्ष्णः फणी वा दुरतिक्रमः ।।
रिपुर्वा नित्यसंकुद्धो यथात्मा दुरधिष्ठितः ।। ५८ ।।
एकः क्षमावतां दोषो न द्वितीयः कथंचन ।।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ।। ५९ ।।
न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्या वसथप्रियस्य ।।
न भोजनाच्छादन तत्परस्य न लोकवित्त ग्रहणे रतस्य ।। 4.1.40.१६० ।।
एकांतशीलस्य सदैव तस्य सर्वेंद्रियप्रीति निवर्तकस्य ।।
स्वाध्याययोगे गतमानसस्य मोक्षो धुवं नित्यमहिंसकस्य ।। ६१ ।।
क्वैकांतशीलत्वमिहास्ति पुंसः क्व चेंद्रियप्रीतिनिवृत्तिरस्ति ।।
क्व योगयुक्तिः क्व च दैवतेज्या काश्यां विनैभिः सहजेन मुक्तिः ।।६२ ।।
विश्वेश संशीलनमेवयोगस्तपश्च विश्वेशपुरीनिवासः ।।
व्रतानि दानं नियमा यमाश्च स्नानं द्युनद्यां यदुदग्वहायाम् ।।६३।।
।। स्कंद उवाच ।। ।।
न्यायागतधनस्तत्त्वज्ञाननिष्ठोतिथिप्रियः ।।
श्राद्धकृत्सत्यवादी च गृहस्थोपीह मुच्यते ।।६४।।
दीनांधकृपणार्थिभ्यो दत्वान्नानि विशेषतः ।।

कृत्वा गार्ह्याणि कर्माणि गृहस्थः श्रेय आप्नुयात् ।। ६५ ।।

इत्थमाचरतां पुंसां काशीनाथः प्रसीदति ।।

काशीनाथप्रसादेन काशीप्राप्तिस्तु मोक्षकृत् ।। ६६ ।।

स सर्वतीर्थसुस्नातः स सर्वक्रतुदीक्षितः ।।

स दत्तसर्वदानस्तु काशी येन निषेविता ।। १६७ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे गृहस्थधर्माख्यानंनाम चत्वारिंशोध्यायः ।।४०।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४१

https://sa.wikisource.org/s/fvy
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम् ।।

वलीपलितसंयुक्तस्तृतीयाश्रममाविशेत् ।। १ ।।

अपत्यापत्यमालोक्य ग्राम्याहारान्विसृज्य च ।।

पत्नीं पुत्रेषु संत्यज्य पत्न्या वा वनमाविशेत् ।। २ ।।

वसानश्चर्मचीराणि साग्निर्मुन्यन्नवर्तनः ।।

जटी सायंप्रगे स्नायी श्मश्रुलोनखलोमभृत् ।।३।।

शाकमूलफलैर्वापि पंचयज्ञन्न हापयेत् ।।

अम्मूलफलभिक्षाभिरर्चयेद्भिक्षुकातिथीन् ।। ४ ।।

अनादाता च दाता च दांतः स्वाध्यायतत्परः ।।

वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ।। ५ ।।

मुन्यन्नैः स्वयमानीतैः पुरोडाशांश्च निर्वपेत् ।।

स्वयंकृतं च लवणं खादेत्स्नेहं फलोद्भवम् ।। ६ ।।

वर्जयेच्छेलुशिग्रू च कवकं पललं मधु ।।

मुन्यन्नमाश्विनेमासि त्यजेद्यत्पूर्वसंचितम् ।।७।।

ग्राम्याणि फलमूलानि फालजान्नं च संत्यजेत् ।।

दंतोलूखलको वा स्यादश्मकुट्टोथ वा भवेत् ।। ८ ।।

सद्यः प्रक्षालको वा स्यादथवा माससंचयी ।।

त्रिषड्द्वादशमासान्नफलमूलादिसंग्रही ।।९।।

नक्ताश्ये कांतराशी वा षष्ठकालाशनोपि वा ।।

चांद्रायणव्रती वा स्यात्पक्षभुग्वाथ मासभुक्।। ।।4.1.41.१०।।

वैखानस मतस्थस्तु फलमूलाशनोपि वा ।।

तपसा शोषयेद्देहं पितॄन्देवांश्च तर्पयेत् ।। ११ ।।

अग्निमात्मनि चाधाय विचरेदनिकेतनः ।।

भिक्षयेत्प्राणयात्रार्थं तापसान्वनवासिनः ।। १२ ।।

ग्रामादानीय वाश्नीयादष्टौ ग्रासान्वसन्वने ।।

इत्थं वनाश्रमी विप्रो ब्रह्मलोके महीयते ।। १३ ।।

अतिवाह्यायुषोभागं तृतीयमिति कानने ।।

आयुषस्तु तुरीयांशे त्यक्त्वा संगान्परिव्रजेत् ।। १४ ।।

ऋणत्रयमसंशोध्य त्वनुत्पाद्य सुतानपि ।।

तथा यज्ञाननिष्ट्वा च मोक्षमिच्छन्व्रजत्यधः ।। १५ ।।

मनागपि न भूतानां यस्मादुत्पद्यते भयम् ।।

सर्वभूतानि तस्येह प्रयच्छंत्यभयं सदा ।। १५ ।।

एक एव चरेन्नित्यमनग्निरनिकेतनः ।।

सिद्ध्यर्थमसहायः स्याद्ग्राममन्नार्थमाश्रयेत् ।।१७।।

जीवितं मरणं वाथ नाभिकांक्षेत्क्वचिद्यतिः ।।

कालमेव प्रतीक्षेत निर्देशं भृतको यथा।।१८।।

सर्वत्र ममता शून्यः सर्वत्र समतायुतः ।।

वृक्षमूलनिकेतश्च मुमुक्षुरिह शस्यते ।।१९।।

ध्यानं शौचं तथा भिक्षा नित्यमेकांतशीलता ।।

यतेश्चत्वारिकर्माणि पंचमं नोपपद्यते ।। 4.1.41.२० ।।

वार्षिकांश्चतुरोमासान्विहरेन्न यतिः क्वचित् ।।

बीजांकुराणां जंतूनां हिंसा तत्र यतो भवेत् ।। २१ ।।

गच्छेत्परिहरन्जन्तून्पिबेत्कं वस्त्रशोधितम्।।

वाचं वदेदनुद्वेगां न क्रुध्येत्केनचित्क्वचित् ।। २२ ।।

चरेदात्मसहायश्च निरपेक्षो निराश्रयः ।।

नित्यमध्यात्मनिरतो नीचकेश नखो वशी ।। २३ ।।

कुसुंभवासा दंडाढ्यो भिक्षाशी ख्यातिवर्जितः ।।

अलाबुदारुमृद्वेणु पात्रं शस्तं न पंचमम् ।। २४ ।।

न ग्राह्यं तैजसं पात्रं भिक्षुकेण कदाचन ।।

वराटके संगृहीते तत्रतत्र दिनेदिने ।।२५।।

गोसहस्रवधं पापं श्रुतिरेषा सनातनी ।।

हृदि सस्नेह भावेन चेद्द्रक्षेत्स्त्रियमेकदा ।। २६ ।।

कोटिद्वयं ब्रह्मकल्पं कुंभीपाकी न संशयः ।।

एककालं चरेद्भैक्षं न कुर्यात्तत्र विस्तरम् ।। २७ ।।

विधूमेसन्न मुसले व्यंगारे भुक्तवज्जने ।।

वृत्ते शरावसंपाते भिक्षां नित्यं चरेद्यतिः ।। २८ ।।

अल्पाहारो रहःस्थायी त्विंद्रियार्थेष्वलोलुपः ।।

रागद्वेषविर्निर्मुक्तो भिक्षुर्मोक्षाय कल्पते ।। २९ ।।

आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।।

किं तस्यानेकतंत्रेण कृतकृत्यः स जायते ।। 4.1.41.३० ।।

संचितं यद्ग्रहस्थेन पापमामरणांतिकम् ।।

निर्धक्ष्यति हि तत्सर्वमेकरात्रोषितो यतिः ।।३१।।

दृष्ट्वा जराभिभवनमसह्यं रोगपीडितम् ।।

देहत्यागं पुनर्गर्भं गर्भक्लेशं च दारुणम् ।।३२।।

नानायोनि निवासं च वियोगं च प्रियैः सह ।।

अप्रियैः सह संयोगमधर्माद्दुःखसंभवम् ।। ३३ ।।

पुनर्निरयसंवासंनानानरकयातनाः ।।

कर्मदोषसमुद्भूता नृणांगतिरनेकधा ।। ३४ ।।

देहेष्वनित्यतां दृष्ट्वा नित्यता परमात्मनः ।।

कुर्वीत मुक्तये यत्नं यत्रयत्राश्रमे रतः ।। ३५ ।।

करपात्रीति विख्याता भिक्षापात्रविवर्जिता ।।

तेषां शतगुणं पुण्यं भवत्येव दिनेदिने ।। ३६ ।।

आश्रमांश्चतुरस्त्वेवं क्रमादासेव्य पंडितः ।।

निर्द्वंद्वस्त्यक्तसंगश्च ब्रह्मभूयाय कल्पते ।। ३७ ।।

असंयतः कुबुद्धीनामात्मा बंधाय कल्पते ।।

धीमद्भिः संयतः सोपि पदं दद्यादनामयम् ।।३८।।

श्रुति स्मृति पुराणं च विद्योपनिषदस्तथा ।।

श्लोकाः मंत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ।। ३९ ।।

वेदानुवचनं ज्ञात्वा ब्रह्मचर्य तपो दमः ।।

श्रद्धोपवासः स्वातंत्र्यमात्मनोज्ञानहेतवः ।। 4.1.41.४० ।।

स हि सर्वैर्विजिज्ञास्य आत्मैवाश्रमवर्तिभिः ।।
श्रोतव्यस्त्वथ मंतव्यो द्रष्टव्यश्च प्रयत्नतः ।।४१।।
आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते नहि।।
स च योगश्चिरं कालमभ्यासादेव सिध्यति ।। ४२ ।।
नारण्यसंश्रयाद्योगो न नानाग्रंथ चिंतनात्।।
न दानैर्न व्रतैर्वापि न तपोभिर्न वा मखैः ।। ४३ ।।
न च पद्मासनाद्योगो न वा घ्राणाग्रवीक्षणात् ।।
न शौचे न न मौनेन न मंत्राराधनैरपि ।। ४४ ।।
अभियोगात्सदाभ्यासात्तत्रैव च विनिश्चयात् ।।
पुनःपुनरनिर्वेदात्सिध्येद्योगो न चान्यथा ।। ४५ ।।
आत्मक्रीडस्य सततं सदात्ममिथुनस्य च ।।
आत्मन्येव सु तृप्तस्य योगसिद्धिर्न दूरतः ।। ४६ ।।
अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति ।।
आत्मारामः स योगींद्रो ब्रह्मीभूतो भवेदिह ।। ४७ ।।
संयोगस्त्वात्ममनसोर्योग इत्युच्यते बुधैः ।।
प्राणापानसमायोगो योग इत्यपि कैश्चन ।। ४८ ।।
विषयेंद्रिय संयोगो योग इत्यप्यपंडितैः ।।
विषयासक्तचित्तानां ज्ञानं मोक्षश्च दूरतः ।। ४९ ।।
दुर्निवारा मनोवृत्तिर्यावत्सा न निवर्तते ।।
किं वदंत्यपियोगस्य तावन्नेदीयसी कुतः ।। 4.1.41.५० ।।
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञे परमात्मनि ।।
एकीकृत्य विमुच्येत योगयुक्तः स उच्यते ।। ५१ ।।
बहिर्मुखानि सर्वाणि कृत्वा खान्यंतराणि वै ।।
मनस्येवेंद्रियग्रामं मनश्चात्मनि योजयेत् ।। ५२ ।।
सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।।
एतद्ध्यानं च योगश्च शेषोन्यो ग्रंथविस्तरः ।। ५३ ।।
यन्नास्ति सर्वलोकेषु तदस्तीति विरुध्यते ।।
कथ्यमानं तदन्यस्य हृदयेनावतिष्ठते ।। ५४ ।।

स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्री सुखं यथा ।।

अयोगी नैव तद्वेत्ति जात्यंध इव वर्तिकाम् ।। ५५ ।।

नित्याभ्यसनशीलस्य स्वसंवेद्यं हि तद्भवेत् ।।

तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ।। ५६ ।।

क्षणमप्येकमुदकं यथा न स्थिरतामियात् ।।

वाताहतं यथा चित्तं तस्मात्तस्य न विश्वसेत् ।। ५७ ।।

अतोऽनिलं निरुंधीत चित्तस्य स्थैर्य हेतवे ।।

मरुन्निरोधनार्थाय षडंगं योगमभ्यसेत् ।। ५८ ।।

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।।

ध्यानं समाधिरेतानि योगांगानि भवंति षट् ।। ५९ ।।

आसनानीह तावंति यावंत्यो जीवयो नयः ।।

सिद्धासनमिदं प्रोक्तं योगिनो योगसिद्धिदम्।।4.1.41.६०।।

एतदभ्यसनान्नित्यं वर्ष्मदार्ढ्यमवाप्नुयात्।। ।। ६१ ।।

दक्षिणं चरणं न्यस्य वामोरूपरि योगवित् ।।

याम्योरूपरि वामं च पद्मासनमिदं विदुः ।। ६२ ।।

कराभ्यां धारयेत्पश्चादंगुष्ठौ दृढबंधवित्।।

भवेत्पद्मासनादस्मादभ्यासाद्दृढविग्रहः ।। ६३ ।।

अथवा ह्यासने यस्मिन्सुखमस्योपजायते ।।

स्वस्तिकादौ तदध्यास्य योगं युंजीत योगवित् ।। ६४ ।।

न तोयवह्निसामीप्ये न जीर्णारण्यगोष्ठयोः ।।

न दंशमशकाकीर्णे न चैत्ये न च चत्वरे ।। ६९ ।।

केशभस्मतुषांगार कीकसादि प्रदूषिते ।।

नाभ्यसेत्पूतिगंधादौ न स्थाने जनसंकुले ।।६६ ।।

सर्वबाधाविरहिते सर्वेंद्रियसुखावहे ।।

मनःप्रसादजनने स्रग्धूपामोदमोदिते ।। ६७ ।।

नातितृप्तः क्षुधार्तो न न विण्मूत्रप्रबाधितः ।।

नाध्वखिन्नो न चिंतार्तो योगं युंजीत योगवित् ।। ।। ६८ ।।

ऊरुस्थोत्तानचरणः सव्येन्यस्योत्तरं करम् ।।

उत्तानं किंचिदुन्नम्य वक्त्रं विष्टभ्य चोरसा ।। ६९ ।।

निमीलिताक्षः सत्त्वस्थो दंतैर्दंतान्न संस्पृशेत् ।।

तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ।। 4.1.41.७० ।।

सन्नियम्यैंद्रियग्रामं नातिनीचोच्छ्रितासनः ।।

मध्यमं चोत्तमं चाथ प्राणायाममुपक्रमेत् ।। ७१ ।।

चलेऽनिले चलं सर्वं निश्चले तत्र निश्चलम् ।।

स्थाणुत्वमाप्नुयाद्योगी ततोऽनिलनिरुंधनात् ।। ७२ ।।

यावद्देहे स्थितः प्राणो जीवितं तावदुच्यते ।।

निर्गते तत्र मरणं ततः प्राणं निरुंधयेत् ।। ७३ ।।

यावद्बद्धो मरुद्देहे यावच्चेतो निराश्रयम् ।।

यावद्दृष्टिर्भुवोर्मध्ये तावत्कालभयं कुतः ।।७४।।

कालसाध्वसतोब्रह्मा प्राणायामं सदाचरेत् ।।

योगिनः सिद्धिमापन्नाः सम्यक्प्राणनियंत्रणात् ।। ७५ ।।

मंदो द्वादशमात्रस्तु मात्रा लघ्वक्षरा मता ।।

मध्यमो द्विगुणः पूर्वादुत्तमस्त्रिगुणस्ततः ।।७६।।

स्वेदं कंपं विषादं च जनयेत्क्रमशस्त्वसौ ।।

प्रथमेन जयेत्स्वेदं द्वितीयेन तु वेपथुम् ।।७७।।

विषादं हि तृतीयेन सिद्धः प्राणोथ योगिनः ।।

भवेत्क्रमात्सन्निरुद्धः सिद्धः प्राणोथ योगिना ।।

क्रमेण सेव्यमानोसौ नयते यत्र चेच्छति ।। ।। ७८ ।।

हठान्निरुद्धप्राणोयं रोमकूपेषु निःसरेत् ।।

देहंविदारयत्येष कुष्ठादिजनयत्यपि ।। ७९ ।।

तत्प्रत्याययितव्योसौ क्रमेणारण्यहस्तिवत् ।।

वन्यो गजो गजारिर्वा क्रमेण मृदुतामियात् ।। 4.1.41.८० ।।

करोति शास्तृनिर्देशं न च तं परिलंघयेत् ।।

तथा प्राणो हृदिस्थोयं योगिनाक्रमयोगतः ।।

गृहीतः सेव्यमानस्तु विश्रंभमुपगच्छति ।। ८१ ।।

षट्त्रिंशदंगुलो हंसः प्रयाणं कुरुते बहिः ।।

सव्यापसव्यमार्गेण प्रयाणात्प्राण उच्यते ।। ८२ ।।

शुद्धिमेति यदा सर्वं नाडीचक्र मनाकुलम् ।।

तदैव जायते योगी क्षमः प्राणनिरोधने ।। ८३ ।।

दृढासनो यथाशक्ति प्राणं चंद्रेण पूरयेत् ।।

रेचयेदथ सूर्येण प्राणायामोयमुच्यते ।। ८४ ।।

स्रवत्पीयूषधारौघं ध्यायंश्चंद्रसमन्वितम् ।।

प्राणायामेन योगींद्रः सुखमाप्नोति तत्क्षणात् ।। ८५ ।।

रविणा प्राणमाकृष्य पूरयेदौदरीं दरीम् ।।

कुंभयित्वा शनैः पश्चाद्योगी चंद्रेण रेचयेत् ।। ८६ ।।

ज्वलज्ज्वलनपुंजाभं शीलयन्नुष्मगुं हृदि ।।

अनेन याम्यायामेन योगींद्रः शर्मभाग्भवेत् ।। ८७ ।।

इत्थं मासत्रयाभ्यासादुभयायामसेवनात् ।।

शुद्धनाडीगणो योगी सिद्धप्राणोभिधीयते ।। ८८ ।।

यथेष्टं धारणं वायोरनलस्य प्रदीपनम् ।।

नादाभिव्यक्तिरारोग्यं भवेन्नाडीविशोधनात् ।। ८९ ।।

प्राणोदेहगतोवायुरायामस्तन्निबंधनम् ।।

एकश्वासमयी मात्रा प्राणायामो निरुच्यते ।। 4.1.41.९० ।।

प्राणायामेऽधमे घर्मः कंपो भवति मध्यमे ।।

उत्तिष्ठेदुत्तमे देहो बद्धपद्मासनो मुहुः ।। ९१ ।।

प्राणायामैर्दहेद्दोषान्प्रत्याहारेण पातकम् ।।

मनोधैर्यं धारणया ध्यानेनेश्वरदर्शनम् ।।९२।।

समाधिना लभेन्मोक्षं त्यक्त्वा धर्मं शुभाशुभम् ।।

आसनेन वपुर्दार्ढ्यं षडंगमिति कीर्तितम् ।। ९३ ।।

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः ।।

प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्तिता ।। ९४ ।।

भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम् ।।

ध्यानद्वादशकेनैव समाधिरभिधीयते ।। ९५ ।।

समाधेः परतो ज्योतिरनंतं स्वप्रकाशकम् ।।

तस्मिन्दृष्टे क्रियाकांडं यातायातं निवर्तते ।। ९६ ।।

पवने व्योमसंप्राप्ते ध्वनिरुत्पद्यते महान् ।।

घंटादीनां प्रवाद्यानां ततः सिद्धिरदूरतः ।। ९७ ।।

प्राणायामेन युक्तेन सर्वव्याधिक्षयोभवेत् ।।

अयुक्ताभ्यासयोगेन सर्वव्याधिसमुद्भवः ।। ९८ ।।

हिक्का श्वासश्च कासश्च शिरः कर्णाक्षिवेदनाः ।। .

भवंति विविधा दोषाः पवनस्य व्यतिक्रमात् ।। ९९ ।।

युक्तं युक्तं त्यजेद्वायुं युक्तंयुक्तं च पूरयेत् ।।

युक्तंयुक्तं च बध्नीयादित्थं सिध्यति योगवित् ।। 4.1.41.१०० ।।

इंद्रियाणां हि चरतां विषयेषु यदृच्छया ।।

यत्प्रत्याहरणं युक्त्या प्रत्याहारः स उच्यते ।। १ ।।

प्रत्याहरति यः खानि कूर्मोंगानीव सर्वतः ।।

प्रत्याहृति विधानेन स स्याद्विगतकल्मषः ।। २ ।।

नाभिदेशे वसेद्भानुस्तालुदेशे च चंद्रमाः ।।

वर्षत्यधोमुखश्चंद्रो ग्रसेदूर्ध्वमुखो रविः ।। ३ ।।

करणं तच्च कर्तव्यं येन सा प्राप्यते सुधा ।।

ऊर्ध्वनाभिरधस्तालुरूर्ध्वं भानुरधःशशी ।।

करणं विपरीताख्यमभ्यासादेव जायते ।। ४ ।।

काकचंचुवदास्येन शीतलं शीतलं पिबेत् ।।

प्राणं प्राणविधानज्ञो योगी भवति निर्जरः ।।५।।

रसनां तालुविवरे निधायोर्ध्वमुखोऽमृतम् ।।

धयन्निर्जरतां गच्छेदाषण्मासान्न संशयः ।। ६ ।।

ऊर्ध्वजिह्वः स्थिरो भूत्वा सोमपानं करोति यः ।।

मासार्धेन न संदेहो मृत्युं जयति योगवित् ।। ७ ।।

संपीड्य रसनाग्रेण राजदंतबिलं महत् ।।

ध्यात्वा सुधामयीं देवीं षण्मासेन कविर्भवेत् ।। ८ ।।

अमृतापूर्णदेहस्य योगिनो द्वित्रिवत्सरात् ।।

ऊर्ध्वं प्रवर्तते रेतो ह्यणिमादिगुणोदयम्।। ९ ।।

नित्यं सोमकलापूर्णं शरीरं यस्य योगिनः ।।

तक्षकेणापि दष्टस्य विषं तस्य न सर्पति।।4.1.41.११०।।

आसनेन समायुक्तः प्राणायामेन संयुतः ।।

प्रत्याहारेण संपन्नो धारणामथ चाभ्यसेत् ।। ११ ।।

हृदये पंचभूतानां धारणां यः पृथक्पृथक् ।।

मनसो निश्चलत्वेन धारणा साभिधीयते ।। १२ ।।

हरितालनिभां भूमिं स लकारां सवेधसम् ।।
चतुष्कोणां हृदि ध्यायेदेषा स्यात्क्षितिधारणा ।। १३ ।।
कंठेंऽबुतत्त्वमर्धेंदुनिभं विष्णुसमन्वितम् ।।
वकारबीजं कुंदाभं ध्यायन्नंबुजयेदिति ।। १४ ।।
तालुस्थमिंद्रगोपाभं त्रिकोणं रेफसंयुतम् ।।
रुद्रेणाधिष्ठितं तेजो ध्यात्वा वह्निं जयेदिति ।। १५ ।।
वायुतत्त्वं भ्रुवोर्मध्ये वृत्तमंजनसन्निभम् ।।
यंबीजमीशदैवत्यं ध्यायन्वायुं जयेदिति ।। १६ ।।
आकाशं च मरीचिवारिसदृशं यद्ब्रह्मरंध्रस्थितं यन्नाथेन सदाशिवेन सहितं शांतं हकाराक्षरम् ।।
प्राणं तत्र विनीय पंचघटिकं चिंतान्वितं धारयेदेषा मोक्षकपाटपाटनपटुः प्रोक्ता नभोधारणा ।। १७ ।।
स्तंभनीप्लावनीचैव दहनीभ्रामणी तथा ।।
शमनी च भवंत्येता भूतानां पंच धारणाः ।। १८ ।।
ध्यै चिंतायां स्मृतो धातुश्चिंता तत्त्वे सुनिश्चला ।।
एतद्ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा ।। १९ ।।
सगुणं वर्णभेदेन निर्गुणं केवलं मतम् ।।
समंत्रं सगुणं विद्धि निर्गुणं मंत्रवर्जितम् ।। 4.1.41.१२० ।।
अंतश्चेतो बहिश्चक्षुरवस्थाप्य सुखासनम्।।
समत्वं च शरीरस्य ध्यानमुद्रातिसिद्धिदा ।। २१ ।।
नाश्वमेधेन तत्पुण्यं न च वै राजसूयतः ।।
यत्पुण्यमेकध्यानेन लभेद्योगी स्थिरासनः ।। २२ ।।
शब्दादीनां च तन्मात्रा यावत्कर्णादिषु स्थिता ।।
तावदेव स्मृतं ध्यानं स्यात्समाधिरतः परम् ।। २३ ।।
धारणा पंचनाडीका ध्यानं स्यात्षष्टिनाडिकम् ।।
दिनद्वाशकेन स्यात्समाधिरिह भण्यते ।। २४ ।।
जलसैंधवयोः साम्यं यथा भवति योगतः ।।
तथात्ममनसोरैक्यं समाधिरिह भण्यते ।। २५ ।।
यदा संक्षीयते प्राणो मानसं च प्रलीयते ।।
तदा समरसत्वं यत्स समाधिरिहोच्यते ।। २६ ।।
यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः ।।
सनष्टसर्वसंकल्पः समाधिरभिधीयते ।। २७ ।।
नात्मानं न परं वेत्ति न शीतं नोष्ममेव च ।।
समाधियुक्तो योगींद्रो न सुखं न सुखेतरत् ।। २८ ।।
काल्यते नैव कालेन लिप्यते नैव कर्मणा ।।

भिद्यते न च शस्त्रास्त्रै योगी युक्तः समाधिना ।। २९ ।।
युक्ताहारविहारश्च युक्तचेष्टो हि कर्मसु ।।
युक्तनिद्रावबोधश्च योगी तत्त्वं प्रपश्यति ।। 4.1.41.१३० ।।
तत्त्वविज्ञानमानंदं ब्रह्म ब्रह्मविदो विदुः ।।
हेतुदृष्टांत रहितं वाङ्मनोभ्यामगोचरम् ।। ३१ ।।
तत्र योगी निरालंबे निरातंके निरामये ।।
षडंगयोगविधिना परेब्रह्मणि लीयते।।३२।।
यथा घृते घृतं क्षिप्तं घृतमेव हि तद्भवेत् ।।
क्षीरेक्षीरं तथा योगी तत्र तन्मयतां व्रजेत् ।। ३३ ।।
अनसंजातपानीयैर्विदध्यादंगमर्दनम् ।।
त्यजेत्कदुष्णं लवणं क्षीरभोजी सदा भवेत् ।। ३४ ।।
ब्रह्मचारी जितक्रोधो जितलोभो विमत्सरः ।।
अब्दमित्थं सदाभ्यासात्स योगीति निगद्यते ।। ३५ ।।
महामुद्रां नभोमुद्रामुड्डीयानं जलंधरम् ।।
मूलबंधं तु यो वेत्ति स योगी योगसिद्धिभाक् ।। ३६ ।।
शोधनं नाडीजालस्य घटनं चंद्रसूर्ययोः ।।
रसानां शोषणं सम्यङ्महामुद्राभिधीयते ।। ३७ ।।
योनिं वामांघ्रिणाऽऽपीड्य कृत्वा वक्षस्थले हनुम् ।।
हस्ताभ्यां प्रसृतं पादं धारयेद्दक्षिणं चिरम् ।। ३८ ।।
प्राणेन कुक्षिमापूर्य चिरं संरेचयेच्छनैः ।।
एषा प्रोक्ता महामुद्रा महाघौघविनाशिनी ।। ३९ ।।
चंद्रांगे तु समभ्यस्य सूर्यांगे पुनरभ्यसेत्।।
यावत्तुल्या भवेत्संख्या ततो मुद्रां विसर्जयेत् ।। 4.1.41.१४० ।।
न हि पथ्यमपथ्यं वा रसाः सर्वेपि नीरसाः ।।
अपि घोरं विषं पीतं पीयूषमिवजीर्यति ।। ४१ ।।
क्षयकुष्ठगुदावर्त गुल्माजीर्णपुरोगमाः ।।
तस्य दोषाः क्षयं यांति महामुद्रां च योभ्यसेत् ।। ४२ ।।
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।।
भ्रुवोरंतर्गता दृष्टिर्मुद्रा भवति खेचरी ।। ४३ ।।
न पीड्यते शरौघेण न च लिप्येत कर्मणा ।।
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम् ।। ४४ ।।
चित्तं चरति खे यस्मा जिह्वा चरति खे गता ।।
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता ।। ४५ ।।

यावद्बिंदुः स्थितो देहे तावन्मुत्युभयं कुतः ।।
यावद्बद्धा नभोमुद्रा तावद्बिंदुर्न गच्छति ।। ४६ ।।
उड्डीनं कुरुते यस्मादहोरात्रं महाखगः ।।
उडीयानं ततः प्रोक्तं तत्र बंधो विधीयते ।। ४७ ।।
जठरे पश्चिमं तानं नाभेरूर्ध्वं च धारयेत् ।।
उड्डीयानो ह्ययं बंधो मृत्योरपि भयं त्यजेत् ।। ४८ ।।
बध्नाति हि शिराजालमधोगामि नभोजलम् ।।
एष जालंधरो बंधः कंठे दुःखौघनाशनः ।। ४९ ।।
जालंधरे कृते बंधे कंठसकोचलक्षणे ।।
न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ।।4.1.41.१५०।।
पार्ष्णिभागेन संपीड्य योनिमाकुंचयेद्गुदम्।।
अपानमूर्ध्वमाकृष्य मूलबंधो विधीयते।। ५१ ।।
अपानप्राणयोरैक्ये क्षयो मूत्रपुरीषयोः ।।
युवा भवति वृद्धोपि सततं मूलबंधनात् ।। ५२ ।।
प्राणापानवशो जीवः ऊर्द्ध्वाधः परिधावति ।।
वामदक्षिणमार्गेण चंचलो न स्थितिं लभेत् ।। ५३।।
गुणबद्धो यथा पक्षी गतोप्याकृष्यते पुनः ।।
गुणैर्बद्धस्तथा जीवः प्राणायामेन कृष्यते ।। ५४ ।।
अपानः कर्षति प्राणं प्राणोपानं च कर्षति ।।
ऊर्ध्वाधः संस्थितावेतौ संयोजयति योगवित् ।। ५५ ।।
हकारेण बहिर्याति सकारेण विशेत्पुनः।।
हंसहंसेत्यतो मंत्रं जीवो जपति सर्वदा ।। ५६ ।।
षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ।।
एतत्संख्यान्वितं मंत्रं जीवो जपति सर्वदा ।। ।। ५७ ।।
अजपा नाम गायत्री योगिनां मोक्षदायिनी ।।
अस्याः संकल्पमात्रेण नरः पापैः प्रमुच्यते ।। ५८ ।।
अंतराया भवंतीह योगिनो योगहानिदाः ।।
श्रूयते दूरगा वार्ता दूरस्थं दृश्यते पुरः ।। ५९ ।।
योजनानां शतं यातुं शक्तिःस्यान्निमिषार्धतः।।
अचिंतितानि शास्त्राणि कंठपाठी भवंति हि ।।4.1.41.१६०।।
धारणाश क्तिरत्युग्रा महाभारो लघुर्भवेत् ।।
क्षणं कृशः क्षणं स्थूलः क्षणमल्पः क्षणं महान् ।। ६१ ।।
परकायं प्रविशति तिरश्चां वेत्ति भाषितम् ।।

दिव्यगंधं तनौ धत्ते दिव्यां वाणीं प्रवक्ति च ।। ६२ ।।
प्रार्थ्यते दिव्यकन्याभिर्दिव्यं धारयते वपुः ।।
इत्यादयोंतरायाः स्युर्योगसंसिद्धिसूचकाः ।। ६३ ।।
यद्येभिरंतरायैर्न क्षिप्यतेऽस्येह मानसम् ।।
तदग्रे तत्समाप्नोति पदं ब्रह्मादि दुर्लभम् ।। ६४ ।।
यत्प्राप्य न निवर्तेत यत्प्राप्य न च शोचति ।।
तल्लभ्यते षडंगेन योगेन कलशोद्भव ।। ६५ ।।
एकेन जन्मना योगः कथमित्थं प्रसिध्यति ।।
ऋते च योगसंसिद्धेः कथं मुक्तिरिहाप्यते ।। ६६ ।।
उभे एव हि निर्वाणवर्त्मनी किल कुंभज ।।
किं वा काश्यां तनुत्यागः किं वा योगोयमीदृशः ।।६७।।
चंचलेंद्रियवृत्तित्वात्कलिकल्मषजृंभणात् ।।
अल्पायुषां तथा नृणां क्वेह योग महोदयः ।।६८।।
अतएव हि जंतूनां महोदयपदप्रदः ।।
सदैव स दयावार्धिः काश्यां विश्वेश्वरः स्थितः ।। ६९ ।।
काश्यां सुखेन कैवल्यं यथालभ्येत जंतुभिः ।।
योगयुक्त्याद्युपायैश्च न तथान्यत्र कुत्रचित् ।। 4.1.41.१७० ।।
काश्यां स्वदेहसंयोगः सम्यग्योग उदाहृतः ।।
मुच्यते नेह योगेन क्षिप्रमन्येन केनचित् ।। ७१ ।।
विश्वेश्वरो विशालाक्षी द्युनदीकालभैरवः ।।
श्रीमान्ढुंढिर्दंडपाणिः षडंगो योग एष वै ।। ७२ ।।
एतत्षडंगयो योगं नित्यं काश्यां निषेवते ।।
संप्राप्य योगनिद्रां स दीर्घाममृतमश्नुते ।। ७३ ।।
ओंकारः कृत्तिवासाश्च केदारश्च त्रिविष्टपः ।।
वीरेश्वरोथविश्वेशः षडंगोयमिहापरः ।। ७४ ।।
पादोदकासिसंभेद ज्ञानोदमणिकर्णिकाः ।।
षडंगोयं महायोगो ब्रह्मधर्मह्रदावपि ।। ७५ ।।
षडंगसेवनादस्माद्वाराणस्यां नरोत्तम ।।
न जातु जायते जंतुर्जननी जठरे पुनः ।। ७६ ।।
गंगास्नानं महामुद्रा महापातकनाशनी ।।
एतन्मुद्राकृताभ्यासोप्यमृतत्वमवाप्नुयात् ।।७७।।
काशीवीथिषु संचारो मुद्रा भवति खेचरी।।
खेचरो जायते नूनं खेचर्या मुद्रयानया ।।७८।।

उड्डीय सर्वतो देशाद्यानं वाराणसीं प्रति ।।
उङ्डीयानो महाबंध एष मुक्त्यै प्रकल्पते ।। ७९ ।।
जलस्य धारणं मूर्ध्नि विश्वेश स्नानजन्मनः ।।
एष जालंधरो बंधः समस्तसुरदुर्लभः ।। 4.1.41.१८० ।।
वृतो विघ्नशतेनापि यन्न काशीं त्यजेत्सुधीः ।।
मूलबंधः स्मृतो ह्येष दुःखमूलनिकृंतनः ।। ८१ ।।
इति योगः समाख्यातो मया ते द्विविधो मुने ।।
सषडंगः समुद्रश्च मुक्तये शंभुभाषितः ।। ८२ ।।
यावन्नेंद्रिय वैक्लव्यं यावद्व्याधिर्न बाधते ।।
यावत्कालविलंबोस्ति तावद्योगरतो भवेत् ।। ८३ ।।
उभयोर्योगयोर्मध्ये काशीयोगोयमुत्तमः ।।
काशीयोगं समभ्यस्य प्राप्नुयाद्योगमुत्तमम् ।। ८४ ।।
आधिव्याधिसहायिन्या जरया मृत्युलिंगया ।।
कालं निकटतो ज्ञात्वा काशीनाथं समाश्रयेत ।। ८५ ।।
काशीनाथं समाश्रित्य कुतः कालभयं नृणाम् ।।
क्रुद्धोपि जीवहृत्कालस्तच्च काश्यां सुमंगलम् ।। ८६ ।।
आतिथ्येनेहसियथा प्रतीक्षेतातिथिं कृती ।।
काश्यां कालं तथायांतं भाग्यवान्संप्रतीक्षते ।। ८७ ।।
कलिः कालः कृतंकर्म त्रिकंटकमितीरितम् ।।
एतत्त्रयं न प्रभवेदानंदवनवासिनाम् ।।८८।।
अन्यत्रातर्कितः कालः कलयिष्यत्यसंशयम् ।।
कालादभयमिच्छेच्चेत्ततः काशीं समाश्रयेत् ।। ८९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे योगाख्यानं नामैकचत्वारिंशोऽध्यायः ।।४१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४२

https://sa.wikisource.org/s/fvz
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्तिरुवाच ।। ।।

कथं निकटतः कालो ज्ञायते हरनंदन ।।

तानि चिह्नानि कतिचिद्ब्रूहि मे परिपृच्छतः ।। १ ।।

।। कुमार उवाच ।। ।।

वदामि कालचिह्नानि जायंते यानि देहिनाम् ।।

मृत्यौ निकटमापन्ने मुने तानि निशामय ।। २।।

याम्यनासापुटे यस्य वायुर्वाति दिवानिशम् ।।

अखंडमेव तस्यायुः क्षयत्यब्दत्रयेण हि ।। ३ ।।

अहोरात्रं त्र्यहोरात्रं रविर्वहति संततम् ।।

अब्दमेकं च तस्येह जीवनावधिरुच्यते ।। ४ ।।

वहेन्नासापुटयुगे दशाहानि निरंतरम् ।।

वातश्चेत्सह संक्रांतिस्तया जीवेद्दिनत्रयम् ।। ५ ।।

नासावर्त्म द्वयं हित्वा मातरिश्वा मुखाद्वहेत् ।।

शंसेद्दिनद्वयादर्वाक्प्रयाणं तस्य चाध्वनि ।। ६ ।।

अकस्मादेवयत्काले मृत्युः सन्निहितो भवेत् ।।

चिंतनीयः प्रयत्नेन स कालो मृत्युभीरुणा ।। ७ ।।

सूर्ये सप्तमराशिस्थे जन्मर्क्षस्थे निशाकरे ।।

पौष्णः स कालो द्रष्टव्यो यदा याम्ये रविर्वहेत् ।। ८ ।।

अकस्माद्वीक्षते यस्तु पुरुषं कृष्णपिंगलम् ।।

तस्मिन्नेव क्षणेऽरूपं स जीवेद्वत्सरद्वयम् ।। ९ ।।

यस्य बीजं मलं मूत्रं क्षुतं मूत्रं मलं तु वा ।।

इहैकदा पतेद्यस्य अब्दं तस्यायुरिष्यते ।। 4.1.42.१० ।।

इंद्रनीलनिभं व्योम्नि नागवृंदं य ईक्षते ।।

इतस्ततः प्रसृमरं षण्मासं न स जीवति ।।।१।।

व्यभ्रेह्नि वारिपूर्णास्यः पृष्ठीकृत्य दिवाकरम् ।।

फूत्कृत्याश्विंद्रचापं न पश्येत्षण्मासजीवितः ।। १२ ।।

अरुंधतीं ध्रुवं चैव विष्णोस्त्रीणिपदानि च ।।

आसन्नमृत्युर्नोपश्येच्चतुर्थं मातृमंडलम् ।।१३।।

अरुंधती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते ।।

विष्णोः पदानि भ्रूमध्ये नेत्रयोर्मातृमंडलम् ।। १४ ।।

वेत्ति नीलादिवर्णस्य कटम्लादिरसस्यहि ।।

अकस्मादन्यथाभावं षण्मासेन स मृत्युभाक् ।।१५।।

षण्मासमृत्योर्मर्त्यस्य कंठोष्ठरसना रदाः ।।

शुष्यंति सततं तद्वद्विच्छायास्तालुपंचमाः ।।१६।।

रेतः करजनेत्रांता नीलिमानं भजंति चेत् ।।

तर्हि कीनाशनगरीं षष्ठेमासि व्रजेन्नरः ।। १७ ।।

संप्रवृत्ते निधुवने मध्यैंते क्षौति चेन्नरः ।।

निश्चितं पंचमे मासि धर्मराजातिथिर्भवेत् ।। १८ ।।

द्रुतमारुह्यशरठस्त्रिवर्णो यस्य मस्तके ।।

प्रयाति याति तस्यायुः षण्मासेन परिक्षयम् ।। १९ ।।

सुस्नातस्यापि यस्याशु हृदयं परिशुष्यति ।।

चरणौ च करौ वापि त्रिमासं तस्य जीवितम् ।। 4.1.42.२० ।।

प्रतिबिंबं भवेद्यस्य पदखंडपदाकृति ।।

पांसौ वा कर्दमे वापि पंचमासान्स जीवति ।। २१ ।।

छाया प्रकंपते यस्य देहबंधेपि निश्चले ।।

कृतांतदूता बध्नंति चतुर्थे मासि तं नरम् ।। २२ ।।

निजस्य प्रतिबिंबस्य नीराज्यमुकुरादिषु ।।

उत्तमांगं न यः पश्येत्समासेन विनश्यति ।। २३ ।।

मतिर्भ्रश्येत्स्खलेद्वाणी धनुरैद्रं निरक्षितै ।।

रात्रौ चंद्रद्वयं चापि दिवा द्वौ च दिवाकरौ ।। २४ ।।

दिवा च तारकाचक्रं रात्रौ व्योमवितारकम् ।।

युगपच्च चतुर्दिक्षु शाक्रं कोदंडमंडलम् ।। २५ ।।

भूरुहे भूधराग्रे च गंधर्वनगरालयम् ।।

दिवापिशाच नृत्यं च एते पंचत्वहेतवः ।।२६।।

सर्वेष्वेतेषु चिह्नेषु यद्येकमपि वीक्षते ।।

तदा मासावधिं मृत्युः प्रतीक्षेत न चाधिकम् ।। २७ ।।

करावरुद्ध श्रवणः शृणोति न यदा ध्वनिम् ।।

स्थूलः कृशः कृशस्थूलस्तदामासान्निवर्तते ।। २८ ।।

यः पश्येदात्मनश्छायां दक्षिणाशा समाश्रिताम् ।।

दिनानि पंच जीवित्वा पंचत्वमुपयाति सः ।। २९ ।।

प्रोह्यते भक्ष्यते वापि पिशाचासुरवायसैः ।।

भूतैः प्रेतैः श्वभिर्गृध्रैर्गोमायुखरसूकरैः ।। 4.1.42.३० ।।

रासभैः करभैः कीशैः श्वेनैरश्वतरैर्बकैः ।।

स्वप्ने स जीवितं त्यक्त्वा वर्षांते यममीक्षते ।। ३१ ।।

गंधपुष्पांशुकैः शोणैः स्वां तनुं भूषितां नरः ।।

यः पश्येत्स्वप्नसमये सोऽष्टौ मासाननित्यहो ।। ३२ ।।

पांसुराशि च वल्मीकं यूपदंडमथापि वा ।।

योधिरोहति वै स्वप्ने स षष्ठे मासि नश्यति ।। ३३ ।।

रासभारूढमात्मानं तैलाभ्यक्तं च मुंडितम् ।।

नीयमानं यमाशां यः स्वप्ने पश्येत्स्वपूर्वजान् ।। ३४ ।।

स्वमौलौ स्वतनौ वापि यः पश्येत्स्वप्नगो नरः ।।

तृणानि शुष्ककाष्ठानि षष्ठे मासि न तिष्ठति ।। ३५ ।।

लोहदंडधरं कृष्णं पुरुषं कृष्णवाससम् ।।

स्वयं योग्रे स्थितं पश्येत्स त्रीन्मासान्न लंघयेत् ।। ३६ ।।

काली कुमारी यं स्वप्ने बद्गीयाद्बाहु पाशकैः ।।

स मासेन समीक्षेत नगरींशमनोषिताम् ।। ३७ ।।

नरो यो वानरारूढो यायात्प्राचीदिशं स्वपन् ।।

दिनैः स पंचभिरेव पश्येत्संयमिनीं पुरीम् ।।३८।।

कृपणोपि वदान्यः स्याद्वदान्यः कृपणो यदि ।।

प्रकृतेर्विकृतिश्चेत्स्यात्तदा पंचत्वमृच्छति ।।३९।।

एतानि कालचिह्नानि संत्यन्यानि बहून्यपि ।।

ज्ञात्वाभ्यसेन्नरो योगमथवाकाशिकां श्रयेत् ।। 4.1.42.४० ।।

न कालवंचनोपायं मुनेन्यमवयाम्यहम् ।।

विना मृत्युजयं काशीनाथं गर्भावरोधकम् ।। ४१ ।।

तावद्गर्जंति पापानि तावद्गर्जेद्यमो नृपः ।।

यावद्विश्वेशशरणं नरो न निरतो व्रजेत् ।। ४२ ।।

प्राप्तविश्वेश्वरावासः पीतोत्तरवहापयाः ।।

स्पृष्ट विश्वेशसल्लिंगः कश्च याति न वंद्यताम् ।। ४३ ।।

करिष्येत्कुपितःकालः किंकाशीवासिनां नृणाम् ।।

काले शिवः स्वयं कर्णे यत्र मंत्रोपदेशकः ।। ४४ ।।

यथा प्रयाति शिशुता कौमारं च यथा गतम् ।।

सत्वरं गत्वरं तद्वद्यौवनं चापि वार्धकम ।। ४५ ।।

यावन्नहि जराक्रांतिर्यावन्नेंद्रियवैक्लवम् ।।

तावत्सर्वं फल्गुरूपं हित्वा काशीं श्रयेत्सुधीः ।। ४६ ।।

अन्यानि काललक्ष्माणि तिष्ठंतु कलशोद्भव ।।

जरैव प्रथमं लक्ष्म चित्रं तत्रापि भीर्नहि ।। ४७ ।।

पराभूतो हि जरया सर्वैश्च परिभूयते ।।

हृततारुण्यमाणिक्यो धनहीनः पुमानिव ।। ४८ ।।

सुतावाक्यं न कुर्वंति पत्नी प्रेमापि मुंचति ।।

बांधवा नैव मन्यंते जरसाश्लेषितं नरम् ।। ४९ ।।

आश्लिष्टं जरया दृष्ट्वा परयोषिद्विशंकिता ।।

भवेत्पराङ्मुखी नित्यं प्रणयिन्यपि कामिनी ।। 4.1.42.५० ।।

न जरा सदृशो व्याधिर्न दुःखं जरया समम् ।।

कारयित्र्यपमानस्य जरैव मरणं नृणाम् ।। ५१ ।।

न जीयते तथा कालस्तपसा योगयुक्तिभिः ।।

यथा चिरेणकालेन काशीवासाद्विजीयते ।। ५२ ।।

विनायज्ञैर्विनादानैर्विना व्रतजपादिभिः ।।

विनातिपुण्यसंभारैः कः काशीं प्राप्तुमीहते ।। ५३ ।।

काशीप्राप्तिरयं योगःकाथीप्राप्तिरिदं तपः ।।

काशीप्राप्तिरिदं दानं काशीप्राप्तिः शिवैकता ।। ५४ ।।

कः कलिकोथवा कालः का जरा किं च दुष्कृतम् ।।

का रुजः कैंतराया वा श्रिता वाराणसी यदि ।। ५५ ।।

कलिस्तानेव बाधेत कालस्तांश्च जिघांसति ।। ५६।।

एनांसि तांश्च बाधंते ये न काशीं समाश्रिताः ।।

काशीसमाश्रिता यैश्च यैश्च विश्वेश्वरोर्चितः ।।

तारकं ज्ञानमासाद्य ते मुक्ताः कर्मपाशतः ।। ।। ५७ ।।

धनिनो न तथा सौख्यं प्राप्नुवंति नराः क्वचित् ।।

यथा निधनतः काश्यां लभते सुखमव्ययम् ।। ५८ ।।

वरं काशीसमावासी नासीनो द्युसदां पदम्।।

दुःखांतं लभते पूर्वः सुखांतं लभते परः ।। ५९ ।।

स्थितोपि भगवनीशो मंदरं चारुकंदरम् ।।

काशीं विना रतिं नाऽऽप दिवोदासनृपोषिताम् ।। 4.1.42.६० ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे कालवंचनोपायोनाम द्विचत्वारिंशोध्यायः ।। ४२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४३

https://sa.wikisource.org/s/fwo
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्तिरुवाच ।। ।।

दिवोदासं नरपतिं कथं देवस्त्रिलोचनः ।।

काशीं संत्याजयामास कथमागाच्च मंदरात् ।।

एतदाख्यानमाख्याहि श्रोतॄणां प्रमुदे भगोः ।। १ ।।

।। स्कंद उवाच ।। ।।

मंदरं गतवान्देवो ब्रह्मणो वाक्य गौरवात् ।।

तपसा तस्य संतुष्टो मंदरस्यैव भूभृतः ।। २ ।।

गते विश्वेश्वरे देवे मंदरं गिरिसुंदरम् ।।

गिरिशेन समं जग्मुरपि सर्वे दिवौकसः ।। ३ ।।

क्षेत्राणि वैष्णवानीह त्यक्त्वा विष्णुरपि क्षितेः ।।

प्रयातो मंदरं यत्र देवदेव उमाधवः ।। ४ ।।

स्थानानि गाणपत्यानि गणेशोपि ततो व्रजत् ।।

हित्वाहमपि विप्रेंद्र गतवान्मंदरं प्रति ।। ५ ।।

सूरः सौराणि संत्यज्य गतश्चायतनादरम् ।।

स्वंस्वं स्थानं क्षितौ त्यक्त्वा ययुरन्येपि निर्जराः ।। ६।।

गतेषु देवसंघेषु पृथिव्याः पृथिवीपतिः ।।

चकार राज्यं निर्द्वंद्वं दिवोदासः प्रतापवान् ।। ७ ।।

विधाय राजधानीं स वाराणस्यां सुनिश्चलाम् ।।

एधां चक्रे महाबुद्धिः प्रजाधर्मेण पालयन् ।। ८ ।।

सूर्यवत्स प्रतपिता दुर्हृदां हृदि नेत्रयोः ।।

सोमवत्सुहृदामासीन्मानसेषु स्वकेष्वऽपि ।। ९ ।।

अखंडमाखंडलवत्कोदंडकलयन्रणे ।।

पलायमानैरालोकिशत्रुसैन्यबलाहकैः ।। 4.1.43.१० ।।

स धर्मराजवज्जातो धर्माधर्मविवेचकः ।।

अदंड्यान्मण्डयन्राजा दंड्यांश्च परिदंडयन् ।। ११ ।।

धनंजय इवाधाक्षीत्परारण्यान्यनेकशः ।।

पाशीव पाशयांचक्रे वैरिचक्रं विदूरगः ।। १२ ।।

सोभूत्पुण्यजनाधीशो रिपुराक्षसवर्धनः ।।

जगत्प्राणसमानश्च जगत्प्राणनतत्परः ।।१३।।

राजराजः स एवाभूत्सर्वेषां धनदः सताम् ।।

स एव रुद्रमूर्तिश्च प्रेक्षिष्ट रिपुभी रणे ।। १४ ।।

विश्वेषां स हि देवानां तपसा रूपधृग्यतः ।।

विश्वेदेवास्ततस्तं तु स्तुवंति च भजंति च ।। १५ ।।

असाध्यः स हि साध्यानां वसुभ्यो वसुनाधिकः ।।

ग्रहाणां विग्रहधरो दस्रतोऽजस्ररूपभाक् ।। १६ ।।

मरुद्गणानगणयंस्तुषितांस्तोषयन्गुणैः ।।

सर्वविद्याधरो यस्तु सर्वविद्याधरेष्वपि ।। १७ ।।

अगर्वानेव गंधर्वान्यश्चक्रे निजगीतिभिः ।।

ररक्षुर्यक्षरक्षांसि तद्दुर्गं स्वर्गसोदरम् ।। १८ ।।

नागानागांसि चक्रुश्च तस्य नागबलीयसः ।।

दनुजामनुजाकारं कृत्वा तं च सिषेविरे ।। १९ ।।

जाता गुह्यचरा यस्य गुह्यकाः परितो नृषु ।।

संसेविष्यामहे राजन्नसुरास्त्वां स्ववैभवैः ।। 4.1.43.२० ।।

वयं यतस्त्वद्विषये सुरावासोऽपि दुर्लभः ।।

अशिक्षयत्क्षितिपतेरिह यस्य तुरंगमान् ।।

आशुगश्चाशुगामित्वं पावमाने पथिस्थितः ।। २१ ।।

अगजान्यस्य तु गजान्नगवर्ष्मसुवर्ष्मणः ।।

अजस्र दानिनो दृष्ट्वा भवन्नन्येपि दानिनः ।। २२ ।।

सदोजिरे च बोद्धारो योद्धारश्चरणाजिरे ।।

न यस्य शास्त्रैर्विजिता न शस्त्रैः केनचित्क्वचित् ।। २३ ।।

न नेत्रविषये जाता विषये यस्यभूभृतः ।।

सदा नष्टपदा द्वेष्यास्तदाऽनष्टपदाः प्रजाः ।। २४ ।।

कलावानेक एवास्ति त्रिदिवेपि दिवौकसाम् ।।

तस्य क्षोणिभृतः क्षोण्यां जनाः सर्वे कलालयाः ।। २५ ।।

एक एव हि कामोस्ति स्वर्गे सोप्यंगवर्जितः ।।

सांगोपांगाश्च सर्वेषां सर्वे कामा हि तद्भुवि ।।२६।।

तस्योपवर्तनेप्येको न श्रुतो गोत्रभित्क्वचित् ।।

स्वर्गे स्वर्गसदामीशो गोत्रभित्परिकीर्तितः ।। २७ ।।

क्षयी च तस्य विषये कोप्याकर्णि न केनचित् ।।

त्रिविष्टपे क्षपानाथः पक्षेपक्षे क्षयीष्यते ।। २८ ।।

नाके नवग्रहाः संति देशास्तस्याऽनवग्रहाः ।। २९ ।।

हिरण्यगर्भः स्वर्लोकेप्येक एव प्रकाशते ।।

हिरण्यगर्भाः सर्वेषां तत्पौराणामिहालयाः ।। 4.1.43.३० ।।

सप्ताश्व एकः स्वर्लोके नितरां भासतेंऽशुमान् ।।

सदंशुकाः प्रतिदिनं बह्वश्वास्तत्पुरौकसः ।। ३१ ।।

सदप्सरा यथास्वर्भूस्तत्पुर्यपिसदप्सराः ।।

एकैव पद्मा वैकुंठे तस्य पद्माकराः शतम् ।। ।। ३२ ।।

अनीतयश्च तद्ग्रामानाराजपुरुषाः क्वचित् ।।

गृहेगृहेत्र धनदा नाक एकोऽलकापतिः ।। ३३ ।।

दिवोदासस्य तस्यैवं काश्यां राज्यं प्रशासतः ।।

गतं वर्षं दिनप्रायं शरदामयुताष्टकम् ।। ३४ ।।

गीर्वाणा विप्रतीकारमथ तस्य चिकीर्षवः ।।

गुरुणा मंत्रयांचक्रुर्धर्मवर्त्मानुयायिनः ।।३५।।

भवादृशामिव मुने प्रायशो धर्मचारिणाम् ।।

विबुधा विदधत्येव महतीरापदांततीः ।।३६।।

यद्यप्यसौ धराधीशो व्याधिनोद्दुर्धराध्वरैः ।।

तानध्वरभुजोऽत्यंतं तथापि सुहृदो न ते ।। ३७ ।।

स्वभाव एव द्युसदां परोत्कर्षासहिष्णुता ।।

बलि बाण दधीच्याद्यैरपराद्धं किमत्र तैः ।।३८।।

अंतराया भवंत्येव धर्मस्यापि पदेपदे ।।

तथापि न निजो धर्मो धर्मधीभिर्विमुच्यते ।। ३९ ।।

अधर्मिणः समेधंते धनधान्यसमृद्धिभिः ।।

अधर्मादेव च परं समूलं यांत्यधोगतिम् ।। 4.1.43.४० ।।

प्रजाः पालयतस्तस्य पुत्रानिव निजौरसान् ।।

रिपुंजयस्य नाल्पोपि बभूवाधर्मसंग्रहः ।।४१।।

षाड्गुण्यवेदिनस्तस्य त्रिशक्त्यूर्जितचेतसः ।।

चतुरोपायवित्तस्य न रंध्रं विविदुः सुराः ।। ४२ ।।

बुद्धिमंतोपि विबुधा विप्रतीकर्तुमुद्यताः ।।

मनागपि न संशेकुरपकर्तुं तदीशितुः ।। ४३ ।।

एकपत्नीव्रताः सर्वे पुमांसस्तस्य मंडले ।।

नारीषु काचिन्नैवासीदपतिव्रतधर्मिणी ।। ४४ ।।

अनधीतो न विप्रोभूदशूरोनैव बाहुजः ।।

वैश्योनभिज्ञो नैवासीदर्थोपार्जनकर्मसु ।।४५।।

अनन्यवृत्तयः शूद्रा द्विजशुश्रूषणं प्रति ।।

तस्य राष्ट्रे समभवन्दिवोदासस्य भूपतेः ।। ४६ ।।

अविप्लुत ब्रह्मचर्यास्तद्राष्ट्रे ब्रह्मचारिणः ।।

नित्यं गुरुकुलाधीना वेदग्रहणतत्पराः ।। ४७ ।।

आतिथ्यधर्मप्रवणा धर्मशास्त्रविचक्षणाः ।।

नित्यसाधुसमाचारा गृहस्थास्तस्य सर्वतः ।। ४८ ।।

तृतीयाश्रमिणो यस्मिन्वनवृत्तिकृतादराः ।।

निःस्पृहा ग्रामवार्तासु वेदवर्त्मानुसारिणः ।। ४९ ।।

सर्वसंगविनिर्मुक्ता निर्मुक्ता निष्परिग्रहाः ।।

वाङ्मनःकर्मदंडाढ्या यतयो यत्र निःस्पृहाः ।। 4.1.43.५० ।।

अन्येनुलोमजन्मानः प्रतिलो मभवा अपि ।।

स्वपारंपर्यतो दृष्टं मनाग्वर्त्म न तत्यजुः ।। ५१ ।।

अनपत्या न तद्राष्ट्रे धनहीनोपि कोपि न ।।

अवृद्धसेवी नो कश्चिदकांडमृतिभाक्च न ।। ५२ ।।

न चाटा नैव वाचाटा वंचका नो न हिंसकाः ।।

न पाषंडा न वै भंडा न रंडा न च शौंडिकाः ।।५३।।

श्रुतिघोषो हि सर्वत्र शास्त्रवादः पदेपदे ।।
सर्वत्र सुभगालापा मुदामंगलगीतयः ।।५४ ।।
वीणावेणुप्रवादाश्च मृदंगा मधुरस्वनाः ।।
सोमपानं विनान्यत्र पानगोष्ठी न कर्णगा ।।५५।।
मांसाशिनः पुरोडाशे नैवान्यत्र कदाचन ।।
न दुरोदरिणो यत्र नाधमर्णा न तस्कराः ।। ५६ ।।
पुत्रस्य पित्रोः पदयोः पूजनं देवपूजनम् ।।
उपवासो व्रतं तीर्थं देवताराधनं परम् ।। ५७ ।।
नारीणां भर्तृपद् योरर्चनं तद्वचःश्रुतिः ।।
समर्चयंति सततमनुजा निजमग्रजम् ।। ५८ ।।
सपर्ययंति मुदिता भृत्याः स्वामिपदांबुजम् ।।
हीनवर्णैरग्रवर्णो वर्ण्यते गुणगौरवैः ।। ५९ ।।
वरिवस्यंति भूयोपि त्रिकालं काशिदेवताः ।।
सर्वत्र सर्वे विद्वांसः समर्च्यंते मनोरथैः ।। 4.1.43.६० ।।
विद्वद्भिश्च तपोनिष्ठास्तपोनिष्ठैर्जितेंद्रियाः ।।
जितेंद्रियैर्ज्ञाननिष्ठा ज्ञानिभिः शिवयोगिनः ।। ६१ ।।
मंत्रपूतं महार्हं च विधियुक्तं सुसंस्कृतम् ।।
वाडवानां मुखाग्नौ च हूयतेऽहर्निशं हविः ।। ६२ ।।
वापीकूपतडागानामारामाणां पदेपदे ।।
शुचिभिर्द्रव्यसंभारैः कर्तारो यत्र भूरिशः ।। ६३ ।।
यद्राष्ट्रे हृष्टपुष्टाश्च दृश्यंते सर्वजातयः ।।
अनिंद्यसेवा संपन्ना विनामृगयु सौनिकान् ।। ६४ ।।
इत्थं तस्य महीजानेः सर्वत्र शुचिवर्तिनः ।।
उन्मिषंतोप्यनिमिषा मनाक्छिद्रं न लेभिरे ।। ६५ ।।
अथोवाचामर गुरुर्देवानपचिकीर्षुकान् ।।
तस्मिन्राजनि धर्मिष्ठे वरिष्ठे मंत्रवेदिषु ।।६८।।
।। गुरुरुवाच ।। ।।
संधिविग्रहयानास्ति सं श्रयं द्वैधभावनम् ।।

यथा स राजा संवेत्ति न तथात्रापि कश्चन ।। ६७ ।।

उपायोप्येक एवास्ति चतुर्ष्विह दिवौकसः ।।

भेदो नाम स चेत्सिध्येत्तपोबलिनि तत्र हि ।।६८।।

तेन यद्यपि भूभर्त्रा भूमेर्देवा विवासिताः ।।

तथापि भूरिशस्तत्र संत्यस्मत्पक्षपातिनः ।। ६९ ।।

कालो निमिषमात्रोपि यान्विना न सुखं व्रजेत् ।।

अस्माकमपि तस्यापि संति ते तत्र मानिताः ।। 4.1.43.७० ।।

अंतर्बहिश्चरा नित्यं सर्वविश्रंभ भूमयः ।।

समागतेषु तेष्वत्र सर्वं नः सेत्स्यति प्रियम् ।। ७१ ।।

समाकर्ण्य च ते सर्वे त्रिदशा गीष्पतीरितम् ।।

निर्णीतवंतस्तस्यार्थं तस्मादंतर्बहिश्चरान् ।।

अभिनंद्याथ तं सर्वे प्रोचुरित्थं भवेदिति ।। ७२ ।।

ततः शक्रः समाहूय वीतिहोत्रं पुरःस्थितम् ।।

ऊचे मधुरया वाचा बहुमानपुरःसरम् ।। ७३ ।।

हव्यवाहन या मूर्तिस्तव तत्र प्रतिष्ठिता ।।

तामुपासंहर क्षिप्रं विषयात्तस्य भूपतेः ।। ।। ७४ ।।

समागतायां तन्मूर्तौ सर्वानष्टाग्रयः प्रजाः ।।

हव्यकव्यक्रियाशून्या विरजिष्यंति राजनि ।। ७५ ।।

प्रजासु च विरक्तासु राज्यकामदुघासु वै ।।

कृच्छ्रेणोपार्जितोऽपार्थो राजशब्दो भविष्यति ।। ७६ ।।

प्रजानां रंजनाद्राजा येयं रूढिरुपार्जिता ।।

तस्यां रूढ्यां प्रनष्टायां राज्यमेव विनंक्ष्यति ।। ७७ ।।

प्रजाविरहितो राजा कोशदुर्गबलादिभिः ।।

समृद्धोप्यचिरान्नश्येत्कूलसंस्थ इव द्रुमः ।। ७८ ।।

त्रिवर्गसाधनाहेतुः प्राक्प्रजैव महीपतेः ।।

क्षीणवृत्त्यां प्रजायां वै त्रिवर्गः क्षीयते स्वयम् ।। ७९ ।।

क्षीणे त्रिवर्गे संक्षीणा गतिर्लोकद्वयात्मिका ।। 4.1.43.८० ।।

इतींद्रवचनाद्वह्निरह्नाय क्षोणिमंडलात् ।।

आचकर्ष निजां मूर्तिं योगमाया बलान्वितः ।। ८१ ।।

निन्ये न केवलं त्रेतां जाठराग्निमपि प्रभुः ।।

वज्रिणो वचसा वह्निर्निजशक्तिसमन्वितम् ।। ८२ ।।

वह्नौ स्वर्लोकमापन्ने जाते मध्यंदिने नृपः ।।

कृतमाध्याह्निकस्तूर्णं प्राविशद्भोज्यमंडपम् ।। ८३ ।।

महानसाधिकृतयो वेपमानास्ततो मुहुः ।।

क्षुधार्तमपि भूपालमिदं मंदं व्यजिज्ञपन् ।। ८४ ।।

सूपकारा ऊचुः ।।

अत्यहस्करतेजस्क प्रतापविजितानल ।।

किंचिद्विज्ञप्तुकामाः स्मोप्यकांडेरणपंडित ।। ८५ ।।

यदि विश्रुणयेद्राजन्भवानभयदक्षिणाम् ।।

तदा विज्ञापयिष्यामः प्रबद्धकरसंपुटाः ।। ८६ ।।

भ्रूसंज्ञयाकृतादेशाः प्रशस्तास्येनभूभुजा ।।

मृदु विज्ञापयांचक्रुः पाकशालाधिकारिणः ।। ८७ ।।

न जानीमो वयं नाथ त्वत्प्रतापभयार्दितः ।।

कुसृत्याथ कया विद्वान्नष्टो वैश्वानरः पुरात् ।। ८८ ।।

कृशानौ कृशतां प्राप्ते कथं पाकक्रिया भवेत् ।।

तथापि सूर्यपाकेन सिद्धा पक्तिर्हि काचन ।। ८९ ।।

प्रभोरादेशमासाद्य तामिहैवानयामहे ।।

मन्यामहे च भूजाने पक्तिरद्यतनी शुभा ।। 4.1.43.९० ।।

श्रुत्वांधसिकवाक्यं स महासत्त्वो महामतिः ।।

नृपतिश्चिंतयामास देवानां वै कृतं त्विदम् ।। ९१ ।।

क्षणं संशीलयंस्तत्र ददर्श तपसोबलात् ।।

न केवलं जहौ गेहं हुतभुक्चौदरीर्दरीः ।। ९२ ।।

अप्यहासीदितोलोकाज्जगाम च सुरालयम् ।।

भवत्विह हि का हानिरस्माकं ज्वलने गतै ।। ९३ ।।

तेषामेवविचाराच्च हानिरेषा सुपर्वणाम् ।।

तद्बलेन च किं राज्यं मयेदमुररीकृतम् ।। ९४ ।।

पितामहेन महतो गौरवात्प्रतिपादितम् ।।
इति चिंतयतस्तस्य मध्यलोकशतक्रतोः ।। ९५ ।।
पौराः समागता द्वारि सह जानपदैर्नरैः ।।
द्वास्थेन चाज्ञया राज्ञस्ततस्तेंतः प्रवेशिताः ।। ९६ ।।
दत्त्वोपदं यथार्हं ते प्रणेमुः क्षोणिवज्रिणम् ।।
केचित्संभाषिता राज्ञादरसोदरया गिरा ।। ९७ ।।
केचिच्च समुदा दृष्ट्या केचिच्च करसंज्ञया ।।
विसर्जिता सना राज्ञा बहुमानपुरःसरम् ।। ९८ ।।
तेजिरे भेजिरे सर्वे रत्नार्चिः परिसेविते ।।
विजितामोदसंदोहे सुरानोकहसौरभैः ।।
राज्ञः शतशलाकस्थच्छत्रस्यच्छाययाशुभे ।। ९९ ।।
विशांपतिरथोवाच तन्मुखच्छाययेरितम् ।।
विज्ञाय तदभिप्रायमलंभीत्या पुरौकसः ।। 4.1.43.१०० ।।
विकारकारिभिर्लेखैर्यदिनीतोऽनलो भुवः ।।
एतावतैव किं सिद्ध्येन्मयि तेषां पराभवः ।। १ ।।
चिकीर्षुरहमेवासं पौराः कार्यमिदंपुरा ।।
परं ह्युपेक्षितप्रायं दिष्ट्या तैः स्मारितं चिरात् ।। २ ।।
गतोऽनलोऽभवद्भद्रं जगत्प्राणोपि यात्वितः ।।
वरुणः पुष्पवंताभ्यामविलंबं प्रयात्वितः ।। ३ ।।
अहमेव हि पर्जन्यो भविष्यामि तपोबलात् ।।
मुदे जनपदानां च सर्वसस्यसमृद्धिदः ।। ४ ।।
तपोयोगबलेनाहमात्मानं परिकल्प्य च ।।
त्रिधावह्निस्वरूपेण पक्तीष्टिव्युष्टिकृत्तमः ।। ५।।
अंतर्बहिश्च यो द्वेधा नभस्वत्पदवी दधत् ।।
सर्वेषामेव वेत्स्यामि त्वंतःकरणचेष्टितम् ।। ६ ।।
विधाय चांभसीं मूर्तिं सर्वजीवैकजीवनीम् ।।
प्रजाः संजीवयिप्यामि किं जडैर्विषये मम ।। ७ ।।
यदा खे तमसा पौरा ग्रस्येते शशिभास्करौ ।।

तदा न किं विना ताभ्यां जीवामः क्षितिमंडले ।। ८ ।।

श्रियं चांद्रमसीं प्राप्य ह्लादयिष्याम्यहं प्रजाः ।।

निशाचरेण किमिह क्षयिणा च कलंकिना ।। ९ ।।

अस्मत्कुले मूलभूतो भास्करो मान्य एव नः ।।

स तिष्ठतु सुखेनात्र यातायातं करोतु च ।। 4.1.43.११० ।।

स एको जगतामात्मा विशेषात्कुलदेवता ।।

सोपकर्तुं न वेत्त्येव तस्येदं व्रतमुत्तमम् ।। ११ ।।

इति नरपतिवाक्सुधारसौघं श्रुतिपुटकैः परिपीय पौरवर्गः ।।

विकसितवदनांबुजो जगामनिजनिजमालयमाधिमुक्तचित्तः ।। १२ ।।

क्षितिपतिरपि तत्तथा विधाय तपसोसाध्यमिहास्ति किं त्रिलोक्याम् ।।

अतिवह्न्यर्कमसौ दधच्चतेजो द्युसदां शल्यमिवोच्चकैर्बभूव ।। १३ ।।

इति श्रीस्कांदे महापुरण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे दिवोदासप्रतापवर्णनंनाम त्रिचत्वारिंशोध्यायः ।।४३।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४४



।। स्कंद उवाच ।।

अथ मंदरकंदरोदरोल्लसद समद्युति रत्नमंदिरे ।।

परितः समधिष्ठितामरे निजशिखरैर्वसनीकृतांबरे ।। १ ।।

निवसञ्जगदीश्वरो हरः कृशरजनीश कलामनोहरः ।।।

लभते स्म न शर्म शंकरः प्रसरत्काशिवियोगज ज्वरः ।। २ ।।

विरहानलशांतये तदा समलेपि त्रिपुरारिणापि यः ।।

मलयोद्भव पंक एष स प्रतिपेदेह्यधुना पिपांसुताम् । ३

परितापहराणि पद्मिनीनां मृदुलान्यपि कंकणीकृतानि ।।

गदितानि यदीश्वरेण सर्पास्तदभूत्सत्यमहोमहेश्वरेच्छा ।। ४ ।।

यदु दुग्धनिधिं निमथ्यदेवैर्मृदुसारः समकर्षि पूर्णचंद्रः ।।

स बभूव कृशो वियोगतप्तेश्वरमूर्धोष्मपरिक्षरच्छरीरः ।। ५ ।।

यददीधरदेष जाततापः पृथुले मौलिजटानि कुंजकोणे ।।

परितापहरां हरस्तदानीं द्युनदीं तामधुनापि नोज्जिहीते।। ६ ।।

महतो विरहस्य शंकरः प्रसभंतस्यवशी वशंगतः ।।

विविदेन सुरैः सदोगतैरपि संवीतसुतापवेष्टितः ।। ७ ।।

अतिचित्रमिदं यदात्मना शुचिरप्येष कृपीटयोनिना ।।

स्वपुरीविरहोद्भवेन वै परिताप्येत जगत्त्रयेश्वरः ।। ८ ।।

निजभालतलं कलानिधेः कलया नित्यमलंकरोति यः ।।

स तदीश्वरमप्यतापयद्विधुरेको विपरीत एव तु ।। ९ ।।

गरलं गलनालिकातले विलसेदस्य न तेन तापितः ।।

अमृतांशु तुषारदीधिति प्रचयैरेव तु तापितोऽद्भुतम् ।। 4.1.44.१० ।।

विलसद्धरिचंदनोदकच्छटया तद्विरहापनुत्तये ।।

हृदया हि तयाप्यदूयत प्रसरद्भोगिफटाभवैर्न तु ।।११।।

सकलभ्रममेष नाशयेत्स्रगहित्वाद्यपदेशजं हरः ।।

इदमद्भुतमस्य यद्भ्रमः स्फुटमाल्येपि महाहिसंभवः ।।१२।।

स्मृतिमात्रपथंगतोपि यस्त्रिविध तापमपाकरोत्यलम्।।

स हि काशिवियोगतापितः स्वगतं किंचिदजल्पदित्यजः ।। १३ ।।

अपि काशि समागतोऽनिलो यदि गात्राणि परिष्वजेन्मम ।।

दवथुः परिशांतिमेति तन्नहि मानी परिगाहनैरपि ।। १४ ।।

अगमिष्यदहोकथं सतापो ननु दक्षांगजयाय एधितः ।।

ममजीवातुलता झटित्यलं ह्यभविष्यन्न हिमाद्रिजा यदि ।। १५ ।।

न तथोज्झितदेहयातया मम दक्षोद्भवयामनोऽदुनोत् ।।

अविमुक्तवियोगजन्मनापरि दूयेत यथा महोष्मणा ।। १६ ।।

अयि काशि मुदा कदा पुनस्तव लप्स्ये सुखमंगसंगजम् ।।

अतिशीतलितानि येन मेऽद्भुतगात्राणि भवंति तत्क्षणात् ।। १७ ।।

अयि काशि विनाशिताघसंघे तवविश्लेषजआशुशुक्षणिः ।।

अमृतांशुकलामृदुद्रवैरतिचित्रंहविषेव वर्धते ।। १८ ।।

अगमन्मम दक्षजा वियोगजो दवथुः प्राग्घिमवत्सुतौषधेन ।।

अधुना खलु नैव शांतिमीयां यदि काशीं न विलोकयेहमाशु ।। १९ ।।

मनसेति गृणंस्तदा शिवः सुतरां संवृततापवैकृतः ।।

जगदंबिकया धियां जनन्या कथमप्येष वियुक्त इत्यमानि ।। 4.1.44.२० ।।

प्रियया वपुषोर्धयानयाप्यपरिज्ञात वियोगकारणः ।।

वचनैरुपचर्यते स्म सप्रणतप्राणिनिदाघदारणः ।। २१ ।।

।। श्रीपार्वत्युवाच ।। ।।

तव सर्वग सर्वमस्ति हस्ते विलसद्योग वियोग एव कस्ते ।।

तव भूतिरहो विभूतिदात्री सकलापत्कलिकापि भूतधात्री ।। २२ ।।

त्वदनीक्षणतः क्षणाद्विभो प्रलयं यांति जगंति शोच्यवत् ।।

च्यवते भवतः कृपालवादितरोपीशनयस्त्वयोंकृतः ।। २३ ।।

भवतः परितापहेतवो न भवंतींदु दिवाकराग्नयः ।।

नयनानियतस्त्रिनेत्र तेऽमी प्रणयिन्यस्तिलसज्जला च मौलौ ।। २४ ।।

भुजगाभुजगाः सदैव तेऽमी न विषं संक्रमते च नीलकंठ ।।

अहमस्मि च वामदेव वामा तव वामंवपुरत्र चित्तयुक्ता ।।२५।।

इति संसृतिसंबीजजनन्याभिहिते हिते ।।

गिरां निगुंफे गिरिशो वक्तुमप्यााददे गिरम् ।। २६ ।।

।। ईश्वर उवाच ।। ।।

अयि काशीत्यष्टमूर्तिर्भवो भावाष्टकोभवत् ।।

सत्वरं शिवयाज्ञायि ध्रुवं काश्याहृतोहरः ।।२७।।

अथबालसखी भूत तत्तत्काननवीरुधम् ।। शिवाप्रस्तावयांचक्रे विमुक्तां मुक्तिदां पुरीम् ।।२८।।

।। पार्वत्युवाच ।। ।।

गगनतलमिलितसलिले प्रलयेपि भव त्रिशूलपरि विधृताम् ।।

कृतपुंडरीकशोभां स्मरहरकाशीं पुरीं यावः ।।२९।।

धराधरेंद्रस्य धरातिसुंदरा न मां तथास्यापि धिनोति धूर्जटे।।

धरागतापीह न या ध्रुवंधरा पुरीधुरीणा तव काशिका यथा।।4.1.44.३०।।

न यत्र काश्यां कलिकालजं भयं न यत्र काश्यां मरणात्पुनर्भवः।।

न यत्र काश्यां कलुषोद्भवं भयं कथं विभो सा नयनातिथिर्भवेत् ।।३१।।

किमत्र नो संति पुरः सहस्रशः पदेपदे सर्वसमृद्धिभूमयः ।।

परं न काशी सदृशीदृशोः पदं क्वचिद्गता मे भवता शपे शिव ।। ३२ ।।

त्रिविष्टपे संति न किं पुरः शतं समस्तकौतूहलजन्मभूमयः ।।

तृणी भवंतीह च ताः पुरःपुरः पदं पुरारे भवतो भवद्विषः ।।३३।।

न केवलं काशिवियोगजो ज्वरः प्रबाधते त्वां तु तथा यथात्र माम् ।।

उपाय एषोत्र निदाघशांतये पुरी तु सा वा ममजन्मभूरथ ।। ३४ ।।

मया न मेने ममजन्मभूमिका वियोगजन्मा परिदाघईशितः ।।

अवाप्यकाशीं परितः प्रशांतिदां समस्तसंतापविघातहेतुकाम् ।। ३५ ।।

न मोक्षलक्ष्म्योत्र समक्षमीक्षितास्तनूभृता केनचिदेव कुत्रचित् ।।

अवैम्यहं शर्मद सर्वशर्मदा सरूपिणी मुक्तिरसौ हि काशिका ।। ३६ ।।

न मुक्तिरस्तीह तथा समाधिना स्थिरेंद्रियत्वोज्झित तत्समाधिना ।।

क्रतुक्रियाभिर्न न वेदविद्यया यथा हि काश्यां परिहाय विग्रहम् ।।३७।।

न नाकलोके सुखमस्ति तादृशं कुतस्तु पातालतलेऽतिसुंदरे ।।

वार्तापि मर्त्ये सुखसंश्रया क्व वा काश्यां हि यादृक्तनुमात्रधारिणि ।। ३८ ।।

क्षेत्रे त्रिशूलिन्भवतोऽविमुक्ते विमुक्तिलक्ष्म्या न कदापि मुक्ते ।।

मनोपि यः प्राणिवरः प्रयुंक्ते षडंगयोगं स सदैव युंक्ते ।। ३९ ।।

षडंगयोगान्नहि तादृशी नृभिः शरीरसिद्धिः सहसात्र लभ्यते ।।

सुखेन काशीं समवाप्य यादृशीदृशौ स्थिरीकृत्य शिव त्वयि क्षणम् ।। 4.1.44.४० ।।

वरं हि तिर्यक्त्वमबुद्धिवैभवं न मानवत्वं बहुबुद्धिभाजनम् ।।

अकाशिसंदर्शननिष्फलोदयं समंततः पुष्करबुद्बुदोपमम् ।। ४१ ।।

दृशौ कृतार्थे कृतकाशिदर्शने तनुःकृतार्था शिवकाशिवासिनी ।।

मनःकृतार्थं धृतकाशिसंश्रयं मुखं कृतार्थं कृतकाशिसंमुखम् ।। ४२ ।।

वरं हि तत्काशिरजोति पावनं रजस्तमोध्वंसि शशिप्रभोज्ज्वलम् ।।

कृतप्रणामैर्मणिकर्णिका भुवे ललाटगंयद्बहुमन्यते सुरैः ।। ४३ ।।

न देवलोको न च सत्यलोको न नागलोको मणिकर्णिकायाः ।।

तुलां व्रजेद्यत्र महाप्रयाणकृच्छ्रुतिर्भवेद्ब्रह्मरसायनास्पदम् ।।४४।।

महामहोभूर्मणिकर्णिकास्थली तमस्ततिर्यत्र समेति संक्षयम् ।।

परः शतैर्जन्मभिरेधितापि या दिवाकराग्नींदुकरैरनिग्रहा ।। ४५ ।।

किमु निर्वाणपदस्य भद्रपीठं मृदुलं तल्पमथोनुमोक्षलक्ष्म्याः ।।

अथवा मणिकर्णिकास्थली परमानंदसुकंदजन्मभूमिः ।। ४६ ।।

समतीतविमुक्तजंतुसंख्या क्रियते यत्र जनैः सुखोपविष्टैः ।।

विलसद्द्युति सूक्ष्मशर्कराभिः स्ववपुःपातमहोत्सवाभिलाषैः ।। ४७ ।।

।। स्कंद उवाच ।। ।।

अपर्णापरिवर्ण्येति पुरीं वाराणसीं मुने ।।

पुनर्विज्ञापयामास काशीप्राप्त्यै पिनाकिनम्।। ४८ ।।

श्रीपार्वत्युवाच ।। ।।

प्रमथाधिप सर्वेश नित्यस्वाधीनवर्तन ।।

यथानंदवनं यायां तथा कुरु वरप्रद।। ४९ ।।

स्कन्द उवाच।। ।।

जितपीयूषमाधुर्यां काशीस्तवनसुंदरीम् ।।

अथाकर्ण्याहमुदितो गिरिशो गिरिजां गिरम् ।। 4.1.44.५० ।।

श्रीदेवदेव उवाच ।। ।।

अयि प्रियतमे गौरि त्वद्वा गमृतसीकरैः ।।

आप्यायितोस्मि नितरां काशीप्राप्त्यै यतेधुना ।। ५१ ।।

त्वं जानासि महादेवि मम यत्तन्महद्व्रतम्।।
अभुक्तपूर्वमन्येन वस्तूपाश्नामि नेतरत् ।।५२।।
पितामहस्य वचनाद्दिवोदासे महीपतौ।।
धर्मेण शासति पुरीं क उपायो विधीयताम् ।।५३।।
कथं स राजा धर्मिष्ठः प्रजापालनतत्परः ।।
वियोज्यते पुरः काश्या दिवोदासो महीपतिः।।५४।।
अधर्मवर्तिनो यस्माद्विघ्नः स्यान्नेतरस्य तु ।।
तस्मात्कं प्रेषयामीशे यस्तं काश्या वियोजयेत् ।।५५।।
धर्मवर्त्मानुसरतां यो विघ्नं समुपाचरेत् ।।
तस्यैव जायते विघ्नः प्रत्युत प्रेमवर्धिनि ।।५६ ।।
विनाच्छिद्रेण तं भूपं नोत्सादयितुमुत्सहे ।।
मयैव हि यतो रक्ष्याः प्रिये धर्मधुरंधराः ।। ५७ ।।
न जरा तमतिक्रामेन्न तं मृत्युर्जिघांसति ।।
व्याधयस्तं न बाधंते धर्मवर्त्मभृदत्रयः ।। ५८ ।।
इति संचिंतयन्देवो योगिनीचक्रमग्रतः ।।
ददर्शातिमहाप्रौढं गाढकार्यस्य साधनम् ।।५९।।
अथ देव्या समालोच्य व्योमकेशो महामुने ।।
योगिनीवृंदमाहूय जगौ वाक्यमिदं हरः ।। 4.1.44.६० ।।
सत्वरं यात योगिन्यो मम वाराणसीं पुरीम्।।
यत्र राजा दिवोदासो राज्यं धर्मेण शास्त्यलम् ।। ६१ ।।
स्वधर्मविच्युतः काशीं यथा तूर्णं त्यजेन्नृपः ।।
तथोपचरत प्राज्ञा योगमायाबलान्विताः ।।६२।।
यथा पुनर्नवीकृत्य पुरीं वाराणसीमहम् ।।
इतः प्रयामि योगिन्यस्तथा क्षिप्रं विधीयताम् ।। ६३ ।।
इति प्रसादमासाद्य शासनं शिरसा वहन्।।
कृतप्रणामो निर्यातो योगिनीनां गणस्ततः ।। ६४ ।।
ययुराकाशमाविश्य मनसोप्य तिरंहसा ।।
परस्परं भाषमाणा योगिन्यस्ता मुदान्विताः ।।६५।।

अद्य धन्यतराः स्मो वै देवदेवेन यत्स्वयम् ।।

कृतप्रसादाः प्रहिताः श्रीमदानंदकाननम्।।६६।।

अद्य सद्यो महालाभावभूतां नोतिदुर्लभौ ।।

त्रिनेत्रराजसंमानस्तथा काशी विलोकनम् ।। ६७ ।।

इति मुदितमनाः स योगिनीनां निकुरंवस्त्वथमंदराद्रिकुंजात् ।।

नभसि लघुकृतप्रयाणवेगो नयनातिथ्यमलंभयत्पुरीं ताम् ।। ६८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूवार्द्धे काशीवर्णनं नाम चतुश्चत्वारिंशोध्यायः ।। ४४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४५

https://sa.wikisource.org/s/fvt
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

अथ तद्योगिनीवृंदं दूराद्दृष्टिं प्रसार्य च ।।

स्वनेत्रदैर्घ्यनिर्माणं प्रशशंस फलान्वितम् ।। १ ।।

दिव्यप्रासादमालानां पताकाश्चलपल्लवाः ।।

सादरं दूरमार्गस्थान्पांथानाह्वयतीरिव ।।२।।

चंचत्प्रासादमाणिक्यैर्विजृंभितमरीचिभिः ।।

सुनीलमपि च व्योमवीक्ष्यमाणं सुनिर्मलम् ।। ३ ।।

देवत्वं माययाच्छाद्य वेषं कार्पटिकोचितम् ।।

विधाय काशीमविशद्योगिनीचक्रमक्रमम् ।। ४ ।।

काचिच्चयोगिनी भूता काचिज्जाता तपस्विनी ।।

काचिद्बभूव सैरंध्री काचिन्मासोपवासिनी ।।५।।

मालाकारवधूः काचित्काचिन्नापितसुंदरी ।।

सूतिकर्मविचारज्ञा ऽपरा भैषज्यकोविदा ।। ६ ।।

वैश्या च काचिदभवत्क्रयविक्रयचंचुरा ।।

व्यालग्राहिण्यभूत्काचिद्दासीधात्री च काचन ।। ७ ।।

एका च नृत्यकुशला त्वन्या गानविशारदा ।।

अपरा वेणुवादज्ञा परा वीणाधराभवत् ।। ८ ।।

मृदंगवादनज्ञान्या काचित्ताल कलावती ।।

काचित्कार्मणतत्त्वज्ञा काचिन्मौक्तिकगुंफिका ।। ९ ।।

गंधभागविधिज्ञान्या काचिदक्षकलालया ।।

आलापोल्लासकुशला काचिच्चत्वरचारिणी ।। 4.1.45.१० ।।

वंशाधिरोहणे दक्षा रज्जुमार्गेण चेतरा ।।

काचिद्वातुलचेष्टाऽभूत्पथि चीवरवेष्टना ।। ११ ।।

अपत्यदाऽनपत्यानां परा तत्रपुरेऽवसत् ।।

काचित्करांघ्रिरेखाणां लक्षणानि चिकेति च ।। १२ ।।

चित्रलेखन नैपुण्यात्काचिज्जनमनोहरा ।।
वशीकरणमंत्रज्ञा काचित्तत्र चचार ह ।। १३ ।।
गुटिकासिद्धिदा काचित्काचिदंजनसिद्धिदा ।।
धातुवादविदग्धान्या पादुकासिद्धिदा परा ।। १४ ।।
अग्निस्तंभ जलस्तंभ वाक्स्तंभं चाप्यशिक्षयत् ।।
खेचरीत्वं ददौ काचिददृश्यत्वं परा ददौ ।। १५ ।।
काचिदाकर्पणीं सिद्धिं ददावुच्चाटनं परा ।।
काचिन्निजांगसौंदर्य युवचित्तविमोहिनी ।। १६ ।।
चिंतितार्थप्रदा काचित्काचिज्ज्योतिः कलावती ।।
इत्यादि वेषभाषाभिरनुकृत्य समंततः ।। १७ ।।
प्रत्यंगणं प्रतिगृहं प्राविशद्योगिनीगणः ।।
इत्थमब्दंचरंत्यस्ता योगिन्योऽहर्निशं पुरि ।।१८।।
न च्छिद्रं लेभिरे क्वापि नृपविघ्नचिकीर्षवः ।।
ततः समेत्य ताः सर्वा योगिन्यो वंध्यवांछिताः ।।
तस्थुः संमंत्र्य तत्रैव न गता मंदरं पुनः ।। १९ ।।
प्रभुकार्यमनिष्पाद्य सदः संभावनैधितः ।।
कः पुरः शक्नुयात्स्थातुं स्वामिनो क्षतविग्रहः ।।4.1.45.२०।।
अन्यच्च चिंतितं ताभिर्योगिनीभिरिदं मुने ।।
प्रभुं विनापि जीवामो न तु काशीं विना पुनः ।। २१ ।।
प्रभूरुष्टोपि सद्भृत्ये जीविकामात्रहारकः ।।
काशीहरेत्कराद्भ्रष्टा पुरुषार्थचतुष्टयम् ।। २२ ।।
नाद्यापि काशीं संत्यज्य तदारभ्य महामुने ।।
योगिन्योन्यत्र तिष्ठंति चरंत्योपि जगत्त्रयम्।। २३ ।।
प्राप्यापि श्रीमतीं काशीं यस्तितिक्षति दुर्मतिः ।।
स एव प्रत्युत त्यक्तो धर्मकामार्थमुक्तिभिः ।।२४।।
कः काशीं प्राप्य दुर्बुद्धिरपरत्र यियासति।।
मोक्षनिक्षेप कलशीं तुच्छश्रीकृतमानसः ।। २५ ।।
विमुखोपीश्वरोस्माकं काशीसेवनपुण्यतः ।।

संमुखो भविता पुण्यं कृतकृत्याः स्म तद्वयम् ।। २६ ।।

दिनैः कतिपयैरेव सर्वज्ञोपि समेष्यति ।।

विना काशीं न रमते यतोऽन्यत्र त्रिलोचनः ।। २७ ।।

शंभोः शक्तिरियं काशी काचित्सर्वैरगोचरा ।।

शंभुरेव हि जानीयादेतस्याः परमं सुखम् ।। ।। २८ ।।

इति निश्चित्य मनसि शंभोरानंदकानने ।।

अतिष्ठद्योगिनीवृंदं कयाचिन्मायायावृतम् ।। २९ ।।

व्यास उवाच ।। ।।

इत्थं समाकर्ण्य मुनिः पुनः पप्रच्छ षण्मुखम् ।।

कानि कानि च नामानि तासां तानि वदेश्वर ।। 4.1.45.३० ।।

भजनाद्योगिनीनां च काश्यां किं जायते फलम् ।।

कस्मिन्पर्वणि ताः पूज्याः कथं पूज्याश्च तद्वद ।। ३१ ।।

श्रुत्वेतिप्रश्नमौमेयो योगिनीसंश्रयं ततः ।।

प्रत्युवाच मुने वच्मि शृणोत्ववहितो भवान् ।। ३२ ।।

।। स्कंद उवाच ।। ।।

नामधेयानि वक्ष्यामि योगिनीनां घटोद्भव।।

आकर्ण्य यानि पापानि क्षयंति भविनां क्षणात्।।३३।।

गजानना सिंहमुखी गृध्रास्या काकतुंडिका।।

उष्ट्रग्रीवा हयग्रीवा वाराही शरभानना ।।३४।।

उलूकिका शिवारावा मयूरी विकटानना ।।

अष्टवक्त्रा कोटराक्षी कुब्जा विकटलोचना ।।३५।।

शुष्कोदरी ललज्जिह्वा श्वदंष्ट्रा वानरानना ।।

ऋक्षाक्षी केकराक्षी च बृहत्तुंडा सुराप्रिया ।। ३६ ।।

कपालहस्ता रक्ताक्षी शुकी श्येनी कपोतिका ।।

पाशहस्ता दंडहस्ता प्रचंडा चंडविक्रमा ।। ३७ ।।

शिशुघ्नी पापहंत्री च काली रुधिरपायिनी ।।

वसाधया गर्भभक्षा शवहस्तांत्रमालिनी ।।३८।।

स्थूलकेशी बृहत्कुक्षिः सर्पास्या प्रेतवाहना ।।

दंदशूककरा क्रौंची मृगशीर्षा वृषानना ।। ३९ ।।

व्यात्तास्या धूमनिःश्वासा व्योमैकचरणोर्ध्वदृक् ।।

तापनी शोषणीदृष्टिः कोटरी स्थूलनासिका ।। 4.1.45.४० ।।

विद्युत्प्रभा बलाकास्या मार्जारी कटपूतना ।।

अट्टाट्टहासा कामाक्षी मृगाक्षी मृगलोचना ।।४१।।

नामानीमानि यो मर्त्यश्चतुःषष्टिं दिनेदिने ।।

जपेत्त्रिसंध्यं तस्येह दुष्टबाधा प्रशाम्यति ।। ४२ ।।

न डाकिन्यो न शाकिन्यो न कूष्मांडा न राक्षसाः ।।

तस्य पीडां प्रकुर्वंति नामानीमानि यः पठेत् ।। ४३ ।।

शिशूनां शांतिकारीणि गर्भशांतिकराणि च ।।

रणे राजकुले वापि विवादे जयदान्यपि ।। ४४ ।।

लभेदभीप्सितां सिद्धिं योगिनीपीठसेवकः ।।

मंत्रांतराण्यपि जपंस्तत्पीठे सिद्धिभाग्भवेत् ।। ४५ ।।

बलिपूजोपहारैश्च धूपदीपसमर्पणैः ।।

क्षिप्रं प्रसन्ना योगिन्यः प्रयच्छेयुर्मनोरथान् ।। ४६ ।।

शरत्काले महापूजां तत्र कृत्वा विधानतः ।।

हवींषि हुत्वा मंत्रज्ञो महतीं सिद्धिमाप्नुयात् ।। ४७ ।।

आरभ्याश्वयुजःशुक्लां तिथिं प्रतिपदं शुभाम् ।।

पूजयेन्नवमीयावन्नरश्चिंतितमाप्नुयात् ।। ४८ ।।

कृष्णपक्षस्य भूतायामुपवासी नरोत्तमः ।।

तत्र जागरणं कृत्वा महतीं सिद्धिमाप्नुयात् ।। ४९ ।।

प्रणवादिचतुर्थ्यन्तैर्नामभिर्भक्तिमान्नरः ।।

प्रत्येकं हवनं कृत्वा शतमष्टोत्तरं निशि ।। 4.1.45.५० ।।

ससर्पिषा गुग्गुलुना लघुकोलि प्रमाणतः ।।

यां यां सिद्धिमभीप्सेत तांतां प्राप्नोति मानवः ।।५१।।

चैत्रकृष्णप्रतिपदि तत्र यात्रा प्रयत्नतः ।।

क्षेत्रविघ्नशांत्यर्थं कर्तव्या पुण्यकृज्जनैः ।। ५२ ।।

यात्रा च सांवत्सरिकीं यो न कुर्यादवज्ञया ।।

तस्य विघ्नं प्रयच्छंति योगिन्यः काशिवासिनः ।। ५३ ।।

अग्रे कृत्वा स्थिताः सर्वास्ताः काश्यां मणिकर्णिकाम् ।।

तन्नमस्कारमात्रेण नरो विघ्नैर्न बाध्यते ।। ५४ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे षष्टियोगन्यागमनंनाम पंचचत्वारिंशोध्यायः ।। ४५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४६

https://sa.wikisource.org/s/fw2

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

गतेथ योगिनीवृंदे देवदेवो घटोद्भव ।।

काशीप्रवृत्तिं जिज्ञासुः प्राहिणोदंशुमालिनम् ।।१।।

देवदेव उवाच ।। ।।

सप्ताश्व त्वरितो याहि पुरीं वाराणसीं शुभाम् ।।

यत्रास्ति स दिवोदासो धर्ममूर्तिर्महीपतिः ।। २ ।।

तस्य धर्मविरोधेन यथातत्क्षेत्रमुद्वसेत् ।।

तथा कुरुष्व भो क्षिप्रं मावमंस्थाश्च तं नृपम् ।। ३ ।।

धर्ममार्ग प्रवृत्तस्य क्रियते यावमानना ।।

सा भवेदात्मनो नूनं महदेनश्च जायते ।। ४ ।।

तवबुद्धिविकासेन च्यवते चेत्स धर्मतः ।।

तदा सा नगरी भानो त्वयोद्वास्याऽसहैः करैः ।। ५ ।।

कामक्रोधौ लोभमोहौ मत्सराहंकृती अपि ।।

ते तत्र न भवेतां यत्तत्कालोपि न तं जयेत् ।। ६ ।।

यावद्धर्मे स्थिराबुद्धिर्यावद्धर्मेस्थिरं मनः ।।

तावद्विघ्नोदयः क्वास्ति विपद्यपि रवे नृषु ।। ७ ।।

सर्वेषामिह जंतूनां त्वं वेत्सि ब्रध्नचेष्टितम् ।।

अतएव जगच्चक्षुर्व्रज त्वं कार्यसिद्धये ।। ८ ।।

रविरादाय देवाज्ञां मूर्तिमन्यां प्रकल्प्य च ।।

नभोध्वगामहोरात्रं काशीमभिमुखोऽभवत् ।। ९ ।।

मनसातीवलोलोऽभूत्काशीदर्शनलालसः ।।

सहस्रचरणोप्यैच्छत्तदा खे नैकपादताम् ।। 4.1.46.१० ।।

हंसत्वं तस्य सूर्यस्य तदा सफलतामगात् ।।

सदा नभोध्वनीनस्य काशीं प्रति यियासतः ।। ११ ।।

अथ काशीं समासाद्य रविरंतर्बहिश्चरन् ।।

मनागपि न तद्रूपे धर्मध्वस्तिमवेक्षत ।।१२।।

विभावसुर्वसन्काश्यां नानारूपेण वत्सरम् ।।

क्वचिन्नावसरं प्राप तत्र राज्ञि सुधर्मिणि ।। १३ ।।

कदाचिदतिथिर्भूतो दुर्लभं प्रार्थयन्नविः ।।

न तस्य राज्ञो विषये दुर्लभं किंचिदैक्षत ।। १४ ।।

कदाचिद्याचको जातो बहुदोपि कदाप्यभूत् ।।

कदाचिद्दीनतां प्राप्तः कदाचिद्व्रणकोप्यभूत् ।। १५ ।।

वेदबाह्यां क्रियां चापि कदाचित्प्रत्यपादयत्।।

कदाचित्स्थापयामास दृष्टप्रत्ययमैहिकम् ।।१६।।

कदाचिज्जटिलो जातः कदाचिच्च दिगंबरः ।।

स कदाचिज्जांगुलिको विषविद्याविशारदः।। ।। १७ ।।

सर्वपाषंडधर्मज्ञः कदाचिद्ब्रह्मवाद्यभूत् ।।

ऐंद्रजालिक आसीच्च कदाचिद्भ्रामयञ्जनान् ।। १८ ।।

नानाव्रतोपदेशैश्च कदाचित्स पतिव्रताः ।।

क्षोभयामास बहुशः सदृष्टांत कथानकैः ।। १९ ।।

कापालिक व्रतधरः कदाचिच्चाभवद्द्विजः ।।

कदाचिदपि विज्ञानी धातुवादी कदाचन ।। 4.1.46.२० ।।

क्वचिद्विप्रः क्वचिद्राजपुत्रो वैश्योंत्यजः क्वचित ।।

ब्रह्मचारी क्वचिदभूद्गृही वनचरः क्वचित् ।। २१ ।।

यतिः कदाचिदिति सरूपैरभ्रामयज्जनान् ।।

सर्वविद्यासु कुशलः सर्वज्ञश्चाभवत्क्वचित् ।। २२ ।।

इति नानाविधै रूपैश्चरन्काश्यां ग्रहेश्वरः ।।

न कदापि जने क्वापि च्छिद्रं प्राप कदाचन ।। २३ ।।

ततो निनिंद चात्मानं चिंतार्तः कश्यपात्मजः ।।

धिक्परप्रेष्यतां यस्यां यशो लभ्येत न क्वचित् ।। २४ ।।

।। मार्तंड उवाच ।। ।।

मंदरं यदि याम्यद्य सद्यस्तत्क्रुद्ध्यतीश्वरः ।।

अनिष्पादितकार्यार्थे मयि सामान्यभृत्यवत् ।। ।।२५ ।।

कोपमप्युररीकृत्य यदि यायां कथंचन ।।

कथं तिष्ठे पुरस्तस्य तर्हि वै मूढभृत्यवत् ।। २६ ।।

अथोंकृत्यावहेलं वा यामि चेच्च कथंचन ।।

क्रोधान्निरीक्षेत्त्र्यक्षो मां विषं पेयं तदा मया ।। २७ ।।

हरकोपानले नूनं यदि यातः पतंगताम् ।।

पितामहोपि मां त्रातुं तदा शक्ष्यति नस्फुटम् ।। २८ ।।

स्थास्याम्यत्रैव तन्नित्यं न त्यक्ष्यामि कदाचन ।।

क्षेत्रसंन्यासविधिना वाराणस्यां कृताश्रमः ।। २९ ।।

पुरः पुरारेः कायार्थमनिवेद्येह तिष्ठतः ।।

यत्पापं भावि मे तस्य काशीपापस्यनिष्कृतिः ।।4.1.46.३०।।

अन्यान्यपि च पापानि महांत्यल्पानि यानि च ।।

क्षयंति तानि सर्वाणि काशीं प्रविशतां सताम् ।।३१।।

बुद्धिपूर्वं मया चैतन्न पापं समुपार्जितम् ।।

पुरारिणैव हि पुराऽऽशासि धर्मो हि रक्ष्यताम् ।। ३२ ।।

धर्मो हि रक्षितो येन देहे सत्वरगत्वरे ।।

त्रैलोक्यरक्षितं तेन किं कामार्थैः सुरक्षितैः ।।३३ ।।

रक्षणीयो यदि भवेत्कामः कामारिणा कथम् ।।

क्षणादनंगतां नीतो बहूनां सुखकार्यपि ।।३४।।

अर्थश्चेत्सर्वथारक्ष्य इति कैश्चिदुदाहृतम्।।

तत्कथं न हरिश्चंद्रोऽरक्षत्कुशिकनंदने ।। ३५ ।।

धर्मस्तु रक्षितः सर्वैरपिदेहव्ययेन च ।।

शिबिप्रभृतिभूपालैर्दधीचिप्रमुखैर्द्विजैः ।। ३६ ।।

अयमेव हि वै धर्मः काशीसेवनसंभवः ।।

रुषितादपि रुद्रान्मां रक्षिष्यति न संशयः ।। ३७ ।।

अवाप्य काशीं दुष्प्रापां को जहाति सचेतनः ।।

रत्नं करस्थमुत्सृज्य कः काचं संजिघृक्षति ।। ३८ ।।

वाराणसीं समुत्सृज्य यस्त्वन्यत्र यियासति ।।

हत्वा निधानं पादेन सोर्थमिच्छति भिक्षया ।। ३९ ।।

पुत्रमित्रकलत्राणि क्षेत्राणि च धनानि च ।।
प्रतिजन्मेह लभ्यंते काश्येका नैव लभ्यते ।। 4.1.46.४० ।।
येन लब्धा पुरी काशी त्रैलोक्योद्धरणक्षमा ।।
त्रैलोक्यैश्वर्यदुष्प्रापं तेन लब्धं महासुखम् ।। ४१ ।।
कुपितोपि हि मे रुद्रस्तेजोहानिं विधास्यति ।।
काश्यां च लप्स्ये तत्तेजो यद्वै स्वात्मावबोधजम् ।। ४२ ।।
इतराणीह तेजांसि भासंते तावदेव हि ।।
खद्योताभानि यावन्नो जृंभते काशिजं महः ।। ४३ ।।
इति काशीप्रभावज्ञो जगच्चक्षुस्तमोनुदः ।।
कृत्वा द्वादशधात्मानं काशीपुर्यां व्यवस्थितः ।। ४४ ।।
लोलार्क उत्तरार्कश्च सांबादित्यस्तथैव च ।।
चतुर्थो द्रुपदादित्यो मयूखादित्य एव च ।। ४५ ।।
खखोल्कश्चारुणादित्यो वृद्धकेशवसंज्ञकौ ।।
दशमो विमलादित्यो गंगादित्यस्तथैव च ।। ।। ४६ ।।
द्वादशश्च यमादित्यः काशिपुर्यां घटोद्भव ।।
तमोऽधिकेभ्यो दुष्टेभ्यः क्षेत्रं रक्षंत्यमी सदा ।। ४७ ।।
तस्यार्कस्य मनोलोलं यदासीत्काशिदर्शने ।।
अतो लोलार्क इत्याख्या काश्यां जाता विवस्वतः ।। ४८ ।।
लोलार्कस्त्वसिसंभेदे दक्षिणस्यां दिशिस्थितः ।।
योगक्षेमं सदा कुर्यात्काशीवासि जनस्य च ।। ।। ४९ ।।
मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे ।।
विधाय वार्षिकीं यात्रां नरः पापै प्रमुच्यते ।। 4.1.46.५० ।।
कृतानि यानि पापानि नरैः संवत्सरावधि ।।
नश्यंति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात् ।। ५१ ।।
नरः स्नात्वासिसंभेदे संतर्प्य पितृदेवताः ।।
श्राद्धं विधाय विधिना पित्रानृण्यमवाप्नुयात् ।।५२।।
लोलार्कसंगमे स्नात्वा दानं होमं सुरार्चनम् ।।
यत्किंचित्क्रियते कर्म तदानंत्याय कल्पते ।। ५३ ।।

सूर्योपरागे लोलार्के स्नानदानादिकाः क्रियाः ।।
कुरुक्षेत्राद्दशगुणा भवंतीह न संशयः ।। ५४ ।।
लोलार्के रथसप्तम्यां स्नात्वा गंगासिसंगमे ।।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ।। ५५ ।।
प्रत्यर्कवारं लोलार्कं यः पश्यति शुचिव्रतः ।।
न तस्य दुःखं लोकेस्मिन्कदाचित्संभविष्यति।।५६।।
न तस्य दुःखं नो पामा न दद्रुर्न विचर्चिका ।।
लोलार्कमर्के यः पश्येत्तत्पादोदकसेवकः ।। ५७ ।।
वाराणस्यामुषित्वापि यो लोलार्कं न सेवते ।।
सेवंते तं नरं नूनं क्लेशाः क्षुद्व्याधिसंभवाः ।। ५८ ।।
सर्वेषां काशितीर्थानां लोलार्कः प्रथमं शिरः ।।
ततोंऽगान्यन्यतीर्थानि तज्जलप्लावितानिहि ।। ५९ ।।
तीर्थांतराणि सर्वाणि भूमीवलयगान्यपि ।।
असिसंभेदतीर्थस्य कलां नार्हंति षोडशीम् ।। 4.1.46.६० ।।
सर्वेषामेव तीर्थानां स्नानाद्यल्लभ्यते फलम् ।।
तत्फलं सम्यगाप्येत नरैर्गंगासिसंगमे ।। ६१ ।।
नार्थवादोयमुदितः स्तुतिवादो न वै मुने ।।
सत्यं यथार्थवादोयं श्रद्धेयः सद्भिरादरात् ।। ६२ ।।
यत्र विश्वेश्वरः साक्षाद्यत्र स्वर्गतरंगिणी ।।
मिथ्या तत्रानुमन्यंते तार्किकाश्चानुसूयकाः ।। ६३ ।।
उदाहरंति ये मूढाः कुतर्कबलदर्पिताः ।।
काश्यां सर्वेर्थवादोयं ते विट्कीटा युगेयुगे ।। ६४ ।।
कस्यचित्काशितीर्थस्य महिम्नो महतस्तुलाम्।।
नाधिरोहेन्मुने नूनमपि त्रैलोक्यमंडपः ।। ६५ ।।
नास्तिका वेदबाह्याश्च शिश्नोदरपरायणाः ।।
अंत्यजाताश्च ये तेषां पुरः काशी न वर्ण्यताम् ।। ६६ ।।
लोलार्ककरनिष्टप्ता असिधार विखंडिताः ।।
काश्यां दक्षिणदिग्भागे न विशेयुर्महामलाः ।।६७।।

महिमानमिमं श्रुत्वा लोलार्कस्य नरोत्तमः ।।

न दुःखी जायते क्वापि संसारे दुःखसागरे ।। ६८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे लोलार्कवर्णनं नाम षट्चत्वारिंशोध्यायः ।। ४६ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४७



।। स्कंद उवाच ।। ।।

अथोत्तरस्यामाशायां कुंडमर्काख्यमुत्तमम् ।।

तत्र नाम्नोत्तरार्केण रश्मिमाली व्यवस्थितः ।। १ ।।

तापयन्दुःखसंघातं साधूनाप्याययन्रविः ।।

उत्तरार्को महातेजाः काशीं रक्षति सर्वदा ।। २ ।।

तत्रेतिहासो यो वृत्तस्तं निशामय सुव्रत ।।

विप्रः प्रियव्रतो नाम कश्चिदात्रेय वंशजः ।। ३ ।।

आसीत्काश्यां शुभाचारः सदातिथिजनप्रियः ।।

भार्या शुभव्रता तस्य बभूवातिमनोहरा ।। ४ ।।

भर्तृशुश्रूषणरता गृहकर्मसुपेशला ।।

तस्यां स जनयामास कन्यामेकां सुलक्षणाम् ।। ५ ।।

मूलर्क्षप्रथमेपादे तथा केंद्रे बृहस्पतौ ।।

ववृधे सा गृहे पित्रोः शुक्ले पक्षे यथा शशी ।। ६ ।।

सुरूपा विनयाचारा पित्रोश्च प्रियकारिणी ।।

अतीव निपुणा जाता गृहोपस्करमार्जने ।। ७ ।।

यथायथा समैधिष्ट सा कन्या पितृमंदिरे ।।

तथातथा पितुस्तस्याश्चिंता संववृधेतराम् ।। ८ ।।

कस्मै देया वरा कन्या सुरम्येयं सुलक्षणा ।।

अस्या अनुगुणो लभ्यः क्व मया वर उत्तमः ।। ९ ।।

कुलेन वयसा चापि शीलेनापि श्रुतेन च ।।

रूपेणार्थेनसंयुक्तः कस्मै दत्ता सुखं लभेत् ।। 4.1.47.१० ।।

इति चिंतयतस्तस्य ज्वरोभूदतिदारुणः ।।

यश्चिंताख्यो ज्वरः पुंसामौषधैर्नापि शाम्यति ।। ११ ।।

तन्मूलर्क्षविपाकेन चिंताख्येन ज्वरेण च ।।

स विप्रः पंचतां प्राप्तस्त्यक्त्वा सर्वं गृहादिकम् ।। १२ ।।

पितर्युपरते तस्याः कन्यायाः सा जनन्यपि ।।

शुभव्रता परित्यज्य तां कन्यां पतिमन्वगात् ।। १३ ।।

धर्मोयं सहचारिण्या जीवताजीवतापि वा ।।

पत्या सहैव स्थातव्यं पतिव्रतयुजा सदा ।। १४ ।।

नापत्यं पाति नो माता न पिता नैव बांधवाः ।।

पत्युश्चरणशुश्रूषा पायाद्वै केवलं स्त्रियम् ।।१५।।

सुलक्षणापि दुःखार्ता पित्रोः पंचत्वमाप्तयोः ।।

और्ध्वदैहिकमापाद्य दशाहं विनिवर्त्य च ।। ।। १६ ।।

चिंतामवाप महतीमनाथा दैन्यमागता ।।

कथमेकाकिनी पित्रा मात्राहीना भवांबुधेः ।। १७ ।।

दुस्तरं पारमाप्स्यामि स्त्रीत्वं सर्वाभिभावि यत् ।।

न कस्मैचिद्वरायाहं पितृभ्यां प्रतिपादिता ।। १८ ।।

तददत्ता कथं स्वैरमहमन्यं वरं वृणे ।।

वृतोपि न कुलीनश्चेद्गुणवान्न च शीलवान् ।। १९ ।।

स्वाधीनोपि न तत्तेन वृतेनापि हि किं भवेत् ।।

इति संचिंतयंती सा रूपौदार्यगुणान्विता ।। 4.1.47.२० ।।

युवभिर्बहुभिर्नित्यं प्रार्थितापि मुहुर्मुहुः ।।

न कस्यापि ददौ बाला प्रवेशं निज मानसे ।। २१ ।।

पित्रोरुपरतिं दृष्ट्वा वात्सल्यं च तथाविधम् ।।

निनिंद बहुधात्मानं संसारं च निनिंद ह ।। २२ ।।

याभ्यामुत्पादिता चाहं याभ्यां च परिपालिता ।।

पितरौ कुत्र तौ यातौ देहिनो धिगनित्यताम् ।। २३ ।।

अहो देहोप्यहोंगत्वं यथा पित्रोः पुरो मम ।।

इति निश्चित्य सा बाला विजितेंद्रिय मानसा ।। २४ ।।

ब्रह्मचर्यं दृढं कृत्वा तप उग्रं चचार ह ।।

उत्तरार्कस्य देवस्य समीपे स्थिरमानसा ।।२५।।

तस्यां तपस्यमानायामेकाच्छागी लघीयसी ।।

तत्र प्रत्यहमागत्य तिष्ठेत्तत्पुरतोऽचला ।।२६।।

तृणपर्णादिकं किंचित्सायमभ्यवहृत्य सा ।।

तत्कुंडपीतपानीया स्वस्वामिसदनं व्रजेत् ।। २७ ।।

तत इत्थं व्यतीतासु पंचषा सुसमासु च ।।

लीलया विचरन्देवस्तत्र देव्या सहागतः ।। २८ ।।

सन्निधावुत्तरार्कस्य तपस्यतीं सुलक्षणाम् ।।

स्थाणुवन्निश्चलां स्थाणुरद्राक्षीत्तपसा कृशाम् ।।२९।।

ततो गिरिजया शंभुर्विज्ञप्तः करुणात्मना ।।

वरेणानुगृहाणेमां बंधुहीनां सुमध्यमाम् ।। 4.1.47.३० ।।

शर्वाणीगिरमाकर्ण्य ततः शर्वः कृपानिधिः ।।

समाधिमीलिताक्षीं तामुवाच वरदो हरः ।। ३१ ।।

सुलक्षणे प्रसन्नोस्मि वरं वरय सुव्रते ।।

चिरं खिन्नासि तपसा कस्तेऽस्तीह मनोरथः ।।३२।।

सापि शंभोर्गिरं श्रुत्वा मुखपीयूषवर्षिणीम् ।।

महासंतापशमनीं लोचने उदमीलयत्।।३३।।

त्र्यक्षं प्रत्यक्षमावीक्ष्य वरदानोन्मुखं पुरः ।।

देवीं च वामभागस्थां प्रणनाम कृतांजलिः ।। ३४ ।।

किं वृणे यावदित्थं सा चिंतयेच्चारुमध्यमा ।।

तावत्तयानिरैक्षिष्ट वराकी बर्करी पुरः ।। ३५ ।।

आत्मार्थं जीवलोकेस्मिन्को न जीवति मानवः ।।

परं परोपकारार्थं यो जीवति स जीवति ।। ३६ ।।

अनया मत्तपोवृत्ति साक्षिण्या बह्वनेहसम् ।।

असेव्यहं तदेतस्यै वरयामि जगत्पतिम् ।। ३७ ।।

परामृश्य मनस्येतत्प्राह त्र्यक्षं सुलक्षणा ।।

कृपानिधे महादेव यदि देयो वरो मम ।। ।। ३८ ।।

अजशावी वराक्येषा तर्हि प्रागनुगृह्यताम् ।।

वक्तुं पशुत्वान्नोवेत्ति किंचिन्मद्भक्तिपेशला ।। ३९ ।।

इति वाचं निशम्येशः परोपकृतिशालिनीम्।।

सुलक्षणाया नितरां तुतोष प्रणतार्तिहा ।। 4.1.47.४० ।।

देवदवस्ततः प्राह देवि पश्य गिरींद्रजे ।।

साधूनामीदृशी बुद्धिः परोपकरणोर्जिता ।। ४१ ।।

ते धन्याः सर्वलोकेषु सर्वधर्माश्रयाश्च ते ।।

यतंते सर्वभावेन परोपकरणाय ये ।।४२।।

संचयाः सर्ववस्तूनां चिरं तिष्ठति नो क्वचित् ।।

सुचिरं तिष्ठते चैकं परोपकरणं प्रिये ।।४३।।

धन्या सुलक्षणा चैषा योग्याऽनुग्रहकर्मणि ।।

ब्रूहि देवि वरो देयः कोऽस्यैच्छाग्यै च कः प्रिये ।। ४४ ।।

।। श्रीदेव्युवाच ।। ।।

सर्वसृष्टिकृतां कर्तः सर्वज्ञप्रणतार्तिहन् ।।

सुलक्षणा शुभाचारा सखी मेस्तु शुभोद्यमा ।। ४५ ।।

यथा जया च विजया यथा चैव जयंतिका ।।

शुभानंदा सुनंदा च कौमुदी च यथोर्मिला ।। ४६ ।।

यथा चंपकमाला च यथा मलयवासिनी ।।

कर्पूरलतिका यद्वद्गंधधारा यथा शुभा ।। ४७ ।।

अशोका च विशोका च यथा मलयगंधिनी ।।

यथा चंदननिःश्वासा यथा मृगमदोत्तमा ।। ४८ ।।

यथा च कोकिलालापा यथा मधुरभाषिणी ।।

गद्यपद्यनिधिर्यद्वदनुक्तज्ञा यथा च सा ।। ४९ ।।

दृगंचलेंगितज्ञा च यथा कृतमनोरथा ।।

गानचित्तहरा यद्वत्तथास्त्वेषा सुलक्षणा ।। 4.1.47.५० ।।

अतिप्रिया भवित्री मे यद्वाल ब्रह्मचारिणी ।।

अनेनैव शरीरेण दिव्यावयवभूषणा ।। ।। ५१ ।।

दिव्यांबरा दिव्यगंधा दिव्यज्ञानसमन्विता ।।

समया मां सदैवास्तां चंचच्चामरधारिणी ।। ५२ ।।

एषापि काशिराजस्य कुमार्यस्त्विह बर्करी ।।

अत्रैव भोगान्संप्राप्य मुक्तिं प्राप्स्यत्यनुत्तमाम् ।। ५३ ।।

अनया त्वर्ककुंडेस्मिन्पुष्ये मासि रवेर्दिने ।।

स्नातं त्वनुदिते सूर्ये शीतादक्षुब्धचित्तया ।। ५४ ।।

राजपुत्री ततः पुण्यादस्त्वेषा शुभलोचना ।।

वरदानप्रभावेण तव विश्वेश्वर प्रभो ।। ५५ ।।

बर्करीकुंडमित्याख्या त्वर्ककुंडस्य जायताम् ।।

एतस्याः प्रतिमा पूज्या भविष्यत्यत्र मानवैः ।। ९६ ।।

उत्तरार्कस्य देवस्य पुष्ये मासि रवेर्दिने ।।

कार्या सा वत्सरीयात्रा न तैः काशीफलेप्सुभिः ।।५७।।

मृडान्याभिहि तं सर्वं कृत्वैतद्विश्वगो विभुः ।।

विश्वनाथो विवेशाथ प्रासादं स्वमतर्कितः ।। ५८ ।।

।। स्कंद उवाच ।। ।।

लोलार्कस्य च माहात्म्यमुत्तरार्कस्य च द्विज ।।

कथितं ते महाभाग सांबादित्यं निशामय ।। ५९ ।।

श्रुत्वैतत्पुण्यमाख्यानं शुभं लोलोत्तरार्कयोः ।।

व्याधिभिर्नाभिभूयेत न दारिद्र्येण बाध्यते ।। 4.1.47.६० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे उत्तरार्कवर्णनं नाम सप्तचत्वारिंशोध्यायः ।। ४७ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४८

https://sa.wikisource.org/s/fw4
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।। ।।

शृणुष्व मैत्रावरुणे द्वारवत्यां यदूद्वहः ।।

दानवानां वधार्थाय भुवोभारापनुत्तये ।। १ ।।

आविरासीत्स्वयं कृष्णः कृष्णवर्त्मप्रतापवान् ।।

वासुदेवो जगद्धाम देवक्या वसुदेवतः।।२।।

साशीतिलक्षं तस्यासन्कुमारा अर्कवर्चसः ।।

स्वर्गे पितादृशा बालाः सुशीला न हि कुंभज ।। ३ ।।

अतीवरूपसंपन्ना अतीव सुमहाबलाः ।।

अतीव शस्त्रशास्त्रज्ञा अतीव शुभलक्षणाः ।। ४ ।।

तांद्रष्टुं मानसः पुत्रो ब्रह्मणस्तपसांनिधिः ।।

कृतवल्कलकौपीनो धृत कृष्णाजिनांबरः ।।५।।

गृहीतब्रह्मदंडश्च त्रिवृन्मौंजी सुमेखलः ।।

उरस्थलस्थ तुलसी मालया समलंकृतः ।। ६ ।।

गोपीचंदननिर्यास लसदंगविलेपनः ।।

तपसा कृशसर्वांगो मूर्तो ज्वलनवज्ज्वलन् ।।७।।

आजगामांबरचरो नारदो द्वारकापुरीम् ।।

विश्वकर्मविनिर्माणां जितस्वर्गपुरीश्रियम् ।।८।।

तंदृष्ट्वा नारदं सर्वे विनम्रतरकंधराः ।।

प्रबद्ध मूर्धांजलयः प्रणेमुर्वृष्णिनंदनाः ।। ९ ।।

सांबः स्वरूपसौंदर्य गर्वसर्वस्वमोहितः ।।

न ननाम मुनिं तत्र हसंस्तद्रूपसंपदम् ।। 4.1.48.१० ।।

सांबस्य तमभिप्रायं विज्ञाय स महामुनिः ।।

विवेश सुमहारम्यं नारदः कृष्णमंदिरम् ।। ११ ।।

कृष्णोथ दृष्ट्वाऽऽगच्छंतं प्रत्युद्गम्य च नारदम् ।।

मधुपर्केण संपूज्य स्वासने चोपवेशयत् ।। १२ ।।

कृत्वा कथा विचित्रार्थास्तत एकांतवर्तिनः ।।

कृष्णस्य कर्णेऽकथयन्नारदः सांबचेष्टितम् ।। १३ ।।

अवश्यं किंचिदत्राऽस्ति यशोदानंदवर्धन ।।

प्रायशस्तन्न घटतेऽसंभाव्यं नाथ वास्त्रियाम् ।। १४ ।।

यूनां त्रिभुवनस्थानां सांबोऽतीव सुरूपवान् ।।

स्वभावचंचलाक्षीणां चेतोवृत्तिः सुचंचला ।। १५ ।।

अपेक्षंते न मुग्धाक्ष्यः कुलं शीलं श्रुतं धनम् ।।

रूपमेव समीक्षंते विषमेषु विमोहिताः ।।१६।।

अथवा विदितं नो ते वल्लवीनां विचेष्टितम् ।।

विनाष्टौनायिकाः कृष्ण कामयंतेऽबलाह्यमुम् ।। ४३ ।।

वामभ्रुवां स्वभावाच्च नारदस्य च वाक्यतः ।।

विज्ञाताऽऽखिलवृत्तांतस्तथ्यं कृष्णोप्यमन्यत ।। १८ ।।

तावद्धैर्यंचलाक्षीणां तावच्चेतोविवेकिता ।।

यावन्नार्थी विविक्तस्थो विविक्तेर्थिनि नान्यथा ।। १९।।

इत्थं विवेचयंश्चित्ते कृष्णः क्रोधनदीरयम् ।।

विवेकसेतुनाऽऽस्तभ्य नारदं प्राहिणोत्सुधीः ।।4.1.48.२०।।

सांबस्य वैकृतं किंचित्क्वचित्कृष्णोनवैक्षत।।

गते देवमुनौ तस्मिन्वीक्षमाणोप्यहर्निशम् ।।२१।।

कियत्यपि गते काले पुनरप्यcraययौ मुनिः ।।

मध्ये लीलावतीनां च ज्ञात्वा कृष्णमवस्थितम् ।। २२ ।।

बहिः क्रीडंतमाहूय सांबमित्याह नारदः ।।

याहि कृष्णांतिकं तूर्णं कथयागमनं मम ।।२३ ।।

सांबोपि यामि नोयामि क्षणमित्थमचिंतयत् ।।

कथं रहःस्थ पितरं यामि स्त्रैणसखंप्रति ।। २४ ।।

न यामि च कथं वाक्यादस्याहं ब्रह्मचारिणः ।।

ज्वलदंगारसंकाश स्फुरत्सर्वांगतेजसः ।। २५।।

प्रणमत्सुकुमारेषु व्रीडितोयं मयैकदा ।।

इदानीमपि नो यायामस्य वाक्यान्महामुनेः ।। २६ ।।

अत्याहितं तदस्तीह तदागोद्वयदर्शनात् ।।
पितुः कोपोपि सुश्लाघ्यो मयि नो ब्राह्मणस्य तु ।। २७।।
ब्रह्मकोपाग्निनिर्दग्धाः प्ररोहंति न जातुचित् ।।
अपराग्निविनिर्दग्धारो हंते दावदग्धवत् ।। २८।।
इति ध्यात्वा क्षणं सांबोऽविशदंतःपुरंपितुः ।।
मध्ये स्त्रैणसभंकृष्णं यावज्जांबवतीसुतः ।। २९ ।।
दूरात्प्रणम्य विज्ञप्तिं स चकार सशंकितः ।।
तावत्तमन्वगच्छच्च नारदः कार्यसिद्धये ।। 4.1.48.३० ।।
ससंभ्रमोथ कृष्णोपि दृष्ट्वा सांबं च नारदम् ।।
समुत्तस्थौ परिदधत्पीतकौशेयमंबरम् ।। ३१ ।।
उत्थिते देवकीसूनौ ताः सर्वा अपि गोपिकाः ।।
विलज्जिताः समुत्तस्थुर्गृह्णंत्यः स्वंस्वमंबरम् ।। ३२ ।।
महार्हशयनीये तं हस्ते धृत्वा महामुनिम् ।।
समुपावेशयत्कृष्णः सांबश्च क्रीडितुं ययौ ।। ३३ ।।
तासां स्खलितमालोक्य तिष्ठंतीनां पुरो मुनिः ।।
कृष्णलीलाद्रवीभूतवरांगानां जगौ हरिम् ।। ३४ ।।
पश्यपश्य महाबुद्धे दृष्ट्वा जांबवतीसुतम् ।।
इमाः स्खलितमापन्नास्तद्रूपक्षुब्धचेतसः ।। ३५ ।।
कृष्णोपि सांबमाहूय सहसैवाशपत्सुतम् ।।
सर्वा जांबवतीतुल्याः पश्यंतमपि दुर्विधेः ।। ३६ ।।
यस्मात्त्वद्रूपमालोक्य गोपाल्यः स्खलिता इमाः ।।
तस्मात्कुष्ठी भव क्षिप्रमकांडागमनेन च ।। ३७ ।।
वेपमानो महाव्याधिभयात्सांबोपि दारुणात् ।।
कृष्णं प्रसादयामास बहुशः पापशांतये।। ३८ ।।
कृष्णोप्यनेन संजानन्सांबं स्वसुतमौरसम् ।।
अब्रवीत्कुष्ठमोक्षाय व्रज वैश्वेश्वरीं पुरीम् ।। ३९ ।।
तत्र ब्रध्नं समाराध्य प्रकृतिं स्वामवाप्स्यसि ।।
महैनसां क्षयो यत्र नास्ति वाराणसीं विना ।। 4.1.48.४० ।।

यत्र विश्वेश्वरः साक्षाद्यत्र स्वर्गापगा च सा ।।

येषां महैनसां दृष्टा मुनिभिर्नैव निष्कृतिः ।।

तेषां विशुद्धिरस्त्येव प्राप्य वाराणसीं पुरीम् ।। ४१ ।।

न केवलं हि पापेभ्यो वाराणस्यां विमुच्यते ।।

प्राकृतेभ्योपि पापेभ्यो मुच्यते शंकराज्ञया ।। ४२ ।।

पुरा पुरारिणा सृष्टमविमुक्तं विमुक्तये ।।

सर्वेषामेव जंतूनां कृपयांते तनुत्यजाम् ।। ४३ ।।

तत्रानंदवने शंभोस्तवशाप निराकृतिः ।।

सांब तत्त्वेरितं याहि नान्यथा शापनिर्वृतिः ।। ४४ ।।

ततः कृष्णं समापृच्छ्य कर्मनिर्मुक्तचेष्टितः ।।

नारदः कृतकृत्यः सन्यथावाकाशवर्त्मना ।। ४५ ।।

सांबो वाराणसीं प्राप्य समाराध्यांशुमालिनम् ।।

कुंडं तत्पृष्ठतः कृत्वा निजां प्रकृतिमाप्तवान् ।।४६ ।।

सांबादित्यस्तदारभ्य सर्वव्याधिहरो रविः ।।

ददाति सर्वभक्तेभ्योऽनामयाः सर्वसंपदः ।। ४७ ।।

सांबकुंडे नरः स्नात्वा रविवारेऽरुणोदये।।

सांबादित्यं च संपूज्य व्याधिभिर्नाभिभूयते ।। ४८ ।।

न स्त्री वैधव्यमाप्नोति सांबादित्यस्य सेवनात् ।।

वंध्या पुत्रं प्रसूयेत शुद्धरूपसमन्वितम् ।। ४९ ।।

शुक्लायां द्विज सप्तम्यां माघे मासि रवेर्दिने ।।

महापर्व समाख्यातं रविपर्व समं शुभम् ।। 4.1.48.५० ।।

महारोगात्प्रमुच्येत तत्र स्नात्वारुणोदये ।।

सांबादित्यं प्रपूज्यापि धर्ममक्षयमाप्नुयात् ।। ५१ ।।

सन्निहत्यां कुरुक्षेत्रे यत्पुण्यं राहुदर्शने ।।

तत्पुण्यं रविसप्तम्यां माघे काश्यां न संशयः ।। ५२ ।।

मधौमासि रवेर्वारे यात्रा सांवत्सरी भवेत् ।।

अशोकैस्तत्र संपूज्य कुंडे स्नात्वा विधानतः ।। ५३ ।।

सांबादित्यं नरो जातु न शोकैरभिभूयते ।।

संवत्सरकृतात्पापाद्वहिर्भवति तत्क्षणात् ।। ५४ ।।

विश्वेशात्पश्चिमाशायां सांबेनात्र महात्मना ।।

सम्यगाराधिता मूर्तिरादित्यस्य शुभप्रदा ।। ५५ ।।

इयं भविष्या तन्मूर्तिरगस्ते त्वत्पुरोऽकथि ।।

तामभ्यर्च्य नमस्कृत्य कृत्वाष्टौ च प्रदक्षिणाः ।।

नरो भवति निष्पापः काशीवास फलं लभेत् ।। ५६ ।।

सांबादित्यस्य माहात्म्यं कथितं ते महामते ।।

यच्छ्रुत्वापि नरो जातु यमलोकं न पश्यति ।। ५७ ।।

इदानीं द्रौपदादित्यं कथयिष्यामि तेनघ ।।

तथा द्रौपदआदित्यः संसेव्यो भक्तसिद्धिदः ।। ५८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सांबादित्यमाहात्म्यकथनं नामाष्टचत्वारिंशोध्यायः ।।४८।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०४९



सूत उवाच ।। ।।

पाराशर्यमुने व्यास कुमारः कुंभजन्मने ।।

यदावदत्कथामेतां तदा क्व द्रुपदात्मजा ।। १ ।।

।। व्यास उवाच ।। ।।

पुराणसंहितां सूत ब्रूते त्रैकालिकीं कथाम् ।।

संदेहो नात्र कर्तव्यो यतस्तद्गोचरोखिलम् ।।२।।

।। स्कंद उवाच।। ।।

आकर्णय मुने पूर्वं पंचवक्त्रो हरः स्वयम् ।।

पृथिव्यां पंचधा भूत्वा प्रादुरासीज्जगद्धितः ।।३।।

उमापि च जगद्धात्री द्रुपदस्य महीभुजः ।।

यजतो वह्निकुंडाच्च प्रादुश्चक्रेति सुंदरी ।। ४ ।।

पंचापि पांडुतनयाः साक्षाद्रुद्रवपुर्धराः ।।

अवतेरुरिह स्वर्गाद्दुष्टसंहारकारकाः ।। ५ ।।

नारायणोपि कृष्णत्वं प्राप्य तत्साहचर्यकृत् ।।

उद्वृत्तवृत्तशमनः सद्वृत्तस्थितिकारकः ।। ।। ६ ।।

प्रतपंतः पृथिव्यां ते पार्थाश्चेरुः पृथक्पृथक् ।।

उदयानुदयौ तस्मिन्संपदां विपदामपि ।। ७ ।।

कदाचित्ते महावीरा भ्रातृव्यप्रतिपादिताम् ।।

विपत्तिमाप्य महतीं बभूवुः काननौकसः ।। ८ ।।

पांचाल्यपि च तत्पत्नी पतिव्यसनतापिता ।।

धर्मज्ञा प्राप्य तन्वंगी ब्रध्नमाराधयद्भृशम् ।। ९ ।।

आराधितोथ सविता तया द्रुपदकन्यया ।।

सदर्वी सपिधानां च स्थालिकामक्षयां ददौ ।। 4.1.49.१० ।।

उवाच च प्रसन्नात्मा भास्करो द्रुपदात्मजाम् ।। २३।।

आराधयंतीं भावेन सर्वत्र शुचिमानसाम् ।। ११ ।।

स्थाल्यैतया महाभागे यावंतोऽन्नार्थिनो जनाः ।।

तावंतस्तृप्तिमाप्स्यंति यावच्च त्वं न भोक्ष्यसे ।। १२ ।।

भुक्तायां त्वयि रिक्तैषा पूर्णभक्ता भविष्यति ।।

रसवद्व्यंजननिधिरिच्छाभक्ष्यप्रदायिनी ।। १३ ।।

इत्थं वरस्तया लब्धः काश्यामादित्यतो मुने ।।

अपरश्च वरो दत्तस्तस्यै देवेन भास्वता ।। १४ ।।

।। रविरुवाच ।। ।।

विश्वेशाद्दक्षिणेभागे यो मां त्वत्पुरतः स्थितम् ।।

आराधयिष्यति नरः क्षुद्बाधा तस्य नश्यति ।। १५ ।।

अन्यश्च मे वरो दत्तो विश्वेशेन पतिव्रते ।।

तपसा परितुष्टेन तं निशामय वच्मि ते ।। १६ ।।

प्राग्रवे त्वां समाराध्य यो मां द्रक्ष्यति मानवः ।।

तस्य त्वं दुःखतिमिरमपानुद निजैः करैः ।। १७ ।।

अतो धर्माप्रिये नित्यं प्राप्य विश्वेश्वराद्वरम् ।।

काशीस्थितानां जंतूनां नाशयाम्यघसंचयम् ।। १८ ।।

ये मामत्र भजिष्यंति मानवाः श्रद्धयान्विताः ।।

त्वद्वरोद्यतपाणिं च तेषां दास्यामि चिंतितम् ।। १९ ।।

भवतीं मत्समीपस्थां युधिष्ठिरपतिव्रताम् ।।

विश्वेशाद्दक्षिणेभागे दंडपाणेः समीपतः ।। 4.1.49.२० ।।

येर्चयिष्यंति भावेन पुरुषा वास्त्रियोपि वा ।।

तेषां कदाचिन्नो भावि भयं प्रियवियोगजम् ।। २१ ।।

न व्याधिजं भयं क्वापि न क्षुत्तृड्दोषसंभवम् ।।

द्रौपदीक्षणतः काश्यां तव धर्मप्रियेनघे ।। २२ ।।

इति दत्त्वा वरान्देव आदित्यः सर्वदः सताम् ।।

शंभुमाराधयामास धर्मं द्रौपद्युपाययौ ।। २३ ।।

आदित्यस्य कथामेतां द्रौपद्याराधितस्य वै ।।

यः श्रोष्यति नरो भक्त्या तस्यैनः क्षयमेष्यति ।। २४ ।।

स्कंद उवाच ।। ।।

द्रौपदादित्यमाहात्म्यं संक्षेपात्कथितं मया ।।

मयूखादित्यमाहात्म्यं शृण्विदानीं घटोद्भव ।। -२५ ।।

पुरा पंचनदे तीर्थे त्रिषुलोकेषु विश्रुते ।।

सहस्ररश्मिर्भगवांस्तपस्तेपे सुदारुणम् ।। २६ ।।

प्रतिष्ठाप्य महालिंगं गभस्तीश्वर संज्ञितम् ।।

गौरीं च मंगला नाम्नीं भक्तमंगलदां सदा ।। २७ ।।

दिव्यवर्षसहस्रं तु शतेन गुणितं मुने ।।

आराधयञ्शिवं सोमं सोमार्धकृतशेखरम् ।। २८ ।।

स्वरूपतस्तु तपनस्त्रिलोकीतापनक्षमः ।।

ततोतितीव्र तपसा जज्वाल नितरां मुने ।। २९ ।।

मयूखैस्तत्र सवितुस्त्रैलोक्यदहनक्षमैः ।।

ततं समस्तं तत्काले द्यावाभूम्योर्यदंतरम् ।। 4.1.49.३० ।।

वैमानिकैर्विष्णुपदे तत्यजे च गतागतम् ।।

तीव्रे पतंगमहसि पतंगत्वभयादिव ।। ३१ ।।

मयूखा एव दृश्यंते तिर्यगूर्ध्वमधोपि च।।

आदित्यस्य न चादित्यो नीपपुष्पस्थितेरिव।। ३२।।

तस्यवै महसां राशेस्तपोराशेस्तपोर्चिषाम्।।

चकंपे साध्वसात्तीव्रा त्रैलोक्यं सचराचरम् ।। ३३ ।।

सूर्य आत्मास्य जगतो वेदेषु परिपठ्यते ।।

स एव चेज्वालयिता को नस्त्राता भवेदिह ।। ३४ ।।

जगच्चक्षुरसौ सूर्यो जगदात्मैष भास्करः ।।

जगद्योयन्मृतप्रायं प्रातःप्रातः प्रबोधयेत् ।। ३५ ।।

तमोंधकूपपतितमुद्यन्नेष दिनेदिने ।।

प्रसार्य परितः पाणीन्प्राणिजातं समुद्धरेत् ।। ३६ ।।

उदितेऽत्रोदिमो नित्यमस्तं यात्यस्तमाप्नुमः ।।

उदयेऽनुदये तस्मादस्माकं कारणं रविः ।। ३७ ।।

इति व्याकुलितं विश्वं पश्यन्विश्वेश्वरः स्वयम् ।।

विश्वत्राता वरं दातुं संजग्मे तिग्मरश्मये ।। ३८ ।।

मयूखमालिनं शंभुरालोक्याति सुनिश्चलम् ।।

समाधि विस्मृतात्मानं विसिस्माय तपः प्रति ।। ३९ ।।

उवाच च प्रसन्नात्मा श्रीकंठः प्रणतार्तिहृत् ।।

अलं तप्त्वा वरं ब्रूहि द्युमणे महसां निधे ।। 4.1.49.४० ।।

निरुद्धेंद्रियवृत्तित्वाद्ब्रध्नो ध्यानसमाधिना ।।

न जग्राह वचः शंभोर्द्वित्रिरुक्तोप्यकर्णवत् ।। ४१ ।।

काष्ठीभूतं तु तं ज्ञात्वा शिवः पस्पर्श पाणिना ।।

महातपः समुद्भूत संतापामृतवर्षिणा ।। ४२ ।।

तत उन्मीलयांचक्रे लोचने विश्वलोचनः ।।

तस्योदयमिव प्राप्य प्रगे पंकजिनीवनी ।।४३।।

परिव्यपेतसंतापस्तपनः स्पर्शनाद्विभोः ।।

अवग्रहितसस्यश्रीरुल्ललास यथांबुदात् ।। ४४ ।।

मित्रो नेत्रातिथीकृत्य त्र्यक्षं प्रत्यक्षमग्रतः ।।

दंडवत्प्रणनामोच्चैस्तुष्टाव च पिनाकिनम् ।। ४५ ।।

।। रविरुवाच ।। ।।

देवदेव जगतांपते विभो भर्ग भीम भव चंद्रभूषण ।।

भूतनाथ भवभीतिहारक त्वां नतोस्मि नतवांछितप्रद ।। ४६।।

चंद्रचूडमृड धूर्जटे हर त्र्यक्ष दक्ष शततंतुशातन।।

शांतशाश्वत शिवापते शिव त्वां नतोस्मि नतवांछितप्रद ।। ४७ ।।

नीललोहित समीहितार्थ दहे(?)द्व्येकलोचन विरूपलोचन ।।

व्योमकेशपशुपाशनाशन त्वां नतोस्मि नतवांछितप्रद ।। ४८ ।।

वामदेवशितिकंठशूलभृच्चंद्रशेखर फणींद्रभूषण।।

कामकृत्पशुपते महेश्वर त्वां नतोस्मि नतवांछितप्रद।।४९।।

त्र्यंबक त्रिपुरसूदनेश्वर त्राणकृत्त्रिनयनत्रयीमय।।

कालकूट दलनांतकांतक त्वां नतोस्मि नतवांछितप्रद ।। 4.1.49.५० ।।

शर्वरीरहितशर्वसर्वगस्वर्गमार्गसुखदापवर्गद ।।

अंधकासुररिपो कपर्दभृत्त्वां नतोस्मि नतवांछितप्रद ।।५१।।

शंकरोग्रगिरिजापते पते विश्वनाथविधिविष्णु संस्तुत ।।

वेदवेद्यविदिताऽखिलेंगि तत्वां नतोस्मि नतवांछितप्रद ।।५२।।

विश्वरूपपररूप वर्जितब्रह्मजिह्मरहितामृतप्रद ।।

वाङ्मनोविषयदूरदूरगत्वां नतोस्मि नतवांछितप्रद ।। ५३ ।।

इत्थं परीत्य मार्तंडो मृडं देवं मृडानिकाम् ।।

अथ तुष्टाव प्रीतात्मा शिववामार्धहारिणीम्।। ५४ ।।

रविरुवाच ।। ।।

देवि त्वदीयचरणांबुजरेणुगौरीं भालस्थलीं वहति यः प्रणतिप्रवीणः ।।

जन्मांतरेपि रजनीकरचारुलेखा तां गौरयत्यतितरां किल तस्य पुंसः ।। ५५ ।।

श्रीमंगले सकलमंगलजन्मभूमे श्रीमंगले सकलकल्मषतूलवह्ने।।

श्रीमंगले सकलदानवदर्पहंत्रि श्रीमंगलेऽखिलमिदं परिपाहि विश्वम्।।५६।।

विश्वेश्वरि त्वमसि विश्वजनस्य कर्त्री त्वं पालयित्र्यसि तथा प्रलयेपिहंत्री ।।

त्वन्नामकीर्तनसमुल्लसदच्छपुण्या स्रोतस्विनी हरति पातककूलवृक्षान् ।।५७।।

मातर्भवानि भवती भवतीव्रदुःखसंभारहारिणि शरण्यमिहास्ति नान्या ।।

धन्यास्त एव भुवनेषु त एव मान्या येषु स्फुरेत्तवशुभः करुणाकटाक्षः ।। ५८ ।।

ये त्वा स्मरंति सततं सहजप्रकाशां काशीपुरीस्थितिमतीं नतमोक्षलक्ष्मीम् ।।

तान्संस्मरेत्स्मरहरो धृतशुद्धबुद्धीन्निर्वाणरक्षणविचक्षणपात्रभूतान् ।।५९।।

मातस्तवांघ्रियुगलं विमलं हृदिस्थं यस्यास्ति तस्य भुवनं सकलं करस्थम् ।।

यो नामतेज एति मंगलगौरि नित्यं सिद्ध्यष्टकं न परिमुंचति तस्य गेहम् ।। 4.1.49.६० ।।

त्वं देवि वेदजननी प्रणवस्वरूपा गायत्र्यसि त्वमसि वै द्विजकामधेनुः ।।

त्वं व्याहृतित्रयमिहाऽखिलकर्मसिद्ध्यै स्वाहास्वधासि सुमनः पितृतृप्तिहेतुः ।। ६१ ।।

गौरि त्वमेव शशिमौलिनि वेधसि त्वं सावित्र्यसि त्वमसि चक्रिणि चारुलक्ष्मीः ।।

काश्यां त्वमस्यमलरूपिणि मोक्षलक्ष्मीस्त्वं मे शरण्यमिह मंगलगौरि मातः ।। ६२ ।।

स्तुत्वेति तां स्मरहरार्धशरीरशोभां श्रीमंगलाष्टक महास्तवनेन भानुः ।।

देवीं च देवमसकृत्परितः प्रणम्य तूष्णीं बभूव सविता शिवयोः पुरस्तात् ।। ६३ ।।

।। देवदेव उवाच ।। ।।

उत्तिष्ठोत्तिष्ठ भद्रं ते प्रसन्नोस्मि महामते ।।

मित्रमन्नेत्रगो नित्यं प्रपश्ये तच्चराचरम् ।। ६४ ।।

मम मूर्तिर्भवान्सूर्य सर्वज्ञो भव सर्वगः ।।

सर्वेषां महसां राशिः सर्वेषां सर्वकर्मवित् ।। ६५ ।।

सर्वेषां सर्वदुःखानि भक्तानां त्वं निराकुरु ।।

त्वया नाम्नां चतुःषष्ट्या यदष्टकमुदीरितम् ।। ६६ ।।

अनेन मां परिष्टुत्य नरो मद्भक्तिमाप्स्यति ।।

अष्टकं मंगलागौर्या मंगलाष्टकसंज्ञकम् ।। ६७ ।।

अनेन मंगलागौरीं स्तुत्वा मंगलमाप्स्यति ।।

चतुःषष्ट्यष्टकं स्तोत्रं मंगलाष्टकमेव च ।। ६८ ।।

एतत्स्तोत्रवरं पुण्यं सर्वपातकनाशनम् ।।

दूरदेशांतरस्थोपि जपन्नित्यं नरोत्तमः ।।६९।।

त्रिसंध्यं परिशुद्धात्मा काशीं प्राप्स्यति दुर्लभाम् ।।

अनेन स्तोत्रयुग्मेन जप्तेन प्रत्यहं नृभिः ।।4.1.49.७०।।

ध्रुवदैनंदिनं पापं क्षालितं नात्र संशयः ।।

न तस्य देहिनो देहे जातु चित्किल्बिषस्थितिः ।।७१।।

त्रिकालं योजयेन्नित्यमेतत्स्तोत्रद्वयंशुभम् ।।

किंजप्तैर्बहुभिः स्तोत्रैश्चंचलश्रीप्रदैर्नृणाम् ।। ७२ ।।

एतत्स्तोत्रद्वयं दद्यात्काश्यां नैःश्रेयसीं श्रियम् ।।

तस्मात्सर्वप्रयत्नेन मानवैर्मोक्षकांक्षिभिः ।। ७३ ।।

एतत्स्तोत्रद्वयं जप्यं त्यक्त्वा स्तोत्राण्यनेकशः ।।

प्रपंच आवयोरेव सर्व एष चराचरः ।। ७४ ।।

तदावयोःस्तवादस्मान्निष्प्रपंचो जनो भवेत् ।।

समृद्धिमाप्य महतीं पुत्रपौत्रवतीमिह ।। ७५ ।।

अंते निर्वाणमाप्नोति जपन्स्तोत्रमिदं नरः ।।

अन्यच्च शृणु सप्ताश्व ग्रहराज दिवाकर ।। ।। ७६ ।।

त्वया प्रतिष्ठितं लिंगं गभस्तीश्वरसंज्ञितम् ।।

सेवितं भक्तिभावेन सर्वसिद्धिसमर्पकम् ।। ७७।।

त्वया गभस्तिमालाभिश्चांपेयांबुजकांतिभिः ।।

यदर्चित्वैश्वरं लिंगं सर्वभावेन भास्कर ।। ७८ ।।

गभस्तीश्वर इत्याख्यां ततो लिंगमवाप्स्यति ।।

अर्चयित्वा गभस्तीशं स्नात्वा पंचनदे नरः ।। ७९ ।।

न जातु जायते मातुर्जठरे धूतकल्मषः ।।

इमां च मंगलागौरीं नारी वा पुरुषोपि वा ।। 4.1.49.८० ।।

चैत्रशुक्लतृतीयायामुपोषणपरायणः ।।

महोपचारैः संपूज्य दुकूलाभरणादिभिः ।। ८१ ।।

रात्रौ जागरणं कृत्वा गीतनृत्यकथादिभिः ।।

प्रातः कुमारीः संपूज्य द्वादशाच्छादनादिभिः ।। ८२ ।।

संभोज्यपरमान्नाद्यैर्दत्त्वान्येभ्योपि दक्षिणाम् ।।

होमं कृत्वा विधानेन जातवेदस इत्यृचा ।। ८३ ।।

अष्टोत्तरशताभिश्च तिलाज्याहुतिभिः प्रगे ।।

एकं गोमिथुनं दत्त्वा ब्राह्मणाय कुटुंबिने ।।८४ ।।

श्रद्धया समलंकृत्य भूषणैर्द्विजदंपती ।।

भोजयित्वा महार्हान्नैः प्रीयेतां मंगलेश्वरौ ।। ८५ ।।

इति मंत्रं समुच्चार्य प्रातः कृत्वाथ पारणम् ।।

न दुर्भगत्वमाप्नोति न दारिद्र्यं कदाचन ।। ८६ ।।

न वै संतानविच्छित्तिं भोगोच्छित्तिं न जातुचित् ।।

स्त्री वैधव्यं न चाप्नोति न नायोषिद्वियोगभाक् ।। ८७ ।।

पापानि विलयं यांति पुण्यराशिश्च लभ्यते ।।

अपि वंध्या प्रसूयेत कृत्वैतन्मंगलाव्रतम् ।। ८८ ।।

एतद्व्रतस्य करणात्कुरूपत्वं न जातुचित् ।।

कुमारी विंदतेत्यंतं गुणरूपयुतं पतिम् ।।८९।।

कुमारोपि व्रतं कृत्वा विंदति स्त्रियमुत्तमाम् ।।

संति व्रतानि बहुशो धनकामप्रदानि च ।।4.1.49.९०।।

नाप्नुयुर्जातुचित्तानि मंगलाव्रततुल्यताम् ।।

कर्तव्या चाब्दिकी यात्रा मधौ तस्यां तिथौ नरैः ।। ९१ ।।

सर्वविघ्नप्रशांत्यर्थं सदा काशीनिवासिभिः ।।

अपरं द्युमणे वच्मि तव चात्र तपस्यतः ।। ९२ ।।

मयूखा एव खे दृष्टा न च दृष्टं कलेवरम् ।।

मयूखादित्य इत्याख्या ततस्ते दितिनंदन ।। ९३ ।।

त्वदर्चनान्नृणां कश्चिन्न व्याधिः प्रभविष्यति ।।

भविष्यति न दारिद्र्यं रविवारे त्वदीक्षणात् ।। ९४ ।।

इत्थं मयूखादित्यस्य शिवो दत्त्वा बहून्वरान् ।।

तत्रैवांतर्हितो भूतो रविस्तत्रैव तस्थिवान् ।। ९५ ।।

श्रुत्वाख्यानमिदं पुण्यं मयूखादित्यसंश्रयम् ।।

द्रौपदादित्यसहितं नरो न निरयं व्रजेत् ।।९६।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे पूर्वार्द्धे द्रौपदादित्यमयूखादित्ययोर्वर्णनं नामैकोनपंचाशत्तमोध्यायः ।। ४९ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५०

https://sa.wikisource.org/s/fw6
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

वाराणस्यां तथादित्या ये चान्ये तान्वदाम्यतः ।।

कलशोद्भव ते प्रीत्या सर्वे सर्वाघनाशनाः ।। १ ।।

खखोल्को नाम भगवानादित्य परिकीर्तितः ।।

त्रिविष्टपोत्तरे भागे सर्वव्याधिविघातकृत् ।। २ ।।

यथा खखोल्क इत्याख्या तस्यादित्यस्य तच्छृणु ।।

पुरा कद्रूश्च विनता दक्षस्य तनये शुभे ।। ।।३।।

कश्यपस्य च ते पत्न्यौ मारीचेः प्राक्प्रजापतेः ।।

क्रीडंत्यावेकदान्योन्यं मुने ते ऊचतुस्त्विति ।। ४ ।।

।। कद्रूरुवाच ।। ।।

विनते त्वं विजानासि यदि तद्ब्रूहि मेग्रतः।।

अखंडिता गतिस्तेस्ति यतो गगनमंडले ।। ५ ।।

योसावुच्चैःश्रवा वाजी श्रूयते सवितूरथे ।।

किं रूपःसोस्ति शबलो धवलो वा वदाशु मे ।। ६ ।।

पणं च कुरु कल्याणि तुभ्यं यो रोचतेनघे ।।

एवमेव न यात्येष कालक्रीडनकं विना ।।७।।

।। विनतोवाच ।। ।।

किं पणेन भगिन्यत्र कथयाम्येवमेव हि ।।

त्वज्जये का च मे प्रीतिर्मज्जये किं नु ते सुखम् ।। ८ ।।

ज्ञात्वा पणो न कर्तव्यो मिथः स्नेहमभीप्सता ।।

ध्रुवमेकस्य विजये क्रोधोन्स्येह जायते ।।९।।

कद्रूरुवाच ।।

क्रीडेयं नात्र भगिनि कारणं किमपि क्रुधः ।।

खेलस्य व्यवहारोयं पणे यत्किंचिदुच्यते ।। 4.1.50.१० ।।

।। विनतोवाच ।। ।।

तथा कुरु यथा प्रीतिस्तवास्ति पवनाशिनि ।।

अथ तां विनतामाह कद्रूः कुटिलमानसा ।। ११ ।।

तस्यास्तु सा भवेद्दासी पराजीयेत या यया ।।

अस्मिन्पणे इमाः सर्वाः सख्यः साक्षिण्य एव नौ ।। १२ ।।

इत्यन्योन्यं पणीकृत्य सर्पिण्यपि पतत्त्रिणी ।।

उवाच कर्बुरं कद्रूरश्वं श्वेतं गरुत्मती ।। १३ ।।

कदागंतव्यमिति च चक्राते ते गमावधिम् ।।

जग्मतुश्च विरम्याथ क्रीडनात्स्वस्वमालयम् ।। १४ ।।

विनतायां गतायां तु कद्रूराहूय चांगजान् ।।

उवाच यात वै पुत्रा द्रुतं वचनतो मम ।। १५।।

तुरंगमुच्चैःश्रवसं प्रोद्भूतं क्षीरनीरधेः ।।

सुरासुरैर्मथ्यमानान्मंदराघातसाध्वसात् ।। १६ ।।

कार्यकारणरूपस्य सादृश्यमधिगच्छति ।।

अतस्तं क्षीरवर्णाभं कल्माषयत पुत्रकाः ।। १७ ।।

तस्य वालधिमध्यास्य कृष्णकुंतलतां गताः ।।

तथा तदंगलोमानि विधत्तविषसीत्कृतैः ।। १८ ।।

इति श्रुत्वा वचो मातुः काद्रवेयाः परस्परम् ।।

संमंत्र्य मातरं प्रोचुः कद्रूं कद्रूपमागताः ।। १९ ।।

।। नागा ऊचुः ।। ।।

मातर्वयं त्वदाह्वानाद्विहाय क्रीडनं बलात् ।।

प्राप्ताः प्रहृष्टा मृष्टान्नं दास्यत्यद्य प्रसूरिति ।। 4.1.50.२० ।।

मृष्टं तिष्ठतु तद्दूरं विषादप्यधिकं कटु ।।

तत्त्वया वादियन्मंत्रैरौषधैर्नोपशाम्यति ।। २१ ।।

वयं न यामो यद्भाव्यं तदस्माकं भवत्विह ।।

इति प्रोक्तं विषास्यैस्तैस्तदा कुटिलगामिभिः ।। २२ ।।

।। स्कंद उवाच ।। ।।

अन्येपि ये कुटिलगाः पररंध्रनिषेविणः ।।

अकर्णाः क्रूरहृदयाः पितरौ व्रीडयंति ते ।। २३ ।।

पित्रोर्गिरं निराकृत्य ये तिष्ठेयुः सुदुर्मदाः ।।

अत्याहितमिह प्राप्य गच्छेयुस्तेऽचिराल्लयम् ।। २४ ।।

तेषां वचनमाकर्ण्य नयाम इति सोरगी ।।

शशाप तान्क्रुधाविष्टा नागांश्चागः समागतान् ।। २५ ।।

ताक्ष्यस्य भक्ष्या भवत यूयं मद्वाक्यलंघनात् ।।

जातमात्राश्च सर्पिण्यो भक्षयंतु स्वबालकान् ।। २६ ।।

इति शापानलाद्भीतैः कैश्चित्पातालमाश्रितम् ।।

जिजीविषुभिरन्यैश्च द्वित्रैश्चक्रे प्रसूवचः ।। २७ ।।

ते पुच्छमौच्चैःश्रवसमधिगम्य महाधियः ।।

सुनीलचिकुराभासं चक्रुरंगं च कर्बुरम् ।। २८ ।।

तत्क्ष्वेडानल धूमौघैः फूत्कारभरनिःसृतैः।।

मातृवाक्कृतिजाद्धर्मान्न दग्धा भानुभानुभिः ।। २९ ।।

विनतापृष्ठमारुह्य कद्रूः स्नेहवशात्ततः ।।

वियन्मार्गमलंकृत्य ददर्शोष्णांशुमंडलम् ।। 4.1.50.३० ।।

तिग्मरश्मिप्रभावेण व्याकुलीभूतमानसा ।।

कद्रुस्ततः खगीं प्राह विस्रब्धं विनते व्रज ।। ३१ ।।

उष्णगोरुष्णगोभिर्मे ताप्यते नितरां तनुः ।।

विस्रब्धाहं स्वभावेन त्वं सापेक्षाहि सर्वतः ।। ।। ३२ ।।

स्वरूपेण पतंगी त्वं पतंगोसौ सहस्रगुः ।।

अतएव न ते बाधा गगने तापसंभवा ।। ३३ ।।

वियत्सरसि हंसोयं भवती हंसगामिनी ।।

चंडरश्मिप्रतापाग्निस्त्वामतो नेह बाधते ।। ३४ ।।

खगीमुद्गीयमानां खे पुनरूचे बिलेशया ।।

त्राहित्राहि भगिन्यत्र यावोन्यत्र वियत्पथः ।। ३५ ।।

विनते विनतां मां त्वं किं नावसि पतत्त्रिणी ।।

तव दासी भविष्यामि त्वदुच्छिष्टनिषेविणी ।।३६ ।।

यावज्जीवमहं भूयां त्वत्पादोदकपायिनी ।।

खखोल्कानि पतेदेषा भृशगद्गदभाषिणी ।।।। ३७ ।।

मूर्च्छां गतवती पक्षपुटौ धृत्वा बिडोरगी।।
सख्युल्कानि पतेदेषा वक्तव्ये त्विति संभ्रमात् ।। ३८ ।।
खखोल्केति यदुक्ता गीः कद्र्वा संभ्रातचेतसा ।।
तदा खखोल्कनामार्कः स्तुतो विनतया बहु ।। ३९ ।।
मनागतिग्मतां प्राप्ते खे प्रयाति विवस्वति ।।
ताभ्यां तुरंगमो दर्शि किंचित्किर्मीरवान्रथे ।। 4.1.50.४० ।।
उक्ता विनतयैवैषा तापोपहतलोचना ।।
क्रूरा सरीसृपी सत्यवादिन्या विश्वमान्यया ।। ४१ ।।
कद्रु त्वया जितं भद्रे यत उच्चैःश्रवा हयः ।।
चंद्ररश्मिप्रभोप्येष कल्माष इव भासते ।। ४२ ।।
विधिर्बलीयान्भुजगि चित्रं जयपराजये ।।
क्रूरोपि विजयी क्वापि त्वक्रूरोपि पराजयी ।। ४३ ।।
विनताविनताधारा वदंतीति यथागतम् ।।
कद्रूनिवेशनं प्राप्ता तस्या दास्यमचीकरत् ।।४४।।
कदाचिद्विनतादर्शि सुपर्णनाश्रुलोचना ।।
विच्छाया मलिना दीना दीर्घनिःश्वासवत्यपि ।। ।। ४५ ।।
सुपर्ण उवाच ।। ।।
प्रातःप्रातरहो मातः क्व यासि त्वं दिनेदिने ।।
सायमायासि च कुतो विच्छाया दीनमानसा ।। ४६ ।।
कुतो निःश्वसिसि प्रोच्चैरश्रुपूर्ण विलोचना ।।
यथा क्लीबसुता योषिद्यथापति तिरस्कृता ।।४७।।
ब्रूहि मातर्झटित्यद्य कुतो दूनासि पत्त्रिणि ।।
मयि जीवति ते बाले कालेपि कृतसाध्वसे।। ।। ४८ ।।
अश्रुनिर्माणकरणे कारणं किं तपस्विनि ।।
सुचरित्रा सुनारीषु नामंगलमिहेष्यते ।। ४९ ।।
धिक्तांश्च पुत्रान्यन्माता तेषु जीवत्सु दुःखभाक् ।।
वरं वंध्यैव सा यस्याः सुता वंध्यमनोरथाः ।।4.1.50.५० ।।
इत्यूर्जस्वलमाकर्ण्य वचः सूनोर्गरुत्मतः ।।

विनता प्राह तं पुत्रं मातृभक्तिसमन्वितम् ।। ५१ ।।

अहं दास्यस्मि रे बाल कद्र्वाश्च क्रूरचेतसः ।।

पृष्ठे वहामि तां नित्यं तत्पुत्रानपि पुत्रक।।५२।।

कदाचिन्मंदरं यामि कदाचिन्मलयाचलम् ।।

कदाचिदंतरीपेषु चरेयं तदुदन्वताम् ।। ।। ५३ ।।

यत्रयत्र नयेयुस्ते काद्रवेयाः सुदुर्मदाः ।।

व्रजेयं तत्रतत्राहं तदधीना यतः सुत ।। ५४।।

गरुड उवाच ।। ।।

दासीत्वकारणं मातः किं ते जातं सुलक्षणे ।।

दक्षप्रजापतेः पुत्रि कश्यपस्यप्रियेऽनघे ।। ५५ ।।

विनतोवाच गरुडं पुरावृत्तमशेषतः ।।

दासीत्वकारणं यद्ववदादित्याश्वविलोकनम् ।। ५६ ।।

श्रुत्वेति गरुडः प्राह मातरं सत्वरं व्रज।।

पृच्छाद्य मातस्तान्दुष्टान्काद्रवेयानिदं वचः ।।५७।।

यद्दुर्लभं हि भवतां यत्रात्यंतरुचिश्च वः ।।

मद्दासीत्वविमोक्षाय तद्याचध्वं ददाम्यहम्।। ।। ५८ ।।

तथाकरोच्च विनता तेपि श्रुत्वा तदीरितम् ।।

सर्पाः संमंत्र्य तां प्रोचुर्विनतां हृष्टमानसाः ।। ५९ ।।

मातृशापविमोक्षाय यदि दास्यति नः सुधाम् ।।

तदा समीहितं तेस्तु न दास्यत्यथ दास्यसि ।। 4.1.50.६० ।।

इत्योंकृत्य समापृच्छ्य कद्रूं द्रुतगतिः खगी ।।

गरुत्मंतं समाचष्ट दृष्ट्वा संहृष्टमानसम् ।। ६१ ।।

नागांतकस्ततः प्राह मातरं चिंतयातुराम् ।।

आनीतं विद्धि पीयूषं मातर्मे देहि भोजनम्।। ६२ ।।

विनता प्राह तं पुत्रं संप्रहृष्टतनूरुहा ।।

भोः सुपर्णार्णवं तूर्णं याहि मंगलमस्तु ते ।। ६३ ।।

संति तत्रापि बहुशो निषादा मत्स्यघातिनः ।।

वेलातटनिवासाश्च तान्भक्षय दुरात्मनः ।। ६४ ।।

परप्राणैर्निजप्राणान्ये पुष्णंतीह दुर्धियः ।।

शासनीयाः प्रयत्नेन श्रेयस्तच्छासनं परम् ।। ६५ ।।

बहुहिंसाकृतां हिंसा भवेत्स्वर्गस्य साधनम् ।।

विहिंसितेषु दुष्टेषु रक्ष्यते भूरिशो यतः ।।६६।।

निषादेष्वपि चेद्विप्रः कश्चिद्भवति पुत्रक ।।

संरक्षणीयो यत्नेन भक्षणीयो न कर्हिचित् ।। ६७ ।।

।। गरुड उवाच ।। ।।

मत्स्यादिनां वसन्मध्ये कथं ज्ञेयो द्विजो मया ।। अभक्ष्यो यस्त्वया प्रोक्तस्तच्चिह्नं किं चनात्थ मे ।। ६८ ।।

।। विनतोवाच ।।

यज्ञसूत्रं गले यस्य सोत्तरीयं सुनिर्मलम् ।।

नित्यधौतानि वासांसि भालं तिलक लांछितम् ।।६९।।

सपवित्रौ करौ यस्य यन्नीवी कुशगर्भिणी।।

यन्मौलिः सशिखाग्रंथिः स ज्ञेयो ब्राह्मणस्त्वया ।। 4.1.50.७० ।।

उच्चरेदृग्यजुःसाम्नामृचमेकामपीह यः ।।

गायत्रीमात्रमंत्रोपि स विज्ञेयो द्विजस्त्वया ।। ७१ ।।

गरुड उवाच ।।

मध्ये सदा निषादानां यो वसेज्जननि द्विजः ।।

तस्यैतेष्वेकमप्येव न मन्ये लक्ष्मबोधकम् ।। ७२ ।।

लक्ष्मांतरं समाचक्ष्व द्विजबोधकरं प्रसूः ।।

येन विज्ञाय तं विप्रं त्यजेयमपि कंठगम् ।। ७३ ।।

तच्छ्रुत्वा विनता प्राह यस्ते कंठगतोऽगज ।।

खदिरांगारवद्दह्यात्तमपाकुरु दूरतः ।। ७४ ।।

द्विजमात्रेपि या हिंसा सा हिंसा कुशलाय न ।।

देशं वंशं श्रियं स्वं च निर्मूलयति कालतः ।। ७५ ।।

निशम्य काश्यपिरितिप्रसूपादौप्रणम्य च ।।

गृहीताशीर्ययौ शीघ्रं खमार्गेण खगेश्वरः ।।७६।।

दूरादालोकयांचक्रे निषादान्मत्स्यजीविनः ।।

पक्षौ विधूय पक्षींद्रो रजसापूर्य रोदसी ।। ७७ ।।

अंधीकृत्य दिशोभागानब्धिरोधस्युपाविशत् ।।

व्यादाय वदनं घोरं महाकंदरसन्निभम् ।। ७८ ।।

कांदिशीका निषादास्तु विविशुस्तत्र च स्वयम् ।।

मन्वानेष्वथ पंथानं तेषु कंठं विशत्स्वपि ।।७९ ।।

जज्वालेंगलसंस्पर्शो द्विजस्तत्कंठकंदलीम् ।।

प्राक्प्रविष्टानथो तार्क्ष्यो निषादानौदरीं दरीम् ।। 4.1.50.८० ।।

प्रवेश्य कंठतालुस्थं तं विज्ञाय द्विजस्फुटम् ।।

भयादुदगिरत्तूर्णं मातृवाक्येन यंत्रितः ।। ८१ ।।

तमुद्गीर्णं नरं दृष्ट्वा पक्षिराट्समभाषत ।।

कस्त्वं जात्यासि निगद मम कंठविदाहकृत् ।। ८२ ।।

स तदाहेति विप्रोहं पृष्टः सन्गरुडाग्रतः ।।

वसाम्येषु निषादेषु जातिमात्रोपजीवकः ।। ८३ ।।

तं प्रेष्य गरुडो दूरं भक्षयित्वाथ भूरिशः ।।

नभो विक्षोभयांचक्रे प्रलयानिल सन्निभः ।। ८४ ।।

तं दृष्ट्वा तिग्मतेजस्कं ज्वालाततदिगंतरम् ।।

ज्वलद्दावानलं शैलमिव बिभ्युर्दिवौकसः ।। ।। ८५ ।।

ते सन्नह्यंत युद्धाय सज्जीकृत बलायुधाः ।।

अध्यास्य वाहनान्याशु सर्वे वर्मभृतः सुराः ।। ८६ ।।

तिर्यग्गतीरविर्नायं नायमग्निः सधूमवान् ।।

क्षणप्रभाप्यसौ नैव को नः सम्मुख एत्यसौ ।। ८७ ।।

न दैत्येषु प्रभेदृक्स्यान्नाकृतिर्दानवेष्वियम्।।

महासाध्वसदः कोयमस्माकं हृत्प्रकंपनः ।। ८८ ।।

यावत्संभावयंतीति नीतिज्ञा अपि निर्जराः ।।

तावद्दुधाव स्वौ पक्षौ पक्षिराजो महाबलः ।। ८९ ।।

निपेतुः पक्षवातेन सायुधाश्च सवाहनाः ।।

न ज्ञायंते क्व संप्राप्ता वात्यया पार्णतार्णवत् ।। 4.1.50.९० ।।

अथ तेषु प्रणष्टेषु बुद्ध्या विज्ञाय पक्षिराट् ।।

कोशागारं सुधायाः स तत्रापश्यच्च रक्षिणः ।। ९१ ।।

शस्त्रास्त्रोद्यतपाणींस्तान्सुरानाधूय सर्वशः ।।

ददर्श कर्तरीयंत्रममृतोपरिसंस्थितम् ।। ९२ ।।

मनःपवनवेगेन भ्रममाणं महारयम् ।।

अपिस्पृशंतं मशकं यत्खंडयति कोटिशः ।। ९३ ।।

उपोपविश्य पक्षींद्रस्तस्य यंत्रस्य निर्भयः ।।

क्षणं विचारयामास किमत्र करवाण्यहो ।। ९४ ।।

स्प्रष्टुं न लभ्यते चैतद्वात्या न प्रभवेदिह ।।

क उपायोत्र कर्तव्यो वृथा जातो ममोद्यमः ।। ९५ ।।

न बलं प्रभवेदत्र न किंचिदपि पौरुषम् ।।

अहो प्रयत्नो देवानामेतत्पीयूषरक्षणे ।।९६।।

यदि मे शंकरे भक्तिर्निर्द्वंद्वातीव निश्चला ।।

तदा स देवदेवो मां वियुनक्तु महाऽधिया ।।९७।।

यद्यहं मातृभक्तोस्मि स्वामिनः शंकरादपि ।।

तदा मे बुद्धिरत्रास्तु पीयूषहरणं क्षमा ।। ९८ ।।

आत्मार्थं नोद्यमश्चायं हृत्स्थो वेत्तीति विश्वगः ।।

मातुर्दास्यविमोक्षाय यतेहममृतं प्रति ।। ९९ ।।

जरितौ पितरौ यस्य बालापत्यश्च यः पुमान् ।।

साध्वी भार्या च तत्पुष्ट्यै दोषोऽकृत्येपि तस्य न ।। 4.1.50.१०० ।।

इति चिंतयतस्तस्य बुद्धिरासीन्महात्मनः ।। १ ।।

देहं चकार सोत्यंतमणीयांसमणोरपि ।।

परमाणुसहस्रांशं कृत्वा रूपं महाद्भुतम् ।। २ ।।

प्रविश्य कर्तरीयंत्रमधोदेहस्य लाघवात् ।।

बिभ्यत्तद्यंत्रतो देहं वंचयन्वायुखंडनात् ।।

मूलमुत्पाट्य तरसा गृहीत्वाऽमृतभाजनम् ।। ३ ।।

निर्ययौ पावने मार्गे क्रोशत्सु स्वर्गसद्मसु ।। ४ ।।

तथा वैकुंठनाथं ते गत्वा प्रोचुः सुधाभुजः ।।

निर्जित्य नीयते चक्रिन्सुधा नो जीवितं परम् ।। ५ ।।

इत्याकर्ण्य हरिस्तेभ्योऽभयं दत्त्वा त्वरायुतः ।।

कृत्वा युद्धं च सुमहद्विंशार्कघटिकाद्वयम् ।। ।। ६ ।।

शुंभदेव्योर्यथासूत गरुडस्तत्र चाधिकः ।।

तदा प्रसन्नो भगवान्महायुद्धेन सर्वदः ।। ७ ।।

गत्वा गरुडमाहेदं प्रसन्नोस्मि खगेश्वर ।।

वरं वृणीहि भद्रं ते जितवृंदारवृंदक।। ८ ।।

हसित्वा गरुडः प्राह विश्वरूपं जनार्दनम् ।।

अहमेव प्रसन्नोस्मि त्वं प्रार्थय वरद्वयम् ।। ९ ।।

ततः कैटभजित्प्राह वैनतेयं मुदान्वितः ।।

वृतंवृतं महोदार देहिदेहि वरद्वयम् ।। 4.1.50.११० ।।

इति विष्णूदितं श्रुत्वा प्रहसन्नाह पक्षिराट् ।।

किं विलंबेन तद्ब्रूहि दत्तं दत्तं वरद्वयम् ।। ११ ।।

अलब्धलाभे संजाते द्यूतादि विजयोदये ।।

दातव्यं सुधियापात्रे सदा लाभजयौ क्व वा ।। १२ ।।

।। श्रीविष्णुरुवाच ।। ।।

बलवानसि पक्षींद्र तन्मे वाहनतां व्रज ।।

एको वरोयं वरद द्वितीयं शृणु काश्यप ।। १३ ।।

दर्शयित्वामृतं प्राज्ञ मातृदास्यविमोक्षकम् ।।

द्विजिह्वेभ्यः कुरु तथा द्रागश्नंति न ते यथा ।। १४ ।।

देया सुधा सुधाभुग्भ्यो द्वितीयोस्तु वरो मम ।।

तथेति स प्रतिज्ञाय निर्ययौ पक्षिराड्दिवः ।। १५ ।।

स मातरं विनिर्मोच्य दास्यात्काश्यपनंदनः ।।

नागानां पुरतो धृत्वा महामृतकमंडलुम् ।। १६ ।।

अमृतं पातुकामांस्तानित्याचष्ट महामतिः ।।

नागाः शुचित्वमासाद्य भोक्तव्यैषा सुधा शुभा ।। १७ ।।

नोचेदशुचिभिः स्पृष्टा स्नानादि परिवर्जितैः ।।

यास्यत्यदृश्यतामेषा सुधाऽनिमिषरक्षिता।। १८।।

सामान्यमपि यद्भक्ष्यं स्पृश्यतेऽशुचिभिः क्वचित् ।।

हरंति तद्रसं देवास्तच्च तिष्ठति नीरसम् ।। १९ ।।

इत्युक्त्वा सहितो मात्रा वैनतेयो विनिर्ययौ ।।

कुशासने च तैरुक्तो धृत्वा पीयूषभाजनम् ।। 4.1.50.१२० ।।

यावत्स्नातुं गताः सर्पास्तावत्पीयूषभाजनम् ।।

आदाय विष्णुना दत्तं देवेभ्य इव जीवितम् ।। २१ ।।

आगत्य भुजगाः स्नात्वा न दृष्ट्वामृतभाजनम् ।।

अहो प्रतारिता नीतममृतं चेति चुक्रुशुः ।। २२ ।।

ततः पर्यलिहन्दर्भान्पीयूषस्पर्शकांक्षिणः ।।

आस्तां तावत्सुधा दूरं जिह्वास्तेषां द्विधाभवन् ।। २३ ।।

अन्येप्यन्यायलब्धार्थं ये बुभुक्षंति केवलम् ।।

तन्नो परिणतिं गच्छेद्भोक्तुं वातैर्न लभ्यते।। ।। २४ ।।

न्यायाध्वस्थेन ताक्ष्र्येण सुधा प्राप्तातिदुर्लभा ।।

लब्धाप्यन्यायतो नागैर्दृष्टमात्रा क्षणाद्गता ।।२५।।

अथ दास्याद्विनिर्मुक्ता विनतोवाच खेचरम् ।।

पुत्र काशीं प्रयास्यामि दास्यपापापनुत्तये ।। २६ ।।

तावत्पापानि जृंभंते नानाजन्मार्जितान्यपि ।।

यावत्काशी न हृत्संस्था पुनर्भवविघातिनी।। २७ ।।

काशीस्मरणमात्रेण किं चित्रं यदघं व्रजेत् ।।

गर्भवासोपि नश्येत विश्वेशानुग्रहात्परात् ।। २८ ।।

यत्र विश्वेश्वरः साक्षात्तारापतिविभूषणः ।।

तारयेत्तारकद्रोण्या दुस्तराद्भवसागरात् ।। २९ ।।

विश्वेशानुगृहीतानां विच्छिन्नाखिलकर्मणाम् ।।

भवेत्काशीं प्रति मतिर्नेतरेषां कदाचन ।। 4.1.50.१३० ।।

काशीं प्रति मनो येषां निःशेषक्षालितैनसाम् ।।

त एव मानवा लोके सत्यं नृप शवोपरे ।। ३१ ।।

तैरेव कालो विजितस्त एव हि गतैनसः ।।

अपुनर्गर्भवासास्ते प्राप्ता वाराणसीह यैः ।। ।। ३२।।

श्रेयसां भाजनं चैतन्नृजन्मन मुधा नयेत्।।

देवानामपिदुष्प्राप्यं काशीसंदर्शनादृते ।। ३३ ।।

कः कलिः कोथवा कालः किं वा कर्माण्यनेकधा ।।

परानंदप्रदं क्षेत्रमविमुक्तं यदीक्षितम् ।। ३४ ।।

ते गर्भवासे तिष्ठंति पुनस्ते गर्भवासिनः।।

ये न गर्भवनच्छेत्रीं सेवंते वरणामसिम्।।३५।।

निशम्येति वचः प्राह ताक्ष्यो नत्वाथ मातरम्।।

अहमप्यागमिष्यामि काशीं द्रष्टुं शिवार्चिताम् ।। ३६।।

मातुराज्ञामथ प्राप्य जनन्या सह पक्षिराट् ।।

क्षणाद्वाराणसीं प्राप मोक्षनिक्षेपभूमिकाम् ।। ३७ ।।

उभावपि च तेपाते तप उग्रं महामती ।।

संस्थाप्य शांभवं लिंगं पतत्रींद्रोऽचलेंद्रियः ।। ३८ ।।

नाम्ना खखोल्कमादित्यं संस्थाप्य विनता शुभम् ।।

अचिरेणैव कालेन महतस्तपसस्तयोः ।।३९।।

काश्यां प्रसन्नौ संजातौ देवौ शंकरभास्करौ ।।

गरुडस्थापिताल्लिंगादाविरासीदुमापतिः ।। 4.1.50.१४० ।।

गरुडाय वरान्प्रादात्स बहूनतिदुर्लभान्।।

खगेंद्र मम भक्तोसि तव ज्ञानं भविष्यति ।। ४१ ।।

वेत्स्यसि त्वं रहस्यं मे यन्न ज्ञातं सुरैरपि ।।

त्वयैतत्स्थापितं लिंगं गरुडेश्वरसंज्ञितम् ।। ४२ ।।

परमज्ञानदं पुंसां दृष्टं स्पृष्टं समर्चितम् ।। अन्यच्च शृणु पक्षींद्र हितं ते वच्मि सांप्रतम् ।। ४३ ।।

असावहं स वै विष्णुर्मास्तु ते भेददृक्च नौ ।।

एवं तस्यैव पक्षींद्र दैत्येंद्र बलहारिण ।। ४४ ।।

प्राप्य सत्पत्रतां पत्रिंस्त्वमप्यर्च्यो भविष्यसि ।।

इति दत्त्वा वरं शंभुः स्वभक्ताय गरुत्मते ।। ४५ ।।

तत्रैवांतर्हितो जातो गरुडोपि हरिं ययौ ।।

हरे रथत्वं संप्राप्य सोपि पूज्योऽभवद्भुवि ।। ४६ ।।

तपस्यंतीमथालोक्य कदाचिद्विनतां प्रभुः ।।

शिवस्यैव परामूर्तिः खखोल्को नाम भास्करः ।। ४७ ।।

दत्त्वा वरं च पापघ्नं शिवज्ञानसमन्वितम् ।।

काशीवासिजनानेक भवपापक्षयंकरः ।। ४८ ।।

विनतादित्य इत्याख्यः खखोल्कस्तत्र संस्थितः ।।

इत्थं खखोल्क आदित्यः काशीविघ्नतमोहरः ।। ४९ ।।

तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।।

काश्यां पैशंगिले तीर्थे खखोल्कस्य विलोकनात् ।।

नरश्चिंतितमाप्नोति नीरोगो जायते क्षणात् ।। 4.1.50.१५० ।।

नरः श्रुत्वैतदाख्यानं खखोल्कादित्यसंभवम् ।।

गरुडेशेन सहितं सर्वपापैः प्रमुच्यते ।। १५१ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखण्डे पूर्वार्द्धे खखोल्कादित्य गरुडेशयोर्वर्णनंनाम पंचाशत्तमोऽध्यायः ।। ५० ।।

इति काशीखंडपूर्वार्धं समाप्तम् ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५१



।। अथ श्रीकाशीखंडोत्तरार्धं प्रारभ्यते ।।

श्रीगणेशाय नमः ।।

।। अगस्तिरुवाच ।। ।।

पार्वती हृदयानंद सर्वज्ञांगभव प्रभो ।।

किंचित्प्रष्टुमनाः स्वामिंस्तद्भवान्वक्तुमर्हति ।। १ ।।

दक्ष प्रजापतेः पुत्री कश्यपस्य परिग्रहः ।।

गरुत्मतः प्रसूः साध्वी कुतो दास्यमवाप सा ।। २ ।।

।। स्कंद उवाच ।। ।।

हंजिकात्वं यथा प्राप्ता विनता सा तपस्विनी ।।

तदप्यहं समाख्यामि निशामय महामते ।। ३ ।।

कद्रूरजीजनत्पुत्राञ्शतं कश्यपतः पुरा ।।

उलूकमरुणं ताक्ष्र्यमसूत विनता त्रयम् ।। ४ ।।

कौशिको राज्यमाप्यापि श्रेष्ठत्वात्पक्षिणां मुने ।।

निर्गुणत्वाच्च तैः सर्वैः स राज्यादवरोपितः ।। ५ ।।

क्रूराक्षोयं दिवांधोयं सदा वक्रनखस्त्वसौ ।।

अतीवोद्वेगजनकं सर्वेषामस्य भाषणम् ।। ६ ।।

इत्थं तस्य गुणग्रामान्विकथ्य बहुशः खगाः ।।

नाद्यापि वृण्वते राज्ये कमपि स्वैरचारिणः ।। ७ ।।

कौशिकेथ तथावृत्ते पुत्रवीक्षणलालसा ।।

अंडं प्रस्फोटयामास मध्यमं विनता तदा ।। ८ ।।

पूर्णे वर्षसहस्रे तु प्रस्फोट्य घटसंभव ।।

तदभेदितयौत्सुक्यादंडमष्टमके शते ।। ९ ।।

तावत्सर्वाणि गात्राणि तस्यातिमहसः शिशोः ।।

ऊर्वोरुपरिसिद्धानि दंडांतर्निवासिनः ।। 4.2.51.१० ।।

अंडान्निर्गतमात्रेण क्रोधारुणमुखश्रिया ।।

अर्धनिष्पन्नदेहेन शिशुना शापिता प्रसूः ।। ११ ।।

जनयित्रि त्वया दृष्ट्वा काद्रवेयान्स्वलीलया ।।

खेलतो मातुरुत्संगे यदंडं व्याधित द्विधा ।। १२ ।।

तदनिष्पन्न सर्वांगः शपामि त्वा विहंगमे ।।

तेषामेवैधि दासी त्वं सपत्न्यंग भुवामिह ।। १३ ।।

वेपमानाथ तच्छापादिदं प्रोवाच पक्षिणी ।।

अनूरो ब्रूहि मे शापावसानं मातुरंगज ।। १४ ।।

।। अनूरुरुवाच ।।

अंडं तृतीयं मा भिंधि ह्यनिष्पन्नं ममेव हि ।।

अस्मिन्नंडे भविष्यो यः स ते दास्यं हरिष्यति ।। १५ ।।

इत्युक्त्वा सोरुणोगच्छदुड्डीयानंदकाननम् ।।

यत्र विश्वेश्वरो दद्यादपि पंगोः शुभां गतिम्।। १६ ।।

एतत्ते पृच्छतः ख्यातं विनता दास्यकारणम्।।

मुने प्रसंगतो वच्मि अरुणादित्यसंभवम् ।। १७ ।।

अनूरुत्वादनूरुर्योरुणः क्रोधारुणो यतः ।।

वाराणस्यां तपस्तस्वा तेनाराधि दिवाकरः ।। १८ ।।

सोपि प्रसन्नो दत्त्वाथ वरांस्तस्मा अनूरवे ।।

आदित्यस्तस्य नाम्नाभूदरुणादित्य इत्यपि ।। १९ ।।

।। अर्क उवाच ।।

तिष्ठानूरो मम रथे सदैव विनतात्मज ।।

जगतां च हितार्थाय ध्वांतं विध्वंसयन्पुरः ।। 4.2.51.२० ।।

अत्र त्वत्स्थापितां मूर्तिं ये भजिष्यंति मानवाः ।।

वाराणस्यां महादेवोत्तरे तेषां कुतो भयम् ।। २१ ।।

येर्चयिष्यंति सततमरुणादित्यसंज्ञकम् ।।

मामत्र तेषां नो दुःखं न दारिद्र्यं न पातकम्।। २२ ।।

व्याधिभिर्नाभिभूयंते नो पसर्गैश्च कैश्चन ।।

शोकाग्निना न दह्यंते ह्यरुणादित्यसेवनात् ।। २३ ।।

अथ स्यंदनमारोप्य नीतवानरुणं रविः ।।

अद्यापि स रथे सौरे प्रातरेव समुद्यति ।। २४ ।।

यः कुर्यात्प्रातरुत्थाय नमस्कारं दिनेदिने ।।

अरुणाय ससूर्याय तस्य दुःखभयं कुतः ।। २५ ।।

अरुणादित्यमाहात्म्यं यः श्रोष्यति नरोत्तमः ।।

न तस्य दुष्कृतं किंचिद्भविष्यति कदाचन ।। २६ ।।

स्कंद उवाच ।।

वृद्धादित्यस्य माहात्म्यं शृणु ते कथयाम्यहम्।।

यस्य श्रवणमात्रेण नरो नो दुष्कृतं भजेत् ।।२७ ।।

पुरात्र वृद्धहारीतो वाराणस्यां महातपाः ।।

महातपः समृद्ध्यर्थं समाराधितवान्रविम् ।। २८ ।।

मूर्तिं संस्थाप्य शुभदां भास्वतः शुभलक्षणाम् ।।

दक्षिणेन विशालाक्ष्या दृढभक्तिसमन्वितः ।। २९ ।।

तुष्टस्तस्मै वरं प्रादाद्ब्रध्नो वृद्धतपस्विने ।।

अलं विलंब्य याचस्व कस्ते देयो वरो मया ।। 4.2.51.३० ।।

सोथ प्रसन्नाद्द्युमणेरवृणीत वरं मुनिः ।।

यदि प्रसन्नो भगवान्युवत्वं देहि मे पुनः।। ३१ ।।

तपःकरण सामर्थ्यं स्थविरस्य न मे यतः ।।

पुनस्तारुण्यमाप्तोहं चरिष्याम्युत्तमं तपः ।।३२।।

तप एव परो धर्मस्तप एव परं वसु ।।

तप एव परः कामो निर्वाणं तप एव हि ।। ३३ ।।

ऋतेन तपसः क्वापि लभ्या ऐश्वर्यसंपदः ।।

पदं ध्रुवादिभिः प्रापि केवलं तपसो बलात् ।। ३४ ।।

ततस्तपश्चरिष्यामि लोकद्वयमहत्त्वदम् ।।

प्राप्य त्वद्वरदानेन यौवनं सर्वसंमतम् ।। ३८३ ।।

धिग्जरांप्राणिनामत्र यया सर्वो विरज्यति ।।

जरातुरेंद्रियग्रामे स्त्रियोपि नयतः स्वसात् ।। ३६ ।।

वरं मरणमेवास्तु मा जरास्त्वतिशोच्यकृत् ।।

क्षणं दुःखं च मरणं जरा दुःखं क्षणेक्षणे ।।३७।।

कांक्षंति दीर्घतपसे चिरमायुर्जितेंद्रियाः ।।

धनं दानाय पुत्राय कलत्रं मुक्तये धियम्।। ३८ ।।

वृद्धस्यवार्धकं ब्रध्नस्तत्क्षणादपहृत्य वै ।।

ददौ च चारुता हेतुं तारुण्यं पुण्यसाधनम् ।।३९।।

एवं स वृद्धहारीतो वाराणस्यां महामुनिः ।।

संप्राप्य यौवनं ब्रध्नात्तप उग्रं चचार ह ।।4.2.51.४०।।

वृद्धेनाराधितो यस्माद्धारीतेन तपस्विना ।।

आदित्यो वार्धकहरो वृद्धादित्यस्ततः स्मृतः ।। ४१ ।।

वृद्धादित्यं समाराध्य वाराणस्यां घटोद्भव ।।

जरा दुर्गति रोगघ्नं बहवः सिद्धिमागताः ।। ४२ ।।

वृद्धादित्यं नमस्कृत्य वाराणस्या रवौ नरः ।।

लभेदभीप्सितां सिद्धिं न क्वचिद्दुर्गतिं लभेत् ।। ४३ ।।

।। स्कंद उवाच ।। ।।

अतः परं शृणु मुने केशवादित्यमुत्तमम् ।।

यथा तु केशवं प्राप्य सविता ज्ञानमाप्तवान् ।। ४४ ।।

व्योम्नि संचरमाणेन सप्ताश्वेनादिकेशवः ।।

एकदा दर्शिभावेन पूजयँल्लिंगमैश्वरम् ।। ४५ ।।

कौतुकादिव उत्तीर्य हरे रविरुपाविशत् ।।

निःशब्दो निश्चलः स्वस्थो महाश्चर्यसमन्वितः ।। ४६ ।।

प्रतीक्षमाणोवसरं किंचित्प्रष्टुमना हरिम् ।।

हरिं विसर्जितार्चं च प्रणनाम कृतांजलिः ।। ४७ ।।

स्वागतं ते हरिः प्राह बहुमानपुरःसरम् ।।

स्वाभ्याशं आसयामास भास्वंतं नतकंधरम्।। ४८।।

अथावसरमालोक्य लोकचक्षुरधोक्षजम् ।।

नत्वा विज्ञापयामास कृतानुज्ञोऽसुरारिणा ।। ४९ ।।

।। रविरुवाच ।। ।।

अंतरात्मासि जगतां विश्वंभर जगत्पते ।।

तवापि पूज्यः कोप्यस्ति जगत्पूज्यात्र माधव ।। 4.2.51.५० ।।

त्वत्तश्चाविर्भवेदेतत्त्वयि सर्वं प्रलीयते ।।

त्वमेव पाता सर्वस्य जगतो जगतांनिधे ।। ५१ ।।

इत्याश्चर्यं समालोक्य प्राप्तोस्म्यत्र तवांतिकम् ।।

किमिदं पूज्यते नाथ भवता भवतापहृत् ।। ५२ ।।

इति श्रुत्वा हृषीकेशः सहस्रांशोरुदीरितम् ।।

उच्चैर्माशंस सप्ताश्वं वारयन्करसंज्ञया ।। ५३ ।।

।। श्रीविष्णुरुवाच ।। ।।

देवदेवो महादेवो नीलकंठ उमापतिः ।।

एक एव हि पूज्योत्र सर्वकारणकारणम् ।। ५४ ।।

अत्र त्रिलोचनादन्यं समर्चयतियोल्पधीः ।।

सलोचनोपि विज्ञेयो लोचनाभ्यां विवर्जितः ।।५५।।

एको मृत्युंजयः पूज्यो जन्ममृत्युजराहरः ।।

मृत्युंजयं किलाभ्यर्च्य श्वेतो मृत्युंजयोभवत् ।। ५६ ।।

कालकालं समाराध्य भृंगी कालं जिगायवै ।।

शैलादिमपि तत्याज मृत्युर्मृत्युंजयार्चकम् ।।५७।।

विजिग्ये त्रिपुरं यस्तु हेलयैकेषु मोक्षणात् ।।

तं समभ्यर्च्य भूतेशं को न पूज्यतमो भवेत् ।।५८।।

त्रिजगज्जयिनो हेतोस्त्र्यक्षस्याराधनं परम् ।।

को नाराधयति ब्रध्नसारस्य स्मरविद्विषः ।। ५९ ।।

यस्याक्षिपक्ष्मसंकोचाज्जगत्संकोचमेत्यदः ।।

विकस्वरं विकासाच्च कस्य पूज्यतमो न सः ।। 4.2.51.६० ।।

शंभोर्लिंगं समभ्यर्च्य पुरुषार्थचतुष्टयम् ।।

प्राप्नोत्यत्र पुमान्सद्यो नात्र कार्या विचारणा ।। ६१ ।।

समर्च्य शांभवं लिंगमपिजन्मशतार्जितम् ।।

पापपुंजं जहात्येव पुमानत्र क्षणाद्ध्रुवम् ।। ६२ ।।

किंकिं न संभवेदत्र शिवलिंगसमर्चनात् ।।

पुत्राः कलत्र क्षेत्राणि स्वर्गो मोक्षोप्यसंशयम् ।। ६३ ।।

त्रैलोक्यैश्वर्यसंपत्तिर्मया प्राप्ता सहस्रगो ।।

शिवलिंगार्चनादेकात्सत्यंसत्यं पुनःपुनः ।। ६४ ।।

अयमेव परोयोगस्त्विदमेव परं तपः ।।

इदमेव परं ज्ञानं स्थाणुलिंगं यदर्च्यते ।। ६५।।

यैर्लिंगं सकृदप्यत्र पूजितं पार्वतीपतेः ।।

कुतो दुःखभयं तेषां संसारे दुःखभाजने ।। ६६ ।।

सर्वं परित्यज्य रवे यो लिंगं शरणं गतः ।।

न तं पापानि बाधंते महांत्यपि दिवाकर ।। ६७ ।।

लिंगार्चने भवेद्वृद्धिस्तेषामेवात्र भास्कर ।।

येषां पुनर्भवच्छेदं चिकीर्षति महेश्वरः ।।६८।।

न लिंगाराधनात्पुण्यं त्रिषुलोकेषु चापरम् ।।

सर्वतीर्थाभिषेकः स्याल्लिंगस्नानांबु सेवनात् ।। ६९ ।।

तस्माल्लिंगं त्वमप्यर्क समर्चय महेशितुः ।।

संप्राप्तं परमां लक्ष्मीं महातेजोभि जृंभणीम् ।। 4.2.51.७० ।।

इति श्रुत्वा हरेर्वाक्यं तदारभ्य सहस्रगुः ।।

विधाय स्फाटिकं लिंगं मुनेद्यापि समर्चयेत् ।। ७१ ।।

गुरुत्वेन तदाकल्य विवस्वानादिकेशवम् ।।

तत्रोपतिष्ठतेद्यापि उत्तरेणादिकेशवात् ।। ७२ ।।

अतः स केशवादित्यः काश्यां भक्ततमोनुदः ।।

समर्चितः सदा देयान्मनसो वांछितं फलम् ।। ७३ ।।

केशवादित्यमाराध्य वाराणस्यां नरोत्तमः ।।

परमं ज्ञानमाप्नोति येन निर्वाणभाग्भवेत् ।। ७४ ।।

तत्र पादोदके तीर्थेकृतसर्वोदकक्रियः ।।

विलोक्य केशवादित्यं मुच्यते जन्मपातकैः ।। ७५ ।।

अगस्ते रथसप्तम्यां रविवारो यदाप्यते ।।

तदा पादोदके तीर्थे आदिकेशव सन्निधौ ।।७६।।

स्नात्वोषसि नरो मौनी केशवादित्यपूजनात् ।।

सप्तजन्मार्जितात्पापान्मुक्तो भवति तत्क्षणात् ।। ७७।।

यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।।

तन्मे रोगं च शोकं च माकरी हंतु सप्तमी ।। ७८ ।।

एतज्जन्मकृतं पापं यच्च जन्मांतरार्जितम् ।।

मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ।। ७९ ।।

इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ।।

सप्तव्याधिसमायुक्तं हर माकरि सप्तमि ।। 4.2.51.८० ।।

एतन्मंत्रत्रयं जप्त्वा स्नात्वा पादोदके नरः ।।

केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ।। ८१ ।।

केशवादित्यमाहात्म्यं शृण्वञ्श्रद्धासमन्वितः ।।

नरो न लिप्यते पापैः शिवभक्तिं च विंदति ।। ८२ ।।

।। स्कंद उवाच ।। ।।

अतः परं शृणु मुने विमलादित्यमुत्तमम् ।।

हरिकेशवने रम्ये वाराणस्यां व्यवस्थितम्।। ८३ ।।

उच्चदेशेभवत्पूर्वं विमलो नाम बाहुजः ।।

स प्राक्तनात्कर्मयोगाद्विमले पथ्यपि स्थितः ।। ८४ ।।

कुष्ठरोगमवाप्योच्चैस्त्यक्त्वा दारान्गृहं वसु ।।

वाराणसीं समासाद्य ब्रध्नमाराधयत्सुधीः ।। ८५ ।।

करवीरैर्जपाभिश्च गंधकैः किंशुकैः शुभैः ।।

रक्तोत्पलैरशोकैश्च स समानर्च भास्करम् ।। ८६ ।।

विचित्ररचनैर्माल्यैः पाटलाचंपकोद्भवैः ।।

कुंकुमागुरुकर्पूरमिश्रितैः शोणचंदनैः ।। ८७ ।।

देवमोहनधूपैश्च बह्वामोदततांबरैः ।।

कर्पूरवर्तिदीपैश्च नैवेद्यैर्घृतपायसैः ।। ८८ ।।

अर्घदानैश्च विधिवत्सौरैः स्तोत्रजपैरपि ।।

एवं समाराधयतस्तस्यार्को वरदोभवत् ।। ८९ ।।

उवाच च वरं ब्रूहि विमलामलचेष्टित ।।

कुष्ठश्च ते प्रयात्वेष प्रार्थयान्यं वरं पुनः ।। 4.2.51.९० ।।

आकर्ण्य विमलश्चेत्थमालापं रश्मिमालिनः ।।

प्रणतो दंडवद्भूमौ संप्रहृष्टतनूरुहः । ९१ ।।

शनैर्विज्ञापयांचक्र एकचक्ररथं रविम् ।।

जगच्चक्षुरमेयात्मन्महाध्वांतविधूनन ।। ९२ ।।

यदि प्रसन्नो भगवन्यदि देयो वरो मम ।।

तदा त्वद्भक्तिनिष्ठा ये कुष्ठं मास्तु तदन्वये ।। ९३ ।।

अन्येपि रोगा मा संतु मास्तु तेषां दरिद्रता ।।

मास्तु कश्चन संतापस्त्वद्भक्तानां सहस्रगो ।। ९४ ।।

। श्रीसूर्य उवाच ।। ।।

तथास्त्विवति महाप्राज्ञ शृण्वन्यं वरमुत्तमम् ।।

त्वयेयं पूजिता मूर्तिरेवं काश्यां महामते ।। ९५ ।।

अस्याः सान्निध्यमत्राहं न त्यक्ष्यामि कदाचन ।।

प्रथिता तव नाम्ना च प्रतिमैषा भविष्यति ।।९६।।

विमलादित्य इत्याख्या भक्तानां वरदा सदा ।।

सर्वव्याधि निहंत्री च सर्वपापक्षयंकरी ।।९७।।

इति दत्त्वा वरान्सूर्यस्तत्रैवांतरधीयत ।।

विमलो निर्मलतनुः सोपि स्वभवनं ययौ ।। ९८ ।।

इत्थं स विमलादित्यो वाराणस्यां शुभप्रदः ।।

तस्य दर्शनमात्रेण कुष्ठरोगः प्रणश्यति ।।९९।।

यश्चैतां विमलादित्यकथां वै शृणुयान्नरः ।।

प्राप्नोति निर्मलां शुद्धिं त्यज्यते च मनोमलैः ।।4.2.51.१००।।

।। स्कंद उवाच ।। ।।

गंगादित्योस्ति तत्रान्यो विश्वेशाद्दक्षिणेन वै ।।

तस्य दर्शनमात्रेण नरः शुद्धिमियादिह ।। १ ।।

यदा गंगा समायाता भगीरथपुरस्कृता ।।

तदा गंगां परिष्टोतुं रविस्तत्रैव संस्थितः ।। २ ।।

अद्याप्यहर्निशं गंगां संमुखीकृत्य भास्करः ।।

परिष्टौति प्रसन्नात्मा गंगाभक्तवरप्रदः ।। ३ ।।

गंगादित्यं समाराध्य वाराणस्यां नरोत्तमः ।।

दुर्गतिं जातु न क्वापि लभते न च रोगभाक् ।। ४

।। स्कंद उवाच ।।

अन्यच्छृणु महाभाग यमादित्यस्य संभवम्।।

यच्छ्रुत्वापि नरो जातु यमलोकं न पश्यति ।। ५ ।।

यमेशात्पश्चिमे भागे वीरेशात्पूर्वतो मुने ।।

यमादित्यं नरो दृष्ट्वा यमलोकं न पश्यति ।। ६ ।।

यमतीर्थे नरः स्नात्वा भूतायां भौमवासरे ।।

यमेश्वरं विलोक्याशु सर्वैः पापैः प्रमुच्यते ।। ७ ।।

यमतीर्थे यमः पूर्वं तप्त्वा सुविमलं तपः ।।

यमेशं च यमादित्यं प्रत्यष्ठाद्भक्तसिद्धिदम् ।। ८ ।।

यमेन स्थापितो यस्मादादित्यस्तत्र कुंभज ।।

अतः स हि यमादित्यो यामीं हरति यातनाम् ।। ९ ।।

यमेशं च यमादित्यं यमेन स्थापितं नमन् ।।

यमतीर्थे कृतस्नानो यमलोकं न पश्यति ।। 4.2.51.११० ।।

यमतीर्थे चतुर्दश्यां भरण्यां भौमवासरे ।।

तर्पणं पिंडदानं च कृत्वा पित्रनृणी भवेत् ।। ११ ।।

अभिलष्यंति सततं पितरो नरकौकसः ।।

भौमै भरण्यां भूतायां यदि योगोयमुत्तमम् ।। १२ ।।

काश्यां कश्चिद्यमे तीर्थे कृत्वा स्नानं महामतिः ।।

अपि यस्तर्पणंकुर्यात्सतिलं नो विमुक्तये ।। १३ ।।

किं गया गमनैः पुंसां किं श्राद्धैर्भूरिदक्षिणैः ।।

यदि काश्यां यमे तीर्थे योगेस्मिञ्श्राद्धमाप्यते।। १४ ।।

श्राद्धं कृत्वा यमे तीर्थे पूजयित्वा यमेश्वरम् ।।

यमादित्यं नमस्कृत्य पितृणामनृणो भवेत् ।।१५।।

।। स्कंद उवाच ।। ।।

इति ते द्वादशादित्याः कथिता पापनाशनाः ।।

यत्संभवं समाकर्ण्य नरो न निरयी भवेत्।। १६ ।।

अन्येपि संति घटज रविभक्तैरनेकशः ।।

काश्यां संस्थापिताः सूर्या गुह्यकार्कादयः किल ।। १७ ।।

श्रुत्वाध्यायानिमान्पुण्यान्द्वादशादित्यसूचकान् ।।
श्रावयित्वापि नो मर्त्यो दुर्गतिं याति कुत्रचित् ।। ११८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायामुत्तरार्द्धे चतुर्थें काशीखण्डे अरुणवृद्धकेशवविमलगंगायमादित्यवर्णनंनामैकपंचाशत्तमोऽध्यायः ।। ।। ५१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५२



स्कंद उवाच ।। ।।

गभस्तिमालिनिगते काशीं त्रैलोक्यमोहिनीम् ।।

पुनश्चिंतामवापोच्चैर्मंदरस्थो मुने हरः ।। १ ।।

नाद्याप्यायांति योगिन्यो नाद्याप्यायाति तिग्मगुः ।।

प्रवृत्तिरपि मे काश्याश्चित्रमत्यंत दुर्लभा ।।२।।

किमत्र चित्रं यत्काशी मदीयमपिमानसम् ।।

निश्चलं चंचलयति गणना केतरेसुरे ।।३।।

अधाक्षिपमहं कामं त्रिजगज्जित्वरंदृशा ।।

अहो काश्यभिलाषोत्र मामेव दुनुयात्तराम्।।४।।

काशीप्रवृत्तिमन्वेष्टुं कं वा प्रहिणुयामितः ।।

ज्ञातुं क एव निपुणो यतः स चतुराननः ।। ५ ।।

इत्याहूय विधातारं बहुमानपुरःसरम् ।।

तत्रोपवेश्य श्रीकंठः प्रोवाच चतुराननम् ।। ६ ।।

योगिन्यः प्रेषिताः पूर्वं प्रेषितोथ सहस्रगुः ।।

नाद्यापि ते निवर्तंते काश्याः कलशसंभव ।। ७ ।।

सा समुत्सुकयेत्काशी लोकेश मम मानसम् ।।

प्राकृतस्य जनस्येव चंचलाक्षीव काचन ।। ८ ।।

मंदरेत्र रतिर्मे न भृशं सुंदरकंदरे ।।

अनच्छतुच्छपानीये नक्रस्येवाल्पपल्वले ।। ९ ।।

ना बाधिष्ट तथा मां स तापो हालाहलोद्भवः ।।

काशीविरहजन्मात्र यथा मामतिबाधते ।। 4.2.52.१० ।।

शीतरश्मिः शिरःस्थोपि वर्षन्पीयूषसीकरैः ।।

काशीविश्लेषजं तापं नाहो गमयितुं प्रभुः ।। ११ ।।

विधे विधेहि मे कार्यमार्य धुर्य महामते ।।

याहि काशीमितस्तूर्णं यतस्व च ममेहिते ।। १२ ।।

ब्रह्मंस्त्वमेव तद्वेत्सि काशी त्यजनकारणम् ।।

मंदोपि न त्यजेत्काशीं किमु यो वेत्ति किंचन ।।१३।।

अद्यैव किं न गच्छेयं काशीं ब्रह्मन्स्वमायया ।।

दिवोदासं स्वधर्मस्थं न तूल्लंघितुमुत्सहे ।। १४।।

विधे सर्वविधेयानि त्वमेव विदधासि यत् ।।

इति चेति च वक्तव्यं त्वय्यपार्थमतोखिलम् ।।१५।।

अरिष्टं गच्छ पंथास्ते शुभोदर्को भवत्वलम्।।

आदायाज्ञां विधि मूर्ध्नि ययौ वाराणसीं मुदा ।।१६।।

सितहंसरथस्तूर्णं प्राप्य वाराणसीं पुरीम् ।।

कृतकृत्यमिवात्मानममन्यत तदात्मभूः ।। ।। १७ ।।

हंसयानफलं मेद्य जातं काशीसमागमे ।।

काशी प्राप्तौ यतः प्रोक्ता अंतरायाः पदेपदे ।। १८ ।।

दृशि धातुरभूद्य मद्दृशो प्राप्य सान्वयः ।।

स्पष्टं दृष्टिपथं प्राप्ता यदेषाऽऽनंदवाटिका ।। १९ ।।

स्वयं सिंचति या मद्भिः स्वाभिः स्वर्गतरंगिणी ।।

यत्रानंदमया वृक्षा यत्रानंदमया जनाः।। 4.2.52.२० ।।

निर्विशंति सदा काश्यां फलान्यानंदवंत्यपि।।

सदैवानंदभूः काशी सदैवानंददः शिवः ।। २१ ।।

आनंदरूपा जायंते तेन काश्यां हि जंतवः ।।

चरणौ चरितुं वित्तस्तावेव कृतिनामिह ।। ।। २२ ।।

चरणौ विचरेतांयौ विश्वभर्तृ पुरी भुवि ।।

तावेव श्रवणौ श्रोतुं संविदा ते बहुश्रुतौ ।। २३ ।।

इह श्रुतिमतां पुंसां याभ्यां काशी श्रुता सकृत् ।।

तदेव मनुते सर्वं मनस्त्विह मनस्विनाम ।। २४ ।।

येनानुमन्यते चैषा काशी सर्वप्रमाणभूः ।।

बुद्धिर्बुध्यति सा सर्वमिह बुद्धिमतां सताम् ।।

ययैतद्धूर्जटेर्धाम धृतं स्व विषयीकृतम् ।। २५ ।।

वरं तृणानि धान्यानि तानि वात्याहतान्यपि ।।

काश्यां यान्या पतंतीह न जनाः काश्यदर्शनाः ।। २६ ।। ।
अद्य मे सफलं चायुः परार्धद्वय संमितम् ।।
यस्मिन्सति मया प्रापि दुष्प्रापा काशिका पुरी ।। २७ ।।
अहो मे धर्मसंपत्तिरहोमे भाग्यगौरवम् ।।
यदद्राक्षिषमद्याहं काशीं सुचिर चिंतिताम् ।। २८ ।।
अद्य मे स्वतपो वृक्षो मनोरथफलैरलम् ।।
शिवभक्त्यंबुना सिक्तः फलितोति बृहत्तरैः ।। २९ ।।
मया व्यधायि बहुधा सृष्टिः सृष्टिं वितन्वता ।।
परमन्यादृशी काशी स्वयं विश्वेश निर्मितिः।। 4.2.52.३० ।।
इति हृष्टमना वेधा दृष्ट्वा वाराणसीं पुरीम् ।।
वृद्धब्राह्मणरूपेण राजानं च ददर्श ह ।। ३१ ।।
जलार्द्राक्षतपाणिश्च स्वस्त्युक्त्वा पृथिवीभुजे ।।
कृतप्रणामो राज्ञाथ भेजे तद्दत्तमासनम् ।।३२।।
कृतमानो नृपतिना सोभ्युत्थानासनादिभिः ।।
विप्रो व्यजिज्ञपद्भूपं पृष्टागमनकारणम् ।। ३३ ।।
।। ब्राह्मण उवाच ।। ।।
भूपाल बहुकालीनोस्म्यहमत्र चिरंतनः ।।
त्वं तु मां नैव जानासि जाने त्वां हि रिपुंजयम् ।। ।। ३४ ।।
परःशता मया दृष्टा राजानो भूरिदक्षिणाः ।।
विजितानेकसंग्रामा यायजूका जितेंद्रियाः ।। ३५ ।।
विनिष्कृतारिषड्वर्गाः सुशीलाः सत्त्वशालिनः ।।
श्रुतस्यपारदृश्वानो राजनीतिविचक्षणाः ।। ३६ ।।
दयादाक्षिण्यनिपुणाः सत्यव्रतपरायणाः ।।
क्षमया क्षमयातुल्या गांभीर्यजितसागराः ।। ३७ ।।
जितरोषरयाः शूराः सौम्यसौंदर्यभूमयः ।।
इत्यादि गुणसंपन्नाः सुसंचितयशोधनाः ।।३८।।
परं द्वित्राः पवित्रा ये राजर्षे तव सद्गुणाः ।।
तेष्वेषु राजसु मम प्रायशो न दृशं गताः ।। ३९ ।।

प्रजानिजकुटुंबस्त्वं त्वं तु भूदेवदैवतः ।।

महातपः सहायस्त्वं पथानान्ये तथा नृपाः ।। 4.2.52.४० ।।

धन्यो मान्योसि च सतां पूजनीयोसि सद्गुणैः ।।

देवा अपि दिवोदास त्वत्त्रासान्न विमार्गगाः ।। ४१ ।।

किं नः स्तुत्या तव नृप द्विजानामस्पृहावताम् ।।

किं कुर्मस्त्वद्गुणग्रामाः स्तावकान्नः प्रकुर्वते ।।४२।।

गोष्ठी तिष्ठत्वियं तावत्प्रस्तुतं स्तौमि सांप्रतम् ।।

यष्टुकामोस्म्यहं राजंस्त्वां सहायमतो वृणे ।।४३।।

त्वया राजन्वती चैषाऽवनिः सर्वर्धिभाजनम् ।।

अहं चास्तिधनो राजन्न्यायोपात्तमहाधनः ।।४४।।

इयं च राजधानी ते कर्मभूमावनुत्तमा ।।

यस्यां कृतानां कार्याणां संवर्तेपि न संक्षयः ।।४९।।

संचितं यद्धनं पुंभिर्नयसन्मार्गगामिभिः ।।

तत्काश्यां विनियुज्येत क्लेशायेतरथा भवेत् ।।४६।।

महिमानं परं काश्याः कोपि वेद न भूपते ।।

ॠते त्रिनयनाच्छंभोः सर्वज्ञानप्रदायिनः ।।४७।।

मन्ये धन्यतरोसि त्वं बहुजन्मशतार्जितैः ।।

सुकृतैः पासि यत्काशीं विश्वभर्तुः परां तनुम् ।। ४८।।

काशी त्रिजगतीसारस्त्रिवेदी सार एव वै ।।

त्रिवर्गोत्तरसारश्च निर्णीतेति महर्षिभिः ।। ४९।।

विश्वेशानुग्रहेणैव त्वयैषा पाल्यते पुरी ।।

एकस्याप्यवनात्काश्यां त्रैलोक्यमवितं भवेत् ।।4.2.52.५०।।

अन्यच्च ते हितं वच्मि यदि ते रोचतेऽनघ ।।

प्रीणनीयः सदैवैको विश्वेशः सर्वकर्मभिः ।। ५१ ।।

अन्यदेवधिया राजन्विश्वेशं पश्य मा क्वचित् ।।

ब्रह्मविष्ण्विंद्र चंद्रार्का क्रीडेयं तस्य धूर्जटेः ।। ।। ५२ ।।

विप्रैरुदर्कमिच्छद्भिः शिक्षणीया यतो नृपाः ।।

अतस्तव हितं ख्यातं किं वा मे चिंतयानया ।। ५३ ।।

इति जोषं स्थितं विप्रं प्रत्युवाच नृपोत्तमः ।।

सर्वं मया हृदि धृतं यत्त्वयोक्तं द्विजोत्तम ।। ५४ ।।

।। राजोवाच ।। ।।

अहं यियक्षमाणस्य तव साहाय्यकर्मणि ।।

दासोस्मि यज्ञसंभारान्नयमेको शतोऽखिलान् ।। ५५ ।।

यदस्ति मेखिलं तत्र सप्तांगेपि भवान्प्रभुः ।।

यजस्वैकमनाब्रह्मन्सिद्धं मन्यस्व वांछितम् ।। ५६ ।।

राज्यं करोमि यद्ब्रह्मन्स्वार्थं तन्न मनागपि ।।

पुत्रैः कलत्रैर्देहेनपरोपकृतये यते ।। ५७।।

राज्ञां क्रतुक्रियाभ्योपि तीर्थेभ्योपि समंततः ।।

प्रजापालनमेवैको धर्मः प्रोक्तो मनीषिभिः ।। ५८ ।।

प्रजासंतापजोवह्निर्वज्राग्नेरपि दारुणः ।।

द्वित्रान्दहति वज्राग्निः पूर्वो राज्यं कुलं तनुम् ।। ५९ ।।

यदावभृथसिस्नासुर्भवेयं द्विजसत्तम ।।

तदा विप्रपदांभोभिरभिषेकं करोम्यहम् ।। 4.2.52.६० ।।

हवनं ब्राह्मणमुखे यत्करोमि द्विजोत्तम ।।

मन्ये क्रतुक्रियाभ्योपि तद्विशिष्टं महामते ।।६१।।

अभिलाषेषु सर्वेषु जागर्त्येको हृदीह मे ।।

अद्यापि मार्गणः कोपि द्रष्टव्यः स्वतनोरपि ।। ६२ ।।

अहो अहोभिर्बहुभिः फलितो मे मनोरथः ।।

यत्त्वं मेद्य गृहे प्राप्तः किंचित्प्रार्थयितुं द्विज ।। ६३ ।।

एकाग्रमानसो विप्र यज्ञान्विपुलदक्षिणान् ।।

बहून्यजकृतं विद्धि साहाय्यं सर्ववस्तुषु ।। ६४ ।।

इति राज्ञो महाबुद्धेर्धर्मशीलस्य भाषितम् ।।

श्रुत्वा तुष्टमनाः स्रष्टा क्रतुसंभारमाहरत् ।। ६५ ।।

साहाय्यं प्राप्य राजर्षेर्दिवोदासस्य पद्मभूः ।।

इयाज दशभिः काश्यामश्वमेधैर्महामखैः ।।६६ ।।

अद्यापि होमधूमोघैर्यद्व्याप्तं गगनांतरम् ।।

तदा प्रभृति न व्योम नीलिमानं जहात्यदः ।। ६७ ।।

तीर्थं दशाश्वमेधाख्यं प्रथितं जगतीतले ।।

तदा प्रभृति तत्रासीद्वाराणस्यां शुभप्रदम् ।। ६८ ।।

पुरा रुद्रसरो नाम तत्तीर्थं कलशोद्भव ।।

दशाश्वमेधिकं पश्चाज्जातं विधिपरिग्रहात् ।। ६९ ।।

स्वर्धुन्यथ ततः प्राप्ता भगीरथसमागमात् ।।

अतीव पुण्यवज्जातमतस्तत्तीर्थमुत्तमम् ।।4.2.52.७०।।

विधिर्दशाश्वमेधेशं लिंगं संस्थाप्य तत्र वै।।

स्थितवान्न गतोद्यापि क्वापि काशीं विहाय तु ।। ७१ ।।

राज्ञो धर्मरतेस्तस्य च्छिद्रं नावाप किंचन ।।

अतः पुरारेः पुरतो व्रजित्वा किं वदेद्विधिः ।। ७२ ।।

क्षेत्रप्रभावं विज्ञाय ध्यायन्विश्वेश्वरं शिवम् ।।

ब्रह्मेश्वरं च संस्थाप्य विधिस्तत्रैव संस्थितः ।। ७३ ।।

परातनुरियं काशी विश्वेशस्येति निश्चितम् ।।

अस्याः संसेवनाच्छंभुर्न कुप्यति पुरो मयि ।। ७४ ।।

कः प्राप्य काशीं दुर्मेधाः पुनस्त्यक्तुमिहेह ते ।।

अनेकजन्मजनितकर्मनिर्मूलनक्षमाम् ।। ७५ ।।

विश्वसंतापसंहर्तुः स्थाने विश्वपतेस्तनुः ।।

संताप्यतेतरां काश्या विश्लेषज महाग्निना ।। ७६ ।।

प्राप्य काशीं त्यजेद्यस्तु समस्ताघौघनाशिनीम्।।

नृपशुः स परिज्ञेयो महासौख्यपराङ्मुखः ।। ७७ ।।

निर्वाणलक्ष्मीं यः कांक्षेत्त्यक्त्वा संसारदुर्गतिम् ।।

तेन काशी न संत्याज्या यद्यासैशादनुग्रहात् ।। ७८ ।।

यः काशीं संपरित्यज्य गच्छेदन्यत्र दुर्मतिः ।।

तस्य हस्ततलाद्गच्छेच्चतुर्वर्गफलोदयः ।। ७९ ।।

निबर्हणी मधौघस्य सुपुण्य परिबृंहिणीम् ।।

कः प्राप्य काशीं दुर्मेधास्त्यजेन्मोक्षसुखप्रदाम्।। 4.2.52.८० ।।

सत्यलोके क्व तत्सौख्यं क्व सौख्यं वैष्णवे पदे ।।

यत्सौख्यं लभ्यते काश्यां निमेषार्धनिषेवणात् ।। ८१ ।।

वाराणसीगुणगणान्निर्णीय द्रुहिणस्त्विति ।।

व्यावृत्य मंदरगिरिं न पुनः प्रत्यगान्मुने ।।८२।।

।। स्कंद उवाच ।। ।।

मित्रावरुणयोः पुत्र महिमानं ब्रवीमि ते ।। ।।

काश्यां दशाश्वमेधस्य सर्वतीर्थशिरोमणेः ।। ८३ ।।

दशाश्वमेधिकं प्राप्य सर्वतीर्थोत्तमोत्तमम् ।।

यत्किंचित्क्रियते कर्म तदक्षयमिहेरितम् ।। ८४ ।।

स्नानं दानं जपो होमः स्वाध्यायो दे वतार्चनम् ।।

संध्योपास्तिस्तर्पणं च श्राद्धं पितृसमर्चनम्।।८५।।

दशाश्वमेधिके तीर्थे सकृत्स्नात्वा नरोत्तमः ।९।

दृष्ट्वा दशाश्वमेधेशं सर्वपापैः प्रमुच्यते ।।८६।।

ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् ।।

दशाश्वमेधिके स्नात्वा मुच्यते जन्मपातकैः ।। ८७ ।।

ज्येष्ठे शुक्ल द्वितीयायां स्नात्वा रुद्रसरोवरे ।।

जन्मद्वयकृतं पापं तत्क्षणादेव नश्यति ।। ८८ ।।

एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः ।।

आशुक्लपक्षदशमि प्रतिजन्माघमुत्सृजेत् ।। ८९ ।।

तिथिं दशहरां प्राप्य दशजन्माघहारिणीम् ।।

दशाश्वमेधिके स्नातो यामीं पश्येन्न यातनाम् ।।4.2.52.९०।।

लिंगं दशाश्वमेधेशं दृष्ट्वा दशहरा तिथौ ।।

दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ।। ९१ ।।

स्नातो दशहरायां यः पूजयेल्लिंगमुत्तमम् ।।

भक्त्या दशाश्वमेधेशं न तं गर्भदशा स्पृशेत् ।।९२।।

ज्येष्ठे मासि सिते पक्षे पक्षं रुद्रसरे नरः ।।

कुर्वन्वै वार्षिकीं यात्रां न विघ्नैरभिभूयते।।९३।।

दशाश्वमेधावभृथैर्यत्फलं सम्यगाप्यते ।।

दशाश्वमेधे तन्नूनं स्नात्वा दशहरा तिथौ ।। ९४ ।।

स्वर्धुन्याः पश्चिमे तीरे नत्वा दशहरेश्वरम् ।।

न दुर्दशामवाप्नोति पुमान्पुण्यतमः क्वचित् ।। ९५ ।।

यत्काश्यां दक्षिणद्वारमंतर्गेहस्य कीर्त्यते ।।

तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयते ।। ९६ ।।

इति ब्राह्मणवेषेण वाराणस्यां महाधिया ।।

द्रुहिणेन स्थितं तावद्यावद्विश्वेश्वरागमः ।। ९७ ।।

दिवोदासोपि राजेंद्रो वृद्धब्राह्मणरूपिणे ।।

ब्रह्मणे कृतयज्ञाय ब्रह्मशालामकल्पयत्।। ९८ ।।

ब्रह्मेश्वरसमीपे तु ब्रह्मशाला मनोहरा ।।

ब्रह्मा तत्रावसद्व्योम ब्रह्मघोषैर्निनादयन् ।। ९९ ।।

इति ते कथितो ब्रह्मन्महिमातिमहत्तरः ।।

दशाश्वमेधतीर्थस्य सर्वाघौघविनाशनः ।। 4.2.52.१०० ।।

श्रुत्वाध्यायमिमं पुण्यं श्रावयित्वा तथैव च ।।

ब्रह्मलोकमवाप्नोति श्रद्धया मानवोत्तमः ।। १०१ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायामुत्तरार्द्धे चतुर्थे काशीखंडे दशाश्वमेधवर्णनंनाम द्विपंचाशत्तमोऽध्यायः ।। ५२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५३

https://sa.wikisource.org/s/fuo



।। अगस्तिरुवाच ।। ।।

अपूर्वेयं कथा ख्याता ब्रह्मणो ब्रह्मवित्तम ।।

किं चकार पुनः शंभुस्तत्र ब्रह्मण्यपि स्थिते ।। १ ।।

।। स्कंद उवाच ।।

शृण्वगस्त्य महाभाग काश्यां ब्रह्मण्यपिस्थिते ।।

गिरिशश्चिंतयामास भृशमुद्विग्नमानसः ।। २ ।।

पुरी सा यादृशी काशी वशीकरणभूमिका ।।

न तादृशीदृशीहासीत्क्वचिन्मे प्रायशो ध्रुवम् ।। ३ ।।

यो यो याति पुरीं तां तु स स तत्रैव तिष्ठति ।।

अभूवन्ननुयोगिन्योऽयोगिन्यः काशिसंगताः ।। ४ ।।

अकिंचित्करतां प्राप्तः स सहस्रकरोप्यरम् ।।

विधिर्विधानदक्षोपि न मे स सविधोभवत् ।। ५ ।।

चिंतयन्निति देवेशो गणानाहूय भूरिशः ।।

प्रेषयामास भो यात क्षिप्रं वाराणसीं पुरीम् ।।६।।

किं कुर्वंति तु योगिन्यः किं करोति स भानुमान् ।।

गत्वा वित्त त्वरायुक्ता विधिश्च विदधाति किम् ।। ७ ।।

नामग्राहं ततःऽप्रैषीद्बहुमान पुरःसरम्।।

शंकुकर्ण महाकाल घटाकर्ण महोदर ।।८।।

सोमनंदिन्नंदिषेण काल पिंगल कुक्कुट ।।

कुंडोदर मयूराक्ष बाण गोकर्ण तारक ।। ९ ।।

तिलपर्ण स्मूलकर्ण दृमिचंड प्रभामय ।।

सुकेश विंदते छाग कपर्दिन्पिंगलाक्षक ।। 4.2.53.१० ।।

वीरभद्र किराताख्य चतुर्मुख निकुंभक ।।

पंचाक्षभारभूताख्य त्र्यक्ष क्षेमक लांगलिन्।।११।।

विराध सुमुखाषाढे भवंतो मम सूनवः ।।

यथेमौ स्कंदहेरंबौ नैगमेयो यथा त्वयम् ।।१२।।

यथा शाखविशाखौ च यथेमौ नंदिभृंगिणौ ।।

भवत्सु विद्यमानेषु महाविक्रमशालिषु ।। १३ ।।

काशीप्रवृत्तिं नो जाने दिवोदासनृपस्य च ।।

योगिन्यर्कविधीनां च तद्द्वौ यातं भवत्स्वमू ।। १४ ।।

शंकुकर्णमहाकालौ कालस्यापि प्रकंपनौ ।।

ज्ञातुं वाराणसीवार्तामायातं चत्वरान्वितौ ।। १५ ।।

कृतप्रतिज्ञौ तो(?) तूर्णं प्राप्य वाराणसीं पुरीम् ।।

शंकुकर्णमहाकालौ विस्मृत्य शांभवीं गिरम् ।। १६ ।।

यथैंद्रजालिकीं दृष्ट्वा मायामिह विचक्षणः ।।

क्षणेन मोहमायाति काशीं वीक्ष्य तथैव तौ ।। १७ ।।

अहो मोहस्य माहात्म्यमहो भाग्यविपर्ययः ।।

निर्वाणराशिं यत्काशीं प्राप्य यांत्यन्यतोऽबुधाः ।। १८ ।।

तत्यजे यैरियं काशी महाशीर्वादभूभिका ।।

तेषां करतलान्मुक्तिः प्राप्तापि परितो गता ।। १९ ।।

यत्र सर्वावभृथतः स्नानमात्रं विशिष्यते ।।

अप्युष्णीकृतपानीयैस्तां काशीं कः परित्यजेत् ।। 4.2.53.२० ।।

यत्रैकपुष्पदानेन शिवलिंगस्य मूर्धनि ।।

दशसौवर्णिकं पुण्यं कस्तां काशीं परित्यजेत् ।। २१ ।।

यत्र दंडप्रणामेन अप्येकेन शिवाग्रतः ।।

तुच्छमैंद्रपदंप्राहुस्तां काशीं को विमुंचति ।। २२ ।।

यत्रैकद्विजमात्रं तु भोजयित्वा यथेच्छया ।।

वाजपेयाधिकं पुण्यं तां काशीं को विमुंचति ।। २३ ।।

एकां गां यत्र दत्त्वा वै विधिवद्ब्राह्मणाय वै ।।

लभेदयुत गोपुण्यं कस्तां काशीं त्यजेत्सुधीः ।। २४ ।।

एकलिंगं प्रतिष्ठाप्य यत्र संस्थापितं भवेत् ।।

अपि त्रैलोक्यमखिलं तां काशीं कः समुज्झति ।। २५ ।।

परिनिश्चित्य तावित्थं लिंगे संस्थाप्य पुण्यदे ।।

तत्रैव संस्थितिं प्राप्तौ काशीं नाद्यापि मुंचतः ।। २६ ।।

शंकुकर्णेश्वरं लिंगं शंकुकर्ण ग णार्चितम् ।।

दृष्ट्वा न जायते जंतुर्जातु मातुर्महोदरे ।। २७ ।।

विश्वेशाद्वायुदिग्भागे शंकुकर्णेश्वरं नरः ।।

संपूज्य न विशेदत्र घोरे संसारसागरे ।। २८ ।।

महाकालेश्वरं लिंगं महाकालगणार्चितम् ।।

अर्चयित्वा च नत्वा च स्तुत्वा कालभयं कुतः ।। २९ ।।

।। स्कंद उवाच ।। ।।

शंकुकर्णे महाकाले चिरंतन विलंबिते ।।

ज्ञात्वा सर्वज्ञनाथोथ प्राहैपीदपरौ गणौ ।। 4.2.53.३० ।।

घंटाकर्ण त्वमागच्छ महोदर महामते ।।

काशीं यातं युवां तूर्णं ज्ञातुं तत्रत्य चेष्टितम् ।।३१।।

इत्यगस्ते गणौ तौ तु गत्वा काशीं महापुरीम्।।

व्यावृत्याद्यापि नो यातौ क्वापि तत्रैव संस्थितौ ।। ३२ ।।

घंटाकर्णेश्वरं लिंगं घंटाकर्ण गणोत्तमः ।।

काश्यां संस्थाप्य विधिवत्स्वयं तत्रैव निर्वृतः ।। ३३ ।।

कुंडं तत्रैव संस्थाप्य लिंगस्नपनकर्मणे ।।

नाद्यापि स त्यजेत्काशीं ध्यायँल्लिंगं तथैव हि ।। ३४ ।।

महोदरोपि तत्प्राच्यां शिवध्यानपरायणः ।।

महोदरेश्वरं लिंगं ध्यायेदद्यापि कुंभज ।। ३५ ।।

महोदरेश्वरं दृष्ट्वा वाराणस्यां द्विजोत्तम ।।

कदाचिदपि वै मातुः प्रविशेन्नौदरीं दरीम् ।। ।। ३६ ।।

घंटाकर्ण ह्रदे स्नात्वा दृष्ट्वा व्यासेश्वरं विभुम् ।।

यत्र कुत्र विपन्नोपि वाराणस्यां मृतो भवेत्।।३७।।

घंटाकर्णे महातीर्थे श्राद्धं कृत्वा विधानतः ।।

अपि दुर्गतिमापन्नानुद्धरेत्सप्तपूर्वजान् ।। ३८ ।।

निमज्ज्याद्यापि तत्कुंडे क्षण योवहितो भवेत् ।।

विश्वेश्वरमहापूजा घंटारावाञ्शृणोति सः ।।३९।।

वदंति पितरः काश्यां घंटाकर्णेमलेजले।।

दाता तिलोदकस्यापि वंशे नः कोपि जायते।।4.2.53.४०।।

यद्वंश्या मुनयः काश्यां घंटाकर्णे महाह्रदे।।

कृतोदकक्रियाः प्राप्ताः परां सिद्धिं घटोद्भव ।।४१।।

।। स्कंद उवाच।। ।।

घंटाकर्णे गणे याते प्रयाते च महोदरे ।।

विसिस्माय स्मरद्वेष्टा मौलिमांदोलयन्मुहुः ।।४२।।

उवाच च मनस्येव हरः स्मित्वा पुनःपुनः ।।

महामोहनविद्यासि काशि त्वां पर्यवैम्यहम् ।। ४३ ।।

पुराविदः प्रशंसंति त्वां महामोहहारिणीम् ।।

काशींत्विति न जानंति महामोहनभूरियम् ।। ४४ ।।

प्रेषयिष्याम्यहं सर्वान्भवती मोहयिष्यति ।।

इति सम्यग्विजानामि काशि त्वां मोहनोषधिम् ।। ४९ ।।

तथापि प्रेषयिष्यामि यावान्मेस्ति परिच्छदः ।।

नोद्यमाद्विरमंतीह ज्ञानिनः साध्यकर्मणि ।। ४६ ।।

नोद्यमाद्विरतिः कार्या क्वापि कार्ये विचक्षणैः ।।

प्रतिकूलोपि खिद्येत विधिस्तत्सततोद्यमात् ।। ४७ ।।

शीतोष्णभानू स्वर्भानु ग्रस्तावपि नभोंगणे ।।

गतिं न त्यजतोद्यापि प्रक्रांतव्य कृतोद्यमौ ।। ४८ ।।

एकत्र हंति कार्याणि प्रातिकूल्याद्विधिर्मुहुः ।।

एकत्रकरणीयानि सेत्स्यंत्यत्र भृशोद्यमात् ।। ४९ ।।

दैवं पूर्वकृतं कर्म कथ्यते नेतरत्पुनः ।।

तन्निराकरणे यत्नः स्वयं कार्यो विपश्चिता ।। 4.2.53.५० ।।

भाजनोपस्थितं दैवाद्भोज्यं नास्यं स्वयं विशेत् ।।

हस्तवक्त्रोद्यमात्तच्च प्रविशेदौदरीं दरीम् ।। ५१ ।।

इत्युद्यमं समर्थ्येशो निश्चितं दैवजित्वरम् ।।

पुनश्च प्रेषयांचक्रे गणान्पंचमहारयान् ।। ५२ ।।

सोमनंदी नंदिषेणः कालपिंगलकुक्कुटाः ।।

तेद्यापि न निवर्तंते काश्यां जीवामृता यथा ।।५३।।
तेपि स्वनाम्ना लिंगानि शंभुसंतुष्टि काम्यया।।
प्रतिष्ठाप्य स्थिताः काश्यां विश्वनिर्वाणजन्मनि ।। ५४ ।।
सोमनंदीश्वरं दृष्ट्वा लिंगं नंदवने परम् ।।
सोमलोके परानंदं प्राप्नुयाद्भक्तिमान्नरः ।। ५५ ।।
तदुत्तरे विलोक्याथ नंदिषेणेश्वरं नरः ।।
आनंदसेनां संप्राप्य जयेन्मृत्युमपि क्षणात् ।। ५६ ।।
कालेश्वरं महालिंगं गंगायाः पश्चिमोत्तरे ।।
प्रणम्य कालपाशेन नो बध्येत कदाचन ।। ।। ५७ ।।
पिंगलेश्वरमभ्यर्च्य कालेशात्किंचिदुत्तरे ।।
लभते पिंगलज्ञानं येन तन्मयतां व्रजेत् ।। ५८ ।।
कुक्कुटेश्वर लिंगस्य येत्र भक्तिं वितन्वते ।।
कुक्कुटांडाकृतेस्तस्य न ते गर्भमवाप्नुयुः ।। ५९ ।।
।। स्कंद उवाच ।। ।।
सोमनंदि प्रभृतिषु मुने पंचगणेष्वपि ।।
आनंदकाननं प्राप्य स्थितेषु स्थाणुरब्रवीत् ।। 4.2.53.६० ।।
कार्यमस्माकमेवैतद्यदि सम्यग्विमृश्यते ।।
अनेनोपाधिनाप्येते तत्र तिष्ठंतु मामकाः ।। ६१ ।।
प्रमथेषु प्रविष्टेषु मायावीर्यमहत्स्वपि ।।
अहमेव प्रविष्टोस्मि वाराणस्यां न संशयः ।। ६२ ।।
क्रमेण प्रेषयिष्यामि योस्ति मे स्वपरिच्छदः ।।
तत्र सर्वेषु यातेषु ततो यास्याम्यहं पुनः ।। ६३ ।।
संप्रधार्येति हृदये देवदेवेन शूलिना ।।
प्रैषिष्ट प्रमथानां तु ततो गणचतुष्टयम् ।। ६४ ।।
कुंडोदरो मयूराख्यो बाणो गोकर्ण एव च ।।
मायाबलं समाश्रित्य काशीं प्रविविशुर्गणाः ।। ६५ ।।
कृत्वोपायशतं तैस्तु दिवोदासस्य संभ्रमे
यदैकोपि समर्थो न तदा तत्रैव संस्थितम् ।।६६।।

अपराधशतेष्वीशः केन तुष्यति कर्मणा ।।

संप्रधार्येति ते चक्रुर्लिंगाराधनमुत्तमम् ।। ६७ ।।

एकस्मिञ्शांभवे लिंगे विधिनात्र समर्चिते ।।

क्षमेत्त्र्यक्षोपराधानां शतं मोक्षं च यच्छति ।।६८।।

न तुष्यति तथा शंभुर्यज्ञदानतपोव्रतैः ।।

यथा तुष्येत्सकृल्लिंगे विधिनाभ्यर्चिते सति ।। ६९ ।।

लिंगार्चनविधानज्ञो लिंगार्चनरतः सदा ।।

त्र्यक्ष एव स विज्ञेयः साक्षाद्द्व्यक्षोपि मानवः ।। 4.2.53.७० ।।

न गोशतप्रदानेन न स्वर्णशतदानतः ।।

तत्फलं लभ्यते पुंभिर्यत्सकृल्लिंगपूजनात् ।। ७१ ।।

अश्वमेधादिभिर्यागैर्न तत्फलमवाप्यते ।।

यत्फलं लभ्यते मर्त्यैर्नित्यं लिंगप्रपूजनात् ।। ७२ ।।

स्नापयित्वा विधानेन यो लिंगस्नपनोदकम् ।।

त्रिः पिबेत्त्रिविधं पापं तस्येहाशु प्रणश्यति ।। ७३ ।।

लिंग स्नपनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनम् ।।

गंगास्नानफलं तस्य जायतेत्र विपाप्मनः ।। ७४ ।।

लिंगं समर्चितं दृष्ट्वा यः कुर्यात्प्रणतिं सकृत् ।।

संदेहो जायते तस्य पुनर्देहनिबंधने ।। ७५ ।।

लिंगं यः स्थापयेद्भक्त्या सप्तजन्मकृतादघात् ।।

मुच्यते नात्र संदेहो विशुद्धः स्वर्गभाग्भवेत् ।। ।। ७६ ।।

विचार्येति गणैः काश्यां स्वामिद्रोहोपशांतये ।।

प्रतिष्ठितानि लिंगानि महापातकभिंद्यपि ।। ७७ ।।

कुंडोदरेश्वरं लिंगं दृष्ट्वा लोलार्कसन्निधौ ।।

सर्वपापविनिर्मुक्तः शिवलोके महीयते ।।७८।।

कुंडोदरेश्वराल्लिंगात्प्रतीच्यामसिरोधसि ।।

मयूरेश्वरमभ्यर्च्य न गर्भं प्रतिपद्यते ।।७९।।

मयूरेशप्रतीच्यां च लिंगं बाणेश्वरं महत् ।।

तस्य दर्शनमात्रेण सर्वैः पापैः प्रमुच्यते ।। 4.2.53.८० ।।

गोकर्णेशं महालिंगमंतर्गेहस्य पश्चिमे ।।

द्वारे समर्च्य वै काश्यां न विघ्नैरभिभूयते ।। ८१ ।।

गोकर्णेश्वर भक्तस्य पंचत्व समये सति ।।

ज्ञानभ्रंशो न जायेत क्वचिदप्यंतमृच्छतः ।।८२।।

।। स्कंद उवाच ।। ।।

चिरयत्सुगणेष्वेषु चतुर्ष्वपिगणेश्वरः ।।

महिमानं महत्त्वं तु तत्काश्याः पर्यवर्णयत् ।। ८३ ।।

वैष्णव्या मायया विश्वं भ्राम्येतात्र ययाखिलम्।।

ध्रुवं मूर्तिमती सैषा काशी विश्वैकमोहिनी ।। ८४ ।।

अपास्य सोदरान्दारान्पुत्रं क्षेत्रं गृहं वसु ।।

अप्यंगीकृत्य निधनं सर्वे काशीमुपासते ।। ८५।।

मरणादपि नो काश्यां भयं यत्र मनागपि ।।

गणास्तत्र तु तिष्ठंतः कुतो मत्तोपि बिभ्यति ।। ८६ ।।

मरणं मंगलं यत्र विभूतिर्यत्र भूषणम् ।।

कौपीनं यत्र कौशेयं काशी कुत्रोपमीयते ।। ८७ ।।

निर्वाणरमणी यत्र रंकं वाऽरंकमेव वा ।।

ब्राह्मणं वा श्वपाकं वा वृणीते प्रांत्यभूषणम् ।। ८८ ।।

मृतानां यत्र जंतूनां निर्वाणपदमृच्छताम् ।।

कोट्यंशेनापि न समा अपि शक्रादयः सुराः ।। ८९ ।।

यत्र काश्यां मृतो जंतुर्ब्रह्मनारायणादिभिः ।।

प्रबद्ध मूर्धांजलिभिर्नमस्येतातियत्नतः ।। 4.2.53.९० ।।

यत्र काश्यां शवत्वेपि जंतुर्नाशुचितां व्रजेत् ।।

अतस्तत्कर्णसंस्पर्शं करोम्यहमपि स्वयम् ।। ९१ ।।

यस्तु काशीति काशीति द्विस्त्रिर्जपति पुण्यवान् ।।

अपि सर्वपवित्रेभ्यः स पवित्रतरो महान् ।। ९२ ।।

येन काशी हृदि ध्याता येन काशीह सेविता ।।

तेनाहं हृदि संध्यातस्तेनाहं सेवितः सदा ।। ९३ ।।

काशीं यः सेवते जंतुर्निर्विकल्पेन चेतसा ।।

तमहं हृदये नित्यं धारयामि प्रयत्नतः ।। ९४ ।।

स्वयं वस्तुमशक्तोपि वासयेत्तीर्थवासिनम् ।।

अप्येकमपि मूल्येन स वस्तुःफलभाग्ध्रुवम् ।। ९५ ।।

काश्यां वसंति ये धीरा आपंचत्व विनिश्चयाः ।।

जीवन्मुक्तास्तु ते ज्ञेया वंद्याः पूज्यास्त एव हि ।। ९६ ।।

इत्थं विमृश्य बहुशः स्थाणुर्वाराणसीगुणान् ।।

गणानन्यान्समाहूय प्राहिणोत्प्रीतिपूर्वकम् ।। ।।९७।।

तारकत्वं समागच्छ गच्छाति स्वच्छमानस ।।

दिवोदासो वृषावासो यामधीष्टे वरां पुरीम् ।।९८।।

तिलपर्ण स्थूलकर्ण दृमिचंड प्रभामय ।।

सुकेश विंदते छाग कपर्दिन्पिंगलाक्षक ।।९९।।

वीरभद्र किराताख्य चतुर्मुख निकुंभक ।।

पंचाक्ष भारभूताख्य त्र्यक्ष क्षेमकलांगलिन् ।। 4.2.53.१०० ।।

विराध सुमुखाषाढे यांतु सर्वे पृथक्पृथक् ।।

एते गणा महाभागाः स्वामिभक्ता दृढव्रताः ।।१।।

कृत्वा माया बहुविधा बहुरूपा विचक्षणाः।।

अनिमेषेक्षणास्तस्थुः क्षोणीशच्छिद्रकांक्षिणः ।।२।।

अपरुज्ञात तच्छिद्रा विद्रावितयशोधनाः।।

आः किमेतदहोजातं निनिंदुः स्वमितीह ते ।।३।।

गणा ऊचुः ।। ।।

धिगस्मान्स्वामिना नित्यं कृतसंभावनान्मुहुः ।।

मनुष्यमात्रमप्यत्र यैरेकं न वशीकृतम् ।। ४ ।।

बहुमानेन दानेन सौहार्देन महीयसा ।।

कृतप्रसादांस्त्र्यक्षेण धिङ्नस्तत्कार्यवंचकान् ।।५।।

का गतिर्नो भवित्रीह स्वामिकृत्यप्रमादिनाम् ।।

अंधं तमोमये लोके ध्रुवं वासो भविष्यति ।। ६ ।।

अकृतस्वामिकार्याणामहो जीवितधारिणाम्।।

अक्षतेंद्रियवृत्तीनां दुर्गतिश्च पदे पदे ।। ७ ।।

लब्धसंभावनानां च न्यक्कृतस्वामिकर्मणाम् ।।

भृत्यानां भूरिभाजां च भंगुराः स्युर्मनोरथाः ।। ८ ।।

अनिष्पादितकार्यार्था ये मुखं प्रेक्षयंत्यहो ।।

अपत्रपाः पुरो भर्तुस्तैर्भूर्भारवतीत्वियम्।।९।।

नाद्रीणां न समुद्राणां न द्रुमाणां महीयसाम् ।।

भूतधात्र्यास्तथा भारो यथा स्वामिद्रुहां महान् ।। 4.2.53.११० ।।

अहो पौराणिकी गाथा स्मृतास्माभिरनिंदिता ।।

तदर्थमवलंब्येह स्थास्यामः कृतनिश्चयाः ।। ११ ।।

अनाकलितपुण्यानां परिक्षीणधनायुषाम् ।।

सर्वोपायविहीनानां गतिर्वाराणसीपुरी ।। १२ ।।

अपुण्यभारखिन्नानां पश्चात्तापमुपेयुषाम्।।

विष्वगूर्ध्वगतीनां च गतिर्वाराणसीपुरी ।। १३ ।।

स्वामिद्रुहः कृतघ्नाश्च ये च विश्रंभघातकाः ।।

तेषां क्वापि गतिर्नास्ति मुक्त्वा वाराणसीं पुरीम् ।। १४ ।।

इत्थं निश्चित्य गाथार्थं प्रमथा अवतस्थिरे ।।

अविज्ञातस्वरूपाश्च दिवोदासेन भूभुजा ।। ।। १५ ।।

न बुबोध स भूपालो नितरां बुद्धिमानपि ।।

विबुधान्विविधाकारैः स्थितानीशप्रभावतः ।। १६ ।।

चित्रं न चित्रगुप्तोपि वेत्ति वाराणसीस्थितान्।।

जंतून्का गणनान्येषां मर्त्यलोकनिवासिनाम् ।। १७ ।।

अविच्छिन्न प्रभावाणामपरिच्छिन्न तेजसाम् ।।

कृतलिंगप्रतिष्ठानां नांतं प्राप्नोति धर्मराट् ।। १८ ।।

इति ते प्रमथाः सर्वे घटोद्भव महामुने ।।

कृतलिंगार्चनाः काशीं नाद्याप्युज्झंति शर्मदाम् ।। १९ ।।

तारकेशं महालिंगं तारकाख्यो गणोत्तमः ।।

तारकज्ञानदं पुंसां मुनेऽद्यापि समर्चयेत् ।। 4.2.53.१२० ।।

तारकेश्वरलिंगस्य कृत्वा भक्तिसुनिश्चलाम् ।।

सुखेन तारकज्ञानं लभ्यते तैर्नरोत्तमैः ।।२१।।

तिलपर्णेश्वरं लिंगं तिलपर्ण प्रतिष्ठितम् ।।

तिलप्रमाणमप्यत्र दृष्ट्वा पापं न संभवेत् ।। २२ ।।

स्थूलकर्णेश्वरं लिंगं परिपूज्य नरोत्तमः ।।

न दुर्गतिमवाप्नोति पुण्यमाप्नोति चोत्तमम् ।। ।। २३ ।।

दृमिचंडेश्वरं लिंगं तथा लिंगं प्रभामयम् ।।

आराध्य तत्प्रतीच्यां च न पापैरभिभूयते ।। २४।।

प्रभामयेश्वरं लिंगं दृष्ट्वान्यत्रापि संस्थितः ।।

प्रभामयेन यानेन शिवलोके व्रजेत्सुधीः ।। २५ ।।

सुकेशेश्वरमभ्यर्च्य हरिकेशवने नरः ।।

षाट्कौशिकमयं देहं धारयेन्न पुनःपुनः ।। २६ ।।

विंदतीशं नरोभ्यर्च्य भीमचंडी समीपतः ।।

त्यक्त्वा प्रचंडमप्येनो मोक्षं विंदति शाश्वतम् ।। २७ ।।

छागलेशं महालिंगं पित्रीश्वरसमीपगम् ।।

विलोक्य पशुवत्कोपि न पापं प्राकृतं स्पृशेत् ।। २८ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखण्डे उत्तरार्द्धे वाराणसीवर्णनं गणप्रेषणं नाम त्रिपंचाशत्तमोऽध्यायः ।। ५३ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५४



स्कंद उवाच ।। ।।

कुंभसंभव वक्ष्यामि शृणोत्ववहितो भवान् ।।

कपर्दीशस्य लिंगस्य महामाहात्म्यमुत्तमम् ।। १ ।।

कपर्दी नाम गणपः शंभोरत्यंतवल्लभः ।।

पित्रीशादुत्तरे भागे लिंगं संस्थाप्य शांभवम् ।।२।।

कुंडं चखान तस्याग्रे विमलोदक संज्ञकम् ।।

यस्य तोयस्य संस्पर्शाद्विमलो जायते नरः ।। ३ ।।

इतिहासं प्रवक्ष्यामि तत्र त्रेतायुगे पुरा ।।

यथावृत्तं कुंभयोने श्रवणात्पातकापहम् ।। ४ ।।

एकः पाशुपत श्रेष्ठो वाल्मीकिरिति संज्ञितः ।।

तपश्चचार स मुनिः कपर्दीशं समर्चयन् ।। ५ ।।

एकदा स हि हेमंते मार्गे मासि तपोधनः ।।

स्नात्वा तत्र महातीर्थे मध्याह्ने विमलोदके ।। ६ ।।

चकार भस्मना स्नानमापादतलमस्तकम् ।।

लिंगस्य दक्षिणेभागे कृतमाध्याह्निकक्रियः ।। ७ ।।

न्यस्तमस्तकपांसुश्च संध्यामाध्यात्मिकीं स्मरन् ।।

जपन्पंचाक्षरीं विद्यां ध्यायन्देवं कपर्दिनम् ।। ८ ।।

कृत्वा संहारमार्गेण सप्रमाणं प्रदक्षिणाम् ।।

हुडुंकृत्य हुडुंकृत्य हुडुंकृत्य त्रिरुच्चकैः ।। ९ ।।

प्रणवं पुरतः कृत्वा षड्जादिस्वरभेदतः ।।

गीतं विधाय सानंदं सनृत्यं हस्तकान्वितम् ।। 4.2.54.१० ।।

अंगहारैर्मनोहारि चारी मंडलसंयुतम् ।।

क्षणं तत्र सरस्तीरे उपविष्टो महातपाः ।। ११ ।।

अद्राक्षीद्राक्षसं घोरमतीव विकृताकृतिम् ।।

शुष्कशंखकपोलास्यं निमग्ना पिंगलोचनम् ।।१२।।

रूक्षस्फुटितकेशाग्रं महालंब शिरोधरम् ।।
अतीव चिपिट घ्राणं शुष्कौष्ठमतिदंतुरम् ।। १३ ।।
महाविशालमौलिं च प्रोर्ध्वीभूतशिरोरुहम् ।।
प्रलंबकर्णपालीकं पिंगलश्मश्रुभीषणम् ।। ।। १४ ।।
प्रलंबित ललज्जिह्ममत्युत्कट कृकाटिकम् ।।
स्थूलास्थि जत्रु संस्थानं दीर्घस्कंधद्वयोत्कटम् ।। १५ ।।
निमग्नकक्षाकुहरं शुष्कह्रस्व भुजद्वयम् ।।
विरलांगुलिहस्ताग्रं नतपीन नखावलिम् ।। १६ ।।
विशुष्क पांसुलोत्क्रोडं पृष्ठलग्नोदरत्वचम् ।।
कटीतटेन विकटं निर्मांसत्रिकबंधनम् ।। १७ ।।
प्रलंब स्फिग्युगयुतं शुष्कमुष्काल्पमेहनम् ।।
दीर्घनिर्मांसलोरूकं स्थूलजान्वस्थिपंजरम् ।। १८ ।।
अस्थिचर्मावशेषं च शिराजालितविग्रहम् ।।
शिरालं दीर्घजंघं च स्थूलगुल्फास्थिभीषणम् ।। १९ ।।
अतिविस्तृत पादं च दीर्घवक्रकृशांगुलिम् ।।
अस्थिचर्मावशेषेण शिराताडितविग्रहम् ।। 4.2.54.२० ।।
विकटं भीषणाकारं क्षुत्क्षाममतिलोमशम् ।।
दावदग्धद्रुमाकारमति चंचललोचनम्।। २१ ।।
मूर्तं भयानकमिव सर्वप्राणिभयप्रदम् ।।
हृदयाकंपनं दृष्ट्वा तं प्रेतं वृद्धतापसः ।।
अतिदीनाननं कस्त्वमिति धैर्येण पृष्टवान्।। २२ ।।
कुतस्त्वमिह संप्राप्तः कस्मात्ते गतिरीदृशी ।।
अनुक्रोशधियारक्षः पृच्छामि वद निर्भयम् ।। २३ ।।
अस्माकं तापसानां च न भयं त्वद्विधान्मनाक् ।।
शिवनामसहस्राणां विभूतिकृतवर्मणाम् ।। २४ ।।
तापसोदीरितमिति तद्रक्षः प्रीतिपूर्वकम् ।।
निशम्य प्रांजलिः प्राह तं कृपालुं तपोधनम् ।। २५ ।।
।। राक्षस उवाच ।।

अनुक्रोशोस्ति यदि ते भगवंस्तापसोत्तम ।।

स्ववृत्तांतं तदा वच्मि शृणुष्वावहितः क्षणम् ।। २६ ।।

प्रतिष्ठानाभिधानोस्ति देशो गोदावरी तटे ।।

तीर्थप्रतिग्रहरुचिस्तत्रासं ब्राह्मणस्त्वहम् ।। २७ ।।

तेन कर्मविपाकेन प्राप्तोस्मि गतिमीदृशीम् ।।

मरुस्थले महाघोरे तरुतोयविवर्जिते ।। २८ ।।

गतो बहुतरः कालस्तत्र मे वसतो मुने ।।

क्षुधितस्य तृषार्तस्य शीततापसहस्य च ।। २९ ।।

वर्षत्यपि महामेघे धारासारैर्दिवानिशम् ।।

प्रावृट्कालेऽनिले वाति किंचित्प्रावरणं न मे ।। 4.2.54.३० ।।

पर्वण्यदत्तदाना ये कृततीर्थप्रतिग्रहाः ।।

त इमां योनिमृच्छंति महादुःख निबंधनीम् ।। ३१ ।।

गते बहुतिथे काले मरुभूमौ मुने मया ।।

दृष्टो ब्राह्मणदायाद एकदा कश्चिदागतः ।। ३२ ।।

सूर्योदयमनुप्राप्य संध्याविधिविवर्जितः ।।

कृत्वा मूत्रपुरीषे तु शौचाचमनवर्जितः ।। ३३ ।।

मुक्तकच्छमशौचं च संध्याकर्मविवर्जितम् ।।

तं दृष्ट्वा तच्छरीरेहं संक्रांतो भोगलिप्सया ।। ३४ ।।

स द्विजो मंदभाग्यान्मे केनचिद्वणिजा सह ।।

अर्थलोभेन संप्राप्तः पुरीं पुण्यामिमां मुने ।।३५।।

अंतःपुरि प्रविष्टोभूत्स द्विजो मुनिसत्तम ।।

तच्छरीराद्बहिर्भूतस्त्वहं पापैः समं क्षणात् ।।३६।।

प्रवेशो नास्ति चास्माकं प्रेतानां तपसां निधे ।।

महतां पातकानां च वाराणस्यां शिवाज्ञया ।।३७।।

अद्यापि तानि पापानि तद्बहिर्निर्गमेच्छया ।।

बहिरेव हि तिष्ठंति सीम्नि प्रमथसाध्वसात् ।।३८।।

अद्य श्वो वा परश्वो वा स बहिर्निर्गमिष्यति ।।

इत्याशया स्थिताः स्मो वै यावदद्य तपोधन ।। ३९ ।।

नाद्यापि स बहिर्गच्छेन्नाद्याप्याशा प्रयाति नः ।।

इत्यास्महे निराधारा आशापाश नियंत्रिताः ।। 4.2.54.४० ।।

चित्रमद्यतनं वच्मि तपस्विंस्तन्निशामय ।।

अतीव भावि कल्याणमिति मन्येऽधुनैव हि ।। ४१ ।।

आप्रयागं प्रतिदिनं प्रयामः क्षुधिता वयम्।।

आहारकाम्यया क्वापि परं नो किंचिदाप्नुमः ।। ४२ ।।

संति सर्वत्र फलिनः पादपाः प्रतिकाननम् ।।

जलाशयाश्च स्वच्छापाः संति भूम्यां पदेपदे ।। ४३ ।।

अन्यान्यपि च भक्ष्याणि सर्वेषां सुलभान्यहो ।।

पानान्यपि विचित्राणि संति भूयांसि सर्वतः ।। ४४ ।।

परं नो दृग्गतान्येव दूरे दूरे व्रजंत्यहो ।।

दैवादद्यैकमायांतं दृष्ट्वा कार्पटिकं मुने ।।४५।।

तस्यांतिकमहं प्राप्तः क्षुधया परिपीडितः ।।

प्रसह्य भक्षयाम्येनमिति मत्वा त्वरान्वितः ।। ४६ ।।

यावत्तं तु जिघृक्षामि तावत्तद्वदनांबुजात् ।।

शिवनामपवित्रा वाङ्निरगाद्विघ्नहारिणी ।। ४७ ।।

शिवनामस्मरणतो मदीयमपि पातकम् ।।

मंदीभूतं ततस्तेन प्रवेशं लब्धवानहम् ।। ४८ ।।

सीमस्थैः प्रमथैर्नाहं सद्यो दृग्गोचरीकृतः ।।

शिवनामश्रुतौ येषां तान्न पश्येद्यमोपि यत् ।। ४९ ।।

अंतर्गेहस्य सीमानं प्राप्तस्तेन सहाधुना ।।

स तु कार्पटिको मध्यं प्रविष्टोहमिहस्थितः ।। 4.2.54.५० ।।

आत्मानं बहुमन्येहं त्वां विलोक्याधुना मुने ।।

मामुद्धर कृपालो त्वं योनेरस्मात्सदारुणात् ।। ५१ ।।

इति प्रेतवचः श्रुत्वा स कृपालुस्तपोधनः ।।

मनसा चिंतयामास धिङ्निजार्थोद्यमान्नरान् ।। ५२ ।।

स्वोदरं भर यः सर्वे पशुपक्षिमृगादयः ।।

स एव धन्यः संसारे यः परार्थोद्यतः सदा ।।५३।।

तपसाद्य निजेनाहं प्रेतमेतमघातुरम्।।
मामेव शरणं प्राप्तमुद्धरिष्याम्यसंशयम् ।। ५४ ।।
विमृश्येति स वै चित्ते पिशाचं प्राह सत्तमः ।।
विमलोदे सरस्यस्मिन्स्नाहि रे पापनुत्तये ।। ५५ ।।
पिशाच ते पिशाचत्वं तीर्थस्यास्य प्रभावतः ।।
कपर्दीशेक्षणादद्य क्षणात्क्षीणं विनंक्ष्यति ।। ५६ ।।
श्रुत्वेति स मुनेर्वाक्यं प्रेतः प्राह प्रणम्य तम्।।
प्रीतात्मा प्रीतमनसं प्रबद्धकरसंपुटः ।।५७।।
पानीयं पातुमपि नो लभेयं मुनिसत्तम ।
स्नानस्य का कथा नाथ रक्षेयुर्जलदेवताः ।।५८।।
पानस्याप्यत्र का वार्ता जलस्पर्शोपि दुर्लभः ।।
इति प्रेतोक्तमाकर्ण्य स भृशं प्रीतिमानभूत् ।। ५९ ।।
उवाच च तपस्वी तं जगदुद्धरणक्षमः ।।
गृहाणेमां विभूतिं त्वं ललाटफलके कुरु ।। 4.2.54.६० ।।
अस्माद्विभूतिमाहात्म्यात्प्रेत कोपि न कुत्रचित् ।।
बाधा करोति कस्यापि महापातकिनोप्यहो ।।६१ ।।
भालं विभूतिधवलं विलोक्य यमकिंकराः ।।
पापिनोपि पलायंते भीताः पाशुपतास्त्रतः ।। ६२ ।।
अस्थिध्वजांकितं दृष्ट्वा यथा पांथा जलाशयम् ।।
दूरं यंति तथा भस्म भालांकं यमकिंकराः ।। ६३ ।।
कृतभूति तनुत्राणं शिवमंत्रैर्नरोत्तमम् ।।
नोपसर्पंति नियतमपि हिंस्राः समंततः ।। ६४ ।।
भक्त्या बिभर्ति यो भस्म शिवमंत्रपवित्रितम् ।।
भाले वक्षसि दोर्मूले न तं हिंसंति हिंसकाः ६५ ।।
सर्वेभ्यो दुष्टसत्त्वेभ्यो यतो रक्षेदहर्निशम् ।।
रक्षत्येषा ततः प्रोक्ता विभूतिर्भूतिकृद्यतः ।। ६६ ।।
भासनाद्भर्त्सनाद्भस्म पांसुः पांसुत्वदायतः ।।
पापानां क्षारणात्क्षारो बुधेरेवं निरुच्यते ।। ६७ ।।

गृहीत्वा धारमध्यात्स भस्म प्रेतकरेऽर्पयत् ।।

सोप्यादरात्समादाय भालदेशे न्यवेशयत् ।। ६८ ।।

विभूतिधारिणं वीक्ष्य पिशाचं जलदेवताः ।।

जलावगाहनपरं वारयांचक्रिरे न तम् ।। ६९ ।।

स्नात्वा पीत्वा स निर्गच्छेद्यावत्तस्माज्जलाशयात् ।।.

तावत्पैशाच्यमगमद्दिव्यदेहमवाप च ।। 4.2.54.७ ०।।

दिव्यमालांबरधरो दिव्यगंधानुलेपनः ।।

दिव्ययानं समारुह्य वर्त्म प्राप्तोथ पावनम् ।। ७१ । ।

गच्छता तेन गगने स तपस्वी नमस्कृतः ।।

प्रोच्चैः प्रोवाच भगवन्मोचितोस्मि त्वयानघ ।। ७२ ।।

तस्मात्कदर्ययोनित्वादतीव परिनिंदितात् ।।

अस्य तीर्थस्य माहात्म्याद्दिव्यदेहमवाप्तवान् ।।७३।।

पिशाचमोचनं तीर्थमद्यारभ्य समाख्यया ।।

अन्येषामपि पैशाच्यमिदं स्नानाद्धरिष्यति ।।७४।।

अस्मिंस्तीर्थे महापुण्ये ये स्नास्यंतीह मानवाः ।।

पिंडांश्च निर्वपिष्यंति संध्यातर्पणपूर्वकम् ।। ७५ ।।

दैवात्पैशाच्यमापन्नास्तेषां पितृपितामहाः ।।

तेपि पैशाच्यमुत्सृज्य यास्यंति परमां गतिम् ।। ७६।।

अद्यशुक्लचतुर्दश्यां मार्गेमासि तपोनिधे ।।

अत्र स्नानादिकं कार्यं पैशाच्यपरिमोचनम ।।७७ ।।

इमां सांवत्सरीं यात्रां ये करिष्यंति मानवाः ।।

तीर्थप्रतिग्रहात्पापान्निःसरिष्यंति ते नराः।।७८।।

पिशाचमोचने स्नात्वा कपर्दीशं समर्च्य च ।।

कृत्वा तत्रान्नदानं च नरोन्यत्रापि निर्भयाः ।। ७९ ।।

मार्गशुक्लचतुर्दश्यां कपर्दीश्वर संनिधौ ।।

स्नात्वान्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ।। 4.2.54.८० ।।

इत्युक्त्वा दिव्यपुरुषो भूयोभूयो नमस्य तम् ।।

तपोधनं महाभागो दिव्यां गतिमवाप्तवान् ।।८१।।

तपोधनोपि तं दृष्ट्वा महाश्चर्यं घटोद्भव ।।

कपर्दीश्वरमाराध्य कालान्निर्वाणमाप्तवान् ।। ८२ ।।

पिशाचमोचनं तीर्थं तदारभ्य महामुने ।।

वाराणस्यां परां ख्यातिमगमत्सर्वपापहृत् ।। ।। ८३ ।।

पैशाचमोचने तीर्थे संभोज्य शिवयोगिनम् ।।

कोटिभोज्यफलं सम्यगेकैक परिसंख्यया ।। ८ ४ ।।

श्रुत्वाध्यायमिमं पुण्यं नरो नियतमानसः ।।

भूतैः प्रेतैः पिशाचैश्च कदाचिन्नाभिभूयते ।। ८५ ।।

बालग्रहाभिभूतानां बालानां शांतिकारकम् ।।

पठनीयं प्रयत्नेन महाख्यानमिदं परम् ।। ८६ ।।

इदमाख्यानमाकर्ण्य गच्छन्देशांतरं नरः ।।

चोरव्याघ्रपिशाचाद्यैर्नाभिभूयेत कुत्रचित् ।। ८७ ।। ।।

इति श्रीस्कांदे महापुराण एकाशातिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्द्धे पिशाचमोचनमहिमाकथनं नाम चतुष्पंचाशत्तमोऽध्यायः ।।५४।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५५

https://sa.wikisource.org/s/fvv

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।।

अन्येपि ये गणास्तत्र काश्यां लिंगानि चक्रिरे ।।

तांश्च ते कथयिष्यामि कुंभयोने निशामय ।। १ ।।

गणेन पिंगलाख्येन पिंगलाख्येशसंज्ञितम् ।।

लिंगं प्रतिष्ठितं शंभोः कपर्दीशादुदग्दिशि ।।२।।

तस्य दर्शनमात्रेण पापानां जायते क्षयः ।।

वीरभद्रो महाप्रीतो देवदेवस्य शूलिनः ।। ३ ।।

वीरभद्रेश्वरं लिंगं ध्यायेदद्यापि निश्चलः ।।

तस्य दर्शनमात्रेण वीरसिद्धिः प्रजायते ।। ४ ।।

अविमुक्तेश्वरात्पश्चाद्वीरभद्रेश्वरं नरः ।।

समर्च्य न रणे भंगं कदाचिदपि चाप्नुयात् ।। ५ ।।

वीरभद्रः स्वयं साक्षाद्वीरमूर्तिधरो मुने ।।

संहरेद्विप्रसंघातमविमुक्तनिवासिनाम ।। ६ ।।

भद्रया भद्रकाल्या च भार्यया शुभया युतम् ।।

वीरभद्रं नरोभ्यर्च्य काशीवासफलं लभेत् ।। ७ ।।

किरातेन किरातेशं लिंगं काश्यां प्रतिष्ठितम् ।।

केदाराद्दक्षिणे भागे भक्तानामभयप्रदम् ।। ८ ।।

चतुर्मुखो गणः श्रीमान्वृद्धकालेश सन्निधौ ।।

चतुर्मुखेश्वरं लिंगं ध्यायेदद्यापि निश्चलः ।। ९ ।।

भक्ताश्चतुर्मुखेशस्य चतुराननवद्दिवि ।।

पूज्यंते सुरसंघातैः सर्वभोगसमन्विताः।। 4.2.55.१ ०।।

निकुंभेश्वरमालोक्य निकुंभगणपूजितम् ।।

पूजयित्वा व्रजन्ग्रामं कार्यसिद्धिमवाप्नुयात् ।।

कुबेरेश समीपेतु शिवलोके महीयते ।। ११ ।।

पंचाक्षेशं महालिंगं महादेवस्य दक्षिणे ।।

समभ्यर्च्य नरः काश्यां जातिस्मृतिमवाप्नुयात् ।। १२ ।।
भारभूतेश्वरं लिंगं भारभूतगणार्चितम्।।
अंतर्गृहोत्तरद्वारि ध्यात्वा शिवपुरे वसेत् ।। १३ ।।
भारभूतेश्वरं लिंगं यैः काश्यां न विलोकितम् ।।
भारभूताः पृथिव्यास्तेऽवकेशिन इव द्रुमाः ।। १४ ।।
गणेन त्र्यक्षसंज्ञेन लिंगं त्र्यक्षेश्वरं परम् ।।
त्रिलोचनपुरोभागे शील्येताद्यापि कुंभज ।। १५ ।।
तस्य लिंगस्य ये भक्तास्ते तु देहावसानतः ।।
त्र्यक्षा एव प्रजायंते नात्र कार्या विचारणा ।। १६ ।।
क्षेमको नाम गणपः काश्यां मूर्तिधरः स्वयम् ।।
विश्वेश्वरं सर्वगतं ध्यायेदद्यापि निश्चलः ।।१७।।
क्षेमकं पूजयेद्यस्तु वाराणस्यां महागणम् ।।
विघ्नास्तस्य प्रलीयंते क्षेमं स्याच्च पदेपदे ।। १८ ।।
देशांतरं गतो यस्तु तस्यागमनकाम्यया ।।
क्षेमकं पूजनीयोत्र क्षेमेणाशु स आव्रजेत् ।।१९।।
लांगलीश्वरमालोक्य लिंगं लांगलिनार्चितम् ।।
विश्वेशादुत्तरेभागे न नरो रोगभाग्भवेत् ।।4.2.55.२० ।।
लांगलीशं सकृत्पूज्य पंचलांगलदानजम् ।।
फलं प्राप्नोत्यविकलं सर्वसंपत्करं परम् ।। २१ ।।
विराधेश्वरमाराध्य विराधगणपूजितम्।।
सर्वापराधयुक्तोपि नापराध्यति कुत्रचित् ।। २२ ।।
दिनेदिनेपराधो यः क्रियते काशिवासिभिः ।।
स याति संक्षयं क्षिप्रं विराधेश समर्चनात् ।। २३ ।।
नैर्ऋते दंढपाणस्तु विराधेशं प्रयत्नतः।।
नत्वा सर्वापराधेभ्यो मुच्यते नात्र संशयः।।२४।।
सुमुखेशं महालिंगं सुमुखाख्यगणार्चितम् ।।
पश्चिमाभिमुखं लिंगं दृष्ट्वा पापैः प्रमुच्यते ।। २५ ।।
स्नात्वा पिलिपिला तीर्थे सुमुखेशं विलोक्य च ।।

सदैव सुमुखं पश्येद्धर्मराजं न दुर्मुखम् ।। २६ ।।

आषाढिनार्चितं लिंगमाषाढीश्वरसंज्ञकम् ।।

दृष्ट्वाषाढयां नरो भक्त्या सर्वैः पापैः प्रमुच्यते ।। २७ ।।

उदीच्यां भारभूतेशादाषाढीशं समर्चयन् ।।

आषाढ्यां पंचदश्यां वै न पापैः परितप्यते ।। २८ ।।

शुचिशुक्लचतुर्दश्यां पंचदश्यामथापि वा ।।

कृत्वा सांवत्सरीं यात्रामनेना जायते नरः ।। २९ ।।

।। स्कंद उवाच ।। ।।

मुने गणेषु चैतेषु वाराणस्यां स्थितेष्विति ।।

स्वनाम्ना स्थाप्य लिंगानि विश्वेशपरितुष्टये ।। ।। 4.2.55.३० ।।

विश्वेशश्चिंतयां चक्रे पुनः काशीप्रवृत्तये ।।

कं वा हितं प्रहित्याद्य निर्वृतिं परमां भजे ।। ३१ ।।

योगिन्यस्तिग्मगुर्वेधाः शंकुकर्णमुखागणाः ।।

व्यावृत्त्यनागताः काश्याः सिंधुगा इव सिंधवः ।। ३२ ।।

ध्रुवं काश्यां प्रविष्टा ये ते प्रविष्टा ममोदरे ।।

तेषां विनिर्गमो नास्ति दीप्तेग्नौ हविषामिव ।। ३३ ।।

येषां हि संस्थितिः काश्यां लिंगार्चनरतात्मनाम् ।।

त एव मम लिंगानि जंगमानि न संशयः ।। ३४ ।।

स्थावरा जंगमाः काश्यामचेतनसचेतनाः ।।

सर्वे ममैव लिंगानि तेभ्यो द्रुह्यंति दुर्धियः ।। ३५ ।।

वाचि वाराणसी येषां श्रुतौ वैश्वेश्वरी कथा ।।

त एव काशी लिंगानि वराण्यर्च्यान्यहं यथा ।। ३६ ।।

वाराणसीति काशीति रुद्रावास इति स्फुटम् ।।

मुखाद्विनिर्गतं येषां तेषां न प्रभवेद्यमः ।। ३७ ।।

आनंदकाननं प्राप्य ये निरानंदभूमिकाम् ।।

अन्यां हृदापि वांछंति निरानंदाः सदात्र ते ।। ३८ ।।

अद्यैव वास्तुमरणं बहुकालांतरेपि वा।।

कलिकाल भिया पुंसां काशी त्याज्या न कर्हिचित् ।। ३९ ।।

अवश्यंभाविनो भावा भविष्यंति पदेपदे ।।
सलक्ष्मीनिलयां काशीं ते त्यजंति कुतो धियः ।। 4.2.55.४० ।।
वरं विघ्नसहस्राणि सोढव्यानि पदेपदे ।।
काश्यां नान्यत्र निर्विघ्नं वांछेद्राज्यमपि क्वचित् ।। ४१ ।।
कियन्निमेषसंभोग्याः संति लक्ष्म्याः पदेपदे ।।
परं निरंतरसुखाऽमुत्राप्यत्रापि का शिका ।। ४२ ।।
विश्वनाथो ह्यहं नाथः काशिकामुक्तिकाशिका ।।
सुधातरंगा स्वर्गंगा त्रय्येषा किन्न यच्छति ।। ४३ ।।
पंचक्रोश्यापरिमिता तनुरेषा पुरी मम ।।
अविच्छिन्नप्रमाणर्धिर्भक्तनिर्वाणकारणम् ।। ४४ ।।
संसारभारखिन्नानां यातायातकृतां सदा ।।
एकैव मे पुरी काशी ध्रुवं विश्रामभूमिका ।। ४५ ।।
मंडपः कल्पवल्लीनां मनोरथफलैरलम् ।।
फलितः काशिकाख्योयं संसाराध्वजुषां सदा ।। ४६ ।।
चक्रवर्तेरियं छत्रं विचित्रं सर्वतापहृत् ।।
काशीनिर्वाणराजस्य ममशूलोच्च दंडवत् ।। ४७ ।।
निर्वाणलक्ष्मीं ये पुण्याः परिवांछंति लीलया ।।
निरंतरसुखप्राप्त्यै काशी त्याज्या न तै नृभिः ।। ४८ ।।
ममानंदवने ये वै निरं तर वनौकसः ।।
मोक्षलक्ष्मीफलान्यत्र सुस्वादूनि लभंति ते ।।४९।।
निर्ममं चापि निर्मोहं या मामपि विमोहयेत् ।।
कैर्न संस्मरणीया सा काशी विश्वविमोहिनी।। ।। 4.2.55.५० ।।
नामापि मधुरं यस्याः परानंदप्रकाशकम् ।।
काश्याः काशीति काशीति सा कैः पुण्यैर्न जप्यते ।। ५१ ।।
काशीनामसुधापानं ये कुर्वंति निरंतरम् ।।
तेषां वर्त्म भवत्येव सुधाम वसुधामयम् ।। ५२ ।।
ममतारहितस्यापि मम सर्वात्मनो ध्रुवम् ।।
त एव मामका लोके ये काशीनाम जापकाः ।। ५३ ।।

रहस्यमिति विज्ञाय वाराणस्या गणेश्वरैः ।।

सब्रह्मयोगिनी ब्रध्रैः स्थितं तत्रैव नान्यथा ।। ५४ ।।

अन्यथा ताश्च योगिन्यः सरविः सपितामहः ।।

ते गणा मां परित्यज्य कथं तिष्ठेयुरन्यतः ।। ५५ ।।

अतीव भद्रं संजातं काश्यां तिष्ठत्सु तेषु हि ।।

एकोपि भेद प्रभवेद्राज्ये राज्यांतरं विना ।। ५६ ।।

लब्धप्रवेशास्तावंतस्ते सर्वे मत्स्वरूपिणः ।।

यतिष्यंति यतोवश्यं मदागमनहेतवे ।।५७।।

अन्यानपि प्रेषयामि मत्पार्श्वपरिवर्तिनः ।।

ये ते तत्र स्थिताः श्रेष्ठा अपिगंतास्म्यहं ततः ।। ५८ ।।

विचार्येति महादेवः समाहूय गजाननम् ।।

प्राहिणोत्कथयित्वेति गच्छ काशीमितः सुत ।। ५९ ।।

तत्रस्थितोपि संसिद्ध्यै यतस्व सहितो गणैः ।।

निर्विघ्नं कुरु चास्माकं नृपे विघ्नं समाचर ।। 4.2.55.६० ।।

आधाय शासनं मूर्ध्नि गणाधीशोथ धूर्जटेः ।।

प्रतस्थे त्वरितः काशीं स्थितिज्ञः स्थितिहेतवे ।।६१।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्द्धे काशीवर्णन गणेशप्रेषणं नाम पंचपंचाशत्तमोऽध्यायः।।५५।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५६

https://sa.wikisource.org/s/fwg
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।।स्कंद उवाच।। ।।

अथेशाज्ञां समादाय गजवक्त्रः प्रतस्थिवान् ।।

शंभोः काश्यागमोपायं चिंतयन्मंदराद्रितः ।। १ ।।

प्राप्य वाराणसीं तूर्णमाशु स्यंदनगो विभुः ।।

वाडवीं मूर्तिमालंब्य प्राविशच्छकुनैः स्तुतः ।। २ ।।

नक्षत्रपाठको भूत्वा वृद्धः प्रत्यवरोधगः ।।

चचार मध्ये नगरं पौराणां प्रीतिमावहन् ।।३।।

स्वयमेव निशाभागे स्वप्नं संदर्शयन्नृणाम् ।।

प्रातस्तेषां गृहान्गत्वा तेषां वक्ति बलाबलम् ।। ४ ।।

भवद्भिरद्य रात्रौ यद्दृष्टं स्वप्नविचेष्टितम् ।।

भवत्कौतूहलोत्पत्त्यै तदेव कथयाम्यहम् ।। ५ ।।

स्वपता भवता रात्रौ तुर्ये यामे महाह्रदः ।।

अदर्शि तत्र च भवान्मज्जन्मज्जंस्तटंगतः ।। ६ ।।

तदंबुपिच्छिले पंके मग्नोन्मग्नोसि भूरिशः ।।

दुःस्वप्नस्यास्य च महान्विपाकोति भयप्रदः ।। ७ ।।

काषायवसनो मुंडः प्रैक्ष्यहो भवतापि यः ।।

परितापं महानेष जनयिष्यति दारुणम् ।। ८ ।।

रात्रौ सूर्यग्रहो दृष्टो महानिष्टकरो ध्रुवम् ।।

ऐंद्रधनुर्द्वयं रात्रौ यदलोकि न तच्छुभम् ।। ९ ।।

प्रतीच्यां रविरागत्य प्रोद्यंतं व्योम्नि शीतगुम् ।।

पातयामास भूपृष्ठे तद्राज्यभयसूचकम् ।। 4.2.56.१० ।।

युगपत्केतुयुगलं युध्यमानं परस्परम् ।।

यददर्शि न तद्भद्रं राष्ट्रभंगाय केवलम् ।। ११ ।।

विशीर्यत्केशदशनं नीयमानं च दक्षिणे ।।

आत्मानं यत्समद्राक्षीः कुटुंबस्यापि भीषणम् ।। १२ ।।

प्रासादध्वजभंगोयस्त्वयैक्षत निशाक्षये ।।

राज्यक्षयकरं विद्धि महोत्पाताय निश्चितम् ।। १३ ।।

नगरी प्लाविता स्वप्ने तरंगैः क्षीरनीरधेः ।।

पक्षैस्त्रिचतुरैः शंके महाशंकां पुरौकसाम् ।। १४ ।।

स्वप्ने वानरयानेन यत्त्वमूढोसि दक्षिणाम् ।।

अतस्तद्वंचनोपायः पुरत्यागो महामते ।। १५ ।।

रुदती या त्वया दृष्टा महिलैका निशात्यये ।।

मुक्तकेशी विवसना सा नारी श्रीरिवोद्गता ।। १६ ।।

देवालयस्य कलशो यत्त्वया वीक्षितः पतन् ।।

दिनैः कतिपयैरेव राज्यभंगो भविष्यति ।। १७ ।।

पुरी परिवृता स्वप्ने मृगयूथैः समंततः ।।

रोरूयमाणैरत्यर्थं मासेनैवोद्वसी भवेत् ।। १८ ।।

आतायियूकगृध्राद्यैः पुरीमुपरिचारिभिः ।।

सूच्यतेत्याहितं किंचिद्ध्रुवमत्र निवासिनाम् ।।१९।।

स्वप्नोत्पातानिति बहूञ्शंसञ्शंसन्नितस्ततः ।।

बहूनुच्चाटयांचक्रे स विघ्नेशः पुरौकसः ।। 4.2.56.२० ।।

केषांचित्पुरतो वादीद्ग्रहचारं प्रदर्शयन् ।।

एकराशिस्थिताः सौरि सितभौमा न शोभनाः ।। २१ ।।

सोयं धूमग्रहो व्योम्नि भित्त्वा सप्तर्षिमंडलम् ।।

प्रयातः पश्चिमामाशां स नाशाय विशांपतेः ।। २२ ।।

अतिचारगतो मंदः पुनर्वक्राध्व संस्थितः ।।

पापग्रहसमायुक्तो न युक्तोयमिहेष्यते ।। २३ ।।

व्यतीते वासरे योयं भूकंपः समपद्यत ।।

कंपं जनयतेऽतीव हृदो मेपि पुरौकसः ।। २४ ।।

उदीच्यादक्षिणाशायां येयमुल्का प्रधाविता ।।

विलीना च वियत्येव स निर्घातं न सा शुभा ।। २५ ।।

उन्मूलितो महामूलो महानिलरयेण यः ।।

चत्वरे चैत्यवृक्षोयं महोत्पातं प्रशंसति ।। २६ ।।

सूर्योदयमनुप्राप्य प्राच्यां शुष्कतरूपरि ।।

करटो रारटीत्येष कटूत्कट भयप्रदः ।। २७ ।।

मध्ये विपणि यतूर्णं कौचिच्चारण्यचारिणौ ।।

मृगौ मृगयतां यातौ पौराणां पुरतोऽहितौ ।।२८।।

रसालशालमुकुलं वीक्ष्यते यच्छरद्यदः ।।

महाकालभयं मन्येप्यकालेपि पुरौकसाम् ।। २९ ।।

साध्वसंजनयित्वेति केचिदुच्चाटिताः पुरः ।।

तेन विघ्नकृतापौराः कपटद्विजरूपिणा।। 4.2.56.३० ।।

अथ मध्येवरोधं स प्रविश्य निजमायया ।।

दृष्टार्थमेव कथयन्स्त्रीणां विस्रंभभूरभूत् ।।३१।।

तव पुत्रशतं जज्ञे सप्तोनं शुभलक्षणे ।।

तेष्वेकस्तुरगारूढो बाह्याल्यां पतितो मृतः ।। ३२ ।।

अंतर्वत्नी त्वियं कन्या जनयिष्यति शोभनाम् ।।

एषा हि दुर्भगा पूर्वं सांप्रतं सुभगाऽभवत् ।। ३३ ।।

असौ हि राज्ञो राज्ञीनामत्यंतमिहवल्लभा।।

मुक्तालंकृतिरेतस्यै राज्ञा दत्ता निजोरसः ।। ३४ ।।

पंचसप्तदिनान्येव जातानीतीह तर्क्यते ।।

अस्यै राज्ञा प्रसादेन ग्रामौ दातुमुदीरितौ ।। ३५।।

इति दृष्टार्थकथनै राज्ञीमान्योभवद्द्विजः ।।

वर्णयंति च ता राज्ञः परोक्षेपि गुणान्बहून् ।। ३६ ।।

अहो यादृगसौ विप्रः सर्वत्रातिविचक्षणः ।।

सुशीलश्च सुरूपश्च सत्यवाङ्मितभाषणः ।। ३७ ।।

अलोलुप उदारश्च सदाचारो जितेंद्रियः ।।

अपि स्वल्पेन संतुष्टः प्रतिग्रहपराङ्मुखः ।। ३८ ।।

जितक्रोधः प्रसन्नास्यस्त्वनसूयुरवंचकः ।।

कृतज्ञः प्रीतिसुमुखः परिवादपराङ्मुखः ।।३९।।

पुण्योपदेष्टा पुण्यात्मा सर्वव्रतपरायणः ।।

शुचिः शुचिचरित्रश्च श्रुतिस्मृतिविशारदः ।। ।। 4.2.56.४० ।।

धीरः पुण्येतिहासज्ञः सर्वदृक्सर्वसंमतः ।।

कलाकलापकुशलो ज्योतिःशास्त्रविदुत्तमः ।। ४१ ।।

क्षमी कुलीनोऽकृपणो भोक्ता निर्मलमानसः ।।

इत्यादि गुणसंपन्नः कोपि क्वापि न दृग्गतः ।। ४२ ।।

इत्थं तास्तद्गुणग्रामं वर्णयंत्यः पदेपदे ।।

कालं विनोदयंति स्म अंतःपुरचराः स्त्रियः ।। ४३।।

एकदावसरं प्राप्य दिवोदासस्य भूभुजः ।।

राज्ञी लीलावती नाम राज्ञे तं विन्यवेदयत् ।। ४४ ।।

राजन्वृद्धो गुणैर्वृद्धो ब्राह्मणः सुविचक्षणः ।।

एकोस्ति स तु द्रष्टव्यो मूर्तो ब्रह्मनिधिः परः ।। ४५ ।।

राज्ञी राज्ञा कृतानुज्ञा सखीं प्रेष्य विचक्षणाम् ।।

आनिनाय च तं विप्रं ब्राह्मं तेज इवांगवत् ।। ४६ ।।

राजापि दूरादायांतं त विलोक्यमहीसुरम् ।।

यत्राकृतिर्गुणास्तत्र जहर्षेति वदन्हृदि ।। ४७ ।।

पदैर्द्वित्रैर्नृपतिना कृताभ्युत्थानसत्कृतिः ।।

चतुर्निगमजाभिः स तमाशीर्भिरनंदयत् ।। ४८ ।।

कृतप्रणामो राज्ञा स सादरं दत्तमासनम् ।।

भेजेथ कुशलं पृष्टः स राज्ञा तेन भूपतिः ।। ४९ ।।

परस्परं कुशलिनौ कुशलौ च कथागमे ।।

प्रश्नोत्तराभ्यां संतुष्टौ द्विजवर्य क्षमाभृतौ ।। 4.2.56.५० ।।

कथावसाने राज्ञाथ गेहं विससृजे द्विजः ।।

लब्धमानमहापूजः स स्वमाश्रममाविशत् ।। ५१ ।।

गतेऽथ स्वाश्रमं विप्रे दिवोदासो नरेश्वरः ।।

लीलावत्याः पुरो विप्रं वर्णयामास भूरिशः ।। ५२ ।।

महादेवि महाप्राज्ञे लीलावति गुणप्रिये ।।

यथाशंसि तथा विप्रस्ततोपि गुणवत्तरः ।। ५३ ।।

अतीतं वेत्ति सकलं वर्तमानमवैति च ।।

प्रष्टव्यः प्रातराहूय भविष्यं किंचिदेष वै ।। ५४ ।।

महाविभव संभारैर्महाभोगैरनेकधा ।।

व्युष्टायां स नृपो रात्र्यां प्रातराहूतवान्द्विजम् ।। ५५ ।।

सत्कृत्य तं द्विजं भक्त्या दुकूलादि प्रदानतः ।।

एकांते तं द्विजं राजा पप्रच्छ निजहृत्स्थितम् ।।५६।।

।।राजोवाच ।। ।।

द्विजवर्यो भवानेकः प्रतिभातीति निश्चितम् ।।

यथातत्त्ववती ते धीर्न तथान्यस्य मे मतिः ।।५७।।

दृष्ट्वा त्वां तु महाप्राज्ञं शांतं दांतं तपोनिधिम् ।।

किंचित्प्रष्टुमना विप्र तदाख्याहि यथार्थवत् ।। ५८ ।।

शासितेयं मया पृथ्वी न तथान्यैस्तु पार्थिवैः ।।

यावद्भूति मया भुक्ता दिव्या भोगा अनेकधा ।।५९।।

निजौरसेभ्योप्यधिकं रात्रिंदिवमतंद्रितम् ।।

विनिर्जित्य हठाद्दुष्टान्प्रजेयं परिपालिता ।।4.2.56.६०।।

द्विजपादार्चनात्किंचित्सुकृतं वेद्मि नापरम् ।।

अनेनापरिकथ्येन कथितेनेह किं मम ।। ६१ ।।

निर्विस्ममिव मे चेतः सांप्रतं सर्वकर्मसु ।।

विचार्यार्य शुभोदर्कमत आख्याहि सत्तम ।।६२।।

।। द्विज उवाच ।। ।।

अपि स्वल्पतरं कृत्यं यद्भवेद्भूभुजामिह ।।

एकांते तत्तु पृष्टेन वक्तव्यं सुधिया सदा ।। ६३ ।।

अमात्येनाप्यपृष्टेन न वक्तव्यं नृपाग्रतः ।।

महापमानभीतेन स्तोकमप्यत्र किंचन ।। ६४ ।।

पृष्टश्चेत्कथयामीह मा तत्र कुरु संशयम् ।।

तत्कृते तव गंता वै मनो निर्वेदकारणम् ।।६५।।

शृणु राजन्महाबुद्धे नायथार्थं ब्रवीम्यहम् ।।

विक्रांतोस्यतिशूरोसि भाग्यवानसि सर्वदा ।। ६६ ।।

पुण्येन यशसा बुद्ध्या संपन्नोस्ति भवान्यथा ।।

मन्ये तथामरावत्यां त्रिदशेशोपि नैव हि ।। ६७ ।।

सुधिया त्वां गुरुं मन्ये प्रसादेन सुधाकरम् ।।

तेजसास्ति भवानर्कः प्रतापेनाशुशुक्षणिः ।।६८।।

प्रभंजनो बलेनासि श्रीदोसि श्रीसमर्पणैः ।।

शासनेन भवान्रुद्रो निर्ऋतिस्त्वं रणांगणे ।।६९ ।।

दुष्टपाशयिता पाशी यमो नियमनेऽसताम् ।।

इंदनात्त्वं महेंद्रोसि क्षमया त्वमसि क्षमा ।। 4.2.56.७० ।।

मर्यादया भवानब्धिर्महत्त्वे हिमवानसि ।।

भार्गवो राजनीत्यासि राज्येन मनुना समः ।। ७१ ।।

संतापहर्ताबुदवत्पवित्रो गांगनामवत् ।।

सर्वेषामेव जंतूनां काशीव सुगतिप्रदः ।।७२।।

रुद्रः संहाररूपेण पालनेन चतुर्भुजः ।।

विधिवत्त्वं विधातासि भारती ते मुखांबुजे ।। ७३ ।।

त्वत्पाणिपद्मे कमला त्वत्क्रोधेस्ति हलाहलः ।।

अमृतं तव वागेव त्वद्भुजावश्विनीसुतौ ।। ७४ ।।

तत्किं यत्त्वयि भूजानौ सर्वदेवमयो ह्यसि ।।

तस्मात्तव शुभोदर्को मया ज्ञातोस्ति तत्त्वतः ।। ७५ ।।

आरभ्याद्य दिनाद्भूप ब्राह्मणोऽष्टादशेहनि ।।

उदीच्यः कश्चिदागत्य ध्रुवं त्वामुपदेक्ष्यति।।७६।।

तस्य वाक्यं त्वया राजन्कर्तव्यमविचारितम् ।।

ततस्ते हृत्स्थितं सर्वं सेत्स्यत्येव महामते ।। ७७ ।।

इत्युक्त्वा पृच्छय राजानं लब्धानुज्ञो द्विजोत्तमः ।।

विवेश स्वाश्रमं तुष्टो नृपोप्याश्चर्यवानभूत् ।। ७८ ।।

इत्थं विघ्नजिता सर्वा पुरी स्वात्मवशीकृता ।।

सपौरा सावरोधा च सनृपा निजमायया ।। ७९ ।।

कृतकृत्यमिवात्मानं ततो मत्वा स विघ्नजित् ।।

विधाय बहुधात्मानं काश्यां स्थितिमवाप च ।। 4.2.56.८० ।।

यदा स न दिवोदासः प्रागासीत्कुंभसंभव ।।

तदातनं निजं स्थानमलंचक्रे गणाधिपः ।। ८१ ।।

दिवोदासे नरपतौ विष्णुनोच्चाटिते सति ।।

पुनर्नवीकृतायां च नगर्यां विश्वकर्मणा ।। ८२ ।।

स्वयमागत्य देवेन मंदरात्सुंदरां पुरीम् ।।

वाराणसीं प्रथमतस्तुष्टुवे गणनायकम् ।। ८३ ।।

।। अगस्त्य उवाच ।। ।।

कथं स्तुतो भगवता देवदेवेन विघ्नजित् ।।

कथं च बहुधात्मानं स चकार विनायकः ।। ८४ ।।

केनकेन स वै नाम्ना काशिपुर्यां व्यवस्थितः ।।

इति सर्वं समासेन कथयस्व षडानन ।। ८५ ।।

इत्युदीरितमाकर्ण्य कुंभयोनेः षडाननः ।।

यथावत्कथयामास गणराज कथां शुभाम् ।। ८६ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्द्धे गणेशमाया प्रपंचो नाम षट्पंचाशत्तमोऽध्यायः ।। ५६।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५७

https://sa.wikisource.org/s/fwa
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

विश्वेशो विश्वया सार्धं मया च मुनिसत्तम ।।

महाशाखविशाखाभ्यां नंदिभृंगिपुरोगमः ।। १ ।।

नैगमेयेन सहितो रुद्रैः सर्वत्र संवृतः ।।

देवर्षिभिः समायुक्तः सनकाद्यैरभिष्टुतः ।। २ ।।

समस्तायतनाधीशैर्दिक्पालैरभिनंदितः ।।

तीर्थैर्दर्शित तीर्थश्च गंधर्वैर्गीतमंगलः ।। ३ ।।

कृतपूजोप्सरोभिश्च नृत्यहस्तकपल्लवैः ।।

वियत्यनाहतैर्वाद्यैः समंतादनुमोदितः ।। ४।।

ऋषीणां ब्रह्मनिर्घोषैर्बधिरीकृतदिङ्मुखः।।

कृतस्तुतिश्चारणौघैर्विमानैरभितोवृतः ।। ५ ।।

त्रिविष्टप वधूमुष्टिभ्रष्टैर्लाजैरितस्ततः ।।

अभिवृष्टो महादेवः संप्रहृष्टतनूरुहः ।। ६ ।।

दत्तमाल्योपहारश्च बहुविद्याधरी गणैः ।।

यक्षगुह्यकसिद्धैश्च खेचरैरभिनंदितः ।। ७ ।।

कृतप्रवेश शकुनो मृगैः शकुनिभिः पुरः ।।

किंनरीभिः प्रहृष्टास्यैः किंनरैरुपवर्णितः ।। ८ ।।

विष्णुना च महालक्ष्म्या ब्रह्मणा विश्वकर्मणा ।।

नंदिनाथ गणेशेन आविष्कृतमहोत्सवः ।। ९ ।।

नागांगनाभिः परितः कृतनीराजनाविधिः ।।

प्रविवेश महादेवः पुरीं वाराणसीं शुभाम् ।। 4.2.57.१० ।।

पश्यतां सर्वदेवानामवरुह्य वृषेंद्रतः ।।

परिष्वज्य गणाधीशं प्रोवाच वृषभध्वजः ।। ११ ।।

यदहं प्राप्तवानस्मि पुरीं वाराणसीं शुभाम् ।।

मयाप्यतीव दुष्प्राप्यां स प्रसादो स्य वै शिशोः ।। १२ ।।

यद्दुष्प्रसाध्यं हि पितुरपि त्रिजगतीतले ।।

तत्सूनुना सुसाध्यं स्यादत्र दृष्टांतता मयि ।। १३ ।।

अनेन गजवक्त्रेण स्वबुद्धिविभवेरिह ।।

काशीप्राप्तिर्यथा मे स्यात्तथा किंचिदनुष्ठितम् ।। १४ ।।

पुत्रवानहमेवास्मि यच्च मे चिरचिंतितम् ।।

स्वपौरुषेण कृतवानभिलाषं करस्थितम् ।। १५ ।।

इत्युक्त्वा त्रिपुरीहर्ता पुरुहूतादिभिः स्तुतः ।।

परितुष्टावसंहृष्टः स्पष्टगीर्भिर्गजाननम् ।। १६ ।।

।। श्रीकंठ उवाच ।। ।।

जय विघ्नकृतामाद्य भक्तनिर्विघ्नकारक ।।

अविघ्नविघ्नशमन महाविघ्नैकविघ्नकृत् ।। १७ ।।

जय सर्वगणाधीश जय सर्व गणाग्रणीः ।।

गणप्रणतपादाब्ज गणनातीतसद्गुण ।। १८ ।।

जय सर्वग सर्वेश सर्वबुद्ध्येकशेवधे ।।

सर्वमायाप्रपंचज्ञ सर्वकर्माग्रपूजित ।। १९ ।।

सर्वमंगलमांगल्य जय त्वं सर्वमंगल ।।

अमंगलोपशमन महामंगलहेतुक ।। 4.2.57.२० ।।

जय सृष्टिकृतां वंद्य जय स्थितिकृतानत ।।

जय संहृतिकृत्स्तुत्य जयसत्कर्मसिद्धिद ।। २१ ।।

सिद्धवंद्यपदांभोज जयसिद्धिविधायक ।।

सर्वसिद्ध्येकनिलय महासिद्ध्यृद्धिसूचक ।।२२।।

अशेषगुणनिर्माण गुणातीत गुणाग्रणी ।।

परिपूर्णचरित्रार्थ जय त्वं गुणवर्णित ।। २३ ।।

जय सर्वबलाधीश बलाराति बलप्रद ।।

बलाकोज्ज्वल दंताग्र बालाबालपराकम ।। २४ ।।

अनंतमहिमाधार धराधर विदारण।।

दंताग्रप्रोतां दङ्नाग जयनागविभूषण।। २५।।

ये त्वांनमंति करुणामय दिव्य मूर्ते सर्वैनसामपि भुवो भुविमुक्तिभाजः।।

तेषां सदैव हरसीहमहोपसर्गान्स्वर्गापवर्गमपि संप्रददासि तेभ्यः ।। २६ ।।

ये विघ्नराज भवता करुणाकटाक्षैः संप्रेक्षिताः क्षितितले क्षणमात्रमत्र ।।

तेषां क्षयंति सकलान्यपिकिल्विषाणि लक्ष्मीः कटाक्षयतितान्पुरुषोत्तमान्हि ।। २७ ।।

ये त्वां स्तुवंति नतविघ्नविघातदक्ष दाक्षायणीहृदयपंकजतिग्मरश्मे ।।

श्रूयंत एव त इह प्रथिता न चित्रं चित्रं तदत्र गणपा यदहो त एव ।। २८ ।।

ये शीलयंति सततं भवतोंघ्रियुग्मं ते पुत्रपौत्रधनधान्यसमृद्धिभाजः ।।

संशीलितांघ्रिकमला बहुभृत्यवर्गैर्भूपालभोग्यकमलां विमलां लभंते ।। २९ ।।

त्वं कारणं परमकारणकारणानां वेद्योसि वेदविदुषां सततं त्वमेकः ।।

त्वं मार्गणीयमसि किंचन मूलवाचां वाचामगोचरचराचरदिव्यमूर्ते ।। 4.2.57.३० ।।

वेदा विदंति न यथार्थतया भवंतं ब्रह्मादयोपि न चराचर सूत्रधार ।।

त्वं हंसि पासि विदधासि समस्तमेकः कस्तेस्तुतिव्यतिकरो मनसाप्यगम्य ।। ३१ ।।

त्वद्दुष्टदृष्टिविशिखैर्निहतान्निहन्मि दैत्यान्पुरांधकजलंधरमुख्यकांश्च।।

कस्यास्ति शक्तिरिह यस्त्वदृतेपि तुच्छं वांछेद्विधातु मिह सिद्धिदकार्यजातम् ।। ३२ ।।

अन्वेषणे ढुंढिरयं प्रथितोस्तिधातुः सर्वार्थढुंढिततया तव ढुंढि नाम ।।

काशीप्रवेशमपि को लभतेत्र देही तोषं विना तव विनायकढुंढिराज ।। ३३ ।।

ढुंढे प्रणम्यपुरतस्तवपादपद्मं यो मां नमस्यति पुमानिह काशिवासी ।।

तत्कर्णमूलमधिगम्य पुरा दिशामि तत्किंचिदत्र न पुनर्भवतास्ति येन ।। ३४ ।।

स्नात्वा नरः प्रथमतो मणिकर्णिकायामुद्धूलितांघ्रियुगलस्तु सचैलमाशु ।।

देवर्षिमानवपितॄनपि तर्पयित्वा ज्ञानोदतीर्थमभिलभ्य भजेत्ततस्त्वाम् ।। ३५ ।।

सामोदमोदकभरैर्वरधूपदीपैर्माल्यैः सुगंधबहुलैरनुलेपनैश्च ।।

संप्रीण्यकाशिनगरीफलदानदक्षं प्रोक्त्वाथ मां क इह सिध्यति नैव ढुंढे ।। ३६ ।।

तीर्थांतराणि च ततः क्रमवर्जितोपि संसाधयन्निह भवत्करुणाकटाक्षैः ।।

दूरीकृतस्वहितघात्युपसर्गवर्गो ढुंढे लभेदविकलं फलमत्र काश्याम्।। ३७ ।।

यः प्रत्यहं नमति ढुं ढिविनायकं त्वां काश्यां प्रगे प्रतिहताखिलविघ्नसंघः ।।

नो तस्य जातु जगतीतलवर्ति वस्तु दुष्प्रापमत्र च परत्र च किंचनापि ।। ३८ ।।

यो नाम ते जपति ढुंढिविनायकस्य तं वै जपंत्यनुदिनं हृदि सिद्धयोष्टौ ।।

भोगान्विभुज्य विविधान्विबुधोपभोग्यान्निर्वाणया कमलया व्रियते स चांते ।। ३९ ।।

दूरे स्थितोप्यहरहस्तव पादपीठं यः संस्मरेत्सकलसिद्धिद ढुंढिराज ।।

काशीस्थिते रविकलं सफलं लभेत नैवान्यथा न वितथा मम वाक्कदाचित् ।। 4.2.57.४० ।।

जाने विघ्नानसंख्यातान्विनिहंतुमनेकधा ।।

क्षेत्रस्यास्य महाभाग नानारूपैरिहस्थितः ।। ४१ ।।

यानि यानि च रूपाणि यत्रयत्र च तेनघ ।।

तानि तत्र प्रवक्ष्यामि शृण्वंत्वेते दिवौकसः ।। ४२ ।।

प्रथमं ढुंढिराजोसि मम दक्षिणतो मनाक् ।।

-आढुंढ्य सर्वभक्तेभ्यः सर्वार्थान्संप्रयच्छसि ।। ४३ ।।

अंगारवासरवतीमिह यैश्चतुर्थी संप्राप्य मोदकभरैः परिमोदवद्भिः ।।

पूजा व्यधायि विविधा तव गंधमाल्यैस्तानत्र पुत्रविदधामि गणान्गणेश ।। ४४ ।।

ये त्वामिह प्रति चतुर्थि समर्चयंति ढुंढे विगाढमतयः कृतिनस्त एव ।।

सर्वापदां शिरसि वामपदं निधाय सम्यग्गजानन गजाननतां लभंते ।। ४५ ।।

माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।।

ये त्वां ढुंढेर्चयिष्यंति तेऽर्च्याः स्युरसुरद्रुहाम् ।।४६।।

विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम् ।।

शुक्लां शुक्लतिलैर्बद्ध्वा प्राश्नीयाल्लड्डुकान्व्रती ।। ४७ ।।

कार्या यात्रा प्रयत्नेन क्षेत्रसिद्धिमभीप्सुभिः ।।

तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुंढे सर्वोपसर्गहृत् ।। ४८ ।।

तां यात्रां नात्रयः कुर्यान्नैवेद्यतिललड्डुकैः ।।

उपसर्गसहस्रैस्तु स हंतव्यो ममाज्ञया ।। ४९ ।।

होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः ।।

तस्यां चतुर्थ्यां मंत्रज्ञस्तस्य मंत्रः प्रसेत्स्यति ।। 4.2.57.५० ।।

वैदिकोऽवैदिको वापि यो मंत्रस्ते गजानन ।।

जप्तस्त्वत्संनिधौ ढुंढे सिद्धिं दास्यति वांछिताम् ।। ५१ ।।

।। ईश्वर उवाच ।।

इमां स्तुतिं ममकृतिं यः पठिष्यति सन्मतिः ।।

न जातु तं तु विघ्नौघाः पीडयिष्यंति निश्चितम् ।। ५२ ।।

ढौंढीं स्तुतिमिमां पुण्यां यः पठेड्ढुंढि संनिधौ ।।

सान्निध्यं तस्य सततं भजेयुः सर्वसिद्धयः ।। ५३ ।।

इमां स्तुतिं नरो जप्त्वा परं नियतमानसः ।।

मानसैरपि पापैस्तैर्नाभिभूयेत कर्हिचित्।।५४।।

पुत्रान्कलत्रं क्षेत्राणि वराश्वान्वरमंदिरम्।।

प्राप्नुयाच्च धनं धान्यं ढुंढिस्तोत्रं जपन्नरः ।। ५५ ।।

सर्वसंपत्करं नाम स्तोत्रमेतन्मयेरितम् ।।

प्रजप्तव्यं प्रयत्नेन मुक्तिकामेन सर्वदा ।।५६।।

जप्त्वा स्तोत्रमिदं पुण्यं क्वापि कार्ये गमिष्यतः ।।

पुंसः पुरः समेष्यंति नियतं सर्वसिद्धयः ।।५७।।

अन्यच्च कथयाम्यत्र शृण्वंत्वेते दिवौकसः ।।

ढुंढिना क्षेत्ररक्षार्थं यत्रयत्र स्थितिः कृता ।। ५८ ।।

काश्यां गंगासि संभेदे नामतोर्कविनायकः ।।

दृष्टोर्कवासरे पुंभिः सर्वतापप्रशांतये ।। ५९ ।।

दुर्गो नाम गणाध्यक्षः सर्वदुर्गतिनाशनः ।।

क्षेत्रस्य दक्षिणे भागे पूजनीयः प्रयत्नतः ।। 4.2.57.६० ।।

भीमचंडी समीपे तु भीमचंडविनायकः ।।

क्षेत्रनैर्ऋतदेशस्थो दृष्टो हंति महाभयम् ।। ६१ ।।

क्षेत्रस्य पश्चिमे भागे स देहलिविनायकः ।।

सर्वान्निवारयेद्विघ्नान्भक्तानां नात्र संशयः ।। ६२ ।।

क्षेत्रवायव्यदिग्भागे उद्दंडाख्यो गजाननः ।।

उद्दंडानपि विघ्नौघान्भक्तानां दंडयेत्सदा ।। ६३ ।।

काश्याः सदोत्तराशायां पाशपाणिर्विनायकः ।।

विनायकान्पाशयति भक्त्या काशीनिवासिनाम् ।। ६४ ।।

गंगावरणयोः संगे रम्यः खर्वविनायकः ।।

अखर्वानपि विघ्नौघान्भक्तानां खर्वयेत्सताम् ।। ६५ ।।

प्राच्यां तु क्षेत्ररक्षार्थं सिद्धः सिद्धिविनायकः ।।

पश्चिमे यमतीर्थस्य साधकक्षिप्रसिद्धिदः ।। ६६ ।।

बाह्यावरणगाश्चैते काश्यामष्टौ विनायकाः ।।

उच्चाटयत्यभक्तांश्च भक्तानां सर्वसिद्धिदाः ।। ६७ ।।

द्वितीयावरणे चैव ये रक्षंति विनायकाः ।।

अविमुक्तमिदं क्षेत्रं तानहं कथयाम्यतः ।। ६८ ।।

स्वर्धुन्याः पश्चिमे कूले उत्तरेर्कविनायकात् ।।

लंबोदरो गणाध्यक्षः क्षालयेद्विघ्नकर्दमम् ।।६९।।

तत्पश्चिमेकूटदंत उदग्दुर्गविनायकात् ।।

दुर्गोपसर्गसंहर्ता रक्षेत्क्षेत्रमिदं सदा ।। ।। 4.2.57.७० ।।

भीमचंड गणाध्यक्षात्किंचिदीशानदिग्गतः ।।

क्षेत्ररक्षोगणाध्यक्षः पूज्यः शालकटंकटः ।। ७१ ।।

प्राच्या देहलिविघ्नेशात्कूश्मांडाख्यो विनायकः ।।

पूजनीयः सदा भक्तेर्महोत्पात प्रशांतये ।। ७२ ।।

उद्दंडाख्याद्गणपतेराशुशुक्षणिदिक्स्थितः ।।

महाप्रसिद्धः संपूज्यो भक्तैर्मुंडविनायकः ।। ७३ ।।

पाताले तस्य देहोस्ति मुंडं काश्यां व्यवस्थितम ।।

अतः स गीयते काश्यां देवो मुंडविनायकः ।। ७४ ।।

पाशपाणेर्गणेशानाद्दक्षिणे विकटद्विजम् ।।

पूजयित्वा गणपतिं गाणपत्यपदं लभेत् ।। ७५ ।।

खर्वाख्यान्नैर्ऋतेभागे राजपुत्रो विनायकः ।।

भ्रष्टराज्यं च राजानं राजानं कुरुतेऽर्चितः ।। ७६ ।।

गंगायाः पश्चिमे कूले प्रणवाख्यो गणाधिपः ।।

अवाच्यां राजपुत्राच्च प्रणतः प्रणयेद्दिवम् ।। ७७ ।।

द्वितीयावरणे काश्यामष्टावेते विनायकाः ।।

उत्सादयेयुर्विघ्नौघान्काशी स्थितिनिवासिनाम् ।। ७८ ।।

क्षेत्रे तृतीयावरणे क्षेत्ररक्षाकृतः सदा ।।

ये विघ्नराजाः संतीह ते वक्तव्या मयाधुना ।। ७९ ।।

उदग्वहायाः स्वर्धुन्या रम्ये रोधसि विघ्नराट् ।।

लंबोदरादुदीच्यां तु वक्रतुंडोघसंघहृत् ।। 4.2.57.८० ।।

कूटदंताद्गणपतेरुदीच्यामेकदंतकः ।।

सदोपसर्गसंसर्गात्पायादानंदकाननम् ।। ८१ ।।

काशीभयहरो नित्यमैश्यां शालकटंकटात् ।।

त्रिमुखो नाम विघ्नेशः कपिसिंहद्विपाननः ।।८२।।

कूश्मांडात्पूर्वदिग्भागे पंचास्यो नाम विघ्नराद् ।।

पंचास्यस्यंदनवरः पाति वाराणसीं पुरीम् ।। ८३ ।।

हेरंबाख्यः सदाग्नेय्यां पूज्यो मुंडविनायकात् ।।

अंबावत्पूरयेत्कामान्सर्वेषां काशिवासिनाम् ।। ८४ ।।

अवाच्यामर्चयेद्धीमान्सिद्ध्यै विकटदंततः ।।

विघ्नराजं गणपतिं सर्वविघ्नविनाशनम् ।। ८५ ।।

विनायकाद्राजपुत्रात्किंचिद्रक्षोदिशिस्थितः ।।

वरदाख्यो गणाध्यक्षः पूज्यो भक्तवरप्रदः ।। ८६ ।।

याम्यां प्रणवविघ्नेशाद्गणेशो मोदकप्रियः ।।

पूज्यः पिशंगिला तीर्थे देवनद्यास्तटे शुभे ।। ८७ ।।

चतुर्थावरणे काश्यां भक्तविघ्नविनाशकाः ।।

द्रष्टव्या हृष्टचेतोभिः स्पष्टमष्टौ विनायकाः ।। ८८ ।।

वक्रतुंडादुदग्दिक्स्थः स्वःसिंधो रोधसिस्थितः ।।

विनायकोस्त्यभयदः सर्वेषां भयनाशनः ।। ८९ ।।

कौबेर्यामेकदशनात्सिंहतुंडो विनायकः ।।

उपसर्गगजान्हंति वाराणसि निवासिनाम् ।। 4.2.57.९० ।।

कूणिताक्षो गणाध्यक्षस्त्रितुंडादीश दिक्स्थितः ।।

महाश्मशानं सततं पायाद्दुष्टकुदृष्टितः ।। ९१ ।।

प्राच्यां पंचास्यतः पायात्पुरीं क्षिप्रप्रसादनः ।।

क्षिप्रप्रसादनार्चातः क्षिप्रं सिध्यंति सिद्धयः ।। ९२ ।।

हेरंबाद्वह्निदिग्भागे चिंतामणि विनायकः ।।

भक्तचिंतामणिः साक्षाच्चिंतितार्थ समर्पकः ।। ९३ ।।

विघ्नराजादवाच्यां तु दंतहस्तो गणेश्वरः ।।

लिखेद्विघ्नसहस्राणि नृणां वाराणसीद्रुहाम् ।। ।। ९४ ।।

वरदाद्यातुधान्यां च यातुधानगणावृतः ।।

देवः पिचिंडिलो नाम पुरीं रक्षेदहर्निशम् ।। ९५ ।।

दृष्टः पिलिपिलातीर्थे दक्षिणे मोदकप्रियात् ।।
उद्दंड मुंडो हेरंबो भक्तेभ्यः किं न यच्छति ।। ९६ ।।
प्राकारे पंचमे काश्यां द्विचतुष्क विनायकाः ।।
कुर्वंति रक्षां क्षेत्रस्य ये तानत्र ब्रवीम्यहम् ।। ९७ ।।
तीरे स्वर्गतरंगिण्या उत्तरे चाभयप्रदात् ।।
स्थूलदंतो गणेशानः स्थूलाः सिद्धीर्दिशेत्सताम् ।। ९८ ।।
सिंहतुडादुदग्भागे कलिप्रिय विनायकः ।।
कलहं कारयेन्नित्यमन्योन्यं तैर्थिकद्रुहाम् ।। ९९ ।।
कूणिताक्षात्तथैशान्यां चतुर्दंतो विनायकः ।।
तस्य दर्शनमात्रेण विघ्नसंघः क्षयेत्स्वयम् ।। 4.2.57.१०० ।।
क्षिप्रप्रसादनादैंद्र्यां द्वितुंडो गणनायकः ।।
अग्रतः पृष्ठतश्चापि बिभर्ति सदृशीं श्रियम् ।। १ ।।
तस्य संदर्शनात्पुसां भवेच्छ्रीः सर्वतोमुखी ।।
ज्येष्ठो नाम गणाध्यक्षो ज्येष्ठो मे पुत्रसंपदि ।। २ ।।
ज्येष्ठशुक्लचतुर्दश्यां संपूज्यो ज्येष्ठताप्तये ।।
स्थितो वह्निदिशो भागे चिंतामणि विनायकात् ।। ३ ।।
दंतहस्ताद्यमाशायां पूज्यो गजविनायकः ।।
तस्य संपूजनाद्भक्त्या गजांता श्रीरवाप्यते ।। ४ ।।
पिचिण्डिलाद्गणपतेर्याम्यां कालविनायकः ।।
भयं न कालकलितं तस्य संसेवनान्नृणाम्।। ५ ।।
उद्दंडमुंडाद्गणपात्की नाशदिशि संस्थितम् ।।
नागेशं गणपं दृष्ट्वा नागलोके महीयते ।। ६ ।।
अथ षष्ठावरणगाः प्रोच्यंते विघ्ननायकाः ।।
तेषां नामश्रवादेव पुंसां सिद्धिः प्रजायते ।। ७ ।।
मणिकर्णो गणपतिः प्राच्यां विघ्नविघातकृत् ।।
आशाविनायको वहन्यां भक्ताशां पूरयन्स्थितः ।। ८ ।।
याम्यांसृष्टिगणेशश्च सृष्टिसंहारसूचकः ।।
नैर्ऋत्यां यक्षविघ्नेशः सर्वविघ्नहरः परः ।। ९ [

प्रतीच्यां गजकर्णश्च सर्वेषां क्षेमकारकः ।।
चित्रघंटो गणपतिर्वायव्यां पालयेत्पुरीम् ।। 4.2.57.११० ।।
स्थूलजंघउदीच्यां च शमयेच्छमिनामघम् ।।
ऐश्यामैशीपुरीं पायात्समंगलविनायकः ।। ११ ।।
यमतीर्थादुदीच्यां च पूज्यो मित्रविनायकः ।।
सप्तमावरणे ये च तांश्च वक्ष्ये विनायकान् ।। १२ ।।
मोदाद्याः पंचविघ्नेशाः षष्ठो ज्ञानविनायकः ।।
सप्तमो द्वारविघ्नेशो महाद्वारपुरश्चरः ।। १३ ।।
अष्टमः सर्वकष्टौघानविमुक्तविनायकः ।।
अविमुक्ते मम क्षेत्रे हरेत्प्रणतचेतसाम् ।।१४।।
षट्पंचाशद्गजमुखानेतान्यः संस्मरिष्यति।।
दूरदेशांतरस्थोपि स मृतो ज्ञानमाप्नुयात् ।। १५ ।।
ढुंढिस्तुतिं महापुण्यां षट्पंचाशद्गजाननाम् ।।
यः पठिष्यति पुण्यात्मा तस्य सिद्धिः पदेपदे ।। १६ ।।
इमे गणेश्वराः सर्वे स्मर्तव्या यत्र कुत्रचित् ।।
महाविपत्समुद्रांतः पतंतं पांति मानवम् ।।१७।।
इति स्तुतिं महापुण्यां श्रुत्वा चैतान्विनायकान् ।।
जातुविघ्नैर्नबाध्येत पापेभ्योपि प्रहीयते ।। १८ ।।
इत्युक्त्वा देवदेवोपि महोत्सवितमानसः ।।
कृताभिषेको ब्रह्माद्यैस्तेभ्यो दत्त्वाभिवांछितम्।। १९ ।।
संप्रसाद्य यथायोगं सर्वानुचित चंचुरः ।।
अविशद्राजसदनं विश्वकर्मविनिर्मितम् ।। 4.2.57.१२०
।। स्कंद उवाच ।।
एवं स्तुतो भगवता देवदेवेन विघ्नजित् ।।
इत्थं च बहुधात्मानं स चकार विनायकः ।। २१ ।।
एतानि तस्य नामानि ढुंढिराजस्य कुंभज ।।
जपित्वा यानि मनुजो लप्स्यते निजवांछितम्।। २२ ।।
अन्येपि तत्र वै भेदास्तस्य ढुंढेर्गणेशितुः ।।

भक्तैः समर्चिता भक्त्या ह्यसंख्याताः सहस्रशः ।। २३ ।।

भगीरथगणाध्यक्षो हरिश्चंद्रविनायकः ।।

कपर्दाख्यो गणपतिस्तथा बिंदुविनायकः ।। २४ ।।

इत्याद्यास्तत्र विघ्नेशाः प्रतिभक्तप्रतिष्ठिताः ।।

तेषामप्यर्चनात्पुंसां जायंते सर्वसंपदः ।। २५ ।।

श्रुत्वाध्यायमिमं पुण्यं नरः श्रद्धासमन्वितः ।।

सर्वविघ्नान्समुत्सृज्य लभते वांछितं पदम् ।। १२६ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्द्धे ढुंढिविनायकप्रादुर्भावो नाम सप्तपंचाशत्तमोऽध्यायः ।। ५७

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५८



।। अगस्त्य उवाच ।।

किं चकार हरः स्कंद मंदराद्रिगतस्तदा ।।

विलंबमालंबयति तस्मिन्नपि गजानने ।। १ ।।

।। स्कंद उवाच ।। ।।

शृण्वगस्त्य कथां पुण्यां कथ्यमानां मयाधुना।।

वाराणस्येकविषयामशेषाघौघनाशिनीम् ।।२ ।।

करींद्रवदने तत्र क्षेत्रवर्येऽविमुक्तके।।

विलंबभाजित्र्यक्षेण प्रैक्षिक्षिप्रमधोक्षजः ।। ३ ।।

प्रोक्तोथ बहुशश्चेति बहुमानपुरःसरम् ।।

तथा त्वमपि माकार्षीर्यथा प्राक्प्रस्थितैः कृतम् ।। ४ ।।

।। श्रीविष्णुरुवाच ।। ।।

उद्यमः प्राणिभिः कार्यो यथाबुद्धि बलाबलम् ।।

परं फलंति कर्माणि त्वदधीनानि शंकर ।। ५ ।।

अचेतनानि कर्माणि स्वतंत्राः प्राणिनोपि न ।।

त्वं च तत्कर्मणां साक्षी त्वं च प्राणिप्रवर्तकः ।। ६ ।।

किंतु त्वत्पादभक्तानां तादृशी जायते मतिः ।।

यया त्वमेव कथयेः साध्वनेनत्वनुष्ठितम् ।। ७ ।।

यत्किंचिदिह वै कर्मस्तोकं वाऽस्तोकमेव वा ।।

तत्सिद्ध्यत्येव गिरिश त्वत्पादस्मृत्यनुष्ठितम् ।। ८ ।।

सुसिद्धमपि वै कार्यं सुबुद्ध्यापि स्वनुष्ठितम् ।।

अत्वत्पदस्मृतिकृतं विनश्यत्येव तत्क्षणात् ।। ९ ।।

शंभुना प्रेषितेनाद्य सूद्यमः क्रियते मया ।।

त्वद्भक्तिसंपत्तिमतां संपन्नप्राय एव नः ।। 4.2.58.१० ।।

अतीव यदसाध्यं स्यात्स्वबुद्धिबलपौरुषैः ।।

तत्कार्यं हि सुसिद्धं स्यात्त्वदनुध्यानतः शिव ।। ११ ।।

यांति प्रदक्षिणीकृत्य ये भवंतं भवं विभो ।।

भवंति तेषां कार्याणि पुरोभूतानि ते भयात् ।। १२ ।।

जातं विद्धि महादेव कार्यमेतत्सुनिश्चितम् ।।

काशीप्रावेशिकश्चिंत्य शुभलग्नोदयः परम् ।। १३ ।।

अथवा काशिसंप्राप्तौ न चिंत्यं हि शुभाशुभम् ।।

तदैव हि शुभः कालो यदैवाप्येत काशिका ।। १४ ।।

शंभुं प्रदक्षिणीकृत्य प्रणम्य च पुनःपुनः ।।

प्रतस्थेऽथ सलक्ष्मीको मंदराद्गरुडध्वजः ।। १५ ।।

दृशोरतिथितां नीत्वा विष्णुर्वाराणसीं ततः ।।

पुंडरीकाक्ष इत्याख्यां सफलीकृतवान्मुदा ।। १६ ।।

गंगावरणयोर्विष्णुः संभेदे स्वच्छमानसः ।।

प्रक्षाल्य पाणिचरणं सचैलः स्नातवानथ ।।१७।।

तदाप्रभृति तत्तीर्थं पादोदकमितीरितम् ।।

पादौ यदादौ शुभदौ क्षालितौ पीतवाससा ।। १८ ।।

तत्र पादोदके तीर्थे ये स्नास्यंतीह मानवाः ।।

तेषां विनश्यति क्षिप्रं पापं सप्तभवार्जितम् ।। १९ ।।

तत्र श्राद्धं नरः कृत्वा दत्त्वा चैव तिलोदकम्।।

सप्तसप्त तथा सप्त स्ववंश्यांस्तारयिष्यति ।। 4.2.58.२० ।।

गयायां यादृशी तृप्तिर्लभ्यते प्रपितामहैः ।।

तीर्थे पादोदके काश्यां तादृशी लभ्यते ध्रुवम् ।। २१ ।।

कृतपादोदक स्नानं पीतपादोदकोदकम् ।।

दत्तपादोदपानीयं नरं न निरयः स्पृशेत् ।। २२ ।।

विष्णुपादोदके तीर्थे प्राश्य पादोदकं सकृत् ।।

जातुचिज्जननीस्तन्यं न पिबेदिति निश्चितम् ।। २३ ।।

सचक्र शालग्रामस्य शंखेन स्नापितस्य च ।।

अद्भिः पादोदकस्यांबु पिबन्नमृततां व्रजेत् ।। २४ ।।

विष्णुपादोदके तीर्थे विष्णुपादोदकं पिबेत् ।।

यदि तत्सुधया किं नु बहुकालीनयातया ।। २५ ।।

काश्यां पादोदके तीर्थे यैः कृता नोदकक्रियाः ।।

जन्मैव विफलं तेषां जलबुद्बुद सश्रियाम् ।।२६।।

कृतनित्यक्रियो विष्णुः सलक्ष्मीकः सकाश्यपिः ।।

उपसंहृत्य तां मूर्तिं त्रैलोक्यव्यापिनीं तथा ।। २७ ।।

विधाय दार्षदीं मूर्तिं स्वहस्तेनादिकेशवः ।।

स्वयं संपूजयामास सर्वसिद्धिसमृद्धिदाम् ।। २८ ।।

आदिकेशवनाम्नीं तां श्रीमूर्तिं पारमेश्वरीम् ।।

संपूज्य मर्त्यो वैकुंठं मन्यते स्वगृहांगणम् ।। २९ ।।

श्वेतद्वीप इति ख्यातं तत्स्थानं काशिसीमनि ।।

श्वेतद्वीपे वसंत्येव नरास्तन्मूर्तिसेवकाः ।। 4.2.58.३० ।।

क्षीराब्धिसंज्ञं तत्रान्यत्तीर्थं केशवतोग्रतः ।।

कृतोदकक्रियस्तत्र वसेत्क्षीराब्धिरोधसि ।। ३१ ।।

तत्र श्राद्धं नरः कृत्वा गां दत्त्वा च पयस्विनीम् ।।

यथोक्तसर्वाभरणां क्षीरोदे वासयेत्पितॄन् ।। ३२ ।।

एकोत्तरशतं वंश्यान्नवेत्पायस कर्दमम् ।।

क्षीरोदरोधः पुण्यात्मा भक्त्या तत्रैकधेनुदः ।।३३।।

बह्वीश्च नैचिकीर्दत्त्वा श्रद्धयात्र सदक्षिणाः ।।

शय्योत्तरांश्च प्रत्येकं पितॄंस्तत्र सुवासयेत्।।३४।।

क्षीरोदाद्दक्षिणे तत्र शंखतीर्थमनुत्तमम् ।।

तत्रापि संतर्प्यपितॄन्विष्णुलोकेमहीयते ।। ३५ ।।

तद्याम्यां चक्रतीर्थं च पितॄणामपि दुर्लभम् ।।

तत्रापि विहितश्राद्धो मुच्यते पैतृकादृणात् ।।३६।।

तत्संन्निधौ गदातीर्थं विष्वगाधिनिबर्हणम् ।।

तारणं च पितॄणां वै कारणं चैनसां क्षये ।। ३७ ।।

पद्मतीर्थं तदग्रे तु तत्र स्नात्वा नरोत्तमः ।।

पितॄन्संतर्प्य विधिना पद्मयानेव हीयते ।। ३८ ।।

तत्रैव च महालक्ष्म्यास्तीर्थं त्रैलोक्यविश्रुतम् ।।

स्वयं यत्र महालक्ष्मीः स्नाता त्रैलोक्यहर्षदा ।।३९।।

तत्र तीर्थे कृतस्नानो दत्त्वा रत्नानि कांचनम् ।।
पट्टांबराणि विप्रेभ्यो न लक्ष्म्या परिहीयते ।।4.2.58.४०।।
यत्रयत्र हि जायेत तत्रतत्र समृद्धिमान् ।।
पितरोपि हि सुश्रीकास्तस्य स्युस्तीर्थगौरवात् ।।४१।।
तत्रास्ति हि महालक्ष्म्या मूर्तिस्त्रैलोक्यवंदिता ।।
तां प्रणम्य नरो भक्त्या न रोगी जायते क्वचित् ।। ४२ ।।
नभस्य बहुलाष्टम्यां कृत्वा जागरणं निशि।।
समभ्यर्च्य महालक्ष्मीं व्रती व्रतफलं लभेत् ।। ४३ ।।
ताक्ष्र्य तीर्थं हि तत्रास्ति ताक्ष्र्यकेशवसन्निधौ।।
तत्र स्नात्वा नरो भक्त्या संसाराहिं न पश्यति ।। ४४ ।।
तदग्रे नारदं तीर्थं महापातकनाशनम् ।।
ब्रह्मविद्योपदेशं च प्राप्तवान्यत्र नारदः ।।४५।।
तत्र स्नातो नरः सम्यग्ब्रह्मविद्यामवाप्नुयात् ।।
केशवात्तेन तत्रोक्तः काश्यां नारदकेशवः ।।४६ ।।
अर्चयित्वा नरो भक्त्या देवं नारदकेशवम् ।।
जनन्या जठरं पीठमध्यास्ते न कदाचन ।। ४७ ।।
प्रह्लादतीर्थं तस्याग्रे यत्र प्रह्लादकेशवः ।।
तत्र श्राद्धादिकं कृत्वा विष्णुलोके महीयते ।। ४८ ।।
आंबरीषमहातीर्थमघघ्नं तस्य सन्निधौ ।।
तत्रौदकीं क्रियां कुर्वन्निष्कालुष्यं लभेन्नरः ।।४९।।
आदित्यकेशवः पूज्य आदिकेशव पूर्वतः ।।
तस्य संदर्शनादेव मुच्यते चोच्चपातकैः ।। ।। 4.2.58.५० ।।
दत्तात्रेयेश्वरं तीर्थं तत्रैवादिगदाधरः ।।
पितॄन्संतर्प्य तत्रैव ज्ञानयोगमवाप्नुयात् ।।५१ ।।
भृगुकेशवपूर्वेण तीर्थं वै भार्गवं परम् ।।
तत्र स्नातो नरः प्राज्ञो भवेद्भार्गववत्सुधीः ।। ५२ ।।
तत्र वामनतीर्थं च प्राच्यां वामनकेशवात् ।।
पूजयित्वा च तं विष्णुं वसेद्वामनसन्निधौ ।। ५३ ।।

नरनारायणं तीर्थं नरनारायणात्पुरः ।।

तत्र तीर्थे कृतस्नानो नरो नारायणो भवेत् ।। ५४ ।।

यज्ञवाराह तीर्थं च तदग्रे पापनाशनम् ।।

प्रतिमज्जनतस्तत्र राजसूय क्रतोः फलम् ।। ५५ ।।

विदारनारसिंहाख्यं तत्र तीर्थं सुनिर्मलम् ।।

स्नातो विदारयेत्तत्र पापं जन्मशतार्जितम् ।। ५६ ।।

गोपिगोविंद तीर्थं च गोपिगोविंदपूर्वतः ।।

स्नात्वा तत्र समभ्यर्च्य विष्णुं विष्णुप्रियो भवेत् ।। ५७ ।।

तीर्थं लक्ष्मीनृसिंहाख्यं गोपिगोविंद दक्षिणे ।।

न लक्ष्म्या त्यज्यते क्वापि तत्तीर्थं परिमज्जनात् ।। ५८ ।।

तदग्रे शेषतीर्थं च शेषमाधवसन्निधौ ।।

तर्पितानां पितृणां च यत्र तृप्तिर्न शिष्यते ।। ५९ ।।

शंखमाधवतीर्थं च तदवाच्यां सुनिर्मलम् ।।

कृतोदको नरस्तत्र भवेत्पापोपि निर्मलः ।। 4.2.58.६० ।।

तदग्रे च हयग्रीवं तीर्थं परमपावनम् ।।

तत्र स्नात्वा हयग्रीवं केशवं परिपूज्य च ।। ६१ ।।

पिंडं च तत्र निर्वाप्य हयग्रीवस्य सन्निधौ ।। ।।

हायग्रीवीं श्रियं प्राप्य समुच्येत सपूर्वजः ।। ६२ ।।

।। स्कंद उवाच ।। ।।

प्रसंगतो मयैतानि तीर्थानि कथितानि ते ।।

भूमौ तिलांतरायां यत्तत्र तीर्थान्यनेशः ।। ६३ ।।

उद्दिष्टानां तु तीर्थानामेतेषां कलशोद्भव ।।

नाममात्रमपि श्रुत्वा निष्पापो जायते नरः ।।

इदानीं प्रस्तुतं विप्र शृणु वक्ष्यामि तेग्रतः ।।

वैकुंठनाथो यच्चक्रे शंखचक्रगदाधरः ।। ६५ ।।

तस्यां मूर्तौ समावेश्य कैशव्यामथ केशवः ।।

शंभोः कार्ये कृतमना अंशांशांशेन निर्गतः ।। ६६ ।।

।। अगस्त्य उवाच ।। ।।

अंशांशांशेन निश्चक्रे कुतो भोश्चक्रपाणिना ।।

क्व निर्गतं च हरिणा प्राप्य काशीं षडानन ।। ६७ ।।

।। स्कंद उवाच ।। ।।

सामस्त्येन यदर्थं न निर्गतं विष्णुना मुने ।।

ब्रुवे तत्कारणमिति क्षणमात्रं निशामय ।। ६८ ।।

संप्राप्य पुण्यसंभारैः प्राज्ञो वाराणसीं पुरीम् ।।

न त्यजेत्सर्वभावेन महालाभैरपीरितः ।। ६९ ।।

अतः प्रतिकृतिः स्वीया तत्र काश्यां मुरारिणा ।।

प्रतितस्थे कलशजस्तोकांशेन च निर्गतम् ।। 4.2.58.७० ।।

किंचित्काश्या उदीच्यां च गत्वा देवेन चक्रिणा ।।

स्वस्थित्यै कल्पितं स्थानं धर्मक्षेत्रमितीरितम् ।। ७१ ।।

ततस्तु सौगतं रूपं शिश्राय श्रीपतिः स्वयम् ।।

अतीव सुंदरतरं त्रैलोक्यस्यापिमोहनम् ।। ७२ ।।

श्रीः परिव्राजिका जाता नितरां सुभगाकृतिः ।।

यामालोक्य जगत्सर्वं चित्रन्यस्तमिवास्थितम् ।। ७३ ।।

विश्वयोनिं जगद्धात्रीं न्यस्तहस्ताग्रपुस्तकाम् ।।

गरुत्मानपि तच्छिष्यो जातो लोकोत्तराकृतिः ।। ७४ ।।

अत्यद्भुत महाप्राज्ञो निःस्पृहः सर्ववस्तुषु ।।

गुरुशुश्रूषणपरो न्यस्तहस्ताग्रपुस्तकः ।। ७५ ।।

अपृच्छत्परमं धर्मं संसारविनिमोचकम् ।।

आचार्यवर्यं सौम्यास्यं प्रसन्नात्मानमुत्तमम् ।। ७६ ।।

धर्मार्थशास्त्रकुशलं ज्ञानविज्ञानशालिनम् ।।

सुस्वरं सुपदव्यक्ति सुस्निग्धमृदुभाषिणम् ।। ७७ ।।

स्तंभनोच्चाटनाकृष्टि वशीकर्मादिकोविदम् ।।

व्याख्यानसमयाकृष्ट पक्षिरोमांचकारिणम् ।। ७८ ।।

पीततद्गीतपीयूष मृगपूगैरुपासितम् ।।

महामोदभराक्रांत वातचांचल्यहारिणम्।। ७९ ।।

वृक्षैरपि पतत्पुष्पच्छलैःकृतसमर्चनम् ।।

ततःप्रोवाच पुण्यात्मा पुण्यकीर्तिः स सौगतः ।। 4.2.58.८० ।।

शिष्यं विनयकीर्तिं तं महाविनयभूषणम्।।८१।।

।। पुण्यकीर्तिरुवाच ।। ।।

त्वया विनयकीर्ते यो धर्मः पृष्टः सनातनः ।।

वक्ष्याम्यहमशेषेण शृणुष्व त्वं महामते ।। ५२ ।।

अनादिसिद्धः संसारः कर्तृकर्मविवर्जितः ।।

स्वयं प्रादुर्भवेदेष स्वयमेव विलीयते ।। ८३ ।।

ब्रह्मादिस्तंबपर्यंतं यावद्देहनिबंधनम् ।।

आत्मैवैकेश्वरस्तत्र न द्वितीयस्तदीशिता ।।८४ ।।

यद्ब्रह्मविष्णुरुद्राद्यास्तथाख्या देहिनामिमाः ।।

आख्या यथास्मदादीनां पुण्यकीर्त्यादिरुच्यते।।।८५।।

देहो यथा स्मदादीनां स्वकालेन विलीयते ।।

ब्रह्मादि मशकांतानां स्वकालाल्लीयते तथा ।।८६ ।।

विचार्यमाणे देहेस्मिन्नकिंचिदधिकं क्वचित् ।।

आहारो मैथुनं निद्रा भयं सर्वत्र यत्समम्।। ८७ ।।

निजाहारपरीमाणं प्राप्य सर्वोपि देहभृत् ।।

सदृशीमेव संतृप्तिं प्राप्नुयान्नाधिकेतराम् ।। ८८ ।।

यथा वितृषिताः स्याम पीत्वा पेयं मुदा वयम् ।।

तृषितास्तु तथान्येपि न विशेषोल्पकोधिकः ।।८९।।

संतु नार्यः सहस्राणि रूपलावण्यभूमयः ।।

परं निधुवने काले ह्येकैवेहोपयुज्यते ।। 4.2.58.९० ।।

अश्वाः परः शताः संतु संत्वनेकेप्यनेकषाः ।।

अधिरोहे तथाप्येको न द्वितीयस्तथात्मनः ।। ९१ ।।

पर्यंकशायिनां स्वापे सुखं यदुपपद्यते ।।

तदेव सौख्यं निद्रायामिह भूशायिनामपि ।। ९२ ।।

यथैव मरणाद्भीतिरस्मदादि वपुष्मताम् ।।

ब्रह्मादिकीटकांतानां तथा मरणतो भयम् ।। ९३ ।।

सर्वेतनुभृतस्तुल्या यदि बुद्ध्या विचार्यते ।।

इदं निश्चित्य केनापि नो हिंस्यः कोपि कुत्रचित् ।। ९४ ।।
धर्मो जीवदया तुल्यो न क्वापि जगतीतले ।।
तस्मात्सर्वप्रयत्नेन कार्या जीवदया नृभिः ।। ९५ ।।
एकस्मिन्रक्षिते जीवे त्रैलोक्यं रक्षितं भवेत् ।।
घातिते घातितं तद्वत्तस्माद्रक्षेन्न घातयेत् ।। ९६ ।।
अहिंसा परमो धर्म इहोक्तः पूर्वसूरिभिः ।।
तस्मान्न हिंसा कर्तव्या नरैर्नरकभीरुभिः ।। ९७ ।।
न हिंसा सदृशं पापं त्रैलोक्ये सचराचरे ।।
हिंसको नरकं गच्छेत्स्वर्गं गच्छेदहिंसकः ।। ९८ ।।
संति दानान्यनेकानि किं तैस्तुच्छ फलप्रदैः ।।
अभीति दानसदृशं परमेकमपीह न ।।९९।।
इह चत्वारि दानानि प्रोक्तानि परमर्षिभिः ।।
विचार्य नानाशास्त्राणि शर्मणेत्र परत्र च ।।4.2.58.१००।।
भीतेभ्यश्चाभयं देयं व्याधितेभ्यस्तथौषधम् ।।
देया विद्यार्थिनां विद्या देयमन्नं क्षुधातुरे ।। १ ।।
अविचिंत्य प्रभावं हि मणिमंत्रौषधीबलम् ।।
तदभ्यस्यं प्रयत्नेन नानार्थोपार्जनाय वै ।। २ ।।
अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ।।
परितः परिपूज्यानि किमन्यैरिह पूजितैः ।। ३ ।।
पंचकर्मेंद्रियाण्येव पंचबुद्धींद्रियाणि च ।।
मनोबुद्धिरिह प्रोक्तं द्वादशायतनं शुभम् ।। ४ ।।
इहैव स्वर्गनरकौ प्राणिनां नान्यतः क्वचित् ।।
सुखं स्वर्गः समाख्यातो दुःखं नरक एव हि ।। ५ ।।
सुखेषु भुज्यमानेषु यत्स्याद्देह विसजर्नम् ।।
अयमेव परो मोक्षो न मोक्षोऽन्यः क्वचित्पुनः ।। ६ ।।
वासनासहितक्लेश समुच्छेदे सति ध्रुवम् ।।
विज्ञानो परमो मोक्षो विज्ञेयस्तत्त्वचिंतकैः ।। ७ ।।
प्रामाणिकी श्रुतिरियं प्रोच्यते वेदवादिभिः ।।

न हिंस्यात्सर्वभूतानि नान्या हिंसाप्रवर्तिका ।। ८ ।।

अग्नीषोमीयमिति या भ्रामिका साऽसतामिह।।

न सा प्रमाणं ज्ञातॄणां पश्वालंभनकारिका ।। ९ ।।

वृक्षांश्छित्त्वा पशून्हत्वा कृत्वा रुधिरकर्दमम ।।

दग्ध्वा वह्नौ तिलाज्यादि चित्रं स्वर्गोऽभिलप्यते ।। 4.2.58.११० ।।

इत्येवं धर्मजिज्ञासां पुण्यकीर्तौ प्रकुर्वति ।।

पारंपर्येण तच्छ्रुत्वा पौरा यात्रां प्रचक्रिरे ।।११।।

परिव्राजिक याप्येवं समाकृष्टाः पुरांगनाः ।।

तया विजानकौमुद्या सर्वविद्याविदग्धया ।। १२ ।।

ततस्तासां पुरस्तात्सा बौद्धधर्मानवीवदत् ।।

दृष्टार्थप्रत्ययकरान्देहसौख्यैकसाधनान ।। १३ ।। ।।

विज्ञानकौमुद्युवाच ।। ।।

आनंदं ब्रह्मणो रूपं श्रुत्यैवं यन्निगद्यते ।।

तत्तथैवेह मंतव्यं मिथ्या नानात्वकल्पना ।।१४।।

यावत्स्वस्थमिदं वर्ष्म यावन्नेंद्रियविक्लवः ।।

यावज्जरा च दूरेस्ति तावत्सौख्यं प्रसाधयेत् ।। १५।।

अस्वास्थ्येंद्रियवैकल्ये वार्धके तु कुतः सुखम् ।।

शरीरमपि दातव्यमर्थिभ्योतः सुखेप्सुभिः।। १६ ।।

याचमानमनोवृत्ति प्रीणनेयस्य नो जनिः ।।

तेन भूर्भारवत्येषा समुद्रागद्रुमैर्नहि।। १७ ।।

सत्वरो गत्वरो देहः संचयाः सपरिक्षयाः ।।

इति विज्ञाय विज्ञाता देहे सौख्यं प्रसाधयेत् ।। १८ ।।

श्व वायस कृमीणां च प्रतिभोज्यमिदं वपुः ।।

भस्मांतं तच्छरीरं च वेदे सत्यं प्रपद्यते ।। १९ ।।

मुधा जातिविकल्पोयं लोकेषु परिकल्प्यते ।।

मानुष्ये सति सामान्ये कोधमः कोथ चोत्तमः ।। 4.2.58.१२० ।।

ब्रह्मादि सृष्टिरेषेति प्रोच्यते वृद्धपूरुषैः ।।

तस्य स्रष्टुः सुतौ दक्ष मरीची चेति विश्रुतौ ।। २१ ।।

मारीचिना कश्यपेन दक्षकन्याः सुलोचनाः ।।

धर्म्येण किल मार्गेण परिणीतास्त्रयोदश ।। २२ ।।

अपीदानींतनैर्मर्त्यैरल्पबुद्धिपराक्रमैः।।

अयं गम्यस्त्वगम्योयं विचारः क्रियते मुधा ।। २३ ।।

मुखबाहूरुपज्जातं चातुर्वर्ण्यमिहोदितम् ।।

कल्पनेयं कृता पूर्वैर्न घटेत विचारतः ।। २४ ।।

एकस्यां च तनौ जाता एकस्माद्यदि वा क्वचित् ।।

चत्वारस्तनयास्तत्किं भिन्नवर्णत्वमाप्नुयुः ।। २५ ।।

वर्णावर्णविवेकोयं तस्मान्न प्रतिभासते।।

अतो भेदो न मंतव्यो मानुष्ये केनचित्क्वचित् ।। ।। २६ ।।

विज्ञानकौमुदीवाणीमित्याकर्ण्य पुरांगनाः ।।

भर्तृशुश्रूषणवतीं विजहुर्मतिमुत्तमाम् ।। २७ ।।

अभ्यस्याकर्षणीं विद्यां वशीकृतिमतीमपि ।।

पुरुषाः सफलीचक्रुः परदारेषु मोहिताः ।। २८ ।।

अंतःपुरचरा नार्यस्तथा राजकुमारकाः ।।

पौराः पुरांगनाश्चापि सर्वे ताभ्यां विमोहिताः ।। २९ ।।

वंध्यानां चापि वंध्यात्वं सा परिव्राजिकाहरत् ।।

तैस्तैश्च कार्मणोपायैरसौ भाग्यवतीः स्त्रियः ।। 4.2.58.१३० ।।

सौभाग्यभाग्यसंपन्ना व्यधाद्विज्ञानकौमुदी ।।

कस्यैचिदंजनं दत्तं कस्यैचित्तिलकौषधम् ।। ३१ ।।

वशीकरणमंत्रैश्च तथा बह्व्योपि दीक्षिताः ।।

मंत्राञ्जपेयुः काश्चिच्च यंत्राण्यन्या लिखंति च ।।३२।।

काश्चिज्जुह्वति कुंडाग्नौ नानाद्रव्याणि निश्चलाः ।।

एवं सर्वेषु पौरेषु निजधर्मेषु सर्वथा ।।

पराङ्मुखेषु जातेषु प्रोल्ललास वृषेतरः ।। ३३ ।।

सिद्धयोकृष्टपच्याद्या नष्टा एनः प्रवेशनात् ।।

आसीत्कुंठितसामर्थ्यो नृपोपि स मनाङ्मनाक् ।। ३४ ।।

दूरस्थितोपि विघ्नेशो नृपं निर्विण्णमानसम् ।।

चकार राज्यकरणे ढुंढिराजो रिपुंजयम् ।। ३५ ।।

अजीगणद्दिवोदासोप्यष्टादश दिनावधिम् ।।

कदा गंता स वै विप्रो यो मां समुपदेक्ष्यति ।। ३६ ।।

इत्थमष्टादशे प्राप्ते दिवसे दिवसेश्वरे ।।

प्राप्ते मध्यं नभोभागं द्वारं प्राप्तो द्विजोत्तमः ।। ३७ ।।

स एव पुण्यकीर्त्याख्यो धर्मक्षेत्रादधोक्षजः ।।

द्विजवेषं समालंब्य समायातो नृपांतिकम् ।। ३८ ।।

द्वित्रैः पवित्रैर्बहुधा जयजीवेति वादिभिः ।।

समेतः स इतो विप्रो मूर्तिमानिव पावकः ।। ३९ ।।

विलोक्य तं समायातं दूरादुत्कंठितो नृपः ।।

मेने भवेद्गुरुरयं युक्तो मदुपदेशने ।। 4.2.58.१४० ।।

अभिगम्य च तं राजा प्रणम्य च पुनःपुनः ।।

गृहीत स्वस्तिवचनो निनायांतःपुरं द्विजम् ।। ४१ ।।

मधुपर्केण विधिना तं संपूज्य जनाधिपः ।।

व्यपेताध्वश्रमं स्वस्थं प्रोल्लसन्मुखपंकजम् ।। ४२ ।।

निवेद्य खाद्यवस्तूनि कृतकृत्य क्रियाविधिम् ।।

परितृप्तं सुखासीनं पप्रच्छ ब्राह्मणं नृपः ।। ४३ ।।

।। राजोवाच ।। ।।

खिन्नोस्मि विप्रवर्याहं राज्यभारं समुद्वहन् ।।

खेदो नास्त्येव हि परं वैराग्यमिव जायते ।। ४४ ।।

किं करोमि क्व गच्छामि कथं मे निर्वृतिर्भवेत् ।।

पक्षद्वय्येव यातेति मम चिंतयतो द्विज ।।४५।।

असीमं सुखसंतानं भुक्तं राज्यं मया द्विज ।।

परिक्षीणविपक्षं च त्र्यक्षैश्वर्यमिव स्फुटम् ।। ४६ ।।

स्वसामर्थ्यादहं जातः पर्जन्याग्न्यनिलात्मकः ।।

प्रजाश्च पालिताः सम्यक्पुत्रा इव निजौरसाः ।। ४७।।

तर्पिताश्चापि भूदेवा वसुभिश्च दिनेदिने।।

एकमेवापराद्धं च मया राज्यं प्रशासता ।। ४८ ।।

देवास्तृणीकृताः सर्वे स्वतपोबलदर्पतः ।।
तच्च प्रजोपकारार्थं न स्वार्थं भवता शपे ।। ४९ ।।
अधुना गुरुरेधित्वं मम भाग्योदयागतः ।।
राज्यं तु प्रकरोम्येवं न्यक्कृतांतकसाध्वसम् ।। 4.2.58.१५० ।।
अकालकालकलनं मम राज्ये न कुत्रचित् ।।
जराव्याधिदरिद्रेभ्यो ममराज्येपि नो भयम् ।। ५१ ।।
कोपि धर्मेतरां वृत्तिं न श्रयेन्मयि शासति ।।
धर्मोदयाजनाः सर्वे सर्वे संति सुखोदयाः ।। ५२ ।।
सद्विद्याव्यसनाः सर्वे सर्वेसन्मार्ग चंचुराः ।।
अथवा यदि कल्पांतं तिष्ठेदायुस्ततोपि किम् ।। ५३ ।।
सर्वे भोग्यास्तथा भांति यथा चर्वित चर्वणम् ।।
किं पिष्टपेषणेनात्र राज्येन द्विजपुंगव ।। ५४ ।।
किमप्युपदिश प्राज्ञ गर्भवासोपशांतये ।।
अथवा त्वां प्रपन्नस्य मम किं चिंतनैरिमः ।। ५५ ।।
यदेव कथयस्यद्य तत्करिष्याम्यसंशयम् ।।
त्वद्विलोकनमात्रेण सर्व एव मनोरथाः ।। ५६ ।।
अन्येषामपि जायंते जातप्राया ममैव तु ।।
जाने देवविरोधेन के के न प्रलयं गताः ।। ५७ ।।
अवंतोपि प्रजाः स्वीया निजधर्ममनुव्रताः ।।
पुरा ते त्रिपुराः शूराः शिवभक्तिपरा अपि ।। ५८ ।।
धरामयं रथं कृत्वा धनुः कृत्वा हिमाचलम् ।।
वेदांश्च वाजिनः कृत्वा गुणं कृत्वा च वासुकिम् ।। ५९ ।।
विरिंचिं सारथिं कृत्वा कृत्वा विष्णुं च पत्त्रिणम्।।
रथचक्रे पुष्पवंतौ प्रतोदं प्रणवात्मकम् ।। 4.2.58.१६० ।।
ताराग्रहमयान्कीलान्वरूथं गगनात्मकम् ।।
ध्वजदंडसुमेरुं च प्रांशुकल्पतरुं ध्वजम् ।। ६१ ।।
योक्त्राणि चक्षुःश्रवसश्छंदास्यंगानि रक्षकान् ।।
भल्लं कालाग्निरुद्राख्यं पुंखीकृत्य प्रभंजनम् ।। ६२ ।।

हरेणैकेषुपातेन लीलया भस्मसात्कृताः ।।
बलिर्यज्ञकृतां श्रेष्ठः कृत्वा कपटखर्वताम् ।। ६३ ।।
पातालं गमितः पूर्वं हरिणा विक्रमैस्त्रिभिः ।।
वृत्तवानपि वै वृत्रः सुत्राम्णा विनिसूदितः ।।६४।।
दधीचिरपि विप्रेंद्रो देवैरस्थिकृते हतः ।।
पूर्ववैरमनुस्मृत्य जयार्थं युध्यतो हरेः ।।
कुशास्त्रैर्विजितस्याजौ तेनैव च दधीचिना ।। ६५ ।।
शिवभक्तस्य बाणस्य दोःसहस्रं पुरा हरिः ।।
चिच्छेद संख्ये किं तेनापराद्धं साधुवर्तिना ।। ६६ ।।
तस्माद्विरोधो भद्राय न भवेद्देवतैः सह ।।
देवेभ्यो मद्भयं नास्ति सत्पथीनस्य वै मनाक् ।। ६७ ।।
यज्ञैर्देवत्वमापन्ना गीर्वाणा वासवादयः ।।
यज्ञैर्दानैस्तपोभिश्च तेभ्योप्याधिक्यमस्ति मे ।। ६८ ।।
अस्तु न्यूनत्वमाधिक्यं किमनेनाधुना मम ।।
इंद्रियोपरमः प्राप्तः सुखदस्तवदर्शनात् ।। ६९ ।।
इदानीं दिश मे तात कर्मनिर्मूलनक्षमम् ।।
उपायं त्वमुपायज्ञ येन निर्वृतिमाप्नुयाम् ।। 4.2.58.१७० ।।
।। स्कंद उवाच ।। ।।
गणेशावेशवशतो राज्ञेति यदुदीरितम् ।।
तदाकर्ण्य हृषीकेशः प्राह ब्राह्मणवेषभृत् ।। ७१ ।।
।। श्रीविष्णुरुवाच ।। ।।
साधुसाधु महाप्राज्ञ नृपचूडामणेऽनघ ।।
मया यदुपदेष्टव्यं तत्त्वयैव निरूपितम् ।। ७२ ।।
त्वमादावेव निर्वृत्तः परं मे मानदो ह्यसि ।।
क्षालितेंद्रियपंकश्च सुतपः स्वच्छवारिभिः ।। ७३ ।।
यदुक्तं भवता भूप तत्सर्वं तथ्यमेव हि ।।
तव शक्तिं च जानामि विरक्तिं च महामते ।। ७४ ।।
न भवत्सदृशो राजा भुवि भूतो भविष्यति ।।

राज्यं भोक्तुं त्वयाज्ञायि युक्तं यत्तु मुमुक्षसि ।। ७५ ।।

विरोधेपि हि देवानां त्वया नापकृतं क्वचित् ।।

धर्मेतरप्रवेशश्च तव राष्ट्रेपि नोभवत् ।। ७६ ।।

प्रवर्तिताभिर्भवता प्रजाभिर्यदनुष्ठितम् ।।

धर्मे धर्मं स्वधर्मज्ञ तेन तृप्ता दिवौकसः ।। ७७ ।।

एक एव हि ते दोषो हृदि मे प्रतिभासते ।।

काश्या विश्वेश्वरो दूरं यत्कृतो भवता किल ।। ७८ ।।

महांतमपराधं ते जाने भूजानि सत्तम ।।

इमं तत्पापशांत्यै च वच्म्युपायं महत्तरम् ।। ७९ ।।

संख्यास्ति यावती देहे देहिनो रोमसंभवा ।।

तावतोप्यपराधा वै यांति लिंग प्रतिष्ठया ।। 4.2.58.१८० ।।

एकं प्रतिष्ठितं येन लिंगमत्रेशभक्तितः ।।

तेनात्मना समं विश्वं जगदेतत्प्रतिष्ठितम् ।। ८१ ।।

रत्नाकरे रत्नसंख्या संख्याविद्भिरपीष्यते ।।

लिंगप्रतिष्ठा पुण्यस्य न तु संख्येति लिख्यते ।। ८२ ।।

तस्मात्सर्वप्रयत्नेन कुरु लिंगं प्रतिष्ठितम् ।।

तया लिंग प्रतिष्ठित्या कृतकृत्यो भविष्यसि ।।८३।।

इत्युक्त्वा ब्राह्मणो दध्यौ क्षणं निश्चलमानसः ।।

उवाच च प्रहृष्टास्यो राजानं पाणिना स्पृशन् ।। ८४ ।।

।। श्रीविष्णुरुवाच ।। ।।

अन्यच्च किंचित्पश्यामि भूपाल ज्ञानचक्षुषा ।।

शृणुष्वावहितो भूत्वा तदपि प्राज्ञसत्तम ।। ८५ ।।

धन्योसि कृतकृत्योसि मान्योसि महतामपि ।।

जप्यं च तव नामेह प्रातः शुभफलेप्सुना ।। ।। ८६ ।।

दिवोदास त्वदभ्याशादपि धन्यतरा वयम् ।।

तेपि धन्यतरा मर्त्ये ये त्वदाख्यां प्रचक्षते ।।८७।।

स्मायं स्मायं जगौ विप्रो मौलिमांदोलयन्मुहुः ।।

हृद्येव बहुशो हृष्टः संप्रहृष्टतनूरुहः ।। ८८ ।।

अहो भाग्योदयश्चास्य अहो नैर्मल्यमस्य वै ।।

यदेनमनिशं ध्यायेद्ध्येयो विश्वेश्वरोऽखिलैः ।। ८९ ।।

अहो उदर्क एतस्य न कैश्चित्प्रतिपद्यते ।।

अस्माकमपि यद्दूरमदवीयस्तदस्य यत् ।। 4.2.58.१९० ।।

हृद्यालोच्येति विप्रोथ वर्णयित्वा क्षितीश्वरम् ।।

आविश्चकार तत्सर्वं यत्समाधावलोकयत् ।। ९१ ।।

।। ब्राह्मण उवाच ।। ।।

राजंस्तवाद्य फलितो मनोरथ महाद्रुमः ।।

अनेनैव शरीरेण त्वं गतासि परं पदम् ।। ९२ ।।

यथा विश्वेश्वरो नित्यं त्वामेव हृदि शीलयेत् ।।

तथास्मदादीनपि न द्विजांस्तत्पादलोचनान् ।। ९३ ।।

कृतलिंगप्रतिष्ठं त्वां सप्तमे ह्यद्य वासरात् ।।

दिव्यविमानमागत्य नेतुमेष्यति शांभवम् ।। ९४ ।।

राजंस्त्वं वेत्सि कस्यायं विपाकः सुकृतस्य ते ।।

वाराणस्याः पुरः सम्यक्सेवनादित्यवैम्यहम् ।। ९५ ।।

एकमप्यत्र यः पायाद्वाराणस्यां स्थितं जनम् ।।

तस्याप्येवं विपाकोस्ति देहांते राजसत्तम ।। ९६ ।।

इति श्रुत्वा स राजर्षिर्दिवोदासः प्रतापवान् ।।

ब्राह्मणाय सशिष्याय प्रादात्प्रीतोभिवांछितम् ।।९७।।

अथ संप्रीणितं विप्रं प्रणम्य च मुहुर्मुहुः ।।

प्रोवाच राजा संहृष्टस्तारितोस्मि भवार्णवात् ।।९८।।

ब्राह्मणोपि प्रहृष्टात्मा परिपूर्णमनोरथः ।।

समापृच्छ्य महीनाथं स्वेष्टं देशं जगाम ह।।९९।।

विलोक्य काशीं परितो मायाद्विजवपुर्हरिः।।

भूयोभूयो विचार्यापि किमत्रातीव पावनम्।।4.2.58.२००।।

स्थानं यच्चाहमध्यास्य निजभक्तानशेषतः ।।

नेष्यामि परमं धाम विश्वेशानुग्रहात्परात्।।१।।

संप्रधार्येति भगवान्दृष्ट्वा पांचनदं ह्रदम्।।

तत्र कृत्वा विधिस्नानं ततस्तत्रैव संस्थितः।।२।।

प्रतीक्षमाणो लक्ष्मीशो मंक्षुत्र्यक्षसमागमम् ।।

तार्क्ष्यं प्रस्थापयांचक्रे राजवृत्तांतवेदिनम् ।। ३ ।।

दिवोदासोपि राजेंद्रो विप्रेंद्रं परिवर्णयन् ।।

आहूय प्रकृतीः सर्वाः सामात्यान्मंडलेश्वरान् ।। ४ ।।

अध्यक्षानपि सर्वांश्च कोशाश्वेभादिदेशितान् ।।

पुत्रान्पंचशतं प्राग्र्यं सुतं च समरंजयम् ।। ५ ।।

पुरोहितं प्रतीहारमृत्विजोगणकान्द्विजान् ।।

सामंतान्राजपुत्रांश्च सूपकारांश्चिकित्सकान् ।। ६ ।।

वैदेशिकानपि बहून्नानाकार्यसमागतान् ।। सांतपुरां च महिषीं वृद्धगोपालबालकान् ।। ७ ।।

सर्वान्प्रोवाच हृष्टात्मा प्रबद्धकरसंपुटः ।।

यथा स ब्राह्मणः प्राह दिनसप्तावधि स्थितिम् ।। ८ ।।

आश्चर्यं तेषु शृण्वत्सु विषण्णवदनेषु च ।।

स्वयं राजगृहं नीत्वा कुमारं समरंजयम् ।। ९ ।।

अभिषिच्य महाबुद्धिः पौराञ्जानपदानपि ।।

प्रसादीकृत्य पुण्यात्मा पुनः काशीमगान्नृपः ।। 4.2.58.२१० ।।

आगत्य काशीं मेधावी स भूपालो रिपुंजयः ।।

प्रासादं कारयामास स्वर्धुन्याः पश्चिमे तटे ।। ११ ।।

रिपून्प्रमथ्य समरे यावती श्रीरुपार्जिता ।।

तावत्या स हि भूपालः शिवालयमचीक्लृपत् ।। १२ ।।

भूपाललक्ष्मीरखिला यत्तत्र विनियोजिता ।।

भूपालश्रीरिति ख्याता ततः साभूरभूच्छुभा ।। ।। १३ ।।

दिवोदासेश्वरं लिंगं प्रतिष्ठाप्य रिपुंजयः ।।

कृतकृत्यमिवात्मानममन्यत नरेश्वरः ।। १४ ।।

अथैकस्मिन्दिने राजा तल्लिंगं विधिपूर्वकम् ।।

समभ्यर्च्य नमस्कृत्य यावत्तुष्टाव तुष्टिदम् ।। १५ ।।

तावन्नभोंगणादाशु दिव्यं यानमवातरत् ।।

पार्षदैः परितः कीर्णं शूलखट्वांगपाणिभिः ।। १६ ।।

अत्यादित्याग्नितेजोभिर्भालनेत्रैः कपर्दिभिः ।।

शुद्धस्फटिकसंकाशैरंगैर्दीप्तनभोगणैः ।। १७ ।।

विभूषाहि फणारत्न ज्योतिः पूजित विग्रहैः ।।

नित्यप्रकाशसंत्रस्त तमःश्रित शिरोधरैः ।। १८ ।।

चामरव्यग्रहस्ताग्र रुद्रकन्याशतावृतम् ।।

अथ पारिषदै राजा दिव्यस्रगनुलेपनैः ।।१९।।

दिव्यैर्दुकूलनेपथ्यैरलंचक्रे मुदान्वितैः ।।

त्रिनेत्रीकृतसद्भाल श्यामीकृतशिरोधरम् ।। 4.2.58.२२० ।।

सुगौरीकृतसर्वांगं कपर्दीकृत मौलिजम् ।।

चतुर्भुजीकृततनुं भूषणीकृतपन्नगम् ।। २१ ।।

चंद्रार्धीकृतमूर्धानं निन्युस्तं पार्षदा दिवम्।। २२ ।।

तदा प्रभृति तत्तीर्थं भूपालश्रीरिति श्रुतम् ।।

तत्र श्राद्धादिकं कृत्वा दानं दत्त्वा स्वशक्तितः ।। २३ ।।

दिवोदासेश्वरं दृष्ट्वा समभ्यचर्य च भक्तितः ।।

राज्ञश्चाख्यायिकां श्रुत्वा न नरो गर्भमाविशेत् ।। २४ ।।

आख्यानमेतन्नृपतेर्दिवोदासस्य पावनम् ।।

पठित्वा पाठयित्वापि नरः पापैः प्रमुच्यते ।। २५ ।।

दिवोदासशुभाख्यानं श्रुत्वा यः समरं विशेत् ।।

न जातु जायते तस्य भयं वैरिकृतं क्वचित् ।। २६ ।।

दिवोदास कथा पुण्या महोत्पात निकृंतनी ।।

पठनीया प्रयत्नेन सर्वविघ्नोपशांतये ।। २७ ।।

नावृष्टिर्जायते तत्र नाकालमरणाद्भयम् ।।

दैवोदासी कथा यत्र सर्वपातकनाशिनी ।। २८ ।।

अस्याख्यानस्य पठनाद्विष्णोरिव मनोरथाः ।।

संपूर्णतां गमिष्यंति शंभोश्चिंतितकारिणः ।।२२९।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्द्धे दिवोदासनिर्वाणप्राप्तिर्नामाष्टपंचाशत्तमोऽध्यायः ।।५८।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०५९

https://sa.wikisource.org/s/fwi
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

अगस्त्य उवाच ।। ।।

सर्वज्ञ हृदयानंद गौरीचुंबितमूर्धज ।।

तारकांतक षड्वक्त्र तारिणे भद्रकारिणे ।। ।। १ ।।

सर्वज्ञाननिधे तुभ्यं नमः सर्वज्ञसूनवे ।।

सर्वथा जितमाराय कुमाराय महात्मने ।।२।।

कामारिमर्धनारीशं वीक्ष्य कामकृतं किल ।।

यो जिगाय कुमारोपि मारं तस्मै नमोस्तु ते ।। ३ ।।

यदुक्तं भवता स्कंद मायाद्विजवपुर्हरिः ।।

काश्यां पंचनदं तीर्थमध्यासातीव पावनम्।। ४ ।।

भूर्भुवःस्वः प्रदेशेषु काशीपरमपावनम्।।

तत्रापि हरिणाज्ञायि तीर्थं पंचनदं परम् ।। ५ ।।

कुतः पंचनदं नाम तस्य तीर्थस्य षण्मुख ।।

कुतश्च सर्वतीर्थेभ्यस्तदासीत्पावनं परम् ।। ६ ।।

कथं च भगवान्विष्णुरंतरात्मा जगत्पतिः ।।

सर्वेषां जगतां पाता कर्ता हर्ता च लीलया ।। ७ ।।

अरूपो रूपमापन्नो ह्यव्यक्तो व्यक्ततां गतः ।।

निराकारोपि साकारो निष्प्रपंचः प्रपंचभाक् ।। ८ ।।

अजन्मानेकजन्मा च त्वनामास्फुटनामभृत्।।

निरालंबोऽखिलालंबो निर्गुणोपि गुणास्पदम् ।। ९ ।।

अहृषीकोहृषीकेशो प्यनंघ्रिरपिसर्वगः ।।

उपसंहृत्य रूपं स्वं सर्वव्यापी जनार्दनः ।। 4.2.59.१० ।।

स्थितः सर्वात्मभावेन तीर्थे पंचनदे परे ।।

एतदाख्याहि षड्वक्त्र पंचवक्त्राद्यथा श्रुतम् ।।१ ३।।

स्कंद उवाच ।। ।।

कथयामि कथामेतां नमस्कृत्य महेश्वरम् ।।

सर्वाघौघ प्रशमनीं सर्वश्रेयोविधायिनीम् ।। ३२ ।।

यथा पंचनदं तीर्थं काश्यां प्रथितिमागतम् ।।

यन्नामग्रहणादेव पापं याति सहस्रधा ।। १३ ।।

प्रयागोपि च तीर्थेशो यत्र साक्षात्स्वयं स्थितः ।।

पापिनां पापसंघातं प्रसह्य निजतेजसा ।। १४ ।।

हरंति सर्वतीर्थानि प्रयागस्य बलेन हि ।।

तानि सर्वाणि तीर्थानि माघे मकरगे रवौ ।। १५ ।।

प्रत्यब्दं निर्मलानि स्युस्तीर्थराज समागमात् ।।

प्रयागश्चापि तीर्थेंद्रः सर्वतीर्थार्पितं मलम् ।। १६ ।।

महाघिनां महाघं च हरेत्पांचनदाद्बलात् ।।

यं संचयति पापौघमावर्षं तीर्थनायकः ।।

तमेकमज्जनादूर्जे त्यजेत्पंचनदे ध्रुवम् ।। १७ ।।

यथा पंचनदोत्पत्तिस्तथा च कथयाम्यहम् ।।

निशामय महाभाग मित्रावरुणनंदन ।। १८ ।।

पुरा वेदशिरा नाम मुनिरासीन्महातपाः ।।

भृगुवंश समुत्पन्नो मूर्तो वेद इवापरः ।। १९ ।।

तपस्यतस्तस्य मुनेः पुरोदृग्गोचरं गता ।।

शुचिरप्सरसां श्रेष्ठा रूपलावण्यशालिनी ।। 4.2.59.२० ।।

तस्या दर्शनमात्रेण परिक्षुब्धं मुनेर्मनः ।।

चस्कंद स मुनिस्तूर्णं साथ भीता वराप्सराः ।। २१ ।।

दूरादेव नमस्कृत्य तमृषिं साभ्यभाषत ।।

अतीव वेपमानांगी शुचिस्तच्छापभीतितः ।। २२ ।।

नापराध्नोम्यहं किंचिन्महोग्रतपसांनिधे ।।

क्षंतव्यं मे क्षमाधार क्षमारूपास्तपस्विनः ।। २३ ।।

मुनीनां मानसं प्रायो यत्पद्मादपि तन्मृदु ।।

स्त्रियः कठोरहृदयाः स्वरूपेणैव सत्तम ।। २४ ।।

इति श्रुत्वा वचस्तस्याः शुचेरप्सरसो मुनिः ।।

विवेकसेतुना स्तंभीन्महारोषनदीरयम् ।। २५ ।।

उवाच च प्रसन्नात्मा शुचे शुचिरसि ध्रुवम् ।।

न मेऽल्पोपि हि दोषोत्र न ते दोषोस्ति सुंदरि ।। ।। २६ ।।

वह्निस्वरूपा ललना नवनीत समः पुमान् ।।

अनभिज्ञा वदंतीति विचारान्महदंतरम् ।। २७ ।।

स्निह्येदुद्धृतसारोपि वह्नेः संस्पर्शमाप्य वै ।।

चित्रं स्त्र्याख्या समादानात्पुमान्स्निह्यति दूरतः ।। २८ ।।

अतः शुचे न भेतव्यं त्वया शुचि मनोगते ।।

अतर्कितोपस्थितया त्वया च स्खलितं मया ।। २९ ।।

स्खलनान्न तथा हानिरकामात्तपसो मुनेः ।।

यथा क्षणांधीकरणाद्धानिः कोपरयादरेः ।। 4.2.59.३० ।।

कोपात्तपः क्षयं याति संचितं यत्सुकृच्छ्रतः ।।

यथाभ्रपटलं प्राप्य प्रकाशः पुष्पवंतयोः ।। ३१ ।।

अनर्थकारिणः क्रोधात्क्वार्थानांपरिजृंभणम् ।।

क्व वा खलजनोत्सेधात्साधूनां परिवर्धनम् ।। ३२ ।।

अमर्षे कर्षति मनो मनोभू संभवः कुतः ।।

विधुंतुदे तुदत्युच्चैर्विधुं कुत्रास्ति कौमुदी ।। ३३ ।।

ज्वलतो रोषदावाग्नेः क्व वा शांतितरोः स्थितिः ।।

दृष्टा केनापि किं क्वापि सिंहात्कलभसुस्थता ।। ३४ ।।

तस्मात्सर्वप्रयत्नेन प्रतीपः प्रतिघातुकः ।।

चतुर्वर्गस्य देहस्य परिहेयो विपश्चिता ।। ३५ ।।

इदानीं शृणु कल्याणि कर्तव्यं यत्त्वया शुचे ।।

अमोघबीजा हि वयं तद्बीजमुररी कुरु ।। ३६ ।।

एतस्मिन्नक्षिते वीर्ये परिस्कन्ने त्वदीक्षणात् ।। त्वया तव भवित्रेकं कन्यारत्नं महाशुचि ।। ३७ ।।

इत्युक्ता तेन मुनिना पुनर्जातेव साप्सराः ।।

महाप्रसाद इत्युक्त्वा मुनेः शुक्रमजीगिलत् ।। ३८ ।।

अथ कालेन दिव्यस्त्री कन्यारत्नमजीजनत् ।।

अतीव नयनानंदि निधानं रूपसंपदाम् ।। ३९ ।।

तस्यैव वेदशिरस आश्रमे तां निधाय सा ।।

शुचिरप्सरसां श्रेष्ठा जगाम च यथेप्सितम् ।।4.2.59.४०।।

तां च वेदशिराः कन्यां स्नेहेन समवर्धयत् ।।

क्षीरेण स्वाश्रमस्थाया हरिण्या हरिणीक्षणाम् ।।४१।।

मुनिर्नाम ददौ तस्यै धूतपापेति चार्थवत् ।।

यन्नामोच्चारणेनापि कंपते पातकावली ।।४२।।

सर्वलक्षणशोभाढ्यां सर्वावयव सुंदरीम् ।।

मुनिस्तत्याज नोत्संगात्क्षणमात्रमपि क्वचित् ।। ४३ ।।

दिनेदिने वर्धमानां तां पश्यन्मुमुदे भृशम् ।।

क्षीरनीरधिवद्रम्यां निशि चांद्रमसीं कलाम् ।। ४४ ।।

अथाष्टवार्षिकीं दृष्ट्वा तां कन्यां स मुनीश्वरः ।।

कस्मै देयेति संचित्य तामेव समपृच्छत ।। ४५।।

।। वेदशिरा उवाच ।। ।।

अयि पुत्रि महाभागे धूतपापे शुभेक्षणे ।।

कस्मै दद्यावराय त्वां त्वमेवाख्याहि तं वरम् ।। ४६ ।।

अतिस्नेहार्द्रचित्तस्य जनेतुश्चेति भाषितम् ।।

निशम्य धूतपापा सा प्रोवाच विनताननना ।। ४७ ।।

।। धूतपापोवाच।। ।।

जनेतर्यद्यहं देया सुंदराय वराय ते ।।

तदा तस्मै प्रयच्छ त्वं यमहं कथयामि ते ।। ४८ ।।

तुभ्यं च रोचते तात शृणोत्ववहितो भवान् ।।

सर्वेभ्योतिपवित्रो यो यः सर्वेषां नमस्कृतः ।। ४९ .।।

सर्वे यमभिलष्यंति यस्मात्सर्वसुखोदयः ।।

कदाचिद्यो न नश्येत यः सदैवानुवर्तते ।। 4.2.59.५० ।।

इहामुत्रापि यो रक्षेन्महापदुदयाद्ध्रुवम् ।।

सर्वे मनोरथा यस्मात्परिपूर्णा भवंति हि ।। ५१ ।।

दिनेदिने च सौभाग्यं वर्धते यस्य सन्निधौ ।।

नैरंतर्येण यत्सेवां कुर्वतो न भयं क्वचित् ।। ५२ ।।

यन्नामग्रहणादेव केपि वाधां न कुर्वते ।।

यदाधारेण तिष्ठंति भुवनानि चतुर्दश ।। ५३ ।।

एवमाद्या गुणा यस्य वरस्य वरचेष्टितम् ।।

तस्मै प्रयच्छ मां तात मम तेपीहशर्मणे ।। ५४ ।।

एतच्छ्रुत्वापि ता तस्या भृशं मुदमवाप ह ।।

धन्योस्मि धन्या मे पूर्वे येषामैषा सुतान्वये ।। ५५ ।।

ध्रुवा हि धूतपापासौ यस्या ईदृग्विधा मतिः ।।

ईदृग्विधैर्गुणगणैर्गरिम्णा कोत्र वै भवेत् ।। ५६ ।।

अथवा स कथं लभ्यो विना पुण्यभरोदयम् ।।

इति क्षणं समाधाय मनः स मुनिपुंगवः ।। ५७ ।।

ज्ञानेन तं समालोच्य वरमीदृग्गुणोदयम् ।।

धन्यां कन्यां बभाषेथ शृणु वत्से शुभैषिणि ।। ५८ ।।

।। पितोवाच ।। ।।

वरस्य ये त्वया प्रोक्ता गुणा एते विचक्षणे ।।

एषां गुणानामाधारो वरोस्तीति विनिश्चितम् ।। ५९ ।।

परं स सुखलभ्यो न नितरां सुभगाकृतिः ।।

तपः पणेन स क्रय्यः सुतीर्थविपणौ क्वचित् ।। 4.2.59.६० ।।

तीर्थभारैः स सुलभो न कौलीन्येन कन्यके ।।

न वेदशास्त्राभ्यसनैर्न चैश्वर्यबलेन वै ।। ६१ ।।

न सौंदर्येण वपुषा न बुद्ध्या न पराक्रमैः ।।

एकयैव मनः शुद्ध्या करणानां जयेन च ।। ६२ ।।

महातपः सहायेन दमदानदयायुजा ।।

लभ्यते स महाप्राज्ञो नान्यथा सदृशः पतिः ।। ६३ ।।

इति श्रुत्वाथ सा कन्या पितरं प्रणिपत्य च ।।

अनुज्ञां प्रार्थयामास तपसे कृतनिश्चया ।। ६४ ।।

।। स्कंद उवाच ।। ।।

कृतानुज्ञा जनेत्रा सा क्षेत्रे परमपावने ।।

तपस्तताप परमं यदसाध्यं तपस्विभिः ।। ६५ ।।

क्व सा बालातिमृद्वंगी क्व च तत्तादृशं तपः ।।

कठोरवर्ष्मसंसाध्यमहो सच्चेतसो धृतिः ।। ६६ ।।

धारासारा सुवर्षासु महावातवतीष्वलम् ।।

शिलासु सावकाशासु सा बह्वीरनयन्निशाः ।। ६७ ।।

श्रुत्वा गर्जरवं घोरं दृष्ट्वा विद्युच्चमत्कृतीः ।।

आसारसीकरैः क्लिन्ना न चकंपे मनाक्च सा ।। ६८ ।।

तडित्स्फुरंतीत्वसकृत्तमिस्रासु तपोवने ।।

यातायातं करोतीव द्रष्टुं तत्तपसः स्थितिम् ।।६९।।

तपर्तुरेव साक्षाच्च कुमारी कैतवात्किल।।

पंचाग्नीन्परिधायात्र तपस्यति तपोवने।।4.2.59.७०।।

जलाभिलाषिणी बाला न मनागपि सा पिबत्।।

कुशाग्रतोयपृषतं पंचाग्निपरितापिता।।७१।।

रोमांच कंचुकवती वेपमानतनुच्छदा।।

पर्यक्षिपत्क्षपाः क्षामा तपसा हैमनीश्च सा ।।७२।।

निशीथिनीषु शिशिरे श्रयंती सारसं रसम् ।।

मेने सा सारसैः केयमुद्यतायेति पद्मिनी ।। ७३ ।।

मनस्विनामपि मनोरागतां सृजते मधौ ।।

तदोष्ठपल्लवाद्रागो जह्रे माकंदपल्लवैः ।। ७४ ।।

वसंते निवसंती सा वने बालाचलंमनः ।।

चक्रे तपस्यपि श्रुत्वा कोकिला काकलीरवम् ।। ७५ ।।

बंधुजीवेऽधररुचिं कलहंसे कलागतीः ।।

निक्षेपमिव सा क्षिप्त्वा शरद्यासीत्तपोरता।। ७६ ।।

अपास्तभोगसंपर्का भोगिनां वृत्तिमाश्रिता ।।

क्षुदुद्बोधनिरोधाय धूतपापा तपस्विनी ।। ।। ७७ ।।

शाणेन मणिवल्लीढा कृशाप्यायादनर्घताम् ।।

तथापि तपसा क्षामा दिदीपे तत्तनुस्तराम् ।। ७८ ।।

निरीक्ष्य तां तपस्यंतीं विधिः संशुद्धमानसाम् ।।

उपेत्योवाच सुप्रज्ञे प्रसन्नोस्मि वरं वृणु ।। ७९ ।।

सा चतुर्वक्त्रमालोक्य हंसयानोपरिस्थितम् ।।

प्रणम्य प्रांजलिः प्रीता प्रोवाचाथ प्रजापतिम् ।। 4.2.59.८० ।।

।। धूतपापोवाच ।। ।।

पितामह वरो मह्यं यदि देयो वरप्रद ।।

सर्वेभ्यः पावनेभ्योपि कुरु मामतिपावनीम् ।। ८१ ।।

स्रष्टा तदिष्टमाकर्ण्य नितरां तुष्टमानसः ।।

प्रत्युवाचाथ तां बालां विमलां विमलेषिणीम् ।। ८२ ।।

।। ब्रह्मोवाच ।। ।।

धूतपापे पवित्राणि यानि संत्यत्र सर्वतः ।।

तेभ्यः पवित्रमतुलं त्वमेधि वरतो मम ।। ८३ ।।

तिस्रः कोट्योऽर्धकोटी च संति तीर्थानि कन्यके ।।

दिवि भुव्यंतरिक्षे च पावनान्युत्तरोत्तरम् ।। ८४ ।।

तानि सर्वाणि तीर्थानि त्वत्तनौ प्रतिलोम वै ।।

वसंतु मम वाक्येन भव सर्वातिपावनी ।। ८५ ।।

इत्युक्त्वांतर्दधे वेधाः सापि निर्धूतकल्मषा ।।

धूतपापोटजं प्राप्ताथो वेदशिरसः पितुः ।। ८६ ।।

कदाचित्तां समालोक्य खेलंतीमुटजाजिरे ।।

धर्मस्तत्तपसाकृष्टः प्रार्थयामास कन्यकाम् ।। ८७ ।।

।।धर्म उवाच ।। ।।

पृथुश्रोणि विशालाक्षि क्षामोदरि शुभानने ।।

क्रीतः स्वरूपसंपत्त्या त्वयाहं देहि मे रहः ।। ८८ ।।

नितरां बाधते कामस्त्वत्कृते मां सुलोचने ।।

अज्ञातनाम्ना सा तेन प्रार्थितेत्यसकृद्ग्रहः ।। ८९ ।।

उवाच सा पिता दाता तं प्रार्थय सुदुर्मते ।।

पितृप्रदेया यत्कन्या श्रुतिरेषा सनातनी ।। 4.2.59.९० ।।

निशम्येति वचो धर्मो भाविनोर्थस्य गौरवात् ।।

पुनर्निबंधयांचक्रे ऽपधृतिर्धृतिशालिनीम् ।। ९१ ।।

।। धर्म उवाच ।। ।।

न प्रार्थयेहं सुभगे पितरं तव सुंदरि ।।

गांधर्वेण विवाहेन कुरु मे त्वं समीहितम् ।। ९२ ।।

इति निर्बंधवद्वाक्यं सा निशम्य कुमारिका ।।

पितुः कन्याफलंदित्सुः पुनराहेति तं द्विजम् ।। ९३ ।।

अरे जडमते मा त्वं पुनर्ब्रूहीति याह्यतः ।।

इत्युक्तोपि कुमार्या स नातिष्ठन्मदनातुरः ।। ९४ ।।

ततः शशाप तं बाला प्रबला तपसो बलात् ।।

जडोसि नितरां यस्माज्जलाधारो नदो भव ।। ९५ ।।

इति शप्तस्तया सोथ तां शशाप क्रुधान्वितः ।।

कठोरहृदये त्वं तु शिला भव सुदुर्मते ।। ९६ ।।

।। स्कंद उवाच ।। ।।

इत्यन्योन्यस्य शापेन मुने धर्मो नदोऽभवत् ।।

अविमुक्ते महाक्षेत्रे ख्यातो धर्मनदो महान् ।। ९७ ।।

साप्याह पितरं त्रस्ता स्वशिलात्वस्य कारणम्।।

ध्यानेन धर्मं विज्ञाय मुनिः कन्यामथाब्रवीत् ।। ९८ ।।

मा भैः पुत्रि करिष्यामि तव सर्वं शुभोदयम् ।।

तच्छापो नान्यथा भूयाच्चंद्रकांतशिला भव ।। ९९ ।।

चंद्रोदयमनुप्राप्य द्रवीभूततनुस्ततः ।।

धुनी भव सुते साध्वि धूतपापेति विश्रुता ।। 4.2.59.१०० ।।

स च धर्मनदः कन्ये तव भर्ता सुशोभनः ।।

तैर्गुणैः परिपूर्णांगो ये गुणाः प्रार्थितास्त्वया ।। १ ।।

अन्यच्च शृणु सद्बुद्धे ममापि तपसो बलात् ।।

द्वैरूप्यं भवतोर्भावि प्राकृतं च द्रवं च वै ।। २ ।।

इत्याश्वास्य पिता कन्यां धूतपापां परंतप ।।

चंद्रकांतशिलाभूतामनुजग्राह बुद्धिमान् ।।३।।

तदारभ्य मुने काश्यां ख्यातो धर्मनदो ह्रदः ।।

धर्मो द्रवस्वरूपेण महापातकनाशनः ।। ४ ।।

धुनी च धूतपापा सा सर्वतीर्थमयी शुभा ।।

हरेन्महाघसंघातान्कूलजानिव पादपान् ।। ।। ५ ।।

तत्र धर्मनदे तीर्थे धूतपापा समन्विते ।।

यदा न स्वर्धुनी तत्र तदा ब्रध्नस्तपो व्यधात् ।। ६ ।।

गभस्तिमाली भगवान्गभस्तीश्वर सन्निधौ ।।

शीलयन्मंगलां गौरीं तप उग्रं चचार ह ।। ७ ।।

नाम्ना मयूखादित्यस्य तीर्थे तत्र तपस्यतः ।।

किरणेभ्यः प्रववृते महास्वेदोतिखेदतः ।। ८ ।।

किरणेभ्यः प्रवृत्ताया महास्वेदस्य संततिः ।।

ततः सा किरणानाम जाता पुण्या तरंगिणी।।९।।

महापापांधतमसं किरणाख्या तरंगिणी।।

ध्वंसयेत्स्नानमात्रेण मिलिता धूतपापया ।।4.2.59.११०।।

आदौ धर्मनदः पुण्यो मिश्रितो धूतपापया ।।

यया धूतानि पापानि सर्वतीर्थीकृतात्मना ।। ११ ।।

ततोपि मिलितागत्य किरणा रविणैधिता ।।

यन्नामस्मरणादेव महामोहोंधतां व्रजेत्।।१२।।

किरणा धूतपापे च तस्मिन्धर्मनदे शुभे ।।

स्रवंत्यौ पापसंहर्त्र्यौ वाराणस्यां शुभद्रवे ।। १३ ।।

ततो भागीरथी प्राप्ता तेन दैलीपिना सह ।।

भागीरथी समायाता यमुना च सरस्वती ।। १४ ।।

किरणा धूतपापा च पुण्यतोया सरस्वती ।।

गंगा च यमुना चैव पंचनद्योत्र कीर्तिताः ।। १५ ।।

अतः पंचनदं नाम तीर्थं त्रैलोक्यविश्रुतम् ।।

तत्राप्लुतो न गृह्णीयाद्देहं ना पांचभौतिकम् ।। १६ ।।

अस्मिन्पंचनदीनां च संभेदेघौघभेदिनि ।।

स्नानमात्रात्प्रयात्येव भित्त्वा ब्रह्मांडमंडपम् ।। १७ ।।

तीर्थानि संति भूयांसि काश्यामत्र पदेपदे ।।

न पंचनदतीर्थस्य कोट्यंशेन समान्यपि ।। १८ ।।

प्रयागे माघमासे तु सम्यक्स्नातस्य यत्फलम् ।।

तत्फलं स्याद्दिनैकेन काश्यां पंचनदे ध्रुवम् ।। १९ ।।

स्नात्वा पंचनदे तीर्थे कृत्वा च पितृतर्पणम् ।।
बिंदुमाधवमभ्यर्च्य न भूयो जन्मभाग्भवेत् ।। 4.2.59.१२० ।।
यावत्संख्यास्तिलादत्ताः पितृभ्यो जलतर्पणे ।।
पुण्ये पंचनदे तीर्थे तृप्तिः स्यात्तावदाब्दिकी ।। २१ ।।
श्रद्धया यैः कृतं श्राद्धं तीर्थे पंचनदे शुभे ।।
तेषां पितामहा मुक्ता नानायोनि गता अपि ।। २२ ।।
यमलोके पितृगणैर्गाथेयं परिगीयते ।।
महिमानं पांचनदं दृष्ट्वा श्राद्धविधानतः ।।२३।।
अस्माकमपि वंश्योत्र कश्चिच्छ्राद्धं करिष्यति ।।
काश्यां पंचनदं प्राप्य येन मुच्यामहे वयम्।। २४ ।।
इयं गाथा प्रतिदिनं श्राद्धदेवस्य सन्निधौ ।।
पितृभिः परिगीयेत काश्यां पंचनदं प्रति ।। २५ ।।
तत्र पंचनदे तीर्थे यत्किंचिद्दीयते वसु ।।
कल्पक्षयेपि न भवेत्तस्य पुण्यस्य संक्षयः ।।२६।।
वंध्यापि वर्षपर्यंतं स्नात्वा पंचनदे ह्रदे ।।
समर्च्य मंगलां गौरीं पुत्रं जनयति ध्रुवम् ।। २७ ।।
जलैः पांचनदैः पुण्यैर्वाससा पारिशोधितैः ।।
महाफलमवाप्नोति स्नपयित्वेष्टदेवताम् ।। २८ ।।
पंचामृतानां कलशैरष्टोत्तरशतोन्मितैः ।।
तुलितोधिकतां यातो बिंदुः पंचनदांभसः ।।२९।।
पंचकूर्चेन पीतेन यात्र शुद्धिरुदाहृता ।।
सा शुद्धिः श्रद्धया प्राश्य बिंदुं पांचनदांभसः ।। 4.2.59.१३० ।।
भवेदवभृथस्नानाद्राजसूयाश्वमेधयोः ।।
यत्फलं तच्छतगुणं स्नानात्पांचनदांभसा ।।३१।।
राजसूयाश्वमेधौ च भवेतां स्वर्गसाधनम् ।।
आब्रह्मघटिकाद्वंद्वं मुक्त्यै पांचनदाप्लुतिः ।।३२।।
स्वर्गराज्याभिषेकोपि न तथा संमतः सताम् ।।
अभिषेकः पांचनदो यथानल्पसुखप्रदः ।।३३।।

वरं वाराणसीं प्राप्य भृत्यः पंचनदोक्षिणाम् ।।

नान्यत्र सेवकीभूत भूपकोटिर्नरेश्वरः ।। ३४ ।।

यैर्न पंचनदे स्नातं कार्तिके पापहारिणि ।।

तेऽद्यापि गर्भे तिष्ठंति पुनस्ते गर्भवासिनः ।। ३५ ।।

कृते धर्मनदं नाम त्रेतायां धूतपापकम् ।।

द्वापरे बिंदुतीर्थं च कलौ पंचनदं स्मृतम्।। ३६ ।।

शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम् ।।

तत्कार्तिके पंचनदे सकृत्स्नानेन लभ्यते ।। ३७ ।।

इष्टापूर्तेषु धर्मेषु यावजन्मकृतेषु यत् ।।

अन्यत्र स्यात्फलं तत्स्यादूर्जे धर्मनदाप्लवात् ।। ३८ ।।

न धूतपाप सदृशं तीर्थं क्वापि महीतले ।।

यदेकस्नानतो नश्येदघं जन्मत्रयार्जितम् ।। ३९ ।।

बिंदुतीर्थे नरो दत्त्वा कांचनं कृष्णलोन्मितम् ।।

न दरिद्रो भवेत्क्वापि न स्वर्णेन वियुज्यते ।। 4.2.59.१४० ।।

गोभूतिलहिरण्याश्व वासोन्नस्रग्विभूषणम् ।।

यत्किंचिद्बिंदुतीर्थेत्र दत्त्वाक्षयमवाप्नुयात् ।। ४१ ।।

एकामप्याहुतिं दत्त्वा समिद्धेग्नौ विधानतः ।।

पुण्ये धर्मनदे तीर्थे कोटिहोमफलं लभेत् ।। ४२ ।।

न पंचनदतीर्थस्य महिमानमनंतकम् ।।

कोपि वर्णयितुं शक्तश्चतुर्वर्ग शुभौकसः ।। ४३ ।।

श्रुत्वाख्यानमिदं पुण्यं श्रावयित्वापि भक्तितः ।।

सर्वपापविशुद्धात्मा विष्णुलोके महीयते ।। ४४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे पंचनदाविर्भावो नामैकोनषष्टितमोऽध्यायः ।। ५९ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६०

https://sa.wikisource.org/s/fwj
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

स्कंद उवाच ।।

उक्ता पंचनदोत्पत्तिर्मित्रावरुणनंदन ।।

इदानीं कथयिष्यामि माधवाविष्कृतिं पराम् ।। १ ।।

यां श्रुत्वा श्रद्धया धीमान्पापेभ्यो मुच्यते क्षणात् ।।

न च श्रिया वियुज्येत संयुज्येत वृषेण च ।। २ ।।

आगत्य मंदरादद्रेरुपेंद्रश्चंद्रशेखरम् ।।

आपृच्छय ताक्ष्र्यरथगः क्षणाद्वाराणसीं पुरीम्।। ३ ।।

दिवो दासं महीपालं समुच्चाट्य स्वमायया ।।

स्थित्वा पादोदके तीर्थे केशवाख्य स्वरूपतः ।। ४ ।।

महिमानं परं काश्यां विचार्य सुविचार्य च ।।

दृष्ट्वा पंचनदं तीर्थं परां मुदमवाप ह ।। ५ ।।

उवाच च प्रसन्नात्मा पुंडरीकविलोचनः ।।

अगण्या अपि वैकुंठ गुणा विगणिता मया ।। ६ ।।

क्व क्षीरनीरधौ संति तावंतो निर्मला गुणाः ।।

यावंतो विजयं तेत्र काश्यां पंचनदे ह्रदे ।। ७ ।।

श्वेतद्वीपेपि सामग्री क्व गुणानां गरीयसी ।।

ईदृशी यादृशी काश्यां धूतपापेस्ति पावनी ।। ८ ।।

मुदे कौमोदकी स्पर्शस्तथा न मम जायते ।। धूतपापांबु संपर्को यथा भवति सर्वथा ।। ९ ।।

न क्षीरनीरधिजया सुखं मे श्लिष्टगात्रया ।।

तथा भवेद्यथात्र स्यात्स्पृष्टया धूतपापया ।। 4.2.60.१० ।।

इत्थं पंचनदे तीर्थे क्षीरनीरधिजाधवः ।।

संप्रेष्य ताक्ष्र्यं त्र्यक्षाग्रे वृत्तांतविनिवेदितुम् ।। ११ ।।

आनंदकाननभवं दिवोदास क्षमापतेः ।।

संवर्णयन्गुणग्रामं पुण्यं पांचनदोद्भवम् ।। १२ ।।

सुखोपविष्टः संहृष्टः सुदृष्टिर्विष्टरश्रवाः ।।

दृष्टवांस्तपसा जुष्टमपुष्टांगं तपोधनम् ।। १३ ।।

स ऋषिस्तं समभ्येत्य पुंडरीकाक्षमच्युतम् ।।

उपोपविष्टकमलं वनमालाविराजितम् ।। १४ ।।

शंखपद्मगदाचक्र चंचत्करचतुष्टयम् ।।

कौस्तुभोद्भासितोरस्कं पीतकौशेयवाससम् ।। १५ ।।

सुनीलेंदीवररुचिं सुस्निग्ध मधुराकृतिम् ।।

नाभीह्रदलसत्पद्म सुपाटलरदच्छदम् ।। १६ ।।

दाडिमीबीजदशनं किरीटद्योतितांबरम् ।।

देवेंद्रवंदितपदं सनकादिपरिष्टुतम् ।। १७ ।।

दिव्यर्षिभिर्नारदाद्यैः परिगीतमहोदयम् ।।

प्रह्लादाद्यैर्भागवतैः परिनंदितमानसम् ।। १८ ।।

धृतशार्ङ्गधनुर्दंडं दंडिताखिलदानवम्।।

मधुकैटभहंतारं कंसविध्वंससूचकम्।। १९ ।।

कैवल्यं यत्परं ब्रह्म निराकारमगोचरम् ।।

तं पुं मूर्त्या परिणतं भक्तानां भक्तिहेतुतः ।।4.2.60.२०।।

वेदाविदुर्यदाकारं नैवोपनिषदोदितम्।।

ब्रह्माद्या न च गीर्वाणाश्चक्रे नेत्रातिथिं सतम् ।।२१।।

प्रणनाम मुदायुक्तः क्षितिविन्यस्तमस्तकः ।।

स ऋषिस्तं हृषीकेशमग्निबिंदुर्महातपाः ।। २२ ।।

तुष्टाव परया भक्त्या मौलिबद्धकरांजलिः ।।

अध्यस्तविस्तीर्णशिलं बलिध्वंसिनमच्युतम् ।। २३ ।।

तत्र पंचनदाभ्याशे मार्कंडेयादि सेविते ।।

गोविंदमग्निबिंदुः स स्तुतवांस्तुष्टमानसः ।। २४ ।।

।। अग्निबिंदुरुवाच ।। ।।

ओं नमः पुंडरीकाक्ष बाह्यांतः शौचदायिने ।।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।। २५ ।।

नमामि ते पदद्वंद्वं सर्वद्वंद्वनिवारकम् ।।

निर्द्वंद्वया धिया विष्णो जिष्णवादि सुरवंदित ।। २६ ।।

यं स्तोतुं नाधिगच्छंति वाचो वाचस्पतेरपि ।।
तमीष्टे क इह स्तोतुं भक्तिरत्र बलीयसी ।। २७ ।।
अपि यो भगवानीशो मनःप्राचामगोचरः ।।
समादृशैरल्पधीभिः कथं स्तुत्यो वचः परः ।। २८ ।।
यं वाचो न विशंतीशं मनतीह मनो न यम् ।।
मनो गिरामतीतं तं कः स्तोतुं शक्तिमान्भवेत् ।। २९ ।।
यस्य निःश्वसितं वेदाः स षडंगपदक्रमाः ।।
तस्य देवस्य महिमा महान्कैरवगम्यते ।। 4.2.60.३० ।।
अतंद्रितमनोबुद्धींद्रिया यं सनकादयः ।।
ध्यायंतोपि हृदाकाशे न विंदंति यथार्थतः ।। ३१ ।।
नारदाद्यैर्मुनिवरैराबाल ब्रह्मचारिभिः ।।
गीयमानचरित्रोपि न सम्यग्योधिगम्यते ।। ३२ ।।
तंसूक्ष्मरूपमजमव्ययमेकमाद्यं बह्माद्यगोचरमजेयमनंतशक्तिम् ।।
नित्यं निरामयममूर्तमचिंत्यमूर्तिं कस्त्वां चराचर चराचरभिन्न वेत्ति ।। ३३ ।।
एकैकमेव तव नामहरेन्मुरारे जन्मार्जिताघमघिनां च महापदाढ्यम् ।।
दद्यात्फलं च महितं महतो मखस्य जप्तं मुकुंदमधुसूदनमाधवेति ।। ३४ ।।
नारायणेति नरकार्णव तारणेति दामोदरेति मधुहेति चतुर्भुजेति ।।
विश्वंभरेति विरजेति जनार्दनेति क्वास्तीह जन्म जपतां क्व कृतांतभीतिः ।। ३५ ।।
ये त्वां त्रिविक्रम सदा हृदि शीलयंति कादंबिनी रुचिर रोचिषमंबुजाक्षम् ।।
सौदामनीविलसितांशुकवीतमूर्ते तेपि स्पृशंति तव कांतिमचिंत्यरूपाम् ।। ३६ ।।
श्रीवत्सलांछनहरेच्युतकैटभारे गोविंदताक्ष्र्य रथकेशवचक्रपाणे ।।
लक्ष्मीपते दनुजसूदन शार्ङ्गपाणे त्वद्भक्तिभाजि न भयंक्वचिदस्ति पुंसि ।।३७।।
यैरर्चितोसि भगवंस्तुलसीप्रसूनैर्दूरीकृतैणमदसौरभदिव्यगंधैः ।।
तानर्चयंति दिवि देवगणाःसमस्ता मंदारदामभिरलं विमलस्वभावान् ।। ३८ ।।
यद्वाचि नाम तव कामदमब्जनेत्र यच्छ्रोत्रयोस्तव कथा मधुराक्षराणि ।।
यच्चित्तभित्तिलिखितं भवतोस्ति रूपं नीरूपभूपपदवी नहि तैर्दुरापा ।। ३९ ।।
ये त्वां भजंति सततं भुविशेषशायिंस्ताञ्छ्रीपते पितृपतींद्र कुबेरमुख्याः ।।
वृंदारका दिवि सदैव सभाजयंति स्वर्गापवर्गसुखसंततिदानदक्ष ।। 4.2.60.४० ।।

ये त्वां स्तुवंति सततं दिवितान्स्तुवंति सिद्धाप्सरोमरगणा लसदब्जपाणे ।।
विश्राणयत्यखिलसिद्धिदकोविना त्वां निर्वाणचारुकमलां कमलायताक्ष ।। ४१ ।।
त्वं हंसि पासि सृजसि क्षणतः स्वलीला लीलावपुर्धर विरिंचिनतांघ्रियुग्म।।
विश्वं त्वमेव परविश्वपतिस्त्वमेव विश्वस्यबीजमसि तत्प्रणतोस्मि नित्यम् ।। ४२ ।।
स्तोता त्वमेव दनुजेंद्ररिपो स्तुतिस्त्वं स्तुत्यस्त्वमेव सकलं हि भवानिहैकः ।।
त्वत्तो न किंचिदपि भिन्नमवैमि विष्णो तृष्णां सदा कृणुहि मे भवजांभवारे ।। ४३ ।।
इति स्तुत्वा हृषीकेशमग्निबिंदुर्महातपाः ।।
तस्थौ तूष्णीं ततो विष्णुरुवाच वरदो मुनिम् ।। ४४
।। श्रीविष्णुरुवाच ।।
अग्निबिंदो महाप्राज्ञ महता तपसांनिधे ।।
वरं वरय सुप्रीतस्तवादेयं न किंचन ।।४५।।
अग्निबिंदुरुवाच ।। ।।
यदि प्रीतोसि भगवन्वैकुंठेश जगत्पते ।।
कमलाकांत तद्देहि यदिह प्रार्थयाम्यहम्।। ।। ४६ ।।
कृतानुज्ञोथ हरिणा भ्रूभंगेन स तापसः ।।
कृतप्रणामो हृष्टात्मा वरयामास केशवम् ।। ४७ ।।
भगवन्सर्वगोपीह तिष्ठ पंचनदे ह्रदे ।।
हिताय सर्व जंतूनां मुमुक्षूणां विशेषतः ।। ४८ ।।
लक्ष्मीशे न वरो मह्यमेष देयोऽविचारतः ।।
नान्यं वरं समीहेहं भक्तिं च त्वपदांबुजे ।। ४९ ।।
इति श्रुत्वा वरं तस्याग्निबिंदोर्मधुसूदनः ।।
प्रीतः परोपकारार्थं तथेत्याहाब्धिजापतिः ।। 4.2.60.५० ।।
।। श्रीविष्णुरुवाच ।। ।।
अग्निबिंदो मुनिश्रेष्ठ स्थास्याम्यहमिह ध्रुवम् ।।
काशीभक्तिमतां पुंसां मुक्तिमार्गं समादिशन् ।। ५१ ।।
मुने पुनः प्रसन्नोस्मि वरं ब्रूहि ददामि ते ।।
अतीव मम भक्तोसि भक्तिस्तेस्तु दृढा मयि ।। ५२ ।।
आदावेव हि तिष्ठासुरहमत्र तपोनिधे ।।

ततस्त्वया समभ्यर्थि स्थास्याम्यत्र सदैव हि ।। ५३ ।।

प्राप्य काशीं सुदुर्मेधाः कस्त्यजेज्ज्ञानवान्यदि ।।

अनर्घ्यं प्राप्य माणिक्यं हित्वा काचं क ईहते ।। ५४ ।।

अल्पीयसा श्रमेणेह वपुषो व्ययमात्रतः ।।

अवश्यं गत्वरस्याशु यथामुक्तिस्तथा क्व हि ।। ५५ ।।

विनिमय्य जराजीर्णं देहं पार्थिवमत्र वै ।।

प्राज्ञाः किमु न गृह्णीयुरमृतं नैर्जरं वपुः ।। ५६ ।।

न तपोभिर्न वा दानैर्न यज्ञैर्बहुदक्षिणैः ।।

अन्यत्र लभ्यते मोक्षो यथा काश्यां तनु व्ययात् ।। ५७ ।।

अपि योगं हि युंजाना योगिनो यतमानसाः ।।

नैकेनजन्मना मुक्ताः काश्यां मुक्ता वपुर्व्ययात् ।। ५८ ।।

इदमेव महादानमिदमेव महत्तपः ।।

इदमेव व्रतं श्रेष्ठं यत्काश्यां म्रियते तनुः ।। ५९ ।।

स एव विद्वाञ्जगति स एव विजितेंद्रियः ।।

स एव पुण्यवान्धन्यो लब्ध्वा काशीं न यस्त्यजेत् ।। 4.2.60.६० ।।

तावत्स्थास्याम्यहं चात्र यावत्काशी मुने त्विह ।।

प्रलयेपि न नाशोस्याः शिवशूलाग्र सुस्थितेः ।। ६१ ।।

इत्याकर्ण्य गिरं विष्णोरग्निबिंदुर्महामुनिः ।।

प्रहृष्टरोमा प्रोवाच पुनरन्यं वरं वृणे ।। ६२ ।।

मापते मम नाम्नात्र तीर्थे पंचनदे शुभे ।।

अभक्तेभ्योपि भक्तेभ्यः स्थितो मुक्तिं सदादिश ।। ६३ ।।

येत्र पंचनदे स्नात्वा गत्वा देशांतरेष्वपि ।।

नरा पंचत्वमापन्ना मुक्तिं तेभ्योपि वै दिश ।। ६४ ।।

येतु पंचनदे स्नात्वा त्वां भजिष्यंति मानवाः ।।

चलाचलापि द्वैरूपा मा त्याक्षीच्छ्रीश्च तान्नरान् ।। ६५ ।।

।। श्रीविष्णुरुवाच ।। ।।

एवमस्त्वग्निबिंदोत्र भवता यद्वृतंमुने।।

त्वन्नाम्नोऽर्धेन मे नाम मया सह भविष्यति ।।६६।।

बिंदुमाधव इत्याख्या मम त्रैलोक्यविश्रुता ।।

काश्यां भविष्यति मुने महापापौघ घातिनी ।। ६७ ।।

ये मामत्र नराः पुण्याः पुण्ये पंचनदे ह्रदे ।।

सदा सपर्ययिष्यंति तेषां संसारभीः कुतः ।। ६८ ।।

वसुस्वरूपिणी लक्ष्मीर्लक्ष्मीर्निर्वाणसंज्ञिका ।।

तत्पार्श्वगा सदा येषां हृदि पंचनदे ह्यहम् ।। ६९ ।।

यैर्न पंचनदं प्राप्य वसुभिः प्रीणिता द्विजाः ।।

आशुलभ्यविपत्तीनां तेषां तद्वसुरोदिति ।। 4.2.60.७० ।।

त एव धन्या लोकेस्मिन्कृतकृत्यास्त एव हि ।।

प्राप्य यैर्मम सांनिध्यं वसवो मम सात्कृताः ।।७१ ।।

बिंदुतीर्थमिदं नाम तव नाम्ना भविष्यति ।।

अग्निबिंदो मुनिश्रेष्ठ सर्वपातकनाशनम् ।। ७२ ।।

कार्तिके बिंदुतीर्थे यो ब्रह्मचर्यपरायणः ।।

स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः।।७३।।

अपि पापसहस्राणि कृत्वा मोहेन मानवः ।।

ऊर्जे धर्मनदे स्नातो निष्पापो जायते क्षणात् ।। '७४ ।।

यावत्स्वस्थोस्ति देहोयं यावन्नेंद्रियविक्लवः ।।

तावद्व्रतानि कुर्वीत यतो देहफलं व्रतम् ।। ७५ ।।

एकभक्तेन नक्तेन तथैवायाचितेन च ।।

उपवासेन देहोयं संशोध्यो शुचिभाजनम् ।। ७६ ।।

कृच्छ्रचांद्रायणादीनि कर्तव्यानि प्रयत्नतः ।।

अशुचिः शुचितामेति कायो यद्व्रतधारणात् ।। ७७ ।।

व्रतैः संशोधिते देहे धर्मो वसति निश्चलः ।।

अर्थकामौ सनिर्वाणौ तत्र यत्र वृष स्थितिः ।। ७८ ।।

तस्माद्व्रतानि सततं चरितव्यानि मानवैः ।।

धर्मसान्निध्य कर्तृणि चतुर्वर्गफलेप्सुभिः ।। ७९ ।।

सदा कर्तुं न शक्नोति व्रतानि यदि मानवः ।।

चातुर्मास्यमनुप्राप्य तदा कुर्यात्प्रयत्नतः ।। 4.2.60.८० ।।

भूशय्या ब्रह्मचर्यं च किंचिद्भक्ष्यनिषेधनम् ।।

एकभक्तादि नियमो नित्यदानं स्वशक्तितः ।। ८१ ।।

पुराणश्रवणं चैव तदर्थाचरणं पुनः ।।

अखंडदीपोद्बोधश्च महापूजेष्टदैवते ।। ८२ ।।

प्रभूतांकुरबीजाढ्ये देशे चापि गतागतम् ।।

यत्नेन वर्जयेद्धीमान्महाधर्मविवृद्धये ।। ८३ ।।

असंभाष्या न संभाष्याश्चातुर्मास्य व्रतस्थितैः ।।

मौनं चापि सदा कार्यं तथ्यं वक्तव्यमेव वा ।।८४।।

निष्पावांश्च मसूरांश्च कोद्रवान्वर्जयेद्व्रती ।।

सदा शुचिभिरास्थेयं स्प्रष्टव्यो नाव्रती जनः ।। ८५ ।।

दंतकेशांबरादीनि नित्यं शोध्यानि यत्नतः ।।

अनिष्टचिंता नो कार्या व्रतिना हृद्यपि क्वचित् ।। ८६ ।।

द्वादशस्वपि मासेषु व्रतिनो यत्फलं भवेत् ।।

चातुर्मास्यव्रतभृतां तत्फलं स्यादखंडितम् ।। ८७ ।।

चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि ।।

तदोर्जे व्रतिना भाव्यमप्यब्दफलमिच्छता ।। ८८ ।।

अव्रतः कार्तिको येषां गतो मूढधियामिह ।।

तेषां पुण्यस्य लेशोपि न भवेत्सूकरात्मनाम् ।। ८९ ।।

कृच्छ्रं वा चातिकृच्छ्रं वा प्राजापत्यमथापि वा ।।

संप्राप्ते कार्तिके मासि कुर्याच्छक्त्याति पुण्यवान् ।। 4.2.60.९० ।।

एकांतरं व्रतं कुर्यात्त्रिरात्र व्रतमेव वा ।।

पंचरात्रं सप्तरात्रं संप्राप्ते कार्तिके व्रती ।। ९१ ।।

पक्षव्रतं वा कुर्वीत मासोपोषणमेव वा ।।

नोर्जो वंध्यो विधातव्यो व्रतिना केनचित्क्वचित् ।। ९२।।

शाकाहारं पयोहारं फलाहारमथापि वा ।।

चरेद्यवान्नाहारं वा संप्राप्ते कार्तिके व्रती ।।९३।।

नित्यनैमित्तिकं स्नानं कुर्यादूर्जे व्रती नरः ।।

ब्रह्मचर्यं चरेदूर्जे महाव्रतफलार्थवान् ।। ९४ ।।

बाहुलं ब्रह्मचर्येण यः क्षिपेच्छुचिमानसः ।।
समस्तं हायनं तेन ब्रह्मचर्यकृतं भवेत् ।।९५।।
यस्तु कार्तिकिकं मासमुपवासैः समापयेत् ।।
अप्यब्दमपि तेनेह भवेत्सम्यगुपोषितम् ।। ९६ ।
शाकाहारपयोहारैरूर्जो यैरतिवाहितः ।।
अखंडिता शरत्तेन तदाहारेण यापिता ।। ९७ ।।
पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः ।।
यो व्रती कांस्यभोजी स्यान्न तद्व्रतफलं लभेत् ।।९८।।
कांस्यस्य नियमे दद्यात्कांस्यं सर्पिः प्रपूरितम् ।।
ऊर्जे न भक्षयेत्क्षौद्रमतिक्षुद्रगतिप्रदम् ।। ९९ ।।
मधुत्यागे घृतं दद्यात्पायसं च सशर्करम् ।।
अभ्यंगेऽभ्यवहारे च तैलमूर्जे विवर्जयेत् ।।4.2.60.१००।।
भूयात्स नारकी देही तत्राभ्यंगाद्यतोनघ ।।
तैलत्यागे तिलान्दद्याद्द्रोणमात्रान्स कांचनान् ।। १ ।।
कार्तिके मत्स्यभोजी यः स तैमीं योनिमृच्छति ।।
बाहुले मांसभोजी यः स कृमिःपूयशोणिते ।। २ ।।
मांसाशिनोपि ये भूपास्त्यजेयुस्तेपि कार्तिके ।।
मत्स्यमांसानि संत्यज्य कार्त्तिके व्रततत्परः ।। ३ ।।
मत्स्यमांसादनाद्दोषाद्बहिर्भवति निश्चितम् ।।
नियमे मत्स्यमांसानां दद्यात्कार्तिकिके व्रती ।।
कूश्मांडानि समाषाणि दशस्वर्णयुतान्यपि ।। ४ ।।
कार्तिके मीनभोजी यः सोश्नात्यमृतमेवहि ।।
सुघंटां सतिलां मौनी सहिरण्यां प्रदापयेत् ।। ५ ।।
कार्तिके लवणं त्यक्तं येन व्रतभृता सता ।।
त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् ।। ६ ।।
भूशय्यां कार्तिके कुर्वन्न भुवं संस्पृशेद्व्रती ।।
पर्यंकं भूशयो दद्यात्सतूलं सोपधानकम् ।। ७ ।।
दीपं यः कार्तिके दद्यादखंडं घृतवर्तिकम् ।।

मोहांध तमसं प्राप्य स न गच्छति दुर्गतिम् ।।८।।

यः कुर्यात्कार्तिके मासे रजन्यां दीपकौमुदीम् ।।

तामिस्रं चांधतामिस्रं न स पश्येत्कदाचन ।।९।।

पापांधकारसंक्रुद्धः कार्तिके दीपदानतः ।।

क्रोधांधकारितमुखं भास्करिं स न वीक्षते ।। 4.2.60.११० ।।

स उद्द्योतमयं पश्येत्त्रैलोक्यं सचराचरम् ।।

प्रबोधयेन्ममाग्रे यो दीपं सोज्वलवर्तिकम् ।। ११ ।।

पंचामृतानां कलशैरूर्जे मां स्नापयेन्नरः ।।

क्षीराब्धितटमासाद्य वसेत्कल्पं स पुण्यवान् ।। १२ ।।

प्रतिक्षपं कार्तिकिके कुर्वञ्ज्योत्स्नां प्रदीपजाम् ।।

ममाग्रे भक्तिसंयुक्तो गर्भध्वांतं न संविशेत् ।। १३ ।।

आज्यवर्तिकमूर्जे यो दीपं मेग्रे प्रबोधयेत् ।।

बुद्धिभ्रंशं न चाप्नोति महामृत्युभये सति ।। १४ ।।

कार्तिके मासि मे यात्रा यैः कृता भक्तितत्परैः ।।

बिंदुतीर्थे कृतस्नानैस्तेषां मुक्तिर्न दूरतः ।। १५ ।।

व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।।

दामोदरगृहाणार्घ्यं दनुजेंद्रनिषूदन ।। १६ ।।

स्नाने नैमित्तिके कृष्ण कार्तिके पापशोषणे ।।

गृहाणत्वर्घ्यं मया दत्तं राधया सहितो भवान् ।। १७ ।।

इमौ मंत्रौ समुच्चार्य योर्घ्यं मह्यं प्रयच्छति ।।

सुवर्णरत्न पुष्पांबु युजा शंखेन पुण्यवान् ।। १८ ।।

सुवर्णपूर्णपृथिवी संकल्पोदकपूर्वकम् ।।

तेन दत्ता भवेत्सम्यक्सुपात्राय सुपर्वणि ।। १९ ।।

एकादशीं समासाद्य प्रबोधकरणीं मम ।।

बिंदुतीर्थकृतस्नानो रात्रौ जागरणान्वितः ।। 4.2.60.१२० ।।

दीपान्प्रोबोध्य बहुशो ममालंकृत्य शक्तितः ।।

तौर्यत्रिकविनोदेन पुराणश्रवणादिभिः ।। २१ ।।

महामहोत्सवं कृत्वा यावत्पूर्णा तिथिर्भवेत् ।।

तत्रान्नदानं बहुशः कृत्वामत्प्रीतये नरः ।। २२ ।।

महापातकयुक्तोपि न विशेत्प्रमदोदरम् ।।

बिंदुमाधवनामानं यो मामत्र समर्चयेत् ।। २३ ।।

बिंदुतीर्थकृतस्नानो निर्वाणं स हि विंदति ।।

आदिमाधवनामाहं पूज्यः सत्ययुगे मुने ।। २४ ।।

अनंतमाधवो ज्ञेयस्त्रेतायां सर्वसिद्धिदः ।।

श्रीदमाधवसंज्ञोहं द्वापरे परमार्थकृत्।।२५।।

कलौ कलिमलध्वंसी ज्ञेयोहं बिंदुमाधवः ।।

कलौ कल्मषसंपन्ना न मां विंदंति मानवाः ।।२६।।

ममैव मायया मूढा भेदवादपरायणाः।।

मम भक्तिं प्रकुर्वाणा ये विश्वेशं द्विषंति वै ।। २७ ।।

विद्विषो मम ते ज्ञेयाः पिशाचपदगामिनः ।।

पैशाचीं योनिमाप्यापि कालभैरवशासनात् ।। २८ ।।

त्रिंशद्वर्ष सहस्राणि उषित्वा दुःखसागरे ।।

विश्वेशानुग्रहादेव ततो मोक्षमवाप्नुयुः ।। २९ ।।

तस्माद्द्वेषो न कर्तव्यो विश्वेशे परमात्मनि ।।

विश्वेश द्वेषिणां पुंसां प्रायश्चित्तं यतो नहि ।। 4.2.60.१३० ।।

मनसापि हि विश्वेशं विद्विषंतीह येऽधमाः ।।

अध्यासतेंधतामिस्रं मृतास्तेन्यत्र संततम् ।।३१।।

शिवनिंदापरा ये च ये पाशुपतनिंदकाः।।

विद्विषो मम ते ज्ञेया पततो नरकेऽशुचौ ।। ३२ ।।

अष्टाविंशति कोटीषु नरकेषु क्रमेण हि ।।

कल्पं कल्पं वसेयुस्ते ये विश्वेश्वरनिंदकाः ।। ३३ ।।

विश्वेशानुग्रहं प्राप्य मुनेहमपि मुक्तिदः ।।

मद्भक्तैस्तद्विशेषेण सेव्यो विश्वेश्वरोऽनिशम्।। ३४ ।।

इयं वाराणसी ज्ञेया मुने पाशुपतस्थली ।।

तस्मात्पशुपतिः सेव्यः काश्यां निश्रेयसार्थिभिः ।। ३५ ।।

अत्र पंचनदे तीर्थे स्नाति विश्वेश्वरः स्वयम् ।।

ऊर्जे सदैव सगणः सस्कंदः सपरिच्छदः ।। ३६ ।।

ब्रह्मा सवेदः समखो ब्रह्माण्याद्याश्च मातरः ।।

सप्ताब्धयः ससरितः स्नांत्यूर्जे धूतपापके ।।३७।।

सचेतना हि यावंतस्त्रैलोक्ये देहधारिणः ।।

तावंतः स्नातुमायांति कार्तिके धूतपापके ।।३८ ।।

यैर्न पंचनदे स्नातं प्राप्य कार्तिकिकं शुभम्।।

जलबुदुदवत्तेषां वृथाजन्म शरीरिणाम्।।३९।।

आनंदकाननं पुण्यं पुण्यं पांचनदं ततः ।।

ततोपि मम सान्निध्यमग्निबिंदो महामुने ।। 4.2.60.१४० ।।

अनेनैवानुमानेन विद्धि पंचनदस्य वै ।।

महिमानं महाप्राज्ञ सर्वतीर्थोत्तमोत्तमम् ।। ४१ ।।

श्रुत्वापि यं महाप्राज्ञो महापापैः प्रमुच्यते ।।

विष्णोर्मुखादिति श्रुत्वा सोग्निबिंदुर्महामुनिः ।। ४२ ।।

पुनः प्रणम्य पप्रच्छ बिंदुमाधवमच्युतम् ।।४३।।

अग्निबिंदुरुवाच ।।

भगवञ्छ्रोतुमिच्छामि बिंदुमाधव तद्वद ।।

कतिधा तव रूपाणि काश्यां संति जनार्दन ।। ४४ ।।

भविष्याण्यपि कानीह तानि मे कथयाच्युत ।।

यानि संपूज्यते भक्ताः प्राप्स्यंति कृतकृत्यताम् ।। १४५ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे बिंदुमाधवाविर्भावोनाम षष्टितमोऽध्यायः ।। ६० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६१





।। अगस्त्य उवाच ।। ।।

षडास्य माधवाख्यानं श्रुतं मे पापनाशनम् ।।

महिमापि श्रुतः श्रेयान्सम्यक्पंचनदस्य वै ।। १ ।।

यदग्निबिंदुना पृच्छि माधवो दैत्यसूदनः ।।

तस्योत्तरं समाख्याहि यथाख्यातं मधुद्विषा ।। २ ।।

।। स्कंद उवाच ।। ।।

शृण्वगस्त्य महर्षे त्वं कथ्यमानं मयाधुना।।

माधवेन यथाचक्षि मुनये चाग्निबिंदवे ।।३।।

।। बिंदुमाधव उवाच ।।

आदौ पादोदके तीर्थे विद्धि मामादिकेशवम् ।।

अग्निबिंदो महाप्राज्ञ भक्तानां मुक्तिदायकम् ।। ४ ।।

अविमुक्तेऽमृते क्षेत्रे येर्चयंत्यादिकेशवम् ।।

तेऽमृतत्वं भजंत्येव सर्वदुःखविवर्जिताः ।। ५ ।।

संगमेशं महालिंगं प्रतिष्ठाप्यादिकेशवः ।।

दर्शनादघहं नृणां भुक्तिं मुक्तिं दिशेत्सदा ।। ६ ।।

याम्यां पादोदकाच्छ्वेतद्वीपतीर्थं महत्तरम् ।।

तत्राहं ज्ञानदो नृणां ज्ञानकेशवसंज्ञकः ।। ७ ।।

श्वेतद्वीपे नरः स्नात्वा ज्ञानकेशवसन्निधौ ।।

न ज्ञानाद्भ्रश्यते क्वापि ज्ञानकेशवपूजनात् ।। ८ ।।

ताक्ष्र्यकेशवनामाहं ताक्ष्र्यतीर्थे नरोत्तमैः ।।

पूजनीयः सदा भक्त्या ताक्ष्र्य वत्ते प्रिया मम ।। ९ ।।

तत्रैव नारदे तीर्थेस्म्यहं नारदकेशवः ।।

ब्रह्मविद्योपदेष्टा च तत्तीर्थाप्लुत वर्ष्मणाम् ।।4.2.61.१०।।

प्रह्लादतीर्थं तत्रैव नाम्ना प्रह्लादकेशवः ।।

भक्तैः समर्चनीयोहं महाभक्ति समृद्धये ।। ११ ।।

तीर्थेऽबरीषे तत्राहं नाम्नैवादित्यकेशवः ।।
पातकध्वांतनिचयं ध्वंसयामीक्षणादपि ।। १२ ।।
दत्तात्रेयेश्वराद्याम्यामहमादिगदाधरः ।।
हरामि तत्र भक्तानां संसारगदसंचयम् ।। १३ ।।
तत्रैव भार्गवे तीर्थे भृगुकेशव नामतः ।।
काशीनिवासिनः पुंसो बिभर्मि च मनोरथैः ।। १४ ।।
वामनाख्येमहातीर्थे मनःप्रार्थितदे शुभे ।।
पूज्योहं शुभमिच्छद्भिर्नाम्ना वामनकेशवः ।। १५ ।।
नरनारायणे तीर्थे नरनारायणात्मकम् ।।
भक्ताः समर्च्य मां स्युर्वै नरनारायणात्मकाः ।। १६ ।।
तीर्थे यज्ञवराहाख्ये यज्ञवाराहसंज्ञकः ।।
नरैः समर्चनीयोहं सर्वयज्ञफलेप्सुभिः ।।१७।।
विदारनरसिंहोहं काशीविघ्नविदारणः ।।
तन्नाम्नि तीर्थे संसेव्यस्तीर्थोपद्रवशांतये ।। १८ ।।
गोपीगोविंदतीर्थे तु गोपीगोविंदसंज्ञकम् ।।
समर्च्य मां नरो भक्त्या मम मायां न संस्पृशेत्।। १९ ।।
मुने लक्ष्मीनृसिंहोस्मि तीर्थे तन्नाम्नि पावने ।।
दिशामि भक्तियुक्तेभ्यः सदानैः श्रेयसीं श्रियम् ।। 4.2.61.२० ।।
शेषमाधवनामाहं शेषतीर्थेऽघहारिणि ।।
विश्राणयाम्यशेषाश्च विशेषान्भक्तचिंतितान् ।। २१ ।।
शंखमाधवतीर्थे च स्नात्वा मां शंखमाधवम् ।।
शंखोदकेन संस्नाप्य भवेच्छंखनिधेः पतिः ।।२२।।
हयग्रीवे महातीर्थे मां हयग्रीवकेशवम् ।।
प्रणम्य प्राप्नुयान्नूनं तद्विष्णोः परमंपदम् ।। २३ ।।
भीष्मकेशवनामाहं वृद्धकालेशपश्चिमे ।।
उपसर्गान्हरे भीष्मान्सेवितो भक्तियुक्तितः ।। २४ ।।
निर्वाणकेशवश्चाहं भक्तनिर्वाणसूचकः ।।
लोलार्कादुत्तरेभागे लोलत्वं चेतसो हरे ।। २५ ।।

वंद्यस्त्रिलोकसुंदर्या याम्यां यो मां समर्चयेत् ।।
काश्यां ख्यातं त्रिभुवनकेशवं न स गर्भभाक् ।। २६ ।।
ज्ञानवाप्याः पुरोभागे विद्धि मां ज्ञानमाधवम् ।।
तत्र मां भक्तितोभ्यर्च्य ज्ञानं प्राप्नोति शाश्वतम् ।। २७ ।।
श्वेतमाधवसंज्ञोहं विशालाक्ष्याः समीपतः ।।
श्वेतद्वीपेश्वरं रूपं कुर्यां भक्त्या समर्चितः ।। २८ ।।
उदग्दशाश्वमेधान्मां प्रयागाख्यं च माधवम् ।।
प्रयागतीर्थे सुस्नातो दृष्ट्वा पापैः प्रमुच्यते ।। २९ ।।
प्रयागगमने पुंसां यत्फलं तपसि श्रुतम् ।।
तत्फलं स्याद्दशगुणमत्र स्नात्वा ममाग्रतः ।। 4.2.61.३० ।।
गंगायमुनयोः संगे यत्पुण्यं स्नानकारिणाम् ।।
काश्यां मत्सन्निधावत्र तत्पुण्यं स्याद्दशोत्तरम् ।। ३१ ।।
दानानि राहुग्रस्तेर्के ददतां यत्फलं भवेत् ।।
कुरुक्षेत्रे हि तत्काश्यामत्रैव स्याद्दशाधिकम् ।। ३२ ।।
गंगोत्तरवहा यत्र यमुना पूर्ववाहिनी ।।
तत्संभेदं नरः प्राप्य मुच्यते ब्रह्महत्यया ।। ३३ ।।
वपनं तत्र कर्तव्यं पिंडदानं च भावतः ।।
देयानि तत्र दानानि महाफलमभीप्सुना ।। ३४ ।।
गुणाः प्रजापतिक्षेत्रे ये सर्वे समुदीरिताः ।।
अविमुक्ते महाक्षेत्रेऽसंख्याताश्च भवंति हि ।। ३५ ।।
प्रयागेशं महालिंगं तत्र तिष्ठति कामदम् ।।
तत्सान्निध्याच्च तत्तीर्थं कामदं परिकीर्तितम् ।। ३६ ।।
काश्यां माघः प्रयागे यैर्न स्नातो मकरार्कगः ।।
अरुणोदयमासाद्य तेषां निःश्रेयसं कुतः ।। ३७ ।।
काश्युद्भवे प्रयागे ये तपसि स्नांति संयताः ।।
दशाश्वमेधजनितं फलं तेषां भवेद्ध्रुवम् ।।३८।।
प्रयागमाधवं भक्त्या प्रयागेशं च कामदम् ।।
प्रयागे तपसि स्नात्वा येर्चयंत्यन्वहं सदा।।३९।।

धनधान्यसुतर्द्धीस्ते लब्ध्वा भोगान्मनोरमान् ।।
भुक्त्वेह परमानंदं परं मोक्षमवाप्नुयुः ।। 4.2.61.४० ।।
माघे सर्वाणि तीर्थानि प्रयागमवियांति हि ।।
प्राच्युदीची प्रतीचीतो दक्षिणाधस्तथोर्ध्वतः ।। ।। ४१ ।।
काशीस्थितानि तीर्थानि मुने यांति न कुत्रचित् ।।
यदि यांति तदा यांति तीर्थत्रयमनुत्तमम् ।। ४२ ।।
आयांत्यूर्जे पंचनदे प्रातःप्रातर्ममांतिकम् ।।
महाघौघप्रशमने महाश्रेयोविधायिनि ।। ४३ ।।
प्राप्य माघमघारिं च प्रयागेश समीपतः ।।
प्रातःप्रयागे संस्नांति सर्वतीर्थानि मामनु ।। ४४ ।।
समासाद्य च मध्याह्नमभियांति च नित्यशः ।।
संस्नातुं सर्वतीर्थानि मुक्तिदां मणिकर्णिकाम् ।। ४५ ।।
काश्यां रहस्यं परममेतत्ते कथितं मुने ।।
यथा तीर्थत्रयीश्रेष्ठा स्वस्वकाले विशेषतः ।। ४६ ।।
अन्यद्रहस्यं वक्ष्यामि न वाच्यं यत्रकुत्रचित् ।।
अभक्तेषु सदा गोप्यं न गोप्यं भक्तिमज्जने ।। ४७ ।।
काश्यां सर्वाणि तीर्थानि एकैकादुत्तरोत्तरम् ।।
महैनांसि प्रहंत्येव प्रसह्य निज तेजसा ।। ४८ ।।
एतदेव रहस्यं ते वाराणस्या उदीर्यते।।
उत्क्षिप्यैकांगुलिं तथ्यं श्रेष्ठैका मणिकर्णिका ।।४९।।
गर्जंति सर्वतीर्थानि स्वस्वधिष्ण्यगतान्यहो ।।
केवलं बलमासाद्य सुमहन्माणिकर्णिकम् ।। 4.2.61.५० ।।
पापानि पापिनां हत्वा महांत्यपि बहून्यपि ।।
काशीतीर्थानि मध्याह्ने प्रायश्चित्तचिकीर्षया ।। ५१ ।।
पर्वस्वपर्वस्वपि वा नित्यं नियमवं त्यहो ।।
निर्मलानि भवंत्येव विगाह्य मणिकर्णिकाम् ।। ५२ ।।
विश्वेशो विश्वया सार्धं सदोपमणिकर्णिकम् ।।
मध्यंदिनं समासाद्य संस्नाति प्रतिवासरम् ।। ५३ ।।

वैकुंठादप्यहं नित्यं मध्याह्ने मणिकर्णिकाम् ।।

विगाहे पद्मया सार्धं मुदा परमया मुने ।। ५४ ।।

सकृन्ममाख्यां गृणतां निर्हरन्यदघान्यहम् ।।

हरिनामसमापन्नस्तद्वलान्माणिकर्णिकात् ।। ५५ ।।

सत्यलोकात्प्रतिदिनं हं सयानः पितामहः ।।

माध्याह्निक विधानाय समायान्मणिकर्णिकाम् ।।५६।।

इंद्राद्या लोकपालाश्च मरीच्याद्या महर्षयः ।।

माध्याह्निकीं क्रियां कर्तुं समीयुर्मणिकर्णिकाम् ।। ५७ ।।

शेषवासुकिमुख्याश्च नागा वै नागलोकतः ।।

समायांतीह मध्याह्ने संस्नातुं मणिकर्णिकाम् ।। ५८ ।।

चराचरेषु सर्वेषु यावंतश्च सचेतनाः ।।

तावंतः स्नांति मध्याह्ने मणिकर्णी जलेमले ।। ५९ ।।

के माणिकर्णिकेयानां गुणानां सुगरीयसाम् ।।

शक्ता वर्णयितुं विप्राऽसंख्येयानां मदादिभिः ।। 4.2.61.६० ।।

चीर्णान्युग्राण्यरण्येषु तैस्तपांसि तपोधनैः ।।

यैरियं हि समासादि मुक्तिभूर्मणिकर्णिका ।। ६१ ।।

विश्राणितमहादानास्त एव नरपुंगवाः ।।

चरमे वयसि प्राप्ता यैरेषा मणिकर्णिका ।। ६२ ।।

चीर्णसर्वव्रतास्ते तु यथोक्तविधिना ध्रुवम् ।।

यैः स्वतल्पीकृता माणिकर्णिकेयी स्थली मृदुः ।।६३।।

त एव धन्या मर्त्येस्मिन्सर्वक्रतुषु दीक्षिताः ।।

त्यक्त्वा पुण्यार्जितां लक्ष्मीमैक्षियैर्मणिकर्णिका ।।६४।।

कृता नानाविधा धर्मा इष्टापूर्तास्तु तैर्नृभिः।।

वार्धकं समनुप्राप्य प्रापि यैर्मणिकर्णिका ।। ६५ ।।

रत्नानि सदुकूलानि कांचनं गजवाजिनः ।।

देयाः प्राज्ञेन यत्नेन सदोपमणिकर्णिकम् ।। ६६ ।।

पुण्येनोपार्जितं द्रव्यमत्यल्पमपि यैर्नरैः ।।

दत्तं तदक्षयं नित्यं मुनेधिमणिकर्णिंकम् ।। ६७ ।।

कुर्याद्यथोक्तमप्येकं प्राणायामं नरोत्तमः ।।

यस्तेन विहितो नूनं षडंगो योग उत्तमः ।। ६८ ।।

जस्वैकामपि गायत्रीं संप्राप्य मणिकर्णिकाम् ।।

लभेदयुतगायत्रीजपनस्य फलं स्फुटम् ।। ६९ ।।

एकामप्याहुतिं प्राज्ञो दत्त्वोपमणिकर्णिकम्।।

यावज्जीवाग्निहोत्रस्य लभेदविकलं फलम् ।। 4.2.61.७० ।।

इति श्रुत्वा हरेर्वाक्यमग्निबिंदुर्महातपाः ।।

प्रणिपत्य महाभक्त्या पुनः पप्रच्छ माधवम्।। ।। ७१ ।।

।। अग्निबिंदुरुवाच ।।

विष्णो कियत्परीमाणा पुण्यैषा मणिकर्णिका ।।

ब्रूहि मे पुंडरीकाक्ष नत्वतस्तत्त्ववित्परः ।। ७२ ।।

।। श्रीविष्णुरुवाच ।।

आगंगा केशवादा च हरिश्चंद्रस्य मंडपात् ।।

आमध्याद्देवसरितः स्वर्द्वारान्मणिकर्णिका ।। ७३ ।।

स्थूलमेतत्परीमाणं सूक्ष्मं च प्रवदामि ते ।।

हरिश्चंद्रस्य तीर्थाग्रे हरिश्चंद्रविनायकः ।। ७४ ।।

सीमाविनायकश्चात्र मणिकर्णी ह्रदोत्तरे ।।

सीमाविनायकं भक्त्या पूजयित्वा नरोत्तमः ।।७५ ।।

मोदकैः सोपचारैश्च प्राप्नुयान्मणिकर्णिकाम्।।

हरिश्चंद्रे महातीर्थे तर्पयेयुः पितामहान्।।७६।।

शतं समाःसु तृप्ताः स्युः प्रयच्छंति च वांच्छितम्।।

हरिश्चंद्रे महातीर्थे स्नात्वा श्रद्धान्वितो नरः ।। ७७ ।।

हरिश्चंद्रेश्वरं नत्वा न सत्यात्परिहीयते ।।

ततः पर्वततीर्थं च पर्वतेश्वर संनिधौ ।। ७८ ।।

अधिष्ठानं महामेरोर्महापातकनाशनम् ।।

तत्र स्नात्वार्चयित्वेशं किंचिद्दत्त्वा स्वशक्तितः ।। ७९ ।।

अध्यास्य मेरुशिखरं दिव्यान्भोगान्समश्नुते ।।

कंबलाश्वतरं तीर्थं पर्वतेश्वर दक्षिणे ।।4.2.61.८०।।

कंबलाश्वतरेशं च तत्तीर्थात्पश्चिमे शुभम् ।।
तस्मिंस्तीर्थे कृतस्नानस्तल्लिंगं यः समर्चयेत् ।। ८१ ।।
अपि तस्य कुले जाता गीतज्ञाः स्युः श्रियान्विताः ।।
चक्रपुष्करिणी तत्र योनिचक्र निवारिणी।।। ८२ ।।
संसारचक्रे गहने यत्र स्नातो विशेन्नना ।।
चक्रपुष्करिणी तीर्थं ममाधिष्ठानमुत्तमम् ।। ८३ ।।
समाः परार्धसंख्यातास्तत्र तप्तं महातपः ।।
तत्र प्रत्यक्षतां यातो मम विश्वेश्वरः परः ।। ८४।।
तत्र लब्धं मयैश्वर्यमविनाशि महत्तरम् ।।
चक्रपुष्करिणी चैव ख्याताभून्मणिकर्णिका ।। ८५ ।।
द्रवरूपं परित्यज्य ललनारूपधारिणी ।।
प्रत्यक्षरूपिणी तत्र मयैक्षि मणिकर्णिका ।। ८६ ।।
तस्या रूपं प्रवक्ष्यामि भक्तानां शुभदं परम् ।।
यद्रूपध्यानतः पुंभिराषण्मासं त्रिसंध्यतः ।। ८७ ।।
प्रत्यक्षरूपिणी देवी दृश्यते मणिकर्णिका ।।
चतुर्भुजा विशालाक्षी स्फुरद्भालविलोचना ।। ८८ ।।
पश्चिमाभिमुखी नित्यं प्रबद्धकरसंपुटा ।।
इंदीवरवतीं मालां दधती दक्षिणे करे ।। ८९ ।।
वरोद्यते करे सव्ये मातुलुंग फलं शुभम् ।।
कुमारीरूपिणी नित्यं नित्यं द्वादशवार्षिकी ।। 4.2.61.९० ।।
शुद्धस्फटिककांतिश्च सुनील स्निग्धमूर्द्धजा ।।
जितप्रवालमाणिक्य रमणीय रदच्छदा ।। ९१ ।।
प्रत्यग्रकेतकीपुष्पलसद्धम्मिल्ल मस्तका ।।
सर्वांग मुक्ताभरणा चंद्रकांत्यंशुकावृता ।। ।। ९२ ।।
पुंडरीकमयीं मालां सश्रीकां बिभ्रती हृदि ।।
ध्यातव्यानेन रूपेण मुमुक्षुभिरहर्निशम् ।। ९३ ।।
निर्वाणलक्ष्मीभवनं श्रीमतीमणिकर्णिका ।।
मंत्रं तस्याश्च वक्ष्यामि भक्तकल्पद्रुमाभिधम्।।

यस्यावर्तनतः सिद्ध्येदपि सिद्ध्यष्टकं नृणाम् ।। ९४ ।।

वाग्भवमायालक्ष्मीमदनप्रणवान्वदेत्पूर्वम् ।।

भांत्यं बिंदूपेतं मणिपदमथ कर्णिके सहृत्प्रणवपुटः ।। ९५ ।।

मंत्रःसुरद्रुमसमः समस्तसुखसंततिप्रदो जप्यः ।।

तिथिभिः परिमितवर्णः परमपदं दिशति निशितधियाम् ।। ९६ ।।

तारस्तारतृतीयो बिंद्वंतोमणिपदं ततः कर्णिके ।।

प्रणवात्मिपदं केन म इति मनुसंख्यवर्णमनुः ।। ९७ ।।

अयं मंत्रोऽनिशं जप्यः पुंभिर्मुक्तिमभीप्सुभिः ।।

होमो दशांशकः कार्यः श्रद्धाबद्धादरैर्नृभिः ।। ९८ ।।

परिप्लुतैः पुंडरीकैर्गव्येन हविषास्फुटैः ।।

सशर्करेण मेधावी सक्षौद्रेण सदाशुचिः ।। ९९ ।।

त्रिलक्षमंत्र जप्येन मृतो देशांतरेष्वपि ।।

अवश्यं मुक्तिमाप्नोति मंत्रस्यास्य प्रभावतः ।। 4.2.61.१०० ।।

सौवर्णी प्रतिमा कार्या नवरत्नसमन्विता।।

पूर्वोक्तरूपसंपन्ना संपूज्या सा प्रयत्नतः ।। १ ।।

संपूज्यावा सदा गेहे नरैर्मोक्षैककांक्षिभिः ।।

मणिकर्ण्यामथाक्षेप्या समभ्यर्च्य प्रयत्नतः ।। २ ।।

संसारभीरुभिः पुंभिः श्रद्धाबद्धादरैरिह ।।

उपायः समनुष्ठेयो ह्यपि दूरनिवासिभिः ।। ३ ।।

मणिकर्ण्यां कृतस्नानो मणिकर्णीश वीक्षणात् ।।

जननी जठरावासे वसतिं न लभेन्नरः ।।४।।

मणिकर्णीश्वरं लिंगं पुरासंस्थापितं मया ।।

प्राग्द्वारेंतर्गृहस्यात्र समर्च्यो मोक्षकांक्षिभिः ।।५।।

ततः पाशुपतं तीर्थमवाच्यां मणिकर्णितः ।।

कृतोदकक्रियस्तत्र पश्येत्पशुपतीश्वरम् ।। ६ ।।

यत्र पाशुपतो योग उपदिष्टः पिनाकिना ।।

ममापि विधिमुख्यानां सुराणां पशुपाशहृत् ।। ।। ७ ।।

अतः पशुपतिर्यत्र लिंगरूपधरः स्वयम्।।

पशुपाशविमोक्षाय नित्यं काश्यां प्रकाशते।। ८ ।।

तत्र चैत्र चतुर्दश्यां शुक्लायां शुचिमानसैः ।।

कार्या यात्रा प्रयत्नेन रात्रौ जागरणं तथा ।। ९ ।।

पूजयित्वा पशुपतिमुपोषणपरायणाः ।।

पशुपाशैर्न बध्यंते दर्शे विहितपारणाः ।। 4.2.61.११० ।।

रुद्रावासस्ततस्तीर्थं तीर्थात्पाशुपतात्पुरः ।।

तत्र स्नात्वा नरैरर्च्यो रुद्रावासेश्वरो हरः ।। ११ ।।

मणिकर्णीश्वराद्याम्यां रुद्रावासेश्वरं नरः ।।

समाराध्य वसेल्लोके रुद्रावासे न संशयः ।। १२ ।।

विश्वतीर्थं ततो याम्यां विश्वैस्तीर्थैरधिष्ठितम् ।।

तत्र स्नात्वा नरो भक्त्या विश्वनाथं विलोकयेत् ।। १३ ।।

विश्वां गौरीं च तदनु पूजयित्वाति भक्तितः ।।

विश्वस्य पूज्यो भवति ततो विश्वमयो भवेत् ।। १४ ।।

मुक्तितीर्थं च तदनु तत्रापि कृतमज्जनः ।।

मोक्षेश्वरं ततोभ्यर्च्य मोक्षमाप्नोत्यसंशयम् ।। १५ ।।

अविमुक्तेश्वरात्पश्चान्मोक्षेशं वीक्ष्य मानवः ।।

न पुनर्मानवेलोके यातायातं करोत्यहो ।। १६ ।।

अविमुक्तेश्वरं तीर्थं मुक्तितीर्थान्मनाक्परे ।।

तत्राप्लुत्याविमुक्तेशमर्चयित्वा विमुच्यते ।। १७ ।।

तत्परे तारकं तीर्थं यत्र विश्वेश्वरः स्वयम् ।।

आचष्टे तारकं ब्रह्ममृतकर्णेमृतात्मकम् ।। १८ ।।

सुस्नातस्तारके तीर्थे तारकेश्वर दर्शनात् ।।

संसारसागरं तीर्त्वा तारयेत्स्वपितॄनपि ।। १९ ।।

तत्राभ्याशे स्कंदतीर्थं तत्राप्लुत्य नरोत्तमः ।।

दृष्ट्वा षडाननं चैव जह्यात्षाट्कौशिकीं तनुम् ।। 4.2.61.१२० ।।

तारकेश्वर पूर्वेण दृष्ट्वा देवं षडाननम् ।।

वसेत्षडानने लोके कौमारं वपुरुद्वहन् ।। २१ ।।

ढुंढितीर्थं ततः पुण्यं नरस्तत्र कृतोदकः ।।

ढुंढिं गणपतिं स्तुत्वा न विघ्नैरभिभूयते ।। २२ ।।

भवानीतीर्थमतुलं ढुंढितीर्थस्य दक्षिणे ।।

तत्र स्नात्वा विधानेन भवानीं परिपूज्य च ।। २३।।

दुकूले रत्ननेपथ्यैर्नैवेद्यैर्बहुविस्तरैः ।।

पुष्पैर्धूपैः प्रदीपैश्च भवानी शो प्रपूज्य च ।। ५४ ।।

समस्तमर्चितं तेन त्रैलोक्यं सचराचरम् ।।

भवानीशंकरौ काश्यामर्चितौ श्रद्धया तु यैः ।। २५ ।।

चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः ।।

अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः ।। २६ ।।

प्रदक्षिणीकृतातेन सप्तद्वीपवती मही ।।

सशैला ससमुद्रा च साश्रमा च सकानना ।। २७ ।।

अष्टौ प्रदक्षिणा देयाः प्रत्यहं तुष्टितत्परैः ।।

नमनीयौ प्रयत्नेन भवानीशंकरौ सदा ।। २८ ।।

भक्तानां कामदा नित्यं भवानी वाससां प्रदा ।।

अतो भवानी संपूज्या काश्यां तीर्थनिवासिभिः ।। २९ ।।

योगक्षेमं सदा कुर्याद्भवानी काशिवासिनाम् ।।

तस्माद्भवानी संसेव्या सततं काशिवासिभिः ।। 4.2.61.१३० ।।

भिक्षणीया सदा भिक्षा भिक्षुणा मोक्षकांक्षिणा ।।

यतो भिक्षाप्रदा काश्यां विश्वेशस्य कुटुंबिनी ।। ३१ ।।

गृहमध्येत्र विश्वेशो भवानी तत्कुटुंबिनी ।।

सर्वेभ्यः काशिसंस्थेभ्यो मोक्षभिक्षां प्रयच्छति ।। ३२ ।।

दुष्प्रापमपि यत्किंचित्काशीक्षेत्रनिवासिनाम् ।।

तत्सुप्राप्यं करोत्येव भवानी पूजिता नृभिः ।। ३३ ।।

कुर्याज्जागरणं रात्रौ महाष्टम्यां व्रती नरः ।।

प्रातर्भवानीमभ्यर्च्य प्राप्नुयाद्वांछितं फलम् ।। ३४ ।।

शुक्रेशात्पश्चिमाशायां भवानीं योऽभिवीक्षते ।।

सर्वे मनोरथास्तस्य सिद्ध्यंतीह न सं शयः ।। ३५ ।।

काश्यां सदैव वस्तव्यं स्नातव्योत्तरवाहिनी ।।

भवानीशंकरौ सेव्यौ प्राप्तव्ये भुक्तिमुक्तिके ।। ३६ ।।

मातर्भवानि तव पादरजोभवानि मातर्भवानि तवदासतरो भवानि ।।

मातर्भवानि नभवानि यथाभवेस्मिंस्त्वद्भाग्भवान्यनुदिनं न पुनर्भवानि ।। ३७ ।।

तिष्ठता गच्छता वापि स्वपता जाग्रतापि वा ।।

अयमत्र सदा जप्यः सुखाप्त्यै काशिवासिना ।। ३८ ।।

ईशानतीर्थं तत्रैव भवानीतीर्थसन्निधौ ।।

तत्र स्नातो य ईशानमर्चयेन्न स जन्मभाक् ।। ३९ ।।

ज्ञानतीर्थं च तत्रैव ज्ञानदं सवर्दा नृणाम् ।।

कृताभिषेकस्तत्तीर्थे दृष्ट्वा ज्ञानेश्वरं शिवम् ।। 4.2.61.१४० ।।

ज्ञानवापीसमीपस्थो ज्ञानेशो यैः समर्चितः ।।

ज्ञानभ्रंशो न तेषां स्यादपि पंचत्वमृच्छताम्।। ४१ ।।

शैलादितीर्थं तत्रैव परमर्द्धि प्रकाशकम् ।।

तत्र श्राद्धादिकं कृत्वा दत्त्वा दानं स्वशक्तितः ।। ४२ ।।

शैलादीश्वरमालोक्य ज्ञानवाप्या उदग्दिशि ।।

लभेद्गणत्वपदवीं नात्र कार्या विचारणा ।। ४३ ।।

नंदितीर्थादवाच्यां तु विष्णुतीर्थं परं मम ।।

तत्र पिंडान्विनिर्वाप्य पितृणामनृणो भवेत् ।। ४४ ।।

विष्णुतीर्थे कृतस्नानो यो मां विष्णुं विलोकयेत् ।।

विश्वेशाद्दक्षिणेपार्श्वे विष्णुलोकं स गच्छति ।। ४५ ।।

यः प्रत्येकादशीं प्राप्य शयनीं बोधिनीं तथा ।।

कुर्याज्जागरणं रात्रौ मम मूर्तिसमीपतः ।। ४६ ।।

प्रातः समर्च्य मां भक्त्या भोजयित्वा द्विजानपि ।।

दत्त्वा गाः कांचनं भूमिं न भूयो भूमिभाग्भवेत् ।।४७।।

कृत्वा तत्र व्रतोत्सर्गं वित्तशाठ्यविवर्जितः ।।

सम्यग्व्रतफलं धीमान्प्राप्नोत्येव ममाज्ञया ।।४८।।

मम तीर्थादवाच्यां तु ती र्थं पैतामहं शुभम् ।।

तत्र श्राद्धविधानेन तर्पयित्वा पितामहान्।।४९।।

पितामहेश्वरं लिंगं ब्रह्मनालोपरिस्थितम्।।

पूजयित्वा नरो भक्त्या ब्रह्मलोकमवाप्नुयात् ।। ।। 4.2.61.१५० ।।

ब्रह्मस्रोतः समीपे तु कृतं कर्म शुभाशुभम् ।।

परामक्षयतामेति शुभमेव ततश्चरेत् ।। ५१ ।।

अत्यल्पमपि यत्कर्म कृतमत्र शुभाशुभम् ।।

प्रलयेपि न तस्यास्ति प्रलयो मुनिसत्तम ।। ५२ ।।

नाभितीर्थमिदं प्रोक्तं नाभिभूतं यतः क्षितेः ।।

अपि ब्रह्मांडगोलस्य नाभिरेषा शुभोदया ।।५३।।

सा माणिकर्णिकेयीयं नाभिर्गांभीर्यभूमिका ।।

ब्रह्मांडगोलकं सर्वं यस्यामेति लयोदयम् ।। ५४ ।।

ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम् ।।

तत्संगमे नरः स्नात्वा कोटिजन्म मलं हरेत् ।। ५५ ।।

ब्रह्मनाले पतेद्येषामपि कीकसमात्रकम् ।।

ब्रह्मांडमंडपांतस्ते न विशंति कदाचन ।। ५६ ।।

ततो भागीरथेस्तीर्थं ब्रह्मनालाच्च दक्षिणे ।।

तत्र स्नात्वा नरः सम्यङ्मुच्यते ब्रह्महत्यया ।। ५७ ।।

भागीरथीश्वरं लिंगं स्वर्गद्वारस्य सन्निधौ ।।

दर्शनाद्ब्रह्महत्यायाः पुरश्चरणमुच्यते ।। ५८ ।।

अशुभां गतिमापन्ना यस्य पूर्वे पितामहाः ।।

तेन भागीरथी तीर्थे तर्पणीयाः प्रयत्नतः ।। ५९ ।।

तत्र भागीरथे तीर्थे श्राद्धं कृत्वा विधानतः ।।

ब्राह्मणान्भोजयित्वा तु ब्रह्मलोके नयेत्पितॄन् ।। 4.2.61.१६० ।।

तद्दक्षिणे महातीर्थं खुरकर्तरि संज्ञितम् ।।

गोलोकादागताभिश्च गोभिर्यत्खुरकोटिभिः ।। ६१ ।।

स्थपुटीकृतभूभागं ततस्तत्खुर कर्तरि ।।

तस्मिंस्तीर्थे कृतस्नानः कृतपिंडोदकक्रियः ।। ६२ ।।

खुरकर्तरीशं लिंगं दृष्ट्वा गोलोकमाप्नुयात् ।।

गोधनैर्न विमुच्येत तल्लिंगस्य समर्चनात् ।।६३।।

दक्षिणे खुरकर्तर्या मार्कंडं तीर्थमुत्तमम्।।

कृतश्राद्धविधानश्च तस्मिंस्तीर्थेऽघहारिणि ।। ६४ ।।

मार्कंडेयेश्वरं लिंगं दृष्ट्वायुर्दीर्घमाप्नुयात् ।।

ब्रह्मतेजोभिवृद्धिं च कीर्तिं च परमां भुवि ।। ६५ ।।

वसिष्ठतीर्थं परमं महापातकनाशनम् ।।

तर्पयित्वा पितॄंस्तत्र वसिष्ठेशं विलोक्य च ।। ६६ ।।

नरो न लिप्यते पापैर्जन्मत्रयसमर्जितैः ।।

वसिष्ठलोके वसति ब्रह्मतेज समन्वितः ।। ६७ ।।

तत्रैवारुधंती तीर्थं स्त्रीणां सौभाग्यवधर्नम् ।।

पतिव्रताभिस्तत्तीर्थं गाहनीयं विशेषतः ।। ६८ ।।

पौंश्चल्यजनितो दोषस्तत्तीर्थपरिमज्जनात्।।

क्षणाद्विनाश मागच्छेदरुंधत्याः प्रभावतः ।। ६९ ।।

मार्कंडेयेश्वरात्प्राच्यां वसिष्ठेश्वर पूजनात् ।।

निष्पापो जायते मर्त्यो महत्पुण्यमवाप्नुयात् ।। 4.2.61.१७० ।।

मूर्ती वसिष्ठारुंधत्योस्तत्र पूज्ये प्रयत्नतः।।

न स्त्री वैधव्यमाप्नोति न पुमान्स्त्री वियोगिताम् ।।७१।।

वसिष्ठतीर्थतो याम्यां नर्मदातीर्थमुत्तमम् ।।

विधाय श्राद्धं मेधावी नर्मदेशंविलोक्य च ।। ७२ ।।

तत्र दत्त्वा महादानं पद्मयानविमुच्यते ।।

ततस्त्रिसंध्यं वै तीर्थं त्रिसंध्येश्वर पूर्वतः ।। ७३ ।।

तत्र तीर्थे नरः स्नात्वा कृत्वा संध्यां विधानतः ।।

संध्याकाल विलोपोत्थपातकैर्नाभिभूयते ।। ७४ ।।

त्रिसंध्येश्वरमालोक्य कृतसंध्यस्त्रिकालतः ।।

त्रिवेदावर्तजं पुण्यं प्राप्नुयाच्छ्रद्धया द्विजः ।। ७५ ।।

ततोऽनुयोगिनीतीर्थं नरस्तत्र कृताप्लवः ।।

दृष्ट्वा तु योगिनीपीठं योगसिद्धिमवाप्नुयात् ।। ७६ ।।

अगस्ति तीर्थे तत्रास्ति महाघौघ विघातकृत् ।।

तत्र स्नात्वा प्रयत्नेन दृष्ट्वागस्तीचश्वरं विभुम् ।। ७७ ।।

अगस्तिकुंडे च ततः संतर्प्य च पितामहान् ।।

अगस्तिना समेतां च लोपामुद्रां प्रणम्य च ।। ७८ ।।।

सर्वपापविनिर्मुक्तः सर्वक्लेशविवर्जितः ।।

गच्छेत्स पूर्वजैः सार्धं शिवलोकं नरोत्तमः ।।७९।।

दक्षिणेऽगस्त्यतीर्थाच्च तीर्थमस्त्यतिपावनम्।।

गंगाकेशवसंज्ञं च सर्वपातकनाशनम् ।। ।।4.2.61.१८०।।

तत्र मे शुभदां मूर्तिं मुने तत्तीर्थसंज्ञिकाम् ।।

संपूज्य श्रद्धया धीमान्मम लोके महीयते ।।८१।।

तत्र पिंडान्विनिर्वाप्य दत्त्वा दानं स्वशक्तितः ।।

शतसांवत्सरीं तृप्तिं पितॄणां स समर्पयेत् ।। ८२ ।।

मणिकर्णी परीमाणमेतत्ते कीर्तितं महत् ।।

सीमाविनायकाद्याम्यां सर्वविघ्नविघातनात् ।। ८३ ।।

वैरोचनेश्वरात्प्राच्यामहं वैकुंठमाधवः ।।

तत्र मां भक्तितोभ्यर्च्य वैकुंठार्चामवाप्नुयात् ।। ८४ ।।

वीरमाधवसंज्ञोहं वीरेशात्पश्चिमे मुने ।।

तत्र व्रती समभ्यर्च्य न यामीं यातनां लभेत् ।। ८५ ।।

कालमाधवनामाहं कालभैरव सन्निधौ ।।

कलिः कालो न कलयेन्मद्भक्तमिति निश्चितम् ।।८६।।

मार्गशीर्षस्य शुक्लायामेकादश्यामुपोषितः ।।

तत्र जागरणं कृत्वा यमं नालोकयेत्क्वचित् ।। ८७ ।।

निर्वाणनरसिंहोहं पुलस्तीश्वरदक्षिणे ।।

भक्तो निर्वाणमाप्नोति तन्मूर्तिनमनादपि ।।८८।।

महाबलनृसिंहोहमोंकारात्पूर्वतो मुने ।।

दूतान्महाबलान्याम्यान्न पश्येत्तु तदर्चकः ।।८९।।

प्रचंडनरसिंहोहं चंडभैरवपूर्वतः ।

प्रचंडमप्यघं कृत्वा निष्पाप्मा स्यात्तदर्चनात् ।। 4.2.61.१९० ।।

अहं गिरिनृसिंहोस्मि तद्देहलिविनायकात् ।।

प्राच्यां प्रबलपापौ घगजानां प्रविदारणः ।। ९१ ।।

महाभयहरश्चाहं नरसिंहो महामुने ।।

पितामहेश्वरात्पश्चाद्भक्त साध्वससाध्वसः ।। ९२ ।।

अत्युग्रनरसिंहोहं कलशेश्वरपश्चिमे ।।

अत्युग्रमपि पापौघं हरामि श्रद्धयार्चितः ।। ९३ ।।

ज्वालामालीनृसिंहोऽहं ज्वालामुख्याः समीपतः ।।

संज्वालयामि पापौघ तृणानि परिपूजितः ।। ।। ९४ ।।

कोलाहलनृसिंहोस्मि दैत्यदानवमर्दनः ।।

ममनामसमुच्चारादघकोलाहलो यतः ।। ९५ ।।

कंकालभैरवो यत्र काशीरक्षणदक्षधीः ।।

तत्र मां भक्तितोभ्यर्च्य नोपसर्गैर्निरुध्यते ।। ९६ ।।

विटंकनरसिंहोस्मि नीलकंठेश्वरादनु ।।

तत्र मां श्रद्धया पूज्य नरो भवति निर्भयः ।।९७।।

अनंतवामनश्चाहमनं तेश्वरसन्निधौ ।।

अनंतान्यपि भक्तस्य कलुषाणि हरेऽर्चितः ।। ९८।।

दधिवामनसंज्ञोहं भक्तानां दधिभक्तदः ।।

यन्नामस्मरणादेव न दरिद्रो नरो भवेत् ।। ९९ ।।

त्रिविक्रमोस्म्यहं काश्यामुदीच्यां च त्रिलोचनात् ।।

ददामि पूजितो लक्ष्मीं हरामि वृजिनान्यपि ।।4.2.61.२००।।

बलिवामननामाहं बलिना परिपूजितः ।।

बलिभद्रेश्वरात्प्राच्यां भक्तानां बलवर्धनः ।। ११ ।।

दक्षिणे भवतीर्थाच्च ताम्रद्वीपादिहागतः ।।

नाम्ना ताम्रवराहोस्मि भक्तानां चिंतितार्थदः ।। २ ।।

मुने धरणिवाराहः प्रयागेश्वरसन्निधौ ।।

स्नात्वा वाराहतीर्थेत्र दृष्ट्वा मां किटि रूपिणम् ।।३।।

संपूज्य बहुभावेन न विशेद्योनिसंकटम् ।।

तत्राल्पमपि दत्त्वान्नं धरादानफलं लभेत्।। ।। ४ ।।

महाकलुषगंभीर सागरे निपतञ्जनः ।।

मम भक्त्युडुपं प्राप्य प्रलयेपि न मज्जति ।। ५ ।।

अहं कोकावराहोस्मि किटीश्वरसमीपतः ।।

तत्र मां पूजयन्मर्त्यो लभते चिंतितफलम् ।। ६ ।।

नारायणाः शतं पंच शतं च जलशायिनः ।।

त्रिंशत्कमठरूपाणि मत्स्यरूपाणि विंशतिः ।। ७ ।।

गोपालाश्च शतं साष्टं बुद्धाः संति सहस्रशः ।।

त्रिंशतरामाश्च रामा एकोत्तरंशतम् ।। ८ ।।

विष्णुरूपोस्म्यहं चैको मुक्तिमंडपमध्यतः ।।

मुनेकृतप्रसादेन विश्वेशेन श्रितः स्वयम् ।। ९ ।।

नारायणस्वरूपेण गणाश्चक्रगदोद्यताः ।।

कुर्वंति रक्षां क्षेत्रस्य परितो नियुतानि षट् ।। 4.2.61.२१० ।।

सोग्निबिंदुरिति श्रुत्वा संप्रहृष्टतनूरुहः ।।

पुनः पप्रच्छ मेधावी मूर्तिभेदान्वद प्रभो ।। ११ ।।

हिताय निजभक्तानां मम संदेहशांतये ।।

कति ते मूर्तयोनंत कथं ज्ञेयास्तथा वद ।। १२ ।।

इत्याकर्ण्य वचस्तस्याग्निबिंदोस्तपसां निधेः ।।

उवाच भगवान्विष्णुर्मूर्तिभेदाननुक्रमात ।। १३ ।।

याञ्श्रुत्वापि हि नो मर्त्यो यमगोचरतां व्रजेत् ।।

केशवादींश्चतुर्विंशद्भेदानाह प्रजापतिः ।। १४ ।।

।। श्रीविष्णुरुवाच ।। ।।

अग्निबिंदो महाप्राज्ञ शृणु ते कथयाम्यहम् ।।

आद्यदक्षिणहस्ताच्च विद्धि सृष्टिक्रमान्मुने ।। १५ ।।

शंखचक्रगदापद्मैर्मूर्तिं जानीहि कैशवीम् ।।

पूजिता या नृणां कुर्याच्चिंतितार्थमसंशयम्।। ।। १६ ।।

मधुहा परिचेतव्यः शंखपद्मगदासिभिः ।।

वैरिणो नाशमायांति तन्मूर्तिपरिसेवनात् ।। १७ ।।

संकर्षणः समर्च्योत्र शंखाब्जारिगदायुधः ।।

तन्मूर्तिपूजनाज्जातु जंतुर्न स्यात्पुनर्भवी ।। १८ ।।

शंखकौमोदकीचक्रपद्मैर्दामोदरोर्च्यते ।।

ददाति वित्तं पुत्रांश्च गोधनं धान्यमेव हि ।। १९ ।।

वामनः शंखचक्राब्जगदाभिरुपलक्षितः ।।

लक्ष्मीवंतं जनं कुर्याद्गृहेपि परिधारितः ।। 4.2.61.२२० ।।

पांचजन्यं गदांपद्मं चित्रमूर्तिं सुदर्शनम् ।।

प्रद्युम्नः पूज्यते मर्त्यैर्बहुद्युम्नं प्रयच्छति ।। २१ ।।

ऊर्ध्ववामकरात्सृष्ट्या विष्ण्वाद्यं षट्कमुच्यते ।।

यस्य स्मरणमात्रेण विलीयंतेघराशयः ।। २२ ।।

शंखारिभ्यां गदाब्जाभ्यां पूज्यो विष्णुः श्रिये नरैः ।।

शंखपद्मगदाचक्रैर्माधवः परमर्द्धिदः ।। २३ ।।

ध्येयोऽनिरुद्धः संसिद्ध्यै शंखाब्जारिगदोद्यतः ।।

शंखेन गदया चक्रांबुजाभ्यां पुरुषोत्तमः ।। ।। २४ ।।

अधोक्षजो जनिहरः शंखार्यब्जगदो मुने ।।

शंखकौमोदकीपद्मचक्रैर्ध्येयो जनार्दनः ।। २५ ।।

अधोवामकरात्सृष्ट्या षडगोंविदादि मूर्तयः ।।

शंखं चक्रं गदां पद्मं गोविंदो बिभृयात्सदा ।। २६ ।।

शंखपद्मगदाचक्रैरर्च्यो लक्ष्म्यै त्रिविक्रमः ।।

शंखाब्जचक्रं बिभ्राणो गदावाञ्श्रीधरः श्रिये ।। २७ ।।

हृषीकेशश्च शंखेन गदाचक्रांबुजैर्मतः ।।

नृसिंहः शंखचक्राभ्यां पद्मेन गदयोद्यते ।।२८।।

अच्युत शंखभृन्नित्यं गदापद्मरथांगवान् ।।

दक्षिणाधः करादूह्या वासुदेवादयश्च षट् ।।२९।।

वासुदेवश्च शंखारि गदाजलजभृत्सदा।।

शंखांबुज गदाचक्री ध्येयो नारायणो नृभिः ।।4.2.61.२३०।।

शंखी पद्मी पद्मनाभो ज्ञेयश्चक्री गदी मुने ।।
उपेंद्रः शंखवान्नित्यं गदारि कमलायुधः ।। ३१ ।।
हरिर्हरेदघं शंखी चक्री पद्मी गदी नृणाम् ।।
शंखेन गदया पद्मचक्राभ्यां कृष्ण उच्यते ।।३२।।
एते भेदा मया ख्याताः स्वमूर्तीनां महामुने ।।
यान्विज्ञाय ध्रुवं मर्त्यो भुक्तिं मुक्तिं च विंदति ।। ३३ ।।
एवं वदति गोविंदे मुनये चाग्निबिंदवे ।।
पक्षींद्रः पक्षविक्षिप्तविपक्षोऽक्षिपथं गतः ।। ३४ ।।
प्राह च प्रणिपत्याशु त्र्यक्षस्यागमनं मुदा ।।
संभ्रमेण हृषीकेशः क्वेश इत्यवदत्ततः ।।३५।।
।। गरुड उवाच ।। ।।
प्रत्यक्षः क्रियतामेष महावृषभकेतनः ।।
यस्य ध्वजस्य रत्नार्चिः पूरयेद्रोदसीमिमाम् ।। ३६ ।।
लोकलोचननिर्माण सफलीकरणक्षमम् ।।
कोटिमार्तंडविद्योत प्रद्योतित दिगाननम् ।। ३७ ।।
निरीक्ष्य पुंडरीकाक्षस्त्र्यक्षस्य वृषभध्वजम् ।।
विमानिनां विमानौघैः परीतगगनांगणम् ।। ३८ ।।
महावाद्यनि नादौघैःप्रतिस्वानित कंदरम् ।।
विद्याधरी परिक्षिप्त पुष्पांजलि सुगंधितम् ।।३९।।
प्रणम्य दूरादपिच संप्रहृष्टतनूरुहः ।।
अभ्युत्थातुं मनश्चक्रे शंखचक्रगदाधरः ।। 4.2.61.२४० ।।
अग्निबिंदुमथ प्राह मुक्तिदस्तु मुदांनिधिः ।।
इदं सुदर्शनं चक्रं स्पृशासव्येनपाणिना ।। ४१ ।।
अग्निबिंदुरितिप्रोक्तः स्पृशेद्यावत्सुदर्शनम्।।
तावत्सुदर्शनो जातः परमानुग्रहाद्धरेः ।। ४२ ।।
।। स्कंद उवाच ।। ।।
ज्योतीरूपोथ स मुनिः कौस्तुभे ज्योतिषां तनौ ।।
एकीभूतः कलशज बिंदुमाधवसेवनात्।। ४३ ।।
बिंदुमाधवपादाब्ज भ्रमरीकृतमानसाः ।।
अग्निबिंदूपमांयांति कलशोद्भव निश्चितम् ।। ४४ ।।
काश्यां सदैव वस्तव्यं द्रष्टव्यो बिंदुमाधवः ।।
श्रोतव्यमिदमाख्यानं जेतव्या जगतांगतिः ।।४५।।
पुण्या पंचनदोत्पत्तिः पुण्या माधवसंकथा ।।

पुण्यो वाराणसी वासः संभवेत्पुण्यजन्मनाम्।। ४६ ।।
अग्निबिंदोः स्तुतिं योत्र माधवाग्रे पठिष्यति ।।
समृद्धसर्वकामः स मोक्षलक्ष्मीपतिर्भवेत् ।। ४७ ।।
श्राद्धकाले सदा जप्य मिदमाख्यानमुत्तमम् ।।
द्विजानां भुंजमानानां पुरस्तात्परतृप्तये ।। ४८ ।।
जप्तव्यमिदमाख्यानं पर्वकाले विरोषतः ।।
पुण्ये पंचनदाभ्याशे पुण्यलक्ष्मीविवृद्धये ।। ४९ ।।
पठितव्यः प्रयत्नेन बिंदुमाधवसंभवः ।।
श्रोतव्यः परया भक्त्या भुक्तिमुक्तिसमृद्धये ।।4.2.61.२५०।।
संप्राप्ते वासरे विष्णो रात्रौ जागरणान्वितः ।।
श्रुत्वाख्यानमिदं पुण्यं वैकुंठे वसतिं लभेत् ।। २५१ ।। ।।
इति श्रीस्कांदे महापुरण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्द्धे बिंदुमाधवाविर्भावो माधवाग्निबिंदुसंवाद वैष्णवतीर्थमाहात्म्यवर्णनं नामैकषष्टितमोध्यायः ।। ६१ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६२



।। अगस्त्य उवाच ।।

श्रुत्वा स्कंद न तृप्तोस्मि तव वक्त्रेरितां कथाम् ।।

अत्याश्चर्यकरं प्रोक्तमाख्यानं बैंदुमाधवम् ।। १ ।।

इदानीं श्रोतुमिच्छामि देवदेवसमागमम् ।।

ताक्ष्यार्त्त्र्यक्षः समाकर्ण्य दिवोदासस्य चेष्टितम् ।।२ ।।

विष्णुमायाप्रपंचं च किमाह गरुडध्वजम् ।।

के के च शंभुना सार्धं समीयुर्मंदराद्रिरेः ।।३।।

ब्रह्मणेशः कथं दृष्टस्त्रपाकुलित चक्षुषा ।।

किमाह देव ब्रह्माणं किमुक्तं भास्वतापि च ।। ४ ।।

योगिनीभिः किमाख्यायि गणाह्वीणाः किमब्रुवन् ।।

एतदाख्याहि मे स्कंद महत्कौतूहलं मयि ।।५।।

इमं प्रश्नं निशम्यैशिर्मुनेः कलशजन्मनः ।।

प्रत्युवाच नमस्कृत्य शिवौ प्रणतसिद्धिदौ।।६।।

।। स्कंद उवाच ।। ।।

मुने शृणु कथामेतां सर्वपातकनाशिनीम्।।

अशेषविघ्नशमनीं महाश्रेयोभिवर्धिनीम्।। ७ ।।

अथ देवोऽसुररिपुः श्रुत्वा शंभुसमागमम् ।।

द्विजराजाय स मुदा समदात्पारितोषिकम् ।। ८ ।।

आयानं शंसते शंभोरुपवाराणसिप्रियम् ।।

ब्रह्माणमग्रतः कृत्वा ततश्चाभ्युद्ययौ हरिः ।। ९ ।।

विवस्वता समेतश्च तैर्गणैः परितो वृतः ।।

योगिनीभिरनूद्यातो गणेशमुपसंस्थितः ।। 4.2.62.१० ।।

अथनेत्रातिथीकृत्य देवदेवं वृषध्वजम् ।।

मंक्षु ताक्ष्यार्दवारुह्य प्रणनाम श्रियः पतिः ।। ११ ।।

पितामहोपि स्थविरो भृशं नम्रशिरोधरः ।।

प्रणतेन मृडेनैव प्रणमन्विनिवारितः ।। १२ ।।

स्वस्त्यभ्युदितपाणिश्च रुद्रसूक्तैरमंत्रयत् ।।

अक्षतान्यथ सार्द्राणि दर्शयन्सफलान्यजः ।। १३।।

मौलिं पादाब्जयोः कृत्वा गणेशः सत्वरो नतः ।।

मूर्ध्न्युपाजिघ्रयांचक्रे हरो हर्षाद्गजाननम् ।। १४ ।।

अभ्युपावेशयच्चापि परिष्वज्य निजासने ।।

सोमनंदि प्रभृतयः प्रणेमुर्दंडवद्गणाः ।। १५ ।।

योगिन्योपि प्रणम्येशं चक्रुर्मंगलगायनम् ।।

तरणिः प्रणनामाथ प्रमथाधिपतिं हरम् ।। १६ ।।

खंडेंदुशेखरश्चाथ उपसिंहासनं हरिम् ।।

समुपावेशयद्वामपार्श्वे मानपुरःसरम् ।। १७ ।।

ब्रह्माणं दक्षिणे भागे परिविश्राणितासनम् ।।

दृष्ट्वा संभाविताः सर्वे शर्वेण प्रणता गणाः ।। १८।।

मौलिचालनमात्रेण योगिन्योपि प्रसादिताः ।।

संतोषितो रविश्चापि विशेति करसंज्ञया ।। १९ ।।

अथ शंभुं शतधृतिः प्रबद्धकरसंपुटः ।।

परिविज्ञापयांचक्रे प्रसन्नवदनांबुजम् ।। 4.2.62.२० ।।

।। ब्रह्मोवाच ।। ।।

भगवन्देवदेवेश क्षंतव्यं गिरिजापते ।।

वाराणसीं समासाद्य यदहं नागतः पुनः ।। २१ ।।

प्रसंगतोपि कः काशीं प्राप्य चंद्रविभूषण ।।

किंचिद्विधातुं शक्तोपि त्यजेत्स्थविरतां दधत्।। २२ ।।

स्वरूपतो ब्राह्मणत्वादपाकर्तुं न शक्यते ।।

अथ शक्तो व्यपाकर्तुं कः पुण्ये संचिकीर्षति ।। २३।।

विभोरपि समाज्ञेयं धर्मवर्त्मानुसारिणि ।।

न किंचिदपकर्तव्यं जानता केनचित्क्वचित ।। २४।।

कस्तादृशि महीजानौ पुण्यवर्त्मन्यतंद्रिते ।।

काशीपाले दिवोदासे मनागपि विरुद्धधीः ।।२५।।

निशम्येति वचस्तुष्टः श्रीकंठोति विशुद्धधीः ।।
हसन्प्रोवाच धातारं ब्रह्मन्सर्वमवैम्यहम् ।।२६।।
।। देवदेव उवाच ।। ।।
आदौ तावददोषं हि ब्रह्मत्वं ब्राह्मणस्य ते ।।
वाजिमेधाध्वराणां च ततोपि दशकं कृतम् ।। २७ ।।
ततोपि विहितं ब्रह्मन्भवता परमं हितम् ।।
अपराधसहस्राणि यल्लिंगं स्थापितं मम ।।२८।।
येनैकमपि मे लिंगं स्थापितं यत्र कुत्रचित् ।।
तस्यापराधलेशोपि नास्ति सर्वापराधिनः ।। २९।।
अपराधसहस्रेपि ब्राह्मणं योपराध्नुयात् ।।
दिनैः कतिपयैरेव तस्यैश्वर्यं विनश्यति ।। 4.2.62.३० ।।
इति ब्रुवति देवेशेप्यंतरुच्छ्वसितं गणैः ।।
समातृभिः समंताच्च विलोक्यास्यं परस्परम् ।। ३१ ।।
अर्कोप्यवसरं ज्ञात्वा नत्वा शंभुं व्यजिज्ञपत् ।।
प्रसन्नास्यमुमाकांतं दृष्ट्वा दृष्टचराचरः ।। ३२ ।।
।। अर्क उवाच ।। ।।
नाथ काशीमितो गत्वा यथाशक्ति कृतोपधिः ।।
अकिंचित्करतां प्राप्तः सहस्रकरवानपि ।। ३३ ।।
स्वधर्मपालके तस्मिन्दिवोदासे धरापतौ ।।
निश्चितागमनं ज्ञात्वा देवस्याहमिह स्थितः ।।३४।।
प्रतीक्षमाणो देवेश त्वदागमनमुत्तमम्।।
विभज्य बहुधात्मानं त्वदाराधनतत्परः ।। ३५ ।।
मनोरथद्रुमश्चाद्य फलितः श्रीमदीक्षशात् ।।
किंचिद्भक्तिलवांभोभिः सिक्तो ध्यानेन पुष्पितः ।। ३६ ।।
इत्युदीरितमाकर्ण्य रवेर्वैरविलोचनः ।।
प्रोवाच देवदेवेशो नापराध्यसि भास्कर ।।३७।।
ममैव कार्यं विहितं त्वं यदत्र व्यवस्थितः ।।
यस्यां सुरप्रवेशो न तस्मिन्राजनि शासति ।। ३८ ।।

इति सूरं समाश्वास्य देवदेव कृपानिधिः ।।
गणानाश्वासयामास व्रीडा नम्रशिरोधरान् ।।३९।।
योगिन्योपि सुदृष्ट्वाथ शंभुना संप्रसादिताः ।।
त्रपाभरसमाक्रांत कंधरा इव सं गताः ।। 4.2.62.४० ।।
ततो व्यापारयांचक्रे त्र्यक्षो नेत्राणि चक्रिणि ।।
हरिर्न किंचिदप्यूचे सर्वज्ञाग्रे महामनाः ।। ४१ ।।
ईशोपि श्रुतवृत्तांतस्ताक्ष्र्याद्व्रणप शार्ङ्गिणोः ।।
मनसैव प्रसन्नोभून्न किंचित्पर्यभाषत ।। ४२ ।।
एतस्मिन्नंतरे प्राप्ता गोलोकात्पंच धेनवः ।।
सुनंदा सुमनाश्चापि सुशीला सुरभिस्तथा ।। ।। ४३ ।।
पंचमी कपिला चापि सर्वाघौघविघट्टिनी ।।
वात्सल्यदृष्ट्या भर्गस्य तासामूधांसि सुस्रुवुः।।४४।।
ववर्षुः पयसां पूरैस्तदूधांसि पयोधराः ।।
धारासारैरविच्छिन्नैस्तावद्यावद्ध्रदोऽभवत् ।।४५।।
पयःपयोधिरिव स द्वितीयः प्रैक्षि पार्षदैः ।।
देवेश समधिष्ठानात्ततीर्थमभवत्परम् ।।४६।।
कपिला ह्रद इत्याख्यां चक्रे तस्य महेश्वरः ।।
ततो देवाज्ञया सर्वे स्नातास्तत्र दिवौकसः ।। ४७ ।।
आविरासुस्ततस्तीर्थादथ दिव्यपितामहाः ।।
तान्दृष्ट्वा ते सुराः सर्वे तर्पयांचक्रिरे मुदा ।। ४८ ।।
अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ।।
इत्याद्या दिव्यपितरस्तृप्ताः शंभुं व्यजिज्ञपन् ।।४९।।
देवदेव जगन्नाथ भक्तानामभयप्रद ।।
अस्मिंस्तीर्थे त्वदभ्याशाज्जाता नस्तृप्तिरक्षया ।। 4.2.62.५० ।।
तस्माच्छंभो वरं देहि प्रसन्नेनांतरात्मना ।।
इति दिव्यपितॄणां स श्रुत्वा वाक्यं वृषध्वजः ।। ५१ ।।
शृण्वतां सर्वदेवानामिदं वचनमब्रवीत् ।।
शर्वः सर्वपितॄणां वै परतृप्तिकरं परम् ।। ५२ ।।

।। श्रीदेवदेव उवाच ।। ।।

शृणु विष्णो महाबाहो शृणु त्वं च पि तामह ।।

एतस्मिन्कापिले तीर्थे कापिलेय पयोभृते ।। ५३ ।।

ये पिंडान्निर्वपिष्यंति श्रद्धया श्राद्धदानतः ।।

तेषां पितॄणां संतृप्तिर्भविष्यति ममाज्ञया ।।५४।।

अन्यं विशेषं वक्ष्यामि महातृप्तिकरं परम् ।।

कुहूसोमसमायोगे दत्तं श्राद्धमिहाक्षयम्।।५५।।

संवर्तकाले संप्राप्ते जलराशिर्जलान्यपि ।।

क्षीयंते न क्षयत्यत्र श्राद्धं सोमकुहू कृतम् ।। ५६।।

अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते ।।

तीर्थे कापिलधारेस्मिन्गयया पुष्करेण किम् ।। ५७ ।।

गदाधरभवान्यत्र यत्र त्वं च पितामह ।।

वृषध्वजोस्म्यहं यत्र फल्गुस्तत्र न संशयः ।। ५८ ।।

दिव्यांतरिक्षभौमानि यानि तीर्थानि सर्वतः ।।

तान्यत्र निवसिष्यंति दर्शे सोमदिनान्विते ।। ९९ ।।

कुरुक्षेत्रे नैमिषे च गंगासागरसंगमे ।।

ग्रहणे श्राद्धतो यत्स्यात्तत्तीर्थे वार्षभध्वजे ।। 4.2.62.६० ।।

अस्य तीर्थस्य नामानि यानि दिव्य पितामहाः ।।

तान्यहं कथयिष्यामि भवतां तृप्तिदान्यलम् ।।६१।।

मधुस्रवेति प्रथममेषा पुष्करिणी स्मृता ।।

कृतकृत्या ततो ज्ञेया ततोऽसौ क्षीरनीरधिः ।। ६२ ।।

वृषभध्वजतीर्थं च तीर्थं पैतामहं ततः ।।

ततो गदाधराख्यं च पितृतीर्थं ततः परम् ।। ।। ६३ ।।

ततः कापिलधारं वै सुधाखनिरियं पुनः ।।

ततः शिवगयाख्यं च ज्ञेयं तीर्थमिदं शुभम् ।।६४।।

एतानि दश नामानि तीर्थस्यास्य पितामहाः ।।

भवतां तृप्तिकारीणि विनापि श्राद्धतर्पणैः ।। ६५ ।।

सूर्येंदु संगमे येत्र पितॄणां तृप्तिकामुकाः ।।

ब्राह्मणान्भोजयिष्यंति तेषां श्राद्धमनंतकम् ।। ६६ ।।

श्राद्धे पितॄणां संतृप्त्यै दास्यंति कपिलां शुभाम् ।।

येत्र तेषां पितृगणो वसेत्क्षीरोदरोधसि ।। ६७ ।।

वृषोत्सर्गः कृतो यैस्तु तीर्थेस्मिन्वार्षभध्वजे ।।

अश्वमेधपुरोडाशैः पितरस्तेन तर्पिताः ।। ६८ ।।

गयातोष्टगुणं पुण्यमस्मिंस्तीर्थे पितामहाः ।।

अमायां सोमयुक्तायां श्राद्धैः कापिलधारिके ।। ६९ ।।

येषां गर्भेऽभवत्स्रावो येऽ दंतजननामृताः ।।

तेषां तृप्तिर्भवेन्नूनं तीर्थे कापिलधारिके।। 4.2.62.७० ।।

अदत्तमौंजीदाना ये ये चादारपरिग्रहाः ।।

तेभ्यो निर्वापितं पिंडमिह ह्यक्षयतां व्रजेत् ।। ।। ७१ ।।

अग्निदाहमृता ये वै नाग्निदाहश्च येषु वै ।।

ते सर्वे तृप्तिमायांति तीर्थे कापिलधारिके ।। ७२ ।।

और्द्ध्वदैहिकहीना ये षोडश श्राद्धवर्जिताः ।।

ते तृप्तिमधिगच्छंति घृतकुल्यां निवापतः ।। ७३ ।।

अपुत्राश्च मृता ये वै येषां नास्त्युकप्रदः ।।

तेपि तृप्तिं परां यांति मधुस्रवसि तर्पिताः ।। ७४ ।।

अपमृत्युमृता ये वै चोरविद्युज्जलादिभिः ।।

तेषामिह कृतं श्राद्धं जायते सुगतिप्रदम् ।। ७५ ।।

आत्मघातेन निधनं यैषामिहविकमर्णाम् ।।

तेपि तृप्तिं लभंतेत्र पिंडैः शिवगयाकृतैः।। ।। ७६ ।।

पितृगोत्रे मृता ये वै मातृपक्षे च ये मृताः ।।

तेषामत्र कृतः पिंडो भवेदक्षयतृप्तिदः ।। ७७ ।।

पत्नीवर्गे मृता ये वै मित्रवर्गे च ये मृताः ।।

ते सर्वे तृप्तिमायांति तर्पिता वार्षभध्वजे ।। ७८ ।।

ब्रह्मक्षत्रविशां वंशे शूद्रवंशेंऽत्यजेषु च ।।

येषां नामगृहीत्वात्र दीयते ते समुद्धृताः ।। ९ ।।

तिर्यग्योनि मृता ये वै ये पिशाचत्वमागताः ।।

तेप्यूर्ध्वगतिमायांति तृप्ताः कापिलधारिके ।। 4.2.62.८० ।।

ये तु मानुषलोकेस्मिन्पितरो मर्त्ययोनयः ।।

ते दिव्ययोनयः स्युर्वै मधुस्रवसि तर्पिताः ।। ।। ८१ ।।

ये दिव्यलोके पितरः पुण्यैर्देवत्वमागताः ।।

ते ब्रह्मलोके गच्छंति तृप्तास्तीर्थे वृषध्वजे ।। ८२।।

कृते क्षीरमयं तीर्थं त्रेतायां मधुमत्पुनः ।।

द्वापरे सर्पिषा पूर्णं कलौ जलमयं भवेत्।। ८३ ।।

सीमाबहिर्गतमपि ज्ञेयं तीर्थमिदं शुभम् ।।

मध्ये वाराणसि श्रेष्ठं मम सान्निध्यतो नरैः ।। ८४ ।।

काशीस्थितैर्यतो दर्शि ध्वजो मेषवृषलांछनः ।।

वृषध्वजेन नाम्नातः स्थास्याम्यत्र पितामहाः।। ८५ ।।

पितामहेन सहितो गदाधरसमन्वितः ।।

रविणा पार्षदैः सार्धं तुष्टये वः पितामहाः ।। ८६ ।।

इति यावद्वरं दत्ते पितृभ्यो वृषभध्वजः ।।

तावन्नदी समागत्य प्रणम्येशं व्यजिज्ञपत् ।।८७।।

।। नंदिकेश्वर उवाच ।। ।।

विहितः स्यदनः सज्जस्ततोस्तु विजयोदयः ।।

अष्टौ कंठीरवा यत्र यत्रोक्ष्णामष्टकं शुभम् ।। ८८ ।।

यत्रेभाः परिभांत्यष्टौ यत्राष्टौ जविनो हयाः ।।

मनः संयमनं यत्र कशापाणि व्यवस्थितम् ।। ८९ ।।

गंगायमुनयोरीषे चक्रे पवनदेवता ।।

सायंप्रातर्मये चक्रे छत्रं द्यौर्मंडलं शुचि ।।4.2.62.९०।।

तारावलीमयाः कीला आहेया उपनायकाः ।।

श्रुतयो मार्गदर्शिन्यः स्मृतयो रथगुप्तयः ।। ९१ ।।

दक्षिणाधूर्दृढा यत्र मखा यत्राभिरक्षकाः ।।

आसनं प्रणवो यत्र गायत्रीपादपीठभूः ।। ९२ ।।

सांगा व्याहृतयो यत्र शुभा सोपानवीथिकाः ।।

सूर्याचंद्रमसौ यत्र सततं द्वाररक्षकौ ।।९३।।

अग्निर्मकरतुंडश्च रथभूः कौमुदीमयी ।।
ध्वजदंडो महामेरुः पताका हस्करप्रभा ।। ९४ ।।
स्वयं वाग्देवता यत्र चंचच्चामरधारिणी ।।
।। स्कंद उवाच ।। ।।
शैलादिनेति विज्ञप्तो देवदेव उमापतिः ।। ९५ ।।
कृतनीराजनविधिरष्टभिर्देवमातृभिः ।।
पिनाकपाणिरुत्तस्थौ दत्तहस्तोथ शार्ङ्गिणा ।। ९६ ।।
निनादो दिव्यवाद्यानां रोदसी पर्यपूरयत् ।।
गीतमंगलगीर्भिश्च चारणैरनुवर्धितः ।। ९७ ।।
तेन दिव्यनिनादेन बधिरीकृतदिङ्मुखाः ।।
आहूता इव आजग्मुर्विष्वग्भुवनवासिनः ।। ९८ ।।
देवाकोट्यस्त्रयस्त्रिंशद्गणाः कोट्ययुतद्वयम् ।।
नवकोट्यस्तु चामुंडा भैरव्यः कोटिसंमिताः ।। ९९ ।।
षडाननाः कुमाराश्च मयूरवरवाहनाः ।।
ममानुगाः समायाताः कोटयोष्टौ महाबलाः ।। 4.2.62.१०० ।।
आययुः कोटयः सप्त स्फुरत्परशुपाणयः ।।
पिचंडिला महावेगा विघ्नविघ्ना गजाननाः ।। १ ।।
षडशीतिसहस्राणि मुनयो ब्रह्मवादिनः ।।
तावतोपि समाजग्मुस्तत्रत्ये गृहमेधिनः ।। २ ।।
नागानां कोटयस्तिस्रः पातालतलवासिनाम् ।।
दानवानां च दैत्यानां द्वे द्वे कोटी शिवात्मनाम् ।। ३ ।।
गंधर्वा नियुतान्यष्टौ कोट्यर्धं यक्षरक्षसाम् ।।
विद्याधराणामयुतं नियुतद्वयसंयुतम् ।। ४ ।।
तथा षष्टिसहस्राणि दिव्याश्चाप्सरसः शुभाः ।।
गोमातरोऽष्टौ लक्षाणि सुपर्णान्ययुतानि षट् ।। ५ ।।
सागराः सप्त संप्राप्ता नानारत्नोपदप्रदाः ।।
सरितां च सहस्राणि त्रीणि पंचायुतानि च ।। ६ ।।
गिरयोऽष्टौ सहस्राणि वनस्पतिशतत्रयम्।।

आजग्मुर्दिग्गजा अष्टौ यत्र देवः पिनाकधृक् ।।७।।

एतैः समेतः संतुष्टः परिष्टुत इतस्ततः ।।

श्रीकंठो रथमारुह्य काशीं प्राविशदुत्तमाम् ।।।७।।

स गिरींद्रसुतस्त्र्यक्षो मुदां धाम मुदां खनिः ।।

काशीं प्रैक्षिष्ट संहृष्टस्त्रिविष्टप समुत्कटाम् ।।९।।

।। स्कंद उवाच ।। ।।

श्रुत्वाख्यानमिदं पुण्यं कोटिजन्माघनाशनम् ।।

पठित्वा पाठयित्वा च शिवसायुज्यमाप्नुयात् ।। 4.2.62.११० ।।

श्राद्धकाले विशेषेण पठनीयं प्रयत्नतः ।।

अक्षयं तद्भवेच्छ्राद्धं पितृतुष्टिकरं परम् ।। ११ ।।

वृषभध्वज माहात्म्यं पठित्वा शिवसन्निधौ ।।

प्रत्यहं वर्षमात्रं तु ह्यपुत्रः पुत्रवान्भवेत् ।। १२ ।।

विश्वेशितुः संप्रवेशो यः काश्यां समुदाहृतः ।।

परमानंदकंदस्य बीजमेतत्सुनिश्चितम् ।। १३ ।।

पठित्वैतन्मुदाख्यानं प्रविशेद्यो नवं गृहम् ।।

स सर्वसौख्यनिलयो भवेदेव न संशयः ।।१४।।

त्रैलोक्यानंदजनकमेतदाख्यानमुत्तमम् ।।

अस्य श्रवणमात्रेण विश्वेशः संप्रसीदति ।। १५ ।।

अलभ्यलाभो देवस्य जातोत्र हि यतः परः ।।

ततः काशी प्रवेशाख्यं जप्यमाख्यानमुत्तमम् ।। ११६ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्द्धे वृषभध्वजप्रादुर्भावोनाम द्विषष्टितमोऽध्यायः ।। ६२ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६३



अगस्त्य उवाच ।। ।।

दृष्ट्वा काशीं दृगानंदां तारकारे पुरारिणा ।।

किमकारि समाचक्ष्व प्राप्तां बहुमनोरथैः ।। १ ।।

।। स्कंद उवाच ।। ।।

पतिव्रतापते ऽगस्त्य शृणु वक्ष्याम्यशेषतः ।।

मृगांकलक्ष्मणोत्कंठं काशी नेत्रातिथीकृता ।। २ ।।

अथ सर्वज्ञनाथेन भक्तवत्सलचेतसा ।।

जैगीषव्यो मुनिश्रेष्ठो गुहां तस्थो निरीक्षितः ।। ३ ।।

यमनेहसमारभ्य मदंराद्रिं विनिर्ययौ ।।

अद्रींद्र सुतया सार्धं रुद्रेणोक्षेंद्रगामिना ।। ४ ।।

तं वासरं पुरस्कृत्य जग्राह नियमं दृढम् ।।

जैगीषव्यो महामेधाः कुंभयोने महाकृती ।।५।।

विषमेक्षण पादाब्जं समीक्षिष्ये यदा पुनः ।।

तदांबुविप्रुषमपि भक्षयिष्यामि चेत्यहो ।।६।।

कुतश्चिद्धारणायोगादथवा शंभ्वनुग्रहात ।।

अनश्नन्नपिबन्योगी जैगीषव्यः स्थितो मुने ।। ७ ।।

तं शंभुरेव जानाति नान्यो जानाति कश्चन ।।

अतएव ततः प्राप्तः प्रथमं प्रमथाधिपः ।। ८ ।।

ज्येष्ठशुक्लचतुर्दश्यां सोमवारानुराधयोः ।।

तत्पर्वणि महायात्रा कर्तव्या तत्र मानवैः ।। ९ ।।

ज्येष्ठस्थानं ततः काश्यां तदाभूदपि पुण्यदम् ।।

तत्र लिंगं समभवत्स्वयं ज्येष्ठेश्वराभिधम् ।। 4.2.63.१० ।।

तल्लिंगदर्शनात्पुंसां पापं जन्मशतार्जितम् ।।

तमोर्कोदयमाप्येव तत्क्षणादेव नश्यति ।।११।।

ज्येष्ठवाप्यां नरः स्नात्वा तर्पयित्वा पितामहान् ।।

ज्येष्ठेश्वरं समालोक्य न भूयो जायते भुवि ।। १२ ।।

आविरासीत्स्वयं तत्र ज्येष्ठेश्वर समीपतः ।।

सर्वसिद्धिप्रदा गौरी ज्येष्ठाश्रेष्ठा समंततः ।। १३ ।।

ज्येष्ठे मासि सिताष्टम्यां तत्र कार्यो महोत्सवः ।।

रात्रौ जागरणं कार्यं सर्वसंपत्समृद्धये ।। १४ ।।

ज्येष्ठां गौरीं नमस्कृत्य ज्येष्ठवापी परिप्लुता ।।

सौभाग्यभाजनं भूयाद्योषा सौभाग्यभागपि।। १५ ।।

निवासं कृतवाञ्शंभुस्तस्मिन्स्थाने यतः स्वयम् ।।

निवासेश इति ख्यातं लिंगं तत्र परं ततः ।। ।। १६ ।।

निवासेश्वरलिंगस्य सेवनात्सर्वसंपदः ।।

निवसंति गृहे नित्यं नित्यं प्रतिपदं पुनः ।। १७ ।।

कृत्वा श्राद्धं विधानेन ज्येष्ठस्थाने नरोत्तमः ।।

ज्येष्ठां तृप्तिं ददात्येव पितृभ्यो मधुसर्पिषा ।। १८ ।।

ज्येष्ठतीर्थे नरः काश्यां दत्त्वा दानानि शक्तितः ।।

ज्येष्ठान्स्वर्गानवाप्नोति नरो मोक्षं च गच्छति ।। १९ ।।

ज्येष्ठेश्वरो च्र्यः प्रथमं काश्यां श्रेयोर्थिभिर्नरैः ।।

ज्येष्ठागौरी ततोभ्यच्र्या सर्वज्येष्ठमभीप्सुभिः ।। 4.2.63.२० ।।

अथ नंदिनमाहूय धूर्जटिः स कृपानिधिः ।।

शृण्वतां सर्वदेवानामिदं वचनमब्रवीत् ।। २१ ।।

।। ईश्वर उवाच ।। ।।

शैलादे प्रविशाशु त्वं गुहास्त्यत्र मनोहरा ।।

तदंतरेस्ति मे भक्तो जैगीषव्यस्तपोधनः ।। २२ ।।

महानियमवान्नंदिस्त्वगस्थिस्नायु शेषितः ।।

तमिहानय मद्भक्तं मद्दर्शन दृढव्रतम् ।। २३ ।।

यदाप्रभृत्यगां काश्या मंदरं सर्वसुंदरम् ।।

महानियमवानेष तदारभ्योज्झिताशनः ।। २४ ।।

गृहाण लीलाकमलमिदं पीयूषपोषणम् ।।

अनेन तस्य गात्राणि स्पृश सद्यः सुबृंहिणा ।। २५ ।।

ततो नंदी समादाय तल्लीलाकमलं विभोः ।।
प्रणम्य देवदेवेशमाविशद्गह्वरां गुहाम् ।।२६।।
नंदी दृष्ट्वाथ तं तत्र धारणादृढमानसम् ।।
तपोग्नि परिशुष्कांगं कमलेन समस्पृशत् ।। २७ ।।
तपांते वृष्टिसंयोगाच्छालूर इव कोटरे ।।
उल्ललास स योगींद्रः स्पर्शमात्रात्तदब्जजात् ।। २८ ।।
अथ नंदी समादाय सत्वरं मुनिपुंगवम् ।।
देवदेवस्य पादाग्रे नमस्कृत्य न्यपातयत् ।। २९ ।।
जैगीषव्योथ संभ्रांतः पुरतो वीक्ष्य शंकरम् ।।
वामांगसन्निविष्टाद्रितनयं प्रणनाम ह ।। 4.2.63.३० ।।
प्रणम्य दंडवद्भूमौ परिलुठ्य समंततः ।।
तुष्टाव परया भक्त्या स मुनिश्चंद्रशेखरम् ।।३१।।
।। जैगीषव्य उवाच ।। ।।
नमः शिवाय शांताय सर्वज्ञाय शुभात्मने।।
जगदानंदकंदाय परमानंदहेतवे ।। ३२ ।।
अरूपाय सरूपाय नानारूपधराय च ।।
विरूपाक्षाय विधये विधिविष्णुस्तुताय च ।।३३।।
स्थावराय नमस्तुभ्यं जंगमाय नमोस्तुते ।।
सर्वात्मने नमस्तुभ्यं नमस्ते परमात्मने ।। ३४ ।।
नमस्त्रैलोक्यकाम्याय कामांगदहनाय च ।।
नमो शेषविशेषाय नमः शेषांगदाय ते ।। ।। ३५ ।।
श्रीकंठाय नमस्तुभ्यं विषकंठाय ते नमः ।।
वैकुंठवंद्यपादाय नमोऽकुंठितशक्तये ।।३६।।
नमः शक्त्यर्धदेहाय विदेहाय सुदेहिने ।।
सकृत्प्रणाममात्रेण देहिदेहनिवारिणे।। ३७ ।।
कालाय कालकालाय कालकूट विषादिने ।।
व्यालयज्ञोपवीताय व्यालभूषणधारिणे ।। ३८ ।।
नमस्ते खंडपरशो नमः खंडें दुधारिणे ।।

खंडिताशेष दुःखाय खड्गखेटकधारिणे ।। ३९ ।।

गीर्वाणगीतनाथाय गंगाकल्लोलमालिने ।।

गौरीशाय गिरीशाय गिरिशाय गुहारणे ।। ।। 4.2.63.४० ।।

चंद्रार्धशुद्धभूषाय चंद्रसूर्याग्निचक्षुषे ।।

नमस्ते चर्मवसन नमो दिग्वसनायते ।। ४१ ।।

जगदीशाय जीर्णाय जराजन्महराय ते ।।

जीवायते नमस्तुभ्यं जंजपूकादिहारिणे ।। ४२ ।।

नमो डमरुहस्ताय धनुर्हस्ताय ते नमः ।।

त्रिनेत्राय नमस्तुभ्यं जगन्नेत्राय ते नमः ।। ४३ ।।

त्रिशूलव्यग्रहस्ताय नमस्त्रिपथगाधर ।।

त्रिविष्टपाधिनाथाय त्रिवेदीपठिताय च ।। ४४ ।।

त्रयीमयाय तुष्टाय भक्ततुष्टिप्रदाय च ।।

दीक्षिताय नमस्तुभ्यं देवदेवाय ते नमः ।। ४५ ।।

दारिताशेषपापाय नमस्ते दीर्घदर्शिने ।।

दूराय दुरवाप्याय दोषनिर्दलनाय च ।। ४६ ।।

दोषाकर कलाधार त्यक्तदोषागमाय च ।।

नमो धूर्जटये तुभ्यं धत्तूरकुसुमप्रिय ।।४७।।

नमो धीराय धर्माय धर्मपालाय ते नमः ।।

नीलग्रीव नमस्तुभ्यं नमस्ते नीललोहित ।। ४८ ।।

नाममात्रस्मृतिकृतां त्रैलोक्यैश्वर्यपूरक ।।

नमः प्रमथनाथाय पिनाकोद्यतपाणये ।। ।। ४९ ।।

पशुपाशविमोक्षाय पशूनां पतये नमः ।।

नामोच्चारणमात्रेण महापातकहारिणे ।। 4.2.63.५० ।।

परात्पराय पाराय परापरपराय च ।।

नमोऽपारचरित्राय सुपवित्रकथाय च ।। ५१ ।।

वामदेवाय वामार्धधारिणे वृषगामिने ।।

नमो भर्गाय भीमाय नतभीतिहराय च ।। ५२ ।।

भवाय भवनाशाय भूतानांपतये नमः ।।

महादेव नमस्तुभ्यं महेश महसांपते ।। ५३ ।।

नमो मृडानीपतये नमो मृत्युंजयाय ते ।।

यज्ञारये नमस्तुभ्यं यक्षराजप्रियाय च ।। ५४।।

यायजूकाय यज्ञाय यज्ञानां फलदायिने ।।

रुद्राय रुद्रपतये कद्रुद्राय रमाय च ।। ५५ ।।

शूलिने शाश्वतेशाय श्मशानावनिचारिणे ।।

शिवाप्रियाय शर्वाय सर्वज्ञाय नमोस्तु ते ।। ५६ ।।

हराय क्षांतिरूपाय क्षेत्रज्ञाय क्षमाकर ।।

क्षमाय क्षितिहर्त्रे च क्षीरगौराय ते नमः ।। ५७ ।।

अंधकारे नमस्तुभ्यमाद्यंतरहिताय च ।।

इडाधाराय ईशाय उपेद्रेंद्रस्तुताय च ।। ५८ ।।

उमाकांताय उग्राय नमस्ते ऊर्ध्वरेतसे ।।

एकरूपाय चैकाय महदैश्वर्यरूपिणे ।। ५९ ।।

अनंतकारिणे तुभ्यमंबिकापतये नमः ।।

त्वमोंकारो वषट्कारो भूर्भुवःस्वस्त्वमेव हि ।।4.2.63.६०।।

दृश्यादृश्य यदत्रास्ति तत्सर्वं त्वमु माधव ।।

स्तुतिं कर्तुं न जानामि स्तुतिकर्ता त्वमेव हि ।। ।। ६१ ।।

वाच्यस्त्वं वाचकस्त्वं हि वाक्च त्वं प्रणतोस्मि ते ।।

नान्यं वेद्मि महादेव नान्यं स्तौमि महेश्वर ।। ६२ ।।

नान्यं नमामि गौरीश नान्याख्यामाददे शिव ।।

मूकोन्यनामग्रहणे बधिरोन्यकथाश्रुतौ ।।६३।।

पंगुरन्याभिगमनेऽस्म्यंधोऽन्यपरिवीक्षणे।।

एक एव भवानीश एककर्ता त्वमेव हि।। ६४ ।।

पाता हर्ता त्वमेवैको नानात्वं मूढकल्पना ।।

अतस्त्वमेव शरणं भूयोभूयः पुनःपुनः ।।६५।।

संसारसागरे मग्नं मामुद्धर महेश्वर ।।

इति स्तुत्वा महेशानं जैगीषव्यो महामुनिः ।। ६६ ।।

वाचंयमो भवत्स्थाणोः पुरतः स्थाणुसन्निभः ।।

इति स्तुतिं समाकर्ण्य मुनेश्चंद्रविभूषणः ।।

उवाच च प्रसन्नात्मा वरं ब्रूहीति तं मुनिम् ।। ६७ ।।

।। जैगीषव्य उवाच ।। ।।

यदि प्रसन्नो देवेश ततस्तव पदांबुजात् ।।

मा भवानि भवानीश दूरं दूरपदप्रद ।।६८।।

अपरश्च वरो नाथ देयोयमविचारतः ।।

यन्मया स्थापितं लिंगं तत्र सान्निध्यमस्तु ते ।।६९।।

।। ईश्वर उवाच ।। ।।

जैगीषव्य महाभाग यदुक्तं भवतानघ ।।

तदस्तु सर्वं तेभीष्टं वरमन्यं ददामि च ।। 4.2.63.७० ।।

योगशास्त्रं मया दत्तं तव निर्वाणसाधकम् ।।

सर्वेषां योगिनां मध्ये योगाचार्योऽस्तु वै भवान् ।। ७१ ।।

रहस्यं योगविद्याया यथावत्त्वं तपोधन ।।

संवेत्स्यसे प्रसादान्मे येन निर्वाणमाप्स्यसि ।। ७२ ।।

यथा नदी यथा भृंगी सोमनंदी यथा तथा ।।

त्वं भविष्यसि भक्तो मे जरामरणवर्जितः ।। ७३ ।।

संति व्रतानि भूयांसि नियमाः संत्यनेकधा ।।

तपांसि नाना संत्यत्र संति दानान्यनेकशः ।। ७४ ।।

श्रेयसां साधनान्यत्र पापघ्नान्यपि सर्वथा ।।

परं हि परमश्चैष नियमो यस्त्वया कृतः ।। ७५।।

परो हि नियमश्चैष मां विलोक्य यदश्यते ।।

मामनालोक्य यद्भुक्तं तद्भुक्तं केवलत्वघम् ।। ७६ ।।

असमर्च्य च यो भुङ्क्ते पत्रपुष्पफलैरपि ।।

रेतोभक्षी भवेन्मूढः स जन्मान्येकविंशतिम् ।। ७७ ।।

महतो नियमस्यास्य भवतानुष्ठितस्य वै ।।

नार्हति षोडशी मात्रामप्यन्ये नियमा यमाः ।। ७८ ।।

अतो मच्चरणाभ्याशे त्वं निवत्स्यसि सर्वथा ।।

अतो नैःश्रेयसीं लक्ष्मीं तत्रैव प्राप्स्यसि ध्रुवम् ।। ७९ ।।

जैगीषव्येश्वरं नाम लिंगं काश्यां सुदुर्लभम् ।।

त्रीणि वर्षाणि संसेव्य लभेद्योगं न संशयः ।। 4.2.63.८० ।।

जैगीषव्यगुहां प्राप्य योगाभ्यसनतत्परः ।।

षण्मासेन लभेत्सिद्धिं वाञ्छितां मदनुग्रहात् ।। ८१ ।।

तव लिंगमिदं भक्तैः पूजनीयं प्रयत्नतः ।।

विलोक्या च गुहा रम्या परासिद्धिमभीप्सुभिः ।। ८२ ।।

अत्र ज्येष्ठेश्वरक्षेत्रे त्वल्लिंगं सर्वसिद्धिदम् ।।

नाशयेदघसंघानि दृष्टं स्पृष्टं समर्चितम् ।। ८३ ।।

अस्मिञ्ज्येष्ठेश्वरक्षेत्रे संभोज्य शिवयोगिनः ।।

कोटिभोज्यफलं सम्यगेकैकपरिसंख्यया।।८४ ।।

जैगीषव्येश्वरं लिंगं गोपनीयं प्रयत्नतः ।।

कलौ कलुषबुद्धीनां पुरतश्च विशेषतः ।। ८५ ।।

करिष्याम्यत्र सांनिध्यमस्मिँल्लिंगे तपोधन।।

योगसिद्धिप्रदानाय साधकेभ्यः सदैव हि ।।८६।।

ददे शृणु महाभाग जैगीषव्यापरं वरम् ।।

त्वयेदं यत्कृतं स्तोत्रं योगसिद्धिकरं परम् ।। ८७ ।।

महापापौघशमनं महापुण्यप्रवर्धनम् ।।

महाभीतिप्रशमनं महाभक्तिविवर्धनम् ।। ८८ ।।

एतत्स्तोत्रजपात्पुंसामसाध्यं नैव किंचन ।।

तस्मात्सर्वप्रयत्नेन जपनीयं सुसाधकैः ४।। ८९ ।।

इति दत्त्वा वरं तस्मै स्मरारिः स्मेरलोचनः ।।

ददर्श ब्राह्मणां स्तत्र समेतान्क्षेत्रवासिनः ।। 4.2.63.९० ।।

।। स्कंद उवाच ।। ।।

निशम्याख्यानमतुलमेतत्प्राज्ञः प्रयत्नतः ।।

निष्पापो जायते मर्त्यो नोपसर्गैः प्रबाध्यते ।।९१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे ज्येष्ठेशाख्यानं नाम त्रिषष्टितमोऽध्यायः ।। ६३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६४

https://sa.wikisource.org/s/fx2
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्त्य उवाच ।।

दृष्ट्वा भूदेवताः शंभुं किमाचख्युः षडानन ।।

कानिकानि च लिंगानि तत्र तान्यपिचक्ष्व मे ।। १ ।।

ज्येष्ठस्थाने महापुण्ये देवदेवस्य वल्लभे ।।

आश्चर्यं किमभूत्तत्र तदाचक्ष्व षडानन ।।२ ।।

।। स्कंद उवाच ।। ।।

शृण्वगस्त्य यथा पृच्छि भवता तद्ब्रवीम्यहम् ।।

मंदराद्रिं यदा देवो गतवान्ब्रह्मगौरवात् ।। ३ ।।

तदा निराश्रया विप्राः क्षेत्रसंन्यासिनोनघाः ।।

उपाकृताश्चाविरतं महाक्षेत्रप्रतिग्रहात् ।। ४ ।।

खातंखातं च दंडाग्रैर्भूमिं कंदादिवृत्तयः ।।

चक्रुः पुष्करिणीं रम्यां दंडखाताभिधां मुने ।। ५ ।।

तत्तीर्थं परितः स्थाप्य महालिंगान्यनेकशः ।।

महेशाराधनपरास्तपश्चक्रुः प्रयत्नतः ।। ६ ।।

विभूतिधारिणो नित्यं नित्यरुद्राक्षधारिणः ।।

लिंगपूजारता नित्यं शतरुद्रियजापिनः ।। ७ ।।

ते श्रुत्वा देवदेवस्य पुनरागमनं मुने ।।

तपःकृशा अतितरामासुरानंद मेदुराः ।। ८ ।।

द्विजाः पंचसहस्राणि चरतो विपुलं तपः ।।

दंडखातान्महातीर्थादाजग्मुर्देवदर्शने ।। ९ ।।

तीर्थान्मंदाकिनी नाम्नो द्विजाः पाशुपतव्रताः ।।

शिवैकाराधनपराः समेता अयुतोन्मिताः ।। 4.2.64.१० ।।

हंसतीर्थात्परिप्राप्ता अयुतं त्रिशतोत्तरम् ।।

शतदुर्वाससस्तीर्थादेकादश शताधिकम् ।। ११ ।।

मत्स्योदर्याः परापेतुः सहस्राणि षडेव हि ।।

कपालमोचनात्सप्त शतान्यभ्यागता द्विजाः ।। १२।।

ऋणमोचनतस्तीर्थात्सहस्रं द्विशताधिकम् ।।

वैतरण्या अपि मुने द्विजानामयुतार्धकम् ।।१३।।

ततः पृथूदकात्कुंडात्पृथुना परिखानितात् ।।

अयासिषुर्द्विजानां च शतान्येव त्रयोदश ।।१४।।

तथैवाप्सरसः कुंडान्मेनकाख्याच्छतद्वयम् ।।

उर्वशीकुंडतः प्राप्ताः सहस्रं द्विशताधिकम् ।। १५ ।।

तथैरावतकुंडाच्च ब्राह्मणास्त्रिशतानि च ।।

गंधर्वाप्सरसः सप्त शतानि द्विशतानि च ।। १६ ।।

वृषेशतीर्थादाजग्मुर्नवतिः सशतत्रया ।।

यक्षिणीकुंडतः प्राप्ताः सहस्रं त्रिशतोत्तरम् ।। १७ ।।

लक्ष्मीतीर्थात्परं जग्मुः षोडशैव शतानि च ।।

पिशाचमोचनात्सप्त सहस्राणि द्विजोत्तमाः ।। १८ ।।

पितृकुंडाच्छतंसाग्रं ध्रुवतीर्थाच्छतानि षट् ।।

मानसाख्याच्च सरसो द्विशती सशतत्रया ।। १९ ।।

ब्राह्मणा वासुकिह्रदात्सहस्राणि दशैव तु ।।

तथैवाष्टशतं द्रष्टुं जानकीकुंडतो द्विजाः ।। 4.2.64.२० ।।

काशीनाथमनुप्राप्ताः परमानंददायिनम् ।।

तथा गौतमकुंडाच्च शतानिनव चागताः ।।२१।।

तीर्थाद्दुर्गतिसंहर्तुर्ब्राह्मणाः प्रतिपेदिरे ।।

एकादशशतान्येव द्रष्टुं देवमुमापतिम् ।। २२ ।।

असीसंभेदमारभ्य गंगातीरस्थिता द्विजाः ।।

आसंगमेश्वरात्तत्र परिप्राप्ता घटोद्भव ।। २३ ।।

अष्टादशसहस्राणि तथा पंचशतान्यपि ।।

ब्राह्मणाः पंचपंचाशद्गंगातीरात्समागताः ।। २४ ।।

सार्द्रदूर्वाक्षतकरैः सपुष्पफलपाणिभिः ।।

सुगंधमाल्यहस्तैश्च ब्राह्मणैर्जयवादिभिः ।। २५ ।।

स्तुतो मंगलसूक्तैश्च प्रणतश्च पुनःपुनः ।।

तेभ्यो दत्ताभयः शंभुः पप्रच्छ कुशलं मुदा ।। २६ ।।

ततस्ते ब्राह्मणाः प्रोचुः प्रबद्धकरसंपुटाः ।।

क्षेत्रे निवसतां नाथ सदानः कुशलोदयः ।। २७ ।।

विशेषतः कृतोऽस्माभिः साक्षान्नयनगोचरः।।

त्वं यत्स्वरूपं श्रुतयो न विदुः परमार्थतः ।। २८ ।।

सदैवाकुशलं तेषां ये त्वत्क्षेत्रपराङ्मुखाः ।।

चतुर्दशापि वै लोकास्तेषां नित्यं पराङ्मुखाः ।। २९ ।।

येषां हृदि सदैवास्ते काशीत्वाशीविषां गद ।।

संसाराशीविषविषं न तेषां प्रभवेत्क्वचित् ।। 4.2.64.३० ।।

गर्भरक्षामणिर्मंत्रः काशीवर्णद्वयात्मकः ।।

यस्य कंठे सदा तिष्ठेत्तस्याकुशलता कुतः ।। ३१ ।।

सुधां पिबति यो नित्यं काशीवर्णद्वयात्मिकाम् ।।

स नैर्जरीं दशां हित्वा सुधैव परिजायते ।। ३२ ।।

श्रुतं कर्णामृतं येन काशीत्यक्षरयुग्मकम् ।।

न समाकणर्यत्येव स पुनर्गर्भजां कथाम्।। ३३ ।।

काशी रजोपि यन्मूर्ध्नि पतेदप्यनिलाहतम् ।।

चंद्रशेखरतन्मूर्धा भवेच्चंद्रकलांकितः ।। ३४ ।।

प्रसंगतोपि यन्नेत्रपथमानंदकाननम् ।।

यातं तेत्र न जायंते नेक्षेरन्पितृकान(व?)नम् ।।३५।।

गच्छता तिष्ठता वापि स्वपता जाग्रताथवा ।।

काशीत्येष महामंत्रो येन जप्तः सनिर्भयः ।। ३६ ।।

येन बीजाक्षरयुगं काशीति हृदि धारितम् ।।

अबीजानि भवंत्येव कर्मबीजानि तस्य वै ।। ३७ ।।

काशी काशीति काशीति जपतो यस्य संस्थितिः ।।

अन्यत्रापि सतस्तस्य पुरो मुक्तिः प्रकाशते ।। ३८ ।।

क्षेममूर्तिरियं काशी क्षेममूर्तिर्भवान्भव ।।

क्षेममूर्तिस्त्रिपथगा नान्यत्क्षेमत्रयं क्वचित् ।। ३९ ।।

ब्राह्मणानामिति वचः क्षेत्रभक्तिविबृंहितम् ।।

निशम्य गिरिजाकांतस्तुतोष नितरां हरः ।। 4.2.64.४० ।।

प्रोवाच च प्रसन्नात्मा धन्या यूयं द्विजर्षभाः ।।

येषामिहेदृशी भक्तिर्मम क्षेत्रेतिपावने ।। ४१ ।।

जाने सत्त्वमया जाताः क्षेत्रस्यास्य निषेवणात् ।।

नीरजस्का वितमसः संसारार्णवपारगाः ।। ४२ ।।

वाराणस्यास्तु ये भक्तास्ते भक्ता मम निश्चितम्।।

जीवन्मुक्ता हि ते नूनं मोक्षलक्ष्म्या कटाक्षिताः ।। ४३ ।।

यैश्च काशीस्थितो जंतुरल्पकोपि विरोधितः ।।

तैर्वै विश्वंभरा सर्वा मया सह विरोधिता ।। ।। ४४ ।।

वाराणस्याः स्तुतिमपि यो निशम्यानुमोदते ।।

अपि ब्रह्मांडमखिलं ध्रुवं तेनानुमोदितम् ।।४५।।

निवसंति हि ये मर्त्या अस्मिन्नानंदकानने ।।

ममांतःकरणे ते वै निवसेयुरकल्मषाः ।। ४६ ।।

निवसंति मम क्षेत्रे मम भक्तिं प्रकुर्वते ।।

मम लिंगधरा ये तु तानेवोपदिशाम्यहम् ।। ४७ ।।

निवसंति मम क्षेत्रे मम भक्तिं न कुर्वते ।।

मम लिंगधरा ये नो न तानुपदिशाम्यहम् ।।४८।।

काशी निर्वाणनगरी येषां चित्ते प्रकाशते ।।

ते मत्पुरः प्रकाशंते नैःश्रेयस्या श्रिया वृताः ।। ४९ ।।

मोक्षलक्ष्मीरियं काशी न येभ्यः परिरोचते ।।

स्वर्लक्ष्मीं कांक्षमाणेभ्यः पतितास्ते न संशयः ।। 4.2.64.५० ।।

कार्थीं संकाक्षमाणानां पुरुषार्थचतुष्टयम् ।।

पुरः किंकरवत्तिष्ठेन्ममानुग्रहतो द्विजाः ।। ५१ ।।

आनंदकानने ह्यत्र ज्वलद्दावानलोस्म्यहम् ।।

कर्मबीजानि जंतूनां ज्वालये न प्ररोहये ।। ५२ ।।

वस्तव्यं सततं काश्यां यष्टव्योहं प्रयत्नतः ।।

जेतव्यौ कलिकालौ च रंतव्या मुक्तिरंगना ।५३।।

प्राप्यापि काशीं दुर्बुद्धिर्यो न मां परिसेवते।।

तस्य हस्तगताप्याशु कैवल्यश्रीः प्रणश्यति ।। ५४ ।।

धन्या मद्भक्तिलक्ष्माणो ब्राह्मणाः काशिवासिनः ।।

यूयं यच्चेतसो वृत्तेर्न दूरेहं न काशिका ।। ५५ ।।

दातव्यो वो वरः कोत्र व्रियतां मे यथारुचि ।।

प्रेयांसो मे यतो यूयं क्षेत्रसंन्यासकारिणः ।। ५६ ।।

इति पीत्वा महेशानमुखक्षीराब्धिजां सुधाम् ।।

परितृप्ता द्विजाः सर्वे वव्रुर्वरमनुत्तमम् ।। ५७ ।।

ब्राह्मणा ऊचुः ।। ।।

उमापते महेशान सर्वज्ञ वर एष नः ।।

काशी कदापि न त्याज्या भवता भवतापहृत् ।। ५८ ।।

वचनाद्ब्राह्मणानां तु शापो मा प्रभवत्विह ।।

कदाचिदपि केषांचित्काश्यां मोक्षांतरायकः ।। ५९ ।।

तव पादाबुंजद्वंद्वे निर्द्वंद्वा भक्तिरस्तु नः ।।

आ कलेवरपातं च काशीवासोस्तु नोनिशम् ।।4.2.64.६०।।

किमन्येन वरेणेश देय एष वरो हि नः ।।

अवधेह्यंधकध्वंसिन्वरमन्यं वृणीमहे ।। ६१ ।।

तव प्रतिनिधी कृत्यास्माभिस्त्वद्भक्तिभावितैः ।।

प्रतिष्ठितेषु लिंगेषु सान्निध्यं भवतोऽस्त्विह।।६२।।

श्रुत्वेति तेषां वाक्यानि तथास्त्विवति पिनाकिना ।।

प्रोचेऽन्योपि वरो दत्तो ज्ञानं वश्च भविष्यति ।।६३।।

पुनः प्रोवाच देवेशो निशामयत भो द्विजाः ।।

हितं वः कथयाम्यत्र तदनुष्ठीयतां ध्रुवम् ।। ६४ ।।

सेव्योत्तरवहा नित्यं लिंगमर्च्यं प्रयत्नतः ।।

दमो दानं दया नित्यं कर्तव्यं मुक्तिकांक्षिभिः ।। ६५ ।।

इदमेव रहस्यं च कथितं क्षेत्रवासिनाम् ।।

मतिः परहिता कार्या वाच्यं नोद्वेगकृद्वचः ।।६६।।

मनसापि न कर्तव्यमेनोत्र विजिगीषुणा।।

अत्रत्यमक्षयं यस्मात्सुकृतं सुकृतेतरम् ।। ६७ ।।

अन्यत्र यत्कृतं पापं तत्काश्यां परिणश्यति ।।
वाराणस्यां कृतं पापमंतर्गेहे प्रणश्यति ।। ६८ ।।
अंतर्गेहे कृतं पापं पैशाच्यनरकावहम् ।।
पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि ।। ६९ ।।
न कल्पकोटिभिः काश्यां कृतं कर्म प्रमृज्यते ।।
किंतु रुद्रपिशाचत्वं जायतेऽत्रायुतत्रयम्.।। 4.2.64.७०. ।।
वाराणस्यां स्थितो यो वै पातकेषु रतः सदा ।।
योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम् ।। ७१ ।।
पुनरत्रैव निवसञ्ज्ञानं प्राप्स्यत्यनुत्तमम् ।।
तेन ज्ञानेथ संप्राप्ते(?) मोक्षमाप्स्यत्यनुत्तमम् ।। ७२ ।। (संप्रांते)
दुष्कृतानि विधायेह बहिः पंचत्वमागताः ।।
तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः ।। ७३ ।।
यामाख्या मे गणाः संति घोरा विकृतमूर्त्तयः ।।
मूषायां ते धमंत्यादौ क्षेत्रदुष्कृतकारिणः ।। ७४ ।।
नयंत्यनूपप्रायां च ततः प्राचीं दुरासदाम् ।।
वर्षाकाले दुराचारान्पातयंति महाजले ।। ७५ ।।
जलौकाभिः सपक्षाभिर्दंदशूकैर्जलोद्भवैः ।।
दुर्निवारैश्च मशकैर्दश्यंते ते दिवानिशम् ।। ७६ ।।
ततो यामैर्हिमर्तौ ते नीयंतेऽद्रौ हिमालये ।।
अशनावरणैर्हीनाः क्लेश्यंते ते दिवानिशम् ।। ७७ ।।
मरुस्थले ततो ग्रीष्मे वारिवृक्षविवर्जिते ।।
दिवाकरकरैस्तीव्रैस्ताप्यंते ते पिपासिताः ।। ७८ ।।
क्लेशितास्ते गणैरुग्रैर्यातनाभिः समंततः ।।
इत्थं कालमसंख्यातमानीयंते ततस्त्विह ।। ७९ ।।
निवेदयंति ते यामाः कालराजांतिके ततः ।।
कालराजोपि तान्द्रष्ट्वा कर्मसंस्मार्य दुष्कृतम् ।। 4.2.64.८० ।।
विवस्त्रान्क्षुत्तृषार्तांश्च लग्नपृष्ठोदरत्वचः ।।
अन्यै रुद्रपिशाचैश्च सहसंयोजयत्यपि ।। ८१ ।।

ततो रुद्रपिशाचास्ते भैरवानुचराः सदा ।।
सहंते क्लममत्यर्थं क्षुत्तृष्णोग्रत्वसंभवम् ।। ८२ ।।
आहारं रुधिरोन्मिश्रं ते लभंते कदाचन ।।
एवं त्र्ययुतसंख्याकं कालं तत्रातिदुःखिताः ।। ८३ ।।
श्मशानस्तंभमभितो नीयंते कंठपाशिताः ।।
पिपासिता अपि न तेंऽबुस्पर्शमपि चाप्नुयुः ।। ८४ ।।
अथ संक्षीणपापास्ते कालभैरवदर्शनात् ।।
इहैव देहिनो भूत्वा मुच्यंते ते ममाज्ञया ।। ८५ ।।
तस्मान्न कामयेतात्र वाङ्मनःकर्मणाप्यघह(?)म् ।।
शुचौ पथि सदा स्थेयं महालाभमभीप्सुभिः ।। ८६ ।।
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।।
ममानुग्रहमासाद्य गच्छत्येव परां गतिम् ।। ८७ ।।
अनाशनं यः कुरुते मद्भक्त इह सुव्रतः ।।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।। ८८ ।।
अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्विषम् ।।
अविमुक्तं सदा सेव्यं संसारभयमोचकम् ।। ८९ ।।
नान्यत्पश्यामि जंतूनां मुक्त्वा वाराणसीं पुरीम् ।।
सर्वपापप्रशमनीं प्रायश्चित्तं कलौ युगे ।। 4.2.64.९० ।।
जन्मांतरसहस्रेषु यत्पापं समुपार्जितम् ।।
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।। ९१ ।।
जन्मांतरसहस्रेषु युंजन्योगी यदाप्नुयात् ।।
तदिहैव परो मोक्षो मरणादधि गम्यते ।। ९२ ।।
तिर्यग्योनिगताः सत्त्वा ये विमुक्तकृतालयाः ।।
कालेन निधनं प्राप्तास्तेपि यांति परां गतिम् ।। ९३ ।।
अविमुक्तं न सेवंते ये मूढास्तमसावृताः ।।
विण्मूत्ररेतसां मध्ये ते वसंति पुनः पुनः ।। ९४ ।।
अविमुक्तं समासाद्य यो लिंगं स्थापयेत्सुधीः ।।
कल्पकोटिशतैर्वापि नास्ति तस्य पुनर्भवः ।। ९५ ।।

ग्रहनक्षत्रताराणां कालेन पतनं ध्रुवम् ।।
अविमुक्ते मृतानां तु पतनं नैव विद्यते।। ९६ ।।
ब्रह्महत्यां नरः कृत्वा पश्चात्संयतमानसः ।।
प्राणांस्त्यजति यः काश्यां स मुक्तो नात्र संशयः ।। ९७ ।।
स्त्रियः पतिव्रता याश्च मम भक्तिसमाहिताः ।।
अविमुक्ते मृता विप्रा यांति ताः परमां गतिम् ।। ९८ ।।
अत्रोत्क्रमणकालेहं स्वयमेव द्विजोत्तमाः ।।
दिशामि तारकं ब्रह्म देही स्याद्येन तन्मयः ।। ९९ ।।
मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः ।।
यथा मोक्षमिहाप्नोति न तथान्यत्रकुत्रचित् ।। 4.2.64.१०० ।।
मरणं निश्चितं ज्ञात्वा गतिं चासुखरूपिणीम् ।।
चलमागंतुकं सर्वं ततः काशीं समाश्रयेत् ।। १ ।।
काशी समाश्रिता यैस्तु मनोवाक्कायकर्मभिः ।।
तानत्र निर्मलधियो निवार्णश्रीः समाश्रयेत् ।। २ ।।
काशीस्थितैकमपि यः प्रीणयेन्न्यायजैर्धनैः ।।
तेन त्रैलोक्यमखिलं प्रीणितं तु मया सह ।। ३ ।।
यः प्रीणयति पुण्यात्मा निर्वाणनगरी नरम् ।।
पुमर्थैन स्थितेर्नित्यं ब्राह्मणाः प्रीणयामि तम् ।। ४ ।।
दिवोदासोपि राजर्षिः काशीं धर्मेण पालयन् ।।
सदेहो मत्पदं प्राप्तो यतो न पुनरागतिः ।। ५।।
अत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना ।।
अतो विमुक्तमासाद्य नान्यद्गच्छेत्तपोवनम् ।। ६ ।।
मोक्षं सुदुर्लभं ज्ञात्वा संसारं चातिभीषणम् ।।
अश्मना चरणौ हत्वा कालमत्र प्रतीक्षयेत् ।। ७ ।।
अविमुक्तं परित्यज्य यदा यास्यंति दुर्धियः ।।
हसिष्यंति तदा भूतान्यन्योन्यकरताडनैः ।। ८ ।।
प्राप्य वाराणसीं पुण्यां सिद्धिक्षेत्रमनुत्तमम् ।।
परिनिष्क्रांतुमन्यत्र कस्य जंतोर्मतिर्भवेत् ।। ९ ।।

महादानेन चान्यत्र यत्फलं लभ्यते नरैः ।।

अविमुक्ते तु काकिण्यां दत्तायां तदवाप्यते ।। 4.2.64.११० ।।

एकं समर्चयेल्लिंगं तपस्तप्येत चापरः ।।

तयोर्मध्ये तु स श्रेष्ठो यो लिंगं पूजयेदिह ।। ११ ।।

तीर्थांतरे गवां कोटिं विधिवद्यः प्रयच्छति।।

एकाहं यो वसेत्काश्यां काशीवासी तयोर्वरः।। ।। १२ ।।

अन्यत्र ब्राह्मणानां तु कोटिं संभोज्य यत्फलम्।।

वाराणस्यां तु चैकेन भोजितेन तदाप्यते।। १३ ।।

सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।।

तुलापुरुषदानेन काशीभिक्षा समा भवेत्।। १४ ।।

ममेह परमं ज्योतिरापातालाद्व्यवस्थितम् ।।

अतीत्य सप्तलोकादीननंतं लिंगरूपधृक् ।। १५ ।।

पृथिव्यंतेपि ये लिंगमविमुक्तं स्मरंति मे ।।

कलुषैस्ते विमुच्यंते महद्भिरिति निश्चितम् ।। १६ ।।

अस्मिन्क्षेत्रे तु ये नाहं दृष्टः स्पृष्टः समर्चितः ।।

संप्राप्य तारकं ज्ञानं न स भूयोभिजायते ।। १७ ।।

यो मामिह समभ्यर्च्य म्रियतेन्यत्रकुत्रचित् ।।

जन्मांतरेपि मां प्राप्य स विमुक्तो भविष्यति ।।१८।।

इत्युक्त्वा क्षेत्रमाहात्म्यं द्विजानामग्रतो हरः ।।

पश्यतामेव तेषां तु तत्रैवांतर्हितोभवत् ।। १९ ।।

तेपि साक्षाद्विरूपाक्षं प्रत्यक्षीकृत्य वाडवाः ।।

प्रहृष्टमनसोऽत्यंतं प्रययुः स्वस्वमाश्रयम् ।। 4.2.64.१२० ।।

शंभोर्वाक्यं विनिश्चित्य सर्वज्ञस्य कृपानिधेः ।।

त्यक्त्वा कार्यांतरं विप्रा लिंगान्येव समर्चिषुः ।। २१ ।।

।। स्कंद उवाच ।। ।।

पठित्वा पाठयित्वा च रहस्याख्यानमुत्तमम् ।।

श्रद्धालुः पातकैर्मुक्तः शिवलोके महीयते ।। १२२ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्द्धे क्षेत्ररहस्यकथनंनाम चतुःषष्टितमोऽध्यायः ।। ६४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६५

https://sa.wikisource.org/s/fx3

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

ज्येष्ठेश्वरस्य परितो यानि लिंगानि कुंभज।।

तानि पंचसहस्राणि मुनीनां सिद्धिदान्यलम् ।। १ ।।

पराशरेश्वरं लिंगं ज्येष्ठेशादुत्तरे महत्।।

तस्य दर्शनमात्रेण निर्मलं ज्ञानमाप्यते ।। २ ।।

तत्रैव सिद्धिदं लिंगं मांडव्येश्वरसंज्ञितम् ।।

न तस्य दर्शनाज्जातु दुर्बुद्धिं प्राप्नुयान्नरः ।। ३ ।।

लिंगं च शंकरेशाख्यं तत्रैव शुभदं सदा ।।

भृगुनारायणस्तत्र भक्तानां सर्वसिद्धिदः ।। ४ ।।

जाबालीश्वर संज्ञं च लिंगं तत्रातिसिद्धिदम् ।।

तस्य संदर्शनाज्जातु न जंतुर्दुर्गतिं व्रजेत् ।। ५ ।।

सुमंतु मुनिना श्रेष्ठस्तत्रादित्यः प्रतिष्ठितः ।।

तस्य संदर्शनादेव कुष्ठव्याधिः प्रशाम्यति ।। ६ ।।

भैरेवी भीषणा नाम तत्र भीषणरूपिणी ।।

क्षेत्रस्य भीषणं सर्वं नाशयेद्भावतोर्चिता ।। ७ ।।

तत्रोपजंघने लिंगं कर्मबंधविमोक्षणम् ।।

नृभिः संसेवितं भक्त्या षण्मासात्सिद्धिदं परम्।।८।।

भारद्वाजेश्वरं लिंगं लिंगं माद्रीश्वरं वरम् ।।

एकत्र संस्थिते द्वे तु द्रष्टव्ये सुकृतात्मना ।।९।।

अरुणि स्थापितं लिंगं तत्रैव कलशोद्भव ।।

तस्य लिंगस्य सेवातः सर्वामृद्धिमवाप्नुयात्।।4.2.65.१०।।

लिंगं वाजसनेयाख्यं तत्रास्त्यतिमनोहरम् ।।

तस्य संदर्शनात्पुंसां वाजपेयफलं भवेत्।।११।।

कण्वेश्वरं शुभं लिंगं लिंगं कात्यायनेश्वरम् ।।

वामदेवेश्वरं लिंगमौतथ्येश्वरमेव च ।। १२ ।।

हारीतेश्वरसंज्ञं च लिंगं वै गालवेश्वरम् ।।
कुंभेर्लिंगं महापुण्यं तथा वै कौसुमेश्वरम् ।। १३ ।।
अग्निवर्णेश्वरं चैव नैध्रुवेश्वरमेव च ।।
वत्सेश्वरं महालिंगं पर्णादेश्वरमेव च ।। १४ ।।
सक्तुप्रस्थेश्वरं लिंगं कणादेशं तथैव च ।।
अन्यत्तत्र महालिंगं मांडूकाय निरूपितम् ।। १५ ।।
वाभ्रवेयेश्वरं लिंगं शिलावृत्तीश्वरं तथा ।।
च्यवनेश्वर लिंगं च शालंकायनकेश्वरम् ।। १६ ।।
कलिंदमेश्वरं लिंगं लिंगमक्रोधनेश्वरम् ।।
लिंगं कपोतवृत्तीशं कंकेशं कुंतलेश्वरम ।। १७ ।।
कंठेश्वरं कहोलेशं लिंगं तुंबुरुपूजितम् ।।
मतगेशं मरुत्तेशं मगधेयेश्वरं तथा ।। १८ ।।
जातूकर्णेश्वरं लिंगं जंबूकेश्वरमेव च ।।
जारुधीशं जलेशं च जाल्मेशं जालकेश्वरम् ।। १९ ।।
एवमादीनि लिंगानि अयुतार्धानि कुंभज ।।
स्मरणाद्दर्शनात्स्पर्शादर्चनान्नमनात्स्तुतेः ।। 4.2.65.२० ।।
न जातु जायते जंतोः कलुषस्य समुद्भवः ।।
एतेषां शुभलिंगानां ज्येष्ठस्थानेति पावने ।। २१ ।।
।। स्कंद उवाच ।। ।।
एकदा तत्र यद्वृत्तं ज्येष्ठस्थाने महामुने ।।
तदहं ते प्रवक्ष्यामि शृणुष्वाघविनाशनम् ।। २२ ।।
स्वैरं विहरतस्तत्र ज्येष्ठस्थाने महेशितुः ।।
कौतुकेनैव चिक्रीड शिवा कंदुकलीलया ।। २३ ।।
उदंच न्न्यंचदंगानां लाघवं परितन्वती ।।
निःश्वासामोदमुदित भ्रमराकुलितेक्षणा ।। २४ ।।
भ्रश्यद्ध म्मिल्लसन्माल्य स्थपुटीकृत भूमिका ।।
स्विद्यत्कपोलपत्राली स्रवदंबुकणोज्ज्वला ।। २५ ।।
स्फुटच्चोलांशुकपथनिर्यदंगप्रभावृता ।।

उल्लसत्कंदुकास्फालातिशोणितकरांबुजा ।। २६ ।।

कंदुकानुग सदृष्टि नर्तित भ्रूचलतांचला ।।

मृडानी किल खेलंती ददृशे जगदंबिका ।। २७ ।।

अंतरिक्षचराभ्यां च दितिजाभ्यां मनोहरा ।।

कटाक्षिताभ्यामिव वै समुपस्थितमृत्युना ।। २८ ।।

विदलोत्पल संज्ञाभ्यां दृप्ताभ्यां वरतो विधेः ।।

तृणीकृतत्रिजगती पुरुषाभ्यां स्वदोर्बलात् ।। २९ ।।

देवीं परिजिहीर्षू तौ विषमेषु प्रपीडितौ ।।

दिवोवतेरतुः क्षिप्रं मायां स्वीकृत्य शांबरीम् ।। 4.2.65.३० ।।

धृत्वा पारषदीं मूर्तिमायातावंबिकांतिकम् ।।

तावत्यंतं सुदुर्वृत्तावतिचंचलमानसा ।। ३१ ।।

सर्वज्ञेन परिज्ञातौ चांचल्याल्लोचनोद्भवात् ।।

कटाक्षिताथ देवेन दुर्गादुर्गारिघातिनी ।। ३२।।

विज्ञाय नेत्रसंज्ञां तु सर्वज्ञार्ध शरीरिणी ।।

तेनैव कंदुकेनाथ युगपन्निजघान तौ ।। ३३।।

महाबलौ महादेव्या कंदुकेन समाहतौ।।

परिभ्रम्य परिभ्रम्य तौ दुष्टौ विनिपेततुः ।। ३४ ।।

वृंतादिव फले पक्वे तालादनिललोलिते ।।

दंभोलिना परिहते शृंगेइव महागिरेः ।। ३५ ।।

तौ निपात्य महादैत्यावकार्यकरणोद्यतौ ।।

ततः परिणतिं यातो लिंगरूपेण कंदुकः ।।३६।।

कंदुकेश्वरसंज्ञं च तल्लिंगमभवत्तदा ।।

ज्येष्ठेश्वर समीपे तु सर्वदुष्टनिवारणम् ।।३७।।

कंदुकेश समुत्पत्तिं यः श्रोष्यति मुदान्वितः ।।

पूजयिष्यति यो भक्तस्तस्य दुःखभयं कुतः ।। ३८ ।।

कंदुकेश्वर भक्तानां मानवानां निरेनसाम् ।।

योगक्षेमं सदा कुर्याद्भवानी भयनाशिनी ।। ३९ ।।

मृडानी तस्य लिंगस्य पूजां कुर्यात्सदैव हि ।।

तत्रैव देव्या सान्निध्यं पार्वत्या भक्तसिद्धिदम् ।। 4.2.65.४० ।।

कंदुकेशं महालिंगं काश्यां यैर्न समर्चितम् ।।

कथं तेषां भवनीशौ स्यातां सर्वेप्सितप्रदौ ।। ४१ ।।

द्रष्टव्यं च प्रयत्नेन तल्लिंगं कंदुकेश्वरम् ।।

सर्वोपसर्गसंघातविघातकरणं परम् ।। ४२ ।।

कंदुकेश्वर नामापि श्रुत्वा वृजिनसंततिः ।।

क्षिप्रं क्षयमवाप्नोति तमः प्राप्योष्णगुं यथा ।। ४३ ।।

।। स्कंद उवाच ।। ।।

संशृणुष्व महाभाग ज्येष्ठेश्वर समीपतः ।।

यद्वृत्तांतमभूद्विप्र परमाश्चर्यकृद्ध्रुवम् ।। ४४ ।।

दंडखाते महातीर्थे देवर्षिपितृतृप्तिदे ।।

तप्यमानेषु विप्रेषु निष्कामं परमं तपः ।। ४५ ।।

दैत्यो दुंदुभिनिर्ह्रादो दुष्टः प्रह्लादमातुलः ।।

देवाः कथं सुजेयाः स्युरित्युपायमचिंतयत् ।। ४६ ।।

किं बलाश्च किमाहाराः किमाधारा हि देवताः ।।

विचार्य बहुशो दैत्यस्तत्त्वं विज्ञाय निश्चितम् ।। ४७ ।।

अवश्यमग्रजन्मानो हेतवोत्र विचारतः ।।

ब्राह्मणान्हंतुमसकृत्कृतवानुद्यमं ततः ।। ४८ ।।

यतः क्रतुभुजो देवाः क्रतवो वेदसंभवाः ।।

ते वेदा ब्राह्मणाधीनास्ततो देवबलं द्विजाः ।। ४९ ।।

निश्चितं ब्राह्मणाधाराः सर्वे वेदाः सवासवाः ।।

गीर्वाणा ब्राह्मणबला नात्र कार्या विचारणा ।। 4.2.65.५० ।।

ब्राह्मणा यदि नष्टाः स्युर्वेदा नष्टास्ततः स्वयम् ।।

आम्नायेषु प्रणष्टेषु विनष्टाः शततंतवः ।। ५१ ।।

यज्ञेषु नाशं गच्छत्सु हृताहारास्ततः सुराः ।।

निर्बलाः सुखजेयाः स्युर्जितेषु त्रिदशेष्वथ ।। ५२ ।।

अहमेव भविष्यामि मान्यस्त्रिजगतीपतिः ।।

आहरिष्यामि देवानामक्षयाः सर्वसंपदः ।। ५३ ।।

निर्वेक्ष्यामि सुखान्येव राज्ये निहतकंटके ।।
इति निश्चित्य दुर्बुद्धिः पुनश्चिंतितवान्मुने ।। ५४ ।।
द्विजाः क्व संति भूयांसो ब्रह्मतेजोतिबृंहिताः ।।
श्रुत्यध्ययन संपन्नास्तपोबल समन्विताः ।। ५५ ।।
भूयसां ब्राह्मणानां तु स्थानं वाराणसी भवेत् ।।
तानादावुपसंहृत्य यामि तीर्थांतरं ततः ।। ५६ ।।
यत्रयत्र हि तीर्थेषु यत्रयत्राश्रमेषु च ।।
संति सर्वेऽग्रजन्मानस्ते मयाद्याः समंततः ।। ५७ ।।
इति दुंदुभिनिर्ह्लादो मतिं कृत्वा कुलोचिताम् ।।
प्राप्यापि काशीं दुर्वृत्तो मायावी न्यवधीद्द्विजान् ।। ५८ ।।
समित्कुशान्समादातुं यत्र यांति द्विजोत्तमाः ।।
अरण्ये तत्र तान्सर्वान्स भक्षयति दुर्मतिः ।। ९।।
यथा कोपि न वेत्त्येव तथाच्छन्नोऽभवत्पुनः ।।
वने वनेचरो भूत्वा यादोरूपी जलाशये ।। 4.2.65.६० ।।
अदृश्यरूपी मायावी देवानामप्यगोचरः ।।
दिवाध्यानपरस्तिष्ठेन्मुनिवन्मुनिमध्यगः ।। ६१ ।।
प्रवेशमुटजानां च निर्गमं च विलोकयन् ।।
यामिन्यां व्याघ्ररूपेण ब्राह्मणान्भक्षयेद्बहून् ।। ६२ ।।
निःशब्दमेव नयति नत्यजेदपि कीकसम् ।।
इत्थं निपातिता विप्रास्तेन दुष्टेन भूरिशः ।। ६३ ।।
एकदा शिवरात्रौ तु भक्तस्त्वेको निजोटजे ।।
सपर्यां देवदेवस्य कृत्वा ध्यानस्थितोभवत् ।। ६४ ।।
स च दुंदुभिनिर्ह्लाद दैत्येंद्रो बलदर्पितः ।।
व्याघ्र रूपं समास्थाय तमादातुं मतिं दधे ।।६५।।
तं भक्तं ध्यानमापन्नं दृढचित्तं शिवेक्षणे।।
कृतास्त्रमंत्रविन्यासं तं क्रांतुमशकन्न सः ।। ६६ ।।
अथ सर्वगतः शंभुर्ज्ञात्वा तस्याशयं हरः ।।
दैत्यस्य दुष्टरूपस्य वधाय विदधे धियम् ।। ६७ ।।

यावदादित्सति व्याघ्रस्तावदाविरभूद्धरः ।।

जगद्रक्षामणिस्त्र्यक्षो भक्तरक्षण दक्षधीः ।। ६८ ।।

रुद्रमायांतमालोक्य तद्भक्तार्चित लिंगतः ।।

दैत्यस्तेनैव रूपेण ववृधे भूधरोपमः ।। ६९ ।।

सावज्ञमथसर्वज्ञं यावत्पश्यति दानवः ।।

तावदायांतमादाय कक्षायंत्रे न्यपीडयत् ।। 4.2.65.७० ।।

पंचास्यस्त्वथ पंचास्यं मुष्ट्या मूर्धन्यताडयत् ।।

स च तेनैव रूपेण कक्षानिष्पेषणेन च ।।७१ ।।

अत्यार्तमरटद्व्याघ्रो रोदसी परिपूरयन् ।।

तेन नादेन सहसा सं प्रवेपितमानसाः ।।७२।।

तपोधनाः समाजग्मुर्निशि शब्दानुसारतः ।।

तत्रेश्वरं समालोक्य कक्षीकृत मृगेश्वरम्।।७३।।

तुष्टुवुः प्रणता सर्वे शर्वं जयजयाक्षरैः ।।

परित्राता जगत्त्रातः प्रत्यूहाद्दारुणादितः ।।७४ ।।

अनुग्रहं कुरुध्वेश तिष्ठात्रैव जगद्गुरो ।।

अनेनैव हि रूपेण व्याघ्रेश इति नामतः ।। ७५ ।।

कुरु रक्षां महादेव ज्येष्ठस्थानस्य सर्वदा ।।

अन्येभ्योप्युपसर्गेभ्यो रक्ष नस्तीर्थवासिनः ।। ७६ ।।

इति श्रुत्वा वचस्तेषां देवश्चंद्रविभूषणः ।।

तथेत्युक्त्वा पुनः प्राह शृणुध्वं द्विजपुंगवाः ।। ७७ ।।

यो मामनेन रूपेण द्रक्ष्यति श्रद्धयात्र वै ।।

तस्योपसर्गसंघातं घातयिष्याम्यसंशयम् ।। ७८ ।।

एतल्लिंगं समभ्यर्च्य यो याति पथि मानवः ।।

चौरव्याघ्रादिसंभूत भयं तस्य कुतो भवेत् ।। ७९ ।।

मच्चरित्रमिदं श्रुत्वा स्मृत्वा लिंगमिदं हृदि ।।

संग्रामे प्रविशन्मर्त्यो जयमाप्नोति नान्यथा ।।4.2.65.८०।।

इत्युक्त्वा देवदेवशस्तस्मिँल्लिंगे लयं ययौ ।।

सविस्मयास्ततो विप्राः प्रातर्याता यथागतम् ।। ८१ ।।

।। स्कन्द उवाच ।। ।।

तदा प्रभृति कुंभोत्थ लिंगं व्याघ्रेश्वराभिधम् ।।

ज्येष्ठेशादुत्तरेभागे दृष्टं स्पृष्टं भयापहम् ।। ८२ ।।

व्याघ्रेश्वरस्य ये भक्तास्तेभ्यो बिभ्यति किंकराः ।।

यामा अपि महाक्रूरा जयजीवेति वादिनः।। ८३ ।।

पराशरेश्वरादीनां लिंगानामिह संभवम् ।।

श्रुत्वा नरो न लिप्येत महापातककर्दमैः।। ८४ ।।

कंदुकेश समुत्पत्तिं व्याघ्रे शाविर्भवं तथा।।

समाकर्ण्य नरो जातु नोपसर्गैः प्रदूयते ।। ८५ ।।

उटजेश्वर लिंगं तु व्याघ्रेशात्पश्चिमे स्थितम् ।।

भक्तरक्षार्थमुद्भूतं स्यात्समभ्यर्च्य निर्भयः ।। ८६ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखण्डे उत्तरार्धे पराशरेश्वरादिलिंगसंभवोनाम पंचषष्टितमोऽध्यायः ।। ६५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६६



।। स्कन्द उवाच ।। ।।

ज्येष्ठेश्वरस्य परितो लिंगान्यन्यानि यानि तु ।।

तानि ते कथयिष्यामि शृणु वातापितापन ।। १ ।।

ज्येष्ठेशाद्दक्षिणे भागे लिंगमप्सरसां शुभम् ।।

तत्रैवाप्सरसः कूपः सौभाग्योदकसंज्ञकः ।। २ ।।

तत्कूपजलसुस्नातो विलोक्याप्सरसेश्वरम् ।।

न दौर्भाग्यमवाप्नोति नारी वा पुरुषोथवा ।। ३ ।।

तत्रैव कुक्कुटेशाख्यं लिंगं वापीसमीपगम्।।

तस्य पूजनतः पुंसां कुटुंबं परिवर्धते ।। ४ ।।

पितामहेश्वरं लिंगं ज्येष्ठवापीतटे शुभम् ।।

तत्र श्राद्धं नरः कृत्वा पितॄणां मुदमर्पयेत्।। ५ ।।

पितामहेशान्नैर्ऋत्यां पूजनीयं प्रयत्नतः ।।

गदाधरेश्वरं लिंगं पितॄणां परितृप्तिदम् ।। ६ ।।

दिशि पुण्यजनाख्यायां लिंगाज्ज्येष्ठेश्वरान्मुने।।

वासुकीश्वरसंज्ञं च लिंगमर्च्यं समंततः।। ७ ।।

तत्र वासुकिकुंडे च स्नानदानादिकाः क्रियाः ।।

सर्पभीतिहराः पुंसां वासुकीशप्रभावतः।। ८ ।।

यः स्नातो नागपंचम्यां कुंडे वासुकिसंज्ञिते ।।

न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः।। ९।।

कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै।।

नागाः प्रसन्ना जायंते कुले तस्यापि सर्वदा।। 4.2.66.१०।।

तत्कुण्डात्पश्चिमे भागे लिंगं वै तक्षकेश्वरम्।।

पूजनीयं प्रयत्नेन भक्तानां सर्वसिद्धिदम् ।। ११।।

मुनेस्तस्योत्तरे भागे कुण्डं तक्षकसंज्ञितम् ।।

कृतोदकक्रियस्तत्र न सर्पैरभिभूयते।। १२।।

तत्कुण्डादुत्तरे भागे क्षेत्रं क्षेमकरः सदा।।

भक्तानां साध्वसध्वंसी कपाली नाम भैरवः।। १३।।

भैरवस्य महाक्षेत्रं तद्वै साधकसिद्धिदम्।।

तत्र संसाधिता विद्याः षण्मासातत्सिद्धिमाप्नुयुः।। १४।।

तत्र चण्डी महामुण्डा भक्तविघ्नोपशांतिदा।

बलिपूजोपहाराद्यैः पूज्या स्वाभीष्टसिद्धये।।१५।।

तस्या यात्रां तु यः कुर्यान्महाष्टम्यां नरोत्तमः ।।

यशस्वी पुत्रपौत्राढ्यो लक्ष्मीवाँश्चापि जायते ।। १६ ।।

महामुण्डा प्रतीच्यां तु चतुःसागरवापिका ।।

तस्यां स्नातो भवेत्स्नातः सागरेषु चतुर्ष्वपि ।। १७ ।।

महाप्रसिद्धं तत्स्थानं चतुःसागरसंज्ञितम्।।

चत्वारि तत्र लिंगानि सागरैः स्थापितानि च ।। १८ ।।

तस्या वाप्याश्चतुर्दिक्षु पूजितानि दहंत्यघम् ।।

तदुत्तरे महालिंगं वृषभेश्वरसंज्ञितम् ।। १९ ।।

हरस्य वृषभेणैव स्थापितं तत्स्वभक्तितः ।।

तस्य दर्शनतः पुंसां षण्मासान्मुक्तिरुद्भवेत् ।। 4.2.66.२० ।।

वृषेश्वरादुदीच्यां तु गंधर्वेश्वरसंज्ञितम् ।।

गंधर्वकुण्डं तत्प्राच्यां तत्र स्नात्वा नरोत्तमः ।। २१ ।।

गंधर्वेश्वरमभ्यर्च्य दत्त्वा दानानि शक्तितः ।।

सन्तर्प्य पितृदेवांश्च गंधर्वैः सह मोदते ।। २२ ।।

कर्कोटनामा नागोस्ति गन्धर्वेश्वरपूर्वतः ।।

तत्र कर्कोटवापी च लिंगं कर्कोटकेश्वरम् ।। २३ ।।

तस्यां वाप्यां नरः स्नात्वा कर्कोटेशं समर्च्य च ।।

कर्कोटनागमाराध्य नागलोके महीयते ।। २४ ।।

कर्कोट नागो यैर्दृष्टस्तद्वाप्यां विहितोदकैः ।।

क्रमते न विषं तेषां देहे स्थावरजंगमम् ।। २५ ।।

कर्कोटेशात्प्रतीच्यां तु धुंधुमारीश्वराभिधम् ।।

तल्लिंगाभ्यर्चनात्पुंसां न भवेद्वैरिजं भयम् ।। २६ ।।

पुरूरवेश्वरं लिंगं तदुदीच्यां व्यवस्थितम् ।।
द्रष्टव्यं तत्प्रयत्नेन चतुर्वर्गफलप्रदम् ।। २७ ।।
दिग्गजेनार्चितं लिंगं सुप्रतीकेन तत्पुरः ।।
सुप्रतीकेश्वरं नाम्ना यशोबलविवर्धनम् ।। २८ ।।
सरश्च सुप्रतीकाख्यं तत्पुरो भासते महत् ।।
तत्र स्नात्वा च तल्लिंगं दृष्ट्वा दिक्पतितां लभेत् ।। २९ ।।
तत्रास्त्येका महागौरी नाम्ना विजयभैरवी ।।
रक्षार्थमुत्तराद्वारि स्थिता पूज्येष्टसिद्धये ।। 4.2.66.३० ।।
वरणायास्तटे रम्ये गणौ हुंडनमुंडनौ ।।
क्षेत्ररक्षां विधत्तस्तौ विघ्नस्तंभन कारकौ ।। ३१ ।।
तौ द्रष्टव्यौ प्रयत्नेन क्षेत्रनिर्विघ्न हेतवे ।।
हुंडनेशं मुंडनेशं तत्र दृष्ट्वा सुखी भवेत् ।। ३२
।। स्कंद उवाच ।। ।।
इल्वलारे कथामेकां शृणुष्वावहितो भव ।।
वरणायास्तटे रम्ये यद्वृत्त पूर्वमुत्तमम् ।। ३३ ।।
एकदाद्रींद्रमालोक्य मेना संहृष्टमानसम् ।।
उमां संस्मृत्य निःश्वस्य प्रोवाचेति पतिव्रता ।। ३४ ।।
।। मेनोवाच ।। ।।
आर्यपुत्र न जानामि प्रवृत्तिमपि कांचन ।।
विवाहसमयादूर्ध्वं तस्या गौर्या गिरीश्वर ।। ३५ ।।
स वृषेंद्रगतिर्देवो भस्मोरग विभूषणः ।।
महापितृवनावासो दिग्वासाः क्वास्ति संप्रति ।। ३६ ।।
अष्टौ या मातरो दृष्टा ब्राह्मी प्रभृतयः प्रिय ।।
स्वस्वरूपास्ता मन्येऽहं बालिकाः कष्टहेतवः ।। ३७ ।।
तस्यैकस्य न कोप्यन्योस्त्यद्वितीयस्य शूलिनः ।।
तदुदंतप्रवृत्त्यै च क्रियतामुद्यमो विभो ।। ३८ ।।
तस्याः प्रियाया वाक्येन तदपत्यप्रियो गिरिः ।।
उवाच वचनं सास्रमुमा वात्सल्यसन्नगीः ।।३९।।

।। गिरिराज उवाच ।। ।।

अहमेव गमिष्यामि तस्या मेने गवेषणे ।।

नितरां बाधते प्रेम तददृष्ट्यग्निदूषितम् ।।4.2.66.४०।।

यदा प्रभृति सा गौरी निर्गता मम सद्मतः ।।

मन्ये मेने तदारभ्य पद्मसद्मा विनिर्ययौ ।। ४१।।

तदालापामृतधयौ न मे शब्दग्रहौ प्रिये ।।

प्राणेश्वरि तदारभ्य स्यातां शब्दांतरग्रहौ ।। ४२ ।।

जैवातृकी यतोह्नः स्याद्दूरीभूता दृशोर्मम ।।

अहो जैवातृकी ज्योत्स्ना ततोह्नोति दुनोति माम् ।। ४३ ।।

इत्युक्त्वादाय रत्नानि वासांसि विविधानि च ।।

धराधरेंद्रो निर्यातः शुभलग्नबलोदये ।। ४४

।। अगस्त्य उवाच ।। ।।

कानि कानि च रत्नानि कियंत्यपि च षण्मुख ।।

यान्यादाय प्रतस्थे स तानि मे ब्रूहि पृच्छतः ।। ४५ ।।

।। स्कंद उवाच ।।

तुला मुक्ताफलानां तु कोटिद्वय परीमिताः ।।

तथा वारितराणां च हीरकाणां तुला शतम् ।। ४६ ।।

नवलक्षाधिकं विप्र षडस्राणां सुतेजसाम् ।।

लक्षद्वयं विदूराणां तुलाविमलवर्चसाम ।। ४७ ।।

कोटयः पद्मरागाणां पंचावैहि तुला मुने ।।

पुष्पराग तुलालक्षं गुणितं नवसंख्यया ।। ४८ ।।

तथा गोमेद रत्नानां तुलालक्षमिता मुनै ।।

इंद्रनीलमणीनां च तुलाः कोट्यर्ध संमिताः ।। ४९ ।।

गरुडोद्गाररत्नानां तुलाः प्रयुतसंमिताः ।।

शुद्धविद्रुमरत्नानां तुलाश्च नवकोटयः ।। 4.2.66.५० ।।

अष्टांगाभरणानां च संख्या कर्तुं न शक्यते ।।

वाससां च विचित्राणां कोमलानां तथा मुने ।। ५१ ।।

चामराणि च भूयांसि द्रव्याण्यामोदवंति च ।।

सुवर्णदासदास्यादीन्यसंख्यातानि वै मुने ।। ५२ ।।
सर्वाण्यपि समादाय प्रतस्थे भूधरेश्वरः ।।
आगत्य वरणातीरं दूरात्काशीमलोकयत् ।। ५३ ।।
अनेकरत्ननिचयैः खचिताऽखिलभूमिकाम् ।।
नानाप्रासादमाणिक्यज्योतिस्तततताबराम् ।। ५४ ।।
सौधाग्रविविधस्वर्णकलशोज्वलदिङ्मुखाम् ।।
जयंतीवैजयंतीनां निकरैस्त्रिदिवस्थलीम् ।। ५५ ।।
महासिद्ध्यष्टकस्यापि क्रीडाभवनमद्भुतम् ।।
जितकल्पद्रुमवनां वनैः सर्वफलावनैः ।। ५६ ।।
इति काशीसमृद्धिं स विलोक्याभूद्विलज्जितः ।।
उवाच च मनस्येव भूधरेंद्र इदं वचः ।। ५७ ।।
प्रासादेषु प्रतोलीषु प्राकारेषु गृहेषु च ।।
गोपुरेषु विचित्रेषु कपाटेषु तटेष्वपि ।। ५८ ।।
मणिमाणिक्यरत्नानामुच्छलच्चारुरोचिषाम् ।।
ज्योतिर्जालैर्जटिलितं ययेदमवलोक्यते ।। ५९ ।।
द्यावाभूम्योरंतरालं तथेति समवैम्यहम् ।।
ईदृक्संपत्तिसंभारः कुवेरस्यापि नो गृहे ।। 4.2.66.६० ।।
अपि वैकुंठभुवने नेतरस्येह का कथा ।।
इति यावद्गिरींद्रोसौ संभावयति चेतसि ।। ६१ ।।
तावत्कार्पटिकः कश्चित्तल्लोचनपथं गतः ।।
आहूय बहुमानं तमपृच्छच्चाचलेश्वरः ।। ६२ ।।
।। हिमवानुवाच ।। ।।
हंहो कार्पटिक श्रेष्ठ अध्यास्वैतदिहासनम् ।।
स्वपुरोदंतमाख्याहि किमपूर्वमिहाध्वग ।। ६३ ।।
कोत्र संप्रत्यधिष्ठाता किमधिष्ठातृ चेष्टितम् ।।
यदि जानासि तत्सर्वमिहाचक्ष्व ममाग्रतः ।। ६४ ।।
सोपि कार्पटिकस्तस्य गिरिराजस्य भाषितम् ।।
समाकर्ण्य समाचष्टुं मुने समुपचक्रमे ।। ६५ ।।

।। कार्पटिक उवाच ।। ।।

आचक्षे शृणु राजेंद्र यत्पृष्टोस्मि त्वयाखिलम् ।।

अहानि पंचषाण्येव व्यतिक्रांतानि मानद।।६६।।

समायाते जगन्नाथे पर्वतेंद्र सुतापतौ ।।

सुंदरान्मंदरादद्रेर्दिवोदासे गते दिवि ।।६७।।

यो वै जगदधिष्ठाता सोधिष्ठातात्र सर्वगः ।।

सर्वदृक्सर्वदः शर्वः कथं न ज्ञायते विभो ।।६८।।

मन्ये दृषत्स्वरूपोसि दृषदोपि कठोरधीः ।।

यतो विश्वेश्वरं काश्यां न वेत्सि गिरिजापतिम् ।।६९।।

स्वभावकठिनात्मापि स वरं हिमवान्गिरिः ।।

प्राणाधिक सुता दानाद्यो धिनोद्विश्वनायकम् ।। 4.2.66.७० ।।

बिभ्रत्सहज काठिन्यं जातो गौरीगुरुर्गुरुः ।।

शंभुं प्रपूज्य सुतया स्रजा विश्वगुरोरपि ।। ७१ ।।

चेष्टितं तस्य को वेद वेदवेद्यस्य चेशितुः ।।

मनागिति च जानेहं तच्चेष्टितमिदं जगत् ।।७२।।

अधिष्ठाता मया ख्यातस्तथाधिष्ठातृ चेष्टितम् ।।

अपूर्वं यत्त्वयापृष्टं तदाख्यामि च तच्छृणु ।। ७३ ।।

शुभे ज्येष्ठेश्वरस्थाने सांप्रतं स उमापतिः ।।

काशीं प्राप्य मुदा तिष्ठेद्गिरिराजांगजा सखः ।। ७४ ।।

।। स्कंद उवाच ।। ।।

यदा यदा स गिरिजा मृदुनामाक्षरामृतम् ।।

आविष्करोति पथिकोऽद्रींद्रो हृष्येत्तदातदा ।। ७५ ।।

उमानामामृतं पीतं येनेह जगतीतले ।।

न जातु जननीस्तन्यं स पिबेत्कुंभसंभव ।। ७६ ।।

उमेतिद्व्यक्षरं मंत्रं योऽहर्निशमनुस्मरेत् ।।

न स्मरेच्चित्रगुप्तस्तं कृतपापमपि द्विज ।। ७७ ।।

पुनः शुश्राव हिमवान्हृष्टः कार्पटिकोदितम् ।।

।। कार्पटिक उवाच ।। ।।

राजन्विश्वेश्वरार्थेयः प्रासादो विश्वकर्मणा ।। ७८ ।।

निर्मीयते सुनिर्माणो जन्मि निर्वाणदायिनः ।।

तदपूर्वं न कर्णाभ्यामप्याकर्णितवानहम् ।। ७९ ।।

यत्रातिमित्रतेजोभिः शलाकाभिः समंततः ।।

मणिमाणिक्यरत्नानां प्रासादेभित्तयः कृताः ।।4.2.66.८० ।।

यत्र संति शतं स्तंभा भास्वंतो द्वादशोत्तराः ।।

एकैकं भुवनं धर्तुमष्टाष्टाविति कल्पिताः ।। ८१ ।।

चतुर्दशसु या शोभा विष्टपेषु समंततः ।।

तस्मिन्विमाने सास्तीह शतकोटिगुणोत्तरा ।। ८२ ।।

चंद्रकांतमणीनां च स्तंभाधार शिलाश्च याः ।।

चित्ररत्नमयैस्तंभैः स्तंभितास्तत्प्रभाभराः ।। ८३ ।।

पद्मरागेंद्रनीलानां शालीनाः शालभंजिकाः ।।

नीराजयंत्यहोरात्रं यत्र रजप्रदीपकैः ।। ८४ ।।

स्फुरत्स्फटिकनिर्माण श्लक्ष्ण पद्मशिलातले ।।

अनेकरत्नरूपाणि विचित्राणि समंततः ।।८५।।

आरक्तपीतमंजिष्ठ नीलकिर्मीरवर्णकैः ।।

विन्यस्तानीव भासंते चित्रे चित्रकृतायतः ।। ८६ ।।

दृक्पिच्छिला विलोक्यंते माणिक्यस्तंभराजयः ।।

यतोऽविमुक्ते स्वक्षेत्रे मोक्षलक्ष्म्यंकुरा इव ।। ८७ ।।

रत्नाकरेभ्यः सर्वेभ्यो गणा रत्नोच्चयान्बहून् ।।

राशींश्चक्रुः समानीय यत्राद्रिशिखरोपमान् ।। ८८ ।।

यत्र पातालतलतो नागानां कोशवेश्मतः।।

गणैर्मणिगणाः सर्वे समाहृत्य गिरीकृताः ।। ८९ ।।

शिवभक्तः स्वयं यत्र पौलस्त्यः स्वद्रिकूटतः ।।

कोटिहाटककूटानि आनयामास राक्षसैः ।। 4.2.66.९० ।।

प्रासादनिर्मितिं श्रुत्वा भक्ता द्वीपांतरस्थिताः ।।

माणिक्यानि समाजह्रुर्यथासंख्यान्यहो नृप ।। ९१ ।।

चिंतामणिः स्वयं यत्र कमर्णे विश्वकर्मणे ।।

विश्राणयेदहोरात्रं विचित्रांश्चिं तितान्मणीन्।। ९२ ।।

नानावर्णपताकाश्च यत्र कल्पमहीरुहः ।।

अनल्पाः कल्पयंत्येव नित्यभक्तिसमन्विताः ।। ९३ ।।

अब्धयो यत्र सततं दधिक्षीरेक्षुसर्पिषाम् ।।

पंचामृतानां कलशैः स्नपयंति दिनेदिने ।। ९४ ।।

यत्र कामदुघा नित्यं स्नपयेन्मधुधारया ।।

स्वदुग्धया स्वयं भक्त्या विश्वेशं लिंगरूपिणम् ।। ९५ ।।

गंधसाररसैर्यं च सेवते मलयाचलः ।।

कर्पूररंभा कर्पूरपूरैर्भक्त्या निषेवते ।। ९६ ।।

इत्याद्य पूर्वं यत्रास्ति प्रत्यहं शंकरालये ।।

कथं तं त्वमुमाकातं न वेत्सि कठिनाशय ।। ९७ ।।

इति तस्य समृद्धिं तां दृष्ट्वा जामातुरद्रिराट ।।

त्रपया परिभूतोभून्नितरां कुंभसंभव ।। ९८ ।।

तस्मै कार्पटिकायाथ स दत्त्वा पारितोषिकम् ।।

पुनश्चिंतापरोजातोऽद्रिराट्कार्पटिके गते ।। ९९ ।।

उवाचेति मनस्येव विस्मयोत्फुल्ललोचनः ।।

अहो भद्रमिदं जातं यत्त्वया श्रावि शर्मभाक् ।। 4.2.66.१०० ।।

यावत्संपत्तिसंभारः श्रूयते दृश्यतेत्र वै ।।

जामातुरत्र सदने लीला त्रिजगतीपतेः ।। १ ।।

ततः प्राभृतकस्तुच्छो नितरां प्रतिभाति मे ।।

कन्यार्थं यो मया नीतो जामातुः परितोषकृत् ।। २ ।।

अहं मन्ये तथैवासौ यथादर्शि मया पुरा ।।

वृद्धोक्षमात्रसंपत्तिः सर्वकर्मपराङ्मुखः ।। ३ ।।

नैनं कोपि विजानीयान्नान्वयोस्य कदाऽचन ।।

नामापि यस्य नैकं च किंदेशीयश्च नोह्यते ।। ४ ।।

किंवृत्तश्च किमाचारो नाममात्रेण चेश्वरः ।।

ऐश्वर्यसूचकं वस्तु यस्य किंचिन्न लक्ष्यते ।। ५ ।।

सोसौ निर्वाणसंपत्तिं रंकायापि ददात्यहो ।।

सुमुखः सर्वकर्माणि फलवंति करोति सः ।। ६ ।।

वेदवेद्यो हि सर्वज्ञो यत्संतानोऽखिलं जगत् ।।

यं न कोपि हि वेदादौ वेदवेद्यः स एष वै ।।७ ।।

योनभिज्ञः सदाज्ञातः स सर्वज्ञोयमेव हि ।।

यस्यैकमपि नो नाम पुंसा ज्ञेयं न केनचित् ।।८।।

सर्वेषां सर्वनामानि यस्य नामानि निश्चितम् ।।

सोसौ हि सर्वदेशीयः सर्वेभ्यः सर्वसिद्धिदः ।।९।।

यस्य देशो न विदितो यस्तु वृत्तिपराङ्मुखः।।

आचारहीनमिव यं पुराऽपश्यं कठोरधीः ।। 4.2.66.१० ।।

श्रुतिस्मृती यतः सर्वमाचारं वित्त एव हि ।।

नाममात्रेण नियतं यमज्ञासिषमीश्वरम् ।। ११ ।।

साक्षादीश्वर एवैष सोन्येष्वैश्वर्यसूचकः ।।

अपि सर्वगुणाधारो गुणातीतः परापरः ।। १२ ।।

अर्वाचीन इहाप्येष पराचीनः परात्परः ।।

भूधराणामहं नाथो विश्वनाथ उमापतिः ।।१३।।

अहं प्रमितसंपत्तिरप्रमेय धनोह्यसौ ।।

तुच्छप्राभृत कस्तस्मान्नेदानीमस्य दर्शनम् ।। १४ ।।

करिष्येथ करिष्यामि व्यावृत्त्यागत्य कर्हिचित् ।।

संप्रधार्येति मनसि सायं स च गिरीश्वरः ।। १५ ।।

आहूय सर्वाननुगान्पार्वतीयान्महाबलान् ।।

आदिष्टवानिदं वाक्यं सर्वे यूयं बलाधिकाः ।। १६ ।।

कुर्वंत्वेकं ममादेशं यावन्नोद्यति भानुमान् ।।

तावच्छिवालयं चैकं विदधत्वत्र सत्वरम्।। १७।।

यस्मिन्कृते कृतार्थः स्यामिह लोके परत्र च ।।

समागत्येह काश्यां यः कुर्यादेकं शिवालयम् ।। १८ ।।

तेन त्रैलोक्यमखिलं सालयं कृतमेव हि ।।

तेन दत्तानि दानानि महांति विधिपूर्वकम् ।। १९ ।।

सुपर्वणि सुपात्राय सुताथ श्रद्धयाधिकम् ।।

येन स्ववित्तमानेन धर्मोपार्जित वित्ततः ।। 4.2.66.१२० ।।
कृतं शंभोर्महासद्म न तं पद्मा त्यजेत्क्वचित् ।।
तपांसि तेन तप्तानि शीर्णपर्णाशनान्यपि ।। २१ ।।
वाराणसीं समासाद्य येनाकारि शिवालयः ।।
अशेषाः सुविशेषाढ्या इष्टांस्तेन महामखाः।। २२ ।।
आनंदकानने येन देवदेवालयः कृतः ।।
इति तस्य समादेशं समाकर्ण्यानुगास्ततः ।।। २३ ।।
चक्रुर्देवालयं श्रेष्ठं यावद्व्युष्टा न यामिनी ।।
तावच्छैलेश्वरं लिंगं शैलेशेन प्रतिष्ठितम् ।।
चंद्रकांतमणेश्चंचत्कांतिश्वेतितमंडपम् ।। २४ ।।
अलेखयत्प्रशस्तिं च प्रशस्ताक्षरमालिनीम् ।।
व्याचक्षाणां निजां सर्वं गोत्रेभ्योप्यधिकोन्नतिम् ।। २५ ।।
ततोऽरुणोदये जाते स्नात्वा पंचनदे ह्रदे ।।
शैलराजः कालराजं नमस्कृत्य समर्च्य च ।। २६ ।।
तत्र राशिं समुत्सृज्य परितस्तवरितो ययौ ।।
पार्वतीयैरनुगतः सर्वैरपि निजालयम् ।। २७ ।।
ततः प्रातः समालोक्य गणौ हुंडनमुंडनो ।।
दृष्टौ देवालयं रम्यं वरणायास्तटे शुभे ।। २८ ।।
अदृष्टपूर्वदेवाय निवेदयितुमागतौ ।।
तौ तु दृष्ट्वा महादेवमुमादर्शितदर्पणम् ।। २९ ।।
प्रणम्य दंडवद्भूमौ कृतांजलिपुटौ गणौ ।।
कृताभ्यनुज्ञो भ्रूक्षेपाद्विज्ञप्तिमथ चक्रतुः ।। 4.2.66.१३० ।।
देवदेव न जानीवः केनचिद्दृढभक्तिना ।।
अतीव रम्यः प्रासादो निर्मितो वरणातटे ।। ३१ ।।
आसायं नैक्षिचावाभ्यां दृष्टोद्यैव प्रगे विभो।।
गणोदितमितीशानो निशम्याह गिरींद्रजाम् ।। ३२ ।।
विज्ञातसर्ववृत्तांतः सर्वज्ञोप्यनभिज्ञवत् ।।
अचलेंद्रागजेयावस्तत्प्रासादविलोकने ।।३७।।

इत्युक्त्वेशः सगिरिजो निरगात्सगणो मुने।।
महास्यंदनमारुह्य प्रासादं द्रष्टुमुत्सुकः ।। ३४ ।।
अथालुलोके गिरिशः प्रासादं वरणातटे ।।
अतीव रम्यरचनं यामिनीमात्रनिर्मितम्।।३५ ।।
स्यंदनादवरुह्याथ गर्भागारमवीविशत् ।।
ददर्श च महालिंगं चंद्रकांतशिलामयम् ।। ३६ ।।
देदीप्यमानं महसा मोक्षलक्ष्म्यंकुराकृति ।।
दृष्टिप्रसादजननं पुनर्जननशातनम् ।। ३७ ।।
केनेदं स्थापितं लिंगं यावज्जिज्ञासतीश्वरः ।।
तावद्दर्श पुरतः प्रशस्तिं कर्तृसूचिकाम्।।
वाचयित्वेव च मनाङ्मनस्येव मनोजहृत् ।।
उवाच देवो दिष्ट्येति प्रेक्षस्वात्मपितुः कृतिम् ।। ३९ ।।
उमा श्रुत्येति संहृष्टा कदंबकुसुमश्रियम् ।।
आनंदांकुरलक्ष्मीवदंगेषु परिबिभ्रती ।। 4.2.66.१४० ।।
ततो व्यजिज्ञपद्देवं देवी पादौ प्रणम्य च ।।
अस्मिँल्लिंगवरे नाथ त्वया स्थेयमहर्निशम् ।। ४१ ।।
अस्य लिंगस्य ये भक्ता शैलेशस्य महेशितुः ।।
तेभ्यस्त्वं महतीमृद्धिं दास्यसीह परत्र च ।। ४२ ।।
तथेति देव उक्त्वा तां पार्वतीं पुनरब्रवीत् ।।
वरणायां कृतस्नानैः शैलेशो यैः समर्चितः ।। ४३ ।।
पितॄन्संतर्प्य च मुदा दत्त्वा दानानि शक्तितः ।।
न तेषां पुनरावृत्तिरत्र संसारवर्त्मनि।। ४४ ।।
शैलैश्वरे महालिंगे नित्यं स्थास्याम्यहं शुभे ।।
प्रदास्यामि परां मुक्तिमेतल्लिंगार्चके जने।। ४५।।
शैलेश्वरं ये द्रक्ष्यंति वरणायाः सुरोधसि ।।
तेषां काश्यां निवसतां दुःखं नाभिभविष्यति ।। ४६।।
उमयापि वरो दत्तस्तत्र लिंगे घटोद्भव ।।
शैलेश्वरस्य ये भक्तास्ते मे पुत्रा न संशयः ।। ४७

।। स्कंद उवाव । ।।

इति शैलेश्वरं लिंगं कथितं ते महामुने ।।

इदानीं कथयिष्यामि रत्नेश्वरसमुद्भवम् ।। ४८।।

श्रुत्वा शैलेश माहात्म्यं श्रद्धया परया नरः ।।

पापकंचुकमुत्सृज्य शिवलोकमवाप्नुयात् ।। १४९ ।।. ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशाखंडे उत्तरार्धे शैलेशादि लिंगनिर्णयोनाम षट्षष्टितमोऽध्यायः ।। ६६ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६७



।। अगस्त्य उवाच ।। ।।

रत्नेश्वरसमुत्पत्तिं कथयस्व षडानन ।।

रत्नभूतं महालिंगं यत्काश्यां परिवर्ण्यते ।। १ ।।

कोस्य लिंगस्य महिमा केनैतच्च प्रतिष्ठितम् ।।

एतं विस्तरतो ब्रूहि गौरीहृदयनंदन ।। २ ।।

।। स्कंद उवाच ।।

रत्नेश्वरस्य माहात्म्यं कथयिष्यामि ते मुने।।

यथा च रत्नलिंगस्य प्रादुर्भावोऽभवद्भुवि ।। ३ ।।

श्रुतं नामापि लिंगस्य यस्य जन्मत्रयार्जितम्।।

वृजिनं नाशयेत्तस्य प्रादुर्भावं ब्रुवे मुने ।। ४।।

शैलराजेन रत्नानि यानि पुंजीकृतान्यहो।।

उत्तरे कालराजस्य तानि तस्य गिरेर्वृषात्।। ५ ।।

सर्वरत्नमयं लिंगं जातं तत्सुकृतात्मनः ।।

शक्रचापसमच्छायं सर्वरत्नद्युतिप्रभम् ।। ६ ।।

तल्लिंगदर्शनादेव ज्ञानरत्नमवाप्यते ।।

शैलेश्वरं समालोक्य शिवौ तत्र समागतौ ।। ७।।

यत्र रत्नमयं लिंगमाविर्भूतं स्वयं मुने ।।

तस्य स्फुरत्प्रभाजालैस्ततमंबरमंडलम् ।। ८ ।।

तत्र दृष्ट्वा शुभं लिंगं सर्वरत्नसमुद्भवम् ।।

भवान्यदृष्टपूर्वा हि परिपप्रच्छ शंकरम् ।। ९ ।।

देवदेव जगन्नाथ सर्वभक्ताभयप्रद ।।

कुतस्त्यमेतल्लिंगं द्विसप्तपातालमूलवत् ।। 4.2.67.१० ।।

ज्वालाजटिलिताकाशं प्रभाभासित दिङ्मुखम् ।।

किमाख्यं किं स्वरूपं च किं प्रभावं भवांतक ।। ११ ।।

यस्य संवीक्षणादेव मनोमेतीव हृष्टवत् ।।

इहैव रमते नाथ कथयैतत्प्रसादतः ।। १२ ।।

।। देवदेव उवाच ।। ।।

शृण्वपर्णे समाख्यामि यत्त्वया पृच्छि पार्वति ।।

स्वरूपमेतल्लिंगस्य सर्वतेजोनिधेः परम् ।। १३ ।।

तव पित्रा हिमवता गिरिराजेन भामिनि ।।

त्वामुद्दिश्य महारत्नसंभारोत्राप्यनायि हि ।। १४ ।।

अत्र तानि च रत्नानि राशीकृत्य हिमाद्रिणा ।।

सुकृतोपार्जितान्येव ययौ स्वसदनं पुनः ।। १५ ।।

तवार्थं वाममार्थं वा श्रद्धया यत्समर्प्यते ।।

काश्यां तस्य परीपाको भवेदीदृग्विधोऽनघे ।। १६ ।।

लिंगं रत्नेश्वराख्यं वै मत्स्वरूपं हि केवलम् ।।

अस्य प्रभावो हि महान्वाराणस्यामुमे ध्रुवम् ।। १७ ।।

सर्वेषामिह लिंगानां रत्नभूतमिदं परम् ।।

अतो रत्नेश्वरं नाम परं निर्वाणरत्नदम् ।। १८ ।।

अनेनैव सुवर्णेन पित्रा राशीकृतेन च ।।

प्रासादमस्य लिंगस्य विधापय महेश्वरि ।।१९।।

लिंगप्रासादकरणात्खंडस्फुटित संस्कृतेः ।।

लिंगस्थापनजं पुण्यं हेलयैवेह लभ्यते ।। 4.2.67.२०।।

तथेति भगवत्योक्त्वा गणाः प्रासादनिर्मितौ ।।

सोमनंदि प्रभृतयो ऽसंख्या व्यापारिता मुने ।। २१ ।।

गणैश्च कांचनमयो नानाकौतुकचित्रितः ।।

निर्ममे याममात्रेण प्रासादो मेरुशृंगवत् ।।२२।।

देवी प्रहृष्टवदना दृष्ट्वा प्रासादनिर्मितिम् ।।

गणेभ्यो व्यतरद्भूरि समानं पारितोषिकम् ।। २३ ।।

पुनश्च देवी पप्रच्छ प्रणिपातपुरःसरम् ।।

महिमानं महादेवं लिंगस्यास्य महामुने ।।२४।।

।। देवदेव उवाच ।। ।।

लिंगं त्वनादिसंसिद्धमेतद्देवि शुभप्रदम् ।।

आविर्भूतमिदानीं च त्वत्पितुः पुण्यगौरवात् ।। २५ ।।

गुह्यानां परमं गुह्यं क्षेत्रेऽस्मिश्चिंतितप्रदम् ।।

कलौ कलुषबुद्धीनां गोपनीयं प्रयत्नतः ।। २६ ।।

यथा रत्नं गृहे गुप्तं न कैश्चिज्ज्ञायते परैः ।।

अविमुक्ते तथा लिंगं रत्नभूतं गृहे मम ।। २७ ।।

यानि ब्रह्मांडमध्येत्र संति लिंगानि पार्वति ।।

तैरर्चितानि सर्वाणि रत्नेशो यैः समर्चितः।।२८।।

प्रमादेनापि यैर्गौरि लिंगं रत्नेशमर्चितम् ।।

ते भवंत्येव नियतं सप्तद्वीपेश्वरा नृपाः ।। २९ ।।

त्रैलोक्ये यानि वस्तूनि रत्नभूतानि तानि तु ।।

रत्नेश्वरं समभ्यर्च्य सकृत्प्राप्नोति मानवः ।। 4.2.67.३० ।।

पूजयिष्यंति ये लिंगं रत्नेशं कामवर्जिताः ।।

ते सर्वे मद्गणा भूत्वा प्रांते द्रक्ष्यंति मामिह ।। ३१ ।।

रुद्राणां कोटिजप्येन यत्फलं परिकीर्तितम् ।।

तत्फलं लभ्यते देवि रत्नेशस्य समर्चनात् ।। ३२ ।।

लिंगे चानादिसंसिद्धे यद्वृत्तं तद्ब्रवीमि ते ।।

इतिहासं महाश्चर्यं सर्वपापनिकृंतनम् ।। ३३ ।।

पुरेह नर्तकी काचिदासीन्नाट्यार्थकोविदा ।।

सैकदा फाल्गुने मासि शिवरात्र्यां कलावती ।।३४।।

ननर्त जागरं प्राप्य जगौ गीतं च पेशलम् ।।

स्वयं च वादयामास नानावाद्यानि वाद्यवित् ।।३५।।

तेन तौर्यत्रिकेणापि प्रीणयित्वाथ सा नटी।।

रत्नेश्वरं महालिंगं देशमिष्टं जगाम ह ।। ३६ ।।

कालधर्मवशंयाता तत्र सा वरनर्तकी ।।

सुता गंधर्वराजस्य वसुभूतेर्बभूव ह ।। ३७ ।।

संगीतस्य सवाद्यस्य तस्य लास्यस्यपुण्यतः ।।

तत्रेशाग्रे कृतस्येह जागरे शिवरात्रिजे ।। ३८ ।।

रम्या रत्नावली नाम रूपलावण्यशालिनी ।।

कलाकलापकुशला मधुरालापवादिनी ।। ३९ ।।
पितुरानंदकृन्नित्यं वसुभूतेर्घटोद्भव ।।
सर्वगांधर्वकुशला गुणरत्नमहाखनिः ।। 4.2.67.४० ।।
मुने सखीत्रयं तस्याश्चारु चातुर्यभाजनम् ।।
शशिलेखानंगलेखा चित्रलेखेति नामतः ।। ४१ ।।
तिसृभिस्ताभिरेकत्र वाग्देवीपरिशीलिता ।।
ताभ्यः सर्वाः कलाः प्रादात्परिप्रीता सरस्वती ।। ४२ ।।
प्राप्य रत्नावली गौरि सा जन्मांतरवासनाम् ।।
रत्नेश्वरस्य लिंगस्य जग्राह नियमं शुभम् ।। ४३।।
रत्नभूतस्य लिंगस्य काश्यां रत्नेश्वरस्य वै ।।
नित्यं संदर्शनं प्राप्य वक्ष्याम्यपि वचो मुखे ।। ४४ ।।
इत्थं नियमवत्यासीत्सा गंधर्वसुतोत्तमा ।।
ताभिः सखीभिः सहिता नित्यं लिंगं च पश्यति ।। ४५।।
एकदाराध्य रत्नेशं ममैतल्लिंगमुत्तमम् ।।
समानर्च च सा बाला रम्यया गीतमालया ।। ४६ ।।
सख्यः प्रदक्षिणीकर्तुं लिंगं तिस्रोऽप्युमे गताः ।।
तस्या गीतेन तुष्टोहं लिंगस्थो वरदोभवम् ।। ४७ ।।
यस्त्वया रंस्यते रात्रावद्य गंधर्वकन्यके ।।
तवनामसमानाख्यः स ते भर्ता भविष्यति ।। ४८ ।।
इति लिंगांबुधेर्जातां परिपीय वचःसुधाम् ।।
बभूवानंदसंदोह मंथरातीव ह्रीमती ।। ४९ ।।
गताथ व्योममार्गेण सखीभिः स्वपितुर्गृहम् ।।
कथयंती निजोदंतं तमालीनां पुरो मुदा ।। 4.2.67.५० ।।
ताभिर्दिष्ट्येति दिष्ट्येति सखीभिः परिनंदिता ।।
अद्य ते वांछितं भावि रत्नेशस्य समर्चनात् ।। ५१ ।।
यद्यायाति स ते रात्रावद्य कौमारहारकः ।।
चोरो बाहुलतापाशैः पाशितव्योतियत्नतः ।। ५२ ।।
गोचरीक्रियतेस्माभिर्यथा स सुकृतैकभूः ।।

प्रातरेव तव प्रेयान्रत्नेशादिष्ट इष्टकृत् ।।५३ ।।

यातास्वस्मासु हृष्टासु भवती शयगौरवात् ।।

अहो रत्नेश्वरं लिंगं प्रत्यक्षीकृतवत्यसि ।। ५४ ।।

अहोभाग्योदयो नृणामहो पुण्यसमुच्छ्रयः ।।

एकस्यैव भवेत्सिद्धिर्यदेकत्रापि तिष्ठताम् ।। ५५ ।।

सत्यं वदंति नासत्यं दैवप्राधान्यवादिनः ।।

दैवमेव फलेदेकं नोद्यमो नापरं बलम् ।। ५६ ।।

भवत्या अपि चास्माकमेक एव हि चोद्यमः ।।

परं दैवं फलत्येकं यथा तव न नः पुरः ।। ५७ ।।

लोकानां व्यवहारोयमालिप्रोक्तप्रसंगतः ।।

परं मनोरथावाप्तिस्तव या सैव नः स्फुटम् ।।५८।।

इति संव्याहरंतीनामनंतोध्वाऽतितुच्छवत् ।।

क्षणात्तासां व्यतिक्रांतः प्राप्ताश्च स्वंस्वमालयम् ।। ५९ ।।

अथ प्रातः समुत्थाय पुनरेकत्र संगताः ।।

सा च मौनवती ताभिः परिभुक्तेव लक्षिता ।। ।। 4.2.67.६० ।।

तूष्णीं प्राप्याथ काशीं सा स्नात्वा मंदाकिनीजले ।।

सखीभिः सहितापश्यल्लिंगं रत्नेश्वरं मम ।। ६१ ।।

निर्वर्त्य नियमं साथ लज्जामुकुलितेक्षणा ।।

निर्बंधेन वयस्याभिः परिपृष्टा जगाद ह ।। ६२ ।।

।। रत्नावल्युवाच ।। ।।

अथ रत्नेश यात्रायाः प्रयातासु स्वमंदिरम् ।।

भवतीषु स्मरंत्येव तद्रत्नेशवचोऽमृतम्।। ६३ ।।

सविशेषांगसंस्काराऽविशं संवेशमंदिरम् ।।

निद्रादरिद्रनयना तद्विलोकनलालसा ।।६४।।

बलात्स्वप्नदशां प्राप्ता भाविनोर्थस्य गौरवात् ।।

आत्मविस्मरणे हेतू ततो मे द्वौ बभूवतुः ।। ६५ ।।

तंद्री तदंगसंस्पर्शौ मम बोधापहारकौ ।।

तंद्र्या परवशा चासं ततस्तत्स्पर्शनेन च ।। ६६ ।।

न जाने त्वथ किं वृत्तं काहं क्वाहं स चाथ कः ।।
तं निर्जिगमिषुं सख्यो यावद्धर्तुं प्रसारितः ।।६७।।
दोः कंकणेन रिपुणा क्वणितं तावदुत्कटम् ।।
महता सिंजितेनाहं तेनाल्पपरिबोधिता ।। ६८ ।।
सुखसंतानपीयूष ह्रदे परिनिमज्य वै ।।
क्षणेन तद्वियोगाग्निकीलासु पतिता बलात् ।।६९।।
किंकुलीयः स नो वेद्मि किंदेशीयः किमाख्यकः ।।
दुनोति नितरां सख्यस्तद्विश्लेषानलो महान् ।। 4.2.67.७० ।।
अनल्पोत्कलितं चेतः पुनस्तत्संगमाशया ।।
प्राणानां मे यियासूनामेकमेव महौषधम् ।। ७१ ।।
वयस्या निशिभुक्तस्य तस्यैव पुनरीक्षणम् ।।
भवतीनामधीनं च तत्पुनर्दर्शनं मम ।।७२।।
काऽलीकमालयो वक्ति स्निग्धमुग्धेसखीजने ।।
तद्दर्शनेन स्थास्यंति प्राणा यास्यंति चान्यथा ।। ७३ ।।
दशम्यवस्था सन्नह्येद्बाधितुं माधुना भृशम् ।।
इति तस्या गिरः श्रुत्वा दूनाया नितरां च ताः ।। ७४ ।।
प्रवेपमानहृदयाः प्रोचुर्वीक्ष्य परस्परम् ।। ७५ ।।
।। सख्य ऊचुः ।। ।।
यस्य ग्रामो न नो नाम नान्वयो नापि बुध्यते ।।
स कथं प्राप्यते भद्रे क उपायो विधीयताम् ।। ७६ ।।
इति रत्नावली श्रुत्वा ससंदेहां च तद्गिरम् ।।
वयस्यास्तदवाप्तौ मे यूयं कुंठि मुमूर्छ ह ।। ७७ ।।
इत्यर्धोक्तेन सा बाला यूयं कुंठितशक्तयः ।।
यद्वक्तव्यं त्विति तया यूयं कुंठीति भाषितम् ।। ७८ ।।
ततस्तास्त्वरिताः सख्यः परितापोपहारकान् ।।
बहुशः शीतलोपायान्व्यधुर्मोहप्रशांतये ।। ७९ ।।
व्यपैति न यदा मूर्छा तत्तच्छीतोपचारतः ।।
तस्यास्तदैकयानीतं रत्नेशस्नपनोदकम् ।। 4.2.67.८० ।।

तदुक्षणात्क्षणादेव तन्मूर्छा विरराम ह ।।

सुप्तोत्थितेव सावादीन्मुहुः शिवशिवेति च ।। ८१ ।।

।। स्कदं उवाच ।।

श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि ।।

नोपायांतरमस्त्येव विनेश चरणोदकम् ।। ८२।।

ये व्याधयोपि दुःसाध्या बहिरंतः शरीरगाः ।।

श्रद्धयेशोदकस्पर्शात्ते नश्यंत्येव नान्यथा ।। ८३ ।।

सेवितं येन सततं भगवच्चरणोदकम्।।

तं बाह्याभ्यंतरशुचिं नोपसर्पति दुर्गतिः ।। ८४ ।।

आधिभौतिकतापं च तापं वाप्याधिदैविकम् ।।

आध्यात्मिकं तथा तापं हरेच्छ्रीचरणोदकम् ।। ८५ ।।

व्यपेतसंज्वरा चाथ गंधर्वतनया मुने ।।

उचितज्ञेति होवाच ताः सखीः स्निग्धधो(धी?)रधीः ।। ८६ ।।

।। रत्नावल्युवाच ।। ।।

शशिलेखेनंगलेखे चित्रलेखे मदीहितं ।।

यूयं कुंठितसामर्थ्याः कुतो वस्ताः कलाः क्व वा ।।८७।।

मत्प्रियप्राप्तये सम्यगुपायोऽस्ति मयेक्षितः ।।

रत्नेश्वरानुग्रहतोऽनुतिष्ठत हि तं हिताः ।। ८८ ।।

शशिलेखेभिलषितप्राप्त्यै लेखांस्त्वमालिख ।।

संलिखानंगलेखे त्वं यूनः सर्वावनीचरान् ।। ८९ ।।

चित्रगे चित्रलेखे त्वं पातालतलशायिनः ।।

किंचिदाविर्भवच्चारु तारुण्यालंकृतीँल्लिख ।। 4.2.67.९० ।।

अथाकर्ण्येति ताः सख्यस्तच्चातुर्यं प्रवर्ण्य च ।।

लिलिखुः क्रमशः सख्यो यूनो यौवन शेवधीन् ।। ९१ ।।

निर्यत्कौमारलक्ष्मीकान्पुंवत्त्व श्रीसमावृतान् ।।

प्रातःसंध्येव गंधर्वी नृपाद्यांस्तानवैक्षत ।। ९२ ।।

सर्वान्सुरनिकायान्सा व्यलोकत शुभेक्षणा ।।

न चांचल्यं जहावक्ष्णोस्तेषु स्वर्लोकवासिषु ।। ९३ ।।

ततो मध्यमलोकस्थान्मुनिराजकुमारकान् ।।
विलोक्यापि न सा प्रीतिं क्वाप्याप प्रेमनिर्भरा ।। ९४ ।।
अथ रत्नावली बाला कर्णाभ्यर्णविलोचना ।।
दृशौ व्यापारयामास बलिसद्मयुवस्वपि ।। ९५ ।।
दितिजान्दनुजान्वीक्ष्य सा गंधर्वी कुमारकान् ।।
रतिं बबंध न क्वापि तापिता मान्मथैः शरैः ।। ९६ ।।
सुधाकर करस्पृष्टाप्यतिदूनांगयष्टिका ।।
पश्यंती नागयूनः सा किंचिदुच्छ्वसिताऽभवत् ।। ९७ ।।
भोगिनस्तान्विलोक्यापि चित्रंचित्रगतानथ ।।
मनात्संभुक्तभोगेव क्षणमासीत्कुमारिका ।। ९८ ।।
यूनः प्रत्येकमद्राक्षीदशेषाञ्छेष वंशजान् ।।
तक्षकान्वयगांस्तद्वदथ वासुकिगोत्रजान् ।। ९९ ।।
पुलीकानंत कर्कोट भद्रसंतानगानपि ।।
दृष्ट्वा नागकुमारांस्ताञ्छंखचूडमथैक्षत ।। 4.2.67.१०० ।।
शंखचूडेक्षणादेव परां लज्जां बभार सा ।।
उद्भिन्नपुलकाप्यासीदंगप्रत्यंग संधिषु ।। १ ।।
तत्त्रपाभरतोऽज्ञायि तत्कौमारहरो वरः ।।
तया वैदग्ध्यवरया क्षणतश्चित्रलेखया ।। २ ।।
अथ चित्रपटी चित्रलेखा चित्रपटांचलम् ।।
परिक्षिप्यावृणोत्तूर्णं परिहासैकपेशला ।। ३ ।।
रत्नावली चित्रलेखां ह्रिया मौनावलंबिनी ।।
दृशा कुटिलयाद्राक्षीत्प्रस्फुरद्दशनांबरा ।। ४ ।।
कटाक्षितानंगलेखा तयाथ शशिलेखया ।।
चित्रलेखापरिक्षिप्त पटांचलमपाकरोत् ।। ५ ।।
वसुभूतिसुता साथ कन्या रत्नावली शुभा ।।
शंखचूडान्ववाये तं रत्नचूडमवैक्षत ।। ६ ।।
तदीक्षणक्षणाद्दृष्टिरानंदाश्रुभिरावृता ।।
कपोलभित्तिरभवत्स्वेदोदकणिकांचिता ।। ७ ।।

चकंपे गात्रलतिका धृतरोमांचकंचुका ।।

चित्रन्यस्तेव तस्तंभ क्षणं मुकुलितानना।। ८ ।।

ततः सा चित्रलेखा तामेत्याश्वासयदातुराम्।।

मौत्सुक्यं व्रज गंधर्वि सिद्धस्तेद्य मनोरथः ।।९।।

एतस्यावगतं सर्वं देशनामान्वयादिकम्।।

मा विषीदालिसुलभस्त्वेष रत्नेश्वरार्पितः ।।4.2.67.११०।।

अहो सदृग्वरावास्या रत्नेशेनासि तोषिता ।।

उत्तिष्ठ यामः सदनं रत्नेशः सर्वदोहिनः ।। ११ ।।

अथ देववशाद्यांत्यस्ता दृष्टा गगनाध्वगाः ।।

सुबाहुना दानवेन पातालतलवासिना ।। १२ ।।

गृहीत्वा ताश्चतस्रोपि निरगाद्दानवो गृहम्।।

हरिर्विकटदंष्ट्रास्यः प्रांतरे हरिणीरिव ।। १३ ।।

तास्तं विलोक्य गंधर्व्यो दंष्ट्राविकटिताननम् ।।

रुधिरारुणनेत्रं च जाता वेपथुभूमयः ।। १४ ।।

हा मातर्हा पितस्त्राहि हा विधे मा विधेहि तत् ।।

यदेतत्कर्तुमारब्धमनाथास्वतिनिष्ठुरम् ।। १५ ।।

हा दैव मंदभाग्याभिः किमस्माभिरनुष्ठितम् ।।

सुकृतेतरवार्तापि नो चित्ते व्याहृता क्वचित् ।। १६ ।।

शिशुक्रीडनकं हित्वा हित्वा रत्नेश्वरार्चनम् ।।

पित्रोः स्वाधीन सच्चेष्टा इष्टं विद्मो न किंचन ।।१७।।

अधोभुवनगा दीना हीनानाथेन कोत्र नः ।।

त्राति त्राणार्थिनीर्बालाः शंभो रत्नेश सर्वग ।। १८ ।।

इत्थं गंधर्वतनया विलपंतीः कृपातुरम् ।।

शुश्राव नागराजोसौ रत्नचूडो महामनाः ।। १९ ।।

कोसौ मत्स्वामिनो नाम रत्नेशस्य महेशितुः ।।

लिंगराजस्य गृह्णाति कर्मबंधनभेदिनः ।। 4.2.67.१२० ।।

पुनरप्यार्तरावं स श्रुत्वा बालामुखेरितम् ।।

रत्नेश रक्षरक्षेति गृहीतास्त्रो विनिर्ययौ ।।२१ ।।

तं वसारसपानेन महामांसनिषेवणात् ।।

अत्यंतोन्मत्त दुश्चेष्टं रत्नचूडो निरैक्षत।। २२ ।।

अध्याक्षिपच्च रे दुष्ट शिष्टकन्यापहारक ।।

मद्दृष्टिगोचरं यातः क्व यास्यस्यद्य रेऽधम ।। २३ ।।

मम बाणहतप्राणः प्रयाणं कुरु दुर्मते ।।

आर्तत्राणोद्यतमते वैवस्वतपुरं प्रति ।। २४ ।।

रत्नेश्वरस्य यैर्नाम प्रलयापद्यपि स्फुटम् ।।

गृहीतं न भवादृग्भ्यस्तेषु भीतिर्भयात्मसु ।। २५ ।।

रत्नेश्वरमहानाम कृतत्राणास्तु ये नराः ।।

तेषां जन्मजराव्याधि कलिकालभयं कुतः ।।२६।।

इत्युक्त्वा ता भयत्रस्तास्तन्मुखप्रहितेक्षणाः ।।

व्याघ्रघ्राता इव मृगीर्माभैषिष्टेत्युवाच सः ।। २७ ।।

इत्याश्वास्याथ गंधर्वीः स वै भुजगराजजः ।।

आकर्णपूर्णमाकृष्य कोदंडं प्राहिणोच्छरम् ।। २८ ।।

सोपि क्रुद्धो दनुजराट्पदास्पृष्टभुजंगवत् ।।

आविद्ध्य कालदंडाभं परिघं व्यसृजन्महत् ।।२९।।

हृदि रत्नेश्वरं लिंगं यस्य सम्यग्विजृंभते ।।

अलातदंडवत्तस्मिन्कालदंडोपि जायते ।। ।। 4.2.67.१३० ।।

अंतरेव स चिच्छेद परिघं स्वमहेषुभिः ।।

दुर्वृतस्य यथेहायुर्विच्छिद्येतांतरैव हि ।। ३१ ।।

ततोस्य बाणं चिक्षेप कालानलसमप्रभम् ।।

स बाणस्तस्य हृदयं प्रविश्य प्रगवेष्य च ।। ३२ ।।

प्राणानस्य विनिर्यात्य स्वयं तूणमगात्पुनः ।।

हृदिस्थं तस्य दौरात्म्यं सर्वं विज्ञाय तत्वतः ।। ३३ ।।

दिगंगनापुरः ख्यातुमिव नागाशुगो गतः ।। ३४ ।।

अन्यायोपार्जितैर्द्रव्यैर्यः सुखं भोक्तुमिच्छति ।।

तानि द्रव्याणि यांत्येव स प्राणानि कुतः सुखम ।। ३५ ।।

इति तं दानवं हत्वा नागराजो महाबली ।।

प्रत्युवाचाथ ताः कन्याः का यूयं कस्य चात्मजाः ।। ३६ ।।

दुरात्मना कुतोनेन संगता दनुजन्मना ।।

क्व वा रत्नेश्वरं लिंगं भवतीभिर्विलोकितम् ।। ३७ ।।

यस्य नामाक्षरोच्चाराद्व्यपेत परमापदः ।।

यृयमाशु तदाख्यात येन जानामि तत्त्वतः ।।२८।।

इति श्रुत्वा गिरस्तस्य नितरां प्रेमनिर्भराः।।

परस्परं मुखं वीक्ष्य कोसौ स्याद्दृष्टपूर्ववत् ।। ३९ ।।

अकारण सखा कोसौ प्रांतरे समुपस्थितः ।।

निजप्राणान्पणीकृत्य येन त्राता स्म बालिकाः ।। 4.2.67.१४० ।।

अस्य संदर्शनादेव स्वभाव चपलान्यपि ।।

मंथराणींद्रियाणिस्तु परिपीय सुधामिव ।। ४१ ।।

यातुमन्यत्र नो नेत्रे प्रोत्सहेते यथा तथा ।।

अन्यद्वस्त्वंतरं प्रेक्ष्य रमणीयतरंत्वपि ।। ४२।।

वचःपीयूषमाधुर्य नितरां प्राप्य नः श्रुती ।।

शब्दांतरग्रहापेक्षां न कुर्वाते स्वजन्मनः ।। ४३ ।।

आप्नुतः पंगुतामेतौ पादौ नश्चंचलावपि ।।

अमुं युवानमालोक्य चोरं नः सन्मनोमणेः ।। ४४ ।।

इति ब्रुवंत्यस्ता बालाः परस्परमनुल्बणम् ।।

दृष्ट्वापि चित्रमध्यस्थं विविदुस्तन्न बालिकाः ।। ४५ ।।

अतीव भीषणाकार दनुजस्यातिसाध्वसात् ।।

अंधीभूतेक्षणास्तं नाज्ञासिषुर्हरिणीक्षणाः ।। ४६ ।।

ऊचुश्च तं युवानं ता निजजीवितरक्षिणम्।।

यदंग भवता पृष्टं स्नेहनिर्भरचेतसा ।। ४७ ।।

तदाचक्षामहे सर्वमवधेहि क्षणं मनः ।।

इयं गंधर्वराजस्य वसुभूतेस्तनूद्भवा ।। ।। ४८ ।।

कन्या रत्नावली नाम गुणरत्नमहाखनिः ।।

वयं वयस्या एतस्याश्छायेवानुगताः सदा ।। ४९ ।।

आरभ्य बाल्यमप्येषा लिंगं रत्नेश्वराभिधम् ।।

यांति पित्राप्यनुज्ञाता काश्यामर्चयितुं सदा ।। 4.2.67.१५० ।।

वरोपि दत्तस्तेनास्यै प्रसन्नेनाथ शंभुना ।।

हरिष्यतीति यः स्वप्ने कौमारं ते कुमारिके ।। ५१ ।।

तव नामसमानाख्यः स ते भर्ता भविष्यति ।।

युवानं स्वप्नभोक्तारं प्राप्याप्येषा सुदुःखिता ।।५२।।

पुनस्तद्विरहोत्थेन वह्निनातीव तापिता।।

कलाकौशल्यतोऽस्माभिः सोपि चित्रे प्रदर्शितः ।। ५३ ।।

यस्य न ग्राम नामापि नान्वयोप्यवबुध्यते ।।

तं दृष्ट्वा चित्रलिखितमप्येषा जीविता पुनः ।। ५४ ।।

ततो रत्नेश्वरं नत्वा स्वगृहायोत्सुकाभवत् ।।

यांतीस्ततोऽनया सार्धं प्रांतरे गगना ध्वनि ।। ५५।।

अतर्किता यमश्चास्मान्धृत्वा पातालमाविशत् ।।

अनंतरं भवानेव तं वेत्ति दनुजाधमम् ।। ।।५६।।

अंग इत्येव वृत्तांतो निजोऽस्माभिरुदीरितः ।।

प्रसादं कुरु चास्माकं पुरः कोसि कृपानिधे ।।५७।।

यदा प्रभृति चास्माभिः स दृष्टो दुष्टदानवः ।।

तदाप्रभृति नो नेत्रे विद्युतेव हतप्रभे ।। ५८ ।।

कांदिशीका भयत्रातर्न विद्मः किंचिदेव हि ।।

क्व वयं का वयं कस्त्वं किं जातं किं भविष्यति ।। ५९ ।।

निशम्येति स पुण्यात्मा नागराजकुमारकः ।।

आश्वास्य ता भयत्रस्ताः प्रोवाचेदं च पुण्यधीः ।। 4.2.67.१६० ।।

मया सह समायात रत्नेशं दर्शयामि वः ।।

इत्याहूय स ता निन्ये क्रीडावापीं सुखोदकाम् ।।६१।।

वित्रित्रमणिसोपानां हंसकोककृतारवाम्।।

कवीनां वासितव्याजात्स्वागतं कुर्वतीमिव ।।६२।।

तत्र तेनाभ्यनुज्ञाताः क्रीडावाप्यां निमज्ज्य ताः ।।

सचैलपुष्पाभरणाः प्रोन्ममज्जुस्ततः पुनः ।। ६३ ।।

बहिर्निर्गत्य गंधर्व्यः पश्यंत्यः स्थगिता इव ।।

रत्नेशालयमालोक्य कालराजसमीपतः ।। ६४।।

परस्परं ततः प्रोचुर्गंधर्व्यो विस्मिता इव ।।

स्वप्नोयं किं नु वा सत्यं खेलो रत्नेश्वरस्य वा ।। ६५ ।।

वयमेव हि वा भ्रांता गंधर्व्यो न वयं किमु ।।

किमेतन्नैव जानीम ऐंद्रजालिक खेलवत्।। ६६।।

एषोत्तरवहा गंगा स्फुटमेव भवेदिह।।

शंखचूडस्य वाप्येषा शंखचूडालयस्त्वसौ ।। ६७ ।।

एतत्पंचनदं तीर्थमेष वागीश्वरालयः ।।

यस्य संदर्शनादेव वाग्विभूतिर्विजृंभते ।। ६८ ।।

शंखचूडेश्वरश्चैष शंखचूडप्रतिष्ठितः ।।

यस्य संदर्शनात्पुंसां न भयं कालसर्पजम् ।। ६९ ।।

एषा मंदाकिनी नाम दीर्घिका पुण्यतोयभूः ।।

यस्यां कृतोदका मर्त्या मर्त्यलोके विशंति न ।। 4.2.67.१७० ।। ।

असावाशापुरी देवी या स्तुता त्रिपुरारिणा ।।

त्रिपुरं जेतुकामेन मंदाकिन्यास्तटे शुभे ।। ७१ ।।

याद्यापि पूजिता मर्त्यैराशां पूरयतेर्थिनाम्।।

मंदाकिन्याः प्रतीच्यां तु एष सिद्ध्यष्टकेश्वरः ।। ७२ ।।

भवेद्यस्य सपर्यातो गृहे सिद्ध्यष्टकं स्फुटम् ।।

कुंडसिद्ध्यष्टकाख्यं च तत्रैव विरजोदकम् ।। ७३ ।।

यत्र स्नात्वा कृतश्राद्धो विरजस्को दिवं व्रजेत् ।।

मूर्त्यस्ताः सिद्धयश्चाष्टौ याः काश्यां सर्वसिद्धिदाः ।। ७४ ।।

सर्वसिद्धिप्रदश्चासौ महाराजविनायकः ।।

विनायकाः प्रणश्यंति यस्मै प्रणमतां नृणाम् ।। ७५ ।।

असौ सिद्धेश्वरस्योच्चैः प्रासादः कांचनोज्ज्वलः ।।

रत्नध्वजपताकाश्च सिद्धिः स्याद्यद्विलोकनात् ।। ७६ ।।

क्षेत्रस्य मध्यमे ।। भागे मध्यमेश्वर एष वै ।।

मध्याधोलोकयोर्मध्ये न वसेद्यस्य वीक्षणात् ।। ७७ ।।

मध्यमेशं समभ्यर्च्य नरो मध्यमविष्टपे ।।

आसमुद्रक्षितींद्रः स्यात्ततो मोक्षं च विंदति ।। ७८ ।।

ऐरावतेश्वरं लिंगं तत्प्राच्यामिष्टसिद्धिकृत् ।।

दृश्यते यत्पताकायां रम्य ऐरावतो गजः ।।७९ ।।

वृद्धकालेश्वरस्यैष प्रासादो रत्ननिर्मितः ।। ।

प्रतिदर्शं वसेद्यत्र रात्रौ चंद्रः सतारकः ।। 4.2.67.१८० ।।

यस्य संदर्शनान्नृणां न कालः प्रभवेद्भवे ।।

न कलिः प्रभवेत्सत्यं न च कल्मषराशयः ।। ८१ ।।

इति यावत्कथां चक्रुः संभ्रांता इव बालिकाः।।

तावद्वसुविभूतिः स गंधर्वस्त्वरया ययौ ।।८२।।

नारदाच्छ्रुतवृत्तांतः सुबाहुदनुजन्मनः ।।

रत्नावली सुता प्रीता ससखीका यथाहृता ।। ८३ ।।

रत्नेश्वरात्समायांती शून्ये गगनवर्त्मनि ।।

यथानयच्च पातालं यथा युद्धमभूत्पुनः ।। ८४ ।।

यथा रत्नेश भक्तेन रत्नचूडेन घातितः ।।

स सुबाहुर्दनुजनुर्महेष्वासेन चेषुणा ।। ८५ ।।

यथा च पृष्टवृत्तांतो वापीमार्गेण चानयत् ।।

शंखचूडस्य वापीं तां पातालेषु प्रवर्तिनीम् ।। ८६ ।।

यथा च प्राप्य निर्याताः काशीं दृष्ट्वापि बालिकाः ।।

भृशं संभ्रांतिमापन्नाः पश्यंत्योपि समुत्सुकाः ।। ८७ ।।

दृष्ट्वा गंधर्वराजस्तां पुनर्जातामिवात्मजाम् ।।

सवयस्यामनाम्लानमुखपंकजसुश्रियम्।। ८८ ।।

परिष्वज्य समाघ्राय ललाटफलकं मुहुः ।।

अंकमारोप्य पप्रच्छ सर्वं वृत्तांतमादरात्।।८९।।

अथ सा कथयामास दनुजापहृतेः कथाम्।। ।।

रत्नेश्वरं वरावाप्तिं स्वप्नावस्थां विहाय च।।4.2.67.१९०।।

रत्नावलीमनोवृत्तिं विज्ञायाथ मुखेंगितैः ।। शशिलेखा समाचष्ट स्पष्टवर्णैः सविस्तरम्।। ९१ ।।

तुतोष नितरां सोथ गंधर्वाधिपतिः कृती ।।

प्रभावं वर्णयामास मुदा रत्नेश्वरस्य च ।। ९२

।। स्कंद उवाच ।। ।।

आकर्णय मुनिश्रेष्ठ विंध्यवृद्धि विवर्धन ।।

प्रत्यहं रत्नचूडोपि वापीमार्गेण संयमी ।।९३।।

नागलोकात्समागत्य स्नात्वा मंदाकिनी जले ।।

रत्नेश्वरं समभ्यर्च्य रत्नांजल्यष्टकेन वै ।। ९४ ।।

सुवर्णपंकजान्यष्टौ समर्पयति हृष्टवत् ।।

एकदा स्वप्नसमये रत्नेशो लिंगरूपधृक् ।। ९५ ।।

रत्नचूडमुवाचेदं निजभक्तं दृढव्रतम् ।।

दानवेन हृतां कन्यां मोचयिष्यति यां भवान् ।। ९६ ।।

तं दानवं रणे जित्वा सा ते पत्नी भविष्यति ।।

इति स्मरन्वरं सोथ नागराजो महामनाः ।।९७।।

तां कन्यां दानवं हत्वा विमोच्य निज वीर्यतः ।।

वापीमार्गेण पातालादानिनाय पुनर्महीम् ।।९८।।

स्वयं च साधयांचक्रे प्रत्यहं नियमं सुधीः।।

लिंगं समर्चयित्वाथ कृत्वा चापि प्रदक्षिणम् ।। ९९ ।।

यावद्बहिः समागच्छेद्रम्याद्रत्नेशमंडपात ।।

तावद्गंधर्वराजाय ताभिः स वसुभूतये ।। 4.2.67.२०० ।।

सोयं सोयं युवा धन्यस्तर्जन्यग्रेण दर्शितः ।।

गंधर्वराजस्तं दृष्ट्वा नागराजकुमारकम्।। १ ।।

अतीवस्मेरनयनः संप्रहृष्टतनूरुहः ।।

मनस्येनं च संवर्ण्य तद्रूपं सवयोन्वयम्।। २ ।।

धन्योस्म्यनुगृहीतोस्मि रत्नेशेन वरार्पणात् ।।

कन्या धन्यतरा चेयमनुरूपोस्ति यत्पतिः ।। ३ ।।

संप्रधार्येति हृद्येनं समाकार्य च सुंदरम् ।।

पृष्ट्वा तन्नामगोत्रं च गणयित्वा बलाबलम् ।। ४ ।।

रत्नेश्वरस्य पुरतस्तस्मै कन्यां ददौ मुदा ।।

नीत्वा गंधर्वलोकं च कृतकौतुकमंगलम् ।। ५ ।।

मधुपर्केण संपूज्य पाणिमग्राहयत्ततः ।।

वैवाहिकेन विधिना ददौ रत्नान्यनेकशः ।। ६ ।।
शशिलेखानंगलेखा चित्रलेखापि कुंभज ।।
विज्ञाप्य स्वजनेतारं वरयामास तं पतिम् ।।७ ।।
उपयम्य चतस्रोपि स गंधर्वसुताः शुभाः ।।
रत्नचूडो जगामाथ ताभिः स्वपितृमंदिरम् ।। ८ ।।
यथा चतसृभिः सार्धं श्रुतिभिः प्रणवः शिवम् ।।
स्वपित्रोश्चरणौ नत्वा नवोढाभिः स नागराट् ।।९।।
विनिवेदितवृत्तांतो रत्नेशानुग्रहस्य च ।।
उवास ताभिः ससुखं पितृभ्यामभिनंदितः ।।4.2.67.२१०।।
।। ईश्वर उवाच ।। ।।
रत्नेश्वरस्य लिंगस्य मम स्थावररूपिणः ।।
सर्वेषां सर्वदस्यास्य प्रभावो गिरिजेऽतुलः ।। ११ ।।
अस्मिँल्लिंगे परां सिद्धिं प्राप्ताः सिद्धाः सहस्रशः ।।
गुप्तमासीदिदं लिंगमद्य यावत्सुमध्यमे ।। ।। १२ ।।
तव पित्रा हिमवता मम भक्तेन सर्वथा ।।
पुण्यार्जितैर्महारत्नै रत्नेशः प्रकटीकृतः ।। १३ ।।
अस्मिँल्लिंगे मम प्रीतिर्नितरामद्रिराजजे ।।
वाराणस्यामिदं लिंगं पूजनीयं प्रयत्नतः ।। १४ ।।
नाना रत्नानि लभ्यंते रत्नेशानुग्रहादुमे ।।
स्त्रीरत्नपुत्ररत्नादि स्वर्गमोक्षावपि प्रिये ।। १५ ।।
योऽत्र रत्नेश्वरं नत्वा मृतो देशांतरेष्वपि ।।
न स स्वर्गादिहागच्छेत्कल्पकोटिशतैरपि ।।१६।।
असितायां चतुर्दश्यामुपोष्य निशि जागरात्।।
रत्नेशसन्निधौ देवि मम सान्निध्यमाप्नुयात् ।। ।। १७ ।।
अस्य लिंगस्य पूर्वेण त्वया जन्मांतरे प्रिये ।।
दाक्षायणीश्वरं लिगं मद्भक्त्यात्र प्रतिष्ठितम् ।। १८ ।।
तस्य संदर्शनादेव न नरो याति दुर्गतिम् ।।
अंबिका नाम गौरी त्वं तत्राहं चांबिकेश्वरः ।। १९ ।।

मूर्तः षडाननस्तत्र तव पुत्रः सुमध्यमे ।।

एतत्त्रयं नरो दृष्ट्वा न गर्भं प्रविशेदुमे ।। 4.2.67.२२० ।।

रत्नेश्वरस्य माहात्म्यं मया ते समुदीरितम् ।।

गोपनीयं प्रयत्नेन कलिकल्मषचेतसाम् ।। २१ ।।

इदं रत्नेश्वराख्यानं यः पठिष्यति सर्वदा ।।

सपुत्रपौत्रपशुभिर्न वियुज्येत कर्हिचित् ।। २२ ।।

श्रुत्वा रत्नेश्वरोत्पत्तिं सेतिहासां नरोत्तमः ।।

अनूढो लभते सत्यं कन्यारत्नं कुलोचितम् ।। २३ ।।

कन्यापीमं समाकर्ण्य त्वितिहासं मनोरमम् ।।

श्रद्धया सत्पतिं प्राप्य भविष्यति पतिव्रता ।। २४ ।।

इतिहासमिमं श्रुत्वा नारी वा पुरुषोपिवा ।।

न जात्विष्टवियोगाग्नि तापेन परितप्यते ।।२२५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे रत्नेश्वरप्रशंसनं नाम सप्तषष्टितमोऽध्यायः ।। ६७ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६८



।। स्कंद उवाच ।।

अन्यच्च शृणु विप्रेंद्र वृत्तातं तत्र संभवम् ।।

महाश्चर्यप्रजननं महापातकहारि च ।। १ ।।

इत्थं कथां प्रकुर्वाणे रत्नशेस्य महेश्वरे ।।

कोलाहलो महानासीत्त्रातत्रातेति सर्वतः ।। २ ।।

महिषासुरपुत्रोसौ समायाति गजासुरः ।।

प्रमथन्प्रमथान्सर्वान्निजवीर्य मदोद्धतः ।। ३ ।।

यत्रयत्र धरायां स चरणं प्रमिणोति हि ।।

अचलोल्लोलयांचक्रे तत्रतत्रास्य भारतः ।। ४ ।।

ऊरुवेगेन तरवः पतंति शिखरैः सह ।।

यस्य दोर्दंडघातेन चूर्णाः स्युश्च शिलोच्चयाः ।। ५ ।।

यस्य मौलिजसंघर्षाद्व(?)नाव्योम त्यजंत्यपि।।

नीलिमानं न चाद्यापि जह्युस्तक्लेशसंगजम् ।। ६ ।।

यस्य निःश्वाससंभारैरुत्तरंगा महाब्धयः ।।

नद्योप्यमंदकल्लोला भवंति तिमिभिः सह ।। ७ ।।

योजनानां सहस्राणि नवयस्य समुच्छ्रयः ।।

तावानेव हि विस्तारस्तनोर्मायाविनोस्य हि ।। ।। ८ ।।

यन्नेत्रयोः पिंगलिमा तथा तरलिमा पुनः ।।

विद्युता नोज्झ्यतेऽद्यापि सोयमायाति सत्वरः ।। ९ ।।

यांयां दिशं समभ्येति सोयं दुःसह दानवः ।।

सासा समी भवेदस्य साध्वसादिव दिग्ध्रुवम् ।। 4.2.68.१० ।।

ब्रह्मलब्धवरश्चायं तृणीकृतजगत्त्रयः ।।

अवध्योहं भवामीति स्त्रीपुंसैः कामनिर्जितैः ।। ११ ।।

ततस्त्रिशूलहेतिस्तमायांतं दैत्यपुंगवम् ।।

विज्ञायावध्यमन्येन शूलेनाभिजघान तम् ।। १२ ।।

प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः ।।

छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम् ।। १३ ।।

।। गजासुर उवाच ।। ।।

त्रिशूलपाणे देवेश जाने त्वां स्मरहारिणम् ।।

तव हस्ते मम वधः श्रेयानेव पुरांतक ।। १४ ।।

किंचिद्विज्ञप्तुमिच्छामि अवधेहि ममेरितम्।।

सत्यं ब्रवीमि नासत्यं मृत्युंजय विचारय ।।१५।।

त्वमेको जगतां वंद्यो विश्वस्योपरि संस्थितः ।।

अहं त्वदुपरिष्टाच्च स्थितोस्मी ति जितं मया ।। १६ ।।

धन्योस्म्यनुगृहीतोस्मि त्वत्त्रिशूलाग्रसंस्थितः ।।

कालेन सर्वैर्मर्तव्यं श्रेयसे मृत्युरीदृशः ।। १७ ।।

इति तस्य वचः श्रुत्वा देवदेवः कृपानिधिः ।।

प्रोवाच प्रहसञ्छंभुर्घटोद्भव गजासुरम् ।। १८ ।।

।। ईश्वर उवाच।। ।।

गजासुर प्रसन्नोस्मि महापौरुषशेवधे ।।

स्वानुकूल वरं ब्रूहि ददामि सुमतेऽसुर ।। १९ ।।

इत्याकर्ण्य स दैत्येंद्रः प्रत्युवाच महेश्वरम् ।।

।। गजासुर उवाच ।। ।।

यदि प्रसन्नो दिग्वासस्तदा नित्यं वसान मे ।। 4.2.68.२० ।।

इमां कृत्तिं विरूपाक्ष त्वत्त्रिशूलाग्निपाविताम् ।।

स्वप्रमाणां सुखस्पर्शां रणांगणपणीकृताम् ।। २१ ।।

इष्टगंधिः सदैवास्तु सदैवास्त्वतिकोमला ।।

सदैव निर्मला चास्तु सदैवास्त्वतिमंडनम् ।। २२ ।।

महातपोऽनलज्वालाः प्राप्यापि सुचिरं विभो ।।

न दग्धा कृत्तिरेषा मे पुण्यगंधनिधिस्ततः ।। २३ ।।

यदि पुण्यवती नैषा ममकृत्तिर्दिगंबर ।।

तदा त्वदंगसंगोस्याः कथं जातो रणांगणे ।। २४ ।।

अन्यं च मे वरं देहि यदि तुष्टोसि शंकर ।।

नामास्तु कृत्तिवासास्ते प्रारभ्याद्यतनं दिनम् ।। २५ ।।

इति तस्य वचः श्रुत्वा तथेत्युक्त्वा च शंकरः ।।

पुनःप्रोवाच तं दैत्यं भक्तिनिर्मलमानसम् ।। २६ ।।

।। ईश्वर उवाच ।। ।। ।।

शृणु पुण्यनिधे दैत्य वरमन्यं सुदुर्लभम् ।।

अविमुक्ते महाक्षेत्रे रण त्यक्त कलेवर ।।२७।।

इदं पुण्यशरीरं ते क्षेत्रेस्मिन्मुक्तिसाधने ।।

मम लिंगं भवत्वत्र सर्वेषांमुक्तिदायकम् ।। २८ ।।

कृत्तिवासेश्वरं नाम महापातकनाशनम् ।।

सर्वेषामेव लिंगानां शिरोभूतमिदं वरम् ।।२९ ।।

यावंति संति लिंगानि वाराणस्यां महांत्यपि ।।

उत्तमं तावतामेतदुत्तमांगवदुत्तमम् ।। 4.2.68.३० ।।

मानवानां हितायात्र स्थास्येहं सपरिग्रहः ।।

दृष्टेनानेन लिंगेन पूजितेन स्तुतेन च।।

कृतकृत्यो भवेन्मर्त्यः संसारं न विशेत्पुनः ।। ३१ ।।

रुद्राः पाशुपताः सिद्धा ऋषयस्तत्त्वचिंतकाः ।।

शांता दांता जितक्रोधा निर्द्वंद्वा निष्परिग्रहाः ।। ३२ ।।

अविमुक्ते स्थिता ये तु मम भक्ता मुमुक्षवः ।।

मानापमानयोस्तुल्याः समलोष्टाश्मकांचनाः ।।३३।।

कृत्तिवासेश्वरे लिंगे स्थास्येहं तदनुग्रहे ।।

दशकोटिसहस्राणि तीर्थानि प्रतिवासरम् ।। ।। ३४ ।।

त्रिकालमागमिष्यंति कृत्तिवासे न संशयः ।।

कलिद्वापरसंभूता नराः कल्मषबुद्धयः ।। ३५ ।।

सदाचारविनिर्मुक्ताः सत्यशौचपराङ्मुखाः ।।

मायया दंभलोभाभ्यां मोहाहंकृतिसंयुताः ।। ३६ ।।

शूद्रान्नसेविनो विप्रा जिह्वाला अतिलालसाः ।।

संध्यास्नानजपेज्यासु दूरीकृत मनोधियः ।। ३७ ।।

कृत्तिवासेश्वरं प्राप्य सर्वपापविवर्जिताः ।।

सुखेन मोक्षमेष्यंति यथा सुकृतिनस्तथा ।। ३८ ।।

कृत्तिवासेश्वरं लिंगं सेव्यं काश्यां ततो नरैः ।।

जन्मांतरसहस्रेषु मोक्षोन्यत्र सुदुर्लभः ।। ३९ ।।

कृत्तिवासेश्वरे लिंगे लभ्यस्त्वेकेन जन्मना ।।

पूर्वजन्मकृतं पापं तपोदानादिभिः शनैः ।।

नश्येत्सद्यो विनश्येत कृत्तिवासे श्वरेक्षणात् ।।4.2.68.४०।।

कृत्तिवासेश्वरं लिंगं येर्चयिष्यंति मानवाः ।।

प्रविष्टास्ते शरीरे मे तेषां नास्ति पुनर्भवः ।।४१।।

अविमुक्तेऽत्र वस्तव्यं जप्तव्यं शतरुद्रियम्।।

कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनःपुनः ।। ४२ ।।

सप्तकोटिमहारुद्रैः सुजप्तैर्यत्फलं भवेत् ।।

तत्फलं लभ्यते काश्यां पूजनात्कृत्तिवाससः ।। ४३ ।।

माघ कृष्णचतुर्दश्यामुपोष्य निशि जागृयात् ।।

कृत्तिवासेशमभ्यर्च्य यः स यायात्परां गतिम्।। ४४ ।।

शुक्लायां पंचदश्यां यश्चैत्र्यां कर्ता महोत्सवम्।।

कृत्तिवासेश्वरे लिंगे न स गर्भं प्रवक्ष्यते ।। ४५ ।।

कथयित्वेति देवेशस्तत्कृत्तिं परिगृह्य च ।।

गजासुरस्य महतीं प्रावृणोद्धरिदंबरः ।। ४६ ।।

महामहोत्सवो जातस्तस्मिन्नहनि कुंभज ।।

कृत्तिवासत्वमापेदे यस्मिन्देवो दिगंबरः ।। ४७ ।।

यत्रच्छत्रीकृतो दैत्यः शूलमारोप्य भूतले ।।

तच्छूलोत्पाटनाज्जातं तत्र कुंडं महत्तरम् ।।४८।।

तस्मिन्कुंडे नरः स्नात्वा कृत्वा च पितृतर्पणम् ।।

कृत्तिवासेश्वरं दृष्ट्वा कृतकृत्यो नरो भवेत् ।।४९।।

स्कंद उवाच ।।

तस्मिंस्तीर्थे तु यद्वृत्तं तदगस्ते निशामय ।।

काका हंसत्वमापन्नास्तत्तीर्थस्य प्रभावतः ।। 4.2.68.५० ।।

एकदा कृत्तिवासे तु चैत्र्यां यात्राऽभवत्पुरा ।।

अन्नं राशीकृतं तत्र ह्युपहारसमुद्भवम् ।। ५१ ।।

बहुदेवलकैर्विप्र तं दृष्ट्वा पक्षिणो मिलन् ।।

परस्परं तदन्नार्थं युध्यंतो व्योमवर्त्मनि ।। ५२ ।।

बलिपुष्टैरपुष्टांगा रटतः करटाः कटु ।।

वलिभिश्चातिपुष्टांगैरबलाश्चंचुभिर्हताः ।। ५३ ।।

ते हन्यमाना न्यपतंस्तस्मिन्कुंडे नभोंगणात् ।।

आयुःशेषेण संत्राता हंसीभूतास्तु वायसाः ।। ५४ ।।

आश्चर्यवंतस्तत्रत्या यात्रायां मिलिता जनाः ।।

ऊचुरंगुलिनिर्देशैरहो पश्यत पश्यत ।। ५५ ।।

अस्मासु वीक्षमाणेषु काकाः कुंडेत्र ये पतन् ।।

धार्तराष्ट्रास्तु ते जातास्तीर्थस्यास्य प्रभावतः ।। ५६ ।।

हंसतीर्थं तदारभ्य कृत्तिवास समीपतः ।।

नाम्ना ख्यातमभूल्लोके तत्कुंडं कलशोद्भव।। ।। ५७ ।।

अतीव मलिनात्मानो महामलिन कर्मभिः ।।

क्षणान्निर्मलतां यांति हंसतीर्थकृतोदकाः ।। ५८ ।।

काश्यां सदैव वस्तव्यं स्नातव्यं हंसतीर्थके ।।

द्रष्टव्यः कृत्तिवासेशः प्राप्तव्यं परमं पदम् ।। ५९ ।।

काश्यां लिंगान्यनेकानि मुने संति पदेपदे ।।

कृत्तिवासेश्वरं लिंगं सर्वलिंगशिरः स्मृतम् ।। 4.2.68.६० ।।

कृत्तिवासं समाराध्य भक्तियुक्तेन चेतसा ।।

सर्वलिंगाराधनजं फलं काश्यामवाप्यते ।। ६१ ।।

जपो दानं तपो होमस्तर्पणं देवतार्चनम् ।।

समीपे कृत्तिवासस्य कृतं सर्वमनंतकम् ।। ६२ ।।

तीर्थं त्वनादिसंसिद्धमेतत्कलशसंभव ।।

पुनर्देवस्य सान्निध्यादाविरासीन्महेशितुः ।। ६३ ।।

एतानि सिद्धलिंगानिच्छन्नानि स्युर्युगेयुगे ।।

अवाप्य शंभुसान्निध्यं पुनराविर्भवंति हि ।। ६४ ।।

हंसतीर्थस्य परितो लिंगानामयुतं मुने ।।

प्रतिष्ठितं मुनिवरैरत्रास्ति द्विशतोत्तरम् ।।६५।।

एकैकं सिद्धिदं नृणामविमुक्तनिवासिनाम् ।।

लिंगं कात्यायनेशादि च्यवनेशां तमेव हि ।। ६६ ।।

लोमशेशं महालिंगं लोमशेन प्रतिष्ठितम् ।।

कृत्तिवासः प्रतीच्यां तु तद्दृष्ट्वा क्वांतकाद्भयम् ।। ६७ ।।

मालतीशं शुभं लिंगं कृत्तिवासोत्तरे महत् ।।

सपर्ययित्वा तल्लिंगं राजा गजपतिर्भवेत् ।। ६८ ।।

अंतकेश्वर संज्ञं च लिंगं तद्रुद्रदिक्स्थितम् ।।

अतिपापोपि निष्पापो जायते तद्विलोकनात् ।।६९।।

जनकेशं महालिंगं तत्पार्श्वे ज्ञानदं परम् ।।

तल्लिंग वरिवस्यातो ब्रह्मज्ञानमवाप्यते ।।4.2.68.७० ।।

तदुत्तरे महामूर्तिरसितांगोस्ति भैरवः ।।

तस्य दर्शनतः पुंसां न भवेद्यमदर्शनम् ।।७१।।

शुष्कोदरी च तत्रास्ति देवी विकटलोचना ।।

कृत्तिवासादुदीच्यां तु काशीप्रत्यूह भक्षिणी ।। ७२ ।।

अग्निजिह्वोस्ति वेतालस्तस्या देव्यास्तु नैर्ऋते ।।

ददाति वांछितां सिद्धिं सोर्चितो भौमवासरे ।। ७३ ।।

वेतालकुंडं तत्रास्ति सर्वव्याधिविघातकृत् ।।

तत्कुंडोदकसंस्पर्शाद्व्रणविस्फोटरुग्व्रजेत् ।। ७४ ।।

वेतालकुंडे सुस्नातो वेतालं प्रणिपत्य च ।।

लभेत वांछितां सिद्धिं दुर्लभां सर्वदेहिभिः ।। ७५ ।।

गणोस्ति तत्र द्विभुजश्चतुष्पात्पंचशीर्षकः ।।

तस्य संवीक्षणादेव पापं याति सहस्रधा ।। ७६ ।।

तदुत्तरे मुने रुद्रश्तुःशृंगोस्ति भीषणः ।।

त्रिपादस्तु द्विशीर्षा च हस्ताः स्युः सप्त एव हि ।।।७७ ।।

रोरूयते वृषाकारस्त्रिधा बद्धः स कुंभज ।।

काशीविघ्नकरा ये च ये काश्यां पापबुद्धयः ।। ७८ ।।

तेषां च संछिदां कर्तुमहं धृतकुठारकः ।।

ये काश्यां विघ्नहर्तारो ये काश्यां धर्मबुद्धयः ।। ७९ ।।

सुधाघटकरश्चाहं तद्वंशपरिषेककृत् ।।

तं दृष्ट्वा वृषरुद्रं वै पूजयित्वा तु भक्तितः ।। 4.2.68.८० ।।

महामहोपचारैश्च न विघ्नैरभिभूयते ।।

मणिप्रदीपो नागोऽस्ति तस्माद्रुद्राद्‌दुदग्दिशि ।। ८१ ।।

मणिकुंडं तदग्रे तु विषव्याधिहरं परम् ।।

तस्मिन्कुंडे कृतस्नानस्तं नागं परिवीक्ष्य च ।। ८२ ।।

मणिमाणिक्यसंपूर्णं गजाश्वरथसंकुलम् ।।

स्त्रीरत्नपुत्ररत्नैश्च समृद्धं राज्यमाप्नुयात् ।। ८३ ।।

कृत्तिवासेश्वरं लिंगं काश्यां यैर्न विलोकितम् ।।

ते मर्त्यलोके भाराय भुवो भूता न संशयः ।। ८४ ।।

।। स्कंद उवाच ।। ।।

कृत्तिवासः समुत्पत्तिं ये श्रोष्यंतीह मानवाः ।।

तल्लिंगदर्शनाच्छ्रेयो लप्स्यंते नात्र संशयः ।। ८५ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे कृत्तिवासः समुद्भवो नामाष्टषष्टितमोऽध्यायः ।।६८।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०६९

https://sa.wikisource.org/s/fvp



।। स्कंद उवाच ।। ।।

शृण्वगस्त्य तपोराशे काश्यां लिंगानि यानि वै ।।

सेवितानि नृणां मुक्त्यै भवेयुर्भावितात्मनाम् ।। १ ।।

कृत्तिप्रावरणं यत्र कृतं देवेन लीलया ।।

रुद्रावास इति ख्यातं तत्स्थानं सर्वसिद्धिदम् ।। २ ।।

स्थिते तत्रोमया सार्धं स्वेच्छया कृत्तिवाससि ।।

आगत्य नंदी विज्ञप्तिं चक्रे प्रणतिपूर्वकम् ।। ३ ।।

देवदेवेश विश्वेश प्रासादाः सुमनोहराः ।।

सर्वरत्नमया रम्याः साष्टाषष्टिरभूदिह ।। ४ ।।

भूर्भुवःस्वस्तले यानि शुभान्यायतनानि हि ।।

मुक्तिदान्यपि तानीह मयानीतानि सर्वतः ।। ५ ।।

यतो यच्च समानीतं यत्र यच्च कृतास्पदम् ।।

कथयिष्याम्यहं नाथ क्षणं तदवधार्यताम् ।। ६ ।।

स्थाणुर्नाम महालिंगं देवदेवस्य मोक्षदम् ।।

कुरुक्षेत्रादिहोद्भूतं कलाशेषोस्ति तत्र वै ।। ७ ।।

तदग्रे सन्निहत्याख्या महापुष्करिणी शुभा ।।

लोलार्क पश्चिमे भागे कुरुक्षेत्रस्थली तु सा ।। ८ ।।

तत्र स्नातं हुतं जप्तं तप्तं दत्तं शुभार्थिभिः ।।

कुरुक्षेत्राद्भवेत्सत्यं कोटिकोटिगुणाधिकम् ।। ९ ।।

नैमिषाद्देवदेवोत्र ब्रह्मावर्तेन संयुतः ।।

तत्रांशमात्रं संस्थाप्य काश्यामाविरभूद्विभो ।। 4.2.69.१० ।।

ढुंढिराजोत्तरेभागे सिद्धिदं साधकस्य वै ।।

लिंगं वै देवदेवाख्यं तदग्रे कूप उत्तमः ।। ११ ।।

ब्रह्मावर्त इति ख्यातः पुनरावृत्तिहृन्नृणाम् ।।

तत्कूपाद्भिः कृतस्नानो देवदेवं समर्च्य च ।। १२ ।।

तत्पुण्यं नैमिषारण्यात्कोटिकोटिगुणं स्मृतम् ।।
गोकर्णायतनादत्र स्वयमाविरभून्महत् ।। १३ ।।
लिंगं महाबलं नाम सांबादित्यसमीपतः ।।
दर्शनात्स्पर्शनाद्यस्य क्षणादेनो महाबलम् ।। १४ ।।
वाताहतस्तूलराशिरिव विद्राति दूरतः ।।
कपालमोचनपुरो दृष्ट्वा लिंगं महाबलम् ।। १५ ।।
महाबलमवाप्नोति निवार्णनगरं व्रजेत् ।।
ऋणमोचनतः प्राच्यां प्रभासात्क्षेत्रसत्तमात् ।। १६ ।।
शशिभूषणसंज्ञं तु लिंगमत्र प्रतिष्ठितम् ।।
तल्लिंगसेवनान्मर्त्यः शाशिभूषणतां व्रजेत् ।। १७ ।।
प्रभासक्षेत्रयात्रायाः पुण्यं प्राप्नोति कोटिकृत् ।।
उज्जयिन्या महाकालः स्वयमत्रागतो विभुः ।। १८ ।।
यन्नामस्मरणादेव न भयं कलिकालतः ।।
प्रणवाख्यान्महालिंगात्प्राच्यां कल्मषनाशनम् ।। १९ ।।
महाकालाभिधं लिंगं दर्शनान्मोक्षदं परम् ।।
अयोगंधेश्वरं लिंगं पुष्करात्तीर्थसत्तमात् ।। 4.2.69.२० ।।
आविरासीदिह महत्पुष्करेण सहैव तु ।।
मत्स्योदर्युत्तरेभागे दृष्ट्वा ऽयोगंधमीश्वरम् ।। २१ ।।
स्नात्वाऽयोगंधकुंडे तु भवात्तारयते पितॄन् ।।
महानादेश्वरं लिंगमट्टहासादिहागतम् ।। २२ ।।
त्रिलोचनादुदीच्यां तु तद्दृष्टमुक्तये मतम् ।।
महोत्कटेश्वरं लिंगं मरुत्कोटादिहागतम् ।।
कामेश्वरोत्तरे भागे दृष्टं विमलसिद्धिदम् ।। २३ ।।
विश्वस्थानादिहायातं लिंगं वै विमलेश्वरम् ।।
स्वर्लीनात्पश्चिमे भागे दृष्टं विमलसिद्धिदम् ।। २४ ।।
महाव्रतं महालिंगं महेंद्रादिह संस्थितम् ।।
स्कंदेश्वर समीपे तु महाव्रतफलप्रदम् ।। २५ ।।
वृंदारकर्षिवृंदानां स्तुवतां प्रथमे युगे ।।

उत्पन्नं यन्महालिंगं भूमिं भित्त्वा सुदुर्भिदाम् ।। २६ ।।
महादेवेति तैरुक्तं यन्मनोरथपूरणात ।।
वाराणस्यां महादेवस्तदारभ्याभवच्च यत् ।। २७ ।।
मुक्तिक्षेत्रं कृतं येन महालिंगेन काशिका ।।
अविमुक्ते महादेवं यो द्रक्ष्यत्यत्रमानवः ।। २८ ।।
शंभुलोके गमस्तस्य यत्रतत्र मृतस्य हि ।।
अविमुक्ते प्रयत्नेन तत्संसेव्यं मुमुक्षुभिः ।। २९ ।।
कल्पांतरेपि न त्यक्तं कदाप्यानंदकाननम् ।।
येन लिंगस्वरूपेण महादेवेन सर्वथा ।। 4.2.69.३० ।।
तत्प्रसादोयमतुलः सर्वरत्नमयः शुभः ।।
हिरण्यगर्भतीर्थाच्च प्रतीच्यां क्षेत्ररक्षकम् ।। ३१ ।।
वाराणस्यामधिष्ठात्री देवता साभिलाषदा ।।
महादेवेति संज्ञा वै सर्वलिंगस्वरूपिणी ।। ३२ ।।
वाराणस्यां महादेवो दृष्टो यैर्लिंगरूपधृक् ।।
तेन त्रैलोक्यलिंगानि दृष्टानीह न संशयः ।। ३३ ।।
वाराणस्यां महादेवं समभ्यर्च्य सकृन्नरः ।।
आभूतसंप्लवं यावच्छिवलोके वसेन्मुदा ।।३४।।
पवित्रपर्वणि सदा श्रावणे मासि यत्नतः ।।
लिंगे पवित्रमारोप्य महादेवे न गर्भभाक् ।।३५।।
पितामहेश्वरं लिंगं गयातीर्थादिहागतम् ।।
फल्गुप्रभृतिभिस्तीर्थैः सार्धकोट्यष्टसंमितैः ।।३६।।
धर्मेण यत्र वै तप्तं युगानामयुतं शतम् ।।
साक्षीकृत्य महालिंगं श्रीमद्धर्मेश्वराभिधम् ।। ३७ ।।
पितामहेश्वरं लिंगं तत्राभ्यर्च्य नरो मुदा ।।
त्रिःसप्तकुलसंयुक्तो मुच्यते नात्र संशयः ।।३८।।
प्रयागात्तीर्थराजाच्च शूलटंको महेश्वरः ।।
तीर्थराजेन सहितः स्थित आगत्य वै स्वयम्।। ३९ ।।
निर्वाणमंडपाद्रम्यादवाच्यामतिनिर्मलः ।।

प्रासादो मेरुणा यस्य स्पर्धते कांचनोज्वलः ।। 4.2.69.४० ।।

देवेनैव वरो दत्तो यत्र पूर्वं युगांतरे ।।

पूज्यो महेश्वरः काश्यां प्रथमं कलुषापहः ।। ४१ ।।

यः प्रयाग इह स्नातो नमस्यति महेश्वरम् ।।

समभ्यर्च्य विधानेन महासंभारविस्तरैः ।। ४२ ।।

प्रयागस्नानजात्पुण्याच्छूलटंक विलोकनात् ।।

स प्राप्नुयान्न संदेहः पुण्यं कोटिगुणोत्तरम् ।। ४३ ।।

शंकुकर्णान्महाक्षेत्रान्महातेज इतीरितम् ।।

लिंगमाविरभूदत्र महातेजोविवृद्धिदम् ।। ४४ ।।

महातेजोनिधिस्तस्य प्रासादोतीवनिर्मलः ।।

ज्वालाजटिलिताकाशो माणिक्यैरेव निर्मितः ।। ४५ ।।

तल्लिंगदर्शनात्स्पर्शात्स्तवनाच्च समर्चनात् ।।

प्राप्यते तत्परं धाम यत्र गत्वा न शोचते ।। ४६ ।।

विनायकेश्वरात्पूर्वं महातेजः समर्चनात् ।।

तेजोमयेन यानेन याति माहेश्वरं पदम् ।। ४७ ।।

रुद्रकोटिसमाख्यातात्तीर्थात्परमपावनात् ।।

महायोगीश्वरं लिंगमाविश्चक्रे स्वयं परम् ।। ४८ ।।

पार्वतीश्वर लिंगस्य समीपे सर्वसिद्धिकृत् ।।

तल्लिंगदर्शनात्पुंसां कोटिलिंग फलं भवेत् ।। ४९ ।।

तत्प्रासादस्य परितो रुद्राणां कोटिसंमिताः ।।

प्रासादारम्यसंस्थाना निर्मिता रुद्रमूर्तिभिः ।। 4.2.69.५० ।।

काश्यां रुद्रस्थली सा तु पठ्यते वेदवादिभिः।।

रुद्रस्थल्यां मृता ये वै कृमिकीटपतंगकाः ।। ।। ५१ ।।

पशुपक्षिमृगा मर्त्या म्लेच्छा वाप्यथ दीक्षिताः ।।

तेषां तु रुद्रीभूतानां पुनरावृत्तिरत्र न ।। ५२ ।।

जन्मांतरसहस्रेषु यत्पापं समुपार्जितम् ।।

रुद्रस्थलीं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।। ५३ ।।

अकामो वा सकामो वा तिर्यग्योनिगतोपि वा ।।

रुद्रस्थल्यां त्यजन्प्राणान्परं निर्वाणमाप्नुयात् ।। ५४ ।।

स्वयमेकांबरात्क्षेत्रात्कृत्तिवासा इहागतः ।।

कृत्तिवाससि लिंगेत्र स्वयमेव व्यवस्थितः ।। ५५ ।।

अस्मिन्स्थाने स्वभक्तानां सांबः सर्षिगणो विभुः ।।

स्वयं चोपदिशेद्ब्रह्म श्रुतौ श्रुतिभिरीडितम् ।। ५६ ।।

क्षेत्रेत्र सिद्धिदे प्राप्तश्चंडीशो मरुजांगलात् ।।

प्रचंडपापसंघातं खंडयेच्छतधेक्षणात् ।। ५७ ।।

पाशपाणिगणाध्यक्ष समीपे यः प्रपश्यति ।।

चंडीश्वरं महालिंगं स याति परमां गतिम् ।। ५८ ।।

कालंजरान्नीलकंठस्तिष्ठेदत्र स्वयं विभुः ।।

गणेशाद्दंतकूटाख्यात्समीपे भवनाशनः ।। ५९ ।।

नीलकंठेश्वरं लिंगं काश्यां यैः परिपूजितम् ।।

नीलकंठास्त एव स्युस्तएव शशिभूषणाः ।। 4.2.69.६० ।।

काश्मीरादिह संप्राप्तं लिंगं विजयसंज्ञितम् ।।

सदा विजयदं पुंसां प्राच्यां शालकटंकटात् ।। ६१ ।।

रणे राजकुले द्यूते विवादे सर्वदैव हि ।।

विजयो जायते पुंसां विजयेश समर्चनात् ।। ।। ६२ ।।

ऊर्ध्वरेतास्त्रिदंडायाः संप्राप्तोत्र स्वयं विभुः ।।

कूश्मांडकं गणाध्यक्षं पुरस्कृत्य व्यवस्थितः ।। ६३ ।।

ऊर्ध्वां गतिमवाप्नोति वीक्षणादूर्ध्वरेतसः ।।

ऊर्ध्वरेतसि ये भक्ता न हि तेषामधोगतिः ।। ६४ ।।

मंडलेश्वरतः क्षेत्राल्लिंगं श्रीकंठसंज्ञितम् ।।

विनायकान्मंडसंज्ञादुत्तरस्यां व्यवस्थितम् ।। ६५ ।।

श्रीकंठस्य च ये भक्ताः श्रीकंठा एव ते नराः ।।

नेह श्रिया वियुज्यंते न परत्र कदाचन ।। ६६ ।।

छागलांडान्महातीर्थात्कपर्दीश्वरसंज्ञितः ।।

पिशाचमोचने तीर्थे स्वयमाविरभूद्विभुः ।। ६७ ।।

कपर्दीशं समभ्यर्च्य न नरो निरयं व्रजेत् ।।

न पिशाचत्वमाप्नोति कृत्वात्राप्यघमुत्तमम् ।। ६८ ।।

आम्रातकेश्वरात्क्षेत्राल्लिंगं सूक्ष्मेश संज्ञितम् ।।

स्वयमभ्यागतं चात्र क्षेत्रे वै श्रेयसांपदे ।। ६९ ।।

विकट द्विजसंज्ञस्य गणेशस्य समीपतः ।।

दृष्ट्वा सूक्ष्मेश्वरं लिंगं गतिं सूक्ष्मामवाप्नुयात्।।4.2.69.७०।। ।

संप्राप्तमिह देवेशं जयंतं मधुकेश्वरात् ।।

लंबोदराद्गणपतेः पुरस्तात्तदवस्थितम् ।। ७१ ।।

जयंतेश्वरमालोक्य स्नात्वा गंगाजले शुभे ।।

प्राप्नुयाद्वांछितां सिद्धिं सर्वत्र विजयी भवेत् ।। ७२ ।।

प्रादुश्चकार देवेशः श्रीशैलात्त्रिपुरांतकः ।।

श्रीशैलशिखरं दृष्ट्वा यत्फलं समुदीरितम् ।। ७३ ।।

त्रिपुरांतकमालोक्य तत्फलं हेलयाप्यते ।।

विश्वेरात्पश्चिमे भागे त्रिपुरांतकमीश्वरम् ।। ७४ ।।

संपूज्य परया भक्त्या न नरो गर्भमाविशेत् ।।

सौम्यस्थानादिहायातो भगवान्कुक्कुटेश्वरः ।। ।। ७९ ।।

वक्रतुंड गणाध्यक्ष समीपे सोपतिष्ठते ।।

तद्दर्शनादर्चनाच्च करस्थाः सर्वसिद्धयः ।।७६।।

जालेश्वरात्त्रिशूली च स्वयमीशः समागतः ।।

कूटदंताद्गणपतेः पुरस्तात्सर्वसिद्धिदः ।। ७७ ।।

रामेश्वरान्महाक्षेत्राज्जटीदेवः समागतः ।।

एकदंतोत्तरे भागे सोर्चितः सर्वकामदः ।। ७८ ।।

त्रिसंध्यात्क्षेत्रतो देवस्त्र्यंबकोस्ति समागतः ।।

त्रिमुखात्पूर्वदिग्भागे पूजितस्त्र्यंबकत्वकृत् ।। ७९ ।।

हरेश्वरो हरिश्चंद्रात्क्षेत्रादत्र समागतः ।।

हरिश्चंद्रेश्वरपुरः पूजितो जयदः सदा ।। 4.2.69.८० ।।

इह शर्वः समायातः स्थानान्मध्यमकेश्वरात् ।।

चतुर्वेदेश्वरं लिंगं पुरोधाय व्यवस्थितम् ।। ८१ ।।

शर्वं लिंगं समभ्यर्च्य काश्यां परमसिद्धिकृत् ।।

न जातु जंतुपदवीं प्राप्नुयात्क्वापि मानवः ।। ८२ ।।

स्थलेश्वरान्महालिंगं प्रादुर्भूतं परंत्विह ।।

यत्र यज्ञेश्वरं लिंगं सर्वलिंगफलप्रदम् ।। ८३ ।।

महालिंगं समभ्यर्च्य महाश्रद्धासमन्वितः ।।

महतीं श्रियमाप्नोति लोकेत्र च परत्र च ।। ८४ ।।

इह लिंगं सहस्राक्षं सुवर्णाख्यात्समागतम् ।।

यस्य संदर्शनात्पुंसां ज्ञानचक्षुः प्रजायते ।। ८५।।

शैलेश्वरादवाच्यां तु सहस्राक्षेश्वरं विभुम् ।।

दृष्ट्वा जन्मसहस्राणां शतानां पातकं त्यजेत् ।। ८६ ।।

हर्षिताद्धर्षितं चात्र प्रादुरासीत्तमोहरम् ।।

लिंगंहर्षप्रदं पुंसां दर्शनात्स्पर्शनादपि ।। ८७ ।।

मंत्रेश्वर समीपे तु प्रासादो हर्षितेशितुः ।।

तद्विलोकनतः पुंसां नित्यं हर्ष परंपरा ।। ८८ ।।

इह स्वयं समायातो रुद्रो रुद्रमहालयात् ।।

यस्य दर्शनतो यांति रुद्रलोके नराः स्फुटम् ।। ८९ ।।

यैस्तु रुद्रेश्वरं लिंगं काश्यामत्र समर्चितम् ।।

ते रुद्ररूपिणो मर्त्या विज्ञेया नात्र संशयः ।। 4.2.69.९० ।।

त्रिपुरेश समीपे तु दृष्ट्वा रुद्रेश्वरं विभुम् ।।

रुद्रास्त इव विज्ञेया जीवंतोपि मृता अपि ।।९१।।

आगादिह महादेवो वृषेशो वृषभध्वजात् ।।

बाणेश्वरस्य लिंगस्य समीपे वृषदः सदा ।।९२।।

इहागतं तु केदारादीशानेश्वर संज्ञितम् ।।

तद्द्रष्टव्यं प्रतीच्यां च लिंगं प्रह्लादकेशवात्।। ९३ ।।

ईशानेशं समभ्यर्च्य स्नात्वोत्तरवहांभसि ।।

वसेदीशाननगरे ईशानसदृशप्रभः ।। ९४ ।।

भैरवाद्भैरवी मूर्तिरत्रायाता मनोहरा ।।

संहारभैरवो नाम द्रष्टव्यः स प्रयत्नतः ।। ९५ ।।

पूजनात्सर्वसिद्ध्यै स प्राच्यां खर्वविनायकात् ।।

संहारभैरवः काश्यां संहरेदघसंततिम् ।। ९६ ।।

उग्रः कनखलात्तीर्थादाविरासेह सिद्धिदः ।।

तद्विलोकनतो नृणामुग्रं पापं प्रणश्यति ।। ९७ ।।

उग्रं लिंगं सदा सेव्यं प्राच्यामर्कविनायकात् ।।

अत्युग्रा अपि नश्येयुरुपसर्गास्तदर्चनात् ।। ९८ ।।

वस्त्रापथान्महाक्षेत्राद्भवो नाम स्वयं विभुः ।।

भीमचंडी समीपे तु प्रादुरासीदिह प्रभो ।। ९९ ।।

भवेश्वरं समभ्यर्च्य भवेनाविर्भवेन्नरः ।।

प्रभुर्भवति सर्वेषां राज्ञामाज्ञाकृतामिह ।। 4.2.69.१०० ।।

देवदारुवनाद्दंडी दंडयन्पातकावलीः ।।

वाराणस्यां समागत्य स्थितो लिंगाकृतिर्विभुः ।।१।।

प्राच्यां दंडीश्वरः पूज्यः स देहलिविनायकात् ।।

तस्यार्चनेन मर्त्यानां न पुनर्भव ईक्ष्यते ।। २ ।।

भद्रकर्णह्रदादत्र भद्रकर्णह्रदान्वितः।।

शिवः साक्षादिहायातः सर्वेषां शिवदोर्चितः ।। ३ ।।

उद्दंडाख्याद्गणपतेः प्राच्यां तत्तीर्थमुत्तमम् ।।

भद्रकर्णह्रदे स्नात्वाभ्यर्च्य लिंगं शिवाह्वयम् ।। ४ ।।

सर्वत्र शिवमाप्नोति भद्रकर्णेश पूजनात् ।।

शृणुयात्सर्वभूतानां भद्रं पश्यति चाक्षिभिः।। ५ ।।

शंकरश्च हरिश्चंद्रात्त्वत्पुरः प्रतिभासते ।।

तत्पूजनाज्जनानां न जननीजठरे जनिः ।। ६ ।।

यमलिंगान्महातीर्थात्काललिंगमिह स्थितम् ।।

कलशेश इति ख्यातं चंद्रेशात्पश्चिमेन च ।। ७ ।।

यमतीर्थे नरः स्नात्वा मित्रावरुणदक्षिणे ।।

काललिंगं समालोक्य कलिकाल भयं कुतः ।। ८ ।।

तत्र भौमचतुर्दश्यां यस्तु यात्रां करिष्यति ।।

अपि पातक युक्तः स यमयात्रां न यास्यति ।। ९ ।।

नैपालाच्च महाक्षेत्रादायात्पशुपतिस्त्विह ।।

यत्र पाशुपतो योग उपदिष्टः पिनाकिना ।। 4.2.69.११० ।।

भवता देवदेवेन ब्रह्मादिभ्यो विमुक्तये ।।

तस्य संदर्शनादेव पशुपाशैर्वियुज्यते ।। ११ ।।

करवीरकतीर्थाच्च कपालीश इहागतः ।।

कपालमोचने तीर्थे द्रष्टव्यः स प्रयत्नतः ।। १२ ।।

तद्विलोकनमात्रेण ब्रह्महत्या विलीयते।।

उमापतिर्देविकाया इहागत्य व्यवस्थितः ।। १३ ।।

दृष्टः पशुपतिः प्राच्यां हरेत्पापं चिरार्जितम् ।।

लिंगं महेश्वरक्षेत्रादिह दीप्तेश संज्ञितम् ।। १४ ।।

उपोमापति तिष्ठेत दीप्त्यै चेह परत्र च ।।

भुक्तिमुक्ति प्र दं लिंगं दीप्तेशं काशिमध्गम् ।।१५।।

कायारोहणतः क्षेत्रादाचार्यो नकुलीश्वरः ।।

शिष्यैः परिवृतस्तिष्ठेन्महापाशुपतव्रतैः ।। १६ ।।

दक्षिणे हि महादेवाद्दृष्टो ज्ञानं प्रयच्छति ।।

अज्ञानं नाशयेत्क्षिप्रं गर्भसंसृतिहेतुकम् ।। १७ ।।

गंगासागरतश्चायादमरेश इतीरितम् ।।

लिंगं यद्दर्शनादेव नामरत्वं हि दुर्लभम् ।।१८।।

सप्तगोदावरीतीर्थाद्देवो भीमेश्वरः प्रभुः ।।

प्रकाशते लिंगरूपी भुक्त्यै मुक्त्यै नृणामिह ।। १९ ।।

नकुलीशात्पुरोभागे दृष्टा भीमेश्वरं प्रभुम्।।

महाभीमानि पापानि प्रणश्यंति हि तत्क्षणात् ।। 4.2.69.१२० ।।

भूतेश्वराद्भस्मगात्रं प्रादुरासीदिह स्वयम् ।।

भीमेशाद्दक्षिणे भागे तदभ्यर्च्य प्रयत्नतः ।। २१ ।।

सम्यक्पाशुपताद्यो गादभ्यस्ताच्च समाः शतम् ।।

यत्प्राप्यते फलं तत्स्याद्भस्मगात्रविलोकनात् ।। २२ ।।

नकुलीश्वरतो देवः स्वयंभूरिति विश्रुतः ।।

आत्मनाप्रकटीभूतः काश्यां लिंगाकृतिर्हरः ।। २३ ।।

स्वयंभु लिंगं संपूज्य स्नात्वा सिद्धिह्रदे नरः ।।

महालक्ष्मीश्वर पुरो न भूयो जन्मभाग्भवेत् ।। २४ ।।

प्रयागतीर्थनिकषा प्रासादो विद्रुमप्रभः ।।

वाराहस्य महानेष धरणीनाम्न एव हि ।। २५ ।।

विंध्यपर्वततः प्राप्तो देवं श्रुत्वा समागतम्।।

सगणं सर्षिदेवं च मंदरादत्र कंदरात्।।२६।।

काश्यां धरणिवाराहो द्रष्टव्यः स प्रयत्नतः।।

आपत्समुद्रसंमग्नमुद्धरेच्छरणागतम्।। २७ ।।

कर्णिकाराद्गणाध्यक्षः कर्णिकारप्रसूनरुक्।।

समर्च्योयं गदाहस्त उपसर्गसहस्रहृत् ।।२८।।

तस्माद्धरणिवाराहात्प्रतीच्यां दिशि संस्थितम् ।।

पूजयित्वा गणाध्यक्षं गाणपत्यपदं लभेत् ।। २९ ।।

हेमकूटाद्विरूपाक्षं लिंगमत्राविरास ह ।।

महेश्वरादवाच्यां च दृष्टं संसारतारकम् ।। 4.2.69.१३० ।।

गंगाद्वाराद्धिमस्थेशं लिंगं हिमसमप्रभम् ।।

ब्रह्मनालात्प्रतीच्यां च द्रष्टव्यमिह सिद्धिदम् ।। ३१ ।।

गणाधिपश्च कैलासाद्गणा अन्ये महाबलाः ।।

कैलासाद्रेः समायाताः सप्तकोटिमिताः प्रभो ।। ३२ ।।

दुर्गाणि तैः कृतानीह सप्तस्वर्गसमानि च ।।

सद्वाराणि सयंत्राणि कपाटविकटानि च ।।३३।।

कोटिकोटिभटाढ्यानि सर्वर्द्धिसहितान्यपि ।।

सुवर्णरूप्यताम्रैश्च कांस्यरीतिकसीसकैः ।। ३४ ।।

अयस्कांतेन कांतानि दृढान्यभ्रंलिहान्यपि ।।

ततः शैलं महादुर्गं तैः काशीपरितः कृतम्।। ३५ ।।

परिखापि कृता निम्ना मत्स्योदर्याजलाविला ।।

मत्स्योदरी द्विधा जाता बहिरंतश्चरा पुनः ।। ३६ ।।

तच्च तीर्थं महत्ख्यातं मिलितं गांगवारिभिः ।।

यदा संहारमार्गेण गंगाभः प्रसरेदिह ।। ३७ ।।

तदा मत्स्योदरी तीर्थं लभ्यते पुण्यगौरवात् ।।

सूर्याचंद्रमसोः पर्वतदाकोटिगुणं शतम् ।। ३८ ।।
सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै ।।
तत्रैव सर्वलिंगानि गंगामत्स्योदरीयतः ।। ३९ ।।
मत्स्योदर्यां हि ये स्नाता यत्रकुत्रापि मानवाः ।।
कृतपिंडप्रदानास्ते न मातुरुदरेशयाः ।। 4.2.69.१४० ।।
अविमुक्तमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् ।।
परितः स्वर्धुनीवारि संसारि परिवीक्ष्यते ।। ४१ ।।
मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः ।।
कृत्वापि बहुपापानि नेक्षंते भास्करेः पुरीम् ।।४२।।
किं स्नात्वा बहुतीर्थेषु किं तप्त्वा दुष्करं तपः ।।
यदि मत्स्योदरी स्नाता कुतो गर्भभयं ततः।। ।। ४३।।
यत्रयत्र हि लिंगानि नृदेवर्षिकृतान्यपि ।।
तत्र मत्स्योदरीं प्राप्य सुस्नातो मोक्षभाजनम् ।।४४।।
संति तीर्थान्यनेकानि भूर्भुवःस्वर्गतान्यपि ।।
न समानि परं तानि कोट्यंशेनापि निश्चितम्।।४५।।
इत्थं तीर्थं कृतं तेन विभो कैलासवासिना।।
गणाधिपेन सुमहत्सुमहोदारकर्मणा।।४६ ।।
भूर्भुवःसंज्ञकं लिंगं पर्वताद्गंधमादनात्।।
स्वयमाविरभूदत्र तस्मात्प्राच्यां गणाधिपात्।। ४७ ।।
विलोक्य भूर्भुवं लिंगं भूर्भुवःस्वर्महः परे ।।
निवसंति जनाः पुण्याः सुचिरं दिव्यभोगिनः ।। ४८ ।।
हाटकेशं महालिंगं भोगवत्या समायुतम् ।।
सप्तपातालतलत इहायातं स्वयं विभो ।। ४९ ।।
शेषवासुकिमुख्यैश्च तत्प्रासादो महानिह ।।
मणिमाणिक्यरत्नौघैर्निरमायि प्रयत्नतः ।। 4.2.69.१५० ।।
तल्लिंगं हाटकमयं रत्नमालाभिरर्चितम् ।।
ईशानेश्वरतः प्राच्यां पूजनीय प्रयत्नतः ।। ।। ५१ ।।
भक्तितोऽभ्यर्च्य तल्लिंगं नरः सर्वसमृद्धिमान् ।।

भुक्त्वा भोगानसंख्यातानंते निवार्णमृच्छति।।५२।।

आकाशात्तारकाल्लिगं ज्योतीरूपमिहागतम्।।

ज्ञानवाप्याः पुरोभागे तल्लिंगं तारकेश्वरम् ।। ।। ५३।।

तारकं ज्ञानमाप्येत तल्लिंगस्य समर्चनात् ।।

ज्ञानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च ।। ५४ ।।

कृतसंध्यादि नियमः परितर्प्य पितामहान्।।

धृतमौनव्रतो धीमान्यावल्लिंग विलोकनम् ।। ५५ ।।

मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति शाश्वतम् ।।

प्रांते च तारकं ज्ञानं यस्माज्ज्ञानाद्विमुच्यते ।। ५६ ।।

किराताच्च किरातेश इहचाविर्बभूव ह ।।

किरातरूपो भगवान्यत्र देवोऽभवत्पुरा ।। ५७ ।।

तत्किरातेश्वरं लिंगं भारभूतेश्वरादनु ।।

नमस्कृत्य नरो जातु न मातुरुदरेशयः ।। ५८।।

लंकापुर्याः समागच्छन्मरुकेश्वरसंज्ञकम् ।।

लिंगं यदर्चनात्पुंसां न भयं रक्षसां भवेत् ।। ५९ ।।

नैर्कत्यां दिशि तल्लिंगं निर्ऋतेश्वरसंज्ञकम् ।।

पौलस्त्यराघवात्पश्चात्पूजितं सर्वदुष्टहृत् ।। 4.2.69.१६० ।।

पुण्यजलप्रियं लिंगं जललिंगस्थलादपि ।।

आयातं तच्च गङ्गाया जलमध्ये व्यवस्थितम्।। ६१ ।।

तत्प्रासादोऽद्भुततरो मध्ये गंगं निरीक्ष्यते ।।

सर्वधातुमयः श्रेष्ठः सर्वरत्नमयः शुभः ।। ६२ ।।

अद्यापि दृश्यते कैश्चित्पुण्यसंभारगौरवात् ।।

श्रेष्ठं लिंगमिहायातं तीर्थात्कोटीश्वरादपि ।। ६३ ।।

कोटिलिंगे क्षणे पुण्यं तल्लिंगस्य निरीक्षणात् ।।

श्रेष्ठं ज्येष्ठेश्वरात्पश्चाच्छ्रेष्ठ सिद्धिप्रदायकम्।। ६४ ।।

वडवास्यात्समुद्भूतं लिंगमत्रानलेश्वरम् ।।

नलेश्वर पुरोभागे पूजितं सर्वसिद्धिदम्।। ६५ ।।

आगत्य विरजस्तीर्थाद्देवदेवस्त्रिलोचनः ।।

लिंगे त्वनादिसंसिद्धे ह्यवतस्थे त्रिविष्टपे ।। ६६ ।।

पुण्ये पिलिपिला तीर्थे सर्वेषां तारकप्रदे ।।

आविश्चक्रे स्वयदेव ओंकारोमरकंटकात् ।। ६७ ।।

तदाद्यं तारकक्षेत्रं यदा गंगा न चागता ।।

यदैवाविरभूत्काशी त्रैलोक्योद्धणाय वै ।।६८।।

तदाकृतिमहल्लिंगं स्वयमाविरभूत्ततः।।

महिमानं न तस्यान्यः परिवेत्ति विभोर्ऋते ।। ६९ ।।

एतान्यायतनानीश आनिनाय महांति च ।।

शेषयित्वांशमात्रं च तस्मिन्क्षेत्रे निजे निजे ।। 4.2.69.१७० ।।

इहायातानि पुण्यानि सर्वभावेन नान्यथा।।

प्रासादाः सर्वतश्चैषां रम्या अभ्रंलिहा विभो ।।७१।।

बहुधातुमयाश्चित्राः सर्वरत्नसमुज्ज्वलाः ।।

येषां कलशमात्रस्य दर्शनान्मुक्तिराप्यते।।७२।।

श्रुत्वापि नाम चैतेषां लिंगानां सुरसत्तम ।।

अपि जन्मसहस्रोत्थाः क्षीयंते पापराशयः ।। ७३ ।।

इदानीं को निदेशोत्र मयानुष्ठेय ईशितः ।।

प्रसादी क्रियतांसो पि सिद्धो मंतव्य एव हि ।। ७४ ।।

।। स्कंद उवाच ।। ।।

श्रुत्वेति नंदिनो वाक्यं देवदेवेश्वरो हरः ।।

श्रद्धा प्रसाद्य शैलादिमिदं प्रोवाच कुंभज ।। ७५ ।।

।। श्रीदेवदेव उवाच ।। ।।

साधूकृतं त्वया नंदिन्सदानंद विधायक ।।

विधेहि मे निदेशं च चंडीर्व्यापारयाधुना ।।७६।।

नवकोट्यस्तु चामुंडायायत्र निवसंति हि ।।

स्वदेवताभिः सहिता भूतवेताल भैरवैः ।। ७७ ।।

ताः पुरी रक्षणार्थाय सवाहनबलायुधाः ।।

प्रतिदुर्गं दुर्गरूपाः परितः परिवासय ।। ७८ ।।

।। स्कंद उवाच ।।

नंदिनं संनिदेश्येति मृडान्या सहितो मृडः ।।

ययौ त्रैविष्टपं क्षेत्रं मुक्तिबीजप्ररोहणम् ।। ७९ ।।

शिलादतनयोप्यैशीं मूर्द्धन्याज्ञां विधाय च ।।

आहूय सर्वतो दुर्गाः प्रतिदुर्गं न्यवेशयत् ।। 4.2.69.१८० ।।

निशम्याध्यायमेतं च पुण्यायतन गर्भिणम्।।

नरः स्वर्गापवर्गौ च प्राप्नुयाच्छ्रद्धया क्रमात् ।। ८१ ।।

श्रुत्वाष्टषष्टिमेतां वै महायतन संश्रयाम् ।।

न जातु प्रविशेन्मर्त्यो जनन्या जाठरीं दरीम् ।। १८२ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्धेऽष्टषष्ट्यायतनसमागमो नामैकोनसप्ततितमोध्यायः ।। ६९ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७०



अगस्त्य उवाच ।।

कात्यायनेय कथय नंदिना विश्वनंदिना ।।

यथा व्यापारिता देव्यो देवदेवनिदेशतः ।। १ ।।

अविमुक्तस्य रक्षार्थं यत्र या देवताः स्थिताः ।।

प्रसादं कुरु मे देव ताः समाचक्ष्व तत्त्वतः ।। २ ।।

इत्यगस्त्युदितं श्रुत्वा महादेवतनूद्भवः ।।

कथयामास या यत्र स्थिताऽऽनंदवने मुदा ।। ३ ।।

स्कंद उवाच ।। ।।

वाराणस्यां विशालाक्षी क्षेत्रस्य परमेष्टदा ।।

विशालतीर्थं गंगायां कृत्वा पृष्ठे व्यवस्थिता ।। ४ ।।

स्नात्वा विशालतीर्थे वै विशालाक्षीं प्रणम्य च ।।

विशालां लभते लक्ष्मीं परत्रेह च शर्मदाम् ।। ५ ।।

भाद्रकृष्णतृतीयायामुपोषणपरैर्नृभिः ।।

कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः ।। ६ ।।

प्रातर्भोज्याः प्रयत्नेन चतुर्दशकुमारिकाः ।।

अलंकृता यथाशक्त्या स्रगंबरविभूषणैः ।।७।।

विधाय पारणं पश्चात्पुत्रभृत्यसमन्वितैः।।

सम्यग्वाराणसीवासफलं लभ्येत कुंभज ।। ८ ।।

तस्यां तिथौ महायात्रा कार्या क्षेत्रनिवासिभिः ।।

उपसर्ग प्रशांत्यर्थं निर्वाणकमलाप्तये ।। ९ ।।

वाराणस्यां विशालाक्षी पूजनीया प्रयत्नतः ।।

धूपदीपैः शुभैर्माल्यैरुपहारैर्मनोहरैः ।।4.2.70.१०।।

मणिमुक्ताद्यलंकारैर्विचित्रोल्लोच चामरैः ।।

शुभैरनुपभुक्तैश्च दुकूलैर्गंधवासितैः ।। ११।।

मोक्षलक्ष्मी समृद्ध्यर्थं यत्रकुत्र निवासिभिः ।।

अप्यल्पमपि यद्दत्तं विशालाक्ष्यै नरोत्तमैः ।। १२ ।।

तदानंत्याय जायंत मुने लोकद्वयेपि हि ।।

विशालाक्षी महापीठे दत्तं जप्तं हुतं स्तुतम् ।। १३ ।।

मोक्षस्तस्य परीपाको नात्र कार्या विचाणा ।।

विशालाक्षी समर्चातो रूपसंपत्तियुक्पतिः ।।१४ ।।

प्राप्यतेत्र कुमारीभिर्गुणशीलाद्यलंकृतः ।।

गुर्विणीभिः सुतनयो वंध्याभिगर्भसंभवः ।। १५ ।।

असौभाग्यवतीभिश्च सौभाग्यं महदाप्यते ।।

विधवाभिर्न वैधव्यं पुनर्जन्मांतरे क्वचित्।। ।। १६ ।।

सीमंतिनीभिः पुंभिर्वा परं निर्वाणमिच्छुभिः ।।

श्रुता दृष्टार्चिता काश्यां विशालाक्ष्यभिलाषदा ।।१७।।

ततोन्यल्ललितातीर्थं गंगाकेशवसन्निधौ ।।

तत्रास्ति ललिता देवी क्षेत्ररक्षाकरी परा ।। १८ ।।

सा च पूज्या प्रयत्नेन सर्वसंपत्समृद्धये ।।

ललितापूजकानां च जातु विघ्नो न जायते ।। १९ ।।

इषे कृष्णद्वितीयायां ललितां परिपूज्य वै ।।

नारी वा पुरुषो वापि लभते वांछितं पदम् ।। 4.2.70.२० ।।

स्नात्वा च ललिता तीर्थे ललितां प्रणिपत्य वै ।।

लभेत्सर्वत्र लालित्यं यद्वा तद्वाऽनुलप्य च ।। २१ ।।

मुने विश्वभुजा गौरी विशालाक्षी पुरः स्थिता ।।

संहरंती महाविघ्नं क्षेत्रभक्तिजुषां सदा ।। २२ ।।

शारदं नवरात्रं च कार्या यात्रा प्रयत्नतः ।।

देव्या विश्वभुजाया वै सर्वकामसमृद्धये ।।२३।।

यो न विश्वभुजां देवीं वाराणस्यां नमेन्नरः ।।

कुतो महोपसर्गेभ्यस्तस्य शांतिर्दुरात्मनः ।। २४ ।।

यैस्तु विश्वभुजा देवी वाराणस्यां स्तुतार्चिता ।।

न हि तान्विघ्नसंघातो बाधते सुकृतात्मनः ।। २५ ।।

अन्यास्ति काश्यां वाराही क्रतुवाराहसन्निधौ ।।

तां प्रणम्य नरो भक्त्या विपदब्धौ न मज्जति ।। २६ ।।

शिवदूती तु तत्रैव द्रष्टव्याऽऽपद्विनाशिनी ।।

आनंदवनरक्षार्थमुद्यच्छूलारितर्जनी ।। २७ ।।

वज्रहस्ता तथा चैंद्री गजराज रथास्थिता ।।

इंद्रेशाद्दक्षिणेभागेऽर्चिता संपत्करी सदा ।। २८ ।।

स्कंदेश्वर समीपे तु कौमारी बर्हियानगा ।।

प्रेक्षणीया प्रयत्नेन महाफलसमृद्धये ।। २९ ।।

महेश्वराद्दक्षिणतो देवी माहेश्वरी नरैः ।।

वृषयानवती पूज्या महावृषसमृद्धिदा ।। 4.2.70.३० ।।

निर्वाणनरसिंहस्य समीपे मोक्षकांक्षिभिः ।।

नारसिंही समर्च्या च समुद्यच्चक्र रम्यदोः ।। ३१ ।।

हंसयानवती ब्राह्मी ब्रह्मेशात्पश्चिमे स्थिता ।।

गलत्कमंडलुजल चुलका ताडिता हिता ।। ३२ ।।

ब्रह्मविद्या प्रबोधार्थं काश्यां पूज्या दिनेदिने ।।

ब्राह्मणैर्यतिभिर्नित्यं निजतत्त्वावबोधिभिः ।। ३३ ।।

शार्ङ्गचापविनिर्मुक्त महेषुभिरितस्ततः ।।

उत्सादयंतीं प्रत्यूहान्काश्यां नारायणीं श्रयेत् ।। ३४ ।।

प्रतीच्यांगोपिगोविंदाद्भ्राम्यच्चक्रोच्च तर्जनीम्।।

नारायणीं यः प्रणमेत्तस्य काश्यां महोदयः।।३५।।

ततो गौरीं विरूपाक्ष देवयान्या उदग्दिशि ।।

पूजयित्वा नरो भक्त्या वांछितां लभते श्रियम् ।। ३६ ।।

शैलेश्वरी समभ्यच्र्या शैलेश्वर समीपगा ।।

तर्जयंती च तर्जन्या संसर्गमुपसर्गजम् ।। ३७ ।।

चित्रकूपे नरः स्नात्वा विचित्रफलदे नृणाम् ।।

चित्रगुप्तेश्वरं वीक्ष्य चित्रघंटां प्रपूज्य च ।। ३८ ।।

बहुपातकयुक्तोपि त्यक्तधर्मपथोपि वा ।।

न चित्रगुप्तलेख्यः स्याच्चित्रघंटार्चको नरः ।। ३९ ।।

योषिद्वा पुरुषो वापि चित्रघंटां न योर्चयेत् ।।

काश्यां विघ्नसहस्राणि तं सेवंते पदेपदे ।।4.2.70.४०।।

चैत्रशुक्लतृतीयायां कार्या यात्रा प्रयत्नतः ।।

महामहोत्सवः कार्यो निशि जागरणं तथा ।। ४१ ।।

महापूजोपकरणैश्चित्रघंटां समर्च्य च ।।

शृणोति नांतकस्येह घंटां महिषकंठगाम् ।। ४२ ।।

चित्रांगदेश्वरप्राच्यां चित्रग्रीवां प्रणम्य च ।।

न जातु जंतुर्वीक्षेत विचित्रां यमयातनाम् ।। ४३ ।।

भद्रकालीं नरो दृष्ट्वा नाभद्रं पश्यति क्वचित्।।

भद्रनागस्य पुरतो भद्रवाप्यां कृतोदकः ।। ४४ ।।

हरसिद्धिं प्रयत्नेन पूजयित्वा नरोत्तमः ।।

महासिद्धिमवाप्नोति प्राच्यां सिद्धिविनायकात् ।। ४५ ।।

विधिं संपूज्य विधिवद्विविधैरुपहारकैः ।।

विविधां लभते सिद्धिं विधीश्वरसमीपगाम् ।। ४६ ।।

प्रयागतीर्थे सुस्नातो जनो निगडभंजनीम् ।।

सभाजयित्वा नो जातु निगडैः परिबाध्यते ।। ४७ ।।

भौमवारे सदा पूज्या देवीनिगडभंजनी ।।

कृत्वैकभुक्तं भक्त्यात्र बंदीमोक्षणकाम्यया ।। ४८ ।।

संसारबंधविच्छित्तिमपि यच्छति सार्चिता ।।

गणना शृंखलादीनां का च तस्याः समर्चनात् ।।४९।।

दूरस्थोपि हि यो बंधुः सोपि क्षिप्रं समेष्यति ।।

बंदी पदजुषां पुंसां श्रद्धया नात्र संशयः ।। 4.2.70.५० ।।

किंचिन्नियममालंब्य यदि सा परिषेविता ।।

कामान्पूरयति क्षिप्रं काशी संदेहहारिणी ।। ५१ ।।

घनटंककरा देवी भक्तबंधनभेदिनी ।।

कं कं न पूरयेत्कामं तीर्थराजसमीपगा ।। ५२ ।।

देवी पशुऽपतेः पश्चादमृतेश्वर सन्निधौ ।।

स्नात्वा चैवामृते कूपे नमनीया प्रयत्नतः ।। ५३ ।।

पूजयित्वा नरो भक्त्या देवताममृतेश्वरीम् ।।

अमृतत्वं भजेदेव तत्पादांबुज सेवनात् ।। ५४ ।।

धारयंतीं महामायाममृतस्य कमंडलुम् ।।

दक्षिणेऽभयदां वामे ध्यात्वा को नाऽमृतत्वभाक् ।।५५।।

सिद्धलक्ष्मी जगद्धात्री प्रतीच्याममृतेश्वरात् ।।

प्रपितामह लिंगस्य पुरतः सिद्धिदार्चिता ।।५६।।

प्रासादं सिद्धलक्ष्म्याश्च विलोक्य कमलाकृतिम् ।।

लक्ष्मीविलाससंज्ञं च को न लक्ष्मीं समाप्नुयात् ।।५७।।

ततः कुब्जा जगन्माता नलकूवरलिंगतः ।।

पूजनीया पुरोभागे प्रपितामहपश्चिमे ।। ५८ ।।

उपसर्गा न शेषांश्च कुब्जा हरति पूजिता ।।

तस्मात्कुब्जा प्रयत्नेन पूज्या काश्यां शुभार्थिभिः ।। ५९ ।।

कुब्जांबरेश्वरं लिंगं नलकूबर पश्चिमे ।।

त्रिलोकसुंदरी गौरी तत्राच्याभीष्टदायिनी ।। 4.2.70.६० ।।

त्रिलोकसुंदरी सिद्धिं दद्यात्त्रैलोक्यसुंदरीम् ।।

वैधव्यं नाप्यते क्वापि तस्या देव्याः समर्चनात् ।। ६१ ।।

दीप्ता नाम महाशक्तिः सांबादित्यसमीपगा ।।

देदीप्यमान लक्ष्मीका जायंते तत्समर्चनात् ।। ६२ ।।

श्रीकंठ सन्निधौ देवी महालक्ष्मीर्जगज्जनिः ।।

स्नात्वा श्रीकुंड तीर्थे तु समर्च्या जगदंबिका ।। ६३ ।।

पितॄन्संतर्प्य विधिवत्तीर्थे श्रीकुंडसंज्ञिते ।।

दत्त्वा दानानि विधिवन्न लक्ष्म्या परिमुच्यते ।। ६४ ।।

लक्ष्मीक्षेत्रं महापीठं साधकस्यैव सिद्धिदम् ।।

साधकस्तत्र मंत्रांश्च नरः सिद्धिमवाप्नुयात् ।। ६५ ।।

संति पीठन्यनेकानि काश्यां सिद्धिकराण्यपि ।।

महालक्ष्मीपीठसमं नान्यल्लक्ष्मीकरं परम् ।। ६६ ।।

महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृतां नृणाम् ।।

संपूजितेह विधिवत्पद्मा सद्म न मुंचति ।। ६७ ।।

उत्तरे तु महालक्ष्म्या हयकंठीकुठारधृक् ।।

काशीविघ्नमहावृक्षांश्छिनत्ति प्रतिवासरम् ।। ६८ ।।

कौर्मी शक्तिर्महालक्ष्मी दक्षिणे पाशपाणिका ।।

बध्नाति विघ्नसंघातं क्षेत्रस्यास्य प्रतिक्षणम्।। ६९ ।।

सा पूजितास्तुता मर्त्यैः क्षेत्रसिद्धिं प्रयच्छति।।

वायव्यां च शिखी चंडी क्षेत्ररक्षाकरी परा ।। 4.2.70.७० ।।

खादंती विघ्नसंघातं शिखी शब्दं करोति च ।।

तस्याः संदर्शनात्पुंसां नश्यंति व्याधयोखिलाः।। ७१ ।।

भीमचंड्युत्तरद्वारं सदा रक्षेदतंद्रिता ।।

भीमेश्वरस्य पुरतः पाशमुद्गरधारिणीम् ।। ७२ ।।

भीमचंडीं नरो दृष्ट्वा भीमकुंडे कृतोदकः ।।

भीमाकृतीन्न वै पश्येद्याम्यान्दूतान्क्वचित्कृती ।।७३।।

छागवक्त्रेश्वरी देवी दक्षिणे वृषभध्वजात् ।।

अहर्निशं भक्षयति विघ्नौघतरुपल्लवान्।। ।। ७४ ।।

तस्या देव्याः प्रसादेन काशीवासः प्रलभ्यते ।।

अतश्छागेश्वरीं देवीं महाष्टम्यां प्रपूजयेत् ।।७५।।

तालजंघेश्वरी देवी तालवृक्षकृतायुधा ।।

उत्सादयति विघ्नौघानानंदवन मध्यगान् ।। ७६ ।।

संगमेश्वर लिंगस्य दक्षिणे विकटाननाम् ।।

तालजंघेश्वरीं नत्वा न विघ्नैरभिभूयते ।।७७।।

उद्दालकेश्वराल्लिंगात्तीर्थं उद्दालकाभिधे ।।

याम्यां च यमदंष्ट्राख्या चर्वयेद्विघ्नसंहतिम् ।। ७८ ।।

प्रणता यमदंष्ट्रायैस्तीर्थेचोद्दालकाभिधे ।।

कृत्वापि पापसंघातं न यमाद्बिभ्यतीहते ।। ।। ७९ ।।

दारुकेश्वर तीर्थे तु दारुकेशसमीपतः ।।

पातालतालुवदनामाकाशोष्ठीं धराधराम् ।। 4.2.70.८० ।।

कपालकर्त्रीं हस्तां च ब्रह्मांडकवलप्रियाम् ।।

शुष्कोदरीं स्नायुबद्धां चर्ममुंडेति विश्रुताम् ।। ८१ ।।

क्षेत्रस्य पूर्वदिग्भागं रक्षंती विघ्नसंघतः ।।

लसत्सहस्रदोर्दंडां ज्वलत्केकरवीक्षणाम् ।। ८२ ।।

पारावारप्रसृमर हस्त न्यस्तारि मोदकाम् ।।

द्वीपि कृत्तिपरीधानां कटुकाट्टाट्टहासिनीम् ।। ८३ ।।

मृणालनालवत्तीव्रं चर्वंतीमस्थि पापिनः ।।

शूलाग्रप्रोत दुर्वृत्त क्षेत्रद्रोहिकलेवराम् ।। ८४ ।।

कपालमालाभरणां महाभीषणरूपिणीम् ।।

चर्ममुंडां नरो नत्वा क्षेत्रविघ्नैर्न बाध्यते ।। ८५ ।।

यथैव चर्ममुंडैषा महारुंडापि तादृशी।।

एतावानेव भेदोस्या रुंडस्रग्भूषणात्वियम् ।। ८६ ।।

क्षेत्ररक्षां प्रकुरुत उभेदेव्यौ महाबले ।।

हसंत्यौ करतालीभिरन्योन्यं दोः प्रसारणात् ।।८७।।

हयग्रीवेश्वरे तीर्थे लोलार्कादुत्तरे सदा ।।

महारुंडा प्रचंडास्या तिष्ठते भक्तविघ्नहृत् ।।८८।।

चर्ममुंडा महारुंडा कथिते ये तु देवते ।।

तयोरंतरतस्तिष्ठेच्चामुंडा मुंडरूपिणी ।। ८९ ।।

एतास्तिस्रः प्रयत्नेन पूज्याः क्षेत्रनिवासिभिः ।।

धनधान्यप्रदाश्चैताः पुत्रपौत्रप्रदा इमाः ।। 4.2.70.९० ।।

उपसर्गानमूर्ध्नंति दद्युर्नैःश्रेयसीं श्रियम् ।।

स्मृता दृष्टा न ताः स्पृष्टाः पूजिताः श्रद्धया नरैः ।। ९१ ।।

महारुंडा प्रतीच्यां च देवी स्वप्नेश्वरी शुभा ।।

भविष्यं कथयेत्स्वप्ने भक्तस्याग्रे शुभाशुभम् ।। ९२ ।।

तत्र स्वप्नेश्वरं लिंगं देवीं स्वप्नेश्वरीं तथा।।

स्नात्वासिसंगमे पुण्ये यस्मिन्कस्मिंस्तिथावपि ।। ९३ ।।

उपोषणपरो धीमान्नारीवा पुरुषोपि वा ।।

संपूज्य स्थंडिलशयः स्वप्ने भावि विलोकयेत् ।।९४।।

अद्यापि प्रत्ययस्तत्र कार्य एष विजानता ।।

भूतं भावि भवत्सर्वं वदेत्स्वप्नेश्वरी निशि।।९५।।

अष्टम्यां च चतुर्दश्यां नवम्यां निशि वा दिवा।।

प्रयत्नतः समच्च्या सा काश्यां ज्ञानार्थिभिर्नरैः ।। ९६ ।।

स्वप्नेश्वर्याश्च वारुण्यां दुर्गादेवी व्यवस्थिता ।।

क्षेत्रस्य दक्षिणं भागं सा सदैवाभिरक्षति ।। ९७ ।।

इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे देवताधिष्ठानंनाम सप्ततितमोऽध्यायः ।। ७० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७१

https://sa.wikisource.org/s/fy9
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्त्य उवाच ।। ।।

कथं दुर्गेति वै नाम देव्या जातंमुमासुत ।।

कथं च काश्यां सा सेव्या समाचक्ष्वेति मामिह ।। १।। ।।

स्कंद उवाच ।। ।।

कथयामि महाबुद्धे यथा कलशसंभव ।।

दुर्गा नामाभवद्देव्या यथा सेव्या च साधकैः ।। २ ।।

दुर्गो नाम मदादैत्यो रुरु दैत्यांगजोभवत्।।

यश्च तप्त्वा तपस्तीव्रं पुंभ्योजेयत्वमाप्तवान् ।। ३ ।।

ततस्तेनाखिला लोका भूर्भुवःस्वर्मुखा अपि ।।

स्वसात्कृता विनिर्जित्य रणे स्वभुजसारतः ।। ४ ।।

स्वयमिंद्रः स्वयं वायुः स्वयं चंद्रः स्वयं यमः ।।

स्वयमग्निः स्वयं पाशी धनदोभूत्स्वयं बली ।। ५ ।।

स्वयमीशानरुद्रार्क वसूनां पदमाददे ।।

तत्साध्वसाद्विमुक्तानि तपांस्यति तपस्विभिः।।६ ।।

न वेदाध्ययनं चक्रुर्ब्राह्मणास्तद्भयादिताः ।।

यज्ञवाटा विनिर्ध्वस्तास्तद्भटैरतिदुःसहैः ।। ७ ।।

विध्वस्ता बहुशः साध्व्यस्तैरमार्गकृतास्पदैः ।।

प्रसभं च परस्वानि अपहृत्य दुरासदाः ।। ८ ।।

अभोक्षिषुर्दुराचाराः क्रूरकर्मपरिग्रहाः ।।

नद्यो विमार्गगा आसञ्ज्वलंति न तथाग्नयः।।९।।

ज्योतींषि न प्रदीप्यंति तद्भयाकुलितान्यहो ।।

दिग्वधूवसनन्यासन्विच्छायानि समंततः ।। 4.2.71.१० ।।

धर्मक्रियाविलुप्ताश्च प्रवृत्ताः सुकृतेतराः ।।

त एव जलदीभूय ववृषुर्निज लीलया ।। ११ ।।

सस्यानि तद्भयात्सूते त्वनुप्तापि वसुंधरा।।

सदैव फलिनो जातास्तरवोप्यवकेशिनः ।।१२।।

बंदीकृताः सुरर्षीणां पत्न्यस्तेनातिदर्पिणा ।।

दिवौकसः कृतास्तेन समस्ताः काननौकसः ।। १३ ।।

मर्त्या अमर्त्यान्स्वगृहं प्राप्तानपि भयार्दिताः ।।

अपि संभाषमात्रेण नार्च्चयंति विपज्जुषः ।। १४ ।। ।।

स्कंद उवाच ।।

न कौलीन्यं न सद्वृत्तं महत्त्वाय प्रकल्पते ।।

एकमेव पदं श्रेयः पदभ्रंशो हि लाघवम् ।। १५ ।।

विपद्यपि हि ते धन्या न ये दैन्यप्रणोदिताः ।।

धनैर्मलिनचित्तानामालभंतेंगणं क्वचित् ।। १६ ।।

पंचत्वमेव हि वरं लोके लाघववर्ज्जितम् ।।

नामरत्वमपि श्रेयो लाघवेन समन्वितम् ।। १७ ।।

त एव लोके जीवंति पुण्यभाजस्त एव वै ।।

विपद्यपि न गांभीर्यं यच्चेतोब्धिः परित्यजेत् ।। १८ ।।

कदाचित्संपदुदयः कदाचिद्विपदुद्गमः ।।

दैवाद्द्वयमपि प्राप्य धीरो धैर्यं न हापयेत् ।। १९ ।।

उदयानुदयौ प्राज्ञैर्द्रष्टव्यौ पुष्पवंतयोः ।।

सदैकरूपताऽत्याज्या हर्षाहर्षौ ततोऽध्रुवौ ।। 4.2.71.२० ।।

यस्त्वापदं समासाद्य दैन्यग्रस्तो विपद्यते ।।

तस्य लोकद्वयं नष्टं तस्माद्दैन्यं विवर्जयेत् ।। २१ ।।

आपद्यपि हि ये धीरा इह लोके परत्र च ।।

न तान्पुनः स्पृशेदापत्तद्धैर्येणावधीरिता ।। २२ ।।

भ्रष्टराज्याश्च विबुधा महेशं शरणं गताः ।।

सर्वज्ञेन ततो देवीप्रेरिताऽसुरमर्दने ।।२३।।

माहेश्वरीं समासाद्य भवान्याज्ञां प्रहृष्टवत् ।।

अमर्त्यायाऽभयं दत्त्वा समरायोपचक्रमे ।।२४।।

कालरात्रीं समाहूय कांत्या त्रैलोक्यसुंदरीम् ।।

प्रेषयामास रुद्राणी तमाह्वातुं सुरद्रुहम् ।। २५ ।।

कालरात्री समासाद्य तं दैत्यं दुष्टचेष्टितम् ।।
उवाच दैत्याधिपते त्यज त्रैलोक्यसंपदम् ।। २६ ।।
त्रिलोकीं लभतामिंद्रस्त्वं तु याहि रसातलम् ।।
प्रवर्ततां क्रियाः सर्वा वेदोक्ता वेदवादिनाम् ।। २७ ।।
अथ चेद्गर्वलेशोऽस्ति तदायाहि समाजये ।।
अथवा जीविताकांक्षी तदिंद्रं शरणं व्रज ।। २८ ।।
इति वक्तुं महादेव्या महामंगलरूपया ।।
त्वदंतिके प्रेषिताहं मृत्युस्ते तदुपेक्षया ।।२९।।
अतो यदुचितं कर्तुं तद्विधेहि महासुर ।।
परं हितं चेच्छृणुयाज्जीवग्राहं ततो व्रज ।। 4.2.71.३० ।।
इत्याकर्ण्य वचो देव्या महाकाल्याः स दैत्यराट् ।।
प्रजज्वाल तदा क्रोधाद्गृह्यतां गृह्यतामियम् ।। ३१ ।।
त्रैलोक्यमोहिनी ह्येषा प्राप्ता मद्भाग्यगौरवैः ।।
त्रैलोक्यराज्यसंपत्ति वल्ल्याः फलमिदं महत् ।। ३२ ।।
एतदर्थं हि देवर्षि नृपा बंदी कृता मया ।।
अनायासेन मे प्राप्ता गृहमेषा शुभोदयात् ।। ३३ ।।
अवश्यं यस्य योग्यं यत्तत्तस्येहोपतिष्ठते ।।
अरण्ये वा गृहे वापि यतो भाग्यस्य गौरवात् ।। ३४ ।।
अंतःपुरचरा एतां नयंत्वंतःपुरं महत् ।।
अनया सदलं कृत्या मम राष्ट्रमलंकृतम् ।। ३५ ।।
अहो महोदयश्चाद्य जातो मम महामते ।।
केवलं न ममैकस्य सर्वदैत्यान्वयस्य च ।। ३६ ।।
नृत्यंतु पितरश्चाद्य मोदंतां बांधवाः सुखम् ।।
मृत्युः कालोंऽतको देवाः प्राप्नुवंत्वद्य मे भयम् ।। ३७ ।।
इति यावत्समायातास्तां नेतुं सौविदल्लकाः ।।
तावत्तया कालरात्र्या प्रत्युक्तो दैत्यपुंगवः।। ।। ३८ ।। ।।
कालरात्र्युवाच ।। ।।
दैत्यराज महाप्राज्ञ नैतद्युक्तं भवादृशाम् ।।

वयं दूत्यः परवशा राजनीतिविदुत्तम ।। ३९ ।।

अल्पोपि दूतसंबाधां न विदध्यात्कदाचन ।।

किं पुनर्ये भवादृक्षा महांतो बलिनोऽधिपाः ।। 4.2.71.४० ।।

दूतीषु कोनुरागोयं महाराजाल्पिकास्विह ।।

अनायासेन च वयमायास्यामस्तदागमात् ।। ४१ ।।

विजित्य समरे तां तु स्वामिनीं मम दैत्यप ।।

मादृशीनां सहस्रणि परिभुंक्ष्व यथेच्छया ।।४२।।

अद्यैव ते महासौख्यं भावितस्याविलोकनात्।।

बांधवानां सुखं तेद्य भविता सह पूर्वजैः ।। ४३ ।।

संपत्स्यंतेऽद्य ते कामाः सर्वे ये चिरचिंतिताः ।।

अबला सा च मुग्धा च तस्यास्त्राता न कश्चन ।। ४४ ।।

सर्वरूपमयी चैव तां भवान्द्रष्टुमर्हति ।।

अहं हि दर्शयिष्यामि यत्र साऽस्ति जगत्खनिः ।। ४५ ।।

धृतायामपि चैकस्यां कस्ते कामो भविष्यति ।।

अहं ते सन्निधिं नैव त्यक्ष्याम्यद्य दिनावधि ।। ४६ ।।

ततो निवारयैतान्मामादित्सून्सौविदल्लकान् ।।

इति श्रुत्वा वचस्तस्याः स कामक्रोधमोहितः ।। ४७ ।।

तामेव बह्वमंस्तैकां दूतीं मृत्योरिवासुरः ।।

शुद्धांतरक्षिणश्चैतां शुद्धां तं प्रापयंत्वरम् ।। ४८ ।।

इति तेन समादिष्टाः सर्वे वर्पवरा मुने ।।

तां धर्तुमुद्यमं चक्रुर्बलेन बलवत्तराः ।। ४९ ।।

सा तान्भस्मीचकाराशु हुंकारजनिताग्निना ।।

ततो दैत्यपतिः क्रुद्धो दृष्ट्वा तान्भस्मसात्कृतान् ।। 4.2.71.५० ।।

क्षणेनैव तया दूत्या दैत्यास्त्र्ययुतसंमितान् ।।

दृशा व्यापारयामास दुर्धरं दुर्मुखं खरम् ।। ५१ ।।

सीरपाणिं पाशपाणिं सुरेंद्रदमनं हनुम् ।।

यज्ञारिं खड्गलोमानमुग्रास्यं देवकंपनम् ।। ।। ५२ ।।

बद्ध्वा पाशैरिमां दुष्टामानयंत्वाशु दानवाः ।।

विध्वस्तकेशवेशां च विस्त्रस्तांबरभूषणाम् ।। ५३ ।।

इति दैत्याधिपादेशाद्दुर्धरप्रमुखास्ततः ।।

पाशासिमुद्गरधरास्तामादातुं कृतोद्यमाः ।। ५४ ।।

गिरींद्रगुरुवर्ष्माणः शस्त्रास्त्रोद्यतपाणयः ।।

दिगंतं ते परिप्राप्तास्तदुच्छ्वासानिलाहताः ।। ५५ ।।

तेषूड्डीनेषु दैत्येषु शतकोटिमितेषु च ।।

निर्जगाम ततः सा तु कालरात्रिर्नभोध्वगा ।। ५६ ।।

ततस्तां तु विनिर्यांतीमनुजग्मुर्महासुराः।।

कोटिकोटिसहस्राणि पूरयित्वा तु रोदसी ।। ५७ ।।

दुर्गोनाम महादैत्यः शतकोटि रथावृतः ।।

गजानामर्बुदशतद्वयेनपारिवारितः ।। ५८ ।।

कोट्यर्बुदेन सहितो हयानां वातरंहसाम् ।।

पदातिभिरसंख्यातैः पच्चूर्णितशिलोच्चयैः ।। ५९ ।।

उदायुधैर्महाभीमैःकृतत्रिजगतीभयैः ।।

समेतः स महादैत्यो दुर्गः क्रुद्धो विनिर्ययौ ।। 4.2.71.६० ।।

अथ दृष्ट्वा महादेवी विंध्याचलकृतालयाम् ।।

आगत्य कालरात्र्यां च निवेदित तदागसम् ।। ६१ ।।

महाभुजसहस्राढयां महातेजोभिबृंहिताम् ।।

तत्तद्धोरप्रहरणां रणकौतुकसादराम् ।। ६२ ।।

प्रौद्यच्चंद्रसहस्रांशु निर्मार्जित शुभाननाम् ।।

लावण्यवार्धि निर्गच्छच्चंचच्चंद्रैकचंद्रिकाम् ।। ६३ ।।

महामाणिक्यनिचय रोचिःखचितविग्रहाम् ।।

त्रैलोक्यरम्यनगरी सुप्रकाशप्रदीपिकाम् ।।६४।।

हरनेत्राग्निनिर्दग्ध कामजीवातुवीरुधम् ।।

लसत्सौंदर्यसंभार जगन्मोहमहौषधिम् ।। ६५ ।।

विषमेषु शरैर्भिन्नहृदयो दैत्यपुंगवः ।।

आदिष्टवान्महासैन्यनायकानुप्रशासनः ।। ६६ ।।

अयि जंभ महाजंभ कुजंभ विकटानन ।।

लंबोदर महाकाय महादंष्ट्र महाहनो ।। ६७ ।।
पिंगाक्ष महिषग्रीव महोग्रात्युग्रविग्रह ।।
क्रूराक्ष क्रोधनाक्रंद संक्रंदन महाभय ।। ६८ ।।
जितांतक महाबाहो महावक्त्र महीधर ।।
दुंदुभे दुंदुभिरव महादुंदुभिनासिक ।। ६९ ।।
उग्रास्य दीर्घदशनमेवकेश वृकानन ।।
सिंहास्य सूकरमुख शिवाराव महोत्कट ।। 4.2.71.७० ।।
शुकतुंड प्रचंडास्य भीमाक्ष क्षुदमानस ।।
उलूकनेत्र कंकास्य काकतुंड करालवाक् ।।७१।।
दीर्घग्रीव महाजंघ क्रमेलक शिरोधर ।।
रक्तबिंदो जपानेत्र विद्युज्जिह्वाग्नितापन ।। ७२ ।।
धूम्राक्ष धूमनिःश्वास चंडचंडांशुतापन ।।
महाभीषणमुख्याश्च शृण्वंत्वाज्ञां ममादरात् ।। ७३ ।।
भवत्स्वेतेषु चान्येषु एतां विंध्यवासिनीम्।।
धृत्यानेष्यति बुद्ध्या वा बलेनापि च्छलेन वा ।।७४।।
तस्याहमिंद्रपदवीमद्य दास्याम्यसंशयम्।।
दृष्ट्वैतां सुंदरीमद्य मनो मे व्याकुलं भवेत् ।। ७२।।
यांतु क्षिप्रं नयावन्मे पंचेषु शरपीडितम् ।।
मनोविह्वलतां गच्छेदेतत्प्राप्तेरभावतः ।।७६।।
इत्याकर्ण्य वचस्तस्य दुर्गस्य दनुजेशितुः ।।
प्रोचुः सर्वे तदा दैत्याः प्रबद्धकरसंपुटाः ।। ७७ ।।
अवधेहि महाराज किमेतत्कर्मदुष्करम् ।।
अनाथायास्तथैकस्या अबलया विशेषतः ।। ७८।।
अस्या आनयने कोयं महायत्नविधिः प्रभो ।।
कोऽस्मान्प्रलयकालाग्निमहाज्वालावलीसमान् ।। ७९ ।।
सहेत त्रिषु लोकेषु त्वत्प्रसादात्कृतोद्यमान् ।।
यद्यादेशो भवेदद्य तदेंद्रं स मरुद्गणम् ।। 4.2.71.८० ।।
सांतःपुरं समानीय क्षिप्न्नुमस्त्वत्पदाग्रतः ।।

भूर्भुवःस्वरिदं सर्वं त्वदाज्ञावशवर्तितम् ।। ८१ ।।

महर्जनस्तपःसत्यलोकास्त्वदधिकारिणः ।।

तत्राप्यसाध्यं नास्माकं त्वन्निदेशान्महासुर ।। ८२ ।।

वैकुंठनायको नित्यं त्वदाज्ञापरिपालकः ।।

यानि रम्याणि रत्नानि तानि संप्रेषयन्मुदा ।।८३।।

अस्माभिरेव संत्यक्तः कैलासाधिपतिः स वै ।।

विपाशी चातिनिःस्वत्वाद्भस्मकृत्यहिभूषणः।। ८४ ।।

अर्धांगेनास्मद्भयतो योषिदेका निगूहिता ।।

तस्य ग्रामेपि सकले द्वितीयो न चतुष्पदः ।। ८५ ।।

एकोऽजरद्गवः सोपि नान्यस्मात्परिजीवति ।।

श्मशानवासिनः सर्वे सर्वे कौपीनवाससः ।।८६।।

सर्वे विभूतिधवला सर्वेप्येक कपर्द्दिनः ।।

समस्ते नगरे तस्य वसंत्येवंविधा गणाः।।८७।।

तेषां गणानां किं कुर्मो दरिद्राणां वयं विभो ।।

समुद्रा रत्नसंभारं प्रत्यहं प्रेषयंति च ।। ८८ ।।

नागा वराकाश्चास्माकं सायंसायं स्वयं प्रभो ।।

प्रदीपयंति सततं फणा रत्नप्रदीपकान् ।। ८९ ।।

कल्पद्रुमः कामगवी चिंतामणिगणा बहु ।।

तव प्रसादादस्माकमपि तिष्ठंति वेश्मसु ।। 4.2.71.९० ।।

वायुर्व्यजनतां यातस्त्वां सेवेत प्रयत्नतः ।।

स्वच्छान्यंबूनि वरुणः प्रत्यहं पूरयत्यहो ।। ९१ ।।

वासांसि क्षालयेदग्निश्चंद्रश्छत्रधरः स्वयम् ।।

सूर्यः प्रकाशयेन्नित्यं क्रीडावाप्यंबुजानि च ।।९२।।

कस्त्वत्प्रसादं नेक्षेत मर्त्यामर्त्योरगेषु च ।।

सर्वे त्वामुपजीवंति सुराऽसुरखगादयः ।। ।। ९३ ।।

पश्य नः पौरुषं राजन्नानयामो बलादिमाम्।।

इत्युक्त्वा युगपत्सर्वे क्षुब्धास्तोयधयो यथा ।।९४।।

संवर्तकालमासाद्य प्लावितुं जगतीमिमाम्।।

रणतूर्य निनादश्च समुत्तस्थौ समंततः ।। ९५ ।।

रोमांचिता यच्छ्रवणात्कातरा अप्यकातराः ।।

ततो देवा भयत्रस्ताश्चकंपे च वसुंधरा ।। ९६ ।।

क्षुब्धा अंबुधयः सर्वे पेतुर्नक्षत्रमालिकाः ।।

रोदसीमंडलं व्याप्तं तेन तूर्यरवेण वै ।। ९७ ।।

ततो भगवती देवी स्वशरीरसमुद्भवाः ।।

शक्तीरुत्पादयामास शतशोऽथ सहस्रशः ।।९८।।

ताभिः शक्तिभिरेतेषां बलिनां दितिजन्मनाम् ।।

प्रत्येकं परितो रुद्ध उद्वेलः सैन्यसागरः ।। ९९ ।।

शस्त्रास्त्राणि महादैत्यैर्यान्युत्सृष्टानि संगरे।।

ताभिः शक्तिभिरुग्राणि तृणीकृत्योज्झितान्यरम् ।। 4.2.71.१०० ।।

ततोतिकोपपूर्णास्ते जंभमुख्याः सुरारयः ।।

असि चक्र भुशुंडीभिर्गदामुद्गरतोमरैः ।। १ ।।

भिंदिपालैश्च परिघैः कुंतैः शल्यैश्च शक्तिभिः ।।

अर्धचंद्रैः क्षुरप्रैश्च नाराचैश्च शिलीमुखैः ।। २ ।।

महाभल्लैः परशुभिर्भिंदुरैर्मर्मभेदिभिः ।।

वृक्षोपलमहावर्षैर्ववृषुर्जलदा इव ।। ३ ।।

अथ सा विंध्यनिलया महामाया महेश्वरी ।।

आदायोद्दंडकोदंडं वायव्यास्त्रेण हेलया ।। ४ ।।

दैत्यास्त्रशस्त्रजालानि परिचिक्षेप दूरतः ।।

ततो महासुरो दुर्गो वीक्ष्य सैन्यं निरायुधम् ।। ५ ।।

ज्वलंतीं शक्तिमादाय तां देवीं प्रति सोऽक्षिपत् ।।

तां तु शक्तिं समायांतीं महावेगवतीं रणे ।। ६ ।।

निजचापविनिर्मुक्तैर्बाणैश्चूर्णी चकार सा ।।

भग्नां शक्तिं समालोक्य ततो दुर्गो महासुरः ।। ७ ।।

चक्रं च प्रेषयामास दैत्यचक्रातिहर्षदम् ।।

तच्च देव्या शरशतैरंतरैवाणुवत्कृतम् ।। ८ ।।

ततः शार्ङ्गं समादाय धनुः शक्रधनुर्यथा ।।

हृदि विव्याध बाणेन तां देवीममरार्दनः ।। ९ ।।

स च बाणस्तया देव्या निज बाणैर्महाजवैः ।।

निवारितोपि वेगेन तां देवीमभ्यगान्मुने ।। 4.2.71.११० ।।

ततः कोदंडदंडेन आषुगेन तमाशुगम् ।।

हत्वा निवारयामास कालदंडमिवापरम् ।। ११ ।।

तस्मिन्विमुखतां याते मार्गणे दुर्गमासुरः ।।

क्रुद्धः शूलं समादाय संवर्तानलसुप्रभम् ।। १२ ।।

महावेगन चिक्षेप तां देवीमभि दैत्यपः ।।

परापतच्च तच्छूलं निजशूलेन चंडिका ।। १३ ।।

अंतरैव प्रचिच्छेद सह दैत्यजयाशया ।।

तस्मिन्नपि महाशूले देवीशूलावहेलिते ।। १४ ।।

गदामादाय दैत्येंद्रः सहसाभिपपात ह ।।

आजघान च तं देवीं भुजमूले महाबलः ।। १५ ।।

सापि देवी भुजं प्राप्य गिरींद्रशिखराकृतिः ।।

गदाशुपरिपुस्फोट शतधा च सहस्रधा ।। १६ ।।

तदा देव्या स दैत्येंद्रो वामपादतलेन हि ।।

आताडितः पपातोर्व्यां हृदि गाढं प्रपीडितः ।।१७।।

तत्क्षणादेव दैत्येंद्रः पतित्वा पुनरुत्थितः ।।

बभूव सहसा दृश्यो दीपो वातहतो यथा ।। १८ ।।

तावज्जगज्जनन्याताः प्रेरिता निज शक्तयः ।।

विचेरुर्दैत्यसैन्येषु संवर्ते मृत्युसैन्यवत् ।। ११९ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे दुर्गपराक्रमो नामैकसप्ततितमोऽध्यायः ।। ७१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७२



।। अगस्त्य उवाच ।।

पार्वतीहृदयानंद स्कंद सर्वज्ञनंदन ।।

काः कास्तु शक्तयस्ता वै तासां नामानि मे वद ।।१।। ।।

स्कंद उवाच ।। ।।

तासां परमशक्तीनामुमावयवसंभुवाम् ।।

आख्याम्याख्यां शृणु मुने कुंभसंभव तत्त्वतः ।। २ ।।

त्रैलोक्यविजया तारा क्षमा त्रैलोक्यसुंदरी ।।

त्रिपुरा त्रिजगन्माता भीमा त्रिपुरभैरवी ।। ३ ।।

कामाख्या कमलाक्षी च धृतिस्त्रिपुरतापनी ।।

जया जयंती विजया जलेशी चापराजिता ।४।।

शंखिनी गजवक्त्रा च महिषघ्नी रणप्रिया ।।

शुभानंदा कोटराक्षी विद्युज्जिह्वा शिवारवा ।। ५ ।।

त्रिनेत्रा च त्रिवक्त्रा च त्रिपदा सर्वमंगला ।।

हुंकारहेतिस्तालेशी सर्पास्या सर्वसुंदरी ।। ६ ।।

सिद्धिर्बुद्धिः स्वधा स्वाहा महानिद्रा शराशना ।।

पाशपाणिः खरमुखी वज्रतारा षडानना।। ७ ।।

मयूरवदना काकी शुकी भासी गरुत्मती ।।

पद्मावती पद्मकेशी पद्मास्या पद्मवासिनी ।। ८ ।।

अक्षरा त्र्यक्षरा तंतुः प्रणवेशी स्वरात्मिका ।।

त्रिवर्गा गर्वरहिता अजपा जपहारिणी ।। ९ ।।

जपसिद्धिस्तपःसिद्धिर्योगसिद्धिः परामृता ।।

मैत्रीकृन्मित्रनेत्रा च रक्षोघ्नी दैत्यतापनी ।। 4.2.72.१० ।।

स्तंभनी मोहनीमाया बहुमाया बलोत्कटा ।।

उच्चाटनी महोल्कास्या दनुजेंद्रक्षयंकरी ।।११।।

क्षेमकरी सिद्धिकरी छिन्नमस्ता शुभानना ।।

शाकंभरी मोक्षलक्ष्मीस्त्रिवर्गफलदायिनी ।। १२ ।।
वार्ताली जंभली क्लिन्ना अश्वारूढा सुरेश्वरी ।।
ज्वालामुखी प्रभृतयो नवकोट्यौ महाबलाः ।। १३ ।।
बलानि बलिनां ताभिर्दानवानां स्वलीलया ।।
संक्षिप्ता निजगंतीव प्रलयानलहेतेभिः ।। १४ ।।
तावत्स दुर्गो दैत्येंद्रः पयोदांतरतो बली ।।
चकार करकावृष्टिं वात्या वेगवतीं बहु ।।१५।।
ततो भगवती देवी शोषणास्त्र प्रयोगतः ।।
वृष्टिं निवारयामास सवर्षोपलमयी क्षणात् ।। १६ ।।
योषिन्मनोरथवती षंढं प्राप्य यथाऽफला ।।
सा दैत्यकरकावृष्टिर्देवीं प्राप्य तथाभवत् ।। १७ ।।
अथ दैतेयराजेन बाहुसंकर्षकोपतः ।।
उत्पाट्य शैलशिखरं परिक्षिप्तं नभोंगणात् ।। १८ ।।
अद्रेः शृंगं सुविस्तीर्णमापतत्परिवीक्ष्य सा ।।
शतकोटिप्रहारेण कोटिशः सकलं व्यधात् ।। १९ ।।
आंदोल्य मौलिमसकृत्कुंडलाभ्यां विराजितम्।।
गजीभूयाशु दुद्राव तां देवीं समरेऽसुरः ।।4.2.72.२०।।
शैलाकारं तमायांतं दृष्ट्वा भगवती गजम् ।।
बद्ध्वा पाशेन जवतः खड्गेन करमच्छिनत् ।। २१ ।।
ततोत्यंतं स चीत्कृत्य देव्याकृत्तकरःकरी ।।
अकिंचित्करतां प्राप्य माहिषं वपुराददे ।। २२ ।।
अचलां सचलां सर्वां स चक्रे सुरघाततः ।।
शिलोच्चयांश्च बहुशः शृंगाभ्यां सोक्षिपद्बली ।।२३।।
निःश्वासवातनिहताः पेतुरुर्व्यां महाद्रुमाः ।।
उद्वेलिताः समभवन्सप्तापि जलराशयः ।।२४।।
महामहिषरूपेण तेन त्रैलोक्यमंडपः ।।
आंदोलितोति बलिना युगांते वात्यया यथा ।। २५ ।।
ब्रह्मांडमप्यकांडेन तद्भयेन समाकुलम् ।।

दृष्ट्वा भगवती क्रुद्धा त्रिशूलेन जघान तम् ।। २६ ।।

त्रिशूलघातविभ्रांतः पतित्वा पुनरुत्थितः ।।

तं त्यक्त्वा माहिषं वेषमभूद्बाहुसहस्रभृत् ।। २७ ।।

स दुर्गो नितरां दुर्गो विबभौ समराजिरे।।

आयुधानां सहस्राणि बिभ्रत्कालांतकोपमः ।। २८ ।।

अथ तूर्णं स दैत्येंद्रस्तां देवीं रणकोविदाम् ।।

महाबलः प्रगृह्याशु नीतवानान्गगनांगणम् ।। ।। २९ ।।

ततो नभोंगणाद्दूरात्क्षिप्त्वा स जगदंबिकाम् ।।

क्षणात्कलंबजालेन च्छादयामास वेगवान् ।। 4.2.72.३० ।।

अथांतरिक्षगा देवी तस्य मार्गणमध्यगा ।।

विद्युन्मालेव विबभौ महाभ्रपटलीधृता ।।३१।।

तं विधूय शरत्रातं निजेषु निकरैरलम् ।।

महेषुणाथ विव्याध सा तं दैत्यजनेश्वरम् ।। ३२ ।।

हृदि विद्धस्तया देव्या स च तेन महेषुणा ।।

व्याघूर्णमाननयनः क्षितिमापाति विह्वलः ।।३३।।

महारुधिरधाराभिः स्रवंतीं च प्रवर्तयन् ।।

तस्मिन्निपतिते दुर्गे महादुर्गपराक्रमे।। ।।३४ ।।

देवदुंदुभयो नेदुः प्रहृष्टानि जगंति च ।।

सूर्याचंद्रमसौ साग्नी तेजो निजमवापतुः ।। ३५ ।।

पुष्पवृष्टिं प्रकुर्वंतः प्राप्ता देवा महर्षिभिः ।।

तुष्टुवुश्च महादेवीं महास्तुतिभिरादरात् ।। ३६ ।। ।।

देवा ऊचुः ।। ।।

नमो देवि जगद्धात्रि जगत्रयमहारणे ।।

महेश्वर महाशक्ते दैत्यद्रुमकुठारके ।। ३७ ।।

त्रैलोक्यव्यापिनि शिवे शंखचक्रगदाधरि ।।

स्वशार्ङ्गव्यग्रहस्ताग्रे नमो विष्णुस्वरूपिणि ।। ३८ ।।

हंसयाने नमस्तुभ्यं सर्वसृष्टिविधायिनि।।

प्राचां वाचां जन्मभूमे चतुराननरूपिणि।। ३९ ।।

त्वमैंद्री त्वं च कौबेरी वायवी त्वं त्वमंबुपा ।।

त्वं यामी नैर्ऋती त्वं च त्वमैशी त्वं च पावकी ।। 4.2.72.४० ।।

शशांककौमुदी त्वं च सौरी शक्तिस्त्वमेव च ।।

सर्वदेवमयी शक्तिस्त्वमेव परमेश्वरी ।। ४१ ।।

त्वं गौरी त्वं च सावित्री त्वं गायत्री सरस्वती ।।

प्रकृतिस्त्वं मतिस्त्वं च त्वमहंकृतिरूपिणी ।। ।। ४२ ।।

चेतः स्वरूपिणी त्वं वै त्वं सर्वेंद्रियरूपिणी ।।

पंचतन्मात्ररूपा त्वं महाभूतात्मिकेंबिके ।। ४३ ।।

शब्दादि रूपिणी त्वं वै करणानुग्रहा त्वमु ।।

ब्रह्मांडकर्त्री त्वं देवि ब्रह्मांडांतस्त्वमेव हि ।। ४४ ।।

त्वं परासि महादेवि त्वं च देवि परापरा ।।

परापराणां परमा परमात्मस्वरूपिणी ।। ४५ ।।

सर्वरूपा त्वमीशानि त्वमरूपासि सर्वगे ।।

त्वं चिच्छक्तिर्महामाये त्वं स्वाहा त्वं स्वधामृते ।। ४६ ।।

वषड्वौषट्स्वरूपासि त्वमेव प्रणवात्मिका ।।

सर्वमंत्रमयी त्वं वै ब्रह्माद्यास्त्वत्समुद्भवाः ।। ४७ ।।

चतुर्वर्गात्मिका त्वं वै चतुर्वर्गफलोदये ।।

त्वत्तः सर्वमिदं विश्वं त्वयि सर्वं जगन्निधे ।। ४८ ।।

यद्दृश्यं यददृश्यं च स्थूलसूक्ष्मस्वरूपतः ।।

तत्र त्वं शक्तिरूपेण किंचिन्न त्वदृते क्वचित् ।। ४९ ।।

मातस्त्वयाद्य विनिहत्य महासुरेंद्रं दुर्गं निसर्गविबुधार्पितदैत्यसैन्यम् ।।

त्राताः स्म देवि सततं नमतां शरण्ये त्वत्तोऽपरः क इह यं शरणं व्रजामः ।। 4.2.72.५० ।।

लोके त एव धनधान्यसमृद्धिभाजस्ते पुत्रपौत्रसुकलत्र सुमित्रवंतः ।।

तेषां यशः प्रसरचंद्रकरावदातं विश्वं भवेद्भवसि येषु सुदृक्त्वमीशे ।। ।। ५१ ।।

त्वद्भक्तिचेतसि जनेन विपत्तिलेशः क्लेशः क्व वानुभवती नतिकृत्सु पुंसु ।।

त्वन्नामसंस्मृतिजुषां सकलायुषां क्व भूयः पुनर्जनिरिह त्रिपुरारिपत्नि ।। ५२ ।।

चित्रं यदत्र समरे स हि दुर्गदैत्यस्त्वद्दृष्टिपातमधिगम्य सुधानिधानम्।।

मृत्योर्वशत्वमगमद्विदितं भवानि दुष्टोपि ते दृशिगतः कुगतिं न याति ।। ५३ ।।

त्वच्छस्त्रवह्निशलभत्वमिता अपीह दैत्याः पतंगरुचिमाप्य दिवं व्रजंति ।।
संतः खलेष्वपि न दुष्टधियो यतः स्युः साधुष्विव प्रणयिनः स्वपथं दिशंति ।। ५४ ।।
प्राच्यां मृडानि परिपाहि सदा नतान्नो याम्यामव प्रतिपदं विपदो भवानि ।।
प्रत्यग्दिशि त्रिपुरतापन पत्नि रक्ष त्वं पाह्युदीचि निजभक्तजनान्महेशि ।। ५५ ।।
ब्रह्माणि रक्ष सततं नतमौलिदेशं त्वं वैष्णवि प्रतिकुलं परिपालयाधः ।।
रुद्राग्नि नैर्ऋति सदागति दिक्षु पांतु मृत्युंजया त्रिनयना त्रिपुरा त्रिशक्त्यः ।। ५६ ।।
पातु त्रिशूलममले तव मौलिजान्नो भालस्थलं शशिकला मृदुमाभ्रुवौ च ।।
नेत्रे त्रिलोचनवधूर्गिरिजा च नासामोष्ठं जया च विजयात्वधरप्रदेशम् ।। ५७ ।।
श्रोत्रद्वयं श्रुतिरवा दशनावलिं श्रीश्चंडी कपोलयुगलं रसनां च वाणी ।।
पायात्सदैव चिबुकं जयमंगला नः कात्यायनी वदनमंडलमेव सर्वम् ।। ५८ ।।
कंठप्रदेशमवतादिह नीलकंठी भूदारशक्तिरनिशं च कृकाटिकायाम् ।।
कौर्म्यं सदेशमनिशं भुजदंडमैंद्री पद्मा च पाणिफलकं नतिकारिणां नः ।। ५९ ।।
हस्तांगुलीः कमलजा विरजानखांश्च कक्षांतरं तरणिमंडलगा तमोघ्नी ।।
वक्षःस्थलं स्थलचरी हृदयं धरित्री कुशिद्वयं त्ववतु नः क्षणदाचरघ्नी ।।4.2.72.६०।।
अव्यात्सदा दरदरीं जगदीश्वरी नो नाभिं नभोगतिरजात्वथ पृष्ठदेशम् ।।
पायात्कटिं च विकटा परमास्फिचौ नो गुह्यं गुहारणिरपानमपाय हंत्री ।।६१ ।।
ऊरुद्वयं च विपुला ललिता च जानू जंघे जवाऽवतु कठोरतरात्र गुल्फौ।।
पादौ रसातलचरांगुलिदेशमुग्रा चांद्री नखान्त्पदतलं तलवासिनी च ।।६२।।
गृहं रक्षतु नो लक्ष्मीः क्षेत्रं क्षेमकरी सदा ।।
पातु पुत्रान्प्रियकरी पायादायुः सनातनी ।। ६३ ।।
यशः पातु महादेवी धर्मं पातु धनुर्धरी ।।
कुलदेवी कुलं पातु सद्गतिं सद्गतिप्रदा ।। ६४ ।।
रणे राजकुले द्यूते संग्रामे शत्रुसंकटे ।।
गृहे वने जलादौ च शर्वाणी सर्वतोऽवतु ।। ६५ ।।
इति स्तुत्वा जगद्धात्रीं प्रणेमुश्च पुनःपुनः ।।
सर्वे सवासवा देवाः सर्षिगंधर्वचारणाः ।। ६६ ।।
ततस्तुष्टा जगन्माता तानाह सुरसत्तमान् ।।
स्वाधिकारान्सुराः सर्वे शासतु प्राग्यथायथा ।। ६७।।

तुष्टाहमनया स्तुत्या नितरां तु यथार्थया ।।

वरमन्यं प्रदास्यामि तच्छृणुध्वं सुरोत्तमाः ।। ६८ ।। ।।

दुर्गोवाच ।। ।।

यः स्तोष्यति तु मां भक्त्या नरः स्तुत्यानया शुचिः ।।

तस्याहं नाशयिष्यामि विपदं च पदे पदे ।।६९।।

एतत्स्तोत्रस्य कवचं परिधास्यति यो नरः ।।

तस्य क्वचिद्भयं नास्ति वज्रपंजरगस्य हि ।।4.2.72.७०।।

अद्यप्रभृति मे नाम दुर्गेति ख्यातिमेष्यति ।।

दुर्गदैत्यस्य समरे पातनादति दुर्गमात्।।७१।।

ये मां दुर्गां शरणगा न तेषां दुर्गतिः क्वचित् ।।

दुर्गास्तुतिरियं पुण्या वज्रपंजरसंज्ञिका ।।७२।।

अनया कवचं कृत्वा मा बिभेतु यमादपि ।।

भूतप्रेतपिशाचाश्च शाकिनीडाकिनी गणाः।।७३।।

झोटिंगा राक्षसाः क्रूरा विष सर्पाग्नि दस्यवः ।।

वेतालाश्चापि कंकाल ग्रहा बालग्रहा अपि।।७४।।

वातपित्तादि जनितास्तथा च विषमज्वराः ।।

दूरादेव पलायंते श्रुत्वा स्तुतिमिमां शुभाम् ।।७५।।

वज्रपंजर नामैतत्स्तोत्रं दुर्गाप्रशंसनम् ।।

एतत्स्तोत्रकृतत्राणे वज्रादपि भयं नहि ।। ७६ ।।

अष्टजप्तेन चानेन योभिमंत्र्य जलं पिबेत् ।।

तस्योदरगतापीडा क्वापि नो संभविष्यति।।७७।।

गर्भपीडा तु नो जातु भविष्यत्यभिमंत्रणात् ।।

बालानां परमा शांतिरेतत्स्तोत्रांबुपानतः ।। ७८ ।।

यत्र सान्निध्यमेतस्य स्तवस्येह भविष्यति ।।

एतास्तु शक्तयः सर्वा सर्वत्र सहिता मया ।। ७९ ।।

रक्षां परिकरिष्यंति मद्भक्तानां ममाज्ञया ।।

इति दत्त्वा वरान्देवी देवेभ्यो तर्हि ता तदा ।। 4.2.72.८० ।।

तेपि स्वर्गौकसः सर्वे स्वंस्वं स्वर्गं ययुर्मुदा ।। ।।

स्कंद उवाच ।।

इत्थं दुर्गाभवन्नाम तया देव्या महामुने ।।

काश्यां सेव्या यथा सा च तच्छृणुष्व वदामि ते ।।८१।।

अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः ।।

संपूज्या सततं काश्यां दुर्गा दुर्गतिनाशिनी ।। ८२ ।।

नवरात्रं प्रयत्नेन प्रत्यहं सा समर्चिता ।।

नाशयिष्यति विघ्नौघान्सुमतिं च प्रदास्यति ।। ८३ ।।

महापूजोपहारैश्च महाबलिनिवेदनैः ।।

दास्यत्यभीष्टदा सिद्धिं दुर्गा काश्यां न संशयः ।। ८४ ।।

प्रतिसंवत्सरं तस्याः कार्या यात्रा प्रयत्नतः ।।

शारदं नवरात्रं च सकुटुंबैः शुभार्थिभिः ।।८५।।

यो न सांवत्सरीं यात्रां दुर्गायाः कुरुते कुधीः ।।

काश्यां विघ्न सहस्राणि तस्य स्युश्च पदेपदे ।। ८६ ।।

दुर्गाकुंडे नरः स्नात्वा सर्वदुर्गार्तिहारिणीम् ।।

दुर्गां संपूज्य विधिवन्नवजन्माघमुत्सृजेत् ।। ८७ ।।

सा दुर्गाशक्तिभिः सार्धं काशीं रक्षति सर्वतः ।।

ताः प्रयत्नेन संपूज्या कालरात्रिमुखा नरैः ।।८८।।

रक्षंति क्षेत्रमेतद्वै तथान्या नवशक्तयः ।।

उपसर्गसहस्रेभ्यस्ता वैदिग्देवताक्रमात् ।। ८९ ।।

शतनेत्रा सहस्रास्या तथायुतभुजापरा ।।

अश्वारूढा गजास्या च त्वरिता शववाहिनी ।। 4.2.72.९० ।।

विश्वा सौभाग्यगौरी च सृष्टाः प्राच्यादिमध्यतः ।।

एता यत्नेन संपूज्याः क्षेत्ररक्षणदेवताः ।।९१।।

तथैव भैरवाश्चाष्टौ दिक्ष्वष्टासु प्रतिष्ठिताः ।।

रक्षंति सततं काशीं निर्वाणश्रीनिकेतनम् ।। ९२ ।।

रुरुश्चंडोसितांगश्च कपाली क्रोधनस्तथा ।।

उन्मत्तभैरवस्तद्वत्क्रमात्संहारभीषणौ ।। ९३ ।।

चतुःषष्टिस्तु वेताला महाभीषणमूर्तयः ।।

रुंडमुंडस्रजः सर्वे कर्त्रीखर्परपाणयः ।। ९४ ।।

श्ववाहना रक्तमुखा महादंष्ट्रा महाभुजाः ।।

नग्ना विमुक्तकेशाश्च प्रमत्ता रुधिरासवैः ।। ९५ ।।

नानारूपधराः सर्वे नानाशस्त्रास्त्र पाणयः ।।

तदाकारैश्च तद्भृत्यैः कोटिशः परिवारिताः ।। ९६ ।।

विद्युज्जिह्वो ललज्जिह्वः क्रूरास्यः क्रूरलोचनः।।

उग्रो विकटदंष्ट्रश्च वक्रास्यो वक्रनासिकः ।। ९७ ।।

जंभको जृंभणमुखो ज्वालानेत्रो वृकोदरः ।।

गर्तनेत्रो महानेत्रस्तुच्छनेत्रोंऽत्रमण्डनः ।। ९८ ।।

ज्वलत्केशः कंबुशिराः खर्वग्रीवो महाहनुः ।।

महानासो लंबकर्णः कर्णप्रावरणोनसः ।।९९।।

इत्यादयो मुने क्षेत्रं दुर्वृत्तरुधिरप्रियाः ।।

त्रासयंतो दुराचारान्रक्षंति परितः सदा ।।4.2.72.१००।।

त्रैलोक्यविजयाद्याश्च ज्वालामुख्यंतगाश्च याः ।।

शक्तयोऽत्र मया ख्याता मुने कलशसंभव ।। १ ।।

ताः काशीं परिरक्षंति चतुर्दिक्षूद्यतायुधाः ।।

ताः समर्च्याः प्रयत्नेन महाविघ्न प्रशांतये ।।२।।

भैरवा रुरुमुख्याश्च महाभयनिवारकाः ।।

संपूज्याः सर्वदा काश्यां सर्वसंपत्तिहेतवः ।।३।।

विद्युज्जिह्वप्रभृतयो वेताला उग्ररूपिणः ।।

अत्युग्रानपि विघ्नौघान्हरिष्यंत्यर्चिता इह ।। ४ ।।

तथा भूतावली चात्र नानाभीषणरूपिणी ।।

उदायुधाऽवति पुरीं शतकोटिमिता मुने ।। ५ ।।

निर्वाणलक्ष्मीक्षेत्रस्य पालयित्री पदेपदे ।।

एता वै देवताः पूज्याः काश्यां निर्वाणकांक्षिभिः ।। ६ ।।

श्रुत्वाध्यायमिमं पुण्यं नरो दुर्गजयाभिधम् ।।

नानाशक्तिसमायुक्तं दुर्गमाशु तरिष्यति ।। ७ ।।

य एते भैरवाः प्रोक्ता ये वेताला उदाहृताः ।।

तेषां नामानि चाकर्ण्य नरो विप्रैर्न दूयते ।। ८ ।।

अदृष्टा अपि ते भूता एतदाख्यानपाठकम् ।।

रक्षिष्यंति प्रयत्नेन सह श्रोतृजनेन च ।। ९ ।।

तस्मात्सर्वप्रयत्नेन काशीभक्तिपरैर्नरैः ।।

श्रोतव्यमिदमाख्यानं महाविघ्ननिवारणम् ।। ।। 4.2.72.११० ।।

गृहेपि यस्य लिखितमेतत्स्थास्यति पूजितम् ।

तस्यापदां सहस्राणि नाशयिष्यंति देवताः ।। ११ ।।

काश्यां यस्यास्ति वै प्रेम तेन कृत्वाऽऽदरं गुरुम् ।।

श्रोतव्यमिदमाख्यानं वज्रपंजरसन्निभम् ।।११२ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे दुर्गाविजयो नाम द्विसप्ततितमोऽध्यायः ।। ७२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७३

https://sa.wikisource.org/s/fya
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

अगस्त्य उवाच ।।

त्रिलोचनं समासाद्य देवदेवः षडाननः ।।

जगदंबिकयायुक्तः किं चकाराशु तद्वद ।। १ ।।

।। स्कन्द उवाच ।। ।।

मुने कलशजाख्यामि यत्पृष्टं तन्निशामय ।।

विरजःसंज्ञकं पीठं यत्प्रोक्तं सर्वसिद्धिदम् ।। २ ।।

तत्पीठदर्शनादेव विरजा जायते नरः ।।

यत्रास्ति तन्महालिंगं वाराणस्यां त्रिलोचनम् ।। ३ ।।

तीर्थं पिलिपिलाख्यं तद्द्युनद्यंभसि विश्रुतम् ।।

सर्वतीर्थमयं तीर्थं तत्काश्यां परिगीयते ।। ४ ।।

विष्टपत्रितयांतर्ये देवर्षिमनुजोरगाः ।।

ससरित्पर्वतारण्याः संति ते तत्र यन्मुने ।। ५ ।।

तदारभ्य च तत्तीर्थं तच्च लिंगं त्रिलोचनम् ।।

त्रिविष्टपमिति ख्यातमतोहेतोर्महत्तरम् ।। ६ ।।

त्रिविष्टपस्य लिंगस्य महिमोक्ताः पिनाकिना ।।

जगज्जनन्याः पुरतो यथा वच्मि तथा मुने ।।७।।

।। देव्युवाच ।। ।।

देवदेव जगन्नाथ शर्व सर्वद सर्वग ।।

सर्वदृक्सर्वजनक किंचित्पृच्छामि तद्वद ।। ।।८।।

इदं तव प्रियं क्षेत्रं कर्मबीजमहौषधम् ।।

नैःश्रेयस्याः श्रियो गेहं ममापि प्रीतिदं महत् ।।९।।

यत्क्षेत्ररजसोप्यग्रे त्रिलोक्यपि तृणायते ।।

तस्याखिलस्य महिमा विष्वक्केनावगम्यते ।। 4.2.73.१० ।।

यानीह संति लिंगानि तानि सर्वाण्यसंशयम् ।।

निर्वाणकारणान्येव स्वयंभून्यपि तान्यपि ।। ११ ।।

यद्यप्येवं तथापीश विशेषं वक्तुमर्हसि ।।

काश्यामनादिसिद्धानि कानि लिंगानि शंकर ।।१२।।

यत्र देवः सदा तिष्ठेत्संवर्तेऽपि स वल्लभः ।।

यैरियं प्रथितिं प्राप्ता काशी मुक्तिपुरीति च।। ।। १३ ।।

येषां स्मरणतोप्यत्र भवेत्पापस्य संक्षयः।।

दर्शनस्पर्शनाभ्यां च स्यातां स्वर्गापवर्गकौ ।। १४ ।।

येषां समर्चनादेव मध्ये जन्म सकृद्विभो ।।

लिंगानि पूजितानि स्युः काश्यां सर्वाणि निश्चितम् ।।१५।।

विधाय मय्यनुक्रोशं कारुण्यामृतसागर ।।

एतदाचक्ष्व मे शंभो पादयोः प्रणतास्म्यहम् ।।१६।।

इत्याकर्ण्य महेशानस्तस्या देव्याः सुभाषितम्।।

कथयामास विंध्यारे महालिंगानि सत्तम ।।१७।।

यन्नामाकर्णनादेव क्षीयंते पापराशयः ।।

प्राप्यते पुण्यसंभारः काश्यां निवार्णकारणम् ।। १८ ।।

।। देवदेव उवाच ।। ।।

शृणु देवि परं गुह्यं क्षेत्रेऽस्मिन्मुक्तिकारणम् ।।

इदं विदंति नैवापि ब्रह्मनारायणादयः ।। १९ ।।

असंख्यातानि लिंगानि पार्वत्यानंदकानने ।।

स्थूलान्यपि च सूक्ष्माणि नानारत्नमयानि च ।। 4.2.73.२० ।।

नानाधातुमयानीशे दार्षदान्यप्यनेकशः ।।

स्वयंभून्यप्यनेकानि देवर्षिस्थापितान्यहो ।।२१।।

सिद्धचारणगंधर्व यक्षरक्षोर्चितान्यपि ।।

असुरोरगमर्त्यैश्च दानवैरप्सरोगणैः ।।२२।।

दिग्गजेर्गिरिभिस्तीर्थैर्ऋक्ष वानर किन्नरैः ।।

पतत्रिप्रमुखैर्देवि स्वस्वनामांकितानि वै ।।२३।।

प्रतिष्ठितानि यानीह मुक्तिहेतूनि तान्यपि ।।

अदृश्यान्यपि दृश्यानि दुरवस्थान्यपि प्रिये ।।२४।।

भग्नान्यपि च कालेन तानि पूज्यानि सुंदरि।।

परार्धशतसंख्यानि गणितान्येकदा मया।। २५।।

गंगाभस्यपि तिष्ठंति षष्टिकोटिमितानिहि।।

सिद्धलिंगानि तानीशे तिष्येऽदृश्यत्वमाययुः ।। २६ ।।

गणनादिवसादवार्ङ्मभक्तजनैःप्रिये ।।

प्रतिष्ठितानि यानीह तेषां संख्या न विद्यते ।।२७।।

त्वया तु यानि पृष्टानि यैरिदं क्षेत्रमुत्तमम् ।।

तानि लिंगानि वक्ष्यामि मुक्तिहेतूनि सुंदरि ।। २८ ।।

कलावतीव गोप्यानि भविष्यंति गिरींद्रजे ।।

परं तेषां प्रभावो यः स्वस्वस्थानं न हास्यति ।। २९ ।।

कलिकल्मषपुष्टा ये ये दुष्टा नास्तिकाः शठाः ।।

एतेषां सिद्धलिंगानां ज्ञास्यंत्याख्यामपीह न ।। 4.2.73.३० ।।

नामश्रवणतोपीह यल्लिंगानां शुभानने ।।

वृजिनानि क्षयं यांति वर्धंते पुण्यराशयः ।। ३१ ।।

ओंकारः प्रथमं लिंगं द्वितीयं च त्रिलोचनम् ।।

तृतीयश्च महादेवः कृत्तिवासाश्चतुर्थकम् ।। ।। ३२ ।।

रत्नेशः पंचमं लिंगं षष्ठं चंद्रेश्वराभिधम् ।।

केदारः सप्तमं लिंगं धर्मेशश्चाष्टमं प्रिये ।। ३३ ।।

वीरेश्वरं च नवमं कामेशं दशमं विदुः ।।

विश्वकर्मेश्वरं लिंगं शुभमेकादशं परम् ।। ३४ ।।

द्वादशं मणिकर्णीशमविमुक्तं त्रयोदशम् ।।

चतुर्दशं महालिंगं मम विश्वेश्वराभिधम् ।। ३५ ।।

प्रिये चतुर्दशैतानि श्रियोहेतूनि सुंदरि ।।

एतेषां समवायोयं मुक्तिक्षेत्रमिहेरितम् ।। ३६ ।।

देवताः समधिष्ठात्र्यः क्षेत्रस्यास्य परा इमाः ।।

आराधिताः प्रयच्छंति नृभ्यो नैःश्रेयसीं श्रियम् ।।३७ ।।

आनंदकानने मुक्त्यै प्रोक्तान्येतानि सुंदरि ।।

प्रिये चतुर्दशेज्यानि महालिंगानि देहिनाम् ।। ३८ ।।

प्रतिमासं समारभ्य तिथिं प्रतिपदं शुभाम् ।।

एतेषां लिंगमुख्यानां कार्या यात्रा प्रयत्नतः ।।३९।।

अनाराध्य महादेवमेषु लिंगेषु कुंभज ।।

कः काश्यां मोक्षमाप्नोति सत्यं सत्यं पुनःपुनः ।।4.2.73.४०।।

तस्मात्सर्वप्रयत्नेन काशीफलमभीप्सुभिः ।।

पूज्यान्येतानि लिंगानि भक्त्या परमया मुने ।।४१।।

।। अगस्त्य उवाच ।। ।।

एतान्येव किमन्यानि महालिंगानि षण्मुख ।।

निर्वाणकारणानीह यदि संति तदा वद ।। ४२ ।।

।। स्कंद उवाच ।। ।।

अन्यान्यपि च संतीह महालिंगानि सुव्रत ।।

कलिप्रभावाद्गुप्तानि भविष्यंत्येव तानि वै ।। ।। ४३ ।।

यस्येश्वरे सदाभक्तिर्यः काशीतत्त्ववित्तमः ।।

स एवैतानि लिंगानि वेत्स्यत्यन्यो न कश्चन ।। ४४ ।।

येषां नामग्रहेणापि कलिकल्मष संक्षयः ।।

अमृतेशस्तारकेशो ज्ञानेशः करुणेश्वरः ।। ४५ ।।

मोक्षद्वारेश्वरश्चैव स्वर्गद्वारेश्वरस्तथा ।।

ब्रह्मेशो लांगलश्चैव वृद्धकालेश्वरस्तथा ।। ४६ ।।

वृषेशश्चैव चंडीशो नंदिकेशो महेश्वरः ।।

ज्योतीरूपेश्वरं लिंगं ख्यातमत्र चतुर्दशम् ।। ४७ ।।

काश्यां चतुर्दशैतानि महालिंगानि सुंदरि ।।

इमानि मुक्तिहेतूनि लिंगान्यानंदकानने ।। ४८ ।।

कलिकल्मषबुद्धीनां नाख्येयानि कदाचन ।।

एतान्याराधयेद्यस्तु लिंगानीह चतुर्दश ।। ४९ ।।

न तस्य पुनरावृत्तिः संसाराध्वनि कर्हिचित् ।।

काशीकोशोयमतुलो न प्रकाश्यो यतस्ततः ।। ।। 4.2.73.५० ।।

एतल्लिंगाभिधा देवि महापद्यपि दुःखहृत् ।।

रहस्यं परमं चैतत्क्षेत्रस्यास्य वरानने ।। ५१ ।।

चतुर्दशापि लिंगानि मत्सान्निध्यकराणि हि ।।

अविमुक्तस्य हृदयमेतदेव गिरींद्रजे ।। ५२ ।।
इमानि यानि लिंगानि सर्वेषां मुक्तिदानि हि ।।
एकैकभुवनस्येह सारमादाय सर्वतः ।।
मयैतानि कृतान्येव महाभक्तिकृपावशात् ।। ५३ ।।
अस्मिन्क्षेत्रे ध्रुवं मुक्तिरिति या प्रथिति प्रिये ।।
कारणं तत्र लिंगानि ममैतानि चतुर्दश ।।५४।।
त एव व्रतिनः कांते त एव च तपस्विनः।।
ध्यातान्येतानि यैर्भक्तैर्लिंगान्यानंदकानने ।।५५।।
त एवाभ्यस्तसद्योगा दत्तदानास्त एव हि ।।
काश्यामिमानि लिंगानि यैर्दृष्टान्यपि दूरतः ।। ५६।।
इष्टापूर्ताश्च ये धर्माः प्रणीता मुनिसत्तमैः ।।
ते सर्वे तेन विहिता यावज्जीवं निरेनसा ।। ५७ ।।
येनाविमुक्तमासाद्य महालिंगानि पार्वति ।।
सकृदभ्यर्चितानीह स मुक्तो नात्र संशयः ।। ५८ ।।
।। स्कंद उवाच ।। ।।
अन्यान्यपि च विंध्यारे देव्यै प्रोक्तानि शंभुना ।।
स्वभक्तानां हिताथार्य तान्यथाकर्णयाग्रज ।। ५९ ।।
शैलेशः संगमेशश्च स्वर्लीनो मध्यमेश्वरः ।।
हिरण्यगर्भ ईशानो गोप्रेक्षो वृषभध्वजः ।। 4.2.73.६० ।।
उपशांत शिवो ज्येष्ठो निवासेश्वर एव च ।।
शुक्रेशो व्याघ्रलिंगं च जंबुकेशं चतुर्दशम् ।। ६१ ।।
मुने चतुर्दशैतानि महांत्यायतनानि वै ।।
एतेषामपि सेवातो नरो मोक्षमवाप्नुयात् ।। ६२ ।।
चैत्रकृष्णप्रतिपदं समारभ्य प्रयत्नतः ।।
आ चतुर्दशिपूज्यानि लिंगान्येतानि सत्तमैः ।। ६३ ।।
एतेषां वार्षिकी यात्रा सुमहोत्सवपूर्वकम् ।।
कार्या मुमुक्षुभिः सम्यक्क्षेत्रसंसिद्धिदायिनी ।। ।। ६४ ।।
मुने चतुर्दशैतानि महालिंगानि यत्नतः ।।

दृष्ट्वा न जायते जंतुः संसारे दुःखसागरे ।।६५।।

क्षेत्रस्य परमं तत्त्वमेतदेव प्रिये ध्रुवम् ।।

संसाररोगग्रस्तानामिदमेव महौषधम् ।। ६६ ।।

क्षेत्रस्योपनिषच्चैषा मुक्तिबीजमिदं परम् ।।

कर्मकाननदावाग्निरेषा लिंगावलिः प्रिये ।। ६७ ।।

एकैकस्यास्य लिंगस्य महिमाद्यंत वर्जितः ।।

मयैव ज्ञायते देवि सम्यङ्नान्येन केनचित् ।।६८।।

इति श्रुत्वा मुने प्राह देवी हृष्टतनूरुहा ।।

प्रणम्य देवमीशानं सर्वज्ञं सर्वदं शिवम् ।। ६९ ।।

।। देव्युवाच ।। ।।

रहस्यं परमं काश्यां यदेतत्समुदीरितम् ।।

तच्छ्रुत्वोत्सुकतां प्राप्तं मनो मेतीव वल्लभ ।। 4.2.73.७० ।।

यदुक्तं लिगमेकैकं महासारतरं परम् ।।

काश्यां परमनिर्वाणकारणं कारणेश्वर ।। ७१ ।।

प्रत्येकं महिमानं मे ब्रूह्येषां भुवनेश्वर ।।

चतुर्दशानां लिंगानां श्रवणादघहारिणाम् ।। ।। ७२ ।।

ओंकारेशस्य लिंगस्य कथमत्र समागमः ।।

अतिपुण्यतमात्तस्मात्क्षेत्रादमरकंटकात् ।। ७३ ।।

किमात्मकोऽयमोंकारो महिमास्य च को हर ।।

केनाराधि पुरा चैष ददावाराधितश्च किम् ।। ७४ ।।

मृडानीवाक्सुधामेतां विधाय श्रुतिगोचराम् ।।

कथामकथयद्देव ओंकारस्यमहाद्भुताम् ।। ७५ ।।

।। देवदेव उवाच ।। ।।

कथामाकर्णयापर्णे वर्णयामि तवाग्रतः ।।

यथोंकारस्य लिंगस्य प्रादुर्भाव इहाभवत् ।।७६।।

पुरानंदवने चात्र ब्रह्मणा विश्वयोनिना ।।

तपस्तप्तं महादेवि समाधिं दधतापरम् ।। ७७ ।।

पूर्णे युगसहस्रेऽथ भित्त्वा पातालसप्तकम्।।

उदतिष्ठत्पुरोज्योतिर्विद्योतित हरिन्मुखम् ।। ७८ ।।

यदंतराविरभवन्निर्व्याजेन समाधिना।।

तदेव परमं धाम बहिराविरभूद्विधेः ।।७९।।

योभूच्चटचटाशब्दः स्फुटतो भूमिभागतः।।

तच्छब्दाद्व्यसृजद्वेधाः समाधिं क्रमतो वशी ।। ।। 4.2.73.८० ।।

स्रष्टाविसृष्ट तद्ध्यानो यावदुन्मील्यलोचने ।।

पुरः पश्येद्ददर्शाग्रे तावदक्षरमादिमम् ।। ८१ ।।

अकारं सत्त्वसंपन्नमृक्क्षेत्रं सृष्टिपालकम् ।।

नारायणात्मकं साक्षात्तमः पारे प्रतिष्ठितम् ।। ८२ ।।

उकारमथ तस्याग्रे रजोरूपं यजुर्जनिम् ।।

विधातारं समस्तस्य स्वाकारमिव बिंबितम् ।। ८३ ।।

नीरवध्वांतसंकेत सदनाभं तदग्रतः ।।

मकारं स ददर्शाथ तमोरूपं विशेषतः ।। ८४ ।।

साम्नो योनिं लये हेतुं साक्षाद्रुद्रस्वरूपिणम् ।।

अथ तत्पुरतो ध्याता व्यधात्स्वनयनातिथिम् ।। ८५ ।।

विश्वरूपमयाकारं सगुणं वापि निर्गुणम्।।

अनाख्यनादसदनं परमानंदविग्रहम् ।।८६।।

शव्दब्रह्मेति यत्ख्यातं सर्ववाङ्मयकारणम् ।।

अथोपरिष्टान्नादस्य बिंदुरूपं परात्परम् ।। ८७ ।।

कारणं कारणानां च जगद्योनिं च तं परम् ।।

विधिर्विलोकयांचक्रे तपसागोचरीकृतम् ।। ८८ ।।

अवनादोमिति ख्यातं सर्वस्यास्य प्रभावतः ।।

भक्तमुन्नयते यस्मात्तदोमिति य ईरितः ।। ८९ ।।

अरूपोपि सरूपाढ्यः स धात्रा नेत्रगीकृतः ।।

तारयेद्यद्भवांभोधेः स्वजपासक्तमानसम् ।।

ततस्तार इति ख्यातो यस्तं ब्रह्मा व्यलोकयत् ।। 4.2.73.९० ।।

प्रणूयते यतः सर्वैः परनिर्वाणकामुकैः ।।

सर्वेभ्योभ्यधिकस्तस्मात्प्रणवो यैः प्रकीर्तितः ।। ९१ ।।

स्वसेवितारं पुरुषं प्रणयेद्यः परंपदम् ।।
अतस्तप्रणवं शांतं प्रत्यक्षीकृतवान्विधिः ।। ९२ ।।
त्रयीमयस्तुरीयोयस्तुर्यातीतोखिलात्मकः ।।
नादबिंदुस्वरूपो यः स प्रैक्षि द्विजगामिना ।। ९३ ।।
प्रावर्तंत यतो वेदाः सांगाः सर्वस्य योनयः ।।
सवेदादिः पद्मभुवा पुरस्तादवलोकितः ।। ९४ ।।
वृषभो यस्त्रिधाबद्धो रोरवीति महोमयः ।।
सनेत्रविषयी चक्रे परमः परमेष्ठिना ।। ९५ ।।
शृंगश्चत्वारि यस्यासन्हस्तासः सप्त एव च ।।
द्वे शीर्षे च त्रयः पादाः स देवो विधिनैक्षत ।। ९६ ।।
यदंतर्लीनमखिलं भूतं भावि भवत्पुनः ।।
तद्बीजं बीजरहितं द्रुहिणेन विलोकितम् ।। ९७ ।।
लीनं मृग्येत यत्रैतदाब्रह्मस्तंबभाजनम्।।
अतः स भाज्यते सद्भिर्यल्लिंगं तद्विलोकितम् ।।९८।।
पंचार्था यत्र भासंते पंचब्रह्ममयं हि यत् ।।
आदिपंचस्वरूपंयन्निरैक्षि ब्रह्मणा हि तत् ।। ९९ ।।
तमालोक्य ततो वेधा लिंगरूपिणमीश्वरम् ।।
पंचाक्षरं प्रपंचाच्च भिन्नं तुष्टाव शंकरम् ।। 4.2.73.१०० ।।
ब्रह्मोवाच ।। ।
नम ओंकाररूपाय नमोऽक्षरवपुर्धृते ।।
नमोऽकारादिवर्णानां प्रभवाय सदाशिव ।। १ ।।
अकारस्त्वमुकारस्त्वं मकारस्त्वमनाकृते ।।
ऋग्यजुः सामरूपाय रूपातीताय ते नमः ।। २ ।।
नमो नादात्मने तुभ्यं नमो बिंदुकलात्मने ।।
अलिंगलिंगरूपाय सर्वरूपस्वरूपिणे ।। ३ ।।
नमस्ते धाम निधये निधनादिविवर्जित ।।
नमो भवाय रुद्राय शर्वाय च नमोस्तुते ।। ४ ।।
नम उग्राय भीमाय पशूनां पतये नमः ।।

नमस्तारस्वरूपाय संभवाय नमोस्तु ते ।। ५ ।।

अमायाय नमस्तुभ्यं नमः शिवतराय ते ।।

कपर्दिने नमस्तुभ्यं शितिकंठ नमोस्तु ते ।। ६ ।।

मीढुष्टमाय गिरिश शिपिविष्टाय ते नमः ।।

नमोऽह्रस्वाय खर्वाय बृहते वृद्धरूपिणे ।। ७ ।।

कुमारगुरवे तुभ्यं कुमारवपुषे नमः ।।

नमः श्वेताय कृष्णाय पीतायारुणमूर्तये ।। ८ ।।

धूम्रवर्णाय पिंगाय नमः किर्मीरवर्चसे ।।

नमः पाटलवर्णाय नमो हरिततेजसे ।। ९ ।।

नानावर्णस्वरूपाय वर्णानां पतये नमः ।।

नमस्ते स्वररूपाय नमो व्यंजनरूपिणे ।। 4.2.73.११० ।।

उदात्तायानुदात्ताय स्वरिताय नमो नमः ।।

ह्रस्वदीर्घप्लुतेशाय सविसर्गाय ते नमः ।। ।। ११ ।।

अनुस्वारस्वरूपाय नमस्ते सानुनासिक ।।

नमो निरनुनासाय दंत्यतालव्यरूपिणे ।। १२ ।।

ओष्ठ्योरस्यस्वरूपाय नम ऊष्मस्वरूपिणे ।।

अंतस्थाय नमस्तुभ्यं पंचमाय पिनाकिने ।। १३ ।।

निषादाय नमस्तुभ्यं निषादपतये नमः ।।

वीणावेणुमृदंगादि वाद्यरूपाय ते नमः ।। १४ ।।

नमस्ताराय मंद्राय घोरायाघोरमूर्तये ।।

नमस्तानस्वरूपाय मूर्च्छनां पतये नमः ।। १५ ।।

स्थायिसंचारिभेदेन नमो भावस्वरूपिणे ।।

तालप्रियाय तालाय लास्यतांडवजन्मने ।। १६ ।।

तौर्यत्रिकस्वरूपाय तौर्यत्रिकमहाप्रिय ।। तौर्यत्रिककृतांभक्त्या निर्वाणश्रीप्रदायक ।।१७।।

स्थूलसूक्ष्मस्वरूपाय दृश्यादृश्य स्वरूपिणे ।।

अर्वाचीनाय च नमः पराचीनाय ते नमः ।। १८ ।।

वाक्प्रपंच स्वरूपाय वाक्प्रपंच पराय च ।।

एकायानेकभेदाय सदसत्पतये नमः ।।१९।।

शब्दब्रह्म नमस्तुभ्यं परब्रह्म नमोस्तुते ।।

नमो वेदांतवेद्याय वेदानां पतये नमः ।। 4.2.73.१२० ।।

नमो वेदस्वरूपाय वेदगोचरमूर्तये ।।

पार्वतीश नमस्तुभ्यं जगदीश नमोस्तु ते ।। २१ ।।

नमस्ते देवदेवेश देव दिव्यपदप्रद ।।

शंकराय नमस्तुभ्यं नमस्तुभ्यं महेश्वर ।। २२ ।।

नमस्ते जगदानंद नमस्ते शशिशेखर ।।

मृत्युंजय नमस्तुभ्यं नमस्ते त्र्यंबकाय च ।। २३ ।।

नमः पिनाकहस्ताय त्रिशूलायुधधारिणे ।।

नमस्त्रिपुरहंत्रे च नमोंधक निषूदन ।। २४ ।।

कंदर्पदर्पदलन नमोजालंधरारये ।।

कालाय कालकालाय कालकूटविषादिने ।। २५ ।।

विषादहंत्रे भक्तानामभक्तैक विषादद ।।

ज्ञानाय ज्ञानरूपाय सर्वज्ञाय नमोऽस्तुते ।। ।। २६ ।।

योगसिद्धिप्रदोसि त्वं योगिनां योगसत्तम ।।

तपसां फलदोसि त्वं तपस्विभ्यस्तपोधन ।। २७ ।।

त्वमेव मंत्ररूपोसि मंत्राणां फलदो भवान् ।।

महादानफलं त्वं वै महादानप्रदो भवान् ।। २६ ।।

महायज्ञस्त्वमेवेश महायज्ञ फलप्रद ।।

त्वं सर्वः सर्वगस्त्वं वै सर्वदः सर्वदृग्भवान् ।।२९।।

सर्वभुक्सर्वकर्ता त्वं सर्वसंहारकारक ।।

योगिनां हृदयाकाश कृतालय नमोस्तु ते ।। 4.2.73.१३० ।।

त्वमेव विष्णुरूपेण शंखचक्रगदाधर ।।

त्रिलोकीं त्रायसे त्रातः सत्त्वमूर्ते नमोस्तु ते ।। ३१।।

त्वमेव विदधास्ये तद्विधिर्भूत्वा विधानवित् ।।

रजोरूपं समालंब्य नीरजस्कपदप्रद ।। ३२ ।।

त्वमेव हि महारुद्रस्त्वं महोग्रो भुजंगभृत् ।।

त्वमेव हि महाभीमो महापितृवनेचर ।। ३३ ।।

तामसीं तनुमाश्रित्य त्वं कृतांत कृतांतक ।।

कालाग्निरुद्रो भूऽत्वांते त्वं संवर्त प्रवर्तकः ।। ३४ ।।

त्वं पुंप्रकृतिरूपाभ्यां महदाद्यखिलं जगत् ।।

अक्षिपक्ष्मसमुत्क्षेपात्पुनराविः करोप्यज ।।३५।।

उन्मेषविनिमेषौ ते सर्गासर्गैककारणम् ।।

कपालमालाखेलोयं भवतः स्वैरचारिणः ।। ३६ ।।

त्वत्कंठे नृकरोटीयं धूर्जटे या विभासते ।।

सर्वेषामंतदग्धानां सास्फुटं बीजमालिका ।। ३७ ।।

त्वत्तः सर्वमिदं शंभो त्वयि सर्वं चराचरम् ।।

कस्त्वां स्तोतुं विजानाति पुरां वाचामगोचरम् ।। ३८ ।।

स्तोता त्वं हि स्तुतिस्त्वं हि नित्यं स्तुत्यस्त्वमेव च ।।

वेद्म्यों नमः शिवायेति नान्यद्वेऽद्म्येव किंचन ।। ३९ ।।

त्वमेव हि शरण्यं मे त्वमेव हि गतिः परा ।।

त्वामेव प्रणमामीश नमस्तुभ्यं नमो नमः ।। 4.2.73.१४० ।।

इत्युदीर्यासकृद्वेधाः प्रणनाम महेश्वरम् ।।

प्रणवाख्यं महालिंगरूपिणं दंडवत्क्षितौ ।। ४१ ।।

।। ईश्वर उवाच ।। ।।

ततो गिरींद्रतनये श्रुत्वा ब्रह्मस्तुतिं पराम् ।।

परमैश्वर्यसंपत्ति हेतुं तुष्टोहमद्भुतम् ।। ४२ ।।

अमूर्तोऽहं ततो लिंगान्मूर्तिमास्थाय शांकरीम् ।।

प्रसन्नोस्मि वरं ब्रूहीत्युवाच चतुराननम् ।। ४३ ।।

चतुर्वक्त्रः समुत्थाय प्रत्यक्षं वीक्ष्य मामथ ।।

पुनर्जयजयेत्युक्त्वा प्रणनाम कृतांजलिः ।। ४४ ।।

आनंदबाष्पसलिलनेत्रो हृष्टतनूरुहः ।।

गद्गदेन स्वरेणाथ प्रोवाच जलजासनः ।। ४५ ।।

ब्रह्मोवाच ।। ।।

यदि प्रसन्नो देवेश यदि देयो वरो मम ।।

तदेतस्मिन्महालिंगे सान्निध्यं तेऽस्तु शंकर ।। ४६ ।।

अयमेव वरो देयो नान्यं वरमहं वृणे ।।

ओंकारेश्वरनामैतदस्तु भक्तैकमुक्तिदम् ।। ४७ ।।

।। स्कंद उवाच ।। ।।

विध्युक्तमिति विप्रर्षे समाकर्ण्य तदेशिता ।।

उवाच वचनं चैतत्तथास्तु चतुराननम् ।।४८।।

वरानन्यानपि विभुः प्रसन्नस्तत्क्षणाद्ददौ।।

विधये दीर्घतपसे तया स्तुत्यातितोषितः ।।४९।।

।। ईश्वर उवाच ।।

सुरश्रेष्ठ तपःश्रेष्ठ सर्वाम्नाय निधिर्भव ।।

सृष्टेःकरणसामर्थ्यं तवास्तु मदनुग्रहात् ।।4.2.73.१५०।।

पितामहस्त्वं सर्वेषां सर्वेषां मान्यभूर्भवान् ।।

त्वत्तपःफलदानार्थं यदेतल्लिंगमुत्थितम् ।। ५१ ।।

परमोंकाररूपं च शब्दब्रह्ममयं विधे ।।

अस्याराधनतः पुंसां न दूरं ब्रह्मणः पदम् ।।५२।।

अकाराख्यमिदं लिंगमुकाराख्यमिदं परम् ।।

मकाराह्वयमेतच्च नादाख्यं बिंदुसंज्ञकम् ।। ५३ ।।

पंचायतनमीशानमित्थमेतदुदीरितम् ।।

मोक्षाय सर्वजंतूनामस्मिन्नानंदकानने ।। ५४ ।।

स्नात्वा मत्स्योदरी तीर्थे विलोक्योंकारमीश्वरम् ।।

न जातु जायते जंतुर्जननी जठरे क्वचित् ।। ५५ ।।

एतन्नादेश्वरं लिंगमेतल्लिंगं सुदुर्लभम् ।।

रम्ये मत्स्योदरी तीरे दृष्टं स्पृष्टं विमुक्तिदम् ।। ५६ ।।

यदेतत्कापिलं ज्योतिरेतल्लिंगे विलोक्यते ।।

अतस्तु कपिलेशाख्यमेतल्लिंगं सुदुर्लभम् ।।५७।।

मत्स्योदरी यदा गंगा कपिलेश्वर सन्निधौ ।।

तदा तत्र नरः स्नात्वा ब्रह्महत्यां व्यपोहति ।। ५८ ।।

वरणोत्सिक्तपानीये द्युनदीतोयमिश्रिते ।।

स्नात्वा नादेश्वरं दृष्ट्वा नरः किमनुशोचति ।। ५९ ।।

अष्टम्यां च चतुर्दश्यां तीर्थानि सह सागरैः ।।
षष्टि कोटि सहस्राणि मत्स्योदर्यां विशंति हि ।।4.2.73.१६०।।
प्रणवेश समीपे तु यदा गंगा समेष्यति ।।
तदा पुण्यतमः कालो देवर्षि पितृवल्लभः ।। ६१ ।।
तत्र स्नानं जपोदानं हवनं देवतार्चनम् ।।
मत्स्योदर्यामक्षयं स्यादोंकारेश्वरसन्निधौ ।। ६२ ।।
ओंकारदर्शनादेव वाजिमेधफलं लभेत् ।।
तस्मात्काश्यां प्रयत्नेन दृश्य ओंकार ईश्वरः ।। ६३ ।।
दुर्लभं मानवं जन्म चतुर्वर्गैकसाधनम् ।।
जलबुद्बुदवत्तत्स्यान्नादेशो येन नेक्षितः ।। ६४ ।।
निरीक्ष्य कपिलेशानं स्नात्वा मत्स्योदरीजले ।।
कृत्वा पिंडप्रदानानि पितृणामनृणो भवेत् ।। ६५ ।।
कृत्वापि मोहात्पापानि भूरीण्येव महांत्यपि ।।
काश्यामोंकारमालोक्य कुतस्त्रस्यति वै यमात् ।। ६६ ।।
ओंकारयात्राभिमुखं नरं वीक्ष्य पितामहाः ।।
परिनृत्यंति मुदिताः स्वसंतानसमुद्भवम् ।। ६७ ।।
यस्य यस्य च वै नाम स्मृत्वा स्मृत्वा नमस्यति ।।
तं तमुन्नयते प्राज्ञः पितरं ब्रह्मणः पदम् ।। ६८ ।।
रुद्राणां नियुतं जप्त्वा यत्फलं सम्यगाप्यते ।।
तत्फलं लभते नूनं भक्त्योंकार विलोकनात् ।। ६९ ।।
केवलं भूमिभाराय जन्मिनो जन्म तस्य वै ।।
येनानंदवने दृष्टो नोंकारः सर्वकामदः ।। 4.2.73.१७० ।।
एकमोंकारमालोक्य समस्ते क्षोणिमंडले ।। लिं
गजातानि सर्वाणि दृष्टानि स्युर्न संशयः ।। ७१ ।।
प्रणवेशं प्रणम्याथ यद्यन्यत्र विपद्यते ।।
स्वर्गलोकमवाप्याथ काश्यां मुक्तिमवाप्नुयात् ।। ७२ ।।
अस्मिँल्लिंगे सदा ब्रह्मन्स्थास्यामीति विनिश्चितम् ।।
दास्यामि च सदा मोक्षमेतल्लिंगार्चकाय वै ।। ७३ ।।

ओंकारं सकृदप्यत्र नरो नत्वा प्रयत्नतः ।।

कृतकृत्यो भवेन्नूनं परमान्मदनुग्रहात ।। ७४ ।।

ओंकारपश्चिमे भागे तारतीर्थमनुत्तमम् ।।

कृतोदकक्रियस्तत्र नरस्तरति दुर्गतिम् ।। ७५ ।।

ओंकारेशस्य ये भक्ता ज्ञेयास्ते नैव मानवाः ।।

मनुष्यचर्मणा नद्धास्ते रुद्रा मोक्षगामिनः ।। ७६ ।।

अस्य लिंगस्य महिमा नान्यैरत्रावगम्यते ।।

त्वत्पुण्योदयतो यस्माद्विधेत्राविरभूदिदम् ।। ७७ ।।

एतल्लिंगप्रभावाच्च सर्वं ज्ञास्यसि तत्त्वतः ।।

विधे विधेहि तस्मात्त्वं सर्वमेतच्चराचरम् ।।७८।।

इति दत्त्वा वरं तस्मै ब्रह्मणे पद्मसंभवे।

तस्मिन्नेव महालिंगे शंभुर्लीनो बभूव ह ।।७९।।

।। स्कंद उवाच ।। ।।

ब्रह्मापि भजतेद्यापि तल्लिंगं कलशोद्भव ।।

स्तुवन्ब्रह्म स्तवेनैव स्वात्मना विहितेन हि ।।4.2.73.१८०।।

ब्रह्मस्तवं जपन्मर्त्यः सर्वैः पापैः प्रमुच्यते ।।

पूर्यते च महापुण्यैर्ज्ञानं प्राप्नोति सत्तमम् ।। ८१ ।।

ब्रह्मस्तवमिमं जप्त्वा त्रिकालं परिवत्सरम् ।।

अंतकाले भवेज्ज्ञानं येन बंधात्प्रमुच्यते ।। ।। १८२ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्ध ओंकारमहिमवर्णनंनाम त्रिसप्ततितमोऽध्यायः ।। ७३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७४

https://sa.wikisource.org/s/fyb
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

शृणु वातापि संहर्तः काश्यां पातकतंकिनी ।।

पद्मकल्पे तु या वृत्ता दमनस्य द्विजन्मनः ।।१।।

भारद्वाजस्य तनयो दमनो नाम नामतः ।।

कृतमौंजीविधिः सोथ विद्याजातं प्रगृह्य च ।। २ ।।

संसारदुःखबहुलं जीवितं चापि चंचलम् ।।

विज्ञाय दमनो विद्वान्निर्जगाम गृहान्निजात् ।। ३ ।।

कांचिद्दिशं समालंब्य निर्वेदं परमं गतः ।।

प्रत्याश्रमं प्रतिनगं प्रत्यब्धि प्रतिकाननम् ।। ४ ।।

प्रतितीर्थं प्रतिनदि स बभ्राम तपोयुतः ।।

यावंत्यायतनानीह तिष्ठंति परितो भुवम् ।।५।।

अध्युवास स तावंति संयतेंद्रियमानसः ।।

परं न मनसः स्थैर्यं क्वापि प्रापि च तेन वै ।। ६ ।।

मनोरथोपदेष्टा च कुत्रचित्क्वापि नेक्षितः ।।

कदाचिद्दैवयोगात्स दमनो नाम तापसः ।।७।।

रेवातटे निरैक्षिष्ट तीर्थं चामरकंटकम् ।।

महदायतनं पुण्यमोंकारस्यापि तत्र वै ।।८।।

दृष्ट्वा हृष्टमना आसीच्चेतः स्थैर्यमवाप ह ।।

अथ पाशुपतांस्तत्र स निरीक्ष्य तपोधनान् ।। ९ ।।

विभूतिभूषिततनून्कृतलिंगसमर्चनान् ।।

विहितप्राणयात्रांश्च कृतागमविचारणान् ।। 4.2.74.१० ।।

स्वस्थोपविष्टान्स्वपुरोरग्रतोऽचलमानसान् ।।

प्रणम्योपाविशत्तत्र तदाचार्यस्य सन्निधौ ।। ११ ।।

प्रबद्धहस्तयुगलः प्रणमतरकंधरः ।।

अथ पाशुपताचार्यो गर्गो नाम महामुनिः ।। १२ ।।

वार्धकेन समाक्रांतस्तपसा कृशविग्रहः ।।

शंभोराराधनेनिष्ठः श्रेष्ठः सर्वतपस्विषु ।।१३।।

पप्रच्छ दमनं चेति कस्त्वं कस्मादिहागतः ।।

तरुणोपि विरक्तोसि कुतस्तद्वद सत्तम ।।।१४।।।

इति प्रणयपूर्वं स निशम्य दमनोऽब्रवीत् ।।

भगोः पाशुपताचार्य सर्वज्ञाराधनप्रिय ।। १५ ।।

कथयामि यथार्थं ते निजचेतोविचेष्टितम् ।।

अहं ब्राह्मणदायादो वेदशास्त्रकृतश्रमः ।। १६ ।।

संसारासारतां ज्ञात्वा वानप्रस्थमशिश्रियम् ।।

अनेनैव शरीरेण महासिद्धिमभीप्सता ।।१७।।

स्नातं बहुषु तीर्थेषु मंत्रा जप्तास्तु कोटिशः ।।

देवताः सेविता बह्व्यो हवनं च कृतं बहु ।। १८ ।।

शुश्रूषिताश्च गुरवो बहवो बह्वनेहसम् ।।

महाश्मशानेषु निशा भूयस्योप्यतिवाहिताः ।। १९ ।।

शिखराणि गिरींद्राणां मया चाध्युषितान्यहो ।।

दिव्यौषधि सहस्राणि मया संसाधितान्यपि ।।4.2.74.२०।।

रसायनानि बहुशः सेवितानि मया पुनः ।।

महासाहसमालंब्य सिद्धाध्युषितकंदराः ।। २१ ।।

मया प्रविष्टा बहुशः कृतांतवदनोपमाः ।।

तपश्चापि महत्तप्तं बहुभिर्नियमैर्यमैः ।। २२ ।।

परं किंचित्क्वचिन्नैक्षि सिद्ध्यंकुरमपि प्रभो ।।

इदानीं त्वामनुप्राप्य महीं पर्यटता मया ।। २३ ।।

मनसः स्थैर्यमापन्नमिव संप्राप्तसिद्धिना ।।

अवश्यं त्वन्मुखांभोजाद्यद्वचो निःसरिष्यति ।। ।। २४ ।।

तेनैव महती सिद्धिर्भवित्री मम नान्यथा ।।

तद्ब्रूहि सूपदेशं च कथं सिद्धिर्भवेन्मम ।। २५ ।।

अनेनैव शरीरेण पार्थिवेन प्रथीयसी ।।

दमनस्य निशम्येति गर्गाचार्यो वचस्तदा ।। २६ ।।

प्रत्यक्षदृष्टं प्रोवाच महदाश्चर्यमुत्तमम् ।।
सर्वेषां शृण्वतां तत्र शिष्याणां स्थिरचेतसाम् ।।
मुमुक्षूणां धृतवतां महापाशुपतं व्रतम् ।।२७।।
।। गर्ग उवाच ।। ।।
अनेनैवेह देहेन यदि त्वं सिद्धिकामुकः ।।
शृणुष्वावहितो भूत्वा तदा ते कथयाम्यहम् ।।२८।।
अविमुक्ते महाक्षेत्रे सर्वसिद्धिप्रदे सताम् ।।
धर्मार्थकाममोक्षाख्य रत्नानां परमाकरे ।। २९ ।।
समाश्रितानां जंतूनां सर्वेषां सर्वकर्मणाम् ।।
शलभानां प्रदीपाभे तमःस्तोम महाद्विपि ।। 4.2.74.३० ।।
कर्मभूरुह दावाग्नौ संसाराब्ध्यौर्वशोचिपि ।।
निर्वाणलक्ष्मी क्षीराब्धौ सुखसंकेतसद्मनि ।। ३१ ।।
दीर्घनिद्रा प्रसुप्तानां परमोद्बोधदायिनि ।।
यातायातश्रमापन्नप्राणिमार्गमहीरुहि ।। ३२ ।।
अनेकजन्मजनित महापापाद्रिवज्रिणि ।।
नामोच्चारकृतां पुंसां महाश्रेयो विधायिनि ।। ३३ ।।
विश्वेशितुः परेधाम्नि सीम्नि स्वर्गापवर्गयोः ।।
स्वर्धुनी लोलकल्लोला नित्यक्षालित भूतले ।। ३४ ।।
एवंविधे महाक्षेत्रे सर्वदुःखौघहारिणि ।।
प्रत्यक्षं मम यद्वृत्तं तद्ब्रवीमि महामते ।। ३५ ।।
यत्र कालभयं नास्ति यत्र नास्त्येनसो भयम् ।।
तत्क्षेत्रमहिमानं कः सम्यग्वर्णयितुं क्षमः ।। ३६ ।।
तीर्थानि यानि लोकेस्मिञ्जंतूनामघहान्यहो ।।
तानि सर्वाणि शुद्ध्यर्थं काशीमायांति नित्यशः ।। ३७ ।।
अपि काश्यां वसेद्यस्तु सर्वाशी सर्वविक्रयी ।।
स यां गतिं लभेन्मर्त्यो यज्ञैर्दानैर्न सान्यतः ।। ३८ ।।
रागबीजसमुद्भूतः संसारविटपो महान् ।।
दीर्घस्वाप कुठारेण च्छिन्नः काश्यां न वर्धते ।। ३९ ।।

सर्वेषामूषराणां तु काशी परम ऊषरः ।।

वसुर्बीजमिदं तस्मिन्नुप्तं नैव प्ररोहति ।। 4.2.74.४० ।।

स्मरिष्यंतीह ये काशीमवश्यं तेपि साधवः ।।

तेप्यघौघ विनिर्मुक्ता यास्यंति गतिमुत्तमाम् ।। ४१ ।।

विभूतिः सर्वलोकानां सत्यादीनां सुभंगुरा ।।

अभंगुरा विमुक्तस्य सा तु लभ्या शिवाज्ञया ।। ४२ ।।

कृमिकीटपतंगानामविमुक्ते तनुत्यजाम् ।।

विभूतिर्दृश्यते या सा क्वास्ति ब्रह्मांडमंडले ।। ४३ ।।

वाराणसी यदा प्राप्ता कदाचित्कालपर्ययात् ।।

स उपायो विधातव्यो येन नो निष्क्रमो बहिः ।। ४४ ।।

पूर्वतो मणिकर्णीशो ब्रह्मेशो दक्षिणे स्थितः ।।

पश्चिमे चैव गोकर्णो भारभूतस्तथोत्तरे ।।४५।।

इत्येतदुत्तमं क्षेत्रमविमुक्ते महाफलम् ।।

मणिकर्णी ह्रदे स्नात्वा दृष्ट्वा विश्वेश्वरंविभुम् ।।४६।।

क्षेत्रं प्रदक्षिणीकृत्य राजसूयफलं लभेत् ।।

तत्र श्राद्धप्रदातुश्च मुच्यंते प्रपितामहाः ।। ४७ ।।

अविमुक्त समं क्षेत्रमपि ब्रह्मांडगोलके ।।

न विद्यते क्वचित्सत्यं सत्यं साधकसिद्धिदम् ।।४८।।

रक्षंति सततं क्षेत्रं यत्र पाशासिपाणयः ।।

महापारिषदा उग्राः क्रूरेभ्योऽक्रूरबुद्धयः ।। ४९ ।।

प्राग्द्वारमट्टहासश्च गणकोटिपरीवृतः ।।

रक्षेदहर्निशं क्षेत्रं दुर्वृत्तेभ्यो विभीषणः ।। 4.2.74.५० ।।

तथैव भूतधात्रीशः क्षेत्रदक्षिणरक्षकः ।।

गोकर्णः पश्चिमद्वारं पाति कोटिगणावृतः ।। ५१ ।।

उदग्द्वारं तथा रक्षेद्घंटाकर्णो महागणः ।।

ऐशंकोणं छागवक्त्रो भीषणो वह्निदिग्दलम् ।।५२ ।।

रक्षः काष्ठां शंकुकर्णो द्रमिचंडो मरुद्दिशम् ।।

इत्थं क्षेत्रं सदा पांति गणा एतेऽति भास्वराः ।।८५३।।

कालाक्षोरण भद्रस्तु कौलेयः कालकंपनः ।।

एते पूर्वेण रक्षंति गंगापारे स्थिता गणाः ।। ५४ ।।

वीरभद्रो नभश्चैव कर्दमालिप्तविग्रहः ।।

स्थूलकर्णो महाबाहुरसिपारे व्यवस्थिताः ।। ५५ ।।

विशालाक्षो महाभीमः कुंडोदरमहोदरौ ।।

रक्षंति पश्चिमद्वारं देहलीदेशसंस्थिताः ।।५६।।

नंदिसेनश्च पंचालः खरपादकरंटकः ।।

आनंदोगोपको बभ्रू रक्षंति वरणातटे ।।।। ५७ ।।

तस्मिन्क्षेत्रे महापुण्ये लिंगमोंकारसंज्ञकम्।।

तत्र सिद्धिं परां प्राप्ता देहेनानेन साधकाः ।। ५८ ।।

कपिलश्चैव सावर्णिः श्रीकंठः पिगलोंशुमान् ।।

एते पाशुपताः सिद्धास्तल्लिंगाराधनेन हि ।। ५९ ।।

एकदा तस्य लिंगस्य कृत्वा पंचापिपूजनम् ।।

नृत्यतः सहुडुत्कारं तस्मिँल्लिंगे लयं ययुः ।। 4.2.74.६० ।।

अन्यच्च ते प्रवक्ष्यामि तत्र यद्वृत्तमद्भुतम् ।।

निशामय महाबुद्धे दमन द्विजसत्तम ।। ६१ ।।

एका भेकी मुने तत्र चरंती लिंग सन्निधौ ।।

प्रदक्षिणं सदा कुर्यान्निर्माल्याक्षतभक्षिणी ।। ६२ ।।

सा तत्र मृत्युं न प्राप शिवनिर्माल्यभक्षणात् ।।

क्षेत्रादन्यत्र मरणं जातं तस्यास्तदेनसः ।। ६३ ।।

वरं विषमपिप्राश्यं शिवस्वं नैव भक्षयेत् ।।

विषमेकाकिनं हंति थिवस्वं पुत्रपौवकम् ।। ६४।।

शिवस्य परिपुष्टांगाः स्पर्शनीया न साधुभिः ।।

तेन कर्मविपाकेन ततस्ते रौरवौकसः ।।६५।।

कश्चित्काकः समालोक्य मंडूकीं तामितस्ततः ।।

पोप्लूयमानामादाय चंच्वा क्षेत्राद्वहिर्गतः ।।६६ ।।

वर्षाभ्वी तेन सा क्षिप्ता काकेन क्षेत्रबाह्यतः ।।

अथ सा कालतो भेकी तत्रैव क्षेत्रसत्तमे ।। ६७ ।।

प्रदक्षिणीकरणतो लिंगस्यस्पर्शनादपि।।
पुण्यापुण्यवतीजाता कन्यापुष्पबटोर्गृहे ।। ६८ ।।
शुभावयवसंस्थाना शुभलक्षणलक्षिता ।।
परं गृध्रमुखी जाता निर्माल्याक्षतभक्षणात् ।। ६९ ।।
सम्यग्गीतरहस्यज्ञा नितरां मधुरस्वरा ।।
सप्तस्वरास्त्रयो ग्रामा मूर्च्छनास्त्वैकविंशतिः ।।4.2.74.७० ।।
ताना एकोनपंचाश ताला एकोत्तरंशतम् ।।
रागाः षडेव तेषां तु पंचपंचापि चांगनाः।।७१ ।।
षड्विंशद्रागरागिण्य इति रागि मुदावहाः ।।
देशकाल विभेदेन पंचषष्टिस्तथा पराः ।। ७२ ।।
यावंत एव तालाः स्यु रागास्तावंत एव हि ।।
इति गीतोपनिषदा प्रत्यहं सा शुभव्रता ।। ७३ ।।
माधवी मधुरालापा सदोंकारं समर्चयेत् ।।
प्राप्याप्यनर्घ्यतारुण्यं सा तु पुष्पबटोः सुता ।। ७४ ।।
प्राग्जन्मवासनायोगादोंकारं बह्ममंस्त वै ।।
स्वभाव चंचलं चेतस्तस्यास्तल्लिंग सेवनात् ।। ७५ ।।
दमनस्थैर्यमगमद्योगेनेव महात्मनः ।।
न दिवा बाधयांचक्रे क्षुतृण्निद्रा क्षपा सुताम् ।। ७६ ।।
अतंद्रितमना आसीत्सा तल्लिंग निरीक्षणे ।।
अक्ष्णोर्निमेषा यावंतस्तस्या आसन्दिवानिशम् ।। ७७ ।।
तावत्कालस्तया साध्व्या महान्विघ्नोऽनुमीयते ।।
निमेषांतरितः कालो यो यो व्यर्थोंगतो मम ।।
लिंगानवेक्षणात्तत्र प्रायश्चित्तं कथं भवेत ।। ७८ ।।
इति संचितयंत्येव सेवां तत्याज नोंकृतेः ।।
जलाभिलाषिणी सा तु लिंगनामामृतं पिबेत् ।। ७९ ।।
नान्य द्विदृक्षिणी तस्या अक्षिणी श्रुतिगे अपि ।।
विहाय लिंगमोंकारं हृद्विहायः स्थितं सताम् ।। 4.2.74.८० ।।
तस्याः शब्दग्रहौ नान्य शब्दग्रहणतत्परौ ।।

अतीव निपुणौ जातौ तत्सन्माल्यकरौकरौ ।। ८१ ।।

नान्यत्र चरणौ तस्याश्चरतः सुखवांछया ।।

त्यक्त्वोंकाराजिरक्षोणीं क्षुण्णां निर्वाणपद्मया ।। ८२ ।।

ओंकारं प्रणवं सारं परब्रह्मप्रकाशकम् ।।

शब्दब्रह्मत्रयीरूपं नादबिंदुकलालयम् ।। ८३ ।।

सदक्षरं चादिरूपं विश्वरूपं परावरम् ।।

वरं वरेण्यं वरदं शाश्वतं शांतमीश्वरम् ।। ८४ ।।

सर्वलोकैकजनकं सर्वलोकैकरक्षकम् ।।

सर्वलोकैकसंहर्तृ सर्वलोकैकवंदितम् ।। ८५ ।।

आद्यंतरहितं नित्यं शिवं शंकरमव्ययम् ।।

एकगुणत्रयातीतं भक्तस्वांतकृतास्पदम् ।। ८६ ।।

निरुपाधिं निराकारं निर्विकारं निरंजनम् ।।

निर्मलं निरहंकारं निष्प्रपंचं निजोदयम् ।। ८७ ।।

स्वात्माराममनंतं च सर्वगं सर्वदर्शिनम् ।।

सर्वदं सर्वभोक्तारं सर्वं सर्वसुखास्पदम् ।।८८।।

वागिंद्रियं तदीयं च प्रोच्चरत्तदहर्निशम् ।।

नामांतरं न गृह्णाति क्वचिदन्यस्यकस्यचित्।।८९।।

एतन्नामाक्षररसं रसयंती दिवानिशम् ।।

रसना नैव जानाति तस्या अन्यद्रसांतरम् ।। 4.2.74.९० ।।

संमार्जनं रंगमालाः प्रासादं परितः सदा ।।

विदध्यान्माधवी तत्र तथार्चा पात्रशोधनम् ।। ९१ ।।

तत्र पाशुपता ये वै प्रणवेशार्चने रताः ।।

तांश्च शुश्रूषयेन्नित्यं पितृबुद्ध्याति भक्तितः ।। ९२ ।।

वैशाखस्य चतुर्दश्यामेकदा सा तु माधवी ।।

रात्रौ जागरणं कृत्वा दिवोपवसान्विता ।। ९३ ।।

यात्रामिलितभक्तेषु प्रातर्यातेषु सर्वतः ।।

संमार्जनादिकं कृत्वा लिंगमभ्यर्च्य हर्षतः ।। ९४ ।।

गायंती मधुरं गीतं नृत्यंती निजलीलया।।

ध्यायंती लिंगमोंकारं तत्र लिंगे लयं ययौ ।। ९५ ।।

अनेनैव शरीरेण पार्थिवेन महामतिः ।।

अस्मदाचार्यमुख्यानां पश्यतां च तपस्विनाम् ।। ९६ ।।

प्रादुर्बभूव यल्लिंगाज्ज्योतिर्जटिलितांबरम् ।।

तत्र ज्योतिषि सा बाला ज्योतिर्मय्यपि साप्यभूत् ।। ९७ ।।

राधशुक्लचतुर्दश्यामद्यापि क्षेत्रवासिनः ।।

तत्र यात्रां प्रकुर्वंति महोत्सवपुरःसराः ।। ९८ ।।

तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः ।।

प्राप्नुवंति परं ज्ञानं यत्रकुत्रापि वै मृताः ।। ९९ ।।

ब्रह्मांडोदर मध्ये तु यानि तीर्थानि सर्वतः ।।

तानि वैशाखभूतायामायांत्योंकृति दर्शने ।।4.2.74.१००।।

लिंगाग्रे श्रीमुखी नाम्नी गुहास्ति परमोत्तमा ।।

पातालस्य च तद्द्वारं तत्र सिद्धा वसंति हि ।। १ ।।

तिष्ठेयुः पंचरात्रं ये गुहायां तत्र सुव्रताः ।।

ते नागकन्याः पश्यंति ब्रूयुस्ताश्च शुभाशुभम् ।। २ ।।

कंदरोत्तरदिग्भागे तत्र कूपो रसोदकः ।।

आषण्मासं च तत्पीत्वा पिबेद्ब्रह्मरसायनम् ।। ३ ।।

तत्र नादेश्वरं लिंगं दृष्ट्वा नादनिदानभूः ।।

सर्वनादात्मकं विश्वं तच्छ्रवो गोचरी भवेत् ।। ४ ।।

तत्र मत्स्योदरीं स्नात्वा स्वर्धुनीं वरुणाप्लुताम् ।।

कृतकृत्यो भवेज्जंतुर्नैव शोचति कुत्रचित् ।। ५ ।।

असंख्याता गताः सिद्धिमोंकारेश्वरसेवकाः ।।

पार्थिवेनैव देहेन दिव्यभूतेन तत्क्षणात् ।। ६ ।।

अविमुक्तं परं क्षेत्रं ब्रह्मांडादपि सर्वतः ।।

ततोपि पर ओंकार उक्तो मत्स्योदरी तटे ।। ७ ।।

प्रणवेशोंऽग यैः काश्यां न नतो नापि चार्चितः ।।

किमर्थं ते समुत्पन्ना मातृतारुण्यहारिणः ।। ८ ।।

यदा प्रभृति विश्वेशो मंदरादागतोऽभवत् ।।

तस्मिन्नानंद गहने तदाप्रभृति सत्तम ।। ९ ।।

सर्वाण्यायतनान्याशु साब्धीनि स गिरीण्यपि ।।

स नदीनि स तीर्थानि स द्वीपानि ययुस्ततः ।। ।। 4.2.74.११० ।।

इदानीं मम भाग्येन स्मारितोहं त्वया मुने ।।

अहमप्यागमिष्यामि यामः काशीं शनैः शनैः ।। ११ ।।

एतेपि मम शिष्या ये महापाशुपतव्रताः ।।

काशीं यियासवस्तेपि यतः सर्वे मुमुक्षवः ।। १२ ।।

अपि वार्धकमासाद्य यैः काशी नैव शीलिता ।।

मानुषे दुर्लभे नष्टे कुतस्तेषां महासुखम् ।। १३ ।।

यावन्नेंद्रिय वैकल्यं यावन्नैवायुषः क्षयः ।।

तावत्सेव्यं प्रयत्नेन शंभोरानंदकाननम्।। १४ ।।

य आनंदवनं शंभोः शिश्रियुः श्रीनिकेतनम् ।।

अचलाश्रीर्न मुंचेत्तान्महासौख्यैकशेवधीन् ।। १५ ।।

इत्याख्याय कथां रम्यां गर्गः पाशुपतोत्तमः ।।

भारद्वाजेन सहितः प्राप वाराणसीं पुरीम् ।। १६ ।।

दमनोपि हि धर्मात्मा गर्गाचार्येण संयुतः ।।

आराध्य श्रीमदोंकारं तस्मिँल्लिंगे लयं गतः ।। १७ ।।

।। स्कंद उवाच ।। ।।

इल्वलारे परं स्थानमोंकारमविमुक्तके ।।

तत्र सिद्धिपरां जग्मुः साधका बहुशो मुने ।। १८ ।।

कलौ कलुषचित्तानां पुरो नाख्येयमेव हि ।।

प्रणवेश्वरमाहात्म्यं नास्तिकानां विशेषतः ।। १९ ।।

ये निंदंति महादेवं क्षेत्रं निंदंति येऽधियः ।।

पुराणं ये च निंदंति ते संभाष्या न कुत्रचित् ।। 4.2.74.१२० ।।

ओंकारसदृशं लिंगं न क्वचिज्जगतीतले ।।

इति गौर्यै समाख्यातं देवदेवेन निश्चितम् ।। १२१ ।।

इममध्यायमाकर्ण्य नरस्तद्गतमानसः ।।

विमुक्तः सर्वपापेभ्यः शिवलोकमवाप्नुयात् ।। १२२ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थेकाशीखंड उत्तरार्ध ओंकारमाहात्म्यं नाम चतुःसप्ततितमोऽध्यायः ।। ७४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७५

https://sa.wikisource.org/s/fyc



।। अगस्त्य उवाच ।। ।।

श्रुत्वोंकारकथामेतां महापातकनाशिनीम् ।।

न तृप्तोस्मि विशाखाथ ब्रूहि त्रैविष्टपीं कथाम् ।। १ ।।

कथं च कथिता देव्यै देवदेवेन षण्मुख ।।

आविर्भूतिर्महाबुद्धे पुण्या त्रैलोचनी परा ।। २ ।।

स्कंद उवाच ।। ।।

आकर्णय मुने वच्मि कथां श्रमनिवारिणीम् ।।

यथा देवेन कथितां त्रिविष्टपसमुद्भवाम् ।। ३ ।।

विरजाख्यं हि तत्पीठं तत्र लिंगं त्रिविष्टपम् ।।

तत्पीठदर्शनादेव विरजा जायते नरः ।। ४ ।।

तिस्रस्तु संगतास्तत्र स्रोतस्विन्यो घटोद्भव ।।

तिस्रः कल्मषहारिण्यो दक्षिणे हि त्रिलोचनात् ।। ५ ।।

स्रोतोमूर्तिधराः साक्षाल्लिंगस्नपनहेतवे ।।

सरस्वत्यथ कालिंदी नर्मदा चातिशर्मदा ।। ६ ।।

तिस्रोपि हि त्रिसंध्यं ताः सरितः कुंभपाणयः ।।

स्नपयंति महाधाम लिंगं त्रैविष्टपं महत् ।। ७ ।।

लिंगानि परितस्ताभिः स्वनाम्नास्थापि तान्यपि ।।

तेषां संदर्शनात्पुंसां तासां स्नानफलं भवेत् ।। ८ ।।

सरस्वतीश्वरं लिंगं दक्षिणेन त्रिविष्टपात् ।।

सारस्वतं पदं दद्याद्दृष्टं स्पृष्टं च जाड्यहृत् ।। ९ ।।

यमुनेशं प्रतीच्यां च नरैर्भक्त्या समर्चितम् ।।

अपि किल्बिषवद्भिश्च यमलोकनिवारणम् ।। 4.2.75.१०।।

दृष्टं त्रिलोचनात्प्राच्यां नर्मदेशं सुशर्मदम् ।।

तल्लिंगार्चनतो नृणां गर्भवासो निषिध्यते ।। ११ ।।

स्नात्वा पिलिपिला तीर्थे त्रिविष्टपसमीपतः ।।

दृष्ट्वा त्रिलोचनं लिंगं किं भूयः परिशोचति ।। १२ ।।

त्रिविष्टपस्य लिंगस्य स्मरणादपि मानवः ।।

त्रिविष्टप पतिर्भूयान्नात्र कार्या विचारणा ।। १३ ।।

त्रिविष्टपस्य द्रष्टारः स्रष्टारः स्युर्न संशयः ।।

कृतकृत्यास्त एवात्र त एवात्र महाधियः ।। १४ ।।

आनंदकानने लिंगं प्रणतं यैस्त्रिविष्टपम् ।।

त्रिलोचनस्य नामापि यैः श्रुतं शुद्धबुद्धिभिः ।। १५ ।।

सप्तजन्मार्जितात्पापात्ते पूता नात्र संशयः ।।

पृथिव्यां यानि लिंगानि तेषु दृष्टेषु यत्फलम् ।। १६ ।।

तत्स्यात्त्रिविष्टपे दृष्टे काश्यां मन्ये ततोधिकम् ।।

काश्यां त्रिविष्टपे दृष्टे दृष्टं सर्वं त्रिविष्टपम् ।। १७ ।।

क्षणान्निर्धूत पापोसौ न पुनर्गर्भभाग्भवेत ।।

स स्नातः सर्वतीर्थेषु सर्वावभृथवान्स च ।। १८ ।।

यो वै पिलिपिला तीर्थे स्नात्वोत्तरवहांभसि ।।

सरित्त्रयं महापुण्यं यत्र साक्षाद्वसेत्सदा ।। १९ ।।

तत्र श्राद्धादिकं कृत्वा गयायां किं करिष्यति ।।

स्नात्वा पिलिपिला तीर्थे कृत्वा वै पिंडपातनम् ।। 4.2.75.२० ।।

दृष्ट्वा त्रिविष्टपं लिंगं कोटितीर्थफलं लभेत् ।।

यदन्यत्रार्जितं पापं तत्काशी दर्शनाद्व्रजेत् ।। २१ ।।

काश्यां तु यत्कृतं पापं तत्पैशाचपदप्रदम् ।।

प्रमादात्पातकं कृत्वा शंभोरानंदकानने ।। २२।।

दृष्ट्वा त्रिविष्टपं लिंगं तत्पापमपि हास्यति ।।

सर्वस्मिन्नपि भूपृष्ठे श्रेष्ठमानंदकाननम् ।। २३ ।।

तत्रापि सर्वतीर्थानि ततोप्योंकारभूमिका ।।

ओंकारादपि सल्लिंगान्मोक्षवर्त्म प्रकाशकात् ।। २४ ।।

अतिश्रेष्ठतरं लिंगं श्रेयोरूपं त्रिलोचनम् ।। २५ ।।

तेजस्विषु यथा भानुर्दृश्येषु च यथा शशी ।।

तथा लिंगेषु सर्वेषु परं लिंगं त्रिलोचनम् ।। २६ ।।

त्रिलोचनार्चकानां सा पदवी न दवीयसी ।।

परं निर्वाणपद्माया महासौख्यैकशेवधेः ।।२७।।

सकृत्त्रिलोचनार्चातो यच्छ्रेयः समुपार्ज्यते ।।

न तदा जन्मसंपूंज्य लिंगान्यन्यानि लभ्यते ।।२८।।

काश्यां त्रिलोचनं लिंगं येर्चयंति महाधियः ।।

तेच्र्यास्त्रिभुवनौकोभिर्ममप्रीतिमभीप्सुभिः ।। २९ ।।

कृत्वापि सर्वसंन्यासं कृत्वा पाशुपतव्रतम् ।।

नियमेभ्यः स्खलित्वापि कुतो बिभ्यति मानवाः ।। 4.2.75.३० ।।

विद्यमाने महालिंगे महापापौघहारिणि।।

त्रिविष्टपे पुण्यराशौ मोक्षनिक्षेपसद्मनि ।।३१।।

समभ्यर्च्य महालिंगं सकृदेव त्रिलोचनम् ।।ऽ

मुच्यते कलुषैः सर्वैरपिजन्मशतार्जितैः।।। ३२ ।।

ब्रह्महापि सुरापो वा स्तेयी वा गुरुतल्पगः ।।

तत्संयोग्यपि वा वर्षं महापापी प्रकीर्तितः ।। ३३ ।।

परदाररतश्चापि परहिंसा रतोपि वा ।।

परापवादशीलोपि तथा विस्रंभघातकः ।। ३४ ।

कृतघ्नोपि भ्रूणहापि वृषलीपतिरेव वा ।।

मातापितृगुरुत्यागी वह्निदो गरदोपि वा ।। ३५ ।।

गोघ्नः स्त्रीघ्नोपि शूद्रघ्नः कन्यादूषयितापि च ।।

क्रूरो वा पिशुनो वापि निजधर्मपराङ्मुखः ।। ३६।।

निंदको नास्तिको वापि कूटसाक्ष्यप्रवादकः।।

अभक्ष्यभक्षको वापि तथाऽविक्रेय विक्रयी ।। ३७ ।।

इत्यादि पापशीलोपि मुक्त्वैकं शिवनिंदकम ।।

पापान्निष्कृतिमाप्नोति नत्वा लिंगं त्रिलोचनम् ।। ३८ ।।

शिवनिंदारतो मूढः शिवशास्त्रविनिंदकः ।।

तस्य नो निष्कृतिर्दृष्टा क्वापि शास्त्रेपि केनचित् ।। ३९ ।।

आत्मघाती स विज्ञेयः सदा त्रैलोक्यघातकः ।।

शिवनिंदां विधत्ते यः स नाभाष्योऽधमाधमः।। 4.2.75.४०।।

शिवनिंदारता ये च शिवभक्तजनेष्वपि।।
ते यांति नरके घोरे यावच्चंद्रदिवाकरौ।।४१।।
शैवाः पूज्याः प्रयत्नेन काश्या मोक्षमभीप्सुभिः।।
तेष्वर्चितेष्वपि शिवः प्रीतो भवत्यसंशयः ।। ४२ ।।
सर्वेषामिह पापानां प्रायश्चित्तचिकीर्षया ।।
निःशंकैरेव वक्तव्यं प्रमाणज्ञैरिदं वचः ।। ४३ ।।
पुरश्चरणकामश्चेद्भीतोसि यदि पापतः ।।
मन्यसे यदि नः सत्यं वाक्यशास्त्रप्रमाणतः ।। ४४ ।।
ततः सर्वं परित्यज्य कृत्वा मनसि निश्चयम् ।।
आनंदकाननं याहि यत्र विश्वेश्वरः स्वयम् ।। ४५ ।।
यत्र क्षेत्रप्रविष्टानां नराणां निश्चितात्मनाम् ।।
न बाधतेऽघनिचयः प्राप्येत च परोवृषः ।। ४६ ।।
तत्राद्यापि महातीर्थं त्रिस्रोतस्यतिनिर्मले ।।
पुण्ये पिलिपिलानाम्नि त्रिसरित्परिसेविते ।। ४७ ।।
त्रिलोचनाक्षिविक्षेप परिक्षिप्त महैनसि ।।
स्नात्वा गृह्योक्तविधिना तर्पणीयान्प्रतर्प्य च ।। ४८ ।।
दत्त्वा देयं यथाशक्ति वित्तशाठ्यविवर्जितः ।।
दृष्ट्वा त्रिविष्टपं लिंगं समभ्यर्च्यातिभक्तितः ।। ४९ ।।
गंधाद्यैर्विविधैर्माल्यैः पंचामृतपुरःसरैः ।।
धूपैर्दीपैः सनैवेद्यैर्वासोभिर्बहुभूषणैः ।। 4.2.75.५० ।।
पूजोपकरणैर्द्रव्यैर्घंटादर्पणचामरैः ।।
चित्रध्वजपताकाभिर्नृत्यवाद्यसुगायनैः ।। ५१ ।।
जपैः प्रदक्षिणाभिश्च नमस्कारैर्मुदायुतैः ।।
परिचारकसंतोषैः कृत्वेति परिपूजनम् ।। ५२ ।।
ब्राह्मणान्वाचयेत्पश्चान्निष्पापोहमिति ब्रुवन् ।।
एवं कुर्वन्नरः प्राज्ञो निरेना जायते क्षणात् ।। ५३ ।।
ततः पंचनदे स्नात्वा मणिकर्णी ह्रदे ततः ।।
ततो विश्वेशमभ्यर्च्य प्राप्नोति सुकृतं महत् ।।५४ ।।

प्रायश्चित्तमिदं प्रोक्तं महापापविशोधनम् ।।

नास्तिके न प्रवक्तव्यं काशीमाहात्म्य निंदके ।। ५५ ।।

ददच्च द्रव्यलोभेन प्रायश्चित्तमिदं शुभम्।।

दाता नरकमाप्नोति सत्यंसत्यं घटोद्भव ।। ५६ ।।

क्षमां प्रदक्षिणीकृन्य यत्फलं सम्यगाप्यते ।।

प्रदोषे तत्फलं काश्यां सप्तकृत्वस्त्रिलोचने ।। ५७ ।।

भुजंगमेखलं लिंगं काश्यां दृष्ट्वा त्रिविष्टपम् ।।

जन्मांतरेपि मुक्तः स्यादन्यत्र मरणे सति ।। ५८ ।।

अन्यत्र सर्वलिंगेषु पुण्यकालो विशिष्यते ।।

त्रिविष्टपे पुण्यकालः सदा रात्रिदिवं नृणाम् ।। ५९ ।।

लिंगान्योंकारमुख्यानि सर्वपापप्रकृंत्यलम् ।।

परं त्रैलोचनी शक्तिः काचिदन्यैव पार्वति ।। 4.2.75.६० ।।

यतः सर्वेषु लिंगेषु लिंगमेतदनुत्तमम् ।।

तत्कारणं शृण्व पर्णे कर्णे कुरु वदाम्यहम् ।। ६१ ।।

पुरा मे योगयुक्तस्य लिंगमेतद्भुवस्तलात् ।।

उद्भिद्य सप्तपातालं निरगात्पुरतो महत् ।। ६२ ।।

अस्मिँल्लिगे पुरा गौरि सुगुप्तं तिष्ठता मया ।।

तुभ्यं नेत्रत्रयं दत्तं निरैक्षिष्ठास्तथोत्तमम् ।। ६३ ।।

तदा प्रभृति देवेशि लिंगमेतत्त्रिलोचनम ।।

विष्टपत्रितयांतस्थैर्गीयते ज्ञानदृष्टिदम् ।। ६४ ।।

त्रिलोचनस्य ये भक्तास्तेपि सर्वे त्रिलोचनाः ।।

मम पारिषदास्ते तु जीवन्मुक्ताऽस्त एव हि ।। ६५ ।।

त्रिलोचनस्य लिंगस्य महिमानं न कश्चन ।।

सम्यग्वेत्ति महेशानि मयैव परिगोपितम् ।।६६।।

शुक्लराधतृतीयायां स्नात्वा पैलिपिले ह्रदे ।।

उपोषणपरा भक्त्या रात्रौ जागरणान्विताः ।।६७।।

त्रिलोचनं पूजयित्वा प्रातः स्नात्वापि तत्र वै ।।

पुनर्लिंगं समभ्यर्च्य दत्त्वा धर्मघटानपि ।। ६८ ।।

सान्नान्सदक्षिणान्देवि पितॄनुद्दिश्य हर्षिताः ।।

विधाय पारणं पश्चाच्छिवभक्तजनैः सह ।। ६९ ।।

विसृज्य पार्थिवं देहं तेन पुण्येन नोदिताः ।।

भवंति देवि नियतं गणा मम पुरोगमाः ।। 4.2.75.७० ।।

तावद्भ्रमंति संसारे देवा मर्त्या महोरगाः ।।

गौरि यावन्न पश्यंति काश्यां लिंगं त्रिलोचनम् ।।७१।।

सकृत्त्रिविष्टपं दृष्ट्वा स्नात्वा पैलिपिले ह्रदे ।।

न जातुः मातुस्तनपो जायते जंतुरत्र हि ।।७२।।

प्रतिमासं सदाष्टम्यां चतुर्दश्यां च भामिनि ।।

आयांति सर्वतीर्थानि द्रष्टुं देवं त्रिविष्टपम् ।।७३।।

त्रिविष्टपाद्दक्षिणतः स्नातः पैलिपिलेऽभसि ।।

तत्र संध्यामुपास्यैकां राजसूयफलं लभेत् ।। ७४ ।।

पादोदकाख्यस्तत्रैव कूपः पापविनाशकः ।।

प्राश्य तस्योदकं मर्त्यो न मर्त्यो जायते पुनः ।।७५ ।।

तस्य लिंगस्य पार्श्वे तु संति लिंगान्यनेकशः ।।

कैवल्यदानि तान्यत्र दर्शनात्स्पर्शनादपि।।७६।।

तत्र शांतनवं लिंगं गंगातीरे प्रतिष्ठितम् ।।

तद्दृष्ट्वा शांतिमाप्नोति नरः संसारतापितः ।।७७।।

तद्दक्षिणे महालिंगं मुने भीष्मेश संज्ञितम् ।।

कलिः कालश्च कामश्च बाधंते न तदीक्षणात् ।। ७८ ।।

तत्प्रतीच्यां महालिंगं द्रोणेश इति कीर्तितम् ।।

यल्लिंगपूजनाद्द्रोणो ज्योतीरूपं पुनर्दधौ ।। ७९ ।।

अश्वत्थामेश्वरं लिंगं तदग्रे चातिपुण्यदम् ।।

यदर्चनवशाद्द्रौणिर्न बिभेत्यपि कालतः ।। 4.2.75.८० ।।

द्रोणेशाद्वायु दिग्भागे वालखिल्येश्वरं परम् ।।

तल्लिंगं श्रद्धया दृष्ट्वा सर्वक्रतुफलं लभेत् ।। ८१ ।।

तद्वामे लिंगमालोक्य वाल्मीकेश्वरसंज्ञितम् ।।

तस्य संदर्शनादेव विशोको जायते नरः ।। ८२ ।।

अन्यच्चात्रैव यद्वृत्तं तद्ब्रवीमि घटोद्भव ।।

त्रिविष्टपस्य माहात्म्यं देव्यै देवेन भाषितम् ।। ८३ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे पंचसप्ततितमोऽध्यायः ।। ७५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७६

https://sa.wikisource.org/s/fyd
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

शृणुष्व मैत्रावरुणे पुराकल्पे रथंतरे ।।

इतिहास इहासीद्यः पीठे विरजसंज्ञिते ।। १ ।।

त्रिलोचनस्य प्रासादे मणिमाणिक्यनिर्मिते ।।

नानाभंगि गवाक्षाढ्ये रत्नसानाविवायते ।। २ ।।

कदाचिदपि कल्पांते द्यो लोके भ्रंशति क्षये ।।

प्रोत्तंभनं स्तंभ इव दत्तो विश्वकृता स्वयम् ।। ३ ।।

मरुत्तरंगिताग्राभिः पताकाभिरितस्ततः ।।

सन्निवारयतीवेत्थमघौघान्विशतो मुने ।। ४ ।।

देदीप्यमान सौवर्ण कलशेन विराजिते ।।

पार्वणेन शशांकेन खेदादिव समाश्रिते ।। ५ ।।

तत्र पारावतद्वंद्वं वसेत्स्वैरं कृतालयम् ।।

प्रातःसायं च मध्याह्ने कुर्वन्नित्यं प्रदक्षिणम् ।। ६ ।।

उड्डीयमानं परितः पक्षवातेरितस्ततः ।।

रजःप्रासादसंलग्नं दूरीकुर्वद्दिनेदिने ।। ७ ।।

त्रिलोचनेति सततं नाम भक्तैरुदाहृतम् ।।

त्रिविष्टपेति च तथा तयोः कर्णातिथी भवेत् ।। ८ ।।

चतुर्विधानि वाद्यानि शंभुप्रीतिकराण्यलम् ।।

तयोः कर्णगुहां प्राप्य प्रतिशब्दं प्रतन्वते ।। ९ ।।

मंगलारार्तिकज्योतिस्त्रिसंध्यं पक्षिणोस्तयोः ।।

नेत्रांत निर्विशन्नित्यं भक्तचेष्टां प्रदर्शयेत् ।।4.2.76.१०।।

प्राणयात्रां विहायापि कदाचित्स्थिरमानसौ ।।

नोड्डीयवांछितं यातः पश्यंतौ कौतुकं खगौ ।। ११ ।।

तत्र भक्तजनाकीर्णं प्रासादं परितो मुने ।।

तंडुलादि चरंतौ तौ कुर्वाते च प्रदक्षिणम् ।। १२ ।।

देवदक्षिणदिग्भागे चतुःस्रोतस्विनी जलम् ।।

तृषार्तौ धयतो विप्र स्नातौ जातु चिदंडजौ ।। १३ ।।

तयोरित्थं विचरतोस्त्रिलोचनसमीपतः ।।

अगाद्बहुतिथः कालो द्विजयोः साधुचेष्टयोः ।। १४ ।।

अथ देवालयस्कंधे गवाक्षांतर्गतौ च तौ ।।

श्येनेन केनचिद्दृष्टौ क्रूरदृष्ट्या सुखस्थितौ ।। १५ ।।

तच्च पारावतद्वंद्वं श्येनः परिजिघृक्षुकः ।।

अवतीर्यांबरादाशु प्रविष्टोन्यशिवालये ।। १६ ।।

ततो विलोकयामास तदागमविनिर्गमौ ।।

केन मार्गेण विशतो दुर्गमेतौ पतत्त्रिणौ ।। १७ ।।

केनाध्वना च निर्यातः क्व काले कुरुतश्च किम् ।।

कथं युगपदे तौ मे ग्राह्यौ स्वैरं भविष्यतः ।। १८ ।।

मध्ये दुर्गप्रविष्टौ च ममवश्याविमौ न यत् ।।

एकदृष्टिः क्षणं तस्थौ श्येन इत्थं विचिंतयन् ।। १९ ।।

अहो दुर्गबलं प्राज्ञाः शंसंत्येवेति हेतुतः ।।

दुर्बलोप्याकलयितुं सहसारिर्न शक्यते ।।4.2.76.२० ।।

करिणां तु सहस्रेण वराश्वानां न लक्षतः ।।

तत्कर्मसिद्धिर्नृपतेर्दुर्गेणैकेन यद्भवेत् ।। २१ ।।

दुर्गस्थो नाभिभूयेत विपक्षः केनचित्क्वचित् ।।

स्वतंत्रं यदि दुर्गं स्यादमर्मज्ञप्रकाशितम् ।। २२ ।।

इति दुर्गबलं शंसञ्श्येनो रोषारुणेक्षणः ।।

असाध्वसौ कलरवौ वीक्ष्य यातो नभोंगणम् ।। २३ ।।

अथ पारावतीदक्षा विपक्षं प्रेक्ष्य पक्षिणम् ।।

महाबलं दुर्गबला प्राह पारावतं पतिम् ।। २४ ।। ।।

कलरव्युवाच ।। ।।

प्रिय पारावत प्राज्ञ सर्वकामि सुखारव ।।

तव दृग्विषयं प्राप्तः श्येनोय प्रबलो रिपुः ।। २५ ।।

सावज्ञं वाक्यमाकर्ण्य पारावत्याः स तत्पतिः ।।

पारावतीमुवाचेदं का चिंतेति तव प्रिये ।। २६ ।।

।। पारावत उवाच ।। ।।

कति नाम न संतीह सुभगे व्योमचारिणः ।।

कति देवालयेष्वेषु खगा नोपविशंति हि ।। २७ ।।

कति चैव न पश्यंति नौ सुखस्थाविह प्रिये ।।

तेभ्यो यदीह भेतव्यं कुतो नौ तत्सुखं प्रिये ।। २८ ।।

रमस्व त्वं मया सार्धं त्यज चिंतामिमां शुभे ।।

अस्य श्येनवराकस्य गणनापि न मे हृदि ।। २९ ।।

इत्थं पारावतवचः श्रुत्वा पारावती ततः ।।

मौनमालंब्य संतस्थे पत्युः पादार्पितेक्षणा ।। 4.2.76.३० ।।

हितवर्त्मोपदिश्यापि प्रिय प्रियचिकीर्षया ।।

साध्व्या जोषं समास्थेयं कार्यं पत्युर्वचः सदा ।। ३१ ।।

अन्येद्युरप्यथायातः श्येनो पश्यत्स दंपती ।।

अपरिच्छिन्नया दृष्ट्या यथा मृत्युर्गतायुषम् ।। ३२ ।।

अथ मंडलगत्या स प्रासादं परितो भ्रमन् ।।

निरीक्ष्य तद्गतायातौ यातो गगनमार्गतः ।। ३३ ।।

गतेऽथ नभसि श्येने पुनः पारावतांगना ।।

प्रोवाच प्रेयसी नाथ दृष्टो दुष्टस्त्वयाऽहितः ।। ३४ ।।

तस्या वाक्यं समाकर्ण्य पुनः कलरवोब्रवीत् ।।

किं करिष्यत्यसौ मुग्धे मम व्योमविहारिणः ।। ३५ ।।

दुर्गं च स्वर्गतुल्यं मे यत्र नास्त्यरितो भयम् ।।

अयं न ता गतीर्वेत्ति या वेदाहं नभोंगणे ।। ३६ ।।

प्रडीनोड्डीन संडीन कांडव्याडकपाटिकाः ।।।

स्रंसनी मंडलवती गतयोष्टावुदाहृताः ।। ३७ ।।

यथैतास्विह कौशल्यं मयि पारावति प्रिये ।।

गतिषु क्वापि कस्यापि पक्षिणो न तथांबरे ।। ३८ ।।

सुखेन तिष्ठ का चिंता मयि जीवति ते प्रिये ।।

इति तद्वचनं श्रुत्वा सास्थिता मूकवत्सती ।। ३९ ।।

अपरेद्युरपि श्येनस्तत्र भारशिलातले ।।
कियदंतरमासाद्योपविष्टोऽतिप्रहृष्टवत् ।।4.2.76.४०।।
आयामं तत्र संस्थित्वा तत्कुलायं विलोक्य च ।।
पुनर्विनिर्गतः श्येनः सापि भीताब्रवीत्पुनः ।।४१।।
प्रियस्थानमिदं त्याज्यं दुष्टदृष्टिविदूषितम् ।।
असौ क्रूरोति निकटमुपविष्टोऽतिहृष्टवत् ।। ४२ ।।
सावज्ञं स पुनः प्राह किं करिष्यत्यसौ प्रिये ।।
मृगाक्षीणां स्वभावोयं प्रायशो भीरुवृत्तयः ।। ४३ ।।
इतरेद्युरपि प्राप्तः स च श्येनो महाबलः ।।
तयोरभिमुखं तत्र स्थितो याम द्वयावधि ।।४४।।
पुनर्विलोक्य तद्वत्र्म शीघ्रं यातो यथागतम्।।
गतेथ शकुनौ तस्मिन्सा बभाषे विहंगमी।। ।।४५।।
नाथ स्थानांतरं यावो मृत्युर्नौ निकटोत्र यत् ।।
पुनर्दुष्टे प्रणष्टेस्मिन्नावां स्यावः सुखं प्रिय ।।४६।।
प्रिय यस्य सपक्षस्य गतिः सर्वत्र सिद्धिदा ।।
स किं स्वदेशरागेण नाशं प्राप्नोति बुद्धिमान्।। ४७ ।।
सोपसर्गं निजं देशं त्यक्त्वा योन्यत्र न व्रजेत् ।।
स पंगुर्नाशमाप्नोति कूलस्थित इव द्रुमः ।। ४८ ।।
प्रियोदितं निशम्येति स भवित्री दशार्दितः ।।
सरीढं पुनरप्याह प्रिये मा भैः खगात्ततः ।। ४९ ।।
अथापरस्मिन्नहनि स श्येनः प्रातरेव हि ।।
तद्द्वारदेशमासाद्य सायं यावत्स्थितो बलः ।। 4.2.76.५० ।।
अस्ताचलस्य शिखरं याते भानौ गते खगे ।।
कुलायाद्बाह्यमागत्योवाच पारावती पतिम् ।। ५१ ।।
नाथ निर्गमनस्यायं कालः कालोऽतिदूरतः ।।
यावत्तावद्विनिर्याहि त्यक्त्वा मामपि सन्मते ।। ५२ ।।
त्वयि जीवति दुष्प्राप्यं न किंचिज्जगतीतले ।।
पुनर्दाराः पुनर्मित्रं पुनर्वसु पुनर्गृहम् ।। ।। ५३ ।।

यद्यात्मा रक्षितः पुंसा दारैरपि धनैरपि ।।
तदा सर्वं हरिश्चंद्रभूपेनेवेह लभ्यते ।। ५४ ।।
अयमात्मा प्रियो बंधुरयमात्मा महद्धनम् ।।
धमार्थकाममोक्षाणामयमात्मार्जकः परः ।। ५५ ।।
यावदात्मनि वै क्षेमं तावत्क्षेमं जगत्त्रये ।।
सोपि क्षेमः सुमतिना यशसा सह वांछ्यते ।। ९६ ।।
यशोहीनं तु यत्क्षेमं तत्क्षेमान्निधनं वरम् ।।
तद्यशः प्राप्यते पुंभिर्नीतिमार्गप्रवर्तने ।। ५७ ।।
अतो नीतिपथं श्रुत्वा नाथ स्थानादितो व्रज ।।
न गमिष्यसि चेत्प्रातस्ततो मे संस्मरिष्यसि ।। ५८ ।।
इत्युक्तोपि स वै पत्न्या पारावत्या सुमेधया ।।
न निर्ययौ प्रतिस्थानाद्भवित्र्या प्रतिवारितः ।। ५९ ।।
अथोषसि समागत्य श्येनेन बलिना तदा ।।
तन्निर्गमाध्वा संरुद्धः किंचिद्भक्ष्यवता मुने ।। 4.2.76.६० ।।
दिनानि कतिचित्तत्र स्थित्वा श्येनो महामतिः ।।
पारावतमुवाचेदं धिक्त्वां पौरुषवर्जितम् ।। ६१ ।।
किंवा युध्यस्व दुर्बुद्धे किंवा निर्याहि मे गिरा ।।
क्षुधाक्षीणो मृतः पश्चान्निरयं यास्यसि ध्रुवम्।। ६२ ।।
द्वौ भवंतावहं चैकश्चलौ जयपराजयौ !।
स्थानार्थं युध्यतः सत्त्वात्स्वर्गो वा दुर्गमेव वा ।। ६३ ।।
पुरुपार्थं समालंब्य ये यतंते महाधियः ।।
विधिरेव हि साहाय्यं कुर्यात्तत्सत्त्वचोदितः ।। ६४ ।।
इत्थं स श्येनसंप्रोक्तः पत्न्याप्युत्साहितः खगः ।।
अयुध्यत्तेन श्येनेन स्वदुर्गद्वारमाश्रितः ।। ६५ ।।
क्षुधितस्तृषितः सोथ श्येनेन बलिना धृतः ।।
चरणेन दृढेनाशु चंच्वा सापि धृता खगी।। ६६ ।।
तावादायोड्डयांचक्रे श्येनो व्योमनि सत्वरम् ।।
चिंतयद्भक्षणस्थानमन्यपक्षिविवर्जितम् ।। ६७ ।।

अथ पत्न्या कलरवः प्रोक्तस्तत्र सुमेधया ।।
वचोवमानितं नाथ त्वया मे स्त्रीति बुद्धितः ।। ६८ ।।
अतोऽवस्थामिमां प्राप्तः किं कुर्यामबलायतः ।।
अधुनापि वचश्चैकं करोषि यदि मे प्रिय ।। ६५ ।।
तदा हितं ते वक्ष्यामि कुरु चैवाविचारितम् ।।
ममैकवाक्यकरणात्स्त्रीजितो न भविप्यसि ।। 4.2.76.७० ।।
यावदास्यगतास्म्यस्य यावत्खस्थो न भूमिगः ।।
तावदात्मविमुक्त्यैवमरेः पादं दृढं दश ।।।७१।।।
इति पत्नीवचः श्रुत्वा तथा स कृतवान्खगः ।।
सपीडितो दृढं पादे श्येनश्चीत्कृतवान्बहु ।। ७२ ।।
तेन चीत्करणेनाथ मुक्ता सा मुखसंपुटात्।।
पादांगुलि श्लथत्वेन सोपि पारावतोऽपतत्।। ७३ ।।
विपद्यपि च न प्राज्ञैः संत्या ज्यः क्वचिदुद्यमः ।।
क्व चंचुपुटस्तस्य क्व च तत्पादपीडनम् ।।७४।।
क्व च द्वयोस्तथाभूता दरेर्मोक्षणमद्भुतम् ।।
दुर्बलेप्युद्यमवति फलं भाग्यं यतोऽर्पयेत् ।। ।। ७५ ।।
तस्माद्भाग्यानुसारेण फलत्येव सदोद्यमः ।।
प्रशंसंत्युद्यमं चातो विपद्यपि मनीषिणः ।। ७६ ।।
अथ तौ कालयोगेन विपन्नौ सरयूतटे ।।
मुक्तिपुर्यामयोध्यायामेको विद्याधरोऽभवत् ।। ७७ ।।
मृतानां यत्र जंतूनां काशीप्राप्तिर्भवेद्ध्रुवम् ।।
मंदारदामतनयो नाम्ना परिमलालयः ।। ७८ ।।
अनेकविद्यानिलयः कलाकौशलभाजनम्।।
कौमारं वय आसाद्य शिवभक्तिपरोभवत् ।। ७९ ।।
नियमं चातिजग्राह विजितेंद्रियमानसः ।।
एकपत्नीव्रतं नित्यं चरिष्यामीति निश्चितम्।। 4.2.76.८० ।।
परयोषित्समासक्तिरायुः कीर्तिं बलं सुखम् ।।
हरेत्स्वर्गं गतिं चापि तस्मात्तां वर्जयेत्सुधीः ।। ८१ ।।

अपरं चापि नियमं स शुचिष्मान्समाददे ।।

गतजन्मांतराभ्यासात्त्रिलोचनसमाश्रयात् ।। ८२ ।।

समस्तपुण्यनिलयं समस्तार्थप्रकाशकम् ।।

समस्तकामजनकं परानंदैककारणम् ।। ।। ८३ ।।

यावच्छरीरमरुजं यावन्नेंद्रियविप्लवः ।।

तावत्त्रिलोचनं काश्यामनर्च्याश्नामि नाण्वपि ।।८४।।

इत्थं मांदारदामिः स नित्यं परिमलालयः ।।

काश्यां त्रिविष्टपं द्रष्टुं समागच्छेत्प्रयत्नवान् ।। ८५ ।।

पारावत्यपि सा जाता रत्नदीपस्य मंदिरे ।।

नागराजस्य पाताले नाम्ना रत्नावलीति च ।। ८६ ।।

समस्तनागकन्यानां रूपशीलकलागुणैः ।।

एकैव रत्नभूतासीद्रत्नदीपोरगात्मजा ।। ८७ ।।

तस्या सखीद्वयं चासीदेका नाम्ना प्रभावती ।।

कलावती तथान्या च नित्यं तदनुगे उभे ।। ८८।।

स्वदेहादनपायिन्यौ छायाकांती यथा तया ।।

ते द्वे सख्यावभूतांहि रत्नावल्या घटोद्भव ।। ८९ ।।

सा तु बाल्ये व्यतिक्रांते किंचिदुद्रिन्नयौवना ।।

शिवभक्तं स्वपितरं दृष्ट्वा नियममग्रहीत् ।। 4.2.76.९० ।।

पितस्त्रिलोचनं काश्यामर्चयित्वा दिनेदिने ।।

आभ्यां सखीभ्यां सहिता मौनं त्यक्ष्यामि नान्यथा ।। ।। ९१ ।।

एवं नागकुमारी सा सखीद्वयसमन्विता ।।

त्रिलोचनं समभ्यर्च्य गृहानहरहोव्रजेत् ।। ९२ ।।

दिनेदिने सा प्रत्यग्रैः कुसुमैरिष्टगंधिभिः ।।

सुविचित्राणि माल्यानि परिगुंफ्यार्चयेद्विभुम् ।। ९३ ।।

तिस्रोपि गीतं गायंति लसद्गांधारसुंदरम् ।।

रासमंडलभेदेन लास्यं तिस्रोपि कुर्वते ।। ९४ ।।

वीणावेणुमृदंगांश्च लयतालविचक्षणाः ।।

वादयंति मुदा युक्तास्तिस्रोपीश्वरसन्निधौ ।।९५।।

इत्थमाराधयंतीशं तिस्रो नागकुमारिकाः ।।
विचित्रगंधमालाभिः संमार्जनविलेपनैः ।। ९६ ।।
एकदा माधवे मासि तृतीयायामुपोषिताः ।।
रात्रौ जागरणं कृत्वा नृत्यगीतकथादिभिः ।। ९७ ।।
प्रातश्चतुर्थी स्नात्वाथ तीर्थं पैलिपिले शुभे ।।
त्रिलोचनं समर्च्याथ प्रसुप्ता रंगमंडपे ।। ९८ ।।
सुप्तासु तासु बालासु त्रिनेत्रः शशिभूषणः ।।
शुद्धकर्पूरगौरांगो जटामुकुटमंडलः ।। ९९ ।।
तमालनीलसुग्रीवः स्फुरत्फणिविभूषणः ।।
वामार्धविलसच्छक्तिर्नागयज्ञोपवीतवान् ।।।4.2.76.१००।।
तस्मादेव विनिष्क्रम्य लिंगात्पन्नगमेखलात् ।।
उवाच च ततो बाला विभुरुत्तिष्ठतेति सः ।। १ ।।
उत्थाय ता विनिर्माज्य लोचने श्रुतिसंगते ।।
अंगमोटनवत्यश्च जृंभाभिः क्वणिताननाः ।। २ ।।
यावत्पश्यंति पुरतः संभ्रमापन्नमानसाः ।।
अतर्किता्गमस्तावत्ताभिर्दृष्टस्त्रिलोचनः ।।३।।
ववंदुरथ ता बाला ज्ञात्वा लक्ष्मभिरीश्वरम् ।।
तुष्टवुश्च प्रहृष्टास्याः सन्नकंठ्योतिगद्गदम्।। ।। ४ ।।
जयशंभो जयेशान जय सर्वग सर्वद ।।
जय त्रिपुरसंहर्तर्जयांधकनिषूदन ।। ५ ।।
जय जालंधरहर जय कंदर्पदर्पहृत् ।।
जय त्रैलोक्यजनक जय त्रैलोक्यवर्धन ।। ६ ।।
जय त्रैलोक्यनिलय जय त्रैलोक्यवंदित ।।
जय भक्तजनाधीन जय प्रमथनायक ।। ७ ।।
जय त्रिपथगापाथः प्रक्षालितजटातट ।।
जय चंद्रकलाज्योतिर्विद्योतितजगत्त्रय ।। ८ ।।
जय सर्पफणारत्न प्रभाभासितविग्रह ।।
जयाद्रिराजतनया तपःक्रीतार्धदेहक ।। ९ ।।

जय श्मशाननिलय जय वाराणसीप्रिय ।।

जयानंदवनाध्यासि प्राणिनिर्वाणदायक ।। 4.2.76.११० ।।

जय विश्वपते शर्व शर्वरीपरिवर्जित ।।

जय नृत्यप्रियेशोग्र जय गीतविशारद ।। ११ ।।

जय प्रणवसद्वास जय धाम महानिधे ।।

जय शूलिन्विरूपाक्ष जय प्रणतसर्वद ।। १२ ।।

विधिः सर्वविधिज्ञोपि न त्वां स्तोतुं विचक्षणः ।।

वाचो वाचस्पतेर्नाथ त्वत्स्तुतौ परिकुंठिताः ।। १३ ।।

विदंति वेदाः सर्वज्ञ न त्वां नाथ यथार्थतः ।।

मनतीह मनो न त्वामनंतं चादिवर्जितम् ।। १४ ।।

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ।।

त्रिलोचन नमस्तुभ्यं त्रिविष्टप नमोस्तु ते ।। १५ ।।

इत्युक्त्वा दंडवद्भूमौ प्रणिपेतुः कुमारिकाः ।।

अथोत्थाप्य कुमारीस्ताः प्रोवाच शशिभूषणः ।। १६।।

सुतो मंदारदाम्नश्च नाम्ना परिमलालयः ।।

पतिर्विद्याधरवरो भवतीनां भविष्यति ।। १७ ।।

चिरं विद्याधरे लोके भोगान्भुक्त्वा समंततः ।।

ततो निर्वेदमापन्नाः काशीसिद्धिमवाप्स्यथ ।। ।। १८ ।।

यूयं तिस्रोपि मे भक्ताः स च विद्याधरो युवा ।।

चत्वारोप्येत एवात्र प्रतिमोक्षमवाप्स्यथ ।। १९ ।।

जन्मांतरेपि मे सेवा भवतीभिश्च तेन च ।।

विहिता तेन वो जन्म निर्मलं भक्तिभावितम् ।। 4.2.76.१२० ।।

एतच्च भवती स्तोत्रं यः पठिष्यति मे पुरः ।।

तस्य कामं प्रदास्यामि भवतीनामिव स्फुटम् ।। २१ ।।

त्यजेत्क्षपाकृतं पापं शुचिः प्रातः पठन्नरः ।।

दिवाकृतमलं हंति सायं पठनतः स्फुटम् ।।२२।।

इत्युक्तवति देवेशे ताः कन्या हृष्टमानसाः ।।

प्रणम्य प्रोचुरीशानं प्रबद्धकरसंपुटाः ।। ।। २३ ।।

नागकन्या ऊचुः ।। ।।

पृच्छामो ब्रूहि नो नाथ करुणाकर शंकर ।।

जन्मांतरे कथं सेवा चतुर्भिर्भवतः कृता ।। २४ ।।

भवप्राग्भव वृत्तांतं तस्यापि सुकृतात्मनः ।।

अस्माकमपि चाख्याहि कृपां कुरु कृपानिधे ।।२५।।

इति श्रुत्वा प्रणयतो बालोदीरितमीशिता ।।

प्रोवाच तासां तस्यापि भवांतरविचेष्टितम् ।। ।। २६ ।।

।। ईश्वर उवाव ।। ।।

शृणुध्वं नागतनयास्तिस्रोपि हि समाहिताः ।।

प्राग्भवे भवतीनां च तस्यापि कथयाम्यहम् ।। ९७ ।।

एषा रत्नावली पूर्वमासीत्पारावती खगी ।।

स च विद्याधरवरः पतिरस्याः खगोभवत् ।। २८ ।।

प्रासादेत्र ममैताभ्यामुषितं सुचिरं सुखम्।।

रजःप्रासादसंलग्नं नुन्नं पक्षानिलैः पुनः ।। २९ ।।

उपरिष्टादधस्ताच्च कृता बह्व्यः प्रदक्षिणाः ।।

व्योम्ना संचरमाणाभ्यां संचरद्भ्यां ममाजिरे ।। 4.2.76.१३० ।।

स्नातं चतुर्नदे तीर्थे पीतं तत्रांबु चासकृत् ।।

आभ्यां कलरवाभ्यां च कृतः कलरवो मुदे ।। ३१ ।।

एताभ्यां स्थिरचेतोभ्यां मुदिताभ्यामतीव हि ।।

दृष्टानि कौतुकान्यत्र मम भक्तैः कृतानि वै ।।३२।।

अमूभ्यां बहुशो दृष्टा मम मंगलदीपिकाः ।।

पीतं श्रुतिपुटाभ्यां च मम नामाक्षरामृतम् ।। ३३ ।।

तिर्यग्योनिप्रभावेन न मृतौ मम सन्निधौ ।।

मृतं पुर्यामयोध्यायां काशीप्राप्तिकृति ध्रुवम् ।। ३४ ।।

अयोध्यानिधनादेषा रत्नदीपसुताभवत् ।।

पतिः पारावतोऽस्याः स जातो विद्याधरांगजः ।।३५।।

एषा प्रभावती नागी नागराजस्य पद्मिनः ।।

इह जन्मनि कन्यासीत्पूर्वं जन्म ब्रवीमि वः ।।३६।।

त्रिशिखस्योरगेंद्रस्य सुता चेयं कलावती ।।

एतस्या अपि वृत्तांतं निशामयत वच्म्यहम्।। ३७ ।।

भवांतरे तृतीयेऽतः कन्ये चारायणस्य ह ।।

आस्तां महर्षेः शीलाढ्ये प्रेमवत्यौ परस्परम् ।।३८।।

पित्रा चारायणेनापि ताभ्यां संप्रेरितेन ते ।।

आमुष्यायण पुत्राय दत्ते नारायणाय हि ।।३९।।

अप्राप्तयौवनः सोथ समिदाहरणाय वै ।।

गतो विधिवशाद्दष्टो दंदशूकेन कानने ।।4.2.76.१४०।।

भवानीगौतमी नाम्न्यो ते तु चारायणांगजे ।।

वैधव्य दुःखमापन्ने दैन्यग्रस्ते बभूवतुः ।। ४१ ।।

अतएव प्रयत्नेन परिणेता विवर्जयेत् ।।

देवतासरिदाह्वानां कन्या पाणिग्रहे सुधीः ।। ४२ ।।

अथर्षेः कस्यचिद्दैवादाश्रमे परमाद्भुते ।।

रंभाफलान्यदत्तानि मोहाज्जगृहतुस्तदा ।।४३।।

कृत्वा मासोपवासादि व्रतानि ब्राह्मणांगजे ।।

अवाप्य निधनं कालाच्छाखामृग्यौ बभूवतुः ।। ४४ ।।

फलचौर्यविपाकेन वानरीत्वं तयोरभूत् ।।

शीलरक्षणधर्मेण काश्यां जनिमवापतुः ।।४५।।

स च नारायणो विप्रः पितृशुश्रूषणव्रतः।।

दष्टोपि दंदशूकेन काश्यां पारावतोभवत् ।। ४६ ।।

एवं भवांतरेचासीदेतयोः पतिरेष कः ।।

तिसृणां भवतीनां च भावी भर्ताधुनापि हि ।। ४७ ।।

प्रासादस्यास्य पार्श्वे तु न्यग्रोधस्तु महानभूत् ।।

तस्मिञ्शाखिनि शाखाढ्ये शाखामृग्यौ बभूवतुः ।। ४८ ।।

चतुःस्रोतस्विनी तीर्थे क्रीडया च ममज्जतुः ।।

पपतुश्चापि पानीयं तस्मिंस्तीर्थं तृषातुरे ।। ४९ ।।

जातिस्वभावचापल्यात्क्रीडंत्यौ च प्रदक्षिणम् ।।

चक्रतुर्बहुकृत्वश्च लिंगं ददृशतुर्बहु ।। 4.2.76.१५० ।।

विचरंत्याविति स्वैरं तत्र न्यग्रोध सन्निधौ ।।

केनचिद्योगिवेषेण पाशेन च नियंत्रिते ।। ५१ ।।

भिक्षार्थं शिक्षिते तेन तदुत्प्लुत्यादि नर्तनम्।।

अथ ते क्वापि मर्कट्यौ कालधर्मवशंगते।। ।। ५२ ।।

काशीवासज पुण्येन त्रैलोचन्यानुसेवया ।।

प्रादक्षिण्यादिरूपिण्या जाते नागसुते इति ।।५३।।

अधुना तं पतिं प्राप्य विद्याधरकुमारकम् ।।

निर्विश्य स्वर्गभोगांश्च काश्यां निर्वृतिमेष्यथ ।। ५४ ।।

यदल्पमपि वै काश्यां कृतं कर्म शुभावहम् ।।

तस्य मोक्षः परीपाको निश्चितं मदनुग्रहात् ।।५५।।

त्रिलोक्या अपि सर्वस्याः श्रेष्ठा वाराणसी पुरी ।।

ततोपि लिंगमोंकारं ततोप्यत्र त्रिलोचनम् ।।५६।।

तिष्ठमानोत्र लिंगेहं भक्तमुक्तिं दिशाम्यहम् ।।

ततः सर्वप्रयत्नेन काश्यां पूज्यस्त्रिलोचनः ।। ५७ ।।

इत्युक्त्वा देवदेवेशस्तत्प्रासादांतरं विशत् ।।

अवाच्यरूपमासाद्य स्थूलं त्रिभुवनादपि ।। ५८ ।।

ताश्च स्वं स्वं पदं प्राप्य तद्वृत्तांतमशेषतः ।।

स्वमातृपुरतश्चोक्त्वा कृतकृत्या इवाभवन्।।५९।।

एकदा माधवे मासि महायात्रा समागता ।।

विद्याधरास्तथा नागा मिलिताः सपरिच्छदाः ।।4.2.76.१६०।।

विरजस्के महाक्षेत्रे त्रिलोचनसमीपतः ।।

देवस्य वरदानाच्च पृष्ट्वान्योन्यं कुलावलीम् ।।६१।।

विद्याधराय ता नागैः कन्यास्तिस्रोपि कल्पिताः ।।

मंदारदामा संतुष्टः प्राप्य तच्च स्नुषात्रयम्।। ६२ ।।

रत्नदीपश्च नागेंद्रः पद्मी च भुजगेश्वरः ।।

त्रिशिखोपि फणींद्रश्च हृष्टा एते त्रयोपि च ।। ६३ ।।

जामातरं समासाद्य शुभं परिमलालयम् ।।

अन्योन्यं स्वजनास्ते तु मुदा विकसितेक्षणाः ।। ६४ ।।

विवाहोत्सव माकल्प्य स्वं स्वं भुवनमाविशन् ।।

त्रिलोचनस्य लिंगस्य वर्णयंतोतिगौरवम् ।। ६५ ।।

स च विद्याधरः श्रीमान्नागीभिर्विपुलं सुखम् ।।

भुक्त्वा वाराणसीं प्राप्य संसेव्याथ त्रिलोचनम् ।। ६६ ।।

गायन्गीतं सुमधुरं नागीभिः सहितः कृती ।।

आत्मानं चातिसंस्मृत्य मध्ये लिंगं लयं गतः ।। ६७ ।।

।। स्कंद उवाच ।। ।।

त्रिलोचनस्य महिमा कलौ देवेन गोपितः ।।

अतोल्पसत्त्वा मनुजा न तल्लिंगमुपासते ।। ६८ ।।

त्रिलोचनकथामेतां श्रुत्वा पापान्वितोप्यहो ।।

विपाप्मा जायते मर्त्यो लभते च परां गतिम् ।। १६९ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे त्रिलोचनप्रभावोनाम षट्सप्ततितमोऽध्यायः ।। ७६ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७७

https://sa.wikisource.org/s/fye
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। पार्वत्युवाच ।। ।।

नमस्ते देवदेवेश प्रणमत्करुणानिधे ।।

वद केदारमाहात्म्यं भक्तानामनुकंपया ।।१।।

तस्मिँल्लिंगे महाप्रीतिस्तव काश्यामनुत्तमा ।।

तद्भक्ताश्च जना नित्यं देवदेवमहाधियः ।। २ ।।

।। देवदेव उवाच ।। ।।

शृण्वपर्णेभिधास्यामि केदारेश्वर संकथाम् ।।

समाकर्ण्यापि यां पापोप्यपापो जायते क्षणात् ।। ३ ।।

केदारं यातुकामस्य पुंसो निश्चितचेतसः ।।

आजन्मसंचितं पापं तत्क्षणादेव नश्यति ।। ४ ।।

गृहाद्विनिर्गते पुंसि केदारमभिनिश्चितम् ।। जन्मद्वयार्जितं पापं शरीरादपि निर्व्रजेत् ।। ५ ।।

मध्ये मार्गं प्रपन्नस्य त्रिजन्मजनितं त्वघम् ।।

देहगेहाद्विनिःसृत्य निराशं याति निःश्वसत् ।। ६ ।।

सायंकेदारकेदारकेदारेति त्रिरुच्चरन्।।

गृहेपि निवसन्नूनं यात्राफलमवाप्नुयात् ।। ७ ।।

दृष्ट्वा केदारशिखरं पीत्वा तत्रत्यमंबु च ।।

सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।।८।।

हरपापह्रदे स्नात्वा केदारेशं प्रपूज्य च ।।

कोटिजन्मार्जितैनोभिर्मुच्यते नात्र संशयः ।।९।।

सकृत्प्रणम्य केदारं हरपापकृतोदकः ।।

स्थाप्य लिंगं हृदंभोजे प्रांते मोक्षं गमिष्यति।।4.2.77.१०।।

हरपापह्रदे श्राद्धं श्रद्धया यः करिष्यति ।।

उद्धृत्य सप्तपुरुषान्स मे लोकं गमिष्यति ।। ११ ।।

पुरा राथंतरे कल्पे यदभूदत्र तच्छृणु ।।

अपर्णे दत्तकर्णा त्वं वर्णयामि तवाग्रतः ।।१२।।

एको ब्राह्मणदायाद उज्जयिन्या इहागतः ।।

कृतोपनयनः पित्रा ब्रह्मचर्यव्रतेस्थितः ।।१३।।

स्थलीं पाशुपतीं काशीं स विलोक्य समंततः।।

द्विजैः पाशुपतैः कीर्णां जटामुकुटभूषितैः ।। १४ ।।

कृतलिंगसमर्चैश्च भूतिभूषितवर्ष्मभिः ।।

भिक्षाहृतान्नसंतुष्टैः पुष्टैर्गंगामृतोदकैः ।। १५ ।।

बभूवानंदितमना व्रतं जग्राह चोत्तमम्।।

हिरण्यगर्भादाचार्यान्महत्पाशुपताभिधम् ।। १६ ।।

स च शिष्यो वशिष्ठोभूत्सर्वपाशुपतोत्तमः ।।

स्नात्वा ह्रदे हरपापे नित्यप्रातः समुत्थितः ।।१७।।

विभूत्याहरहः स्नाति त्रिकालं लिंगमर्चयन् ।।

नांतरं स विजानाति शिवलिंगे गुरौ तथा ।।१८।।

स द्वादशाब्ददेशीयो वशिष्ठो गुरुणा सह ।।

ययौ केदारयात्रार्थं गिरिं गौरीगुरोर्गुरुम् ।।१९।।

यत्र गत्वा न शोचंति किंचित्संसारिणः क्वचित ।।

प्राश्योदकं लिंगरूपं लिंगरूपत्वमागताः ।।4.2.77.२०।।

असिधारं गिरिं प्राप्य वशिष्ठस्य तपस्विनः ।।

गुरुर्हिरण्यगर्भाख्यः पंचत्वमगमत्तदा ।। २१ ।।

पश्यतां तापसानां च विमाने सार्वकामिके ।।

आरोप्य तं पारिषदाः कैलासमनयन्मुदा ।। २२ ।।

यस्तु केदारमुद्दिश्य गेहादर्धपथेप्यहो ।।

अकातरस्त्यजेत्प्राणान्कैलासे स चिरं वसेत् ।। २३ ।।

तदाश्चर्यं समालोक्य स वशिष्ठस्तपोधनः ।।

केदारमेव लिंगेषु बह्वमंस्त सुनिश्चितम् ।। २४।।

अथ कृत्वा स कैदारीं यात्रां वाराणसीमगात् ।।

अग्रहीन्नियमं चापि यथार्थं चाकरोत्पुनः ।। ।। २५ ।।

प्रति चैत्रं सदा चैत्र्यां यावज्जीवमहं ध्रुवम् ।।

विलोकयिष्ये केदारं वसन्वाराणसीं पुरीम् ।। २६ ।।

तेन यात्राः कृताः सम्यक् षष्टिरेकाधिका मुदा ।।
आनंदकानने नित्यं वसता ब्रह्मचारिणा ।। २७ ।।
पुनर्यात्रां स वै चक्रे मधौ निकटवर्तिनि ।।
परमोत्साहसंतुष्टः पलिता कलितोप्यलम्।। २८ ।।
तपोधनैस्तन्निधनं शंकमानैर्निवारितः ।।
कारुण्यपूर्णहृदयैरन्यैरपि च संगिभिः ।। २९ ।।
ततोपि न तदुत्साहभंगोभूद्दृढचेतसः ।।
मध्ये मार्गं मृतस्यापि गुरोरिव गतिर्मम ।। 4.2.77.३० ।।
इति निश्चितचेतस्के वशिष्ठे तापसे शुचौ ।।
अशूद्रान्न परीपुष्टे तुष्टोहं चंडिकेऽभवम् ।। ३१ ।।
स्वप्रेमया स संप्रोक्तो वशिष्ठस्तापसोत्तमः ।।
दृढव्रत प्रसन्नोस्मि केदारं विद्धि मामिह ।। ३२ ।।
अभीष्टं च वरं मत्तः प्रार्थयस्वाविचारितम् ।।
इत्युक्तवत्यपि मयि स्वप्नो मिथ्येति सोब्रवीत्।। ३३ ।।
ततोपि स मया प्रोक्तः स्वप्नो मिथ्याऽशुचिष्मताम् ।।
भवादृशाममिथ्यैव स्वाख्या सदृशवर्तिनाम् ।। ३४ ।।
वरं ब्रूहि प्रसन्नोस्मि स्वप्नशंकां त्यज द्विज ।।
तव सत्त्ववतः किंचिन्मयादेयं न किंचन ।। ३५ ।।
इत्युक्तं मे समाकर्ण्य वरयामास मामिति ।।
शिष्यो हिरण्यगर्भस्य तपस्विजनसत्तमः ।। ३६ ।।
यदि प्रसन्नो देवेश तदा मे सानुगा इमे ।।
सर्वे शूलिन्ननुग्राह्या एष एव वरो मम ।। ३७ ।।
देवि तस्येदमाकर्ण्य परोपकृतिशालिनः ।।
वचनं नितरां प्रीतस्तथेति तमुवाच ह ।। ३८ ।।
पुनः परोपकरणात्ततपो द्विगुणीकृतम् ।।
तेन पुण्येन स मया पुनः प्रोक्तो वरं वृणु ।। ३९ ।।
स वशिष्ठो महाप्राज्ञो दृढ पाशुपतव्रतः ।।
देवि मे प्रार्थयामास हिमशैलादिह स्थितिम् ।। 4.2.77.४० ।।

ततस्तत्तपसाकृष्टः कलामात्रेण तत्र हि ।।

हिमशैले ततश्चात्र सर्वभावेन संस्थितः ।। ४१ ।।

ततः प्रभाते संजाते सर्वेषां पश्यतामहम् ।।

हिमाद्रे प्रस्थितः प्राप्तस्तूयमानः सुरर्षिभिः ।।४२।।

वशिष्ठं पुरतः कृत्वा सर्वसार्थसमायुतम् ।।

हरपापह्रदे तीर्थे स्थितोहं तद्नुग्रहात् ।। ४३ ।।

मत्परिग्रहतः सर्वे हरपापे कृतोदकाः ।।

आराध्य मामनेनैव वपुषा सिद्धिमागताः ।। ४४ ।।

तदा प्रभृति लिंगेस्मिन्स्थितः साधकसिद्धये ।।

अविमुक्ते परे क्षेत्रे कलिकाले विशेषतः ।। ४५।।

तुषाराद्रिं समारुह्य केदारं वीक्ष्य यत्फलम् ।।

तत्फलं सप्तगुणितं काश्यां केदारदर्शने ।। ४६ ।।

गौरीकुंडं यथा तत्र हंसतीर्थं च निर्मलम् ।।

यथा मधुस्रवा गंगा काश्यां तदखिलं तथा ।। ४७ ।।

इदं तीर्थं हरपापं सप्तजन्माघनाशनम् ।।

गंगायां मिलितं पश्चाज्जन्मकोटिकृताघहम् ।। ४८ ।।

अत्र पूर्वं तु काकोलौ युध्यतौ खान्निपेततुः ।।

पश्यतां तत्र संस्थानां हंसौ भूत्वा विनिर्गतौ ।।४९।।

गौरि त्वया कृतं पूर्वं स्नानमत्र महाह्रदे ।।

गौरीतीर्थं ततः ख्यातं सर्वतीर्थोत्तमोत्तमम् ।। 4.2.77.५० ।।

अत्रामृतस्रवा गंगा महामोहांधकारहृत् ।।

अनेकजन्मजनित जाड्यध्वंसविधायिनी ।। ५१ ।।

सरसा मानसेनात्र पूर्वं तप्तं महातपः ।।

अतस्तु मानसं तीर्थं जने ख्यातिमिदं गतम् ।।५२।।

अत्र पूर्वं जनः स्नानमात्रेणैव प्रमुच्यते ।।

पश्चात्प्रसादितश्चाहं त्रिदशैर्मुक्तिदुर्दृशैः ।। ५३ ।।

सर्वे मुक्तिं गमिष्यंति यदि देवेह मानवाः ।।

केदारकुंडे सुस्नातास्तदोच्छित्तिर्भविष्यति ।। ५४ ।।

सर्वेषामेव वर्णानामाश्रमाणां च धर्मिणाम्।।

तस्मात्तनुविसर्गेत्र मोक्षं दास्यति नान्यथा ।। ५५ ।।

ततस्तदुपरोधेन तथेति च मयोदितम् ।।

तदारभ्य महादेवि स्नानात्केदारकुंडतः।।।। ५६ ।।

समर्चनाच्च भक्त्या वै मम नाम जपादपि ।।

नैःश्रेयसीं श्रियं दद्यामन्यत्रापि तनुत्यजाम ।। ५७ ।।

केदारतीर्थे यः स्नात्वा पिंडान्दास्यति चात्वरः ।।

एकोत्तरशतं वंश्यास्तस्य तीर्णा भवांबुधिम्।। ५८ ।।

भौमवारे यदा दर्शस्तदा यः श्राद्धदो नरः ।।

केदारकुंडमासाद्य गयाश्राद्धेन किं ततः ।। ५९ ।।

केदारं गंतुकामस्य बुद्धिर्देया नरैरियम् ।।

काश्यां स्पृशंस्त्वं केदारं कृतकृत्यो भविष्यसि ।। 4.2.77.६० ।।

चैत्रकृष्णचतुर्दश्यामुपवासं विधाय च ।।

त्रिगंडूषान्पिबन्प्रातर्हृल्लिंगमधितिष्ठति ।। ६१ ।।

केदारोदकपानेन यथा तत्र फलं भवेत् ।।

तथात्र जायते पुंसां स्त्रीणां चापि न संशयः ।। ६२ ।।

केदारभक्तं संपूज्य वासोन्नद्रविणादिभिः ।।

आजन्मजनितं पापं त्यक्त्वा याति ममालयम् ।। ।। ६३ ।।

आषण्मासं त्रिकालं यः केदारेशं नमस्यति ।।

तं नमस्यंति सततं लोकपाला यमादयः ।। ६४ ।।

कलौ केदारमाहात्म्यं योपि कोपि न वेत्स्यति ।।

यो वेत्स्यति सुपुण्यात्मा सर्वं वेत्स्यति स ध्रुवम् ।। ६५ ।।

केदारेशं सकृद्दृष्ट्वा देवि मेऽनुचरो भवेत् ।।

तस्मात्काश्यां प्रयत्नेन केदारेशं विलोकयेत् ।।६६।।

चित्रांगदेश्वरं लिंगं केदारादुत्तरे शुभम् ।।

तस्यार्चनान्नरो नित्यं स्वर्गभोगानुपाश्नुते ।। ६७ ।।

केदाराद्दक्षिणे भागे नीलकंठ विलोकनात् ।।

संसारोरगदष्टस्य तस्य नास्ति विषाद्भयम् ।। ६८ ।।

तद्वायव्यंबरीषेशो नरस्तदवलोकनात् ।।

गर्भवासं न चाप्नोति संसारे दुःखसंकुले ।।६९।।

इंद्रद्युम्नेश्वरं लिंगं तत्समीपे समर्च्य च ।।

तेजोमयेन यानेन स स्वर्ग भुवि मोदते ।। 4.2.77.७० ।।

तद्दक्षिणे नरो दृष्ट्वा लिंगं कालंजरेश्वरम् ।।

जरां कालं विनिर्जित्य मम लोके वसेच्चिरम् ।।७१।।

दृष्ट्वा क्षेमेश्वरं लिंगमुद्क्चित्रांगदेश्वरात् ।।

सर्वत्र क्षेममाप्नोति लोकेऽत्र च परत्र च ।।७२।।

।। स्कंद उवाच ।। ।।

देवदेवेन विंध्यारे केदार महिमा महान् ।।

इत्याख्यायि पुरांबायै मया तेपि निरूपितः ।। ७३ ।।

केदारेश्वरलिंगस्य श्रुत्वोत्पत्तिं कृती नरः ।।

शिवलोकमवाप्नोति निष्पापो जायते क्षणात् ।। ७४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे केदारमहिमाख्यानं नाम सप्तसप्ततितमोऽध्यायः ।।७७।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७८

https://sa.wikisource.org/s/fyf
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। पार्वत्युवाच ।।

आनंदकानने शंभो यल्लिंगं पुण्यवर्धनम् ।।

यन्नामस्मरणादेव महापातकसंक्षयः ।। १ ।।

यत्सेव्यं साधकैर्नित्यं यत्र प्रीतिरनुत्तमा ।।

यत्र दत्तं हुतं जप्तं ध्यातं भवति चाक्षयम् ।। २ ।।

यस्य संस्मरणादेव यल्लिंगस्य विलोकनात् ।।

यल्लिंगप्रणतेश्चापि यस्य संस्पर्शनादपि ।। ३ ।।

पंचामृतादि स्नपनपूर्वाद्यस्यार्चनादपि ।।

तल्लिंगं कथयेशान भवेच्छ्रेयः परंपरा ।।४।।

।। स्कंद उवाच ।। ।।

इति देवीसमुदितं समाकर्ण्य वटोद्भव ।।

सर्वज्ञेन यदाख्यातं तदाख्यास्यामि ते शृणु ।। ५ ।।

देवदेव उवाच ।। ।।

उमे भवत्या यत्पृष्टं भवबंधविमोक्षकृत् ।।

ततोऽहं कथयिष्यामि लिंगं स्थिरमना भव ।। ६ ।।

आनंदकानने चात्र रहस्यं परमं मम ।।

न मया कस्यचित्ख्यातं न प्रष्टुं वेत्ति कश्चन ।।७।।

संति लिंगान्यनेकानि ममानंदवने प्रिये।।

परं त्वया यथा पृष्टं यथावत्तद्ब्रवीमि ते ।। ८ ।।

यत्र मुक्तिस्वरूपा त्वं स्वयं तिष्ठसि विश्वगे ।।

यत्र ते नंदनश्चास्ति क्षेत्रं विघ्नविघातकृत् ।। ९ ।।

ममापि येन त्रिपुरं समरे जयकांक्षिणः ।।

जयाशा पूरिता स्तुत्या बहुमोदकदानतः ।। 4.2.78.१० ।।

यत्रास्ति तीर्थमघहृत्पितृप्रीतिविवर्धनम् ।।

यत्स्नानाद्वृत्रहा वृत्रवधपापाद्विमुक्तवान् ।। ११ ।।

धर्माधिकरणं यत्र धर्मराजोप्यवाप्तवान् ।।

सुदुष्करं तपस्तप्त्वा परमेण समाधिना ।। १२ ।।

पक्षिणोपि हि यत्रापुर्ज्ञानं संसारमोचनम् ।।

रम्यो हिरण्मयो यत्र बभूव बहुपादद्रुमः ।। ।। १३ ।।

यल्लिंगदर्शनादेव दुर्दमो नाम पार्थिवः ।।

उद्वेजकोपि लोकानां क्षणाद्धर्ममतिस्त्वभूत् ।। १४ ।।

तस्य लिंगस्य माहात्म्यमाविर्भावं च सुंदरि ।।

निशामयाभिधास्यामि महापातक नाशनम् ।। १५ ।।

धर्मपीठं तदुद्दिष्टमत्रानंदवने मम ।।

तत्पीठदर्शनादेव नरः पापैः प्रमुच्यते ।। १६ ।।

पुरा विवस्वतः पुत्रो यमः परमसंयमी ।।

तपस्तताप विपुलं विशालाक्षि तवाग्रतः ।। १७ ।।

शिशिरे जलमध्यस्थो वर्षास्वभ्रावकाशकः ।।

तपर्तौ पंचवह्निस्थः कदाचिदिति तप्तवान् ।। १८ ।।

पादाग्रांगुष्ठभूस्पर्शी बहुकालं स तस्थिवान् ।।

एकपादस्थितः सोपि कदाचिद्वह्वनेहसम् ।। १९ ।।

समीराभ्यवहर्तासीद्वहुदिष्टं सदिष्टवान् ।।

पपौ स तु पिपासुः सन्कुशाग्रजलविप्रुषः ।। 4.2.78.२० ।।

दिव्यां चतुर्युगीमित्थं स निनाय तपश्चरन् ।।

चतुर्गुणं दिदृक्षुर्मां परमेण समाधिना ।। २१ ।।

ततोहं तस्य तपसा संतुष्टः स्थिरचेतसः ।।

ययौ तस्मै वरान्दातुं शमनाय महात्मने ।।२२।।

वटः कांचनशाखाख्यो यस्तपस्तापसंततिम् ।।

दूरीचकार सुच्छायो बहुद्विजसमाश्रयः ।। २३ ।।

मंदमद मरुल्लोल पल्लवैः करपल्लवैः ।।

योध्वगानध्वसंतप्तानाह्वये दिवतापहृत् ।। २४ ।।

स्वानुरागैः सुरभिभिः स्वादुभिश्च पचेलिमैः ।।

प्रीणयेदर्थिसार्थं यो वृत्तैर्निजफलैरलम् ।।२५।।

तदधस्तात्परं वीक्ष्य तमहं तपनांगजम् ।।

स्थाणुनिश्चल वर्ष्माणं नासाग्रन्यस्तलोचनम् ।। २६ ।।

तपस्तेजोभिरुद्यद्भिः परितः परिधीकृतम् ।।

भानुमंतमिवाकाशे सुनीले स्वेन तेजसा ।। २७ ।।

स्वाख्यांकितं महालिंगं प्रतिष्ठाप्यातिभक्तितः ।।

स्वच्छ सूर्योपलमयतेजः पुंजैरिवार्चितम् ।। २८ ।।

साक्षीकृत्येव तल्लिंगं तप्यमानं महत्तपः ।।

प्रत्यवोचं धर्मराजं वरं ब्रूहीति भास्करे ।। २९ ।।

अलं तप्त्वा महाभाग प्रसन्नोस्मि शुभव्रत ।।

निशम्य शमनश्चेति दृष्ट्वा मां प्रणनाम ह ।। 4.2.78.३० ।।

चकार स्तवनं चापि परिहृष्टेंद्रियेश्वरः ।।

निर्व्याजं स समाधिं च विसृज्य ब्रध्ननंदनः ।। ३१ ।।

धर्म उवाच ।। ।।

नमोनमः कारणकारणानां नमोनमः कारणवर्जिताय ।।

नमोनमः कार्यमयाय तुभ्यं नमोनमः कार्यविभिन्नरूप ।। ३२ ।।

अरूपरूपाय समस्तरूपिणे पराणुरूपाय परापराय ।।

अपारपाराय पराब्धिपार प्रदाय तुभ्यं शशिमौलये नमः।। ।। ३३ ।।

अनीश्वरस्त्वं जगदीश्वरस्त्वं गुणात्मकस्त्वं गुणवर्जितस्त्वम् ।।

कालात्परस्त्वं प्रकृतेः परस्त्वं कालाय कालात्प्रकृते नमस्ते ।।३४ ।।

त्वमेव निर्वाणपद प्रदोसि त्वमेव निर्वाणमनंतशक्ते ।।

त्वमात्मरूपः परमात्मरूपस्त्वमंतरात्मासि चराचरस्य ।। ३५ ।।

त्वत्तो जगत्त्वं जगदेवसाक्षाज्जगत्त्वदीयं जगदेकबंधो ।।

हर्ताविता त्वं प्रथमो विधाता विधातृविष्ण्वीश नमो नमस्ते ।। ३६ ।।

मृडस्त्वमेव श्रुतिवर्त्मगेषु त्वमेव भीमोऽश्रुतिवर्त्मगेषु ।।

त्वं शंकरः सोमसुभक्तिभाजामुग्रोसि रुद्र त्वमभक्तिभाजाम् ।। ३७ ।।

त्वमेव शूली द्विषतां त्वमेव विनम्रचेतो वचसां शिवोसि ।।

श्रीकंठ एकः स्वपदश्रितानां दुरात्मनां हालहलोग्रकंठः ।। ३८ ।।

नमोस्तु ते शंकर शांतशंभो नमोस्तु ते चंद्रकलावतंस ।।

नमोस्तु तुभ्यं फणिभूषणाय पिनाकपाणेऽधकवैरिणे नमः ।। ३९ ।।
स एव धन्यस्तव भक्तिभाग्यस्तवार्चको यः सुकृती स एव ।।
तवस्तुतिं यः कुरुते सदैव स स्तूयते दुश्च्यवनादि देवैः ।। 4.2.78.४० ।।
कस्त्वामिह स्तोतुमनंतशक्ते शक्नोति मादृग्लघुबुद्धिवैभवः ।।
प्राचां न वाचामिहगोचरो यः स्तुतिस्त्वयीयं नतिरेव यावत् ।। ४१ ।।
स्कंद उवाच।। ।।
उदीर्य सूर्यस्य सुतोतिभक्त्या नमः शिवायेति समुच्चरन्सः ।।
इलामिलन्मौलिरतीव हृष्टः सहस्रकृत्वः प्रणनाम शंभुम् ।।४२।।
ततः शिवस्तं तपसातिखिन्नं निवार्य ताभ्यः प्रणतिभ्य ईश्वरः ।।
वरान्ददौ सप्ततुरंगसूनवे त्वं धर्मराजो भव नामतोपि ।। ४३ ।।
त्वमेव धर्माधिकृतौ समस्त शरीरिणां स्थावरजंगमानाम् ।।
मया नियुक्तोद्य दिनादिकृत्यः प्रशाधि सर्वान्मम शासनेन ।।४४।।
त्वं दक्षिणायाश्च दिशोधिनाथस्त्वं कर्मसाक्षी भव सर्वजंतोः ।।
त्वद्दर्शिताध्वान इतो व्रजंतु स्वकर्मयोग्यां गतिमुत्तमाधमाः ।। ४५ ।।
त्वया यदेतन्ममभक्तिभाजा लिंगं समाराधितमत्र धर्म ।।
तद्दर्शनात्स्पर्शनतोऽर्चनाच्च सिद्धिर्भविष्यत्यचिरेण पुंसाम्।। ४६ ।।
धर्मेश्वरं यः सकृदेव मर्त्यो विलोकयिष्यत्यवदातबुद्धिः ।।
स्नात्वा पुरस्तेऽत्र च धर्मतीर्थे न तस्य दूरे पुरुषार्थसिद्धिः ।। ४७ ।।
कृत्वाप्यघानामिह यः सहस्रं धर्मेश्वरं पश्यति दैवयोगात्।।
सहेतनो जातु स नारकीं व्यथां कथां तदीयां दिविकुर्वतेमराः ।। ४८ ।।
यो धर्मपीठं प्रतिलभ्य काश्यां स्वश्रेयसे नो यततेऽत्र मर्त्यः ।।
कथं स धर्मत्वमिवातितेजाः करिष्यति स्वं कृतकृत्यमेव ।।
त्वया यथाप्ता इह धर्मराज मनोरथास्ते गुरुभिस्तपोभिः ।।
तथैव धर्मेश्वरभक्तिभाजां कामाः फलिष्यंति न संशयोत्र ।। 4.2.78.५० ।।
कृत्वाप्यघान्येव महांत्यपीह धर्मेश्वरार्चां सकृदेव कुर्वन् ।।
कुतो बिभेति प्रियबंधुरेव तव त्वदीयार्चित लिंगभक्तः ।। ५१ ।।
पत्रेण पुष्पेण जलेन दूर्वया यो धर्मधर्मेश्वरमर्चयिष्यति ।।
समर्चयिष्यंत्यमृतांधसस्तं मंदारमालाभिरतिप्रहृष्टाः ।। ५२ ।।

त्वत्तो विभेष्यंति कृतैनसो ये भयं न तेषां भविता कदाचित् ।।
धर्मेश्वरार्चा रचनां करिष्यतां हरिष्यतां बंधुतयामनस्ते ।। ५३ ।।
यदत्र दास्यंति हि धर्मपीठे नरा द्युनद्यां कृतमज्जनाश्च ।।
तदक्षयं भावि युगांतरेपि कृतप्रणामास्तव धर्मलिंगे ।। ५४ ।।
ये कार्तिके मासि सिताष्टमी तिथौ यात्रां करिष्यंति नरा उपोषिताः ।।
रात्रौ च वै जागरणं महोत्सवैर्धर्मेश्वरे तेन पुनर्भवा भुवि ।। ५५ ।।
स्तुतिं च ये वै त्वदुदीरितामिमां नराः पठिष्यंति तवाग्रतः क्वचित् ।।
निरेनसस्ते मम लोकगामिनः प्राप्स्यंति ते वैभवतः सखित्वम् ।। ५६ ।।
पुनर्वरं ब्रूहि यथेप्सितं ददे तेजोनिधेर्नंदन धर्मराज ।।
अदेयमत्रास्ति न किंचिदेव ते विधेहि वागुद्यममात्रमेव ।। ५७ ।।
प्रसन्नमूर्तिं स विलोक्य शंकरं कारुण्यपूर्णं स्वमनोरथाभिदम् ।।
आनंदसंदोहसरोनिमग्नो वक्तुं क्षणं नैव शशाक किंचित् ।। ५८ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे धर्मेशमहिमाख्यानं नामाष्टसप्ततितमोऽध्यायः ।। ७८ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०७९

https://sa.wikisource.org/s/fyg

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।।

आनंदबाष्पसलिलरुद्धकंठं विलोक्य तम्।।

मृडः पस्पर्श पाणिभ्यां सौधाभ्यां तु सुधांबुधिः ।। १ ।।

अथ तत्स्पर्शसौख्येन धर्मराजो महातपाः ।।

पुनरंकुरयामास तपोग्नि ज्वलितां तनुम् ।। २ ।।

ततः प्रोवाच स ब्राध्निर्देव देवमुमापतिम् ।।

प्रसन्नवदनं शांतं शांतपारिषदावृतम् ।। ३ ।।

प्रसन्नोसि यदीशान सर्वज्ञ करुणानिधे ।।

किमन्येन वरेणात्र यत्त्वं साक्षात्कृतो मया ।। ४ ।।

यं न वेदा विदुः सम्यङ्न च तौ वेदपूरुषौ ।।

ततोपि वरयोग्योस्मि तन्नाथ प्रार्थयाम्यहम् ।। ५ ।।

श्रीकंठांडज डिंभानाममीषां मधुरब्रुवाम् ।।

मत्तपश्चिरसाक्षीणां मत्पुरः प्राप्तजन्मनाम् ।। ६ ।।

पितृभ्यां परिहीनानामितिहास कथाविदाम् ।।

त्यक्ताहारविहाराणां कीराणां वरदो भव ।।७।।

एतत्प्रसूतिसमये आमयेन प्रपीडिता ।।

शुकी पंचत्वमापन्ना शुकः श्येनेन भक्षितः ।। ८ ।।

रक्षितानामनाथानां सदा मन्मुखदर्शिनाम् ।।

अनाथनाथ भवता ह्यायुःशेषस्वरूपिणा ।। ९ ।।

इति धर्मवचः श्रुत्वा परोपकृतिनिर्मलम् ।।

तानाहूय मुने शंभुर्विनयावनताननान् ।।4.2.79.१ ०।।

उवाच धर्मेति प्रीतः शुकशावानिदं वचः ।।

अयि पत्त्ररथा ब्रूत साधवो धर्मसंगताः ।। ११ ।।

को वरो भवता देयो धर्मेश परिचारिणाम् ।।

साधुसंसर्गसंक्षीण जन्मांतरमहैनसाम् ।। १२ ।।

इति श्रुत्वा महेशस्य वचनं ते पतत्त्रिणः ।।
प्रोचुः प्रणम्य देवेशं नमस्ते भवनाशन ।। १३ ।।
।। पक्षिण ऊचुः ।। ।।
अनाथनाथ सर्वज्ञ को वरो नः समीहितः ।।
इतोपि त्र्यक्ष यत्साक्षात्तिर्यक्त्वेपि समीक्षिताः ।। १४ ।।
लाभाः संतूद्यमवतां गिरीशेह परः शताः ।।
परं परोयं लाभोत्र यत्त्वं दृग्गोचरी भवेः ।। १५ ।।
यदेतद्दृश्यते नाथ तत्सर्वं क्षणभंगुरम् ।।
अभंगुरो भवानेकस्त्वत्सपर्याप्यभंगुरा ।। १६ ।।
विचित्रजन्मकोटीनां स्मृतिर्नोत्र परिस्फुरेत् ।।
एतत्तपस्विरचितलिंगपूजा विलोकनात् ।। १७ ।।
देवयोनिरपि प्राप्ता चिरमस्माभिरीशितः ।।
दिव्यांगना सहस्राणि तत्र भुक्त्वा स्वलीलया।। १८ ।।
आसुरी दानवी नागी नैर्ऋती चापि कैन्नरी ।।
विद्याधरी च गांधर्वी योनिरस्माभिरर्जिता ।। ।। १९ ।।
नरत्वे भूपतित्वं च परिप्राप्तमनेकशः ।।
जले जलचरत्वं च स्थले च स्थलचारिता ।। 4.2.79.२० ।।
वने वनौकसो जाता ग्रामेषु ग्रामवासिनः ।।
दातारो याचितारश्च रक्षितारश्च घातुकाः ।। २१ ।।
सुखिनोपि वयं जाता दुःखिनो वयमास्म च ।।
जेतारश्च वयं जाताः पराजेतार एव च ।। २२ ।।
अधीतिनोपि मूर्खाश्च स्वामिनः सेवका अपि ।।
चतुर्षु भूतग्रामेषु उत्तमाधममध्यमाः ।। २३ ।।
अभूम भूरिशः शंभो न क्वापि स्थैर्यमागताः ।।
इतोयोनेस्ततो योनौ ततो योनेस्ततोन्यतः ।। २४ ।।
पिनाकिन्क्वापि न प्रापि सुखलेशो मनागपि ।।
इदानीं पुण्यसंभारैर्धर्मेश्वरविलोकनात् ।।२५।।
तापनेःसुतपो वह्निज्वालाप्रज्वलितैनसः ।।

संवीक्ष्य त्र्यक्ष साक्षात्त्वां कृतकृत्या बभूविम ।। २६ ।।

तथापि चेद्वरो देयस्तिर्यक्ष्वस्मासु धूर्जटे ।।

कृपणेष्वपि शोच्येषु ज्ञानं सर्वज्ञ देहि तत् ।। २७ ।।

येन ज्ञानेन मुक्ताः स्मोऽमुष्मात्संसारबंधनात् ।।

यंत्रिताः प्राकृतैः पाशैरदुर्भेद्यैश्च मादृशैः ।। २८ ।।

ऐंद्रं पदं न वांछामो न चांद्रं नान्यदेव हि ।।

वाञ्छामः केवलं मृत्युं काश्यां शंभोऽपुनर्भवम् ।। २९ ।।

त्वत्सान्निध्याद्विजानीमः सर्वज्ञ सकलं वयम् ।।

यथा चंदनसंसर्गात्सर्वे सुरभयो द्रुमाः ।। 4.2.79.३० ।।

एतदेव परं ज्ञानं संसारोच्छित्तिकारणम् ।।

वपुर्विसर्जनं काले यत्तवानंदकानने ।। ३१ ।।

निर्मथ्य विष्वग्वाग्जालं सारभूतमिदं परम् ।।

ब्रह्मणोदीरितं पूर्वं काश्यां मुक्तिस्तनुत्यजाम् ।।३२।।

यद्वाच्यं बहुभिर्ग्रंथैस्तदष्टाभिरिहाक्षरैः ।।

हरिणोक्तं रविपुरः कैवल्यं काशिसंस्थितौ ।। ३३ ।।

याज्ञवल्क्यो मुनिवरः प्रोक्तवान्मुनिसंसदि ।।

रवेरधीत्य निगमान्काश्यामंते परं पदम् ।। ३४ ।।

स्वामिनापि जगद्धात्री पुरतो मंदराचले ।।

इदमेव पुरा प्रोक्तं काशीनिर्वाणजन्मभूः ।। ३५ ।।

कृष्णद्वैपायनोप्येवं शंभो वक्ष्यति नान्यथा।।

यत्रविश्वेश्वरः साक्षान्मुक्तिस्तत्र पदेपदे ।।३६।।

वदंत्यन्येपि मुनयस्तीर्थसंन्यासकारिणः।।

चिरंतना लोमशाद्याः काशिका मुक्तिकाशिका ।। ३७ ।।

वयमप्येवं जानीमो यत्र स्वर्गतरंगिणी।।

आनंदकानने शंर्भोमोक्षस्तत्रैव निश्चितम् ।। ३८ ।।

भूतं भावि भविष्यं यत्स्वर्गे मर्त्ये रसातले ।।

तत्सर्वमेव जानीमो धर्मेशानुग्रहात्परात् ।।३९।।

अतो हिरण्यगर्भोक्तं हरिप्रोक्तं मुनीरितम् ।।

भवतोक्तं च निखिलं शंभो जानीमहे वयम्।।4.2.79.४०।।

करामलकवत्सर्वमेतद्ब्रह्मांडगोलकम् ।।

अस्मद्वाग्गोचरेऽस्त्येव धर्मपीठनिषेवणात् ।। ४१ ।।

धर्मराजस्य तपसा तिर्यञ्चोपि वयं विभो ।।

जाताः स्म निर्विकल्पं हि सर्वज्ञानस्य भाजनम् ।। ४२ ।।

मधुरं मृदुलं सत्यं स्वप्रमाणं सुसंस्कृतम् ।।

हितं मितं सदृष्टांतं श्रुत्वा पक्षिसुभाषितम् ।। ४३ ।।

देवोतिविस्मयापन्नो ऽवर्णयत्पीठगौरवम् ।।

त्रैलोक्यनगरे चात्र काशीराजगृहं मम ।। ४४ ।।

तत्रापि भोगभवनमनर्घ्यमणिनिर्मितम् ।।

मोक्षलक्ष्मीविलासाख्यः प्रासादो मेति शर्मभूः ।। ४५ ।।

पतत्त्रिणो पिमुच्यंते यं कुर्वाणाः प्रदक्षिणम् ।।

स्वेच्छया विचरंतः खे खेचरा अपि देवताः ।।४६।।

मोक्षलक्ष्मीविलासाख्य प्रासादस्य विलोकनात् ।।

शरीराद्दूरतो याति ब्रह्महत्यापि नान्यथा ।। ४७ ।।

मोक्षलक्ष्मीविलासस्य कलशो यैर्निरीक्षतः ।।

निधानकलशास्तांस्तु न मुंचंति पदेपदे ।। ४८ ।।

दूरतोपि पताकापि मम प्रासादमूर्धगा ।।

नेत्रातिथी कृता यैस्तु नित्यं तेऽतिथयो मम ।। ४९ ।।

भूमिं भित्त्वा स्वयं जातस्तत्प्रासादमिषेण हि ।।

आनंदाख्यस्य कंदस्य कोप्येष परमोंकुरः ।।4.2.79.५०।।

ब्रह्मादिस्थावरांतानि यत्र रूपण्यनेकशः ।।

मामेवोपासते नित्यं चित्रं चित्रगतान्यपि ।।५१।।

ससौधो मेखिले लोके स्थानं परमनिर्वृतेः ।।

रतिशाला स मे रम्या स मे विश्वासभूमिका ।।५२।।

मम सर्वगतस्यापि प्रासादोयं परास्पदम् ।।

परं ब्रह्म यदाम्नातं परमोपनिषद्गिरा ।।

अमूर्तं तदहं मूर्तो भूयां भक्तकृपावशात् ।। ५३ ।।

नैःश्रेयस्याः श्रियो धाम तद्याम्यां मंडपोस्ति मे ।।

तत्राहं सततं तिष्ठे तत्सदोमंडपं मम ।। ५४ ।।

निमेषार्धप्रमाणं च कालं तिष्ठति निश्चलः ।।

तत्र यस्तेन वै योगः समभ्यस्तः समाः शतम् ।। ५५ ।।

निर्वाणमंडपं नाम तत्स्थानं जगतीतले ।।

तत्रर्चं संजपन्नेकां लभेत्सर्वश्रुतेः फलम् ।। ।। ५६ ।।

प्राणायामं तु यः कुर्यादप्येकं मुक्तिमंडपे ।।

तेनाष्टांगः समभ्यस्तो योगोऽन्यत्रायुतं समाः ।। ५७ ।।

निर्वाणमंडपे यस्तु जपेदेकं षडक्षरम् ।।

कोटिरुद्रेण जप्तेन यत्फलं तस्य तद्भवेत् ।।५८।।

शुचिर्गंगांभसि स्नातो यो जपेच्छतरुद्रियम् ।।

निर्वाणमंडपे ज्ञेयः स रुद्रो द्विजवेषभृत् ।। ५९ ।।

ब्रह्मयज्ञसकृत्कृत्वा मम दक्षिणमंडपे ।।

ब्रह्मलोकमवाप्याथ परं ब्रह्माधिगच्छति ।। 4.2.79.६० ।।

धर्मशास्त्रं पुराणानि सेतिहासानि तत्र यः ।।

पठेन्निरभिलाषुः सन्स वसेन्मम वेश्मनि ।। ६१ ।।

तिष्ठेदिंद्रियचापल्यं यो निवार्य क्षणं कृती ।।

निर्वाणमंडपेन्यत्र तेन तप्तं महत्तपः ।। ६२ ।।

वायुभक्षणतोन्यत्र यत्पुण्यं शरदां शतम् ।।

तत्पुण्यं घटिकार्धेन मौनं दक्षिणमंडपे ।। ६३ ।।

मितं कृष्णलकेनापि योदद्यान्मुक्तिमंडपे ।।

स्वर्णं सौवर्णयानेन स तु संचरते दिवि ।। ६४ ।।

तत्रैकं जागरं कुर्याद्यस्मिन्कस्मिन्दिनेपि यः ।।

उपोषितोर्चयेल्लिंगं स सर्वव्रतपुण्यभाक् ।। ६५ ।।

तत्र दत्त्वा महादानं तत्र कृत्वा महाव्रतम् ।।

तत्राधीत्याखिलं वेदं च्यवते न नरो दिवः ।। ६६ ।।

प्रयाणं कुर्वते यस्य प्राणा मे मुक्तिमंडपे ।।

समामनुप्रविष्टोत्र तिष्ठेद्यावदहं खलु ।। ६७ ।।

जलक्रीडां सदा कुर्यां ज्ञानवाप्यां सहोमया ।।
यदंबुपानमात्रेण ज्ञानं जायेत निमर्लम् ।। ६८ ।।
तज्जलक्रीडनस्थानं मम प्रीतिकरं महत् ।।
अमुष्मिन्राजसदने जाड्यहृज्जलपूरितम् ।। ६९ ।।
तत्प्रासादपुरोभागे मम शृंगारमंडपः ।। श्री
पीठं तद्धि विज्ञेयं निःश्रीकश्रीसमर्पणम् ।।4.2.79.७०।।
मदर्थं तत्र यो दद्याद्दुकूलानि शुचीन्यहो ।।
माल्यानि सुविचित्राणि यक्षकर्दमवंति च ।। ७१ ।।
नाना नेपथ्यवस्तूनि पूजोपकरणाऽन्यपि ।।
स श्रियालंकृतस्तिष्ठेद्यत्र कुत्रापि सत्तमः ।।७२।।
निर्वाणलक्ष्मीर्वृणुते तं निर्वाणपदाप्तये ।।
यत्र कुत्रापि निधनं प्राप्नुयादपि स ध्रुवम् ।। ७३ ।।
मोक्षलक्ष्मीविलासाख्य प्रासादस्योत्तरे मम ।।
ऐश्वर्यमडपं रम्यं तत्रैश्वर्यं ददाम्यहम् ।। ७४ ।।
मत्प्रासादैंद्रदिग्भागे ज्ञानमंडपमस्ति यत् ।।
ज्ञानं दिशामि सततं तत्र मां ध्यायतां सताम् ।। ७५ ।।
भवानि राजसदने ममास्ति हि महानसम् ।।
यत्तत्रोपहृतं पुण्यं निर्विशामि मुदैव तत् ।। ७६ ।।
विशालाक्ष्या महासौधे मम विश्रामभूमिका ।।
तत्र संसृतिखिन्नानां विश्रामं श्राणयाम्यहम् ।। ।। ७७ ।।
नियमस्नानतीर्थं च चक्रपुष्करिणी मम ।।
तत्र स्नानवतां पुंसां तन्नैर्मल्यं दिशाम्यहम् ।। ७८ ।।
यदाहुः परमं तत्त्वं यदाहुर्ब्रह्मसत्तमम् ।।
स्वसंवेद्यं यदाहुश्च तत्तत्रांते दिशाम्यहम् ।।७९।।
यदाहुस्तारकं ज्ञानं यदाहुरतिनिर्मलम् ।।
स्वात्मारामं यदाहुश्च तत्तत्रांते दिशाम्यहम् ।। 4.2.79.८० ।।
जगन्मंगलभूर्यात्र परमा मणिकर्णिका ।।
विपाशयामि तत्राहं कर्मभिः पाशितान्पशून् ।। ८१ ।।

निर्वाणश्राणने यत्र पात्रापात्रं न चिंतये ।।
आनंदकानने तन्मे दानस्थानं दिवानिशम् ।। ८२ ।।
भवांबुधौ महागाधे प्राणिनः परिमज्जतः ।।
भूत्वैव कर्णधारोंते यत्र संतारयाम्यहम् ।। ८३ ।।
सौभाग्यभाग्यभूर्या वै विख्याता मणिकर्णिका ।।
ददामि तस्यां सर्वस्वमग्रजायांत्यजाय वा ।।८४।।
महासमाधिसंपन्नैर्वेदांतार्थ निषेविभिः ।।
दुष्प्रापोन्यत्र यो मोक्षः शोच्यैरपि स लभ्यते ।। ८५ ।।
दीक्षितो वा दिवाकीर्तिः पंडितो वाप्यपंडितः ।।
तुल्यो मे मोक्षदीक्षायां संप्राप्य मणिकर्णिकाम् ।। ८६ ।।
यत्त्यागेन्यत्र कृपणस्तत्प्राप्य मणिकर्णिकाम् ।।
ददामि जंतुमात्राय सर्वस्वं चिरसंचितम् ।। ८७ ।।
यदि दैवादिह प्राप्तस्त्रिसंयोगोऽतिदुर्घटः ।।
अविचारं तदा देयं सर्वस्वं चिरसंचितम् ।। ८८ ।।
शरीरमथ संपत्तिरथ सा मणिकर्णिका ।।
त्रिसंयोगोयमप्राप्यो देवैरिंद्रादिकैरपि ।। ८९ ।।
पुनः पुनर्विचार्येति जंतुमात्रेभ्य एव च ।।
निर्वाणलक्ष्मीं यच्छामि सदोपमणिकर्णिकम् ।। 4.2.79.९० ।।
मुक्तिदा न मही सा मे वाराणस्यां महीयसी ।।
तन्मही रजसा साम्यं त्रिलोक्यपि न चोद्वहेत् ।। ९१ ।।
परं लिंगार्चनस्थानमविमुक्तेश्वरेश्वरम् ।।
तत्र पूजां सकृत्कृत्वा कृतकृत्यो नरो भवेत् ।। ९२ ।।
सायं पाशुपतीं संध्यां कुर्यां पशुपतीश्वरे ।।
विभूतिधारणात्तत्र पशुपाशैर्न बध्यते ।। ९३ ।।
प्रातःसध्याकरोम्येव सदोंकारनिकेतने ।।
तत्रैकापि कृता संध्या सर्वपातककृंतनी ।। ९४ ।।
वसामि कृत्तिवासेहं सदा प्रति चतुर्दशि ।।
अत्र जागरणं कृत्वा चतुर्दश्यां न गर्भभाक् ।। ९९ ।।

रत्नेश्वरोर्चितो दद्यान्महारत्नानि भक्तितः ।।

रत्नैः समर्च्य तल्लिंगं स्त्रीरत्नादि लभेन्नरः ।। ९६ ।।

विष्टपत्रितयांतःस्थोप्यहं लिंगे त्रिविष्टपे ।।

तिष्ठामि सततं भक्तमनोरथसमृद्धये ।। ९७ ।।

विरजस्कं महापीठं तत्र संसेव्य मानवः ।।

विरजा जायते नूनं चतुर्नद कृतोदकः ।। ९८ ।।

महादेवे महापीठं मम साधकसिद्धिदम् ।।

तत्पीठदर्शनादेव महापापैः प्रमुच्यते ।। ९९ ।।

पितृप्रीतिप्रदं पीठं वृषभध्वजसंज्ञकम् ।।

पितृतर्पणकृत्तत्र पितॄंस्तारयति क्षणात् ।। 4.2.79.१०० ।।

आदिकेशवपीठेहमादिकेशवरूपधृक् ।।

श्वेतद्वीपं नये भक्तान्वैष्णवानतिवल्लभान् ।। १ ।।

तत्रैव मंगलापीठे सर्वमंगलदायिनि ।।

उप पंचनदे तीर्थे भक्तान्संतारयाम्यहम् ।। २ ।।

बिंदुमाधवरूपेण यत्राहं वैष्णवाञ्जनान् ।।

नये पंचनदस्नातांस्तद्विष्णोः परमं पदम् ।। ३ ।।

पंचमुद्रे महापीठे ये वीरेश्वरसेवकाः ।।

तेषां परमनिर्वाणं कालेनाल्पेन जायते ।।।। ४ ।।

तत्र सिद्धेश्वरीपीठे चंद्रेश्वर समीपतः ।।

तत्र संनिधिकर्तॄणां सिद्धिः षण्मासतो भवेत् ।। ५ ।।

काश्यां च योगिनीपीठे योगसिद्धिविधायिनि ।।

सिद्धीरुच्चाटनाद्याश्च कैर्न लब्धाः सुसाधकैः ।। ६ ।।

अनेकानीह पीठानि संति काश्यां पदेपदे ।।

परं धर्मेशपीठस्य काचिच्छक्तिरनुत्तमा ।। ७ ।।

यत्रामी बालकीराश्च निर्मलज्ञानभाजनम् ।।

आसुः सदुपदेशान्मे त्रातत्रातेति भाषिणः ।। ८ ।।

एतद्धर्मेश्वरं पीठं त्यजाम्यद्यदिनावधि ।।

न कदाचित्तरणिजत्वत्तपोवनमुत्तमम् ।। ९ ।।

ममानुग्रहतः कीरानेतान्पश्य रवेः सुत ।।
दिव्यविमानमारुह्य गंतारो मत्पुरं महत् ।। 4.2.79.११० ।।
तत्र भुक्त्वा चिरं भोगाञ्ज्ञानं प्राप्य मयेरितम् ।।
इह मुक्तिमवाप्स्यंति त्वत्संसर्गातिनिर्मलाः ।। ११ ।।
इत्युक्तवति देवेशे कैलासशिखरोपमम् ।।
दिव्यं विमानमापन्नं रुद्रकन्यापरिष्कृतम् ।। १२ ।।
आरुह्यते न यानेन दिव्यरूपवराः खगाः ।।
कैलासमभिसंजग्मुर्धर्ममापृच्छ्यतेऽमलाः ।।११३।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे धर्मेशाख्याननामैकोनाशीतितमोऽध्यायः ।। ७९ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८०

https://sa.wikisource.org/s/fyh
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

कुंभोद्भूत तदाश्चर्यं विलोक्य जगदंबिका ।।

उवाच शंभुं प्रणता प्रणतार्तिहरं परम् ।।१।।

।। अंबिकोवाच।। ।।

अस्य पीठस्य माहात्म्यं महादेव महेश्वर ।।

तिरश्चामपि यज्जातं ज्ञानं संसारमोचनम् ।। २ ।।

अतः प्रभावं विज्ञाय धर्मपीठस्य धूर्जटे ।।

धर्मेश्वरसमीपेहं स्थास्याम्यद्य दिनावधि ।। ३ ।।

अत्र लिंगे तु ये भक्ताः स्त्रियो वा पुरुषास्तु वा ।।

तेषामभीष्टां संसिद्धिं साधयिष्याम्यहं सदा ।। ४ ।।

।। ईश्वर उवाच ।। ।।

साधुकृतं त्वया देवि कृतवत्या परिग्रहम् ।।

अस्येह धर्मपीठस्य मनोरथकृतः सताम् ।। ५ ।।

त एव विश्वभोक्तारो विश्वमान्यास्त एव हि ।।

ये त्वां विश्वभुजामत्र पूजयिष्यंति मानवाः ।। ६ ।।

विश्वे विश्वभुजे विश्वस्थित्युत्पत्तिलयप्रदे ।।

नरास्त्वदर्चकाश्चात्र भविष्यंत्यमलात्मकाः ।।७।।

मनोरथतृतीयायां यस्ते भक्तिं विधास्यति ।।

तन्मनोरथसंसिद्धिर्भवित्री मदनुग्रहात् ।। ८ ।।

नारी वा पुरुषो वाथ त्वद्व्रताचरणात्प्रिये ।।

मनोरथानिह प्राप्य ज्ञानमंते च लप्स्यते ।। ९ ।।

।। देव्युवाच ।। ।।

मनोरथतृतीयायां व्रतं कीदृक्कथा कथम् ।।

किं फलं कैः कृतं नाथ कथयैतत्कृपां कुरु ।। 4.2.80.१० ।।

।। ईश्वर उवाच ।। ।।

शृणु देवि यथा पृष्टं भवत्या भवतारिणि ।।

मनोरथव्रतं चैतद्गुह्याद्गुह्यतरं परम् ।। ११ ।।

पुलोमतनया पूर्वं तताप परमं तपः ।।

किंचिन्मनोरथं प्राप्तुं न चाप तपसः फलम् ।। १२ ।।

अपूपुजत्ततो मां सा भक्त्या परमया मुदा ।।

गीतेन सरहस्येन कलकंठीकलेन हि ।। १३ ।।

तद्गानेनातिसंतुष्टो मृदुना मधुरेण च ।।

सुतालेन सुरंगेण धातुमात्राकलावता ।। १४ ।।

प्रोवाच तां वरं ब्रूहि प्रसन्नोस्मि पुलोमजे ।।

अनेन च सुगीतेन त्वनया लिंगपूजया ।। १५ ।।

।।पुलोमजोवाच ।। ।।

यदि प्रसन्नो देवेश तदा यो मे मनोरथः ।।

तं पूरय महादेव महादेवी महाप्रिय ।। १६ ।।

सर्वदेवेषु यो मान्यः सर्वदेवेषु सुंदरः ।।

यायजूकेषु सर्वेषु यः श्रेष्ठः सोस्तु मे पतिः ।। १७ ।।

यथाभिलषितं रूपं यथाभिलषितं सुखम् ।।

यथाभिलषितं चायुः प्रसन्नो देहि मे भव ।। १८ ।।

यदायदा च पत्या मे संगः स्याद्धृत्सुखेच्छया ।।

तदातदा च तं देहं त्यक्त्वान्यं देहमाप्नुयाम्।। ।। १९ ।।

सदा च लिंगपूजायां मम भक्तिरनुत्तमा ।।

भव भूयाद्भवहर जरामरणहारिणी ।। 4.2.80.२० ।।

भर्तुर्व्ययेपि वैधव्यं क्षणमात्रमपीह न ।।

मम भावि महादेव पातिव्रत्यं च यातु मा ।। २१ ।।

।। स्कंद उवाच ।। ।।

इमं मनोरथं तस्याः पौलोम्याः पुरसूदनः ।।

समाकर्ण्य क्षणं स्मित्वा प्राहेशो विस्मयान्वितः ।। २६ ।।

ईश्वर उवाच ।। ।।

पुलोमकन्ये यश्चैष त्वयाकारि मनोरथः ।।

लप्स्यसे व्रतचर्यातस्तत्कुरुष्व जितेंद्रिये ।। २३ ।।

मनोरथतृतीयायाश्चरणेन भविष्यति ।।

तत्प्राप्तये व्रतं वक्ष्ये तद्विधेहि यथोदितम्।। २४ ।।

तेन व्रतेन चीर्णेन महासौभाग्यदेन तु ।।

अवश्यं भविता बाले तव चैवं मनोरथः ।। २५ ।।

।। पुलोमकन्यावोच ।। ।।

कारुण्यवारिधे शंभो प्रणतप्राणि सर्वद ।।

किमात्मिकाथ का शक्तिः का पूज्या तत्र देवता ।। २६ ।।

कदा च तद्विधातव्यमिति कर्तव्यता च का ।।

इत्याकर्ण्य शिवो वाक्यं तां तु प्रणिजगाद ह ।। २७।।

।। ईश्वर उवाच ।। ।।

मनोरथतृतीयायां व्रतं पौलोमि तच्छुभम्।।

पूज्या विश्वभुजा गौरी भुजविंशतिशालिनी ।। २८ ।।

वरदोऽभयहस्तश्च साक्षसूत्रः समोदकः ।।

देव्याः पुरस्ताद्व्रतिना पूज्य आशाविनायकः।।२९।।

चैत्रशुक्ल तृतीयायां कृत्वा वै दंतधावनम् ।।

सायंतनीं च निर्वर्त्य नातितृप्त्या भुजिक्रियाम् ।।4.2.80.३०।।

नियमं चेति गृह्णीयाज्जितक्रोधो जितेंद्रियः ।।

संत्यक्तास्पृश्य संस्पर्शः शुचिस्तद्गतमानसः ।। ३१ ।।

प्रातर्व्रतं चरिष्यामि मातर्विश्वभुजेनघे ।।

विधेहि तत्र सांनिध्यं मन्मनोरथसिद्धये ।। ३२ ।।

नियमं चेति संगृह्य स्वपेद्रात्रौ शुभं स्मरन्।।

प्रातरुत्थाय मेधावी विधायावश्यकं विधिम् ।। ३३ ।।

शौचमाचमनं कृत्वा दंतकाष्ठं समाददेत् ।।

अशोकवृक्षस्य शुभं सर्वशोकनिशातनम् ।।३४।।

नित्यंतनं च निष्पाद्य विधिं विधिविदांवरः ।।

स्नात्वा शुद्धांबरः सायं गौरीपूजां समाचरेत् ।। ३५ ।।

आदौ विनायकं पूज्य घृतपूरान्निवेद्य च ।।

ततोर्चयेद्विश्वभुजामशोककुसुमैः शुभैः ।। ३६ ।।

अशोकवर्तिनैवेद्यैर्धूपैश्चागुरुसंभवैः ।।

कुंकुमेनानुलिप्यादावेकभक्तं ततश्चरेत् ।। ३७ ।।

अशोकवर्तिसहितैर्घृतपूरैर्मनोहरैः ।।

एवं चैत्रतृतीयायां व्यतीतायां पुलोमजे ।।३८।।

राधादिफाल्गुनांतासु तृतीयासु व्रतं चरेत् ।।

क्रमेण दंतकाष्ठानि कथयामि तवानघे ।।३९।।

अनुलेपनवस्तूनि कुसुमानि तथैव च ।।

नैवेद्यानि गजास्यस्य देव्याश्चापि शुभव्रते ।। 4.2.80.४० ।।

अन्नानि चैकभक्तस्य शृणुतानि फलाप्तये ।।

जंब्वपामार्ग खदिर जाती चूतकदंबकम्।।४१।।

प्लक्षोदुंबरखर्जूरी बीजपूरी सदाडिमी ।।

दंतकाष्ठ द्रुमा एते व्रतिनः समुदाहृताः ।।४२।।

सिंदूरागुरु कस्तूरी चंदनं रक्तचंदनम् ।।

गोरोचना देवदारु पद्माक्षं च निशाद्वयम् ।।४३।।

प्रीत्यानुलेपनं बाले यक्षकर्दमसंभवम् ।। सर्वेषामप्यलाभे च प्रशस्तो यक्षकर्दमः ।।४४।।

कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुंकुमस्य च ।।

चंदनस्य त्रयो भागाः शशिनस्त्वेक एव हि ।। ४५ ।।

यक्षकर्दम इत्येष समस्तसुरवल्लभः ।।

अनुलिप्याथ कुसुमैरर्चयेद्वच्मि तान्यपि ।। ४६ ।।

पाटला मल्लिका पद्म केतकी करवीरकः ।।

उत्पलै राजचंपैश्च नंद्यावर्तैश्च जातिभिः ।। ४७ ।।

कुमारीभिः कर्णिकारैरलाभेतच्छदैः सह ।।

सुगंधिभिः प्रसूनोघैः सर्वालाभेपि पूजयेत् ।। ४८ ।।

करंभो दधिभक्तं च सचूतरसमंडकाः ।।

फेणिका वटकाश्चैव पायसं च सशर्करम् ।। ४९ ।।

समुद्गं सघृतं भक्तं कार्त्तिके विनिवेदयेत् ।।

इंडेरिकाश्च लड्डूका माघे लंपसिका शुभा ।। 4.2.80.५० ।।

मुष्टिकाः शर्करागर्भाः सर्पिषा परिसाधिताः ।।

निवेद्याः फाल्गुने देव्यै सार्धं विघ्नजिता मुदा ।। ५१ ।।

निवेदयेद्यदन्नं हि एकभक्तपि तत्स्मृतम् ।।

अन्यन्निवेद्य संमूढो भुंजानोऽन्यत्पतेदधः ।। ५२ ।।

प्रतिमासं तृतीयायामेवमाराध्य वत्सरम् ।।

व्रतसंपूर्तये कुर्यात्स्थंडिलेऽग्निसमर्चनम् ।। ५३ ।।

जातवेदसमंत्रेण तिलाज्यद्रविणेन च ।।

शतमष्टाधिकं होमं कारयेद्विधिना व्रती ।।५४।।

सदैव नक्ते पूजोक्ता सदा नक्ते तु भोजनम् ।।

नक्त एव हि होमोऽयं नक्त एव क्षमापनम् ।। ५५ ।।

गृहाण पूजां मे भक्त्या मातर्विघ्नजिता सह ।।

नमोस्तु ते विश्वभुजे पूरयाशु मनोरथम् ।। ५६ ।।

नमो विघ्नकृते तुभ्यं नम आशाविनायक ।।

त्वं विश्वभुजया सार्धं मम देहि मनोरथम् ।।५७।।

एतौ मंत्रौ समुच्चार्य पूज्या गौरीविनायकौ ।।

व्रतक्षमापने देयः पर्यंकस्तूलिकान्वितः ।। ५८ ।।

उपधान्या समायुक्तो दीपीदपर्णसंयुतः ।।

आचार्यं च सपत्नीकं पर्यंक उपवेश्य च ।। ५९ ।।

व्रती समर्चयेद्वस्त्रैः करकर्णविभूषणैः ।।

सुगंधचंदनैर्माल्यैर्दक्षिणाभिर्मुदान्वितः ।। 4.2.80.६० ।।

दद्यात्पयस्विनीं गां च व्रतस्यपरिपूर्तये ।।

तथोपभोगवस्तूनिच्छत्रोपानत्कमंडलुम् ।। ६१ ।।

मनोरथतृतीयाया व्रतमेतन्मया कृतम् ।।

न्यूनातिरिक्तं संपूर्णमेतदस्तु भवद्गिरा ।।६२।।

इत्याचार्यं समापृच्छ्य तथेत्युक्तश्च तेन वै ।।

आसीमांतमनुव्रज्य दत्त्वान्येभ्योपि शक्तितः ।। ६३ ।।

नक्तं समाचरेत्पोष्यैः सार्धं सुप्रीतमानसः ।।

प्रातश्चतुर्थ्यां संभोज्य चतुरश्च कुमारकान् ।। ६४ ।।

अभ्यर्च्य गंधमाल्याद्यैर्द्वादशापि कुमारिकाः ।।

एवं संपूर्णतां याति व्रतमेतत्सुनिर्मलम् ।।६५।।

कार्यं मनोरथावास्त्यै सर्वैरेतद्व्रतं शुभम् ।।

पत्नीं मनोरमां कुल्यां मनोवृत्त्यनुसारिणीम् ।।६६।।

तारिणीं दुःखसंसारसागरस्य पतिव्रताम् ।।

कुर्वन्नेतद्व्रतं वर्षं कुमारः प्राप्नुयात्स्फुटम् ।। ६७ ।।

कुमारी पतिमाप्नोति स्वाढ्यं सर्वगुणाधिकम् ।।

सुवासिनी लभेत्पुत्रान्पत्युः सौख्यमखंडितम् ।। ६८ ।।

दुर्भगा सुभगास्याच्च धनाढ्या स्याद्दरिद्रिणी ।।

विधवापि न वैधव्यं पुनराप्नोति कुत्रचित् ।। ६९ ।।

गुर्विणी च शुभं पुत्रं लभते सुचिरायुषम् ।।

ब्राह्मणो लभते विद्यां सर्वसौभाग्यदायिनीम् ।। 4.2.80.७० ।।

राज्यभ्रष्टो लभेद्राज्यं वैश्यो लाभं च विंदति ।।

चिंतितं लभते शूद्रो व्रतस्यास्य निषेवणात् ।। ७ ।।।

धर्मार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात् ।।

कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ।। ७२ ।।

यो यो मनोरथो यस्य स तं तं विंदते ध्रुवम् ।।

मनोरथतृतीयाया व्रतस्य चरणाद्व्रती ।। ७३ ।।

।। स्कंद उवाच ।। ।।

इत्थं निशम्य शिवतः शिवा संतुष्टमानसा ।।

पुनः पप्रच्छ विश्वेशं प्रबद्धकरसंपुटा ।। ७४ ।।

अन्यत्र ये व्रतं चैतत्करिष्यंति सदाशिव ।।

ते कथं पूजयिष्यंति मां च आशाविनायकम् ।। ७५ ।। ।।

शिव उवाच ।। ।।

साधु पृष्टं त्वया देवि सर्वसंदेहभेदिनि ।।

वाराणस्यां समर्च्या त्वं विश्वे प्रत्यक्षरूपिणी ।।७६।।

आशा विघ्नजिता सार्धं सर्वाशापूर्तिकारिणा ।।

हारिणानंतविघ्नानां मम क्षेत्र शुभार्थिना ।। ७७ ।।

क्षिप्रमागमयित्वा च नत्वा दूरंगतानपि ।।

कृतकृत्यान्विधायाथ चिंतितैः समनोरथैः ।। ७८ ।।

अन्यत्र व्रतिभिर्विश्वे कांचनीप्रतिमा तव ।।

पंचकृष्णलकादूर्ध्वं कार्या विघ्नहृतोपि च ।। ७९ ।।

आचार्याय व्रती दद्याद् व्रतांते प्रतिमा द्वयम् ।।

सकृत्कृते व्रती चास्मिन्कृतकृत्यो व्रती भवेत् ।। 4.2.80.८० ।।

ततः पुलोमजा देवि श्रुत्वैतद्व्रतमुत्तमम् ।।

कृत्वा मनोरथं प्राप यथाभिवांछितं हृदि ।।८१।।

अरुंधत्या वसिष्ठोपि लब्धोऽत्रिऽनसूयया ।।

सुनीत्योत्तानपादाच्च ध्रुवः प्राप्तोंऽगजोत्तमः ।। ८२ ।।

सुनीतेदुर्भगत्वं च पुनरस्माद्व्रताद्गतम् ।।

चतुर्भुजः पतिः प्राप्तः क्षीरनीरधिजन्मना ।। ८३ ।।

किं बहूक्तेन सुश्रोणि कृतंयेन व्रतं त्विदम् ।।

व्रतानि तेन सर्वाणि कृतानि व्रतिना ध्रुवम् ।। ८४ ।।

श्रुत्वा धीमान्कथां पुण्यां पुनस्तद्व्रतमानसः ।।

शुभबुद्धिमवाप्नोति पापैरपि विमुच्यते ।। ८५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्धे धर्मेश्वराख्याने विश्वभुजाशाविनायकप्रशंसने मनोरथतृतीयाव्रताख्यानं नामाशीतितमोध्यायः ।। ८० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८१

https://sa.wikisource.org/s/fvr

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्त्य उवाच ।। ।।

धर्मतीर्थस्य माहात्म्यं कीदृग्देवेन शंभुना ।।

स्कंद देव्यै समाख्यातं तदाख्याहि कृपां कुरु ।। १ ।।

।। स्कंद उवाच ।। ।।

विंध्योन्नतिहृदाख्यामि धर्मतीर्थसमुद्भवम् ।।

आकर्णय महाप्राज्ञ यथा देवेन भाषितम् ।। २ ।।

वृत्रं निहत्य वृत्रारिर्ब्रह्महत्यामवाप्तवान् ।।

अनुतप्तोथ पप्रच्छ प्रायश्चित्तं पुरोहितम् ।। ३ ।।

।। बृहस्पतिरुवाच ।। ।।

यदि त्वं देवराजेमां ब्रह्महत्यां सुदुस्त्यजाम् ।।

अपानुनुत्सुस्तद्याहि काशीं विश्वेशपालिताम् ।। ४ ।।

नान्यत्किंचित्क्वचिद्दृष्टं ब्रह्महत्यामहौषधम् ।।

राजधानीं परित्यज्य शक्र विश्वेशितुः पराम् ।। ५ ।।

भैरवस्यापिहस्ताग्रादपतद्वैधसं शिरः ।।

यत्रानंदवने तत्र वृत्रशत्रो व्रज द्रुतम् ।।६।।

सीमानमपि संप्राप्य शक्रानंदवनस्य हि ।।

ब्रह्महत्या पलायेत वेपमाना निराश्रया ।। ७ ।।

अन्येषामपि पापानां महापापजुषामपि ।।

नाशयित्री परा काशी विश्वेश समधिष्ठिता ।। ८ ।।

महापातकतो मुक्तिः काश्यामे व शतक्रतो ।।

महासंसारतो मुक्तिः काश्यामेव न चान्यतः ।।९।।

निर्वाणनगरी काशी काशी सर्वाघसंघहृत् ।।

विश्वेशितुः प्रिया काशी द्यौः काशी सदृशी नहि ।। ।। 4.2.81.१० ।।

ब्रह्महत्याभयं यस्य यस्य संसारतो भयम्।।

जातुचित्तेन न त्याज्या काशिका मुक्तिकाशिका ।।११।।

जंतूनां कर्मबीजानां यत्र देहविसर्जने ।।
न जातुचित्प्ररोहोस्ति हरदृष्ट्याप्तशुष्मणाम् ।। १२ ।।
तां काशीं प्राप्य वृत्रारे वृत्रहत्यापनुत्तये ।।
समाराधय विश्वेशं विश्वमुक्तिप्रदायकम् ।। १३ ।।
बृहस्पतेरिति वचो निशम्य स सहस्रदृक् ।।
आयादद्रुततरं काशीं महापातकघातुकाम् ।। १४ ।।
स्नात्वोत्तरवहायां च धर्मेशं परितः स्थितः ।।
आराधयन्महादेवं ब्रह्मद्दत्याप नुत्तये ।। १५ ।।
महारुद्रजपासक्तः सुत्रामाथ त्रिलोचनम् ।।
ददर्श लिंगमध्यस्थं स्वभासा दीपितांबरम् ।। १६ ।।
पुनस्तुष्टाव वेदोक्तै रुद्रसूक्तैरनेकधा ।।
विनिष्क्रम्य ततो लिंगादाविर्भूय भवोवदत् ।। १७ ।।
शचीपते प्रसन्नोस्मि वरं वरय सुव्रत ।।
किं देयं द्रुतमाख्याहि धर्मपीठकृतास्पद ।। १८ ।।
श्रुत्वेति देवदेवस्य स प्रेमवचनं हरिः ।।
सर्वज्ञ किंतेऽविदितं तमुवाचेति वृत्रहा ।। १९ ।।
ततस्तत्कृपयानुन्नो धर्मपीठनिषेवणात् ।।
निष्पाद्य तीर्थं तत्रेशोऽत्र स्नाहींद्रेति चाब्रवीत् ।।4.2.81.२०।।
तत्रेंद्रः स्नानमात्रेण दिव्यगंधोऽभवत्क्षणात् ।।
अवाप च रुचिं चारुं प्राक्तनीं शातयाज्ञिकीम् ।।२१।।
तदाश्चर्यमथो दृष्ट्वा मुनयो नारदादयः ।।
परिसस्नुर्मुदायुक्ता धर्मतीर्थेऽघहारिणि ।। २२ ।।
अतर्पयन्पितॄन्दिव्यान्व्यधुः श्राद्धानि श्रद्धया ।।
धर्मेशं स्नापयामासुस्तत्तीर्थाम्बुभृतैर्घटैः ।। २३ ।।
तदा प्रभृति तत्तीर्थं धर्मांधुरिति विश्रुतम् ।।
ब्रह्महत्यादि पापानामक्लेशं क्षालनं परम् ।। २४ ।।
यत्फलं तीर्थराजस्य स्नानेन परिकीर्त्यते ।।
सहस्रगुणितं तत्स्याद्धर्मांधु स्नानमात्रतः ।। २५ ।।

गंगाद्वारे कुरुक्षेत्रे गंगासागरसंगमे ।।

यत्फलं लभते मर्त्यो धर्मतीर्थे तदाप्नुयात् ।। २६ ।।

नर्मदायां सरस्वत्यां गौतम्यां सिंहगे गुरौ ।।

स्नात्वा यत्फलमाप्येत धर्मकूपे तदाप्नुयात्।। २७ ।।

मानसे पुष्करे चैव द्वारिके सागरे तथा ।।

तीर्थे स्नात्वा फलं यत्स्यात्तत्स्याद्धर्मजलाशये ।।२८।।

कार्तिक्यां सूकरक्षेत्रे चैत्र्यां गौरीमहाह्रदे ।।

शंखोद्धारे हरिदिने यत्फलं तत्फलं त्विह ।।२९।।

तीर्थद्वयं प्रतीक्षंते सिस्नासून्पितरो नरान् ।।

गंगायां धर्मकूपे च पिंडनिर्वपणाशया ।।4.2.81.३०।।

पितामहसमीपे वा धर्मेशस्याग्रतोथ वा ।।

फल्गौ च धर्मकूपे च माद्यंति प्रपितामहाः ।। ३१ ।।

धर्मकूपे नरः स्नात्वा परितर्प्य पितामहान् ।।

गयां गत्वा किमधिकं कर्ता पितृमुदावहम् ।। ३२ ।।

यथा गयायां तृप्ताः स्युः पिंडदाने पितामहाः ।।

धर्मतीर्थे तथैव स्युर्न न्यूनं नैव चाधिकम् ।। ३३ ।

ते धन्याः पितृभक्तास्ते प्रीणितास्तैः पितामहाः।।

पैत्रादृणाद्धर्मतीर्थे निष्कृतिर्यैः कृता सुतैः ।। ।। ३४ ।।

तत्तीर्थस्य प्रभावेण निष्पापोभूत्क्षणेन च ।।

प्रणम्य देवदेवेशमिंद्रोऽगादमरावतीम् ।।३५।।

अपारो महिमा तस्य धर्मतीर्थस्य कुंभज ।।

तत्कूपे स्वं निरीक्ष्यापि श्राद्धदानफलं लभेत् ।। ३६ ।।

तत्रापि काकिणी मात्रं यच्छेत्पितृमुदे नरः ।।

अक्षयं फलमाप्नोति धर्मपीठप्रभावतः ।। ३७ ।।

तत्र यो भोजयेद्विप्रान्यतिनोथ तपस्विनः ।।

सिक्थे सिक्थे लभेत्सोथ वाजपेयफलं स्फुटम् ।। ३८ ।।

प्राप्यामरावतीं शक्रस्ततो दिविषदां पुरः ।।

धर्मपीठस्य माहात्म्यं महत्काश्यामवर्णयत् ।। ३९ ।।

आगत्य पुनरप्यत्र शंभोरानंदकानने ।।
मुनिवृंदारकैः सार्धं लिंगमस्थापयद्धरिः ।।4.2.81.४०।।
तारकेशात्पश्चिमत इंद्रेश्वरमितीरितम् ।।
तस्य संदर्शनात्पुंसामैंद्रलोको न दूरतः ।।४१।।
तद्दक्षिणे शचीशश्च स्वयं शच्या प्रतिष्ठितः ।।
शचीशार्चनतः स्त्रीणां सौभाग्यमतुलं भवेत् ।। ४२ ।।
तत्समीपेस्ति रंभेशो बहुसौख्यसमृद्धिदः ।।
इंद्रेश्वरस्य परितो लोकपालेश्वरो परः ।। ४३ ।।
तदर्चनात्प्रसीदंति लोकपालाः समृद्धिदाः ।।
धर्मेशात्पश्चिमाशायां धरणीशः प्रकीर्तितः ।।
तद्दर्शनेन धैर्यं स्याद्राज्ये राजकुलादिषु ।। ४४ ।।
धर्मेशाद्दक्षिणे पूज्यं तत्त्वेशाख्यं परं नरैः ।।
तत्त्वज्ञानं प्रवर्तेत तल्लिंगस्य समर्चनात् ।। ४५ ।।
धर्मेशात्पूर्वदिग्भागे वैराग्येशं समर्चयेत् ।।
निवृत्तिश्चेतसस्तस्य लिंगस्य स्पर्शनादपि ।। ४६ ।।
ज्ञानेश्वरं तथैशान्यां ज्ञानदं सर्वदेहिनाम् ।।
ऐश्वर्येशमुदीच्यां च लिंगाद्धर्मेश्वराच्छुभात् ।। ४७ ।।
तद्दर्शनाद्भवेन्नृणामैश्वर्यं मनसेप्सितम् ।।
पंचवक्त्रस्य रूपाणि लिंगान्येतानि कुंभज ।।४८।।
एतान्यवश्यं संसेव्य नरः प्राप्नोति शाश्वतम् ।।
अन्यत्तत्रैव यद्वृत्तं तदाख्यामि मुने शृणु ।।४९।।
यच्छ्रुत्वापि नरो घोरे संसाराब्धौ न मज्जति ।।
कदंबशिखरो नाम विंध्यपादो महानिह ।। 4.2.81.५० ।।
दमस्य पुत्रस्तत्रासीद्दुर्दमो नाम पार्थिवः ।।
पितर्युपरते राज्यं संप्राप्याविजितेंद्रियः ।। ५१ ।।
हरेत्पुरंध्रीः प्रसभं पौराणां काममोहितः ।।
असाधवः प्रियास्तस्य साधवोऽप्रियतां ययुः ।। ५२ ।।
अदंड्यान्दंडयांचक्रे दंड्येष्वासीत्पराङ्मुखः ।।

सदैव मृगयाशीलः सोऽभून्मृगयु संगतः ।। ।। ५३ ।।

विवासिताः स्वविषयात्तेन सन्मतिदायिनः ।।

धर्माधिकारिणः शूद्रा ब्राह्मणाः करदीकृताः ।।५४।।

परदारेषुसंतुष्टः स्वदारेषु पराङ्मुखः ।।

आनर्च जातुचिन्नैव देवौ दुःखांतकारिणौ ।। ५५ ।।

हारिणौ सर्वपापानां सर्ववांछितदायिनौ ।।

सर्वेषां जगतीसारौ श्रीकंठश्रीपतीपती ।। ५६ ।।

स्वप्रजास्वेक उदितो धूमकेतुरिवापरः ।।

दुर्दमो नाम भूपालः क्षयाया कांड एव हि ।।५७।।

स कदाचिन्मृगयुभिः पापर्धि व्यसनातुरः ।।

सार्धं विवेशारण्यानि गृष्टिपृष्ठानुगो हयी ।। ।। ५८ ।।

एकाकी दैवयोगेन दुर्दमः सोऽवनीपतिः ।

धन्वी तुरंगमारुढोऽविशदानंदकाननम् ।। ५९ ।।

स विलोक्याथ सर्वत्र पादपा नवकेशिनः ।।

सुच्छायांश्च सुविस्तारान्गतश्रम इवाभवत् ।। 4.2.81.६० ।।

सुगंधेन सुशीतेन सुमदेन सुवायुना ।।

क्षणं संवीजितो राजा पल्लवव्यजनैः कुजैः ।। ६३ ।।

केवलं मृगया जातस्तत्खेदो न व्यपाव्रजत् ।।

आजन्मजनितः खेदो निरगात्तद्वनेक्षणात् ।। ६२ ।।

मध्ये वनं स चापश्यत्प्रासादं चुंबितांबरम् ।।

महारत्नशलाकानां रम्यमेकमिवाकरम् ।।६३।।

अथावरुह्य तुरगात्स भूपालोतिविस्मितः ।।

धर्मेशमंडपं प्राप्य स्वात्मानं प्रशशंस ह ।।६४।।

धन्योस्म्यहं प्रसन्नोस्मि धन्ये मेद्य विलोचने ।।

धन्यमद्यतनं चाहर्यदपश्यमिमां भुवम् ।। ६५ ।।

पुनर्निनिंद चात्मानं धर्मपीठ प्रभावतः ।।

धिङ्मां दुर्जनसंसर्गं त्यक्तसज्जनसंगमम् ।। ६६ ।।

जंतूद्वेगकरं मूढं प्रजापीडनपंडितम् ।।

परदारपरद्रव्यापहृत्यासुखमानिनम् ।।६७।।

अद्ययावन्मम गतं वृथाजन्माल्पमेधस ।।

धर्मस्थानानीदृशानि यद्दृष्टानि न कुत्रचित् ।। ६८ ।।

एवं बहु विनिंद्य स्वं नत्वा धर्मेश्वरं विभुम् ।।

आरुह्याश्वं ययौ राजा दुर्दमो विषयं स्वकम् ।। ६९ ।।

ततोमात्यान्समाहूय क्रमायातांश्चिरंतनान् ।।

नवीनान्परिनिर्वास्य पौरांश्चापि समाह्वयत् ।। 4.2.81.७० ।।

ब्राह्मणांश्चनमस्कृत्य तेभ्यो वृत्तीः प्रदाय च ।।

पुत्रे राज्यं समारोप्य प्रजाधर्मे निवेश्य च ।। ७१ ।।

परिदंड्य च दंडार्हान्साधूंश्च परितोष्य च ।।

दारानपि परित्यज्य विषयेषु पराङ्मुखः ।। ७२ ।।

समागच्छदथैकाकी काशीं श्रेयोविकासिनीम् ।।

धर्मेश्वरं समाराध्य कालान्निर्वाणमाप्तवान् ।। ७३ ।।

धर्मेशदर्शनान्नित्यं तथाभूतः स दुर्दमः ।।

बभूव दमिनां श्रेष्ठः प्रांते मोक्षं च लब्धवान् ।। ७४ ।।

इत्थं धर्मेश माहात्म्यं मया स्वल्पं निरूपितम् ।।

धर्मपीठस्य माहात्म्यं सम्यक्को वेद कुंभज ।। ७९ ।।

इदं धर्मेश्वराख्यानं यः श्रोष्यति नरोत्तमः ।।

आजन्मसंचितात्पापात्स मुक्तो भवति क्षणात् ।।७६।।

श्राद्धकाले विशेषेण धर्मेशाख्यानमुत्तमम्।।

श्रावयेद्ब्राह्मणान्धीमान्पितॄणां तृप्तिकारणम् ।। ७७ ।।

धर्माख्यानमिदं शृण्वन्नपि दूरस्थितः सुधीः ।।

सर्वपापर्विनिर्मुक्तो गंतांते शिवमंदिरम् ।। ७८ ।। ।।

इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्धे धर्मेश्वराख्याननामैकाशीतितमोध्यायः ।। ८१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८२



।। पार्वत्युवाच ।। ।।

वीरेशस्य महेशान श्रूयते महिमा महान् ।।

परां सिद्धिं परोपतुस्तत्र सिद्धाः परः शताः ।।१।।

कथमाविर्भवस्तस्य काश्यां लिंगवरस्य तु ।।

आशुसिद्धिप्रदस्येह तन्मे ब्रूहि जगत्पते ।। ।। २ ।।

।। महेश्वर उवाच ।। ।।

निशामय महादेवि वीरेशाविर्भवं परम् ।।

यं श्रुत्वापि नरः पुण्यं प्राप्नोति विपुलं शिवे ।।३।।

आसीदमित्रजिन्नाम राजा परपुरंजयः ।।

धार्मिकः सत्त्वसंपन्नः प्रजारंजनतत्परः ।। ४ ।।

यशोधनो वदान्यश्च सुधीर्ब्राह्मणदैवतः ।।

सदैवावभृथस्नानपरिक्लिन्न शिरोरुहः ।। ५ ।।

विनीतो नीतिसंपन्नः कुशलः सर्वकर्मसु ।।

विद्याब्धिपारदृश्वा च गुणवान्गुणिवत्सलः ।। ६ ।।

कृतज्ञो मधुरालापः पापकर्मपराङ्मुखः ।।

सत्यवाक्छौचनिलयः स्वल्पवाग्विजितेंद्रियः ।। ७ ।।

रणांगणे कृतांताभः संख्यावांश्च सदोजिरे ।।

कामिनीकामकेलिज्ञो युवापि स्थविरप्रियः ।। ८ ।।

धर्मार्थैधितकोशश्च समृद्धबलवाहनः ।।

सुभगश्च सुरूपश्च सुमेधाः सुप्रजाश्रयः ।।९।।

स्थैर्य धैर्य समापन्नो देशकालविचक्षणः ।।

मन्यमानप्रदो नित्यं सर्वदूषणवर्जितः ।। 4.2.82.१० ।।

वासुदेवांघ्रियुगले चेतोवृत्तिं निधाय सः ।।

चकार राज्यं निर्द्वंद्वं विष्वगीति विवर्जितम् ।। ११ ।।

अलंघ्यशासनः श्रीमान्विष्णुभक्तिपरायणः ।।

अभुनक्प्रचुरान्भोगान्समंताद्विष्णुसात्कृतान् ।। १२ ।।

हरेरायतनान्युच्चैः प्रतिसौधं पदेपदे ।।

तस्य राज्ये समभवन्महाभाग्यनिधेः शिवे ।।१३।।

गोविंदगोपगोपाल गोपीजनमनोहर ।।

गदापाणे गुणातीत गुणाढ्य गरुडध्वज ।। १४ ।।

केशिहृत्कैटभाराते कंसारे कमलापते ।।

कृष्णकेशव कंजाक्ष कीनाश भयनाशन ।। १५ ।।

पुरुषोत्तम पापारे पुंडरीकविलोचन ।।

पीतकौशेयवसन पद्मनाभ परात्पर ।। १६ ।।

जनार्दन जगन्नाथ जाह्नवीजलजन्मभूः ।।

जन्मिनां जन्महरण जंजपूकाघनाशन ।। १७ ।।

श्रीवत्सवक्षः श्रीकांत श्रीकर श्रेयसां निधे ।।

श्रीरंगशार्ङ्गकोदंड शौरे शीतांशुलोचन ।। १८ ।।

दैत्यारे दानवाराते दामोदर दुरंतक ।।

देवकीहृदयानंद दंदशूकेश्वरेशय ।। १९।।

विष्णो वैकुंठनिलय बाणारे विष्टरश्रवः ।।

विष्वक्सेन विराधारे वनमालिन्वनप्रिय ।। 4.2.82.२० ।।

त्रिविक्रमत्रिलोकीश चक्रपाणे चतुर्भुज ।।

इत्यादीनि पवित्राणि नामानि प्रतिमंदिरम् ।। २१ ।।

स्त्रीवृद्धबालगोपाल वदनोदीरितानि तु ।।

श्रूयते यत्रकुत्रापि रम्याणि मधुविद्विषः ।। २२ ।।

सुरसाकाननान्येव विलोक्यंते गृहेगृहे।।

चरित्राणि विचित्राणि पवित्राण्यब्धिजापतेः ।। २३ ।।

सौधभित्तिषु दृश्यंते चित्रकृन्निर्मितानि तु ।।

ऋते हरिकथायास्तु नान्या वार्ता निशम्यते ।। ।। २४ ।।

हरिणा नैव विध्यंते हरिनामांशधारिणः ।।

तस्य राज्ञो भयाद्व्याधैररण्यसुखचारिणः ।। २५ ।।

न मत्स्या नैव कमठा न वराहाश्च केनचित् ।।

हन्यंते क्वापि तद्भीत्या मत्स्यमांसाशिनापि वै ।। २६ ।।

अप्युत्तानशयास्तस्य राष्ट्रे मित्रजितः क्वचित् ।।

स्तनपानं न कुर्वंति संप्राप्य हरिवासरम् ।। २७ ।।

पशवोपि तृणाहारं परित्यज्य हरेर्दिने ।।

उपोषणपरा जाता अन्येषां का कथा नृणाम् ।। २८ ।।

महामहोत्सवः सर्वैः पुरौकोभिर्वितन्यते ।।

तस्मिन्प्रशासति भुवं संप्राप्ते हरिवासरे ।। २९ ।।

स एव दंड्योऽभूत्तस्य राज्ञो मित्रजितः क्षितौ ।।

यो विष्णुभक्तिरहितः प्राणैरपि धनैरपि ।। 4.2.82.३० ।।

अंत्यजा अपि तद्राष्ट्रे शंखचक्रांकधारिणः ।।

संप्राप्य वैष्णवीं दीक्षां दीक्षिता इव संबभुः ।। ३१ ।।

शुभानि यानि कर्माणि क्रियंतेऽनुदिनं जनैः ।।

वासुदेवे समर्प्यंते तानि तैरफलेप्सुभिः ।। ३२ ।।

विना मुकुंदं गोविंदं परमानंदमच्युतम् ।।

नान्यो जप्येतमन्येत न भज्येत जनैः क्वचित् ।। ३३ ।।

कृष्ण एव परो देव कृष्णएव परागतिः ।।

कृष्ण एव परो बंधुस्तस्यासीदवनीपतेः ।।३४।।

एवं तस्मिन्महीपाले राज्यं सम्यक्प्रशासति ।।

एकदा नारदः श्रीमांस्तं दिदृक्षुः समाययौ ।।३५।।

राज्ञा समर्चितः सोथ मधुपर्क विधानतः ।।

नारदो वर्णयामास तममित्रजितं नृपम् ।। ३६ ।।

।। नारद उवाच ।। ।।

धन्योसि कृतकृत्योसि मान्योप्यसि दिवौकसाम् ।।

सर्वभूतेषु गोविंदं परिपश्यन्विशांपते ।। ३७ ।।

यो वेद पुरुषो विष्णुर्यो यज्ञपुरुषो हरिः ।।

योंतरात्मास्य जगतः कर्ता हर्ताविता विभुः ।। ३८ ।।

तन्मयं पश्यतो विश्वं तव भूपालसत्तम ।।

दर्शनं प्राप्य शुभदं शुचित्वमगमं परम् ।। ३९ ।।

एक एव हि सारोत्र संसारे क्षणभंगुरे ।।
कमलाकांत पादाब्ज भक्तिभावोऽखिलप्रदः ।। 4.2.82.४० ।।
परित्यज्य हि यः सर्वं विष्णुमेकं सदा भजेत् ।।
सुमेधसं भजंते तं पदार्थाः सर्व एव हि ।। ४१ ।।
हृषीकेशे हृषीकाणि यस्य स्थैर्यं गतान्यहो ।।
स एव स्थैर्यमाप्नोति ब्रह्मांडेऽतीव चंचले ।। ४२ ।।
यौवनं धनमायुष्यं पद्मिनीजलबिंदुवत् ।।
अतीव चपलं ज्ञात्वाऽच्युतमेकं समाश्रयेत् ।। ४३ ।।
वाचि चेतसि सर्वत्र यस्य देवो जनार्दनः ।।
स एव सर्वदा वंद्यो नररूपी जनार्दनः ।। ४४ ।।
निर्व्याज प्रणिधानेन शीलयित्वा श्रियःपतिम् ।।
पुरुषोत्तमतां को न प्राप्तवानिह भूतले ।। ४५ ।।
अनया विष्णुभक्त्या ते संतुष्टेंद्रियमानसः ।।
उपकर्तुमना ब्रूयां तन्निशामय भूपते ।। ४६ ।।
बाला विद्याधरसुता नाम्ना मलयगंधिनी ।।
क्रीडंती पितुराक्रोडे हृता कंकालकेतुना ।। ४७ ।।
कपालकेतुपुत्रेण दानवेन बलीयसा ।।
आगामिन्यां तृतीयायां तस्याः पाणिग्रहं किल ।। ४८ ।।
पाताले चंपकावत्यां नगर्यां सास्ति सांप्रतम् ।।
हाटकेशात्समागच्छंस्तया हंसाश्रुनेत्रया ।। ४९ ।।
दृष्टः प्रणम्य विज्ञप्तो यथा तच्च निथामय ।।
ब्रह्मचारिन्मुनिश्रेष्ठ गंधमादनशैलतः ।। 4.2.82.५० ।।
बालक्रीडनकासक्तां मोहयित्वा निनाय सः ।।
कंकालकेतुर्दुर्वृत्तो दुर्जयोन्यास्त्रघाततः ।। ५१ ।।
स्वस्य त्रिशूलघातेन म्रियते नान्यथा रणे ।।
जगत्पर्याकुलीकृत्य निद्रात्यत्रविनिर्भयः ।। ५२ ।।
यदि कोपि कृतज्ञो मां हत्वेमं दुष्टदानवम् ।।
मद्दत्तेन त्रिशूलेन नयेद्भद्रं भवेन्नरः ।। ५३ ।।

यदत्रोपचिकीर्षुस्त्वं रक्ष मां दुष्टदानवात् ।।
ममापि हि वरो दत्तो भगवत्या महामुने ।। ५४ ।।
विष्णुभक्तो युवा धीमान्पुत्रि त्वां परिणेष्यति ।।
आ तृतीया तिथि यथा तद्वाक्यं तथ्यतां व्रजेत् ।। ५५ ।।
तथा निमित्तमात्रं त्वं भव यत्नं समाचर ।।
इति तद्वचनाद्राजन्विष्णुभक्तिपरायणम् ।।
युवानं चापि धीमंतं त्वामनु प्राप्तवानहम् ।।५६।।
तद्गच्छ कार्यसिद्ध्यै त्वं हत्वा तं दुष्टदानवम् ।।
आनयाशु महाबाहो शुभां मलयगंधिनीम् ।। ५७ ।।
सा तु विद्याधरी जीवेद्विलोक्य त्वां नरेश्वर ।।
पार्वतीवचनाद्दुष्टं घातयिष्यत्ययत्नतः ।। ५८ ।।
इति नारदवाक्यं स निशम्यामित्रजिन्नृपः ।।
अनल्पोत्कलिको जातो विद्याधरसुतां प्रति ।। ५९ ।।
उपायं चापि पप्रच्छ गंतुं तां चंपकावतीम् ।।
नारदेन पुनः प्रोक्तः स राजा गिरिराजजे ।। 4.2.82.६० ।।
तूर्णमर्णवमासाद्य पूर्णिमादिवसे नृप ।।
भवान्द्रक्ष्यति पोतस्थः कल्पवृंदारथस्थितम् ।।६१।।
तत्र दिव्यांगना काचिद्दिव्यपर्यंक संस्थिता ।।
वीणामादाय गायंती गाथां गास्यति सुस्वरम् ।। ६२ ।।
यत्कर्मविहितं येन शुभं वाथ शुभेतरम् ।।
स एव भुंक्ते तत्तथ्यं विधिसूत्रनियंत्रितः ।। ६३ ।।
गाथामिमां सा संगीय सरथा स महीरुहा ।।
सपर्यंका क्षणादेव मध्ये सिंधुं प्रवेक्ष्यति ।।६४।।
भवानप्यविशंकं च ततः पोतान्महार्णवे ।।
तामनु व्रजतु क्षिप्रं यज्ञवाराहमास्तुवन् ।।६५।।
ततो द्रक्ष्यसि पाताले नगरीं चंपकावतीम् ।।
महामनोहरा राजन्सहितां बालयानया ।।६६।।
इत्युक्त्वांतर्हितो देवि स चतुर्मुखनंदनः ।।

राजाप्यर्णवमासाद्य यथोक्तं परिलक्ष्य च ।। ६७ ।।

विवेशांतःसमुद्रं च नगरीमाससाद ताम् ।।

साथ विद्याधरी बाला नेत्रप्राघुणकी कृता ।। ६८ ।।

तेन राज्ञा त्रिजगती सौंदर्यश्रीरिवैकिका ।।

पातालदेवतेयं वा ममनेत्रोत्सवाय किम् ।।६९।।

निरणायि मधुद्वेष्ट्रा स्रष्टुः सृष्टिविलक्षणा ।।

कुहूराहुभयादेषा कांतिश्चांद्रमसी किमु ।।4.2.82.७०।।

योषिद्रूपं समाश्रित्य तिष्ठतेऽत्राकुतोऽभया ।।

इत्थं क्षणं तां निर्वर्ण्य स राजागात्तदंतिकम् ।। ७१ ।।

सा विलोक्याथ तं बाला नितरां मधुराकृतिम् ।।

विशालोरस्थलतलं प्रलंबतुलसीस्रजम् ।। ७२ ।।

शंखचक्रांकसुभग भुजद्वयविराजितम् ।।

हरिनामाक्षरसुधा सुधौत रदनावलिम् ।। ७३ ।।

भवानीभक्तिबीजोत्थं भूरुहं पुरुषाकृतिम् ।।

मनोरथफलैः पूर्णमासीद्धृष्टतनूरुहा ।।७४।।

दोलापर्यंकमुत्सृज्य ह्रीभरा नम्रकंधरा ।।

वेपथुं च परिष्टभ्य बाला प्रोवाच भूपतिम् ।।७५ ।।

कस्त्वमत्र कृतांतस्य भवनं मधुराकृते ।।

प्राप्तो मे मंदभाग्यायाश्चेतोवृत्तिं निरुंधयन् ।। ७६ ।।

यावन्नायाति सुभग स कठोरतराकृतिः ।।

अतिपर्याकुलीकृत्य त्रिलोकीं दानवो मुहुः ।।७७।।

कंकालकेतुर्दुर्वृत्तस्त्ववध्यः परहेतिभिः ।।

तावद्रुसं समातिष्ठ शस्त्रागारेति गह्वरे ।।७८।।

न मे कन्याव्रतं भंक्तुं स समर्थ उमा वरात्।।

आगामिन्यां तृतीयायां परश्वः पाणिपीडनम् ।। ७९ ।।

संचिकीर्षति दुष्टात्मा गतायुर्मम शापतः ।।

मा तद्भीतिं कुरु युवंस्तत्कार्यं भवित‍ाचिरम् ।। 4.2.82.८० ।।

विद्याधर्येति चोक्तः स शस्त्रागारे निगूढवत् ।।

स्थितो वीरो महाबाहुर्दानवागमने क्षणः ।।८१।।
अथ सायं समायातो दानवो भीषणाकृतिः।।
त्रिशूलं कलयन्पाणौ मृत्योरपि भयावहम् ।। ८२ ।।
आगत्य दानवो रौद्रः प्रलयांबुदनिस्वनः ।।
विद्याधरीं जगादेति मदाघूर्णितलोचनः ।।८३।।
गृहाणेमानि रत्नानि दिव्यानि वरवर्णिनि ।।
कन्यात्वं च परश्वस्ते पाणिग्राहादपैष्यति ।। ८४ ।।
दासीनामयुतं प्रातर्दास्यामि तव सुंदरि ।।
आसुरीणां सुरीणां च दानवीनां मनोहरम् ।। ८५ ।।
गंधर्वीणां नरीणां च किन्नरीणां शतंशतम् ।।
विद्याधरीणां नागीनां यक्षिणीनां शतानि षट् ।। ८६ ।।
राक्षसीनां शतान्यष्टौ शतमप्सरसां वरम् ।।
एतास्ते परिचारिण्यो भविष्यंत्यमलाशये ।। ८७ ।।
यावत्संपत्तिसंभारो दिक्पालानां गृहेषु वै ।।
मत्परिग्रहतां प्राप्य तावतस्त्वमिहेश्वरी ।। ८८ ।।
दिव्यान्भोगान्मया सार्धं भोक्ष्यसे मत्परिग्रहात् ।।
कदा परश्वो भविता यस्मिन्वैवाहिको विधिः ।। ८९ ।।
त्वदंगसंगसंस्पर्श सुखसंदोह मेदुरः ।।
परां निर्वृतिमाप्स्यामि परश्वो निकटं यदि ।। 4.2.82.९० ।।
मनोरथाश्चिरं यावद्यं मे हृदि समेधिताः ।।
तान्कृतार्थी करिष्यामि परश्वस्तव संगमात् ।। ९१ ।।
जित्वा देवान्रणे सर्वानिंद्रादीन्मृगलोचने ।।
त्रैलोक्यैश्वर्यसंपत्तेस्त्वां करिष्यामि चेश्वरीम् ।। ९२ ।।
आधायांके त्रिशूलं स्वे सुष्वापेति प्रलप्य सः ।।
नरमांसवसास्वाद प्रमत्तो वीतसाध्वसः ।। ।।९३।।
वरं स्मरंती सा गौर्या विद्याधरकुमारिका ।।
विज्ञाय तं प्रमत्तं च सुसुप्तं चातिनिर्भयम् ।। ९४ ।।
आहूय तं नरवरं वरं सर्वांगसुंदरम् ।।।

विष्णुभक्तिकृतत्राणं प्राणनाथेति जल्प्य च ।। ९५ ।।

शूलं तदंकादादाय गृहाणेमं जहि द्रुतम् ।।

इति त्रिशूलं बालातो बालार्कसदृशद्युति ।। ९६ ।।

समादाय महाबाहुः स तदा मित्रजिन्नृपः ।।

जहर्ष च जगादोच्चैर्बालायाश्चाभयं दिशन् ।। ९७ ।।

वामपादप्रहारेण तमाताड्य स निर्भयः ।।

संस्मरंश्चक्रिणं चित्ते जगद्रक्षामणिं हरिम् ।। ९८ ।।

जगर्ज्ज तिष्ठ रे दुष्ट कन्याधर्षणलालस ।।

युध्यस्वात्र मया सार्धं न सुप्तं हन्म्यहं रिपुम् ।।९९।।

इति संश्रुत्य संभ्रांत उत्थाय स दनोः सुतः ।।

त्रिशूलं देहि मे कांते प्रोवाचेति मुहुर्मुहुः ।। 4.2.82.१०० ।।

कोयं मृत्युगृहं प्राप्तः कस्य रुष्टोऽद्य चांतकः ।।

क आयुषाद्य संत्यक्तो यः प्राप्तो मम गोचरम् ।।१ ।।

मम प्रचंड दोर्दंड कंडू कंडूयन क्षमः ।।

नाल्पो नरोयं भविता किं त्रिशूलेन सुंदरि ।।२।।

माभैर्मे कौतुकं पश्य भक्ष्योऽयं मम सांप्रतम् ।।

कालेन मत्तो भीतेन स्वयमेवोपढौकितः ।६ ३ ।।

इत्युक्त्वा मुष्टिघातेन तेनोच्चैर्दनुसूनुना ।।

हृदये निहतो राजा शिलातिकठिने द्रुतम् ।। ४ ।।

स चक्रिणा कृतत्राणः पीडामल्पीयसीमपि ।।

नो वेद कठिनोरस्कस्तत्करं प्रत्युतानुदत् ।। ५ ।।

अथ कोपवता राज्ञा हतो वक्त्रे चपेटया ।।

आघूर्णितशिरा भूमौ पतित्वा पुनरुत्थितः ।। ६ ।।

उवाच च वचो धैर्यमवष्टभ्य महाबली ।। ७ ।।

।। दानव उवाच ।। ।।

ज्ञातं न त्वं मनुष्योसि नृरूपेण चतुर्भुजः ।।

आयातश्छिद्रमासाद्य हंतुं मां दानवांतकः ।। ८ ।।

एकं विधेहि मधुभिद्यदि त्वं बलवानसि ।।

विहायैतन्महच्छूलं युध्यस्व स्वायुधैर्मया ।।९।।

त्वया कपटरूपेण बलिनः कैटभादयः ।।

न बलेन हताः संख्ये हता एवच्छलेन हि ।। 4.2.82.११० ।

बलिं पातालमनयस्त्वं नृवामनतां दधत् ।।

नृमृगत्वेन भवता हिरण्यकशिपुर्हतः ।। ११ ।।

त्वया जटिलरूपेण लंकेशो विनिपातितः ।।

गोपालवेषमासाद्य कंसाद्या घातितास्त्वया ।। १२ ।।

स्त्रीरूपेणाहरस्त्वं तु विप्रलाप्या सुरान्सुधाम् ।।

यादो रूपेण भवता शंखाद्यानि हता बहु ।।१३।।

मायाविनामग्रगण्य सर्वमर्मज्ञसाधक ।।

न त्वत्तोहं बिभेम्यद्य यदि शूलं विहास्यसि ।। १४ ।।

अथवा दैन्यवचनः किमेभिः कातरोचितैः ।।

न त्यक्ष्यसि त्रिशूलं त्वं न त्वां जेष्याम्यहं रणे ।। १५ ।।

अवश्यमेव मर्तव्यमद्य प्रातः शरीरिणा ।।

त्वत्करेण वरं मृत्युर्बलेनापिच्छलेन वा ।। १६ ।।

इयं विद्याधरी कन्या न मया दूषिता सती ।।

साक्षाच्छ्रीरेव मंतव्या तवार्थं रक्षिता मया ।। १७ ।।

इत्युक्त्वा वामदोर्दंडप्रहारेणातिनिष्ठुरम् ।।

निजघान दनोः सूनुस्तं शिलोच्चयकंपिना ।। १८ ।।

नृपो वक्षः प्रहारं तं विषह्य रण मूर्द्धनि ।।

लक्षीचकार तद्वक्षस्त्रिशूलं तोलयन्करे ।। १९ ।।

निजघान महाबाहुः स च प्राणाञ्जहौ क्षणात् ।।

इत्थं कंकालकेतुं स निहत्य सुरकंपनम् ।। 4.2.82.१२० ।।

विद्याधरीं प्रपश्यंतीं प्राह हृष्टतनूरुहाम् ।।

नारदस्य मुनेर्वाक्यात्तव सुश्रोणि वांछितम् ।। २१ ।।

कृतं मया कृतज्ञे किं करवाण्यधुना वद ।।

श्रुत्वेति तस्य सा वाक्यं प्राह गंभीरचेतसः ।। २२ ।।

मलयगंधिन्युवाच ।। ।।

अथोदारमते वीर निज प्राणैः पणीकृताम् ।।
किं मां पृच्छसि जीवातो कुलकन्या प्रदूषिताम् ।। २३ ।।
इति ब्रुवत्यां कन्यायां पुनः स्वैरचरो मुनिः ।।
अतर्किताגमः प्राप्तो नारदो देवलोकतः ।।२४।।
ततस्तुतुषतुस्तौ तु दृष्ट्वा तं मुनिसत्तमम् ।।
कृतप्रणामौ मुनिना परिविश्राणिताशिषौ ।।२५।।
पाणिग्रहेण विधिनाऽभिषिक्तौ नारदेन तु ।।
जग्मतुर्नारदादिष्ट वर्त्मना कृतमंगलौ ।। २६ ।।
तया मलयगंधिन्या युतः सोऽमित्रजिन्नृपः ।।
पुरीं वाराणसीं प्राप्य पौरैर्विहितमंगलाम् ।। २७ ।।
यद्वीक्षणादपि नरो नारकी नैव जातुचित् ।।
गतिमाप्नोति मेधावी तां पुरीमविशन्नृपः ।। २८ ।।
यस्यां पुर्यां प्रवेशं न लभंते वासवादयः ।।
कैवल्यजनयित्र्यां हि तां पुरीमविशन्नृपः ।।२९।।
अपि स्मृत्वा पुरीं यां वै काशीं त्रैलोक्यकांक्षिताम् ।।
न नरो लिप्यते पापैस्तां विवेश स भूपतिः ।।।। 4.2.82.१३० ।।
यस्यां पुर्यां प्रविष्टो ना महद्भिरपि पातकैः ।।
नाभिभूयेत तां काशीं प्राविशत्स विशांपतिः ।। ३१ ।।
सापि विद्याधरी काशी समृद्धिं वीक्ष्य दूरतः ।।
निनिंद स्वर्गलोकं च पातालनगरीमपि ।। ३२ ।।
प्राप्या मित्रजितं कांतं तथा हृष्टा न सा वधूः ।।
यथा दृष्ट्वाप्यहो काशीं परमानंदकेतनम् ।। ३३ ।।
सा कृतार्थमिवात्मानं मन्यमाना मनस्विनी ।।
तेन पत्या च काश्या च परां निर्वृतिमाययौ ।। ३४ ।।
सोप्यमित्रजिदासाद्य पत्नीं मलयगंधिनीम् ।।
धर्मप्रधानं संसेव्य कामं प्राप्तोत्तमं सुखम् ।। ३५ ।।
सैकदा तं पतिं राज्ञी विष्णुभक्तिपरायणम् ।।
रहो विज्ञापयांचक्रे पतिभक्ता सुतार्थिनी ।। ३६ ।।

।। राज्न्युवाच ।। ।।

भूपाभीष्टतृतीयायाश्चरिष्यामि महाव्रतम् ।।

यद्यनुज्ञा भवेद्भर्तुः पुत्रकामार्थितप्रदम् ।। ३७ ।।

।। राजोवाच ।। ।।

देव्यभीष्टतृतीयायां व्रतं कीदृग्भवेद्वद ।।

का देवता तत्र पूज्या विधानं चापि किं फलम् ।। ३८ ।।

नारी पत्यननुज्ञाता या व्रतादि समाचरेत् ।।

जीवंती दुःखिनी सा स्यान्मृता निरयमृच्छति ।। ३९ ।।

इति राज्ञोदिता राज्ञी प्रवक्तुमुपचक्रमे ।।

इति कर्तव्यतां तस्य व्रतस्य सरहस्यकाम्।।4.2.82.१४०।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे उत्तरार्धे वीरेश्वराविर्भावेऽमित्रजित्पराक्रमो नाम द्व्यशीतितमोध्यायः ।। ८२ ।।

राज्युवाच ।। ।।
अवधेहि धरानाथ कथयामि यथातथम् ।।
व्रतस्यास्य विधानं च फलं चाभीष्टदेवताम् ।। १ ।।
पुरा पुरः श्रीदपत्न्याः श्रीमुख्या ब्रह्मसूनुना ।।
नारदेन सुतार्थिन्या व्रतमेतदुदीरितम् ।। २ ।।
चीर्णं चाथ तया देव्या पुत्रोभून्नलकूबरः ।।
अन्याभिरपि बह्वीभिः पुत्राः प्राप्ता व्रतादितः ।। ३ ।।
विधिनाप्यत्र संपूज्या गौरी सर्वविधानवित् ।।
स्तनंधयेन सहिता धयता स्तनमुन्मुखम् ।। ४ ।।
मार्गशीर्ष तृतीयायां शुक्लायां कलशोपरि ।।
ताम्रपात्रं निधायैकं तंडुलैः परिपूरितम् ।। ५ ।।
अविच्छिन्नं नवीनं च रजनीरागरंजितम् ।।
वासः पात्रोपरि न्यस्य सूक्ष्मात्सूक्ष्मतरं परम् ।।६।।
तस्योपरि शुभं पद्मं रविरश्मिविकासितम् ।।
तत्कर्णिकाया उपरि चतुःस्वर्णविनिर्मितम् ।। ७ ।।
विधिं संपूजयेद्भक्त्या रत्नपट्टाबंरादिभिः ।।
पुष्पैर्नानाविधै रम्यैः फलैर्नारंगमुख्यकैः ।। ८ ।।
सुगंधैश्चंदनाद्यैश्च कर्पूर मृगनाभिभिः ।।
परमान्नादि नैवेद्यैः पक्वान्नैर्बहुभंगिभिः ।।९।।
धूपैरगुरुमुख्यैश्च रम्ये कुसुममंडपे ।।
रात्रौ जागरणं कार्यं विनिंद्रैः परमोत्सवैः ।। 4.2.83.१० ।।
हस्तमात्रमिते कुंडे जातवेदस इत्यृचा ।।
घृतेन मधुनाप्लुत्य जुहुयान्मंत्रविद्द्विजः ।। ११ ।।
सहस्रकमलानां च स्मेराणां स्वयमेव हि ।।
नवप्रसूतां कपिलां सुशीलां च पयस्विनीम् ।। १२ ।।
दद्यादाचार्यवर्याय सालंकारां सलक्षणाम् ।।
उपोष्य दंपती भक्त्या नवांबरविभूषितौ ।। १३ ।।
प्रातःस्नात्वा चतुर्थ्यां च संपूज्याचार्यमादृतः ।।
वस्त्रैराभरणैर्माल्यैर्दक्षिणाभिर्मुदान्वितौ ।। १४ ।।
सोपस्करां च तां मूर्तिमाचार्याय निवेदयेत् ।।
समुच्चरन्निमं मंत्रं व्रतकृन्मिथुनं मुदा ।। १५ ।।
नमो विश्वविधानज्ञे विधे विविधकारिणि ।।
सुतं वंशकरं देहि तुष्टामुष्माद्व्रताच्छुभात् ।। १६ ।।

सहसं भोजयित्वाथ द्विजानां भक्तिपूर्वकम् ।।
भुक्तशेषेण चान्नेन कुर्याद्वै पारणं ततः ।। १७ ।।
इत्थमेतद्व्रतं राजंश्चिकीर्षामि त्वया सह ।।
कुरु चैतत्प्रियं मह्यमभीष्टफललब्धये ।। १८ ।।
इति भूपालवर्येण श्रुत्वा संहृष्टचेतसा ।।
मुनेव तं समाचीर्णं सांतर्वत्नी बभूव ह ।। १९ ।।
तयाथ प्रार्थिता गौरी गर्भिण्या भक्तितोषिता ।।
पुत्रं देहि महामाये साक्षाद्विष्ण्वंशसंभवम् ।। 4.2.83.२० ।।
जातमात्रो व्रजेत्स्वर्गं पुनगयाति चात्र वै ।।
भक्तः सदाशिवेऽत्यर्थं प्रसिद्धः सर्वभूतले ।।२१।।
विनैव स्तन्यपानेन षोडशाब्दाकृतिः क्षणात् ।।
एवंभूतः सुतो गौरि यथा मे स्यात्तथाकुरु ।।२२।।
मृडान्यापि तथेत्युक्ता राज्ञी भक्त्यातितुष्टया ।।
अथ कालेन तनयं मूलर्क्षे साप्यजीजनत् ।। २३ ।।
हितैरमात्यैरथ सा विज्ञप्तारिष्टसंस्थिता ।।
देवि राजार्थिनी चेत्त्वं त्यज दुष्टर्क्षजं सुतम् ।। ।। २४ ।।
सा मंत्रिवाक्यमाकर्ण्य केवलं पतिदेवता ।।
अत्याक्षीत्तं तथा प्राप्तं तनयं नयकोविदा ।। २५ ।।
धात्रेयिकां समाकार्य प्राहेदं सा नृपांगना ।।
पंचमुद्रे महापीठे विकटा नाम मातृका ।। २६ ।।
तदग्रे स्थापयित्वामुं बालं धात्रेयिके वद ।।
गौर्यादत्तः शिशुरसौ तवाग्रे विनिवेदितः ।। २७ ।।
राज्ञ्या पत्युः प्रियेषिण्या मंत्रिविज्ञप्तिनुन्नया ।।
सापि राज्ञ्युदितं श्रुत्वा शिशुं लास्य शशिप्रभम् ।। २८ ।।
विकटायाः पुरः स्थाप्य गृहं धात्रेयिका गता ।।
अथ सा विकटा देवी समाहूय च योगिनीः ।। २९ ।।
उवाच नयत क्षिप्रं शिशुं मातृगणाग्रतः ।।
तासामाज्ञां च कुरुत रक्षतामुं प्रयत्नतः ।। 4.2.83.३० ।।
योगिन्यो विकटावाक्यात्खेचर्यस्ताः क्षणेन तम् ।।
निन्युर्गगनमार्गेण ब्राह्म्याद्या यत्र मातरः ।। ३१ ।।
प्रणम्य योगिनीवृंदं तं शिशुं सूर्यवर्चसम् ।।
पुरो निधाय मातृणां प्रोवाच विकटोदितम् ।। ३२ ।।
ब्रह्माणी वैष्णवी रौद्री वाराही नारसिंहिका ।।

कौमारी चापि माहेंद्री चामुंडा चैव चंडिका । ३३ ।।
दृष्ट्वा तं बालकं रम्यं विकटाप्रेषितं ततः ।।
पप्रच्छुर्युगपड्डिंभं कस्ते तातः प्रसूश्च कः।। ३४ ।।
मातृभिश्चेति पुष्टः स यदा किंचिन्न वक्ति च ।।
तदा तद्योगिनीचक्रं प्राह मातृगणस्त्विति ।। ३५ ।।
राज्ययोग्यो भवत्येष महालक्षणलक्षितः ।।
पुनस्तत्रैव नेतव्यो योगिन्यस्त्वविलंबितम् ।। ३६ ।।
पंचमुद्रा महादेवी तिष्ठते यत्र काम्यदा ।
यस्याः संसेवनान्नृणां निर्वाणश्रीरदूरतः ।। ३७ ।।
सर्वत्रशुभजन्मिन्यां काश्यां मुक्तिः पदेपदे ।।
तथापि सविशेषं हि तत्पीठं सर्वसिद्धिकृत् ।। ३८ ।।
तत्पीठसेवनादस्य षोडशाब्दाकृतेः शिशोः ।।
सिद्धिर्भवित्री परमा विश्वेशानुग्रहात्परात् ।। ।। ३९ ।।
एवं मातृगणाशीर्भिर्योगिनीभिः क्षणेन हि ।।
प्रापितो मातृवाक्येन पंचमुद्रांकितं पुनः ।। 4.2.83.४० ।।
संप्राप्य तन्महापीठं स्वर्गलोकादिहागतः ।।
आनंदकानने दिव्यं तताप विपुलं तपः ।। ४१ ।।
तपसातीव तीव्रेण निश्चलेंद्रियचेतसः ।।
तस्य राजकुमारस्य प्रसन्नोभूदुमाधवः। ।।४२।।
आविर्बभूव पुरतो लिंगरूपेण शंकरः ।।
प्रोवाच च प्रसन्नोस्मि वरं ब्रूहि नृपांगज ।।४३।।
।। स्कंद उवाच ।। ।।
सर्वज्योतिर्मयं लिंगं पुरतो वीक्ष्य वाङ्मयम् ।।
सप्तपातालमुद्भिद्य स्थितं बृहदनुग्रहात ।। ४४ ।।
प्रणम्य दंडवद्भूमौ परितुष्टाव धूर्जटिम् ।।
सूक्तैर्जन्मांतराभ्यस्तैः सुहृष्टो रुद्रदेवतैः ।। ४५ ।।
ततः प्रसन्नो भगवान्देवदेवो महेश्वरः ।।
संतुष्टस्तपसा तस्य प्रोवाच वृषभध्वजः।। ४६ ।।
।। देवदेव उवाच ।। ।।
वरं वरय संतप्त तपसा क्लेशितं वपुः ।।
त्वयेदं बालवपुषा वशीकृतं मनो मम ।। ४७ ।।
शिवोक्तं च समाकर्ण्य वरदानं पुनःपुनः ।।
वरं च प्रार्थयांचक्रे परिहृष्टतनूरुहः ।। ४८ ।।

।। कुमार उवाच ।। ।।
देवदेवमहादेव यदि देयो वरो मम ।।
तदत्र भवता स्थेयं भवतापहृता सदा ।। ४९ ।।
अस्मिँल्लिंगे स्थितः शंभो कुरु भक्तसमीहितम् ।।
विना मुद्रादिकरणं मंत्रेणापि विना विभो ।। 4.2.83.५० ।।
दिश सिद्धिं परामत्र दर्शनात्स्पर्शनान्नतेः ।।
अस्य लिंगस्य ये भक्ता मनोवाक्कायकर्मभिः ।।५१ ।।
सदैवानुग्रहस्तेषु कर्तव्यो वर एष मे ।।
इति तद्व्रतमाकर्ण्य लिंगरूपोवदत्प्रभुः ।।५२।।
एवमस्तु यदुक्तं ते वीरवैष्णव सूनुना ।।
जनेतुर्विष्णुभक्ताच्च राज्ञोऽमित्रज्जितो भवान् ।। ५३ ।।
विष्ण्वंश एवमुत्पन्नो मम भक्तिपरांगज ।।
वीरवीरेश्वरं नाम लिंगमेतत्त्वदाख्यया ।। ५४ ।।
काश्यां दास्यत्यभीष्टानि भक्तानां चिंतितान्यहो ।।
अस्मिँल्लिंगे सदा वीर स्थास्याम्यद्यदिनावधि ।। ५५ ।।
दास्यामि च परां सिद्धिमाश्रितेभ्यो न संशयः ।।
परं न महिमानं मे कलौ कश्चिच्च वेत्स्यति ।। ५६ ।।
यस्तु वेत्स्यति भाग्येन स परां सिद्धिमाप्स्यति ।।
अत्र जप्तं हुतं दत्तं स्तुतमर्चितमेव वा ।। ५७ ।।
जीर्णोद्धारादिकरणमक्षय्यफलहेतुकम् ।।
त्वं तु राज्यं परं प्राप्य सर्वभूपालदुर्लभम्।। ५८ ।।
भुक्त्वा भोगांश्च विपुलानंते सिद्धिमवाप्स्यसि ।।
पुरी वाराणसी रम्या सर्वस्मिन्जगतीतले ।।५९।।
पुण्यस्तत्रापि संभेदः सरितोरसि गंगयोः ।।
ततोऽपि च हयग्रीवं तीर्थं चैवाति पुण्यदम् ।। 4.2.83.६० ।।
यत्र विष्णुर्हयग्रीवो भक्तचिंतितमर्पयेत् ।।
हयग्रीवाच्च वै तीर्थाद्गजतीर्थं विशिष्यते ।। ६१ ।।
यत्र वै स्नानमात्रेण गजदानफलं लभेत् ।।
कोकावराहतीर्थं च पुण्यदं गजतीर्थतः ।। ६२ ।।
कोकावराहमभ्यर्च्य तत्र नो जन्मभाग्जनः ।।
अपि कोकावराहाच्च दिलीपेश्वरसन्निधौ ।। ६३ ।।
दिलीपतीर्थं सुश्रेष्ठं सद्यः पापहरं परम् ।।
ततः सगरतीर्थं च सगरेश समीपतः ।। ६४ ।।

यत्र मज्जन्नरो मज्जेन्न भूयो दुःखसागरे ।।
सप्तसागरतीर्थं च शुभं सगरतीर्थतः ।। ६५ ।।
सप्ताब्धिस्नानजं पुण्यं यत्र स्नात्वा नरो लभेत् ।।
महोदधीति विख्यातं तीर्थं सप्ताब्धितीर्थतः ।। ६६ ।।
सकृद्यत्राप्लुतो धीमान्दहेदघमहोदधिम् ।।
चौरतीर्थं ततः पुण्यं कपिलेश्वर सन्निधौ ।। ६७ ।।
पापं सुवर्णचौर्यादि यत्र स्नात्वा क्षयं व्रजेत् ।।
हंसतीर्थ ततोपीड्यं केदारेश्वर सन्निधौ ।। ६८ ।।
हंस स्वरूपी यत्राहं नयामि ब्रह्मदेहिनः ।। ६९ ।।
ततस्त्रिभुवनाख्यस्य केशवस्याति पुण्यदम् ।।
तीर्थं यत्राप्लुता मर्त्या मर्त्यलोकं विशंति न ।। 4.2.83.७० ।।
गोव्याघ्रे श्वर तीर्थं च ततोप्यधिकमेव हि ।।
स्वभाववैरमुत्सृज्य यत्रोभौ सिद्धिमापतुः ।। ७१ ।।
ततोपि हि वरं वीर तीर्थं मांधातुसंज्ञितम् ।।
चक्रवर्तिपदं यत्र प्राप्तं तेन महीभुजा ।। ७२ ।।
ततोपि मुचुकुंदाख्यं तीर्थं चातीव पुण्यदम् ।।
यत्र स्नातो नरो जातु रिपुभिर्नाभिभूयते ।।७३।।
पृथु तीर्थं ततोप्युच्चैः श्रेयसां साधनं परम् ।।
पृथ्वीश्वरं यत्र दृष्ट्वा नरः पृथ्वीपतिर्भवेत् ।। ७४ ।।
ततः परशुरामस्य तीर्थं चातीव सिद्धिदम् ।।
यत्र क्षत्रवधात्पापाज्जामदग्न्यो विमुक्तवान् । ।७५।
अद्यापि क्षत्रवधजं पापं तत्र प्रणश्यति ।।
एकेन स्नानमात्रेण ज्ञानाज्ञानकृतेन च ।। ७६ ।।
ततोपि श्रेयसां कर्तृ तीर्थं कृष्णाग्रजस्य हि ।।
यत्र सूतवधात्पापाद्बलदेवो विमुक्तवान् ।। ७७ ।।
दिवोदासस्य वै तीर्थं तत्र राज्ञोऽतिमेधसः ।।
तत्र स्नातो नरो जातु न ज्ञानाच्च्यवतेंऽततः ।। ७८ ।।
ततोपि हि महातीर्थं सर्वपापप्रणाशनम् ।।
यत्र भागीरथी साक्षान्मूर्तिरूपेण तिष्ठति ।। ७९ ।।
स्नात्वा भागीरथी तीर्थे कृत्वा श्राद्धं विधानवित् ।।
दत्त्वा दानं च पात्रेभ्यो न भूयो गर्भभाग्भवेत् ।। 4.2.83.८० ।।
हरपापं च भो वीर तीर्थं भागीरथीतटे ।।
तत्र स्नात्वा क्षयं यांति महापापकुलान्यपि ।।८१।।

यो निष्पापेश्वरं लिंगं तत्र पश्यति मानवः ।।
निष्पापो जायते वीर स तल्लिंगेक्षणात्क्षणात् ।।८२।।
दशाश्वमेधतीर्थं च ततोपि प्रवरं मतम् ।।
दशानामश्वमेधानां यत्र स्नात्वा फलं लभेत् ।८३।।
ततोपि शुभदं वीर बंदीतीर्थं प्रचक्षते ।।
यत्र स्नातो नरो मुच्येदपि संसारबंधनात् ।। ८४ ।।
हिरण्याक्षेण दैत्येन बहुशो देवताः पुरा ।।
बंदीकृता निगडिता स्तुष्टुवुर्जगदंबिकाम् ।। ८५ ।।
ततो विशृंखलीभूतैर्वंदिता यज्जगज्जनिः ।।
तदा प्रभृति बंदीति गीयतेद्यापि मानवैः ।। ८६ ।।
बंदीतीर्थस्तु तत्रैव महानिगडखंडनम् ।।
तत्र स्नातो विमुच्येत सर्वस्मात्कर्मपाशतः ।। ८७ ।।
बंदीतीर्थं महाश्रेष्ठं काशिपुर्यां विशांपते ।।
तत्र स्नातो नरो यायाद्विमुक्तिं देव्यनुग्रहात् ।। ८८ ।।
ततोपि हि श्रेष्ठतरं प्रयागमिति विश्रुतम् ।।
प्रयागमाधवो यत्र सर्वयागफलप्रदः ।। ८९ ।।
क्षोणीवराहतीर्थं च ततोपि शुभदं परम् ।।
तत्र स्नातो नरो जातु तिर्यग्योनिं न गच्छति ।। 4.2.83.९० ।।
ततः कालेश्वरं तीर्थं वीरश्रेष्ठतरं परम् ।।
कलिकालौ न बाधेते यत्र स्नातं नरोत्तमम् ।।९१ ।।
अशोकतीर्थं तत्रैव ततोप्यतितरां शुभम् ।।
यत्र स्नातो नरो जातु नापतेच्छोकसागरे ।। ९२ ।।
ततोति निर्मलतरं शक्रतीर्थं नृपांगज ।।
शुक्रद्वारा न जायेत यत्र स्नातो नरोत्तमः ।।९३।।
ततोऽपि पुण्यदं राजन्भवानीतीर्थमुत्तमम् ।।
यत्र स्नात्वा भवानीशौ दृष्ट्वा नैव पुनर्भवेत् ।। ९४ ।।
प्रभासतीर्थं विख्यातं ततोपि शुभदं नृणाम् ।।
सोमेश्वरस्य पुरतस्तत्र स्नातो न गर्भभाक् ।। ९५ ।।
ततो गरुडतीर्थं च संसारविषनाशनम् ।।
गरुडेशं समभ्यर्च्य तत्र स्नात्वा न शोचति ।। ९६ ।।
ब्रह्मतीर्थं ततः पुण्यं वीरब्रह्मेश्वरात्पुरः ।।
ब्रह्मविद्यामवाप्नोति तत्र स्नानेन मानवः ।। ९७ ।।
ततो वृद्धार्कतीर्थं च विधितीर्थं ततः परम् ।।

तत्राप्लुतो नरो याति रविलोकं सुनिर्मलम् ।। ९८ ।।
ततो नृसिंहतीर्थं च महाभयनिवारणम् ।।
कालादपि कुतस्तत्र स्नात्वा परिबिभेति च ।। ९९ ।।
ततोपि पुण्यदं नृणां तीर्थं चित्ररथेश्वरम् ।।
यत्र स्नात्वा च दत्त्वा च चित्रगुप्तं न पश्यति ।।4.2.83.१००।।
धर्मतीर्थं ततः पुण्यं धर्मेश पुरतः स्थितम् ।।
तत्र श्राद्धदिकं कृत्वा पितॄणामनृणो भवेत् ।।१।।
विशालतीर्थं विमलं विशालफलदं ततः ।।
तत्र स्नात्वा विशालाक्षी दृष्ट्वा गर्भेन जायते ।। २ ।।
जरासंधेश तीर्थं च जरासंधेशसन्निधौ ।।
संसारज्वरपीडाभिस्तत्र स्नातो न मुह्यति ।। ३ ।।
ततोऽपि ललितातीर्थं महासौभाग्यवर्धनम् ।।
स्नात्वार्चयित्वा ललितां न दरिद्रो न दुःखभाक् ।। ४ ।।
ततो गौतमतीर्थं च सर्वपापविशोधनम् ।।
स्नात्वा पिंडान्विनिर्वाप्य यत्र शोचति न क्वचित् ।। ५ ।।
गंगाकेशवतीर्थं च तीर्थं चागस्त्य संज्ञकम् ।।
ततस्तु योगिनीतीर्थं त्रिसंध्याख्यं ततः परम् ।। ६ ।।
ततस्तु नार्मदं तीर्थं तत आरुंधतेयकम् ।।
वासिष्ठं च ततस्तीर्थं मार्कंण्डेयमनुत्तमम् ।। ७ ।।
ज्ञेयान्येतानि तीर्थानि पुण्यदान्युत्तरोत्तरम ।।
खुरकर्तरि संज्ञं च ततस्तीर्थमनुत्तमम् ।। ८ ।।
तत्र श्राद्धादिकरणान्नरोमुच्येत किल्बिषैः ।।
ततो भगीरथं तीर्थं राजर्षेरतिपुण्यदम्।। ९ ।।
तत्राल्पमपि यच्छेद्यत्कल्पांतेप्यक्षयं हि तत् ।।
एतेभ्योपि हि तीर्थेभ्यो लिंगकोटित्रयादपि ।।4.2.83.११० ।।
वीरवीरेश्वरं लिंगं महाश्रेष्ठं भविष्यति ।।
वीरतीर्थे नरः स्नात्वा वीरेशं परिपूज्य च ।। ११ ।।
तीर्थेष्वेतेषु सर्वेषु स्नातो भवति नान्यथा ।।
यस्तु वीरेश्वरं लिंगं नक्तमभ्यर्चयिप्यति ।।
तेन त्रिकोटिसंख्यानि लिंगानीहार्चितानि वै ।। १२ ।।
यस्तु कामयते लक्ष्मीं मुक्तिदां भुक्तिदामपि ।।
तेन वीरेश्वरं लिंगं संसेव्यमतियत्नतः ।। १३ ।।
विधायैकं जागरणं नरो वीरेशमर्चयन् ।।

भूतायां नैव गृह्णाति शरीरं पांचभौतिकम् ।। १४ ।।
इदं लिंगं सदाभ्यच्र्यं सिद्धैः संसिद्धिकामुकैः ।।
ऐहिकामुष्मिकान्यस्मात्सर्वान्कामान्समर्थयेत् ।। १५ ।।
पंचामृतेन स्नपनं यः करिष्यति मानवः ।।
पलेपले फलं तस्य वीरेशे घटकोटिजम् ।। १६ ।।
यदन्यत्र फलं लिंगे कोटिपुष्प प्रदानतः ।।
तदेकेनैव पुष्पेण वीरेशे नात्र संशयः ।। १७ ।।
एकामप्याहुतिं दत्त्वा वीरेश्वरसमीपतः ।।
कोटिहोमफलं सम्यङ्नात्र कार्या विचारणा ।। १८ ।।
सिक्थेसिक्थे च नैवैद्यै कोटिसिक्थफलं भवेत् ।।
अत्यल्पमपि वीरेशे कृतमक्षयतां व्रजेत् ।। १९ ।।
अप्येकं यो महारुद्रं जपेद्वीरेश सन्निधौ ।।
जापयेद्वा भवेत्तस्य कोटिरुद्रफलं ध्रुवम् ।। 4.2.83.१२० ।।
व्रतोत्सर्गादि वीरेशे यत्कृतं व्रतिभिर्नृभिः ।।
तत्कोटिगुणसंख्याकं भवत्येव न संशयः ।। २१ ।।
कृता अष्टौ नमस्कारा येन वीरेश्वराग्रतः ।।
अष्टकोटि नमस्कारफलं तस्य न संशयः ।। २२ ।।
सर्वासां संपदां स्थानमिदं लिंगं भविष्यति ।।
वीरश्वेरं न संदेहो वीर मे वरदानतः ।। २३ ।।
ज्ञानमुत्पत्स्यते पुंसां तारकाख्यं ममाज्ञया ।।
जीवतामेव तत्सेव्यमेतल्लिंगं शुभार्थिभिः ।। २४ ।।
एतच्छ्रुत्वा पुनः प्राह वीरो मित्रजितः सुतः ।।
प्रणम्य देवदेवेशं परिपूर्णमनोरथः ।। २५ ।।
तीर्थान्येतानि देवेश यान्युक्तानि ममाग्रतः ।।
कृपया पुनरप्येव तदन्यानि वद प्रभो ।। २६ ।।
आदिकेशवमारभ्य तत्तीर्थाच्च भगीरथात् ।।
येषां श्रवणमात्रेण निष्पापो जायते नरः ।। २७ ।।
इति श्रुत्वा महेशानो महीप तनयोदितम् ।।
पुनस्तीर्थानि गंगायां वक्तुं समुपचक्रमे ।। १२८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे उत्तरार्धे वीरेश्वराविर्भावोनाम त्र्यशीतितमोऽध्यायः ।। ८३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८४

https://sa.wikisource.org/s/fw8

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।।

आकर्णय क्षोणिसुर यथा स्थाणुरचीकरत् ।।

गंगावरणयोः पुण्यात्संभेदात्तीर्थभूमिकाम्।। १ ।।

संगमे तत्र निष्णातः संगमेशं समर्च्य च ।।

नरो न जातु जननी गर्भसंगमवाप्नुयात् ।। २ ।।

तत्र पादोदकं तीर्थं यत्र देवेन शार्ङ्गिणा ।।

आदौ पादौ क्षलितौ तु मंदराच्चागतेन यत् ।। ३ ।।

विष्णुपादोदके तीर्थे वारिकार्यं करोति यः ।।

व्यतीपातेन नियतं भूयः सांसारिकी गतिः ।।४।।

कृतपादोदक स्नानः कृतकेशवपूजनः ।।

वीतसंसारवसतिः काश्यामासीन्नरोत्तमः ।। ५ ।।

काश्यां सा भूमिरुद्दिष्टा श्वेतद्वीप इति द्विजैः ।।

तत्र पुण्यार्जनं कृत्वा श्वेतद्वीपाधिपो भवेत् ।। ६ ।।

ततः पादोदकात्तीर्थात्तीर्थं क्षीराब्धिसंज्ञकम् ।।

तत्रार्जित महापुण्यो वसेत्क्षीराब्धिरोधसि ।। ७ ।।

क्षीरोदाद्दक्षिणेभागे तीर्थं शंखाख्यनुत्तमम् ।।

तत्र स्नातो भवेन्नूनं नाशंखादिनिधेः पतिः ।। ८ ।।

अर्वाक्च शंखतीर्थाद्वै चक्रतीर्थमनुत्तमम् ।।

संसारचक्रे न पतेत्तत्तीर्थजलमज्जनात् ।। ९।।

गदातीर्थं तदग्रे तु संसारगदनाशनम् ।।

तत्र श्राद्धादिकरणात्पश्येद्देवं गदाधरम् ।। 4.2.84.१० ।।

पद्माकृत्पद्मतीर्थं च तदग्रे पितृतृप्तिकृत् ।।

तत्र स्नानादिकरणात्प्राप्नुयादघसंक्षयम् ।। ११ ।।

ततस्तीर्थं महालक्ष्म्या महापुण्यफलप्रदम् ।।

तत्राभ्यर्च्य महालक्ष्मीं निर्वाणकमलां लभेत् ।। १२ ।।

ततो गारुत्मतं तीर्थं संसारगरनाशनम् ।।
कृतोदकक्रियस्तत्र वैकुंठे वसतिं लभेत् ।। १३ ।।
ततो नारदतीर्थं च ब्रह्मविद्यैककारणम् ।।
तत्र स्नानेन मुक्तः स्याद्दृष्ट्वा नारदकेशवम् ।। १९। ।।
प्रह्लादतीर्थं तद्याम्ये महाभक्तिफलप्रदम् ।।
तत्र वै स्नानमात्रेण विष्णोः प्रियतरो भवेत् ।। १५ ।।
अंबरीषं ततस्तीर्थं महापातकनाशनम् ।।
तत्र वै शुभकर्माणो जना नो गर्भभाजनम् ।। ।। १६ ।।
आदित्यकेशवं नाम तदग्रे तीर्थमुत्तमम् ।।
कृताभिषेकस्तत्रापि लभेत्स्वर्गाभिषेचनम् ।। १७ ।।
दत्तात्रेयस्य तत्रास्ति तीर्थं त्रैलोक्यपावनम् ।।
योगसिद्धिं लभे तत्र स्नानमात्रेण भावतः ।। १८ ।।
तदग्रे भार्गवं तीर्थं महाज्ञानसमर्पकम् ।।
तत्र स्नानविधानेन भवेद्भार्गव लोकभाक् ।। १९ ।।
ततो वामनतीर्थं च विष्णुसान्निध्यहेतुकम् ।।
तत्र श्राद्धविधानेन मुच्यते पितृजादृणात् ।। 4.2.84.२० ।।
नरनारायणाख्यं हि ततस्तीर्थं शुभप्रदम् ।।
तत्तीर्थमज्जनात्पुंसां गर्भवासः सुदुर्लभः ।। २१ ।।
यज्ञवाराहतीर्थं च ततो दक्षिणतः शुभम् ।।
यत्र स्नातस्य वै पुंसां राजसूयफलं ध्रुवम्।। २२ ।।
विदारनारसिंहाख्यं तीर्थं तत्रास्ति पावनम् ।।
यत्रैकस्नानतो नश्येदघ जन्मशतार्जितम् ।। २३ ।।
गोपीगोविंदतीर्थं च ततो वैष्णवलोकदम् ।।
यस्मिन्स्नातो नरो विद्वान्न विंद्याद्गर्भवेदनम् ।। २४ ।।
लक्ष्मीनृसिंहतीर्थं च गोपीगोविंद दक्षिणे ।।
निर्वाणलक्ष्म्या यत्रत्यो व्रियते तु नरोत्तमः ।। २५ ।।
तद्दक्षिणायां काष्ठायां शेषतीर्थमनुत्तमम्।।
महापापौघ शेषोपि न तिष्ठेद्यन्निमज्जनात् ।। ।। २६ ।।

शंखमाधवतीर्थं च तद्याम्यां दिशि चोत्तमम् ।।

तत्तीर्थसेवनान्नृणां कुतः पापभयं महत् ।। २७ ।।

ततोपि पावनतरं तीर्थं तत्क्षणसिद्धिदम् ।।

नीलग्रीवाख्यमतुलं तत्स्नायी सर्वदा शुचिः ।। २८ ।।

तत्रोद्दालकतीर्थं च सर्वाघौघ विनाशनम् ।।

ददाति महतीमृद्धिं स्नानमात्रेण तन्नृणाम् ।। २९ ।।

ततः सांख्याख्य तीर्थं च सांख्येश्वर समीपतः ।।

तत्तीर्थसेवनात्पुंसां सांख्ययोगः प्रसीदति ।। 4.2.84.३० ।।

स्वर्लोकाद्यत्र संलीनः स्वयं देव उमापतिः ।।

अतः स्वर्लीनतीर्थं च स्वर्लीनेश्वर सन्निधौ ।। ३१ ।।

तत्र स्नानेन दानेन श्रद्धया द्विजभोजनैः ।।

जपहोमार्चनैः पुंसामक्षयं सर्वमेव हि ।। ३२ ।।

महिषासुरतीर्थं च तत्समीपेति पावनम् ।।

यत्र तस्वा स दैत्येंद्रो विजिग्ये सकलान्सुरान् ।। ३३ ।।

तत्तीर्थसेवकोद्यापि नारिभिः परिभूयते ।।

न पातकैर्महद्भिश्च प्रार्थितं च फलं लभेत् ।। ३४ ।।

बाणतीर्थं च तस्यारात्तत्सहस्रभुजप्रदम् ।।

तत्र स्नातो नरो भक्तिं प्राप्नुयाच्छांभवीं स्थिराम् ।। ३५ ।।

गोप्रतारेश्वरं नाम तदग्रे तीर्थमुत्तमम् ।।

अपुत्रोपि तरेद्यत्र स्नातो वैतरणीं सुखम् ।। ३६ ।।

तीर्थं हिरण्यगर्भाख्यं तद्याम्ये सर्वपापहृत्।।

तत्र स्नातो हिरण्येन मुच्यते न कदाचन ।।३७।।

ततः प्रणवतीर्थं च सर्वतीर्थोत्तमोत्तमम् ।।

जीवन्मुक्तो भवेत्तत्र स्नानमात्रेण मानवः ।। ३८ ।।

ततः पिशंगिला तीर्थं दर्शनादपि पापहृत् ।।

मुने ममाधिष्ठानं वै तदगस्तेऽति सिद्धिदम् ।। ३९ ।।

स्नात्वा पिशंगिला तीर्थे दत्त्वा दानं च किंचन ।।

किं शोचति कृतात्पापादन्यत्रापि मृतो यदि ।। 4.2.84.४० ।।

यो वै पिशंगिला तीर्थे स्नात्वा मामर्चयिष्यति ।।
भविष्यति स मे मित्त्रं मित्रतेजः समप्रभम् ।। ४१ ।।
ततस्त्रैविष्टपीदृष्टि निर्मलीकृत पुष्कलम्।।
तीर्थं पिलिपिलाख्यं वै मनोमलविनाशनम् ।। ४२ ।। ।।
तत्र श्राद्धादिकरणाद्दीनानाथ प्रतर्पणात् ।।
महतीं श्रियमाप्नोति मानवोतीव निश्चलाम् ।। ४३ ।।
ततो नागेश्वरं तीर्थं महाघपरिशोधनम् ।।
तत्तीर्थमज्जनादेव भवेत्सर्वाघसंक्षयः ।। ४४ ।।
तद्दक्षिणे महापुण्यं कर्णादित्याख्यमुत्तमम् ।।
तीर्थं यत्राप्लुतो मर्त्यो भास्करीं श्रियमावहेत् ।। ४५ ।।
ततो भैरवतीर्थं च महाघौघक्षयप्रदम् ।।
चतुरर्थोदयकरं सर्वविघ्ननिवारणम् ।। ४६ ।।
भौमाष्टम्यां तत्र नरः स्नात्वा संतर्पयेत्पितॄन् ।।
दृष्ट्वा च भैरवं कालं कलिं कालं च संजयेत् ।। ४७ ।।
तीर्थं खर्वनृसिंहाख्यं तीर्थाद्भरवतः पुरः ।।
तत्र स्नातस्य वै पुंसः कुतोघजनितं भयम् ।। ४८ ।।
मृकंडस्य मुनेस्तीर्थं तद्याम्यामतिनिर्मलम ।।
तत्र स्नानेन मर्त्यानां नापायमरणं क्वचित् ।। ४९ ।।
ततः पंचनदाख्यं वै सर्वतीर्थनिषेवितम् ।।
तीर्थं यत्र नरः स्नात्वा न संसारी पुनर्भवेत् ।। 4.2.84.५० ।।
ब्रह्मांडोदरवर्तीनि यानि तीर्थानि सर्वतः ।।
ऊर्जे यत्र समायांति स्वाघौघ परिनुत्तये ।। ५१ ।।
सर्वदा यत्र सर्वाणि दशम्यादिदिनत्रयम् ।।
तिष्ठंति तीर्थवर्याणि निजनैर्मल्यहेतवे ।। ।। ५२ ।।
भूरिशः सर्वतीर्थानि मध्य्य काशि पदेपदे ।।
परं पांचनदः कैश्चिन्महिमानापि कुत्रचित् ।। ५३ ।।
अप्येकं कार्तिकस्याहस्तत्र वै सफलीकृतम् ।।
जपहोमार्चनादानैः कृतकृत्यास्त एव हि ।। ५४ ।।

सर्वाण्यपि च तीर्थानि युगपत्तुलितान्यपि ।।

नाधिजन्मुः पंचनद्याः कलाया अपि तुल्यताम् ।। ५५ ।।

स्नात्वा पांचनदे तीर्थे दृष्ट्वा वै बिंदुमाधवम् ।।

न जातु जायते धीमाञ्जननी जठराजिरे ।। ५६ ।।

ततो ज्ञानहदं तीर्थं जडानामपि जाड्यहृत् ।।

तत्र स्नातो नरो जातु ज्ञानभ्रंशं न चाप्नुयात् ।। ५७ ।।

तत्र ज्ञानह्रदे स्नात्वा दृष्ट्वा ज्ञानेश्वरं नरः ।।

ज्ञानं तदधिगच्छेद्वै येन नो बाध्यते पुनः ।। ५८ ।।

ततोस्ति मंगलं तीर्थं सर्वामंगलनाशनम् ।।

तत्रावगाहनं कृत्वा भवेन्मंगलभाजनम् ।। ५९ ।।

अमंगलानि नश्येयुर्भवेयुर्मंगलानि च ।।

स्नातुर्वै मंगले तीर्थे नमस्कर्तुश्च मंगलम् ।। ।। 4.2.84.६० ।।

मयूखमालिनस्तीर्थं तदग्रे मलनाशनम् ।।

तत्राप्लुतो गभस्तीशं विलोक्य विमलो भवेत् ।। ६१ ।।

मखतीर्थं तु तत्रैव मखैश्वर समीपतः ।।

मखजं पुण्यमाप्नोति तत्र स्नातो नरोत्तमः ।। ६२ ।।

तत्पार्श्वे बिंदुतीर्थं च परमज्ञानकारणम् ।।

तत्र श्राद्धादिकं कृत्वा लभेत्सुकृतमुत्तमम् ।। ६३ ।।

पिप्पलादस्य च मुनेस्तीर्थं तद्याम्यदिक्स्थितम् ।।

स्नात्वा शनेर्दिने तत्र दृष्ट्वावै पिप्पलेश्वरम् ।। ६४ ।।

पिप्पलं तत्र सेवित्वा अश्वत्थ इति मंत्रतः ।।

शनिपीडां न लभते दुःस्वप्नं चापि नाशयेत् ।। ६५ ।।

ततस्ताम्रवराहाख्यं तीर्थं चैवातिपावनम् ।।

यत्र स्नानेन दानेन न मज्जेदघसागरे ।। ६६ ।।

तदग्रे कालगंगा च कलिकल्मषनाशिनी ।।

तस्यां स्नात्वा नरो धीमांस्तत्क्षणान्निरघो भवेत् ।।६७।।

इंद्रद्युम्नं महातीर्थमिंद्रद्युम्नेश्वराग्रतः ।।

तोयकृत्यं तत्र कृत्वा लोकमैंद्रमवाप्नुयात।। ६८।।

ततस्तु रामतीर्थं च वीररामेश्वराग्रतः ।।

तत्तीर्थस्नानमात्रेण वैष्णवं लोकमाप्नुयात् ।। ६९ ।।

तत ऐक्ष्वाकवं तीर्थं सर्वाघौघविनाशनम् ।।

तत्र स्नानेन पूतात्मा जायते मनुजोत्तमः ।। 4.2.84.७० ।।

मरुत्ततीर्थं तत्प्रांते मरुत्तेश्वरसन्निधो ।।

तत्र स्नात्वा तमर्च्येशं महदैश्वर्यमाप्नुयात् ।। ७१ ।।

मैत्रावरुणतीर्थं च ततः पातकनाशनम् ।।

तत्र पिंडप्रदानेन पितॄणां भवति प्रियः ।। ७२ ।।

ततोग्नितीर्थविमलमग्नीश पुरतो महत् ।।

अग्निलोकमवाप्नोति तत्तीर्थपरिमज्जनात् ।। ७३ ।।

अंगारतीर्थं तत्रैव अंगारेश्वरसन्निधौ ।।

तत्रांगार चतुर्थ्यां नु स्नात्वा निष्पापतामियात् ।। ७४ ।।

ततो वै कलितीर्थं च कलशेश्वरसन्निधौ ।।

स्नात्वा तल्लिंगमभ्यर्च्य कलिकालान्न बिभ्यति ।।७५।।

चंद्रतीर्थं च तत्रैव चंद्रेश्वरसमीपतः ।।

तत्र स्नात्वार्च्य चंद्रेशं चंद्रलोकमवाप्नुयात् ।। ७६ ।।

तदग्रे वीरतीर्थं च वीरेश्वर समीपतः ।।

यदुक्तं प्राक्तवपुरस्तीर्थानामुत्तमं परम् ।। ७७ ।।

विघ्नेशतीर्थं च ततः सर्वविघ्नविघातकृत् ।।

जातुचित्तत्र संस्नातो न विघ्नैरभिभूयते ।। ७८ ।।

हरिश्चंद्रस्य राजर्षेस्ततस्तीर्थमनुत्तमम् ।।

यत्र स्नातो नरो जातु न सत्याच्चयवते कचित् ।। ७९ ।।

हरिश्चंद्रस्य तीर्थे तु यच्छ्रेयः समुपार्जितम् ।।

तदक्षयफलं वीर इह लोके परत्र च ।। 4.2.84.८० ।।

ततः पर्वततीर्थं च पर्वतेश समीपतः ।।

सर्वपर्वफलं तस्य स्नात्वा पर्वण्यपर्वणि ।।८१।।

कंबलाश्वतरं तीर्थं तत्र सर्वविषापहम् ।।

तत्र स्नातो भवेन्मर्त्यो गीतविद्याविशारदः ।। ८२ ।।

ततः सारस्वतं तीर्थं सर्वविद्योपपादकम् ।।
तिष्ठेयुः पितरस्तत्र सह देवर्षिमानवैः ।। ८३ ।।
उमातीर्थं तु तत्रैव सर्वशक्तिसमन्वितम् ।।
औमेयलोकप्राप्त्यै स्यात्स्नानमात्रेण निश्चितम् ।। ८४ ।।
ततस्त्रिलोकी विख्यातं त्रिलोक्युद्धरणक्षमम् ।।
तीर्थं श्रेष्ठतरं वीर यदाख्या मणिकर्णिका ।। ८५ ।।
चक्रपुष्करिणीतीर्थं तदादौ विष्णुना कृतम् ।।
तदाख्या कर्णनादेव सर्वैः पापैः प्रमुच्यते ।। ८६ ।।
स्वर्गौकसस्त्रिसंध्यं वै जपंति मणिकर्णिकाम् ।।
यन्नामग्रहणं पुंसां श्रेयसं परमाय हि ।। ८७ ।।
यैः श्रुता यैः स्मृता वीर यैर्दृष्टा मणिकर्णिका ।।
त एव कृतिनो लोके कृतकृत्यास्त एव हि ।। ८८ ।।
त्रिलोके ये जपंतीह मानवा मणिकर्णिकाम् ।।
जपामि तानहं वीर त्रिकालं पुण्यकर्मणः ।। ८९ ।।
इष्टं तेन महायज्ञैः सहस्रशतदक्षिणैः ।।
पंचाक्षरी महाविद्या येनोक्ता मणिकर्णिका ।। 4.2.84.९० ।।
महादानानि दत्तानि तेन वै पुण्यकर्मणा ।।
येनाहमर्चितो वीर संप्राप्य मणिकर्णिकाम् ।। ९१ ।।
मणिकर्ण्यंबुभिर्येन तर्पिताः प्रपितामहाः ।।
तेन श्राद्धानि दत्तानि गयायां मधुपायसैः ।। ९२ ।।
मणिकर्णीजलं येन संपीतं शुद्धबुद्धिना ।।
किं तस्य सोमपानैस्तैः पुनरावृत्तिलक्षणैः ।। ९३ ।।
ते स्नाताः सर्वतीर्थेषु महापर्वसुभूरिशः ।।
तथा च सर्वावभृथैर्यैः स्नाता मणिकर्णिका ।। ।। ९४ ।।
तैः सुराः पूजिताः सर्वे ब्रह्मविष्णुमुखा मखैः ।।
यैः स्वर्णकुसुमैरत्नैरर्चिता मणिकर्णिका ।।९५।।
अहं तेनोमया सार्धं दीक्षां संप्राप्य शांभवीम् ।।
अर्चितः प्रत्यहं येन पूजिता णिकर्णिका ।। ९६ ।।

तपांसि तेन तप्तानि शीर्णपर्णादिना चिरम् ।।

सेविता श्रद्धया येन श्रीमती मणिकर्णिका ।। ९७ ।।

दत्त्वा दानानि भूरीणि मखानिष्ट्वा तु भूरिशः ।।

चिरं तप्त्वाप्यरण्येषु स्वर्गैश्वर्यान्महीं पुनः ।। ९८ ।।

विपुलेत्र महीपृष्ठे पंचक्रोश्यां मनोहरा ।।

संश्रिता मणिकर्णीयैस्ते याताश्चानिवर्तकाः ।। ९९ ।।

दानानां च व्रतानां च क्रतूनां तपसामपि ।।

इदमेव फलं मन्ये यदाप्या मणिकर्णिका ।। 4.2.84.१०० ।।

मोक्षलक्ष्मीरियं साक्षाच्छ्रीमती मणिकर्णिका ।।

प्रायोस्या महिमानं वै नवेद्म्यहमपि स्फुटम् ।। १ ।।

अवाच्यां मणिकर्ण्याश्च तीर्थं पाशुपतं परम् ।।

तीर्थं तु रुद्रवासाख्यं विश्वतीर्थमतः परम् ।। २ ।।

मुक्तितीर्थं ततो रम्यमविमुक्तमथोत्तमम् ।।

तीर्थं च तारकं स्कांदं ढुंढेस्तीर्थं ततोपि च ।। ३ ।।

भवानेयमथैशानं ज्ञानतीर्थमथोत्तमम् ।।

नंदितीर्थं विष्णुतीर्थं तीर्थं पैतामहं ततः ।। ४ ।।

नाभितीर्थमिदं चैव ब्रह्मनालमतः परम् ।।

ततो भागीरथं तीर्थं यत्तवाग्रे पुराकथि ।।५।।

तीर्थात्युत्तरवाहिन्यां स्वर्धुन्यां काशिसन्निधौ ।।

संत्यनेकानि पुण्यानि मयोक्तान्यल्पशः पुनः ।। ६ ।।

तत्रापि नितरां श्रेष्ठा पंचतीर्थी(?) नृपांगज ।।

यस्यां स्नात्वा नरो भूयो गर्भवासं न संस्मरेत् ।। ७ ।।

प्रथमं चासिसंभेदं तीर्थानां प्रवरं परम्।।

ततो दशाश्वमेधाख्यं सर्वतीर्थनिषेवितम् ।। ८ ।।

ततः पादोदकं तीर्थमादिकेशवसन्निधौ ।।

ततः पंचनदं पुण्यं स्नानमात्रादघौघहृत् ।। ९ ।।

एतेषामपि तीर्थानां चतुर्णामपि सत्तम ।।

पंचमं मणिकर्ण्याख्यं मनावेयवशुद्धिदम् ।।4.2.84.११०।।

अहं स्नाम्यत्र सततमुमया सह पर्वसु ।।
ब्रह्मणा विष्णुना सार्धं सहेंद्रादिसुरर्षिभिः ।। ११ ।।
अतएवात्र गीयेत गाथेयं श्रुतिसंमता।।
नागलोककृतावासैः स्वर्गौकोभिश्च संततम् ।। १२ ।।
सत्यं सत्यं पुनः सत्यं सत्यपूर्वमिदं वचः ।।
मणिकर्णी समं तीर्थं नास्ति ब्रह्मांडगोलके ।। १३ ।।
पंचतीर्थ्यां नरः स्नात्वा न देहं पांचभौतिकम् ।।
गृह्णाति जातुचित्काश्यां पंचास्योवाथ जायते ।। १४ ।।
इति दत्त्वा वरान्देवो वीरस्यांतर्दधे हरः ।।
स च वीरोपि वीरेशं प्राच्र्य प्राप्तः समीहितम् ।। १५ ।।
।। स्कंद उवाच।। ।।
तीर्थाध्यायमिमं पुण्यमगस्ते यो निशामयेत् ।।
तस्याघसंक्षयं यायादपि जन्मशतार्जितम् ।। १६ ।।
इति वीरेश्वराख्यानं तीर्थाख्यानप्रसंगतः ।।
कथितं ते पुरागस्ते कामेशं कथयाम्यतः ।।११७।। ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे वीरेश्वराख्यानं नाम चतुरशीतितमोऽध्यायः ।। ८४ ।। ।।।।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८५

https://sa.wikisource.org/s/fym
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।। ।।

जगज्जनन्याः पार्वत्याः पुरोगस्ते पुरारिणा ।।

यथाख्यायि कथा पुण्या तथा ते कथयाम्यहम् ।। १ ।।

पुरा महीमिमां सर्वां ससमुद्राद्रिकाननाम् ।।

ससरित्कां सार्णवां च सग्रामपुरपत्तनाम् ।। २ ।।

परिभ्रम्य महातेजा महामर्षो महातपाः ।।

दुर्वासाः संपरिप्राप्तः शंभोरानंदकाननम् ।। ३ ।।

विलोक्याक्रीडमखिलं बहुप्रासादमंडितम्।।

बहुकुंडतडागं च शंभोस्तोषमुपागमत्।।।

पदेपदे मुनीनां च जितकाल महाभियाम् ।।

दृष्टोटजानि रम्याणि दुर्वासा विस्मितोभवत्।। ।। ५ ।।

सर्वर्तुकुसुमान्वृक्षान्सुच्छायस्निग्धपल्लवान् ।।

सफलान्सुलताश्लिष्टान्दृष्ट्वा प्रीतिमगान्मुनिः ।। ६ ।।

दुर्वासाश्चातिहृष्टोभूद्दृष्ट्वा पाशुपतोत्तमान् ।।

भूतिभूषितसर्वांगाञ्जटाजटितमौलिकान् ।। ७ ।।

कौपीनमात्र वसनान्स्मरारि ध्यान तत्परान् ।।

कक्षीकृतमहालाबून्हुडुत्कारजितांबुदान् ।। ८ ।।

करंडदंडपानीय पात्रमात्रपरिग्रहान् ।।

क्वचित्त्रिदंडिनो दृष्ट्वा निःसंगा निष्परिग्रहान् ।। ९ ।।

कालादपि निरातंकान्विश्वेशशरणं गतान् ।।

क्वचिद्वेदरहस्यज्ञानाबाल्यब्रह्मचारिणः ।। 4.2.85.१० ।।

नित्यं भागीरथीस्नानपरिपिंगलमूर्धजान् ।। ५।।

विलोक्य काश्यां दुर्वासा ब्राह्मणान्मुमुदेतराम् ।। ११ ।।

पशुष्वपि च या तुष्टिर्मृगेष्वपि च या द्युतिः ।।

तिर्यक्ष्वपि च या हृष्टिः काश्यां नान्यत्र सा स्फुटम् ।। १२ ।।

इदं सुश्रेयसो व्युष्टिः क्वामरेषु त्रिविष्टपे ।।

यत्रत्येष्वपि तिर्यक्षु परमानंदवर्धिनी।। १३ ।।

वरमेतेपि पशव आनंदवनचारिणः ।।

सदानंदाः पुनर्देवाननंदनवनाश्रिताः ।। १४ ।।

वरं काशीपुरीवासी म्लेच्छोपि हि शुभायतिः ।।

नान्यत्रत्यो दीक्षितोपि स हि मुक्तेरभाजनम्।। १५ ।।

वैश्वेश्वरी पुरी चैषा यथा मे चित्तहारिणी ।।

सर्वापि न तथा क्षोणी न स्वर्गो नैव नागभूः।।१६।।

स्थैर्यं बबंध न क्वापि भ्रमतो मे मनोगतिः ।।

सर्वस्मिन्नपि भूभागे यथा स्थैर्यमगादिह ।। १७ ।।

रम्या पुरी भवेदेषा ब्रह्मांडादखिलादपि ।।

परिष्टुत्येति दुर्वासाश्चेतोवृत्तिमवाप ह ।। १८ ।।

तप्यमानोपि हि तपः सुचिरं स महातपाः।।

यदा नाप फलं किंचिच्चुकोप च तदा भृशम् ।। १९ ।।

धिक्च मां तापसं दुष्टं धिक्च मे दुश्चरं तपः ।।

धिक्च क्षेत्रमिदं शंभोः सर्वेषां च प्रतारकम् ।। 4.2.85.२० ।।

यथा न मुक्तिरत्र स्यात्कस्यापि करवै तथा ।।

इति शप्तुं यदोद्युक्तः संजहास तदा शिवः ।।२१।।

तत्र लिंगमभूदेकं ख्यातं प्रहसितेश्वरम् ।।

तल्लिंगदर्शनात्पुंसामानंदः स्यात्पदेपदे ।। २२ ।।

उवाच विस्मयाविष्टो मनस्येव महेशिता ।।

ईदृशेभ्यस्तपस्विभ्यो नमोस्त्विवति पुनःपुनः ।।२३।।

यत्रैव हि तपस्यंति यत्रैव विहिताश्रमाः ।।

लब्धप्रतिष्ठा यत्रैव तत्रैवामर्षिणो द्विजाः।।२४।।

मनाक्चिंतितमात्रं तु चेल्लभंते न तापसाः ।।

क्रुधा तदैव जीयंते हारिण्या तपसां श्रियः ।। २५ ।।

तथापि तापसा मान्याः स्वश्रेयोवृद्धिकांक्षिभिः ।।

अक्रोधनाः क्रोधना वा का चिंता हि तपस्विनाम् ।। २६ ।।

इति यावन्महेशानो मनस्येव विचिंतयेत् ।।
तावत्तत्क्रोधजो वह्निर्व्यानशे व्योममंडलम् ।। २७ ।।
तत्कोधानलधूमोघैर्व्यापितं यन्नभोंगणम् ।।
तद्दधाति नभोद्यापि नीलिमानं महत्तरम् ।। २८ ।।
ततो गणाः परिक्षुब्धाः प्रलयार्णव नीरवत् ।।
आः किमेतत्किमेतद्वै भाषमाणाः परस्परम् ।। २९ ।।
गर्जंतस्तर्जयंतश्च प्रोद्यता युधपाणयः ।।
प्रमथाः परितस्थुस्ते परितो धाम शांभवम् ।।4.2.85.३०।।
को यमः कोथवा कालः को मृत्युः कस्तथांतकः।।
को वा विधाता के लेखाः कुद्धेष्वस्मासु कः परः ।। ३१ ।।
अग्निं पिबामो जलवच्चूर्णीकुर्मोखिलान्गिरीन् ।।
सप्तापि चार्णवांस्तूर्णं करवाम मरुस्थलीम् ।। ३२ ।।
पातालं चानयामोर्ध्वमधो दध्मोथवा दिवम् ।।
एकमेव हि वा ग्रासं गगनं करवामहे ।। ३३ ।।
ब्रह्मांडभांडमथवा स्फोटयामः क्षणेन हि ।।
आस्फालयामो वान्योन्यं कालं मृत्युं च तालवत्।। ३४ ।।
ग्रसामो वाथ भुवनं मुक्त्वा वाराणसीं पुरीम् ।।
यत्र मुक्ता भवंत्येव मृतमात्रेण जंतवः ।। ३५ ।।
कुतोऽयं धूमसंभारो ज्वालावल्यः कुतस्त्वमूः ।।
को वा मृत्युंजयं रुद्रं नो विद्यान्मदमोहितः ।। ३६ ।।
इति पारिषदाः शंभोर्महाभय भयप्रदाः ।। जल्पंतः कल्पयामासुः प्राकारं गगनस्पृशम्।।३७।।
शकलीकृत्य बहुशः शिलावत्प्रलयानलम् ।।
नंदी च नंदिषेणश्च सोमनंदी महोदरः ।। ।। ३८ ।।
महाहनुर्महाग्रीवो महाकालो जितांतकः ।।
मृत्युप्रकंपनो भीमो घंटाकर्णो महाबलः ।।३९।।
क्षोभणो द्रावणो जृंभी पचास्यः पंचलोचनः ।।
द्विशिरास्त्रिशिराः सोमः पंचहस्तो दशाननः ।। 4.2.85.४० ।।
चंडो भृंगिरिटिस्तुंडी प्रचंडस्तांडवप्रियः ।।

पिचिंडिलः स्थूलशिराः स्थूलकेशो गभस्तिमान् ।। ४१ ।।

क्षेमकः क्षेमधन्वा च वीरभद्रो रणप्रियः ।।

चंडपाणिः शूलपाणिः पाशपाणिः करोदरः ।। ४२ ।।

दीर्घग्रीवोथ पिंगाक्षः पिंगलः पिंगमूर्धजः ।।

बहुनेत्रो लंबकर्णः खर्वः पर्वतविग्रहः ।।४३।।

गोकर्णो गजकर्णश्च कोकिलाख्यो गजाननः ।।

अहं वै नैगमेयश्च विकटास्योट्टहासकः ।।४४।।

सीरपाणिः शिवारावो वैणिको वेणुवादनः ।।

दुराधर्षो दुःसहश्च गर्जनो रिपुतर्जनः ।। ४५ ।।

इत्यादयो गणेशानाः शतकोटि दुरासदाः ।।

काश्यां निवारयामासुरपि प्राभंजनीं गतिम् ।। ४६ ।।

क्षुब्धेषु तेषु वीरेषु चकंपे भुवनत्रयम् ।।

दुर्वाससश्च कोपाग्नि ज्वालाभिर्व्याकुलीकृतम् ।। ४७ ।।

तदा विविशतुः काश्यां सूर्याचंद्रमसावपि ।।

न गणैरकृतानुज्ञौ तत्तेजः शमितप्रभौ ।। ४८ ।।

निवार्य प्रमथानीकमतिक्षुब्धमुमाधवः ।।

मदंश एव हि मुनीरानसूये य एष वै ।। ४९ ।।

अथो दुर्वाससे लिंगादाविरासीत्कृपानिधिः ।।

महातेजोमयः शंभुर्मुनिशापात्पुरीमवन् ।।4.2.85.५०।।

माभूच्छापो मुनेः काश्यां निर्वाणप्रतिबंधकः ।।

इत्यनुक्रोशतो देवस्तस्य प्रत्यक्षतां गतः।। ५१ ।।

उवाच च प्रसन्नोस्मि महाक्रोधन तापस ।।

वरयस्व वरः कस्ते मया देयो विशंकितः ।। ५२।।

ततो विलज्जितोगस्त्य शापोद्यतकरो मुनिः ।।

अपराद्धं बहु मया क्रोधांधेनेति दुर्धिया ।। ५३ ।।

उवाच चेति बहुशो धिङ्मां क्रोधवशंगतम् ।।

त्रैलोक्याभयदां काशीं शप्तुमुद्यतचेतसम् ।। ५४ ।।

दुःखार्णव निमग्नानां यातायातेति खेदिनाम् ।।

कर्मपाशितकंठानां काश्येका मुक्तिसाधनम्।। ५५।।
सर्वेषां जंतुजातानां जनन्येकैक्काशिका।
महामृतस्तन्यदात्री नेत्री च परमं पदम् ।। ५६ ।।
जनन्या सह नो काशी लभेदुपमितिं क्वचित्।।
धारयेज्जननी गर्भे काशी गर्भाद्विमोचयेत् ।।५७ ।।
एवंभूतां तु यः काशीमन्योपि हि शपिष्यति ।।
तस्यैव शापो भविता न तु काश्याः कथंचन ।। ५८ ।।
इति दुर्वाससो वाक्यं श्रुत्वा देवस्त्रिलोचनः ।।
अतीव तुषितो जातः काशीस्तवन लब्धमुत् ।।५९।।
यः काशीं स्तौति मेधावी यः काशीं हृदि धारयेत् ।।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः ।।4.2.85.६०।।
जिह्वाग्रे वर्तते यस्य काशीत्यक्षरयुग्मकम् ।।
न तस्य गर्भवासः स्यात्क्वचिदेव सुमेधसः ।। ६१ ।।
यो मंत्रं जपति प्रातः काशी वर्णद्वयात्मकम्।।
स तु लोकद्वयं जित्वा लोकातीतं व्रजेत्पदम् ।।६२।।
आनुसूयेय ते ज्ञानं काशीस्तवन पुण्यतः ।।
यथेदानीं समुत्पन्नं तथा न तपसः पुरा ।। ६३ ।।
मुने न मे प्रियस्तद्वद्दीक्षितो मम पूजकः ।।
यादृक्प्रियतरः सत्यं काशीस्तवन लालसः ।।६४।।
तादृक्तुष्टिर्न मे दानैस्तादृक्तुष्टिर्न मे मखैः ।।
न तुष्टिस्तपसा तादृग्यादृशी काशिसंस्तवैः ।। ६५ ।।
आनंदकाननं येन स्तुतमेतत्सुचेतसा ।।
तेनाहं संस्तुतः सम्यक्सर्वैः सूक्तैः श्रुतीरितैः ।। ६६ ।।
तव कामाः समृद्धाः स्युरानुसूयेय तापस ।।
ज्ञानं ते परमं भावि महामोहविनाशनम् ।। ६७ ।।
अपरं च वरं ब्रूहि किं दातव्यं तवानघ ।।
त्वादृशा एव मुनयः श्लाघनीया यतः सताम्।। ६८ ।।
यस्यास्त्वेव हि सामर्थ्यं तपसः क्रुद्ध्यतीहसः ।।

कुपितोप्यसमर्थस्तु किं कर्ता क्षीणवृत्तिवत्।।६९।।

इति श्रुत्वा परिष्टुत्य दुर्वासाः कृत्तिवाससम् ।।

वरं च प्रार्थयामास परिहृष्ट तनूरुहः ।। 4.2.85.७० ।।

।।दुर्वासा उवाच ।। ।।

देवदेव जगन्नाथ करुणाकर शंकर ।।

महापराधविध्वंसिन्नंधकारे स्मरांतक ।। ७१ ।।

मृत्युंजयोग्रभूतेश मृडानीश त्रिलोचन ।।

यदि प्रसन्नो मे नाथ यदि देयो वरो मम ।। ७२ ।।

तदिदं कामदं नाम लिगमस्त्विह धूर्जटे ।।

इदं च पल्वलं मेत्र कामकुंडाख्यमस्तु वै ।। ७३ ।।

।। देवदेव उवाच ।। ।।

एवमस्तु महातेजो मुने परमकोपन ।।

यत्त्वया स्थापितं लिंगं दुर्वासेश्वरसंज्ञितम्।। ७४ ।।

तदेव कामकृन्नृणां कामेश्वरमिहास्त्विति ।।

यः प्रदोषे त्रयोदश्यां शनिवासरसंयुजि ।। ७५ ।।

संस्नास्यति नरो धीमान्कामकुंडे त्वदास्पदे ।।

त्वत्स्थापितं च कामेशं लिंगं द्रक्ष्यति मानवः ।। ७६ ।।

स वै कामकृताद्दोषाद्यामीं नाप्स्यति यातनाम् ।।

बहवोपि हि पाप्मानो बहुभिर्जन्मभिः कृताः ।। ७७ ।।

कामतीर्थांबु संस्नानाद्यास्यंति विलयं क्षणात् ।।

कामाः समृद्धिमाप्स्यंति कामेश्वर निषेवणात् ।। ७८ ।।

इति दत्त्वा वराञ्शंभुस्तल्लिंगे लयमाययौ।। ।।

स्कंद उवाच ।।

तल्लिंगाराधनात्कामाः प्राप्ता दुर्वाससा भृशम् ।। ७९ ।।

तस्मात्सर्वप्रयत्नेन काश्यां कामेश्वरः सदा ।।

पूजनीयः प्रयत्नेन महाकामाभिलाषुकैः ।।4.2.85.८० ।।

कामकुंडकृतस्नानैर्महापातकशांतये ।।

इदं कामेश्वराख्यानं यः पठिष्यति पुण्यवान् ।।

यः श्रोष्यति च मेधावी तौ निष्पापौ भविष्यतः ।। ८१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां चतुर्थे काशीखंड उत्तरार्धे दुर्वाससो वरप्रदानं नाम पंचाशीतितमोऽध्यायः ।। ८५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८६

https://sa.wikisource.org/s/fyn
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। पार्वत्युवाच ।। ।।

विश्वकर्मेश्वरं लिंगं यत्काश्यां प्रथितं परम् ।।

तस्य लिंगस्य कथय देवदेव समुद्भवम् ।। १ ।।

।। देवदेव उवाच ।। ।।

शृणु देवि प्रवक्ष्यामि कथां पातकनाशिनीम् ।।

विश्वकर्मेश लिंगस्य प्रादुर्भावं मनोहरम्।।२।।

विश्वकर्माभवत्पूर्वं ब्रह्मणस्त्वपरा तनुः ।।

त्वष्टुः प्रजापतेः पुत्रो निपुणः सर्वकर्मसु ।।३।।

कृतोपनयनः सोथ बालो गुरुकुले वसन् ।।

चकार गुरुशुश्रूषां भिक्षान्नकृतभोजनः।।४ ।।

एकदा तद्गुरुः प्राह प्रावृट्काले समागते ।।

कुरूटजं मदर्थं त्वं यथा प्रावृण्न बाधते ।। ५ ।।

यत्कदाचिन्न भज्येत न पुरातनतां व्रजेत्।।

गुरुपत्न्यात्वभिहितो रे त्वाष्ट्र कुरु कंचुकम् ।।६।।

ममांगयोग्यं नो गाढं न श्लथं च प्रयत्नतः ।।

विनैव वाससा चारु वाल्कलं च सदोज्ज्वलम् ।।७।।

गुरुपुत्रेण चाज्ञप्तो ममार्थं पादुके कुरु ।।

यदारूढस्य मे पादौ न पंकः संस्पृशेत्क्वचित् ।। ८ ।।

चर्मादिबंधनिर्मुक्ते धावतो मे सुखप्रदे ।।

याभ्यां च संचरे वारि स्थल भूमाविव द्रुतम्।। ।। ९ ।।

गुरुकन्यापि तं प्राह त्वाष्ट्र मे श्रवणोचिते ।।

भूषणे स्वेन हस्तेन कुरु कांचननिर्मिते ।।4.2.86.१०।।

कुमारी क्रीडनीयानि कौतुकानि च देहि मे ।।

दंतिदंतमयान्येव स्वहस्तरचितानि च ।। ११ ।।

गृहोपकरणं द्रव्यं मुसलोलूखलादिकम् ।।

तथा घटय मेधाविन्यथा त्रुट्यति न क्वचित् ।। १२ ।।

अक्षालितान्यपि यथा नित्यं पीठानि सत्तम ।।

उज्ज्वलानि भवंत्येव स्थालिकाश्च तथा कुरु ।। १३ ।।

सूपकर्मण्यपि च मां प्रशाधि त्वष्ट्रनंदन ।।

यथांगुल्यो न दह्यंते पाकः स्याच्च यथा शुभः ।। ।। १४ ।।

एकस्तंभमयं गेहमेकदारुविनिर्मितम् ।।

तथा कुरु वरं त्वाष्ट्र यत्रेच्छा तत्र धारये ।। १५ ।।

ये सहाध्यायिनोप्यस्य वयोज्येष्ठाश्च तेपि हि ।।

सर्वेसर्वे समीहंते कर्म तत्कृतमेव हि।।१६।।

तथेति स प्रतिज्ञाय सर्वेषां पुरतोद्रिजे ।।

मध्ये वनं प्राविशच्च महाचिंताभयार्दितः ।।१७।।

किंचित्कर्तुं न जानाति प्रतिज्ञातं च तेन वै।।

सर्वेषां पुरतः सर्वं करिष्यामीति निश्चितम्।। १८।।

किं करोमि क्व गच्छामि को मे साहाय्यमर्पयेत् ।।

बुद्धेरपि वनस्थस्य शरणं कं व्रजामि च ।। १९ ।।

अंगीकृत्य गुरोर्वाक्यं गुरुपत्न्या गुरोः शिशोः ।।

यो न निष्पादयेन्मूढः स भवेन्निरयी नरः ।। 4.2.86.२० ।।

गुरुशुश्रूषणं धर्म एको हि ब्रह्मचारिणाम् ।।

अनिष्पाद्य तु तद्वाक्यं कथं मे निष्कृतिर्भवेत् ।। २१ ।।

गुरूणां वाक्यकरणात्सर्व एव मनोरथाः ।।

सिद्ध्यंतीतरथा नैव तस्मात्कार्यं हि तद्वचः ।।२२।।

कथं तद्वचसः सिद्धिं प्राप्स्याम्यत्र वने स्थितः ।।

कश्च मेत्र सहायी स्याद्धिषणादुर्बलस्य वै ।। २३ ।।

आस्तां गुरुकथा दूरं योऽन्यस्यापि लघोरपि ।।

ओमित्युक्त्वा न कुरुते कार्यं सोथ व्रजत्यधः ।। २४ ।।

कथमेतानि कर्माणि करिष्येऽज्ञोऽसहायवान् ।।

अंगीकृतानि तद्भीत्या नमस्ते भवितव्यते ।। २५ ।।

यावदित्थं चिंतयति स त्वाष्ट्रो वनमध्यगः ।।

तावत्तदेव संप्राप्तस्तेनैकोऽदर्शि तापसः ।। २६ ।।

अथ नत्वा स तं प्राह वने दृष्टं तपस्विनम् ।।

को भवान्मानसं मे यो नितरां सुखयत्यहो ।।२७।।

त्वद्दर्शनेन मे गात्रं चिंतासंतापतापितम् ।।

हिमानी गाहनेनेव शीतलं भवति क्षणम् ।। २८ ।।

किं त्वं मे प्राक्तनं कर्म प्राप्तं तापसरूपधृक् ।।

अथवा करुणावार्धिराविर्भूतः शिवो भवान् ।। २९ ।।

योसि सोसि नमस्तुभ्यमुपदेशेन युंक्ष्व माम् ।।

गुरूक्तं गुरुपत्न्युक्तं गुर्वपत्योक्तमेव च ।। 4.2.86.३० ।।

कथं कर्तुमहं शक्तः कर्म तत्र दिशाद्भुतम् ।।

कुरु मे बुद्धिसाहाय्यं निर्जने बंधुतां गतः ।। ।। ३१ ।।

इत्युक्तस्तेन स वने तापसो ब्रह्मचारिणा ।।

कारुण्यपूर्णहृदयो यथोक्तमुपदिष्टवान् ।। ३२ ।।

य आप्तत्वेन संपृष्टो दुर्बुद्धिं संप्रयच्छति ।।

स याति नरकं घोरं यावदाभूतसंप्लवम् ।। ३३ ।।

तापस उवाच ।। ।।

ब्रह्मचारिञ्शृणु ब्रूयां किमद्भुततरं त्विदम्।।

विश्वेशानुग्रहाद्ब्रह्माप्यभवत्सृष्टिकोविदः ।। ३४ ।।

यदि त्वं त्वाष्ट्र सर्वज्ञं काश्यामाराधयिष्यसि ।।

ततस्ते विश्वकर्मेति नाम सत्यं भविष्यति ।। ३५ ।।

विश्वेशानुग्रहात्काश्यामभिलाषा न दुर्लभाः ।।

सुलभो दुर्लभो वै यद्यत्र मोक्षस्तनुत्यजाम् ।। ३६ ।।

सृष्टेःकरण सामर्थ्यं सृष्टिरक्षाप्रवीणता ।।

विधिना विष्णुना प्रापि विश्वेशानुग्रहात्परात् ।। ३७ ।।

याहि वैश्वेश्वरं सद्म पद्मया समधिष्ठितम् ।।

निर्वाणसंज्ञया बाला यदीच्छेः स्वान्मनोरथान् ।। ३८ ।।

स हि सर्वप्रदः शंभुर्याचितश्चोपमन्युना ।।

पयोमात्रं ददौ तस्मै सर्वं क्षीराब्धिमेव च ।। ३९ ।।

आनंदकानने शंभोः किं किं केन न लभ्यते ।।
यत्र वासकृतां पुंसां धर्मराशिः पदेपदे ।। 4.2.86.४० ।।
स्वर्धुनी स्पर्शमात्रेण महापातकसंततिः ।।
यत्र संक्षयति क्षिप्रं तां काशीं को न संश्रयेत् ।। ४१ ।।
न तादृग्धर्मसंभारो लभ्यते क्रतुकोटिभिः ।।
यादृग्वाराणसी वीथी संचारेण पदेपदे ।। ४२ ।।
धर्मार्थकाममोक्षाणां यद्यत्रास्ति मनोरथः ।।
तदा वाराणसीं याहि याहि त्रैलोक्यपावनीम् ।। ४३ ।।
सर्वकामफलप्राप्तिस्तदैव स्याद्ध्रुवं नृणाम् ।।
यदैव सर्वदः सर्वः काश्यां विश्वेश्वरः श्रितः ।। ४४ ।।
स तापसोक्तमाकर्ण्य त्वाष्ट्र इत्थं सुहृष्टवान् ।।
काशीसंप्रात्युपायं च तमेव समपृच्छत ।।४५।।
।। त्वाष्ट्र उवाच ।। ।।
तदानंदवनं शंभोः क्वास्ति तापससत्तम ।।
यत्र नो दुर्लभं किंचित्साधकानां त्रयीस्थितम् ।। ४६ ।।
स्वर्गे वा मर्त्यलोके वा बलिसद्मनि वा मुने ।।
क्व तदानंदगहनं यत्रानंदपयोब्धिजा ।। ४७ ।।
यत्र विश्वेश्वरो देवो विश्वेषां कर्णधारकः ।।
व्याचष्टे तारकं ज्ञानं येन तन्मयतां ययुः ।। ४८ ।।
सुलभा यत्र नियतमानंदवनचारिणः ।।
अपि नैःश्रेयसी लक्ष्मीः किमन्येल्प मनोरथाः।।४९।।
कस्तां मां प्रापयेच्छंभोः कथं यामि तथा वद ।।
स तपस्वीति तद्वाक्यमाकर्ण्य श्रद्धयान्वितम् ।।4.2.86.५०।।
प्राहागच्छ नयामि त्वां यियासुरहमप्यहो।।
दुर्लभं प्राप्य मानुष्यं यदि काशी न सेविता ।। ५१ ।।
पुनःक्व नृत्वं श्रेयोभूः क्व काशीकर्मबंधहृत् ।।
वृथागते हि मानुष्ये काशीप्राप्तिविवर्जनात् ।। ५२ ।।
आयुष्यं च भविष्यं च सर्वमेव वृथागतम्।।

अतोहं सफलीकर्तुं मानुष्यं चातिचंचलम् ।। ५३ ।।

यास्यामि काशीमायाहि मायां हित्वा त्वमप्यहो ।।

इति तेन सह त्वाष्ट्रो मुनिनातिकृपालुना ।। ५४ ।।

पुरीं वैश्वेश्वरीं प्राप्तो मनःस्वास्थ्यमवाप च ।।

ततः प्रापय्य तां काशीं तापसः क्वाप्यतर्कितम् ।। ५५ ।।

जगाम कुंभसंभूत स त्वाष्ट्रोपीत्यमन्यत ।।

अवश्यं स हि विश्वेशः सर्वेषां चिंतितप्रदः।। ५६।।

सत्पथस्थिरवृतीनां दूरस्थोपि समीपगः ।।

यस्मिन्प्रसन्नदृक्त्र्यक्षस्तं दविष्ठमपि ध्रुवम् ।।५७।।।

सुनेदिष्ठं करोत्येव स्वयंवर्त्मोपदेशयन् ।।

क्वाहं तत्र वने बालश्चिंताकुलितमानसः ।।

क्व तापसः स यो मां वै सूदिश्येह चानयत् ।। ५८ ।।

खेलोयमस्य त्र्यक्षस्य यस्य भक्तस्य कुत्रचित् ।।

न दुर्लभतरं किंचिदहो क्वाहं क्व काशिका ।। ५९ ।।

नाराधितो मया शंभुः प्राक्तने जन्मनि क्वचित् ।।

शरीरित्वानुमानेन ज्ञातमेतदसंशयम्।। 4.2.86.६० ।।

अस्मिञ्जन्मनि बालत्वान्न चैवाराधितः स्फुटम् ।।

प्रत्यक्षमेव मे वैतत्कुतोनुग्रहधीर्मयि ।। ६१ ।।

आज्ञातं गुरुभक्तिर्मे हेतुः शंभुप्रसादने ।।

ययेहानुगृहीतोस्मि विश्वेशेन कृपालुना ।। ६२ ।।

अथवा कारणापेक्षस्त्र्यक्षस्त्वितरदेववत् ।।

रंकमप्यनुगृह्णाति केवलं कारणं कृपा।। ६३ ।।

यदि नो मय्यनुक्रोशः कथं तापससंगतिः ।।

तद्रूपेण स्वयं शंभुरानिनायेह मां ध्रुवम् ।।६४।।

न दानानि न वै यज्ञा न तपांसि व्रतानि च ।।।

शंभोः प्रसादहेतूनि कारणं तत्कृपैव हि ।। ।। ६५ ।।

दयामपि तदा कुर्यादसौ विश्वेश्वरः पराम् ।।

यदाश्रुत्युक्तमध्वानं सद्भिः क्षुण्णं न संत्यजेत् ।। ६६ ।।

अनुक्रोशं समर्थ्येति स त्वाष्ट्रः शंभवं शुचिः ।।
संस्थाप्य लिंगमीशस्याराधयत्स्वस्थमानसः ।। ६७ ।।
आनीय पुष्पसंभारमार्तवं काननाद्बहु ।।
स्नात्वाभ्यर्चयतीशानं कंदमूलफलाशनः ।। ६८ ।।
इत्थं त्वष्टृतनूजस्य लिंगाराधनचेतसः ।।
त्रिहायनात्प्रसन्नोभूत्तस्येशः करुणानिधिः ।। ६९ ।।
तस्मादेव हि लिंगाच्च प्रादुर्भूय भवोऽब्रवीत् ।।
वरं वरय रे त्वाष्ट्र दृढभक्त्यानया तव ।। ।। 4.2.86.७० ।।
प्रसन्नोस्मि भृशं बाल गुर्वर्थकृतचेतसः ।।
गुरुणा गुरुपत्न्या च गुर्वपत्यद्वयेन च ।। ७१ ।।
यथार्थितं तथा कर्तुं ते सामर्थ्यं भविष्यति ।। ७२ ।।
अन्यान्वरांश्च ते दद्यां त्वाष्ट्र तुष्टस्त्वदर्चया ।।
ताञ्शृणुष्व महाभाग लिंगस्यास्याद्भुतश्रियः ।। ७३ ।।
त्वं सुवर्णादिधातूनां दारूणां दृषदामपि ।।
मणीनामपिरत्नानां पुष्पाणामपि वाससाम् ।। ७४ ।।
कर्पूरादिसुगंधीनां द्रव्याणामप्यपामपि ।।
कंदमूलफलानां च द्रव्याणामपि च त्वचाम्।। ।। ७५ ।।
सर्वेषां वस्तुजातानां कर्तुं कर्म प्रवेत्स्यसि ।।
यस्य यस्य रुचिर्यत्र सद्म देवालयादिषु ।। ७६ ।।
तस्य तस्येह तुष्ट्यै त्वं तथा कर्तुं प्रवेत्स्यसि ।।
सर्वनेपथ्यरचनाः सर्वाः सूपस्य संस्कृतीः ।।७७।।
सर्वाणि शिल्पकार्याणि तौर्यत्रिकमथापि च ।।
सर्वं ज्ञास्यसि कर्तुं त्वं द्वितीय इव पद्मभूः ।।७८।।
नानाविधानि यंत्राणि नानायुधविधानकम् ।।
जलाशयानां रचनाः सुदुर्गरचनास्तथा ।। ७९ ।।
तादृक्कर्तुं पुरा वेत्सि यादृङ्नान्योऽधियास्यति ।।
कलाजातं हि सर्वं त्वमवयास्यसि मे वरात् ।। 4.2.86.८० ।।
सर्वेंद्रजालिकी विद्या त्वदधीना भविष्यति ।।

सर्वकर्मसु कौशल्यं सर्वबुद्धिवरिष्ठताम् ।।८१ ।।

सर्वेषां च मनोवृत्तिं त्वं ज्ञास्यसि वरान्मम ।।

किं बहूक्तेन यत्स्वर्गे यत्पाताले यदत्र च।। ८२।।

अतिलोकोत्तरं कर्म तत्सर्वं वेत्स्यसि स्वयम् ।। ८३ ।।

विश्वेषां विश्वकर्माणि विश्वेषु भुवनेषु च ।।

यतो ज्ञास्यसि तन्नाम विश्वकर्मेति तेऽनघ ।। ८४ ।।

अपरः को वरो देयस्तव तं प्रार्थयाश्वहो ।।

तवादेयं न मे किंचिल्लिंगार्चनरतस्य हि ।। ८५ ।।

अन्यत्रापि हि यो लिंगं समर्चयति सन्मतिः ।।

तस्यापि वांछितं देयं किंपुनर्योविकाशिकम् ।। ८६ ।।

येन काश्यां समभ्यर्चि येन काश्यां प्रतिष्ठितम् ।।

येन काश्यां स्तुतं लिंगं स मे रूपाय दर्पणः।। ८७ ।।

तत्त्वं स्वच्छोसि मुकुरो मम नेत्रत्रयस्य हि ।।

काश्यां लिंगार्चनात्त्वाष्ट्र वरं वरय सुव्रत ।। ८८ ।।

काश्यां यो राजधान्यां मे हित्वा मामन्यमर्चयेत् ।।

स वराकोल्पधीर्मुष्टोऽल्पतुष्टिर्मुक्तिवर्जितः ।। ८९ ।।

तदानंदवनेह्यत्र समर्च्योहं मुमुक्षुभिः ।।

द्रुहिणोपेंद्रचंद्रेंद्रैरिहान्यो न समर्च्यते ।। 4.2.86.९० ।।

यथानंदवनं प्राप्य त्वं मामर्चितवानसि ।।

तथान्ये पुण्यकर्माणो मामभ्यर्च्यैव मामिताः ।। ९१ ।।

अनुग्राह्योऽसि नितरां ततो वरय दुर्लभम् ।।

श्राणितं तदवैहि त्वं वद मा चिरयस्व भोः ।। ९२ ।।

।। विश्वकर्मोवाच ।। ।।

इदं यत्स्थापितं लिंगं मयाज्ञेनापि शंकर ।।

तल्लिंगमन्येप्याराध्य संतु समृद्धिभाजनम् ।। ९३ ।।

अन्यच्च नाथ प्राथ्योसि तच्च विश्राणयिष्यसि ।।

मया विनिर्मापयिता स्वं प्रासादं कदा भवान् ।। ९४ ।।

देवदेव उवाच ।। ।।

एवमस्तु यदुक्तं ते तव लिंगसमर्चकाः ।।

समृद्धिभाजनं वै स्युः स्युश्च निर्वाणदीक्षिताः ।। ९५ ।।

यदा च राजा भविता दिवोदासो विधेर्वरात्।।

तदा मे वचनात्तात प्रासादं मे विधास्यति ।। ९६ ।।

नवीकृत्य पुनः काशी निर्विष्टा तेन भूभुजा ।।

गणेशमायया राज्यात्परिनिर्विण्णचेतसा ।। ९७ ।।

विष्णोः सदुपदेशाच्च मामेव शरणं गतः ।।

निर्वाणलक्ष्मीः प्राप्तेह हित्वा राज्यश्रियं चलाम्।। ९८ ।।

विश्वकर्मन्व्रज गुरोः शासनाय यतस्व च ।।

गुरुभक्तिकृतो यस्मान्मद्भक्ता नात्र संशयः ।। ९९ ।।

ये गुरुं चावमन्यंते तेवमान्या मयाप्यहो ।।

तस्माद्गुरूपदिष्टं हि कुरु शिष्यसमीहितम् ।। 4.2.86.१०० ।।

तत आगत्य मे पार्श्वं यावन्निर्वाणमेष्यसि ।।

तावत्स्थास्यसि शुद्धात्मा देवानां हितमाचरन् ।। १ ।।

तवात्र लिंगे सततं स्थास्याम्यहमभीष्टदः ।।

अस्य लिंगस्य भक्तानां निर्वाणश्रीरदूरतः ।।२ ।।

अंगारेशादुदीच्यां ये त्वल्लिंगस्यसमर्चकाः ।।

तेषां मनोरथावाप्तिर्भविष्यति पदेपदे ।। ३ ।।

इत्युक्त्वांतर्दधे देवस्त्वाष्ट्रोपि गुरुमाप्तवान् ।।

गुरोः समीहितं भूरि विधाय स गृहान्ययौ ।।४।।

गृहेपि मातापितरौ संतोष्य निजकर्मणा ।।

तदुक्ताज्ञां समाधाय पुनः काशीं समाययौ ।। ५ ।।

स्वलिंगाराधनासक्तो नाद्यापि त्वष्टृनंदनः ।।

काशीं त्यजति मेधावी सर्वदेव प्रियं चरन् ।। ६ ।।

।। ईश्वर उवाच ।। ।।

पृष्टानि यानि लिंगानि त्वया देवि गिरींद्रजे ।।

काशी मुक्तौ समर्थानि तान्युक्तानि मया तव।। ७ ।।

लिंगमोंकारसंज्ञं च तथा देवं त्रिविष्टपम् ।।

महादेवः कृत्तिवासा रत्नेशश्चंद्रसंज्ञकः ।। ८ ।।

केदारश्चापि धर्मेशस्तथा वीरेश्वराभिधः ।।

कामेशविश्वकर्मेशौ मणिकर्णीश्वरस्तथा ।। ९ ।।

ममार्च्यमविमुक्ताख्यं ततो देवि ममा ख्यकम् ।।

विश्वनाथेति विश्वस्मिन्प्रथितं विश्वसौख्यदम्।। 4.2.86.११० ।।

अविमुक्तं समासाद्य येन विश्वेश्वरोर्चितः ।।

न तस्यास्ति पुनर्जन्म कल्पकोटिशतेष्वपि ।। ११ ।।

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।।

एकत्र चतुरोमासानब्दं नावास इष्यते ।। १२ ।।

अविमुक्ते प्रविष्टानां विहारो नैव युज्यते ।।

मोक्षोप्यसंशयश्चात्र तस्मात्त्याज्या न काशिका ।। १३ ।।

आनंदकाननं हित्वा नान्यद्गच्छेत्तपोवनम् ।।

तपोयोगश्च मोक्षश्च यतोत्रैव मदाश्रयात् ।। १४ ।।

कृपया सर्वजंतूनां क्षेत्रमेतन्मया कृतम् ।।

अवश्यमेव सिद्ध्यंति क्षेत्रेस्मिन्सिद्धिकांक्षिणः ।। २५ ।।

अतीतं वर्तमानं च जानतोऽज्ञानतः कृतम् ।।

यदेनस्तल्लयं यायादानंदवनवीक्षणात् ।। १६ ।।

अत्युग्रैश्च तपोभिर्यन्महादानैर्महाव्रतैः ।।

नियमैश्च यमैः सम्यक्त्वयोगेन महामखैः ।। १७ ।।

वेदांतशास्त्राभ्यसनैः सर्वोपनिषदाश्रयात् ।।

एभिर्वै यदवाप्येत तत्काश्यां हेलयाप्यते ।।१८।।

कर्मसूत्रेण बद्धा वै भ्राम्यंते तावदेव हि ।।

यावद्वैश्वेश्वरे धाम्नि मम नैव तनुत्यजः ।।१९।।

काश्यां स्वलीलया देवि तिर्यग्योनिजुषामपि।।

ददामि चांते तत्स्थानं यत्र यांति न याज्ञिकाः ।। 4.2.86.१२० ।।

भूतग्रामोऽखिलोप्यत्र मुक्तिक्षेत्रे कृतालयः ।।

कालेन निधनं यातो यात्येव परमां गतिम् ।। २१ ।।

विषयासक्तचित्तोपि त्यक्तधर्मरतिस्त्वपि ।।

कालेनोज्झितदेहोऽत्र न संसारं पुनर्विशेत् ।। २२ ।।

प्रयागे यत्फलं देवि माघे चोपनिमज्जनात् ।।

तत्फलं कोटिगुणितं वाराणस्यां क्षणेक्षणे ।। २३ ।।

अस्य क्षेत्रस्य महिमा कोपि वाचामगोचरः ।।

उद्देशमात्रमाख्यायि मया ते प्रीतिकाम्यया ।। २४ ।।

चतुर्दशानां लिंगानां श्रुत्वाख्यानानि सत्तमः ।।

चतुर्दश सुलोकेषु पूजां प्राप्स्यत्यनुत्तमाम् ।। १२५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे विश्वकर्मेश प्रादुर्भावो नाम षडशीतितमोऽध्यायः ।। ८६ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८७



।। अगस्त्य उवाच ।। ।।

सर्वज्ञसूनो षड्वक्त्र सर्वार्थकुशल प्रभो ।।

प्रादुर्भावं निशम्यैषां लिंगानां मुक्तिदायिनाम् ।। १ ।।

नितरां परितृप्तोस्मि सुधां पीत्वेव निर्जरः ।।

ओंकारप्रमुखैर्लिंगैरिदमानंदकाननम्।।२।।

आनंदमेवजनयेदपि पापजुषामिह ।।

परानंदमहं प्राप्तः श्रुत्वैतल्लिंगकीर्तनम् ।।३।।

जीवन्मुक्तइवासं हि क्षेत्रतत्त्वश्रुतेरहम् ।।

स्कंददक्षेश्वरादीनि लिंगानीह चतुर्दश ।।

यान्युक्तानि समाचक्ष्व तत्प्रभावमशेषतः ।। ४ ।।

यो दक्षो गर्हयामास मध्ये देवसभं विभुम् ।।

स कथं लिंगमीशस्य प्रत्यस्थापयदद्भुतम् ।।५।।

इति श्रुत्वा शिखिरथः कुंभयोनेरुदीरितम् ।।

सूत संकथयामास दक्षेश्वर समुद्भवम् ।।६।।

।। स्कंद उवाच ।।

आकर्णय मुने वच्मि कथां कल्मषहारिणीम् ।।

पुरश्चरणकामोसौ दक्षः काशीं समाययौ ।। ७ ।।

छागवक्त्रो विरूपास्यो दधीचि परिधिक्कृतः ।।

प्रायश्चित्तविधानार्थं सूपदिष्टः स्वयंभुवा ।। ८ ।।

एकदा देवदेवस्य सेवार्थं शशिमौलिनः ।।

कैलासमगमद्विष्णुः पद्मयोनिपुरस्कृतः ।। ९ ।।

इंद्रादयो लोकपाला विश्वेदेवा मरुद्गणाः ।।

आदित्या वसवो रुद्राः साध्या विद्याधरोरगाः ।। 4.2.87.१० ।।

ऋषयोऽप्सरसोयक्षा गंधर्वाः सिद्धचारणाः ।।

तैर्नतो देवदेवेशः परिहृष्टतनूरुहैः ।।११।।

स्तुतश्च नाना स्तुतिभिः शंभुनापि कृतादराः ।।

विविशुश्चासनश्रेण्यां तन्मुखासक्तदृष्टयः ।। १२ ।।

अथ तेषूपविष्टेषु शंभुना विष्टरश्रवाः ।।

कृतहस्तपरिस्पर्शमानः पृष्टो महादरम् ।। १३ ।।

श्रीवत्सलांछन हरे दैत्यवंशदवानल ।।

कच्चित्पालयितुं शक्तिस्त्रिलोकीमस्त्यकुंठिता।। १४ ।।

दितिजान्दनुजान्दुष्टान्कच्चिच्छासि रणांगणे ।।

अपि कुद्धान्महीदेवान्मामिव प्रतिमन्यसे ।। १५ ।।

बाधया रहिता गावः कच्चित्संति महीतले ।।

स्त्रियः संति हि सुश्रीकाः पतिव्रतपरायणाः ।। १६ ।।

विधियज्ञाः प्रवर्तंते पृथिव्यां बहुदक्षिणाः ।।

निराबाधं तपः कच्चिदस्ति शश्वत्तपस्विनाम् ।। १७ ।।

निष्प्रत्यूहं पठंत्येव सांगान्वेदान्द्विजोत्तमाः ।।

महीपालाः प्रजाः कच्चित्पांति त्वमिवकेशव ।। १८।।

स्वेषु स्वेषु च धर्मेषु कच्चिद्वर्णाश्रमास्तथा ।।

निष्ठावंतो हि तिष्ठंति प्रहृष्टेंद्रियमानसाः ।। १९ ।।

धूर्जटिः परिपृच्छयेति हृष्टं वैकुंठनायकम्।

ब्रह्माणं चापि पप्रच्छ ब्राह्मं तेजः समेधते ।। 4.2.87.२० ।।

सत्यमस्खलितं कच्चिदस्ति त्रैलोक्यमंडपे ।।

तीर्थावरोधो न क्वापि केनचित्क्रियते विधे ।। २१ ।।

इंद्रादयः सुराः कच्चित्स्वेषु स्वेषु पुरेष्वहो ।।

राज्यं प्रशासति स्वस्थाः कृष्णदोर्दंडपालिताः ।। २२ ।।

प्रत्येकं परिपृच्छ्येशः सर्वानित्थं कृतादरान् ।।

पृष्ट्वा गमनकार्यं च तेषां कृत्वा मनोरथान् ।। २३ ।।

विससर्जाथ तान्सर्वान्देवः सौधं समाविशत् ।।

गतेष्वथ च देवेषु स्वस्व धिष्ण्येषु हृष्टवत् ।। २४ ।।

मध्ये मार्गं स चिंतोभूद्दक्षः सत्याः पिता तदा ।।

अन्यदेवसमानं स मानं प्राप न चाधिकम् ।। २५ ।।

अतीव क्षुब्धचित्तोभून्मंदराघाततोऽब्धिवत् ।।

उवाच च मनस्येतन्महाक्रोधरयांधदृक्।। २६ ।।

अतीवगर्वितो जातः सती मे प्राप्य कन्यकाम् ।।

कस्यचिन्नाप्यसौ प्रायो न कोस्यापि क्वचित्पुनः ।। २७ ।।

किं वंश्यस्त्वेष किं गोत्रः किं देशीयः किमात्मकः ।।

किं वृत्तिः किं समाचारो विपा(षा?)दी वृषवाहनः ।। २८ ।।

न प्रायशस्तपस्व्येष क्व तपः क्वास्त्रधारणम् ।।

न गृहस्थेषु गण्योसौ श्मशाननिलयो यतः ।। २९ ।।

असौ न ब्रह्मचारी स्यात्कृतपाणिग्रह स्थितिः।।

वानप्रस्थ्यं कुतश्चास्मिन्नैश्वर्यमदमोहिते ।।4.2.87.३०।।

न ब्राह्मणोभवत्येष यतो वेदो न वेत्त्यमुम् ।।

शस्त्रास्त्रधारणात्प्रायः क्षत्रियः स्यान्न सोप्ययम्।। ३१ ।।

क्षतात्संत्राणनात्क्षत्रं तत्क्वास्मिन्प्रलयप्रिये ।।

वैश्योपि न भवेदेष सदा निर्धनचेष्टनः ।। ३२ ।।

शूद्रोपि न भवेत्प्रायो नागयज्ञोपवीतवान् ।।

एवं वर्णाश्रमातीतः कोसौ सम्यङ्नकीर्त्यते ।। ३३ ।।

सर्वः प्रकृत्या ज्ञायेत स्थाणुः प्रकृतिवर्जितः ।।

प्रायशः पुरुषोनासावर्धनारीवपुर्यतः ।। ३४ ।।

योषापि न भवेदेष यतोसौ श्मश्रुलाननः ।।

नपुंसकोपि न भवेल्लिंगमस्ययतोर्च्यते ।। ३५ ।।

बालोपि न भवत्येष यतोऽयं बहुवार्षिकः।।

अनादिवृद्धो लोकेषु गीयते चोग्र एष यत् ।। ३६ ।।

अतो युवत्वं संभाव्यं नात्र नूनं चिरंतने ।।

वृद्धोऽपि न भवत्येष जरामरणवर्जितः ।। ३७ ।।

ब्रह्मादीन्संहरेत्प्रांते तथापि च न पातकी ।।

पुण्यलेशोपि नास्त्यस्मिन्ब्रह्ममौलिच्छिदिक्रुधा।। ३८ ।।

अस्थिनेपथ्यवति च क्व शुचित्वं विवाससि ।।

किं बहूक्तेन नो किंचिज्ज्ञायतेऽस्य विचेष्टितम् ।। २९ ।।

अहो धार्ष्ट्यं महद्दृष्टं जटिलस्याद्य चाद्भुतम् ।।

यदासनान्नोत्थितोसौ दृष्ट्वा मां श्वशुरं गुरुम् ।। 4.2.87.४० ।।

एवंभूता भवंत्येव मातापितृविवर्जिताः ।।

निर्गुणा अकुलीनाश्च कर्मभ्रष्टा निरंकुशाः ।। ४१ ।।

स्वच्छंदचारिणोऽनाथाः सर्वत्र स्वाभिमानिनः ।।

अकिंचना अपिप्रायस्तथापीश्वरमानिनः ।। ४२ ।।

जामातॄणां स्वभावोयं प्रायशो गर्वभाजनम् ।।

किंचिदैश्वयर्मासाद्य भवत्येव न संशयः ।। ४३ ।।

द्विजराजः स गर्विष्ठो रोहिणीप्रेमनिर्भरः ।।

कृत्तिकादिषु चास्नेही मया शप्तः क्षयीकृतः ।। ४४ ।।

अस्याहं गर्वसर्वस्वं हरिष्याम्येव शूलिनः ।।

यथावमानितश्चाहमनेनास्य गृहं गतः ।। ४५ ।।

तथास्याहं करिष्यामि मानहानिं च सर्वतः ।।

संप्रधार्येति बहुशः स तु दक्षः प्रजापतिः ।। ४६ ।।

प्राप्य स्वभवनं देवानाजुहाव सवासवान् ।।

अहं यियक्षुर्यूयं मे यज्ञसाहाय्यकारिणः ।। ४७ ।।

भवंतु यज्ञसंभारानानयंतु त्वरान्विताः ।।

श्वेतद्वीपमथो गत्वा चक्रे चक्रिणमच्युतम् ।। ४८ ।।

महाक्रतूपद्रष्टारं यज्ञपूरुषमेव च ।।

तस्यर्त्विजोभवन्सर्व ऋषयो ब्रह्मवादिनः ।। ४९ ।।

प्रावर्तत ततस्तस्य दक्षस्य च महाध्वरः ।।

दृष्ट्वा देवनिकायांश्च तस्मिन्दक्ष महाध्वरे ।। 4.2.87.५० ।।

अनीश्वरांस्ततो वेधा व्याजं कृत्वा गृहं ययौ ।।

दधीचिरथ संवीक्ष्य सर्वांस्त्रैलोक्यवासिनः ।। ५१ ।।

दक्षयज्ञे समायातान्सतीश्वरविवर्जितान् ।।

प्राप्तसंमानसंभारान्वासोलंकृतिपूर्वकम् ।।५२ ।।

दक्षस्य हि शुभोदर्कमिच्छन्प्रोवाच चेति वै ।। ।।

दधीचिरुवाच ।।

दक्षप्रजापते दक्ष साक्षाद्धातृस्वरूपधृक् ।। ५३ ।।

न चास्ति तव सामर्थ्यं क्वापि कस्यापि निश्चितम् ।।

यादृशः क्रतुसंभारस्तव चेह समीक्ष्यते ।। ५४ ।।

न तादृङ्नेदसि प्रायः क्वापि ज्ञातो महामते ।।

क्रतुस्तु नैव कर्तव्यो नास्ति क्रतुसमो रिपुः ।। ५५ ।।

कर्तव्यश्चेत्तदाकार्यः स्याच्चेत्संपत्ति रीदृशी ।।

साक्षादग्निः स्वयं कुंडे साक्षादिंद्रादिदेवताः ।।५६।।

साक्षाच्च सर्वे मंत्रा वै साक्षाद्यज्ञपुमानसौ ।।

आचार्यपदवीमेष देवाचार्यः स्वयं चरेत् ।।

साक्षाद्ब्रह्मा स्वयं चैष भृगुर्वै कर्मकांडवित् ।। ५७ ।।

अयं पूषा भगस्त्वेष इयं देवी सरस्वती ।।

एते च सर्वदिक्पाला यज्ञरक्षाकृतः स्वयम् ।। ५८।।

त्वं च दीक्षां शुभां प्राप्तो देव्या च शतरूपया ।।

जामाता त्वेष ते धर्मः पत्नीभिर्दशभिः सह ।। ५९ ।।

स्वयमेव हि कुर्वीत धर्मकार्यं प्रयत्नतः ।।

ओषधीनामयं नाथस्तव जामातृषूत्तमः ।। 4.2.87.६० ।।

सप्तविंशतिभिः सार्धं पत्नीभिस्तव कार्यकृत् ।।

ओषधीः पूरयेत्सर्वा द्विजराजो महासुधीः ।।६१।।

दीक्षितो राजसूयस्य दत्तत्रैलोक्यदक्षिणः ।।

मारीचः कश्यपश्चासौ प्रजापतिषु सत्तमः ।।

त्रयोदशमिताभिश्च भार्याभिस्तव कार्यकृत् ।। ६२ ।।

हविः कामदुघा सूते कल्पवृक्षः समित्कुशान् ।।

दारुपात्राणि सर्वाणि शकटं मंडपादिकम् ।। ६३ ।।

विश्वकर्माप्यलंकारान्कुरुतेभ्यागतर्त्विजाम् ।।

वसूनि चाऽपि वासांसि वसवोष्टौ ददत्यपि ।। ६४ ।।

स्वयंलक्ष्मीरलंकुर्याद्यावै चात्र सुवासिनीः ।। ६५ ।।

सर्वे सुखाय मे दक्ष वीक्षमाणस्य सर्वतः ।।

एकं दुःखाकरोत्येव यत्त्वं विस्मृतवानसि ।। ६६ ।।

जीवहीनो यथा देहो भूषितोपि न शोभते ।।

तथेश्वरं विना यज्ञः श्मशानमिव लक्ष्यते ।। ६७ ।।

इत्थं दधीचिवचनं श्रुत्वा दक्षः प्रजापतिः ।।

भृशं जज्वाल कोपेन हविषा कृष्णवर्त्मवत् ।। ६८ ।।

पूर्वस्तुत्याति संहृष्टो दृष्टो योसौ दधीचिना ।।

स एव चापि कोपाग्निमुद्वमन्वीक्षितो मुखात् ।। ६९ ।।

प्रत्युवाचाथ तं विप्रं वेपमानांगयष्टिकः ।।

दक्षः प्रजापती रोषाज्जिघांसुरिव तं द्विजम् ।। 4.2.87.७० ।।

।। दक्ष उवाच ।। ।।

ब्राह्मणोसि दधीचे त्वं किं करोमि तवात्र वै ।।

दीक्षामहमहो प्राप्तः कर्तुं नायाति किंचन ।। ७१ ।।

भवान्केन समाहूतो यदत्रागान्महाजडः ।।

आगतोपि हि केन त्वं पृष्ट इत्थं प्रब्रवीषि यत् ।। ७२ ।।

सर्वमंगलमांगल्यो यत्र श्रीमानयं हरिः ।।

स्वयं वै यज्ञपुरुषः स मखः किं श्मशानवत् ।। ७३ ।।

यत्र वज्रधरः शक्रः शतयज्ञैकदीक्षितः ।।

त्रयस्त्रिंशतिकोटीनाममराणां पतिः स्वयम् ।। ७४ ।।

तं त्वंचोपमिमीषेमुं श्मशानेन महामखम् ।।

धर्मराट्च स्वयं यत्र धर्माधर्मैककोविदः ।। ७५ ।।

श्रीदोस्ति यत्र श्रीदाता साक्षाद्यत्राशुशुक्षणिः ।।

तं यज्ञमुपमासि त्वममंगलभुवातया ।। ७६ ।।

देवाचार्यः स्वयं यत्र क्रतोराचार्यतागतः ।।

अभिमानवशात्तं त्वमाख्यासि पितृकाननम् ।। ७७ ।।

यत्रार्त्विज्यं भजंतेऽमी वसिष्ठप्रमुखर्षयः ।।

तमध्वरं समाचक्षे मंगलेतरभूमिवत् ।। ७८ ।।

निशम्येति मुनिः प्राह दधीचिर्ज्ञानिनां वरः ।।

सर्वमंगलमांगल्यो भवेद्यज्ञपुमान्हरिः ।। ७९ ।।

तथापि शांभवी शक्तिर्वेदे विष्णुः प्रपठ्यते ।।

वामांगं स्रष्टुराद्यस्य हरिस्तदितरद्विधिः ।। 4.2.87.८० ।।

दीक्षितो योश्वमेधानां शतस्य कुलिशायुधः ।।

दुर्वाससा क्षणेनापि नीतो निःश्रीकतां हि सः ।। ८१ ।।

पुनराराध्य भूतेशं प्रापैकाममरावतीम् ।।

यस्त्वया धर्मराजोत्र कथितः क्रतुरक्षकः ।। ८२ ।।

बलं तस्याखिलैर्ज्ञातं श्वेतं पाशयतः पुरा ।।

धनदस्त्र्यंबकसखस्तच्चक्षुश्चाशुशुक्षणिः ।। ८३ ।।

पार्ष्णिग्राह्यभवद्रुद्रो देवाचार्यस्य वै तदा ।।

यदा तारामधार्षीत्स द्विजराजोऽतिसुंदरीम् ।। ८४ ।।

तं विदंति वसिष्ठाद्यास्तवार्त्विज्यं भजंति ये ।।

एको रुद्रो न द्वितीयः संविदाना अपीति हि ।। ८५।।

प्रावर्तंतर्षयोन्येपि गौरवात्तव ते क्रतौ ।।

यदि मे ब्राह्मणस्यैकं शृणोषि वचनं हितम् ।। ८६ ।।

तदा क्रतुफलाधीशं विश्वेशं त्वं समाह्वय ।।

विना तेन क्रतुरसौ कृतोप्यकृत एव हि ।। ८७ ।।

सति तस्मिन्नमहादेवे विश्वकर्मैकसाक्षिणि ।।

तवापि चैषा सर्वेषां फलिष्यंति मनोरथाः ।। ८८ ।।

यथा जडानि बीजानि न फलंति स्वयं तथा ।।

जडानि सर्वकर्माणि न फलंतीश्वरं विना ।। ८९ ।।

अर्थहीना यथा वाणी धर्महीना यथा तनुः ।।

पतिहीना यथा नारी शिवहीना तथा क्रिया ।। ।। 4.2.87.९० ।।

गंगाहीना यथा देशाः पुत्रहीना यथा गृहाः ।।

दानहीना यथा संपच्छिवहीना तथा क्रिया ।। ९१ ।।

मंत्रिहीनं यथा राज्यं श्रुतिहीना यथा द्विजाः ।।

योषा हीनं यथा सौख्यं शिवहीना तथा क्रिया ।। ९२ ।।

दर्भहीना यथा संध्या तिलहीनं च तर्पणम् ।।

हविर्हीनो यथा होमः शिवहीना तथा क्रिया ।। ९३ ।।

इत्थं दधीचिनाख्यातं जग्राह वचनं न तत् ।।

दक्षो दक्षोपि तत्रैव शंभोर्माया विमोहितः।। ९४ ।।

प्रोवाच च भृशं क्रुद्धः का चिंता तव मे क्रतोः ।।

क्रतुमुख्यानि सर्वाणि यानि कर्माणि सर्वतः ।। ९५ ।।

तानि सिद्ध्यंति नियतं यथार्थकरणादिह ।।

अयथार्थविधानेन सिद्ध्येत्कर्मापि नेशितुः ।। ९६ ।।

स्वकर्मसिद्धये चाथ सर्व एव हि चेश्वरः ।।

ईश्वरः कर्मणां साक्षी यत्त्वयापीति भाषितम् ।। ९७ ।।

तत्तथास्तु परं साक्षी नार्थं दद्याच्च कुत्रचित् ।। ९८ ।।

जडानि सर्वकर्माणि न फलंतीश्वरं विना ।।

यदुक्तं भवता तत्राप्यहो दृष्टांतयाम्यहम् ।। ९९ ।।

जडान्यपि च बीजानि कालं संप्राप्यवात्मनः ।।

अंकूरयंति कालाच्च पुष्प्यंति च फलंति च ।। 4.2.87.१०० ।।

विनापीशं तथा कर्म स्वयं कालात्फलत्यहो ।।

किमीश्वरेण तेनात्र महामंगलमूर्तिना ।। १ ।।

।। दधीचिरुवाच ।। ।।

यथार्थकरणात्सिद्धमपि कार्यं कदाचन ।।

ईश्वरप्रातिकूल्याच्च सिद्धमेवाशु नश्यति ।। २ ।।

ईश्वरेच्छा बलात्कर्म कृतमप्यविधानतः ।।

संसिद्ध्येत्तदधीनाश्च कथं सर्व इहेश्वराः ।। ३ ।।

सामान्यसाक्षिवन्नेशः सर्वेषां सर्वकर्मणाम् ।।

साक्षीभवेदसंदिग्धः फलस्य प्रतिभूरपि ।। ४ ।।

भूजलादिस्वरूपेण बीजमाविश्यसर्वकृत् ।।

स्वयं कालस्वरूपेण विदध्यादंकुरोदयम् ।। ५ ।।

यत्त्वयोक्तं विनापीशं काले कर्मफलेत्स्वयम् ।।

स एव कालो भगवान्सर्वकर्ता महेशिता ।। ६ ।।

अन्यच्च भवता प्रोक्तं तदेकं तथ्यमेव तत् ।।

किमीश्वरेण तेनात्र महामंगलमूर्तिना ।। ७ ।।

ये महांतो भवंत्येव ये च मंगलमूर्तयः ।।

ईश्वराख्या च येष्वस्ति किं तैरत्र तवांतिके ।। ८ ।।

उत्तरादुत्तरं चेति प्रत्युत्तरयति द्विजे ।।

दधीचौ चुक्रुधेऽत्यंतं दक्षोगर्वातिसुश्रिया ।। ९ ।।

आदिदेश समीपस्थानालोक्य परितस्त्विति ।।

ब्राह्मणापसदं चामुं परिदूरयताशु वै ।। 4.2.87.११० ।।

अमुष्मादध्वरश्रेष्ठादवरिष्ठमनोगतम् ।।

इत्थं दधीचिराकर्ण्य प्रोवाच प्रहसन्निव ।। ११ ।।

किं मां दूरयसे मूढ दूरीभूतो भवानपि ।।

सर्वेभ्यो मंगलेभ्यश्च सर्वैरेभिः समं ध्रुवम् ।। १२ ।।

अकांडे क्रोधजो दंडस्तव मूर्ध्नि पतिष्यति ।।

महेशितुस्त्रिजगती परिशास्तुः प्रजापते ।। १३ ।।

इत्युक्त्वा निर्जगामाशु यज्ञवाटात्ततो द्विजः ।।

तस्मिन्निर्याति निर्यातो दुर्वासाश्च्यवनो भवान् ।। १४ ।।

उत्तंक उपमन्युश्च ऋचीकोद्दालकावपि ।।

मांडव्यो वामदेवश्च गालवो गर्गगौतमौ ।।१५।।

शिवतत्त्वविदोन्येपि दक्षयज्ञाद्विनिर्ययुः ।।

गते दधीचौ सानंदं प्रावर्तत महामखः ।।१६।।

ये स्थिता ब्राह्मणास्तत्र तेभ्यो द्विगुण दक्षिणाम् ।।

प्रादात्प्रजापतिर्दक्षस्त्वन्येभ्योप्यधिकं वसु ।। ।। १७ ।।

सर्वे जामातरस्तेन तोषिता भूरिशोधनैः ।।

कन्याश्चालंकृताः सर्वा महाविभवविस्तरैः ।।१८।।

ऋषिपत्न्योपि बहुशो देवपत्न्योप्यनेकशः ।।

तथा पुरांगनाः सर्वास्तेन मानभुवः कृताः ।। १९ ।।

ब्रह्मघोषेण तारेण व्योमशब्दगुणं स्फुटम् ।।

कारितं तेन दक्षेण विप्राणां हृष्टचेतसाम् ।। 4.2.87.१२० ।।

अग्निर्मंदाग्निरभवत्तस्मिञ्जुह्वति दीक्षिते ।।

हविः परिमलेनैव परितृप्ता दिगंगनाः ।। २१ ।।

स्वाहाकारैर्वषट्कारैः सुरा जाताः पिचंडिलाः ।।

रचिता गिरयस्तेन सदन्नानां पदेपदे ।।२२।।

घृतकुल्याः कृतास्तेन मधुकुल्याः सहस्रशः ।।

महासरांसि पयसां द्रप्सस्यापि महाह्रदाः ।। २३ ।।

राशयश्च दुकूलानां रत्नानां शिखराणि च ।।

यज्ञवाटस्य वसुधा स्वर्णरूप्यमयीकृता ।। २४ ।।

न लभ्यंते क्रतौ तस्य मार्गिता अपि मार्गणाः ।।

हृष्टाः पुष्टाः समभवन्नपि तत्परिचारकाः ।। २५ ।।

ध्वनिर्मंगलगीतानां व्यानशे गगनांगणम् ।।

जहृषे चाप्सरोवृंदैर्गंधर्वैर्मुमुदेतराम् ।। २६ ।।

विद्याधरैर्ननंदे च वसुधा ववृधे भृशम् ।।

महाविभवसंभारे तस्मिन्दाक्षे महाक्रतौ ।।

इत्थं प्रवृत्तेऽथ मुनिः कैलासं नारदो ययौ ।।१२७।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे दक्षयज्ञप्रादुर्भावोनाम सप्ताशीतितमोऽध्यायः ।। ८७।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८८

https://sa.wikisource.org/s/fyo



अगस्त्य उवाच ।। ।।

शिवलोकं समासाद्य मुनिना ब्रह्मसूनुना ।।

किं चक्रे ब्रूहि षड्वक्त्र कथां कौतुकशालिनीम् ।। १ ।।

स्कंद उवाच ।। ।।

शृणु कुंभज वक्ष्यामि नारदेन महात्मना ।।

यत्कृतं तत्र गत्वाशु कैलासं शंकरालयम् ।। २ ।।

मुनिर्गगनमार्गेण प्राप्य तद्धाम शांभवम्।।

दृष्ट्वा शिवौ प्रणम्याथ शिवेन विहितादरः ।। ३ ।।

तदुद्दिष्टासनं भेजे पश्यंस्तत्क्रीडनं परम्।।

क्रीडंतौ तौ तु चाक्षाभ्यां यदा न च विरमेतुः ।। ४ ।।

तदौत्सुक्येन स मुनिः प्रेर्यमाण उवाच ह ।।

।। नारद उवाच ।। ।।

देवदेव तव क्रीडाखिलं ब्रह्मांडगोलकम् ।।

मासा द्वादश ये नाथ ते सारिफलके गृहाः ।। ५ ।।

कृष्णाः कृष्णेतरा या वै तिथयस्ताश्च सारिकाः ।।

द्विपंचदशमासे यास्त्वक्षयुग्मं तथायने ।। ६ ।।

सृष्टिप्रलय संज्ञौ द्वौ ग्लहौ जयपराजयौ ।।

देवीजये भवेत्सृष्टिरसृष्टिर्धूर्जटेर्जये ।। ७ ।।

भवतोः खेलसमयो यः सा स्थितिरुदाहृता।।

इत्थं क्रीडैव सकलमेतद्ब्रह्मांडमीशयोः ।। ८ ।।

न देवी जेष्यति पतिं नेशः शक्तिं विजेष्यति ।।

किंचिद्विज्ञप्तुकामोस्मि तन्मातरवधार्यताम् ।। ९ ।।

देवः सर्वज्ञनाथोपि न किंचिदवबुध्यति ।।

मानापमानयोर्यस्मादसौ दूरे व्यवस्थितः ।। 4.2.88.१० ।।

लीलात्मा गुणवानेष विचारादतिनिर्गुणः ।।

कुर्वन्नपि हि कर्माणि बाध्यते नैव कर्मभिः ।। ११ ।।

मध्यस्थोपि हि सर्वस्य माध्यस्थ्यमवलंबतै ।।

सर्वत्रायं महेशानो मित्राऽमित्रसमानदृक् ।। १२ ।।

त्वं शक्तिरस्य देवस्य सर्वेषां मान्यभूः परा ।।

दक्षस्यापि त्वया मानो दत्तो पत्यनिमित्तकः ।। १३ ।।

परं त्वं सर्वजगतां जनयित्र्येकिका ध्रुवम् ।।

त्वत्त आविर्भवंत्येव धातृकेशववासवाः।। ।। १४ ।।

त्वमात्मानं न जानासि त्र्यक्षमायाविमोहिता ।।

अतएव हि मे चित्तं दुनोत्यतितरां सति ।। १५ ।।

अन्या अपि हि याः सत्यः पातिव्रत्यपरायणाः ।।

ता भर्तृचरणौ हित्वा किंचिदन्यन्न मन्वते ।। १६ ।।

अथवास्तामियं वार्ता प्रस्तुतं प्रब्रवीम्यहम् ।।

अद्य नीलगिरेस्तस्माद्धरिद्वारसमीपतः ।। १७ ।।

अपूर्वमिव संवीक्ष्य परिप्राप्तस्तवांतिकम् ।।

अत्याश्चर्यविषादाभ्यां किचिद्वक्तुमिहोत्सुकः ।। १८ ।।

आश्चर्यहेतुरेवायं यत्पुंजातं त्रयीतले ।।

तद्दृष्टं सकलत्रं च दक्षस्याध्वरमंडपे ।। १९ ।।

सालंकारं समानं च सानंदमुखपंकजम् ।।

विस्मृताखिलकार्यं च दक्षयज्ञप्रवर्तकम् ।। 4.2.88.२० ।।

विषादे कारणं चैतद्यतो जातमिदं जगत् ।।

यस्मिन्प्रवर्तते यत्र लयमेष्यति च ध्रुवम् ।। २१ ।।

तदेव तत्र नो दृष्टं भवद्द्वंद्वं भवापहम् ।।

प्रायो विषादजनकं भवतोर्यददर्शनम् ।। २२ ।।

तदेव नाभवत्तत्र समभूदन्यदेव हि ।।

तच्च वक्तुं न शक्येत तद्वक्ता दक्ष एव सः ।। २३ ।।

तानि वाक्यानि चाकर्ण्य द्रुहिणेन ययेततः ।।

महर्षिणा दधीचेन धिक्कृतो नितरां हि सः ।।२४ ।।

शप्तश्च वीक्षमाणानां देवर्षीणां प्रजापतिः ।।

मया च कर्णौ पिहितौ श्रुत्वा तद्गर्हणा गिरः ।। २५ ।।

दधीचिना समं केचिद्दुर्वासः प्रमुखा द्विजाः ।।

भवनिंदां समाकर्ण्य कियतोपि विनिर्ययुः ।।२६।।

प्रावर्तत महायागो हृष्टपुष्टमहाजनः ।।

तथा द्रष्टुं न शक्नोमि तत आगतवानिह ।।२७ ।।

भगिन्योपि च या देवि तव तत्र सभर्तृकाः ।।

तासां गौरवमालोक्य न किंचिद्वक्तुमुत्सहे ।। २८ ।।

इति देवी समाकर्ण्य सती दक्षकुमारिका ।।

करादक्षौ समुत्सृज्य दध्यौ किंचित्क्षणं हृदि ।। २९ ।।

उवाच च भवत्वेवं शरणं भव एव मे ।।

संप्रधार्येति मनसि सती दाक्षायणी ततः ।।4.2.88.३०।।

द्रुतमेव समुत्तस्थौ प्रणनाम च शंकरम् ।।

मौलावंजलिमाधाय देवी देवं व्यजिज्ञपत् ।।३१।।

।। देव्युवाच ।। ।।

विजयस्वांधकध्वंसिं त्र्यंबक त्रिपुरांतक ।।

चरणौ शरणं ते मे देह्यनुज्ञा सदाशिव ।।३२।।

मा निषेधीः प्रार्थयामि यास्यमि पितुरंतिकम् ।।

उक्त्वेति मौलिमदधादंधकारि पदांबुजे ।। ३३ ।।

अथोक्ता शंभुना देवी मृडान्युत्तिष्ठ भामिनि ।।

किमपूर्णं तवास्त्यत्र वदसौ भाग्यसुंदरि ।। ३४ ।।

लक्ष्म्या अपि च सौभाग्यं ब्रह्माण्यै कांतिरुत्तमा ।।

शच्यै नित्यनवीनत्वं भवत्या दत्तमीश्वरि ।। ३५ ।।

त्वया च शक्तिमानस्मि महदैश्वर्यरक्षणे ।।

त्वां च शक्तिं समासाद्य स्वलीलारूपधारिणीम् ।। ३६ ।।

एतत्सृजामि पाम्यद्मि त्वल्लीलाप्रेरितोंगने ।।

कुतो मां हातुमिच्छेस्त्वं मम वामार्धधारिणि ।। ३७ ।।

शिवा शिवोदितं चेति श्रुत्वाप्याह महेश्वरम् ।।

जीवितेश विहाय त्वां न क्वापि परियाम्यहम् ।।३८।।

मनो मे चरणद्वंद्वे तव स्थास्यति निश्चलम् ।।
क्रतुं द्रष्टुं पितुर्यामि नैक्षि यज्ञो मया क्वचित् ।।३९।।
शंभुः कात्यायनीवाक्यामिति श्रुत्वा तदाब्रवीत् ।।
क्रतुस्त्वया नेक्षितश्चेदाहरामि ततः क्रतुम् ।। 4.2.88.४० ।।
मच्छक्ति धारिणी त्वं वा सृजैवान्यां क्रतुक्रियाम् ।।
अन्यो यज्ञपुमानस्तु संत्वन्ये लोकपालकाः ।। ४१ ।।
अन्यानाशु विधेहि त्वमृषीनार्त्विज्यकर्मणि ।।
पुनर्जगाद देवीति श्रुत्वा शंभोरुदीरितम् ।। ४२ ।।
पितुर्यज्ञोत्सवो नाथ द्रष्टव्योऽत्र मया ध्रुवम् ।।
देह्यनुज्ञां गमिष्यामि मा मे कार्षीर्वचोन्यथा ।। ४३ ।।
कः प्रतीपयितुं शक्तश्चेतो वा जलमेव वा ।।
निम्नायाभ्युद्यतं नाथ माद्य मां प्रतिषेधय ।। ४४ ।।
निशम्येति पुनः प्राह सर्वज्ञो भूतनायकः ।।
मा याहि देवि मां हित्वा गता च न मिलिष्यसि ।। ४५ ।।
अद्य प्राचीं यियासुं त्वां वारयेत्पंगुवासरः ।।
नक्षत्रं च तथा ज्येष्ठा तिथिश्च नवमी प्रिये ।। ४६ ।।
अद्य सप्तदशो योगो वियोगोद्य तनोऽशुभः ।।
धनिष्ठार्ध समुत्पन्ने तव ताराद्य पंचमी ।। ।। ४७ ।।
मा गा देवि गताद्य त्वं नहि द्रक्ष्यसि मां पुनः ।।
पुनर्देवी बभाषे सा यदि नाम्नाप्यहं सती ।। ४८ ।।
तदा तन्वंतरेणापि करिष्ये तव दासताम् ।।
ततो भवः पुनः प्राह को वा वारयितुं प्रभुः ।। ४९ ।।
परिक्षुब्धमनोवृत्तिं स्त्रियं वा पुरुषं तु वा ।।
पुनर्न दर्शनं देवि मया सत्यं ब्रवीम्यहम् ।।4.2.88.५०।।
परं न देवि गंतव्यं महामानधनेच्छुभिः ।।
अनाहूत तया कांते मातापितृगृहानपि ।। ५१ ।।
यथा सिंधुगता सिंधुर्न पुनः परिवर्तते ।।
तथाद्य गंत्र्या नो जातु तवागमनमिष्यते ।। ५२ ।।

।। देव्युवाच ।। ।।

अवश्यं यद्यहं रक्ता तव पादाबुंजद्वये ।।

तथा त्वमेव मे नाथो भविष्यसि भवांतरे ।। ५३ ।।

इत्युक्त्वा निर्ययौ देवी कोपांधीकृतलोचना ।।

यियासुभिश्च कार्यार्थं यत्कर्तव्यं न तत्कृतम् ।। ५४ ।।

न ननाम महादेवं न च चक्रे प्रदक्षिणम् ।।

अतएव हि सा देवी न गता पुनरागता ।। ५५ ।।

अप्रणम्य महेशानमकृत्वापि प्रदक्षिणम् ।।

अद्यापि न निवर्तंते गताः प्राग्वासरा इव ।। ५६ ।।

तया चरणचारिण्या राज्ञ्या त्रिभुवनेशितुः ।।

अपि तत्पावनं वर्त्म मेनेति कठिनं बहु ।। ५७ ।।

देवोपि तां सतीं यांतीं दृष्ट्वा चरणचारिणीम् ।।

अतीव विव्यथे चित्ते गणांश्चाथ समाह्वयत् ।। ५८ ।।

गणा विमानं नयत मनःपवनचक्रिणम् ।।

पंचास्यायुतसंयुक्तं रत्नसानुध्वजोच्छ्रितम् ।। ५९ ।।

महावातपताकं च महाबुद्ध्यक्षलक्षितम् ।।

नर्मदालकनंदा च यत्रेषादंडतांगते ।। 4.2.88.६० ।। रथोपरि टिप्पणी

छत्रीभूतौ च यत्रस्तः सूर्याचंद्रमसावपि ।।

यस्मिन्मकरतुंडं च वाराहीशक्तिरुत्तमा ।। ६१ ।।

धूः स्वयं चापि गायत्री रज्जवस्तक्षकादयः ।।

सारथिः प्रणवो यत्र क्रेंकारः प्रणवध्वनिः ।। ६२ ।।

अंगानि रक्षका यत्र वरूथश्छंदसां गणः ।।

इत्याज्ञप्ता गणास्तूर्णं रथं निन्युर्हराज्ञया ।। ६३ ।।

देव्या सनाथं तं कृत्वा विमानं पार्षदा दिवि ।।

अनुजग्मुर्महादेवीं दिव्यां तेजोविजृंभिणीम्।। ६४ ।।

सा क्षणं त्र्यक्षरमणी वीक्ष्य दक्षसभांगणम्।।

नभोंऽगणाद्विमानस्थानतो वेगादवातरत् ।। ६५ ।।

अविशद् यज्ञवाटं च चकितंरक्षि वीक्षिता ।।

कृतमंगलनेपथ्यां प्रसूं दृष्ट्वा किरीटिनीम्।। ६६ ।।

सभर्तृकाश्च भगिनीर्नवालंकृतिशालिनीः ।।

साश्चर्याश्च सगर्वाश्च सानंदाश्च ससाध्वसाः ।। ६७।।

अचिंतिता त्वनाहूता विमानाद्धरवल्लभा ।।

कथमेषा परिप्राप्ता क्षणमित्थं प्रपश्यतीः।। ।। ६८ ।।

असंभाष्या पिताः सर्वा गता दक्षांतिकं सती ।।

पित्रा पृष्टा तु मात्रापि भद्रं जातं त्वदागमे ।। ६९ ।।

।। सत्युवाच ।। ।।

यदि भद्रं जनेतर्मे समागमनतो भवेत् ।।

कथं नाहं समाहूता यथैता मे सहोदराः ।। 4.2.88.७० ।।

।। दक्ष उवाच ।। ।।

अयि कन्ये महाधन्ये ह्यनन्ये सर्वमंगले ।।

अयं ते न मनाग्दोषो दोष एष ममैव हि ।। ७१ ।।

तादृग्विधाय यत्पत्ये मया दत्ताज्ञबुद्धिना ।।

यदहं तं समाज्ञास्यमीश्वरोसौ निरीश्वरः ।। ७२ ।।

तदा कथमदास्यं त्वां तस्मै मायास्वरूपिणं ।।

अहं शिवाख्यया तुष्टो न जाने शिवरूपिणम्।। ७३ ।।

पितामहेन बहुधा वर्णितोसौ ममाग्रतः ।।

शंकरोयमयं शभुरसौ पशुपतिः शिवः ।। ७४ ।।

श्रीकंठोसौ महेशोऽसौ सर्वज्ञोसौ वृषध्वजः ।।

अस्मै कन्यां प्रयच्छ त्वं महादेवाय धन्विने ।। ७५ ।।

वाक्याच्छतधृतेस्तस्मात्तस्मै दत्ता मयानघे ।।

न जाने तं विरूपाक्षमुक्षगं विषभक्षिणम् ।। ७६ ।।

पितृकाननसंवासं शूलिनं च कपालिनम् ।।

द्विजिह्वसंगसुभगं जलाधारं कपर्दिनम्।। ७७ ।।

कलंकिकृतमौलिं च धूलिधूसरचर्चितम् ।।

क्वचित्कौपीनवसनं नग्नं वातूलवत्क्वचित् ।। ७८ ।।

क्वचिच्च चर्मवसनं क्वचिद्भिक्षाटनप्रियम् ।।

विटंकभूतानुचरं स्थाणुमुग्रं तमोगुणम्।। ।। ७९ ।।

रुद्रं रौद्रपरीवारं महाकालवपुर्धरम् ।।

नृकरोटीपरिकरं जातिगोत्रविवर्जितम् ।। 4.2.88.८० ।।

न सम्यग्वेत्ति तं कश्चिज्जानानोपि प्रतारितः ।।

किं बहूक्तेन तनये समस्त नयशालिनि ।। ८१ ।।

क्व पांसुलपटच्छन्नो महाशंखविभूषणः ।।

प्रबद्धसर्पकेयूरः प्रलंबित जटासटः ।। ८२ ।।

डमड्डमरुकव्यग्र हस्ताग्रः खंडचंद्रभृत् ।।

तांडवाडंबररुचिः सर्वामंगल चेष्टितः ।।८३।।

मृडानि सहरः क्वाऽयमध्वरो मंगलालयः ।।

अतएव समाहूता नेह त्वं सर्वमंगले ।। ८४ ।।

दुकूलान्यनुकूलानि रत्नालंकृतयः शुभाः ।।

प्रागेव धारितास्तेत्र पश्यागत्य गृहाण च ।। ८५ ।।

इह मंगलवेशेषु देवेंद्रेषु स शूलधृक् ।।

कथमर्हो भवेच्चेति मंगले विषमेक्षणः ।। ८६ ।।

इत्याकर्ण्य सती साध्वी जनेतुरुदितं तदा ।।

अत्यंतदूनहृदया वक्तुं समुपचक्रमे ।।८७।।

सत्युवाच ।। ।।

नाकर्णितं मया किंचित्त्वयि प्रब्रुवति प्रभो ।।

पदद्वयीं समाकर्ण्य तां च ते कथयाम्यहम् ।।८८।।

न सम्यग्वेत्ति तं कश्चिज्जानानोपि प्रतारितः ।।

एतत्सम्यक्त्वयाख्यायि कस्तं वेत्ति सदाशिवम्।। ८९ ।।

त्वं तु प्रतारितः पूर्वमधुनापि प्रतारितः ।।

कृत्वा तेन च संबंधमसंबद्धप्रलापभाक् ।। 4.2.88.९० ।।

यादृशं वक्षितं शंभुं तादृशं यद्यमन्यथाः ।।

कुतो मामददास्तस्मै यं च कश्च न वेद न ।। ९१ ।।

अथवा तेन संबंधे न हेतुर्भवतो मतिः ।।

तत्र हेतुरभूत्तात मम पुण्यैकगौरवम्।। ।। ९२ ।।

अथोक्त्वैवं बहुतरं त्वं जनेतास्य वर्ष्मणः ।।
श्रुतानेन च देहेन पत्युः परिविगर्हणा ।। ९३ ।।
पुरश्चरणमेवैतद्यदस्यैव विसर्जनम् ।।
सुश्लाघ्यजन्मया तावत्प्राणितव्यं सुयोषिता ।।
यावज्जीवितनाथस्याश्रवणीया विगर्हणा ।। ९४ ।।
इत्युक्त्वा क्रोधदीप्ताग्नौ महादेवस्वरूपिणि ।।
जुहाव देहसमिधं प्राणरोधविधानतः ।। ९५ ।।
ततो विवर्णतां प्राप्ताः सर्वे देवाः सवासवाः ।।
नाग्निर्जज्वाल च तथा यथाज्याहुतिभिः पुरा ।। ९६ ।।
मंत्राः कुंठितसामर्थ्यास्तत्क्षणादेव चाभवन् ।।
अहो महानिष्टतरं किमेतत्समुपस्थितम् ।।९७।।
केचिदूचुर्द्विजवरा मिथः परिरियियासवः ।।
महाझंझानिलः प्राप्तः पर्वतांदोलनक्षमः ।। ९८।।
मखमंडप भूस्तेन क्षणतः स्थपुटीकृता ।।
अकांडं तडिदापातो जातोभूद्भूप्रकपनः ।।९९।।
दिवश्चोल्काः प्रपतिताः पिशाचा नृत्यमादधुः ।।
आतापिगृध्रैरुपरि गगने मंडलायितम् ।। 4.2.88.१०० ।।
रवेरधस्तादशिवं शिवास्तत्राप्यरारिषुः ।।
मेघारुधिरविपुड्भिस्तत्र वृष्टिं व्यधुः पराम् ।। १ ।।
निर्घातनिःस्वनो भूमेरुत्थितो हृत्प्रकंपनः ।।
दिव्यायुधानि च मिथो युध्यंति स्मातिभीषणम् ।। २ ।।
हवनीयं महद्रव्यं दूषितं क्रोष्टुभिः श्वभिः ।।
चकोराः करटास्तत्र विचेरुर्यज्ञमंडपे ।। ३ ।।
श्मशानवाटवज्जातो यज्ञवाटः स वै क्षणात।।
यद्यत्रावस्थितं सर्वं तत्तत्रैव परिष्ठितम् ।। ४ ।।
चित्रन्यस्तमिवासीच्च वस्तुजातमशोभि च ।।
स्थगिता इव संवृत्तास्तत्र चक्रधरादयः ।। ५ ।।
दक्षोपि वदनग्लानिमवाप्य सपरिच्छदः ।।

पुनर्यथाकथंचिच्च यज्ञं प्रावर्तयन्द्विजाः ।।१०६।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे सतीदेहविसर्जनं नामाष्टाशीतितमोऽध्यायः ।। ८८ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०८९

https://sa.wikisource.org/s/fv0
< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। स्कंद उवाच ।।

पुनः स नारदोऽगस्त्य देव्याः प्राक्समुपागतः ।।

तद्वृत्तांतमशेषं च हरायावेदितुं ययौ ।। १ ।।

दृष्ट्वा स नारदः शंभुं नंदिना सह संकथाम् ।।

कांचित्तर्जनिविन्यास पूर्वं कुर्वंतमानमत् ।। २ ।।

उपाविशच्च शैलादि विसृष्टासनमुत्तमम् ।।

वैलक्ष्यं नाटयन्किंचित्क्षणं जोषं समास्थितः ।।३।।

आकारेणैव सर्वज्ञस्तद्वृत्तांतं विवेद ह।।

अवादीच्च मुनिं शंभुः कुतो मौनावलंबनम् ।। ४ ।।

शरारिणां स्थितिरियमुत्पत्तिप्रलयात्मिका ।।

दिव्यान्यपि शरीराणि कालाद्यांत्येवमेव हि ।। ५ ।।

दृश्यं विनश्वरं सर्वं विशेषाद्यदनीश्वरम् ।।

ततोऽत्र चित्रं किं ब्रह्मन्कंकालः कालयेन्न वै ।।६।।

अभाविनो हि भावस्य भावः क्वापि न संभवेत् ।।

भाविनोपि हि नाभावस्ततो मुह्यंति नो बुधाः ।। ७ ।।

शंभूदीरितमाकर्ण्य स इत्थं मुनिपुंगवः ।।

प्रोक्तवान्सत्यमेवैतद्यद्देवेन प्रभाषितम् ।। ८ ।।

अवश्यमेव यद्भाव्यं तद्भूतं नात्र संशयः ।।

परं मां बाधतेत्यंतं चिंतैका चित्तमाथिनी ।। ९ ।।

नापचीयेत ते किंचिन्नोपचीयेत तत्त्वतः ।।

अव्ययत्वाच्च पूर्णत्वाद्धानिवृद्धी कृतस्त्वयि ।। 4.2.89.१० ।।

अहो वराकः संसारः क्व भविष्यत्यनीश्वरः ।।

आरभ्याद्यदिनं न त्वामर्चयिष्यंति केपि यत् ।। ११ ।।

यतः प्रजापतिर्दक्षो न त्वामाहूतवान्क्रतौ ।।

तेनाद्यरीढि तं दृष्ट्वा देवर्षिमनुजा अपि।। १२ ।।

तव रीढां करिष्यंति किमैश्वर्येण रीढिनाम् ।।

प्राप्तावहेडना लोके जितकालभया अपि ।।

अथैश्वर्येण संपन्नाः प्रतिष्ठाभाजनं किमु ।। १३ ।।

महीयसायुषा तेषां वसुभिर्भूरिभिश्च किम् ।।

येऽभिमानधनानेह लब्धरीढाः पदेपदे ।। १४ ।।

अचेतनाश्च सावज्ञा जीवंतोपि न कीर्तये ।।

अभिमानधना धन्या वरं योषित्सुसासती ।। १५ ।।

या त्वद्विनिंदाश्रवणात्तृणीचक्रे स्वजीवितम्।।

इत्याकर्ण्य महाकालः सम्यग्ज्ञात्वा सतीव्ययम् ।। १६ ।।

सत्यं मुने सती देवी तृणीचक्रे स्वजीवितम् ।।

जोषं स्थिते मुनौ तत्र तन्महाकालसाध्वसात् ।।१७।।

रुद्रश्चातीवरुद्रोभूद्वहुकोपाग्निदीपितः ।।

ततस्तत्कोपजाद्वह्निराविरासीन्महाद्युतिः ।।१८।।

प्रत्यक्षः प्रतिमाकारः कालमृत्युप्रकंपनः ।।

उवाच च प्रणम्येशं भुशुंडीं महतीं दधत् ।।१९।।

आज्ञां देहि पितः किं ते करवै दास्यमुत्तमम्।।

ब्रह्मांडमेककवलं करवाणि त्वदाज्ञया ।। 4.2.89.२० ।।

पिबामि चार्णवान्सप्ताप्येकेन चुलुकेन वै ।।

रसातलं वा पातालं पातालं वा रसातलम् ।। २१ ।।

त्वदाज्ञया नयामीश विनिमय्य स्वहेलया ।।

सलोकपालमिंद्रं वा धृत्वा केशैरिहानये ।। २२ ।।

अपि वैकुंठनाथश्चेत्तत्साहाय्यं करिष्यति ।।

तदा तं कुंठितास्त्रं च करिष्यामि त्वदाज्ञया ।। २३ ।।

दनुजा दितिजाः के वै वरा कारणदुर्बलाः ।।

तेषु चोत्कटतां कोपि धत्ते तं प्रणिहन्म्यहम् ।। २४ ।।

कालं बध्नामि वा संख्ये मृत्योर्वा मृत्युमर्थये ।।

स्थावरेषु चरेष्वत्र मयि कुद्धे रणांगणे ।। २५ ।।

त्वद्बलेन महेशान न कोपि स्थैर्यमेष्यति ।।

ममपादतलाघातादेतद्वै क्षोणिमंडलम् ।। २६ ।।

कदलीदलवद्वाताद्वेपते सरसातलम् ।।

चूर्णीकरोमि दोर्दंडघाताच्चैतान्कुलाचलान् ।। २७ ।।

किं बहूक्तेन देह्याज्ञां ममासाध्यं न किंचन ।।

त्वत्पादबलमासाद्य कृतं विद्ध्यद्यचिंतितम् ।। २८ ।।

इति प्रतिज्ञां तस्येशः श्रुत्वा कृतममन्यत ।।

कृतकृत्यमिवात्यंतं तं मुदा प्रत्युवाच च ।। २९ ।।

महावीरोसि रे भद्र मम सर्वगणेष्विह ।।

वीरभद्राख्यया त्वं हि प्रथितिं परमां व्रज ।। 4.2.89.३० ।।

कुरु मे सत्वरं कार्यं दक्षयज्ञं क्षयं नय ।।

ये त्वां तत्रावमन्यंते तत्साहाय्यविधायिनः ।। ३१ ।।

ते त्वयाप्यवमंतव्या व्रज पुत्र शुभोदय ।।

इत्याज्ञां मूर्ध्नि चाधाय स ततः पारमेश्वरीम् ।। ३२ ।।

हरं प्रदक्षिणीकृत्य जग्मिवानतिरंहसा ।।

ततस्तदनुगाञ्शंभुः स्वनिःश्वाससमुद्गतान् ।। ३३ ।।

शतकोटिमितानुग्रान्गणानन्न्यानवासृजत् ।।

ते गणा वीरभद्रं तं यांतं केचित्पुरोगताः ।। ३४ ।।

केचित्तदनुगा जाताः केचित्तत्पार्श्वगा ययुः।।

अंबरं तैः समाक्रांतं तेजोवीजित भास्करैः ।। ३५ ।।

शृंगाग्राणि गिरीणां च कैश्चिदुत्पाटितानि वै ।।

आचूडमूलाः कैश्चिच्च विधता वै शिलोच्चयाः ।।३६।।

उत्पाट्य महतो वृक्षान्केचित्प्राप्ता मखांगणम् ।।

कैश्चिदुत्पाटिता यूपाः केचित्कुंडान्यपूपुरन् ।। ३७ ।।

मंडपं ध्वंसयामासुः केचित्क्रोधोद्धुरागणाः ।।

अचीखनन्वै वेदीश्च केचिद्वै शूलपाणयः ।।

अभक्षयन्हवींष्यन्ये पृषदाज्यं पपुः परे ।। ३८ ।।

दध्वंसुरन्नराशींश्च केचित्पर्वतसन्निभान् ।।

केचिद्वै पायसाहाराः केचिद्वै क्षीरपायिनः ।। ।। ३९ ।।

केचित्पक्वान्नपुष्टांगा यज्ञपात्राण्यचूर्णयन् ।।

अमोटयन्स्रुचादंडान्केचिद्दोर्दंडशालिनः ।। 4.2.89.४०

व्यभजञ्छकटान्केचित्पशून्केचिदजीगिलन् ।।

अग्निं निर्वापयामासुः केचिदत्यग्नितेजसः ।। ४१ ।।

स्वयं परिदधुश्चान्ये दुकूलानि मुदा युताः ।।

जगृहुः केचन पुरा रत्नानां पर्वतं कृतम् ।। ४२ ।।

एकेन च भगो देवः पश्यंश्चक्रे विलोचनः ।।

पूष्णो दंतावलीमन्यः पातयामास कोपितः ।। ४३ ।।

यज्ञः पलायितो दृष्टः केनचिन्मृगरूपधृक् ।।

शिरोविरहितश्चक्रे तेन चक्रेण दूरतः ।। ४४ ।।

एकः सरस्वतीं यांतीं दृष्ट्वा निर्नासिकां व्यधात् ।।

अदितेरोष्ठपुटकौ छिन्नावन्येन कोपिना ।। ४५ ।।

अर्यम्णो बाहुयुगलं तथोत्पाटितवान्परः।।

अग्नेरुत्पाटयामास कश्चिज्जिह्वां प्रसह्य च ।।४६।।

चिच्छेद वायोर्वृषणं पार्षदोन्यः प्रतापवान् ।।

पाशयित्वा यमं कश्चित्को धर्म इति पृष्टवान् ।।४७।।

यत्र धर्मे महेशो न प्रथमं परिपूज्यते ।।

नैर्ऋतं संगृहीत्वान्यः केशेष्वातो्ल्यचासकृत् ।।४८।।

अनीश्वरं हविर्भुक्तं त्वयेत्या ताडयत्पदा ।।

कुबेरमपरो धृत्वा पादयोरधुनोद्बलात् ।। ४९ ।।

वामयामास बहुशो भक्षिता ह्यध्वराहुतीः ।।

एकादशाऽपि ये रुद्रा लोकपालैकपंक्तयः ।। 4.2.89.५० ।।

रुद्राख्या धारणवशात्प्रमथैस्तेऽवहेलिताः ।।

वरुणोदरमापीड्य प्रमथोन्यो बलेनहि ।। ५१ ।।

बहिरुद्गिरयामास यद्दत्तं चेशवर्ज्जितम् ।।

मायूरीं तनुमासाद्य सहस्राक्षो महामतिः ।। ५२ ।।

उड्डीय गिरिमाश्रित्यच्छन्नः कौतुकमैक्षत ।।

ब्राह्मणान्प्रमथा नत्वा यातयातेतिचाब्रुवन् ।। ५३ ।।

प्रमथाः कालयामासुरन्यानपि च याचकान् ।।
इत्थं प्रमथिते यागे प्रमथैः प्रथमागतैः ।।
वीरभद्रः स्वतः प्राप्तः प्रमथानीकिनी वृतः ।।५४।।
यज्ञवाटं श्मशानाभं दृष्ट्वा तैः प्रमथैः पुरा ।।
अतिशोच्यां दशां नीतं वीरभद्रस्ततो जगौ ।। ।। ५५ ।।
गणाः पश्यत दुर्वृतैः प्रारब्धानां च कर्मणाम् ।।
अनीश्वरैरवस्थेयं कुतो द्वेषो महेश्वरे ।। ५६ ।।
ये द्विषंति महादेवं सर्वकर्मैकसाक्षिणम् ।।
धर्मकार्ये प्रवृत्तास्तु ते प्राप्स्यंतीदृशं दशाम् ।। ५७ ।।
क्व स दक्षो दुराचारः क्व च यज्ञभुजः सुराः ।।
धृत्वा सर्वानानयत यात द्रुततरं गणाः ।।५८।।
इत्याज्ञा वीरभद्रस्य प्राप्य ते प्रमथा द्रुतम्।।
यावद्यांत्यग्रतस्तावद्दृष्टः क्रुद्धो गदाधरः ।। ५९ ।।
तेन ते प्रमथाः सर्वे महाबलपराक्रमाः ।।
शुष्कपर्णतृणावस्थां प्रापिता वात्ययेव हि ।।4.2.89.६०।।
अथ नष्टेषु सर्वेषु प्रमथेषु हरेर्भयात् ।।
चुकोप वीरभद्रः स प्रलयानलसंनिभः ।। ६१ ।।
ददर्श शार्ङ्गिणं चाग्रे स्वगणैश्च परिष्टुतम् ।।
चतुर्भुजैरसंख्यातैर्जितदैत्यमहाबलैः ।।६२।।
चक्रिभिर्गदिभिर्जुष्टं खड्गिभिश्चापि शार्ङ्गिभिः ।।
वीरभद्रस्ततः प्राह दृष्ट्वा तं दैत्यसूदनम् ।। ६३ ।।
त्वं तु यज्ञपुमानत्र महायज्ञप्रवर्तकः ।।
रक्षिता निजवीर्येण दक्षस्य त्र्यक्षवैरिणः ।। ६४ ।।
किं वा दक्षं समानीय देहि युध्यस्व वा मया ।।
न दास्यसि च चेद्दक्षं ततस्तं रक्ष यत्नतः ।। ६५ ।।
प्रायशः शंभुभक्तेषु यतस्त्वं प्रोच्यसेऽग्रणीः ।।
एकोनेऽब्जसहस्रेप्राग्ददौ नेत्रांबुजं भवान् ।। ६६ ।।
तुष्टेन शंभुना दत्तं तुभ्यं चक्रं सुदर्शनम् ।।

यत्साहाय्यमवाप्याजौ त्वं जयेर्दनुजाधिपान् ।। ६७ ।।

इत्याकर्ण्य वचस्तस्य वीरभद्रस्य चोर्जितम्।।

जिज्ञासुस्तद्बलं विष्णुर्वीरभद्रमुवाच ह ।। ६८ ।।

त्वं शंभोः सुत देशीयो गणानां प्रवरोस्यहो ।।

राजादेशमनुप्राप्य ततोप्यतिबलो महान् ।। ६९ ।।

योसि सोस्यहमप्यत्र दक्षरक्षणदक्षधीः ।।

पश्यामि तव सामर्थ्यं कथं दक्षं हरिष्यसि ।। 4.2.89.७० ।।

इत्युक्तो वीरभद्रः स तेन वै शार्ङ्गधन्वना ।।

प्रमथान्दृष्टिभंग्यैव प्रेरयामास संगरे ।। ७१ ।।

अथ तैः प्रमथैर्विष्णोरनुगा गदिता रणे ।।

आददानास्तृणं वक्त्रे णापिताः पाशवीं दशाम् ।। ७२ ।।

ततस्ताक्ष्र्यरथः क्रुद्धस्त्वेकैकं रणमूर्धनि ।।

सहस्रेणसहस्रेण बाणानां हृद्यताडयत् ।। ७३ ।।

ते भिन्नवक्षसः सर्वे गणा रुधिरवर्षिणः ।।

वासंतीं कैंशुकीं शोभां परिप्रापूरणाजिरे ।। ७४ ।।

क्षरंत इव मातंगाः स्रवंत इव पर्वताः ।।

मदेन धातुरागेण मिश्रैः शुशुभिरे गणाः ।। ७५ ।।

ततः प्रहस्य गणपोऽब्रवीद्वै कुंठनायकम् ।।

हे शार्ङ्गधन्वञ्जाने त्वां त्वं रणांगण पंडितः ।। ७६ ।।

परं युध्यसि दैत्येंद्रैर्दानवेंद्रैर्न पार्षदैः ।।

इत्युक्त्वा वीरभद्रेण भुशुंडीकलिताकरे ।।७७।।

गदिनाऽथ गदा तूर्णं दैत्येंद्रगिरिरेणुकृत् ।।

ततः प्रहतवान्वीरो भुशुंड्या तं गदाधरम् ।। ७८ ।।

तदंगसंगमासाद्य विदद्रे शतधा तया ।।

कौमोदकी प्रहारेण वीरभद्रं प्रतापिनम् ।। ७९ ।।

जघान वासुदेवोपि तरसाऽज्ञातवेदनम् ।।

ततः खट्वांगमादाय गदाहस्तं गदाधरम् ।।4.2.89.८०।।

आताड्य सव्यदोर्दंडे गदां भूमावपातयत् ।।

कुपितोयं मधुद्वेषी चक्रेणाताडयच्च तम् ।। ८१ ।।

स च चक्रं समागच्छद्दृष्ट्वा सस्मार शंकरम् ।।

शंकरस्मरणाच्चक्रं मनाग्वक्रत्वमाप्य च ।।

कंठमासाद्यवीरस्य सम्यग्जातं सुदर्शनम् ।।८२।।

तेन चक्रेण शुशुभे नितरां स गणेश्वरः ।।

वीरलक्ष्म्यावृत इव समरे विजयस्रजा ।। ८३ ।।

ततः सुदर्शनं दृष्ट्वा तत्कंठाभरणं हरिः ।।

मनाक्स चकितं स्मित्वा ततो जग्राह नंदकम् ।। ८४ ।।

सनंदकं करं तस्य प्रोद्यतं मधुविद्विषः ।।

पश्यतां दिविसिद्धानां स्तंभयामास हुंकृता ।। ८५ ।।

अभ्यधावच्च वेगेन गृहीत्वा शूलमुज्ज्वलम् ।।

यावज्जिघांसति हरिं तावदाकाशवाचया ।। ८६ ।।

वारितो गणराजः स मा कार्षीः साहसं त्विति ।।

ततस्तमपहायाशु वीरभद्रो गणोत्तमः ।। ८७ ।।

प्राप्य दक्षं विनद्योच्चैर्धिक्त्वामीश्वरनिंदकम् ।।

यस्येदृगस्ति संपत्तिर्यत्रदेवाः सहायिनः ।।

स कथं सेश्वरं कर्म न कुर्याद्दक्षतांदधत् ।। ८८ ।।

येनास्येन पवित्रेण भवता निंदितः शिवः ।।

चूर्णयामि तदास्यं ते चपेटाभिः समंततः ।।८९।।

इत्युक्त्वा तस्य दक्षस्य हरपारुष्यभाषिणः ।।

चिच्छेद वदनं वीरश्चपेटशतघातनैः ।। ।। 4.2.89.९० ।।

ततस्त्वदितिमुख्यानां मिलितानां महोत्सवे ।।

त्रोटयामास कर्णादीन्यंगप्रत्यंगकानि च ।। ९१ ।।

वेणीदंडाश्च कासांचित्तेनच्छिन्ना महारुषा ।।

कासांचिच्च कराश्छिन्ना कासांचित्कर्तितास्तनाः ।। ९२ ।।

नासापुटांस्तथान्यासां पाटयामास पार्षदः ।।

चिच्छेद चांगुलीश्चापि तथान्यासां शिवप्रियः।। ।। ९३ ।।

ये ये निनिंदुर्देवेशं ये ये च शुश्रुवुस्तदा ।।

तेषां जिह्वाश्रुतीः कोपादच्छिनच्चाकरोद्द्विधा ।। ९४ ।।

केचिदुल्लंबिता यूपे पाशयित्वा दृढं गले ।।

अधोमुखायै देवेशं विहायात्तं महाहविः ।। ९५ ।।

द्विजराजश्च धर्मश्च भृगुमारीचिमुख्यकाः ।।

अत्यंतमपमानस्य भाजनं तेन कारिताः ।। ९६ ।।

एते जामातरस्तस्य यतो दक्षस्य दुर्धियः ।।

हित्वा महेश्वरममून्सोपश्यदधिकाञ्शिवात् ।। ९७ ।।

तानि कुंडानि ते यूपास्ते स्तंभाः स च मंडपः ।।

तावेद्यस्तानि पात्राणि तानि हव्यान्यनेकधा ।। ९८ ।।

ते च वै यज्ञसंभारास्ते ते यज्ञप्रवर्तकाः ।।

ते रक्षपालास्तेमंत्रा विनेशुर्हेलयाऽखिलाः ।। ९९ ।।

स्तोकेनैव हि कालेन यथर्धिः परवंचनात् ।।

अर्जिता नश्यति क्षिप्रं दक्षसंपद्गताऽशिवा ।।4.2.89.१००।।

नीते महाक्रतौ तेन सगणेनेदृशीं दशाम् ।।

विधिर्विधि विलोपाच्च हरं विज्ञाप्य चानयत् ।।१ ।।

तत्र यत्र मखः सोभूदीदृक्षः शिववर्जितः ।।

आयातेथ महादेवे वीरभद्रोतिलज्जितः ।। २ ।।

नत्वा न किंचिदवदद्देवः सर्वमवैत्स्वयम् ।।

प्रसाद्य देवदेवेशं सुरज्येष्ठोऽब्रवीत्पुनः ।। ३ ।।

अपराध्यप्ययं दक्षः संप्रसाद्यः कृषानिधे ।।

यथापूर्वं पुनरमून्सर्वान्कारय शंकर ।। ४ ।।

यथाविधिः प्रवर्तेत वैदिकः पुनरेव हि ।।

तथाज्ञा दीयतां शंभो कर्मसिद्ध्यति सेश्वरम्।।५ ।।

अनीश्वरासु सर्वासु क्रियासु परमेश्वर ।।

एवमेव भवत्येव विघ्नजाताः सहस्रशः ।। ६ ।।

विचारतो वराकोयम दक्षो भक्ततरस्तव ।।

कुर्वन्योऽनीश्वरम कर्म परदृष्टांततां गतः ।। ७ ।।

अन्योपि यो महेशानं हित्वा कर्म करिष्यति ।।

तस्य तत्कर्मसंसिद्धिर्दक्षस्येव भविष्यति ।।८।।

अतो न कश्चित्किंचिच्च क्वचित्कर्म विना शिवम् ।।

विधास्यति निशम्यास्य दक्षत्येदृक्ष चेष्टितम् ।।९।।

विधीरितमिति श्रुत्वा स्मित्वा देवो महेश्वरः ।।

वीरमाज्ञापयामास यथापूर्वं प्रकल्पय ।। 4.2.89.११० ।।

वीरभद्रोपि तत्सर्वं शर्वाज्ञां प्रतिपद्य च ।।

विना दक्षस्य वदनं यथापूर्वमकल्पपयत् ।। ११ ।।

ईश्वरं ये विनिंदंति ते मूकाः पशवो ध्रुवम् ।।

ततो मेषमुखं दक्षं वीरभद्रो गणो व्यधात् ।। १२ ।।

देवो ब्रह्माणमापृच्छय धर्माद्गार्हस्थ्यतश्च्युतः ।।

सपापं दोहिमप्रस्थं जगाम तपसे ततः ।। १३ ।।

अनाश्रमवता पुंसा यतः कालो मनागपि ।।

मुधा कलयितव्यो न तस्माच्छ्रेयः सदा श्रम ।। १४ ।।

अतः स सर्वं तपसां फलदाता महेश्वरः ।।

तपश्चचार सगणो ब्रह्मा दक्षं त्वशिक्षयत् ।। १५ ।।

हरनिंदा समुद्भूत पापपंकं सुदुस्त्यजम् ।।

यदि क्षालयितुं कांक्षा तदा वाराणसीं व्रज ।। १६ ।।

प्राप्य वाराणसीं पुण्यां महापापौघहारिणीम् ।।

कुरु लिंगप्रतिष्ठां त्वं तेन शंभुः स तुष्यति ।। १७ ।।

तुष्टे महेश्वरे तुष्टं जगदेतच्चराचरम् ।।

नान्यत्र पापं ते गंतृ विना वाराणसीं पुरीम् ।। १८ ।।

ब्रह्महत्यादि पापानां प्रायश्चित्तं मनीषिभिः ।।

प्रोक्तं न हरनिंदायास्तत्र काश्येव केवलम ।१९।।

काश्यां लिंगप्रतिष्ठायैः कृताऽत्र सुकृतात्मभिः ।।

सर्वे धर्माः कृतास्तैस्तु त एव पुरुषार्थिनः ।। 4.2.89.१२० ।।

इत्याकर्ण्य विधेर्वाक्यं दक्षः प्राप्याथ सत्वरम् ।।

अविमुक्तं महाक्षेत्रं तताप परमं तपः ।।२१।।

संस्थाप्य लिंगं विधिवल्लिंगाराधनतत्परः ।।

न वेत्ति लिंगादपरं स किंचिज्जगतीतले ।। २२ ।।

दिवानिशं महेशानं परिष्टौति समर्चति ।।

नमति ध्यायतीक्षेत दक्षो दक्षप्रजापतिः ।।२३।।

एकचित्तस्य दक्षस्य ध्यायतो लिंगमैश्वरम् ।।

समाः सहस्रमगमन्मितं द्वादशसंख्यया ।।।२४।।।

मेनां यावत्सती प्राप्य हिमाचलपतिव्रताम् ।।

उमारूपाति तपसा पतिं प्राप पिनाकिनम् ।।२५।।

तावत्स दक्षस्तपसि निश्चलो लिंगमार्चयत् ।।

ततः काशीं समासाद्य सह भर्त्रा गिरींद्रजा ।।२६।।

दृष्ट्वा तं निश्चलहृदं शिवलिंगार्चने रतम् ।।

हरं व्यजिज्ञपद्देवी क्षीणोयं तपसा विभो ।। २७ ।।

प्रसादय कृपासिंधो वरणैनं प्रजापतिम् ।।

इत्युक्तोऽपर्णया शंभुः प्राह तं दक्षमीशिता ।। २. ।।

वरं ब्रूहि महाभाग दास्यामि मनसेप्सितम् ।।

इतीशोदितमाकर्ण्य प्रणम्य बहुशो हरम् ।।२९।।

स्तुत्वा नानाविधैः स्तोत्रैः प्रसन्नं वीक्ष्य शंकरम् ।।

प्रोवाच देवदेवेशं यदि देयो वरो मम ।। 4.2.89.१३० ।।

तत्त्वदीय पदद्वंद्वे निर्द्वंद्वा भक्तिरस्तु मे ।।

इदं च ते महालिंगं यन्मयाऽत्र प्रतिष्ठितम् ।।

अस्मिँल्लिंगे त्वया नाथ स्थातव्यं सर्वदैव हि ।। ३१ ।। ।

मयापराद्धं यद्देव तत्क्षंतव्यं कृपानिधे ।।

एत एव वराः संतु क्रिमन्यैरुत्तमैर्वरैः ।।३२।।

इति श्रुत्वा महादेवः प्रसन्नोतितरां भवः ।।

प्रोवाच च यदुक्तं ते तत्तथास्तु न चान्यथा ।। ३३।।

अन्यच्च ते वरं दद्यां तच्छृणुष्व प्रजापते ।।

यत्त्वया स्थापितं लिंगमेतद्दक्षेश्वराभिधम् ।। ३४ ।।

अस्य संसेवनात्पुंसामपराधसहस्रकम्।।

क्षमिष्येहं न संदेहस्तस्मात्पूज्यमिदं जनैः ।। ३५ ।।

त्वं तु लिंगार्चनादस्मात्सर्वमान्यो भविष्यसि ।।

परार्धद्वितयप्रांते ततो मोक्षमवाप्स्यसि ।। ३६ ।।

इत्युक्त्वा देवदेवेशस्तस्मिँल्लिंगे लयं ययौ ।।

दक्षोपि गतवान्गेहं परिप्राप्तमनोरथः ।। ३७।।

।। स्कंद उवाच ।। ।।

इत्यगस्त्य समाख्यातो दक्षेश्वरसमुद्भवः ।।

यं श्रुत्वा मुच्यते जंतुरपराध शतैरपि ।।।३५।।

श्रुत्वाख्यानमिदं पुण्यं दक्षेश्वरसमुद्भवम् ।।

नरो न लिप्यते पापैरपराधालयोपि हि ।। १३९ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे दक्षेश्वरप्रादुर्भावोनाम नवाशीतितमोऽध्यायः ।। ८९ ।। ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९०



अगस्त्य उवाच ।। ।।

पार्वतीहृदयानंद पार्वतीश समुद्भवम् ।।

कथयेह यदुद्दिष्टं भवता प्रागघापहम् ।। १ ।।

।। स्कंद उवाच ।।

शृण्वगस्ते यदा मेना हिमाचलपतिव्रता ।।

गिरींद्रजां सुतामाह पुत्रि तेस्य महेशितुः ।। २ ।।

किं स्थानं वसतिर्वा का को बंधुर्वेत्सि किंचन ।।

प्रायो गृहं न जामातुरस्य कोपि च कुत्रचित् ।। ३ ।।

निशम्येति वचो मातुरतिह्रीणा गिरींद्रजा ।।

आसाद्यावसरं शंभुं नत्वा गौरी व्यजिज्ञपत् ।। ४ ।।

मया श्वश्रूगृहं कांत गम्यमद्य विनिश्चितम् ।।

नाथात्र नैव वस्तव्यं नय मां स्वं निकेतनम् ।। ५ ।।

गिरींद्रजागिरं श्रुत्वा गिरीश इति तत्त्ववित् ।।

हित्वा हिमगिरिं प्राप्तो निजमानंदकाननम् ।। ६।।

प्राप्यानंदवनं देवी परमानंदकारणम्।।

विस्मृत्य पितृसंवासं जाता चानंदरूपिणी ।। ७ ।।

अथ विज्ञापयांचक्रे गौरी गिरिशमेकदा ।।

अच्छिन्नानंदसंदोहः कुतः क्षेत्रेऽत्र तद्वद ।। ८ ।।

इति गौरीरितं श्रुत्वा प्रत्युवाच पिनाकधृक् ।।

पंचक्रोशपरीमाणे क्षेत्रेस्मिन्मुक्तिसद्मनि ।। ९ ।।

तिलांतरं न देव्यस्ति विना लिंगं हि कुत्रचित् ।।

एकैकं परितो लिंगं क्रोशं क्रोशं च यावनिः ।। 4.2.90.१० ।।

अन्यत्रापि हि सा देवि भवेदानंदकारणम् ।।

अत्रानंदवने देवि परमानंदजन्मनि ।। ११ ।।

परमानंदरूपाणि संति लिंगान्यनेकशः ।।

चतुर्दशसु लोकेषु कृतिनो ये वसंति हि ।। १२ ।।

तैः स्वनाम्नेह लिंगानि कृत्वाऽऽपि कृतकृत्यता ।।

अत्र येन महादेवि लिंगं संस्थापितं मम ।। १३ ।।

वेत्ति तच्छ्रेयसः संख्यां शेषोपि न विशेषवित् ।। १४ ।।

परिच्छेदव्यतीतस्यानंदस्य परकारणम् ।।

अतस्त्विदं परं क्षेत्रं लिगैर्भूयोभिरद्रिजे ।। १५ ।।

निशम्येति महादेवी पुनः पादौ प्रणम्य च ।।

देह्यनुज्ञां महादेव लिंगसंस्थापनाय मे।।१६।।

पत्युराज्ञां समासाद्य यच्छेच्छ्रेयः पतिव्रता ।।

न तस्याः श्रेयसो हानिः संवर्तेपि कदाचन ।। १७ ।।

इति प्रसाद्य देवेशमाज्ञां प्राप्य महेशितुः ।।

लिंगं संस्थापितं गौर्या महादेव समीपतः ।। १८ ।।

तल्लिंगदर्शनात्पुंसां ब्रह्महत्यादिपातकम् ।।

विलीयेत न संदेहो देहबंधोपि नो पुनः ।। १९ ।।

तत्र लिंगे वरो दत्तो देवदेवेन यः पुनः ।।

निशामय मुने तं तु भक्तानां हितकाम्यया ।। 4.2.90.२० ।।

लिंगं यः पार्वतीशाख्यं काश्यां संपूजयिष्यति ।।

तद्देहावसितिं प्राप्य काशीलिंगं भविष्यति ।। २१ ।।

काशीलिंगत्वमासाद्य मामेवानुप्रवेक्ष्यति ।।

चैत्रशुक्लतृतीयायां पार्वतीशसमर्चनात् ।। २२ ।।

इह सौभाग्यमाप्नोति परत्र च शुभां गतिम् ।।

पार्वतीश्वरमाराध्य योषिद्वा पुरुषोपि वा ।। २३ ।।

न गर्भमाविशेद्भूयो भवेत्सौभाग्यभाजनम् ।।

पार्वतीशस्य लिंगस्य नामापि परिगृह्णतः ।।२४।।

अपि जन्मसहस्रस्य पापं क्षयति तत्क्षणात् ।।

पार्वतीशस्य माहात्म्यं यः श्रोष्यति नरोत्तमः ।।

ऐहिकामुष्मिकान्कामान्स प्राप्स्यति महामतिः ।। २५ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे पार्वतीशवर्णनं नाम नवतितमोऽध्यायः ।। ९० ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९१



।। स्कंद उवाच ।। ।।

पार्वतीशस्य महिमा कथितस्ते मयानघ ।।

मुने निशामयेदानीं गंगेश्वरसमुद्भवम् ।। १ ।।

यं श्रुत्वा यत्रकुत्रापि गंगास्नानफलं लभेत् ।।

चक्रपुष्करिणीतीर्थं यदा गंगा समागता ।। ।। २ ।।

तेन दैलीपिना सार्धमस्मिन्नानंदकानने ।।

क्षेत्रप्रभावमतुलं ज्ञात्वा शंभुपरिग्रहात् ।। ३ ।।

स्मृत्वा लिंगप्रतिष्ठायाः काश्यां लोकोत्तरं फलम् ।।

गंगया स्थापितं लिंगं विश्वेशात्पूर्वतः शुभम्।। ४।।

गंगेश्वरस्य लिंगस्य काश्यां दृष्टिः सुदुर्लभा ।।

तिथौ दशहरायां च यो गंगेशं समर्चयेत् ।। ५ ।।

तस्य जन्मसहस्रस्य पापं संक्षीयते क्षणात् ।।

कलौ गंगेश्वरं लिंगं गुप्तप्रायं भविष्यति ।। ६ ।।

तस्य संदर्शनं पुंसां जायते पुण्यहेतवे ।।

दृष्टं गंगेश्वरं लिंगं येन काश्यां सुदुर्लभम् ।। ७।।

प्रत्यक्षरूपिणी गंगा तेन दृष्टा न संशयः ।।

कलौ सुदुर्लभा गंगा सर्वकल्मषहारिणी ।। ८ ।।

भविष्यति न संदेहो मित्रावरुणनंदन।।

ततोपि तिष्ये संप्राप्ते काश्यत्यंतं सुदुर्लभा ।। ९ ।।

ततोपि दुर्लभं काश्यां लिंगं गंगेश्वराभिधम् ।।

यस्य संदर्शनं पुंसां भवेत्पापक्षयाय वै ।। 4.2.91.१० ।।

श्रुत्वा गंगेश माहात्म्यं न नरो निरयी भवेत् ।।

लभेच्च पुण्यसंभारं चिंतितं चाधिगच्छति ।। ११ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे गंगेश्वरमहिमाख्यानं नामैकनवतितमोऽध्यायः ।। ९१ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९२



।। स्कंद उवाच ।। ।।

नर्मदेशस्य माहात्म्यं कथयामि मुने तव ।।

यस्य स्मरणमात्रेण महापातकसंक्षयः ।। १ ।।

अस्य वाराहकल्पस्य प्रवेशे मुनिपुंगवैः ।।

आपृच्छि का सरिच्छ्रेष्ठा वद तां त्वं मृकंडज ।।२।।

मार्कंडेय उवाच ।। ।।

शृणुध्वं मुनयः सर्वे संति नद्यः परःशतम् ।।

सर्वा अप्यघहारिण्यः सर्वा अपि वृषप्रदाः ।।३।।

सर्वाभ्योपि नदीभ्यश्च श्रेष्ठाः सर्वाः समुद्रगाः।।

ततोपि हि महाश्रेष्ठाः सरित्सु सरिदुत्तमाः ।। ४ ।।

गंगा च यमुनाचाथ नर्मदा च सरस्वती ।।

चतुष्टयमिदं पुण्यं धुनीषु मुनिपुंगवाः ।। ५ ।।

ऋग्वेदमूर्तिर्गंगा स्याद्यमुना च यजुर्ध्रुवम् ।।

नर्मदा साममूर्तिस्तु स्यादथर्वा सरस्वती ।। ६ ।।

गंगा सर्वसरिद्योनिः समुद्रस्यापि पूरणी ।।

गंगाया न लभेत्साम्यं काचिदत्र सरिद्वरा ।। ।। ७ ।।

किंतु पूर्वं तपस्तप्त्वा रेवया बह्वनेहसम् ।।

वरदानोन्मुखो धाता प्रार्थितश्चेति सत्तम ।। ८ ।।

गंगा साम्यं विधे देहि प्रसन्नोसि यदि प्रभो ।।

ब्रह्मणाथ ततः प्रोक्ता नर्मदा स्मितपूर्वकम् ।।९।।

यदि त्र्यक्षसमत्वं तु लभ्यतेऽन्येन केनचित् ।।

तदा गंगासमत्वं च लभ्यते सरितान्यया ।।4.2.92.१०।।

पुरुषोत्तम तुल्यः स्यात्पुरुषोन्यो यदि क्वचित ।।

स्रोतस्विनी तदा साम्यं लभते गंगया परा ।। ११ ।।

यदि गौरी समा नारी क्वचिदन्या भवेदिह ।।

अन्या धुनीह स्वर्धुन्यास्तदा साम्यमुपैष्यति ।। १२ ।।

यदि काशीपुरी तुल्या भवेदस्या क्वचित्पुरी ।।

तदा स्वर्गतरंगिण्याः साम्यमन्या नदी लभेत् ।। १३ ।।

निशम्येति विधेर्वाक्यं नर्मदा सरिदुत्तमा ।।

धातुर्वरं परित्यज्य प्राप्ता वाराणसीं पुरीम् ।। १४ ।।

सर्वेभ्योपि हि पुण्येभ्यः काश्यां लिंगप्रतिष्ठितेः ।।

अपरा न समुद्दिष्टा कैश्चिच्छ्रेयस्करी क्रिया ।। १५ ।।

अथ सा नर्मदा पुण्या विधिपूर्वां प्रतिष्ठितिम् ।।

व्यधात्पिलिपिलातीर्थे त्रिविषिष्टपसमीपतः ।। १६ ।।

ततः शंभुः प्रसन्नोभूऽत्तस्यै नद्यै शुभात्मने ।।

वरं वृणीष्व सुभगे यत्तुभ्यं रोचतेऽनघे ।। १७ ।।

सरिद्वरा निशम्येति रेवा प्राह महेश्वरम् ।।

किं वरेणेह देवेश भृशं तुच्छेन धूर्जटे ।। ।। १८ ।।

निर्द्वंद्वा त्वत्पदद्वंद्वे भक्तिरस्तु महेश्वर ।।

श्रुत्वेति नितरां तुष्टो रेवागिरमनुत्तमाम् ।। १९ ।।

प्रोवाच च सरिच्छ्रेष्ठे त्वयोक्तं यत्तथास्तु तत् ।।

गृहाण पुण्यनिलये वितरामि वरांतरम् ।। 4.2.92.२० ।।

यावंत्यो दृषदः संति तव रोधसि नर्मदे ।।

तावंत्यो लिंगरूपिण्यो भविष्यंति वरान्मम ।। २१ ।।

अन्यं च ते वरं दद्या तमप्याकर्णयोत्तमम् ।।

दुष्प्रापं यज्ञतपसां राशिभिः परमार्थतः ।। २२ ।।

सद्यः पापहरा गंगा सप्ताहेन कलिंदजा ।।

त्र्यहात्सरस्वती रेवे त्वं तु दर्शनमात्रतः ।। ।। २३ ।।

अपरं च वरं दद्यां नर्मदे दर्शनाघहे ।।

भवत्या स्थापितं लिंगं नर्मदेश्वरसंजकम् ।। २४ ।।

यत्तल्लिंगं महापुण्यं मुक्तिं दास्यति शाश्वतीम ।।

अस्य लिंगस्य ये भक्तास्तान्दृष्ट्वा सूर्यनंदनः ।। २५ ।।

प्रणमिष्यंति यत्नेन महाश्रेयोभिवृद्धये ।।

संति लिंगान्यनेकानि काश्यां देवि पदेपदे ।। २६ ।।

परं हि नर्मदेशस्य महिमा कोपि चाद्भुतः ।।

इत्युक्त्वा देवदेवेशस्तस्मिँल्लिंगे लयं ययौ ।। २७ ।।

नर्मदापि प्रहृष्टासीत्पावित्र्यं प्राप्य चाद्भुतम् ।।

स्वदेशं च परिप्राप्ता दृष्टमात्राघहारिणी ।। २८ ।।

वाक्यं मृकंडजमुनेस्तेपि श्रुत्वा मुनीश्वराः ।।

प्रहृष्टचेतसो जाताश्चक्रुः स्वं स्वं ततो हितम् ।। २९ ।।

।। स्कंद उवाच ।। ।।

नर्मदेशस्य माहात्म्यं श्रुत्वा भक्तियुतो नरः ।।

पापकंचुकमुत्सृज्य प्राप्स्यति ज्ञानमुत्तमम् ।। 4.2.92.३० ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे नर्मदेश्वराख्यानं नाम द्विनवतितमोऽध्यायः ।। ९२ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९३



।। अगस्त्य उवाच ।। ।।

नर्मदेशस्य माहात्म्यं श्रुतं कल्मषनाशनम् ।।

इदानीं कथय स्कंद सतीश्वर समुद्भवम् ।। १ ।।

स्कंद उवाच ।। ।।

मित्रावरुणसंभूत कथयामि कथां शृणु ।। यथा सतीश्वरं लिंगं काश्यामाविर्बभूव ह ।। २ ।।

पुरा तताप सुमहत्तपः शतधृतिर्मुने ।।

तपसा तेन देवेशः संतुष्टो वरदोऽभवत् ।। ३ ।।

उवाच चापि ब्रह्माणं नितरां ब्राह्मणप्रियः ।।

सर्वज्ञनाथो लोकात्मा वरं वरय लोककृत् ।। ४ ।।

।। ब्रह्मोवाच ।। ।।

यदि प्रसन्नो देवेश वरं दास्यसि वांछितम् ।।

तदा त्वं मे भव सुतो देवी दक्षसुताऽस्तु च ।। ५ ।।

इति श्रुत्वा महादेवः सर्वदो ब्रह्मणो वरम् ।।

स्मित्वा देवीमुखं वीक्ष्य प्रोवाच चतुराननम् ।। ६ ।।

ब्रह्मंस्त्वद्वांछितं भूयात्किमदेयं पितामह ।।

इत्युक्त्वा ब्रह्मणो भालादाविरासीच्छशांकभृत् ।। ७ ।।

रुदन्स उत्तानशयो ब्रह्मणो मुखमैक्षत ।।

ततो ब्रह्मापि तं बालं रुदंतं प्रविलोक्य च ।। ८ ।।

किं मां जनकमाप्यापि त्वं रोदिषि मुहुर्मुहुः ।।

श्रुत्वेति पृथुकः प्राह यथोक्तं परमेष्ठिना ।। ९ ।।

नाम्ने रोदिमि मे स्रष्टुर्नाम देहि पितामह ।।

रोदनाद्रुद्र इत्याख्यां समाया डिंभको लभत् ।।4.2.93.१०।।

।। अगस्त्य उवाच ।। ।।

अर्भकत्वं गतोपीशः किं रुरोद षडानन ।।

यदि वेत्सि तदाचक्ष्व महत्कौतूहलं हि मे ।। ११ ।।

।। स्कंद उवाच ।। ।।

सर्वज्ञस्य कुमारत्वात्किंचित्किंचिदवैम्यहम् ।।

रोदने कारणं वच्मि शृणु कुंभसमुद्भव ।। १२ ।।

मनसीति विचारोभूद्देवस्य परमात्मनः ।।

बुद्धिवैभवमस्याहो वीक्षितुं परमेष्ठिनः ।।१३।।

सत्यलोकाधिनाथस्य चतुरास्यस्य वेधसः ।।

इत्यानंदात्समुद्भूतो वाष्पपूरो महेशितुः ।।१४।।

।। अगस्त्य उवाच ।। ।।

किं बुद्धिवैभवं धातुः शंभुना मनसीक्षितम् ।

येनानंदाश्रु संभारो बाल्येप्यभवदीशितुः ।।१५।।

एतत्कथय मे प्राज्ञ सर्वज्ञानंदवर्धन ।।

श्रुत्वागस्त्युदितं वाक्यं तारकारिरुवाच ह ।।१६।।

देवे न मनसि ध्यातमिति कुंभजने मुने ।।

विनापत्यं जनेतारं क उद्धर्तुमिह प्रभुः ।। १७ ।।

एको मनोरथश्चायं द्वितीयोयं सुनिश्चितम् ।।

अपत्यत्वं गते चास्मिन्स्मर्तुरुत्पत्तिहारिणि ।। १८ ।।

क्षणंक्षणं समालोक्यमंगस्पर्शे क्षणंक्षणम् ।।

एकशय्यासनाहारं लप्स्यतेऽनेन क्षणेक्षणे !। १९ ।।

योयं न गोचरः क्वापि वाणीमनसयोरपि ।।

स मेऽपत्यत्वमासाद्य किं न दास्यति चिंतितम् ।। 4.2.93.२० ।।

योऽमुं सकृत्स्पृशेज्जंतुर्योमुं पश्येत्सकृन्मुदा ।

न स भूयोभिजायेत भवेच्चानंदमेदुरः ।। २१ ।।

गृहक्रीडनकं मे सौ यदि भूयात्कथंचन ।।

तदापरस्य सौख्यस्य निधानं स्यामसंशयम् ।। २२ ।।

विधेः समीहितं चेति नूनं ज्ञात्वा स सर्ववित् ।।

आनंदवाष्पकलितं चक्षुस्त्रयमदीधरत् ।। २३ ।।

श्रुत्वैत्यगस्तिः स्कंदस्य भाषितं पर्यमूमुदत् ।।

ननाम चांघ्री प्रोवाच जयसर्वज्ञनंदन ।। २४ ।।

विधेरपि मनोज्ञातं शंभोरपि मनोगतम् ।।

सम्यक्चित्तं त्वया ज्ञातं नमस्तुभ्यं चिदात्मने ।। २५ ।।

स्कंदोपि नितरां तुष्टःश्रोतुरानंददर्शनात् ।।

धन्योस्यगस्त्य धन्योसि श्रोतुं जानासि तत्त्वतः ।। २६ ।।

न मे श्रमो वृथा जातो ब्रुवतस्ते पुरः कथाम् ।।

इत्यगस्तिं समाभाष्य पुनः प्राह षडाननः ।। २७ ।।

देवे रुद्रत्वमापन्ने देवी दक्षसुताभवत् ।।

सापि तप्त्वा तपस्तीव्रं सती काश्यां वरार्थिनी ।। २८ ।।

ददर्श लिंगरूपेण प्रादुर्भूतं हरं पुरः ।।

अलं तप्त्वा महादेवि प्रोक्तवंतमिति स्फुटम् ।। २१ ।।

इदं सतीश्वरं लिंगं तव नाम्ना भविष्यति .।।

यथा मनोरथस्तेऽत्र फलितो दक्षकन्यके ।। 4.2.93.३० ।।

तथैतल्लिंगमाराध्यान्यस्यापि हि फलिष्यति ।।

कुमारी प्राप्स्यति पतिं मनसोपि समुच्छ्रितम् ।। ३१ ।।

एतल्लिंगं समाराध्य कुमारोपि वरांगनाम् ।।

यस्य यस्य हि यः कामस्तस्य तस्य हि स ध्रुवम् ।। ३२ ।।

भविष्यति न संदेहः सतीश्वरसमर्चगात् ।।

सतीश्वरं समभ्यर्च्य यो यो यं यं समीहते ।। ३३ ।।

तस्य तस्य स स क्षिप्रं भविष्यति मनोरथः ।। ३४ ।।

इतोष्टमे च दिवसे त्वज्जनेता प्रजापतिः ।।

मह्यं दास्यति कन्यां त्वां सफलस्ते मनोरथः ।।

इत्युक्त्वा देवदेवेशस्तत्रैवांतर्हितोभवत् ।। ३५ ।।

सापि स्वभवनं याता सती दाक्षायणी मुदा ।।

पितापि तस्मै प्रादात्तां रुद्राय दिवसेष्टमे ।। ३६ ।।

।। स्कंद उवाव ।। ।।

इत्थं सतीश्वरं लिंगं काश्यां प्रादुरभून्मुने ।।

स्मरणादपि लिंगं च दद्यात्सत्त्वगुणं परम् ।। ३७ ।।

रत्नेशात्पूर्वतो भागे दृष्ट्वा लिंगं सतीश्वरम् ।।

मुच्यते पातकैः सद्यः क्रमाज्ज्ञानं च विंदति ।। ३८ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे सतीश्वरप्रादुर्भावो नाम त्रिनवतितमोऽध्यायः ।। ९३ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९४



।। स्कंद उवाच ।। ।।

अन्यान्यपि च लिंगानि कथयामि महामुने ।।

अमृतेशमुखादीनि यन्नामाप्यमृतप्रदम् ।। १ ।।

पुरा सनारु नामासीन्मुनिरत्र गृहाश्रमी ।।

ब्रह्मयज्ञरतो नित्यं नित्यं चातिथिदैवतः ।। २ ।।

लिंगपूजारतो नित्यं नित्यं तीर्थाप्रतिग्रही ।।

तस्यर्षेरभवत्पुत्रः सनारोरुपजंघनिः ।।३।।

स कदाचिद्वतोरण्यं तत्र दष्टः पृदाकुना ।।

अथ तत्स वयोभिश्च स आनीतः स्वमाश्रमम् ।। ४ ।।

सनारुणा समुच्छवस्य नीतः स उपजंघनिः ।।

महाश्मशानभूभागं स्वर्गद्वारसमीपतः ।। ५ ।।

तत्रासीच्छ्रीफलाकारं लिंगमेकं सुगुप्तवत् ।।

निधाय तत्र तं यावच्छवं संचिंतयेत्सुधीः ।। ६ ।।

सर्पदष्टस्य संस्कारः कथं भवति चेति वै ।।

तावत्स जीवन्नुत्तस्थौ सुप्तवच्चौपजंघनिः ।। ७ ।।

अथ तं वीक्ष्य स मुनिः सनारुरुपजंघनिम् ।।

पुनः प्राणितसंपन्नं विस्मयं प्राप्तवान्परम् ।। ८ ।।

प्राणितव्येऽत्र को हेतुर्मच्छिशोरुपजंघनेः ।।

क्षेत्राद्बहिरहिर्यं हि दष्टा नैषीत्परासु ताम् ।। ९ ।।

इति यावत्स संधत्ते धियं तज्जीवितैकिकाम्।।

तावत्पिपीलिका त्वेका मृतं क्वापि पिपीलिकम् ।। 4.2.94.१० ।।

आनिनाय च तत्रैव सोप्य नन्निर्गतस्ततः ।।

अथ विज्ञाय स मुनिस्तत्त्वं जीवितसूचितम्।। ११ ।।

मृदु हस्ततलेनैव यावत्खनति वै मुनिः ।।

तावच्छ्रीफलमात्रं हि लिंगं तेन समीक्षितम् ।। १२ ।।

सनारुणाथ तल्लिंगं तेन तत्र समर्चितम् ।।
चिरकालीन लिंगस्य कृतं नामापि सान्वयम् ।। १३ ।।
अमृतेश्वरनामेदं लिंगमानंदकानने ।।
एतल्लिंगस्य संस्पर्शादमृतत्वं लभेद्ध्रुवम् ।। १४ ।।
अमृतेशं समभ्यर्च्य जीवत्पुत्रः स वै मुनिः।।
स्वास्पदं समनुप्राप्तो दृष्टआश्चर्यवज्जनैः ।। १५ ।।
तदाप्रभृति तल्लिंगममृतेशं मुनीश्वर ।।
काश्यां सिद्धिप्रदं नृणां कलौ गुप्तं भवेत्पुनः ।। १६ ।।
अमृतेश्वर संस्पर्शान्मृता जीवंति तत्क्षणात् ।।
अमृतत्वं भजंतेऽत्र जीवंतः स्पर्शमात्रतः ।। ३७ ।।
अमृतेश समं लिंगं नास्ति क्वापि महीतले।।
तल्लिंगं शंभुना तिष्ये कृतं गुप्तं प्रयत्नतः ।। १८ ।।
अमृतेश्वर नामापि ये काश्यां परिगृह्णते ।।
न तेषामुपसर्गोत्थं भयं क्वापि भविष्यति।।१९।।
मुनेऽन्यच्च महालिंगं करुणेश्वरसंज्ञितम्।।
मोक्षद्वार समीपे तु मोक्षद्वारेश्वराग्रतः ।।4.2.94.२०।।
दर्शनात्तस्य लिंगस्य महाकारुणिकस्य वै ।।
न क्षेत्रान्निर्गमो जातु बहिर्भवति कस्यचित् ।। २१ ।।
स्नातव्यं मणिकर्ण्यां च द्रष्टव्यः करुणेश्वरः ।।
क्षेत्रोपसर्गजा भीतिर्हातव्या परया मुदा ।। २२ ।।
सोमवासरमासाद्य एकभक्तव्रतं चरेत् ।।
यष्टव्यः करुणापुष्पैर्व्रतिना करुणेश्वरः ।। २३ ।।
तेन व्रतेन संतुष्टः करुणेशः कदाचन ।।
न तं क्षेत्राद्बहिः कुर्यात्तस्मात्कार्यं व्रतं त्विदम् ।। २४ ।।
तत्पत्रैस्तत्फलैर्वापि संपूज्यः करुणेश्वरः ।।
यो न जानाति तल्लिंगं सम्यग्ज्ञानविवर्जितः ।। २५ ।।
तेनार्च्यः करुणावृक्षो देवेशः प्रीयतामिति ।।
यो वर्षं सोमवारस्य व्रतं कुर्यादिति द्विजः ।। २६ ।।

प्रसन्नः करुणेशोत्र तस्य दास्यति वांछितम् ।।

द्रष्टव्यः करुणेशोत्र काश्यां यत्नेन मानवैः ।। २७ ।।

इति ते करुणेशस्य महिमोक्तो महत्तरः ।।

यं श्रुत्वा नोपसर्गोत्थं भयं काश्यां भविष्यति ।। २८ ।।

मोक्षद्वारेश्वरं चैव स्वर्गद्वोरेश्वरं तथा ।।

उभौ काश्यां नरो दृष्ट्वा स्वर्गं मोक्षं च विंदति ।। २९ ।।

ज्योतीरूपेश्वरं लिंगं काश्यामन्यत्प्रकाशते ।।

तस्य संपूजनाद्भक्ता ज्योतीरूपा भवंति हि ।। 4.2.94.३० ।।

चक्रपुष्करिणी तीरे ज्योतीरूपेश्वरं परम् ।।

समभ्यर्च्याप्नुयान्मर्त्यो ज्योतीरूपं न संशयः ।। ३१ ।।

यदा भागीरथी गंगा तत्र प्राप्ता सरिद्वरा ।।

तदारभ्यार्चयेन्नित्यं तल्लिंगं स्वर्धुनी मुदा ।। ३२ ।।

पुरा विष्णौ तपत्यत्र तल्लिंगं स्वयमेव हि ।।

तत्राविरासीत्तेजस्वि तेन क्षेत्रमिदं शुभम् ।। ३३ ।।

चक्रपुष्करिणी तीरे ज्योतीरूपेश्वरं तदा ।।

दूरस्थोपीह यो ध्यायेत्तस्य सिद्धिरदूरतः।।३४।।

एतेष्वपि च लिंगेषु चतुर्दशसु सत्तम।।

लिंगाष्टकं महावीर्यं कर्मबीजदवानलम् ।। ३५ ।।

ओंकारादीनि लिंगानि यान्युक्तानि चतुर्दश ।।

तथा दक्षेश्वरादीनि लिंगान्यष्टौ महांति च ।।३६।।

शैलैशादीनि लिंगानि तथा यानि चतुर्दश ।।

पुनः षट्त्रिंशदेतानि क्षेत्रसंसिद्धि हेतवे ।। ३७ ।।

षदत्रिंशत्तत्त्वरूपोसौ लिगेष्वेषु सदाशिवः ।।

अस्मिन्क्षेत्रे वसन्नित्यं तारकं ज्ञानमादिशेत् ।। ३८ ।।

क्षेत्रस्य तत्त्वमेतद्धि षट्त्रिंशल्लिंगरूप्यहो ।।

एतेषां भजनात्पुंसां न भवेद्दुर्गतिः क्वचित् ।।३९।।

मुने रहस्यभूतानि र्लिगान्येतानि निश्चितम्।।

एतल्लिंगप्रभावाच्च मुक्तिरत्र सुनिश्चिता ।। 4.2.94.४० ।।

मोक्षक्षेत्रमिदं काशी लिंगैरेतैर्महामते ।।
एतान्यन्यानि सिद्धानि संभवंति युगेयुगे ।। ४१ ।।
आनंदकाननं शंभोः क्षेत्रमेतदनादिमत्।।
अत्र संस्थितिमापन्ना मुक्ता एव न संशयः ।। ४२ ।।
योगसिद्धिरिहास्त्येव तपःसिद्धिरिहैव हि ।।
व्रतसिद्धिर्मंत्रसिद्धिस्तीर्थसिद्धिः सुनिश्चितम् ।। ४३ ।।
सिद्ध्यष्टकं तु यत्प्रोक्तमणिमादि महत्तरम् ।।
तज्जन्मभूमिरेषैव शंभोरानंदवाटिका ।।४४।।
निर्वाणलक्ष्म्याः सदनमेतदानंदकाननम् ।।
एतत्प्राप्य न मोक्तव्यं पुण्यैः संसारभीरुणा ।। ४५ ।।
अयमेव महालाभ इदमेव परं तपः ।।
एतदेव महत्पुण्यं लब्धा वाराणसीह यत् ।। ।। ४६ ।।
अवश्यं जन्मिनो मृत्युर्यत्र कुत्र भविष्यति ।।
कर्मानुसारिणी लभ्या गतिः पश्चाच्छुभाशुभा ।। ४७ ।।
मृत्युं विज्ञाय नियतं गतिकर्मानुसारिणीम् ।।
अवश्यं काशिका सेव्या सर्वकर्मनिवारिणी ।। ४८ ।।
मानुष्यं प्राप्य यं मूढा निमेषमितजीवितम् ।।
न सेवंते पुरीं काशीं ते मुष्टा मंदबुद्धयः ।। ४९ ।।
दुर्लभं जन्म मानुष्यं दुर्लभा काशिकापुरी ।।
उभयोः संगमासाद्य मुक्ता एव न संशयः ।। 4.2.94.५० ।।
क्व च तादृक्तपांसीह क्व तादृग्योग उत्तमः ।।
यादृग्भिः प्राप्यते मुक्तिः काश्यां मोक्षोत्तमोत्तमः ।। ५१ ।।
सत्यं सत्यं पुनः सत्यं सत्यपूर्वं पुनःपुनः ।।
न काशी सदृशी मुक्त्यै भूमिरन्या महीतले।। ५२ ।।
विश्वेशो मुक्तिदो नित्यं मुक्त्यै चोत्तरवाहिनी ।।
आनंदकानने मुक्तिर्मुक्तिर्नान्यत्र कुत्रचित् ।। ५३ ।।
एक एव हि विश्वेशो मुक्तिदो नान्य एव हि ।।
स एव काशीं प्रापय्य मुक्तिं यच्छति नान्यतः ।। ५४ ।।

सायुज्यमुक्तिरत्रैव सान्निध्यादिरथान्यतः ।।

सुलभा सापि नो नूनं काश्यां मोक्षोस्ति हेलया ।।५५।।

।। स्कंद उवाच ।। ।।

शृण्वगस्त्य महाभाग भविष्यं कथयाम्यहम् ।।

कृष्णद्वैपायनो व्यासोऽकथयद्यन्महद्वचः ।।

निश्चिकेतुमनाः पश्चाद्यत्करिष्यति तच्छृणु ।।५६।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धेऽमृतेशादिलिंगप्रादुर्भावोनाम चतुर्नवतितमोऽध्यायः ।। ९४ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९५



।। व्यास उवाच [। ।।

शृणु सूत महाबुद्धे यथा स्कंदेन भाषितम् ।।

भविष्यं मम तस्याग्रे कुंभयोने महामते ।। १ ।।

।। स्कंद उवाच ।। ।।

निशामय महाभाग त्वं मैत्रावरुणे मुने ।।

पाराशर्यो मुनिवरो यथा मोहमुपैष्यति ।। २ ।।

व्यस्य वेदान्महाबुद्धिर्नाना शाखा प्रभेदतः ।।

अष्टादशपुराणानि सूतादीन्परिपाठ्य च ।। ३ ।।

श्रुतिस्मृतिपुराणानां रहस्यं यस्त्वचीकरत् ।।

महाभारतसंज्ञं च सर्वलोकमनोहरम् ।।४।।

सर्वपापप्रशमनं सर्वशांतिकरं परम् ।।

यस्य श्रवणमात्रेण ब्रह्महत्या विनश्यति ।।५।।

एकदा स मुनिः श्रीमान्पर्यटन्पृथिवीतले ।।

संप्राप्तो नैमिषारण्यं यत्र संति मुनीश्वराः ।। ६ ।।

अष्टाशीतिसहस्राणि शौनकाद्यास्तपोधनाः ।।.

त्रिपुंड्रितमहाभाला लसद्रुद्राक्षमालिनः ।। ७ ।।

विभूतिधारिणो भक्त्या रुद्रसूक्तजपप्रियान् ।।

लिंगाराधनसंसक्ताञ्छिवनामकृतादरान् ।। ८ ।।

एक एव हि विश्वेशो मुक्तिदो नान्य एव हि ।।

इति ब्रुवाणान्सततं परिनिश्चितमानसान् ।। ९ ।।

विलोक्य स मुनिर्व्यासस्तासर्वान्गिरिशात्मनः ।।

उत्क्षिप्य तर्जनीमुच्चैः प्रोवाचेदं वचः पुनः ।। 4.2.95.१० ।।

परिनिर्मथ्य वाग्जालं सुनिश्चित्यासकृद्बहु ।।

इदमेकं परिज्ञातं सेव्यः सर्वेश्वरो हरिः ।। ११ ।।

वेदे रामायणे चैव पुराणेषु च भारते ।।

आदिमध्यावसानेषु हरिरेकोऽत्र नापरः ।। १२ ।।
सत्यं सत्यं त्रिसत्यं पुनः सत्यं न मृषा पुनः ।।
न वेदादपरं शास्त्रं न देवोच्युततः परः ।। १३ ।।
लक्ष्मीशः सर्वदो नान्यो लक्ष्मीशोप्यपवर्गदः ।।
एक एव हि लक्ष्मीशस्ततो ध्येयो न चापरः ।। १४ ।।
भुक्तेर्मुक्तेरिहान्यत्र नान्यो दाता जनार्दनात्।।
तस्माच्चतुर्भुजो नित्यं सेवनीयः सुखेप्सुभिः ।। १५ ।।
विहाय केशवादन्यं ये सेवंतेल्पमेधसः ।।
संसारचक्रे गहने ते विशंति पुनःपुनः ।। १६ ।।
एक एव हि सर्वेशो हृषीकेशः परात्परः ।।
तं सेवमानः सततं सेव्यस्त्रिजगतां भवेत्।।१७।।
एको धर्मप्रदो विष्णुस्त्वेको बह्वर्थदो हरिः ।।
एकः कामप्रदश्चक्री त्वेको मोक्षप्रदोच्युतः ।। १८ ।।
शार्ङ्गिणं ये परित्यज्य देवमन्यमुपासते ।।
ते सद्भिश्च बहिष्कार्या वेदहीना यथा द्विजाः ।। १९ ।।
श्रुत्वेति वाक्यं व्यासस्य नैमिषारण्यवासिनः।।
प्रवेपमानहृदयाः परिप्रोचुरिदं वचः ।। 4.2.95.२० ।।
।। ऋषय ऊचुः ।। ।।
पाराशर्य मुने मान्यस्त्वमस्माकं महामते ।।
यतो वेदास्त्वया व्यस्ताः पुराणान्यपि वेत्ति यत् ।। २१ ।।
यतश्च कर्ता त्वमसि महतो भारतस्य वै ।।
धर्मार्थकाममोक्षाणां विनिश्चयकृतो ध्रुवम् ।। २२ ।।
तत्त्वज्ञः कोपरश्चात्र त्वत्तः सत्यवतीसुत।।
भवता यत्प्रतिज्ञातं निश्चित्योक्षिप्यतर्जनीम् ।। २३ ।।
अस्मिन्माणवकास्तत्र परिश्रद्दधते नहि ।।
प्रतिज्ञा तस्य वचसस्तव श्रद्धा भवेत्तदा ।।२४।।
यदाऽऽनंदवने शंभोः प्रतिजानासि वै वचः ।।२५।।
गच्छ वाराणसीं व्यास यत्र विश्वेश्वरः स्वयम् ।।

न तत्र युगधर्मोस्ति न च लग्ना वसुंधरा ।।२६।।

इति श्रुत्वा मुनिर्व्यासः किंचित्कुपितवद्धृदि ।।

जगाम तूर्णं सहितः स्वशिष्यैरयुतोन्मितैः ।। २७ ।।

प्राप्य वाराणसीं व्यासः स्नात्वा पंचनदे ह्रदे ।।

श्रीमन्माधवमभ्यर्च्य ययौ पादोदकं ततः ।। २८ ।।

तत्र स्नानादिकं कृत्वा दृष्ट्वा चैवादिकेशवम् ।।

पंचरात्रं ततः कृत्वा वैष्णवैरभिनंदितः ।। २९ ।।

अग्रतः पृष्ठतः शंखैर्वाद्यमानैः प्रमोदितः ।।

जयविष्णो हृषीकेश गोविंद मधुसूदन ।। 4.2.95.३० ।।

अच्युतानंतवैकुंठ माधवोपेंद्रकेशव ।।

त्रिविक्रम गदापाणे शार्ङ्गपाणे जनार्दन ।। ३१ ।।

श्रीवत्सवक्षः श्रीकांत पीतांबर मुरांतक ।।

कैटभारे बलिध्वंसिन्कंसारे केशिसूदन ।। ।। ३२ ।।

नारायणासुररिपो कृष्ण शौरे चतुर्भुज ।।

देवकीहृदयानंद यशोदानंदवर्धन ।। ३३ ।।

पुंडरीकाक्ष दैत्यारे दामोदर बलप्रिय ।।

बलारातिस्तुत हरे वासुदेव वसुप्रद ।। ३४ ।।

विष्वक्चमूस्ताक्ष्र्य रथवनमालिन्नरोत्तम ।।

अधोक्षज क्षमाधार पद्मनाभ जलेशय ।।३५।।

नृसिंह यज्ञवाराह गोपगोपालवल्लभ ।।

गोपीपते गुणातीत गरुडध्वज गोत्रभृत् ।। ३६ ।।

जय चाणूरमथन जय त्रैलोक्यरक्षण ।।

जयानाद्य जयानंद जय नीलोत्पलद्युते ।। ३७ ।।

कौस्तुभोद्भूषितोरस्क पूतनाधातुशोषण ।।

रक्षरक्ष जगद्रक्षामणे नरकहारक ।। ३८ ।।

सहस्रशीर्षपुरुष पुरुहूत सुखप्रद ।।

यद्भूतं यच्च भाव्यं वै तत्रैकः पुरुषो भवान् ।। ३९ ।।

इत्यादि नाममालाभिः संस्तुवन्वनमालिनम् ।।

स्वच्छंदलीलया गायन्नृत्यंश्च परया मुदा ।। 4.2.95.४० ।।

व्यासो विश्वेशभवनं समायातः सुहृष्टवत् ।।

ज्ञानवापी पुरोभागे महाभागवतैः सह ।। ४१ ।।

विराजमानसत्कंठस्तुलसीवरदामभिः ।।

स्वयं तालधरो जातः स्वयं जातः सुनर्तकः ।।४२।।

वेणुवादनतत्त्वज्ञः स्वयं श्रुतिधरोभवत् ।।

नृत्यं परिसमाप्येत्थं व्यासः सत्यवतीसुतः ।। ४३ ।।

पुनरूर्ध्वभुजं कृत्वा दक्षिणं शिष्यमध्यगः ।।

पुनः पपाठ तानेव श्लोकान्गायन्निवोच्चकैः ।। ४४ ।।

परिनिर्मथ्य वाग्जालं सुनिश्चित्यासकृद्बहु ।।

इदमेकं परिज्ञातं सेव्यः सर्वेश्वरो हरिः ।। ४५ ।।

इत्यादि श्लोकसंघातं स्वप्रतिज्ञा प्रबोधकम्।।

यावत्पठति स व्यासः सव्यमुत्क्षिप्य वै भुजम् ।। ४६ ।।

तस्तंभ तावत्तद्बाहुं स शैलादिः स्वलीलया ।।

वाक्स्तंभश्चापि तस्यासीन्मुनेर्व्यासस्य सन्मुनेः ।। ४७ ।।

ततो गुप्तं समागम्य विष्णुर्व्यासमभाषत ।।

अपराद्धं महच्चात्र भवता व्यास निश्चितम् ।। ४८ ।।

तवैतदपराधेन भीतिर्मेपि महत्तरा ।।

एक एव हि विश्वेशो द्वितीयो नास्ति कश्चन ।। ४९ ।।

तत्प्रसादादहं चक्री लक्ष्मीशस्तत्प्रभावतः ।।

त्रैलोक्यरक्षासामर्थ्यं दत्तं तेनैव शंभुना ।।4.2.95.५०।।

तद्भक्त्या परमैश्वर्यं मया लब्धं वरात्ततः ।।

इदानीं स्तुहि तं शंभुं यदि मे शुभमिच्छसि ।।५१।।

अन्यदापि न वै कार्या भवता शेमुषीदृशी ।।

पाराशर्य इति श्रुत्वा संज्ञया व्याजहार ह ।।५२।।

भुजस्तंभः कृतस्तेन नंदिना दृष्टिमात्रतः ।।

वाक्स्तंभस्तद्भयाज्जातः स्पृश मे कंठकंदलीम्।। ५३ ।।

यथा स्तोतुं भवानीश प्रभवाभि भवांतकम ।।

संस्पृश्य विष्णुस्तत्कंठं गुप्तमेव जगाम ह ।।५४।।

ततः सत्यवतीसूनुस्तथा स्तंभितदोर्लतः।।

प्रारब्धवान्महेशानं परितुष्टोतुमुदारधीः ।। ।। ५५ ।।

।। व्यास उवाच ।। ।।

एको रुद्रो न द्वितीयो यतस्तद्ब्रह्मैवैकं नेह नानास्ति किंचित् ।।

यद्यप्यन्यः कोपि वा कुत्रचिद्वा व्याचष्टां तद्यस्य शक्तिर्मदग्रे ।। २६ ।।

यः क्षीराब्धेर्मंदराघातजातो ज्वालामाली कालकूटोति भीमः ।।

तं सोढुं वा को परोऽभून्महेशाद्यत्कीलाभिः कृष्णतामाप विष्णुः ।। ५७ ।।

यद्बाणोभूच्छ्रीपतिर्यस्य यंता लोकेशो यत्स्यंदनं भूः समस्ता ।।

वाहा वेदा यस्य येनेषुपाताद्दग्धा ग्रामास्त्रैपुरास्तत्समः कः ।। ५८ ।।

यं कदर्पो वीक्षमाणः समानं देवैरन्यैर्भस्मजातः स्वयं हि ।।

पौष्पैर्बाणैः सर्वविश्वैकजेता को वा स्तुत्यः कामजेतुस्ततोन्यः ।। ५९ ।।

यं वै वेदो वेद नो नैव विष्णुर्नोवा वेधा नो मनो नैव वाणी ।।

तं देवेशं मादृशः कोल्पमेधा याथात्म्याद्वै वेत्त्यहो विश्वनाथम् ।। 4.2.95.६० ।।

यस्मिन्सर्वं यस्तु सर्वत्र सर्वो यो वै कर्ता योऽविता योऽपहर्ता ।।

नो यस्यादिर्यः समस्तादिरेको नो यस्यांतो योंतकृत्तं नतोस्मि ।। ६१ ।।

यस्यैकाख्या वाजिमेधेन तुल्या यस्या न त्या चैकयाल्पेंद्रलक्ष्मीः ।।

यस्य स्तुत्या लभ्यते सत्यलोको यस्यार्चातो मोक्षलक्ष्मीरदूरा ।।६२।।

नान्यं देवं वेद्म्यहं श्रीमहेशान्नान्यं देवं स्तौमि शंभोर्ऋतेऽहम् ।।

नान्यं देवं वा नमामि त्रिनेत्रात्सत्यं सत्यं सत्यमेतन्मृषा न ।। ६३ ।।

इत्थं यावत्स्तौति शंभुं महर्षिस्तावन्नंदी शांभवाद्दृक्प्रसादात् ।।

तद्दोः स्तंभं त्यक्तवांश्चाबभाषे स्मायंस्मायं ब्राह्मणेभ्यो नमो वः ।। ६४ ।।

नंदिकेश्वर उवाच ।।

इदं स्तवं महापुण्यं व्यास ते परिकीर्तितम् ।।

यः पठिष्यति मेधावी तस्य तुष्यति शंकरः ।।६५।।

व्यासाष्टकमिदं प्रातः पठितव्यं प्रयत्नतः ।।

दुःस्वप्नपापशमनं शिवसान्निध्यकारकम् ।। ६६ ।।

मातृहा पितृहा वापि गोघ्नो बालघ्न एव वा ।।

सुरापी स्वर्णहृद्वापि निष्पापो स्याः स्तुतेर्जपात् ।। ६७ ।।

स्कंद उवाच ।। ।।

पाराशर्यस्तदारभ्य शंभुभक्तिपरोभवत् ।।

लिंगं व्यासेश्वरं स्थाप्य घंटाकर्ण ह्रदाग्रतः ।।६८।।

विभूतिभूषणो नित्यं नित्यरुद्राक्षभूषणः ।।

रुद्रसूक्तपरो नित्यं नित्यं लिंगार्चकोभवत् ।। ६९ ।।

स कृत्वा क्षेत्रसंन्यासं त्यजेन्नाद्यापि काशिकाम् ।।

तत्त्वं क्षेत्रस्य विज्ञाय निर्वाणपददायिनः ।। 4.2.95.७० ।।

घंटाकर्णह्रदे स्नात्वा दृष्ट्वा व्यासेश्वरं नरः ।।

यत्रकुत्र मृतो वापि वाराणस्यां मृतो भवेत् ।। ७१ ।।

काश्यां व्यासेश्वरं लिंगं पूजयित्वा नरोत्तमः ।।

न ज्ञानाद्भ्रश्यते क्वापि पातकैर्नाभिभूयते ।। ७२ ।।

व्यासेश्वरस्य ये भक्ता न तेषां कलिकालतः ।।

न पापतो भयं क्वापि न च क्षेत्रोपसर्गतः ।। ७३ ।।

व्यासेश्वरः प्रयत्नेन द्रष्टव्यः काशिवासिभिः ।।

घंटाकर्णकृतस्नानैः क्षेत्रपातकभीरुभिः ।। ७४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे व्यासभुजस्तंभोनाम पंचनवतितमोऽध्यायः ।। ९५ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९६

https://sa.wikisource.org/s/g3q

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्त्य उवाच ।। ।।

कृष्णद्वैपायनः स्कंद शंभुभक्तिपरो यदि ।।

यदि क्षेत्ररहस्यज्ञः क्षेत्रसंन्यासकृद्यदि ।। १ ।।

तथा दृष्टप्रभावश्चेत्तथा चेज्ज्ञानिनां वरः ।।

पुरीं वाराणसीं श्रेष्ठां कथं किल शपिष्यति ।। २ ।।

।। स्कंद उवाच ।। ।।

सत्यमेतत्त्वया पृच्छि कथयामि मुने शृणु ।।

तस्य व्यासस्य चरितं भविष्यं त्वयि पृच्छति ।। ३ ।।

यदारभ्य मुनेस्तस्य नंदी स्तंभितवान्भुजम् ।।

तदारभ्य महेशानं संस्तौति परमादृतः ।। ४ ।।

काश्यां तीर्थान्यनेकानि काश्यां लिगान्यनेकशः ।।

तथापि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका ।।५ ।।

लिंगेष्वेको हि विश्वेशस्तीर्थेषु मणिकर्णिका ।।

इति संव्याहरन्व्यासस्तदद्वयं बहु मन्यते ।। ६ ।।

त्यक्त्वा स बहु वाग्जालं प्रातः स्नात्वा दिनेदिने ।।

निर्वाणमंडपे वक्ति महिमानं महेशितुः ।। ७ ।।

शिष्याणां पुरतो नित्यं क्षेत्रस्य महिमा महान् ।।

व्याख्यायते मुदा तेन व्यासेन परमर्षिणा ।। ८ ।।

अत्र यत्क्रियते क्षेत्रे शुभं वाऽशुभमेव वा ।।

संवर्तेपि न तस्यांतस्तस्माच्छ्रेयः समाचरेत् ।। ९ ।।

क्षेत्रसिद्धिं समीहंते ये चात्र कृतिनो जनाः ।।

यावज्जीवं न तैस्त्याज्या सुधीभिर्मणिकर्णिका ।। 4.2.96.१० ।।

चक्रपुष्करिणी तीर्थे स्नातव्यं प्रतिवासरम् ।।

पुष्पैः पत्रैः फलैस्तोयैरर्च्यो विश्वेश्वरः सदा ।। ११ ।।

स्ववर्णाश्रमधर्मश्च त्यक्तव्यो न मनागपि ।।

प्रत्यहं क्षेत्रमहिमा श्रोतव्यः श्रद्धया सकृत् ।।१२।।

यथाशक्ति च देयानि दानान्यत्र सुगुप्तवत् ।।

अन्नान्यपि च देयानि विघ्नान्परिजिहीर्षुणा ।। १३ ।।

परोपकरणं चात्र कर्तव्यं सुधिया सदा ।।

पर्वस्वपि विशेषेण स्नानदानादिकाः क्रियाः ।।१४।।

विशेषपूजा कर्तव्या सुमहोत्सवपूर्वकम ।।

कार्यास्तथाधिका यात्राः समर्च्याः क्षेत्रदेवताः।।।३५।।

अत्र मर्म न वक्तव्यं सुधियां कस्यचित्क्वचित् ।।

परदार परद्रव्य परापकरणं त्यजेत् ।। १६ ।।

परापवादो नो वाच्यः परेर्ष्यां न च कारयेत् ।।

असत्यं नैव वक्तव्यं प्राणैः कंठगतैरपि ।। १७ ।।

अत्रत्य जंतुरक्षार्थमसत्यमपि भाषयेत् ।।

येनकेनप्रकारेण शुभेनाप्यशुभेन वा।।१८।।

अत्रत्यः प्राणिमात्रोपि रक्षणीयः प्रयत्नतः ।।

एकस्मिन्नक्षिते जंतावत्र काश्यां प्रयत्नतः ।।

त्रैलोक्यरक्षणात्पुण्यं यत्स्यात्तत्स्यान्न संशयः ।। १९ ।।

ये वसंति सदा काश्यां क्षेत्रसंन्यासकारिणः ।।

त एव रुद्रा मंतव्या जीवन्मुक्ता न संशयः ।। 4.2.96.२० ।।

ते पूज्यास्ते नमस्कार्यास्ते संतोष्याः प्रयत्नतः ।।

तेषु वै परितुष्टेषु तुष्येद्विश्वेश्वरः स्वयम् ।। २१ ।।

काश्यां वसंति ये मर्त्या दूरस्थैरपि सन्नरैः ।।

योगक्षेमो विधातव्यस्तेषां विश्वेशितुर्मुदे ।। २२ ।।

प्रसरस्त्विंद्रियाणां च निवार्योत्र निवासिभिः ।।

मनसोपि हि चांचल्यमिह वार्यं प्रयत्नतः ।। २३ ।।

मरणं नाभिकांक्षेद्धि कांक्ष्यो मोक्षोऽपिनो पुनः ।।

शरीरशोषणोपायः कर्तव्यः सुधिया नहि ।। २४ ।।

शरीरसौष्ठवं कांक्ष्यं व्रतस्नानादिसिद्धये ।।

आयुर्बह्वत्र वै चिंत्यं महाफलसमृद्धये ।। २८५ ।।

आत्मरक्षात्र कर्तव्या महाश्रेयोभिवृद्धये ।।

अत्रात्म त्यजनोपायं मनसापि न चिंतयेत् ।। २५ ।।

एकस्मिन्नपि यच्चाह्नि काश्यां श्रेयोभिलभ्यते ।।

न तु वर्षशतेनापि तदन्यत्राप्यते क्वचित् ।। २७ ।।

अन्यत्र योगाभ्यसनाद्यावज्जन्म यदर्ज्यते ।।

वाराणस्यां तदेकेन प्राणायामेन लभ्यते ।।२८।।

सर्वतीर्थावगाहाच्च यावज्जन्म यदर्ज्यते ।।

तदानंदवने प्राप्यं मणिकर्ण्येकमज्जनात् ।। ।। २९ ।।

सर्वलिंगार्चनात्पुण्यं यावज्जन्म यदर्ज्यते ।।

सकृद्विश्वेशमभ्यर्च्य श्रद्धया तदवाप्यते ।।4.2.96.३० ।।

यज्जन्मनां सहस्रेण निर्मलं पुण्यमर्जितम् ।।

तत्पुण्यपरिवर्तेन भवेद्विश्वेशदर्शनम् ।। ३। ।।

गवां कोटि प्रदानेन सम्यग्दत्तेन यत्फलम ।।

तत्फलं सम्यगाप्येत विश्वेश्वर विलोकनात् ।। ३२ ।।

यत्षोडशमहादानैः पुण्यं प्रोक्तं महर्षिभिः ।।

तत्पुण्यं जायते पुंसां विश्वेशे पुष्पदानतः ।।३३।।

अश्वमेधादिभिर्यज्ञैर्यत्फलं प्राप्यतेखिलैः ।।

पंचामृतानां स्नपनाद्विश्वेशे तदवाप्यते ।।३४।।

वाजपेयसहस्रेण सम्यगिष्टेन यत्फलम् ।।

सकृन्महार्हैर्नैवेद्यैर्विश्वेशे तच्छताधिकम् ।।३२।।

ध्वजातपत्रं चमरं विश्वेशे यः समर्पयेत् ।।

एकच्छत्रं स वै राज्यं प्राप्नुयाद्वसुधातले ।। ३५ ।।

महापूजोपकरणं योर्पयेद्विश्वभर्तरि ।।

न तं संपत्तिसंभारा विमुंचंतीह कुत्रचित् ।। ३७ ।।

सर्वर्तुकुसुमाढ्यां च यः कुर्यात्पुष्पवाटिकाम् ।।

तदंगणे कल्पवृक्षाश्छायां कुर्वंति शीतलाम् ।।३८।।

यः क्षीरस्नपनार्थं वै विश्वेशे धेनुमर्पयेत् ।।

क्षीरार्णवतटे तस्य निवसेयुः पितामहाः ।। ।। ३९ ।।

विश्वेशराजसदने यः सुधां चित्रमेव वा ।।
कारयेत्तस्य भवनं कैलासचित्रितं भवेत् ।। 4.2.96.४० ।।
ब्राह्मणान्यतिनो वापि तथैव शिवयोगिनः ।।
भोजयेद्योत्र वै काश्यामेकैक गणना क्रमात् ।। ४१ ।।
कोटिभोज्यफलं तस्य श्रद्धया नात्र संशयः ।।
तपस्त्वत्र प्रकर्तव्यं दानमत्र प्रदापयेत् ।। ४२ ।।
विश्वेशस्तोषणीयोत्र स्नानहोमजपादिभिः ।।
अन्यत्र कोटिजप्येन यत्फलं प्राप्यते नरैः ।।
अष्टोत्तरशतं जप्त्वा तदत्र समवाप्यते ।। ४३ ।।
कोटिहोमेन यत्प्रोक्तं फलमन्यत्र सूरिभिः ।।
अष्टोत्तराहुतिशतात्तदत्रानंदकानने ।। ४४ ।।
यो जपेद्रुद्रसूक्तानि काश्यां विश्वेशसन्निधौ ।।
पारायणेन वेदानां सर्वेषां फलमाप्यते ।। ४५ ।।
तस्य पुण्यं न जानामि चिंतिते चाक्षरे परे ।।
काश्यां नित्यं प्रवस्तव्यं सेव्योत्तरवहा सदा ।। ४६ ।।
आपद्यपि हि घोरायां काशी त्याज्या न कुत्रचित् ।।
यतः सर्वापदांहर्ता त्राता विश्वपतिः प्रभुः ।। ४७ ।।
अवंध्यं दिवसं कुर्यात्स्नानदानजपादिभिः ।।
यतः काश्यां कृतं कर्म महत्त्वाय प्रकल्पते ।। ४८ ।।
कृच्छ्रचांद्रायणादीनि कर्तव्यानि प्रयत्नतः ।।
तथेंद्रियविकाराश्च न बाधंतेत्र कर्हिचित् ।। ४९ ।।
यदींद्रियाणि कुर्वंति विक्रियामिह देहिनाम् ।।
तदात्रवाससं सिद्धिर्विघ्नेभ्यो नैव लभ्यते ।। 4.2.96.५० ।।
।। अगस्त्य उवाच ।। ।।
कृच्छ्र चांद्रायणादीनि व्यासो वक्ष्यति यानि वै।।
तेषां स्वरूपमाख्याहि स्कंदेंद्रिय विशुद्धये ।। ५१ ।।
।। स्कंद उवाच ।। ।।
कथयामि महाबुद्धे कृच्छ्रादीनि तवाग्रतः ।।

यानि कृत्वात्र मनुजो देहशुद्धिं लभेत्पराम् ।। ५२ ।।

एकभक्तेन नक्तेन तथैवायाचितेन च ।।

उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ।।५३ ।।

वटोदुंबरराजीव बिल्वपत्रकुशोदकम् ।।

प्रत्येकं प्रत्यहं पीतं पर्णकृच्छ्रः प्रकीर्तितः ।।५४।।

पिण्याकघृततक्रांबु सक्तूनां प्रतिवासरम् ।।

एकैकमुपवासश्च कृच्छ्रः सौम्यः प्रकीर्तितः ।। ५५ ।।

हविषा प्रातरश्नीत हविषा सायमेव च ।।

हविषा याचितं त्रींस्तु सोपवासस्त्रयहं वसेत् ।। ५६ ।।

एकैकग्रासमश्नीयादहानि त्रीणि पूर्ववत् ।।

त्र्यहं चोपवसेदंत्यमतिकृच्छ्रं चरन्द्विजः ।। ५७ ।।

कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिः ।।

द्वादशाहोपवासेन पराकः परिकीर्तितः ।। ५८ ।।

त्र्यहं प्रातस्त्रयहं सायं त्र्यहमद्यादयाचितम्।।

त्र्यहं चोपवसेदंत्यं प्राजापत्यं चरन्द्विजः ।। ५९ ।।

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्।।

एकरात्रोपवासश्च कृच्छ्रः सांतपनः स्मृतः ।। 4.2.96.६० ।।

पृथक्सांतपनद्रव्यैः षडहः सोपवासकः ।।

सप्ताहेन तु कृच्छ्रोयं महासांतपनः स्मृतः ।। ६१ ।।

तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ।।

एतांस्त्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ।। ६२ ।।

त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।।

त्र्यहमुष्णघृतं प्राश्य वायुभक्षो दिनत्रयम् ।। ६३ ।।

पलमेकं पयः पीत्वा सर्पिषश्च पलद्वयम् ।।

पलमेकं तु तोयस्य तप्तकृच्छ्र उदाहृतः ।। ६४ ।।

गोमूत्रेण समायुक्तं यावकं यः प्रयोजयेत् ।।

कृच्छ्रमेकाह्निकं प्रोक्तं शरीरस्य विशोधनम् ।। ६५ ।।

हस्तावुत्तानतः कृत्वा दिवसं मारुताशनः ।।

रात्रौ जले स्थितो व्युष्टः प्राजापत्येन तत्समम्।। ६६।।

एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्धयेत्।।

उपस्पृशं स्त्रिषवणमेतच्चांद्रायणं स्मृतम् ।। ६७ ।।

एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत् ।।

भुंजीत दर्शे नो किंचिदेष चांद्रायणो विधिः ।।६८।।

चतुरः प्रातरश्नीयात्पिंडान्विप्रः समाहितः ।।

चतुरोस्तमिते सूर्ये शिशुचांद्रायणं स्मृतम् ।। ६९ ।।

अष्टावष्टौ समश्नीयात्पिंडान्मध्यंदिने स्थिते ।।

नियतात्मा हविष्यस्य यतिचांद्रायणं स्मृतम् ।। 4.2.96.७० ।।

यथाकथंचित्पिंडानां तिस्रोशीतीः समाहितः ।।

मासेनाश्नन्हविष्यस्य चंद्रस्यैति सलोकताम् ।। ७१ ।।

अद्भिर्गात्राणि शुध्यंति मनः सत्येन शुद्ध्यति ।।

विद्या तपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति ।।७२।।

तच्च ज्ञानं भवेत्पुंसां सम्यक्काशीनिषेवणात् ।।

काशीनिषेवणेन स्याद्विश्वेशकरुणोदयः।। ।। ७३ ।।

ततो महोदयावाप्तिः कर्मनिर्मूलनक्षमा।।

अतः काश्यां प्रयत्नेन स्नान दान तपो जपः ।।७४।।

व्रतं पुराणश्रवणं स्मृत्युक्ताध्व निषेवणम् ।।

प्रतिक्षणे प्रतिदिनं विश्वेश पदचिंतनम् ।। ७५ ।।

लिंगार्चनं त्रिकालं च लिंगस्यापि प्रतिष्ठितिः ।।

साधुभिः सह संलापो जल्पः शिवशिवेति च ।।७६।।

अतिथेश्चापि सत्कारो मैत्रीतीर्थनिवासिभिः ।।

आस्तिक्यबुद्धिर्विनयो मानामान समानधीः ।। ७७ ।।

अकामिता त्वनौद्धत्यमरागित्वमहिंसनम् ।।

अप्रतिग्रहवृत्तिश्च मतिश्चानुग्रहात्मिका ।। ७८ ।।

अदंभितात्वमात्सर्यमप्रार्थितधनागमः ।।

अलोभित्वमनालस्यमपारुष्यमदीनता ।। ७९ ।।

इत्यादि सत्प्रवृत्तिश्च कर्तव्या क्षेत्रवासिना ।।

प्रत्यहं चेति शिष्येभ्यः सधर्ममुपदेक्ष्यति ।। 4.2.96.८० ।।

नित्यं त्रिषवणस्नायी नित्यं भिक्षाकृताशनः ।।

लिंगपूजार्चको नित्यमित्थं व्यासो वसेत्पुरा ।। ।। ८१ ।।

एकदा तस्य जिज्ञासां कर्तुं देवीं हरोवदत् ।।

अद्य भिक्षाटनं प्राप्ते व्यासे परमधार्मिके ।। ८२ ।।

अपि सर्वगते क्वापि भिक्षां मा यच्छ सुंदरि ।।

तथेत्युक्ता भवानी सा भवं भवनिवारणम्।। ८३ ।।

नमस्कृत्य प्रतिगृहं तस्य भिक्षां न्यषेधयत् ।।

स मुनिः सहितः शिष्यैर्भिक्षामप्राप्य दूनवत् ।। ८४ ।।

वेलातिक्रममालोक्य पुनर्बभ्राम तां पुरीम्।।

गृहेगृहे परिप्राप्ता भिक्षान्यैः सर्वभिक्षुकैः ।।८५।।

तदह्निनालभद्भिक्षां सशिष्यः स मुनिः क्वचित् ।।

अथ सायंतनं कर्म कृत्वा छात्रैः समन्वितः ।। ८६ ।।

उपोषणपरो भूत्वा तथैवासीदहर्निशम्।।

अथान्येद्युर्मुनिर्व्यासः कृत्वा माध्याह्निकं विधिम्।। ८७ ।।

ययौ भिक्षाटनं कर्तुं सशिष्यः परितः पुरीम् ।।

सर्वत्र स परिभ्रांतः प्रतिसौधं मुहुर्मुहुः ।। ८८ ।।

न क्वापि लब्धवान्भिक्षां भाग्यहीनो धनं यथा ।।

अथ चिंतितवान्व्यासः परिश्रांतः परिभ्रमन् ।। ८९ ।।

को हेतुर्यन्न लभ्येत भिक्षा यत्नेन रक्षिता ।।

अंतेवासिन आहूय व्यासः पप्रच्छ चाखिलान् ।। 4.2.96.९० ।।

भवद्भिरपि नो भिक्षा परिप्राप्तेति गम्यते ।।

किमत्र पुरि संवृत्तं द्वित्रा यात ममाज्ञया ।। ९१ ।।

द्वितीयेह्न्यपि यद्भिक्षा न लभ्येतातियत्नतः ।।

अनिष्टं किंचिदत्रासीन्महागुरुनिपातजम् ।। ९२ ।।

अन्नक्षयो वा सर्वस्यां नगर्यामभवत्क्षणात् ।।

राजदंडोथ युगपज्जातः सर्वपुरौकसाम् ।। ९३ ।।

अथवा वारिता भिक्षा केनाप्यस्मासु चेर्ष्यया ।।

पुरौकसोभवन्दुस्थास्तूपसर्गेण केनचित् ।। ९४ ।।

किमेतदखिलमज्ञात्वा समागच्छत सत्वरम् ।।

द्वित्राः पवित्रचरणात्प्राप्यानुज्ञां गुरोरथ ।।

समाचख्युः समागम्य दृष्ट्वर्द्धि तत्पुरौकसाम् ।। ९५ ।।

।। शिष्या ऊचुः ।। ।।

शृण्वंत्वाराध्यचरणा नोपसर्गोत्र कश्चन ।।

नान्नक्षयो वा सर्वस्यां नगर्यामिह कुत्रचित् ।। ।। ९६ ।।

यत्र विश्वेश्वरः साक्षाद्यत्राऽमरधुनी स्वयम् ।।

त्वादृशा यत्र मुनयः क्व भीस्तत्रोपसर्गजा ।। ९७ ।।

समृद्धिर्या गृहस्थानामिह विश्वेशितुः पुरि ।।

न सर्द्धिरस्ति वैकुंठे स्वल्पास्ता अलकादयः ।। ९८ ।।

रत्नाकरेषु रत्नानि न तावंति महामुने।।

यावंति संति विश्वेशनिर्माल्योपभुजां गृहे ।। ९९ ।।

गृहेगृहेत्र धान्यानां राशयो यादृशः पुनः ।।

न तादृशः कल्पवृक्षदत्ता ऐंद्रे पुरे क्वचित् ।। 4.2.96.१०० ।।

यत्र साक्षाद्विशालाक्षी सुविस्तारफलप्रदा ।।

न तत्र पुरि सर्वस्यां नरो वै निर्धनः क्वचित् ।। १ ।।

निर्वाणलक्ष्म्याः सदने त्वस्मिन्नानंदकानने ।।

मोक्षोपि यत्र सुलभः किमन्यत्तत्र दुर्लभम् ।। २ ।।

सीमंतिन्यः स्त्रियः सर्वाः पतिव्रतपरायणाः ।।

सर्वा भवानी रूपिण्यो विश्वेशार्पितसत्क्रियाः ।।३।।

यावंतः पुरुषाः काश्यां सर्व एव गणाधिपाः ।।

सर्व एव कुमारा वै सर्वे तारकदृष्टयः ।।४।।

त्रिपुंड्रांकितभाला ये ते सर्वे चंद्रमौलयः ।।

उपसर्गसहस्रैश्च पीड्यमाना अपीह ये ।। ५ ।।

न त्यजंति सदा काशीं सर्वज्ञा एव तेखिलाः ।।

गृहेगृहेपि वटवो ब्रह्मवादविवादिनः ।। ६ ।।

स्वर्धुनी धूतकलुषाः संतीह चतुराननाः ।।

निर्वाणलक्ष्मीपतयः क्षेत्रसंन्यासकारिणः ।।७।।

सर्व एव हृषीकेशाः सर्वे वै पुरुषोत्तमाः ।।

अच्युता एव विज्ञेया एतत्क्षेत्रपरिग्रहाः ।। ८ ।।

स्त्रियो वा पुरुषा वापि सर्व एव न संशयः ।।

सर्व एव त्रिनयनाः सर्व एव चतुर्भुजाः ।। ९ ।।

श्रीकंठाः सर्व एवात्र सर्वे मृत्युंजया ध्रुवम् ।।

मोक्षश्री श्रितवर्ष्माणस्त्वर्धनारीश्वरायतः ।। 4.2.96.११० ।।

धर्मराशिः परश्चात्र महांतोऽत्रार्थराशयः ।।

सर्वे कामाः फलंत्यत्र कैवल्यं चात्र निर्मलम् ।। ११ ।।

न गर्भवाससंसर्गः काशीसंस्थितिकारिणाम् ।।

न कलिश्चात्र बाधेत कालो नैव प्रबाधते ।। १२ ।।

एनांसि नात्र बाधंते विश्वेशशरणार्थिनः ।।

यत्र विश्वेश्वरः साक्षान्नादबिंदुकलात्मकः ।। १३ ।।

ध्वनिरूपी हि तत्रास्ति प्रणवो मंत्रविग्रहः ।।

अतो विग्रहवंतोत्र संति वेदा विनिश्चितम् ।। १४ ।।

सरस्वती सरिद्रूपा ह्यतः शास्त्रनिकेतनम् ।।

आनंदकाननं सर्वं धर्मशास्त्रकृतालयम्।। १५ ।।

यावंतो दिवि वै देवास्तावंतोत्र मृषा न हि ।।

नीराजयंति विश्वेशं रात्रौ रात्रौ सदाऽहयः ।। ।। १६ ।।

स्वफणामणिदीपैश्च प्राप्य काशीं रसातलात् ।।

समुद्राः सर्व एवात्र कामधेनुव्रजान्विताः ।।१७।।

पंचपीयूषधाराभिर्विश्वेशं स्नपयंति हि ।।

मंदारः पारिजातश्च संतानो हरिचंदनः ।। १८ ।।

कल्पद्रुमश्च पंचैते तरुभिः सह सर्वदा ।। १९ ।।

सर्वे सुरनिकायाश्च सर्व एव महर्षयः ।।

योगिनः सर्व एवात्र काशीनाथमुपासते ।।4.2.96.१२०।।

विद्यानां सदनं काशी काशी लक्ष्म्याः परालयः ।।

मुक्तिक्षेत्रमिदं काशी काशी सर्वा त्रयीमयी।।२१।।

इति श्रुत्वा मुनिवरः पाराशर्यो महातपाः ।।

एवं बभाषे ताञ्शिष्यान्पुनःश्लोकं पठंत्वमुम् ।। २२ ।।

।। शिष्या ऊचुः ।। ।।

विद्यानां चाश्रयः काशी काशी लक्ष्म्याः परालयः ।।

मुक्तिक्षेत्रमिदं काशी काशी सर्वा त्रयीमयी ।। २३ ।।

।। स्कंद उवाच ।। ।।

निशम्येति तदा व्यासः क्रोधांधीकृतलोचनः ।।

क्षुत्कृशानुज्वलन्मूर्तिः काशीं शप्स्यति कुंभज ।। ।। २४ ।।

।। व्यास उवाच ।। ।।

मा भूत्त्रैपूरुषीविद्या मा भूत्त्रैपूरुषं धनम् ।।

मा भूत्त्रैपूरुषी मुक्तिः काशीं व्यासः शपन्निति ।।२५।।

गर्वः परोत्र विद्यानां धनगर्वोत्र वै महान् ।।

मुक्तिगर्वेण नो भिक्षां प्रयच्छंत्यत्र वासिनः ।। २६ ।।

इति कृत्वा मतिं व्यासः काश्यां शापमदात्तदा ।।

दत्त्वापि शापं स मुनिर्भिक्षितुं क्रोधवान्ययौ।। ।। २७ ।।

प्रतिगेहं त्वरायुक्तः प्रविशन्व्योमदत्तदृक् ।।

बभ्राम नगरीं सर्वां क्वापि भैक्षं न लब्धवान् ।।२८।।

अंशुमालिनमावीक्ष्य मनाग्लोहितमंडलम् ।।

भिक्षापात्रं परिक्षिप्य निर्ययावाश्रमं प्रति ।। २९ ।।

अथ गच्छन्महादेव्या गृहद्वारि निषण्णया ।।

प्राकृतस्त्रीस्वरूपिण्या भिक्षायै प्रार्थितोतिथिः ।। 4.2.96.१३० ।।

।। गृहिण्युवाच ।। ।।

भगवन्भिक्षुकास्तावदद्य दृष्टा न कुत्रचित् ।।

असत्कृत्यातिथिं नाथो न मे भोक्ष्यति कर्हिचित् ।। ३१ ।।

वैश्वदेवादिकं कर्म कृत्वा गृहपतिर्मम ।।

प्रतीक्षेतातिथिपथं तस्मात्त्वमतिथिर्भव ।। ३२ ।।

विनातिथि गृहस्थोयस्त्वन्नमेको निषेवते ।।

निषेवतेऽघं स परं सहितः स्वपितामहैः ।। ३३ ।।

तस्मात्त्वरितमायाहि कुरु मे पत्युरीहितम् ।।

गार्हस्थ्यं सफलं कर्तुमिच्छतोऽतिथिपूजनात् ।। ३४ ।।

इति श्रुत्वा गतामर्षो व्यासस्तामाह विस्मितः ।।

।। व्यास उवाच ।। ।।

भद्रे का त्वं कुतः प्राप्ता पूर्वं दृष्टा न कुत्रचित् ।। ३५ ।।

मन्ये धर्ममयी मूर्तिः कापि त्वं शुचिमानसा ।।

त्वद्दर्शनात्परां प्रीतिं संप्राप्तानींद्रियाणि मे ।। ३६ ।।

त्वं सुधैव भवेः प्रायः सर्वावयवसुंदरि ।।

मंदराघातसंत्रासात्यक्तक्षीरार्णवस्थितिः ।। ३७ ।।

कलासुधाकरस्याथ कुहू राहुभयार्दिता ।।

सीमंतिनी स्वरूपेण तिष्ठेः काश्यामनिर्भया ।। ३८ ।।

अथवा कमलासि त्वं विहाय कमलालयम् ।।

निशि संकोचिनं काश्यां विकाशिन्यां वसेः सदा ।। ३९ ।।

किंवा नु करुणामूर्तिरिह काशिनिवासिनाम् ।।

सर्वदुःखौघहरिणी परानंदप्रदायिनी ।। 4.2.96.१४० ।।

वाराणस्याः किमथवाऽधिष्ठात्री देवता त्वमु।।

किं वा निर्वाणलक्ष्मीस्त्वं या काश्यां परिगीयते ।। ४१ ।।

श्वपाकं यायजूकं वा प्रांतेऽलंकुर्वती समम्।।

मद्भाग्यं वा परिणतमेतद्योषित्स्वरूपतः ।। ४२ ।।

अथवा सा भवेन्नूनं या क्षेत्रे परिगीयते ।।

भक्तपोतप्रदा भक्त्या भवानी भवनाशिनी ।। ४३ ।।

सर्वथैव न नारी त्वं नासुरी नैव किन्नरी।।

विद्याधरा न नो नागी नो गंधर्वी न यक्षिणी ।। ४४ ।।

त्वमिष्टदेवतैवासि काचिन्मे मोहहारिणी ।।

केयं चिंताथवामेत्र काचित्त्वं भव सुंदरि ।।४५।।

परवानस्म्यहं जातस्तवदर्शनतोऽधुना ।।

अवश्यमेवकर्तास्मि तवादेश्यं तदादिश ।। ४६ ।।

एकं तपोव्ययं हित्वा कारयिष्यसि यत्पुनः ।।

तदेवाहं करिष्यामि विधेयः शुभलोचने ।। ४७ ।।

न वचस्त्वादृशीनांहि महत्त्वं हापयेत्सताम् ।।

परं त्वं कासि सुभगे सत्यं ब्रूहि ममाग्रतः ।। ४८ ।।

अथवा तव देहेस्मिन्क्वा सत्यं निर्मलेक्षणे ।।

इति पृष्टाह मुनिना सा विश्वायुर्घटोद्भव ।। ४९ ।।

अत्रत्यस्यैव हि मुने गृहिणी गृहमेधिनः ।।

नित्यं वीक्षे चरंतं त्वां भिक्षां शिष्यगणैर्वृतम् ।। 4.2.96.१५० ।।

त्वमेव मां नो जानीषे जाने त्वामहमेव हि ।।

तपस्विन्किं बहूक्तेन यावन्नास्तं व्रजेद्रविः ।। ५१ ।।

प्राणनाथस्य मे तावदातिथ्यं सफलीकुरु ।।

तच्छ्रुत्वा स मुनिः प्राह विनयानतकंधरः ।। ५२ ।।

।। व्यास उवाच ।। ।।

अस्ति मे नियमः कश्चित्स सिद्धिं चेद्व्रजेच्छुभे ।।

एकभिक्षां तदाहं तु करिष्ये नान्यथा पुनः ।। ५३ ।।

तपस्व्युदीरितं श्रुत्वा सा प्रोवाच वचस्ततः ।।

अविशंक वद मुने कस्तेस्ति नियमः सुधीः ।। ५४ ।।

मम भर्तुः प्रसादेन किंचिन्न्यूनं यतोऽत्र न ।।

इति श्रुत्वा प्रहृष्टात्मा स तामाह तपोधनः ।। ५५ ।।

अयुतं मम शिष्या ये तैः सपक्तिमहं वृणे ।।

अस्तं यावन्न यात्यर्कस्तावद्भोक्ष्येन्यथा नहि ।। ५६ ।।

निशम्येति प्रहृष्टास्या सा प्रोवाच मुनिंततः ।।

किं विलंबेन तद्याहि सर्वाञ्शिष्यान्समाह्वय ।। ५७. ।।

पुनः प्राह स तां साध्वि त्वेतावत्सिद्धिरस्ति ते ।।

येन तृप्तिं गमिष्यंति मच्छिष्याः सर्व एव ते।।५८।।

स्मित्वाथ साब्रवीत्तं तु मुने भर्तुरनुग्रहात् ।।

सिद्धमेव सदैवास्ते सर्वं तावन्ममालये ।।।। ५९ ।।

यावतार्थिजनस्तृप्तिमेति सर्वोपि सर्वशः ।।

वयं न तादृङ्महिला भर्तृसंदेहकारिकाः ।। 4.2.96.१६० ।।

आयातोर्थी यदा गेहे सिद्धं कार्यं तदैव हि ।।

परिपूर्णा दिशः सर्वाः परिपूर्णामनोरथाः ।। ६१ ।।

परिपूर्णगृहं सर्वं पत्युःपाद प्रसादतः ।।

याहि तूर्णं समायाहि यावदन्नार्थिभिः सह ।। ६२ ।।

पतिर्मे बहुकालीनः कालं न सहते चिरम् ।।

प्रियातिथिः प्रियतमस्तदातिथ्यसमृद्धये ।।६३।।

आशु गत्वा समागच्छ यावन्नास्तमितो रविः ।।

इति प्रहृष्टस्त्वरितः शिष्यानाहूय सर्वतः ।। ।। ६४ ।।

आगत्यतां पुनः प्राह दृष्ट्वा तन्मार्गलोचनाम् ।।

मातः सर्वे समायातास्त्वरितं देहि भोजनम् ।। ६५ ।।

अस्ताचलं हि समया समियादेष भास्करः ।।

इत्युक्त्वा मंदिरस्यांतर्विविशुस्ते तपोधनाः ।। ६६ ।।

तन्मंडपमणिज्योतिस्तत्याहितदिनश्रियः ।।

यावद्गच्छतितत्सौधमध्यमाशु तपस्विनः ।। ६७ ।।

पादौप्रक्षाल्य तावत्ते कैश्चित्कैश्चित्समर्च्य च ।।

कतिचित्परिविष्टान्ना भोक्तुमेवोपवेशिताः ।। ६८ ।।

तद्दिव्यपाकसंभारान्दृष्टवा तद्दृष्टयः क्षणात् ।।

परातृप्तिमुपागच्छन्घ्राणन्यामोदराजिभिः ।। ६९ ।।

अतितृप्तिं समापन्नास्ते तदन्ननिषेवणात् ।।

आचांताश्चंदनैः स्रग्भिरंबरैः परिभूषिताः ।। 4.2.96.१७० ।।

अथ सांध्यं विधिं कृत्वा प्रोपविश्य तदग्रतः ।।

अभिनंद्य महाशीर्भिर्यावद्गंतुं प्रचक्रमुः ।। ७१ ।।

तावद्वृद्धगृहस्थेन गृहिणी सा कटाक्षिता ।।

पप्रच्छ तीर्थे वसतां को धर्मो मुख्य एव हि ।। ७२ ।।

तथा तदनुसारेण तीर्थे वर्तामहे वयम् ।।

सर्वधर्मविदां श्रेष्ठः श्रुत्वा तद्गृहिणी वचः ।।७३।।

तदादरसुधाक्लिन्न महान्नस्वादतर्पितः ।।

प्रत्युवाच मुनिर्व्यासः स्मित्वा तां सर्ववित्तमाम् ।।७४।।

।। व्यास उवाच ।। ।।

स्वच्छांतःकरणेमातर्महामिष्टान्नमानदे ।।

स एष धर्मो नान्योस्ति यत्त्वया परिचर्यते ।।७५।।

त्वमेव धर्मं जानासि पतिशुश्रूषणे रता ।।

यदि पृच्छसि मां सत्यं तदा किंचन वच्मि ते ।। ७६ ।।

वक्तव्यमेव पृष्टेन मनागपि विजानता ।।

स एव धर्मः सुभगे नान्यो धर्मोस्ति कश्चन ।। ७७ ।।

येनैष तोषमायाति तव भर्ता चिरंतनः ।।

।। गृहिण्युवाच ।। ।।

अयं धर्मो भवेन्नूनं क्रियते च स्वशक्तितः ।। ७८ ।।

साधारणानि धर्माणि संपृच्छे तानि मे वद ।।

।। व्यास उवाच ।। ।।

अनुद्वेगकरं वाक्यं परोत्कर्षसहिष्णुता ।।७९।।

विचार्य कारिता नित्यं स्वधिष्ण्योदय चिंतनम् ।।

गृहस्थ उवाच ।। ।।

एषु धर्मेषु भो विद्वंस्त्वयि कोस्तीह तद्वद ।। 4.2.96.१८० ।।

ततः स्थगितवद्व्यासस्तस्थौ किंचिन्न चोक्तवान् ।।

ततः पुनर्गृहस्थेन स हि प्रोक्तस्तपोधनः ।। ८१ ।।

यद्येत एव वै धर्मास्त्वया ये प्रतिपादिताः ।।

तद्दांतता तवैवैक्षि दानं शापस्य चोत्तमम् ।। ८२ ।।

त्वय्येव हि दया सम्यग्धैर्यं त्वय्येव चोत्तमम् ।।

त्वयि संभावनास्त्येव कामक्रोधविनिग्रहे ।। ८३ ।।

त्वमेव सम्यग्जानीषे वक्तुं चोद्वेगवर्जितम् ।।

त्वय्येव सम्यग्दृश्येत परोत्कर्ष सहिष्णुता ।। ८४ ।।

विचार्य कारितायाश्च त्वमेव निलयोमहान् ।।

स्वस्यधिष्ण्यस्य च भवांश्चिंतयेदुदयं ध्रुवम् ।। ८५ ।।

ममैकं ब्रूहि भो विद्वञ्छापं दद्याच्च यः क्रुधा ।।

अलभन्स्वार्थसंसिद्धिमभाग्यात्तस्य कस्य सः ।। ८६ ।।

।। व्यास उवाच ।। ।।

यः स्वार्थसिद्धिमलभन्नभाग्याच्छपति क्रुधा ।।

स शापः प्रत्युत भवेच्छप्तुरेवाविवेकिनः ।। ८७ ।।

।। गृहस्थ उवाच ।। ।।

भवता भ्रमता विप्र नाप्ताभिक्षा यदाप्यहो ।।

तदापराद्धं किमिह वराकैः क्षेत्रवासिभिः ।। ८८ ।।

तपस्विञ्शृणु मे वाक्यं राजधान्यां ममेह यः ।।

ऋद्धिं द्रष्टुं न शक्नोति परिशप्तः स एव हि ।। ८९ ।।

अद्य प्रभृति न क्षेत्रे मदीये शापवर्जिते ।।

आवस क्रोधन मुने न वासे योग्यतात्र ते ।। ।। 4.2.96.९० ।।

इदानीमेव निर्गच्छ बहिः क्षेत्रादितो भव ।।

त्वद्विधानां न योग्यं मे क्षेत्रं मोक्षैकसाधनम् ।। ९१ ।।

अत्राल्पमपि यद्दौष्ट्यं कृतं मत्क्षेत्रवासिनाम् ।।

तद्दौष्ट्यस्य परीपाको रुद्रपैशाच्यमेव हि ।। ९२ ।।

तच्छ्रुत्वा वेपमानः स परिशुष्कौष्ठतालुकः ।।

जगाम शरणं गौरीं लुठंस्तच्चरणाग्रतः ।। ९३ ।।

उवाच च वचो मातस्त्राहि त्राहि भृशं रुदन् ।।

अनाथस्त्वत्सनाथोहं बालिशस्तव बालकः ।। ९४ ।।

शरणागतं च संत्राहि रक्ष मां शरणागतम् ।।

बहूनामागसां गेहमस्माकं दुष्टमानसम्।। ९५ ।।

शंभुशापोऽन्यथाकर्तुं भवत्यापि न शक्यते ।।

अहं च शरणायातस्तदेकं क्रियतां शिवे ।। ९६ ।।

प्रत्यष्टमि सदा क्षेत्रे प्रतिभूतं च पार्वति ।।

दिश प्रवेशनादेशं नेशस्त्वद्वाक्यलंघकः ।। ९७ ।।

इत्युक्ता तेन मुनिना भवानी करुणाजनिः ।।

मुखं महेशितुर्वीक्ष्य तथेत्याह तदाज्ञया ।। ९८ ।।

अथांतर्हितवंतौ तौ शिवौ क्षेत्रशिवंकरौ ।।

व्यासोपि निर्ययौ क्षेत्रात्स्वापराधवशं वदन्।। ९९ ।।

अहोरात्रं स पश्यन्वै क्षेत्रं दृष्टेरदूरगम् ।।

प्राप्याष्टमीं च भूतां च मध्ये क्षेत्रं सदा विशेत् ।। 4.2.96.२०० ।।

लोलार्कादग्निदिग्भागे स्वर्धुनीं पूर्वरोधसि ।।

स्थितो ह्यद्यापि पश्येत्स काशीप्रासादराजिकाम् ।। १ ।।

।। स्कंद उवाच ।। ।।

इत्थं कुंभज स व्यासः क्षेत्रे शापं प्रदास्यति ।।

क्षेत्रशापप्रदानाच्च बहिर्यास्यति तत्क्षणात् ।। ।। २ ।।

अतएवाविमुक्तस्य क्षेत्रस्य शुभशंसिनः ।।

भविष्यति शुभं नित्यमन्यथा त्वन्यथैव हि ।। ३ ।।

श्रुत्वाध्यायमिमं पुण्यं व्यासशाप विमोक्षणम् ।।

महादुर्गोपसर्गेभ्यो भयं तस्य न कुत्रचित् ।। २०४ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे व्यासशापविमोक्षणं नाम षण्णवतितमोऽध्यायः ।। ९६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९७

https://sa.wikisource.org/s/fvx

< स्कन्दपुराणम् | खण्डः ४ (काशीखण्डः)

।। अगस्त्य उवाच ।। ।।

एतद्भविष्यं श्रुत्वाहं व्यासस्य शिवनंदन ।।

आश्चर्यभाजनं जातस्तीर्थानि कथयाधुना ।। १ ।।

आनंदकानने यानि यत्र संति षडानन ।।

तानि लिंगस्वरूपाणि समाचक्ष्व ममाग्रतः ।। २ ।।

।। स्कंद उवाच ।। ।।

अयमेव हि वै प्रश्नो देव्यै देवेन भोस्तदा ।।

यादृशः कथितो वच्मि तादृशं शृणु कुंभज ।। ३ ।।

।। देव्युवाच ।। ।।

यानि यानि हि तीर्थानि यत्रयत्र महेश्वर ।।

तानि तानीह मे काश्यां तत्रतत्र वद प्रभो ।। ४ ।।

।। देवदेव उवाच ।। ।।

शृणु देवि विशालाक्षि तीर्थं लिंगमुदाहृतम् ।।

जलाशयेपि तीर्थाख्या जाता मूर्ति परिग्रहात् ।। ।। ५ ।।

मूर्तयो ब्रह्मविष्ण्वर्कशिवविघ्नेश्वरादिकाः ।।

लिंगं शैवमिति ख्यातं यत्रैतत्तीर्थमेव तत् ।।६।।

वाराणस्यां महादेवः प्रथमं तीर्थमुच्यते ।।

तदुत्तरे महाकूपः सारस्वतपदप्रदः ।। ७ ।।

क्षेत्रपूर्वोत्तरेभागे तद्दृष्टं पशुपाशहृत् ।।

तत्पश्चाद्विग्रहवती पूज्या वाराणसी नरैः ।। ८ ।।

सा पूजिता प्रयत्नेन सुखवस्तिप्रदा सदा ।।

महादेवस्य पूर्वेण गोप्रेक्षं लिंगमुत्तमम् ।। ९ ।।

तद्दर्शनाद्भवेत्सम्यग्गोदानजनितं फलम् ।।

गोलोकात्प्रेषिता गावः पूर्वं यच्छंभुना स्वयम् ।। 4.2.97.१० ।।

वाराणसीं समायाता गोप्रेक्षं तत्ततः स्नृतम् ।।

गोप्रेक्षाद्दक्षिणेभागे दधीचीश्वरसंज्ञितम् ।।१ १।।

तद्दर्शनाद्भवेत्पुंसां फलं यज्ञसमुद्भवम् ।।

अत्रीश्वरं तु तत्प्राच्यां मधुकैटभपूजितम् ।। १२ ।।

लिंगं दृष्ट्वा प्रयत्नेन वैष्णवं पदमृच्छति ।।

गोप्रेक्षात्पूर्वदिग्भागे लिंगं वै विज्वरं स्मृतम् ।।१३।।

तस्य संपूजनान्मर्त्यो विज्वरो जायते क्षणात् ।।

प्राच्यां वेदेश्वरस्तस्य चतुर्वेदफलप्रदः ।। १४ ।।

वेदेश्वरादुदीच्यां तु क्षेत्रज्ञश्चादिकेशवः ।।

दृष्टं त्रिभुवनं सर्वं तस्य संदर्शनाद्ध्रुवम् ।। १५ ।।

संगमेश्वरमालोक्य तत्प्राच्याम जायतेनघः ।।

चतुर्मुखेन विधिना तत्पूर्वेण चतुर्मुखम् ।। १६ ।।

प्रयागसंज्ञकम लिंगमर्चितम ब्रह्मलोकदम् ।।

तत्र शांतिकरी गौरी पूजिता शांतिकृद्भवेत् ।। १७ ।।

वरणायास्तटे पूर्वे पूज्यं कुंतीश्वरं नृभिः ।।

तत्पूजनात्प्रजायंते पुत्रा निजकुलोज्ज्वलाः ।। १८।।

कुंतीश्वरादुत्तरतस्तीर्थं वै कापिलो ह्रदः ।।

तत्र वै स्नानमात्रेण वृषभध्वजपूजनात् ।। १९ ।

राजसूयस्य यज्ञस्य फलं त्वविकलं भवेत् ।।

रोरवादिषु ये केचित्पितरः कोटिसंमिताः ।।4.2.97.२०।।

तत्र श्राद्धे कृते पुत्रैः पितृलोकं प्रयांति ते ।।

आनुसूयेश्वरं लिंगं गोप्रेक्षादुत्तरे मुने।। २१ ।।

तद्दर्शनाद्भवेत्स्त्रीणां पातिव्रत्य फलं स्फुटम् ।।

तल्लिंगपूर्वदिग्भागे पूज्यः सिद्धिविनायकः ।।२२।।

यां सिद्धिं यः समीहेत स तामाप्नोति तन्नतेः ।।

हिरण्यकशिपोर्लिंगं गणेशात्पश्चिमे ततः ।।२३।।

हिरण्यकूपस्तत्रास्ति हिरण्याश्वसमृद्धिकृत् ।। २४ ।।

मुंडासुरेश्वरं लिंगं तत्प्रतीच्यां च सिद्धिदम्।।

अभीष्टदं तु नैर्ऋत्यां गोप्रेक्षाद्वृषभेश्वरम् ।। २५ ।।

मुने स्कंदेश्वरं लिंगं महादेवस्य पश्चिमे ।।

तल्लिंगपूजनान्नृणां भवेन्मम सलोकता ।। २६ ।।

तत्पार्श्वतो हि शाखेशो विशाखेशश्च तत्र वै ।।

नैगमेयेश्वरस्तत्र येन्ये नंद्यादयो गणाः ।। २७ ।।

तेषामपि हि लिंगानि तत्र संति सहस्रशः ।।

तद्दर्शनाद्भवेत्पुंसां तत्तद्गणसलोकता ।। २८।।

नंदीश्वरात्प्रतीच्यां च शिलादेशः कुधीहरः ।।

महाबलप्रदस्तत्र हिरण्याक्षेश्वरः शुभः ।। २९ ।।

तद्दक्षिणेट्टहासाख्यं लिंगं सर्वसुखप्रदम् ।।

प्रसन्नवदनेशाख्यं लिंगं तस्योत्तरे शुभम् ।।4.2.97.३० ।।

प्रसन्नवदनस्तिष्ठेद्भक्तस्तद्दर्शनाच्छुभात् ।।

तदुत्तरे प्रसन्नोदं कुंडं नैर्मल्यदं नृणाम् ।। ३१ ।।

प्रतीच्यामट्टहासस्य मित्रावरुणनामनी ।।

लिंगे तल्लोकदे पूज्ये महापातकहारिणी ।। ३२ ।।

नैर्ऋत्यां चाट्टहासस्य वृद्धवासिष्ठसंज्ञकम् ।।

लिंगं तत्पूजनात्पुंसां ज्ञानमुत्पद्यते महत् ।। ३३ ।।

वसिष्ठेश समीपस्थः कृष्णेशो विष्णुलोकदः ।।

तद्याम्यां याज्ञवल्क्येशो ब्रह्मतेजोविवर्धनः ।। ३४ ।।

प्रह्लादेश्वरमभ्यर्च्य तत्पश्चाद्भक्तिवर्धनम् ।।

स्वयंलीनः शिवो यत्र भक्तानुग्रहकाम्यया ।। ३५ ।।

अतः स्वलीनं तत्पूर्वे लिंगं पूज्यं प्रयत्नतः ।।

सदैव ज्ञाननिष्ठानां परमानंदमिच्छताम् ।।

या गतिर्विहिता तेषां स्वलीने सा तनुत्यजाम् ।। ३६ ।।

वैरोचनेश्वरं लिंगं स्वलीनात्पुरतः स्थितम्।।

तदुत्तरे बलीशं च महाबलविवर्धनम् ।। ३७ ।।

तत्रैव लिंगं बाणेशं पूजितं सर्वकामदम् ।।

चंद्रेश्वरस्य पूर्वेण लिंगं विद्येश्वराभिधम् ।। ३८ ।।

सर्वाविद्याः प्रसन्नाः स्युस्तस्य लिंगस्य सेवनात् ।।

तद्दक्षिणे तु वीरेशो महासिद्धि विधायकः ।।३९।।

तत्रैव विकटा देवी सर्वदुःखौघमोचनी ।।

पंचमुद्रं महापीठं तज्ज्ञेयं सर्वसिद्धिदम् ।। 4.2.97.४० ।।

तत्र जप्ता महामंत्राः क्षिप्रं सिध्यंति नान्यथा ।।

तत्पीठे वायुकोणे तु संपूज्यः सगरेश्वरः ।।४१ ।।

तदर्चनादश्वमेधफलं त्वविकलं भवेत् ।।

तदीशाने च वालीशस्तिर्यग्योनि निवारकः ।। ४२ ।।

महापापौघविध्वंसी सुग्रीवेशस्तदुत्तरे ।।

हनूमदीश्वरस्तत्र ब्रह्मचर्यफलप्रदः ।। ४३ ।।

महाबुद्धिप्रदस्तत्र पूज्यो जांबवतीश्वरः ।।

आश्विने येश्वरौ पूज्यौ गंगायाः पश्चिमे तटे ।। ४४ ।।

तदुत्तरे भद्रह्रदो गवां क्षीरेण पूरितः ।।

कपिलानां सहस्रेण सम्यग्दत्तने यत्फलम् ।। ४५ ।।

तत्फलं लभते मर्त्यः स्नातो भद्रह्रदे ध्रुवम् ।।

पूर्वाभाद्रपदा युक्ता पौर्णमासी यदा भवेत् ।। ४६ ।।

तदा पुण्यतमः कालो वाजिमेधफलप्रदः ।।

ह्रद पश्चिम तीरे तु भद्रेश्वर विलोकनात् ।। ४७ ।।

गोलोकं प्राप्नुयात्तस्मात्पुण्यान्नैवात्र संशयः ।।

भद्रेश्वराद्यातुधान्यामुपशांत शिवो मुने ।। ४८ ।।

तस्य लिंगस्य संस्पर्शात्परा शांतिं समृच्छति ।।

उपशांत शिवं लिंगं दृष्ट्वा जन्मशतार्जितम् ।।४९।।

त्यजेदश्रेयसो राशिं श्रेयोराशिं च विंदति ।।

तदुत्तरे च चक्रेशो योनिचक्र निवारकः ।। 4.2.97.५० ।।

तदुत्तरे चक्रह्रदो महापुण्यविवर्धनः ।।

स्नात्वा चक्रह्रदे मर्त्यश्चक्रेशं परिपूज्य च ।। ५१ ।।

शिवलोकमवाप्नोति भावितेनांतरात्मना ।।

तन्नैर्ऋते च शूलेशो द्रष्टव्यश्च प्रयत्नतः ।। ५२ ।।

शूलं तत्र पुरा न्यस्तं स्नानार्थं वरवर्णिनि ।।

ह्रदस्तत्र समुत्पन्नः शूलेशस्याग्रतो महान् ।। ५३ ।।
स्नानं कृत्वा ह्रदे तत्र दृष्ट्वा शूलेश्वरं विभुम् ।।
रुद्रलोकं नरा यांति त्यक्त्वा संसारगह्वरम् ।।५४।।
तत्पूर्वतो नारदेन तपस्तप्तं महत्तरम्।।
लिंगं च स्थापितं श्रेष्ठं कुंडं चापि शुभं कृतम् ।। ५५ ।।
तत्र कुंडे नरः स्नात्वा दृष्ट्वा वै नारदेश्वरम् ।।
संसाराब्धिमहाघोरं संतरेन्नात्र संजयः ।। ५६ ।।
नारदेश्वर पूर्वेण दृष्ट्वाऽवभ्रातकेश्वरम् ।।
निर्मलां गतिमाप्नोति पापौघं च विमुंचति ।। ५७ ।।
तदग्रे ताम्रकुंडं च तत्र स्नातो न गर्भभाक् ।।
विघ्नहर्ता गणाध्यक्षस्तद्वायव्ये सुविघ्नहृत् ।। ५८ ।।
तत्र विघ्नहरं कुंडं तत्र स्नातो न विघ्नभाक् ।।
अनारकेश्वरं लिंगं तदुदग्दिशि चोत्तमम् ।। ५९ ।।
कुंडं चानारकाख्यं वै तत्र स्नातो न नारकी ।।
वरणायास्तटे रम्ये वरणेशस्तदुत्तरे ।। 4.2.97.६० ।।
तत्र पाशुपतः सिद्धस्त्वक्षपादो महामुने ।।
अनेनैव शरीरेण शाश्वतीं सिद्धिमागतः ।। ६१ ।।
तत्पश्चिमे च शैलेशः परनिर्वाणकामदः ।।
कोटीश्वरं तु तद्याम्यां लिंगं शाश्वतसिद्धिदम् ।। ६२ ।।
कोटितीर्थे ह्रदे स्नात्वा कोटीशं परिपूज्य च ।।
गवां कोटिप्रदानस्य फलमाप्नोति मानवः ।। ६३ ।।
महाश्मशानस्तंभोस्ति कोटीशाद्वह्निदिक्स्थितः ।।
तस्मिन्स्तंभे महारुद्रस्तिष्ठते चोमया सह ।। ६४ ।।
तं स्तंभं समलंकृत्य नरस्तत्पदमाप्नुयात् ।।
तत्रैव तीर्थं परमं कपालेश समीपतः ।।६५।।
कपालमोचनं नाम तत्र स्नातोऽश्वमेधभाक् ।।
ऋणमोचनतीर्थं तु तदुदग्दिशि शोभनम् ।। ६६ ।।
तत्र तीर्थे नरः स्नात्वा मुक्तो भवति चर्णतः ।।

तत्रैवांगारकं तीर्थं कुंडं चांगारनिर्मलम् ।। ६७ ।।

स्नात्वांगारक तीर्थे तु भवेद्भूयो न गर्भभाक् ।।

अंगारवारयुक्तायां चतुर्थ्यां स्नाति यो नरः ।।

व्याधिभिर्नाभि भूयेत न च दुःखी कदाचन ।। ६८ ।।

विश्वकर्मेश्वरं लिंगं ज्ञानदं च तदुत्तरे ।।

महामुंडेश्वरं लिंगं तस्य दक्षिणतः शुभम्।। ६९ ।।

कूपः शुभोद नामापि स्नातव्यं तत्र निश्चितम् ।।

तत्र मुंडमयी माला मया क्षिप्तातिशोभना ।। 4.2.97.७० ।।

महामुंडा ततो देवी समुत्पन्नाघहारिणी ।।

खट्वांगं च धृतं तत्र खट्वांगेशस्ततोभवत् ।। ७१ ।।

निष्पापो जायते मर्त्यः खट्वांगेश विलोकनात् ।।

भुवनेशस्ततो याम्यां कुंडं च भुवनेश्वरम् ।। ७२ ।।

तत्र कुंडे नरः स्नातो भुवने शोभवेन्नरः ।।

तद्याम्यां विमलेशश्च कुंडं च विमलोदकम् ।। ७३ ।।

तत्र स्नात्वा विलोक्येशं विमलो जायते नरः ।।

तत्र पाशुपतः सिद्धस्त्र्यंबको नाम नामतः ।। ७४ ।।

अनेनैव शरीरेण रुद्रलोकमवाप्तवान् ।।

भृगोरायतनं तस्य पश्चिमेऽतीव पुण्यदम् ।। ७२ ।।

विधिपूर्वं तदभ्यर्च्य प्राप्नुयाच्छिवमंदिरम् ।।

शुभेश्वरश्च तद्याम्यां महाशुभफलप्रदः ।। ७६ ।।

तत्र सिद्धः पाशुपतः कपिलर्षिर्महातपाः ।।

तत्रास्ति हि गुहा रम्या कपिलेश्वर संनिधौ ।। ७७ ।।

तां गुहां प्रविशेद्यो वै न स गर्भे विशेत्क्वचित् ।।

तत्र यज्ञोदकूपोस्ति वाजिमेधफलप्रदः ।। ७८ ।।

ओंकार एष एवासावादिवर्णमयात्मकः ।।

मत्स्योदर्युत्तरे कूले नादेशस्त्वहमेव च ।। ७९ ।।

नादेशः परमं ब्रह्म नादेशः परमा गतिः ।।

नादेशः परमं स्थानं दुःखसंसारमोचनम् ।। 4.2.97.८० ।।

कदाचित्तस्य देवस्य दर्शने याति जाह्नवी ।।
मत्स्योदरी सा कथिता स्नानं पुण्यैरवाप्यते ।। ८१ ।।
मत्स्योदरी यदा गंगा पश्चिमे कपिलेश्वरम् ।।
समायाति महादेवि तदा योगः सुदुर्लभः ।। ८२ ।।
उद्दालकेश्वरं लिंगमुदीच्यां कपिलेश्वरात् ।।
तद्दर्शनेन संसिद्धिः परा सर्वैरवाप्यते ।। ८३ ।।
तदुत्तरे बाष्कुलीशं लिंगं सर्वार्थसिद्धिदम् ।।
बाष्कुलीशाद्दक्षिणतो लिंगं वै कौस्तुभेश्वरम् ।। ८४ ।।
तस्यार्चनेन रत्नौघैर्न वियुज्येत कर्हिचित् ।।
शंकुकर्णेश्वरं लिंगं कौस्तुभेश्वरदक्षिणे ।। ।। ८५ ।।
संसेव्य परमं ज्ञानं लभेदद्यापि साधकः ।।
अघोरेशो गुहाद्वारि कूपस्तस्योत्तरे शुभः ।। ८६ ।।
अघोरोद इति ख्यातो वाजिमेधफलप्रदः ।।
गर्गेशो दमनेशश्च तत्र लिंगद्वयं शुभम् ।। ८७ ।।
अनेनैवेह देहेन यत्र तौ सिद्धिमापतुः ।।
तल्लिंगयोः समर्चातः सिद्धिर्भवति वांछिता ।। ८८ ।।
तद्दक्षिणे महाकुंडं रुद्रावास इति स्मृतम् ।।
तत्र रुद्रेशमभ्यर्च्य कोटिरुद्रफलं लभेत् ।। ८९ ।।
चतुर्दशी यदापर्णे रुद्रनक्षत्र संयुता ।।
तदा पुण्यतमः कालस्तस्मिन्कुंडे महाफलः ।। 4.2.97.९० ।।
रुद्रकुंडे नरः स्नात्वा दृष्ट्वा रुद्रेश्वरं विभुम् ।।
यत्रतत्र मृतो वापि रुद्रलोकमवाप्नुयात् ।। ९१ ।।
रुद्रस्य नैर्ऋते भागे लिंगं तत्र महालयम् ।।
तदग्रे पितृकूपोस्ति पितॄणामालयः परः ।।९२।।
तत्र श्राद्धं नरः कृत्वा पिंडान्कूपे परिक्षिपेत् ।।
एकविंशकुलोपेतः श्राद्धकृद्रुद्रलोकभाक् ।। ९३ ।।
तत्र वैतरणी नाम दीर्घिका पश्चिमानना ।।
तस्यां स्नातो नरो देवि नरकं नैव गच्छति ।। ९४ ।।

बृहस्पतीश्वरं लिंगं रुद्रकुंडाच्च पश्चिमे ।।

गुरुपुष्यसमायोगे दृष्ट्वा दिव्यां लभेद्गिरम् ।। ९५ ।।

रुद्रावासाद्दक्षिणतः कामेशं लिंगमुत्तमम् ।।

तद्दक्षिणे महाकुंडं स्नानाच्चिंतित कामदम् ।। ९६ ।।

चैत्रशुक्ल त्रयोदश्यां तत्र यात्रा च कामदा ।।

नलकूबर लिंगं च प्राच्यां कामेश्वराच्छुभम् ।।९७।।

तदग्रे पावनः कूपो धनधान्य समृद्धिदः ।।

नलकूबरपूर्वेण सूर्याचंद्रमसेश्वरौ ।। ९८ ।।

अज्ञानध्वांतपटलीं हरतस्तौ समर्चितौ ।।

तद्दक्षिणेध्वकेशश्च दृष्टो मोहविनाशनः ।। ।।९९।।

तत्र सिद्धीश्वरं लिंगं महासिद्धिसमर्पकम् ।।

तत्रैव मंडलेशश्च मंडलेशपदप्रदः ।। 4.2.97.१०० ।।

कामकुंडस्य पूर्वेण च्यवनेशः समृद्धिदः ।।

तत्रैव सनकेशश्च राजसूयफलप्रदः ।। १ ।।

सनत्कुमार लिंगं च तत्पश्चाद्योगसिद्धिकृत् ।।

तदुत्तरे सनंदेशो महाज्ञान समर्थकः ।।२।।

तद्याम्यामाहुतीशश्च दृष्टो होमफलप्रदः ।।

तद्याम्यां पुण्यजनकं लिंगं पंचशिखेश्वरम् ।। ३ ।।

मार्कंडेय ह्रदस्तस्य पश्चिमे पुण्यवर्धनः ।।

तस्मिन्ह्रदे नरः स्नात्वा किं भूयः परिशोचति ।। ४।।

तत्र स्नानं च दानं च भवेदक्षय पुण्यदम् ।।

तदुत्तरे च कुंडेशः सर्वसिद्धैर्नमस्कृतः ।।५।।

दीक्षां पाशुपतीं लब्ध्वा द्वादशाब्देन यत्फलम् ।।

तत्फलं लभते विप्र मर्त्यः कुंडेश दर्शनात् ।। ।। ६ ।।

मार्कंडेय ह्रदात्पूर्वं शांडिल्येशः सुपुण्यदः ।।

तत्पश्चिमे च चंडेशश्चंडांशु ग्रहणाघहृत् ।। ७ ।।

दक्षिणे च कपालेशात्कुंडं श्रीकंठसंज्ञितम् ।।

तत्र कुंडे नरः स्नात्वा दाता स्याच्छ्रीप्रभावतः ।। ८ ।।

महालक्ष्मीश्वरं लिंगं तस्य कुंडस्य सन्निधौ ।।

महालक्ष्मीं समभ्यर्च्य स्नातस्तत्कुंडवारिषु ।।९।।

चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्च वीज्यते ।।

यदा मत्स्योदरीं यांति स्वर्गलोकाद्दिवौकसः ।।

तदा तेनैव मार्गेण यांति स्त्रीभिर्वृताः सुखम् ।।4.2.97.११०।।

स्वर्गद्वारमतः ख्यातं तत्स्थानं मुनिसत्तम ।।

तत्कुंड दक्षिणेभागे लिंगं ब्रह्मपदप्रदम् ।। ११ ।।

गायत्रीश्वर सावित्रीश्वरौ पूज्यौ प्रयत्नतः ।।

मत्स्योदर्यास्तटे रम्ये लिंगं सत्यवतीश्वरम् ।।१२।।

तयोः पूर्वेण संपूज्य तपःश्री परिवर्धनम् ।।

उग्रेश्वरं महालिंगं लक्ष्मीशात्पूर्वदिक्स्थितम् ।।१३।।

जातिस्मरो भवेन्मर्त्यस्तल्लिंगस्य समर्चनात् ।।

तद्दक्षिणे चोग्रकुंडं स्नानात्कनखलाधिकम् ।। १४ ।।

करवीरेश्वरं लिंगंतस्य कुंडंस्य पश्चिमे ।।

तस्य दर्शनतः पुंसां जायते रोगसंक्षयः ।। १५ ।।

तद्वाव्ये मरीचीशं कुंडं चाघौघनाशनम् ।।

तत्पश्चाच्चेंद्रकुंडं लिंगं चैंद्रेश्वरं मुने ।। १६ ।।

इंद्रेशाद्दक्षिणेभागे शुभा कर्कोटवापिका ।।

तत्र वापीजले स्नात्वा दृष्ट्वा कर्कोटकेश्वरम् ।। ।। १७ ।।

नागानामाधिपत्यं तु जायते नात्र संशयः ।।

तत्पश्चाद्दमिचंडेशो ब्रह्महत्याहरो हरः ।। १८।।

तद्दक्षिणे महाकुंडं रुद्रलोकफलप्रदम् ।।

तत्पश्चिमे महालिंगमग्नीश इति विश्रुतम् ।। १९ ।।

आग्नेयं नाम कुंडं च तत्पूर्वेग्निसलोकदम् ।।

आग्नेयेश्वरतः प्राच्यां कुंडं तद्दक्षिणे शुभम्।। 4.2.97.१२० ।।

तत्र कुंडे नरः स्नात्वा स्वर्गे वसति पूर्वजैः ।।

तत्प्राच्यां बालचंद्रेशश्चंद्रलोकगतिप्रदः ।। २१ ।।

परितो बालचंद्रेशं गणलिंगान्यनेकशः ।।

विलोक्य तानि लिंगानि गाणपत्यं पदं लभेत् ।।२२ ।।

बालचंद्र समीपे तु कूपः पितृगणप्रियः ।।

तत्र श्राद्धप्रदः स्नात्वा पितॄन्सप्ताऽत्र तारयेत् ।। २३ ।।

तदंधोः पूर्वतो लिंगं पुण्यं विश्वेश्वराह्वयम्।।

विश्वेश्वरस्य पूर्वेण वृद्धकालेश्वरो हरः ।। २४ ।।

कालोदो नाम कूपोस्ति तदग्रे सर्वरोगहृत् ।।

यैस्तु तत्रोदकं पीतं स्त्रीभिः पुंभिः स्वकर्मभिः ।। २५ ।।

न तेषां परिवर्तोत्र कल्पकोटिशतैरपि ।।

तत्पीत्वा जन्मबंधोत्थाद्भयान्मुच्येत मानवः ।। २६ ।।

तत्र कूपे तु यद्दत्तं दानं शिवरतात्मनाम् ।।

संवर्तेपि न तस्यास्ति नाशः कलशसंभव ।।२७।।

खंडस्फुटितसंस्कारं तत्र कुर्वंति ये नराः ।।

ते रुद्रलोकमासाद्य मोदंते सुखिनः सदा ।। २८ ।।

कालेशाद्दक्षिणे भागे मृत्य्वीशस्त्वपमृत्युहृत् ।।

लिंगं दक्षेश्वराह्वं च ततः कूपादुदग्दिशि ।। २९ ।।

अपराधसहस्रं तु नश्येत्तस्य समर्चनात् ।। 4.2.97.१३० ।।

महाकालेश लिंगं च दक्षेशात्पूर्वतो महत् ।।

महाकुंडे नरः स्नात्वा महाकालं तु योर्चयेत् ।।३१।।

अर्चितं तेन वै तत्र जगदेतच्चराचरम् ।।

अंतकेश्वरमालोक्य तद्याम्यां नांतकस्य भीः ।। ३२ ।।

हस्तिपालेश्वरं लिंगं तस्य दक्षिणतो मुने।।

तस्य पूजनतो याति पुण्यं वै हस्तिदानजम् ।। ३३ ।।

तत्रैरावतकुंडं च लिंगमैरावतेश्वरम् ।।

तल्लिंगमर्चयन्मर्त्यो धनधान्यसमृद्धिभाक् ।। ३४ ।।

तद्दक्षिणे श्रेयसे च लिंगं स्यान्मालतीश्वरम् ।।

हस्तीश्वरादुत्तरे तु जयंतेशो जयप्रदः ।। ३५ ।।

बंदीश्वरो महाकाल कुंडादुत्तरतः शुभः ।।

बंदिकुंडं च विख्यातं वाराणस्यां महाघहृत्।। ३६।।

तत्र स्नानेन दानेन श्राद्धेनाक्षयमश्नुते ।।
धन्वंतरीश्वरं लिंगं कुंडं तन्नाम चैव हि ।। ३७ ।।
तस्य लिंगस्य नामान्यत्कुंडनामान्यदेव हि ।।
तुंगेश्वरं लिंग नाम कुंडं वैद्येश्वराभिधम् ।। ३८ ।।
सुधामय्यो महौषध्यः क्षिप्तास्तत्र महाधियः ।।
तत्कुंडस्नानतस्तस्मात्तल्लिंग परिवीक्षणात् ।।
नश्यंति व्याधयः सर्वे सह पापैः सुदारुणैः ।। ३९ ।।
तदुत्तरे हलीशेशः सर्वव्याधिनिपूदनः ।।
शिवेश्वरः शिवकरस्तुंगनाम्नश्च दक्षिणे ।। 4.2.97.१४० ।।
जमदग्नीश्वरं लिंगं शिवेशाद्दक्षिणे शुभम् ।।
तत्पश्चिमे भैरवेशः कूपस्तस्योत्तरे शुभः ।।४१ ।।
तदुदस्पर्शमात्रेण सर्वयज्ञफलं लभेत् ।।
तत्कूपपश्चिमे भागे सुकेशो योगसिद्धिदः ।। ४२ ।।
तन्नैर्ऋत्यां च व्यासेशः कूपश्च विमलोदकः ।।
व्यासकूपे नरः स्नात्वा तर्पयित्वा सुरान्पितॄन् ।। ४३ ।।
अक्षयं लभते लोकं यत्रकुत्राभिकांक्षितम् ।।
व्यासतीर्थात्पश्चिमतो घंटाकर्णो ह्रदो महान् ।। ४४ ।।
घंटाकर्णह्रदे स्नात्वा व्यासंश परिदर्शनात् ।।
यत्रतत्र मृतो वापि वाराणस्यां मृतो भवेत् ।। ४५ ।।
घंटाकर्ण समीपे तु पंचचूडाप्सरः सरः ।।
पंचचूडाजले स्नात्वा दृष्ट्वा देवं तमीश्वरम् ।। ४६।।
स्वर्गलोकं नरो याति पंचचूडाप्रियो भवेत् ।।
गौरीकूपस्ततोवाच्यां सर्वजाड्यविनाशनः ।। ४७ ।।
पंचचूडोत्तरे भागे तीर्थं चाशोकसंज्ञितम्।।
मंदाकिनी महातीर्थं तदुदीच्यां महाघहृत् ।। ४८ ।।
स्वर्गलोकेपि सा पुण्या किं पुनर्मानवे मुने ।।
तदुत्तरे मध्यमेशो मध्ये क्षेत्रं स्वपित्यहो ।।४९।।
तत्र जागरणं कृत्वाऽशोकाष्टम्यां मधौ नरः ।।

न जातु शोकं लभते सदानंदमयो भवेत्।।4.2.97.१५०।।
मुक्तिक्षेत्रप्रमाणं च क्रोशं क्रोशं च सर्वतः।।
आरभ्य लिंगादस्माच्च पुण्यदान्मध्यमेश्वरात् ।।५१।।
एतदेव सदा प्राहुः सर्वे वै प्रपितामहाः ।।
कश्चिदस्मत्कुले जातो मंदाकिन्या जलाप्लुतः ।।५२।।
भोजयेत्प्रयतो विप्रान्यतीन्पाशुपतानपि ।।
मदाकिन्यां नरः स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ।। ५३ ।।
एकविंशत्कुलोपेतो रुद्रलोके वसेच्चिरम् ।।
मध्यमेशादवाच्यां च विश्वेदेवेश्वरः शुभः ।।५४।।
तदर्चनादर्चिताः स्युर्विश्वेदेवास्त्रयोदश ।।
तत्पूर्वे वीरभद्रेशो महावीरपदप्रदः ।।५५।।
भद्रदा भद्रकाली च तस्य दक्षिणतः शुभा ।।
भद्राकाल ह्रदो नाम तत्रातीव शुभप्रदः ।।५६।।
आपस्तंबेश्वरं लिंगं तत्प्राच्यां ज्ञानदं परम् ।।
तदुत्तरे पुण्यकूपस्तत्पश्चाच्छौनको ह्रदः ।। ५७ ।।
ह्रदपश्चिमतो लिंगं शौनकेशं सुधीप्रदम् ।।
ह्रदे तत्र नरः स्नात्वा दृष्ट्वा वै शौनकेश्वरम् ।। ५८ ।।
ज्ञानं तत्संलभेद्दिव्यं येन मृत्युं तरत्यसौ ।।
तद्दक्षिणे जंबुकेशस्तिर्यग्योनि निवारकः ।।५९।।
तदुत्तरे मतंगेशो गानविद्याप्रबोधकः ।।
मतंगेशस्य वायव्ये नानालिंगानि सर्वतः ।।4.2.97.१६०।।
मुनिभिः स्थापितानीह सर्वसिद्धिप्रदानि च ।।
ब्रह्मरातेश्वरं लिंगं मतंगेशाच्च दक्षिणे ।।६१।।
तल्लिंगदर्शनादायुर्नांतराच्छिद्यते क्वचित् ।।
तत्राज्यपेश्वरं लिंगं पितृलिंगान्यनेकशः ।।
तल्लिंगसेवया सर्वे तुष्यंति प्रपितामहाः ।। ६२ ।।
तद्दक्षिणे सिद्धकूपः सिद्धाः संति सहस्रशः।।
वायुरूपास्तु ये सिद्धा ये सिद्धा भानुरश्मिगाः ।। ६३ ।।

तैः स्थापितं तु यल्लिंगं तत्सिद्धेश्वरमीरितम् ।।
तस्य संदर्शनादेव सर्वाः स्युः सिद्धयोऽमलाः ।। ६४ ।।
तत्पश्चिमे सिद्धवापी पीता स्नाता च सिद्धिदा ।।
प्राच्यां च सिद्धकूपाद्वै लिंगं व्याघ्रेश्वराभिधम् ।। ६५ ।।
तल्लिंगदर्शनान्नृणां न भयं व्याघ्रचोरजम् ।।
ज्येष्ठेश्वरं च तद्याम्यां ज्येष्ठस्थानेति सिद्धिदम् ।।६६।।
तद्दक्षिणे मुदां धाम लिंगं प्रहसितेश्वरम् ।।
तदुत्तरे निवासेश काशीवासफलप्रदः ।। ६७ ।।
चतुःसमुद्रकूपोस्ति तत्राब्धिस्नान पुण्यदः ।।
ज्येष्ठा देवी तु तत्रास्ति नता ज्येष्ठपदप्रदा ।। ६८ ।।
अवाच्यां व्याघ्रलिंगाच्च लिंगं चंडीश्वराभिधम् ।।
तदुत्तरे दंडखातं सरः पितृमुदावहम् ।। ६९ ।।
ग्रहणानंतरे स्नानं दंडखातेति पुण्यदम् ।।
जैगीषव्य गुहा तत्र तत्र लिंगं तदाह्वयम्।।4.2.97.१७०।।
त्रिरात्रोपोषितस्तत्र ज्ञानं लभ्येत निर्मलम् ।।
महापुण्यप्रदं लिंगं तत्पश्चाद्देवलेश्वरम् ।। ७१ ।।
शतकालस्तत्समीपे शतं कालानुमापतिः ।।
तल्लिंगाविर्भवे काश्यां कालयामास कुंभज ।। ७२ ।।
तल्लिंगदशर्नादायुः शतवर्षाण्यखंडितम् ।।
शातातपेशस्तद्याम्यां महाजपफलप्रदः ।। ७३ ।।
तत्पश्चिमे हेतुकेशो हेतुभूतो महाफले ।।
तद्दक्षिणेक्षपादेशो महाज्ञानप्रर्वतकः ।। ७४ ।।
तदग्रे च कणादेशस्तत्र पुण्योदकः प्रहिः ।।
स्नात्वा काणादकूपे यः कणादेशं समर्चयेत् ।। ७५।।
न धनेन न धान्येन त्यज्यते स कदाचन ।।
तस्य दक्षिणतो दृश्यो भूतीशो भूतिकृत्सताम् ।।७६।।
तत्पश्चिमेऽघसंहर्तृ आषाढीश्वर संज्ञितम् ।।
दुर्वासेशश्च तत्पूर्वे सर्वकामसमृद्धिकृत् ।।७७ ।।

तद्याम्यां भारभूतेशः पापभारापहारकः ।।

व्यासेश्वरस्य पूर्वेण द्वौ शंखलिखितेश्वरौ ।।

तौ दृश्यौ यत्नतः काश्यां महाज्ञान प्रवर्तकौ ।। ७८।।

यत्समाप्याप्यते पुण्यं निष्ठा पाशुपतव्रतम् ।।

तदाप्यतेत्र विश्वेश सकृदीक्षणतः क्षणात् ।।७९।।

तदीशानेवधूतेशो योगज्ञानप्रवर्तकः ।।

तीर्थं चैवावधूतेशं सर्वकल्मषनाशकृत् ।।4.2.97.१८०।।

अवधूतेश्वरात्पूर्वे लिंगं पशुपतीश्वरम् ।।

तल्लिंगसेवया पुंसां पशुपाशविमोक्षणम् ।।८१।।

तद्दक्षिणे गोभिलेशो महाभिलषितप्रदः।

जीमूतवाहनेशश्च तत्पश्चाल्लिंगमुत्तमम् ।। ८२ ।।

विद्याधरपदप्राप्तिस्तल्लिंगपरिसेवनात्।।

मयूखार्कः पंचनदे गभस्तीशश्च तत्र वै ।। ८३ ।।

दधिकल्पह्रदो नाम तदुदीच्यां महाप्रहिः ।।

दुर्लभं तत्प्रहिस्नानं दुर्लभं च तदीक्षणम् ।। ८४ ।।

गभस्तीशोत्तरे भागे दधिकल्पेश्वरो हरः ।।

नरस्तमाशु संवीक्ष्य कल्पं त्र्यक्षपुरे वसेत् ।। ८५ ।।

गभस्तीशाद्दक्षिणे तु मंगलां मंगलालयाम् ।।

उद्दिश्य मंगलां गौरीं भोजयेद्द्विजदंपती ।। ८६ ।।

अलंकृत्य यथाशक्ति तत्पुण्यांतो न कर्हिचित् ।।

क्षितिप्रदक्षिणफला मंगलैका प्रदक्षिणा ।। ८७ ।।

वदनप्रेक्षणादेवी मुखप्रेक्षेश्वरोत्तरे ।।

मंगलायाः समीपे तु सर्वसिद्धिकरी शिवा ।। ८८ ।।

लिंगे त्वष्ट्रीशवृत्तेशौ मुखप्रेक्षोत्तरे शुभे ।।

सहेमभूमिदानस्य फलं दर्शनतस्तयोः ।।८९।।

तदुत्तरे चर्चिकाया देव्याः संदर्शनं शुभम् ।।

रेवतेश्वर लिंगं च चर्चिकाग्रेण शांतिकृत् ।। 4.2.97.१९० ।।

महाशुभायतस्याग्रे लिंगं पंचनदेश्वरम् ।।

मंगलोदो महाकूपो मंगला पश्चिमे शुभः ।। ९१ ।।

उपमन्योर्महालिंगं मंगला पश्चिमे शुभम् ।।

व्याघ्रपादेश्वरं लिंगं तत्पश्चाद्व्याघ्रभीतिहृत् ।। ९२ ।।

नैर्ऋत्यां च गभस्तीशाच्छशांकेशोघसंघहृत् ।।

तत्पश्चिमे चैत्ररथं लिंगं दिव्यगतिप्रदम् ।। ९३ ।।

रेवतेशात्पश्चिमतो जैमिनीशो महाघहृत् ।।

तत्र लिंगान्यनेकानि ऋषीणामृषिसत्तम ।। ९४ ।।

जैमिनीशाच्च वायव्ये लिंगं वै रावणेश्वरम् ।।

न तद्दशर्नतः पुंसां राक्षसानां महाभयम् ।। ९५ ।।

तद्दक्षिणे वराहेशो मांडव्येशस्ततो यमे ।।

तद्दक्षिणे प्रचंडेशो योगेशो दक्षिणे ततः ।। ९६ ।।

तद्दक्षिणे च धातेशः सोमेशश्च तदग्रतः ।।

तन्नैर्ऋत्यां कनकेशो महाकनकदः सताम् ।। ९७ ।।

तदुत्तरे पांडवानां पंचलिंगानि सन्मुदे ।।

संवर्तेशस्तदग्रे च श्वेतेशस्तस्य पश्चिमे ।। ९८ ।।

तत्पश्चात्कलशेशश्च लिंगं कालाभयप्रदम् ।।

कालेन पाशिते श्वेते मुने कुंभात्समुत्थितम् ।।९९।।

चित्रगुप्तेश्वरं लिंगं तदुदीच्यामघापहम् ।।

चित्रगुप्तेश्वरात्पश्चाद्यो दृढेशो महाफलः ।। 4.2.97.२०० ।।

कलशेशादवाच्यां च ग्रहेशो लिंगमुत्तमम् ।।

ग्रहबाधां शमयति तल्लिंग परिलोकनम् ।। १ ।।

चित्रगुप्तेश्वरात्पश्चाद्यदृच्छेशो महाफलः ।।

उतथ्यवामदेवेशं लिंगं याम्यां ग्रहेश्वरात् ।।२।।

कंबलाश्वतरेशौ च तस्य दक्षिणतः शुभे ।।

तत्रैव निर्मलं लिंगं नलकूबरपूजितम् ।। ३ ।।

तद्याम्यां मणिकर्णीशं तदुदक्पलितेश्वरम् ।।

जराहरं च तत्रैव तत्पश्चात्पापनाशनम् ।।४।।

तत्पश्चिमे निर्जरेशस्तन्नैर्ऋत्यां पितामहः ।।

पितामहस्रोतिका च तत्र श्राद्धं महाफलम् ।।५।।

तद्याम्यां वरुणेशश्च बाणेशस्तस्य दक्षिणे।

पितामहस्रोतिकायां कूश्मांडेशस्तु सिद्धिकृत् ।। ६ ।।

तत्पूर्वतो राक्षसेशो गंगेशस्तस्य दक्षिणे ।।

तदुत्तरे निम्नगेशाः संति लिंगान्यनेकशः ।। ७ ।।

वैवस्वतेश्वरस्तत्र यमलोकनिवारकः ।।

तत्पश्चाददितीशश्च चक्रेशस्तस्य चाग्रतः ।। ८ ।।

तदग्रे कालकेशाख्यो दृष्टप्रत्ययकृत्परः ।।

छाया संदृश्यते तत्र निष्पापस्तदवेक्षणात् ।। ९ ।।

तदग्रे तारकेशश्च तदग्रे स्वर्णभारदः।।

तदुत्तरे मरुतेशः शक्रेशश्च तदग्रतः ।। 4.2.97.२१० ।।

तद्दक्षिणे च रंभेशस्तत्रैव च शशीश्वरः ।।

तदुत्तरे लोकपेशास्तत्र लिंगान्यनेकशः ।। ११ ।।

नागगंधर्वयक्षाणां किन्नराप्सरसामपि ।।

देवर्षिगणवृदानां नानासिद्धिकराण्यपि ।। १२ ।।

शक्रेशाद्दक्षिणे भागे फाल्गुनेशो महाघहृत् ।।

महापाशुपतेशश्च तद्याम्यां शुभकृत्परः ।। १३ ।।

तत्पश्चिमे समुद्रेश ईशानेशस्तदुत्तरे।।

तत्पूर्वे लांगलीशश्च सर्वसिद्धिसमर्पकः ।। १४ ।।

रागद्वेषविनिर्मुक्ताः सिद्धिं यांति च पूजकाः ।।

तेषां मोक्षो मया ख्यातो न तु ते देवि मानवाः ।। १५ ।।

मधुपिंगश्वेतकेतू लांगलीशे तपस्विनौ ।।

अनेनैव शरीरेण जग्मतुः सिद्धिमुत्तमाम् ।। १६ ।।

तत्रैव नकुलीशश्च कपिलेशश्च तत्र वै।।

रहस्यं परमं चोभौ मम व्रत निषेविणौ।। १७ ।।

तत्सन्निधौ प्रीतिकेशस्तत्र प्रीतिर्मम प्रिये ।।

तत्रोपवासादेकस्मात्फलमब्दशताधिकम् ।। १८ ।।

एकं जागरणं कृत्वा प्रीतिकेश उपोषितः ।।

गणत्वपदवी तस्य निश्चिता मम पर्वणि ।। १९ ।।

देवस्य दक्षिणे भागे तत्र वापी शुभोदका ।।

तदंबुप्राशनं नृणामपुनर्भवहेतवे ।। 4.2.97.२२० ।।

तज्जलात्पश्चिमे भागे दंडपाणिः सदावति ।।

तत्प्राच्यवाच्युत्तरस्यां तारः कालः शिलादजः।।२१।।

लिंगत्रयं हृदब्जेयच्छ्रद्धयापी तमर्पयेत् ।।

यैस्तत्र तज्जलं पीतं कृतार्थास्ते नरोत्तमाः ।।२२।।

अविमुक्तसमीपेच्यों मोक्षेशो मोक्षबुद्धिदः ।।

करुणेशो दयाधाम तदुदीच्यां समर्चयेत् ।।२३।।

स्वर्णाक्षेशस्तु तत्प्राच्यां ज्ञानदस्तस्य चोत्तरे ।।

सौभाग्यगौरी संपूज्या बहुसौभाग्यसंपदे ।।२४।।

विश्वेशाद्दक्षिणेभागे निकुंभेशः प्रयत्नतः ।।

क्षेत्रक्षेमकरः पूज्यस्तत्पश्चाद्विघ्ननायकः ।। २५ ।।

सर्वविघ्नच्छिदभ्यर्च्यश्चतुर्थ्यां तु विशेषतः ।।

विरूपाक्षो निकुंभेशाद्वह्नौ पूज्यः सुसिद्धिदः ।। २६ ।।

तद्दक्षिणे च शुक्रेशः पुत्रपौत्रप्रवर्धनः ।।

तदुदीच्यां महालिंगं देवयानीश्वराभिधम्।। २७ ।।

शुक्रेशादग्रतः पूज्यः कचेश इति संज्ञितः ।।

शुक्रकूपमुपस्पृश्य हयमेधफलं लभेत् ।। २८ ।।

भवानीशौ नमस्यौ च शुक्रेशात्पश्चिमे शुभौ ।।

भक्तपोतप्रदौ तौ तु निजभक्तस्य सर्वदा ।। २९ ।।

अलर्केशः समभ्यर्च्यः शुक्रेशात्पूर्वदिक्स्थितः ।।

मदालसेश्वरस्तत्र तत्पूर्वे सर्वविघ्नहृत् ।। 4.2.97.२३० ।।

गणेश्वरेश्वरं लिंगं सर्वसिद्धिकरं परम् ।।

हत्वा लंकेश्वरं विप्र रघुणाथ प्रतिष्ठितम् ।।३१।।

तल्लिंगस्पर्शनादाशु ब्रह्महापि विशुध्यति ।।

महापुण्यप्रदं चान्यत्तत्राच्यं त्रिपुरांतकम् ।। ३२ ।।

दत्तात्रेयेश्वरं लिंगं तस्य पश्चिमतः शुभम् ।।

तद्याम्यां हरिकेशेशो गोकर्णेशस्ततः परम् ।। ३३ ।।

सरस्तदग्रे पापघ्नं तत्पश्चाच्च ध्रुवेश्वरः ।।

तदग्रे धुवकुंडं च पितृप्रीतिकरं परम् ।। ३४ ।।

तदुत्तरपिशाचेशः पैशाच्य पदहारकः ।।

पित्रीशस्तद्यमदिशि पितृकुंडं तदग्रतः ।। ३५ ।।

तत्र श्राद्धकृतां पुंसां तुष्येयुः प्रपितामहाः।।

अग्रे ध्रुवेशात्तारेशो वैद्यनाथः स एव हि ।। ३६ ।।

तन्नैर्ऋत्यां मनोलिंगं वंशवृद्धिकरं परम् ।।

प्रियव्रतेश्वरं लिंगं वैद्यनाथपुरोगतम्।। ३७ ।।

तद्याम्यां मुचुकुंदेशस्तत्पार्श्वे गौतमेश्वरः ।।

तत्पश्चिमेन भद्रेशतद्याम्यामृष्यशृंगिणः ।। ३८ ।।

ब्रह्मेशस्तत्पुरस्ताच्च पर्जन्येशस्तदीशगः ।।

तत्प्राच्यां नहुषेशश्च विशालाक्षी च तत्पुरः ।। ३९ ।।

विशालाक्षीश्वरं लिंगं तत्रैव क्षेत्रवस्तिदम् ।।

जरासंधेश्वरं लिंगं तद्याम्यां ज्वरनाशनम् ।। 4.2.97.२४० ।।

तत्पुरस्ताद्धिरण्याक्षलिंगं पूज्यं हिरण्यदम् ।।

तत्पश्चिमे गयाधीशस्तत्प्रतीच्यां भगीरथः ।। ४१ ।।

तदग्रे च दिलीपेशो ब्रह्मेशात्पश्चिमे मुने ।।

तत्र लिंगं सकुंडं च स्नातुरिष्टफलप्रदम् ।। ४२ ।।

तत्र विश्वावसोर्लिंगं मुंडेशस्तत्र पूर्वतः ।।

तद्दक्षिणे विधीशश्च तद्याम्यां वाजिमेधकः ।।४३ ।।

दशाश्वमेधिके स्नात्वा दृष्ट्वा तल्लिंगमुत्तमम् ।।

दशानामश्वमेधानां फलं प्राप्नोति मानवः ।। ४४ ।।

तदुत्तरे मातृतीर्थं स्नातुर्जन्मभयापहृत् ।।

तत्र स्नानं तु यकुर्यान्नारी वा पुरुषोपि वा ।। ४५ ।।

ईप्सितं फलमाप्नोति मातृणां च प्रसादतः ।।

दक्षिणे तव कुंडाच्च पुष्पदंतेश्वरः परः ।। ४६ ।।

तदग्निदिशि देवर्षि गण लिंगान्यनेकशः ।।

पुष्पदंताद्दक्षिणतः सिद्धीशः परसिद्धिदः ।। ४७ ।।

पंचोपचारपूजातः स्वप्ने सिद्धिं परां दिशेत् ।।

राज्यप्राप्तिर्भवेत्पुंसां हरिश्चंद्रेशसेवया ।। ४८ ।।

तत्पश्चिमे नैर्ऋतेशोंगिरसेशस्ततो यमे ।।

तद्दक्षिणे च क्षेमेशश्चित्रांगेशस्ततो यमे ।। ४९ ।।

तद्दक्षिणे च केदारो रुद्रानुचरताप्रदः ।।

चंद्रसूर्यान्वयैर्भूपैः केदाराद्दक्षिणापथे ।। 4.2.97.२५० ।।

प्रतिष्ठितानि लिंगानि शतशोथ सहस्रशः ।।

लोलार्काद्दक्षिणाशायां सर्वाशापूरकोर्चितः ।। ५१ ।।

करंधमेश्वरं लिंगं तत्प्रतीच्यां महाफलम् ।।

तत्पश्चिमे महादुर्गा महादुर्गप्रभंजनी ।। ५२ ।।

शुष्केश्वरं च तद्याम्यां शुष्कया सरितार्चितम् ।।

जनकेशस्तत्प्रतीच्यां शंकुकर्णस्तदुत्तरे ।। ५३ ।।

महासिद्धीश्वरं लिंगं तत्प्राच्यां सर्वसिद्धिदम् ।।

सिद्धकुंडे नरः स्नात्वा दृष्ट्वा सिद्धेश्वरं महत् ।। ५४ ।।

सर्वासामेव सिद्धीनां पारं गच्छति मानवः ।।

शंकुकर्णेश वायव्ये लिंगं वाडव्यसंज्ञितम् ।। ५५ ।।

तदग्रे च विभांडेशः कहोलेशस्तदुत्तरे ।।

तत्र द्वारेश्वरं लिंगं देवी द्वारेश्वरी शुभा ।। ५६ ।।

तत्पूजनाद्भवेत्सिद्धिरानंदारण्य वस्तिदा ।।

रक्षकाश्च गणास्तत्र नानारूपायुधा मुने ।। ५७ ।।

तत्रैव हरिदीशं च लिंगं कात्यायनं ततः ।।

तत्पार्श्वे जांगलेशश्च तत्पश्चान्मुकुटेश्वरः ।। ५८ ।।

तत्रैव कुंडं विमलं सर्वयात्राफलप्रदम् ।।

स्नात्वा मुकुटकुंडे च दृष्ट्वा वै मुकुटेश्वरम् ।। ५९ ।।

यात्रया सर्व लिंगानां यत्फलं तदवाप्यते ।।

तपसश्चापि योगस्य सिद्धिदा साऽवनीपरा ।।4.2.97.२६०।।

मुने शतं सहस्राणि तत्र लिंगानि सिद्धये ।।

एका दिगुत्तरा देवि वाराणस्यां प्रिया मम ।। ६१ ।।

तत्रापि पंचायतने रतिर्मे नितरां प्रिये ।।

उत्पत्तिस्थिति कालेपि तत्राहं सर्वदा स्थितः ।। ६२ ।।

एवं यस्तु विजानाति न स पापैः प्रलिप्यते ।।

सत्यं सत्यं पुनः सत्यं त्रिसत्यं नान्यतः प्रिये ।। ६३ ।।

शीघ्रं तत्रैव गंतव्यं यदीच्छेन्मामकं पदम् ।।

उद्देशमात्रं लिगानि कथितानि मया मुने ।। ६४ ।।

द्विस्त्रिः कृत्वः स्थापितानि भक्त्या लिंगानि कानिचित् ।।

न तानि पुनरुक्तानि श्रद्धयाचर्यानि सर्वतः ।। ६५ ।।

एतानि यानि लिंगानि यानि कुंडानि येंऽधवः ।।

या वाप्यस्तानि सर्वाणि श्रद्धेयानि मनीषिभिः ।।६६।।

एतेषां दर्शनात्स्नानात्फलमत्रोत्तरोत्तरम्।।

अत्रत्यानां च लिंगानां कूपानां सरसामपि ।।६७।।

वापीनां चापि मूर्तीनां कः संख्यातुं प्रभुर्भवेत् ।।

आनंदकाननस्थानि तृणान्यपि परं वरम् ।।६८।।

दिवौकसोपि नान्यत्र यत्पुनर्जन्मभाजनम्।।

सर्वलिंगमयी काशी सर्वतीर्थैकजन्मभूः ।।६९।।

स्वर्गापवर्गयोर्दात्री दृष्टा देहांतसेविता ।।

मम प्रियतमा देवि त्वमेव तपसो बलात् ।। 4.2.97.२७० ।।

स्वभावतस्त्वियं काशी सुखविश्रामभूर्मम ।।

ये काश्यानाम गृह्णंति येनुमोदंत एव हि ।। ७१ ।।

ते मे शाखविशाखाभाः स्कंदनंदिगजास्यवत् ।।

त एव भक्ता मे देवि त एव मम सेवकाः ।।७२।।

मुमुक्षवस्त एवात्र येचानंदवनौकसः ।।

तपस्तप्तं महत्तैस्तु कृतं तैस्तु महाव्रतम्।। ७३ ।।

तैश्च दत्तं महादानं ये चानंदवनौकसः ।।

ते स्नातसर्वतीर्था वै तेखिलाध्वरदीक्षिताः ।। ७४ ।।

ते चीर्णसर्वधर्माहि ये चानंदवनौकसः ।।

सुरासुरोरगनरा भूमिभारायतेऽखिलाः ।।
वयस्यपीह चरमे येनानंदवनौकसः ।। ७५ ।।
अंत्यजोपि वरः काश्यां नान्यत्र श्रुतिपारगः ।।
संसारपारगः पूर्वस्त्वंत्यश्चांत्यजतोप्यधः ।। ७६ ।।
स एव नूनं सर्वज्ञः स एव ह्यधिकेक्षणः ।।
यः पार्थिवीं तनुं हित्वा काश्यां धत्ते सुधामयीम् ।।७७।।
श्रुत्वाध्यायमिदं पुण्यं सर्वतीर्थरहस्यवत् ।।
काशीदर्शनजं पुण्यं प्राप्नोति नियतं नरः।।७८।।
यः पठेदिममध्यायं प्रातः प्रातर्दिनेदिने ।।
दृष्टानि तेन सर्वाणि तीर्थान्येतानि नान्यथा ।। ७९ ।।
सर्वलिंगमयाध्यायं योऽमुं नित्यं जपेत्सुधीः ।।
न तं यमो न तं दूता नैनमंहोपि बाधते ।। 4.2.97.२८० ।।
ब्रह्मयज्ञफलं तस्य जायते सुकृतात्मनः ।।
यो जपेदमुमध्यायं शुचिस्तद्गतमानसः ।। ८१ ।।
स स्नातः सर्वकुंडेषु सर्ववाप्यंबुपः स च ।।
सर्वलिंगार्चकः सोत्र योऽमुमध्यायमाजपेत्।।८२।।
किमन्यैर्बहुभिः स्तोत्रैरतिस्तोकफलप्रदैः ।।
मत्प्रेमवद्भिरध्यायो जप्तव्योयं महाफल।।८३।।
महादानेषु दत्तेषु यत्फलं प्राप्यतेऽत्र वै ।।
सकृज्जपान्महाध्यायादमुष्मात्तत्समाप्यते ।। ८४ ।।
स्नात्वा सर्वाणि तीर्थानि दृष्ट्वा लिंगान्यनेकशः ।।
यत्फलं लभ्यते मर्त्यैस्तदेतज्जपनाद्ध्रुवम् ।। ८५ ।।
इदमेव तपोत्युग्रमयमेव जपो महान् ।।
काशीलिंगावली नामाध्यायो जप्येत यन्मुने ।। ८६ ।।
मम द्रुहे नास्तिकाय वेदनिंदारताय च।।
न दातव्यो न दातव्यो न दातव्यो जपस्त्वयम् ।। ८७ ।।
अध्यायस्यास्य जपनात्पापं ब्रह्मवधोद्भवम् ।।
अगम्यागमनं चापि तथाभक्षस्यभक्षणम् ।। ८८ ।।

गुरुदाराभिचारोत्थं हेमस्तेयसमुद्भवम् ।।

मातापितृवधाज्जातं गोभ्रूणहननोद्भवम् ।। ८९ ।।

महापापानि पापानि ज्ञाताज्ञातानि भूरिशः ।।

उपपापानि पापानि मनोवाक्कायजान्यपि ।। 4.2.97.२९० ।।

विलयं यांत्यशेषाणि निःसंदेहं ममाज्ञया ।।

पुत्रान्पौत्रान्धनं धान्यं कलत्रं क्षेत्रमेव च।।९१।।

मनःसमीहितं सर्वं स्वर्गं मोक्षसुखान्यपि ।।

जस्वाध्यायमिमं विद्वान्प्राप्स्यत्येव न संशयः।।९२।।

इति यावत्समाख्याति देवो देवीपुरः कथाम् ।।

तावन्नंदीसमागत्य प्रणम्येति व्यजिज्ञपत्।। ९३ ।।

जाता परिसमाप्तिश्च महाप्रासादनिर्मितेः ।।

सज्जीकृतो रथश्चायं ब्रह्माद्या मिलिताः सुराः ।। ९४ ।।

ताक्ष्यर्गः पुंडरीकाक्षो द्वारि तिष्ठति सानुगः ।।

प्रतीक्षमाणोऽवसरं पुरस्कृत्य मुनीश्वरान्।। ९५ ।।

चतुर्दशसु लोकेषु ये ये तिष्ठंति सुव्रताः ।।

ते निशम्याद्यमिलिताः प्रावेशिक महोत्सवम् ।। ९६ ।।

।। स्कंद उवाच ।। ।।

इति नंदिवचः श्रुत्वा देवो देवी समायुतः ।।

दिव्यं रथं समारुह्य निर्जगाम त्रिविष्टपात् ।। २९७ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे क्षेत्रतीर्थवर्णनं नाम सप्तनवतितमोऽध्यायः ।। ९७।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९८



।। व्यास उवाच।। ।।

शृणु सूत महाभाग यथा स्कंदेन भाषितः।।

महामहोत्सवः शंभोः पृच्छते कुंभसंभवे ।। १ ।।

।। स्कंद उवाच ।। ।।

निशामय महाप्राज्ञ शंभु प्रावेशिकीं कथाम् ।।

त्रैलोक्यानंदजननीं महापातकतंकिनीम् ।। २ ।।

मंदरादागतः शंभुश्चैत्रे दमनपर्वणि ।।

प्राप्याप्यानंदगहनमितश्चेतश्चचार ह ।। ३ ।।

मोक्षलक्ष्मीविलासेथ प्रासादे सिद्धिमागते ।।

देवो विरजसः पीठादंतर्गेहं विवेश ह ।। ४ ।।

ऊर्जशुक्लप्रतिपदि बुधराधासमायुजि ।।

चंद्रे सप्तमराशिस्थे शेषेषूच्चग्रहेषु च ।। ५ ।।

वाद्यमानेषु वाद्येषु प्रसन्नासु हरित्सु च ।।

ब्राह्मणानां श्रुतिरव न्यक्कृतान्यरवांतरे ।। ६ ।।

प्रतिशब्दित भूर्लोक भुवर्लोकांतराध्वनि ।।

सर्वं प्रमुदितं चासीच्छंभोः प्रावेशिकोत्सवे ।। ७ ।।

जगुर्गंधर्वनिकरा ननृतुश्चाप्सरोगणाः ।। २८ ।।

चारणास्तु स्तुतिं कुर्युर्जहृषुर्देवतागणाः ।।८।।

ववुर्गंधवहा वाता ववृषुः कुसुमैर्घनाः ।।

सर्वे मंगलनेपथ्याः सर्वे मंगलभाषिणः ।।९।।

स्थावरा जंगमाः सर्वे जाता आनंदमेदुराः।।

सुरासुरेषु सर्वेषु गंधर्वेषूरगेषु च ।। 4.2.98.१० ।।

विद्याधरेषु साध्येषु किन्नरेषु नरेषु च ।।

स्त्रीपुंजातेषु सर्वेषु रेजुश्चत्वार एव च ।। ११ ।।

निष्प्रत्यूहं च नितरां पुरुषार्थाः पदेपदे ।।

धूपधूमभरैर्व्योम यद्रक्तं तु तदा मुने ।। १२ ।।

नाद्यापि नीलिमानंतं परित्यजति कर्हिचित् ।।

नीराजनाय ये दीपास्तदा सर्वे प्रबोधिताः ।। १३ ।।

तेषां ज्योतींषि खेद्यापि राजंते तारकाच्छलात् ।।

प्रतिसौधं पताकाश्च नानाकारा विचित्रिताः ।। १४ ।।

रम्यध्वजप्रभाधौता रेजुः प्रति शिवालयम् ।।

क्वचिद्गायंति गीतज्ञाः क्वचिन्नृत्यंति नर्तकाः ।। १५ ।।

चतुर्विधानि वाद्यानि वाद्यंते च क्वचित्क्वचित् ।।

प्रत्यध्वं चंदनरसच्छटा पिच्छिलभूमयः ।। १६ ।।

हरित श्वेत मांजिष्ठ नील पीत बहुप्रभाः ।।

प्रत्यंगणं शुभाकारा रंगमालाश्चकाशिरे ।। १७ ।।

रत्नकुट्टिमभूभागा गोपुराग्रेषु रेजिरे ।।

सुधोज्ज्वला हर्म्यमालाः सौधनामप्रपेदिरे ।।१८।।

अचेतनान्यपि तदा चेतनानीव संबभुः ।।

यानि कानीह कीर्त्यंते मंगलानि घटोद्भव ।। १९।।

तेषामेव हि सर्वेषां तत्तु जन्मदिवाभवत् ।।

आगत्य देवदेवोथ मुक्तिमंडपमाविशत् ।। 4.2.98.२० ।।

अथाभिषिक्तश्चतुराननेन महर्षिवृंदैः सह देवदेवः ।।

शुभासनस्थः सहितो भवान्या कुमारवृंदैः परितो वृतश्च।। ।। २१ ।।

रत्नैरसंख्यैर्बहुभिर्दुकूलैर्माल्यैर्विचित्रैर्लसदिष्टगंधैः ।।

अपूपुजन्देवगणा महेशं तदा मुदाते च महोरगेंद्राः ।। २२ ।।

रत्नाकरैश्चापि गिरींद्रवर्यैर्यथा स्वमन्यैरपि पुण्यधीभिः ।।

संपूजितः कुंभज तत्र शंभुर्नीराजितो मातृगणैरथेशः ।।२३।।

संतोष्य सर्वान्प्रथमं मुनींद्रान्स्वैस्स्वैर्हृदिस्थैश्च चिराभिलाषैः ।।

ब्रह्माणमाभाष्य शिवोथ विष्णुं जगाद सर्वामरवृंदवंद्यः ।। २४ ।।

इतो निषीदेति समानपूर्वं त्वं मे समस्तप्रभुतैकहेतुः ।।

दूरेपि तिष्ठन्निकटस्त्वमेव त्वत्तो न कश्चिन्मम कार्यकर्ता ।। २५ ।।

त्वया दिवोदास नरेंद्रवर्यः सदूपदेशैश्च तथोपदिष्टः ।।

यथा स सिद्धिं परमामवाप समीहितं मे निखिलं च सिद्धम् ।। २६ ।।

विष्णो वरं ब्रूहि य ईप्सितस्ते नादेयमत्रास्ति किमप्यहो ते।।

इदं मयाऽऽनंदवनं यदाप्तं हेतुस्तु तत्रत्वमसौ गणेशः ।। २७ ।।

न मे प्रियं किंचन विष्टपत्रये तथा यथेयं परसौख्यभूमिः ।।

वाराणसी ब्रह्मरसायनस्य खनिर्जनिर्यत्र न दीर्घशायिनाम् ।। २८ ।।

श्रुत्वेति वाक्यं जगदीशितुश्च प्रोवाच विष्णुर्वरदं महेशम् ।।

यदि प्रसन्नोसि पिनाकपाणे तदा पदाद्दूरमहं न ते स्याम् ।। २९ ।।

श्रुत्वेति वाक्यं मधुसूदनस्य जगाद तुष्टो नितरां पुरारिः ।।

सदा मुरारे मम सन्निधौ त्वं तिष्ठस्व निर्वाणरमाश्रयेत्र ।। 4.2.98.३० ।।

आदावनाराध्य भवंतमत्र यो मां भजिष्यत्यपि भक्तियुक्तः ।।

समीहितं तस्य न सेत्स्यति ध्रुवं परात्परान्मेंबुज चक्रपाणे ।।३१ ।।

सर्वत्र सौख्यं मम मुक्तिमंडपे संतिष्ठमानस्य भवेदिहाच्युत ।।

न तत्तु कैलासगिरौ सुनिर्मले न भक्तचेतस्यपि निश्चलश्रियि ।। ३२ ।।

निमेषमात्रं स्थिरचित्तवृत्तयस्तिष्ठंति ये दक्षिणमंडपेत्र मे ।।

अनन्यभावा अपि गाढमानसा न ते पुनर्गर्भदशामुपासते ।। ३३ ।।

संस्नाय ये चक्रसरस्यगाधे समस्ततीर्थैक शिरोविभूषणे ।।

क्षणं विशंतीह निरीहमानसा निरेनसस्ते मम पार्षदा हि ।। ३४ ।।

स्मरंति ये मामपवर्गमंडपे किंचिद्यथाशक्ति ददत्यपि स्वम् ।।

शृण्वंति पुण्याश्च कथाः क्षणं स्थिरास्ते कोटिगोदानफलं भजंति ।। ३५ ।।

उपेंद्रतप्तानि तपांसि तैश्चिरं स्नाता हि ते चाखिलतीर्थसार्थकैः ।।

स्नात्वेह ये वै मणिकर्णिका ह्रदे समासते मुक्तिजनाश्रयेक्षणम् ।। ३६ ।।

तीर्थानि संतीह पदेपदे हरे तुला क्व तेषां मणिकर्णिकायाः ।।

कतीहनो संति शुभाश्च मंडपाः परंपरोमुक्तिरमाश्रयोयम् ।। ३७ ।।

कैवल्यमंडपस्यास्य भविष्ये द्वापरे हरे ।।

लोके ख्यातिर्भवित्रीयमेष कुक्कुटमंडपः ।। ३८ ।।

।। हरिरुवाच ।। ।।

भालनेत्रसमाख्याहि कथं निर्वाणमंडपः ।।

तथा ख्यातिमसौ गंता यथा देवेन भाषितम् ।। ३९ ।।

।। देवदेव उवाच ।। ।।

महानंदो द्विजो नाम भविष्योत्र चतुर्भुज ।।

अग्रवेदीसमाचारस्त्यक्ततीर्थप्रतिग्रहः ।। 4.2.98.४० ।।

अदांभिकोऽक्रूरमनाः सदैवातिथिवल्लभः ।।

अथ यौवनमासाद्य पितर्युपरते स हि ।। ४१ ।।

विषमेषु शरैस्तीव्रैः कारितस्त्वपदे पदम् ।।

जहार कस्यचिद्भार्यां मैत्रीं कृत्वा तु तेन वै ।। ४२ ।।

तया च प्रेरितोऽपेयं पपौ चापि विमोहितः ।।

अभक्ष्यभक्षणरुचिरभून्मदनमोहितः ।।४३।।

वैष्णवान्धनिनो दृष्ट्वा क्षणं वैष्णववेषभृत् ।।

शैवान्निंदति मूढात्मा नरकत्राणकारणम् ।।४४।।

शिवभक्तान्समालोक्य किंचिच्च परिदित्सुकान् ।।

गर्हयेद्वैष्णवान्सर्वाञ्शैवलिंगोपजीवकः ।। ४५ ।।

इति पाखंडधर्मज्ञः संध्यास्नानपराङ्मुखः ।।

विशालतिलकः स्रग्वी शुद्धधौतांबरोज्वलः ।। ४६. ।। २७ ।।

शिखी चोपग्रहकरः सर्वेभ्योऽसत्प्रतिग्रही।।

तस्यापत्यद्वयं जातमुन्मत्तपथवर्तिनः ।। ४७ ।।

एवं तस्य प्रवृत्तस्य कश्चित्पर्वतदेशतः ।।

समागमिष्यति धनी तीर्थयात्रार्थसिद्धये ।। ४८ ।।

स्नात्वा स चक्रसरसि कथयिष्यति चेति वै ।।

अहमस्ति धनोदित्सुर्जात्या चांडालसत्तमः ।।४९।।

अस्ति कश्चित्प्रतिग्राही यस्मै दद्यामहं धनम् ।।

इति तस्य वचः श्रुत्वा कैश्चिच्चांगुलिसंज्ञया ।।4.2.98.५०।।

उद्दिष्ट उपविष्टोसौ यो जपेद्ध्यानमुद्रया ।।

एष प्रतिग्रहं त्वत्तो ग्रहीष्यति न चेतरः ।।५१।।

इति तेषां वचः श्रुत्वा स गत्वा तत्समीपतः ।।

दंडवत्प्रणिपत्याथ तं बभाषे तदांत्यजः ।।५२।।

मामुद्धर महाविप्र तीर्थं मे सफलीकुरु ।।

किंचिद्वस्त्वस्ति मे तत्त्वं गृहाणानुग्रहं कुरु ।। ५३ ।।
अथाक्षमालिकां कर्णे कृत्वा ध्यानं विसृज्य च ।।
कियद्धनं तवास्तीह पप्रच्छ करसंज्ञया ।। ५४ ।।
तस्य संज्ञां स वै बुद्ध्वा प्रोवाचाति प्रहृष्टवत् ।।
संतृप्तिर्यावता ते स्यात्तावद्दास्यामि नान्यथा ।। ५५ ।।
इति तद्वचनं श्रुत्वा त्यक्त्वा मौनमुवाच ह ।।
सानंदः स महानंदो निःस्पृहोस्मि प्रतिग्रहे ।। ५६ ।।
परं तेऽनुग्रहार्थं तु करिष्यामि प्रतिग्रहम् ।।
किंच मे वचनं त्वं चेत्करिष्यस्युत्तमोत्तम ।।५७।।
यावदस्त्यखिलं वित्तं तन्मध्ये न्यस्य कस्यचित् ।।
न स्तोकमपि दातव्यं तदाऽऽदास्यामि नान्यथा ।।५८।।
।। चांडाल उवाच ।। ।।
यावदस्ति मयानीतं विश्वेशप्रीतये वसु।।
तावत्तुभ्यं प्रदास्यामि विश्वेशस्त्वं यतो मम।।५९।।
ये वसंतीह विश्वेश राजधान्यां द्विजोत्तम ।।
क्षुद्राक्षुद्रा जंतुमात्रा विश्वेशां शास्त एव हि।।4.2.98.६०।।
परोद्धरणशीला ये ये परेच्छाप्रपूरकाः ।।
परोपकृतिशीला ये विश्वेशां शास्त एव हि ।। ६१ ।।
इति तद्वचनं श्रुत्वा प्रहृष्टेंद्रियमानसः ।।
उवाच पार्वतीयं तं सोऽग्रजन्मांत्यजं तदा ।। ६२ ।।
आयाहि दर्भानादेहि कुरूत्सर्गं त्वरान्वितः ।।
तथेति स चकाराशु पार्वतीयो महामनाः ।। ३३ ।।
विश्वेशः प्रीयतां चेति प्रोच्य यातो यथागतः ।।
स च द्विजो द्विजैरन्यैर्धिक्कृतोपि वसन्निह ।। ६४ ।।
बहिर्निर्गतमात्रस्तु बहुभिः परिभूयते ।।
चांडालब्राह्मणश्चैष चांडालात्त धनस्त्वसौ ।। ६५ ।।
असावेव हि चांडालः सर्वलोकबहिष्कृतः ।।
इत्थं तमनुधावंति थूत्कुर्वंतः परितो हरे ।। ६६ ।।

स च तद्भयतो गेहात्काकभीतदिवांधवत् ।।
न निःसरेत्क्वचिदपि लज्जाकृति नतास्यकः।।६७।।
स एकदा संप्रधार्य गृहिण्या लोकदूषितः ।।
जगाम कीकटान्देशांस्त्यक्त्वा वाराणसीं पुरीम् ।।६८।।
मध्ये मार्गं स गच्छन्वै लक्षितस्तु सकांचनः ।।
अपि कार्पटिकांतस्थः स रुद्धो मार्गरोधिभिः।।६९।।
नीत्वा ते तमरण्यानीं तस्कराः सपरिच्छदम्।।
उल्लुंठ्य धनमादाय समालोच्य परस्परम्।।4.2.98.७०।।
प्रोचुर्भूरिधनं चैतज्जीर्यत्यस्मिन्न जीवति ।।
असौ धनी प्रयत्नेन वध्यः सपरिचारकः ।। ७१ ।।
संप्रधार्येति तेप्राहुः स्मर्तव्यं स्मर पांथिक ।।
त्वां वयं घातयिष्यामो निश्चितं सपरिच्छदम् ।। ७२ ।।
निशम्येति मनस्येव कथयामास स द्विजः ।।
अहो प्रतिगृहीतं मे यदर्थं वसु भूरिशः ।। ७३ ।।
कुटुंबमपि तन्नष्टं नष्टश्चापि प्रतिग्रहः ।।
जीवितं चापि मे नष्टं नष्टा काशीपुरीस्थितिः ।। ७४ ।।
युगपत्सर्वमेवाशु नष्टं दुर्बुद्धिचेष्टया ।।
न काश्यां मरणं प्राप्तं तस्माद्दुष्टप्रतिग्रहात् ।। ७५ ।।
प्रांते कुटुंबस्मरणात्तथाकाशीस्मृतेरपि ।।
चोरैर्हतोपि स तदा कीकटे कुक्कुटोऽभवत् ।।७६।।
सा कुक्कुटी सुतौ तौ तु ताम्रचूडत्वमापतुः ।।
प्रांते काशीस्मरणतो जाता जातिस्मृतिः परा ।। ७७ ।।
इत्थं बहुतिथेकाले गते कार्पटिकोत्तमाः ।।
तस्मिन्नेवाध्वनि प्राप्ताश्चत्वारो यत्र कुक्कुटाः ।।७८।।
वाराणस्याः कथां प्रोच्चैः कुर्वंतोऽन्योन्यमेव हि ।।
काशीकथां समाकर्ण्य तदा ते चरणायुधाः ।। ७९ ।।
जातिस्मृतिप्रभावेण तत्संगेन तु निर्गताः ।।
तैश्च कार्पटिकश्रेष्ठैः पथि दृष्ट्वा कृपालुभिः ।। 4.2.98.८० ।।

तंदुलादिपरिक्षेपैः प्रापिताः क्षेत्रमुत्तमम् ।।

ते तु क्षेत्रं समासाद्य चत्वारश्चरणायुधाः ।। ८१ ।।

चरिष्यंतोऽत्र परितो मुक्तिमंडपमुत्तमम् ।।

जिताहारान्सनियमान्कामक्रोधपराङ्मुखान् ।। ८२ ।।

प्रहासान्मत्कथालापाँल्लाभमोहविवर्जितान् ।।

स्वर्धुनीस्नानसंक्लिन्न सुनिर्मलशिरोरुहान् ।। ९३ ।।

मन्नामोच्चारणपरान्मत्कथार्पितसुश्रुतीन् ।।

मद्वत्तचित्तसद्वृत्तीन्दृष्ट्वा क्षेत्रनिवासिनः ।।८४ ।।

मानयामासुरथ तान्कुक्कुटान्साधुवर्त्मनः ।।

प्राक्तनां वासनायोगात्संप्रधार्य परस्परम् ।।

क्रमेणाहारमाकुंच्य प्राणांस्त्यक्ष्यंति चात्र वै ।। ८५ ।।

पश्यतां सर्वलोकानां विष्णो ते मदनुग्रहात् ।।

विमानमधिरुह्याशु कैलासं प्राप्य मत्पदम् ।।८६।।

निर्विश्य सुचिरं कालं दिव्यान्भोगाननुत्तमान् ।।

ततोऽत्र ज्ञानिनो भूत्वा मुक्तिं प्राप्स्यंति शाश्वतीम् ।। ८७ ।।

ततो लोकास्तददारभ्य कथयिष्यंति सर्वतः ।।

मुक्तिमंडपनामैतदेष कुक्कुटमंडपः ।। ८८ ।।

चरित्रमपि वै तेषां ये स्मरिष्यंति मानवाः ।।

मुक्तिमंडपमासाद्य श्रेयः प्राप्स्यंति तेपि हि ।। ८९ ।।

इति यावत्कथां शंभुर्भविष्यामग्रतो हरेः ।।

अकरोत्तुमुलो नादो घंटानां तावदुद्गतः ।। 4.2.98.९० ।।

अथनंदिनमाहूय देवदेव उमाधवः ।।

प्रोवाच नंदिन्विज्ञायागत्य ब्रूहि कुतो रवः ।।९१।।

अथ नंदी समागत्य प्रोवाच वृषभध्वजम्।।

नमस्कृत्य प्रहृष्टास्यः प्रबद्धकरसंपुटः ।। ९२ ।।

।। नंद्युवाच ।। ।।

देवदेव त्रिनयन किमपूर्वं ब्रवीमि ते ।।

मोक्षलक्ष्मीविलासोऽत्र कैश्चित्कैश्चित्समर्च्यते।।९३।।

अथ स्मित्वाब्रवीच्छंभुः सिद्धं नस्तु समीहितम् ।।

उत्थाय देवदेवेशः सह देव्या सुमंगलः।।९४।।

ब्रह्मणा हरिणा सार्धं ततोऽगाद्रंगमंडपम् ।।

।। स्कंद उवाच ।। ।।

श्रुत्वाध्यायमिमं पुण्यं परमानंदकारणम् ।।

नरः परां मुदं प्राप्य कैलासं प्राप्स्यति ध्रुवम् ।। ९५ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे मुक्तिमंडपगमनं नामाष्टनवतितमोऽध्यायः ।। ९८ ।।

# स्कन्दपुराणम्/खण्डः ४ (काशीखण्डः)/अध्यायः ०९९



।। व्यास उवाच ।।

शृणु सूत यथा प्रोक्तं कुंभजे शरजन्मना ।।

देवदेवस्य चरितं विश्वेशस्य परात्मनः ।। १ ।।

अगस्त्य उवाच ।।

सेनानीः कथय त्वं मे ततो निर्वाणमंडपात् ।।

निर्गत्य देवो देवेंद्रैः सहितः किं चकार ह।। २ ।।

स्कंद उवाच ।।

मुक्तिमंडपतः शंभुर्ब्रह्मविष्णुपुरोगमः ।।

शृंगारमंडपं प्राप्य यच्चकार वदामि तत् ।। ३ ।।

प्राङ्मुखस्तूपविश्येशः सहास्माभिः सहेशया ।।

ब्रह्मणाधिष्ठितः सव्ये वामपार्श्वेथ शार्ङ्गिणा ।। ४ ।।

वीज्यमानो महेंद्रेण ऋषिभिः परितो वृतः ।।

गणैः पृष्ठप्रदेशस्थैर्जोषं तिष्ठद्भिरादरात् ।। ५।।

उदायुधैः सेव्यमानश्चावसन्मानभूरिभिः ।।

ब्रह्मणे विष्णवे शंभुः पाणिमुत्क्षिप्य दक्षिणम् ।। ६ ।।

दर्शयामास देवेशो लिंगं पश्यत पश्यत ।।

इदमेव परं ज्योतिरिदमेव परात्परम् ।। ।। ७ ।।

इदमेव हि मे रूपं स्थावरं चाति सिद्धिदम् ।।

एते पाशुपता सिद्धा आबाल ब्रह्मचारिणः ।। ८ ।।

जितेंद्रियास्तपोनिष्ठाः पंचार्थज्ञाननिर्मलाः ।।

भस्मकूटशया दाताः सुशीला ऊर्ध्वरेतसः ।।९ ।।

लिंगार्चनरता नित्यमनन्येंद्रियमानसाः ।।

सदैव वारुणाग्नेय स्नानद्वय सुनिर्मलाः ।। 4.2.99.१० ।।

कंदमूलफलाहाराः परतत्त्वार्पितेक्षणाः ।।

सत्यवंतो जितक्रोधा निर्मोहा निष्परिग्रहाः ।। ११ ।।

निरीहा निष्प्रपंचाश्च निरातंका निरामयाः ।।

निर्भगा निरुपायाश्च निःसंगा निर्मलाशयाः ।। १२ ।।

निस्तीर्णोदग्रसंसारा निर्विकल्पा निरेनसः ।।

निर्द्वंद्वा निश्चितार्थाश्च निरहंकारवृत्तयः ।। १३ ।।

सदैव मे महाप्रीता मत्पुत्रा मत्स्वरूपिणः ।।

एते पूज्या नमस्याश्च मद्बुद्ध्यामत्परायणैः ।। १४ ।।

अर्चितेष्वेष्वहं प्रीतो भविष्यामि न संशयः ।।

अस्मिन्वैश्वेश्वरे क्षेत्रे संभोज्याः शिवयोगिनः ।। १५ ।।

कोटिभोज्यफलं सम्यगेकैक परिसंख्यया ।।

अयं विश्वेश्वरः साक्षात्स्थावरात्मा जगत्प्रभुः ।। १६ ।।

सर्वेषां सर्वसिद्धीनां कर्ता भक्तिजुषामिह ।।

अहं कदाचिद्दृश्यः स्यामदृश्यः स्यां कदाचन ।। १७ ।।

आनंदकानने चात्र स्वैरं तिष्ठामि देवताः ।।

अनुग्रहाय सर्वेषां भक्तानामिह सर्वदा ।। १८ ।।

स्थास्यामि लिंगरूपेण चिंतितार्थफलप्रदः ।।

स्वयंभून्यस्वयंभूनि यानि लिंगानि सर्वतः ।।

तानि सर्वाणि चायांति द्रष्टुं लिंगमिदं सदा ।। १९ ।।

अहं सर्वेषु लिंगेषु तिष्ठाम्येव न संशयः ।।

परं त्वियं परामूर्तिर्मम लिंगस्वरूपिणी ।। 4.2.99.२० ।।

येन लिंगमिदं दृष्टं श्रद्धया शुद्धचक्षुषा ।।

साक्षात्कारेण तेनाहं दृष्ट एव दिवौकसः ।। २१ ।।

श्रवणादस्य लिंगस्य पातकं जन्मसंचितम् ।।

क्षणात्क्षयति शृण्वंतु देवा ऋषिगणैः सह ।। २२ ।।

स्मरणादस्य लिंगस्य पापं जन्मद्वयार्जितम् ।।

अवश्यं नश्यति क्षिप्रं मम वाक्यान्न संशयः ।।२३ ।।

एतल्लिंगं समुद्दिश्य गृहान्निष्क्रमणक्षणात् ।।

विलीयते महापापमपि जन्मत्रयार्जितम् ।।२४।।

दर्शनादस्य लिंगस्य हयमेधशतोद्भवम् ।।

पुण्यं लभेत नियतं ममानुग्रहतोमराः ।।२५।।

स्वयंभुवोस्य लिंगस्य मम विश्वेशितुः सुराः ।।

राजसूयसहस्रस्य फलं स्यात्स्पर्शमात्रतः।।२६।।

पुष्पमात्र प्रदानाच्च चुलुकोदकपूर्वकम् ।।

शतसौवर्णिकं पुण्यं लभते भक्तियोगतः ।।२७।।

पूजामात्रं विधायास्य लिंगराजस्य भक्तितः ।।

सहस्रहेमकमलपूजाफलमवाप्यते ।। २८ ।।

विधाय महती पूजां पंचामृतपुरःसराम् ।।

अस्य लिंगस्य लभते पुरुषार्थचतुष्टयम् ।। २९ ।।

वस्त्रपूतजलैर्लिंगं स्नापयित्वा ममामराः ।।

लक्षाश्वमेधजनितं पुण्यमाप्नोति सत्तमः ।। 4.2.99.३० ।।

सुगंधचंदनरसैर्लिंगमालिप्य भक्तितः ।।

आलिप्यते सुरस्त्रीभिः सुगंधैर्यक्षकर्दमैः ।। ३१ ।।

सामोद धूपदानैश्च दिव्यगंधाश्रयो भवेत् ।।

घृतदीपप्रबोधैश्च ज्योतीरूप विमानगः ।। ३२ ।।

कर्पूरवर्तिदीपेन सकृद्दत्तेन भक्तितः।।

कर्पूरदेहगौरश्रीर्भवेद्भालविलोचनः ।। ३३ ।।

दत्त्वा नैवेद्यमात्रं तु सिक्थेसिक्थे युगंयुगम् ।।

कैलासाद्रौ वसेद्धीमान्महाभोगसमन्वितः ।। ३४ ।।

विश्वेशे परमान्नं यो दद्यात्साज्य सशर्करम् ।।

त्रैलोक्यं तर्पितं तेन सदेवपितृमानवम्।। ३५ ।।

मुखवासं तु यो दद्याद्दर्पणं चारुचामरम् ।।

उल्लोचं सुखपर्यंकं तस्य पुण्यफलं महत् ।। ३६ ।।

संख्या सागररत्नानां कथंचित्कर्तुमिष्यते ।।

मुखवासादिदानस्य कः संख्यामत्र कारयेत् ।। ३७ ।।

पूजोपकरणद्रव्यं यो घंटा गडुकादिकम् ।।

भक्त्या मे भवने दद्यात्स वसेदत्र मेंतिके ।। ३८ ।।

यो गीतवाद्यनृत्यानामेकं मत्प्रीतये व्यधात् ।।

तस्याग्रतो दिवारात्रं भवेत्तौर्यत्रिकं महत् ।। ३९ ।।

चित्रलेखनकर्मादि प्रासादे मेऽत्र कारयेत् ।।

यः सचित्रान्महाभोगान्भुंक्ते मत्पुरतः स्थितः ।।4.2.99.४०।।

सकृद्विश्वेश्वरं नत्वा मध्ये जन्मसुधीर्नरः ।।

त्रैलोक्यवंदितपदो जायते वसुधापतिः।। ।। ४१ ।।

यस्तु विश्वेवरं दृष्ट्वा ह्यन्यत्रापि विपद्यते ।।

तस्य जन्मांतरे मोक्षो भवत्येव न संशयः ।। ४२ ।।

विश्वेशाख्या तु जिह्वाग्रे विश्वनाथकथाश्रुतौ ।।

विश्वेशशीलनं चित्ते यस्य तस्य जनिः कुतः ।। ४३ ।।

लिंगं मे विश्वनाथस्य दृष्ट्वा यश्चानुमोदते ।।

स मे गणेषु गण्येत महापुण्यबलाश्रितः ।। ४४ ।।

नित्यं विश्वेश विश्वेश विश्वनाथेति यो जपेत् ।।

त्रिसंध्यं तं सुकृतिनं जपाम्यहमपि ध्रुवम् ।। १५ ।।

ममापीदं महालिंगं सदा पूज्यतमं सुराः .।।

तस्मात्सर्वप्रयत्नेन पूज्यं देवर्षि मानवैः ।। ४६ ।।

यैर्न विश्वेश्वरो दृष्टो यैर्न विश्वेश्वरः स्मृतः ।।

कृतांतदूतैस्ते दृष्टास्तैः स्मृता गर्भवेदना ।। ४७ ।।

यैरिदं प्रणतं लिंगं प्रणतास्ते सुरासुरैः ।।

यस्यै केन प्रणामेन दिक्पालपदमल्पकम् ।।

दिक्पालपदतः पातः पातः शिवनतेर्नहि ।। ४८ ।।

शृण्वंतु देवर्षिगणाः समस्तास्तथ्यं ब्रुवे तच्च परोपकृत्यै ।।

न भूर्भुवः स्वर्गमहर्जनांतर्विश्वेशतुल्यं क्वचिदस्ति लिंगम् ।। ४९ ।।

न सत्यलोके न तपस्यहो सुरा वैकुंठकैलासरसातलेषु ।।

तीर्थं क्वचिद्वै मणिकर्णिकासमं लिंगं च विश्वेश्वरतुल्यमन्यतः ।। 4.2.99.५० ।।

न विश्वनाथस्य समं हि लिंगं न तीर्थमन्यन्मणिकर्णिकातः ।।

तपोवनं कुत्रचिदस्ति नान्यच्छुभं ममानंदवनेन तुल्यम् ।। ५१ ।।

वाराणसी तीर्थमयी समस्ता यस्यास्तुनामापि हि तीर्थतीर्थम् ।।

तत्रापि काचिन्मम सौख्यभूमिर्महापवित्रा मणिकर्णिकासौ ।। ५२ ।।

स्थानादमुष्मान्ममराजसौधात्प्राच्यां मनागीशसमाश्रितायाम् ।।

सव्येपसव्ये च कराः क्रमेण शतत्रयी यापि शतद्वयी च ।। ५३ ।।

हस्ताः शतं पंच सुरापगायामुदीच्यवाच्योर्मणिकर्णिकेयम् ।।

सारस्त्रिलोक्याः परकोशभूमिर्यैः सेविता ते मम हृच्छया हि ।। ५४ ।।

अस्मिन्ममानंदवने यदेतल्लिंगं सुधाधाम सुधामधाम ।।

आसप्त पातालतलात्स्वयंभु समुत्थितं भक्तकृपावशेन ।।५५।।

येस्मिञ्जनाः कृत्रिमभावबुद्ध्या लिंगं भजिष्यंति च हेतुवादैः ।।

तेषां हि दंडः पर एष एव नगर्भवासाद्विरमंति ते ध्रुवम् ।। ५६ ।।

यद्यद्धितं स्वस्य सदैव तत्तल्लिंगेत्र देयं मम भक्तिमद्भिः ।।

इहाप्यमुत्रापि न तस्य संक्षयो यथेह पापस्य कृतस्य पापिभिः ।। ५७ ।।

दूरस्थितैरप्यधिबुद्धिभिर्यैर्लिंगं समाराधि ममेदमत्र ।।

मयैव दत्तैः शुभवस्तुजातैर्निःश्रेयसः श्रीर्वसं(?)येत्सतस्तान् ।। ५८ ।।

शृणुष्व विष्णो शृणु सृष्टिकर्तः शृण्वंतु देवर्षिगणाः समस्ताः ।।

इदं हि लिंगं परसिद्धिदं सतां भेदो मनागत्र न मत्सकाशतः ।। ५९ ।।

अस्मिन्हि लिंगेऽखिलसिद्धिसाधने समर्पितं यैः सुकृतार्जितं वसु ।।

तेभ्योतिमात्राखिलसौख्यसाधनं ददामि निर्वाणपदं सुनिर्भयम् ।। 4.2.99.६० ।।

उत्क्षिप्य बाहुं त्वसकृद्ब्रवीमि त्रयीमयेऽस्मिंस्त्रयमेव सारम् ।।

विश्वेश लिंगं मणिकर्णिकांबु काशीपुरी सत्यमिदं त्रिसत्यम् ।। ६१ ।।

उत्थाय देवोथ स शक्तिरीशस्तस्मिन्हि लिंगे कृतचारुपूजः ।।

ययौ लयं ते च सुरा जयेति जयेति चोक्त्वा नुनुवुस्तमीशम् ।। ६२ ।।

स्कंद उवाच ।। ।।

क्षेत्रस्य मैत्रावरुणे विमुक्तस्य महामते ।।

प्रभावस्यैकदेशोयं कथितः कल्मषापहः ।। ६३ ।।

तवाग्रे तु यथाबुद्धि काशीविश्लेषतापि नः ।।

अचिरेणैव कालेन काशीं प्राप्स्यस्यनुत्तमाम् ।। ६४ ।।

अस्ताचलस्य शिखरं प्राप्तवानेष भानुमान् ।।

तवापि हि ममाप्येष मौनस्य समयोऽभवत् ।। ६५ ।।

।। व्यास उवाच ।। ।।

श्रुत्वेति स मुनिः सूत संध्योपास्त्यै विनिर्गतः।।
प्रणम्यौ मेयमसकृल्लोपामुद्रा समन्वितः ।। ६६ ।।
रहस्यं परिविज्ञाय क्षेत्रस्य शशिमौलिनः ।।
अगस्त्यो निश्चितमनाः शिवध्यानपरोभवत् ।। ६७ ।।
आनंदकाननस्येह महिमानं महत्तरम् ।।
कोत्र वर्णयितुं शक्तः सूत वर्षशतैरपि ।। ६८ ।।
यथा देव्यै समाख्यायि शिवेन परमात्मना ।।
तथा स्कंदेन कथितं माहात्म्यं कुंभसंभवे ।। ६९।।
तवाग्रे च समाख्यातं शुकादीनां च सत्तम ।।
इदानीं प्रष्टुकामोसि किं तत्पृच्छ वदामि ते।।4.2.99.७०।।
श्रुत्वाध्यायमिमं पुण्यं सर्वकल्मषनाशनम् ।।
समस्तचिंतितफलप्रदं मर्त्यो भवेत्कृती ।।७१।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धे विश्वेश्वरलिंगमहिमाख्यो नाम नवनवतितमोऽध्यायः ।। ९९ ।।

।। सूत उवाच ।। ।।

इदं स्कांदमहं श्रुत्वा काशीखंडमनुत्तमम् ।।

नितरां परितृप्तोस्मि हृदि चापि विधारितम् ।। १ ।।

अनुक्रमणिकाध्यायं तथा माहात्म्यमुत्तमम् ।।

पाराशर्य समाचक्ष्व यथापूर्वमिदं भवेत्।। २ ।।

।। व्यास उवाच ।। ।।

सूतावधेहि धर्मात्मञ्जातूकर्ण्य निशामय ।।

शुकवैशंपायनाद्याः शृण्वंत्वपि च बालकाः ।। ३ ।।

अनुक्रमणिकाध्यायं माहात्म्यं चापि खंडजम् ।।

प्रवक्ष्याम्यघनाशाय महापुण्यप्रवर्धनम् ।। ४ ।।

विंध्यनारदसंवादः प्रथमे परिकीर्तितः ।।

सत्यलोकप्रभावश्च द्वितीयः समुदाहृतः ।। ५ ।।

अगस्तेराश्रमपदे देवानामागमस्ततः ।।

पतिव्रता चरित्रं च प्रस्थानं कुंभसंभवः ।। ६ ।।

तीर्थप्रशंसा च ततः सप्तपुर्यस्ततः स्मृताः ।।

संयमिन्याः स्वरूपं च ब्रध्नलोकस्ततः परम् ।। ७ ।।

इंद्राग्न्योर्लोकसंप्राप्तिस्ततश्च शिवशर्मणः ।।

अग्नेः समुद्भवस्तस्मात् क्रव्याद्वरुणसंभवः ।।८ ।।

गंधवत्यलकापुर्योरीशयोस्तु समुद्भवः ।।

चंद्रलोकपरिप्राप्तिः शिवशर्मद्विजन्मनः ।। ९ ।।

उडुलोक कथा तस्मात्ततः शुक्रसमुद्भवः ।।

माहेय गुरुसौरीणां लोकानां वर्णनं ततः ।। 4.2.100.१० ।।

सप्तर्षीणां ततो लोका ध्रुवस्य च तपस्ततः ।।

ततो ध्रुवपदप्राप्तिर्ध्रुवलोक स्थितिस्ततः. ।। ११ ।।

दर्शनं सत्यलोकस्य तस्य वै शिवशर्मणः ।।

चतुर्भुजाभिषेकश्च निर्वाणं शिवशर्मणः ।। १२।।

स्कंदागस्त्योश्च संवादो मणिकर्ण्याः समुद्भवः ।।

ततस्तु गंगामाहात्म्यं ततो दशहरास्तवः ।।१३ ।।

प्रभावश्चापि गंगाया गंगानामसहस्रकम् ।।

वाराणस्याः प्रशंसाथ भैरवाविर्भवस्ततः ।। १४ ।।

दंडपाणेः समुद्भूतिर्ज्ञानवाप्युद्भवस्ततः ।।

आख्यानं च कलावत्याः सदाचारस्ततः परम् ।। १५ ।।

ब्रह्मचारि प्रकरणं ततः स्त्रीलक्षणानि च ।।

कृत्याकृत्यप्रकरणमविमुक्तेशवर्णनम् ।। १६ ।।
ततो गृहस्थधर्माश्च ततो योगनिरूपणम् ।।
कालज्ञानं ततः प्रोक्तं दिवोदासस्य वर्णनम् ।। १७ ।।
काश्याश्च वर्णनं तस्माद्योगिनीवर्णनं ततः ।।
लोलार्कस्य समाख्यानमुत्तरार्ककथा ततः।। ।। १८।।
सांबादित्यस्य महिमा द्रुपदादित्य शंसनम् ।।
ततस्तु गरुडाख्यानमरुणार्कादयस्ततः ।। १९ ।।
दशाश्वमेधिकं तीर्थं मंदराच्च गणागमः ।।
पिशाचमोचनाख्यानं गणेशप्रेषणं ततः ।। 4.2.100.२० ।।
मायागणपतेश्चाथ ढुंढिप्रादुर्भवस्ततः ।।
विष्णुमायाप्रपंचोथ दिवोदासविसर्जनम् ।। २१ ।।
ततः पंचनदोत्पत्तिर्बिंदुमाधवसंभवः ।।
ततो वैष्णवतीर्थानां माहात्म्यपरिवर्णनम् ।। २२ ।।
प्रयाणं मंदरात्काशीं वृषभध्वजशूलिनः ।।
जैगीषव्येन संवादो ज्येष्ठस्थाने महेशितुः ।।२३ ।।
ततः क्षेत्ररहस्यस्य कथनं पापनाशनम् ।।
अथातः कंदुकेशस्य व्याघ्रेशस्य समुद्भवः ।।२४।।
ततः शैलेश्वरकथा रत्नेशस्य च दर्शनम् ।।
कृत्तिवासः समुत्पत्तिस्ततश्चायतनागमः ।।२५।।
देवतानामधिष्ठानं दुर्गासुरपराक्रमः ।।
दुर्गाया विजयश्चाथ तत ओंकारवर्णनम् ।। २६ ।।
पुनरोंकारमाहात्म्यं त्रिलोचनसमुद्भवः ।।
त्रिलोचनप्रभावोथ केदाराख्यानमेव च ।। २७ ।।
ततो धर्मेशमहिमा ततः पक्षिकथा शुभा ।।
ततो विश्वभुजाख्यानं दुर्दमस्य कथा ततः ।। २८ ।।
ततो वीरेश्वराख्यानं वीरेश महिमा पुनः ।।
गंगातीर्थैश्च संयुक्ता कामेश महिमा ततः ।। २९ ।।
विश्वकर्मेश महिमा दक्षयज्ञसमुद्भवः ।।
सत्या देहविसर्गश्च ततो दक्षेश्वरोद्भवः ।। 4.2.100.३० ।।
ततो वै पार्वतीशस्य महिम्नः परिकीर्तनम् ।।
गंगेशस्याथ महिमा नर्मदेशसमुद्भवः ।। ३१ ।।
सतीश्वरसमुत्पत्तिरमृतेशादि वणर्नम् ।।
व्यासस्य हि भुजस्तंभो व्यासशापविमोक्षणम् ।। ३२ ।।

क्षेत्रतीर्थकदंबं च मुक्तिमंडप संकथा ।।
विश्वेशाविर्भवश्चाथ ततो यात्रापरिक्रमः ।। ३३ ।।
एतदाख्यानशतकं क्रमेण परिकीर्तितम् ।।
यस्य श्रवणमात्रेण सर्वखंड श्रुतेः फलम् ।।
अनुक्रमणिकाध्यायेप्यस्ति यात्रापरिक्रमः ।।३४।।
।। सूत उवाच ।।
यात्रा परिक्रमं ब्रूहि जनानां हितकाम्यया ।।
यथावत्सिद्धिकामानां सत्यवत्याः सुतोत्तम ।। ३५ ।।
।। व्यास उवाच।। ।।
निशामय महाप्राज्ञ लोमहर्षण वच्मि ते ।।
यथा प्रथमतो यात्रा कर्तव्या यात्रिकैर्मुदा ।। ३६ ।।
सचैलमादौ संस्नाय चक्रपुष्करिणीजले ।।
संतर्प्यदेवासपितॄन्ब्राह्मणांश्च तथार्थिनः ।। ३७ ।।
आदित्यं द्रौपदीं विष्णुं दंडपाणिं महेश्वरम् ।।
नमस्कृत्य ततो गच्छेद्द्रष्टुं ढुंढिविनायकम् ।।३८।।
ज्ञानवापीमुपस्पृश्य नंदिकेशं ततोर्चयेत् ।।
तारकेशं ततोभ्यर्च्य महाकालेश्वरं ततः ।। ३९ ।।
ततः पुनर्दंडपाणिमित्येषा पंचतीर्थिका ।। 4.2.100.४० ।।
दैनंदिनी विधातव्या महाफलमभीप्सुभिः ।।
ततो वैश्वेश्वरी यात्रा कार्या सर्वार्थ सिद्धिदा।।४१ ।।
द्विसप्तायतनानां च कार्या यात्रा प्रयत्नतः ।।
कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि ।। ४२ ।।
अथवा प्रतिभूतं च क्षेत्रसिद्धिमभीप्सुभिः ।।
तत्तत्तीर्थकृतस्नानस्तत्तल्लिंगकृतार्चनः ।।४३।।
मौनेन यात्रां कुर्वाणः फलं प्राप्नोति यात्रिकः।।
ओंकारं प्रथमं पश्येन्मत्स्योदर्यां कृतोदकः ।। ४४ ।।
त्रिविष्टपं महादेवं ततो वै कृत्तिवाससम् ।।
रत्नेशं चाथ चंद्रेशं केदारं च ततो व्रजेत् ।।४५।।
धर्मेश्वरं च वीरेशं गच्छेत्कामेश्वरं ततः ।।
विश्वकर्मेश्वरं चाथ मणिकर्णीश्वरं ततः ।। ४६ ।।
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्चयेत् ।।
एषा यात्रा प्रयत्नेन कर्तव्या क्षेत्रवासिना ।। ४७ ।।
यस्तु क्षेत्रमुषित्वा तु नैतां यात्रां समाचरेत् ।।

विघ्नास्तस्योपतिष्ठंते क्षेत्रोच्चाटनसूचकाः ।। ४८ ।।
अष्टायतन यात्रान्या कर्तव्या विघ्नशांतये ।।
दक्षेशः पार्वतीशश्च तथा पशुपतीश्वरः ।।४९।।
गंगेशो नर्मदेशश्च गभस्तीशः सतीश्वरः ।।
अष्टमस्तारकेशश्च प्रत्यष्टमि विशेषतः ।। 4.2.100.५० ।।
दृश्यान्येतानि लिंगानि महापापोपशांतये ।।
अपरापि शुभा यात्रा योगक्षेमकरी सदा ।। ५१ ।।
सर्वविघ्नोपहंत्री च कर्तव्या क्षेत्रवासिभिः ।।
शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्वकम् ।। ५२ ।।
स्नानं तु संगमे कृत्वा द्रष्टव्यः संगमेश्वरः ।।
स्वलीन तीर्थे सुस्नातः पश्येत्स्वलीनमीश्वरम् ।। ५३ ।।
स्नात्वा मंदाकिनी तीर्थे द्रष्टव्यो मध्यमेश्वरः ।।
पश्येद्धिरण्यगर्भेशं तत्र तीर्थे कृतोदकः ।। ५४ ।।
मणिकर्ण्यां ततः स्नात्वा पश्येदीशानमीश्वरम्।।
ततः कूपमुपस्पृश्य गोप्रेक्षमवलोकयेत् ।। ५५ ।।
कापिलेय ह्रदे स्नात्वा वीक्षेत वृषभध्वजम् ।।
उपशांतशिवं पश्येत्तत्कूपविहितोदकः ।। ५६ ।।
पंचचूडाह्रदे स्नात्वा ज्येष्ठस्थानं ततोर्चयेत् ।।
चतुःसमुद्रकूपे तु स्नात्वा देवं समर्चयेत् ।। ५७ ।।
देवस्याग्रे तु या वापी तत्रोपस्पर्शने कृते ।।
शुक्रेश्वरं ततः पश्येत्तत्कूपविहितोदकः ।।५८।।
दंडखाते ततः स्नात्वा व्याघ्रेशं पूजयेत्ततः ।।
शौनकेश्वरकुंडे तु स्नानं कृत्वा ततोर्चयेत् ।।५९।।
जंबुकेशं महालिंगं कृत्वा यात्रामिमां नरः।।
क्वचिन्न जायते भूयः संसारे दुःखसागरे ।।4.2.100.६०।।
समारभ्य प्रतिपदं यावत्कृष्णा चतुर्दशी ।।
एतत्क्रमेण कर्तव्यान्ये तदायतनानि वै ।।६१।।
इमां यात्रां नरः कृत्वा न भूयोप्यभिजायते ।।
अन्या यात्रा प्रकर्तव्यैका दशायतनोद्भवा ।।६२ ।।
आग्नीध्र कुंडे सुस्नातः पश्येदाग्नीध्रमीश्वरम् ।।
उर्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् ।।६३।।
आषाढीशं ततो दृष्ट्वा भारभूतेश्वरं ततः ।।
लांगलीशमथालोक्य ततस्तु त्रिपुरांतकम् ।। ६४ ।।

ततो मनःप्रकामेशं प्रीतिकेशमथो व्रजेत् ।।
मदालसेश्वरं तस्मात्तिलपर्णेश्वरं ततः ।। ६५ ।।
यात्रैकादशलिंगानामेषा कार्या प्रयत्नतः।।
इमां यात्रां प्रकुर्वाणो रुद्रत्वं प्राप्नुयान्नरः ।। ६६।।
अतः परं प्रवक्ष्यामि गारी यात्रामनुत्तमाम्।।
शुक्लपक्षे तृतीयायां या यात्रा विष्वगृद्धिदा ।। ६७ ।।
गोप्रेक्षतीर्थे सुस्नाय मुखनिर्मालिकां व्रजेत् ।।
ज्येष्ठावाप्यां नरः स्नात्वा ज्येष्ठागौरीं समर्चयेत् ।।६८।।
सौभाग्यगौरी संपूज्या ज्ञानवाप्यां कृतोदकैः।।
ततः शृंगारगौरीं च तत्रैव च कृतोदकः ।। ६९ ।।
स्नात्वा विशालगंगायां विशालाक्षीं ततो व्रजेत् ।।
सुस्नातो ललितातीर्थे ललितामर्चयेत्ततः ।।4.2.100.७०।।
स्नात्वा भवानीतीर्थेथ भवानीं परिपूजयेत् ।।
मंगला च ततोभ्यर्च्या बिंदुतीर्थकृतोदकैः ।। ७१ ।।
ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये ।।
इमां यात्रां नरः कृत्वा क्षेत्रेस्मिन्मुक्तिजन्मनि ।। ७२ ।।
न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् ।।
कुर्यात्प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा ।। ७३ ।।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदे ।।
भौमे भैरवयात्रा च कार्या पातकहारिणी ।। ७४ ।।
रविवारे रवेर्यात्रा षष्ठ्यां वारविसंयुजि ।।
तथैव रविसप्तम्यां सर्वविघ्नोपशांतये ।। ७५ ।।
नवम्यामथवाष्टम्यां चंडीयात्रा शुभा मता ।।
अंतर्गृहस्य वै यात्रा कर्तव्या प्रतिवासरम् ।। ७६ ।।
प्रातःस्नानं विधायादौ नत्वा पंचविनायकान् ।।
नमस्कृत्वाथ विश्वेशं स्थित्वा निर्वाणमंडपे ।। ७७ ।।
अंतर्गृहस्य यात्रा वै करिष्ये घौघशांतये ।।
गृहीत्वा नियमं चेति गत्वाथ मणिकर्णिकाम् ।। ७८ ।।
स्नात्वा मौनेन चागत्य मणिकर्णीशमर्चयेत् ।।
कंबलाश्वतरौ नत्वा वासुकीशं प्रणम्य च ।।७९।।
पर्वतेशं ततो दृष्ट्वा गंगाकेशवमप्यथ ।।
ततस्तु ललितां दृष्ट्वा जरासंधेश्वरं ततः ।।4.2.100.८०।।
ततो वै सोमनाथं च वाराहं च ततो व्रजेत् ।।

ब्रह्मेश्वरं ततो नत्वा नत्वागस्तीश्वरं ततः ।। ८१ ।।
कश्यपेशं नमस्कृत्य हरिकेशवनं ततः ।।
वैद्यनाथं ततो दृष्ट्वा ध्रुवेशमथ वीक्ष्य च ।। ८२ ।।
गोकर्णेश्वरमभ्यर्च्य हाटकेशमथो व्रजेत् ।।
अस्थिक्षेप तडागे च दृष्ट्वा वै कीकसेश्वरम् ।। ८३ ।।
भारभूतं ततो नत्वा चित्रेगुप्तेश्वरं ततः ।।
चित्रघंटां प्रणम्याथ ततः पशुपतीश्वरम् ।। ८४ ।।
पितामहेश्वरं गत्वा ततस्तु कलशेश्वरम् ।।
चंद्रेशस्त्वथ वीरेशो विद्येशोग्नीश एव च ।।८५।।
नागेश्वरो हरिश्चंद्रश्चिंतामणिविनायकः ।।
सेनाविनायकश्चाथ द्रष्टव्यः सर्वविघ्नहृत् ।। ८६ ।।
वसिष्ठवामदेवौ च मूर्तिरूपधरावुभौ ।।
द्रष्टव्यौ यत्नतः काश्यां महाविघ्नविनाशिनौ ।। ८७ ।।
सीमाविनायकं चाथ करुणेशं ततो व्रजेत् ।।
त्रिसंध्येशो विशालाक्षी धर्मेशो विश्वबाहुका ।।
आशाविनायकश्चाथ वृद्धादित्यस्ततः पुनः ।। ८८ ।।
चतुर्वक्त्रेश्वरं लिंगं ब्राह्मीशस्तु ततः परः ।।
ततो मनःप्रकामेश ईशानेशस्ततः परम् ।। ८९ ।।
चंडीचंडीश्वरौ दृश्यौ भवानीशंकरौ ततः ।।
ढुंढिं प्रणम्य च ततो राजराजेशमर्चयेत् ।। 4.2.100.९० ।।
लांगलीशस्ततोभ्यर्च्यस्ततस्तु नकुलीश्वरः ।।
परान्नेशमथो नत्वा परद्रव्येश्वरं ततः ।। ९१ ।।
प्रतिग्रहेश्वरं वापि निष्कलंकेशमेव च ।।
मार्कंडेयेशमभ्यर्च्य ततश्चाप्सरसेश्वरम् ।। ९२ ।।
गंगेशोर्च्यस्ततो ज्ञानवाप्यां स्नानं समाचरेत् ।।
नंदिकेशं तारकेशं महाकालेश्वरं ततः ।। ९३ ।।
दंडपाणिं महेशं च मोक्षेशं प्रणमेत्ततः ।।
वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं ततः ।।९४।।
विनायकांस्ततः पंच विश्वनाथं ततो व्रजेत् ।।.
ततो मौनं विसृज्याथ मंत्रमेतमुदीरयेत् ।। ९५ ।।
अंतर्गृहस्य यात्रेयं यथावद्या मया कृता ।।
न्यूनातिरिक्तया शंभुः प्रीयतामनया विभुः ।।९६।।
इति मंत्रं समुच्चार्य क्षणं वै मुक्तिमंडपे ।।

विश्रम्य यायाद्भवनं निष्पापः पुण्यवान्नरः ।।९७।।
संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्वतः ।।
कार्या यात्रा प्रयत्नेन महापुण्य समृद्धये ।। ९८ ।।
नभस्य पंचदश्यां च कुलस्तंभं समर्चयेत् ।।
दुःखं रुद्रपिशाचत्वं न भवेद्यस्य पूजनात् ।। ९९ ।।
श्रद्धापूर्वमिमा यात्रा कर्तव्याः क्षेत्रवासिभिः ।।
पर्वस्वपि विशेषेण कार्या यात्राश्च सर्वतः ।। 4.2.100.१०० ।।
न वंध्यं दिवसं कुर्याद्विनायात्रां क्वचित्कृती ।।
यात्राद्वयं प्रयत्नेन कर्तव्यं प्रतिवासरम् ।। १ ।।
आदौ स्वर्गतरंगिण्यास्ततो विश्वेशितुर्ध्रुवम् ।।
यस्य वंध्यं दिनं यातं काश्यां निवसतः सतः ।। २।।
निराशाः पितरस्तस्य तस्मिन्नेव दिनेऽभवन् ।।
स दष्टः कालसर्पेण स दृष्टो मृत्युना स्फुटम् ।। ३ ।।
स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः ।।
सर्वतीर्थेषु सस्नौ स सर्वयात्रां व्यधात्स च ।।
मणिकर्ण्यां तु यः स्नातो यो विश्वेशं निरैक्षत ।।४।।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनःपुनः ।।
दृश्यो विश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका।।५।।
।। व्यास उवाच ।। ।।
सूत स्कांदमिदं श्रुत्वा काशीमाहात्म्यमुत्तमम् ।।
नरो न निरयं याति कृत्वाप्यघसहस्रकम् ।। ६ ।।
स्नात्वा सर्वाणि तीर्थानि यच्छ्रेयः समुपार्ज्यते ।।
काशीखंडस्य श्रवणात्तत्स्यात्सूत न संशयः ।।७।।
दत्त्वा दानानि सर्वाणि कृत्वा यज्ञाननेकशः ।।
तत्पुण्यं लभते मर्त्यस्तदा तच्छ्रवणाद्ध्रुवम् ।।८ ।।
तप्त्वा तपांसि चोग्राणि प्राप्यते यन्महत्फलम् ।।
श्रवणादस्य खंडस्य लभते तन्न संशयः ।। ९ ।।
अधीत्य चतुरो वेदान्सांगान्यत्फलमाप्यते ।।
काशीखंडं समाकर्ण्य तत्फलं लभ्यते नरैः ।। 4.2.100.११० ।।
गयायां श्राद्धदानाच्च यथा तृप्यंति पूर्वजाः ।।
तथैतच्छ्रवणान्नृणां तृप्नुवंति पितामहाः ।। ११ ।।
तैश्च सर्वपुराणानि श्रुतानि स्थिरबुद्धिभिः ।।
काशीखंडं श्रुतं यैश्च सर्वेषां श्रेयसां पदम् ।। १२ ।।

श्रुताश्च सर्वधर्मास्तैर्महापुण्येकराशिभिः ।।
श्रुतं यैः स्थिरचेतोभिः काशीमाहात्म्यमुत्तमम्।।१३ ।।
इदमेव हि देवेज्या परमा परिकीर्तिता ।।
जपेत्तत्खंडमखिलं श्रोतव्यं श्रद्धया द्विजाः ।। १४ ।।
शृणुयादेकमपि य आख्यानं काशिखंडजम् ।।
श्रुतानि तेन सर्वाणि धर्मशास्त्राण्यसंशयम् ।। १५ ।।
महाधर्मैकजननं महार्थप्रतिपादकम् ।।
कारणं सर्वकामाप्तेः काशीखंडमिदं स्मृतम् ।। १६ ।।
एतच्छ्रवणतः पुंसां कैवल्यं नैव दूरतः ।।
तुष्यंति सर्वे पितरः श्रुत्वैतत्खंडमुत्तमम् ।। १७।।
प्रीणंत्यमर्त्याः सर्वेपि ब्रह्मविष्णुशिवादयः ।।
मुनयः परिमोदंते माद्यंति सनकादयः ।। १८ ।।
हृष्टः सर्वो भवेदेव भूतग्रामश्चतुर्विधः ।।
महिमश्रवणादस्माद्वाराणस्या न संशयः ।। १९ ।।
य इदं श्रावयेद्विद्वान्समस्तं त्वर्धमेव वा ।।
पादमात्रं तदर्धं वा त्वेकं व्याख्यानमुत्तमम् ।। 4.2.100.१२० ।।
स नमस्यः प्रयत्नेन संपूज्यस्त्विष्टदेववत् ।।
तस्मै देयं प्रयत्नेन विश्वेश प्रीतये सदा ।। २१ ।।
तस्मिंस्तुष्टे हि संतुष्टो विश्वेशो नात्र संशयः।।
यत्रैतत्पठ्यते खंडं परानंदसमाश्रयम् ।। २२ ।।
न तत्र प्रभवेत्कश्चिदमंगलसमुद्भवः ।।
य इदं शृणुयाद्विद्वान्यश्चेदं श्रावयेत्सुधीः ।। २३ ।।
यः पठेदपि पुण्यात्मा ते सर्वे रुद्रमूर्तयः ।।
य एतत्पुस्तकं रम्यं लेखयित्वा समर्पयेत् ।। २४ ।।
अखिलानि पुराणानि तेन दत्तानि नान्यथा ।।
अत्राख्यानानि यावंति श्लोका यावंत एव हि ।। २५ ।।
तथा पदानि यावंति वर्णा यावंत एव हि ।।
यावंत्यपि च मात्राणि यावंत्यः पदपंक्तयः ।। २६ ।।
गुणे सूत्राणि यावंति यावंतः पटतंतवः ।।
चित्ररूपाणि यावंति रम्यपुस्तकसंचके ।। २७ ।।
तावद्युगसहस्राणि दाता स्वर्गे महीयते ।।
एतद्द्वादशकृत्वो यः शृणुयात्खंडमुत्तमम् ।। २८ ।।
ब्रह्महत्यापि तस्याशु नश्येच्छंभोरनुग्रहात् ।।

अपुत्रः शृणुयाद्यस्तु सुस्नातः श्रद्धयान्वितः ।। २९ ।।
तस्य पुत्रो भवत्येव शंभोराज्ञा प्रभावतः ।।
किं बहूक्तेन सूतेह यस्य यस्य मनोरथः ।। 4.2.100.१३० ।।
यो यस्तं तं स ससदा श्रुत्वैतत्प्राप्नुयात्कृती ।।
शृणुयाद्दूरदेशेपि यः काशीखंडमुत्तमम् ।। ३१ ।।
स काशीवासपुण्यस्य भाजनं स्याच्छिवाज्ञया ।।
एतच्छ्रवणतः पुंसां सर्वत्र विजयो भवेत् ।।
सौभाग्यं चापि सर्वत्र प्राप्नुयान्निर्मलाशयः ।। ३२ ।।
यस्य विश्वेश्वरस्तुष्टस्तस्यैतच्छ्रवणे मतिः ।।
जायते पुण्ययुक्तस्य महानिर्मलचेतसः ।। ३३ ।।
सर्वेषां मंगलानां च महामंगलमुत्तमम् ।।
गृहेपि लिखितं पूज्यं सर्वमंगलसिद्धये ।।१३४।। ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां चतुर्थे काशीखंड उत्तरार्धेऽनुक्रमणिकानाम शततमोऽध्यायः ।। १०० ।। ।।७।। ।। श्रीकाशीखण्डोत्तरार्धं सम्पूर्णम् ।।
।। समाप्तं चेदं चतुर्थं काशीखंडम् ।।४।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ०१



।। श्रीगणेशाय नमः ।।

श्रीजगदंबायै नमः ।।

।। अथावन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्यं प्रारभ्यते ।।

।। व्यास उवाच ।। ।।

स्रष्टारोऽपि प्रजानां प्रबलभवभयाद्यं नमस्यंति देवा

यो ह्यव्यक्ते प्रविष्टः प्रविहितमनसां ध्यानयुक्तात्मनां च ।।

लोकानामादिदेवः स जयतु भगवाञ्छ्रीमहा कालनामा बिभ्राणः सोमलेखामहिवलययुतं व्यक्तलिंगं कपालम् ।। १ ।।

।। उमोवाच ।। ।।

पृथिव्यां यानि तीर्थानि पुण्याश्च सरितस्तथा।।

कथ्यंतां तानि यत्नेन श्रद्धा येषु प्रजायते ।। २ ।।

ईश्वर उवाच ।। ।।

अस्ति लोकेषु विख्याता गंगा त्रिपथगा नदी ।।

सेविता देवगन्धर्वैर्मुनिभिश्च निषेविता ।। ३ ।।

तपनस्य सुता देवी यमुना लोकपावनी ।।

पितॄणां वल्लभा देवी महापातकनाशिनी ।। ४ ।।

चन्द्रभागा वितस्ता च नर्मदाऽमरकण्टके ।।

कुरुक्षेत्रं गया देवि प्रभासं नैमिषं तथा ।। ५ ।।

केदारं पुष्करं चैव तथा कायावरोहणम् ।।

तथा पुण्यतमं देवि महाकालवनं शुभम् ।। ६ ।।

यत्रास्ते श्रीमहाकालः पापेन्धनहुताशनः ।।

क्षेत्रं योजनपर्यंतं ब्रह्महत्यादिनाशनम् ।। ७ ।।

भुक्तिदं मुक्तिदं क्षेत्रं कलिक ल्मषनाशनम् ।।

प्रलयेऽप्यक्षयं देवि दुष्प्रापं त्रिदशैरपि ।। ८ ।।

।। उमोवाच ।। ।।

प्रभावः कथ्यतां देव क्षेत्रस्यास्य महेश्वर ।।

यानि तीर्थानि विद्यन्ते यानि लिंगानि संति वै।। ९ ।।
तान्यहं श्रोतुमिच्छामि परं कौतूहलं हि मे ।। 5.1.1.१० ।।
।। महादेव उवाच ।। ।।
शृणु देवि प्रयत्नेन प्रभावं पापनाशनम् ।।
क्षेत्रमाद्यं महादेवि सर्वपापप्रणाशनम् ।। ११ ।।
श्रीमेरोः संनिधाने च शिखरं रत्नचिह्नितम् ।।
अनेकाश्चर्यनिलयं बहुपादपसंकुलम् ।। १२ ।।
विचित्रधातुभिश्चित्रं स्वच्छस्फटिकवेदिकम् ।।
विचित्रवर्णशोभाढ्यमृषिसंघनिनादितम् ।। १३ ।।
मृगनागेन्द्रसंयुक्तं गजयूथसमाकुलम् ।।
निर्झरांबुप्रपातोत्थशीकराकरसंकुलम् ।। १४ ।।
वाताहततरुव्रातप्रसूनास्थानचित्रितम् ।।
मृगनाभिवरामोदवासिता शेषकाननम् ।। १५ ।।
लतागृहरतिस्थानं सिद्धविद्याधराश्रयम् ।।
प्रवीणकिन्नरव्रातमधुरध्वनिनादितम् ।। १६ ।।
तस्मिन्वने महारम्ये शोभिताशेष भूमिकम् ।।
वैराजं नाम भवनं ब्रह्मणः परमेष्ठिनः ।। १७ ।।
तत्र दिव्यांगनागीतमधुरध्वनिनादिता ।।
पारिजाततरुच्छन्नमंजरीदामशोभिता ।। ।। १८ ।।
बहुवाद्यसमुन्नद्धमहास्वननिनादिता ।।
लयतालयुतानेकगीतवादित्रनादिता ।। १९ ।।
विन्यस्ता कोटिभिः स्तंभैर्निर्मलादर्शशोभिता ।।
लयतालयुतानेकमहाकौतुकसंयुता ।। 5.1.1.२० ।।
अप्सरोनृत्यविन्यासविलासोल्लासशोभिता ।।
सभा कांतिमतीनाम देवानां हर्षदायिका ।। २१ ।।
ऋषिसंघसमाकीर्णा मुनिवृन्दनिषेविता ।।
द्विजातिवेदशब्देन नादिताऽऽनंददायिका ।। २२ ।।
तस्यां निविष्टं वागीशं शंकराराधने रतम् ।।
सनत्कुमारं ब्रह्मर्षिं ब्रह्मणो मानसं सुतम् ।। २३ ।।
मुनिमध्यात्समुत्थाय कृष्णद्वैपायनो मुनिः ।।
पराशरसुतो व्यासः प्रणिपत्य यथाविधि ।। २४ ।।
कृतांजलिपुटो भूत्वा भवभक्त्यानुभावितः ।।

पप्रच्छ परया तुष्ट्या हर्षितांगरुहाननः ।। २५ ।।
महाकालस्य माहात्म्यं प्राणिनां मोहनाशनम् ।।
।। ।। व्यास उवाच ।। ।।
महाकालवनं कस्मात्प्रोच्यते सर्वतो वरम् ।। २६ ।।
भगवन्क्षेत्रमाहात्म्यं महाकालस्य कथ्यताम् ।।
कथं गुह्यवनं प्रोक्तं पीठत्वमूषरं तथा ।। २७ ।।
फलं यथात्र वसतां मृतानां च गतिर्यथा ।।
स्नानेन यद्भवेत्पुण्यं दानेनापि च यत्फलम् ।। २८ ।।
कथमेतत्स्मशानं च क्षेत्रं प्रोक्तं यथा तथा ।।
पृष्टं मे शंकरे भक्त्या ब्रूहि त्वं शास्त्रकोविद ।। २९ ।।
।। सनत्कुमार उवाच ।। ।।
क्षीयते पातकं यत्र तेनेदं क्षेत्रमुच्यते ।।
यस्मात्स्थानं च मातृणां पीठं तेनैव कथ्यते ।। 5.1.1.३० ।।
मृताः पुनर्न जायंते तेनेदमूषरं स्मृतम् ।।
गुह्यमेतत्प्रियं नित्यं क्षेत्रं शंभोर्महा त्मनः ।।३१।।
यस्मादिष्टं हि भूतानां स्मशानमतिवल्लभम् ।।
महाकालवनं यच्च तथा चैवाविमुक्तिकम् ।। ३२ ।।
एकाम्रकं भद्रकालं करवीरवनमेव च ।।
कोलागिरिस्तथा काशी प्रयागममरेश्वरम् ।। ३३ ।।
भरथं चैव केदारं दिव्यं रुद्रमहालयम् ।।
दिव्यस्मशानान्येतानि रुद्रस्येष्टानि नित्यशः ।। ।। ३४ ।।
रमते भगवानेषु सिद्धक्षेत्रेषु सर्वदा ।।
पृथिव्यां नैमिषं तीर्थमुत्तमं तीर्थपुष्करम् ।। ३५ ।।
त्रयाणामपि लोकानां कुरुक्षेत्रं प्रशस्यते ।।
कुरुक्षेत्राद्दशगुणा पुण्या वाराणसी मता ।। ३६ ।।
तस्या दशगुणं व्यास महाकालवनोत्तमम् ।।
प्रभासाद्यानि तीर्थानि पृथिव्यामिह यानि तु ।। ३७ ।।
प्रभासमुत्तमं तीर्थं क्षेत्रमाद्यं पिनाकिनः ।।
श्रीशैलमुत्तमं तीर्थं देवदारुवनं तथा ।। ३८ ।।
तस्मादप्युत्तमं व्यास पुण्या वाराणसी मता।।
तस्माद्दशगुणं प्रोक्तं सर्वतीर्थोत्तमं यतः।।३९।।
महाकालवनं गुह्यं सिद्धक्षेत्रं तथोषरम् ।।

किंचिद्गुह्यान्यथान्यानि स्मशानान्यूषराणि च ।।5.1.1.४०।।
सर्वतस्तु समाख्यातं महाकालवनं मुने ।।
स्मशानमूषरक्षेत्रं पीठं तु वनमेव च ।।४१।।
पंचैकत्र न लभ्यंते महाकालपुरादृते ।।४२।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये महाकालवनप्रशंसावर्णनंनाम प्रथमोऽध्यायः ।। १ ।।

।। सनत्कुमार उवाच ।। ।।
पुरा त्वेकार्णवे प्राप्ते नष्टे स्थावरजंगमे ।।
नाग्निर्न वायुरादित्यो न भूमिर्न दिशो नभः ।।१।।
न नक्षत्राणि न ज्योतिर्न द्यौर्नेंदुर्ग्रहा स्तथा ।।
न देवासुरगंधर्वाः पिशाचोरगराक्षसाः ।। २ ।।
सरांसि नैव गिरयो नापगा नाब्धयस्तथा ।।
सर्वमेवतमोभूतं न प्राज्ञायत किंचन ।। ३ ।।
तदैको हि महाकालो लोकानुग्रहकारणात् ।।
तस्थौ स्थानान्यशेषाणि काष्ठास्वालोकयन्प्रभुः ।। ४ ।।
सृष्ट्यर्थं स महाकालः करे कामं प्रतिष्ठितम्।।
दक्षिणस्य तु तर्जन्यां स ममंथाविशोषितम् ।।५।।
कललं बुद्बुदं भूत्वा तविवेगविवर्द्धितम् ।।
जज्ञे तदंडं सुदृढं सुष्ठु वृत्तं हिरण्मयम् ।।६।।
करेण ताडितं तद्धि बभूव द्विदलं महत् ।।
अधःखंडं स्मृता भूमिरूर्ध्वं द्यौस्तारकान्वितम् ।। ७ ।।
मध्येऽभवत्तदा ब्रह्मा पंचवक्त्रश्चतुर्भुजः ।।
महेश्वरोऽनुमान्यैव तमयोजदनंतरम् ।। ८ ।।
कुरु सृष्टिं महाबाहो विचित्रां मदनुग्रहात् ।।
इत्युक्त्वांतर्हितः क्वापि देवो ब्रह्मा न जग्मिवान् ।। ९ ।।
प्रेर्यमाणोऽपि वै स्रष्टुं ब्रह्मा देवमचिंतयत् ।।
ब्रह्मणा ध्यायमानश्च ज्ञानार्थं भगवान्भवः ।। 5.1.2.१० ।।
ब्रह्मणस्तपसा दृष्टः प्रादाद्वेदं षडंगकम् ।।
लब्धे वेदेऽपि न चिरात्सष्टिं कर्तुं शशाक सः ।।११।।
तपसाऽतिष्ठदा भूयः समाराधयितुं भवम् ।।
नापश्यत्स यदा देवं तदा तुष्टाव भावितः ।। १२ ।।।
।। ब्रह्मोवाच ।। ।।
नमः शिवायामलसत्त्वचेतसे गुणत्रयातीतविसारितेजसे ।।
षडंगवेदस्य ममापि वेधसे परस्वरूपानुभवाय चक्षुषे ।। १३ ।।
नमोऽ स्तु ते सृष्टिविधौ रजोजुषे जगत्स्थितौ सत्त्वमधिष्ठिताय ते ।।
विनाशहेतौ तमसा महीयसे शिवाय निर्वाणसुखप्रदायिने ।।१४।।
अशेषभूतप्रकृतेः परा य वै परात्मरूपाय नमः शिवाय वै ।।
नृबुद्ध्यहंकारमनोविधायिने भर्त्रे च षड्विंशकरूपकाय वै ।। १५ ।।
भूतोयवह्न्यम्बरवायुचंद्रसूर्यात्मरूपाभिरिदं तनूभिः ।।

व्याप्तं जगद्यस्य नमोऽस्तु तस्मै भूतं भविष्यमथ वर्तमानम् ।। १६ ।।
यानीह तेजांसि जगंति यानि भूतानि भव्यान्यथ कारणानि ।।
भवंति सृष्टौ विलयं विनाशे व्रजंति यस्यात्मनि तं नमामि ।। १७ ।।
।। सनत्कुमार उवाच ।। ।।
एवं संस्तुवतो व्यास ब्रह्मणो भगवान्परः ।।
अन्तर्हित उवाचेदं ब्रह्मन्संयाच्यतां वरः ।। १८ ।।
स वव्रे मनसा पुत्रं भवं गौरवकारणात् ।।
विज्ञायांतर्गतं तस्य परमेश उवाच तम् ।। १९ ।।
यस्मान्मां मनसा पुत्रं चतुर्मुख समीहसे ।।
कस्मिंश्चित्कारणे तस्मादहं छेत्स्यामि ते शिरः ।। 5.1.2.२० ।।
अयाच्यं याचितं यस्मान्ममांशो नीललोहितः ।।
रुद्रो भविष्यति सुतः स च ते हिंस्यति प्रभाम् ।। २१ ।।
अन्यद्यस्मात्स्मृतो भक्त्या त्वयाहं पितृभावतः ।।
परब्रह्मस्वरूपेण जिज्ञासा मम या कृता ।। ।। २२ ।।
तस्माद्ब्रह्मेति लोकेऽत्र नाम ख्यातं भविष्यति ।।
पितामहत्वं तेनापि पितामहस्ततो ह्यसि ।। २३ ।।
लब्ध्वा शापवरावेवं पुत्रसृष्टिं चकार सः ।।
स्वतेजोजनितं वह्निं जुह्वतः स्वेदमावहत् ।।२४।।
समिद्युक्तेन हस्तेन ललाटं मार्जतोऽभवत् ।।
स्विन्नभ्रष्टस्ततो रक्तबिंदुरेको विभावसौ ।।२५।।।
स नीललोहितोऽभूद्वै स च रुद्रो भवाज्ञया ।।
तदनन्तरमासाद्य उत्ततार सुतोंऽतिकात् ।। २६ ।।
पंचवक्त्रो दशभुजः शूलचापासिशक्तिमान् ।।
त्रिपंच नयनो रौद्रो व्यालयज्ञोपवीतकः ।। २७ ।।
सेन्दुः कपर्दं बिभ्राणः सिंहचर्मांबरंधरः ।।
जातमेवं स दृष्ट्वा तु ब्रह्मा नामाकरोत्तदा ।। २८ ।।
नीललोहितनामेति भव रुद्र पिनाकधृक् ।।
ततः प्रववृते सृष्टिः स्रष्टुर्लोकपितामहात् ।। २९ ।।
सप्तादौ मानसाञ्जज्ञे सनकादींस्ततोऽपरान् ।।
मरीचि दक्षप्रभृतीन्मन्वादींश्च प्रजासृजः ।। 5.1.2.३० ।।
अष्टभेदान्सुरान्कृत्वा तिर्यग्योनिं च पंचधा ।।
मनुष्यानेकभेदांश्च सृष्टिमेवं ससर्ज ह ।। ३१ ।।
सृष्टिः सुरादिका जाता कृत्वा ब्रह्माणमप्यधः ।।

प्रणम्याथ सिषेवुस्ते केवलं नीललोहितम् ।। ३२ ।।
ततो ब्रह्माऽवदद्रुद्रमपूज्यो हि त्वया कृतः ।।
स्वतेजसा भवान्पूज्यो यतो याहि हिमालयम् ।।३३।।
तं नीललोहितः प्रोचे भवता नार्चितो ह्यहम् ।।
ततो जगाम रुद्रोऽसौ स यत्र भगवान्भवः ।।३४।।
ततो ब्रह्माऽभवन्मूढो रजसा चोपबृंहितः ।।
ततापं तेजसा सृष्टिं मन्यमानो मया कृताम् ।। ३५।।
मत्तुल्यो नास्ति वै देवो येन सृष्टिः प्रवर्द्धिता ।।
सदेवासुरगन्धर्वा पशु पक्षिमृगाकुला ।। ३६ ।
एवं मूढः स पंचास्यो विरंच्योऽभवद्दर्पितः ।।
प्राग्वक्त्रं सुस्वरं तस्य सामवेदप्रवर्तकम् ।। ३७ ।।
द्वितीयं वदनं तस्य ऋग्वे दस्य प्रवर्तकम्।।
यजुर्वेदधरं चान्यदथर्वाख्यं चतुर्थकम् ।। ३८ ।।
सांगोपांगेतिहासांश्च सरहस्यान्ससंग्रहान् ।।
वेदानधीते वक्त्रेण पंचमेनोपचक्षुषा ।। ।। ३९ ।।
तस्याऽसुराः सुराः सर्वे वक्त्रस्याद्भुततेजसः ।।
तेजसा न प्रकाशंते दीपः सूर्योदये यथा ।। 5.1.2.४० ।।
सपुत्रा अपि सोद्वेगा बभूवुर्नष्ट चेतसः ।।
नाभिगन्तुं न च द्रष्टुं चिरं तेजोऽपसर्पितुम् ।। ४१ ।।
अभिभूतमिवात्मानं मन्यमाना अविद्विषः ।।
सर्वे ते मन्त्रयामासुर्देवा वै हितमा त्मनः ।। ४२ ।।
गच्छाम शरणं देवं निस्तेजा ब्रह्मतेजसा ।।
किं तु तस्य न जानीमः स्थानं यत्र व्यवस्थितः ।। ४३ ।।
तं भीममत्र दक्ष्यामो भक्त्या नान्येन केनचित् ।।
एवं संमन्त्र्य ते देवाः कृतांजलिपुटास्तदा ।।
चक्रुः स्तोत्रं महेशस्य परया स्वरसंपदा ।। ४४ ।।
।। देवा ऊचुः ।।।
नमस्ते देवदेवेश महेश्वर नमोनमः ।। ४५ ।।
न विद्मः परमं मूढा महिमानं तवातुलम् ।।
यद्योगेन परं ब्रह्म भूतानां त्वं सनातनः ।। ४६ ।।
प्रतिष्ठा सर्वभूतानां हेतुः सर्वस्य सर्जने ।।
बिभर्षि चैव नेत्रस्थान्सोमसूर्यविभावसून् ।। ४७ ।।
नामसंकीर्तनादेव मुच्यन्ते जंतवोऽशुभात् ।।

पृथिव्यबग्निचन्द्रार्कव्योमवायूपलक्षणाः ।। ४८ ।।
मूर्तयस्ते महादेव व्याप्तमाभिरशेषतः ।।
रजःसत्त्वतमोभावैर्भ्राम्यमाणं त्वया जगत् ।। ४९ ।।
नावबुध्यति सर्वेश सर्वमूर्तिधरो यतः ।।
ब्रह्मादीनां सुरेशानां संमोहनविमोहनम् ।।
त्वं करोषि युगावर्तकाले काले च दुःसहम् ।। 5.1.2.५० ।।
।। सनत्कुमार उवाच ।। ।।
प्रत्यक्षं दर्शनं दत्त्वा देवानामनुकंपया ।।
प्रसन्नवदनो भूत्वा देवैश्चापि नमस्कृतः ।। ५१ ।।
वासयन्मोहनाम्ना तु सह देवैर्महेश्वरः ।।५२।।
एवं संस्तूयमानोऽसौ देवर्षिपितृमानवैः ।।
अन्तर्हित उवाचेदं देवा ब्रूत यथेप्सितम् ।। ५३ ।।
।। देवा ऊचुः ।। ।।
प्रत्यक्षं दर्शनं स्थाणो प्रार्थयाम सदा तव ।।
त्वया कारुण्यतोऽस्माकं वरश्चापि प्रदीयताम् ।। ५४ ।।
यदस्माकं महद्वीर्यं तेजश्चैव पराक्रमम् ।।
तत्सर्वं ब्रह्मणा ग्रस्तं पंचमास्यस्य तेजसा ।। ५५ ।।
विनेशुः सर्वतेजांसि त्वत्प्रसादात्पुनः प्रभो ।।
जायते तद्यथापूर्वं तथा कुरु महेश्वर ।। ५६ ।।
।। सनत्कुमार उवाच ।। ।।
प्रत्यक्षमेत्य वै पश्चाच्चलितः शर्व एव हि ।।
जगाम तत्र यत्रासौ रजोऽहंकारमूर्त्तिमान्।।
देवाः स्तुवंतो देवेशं परिवार्य उपाविशन् ।। ।। ५७ ।।
ब्रह्मा तमागतं देवं नाजानात्तमसा वृतः ।।
सूर्यकोटिसहस्राणां तेजसा रंजयञ्जगत् ।। ५८ ।।
तदाऽदृश्यत विश्वात्मा विश्वसृग्विश्वभाव नः ।।
स पितामहमासीनं सकले देवमण्डले ।। ५९ ।।
तेजसाभिभवन्रुद्रस्तेन मत्तोऽग्रतः स्थितः ।।
रुद्रतेजोभिभूतं च ब्रह्मवक्त्रं न राजते ।। 5.1.2.६० ।।
रात्रौ प्रकाशकिरणश्चंद्रः सूर्योदये यथा ।।
सगर्वोथात्मजं दृष्ट्वा रुद्रदेवं सनातनम् ।। ६१ ।।
अवन्दत करेणैव प्राह वै सस्मितं वचः ।।
प्रत्युवाच विरूपाक्षो ब्रह्माणं तं हसन्निव ।। ६२ ।।

यतो न वेद परमं देवं तत्तेजसावृतः ।।
ततोऽट्टहासं भगवान्मुमोच शशिशेखरः ।। ६३ ।।
पश्यतां सर्वदेवानां शृण्वतां वाचमुक्तवान् ।।
तेनाट्टहासशब्देन मोहयित्वा पितामहम् ।। ६४ ।।
तेजोराशिशशांकाभः शशांकार्काग्निलोचनः ।।
वामांगुष्ठनखाग्रेण ब्रह्मणः पञ्चमं शिरः ।। ६५ ।।
चकर्त कदलीगर्भं नरः कररुहैरिव ।।
छिद्यमानं च तद्वक्त्रं बुबुधे न पितामहः ।। ६६ ।।
रुद्रस्य तेजसा तस्मान्मो हितो न नतिं गतः ।।
छिन्नं तस्य शिरः पश्चाद्रुद्रहस्ते स्थितं तदा ।। ६७ ।।
अपश्यद्दैवतैः सार्धं रौद्रमतिभयाज्ज्वलत् ।।
महेश्वरकरांतस्थनखै र्वक्त्रं विराजते ।। ६८ ।।
ग्रहमण्डलमध्यस्थो द्वितीय इव चन्द्रमाः ।।
उत्क्षिप्य तत्कपालेन ननर्त शशिशेखरः ।। ६९ ।।
शिखरस्थेन सूर्येण कैलास इव पर्वतः ।।
छिन्ने वक्त्रे ततो देवा हृष्टपुष्टा वृषध्वजम् ।।
तुष्टुवुर्विविधैः स्तोत्रैर्देवदेवं कपालिनम् ।। 5.1.2.७० ।।
।। देवा ऊचुः ।। ।।
नमः कपालिने नित्यं महाकालाय शंखिने ।। ७१ ।।
ऐश्वर्यज्ञानयुक्ताय सर्वभोगप्रदायिने ।।
नमो दर्पविनाशाय सर्वदेवमयाय च ।। ७२ ।।
कालसंहारकर्ता त्वं महाकालस्ततो ह्यसि ।।
भक्तानां दुःखशमनो दुःखांतस्तेन रोचसे ।। ७३ ।।
शंकरोप्याशु भक्तानां तेन त्वं शंकरः स्मृतः ।।
छित्त्वा ब्रह्मशिरो यस्मात्कपालं च बिभर्षि च ।।७४।।
तेन देव कपाली त्वं स्तुतो ह्यसि प्रसीद नः ।।
एवं स्तुतः प्रसन्नात्मा देवानुत्थाप्य शंकरः ।।७५।।
कृपानिधिः स भगवांस्तत्रैवांतरधीयत ।।
शशिशकलमयूखैर्भासित यत्कपर्दं द्रवति गगनगंगातोयवीचीविचेयम्।।
सितविधृतकपालो मालया रुद्रपार्श्वे स जयति जितवेधा ऊर्जितः प्राज्यतेजाः ।।७६।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमआवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये
ब्रह्मशिरश्छेद वर्णनं नामद्वितीयोऽध्यायः ।। २ ।।।छ।।।

।। सनत्कुमार उवाच ।। ।।
छिन्ने वक्त्रे ततो ब्रह्मा क्रोधेन तमसा वृतः ।।
ललाटे स्वदमुत्पन्नं गृहीत्वाऽताडयद्भुवि ।। १ ।।
तत्स्वेदात्कुंडली जज्ञे सधनुः समहेषुधिः ।।
सहस्रकवचो वीरः किं करोमीत्युवाच ह ।। २ ।।
तमुवाच विरंचिस्तु दर्शयन्रुद्रमोजसा ।।
वध्यतामेष दुर्बुद्धिर्जायते न यथा पुनः ।। ३ ।।
ब्रह्मणो वचनं श्रुत्वा धनुरुद्यम्य पृष्ठतः ।।
स प्रतस्थे महेशस्य बाणहस्तोऽतिरोषभृत् ।। ४ ।।
स दृष्ट्वा पुरुषं चोग्रमगमद्विस्मितो भवः ।।
दिव्यबाणधनुर्हस्तं वेगविक्रांतगामिनम् ।। ५ ।।
मया न वध्योऽतिबलः सखा विष्णोर्भविष्यति ।।
अनुग्राहयो ह्यहं तेन सख्यार्थं तपसि स्थितः ।। ६ ।।
चिंतयन्नित्थमीशोऽपि विष्णोराश्रममभ्यगात् ।।
हुंकारध्वनिना ब्रह्मन्मोहयित्वा ततो नरम् ।। ७ ।।
प्रपात्य च तदा हृष्टः क्रीडां कुर्वञ्जगत्स्थितौ ।।
यत्र नारायणः श्रीमांस्तपस्तेपे प्रतापवान् ।। ८ ।।
अदृश्यः सर्वभूतानां विश्वात्मा विश्वसृग्विभुः ।।
तत्र प्राप्तो विरूपाक्षो ददर्श मधुसूदनम् ।। ९ ।।
एकांगुष्ठस्थितं भूमौ तपोऽत्यंतमनातुरम् ।।
युगांतार्कसहस्रस्य तेजसा वृतमद्भुतम् ।। 5.1.3.१० ।।
पुण्या धारसमायुक्तं पुराणपुरुषोत्तमम् ।।
दृष्ट्वा नारायणं देवं भिक्षां देहीत्युवाच ह ।। ११ ।।
कपालं दर्शयित्वाग्रे ज्वलज्ज्वलनसोत्कटम् ।।
कपालपाणिं संप्रेक्ष्य रुद्रं विष्णुरचिंतयत् ।। १२ ।।
कोऽन्यो योग्यो भवेद्भिक्षुर्भिक्षादानस्य सांप्रतम् ।।
योग्योऽयमिति संकल्प्य दक्षिणं भुजमर्पयत् ।। १३ ।।
तं बिभेदांतर्गतज्ञः शूलेन शशिशेखरः ।।
ततः प्रवाह उत्पन्नः शोणितस्य विभोर्भुजात् ।। १४ ।।
जांबूनदरसाकारा वह्निज्वालेव निर्मला ।।
निष्पपात कपालांते शंभुना संप्रतीच्छिता ।। १५ ।।
ऋज्वी वेगवती शिप्रा दीधितीवांबरे रवेः ।।
पंचाशद्योजना दीर्घा विस्तारे दशयोजना ।। १६ ।।

दिव्यं वर्षसहस्रं सा समुवाह हरेर्भुजात् ।।
कियंतं कालमीशो हि भिक्षां जग्राह भावितः ।। १७ ।।
दत्तां नारायणेनाथ सत्पात्रे पात्र उत्तमे ।।
ततो नारायणः प्राह हरं परमिदं वचः ।। १८ ।।
संपूर्णं तव पात्रं हि ततो वै परमेश्वरः ।।
सतोयांबुदनिर्घोषं श्रुत्वा वाक्यं हरेर्हरः ।। १९ ।।
शशिसूर्याग्नि नयनः शशिशेखरशोभितः ।।
कपाले दृष्टिमावेश्य त्रिनेत्रैश्च जनार्दनम् ।। 5.1.3.२० ।।
अंगुल्या घटयन्प्राह कपालं चातिपूरितम् ।।
श्रुत्वा हरिरिदं वाक्यं रक्तधारां समाहरत् ।। २१ ।।
पार्श्वतोथ हरेरीशः स्वांगुल्या रुधिरं तदा ।।
दिव्यं वर्षसहस्रं च दृष्टिपातं ममंथ वै ।। २२ ।।
मथ्यमाने ततो रक्ते कललं बुद्बुदं क्रमात् ।।
बभूव च ततः पश्चात्किरीटी सशरासनः ।। २३ ।।
सहस्रबाहू रक्ताक्षो धनुर्ज्यां संस्पृशन्मुहुः ।।
बभूव तूणीरगलो वृषस्कंधोंऽगुलित्रवान् ।। २४ ।।
पुरुषोऽर्जुनसंकाशः कपाले संप्रकाशयन् ।।
तं दृष्ट्वा भगवान्विष्णुः प्राह रुद्रमिदं वचः ।। २५ ।।
कपाले भगवन्कोऽयं प्रादुर्भूतोऽभवन्नरः ।।
उक्तिं श्रुत्वा हरेरीशस्तमुवाच हरे शृणु ।। २६ ।।
नरो नामेति पुरुषः परमास्त्रविदांवरः ।।
यस्त्वयोक्तो नर इति नरस्तस्माद्भ विष्यति ।। २७ ।।
नरनारायणौ चोभौ युगे ख्यातौ भविष्यतः ।।
संग्रामे देवकार्येषु लोकानां परिपालने ।। २८ ।।
एष नारायण सखा नरस्तव भविष्यति ।।
तव एकाकिनः संख्ये तपसश्च महामुनिः ।। २९ ।।
विज्ञानस्य परीक्षायै तेजो लोके भविष्यति ।।
तेजोधिकमिदं दिव्यं ब्रह्मणः पंचमं शिरः ।। 5.1.3.३० ।।
तेजसा ब्रह्मणो दीप्तो भुजस्य तव शोणितात् ।।
मम दृष्टिनिपाताच्च त्रीणि तेजांसि यान्यतः ।। ३१ ।।
तत्संयोगात्समुत्पन्नः शत्रूनुद्वेजयिष्यति ।।
अवध्या ये भविष्यंति दुर्जयास्तव चापरे ।। ३२ ।।
शक्रस्य चामरारीणां तेषामेव भयंकरः ।।

एवमुक्तवतः शंभोर्विस्मितस्तस्य तेजसा ।। ३३ ।।
हरिरपि स तत्रैव तुष्टाव हरकेशवौ ।।
नमो हर हरे तुभ्यं नमः शंकर विष्णवे ।। ३४ ।।
नमस्ते शूलहस्ताय नमस्ते खड्गपा णये ।।
नमोनमस्ते मेध्याय हृषीकेश नमोऽस्तु ते ।। ३५ ।।
नमोऽस्तु वाचां पतये श्रीधराय नमोनमः ।।
एवं स्तुवन्तं तं भक्त्या कृतांजलि पुटं नरम्।। ३६ ।।
तथैवांजलिसंबद्धं गृहीत्वाशु करद्वयम्।।
उद्धृत्याथ कपालात्तु पुनर्वचनमब्रवीत् ।। ३७ ।।
य एव पुरुषो रौद्रो ब्रह्मणः स्वेदसं भवः ।।
मम हुंकारशब्देन मोहनिद्रामुपागतः ।। ३८ ।।
निबोध तं च त्वरितमित्युक्त्वांतर्हितो हरः ।।
नारायणस्य प्रत्यक्षं बोधयित्वा द्रुतं हि तम्।। ३९ ।।
वामपादेन हत्वा च समुत्तस्थौ नरो रुषा ।।
तयोर्युद्धं समभवत्स्वेदरक्तजयोर्महत् ।। 5.1.3.४० ।।
विस्फारितधनुःशब्दैर्नादिताशेषभूत लम्।।
कवचं स्वेदजस्यैकं रक्तजस्य तथा भुजौ ।।४१।।
एवं समेन वै युद्धं दिव्यं जातं तु भूतले ।।
त्रिवर्षोनानि वर्षाणां शतानि दश सुद्विज।।४२।।
युध्यतो समतीतानि स्वेदरक्तजयोर्मुने ।।
रक्तजो द्विभुजो दृष्ट्वा कवचैकेन स्वेदजम् ।। ४३ ।।
बिभेद बाणवेगेन ब्रह्मणस्तं नरं परम् ।।
ससंभ्रममु वाचेदं ब्रह्माणं मधुसूदनः ।। ४४ ।।
मन्नरेणोच्छ्रितो ब्रह्मंस्त्वदीयो विनिपातितः ।।
श्रुत्वा तदाकुलो ब्रह्मा बभाषे मधुसूदनम् ।। ४५ ।।
हरेऽन्यजन्मनि नरो मदीयो यदि हीयते ।।
तेन तुष्टेन संप्रोक्तं हरिणैवं भविष्यति ।। ४६ ।।
कृत्वा तयो रणमपि निवार्य तावुवाच ह ।।
अथान्यजन्मनि नरो मदीयो भविता कलौ ।। ४७ ।।
ततो महारणे जाते तत्राहं योजयामि तम् ।।
विष्णुनाथ समाहूय महेश्वरसुरेश्वरौ ।। ४८ ।।
उक्ताविमौ नरौ रुद्रौ पालनीयौ स्वशक्तितः ।।
स्वेदजातासृग्जातौ तु स्वकीयांशौ धरातले ।।

स्वांशभूतौ द्वापरांते नियोज्यौ भूतले त्वया ।। ४९ ।।
ततोऽब्रवीत्तदा विष्णुं सुरेशो दुःखितं वचः ।। 5.1.3.५० ।।
अस्मिन्मन्वंतरे देव त्रेतायुगं तदा यदा ।।
त्वद्रूपेणेह महता सूर्यपुत्रहितार्थिना ।।
वालीनाम महाबाहुः सुग्रीवार्थे निपातितः ।। ५१ ।।
तेन दुःखेन तप्तोऽहं नाहं गृह्णामि ते नरम् ।।
अगृह्णमानं देवेशं कारणांतरवादिनम् ।। ५२ ।।
विष्णुः प्रोवाच मघवन्भुवो भारावतारणे।।
अवतारं करिष्यामि मर्त्यलोकेऽप्यहं विभो।।५३।।
ततो हृष्टोऽभवच्छक्रो विष्णुवाक्येन तेन वै।।
प्रतिगृह्य नरं हृष्टः सत्यमस्तु वचस्तव ।। ५४ ।।
इत्युक्त्वा तु रवीन्द्रौ स प्रेषयित्वा च तौ पुनः ।।
गत्वा च पुण्डरीकाक्षो ब्रह्माणं ब्रह्मवेश्मनि ।। ५५ ।।
कृतं जुगुप्सितं कर्म ब्रह्मन्नीशं जिघांसता ।।
यत्त्वया देवदेवेश पुमान्कोपेन भाषितः ।। ५६ ।।
शुद्ध्यर्थमस्य पापस्य प्रायश्चित्तं परं कुरु ।।
गृह्णन्वह्निनत्रयं ब्रह्मन्नग्नि होत्रमुपास्व ह ।। ५७ ।।
एको वै गार्हपत्योऽस्तु द्वितीयाहवनीयकः ।।
दक्षिणाग्निस्तृतीयस्तु त्रिकुण्डेषु प्रकल्पय ।। ५८ ।।
वर्तुले तर्पयात्मानं मामथो धनुषाकृतौ ।।
चतुष्कोणे हरं देवमृग्यजुःसामनामभिः ।। ५९ ।।
हुत्वा त्वग्निं च तपसा हरमेवार्च्य तत्क्षणात् ।।
दिव्यं वर्षसहस्रं तु हुत्वाग्निं सिद्धिमाप्स्यसि ।। 5.1.3.६० ।।
प्रायश्चित्तविशुद्धात्मा प्रतिपद्य महेश्वरम्।।
ततो निष्कल्मषो भूत्वा विषादस्ते गमिष्यति ।। ६१ ।।
इत्येवमुक्त्वा हरिरुग्रतेजा गतः स्वकीयं निलयं महात्मा ।।
ब्रह्मापि चित्तं तपसे निधाय समादधे सर्वमथाच्युतोक्तम् ।।६२।।
इति श्रीस्कांदे महापुराण एकाशीतिसाह स्र्यां संहितायां पंचम आवंत्यखण्डेऽवंतीक्षेत्रमाहात्म्ये ब्रह्मणः प्रायश्चित्तवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।।छ।।।

।। व्यास उवाच ।। ।।
योऽसौ कपाल उत्पन्नो नरोनाम धनुर्धरः।।
किमेवं सोऽधुना जात उत्पत्तौ विश्वकर्मणः।।१।।
कथं रुद्रेण जनितः प्रभुणा बुद्धिपूर्वकम्।।
विष्णुना वा भगवता ब्रह्मणा भाव भेदतः ।।२।।
केन कस्मात्समुत्पन्नः शंकराच्युतब्रह्मणाम् ।।
ब्रह्मा हिरण्यगर्भो यो यो जातश्च चतुर्मुखः ।। ३ ।।
अद्भुतं पंचमं वक्त्रं कथं तस्याप्युपस्थितम् ।।
स तस्थौ भगवान्ब्रह्मा कथं रुद्रे मनोऽदधत् ।। ४ ।।
मूढात्मना नरो येन हंतुं स प्रहितो हरम् ।। ५ ।।
।। सनत्कुमार उवाच ।। ।।
महेश्वरहरी एतौ द्वावेव सति तिष्ठतः ।।
तयोरविदितं नास्ति सिद्धासिद्धं महात्मनोः ।। ६ ।।
ब्रह्मणः पंचमं वक्त्रं यत्तदासीन्महात्मनः ।।
तस्यैव मानसः सोग्निः शिरसा तेन वै धृतः ।। ७ ।।
यो नरो ब्रह्मणः प्रोक्तः सोऽप्यग्निस्तस्य मानसः ।।
दधार तं महादेवः कृत्वांगुल्यंतरांतरे ।। ८ ।।
पूर्वं दृष्ट्वा समुत्पत्ति मेवं तस्य महान्नरः ।।
तस्मात्कपालमंगुल्यां घट्टमानमजायत ।। ९ ।।
स तं हत्वा शरेणाजौ ब्रह्मणो निहितं रजः ।।
मुमोह रजसा सत्त्वं यदृच्छा कृतप्रभुर्यतः ।। 5.1.4.१० ।।
।। व्यास उवाच ।। ।।
कथमग्निः समुत्पन्नो योनिः सर्वेण धारितः ।।
विस्तरेण तदाचक्ष्व भगवन्मुनिवंदित ।। ११ ।। ।।
।। सनत्कुमार उवाच ।। ।।
अव्यक्तादीन्ससर्जादावंडं हि तदजायत ।।
जज्ञे सौवर्णवर्णाभो ब्रह्मा लोकपितामहः ।। १२ ।।
स्वयंभूः स तपस्तप्त्वा दिव्यं वर्षशतं महत् ।।
स तपःस्थो व्याजहार भूर्भुवःस्वरिति श्रुतीः ।। १३ ।।
श्रुतियोगात्तु मनसः पश्चादग्निरजायत ।।
अधोमुखः पपाताग्निः पृथिवीं निर्दहन्यदा ।। १४ ।।
पाणिभ्यां ब्रह्मणा सोग्निर्भूमेरूर्ध्वं निवेशितः ।।
ततो दक्षिणहस्तेन वेद्यामग्निः प्रणीयते ।। १५ ।।

पुरापतन्नधोज्वाल ऊर्ध्वज्वालो यदा धृतः ।।
उत्तानश्च कृतो यस्माद्ब्रह्मणा निर्मितो मिथः ।। १६ ।।
ज्वालाभिः प्रज्वलन्नूर्ध्वं सर्वशब्दस्फुलिंगवान् ।।
हिरण्यवर्णं ब्रह्माणं तदोवाचानिरुत्कटः ।। १७ ।।
किमर्थं तु त्वया देव भूमिभक्षं निवारितम् ।।
बुभुक्षयाहमाविष्ट आहारो मे प्रदीयताम् ।। १८ ।।
एवमुक्तोऽग्नये ब्रह्मा स्वरोमाणि जुहाव सः ।।
कृशश्चखाद अग्निस्तु सर्वरोमाणि ब्रह्मणः ।। १९ ।।
अब्रवीच्च न मे तृप्तिर्न च मे देहनिर्वृतिः ।।
त्वचं जुहाव ब्रह्मा च चखादाग्निस्त्वचं तदा ।। 5.1.4.२० ।।
अब्रवीत्तं तदा वह्निस्तृप्तिर्नास्ति ममेति हि ।।
जुहाव स्वानि मांसानि त्वचोत्कृत्य प्रजापतिः ।। २१ ।।
अब्रवीच्च न मे तृप्तिर्न च मे देहनिर्वृतिः।।
जुहाव ब्रह्मा चास्थीनि तान्यश्नात्स बुभुक्षितः ।। २२ ।।
ततो धात्रा हुताशाय कृतो देहो विधातुकः ।
तमदेहमथो दृष्ट्वा ब्रह्माणमवदच्च सः ।। २३ ।।
अहो ब्रह्मन्न मे तृप्तिर्न च मे देहनिर्वृतिः।
कुद्धेण ब्रह्मणा सोऽग्निर्हुंकारेण द्विधा कृतः ।। २४ ।।
आहतू रुदतावग्नी आहारार्थं प्रजापतिम् ।।
हुंकारेण पुनर्ब्रह्मा द्विधैकैकं चकार वै ।। २५ ।।
त्रयस्तेषां रुदंति स्म रुदन्ह्येको ह्यसंवृतः ।।
क्रुद्धेन ब्रह्मणा व्यास हुंकारेणैव ताडितः ।। २६ ।।
रोरूयमाणे चाग्नौ तु पुनर्ब्रह्मा कृपान्वितः ।।
प्राह कामाभिभूतानां भुंक्ष्व त्वं देहधातुकम् ।। २७ ।।
स कालस्तस्य कामस्य सा वृत्तिः संप्रकल्पिता ।।
अकाराग्निं सन्निविष्टं दृष्ट्वा मनसि मानसः ।। २८ ।।
हुंकाराग्निः प्रजज्वाल किमेतदिति चाब्रवीत् ।।
ब्रह्मा तमाह त्वमपि यथेष्टां वृत्तिमाश्रय ।। २९ ।।
देवमध्ये बहिर्वापि मुनीनामाश्रमेषु च ।।
इत्येवमुक्तस्तेनाशु वृत्तिमेतामरोचयत् ।। 5.1.4.३० ।।
अहमेवं प्रदास्यामि पुनः पुनरुवाच ह ।।
यस्मादेष द्वितीयोग्निर्हुंकारात्समजायत ।। ३१ ।।
साभिमानोऽपमानो वा हुंकारो यत्र कथ्यते ।।

सा च वृत्तिर्ममादेशाद्बुभुक्षाशांतये तव ।। ३२ ।।
इकाराग्निं समाहूय ब्रह्मा वचनम ब्रवीत्।।
भवतोग्ने त्वियं वृत्तिरन्नं भुक्तं दहेरिति ।।३३।।
उकाराग्निं समाहूय ब्रह्मा वचनमब्रवीत् ।।
यत्पृथिव्यां गुरुध्यानं भगवंस्तत्समाश्रय।।३४।।
अहं च ते विधास्यामि स्थानमाहारमेव च ।।
इत्युक्तः स तु तेनाग्निर्यत्पृथिव्यां शिलाचयः ।। ३५ ।।
यतोऽग्निर्व्यास तेनोक्तो गिरौ दुर्गे महामुने ।।
उकाराग्निः स चाप्येष समुद्रे वडवामुखः ।। ३६ ।।
सोऽपि भिन्नः समाहूतो ब्रह्मणा स्थानलिप्सया ।।
त्वं चक्षुः सर्वलोकस्य ब्रह्मा वचनमब्रवीत् ।। ३७ ।।
तस्मात्त्वं संस्कृतां वाणीं द्विजातीनां प्रकाशय ।।
दैवी पुण्या हि पापांश्च आयुष्यं हंत्यसंस्कृता ।। ३८ ।।
तस्माद्द्विजातेर्विज्ञेया वाणी पुण्या प्रकाशिता ।।
वाक्च माता द्विजातीनां मुखे सा संप्रतिष्ठिता ।। ३९ ।।
अनृताक्षरविन्यासादमंगल्या ह्यसंस्कृता ।।
वक्तारं हंत्यतो ह्यग्निः सदा संस्कृतकृद्द्विजः ।। 5.1.4.४० ।।
आहूय भूयोऽकाराग्निं प्रजापतिरचक्षुषम् ।।
वाग्वेदवाणीमवदत्सोपि संमीलितेक्षणः ।। ४१।।
ब्रह्माणमाह वह्निस्तु वाचोहं मुखमस्मि हे ।।
स्थानं मम प्रयच्छस्व सर्वतेजोवरं परम् ।। ४२ ।।
ब्रह्मा तमाह यस्मात्त्वं तेजःस्थानं समीहसे ।।
तस्मात्तेजोमयं यत्ते रविस्थानं भविष्यति ।।४३।।
यस्मात्तेजः प्रपश्यंति चक्षुर्भवति दुर्बलम् ।।
तस्मात्तत्तेजसा युक्तं पश्येदनिमिषं क्वचित् ।। ४४ ।।
इकारमथ संभिन्नमग्निमाह पितामहः ।।
सौम्यदृष्ट्या तु ब्रह्माणं समुदीक्षमुपागतम्।। ४५ ।।
यस्माच्छीघ्रं महासत्त्व सौम्यदृष्टिरिहागतः ।।
तस्माद्दास्याम्यहं स्थानं सर्वभूतमनोरमम् ।। ४६ ।।
संशीतात्मा शीतरश्मिश्चंद्रमास्त्वं भविष्यसि ।।
सर्वतेजोधिको दिव्यः सौम्यः परमभासुरः ।। ४७ ।।
तरुस्थः सर्वतेजांसि तेजसाऽभिभविष्यसि ।।
इत्युक्त्वा तं विसृज्याथ उकाराग्निमथाह्वयत ।। ४८ ।।

इहैहीतीति शिरसि समादाय न्यवेशयत् ।।
तत्रस्थं पंचमं वक्त्रं ऊर्ध्वमेतत्प्रजायते ।। ४९ ।।
स एवं रूपवानग्निरुकाराग्निः प्रतिष्ठितः ।।
तस्मादग्निश्च सूर्यश्च एकमेतौ विनिर्दिशेत् ।। 5.1.4.५० ।।
भवाग्निरूपं परमं ब्रह्माणमिदमब्रवीत् ।।
ममापि रुचिरं स्थानं प्रयच्छस्व यथा स्वयम् ।। ५१ ।।
ब्रह्मा तमाह कतमं स्थानं ते रोचतेऽनल ।।
अग्निस्तं प्रत्युवाचेदं स्थानं कथय मे परम्।।५२।।
स्थानं नैवास्ति ते भव्यं ततो ह्येवं भविष्यति।।
अत्र ते स्थातुमिच्छास्ति यदि संस्थास्यते त्विह।।५३।।
लोके नित्यं समाचार लोकसंस्थितिहेतुकः।।
संभवार्थमिहास त्वं निजसत्त्वपराक्रमः।।५४।।
यदिह त्वं महाज्वालाभाभिः कलितशोभनः।।
प्राप्स्यसे सर्व जंतूनां भासुरत्वमनुत्तमम्।।
न ह्येष धर्मश्चैवाद्यो मायामोहितकाम्यया ।।५५।।
इत्युक्ते ब्रह्मणा सोऽग्निः प्रजज्वाल सहस्रशः ।।
अनंतज्वालाभि ततो नानावर्णादिभिः श्रितः ।। ५६ ।।
अकारेकार ऊकारो ब्रह्मा तमथ दृष्टवान् ।।
नैवासौ शाम्यतां याति वह्निर्भूयो व्यवर्धत ।। ५७ ।।
व्याप्तं भवाग्निना सर्वं तिर्यगूर्ध्वमधस्तथा ।।
ज्वालाभिरुपरि क्षिप्तं दृष्ट्वात्मानं समंततः ।। ५८ ।।
चिंतयंतं तु ब्रह्माणं भीतं चैव विशेषतः ।।
शिरस्यंजलिमाधाय तुष्टावाथ प्रणम्य तम् ।। ५९ ।
तेजोनिधिं च सर्वेशं ज्ञातुमिच्छन्प्रजापतिः ।।
निरुक्तसूक्तराहस्यैर्ऋग्यजुःसामभाषितैः ।। 5.1.4.६० ।।
।। ब्रह्मोवाच ।। ।।
सप्ततेजो नमस्तेऽस्तु परस्य परमात्मने ।।
अद्भुतानां प्रतिश्रोत्रे तेजसा निधये नमः ।। ६१ ।।
बीजं यो विश्वभावानां संमोहनविमोहनम् ।।
अंधकारो युगावर्तकाले काले च दुःसह ।। ६२ ।।
ऊर्ध्ववक्त्र नमस्तेस्तु सत्त्वात्मक धरात्मक ।।
ज्वलज्ज्वालोत्पन्नजल जलजेश जलेचर ।। ६३ ।।
जलजोत्फुल्लपत्राक्ष जलदेव हुताशन ।।

कृष्णकांते कृष्णमार्ग स्वर्गमार्गप्रदायक ।। ६४ ।।
यज्ञाहुतिसमाचार यज्ञरूप नमोनमः।।
स्वर्णगर्भ शमीगर्भ जय देव सनातन।।६५।।
तमोहार महाहार स्वाप्रिय तमोहर।।
प्रदीप्तरोचिर्देवेश चित्रभानो नमोस्तु ते।।६६।।
वैश्वानरानलोदग्र ऊर्ध्वपावक सर्वग??
विभावसो महाभाग कृष्णवर्त्मन्नमोनमः ।। ६७ ।।
।। सनत्कुमार उवाच ।। ।।
एवं स्तुतस्तदा सोग्निर्विरंचिमब्रवीद्वचः।।
तुष्टोऽहं भवतो ब्रह्मन्भावकर्म प्रसिध्यति ।। ६८ ।।
एवमुक्तस्तदा ब्रह्मा नमस्कृत्याब्रवीत्पुनः।।
ज्ञातुमिच्छाम्यहं देव को हि त्वं भगवानिति ।। ६९ ।।
अब्रवीत्सोऽथ ब्रह्माणं पुरुष स्त्वं प्रजापतिः ।।
अज्ञेयं परमं रूपं तेन योग्येन पश्य मे ।। 5.1.4.७० ।।
अथापश्यत्स दिव्येन भगवंतं सनातनम् ।।
सर्वज्ञं विधिकर्तारमीश्वरं सदसत्प रम् ।। ७१ ।।
ज्वलनं गगनं भूमिं दृश्यादृश्यं परं पदम् ।।
भूतं भव्यं भविष्यं च जगत्स्थावरजंगमम् ।।
सदैव कुरुते देवो भुंक्ते सर्वं यतः प्रभुः ।। ।। ७२ ।।
अतिसंभूतिभव्येन स्तोत्रेणाथ प्रजापतिः ।।
तुष्टाव देवं प्रकृतं पुराणमजमव्ययम् ।। ७३ ।।
ततोऽतिरक्तवर्णं च दृष्ट्वा देवः प्रजापतिः ।।
विश्वतोबाहुचरणं विश्वतोऽग्निशिरोमुखम् ।।७४।।
व्यक्ताव्यक्तप्रणेतारं प्रणमञ्छिरसा स्वयम्।।
पश्यतेऽथ नमस्तेऽस्तु तुभ्यं विश्वभवात्मने ।। ७५ ।।
पृथिवी वायुराकाशं यच्चान्यद्भुवनत्रयम् ।।
लोकालोकेश्वरं चैव जगत्स्थावरजंगमम् ।। ७६ ।।
तत्त्वसर्गं भूतसर्गं भावसर्गं तथैव च ।।
ब्रह्मतेजोमयात्मानं संपश्यंश्चक्षुषा स्वतः ।। ७७ ।।
यत्किंचिद्वस्तुजातं हि तत्सर्वमचरं चरम् ।।
एवं स्तुतः स तु तदा अनादिर्भगवान्प्रभुः।। ७८ ।।
अथेशः प्राह ब्रह्माणं त्वया दृष्टं यथातथम् ।।
सृजेदानीं प्रजाः सर्वाः स च त्वं विनयान्वितः ।। ७९ ।।

कर्ताहमनुकर्ता त्वं लोकानां स्थितिकारणे ।।
कुरुष्वैतत्तथा भाव्यं मया पूर्वं विनिर्मितम् ।। 5.1.4.८० ।।
इत्युक्तो देवदेवेन ब्रह्मा वचनमब्रवीत् ।।
नमस्तेऽस्तु महादेव भव शर्व नमोऽस्तु ते ।। ८१ ।।
त्वत्प्रसादात्प्रजासर्गं कुर्वतो मे महेश्वर ।।
सखायं प्राप्तुमिच्छामि त्वया दत्तं जगत्पते ।।८२।।
।। महेश्वर उवाच ।। ।।
ध्यायतः पुत्रकामस्य स्रष्टु कामस्य ते यतः ।।
कल्पितं भविता देव मदुत्पत्तिं यदीप्स्यसि ।। ८३ ।।
पुत्रत्वं प्राप्य हीशस्ते छेत्स्यामि पंचमं शिरः ।।
तत्र चोत्पादयिष्यामि नरनारायणावुभौ ।। ८४ ।।
।। ब्रह्मोवाच ।। ।।
कथं नारायणो देवस्तपसा मन्यते स नः ।।
कीर्तयस्व सखा धन्यः स नः पूज्यो भविष्यति ।। ।। ८५ ।।
अथापश्यत्ततो ब्रह्मा तेजसा हरिमच्युतम् ।।
तं सर्वगमनं गम्यं शिवं नारायणात्मकम् ।। ८६ ।।
महेश्वरस्य तेजोर्ध्वं संतं नारायणं प्रभुम् ।।
चकार व्याहरन्नार्तं श्रीरूपं शक्तिसाम्यतः ।। ८७ ।।
अंगुल्या संस्पृशन्देवो ब्रह्माणमब्रवीद्वचः ।।
ब्रह्मंस्ते परमं धाम ऋषिर्नारायणानुगः ।। ।। ८८ ।।
भविता लोकरक्षार्थं श्रेष्ठः सर्वधनुष्मताम् ।।
नारायण महावीर्य शक्तिरेषा मदीयिका ।। ८९ ।।
इत्युक्त्वा भगवान्देवस्तमग्निं पाणिनाऽ ग्रहीत् ।।
दक्षहस्तांगुलिनखमध्यस्थं समचीकरत् ।। 5.1.4.९० ।।
इति सत्कृत्य सततं नरं चैव महेश्वरः ।।
ब्रह्मणो दर्शयित्वाथ तत्रैवांतरधीयत ।। ९१ ।।
अथाब्रवीत्ततो ब्रह्मा अग्निं तं तु युगक्षये ।।
स्पृशन्दक्षिणवामाभ्यां सांत्वयन्निव तं गिरा ।। ९२ ।।
भृगुश्चैवांगिराः पुत्रौ भवितारौ न संशयः ।।
अत्रैव मम भवतां वंशे विख्यातकर्मणौ ।। ९३ ।।
द्विधा संभज्य तेनाग्निं सृष्टेर्यज्ञो भविष्यति ।।
भवंतौ तिष्ठतस्तत्र पृथिव्यां दानमाश्रितौ ।। ९४ ।।
ब्रह्मणाऽग्नी समेतौ तु ब्रह्माणमनुनोदितौ ।।

तस्मादेवं विधातव्यौ निर्मथ्य विधिपूर्वकम् ।। ९५ ।।
अतोऽश्वत्थे शमीगर्भे संयोगस्तत्र पठ्यते ।।
भार्गवांगिरसश्चैव द्विविधो दैव उच्यते ।। ९६ ।।
तस्मात्सुतहितः श्रेष्ठश्चतुर्थ इति कथ्यते ।।
एवं व्यास समुत्पन्नो नरोऽसौ पूर्वजन्मनि ।। ९७ ।।
एवं तु ब्रह्मणो वक्त्रं पञ्चमं समपद्यत ।। ९८ ।।
एतद्यो बुध्यते देव तेजःसर्गमनुत्तमम् ।।
ब्रह्मणो याति सालोक्यं शांतो दांतो जितेन्द्रियः ।। ९९ ।।
एतद्योग्निसमुद्भवं पशुपतेर्माहात्म्यसंसूचकं वह्नेः साधुमतिः शृणोति सततं यः श्रद्धया भावितम्।
यो व्यास द्विजदेवताप्रमुखतः संश्रावयेद्भक्तितः सोऽत्यर्थं भवभावितः शिवपुरे संपूज्यते दैवतैः ।।
5.1.4.१०० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये
वैश्वानरोत्पत्ति वर्णनंनाम चतुर्थोऽध्यायः ।। ४ ।। छ ।।

।। व्यास उवाच ।। ।।
युद्धे निवारिते तत्र रक्तस्वेदजयोः पुरा ।।
किं कृतं ब्रह्मणा तत्र प्रायश्चित्तं च कर्मणाम् ।। १ ।।
जनार्दनेन किं कर्म शंकरेण च यन्मुने ।।
एतत्सर्वं समाख्याहि प्रसीद वदतांवर ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
ब्रह्मा जुह्वन्नग्निहोत्रं वनौषधिफलच्छदैः ।।
शस्तैः कुशसमिद्भिश्च यथोक्तं हरिणा पुरा ।। ३ ।।
बदर्याश्रममासाद्य नरनारायणावृषी ।।
तेपतुस्तौ तपश्चोग्रं हितार्थं सर्वदेहिनाम् ।। ४ ।।
कपालपाणिर्देवेशः पर्यटन्वसुधामिमाम् ।।
कुशस्थलीं समासाद्य प्रविष्टस्तद्वनोत्तमम् ।। ५ ।।
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ।।
नानापक्षिरवाकीर्णं नानामृगसमाकुलम् ।। ६ ।।
द्रुमपुष्पभरामोदवासितं यत्सुवायुना ।।
बुद्धिपूर्वमिव न्यस्तैः फलपुष्पैः सुपूजितम्।। ७ ।।
नानागंधरसाढ्यैश्च पक्वापक्वफलोद्भवैः ।।
फलैः सुवर्णरूपाढ्यैरासमन्तान्मनोरमैः ।। ८ ।।
जीर्णपत्रतृणादीनि शुष्क काष्ठफलानि च ।।
बहिः क्षिपंति जातानि मरुतोनुग्रहाणि च ।। ९ ।।
नानापुष्पसमूहानां गन्धमादाय मारुतः ।।
शीतलो वाति तं भूमिदेशं यत्र विवेश सः ।। 5.1.5.१० ।।
हरितस्निग्धनिच्छिद्रैः पर्णैरच्छिद्रकोटरैः ।।
वृक्षैरनेकसंख्यैश्च भूषितं शिरसान्वितैः ।। ११ ।।
अरोगिदर्शनीयैश्च सुवृत्तैः क्वचि दुद्धतैः ।।
कुटुम्बैरिव विप्राणां सिद्धिर्वै भाति सर्वतः ।। १२ ।।
शोभनैर्वायुसंकीर्णैरंकुरैः प्रावृता द्रुमाः ।।
कुलीनैरिव निच्छिद्रैः स्वगणैः प्रावृता नराः ।। १३ ।।
पवनोद्धूतशिखरैः स्पर्शयंति परस्परम् ।।
आरात्पवनतोऽन्योन्यस्पृष्टशाखावतंसकाः ।। १४ ।।
नागवृक्षाः क्वचित्पुष्पैर्भ्रमरालीनकेस रैः ।।
नयनैरिव शोभंते धवलैः कृष्णतारकैः ।। १५ ।।
पुष्पसन्नद्धशिखराः कर्णिकारद्रुमाः क्वचित् ।।

युग्मयुग्मविवाहे च शोभंते साधु दंपतीः।।१६।।
सुपुष्पविभवाटोपैः सिन्दुवारस्य पंक्तयः ।।
मूर्तिमत्य इवाभांति पूजिता वनदेवताः ।। १७ ।।
क्वचित्क्वचित्कुन्दलताः सुपुष्पाभरणोज्ज्वलाः ।।
दिक्षुदिक्षु प्रशोभन्ते बालचन्द्रा इवोद्यताः ।। १८ ।।
अतिविद्रुमशोभाढ्या कासंत्यो यूथिकालताः ।।
पुष्पिताः पुष्पविटपान्वीज यंत्य इवोत्थिताः ।। १९ ।।
शालार्जुनाः क्वचिद्भांति वनोद्देशेषु पुष्पिताः ।।
धौतकौशेयवासोभिः प्रावृताः पुरुषोत्तमाः ।। 5.1.5.२० ।।
अविमुक्तं तु वल्लीभिः पुष्पितास्तु द्रुमास्तथा ।।
उपगूढा विराजन्ते नारीभिरिव सुप्रिया ।। २१ ।।
चूताश्च तिलकाश्चैव मञ्जरीभिः करैरिव ।।
वायुप्रत्ताभिरन्योन्यं ढौकन्तीव हि सज्जनान् ।। २२ ।।
परस्परं च संयुक्तैस्तिलकाशोकपल्लवैः ।।
हस्तैर्हस्तान्स्पृशंतीव सुहृदश्चित्तसंगताः ।। २३ ।।
फलपुष्पनगा नम्राः पेशलेनेव सज्जनाः ।।
अन्योन्यमर्पयंतीव सपुष्पाणि फलानि च ।। २४ ।।
मारुताश्लिष्टसंतुष्टैः पादपाः शालिवारिभिः ।।
आर्याः समागता लोके प्रीतिदाय इव स्थिताः ।। २५ ।।
पुष्पाणामिव वेगेन स्वशोभार्थं व्रजंति वै ।।
समसन्नाहमासाद्य पुरुषाः स्पर्धयेव हि ।। २६ ।।
पुष्पशोभाभरनतैः शिखरैः कंपसंयुतैः ।।
नृत्यन्ति पक्षिणो मत्ता युक्ताः शोभनशेखरैः ।। २७ ।।
भृंगाः पवनविक्षिप्तामृतवल्लीलताश्रिताः ।।
सवल्लिकाः प्रनृत्यन्ति मानवा इव सप्रियाः ।। २८ ।।
पुष्पाभिः कुन्दवल्लीभिः पादपाः क्वचिदावृताः ।।
भाति तारागणैश्चित्रैः शरदीव नभस्तलम् ।। २९ ।।
द्रुमा णामप्यथाग्रेषु पुष्पिता माधवी लता ।।
शिखरा इव शोभन्ते रचिता बुद्धिपूर्वकम् ।।5.1.5.३०।।
हरिताः कांचनच्छायाः फलिताः पुष्पिता द्रुमाः।।
सौहृदं दर्शयन्तीव नराः साधुसमागमे ।। ३१ ।।
पुष्पकिंजल्कबहुलाः किंजल्कबहुलोदराः ।।
किंजल्कमत्तमधुपा विशदा इव शारिका ।। ३२ ।।

शिरीष पुष्पसंकाशाः शुका मिथुनतः क्वचित् ।।
कीर्तयंति गिरश्चित्राः पूजिता ब्राह्मणा यथा ।। ३३ ।।
संयुक्ताः सहचारिण्या मयूराश्चित्रबर्हिणः ।।
वनांतरे व्यतिष्ठंत एकांत इव संस्थिताः ।। ३४ ।।
कूजंति पत्रिसंघाता नानाद्भुतविराविणः ।।
कुर्वंति रमणीयं हि रमणीयतरं वनम् ।। ३५ ।।
नाना मृगगणाकीर्णं नित्यं समुदितांडजम् ।।
तद्वनं नंदनसमं मनोदृष्टिविवर्धनम् ।। ३६ ।।
कपालपाणिर्भगवांस्तथारूपं वनोत्तमम् ।।
ददर्श शंकरो दृष्ट्या सौम्यया नंदनोपमम् ।। ३७ ।।
ता वृक्षपंक्तयः सर्वा दृष्ट्वा रुद्रं समागतम् ।।
निवेद्य शंभवे भक्त्या मुमुचुः पुष्पसंपदम् ।। ३८ ।।
पुष्पप्रतिग्रहं कृत्वा पादपानां महेश्वरः ।।
वरं वृणीध्वं भद्रं वः पादपानित्युवाच सः ।। ३९ ।।
एवमुक्ते भगवता तरवो निरवग्रहाः ।।
ऊचुः प्रांजलयः सर्वे नमस्कृत्य महेश्वरम् ।। 5.1.5.४० ।।
वरं ददासि देवेश प्रसन्न जनवत्सल ।।
इहैव भगवन्नित्य वने सन्निहितो भव ।। ४१ ।।
एष नः परमः कामो देवदेव नमोऽस्तु ते ।।
त्वं चेद्वससि देवेश वनेऽस्मिन्विश्वभावन ।। ४२ ।।
सर्वात्मना प्रपन्ना वै याचामहे वरोत्तमम् ।।
किमन्यवरकोटीभिरेष नो दीयतां वरः ।। ४३ ।।
इत्युक्तः पादपैः सर्वैः शरणागतवत्सलः ।।
वरं ददौ पादपेभ्यः प्रोच्यमानं मया शृणु ।। ४४ ।।
।। महेश्वर उवाच ।। ।।
बाढं मे मनसा वासो नित्यमत्र वनोत्तमे ।।
वरं ददामि भूयो वो न वृथा दर्शनं मम ।। ४५ ।।
नाग्निर्न वायुर्न जलं न सूर्यकिरणातपः ।।
न विद्युदशनिः शीतं रुजं वो जनयिष्यति ।। ४६ ।।
नित्यं पुष्पवरोपेता नित्यं सुस्थिरयौवनाः ।।
कामगाः कामरूपाश्च कामरूपफलप्रदाः ।। ४७ ।।
कामसंदर्शनाः पुंसां तपःसंध्याज्वलद्दृशाम् ।।
श्रिया परमया युक्ता मत्प्रसादाद्भविष्यथ ।। ४८ ।।

एवं स वरदः शंभुरनुजग्राह पादपान् ।।
स्थित्वा वर्षसहस्रं तु कपालं चाक्षिपद्भुवि ।। ४९ ।।
क्षितिं निपतता तेन कंपते स्म रसातलम् ।।
विवशास्तत्यजुर्वेलां सागराः क्षुभितोर्मयः ।। 5.1.5.५० ।।
शक्राशनिहतानीव व्याघ्रव्यालान्वितानि च ।।
शिखराणि व्यशीर्यंत पर्वतानां सहस्रशः ।। ५१ ।।
देवसिद्धविमानानि गंधर्वनगराणि च ।।
प्रस्फुरन्ति विनिष्पेतुर्विनिनेशुर्धरातले ।। ५२ ।।
कपोतमेषाश्चात्यंतं पुनः संघातदर्शनाः ।।
ज्योतिर्ग्रहाश्छादयंतो बभूवुस्तीर्णभास्कराः ।। ५३ ।।
महता तस्य शब्देन जडांधबधिरं कृतम् ।।
बभूव व्याकुलं सर्वं त्रैलोक्यं सचराचरम् ।। ५४ ।।
सुरासुराणां सर्वेषां शरीराणि मनांसि च ।।
अवसे दुश्चकंपुश्च किमेतदिति जज्ञिरे ।। ५५ ।।
धैर्यमालंब्य सर्वेऽपि समागम्येंद्रपूर्वकाः ।।
ब्रह्मलोकं समासाद्य ब्रह्माणमिदमूचिरे ।। ५६ ।।
किं निमित्तं तु भगवन्नेतदुत्पातदर्शने ।।
त्रैलोक्यं कंपितं येन संयुक्तं कालकर्मणा ।। ५७ ।।
जातं कल्पावसानं च भिन्नमर्यादसागरम् ।।
चत्वारो दिग्गजाः किं नु बभूवुरचलाश्चलाः ।। ५८ ।।
धरा समाधृता कस्मात्सप्तसागरवारिणा ।।
उत्पत्तिर्नास्ति सर्वस्य भगवन्न प्रयोजनम् ।। ५९ ।।
यादृशोऽयं श्रुतः शब्दो न भूतो नापि विश्रुतः ।।
त्रैलोक्यमाकुलं येन चक्रे रौद्रेण भूयसा ।। 5.1.5.६० ।।
एवमुक्तोऽब्रवीद्ब्रह्मा परमेशानुभावितः ।।
तत्प्रसादात्प्रति ज्ञानी ज्ञात्वा रुद्रमुपस्थितम् ।। ६१ ।।
यत्पृष्टं मरुतः सर्वे शृणुध्वं तत्र कारणम् ।।
निश्चयेनात्र विज्ञेयं श्रद्दधानैर्यथाविधि ।। ६२ ।।
मुखं छित्त्वा नखाग्रेण मद्देहात्पंचमं शिरः ।।
कपालपाणिर्भगवान्विष्णोराश्रममभ्यगात् ।। ६३ ।।
ययाचे पात्रमादाय भिक्षां नारायणं प्रभुम् ।।
उत्पपात मुनिस्तत्र नरोनाम धनुर्धरः ।। ६४ ।।
ततः कुशस्थलीमेत्य भगवांस्तद्वनोत्तमम् ।।

विवेश तरुमार्गेण पुष्पामोदाभिनंदितः ।। ६५ ।।
अनुगृह्याथ भगवान्वनं तत्सर्वगांडजम् ।।
जगतोऽनुग्रहार्थाय तत्र वासमरोचयत् ।। ६६ ।।
तत्कपालं करस्थं यन्न्यस्तं भगवता क्षितौ ।।
तेनैषा कम्पिता भूमिः कृतं त्रैलोक्यमाकुलम् ।। ६७ ।।
तद्द्रक्ष्यथ विरूपाक्षं प्रपद्यत मया सह ।।
आराध्यमानो भग वान्प्रदास्यति वरं हि वः ।। ६८ ।।
इत्युक्त्वा भगवान्ब्रह्मा सह तैर्देवदानवैः ।।
जगाम तद्वनोद्देशं यत्रास्ते वृषभध्वजः ।। ६९ ।।
प्रहृष्टमनसः सर्वे कोकिलालापलापिताम् ।।
पुष्पोच्चयोक्षितां सीमां विविशुः शंकरेप्सवः ।। 5.1.5.७० ।।
संप्राप्तं सर्वमेतैस्तद्वनं नंदनसंमितम् ।।
सुवल्लीगृहशोभाढ्यं सुदृढं शुशुभे तदा ।। ७१ ।।
दृष्ट्वा तद्वनमुत्तमं तनुभृतामाह्लादकं चेतसां नानासत्फलपुष्पपादपवनैरासेवितं सर्वतः ।।
तस्मिन्बर्हिणहंससारसकुलै र्मंडूकमत्स्यैर्युते द्रक्ष्यामो हरमत्र चेतसि सुराः प्रापुर्मुदं ते तदा ।। ७२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य खण्डेऽवन्तीक्षेत्रमाहात्म्ये देवागमनवर्णनंनाम पंचमोऽध्यायः ।।५।।

।। सनत्कुमार उवाच ।। ।।
प्रविश्याथ वनं देवाः सर्वपुष्पोपशोभितम् ।।
इह देवो ऽत्र देवोऽत्र विविशुस्ते दिदृक्षवः ।। १ ।।
अद्भुतस्य वनस्यांते न ते ददृशिरे सुराः ।।
विचिन्वंतो महादेवं देवैर्बहुविलोकितः ।।२।।
तमुवाच स भद्रं वै द्रक्ष्यध्वं न तपो विना ।।
विचिन्वन्तो विरूपाक्षं नैनं पश्यत शंकरम् ।। ३ ।।
स युक्तं हृदये स्मृत्वा ब्रह्मा देवांस्ततोऽब्रवीत् ।।
त्रिविधो दर्शनोपायस्तस्य देवस्य सर्वदा ।। ४ ।।
श्रद्धाज्ञानेन तपसा योगेनैव निगद्यते ।।
सकलं निष्कलं चापि देवाः पश्यंति योगिनः ।। ५ ।।
तपस्विनस्तु सकलं ज्ञानिनो निष्कलं परम् ।।
समुत्पन्नेऽपि विज्ञाने मंदश्रद्धो न पश्यति ।। ६ ।।
भक्त्या परमयोपेताः परं पश्यंति योगिनः ।।
द्रष्टव्यो निर्विकारोऽसौ प्रधानपुरुषेश्वरः ।। ७ ।।
नादीक्षितैरतो देवाः शैवीं दीक्षां प्रपद्यत ।।
कर्मणा मनसा वाचा नित्ययुक्ता महेश्वरे ।। ८ ।।
तपश्चरत भद्रं वो रुद्राराध नतत्पराः ।।
शिवदीक्षां प्रपन्नानां भक्तानां च तपस्विनाम् ।। ९ ।।
सर्वकालं विजानाति दातव्यं दर्शनं मया ।।
ब्रह्मणो वचनं श्रुत्वा हितमेव यदु क्तवान् ।। 5.1.6.१० ।।
शिवेक्षाविष्टमतयो ब्रह्माणमिदमबुवन् ।।
मार्गेण विधिना चैव शिवदीक्षासु तत्पराः ।। ११. ।।
प्रयच्छ ब्रह्मन्सर्वेषां दीक्षां नः शिवतोषदाम्।।
श्रुत्वेति वचनं ब्रह्मा प्रत्युवाच विचारितम् ।। १२ ।।
संदिदीक्षयिषुः क्षिप्रममराञ्छिवदीक्षया ।।
शिवयज्ञार्थसंभारानानयध्वमलं सुराः ।। १३ ।।
वेदी प्रकल्प्यतामत्र यष्टव्योऽष्टतनुः शिवः ।।
पद्मयोनेर्वचः श्रुत्वा चक्रुः सर्वमतः सुराः ।। १४ ।।
विनीतवेषाः प्रणता अनेन सस्तमन्वगुः ।।
शिवप्रसादसंप्राप्त्यै पुष्करज्ञानमीरितम् ।। १५ ।।
यज्ञं चकार विधिना वेधाश्चन्द्रार्धधारिणः ।।
पद्मयोनिः पुरस्कृत्य तदा दीक्षां प्र योगतः ।।१६।।

अनुग्रहेण देवांस्तानकारयत भावतः ।।
ततो व्रतानां प्रवरं व्रतं दिव्यं महाप्रभुः ।।१७।।
तेभ्यो ददौ देवताभ्यः स तदप्यविरोधवित् ।।
पठ्यते शिवशालायां महापाशुपतं व्रतम्।।१८।।
शैवं यथोदितं यच्च आगमाचारचेष्टितम् ।।
शिवाराधनमुख्यानां मुनीनां तीव्रतेजसाम् ।।१९।।
सर्वानुग्राहकः शंभुः सर्वदेवैः प्रकल्पितम् ।।
तदेवं प्रार्थितं बुद्ध्या व्रतं रौद्रं शिवं समम् ।। 5.1.6.२० ।।
तत्तेभ्यो विस्मयं त्यक्त्वा प्रायच्छत्कनकांडजः ।।
कामिकं भस्मनामाढ्यं सर्वदा कीर्तितं शुभम्।। २१ ।।
पापघ्नं दुःखशमनं पुष्टिश्रीबलवर्धनम्।।
सिद्धिदं कीर्तिकृत्कांतं कलिकल्मषमोक्षणम्।।२२।।
तस्मात्सर्वप्रयत्नेन भस्मस्नानं समाहिताः ।।
कुर्वंतो मानवा दांता दीक्षिताः संयतेंद्रियाः ।। २३ ।।
सर्वे कमंडलुधराः सर्वे रुद्राक्षधारिणः ।।
अनिष्टदर्शनालाप संगत्या परिवर्जिताः ।। २४ ।।
एवं व्रतधराः सर्वे वने तस्मिन्महेश्वरम् ।।
आराधयंस्तमीशानं व्रतेनैव उमाधवम् ।। २५ ।।
भक्त्या परमया युक्ता विधिना परमेण च ।।
कालेन महता ध्यानादेवं ज्ञात्वा मनोगतम् ।। २६ ।।
रुद्रध्यानाग्निनिर्दग्धकल्मषाश्च श्रियान्विताः ।।
तदा हत्वाऽसुरं शंभुः प्रत्यक्षो भगवानभूत् ।। २७ ।।
।। सनत्कुमार उवाच ।। ।।
ब्रह्मदत्तं वरं देवाः सर्वे शर्वानुभाविताः ।।
समचीकरन्प्रत्युक्ता ब्रह्मापीशानभावितः ।। २८ ।।
गते वर्षसहस्रे स दिव्ये देवेश्वरेश्वरः ।।
जातानुकंपो देवानां दीपो दर्शनमेयिवान् ।। २९ ।।
गणैर्नानाविधैः सार्धं नानाभूषणभूषितैः।।
सुदर्पोद्धूतदर्पघ्नैघोरैर्घोरविघातिभिः ।। 5.1.6.३० ।।
कामरूपैरकामैश्च सर्वकामसमन्वितैः ।।
करींद्रकरटाटोपपाटनैः सिंहदेहिभिः ।। ३१ ।।
अणिमादि गुणैर्दिव्यैर्योगैश्वर्यादिनामभिः ।।
व्यालोलकेशरशनादंष्ट्राकटकटोद्भवैः ।। ३२ ।।

व्याघ्रव्यालाननै रौद्रैः काककंकवटैस्तथा ।। ३३ ।।
अरूपैः समरूपैश्च सुरूपैर्बहुरूपकैः ।।
एकद्वित्रिशिरोभिश्च बहुशीर्षैरशीर्षकैः ।। ३४ ।।
एकद्वित्रिशिखैश्चैव नानारूपविराजितैः ।।
बहुनेत्रैरनेत्रैश्च एकद्वित्रिविलो चनैः ।। ३५ ।।
एककर्णैर्द्विकर्णैश्च बहुकर्णैर्विकर्णकैः ।।
एकद्वित्रिसुनासैश्च बहुनासैरनासिकैः ।। ३६ ।।
एकजंघैर्द्विजंघैश्च बहुजंघैरजंघकैः ।।
एक पादैर्द्विपादैश्च बहुपादैरपादकैः ।। ३७ ।।
गौरश्यामैः श्यामगौरैरसितैः कर्बुरैस्तथा ।।
भुजंगहारवलयैः कृतयज्ञोपवीतकैः ।। ३८ ।।
शूलासिपट्टिश धरैर्भुशुंडीपीरघायुधैः ।।
चक्रक्रकचकोदंडकांडदंडास्त्रपाणिभिः ।। ३९ ।।
गदामुद्गरपाषाणमुशलायुधहस्तकैः ।।
वज्रशक्त्यशनिप्रासकुंतकर्तृक धारिभिः ।। 5.1.6.४० ।।
भंभाभेरीर्वादयद्भिर्वीणापणववेणुकान् ।।
मृदंगविमलाढक्काकाहलानकदुंदुभीन् ।। ४१ ।।
हुडंकाशृंगिकाद्यानि नानावाद्यानि वादकैः ।।
एवं नानाविधै रौद्रैर्भीमैर्भीमपराक्रमैः ।।४२।।
गणेश्वरैः सुदुर्द्धर्षैर्वृतः सूर्यो ग्रहैरिव ।।
आविर्भूतो महादेवः स्वगणैः परिवारितः ।।
तं पश्य तां तदा व्यास ब्रह्मादीनां दिवौकसाम् ।। ४३ ।।
अथ ब्रह्मादयो देवा दृष्ट्वाग्रे गणनायकम् ।।
तेजसाध्यासितास्तस्य बभूवुर्भ्रांतचेतसः ।। ४४ ।।
ततो ऽवलंब्य ते धैर्यं दृष्ट्वा देवं यथाविधि ।।
षडंगवेदयोगेन हृष्टचित्तवपुर्धराः ।। ४५ ।।
शिरोगतैरंजलिभिः पादेभ्यश्च महीं गतैः ।।
तुष्टुवुः सृष्टिसंहार स्थितिकर्तारमीश्वरम् ।। ४६ ।।
।। देवा ऊचुः ।। ।।
नमः शिवाय शांताय सगणाय सनंदिने ।।
वृषासनाय सौम्याय शूलशक्तिधराय ते ।।४७।।
नमो दिक्चर्मवस्त्राय शुचये तीव्रतेजसे ।।
ब्रह्मणे ब्रह्मदेहाय ब्रह्मणा योजिताय च ।। ४८ ।।

नमोंधकविनाशाय परेशाय नमोनमः ।।
रुद्राय पंच वक्त्राय सर्वरोगापहारिणे ।। ४९ ।।
गिरिशाय सुरेशाय ईशानाय नमोनमः ।।
भीमोग्रादिस्वरूपाय विजयाय नमोनमः ।। 5.1.6.५० ।।
सुरासुराधिपतये यतीनां पतये नमः ।।
चंडाय चंडदंडाय वरखट्वांगदंडिने ।। ५१ ।।
विरूपाक्षशुभाख्याय विश्वरूपाय वै नमः ।।
शांताय च मनोज्ञाय त्रिनेत्राय नमोनमः ।। ५२ ।।
वेधसे विश्वरूपाय दैत्यसंहारिणे नमः ।।
भक्तानुकंपिनेऽत्यर्थं रुद्रज्ञानपराय च ।। ५३ ।।
विरूपाय सुरूपाय रूपाणां शतधारिणे ।।
पंचास्याय शुभास्याय चन्द्रास्याय नमोनमः ।। ५४ ।।
वरदाय वराहाय सुकूर्माय नमोनमः ।। ५५ ।।
त्रिनेत्र त्राणमस्माकं त्रिपुरघ्न विधीयताम् ।।
वाङ्मनःकायभावैस्त्वां प्रपन्नानां महेश्वर ।। ५६ ।।
।। सनत्कुमार उवाच ।। ।।
एवं स्तुतस्तदा देवैर्विरिंच्याद्यैस्तथा हरः ।।
शरीराणि विलोक्येशः कृशान्यथ दिवौकसाम् ।। ५७ ।।
दिव्यप्रतापधारेण त्रिवेधेनांतरात्मना ।। ५८ ।।
आराधनं समीक्ष्याह ब्रह्मादीनां सुरेश्वरः ।।
साधुसाधु महाभागाः शश्वद्व्रतमुपासितम् ।। ५९ ।।
दिव्येनानेन विधिना भृशमाराधितो ह्यहम् ।।
भवद्भिः श्र द्धयात्यर्थं मम दर्शनकांक्षया ।। 5.1.6.६० ।।
व्रतस्था मां हि पश्यंति मानुषा देवता अपि ।।
यदि यच्च प्रयच्छामि कांश्चिद्वो हि वराञ्छुभान् ।। ६१ ।।
एकैकशो द्वित्रिशो वा समस्तेभ्यः समेन वः ।।
सर्वकामप्रसिद्ध्यर्थं दास्याम्येनं वरं हि वः ।। ६२ ।।
हिताय भवतां चाहमागामुज्जयिनीं प्रति ।।
क्षिप्तं कपालं च मया किं पुनर्भद्रमस्तु वः ।। ६३ ।।
।। देवा ऊचुः ।। ।।
किं कृतं हितमस्माकं कपालं क्षिपता त्वया ।। ६४ ।।
किमर्थं कंपिता भूमिस्त्रैलोक्यं व्याकुलीकृतम् ।।
नैतन्निरर्थकं देव कथ्यतामत्र कारणम् ।। ६५ ।।

।। महादेव उवाच ।। ।।
युष्मद्धितार्थमेतद्वै भयं विनिहितं कृतम् ।।
देवतानां तु रक्षार्थं श्रूयतामत्र कारणम् ।। ६६ ।।
असुरो द्रोहणोनाम बलवान्योगमायिकः ।।
अवस्थितस्त्ववष्टभ्य रसातलतला श्रयम् ।। ६७ ।।
तस्य दैत्यस्य बलिनो दैत्याः परपुरंजयाः ।।
युष्माञ्ज्ञात्वा तपस्थांश्चाप्यभ्यगुर्बहवो हि ते ।। ६८ ।।
सेंद्रान्निहंतुमिच्छंतो माया प्रच्छन्नचारकाः ।।
पुरीं कनकशृंगाढ्यामेनामधि कुशस्थलीम्।।
समुद्ययुः सुरान्हंतुमुद्यता उद्यतायुधाः ।। ६९ ।।
तेषां कपालपातेन भूमिनिष्कं पनेन च ।।
शब्देन चातिघोरेण देहात्प्राणा विनिर्ययुः ।। 5.1.6.७० ।।
लोकस्थितिविनाशाथ तेषामासीत्समुद्यमः ।।
राज्यैश्वर्येण दर्पिष्ठास्तेन ते निहता मया ।। ७१ ।।
।। देवा ऊचुः ।। ।।
विश्वस्तानां पुनश्चैवमेव चानुग्रहः कृतः ।।
देवानुग्रहकर्ता त्वं गुणस्मृतिनिषेवितः ।। ७२ ।।
दिव्यदृष्टिभिरत्यर्थं यशोऽर्थं भीम नंदिताः ।।
इत्युक्त्वा प्रणतान्देवानुत्थाप्योचे पुनर्भवः ।। ७३ ।।
।। शिव उवाच ।। ।।
परिचर्याभिसंयुक्तं नित्यमुग्रनिषेवितम्।।
ध्यानसाधननिष्पन्नं यदन्येषां न विद्यते ।। ७४ ।।
मनोवाक्कायभावेन दुष्करं दुश्चरं तपः ।।
अनेन तपसा युक्ताः कष्टेन दुःसहेन च ।। ७५ ।।
महता तनुसाध्येन बहुकालार्जितेन वः ।।
समंतादभिवर्धेतां युष्मत्तेजस्तपोऽपि च ।। ७६ ।।
।। सनत्कुमार उवाच ।। ।।
इत्युक्ता देवदेवेन देवा ब्रह्मपुरोगमाः ।।
ऊचुरुन्नाम्य वक्त्राणि स्थिता जानुभिरीश्वरम् ।। ७७ ।।
।। देवा ऊचुः ।। ।।
प्राणदस्त्वं कारणस्त्वं तपसां देव दृश्यसे ।।
तदस्माकं प्रवृत्तानां मानुषाणां वरप्रद ।। ७८ ।।
रक्षां कुरुष्व देवेश भक्तानामभयंकर ।। ७९ ।।

।। ईश्वर उवाच ।। ।।
यत्नेन विधिना दत्तं सुव्यक्तं दर्शनं हि वः ।।
सुदुर्लभान्यपि पुनर्दास्यामि वो वरान्बहून् ।। 5.1.6.८० ।।
एवमुक्ते भगवता ब्रह्मा वचनमब्रवीत् ।।
देवानामग्रतः स्थित्वा श्रुतशब्दोद्भवं भवम् ।। ८१ ।।
प्राप्ता वयं च भगवन्सुपर्याप्तो महावरः ।।
जायतां नः सदैश्वर्यं वासस्थानमथाक्षयम् ।। ८२ ।।
।। ।। शिव उवाच ।। ।।
लोकेऽस्मिन्मम ये भक्ता मया विनिहताश्च ये ।।
नैवं ते दुर्गतिं यांति लभंते सुमतिं पराम् ।। ८३ ।।
सार्धं तत्र जटाजूटैः शिरोभिः शूलपाणयः ।।
भांति मद्वामपार्श्वस्था इमे ते दारुणा गणाः ।। ८४ ।।
येषां विनिग्रहार्थाय युष्मत्संबोधनाय च ।।
सविकारं मया क्षिप्तं कपालं धरणीतले ।।८५।।
कृतो मेऽनुग्रहस्तेषां भक्तानां भक्तिमिच्छताम् ।।
वनेऽस्मिन्नित्यवासो मे वृक्षैरभ्यर्थितस्य च ।। ८६ ।।
महाकालवने देवा आगतस्य ममानघाः ।।
तपस्यतां च भवतां महाकालवनं ततः ।। ८७ ।।
नामद्वययुतं गुह्यं लोके ख्यातं भविष्यति ।।
गुह्यं वनं श्मशानं च क्षेत्राणां प्रवरं महत् ।।८८।।
कपालव्रतचर्या च मया ह्येषा प्रकीर्तिता ।।
कपालपात्रे भुंजानः कपालव्रतभूषणः ।।८९।।
कपालपाणिः संतुष्टो भिक्षा व्रतसमन्वितः ।।
श्मशाननिलयो रौद्रो व्रतोन्मत्तविमूढधीः।।5.1.6.९०।।
नंदितः सर्वभूतेषु प्रियाप्रियसमः सदा ।।
भस्मभूषितसर्वांगो ज्ञानी चैव विशेषतः ।।९१।।
जितेंद्रियोऽसर्वसंगो मृद्भस्मोदकसंग्रही ।।
नित्ययुक्तः सदाव्यापी जापी जितवरासनः ।। ९२ ।।
पुण्यतीर्थाश्रमोपेतः स्वरे देवे समाहितः ।।
लोकातीतं परं ज्ञानं महापाशुपतं व्रतम् ।। ९३ ।।
कपालव्रतमास्थाय पुरा चीर्णं मया स्वयम् ।।
कपालं परमं गुह्यं पवित्रं पापनाशनम् ।। ९४ ।।
कपालव्रतमेतद्धि दुर्धरं परमाद्भुतम् ।।

अत्यंतमुत्कटं रौद्रमघोरं लोमहर्षणम् ।। ९५ ।।
महाव्रतं द्विषन्मोहात्पापेनैव स्थितो नरः ।।
न मुच्यते स पापेन जन्मकोटिशतैरपि ।। ९६ ।।
महापाशुपतं तस्मान्न हन्यान्न च दूषयेत् ।।
एतस्मिन्निहते तस्मात्कोटिर्भवति घातिता ।। ९७ ।।
एवं महाव्रतं यस्तु भोजयेच्छ्रद्धयान्वितः ।।
तस्य भुक्ता भवेत्कोटिर्विप्राणां वेदपाठिनाम् ।। ९८ ।।
कपालपूरणीं भिक्षां यतीनां यः प्रयच्छति ।।
विमुक्तः सर्व पापेभ्यो नासौ दुर्गतिमाप्नुयात् ।। ९९ ।।
कपाले भोजनं श्रेष्ठं मार्गोऽयं ब्रह्मसंभवः ।।
वदंति लोके वेदेषु पूजितं देवदानवैः ।। 5.1.6.१०० ।।
धारयिष्यंति ये विप्राः कपालं भूतमोहनम् ।।
मम तुल्यास्तु ते ब्रह्मन्विचरंति महीतले ।। १ ।।
जपैकनिरता धीराः कपालकृतभूषणाः ।।
महापाशुपता लोके रुद्राः संसारतारकाः ।। २ ।।
धर्माधर्मविमुक्ताश्च कृत्याकृत्यविवर्जिताः ।।
दीक्षया ज्ञानयोगेन प्राणिनस्तारयंति ते ।। ३ ।।
यानि तीर्थानि लोकेऽस्मिन्यज्ञकोटिशतानि च ।।
विशुद्धस्य विज्ञानस्य कलां नार्हंति षोडशीम् ।। ४ ।।
यथाहं सर्वदेवानां संपूज्यो वै पितामह ।।
तथैव सर्वयोगेभ्यः संपूज्योऽयं महाव्रती ।। ५ ।।
संसारबन्धमोक्षार्थं शिवगुह्यमिदं व्रतम् ।।
यदेतत्सर्वधर्मेण अपुनर्भवकारणम्।। ६ ।।
कपालव्रतमादाय यस्त्यजेदजिते न्द्रियः ।।
रौरवं स प्रयात्याशु प्रणीतो यमकिंकरैः ।। ७ ।।
आलापयति भावेन न तु कर्म करोति यः ।।
सरागचित्तः शृंगारी न च धर्मप्रियंकरः ।। ८ ।।
एकत्र भोजी मिष्टाश्ी कैतवेन प्रियस्तथा ।।
कुग्रामनगरे वासी कृषिवाणिज्यसेवकः ।। ९ ।।
इत्यादिदुष्टदोषश्च तस्य संभाषणादपि ।।
नरो नरकगामी स्याद्यतो मद्व्रतदूषकः ।। 5.1.6.११० ।।
दृष्ट्वा च शिष्टमथ ३ महाव्रतधरो नरः ।।
न स्पृशेदंगमंगेन स्पृष्ट्वा स्नायात्तु चांबुभिः ।। ११ ।।

एवं च सर्वमाख्यातं कपालस्य च मोक्षणम् ।।
यथा मयात्र निक्षिप्तमज्ञानेन हतं स्वयम् ।। १२ ।।
।। सनत्कुमार उवाच ।। ।।
एवमुक्त्वा स भगवान्ब्रह्माद्यैरमरैः सह ।।
क्षेत्रं निवासयामास यथावत्कथयामि ते ।।१३।।
आद्यमेतत्तत्स्मशानं च पठ्यते मुनिसत्तमैः ।।
महाकालवनं व्यास यत्र सन्नि हितो हरः ।।१४।।
अनुग्रहस्य भुवनं भूमिभागो न संशयः ।।
अनुग्रहार्थं भूतानां क्षेत्रांतर्मृत्युधर्मिणाम् ।।१५।।
सुवर्णवज्रपर्यंकवेदिका च महीकृता ।।
विचित्रकुसुमारत्नैः कारिता सर्वशोभना ।।१६।।
स्वर्णवज्रांकिततला श्रेष्ठा हरितशाद्वला ।।
त्रिंशच्चत्वारिंशपूर्णाः कलशाः कोणसंस्थिताः ।। १७ ।।
द्वाराणि तत्र चत्वारि प्रवर्णानि तपंति च ।।
कुम्भाः शोभंति तत्रस्थाः उदिता भास्करा इव ।।१८।।
रमते तत्र भगवान्वनानामुत्तमे वने ।।
सनंदिदेवगणपः कालदंडादिसंयुतः ।।१९।।
एतत्कृतयुगे सर्वं प्रत्यक्षं दृश्यते वने ।।
त्रेतायां धर्मनिरतास्तापसा ब्रह्मचारिणः ।।5.1.6.१२०।।
द्वापरे धर्मशीला ये श्रुतवि ज्ञानशालिनः ।।
कलौ तु शुद्धविज्ञानशालिनः शंकरं हरम्।।२१।।
तपोधिकाः प्रपश्यंति देवदेवं महेश्वरम् ।।
महाकालवने नित्यं शूलपट्टिशधारिणम् ।। ।। २२ ।।
एतत्ते तथ्यमाख्यातं लोकानुग्रहकारकम् ।।
सहितानुक्रमेणात्र मन्त्रैश्च विधिपूर्वकम् ।। २३ ।।
समर्चयंति ये विप्रा भक्त्या शंभुमहापदम् ।।।
वसंतीह समीपं ते महाकालानुभाविताः ।। २४ ।।
पठति य इह लोके तस्य संस्थानमेतत्प्रथितगुणगणौघैरर्चितं दोषहं तत् ।।
शुभमतिरभिषिक्तः सोऽमरैरर्च्यमानो व्रजति हरपुरं यः संशृणोत्येकचित्तः ।।१२५।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्ती क्षेत्रमाहात्म्यं कपालमोक्षणवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।। छ ।।

।। व्यास उवाच ।। ।।
भगवन्केन विधिना महाकालवने नरैः ।।
रुद्रलोकमभीप्सद्भिर्वस्तव्यं क्षेत्रवासिभिः ।।१ ।।
किं मनुष्यैरुत स्त्रीभिः सिद्ध्यर्थं ह्याश्रमान्वितैः।।
वसद्भिः किमनुष्ठेयमेतत्सर्वं ब्रवीहि नः ।। २ ।।
नरैः स्त्रीभिश्च वस्तव्यं वर्णैश्चाश्रमवासिभिः ।।
स्वधर्माचारनिरतैर्दंभमोहविवर्जितैः ।। ३ ।।
कर्मणा मनसा वाचा रुद्रभक्तैर्यतेन्द्रियैः ।।
अनुश्रुतिभिरक्षुद्रैः सर्वभूत हिते रतैः ।।
किं कुर्वाणैर्नरैः कर्म रुद्रभक्तिं ब्रवीहि नः ।। ४ ।।
।। सनत्कुमार उवाच ।। ।।
त्रिविधा कथिता ह्यत्र मनोवाक्कायसंभवा ।।
लौकिकी वैदिकी चान्या भवेदाध्यात्मिकी तथा ।। ५ ।।
ध्यानधारणया बुद्ध्या रुद्राणां स्मरणं हि तत् ।।
रुद्रभक्तिकरी चैषा मानसी भक्तिरु च्यते ।। ६ ।।
व्रतोपवासनियमैर्यतेद्रियनिरोधिभिः ।।
कायिका भक्ती रुद्रस्य ज्ञानध्यानस्य धर्मिणाम् ।। ७ ।।
गोघृतक्षीरदधिभिर्गंधरक्तकुशो दकैः ।।
गन्धमाल्यैश्च विविधैर्धातुभिश्चोपपादिता ।। ८ ।।
घृतगुग्गुलधूपैश्च कृष्णागरुसुगंधिभिः ।।
भूषणैर्हेमरत्नानां चित्राभिः स्रग्भिरेव च ।। ९ ।।
वासप्रविसरास्तोत्रैः पताकाव्यजनोच्छ्रितैः ।।
नृत्यवादित्रगीतैश्च सर्वप्रत्युपहारकैः ।। 5.1.7.१० ।।
भक्ष्यभोज्यानुपानैश्च यावत्पूजाक्षतैर्नरैः ।।
महेश्वरं पुरस्कृत्य भक्तिः सा लौकिकी मता ।। ११ ।।
वेदमन्त्रहविर्यागैर्या क्रिया वैदिकी मता ।। १२ ।।
दर्शे च पूर्णमास्यां वा कर्तव्यं चाग्निहोत्रकम् ।।।
प्राशनं दक्षिणादानं पुरोडाशश्च सत्क्रिया ।। १३ ।।
इष्टवृत्तिः सोमपानं याज्ञिकं सर्वकर्म च।।
ऋग्यजुःसामजाप्यानि संहिताध्ययनानि च ।।१४।।।
क्रियते रुद्रमुद्दिश्य सा भक्तिर्वैदिकी स्मृता ।।
अग्निभूम्यनिलाकाशनिशाकरदिवाकरान् ।। १५ ।।
समुद्दिश्य कृतं कर्म तत्सर्वं दैविकं भवेत् ।।।

आध्यात्मिकी तु द्विविधा रुद्रभक्तिः स्थिता मुने ।। १६ ।।
सांख्याख्या यौगिकी चान्या विभागं तत्र मे शृणु ।।
चतुर्विंशतितत्त्वानि प्रधानादीनि संख्यया ।। १७ ।।
अचेतनानि योज्यानि पुरुषः पञ्चविंशकः ।।
चेतनः पुरुषो भोक्ता न कार्यं तस्य कर्मणः ।। १८ ।।
रुद्रः षड्विंशकः कर्ता सर्वज्ञश्चेतनः प्रभुः ।।
अजन्मा नित्यमव्यक्तमधिष्ठाता प्रयोजकः ।। १९ ।।
पुरुषो नित्यव्यक्तः स्यात्कारणं च महेश्वरः ।।
तत्त्वसर्गं भवेत्सर्गं भूतसर्गं च तत्त्वतः ।। 5.1.7.२० ।।
संख्यया परिसर्गाय प्रधानं च गुणात्मकम् ।।
साधर्म्यमात्मनैश्वर्यं प्रधानं वै विधर्मि च ।।२१ ।।
कारणं तच्च रुद्रस्य काम्य त्वमिदमुच्यते ।।
सर्वत्र कर्तृता रुद्रे पुरुषे चाप्यकर्तृता ।। २२ ।।
अचैतन्यं प्रधाने च तच्च तत्त्वमिदं स्मृतम् ।।
तत्त्वांतरेण मुच्यंते कार्यं कारणमेव च ।। २३ ।।
प्रयोजने च वैजात्यं ज्ञात्वा तत्त्वमसंख्यया ।।
संख्यास्तीत्युच्यते प्राज्ञै रुद्रतत्त्वार्थचिंतकैः ।। २४ ।।
इति तस्य तत्त्वभावं तत्त्वसंख्या च तत्त्वतः ।।
रुद्रतत्त्वाधिकं चापि ज्ञानतत्त्वं विदुर्बुधाः ।। २५ ।।
सांख्ये कृता भक्तिरेषा सद्भिराध्यात्मिकी मता ।।
योगिनामपि मे भक्त्या शृणु भक्तिं महासुर ।। २६ ।।
प्राणायामपरो नित्यं ध्यायते नियतेंद्रियः ।।
धारणां हृदये धृत्वा ध्यायते यो महेश्वरम् ।। २७ ।।
हृत्कञ्जकर्णिकासीनं पञ्चवक्त्रं त्रिलोचनम् ।।
शशांकज्योतिजठरं व्यालवृत्तकटीतटम् ।। २८ ।।
श्वेतं दशभुजं भद्रं वरदाभयहस्तकम् ।।
योगजा मानसी व्यास रुद्रभक्तिः परा स्मृता ।। २९ ।।
य एव भक्तिमान्रुद्रे रुद्रभक्तः स उच्यते ।।
विधिं तु शृणु मे व्यास यः स्मृतः क्षेत्रवासिनाम् ।। 5.1.7.३० ।।
स्वयं रुद्रेण विहितो ब्रह्मादीनां समागमे ।।
कथितो विस्तरात्पूर्वं सर्वेषां तत्र सन्निधौ ।।३१।।
निर्ममा निरहंकारा निःसंगा निष्परिग्रहाः ।।
बंधुवर्गेण निः स्नेहाः समलोष्टाश्मकांचनाः ।। ३२ ।।

भूतानां कर्मभिर्नित्यं त्रिविधैरभयप्रदाः ।।
सांख्ययोगविधिज्ञाश्च धर्मज्ञाश्छिन्नसंशयाः ।। ३३ ।।
यजंतो विवि धैर्यज्ञैर्ये विप्राः क्षेत्रवासिनः ।।
महाकालवने तेषां मृतानां यत्फलं शृणु ।। ३४ ।।
व्रजंत्येव सुदुष्प्राप्यं ब्रह्मसायुज्यमक्षयम् ।।
संप्राप्य न पुन र्जन्म लभंते मोक्षमव्ययम् ।। ३५ ।।
पुनरावर्तनं हित्वा विधिं माहेश्वरं स्थिताः ।।
पुनरावृत्तिरन्येषां प्रपंचाश्रमवासिनाम् ।। ३६ ।।
गार्हस्थ्यं विधिमासाद्य षट्कर्मनिरताः सदा ।।
जुह्वते विधिना सम्यङ्मंत्रस्तोत्रैर्नियंत्रिताः ।। ३७ ।।
अधिकं फलमायांति सर्वदुःखविवर्जिताः ।।
सर्व लोकेषु चान्यत्र गतिस्तस्य न हन्यते ।। ३८ ।।
दिव्येनैश्वर्ययोगेन स्वारूढः स्वपरिग्रहः ।।
बहुसूर्यप्रकाशेन विमानेन सुवर्चसा ।। ३९ ।।
वृतः स्त्रीणां सहस्रैश्च स्वच्छंदगमनालयः ।।
विचरत्यविचार्यैव सर्वलोकान्दिवौकसाम् ।। 5.1.7.४० ।।
स्पृहणीयतमः पुंसां सर्ववर्णोत्तमो धनी ।।
स्वर्गाच्च्युतः प्रजायेत कुले महति रूपवान् ।। ४१ ।।
धर्मज्ञो रुद्रभक्तश्च सर्वविद्यार्थपारगः ।।
तथैव ब्रह्मचर्येण गुरुशुश्रूषणेन च ।। ४२ ।।
वेदाध्ययनसंयुक्तो च भैक्षवृत्तिर्जितेंद्रियः ।।
नित्यं सत्यव्रते युक्तः स्वधर्मे च प्रमोदवान् ।। ४३ ।।
मृतः काले समृद्धेन सर्वभोगावलंबिना ।।
सूर्येणेव द्वितीयेन विमानेन विचारितः ।। ४४ ।।
गुह्यकोनाम रुद्रस्य गणः परमसंमतः ।।
अप्रमेयबलैश्वर्यो देवदानवपूजितः ।। ४५ ।।
तेषां च समतां याति तुल्यैश्वर्यसम न्वितः ।।
देवदानवमर्त्येषु स च पूज्यतमो भवेत। ।। ४६ ।।
वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।।
ऐवमैश्वर्यसंयुक्तो रुद्रलोके महीयते ।। ४७ ।।
वसित्वासौ विभूत्या वै यदा च च्यवते नरः ।।
रुद्रलोकाच्च्युतो भूमौ वसते नात्र संशयः ।। ४८ ।।
महाकालवने क्षेत्रे ब्रह्मचर्याश्रमे स्थितः ।।।

महेश्वरपरो नित्यं वसेद्वाऽथ म्रियेत वा ।। ४९ ।।
मृतोऽसौ याति दिव्ये वै विमाने सूर्यवर्चसि ।।
पूर्णचंद्रप्रकाशो वै शशिवत्प्रियदर्शनः ।। 5.1.7.५० ।।
रुद्रलोकं समासाद्य गुह्यकैः सह मोदते ।।
ऐश्वर्यं च महद्भुंक्ते सर्वस्य जगतः प्रभुः ।। ५१ ।।
भुक्त्वा युगसहस्राणि रुद्रलोके महीयते ।।
प्रच्युतस्तु पुनस्तस्माद्रुद्रलोकात्क्रमेण तु ।। ५२ ।।
नित्यं प्रमुदितस्तत्र भुक्त्वा लोकमनामयम् ।।
द्विजानां साधने नित्यं कुले महति जायते ।। ५३ ।।।
मानवेषु च धर्मेषु वसेद्भूयांश्च रूपवान् ।।
स्पृहणीयवपुः स्त्रीणां महाभोगपतिर्भवेत् ।। ५४ ।।
वानप्रस्थसमाचारो वनौषधिविवर्जितः ।।
शीर्णपर्ण समाहारः फलपुष्पांबुभोजनः ।। ५५ ।।
कणाशनोऽश्मकुट्टो वा दंतोलूखलकोऽथ वा ।।
येन केनाप्युपायेन जीर्णवल्कलधारकः ।। ५६ ।।
जटी त्रिषवणस्नायी मुक्तकेशः सुदंडवान् ।।
जलशायी पंचतपा वर्षास्वभ्रावकाशकः ।। ५७ ।।
कीटकंटकपाषाणभूम्यां तु शयनं तथा ।।
स्थानं वीरासनरतः संविभागी दृढब्रतः ।। ५८ ।।
अरण्यौषधिभोक्ता च सर्वभूताभयप्रदः ।।
नित्यं धर्मपरो मौनी जितक्रोधो जितेंद्रियः ।। ५९ ।।
रुद्रभक्तः क्षेत्रवासी महाकालवने मुनिः ।।
सर्वसंगपरित्यागी स्वारामो विगतस्पृहः ।। 5.1.7.६० ।।
यश्चात्र वसते व्यास शृणु तस्य हि या गतिः ।।
तरुणार्कप्रदीप्तेन वेदिकास्तंभशोभिना ।। ६१ ।।
रुद्रभक्तो विमानेन याति कामप्रचारिणा ।।
विराजमानो नभसि द्वितीय इव चंद्रमाः ।। ६२ ।।
गीतवादित्रशब्देन संवृतोऽप्सरसां गणै ।।
वर्षकोटिशतं साग्रं रुद्रलोके महीयते ।। ६३ ।।
रुद्रलोकाच्च्युतश्चापि विष्णुलोके महीयते ।।
विष्णुलोकात्परिभ्रष्टो ब्रह्मलोकं स गच्छति ।। ६४ ।।
तस्मादपि च्युतः स्थानाद्द्वीपेषु स हि जायते ।।
स्वर्गेषु च तथान्येषु भोगान्भुंक्ते यथेच्छया ।। ६५ ।।

भुक्तैश्वर्यो नरस्तेषु मर्त्यामर्त्येषु जायते ।।
राजा वा राजतुल्यो वा जायते धनवान्सुखी ।।
सुरूपः सुभगः कांतः कीर्तिमान्रुद्रभावितः ।। ६६ ।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा क्षेत्रवासिनः ।।
स्वधर्मनिरता व्यास स्वभृत्या चारजीविनः ।। ६७ ।।
सर्वात्मना रुद्रभक्ता भूतानुग्रहकारिणः ।।
महाकालवने क्षेत्रे ये वसंति मुमुक्षवः ।। ६८ ।।
मृतास्ते रुद्रभवने विमानैर्यांति शोभनैः ।।
अप्सरोगणसंयुक्तैः कामगैः कामरूपिभिः ।। ६९ ।।
अथवा संविदग्नौ च शरीरं विजुहोति यः ।।
रुद्रध्यायी महासत्त्वः स रुद्र भवने वसेत्।। 5.1.7.७० ।।
रुद्रलोकोऽक्षयस्तेषां शाश्वतो गुह्यकैः सह ।।
सर्वलोकोत्तमो रम्यो भवतीष्टार्थसाधकः ।। ७१ ।।
ये त्यजंति महाकाले प्राणान नशनैर्नराः ।।
तेषामप्यक्षयो व्यास रुद्रलोको महात्मनाम् ।। ७२ ।।
सांख्याः स्तुवंति ते रुद्रं सर्वदुःखविवर्जिताः ।।
सर्वामरयुतं देवं नंदिदेवगणै र्युतम्।।
अनाशकमृताः शूद्रा महाकालवने नराः ।। ७३ ।।
सिंहयुक्तैस्तु ते यांति विमानैरर्कसन्निभैः ।। ७४ ।।
नानावर्णसुवर्णाढ्यैर्हृष्टगंधाधिवा सितैः ।
अनौपम्यगुणै रम्यैरप्सरोगीतवादिभिः ।। ७५ ।।
पताकाध्वजविन्यस्तैर्नानाघंटानिनादितैः।।
सुप्रभैर्गुणसंपन्नैर्मयूरवरचारिभिः ।। ७६ ।।
रुद्रलोके नरा धीराः सर्वे चानशनैर्मृताः ।।
तत्रोषित्वा चिरं कालं भोगान्भुक्त्वा यथेप्सितान् ।।
धनी विप्रकुले भोगी जायते मर्त्यमागतः ।। ७७ ।।
करीषं साधयेद्यस्तु महाकालवने नरः ।।
सर्वभोगविनिर्मुक्तो रुद्रलोकं स गच्छति ।। ७८ ।।
रुद्रलोके वसेत्तावद्यावत्कल्पक्षयो भवेत् ।। ७९ ।।
तत्र भुक्त्वा महाभोगानिह जातो महीपतिः ।।
पृथिव्याः सकलायाश्च रूपवान्सुभगो भवेत् ।। 5.1.7.८० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये महाकालवनवासविधिवर्णनंनाम सप्तमोऽध्यायः ।। ७ ।। छ ।।

।। व्यास उवाच ।। ।।

आचारः परमो धर्मः सर्वधर्मपरायणः ।।

स्वधर्मनिरताश्चैव जितक्रोधा जितेंद्रियाः ।। १ ।।

रुद्रलोकं व्रजंतीह नात्र चित्रा मतिर्मम ।।

असंशयं च गच्छंति लोकानन्याञ्छशिप्रभैः ।। २ ।।

विनापि क्षेत्रवासेन तथैव नियमेन च ।।

स्त्रियो म्लेच्छाश्च शूद्राश्च पशवः पक्षिणो मृगाः ।। ३ ।।

मूका जडांधबधि रास्तपोनियमवर्जिताः ।।

एषां तु का गतिश्चेत्ते महाकालवने मृताः ।। ४ ।।

।। सनत्कुमार उवाच ।। ।।

स्त्रियो म्लेच्छाश्च मूढाश्च पशवः पक्षिणो मृगाः ।।

कालेनैव मृता व्यास रुद्रलोकं व्रजंति ते ।। ५ ।।

शरीरैर्दिव्यरूपैश्च सर्वभोगसमन्विताः ।।

रमंते शंभुना सार्धं स्मशाने प्रेतसंकुले ।। ६ ।।

निर्भत्सिता पुरा देवी कालीति पार्वतीति च ।।

तदा सा कुपिता देवी कटके शंकरं प्रति ।।७।।

एवं हि कलहो जातः शिवगौर्योर्हि यत्र तु ।।

देवस्तत्र समुद्भूतो नाम्ना कलकलेश्वरः ।। ८ ।।

कृतमग्रे तदा कुंडं नाम्ना कलहनाशनम् ।।

स्नाने तत्र कृते व्यास जाताऽकलहिनी प्रिया ।। ९ ।।

तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा महेश्वरम् ।।

उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ।।5.1.8.१०।।

तत्र यच्छति यो दानं त्रुटिमात्रं च चंदनम् ।।

आत्मना तारि तास्तेन दश पूर्वे दशापरे ।। ११ ।।

भूमिदानं च यस्तत्र प्रदास्यति नरो मुने ।।

अपि गोचर्ममात्रेण सर्वभूम्यधिपो भवेत् ।। १२ ।।

गामेकां रक्ति कामेकां भूमेरप्येकमंगुलम् ।।

यः प्रदास्यति भक्त्या हि स वै राजा भविष्यति ।। १३ ।।

धेनुमश्वांस्तिलान्वस्त्रं भाजनं ताम्रदोहनम् ।।

उपानहश्च च्छत्रं च तथा च श्रेष्ठपादुके ।। १४ ।।

ये प्रदास्यंति विप्रेभ्यस्तेषां लोकाः सदाऽक्षयाः ।।

तस्य दक्षिणपार्श्वे तु पृष्ठे मात्राख्य देवताः ।। १५ ।।

सा तत्र सर्वलोकानां देवी दुरितहारिणी ।।

सर्वतीर्थं तु विज्ञेयं मणिकर्णिकमुत्तमम् ।। १६ ।।

तस्मिन्स्नात्वा तु यः पश्येत्पृष्ठमातर आदरात्।।

स मुक्तः सर्वपापेभ्यः सिद्धिमाप्नोति वांछिताम् ।। १७ ।।

तासां तु दर्शनं कृत्वा मार्गे गमनमाचरेत्।।

न भयं तस्य चोरेभ्यो रक्षोभूतभयं तथा ।। १८ ।।

स्वदेशे परदेशे वा पर्वतेष्वटवीषु च ।।

न समुद्रे भयं तस्य तथा वै दुष्टभावना ।। १९ ।।

ग्रहपीडासु सर्वासु तथा राजभयादिकम् ।।

बस्तं वा यदि वा मेषं महिषं चापि घातयेत् ।। 5.1.8.२० ।।

देवीमुद्दिश्य यो विप्र सोऽभीष्टफलमश्नुते ।।

आश्विनस्य सिताष्टम्यामर्धरात्रिगते नरः ।। ।। २१ ।।

यः स्नाति पुरतो देव्याः स सिद्धि लभते पराम् ।।

मृतपुत्रा च या नारी कुण्डे स्नात्वा सभर्तृका ।। २२ ।।

स्नाति वै फलकुम्भेन अग्रे देव्या विधानतः ।।

स्नात्वा नान्यमुखं पश्येत्कुम्भस्नानेन वै मुने ।। २३ ।।

तस्य संजायते पुत्रो यथा देवः षडाननः ।।

पृष्ठे मातुः परं पुण्यं तीर्थमप्सरसां शुभम् ।। २४ ।।

रूपसौभाग्यसंपन्नस्तत्र स्नातो भवेन्नरः ।।

उर्वश्या वै पुरा व्यास तीर्थस्यास्य प्रभावतः ।। २५ ।।

भर्ता पुरूरवा लब्धं ऐलेयोंऽसौ महीपतिः ।।

इति कौतूहलं श्रुत्वा व्यासो वचनमब्रवीत् ।। २६ ।।

।। व्यास उवाच ।। ।।

कथमप्सरसां तीर्थं तत्र जातं महामुने ।।

कारणेन यथा तेन यस्मिन्काले प्रतिष्ठितम् ।।
तथा तन्मे सविस्तारं सरहस्यं प्रकीर्तय ।। २७ ।।
कथं पुरूरवाश्चासौ भार्यास्तस्य वराप्सराः ।।
उर्वशीनाम का सा तु केन जाता वरांगना ।।
सर्वमेतद्यथावृत्तं वद कौतूहलं हि मे ।। २८ ।।
।। सनत्कुमार उवाच ।। ।।
नरनारायणौ पूर्वं यत्र वै तेपतुस्तपः ।। २९ ।।
बदरिकाश्रमस्थौ तौ तेनेन्द्रो भयमागतः ।।
सर्वाश्चाप्सरसो हृद्या रूपयौवनदर्पिताः ।। 5.1.8.३० ।।
आदिष्टा या मघवता विघ्नार्थं च समागताः ।।
तौ दृष्ट्वाप्सरसस्तत्र रमन्तीर्मदविह्वलाः ।। ३१ ।।
विघ्नार्थमिह आयातास्तदा देवौ जजल्पतुः ।।
अस्माकं न स्त्रियः संति तेन वै विघ्नकारणम् ।। ३२ ।।
एवं संजल्प्य च नरो नारायणमुवाच ह ।।
करिष्याम्यहमेकां वै आसां तु रूपतोऽधिकाम्।।३३।।
मंजर्या सहकारस्य स्त्रीमूरुभ्यां चकार ह ।।
रूपेणाप्रतिमां लोके सर्वाभरणभूषिताम् ।। ३४ ।।
उत्थितां प्रमदां दृष्ट्वा ज्वलनाभां वरांगनाम् ।।
गत्वा शशंसुस्ताः शक्रं न तौ लोभयितुं क्षमाः ।। ३५ ।।
शक्रस्तासां वचः श्रुत्वा गत्वा देवावुवाच ह ।।
प्रणामावनतो भूत्वा कृत्वा शिरसि चांजलिम् ।। ३६ ।।
अहमर्थी स्त्रियाश्चास्याः प्रसादः क्रियतामिति ।।
ततस्तां ददतुर्देवाविंद्राय परमेश्वरौ ।। ३७ ।।
अस्मद्वचनसामर्थ्याद्गृहाणेमां त्वमुर्वशीम् ।।
ऊरुभ्यां जनिता यस्मान्नरेणेयं वरांगना ।। ३८ ।।
मंजर्या सहकारस्य तेनेयमुर्वशी स्मृता ।।
पुरंदरो गृहीत्वा तामुर्वशीं परमांगनाम् ।। ३९ ।।
गत्वा स्वर्गमथाहूय चित्रांगदमुवाच ह ।।

शिक्षाऽस्याः क्रियतां चित्र यथा नृत्ये विचक्षणा ।। 5.1.8.४० ।।

क्रियतामचिरादेषा यत्नमास्थाय शोभनम् ।।

एवमुक्ते तु शक्रेण कृता तेन विचक्षणा ।।

वरं प्रवीणा सा जाता नृत्ये गीते च कोविदा ।। ४१ ।।

एवं सा न्यवसत्तत्र सुरसद्मनि सुन्दरी ।।

गते बहुतिथे काले तत्रा गात्स नरेश्वरः ।। ४२ ।।

इलस्यपुत्रो धर्मात्मा नाम्ना चैव पुरूरवाः ।।

इन्द्रस्यार्द्धासनगतो नृत्यं पश्यति तत्र ह ।। ४३ ।।

नृत्यन्तीं वासवस्याग्रे उर्वशीं वीक्ष्य कामुकः ।।

हृतचित्तस्तया राजा न किंचित्प्रत्यपद्यत ।। ४४ ।।

धैर्यं चित्ते समावेश्य मुहूर्तं पर्यवस्थितः ।।

उर्वशी च तदा तेन दर्शनाहतमानसा ।। ४५ ।।

तत्प्रदेशाद्विनिष्क्रम्य कामार्ता चातिविह्वला ।।

भूमौ सा पतिता बाला उच्छ्रिताद्रंगमण्डलात् ।। ४६ ।।

अथात्मानं च संवेद्य उत्थिता भूमिमण्डलात् ।।

दृष्टा सा राजसिंहेन मन्मथेन प्रपीडिता ।। ४७ ।।

गतः पुरूरवा भूमिं तामेव मनसा स्मरन् ।।

स्मरन्ती राजशार्दूलं गता साप्युर्वशी गृहम् ।। ४८ ।।

चित्रांगदगृहे गत्वा दूतं साथ चकार ह ।।

चित्रांगदेन सा नीता रात्रौ यत्र पुरूरवाः ।। ४९ ।।

उर्वश्या रहितः स्वर्गः शून्योऽप्यासीद्दिवौकसाम् ।।

रात्रावेव च सा तेन आनीता त्रिदिवं पुनः ।। 5.1.8.५० ।।

तया विरहितः सोऽपि शून्यचित्तः परिभ्रमन् ।।

उन्मत्ततां गतो व्यास षष्टिवर्षाणि पार्थिवः ।।५१।।

परिभ्रमन्स तीर्थानि महाकालवनं गतः ।।

गंध वैंणोर्वशी स्वर्गे नीता सा परमाप्सराः ।। ५२ ।।

नापि शेते न वा स्नाति हे राजन्निति जल्पति ।।

तावदप्सरसः सर्वास्ताः प्राप्ता यत्र चोर्वशी ।। ५३ ।।

रंभा च मेनका चैव प्रम्लोचा पुंजिकस्थली ।।
जलपूर्णाश्रुपूर्णा च वसंता चंद्रिका तथा ।। ५४ ।।
सूर्यदत्ता विशालाक्षी चंद्रा चन्द्रप्रभा तथा ।।
आगत्य तास्तु सहिता उर्वशीं वाक्यमब्रुवन् ।। ५५ ।।
किं रोदिषि वरारोहे मर्त्यहेतोः सुलोचने ।।
तद्वाक्यमुर्वशी तासां श्रुत्वा वचनम ब्रवीत् ।। ५६ ।।
सौख्यं षण्ढो न जानाति संगात्स्त्रीपुंसयोर्हि यत् ।।
अनयोपमया ज्ञेयं तस्यार्थे कृतनिश्चया ।। ५७ ।।
श्रुत्वा चेति वचस्तस्यास्ताः संमंत्र्य समाहिताः ।।
अविदिते च देवानां महाकालवने गताः ।। ५८ ।।
नृपं च ददृशुस्तत्र वृक्षच्छायानिषेवितम् ।।
दृष्ट्वा चाथ नृपं सर्वा भृशं जाताः सुविह्वलाः ।। ५९ ।।
दृष्ट्वा तथाविधाः सर्वाः कामार्ता सुरयोषितः ।।
मूढचित्ताः प्रहस्यैवमुर्वशी वाक्यमब्रवीत् ।।5.1.8.६०।।
।। उर्वश्युवाच ।। ।।
अयं स पुरुषव्याघ्रो विना येनाहमीदृशी ।।
ऐलः पुरूरवा नाम विख्यातो जगतीपतिः ।। ६१ ।।
एवं ब्रुवन्त्यां वै तस्यामुर्वश्यामप्सरोगणः ।।
मौनीभूतश्चिरं तस्थौ लज्जयानतकन्धरः ।। ६२ ।।
एतस्मिन्नन्तरे प्रायाद्भगवांस्तत्र नारदः ।।
दृष्ट्वा तथागताः सर्वा उर्वश्या सहितं नृपम् ।। ६३ ।।
संप्रेक्ष्य च ततः प्राह कि यूयमिह निस्वनाः ।।
त्यक्त्वा तथाविधं रम्यमिन्द्रस्यालयमुत्तमम् ।। ६४ ।।
वरं च व्रियतां शीघ्रं वियोगो न भवि ष्यति ।।
माहात्म्यं चास्य तीर्थस्य कथयामास नारदः ।। ६५ ।।
अस्मिन्हि दुर्भगा तीर्थे स्नात्वा स्त्री पुरुषोऽपि वा ।।
सौभाग्यं लभते सम्यक्सर्वभोगांस्तथोत्तमान् ।। ६६ ।।
आत्मानं तोलयेद्यस्तु तिलैर्वा लवणेन वा ।।

शर्कराभिश्च बह्वीभिर्वित्तशाठ्यविवर्जितः ।। ६७ ।।
गुडेन मधुना वापि देवीमुद्दिस्य पार्वतीम् ।।
लवणेन स्वरूपाढ्यस्तिलैः सर्वांगशोभनः ।। ६८ ।।
द्रव्यवृद्धिः शर्करया गुडेनांगेषु पूर्णता ।।
मधुना चैव सौभाग्यं तीर्थस्यास्य प्रभावतः ।। ६९ ।।
द्वादशैव तु युग्मानि देव्या देवस्य भोजयेत् ।।
कूपीं नखरिणीं दद्यात्ताटंकं कतकांजनम् ।। 5.1.8.७० ।।
वेत्रजां कंचुकीं चैव वस्त्रे कौसुंभके तथा ।।
श्वेतानुलेपनं पुंसां स्त्रीणां दद्याच्च कुंकुमम् ।। ७१ ।।
आषाढे श्रावणे वापि मासि भाद्रपदे तथा ।।
शुक्लाश्विनतृतीयाया मुत्तमं व्रतमाचरेत् ।। ७२ ।।
उत्तमा जायते नारी यथा देवी उमा तथा ।।
उमामहेश्वरौ कार्यौ सौवर्णौ च स्वशक्तितः ।। ७३ ।।
धार्यौ नार्या हि तौ देवौ स्वयं तुलावरोहणे ।।
फलानि चैव देयानि शाकानि विविधानि च ।। ७४ ।।
तत्र दत्तं हुतं जप्तं सर्वं कोटिगुणं भवेत् ।।
एवं या कुरुते तत्र तीर्थे नारी समाहिता ।। ७५ ।।
गन्धर्वाप्सरसां लोके मृता याति न संशयः ।।
अत्र तीर्थे च द्वे लिंगे पूजिते देवदानवैः ।। ७६ ।।
दृष्ट्वा ते परमां सिद्धिं प्राप्नुतो दंपती तदा ।।
कार्तिक्यां तु विशेषेण कृत्वा तत्र प्रजागरम् ।।
संपूज्य गंधपुष्पैश्च रुद्रलोकमवाप्नुयात् ।। ७७ ।।
यथा देव्याः स्वरूपेण वियोगो नैव दृश्यते ।।
तथा तयोर्वियोगश्च दृश्यते न कदाचन ।। ७८ ।।
एवं कृत्वाथ तां विप्र सर्वाश्च त्रिदिवं गताः ।।
उक्तमप्सरसां तीर्थं तीर्थांतरमथोच्यते ।। ७९ ।।
दक्षिणे पृष्ठदेव्या वै माहिषं कुण्डमुच्यते ।।

महिषो दानवः पूर्वं निहतो गणनायकैः ।। 5.1.8.८० ।।

तत्र तीर्थे नरः स्नात्वा मातृः संपूज्य यत्नतः ।।

प्रेतरक्षः पिशाचानां पीडया स विमुच्यते ।।८१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽप्सरःकुण्डमाहात्म्यवर्णनंनामाष्टमोऽध्याः।। ८ ।।

।। व्यास उवाच ।। ।।
कथं तन्माहिषं कुण्डं मातृणामाकृतिः कथम्।।
रुद्रस्यैव कथं क्षेत्रे महिषो दानवो हतः ।।१।।
।। सनत्कुमार उवाच ।। ।।
कपालखंडमादायं महादेवोऽप्यतिप्रभम् ।
ब्रह्मतेजो मयं दिव्यं ज्वलंतमिव चार्चिषा ।।२।।
क्रीडमानो जगन्नाथो मोहयामास वै सुरान्।।
निमेषात्स इमं लोकं योगात्मा योगलीलया।।३।।
प्राप्य पुण्यतमं क्षेत्रं यत्रातिष्ठन्महाप्रभुः ।।
तत्रतत्र महद्दिव्यं कपालं देवताधिपः ।। ४ ।।
स्थापयामास दीप्तार्चिर्गणानामग्रतः प्रभुः ।।
त्वत्स्थापितमथो दृष्ट्वा गताः सर्वे महौजसः ।। ५ ।।
विनदत्समहानादं नादयंत दिशो दश ।।
क्षोभार्णवाशनिप्रख्यं नभो येन विदीर्यते ।। ६ ।।
तेन शब्देन घोरेण दानवो देवकंटकः ।।
हालाहल इति ख्यातो देशं तमभिधावितः ।। ७ ।।
अमृष्यमाणः क्रोधार्तो दुरात्मा दुर्जयः सुरैः ।।
ब्रह्मदत्तवरश्चैव माहिषं वपुरास्थितः ।। ८ ।।
दैत्यैः परिवृतो घोरै कोटिभिश्चोद्यतायुधैः ।।
तमायांतं तु सक्रोधं महिषं देवकंटकम् ।। ९ ।।
समावेक्ष्याह वै देवो गणान्सर्वा न्पिनाकधृक् ।।
मायावी गणपा दैत्यस्त्रैलोक्यस्यापि कंटकः ।। 5.1.9.१० ।।
आयाति त्वरितो यूयं तस्मादेनं विनिघ्नथ ।।
कपालस्य गतिं सर्व आश्रिता गणनायकाः ।। ११ ।।
ततो देवगणा दृष्ट्वा तमायांतं महासुरम् ।।
गर्जमानं महानादं भ्रममाणं महाभुजम् ।। १२ ।।
बिभिदुः शलसंघातैरसिभि र्मुसलैस्तथा ।।
संमुह्य शरजालेन ततो भूमौ न्यपातयन् ।। १३ ।।
हते तस्मिन्महादेवो देवान्प्रोवाच वै तदा ।।
अहो दर्पातिमूढः स दर्पेण निधनं गतः ।। १४ ।।
एतस्मिन्नंतरे व्यास तत्कपालात्सुभैरवाः ।।
दीप्तास्या मातरः सर्वाः प्रचंडास्त्रा महाबलाः ।। १५ ।।
अभ्यधावंस्तमुद्देशं महादेवं निवेद्य वै ।।

दैत्यं ता भक्षयंति स्म भित्त्वा भित्त्वा महाबलाः ।। १६ ।।
कपालमातरस्तस्मात्ख्याताः क्षेत्रे महाबलाः ।।
महाकपालस्तस्माद्वै तादृशः परि कीर्तितः ।। १७ ।।
स्थापितस्य कपालस्य भित्त्वा समभवत्पुरा ।।
ख्यातं शिवतडागं च सर्वपापप्रणाशनम् ।। १८ ।।
तदद्यापि महद्दिव्यं सरस्तत्र प्रकाशते ।।
त्रिषु लोकेषु विख्यातं गणगंधर्वसेवितम् ।। १९ ।।
पात्रस्थमुद्धुतं वापि शीतोष्णं क्वथितं जलम् ।।
रौद्रं सरः पुनातीहाश्वमेधावभृथो यथा ।। 5.1.9.२० ।।
प्रागाद्ब्रह्मापि तं देशं देवतानां शतैर्वृतः ।।
स्वर्गलोकस्य निःश्रेणी कीर्तिता ब्रह्मणा स्वयम् ।। २१ ।।
अत्र त्यजंति ये प्राणान्रुद्र लोकं व्रजंति ते ।।
धन्या व्यास नरा मर्त्ये महाकालवने स्थिताः ।। २२ ।।
रौद्रे सरसि ये स्नांति जलं वापि पिबंति ये ।।
स्वधर्माचारनिरताः पश्यंतीशानमीश्वरम् ।। २३ ।।
इति स्वर्गगता देवाः स्पृहां कुर्वंति नित्यशः ।। २४ ।।
इदं शुभं दिव्यमधर्मनाशनं महाकपालं सुरदैत्यपूजितम् ।।
महाप्रभं पापहरं सनातनं सुरेशलोकादपि दुर्लभं सदा ।। २५ ।।
तपोरतैः सिद्धगणैरभिष्टुतं यथा नभःस्थं दिननाथमंडलम् ।।
य एकचित्तः शृणुयात्प्रसादतस्त्रिविष्टपं गच्छति सोऽभिनंदितः ।।२६।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां पंचम आवन्त्यखण्डेऽवन्तीक्षेत्र माहात्म्ये महिषकुण्डरुद्रसरोमाहात्म्यवर्णनंनाम नवमोऽध्यायः ।। ९ ।। ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
अथातः संप्रवक्ष्यामि तीर्थं त्रैलोक्य विश्रुतम्।।
स्वयंभूतं महेशस्य विख्यातं कुटुंबिकेश्वरम्।। १ ।।
मुच्यते सर्वपापैस्तु सप्तजन्मकृतैरपि ।।
शुचिः पश्यति यो देवं कृत्वा श्राद्धं यथा विधि ।। २ ।।
सर्वाँल्लोकानतिक्रम्य शिवलोकं स गच्छति ।।
यस्तु सर्वाणि शाकानि कन्दानि विविधानि च ।। ३ ।।
तीरे तस्य प्रयच्छेत स प्राप्नोति परां गतिम् ।।
पौषे प्रतिपदि सिते अष्टम्यां वा समाहितः ।। ४ ।।
एकेनैवोपवासेन अश्वमेधफलं लभेत् ।।
आश्विन्यां पौर्णमास्यां च शुचिः पश्यति मानवः ।। ५ ।।
पट्टबंधं महेशस्य स विपाप्मा दिवं व्रजेत् ।।
चैत्रे मासि सिते पक्षे पञ्चम्यां समुपोषितः ।। ६ ।।
कर्पूरं कुङ्कुमं चैव मृगनाभि सचन्दनम्।।
निवेदयति देवाय नैवेद्यं घृतपायसम् ।। ७ ।।
स्वरूपं चैव विप्रेन्द्र सभार्यं भोजयेद्द्विजम् ।।
रुद्रलोकमवाप्नोति यावदिंद्राश्चतु र्दश ।। ८ ।।
इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये
कुटुम्बिकेश्वरमाहात्म्यवर्णनंनाम दशमोऽध्यायः ।। १० ।। ।। छ ।। ।।

अथातः संप्रवक्ष्यामि तीर्थं विद्याधरस्य तु ।।
तत्र स्नात्वा शुचिर्भूत्वा विद्याधरपतिर्भवेत् ।। १ ।।
।। व्यास उवाच ।। ।।
कथं तीर्थमिदं क्षेत्रे जातमत्र महामुने ।।
प्रसादाद्ब्रूहि मे ब्रह्मञ्छ्रोतुमिच्छामि सांप्रतम् ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
विद्याधरपतिः कश्चिदासीद्रूपधरः पुरा ।।
ग्रथिता पारिजातस्य माला तेन मनोरमा ।। ३ ।।
गृहीत्वा च स तां मालां गतो वासववेश्मनि ।।
नृत्यंती वासवस्याग्रे दृष्टा तेन च मेनका ।। ४ ।।
दत्ता तस्यै तदा तेन सा माला नृत्यमाश्रितः ।।
सा मेनकास्तुताऽस्थाने मालया मोहिता भवत्। ५ ।।
कोपाविष्टेन शक्रेण शप्तो विद्याधरस्तदा ।।
पृथिव्यां गच्छ पापिष्ठ नृत्यभंगस्त्वया कृतः ।। ६ ।।
विद्याधरपदं त्यक्त्वा मम शापाच्च सांप्रतम्।।
एवमुक्तस्तु शक्रेण वाक्यं विद्याधरोऽब्रवीत।। ७ ।।
अजानता मया नाथ अपराधः कृतोऽधुना ।।
अनुग्रहमतो देव कुरु मे त्वं प्रसा दतः ।। ८।।
एवमुक्तः स शक्रो वै विद्याधरमुवाच ह ।।
गच्छावंतीं त्वमद्यैव यत्रास्ते गांगटी गुहा ।।९।।
तस्याश्चोत्तरभागे तु विद्यते तीर्थमुत्तमम् ।।
ख्यातं तत्त्रिषु लोकेषु नाम्ना विद्याधरं शुभम् ।। 5.1.11.१० ।।
भक्त्या तत्र कृते स्नाने विद्याधरपतिर्भवेत् ।।
अतस्त्वमपि तत्रैव कुरु स्नानं प्रयत्नतः ।।११।।
एवमुक्तः स शक्रेण आगतोऽवंतिमंडले ।।
स्नानं कृत्वा च तेनैव तीर्थे तस्मिन्मनोरमे ।। १२ ।।
प्रभावात्तस्य तीर्थस्य पुनः प्राप्तं पदं स्वकम् ।।
एवं व्यास समाख्यातं तीर्थं विद्याधरं शुभम्।।१३।।
तत्र पुष्पाणि यो दद्याच्चंदनं च विलेपनम् ।।
लभेत्समस्तभोगान्स इहलोके परत्र च ।।१४।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां पञ्चम आवंत्यखंडे ऽवन्तीक्षेत्रमाहात्म्ये विद्याधरतीर्थमाहात्म्यवर्णनं नामैकादशोऽध्यायः ।।११।।

सनत्कुमार उवाच।।
उत्तरे तु प्रवक्ष्यामि मर्कटेश्वरमुत्तमम्।।
तत्र तीर्थं च विख्यातं सर्वकामप्रदायकम् ।। १ ।।
तस्मिंस्तीर्थे नरः स्नात्वा गोशतस्य फलं लभेत्।।
विस्फोटानां प्रशांत्यर्थं बालानां चैव कारणे ।।२ ।।
मापेन मापितान्कृत्वा मसूरांस्तत्र कुट्टयेत् ।।
शीतलायाः प्रभावेन बालाः संतु निरामयाः ।। ३ ।।
ये पश्यंति नरा भक्त्या शीतलां दुरितापहाम् ।।
न तेषां दुष्कृतं किंचिन्न दारिद्र्यं द्विजोत्तम ।। ४ ।।
न च रोगभयं तेषां ग्रहपीडा तथैव च ।।५।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये शीतला माहात्म्यवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।। ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
स्वर्गद्वारे नरः स्नात्वा दृष्ट्वा देवं च भैरवम् ।।
श्राद्धं तत्रैव कुर्वीत पितॄनुद्दिश्य भक्तितः ।। १ ।।
पितॄंश्च स नरो व्यास तारयेदात्मना सह ।।
स्वर्गद्वारेण योऽभ्येति रुद्रस्य परमं पदम् ।। २ ।।
भैरवस्याग्रतो देवी पूर्वे तिष्ठति चांबिका ।।
तां तु दृष्ट्वा नरः स्त्री वा मुच्यते सर्वपातकैः ।। ३ ।।
महानवम्यां पुरुषः कृत्वा बस्तमयं बलिम् ।।
महिषं वा सुरां मांसं मालां बिल्वमयीं शुभाम् ।।
भक्त्या निवेद्य देव्यै तु सर्वासिद्धिमवाप्नुयात् ।। ४ ।।
तत्र स्नात्वा नरो भक्त्या पूजां कृत्वा महेश्वरे ।।
स्वर्गद्वारेण सोऽभ्येति रुद्रस्य भवनं द्विज ।। ५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये स्वर्गद्वारमाहात्म्य वर्णनंनाम त्रयोदशोध्यायः ।। १३ ।। ।।छ।।

।। सनत्कुमार उवाच ।। ।।
स्नात्वा चतुःसमुद्रे तु पश्येद्राजस्थलं शिवम् ।।
यस्य दर्शनमात्रेण पुत्रवाञ्जायते नरः ।। १ ।।
समुद्राः संति चत्वारः क्षारक्षीरदधीक्षवः ।।
समीपे तस्य देवस्य सुद्युम्नेन प्रतिष्ठिताः ।। २ ।।
।। व्यास उवाच ।। ।।
राजस्थल समीपे तु समुद्राः केन हेतुना ।।
कथय त्वं मुनिश्रेष्ठ सुद्युम्नेन प्रतिष्ठिताः ।। ३ ।।
लक्षयोजनपर्यंतं जंबुद्वीपं सुशोभनम् ।।
मर्यादायां स्थापितोऽयं समुद्रः क्षारसंज्ञितः ।।४।।
शाकद्वीपे द्विलक्षे तु क्षीराब्धिः संप्रतिष्ठितः ।।
दध्यब्धिस्तु कुशद्वीपे चतुर्लक्षः प्रतिष्ठितः।।
शाल्मले त्विक्षुजलधिर्ह्यष्टलक्षः प्रतिष्ठितः ।। ५ ।।
चत्वारस्ते समाख्याताः समुद्रा भूमिमंडले ।।
राजस्थलसमीपे तु कथमेकत्र संगताः ।। ६ ।।
।। सनत्कुमार उवाच ।। ।।
सुद्युम्नो नाम राजासीत्पुरा कल्पे सुधार्मिकः ।।
तस्य पत्नी वरारोहा नाम्ना ख्याता सुदर्शना ।। ७ ।।
मुनिं दाल्भ्यं च सा दृष्ट्वा पप्रच्छ सुतकाम्यया ।।
भगवन्केन दानेन स्नानेन विधिनाऽथवा ।। ८ ।।
सर्वलक्षणसंपूर्णः पुत्रो लभ्यो मया कथम् ।।
एतदाख्याहि विप्रर्षे याथातथ्यं सविस्तरम् ।। ।। ९ ।।
।। दाल्भ्य उवाच ।। ।।
विहितास्ते पुरा पुत्र्यब्धयः पुत्रेप्सयोत्तमाः ।।
स्वयंभुवेन देवेन ब्रह्मणा लोककारिणा ।। 5.1.14.१० ।।
तेषु राज्ञा कृते स्नाने तव पुत्रो भविष्यति ।।
शंकराराधने पुत्रि तस्मात्प्रेरय वल्लभम् ।। ११ ।।
दाल्भ्यस्यैव तु वाक्येन विचित्राख्यानकेन च ।।
प्रस्थापयामास पतिं शंकराराधने द्रुतम्।। १२ ।।
स गत्वा तोषयामास शंकरं गंधमादने ।।
संतुष्टः शंकरः प्राह शशिसूर्याग्निलोचनः ।।१३।।
अवंतीं गच्छ राजेद्र पुत्रं प्राप्स्यसि शोभनम्।।
मच्छासनाज्जलधयो गमिष्यंति कुशस्थलीम् ।। १४ ।।

मेरुरूपे स्थले राजन्समीपे शंकरस्य च ।।
द्रक्ष्यसि त्वं नरश्रेष्ठ जलधींस्तत्र संगतान्।।
अभ्यर्थितास्त्वया तत्र स्थास्यंति कलया सदा ।। १५ ।।
एवमुक्त्वा महादेवो जगामादर्शनं विभुः ।।
सुद्युम्नो भार्यया सार्धमाजगाम कुशस्थलीम् ।। १६ ।।
आगतस्तु कुशस्थल्यां समुद्रांश्च ददर्श ह ।।
तांस्तु दृष्ट्वा नमश्चक्रे राजस्थलसमीपतः ।। १७ ।।
ते वै दृष्ट्वा च सुद्युम्नं प्रणतं भक्तवत्सलम् ।।
प्रोचुर्वारिधयः सर्वे वरं वरय सुव्रत ।।१६।।
स वव्रे मनसा पुत्रं सर्वलक्षणसंयुतम् ।।
उवाच च पुना राजा यावत्ति ष्ठति मेदिनी ।।
तावदत्रैव स्थातव्यं राजस्थलसमीपतः ।। १९ ।।
।। समुद्रा ऊचुः ।। ।।
तावत्स्थास्यामहेऽत्रैव यावत्कल्पावसानकम् ।। 5.1.14.२० ।।
भविष्यति च ते पुत्रः सर्वलक्षणसंयुतः ।।
अत्र ते स्नानमात्रेण तस्मात्स्नानं समाचर ।। २१ ।।
स्थले चात्र शुभे राजन्स्थास्यामः कलया सह ।।।
एवं व्यास समुद्रास्तु सुद्युम्नेनावतारिताः ।। २२ ।।
कुरुते तेषु यो यात्रां तस्य पुण्यफलं शृणु ।।
स्नानं कृत्वा महापुण्ये समुद्रे क्षारसंज्ञके ।।। ।। २३ ।।
कुर्याच्छ्राद्धं ततो व्यास पितॄणां भक्तितत्परः ।।
पूजयेच्च महादेवं स्थलस्थं पार्वतीपतिम् ।। २४ ।।
मंडकांश्च ततो दद्याद्ब्राह्मणे वेदपारगे ।।।
पात्रं ताम्रमयं कार्यं लवणेन प्रपूरितम् ।। २५ ।।
सहिरण्यं च दातव्यं ब्राह्मणे वेदपारगे ।।
सप्तधान्यसमायुक्तं वेणुजं वस्त्रवेष्टितम् ।। २६ ।।
सदक्षिणं फलैर्युक्तमर्घ्यं दद्यात्प्रयत्नतः ।।
क्षीराब्धिं च ततो गत्वा स्नानं कुर्याच्च पूर्ववत् ।। २७ ।।
क्षीरं तत्र प्रदातव्यं ताम्रपात्रेण पूरितम् ।।
दध्यब्धौ च तथा कृत्वा दद्याद्दध्योदनं शुभम् ।। २८ ।।
इक्ष्वब्धौ च तथा कृत्वा दद्याद्विप्रे गुडं शुभम् ।।
यात्रां कृत्वा तु वै व्यास गां च दद्यात्पयस्विनीम् ।। २९ ।।।
एवं यः कुरुते यात्रां राजस्थलसमीपतः ।।

भव्यां हि लभते लक्ष्मीं पुत्रांश्चापि मनोरमान् ।। 5.1.14.३० ।।
मृते स्वर्गमवाप्नोति यावदिंद्राश्चतुर्दश ।।
तावत्स्वर्गफलं भुक्त्वा पश्चान्मोक्षं प्रयास्यति ।। ३१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहा त्म्ये राजस्थलेश्वरसमीपे चतुःसमुद्रमाहात्म्यवर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महातीर्थं नाम्ना शंकरवापिका ।।
क्रीडमानेन देवेन निर्मितं तीर्थमुत्तमम् ।। १ ।।
प्रक्षिप्तं देवदेवेन कपालक्षालनं जलम् ।।
वापीगतं कृतं यस्मादतः शंकरवापिका ।। २ ।।
अर्काष्टम्यां नरः स्नात्वा दिशासु विदिशासु च ।।
पूर्वादिक्रमतो यावद्वापीमध्ये तथैव च ।। ३ ।।
हविष्यान्नयुतान्व्यास दद्याच्च करका न्नवान्।।
शाकमूलांश्च विप्रेभ्यस्तस्य पुण्यफलं शृणु ।। ४ ।।
परत्र चेह ये लोकाः सर्वभावसमन्विताः ।।
तत्रतत्र समायाति भुनक्त्यैश्वर्यमुत्तमम् ।। ।। ५ ।।
ये नरा कीर्तयिष्यंति माहात्म्यमतिभाविकाः ।।
रुद्रलोकेऽपि ते पूज्यास्तेभ्योऽपि सततं नमः ।। ६ ।।
।। सनत्कुमार उवाच ।। ।।
ततो वै देवदेवेशः पिनाकी वृषभध्वजः ।।
तुष्टाव प्रयतो भूत्वा देवदेवं दिवाकरम् ।। ७ ।।
आजगाम दिवानाथः संतुष्टः प्राह शंकरम् ।। ८ ।। ।।
।। सूर्य उवाच ।। ।।
वरं वरय भूतेश वरदोऽस्मि ददामि ते ।।
तमाह वरदश्चेत्त्वं याच्यमानं कुरुष्व मे ।। ९ ।।
अंशेन स्थीयतामत्र हितार्थं सर्वदेहिनाम् ।।
अवतीर्णो रविस्तत्र श्रुत्वा माहेश्वरं वचः ।। 5.1.15.१० ।।
ततो देवाधिदेवस्य शंकरस्य महौजसः ।।
वाक्येन भास्करस्तत्र ययौ ख्यातिं महाद्युतिः ।। ११ ।।
शंकरादित्यनामेति लोकानुग्रहकारकः ।।
देवा दैत्याश्च गंधर्वा विस्मिताः सह किन्नरैः ।। १२ ।।
अहो धन्यमिदं स्थानं यत्रास्ते त्रिपुरांतकः ।।
भास्करोऽपि च तत्रस्थस्तीर्थमध्ये च वर्तते ।। १३ ।।
ततस्तुष्टाश्च ते सर्वे ब्रह्माद्याः सुरसत्तमाः ।।
देवेशं पूजयामासुरादित्यं शंकरं तथा।।१४।।
मूर्तिमंतश्च ते देवा अवतीर्य च शोभनम् ।।
स्थापयित्वाऽब्रवीद्वाक्यं येऽत्र स्नास्यंति मानवाः ।।१५।।
न दुःखं जायते तेषां जरामरण शोकजम् ।।

सर्वयज्ञेषु यत्पुण्यं सर्वदानेषु यत्फलम्।।
तस्माच्चैवाधिकं ह्यत्र शंकरादित्यदर्शनात्।।१६।।
व्याधयो नाधयश्चैव दारिद्र्यं न कदाचन ।।
ऐश्वर्यं चातुलं तेषां जायते भुवि सर्वदा ।।१७।।
न रोगो न च दारिद्र्यं वियोगो न च बन्धुभिः ।।
जायते मुनिशार्दूल शंकरादित्यदर्शनात्।।१८।।
इत्येवं देवदेवेन पुरा वै शूलपाणिना ।।
शंकरादित्यनाम्ना च स्थापितं परमं पदम् ।। १९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये शंकरादित्यमाहात्म्यवर्णनंनाम पञ्चदशोऽध्यायः ।। १५ ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
अथान्यत्सं प्रवक्ष्यामि तीर्थानां तीर्थमुत्तमम् ।।
स्थापितं परमं तीर्थं स्वनाम्ना मुनिसत्तम ।। १ ।।
एकदा समये व्यास कपालक्षालनाय वै ।।
शीर्षोदकं गृहीत्वा तु कपालेन महेश्वरः ।। २ ।।
प्रक्षाल्य चाक्षिपद्भूमौ तत्र तीर्थमनुत्तमम् ।।
नाम्ना गन्धवती पुण्या नदी त्रैलोक्यविश्रुता ।।३।।
ब्रह्मणो रुधिरेणाशु परि पूर्णाभवत्क्षणात् ।।
तस्यां स्नानं सदा शस्तं स्वयं देवेन भाषितम्।। ४ ।।
श्राद्धं च तर्पणं कृत्वा तत्सर्वं चाक्षयं भवेत् ।।
वायुभूतास्तु पितरस्तस्यास्ती रे तु दक्षिणे ।। ५ ।।
तिष्ठंति मुनिशार्दूल चिंतयंति स्वगोत्रजम् ।।
आगमिष्यति पुत्रोऽद्य नप्ता वा संतताविह ।। ६ ।।
संयावं पायसं वापि श्यामाकं सनिवारकम् ।।
सकृत्क्षौद्रतिलैर्युक्तं पिण्डं दास्यति वै कदा ।। ७ ।।
तेन पिंडप्रदानेन तृप्तिर्भवति चाक्षया ।।
यस्तु स्नात्वा च वै पिंडं दद्याद्वै चंद्रं पर्वणि ।। ६ ।।
पितरौ द्वादशाब्दानि तृप्तिं यास्यंति तस्य वै ।।
येऽत्रागत्य सुविद्वांसो मानवा वा तथा द्विजाः ।। ९ ।।
पितॄन्संतर्पयिष्यंति स्वर्गस्तेषां सदाऽक्षयः ।।
तत्र यद्दीयते दानं त्रुटिमात्रं तु कांचनम् ।। 5.1.16.१० ।।
अक्षयं तस्य तत्प्रोक्तं ब्रह्मणा वै स्वयंभुवा ।।
गंगाद्वारे प्रयागे च कुरुक्षेत्रेऽथ पुष्करे ।। ११ ।।
वाराणस्यां गयायां च सा न तृप्तिर्भविष्यति ।।
तुष्टाश्च पितरो नृणां दास्यंति कांक्षितान्वरान्।। १२ ।।
यो यमुद्दिश्य वैकाममिह श्राद्धं करिष्यति ।।
तस्य तज्जायते सर्वं मृतस्य परमा गतिः ।। १३ ।।
नवमी अष्टमी चैव अमावास्याथ पूर्णिमा ।।
सर्वाण्येतानि वै व्यास रवेः संक्रम एव च ।। १४ ।।
ब्रह्मेंद्र रुद्रदेवांश्च सूर्याग्निब्रह्मदैवतान् ।।
विश्वेदेवान्सगन्धर्वान्यक्षाश्च मनुजान्पशून् ।। १५ ।।
सरीसृपान्पितृगणान्यच्चान्यद्भुवि संस्थितम् ।।
श्राद्धं वै श्रद्धया कुर्वन्प्रीणयत्यखिलं जगत् ।। १६ ।।

मासिमास्यसिते पक्षे पंचदश्यां द्विजोत्तम ।।
इन्दुक्षये यदा मैत्रं विशाखां चैव रोहिणीम् ।। १७ ।।
श्राद्धे पितृगणास्तृप्तिं प्रयांति पितरोऽर्जिताम् ।।
वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता ।। १८ ।।
भक्त्या श्राद्धं प्रकर्तव्यं पित रस्तेन तर्पिताः ।।
अपि धन्याः कुले जाता अस्माकं मतिशालिनः ।। १९ ।।
ये कुर्वंति च वै श्राद्धं पिंडान्ये निर्वपंति च ।।
तेन पिंडप्रदानेन तृप्तिर्नो भविताऽक्षया ।। 5.1.16.२० ।।
इहैत्य वै पुण्यजलेषु सम्यक्स्नात्वा नरस्तांस्तु लभेत कामान् ।।
यान्प्राप्य च प्रेतगणैः समेतः स मोदते देववृ तोऽथ सिद्धः ।। २१ ।।
चित्तं च वित्तं च नृणां च शुद्धं शस्तश्च कालः कथितो विधिश्च ।।
पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छंति हि वांछितानि ।। २२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये नीलगन्धवतीप्रभाववर्णनंनाम षोडशोऽध्यायः ।। १६ ।।

।। सनत्कुमार उवाच ।। ।।
दशाश्वमेधिके स्नात्वा दृष्ट्वा देवं महेश्वरम् ।।
दशानामश्वमेधानां फलं प्राप्नोति मान वः ।। १ ।।
मनुना मानवेन्द्रेण राज्ञा चैव ययातिना ।।
रघुणोशनसा चैव लोमशेन महर्षिणा ।। २ ।।
अत्रिणा भृगुणा व्यास दत्तात्रेयेण धीमता ।।
पुरूरवसा पुण्येन नहुषेण नलेन च ।। ३ ।।
अत्र स्नानेन संप्राप्तं दशाश्वमेधिकं फलम् ।।
संप्राप्ते द्वापरस्यांते राज्ञा बाष्कलिना तथा ।। ४ ।।
दशानामश्वमेधानां फल प्राप्तं द्विजोत्तम ।।
कृष्णवर्णं तथा लिंगं पूजितं भक्तितः सदा ।। ५ ।।
दृष्ट्वा स्पृष्ट्वा च तं देवं प्रागुक्तं लभते फलम् ।।
चैत्रे मासि सिताष्टम्यां देवं संपूज्य भक्तितः ।। ६ ।।
अश्वं दद्याच्च विप्राय सुरूपं च गुणान्वितम् ।।
यावंति तस्य रोमाणि गण्यंते संख्यया द्विज ।। ७ ।।
तावद्वर्षसहस्राणि शिवलोके महीयते ।।
शिवलोकात्परिभ्रष्टः सार्वभौमो भवेद्भुवि ।। ८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये दशाश्वमेधमाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।।

।। सनत्कुमार उवाच ।। ।।
एकानंशां नमस्कृत्य देवीं त्रैलोक्यविश्रुताम् ।।
पूजां कृत्वा विधानेन सर्वसिद्धिफलं लभेत् ।। १ ।।
अणिमादिगुणान्सर्वान्गुटिकासिद्धिमंजनम् ।।
खड्गं च पादुके चैव विलवासं रसायनम् ।।
सर्वं तुष्टा प्रयच्छेत नात्र कार्या विचारणा ।। २ ।।
सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता ।।
सर्वान्कामान्नृणां देवी तुष्टा दद्याच्च सर्वदा ।। ३ ।।
महानवम्यां यो देवीं महिषेण प्रपूजयेत् ।।
मेषेण वा यथालाभं सर्वान्कामानवाप्नुया त् ।। ४ ।।
।। व्यास उवाच ।। ।।
कथं देवी समुत्पन्ना एकानंशेति विश्रुता ।।
तत्सर्वं श्रोतुमिच्छामि सर्वपापप्रणाशिनी ।। ५ ।। ।।
।। सनत्कुमार उवाच ।। ।।
पुरा कृतयुगस्यादौ ब्रह्मा लोकपितामहः ।।
निशां सस्मार भगवान्स्वां तनूं पूर्वसंभवाम् ।। ६ ।।
ततो भगवती रात्रिरुपतस्थे पितामहम् ।।
तां विविक्ते समालोक्य ब्रह्मोवाच विभावरीम् ।। ७ ।।
।। ब्रह्मोवाच ।। ।।
विभावरी महामाये विबुधानामुपस्थितम् ।।
यत्कर्तव्यं त्वया देवि शृणु चार्थस्य निश्चयम्।। ८ ।।
तारकोनाम दैत्येंद्रः सुरशत्रुरनिर्जितः ।।
तस्य भयेन वै देवास्त्रस्ताः सर्वे दिवौकसः ।। ९।।
तस्माद्भद्रे महेशो वै जनयिष्यति चेद्वरम् ।।
सुतं स भविता तस्य तारकस्यांतकः किल ।। 5.1.18.१० ।।
शंकरम्याभवत्पत्नी सती दक्षसुता तु या ।।
सा पितुः कुपिता भद्रे कस्मिंश्चित्कारणांतरे ।। ११ ।।
भवित्री हिमशैलस्य दुहिता लोकपावनी ।।
विरहेण हरस्तस्या मत्वा शून्यंजगत्त्रयम् ।। १२ ।।
अतपद्धिमशैलस्य कंदरे सिद्धसेविते ।।
प्रतीक्षमाणस्तज्जन्म किंचित्कालं वसिष्यति ।। १३ ।।
तस्मात्सुतप्ततपसोर्भविता यो महाप्रभुः ।।
स भविष्यति दैत्यस्य तारकस्य निवारकः ।। १४ ।।

जातमात्रा तु सा देवी स्वल्पसंज्ञैव भामिनी ।।
विरहोत्कंठिता गाढं हरसंगमलालसा ।। १५ ।।
तयोः सुतप्ततपसोः संयोगः स्यात्सुयुक्तयोः ।।
पार्वतीहरयोस्तस्मात्सुरतं शक्तिकारणम् ।। १६ ।।
भवेत्तत्र सुराणां च कार्यार्थे विप्रमाचर ।।
विघ्नं त्वया विधातव्यं यथा ताभ्यां तथा शृणु ।। १७ ।।
गर्भस्थानेऽथ तां मातः स्वेन रूपेण रंजय ।।
ततो रहसि शर्वस्तां बिभ्रदानंदपूर्वकम् ।।१८।।
हासयिष्यति कालीति ततः सा कुपिता सती ।।
प्रयास्यति तपः कर्तुं ततः सा तपसा युता ।। १९ ।।
जनयिष्यति यं शर्वादिंदुवज्ज्योतिमंड लम् ।।
स भविष्यति हंता वै सुरारीणां न संशयः ।। 5.1.18.२० ।।
त्वयापि दानवा देवि हंतव्या लोकदुर्जयाः ।।
यावच्च न सती देहे संक्रांतगुणसंचया ।। २१ ।।
तत्संगमेन तावत्त्वं दैत्यान्हंतुं भविष्यसि ।।
एवं कृते त्वया देवि तपः काली करिष्यति ।। २२ ।।
समाप्तनियमा सा च यदा गौरी भविष्यति ।।
तदा तवापि सारूप्यं शैलजा संप्रदास्यति ।। २३ ।।
ततस्तवापि सहजा सैकानंशा भविष्यति ।।
रूपांशेन च संयुक्ता त्वमुमाख्या भविष्यसि ।। २४ ।।
एकानंशेति लोकस्त्वां वरदे पूजयिष्यति ।।
भेदैर्बहुविधाकारैः सर्वगां कामसाधनीम् २५ ।।
ॐकारवक्त्रा गायत्री त्वमेव ब्रह्मवादिनी ।।
आक्रांतरुचिराकारा राज्ञां चाहवशालिनी ।।२६।।
विशां त्वं कमलादेवी शूद्राणां जननी स्वयम् ।।
ज्ञानिनां ज्ञेयरूपा त्वं त्वं गतिः सर्वदेहिनाम् ।। २७ ।।
त्वं च कीर्तिमतां कीर्तिस्त्वं भूतिः सर्वदेहिनाम् ।।
रतिदा रक्तचित्तानां प्रीतिस्त्वं स्नेहवर्तिनाम्।। २८ ।।
त्वं कांतिः कृतभूषा णां त्वं शांतिर्हृष्टकर्मणाम् ।।
त्वं च भ्रांतिरबोधानां त्वं कीर्तिः क्रमयाजिनाम् ।। २९ ।।
महावेला समुद्राणां विलासस्त्वं विलासिनाम् ।।
संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकशालिनाम् ।। 5.1.18.३० ।।
इत्यनेकविधैर्देवि रूपैर्लोकेषु चर्चिता ।।

ये त्वां पश्यंति वरदे पूजयिष्यंति चापि ये ।।
कामा नाप्स्यंति ते सर्वे नियतं नात्र संशयः ।। ३१ ।।
इत्येवं सा समुत्पन्ना ब्रह्मणा संस्तुता सती ।।
एकानंशा महादेवी ध्यातव्या सापि भक्तितः ।।३२।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्य एकानंशामाहात्म्यवर्णनंनामाष्टादशो ऽध्यायः ।। १८ ।। ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
अथातः संप्रवक्ष्यामि हरसिद्धिं सुसिद्धिदाम् ।।
पार्वत्या हरणे यत्र सिद्धिः प्राप्ता हरेण च ।। १ ।।
बलिनौ दानवौ जातौ नाम्ना चण्डप्रचंडकौ ।।
उत्खाय त्रिदिवं सर्वं गिरिं कैलासमागतौ ।। २ ।।
दृष्ट्वा तत्र गिरीशं तु उद्यताक्षाक्षहस्तकम् ।।
नागेशं शशिखट्वांगं गृहीत्वा दक्षिणे करे ।। ३ ।।
देविदेवीति जल्पंतं दासस्तेऽस्मीति वादिनम् ।।
यावदेकं तु फलकं तावद्द्यूतं प्रवर्तताम् ।। ४ ।।
रागीभूते तदा देवे तौ प्राप्तौ देवकंटकौ ।।
उत्सादिताः शिवगणा नंदिना प्रतिषेधितौ ।। ५ ।।
ततस्ताभ्यां तदा नंदी शूलाभ्यां प्रविदारितः ।।
समं सव्यदक्षिणं वै सुस्राव रुधिरं बहु ।। ६ ।।
नंदिनं ताडितं दृष्ट्वा तदा शिलादनंदनम् ।।
ध्याता हरेण सा देवी प्रणता साऽग्रतः स्थिता ।। ७ ।।
वध्यतां तौ महादैत्यौ वधामीति वचोऽब्रवीत् ।।
गृहीत्वा मुद्गरं घोरमतिक्रोधादताडयत् ।। ८ ।।
यदा तया हतौ दृष्टौ दानवौ बलगवितौ ।।
हरस्तामाह हे चंडि संहृतौ दुष्टदानवौ ।। ९ ।।
हरसिद्धिरतो लोके नाम्ना ख्यातिं गमिष्यसि ।।
ततः प्रभृति सा देवी हरसिद्धि प्रदायिनी ।।
हरसिद्धिरिति ख्याता महाकाले बभूव ह ।। 5.1.19.१० ।।
यः पश्येत्परया भक्त्या हरसिद्धिं नरोत्तमः ।।
सोऽक्षयाँल्लभते कामान्मृतः शिवपुरं व्रजेत् ।। ११ ।।
आदिसिद्धिं महादेवीं नित्यां व्योमस्वरूपिणीम् ।।
हरसिद्धिं प्रपश्येद्यः सोऽभीष्टं लभते फलम् ।। १२ ।।
यः स्मरेद्धरसिद्धीति मंत्रं च चतुरक्षरम् ।।
न वैरिणो भयं तस्य दारिद्र्यं नैव जायते ।। १३ ।।
नरो महानवम्यां यो हरसिद्धिं प्रपूजयेत् ।।
महिषं च बलिं दद्यात्स भवेद्भूपतिर्भुवि ।। १४ ।।
नवम्यां पूजिता देवी हरसिद्धिर्हरप्रिया ।।
तुष्टा नृणां सदा व्यास ददात्यनवमं फलम् ।। १५ ।।
सा पुण्या सा पवित्रा च सर्वत्र सुखदायिनी ।।

स्मृता संपूजिता दृष्टा धनपुत्रसुखप्रदा ।। १६ ।।
महानवम्यां ये व्यास हन्यंते महिषादयः ।।
सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते ।। १७ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवत्यखंडेऽवन्तीक्षेत्रमाहात्म्ये हरसिद्धिमाहात्म्य वर्णनंनामैकोनविंशोऽध्यायः ।। १९ ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
मासमेकं नरो भक्त्या पश्येद्वा वटयक्षिणीम् ।।
पूजयेत्स्वर्णपुष्पैश्च तस्य सिद्धिर्न हीयते ।। १ ।।
इति वटयक्षिणीमाहात्म्यम् ।।
पिशाचके नरः स्नात्वा चतुर्दश्यां विशेषतः ।।
तिलान्ददाति यो भक्त्या न पिशाचः प्रजायते ।। २ ।।
यं समुद्दिश्य यद्दत्तं तदक्षयतरं भवेत् ।।
तत्कुलं हि पिशाचत्वान्मुच्यते नात्र संशयः ।। ३ ।।
यस्य नाम्ना नरः स्नाति पिशाच त्वात्स मुच्यते ।।
कुंभान्वा करकान्वापि योऽत्र दद्यात्समंडकान् ।। ४ ।।
तस्य वै शाश्वती मुक्तिः कुले प्रेतो न जायते ।।
शिप्रागुंफेश्वरं दृष्ट्वा रुद्र भक्तो जितेंद्रियः ।। ५ ।।
मुच्यते सर्वपापेभ्यः कंचुकेन फणी यथा ।।
स्नात्वागस्त्येश्वरं पश्येद्योऽतिभक्त्या च मानवः ।। ६ ।।
त्यक्त्वा यमगृहं व्यास रुद्रलोकं स गच्छति ।।
शिप्रायां यो नरः स्नात्वा पश्येड्ढुंढेश्वरं शिवम् ।। ७ ।।
सोऽश्वमेधफलं व्यास लभते नात्र संशयः ।।
देवेनात्र पुरा व्यास वादितो डमरुर्यतः ।। ८ ।।
देवस्तेन समाख्यातो नाम्ना डमरुकेश्वरः ।।
भक्त्या पश्येन्नरो यस्तु देवं डमरुकेश्वरम् ।। ९ ।।
नैव व्याधिभयं तस्य मृतः शिवपुरं व्रजेत् ।।
अनादिकल्पेश्वरं यस्तु भक्त्या पश्यति मानवः ।। 5.1.20.१० ।।
राज्यं स लभते स्वर्गं यथा देवः पुरंदरः ।।
देवानामप्यसौ व्यास स्पर्धनीयः सदा भवेत् ।। ११।।
कल्पकोटिशतं साग्रं भोगयुक्तस्तु मोदते ।।
पश्येत्सिद्धेश्वरं यस्तु वीरभद्रं च चंडिकाम्।। ।। १२ ।।
सोत्रैव लभते सिद्धिं जयं सर्वत्र मानवः ।।
स्वर्णजालेश्वरं दृष्ट्वा स्नातस्तीर्थे त्रिविष्टपे ।।१३।।
स्वर्णेन पूजयेद्देवं सर्वपापैः प्रमुच्यते ।।
स्नात्वा पश्येन्नरो भक्त्या यः कर्कोटेश्वरं शिवम् ।। १४ ।।
सर्पतो न भयं तस्य दारिद्र्यं नैव जायते ।।
यः पश्येत्परया भक्त्या महामायां सनातनीम् ।। ।। १५ ।।
विष्णुमायाविनिर्मुक्तः स याति परमं पदम् ।।

अर्चयेत्परया भक्त्या यः कपालेश्वरं नरः ।। १६ ।।

स मुच्येत महापापैर्यद्यपि ब्रह्महा भवेत् ।।

स्वर्गद्वारे नरः स्नात्वा दृष्ट्वा देवं च भैरवम् ।। १७ ।।

दर्शनात्तस्य देवस्य शतयज्ञफलं भवेत् ।। १८ ।।

इतिश्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये चतुर्दशतीर्थयात्रावर्णनंनाम विंशोऽध्यायः ।। २० ।। ।। छ ।।

।। सनत्कुमार उवाच ।। ।।
अथान्यत्संप्रवक्ष्यामि देवं त्रिदशपूजितम् ।।
हनुमत्केश्वरंनाम भुक्तिमुक्तिफलप्रदम् ।। १ ।।
शैवे सरसि यः स्नात्वा पश्येद्धनुमत्केश्वरम् ।।
कल्पकोटिसहस्राणि वायुलोके स मोदते ।। २ ।।
।। व्यास उवाच ।। ।।
हनुमत्केश्वरो यस्तु ह्युक्तः पूर्वं त्वयाऽनघ ।।
कथां कथय ह्येतस्य वृत्तपूर्वां सनातनीम् ।। ३ ।।
।। सनत्कुमार उवाच ।। ।।
त्रैलोक्यकण्टकः पूर्वं रावणो नाम राक्षसः ।।
विष्णुना रामरूपेण लंकायां विनिपातितः ।। ४ ।।
घातयित्वा तु तं दुष्टं सीतामादाय जानकीम् ।।
वानरैः सह ऋक्षैश्च नगरीं स्वामुपागतः ।। ५ ।।
तत्र राज्यमनुप्राप्य ऋषिभिः परिवारितः ।।
कथावसाने रामेण ह्यगस्त्यो मुनिसत्तमः ।। ६ ।।
पप्रच्छ च द्वयोर्वीर्यं शंभुवातजयोस्तदा ।।
तदा दाशरथिं प्राह अग स्तिर्मुनिसत्तमः ।। ७ ।।
अनौपम्यो यथा देवो युद्धे शौर्यं? महेश्वरः ।।
ज्ञेयो वायुसुतस्तद्वत्सत्यमेतद्ब्रवीमि ते ।। ८ ।।
एतच्छ्रुत्वाथ हनुमान्यद्धरेणो पमा मम ।।
कृता मुनिवरेणेह प्रत्यक्षं राघवस्य ह ।। ९ ।।
गमिष्ये नगरीं लंकां लिंगमेकं प्रयाचितुम् ।।
राक्षसेन्द्रं महाभागं विभीषणमकल्म षम् ।। 5.1.21.१० ।।
ततो गतः स लंकायां विभीषणमुवाच ह ।।
देहि मे त्वं महाभाग लिंगमेकं च शोभनम् ।। ११ ।।
उक्तं च राक्षसेन्द्रेण गृहाणैतद्यथा रुचि ।।
एतानि षट् च लिंगानि रावणस्थापितानि वै ।। १२ ।।
त्रैलोक्यविजयात्पूर्वं मम भ्रात्रा महात्मना ।।
एतेषु यदभीष्टं ते लिंगं कथय सुव्रत ।।
तत्प्रयच्छामि तेऽद्यैव सत्यमेतत्प्लवंगम ।। १३ ।।
ततो जग्राह हनुमाँल्लिंगं मौक्तिकसंनिभम् ।।
यदेतद्दृश्यते वीर तत्प्रयच्छ ममानघ ।। ।। १४ ।।
श्रुत्वा हनुमतो वाक्यमथोवाच विभीषणः ।।

दत्तमेतन्महावीर लिंगं यद्धृतवानसि ।। १५ ।।
श्रूयते हि पुरावृत्तं लिंगमेतद्धनेश्वरः ।।
रुद्र भक्त्या समायुक्तस्त्रिकालमप्यपूजयत् ।। १६ ।।
रावणेन यदा बद्धस्तदानीं हि धनेश्वरः ।।
लिंगस्यास्य प्रभावेन विमुक्तः समपद्यत ।। १७ ।।
प्रसादात्तस्य लिंगस्य धनेशो धनरक्षकः ।।
गृहीत्वा तन्महालिंगं स्वस्थो जातोऽथ वानरः ।। १८ ।।
।। सनत्कुमार उवाच ।। ।।
गृहीत्वा तु ततो लिंगं प्रस्थितो विमलेंऽबरे ।।
सप्तमे दिवसे चैव संप्राप्तोऽवंतिकां पुरीम् ।। १९ ।।
तत्र रुद्रसरस्तीरे स्थाप्य स्नानमथाकरोत् ।।
महाकालस्य पूजार्थं गमनं प्रत्यचिंतयत् ।। 5.1.21.२० ।।
उद्धर्तुकामस्तल्लिगमुद्धर्तुं न शशाक सः ।। २१ ।।
ततो व्यवस्थितो देवः प्राह तं वायुनन्दनम् ।।
अस्मिन्क्षेत्रे हनूमन्मां त्वन्नाम्नैव प्रतिष्ठापय ।। २२ ।।
हनुमत्केश्वरं चाथ लोके ख्यातं भविष्यति ।।
शैलवच्चोन्नतं लिंगं स्थापितं वायुसूनुना ।। २३ ।।
शनौ पश्येन्नरो यस्तु हनुमत्केश्वरं शिवम् ।।
तस्य शत्रुभयं नास्ति संग्रामे जयमाप्नुयात् ।। २४ ।।
न च चौरभयं तस्य न दारिद्र्यं न दुर्गतिः ।।
तैलाभिषेकं यः कुर्याद्धनुमत्केश्वरे शिवे ।।२५।।
तस्य रोगाः प्रलीयन्ते ग्रहपीडा न जायते ।।
ये द्रक्ष्यंति नराः भक्त्या तेषां मोक्षो भविष्यति ।।२६।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये हनुमत्केश्वरमाहात्म्यवर्णनंनामै कविंशोऽध्यायः ।।२१।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २२



।। श्रीसनत्कुमार उवाच ।। ।।
यमेश्वरं तु यः पश्येत्स्नापयित्वा तिलांभसा ।।
कुंकुमेन समालिप्य पूजयेदुत्पलैस्ततः ।। १ ।।
दहेत्कृष्णागरुं धूपं दापयेत्तिलतण्डुलान् ।।
य एवमर्चयेद्देवमीश्वरं शूलहस्तकम्।। २ ।।
यत्र कुत्र मृतस्यापि यमः पितृसमो भवेत् ।। ३ ।।
।। इति यमेश्वरमाहात्म्यम्।।
।। सनत्कुमार उवाच ।। ।।
कथयामि परं व्यास तीर्थं तीर्थेषु चोत्तमम् ।।
नाम्ना रुद्रसरः प्रोक्तं त्रिषु लोकेषु विश्रुतम् ।। ४ ।।
तत्र स्नात्वा शुचिर्भूत्वा पश्येत्कोटेश्वरं शिवम् ।।
मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ।। ५ ।।
श्राद्धं तत्रैव कृत्वा तु शृणु यत्फलमाप्नुयात् ।।
दशानामश्वमेधानां वाजपेयशतस्य च।।६।।
फलं कोटिगुणं व्यास लभते नात्र संशयः।।
पितॄनुद्दिश्य यत्किंचित्कोटितीर्थे प्रदीयते।।७।।
तत्सर्वं कोटिगुणितं जायते नात्र संशयः।।
कोटितीर्थे नरः स्नात्वा ध्यायेद्यः परमाक्षरम्।।८।।
मुच्यते सर्वपापेभ्यो निर्मोकेन यथोरगः ।।
प्रातरुत्थाय यो विप्र तत्र स्नानं करोति वै ।।९।।
दृष्ट्वा देवं महाकालं गोसहस्रफलं लभेत्।।
कोटितीर्थे नरः स्नात्वा सप्तरात्रोषितः शुचिः ।।5.1.22.१०।।
चांद्रायणसहस्रस्य फलं प्राप्नोति मानवः ।।
जागरं तत्र कुर्याद्यो ह्यनंतफलमश्नुते ।। ११ ।।
गन्धपुष्पार्चनं कृत्वा महास्नपनपूर्वकम् ।।
य एवं नयते रात्रिं सोपवासो जितेंद्रियः ।। १२ ।।

लभते सर्वकामित्वं यत्सुरैरपि दुर्लभम् ।।
कार्तिक्यामथ वैशाख्यां देवं तत्र प्रपूजयेत् ।। १३ ।।
गंधपुष्पैश्च कालीनैस्तथा वस्त्रैः सुशोभनैः ।।
कर्पूरं कुंकुमं चैव श्रीखण्डमगरुं तथा ।। १४ ।।
समभागानि कृत्वा तु शिलापृष्ठे च पेषयेत् ।।
अनुलिप्य महाकालं रुद्रस्यानुचरो भवेत् ।। १५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये रुद्रसरोमाहात्म्यवर्णनंनाम द्वाविंशोऽध्यायः ।। ।। २२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २३



।। सनत्कुमार उवाच ।। ।।
अथ यात्रां प्रवक्ष्यामि महाकालस्य यत्नतः ।।
शिवां श्रेयस्करीं पुण्यां पुण्यलोकप्रदायिनीम् ।। ।। १ ।।
स्नात्वा सरसि रुद्रस्य दृष्ट्वा कोटेश्वरं शिवम्।।
नमस्कृत्य ततो गच्छेन्महाकालं सनातनम् ।। २ ।।
गन्धैः पुष्पैर्नमस्कारैः संपूज्य त्रिदशेश्वरम्।।
प्रणिपत्य ततो गच्छेद्देवं कपालमोचनम् ।। ३ ।।
तत्रैव देवदेवेशः कपालं न्यस्तवान्क्षितौ ।।
कपाले तत्क्षणान्न्यस्ते तत्राभूल्लिंगमुत्तमम् ।। ।। ४ ।।
कपालमोचनं नाम सर्वपापप्रणाशनम् ।।
तत्र वै स्नपनं कुर्यादाज्यपलशतेन वै ।। ५ ।।
तदर्धार्धेन पादेन वित्तशाठ्यविवर्जितः ।।
काले पूर्णे स विप्रेन्द्र शिवलोके महीयते ।। ६ ।।
नमस्कृत्य ततो गच्छेत्कपिलेश्वरमुत्तमम् ।।
दर्शनादस्य देवस्य मुच्यते ब्रह्महत्यया ।। ७ ।।
हनुमत्केश्वरं देवं ततो गच्छेत्समाहितः ।।
ऐश्वर्यमतुलं व्यास दर्शनादस्य जायते ।। ८ ।।
ततो गच्छेन्महादेवं पैप्पलाख्यं सनातनम् ।।
यस्य दर्शनमात्रेण मुक्तिः स्याद्द्विजसत्तम ।। ९ ।।
स्वप्नेश्वरं ततो गच्छेद्भक्तिश्रद्धासमन्वितः ।।
दर्शनादस्य देवस्य दुःस्वप्नं च विनश्यति ।। 5.1.23.१० ।।
ततो गच्छेन्महादेवमीशानं विश्वतोमुखम्।।
यस्य दर्शनमात्रेण विश्वस्यैव पतिर्भवेत् ।। ११ ।।
सोमेश्वरं ततो गच्छेज्जितक्रोधो जितेंद्रियः ।।
कुष्ठरोगादिदोषेभ्यो दर्शनादस्य मुच्यते ।। १२ ।।
वैश्वानरेश्वरं व्यास ततो गच्छेत्समाहितः ।।

तस्य वृद्धिः सदा लोके जायते तस्य दर्शनात् ।। १३ ।।
बीजपूरकहस्तं तु लकु लीशं ततो व्रजेत् ।।
रुद्रत्वं दर्शनात्तस्य जायते नात्र संशयः ।। १४ ।।
ततो गच्छेन्महादेवं गद्याणेश्वरमुत्तमम् ।।
यस्य दर्शनमात्रेण जायंते सर्व सिद्धयः ।।१५।।
अभ्यर्थितः सदा देवैः पूजितः सिद्धिकारणात् ।।
तेनाभ्यर्थितेश्वरोऽयं विख्यातो विघ्ननायकः ।।१६।।
वयोवृद्धं ततो गच्छेन्महाकालं सनातनम् ।।
न रोगो न जराव्याधिर्दर्शनान्नात्र संशयः ।। १७ ।।
विघ्ननाशं ततो गच्छेत्प्राणीशं बलमुत्तमम् ।।
स्नानं घटशतैस्तस्य कुर्याद्भक्त्या समाहितः ।। १८ ।।
तस्य चैव कृते स्नाने लभ्यंते सर्वसिद्धयः ।।
स्वर्गश्चापि सदा व्यास दर्शनादस्य जायते ।। १९ ।।
तनयं तमनूल्लंघ्य दंड पाणिं ततो व्रजेत् ।।
यस्य दर्शनमात्रेण यमलोको न दृश्यते ।। 5.1.23.२० ।।
पुष्पदन्तं ततो गच्छेद्भक्तिश्रद्धासमन्वितः ।।
यस्य दर्शनमात्रेण मुच्यते सर्वपातकैः ।। २१ ।।
गुह्यं चैव महाकालं ततो गच्छेत्समाहितः ।।
यस्य दर्शनमात्रेण गुह्यपापैः प्रमुच्यते ।। २२ ।।
ततो गच्छेत्समाधिस्थो दुर्वासेश्वरमुत्तमम् ।।
यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत् ।। २३ ।।
श्वासावरोधनं कृत्वा दुर्वाससः समीपतः ।।
गौरीं गत्वा महादुर्गां त्यजेच्छ्वासमनंतरम् ।। २४ ।।
तत्रोच्छ्वासो विमोक्त्यस्तामभ्यर्च्य तु सर्वथा ।।
कालेश्वरं ततो गच्छेद्देवदेवं महेश्वरम् ।। २५ ।।
यस्य दर्शनमात्रेण यमलोकं न पश्यति ।।
विधीशं च ततो गच्छेद्देवदेवं महेश्वरम् ।। २६ ।।
यस्य दर्शनमात्रेण बधिरत्वं न जायते ।।
कीर्तयेदात्मनो नाम स्थानं गोत्रं च तस्य वै ।। २७ ।।
न कीर्तयेद्यदा नाम सा यात्रा विफली भवेत् ।।
देवस्याग्रे ततो व्यास उपविश्य समाहितः ।। ।। २८ ।।
भक्तियुक्तस्ततो ब्रूयान्नमस्कृत्वा पुनःपुनः ।।

मया समर्पिता यात्रा त्वत्प्रसादान्महेश्वर ।। २९ ।।
संसारसागराद्घोरान्मामुद्धर जगत्पते ।।
अनेन विधिना यस्तु महाकालं प्रदक्षयेत् ।। 5.1.23.३० ।।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ।।
गोलक्षं द्विजलक्षाय दत्त्वा यल्लभते फलम् ।। ३१ ।।
तत्फलं देवदेवस्य सकृद्दत्त्वा प्रदक्षिणम्।।
भक्त्या परमया युक्तो महाकालं प्रदक्षयेत् ।। ३२ ।।
पदेपदे यज्ञफलमिति मे शंकरोऽब्रवीत् ।।
षष्टिकोटि सहस्राणि षष्टिकोटिशतानि च ।। ३३ ।।
पूजितानि भवंत्यत्र यात्रेश्वरसमर्चनात् ।।
य एवं कुरुते यात्रां शिवध्यानपरायणः ।। ३४ ।।
सहस्रदक्षिणां दद्यात्तस्य पुण्यफलं शृणु ।।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।। ३५ ।।
एवं यात्रां समाप्याथ गत्वा निजगृहं नरः ।।
यात्रादैवत संख्यान्वै षड्विंशतिद्विजोत्तमान्।। ३६ ।।
भोजयेच्छिवभक्तांश्च शिवध्यानपरायणान् ।।
सवस्त्रां दक्षिणां दत्वा प्राप्यानुज्ञां विसर्जयेत् ।। ३७ ।।
यात्राक्रमेण चैकैकं द्वारांतरमनुव्रजेत् ।।
धर्मोपदेशके पश्चात्सर्वोपस्करसंयुताम् ।। ३८ ।।
धेनुं पयस्विनीं दद्याद्वित्तशाठ्यविवर्जितः ।।
भुञ्जीताथ स्वयं व्यास सर्वभृत्यसमन्वितः ।। ३९ ।।
दीनानाथदरिद्रांधविकलाद्यांश्च भोजयेत् ।।
यदत्र फलमुद्दिष्टं तद्वदामि शृणुष्व मे ।। 5.1.23.४० ।।
कुलानां शतमुद्धृत्य मातापित्रोः समाहितः ।।
कल्पकोटिसहस्राणि शिवलोके स मोदते ।। ४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये महाकालेश्वरयात्रामाहात्म्यवर्णनंनाम त्रयोविंशोऽध्यायः ।। २३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २४

https://sa.wikisource.org/s/fj4

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
वाल्मीकेश्वरमित्याख्यं यस्तु देवं प्रपूजयेत् ।।
मौनी ध्यानपरो भूत्वा स कवित्वमवाप्नुयात् ।। १ ।।
।। व्यास उवाच ।। ।।
कथमत्र समुत्पन्नः कोऽसौ वाल्मीकेश्वरः प्रभुः ।।
यस्य दर्शनमात्रेण कवित्वमुपजायते ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
आसीद्व्यास पुरा विप्रः सुमतिर्भृगु वंशजः ।।
रूपयौवनसंपन्ना तस्य भार्याथ कौशिकी ।। ३ ।।
तस्य पुत्रः समुत्पन्नो ह्यग्निशर्मेति नामतः ।।
स पित्रा प्रोच्यमानोऽपि वेदाभ्यासं न मन्यते ।। ४ ।।
ततो बहुतिथे काले अनावृष्टिरजायत ।।
तस्यां विपद्गतः सोऽथ दक्षिणामाश्रितो दिशम् ।। ५ ।।
ततोऽसौ सुमतिर्विप्रः सभार्यः स सुतस्तथा ।।
विदेशं काननं प्राप्तः कृत्वा चाश्रममाश्रितः ।। ६ ।।
आभीरैर्दस्युभिः सार्धं संगोऽभूदग्निशर्मणः।।
आगच्छति पथा तेन यस्तं हंति स पापकृत्।। ७ ।।
स्मृतिर्नष्टा गता वेदा गतं गोत्रं गता श्रुतिः ।।
कस्मिंश्चिदथ काले तु तीर्थयात्राप्रसंगतः।। ८ ।।
सप्तर्षयः पथा तेन सुव्रताः समुपस्थिताः ।।
अग्निशर्माथ तान्दृष्ट्वा हन्तुकामोऽब्रवीदिदम्।। ९ ।।
वस्त्राणीमानि मुच्यध्वं छत्रिकोपानहौ तथा ।।
हन्तव्या हि मया यूयं गन्तारो यम सादने ।। 5.1.24.१० ।।
तस्य तद्वचनं श्रुत्वा अत्रिर्वचनमब्रवीत्।।
अस्मत्पीडनजं पापं कथं ते हृदि वर्तते ।।
वयं तपस्विनो भूत्वा तीर्थयात्राकृतोद्यमाः ।। ११ ।।

।। अग्निशर्मोवाच ।। ।।
ममास्ति माताथ पिता सुतो भार्या गरीयसी ।।
पोषयामि सदा तांस्तु एतन्मे हृदि संस्थितम् ।। १२ ।।
।। अत्रिरुवाच ।। ।।
पित्रादीनाशु पृच्छस्व स्वकर्मोपार्जितं प्रति ।।
यद्युष्मदर्थं क्रियते पापं तत्कस्य कथ्यताम् ।।१३।।
यदि ते कथयंति स्म मा मृषा प्राणिनो वधीः ।। १४ ।।
।। अग्निशर्मोवाच ।। ।।
न कदाचिन्मया ते तु संपृष्टा ईदृशं वचः।।
युष्माकं वचसा मेऽद्य प्रतिबोधः प्रवर्तते ।। १५।।
गत्वा पृच्छामि तान्सर्वान्कस्य भावश्च कीदृशः ।।
यूयमत्रैव तिष्ठध्वं यावदागमनं मम ।। १६ ।।
इत्युक्त्वा तान्जगामाशु पितरं स्वमुवाच ह ।।
धर्मस्य प्रतिघातेन प्राणिनां पीडनेन च ।। १७ ।।
सुमहद्दृश्यते पापं कस्य तत्कथ्यतां मम ।।
पिता प्राह तथा माता नापुण्यमावयोरिह ।। १८ ।।
त्वं जानासि यत्कुरुषे कृतं भाव्यं पुनस्त्वया ।।
तयोस्तद्वचनं श्रुत्वा भार्या वचनमब्रवीत् ।। १९ ।।
तयाप्युक्तं न मे पापं पापमेतत्तवैव हि ।।
तद्वाक्यमब्रवीत्पुत्रं बालोऽहमितिसोऽब्रवीत् ।। 5.1.24.२० ।।
तज्ज्ञात्वा हृदयं तेषां चेष्टितं चैव तत्त्वतः ।।
नष्टोऽहमिति मन्वानः शरणं मे तपस्विनः ।। ।। २१ ।।
क्षिप्त्वाथ लगुडं कृष्णं येन वै जंतवो हताः।।
प्रकीर्य केशांस्त्वरित ऋषीणामग्रतः स्थितः ।। २२ ।।
प्रणम्य दंडपातेन ततो वचनमव्रवीत् ।।
न मे माता न च पिता न भार्या न च मे सुतः ।। २३ ।।
सर्वैस्तैः परिमुक्तौऽहं भवतां शरणं गतः ।।
सुष्ठूपदेशदानान्मां नरकात्त्रातुमर्हथ ।। २४ ।।
एवं तं वादिनं दृष्ट्वा ऋषयोऽत्रिमथाब्रुवन्।।
भवतो वचनादस्य प्रतिबोधः समागतः ।। २५ ।।
भवताऽयमनुग्राह्यः शिष्यो भवतु ते मुने ।।
तथेत्युक्ताथ तान्प्राह चाग्निं ध्यानं समाचर ।। २६ ।।

अनेन ध्यानयोगेन महामंत्रजपेन च ।।
अनेकदुस्तरात्युग्रपापकृज्जनघातकः।।
संस्थितो वृक्ष मूले त्वं परा सिद्धिं गमिष्यसि ।। २७ ।।
इत्युक्त्वा ते ययुः सर्वे संकामं सोऽपि तत्र वै ।।
तद्ध्यानस्थोऽभवद्योगी वत्सराणि त्रयोदश ।। २८ ।।
तस्योपर्यभवत्तत्र वल्मीकोऽविचलस्य च ।।
निवृत्तास्तु पथा तेन मुनयस्तत्र शुश्रुवुः ।। २९ ।।
उदीरितं ध्वनिं तेन वल्मीके विस्मयान्विताः ।।
ततः खनित्वा वल्मीकं काष्ठीभूतोरुशंकुभिः ।।5.1.24.३०।।
तं दृष्ट्वोत्थापयामासुर्मुनयो नयसंयुतम् ।।
नमश्चक्रेऽथ तान्सर्वान्स विप्रो मुनिपुंगवान् ।।३१।।
तान्प्राह प्रणतो भूत्वा तपसा दीप्ततेजसः।।
प्रसादाद्भवतामद्य ज्ञानं लब्धं मया शुभम्।।३२।।
दीनोऽहमुद्धृतः सर्वैर्मग्नोऽहं पापकर्दमे ।।
तस्येति ते वाक्यमूचुः परमधार्मिकाः ।। ३३ ।।
वल्मीकेऽस्मिन्स्थितः पुत्र यतस्त्वमेकचित्ततः ।।
वाल्मीकिरिति ते नाम भुवि ख्यातं भवि ष्यति ।। ३४ ।।
इत्युक्त्वा मुनयो जग्मुः स्वां दिशां तपसान्विताः ।।
गतेषु मुनिमुख्येषु वाल्मीकिस्तपतां वरः ।।
कुशस्थल्यामथागम्य समाराध्य महेश्वरम् ।। ३५ ।।
तस्मात्कवित्वमासाद्य चक्रे काव्यं मनोरमम् ।।
रामायणं च यत्प्राहुः कथां सुप्रथमस्थिताम्।। ३६ ।।
ततः प्रभृति देवेशो वाल्मीकेश्वरसंज्ञकः ।।
ख्यातोऽवंत्यां ततो व्यास नृणां कवित्वदायकः ।। ३७ ।।
इति ते कथितं लिंगं वाल्मीकेश्वरमुत्तमम् ।।
यस्य दर्शनमात्रे ण कवित्वमुपपद्यते ।। ३८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवंतीक्षेत्रमाहात्म्य वाल्मीकेश्वरमाहात्म्य वर्णनं नाम चतुर्विंशोऽध्यायः ।। २४ ।।छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २५



।। सनत्कुमार उवाच ।। ।।
शुक्रेश्वरं समभ्यर्च्य सितपुष्पैर्विलेपनैः ।।
प्रणिपत्य ततो भक्त्या रुद्रलोके महीयते ।। १ ।।
भीमेश्वरं नरो दृष्ट्वा भक्त्या संपूज्य यत्नतः ।।
न भयं लभते व्यास रणे रात्रौ जलेऽनले ।। २ ।।
गर्गेश्वरं स्नापयित्वा तिलतैलेन मानवः ।।
बिल्वपत्रैस्तु संपूज्य धर्मवृद्धिमवाप्नुयात् ।। ३ ।।
उपोषितश्चतुर्दश्यां तिलप्रस्थतिलांभसा ।।
स्नापयित्वा तिलैरिष्ट्वा सदा सौख्यमवाप्नुयात् ।। ४ ।।
गोसहस्रं नरो दत्त्वा भावं कृत्वा विशेषतः ।।
भवबंधविनिर्मुक्तो रुद्रलोकं स गच्छति ।। ५ ।।
कामेश्वरं समभ्यर्च्य कुंकुमादिविलेपनैः ।।
कामिकेन विमानेन याति स्वर्गं न संशयः ।। ६ ।।
चूडामणिं नमस्कृत्य नवम्यां कार्तिके सिते ।।
न वियोनिं नरो याति धर्मबुद्धिः स जायते ।। ७ ।।
चंडीश्वरं समभ्यर्च्य कृष्णाष्टम्यामुपोषितः ।।
निर्माल्योल्लंघनोत्थेन न शोकेनापि लिप्यते ।। ८ ।।
इत्यादितीर्थानि महेश्वरस्य पुण्यानि सर्वाणि नरोऽभिगम्य ।।
विशुद्धचित्तो भुवि भावितात्मा प्रयाति शंभोर्भुवनं सुरम्यम्।। ९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये शुक्रेश्वरभीमेश्वर गर्गेश्वरकामेश्वर चूडामणीश्वर चण्डीश्वरादितीर्थमाहात्म्यवर्णनं नाम पञ्चविंशोऽध्यायः ।। २५ ।। । छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २६

https://sa.wikisource.org/s/fiy
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। व्यास उवाच ।। ।।
गुह्यस्थाने पवित्राणि कीर्तितानि त्वया मुने ।।
प्रमाणं कथयस्वाद्य महाकालवनस्य मे ।। १ ।।
।। सनत्कुमार उवाच ।। ।।
यथाश्रुतं मया पूर्वं गदतो ब्रह्मणः स्वयम् ।।
तत्तेऽहं संप्रवक्ष्यामि शृणु त्वं गदतो मम ।। २ ।।
योजनस्यैव पर्यंतं चतुर्दिक्षूपशोभितम् ।।
सौवर्णैस्तोरणैश्चैव मुक्तादामविलंबिभिः ।। ३ ।।
द्वाराणि तत्र शोभंते कांचनैः कलशैः स्थितैः ।।
सितपद्ममुखैर्द्वारैरनेकमणिमंडितैः ।। ४ ।।
महेश्वरप्रयुक्ताश्च द्वाराध्यक्षा महाबलाः ।।
द्वारेषु तेषु शोभंते लोकानुग्रहकारकाः ।। ५ ।।
पिंगलेशः स्थितः पूर्वे बालरूपो विभावसुः ।।
तीर्थस्याभिमुखो गौरो गुरुर्गणैरथानुगः ।। ।। ६ ।।
दक्षिणेऽपि महायोगी कायावरोहणेश्वरः ।।
वित्तेशः पश्चिमे द्वारे क्षेत्रस्याभिमुखः स्थितः ।। ७ ।।
नियुक्तो वै महेशेन वारुणीं दिशमास्थितः ।।
उत्तरां दिशमाश्रित्य स्थितश्चैवोत्तरेश्वरः ।। ८ ।।
साधकः सर्वकार्याणामादिष्टः शंकरेण सः ।।
मानवा ये वसंत्यत्र क्षेत्रमध्ये सुधार्मिकाः ।। ९ ।।
मृता रुद्रपुरं यांति विमानैः सार्वकामिकैः ।।
कृष्णपक्षे चतुर्दश्यामथ वार्केन्दुसंगमे ।। 5.1.26.१० ।।
पंचेशानीं नमस्कृत्य प्रतिलोमानु लोमतः ।।
उपोषितो दिनैकेन ध्यायमानो महेश्वरम् ।। ११ ।।
मुच्यते सर्वपापैस्तु बहुजन्मकृतैरपि ।।
एवं च विप्र यो यात्रां पंचेशानीं समारभेत् ।। १२ ।।

अनेनैव स्वदेहेन रुद्रलोकं स गच्छति ।।
पंचेशानीमथान्यां ते सुखेन क्रियते यथा ।। १३ ।।
तथा शृणु प्रवक्ष्यामि सर्वपापप्रणाशिनीम् ।।
प्रातः स्नात्वा रुद्रसरस्येकादश्यां समाहितः ।। १४ ।।
श्राद्धं कृत्वा महाकालं नत्वा चेशानमीश्वरम् ।।
पिंगलेशं ततः प्राप्य स्नात्वा श्राद्धं समाचरेत् ।। १५ ।।
उपगम्य ततो देवं गणेशं पिंगलेश्वरम् ।।
गन्धैः पुष्पैश्च धूपैश्च तमभ्यर्च्य निवर्तयेत् ।। १६ ।।
महाकालेश्वरं प्राप्य भूयः स्नातो जितेंद्रियः ।।
अर्चयेद्देवदेवेशं स्वयंभुवं सनातनम् ।। १७ ।।
ईशाने गमयेद्रात्रिं कृत्वा वै नक्तभोजनम् ।।
ध्यायमानो महेशानं भूमौ विन्यस्य विग्रहम् ।। १८ ।।
द्वादश्यां पूर्ववत्सर्वं प्रातः स्नात्वा व्रजेन्नरः ।।
कायावरोहणं गत्वा पिंगलेश्वरवद्यजेत् ।। १९ ।।
त्रयोदश्यामथाप्येवं बिल्वेशं पश्चिमेऽर्चयेत् ।।
चतुर्दश्यां तथा सौम्ये पूजयेदुत्तरेश्वरम् ।। 5.1.26.२० ।।
अमावास्यां शुचिः स्नातो महाकालेश्वरं यजेत् ।।
गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैस्तथा ।। २१ ।।
गीतनृत्यादिकं कृत्वा प्रणिपत्य क्षमापयेत् ।।
यात्रां कृत्वा तु पूर्वोक्तां ततो निजगृहं व्रजेत् ।। २२ ।।
ब्राह्मणान्भोजयेत्पञ्च शिवभक्तिपरायणान् ।।
प्रणम्य देवतारूपान्महाकालोषितान्द्विजान् ।। २३ ।।
पूजयित्वा हिरण्येन सूक्ष्मवस्त्रगुणैर्नवैः ।।
रथं पिंगलके दद्याद्गजं कायावरोहणे ।। २४ ।।
दत्त्वा बिल्वेश्वरे चाश्वं वृषं दत्त्वा तु चोत्तरे ।।
धेनुं दत्त्वा महाकाले सर्वोपस्करसंयुतम् ।। २५ ।।
य एवं कुरुते व्यास तस्य पुण्यफलं शृणु ।। २६ ।।
पितृकैर्मातृकैः सार्धं कुलैः स दिवि मोदते ।।
अप्सरोगीतनृत्याद्यैर्विमानैः सार्वकामिकैः ।। २७ ।। ।।
इति पंचेशानीयात्रामाहात्म्यम् ।। ।।
यस्तु प्रदक्षिणां कुर्यान्नियमेन कुशस्थलीम् ।।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।। २८ ।।

यस्तु पद्मावतीं पश्येद्दर्चयेत्पंकजैर्नरः ।।
दत्त्वा धूपं सनैवेद्यं मृतो ब्रह्मपुरं व्रजेत् ।। २९ ।।
स्वर्णशृंगाटिकां व्यास कुसुमैः स्वर्णसंनिभैः ।।
समभ्यर्च्य महाभक्त्या स याति शिवमन्दिरम् ।। 5.1.26.३० ।।
अवन्तिनीं तु यः पश्येद्देवीं त्रैलोक्यविश्रुताम् ।।
कामिकेन विमानेन याति पौरंदरं पुरम् ।। ३१ ।।
अर्चयेत्पंकजैर्भक्त्या यो देवीममरावतीम् ।।
अमरैः सह संहृष्टो मोदते दिवि सर्वदा ।। ३२ ।।
देवीमुज्जयनीं भक्त्या यः पश्यति समाहितः ।।
सर्वैश्वर्यसमायुक्तो रुद्रलोके महीयते ।। ३३ ।।
विशालां चैव यः पश्येद्रुद्रभक्त्या समाहितः ।।
मुच्यते त्रिविधैः पापैर्नात्र कार्या विचारणा ।। ३४ ।। ।।
इति श्रीकल्पसप्तकमहिमा ।। ।।
शृणु व्यास महातीर्थं पुरा यद्ब्रह्मणार्चितम् ।।
अक्रूरेश्वरमित्याख्यं यत्र सिद्धः पितामहः ।। ३५ ।।
तत्र देवार्चनं कृत्वा कृष्णाष्टम्यामुपोषितः ।।
जितेंद्रियः शुचिर्दांतो रुद्रलोकमवाप्नुयात् ।। ३६ ।।
न वदेत्केनचित्सार्धं नरः प्रातर्गृहे स्थितः ।।
दृष्ट्वाऽक्रूरेश्वरं देवं हेमदानफलं लभेत् ।।३७।। ।।
इत्यक्रूरेश्वरमाहात्म्यम् ।। ।।
यस्तु पश्यति ब्रह्माणं शुचिः स्नातो जितेंद्रियः ।।
मुच्यते पातकाद्घोराद्ब्रह्मलोकं मृतो व्रजेत् ।। ३८ ।।
पद्मासनस्थितो ब्रह्मा ध्यायमानः परं पदम् ।।
वसिष्ठाद्यैर्मुनिवरैर्विज्ञप्तः कर्मसंभवान् ।। ३९ ।।
।। ऋषय ऊचुः ।। ।।
आदित्या मरुतः साध्यास्तथा चैवाश्विनावुभौ ।।
पितरो ये च लोकानां पूज्यंते भुवि मानवैः ।। 5.1.26.४० ।।
ग्रहार्कतारका यक्षा दिग्गजाश्च्यानलानिलाः ।।
अमी देवा वयं सर्वे त्वदंशाः परिपठ्यते ।। ४१ ।।
कथं ध्यायसि देवेश एतत्सर्वं ब्रवीहि नः ।। ४२ ।।
।। ब्रह्मोवाच ।। ।।
द्वे विद्ये तत्त्वरूपे ये परा चैवापरा तथा ।।

ते द्वे च मम रूपे द्वे नित्ये मूर्तात्मिके मम ।। ४३ ।।
।। ऋषय ऊचुः ।। ।।
पितामह कथं विद्मो भवंतं परमं विभुम् ।।
येनास्माकं परा सिद्धिर्जायते तव दर्शनात् ।। ४४ ।।
।। ब्रह्मोवाच ।। ।।
माहेश्वरं परं क्षेत्रं कुशस्थलीति शब्दितम् ।।
यज्ञार्थिना मया देवः श्रीकंठः पार्वती पतिः ।। ४५ ।।
याचितस्तेन देवेन उक्तोऽहं परमेष्ठिना ।।
समंताद्योजनं साग्रं क्षेत्रमेतत्पितामहः ।। ४६ ।।
मया दत्तं तव विभो महाकालवनादृते ।।
वारितः स मया तत्र वने गुप्तो हि रोषतः ।।
कपर्दिना च तत्रोक्तो यास्यामो न तवांतिकम् ।। ४७ ।।
आरब्धो वै ततो यज्ञो नारायणपरिग्रहात् ।।
ज्ञातस्तथापि मे यज्ञो देवदेवेन शंभुना ।। ४८ ।।
यज्ञवाटं कपर्दीशस्ततो भिक्षार्थमागतः ।।
याज्ञिकैः सोऽथ तत्रोक्तो मात्र तिष्ठ जुगुप्सितः ।। ४९ ।।
कपर्दिना च ते तत्र उक्ता यास्याम्यहं पुनः ।।
एवमुक्त्वा कपालं स भूमौ संस्थाप्य तत्र हि ।।5.1.26.५०।।
स्नातुं नदीं ययौ शिप्रां कपर्दी परमेश्वरः।।
उक्तं तस्मिन्गते शिप्रां कपर्दिनि द्विजातिभिः।।५१।।
कथं हि क्रियते होमः कपाले सदसि स्थिते।।
अकपालानि शौचानि पुरा प्रोक्तं मनीषिभिः ।। ५२ ।।
तत्कपालं सदस्येन उक्षिप्तं पाणिना स्वयम् ।।
तस्मिन्क्षिप्तेऽभवच्चान्यत्पुनः क्षिप्तेऽभवत्पुनः ।। ५३ ।
एवं नांतं कपालानां प्राप्यते मुनिसत्तमाः ।।
रुद्रं कपर्दिनं मत्वा शरणं तं समागताः ।। ५४ ।।
ततः स दर्शनं प्रादाद्भक्त्या तुष्टो महेश्वरः ।।
कपालपाणिर्भगवान्मामुवा च ततः प्रभुः ।। ५५ ।।
वरं वरय भो ब्रह्मन्यत्ते मनसि वर्तते ।।
नास्त्यदेयं मया तुभ्यं सर्वं दास्यामि तत्त्वतः ।।५६।।
ब्रह्मोत्तरमिदं स्थानं मया दत्तं चतुर्मुख ।।
कारयस्व यथाकामं यथावर्णचतुष्टयम् ।। ५७ ।।

एवं वदंतं वरदमीशानं परमेश्वरम् ।।
तथेति चोक्त्वा सदसि न मयाऽन्यो वरो वृतः । ।। ५८ ।।
उज्जयिनीति वै नाम कुशस्थल्या निवेशितम् ।।
कुंडं मंदाकिनी तत्र मया कृतमनंतरम् ।। ५९ ।।
तत्र विप्राः कृते स्नाने सर्वपापैः प्रमुच्यते ।।
तस्यां संस्थापयेद्दिक्षु चतुरोऽर्थघटाञ्छुभान् ।। 5.1.26.६० ।।
सतिलास्तान्सवस्त्रांश्च सफलान्मंडकैः सह ।।
कार्तिक्यामथ माघ्यां च चातु र्विद्ये प्रदापयेत् ।। ६१ ।।
प्रथमं च ऋग्वेदाय यजुर्वेदाय दक्षिणम् ।।
पश्चिमं सामवेदाय अथर्वणे तथोत्तरम् ।। ६२ ।।
वेदानुद्दिश्य चाप्येवं प्रीयतां मे पितामहः ।।
कृते चैवं हि यत्पुण्यं तच्छृणुध्वं समाहिताः ।। ६३ ।।
सर्वतीर्थेषु यत्पुण्यं मंदाकिन्यां तथा भवेत् ।।
सहस्रगुणितं स्नानं जाप्यं लक्षगुणं भवेत् ।। ६४ ।।
दानं कोटिगुणं ज्ञेयं मंदाकिन्यां न संशयः ।।
कौमुदे मासि संप्राप्ते गोदानं तत्र कारयेत् ।। ६५ ।।
घृतधेनुं च कार्तिक्यां माघ्यां तिलमयीं तथा ।।
जलधेनुं तु वैशाख्यां दत्त्वा मुच्येत पातकैः ।। ६६ ।।
वाचिकं मानसं पापं कर्मजं यच्च दुष्कृ तम् ।।
विनश्येत्किल्बिषं सर्वं मंदाकिन्यास्तु दर्शनात् । ६७ ।।
मंदाकिनीसमं तीर्थं पृथिव्यां नैव दृश्यते ।।
यस्य दर्शनमात्रेण ब्रह्मलोके स मोदते ।। ६८ ।।
मंदाकिन्यां तु यः स्नानं कृत्वा श्राद्धं प्रदास्यति ।।
दर्शे च पूर्णिमायां वा पितृलोके स मोदते ।। ।। ६९ ।।
पितामहं तु यो भक्त्या नित्यं पश्यति मानवः ।।
अश्वमेधसहस्रेण राजसूयशतेन च ।। 5.1.26.७० ।।
युज्यते नात्र संदेहः सत्यमेतत्तपोधनाः ।।
ततो मन्वंतरेऽतीते प्राप्ते वैवस्वते पुनः ।। ७१ ।।
तेनैवोन्मत्तवेषेण ऊर्ध्वशेषो महेश्वरः ।।
प्रविष्टो ब्रह्मणः सत्रे दृष्टस्तैर्द्विज सत्तमैः ।। ७२ ।।
ते ब्राह्मणाः शपंति स्म निन्दां कुर्वंति चापरे ।।
अपरे पांशुभिः शिश्नं घ्नंति तस्याशपन्द्विजाः ।। ७३ ।।

लोष्ठैर्लगुडकैश्चा न्ये घ्नंति तं बलगर्विताः ।।
जटामुकुटकं केचिद्धृत्वा कर्षंति चापरे ।। ७४ ।।
पृच्छंति ब्रतचर्यां वै केन व्रतं च दर्शितम् ।।
अत्र चैव स्त्रियः संति कथमेतत्त्वया कृतम् ।। ७५ ।।
ब्रह्मणा चेदृशी चर्या विष्णुना वा कृता स्वयम् ।।
गिरिशेनापि देवेन केनेदं दुष्कृतं कृतम् ।। ७६ ।।
मा विडम्बय देवेशं वध्यो हि नस्त्वमद्य वै ।।
एवं तैर्हन्यमानस्तु ब्राह्मणैस्तत्र शंकरः ।। ७७ ।।
स्मितं कृत्वाऽब्रवीत्सर्वान्ब्राह्मणान्परमेश्वरः ।।
किं यूयं मामभि हथ ह्युन्मत्तं नष्टचेतसम् ।। ७८ ।।
यूयं कारुणिकाः सर्वे मैत्रभावे व्यवस्थिताः ।।
तमेवं वादिनं देवं जाल्मरूपधरं हरम् ।। ७९ ।।
मायया तस्य देवस्य मोहितास्ते द्विजातयः ।।
पुनः कपर्दिनं जघ्नुः पाणिपादेन वै द्विजाः ।। 5.1.26.८० ।।
ताड्यमानस्तु तैर्विप्रैः परं कोपमुपागमत् ।।
ततो देवेन ते शप्ता यूयं वेदविवर्जिताः ।। ८१ ।।
ऊर्ध्वजूटाः सलगुडाः परदारोपजीविनः ।।
रता द्यूते च वेश्यायां पितृमातृविवर्जिताः ।। ८२ ।।
न पुत्रे पितृ वित्तं च विद्या वापि भविष्यति ।।
शेषो मम हतो यैश्च ते सर्वेंद्रियवर्जिताः ।। ८३ ।।
रौद्रां भिक्षां तु भिक्षंतः परपिंडोपजीविनः ।।
आत्मानं वर्णयिष्यंति धनधान्यविवर्जिताः ।। ८४ ।।
यैश्च तत्र कृता विप्रैर्हन्यमाने कृपा मयि ।।
तेषां धनं च पुत्राश्च दासीदासादयश्च वै ।।८५।।
कुलोत्पन्नाश्च वै नार्यो भविष्यंति वरान्मम ।।
एवं शापं वरं दत्त्वा गतोंऽतर्धानमीश्वरः ।। ८६ ।।
ततो द्विजा गते देवे मत्वा तं शंकरं विभुम् ।।
अन्वेषयंतो यत्नेन महाकालवनं गताः ।। ८७ ।।
स्नात्वा सरसि रुद्रस्य जपतः शतरुद्रियम् ।।
जाप्यावसाने तान्देवोऽशरीरिण्या गिराऽब्रवीत् ।। ८८ ।।
अनृतं न मया प्रोक्तं स्वैरेष्वेपि कुतः सुखम् ।।
भूयोऽप्यनुग्रहं विप्रा युष्माकं करवाण्यहम् ।। ८९ ।।

शांता दांताश्च ये विप्रा भक्तिमंतो मयि स्थिताः ।।
न तेषां छिद्यते वंशो न धनं न च संततिः ।। 5.1.26.९० ।।
अग्निहोत्ररता ये च भक्तिमंतो जनार्दने ।।
पूजयंति च ब्रह्माणं तेजोराशिं दिवाकरम् ।।९१।।
नाशुभं विद्यते तेषां येषां सख्ये स्थिता मतिः ।।
एतावदुक्त्वा देवेशस्तूष्णीमासीज्जगत्प्रभुः ।। ९२ ।।
एवं शापं वरं लब्ध्वा देवदेवान्महेश्वरात् ।।
आजग्मुः सहिताः सर्वे यत्र देवः पितामहः ।। ९३ ।।
विरंचिमथ ते जाप्यैस्तोषयन्तोऽग्रतः स्थिताः ।।
तुष्टस्तानब्रवीद्ब्रह्मा मत्तोऽपि व्रियतां वरः ।। ९४ ।।
ब्रह्मणस्तेन वाक्येन तुष्टाः सर्वे द्विजोत्तमाः ।।
को वरो याच्यतां विप्राः परितुष्टे पितामहे ।। ९५ ।।
एके तत्राब्रुवन्विप्रा वेदान्वै वृणवामहै ।।
ततोऽन्ये च धनं धान्यं व्रियतामविशंकितैः ।। ९६ ।।
अन्ये प्राहुः किमस्माकं धनैस्तुष्टे पितामहे ।।
अग्निहोत्राणि वेदाश्च शास्त्राणि विविधानि च ।। ९७ ।।
शांता आढ्याश्च लोकाश्च वरदानाद्भवंतु नः ।।
एवं प्रजल्पतां तत्र विप्राणां कोप आविशत् ।। ९८ ।।
परस्परं वरार्थेऽथ युद्धं कर्तुं समुद्यताः ।।
युध्यंते सायुधाः केचित्केचित्तत्रोपसर्पकाः ।। ९९ ।।
केचिद्विप्रा उदासीनाः केचिद्वै मौनमास्थिताः ।।
दृष्ट्वैवं भगवान्प्राह विप्रान्युद्धं प्रकुर्वतः ।। 5.1.26.१०० ।।
यस्मात्कुमंत्रिता विप्राः शालाया बाह्यसंस्थिते ।।
तस्मादामूलतो विप्रा गुल्मे युद्धोपसर्पकाः ।। १ ।।
उदासीनस्तु यो गुल्मो वृत्तिहीनो भविष्यति ।।
वेदास्तस्य भवेयुर्वै यस्त्वस्ति मौनसंस्थितः ।। २ ।।
तृतीयः सायुधो गुल्मो योद्धुकामस्तु यः स्थितः ।।
परदारेषु वेश्यायां द्यूते चौर्ये सदा रतः ।।३।।
चतुर्विधः स वै विप्रो वृत्तिहीनो भविष्यति ।।
एवमुक्त्वा ययौ ब्रह्मा वैराजं भवनोत्तमम् ।। ४ ।।
एवं मे परमं क्षेत्रं मुनयोऽवंतिमंडले ।।
यां देवनगरीं लोके प्रवदन्तीह मानवाः ।। ५ ।।

तस्यां तु ये द्विजाः शांता वसंति क्षेत्रवासिन ।।
न तेषां दुर्लभं किंचिन्म म लोके भविष्यति ।। ६ ।।
कोलामुखे कुरुक्षेत्रे नैमिषे पुष्करेषु च ।।
वाराणस्यां प्रभासे च तथा बदरिकाश्रमे ।। ७ ।।
गंगाद्वारे प्रयागे च गंगासा गरसंगमे ।।
रुद्रकोट्यां विरूपाक्षे मित्रस्यापि तथा वने ।। ८ ।।
तीर्थेष्वेतेषु क्षेत्रेषु या सिद्धिर्द्वादशाब्दिका ।।
प्राप्यते मानवैर्लोके सा मासेनेह लभ्यते ।।
उज्जयिन्यां न संदेहो ब्रह्मचर्ये मनो यदि ।। ९ ।।
तीर्थानां प्रवरं तीर्थं क्षेत्राणामपि चोत्तमम् ।।
सदाभिरुचितं मह्यमेतद्वै मुनिसत्तमाः ।। 5.1.26.११०।।
मंदाकिन्यास्तु माहात्म्यं क्षेत्रस्योत्पत्तिरुत्तमा ।।
भूयः किमन्यदिच्छास्ति श्रोतुं वै द्विजसत्तमाः ।। ११ ।।
।। सनत्कुमार उवाच ।। ।।
एतत्ते ब्रह्मणो वाक्यं श्रुत्वा व्यास तथाविधम् ।।
वसिष्ठाद्याश्च मुनयः परं ध्यानमथो गताः ।। १२ ।।
ध्यात्वा तु सुचिरं कालं तत्र वासे मनो दधुः ।।
साग्निहोत्राः सपत्नीका गताश्चावंतिमंडले ।। १३ ।।
महाकालवनं दृष्ट्वा शिप्रां चैव महानदीम् ।।
श्मशानमूषरं चैव नदीं गन्धवतीं तथा ।। १४ ।।
कोटितीर्थमुपस्पृश्य चक्रुर्वासं च तत्र वै ।।
स्मृत्वा तद्ब्रह्मणो वाक्यं रुचिस्तेषां तदाऽभवत् ।। १५ ।।
अरुन्धत्या वसिष्ठश्च गमनं प्रति नोदितः ।।
उवाच तां महात्मासौ स्वां भार्यां मुनिसत्तमाः ।। १६ ।।
महाकालः सरिच्छिप्रा गतिश्चैव सुनिर्मला ।।
उज्जयिन्यां विशालाक्षि वासः कस्य न रोचते ।। १७ ।।
स्नानं कृत्वा नरो यस्तु महानद्यां हि दुर्लभम् ।।
महाकालं नमस्कृत्य नरो मृत्युं न शोचयेत् ।। १८ ।।
मृतः कीटः पतंगो वा रुद्र स्यानुचरो भवेत् ।।
यत्रैषा श्रूयते मुक्तिः कथं सा त्यजते मया ।। १९ ।।
एवं प्रजल्प्याथ मुनिप्रधानस्तत्रैव वासं सहसा चकार ।।

वनस्य व्युष्टिं परिकीर्तयंस्तु स्थितः सहैवात्र मुनिप्रधानैः ।। 5.1.26.१२० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षे त्रमाहात्म्ये मंदाकिनीक्षेत्रमाहात्म्यवर्णनंनाम षड्विंशोऽध्यायः ।। २६ ।। ।।छ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २७



।। सनत्कुमार उवाच ।। ।।
योऽवंत्यामंकपादाख्ये पश्येद्रामजनार्दनौ ।।
ययोर्दर्शनमात्रेण यमलोकं न पश्यति ।। १ ।।
।। व्यास उवाच ।। ।।
कथं तावंकपादाख्ये यातावत्र महामुने ।।
न पश्येद्यमलोकं स यद्यपि ब्रह्महा भवेत् ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
भारावतारणार्थाय देवौ रामजनार्दनौ ।।
अवतीर्णौ यदोर्वंशे दिव्यरूपौ महाद्युतौ ।। ३ ।।
कंसं हत्वा सचाणूरमुग्रसेनं नराधिपम् ।।
अभिषिच्य स्वयं राज्ये यदुसिंह उवाच तम् ।। ४ ।।
किं कार्यं ते मया ब्रूहि कर्तव्यं ते सुते हते ।।
एवमुक्तः स राजा वां उग्रसेनोऽब्रवीदिदम्।। ५ ।।
सर्वं संपत्स्यते कृष्ण भवतो हि न दुर्लभम् ।।
विज्ञाताखिलविज्ञानौ भवितारावुभावपि ।। ६ ।।
गच्छेतमुज्जयिन्यां वै कृतविद्यौ भविष्यथ।।
ततः सांदीपनिं विप्रं जग्मतू रामकेशवौ।।७।।
कण्ठस्थांश्चक्रतुर्वेदानाचारमखिलं च तौ।।
सरहस्यं धनुर्वेदं ससंहारं तथैव च ।।८।।
अहोरात्रैश्चतुःषष्ट्या तदद्भुतमभूद्द्विज ।।
सांदीपनिरसंभाव्यं तयोः कर्मातिमानुषम् ।। ९ ।।
विचिंत्य तौ तदा मेने प्राप्तौ चंद्र दिवाकरौ।।
ततः किंचित्स नोवाच स्नातुं तीर्थमथाययौ ।।5.1.27.१०।।
शिष्यैस्तु सहितो विप्रो महाकालवनेऽविशत् ।।
शिष्यैः सह प्रविष्टौ द्वौ तदा तौ रामकेशवौ।११।।
वन्दमानौ महाकालं स तं केशवमब्रवीत्।।
त्वया नाथेन देवानां मानुष्यत्वे हि तिष्ठता ।। १२।।

सुखमासीच्च साधूनामज्ञानानां च सर्वदा ।।
जने पीडाकरा ये तु सदा वा बलदर्पिताः ।।१३।।
युवाभ्यां ते हताः सर्वे कंसप्रमुखतो नृपाः ।
मुनिसिद्धसुरादीनां स्थितिः कार्या त्वयाऽनघ ।।१४।।
करिष्यामि तमित्युक्त्वा स नमस्य ततो ययौ ।।
दृष्ट्वा सांदीपनिं शिष्या ऊचुरेवं दिनेदिने ।। १५ ।।
कस्य न श्रद्दधे तेषां वचस्त्वत्यद्भुतं यतः ।।
स्वयं ययौ ततो द्रष्टुमाश्चर्यं शिष्यभाषितम् ।। १६ ।।
ततस्तत्रोत्थितः शब्दः संश्लेषे च तथा तयोः।।
तावागतौ गृहं तत्र गुरुर्वचनमब्रवीत् ।। १७ ।।
न वै ज्ञातौ मया वीरौ यदुवृष्णिकुलोद्भवौ ।।
ततः सांदीपनिं कृष्णः कृतकृत्योऽब्रवीद्वचः ।। १८ ।।
गुर्वर्थं किं ददामीति सह रामेण हर्षितः ।।
तच्छ्रुत्वा वचनं हृद्यं गुरुः प्रोवाच हर्षितः ।। १९ ।।
पुत्रमिच्छाम्यहं त्वत्तो यो मृतो लवणांभसि ।।
पुत्र एको हि मे जातः स चापि तिमिना हृतः ।। 5.1.27.२० ।।
प्रभासे तीर्थयात्रायां त्वमेव तमिहानय ।।
तथेति चाब्रवीत्कृष्णो रामस्यानुमते गतः ।। २१ ।।
तं समुद्र उवाचेदं दैत्यः पंचजनो महान्।।
तिमि रूपेण तं बालं ग्रस्तवान्मयि संस्थितः ।। २२ ।।
ततः पंचजनं हत्वा ग्राहरूपं महाबलम् ।।
तन्मध्यस्थं च जग्राह शंखं ग्रस्तो हि यः पुरा ।। २३ ।।
जलेश्वरगृहात्तेन ग्राहेणातीव लीलया ।।
तस्योदरे यदा बालं नाप्तवांस्तु जनार्दनः ।। २४ ।।
यमालयगतं मत्वा तदा वरुणमब्रवीत् ।।
भगवान्यादसामीश रथो मे दीयतां महान्।।२५।।
पुराजिरे हता दैत्या दानवा बलदर्पिताः।।
मया येन रथेनाद्य मह्यं स दीयतां रथः।।२६।।
न्यासभूतो रथो यस्ते विधृतो निहतारिणा।।
मया धर्मं पुरस्कृत्य स दीयतामपांपते।।२७।।
येनाहवे प्रेतराजं जित्वा पश्यामि बालकम्।।
एतच्छ्रुत्वा प्रहृष्टात्मा ज्ञात्वा कार्यार्थिनं हरिम् ।।

ददौ तं रथमक्षोभ्यं रणे तस्मै सुरासुरैः ।। २८ ।।

ततो हरिः समालोक्य रथं रत्नपरिष्कृतम् ।।

द्वीपिचर्मपरीधानं वैयाघ्रपरिवारितम् ।। २९ ।।

नाना चित्रविचित्रांगं गरुडध्वजराजितम् ।।

संयुक्तं शैब्यसुग्रीवपुष्पदंतबलाहकैः ।। 5.1.27.३० ।।

अजेयं देवदेवेंद्रदानवासुरराक्षसैः ।।

अनेकायुधसंपूर्णं मणिविद्रुमभूषितम् ।।३१।।

सहस्रसूर्यप्रतिमं चारुवक्त्रचतुर्युगम्।।

किंकिणीशतशोभाढ्यं घंटाचामरचं द्रिकम् ।। ३२ ।।

संवर्ताकारविषमं खगेंद्रवरकेतनम् ।।

दृष्ट्वा कृष्णः सरामस्तु मुमुदे वीतविस्मयात् ।। ३३ ।।

प्रदक्षिणमुपाकृत्य देवताभ्यः प्रणम्य च ।।

आरुरोह रथं विष्णुर्विमानं साग्रयोजनम् ।। ३४ ।।

ततो जगाम त्वरितो जनार्दनो जगन्निवासो यमलोकमाश्रिताम् ।।

दिशं सहस्रैः किरणै र्वृतां पुरीं दध्मौ च शंखं परिगृह्य चाच्युतः ।। ३५ ।।

तत्र प्रध्यापयामास शंखं शार्ङ्गधनुर्धरः ।।

तेन शब्देन वित्रस्ताः कृतांतालयवासिनः ।।। ३६ ।।

नरकांतर्गता मर्त्याः पापाचारपरायणाः ।।

सुखमापुः प्रसन्नाश्च वह्नयः कृष्णदर्शनात् ।। ३७।।

शस्त्राणि कुंठतां प्रापुर्यंत्राणि विविधानि च ।।

विदीर्णानि तदा चासुर्देवदेवस्य दर्शनात् ।। ३८ ।।

असिपत्रवनंनाम शीर्णपर्णमजायत ।।

रौरवनाम नरकमभैरवमभूत्तदा ।। ३९ ।।

अभैरवं भैरवाख्यं कुंभीपाकमवाचिकम् ।।

शृंगाटं शृंगसदृशं लोहसूच्यप्यसूचिका ।। 5.1.27.४० ।।

दुस्तरा सुतरा जाता नदी वैतरणी नृणाम् ।।

नरकांते तदा जाते गते विश्वेश्वरे विभौ । ४१ ।।

पापक्षयात्ततः सर्वे ते मुक्ता नारका नराः ।।

पदमव्ययमासाद्य दृष्ट्वा विष्णुं तमोऽपहम् ।। ४२ ।।

विमानेषु सहस्रेषु ह्यारूढास्ते समंततः ।।

समीक्ष्य पुंडरीकाक्षं मुक्तास्ते सर्वपातकात् ।। ४३ ।।

ततः शून्यं मुने जातं सर्वं निरयमंडलम् ।।

दर्शनात्तस्य देवस्य विष्णोर्विश्वस्वरूपिणः ।। ४४ ।।
ततो दूताः कृतांतस्य कृष्णं च युद्धकारिणम् ।।
वारयामासुरत्युग्रा विशंतं नरकान्प्रति ।। ४५ ।। ।।
।। किंकरा ऊचुः ।। ।।
मा वीरानेन मार्गेण रथमानय मानवन् ।।
प्रयांत्यधोगतिं पापात्परस्त्रीस्वापहारकाः ।। ४६ ।।
यमादिष्टा नराः पापा येऽमोच्या वर्षकोटिभिः ।।
दृष्ट्वा त एव सद्यस्त्वां गताः स्वर्गमपावृताः ।। ४७ ।।
एतच्छ्रुत्वा वचस्तेषां कृपया पीडितो भृशम् ।।
पुनः प्रोवाच मधुहा मोक्षायाहमुपागतः ।। ४८ ।।
सर्वेषां स्वर्गदाताहं यमलोकनिवारकः ।।
अंजसा यमराड्दूता यमायाख्यात मे वचः ।। ४९ ।।
एतच्छ्रुत्वा वचो दूताः सत्वरा यममागताः ।।
सर्वमाचक्षिरे वृत्तं यथा नारकमोक्षणम् ।। 5.1.27.५० ।।
ततो यमो रुषाविष्टः प्राह तान्यमकिंकरान् ।।
यः कश्चिदागतो मर्त्यो मर्यादाभेदकृन्नरः ।। ५१ ।।
तं गत्वा वारयध्वं वै गृहीत्वानीयतामिति ।।
अयं नरांतको यातु किंकरः सह किंकरैः ।। ५२ ।।
एवमुक्तो यमेनाथ किंकरः स नरांतकः ।।
गत्वा तं वारयामास वाग्भिरुग्राभिरच्युतम् ।। ५३ ।।
यदा न वारितस्तस्थौ तदा क्रुद्धो नरांतकः ।।
तदा शरैरतीवोग्रैस्ताडितस्तेन केशवः ।। ५४ ।।
बलदेवोपि समरे ताडितो विविधैः शरैः ।।
तावुभौ ताडितौ घोरैः समंताद्यमकिंकरैः ।। ५५ ।।
आदाय धनुषी दिव्ये जघ्नतुर्यमकिंकरान्।।
बाणैरनेकसाहस्रैः क्रुद्धौ रामजनार्दनौ ।। ५६ ।।
नरांतकोऽपि समरे बलेन बलिनार्दितः ।।
पपात गदया भिन्नो मूर्ध्नि निर्यातलोचनः ।। ५७ ।।
ततो नरांतके वीरे पतिते यमकिंकरे ।।
किंकराणामभूत्सैन्यमार्तं रणपराङ्मुखम् ।। ५८ ।।
रामकृष्णाभ्यां ते दूता हन्यमाना भयातुराः ।।
यमाय कथयामासुर्नरांतकस्तु पातितः ।। ५९ ।।

ततो यमो ययौ क्रुद्धः समंतात्किंकरैर्वृतः ।।
प्राह ततो यमः क्रुद्धो नो जितोहं पुरा परैः ।।5.1.27.६० ।।
ततो वादित्रनिर्घोषैस्तुमुलानकगोमुखैः ।।
नानाडमरुकैश्चैव चित्रगुप्तैश्च गच्छति ।। ६१ ।।
देवा विद्याधराः सिद्धा दृष्ट्वा यांतं महाबलम् ।।
कृतांतस्य रणेऽक्षोभ्यं कामपालं जगत्पतिम् ।। ६२ ।।
ततस्ते किंकराः सर्वे चित्रगुप्तेन नोदिताः।।
रथमावृत्य बाणौघैः प्रविव्यधुः समंततः ।। ६३ ।।
बलं च केशवं संख्ये जघ्नतुस्तावुभावपि ।।
रणे च विविधैर्बाणैश्चित्रगुप्तस्य पश्यतः ।। ६४ ।।
विदार्य च सहस्राणि किंकराणां समंततः ।।
कृतांतानीकिनीमध्ये कृतांत इव केशवः ।।
चचार रणदुर्धर्षः कामपालेन पालितः ।। ६५ ।।
ततश्चित्रगुप्तो रणे किंकराद्यं विदीर्णं निरीक्ष्यार्तनादं चकार ।। ६६ ।।
शरैः पंचभिः कृष्णमायांतमाजौ जघानाष्टभिर्वक्त्रदेशे स भिन्नः ।।
शरार्तो रथोपस्थ आसीत्तदार्तस्तमालोक्य भिन्नं रणे नष्टसंज्ञम् ।। ६७ ।।
रथं स्वं समादाय यातः कृतांतस्ततश्चित्रगुप्ते शरार्ते प्रसुप्ते ।।
रणे कीर्तिलुप्ते भयक्षोभयुक्तः स्वसैन्यैश्च युक्तो भयार्तो निषण्णः ।। ६८ ।।
प्रधानाश्च भग्ना विचित्राश्च भग्नास्ततश्चित्रगुप्तं निशम्याथ भग्नम् ।।
स कालस्तमायांतमालोक्य दूराद्वरसैन्यमादाय देवारि शत्रुम् ।। ६९ ।।
विनाशाय युध्यद्युगांते प्रजानां यथा वाडवो ज्वालवृद्धः प्रवृत्तः ।।
तमायांतमालोक्य कालं करालं शरैरावृणोदंतकं कालकल्पैः ।। 5.1.27.७० ।।
स कालः करालं समादाय दंडं मुमोचाच्युते पश्यतां देवतानाम् ।।
ततः कालदंडः प्रजानां विनाशो हरेः संनिकाशं समभ्याजगाम ।। ७१ ।।
ततो देवगंधर्वयक्षा मुनींद्राः परं विस्मयं प्रापुरावीक्ष्य रामम् ।।
ज्वलंतं च जग्राह कालस्य दंडं स रामो वरलीलयाऽनंतमूर्तिः ।। ७२ ।।
गृहीते बलेनाहवे कालदंडे मोक्तुकामे पुनः कालनाशाय वै।
तूर्णमभ्येत्य तत्रांतरे रणे वारयामास कृष्णं तदा।।७३।।
मा मुंचेत्यब्रवीद्वेधाः कालं कालायुधं बल।।
त्वया बलवता वीर चराचरधरा धरा।।७४।।
धार्यते शिरसा देव संसारे नास्ति ते समः ।।
त्वया विश्वपतिर्विष्णुरुत्संगेन सदोह्यते।।

कोऽन्योस्ति त्वत्समो राम यो जगद्दहने क्षमः ।।
जगत्स्रष्टा जगद्गोप्ता जगद्धर्ता जगत्पतिः ।।७६।।
पाल्यते यत्त्वया सोपि विष्णुर्विश्वैकनायकः ।।
कस्ते स्तुतिकरोऽस्तीह को गुणान्वक्तुमर्हति ।। ७७ ।।
ततो वयं त्वदंकस्थविष्णुनाभिभवा यतः ।।
इत्युक्त्वा बलदेवं च वासुदेवं पुनर्वचः ।। ७८ ।।
उवाच चतुरास्यस्तु स्तुतिश्च वृतः सुरैः ।।
कृष्णकृष्ण करालस्य कालस्यास्य कृपां कुरु ।। ७९ ।।
यतो भवंतमायांतं विष्णुं विश्वैकनायकम् ।।
वेत्ति नायं जगन्नाथं नरकार्णवतारकम् ।। 5.1.27.८० ।।
त्वया वै भगवन्पूर्वं यमः संस्थापितः पदे ।।
नृणां दुष्कृतकर्तॄणां नरकाय यमः प्रभो ।। ८१ ।।
तस्मादस्य जगन्नाथ क्षम्यतां पुरुषोत्तम ।।
विभो कृपां कुरुष्वास्य ब्रूहि यत्ते विवक्षितम् ।। ८२ ।।
एतच्छ्रुत्वाऽब्रवीत्कृष्णो धातः शृणु गुरोर्मम ।।
सांदीपनेः समानीतः सुतस्तेनागताविह ।। ८३ ।।
समर्प्यतां गुरुश्रेष्ठ श्रेष्ठाय गुरुदक्षिणा ।।
आवाभ्यां वै प्रतिज्ञातो तस्मात्सा पाल्यतां विभो ।। ८४ ।।
एतत्पितामहः श्रुत्वा यमं समरनिर्जितम् ।।
समाहूयाब्रवीद्विष्णुर्यद्ब्रवीति कुरुष्व तत् ।। ८५ ।।
तच्छ्रुत्वा धर्मराजस्तु विरंचिमिदमब्रवीत् ।।
भगवन्विश्वकृल्लोके नैष मार्गस्त्वया कृतः ।। ८६ ।।
यमलोकमनुप्राप्य कायहीनः शरीरवान् ।।
यत्कायरहितो याति नैतदत्र प्रपद्यते ।। ८७ ।।
तच्छ्रुत्वा हि पुनर्ब्रह्मा विश्वस्यास्य विभुः स्वयम् ।।
विश्वकृद्विश्वहृद्यस्माद्यदिच्छति करोतु तत् ।। ८८ ।।
तस्मादर्पय पुत्रं त्वं मुनेः सांदीपनेश्च यः ।।
नरके यं पुनः कृत्वा तं चानय महामते ।। ८९ ।।
तच्छ्रुत्वा धर्मराजस्तु पुत्रं सांदीपनेस्तथा ।।
ससर्ज बाल रूपं च तदात्मानं तदुद्भवम् ।। 5.1.27.९० ।।
अर्पयामास कृष्णस्य बालं रूपसमन्वितम् ।।
स सर्वदेवतानां च तदद्भुतमिवाभवत् ।। ९१ ।।

ततः प्राप्य गुरोः पुत्रं प्रभुः प्रीतः प्रजापतिम् ।।
प्राह प्राप्तो मया ब्रह्मन्स्वरूपो द्विजदारकः ।। ९२ ।।
।। श्रीकृष्ण उवाच ।। ।।
अद्यप्रभृति लोकेश देशे मच्चरणां किते ।।
अवंत्यामंकपादाख्ये मृता नेक्षंति ते यमम् ।। ९३ ।।
महाकालपुरे देवमाद्यं वै पुरुषोत्तमम् ।।
विश्वरूपं च गोविंदं शंखोद्धारं च केश वम् ।। ९४ ।।
ये पश्यंति कुशस्थल्यामेतेषां मूर्तिपंचकम् ।।
ते नरा न गमिष्यंति विरंचे निरयं क्वचित् ।। ९५ ।।
तथैवागमनादत्र मम रामस्य ना रकाः ।।
विमुक्तास्ते त्वघाद्घोरात्प्राप्नुवंत्वखिला दिवम् ।। ९६ ।।
इत्युक्ते वचने वेधाः प्रोवाच प्रीतिमान्हरिम् ।।
यत्त्वयोक्तं वचः कृष्ण तदस्तु सकलं सदा ।। ९७ ।।
ये च त्वामादिपुरुषं प्रथमं पुरुषोत्तमम् ।।
प्रणम्य पश्चाद्द्रक्ष्यंति स्नात्वा शिवसरस्यपि ।। ९८ ।।
अधोज्वालं महाकालं सोऽश्वमेधफलं लभेत् ।।
एवमुक्तो हरिः पुत्रमादाय बलिना सह ।। ९९ ।।
संमान्य वेधसं कालं समारोहद्रथं ततः ।।
शंखमापूरयामास कृतकार्यो जनार्दनः ।। 5.1.27.१०० ।।
मोक्षाय निरयस्थानां नृणां वै पापकर्मणाम् ।।
ततस्ते शंखशब्देन स्मरणेनाच्युतस्य च ।। १ ।।
दिव्यान्विमानानारुह्य दिवमेवाखिला गताः ।।
शून्यं तन्मंडलं जातं नारायणसमागमे ।। २ ।।
कालोऽपि दंडमासाद्य बलदेवात्पुनः पुरम् ।।
प्रविवेश ततो धाता तत्रैवांतरधीयत ।। ३ ।।
कृष्णोपि बलवान्धीरः प्राप्त उज्जयिनीं पुरीम् ।।
बलदेवसहायस्तु सत्वरेणाशुगामिना ।। ४ ।।
ततः सांदीपनेः पुत्रमर्पयामास केशिहा ।।
गुरवे यत्प्रतिज्ञातं स तस्मादनृणोऽभवत् ।। ५ ।।
एवं सांदीपनिः पुत्रं दृष्ट्वा च पुनरागतम् ।।
नागरास्तत्र राजा च विस्मयं परमं ययुः ।। ६ ।।
तौ वीरावर्चयामासुर्मत्वा देवोत्तमोत्तमौ ।।

सांदीपनिरुवाचेदं तौ च रामजनार्दनौ ।। ७ ।।
इह स्थास्यति वां कीर्तिर्यावदाभूतसंप्लवम् ।।
स्थाने मदीय एतस्मिंस्तिष्ठंतौ यदुनंदनौ ।।८।।
न विज्ञातौ मया वीरौ यदुवृष्णिकुलोद्भवौ ।।
नरनारायणौ देवौ देवकार्यार्थमागतौ ।।९।।
नाल्पमृत्युर्भवेत्तस्य न व्याधिर्न च दुर्गतिः ।।
प्राप्य ह्यत्र च यः स्नाति स्वर्गलोके स मोदते ।।5.1.27.११०।।
शंखिनं विश्वरूपं च गोविदं चक्रिणं तथा ।।
चत्वारि विष्णुक्षेत्राणि अंकपादस्तु पंचमः ।। ११ ।।
एषां यात्रां प्रवक्ष्यामि यथा कार्या मनीषिभिः ।।
मंदाकिन्यां कृतस्नानो दृष्ट्वा रामजनार्दनौ ।। १२ ।।
शंखोद्धारे ततः स्नात्वा प्रपश्येद्बलकेशवौ ।।
स्नानं कृत्वा ततः कुंडे गोविंदं च समर्चयेत ।। १३ ।।
चक्रिणं च ततो दृष्ट्वा देवदेवं च शंखिनम् ।।
अंकपादौ ततो दृष्ट्वा विश्वरूपं ततो व्रजेत् ।। १४ ।।
तस्याग्रतः करीकुंडे स्नानं कृत्वा यथाविधि ।।
पुनस्तेन प्रकारेण प्रपश्येद्बलकेशवौ ।। १५ ।।
स्नानं कृत्वा ततः कुंडे गोविंदं च समर्चयेत् ।।
तथैव चक्रिहलिनौ दृष्ट्वा तं केशवं व्रजेत् ।। १६ ।।
शिप्रांभसि नरः स्नात्वा भक्त्या संपूज्य केशवम् ।।
परावृत्यांकपादे तु तां रात्रिं गमयेच्छुचिः ।। १७ ।।
प्रातर्वै भोजयेत्तत्र पंच विप्रांश्च सुव्रतान् ।।
गोदक्षिणां शंखिने तु विश्वरूपाय वै हयम् ।। १८ ।।
गोविंदाय गजं दद्यात्सर्वं दद्याच्च केशवे ।।
उपोष्य द्वादशीं विप्र योऽकपादं समर्चयेत् ।। १९ ।।
गंधपुष्पैश्च धूपैश्च नैवेद्यैर्विविधैस्तथा ।।
श्राद्धं यः कुरुते सर्वं तस्य पुण्यफलं शृणु ।। 5.1.27.१२० ।।
कुलानां शतमुद्धृत्य विमानैः सर्वकामिकैः ।।
गीतनृत्यादिभोगैश्च वैकुंठे सुचिरं वसेत् ।। २१ ।।
पुनर्लोक मिमं प्राप्य पवित्रे जायते कुले ।।

प्राप्नोत्यनंतसंतानं विष्णुलोकं पुनर्व्रजेत् ।।१२२।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्सयखण्डेऽवंतीक्षेत्रमाहात्म्येंऽकपादमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ।।२७।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/fix
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
अथान्यं संप्रवक्ष्यामि देवं त्रैलोक्यविश्रुतम्।।
चंद्रादित्यमिति ख्यातं चंद्रादित्यार्चितं पुरा ।।१।।
यस्तं समर्चयेद्देवं सुरासुरनमस्कृतम् ।।
गंधपुपोस्तथा धूपैर्नैवेद्यैर्विविधैस्तथा ।। २ ।।
चंद्रादित्यादिसालोक्यं प्रयाति सर्वकामिकम् ।।
विमानं सूर्यसंकाशैर्यावच्चंद्रदिवाकरौ ।। ३ ।। ।।
इति चन्द्रादित्यमाहात्म्यम् ।।
।। सनत्कुमार उवाच ।। ।।
करभेशं ततो गच्छेद्देवदेवं महेश्वरम् ।।
यस्य दर्शनमात्रेण कुयोनौ नैव जायते ।। ४ ।।
।। व्यास उवाच ।। ।।
करभेशमहं देवं श्रोतुमिच्छामि तत्त्वतः ।।
कथं देवः समुत्पन्नः करभेशेतिसंज्ञितः ।। ५ ।।
।। सनत्कुमार उवाच ।। ।।
पुरा देवगणैः सार्धं देवदेवो महेश्वरः ।।
वनेऽस्मिन्क्रीडयामास परमाह्लादसंयुतः ।। ६ ।।
क्रीडन्बहुतिथे काले शंकरः करभोऽभवत् ।।
ज्ञायते च स नो देवैः शंकरः करभाकृतिः ।। ७ ।।
अन्वेषयंति ते देवास्ततो विस्मयसंयुताः ।।
न पश्यंति यदा तत्र तं देवं शूलपाणिनम् ।। ८ ।।
देवैः पृष्टस्ततो ब्रह्मा क्वास्ति देवो महेश्वरः ।।
ध्यात्वाथ ब्रह्मणा दृष्टो गुप्तो योगप्रभुर्हरः ।। ९ ।।
देवैः सार्धं ततो ब्रह्मा पप्रच्छ गणनायकम् ।।
न दृष्टः शंकरोऽस्माभिर्गतः कुत्र विनायक ।। 5.1.28.१० ।।
कथयस्व नमस्तुभ्यं दास्यामो लड्डुकान्विभो ।।

एवमुक्तस्तदा हृष्टः प्रोवाच गणनायकः ।। ११ ।।
करभोऽयं महाऽदेवो दृश्यते विबुधो त्तमाः ।।
श्रुत्वा चैवं वचो देवाः प्रहृष्टाः करभं ययुः ।। १२ ।।
ज्ञातोऽस्माभिर्महादेव जल्पंत इति ते स्वयम् ।।
गत्वा चैव ततः सर्वे चतुर्दिक्षु स्थिताः स्वयम् ।।१३।।
विचिंत्येति कथं ज्ञातः शंकरो विस्मयं गतः ।।
त्यक्त्वाथ कारभं रूपं देवदेवो महेश्वरः ।। १४ ।।
लिंगमुत्पादयामास दिव्यं यत्करभे श्वरम् ।।
ते दृष्ट्वाऽथ सुराः सर्वे साष्टांगप्रणतिस्थिताः ।। १५ ।।
ततःप्रभृति विख्यातः शंकरः करभेश्वरः ।।
कोटितीर्थादुत्तरस्मिन्स्थापयामास विघ्नपम् ।। १६ ।।
स्वनाम्ना प्रथितं चक्रे करभं चातिपूजितम् ।।
स्नात्वा तत्र शुचिर्भूत्वा यस्तमर्चयते शिवम् ।। १७ ।।
गंधपुष्पैश्च नैवेद्यैः शृणु तेषां च यत्फलम् ।।
सर्वमेधेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।। १८ ।।
ततोऽधिकं स लभते नात्र कार्या विचारणा ।।
महाकालं ततो गच्छन्संपूर्णं फलमाप्नुयात् ।। १९ ।।
ततः प्रसिद्धो लोकेऽस्मिन्नृद्धिदः करभेश्वरः ।। 5.1.28.२० ।। ।।
इति करभेश्वरमाहात्म्यम् ।। ।। छ ।। ।।
।। सनत्कुमार उवाच ।। ।।
लड्डुकैश्च ततो देवैर्विघ्ननाथः समर्चितः ।।
तदाप्रभृति विख्यातो विश्वेशो लड्डुकप्रियः ।। २१ ।।
यः समर्चयते भक्त्या तस्य विघ्नो न जायते ।।
तस्मै ददाति संतुष्टः सर्वान्कामान्विनायकः ।। २२ ।।
निराहारश्चतुर्थ्यां च स्नात्वा शिप्रां विशेषतः ।।
रक्तांबरधरोभूत्वा रक्तपुष्पैर्विनायकम् ।। २३ ।।
रक्तचंदनतोयेन मंत्रैः स्नपनपूर्वकम् ।।
चंदनेनापि रक्तेन तं विलेप्य प्रपूजयेत् ।। २४ ।।
धूपं दद्यात्तथा दिव्यं सुगंधं लड्डुकप्रिये ।।
नैवेद्ये लड्डुका देया आज्यखंडपरिप्लुताः ।। २५ ।।
न तस्य जायते व्याधिर्भयं विघ्नं कदाचन ।।
लभते च सदाभीष्टं मृतः शिवपुरं व्रजेत्।। २६ ।।

अवतीर्णः पुनर्लोके जायते वसुधाधिपः ।।
मतिमान्पुत्रवाञ्छूरो नात्र कार्या विचारणा ।। २७ ।। ।।
इति गणेशमा हात्म्यम् ।।
।। सनत्कुमार उवाच ।। ।।
कुसुमेशं सुरद्वारे सुरासुरनमस्कृतम् ।।
श्रद्धया पूजयेद्यस्तु शिवलोके स मोदते ।। २८ ।।
जयेश्वरं तु यः पश्येद्देवदेवं महेश्वरम् ।।
जयी स्यात्सर्वकार्येषु शिवलोकं स गच्छति ।। २९ ।।
शिवद्वारे शिवं लिंगमर्चयेन्मानवो यदि ।।
त्रिदिवं याति यानेन गाणपत्यं च विंदति ।। 5.1.28.३० ।।
अथान्यं संप्रवक्ष्यामि मार्कंडेश्वरमुत्तमम् ।।
मार्कण्डेयो मुनिर्यत्र तप्तवान्सुमहत्तपः ।। ३१ ।।
दृष्ट्वा तं शंकरं देवं वाजपेयफलं लभेत् ।।
सर्वपापविशुद्धात्मा चिरायुर्जायते नरः ।। ३२ ।।
शृणु व्यास महास्थानं यस्यां पुर्यामनुत्तमम् ।।
यत्र तिष्ठति सा देवी ब्रह्माणी हंसवाहिनी ।। ३३ ।।
भक्तानां पूरयेदाशां पुत्रवत्परिपालयेत् ।।
यथा माता तथा देवी दृष्टा शांतिपरैरपि ।। ३४ ।।
अर्चिता ब्रह्मणा सा तु स्तुता देवी सुरोत्तमैः ।।
अर्चयेद्गंधपुष्पैश्च नैवेद्यैः सर्वसिद्धिदाम् ।।
अपि या ब्रह्मणः पूर्वमभूदेव सुसिद्धिदा ।। ३५ ।।
यः स्नात्वा ब्रह्मसरसि पश्ये द्ब्रह्मेश्वरं शिवम्।।
भवबंधविनिर्मुक्तो ब्रह्मलोके स मोदते ।। ३६ ।।
अथान्यां संप्रवक्ष्यामि यज्ञवापीमनुत्तमाम् ।।
यत्र वै ब्रह्मणा पूर्वमिष्टो यज्ञः सदक्षिणः ।। ३७ ।।
यज्ञार्थं यत्कृतं कुंडं यज्ञवापी च सा स्मृता ।।
पशुश्च पतितो यस्मात्तस्मात्पशुपतिः स्मृतः ।। ३८ ।।
तस्यां स्नात्वा शुचिर्भूत्वा पश्येत्पशुपतिं तु यः ।।
उद्धरेत्स पितॄन्व्यास पशुयोनिगतानपि ।। ३९ ।।
सुवर्णमणिमुक्ताद्यैर्विमानैः सर्वकामगैः ।।
याति रुद्रपुरं दिव्यं यत्र देवो महेश्वरः ।। 5.1.28.४० ।।
रूपकुंडे नरः स्नात्वा सुरूपो जायतेनरः ।।

स्वर्गे स देवगंधर्वैः स्पृहणीयवपुर्भवेत् ।। ४१ ।।
कुंडे स्नात्वाप्यनंगे यः शुचिर्भूत्वा समाहितः ।।
पश्येच्च देवदेवेशमनंगेनार्चितं पुरा ।।
कामं स लभतेऽभीष्टं मृतो याति शिवालयम् ।। ४२ ।।
आषाढे तु सिताष्टम्यां जागरं यस्तु कारयेत् ।।
केदारे यत्फलं प्रोक्तं तत्समानमवाप्नुयात् ।। ४३ ।।
करीकुंडे नरः स्नात्वा विश्वरूपं तु योऽर्चयेत् ।।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।। ४४ ।।
अजागंधे नरः स्नात्वा दृष्ट्वा ब्रह्मेश्वरं शिवम् ।।
ब्रह्महत्यासमं पापं तत्क्षणात्संव्यपोहति ।। ४५ ।।
चक्रतीर्थे नरः स्नात्वा चक्र स्वामिनमर्चयेत् ।।
जायते स नरो व्यास चक्रवर्ती सदा भुवि ।। ४६.।।
सिद्धेश्वरं यदा पश्येत्स्नात्वा सुविधिपूर्वकम् ।।
कामिकेन विमानेन रुद्रलोकं स गच्छति ।। ४७ ।। ।।
इति यज्ञवापीमाहात्म्यम् ।। ।।
सोमवत्यां नरः स्नात्वा यः सोमेश्वरमर्चयेत् ।।
सोमवन्निर्मलो भूत्वा सोमलोके स मोदते ।। ४८ ।।
।। व्यास उवाच ।। ।।
तीर्थं सोमवतीनाम लिंगं सोमेश्वरं तथा ।।
अभूदेतत्कथं नाम श्रोतुमिच्छामि तत्त्वतः ।। ४९ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास यथोत्पन्नं सोमतीर्थं सुशोभनम् ।।
सोमेश्वरं यथा लिंगमेतत्सत्यं वदामि ते ।।5.1.28.५०।।
यो देवो भगवान्सोमो लोकस्याप्यायनं परम् ।।
आसीत्तस्य पुरा व्यास पिता विप्रो महातपाः ।। ५१ ।।
अवन्त्यां च महाभागो योऽत्रिर्नामा तपोनिधिः ।।
वर्षाणां त्रीणि दिव्यानि सहस्राणि तपो महत् ।। ५२ ।। अत्रि शब्दोपरि टिप्पणी
ऊर्ध्वबाहुः स वै तेपे ब्रह्मध्यानपरायणः ।।
ऊर्ध्वं गतं ततो व्यास ब्राह्म्यं तेजो महात्मनः ।। ५३ ।।
नेत्राभ्यां तेन सुस्राव भासयच्च दिशो दश ।।
तेजस्तत्सहसा दृष्ट्वा दिशो दशोद्धतं स्वतः ।। ५४ ।।
दिशश्च तद्यदा व्यास सर्वा धर्तुं न चाशकन् ।।

असुस्रवत्तदा दिग्भ्यस्तद्धि तेजोतिदुःसहम् ।। ५५ ।।
लोकांश्च भासयत्सर्वान्धरण्यां वै पपात ह ।।
सोमो जातस्ततस्तेन शीतांशुश्च जनप्रियः ।। ५६ ।।
वारि सोमात्समुत्पन्नं व्यास तेनैव तेजसा ।।
प्रविष्टा सा नदी शिप्राममृतेनातिपूरिता ।। ५७ ।।
ततः सोमवती शिप्रा विख्याता सर्वसि द्धिदा ।।
सोमयुक्तां नदीं शिप्रां दृष्ट्वा पापं व्यपोहति ।। ५८ ।।
ख्याता च त्रिषु लोकेषु पापिनां पुण्यदायिनी ।।
ब्रह्महा वा सुरापो वा स्तेयी वा गुरुतल्पगः ।। ५९ ।।
चत्वारोऽप्यत्र पापेन मुच्यंते दर्शनाद्ध्रुवम् ।।
अमासोमौ यदा युक्तौ सोमवत्यां तदा मुने ।। 5.1.28.६० ।।
स्नानं दानं च यो धीमाञ्जपं होमं समाचरेत् ।।
अक्षयं तस्य तत्सर्वं यावच्चंद्रदिवाकरौ ।। ६१ ।।
तिलोदकप्रदानेन पिंडदानेन कारिता ।।
अकाले कालिकी तृप्तिः पितॄणां च यतो मता ।। ६२ ।।
सर्वत्र दुर्लभा सिप्रा सोमं सोमग्रहस्तथा ।।
सोमेश्वरः सोमवारः सकाराः पंच दुर्लभाः ।। ६३ ।।
शिप्रासोमजलं व्यास कोटितीर्थफलप्रदम् ।।
अमासोमसमायोगे पितृतीर्थसमं स्मृतम् ।। ६४ ।।
अमायां सोमवारश्चेद्व्यतीपातो यदा भवेत् ।।
शतगुणं गयायास्तु सोमवत्यां प्रकीर्तितम् ।। ६५ ।।
एवं सोमवतीतीर्थं जातमत्र महामुने ।।
सोमं दृष्ट्वाथ पतितं क्षितौ ब्रह्मा जगद्गुरुः ।। ६६ ।।
रथे तं स्थापयामास लोकानां हितकाम्यया ।।
सं तु वेदमयो व्यास धर्माक्षः सत्यसंग्रहः ।। ६७ ।।
युक्तो वाजिसहस्रेण ब्रह्मणा प्रेरितस्तदा ।।
दृष्ट्वा सोमं ततो देवा रथे तं ब्रह्मणा युतम् ।। ६८ ।।
तुष्टुवुः सर्वभावेन हृष्टाः सर्वे समाहिताः ।।
तस्य संस्तूयमानस्य तेजः सोमस्य भास्वरम् ।। ६९ ।।
आप्यायमानं त्रीँल्लोकान्पपात धरणीतले ।।
ब्रह्मा तेन रथेनाथ सागरांतां वसुन्धराम् ।। 5.1.28.७० ।।
त्रिःसप्तकृत्वोऽतिशयाच्चकाराब्धिप्रदक्षिणम् ।।

तस्य तत्पतितं तेजो व्यास सोमस्य शीतलम् ।। ७१।।
तदेवौषधयो दिव्या जाता भुवि सुनिर्मलाः ।।
याभिर्धार्यो ह्ययं लोकः प्रजाश्चैव चतुर्विधाः ।। ७२ ।।
तुष्टोऽथ भगवान्सोमो जगतेः सर्वदा मुने ।।
दशवर्षसहस्राणि तेपेऽतिदुःसहं तपः ।। ७३ ।।
ततस्तस्मै ददौ वाक्यं ब्रह्मा लोकपितामहः ।।
बीजौषधानि विप्राणां सोमो राजा बभूव ह ।। ७४ ।।
सप्तविंशतिं सोमाय दाक्षायणीर्महाव्रताः ।।
पत्नीः प्राचेतसो दक्षो ददौ नक्षत्रसंज्ञकाः ।। ७५ ।।
स तत्प्राप्य महद्राज्यं सोमो भार्यायुतस्तदा ।।
समारेभे राजसूयं सहस्रशतदक्षिणम् ।। ७६ ।।
होता च भगवानत्रिरध्वर्युर्भगवान्भृगुः ।।
हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ।। ७७ ।।
सदस्यो भगवान्विष्णुः सनकादिमुखैर्युतः ।।
ददौ स दक्षिणां सोमस्त्रीँल्लोकान्सुसमाहितः ।। ७८ ।।
सिनीवाली कुहूश्चैव धृतिः पुष्टिः प्रभा वसुः ।।
कीर्तिर्धृतिश्च लक्ष्मीस्तं देव्यो दिव्याः सिषेविरे ।। ७९ ।।
प्राप्यावभृथमव्यग्रः सर्वदेवर्षिपूजितः ।।
अतीव राजते चन्द्रो दशधा भासयन्दिशः ।। 5.1.28.८० ।।
तस्य तत्प्राप्य दुष्प्राप्यमैश्वर्यमृषिसंस्कृतम् ।।
विबभ्राम मतिर्व्यास विनयाद्यमपास्य च ।। ८१ ।।
बृहस्पतेस्तदा भार्यां तारानाम्नीं यशस्विनीम् ।।
जहार तमसा साध्वीमवमान्यां गिरःसुतम् ।। ८२ ।।
वाच्यमानस्तदा सोमो देवदेवर्षिभिस्तथा ।।
नैव व्यसर्जयत्तारां तस्मा आंगिरसाय च ।। ८३ ।।
बृहस्पतेस्ततः पक्षं शक्रो जग्राह कोपतः ।।
स हि शिष्यो महातेजा गुरोः पूर्वं वृहस्पतेः ।। ८४ ।।
ततो युद्धमभूत्तत्र सुघोरं शक्रसोमयोः ।।
देवानां दानवानां च व्यास त्रासकरं महत् ।। ८५ ।।
सर्वे भीतास्ततो देवा ब्रह्माणं शरणं गताः ।।
अग्रतो ब्रह्मणो युद्धं कथितं शक्रसोमयोः ।। ८६ ।।
देवानां वचनं श्रुत्वा सार्द्धं देवैः पितामहः ।।

आगत्य युद्धभूमिं सोऽवारयद्देवदानवान्।। ८७ ।।
वारितास्ते स्थितास्तत्र युद्धं त्यक्त्वा सुरासुराः ।।
तारामादाय स तदा ददा वांगिरसे द्विजे ।। ८८ ।।
तामंतःप्रसवां दृष्ट्वा प्राह भार्यां बृहस्पतिः ।।
मदीयायां न ते योन्यां गर्भो धार्यः कथंचन ।। ८९ ।।
उत्ससर्ज ततस्तारा कुमारं देवरूपिणम् ।।
इषीकास्त्रं समासाद्य ज्वलंतमिव पावकम्।। 5.1.28.९० ।।
स तेजो जातमात्रोऽपि देवानामाक्षिपच्छिशुः ।।
ततः संशयमापन्ना ऊचुस्तारां दिवौकसः ।। ९१ ।।
कस्यायं ब्रूहि सुभगे सोमस्याथ बृहस्पतेः ।।
नाचचक्षे तु देवानां वेधाः पप्रच्छ तां पुनः ।। ९२ ।।
यदत्र सत्यं तद्ब्रूहि तारे कस्य सुतो ह्ययम् ।।
सा प्रांजलिरुवाचेदं ब्रह्माणं वरदं विभुम् ।। ९३ ।।
सोमस्येति रहः सोऽयं कुमारो देवसंनिभः ।।
सोमस्य तं सुतं ज्ञात्वा परिष्वज्य पितामहः ।। ९४ ।।
बुध इत्यकरोन्नाम तस्य पुत्रस्य वै तदा ।।
परदारापहाराच्च यत्पापं तेन दुःसहम् ।। ९५ ।।
तेन सोमोऽभवत्कुष्ठी क्षयरोगयुतस्तदा ।।
ततो राज्ये स्वकं पुत्रं स्थापयित्वा यथाविधि ।। ९६ ।।
अवन्तीमाजगामाशु सोमो देवदिदृक्षया ।।
सोमाहे सोमवत्यां च अमायोगे जितेंद्रियः ।। ९७ ।।
स्नात्वा संपूजयामास सोमः सोमेश्वरं ततः ।।
तस्य भक्त्या च सन्तुष्टः प्राह सोमं महे श्वरः ।। ९८ ।।
मत्प्रसादाद्वपुः कांतं तव सोम भविष्यति ।।
सोमेश्वरमिति ख्यातं भुक्तिप्रदायकम् ।। ९९ ।।
एवं व्यास तु तत्तीर्थं लिंगं चैवाति दुर्लभम् ।।
कथितं तथ्यभावेन मया तुष्टेन सांप्रतम् ।। 5.1.28.१०० ।।
श्रावणं प्राप्य यो मासं सोमनाथं जितेंद्रियः ।।
नित्यं पश्येन्नरो व्यास तस्य पुण्यफलं शृणु ।। १०१ ।।
सौराष्ट्रे सोमनाथस्य पूजायाः प्रत्यहं फलम् ।।

लभते स नरो व्यास नात्र कार्या विचारणा ।। १०२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये सोमवतीतीर्थमाहात्म्यवर्णनंनामाष्टाविंशो ऽध्यायः ।। २८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः २९

https://sa.wikisource.org/s/fj1
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
तीर्थस्याऽनरकस्यास्य माहात्म्यं शृणु सांप्रतम् ।।
तीर्थे चानरके स्नात्वा दृष्ट्वा देवं महेश्वरम् ।।
न पश्येन्नरकं क्वापि यद्यपि ब्रह्महा भवेत् ।। १ ।।
।। व्यास उवाच ।। ।।
कियंतो नरकास्तात कस्मिन्स्थाने प्रतिष्ठिताः।।
पतन्ति केन पापेन पापिनस्तेषु दुःखिताः ।। २ ।।
तत्कथं प्राणिनस्तत्र गच्छन्ति पापकारिणः ।।
एतत्सर्वं समाख्याहि यदि तुष्टोऽसि मे प्रभो ।। ३ ।। ।।
।। सनत्कुमार उवाच ।। ।।
शृणुष्व नरकान्व्यास तावन्तो यत्र संस्थिताः ।।
न लभ्यंते यथा चैते सत्यमेतद्वदामि ते ।। ४ ।।
पातालनि लयाः सर्वे विख्याता दुःखदाः सदा ।।
पुण्यप्लावेन ते सर्वे तिर्यग्यांति स्वकर्मभिः ।। ५ ।।
रौरवः सूकरो रौद्रस्तालो विनशकस्तथा ।।
तप्तकुम्भस्तु तप्तायो महाज्वालस्तथैव च ।। ६ ।।
कुंभीपाकः क्रकचनस्तथा देवातिदारुणः ।।
कृमिभुक्तिश्च रक्ताख्यो लालाभक्षश्च गंडकः ।। ७ ।।
अधोमुखश्चास्थिभंगो यंत्रपीडनकस्तथा ।।
संदंशो रुधिरांगश्च श्वभोज्यश्च कुभोजनः ।। ८ ।।
इत्येवमादयः सर्वे नरका भृशदारुणाः ।।
यमस्य विषये संति स्तुता हि भयदायिनः ।।९।।
पतंति पुरुषास्तेषु पापकर्मरताश्च ये ।।
पतिताश्च प्रपच्यंते नराः कर्मानुरूपतः ।।5.1.29.१०।।
यातनाभिर्विचित्राभी रौद्रकर्म क्षयाद्भृशम् ।।
सुगाढं हस्तयोर्बद्धास्तप्तशृंखलया नराः ।। ११ ।।

महावृक्षाग्रशृंगेषु लंब्यंते यमकिंकरैः ।।
शोचंतः स्वानि कर्माणि तूष्णीं तिष्ठंति निश्चलाः ।। १२ ।।
अग्निवर्णैः शंकुभिश्च लोहदंडैः सकंटकैः।।
हन्यंते किंकरैर्घोरैः समंतात्पापकारिणः ।। १३ ।।
तत्तत्क्षणात्प्रदीप्तेन वह्निना च विशेषतः ।।
समंततः प्रक्षिप्यंते कृत्ताश्च जर्जरीकृताः ।। १४ ।।
कूटसाक्षी तथाऽसम्यक्पक्षपातेन यो वदेत् ।।
यश्चान्यदनृतं ब्रूयात्स नरो याति रौरवम् ।। १५ ।।
सुरापो ब्रह्महा हर्ता सुवर्णस्य च सूचकः ।।
प्रयांति नरकांश्चैव तैः संसर्गमुपैति यः ।। १६ ।।
भ्रूणहा गुरुहंता च गोघ्नश्च मुनिसत्तम ।।
यांत्येते नरकं रौद्रं ये च विश्वासघातकाः ।। १७ ।।
तप्तलोष्ठेषु पच्यंते यस्तु भक्तं परित्यजेत् ।।
स्नुषां सुतां च यो गच्छेन्महा ज्वाले स पात्यते ।। १८ ।।
कुंभीपाके प्रयात्येव पादैरूर्ध्वैरधोमुखः ।।
करोति कर्म वै नित्यं यश्च गां प्रतिषेधयेत् ।। १९ ।।
स्वामिद्रोही च यो रौद्रस्तप्तकुंभे स पात्यते ।।
देवदूषयिता यश्च वेदविक्रयिकस्तथा ।। 5.1.29.२० ।।
परस्त्रीगामिनो ये च यांति क्रकचने तु ते ।।
चौरोऽतिदारुणे याति मर्यादाभेदकस्तथा ।। २१ ।।
देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ।।
स याति कृमिभक्षे वै रक्ताख्ये च पतंति ते ।। २२ ।।
पितृदेवगुरूणां च सपर्यां न करोति यः ।।
लालाभक्षे स यात्युग्रे कूटकर्म करोति यः ।। २३ ।।
अंत्यजेभ्यो ग्रहीता च नरके यात्यधोमुखे ।।
अस्थिभंगे प्रयात्येव एको मिष्टान्नभुङ्नरः ।। २४ ।।
कृतघ्नः पिशुनः क्रूरः कूटमानी विडंबकः ।।
यंत्रपीडनके याति परगुह्यप्रकाशकः ।। २५ ।।
लाक्षामांसरसानां च तिलानां रसकस्य च ।।
विक्रयी ब्राह्मणो याति श्वदंशे नात्र संशयः ।। २६ ।।
मधुहा ग्रामहंता च याति वैतरणीं नरः ।।
वर्णाश्रमविरुद्धं च कर्म कुर्वंति ये नराः ।। २७ ।।

कर्मणा मनसा वाचा महानद्यां प्रयांति ते ।।
गुरूणामवमंता च शास्त्रदूषयिता च यः ।। २८ ।।
असिपत्रे प्रयात्येव तथा पर्वविलंघकः ।।
धनयौवनमत्ता ये मर्यादाभेदिनो नराः ।। २९ ।।
ते यांति नरके घोरे कृष्णसूत्रेऽतिदारुणे ।।
असंस्कृतश्च यो विप्रो वृषलीं सेवते तु वै ।। 5.1.29.३० ।।
वृषलीमिथुनो यश्च पततस्तावुभावपि ।।
उच्छिष्टा ये स्पृशंतीह गावोऽग्निं जननीं द्विजान् ।। ३१ ।।
ते पच्यंते कुभोज्ये च मित्र द्वेषी विशेषतः ।।
पंक्तिभेदे दिवास्वप्ने ये नरोऽब्रह्मचारिणः ।। ३२ ।।
पुत्रैरध्यापिता ये तै ते पतंति श्वभोजने ।।
एते चान्ये च नरकाः शतशोऽ थ सहस्रशः ।। ३३ ।।
तत्र दुष्कृतकर्माणः पच्यंते यातनागताः ।।
नृणां स्वर्गाश्च यावंतस्तावंतो निरयास्तथा ।। ३४ ।।
पापं कृत्वा तु बहुलं प्रायश्चित्तपराङ्मुखाः ।।
कृते पापे च वै तापो यस्य पुंसः प्रजायते ।। ३५ ।।
प्रायश्चित्तं तु तस्यैकं शिवसंस्मरणं परम् ।।
तस्मादहर्निशं शंभुं संस्मरन्पुरुषोत्तमः ।। ३६ ।।
न याति नरकं शुद्धः संक्षीणाखिलपातकः ।।
कार्तिकस्यासिते पक्षे कृष्णा या च चतुर्दशी ।।
तस्यां दीपः प्रदातव्यो देवदेवस्य चाग्रतः ।। ३७ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये नरकऽकथनं नामैकोनत्रिंशोऽध्यायः ।। २९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३०

https://sa.wikisource.org/s/fiw
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। व्यास उवाच ।। ।।
दीपेऽस्मिन्यत्फलं चास्ति विधिना येन दीयते ।।
तत्सर्वं ब्रूहि मे तात दीपोत्पत्तिं च शोभनाम् ।। १ ।।
।। सनत्कुमार उवाच ।। ।।
पुरा कृतयुगे व्यास पार्वतीं शंकरोऽग्रतः ।।
अभिप्रयाचितुं यातस्तयापि सोऽभियाचितः ।। २ ।।
।। पार्वत्युवाच ।। ।।
शरीरे कृष्णता शंभो ममास्ति रूपहारिणी ।।
तस्माद्याचे भृशं शंभो प्रसीद दिव्य लोचन ।। ३ ।।
भवेन वर्णिता सा वै अतीव शोभना मम ।।
लोचने पक्ष्ममालायाः शोभसेऽतितरां सदा ।। ४ ।।
सिताब्जसंस्थितो भृंगो यथा शोभयते च तम् ।।
तया तथा याचितोसौ धूर्जटिर्वृषभासनः ।। ५ ।।
विरूपरूपकर्तासि न शृणोषि वचो यदा ।।
तदा त्वहं सवै राग्या चरेयं दुष्करं तपः ।। ६ ।।
भवस्तयेति चोक्तस्तु तस्या वै पाणिमग्रहीत् ।।
कदाचिच्छंकरो देवो रतिं याचितवान्प्रियाम् ।। ७ ।।
रतिं दत्तवती सा तु जहास नाम कीर्तयन् ।।
सुदुःखिताऽभवत्सा तु पराङ्मुखी विहाय तम् ।। ८ ।।
उवाच रोषसंयुक्ता संस्मृत्य देवभाषितम् ।।
तपोवनं व्रजाम्यद्य सुगौरत्वोपलब्धये ।। ९ ।।
सुवर्णरूपरूपा च यदा पुनर्भवामि च ।।
तदा तव सानुरागा भवामि चैव नान्यथा ।। 5.1.30.१० ।।
इतीदमेव जल्पंती जगाम विंध्यपर्वतम् ।।
हरः शुशोच ततस्तां क्व गता सा विहाय माम् ।। ११ ।।
स्मरंस्तदेव चेष्टितं तदेव पूर्वभाषितम् ।।

तदैव मे वृथा मतिर्मुदा यदा न मानिता ।। १२ ।।
यतो मया हिमाद्रिजा समस्तलोकसुन्दरी ।।
पुरैव नाभिनंदिता गता विहाय मामिति ।। १३ ।।
इतीदमेव सोऽवदद्गतस्त्वद्दर्शनं ततः ।।
प्रियावियोगमीदृशं गुरुं न सोढुमुत्सहे ।। १४ ।।
ततो जगद्धि संकुलं महाभयेन संयुतम् ।।
सुरासुरा महर्षयः परं विषादमभ्यगुः ।। १५ ।।
विहाय मंदिराणि ते परं विषादमागताः ।।
हरस्तुतिं परां च ते प्रचक्रुरद्भुतोपमाः ।। १६ ।।
।। सनत्कुमार उवाच ।। ।।
न दृश्यते यदा देवो रुद्रो बालेंदुशेखरः ।।
नष्टालोकं जगत्सर्वं कांतारमभवत्तदा ।। १७ ।।
त्रीणि नेत्राणि रुद्रस्य यतः सूर्येंदुव ह्नयः ।।
गते रुद्रे न ते भांति जगत्यस्मिंश्चराचरे ।। १८ ।।
ततस्तमसि दुस्तारे संभूते लोमहर्षणे ।।
अन्योन्यं हि न पश्यंति सुरासुरास्तमोवृताः ।। ।। १९ ।।
एषा बुद्धिस्ततस्तेषामुत्पन्ना कार्यसिद्धये ।।
यया बुद्ध्या जगन्नाथो ज्ञायते पार्वतीपतिः ।। 5.1.30.२० ।।
न ह्यालोको विना तेन शशिसूर्याग्निच क्षुषा ।।
परस्परं ब्रुवंति स्म दुःखितास्ते विसंज्ञया ।। २१ ।।
हे देव हे मुने सिद्धे हे ऋषे हे निशाचर ।।
हे दैत्य हे दनुश्रेष्ठ हे मनुष्यनिदेशक ।। ।। २२ ।।
गतोऽसि कां दिशं तात को वा लब्धस्त्वया विभो ।।
क्वचिद्विश्रामभूमिस्ते क्वचिदालंबनेऽपि वा ।। २३ ।।
पाथेयमस्ति किंचित्ते दिशि किं वाथ कुत्रचित् ।।
प्रकाशं वाहनं छत्रमशनं शयनं गृहम् ।। २४ ।।
क्वचिद्वासि कथं तोयमथवा चित्तनिर्वृतिः ।।
बन्धुः पुत्रोऽसि वा तात वृक्ष च्छाया सुशीतला ।। २५ ।।
एवं प्रकारं करुणं समाभाष्य परस्परम् ।।
भूयश्चिन्तापराः सर्वे देवाश्चेंद्रपुरोगमाः ।। २६ ।।
भूमेर्विवरमाश्रित्य प्राणिनो ये वसंत्यपि ।।
रसातले च दैतेयाः संस्थिताः पन्नगाश्च ये ।। २७ ।।

न तेषां विद्यते सूर्यो नेन्दुर्नान्ये महाग्रहाः ।।
नाग्निर्देवमुखं विद्युन्नैव तारकको टयः ।। २८ ।।
केनालोकेन पश्यंति समानि विषमाणि च ।।
नरकस्था नरा लोके न पश्यंत्यन्यलोकगाः ।। २९ ।।
विचरन्तः समं को वा मनो रथशतप्रदः ।।
तृष्णांभः क्षुधितान्नं च श्रांतानामथ वाहनम् ।। 5.1.30.३० ।।
समे शय्या जले नौश्च रोगे सत्परिचारकः ।।
श्रेष्ठौषधीभिः सन्मंत्रैः संपदो व्याधिसंकटे ।। ३१ ।।
सुहृद्विदेशे च्छायोष्णे निर्धूमः शिशिरे शिखी ।।
महाभये परित्राणं प्रकाशश्च महानिशि ।। ३२ ।।
सर्वदश्चैव सर्वेषां मनोरथशतप्रदः ।।
एक एव भवान्द्योतस्त्वां च जानीमहे वयम् ।। ३३ ।।
ब्रुवंत इति ते व्यास शुश्रुवुर्मधुरां गिरम् ।।
श्रुतपूर्वां तमोमध्याद्विष्णोर तुलकर्मणः ।। ३४ ।।
न जानंति स्थितः कुत्र भाषते केशवो विभुः ।।
शृणुध्वमिति मे वाक्यं सर्वे चैव समाहिताः ।। ३५ ।।
दानमेकं सदा सम्य क्चिंतामणिसमं स्मृतम् ।।
सर्वेषामेव दानानां दीपदानं प्रशस्यते ।। ३६ ।।
तच्च देयमतः सर्वैः शृणुध्वं तत्त्वतो भृशम् ।।
मया रसातले पूर्वं नागा नामनुकंपया ।। ३७ ।।
उत्पादितो दीपवरो येन ध्वस्तमिदं तमः ।।
एवंभूतस्तु वायूनामप्रधृष्यो महाप्रभः ।।३८।।
निष्कंपो निर्मलो हृद्यः सुस्थिरो भास्करप्रभः ।।
नात्युष्णो नातिशीतश्च देव्या योगसमुद्भवः ।।
तेन दीपप्रकाशेन गोकर्णो निर्वृतिं ययौ ।। ३९ ।।
नागाः शेषादयः सर्वे नोद्यमानाश्च संघशः ।।
दीपाद्दीपसहस्राणि ददुस्ते वै शिवाग्रतः ।। 5.1.30.४० ।।
पर्वतेषु समुद्रेषु वनेषूपवनेषु च ।।
नदीतीरेषु सर्वत्र दीपान्प्रज्वाल्य रेमिरे ।। ४१ ।।
भुंजानाः पञ्च मूलानि दिव्यानि क्षीरसंयुतम् ।।
परमान्नं च मांसानि मकरंदं घृतौदनम् ।। ४२ ।।
चन्द्रशालिभवं भक्तं तांबूलं सप्तधा गतम् ।।

मद्यमष्टप्रकारं तु भार्यापीतावशेषकम्।। ४३ ।।
शयनेषु महार्हेषु हृद्यासु वनराजिषु ।।
वृक्षमूलेषु सर्वेषु वनच्छायोपशोभिषु ।। ४४ ।।
रमन्ते स्म च ते सर्वे ह्युद्वेष्टंतः परस्परम् ।।
कामतन्त्रोपदिष्टैस्तु शास्त्रैश्च चुंबनादिभिः ।। ४५ ।।
सूर्यतापभयान्मुक्ताश्चंद्ररश्मिभयाच्च ते ।।
विमुक्ताश्च भयाद्घोरात्पिपीलिकोद्भवात्तथा ।। ४६ ।।
सूर्यतापेन दाहः स्याच्छीतं चंद्रमरीचिभिः ।।
मयूरनकुलाद्यैश्च पिपीलीमरणाद्भयम् ।। ४७ ।।
सौवर्णान्दीपका न्कृत्वा द्विजेभ्यस्ते ददुः पुनः ।।
तेन पातालमाश्रित्य कृत्वा भोगवतीं पुरीम् ।। ४८ ।।
वसंति सुखिनस्तत्र स्वर्गादष्टगुणैः सुखैः ।।
एवमंधं तमो देवाः पातालाद्दीपतो गतम् ।। ४९ ।।
एतद्गुह्यं मया ख्यातं भवतां चानुकम्पया ।।
दीपदानमतोयूयं कुरुध्वं सुसमाहिताः ।। 5.1.30.५० ।।
दीपाग्निना विना नैव तमोदारु प्रदह्यते ।।
नारायणपरा देवा निशम्याथ समाहिताः ।। ५१ ।।
पप्रच्छुस्ते पुनः सर्वे हृष्टा दामोदरं विभुम् ।।
ब्रूहि नोग्निं जगन्नाथ स दीपो येन जायते ।। ५२ ।।
घोरे तमसि वै मग्ना नाग्निं जानीमहे वयम् ।।
देवानां मानसो वह्निरथ कृष्णेन कीर्तितः ।। ५३ ।।
तेन दीपं प्रतिज्वाल्य देवाः शिवपरायणाः ।।
ददुस्ते शिवमुद्दिश्य सर्वाभीष्टफलप्रदम् ।। ५४ ।।
दत्ते दीपे ततो देवैर्दृष्टो हृष्टो महेश्वरः ।।
तिमिरं तद्गतं चापि जगद्येन जडीकृतम् ।। ५५ ।।
ततो देवाः सुखं प्रापुः स्वर्गे सेन्द्रपुरोगमाः ।।
राज्यं भोगान्वितं प्राप्य सार्धं स्त्रीभिश्च रेमिरे ।। ५६ ।।
दीपदानफलं ज्ञात्वा दैतेयाश्चापि विस्मिताः ।।
तथैव तत्फलं ज्ञात्वा व्यास यक्षाश्च विस्मिताः ।। ५७ ।।
पूजयित्वा महादेवं पुष्पैश्च निर्मलैर्जलैः ।।
ददुर्दीप सहस्राणि सर्वे शिवपरायणाः ।। ५८ ।।
स्वस्थाने चाभवन्सर्वे दीपदानाच्च शोभनाः ।।

स्वेच्छया भुंजते भोगान्बन्धुभृत्यादिसंयुताः ।। ५९ ।।
निराहारास्ततो व्यास पिशाचा वै निराश्रयाः ।।
दीपदानफलं ज्ञात्वा सर्वे तेऽतीव विस्मिताः ।। 5.1.30.६० ।।
चंडालादग्निमानीय ददुर्दीपं शिवे रताः ।। ।
दीपदानफलं ते वै पुत्रदारसमन्विताः ।। ६१ ।।
लीढमन्नं गतरसं पूति पर्युषितं तथा ।।
उच्छिष्टं सूतिकास्पृष्टं न मेध्यं चातिलंघितम् ।। ६२ ।।
भुंजानास्ते सदा हृष्टा रमंते दुष्टभूमिषु ।।
विद्याधरास्तथा मर्त्याः सिद्धाश्च शिवमानसाः ।। ६३ ।।
दीपदानफलं ज्ञात्वा ददुर्दीपं शिवाग्रतः ।।
दीपदानात्ततः सर्वे सर्वभोगसमन्विताः ।। ६४ ।।
स्थानेषु मुदितास्तेषु रमंते सुखिनस्तदा ।।
तिमिरं तद्गतं चैव व्यास लोकेषु दीपतः ।। ६५ ।।
ततो घोरं स्थितं सम्यक्प्रेतलोकेषु सर्वदा ।।
प्रेतलोकं तदा दृष्ट्वा घोरेण तमसा वृताः ।। ६६ ।।
दामोदरं जगन्नाथमूचुः सर्वे सुरोत्तमाः ।।
घोरं चैव तमो हत्वा प्रसन्नास्ते सदा विभो ।। ६७ ।।
गंधर्वाश्च तथा यक्षाः सिद्धा विद्याधरोरगाः ।।
वयं चैव तथा मर्त्याः सर्वभोगैश्च संयुताः ।। ।। ६८ ।।
स्थानेषु च सदा ह्येषु सुखिनश्च रमामहे ।।
प्रेतलोके नरा ये वै घोरेण तमसा वृताः ।। ६९ ।।
वसंति च जगन्नाथ वर्तंते तेऽतिदुःखिताः ।।
यैर्नो कृतं हि तत्कर्म कृष्णालं पापमोहितैः ।। 5.1.30.७० ।।
न तेषां विद्यते किंचिद्यत्प्रकाशं करोति च ।।
घोरे तमसि ते मग्नास्तत्र नार्केन्दुवह्नयः ।। ७१ ।।
न सहायो न जायेयं नालंबो न च देशिकाः ।।
न वाहनं न शय्या च केवलं तु महत्तमः ।। ७२ ।।
तत्राष्टाविंशतिः ख्याता घोरा नरककोटयः ।।
तमोमयाश्च ताः सर्वाः पापिनां भयदाः सदा ।। ७३ ।।
सुखं तत्र कथं कृष्ण लभंते दुःखिता नराः ।।
दारिद्र्यदुःखरोगैश्च मायामोहैश्च सर्वदा ।। ७४ ।।
।। सनत्कुमार उवाच ।। ।।

इति श्रुत्वा तु देवानां प्रार्थनां गरुड ध्वजः ।।
उवाच वचनं हृद्यं मनोरथफलप्रदम् ।।७५।।
शृणुध्वं त्रिदशाः सर्वे यत्प्रवक्ष्यामि वो वचः।।७६।।
अवंत्यां वर्तते तीर्थं सद्यः पापहरं परम् ।।
अनरकाख्यं महापुण्यं सर्वतीर्थोत्तमोत्तमम् ।। ७७ ।।
कार्तिकस्यासिते पक्षे चतुर्दश्यां समाहितः ।।
तत्र स्नात्वा नरो यस्तु यमध्यानपरायणः ।। ७८ ।।
संगृह्य वै तिलान्कृष्णान्पितृभक्तो जितेंद्रियः ।।
दक्षिणाभिमुखो भूत्वा मध्याह्ने सुरसत्तमाः ।। ७९ ।।
अपसव्यं तथा कृत्वा मंत्रैः संतर्प येद्यमम् ।।
यमाय धर्मराजाय मृत्यवे चांतकाय च ।। 5.1.30.८० ।।
वैवस्वताय कालाय दक्षाय मनवे तथा ।।
कृष्णाय कृष्णगुप्ताय प्रेतलोकपराय च ।। ८१ ।।
हरये रविपुत्राय कालिंदीसोदराय च ।।
तथा वै श्राद्धदेवाय पितृणां पतये तथा ।। ८२ ।।
मंत्रैरेभिर्नमःप्रोक्तैरोंकाराद्यैः सुशोभनैः ।।
जलांजलिं सदर्भं वै दद्याच्च तिलसंयुतम् ।। ८३ ।।
संतर्पयेद्यमं देवं तिलपात्रं समाहितः ।।
प्राज्ञो विप्राय वै दद्याद्वित्तशाठ्यविवर्जितः ।। ८४ ।।
अनेन विधिना यस्तु संतर्पयेद्यमं विभुम् ।।
पितरस्तस्य मुच्यंते निरये ये गता अपि ।। ८५ ।।
रात्रिं तत्राथ संप्राप्य मानवः कामसंयुतः ।।
नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे ।। ८६ ।।
नमः सूर्याय रुद्राय कालांतपतये नमः ।।
एभिर्मंत्रैर्यमे दीपं यो दद्याद्घृतपूरितम् ।। ८७ ।।
कार्तिकं हि समग्रं तु वर्धंते तस्य संपदः ।।
संपूर्णे कार्तिके चैव दीपोद्यापनमाचरेत् ।। ८८ ।।
दिवाकराह्नेऽस्तमिते च सूर्ये दीपस्य वर्त्तिं पुरुष प्रमाणाम् ।।
यूपाकृतौ दारुमये करोति यया च धीमान्यमभक्तिचित्तः ।।८९।।
निक्षिप्य भूमावथ हस्तमात्रं मूर्ध्नि द्विहस्ताष्टदलान्वितस्य ।।
धार्याश्चतस्रः शुभपट्टिकाश्च च्छिद्रेण युक्ताश्चतुरंगुलेन ।। 5.1.30.९० ।।
तत्कर्णिकायां तु महाप्रकाशो देयो हि दीपः परया च भक्त्या ।।

उदङ्मुखान्दीपवरांस्त थाष्टौ दलेषु तस्या घृतपूर्यमाणाः ।। ९१ ।।
अनंगलग्नं धवलं च वस्त्रं नवं सुरक्तं ह्यथवा सुशुक्लम् ।।
वर्त्यां प्रदेयं च स्वके च दद्यात्स्निग्धे त्वखण्डे सुसमे प्रशस्ते ।। ९२ ।।
तच्छालिपिष्टोपरि संनिधाय यथा न निर्याति न कंपते च ।।
सर्वं प्रकुर्यात्त्रिगुणप्रमाणं मध्यस्थितस्तस्य च दीपराजः ।। ९३ ।।
दलेषु शोभार्थमतीव कुर्यान्मनोरथप्रत्युपलब्धये च ।।
घंटाष्टकं लंबितपुष्पदाम सवस्त्रशोभान्वितमंत्र कार्यम् ।। ९४ ।।
संलिप्य भूमिं त्वथ गोमयेन पुनः सुगंधेन जलेन लिप्त्वा ।।
कुर्याद्विचित्रं त्वथ मंडले च दलाष्टकं वै कमलं च रम्यम् ।। ९५ ।।
ततो जलं शीतलमानयित्वा आपूर्य चाष्टौ कलशांस्तु रम्यान् ।।
निधाय मूर्ध्नि क्रमशो हि धीमान्फलानि मूलानि तथेक्षुकानि ।। ९६ ।।
मध्वाज्ययुक्ता दधिदुग्धपूर्णा नैर्ऋत्यकोणादथ दक्षिणांतम् ।।
धर्माय दद्यादथ शंकराय दामोदरायाप्यथ वेधसे च ।।९७।।
प्रजापतिभ्यः क्रमशो हि भक्त्या प्रेतेभ्य इंद्राय तथा पितृभ्यः ।।
होमादिपात्रं तिलचूर्णमेव दद्याद्द्विजानां च सदक्षिणं च ।। ९८ ।।
गावो हिरण्यं रजतं च वस्त्रं फलानि मूलानि यवाश्च धान्यम्।।
गृहं रथं कुंजरमश्वमेव मनोज्ञमन्यं हृदयप्रियं यत् ।। ९९ ।।
विद्याधिकेभ्यो द्विजसत्तमेभ्यः पौराणिकेभ्यश्च तथा द्विजेभ्यः ।।
एकैकसु प्रीणनमत्र कुर्याद्दीपैर्दलस्थैश्च यमादिकानाम् ।। 5.1.30.१०० ।।
धर्माय देयस्त्वथ मध्यदीप आज्ञां च लब्ध्वा व्रतदेशिकस्य ।।
नृत्येन गीतेन सुशोभने न युक्तं सुवाद्येन च कारयेच्च ।। १ ।।
एतत्समग्रं विधिवच्च कुर्यात्सशक्तिमादौ स्वधनं समीक्ष्य ।।
आहूय विप्राञ्छुभभावयुक्तान्वदेच्च धीमान्परया च भक्त्या ।। २ ।।
दीपान्समग्रान्नव वर्जयित्वा सर्वं नयेयुः स्थितमत्र विप्राः ।।
प्रदक्षिणीकृत्य विसृज्य विप्रांस्ततो भवद्वै स च नक्तभोजी ।। ३ ।।
एवं कृते नागलोकाद्विशिष्टं सुखं भवेत्प्रेतलोकेस्थितानाम् ।। ४ ।।
एवं ह्यनरके व्यास दीपदानं करोति यः ।।
तस्यैव यत्फलं प्रोक्तं तदिहैकमनाः शृणु ।। ५ ।।
विमानैः कामिकैर्दिव्यैरप्सरोगणसेवितैः ।।
उह्यमानो दिवं याति यावच्चंद्रदिवाकरौ ।। १०६ ।।

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽनरकेश्वरदीपदानमाहात्म्यवर्णनंनाम त्रिंशोऽध्यायः ।। ३० ।। ।। छ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३१



।। सनत्कुमार उवाच ।। ।।
अथान्यत्संप्रवक्ष्यामि केदारेश्वरमुत्तमम् ।।
प्रवरं सर्वतीर्थानां त्रिषु लोकेषु विश्रुतम् ।। १ ।।
तत्र स्नात्वा शुचिर्भूत्वा यः पश्यति महेश्वरम् ।।
केदारे यत्फलं प्रोक्तं तदत्रापि लभेन्नरः ।। २ ।।
सर्वपापविनिर्मुक्तः स्वकीयकुलसंयुतः ।।
विमानेनार्कवर्णेन शिव लोके स मोदते ।। ३ ।।
जटाशृंगे नरः स्नात्वा शुचिर्भूत्वा जितेंद्रियः ।।
दृष्ट्वा जटेश्वरं देवं ततः पापाद्विमुच्यते ।। ४ ।।
महातपनमादौ च कृत्वा गच्छेच्छिवं प्रति ।।
मातृकं पितृकं चैव कुलानां तारयेच्छतम् ।। ५ ।।
इंद्रतीर्थे नरः स्नात्वा दृष्ट्वा चेंद्रेश्वरं शिवम् ।।
विमुक्तः सर्वपापेभ्यः शक्रलोके महीयते ।। ६ ।।
कुंडेश्वरं तु यः पश्येच्छिवध्यानपरायणः ।।
लभते स नरो व्यास शिवदीक्षाफलं शिवम् ।। ७ ।।
गोपतीर्थे नरः स्नात्वा दृष्ट्वा गोपेश्वरं शिवम् ।।
शिवलोकं नरो याति ह्यमृतादमरो यथा ।। ८ ।।
स्नात्वा तु चिपिटातीर्थे शिवं देवं प्रणम्य च ।।
तिर्यग्योनिं नरो नैव प्रयाति मुनिपुंगव ।। ९ ।।
विजये च नरः स्नात्वा आनंदेश्वरपूजनात् ।।
विमुक्तः सर्वपापेभ्यः स्वर्लोके विजयी भवेत् ।। 5.1.31.१० ।।
अथान्यं संप्रवक्ष्यामि कुशस्थल्यां विनिर्मितम् ।।
देवं रामेश्वरं व्यास भुक्तिमुक्तिप्रदायकम् ।। ११ ।।
चित्रकूटात्पुरा रामो मैथिल्या लक्ष्मणेन च ।।
समन्वितः समागत्य पप्रच्छ मुनिसत्तमम् ।। १२ ।।
।। राम उवाच ।। ।।

कानि तीर्थानि पुण्यानि किं वा क्षेत्रं महामुने ।।
यत्र गत्वा न चाप्नोति वियोगं सह बांधवैः ।। १३ ।।
अनेन वनवासेन मरणेन पितुः प्रभो ।।
भरतस्य वियोगेन प्रतप्येऽहं त्रिभिर्मुने ।। १४ ।।
तद्वाक्यं राघवेणोक्तं श्रुत्वा विप्रर्षभस्तदा ।।
ध्यात्वा तु सुचिरं कालमिदं वचनमब्रवीत् ।। १५ ।।
साधु पृष्टं त्वया वीर रघूणां वंशवर्धन ।।
मम पित्रा कृतं क्षेत्रं प्रयाच्य शिवमादरात ।। १६ ।।
अवंतीविषये राम पुरी तस्मिन्कुशस्थली ।।
उज्जयिनीति वै नाम्ना ख्यातिं लोके गता विभो ।। १७ ।।
तस्यां गत्वा दशरथं पिंडदानेन तर्पय ।।
सुरासुरगुरुस्तत्र महाकालो व्यवस्थितः ।। १६ ।।
देवः स वै सदा राजन्वांछितार्थफलप्रदः ।।
दृष्टे तस्मिञ्जगन्नाथे वियोगो नैव जायते ।। १९ ।।
तत्र गच्छंति ये विप्रा राजा चैव महावलः ।।
लभंते परमं स्थानं यत्र देवो महेश्वरः ।। 5.1.31.२० ।।
तीर्थानामपि तत्तीर्थं प्रविष्टोऽवंतिमंडले ।।
आजगाम ततोवंतीं सा शिप्रा यत्र पुण्यदा ।। २१ ।।
तस्यां स्नात्वा ततो रामस्तर्पयामास पूर्वजान् ।।
महाकालं यदा द्रष्टुं प्रतस्थे रघुनंदनः।।२२।।
वाण्या ततोऽशरीरिण्या देवदेवेन भाषितम् ।।
भो भो राघव भद्रं ते स्वनाम्ना स्थापयस्व माम् ।।२३।।
अत्र स्थानं मया दत्त मा विचारय राघव ।।
ततो हृष्टमना रामो लक्ष्मणं वाक्यमब्रवीत् ।। २४ ।।
अनुगृहीताः सौमित्रे देवदेवेन शंभुना ।।
तस्मात्स्थापय तीर्थेऽस्मिँल्लिंगं रामेश्वरं शुभम्।। २५ ।।
वाक्यं तल्लक्ष्मणः श्रुत्वा स्थापयामास शंकरम् ।।
दृष्ट्वा देवं पुरा रामो लक्ष्मणं वाक्यमब्रवीत् ।। २६ ।।
एहि लक्ष्मण शीघ्रं त्वं शिप्राया जलमानय ।।
करिष्यामि यतोऽत्राहं देवस्य स्नपनं शुभम् ।। २७ ।।
लक्ष्मणस्त्वब्रवीद्वाक्यं सीतया किं करिष्यसि ।।
राम नाहं सर्वकालं दासभावं करोमि ते ।। २८ ।।

इयं च पुष्टा सुदृढा पीवरा च ममाग्रतः ।।
वद राघव सत्येन अनया किं करिष्यसि ।। २९ ।।
श्रुत्वा रामो हि तद्वाक्यं लक्ष्मणेन प्रभाषितम्।।
विमना राघवस्तस्थौ सीता चापि वरानना ।। 5.1.31.३० ।।
यदुक्तं लक्ष्मणेनाथ तच्च सीता चकार ह ।।
स्नात्वा भुक्त्वा च तौ वीरौ महाकालमुपागतौ ।। ३१ ।।
नीत्वा विभावरीं तत्र गमनाय मनो दधे ।।
उत्तिष्ठ वत्स सौमित्रे व्रजामो दक्षिणां दिशम्।। ।। ३२ ।।
सौमित्रिरब्रवीद्वाक्यं नाहं गन्ता कथंचन ।।
व्रज त्वमनया सार्धं भार्यया कमलेक्षण ।। ३३ ।।
नाहमग्रे वनं यामि न वायोध्यां कथं चन ।।
एवं ब्रुवाणं सौमित्रिमुवाच रघुनंदनः ।। ३४ ।।
कथं पूर्वमूयोध्याया निर्गतोऽसि मया सह ।।
वने वसाम्यहं राम नव वर्षाणि पंच च ।। ३५ ।।
प्रमादः क्रियतां मह्यं नय मामपि राघव ।।
इदानीं त्वमर्धपथे कथं स्थातासि शत्रुहन् ।। ३६ ।।
लक्ष्मणस्त्वब्रवीद्राम नाहं गन्ता वनं पुनः ।।
लक्ष्मणं विकृतं ज्ञात्वा रामो वचनमब्रवीत् ।। ३७ ।।
मा माऽनुव्रज सौमित्रे ह्येको यास्यामि काननम् ।।
द्वितीयापि त्वियं सीता उक्तो रामेण लक्ष्मणः ।। ३८ ।।
धनुः संगृह्य विमना उत्तस्थौ लक्ष्मणस्तदा ।।
प्राप्तौ प्राकारमर्यादां क्षेत्रसीमां परंतपौ ।। ।।
क्षेत्रसीमां समुल्लंघ्य रामो लक्ष्मणमब्रवीत् ।। 5.1.31.४० ।।
निवर्तयस्व सौमित्रे समर्पय च मे धनुः ।।
रामवाक्यमुपश्रुत्य सीतां वै लक्ष्मणोऽब्रवीत् ।। ४१ ।।
किमर्थं हि परित्यक्तः कोऽपराधः कृतो मया ।।
रामेण हि परित्यक्तः प्राणांस्त्यक्ष्याम्यसंशयम् ।। ४२ ।।
रामं ततोऽब्रवीत्सीता किमर्थं लक्ष्मणस्त्वया ।।
देव संत्यज्यते वीरः सुमित्रानंदिवर्धनः ।। ४३ ।।
राघवस्त्वब्रवीत्सीतां नाहं त्यक्ष्यामि लक्ष्मणम् ।।
न कदाचिदपि स्वप्ने लक्ष्मणसदृशं प्रियम् ।। ४४ ।।
श्रुतपूर्वं तु सुश्रोणि क्षेत्रस्यास्य विचेष्टितम् ।।

अस्मिन्क्षेत्रे न सौभ्रात्रं सर्वो हि स्वार्थतत्परः ।। ४५ ।।
परस्परं न मन्यंते स्वार्थनिष्ठैकहेतवः ।।
न शृण्वंति पितुः पुत्राः पुत्राणां वा तथा पिता ।। ४६ ।।
न च शिष्यो गुरोर्वाक्यं गुरुर्वा शिष्यकर्म च ।।
अर्थानुबंधिनी प्रीतिर्न कश्चित्कस्यचि त्प्रियः ।।४७।।
एवमुक्त्वा ययौ रामो लक्ष्मणो जानकी तथा ।।
लिंगं तत्र प्रतिष्ठाप्य स्वनाम्ना रघुनंदनः ।।४८।।
रामतीर्थे नरः स्नात्वा दृष्ट्वा रामेश्वरं शिवम्।।
विमुक्तः सर्वपापेभ्यः शिवलोकं स गच्छति ।।४९।। ।।
इति रामेश्वरमाहात्म्यम् ।।
।। सनत्कुमार उवाच ।। ।।
तीर्थे सौभाग्यके स्नात्वा दृष्ट्वा सौभाम्यमीश्वरम् ।।
सर्वपापविनिर्मुक्तः सौभाग्यं परमं लभेत् ।। 5.1.31.५० ।।
घृततीर्थे नरः स्नात्वा घृतेन स्नापयेच्छिवम् ।।
घृतमग्नावथो हुत्वा रुद्रलोके महीयते।।५१।।
देवीं योगीश्वरीं पूज्य सुरासुरनमस्कृताम् ।।
सर्वपापविनिर्मुक्तः परं योगमवाप्नुयात्।।५२।।
शंखावर्ते नरः स्नात्वा सर्वपापविवर्जितः ।।।
धनधान्यसमायुक्तो जायते निर्मले कुले ।। ५३ ।।
सुधोदके चतुर्दश्यां मुक्त्यर्थं स्नापयेन्नरः।।
शिवं सुधेश्वरं दृष्ट्वा ततो मोक्षगतिर्भवेत् ।।५४।।
तथान्य त्संप्रवक्ष्यामि तीर्थं त्रैलोक्यविश्रुतम् ।।
किं पुनेति च विख्यातं ब्रह्महत्याविमोचनम् ।।५५।।
पूर्वं त्रेतायुगे व्यास सुनेत्रो नाम वै द्विजः।।
तस्य पुत्रः समु त्पन्नो विश्वावसुरिति स्मृतः ।।५६।।
यवक्रीतस्य शापेन स्वपिता तेन घातितः ।।
ब्रह्महत्यान्वितो व्यास तीर्थात्तीर्थं परिभ्रमन् ।।५७।।
तीर्थे किंपुनके स्नात्वा धारातीर्थे गतो द्विजः ।।
ततः कपिलधारायां चिंतयत्यात्मना स्वयम् ।। ५८ ।।
कथं मे पतिता धारा अनृता वा श्रुतिस्तथा ।।
एवं ह्यचिंत यत्सोऽथ पुनरायादवंतिकाम् ।। ५९ ।।
अत्र तीर्थे पुनः स्नाति यावद्वाणीं ततोऽशृणोत् ।।

किं पुनर्ध्यायसि ब्रह्मन्येन जातो द्विजोत्तमः ।। 5.1.31.६० ।।
न तेऽस्ति ब्रह्महत्या वै तीर्थस्नानेन नाशिता ।।
गच्छ शीघ्रं गृहं विप्र पापहीनो यथासुखम् ।। ६१ ।।
।। इति किंपुनामाहात्म्यम् ।। ।। ।।
।। सनत्कुमार उवाच ।। ।।
पुनरन्यत्प्रवक्ष्यामि पत्तनेश्वरमुत्तमम् ।।
तत्र स्थित्वा महेशेन पुनः पत्तनमीक्षितम् ।। ६२ ।।
पत्तनेश्वर इत्याख्यो देवदेवो महेश्वरः ।।
यस्तु गंधैश्च पुष्पैश्च धूपैर्दीपैर्मनोरमैः ।। ६३ ।।
भावयुक्तो नरो व्यास पूजयेद्विधिवत्सदा ।।
यथावत्तिष्ठते लिंगं वंशच्छेदो न जायते ।। ६४ ।।
हंसयुक्तेन यानेन शिवलोकं स गच्छति ।।
तथान्यत्संप्रवक्ष्यामि तीर्थं त्रैलोक्यविश्रुतम् ।। ६५ ।।
दुर्धर्षमिति विख्यातं ब्रह्महत्याविमोचनम् ।।
पुरा दिवाकरो व्यास चक्रे दुर्धर्षनामतः ।। ६६ ।।
तीर्थमासीन्नदीतीरे विख्यातं सूर्यसंस्कृतम् ।।
तेजःपुंजं भवेल्लिंगं गणगं धर्वपूजितम् ।। ६७ ।।
सप्तम्यामथवाष्टम्यां संक्रातौ रविवासरे ।।
तत्र स्नात्वा शुचिर्भूत्वा दिनमेकमुपोषितः ।। ६८ ।।
दृष्ट्वा महेश्वरं तत्र शिप्राकूले व्यवस्थितम् ।।
पूजयित्वा तु भावेन यत्फलं तच्छ्रणुष्व मे ।। ६९ ।।
पितृमातृकुलं सर्वं समुद्धृत्य शिवं व्रजेत् ।।
तत्र यच्छति यो दानं गोहेमादि विशेषतः ।। 5.1.31.७० ।।
तावत्तदक्षयं लोके यावच्चंद्रदिवाकरौ ।।
तथान्यत्संप्रवक्ष्यामि गोपींद्रं तीर्थमुत्तमम् ।। ७१ ।।
गौतमेन पुरा यत्र इन्द्रः शापाद्भ गीकृतः ।।
भगव्रीडायुतः शक्रः प्रविश्य वनमुत्तमम् ।। ७२ ।।
अतोषयत्तदोग्रेण तपसा शंकरं पुरा ।।
तुष्टेन शंभुना विप्र ये भगास्तच्छरीरगाः ।।। ।। ७३ ।।
गोसहस्रीकृतास्तेन गोपींद्रस्तेन कथ्यते ।।
तत्र स्नात्वा दिवं याति शक्रतुल्यपराक्रमः ।। ७४ ।।
ये मृतास्ते पुनर्जन्म नाप्नुवंति महीतले ।।।

गंगातीर्थे नरः स्नात्वा पुण्यमाप्नोति पुष्कलम् ।। ७५ ।।
ज्येष्ठशुक्लदशम्यां तु गंगायां फलमादिशेत् ।।
स्नात्वा पुष्पकरंडे च दृष्ट्वा पुष्पकरण्डकम् ।। ७६ ।।
पुष्पकेन विमानेन प्रयातो दिवि मोदते ।।
नरकादुद्धरत्याशु नरः स्नात्वोत्तरेश्वरे।।७७।।
इष्टभोगसमापन्नो याति स्वर्गं न संशयः ।।
भूतेश्वरे नरः स्नात्वा भूतेश्वरमथार्चयेत् ।। ७८ ।।
गंधपुष्पादिनैवेद्यैर्मृतो रुद्रपुरं व्रजेत् ।।
शिप्रायां तु नरः स्नात्वा कैलासं तु नमस्यति ।। ७९ ।।।
सूर्याऽऽहतं तमो यद्वत्तद्वत्पापं प्रणश्यति ।।
अंबालिकां च यः पश्येत्समाधिनियमेन च ।। 5.1.31.८० ।।
स मुक्तः सर्वपापेभ्यः कंचुकेन फणी यथा ।।
घण्टेश्वरं प्रवक्ष्यामि यत्सुरैरपि पूजितम् ।। ८१ ।।
यत्र कूपोदकं पीत्वा सौभाग्यमतुलं लभेत् ।।
अर्चयेद्यस्तु देवेशं गंधपुष्पैरनुक्रमात् ।। ८२ ।।
शिवलोके वसेत्तावद्यावदिंद्राश्चतुर्दश ।।
पुण्येश्वरं तु यः पश्येच्छुचिः स्नातो जितेन्द्रियः ।। ८३ ।।
स गाणपत्यमाप्नोति यत्सुरैरपि दुर्लभम् ।।
लंपेश्वरे नरः स्नात्वा समभ्यर्च्य महेश्वरम्।।८४।।
न याति नरकं मर्त्यः स्वर्गलोके महीयते।।
तथान्यत्संप्रवक्ष्यामि यत्सुरैरपि दुर्लभम् ।।८५।।
पूजितं ब्रह्मणा पूर्वं स्थविराख्यं विनायकम् ।।
तत्र स्नात्वा शुचिर्भूत्वा पूजयेद्यो विनायकम्।।८६।।
गंधैर्धूपैश्च नैवेद्यैर्भक्ष्यैर्भोज्यैः फलं शृणु ।।
समीहिता भवेत्सिद्धिर्मृतः शिवपुरं व्रजेत्।।८७।।
नवनद्याः समीपे तु पार्वतीं पूजयेद्बुधः।।
गंधपुष्पैश्च धूपैश्च सौभाग्यमतुलं लभेत्।।८८।।
कामोदके नरः स्नात्वा दृष्ट्वा कामं रतिप्रियम् ।।
स्वर्गे च देवगंधर्वस्पृहणीयवपुर्भवेत् ।।८९।।
प्रयागे तु नरः स्नात्वा प्रयागेशं तु पश्यति ।।

सर्वलोकानतिक्रम्य शिवलोके मही यते ।। 5.1.31.९० ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये सौभाग्येश्वरादिनानातीर्थमाहात्म्य वर्णनंनामैकत्रिंशोऽध्यायः ।। ३१ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३२



।। सनत्कुमार उवाच ।। ।।

अथान्यत्संप्रवक्ष्यामि नरादित्यं दिवाकरम् ।।

यस्य दर्शनमात्रेण सर्वरोगैर्विमुच्यते ।। १ ।।

स्थापनां ते प्रवक्ष्यामि नरादित्यस्य यादृशी ।।

युद्धे निवारिते तस्मिन्रक्तस्वेदजयोः पुरा ।। २ ।।

नरनारायणौ देवाववतीर्णौ धरातले ।।

कुंत्यां देव्यां च देवक्यां मथुरायामजायताम् ।। ३ ।।

एवं तौ वर्तितौ लोके कांतौ वृद्धिं परां गतौ ।।

अन्यस्मात्कारणात्कृष्णो ऽन्यस्माज्जातो धनंजयः ।।४।।

कंसादीन्दानवान्सर्वान्निजघान रणे हि सः ।।

स्वर्गं गतस्ततः पार्थो वासवादस्त्रसिद्धये ।। ५ ।।

कृतास्त्रेण तु वीरेण देवराजस्य दक्षिणा ।।

संस्तुता देवराजस्तु ययाचे तां हि दक्षिणाम् ।। ६ ।।

निवातकवचा ह्युग्रा हिरण्यपुरवासिनः ।।

वध्यंतामर्जुन क्षिप्रमेषा मे गुरुदक्षिणा ।। ७ ।।

अर्जुनेन प्रतिज्ञातो वधस्तेषां दुरात्मनाम् ।।

ऐंद्रं स रथमास्थाय गृहीत्वा सशरं धनुः ।। ८ ।।

निहत्य तांस्ततः पार्थः कृत्वा कर्म सुदुष्करम् ।।

प्रीतिमुत्पादयामास सर्वेषां च दिवौकसाम् ।। ९ ।।

कृतकार्यं तदा शक्रस्त्वर्जुनं वाक्यमब्रवीत् ।।

यत्तेऽभिरुचिरं वीर मृत्युलोके सुदुर्लभम् ।। 5.1.32.१० ।।

मनसा कांक्षितं पार्थ वरं त्वं वरयोत्तमम् ।।

स वव्रे प्रतिमे द्वे तु येऽर्चिते ब्रह्मणा स्वयम् ।। ११ ।।

ब्रह्मणा प्रीतियुक्तेन दक्षाय प्रतिपादिते ।।

दक्षेणापि युगं साग्रं पूजिते तिमिरापहे ।। १२ ।।

सुराणामसुराणां च विग्रहे समुपस्थिते ।।

दानवैर्निर्जितः शक्रो हृतराज्यो वनं गतः ।। १३ ।।

तपश्चचार दुर्धर्षमेकपादः शतक्रतुः ।।

दिव्यवर्षसहस्रं तु धिषणस्तं ददर्श ह ।। १४ ।।

दृष्ट्वा तु देवराजं तं बृहस्पतिरुवाच ह ।।

हित्वा त्रिदिवमायातः कथं शक्र त्विदं वनम् ।। १५ ।।

एकाकिना वनस्थेन न साध्याः शत्रवस्त्वया ।।

ज्ञात्वैवं देवराज त्वं शीघ्रं दक्षाश्रमं व्रज ।। १६ ।।

पूजार्थे ब्रह्मणा दत्ते पारिजातसमुद्भवे ।।

चकार विश्वकर्मा ये ते याचस्व प्रजापतिम् ।। १७ ।।

शत्रूणां च क्षयो भावी प्रसादादर्चयो स्तयोः ।।

गुरोस्तु तेन वाक्येन हृष्टो देवः शतक्रतुः ।।१८।।

जगाम सत्वरस्तत्र यत्र दक्षः प्रजापतिः ।।

विनयावनतो भूत्वा ययाचे प्रतिमे शुभे ।। १९

पूजिते प्रतिमे व्यास शक्रेण शरदां शतम् ।।

तयोस्तु तेजसा सर्वे विनाशं दानवा गताः।।5.1.32.२०।।

प्रतिमे चोचुतुः शक्रं वरयस्व वरोत्तमम्।।

भक्त्यानया परं तुष्टावावां जानीहि वासव।।२१।।

वरं वव्रे तदा शक्रः प्रसन्नात्मा द्विजोत्म।।

अस्माकं प्रतिपक्षा ये दानवाः पापचेतसः ।। २२ ।।

सर्वे ते नाशमृच्छंतु वर एष मतो मम ।।

युवां पूजितुमिच्छामि यावदिंद्रो भवाम्यहम् ।। २३ ।।

तथेति चोक्त्वा प्रतिमे ते नाकं प्रति जग्मतुः ।।

तत्तु याचे ह्यवश्यार्थे वरार्थे प्रतिमाद्वयम् ।। २४ ।।

।। इंद्र उवाच ।। ।।

साधु पार्थ पुनः साधु यत्रेत्थं प्रतितिष्ठतः ।।

इमे च प्रतिमे पार्थ शंकरेण महात्मना ।। २५ ।।

सुरक्तैः शतपत्रैश्च पूजिते ब्रह्मणो दिनम् ।।।

त्रैलोक्यपालनार्थाय पूजिते विष्णुना पुरा ।। २६ ।।

नीलोत्पलैः सुगंधैश्च सहस्रपरिवत्सरान् ।।

ततः प्रजापतिः सृष्टिं कर्तुकामः समा हितः ।। २७ ।।

पूजयामास प्रतिमे पद्मै रक्तोत्पलैः शुभैः ।।

त्वमेव हि कथं पार्थ मृत्युलोके नयिष्यति ।। २८ ।।

एताभ्यां रहितः स्वर्गो मृत्युतुल्यो भविष्यति ।।

अदातुकामं देवेंद्रं प्रणिपत्य तमर्जुनः ।। २९ ।।

उवाच नाहमर्थ्यस्मिन्वरेणानेन वै प्रभो ।।

ततः शक्रः पुनः पार्थमुवाच मुनिपुंगव ।। 5.1.32.३० ।।

गृहीत्वा त्वमिमे वीर कुशस्थल्यां निवेशय ।।

शिप्राया उत्तरे तीरे केशवार्कं तु केशवः ।। ३१ ।।

प्रति तिष्ठति वै यत्र सर्वपापप्रणाशनः ।।

संस्थापयस्व वै तत्र सर्वपापप्रणाशने ।।

भविष्यति तदा यात्रा आषाढी चाथ कौमुदी ।। ३२ ।।

आगमिष्याम्यहं तत्र सहितोऽप्सरसां गणैः ।।

मरुतश्चागमिष्यंति मेघाश्चैव सविद्युतः ।। ३३ ।।

मेघखण्डे समुद्भूते मयि तत्र प्रवर्षति ।।

प्रवदिष्यंति वै लोकाः प्राप्तो देवः पुरंदरः ।। ३४ ।।

भास्करं च नमस्कृत्य ब्रह्माद्यैः पूजितं विभुम् ।।

प्रतियामि तु बीभत्सो पुनरेव यथागतम् ।। ३५ ।।

एवं मूर्तिद्वयं व्यास दत्त्वा पार्थाय वासवः ।।

भूर्लोकं प्रेषयामास सूतेन सह पांडवम् ।। ३६ ।।

नारदो द्वारकायां तु कृष्णस्याह्वानकारणात् ।।

देवराजस्य तद्वाक्यं सरहस्यं च केशवम् ।। ३७ ।।

श्रावयामास विप्रेंद्रं एहि कृष्ण कुशस्थलीम् ।।

अर्च्चे हि पारिजातस्य विश्वकर्मसुकारिते ।। ३८ ।।

इंद्रेणाथ प्रदत्ते वै ते तुभ्यं पांडवाय च ।।

श्रुत्वा शौरिस्तु तद्वाक्यं प्रतस्थेऽवंतिनीपुरीम् ।। ३९ ।।

अवातरच्च आकाशात्तमालिंग्य च पांडवम् ।।

प्रीतः प्रोवाच वचनं परिष्वज्य च फाल्गुनम् ।। 5.1.32.४० ।।

जन्म मे सफलं जातं प्रीतिर्मे जनितार्जुन ।।

यतो मे प्रीतिरतुला क्रियतां कार्यमुत्तमम्।। ।। ४१ ।।

इत्युक्त्वा तौ तदा व्यास समायातौ कुशस्थलीम् ।।

पार्थं प्राह तदा कृष्णः सुसंपूर्णमनोरथः ।। ४२ ।।

गत्वार्जुन दिशं प्राचीं मूर्तिमेकां निवेशय ।।

पूर्वाह्ले हि शुभं लग्नं भविष्यति मनोरमम् ।। ४३ ।।

अहमप्युत्तरां यामि स्थापनार्थं नदीं मुने ।।

मम शंखस्य नादेन प्रतितिष्ठ रविं प्रभुम् ।। ४४ ।।

पूर्वां गत्वा ततः पार्थ शुभं स्थानं व्यलोकयत् ।।

व्यास संस्थापयामास दिननाथं च सुस्थिरम् ।। ४५ ।।

अर्कं देवं स्थापयामि यावद्दध्यौ च पांडवः ।।

तावत्स चाब्रवीदेनं स्थानं कारय शोभनम् ।। ४६ ।।

कथयामास पार्थाय तेजसा तेन दुःसहम् ।।

सव्यसाची ततो भीतो दृष्ट्वार्च्चां तां प्रजल्पतीम् ।। ४७ ।।

तेजस्त्वसहमानो वै देवं वचनमब्रवीत् ।।

क्व देव त्वां स्थापयामि किं स्थानं तव रोचते ।। ४८ ।।

सौम्य रूपः सुदर्शश्च प्रजाभ्यो भव गोपते ।।

दिविसंस्थाश्च ये देवा नागाः पातालसंश्रयाः ।। ४९ ।।

भुविस्था मानवाः पूता भवंतु तव दर्शनात् ।।

सोऽर्जुनमब्रवीद्देवो मा भैस्त्वं मम दर्शनात् ।। 5.1.32.५० ।।

दक्षिणेन करेणाथ ह्यभयेनाभयप्रदः ।।

समाश्वास्याथ तं शांतं सौम्यमूर्तिर्बभूव ह ।। ५१ ।।

प्रभाकरेण देवेन निजं तेजः प्रदर्शितम ।।

ततः सूर्योऽब्रवीत्स्थानमेतदेवाचलं मम ।। ५२ ।।

प्राप्ते लग्ने च हरिणा शंखश्चापूरितो महान् ।।

नरेण च स वै सूर्यः स्थापितोऽमरसंस्तुतः ।। ५३ ।।

।। अर्जुन उवाच ।। ।।

जयति किरणमाली भासुरः श्रांतसप्तिः सकलभुवनधामा प्राग्दिगंताट्टहासः ।।

भवति विगतपापं कीर्तनादेव यस्य प्रचुरकलुषदोषैर्ग्रस्तमंगं नराणाम् ।। ५४ ।।

ब्रह्माद्यैर्मुनिभिरभिष्टुतं पतंगं कः स्तोतुं कविरभिवांछते प्रकामम् ।।

स्तोष्येहं तदपि सुविस्तरात्सुबुद्धे किं दीपो ज्वलति हि नोदिते शशांके ।। ५५ ।।

शास्त्रार्थकामनिपुणैर्मुनिभिः स्तुतस्य किं वस्तु यन्न रचितं विविधैः प्रयोगैः ।।

द्वैपायनप्रभृतिभिर्मुनिभिः पुराणैरापीतसारमिह भाति जगत्समस्तम् ।। ५६ ।।

कामं तथाप्यहमतीव विचार्य ब्रुद्ध्या भानोस्त्रिलोकगुरुपूजितपादयुग्मम् ।।

वृत्तैः स्फुटार्थमधुराक्षरसंधियुक्तैस्त्वां वै विचित्रगतिभिः परिकीर्तयिष्ये ।। ५७ ।।

तावज्जगद्भवति निश्चलमेव सर्वं तावत्क्रियाश्च विविधा न च यांति सिद्धिम् ।।

यावच्च नाथ कमलामलमंडल त्वमुत्तिष्ठसे व्यपनयन्किरणैस्तमांसि ।। ५८ ।।

तावन्न भांति शिखराणि महीरुहाणां गुच्छैस्तु फुल्लवनमीलितलोचनानि ।।

सुप्तानि बोधयसि षट्चरणाकुलानि यावन्न भाभिरमलाभिरनुत्तमाभिः ।। ५९ ।।

उद्यंतमंबरतले सुरसिद्धसंघाः सब्रह्मदैत्यमुनिकिन्नरनागयक्षाः ।।

त्वामर्चयंति विबुधाः प्रणतैः शिरोभिश्चञ्चत्किरीटमणिभाभिरनुत्तमाभिः ।। 5.1.32.६० ।।

अस्तं गते त्वयि जगद्भवति प्रसुप्तं भूयस्त्वयि प्रतपति प्रतिबोधमेति ।।

एवं सदा वरद लोकहितार्थहेतोरेकस्त्वमेव भगवंस्तिमिरस्य हंता ।। ६१ ।।

उत्साहशक्तिनयशौर्यसमन्वितानां सेवाप्रयोगरचनाविधितत्पराणाम् ।।

कार्याणि यन्न फलदानि भवंति पुंसां हेतुस्त्वभक्तिरिह नाथ वेति नूनम् ।।६२ ६२ ।।

यत्संयुगेषु रथकुञ्जरकुन्तशक्तिनाराचचक्रशरतोमरभीमखड्गैः ।।

क्षिप्रं नराः समुपयांति विजित्य शत्रून्सर्वं सदा प्रणतवत्सल वेष्टितं ते ।। ६३ ।।

कांतारदुर्गविषमेष्वपि वर्तमाना ऋक्षेभसिंहबहुकण्टकतस्करेषु ।।

तृष्णान्विताश्च बहुशोकविमूढचित्तास्त्वत्कीर्तनाद्धि गतमृत्यु भया भवंति ।। ६४ ।।

तेजोराशिस्त्वमिह शरणं सर्वतोदुःखितानां

त्वत्तुल्योऽन्यो जगति सकले नास्ति कश्चिद्दयालुः ।।

त्वय्येकस्मिन्भवति सकला भक्तिरन्विष्यमाणा

त्वामासाद्य प्रभवति कुतो व्याधिदुःखं नराणाम्।। ६५ ।।

कः कुष्ठाभिहतः क्व चारिभिरथो को व्याधिभिः पीडितः

के पंग्वंधजडाः क्व शीर्णचरणः को वा विपन्नक्रियः ।।

इत्येवं प्रसमीक्ष्य देव कृपया दोषात्परित्रायसे

कस्यान्यस्य परोपकारनिरता चेष्टा यथैषा तव ।। ६६ ।।

धर्मः परत्र किल तिष्ठति सेवितोऽसौ

कालांतरेण विबुधा वरदा भवंति ।।

त्वं सेवितः प्रणतवत्सल भूतिकामैः

सद्यः प्रयच्छसि फलं यदभीप्सितं तैः ।। ६७ ।।

विभ्रांतकांतहरिणीसदृशेक्षणाभिः

कांतोरुहारमणिकुण्डलमेखलाभिः ।।

तेषां भवंति भवनानि विलासिनीभिर्येषां नृणां त्वमसि वै वरदः प्रसन्नः ।। ६८ ।।

यैस्त्वं नरैः सकृदपि प्रणतः कथंचिद्ध्यातोऽथवा भुवननाथ तथांतकाले ।।

निष्कल्मषा जगति दुष्कृतिनो भवंति ते निर्मलाः सुकृतिनो गतिमाप्नुवंति ।। ६९ ।।

ये त्वां कुतर्कमतिभिर्न नमंति भक्त्या रोमांचकंचुकशताकुलितैः शरीरैः ।।

ते निर्धनाः परगृहेष्ववभूतमन्नं क्षुत्क्षामकण्ठवदनाः परितर्कयंति ।। 5.1.32.७० ।।

उदधिजलतरंगक्षोभलोलाक्षियुग्मैः सफणिमणिमयूखोद्भासितैर्लेलिहद्भिः ।।

प्रणिपतितशिरोभिर्नागमुख्यैरजस्रं श्रुतिभिरनुपमाभिः स्तूयसे पुष्कलाभिः ।। ७१ ।।

तव सुरवर गच्छतोऽनुसरंति त्रिदशनदीकमलोद्भ तानि वातैः ।।

कनककमलरेणुपिंजरितानि भ्रमरकुलानि पतंग चामराणि ।। ७२ ।।

तत्त्वध्यानं जलनिधिनिवहे स्थित्वा स्थित्वा चरणनिवहैः ।।

आजीवार्थं प्रतपसि भगवन्कस्ते तुल्यस्त्रिभुवनसमये ।। ७३ ।।

उदयाद्रिनितंबसंस्थितस्य ह्युदयेष्वस्तमयेषु चावृतस्य ।।

किरणास्तपनीयसप्रभास्ते विलसन्तस्तडितो विडंबयंति ।। ७४ ।।

यथायथा व्रजति रथस्तवांबरे विपाटयन्धनतिमिरौघसंचयान् ।।

तथातथा क्षुभितमहानिलासृतं प्रतीयते मुहुरिव दुन्दुभिर्यथा ।। ७५ ।।

चारुपद्मविनिमीलितेक्षणां चक्रवाककलहंसमेखलाम् ।।

कामिनीमिव रतिश्रमालसां तां विबोधयसि पद्मिनीं करैः ।। ७६ ।।

नीललोलमतिकान्तमुत्पलं भृंगतुंगचरणाकुलीकृतम् ।।

त्वत्प्रभाभिरनुरागरंजितं पद्मरागमिव शोभते भृशम् ।। ७७ ।।

स्फुरच्छशांकहारनिर्मलं खग त्वदंकेष्वचंचलम् ।।

विभात्यतीव कांतमंबरं समं बृहच्चैक पाटलम्।। ७८ ।।

हरिति च तावन्मुहिर्निषेविततमस्यशुभं भवति च यावदैव किरणैस्तव पूजिततरम् ।।

ऋषिभिर्मुनिभिरुदारधीभिः शाश्व तमार्गपरैर्वरद न शक्यते तव गुणस्तुतिराश्रयितुम् ।। ७९ ।।

त्वं विष्णुस्त्वं शशांकस्त्वमसुरमथनः शण्मुखस्त्वं धनेशस्त्वं कालस्त्वं च धाता क्षितिधरमलयापाश्रयस्त्वं हुताशः ।।

ॐकारस्त्वं द्विजानां त्वमिह जलनिधित्वं शरस्त्वं च रुद्रस्त्वं मुख्यस्त्वं पयोदो व्रतयमनियमास्त्वं जगत्सर्वमेव ।। 5.1.32.८० ।।

त्वमनिंद्य गोपते त्रिपुरमथन मन्मथदाहकरस्त्वमसुरभीमदर्पहा पाहि माम् ।।

त्रिदशाधिपकमलवराननस्त्वमिह देवगुरुर्भगवां स्त्रिभुवनमण्डलेऽस्ति कतमस्तव तुल्यगुणः ।। ८१ ।।

आदित्य भास्कर दिवाकर सप्तसप्ते मार्तंड सूर्य हरिदश्वपते च भानो ।।

अश्रांतवाहन खरूप गभस्तिमालिंस्त्वां लोकनाथ शरणं प्रतिपद्यतेऽसौ ।। ८२ ।।

प्राग्दिग्वधूतिलकभासुरकर्णपूर मंदाकिनीदयितनाथ जगत्प्रदीप ।।

हेमाद्रितापन नभस्तलहारिरत्न सन्ध्यांगनावदनराग नमोनमस्ते ।। ८३ ।।

ब्रह्मैव सत्य शुभमंगल लोकनाथ व्योमांगणेश मुनिसंस्तुत विश्वमूर्ते ।।

आर्तस्य शोकहर किंकरपालकश्च त्वं मे प्रसीद भगवञ्छरणागतस्य ।। ८४ ।।

कृत्वांजलिं शिरसि पंकजकुड्मलाभं यत्संस्तुतस्त्वमिह देव मयाद्य भक्त्या ।।

तेन प्रभो भव ममोपरि सौम्यमूर्तिर्धर्मे मतिं कुरु सदा श्रियमूर्जितां च ।। ८५ ।।

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहे तवे ।।

त्रयीमयाय त्रिगुणात्मधारणे विरंचिनारायणशंकरात्मने ।। ८६ ।।

।। सूर्य उवाच ।। ।।

तुष्टोहमधुना पार्थ स्तोत्रेणानेन सुव्रत ।।

वरं दास्यामि यत्नेन यत्ते मनसि वर्तते ।। ८७ ।।

मद्दर्शनं हि विफलं न कदाचित्प्रजायते ।।

शूराणां च विशेषेण ह्यदेयं नास्ति यत्नतः ।। ८८ ।। ।।

।। अर्जुन उवाच ।। ।।

एष एव वरो मह्यं वराणामुत्तमोत्तमः ।।

अत्र संनिहितो देव सर्वकालं भव प्रभो ।। ८९ ।।

ये च त्वां मानवा भक्त्या स्तो ष्यंति प्रणताः सदा ।।

तेषां धनं च धान्यं च पुत्रदारादिकं वसु ।।5.1.32.९० ।।

मनसश्चेप्सितं सर्व दातव्यं हि वरो मम ।।

सनत्कुमार उवाच ।।

आदित्यो ऽस्मै वरं दत्त्वा ह्युवाच वचनं शुभम्।। ९१ ।।

यस्त्वत्कृतेन स्तोत्रेण मां स्तोष्यति नरोत्तमः ।।

श्रिया न विच्युतिस्तस्य भवेदेष वरो मम ।। ९२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये नरादित्यमाहात्म्येऽर्जुनस्तुतिवर्णनंनाम द्वात्रिं शोऽध्यायः ।। ३२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३३

https://sa.wikisource.org/s/fj9



5.1.33

।। सनत्कुमार उवाच ।। ।।

नारायणोऽपि संस्थाप्य शंखं दध्मौ प्रयत्नतः ।।

तुष्टाव प्रयतो भूत्वा स्तोत्रेणा नेन भास्करम् ।। १ ।।

।। श्रीकृष्ण उवाच ।। ।।

आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् ।।

दिवाकरं दिवानाथं तपनं तपतां वरम् ।। २ ।।

वरेण्यं वरदं विष्णुमनघं वासवानुजम् ।।

बलवीर्यं सहस्रांशुं सहस्रकिरणद्युतिम् ।। ३ ।।

मयूखमालिनं विश्वं मार्तंडं चंडरोचिषम् ।।

सदातीतं सुभास्वंतं सप्तसप्तिं सुखोदयम् ।। ४।।

देवदेवमहिर्बुध्न्यं धाम्नां निधिमनुत्तमम् ।।

तपोब्रह्ममयालोकं लोकपालमपांपतिम् ।। ५।।

जगत्प्रबोधजनकं जगद्बीजं जगत्प्रभुम् ।।

अर्कं निःश्रेयसपरं कारणं श्रेयसां परम् ।। ६ ।।

इनं प्रभाविणं पुण्यं पतंगं पवगेश्वरम् ।।

दातारं वांछितार्थानां दृष्टादृष्ट- फलप्रदम् ।। ७ ।।

गृहं गृहकरं हंसं हरिदश्वं हुताशनम् ।।

मंगल्यं मंगलं गेयं ध्रुवं धर्मप्रबोधनम् ।। ८ ।।

भवसंभावित भावं भूतभव्यभवात्मकम् ।।

दुर्गमं दुर्गतिहरं हरनेत्रं त्रयीमयम् ।। ९ ।।

त्रैलोक्यतिलकं तीर्थं तरणिं सर्वतोमुखम् ।।

तेजोराशिसुनिर्वाणं विश्वेशं धाम सांप्रतम् ।। 5.1.33.१० ।।

कल्पं कल्पानलं कालं कालचक्रं क्रतुप्रियम् ।।

भूषणं मरुतं सूर्यं मणिरत्नं सुलोचनम् ।। ११ ।।

त्वष्टारं विष्टरं विश्वं सदसत्कर्मसाक्षिकम् ।।

सवितारं सहस्राक्षं प्रजापालमधोक्षजम्।। १२ ।।
ब्रह्माणं वासरारंभे रक्तवर्णं महाद्युतिम् ।।
शुक्लं मध्यंदिने रुद्रं श्यामं विष्णुं दिनक्षये ।। १३ ।।
नाम्नामष्टशतं दिव्यं विष्णुना समुदाहृतम् ।।
य इदं प्रयतो भूत्वा पठेद्भक्त्या समाहितः ।। १४ ।।
न तस्य विपदः क्वापि सर्वत्रापि शुभा गतिः ।।
धनधान्यसुखावाप्तिः पुत्रलाभश्च जायते ।। १५ ।।
तेजः प्रज्ञां परं लाभं ज्ञानं च लभते गतिम् ।।
एतच्छ्रुत्वा जगन्नाथो जगामादर्शनं ततः ।। १६ ।।
केशवार्कमुखं दृष्ट्वा पद्मरागसमप्रभम् ।।
विमुक्तः सर्वपापेभ्यः सूर्यलोके महीयते ।। १७ ।।
केशवार्कसमीपे तु रेणुतीर्थं प्रचक्षते ।।
तद्दृष्ट्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। १८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽ वन्तीक्षेत्रमाहात्म्ये केशवादित्यमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३४

https://sa.wikisource.org/s/fis
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
तीर्थमन्यत्तथा वक्ष्ये शक्तिभेदमिति स्मृतम् ।।
स्कंदस्य च जटाभद्रं चक्रे यत्र पुरा शिवः ।। १ ।।
तारकं च तथा दैत्यं हत्वा यत्र सुरद्विषम् ।।
शक्तिं स्कंदः स्वयं क्रुद्धो निश्चिक्षेप महीतले ।। २ ।।
।। व्यास उवाच ।। ।।
भगवन्ब्रूहि यत्नेन संशयो मे महामुने ।।
कथं स्कंदः समुत्पन्न एतदिच्छामि वेदितुम् ।।३।। ।।
।। सनत्कुमार उवाच ।। ।।
पुरा देवासुरे युद्धे निर्जिता दानवैः सुराः ।।
दिवं त्यक्त्वा दिशो याताः शक्राद्या भयविह्वलाः ।। ४ ।।
तत्र तु देव राजेन तपसोग्रेण वै मुने ।।
आराधितो महादेवस्त्र्यंबकस्त्रिपुरांतकः ।। ५ ।।
ततस्तुष्टो महादेवः शक्रस्याभिमुखः स्थितः ।।
उवाच वचनं श्लक्ष्णं वरमिष्टं ददामि ते ।। ६ ।।
।। शक्र उवाच ।। ।।
यदि तुष्टोऽसि भगवन्कारुण्यान्मम शंकर ।।
महासेनापतिं देव प्रयच्छ परमेश्वर ।। ७ ।। ।। ।।
।। हर उवाच ।। ।।
उत्पादयामि देवेषु स्ववीर्यादूर्जितं सुतम् ।।
सेनान्यां च महासेनं सुराणां भयहारकम् ।। ८ ।।
।। सनत्कुमार उवाच ।।
इत्युक्त्वांतर्दधे देवः सर्वभूतपतिर्हरः ।।
सुतचिंतापरो देवो जगाम च हिमालयम् ।। ९ ।।
देवदारुवने तस्थौ ज्ञानध्यानपरोऽभवत् ।।
ब्रह्मादयोऽपि यं देवं योगिनो ध्यानचिंतकाः ।। 5.1.34.१० ।।

ध्यायंति नियतात्मनः प्राणायामपरा मुने ।।
लिंगमूर्तिश्च यो नित्यं पूज्यते सर्वजंतुभिः ।। ११ ।।
स ध्यायति किमर्थं तन्न विद्मः परमार्थिनः ।।
वं ध्यानपरे देवे देवी हिमवतो गृहे ।। १२ ।।
मध्ये वयसि वर्तंती यासीद्दाक्षायणी सती ।।
 पितुर्गेहे निजो देहो यया योगाद्विसर्जितः ।। १३ ।।
निमंत्रितो न मे भर्ता इति कोपं चकार या ।।
तां देवीं हिमवान्पूर्वं श्रुत्वा देवर्षिनारदात् ।। ।। १४ ।।
भवभार्या भवित्रीति नान्यं वरमचिंतयत् ।।
तपस्यति च रुद्राय सा सखीभ्यां समन्विता ।। १५ ।।
कथं हि शंकरो देवो मम भर्ता भविष्यति ।।
यावदेवं गतो देवो देवी हिमवतः सुता ।। १६ ।।
ततः समागता देवाः कृत्वाग्रे बलसूदनम् ।।
जग्मुर्ब्रह्मसदः पुण्यं द्रष्टुं ब्रह्माणम व्ययम् ।। १७ ।।
ते सुरास्तत्स्तुतिं कृत्वा वाक्यमेतत्समैरयन् ।।
शरणं भव देवानां दानवैर्विजितात्मनाम् ।। १८ ।।
ततोऽवोचत्सुरान्ब्रह्मा ज्ञातं कार्यं समाहितम् ।।
नैतच्छंभोर्विना वीर्यात्कार्यसिद्धिर्भविष्यति ।। १९ ।।
तथा यतध्वं देवेशं यथा वांछति पार्वतीम् ।।
इत्युक्त्वांतर्दधे ब्रह्मा स्वप्ने लब्धं धनं यथा ।। 5.1.34.२० ।।
ततो मेरुं समागत्य पुनर्मंत्रं प्रचक्रिरे ।।
तेषामाहेदृशं शक्रस्तुष्टः शंभुः पुरा मम ।। २१ ।।
प्रतिपन्नं च देवेन स्वांगात्सेना पतिं प्रति ।।
तस्मादेवं गते कार्ये कारणं मकरध्वजः ।। २२ ।।
इति संचित्य देवेशः काममाहूय सत्वरम् ।।
उवाच वचनं हृद्यं देवाना मनुकंपया ।। २३ ।।
यथा देवो भजेद्देवीं तथा काम विधीयताम् ।।
कारणं महदेतद्वै देवानां समुपस्थितम् ।। २४ ।।
कामो वाक्यं हरेः श्रुत्वा प्रहस्येदमुवाच ह ।।
करिष्ये सर्वमेवं हि सखा मे चेद्भवेन्मधुः ।। २५ ।।
तस्मिन्क्षणेऽथ शक्रेण कामवाक्यादनंतरम्।।
समादिष्टो मधुः क्षिप्रं कामस्यानुचरो भव ।। २६ ।।

लब्ध्वा कामो मधुं मित्रं प्रतस्थे भार्यया सह ।।
कृत्वा सज्यं धनुर्बाणं पौष्पं पाणौ समाहितः ।। २७ ।।
यत्र देवाधिदेवेशो देवदारुवने स्थितः ।।
नन्दीश्वरः प्रतीहारः कृतध्यानोऽवतिष्ठति ।। २८ ।।
चूतवृक्षाश्रितः कामो यावद्बाणं सुमोहनम् ।।
संदधात्यंतरे चास्मिन्देवी प्राप भवाश्रमम् ।। २९ ।।
त्यक्तध्यानव्रतो देवो हृष्टश्चाह्लादचेतनः ।।
ततो विलोकयामास दिशः सर्वाः प्रयत्नतः ।। 5.1.34.३० ।।
चूतवृक्षाश्रितं काममपश्यच्च रुषान्वितः ।।
भस्मीकृतस्तृतीयाक्ष्णा वह्निज्वालावता ततः ।। ३१ ।।
देवोऽप्यन्तर्दधे तस्मात्स्थानादाशु गणैः सह ।।
पार्वती विस्मिता साध्वी लज्जिता दुःखिताऽभवत् ।। ३२ ।।
हिमवांस्तां समुत्थाप्य निनायाशु निजं गृहम् ।।
गते देवे च देव्यां च कामपत्नी सुदुः खिता ।। २३ ।।
भस्मीकृतं पतिं दृष्ट्वा विललाप सुदुःखिता ।।
दृष्ट्वा रतिं सुदुःखार्ता वागुवाचाशरीरिणी ।।३४।।
आश्वासयंतीं कृपया सखीमिव सुदुः खिताम् ।।
मा रोदीस्त्वं शुभापांगि तव भर्ता करिष्यति।।३५।।
सर्वकार्याण्यनंगोपि मित्रकार्यं विधानतः ।।
यदा चायं महादेवः परिणेष्यति पार्वतीम् ।। ३६ ।।
ततः शंभोरनुध्यानात्थास्यति न संशयः ।।
द्वापरांते यदा कृष्णो द्वारकायां निवत्स्यति ।। ३७ ।।
तत्पुत्रो भविता देही प्रद्युम्नोनाम ते पतिः ।।
इत्युक्ता साऽजहाच्छोकमाकाशाज्जातया गिरा।। ३८ ।।
अचिंतयत्तदा देवी उमापि हिमवद्गृहे ।।
कामस्य दहनं तेजः शंभोर्यत्तदनुत्तमम् ।। ३९ ।।
कथं भर्त्ता भवेद्देवः कामस्योत्थापनं कथम् ।।
नैतत्तपो विना कार्यं क्वचित्कस्यापि सिध्यति ।। 5.1.34.४० ।।
एवं संचिंतयित्वाथ सखीभिः सहिता ततः ।।
तपश्चकार सुमहत्पित्रादेशाच्छुभव्रता ।। ४१ ।।
वर्षास्वभ्रावकाशस्था हेमंते जलशायिनी।।
ग्रीष्मे पंचाग्नितप्तांगी तपस्युग्रे समा स्थिता ।। ४२ ।।

तां दृष्ट्वा तपसोपेतां ब्रह्मचारिवया हरः ।।
आजगामाश्रमं देव्याः कृतातिथ्योऽब्रवीदिदम् ।। ४३ ।।
कृशमध्ये कृशापांगि किमर्थं नवयौवने ।।
तपः करोषि कल्याणि कस्यार्थे कारणं वद ।। ४४ ।।
उवाच चोत्तरं सा वै सत्यं च मधुरं तथा ।।
बटो तपःसमारंभः क्रियते शंकरा प्तये ।। ४५ ।।
विचार्य च हरः श्रुत्वाऽनंदयत्कार्यमात्मनः ।।
उमाभक्तिपरीक्षार्थं शिवं वाचा निनिन्द वै ।। ४६ ।।
तस्य तद्वचनं श्रुत्वा न सेहे सा गिरेः सुता ।।
गंतुकामामुमां मत्वा तस्मात्स्थानान्महेश्वरः ।।
स्वं वपुर्दर्शयामास त्रिनेत्रं शूलपाणिनम् ।। ४७ ।।
लज्जिताभूद्भवानीशं दृष्ट्वा तस्थावधोमुखी ।।
विजयाथाह योगीन्द्रं प्राथ्र्या चाभिजने त्वियम् ।।
पार्वतीहरणार्थाय यत्नं च प्रकरोम्यहम् ।। ४८ ।।
इत्युक्त्वांतर्दधे देवो देव्यागाच्च पितुर्गृहम् ।।
देवीलाभाय सप्तर्षीन्सस्मार स्मरशासनः ।। ४९ ।।
प्रणेमुस्तेप्यथागम्य संस्मृताः परमेश्वरम् ।।
ऊचुश्च प्रांज लिपुटाः कुर्म किं शाधि नो भृशम् ।। 5.1.34.५० ।।
ततोऽब्रवीन्मुनीनीशः समस्तांश्च गिरेर्गृहम् ।।
गत्वा तथा कुरुध्वं मे पार्वती स्याद्यथा प्रिया ।। ।। ५१ ।।
तथेति ते प्रतिज्ञाय संकेतं शंभुना समम् ।।
कृत्वा जग्मुः सपत्नीका गिरींद्रस्य निवेशनम् ।। ५२ ।।
दत्तार्घा भूधरेंद्रेण कृतासन परिग्रहाः ।।
ऊचुरद्रिमुमां यच्छ शंकरायार्थिने प्रियाम् ।। ५३ ।।
दत्तेत्युक्ता गिरींद्रेण निरूप्योद्वाहवासरम् ।।
लब्ध्वानुज्ञां समायाता यत्रास्ते स महेश्वरः ।। ५४ ।।
ऊचुस्ते शंकरं सर्वे दत्ता हिमवता शिवा ।।
कृतकार्याश्च सर्वेऽपि वव्रजुस्ते यथागतम् ।। ५५ ।।
चक्रुर्विवाह सामग्रीं ब्रह्मेन्द्रादिसुरास्तदा ।।
वृषासनो जगामाथ नंदीशप्रमुखैर्गणैः ।। ५६ ।।
शंखदुंदुभिनादैश्च ब्रह्माद्यैरमरैः सह ।।
प्राप्यागेंद्रालयं हीशः कृतकौतुकमंगलः ।। ५७ ।।

विवाह्येमां विधानेन जगाम स्वालयं पुनः ।।
तत्रैकांतरतिर्देवो यावत्तिष्ठति कामवान् ।। ५८ ।।
तावत्त्रस्तैः सुरैरग्निः प्रेषितोऽगान्महेश्वरम् ।।
अग्नौ तत्र गते देवो रतिं कृत्वा महेश्वरः ।। ५९ ।।
निचिक्षेप मुखे वह्नेः स्वरेतो व्रीडितो भृशम् ।।
रेतसा तेन तप्तो ऽग्निर्गंगातोये निक्षिप्तवान् ।। 5.1.34.६० ।।
हररेतोऽग्निनोद्गीर्णं गंगामध्ये पपात ह ।।
तया तु स्वतटे न्यस्तं दग्धया रुद्ररेतसा ।। ६१ ।।
सप्तर्षीणां च षट्पत्न्यः स्नानार्थं जाह्नवीं ययुः ।।
शीतार्तास्ताः कृतस्नाना दृष्ट्वा तेजस्तटे ज्वलत् ।। ६२ ।।
मत्वाग्निमिति ताः सर्वास्तपंति स्म यथेच्छया ।।
तपंतीनां च वै तासां तद्बीजसंभव मुने ।। ६३ ।।
षडाननं समारूढं श्रोणिद्वारेण सत्वरम् ।।
यदान्योन्यमुत्पतितुं शक्ता नाग्निपुरोगमात् ।। ६४ ।।
चिंतां जग्मुस्तदा सर्वा मुनित्रासात्ततो भयात् ।।
ततश्च तपसो वीर्यान्निष्कृष्य स्वोदरात्ततः ।। ६५ ।।
षड्भिरेकत्वमापद्य श्वेतपर्वतमस्तके ।।
मध्ये शराणां वै कृत्य निक्षिप्तं वीर्यमुत्तमम् ।। ६६ ।।
शुक्लायां प्रतिपद्यासीद्द्वितीयायां समीकृतः ।।
तृतीयायां च साकारः सर्वलक्षणलक्षितः ।। ६७ ।।
चतुर्थ्यां परिपूर्णांगः षण्मुखो द्वादशेक्षणः ।।
अलंकृतस्तु पंचम्यां षष्ठ्यां च स समुत्थितः ।। ६८ ।।
तेजसा श्वेतताम्रेण ततापं स जगत्त्रयम् ।।
जातमित्थं समाकर्ण्य सर्वे शक्रमुखाः सुराः ।। ६९ ।।
समागत्यास्य संस्कारं ब्रह्मा चक्रे यथाविधि ।।
तुष्टेन पार्वतीशेन शक्तिर्दत्ता दृढा शुभा ।। 5.1.34.७० ।।
ततो गौर्या मयूरश्च वाहने परिकल्पितः ।।
छागश्चैवाग्निना दत्तः कुक्कुटं सरितां पतिः ।। ७१ ।।
शूलेन कृत्तिकाभिश्च वर्धितः पुत्रकाम्यया ।।
ततस्तु प्राप्तसंस्कारो ब्रह्माद्यैरभिनंदितः ।। ७२ ।।
शक्तिहस्तोऽभिषिक्तस्तु देवसेनासमादृतः ।।
वित्ताधिपेन साह्येन पावकिः पण्मुखों ऽशतः ।। ७३ ।।

गांगेयः कार्तिकेयश्च गुहः स्कंद उमासुतः ।।
देवसेनापतिः स्वामी सेनानीश्च शिखिध्वजः ।। ७४ ।।
कुमारः शक्तिधारी च तस्य नामानि षोडश ।।
यः पठेन्मानवो भक्त्या बाधा तस्य न जायते ।। ७५ ।।
एवं जातो महासेनो दानवानां क्षयकरः ।।
कुशस्थल्यां समानीतः शंभुना स्थानकारणात् ।। ७६ ।।
अभिषिक्तः स तेनासौ भद्रितः स जटाः पुरा ।।
तेन भद्रजटंनाम देवतीर्थं च कथ्यते ।। ७७ ।।
कृताभिषेकं लब्धास्त्रं महासेनं महेश्वरः ।।
तमुवाच समधुरं सर्वदेवसमागमे ।। ७८ ।।
रक्षा कार्या त्वया पुत्र सामरस्य शतक्रतोः ।।
देवानां बाधकाः सर्वे निहंतव्याः सुरद्विषः ।। ७९ ।।
इत्थं महोत्सवे जाते दृप्तप्रमथसागरे ।।
मातरोऽन्वागताः सर्वाः पातालतलसंस्थिताः ।। 5.1.34.८० ।।
तासामाहारसंज्ञाभिश्चक्रे नामानि शंकरः ।।
यानि तानि प्रवक्ष्यामि शृणु त्वं मुनिपुंगव ।।८१।।
वटभोजनकामा या ज्ञेयास्ता वटमातरः ।।
भुञ्जते चर्पटान्यास्तु ता वै चर्पटमातरः ।।८२।।
क्रीडार्थं शंभुना चाथ प्राप्ता याः पौलभोजने ।।
षण्णवतिमातरः सत्याः सर्वास्ताः पौलमातरः ।।८३।।
सर्वासां दर्शनं पुण्यं ग्रहभूतविनाशनम् ।।
प्रयत्नतः सदा देव्यो द्रष्टव्या मानवैर्मुने ।।८४।।
लब्ध्वा शक्तिं महासेनो देवसेनो महाव्रतः ।।
जघान दानवेंद्रं तं तारकं तरसा तदा ।। ८५ ।।
दत्त्वा राज्यं तथैंद्राय स्फीतं निहतकंटकम् ।।
कुशस्थलीं समागम्य तत्र वासं समाचरत् ।।८६।।
एवं निहत्य दैत्येंद्रं स गांगेयो महाब लः ।।
शक्तिं शिप्राजले मुक्त्वा पातालं च बिभेद सा ।।८७।।
ततो भोगवती व्यास शक्तिभेदेन निर्गता ।।
वंदिता सर्वदेवैश्च मुनिभिश्च तपोधनैः।।८८।।
पृथिव्यां यानि तीर्थानि समुद्रादिगतानि च ।।
शक्तिभेदे तु न्यस्तानि शतकोटिसहस्रशः ।। ८९ ।।

अतोऽतिपुण्यं त्रैलोक्ये कोटितीर्थमुदाहृतम् ।।
ब्रह्मणा स्थापितस्तत्र कोटितीर्थेश्वरः शिवः ।। 5.1.34.९० ।।
कोटितीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरं शिवम् ।।
मुच्यते सर्वपापेभ्यो निर्मोकादिव पन्नगः ।। ।। ९१ ।।
श्राद्धं करोति यस्तत्र पितृभक्तो नरो मुने ।।
दशानामश्वमेधानां प्राप्नोति सकलं फलम् ।। ९२ ।।
पितॄनुद्दिश्य यत्किञ्चित्कोटितीर्थे प्रदीयते ।।
तत्सर्वं कोटिगुणितं जायते नात्र संशयः ।। ९३ ।।
तत्र तीर्थे नरो यस्तु गां ददाति पयस्विनीम् ।।
सर्वलोकानतिक्रम्य स गच्छेत्प रमां गतिम् ।। ९४ ।।
यावन्त्यंगेषु रोमाणि तत्प्रसूतिकुलेषु च ।।
तावद्युगसहस्राणि शिवलोके महीयते ।। ९५ ।।
पौर्णमास्याममावास्यां पश्येच्छक्तिधरं तु यः ।।
नापुत्रो नाधनो रोगी सप्तजन्मसु जायते ।। ९६ ।।
जलप्रवेशं यः कुर्यात्तत्र तीर्थे नरोत्तमः ।।
सोऽक्षयं लभते लोकं यावच्चन्द्र दिवाकरौ ।। ९७ ।।
वृषोत्सर्गं तु यः कुर्यात्पितृभक्तो नरो मुने ।।
सोऽक्षयं लभते स्थानं यत्सुरैरपि दुर्लभम् ।। ९८ ।।
इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये शक्तिभेदतीर्थमाहात्म्यवर्णनंनाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।। ।।।छ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३५



।। सनत्कुमार उवाच ।। ।।
स्वर्णक्षुरे नरः स्नात्वा दृष्ट्वा देवं महेश्वरम् ।।
कपिलाशतदानस्य फलमप्यधिकं भवेत् ।। १ ।।
वाप्यां पितामह स्यापि यः स्नायाद्विजितेंद्रियः ।।
हंसयुक्तेन यानेन ब्रह्मलोकं स गच्छति ।। २ ।।
तैलाभिधानमातृणां रात्रौ यच्छति यो बलिम् ।।
तस्य सिद्धिर्भवे त्सद्यो मृतः शिवपुरं यजेत् ।। ३ ।।
विष्णुवाप्यां नरः स्नात्वा चैत्रे वा फाल्गुनेऽथवा ।।
जागरं यस्तु कुर्वीत सोपवासो जितेन्द्रियः ।।
मुच्यते सर्व पापेभ्यो विष्णुलोकं स गच्छति ।। ४ ।।
अभयेश्वरदेवस्य भक्त्या नियतमानसः ।।
पूजाबन्धमथो दृष्ट्वा रुद्रलोकं स गच्छति ।। ५ ।।
लोके तु जायते दाता सार्वभौमो महीपतिः ।।
यस्त्वगस्त्वेश्वरं गच्छेदेकचित्तो नरो मुने ।। ६ ।।
दृष्ट्वागस्त्येश्वरं देवं सोपवासो जितेंद्रियः ।।
अगस्त्योदयवेलायां मुच्यते सर्वपातकैः ।। ७ ।।
कृत्वागस्त्यं च सौवर्णं रौप्यं वाथ स्वशक्तितः ।।
पञ्चरत्नसमायुक्तं वस्त्रेण च समन्वितम् ।।८।।
तत्कालीनैः फलैः पुष्पैः पूजनीयो विधानतः ।।
विधानं तस्य वक्ष्यामि चातुर्वर्ण्ये द्विजोत्तम ।। ९ ।।
सप्तधान्यानि मुख्यानि तावन्त्येव फलानि च ।।
एकं धान्यं फलं चैकमग्रे त्याज्यं भवेन्मुने ।। 5.1.35.१० ।।
यावद्वै सप्त वर्षाणि व्रतमेवं समाचरेत् ।। ११ ।।
।। अर्घ्यमन्त्रः ।। ।।
काशपुष्पप्रतीकाश वह्निमारुतसं भव ।।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ।। १२ ।।

दत्तेऽर्घे यत्फलं व्यास तद्वै ह्येकमनाः शृणु ।।
पुत्रवान्धनवांश्चैव जायते नात्र संशयः ।। १३ ।।
मृतः स्वर्गमवाप्नोति संपन्ने जायतेकुले ।।
मर्त्यलोकं पुनः प्राप्य महायोगीश्वरो भवेत् ।। १४ ।।
यश्चैतच्छृणुयान्नित्यं पठेद्वा सुसमाहितः।।
सर्वपापविनिर्मुक्तो मुनिलोके स मोदते ।। १५ ।।
।। इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य खण्डेऽवन्तीक्षेत्रमाहात्म्येऽगस्त्येश्वरमाहात्म्यवर्णनंनाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३६



।। व्यास उवाच ।। ।।
महाकालं किमर्थं तु किं वा शिवपदं स्मृतम् ।।
कोटीश्वरं किमर्थं तु पावकं तत्किमुच्यते ।। १ ।।
नरदीपं किमर्थं तु द्वितीया वटमातरः ।।
अभयेश्वरं किमर्थं तु शंखोद्धा रणमेव च ।। २ ।।
शूलेश्वरं किमर्थं तु किमोंकारस्तु कथ्यते ।।
धूतपापं किमर्थं तु किमंगारेश्वरं तथा ।। ३ ।।
पुरी चोज्जयिनी दिव्या सप्तकल्पा कथं स्मृता ।।
कथयस्व मुनिश्रेष्ठ तस्या नामानि यानि च ।। ४ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास यथा ख्याता पुरी दिव्या कुश स्थली ।।
नामतः कर्मतः श्रेष्ठा सप्तकल्पानुवासिनी ।। ५ ।।
प्राक्कल्पे स्वर्णशृंगाख्या द्वितीये तु कुशस्थली ।।
तृतीयेऽवंतिका प्रोक्ता चतुर्थेत्वमरा वती ।। ६ ।।
विख्याता पञ्चमे कल्पे पुरी चूडामणीति च ।।
षष्ठे पद्मावती ज्ञेया सप्तमे चोज्जयिनी पुरी ।। ७ ।।
पुनरंते तु कल्पस्य स्वर्णशृङ्गादि का स्मृता ।।
एतानि सप्त नामानि प्रातरुत्थाय यः पठेत् ।। ८ ।।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।।
उज्जयिन्यां पुरा राजा बभूव किल चांधकः ।। ९ ।।
तस्य पुत्रो महावीर्यो नाम्ना कनकदानवः ।।
युद्धार्थं स महावीर्यः शक्रं युद्धे समाह्वयत् ।। 5.1.36.१० ।।
क्रोधादिंद्रेण संग्रामे युध्य मानो निपातितः ।।
निहत्य दानवं शक्रो भयादंधासुरस्य तु ।। ११ ।।
जगाम शंकरान्वेषी कैलासं शंकरालयम् ।।
दृष्ट्वा प्रणम्य देवेशं चंद्रार्धकृत शेखरम् ।। १२ ।।

भीतो विज्ञापयामास स चाश्र्वाकुललोचनः ।।
अभयं देहि मे देव दानवादंधकाच्च वै ।। १३ ।।
शक्रस्येत्थं वचः श्रुत्वा शरणा गतवत्सलः ।।
ददावभयमेवासौ मा भैस्त्वमंधकाद्धि वै ।। १४ ।।
कृत्वा रूपं महादेवो विश्वरूपं सुभैरवम् ।।
सर्पैर्ललद्भिरत्युग्रैस्तीक्ष्णदंष्ट्रैर्विषोल्बणैः ।। १५ ।।
पातालोदररूपैश्च भैरवारावनादिभिः ।।
भुजैरनेकसाहस्रैर्बहुशस्त्रधृतैस्तथा ।। १६ ।।
सिंहचर्मपरीधानं व्याघ्रत्वगुत्तरीयकम् ।।
गवाजिन कृताटोपं चंद्राग्निरविलोचनम् ।। १७ ।।
महामहीध्रतुल्याभ्यां जंघाभ्यां भूषितं सदा ।।
क्षोभयंश्चालयन्सर्वान्पातालस्य तलावधि ।। १८ ।।
ईदृग्रूपं विधायेशो दनुदैत्यभयावहम् ।।
अवातरन्महीं भीमः पादेनैकेन शंकरः ।। १९ ।।
तत्रैव हि ह्रदो जातः सर्वदैवतवंदितः ।।
ख्यातं शिवपदं तद्धि यत्पदाऽऽक्रांतवान्विभुः ।। 5.1.36.२० ।।
पापानां च पुरा कोटिः पादांगुष्ठेन दारिता ।।
कोटितीर्थमतः ख्यातं सर्वपापप्रणाशनम् ।। २१ ।।
अगस्त्येन तथा कोटिस्तीर्थानामवधारिता ।।
अतोऽपीदं शुभं लोके कोटितीर्थं सदा स्मृतम् ।। २२ ।।
दृष्ट्वा तु त्रिदशाः सर्वे स्नाता वै हितकाम्यया ।।
महा कालकृतं रूपं महाकालस्ततः स्मृतः ।। २३ ।।
अंधासुरोऽपि दनुजः पुत्रं श्रुत्वा हतं युधि ।।
क्रोधेन तमसाविष्टो रणतूर्याण्यवादयत ।। २४ ।।
ससैन्यो निर्गतः प्राप्तो यत्र ते त्रिदशाः स्थिताः ।।
महत्या सेनया सार्धं रथवारणयुक्तया ।। २५ ।।
तदैव दानवान्वीक्ष्य महाहवकृतोद्यमान् ।।
वेपंतस्ते सुसंनद्धा शंभुं शरणमाययुः ।। २६ ।।
मा भैरिति महाकालो देवानुक्त्वा त्रिलोचनः ।।
गृहीत्वा शूलमातिष्ठद्दष्टादंष्ट्राधरो रुषा ।। २७ ।।
कोपयुक्ते विरूपाक्षे ज्वालाभिः पूरितं नभः ।।
अंधकेनाथ रुष्टेन शरकोटिस्तु दुःसहा ।। २८ ।।

मुक्ता जगाम देवानां ननाश शलभाकृति ।।
विस्फुलिंगार्चिषं वह्निं मुंचमानः पिनाकधृक् ।। २९ ।।
शतशः शकलीचक्रे तं च बाणैरताडयत् ।।
अंधकोऽपि हि युद्धस्थः शिथिलः शिथिला युधः ।। 5.1.36.३० ।।
निरुद्धः शंभुना बाणैरलिभिः पंकजं यथा ।।
तस्य सैन्यं प्रविद्धं च तद्गणैर्युधि योधिभिः ।। ३१ ।।
योधवरैर्हता दिव्यैः स्थाणु सान्निध्यमाश्रितैः ।।
ततोंऽधकेन सैन्यं स्वं भिन्नं दृष्ट्वा तथासुरैः ।। ३२ ।।
आत्मानं च महेशेन विद्धं च बाणकोटिभिः ।।
विदलीकृतदेहोऽसौ भय माश्रित्य वेगतः ।। ३३ ।।
चकार तामसीं मायां मायाशतविशारदः ।।
तयांतर्हितदेवेशो जगाम दिशमुत्तराम् ।। ३४ ।।
शंभुर्भीतिभरं बिभ्रद्बभ्राम भुवि भिन्नहृत् ।।
यस्मिन्मार्गे गतो देवस्तेन दैत्यो जगाम ह ।। ३५ ।।
वदन्न दृश्यते क्वासौ गतो दुष्टः पुनःपुनः ।।
उवाच चांधकः शब्दं तथोवा च महेश्वरः ।। ३६ ।।
तत्र तीर्थमथोत्पन्नं वागंधकमभिश्रुतम् ।।
तत्र स्नात्वा शुचिर्भूत्वा यो वै दद्यात्सशर्करम् ।। ३७ ।।
नवम्यां मार्गशीर्षस्य शुक्लायां श्रद्धयान्वितः ।।
अक्षयं तद्भवेद्दत्तं दाता शिवपुरं व्रजेत् ।। ३८ ।।
पितृनुद्दिश्य यत्किंचिद्दीयते भक्तितः शिवे ।।
तृप्तास्तिष्ठंति ते तावद्यावदाभूत संप्लवम् ।। ३९ ।।
तमसा च्छादिता देवाः संबभूवुः समाकुलाः ।।
संभ्रांतमनसः सर्वे न किंचिदपि मेनिरे ।। 5.1.36.४० ।।
एतस्मिन्नंतरे व्यास नरादित्यः स्वतेजसा ।।
उत्तस्थौ नररूपेण कुर्वन्वितिमिरा दिशः ।। ४१ ।।
नष्टे तमसि दैत्येपि प्रकाश प्रकटे सति ।।
देवा मुदमवापुस्ते दृष्ट्वा नरं विलोचनैः ।। ४२ ।।
स्तुवंतो विविधैः स्तोत्रैर्नररूपं दिवाकरम् ।।
उत्तस्थौ नररूपेण दीप्तो यस्माद्दिवाकरः ।। ४३ ।।
तेनास्य नाम ते चकुर्नरदीप इतीश्वराः ।।
यः पश्यति नरो भक्त्या नरदीपं दिवाकरम् ।। ४४ ।।

मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत् ।।
षष्ठ्यामर्कदिने विप्र सप्तम्यामुप वासयेत् ।। ४५ ।।
दिनच्छिद्रेथ संक्रांतौ ग्रहणे विषुवत्यथ ।।
कुंडे स्नात्वा शुचिर्भूत्वा जपन्नियतमानसः ।। ४६ ।।
नरदीपं नरः पश्येत्स्तोत्रवा दित्रमंगलैः ।।
गंधैर्धूपैस्तथा दीपैर्नैवेद्यैः पूजयेत्तथा ।। ४७ ।।
गीतं वाद्यं पुरस्कृत्य प्रणम्याष्टांगमेव च ।।
प्रातर्मध्यापराह्ने वा कृत्वार्कस्य प्रदक्षिणा म् ।। ४८ ।।
स मुक्तः सर्वपापैस्तु सप्तजन्मकृतैरपि ।।
सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ।।४९।।
सूर्यलोकं प्रयात्याशु यत्सुरैरपि दुर्लभम् ।।
शक्रात्प्राप्य पुरा यस्माद्भानुरत्र प्रतिष्ठितः ।। 5.1.36.५० ।।
नरेणैव प्रसादेन नरदीपस्ततो ह्ययम् ।।
तदैवास्य पुरा व्यास यात्रा शक्रेण निर्मिता ।। ५१ ।।
आगमिष्याम्यहं पार्थ सार्धं देवैः समाहितः ।।
ज्येष्ठे सिते द्वितीयायां नरदीपे तु सर्वदा ।।५२।।
तत्राहमागतो ज्ञेयो लोके देवस्य वर्षणात् ।।
ततोऽनंतरमागत्य देवा ये त्रिदशालयात् ।। ५३ ।।
दृष्ट्वा देवं तथारूढं नरदीपं सुदीपितम् ।।
कृत्वा यात्रां च ते यांति देवयानैरितस्ततः ।। ५४ ।।
यः पश्येन्मानवो भक्त्या नरदीपं रथस्थितम् ।।
सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ।। ५५ ।।
रथयात्रामथो वक्ष्ये नरदीपस्य या मुने ।।
तां कृत्वा चैव यत्पुण्यं मुनिभिः परिकीर्तितम् ।। ५६ ।।
ज्येष्ठे सिते द्वितीयायां रथस्थो हि दिवाकरः ।।
कुशस्थल्यां द्विजैः श्रेष्ठैर्बाहुक्षेपैः प्रणीयते ।। ५७ ।।
उत्तरां दिशमायांतं यः पश्यति दिवस्पतिम् ।।
अग्निष्टोमस्य यज्ञस्य लभते सोऽखिलं फलम् ।।५८।।
निवृत्य केशवार्काद्यो रथं पश्यति मानवः।।
शुंडीरस्वामिनो यात्रा कृता तेन न संशयः ।। ५९ ।।
रथमाकर्षते यस्तु रज्ज्वाकर्षेण वै मुने ।।
कुलमुद्धरते सोऽपि पूर्वान्पितृपितामहान् ।। 5.1.36.६० ।।

दक्षिणाभिमुखं यांतं नरदीपं द्विजोत्तम ।।
ये संयताः प्रपश्यंति ते यांति च त्रिविष्टपम् ।। ६१ ।।
सूत्रेण वेष्टयेत्क्षेत्रं रथं देवमथापि वा ।।
सर्वान्कामानवाप्नोति कृतपुण्यश्च जायते ।। ६२ ।।
प्रदक्षिणां तु सूर्यस्य भक्त्या कुर्वंति ये नराः ।।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुंधरा ।। ६३ ।।
प्रातरुत्थाय यो भक्त्या मौनी याति दिवाकरम्।।
दृष्ट्वा तु पूर्वद्वारेण नमस्कृत्य द्विजोत्तम ।। ६४ ।।
प्रविश्य दक्षिणेनैव रथचक्रं प्रपूजयेत् ।।
तेन द्वारेण निष्क्रम्य प्रणिपत्य व्रजेत्ततः ।।६५।।
पश्चिमं द्वारमाश्रित्य रथस्थं सूर्यमर्चयेत् ।।
चामरं च वितानं च घंटादीनि निवेदयेत् ।।६६।।
पूर्वद्वारे तु गौर्दे या तथाश्वश्चैव दक्षिणे ।।
पश्चिमे च गजः प्रोक्त उत्तरे रथ एव च ।।६७।।
कुर्यादेव तु यो यात्रां नरदीपस्य मानवः।।
सर्वान्कामानवाप्नोति कृतपुण्यश्च जायते ।।६८।।
गोसूर्यशिवशक्राणां स्वर्लोकं लभते शुभम् ।।
प्रदक्षिणा महामेरोः कृता तेन भवेन्मुने।।६९।।
दद्याद्गवां सहस्रं यो व्यतीपातशते नरः।।
अश्वानां च सहस्रेण यद्यायात्तत्फलं लभेत् ।।5.1.36.७०।।
नरदीपे रथारूढे वपनं कारयेत्तु यः।।
श्रिया न विच्युतिस्तस्य सूर्यलोके महीयते।।७१।।
सूर्यस्य पुरतो वाप्यां मासं नित्यं सरस्वती।।
यस्तामालोकते मर्त्यो दुःस्वप्नं तस्य नश्यति।।७२।।
भक्त्या योऽनुदिनं व्यास नरदीपं प्रपश्यति।।
उत्तमं स्थान मासाद्य पुत्रपौत्रसमन्वितः।।७३।।
प्रक्रीड्य बंधुभिः सार्धं मृतः सूर्यपुरं व्रजेत्।।
प्रनष्टे तिमिरे विप्र जाते सर्वत्र सुप्रभे ।।७४।।
हतेंऽधके महेशेन शूलेन त्रिशिखेन वै ।।
प्रहृष्टाश्च सुराः सर्वे ब्रह्मेंद्रप्रमुखास्तदा ।।७५।।
शंखं दध्मौ तदा विष्णुः सुराणां हितकाम्यया ।।
तत्र तीर्थमथोत्पन्नं शंखोद्धारणसंज्ञ कम् ।।७६।।

तत्र संनिहितो विष्णुर्लिंगं चैव चतुर्मुखम् ।।
अनाद्यं चैव विप्रेंद्र लिंगस्यैव समीपतः ।।७७।।
देवस्य दक्षिणे भागे शूलेनाधिष्ठितः स्थितः ।।
चतुर्दश्यां तथाष्टम्यां ये पश्यंति जितेंद्रियाः ।। ७८ ।।
ते क्षीणाशेषपापौघाः प्राप्स्यंति परमां गतिम् ।।
योगिनीनां बलिं यस्तु यथावत्संप्रदा स्यति ।। ७९ ।।
भूतप्रेतपिशाचाद्यैर्नासौ केनापि बाध्यते ।।
द्वादशीं समुपोष्यैव स्नात्वा देवं जनार्दनम् ।। 5.1.36.८० ।।
यः पश्येच्छंखिनं देवं सोऽच्युतं स्थानमाप्नुयात् ।। ८१ ।।
यः स्थूलसूक्ष्मप्रकटप्रकाशो यः सर्वभूतो न च सर्वभूतः ।।
विश्व यतश्चैव हि विश्वहेतुर्नमोस्तु तस्मै पुरुषोत्तमाय ।। ८२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडेऽवन्तीक्षेत्रमाहात्म्ये नरदीपमाहात्म्यवर्णनंनाम षट्त्रिशोऽध्यायः ।।३६।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३७



सनत्कुमार उवाच ।। ।।
भिन्नेंऽधके त्रिशूलेन ध्वनी रुद्रस्य निर्गतः ।।
तत्रोंकारः समुत्पन्नो देवदेवो महेश्वरः ।। १ ।।
तत्र स्नात्वा शुचिर्भूत्वा समाधिनियमेन च ।।
दृष्ट्वोंकारं महादेवं मुच्यते सर्वपातकैः ।। २ ।।
हत्वांधके त्रिशूलश्च भोगवत्या जले ययौ ।।
दृष्ट्वा शूलं सुतेजस्कं हाटको विस्मयं गतः ।।
पप्रच्छ केन कार्येण भवानिह समागतः ।। ३ ।।
कथयामास शूलोसौ शंकरेणाहमीरितः ।।
अंधकस्य वधार्थाय पापवृत्तेः सुदु र्मतेः।।४।।
भित्त्वा तमहमायातो भोगवत्या जले शुभे ।।
गमिष्यामि पुनस्तत्र यत्र तिष्ठति शंकरः ।। ५ ।।
शूलोक्तं वचनं श्रुत्वा परमेशदिदृक्षया ।।
हाटकः शूलमार्गेण निर्जगाम जवेन सः ।।
बहुवक्त्रसमाकीर्णं सुप्रभं सुमनोरमम्।। ६ ।।
तं दृष्ट्वा त्रिदशाः सर्वे शूलेशं हाटकेश्वरम्।।
प्रणम्य हृष्टरोमाणो यथा प्रोत्फुल्लपंकजम् ।। ७ ।।
तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्मविष्णुपुरोगमाः ।।
हाटकेश्वरनामासीत्पाताले यो व्यवस्थितः ।। ८ ।।
निर्गतः शूलमार्गेण तेन शूलेश्वरः स्मृतः ।।
धूतपापं च यत्तीर्थं देवदेवस्य चोत्तरे ।। ९ ।।
तत्र पापः स दैत्येंद्रो धूतः शूलेन वीर्यवान् ।।
तेन तीर्थमिदं व्यास धूतपापं निगद्यते ।। 5.1.37.१० ।।
अष्टम्यां वा पौर्णमास्यां चतुर्दश्यां शनौ तथा ।।
उपोष्य रजनीमेकां शिवभक्तो जितेंद्रियः ।। ११ ।।
धूतपापं तु यः पश्येद्देवदेवं महेश्वरम्।।

विमुक्तः सर्वपापैः स सप्तजन्मकृतैरपि ।।१२।।
कुलानां शतमुद्धृत्य शिवलोकं च गच्छति ।।
कृताभिषेकं यः पश्येत्पौषे मासि स वै नरः ।। १३ ।।
शूलेश्वरप्रभावेन मुच्यते ब्रह्महत्यया ।।
विमानानां सहस्रेण मृतो याति परं पदम् ।। १४ ।।
इति चांधकशूलोयं यावद्भोगवतीं गतः ।।
तावत्समुत्थिता घोरा असुरा रुधिरोद्भवाः ।। १५ ।।
खड्गहस्ता महावीर्या अनेकशतसंख्यया ।।
चतुर्दिक्षु स्थितैर्घोरैर्हन्य मानो महेश्वरः ।।
सिंहनादं मुमोचाथ पीडितस्तैर्दुरात्मभिः ।। १६ ।।
सिंहनादेन ते पापा मूर्छिताः पतिता भुवि ।।
पुनः समुत्थिता जग्मुर्देवदेवं महेश्वरम् ।।
वित्रस्ताश्च ततो देवा ब्रह्मविष्णुपुरोगमाः ।। १७ ।।
असाध्यांस्तांस्तथा मत्वा मंत्रं कृत्वा हितैषिणः ।।
ततो देवा विचार्याथ स्त्रीं सृजाम इति स्वयम् ।। १८ ।।
इत्युक्त्वोत्पादयामास ब्रह्मा हंसासनां शुभाम् ।।
चतुर्वक्त्रां चतुर्हस्तां ब्रह्माणीं रूपधारिणीम् ।। १९ ।।
कुमारश्चैव कौमारीं मयूरवरवाहनाम् ।।
रक्तमाल्याबरधरां शक्तिकुक्कुटधारिणीम् ।। 5.1.37.२० ।।
पुनः कुमारः कौमारीं पक्षींद्रवरवाहनाम् ।।
कृष्णां करालदशनां धर्मराजस्य वाहनीम् ।। २१ ।।
दैत्यदेहप्रमथनीं दंडमुद्गरधारिणीम् ।।
ललाटलोचनां नीलां कपालकरभूषिताम् ।। २२ ।।
सिंहाजिनधरां कृष्णां सर्वभूषणभूषिताम्।।
कर्त्रीहस्तां खड्गहस्तां खेटखट्वांगधारिणीम् ।।
चर्मास्थिकेशवपुषं चामुंडाममृजत्प्रभुः ।। २३ ।।
वटस्य निकटे पूर्वं निर्मिता लोकमातरः ।।
ततो लोके सुविख्याताः प्रत्यक्षा वटमातरः ।। २४ ।।
तत्र स्नात्वा शुचिर्भूत्वा मातॄः पश्यति यो नरः ।।
स मुक्तः सर्वपापेभ्यो मातृलोके महीयते ।। २५ ।।
सिंहनादोऽपि देवेन कृतो यत्र महामुने ।।
तत्र सिंहेश्वरो देवः सर्वदुष्कृतनाशनः ।। २६ ।।

दर्शनात्तस्य देवस्य सिंहवत्स बली भवेत् ।।
सिंहनादे कृते यत्र जातं कण्टकितं वपुः ।। २७ ।।
तत्र कण्टेश्वरो देवो भक्तानां सर्वदः सदा ।।
तत्र तीर्थे नरः स्नात्वा दृष्ट्वा कण्टेश्वरं शिवम् ।। २८।।
ग्रहभूतपिशाचेभ्यो न भयं प्राप्नुयात्क्वचित् ।।
ततस्ता मातरः सर्वा आदिष्टास्तु हरेण वै ।। २९ ।।
अन्धासुरस्य रौद्रस्य पिबध्वं रुधिरं द्रुतम् ।।
एतस्मिन्नन्तरे व्यास प्रज्वलज्ज्वलनोपमः ।। 5.1.37.३० ।।
अभयं शक्र मा भैस्त्वं यत्रोवाचेति शंकरः ।।
तत्र लिंगं समुद्भूतमभयेश्वरमुत्तमम् ।। ३१ ।।
वंदितं देवगंधर्वैः सिद्धविद्याधरोरगैः ।।
तत्र स्नात्वा शुचिर्भूत्वा सोपवासो जितेन्द्रियः ।। ३२ ।।
अर्चये द्देवदेवेशमश्वमेधफलं लभेत् ।।
भूतप्रेतपिशाचेभ्यो भयं तस्य न विद्यते ।। ३३ ।।
सिंहयुक्तेन यानेन शिवलोकं स गच्छति ।।
अन्धकस्य तु या माया रक्तासुरसमुद्भवा ।। ३४ ।।
मातृभिर्युध्यमानाभिः क्षयमाशु जगाम सा ।।
देव्यः पिबन्त्यो रक्तौघं दैतेयतनुतश्च्युतम् ।। ३५ ।।
षट्तृप्तिं परमा जग्मुर्न तु तृप्ता ललाटजा ।।
हतमायः शिष्टकस्तु भिन्नशूलतनुच्छदः ।। ३६ ।।
उत्तराभिमुखं शूलमंधकोऽकर्षयद्बली ।।
संनिरुद्धो महादेहो वारितो गणपेन सः ।। ३७ ।।
महाविनायकः ख्यातस्तस्माल्लोकेऽभवन्मुने ।।
दर्शनात्तस्य देवस्य न विघ्नैः पीड्यते नरः ।। ३८ ।।
मासेमासे चतुर्थ्यां यो गणेशं पूजयेद्द्विज ।।
न तस्य विघ्नं जायेत इह लोके परत्र च ।। ३९ ।।
स्वेदबिंदुरथो तस्य ललाटादपतद्भुवि ।।
तस्मादंगारको जातो रक्तमाल्यानुलेपनः ।। 5.1.37.४० ।।
आवन्त्ये विषये जातो लोहितांगो धरासुतः ।।
अंगारकस्तु रक्ताक्षो महादेवसुतस्तथा ।। ४१ ।।
नामभिर्ब्रह्मणा स्तुत्वा ग्रहमध्येऽधिरोपितः ।।
तत्र तीर्थमथोत्पन्नमंगारेश्वरमुत्तमम् ।। ४२ ।।

ब्रह्मणा स्थापितं लिंगं गणगंधर्वसेवितम् ।।
शुचिस्तत्र च यः स्नाति नरो ह्यंगारवासरे ।। ४३ ।।
दृष्ट्वांगारेश्वरं सोथ मुच्यते सर्वपातकैः ।।
चतुर्थ्यां मंगलदिने नक्ते चार्घ्यं निवेदयेत् ।। ४४ ।।
यावत्पूर्णाश्चतस्रः स्युस्तावत्कार्याः प्रयत्नतः ।।
पञ्च वै करकाः कार्यास्ताम्रपात्रेण संयुताः ।। ४५ ।।
गुडपीठमयाः कार्या रक्तवस्त्रसमन्विताः ।।
रक्तचंदनसंयुक्ता रक्तपुष्पैश्च पूजिताः ।। ४६ ।।
तिलतण्डुलसंपूर्णमेकं तत्रैव कारयेत् ।।
द्वितीयं लड्डुकैश्चैव तृतीयं पयसा तथा ।। ४७ ।।
उत्तरीभिश्चतुर्थं च पञ्चमं मूलकैस्तथा ।।
कृत्वा ह्येवं विधानेन मंत्रेणार्घ्यं निवेदयेत् ।। ४८ ।।
कुजाय लोहितांगाय ग्रहमध्यस्थिताय च ।।
कार्तिकेयानुरूपाय सुरूपाय नमो नमः ।।४९।।
शिवललाटसंभूत धरणीगर्भसंभव ।।
रूपार्थं त्वां प्रपन्नोस्मि गृहाणार्घ्यं नमोऽस्तु ते ।।5.1.37.५०।।
ज्वलितांगारवर्णाभ स्निग्धविद्रुमभा सुर ।।
पुत्रार्थी त्वां प्रपन्नोस्मि गृहाणार्घ्यं धरात्मज ।। ५१ ।।
आवन्त्यमण्डले जातो धरण्यां च शिवेन वै ।।
पुत्रं देहि धनं देहि यशो देहि नमोऽस्तु ते ।। ५२ ।।
एवं संपूजितो भौमश्चतुर्थ्यां मुनिसत्तम ।।
भुक्त्वा भोगांस्तथा पुत्रान्प्राप्य वै क्षितिमंडले ।। ५३ ।।
मृतः स्वर्गमवाप्नोति यावदिन्द्राश्चतुर्दश ।। ५४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽङ्गारकीचतुर्थी व्रतमाहात्म्यवर्णनंनाम सप्तत्रिंशोऽध्यायः ।। ३७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३८



।। सनत्कुमार उवाच ।। ।।
नास्ति शेषं यदा रक्तं पीयमानं च रक्षसः ।।
चामुंडायास्ततो रक्तमभूदास्यं च भासुरम् ।।१।।
कृष्णं कृतांतकल्पांतं करालदशनाधरम् ।।
प्रज्वलत्यंधके शांतं ज्वलत्केसरलोचनम् ।।२।।
घोरघर्घरनिर्घोषस्फीतफेत्कारविस्वरम् ।।
तार्क्ष्यपक्षकृतापीडं तीक्ष्णदंष्ट्राकुरोज्ज्वलम् ।।३।।
तस्मिन्मुखे कपालाग्रं निधाय रुषितानना ।।
अपिबद्रुधिरं चंडी चण्ड दोर्दंडमंडिता ।। ४ ।।
तया पिबंत्या दैत्येंद्रः शरीरे कृशतां गतः ।।
क्षयं निन्येऽथ संक्षीणक्षुद्रक्षुभितवीक्षणः ।। ५ ।।
इत्थं निर्वीर्यदेहोऽसौ बभूवांध कदानवः ।।
सर्वां संहृत्य मायां यो बलं क्षीणमथाकरोत् ।। ६ ।।
तीव्रं भयं समासाद्य प्राणत्राणपरायणः ।।
दृष्ट्वा नान्यां गतिं लोके दैत्यस्तुष्टाव शंकरम् ।। ७ ।।
कृतांजलिपुटो भूत्वा रोमांचितशरीरकः ।।
सात्त्विकं भावमापन्नस्त्यक्त्वा चैव रजस्तमः ।। ८ ।।
लोकानां कारणं देवं विबुधाधि पतिं प्रभुम् ।।
शश्वद्बुद्ध्यान्वितो भक्त्या निर्मलेनांतरात्मना ।। ९ ।।
श्लाघ्यं शिवं च तुष्टाव देवं चंद्रार्धशेखरम् ।। 5.1.38.१० ।।
।। अंधक उवाच ।। ।।
कृत्स्नस्य योऽस्य जगतः सचराचरस्य कर्ता कृतस्य च तथा सुखदुःखदाता।।
संसारहेतुरपि यः पुनरंतकाले तं शंकरं शरणदं शरणं व्रजामि ।।११।।
यं योगिनो विगतमोहतमोरजस्का भक्त्यैकतानमनसो विनिवृत्तकामाः ।।
ध्यायंति येऽखिलधियोऽमितदिव्यभूतिं तं शंकरं शरणदं शरणं व्रजामि ।। १२ ।।
यश्चंद्रखंडममलं विलसन्मयूखं बद्ध्वा सदा सुरसरिच्छिरसा बिभर्ति ।।

यस्यार्धदेहमभजद्गिरिराजपुत्री तं शंकरं शरणदं शरणं व्रजामि ।। ।। १३ ।।
यः सिद्धचारणनिषेवितपादपद्मो गंगां महोर्मिविषमां गगनात्पतंतीम् ।।
मूर्ध्ना दधे स्रजमिव त्रिजगत्पुनंतीं तं शंकरं शरणदं शरणं व्रजामि ।। १४ ।।
कैलासशैलशिखरं प्रविकंप्यमानं कैलासशृंगसदृशेन दशाननेन ।।
यः पादपद्मपरिपीडनसेव्यमानस्तं शंकरं शरणदं शरणं व्रजामि ।। १५ ।।
दक्षाध्वरे च नयने च तथा भगस्य पूष्णस्तथा दशनपंक्तिमशातयद्यः ।।
व्यष्टंभयत्कुलिशहस्तमथैंद्रमीशं तं शंकरं शरणदं शरणं व्रजामि ।।१६।।
येनासकृद्दितिसुताश्च दनोः सुताश्च विद्याधरोरगगणाश्च वरैः समग्रैः ।।
संयोजिता मुनिवराः फलमूलभक्षास्तं शंकरं शरणदं शरणं व्रजामि ।। १७ ।।
एवं कृतेपि विषयेष्वपि सक्तभावा ज्ञानेन च श्रुतगुणैरपि तेन युक्ताः ।।
यं संश्रिताः सुखभुजः पुरुषा भवंति तं शंकरं शरणदं शरणं व्रजा मि ।। १८ ।।
ब्रह्मेंद्रविष्णुमरुतां च सषण्मुखानां योऽदाद्वरान्सुबहुशो भगवान्महेशः ।।
सूतं च मृत्युवदनात्पुनरुज्जहार तं शंकरं शरणदं शरणं व्रजामि ।। १९ ।।
आराधितस्तु तपसा हिमवन्निकुंजे धूम्रव्रतेन तपसा च परैरगम्यः ।।
संजीवनीं समददाद्भृगवे महात्मा तं शंकरं शरणदं शरणं व्रजामि ।।5.1.38.२०।।
क्रीडार्थमेव भगवान्भुवनानि सप्त नानानदीविहगपादपमंडितानि ।।
सब्रह्मकानि ससृजे सुकृताभिधानि तं शंकरं शरणदं शरणं व्रजामि ।। २१ ।।
यः सव्यपाणिकमलाग्रनखेन देवस्तत्पंचमं प्रसभमेव करालरंध्रम् ।।
ब्राह्म्यं शिरस्तरणिपद्मनिभं चकर्त तं शंकरं शरणदं शरणं व्रजामि ।। २२ ।।
ये त्वां सुरोत्तमगुरुं पुरुषा विमूढा जानंति नास्य जगतः सचराचरस्य ।।
ऐश्वर्यमानविगमेऽनुशयेन पश्चात्ते यातनामनुभवंति यथाहमेव ।। २३ ।।
यः पठेत्स्तुतिमिमां शुचिकर्मा यः शृणोति सततं शिवभक्तः ।।
विप्रसंसदि सदा शुभकर्मा स प्रयाति शिवलोक मखंडम् ।। २४ ।।
।। सनत्कुमार उवाच ।। ।।
तस्यैवं स्तुवतो देवः शूलपाणिर्वृषध्वजः ।।
पूर्णे वर्षशतस्यांते प्रीतः प्रोवाच शंकरः ।। २५ ।।
पुत्र तुष्टोऽस्मि भद्रं ते जातस्त्वं निर्मलोऽधुना ।।
दिव्यं ददामि ते चक्षुः पश्य मां विगतज्वरः ।। २६ ।।
यच्च ते मनसा वापि किंचिच्च कांक्षितं फलम् ।।
तत्तत्सर्वं प्रदास्यामि ब्रूहि दानवसत्तम ।। २७ ।।
।। दानव उवाच ।। ।।
ब्राह्म्यं वैष्णवमैंद्रं वा पदमावृत्तिलक्षणम् ।।

विदितं मम तत्सर्वं मनागपि न कांक्षये ।। २८ ।।
यदि तुष्टोऽसि देवेश गाणपत्यं ददस्व मे ।।
सविशेषं विशुद्धं च तदक्षय्यं च सर्वदा ।। २९ ।।
।। महादेव उवाच ।। ।।
अमरो जरया त्यक्तः सर्वदुःखविवर्जितः ।।
भविष्यसि गणाध्यक्षः सर्वलोकनमस्कृतः ।। 5.1.38.३० ।।
कामरूपो महायोगी महासत्त्वो महाबलः ।।
अणिमादिगुणैर्युक्तः प्रियश्च मम सर्वदा ।। ३१ ।।
।। सनत्कुमार उवाच ।। ।।
ततश्च सोंऽधकः श्रीमान्वराँल्लब्ध्वा सुदुर्लभान् ।।
महादेवगणो भूत्वा तत्रैवांतरधीयत ।। ३२ ।।
गतेंऽधके ततो देव्यो ब्रह्माण्याद्याः समागताः ।।
स देवो यत्र भगवानंधकस्य वरप्रदः ।। ३३ ।।
तास्तष्टुवुर्महादेवमथ तुष्टो महेश्वरः ।।
चामुंडा च महेशेन समाश्वस्ता शिवाऽभवत् ।। ३४ ।।
शंकरं प्रणतं दृष्ट्वा तासामग्रे व्यवस्थितम् ।।
ब्रह्मादयोऽपि ते हृष्टास्तुष्टुबुर्विविधैः स्तवैः ।। ३५ ।।
प्रशांतास्ता यदा हृष्टाः शंभुना रुधिराशनाः।।
तदा वोचदिदं वाक्यं तासां स्थित्यर्थमुत्तमम् ।। ३६ ।।
आवंत्ये विषये सर्वा यस्माजाता महाबलाः ।।
आवंत्यमातरस्तस्मात्ख्याता लोके भविष्यथ ।। ।। ३७ ।।
अवंत्यां प्रीतिसंपन्नाः सर्वपापप्रणाशिनीः ।।
स्थिरा वसंत्यो लोकानां वरदाश्च भविष्यथ ।। ३८ ।।
श्रावणस्य तु मासस्य अमावास्यां समाहिताः ।।
ये द्रक्ष्यंति सदा भक्त्या तेषां लोका महोदयाः ।। ३९ ।।
अपुत्रो लभते पुत्रान्धनार्थी लभते धनम् ।।
रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः ।। 5.1.38.४० ।।
हंसयुक्तेन यानेन पितृलोके महीयते ।।
पुरीमिमां च रक्षध्वं कल्पेकल्पे क्रमेण तु।। ४१ ।।
एवमुक्त्वा तु देवेशो गतः कैलास पर्वतम् ।।
स्तूयमानो गणै रौद्रैर्दैत्यामरगणेश्वरैः ।। ४२ ।।
असुरसुरगणानां नायकस्यानुकीर्तिं कथयति कथनीयां श्रद्धया यः शृणोति ।।

सकल सुखनिधानं रुद्रलोकं स कांतं सुरगणदनुनाथैरर्चितं यात्यनंतम् ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडेऽवन्तीक्षेत्रमाहात्म्येऽन्धकवृत्तांतवर्णनंनामाष्टात्रिंशोऽध्यायः ।। ३८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ३९



।। व्यास उवाच ।। ।।

भगवन्क्षेत्रमाहात्म्यं कथितं च यथातथम् ।।

तीर्थानामुत्तमं तीर्थं पुण्यानां पुण्यवर्धनम् ।। १ ।।

कति संत्यत्र तीर्थानि लिंगानि च तथा कति ।।

कथयस्व प्रसादेन पृच्छतो मम सांप्रतम् ।। २ ।।

।। सनत्कुमार उवाच ।। ।।

षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।।

महाकालवने व्यास लिंगसंख्या न विद्यते ।। ३ ।।

अकामो वा सकामो वा जायते योऽत्र मानवः ।।

महाकालवने रम्ये शिवलोके महीयते ।। ४ ।।

कृतकामानि तीर्थानि प्रासादायतनानि च ।।

तेषु स्नात्वा शुचिर्भूत्वा शिवलोके महीयते ।। ५ ।।

पुण्यानि सर्वतीर्थानि सिद्धिक्षेत्राणि सर्वतः ।।

तेषां मुख्यतमं विद्धि क्षेत्रं तीर्थं तथोत्तमम् ।। ।। ६ ।।

यः शृणोति महाभक्त्या स याति परमां गतिम् ।। ७ ।। ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्य खण्डेऽवन्तीक्षेत्रमाहात्म्ये महाकालवनमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः ।। ३९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४०



।। व्यास उवाच ।। ।।
भगवन्भवता सर्वं भवभीतिविनाशकम् ।।
ईश्वरस्थानमाख्यातं समंतात्साग्रयोजनम् ।। १ ।।
यत्र क्षेत्रे मृता मर्त्याः सदाचारास्तथोत्तमाः ।।
विमानस्था पुरे नूनमैश्वरे ते वसंति च ।। २ ।।
यत्र कीटपतंगाद्या मृता यांति परां गतिम् ।।
किं तीर्थं पुण्यमन्यच्च महाकालवनादृते ।। ३ ।।
तस्माद्ब्रूहि ममैकं तु प्रश्नं तथ्येन सांप्रतम् ।।
कथं कनकशृंगेति ख्याता ह्येषा पुरा मुने ।। ४ ।।
कुशस्थली कथं नाम तथावंती कथं स्मृता ।।
पद्मावती कथं साधो कथमुज्जयिनी तथा ।। ५ ।।
नाम्नां हेतुमथो तेषां ब्रूहि त्वं मुनिसत्तम ।। ६ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास प्रवक्ष्यामि यथा पूर्वं विरंचिना ।।
कथितं वामदेवाय गौरकल्पे पुरातने ।। ७ ।।
महेशेन भगवता विधिश्चैवात्र हेतुतः ।।
पृष्टस्तु स्वश्च्युतानां च कुतो निवसतां सुखम् ।। ८ ।।
स्वर्गप्राप्तिश्च भवति स्वेच्छाचारविहारिणाम् ।।
कोऽतिपुण्यतमः श्रेष्ठः प्रदेशः पापदारकः ।। ९ ।।
कुतो निवर्तितं चित्तं जायते वसतां क्वचित् ।।
वसतामपि लोके शमैहिकं पारलौकिकम् ।।
एतन्मे भगवन्ब्रूहि हितार्थं सर्वदेहिनाम् ।। ।। 5.1.40.१० ।।
।। सनत्कुमार उवाच ।। ।।
एवमादौ पुरा कल्पे प्रोक्तः श्रेष्ठः स शंभुना ।। ११ ।।
प्रोवाच पार्वतीकांतं प्रभुः प्रीतः पितामहः ।।
भगवन्सर्वकर्ता त्वं सर्वदर्शी सदाशिवः ।। १२ ।।

अजानन्निव त्वं सर्वं मां पृच्छसि सनातन ।।
यत्र कल्पांतको वह्निरधिज्वालः प्रतिष्ठितः ।। ।। १३ ।।
त्वमेव च महाकालः सर्वं वै ज्ञायते त्वया ।।
नाथ ये मानवास्तत्र सदाचारास्तथा परे ।। १४ ।।
निवसंति न ते मर्त्याः सुरास्ते वै न संशयः ।।
लभंते च पुनः स्वर्गं मृता वै कालपर्यये ।। १५ ।।
वर्तते च पुरी तत्र रम्यहर्म्या सुशोभना ।।
यस्यां भांति विचित्राणि हर्म्याणि विविधानि च ।। १६ ।।
स्वर्णशृङ्गाश्च प्रासादा विहिता विश्वकर्मणा ।।
देवाः संति सदा तत्र तीर्थानि विविधानि च ।। १७ ।।
पूर्वकल्पे स्थितोऽहं च यत्र त्वं केशवस्तथा ।।
तामेव च पुरीं द्रष्टुं सर्वे लोका ह्यवंतिकाम् ।। १८ ।।
तथा देवर्षयः सिद्धा यक्षकिंनरदानवाः ।।
आजग्मुः स्थाणुना सार्धं वेधसा ब्रह्मयोनिना ।। १९ ।।
तथैव च वरा नार्यो देवानामतिवल्लभाः ।।
समापेतुः सहस्राणि द्रष्टुमत्यद्भुतां पुरीम् ।। 5.1.40.२० ।।
आगत्य च यदा देवः सह देवैर्महेश्वरः ।।
वीक्षते नगरीं रम्यामपश्यदावृतां तथा ।। २१ ।।
प्रासादैः स्वर्णशृंगाढ्यैर्मणिरत्नविभूषितैः ।।
विश्वरूपो हि भगवान्राजा विश्वैक नायकः ।। २२ ।।
तत्रास्ते शोभने दिव्ये प्रासादे मणिभूषिते ।।
सेव्यमानः सुरैः सिद्धैर्मुनिविद्याधरोरगैः ।। २३ ।।
ततो महेशश्च पितामहश्च समेत्य तं विश्वपतिं ननंदतुः ।।
समर्चितौ तेन यथार्हमादरात्सहानुगावागमनं त्वपृच्छत् ।। २४ ।।
किमागतौ वा त्रिदिवान्महीतलं सहानुगावाश यकश्च कथ्यताम् ।।
ततस्तु तावूचतुरब्जजेश्वरौ भवान्तरे यत्र च तत्र नौ रतिः ।। २५ ।।
त्वया विना नैव सुरालये सुखं महीतले वाथ रसातलेऽ स्ति नः ।।
कदा त्वया कांचनशेखरा पुरी निवेशिता वेश्मवती विचित्रिता ।। २६ ।।
।। हरिरुवाच ।। ।।
त्वदर्थमेवेश विशेषशालिनी सृष्टा हि वै सर्वगुणाकरा मया ।।
प्रयच्छ विश्वेश्वर चावयोरिह स्थानं च तीर्थं प्रलयेऽक्षयं च ।। २७ ।।
ददाम्यभीष्टं युवयोरिहालयं प्रजापते ह्युत्तरतस्तव स्थितिः ।।

महेश्वर त्वं व्रज दक्षिणालयं स्थानं सुदत्तं युवयोः सुशोभनम् ।। २८ ।।

महाकालो ह्यधोज्वालो जगदात्मा प्रभुः स्थितः ।।

गणैरनेक साहस्रैरादृतः परमेश्वरः ।। २९ ।।

क्रीडार्थं नगरी सृष्टा सर्वभूतहितैषिणा ।।

मयाद्य युवयोर्दत्ता विहायाऽचलमात्मनः ।। 5.1.40.३० ।।

भवद्भ्यां हेमशृं गेति यस्माच्च समुदीरिता ।।

पुरी कनकशृंगेति लोके ख्याता भविष्यति ।। ३१ ।।

एवं कनकशृङ्गेति प्रथमं नाम कथ्यते ।। ३२ ।।

जपंतश्च स्थिता यत्र ब्रह्मविष्णुमहेश्वराः ।।

नित्यं रमंति भक्तानां सर्वाभीष्टफलप्रदाः ।। ३३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये कनकशृङ्गाभिधानवृत्तांतवर्णनंनाम चत्वारिंशोऽध्यायः ।। ४० ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४१



।। सनत्कुमार उवाच ।। ।।
शृणु व्यास यथेयं तु प्रोच्यते हि कुशस्थली ।।
कल्पे तत्पुरुषे पूर्वं वेदविद्भिर्मनीषिभिः ।। १ ।।
वेधसा सृजितं विश्वं दैत्यदानवरा क्षसम् ।।
अन्योन्यमदसंमत्तमन्योन्यद्वेषि वै रणे ।। २ ।।
देवाश्च दानवाः संख्ये नित्यं स्पर्धासमन्विताः ।।
मनुष्या मनुजैः सार्धं सिद्धविद्याधरैः सह ।। ३ ।।
चारणाः किंनरैः सार्धमेवं ते द्वेषतत्पराः ।।
युद्धं कुर्वंति सततमविस्पष्टार्थया गिरा ।। ४ ।।
सर्वे चैव च बलिनो दुर्बलैर्मनुजैः सह ।।
पशवः पशुभिः सार्धं पक्षिणः सह पक्षिभिः ।। ५ ।।
एवमन्योन्यमन्यैश्च निर्मर्यादमिदं जगत् ।।
दृष्ट्वा विश्वस्य कर्तारं विष्णुं विश्वेश्वरं परम् ।। ६ ।।
व्रजामि शरणं देवं शरणार्त्तिहरं हरिम् ।।
एवं मनसि संधाय दध्यौ ध्यानेन माधवम् ।। ७ ।।
ततो ध्यातो महायोगी विश्वरूपधरो हरिः ।।
लोहदण्डधरः श्रीमानिदमाह पितामहम् ।। ८ ।।
ब्रह्मन्ध्यातस्त्वया सम्यग्ध्यानयोगेन पश्य माम् ।।
समायांतं तथा ध्यातं जगतां पातुमुद्यतम् ।। ९ ।।
ततो धाता निशम्यैतत्त्यक्त्वा ध्यानमवेक्ष्य तम् ।।
समुत्थायैकमनसा नमश्चक्रेऽर्चयत्पुनः ।। 5.1.41.१० ।।
पाद्येनाचमनीयेन मधुपर्केण केशवम् ।।
पूजयित्वा पुनर्वाक्यमुवाचाच्युतमब्जजः ।। ११ ।।
।। ब्रह्मोवाच ।। ।।
देवदेव जगन्नाथ जगत्सृष्टमिदं त्वया ।।
ऋते त्वया जगद्विष्णो नैवावस्थातु मर्हति ।। १२ ।।

शास्ता त्वमस्य विश्वस्य विशुद्धस्य च नापरः ।।
त्वत्तोस्तीदं जगत्सर्वं तस्मात्त्वमनुशासय ।। १३ ।।
देवदानवगंधर्वाः सयक्षो रगराक्षसाः ।।
त्वामृते पुण्डरीकाक्षं व्यापिताशेषविग्रहाः ।।
परस्परं विनिघ्नंति तांश्च त्वं रक्षितुं क्षमः ।। १४ ।।
त्वमस्य विश्वस्य चराचरस्य स्थितेः सदा प्राणभृदात्मरूपिणी ।। १५ ।।
त्वया धृतं सर्वमिदं जगद्वै यतस्ततोऽसि त्वमुपेन्द्रसंज्ञः ।।
प्रवेशनं व्याप्तमिदं स्वधाम यत्त्वमुच्यसे विष्णुरतो मुनींद्रैः ।। १६ ।।
निवासितं विश्वमिदं त्वयाद्य वासश्च धातोरिति वासुदेवः ।।
तवानुगं विश्वमिदं विभुस्त्वमशेषविश्वस्य विभासि राजा ।। १७ ।।
सेनानुरूपं जगदेव यस्मादतः स्मृतस्त्वं किल विश्वसेनः ।।
विलेखनादस्य चराचरस्य कृतेश्च धातोस्त्वमतोऽसि कृष्णः ।। १८ ।।
जितं त्वया देव जगत्त्रयं यज्जितेश्च धातोस्त्वमतोऽसि जिष्णुः ।।
तस्मात्समस्तग्रहलोकपालं जगद्विभो पालय सर्वकालम् ।।१९।।
त्वमस्य सर्वस्य भवादिराजस्तवास्तु भद्रासनमद्वितीयम।।
प्रदक्षिणावर्तनकस्तु शंखः करस्थितः शोभति पूरुषस्य ।। 5.1.41.२० ।।
सुदर्शनं नाम तवास्ति चक्रमतो हि गीतः कविभि स्तु चक्री ।।
ध्वजोऽस्ति ते देव सुपर्णसेवितस्तथासुपर्णश्च तवास्ति वाहनम् ।।२१।।
तुरंगमाः संतु तवारिसंहरे तथा हृषीकेश सुदन्तदन्तिनः।।
किरीटनिष्कांगदकर्णपूरकेयूरहारोत्तमहेमसूत्रैः ।। २२ ।।
विचित्रवस्त्रोत्तमरक्तमाल्यैर्विभूषितस्त्वं भव भीमसेनः ।।
श्रिया कदाचिच्च न मुच्यते भवान्भवं ति ते नित्यमनंतसंपदः ।। २३ ।।
तवानुगा भक्तिरिहास्तु वै सती मुकुन्द भक्ते त्वमतः प्रसीद मे ।। २४ ।।
।। सनत्कुमार उवाच ।। ।।
स एवमुक्तस्तु पुरो दिवौकसां विभुः प्रसन्नस्त्विदमब्रवीद्धरः ।।
विरिंच मे दर्शय तस्य मंडलं त्वया विमुक्तं च सदाशिवं विभो ।। २५ ।।
स्थिरं स्थि यत्र जगत्करोम्यहं ततो विरंचिः कुशमुष्टिमाददे ।।
पवित्रदेशस्य निदर्शनाय जगाम पुण्यं च्यवनाश्रमं तदा ।। २६ ।।
ततः स्थलीमुच्चतरामवाप्य पितामहः केशवमाह चादरात् ।।
त्वदुद्भवं चात्र पवित्रमंडलं त्वया विमुक्तं च सदा शिवं विभो ।। २७ ।।
त्वमेव विष्णुर्विबुधार्चितः सदा स्मृतो मुनींद्रैः स च विष्टरश्रवाः ।।
निषीद विश्वेश कुशस्थलं यदा तदाश्रितो माधवमासरूपवान् ।। २८ ।।

कुशस्थलीं संस्थित एव देव इत्थं विधात्रा पुरुषोत्तमः स्तुतः ।।
स्थलीं कुशैरास्तरितामुपाविशत्कुशस्थलीं देवमुनीन्द्रसेविताम् ।। २९ ।।
समंततो योजनसं ख्ययावृतां ततो विधाता पुरुषोत्तमस्तथा ।।
कुशस्थलीति प्रथितं जगत्त्रये प्रचक्रतुर्नाम च तावुभावपि ।। 5.1.41.३० ।।
तत्र विश्वपतिः श्रीमान्विश्वेशो विश्वकृद्विभुः ।।
विश्वं शशास विश्वात्मा सर्वविश्वस्य नायकः ।। ३१ ।।
एवं कुशस्थली ख्याता हेमशृङ्गेति या पुरा ।।
स्तीर्णा कुशैर्यतो धात्रा कुशस्थली ततः स्मृता ।। ३२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये व्याससनत्कुमारसंवादे कुशस्थलीनामहेतुकथावर्णनंनामैकचत्वारिंशोऽध्यायः ।। ४१ ।। ।।. छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४२



।। सनत्कुमार उवाच ।। ।।
पुरा चैशानकल्पे तु स्मृतावंती यथा पुरी ।।
तथा शृणु सुरैः पूर्वं दैत्यसैन्यपराजितैः ।। १ ।।
आश्रितं मेरुशिखरं वनकंदगुहावृतम्।।
तत्र गत्वा द्विजश्रेष्ठ मंत्रं च चक्रुरुद्यताः।।२।।
अन्योन्यं च समासाद्य समभ्यर्च्य परस्परम्।।
जग्मुः सर्वे सुरगणा यत्र ब्रह्मा प्रजापतिः।।३।।
निवेदयांचक्रिरे सर्वं तत्रागमनकारणम्।।
तेषां तद्वचनं श्रुत्वा देवानां स प्रजेश्वरः।।४।।
जगाम त्रिदशैः साकं देवदेवं महेश्वरम्।।
स चापि ह्यगमत्तत्र वैकुठं धाम यत्र वै ।। ५ ।।
ऋद्धिसिद्धिप्रदं नित्यं मुनिचारणसेवितम् ।।
किन्नरैर्गीयमानं च अप्सरोगणसेवितम् ।। ६ ।।
ऋषिभिर्भार्गवादिभिर्देवर्षिनारदोत्तमैः ।।
सिद्धगंधर्वमुख्यैश्च कुमारैः सनकादिभिः ।। ७ ।।
प्रजापतिगणाकीर्णं मानवैश्च चतुर्दशैः ।।
वसुभिर्विश्वेदेवैश्च पितॄणामुत्तमैर्गणैः ।। ८ ।।
संसेव्यं च सदाचारैः पुण्यवद्भिर्जनैस्तथा ।।
दिव्यं दिव्यैश्च प्रासादैर्दिव्यपादपशोभितम् ।। ९ ।।
मणिरत्नैश्च सोपानै र्दिव्यं सरसशोभितम् ।।
हंसकारंडवाकीर्णं मणिभाभिः सुभास्वरम् ।। 5.1.42.१० ।।
षडूर्मिरहितं स्थानं यत्र तिष्ठन्ति पक्षिणः ।।
तत्र गत्वा सुराः सर्वे वासु देवदिदृक्षया ।।
स्तुतिमारेभिरे कर्तुं देवदेवजगत्पतेः ।।११ ।।
।। देवा ऊचुः ।। ।।
नमोऽनंताय बृहते कूर्माय वै नमोनमः ।। १२ ।।

नृसिंहरूपायोग्राय नमो वाराहरूपिणे ।।
राघवाय च रामाय ब्रह्मणेऽनंतशक्तये ।। १३ ।।
वासुदेवाय शांताय यदूनां पतये नमः ।।
नमो बुद्धाय शुद्धाय कल्कये म्लेच्छनाशिने ।। १४ ।।
इति स्तवाभियुक्तानां वागुवाचाशरीरिणी ।।
शृणुध्वं भोः सुराः सर्वे भूत्वा चैकाग्रमानसाः ।। १५ ।।
महाकालवने रम्ये ब्रह्मर्षिगणसेविते ।।
तत्र पुण्या पुरी ह्येका सर्वकामफलप्रदा ।। १६ ।।
नाम्ना कुशस्थली रम्या सिद्धगंधर्वसेविता ।।
कल्पादौ कल्पमध्ये वा यत्र संनिहितो हरः ।। १७ ।।
कल्पक्षये क्षयं यांति स्थावराणि चराणि च ।।
तीर्थानि चैव सर्वाणि पुण्यान्यायतनानि च ।। १८ ।।
सरितः सागराः सर्वे सरांस्युपवनानि च ।।
औषधीर्वृक्षवल्लीश्च यंत्रं मंत्रं शुभाशुभम् ।। १९ ।।
ज्योतींषि चंद्रसूर्यौ च सर्वं विष्णुमयं जगत् ।।
तेषां बीजं च पुण्यं च जीवकर्माशय तथा ।। 5.1.42.२० ।।
सर्वमादाय भगवाञ्छंकरस्तत्र तिष्ठति ।।
सर्वतीर्थमयी गंगा सर्वदेवमयो हरिः ।। २१ ।।
सर्वयज्ञमयो वेदः सर्वधर्ममयी दया ।।
रेवा च सरितां श्रेष्ठा भुवि पुण्यकृताधिका ।। २२ ।।
तस्माद्धितकरं क्षेत्रं कुरूणां वै सुरोत्तमाः ।।
तस्माद्दशगुणं मन्ये प्रयागं तीर्थमुत्तमम् ।। २३ ।।
तस्माद्दशगुणा काशी काश्या दशगुणा गया ।।
ततो दशगुणा प्रोक्ता कुशस्थली च पुण्यदा ।। २४ ।।
उपरागसहस्राणि व्यतिपातायुतानि च ।।
अमालक्षं तु एतस्याः कलां नार्हंति षोडशीम् ।। २५ ।।
लक्षमिंदुक्षये दानं सहस्रं चायनद्वये ।।
व्यतीपाते च कोटिः स्याद्रा कायां च ह्यनंतकम् ।। २६ ।।
तस्माद्धितकरा देवा पुरी ह्येषा कुशस्थली ।।
अनंताऽनंतसंख्यातं दानं किंचित्कृतं नरैः ।। २७ ।।
तत्सर्वं भोः सुरश्रेष्ठाः सर्वं तच्चाक्षयं भवेत् ।।
तस्मात्सर्वप्रयत्नेन यूयं यात हि मा चिरम् ।। २८ ।।

क्षीणपुण्या भवंतो वै बाधंते तेन वः सुराः ।।
महाकालवने रम्ये पुरी ह्येषा कुशस्थली ।। २९ ।।
तत्र गत्वा भवंतो वै स्नानदानादिकं भुवि ।।
आचरध्वं सुविधिना पुण्यात्स्वर्गमवाप्स्यथ ।। 5.1.42.३० ।।
एतच्छ्रुत्वा वचस्तस्या वाण्याश्चाकाशगं तदा ।।
प्रणम्य शिरसा तस्यै ब्रह्मेशानपुरोगमाः ।। ३१ ।।
पुनर्जग्मुः सुराः सर्वे यत्र माहेश्वरं वनम् ।।
पुरीं चैव द्विजश्रेष्ठ सर्वकामफलप्रदाम् ।। ३२ ।।
चातुर्वर्ण्यसमाकीर्णामृषिगंधर्वसेविताम् ।।
पुण्यवद्भिर्जनैः पूर्णां सिद्धचारणसेविताम् ।। ३३ ।।
दरिद्रो न जडो मूर्खो न रोगी न च मत्सरी ।।
न व्याधितो नापकारी जनः क्वचित्प्रदृश्यते ।। ३४ ।।
दाता शांताः सुशीलाश्च जरारोगविवर्जिताः ।।
स्वधर्मनिरता नित्यं सदाचारातिथिप्रियाः ।। ३५ ।।
नरा यत्र निवसंति नार्यश्चैव पतिव्रताः ।।
महोत्सवाः सुगीतानि हव्यं कव्यं गृहेगृहे ।। ३६ ।।
ईदृशीं च पुरीं दृष्ट्वा देवा हर्षं परं गताः ।।
तत्र तीर्थं समाख्यातं नाम्ना पैशाचमोचनम् ।। ३७ ।।
पुण्यवद्भिः सदा सेव्यं सर्वतीर्थनिषे वितम् ।।
तस्मिन्स्नात्वा च जप्त्वा च हुत्वा दत्त्वा च देवताः ।। ३८ ।।
पुण्यं चाथाक्षयं लब्ध्वा पुनर्याताः सुरालयम् ।।
जित्वाऽसुरान्महादुष्टान्स्थानं प्राप्ताः स्वकंस्वकम्।। ३९ ।।
येऽस्यां कुर्युर्महाभागाः स्नानं दानं तथार्चनम् ।।
हवनं तर्पणं पितॄंस्तत्सर्वं स्याद्ध्यनंतकम् ।। 5.1.42.४० ।।
तस्मात्सर्वप्रयत्नेन एतत्कार्यं सदा बुधैः।।
देवतीर्थौषधीबीजभूतानां चैव पालनम् ।। ४१ ।।
कल्पेकल्पे च यस्यां वै तेनावंती पुरी स्मृता ।।
अद्यप्रभृति पुरी ह्येषा नाम्नावंती कुशस्थली ।।४२ ।।
इत्युक्त्वा वै तदा देवाः स्वधाम परमं गताः ।।
तदारभ्य द्विजश्रेष्ठ ह्यवंती भुवि विश्रुता ।। ४३ ।।
य एतां सुकथां दिव्यां पुण्यां च पापहारिणीम्।।
शृणुयाच्छ्रावयेद्यो वै सर्वपापैः स मुच्यते ।। ४४ ।।

अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।।
वाजपेयसहस्राणां राजसूयशताधिकम् ।। ४५ ।।
पुण्यं लब्ध्वा नरो नित्यं शिवलोके महीयते ।। ४६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽवंत्यभिधानकथावर्णनंनाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४३



।। सनत्कुमार उवाच ।। ।।
एकस्मिन्नंतरे व्यास यथोज्जयनी स्मृता पुरी ।।
तथाहं संप्रवक्ष्यामि शृणुष्व त्वं समाहितः ।। १ ।।
त्रिपुराख्यो महादैत्यः सर्वदैत्यजनेश्वरः ।।
तपस्तेपे सुदुर्धर्षं ब्रह्मणस्तुष्टिकारणात्।। २ ।।
आतपे चाग्निसेवां वै प्रावृषि मेघडंबरम् ।।
दमयित्वा तदात्मानं शीतकाले जलाशये ।। ३ ।।
शीर्णपत्र जलाहारो वायुभक्षी निराश्रयः ।।
गायत्रीव्रतमास्थाय त्यक्तसर्वपरिग्रहः ।।४।।
एवं वर्षसहस्रं तु तपस्तप्तं सुदुश्चरम् ।।
पूर्णे वर्षसहस्रे तु ब्रह्मा प्रीततमो ऽब्रवीत्।।५।।
व्रियतां भोऽसुरश्रेष्ठ वरं मत्तोभिवांछितम्।।
तत्सर्वं सांप्रतं लोके वरं तुभ्यं ददामि वै।। ।। ६।।
एवमुक्तः स विधिना दैत्यस्त्रिपुरसंज्ञितः।।
उवाच वचनं सद्यो ब्रह्माणं संशितव्रतम्।।
त्रिपुर उवाच।।
यदि तुष्टमना ब्रह्मन्वरं मे दातुमिच्छसि।।
देवदानगंधर्वपिशाचोरगराक्षसैः ।।
अवध्योऽहं सदा भूयां वरमेतद्वृणोम्यहम् ।। ८ ।।
।। ब्रह्मोवाच ।। ।।
एवं भवतु भो वत्स विचरस्वाकुतोभयः ।।
इत्युक्त्वा सहसा ब्रह्मा तत्रैवांतरधीयत ।।९।।
तदारभ्य महादैत्यो देवानां कदनं महत् ।।
चकार कोपपूर्णो वै पूर्ववैरमनुस्मरन् ।। 5.1.43.१० ।।
वासयित्वा यत्र तत्र त्रिपुराणि चराणि च ।।
अत्र वासकृतः सर्वे वर्णाश्रमपरा जनाः ।। ११ ।।

तेषां वै कदनं चक्रे नानोपायेन पापधीः ।।
तस्मिन्पुरे दुष्टवासे ब्राह्मणा वेदपारगाः ।। १२ ।।
न जुहुयुश्चाग्निहोत्रं सोमपानं न कर्हिचित् ।।
कुतश्चित्सुकृतं कर्म जनाः कुर्वंति नो मुने ।। १३ ।।
स्वाहाकारस्वधाकारवषट्कारविवर्जिताः ।।
नोत्सवो दृश्यते गेहे कस्यचिद्भुवि विस्तृतः ।। १४ ।।
देवतायतनं नास्ति तथा नो शिवपूजनम् ।।
नास्ति यज्ञो न दानानि न गोब्राह्मणपूजनम् ।। ।। १५ ।।
सदाचारजनो नास्ति दया मानविवर्जिता ।।
न दानी नोपकारी च तपस्वी नैव दृश्यते ।। १६ ।।
एवं व्यास पुरे तस्मिन्नष्टप्रायमिदं जगत् ।।
प्रजानां ब्राह्मणा मूलं वेदमूला हि ब्राह्मणाः ।। १७ ।।
वेदमूलपरा यज्ञा यज्ञमूला हि देवताः ।।
तस्माद्व्यास हतं सर्वं कृतं तेन दुरात्मना ।। ।। १८ ।।
तेन देवगणाः सर्वे हतप्राया हतौजसः ।।
विचरंति यथा मर्त्या भुवि तेन पराजिताः ।। १९ ।।
अन्योन्यकृतसंधाना मंत्रं कृत्वा समा हिताः ।।
जग्मुस्ते तत्र यत्रास्ते प्रजापतिरकल्मषः ।। 5.1.43.२० ।।
त्रिदशाः कथयामासुरात्मव्यसनकारणम् ।।
तज्ज्ञात्वा सहसोत्थाय ब्रह्मा लोकपिता महः ।। २१ ।।
जगाम त्रिदशैः सार्धं महाकालवनोतमम् ।।
यत्रास्ते सततं देव उमया सहितः शिवः ।। २२ ।।
यत्रावंती पुरी दिव्या सर्वतीर्थनिषेविता ।।
तत्रागत्य सुरैः साकं स्वयंभूश्चतुराननः ।।२३।।
स्नानं दानं जपं होमं कृत्वा रुद्रसरे तदा ।।
पूजयित्वा महाकालं ब्रह्मा वचनमब्रवीत् ।।२४।। ।।
।। ब्रह्मोवाच ।। ।।
देवदेव महादेव भक्तानामभयंकर ।।
श्रूयतां भोः सुरश्रेष्ठ देवकार्यमनुत्तमम् ।।२५।।
त्रिपुरोनाम दैत्येंद्रो देवानां कदनं महत् ।।
करोति सततं दैत्यो देवब्राह्मणनिंदकः ।।२६।।
वासयित्वा पुरस्तिस्रो विस्तीर्णा विचरत्यथ ।।

तत्र स्थितानि भूतानि नाशं यांति दुरात्मना ।।२७।।
एवं कृत्वा प्रजाः सर्वाः क्षयं नीताश्चराचराः ।।
उद्वासितानि द्वीपानि ग्रामाश्च नगराणि च ।।२८।।
ऋषीणामाश्रमाः सर्वे यतीनामायतनानि च ।।
एवं कृत्वा सुराः सर्वे भ्रष्टराज्याः पराजिताः ।ऽ। २९ ।।
विचरंति यथा मर्त्यास्त्रिपुरेण दुरात्मना ।।
मत्तो लब्धवरो नित्यं व्रजत्येवाकुतोभयः ।। ।। 5.1.43.३० ।।
तस्मात्सर्वप्रयत्नेन वधस्तस्य विचिंत्यताम् ।। ३१ ।।
इति श्रुत्वा वचस्तस्य ब्रह्मणः संशितात्मनः ।।
चिरं ध्यात्वा महादेवो ब्रह्माणं तमुवाच ह ।। ३२ ।।
।। महादेव उवाच ।। ।।
श्रूयतां भोः सुरश्रेष्ठा ब्रह्मशक्रपुरोगमाः ।।
जयोपायं करिष्यामि दैत्यस्यास्य दुरात्मनः ।।३३।।
तपश्चरत यूयं वा आत्मनो जयकांक्षिणः ।।
अवंत्यां यद्धुतं दत्तं तत्सर्वं चाक्षयं भवेत् ।। ३४ ।।
इत्युक्त्वा सर्वदेवानां तत्रैवांतर्हितः शिवः ।।
गत्वा स्मशाननिलये भूतप्रेतनिषेविते ।। ३५ ।।
जयार्थं तस्य दैत्यस्य त्रिपुरस्य दुरात्मनः ।।
उपासांचक्रिरे तत्र चामुण्डायाः सुरेश्वराः।। ।। ३६ ।।
महिषैश्च महामेध्यैः पशुपुष्पार्घतर्पणैः ।।
बलिभिर्विविधैर्दानैर्धूपदीपाग्नितर्पणैः ।।
पूजयित्वा तदा देवीं तामीडे वृषभध्वजः ।। ३७ ।।
दुर्गां भगवतीं भद्रां दुर्गसंसारतारणीम् ।।
त्रिपुरांतकारिणीं कृत्यां चंडमुंडवधोद्यमाम् ।। ३८ ।।
दैत्यमेदोमदोन्मत्तां रक्ताख्यां रक्तदंतिकाम् ।।
रक्तांबरधरां धीरां रक्तपुष्पावतीं सतीम् ।। ३९ ।।
महिषवाहिनीं श्यामां यक्षासनपरिग्रहाम् ।।
द्वीपिचर्मपरीधानां शुष्कमांसाति भैरवाम् ।। 5.1.43.४० ।।
पूजयित्वा प्रसन्नात्मा ध्यानमास्थाय संस्थितः ।।
तदा भगवती भद्रा ययेदं धार्यते जगत् ।।
प्रसन्नवदना भूत्वा प्रत्यक्षं प्राह चंडिका ।। ४१ ।।
।। देव्युवाच ।। ।।

व्रियतां भोः सुरश्रेष्ठ वरं मत्तोऽभिवांछितम् ।।
सर्वं त्वयोक्तं यच्छामि जगतामुपकारकम् ।। ४२ ।।
।। श्रीहर उवाच ।। ।।
यदि तुष्टासि वै देवि देहि मे वरमुत्तमम् ।।
येन हन्मि महादैत्यं त्रिपुरं देवकंटक म् ।। ४३ ।।
।। श्रीदेव्युवाच ।। ।।
जय ह्येनं महादेव गृहाण पाशुपतं परम् ।।
मया दत्तं सुरश्रेष्ठ दैत्यनाशकरं परम् ।। ४४ ।।
महापाशुपतं शस्त्रं करे कृत्वा च शंकरः ।। ४५ ।।
उज्जहार तदा शंभुर्दैत्यनाशाय सत्वरः ।।
महाडंबरिको भूत्वा सर्वप्राणिभयंकरः ।। ४६ ।।
स्तुतिं कृत्वा ययौ वाग्भिः पृष्ठतोऽनुययुः सुराः ।।
शरेणैकेन वै रुद्रो जघान तं महासुरम् ।। ४७ ।।
मायिनं तं त्रिधा भित्त्वा मायायुद्धेन शंकरः ।।
पुनरागात्पुरीमेतामवंतीममरसेविताम् ।। ४८ ।।
जयाशिषा प्रयुंजाना ऋषयः सिद्धचारणाः ।।
तुष्टुवुश्च तदा देवा जयशब्देन हर्षिताः ।। ४९ ।।
अप्सरा ननृतुस्तत्र गंधर्वा ललितं जगुः ।।
ववौ तदा पुण्यतमो वायुः सुखप्रदो नृणाम् ।।5.1.43.५०।।
जयशब्दस्तदा जातः प्राणिनां च गृहेगृहे ।।
जज्वलुश्चाग्नयः शांताः शांता दिग्ज नितस्वनाः ।। ५१ ।।
प्रवर्तंते तदा यज्ञा महोत्सवसदक्षिणाः ।।
देवाः प्रपेदिरे स्थानं स्वकीयं पुनरादृतम् ।। ५२ ।।
उज्जितो दानवो यस्मात्त्रैलोक्ये स्थापितं यशः ।।
तस्मात्सर्वैः सुरश्रेष्ठैर्ऋषिभिः सनकादिभिः ।। ५३ ।।
कृतं नाम ह्यवंत्या वा उज्जयिनी पापनाशिनी ।।
अवंती च पुरा प्रोक्ता सर्वकामवरप्रदा ।। ५४ ।।
अद्यप्रभृति पुरी व्यास उज्जयिनी समाश्रिताः ।।
येऽस्यां च स्नानदानादि भुवि कुर्वंति मानवाः ।। ५५ ।।
न तेषां दुष्कृतं किंचिद्देहे तिष्ठति पापजम् ।। ५६ ।।
विद्यार्थी गिरीशं धनार्थी धनेशं सुतार्थी सुतेशं दिनेशं सुखार्थी ।।
धियोर्थी गणेशं प्रियार्थी वसेद्वै गिरां ग्राह्य मानी जनश्चोज्जयिन्याम् ।। ५७

य एतस्यां महाभाग सदा वसति मानवः ।।
भुक्त्वा कामान्मनोऽभीष्टान्मृतः शिवपुरं व्रजेत् ।। ५८ ।।
तत्रैव वसते नित्यं कल्पकोटिशताधिकम् ।। ५९ ।।
य एतां वै कथां पुण्यां पठते शृणुतेऽथ वा ।।
मुच्यते सर्वपापेभ्यो गोसहस्रफलं लभेत् ।। 5.1.43.६० ।।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये उज्जयिन्यभिधानकथनंनाम त्रिचत्वारिंशो ऽध्यायः ।। ४३ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४४

https://sa.wikisource.org/s/fjk
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।

अथातः संप्रवक्ष्यामि पद्मावती यथाऽभवत् ।।

शृणुष्व चादृतो व्यास बहुपुण्यकृतां कथाम् ।। १ ।।

एकदा सर्वरत्नानां हानिर्जाता दुरात्मभिः।।

धर्मग्लानिर्निरोधश्च जातो वै दुष्टदानवैः ।। २ ।।

तदा सुरासुरैः सर्वैर्मिलित्वा मथितोंऽबु धिः ।।

मेरुर्वंशोदधिः पात्रं रज्जुर्वासुकिपन्नगः ।। ३ ।।

कूर्मपृष्ठे विधिं कृत्वा रत्नानि दुदुहुस्तदा ।।

आदौ लक्ष्मीर्विनिर्याता कृष्णाय प्रतिपादिता ।। ।। ४ ।।

तेन कृत्वा विषादोऽभूद्देवदानवयोस्तदा ।।

एतस्मिन्नंतरे प्राप्तो नारदो देवदर्शनः।।। ५ ।।

वारितः कलहस्तेन देवदैत्यसमुद्भवः ।।

महाकालवने साऽस्तु पद्मा सिंधुसमुद्भवा ।। ६ ।।

सागरांते च रत्नानि तिष्ठंति विविधानि च ।।

तानि सर्वाणि चादाय भवतां वै ददाम्यहम् ।। ७ ।।

मथ्यतामुदधिः शीघ्रं नात्र कार्या विचारणा।।

पुनस्ते तूद्यमं चक्रुरमृतार्थं सुरासुराः ।। ८ ।।

मथ्यमानेंऽबुधौ तेषां मणिः प्राप्तश्च कौस्तुभः ।।

परिजाततरुः पश्चात्सुरा जाता ततः परम् ।। ९ ।।

धन्वंतरिरथोत्पन्नश्चंद्रो जातोऽपि वै ततः ।।

कामधेनुस्ततो जाता गजरत्नं ततः परम् ।। 5.1.44.१० ।।

उच्चैःश्रवा हयश्रेष्ठः सुधा रंभा ततस्ततः ।।

ततः परं च सारंगं धनुः सर्वास्त्रसंभवम् ।। ११ ।।

पांचजन्यस्तथा शंखः करे तिष्ठति मुरद्विषः ।।

निधिरेष महापद्मो विषं हालाहलं ततः ।। १२ ।।

चतुर्दशापि रत्नानि प्राप्तानि विविधानि च ।।

समादाय गतास्तत्र यत्र माहेश्वरं वनम् ।। १३ ।।

गत्वा ते च समासीना मंत्रं चक्रुः परस्परम् ।।

अहंपूर्वमहंपूर्वमिति ते समयंत्रिताः ।। १४ ।।

कोलाहलस्तथोत्पन्नो नारदः पुनरभ्यगात् ।।

तेषां कलिमलं दृष्ट्वा विष्णुमाराधयत्ततः ।। १५ ।।

मोहनीरूपमास्थाय नारीभूत्वाभ्यगाद्धरिः ।।

अतिरूपवती तन्वी तामालोक्य महासुराः ।। १६ ।।

विह्वलांगाश्च ते सर्वे कामबाणवशंगताः ।।

एतस्मिन्नंतरे तेषां सुरां प्रादात्सुरेश्वरः ।। १७ ।।

हस्तलाघवयोगेन देवानाममृतं ददौ ।।

एतस्मिन्नंतरे व्यास राहुस्तद्रू पधारकः ।। १८ ।।

तेषामंतरगो भूत्वा पपौ चामृतमुत्तमम् ।।

तज्ज्ञात्वा च द्रुतं विष्णुः शिरश्चक्रेण चाच्छिनत् ।।१९।।

सुधास्पर्शप्रसंगेन न ममारासुरस्तदा ।।

राहुः केतुरिति ख्यातौ क्षेत्रेऽस्मिन्मुनिसत्तम ।। 5.1.44.२० ।।

राहुकायात्समुद्भूतं बहु सुस्राव शोणितम् ।।

तस्मिन्क्षेत्रे महत्तीर्थं जातं तद्दोष नाशनम् ।। २१ ।।

तत्र स्नात्वा शुचिर्भूत्वा राहोर्दर्शनतत्पराः ।।

न तेषां जायते किंचिद्राहुपीडा कदाचन ।। २२ ।।

वांछितार्थमवाप्नोति गोसहस्र फलं भवेत् ।।

ततस्तानि च रत्नानि महाकालवने सुराः।। २३ ।।

विभज्य भागांस्ते सर्वे प्राप्य रत्नभुजोऽभवन् ।।

मणिं पद्मां धनुः शंखं विष्णवे नारदो ददौ ।। २४ ।।

सूर्याय च ददौ ह्यश्वं सप्तास्यं चाब्धिसंभवम् ।।

ऐरावतं गजश्रेष्ठं वासवाय समर्पयत् ।। २५ ।।

पीयूषं दिविषद्गणान्ददौ चंद्रं च शंभवे ।।

पारिजातं तरुश्रेष्ठं रंभां चैव वरांगनाम् ।। २६ ।।

इंद्रक्रीडावने रम्ये नंदने च समर्पयत् ।।

ऋषीणां समदाद्धेनुं कामदोग्ध्रीं यज्ञसिद्धये ।। २७ ।।

निधिरेष महापद्मः कुबेरभवनं गतः ।।

यत्तद्धालाहलं प्रोक्तं विषं केनापि नादृतम् ।। २८ ।।

यतोयतः प्रसरति प्रलयं यांति जंतवः ।।

दधार तद्विषं शंभुर्जगतां हितकाम्यया ।। २९ ।।

तदाप्रभृति महादेवो नीलकंठ इति स्मृतः ।।

रत्नकुंडे नरः स्नात्वा नीलग्रीवं च पश्यति ।। 5.1.44.३० ।।

मुक्त्वा स सर्वपापेभ्यः सर्वरत्नभुजो भवेत् ।।

शताश्वमेधिकं पुण्यं लब्ध्वा शिवपुरं व्रजेत् ।। ३१ ।।

तदादाय सुराः सर्वे ब्रह्मविष्णुपुरोगमाः ।।

ऊचुश्च ते तदा व्यास हर्षनिर्भरमानसाः ।। ३२ ।।

उज्जयिनीं समासाद्य जाता रत्नभुजो वयम् ।।

पद्मायाश्च निवासेन यस्मात्सर्वसुखावहा ।। ३३ ।।

तस्मात्सर्वेषु कालेषु पद्मा वसतु निश्चला ।।

अद्यप्रभृति पूरेषा पद्मावतीति च स्मृता ।। ३४ ।।

य एतस्यां महाभागाः स्नानं दानं तथार्चनम् ।।

तर्पणं चैव देवानां पितॄणां च विशेषतः ।। ३५ ।।

न तेषां दुष्कृतं किंचिन्न दारिद्र्यं न दुर्गतिः ।।

शतं कुलानि सर्वाणि तारयेन्निरयात्तदा ।। ३६ ।।

धनार्थी चैव पुत्रार्थो विद्यार्थो बहुकामुकः ।।

यत्रकुत्र स्थितो भूत्वा पद्मावतीति च स्मरेत् ।। ३७ ।।

सर्वान्कामानवाप्नोति शिवः साक्षाद्भवेन्नरः ।।

एतद्व्यास फलं नाम्नः किं चिरं सेवनेन वै ।। ३८ ।।

ये शृण्वंति कथां पुण्यां ये श्रावयंति नित्यशः ।।

न तेषां पातकं किंचिदश्वमेधफलं लभेत् ।। ।। ३९ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडेऽवन्तीक्षेत्रमाहात्म्ये पद्मावतीनामकथावर्णनंनाम चतुश्चत्वारिं शोऽध्यायः ।। ४४ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४५

https://sa.wikisource.org/s/fod



।। सनत्कुमार उवाच ।। ।।
शृणुष्वावहितो व्यास कथां पापहरां पराम् ।।
एषा कुमुद्वती जाता यथा पद्मावती पुरी ।।
तथाहं संप्रवक्ष्यामि यथा मे लोमशोऽब्रवीत् ।। १ ।।
।। लोमश उवाच ।। ।।
शृणु वत्स मया दृष्टा बहुपुण्यतमा पुरी ।।
एकदा तीर्थयात्रायां गतोऽहं वै कुशस्थलीम् ।।
गुह्याद्गुह्यतरं स्थानं यत्र संनिहितो हरः ।। २ ।।
यस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ।।
यत्र तत्र स्थिता विप्रा ब्रह्मघोषमकुर्वत ।। ३ ।।
यज्ञांश्चैव तथा चित्रानृत्विजोदारकर्मणः ।।
ऋषयश्च महाभागाः प्रकुर्वंति समाहिताः ।। ४ ।।
ऋषिपत्न्यस्तथा साध्व्यः परिचर्यां प्रकुर्वते ।।
दश विष्णुसमाः ख्यातास्तत्रैव निवसंति ते ।। ५ ।।
रुद्रा ह्येकादश प्रोक्ता द्वादशार्कास्तथैव च ।।
अष्टौ च वसवः ख्याता विश्वे देवास्त्रयोदश ।। ६ ।।
अष्टौ च दिग्गजाश्चैव मनवश्च चतुर्दश ।।
मरुद्गणाश्च ते सर्वे तत्रैवेंद्रपुरोगमाः ।। ७ ।।
गंधर्वासरसश्चैव किंनरोरगराक्षसाः ।
सिद्धास्तपस्विनो वत्स तत्रैव समुपस्थिताः ।।८।।
अष्टौ वै भैरवाः ख्याताश्चत्वारः पवनात्मजाः ।।
विनायकाश्च षट् प्रोक्ता देव्यश्च चतुर्विंशतिः ।। ।। ९ ।।
एते देवगणाः प्रोक्ता रौद्राश्चैव तथा गणाः ।।
ब्रह्मा वेदविदां श्रेष्ठो मरिचिकश्यपादयः ।। 5.1.45.१० ।।
दक्षः प्रजापतिश्रेष्ठो दितिर्वै देवमातरः ।
सुरभीप्रमुखा गावः स्थावराणि चराणि च ।। ११ ।।

तीर्थानि यानि सर्वाणि नद्यः प्रस्रवणानि च ।।
क्षेत्राणि चैव सर्वाणि भुवि पुण्यतमानि वै ।। १२ ।।
सप्त पुर्यस्त्रयो ग्रामा नवारण्या नवोषराः ।।
चतुर्दशानि गुह्यानि मुक्तिद्वाराणि भूतले ।। १३ ।।
समुद्राश्चैव चत्वारो रत्नानि विविधानि च ।।
सती पतिव्रताः साध्व्यस्तथा ब्रह्मर्षयोऽमलाः ।।
राजर्षयस्तथा शांता ब्राह्मणा वेदपारगाः ।। १४ ।।
वेदाः पुराणस्मृतयो गाथा गीतिप्रहे लिकाः ।।
उपासांचक्रिरे तस्य देवदेवेडुमापतेः ।। १५ ।।
तस्य दर्शनमात्रेण जातोऽहं विज्वरोऽमलः ।।
दीर्घायुर्दीर्घतपसा जरारोगविवर्जितः ।।१६।।
स्नातोऽहं सर्वतीर्थेषु शुचिर्भूत्वा समाहितः ।।
प्रसन्नमानसो जातः सर्वपापपराङ्मुखः ।। १७ ।।
दृष्ट्वा पद्मावतीं शुद्धां सर्वकामवरप्रदाम् ।।
न यत्र दृश्यते कश्चिच्छोकरोगपरो जनः ।। १८ ।।
न दुःखी न च दारिद्रो न मूर्खो नाजितेंद्रियः ।।
परस्परविरोधी न नृतिर्य्यक्षु च दृश्यते ।। १९ ।।
अन्योन्यं सर्वमित्राणि अन्योन्यं चोपकारिणः ।।
सर्वे दांताश्च शांताश्च सर्वे विद्योपदेशिनः ।। 5.1.45.२० ।।
उद्यानानि च रम्याणि वनान्युपवनानि च ।।
हर्म्याणि च सुशुभ्राणि श्रेणीबद्धानि भांति वै ।।२१ ।।
नानारत्नसमाकीर्णैर्हेमकुंभैः सुशोभनैः ।।
विराजंते विचित्राणि गीतवाद्यमहोत्सवैः।।२२ ।।
सदैव वसते यत्र उमया सह शंकरः ।।
चंद्रचूडः कृत्तिवासाश्चिताभस्मांगलेपनः ।। २३ ।।
चंद्रज्योत्स्नाकलापूर्णमरीचिभिः सदा बभौ ।।
यत्र नो कृष्णपक्षोऽभून्नामावास्या न वै तमः ।। २४ ।।
सदैव पुष्पिता श्यामा बाल्यरूपवती यथा ।।
हर्म्यपृष्ठे गवाक्षे च द्वाराजिरगृहांतरे ।। २५ ।।
गिरिगह्वरकुंजेषु गुहाध्वांतांतरेषु च ।।
आश्रमेषु च रम्येषु वनेषूपवनेषु च ।। २६ ।।
गृहदीर्घिकासु रम्यासु शालामालासु सर्वतः ।।

चंद्रज्योत्स्नासमापूर्णा दृश्यंते धवला दिशः ।। २७ ।।
कुमुद्वतीप्रफुल्लानि विराजंते सरांसि च ।।
ज्योतिर्गणसमाकीर्णं शरदीव नभःस्थलम् ।। २८ ।।
नद्यः सरांसि सर्वाणि वापीकूपसुपल्वलाः ।।
कुमुद्वत्या समाकीर्णा आसीच्चांद्रमसी मही ।। २९ ।।
यस्मात्सर्वेषु कालेषु प्रफुल्ला च कुमुद्वती ।।
तस्मात्पद्मावती ह्येषा जाता कुमुद्वती पुरी ।। 5.1.45.३० ।।
कुमुद्वत्यां नरा ये तु श्राद्धं कुर्युः समाहिताः ।।
न तेषां पितरः स्वर्गाच्च्यवंते हि कदाचन ।। ३१ ।।
अक्षयं लभते श्राद्धं पितॄणां दत्तमक्षयम् ।।
स्नानं दानं तथा होमो देवताराधनं तथा ।। ३२ ।।
यत्किंचित्क्रियते कर्म तत्सर्वं चाक्षयं भवेत् ।।
एवं कुमुद्वती जाता पुरी व्यास सनातनी ।। ३३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये कुमुद्वतीप्रभावकथनंनाम पञ्चचत्वारिंशोऽध्यायः ।। ४५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४६



।। सनत्कुमार उवाच ।। ।।
अमरावती यथा जाता पुरी ह्येषा कुशस्थली ।।
शृणु व्यास महाभाग यथा ब्रह्माब्रवीत्सुरान् ।। १ ।।
तथाहं संप्रवक्ष्यामि विस्तरेण तपोधन ।।
एकदा ब्रह्मणादिष्टः प्रजार्थमृषिसत्तमः ।। २ ।।
मारीचः कश्यपस्तेपे तपः परमदुष्करम् ।।
महाकालवने रम्ये दिव्ये स हि महानृषिः ।। ३ ।।
शीर्णपत्रानिलाहारो वायुभक्षी जितेन्द्रियः ।।
पूर्णे वर्षसहस्रे तु वागुवाचाशरीरिणी ।। ४ ।।
श्रूयतां भो द्विजश्रेष्ठ मम वाक्यमनुत्तमम् ।।
यस्मात्तपसि तपस्तीव्रं फलमुद्दिश्य सुव्रत ।। ५ ।।
तस्मात्ते संततिस्तात यावच्चंद्रदिवाकरौ ।।
तावत्तिष्ठतु मेदिन्यां यशसा पुत्रपौत्रकैः ।। ६ ।।
अदितिस्ते सती भार्या त्वया सहाचरत्तपः ।।
तस्मात्सर्वेषु कालेषु छायाभूता यशस्विनी ।।७।।
भविष्यंति सुताः सर्वे विष्णुश्चेंद्रपुरोगमाः ।।
अमरा निर्जरा देवा दिवि ख्याताः सदैव हि ।। ८ ।।
त्वं चापि च ऋषिश्रेष्ठः प्रजापतिरकल्मषः ।।
भविष्यसि न संदेहो ममवाक्याद्द्विजोत्तम ।। ९ ।।
इत्युक्त्वा च पुन र्देवी तत्रैवांतरधीयत ।।
तदारभ्य पुरीं व्यास कुशस्थलीमनुत्तमाम् ।। 5.1.46.१० ।।
कश्यपः सह दाक्षिण्या साग्निकः समुपाश्रितः ।।
प्रजापि ववृधे तस्मा त्सदेवासुरमानुषा ।। ११ ।।
मरीचेः कश्यपो जज्ञे ततः सर्वं प्रतिष्ठितम् ।।
सुधापानकृतो देवाः शश्वत्तेनामराः कृताः ।। १२ ।।
नंदनं चापि तत्रैव महाकालवनोत्तमे ।।

कामधेनुः समाख्याता मनोरथवरप्रदा ।। १३ ।।
सा सिषेवे सदा तत्र महाकालं महेश्वरम् ।।
पारिजाततरुश्रेष्ठस्तथा चाम्लानपंकजम्।।१४।।
बिंदुसरः समाख्यातं मानसं सर उत्तमम्।।
हंससारससमाकीर्णं सुरसिद्धनिषेवितम्।। १५।।
मुक्तामणिगणाकीर्णं रत्नशोभनशोभितम् ।।
निधिरेष महापद्मः कह्लारकुमुदोज्ज्वलः।। १६।।
यानि यानि च दिव्यानि संति ब्रह्माण्डगोलके।।
तानि सर्वाणि तिष्ठंति महाकालवने शुभे ।। १७ ।।
तेनतेनात्मयोगेन मानवाश्चात्र संस्थिताः ।।
तदाहारास्तदाचारास्तद्रूपास्तत्पराक्रमाः ।। १८ ।।
अन्योन्यं च समाकीर्णा सर्वे चामरसंनिभाः ।।
विचरंति यथा देवाः पुरीमेतां जना भुवि ।। १९ ।।
अमरांगनासमा नार्यः सदैव स्थिरयौवनाः ।।
ईदृशी च पुरी दृष्टा भुवि व्यास सनातनी ।। 5.1.46.२० ।।
देवदानवगन्धर्वैः किन्नरोरगराक्षसैः ।।
भुक्तिमुक्तिप्रदा नित्या बहुकालफलप्रदा ।। २१ ।।
अमराणां कटकं ह्यत्र तस्माजातामरावती ।।
य एतस्यां महाभागाः प्रसंगेन समागताः ।। २२ ।।
स्नानदानादिकं कृत्वा पश्यत्येव महेश्वरम् ।।
न तेषां दुर्लभं किञ्चित्पुत्रतो धनतोऽपि वा ।। २३ ।।
सर्वभोगानवाप्नोति मृतः शिवपुरं व्रजेत् ।।
पठनाच्छ्रवणाद्वापि शतरुद्रियफलं लभेत् ।। २४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽमरावतीनामकथनंनाम षट्चत्वारिंशोऽध्यायः ।। ४६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४७



।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महाभाग पुरी ह्येषामरावती ।।
विशाला च समाख्याता सर्वलोकेषु गीयते ।। १ ।।
तथाहं संप्रवक्ष्यामि ब्रह्मणा कथितं पुरा ।।
गुह्याद्गुह्यतरं क्षेत्रं सर्वपापप्रणाशनम् ।। २ ।।
उमया सहितो देव एक एवाचरद्वने ।।
ततो भूतगणाः सर्वे पश्चात्सर्वे सुरासुराः ।। ३ ।।
विष्णुर्दशाकृतिर्यत्र देव्यो वै लोकमातरः ।।
विनायकाश्च वैतालाः कूष्मांडा भैरवादयः ।। ४ ।।
कल्पोद्भेदाश्च लिंगाश्च चतुराशीतिसंख्यकाः ।।
क्षेत्राणि क्षेत्रपालाश्च ऋद्धिः सिद्धिस्तथैव च ।। ५ ।।
पितरो लोकपालाश्च सिद्धाः सिद्धिप्रदाश्च ये ।।
ऋषयश्च महाभागा ऋषिपत्न्योऽमलाशयाः ।। ६ ।।
किंनरा देवगन्धर्वा ह्यप्सराश्च वरांगनाः ।।
मरुद्गणाश्च ये सर्वे साधकानां गणाश्च ये ।। ७ ।।
यक्षा गुह्यकसंघाश्च पिशाचोरगराक्षसाः ।।
स्थावरा जंगमाः सर्वे ध्यानं मानसमाश्रिताः ।। ८ ।।
उपासांचक्रिरे तत्र देवदेवमुमापतिम्।।
तान्दृष्ट्वा सा तदा देवी पार्वती गिरिजा तदा ।।
उवाच श्लक्ष्णया वाचा शंकरं जगदाश्रयम् ।। ९ ।।
।। पार्वत्युवाच ।। ।।
देवदेव जगन्नाथ जगदाधारतत्पर ।।
पश्य एतान्महाभागान्ध्यायमानांस्तवाश्रितान् ।।5.1.47.१०।।
नानुपेक्ष्याश्च तान्सर्वान्वातवर्षातपार्दितान् ।।
कल्पय त्वं महा भाग एतेषामात्मनो हितम्।।११।।
यथायोग्यं वासनार्थं स्थानं परमशोभनम्।।

पुरीं कल्पय मे नाथ वासार्थं सर्वकामदाम् ।।१२।।
एषा मे वासना स्वामिन्भवतां यदि रोचते ।।
इति श्रुत्वा वचस्तस्याः पार्वत्याः परमेश्वरः ।।
कल्पयामास पुरीं रम्यां सर्वभूतमनोरमाम् ।। १३ ।।।
आत्मनोपि हितां पुण्यां शंभुः सर्वात्मना तदा।।
बहुयोजनविस्तीर्णां दिव्यां दिव्यजनप्रियाम्।।१४।।
दिव्याभिप्रायसंयुक्तां दिव्यस्थानमनोरमाम्।।
दिव्यसर्वगुणोपेता विशालां विरजां शुभाम् ।। १५ ।।
क्रयविक्रयसंपन्नहट्टाट्टालकचत्वराम् ।।
बहुहर्म्यगृहाकीर्णां सौधपंक्तिविराजिताम् ।। १६ ।।
स्फाटिकाभित्तिरचितां वैडूर्यमणिभूमिकाम् ।।
प्रवालस्तंभप्रवरां हेमाभरणसंभराम् ।। १७ ।।
आरक्तमणिदेहल्यां द्वारशाखाभिमंडिताम् ।।
जांबूनदकपाटाढ्यां वज्रार्गलसुसंस्कृताम् ।। १८ ।।
मणिरत्नसमाभूमिद्वाराजिरगृहांतराम् ।।
घोषजालातिरम्यां च मुक्तादामविलंबिनीम् ।। १९ ।।
हेमस्तं भध्वजोपेताः पताकाश्च गृहेगृहे ।।
कलशाश्च विराजंते मणिहेमाचिता गृहे ।। 5.1.47.२० ।।
वापीकूपतडागानि सरांसि विमलानि च ।।
पद्मकिंजल्कगंधीनि जलयंत्रोपशोभिताम् ।। २१ ।।
हंसकारंडवाकीर्णां शिखंडिगणशोभिताम् ।।
जलयंत्रकृताधारां गृहवापीवनाकराम् ।। २२ ।।
क्वचिन्नृत्यंति मयूराः क्वचित्कूजंति कोकिलाः ।।
भ्रमरावलीढपुष्पाढ्यस्तबका वनराजयः ।।२३।।
नरनारीगणाकीर्णां वर्णाश्रमनिषेविताम् ।।
हर्म्यांतरागता नार्यो विलोकनपरा बभुः ।। २४ ।।
चंद्रमालाकृतश्रेणीतोरणानीव च शोभते ।।
एवं व्यास पुरी रम्या आत्मयोगेन वासिता ।। २५ ।।
यत्रालकापुरी रम्या कुबेरभवनांकिता ।।
धवला पुण्यजनैः कीर्णा पक्षिभिश्चोपशोभिता ।। २६ ।।
तत्र भोगवती दिव्या वरुणालय उत्तमः ।।
नागकन्याभिरुग्राभि र्नागपत्नीभिः संकुला ।। २७ ।।

संयमनीपुरी श्रेष्ठा धर्मराजेन पालिता ।।
सदाचारजनैः पूर्णा कृता कृतविचक्षणैः ।। २८ ।।
देवतानां पुरी रम्या वासवेनाभिरक्षिता ।।
पुण्यस्त्रीणां गणाकीर्णा किन्नरोद्गीतमंडिता ।। २९ ।।
एवंविधानि रम्याणि पुरा बहुतराणि च ।।
बहुविस्तीर्णमानानि शुभ्रा ण्यतितराणि च ।। 5.1.47.३० ।।
क्वचिद्रंभाकृतद्वारा यवांकुरघटाः शुभाः ।।
क्वचिद्गायन्ति गन्धर्वाः क्वचिन्नृत्यंति नर्तकाः ।। ३१ ।।
क्वचिद्बालाः पठंति स्म वेदाध्ययनका द्विजाः ।।
क्वचिद्यज्ञान्यजंति स्म यजमानाः सऋत्विजः ।।३२।।
क्वचिच्चावभृथस्नाताः क्वचिद्दानान्यकुर्वत ।।
क्वचित्क्वचित्तूपनयनं विवाहाग्निपरिग्रहम् ।। ३३ ।।
क्वचिदारामपूर्तं वै क्वचिद्यात्रावधारणम् ।।
वापीकूपतडागानां तथैव विधिपूर्वकम् ।। ३४ ।।
क्वचित्कथाप्रसंगांश्च परिशंसंति वाचकाः ।।
क्वचिद्गाथाः प्रकुर्वंति कवयः पुर उत्तमे ।। ३५ ।।
क्वचिन्मल्ला नियुध्यंते नटा नाट्यपराः क्वचित् ।।
तडागानि विराजंते मणिसोपानपंक्तिभिः ।। ३६ ।।
चंचलाश्चपला बालाः श्यामाः षोडशवार्षिकाः ।।
वारिहारपरास्तत्र मणिहेमघटोत्कटाः ।। ३७ ।।
एवं व्यास पुरी रम्या निर्मिता योगमायया ।।
शंभुना सर्वपापघ्नी प्रियाप्रियचिकीर्षया ।।३८।।
विशाला बहुविस्तीर्णा पुण्या पुण्यजनाश्रया ।।
तस्मात्सर्वेषु कालेषु सर्वलोकेषु गीयते ।। ३९ ।।
विशालेति समाख्याता पुरी रम्या सनातनी ।।
यत्रतत्र स्थितो वापि सर्वावस्थां गतोऽपि वा ।। 5.1.47.४० ।।
विशालेति वदेन्नित्यं शिवलोके महीयते ।।
ईदृशी न पुरीव्यास भुवि ब्रह्मांडगोलके ।। ४१ ।।
विशाला सदृशी चान्या भुक्तिमुक्तिप्रदा नृणाम् ।।
पितॄनुद्दिश्य कुर्वंति श्राद्धं काले नरा यदि ।। ४२ ।।
तदक्षयं भवेत्तेषां पितृकल्पे च गीयते ।।
स्नानदानादिकं यैस्तु विशालायां प्रसंगतः ।। ४३ ।।

यत्र कुत्र गतास्ते वै मृता यांति शिवालयम् ।।
धन्याः पुण्यतमा लोके प्रीतिर्येषां सदाचला ।। ४४ ।।
विशालायां फलं शश्वच्छेषः शक्तो न वर्णितुम् ।।
कथाश्रवणमात्रेण वाच्यमानेन तत्क्षणात् ।।
महापापोद्भवात्पापान्मुच्यते नात्र संशयः ।। ४५ ।।
एवं व्यास पुरी जाता विशाला च कुशस्थली ।।
प्रतिकल्पा यथा जाता तथा मे शृणु भाषतः ।। ४६ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्र माहात्म्ये विशालाभिधानकथनंनाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४८

https://sa.wikisource.org/s/fou
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
शृणुष्वावहितो व्यास स्थितिमेकाग्रमानसः ।।
मया व्यासमुखात्प्राप्ता कल्पभेदे कथा शुभा ।। १ ।।
गुह्याद्गुह्यतरा श्रेष्ठा न देया यस्य कस्यचित् ।।
नास्तिकाय कृतघ्नाय नाशिष्याय कदाचन ।। ।। २ ।।
एषा पुण्यतमा व्यास कथा पापहरा परा ।।
यस्याः श्रवणमात्रेण कल्पदोषो न बाधते ।। ३ ।।
प्रमाणं कल्पपर्यंतं ब्रह्मणः परमेष्ठिनः ।।
मन्वंतरेषु सर्वेषु कल्पकल्पांतरेषु च ।। ४ ।।
यावत्संख्या परिमिता तावती शृणु सत्तम ।।
अहोरात्रं च भजते सूर्यो मानुषदैवतम् ।। ५ ।।
तामुपादाय गणनां शृणु संख्या द्विजोत्तम ।।
निमेषैः पंचदशभिः काष्ठा त्रिंशत्तु ताः कला ।। ६ ।।
त्रिंशत्कला मुहूर्तस्तु त्रिंशता तैर्मनीषिणः ।।
अहोरात्र मिति प्राहुश्चंद्रादित्यगतिस्तदा ।।७।।
रविर्गतिविशेषेण सन्ध्यायां याति नित्यशः ।।
तदहस्तु मनुष्याणां रात्रिश्चैव तु तादृशी ।। ८ ।।
पक्षौ मासा ऋतुश्चाब्दमयने च प्रकीर्तिते ।।
पितॄणां चैव देवानां ब्रह्मणश्च यथातथम् ।। ९ ।।
यावत्संख्या समाख्याता आयुरंतश्च तादृशः ।।
अहोरात्राः पंचदश पक्ष इत्यभिशब्दितः ।। 5.1.48.१० ।।
पक्षौ द्वौ तौ कृतौ मासौ मासौ द्वावृतुरुच्यते ।।
अयनं चर्तुभिस्त्रिभिरब्दं द्वे अयने स्मृतम् ।। ११ ।।
दक्षिणं चोत्तरं चैव संख्यातत्त्वविशारदैः ।।
मानेनानेन यो मासः पक्षद्वयसमन्वितः ।। १२ ।।
पितॄणां तदहोरात्रमिति कालविदो विदुः ।।

शुक्ल पक्षस्त्वहस्तेषां कृष्णपक्षस्तु शर्वरी ।। १३ ।।
कृष्णपक्षे त्विह श्राद्धं पितॄणां वर्तते द्विज ।।
मानुषेण तु मानेन यो वै संवत्सरः स्मृतः।।१४।।
देवानां तदहोरात्रं दिवा चैवोत्तरायणम्।।
दक्षिणायनं स्मृता रात्रिः प्राज्ञैस्तत्त्वार्थकोविदैः।।१५।।
दिव्यमब्दं शतगुणं दिव्यमब्दसहस्रकम् ।।
मुनिभिश्चैव तत्त्वज्ञैरहोरात्रं मनोः स्मृतम् ।। १६ ।।
अहोरात्रं दशगुणं मानवः पक्ष उच्यते ।।
पक्षाद्दशगुणो मासो मासा द्वादशभिर्गुणैः ।। १७ ।।
ऋतुर्मनूनां संप्रोक्तः प्राज्ञैस्तत्त्वार्थदर्शिभिः ।।
षड्भिस्तैर्वर्षं संप्रोक्तं तेन संख्या निबध्यते ।। १८ ।।
चत्वार्येव सहस्राणि वर्षाणां तु कृतं युगम् ।।
तावती तु भवेत्संध्या संध्यांशश्च तथाविधः ।। १९ ।।
त्रीणि वर्षसहस्राणि त्रेता तत्परिमाणतः ।।
तस्याश्च त्रिशती संध्या संध्यांशश्च तथा परः ।। 5.1.48.२० ।।
तथा वर्षसहस्रे द्वे द्वापरं परिकीर्तितम् ।।
तस्य च द्विशती संध्या संध्यांशश्च तथा। परः ।। २१ ।।
कलिर्वर्षसहस्रं तु संख्या चोक्ता मनीषिभिः ।।
तस्य चैकशती संध्या संध्यांशश्च तथाविधः ।। २२ ।। ( ४८०० कृतं, ३६०० त्रेता, २४०० द्वापरम्, १२०० कलिः)
एषा द्वादशसाहस्री युगसंख्या प्रकीर्तिता ।।
दिव्येनानेन मानेन युगसंख्यां निबोध मे ।। २३ ।।
ससर्ज स पुनस्तात जगत्सर्वमिदं ततः ।।
कृतं त्रेता द्वापरं च कलिश्चैव चतुर्युगम् ।। २४ ।।
युगं तदेकसप्तत्या गुणितं द्विजसत्तम ।।
मन्वंतरमिति प्रोक्तं संख्यानार्थविशारदैः ।। २५ ।।
अयनं चापि तत्प्रोक्तं द्वेऽयने दक्षिणोत्तरे ।।
मनुः प्रलीयते ह्यत्र संप्राप्ते जगतः प्रभौ ।। २६ ।।
ततोऽपरो मनुः कालमेतावन्तं भवेत्पुनः ।।
समतीते तु राजेंद्र प्रोक्तः संवत्सरस्य वै ।। २७ ।।
तदैव चायनं प्रोक्तं मुनिना तत्त्वदर्शिना ।।
ब्रह्मणस्तदहः प्रोक्तं कल्प श्चेति स उच्यते ।। २८ ।।

सहस्रयुगपर्यंतं सा निशा प्रोच्यते बुधैः ।।
निमज्जत्यत्र चोर्वी सा सशैलवनकानना ।। २९ ।।
तस्मिन्युगसहस्रे तु पूर्णे वै द्विजसत्तम ।।
ब्राह्मे दिवसपर्यंते कल्पो निःशेष उच्यते ।। 5.1.48.३० ।।
युगानि सप्ततिं तानि साग्राणि कथितानि ते ।।
कृतत्रेतादियुक्तानि मनोरंतर मुच्यते ।। ३१ ।।
चतुर्दशैते मनवः कथिताः कीर्तिवर्धनाः ।।
वेदेषु सपुराणेषु सर्वेषु प्रभविष्णवः ।। ३२ ।।
प्रजानां पतयो व्यास धन्यमेषां प्रकीर्त नम् ।। ३३ ।।
मन्वंतरेषु संहाराः संहारांतेषु संभवाः ।
न शक्यमंतस्तेषां वै वक्तुं वर्षशतैरपि ।। ३४ ।।
विसर्गश्च प्रजानां वै संहारस्य च भारत ।।।
मन्वंतरेषु संहारः श्रूयते भरतर्षभ ।। ३५ ।।
यत्र तिष्ठंति वै देवाः सर्वे सप्तर्षिभिः सह ।।
तपसा ब्रह्मचर्येण श्रुतेन च समन्विताः ।। ३६ ।।
पूर्णे युगसहस्रे तु कल्पो निःशेष उच्यते ।।
तत्र सर्वाणि भूतानि दग्धान्यादित्यरश्मिभिः ।। ३७ ।।
ब्रह्माणमग्रतः कृत्वा सहादित्यैर्गणैर्द्विज ।।
प्रविशंति सुरश्रेष्ठं हरिं नारायणं प्रभुम् ।। ३८ ।।
स स्रष्टा सर्वभूतानां कल्पांते तु पुनःपुनः ।।
अव्यक्तः शाश्वतो देवस्तस्य सर्वमिदं जगत् ।। ३९ ।।
स एव विद्यते व्यास महेशा सह संयुतः ।।
महाकालवने वासं चकार जगदीश्वरः ।। 5.1.48.४० ।।
प्रलयो न बाधते व्यास महाकालवनोत्तमे ।।
कल्पे कल्पे च वै रम्या पुरी ह्येषा कुशस्थली ।। ४१ ।।
निरामया निरातंका निर्विकारा युगेयुगे ।।
मार्कण्डेयोपदिष्टानि कल्पानि संभवंति च ।। ४२ ।।
अत्रैव च वने रम्ये ब्रह्मा लोकपितामहः ।।
प्रजानां पतयो ये ते दक्षः प्राचेतसस्तथा।। ४३ ।।
मरीचिः कश्यपो रुद्रो येऽन्ये भृग्वादयस्तथा ।।
कल्पादौ ससृजे लोकांश्चराचरान्यथा तथा ।। ४४ ।।
एवमादौ पुरा व्यास कल्पं कल्पायते तदा ।।

वाराहवामनविष्णुपितॄणां वै तथैव च ।।४५।।
कल्पभेदाः समाख्याता महाकालवने शुभे ।।
चतुराशीतिकल्पानि संजातानि द्विजोत्तम ।। ४६ ।।
तावंति योगलिंगानि वने तिष्ठन्ति सत्तम।।
पुनर्जाता पुनः र्नष्टा महीसागरपर्वताः ।।४७।।
पुनःपुनर्भविष्यंति पुरी ह्येषाऽचला स्मृता ।।
तस्मात्सर्वेषु कालेषु सर्वलोकेषु गीयते ।।४८।।
प्रतिकल्पेति विख्याता भुवि व्यास भविष्यति ।।
येऽस्यां वै मानवा दांताः स्नानदानादिकं तथा ।। ४९ ।।
जपं होमं तथा श्राद्धं पितॄनुद्दिश्य देवताः ।।
न तेषां पुनरा वृत्तिः कोटिकल्पशतैरपि ।। 5.1.48.५० ।।
प्रतिकल्पामनुप्राप्य दृष्ट्वा देवं महेश्वरम् ।।
वैशाखे पौर्णमास्यां वै स्नापयंत्येकवासरम् ।। ५१ ।।
प्रसंगतो रजः क्लांतः शिप्रांभसि च मानवाः ।।
न तेषां दुष्कृतं किंचिद्विष्णुलोके वसंति ते ।।५२।।
मन्वंतरसहस्रेषु काशिवासेषु यत्फलम् ।।
तत्फलं प्राप्नुयाज्जंतुः प्रतिकल्पं क्षणादपि ।। ५३ ।।
प्रतिकल्पे च कल्पांते सैवासीच्च पुरी शुभा ।।
तस्मात्सर्वजनैः ख्याता प्रतिकल्पा द्विजोत्तम ।। ५४ ।।
ये चैतस्य महाभागाः प्रीतिं कुर्वंति मानवाः ।।
न तेषां कल्पभेदोऽयं स्वप्नवज्जायते क्षणात् ।। ५५ ।।
यः शृणोति कथां पुण्यां प्रतिकल्पोद्भवां शुभाम् ।।
श्रावयेद्वा प्रयत्नेन ब्रह्महत्यां व्यपोहति ।। ५६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये प्रतिकल्पाभिधानकथनंनामाष्टाचत्वारिंशोऽध्यायः ।। ४८ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ४९



।। सनत्कुमार उवाच ।। ।।
एवं व्यास पुरी रम्या नामभूता सनातनी ।।
युगेयुगे यथा जाता तथा ख्याता मयाऽनघ ।। १ ।।
।। व्यास उवाच ।। ।।
भूयोऽहं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।।
शिप्रायाश्च कथां पुण्यां पवित्रां पापहारिणीम् ।। २ ।।
सुन्दरं कुंडमाख्यातं पिशाचमोचनं तथा ।।
नीलगंगा इति प्रोक्ता कर्कराजमतः परम् ।। ३ ।।
पुष्कराणि च सर्वाणि गयातीर्थमनुत्तमम् ।।
गोमतीकुण्डमाख्यातं नाम्ना धर्मसरस्तथा ।। ४ ।।
ख्यातं संगमजं तीर्थं शनेर्जन्मकथां शुभाम् ।।
च्यवनाश्रमे च या वार्ता तथा नागालये शुभे ।। ५ ।।
पुरुषोत्तममहिमानं काले केन कथं भवेत् ।।
एतद्वेदितुमिच्छामि यत्ते मनसि वर्तते ।। ६ ।।
।। सनत्कुमार उवाच।। ।।
शृणु व्यास महाभाग कथां पापहरां पराम्।।
यस्मिन्काले यदा जाता महाकालवने शुभे।।७।।
नास्ति वत्स महीपृष्ठे शिप्रायाः सदृशी नदी ।।
यस्यास्तीरे क्षणान्मुक्तिः किं चिरात्सेवनेन वै ।। ८ ।।
वैकुण्ठे जायते शिप्रा ज्वरघ्नी च सुरालये ।।
महाद्वारे च पापघ्नी पातालेऽमृतसंभवा ।। ९ ।।
वाराहकल्पे वै प्रोक्ता विष्णुदेहेति नामतः ।।
शिप्रावंत्यां समाख्याता कामधेनुसमुद्भवा ।। 5.1.49.१० ।।
।। व्यास उवाच ।। ।।
विचित्रमिदमाख्यातं भवता ऋषिसत्तम ।।
वक्तुमर्हसि शिप्रायाः समासेन कथां शुभाम् ।। ११ ।।

।। सनत्कुमार उवाच ।। ।।
ब्राह्मं कपालमादाय भिक्षार्थं संचरन्महीम् ।।
महादेवो विशुद्धात्मा सर्वलोकेषु सर्वतः ।।१२।।
अप्राप्तभिक्षो भिक्षार्थी वैकुण्ठमगमद्विभुः ।।
गतश्चातिथ्यवेलायां भ्रममाणो यतस्ततः।।१३।।
लोकनिंदापरः क्रुद्धः क्षुधितो बहुवासरैः ।।
भिक्षां देहीति भो ब्रह्मन्क्षुधितोऽहं समाहितः ।।१४।।
कपालं च करे कृत्वा इत्यु वाच पुनः पुनः ।।
गृह्यतां हर भिक्षां ते ददामीति हरिस्तदा ।।१५।।
इत्युक्त्वा करमुद्यम्य तर्जन्यगुंलिमादधत् ।।
तदा रुद्रः समाध्मातस्त्रिशूलेनाहन द्रुषा ।।१६।।
तदांगुलिसमुद्भूतं बहु सुस्रावशोणितम् ।।
तेनाशु पात्रं तत्पूर्णं शंकरस्य करे स्थितम् ।।१७।।
तदा उद्वेलिता सा वै धारा जाता समं ततः ।।
तत्र स्थाने समुद्भूता शिप्राऽसृग्धारसंभवा ।। १८ ।।
वैकुंठे चाभवत्सद्यो नदी त्रैलोक्यपावनी ।।
एवं शिप्रा सरिच्छ्रेष्ठा त्रिषु लोकेषु विश्रुता ।। १९ ।।
ज्वरघ्नी च यथा प्रोक्ता तथा व्यास ब्रवीम्यहम् ।।
यदा बाणासुरो दैत्यः कृष्णेन सह संयुगे ।। 5.1.49.२० ।।
योधयामास दैत्येंद्रो ह्यनिरुद्धप्र हेलनः ।।
सहस्रबाहुभिर्वीरो नानाप्रहरणोद्यतः ।। २१ ।।
तस्मात्क्रुद्धो वासुदेवश्चक्रमादाय सत्वरः ।।
चिच्छेद बाहुसाहस्रं क्षुरप्रेणाशुगामिना ।। २२ ।।
स तदा भग्नसंकल्पश्छिन्नदोश्च व्रणार्दितः ।।
पराङ्मुखपरो भूत्वा शंकरं शरणं ययौ ।। २३ ।।
तदागतं महादैत्यं समीपे भयविह्वलम् ।।
विलोक्य कृपयाविष्टो गते संग्राममूर्धनि ।। २४ ।।
छित्त्वा बाहुसहस्रं वै दैत्यराजस्य चाहवे ।।
क्रुद्धः कृष्णो महाबाहुः परसेनांतको वरः ।। २५ ।।
स्थितो यत्राचलो व्यास तत्रागतो महेश्वरः ।।
वारयामास कृष्णं वै शरोघैश्च समाकिरन्।।२६।।
अन्योन्यं च समासाद्य कृत्वा युद्धं तु दारुणम् ।।

शस्त्रास्त्रैश्च महाघोरैः सर्वप्राणिभयंकरैः ।। २७ ।।
वैष्णवास्त्रं तदा कृष्णः संदधे हरजिघांसया ।।
पाशुपतं च नामास्त्रं सर्वसंहारकारकम् ।। २८ ।। ।
संदधे वै तदा शंभुः कृष्णप्राणहरोत्सुकः ।।
हाहाकारस्तदा जातः सर्वलोकेषु श्रूयते ।। २९ ।।
मोहनास्त्रं पुनः कृष्णः शिवोपरि मुमोच ह ।।
तेनास्त्रेण तदा शंभुर्मोहितो देवमायया ।। 5.1.49.३० ।।
जृंभमाणः स्थितः संख्ये किंचित्कालं मुहुर्मुहुः ।।
लब्धसंज्ञः पुनर्जातो यदा रुद्रो महाहवे ।। ३१ ।।
तदा क्रोधाभिभूतेन कृतो माहेश्वरो ज्वरः ।।
ललाटफलकात्सद्यो वीरभद्रो महाबलः ।। ३२ ।।
त्रिनेत्रस्त्रिशिरा ह्रस्वस्त्रिपादो बर्कराकृतिः ।।
क्षुद्रो जटिलभस्मांगो महाव्याधिर्दुरत्ययः ।। ३३ ।।
कृष्णसेनां समासाद्य महादेवेन प्रेरितः ।।
प्राणिनां कदनं चक्रे सर्वेषां कृष्णसंगिनाम् ।। ३४ ।।
पराङ्मुख्यपरा भग्ना ज्वराभिघातपीडिता ।।
बभूव सहसा व्यास सेना कृष्णेन पालिता ।।३५।।
तथाभूतां समालोक्य जृंभमाणा रुजार्दिताम् ।।
स्वसेनां भग्नसंकल्पां माहेशज्वरपीडिताम् ।। ३६ ।।
ससर्ज वैष्णवं तापं कृष्णः परमकोपनः।।
तेन सह वैष्णवेन माहेश्वरेण ज्वरेण च ।। ३७ ।।
अन्योन्यमभवद्युद्धं घोरं घोरतरं महत् ।।
संग्रामं बहुलं कृत्वा भग्नो माहेश्वरो ज्वरः ।।३८।।
सर्वलोकेषु गत्वा वै न शांतिं प्रतिजग्मिवान् ।।
महाकालवने रम्ये प्राप्तस्तेनाभिपीडितः ।। ३९ ।।
निमग्नोऽथ वै शिप्रायां ततः शांतिं परां ययौ ।।
दृष्ट्वा माहेश्वरं शांतं ज्वरं परमकोपनम् ।। 5.1.49.४० ।।
वैष्णवो ऽपि समासाद्य तस्यां मज्जनमाचरत् ।।
तस्याः प्रभावसन्नष्टौ ज्वरो हरिहरोद्भवौ ।। ४१ ।।
तस्मात्सर्वेषु कालेषु ज्वरघ्नी साऽभवत्क्षणात् ।।
ज्वराभिभूतास्तां प्राप्य जनाः परमदुःखिताः ।। ४२ ।।
निमज्जंति च शिप्रायां व्यासोषसि समाहिताः ।।

न तेषां बाधते पीडा ज्वरोद्भूता कदाचन ।। ।। ४३ ।।

सत्यमुक्तं तदा व्यास ब्रह्महरिहरेण च ।।४४।।

ये शृण्वंति कथां दिव्यां नराश्चैकाग्रमानसाः ।।

न तेषां जायते किंचिज्जवरसंतापजं भयम् ।। ।। ४५ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखंडेऽवन्तीक्षेत्रमाहात्म्ये शिप्राया माहात्म्ये ज्वरानुग्रहोनामैकोन पंचाशत्तमोऽध्यायः ।।४९।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५०



।। सनत्कुमार उवाच ।। ।।
पापनाशिनी विख्याता यथा शिप्रा पयस्विनी ।।
तथाहं संप्रवक्ष्यामि समासेन परंतप।।१।।
पुरा कृतयुगे व्यास दमनोनाम वै नृपः ।।
कीकटेषु समाख्यातो राजा परमकोपनः ।।२।।
उत्पथी सर्वधर्माणां गोब्राह्मणविनिंदकः ।।
सुरापी हेमहारी मत्सरी गुरुतल्पगः ।। ३ ।।
प्रजासर्वस्वहर्ता च परदाराभिमर्शकः ।।
धूर्तको धूर्तसंगी च पिशुनस्तस्कराकृतिः ।।४।।
गोग्रहः पुरभेदी च बंदी बंदिजनप्रियः ।।
कुत्सितः कोपपूर्णश्च वेदशास्त्रविवर्जितः ।।५ ।।
साधुसंगपरित्यागी दुष्टो दुष्टजनप्रियः ।।
कुलांगनापरित्यागी पण्यस्त्रीवृषलीपतिः ।। ६ ।।
धर्मनिंदाकरो नित्यमधर्मे रमते मतिः ।।
न हूयंते न पूज्यंते न श्रूयंते कथा बुधैः ।। ७ ।।
वेदा यज्ञाश्च देवानां मूर्तिः पद्भ्यां च ताड्यते ।।
एवं दुष्टतरो राजा न भूतो न भविष्यति ।। ८ ।।
स एकदा वने घोरे मृगयावनगोचरः ।।
इतस्ततो भ्रममाणो व्याधैः परिवृतः खलः ।। ।। ९ ।।
न लब्ध्वा खेटकं किंचित्क्षुधार्तस्तृषितः खलः ।।
एकाकी विगतोऽसंगो महाकालवनांतिके ।। 5.1.50.१० ।।
रात्रिः समागता तत्र घोरा घोरनि षेविता ।।
वृक्षमूलमुपावृत्य शयनार्थी क्षुधार्दितः ।। ११ ।।
तत्राश्वं विटपे बद्ध्वा स्वयमेव न्यषीदत ।।
तदैव काले वृक्षाद्वै सर्पः पपात मस्तके ।।१२।।
किमिदं कुत आश्चर्यं कृत्वा हस्तेन वारितः ।।

तेन वारयिता राजा दष्टोंऽगुष्ठे तदाऽहिना ।। १३ ।।
दष्टमात्रे च नृपतिर्व्यथितः क्षितिमागतः ।।
कियत्काले व्यथाविष्टो मुमोह क्षीणमंगलः ।। १४।।
एतत्क्षणात्प्रेतभूतो घोरे नरकसंचये ।।
यमदूतैस्ताड्यमानो विविधास्त्रैः स्वकर्मजैः ।। १५ ।।
हर्षिताश्च गणाः सर्वे यमराजस्य किंकराः ।।
बद्ध्वा पाशैश्च तं निन्युः पापिष्ठं यममंदिरे ।। १६ ।।
एतस्मिन्नंतरे व्यास क्रव्यादैः खादितं शवम् ।।
किंचिच्छेषतरं प्रातर्वायसेनाभिलक्षितम् ।। १७ ।।
तत्र गत्वानयन्मांसं तुंडेन वियदुद्गतः ।।
ततोऽन्यैर्वायसैर्भग्नो भ्राम्यमाण इतस्ततः ।। १८ ।।
तत्राटतो हि यत्रास्ते दिव्या शिप्रा पयस्विनी ।।
किंचित्कर्मविपाकेन वायसास्यगतं पलम् ।। १९।।
पतितं वै जले तस्याः शिप्रायास्तस्य काय जम्।।
तेन पुण्यप्रभावेन शिवोऽजायत तत्क्षणात् ।। 5.1.50.२० ।।
त्रिनेत्रोथ जटाजूटी व्याघ्रांबरपरीवृतः ।।
शूलहस्तो वृषारूढो भालचंद्रो ह्युमापतिः ।। २१ ।।
इत्याश्चर्यमयं रूपं दृष्ट्वा दूताश्च धर्षिताः ।।
तद्गणैस्ताडिता भग्ना धर्मराज्ञे शशंसिरे ।। २२ ।।
श्रूयतां भो महाराज धर्मराज नमोस्तु ते ।।
दूतानां यद्वचो रम्यं बह्वाश्चर्यमयं परम् ।।२३।।
कीकटाधिमतिर्मंदः पापिष्ठो वृषलीपतिः ।।
दमनो नाम राजाभूत्समस्ते क्षितिमंडले ।।२४।।
यानि कानि च पापानि ब्रह्महत्यासमानि च ।।
तानि सर्वाणि तेनापि कृतानि भुवि सत्तम ।। २५ ।।
मर्यादाभेदको मूढो वर्णाश्रमसुधर्मिणाम् ।।
कुसंगी द्यूतकोन्मादी बहुव्यंगभरः खलः ।। २६ ।।
यमदंडपरः पापी अस्माकं हर्षवर्धनः ।।
स कथं शिवरूपी स्यात्किमाश्चर्यमतः परम् ।। २७ ।।
यावंतः पतिताः पूर्वे पापिनः सर्व एव हि ।।
कृष्णेन तारिताः सर्वे ब्रह्मपुत्रार्थिना तदा ।। २८ ।।
तदाप्रभृति सर्वाणि कुंडानि नरकस्य वै ।।

शुष्काणि चैव दृश्यंते ग्रीष्मांते वै ह्रदा यथा।।२९।।
न चैवार्तरवं किंचिच्छ्रूयते तव मंदिरे ।।
अस्माकं जीवनं नास्ति किमुपायं वदस्व नः ।।5.1.50.३०।।
एक एवागतो लोके वृत्तिदो नो यमाधिप ।।
सोऽपि शिवत्वमापन्नः कस्मान्नो जीव्यते कथम् ।। ३१ ।।
धर्मराजस्तदाश्रुत्य किंकराणां परं वचः ।।
चिरं ध्यात्वा स्वकानूचे देशकालोचितं वचः ।। ३२ ।।
।। धर्मराज उवाच ।। ।।
श्रूयतां भो गणाः सर्वैः श्रुतिरेकाग्रमानसैः ।।
येन पुण्यप्रभावेन पापिष्ठः शिवतां गतः ।। ३३ ।।
भुवि पुण्यतमे देशे महाकालवने शुभे ।।
शिप्रानाम सरिच्छ्रेष्ठा सर्वपापहरा परा ।।३४ ।।
येषां शिप्रोदक स्पर्शो जायते भुवि किंकराः ।।
न तेषां पातकं किंचिन्मृतः शिवपुरं व्रजेत् ।। ३५ ।।
मनसा वपुषा वाचा पापानि विविधानि च ।।
तत्क्षणात्प्रलयं यांति शिप्रासरिन्निषेवणात् ।। ३६ ।।
शिप्राशिप्रेति यो ब्रूते यत्र कुत्रापि मानवः ।।
स एव शिवतां याति न जाने स्नानजं फलम् ।।३७।।
यत्र कीटपतंगाश्च शिप्रावारिचराश्च ये ।।
मृताः शिवपुरं यान्ति शिप्रानीरनिषेवणात् ।। ३८ ।।
कृत्वान्यत्र महापापं येऽन्ते शिप्रातटं श्रिताः ।।
महापातकिनोऽप्येते मृता यांति शिवालयम् ।। ३९ ।।
माधवे मासि संप्राप्ते निमज्जंति नरोत्तमाः ।।
न तेषां निरयं किंचिच्छिवरूपाश्चरंति ते ।। 5.1.50.४० ।।
वायसेनाहृतं मांसं तस्य राज्ञः कृतागसः ।।
शिप्रागाधजले क्षिप्तं का तत्र परिदेवना ।। ४१ ।।
वापीकूपतडागादि अधिकाधिकसत्फलम् ।।
तस्माद्दशगुणं पुण्यं नदीषु उपजायते ।। ४२ ।।
तस्माद्दशगुणा तापी गोदा पुण्या ततोधिका ।।
तस्माद्दशगुणा रेवा गंगा पुण्या ततोऽधिका ।।
तस्माद्दशगुणा शिप्रा पवित्रा पापनाशिनी ।। ४३ ।।
दमनस्य शरीरस्य मांसं शिप्रासमागतम् ।।

तेन पुण्यप्रभावेन शिवरूपधरोऽभ वत् ।। ४४ ।।
ईदृशा च नदी रम्या अवन्त्यां भुवि वर्तते ।।
वांछंति देवताः सर्वास्तस्या दुर्लभदर्शनम् ।। ४५।।
धर्मराजवचः श्रुत्वा गणा विस्मय मागताः ।।
मनसा च निरातंकाः शिप्रां शरणमागताः ।। ४६ ।।
।। सनत्कुमार उवाच ।। ।।
तदाप्रभृति विख्याता शिप्रेयं पापनाशिनी ।।
गीयते च पुराणेषु यस्या माहात्म्यमुत्तमम् ।। ४७ ।।
दमनस्य च निर्मुक्तिः शिप्रामाहात्म्यमुत्तमम् ।।
यमदूतानां संवादं श्रुत्वा मुक्तिर्न संशयः ।। ।। ४८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये शिप्रामाहात्म्ये पञ्चाशत्तमो ऽध्यायः ।। ५० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५१

https://sa.wikisource.org/s/fob
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महाबुद्धे शिप्रामाहात्म्यमुत्तमम् ।।
यथाऽमृतभवा ख्याता पाताले नागसंमते ।।१।।
एकदा रुद्रो भिक्षार्थं नागलोके बुभुक्षितः ।।
करे कपालमादाय भोगवत्यां समागतः ।। २ ।।
भिक्षां देहि वचो दीनं वाचयित्वा गृहेगृहे ।।
भिक्षा केनापि नो दत्ता क्षुधितस्य च धूर्जटेः ।। ३ ।।
तदा क्रोधाभिरक्ताक्षः शूलपाणिः क्षुधार्दितः ।।
भ्रामयित्वा पुरीं सर्वां शनैर्बहिर्विनिर्ययौ ।। ४ ।।
एकविंशतिकुण्डानि पीयूषस्य द्विजोत्तम ।।
यत्र तिष्ठंति सर्वाणि नागलोकस्य रक्षणे ।। ५ ।।
तत्र गत्वा स भगवाञ्छंभुः सर्वात्मसंभवः ।।
अपिबन्नेत्रमार्गेण तृतीयेन च शंकरः ।। ६ ।।
रिक्तानि पीयूषकुण्डानि कृत्वा तत्रैव सोत्थितः ।।
कंपितश्च तदा लोको नागानां सर्वतोमु खम् ।। ७ ।।
कस्येदं कर्म किं जातं सुधा यस्मादितो गता ।।
इत्युक्ता चैव ते सर्वे नागा वासुकिपुरोगमाः ।। ८ ।।
महदतिक्रमणे शंकाः पुरात्ते निर्ययुर्बहिः ।।
किं कुर्वाम क्व गच्छाम कस्येदं हेलनं कृतम् ।। ९ ।।
येनास्माकं कोपितेन हृतं चामृतमुत्तमम् ।।
अस्माकं जीवनं तस्मात्कथं जीवाम पन्नगाः ।। 5.1.51.१० ।।
इत्युक्त्वा पन्नगाः सर्वे सस्त्रीबालपरिग्रहाः ।।
हरिं च जग्मुः शरणं मनसा परिशंकिताः।।११।।
तेषामनुग्रहार्थाय वागुवाचाशरीरिणी।।
श्रूयतामुरगाः सर्वे युष्माभिर्देवहेलनम्।।१२।। ।
भिक्षार्थमागतः शम्भुः क्षुधार्तश्च गृहेगृहे ।।

विदित्वातिथिवेलायां कपालकरभिक्षुकः ।। १३ ।।
दत्ता न भिक्षा केनापि भोगवत्यां पिन किनः ।।
तदा बहिर्गतो नाथः क्षुधितो धर्मविग्रहः ।। १४ ।।
तेन नष्टा सुधा सर्वा कुंडांते पन्नगोत्तमाः ।।
यूयं प्रयात पातालान्म हाकालवनोत्तमे ।। १५ ।।
तत्रैका वै सरिच्छ्रेष्ठा शिप्रानामेति विश्रुता ।।
त्रैलोक्यपावनी ह्येषा सर्वकामफलप्रदा ।। १६ ।।
यस्या दर्शनमात्रेण सर्वपापक्षयो भवेत् ।।
तत्र गत्वा भवद्भिश्च स्नानं कार्यं यथाविधि ।। १७ ।।
भजनं देवदेवस्य ततः पूजां करिष्यथ ।।
भजनाद्देवदेवस्य शिप्रासलिलमज्जनात् ।। १८ ।।
भविष्यति ततः सद्यः सुधा लोके पुरेव वः ।।
इति संभाष्य तान्नागांस्तत्रैवांतरधीयत ।। १९ ।।
वाणीं व्यास तदा दिव्यां सहसा लोकसाक्षिणीम् ।।
श्रुत्वा देवेरितां वाणीं तथेत्युक्त्वा च पन्नगाः ।। 5.1.51.२० ।।
स्त्रीबालवृद्धसहिता महाकालवनं ययुः ।।
तत्र गत्वा ददृशुस्ते नदीं त्रैलोक्यवंदिताम् ।। २१ ।।
सर्वत्र कुसुमाकीर्णां तरुच्छायाभिराश्रिताम् ।।
हंसकारंडवाकीर्णां मणिमुक्ताप्रवालकाम् ।। ।। २२ ।।
मणिसोपानरचितां पद्मखंडैश्च मंडिताम् ।।
सायं प्रातः स्थिता विप्राः संध्योपासनतत्पराः ।। २३ ।।
ऋषयश्च महाभागा भृग्वंगिरसमु ख्यकाः ।।
गंधर्वाश्चैव तत्रैव देवर्षिनारदादयः ।। २४ ।।
वसवश्च तथादित्या ह्यश्विनौ मरुतस्तथा ।।
रुद्राः साध्याश्च देवाश्च पितरो विमलाशयाः ।। ।। २५ ।।
उपासते च शिप्रां वै संध्यावेलां समाहिताः ।।
ऋषिपत्न्यो महाभागा देवकन्याप्सरोगणाः ।। २६ ।।
पतिव्रता महाभागास्तत्रैव पतिभिः सह ।।
उपासंते सदाचारा वर्णाश्रमपुरोगमाः ।। २७ ।।
राजर्षयः समासीना निर्वाणपदवीं गताः ।।
सिद्धा योगेश्वरा शांतास्तापसाः शंसितव्रताः ।। ।। २८ ।।
नानादेशोद्भवा लोका यात्रिणः समुपागताः ।।

शिप्राकूले समासीना नरनारीसमन्विताः ।। २९ ।।
कुर्वते तत्र धर्माणि महादानानि सर्वशः ।।
एवंविधां समालोक्य व्यास त्रैलोक्यवंदिताम् ।। 5.1.51.३० ।।
नदीं सुधामयीं सर्वां नागाः परमहर्षिताः ।।
स्नानदानादिकं कृत्वा महादेवमुपा सिरे ।। ३१ ।।
वेदोक्तविधिना सर्वे भक्त्या पन्नगसत्तमाः ।।
पंचांगपूर्वकं स्नानं यक्षकर्दमलेपनम् ।। ३२ ।।
अम्लानपंकजां मालां नानापुष्पाक्षतै स्तथा ।।
वासःस्रगनुलेपाद्यैश्चन्दनैर्गंधधूपकैः ।। ३३ ।।
दीपदानादिनैवेद्यैस्तांबूलमथ दक्षिणाः ।।
कर्पूरार्तिकराः सर्वे महादेवमुपागताः ।।
स्तुतिमारेभिरे कर्तुं सुधाकामास्तदोरगाः ।। ३४ ।।
।। सर्पा उचुः ।। ।।
नमोऽनंताय बृहते सर्वदेव नमोनमः ।।
चंद्रमौले नमस्तेऽस्तु कपर्दिन्परमात्मने ।।
वृषध्वज नमस्तेऽस्तु त्रिशूलवरधारिणे ।। ३५ ।।
त्र्यम्बकाय नमस्तेऽस्तु जटामुकुटधारिणे ।।
शेषहार नमस्तेस्तु चिताभस्मांगधारिणे ।। ३६ ।।
कृत्तिवास नमस्तेऽस्तु गिरीशाय नमोनमः ।।
त्रिपुरघ्न नमस्तेस्तु स्मरांतक नमोऽस्तु ते ।। ३७ ।।
मृगव्याध नमस्तेऽस्तु घस्मराय नमोनमः ।।
शंकरात्मन्नमस्तेस्तु सर्वकामफलप्रद ।। ३८ ।।
सर्वसाक्षिन्नमस्तेऽस्तु सर्वभूताशयाकृते ।।
सर्वाधार नमस्तेऽस्तु सर्वशक्तिधराय च ।। ३९ ।।।
सर्वभोग नमस्तेऽस्तु सर्वबीजसमुद्भव ।।
दिव्यहास नमस्तेऽस्तु नमोऽमृतस्रवाय च ।। 5.1.51.४० ।।
काम्यकाम नमस्तेस्तु सर्वकामवरप्रद ।।
नमः शिवाय शांताय पशूनां पतये नमः ।। ४१ ।।
नमो मृडाय दांताय शांतरूपाय वै नमः ।। ४२ ।।
एवं प्रसादितो नागैर्भगवान्वृषभध्वजः ।।
प्रसन्नवदनो भूत्वा प्रत्यक्षः प्राह पन्नगान् ।। ४३ ।।
।। श्रीमहादेव उवाच ।। ।।

शृणुध्वमुरगाः सर्वे वचस्तथ्यं वदामि वः ।।
नागलोके पुरा नित्यं भिक्षार्थं चागतोस्म्यहम् ।। ४४ ।।
गृहेगृहे भोगवत्यां व्यचरत्क्षु धितो भृशम् ।।
कपालं च करे कृत्वा धृत्वा कंथां सुचीरकाम् ।। ४५ ।।
अप्राप्तभिक्षो भिक्षार्थी पुनरागां ततो गृहम् ।।
तेन पापप्रसंगेन सुधा नष्टा च वः स्थलात् ।। ४६ ।।
किंचित्पुण्यप्रसंगेन महाकालवनोत्तमे ।।
यूयं प्राप्ता महाभागा हित्वा नागालयोत्तमम् ।। ४७ ।।
आबालवृद्धैः सस्त्रीभि दृष्टा शिप्रा सरिद्वरा।।
यस्या दर्शनमात्रेण सुनिष्पापोऽस्म्यहं पुरा ।। ४८ ।।
शिप्रायां स्नानजं पुण्यं वक्तुं शक्तो न कीदृशम्।।
दर्शनाज्जायते शंभुस्तत्क्षणाद्भुवि पन्नगाः ।। ४९ ।।
यस्मात्स्नानं कृतं सर्वैः शिप्रायां पन्नगोत्तमैः ।।
तेन पुण्यप्रभावेन सुधास्तु वो गृहेगृहे ।। 5.1.51.५० ।।
नीत्वा शिप्रोदकं पुण्यं कुण्डेषु परिषिञ्चत ।।
तेनैतानि च कुण्डानि अमृतान्येकविंशतिः ।। ५१ ।।
संपूर्णानि भविष्यंति स्थिराणि पन्नगोत्तमाः ।।
तथेत्युक्त्वा च ते सर्वे धृत्वा शिप्रोदकं करैः ।। ५२ ।।
गतास्ते वै स्वकं लोकं नमस्कृत्वा महेश्वरम् ।।
ततः प्रभृति सा शिप्रा नागलोकेऽमृतोद्भवा ।। ५३ ।।
सर्वलोकेषु विख्याता व्यास शिप्राऽमृतोद्भवा ।।
ये तु तस्यां प्रकुर्वंति नराः स्नानादिकं भुवि ।। ५४ ।।
न तेषां दुष्कृतं किंचिन्नापदो न च दुर्गतिः ।।
न वियोगो भवेत्तेषां पुत्रदारादिकैः कदा ।। ५५ ।।
न च मित्राणि दुष्यंति न रोगो न दरिद्रता ।।
कथां पापहरां पुण्यां सर्वकामवर प्रदाम् ।।
पठनाच्छ्रवणाद्वापि गोसहस्रफलं लभेत् ।। ५६ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽ वन्तीक्षेत्रमाहात्म्ये शिप्रामाहात्म्येऽमृतोद्भवानामकथावर्णनंनामैकपञ्चाशत्तमोऽध्यायः ।। ५१ ।। ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५२



।। सनत्कुमार उवाच ।। ।।।
भूयः शृणु महाभाग शिप्रामाहात्म्यमुत्तमम् ।।
यस्य श्रवणमात्रेण हयमेधफलं भवेत् ।। १ ।।
शिप्रा च सर्वतः पुण्या पवित्रा पापहारिणी ।।
अवंत्यां च विशेषेण शिप्रा चोत्तरवाहिनी ।। २ ।।
तथापि तत्समुत्पत्तिं विस्तराद्वदतो मम ।।
यथा वाराहतनया विष्णुदेहोद्भवा शिवा ।।
शृणु व्यास महापुण्यां कथां पौराणिकीं शुभाम् ।।९३ ।।
पुरा महासुरो जातो हिरण्याक्षो महाबलः ।। ४ ।।
स चेमां सकलां पृथ्वीं वशीकृत्वा चकार ह ।।
राज्यं च सार्वभौमानां दानवैश्च दुरात्मभिः ।। ५ ।।
जित्वा च सकलाँल्लोकान्सुरानिंद्रपुरोगमान् ।।
दिक्पालान्वसुपालांश्च तिरस्कृत्यसुरा धिपः ।। ६ ।।
स सर्वान्सर्वलोकेभ्यः स्वयमेवाधितिष्ठति ।।
स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि ।। ७ ।।
विचरंति यथा मर्त्या भ्रष्टराज्याः पराजिताः ।।
अलब्धशरणाः सर्वे ब्रह्माणं शरणं ययुः ।। ८ ।।
तत्र गत्वा नमस्कृत्य दैत्यकृत्यं न्यवेदयन् ।।
भगवन्किमिदं कार्यं भवता परमेष्ठिना ।। ।। ९ ।।
येन देवगणाः सर्वे नष्टप्रायाश्च तत्क्षणात् ।।
हिरण्याक्षेण दैत्येन हृतं स्वर्गमकण्टकम् ।। 5.1.52.१० ।।
यज्ञभागांश्च वै सर्वानुपाश्नाति पृथक्पृथक् ।।
केनोपायेन जीवाम कथं तिष्ठाम भूतले ।। ११ ।।
इति विक्लवितं तेषां देवानां स पितामहः ।।
उवाच वचनं रम्यं तत्कालसमयोचितम् ।। १२ ।।
।। ।। ब्रह्मोवाच ।। ।।
शृणुध्वं भोः सुरश्रेष्ठा यूयं सर्वे समाहिताः ।।

पुरायं पार्षदश्रेष्ठो द्वारपालः समाहितः ।। १३ ।।
वैकुण्ठभवने रम्ये विष्णोरतुलतेजसः ।
जयोनाम महाबाहुर्विजयेन समन्विततत।। १० ।।
द्वावेव सचिवौ दांतौ विष्णुवेषधरावुभौ।।
आत्तयष्टी च विक्रांतौ द्वारे संतिष्ठतः सदा ।। ।।१५।।
एकदा वै मुनिश्रेष्ठ ब्रह्मणो मानसात्मजाः।।
स्वैरं चरंतो लोकानां विष्णोर्भवनमागताः ।।१६।।
सनकादयो महाभागा भगवद्दर्शनलालसाः।।
ताभ्यां निवारिताः सर्वे पेतुर्वै धरणीतले ।। १७ ।।
मुमुहुश्च तदा व्यास कुमारा भृशदुःखिताः ।।
ततोऽगात्स महाबाहुर्भगवान्कमलेक्षणः ।। १८ ।।
ददर्श सहसा विष्णुः कुमारान्भुवि दुःखितान् ।।
उत्थाप्यांकं समारोप्य सस्वजे मधुसूदनः ।। १९ ।।
मूर्ध्नि चाघ्राय बाहुभ्यां परिष्वज्य ह्युवाच ह।।
कस्माद्वः कश्मलमिदं केनापि दुःखिता भृशम् ।। 5.1.52.२० ।।
सर्वं तत्कारणं बाला ब्रूत नो धर्मवित्तमाः ।। २१ ।।
।। कुमारा ऊचुः ।। ।।
श्रूयतां भो महाराज अस्माकं दुःखमीदृशम् ।।
येन प्राप्ता वयं ब्रह्मन्दशामेतां शृणुष्व ह ।। २२ ।।
आयाता भ्रातरो ह्येते चत्वारो लोकपर्यटाः ।।
दर्शनार्थं रमानाथ साभिलाषाः शुचार्दिताः ।। २३ ।।
निवारिताश्च सहसा ताभ्यां वै द्वारपालनात् ।।
तेनैवेयं दशा प्राप्ता भवता परिपालिताः ।। २४ ।। ।।
।। भगवानुवाच ।। ।।
अतः प्रभृति स्थानेस्मिन्स्थितिर्नास्ति च शाश्वती ।।
एतयोरासुरी योनिः प्राप्स्यते यन्ममाहितौ ।। २५ ।।
सद्यः प्राप्तौ तदा व्यास आसुरीं योनिमेव तौ ।।
जयविजयनामाख्यौ दुष्टभावसमाश्रितौ ।। २६ ।।
जन्मांतरसहस्रेण तपोदानसमाधिभिः ।।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ।। २७ ।।
दुष्टभावेन सद्यो वै जन्मभिर्जायते त्रिभिः ।।
भविष्यति च तस्माद्वो विष्णुभक्तिः परा स्मृता ।।२८।।

जन्मजन्मांतरे जातौ तामसीं योनिमुद्धतौ ।।
हिरण्यकशिपुश्चैव हिरण्याक्षो महाबलः ।। २९ ।।
तथैव कुंभकर्णाख्यो रावणो लोकरावणः ।।
दंत वक्त्रः शिशुपालश्च जन्मत्रयमिति स्मृतम् ।। 5.1.52.३० ।।
योऽसौ महाबली दैत्यो हिरण्याक्ष इति स्मृतः ।।
दुष्टभावसमापन्नो देवब्राह्मणनिंदकः ।। ।। ३१ ।।
जित्वा च सकलान्देवान्स्वयमेवाधितिष्ठति ।। ३२ ।।
स्वर्गान्निराकृताः सर्वे भ्रष्टराज्याः पराजिताः ।।
विचरंति यथा मर्त्यास्तेन देव गणा भुवि ।। ३३ ।।
स्वधाकारो वषट्कारः स्वाहाकारो न दृश्यते ।।
देवपूजार्चनं नास्ति ब्राह्मणानां विशेषतः ।। ३४ ।।
नैव तीर्थं प्रकाशेत पुण्यान्यायतनानि च ।।
आश्रमेषु च सर्वेषु ऋषीणां च महात्मनाम् ।। ३५ ।।
उद्वृत्तं च प्रकुर्वंति दुष्टदैत्याः प्रहारिणः ।।
वर्णाश्रमवतां धर्माः स्त्रीणां चैव सुशीलता।। १८ ।।
उच्छिन्ना हि तदा जातास्तस्मिन्राज्ञि दुरात्मनि ।।
दुष्टाचारा दुरात्मानो मायिनो बहुमानिनः ।। ३७ ।।
पाखंडिनोऽपरा क्रांताः सर्वे धर्मबहिर्मुखाः ।।
पशुधर्मरताः सर्वे सर्वे ब्रह्मेतिशंसिनः ।। ३८ ।।
बहुम्लेच्छा बहुक्लेशा बह्वाबाधावनी कृता ।।
को वेदः का स्मृतिः को यज्ञः का च दक्षिणा ।। ३९ ।।
तमीभूतं जगत्सर्वं दृश्यते वसुधातले ।।
एवं व्यास यदा जातं दुष्टं सर्वं जगत्त्रयम् ।। 5.1.52.४० ।।
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।। ४१ ।।
इति ज्ञात्वा महाविष्णुर्वाराहं वपुरात्मवान् ।।
दधार लीलया दिव्यं श्वेतद्वीपोपमं शुभम् ।। ४२ ।।
यूपदंष्ट्रो हविर्गंधो बीजौषधितनूरुहः ।।
वेदपादः शुचिर्दंडी जिह्वाग्निस्तालुकाहुतिः ।। ४३ ।।
अंतरास्यरुचादार्ढो यज्ञकायः सुदक्षिणः ।।
उद्गानघुर्घुरोन्नादो विहार ऋत्विजाकृतिः ।। ४४ ।।
हौत्रश्वासपरो दक्षसदस्यावयवः स्मृतः ।।

पुच्छः कर्माशनो नित्यं यजमानसुमानदः ।। ४५ ।।
वेदिपल्वलसंस्तारो ब्रह्माध्वर्युर्वनाकरः ।।
लोककल्पो लोकसाक्षी परावरवहः शुचिः ।। ४६ ।।
आद्यः पुरुष ईशानः पुरुहूतः पुरुष्टुतः ।।
तेनासौ निहतो दैत्यो हिरण्याक्षो दुरासदः ।। ४७ ।।
संग्रामान्सुबहून्कृत्वा बहुकष्टेन विष्णुना ।।
दैत्येन पीडिता पृथ्वी रसातलतलंगता ।। ४८ ।।
उद्धृता च वराहेण दंष्ट्रया चंद्ररेखया ।।
हतास्ते दानवाः सर्वे शेषाः पातालमाययुः ।। ४९ ।।
ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ।।
जज्वलुश्चाग्नयः शांताः शांता दिग्जनितस्वनाः ।। 5.1.52.५० ।।
सरितो मार्गवाहिन्यः सागराः प्रकृतिं गतः ।।
दृष्ट्वा देवोऽखिलं व्यास प्रसन्नात्मा बभूव ह ।। ५१ ।।
वाराहमूर्तिर्भगवान्सर्वकामफलप्रदः ।।
आनंदनिर्भरो देवो हतदैत्यो वरप्रदः ।। ५२ ।।
तस्यापि हृदयाज्जाता नदी ह्येषा सनातनी ।।
आनंदजलसंपूर्णा सर्वानंदवरप्रदा ।।५३।।
बहुयोजनविस्तारा बहुला कामचारिणी ।।
पद्माकरसमाकीर्णा हंसकारण्डसंकुला ।।५४।।
सरला तरलच्छाया यक्षगंधर्वसेविता ।।
किन्नरीगीयमाना च गीयमाना खगालिभिः ।।५५।।
अप्सरोभिर्नृत्यमाना स्तूयमाना महर्षिभिः।।
हूयमाना हुताग्निभी राजर्षिभिः समाश्रिता ।। ५६ ।।
तुंगस्तनभराक्रांतयोषिद्भिः क्रीडितान्तरा ।।
क्वचित्कीरवरांदोलै रम्यमाणा विराजिता ।।५७।।।
वेदविद्भिर्द्विजैः सेव्या ऋषिभिस्संशितात्मभिः ।।
सर्वदा सर्वकाले च सिद्धैः सिद्धिप्रदा नृणाम् ।। ५८ ।।
महाकालवने रम्ये रम्या पद्मावती पुरी ।।
सुन्दरं कुण्डमपरं रम्यं प्राचीनकं शुभम् ।। ५९ ।।
यत्र स्नात्वा नरा यांति शिवलोकं सनातनम् ।।
यत्र नीला परा व्यास शिप्रा वै लोकपावनी ।। 5.1.52.६० ।।
वाराहेण कृतं सर्वं दुष्टदैत्यनिबर्हणम् ।।

तेन देवा निरातंकाः कृता वाराहमूर्तिना ।। ६१ ।।
कृतप्रांजलयः सर्वे देवा इंद्रपुरोगमाः ।।
स्तुतिं कृत्वा महाविष्णोः सततं पुरतः स्थिताः ।। ६२ ।।
देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ।।
किं दानं किं तपः पुण्यं किं तीर्थं का च देवता ।। ।। ६३ ।।
येन पुण्यप्रभावेन पुनः स्वर्गो ह्यवाप्स्यते ।।
एतन्निश्चित्य नो ब्रूहि सर्वं गुह्यतरं विभो ।। ६४ ।।
।। विष्णुरुवाच ।। ।।
शृणुध्वं भोः सुराः सर्वे युष्माकं सिद्धिकारणम् ।।
गुह्याद्गुह्यतरं पुण्यं महाकालवनं शुभम् ।। ६५ ।।
मम देहोद्भवा शिप्रा यत्र लीना पयस्विनी ।।
नीलगंगा सरिच्छ्रेष्ठा यत्र प्राची सरस्वती ।। ६६ ।।
पुष्करं च गयातीर्थं पुरुषोत्तमसरः शुभम् ।।
तत्रैव गच्छत क्षिप्र पुनर्लोकानवाप्स्यथ ।। ६७ ।।
इति श्रुत्वा परं वाक्यं देवदेवजगद्गुरोः ।।
तत्र देवगणाः सर्वे ब्रह्मशक्रपुरोगमाः ।। ६८ ।।
महाकालवने रम्ये यत्र शिप्रा सरिद्वरा ।।
स्नानदानादिकं कृत्वा श्राद्धं कृत्वा यथोचितम् ।। ६९ ।।
तेन पुण्यप्रभावेन स्वकाँल्लोकान्गताः सुराः ।।
एवं व्यास समाख्याता शिप्रा वै लोकपावनी ।। 5.1.52.७० ।।
जातं सरो वराहस्य विष्णोरतुलतेजसः ।।
यस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ।। ७१ ।।
अत्र स्नात्वा पयः पीत्वा श्राद्धं कृत्वा यथोचितम् ।।
पयस्विनीं च गां दत्त्वा विष्णुलोके महीयते ।। ७२ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्ती क्षेत्रमाहात्म्ये शिप्रामाहात्म्यवर्णनंनाम द्विपञ्चाशत्तमोऽध्यायः ।। ५२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५३



।। सनत्कुमार उवाच ।। ।।
पृथिव्यां यानि तीर्थानि तानि सर्वाणि सुव्रत ।।
अवंत्यां सुन्दरे तीर्थे तिष्ठंति सर्वदा भुवि ।। १ ।।
।। व्यास उवाच ।। ।।
किमिदं सुन्दरं कुण्डं कदाकालेऽभवत्क्षितौ ।। ।।
निर्मितं केन को देवः किं वा तस्य फलं स्मृतम् ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु पुण्यतमे क्षेत्रे सुन्दराख्यं यदा ऽभवत् ।।
सर्वपापप्रशमनं वांछितार्थफलप्रदम् ।। ३ ।।
यस्य श्रवणमात्रेण ब्रह्महत्या व्यपोहति ।।
अश्वमेधादिकं पुण्यं वाजपेयश ताधिकम् ।। ४ ।।
पुरा कल्पक्षये व्यास नष्टकल्पा च मेदिनी ।।
प्रचण्डवातवर्षाभ्यां चूर्णितो मेरुपर्वतः ।। ५ ।।
तदात्र पतितं व्यास वैकुण्ठशिखरोत्तमम् ।।
महाकालवने घोरे गुह्ये चाव्ययके ध्रुवे ।। ६ ।।
तत्क्षणात्पतिते शृंगे कुण्डं जातं सुनिश्चितम् ।।
रत्नसोपानमच्छोदं मुक्तासैकतपूरितम् ।। ७ ।।
जांबूनदकरारोहं हेमपद्मविराजितम् ।।
कल्पद्रुमकृतच्छायं चिंतामणिसमुच्छ्रितम् ।। ८ ।।
हंसकारंडवाकीर्णं चक्रवाकोपशोभितम् ।।
बीजौषधिगणाकीर्णं सर्वतत्त्वाभिसंयुतम् ।। ९ ।।
कल्पक्षये न क्षीयंते यानि तत्त्वानि सर्वशः ।।
तानि तत्र प्रतिष्ठंति मूर्तिमंति पराणि च ।। 5.1.53.१० ।।
वेदशास्त्रपुराणानि गाथागीतिक्षराक्षराः ।।
ॐकारश्च वषट्कारो गायत्री त्रिपदा परा ।। ।।११ ।।
कलाः काष्ठा मुहूर्ताश्च लवत्रुटिपलं घटिः ।।

अहर्निशश्च यामाश्च पक्षमासावृतुस्तथा ।। १२ ।।
संवत्सरयुगाश्चैव कुण्डे तिष्ठंति मूर्तितः ।।
देवा यक्षाश्च नागाश्च गुह्यकाः किन्नरास्तथा ।। १३ ।।
गंधर्वाप्सरसो यक्षाः सिद्धाः किंपुरुषास्तथा ।।
उपासांचक्रिरे तस्य कल्पदोषभयातुराः ।। १४ ।।
ब्रह्मा रुद्रश्च कालश्च लोकपाला महौजसः ।।
केचिद्ध्यानपराः सिद्धास्तापसाः शंसितव्रताः ।। १५ ।।
तिष्ठंति बहुयुग व्यास यावत्कल्पः समाप्यते ।।
सुदर्शनसमाकारं पूरितं चामृतांबुभिः ।। १६ ।।
दिव्यपादपसंयुक्तं पारिजातगुणान्वितम् ।।
दिव्यस्त्रीस्नानगंधोदैर्वासितोद्गारिसौरभम्।। १७ ।।
क्वचिन्मयूरा नृत्यंति क्वचित्कूजंति कोकिलाः ।।
क्वचित्केकारवाः क्वापि मेघघोषसमाकुलम् ।। ।। १८ ।।
सुन्दरं सुन्दराकारं सुन्दरं तेन चोच्यते ।।
बहुपुण्यकरं व्यास सर्वपापहरं परम् ।। १९ ।।
यत्र संनिहितो विष्णुः शिवः शक्त्या युतो वशी ।।
उपासांचक्रिरे शश्वत्सर्वकालेषु सर्वदा ।। 5.1.53.२० ।।
पक्षार्धं पक्षमेकं च सुन्दरकुण्डे नरो वसेत् ।।
वैकुण्ठे नियतं वासो यावत्कल्पशतं भवेत्।। २१ ।।
पक्षिकीटपतंगाश्च मृता यांति शिवालयम् ।।
किं पुनर्मानवा लोके स्नानपूताश्च तत्र वै ।। २२ ।।
ये ददति तिलान्धेनुं गजवा जिरथावनीः।।
दासीर्दासान्सुवर्णं च रत्नानि विविधानि च ।।२३।।
शय्यादानविमानानि दानानि विविधानि च ।।
न तेषां दानजं वेद्मि कीदृग्व्यास फलं भवेत्।। २४ ।।
भूयः शृणु परं व्यास सुन्दरकुण्डफलं स्मृतम्।।
एकदा बहुपापेन पतितः पापयोनिषु ।। २५ ।।
पिशाचो मोक्षमापन्नः शिव रूपधरो गतः।।
पिशाचमोचने स्नात्वा दृष्ट्वा देवं महेश्वरम्।।२६।।
मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत्।।२७।।
।।व्यास उवाच।।
कोऽसौ पिशाच इति ख्यातः किं तेन दुष्कृतं कृतम् ।।

येन पापप्रसंगेन पिशाचत्वमुपागतः ।। २८ ।।
कथं तीर्थप्रसंगोऽस्य जातो वै द्विज सत्तम ।।
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदांवर ।। २९ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महाख्यानं तीर्थमाहात्म्यमुत्तमम् ।।
यस्य श्रवणमात्रेण सर्वपापक्षयो भवेत् ।।5.1.53.३०।।
ब्राह्मणो देवलो नाम दाक्षिणात्यो द्विजाधमः ।।
सदा पापरतो लोभी कूटसाक्षी च लंपटः ।। ३१ ।।
गुरुद्रोही कितवो धूर्तो गुरुहा गुरुतल्पगः ।।
हेमहारी सुरापी च ब्रह्महा स्वामिद्रोहकः ।। ३२ ।।
अभक्ष्यभक्षकश्चैव वेदशास्त्रविवर्जितः ।।
अनेकजन्मार्जितपापी सर्वधर्मबहिष्कृतः ।।।३३ ।।
विश्वासघातको मानी चोरसंगरतः खलः ।।
देशांतरगतो मंदश्चौरकार्यार्थसाधकः ।। ३४ ।।
बहवो निहता मार्गे पापाचारेण जंतवः।।
मगधे स गतो दुष्टः प्रसंगात्पापकारिणाम्।।३५।।
तत्रैको ब्राह्मणो दांतो वेदवेदांगपारगः ।।
साग्निकः शुद्धसत्त्वस्थो ब्रह्मकर्मरतः सदा ।। ३६ ।।
श्वशुरगृहे स्थिता भार्या तामादाय यशस्विनीम् ।।
चलितो यानमारुह्य तेन पापेन घातितः ।। ३७ ।।
तस्य स्त्री च वरारोहा रूपलावण्यशालिनी ।।
पतिव्रता महाभागा दृढचित्ता शुचिस्मिता ।। ३८ ।।
हते भर्तरि दुःखार्ता पतिविरहकातरा ।।
वने घोरे परिभ्रष्टा काष्ठान्यादाय भामिनी ।। ३९ ।।
आरुरोह चितां दीप्तां पतिना हृष्टमानसा ।।
स च दुष्टतरः सर्वं तस्य विप्रस्य जीवनम् ।। 5.1.53.४० ।।
गृहीत्वा चलितो मार्गे गृहीतो राजकिंकरैः ।।
बंधयित्वा च तैः सर्वैस्तेन वित्तेन वै सह ।।
नीतोऽसौ राजभवनं निवेदितो राजसंनिधौ ।।४१।।
पातितो वै गले बद्ध्वा रज्जुना वृक्षकोटरे ।।
चांडालैर्घृष्टितो भूमावितस्ततः श्वपाकिभिः ।। ४२ ।।
तेन कर्मविपाकेन रौरवं नरकं गतः ।।

षष्टिवर्षसहस्राणि विष्ठायां कृमितां गतः ।। ४३ ।।
ततोऽन्यं नरकं प्राप्तो यमशासनकारकैः ।।
असिपत्रवनं घोरमायसं तप्तसायकम् ।। ४४ ।।
मुद्गरैस्ताड्यमानो हि शृंखलाभिश्च किंकरैः ।।
कुंभीपाकगतौ रौति वैतरण्यां सुपीडितः ।। ४५ ।।
एवं बहुविधान्कुण्डान्भुक्त्वा पापी नवान्नवान् ।।
ततः प्रेतत्वमापन्नो युगानां पंचसप्ततिम् ।। ४६ ।।
महाकायो महारावो महोदरः सूचीमुखः ।।
क्षुत्तृड्भ्यां च पराक्रांतो मरुदेशं समाश्रितः ।। ४७ ।।
ततः कष्टतरां प्राप्य पैशाचीं तनुमाश्रितः ।।
कुटिलो दुष्टभावश्च दुष्टचारी दिगंबरः ।। ४८ ।।
विण्मूत्रदूषितोच्छिष्टपूतिपर्युष्टभोजनः ।।
श्मशानोच्छिष्टभोजी च कृत्तिवासा विलोचनः ।। ४९ ।।
भग्नवापीतडागे च शुष्कवृक्षे निरूदके ।।
प्राकारपरिखागारे शून्यागारे नदीतटे ।। 5.1.53.५० ।।
निवासो रोचते तस्य सर्वदा सर्वसंधिषु ।।
एवं बहुयुगे याते महाकालवने गतः ।। ५१ ।।
यत्र माहेश्वरं लिंगं सुन्दरं कुंडमुत्तमम् ।।
तत्रोषितत्वमात्रेण सिंहेन विनिपातितः ।। ५२ ।।
घातयित्वा च तं पापं जलार्थी कुंडमाविशत् ।।
दंष्ट्रांतरगतं चास्थ्यपतत्तस्य मुखाज्जले ।। ५३ ।।
तेन पुण्यप्रभावेन सर्वपापं क्षयं गतम् ।।
मृतमात्रे च लिंगं तन्नेत्रांतरगतं तदा ।। ५४ ।।
हित्वा पैशाचकं देहं ज्योतिस्तल्लिंगमाविशत्।।
तदारभ्य परं व्यास तीर्थं पैशाचमोचनम्।। ।।५५ ।।
पिशाचमोचनेशेति देवः ख्यातिं ततो गतः ।।
तावद्गर्जंति पापानि मदोन्मत्तगजा यथा।।५६ ।।
यावन्नायाति शिप्रायास्तीर्थे पैशाचमो चने ।।
पिशाचमोचने स्नात्वा शुचिर्भूत्वा समाहितः ।। ५७ ।।
पिशाचमोचनं देवं पूजयित्वा यथाविधि ।।
सर्वपापविशुद्धात्मा जायते नात्र संशयः ।। ५८ ।।
पिशाचमोचने व्यास महादानानि कारयेत् ।।

न तस्य पुनरावृत्तिः शिवलोकात्कदाचन ।। ५९ ।।
पिशाचमोचनकथां पवित्रां पापहारिणीम् ।।
यः पठेच्छ्णुयाच्चैव हयमेधफलं लभेत् ।। 5.1.53.६० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽव न्तीक्षेत्रमाहात्म्ये सुन्दरकुंडपिशाचमोचनतीर्थमाहात्म्यवर्णनंनाम त्रिपञ्चाशत्तमोऽध्यायः ।। ५३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५४



।। व्यास उवाच ।। ।।
भूयस्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांवर ।।
नीलगंगा कदा ब्रह्मञ्छिप्राकुंडे समागता ।। १ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महातीर्थं सर्वतीर्थफल प्रदम् ।।
नीलगंगां नरः स्नात्वा संगमेश्वरमर्चयेत् ।। २ ।।
दुःसंगसंभवा दोषा न भवंति कदाचन ।।
एकदा ब्रह्मलोके वै गंगा त्रिपथगा नदी ।। ३ ।।
गता पुनंती त्रील्लोकान्नीलवासा शुचार्दिता ।।
भगवन्किमिदं जातं पातकं मे कृतं पुरा ।। ४ ।।
दुष्टाचारापराधेन येनेमां प्रापिता दशाम् ।।
सर्वलोकेषु यत्किंचिजनानां पातकं भुवि ।। ५ ।।
तत्सर्वं तिष्ठति मयि सर्वेषामपि देहिनाम् ।।
तेनाहं वै भराक्रांता नो शक्या चलितुं धराम् ।। ६ ।।
नीलभासा विवर्णा च सर्वधर्मबहिर्मुखा ।।
यत्किंचित्क्रियते कर्म शुभं वा यदि वाऽशुभम्।।७।।
मयि त्यक्त्वा पुनंतीह जंतवः सर्वशोऽमलाः ।।
तिष्ठंति पुण्यलोकेषु भुक्तिमुक्तिप्रदेषु च ।। ८ ।।
अस्माकं च महत्कष्टं जातं धातः परं मलम् ।।
न हि शर्म न वै शांतिर्न निद्रा न च निर्वृतिः ।। ९ ।।
न लोके च स्थितिर्मेद्य पापिष्ठायाः सनातनी ।।
दुष्टसंगोद्भवैर्दोषैः प्लाविताहं जगद्गुरो ।।5.1.54.१०।।
किं करोमि क्व गच्छामि येन शांतिर्भवेन्मम ।।
किं तपः किं च दानं मे किं तीर्थं किं च साधनम्।। ११ ।।
येनाहं पापलिप्तांगी पुनः प्रकृतिमाप्नुयाम् ।।
एवं ज्ञात्वा महायो गिन्यथा योग्यं तथा कुरु ।। १२ ।।

।। ब्रह्मोवाच ।। ।।

श्रूयतां भोः सरिच्छ्रेष्ठे कारणं पापनाशनम् ।।

महाकालवने रम्ये पुरी ह्येषा ऽमरावती ।। १३ ।।

तत्र शिप्रा सरिच्छ्रेष्ठा वर्तते भुवि पावनी।।

तस्या दर्शनमात्रेण सर्वपापक्षयो भवेत् ।। १४ ।।

तत्र गच्छ महाभागे सद्यश्चात्म विशुद्धये ।।

ब्रह्मणेति समाख्यातं श्रुत्वा गंगा सरिद्वरा ।। १५ ।।

तमभिज्ञाय संप्राप्ता महाकालवनं शुभम् ।।

पुष्करस्याग्निभागे च यत्र देवो मरुत्सुतः ।। १६ ।।

विंध्यस्य चोत्तरे भागे अंजन्याश्रममुत्तमम्।।

सा पुत्रेण तपस्तेपे पवित्रा ब्रह्मचारिणी ।। १७ ।।

पतिव्रताभिः सर्वाभिः पतिभिर्ब्रह्मचारिभिः ।।

देवांगनाभिर्बहुभिः क्रीडद्भिर्बालकुंजरैः ।। १८ ।।

सरसीफुल्लकल्हारैर्मत्तालिकुलनादितैः ।।

निर्वैरजंतुभिः सेव्यं ब्रह्मर्षिगणसे वितम् ।। १९ ।।

मनोह्लादकरं पुण्यं पवित्रं पापनाशनम् ।।

तत्र प्रवेशमात्रेण नीलवासाः सरिद्वरा ।। 5.1.54.२० ।।

शुक्लवासाऽभवत्सद्यो नष्टपापमला ऽशुभा ।।

शरच्चंद्रनिभाकारा धूतपापा पयस्विनी ।। २१ ।।

तत्रैव चाश्रमं चक्रे मनःसंहर्षकारणम् ।।

तत्प्रभृति समाख्यातं सर्वलोकेषु पुण्यदम् ।। ।। २२ ।।

नीलगंगेति वै व्यास तीर्थं किल्विषनाशनम् ।।

अस्मिंस्तीर्थे नरः स्नात्वा हनुमंतमथार्चयेत् ।। २३ ।।

तस्य सिद्धिः करगता भविष्यति न संशयः ।।

आश्विने मासि संप्राप्ते कृष्णपक्षे समाहितः ।।२४।।

दर्शे पितॄन्समुद्दिश्य श्राद्धं कुर्यान्महालयम् ।।

तारितं च कुलं सर्वं तेनात्मैकोत्तरं शतम् ।। २५ ।।

समगोत्रेषु ये जाताः पूर्वजा निरयवासिनः ।।

ते सर्वे सद्गतिं यांति तेषां लोकाः सनातनाः ।। २६ ।।

स्नात्वा तिलांजलिं दद्यात्पितॄ नुद्दिश्य तत्परः ।।

अक्षया जायते तृप्तिः स्वर्गलोके महीयते ।। २७ ।।

भोजयेद्ब्राह्मणान्सप्त श्राद्धं कृत्वा तु पायसैः ।।

अक्षयं लभते श्राद्ध मश्वमेधफलं भवेत् ।। २८ ।।
तीर्थं पुण्यतरं व्यास शृणु चान्यद्वदामि ते ।।
दुग्धकुंडमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ।। २९ ।
सर्वपापहरं पुण्यं सर्वकामवरप्रदम्।।
पुरा दुग्धधरा देवी पृथुना धर्ममूर्तिना।। 5.1.54.३० ।।
दुग्धं सर्वं हविर्भाव्यं सर्वेषां जीवनप्रदम् ।।
दत्तं निधाय कुंडेस्मिंस्तेन दुग्धसरः स्मृतम् ।। ३१ ।।
कुंडे स्नात्वा पयः पीत्वा दत्त्वा गां च पयस्विनीम् ।।
सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः ।। ।।३२ ।।
जायते सर्वकालेषु मृतः स्वर्गपुरं व्रजेत् ।।
ततः पुष्करमासाद्य स्नानदानादिकं चरेत् ।। ३३ ।।
सर्वपापविशुद्धात्मा पुष्करस्य फलं लभेत् ।। ३४।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये नीलगंगामाहात्म्यवर्णनंनाम चतुःपंचाशत्तमोऽध्यायः ।। ५४ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५५

https://sa.wikisource.org/s/fkk
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। व्यास उवाच ।। ।।
कोऽसौ विंध्यगिरिर्ब्रह्मन्कदा काले समागतः ।।
महाकालवने रम्ये केन वा प्रेषितः पुरा ।। १ ।।
।। सनत्कुमार उवाच ।। ।।
पुरा रेवाजलैर्व्यास प्लावितेयं वसुंधरा ।।
तदा सर्वसुरैरेवमगस्तिर्मुनिसत्तमः।।२।।
आराधितो महाभागो धरणीत्राणकारणात्।।
तदागत्य गिरौ रम्ये विंध्ये स मुनिसत्तम ।। ३ ।।
एकाग्रमानसो भूत्वा भवानीं विंध्यवासिनीम् ।।
आराधयामास तदा तां च देवीं वरेप्सया ।। ४ ।।
कंसविद्रावणकरीमसुराणां क्षयंकरीम्।।
भारावतारणीं पुण्यां बलदेवानुजां शुभाम् ।। ५ ।।
यशोदागर्भसंभूतां चाणूरबलमर्दिनीम्।।
विद्युदाभां नभःस्थां च कृष्णां कृष्णाहिमर्दिनीम्।।६।।
जननीं देवसेनस्य कवीनां वाचमीश्वरीम् ।।
गायत्रीं द्विजमुख्यानां व्याहृतिश्छंदसां वराम् ।। ७ ।।
सहस्राक्षीं तथेंद्रस्य ऋषेश्चारुंधतीं पराम् ।।
गवां कामदुघां श्यामां लतां मधुतमप्रियाम् ।।८।।
अदितिं सर्वमातॄणां पार्वतीं सर्वयोषिताम् ।।
ज्योत्स्नां चांद्रमसीं बालां सर्वकामवरप्रदाम् ।। ९ ।।
शारदीमृतुवेलायां वृंदावनचरीं वराम् ।।
मायिनां वैष्णवीं मायां सर्वदैत्यविमोहिनीम् ।। 5.1.55.१० ।।
लक्ष्मीं च श्रीमतामिष्टां यक्षिणीं धनदार्चिताम् ।।
महोदधीप्सितां वेलां राज्ञां च राजसंपदम् ।। ।।११।।
वेदिकां यज्ञशालानां हविराहवनीं शुभाम् ।
दक्षिणां सर्वदीक्षाणां सर्वकामफलप्रदाम् ।।१२।।

एवं स्तुता तदा देवी प्रत्यक्षा विंध्यवासिनी ।।
प्राह प्रसादसुमुखी ऋषीणां प्रवरं ह्यृषिम् ।। १३ ।।
वियतां भो द्विजश्रेष्ठ यदस्मत्तोऽभिवांछितम्।।
यदीप्सिता त्वया वत्स स्तुतिर्मे शुचिना कृता।। ।। १४ ।।
।। अगस्तिरुवाच ।। ।।
यदि मातर्वरो देयो देवानामुपकारिणि ।।
रेवेयं वर्द्धिता लोके सर्वलोकभयप्रदा ।।१५।।
तयेदं प्लावितं विश्वं तस्यास्तु ग्रहणं कुरु ।।
इति सा प्रार्थिता तेन तदा काले महर्षिणा ।। १६ ।।
आगात्साध्वी तदा व्यास महाकालवनं शुभम्।।
सांत्वपूर्वं वचस्तथ्यमगस्ति मिदमब्रवीत् ।। १७ ।।
वारयिष्ये परां देवीं वर्धमानां द्रुतं ह्यृषे ।।
तावत्कालं न चोत्तिष्ठेद्विंध्यो नाम महागिरिः ।। १८ ।।
यावत्त्रिकूटे द्वारे त्वं स्थास्य सि ऋषिसत्तम ।।
देवकार्योद्यतो नित्यं दक्षिणां दिशमुत्तमाम् ।।१९।।
कुशस्थली महापुण्या पवित्रा पापहारिणी ।।
पुरी ह्येषा मुनिश्रेष्ठ त्रिषु लोकेषु विश्रुता ।।
तत्रैवाहं चिरं कालं मातृभिर्निवसामि वै ।। 5.1.55.२० ।।
तत्रापि त्वं सदा सिद्धक्षेत्राधिपत्यमाप्नुयाः ।।
मत्सरो निर्मलं पुण्यं विमलोदं च विश्रु तम् ।। २१ ।।
यत्र पुण्यवतां वासो देव्यस्तिष्ठंति कोटिशः ।।
तस्मिंस्तीर्थे नराः स्नात्वा शुचीभूय समाहिताः ।। २२ ।।
यजंति चैव मां भक्त्या धूपदीपाग्नितर्पणैः ।।
क्षीरखंडाज्यभोज्यैश्च भोजयेद्विधिवद्द्विजान् ।।२३।।
न तेषां दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।।
धनधान्यधरैश्वर्यपुत्रदारादिसं पदाम् ।। २४ ।।
प्राप्यंते विविधा भोगा देवानामपि दुर्लभाः ।।
शत्रुतो न भयं तेषां दस्युभ्यो वा न राजतः ।। २५ ।।
न शस्त्रानलतोयौघात्कदा चित्संभविष्यति ।।
दीर्घायुर्बुद्धिमाँल्लोके उषित्वा शाश्वतीः समाः ।। २६ ।।
सर्वपापविशुद्धात्मा मृतः शिवपुरं व्रजेत् ।।
एवं व्यास पुरीं प्राप्य रम्यां चोज्जयिनीं शुभाम् २७।।

समाश्रिता तदा देवी सततं विंध्यवासिनी ।।
तस्मिंस्तीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।। २८ ।।
स्त्रियो वा रजो दोषार्ता वंध्याः काकबकादिकाः।।
दुर्भगाः शीलहीनाश्च सर्वकामविवर्जिताः।।२९।।
विमलोदेऽपि ताः स्नात्वा दृष्ट्वा वै विंध्यवासिनीम्।।
मुच्यंते सर्वदो षैस्ता नात्र कार्या विचारणा ।। 5.1.55.३० ।।
अपुत्रा प्राप्नुयुः पुत्रान्कन्या वीरपतिं वरम् ।।
प्राप्यते सर्वसौभाग्यं सर्वकामवरप्रदम् ।। ३१ ।।
विद्यावाञ्जायते विप्रः क्षत्रियो विजयी भवेत् ।।
वैश्यश्च बहुलाभाढ्यः शूद्रः सुखमथाश्नुते ।। ३२ ।।
कथां पुण्यवतीमेतां सर्वकामवरप्रदाम्।।
पठन्वाप्यथवा शृण्वन्गोसहस्रफलं लभेत् ।। ३३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये विंध्यवासिनी विमलोदतीर्थमाहात्म्यवर्णनंनाम पञ्चपञ्चाशत्तमोऽध्यायः ।। ५५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५६



।। सनत्कुमार उवाच ।। ।।
तीर्थमन्यतरं व्यास क्षातासंगमसंभवम् ।।
यत्र तु स्नानमात्रेण महापापैः प्रमुच्यते ।। १ ।।
अमा वै शनिवारेण यदायाति समाहितः ।।
पितॄनुद्दिश्य यः कुर्याच्छ्राद्धं चैव तिलोदकम् ।। २ ।।
पश्येच्छनैश्चरं देवं स्थावरं लिंगमुत्तमम् ।।
तस्य शानैश्चरी पीडा न भवेत्तु कदाचन ।। ३ ।।
।। व्यास उवाच ।। ।।
महातीर्थं समाख्यातं महाकालवने शुभे ।।
भूयस्तु श्रोतुमिच्छामि विस्तरेण तपोधन ।।४।।
।। सनत्कुमार उवाच ।। ।।
श्रूयतां भो द्विजश्रेष्ठ कथा पौराणिकी शुभा ।।
यस्याः श्रवणमात्रेण महापापक्षयो भवेत् ।।५ ।।
रेवा चर्मण्वती क्षाता तिस्रो नद्यः पुराऽनघ ।।
जातास्त्रैलोक्यपावन्यो भुवि चामरकंटकात् ।। ६ ।।
पुण्याः पुण्यजला रम्याः पवित्राः पापहारकाः ।।
पुनंत्यः सर्वलोकानां स्नानात्पानात्तथापगाः।। ७ ।।
एकदोपवने रम्ये मांधातृक्षेत्र उत्तमे ।।
मिथो रमंति संहृष्टाः परस्परजिगीषया ।। ८ ।।
किंचिद्दोषप्रसंगेन मिथो भेदो ह्यजायत ।।
रेवासंगं परित्यक्ता भित्त्वा विंध्यगिरिं वरम् ।। ९ ।।
महाकालवने रम्ये समा याता सरिद्वरा ।।
यत्र शिप्रा महापुण्या पुरी ह्येषाऽमरावती ।। 5.1.56.१० ।।
सर्वतीर्थवरं श्रेष्ठं नामा रुद्रसरः स्मृतम् ।।
भुक्तिमुक्तिप्रदं नित्यं सिद्धर्षिगण सेवितम्।। ११ ।।
तत्रागत्य पुरा क्षाता शिप्रासंगं समाश्रिता ।।

तत्र तीर्थं परं जातं क्षातासंगमसंज्ञितम् ।।
यत्र धूतरजा जातः सद्यः प्रोक्तो विभावसुः ।। १२ ।।
।। व्यास उवाच ।। ।।
कथं सूर्यस्त्वया प्रोक्तो विरजो ह्यभवत्पुरा ।।
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदांवर ।। १३ ।। ।।
।। सनत्कुमार उवाच ।। ।।
पुरानुसूर्यां सावित्रीं त्वष्टा स्वतनयां ददौ ।। १४ ।।
पतिधर्मरता नित्यं सिषेवे लोकचक्षुषे ।।
तस्यां वै मिथुनं जज्ञे लोकसाक्षिविभावसोः ।। १५ ।।
यमो वैवस्वतो जातो यमुना लोकपावनी ।।
ततस्त्वष्टाऽब्रवीच्छायां स्वकीयां सूनृतां गिरम् ।। १६ ।।
मिथुनं मे तवोत्संगे धृतं त्वं परिपालय ।।
तावदेवमिह च्छाये यावत्पितुर्गृहेचरी ।। १७ ।।
रविभक्तिरता नित्यं चर त्वं मम वेश्मनि ।।
नो वाच्याहं कदा च्छाये पितुर्वेश्मगता रवेः ।। १८ ।।
एवं सा समयं कृत्वा सावित्री ह्यगमत्तदा ।।
पितुर्वेश्मगता बाला सवितुर्भयविह्वला ।। १९ ।।
पित्र निवारिता सद्यो वडवारूपधारिणी ।।
विचचार वने रम्ये बहुलोदकशाड्वले ।। 5.1.56.२० ।।
एकदा याचिता तेन वैवस्वतेन बुभुक्षता ।।
नोदनं वै तया दत्तं याचमानाय तत्क्षणात् ।। २१ ।।
तदा पदाहता तेन च्छाया तं च शशाप ह ।।
यतस्त्वं मे पदाघातं कृतवान्बालभावनात् ।। ।। २२ ।।
तस्मात्त्वं च पदा खंजो भविष्यसि न संशयः ।।
एवं शप्तो रुजाक्रांतो विललाप शुचार्दितः ।। २३ ।।
एतस्मिन्नंतरे व्यास परिभूय वसुंधराम् ।।
भावयन्सकलाँल्लोकान्ग्रहचारी विभावसुः ।। २४ ।।
दृष्ट्वा च तनयं पंगुमित्युवाच विभावसुः ।।
किमिदं वत्स ते कष्टं कुतः प्राप्तं त्वयाऽनघ ।। २५ ।।
इति पृष्टो यदा तेन सवित्रा लोकभास्वता ।।
उवाच गद्गदा वाचं यमः संयमिनीपतिः ।। २६ ।।
प्रातराशाय मे नाथ याचितं मातुरंतिकात् ।।

नो दत्तं भोजनं क्षिप्रं बालभावेन ताडिता ।। २७ ।।
पादौ मे गलितौ सद्यो मातुः शापपराभवौ ।।
तच्छ्रुत्वा मोहमापन्नो रविर्ध्यानपरायणः ।। २८ ।।
विचित्रमिदमाख्यातं मातुः शापस्य कारणम् ।।
एवं ध्यात्वा चिरं कालं ज्ञातवान्नविरंशुमान् ।। ।। २९ ।।
नेयं सा रुचिरापांगी त्वाष्ट्री लोकस्य पावनी ।।
केयं वा कुत आयाता कासि त्वं च शुचिस्मिते ।। 5.1.56.३० ।।
।। छायोवाच ।। ।।
नानुसूर्या महाराज छाया तस्याः स्वसंभवा ।।
गता वै सा पितुर्गेहे वारिताहं तयाऽनघ ।। ३१ ।।
सवित्रे नैव वक्तव्यं छाये किंचित्कथंचन ।।
एष मे समयो नाथ तेनाहं मौनमास्थिता ।। ३२ ।।
तच्छ्रुत्वा भगवांस्त्वष्टुः समीपं रोषमास्थितः ।।
जगाम सहसा भानुर्बहुरोषसमन्वितः ।। ।। ३३ ।।
तं दृष्ट्वा सहसोत्थाय त्वष्टा लोकपितामहः ।।
पाद्यार्घ्याचमनीयं च मधुपर्कैरपूजयत् ।। ३४ ।।
नत्वा पादौ परिक्रम्य बहुमानपुरः सरम् ।।
उवाच मधुरया वाचा प्रियं ते करवाम किम् ।। ३५ ।।
।। रविरुवाच ।। ।।
क्व सानुसूर्या सावित्री ममानुप्रियकारिणी ।।
आगता ते गृहं तात मम मार्गानुमोदिनी ।। ३६ ।।
।। त्वष्टोवाच ।। ।।
न जानीमो वयं तात प्रिया मे क्व गता सुता ।।
इत्युक्ते वचने त्वष्ट्रा रविर्दुश्चिंतमानसः ।। ३७ ।।
किं करोमि क्व गच्छामि क्व च प्रियतरा मम ।।
इति संभाषमाणे तु त्वष्टा वाक्यमथाब्रवीत् ।। ३८ ।।
तव तेजः परिभ्रष्टा भग्ना क्वापि गताबला ।।
यदि ते वल्लभा भार्या तेजस्त्वं परिशामय ।। ३९ ।।
।। सूर्य उवाच ।। ।।
यद्येवं दुस्सहं तेजो मम पूर्वपितामह ।।
तदा ते रोचते सम्यग्यथा स्याद्वै तथा कुरु।।5.1.56.४०।।
इति सूर्यवचः श्रुत्वा शाणं कृत्वा सुदर्शनम्।।

घृष्टितः क्षुरधारेण लघीयान्निर्मलोऽभवत्।।४१।।
तस्य घृष्टितमात्रेण त्वष्टा चक्रे विवस्वतः ।।
शाणं सुदर्शनं चक्रं सैकता मणिजातयः ।। ४२ ।।
तदा त्वष्टाऽब्रवीद्वाक्यं मधुरं सूर्यसंनिधौ ।।
महाकाल वने रम्ये वडवारूपगीरणी ।। ४३ ।।
गृह्यतां भोः सुरश्रेष्ठ शीघ्रं गच्छतु शाड्वले ।।
यत्र शिप्रा सरिच्छ्रेष्ठा यत्र क्षाता समागता ।। ४४ ।।
उभयोः संगमो यत्र तत्र मुक्तिर्न संशयः ।।
तत्र तां सुभगां पत्नीं प्राप्स्यसि त्वं न संशयः ।। ४५ ।।
इति तस्य वचः श्रुत्वा सविता सर्वतापनः ।।
तत्रागमद्वनं यत्र महाकालस्य पावनम् ।। ४६ ।।
क्षातासंगमसंयुक्ता यत्र शिप्रा पयस्विनी ।।
तत्र भुक्तिश्च मुक्तिश्च धनधान्यसमागमः ।। ४७ ।।
तत्रागत्य प्रियां भार्यां वडवारूपधारिणीम् ।।
ददर्श तां पुनः श्यामां हरिरूपधरो हरिः ।। ४८ ।।
नासिकाघ्राणमात्रेण यत्र जातौ सुतावुभौ ।।
दर्शनीयौ सुनृम्णांगौ भिषजौ तौ दिवौकसाम् ।। ४९ ।।
छाया च सुषुवे तत्र मिथुनं द्विजसत्तम ।।
तापीं शनैश्चरं चैव सर्वलोकप्रतापनम् ।।5.1.56.५०।।
शनि योगे यदामा वै जायते सर्वकामदा ।।
तदा स्नानं च दानं च श्राद्धं चैव तु कारयेत् ।। ५१ ।।
तस्य हस्तगता लक्ष्मीर्जायते सर्वदा भुवि ।।
क्षाता संगमे नरः स्नात्वा दानं दत्त्वा च शक्तितः ।। ५२ ।।
स्थावरेशं समभ्यर्च्य तस्य पापक्षयो भवेत् ।।
सौरिः शनैश्चरो मंदः कृष्णोऽनंतोऽतको यमः ।। ५३ ।।
पिंगश्छायासुतो बभ्रुः स्थावरः पिप्पलायनः ।।
एतानि शनिनामानि प्रातःकाले पठेन्नरः ।। ५४ ।।
तस्य शानैश्चरी पीडा न भवेत्तु कदाचन ।।
यमधर्मोऽपि चात्रैव तपस्तेपे सुदुस्तरम् ।। ५५ ।।
यज्ञकुण्डोत्तरे भागे यत्र तिष्ठति मारुतिः ।।
धर्मसरेति विख्यातं नाम्ना तत्तीर्थमुत्तमम् ।। ५६ ।।
यत्र सिद्धिं परां प्राप्तस्तपसा पवनात्मजः ।।

तस्मिंस्तीर्थे नरः स्नात्वा दत्त्वा वै कांस्यभाजनम् ।। ५७ ।।

सवासो मणिमु क्ताभिः कांचनालंकृतं वरम् ।।

ब्राह्मणेभ्यः स्वलंकृत्य वेदविद्भ्यश्च सादरम् ।। ५८ ।।

मातृलोकं समुत्तीर्णो ब्रह्मलोके महीयते ।।

श्रावणे मास्युभे पक्षे एकादश्यां तु यो नरः ।। ५९ ।।

धर्मतीर्थे सदाचारी स्नानदानादिकाः क्रियाः ।।

करोति सततं तस्य विष्णुलोकः सनातनः ।। 5.1.56.६० ।।

च्यवनाश्रमे नरः स्नात्वा च्यवनेश्वरं विलोकयेत् ।।

यत्र सिद्धिं गतौ पुण्यावश्विनौ भिषजां वरौ ।। ६१ ।।

च्यवनस्य प्रसादेन देवपंक्तिमवापतुः ।।

च्यवनेन पुरा दृष्टिः प्राप्ता वै देवभेषजात् ।। ६२ ।।

तस्मिंस्तीर्थे द्विजश्रेष्ठ दिव्यदृष्टिर्भवेन्नरः ।।

अत्रैव प्राप्तवान्सूर्यः साग्निहोत्राश्रमं परम् ।। ६३ ।।

अनु सूर्यां महाभागां सावित्रीं लोकविश्रुताम्।।

सूर्यलोकं समासाद्य बुभुजे विपुलां श्रियम्।।६४।।

तस्माद्व्यास परं तीर्थं क्षातासंगमसंज्ञितम्।।

सर्वपापहरं पुण्यं सर्वकामवरप्रदम्।।६५।।

य एतां तु कथां पुण्यां शृणोति भुवि भक्तितः।।

पठेद्वा प्रातरुत्थाय तस्य पुण्यफलं शृणु।।६६।।

कपिलागोसहस्रेण फलं भवति पर्वणि ।।

तत्फलं समवाप्नोति नात्र कार्या विचारणा ।। ६७ ।। ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसा हस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये क्षातासंगममाहात्म्यवर्णनंनाम षट्पंचाशत्तमोऽध्यायः ।। ५६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५७



।। सनत्कुमार उवाच ।। ।।
शृणु व्यास प्रवक्ष्यामि तीर्थमेकमतः परम् ।।
तीर्थानामुत्तमं तीर्थं गयानामेति नामतः ।। १ ।।
तत्र स्नात्वा नरो नित्यं मुच्यते च ऋणत्रयात् ।।
देवान्पितॄन्समभ्यर्च्य विष्णुलोकं स गच्छति ।। २ ।।
।। व्यास उवाच ।। ।।
कीकटेषु गया पुण्या नदी पुण्या पुनः पुना ।।
च्यवनस्याश्रमः पुण्यः पुण्यो राजगिरिस्तथा ।। ३ ।।
स कथं विदितो देशे महाकालवने शुभे ।।
एतद्वेदितुमिच्छामि विस्तरेण तपोधन ।। ।।। ४ ।।
।। सनत्कुमार उवाच ।। ।।
शृणु व्यास कथां पुण्यां पवित्रां पापहारिणीम् ।।
यस्याः श्रवणमात्रेण पितरो यांति सद्गतिम् ।। ५ ।।
पुरा कृतयुगे पुण्ये युगादिदेवनामतः ।।
राजासीत्स तु धर्मात्मा पुण्यश्रवणकीर्तनः ।। ६ ।।
तस्य पालयतः सम्यक्प्रजाः पुत्रानिवौरसान् ।।
बभूवुः सर्वसंपन्ना वर्धमानाः समंततः ।। ७ ।।
धर्मश्चतुष्पदो नित्यं यस्मिन्राज्ञि प्रशासति ।।
कालवर्षी च पर्जन्य ऋतवः स्वांगचारिणः ।। ८ ।।
बहुसस्यफला पृथ्वी गावश्च बहुदुग्धदाः ।।
वेदवादरता विप्राः क्षत्त्रिया बाहुशालिनः ।। ९ ।।
वैश्या धनपरा नित्यं शूद्राः शुश्रूषणे रताः ।।
वर्णाश्रमरताः सर्वे सर्वे धर्मोपदेशकाः ।। 5.1.57.१० ।।
श्रुतिस्मृतिपरो धर्मो हृष्टपुष्टजनाकरः ।।
नाधिव्याध्यभिभूतश्च लक्ष्यते कोऽपि मानवः ।। ११ ।।
दुःशीला दुर्भगा नारी विधवा नैव लक्ष्यते ।।

बहुपुत्राऽल्पपुत्रा च मृतपुत्रा न वंध्यका ।।१२।।
रूपशीलगुणोपेता पतिव्रतपरायणा ।।
नो मार्गः कंटसंकीर्णो दस्युदोषैश्च दूषितः ।। १३ ।।
हूयतां भुज्यतां शश्वद्दीयतां च गृहेगृहे ।।
दयादानतपोहोमजपयज्ञक्रियापराः ।। १४ ।।
जनाः सर्वत्र दृश्यंते सर्वधर्म परायणाः ।।
चतुष्पादचरो धर्मो ह्यधर्मोऽपादविग्रहः।। १५ ।।
एवं राजा स धर्मात्मा युगादिदेवसंज्ञितः ।।
येनेयं पालिता पृथ्वी धर्मेण वर्धिताः प्रजाः ।। १६ ।।
अवंत्यां च पुरा व्यास यज्ञकोटिं समाचरत् ।।
तस्मिन्कालेतिविक्रांतस्तुहंडो नाम दानवः ।। १७ ।।
तेन सर्वं वशं नीतं चरा चरमिदंजगत् ।।
घोरं तप्त्वा तपः पुण्यं ब्रह्मलब्धवरः खलः ।। १८ ।।
नैव देवा न यज्ञाश्च वेदमार्गविवर्जिताः ।।
देवतापूजनं नास्ति स्वधा स्वाहा न दृश्यते ।। १९ ।।
उत्सन्नो धर्ममार्गोऽयं शाश्वतो वै दुरात्मना ।।
नष्टप्रायाः सुरास्तेन कृताः सर्वे द्विजोत्तमाः ।।5.1.57.२०।।
ब्रह्माणं शरणं जग्मुः पितृभिः सह साधुभिः ।।
किं कुर्मो वा क्व गच्छाम तुहंडेन पराजिताः ।। २१ ।।
इति श्रुत्वा वचस्तेषां ब्रह्मा लोकपितामहः ।।
समुत्थाय ततः सर्वैर्विष्णुलोकं जगाम ह ।। २२ ।।
तत्र गत्वा समाराध्य विष्णुं देवगणैः सह ।।
स्तुतिं पुरुषसूक्तेन विष्णोरतुलतेजसः ।। २३।।
प्रचक्रुः सर्व एवैते ह्यात्मनोभ्युदयाय च ।।
तदा तेषां शमिच्छन्ती वागुवाचाशरीरिणी ।। २४ ।।
श्रूयतां भोः सुरश्रेष्ठा भवतां श्रेय उत्तमम् ।।
यूयं यात क्षितौ क्षिप्रं महाकालवनं प्रति ।। २५ ।।
गुह्याद्गुह्यतरं पुण्यं पवित्रं पापनाशनम् ।।
नो यत्र मायिनां माया प्रकाशयति भूतले ।। २६ ।।
सर्वतीर्थमयं तीर्थं कोटितीर्थवरप्रदम् ।।
यत्र शिप्रा सरिच्छ्रेष्ठा सर्वकामफलप्रदा ।। २७ ।।
दैत्यांतकारिणी दिव्या महाकाली कुलेश्वरी ।।

कोटिकोटिगणाकीर्णा मातृ णां शक्तिवर्धिनी ।। २८ ।।
यत्र गया महापुण्या फल्गुश्चैव महानदी ।।
पुरुषोत्तमगिरिश्रेष्ठो यत्र बुद्धगया स्मृता ।। २९ ।।
तथैवाद्यगया ख्याता त्रिषु लोकेषु विश्रुता ।।
विष्णोः षोडशपदीतीर्थं गदाधरविनिर्मितम् ।। 5.1.57.३० ।।
सर्वपापहरा पुण्या यत्र प्राची सरस्वती ।।
महासुरनदी प्रोक्ता यत्र तिष्ठति पुण्यदा ।। ३१ ।।
न्यग्रोधश्चाक्षयो नित्यः पुरा प्रोक्तो महर्षिणा।।
तत्रैव सा शिला प्रोक्ता प्रेतमोक्षकरी शुभा ।। ३२।।
तत्रैव संति ताः सर्वा देवताः पितृकल्पजाः ।।
सर्वाक्षरमयोंकारः सर्वदेवमयो हरिः ।। ३३ ।।
सर्वतीर्थमया देवा गयातीर्थमनुत्तमम्।।
शीघ्रं गच्छत तत्रैव परां सिद्धि मवाप्स्यथ ।। ३४ ।।
यत्र प्रविष्टमात्रेण पितरो निरयस्थिताः ।।
ते सर्वे स्वर्गमायांति ब्रह्मभूयाय कल्पते ।। ३५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये गयातीर्थमाहात्म्ये गयातीर्थप्रशंसावर्णनं नाम सप्तपञ्चा शत्तमोऽध्यायः ।। ५७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५८

https://sa.wikisource.org/s/fjx
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। व्यास उवाच ।। ।।

विचित्रमिदमाख्यातं गयामाहात्म्यमुत्तमम् ।।

भगवन्भवता सर्वं विदितं विश्वमूर्तिना ।। १ ।।

तत्सर्वं श्रोतुमिच्छामि श्राद्धस्य फलमुत्तमम् ।।

क्षेत्रस्य च द्विजश्रेष्ठ विस्तरेण तपोधन ।। २ ।।

कियंतः पितरो नित्यं तृप्ता यांति सुरालयम् ।।

केषां के पितरः प्रोक्ताः किमुद्देश्याः पुराऽनघ ।। ३ ।।

।। सनत्कुमार उवाच ।। ।।

धन्योऽसि कृतकृत्योऽसि यस्य ते नैष्ठिकी मतिः ।।

तथापि शृणु वै वत्स श्राद्धस्य विधिमुत्तमम् ।। ४ ।।

श्राद्धे प्रकल्पिता लोकाः श्राद्धे धर्मः प्रतिष्ठितः ।।

श्राद्धे यज्ञा हि तिष्ठंति सर्वकर्मफलप्रदाः ।। ५ ।।

श्रद्धया दीयते किंचिद्दैवं ब्रह्माग्नितर्पणम् ।।

श्राद्धं तु तद्विजानीयात्पुरा प्रोक्तं मह र्षिणा ।। ६ ।।

मनुष्या ऋषयः सर्वे सुरसिद्धाश्च राक्षसाः ।।

गंधर्वाः किन्नरा नागा ब्रह्मेशानसुरेश्वराः ।। ७ ।।

त्रीन्पितॄंश्च समुद्दिश्य श्राद्धं दद्युः समाहिताः ।।

प्राप्नुवन्त्यखिलान्कामान्सर्वान्व्यास मनोगतान् ।। ८ ।।

एवं परंपरामार्गं प्रवर्तंते सनातनम् ।।

तथापि पितरो ह्येते समाख्याततमा भुवि ।। ९ ।।

तत्सर्वं संप्रवक्ष्यामि यथा श्रुतं तथा शृणु ।।

त एते पितरो देवा देवाश्च पितरस्तथा ।। 5.1.58.१० ।।

अन्योन्यं पितरो ह्येते देवाः पितृगणैः सह ।।

मार्कंडेन पुरा पृष्टं प्रश्नमेतद्द्विजोत्तम ।। ११ ।।

निबोध त्वं मतं सर्वं यदुक्तं तत्समाहितः ।।

यावंतस्ते पितृगणास्तस्मिँल्लोके च ये गताः ।। १२ ।।

।। सनत्कुमार उवाच ।। ।।

सप्तैते यजतां श्रेष्ठाः सर्वे पितृगणाः स्मृताः ।।

चत्वारो मूर्तिमंतो वै त्रयस्तेषां च मूर्तयः ।। ।। १३ ।।

तेषां लोकं विसर्गं च कीर्तयिष्यामि तच्छृणु ।।

प्रभावं त्वं महत्त्वं च विस्तरेण तपोधन ।। १४ ।।

धर्ममूर्तिधरास्तेषां तपो ये परमं गताः।।

तेषां नामानि लोकांश्च कीर्तयिष्यामि तच्छृणु।। १५ ।।

लोकाः सनातना नाम यत्र तिष्ठंति भास्वराः ।।

अमूर्तयः पितृगणास्ते वै पुत्राः प्रजापतेः ।। १६ ।।

विराजस्य द्विजश्रेष्ठ वैराजा इति नः श्रुतम् ।।

यजन्ते तान्देवगणा विधिदृष्टेन कर्मणा ।। १७ ।।

एते वै योगविभ्रष्टा लोकान्प्राप्य सनातनान् ।।

पुनर्युगसहस्रांति जायंते ब्रह्मवादिनः ।। १८ ।।

ते प्राप्य तां स्मृतिं भूयः सांख्ययोगमनुत्तमम् ।।

यांति योगगतिं सिद्धाः पुनरावृत्तिदुर्लभाम् ।। १९ ।।

एते स्युः पितरस्तात योगिनां योगवर्धनाः ।।

आप्याययन्ति ये पूर्वं सोमं योगबलेन वै ।। 5.1.58.२० ।।

तस्माच्छ्राद्धानि देयानि योगिनां द्विजसत्तम ।।

एष वै प्रथमः कल्पः सोमपानामनुत्तमः ।। २१ ।।

एतेषां मानसी कन्या मेना नाम महागिरेः ।।

पत्नी हिमवतः श्रेष्ठा यस्यां मैनाक उच्यते ।। २२ ।।

मैनाकस्य सुतः श्रीमान्क्रौंचो नाम महागिरिः ।।

अग्निष्वात्ताः पितृगणास्तत्र तिष्ठंति भास्वराः ।। २३ ।।

याम्यां बर्हिषदश्चासन्यमाश्च पश्चिमां दिशम् ।।

सोमपाश्चोत्तरां प्राप्ता दिशं धनदपालिताम्।। २४ ।।

अमूर्तिमंतावाकाशे कव्यवाडनलौ क्षितौ ।। ।। २५ ।।

यक्षरक्षःपिशाचाश्च यजंते भावितात्मनः ।।

साध्या देवान्यजन्ति स्म विश्वेदेवा ऋषींस्तथा ।। २६ ।।

मानवाः श्राद्धदेवं च ऋषयो ब्रह्म सनातनम् ।।

एवं परंपराप्राप्तः श्राद्धधर्मः सनातनः ।। २७ ।।

देवकार्यात्परं कार्यं पितृकार्यं विशिष्यते ।।

भरद्वाजात्मजाः सप्त श्राद्धधर्मपराय णाः ।। २८ ।।

जातिस्मरत्वमापन्ना निर्वाणपदवीं गताः।।

गुरोश्च दोग्ध्रीं गां हत्वा सप्तैते वै द्विजाधमाः ।। २९ ।।

पितृनुद्दिश्य ते सर्वे भक्षयंतः क्षुधा र्दिताः ।।

तेन पुण्यप्रभावेन योगभ्रष्टा दिवं गताः ।। 5.1.58.३० ।।

सप्त जातिस्मरास्ते वै योगयुक्ता बभूविरे ।।

तस्माच्छ्राद्धं परं प्रोक्तं सूरिभिः परमात्मभिः ।। ३१ ।।

श्राद्धे प्रतिष्ठिता लोकाः श्राद्धे योगः परंतप ।।

एवं ते पितरः प्रोक्ताः श्राद्धस्य च विधिं शृणु ।। ३२ ।।

ब्रह्मचर्यरतो दांतो न क्रोधी न च मत्सरी ।।

शौचाचारपरो धीरः शास्त्रदृष्टिर्जितेंद्रियः ।।३३ ।।

एवं यः कुरुते श्राद्धं तीर्थे चैव विशेषतः ।।

ततोऽधिकतरा प्रोक्ता तृप्तिर्व्यास क्षयेऽहनि ।। ३४ ।।

वृद्धिश्राद्धे तथा प्रोक्ता महालये शताधिका ।।

ततो दशगुणा प्रोक्ता प्रयागे द्विजसत्तम ।। ३५ ।।

प्रयागाद्दशगुणा तृप्तिः कुरुक्षेत्रे च सत्तम ।।

कुरुक्षेत्रात्ततो व्यास दशाधिका गया स्मृता ।। ३६ ।।

ततो दशाधिका व्यास महाकालवने शुभे ।।

अवंत्यां सर्वतः पुण्यं गयातीर्थे च सर्वदा ।। ३७ ।।

येषां निरयमापन्नाः पितरो जन्मजन्मनि ।।

तेषामुद्धरणार्थाय तीर्थमेतत्सुदुर्लभम्।।३८।।

सकृत्स्मरणमात्रेण पितृणा दत्तमक्षयम् ।।

ये नरा रणमध्यस्थाः पितृवंशविवर्जिताः ।। ३९ ।।

गर्भपाते मृता ये च नामगोत्रच्युतास्तथा ।।

स्वगोत्रे परगोत्रे वा आत्मघातमृताः परे ।। 5.1.58.४० ।।

तेषामुद्धरणार्थाय तत्र श्राद्धं विधीयताम् ।।

उद्बंधनमृता ये च विषशस्त्रैर्मृताश्च ये।। ४१ ।।

दष्ट्रिभिर्व्यंगतो वापि दौर्ब्राह्मण्ये मृताश्च ये।।

तेषामुद्धर णार्थाय अत्र श्राद्धं विधीयते ।। ४२ ।।

अग्निदग्धाश्च ये जीवा नाग्निदग्धास्तथा परे ।। ४३ ।।

विद्युद्घातेन ये केचिन्मुद्गराभिहताः परे ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ४४ ।।

रौरवे चांधतामिस्रे कालसूत्रे च ये गताः ।।

अनेकयातनासंस्थाः प्रेतलोके च ये गताः ।। ४५ ।।

असिपत्रवने घोरे कुंभीपाके च ये गताः ।।

पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ४६ ।।

उदकेषु मृता ये च नारीसूतीमृतास्तथा ।। ४७ ।।

अश्वसूकूरकृमिदंष्ट्रिश्वशृंगिशकटाहताः ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ४८ ।।

भग्नदंष्ट्राश्च शस्त्रास्त्रैर्व्याघ्राहिगजभूमिपैः ।।

शलभैर्वृश्चिकैर्दंष्ट्रिचोरैर्ये चापि घातिताः ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ४९ ।।

अष्टशल्यैर्मृता ये च शौचाचारविवर्जिताः ।।

विषूचिकामृता ये च ये चातीसारतो मृताः ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। 5.1.58.५० ।।

शाकिन्यादि ग्रहग्रस्तजलमध्ये च ये मृताः ।।

अस्पृश्यस्पर्शसंस्पृष्टाः पापा अपत्यवर्जिताः ।।

तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ५१ ।।

जन्मांतरसहस्राणि भ्रमंति स्वेन कर्मणा ।।

मानुषं दुर्लभं येषां तेभ्यः श्राद्धं विधीयताम् ।।५२।।
येऽन्यजन्मन्यबांधवा येऽन्यजन्मनि बांधवाः।।
येऽन्यजन्मनि संबद्धा मित्रामित्रे तथा परे ।।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ५३ ।।
पितृवंशे मृता ये च मातृवंशे तथैव च ।।
गुरुश्वशुरबंधूनां ये चान्ये बांधवा मृताः ।।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ५४ ।।
ये मे कुले लुप्तपिंडाः पुत्रदारादिवर्जिताः ।।
क्रियालोपगता ये च तेभ्यः श्राद्धं विधीयते।। ५५ ।।
पंगुकुब्जा विरूपाश्च आमगर्भाश्च ये मृताः।।
ज्ञाताऽज्ञाताः कुले ये च तेभ्यः श्राद्धं विधीयते।।५६।।
आब्रह्मभुवनाद्ये च अन्यैर्दुर्मरणैर्मृताः।।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते।।५७।।
तृषार्ताः क्षुधिताश्चैव हापिताश्चैव ये मृताः।।
प्रेतयोनिं गताश्चैव म्लेच्छयोनिं गताश्च ये।।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ।। ५८ ।।
एवं श्राद्धविधिं व्यास तस्मिंस्तीर्थे समाचरेत् ।।
ऋणत्रयविनिर्मुक्तो वांछितार्थं लभेत सः ।।
गयायां च समासाद्य सुरा इंद्रपुरोगमाः ।।
चक्रुश्च विधिवत्सर्वे यदुक्तं देवभाषया ।। ५९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये गयामाहात्म्ये श्राद्धविधिवर्णनंनामाष्टापञ्चाशत्तमोऽध्यायः ।।५८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ५९



।। सनत्कुमार उवाच ।। ।।
ततः सुरगणाः सर्वे धूतपापा समाहिताः ।।
पुनर्योगबलं प्राप्य स्वाधिकारं ययुः पुरा ।। १ ।।
एवं व्यास गयातीर्थं कुमुद्वत्यां सुनिश्चित म् ।।
गयायां यानि तीर्थानि पुण्यान्यायतनानि च ।। २ ।।
तत्तीर्थेषु नरः स्नात्वा तत्तत्तीर्थफलं भवेत् ।।
तथैव च गयाक्षेत्रं गयाश्राद्ध फलप्रदम् ।। ३ ।।
फल्गुश्च सरितां श्रेष्ठा तथैव फलदायिनी ।।
आदिगया बुद्धगया तथा विष्णुपदी स्मृता ।। ४ ।।
गयाकोष्ठस्तथा प्रोक्तो गदाधरपदानि च ।।
वेदिका षोडशी प्रोक्ता तथैव चाक्षयो वटः ।। ५ ।।
प्रेतमुक्तिकरी नित्यं शिला चोक्ता तथैव च ।।
अच्छोदा निम्नगा प्रोक्ता पितॄणां चाश्रमोत्तमः ।। ६ ।।
देवानां दानवानां च यक्षकिन्नररक्षसाम् ।।
पन्नगानां च सर्वेषां तथैवाश्रम उत्तमः ।।७।।
एतत्स्थानेषु सर्वेषु स्नानदानादिकाः क्रियाः ।।
श्राद्धं च विधिवद्देयं तत्तत्तीर्थफलं लभेत् ।।८।।
गयायां पितृरूपेण स्वयमेव जनार्दनः ।।
तं ध्यात्वा पुंडरीकाक्षं मुच्यते च ऋणत्रयात् ।। ।। ९ ।।
एवं व्यास गयातीर्थं पुरावन्त्यां प्रतिष्ठितम् ।।
पश्चात्तु कैकटे जातं यत्र संनिहितोऽसुरः ।। 5.1.59.१० ।।
तदारभ्य द्विजश्रेष्ठ गया तत्र प्रतिष्ठिता।।
गदाधरपदाघातैर्महासुरो निपातितः ।। ११ ।।
तत्पदे च महिमानं जनार्दनसमर्पितम् ।। १२ ।।
पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।।
यत्र तत्र करिष्यामि पितॄणां दत्तमक्षयम्।।

सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ।। १३ ।।
संवत्सरे परं व्यास दिनमेकं प्रतिष्ठितम् ।।
कन्यास्थे च दिवा नाथे हस्तनक्षत्रसंयुते ।।
महालयेति तत्प्रोक्तं पितॄणां दत्तमक्षयम् ।।१४।।
सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ।।१५।।
संवत्सरे परं व्यास दिनमेकं प्रतिष्ठितम् ।।
अन्वष्टकायां कुर्वंति मातॄणां श्राद्धमुत्तमम् ।। १६ ।।
अक्षय्या जायते तृप्तिः पितॄणां कल्पसंख्यया ।।
एवं व्यास पुरी रम्या स्नानदा नादिकर्मसु ।। १७ ।।
भूयस्तु संप्रवक्ष्यामि माहात्म्यं परमाद्भुतम् ।।
तच्छृणुष्व मया ख्यातं पवित्रं पापनाशनम् ।। १८ ।।
सप्तर्षीणां च या भार्या ऋषिपत्न्यः पतिव्रताः ।।
स्वाहादोषपरिभ्रष्टा दूषिताः पावकेन च ।। १९ ।।
ऋषिभिश्च परित्यक्ता बभ्रमुश्च वनाद्वनम् ।।
एवं बहुतिथे काले नारदो देवदर्शनः।।5.1.59.२०।।
तासां च प्रियमन्विच्छन्समायातो वनांतरे ।।
ताभिश्च सत्कृतो नित्यं समासीनो धृतव्रतः ।। २१ ।।
उवाच श्लक्ष्णया वाचा देशकालोचितं वचः ।।
किमिदं विकृतं जातं भवतीनां पराभवः ।। २२ ।।
कस्माच्च ऋषिभिस्त्यक्ता लोकमातरः पतिव्रताः ।। २३ ।। ।।
।। ऋषिपत्न्य ऊचुः ।। ।।
न जानीमो वयं तात येन दोषेण तापसैः ।।
विमुक्ताः साग्निकैः क्षिप्रं कार्तिकेयप्रसंगतः ।। २४ ।।
लोकापवादजं किंचिज्जातं दिष्टवशादधम् ।।
किं कुर्मो वा क्व गच्छामः किं तपः का च देवता ।। २५ ।।
यस्याराधनपुण्येन पतिसांनिध्यमाप्नुयुः ।।
एतन्निश्चित्य भो ब्रह्मन्ब्रूहि त्वं वेदतत्त्वतः ।।२६।।
इति पृष्टस्तदा ताभिर्ऋषिपत्नीभिर्नारदः ।।
उवाच सुचिरं ध्यात्वा तासां स शर्महेतवे ।।२७।।
।। नारद उवाच ।। ।।
श्रूयतां भोस्तपःश्रेष्ठा भवतीनां च कारणम्।।
महाकालवने रम्ये गयातीर्थमनुत्तमम् ।।२८ ।।

तत्रैव चाक्षयो नाम न्यग्रोधः शाखिनां वरः ।।
तत्रागमनमात्रेण धूतदोषा भविष्यथ ।। २९ ।।
सर्वदोषहरं तीर्थं सर्वकामवरप्रदम् ।।
सर्वसौख्यकरं पुण्यं तत्र गच्छत मा चिरम् ।। 5.1.59.३० ।।
नारदस्य वचः श्रुत्वा ऋषिपन्त्यः सुचोदिताः ।।
महाकालवने व्यास इच्छंत्यः प्रियमात्मनः ।। ३१ ।।
आजग्मुस्तद्वनं तत्र यत्र तीर्थं गयाभिधम् ।।
तत्र गत्वा शुचीभूय स्नानदानादिकाः क्रियाः ।। ३२ ।।
कृतास्ताभिश्च पुण्याभिर्नभस्यस्यासितेतरे ।।
पञ्चम्यामृषिसंज्ञायां ताभिः सुचरितं व्रतम्।। ३३ ।।
उपोष्य चैकरात्रं तु जागरं चैव योगतः ।।
कृतमात्रे व्रते व्यास धूतपापा बभुः क्षणात् ।। ।। ३४।।
भर्तृकोपपरिभ्रष्टाः सद्यः प्राप्ता गृहाश्रमम्।।
ऋषिभिः साग्निकं दत्तं पूर्ववदृषिसत्तम।।३५।।
तदाप्रभृति लोकेस्मिन्पंचमी ऋषिसंज्ञिता ।।
ये नराश्चाथ नार्यो यास्तां कुर्वन्ति तु भक्तिः।।३६।।
नीवाराहारकं कृत्वा शुचीभूय समाहिताः।।
न तेषां जायते किंचिदापद्दुःखं कदाचन।।
दुर्भगत्वं च नारीणां न वियोगश्च मातृभिः।३८।।
पुत्रतो धनतो वापि कदाचित्संभविष्यति।।
एवं व्यास समाख्यातं यत्त्वया परिपृच्छितम् ।। ३९ ।।
अवंत्यामीदृशं तीर्थं वर्तते भुवि सत्तम ।।
तादृशं पुण्यदं किंचिन्नास्ति ब्रह्मांडगोलके ।। 5.1.59.४० ।।
अस्मिंस्तीर्थे नरः कश्चिन्महा दानानि चेच्चरेत् ।।
अक्षयाणि भवंत्यस्य विष्णुलोके महीयते ।। ४१ ।।
यो वै नियमवान्भूत्वा कथामेतां शृणोति वा ।।
पठेच्च सततं व्यास हय मेधफलं लभेत् ।। ४२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये गयातीर्थमाहात्म्य वर्णनंनामैकोनषष्टितमोऽध्यायः।।५९।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६०

https://sa.wikisource.org/s/fkb



।। व्यास उवाच।।

पुरुषोत्तमं परं तीर्थं त्वया प्रोक्तं पुरानघ।।

माहात्म्यं तस्य तीर्थस्य विस्तराद्वद मे प्रभो।।

एतत्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर।।१।।

।।सनत्कुमार उवाच।।

शृणुष्व भो द्विजश्रेष्ठ कथां पापहरां पराम् ।। २ ।।

यस्याः श्रवणमात्रेण महापापक्षयो भवेत् ।।

पुराकल्पेषु वै ब्रह्मन्वैकुण्ठे विमले शुभे ।। ३ ।।

समासीनो रमानाथः पार्षदैः सनकादिभिः ।।

महर्षिभिः सदाचारैः पितामहपुरोगमैः ।। ४ ।।

ऋदिसिद्धिगुणोपेतैस्तत्त्वैस्तैर्महदादिभिः ।।

गणगंधर्वसंघैश्च सेव्यमानः समं ततः ।। ५ ।।

किन्नरोद्गानसन्मानैर्नृत्यद्भिरप्सरोगणैः ।।

चिंतामणिगृहोद्वारललितांगणभूमिषु।। ६ ।।

कल्पद्रुमकृतच्छाय आसीनो हि मुरुद्विषः ।।

धर्मवादरताः सर्वे ब्रह्ममार्गसुनिश्चिताः ।।७।।

तेषां मध्ये परा भाषा ह्यपृच्छत्कमलापतिम् ।। ८ ।।

।। लक्ष्मीरुवाच ।। ।।

पुण्यकानां विधिं नाथ श्रोतुमिच्छामि तत्त्वतः ।।

सर्वज्ञोसि महाप्राज्ञ वाच्यतां यदि रोचते ।। ९ ।।

।। श्रीभगवानुवाच ।। ।।

दानं स्नानं तपः श्राद्धं सदा शस्तं हि शोभने ।।

तथापि विधिना प्राप्तं तत्सर्वं चाक्षयं भवेत् ।। 5.1.60.१० ।।

देशे काले पर्वणि च तीर्थे चायतने पदे ।।

दानं स्नानं तपः श्राद्धं मुनिभिः परिकीर्तितम्।। ११ ।।

पूर्णमास्याममावास्यां संक्रांतौ ग्रहणे तथा ।।

वैधृतौ च व्यतीपाते दानवृद्धिः परा स्मृता ।। १२ ।।
गंगायां भास्करक्षेत्रे कुरुक्षेत्रे च पुष्करे ।।
गोदावर्यां गयायां च तीर्थे चामरकंटके ।। १३ ।।
अवंत्यां च हुतं दत्तं तत्सर्वं चाक्षयं भवेत् ।।
तस्मात्सर्वप्रयत्नेन पर्वे तीर्थं समाचरेत् ।। १४ ।।
कुचैलो दुर्भगो मूर्खो जडो रोगसमन्वितः ।।
तीर्थपर्वपरिभ्रष्टो नरो भवति निश्चितम् ।। १५ ।।
के योगाः सुकृतानां च कर्तव्याश्च विशेषतः ।। १६ ।।
।। श्रीकृष्ण उवाच ।। ।।
साधु पृष्टः प्रिये प्रश्नः पुण्यकानां त्वयाऽनघे ।।
मलमासे समायाते ये नरा व्रतवर्जिताः ।।
जन्मजन्मनि दारिद्र्यं तेषां भवति शोभने ।। १७ ।।
।। श्रीरुक्मिण्युवाच ।। ।।
कीदृशो हि मलो मासः केन योगेन जायते ।।
कदा काले समायाति एतन्नो वद विस्तरात् ।। १८ ।।
।। श्रीकृष्ण उवाच ।। ।।
युक्तमुक्तं त्वया देवि प्रश्नः कालेऽयमीदृशः ।।
देवतापितृकार्याणि विधिना हि मलिम्लुचे ।। १९ ।।
क्षौरं मौंजी विवाहश्च व्रतोपवासकं तथा ।।
विशेषेण गृहस्थानां वर्ज्यं मुनिवरोत्तमैः ।। 5.1.60.२० ।।
संवत्सरत्रयांते च मासोऽयमधिगच्छति ।।
असंक्रमे रवेरस्मिंस्तस्मादधिकमासकः ।। २१ ।।
अधिमासाधिपत्योऽहं सदैव पुरुषोत्तमः ।।
ममाभिधानं तीर्थं च महाकालवने शुभम् ।। २२ ।।
पुरुषोत्तमाख्यं मे धाम सदैवात्र प्रति ष्ठति ।।
तस्मात्सर्वप्रयत्नेन गंतव्यं हि त्वया सह ।। .२३ ।।
महाकालवने तत्र यत्र तीर्थं ममाभिधम् ।।
प्राणिनो ये समायांति मज्जनार्थं प्रिये ध्रुवम्।।२४।।
तेषामिह ममादेयं न कदापि भविष्यति।।
धनधान्यकलत्रादि पुत्रसौख्यं सदैव हि।।२५।।
असंक्रांतेऽपि संप्राप्ते मामुद्दिश्य व्रतं चरेत् ।।
अधिमासाधिपत्योऽहं सदा वै पुरुषोत्तमः ।। २६ ।।

स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।।
देवतार्चां च मध्याह्ने ये कुर्वंति नरोत्तमाः ।। २७ ।।
अक्षयं च भवेत्सर्वं तेषां वै कमले ध्रुवम् ।।
मलमासो गतः शून्यो येषां देवि प्रमादतः ।। २८ ।।
दारिद्र्यं च सदा तेषां शोकरोगविवर्धनम् ।।
अधिमासे समायाते अवंत्यां व्रतमाचरेत् ।। २९ ।।
तेषां ददाम्यहं प्रीत्या त्वामेव च न संशयः ।।
स्वल्पं दानमलं कार्यं यत्किं चिदिह यत्कृतम् ।।
तत्सर्वं मत्प्रसादेन ह्यनंतं प्रियदर्शने ।। 5.1.60.३० ।।
।। श्रीरुवाच ।। ।।
ईदृशो हि त्वया प्रोक्तो ह्यधिमासस्य सुव्रत ।। ३१ ।।
महिमा ह्यपि लोकानां सर्वकामवरप्रदः ।।
अधिमासव्रतं पुण्यं कथयस्व प्रसादतः ।। ३२ ।।
।। श्रीकृष्ण उवाच ।। ।।
असंक्रातो यदा मासः प्राप्यते मानवैः प्रिये ।।
महोत्सवस्तदा कार्य आत्मनो हितकांक्षिभिः ।। ३३ ।।
कृष्णपक्षे चतुर्दश्यां नवम्यां वा सुरेश्वरि ।।
अष्टम्यां चाथ कर्तव्यं व्रतं शोकविनाशनम् ।। ३४ ।।
यथालाभोपहारेण मासे चापि मलिम्लुचे ।।
पुण्याहे प्रातरुत्थाय कृत्वा पौर्वाह्निकीं क्रियाम् ।। ३५ ।।
गृहीत्वा नियमं पश्चाद्वासुदेवं हृदि स्मरन् ।।
उपवासं च नक्तं च एकभुक्तं च मानिनि ।। ३६ ।।
एकस्य निश्चयं कृत्वा ततो विप्रान्निमंत्रयेत् ।।
सपत्नीका न्सदाचारान्कुलीनाञ्ज्ञातिसंभवान् ।। ३७ ।।
ततो मध्याह्नसमये लक्ष्मीयुक्तं सनातनम् ।।
स्थापयेदव्रणे कुंभे वेदमंत्रैर्द्विजातिभिः ।। ३८ ।।
पूजयेत्परया भक्त्या गोत्रिभिः सपितामहम् ।।
गंधतोयेन संस्थाप्य पंचामृतैस्तथैव च ।। ३९ ।।
मिष्टान्नैर्नवभिश्चैव नैवेद्यैर्धूपदीपकैः ।।
आच्छादनैश्च वस्त्रैश्च पीतकौशेयकैस्तथा ।। 5.1.60.४० ।।
घंटामृदंगनिर्ह्रादैर्घोषध्वनिसमन्वितैः ।।
आरार्तिकं व्रती कुर्यात्कर्पूरागरुचंदनैः ।। ४१ ।।

अलाभे तूल्मुकै श्चापि फलस्यानंत्यहेतवे ।।
ताम्रपात्रस्थिते तोये चंदनाक्षतपुष्पकैः ।। ४२ ।।
अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनांतरात्मना ।।
पंचरत्नैः समायुक्तैर्जा नुनी कृत्य भूतले ।।
समादाय च पाणिभ्यां सर्वभक्तिसमन्वितः ।। ४३ ।।
अर्घ्यमन्त्रः ।।
कृपावन्सर्वभूतेषु जगदानंदकारक ।।
गृहाणार्घ्यमिमं देव संपूर्णफलदो भव ।। ४४ ।।
प्रार्थनामंत्र ।।
स्वयंभुवे नमस्तुभ्यं ब्रह्मणेऽमिततेजसे ।।
नमोस्तु ते श्रियानंद ब्रह्मानंद कृपाकर ।। ४५ ।।
एवं संप्रार्थ्य गोविंदं पूजयेद्ब्राह्मणात्स्वयम् ।।
सपत्नीकाच्छुचीन्स्नाताल्लँक्ष्मीनारायणौ स्मरन् ।। ४६ ।।
पूजयित्वा विधानेन भोजयेद्घृतपायसैः ।। ४७ ।।
भोजयित्वा विधानेन सपत्नीकं यथोचितम् ।।
विद्याविनयसंपन्नं तथा पत्न्या समन्वितम् ।। ४८ ।।
पूजयित्वा यथाशक्त्या वस्त्रालंकारकुंकुमैः ।।
गोस्तन्याम्रकपित्थैश्च खर्जूरैः कदलीफलैः ।। ४९ ।।
पनसैर्नारिकेलैश्च नारंगैर्दाडिमैस्तथा ।।
घृतपक्वान्नगोधूमैः शुभैः सोमालिकैर्वटैः ।। 5.1.60.५० ।।
शर्कराघृतपूरैश्च कर्णिकैः खंडमंडकैः ।।
उर्वारुकर्कटीशाकैः शृंगबेरैः समूलकैः ।। ५१ ।।
अन्यैश्च विविधैः शाकैराम्रैः पक्वैः पृथक्पृथक् ।।
भक्ष्यभोज्यलेह्यपेयकंदकानि विशेषतः ।। ५२ ।।
सुवासितान्गोरसांश्च परिवेष्य मृदु ब्रुवन् ।।
इदं स्वादु रसं भोज्यं भवदर्थे प्रकल्पितम् ।। ५३ ।।
याच्यतां रोचते यच्च यन्मया पाचितं प्रभो ।।
धन्योस्म्यनुगृहीतोस्मि कृतं सार्थं च मंदिरम् ।। ५४ ।।
विसर्जयेत्ततो विप्रान्दत्त्वा तांबूलदक्षिणाः ।।
चतुर्भिर्मिलितैर्देवि तांबूलं मम वल्लभम् ।। ५५ ।।
यो ददाति द्विजश्रेष्ठे स भवेत्सुभगो नरः ।।
सुभगा च सदाचारा वल्लभा स्वजने सदा ।। ५६ ।।

पुत्रसौभाग्ययुक्ता च तांबूलैर्जायते प्रिये ।।
पत्रैस्तु केशवः प्रीतः पूगैरीशः सहोमया ।। ५७ ।।
चूर्णकेनानलः प्रीतः खदिरेण तु मन्मथः ।।
चतुर्भिर्विश्वरूपोऽसौ यः पुष्णाति जगत्त्रयम् ।। ५८ ।।
परितोष्य सपत्नीकान्हस्ते दत्त्वा च मोदकान् ।।
आ सीमांतमनुव्रज्य भुंजीत सह बंधुभिः ।।५९।।
असंक्रांते व्रतं नारी या करोतीह सुप्रिये ।।
दारिद्र्यं पुत्रशोकं च वैधव्यं नाप्नुयात्क्वचित् ।।5.1.60.६०।।
नरो वा यदि वा नारी यः कुर्याच्च मलिम्लुचे ।।
स सर्वसुखभोक्ता च भवेन्नास्त्येव संशयः ।। ६१ ।।
मलिम्लुचे प्राप्य न पूजितो यैर्नारायणोऽहं परयेह भक्त्या ।।
कथं भवेयुः सुखपुत्रसंपत्सुहृत्सुभार्याः सुगुणैरुपेताः ।।६२।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे ऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तममाहात्म्ये दानादिमाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ।। ६० ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६१



।। सनत्कुमार उवाच ।। ।।
अधिमासं समासाद्य योऽन्यत्र स्थितिमात्मनः ।।
करोति स नरो मूर्खो महाकालवनादृते ।। १ ।।
अधिमासे नरो व्यास तीर्थे पुरुषोत्तमाभिधे ।।
स्नात्वा दत्त्वा च दानानि तेषां लोकाः सनातनाः ।। २ ।।
पुरुषोत्तमं समभ्यर्च्य रमालालितपादकम् ।।
तथैव च उमां देवीं शंकरेण च पूजयेत् ।। ३ ।।
वांछितार्थशतं प्राप्य विष्णुलोके महीयते ।।
भाद्रपदे सिते पक्षे एकादश्यां समाहितः ।।
उपोष्य विधिवद्व्यास रात्रौ जागरणं चरेत् ।। ४ ।।
विष्णोश्च पूजनं कार्यं जलयात्रा तथैव च ।।
पुरुषोत्तमसरे नित्यं तस्य पुण्यफलं शृणु ।। ५ ।।
पुत्रदारधनं सम्यगायुरारोग्यसंपदः ।।
न तेषां दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।।६।।
तस्य पूर्वतरे भागे जटेश्वरमहेश्वरः ।।
तिष्ठति तापसस्तीरे यत्र राजा भगीरथः ।। ७ ।।
तपस्तप्त्वा परं लेभे पुण्यं पुण्यवतां वरः ।।
गंगां भूतलमानीय सर्वलोकसुखाय वै ।। ८ ।।
तस्य तीर्थे नरः स्नात्वा तिलधेनुं प्रदापयेत् ।।
सर्वयज्ञफलं प्राप्य पुत्रवाञ्जा यते नरः।।९।।
तस्येशानतरे भागे रामो भार्गवसत्तमः।।
तपस्तेपे सुधर्मात्मा आत्मकायविशुद्धये।।5.1.61.१०।।
कौशिकी च सरिच्छ्रेष्ठा सर्वतीर्थवरप्रदा।।
तत्र स्नात्वा नरो जातिहत्यादोषविवर्जितः ।।११।।

रामेश्वरं समालोक्य धूतपापो भवेन्नरः।१२।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तमेश्वरमाहात्म्येऽधिमासस्नानदानादिमाहात्म्यवर्णनंनामैकषष्टितमोऽध्यायः ।।६१।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६२



।। व्यास उवाच ।।
गोमतीकुण्डं त्वया प्रोक्तं पुरा ब्रह्मन्सनातनम् ।।
कस्मिन्काले कदा जातं तन्नो वद सुविस्तरात् ।। १ ।।
।। सनत्कुमार उवाच ।।
शृणुष्व भो महाप्राज्ञ कथां पापहरां पराम् ।।
गोमतीकुण्डोद्भवां पुण्यां पुरा रुद्रेण भाषिताम् ।। २ ।।
नैमिषे च समासीना ऋषयः शौनकादयः ।।
कथयंति कथां पुण्यां सर्वतीर्थोद्भवां शुभाम् ।। ३ ।।
तस्मिन्नवसरे पुण्ये काशीमाहात्म्यमुत्तमम् ।।
कथितं नारदेनैव पवित्रं पापहारकम् ।। ४ ।।
ऊषरः पुण्य पापानां धन्या वाराणसी पुरी ।।
ध्रुवं लभंते मोक्षं च समं चंडालपंडिताः ।। ५।।
असीवरुणयोर्मध्ये पंचक्रोशी महाफलम् ।।
अमरा मरणमिच्छन्ति का कथा इतरे जनाः ।। ६ ।।
इति स्मृत्वा तदा व्यास स्वयंभूः प्रत्यभाषत ।।
शृण्वतां सर्वदेवानामृषीणां च परंतप ।। ७ ।।
नदी न गोमतीतुल्या कृष्णतुल्या न देवता ।।
सर्वपातालभूमध्ये न द्वारकासमा पुरी ।। ८ ।।
इति ते निश्चयं ज्ञात्वा ऋषयः शौनकादयः ।।
यत्र तत्र स्थिताः सर्वे प्रातःसंध्यामुपासितुम्।। ९ ।।
तत्रैव गोमतीतीरे चक्रुस्ते ला धृतव्रताः ।।
सांदीपनोऽपि तत्रैव प्रातःसंध्यां समाचरत् ।। 5.1.62.१० ।।
एवं बहुतिथे काले चरतस्तस्य वै व्रतम्।।
सांदीपनस्य वै व्यास ह्यवंतीपुरवासिनः।।११।।
तस्यैव कामपूर्त्यर्थं विद्यार्थिनौ रामजनार्दनौ ।।
समायातौ सुकुमारांगौ सततं ब्रह्मचारिणौ ।। १२ ।।

निवासं चक्रतुस्तस्य गुरोर्गेहे परंतप ।।
तस्य पाठयतः सम्यग्विद्यां सर्वश्रुतीः परम् ।। १३ ।।
उषस्युषसि तत्रैव दृश्यते न तदा गुरुः ।।
विद्योपदेशकालोऽयं क्व गतो नौ गुरुर्वरः ।। १४ ।।
इति पृष्टे तयोरेवं गुरुपत्नी ह्युवाच ह ।।
सदैव कुरुते वत्स प्रातःसंध्याद्युपास नम् ।। १५ ।।
तत्रैव याति वै नित्यं गुरुस्ते स्नानकारणात् ।।
गोमती वै सरिच्छ्रेष्ठा द्वारकायां च पावनी ।।१६।।
इति श्रुत्वा तदा कृष्णो रामेण सह संयुतः ।।
किं कर्तव्यमिहास्माभिरात्मनो हितमुत्तमम् ।। १७ ।।
गुरोरागमनं कांक्षे अत्रैव स्थितिकांक्षया ।।
एतस्मिन्नेव काले तु सांदीपनिरगा द्गृहम्।। १८ ।।
तत उत्थाय तौ वीरौ गुरोरावंदनं ततः ।।
प्रश्रयावनतौ कृत्वा ह्यब्रूतां वचनं गुरुम् ।। १९ ।।
श्रूयतां भो महायोगिन्नस्माकं वासकार णम्।।
विद्यार्थिनाविह प्राप्तौ युष्माकं च गृहोत्तमे ।। 5.1.62.२० ।।
प्रातःकाले च ते ब्रह्मन्समयो नास्ति नौ प्रभो ।।
एतच्छ्रुत्वा वचस्तस्य कृष्णस्य च बलस्य च ।। २१ ।।
उवाच भगवान्व्यास आत्मनो व्रतकारणम् ।।
अस्माकं परमं वत्स व्रतं वै शाश्वतं मतम् ।। २२ ।।
गोमतीस्नानं कर्तव्यं प्रातःकाले सदा बुधैः ।।
तत्रैवोपासनं पुण्यं संध्याया इति निश्चितम् ।। २३ ।।
इति निश्चित्य युष्माभिर्यद्योग्यं क्रियतां तथा ।।
तच्छ्रुत्वा भगवान्विष्णुर्मायामानुषरूपवान् ।। २४ ।।
गोमत्याराधनं चक्रे कुशस्थल्यां द्विजोत्तम ।।
यत्र शिवेश्वरो देवो यज्ञकुण्डमनुत्तमम् ।। २५ ।।
कंथडेश्वरस्योत्तरे भागे गोमती सा समागता ।।
पातालतलमाभेद्य सरस्वत्या सहागता ।। २६ ।।
प्रातरुत्थाय ते सर्वे गोमतीं सरितां वराम् ।।
ददृशुः सुचिरापांगीं व्यास स्वाश्रमगामिनीम् ।। २७ ।।
।। श्रीकृष्ण उवाच ।। ।।
अत्रैव चागता ब्रह्मन्गोमती सरितांवरा ।।

स्नानदानादिकं सर्वमत्रैव समुपासय।। २८ ।।
गोमत्यत्र समालीना यज्ञकुण्डे सरस्वती ।।
तदाप्रभृति लोकेऽस्मिन्गोमतीकुण्डमुच्यते ।। २९ ।।
सर्वेषामपि लोकानां मार्गोऽ त्रैव च विद्यते ।।
तस्माद्व्यास महापुण्यं भुवि तीर्थमनुत्तमम्।। 5.1.62.३० ।।
गोमतीकुण्डमाख्यातं सर्वपापप्रणानशनम् ।।
भाद्रे मास्यसिताऽष्टम्यां कृष्ण जन्मसमुद्भवम् ।। ३१।।
तत्र स्नात्वा नरो नित्यं रात्रौ जागरणं चरेत् ।।
उपोष्य विधिवद्व्यास सशिष्यं व्यासमर्चयेत् ।। ३२ ।।
वैष्णवांश्च नरांश्चैव कृष्णजन्मोत्सुकान्वरान्।।
नानासुगंधपुष्पाद्यैर्वस्त्रालंकारसंयुतैः ।। ३३ ।।
गोब्राह्मणानां पूजाश्च क्रियते यैः समाहितैः ।।
न तेषां दुर्लभं किंचित्सर्वलोकेषु विद्यते ।। ३४ ।।
गोमतीस्नानजात्पुण्याद्वासुदेवसमागमात् ।।
मनोरथफलप्राप्तिर्जायते नाऽत्र संशयः ।। ३५ ।।
तथा चैत्रसिते पक्षे यावच्चैकादशी भवेत् ।।
तद्दिने च नरः स्नात्वा गोमत्यां च विशेषतः ।। ३६ ।।
रात्रौ जागरणं कृत्वा विष्णुपूजां तथैव च ।।
आमलकीं ततो गत्वा प्रदक्षिणात्पदेपदे ।। ३७ ।।
गोसहस्रफलं तेषां प्राप्यते नाऽत्र संशयः ।।
ये शृण्वंति कथां पुण्यां पवित्रां पापहारिणीम् ।। ३८ ।।
सर्वपापविनिर्मुक्ता विष्णुलोकं प्रयांति ते ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये गोमतीतीर्थकुण्डमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ।। ६२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६३



।। सनत्कुमार उवाच ।। ।।
कंथडेश्वर इति ख्यातं तत्र तीर्थमनुत्तमम् ।।
तत्र तीर्थे नरः स्नात्वा दृष्ट्वा देवं महेश्वरम् ।। १ ।।
मुच्यते सर्वपापेभ्यः शुचिः प्रयतमानसः ।।
विमानशतसंयुक्तः शिवलोके महीयते ।। २ ।।
भुवि पुण्यतमं तीर्थं सर्वपापहरं परम् ।।
खगर्तासंगमो यत्र गंगेश्वरसमीपतः ।। ३ ।।
महापापहरं पुण्यं महापुण्यफलप्रदम् ।।
आकाशात्पतिता यत्र गंगा त्रैलोक्य पावनी ।। ४ ।।
विधृता शिरसि सद्यो महादेवेन शंभुना ।।
तस्मिंस्तीर्थे नरः स्नात्वा गंगेशमवलोकयेत् ।। ५ ।।
गंगास्नानफलं प्राप्य विष्णु लोके महीयते ।।
वीरेश्वरमनुप्राप्य तस्मिंस्तीर्थे नरो वसेत् ।। ६ ।।
सर्वपापविशुद्धात्मा वीरलोकमवाप्नुयात्।।
तीर्थमन्यन्महापुण्यं भुवि ख्यातं महर्षिभिः ।। ७ ।।
वामनकुण्डेति विख्यातं त्रिषु लोकेषु विश्रुतम् ।।
यस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ।। ८ ।।
मनोरथशतं प्राप्य पश्चाद्विष्णु पुरं व्रजेत् ।।
।। व्यास उवाच ।। ।।
कदा काले समुत्पन्नं वामनाख्यं पुराऽनघ ।। ९ ।।
तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।। ।।
।। सनत्कुमार उवाच ।। ।।
शृणुष्व भो द्विजश्रेष्ठ कथां पापहरां पराम् ।। 5.1.63.१० ।।
यस्य श्रवणमात्रेण सर्वपापात्प्रमुच्यते ।।
दैत्येंद्रस्तु पुरा प्रोक्तो विष्णुभक्तिपरायणः ।। ११ ।।
प्रह्लाद इति विख्यातः सर्वधर्मभृतां वरः ।।

आचारविजितो धर्मः सत्येन विजिता रमा ।। १२ ।।
धैर्येण च धृता लोकाः क्षमया विधृता मही ।।
गांभीर्येणाऽर्णवा दिव्याः शौर्येण शत्रुणा गणाः ।। १३ ।।
प्रश्रयेणाभ्यागताश्च जितास्तेन महात्मना ।।।
दक्षिणाभिर्जितो यज्ञो हविषा हव्यवाहनः ।। १४ ।।
शौचाऽऽचारविशुद्धात्मा तपसा च हताऽशुभः ।।
दानमानजिता विप्रा भोजनाच्छादना दिभिः ।। १५ ।।
संस्कारेण जितं जन्म दमेनाऽऽत्मा सनातनः ।।
प्राणायामजितो वायुर्योगध्यानजितो हरिः ।। १६ ।।
ईदृशश्च महायोगी सत्यधर्म परायणः ।।
प्रह्लादेन समो धीरो न भूतो न भविष्यति ।। १७ ।।
तस्य पौत्रः सदाचारी बलिरित्यभिधीयते ।।
तस्य पालयतः सम्यक्प्रजाः सम्यग्विवर्धिताः ।। १८ ।।
नाल्पायुर्न जडो मूर्खो न रोगी न च मत्सरी ।।
अपुत्रो द्रव्यहीनश्च कोऽपि नाऽस्ति महीतले ।। १९ ।।
महाराजो महीपालो यज्वा विपुलदक्षिणः ।।
सप्तद्वीपवती तेन पालिता वसुधा सदा ।। 5.1.63.२० ।।
एकदा च समासीने सभामध्ये वरासने ।।
जय शब्दे वर्तमाने गंधर्वा ललितं जगुः ।। २१ ।।
वाद्यमानेषु वाद्येषु ननृतुश्चाऽप्सरोगणाः ।।
कथायां कथ्यमानायां शुभायां च विचक्षणैः ।। २२ ।।
सूता वैतालिकाः सिद्धाश्चारणाश्च बहुश्रुताः ।।
ऋषयश्च समायातास्तत्रैव द्विजसत्तम ।। २३ ।।
सुन्दोपसुन्दतुहुंडाद्या महिषासुरकोल्बणाः ।।
शुम्भनिशुम्भधूम्राक्षकालकेयाश्च दानवाः ।। २४ ।।
कालनेमिश्च विक्रांतो दौर्हृदो मूषको यमः ।।
निकुम्भः कुम्भविशठो ह्यन्धकश्च महाबलः ।। ।। २५ ।।
शंखो जलंधरो रौद्रो वातापी च बलाधिकः ।।
सर्वजिद्विश्वहंता च कामचारी हलायुधः ।। २६ ।।
एते चाऽन्ये च बहवो दनुवंशवि वर्धनाः ।।
उपासांचक्रिरे तत्र बलिराजमकल्मषम् ।। २७ ।।
सिद्धा नागाश्च यक्षाश्च किन्नराः किंपुरुषास्तथा ।।

खेचरा भूचरा बाला राक्षसाश्चैव दारुणाः ।। २८ ।।
एते चाऽन्ये च बहवो राजानं पर्युपासत ।।
तत्र सभा महादिव्या शुशुभे च द्विजोत्तम ।। २९ ।।
ग्रहैरुज्वलितैः कीर्णो शरदीव नभःस्थलम् ।।
तत्सभायां समासीनो रराज बलिराट् तथा ।। 5.1.63.३० ।।
मरुद्भिरिव संवीतो वासवो दिवि देवतैः ।।
एकदा च सभामध्ये नारदो देवदर्शनः ।। ३१ ।।
आगतस्तेषु सर्वेषु दानवेषु स्थितेषु च ।।
दृष्ट्वा तमागतं सर्वे ह्युत्तस्थुर्दितिनंदनाः ।। ३२ ।।
ववन्दिरे सर्वशस्तु बलिना किंनरोत्त मम्।।
सकृत्य चासनं दत्त्वा पप्रच्छ कुशलं नृपः ।। ३३ ।।
कृत्वाऽऽतिथ्यं समासीनो नारदः प्राह सत्तमः ।।
मेघगंभीरया वाचा बलिं प्राहर्षिस त्तमः ।। ३४ ।।
।। नारद उवाच ।। ।।
श्रूयतां दितिजश्रेष्ठ गतोऽहं वृषमंदिरे ।।
तत्र देवसभा रम्या दिव्याऽभिप्रायसंयुता ।।
तत्र देवाः सगंधर्वाः पुरंदरपुरोगमाः ।। ३५ ।।
समासीनाः कथां पुण्यां कथयंति परस्परम् ।।
तत्र दैत्यकथां शुभ्रां मया ख्यातां न सेहिरे ।। ३६ ।।
हिरण्यकशिपुर्दैत्यः पुराऽऽसीच्च प्रजापतिः ।।
त्रैलोक्यविजयी नेता येनेयं वसुधा जिता ।। ३७ ।।
सर्वलोकं वशीकृत्य बुभुजे च वसुन्धराम् ।।
अतीव तेजःसंपन्नो महाबलपराक्रमः ।। ३८ ।।
वशी सर्वत्रगः कामी नृसिंहेन निपातितः ।।
बलिं कियद्बलं लोके नारद त्व प्रशंससि ।। ३९ ।।
इति मां धर्षयित्वा च बिडौजा लोकसंग्रही ।।
बहुधा वादयन्वादान्कटुकान्दानवोत्तम ।। 5.1.63.४० ।।
तस्मात्त्वं दानवश्रेष्ठ पितृपर्यागतां महीम् ।।
विजित्य सार्वभौमत्वं लभस्व वसुधाधिप ।। ४१ ।।
कियद्बलधृता नूनं देवाश्च दनुजोत्तम ।।
पलायनपरा दांता सदैव रणभीरवः ।। ४२ ।।
मम वाक्यपरो भूत्वा त्रैलोक्याधिपतिर्भव ।।

नारदस्य वचः श्रुत्वा वलिर्वैरोचनिस्तदा ।। ४३ ।।
चकार कोपमतुलं त्रैलोक्यविजये द्विज ।।
मंत्रयित्वाऽसुरान्सर्वान्सर्वदैत्यजनेश्वरः ।। ४४ ।।
संग्राममकरोत्तीव्रं वासवेन बलीयसा ।।
जित्वा च सकलाल्देवान्वशीचक्रे सवासवान् ।। ४५ ।।
सर्वलोकेश्वरो जातो बलिर्वैरोचनोऽसुरः ।।
हताधिकारास्त्रिदशा भ्रष्टराज्याः पराजिताः ।। ४६ ।।
विचरंति यथा मर्त्यास्तेन देवगणा भुवि ।।
किंचित्कालं समासाद्य ब्रह्माणं शरणं ययुः ।। ४७ ।।
भो ब्रह्मन्बलिना भ्रष्टा देवलोकात्परंतप ।।
किं कुर्मः क्व च गच्छामः कमुपा यं चरामहे ।। ४८ ।।
।। ब्रह्मोवाच ।। ।।
श्रूयतां भोः सुरश्रेष्ठा युष्माकं साधनं परम् ।।
यूयं यात पुरीं रम्यां पद्मावतीमम रोत्तमाः ।। ४९ ।।
तत्र तीर्थवरं श्रेष्ठं नाम्ना चोत्तरमानसम् ।।
यत्राऽष्टसिद्धिदा ख्याता महासिद्धिप्रदा नृणाम् ।। 5.1.63.५० ।।
निधयश्च नवैवापि तत्र तिष्ठंति सत्तम ।।
तस्यैव दक्षिणे भागे विष्णुतीर्थमनुत्तमम्।।५१।।
तत्र स्नात्वा नरः पश्येत्सिद्धेश्वरीं सुसिद्धिदाम् ।।
ऋद्धिसिद्धिपरोभूत्वा विष्णु लोके महीयते ।। ५२ ।।
आश्विनस्य सिते पक्षे दशम्यां दिवसे तथा ।।
अष्टसिद्धिशमीदेशे गणेश्वरं प्रपूजयेत् ।। ५३ ।।
विजयी सर्वलोकेषु जाय ते नात्र संशयः ।।
शमीमूलस्थितं नित्यमृद्धिसिद्धिवरप्रदम्।। ५४ ।।
पूजयेद्वै नरो नित्यं गणेशं सर्वकामदम् ।।
सर्वकामवरं लब्ध्वा पुत्रवान्धनवान्भवेत् ।। ५५ ।।
तस्मात्सर्वप्रयत्नेन महाकालवनं व्रजेत् ।।
यत्र विष्णुसरस्तीर्थं तत्र गच्छत माचिरम् ।। 5६ ।।
उपासनां सुरश्रेष्ठा विष्णोरतु लेतेजसः ।।
कुरुध्वं सर्वभीतिभ्यस्त्राता स स्यात्सुरोत्तमाः ।। ५७ ।।
इति श्रुत्वा वचस्तस्य ब्रह्मणः शंसितात्मनः ।।
महाकालवने प्राप्ता देवास्ते कार्यसाधकाः ।। ५८ ।।

अत्राऽऽगात्य शुचीभूय स्नानदानादिकर्मभिः ।।
उपासांचक्रिरे सिद्धा विष्णुभक्तिपरायणाः ।। ५९ ।।
ब्रह्माणमथ ते सर्वे पप्रच्छुर्विधिमादरात्।।
उपासनाया देवस्य देवाः शक्रपुरोगमाः ।। 5.1.63.६० ।।
।। देवा ऊचुः ।। ।।
ब्रह्मन्केन प्रकारेण विष्णुभक्तिः परा भवेत्।।
तत्सर्वं श्रोतु मिच्छामस्त्वत्तो ब्रह्मविदां वर ।। ६१ ।।
।। ब्रह्मोवाच ।। ।।
श्रूयतां भोः सुरश्रेष्ठा विष्णुभक्तिमनुत्तमाम् ।।
शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।। ६२ ।।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ।।
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।। ६३ ।।
येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ।।
अभीप्सितार्थसिद्ध्यर्थं पूज्यते यः सुरैरपि ।। ६४ ।।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ।।
कल्पादौ सृष्टिकामेन प्रेरितोहं च शौरिणा ।। ६५ ।।
न शक्तो वै प्रजाः कर्तुं विष्णुध्यानपरायणः ।।
एतस्मिन्नंतरे सद्यो मार्कण्डेयो महाऋषिः ।। ६६ ।।
सर्वसिद्धेश्वरो दांतो दीर्घायुर्विजितेंद्रियः ।।
मया दृष्टो ऽथ गत्वा तं तदाहं समुपस्थितः ।।
ततः प्रफुल्लनयनौ सत्कृत्य चेतरेतरम् ।। ६७ ।।
पृच्छमानौ परं स्वास्थ्यं सुखासीनौ सुरोत्तमाः ।।
तदा मया स पृष्टो वै मार्कण्डेयो महामुनिः ।। ६८ ।।
भगवन्केन प्रकारेण प्रजा मेऽनामया भवेत् ।।
तत्सर्वं श्रोतुमिच्छामि भगवन्मुनिवंदित ।। ६९ ।।
।। श्रीमार्कण्डेय उवाच ।। ।।
विष्णुभक्तिः परा नित्या सर्वार्तिदुःखनाशिनी ।।
सर्वपापहरा पुण्या सर्वसुखप्रदायिनी ।। 5.1.63.७० ।।
एषा ब्राह्मी महाविद्या न देया यस्य कस्यचित् ।।
कृतघ्नाय ह्यशिष्याय नास्तिकायानृताय च ।। ७१ ।।
ईर्ष्यकाय च रूक्षाय कामिकाय कदाचन ।।
तद्व्रतं सर्वं विघ्नंति यत्तद्धर्मं सनातनम् ।। ७२ ।।

एतद्गुह्यतमं शास्त्रं सर्वपापप्रणाशनम् ।।
पवित्रं च पवित्राणां पावनानां च पावनम् ।।७३।।
विष्णोर्नामसहस्रं च विष्णुभक्तिकरं शुभम् ।।
सर्वसिद्धिकरं नृणां भुक्तिमुक्तिप्रदं शुभम् ।। ७४ ।।
ॐ अस्य श्रीविष्णुसहस्रनामस्तोत्रमंत्रस्य मार्कंडेय ऋषिः विष्णुर्देवता अनुष्टुप्च्छंदः सर्वकामावात्यर्थे जपे विनियोगः ।।
अथ ध्यानम् ।।
सजलजलदनीलं दर्शितोदारशीलं करतलधृतशैलं वेणुवाद्ये रसालम् ।।
व्रजजन कुलपालं कामिनीकेलिलोलं तरुणतुलसिमालं नौमि गोपालबालम् ।।७५ ।।
ॐविश्वं विष्णुर्हृषीकेशः सर्वात्मा सर्वभावनः ।।
सर्वगः शर्वरीनाथो भूतग्रामाऽऽशयाशयः ।। ७६ ।।
अनादिनिधनो देवः सर्वज्ञः सर्वसंभवः ।।
सर्वव्यापी जगद्धाता सर्वशक्तिधरोऽनघः ।।७७।
जगद्बीजं जगत्स्रष्टा जगदीशो जगत्पतिः ।।
जगद्गुरुर्जगन्नाथो जगद्धाता जगन्मयः ।।७८।।
सर्वाऽऽकृतिधरः सर्वविश्वरूपी जनार्दनः ।।
अजन्मा शाश्वतो नित्यो विश्वाधा रो विभुः प्रभुः ।। ७९ ।।
बहुरूपैकरूपश्च सर्वरूपधरो हरः ।।
कालाग्निप्रभवो वायुः प्रलयांतकरोऽक्षयः ।। 5.1.63.८० ।।
महार्णवो महामेघो जलबुद्बुदसं भवः ।।
संस्कृतो विकृतो मत्स्यो महामत्स्यस्तिमिंगिलः ।। ८१ ।।
अनंतो वासुकिः शेषो वराहो धरणीधरः ।।
पयःक्षीरविवेकाढ्यो हंसो हेम गिरिस्थितः ।। ८२ ।।
हयग्रीवो विशालाक्षो हयकर्णो हयाकृतिः ।।
मंथनो रत्नहारी च कूर्मो धरधराधरः ।। ८३ ।।
विनिद्रो निद्रितो नंदी सुनंदो नंदनप्रियः ।।
नाभिनालमृणाली च स्वयंभूश्चतुराननः ।। ८४ ।।
प्रजापतिपरो दक्षः सृष्टिकर्ता प्रजाकरः ।।
मरीचिः कश्यपो दक्षः सुरासुरा गुरुः कविः ।। ८५ ।।
वामनो वाममार्गी च वामकर्मा बृहद्वपुः ।।
त्रैलोक्यक्रमणो दीपो बलियज्ञविनाशनः ।। ८६ ।।
यज्ञहर्ता यज्ञकर्ता यज्ञेशो यज्ञभुग्विभुः ।।

सहस्रांशुर्भगो भानुर्विवस्वान्रविरंशुमान् ।। ८७ ।।
तिग्मतेजाश्चाल्पतेजाः कर्मसाक्षी मनुर्यमः ।।
देवराजः सुरपतिर्दानवारिः शची पतिः ।। ८८ ।।
अग्निर्वायुसखो वह्निर्वरुणो यादसां पतिः ।।
नैर्ऋतो नादनोऽनादी रक्षयक्षोधनाधिपः ।। ८९ ।।
कुबेरो वित्तवान्वेगो वसुपालो विलासकृत् ।।
अमृतस्रवणः सोमः सोमपानकरः सुधीः ।। 5.1.63.९० ।।
सर्वौषधिकरः श्रीमान्निशाकरदिवाकरः ।।
विषारिर्विषहर्ता च विषकंठधरो गिरिः ।। ९१ ।।
नीलकंठो वृषी रुद्रो भालचंद्रो ह्युमापतिः ।।
शिवः शांतो वशी वीरो ध्यानी मानी च मानदः ।। ९२ ।।
कृमिकीटो मृगव्याधो मृगहा मृगलाञ्छनः ।।
बटुको भैरवो बालः कपाली दंडविग्रहः ।। ९३ ।।
स्मशानवासी मांसाशी दुष्टनाशी वरांतकृत् ।।
योगिनीत्रासको योगी ध्या नस्थो ध्यानवासनः ।। ९४ ।।
सेनानीः सेनदेः स्कंदो महाकालो गणाधिपः ।।
आदिदेवो गणपतिर्विघ्नहा विघ्ननाशनः ।। ९५ ।।
ऋद्धिसिद्धिप्रदो दंती भालचन्द्रो गजाननः ।।
नृसिंह उग्रदंष्ट्रश्च नखी दानवनाशकृत् ।। ९६ ।।
प्रह्लादपोषकर्ता च सर्वदैत्यजनेश्वरः ।।
शलभः सागरः साक्षी कल्प कल्पकः ।।९७ ।।
हेमदो हेमभागीच हिमकर्ता हिमाचलः ।।
भूधरो भूमिदो मेरुः कैलासशिखरो गिरिः ।। ९८ ।।
लोकालोकांतरो लोकी विलोकी भुवनेश्वरः ।।
दिक्पालो दिक्पतिर्दिव्यो दिव्यकायो जितेंद्रियः ।। ९९ ।।
विरूपो रूपवान्रागी नृत्यगीतविशारदः ।।
हाहा हूहूश्चित्ररथो देव र्षिर्नारदः सखा ।। 5.1.63.१०० ।।
विश्वेदेवाः साध्यदेवा धृताशीश्च चलोऽचलः ।।
कपिलो जल्पको वादी दत्तो हैहयसंघराट् ।। १ ।।
वसिष्ठो वामदेवश्च सप्तर्षिप्रवरो भृगुः ।।
जामदग्न्यो महावीरः क्षत्रियांऽतकरो ह्यृषिः ।। २ ।।
हिरण्यकशिपुश्चैव हिरण्याक्षो हरप्रियः ।।

अगस्तिः पुलहो दक्षः पौल स्त्यो रावणो घटः ।।३।।
देवारिस्तापसस्तापी विभीषणहरिप्रियः ।।
तेजस्वी तेजदस्तेजी ईशो राजपतिः प्रभुः ।। ४ ।।
दाशरथी राघवो रामो रघुवंश विवर्धनः।।
सीतापतिः पतिः श्रीमान्ब्रह्मण्यो भक्तवत्सलः।।५।।
सन्नद्धः कवची खड्गी चीरवासा दिगंबरः ।।
किरीटी कुडली चापी शंखचक्री गदाधरः ।।६।।
कौसल्यानंदनोदारो भूमिशायी गुहप्रियः ।।
सौमित्रो भरतो बालः शत्रुघ्नो भरताऽग्रजः ।। ७ ।।
लक्ष्मणः परवीरघ्नः स्त्रीसहायः कपीश्वरः ।।
हनुमानृक्षराजश्च सुग्रीवो वालिनाशनः ।। ८ ।।
दूतप्रियो दूतकारी ह्यंगदो गदतां वरः ।।
वनध्वंसी वनी वेगो वानरध्वज लांगुली ।। ९ ।।
रविदंष्ट्री च लंकाहा हाहाकारो वरप्रदः ।।
भवसेतुर्महासेतुर्बद्धसेतू रमेश्वरः ।। 5.1.63.११० ।।
जानकीवल्लभः कामी किरीटी कुण्डली खगी ।।
पुण्डरीकविशालाक्षो महाबाहुर्घनाकृतिः ।। ११ ।।
चंचलश्चपलः कामी वामी वामांगवत्सलः ।।
स्त्रीप्रियः स्त्रीपरः स्त्रैणः स्त्रियो वामांगवासकः ।। १२ ।।
जितवैरी जितकामो जितक्रोधो जितेंद्रियः ।।
शांतो दांतो दयारामो ह्येकस्त्रीव्रतधारकः ।। १३ ।।
सात्त्विकः सत्त्वसंस्थानो मदहा क्रोधहा खरः ।।
बहुराक्षस संवीतः सर्वराक्षसनाशकृत् ।। १४ ।।
रावणारी रणक्षुद्र दशमस्तकच्छेदकः ।।
राज्यकारी यज्ञकारी दाता भोक्ता तपोधनः ।। १५ ।।
अयोध्याधिपतिः कांतो वैकुंठोऽकुंठविग्रहः ।।
सत्यव्रतो व्रती शूरस्तपी सत्यफलप्रदः ।। १६ ।।
सर्वसाक्षीः सर्वगश्च सर्वप्राणहरोऽव्ययः ।।
प्राणश्चाथाप्यपानश्च व्यानोदानः समानतः ।। १७ ।।
नागः कृकलः कूर्मश्च देवदत्तो धनंजयः ।।
सर्वप्राणविदो व्यापी योगधारकधारकः ।।१८।।
तत्त्ववित्तत्त्वदस्तत्त्वी सर्वतत्त्वविशारदः ।।

ध्यानस्थो ध्यानशाली च मनस्वी योगवित्तमः ।। १९ ।।

ब्रह्मज्ञो ब्रह्मदो बह्मज्ञाता च ब्रह्मसंभवः ।।

अध्यात्मविद्विदो दीपो ज्योतीरूपो निरंजनः ।। 5.1.63.१२० ।।

ज्ञानदोऽज्ञानहा ज्ञानी गुरुः शिष्योपदेशकः ।।

सुशिष्यः शिक्षितः शाली शिष्यशिक्षाविशारदः ।। २१ ।।

मंत्रदो मंत्रहा मंत्री तंत्री तन्त्रजनप्रियः ।।

सन्मंत्रो मन्त्रविन्मन्त्री यन्त्रमन्त्रैकभंजनः ।। २२ ।।

मारणो मोहनो मोही स्तंभोच्चाटनकृत्खलः ।।

बहुमायो विमायश्च महामायाविमोहकः ।। २३ ।।

मोक्षदो बंधको बंदी ह्याकर्षणविकर्षणः ।।

ह्रींकारो बीजरूपी च क्लींकारः कीलकाधिपः ।। । २४ ।।

सौंकार शक्तिमाञ्च्छक्तिः सर्वशक्तिधरो धरः ।।

अकारोकार औंकारश्छंदोगायत्रसम्भवः ।। २५ ।।

वेदो वेदविदो वेदी वेदाऽध्यायी सदाशिवः ।।

ऋग्यजुःसामाथर्वेशः सामगानकरोऽकरी ।। २६ ।।

त्रिपदो बहुपादी च शतपथः सर्वतोमुखः ।।

प्राकृतः संस्कृतो योगी गीतग्रंथप्रहेलिकः ।। २७ ।।

सगुणो विगुणश्छंदो निःसंगो विगुणो गुणी ।।

निर्गुणो गुणवान्संगी कर्मी धर्मी च कर्मदः ।। २८ ।।

निष्कर्मा कामकामी च निःसंगः संगवर्जितः ।।

निर्लोभो निरहंकारी निष्किंचनजनप्रियः ।। २९ ।।

सर्वसंगकरो रागी सर्वत्यागी बहिश्चरः ।।

एकपादो द्विपादश्च बहु पादोऽल्पपादकः ।। 5.1.63.१३० ।।

द्विपदस्त्रिपदोऽपादी विपादी पदसंग्रहः ।।

खेचरो भूचरो भ्रामी भृंगकीटमधुप्रियः ।। ३१ ।।

क्रतुः संवत्सरो मासो गणितार्को ह्यहर्निशः ।।

कृतं त्रेता कलिश्चैव द्वापरश्चतुराकृतिः ।। ३२ ।।

दिवाकालकरः कालः कुलधर्मः सनातनः ।।

कला काष्ठा कला नाड्यो यामः पक्षः सितासितः ।। ३३ ।।

युगो युगन्धरो योग्यो युगधर्मप्रवर्तकः ।।

कुलाचारः कुलकरः कुलदैवकरः कुली ।। ३४ ।।

चतुराऽऽश्रमचारी च गृहस्थो ह्यतिथिप्रियः ।।

वनस्थो वनचारी च वानप्रस्थाऽऽश्रमोऽश्रमी ।। ३५ ।।
बटुको ब्रह्मचारी च शिखासूत्री कमण्डली ।।
त्रिजटी ध्यानवान्ध्यानी बद्रिकाश्रमवासकृत् ।। ३६ ।।
हेमाद्रिप्रभवो हैमो हेमराशिर्हि माकरः ।।
महाप्रस्थानको विप्रो विरागी रागवान्गृही ।। ३७ ।।
नरनारायणोऽनागो केदारोदारविग्रहः ।।
गंगाद्वारतपःसारस्तपोवन तपोनिधिः ।। ३८ ।।
निधिरेष महापद्मः पद्माकरश्रियालयः ।।
पद्मनाभः परीतात्मा परिव्राट्पुरुषोत्तमः ।। ३९ ।।
परानंदः पुराणश्च सम्राड्राज विराजकः ।।
चक्रस्थश्चक्रपालस्थश्चक्रवर्ती नराधिपः ।।5.1.63.१४०।।
आयुर्वेदविदो वैद्यो धन्वंतरिश्च रोगहा।।
औषधीबीजसंभूतो रोगी रोगविनाशकृत।। ।। ४१ ।।
चेतनश्चेतकोऽचिंत्यश्चित्तचिंताविनाशकृत् ।।
अतींद्रियः सुखस्पर्शश्चरचारी विहंगमः ।। ४२ ।।
गरुडः पक्षिराजश्च चाक्षुषो विनता त्मजः ।।
विष्णुयानविमानस्थो मनोमयतुरंगमः ।। ४३ ।।
बहुवृष्टिकरो वर्षो ऐरावणविरावणः ।।
उच्चैःश्रवाऽरुणो गामी हरिदश्वो हरिप्रियः ।।४४।।
प्रावृषो मेघमाली च गजरत्नपुरंदरः ।।
वसुदो वसुधारश्च निद्रालुः पन्नगाशनः ।। ४५ ।।
शेषशायी जलेशायी व्यासः सत्यवतीसुतः ।।
वेदव्यासकरो वाग्ग्मी बहुशाखाविकल्पकः ।। ४६ ।।
स्मृतिः पुराणधर्मार्थी परावरविचक्षणः ।।
सहस्रशीर्षा सहस्राक्षः सहस्रवदनोज्ज्वलः ।। ४७ ।।
सहस्रबाहुः सहस्रांशुः सहस्रकिरणो नरः ।।
बहुशीर्षैकशीर्षश्च त्रिशिरा विशिराः शिरी ।। ४८ ।।
जटिलो भस्मरागी च दिव्यांबरधरः शुचिः ।।
अणुरूपो बृहद्रूपो विरूपो विकराकृतिः ।। ४९ ।।
समुद्रमाथको माथी सर्वरत्नहरो हरिः ।।
वज्रवैडूर्यको वज्री चिंतामणिमहामणिः ।।5.1.63.१५०।।
अनिर्मूल्यो महामूल्यो निर्मूल्यः सुरभिः सुखी ।।

पिता माता शिशुर्बंधुर्धाता त्वष्टार्यमा यमः ।। ५१ ।।
अंतःस्थो बाह्यकारी च बहिःस्थो वै बहिश्चरः ।।
पावनः पावकः पाकी सर्वभक्षी हुताशनः ।। ५२ ।।
भगवान्भगहा भागी भवभंजो भयंकरः ।।
कायस्थः कार्यकारी च कार्यकर्ता करप्रदः ।। ५३ ।।
एकधर्मा द्विधर्मा च सुखी दूत्योपजीवकः ।।
बालकस्तारकस्त्राता कालो मूषकभक्षकः ।। ५४ ।।
संजीवनो जीवकर्ता सजीवो जीवसंभवः।।
षड्विंशको महा विष्णुः सर्वव्यापी महेश्वरः ।। ५५ ।।
दिव्यांगदो मुक्तमाली श्रीवत्सो मकरध्वजः ।।
श्याममूर्तिर्घनश्यामः पीतवासाः शुभाननः ।। ५६ ।।
चीरवासा विवासाश्च भूतदानववल्लभः ।।
अमृतोऽमृतभागी च मोहिनीरूपधारकः ।। ५७ ।।
दिव्यदृष्टिः समदृष्टिर्देवदानववंचकः ।।
कबंधः केतुकारी च स्वर्भानुश्चंद्रतापनः ।। ५८ ।।
ग्रहराजो ग्रही ग्राहः सर्वग्रहविमोचकः ।।
दानमानजपो होमः सानुकूलः शुभग्रहः ।। ५९ ।।
विघ्नकर्ताऽपहर्ता च विघ्ननाशो विनायकः ।।
अपकारोपकारी च सर्वसिद्धिफलप्रदः ।। 5.1.63.१६० ।।
सेवकः सामदानी च भेदी दंडी च मत्सरी ।।
दयावान्दानशीलश्च दानी यज्वा प्रतिग्रही ।। ६१ ।।
हविरग्निश्चरुस्थाली समिधश्चानिलो यमः ।।
होतोद्गाता शुचिः कुण्डः सामगो वैकृतिः सवः ।। ६२ ।।
द्रव्यं पात्राणि संकल्पो मुशलो ह्यरणिः कुशः ।।
दीक्षितो मंडपो वेदिर्यजमानः पशुः क्रतुः ।। ६३ ।।
दक्षिणा स्वस्तिमान्स्वस्ति ह्याशीर्वादः शुभप्रदः ।।
आदिवृक्षो महावृक्षो देववृक्षो वनस्पतिः ।। ६४ ।।
प्रयागो वेणुमान्वेणी न्यग्रोधश्चाऽक्षयो वटः ।।
सुतीर्थस्तीर्थकारी च तीर्थराजो व्रती वतः ।। ६५ ।।
वृत्तिदाता पृथुः पुत्रो दोग्धा गौर्वत्स एव च ।।
क्षीरं क्षीरवहः क्षीरी क्षीरभागविभामवित् ।। ६६ ।।
राज्यभागविदो भागी सर्वभागविकल्पकः ।।

वाहनो वाहको वेगी पादचारी तपश्चरः ।। ६७ ।।
गोपनो गोपको गोपी गोपकन्याविहारकृत्।।
वासुदेवो विशालाक्षः कृष्णोगोपीजनप्रियः ।। ६८ ।।
देवकीनंदनो नंदी नंदगोपगृहाऽऽश्रमी ।।
यशोदानंदनो दामी दामोदर उलूखली ।। ६९।।
पूतनारिः पदाकारी लीलाशकटभंजकः ।।
नवनीतप्रियो वाग्ग्मी वत्सपालकबालकः ।। 5.1.63.१७० ।।
वत्सरूपधरो वत्सी वत्सहा धेनुकांतकृत्।।
बकारिर्वनवासी च वनक्रीडाविशारदः ।। ७१ ।।
कृष्णवर्णाऽऽकृतिः कांतो वेणुवेत्रविधारकः ।।
गोपमोक्षकरो मोक्षो यमुनापुलिनेचरः ।। ७२ ।।
मायावत्सकरो मायी ब्रह्ममायापमोहकः ।।
आत्मसारविहारज्ञो गोपदारकदारकः ।। ७३ ।।
गोचारी गोपतिर्गोपो गोवर्धनधरो बली ।।
इन्द्रद्युम्नो मखध्वंसी वृष्टिहा गोपरक्षकः ।। ७४ ।।
सुरभित्राणकर्ता च दावपानकरः कली ।
कालीयमर्दनः काली यमुनाह्रदविहारकः।।७५।।
संकर्षणो बलश्लाघ्यो बलदेवो हलायुधः।।
लांगली मुसली चक्री रामो रोहिणिनंदनः।।७६।।
यमुनाकर्षणोद्धारो नीलवासा हलो हली।।
रेवती रमणो लोलो बहुमानकरः परः ।। ७७ ।।
धेनुकारिर्महावीरो गोपकन्याविदूषकः ।।
काममानहरः कामी गोपीवासोऽपतस्करः ।। ७८ ।।
वेणुवादी च नादी च नृत्यगीतविशारदः ।।
गोपीमोहकरो गानी रासको रजनीचरः ।। ७९ ।।
दिव्यमाली विमाली च वनमालाविभूषितः ।।
कैटभारिश्च कंसारिर्मधुहा मधुसूदनः ।।5.1.63.१८०।।
चाणूरमर्दनो मल्लो मुष्टी मुष्टिकनाशकृत् ।।
मुरहा मोदका मोदी मदघ्नो नरकांतकृत ।।८१।।
विद्याध्यायी भूमिशायी सुदामा सुसखा सुखी ।।
सकलो विकलो वैद्यः कलितो वै कलानिधिः ।। ८२ ।।
विद्याशाली विशाली च पितृमातृविमोक्षकः।।

रुक्मिणी रमणो रम्यः कालिंदीपतिः शंखहा।।८३।।
पांचजन्यो महापद्मो बहुनायकनायकः।।
धुंधुमारो निकुंभघ्नः शंबरांतो रतिप्रियः।। ८४।।
प्रद्युम्नश्चानिरुद्धश्च सात्वतां पतिरर्जुनः ।।
फाल्गुनश्च गुडाकेशः सव्यसाची धनंजयः ।। ८५ ।।
किरीटी च धनुष्पाणिर्धनुर्वेदविशारदः ।।
शिखंडी सात्यकिः शैब्यो भीमो भीमपराक्रमः ।। ८६ ।।
पांचालश्चाभिमन्युश्च सौभद्रो द्रौपदीपति. ।।
युधिष्ठिरो धर्मराजः सत्यवादी शुचिव्रतः ।। ८७ ।।
नकुलः सहदेव श्च कर्णो दुर्योधनो घृणी ।।
गांगेयोऽथ गदापाणिर्भीष्मो भागीरथीसुतः ।। ८८ ।।
प्रज्ञाचक्षुर्धृतराष्ट्रो भारद्वाजोथ गौतमः ।।
अश्वत्थामा विकर्णश्चजहु?र्युद्धविशारदः।।८९।।
सीमंतिको गदी गाल्वो विश्वामित्रो दुरासदः ।।
दुर्वासा दुर्विनीतश्च मार्कंडेयो महामुनिः ।।5.1.63.१९०।।
लोमशो निर्मलोऽलोमी दीर्घायुश्च चिरोऽचिरी ।।
पुनर्जीवी मृतो भावी भूतो भव्यो भविष्यकः ।। ९१ ।।
त्रिकालोऽथ त्रिलिंगश्च त्रिनेत्रस्त्रिपदीपतिः ।।
यादवो याज्ञवल्क्यश्च यदुवंशविवर्धनः ।। ९२ ।।
शल्यक्रीडी विक्रीडश्च यादवांतकरः कलिः ।।
सदयो हृदयो दायो दायदो दायभाग्दयी ।। ९३ ।।
महोदधि र्महीपृष्ठो नीलपर्वतवासकृत ।।
एकवर्णो विवर्णश्च सर्ववर्णबहिश्चरः ।। ९४ ।।
यज्ञनिंदी वेदनिंदी वेदबाह्यो बलो बलिः ।।
बौद्धारिर्बाधको बाधो जगन्नाथो जगत्पतिः ।। ९५ ।।
भक्तिर्भागवतो भागी विभक्तो भगवत्प्रियः ।।
त्रिग्रामोऽथ नवारण्यो गुह्योपनिषदासनः ।। ९६ ।।
शालिग्रामः शिलायुक्तो विशालो गंडकाश्रयः ।।
श्रुतदेवः श्रुतः श्रावी श्रुतबोधः श्रुतश्रवाः ।। ९७ ।।
कल्किः कालकलः कल्को दुष्टम्लेच्छविनाश कृत्।।
कुंकुमी धवलो धीरः क्षमाकरो वृषाकपिः ।।९८।।
किंकरः किन्नरः कण्वः केकी किंपुरुषाधिपः ।।

एकरोमा विरोमा च बहुरोमा बृहत्कविः ।। ।। ९९ ।।
वज्रप्रहरणो वज्री वृत्रघ्नो वासवानुजः ।।
बहुतीर्थकरस्तीर्थः सर्वतीर्थजनेश्वरः ।। 5.1.63.२०० ।।
व्यतीपातोपरागश्च दानवृद्धिकरः शुभः ।।
असंख्येयोऽप्रमेयश्च संख्याकारो विसंख्यकः ।। १ ।।
मिहिकोत्तारकस्तारो बालचंद्रः सुधाकरः ।।
किंवर्णः कीदृशः किञ्चित्किंस्वभावः किमाश्रयः ।।२।।
निर्लोकश्च निराकारी बह्वाकारैककारकः ।।
दौहित्रः पुत्रिकः पौत्रो नप्ता वंशधरो धरः ।। ३ ।।
द्रवीभूतो दयालुश्च सर्वसिद्धिप्रदो मणिः ।। ।। ४ ।।
आधारोऽपि विधारश्च धरासूनुः सुमंगलः ।।
मंगलो मंगलाकारो मांगल्यः सर्वमंगलः ।। ५ ।।
नाम्नां सहस्रं नामेदं विष्णोरतुलतेजसः ।।
सर्वसिद्धिकरं काम्यं पुण्यं हरिहरात्मकम् ।। ६ ।।
यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।।
यश्चेदं शृणुयान्नित्यं नरो निश्चलमानसः ।। ७ ।।
त्रिसंध्यं श्रद्धया युक्तः सर्वपापैः प्रमुच्यते।।
नंदते पुत्रपौत्रैश्च दारैर्भृत्यैश्च पूजितः ।। ८ ।।
प्राप्नुते विपुलां लक्ष्मीं मुच्यते सर्वसंकटात् ।।
सर्वान्कामानवाप्नोति लभते विपुलं यशः ।। ९ ।।
विद्यावाञ्जायते विप्रः क्षत्रियो विजयी भवेत् ।।
वैश्यश्च धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ।। 5.1.63.२१० ।।
रणे घोरे विवादे च व्यापारे पारतंत्रके ।।
विजयी जयमाप्नोति सर्वदा सर्वकर्मसु ।। ११ ।।
एकधा दशधा चैव शतधा च सहस्रधा ।।
पठते हि नरो नित्यं तथैव फलमश्नुते ।। १२ ।।
पुत्रार्थी प्राप्नुते पुत्रान्धनार्थी धनमव्ययम् ।।
मोक्षार्थी प्राप्नुते मोक्षं धर्मार्थी धर्मसंचयम् ।। १३ ।।
कन्यार्थी प्राप्नुते कन्यां दुर्लभां यत्सुरैरपि ।।
ज्ञानार्थी जायते ज्ञानी योगी योगेषु युज्यते ।। १४ ।।
महोत्पातेषु घोरेषु दुर्भिक्षे राजविग्रहे ।।
महामारीसमुद्भूते दारिद्र्ये दुःखपीडिते ।। १५ ।।

अरण्ये प्रांतरे वाऽपि दावाग्निपरिवारिते ।।
सिंहव्याघ्राभिभूतेऽपि वने हस्तिसमाकुले ।। १६ ।।
राज्ञा क्रुद्धेन चाज्ञप्ते दस्युभिः सह संगमे ।।
विद्युत्पातेषु घोरेषु स्मर्तव्यं हि सदा नरैः ।। १७ ।।
ग्रहपीडासु चोग्रासु वधबन्धगतावपि ।।
महार्णवे महानद्यां पोतस्थेषु न चापदः ।। १८ ।।
रोगग्रस्तो विवर्णश्च गतकेशनखत्वचः ।।
पठनाच्छ्रवणाद्वापि दिव्यकाया भवंति ते ।। १९ ।।
तुलसीवनसंस्थाने सरोद्वीपे सुरालये ।।
बद्रिकाश्रमे शुभे देशे गंगाद्वारे तपोवने ।। 5.1.63.२२० ।।
मधुवने प्रयागे च द्वारकायां समाहितः ।।
महाकालवने सिद्धे नियताः सर्वकामिकाः ।। २१ ।।
ये पठंति शतावर्तं भक्तिमंतो जितेंद्रियाः ।।
ते सिद्धाः सिद्धिदा लोके विचरंति महीतले ।। २२ ।।
अन्योन्यभेदभेदानां मैत्रीकरणमुत्तमम् ।।
मोहनं मोहनानां च पवित्रं पापनाशनम् ।। २३ ।।
बालग्रहविनाशाय शांतीकरणमुत्तमम् ।।
दुर्वृत्तानां च पापानां बुद्धिनाशकरं परम् ।। ।२४ ।।
पतद्गर्भा च वंध्या च स्राविणी काकवन्ध्यका ।।
अनायासेन सततं पुत्रमेव प्रसूयते ।। ।। २५ ।।
पयःपुष्कलदा गावो बहुधान्यफला। कृषिः ।।
स्वामिधर्मपरा भृत्या नारी पतिव्रता भवेत् ।। २६ ।।
अकालमृत्युनाशाय तथा दुःस्वप्नदर्शने ।।
शांतिकर्मणि सर्वत्र स्मर्तव्यं च सदा नरैः ।। २७ ।।
यः पठत्यन्वहं मर्त्यः शुचिष्मान्विष्णुसन्निधौ ।।
एकाकी च जिताहारो जितक्रोधो जितेंद्रियः ।। २८ ।।
गरुडारोहसंपन्नः पीतवासाश्चतुर्भुजः ।।
वाञ्छितं प्राप्य लोकेऽस्मिन्विष्णुलोके स गच्छति ।।२९ ।।
एकतः सकला विद्या एकतः सकलं तपः ।।
एकतः सकलो धर्मो नाम विष्णोस्तथैकतः ।। 5.1.63.२३० ।।
यो हि नामसहस्रेण स्तोतुमिच्छति वै द्विजः।।
सोऽयमेकेन श्लोकेन स्तुत एव न संशयः ।। ३१ ।।

सहस्राक्षः सहस्रपात्सहस्रवदनोज्ज्वलः ।।
सहस्रनामानंताक्षः सहस्रबाहुर्नमोस्तु ते ।। ३२ ।।
विष्णोर्नामसहस्रं वै पुराणं वेदसम्मतम् ।।
पठितव्यं सदा भक्तैः सर्वमंगलमंगलम् ।। ३३ ।।
इति स्तवाभियुक्तानां देवानां तत्र वै द्विज ।।
प्रत्यक्षं प्राह भगवान्वरदो वरदार्चितः ।। ३४ ।।
।। श्रीभगवानुवाच ।। ।।
व्रियतां भोः सुराः सर्वैर्वरोऽस्मत्तोभिवांछितः ।।
तत्सर्वं संप्रदास्यामि नाऽत्र कार्या विचारणा ।। ३५ ।।
।। देवा ऊचुः ।। ।।
वरदोऽसि यदा विष्णो वरमेतं ददस्व नः ।।
अदितेर्गर्भसंभूतः शक्रस्याऽप्यनुजो भव ।। ३६ ।।
इति संप्रार्थितो देवैर्ब्रह्मशक्रपुरोगमैः ।।
तथेत्युक्त्वा च भगवांस्तत्रैवांऽतरधीयत ।। ३७ ।।
ततः कतिपये काले भगवानदितिनंदनः ।।
विष्णुरूपधरो ऽनंतो वामनत्वाच्च वामनः ।। ३८ ।।
बलिर्वैरोचनो व्यास वाजिमेधशतेन च ।।
ईजे द्विजवरश्रेष्ठ इंद्रराज्यजिहीर्षया ।।३९।।
ऋत्विजं कश्यपं कृत्वा होतारं भृगुसत्तमम् ।।
ब्रह्मा तत्राभवच्चैव स्वयमेव पितामहः ।। 5.1.63.२४० ।।
अध्वर्युर्भगवानत्रिर्बभूव मुनिसत्तमः ।।
उद्गाता नारदश्चैव वसिष्ठश्च सभासदः ।। ४१ ।।
ये यत्र विहिताः सर्वे तत्र तत्र मुनीश्वराः ।।
बलिस्तत्राऽभवद्व्यास दीक्षितो राजसत्तमः ।। ४२ ।।
एवं प्रवर्तमानेषु यज्ञेषु मुनिसत्तम ।।
हूयतां भुज्यतां चैव दीयतां धीयतां तथा ।। ४३ ।।
इति वाचः शुभास्तत्र श्रूयंते च द्विजोत्तम ।।
तस्मिन्काले सुचित्रेषु वामनोऽगाच्छुचिस्मितः ।। ४४ ।।
पठमानो मुखाग्रेण चातुर्वेदिकमंत्रकान् ।।
द्वारे तिष्ठति राजेंद्र वामनो द्विजसत्तमः ।। ४५ ।।
प्रतिहारेण वै व्यास सर्वं राज्ञे निवेदितम् ।।
उत्थाय च महाराजो बलिर्वैरोचनिस्तदा ।। ४६ ।।

अर्घ्यमादाय तत्सर्वं जगाम स्वैः सभासदैः ।।
पूजयित्वा यथान्यायं वामनं लोकभावनम् ।। ४७ ।।
आनयित्वा सभामध्ये दत्त्वाऽऽसनपरिग्रहम् ।।
कुतस्त्वागमनं ब्रह्मन्किं तेऽभीष्टं ददामि वै ।। ४८ ।। ।।
।। वामन उवाच ।। ।।
राजराजाखिला सृष्टिर्ब्रह्मणः परमेष्ठिनः ।।
ततोऽहमागतो भूमन्यज्ञं चैव दिदृक्षया ।। ४९ ।।
वरुणस्य च यज्ञो वै दृष्टो मे वै पुरानघ ।।
यक्षाधिपतेर्नूनं च यज्ञं वै दृष्टवानहम् ।। 5.1.63.२५० ।।
धर्मस्याऽपि च यज्ञो मे प्रजापतेश्च सत्तम ।।
वायोर्यज्ञो महाराज दृष्टो मे विधिपूर्वकः ।। ५१ ।।
राजर्षीणां च ये यज्ञा दृष्टास्तेऽपि महाव्रत ।।
यादृशं वै महाराज यज्ञं ते दृष्टवानहम् ।। ५२ ।।
ईदृशो राजराजेंद्र न भूतो न भविष्यति ।।
तस्मादिहागतो राजन्याचनार्थं तवाऽनघ ।। ५३ ।।
।। बलिरुवाच ।। ।।
याचस्व त्वं द्विजश्रेष्ठ किं तेऽभीष्टं ददाम्य हम् ।।५४।।
।। वामन उवाच ।। ।।
देहि मे राजराजेंद्र पदानि त्रीणि मेदिनीम् ।।
वासार्थं रोचते तेऽद्य यदि पार्थिवसत्तम ।।५५।।
।। बलिरुवाच।। ।।
किमिदं याचितं विप्र स्वल्पं ते नहि ते परम् ।।
गजवाजिरथाः क्षोणी रत्नानि विविधानि च ।। ५६ ।।
दासदासीर्वरारोहाः स्त्रियो नाना वसूनि च ।।
द्रव्याणि वाससी शुभ्रे याचस्व त्वं द्विजोत्तम ।।५७।।
पात्रोऽसि कृतकृत्योऽसि वेदवेदांगपारग।।५८।।
।। वामन उवाच ।। ।।
न मे किंचित्स्पृहा राज न्विद्यते भुवि मानद ।।
देहि त्वं त्रिपदां भूमिं यदि श्रद्धाऽस्ति तेऽधुना ।। ५९ ।।
इत्युक्ते वामनेनाथ बलिर्वचनमब्रवीत् ।।
गृहाण त्रिपदां भूमिं वासस्यार्थं हि मानद ।। 5.1.63.२६० ।।
इत्युक्त्वा स च राजर्षिर्ददौ भूमिं द्विजाय वै ।।

वारितोऽपि तदा व्यास भृगुणा दैवनोदितः ।। ६१ ।।
दत्तमात्रे जले सद्यो ब्रह्माण्डं चाक्रमद्धरिः ।।
सार्धं पादद्वयं जाता सशैलवनकानना ।। ६२ ।।
वसुधेयं तदा व्यास बलिना चार्पितं वसु ।।
जित्वाऽसुरगणान्त्सर्वा न्राज्यं दत्त्वा शतक्रतोः ।। ६३ ।।
पश्चात्कुमुद्वतीं प्राप्तो विष्णुर्वामनरूपधृक् ।। ६४ ।।
ऋद्धिसिद्ध्याश्रमे पुण्ये तीर्थं कृत्वाऽऽत्मसंभवम्।।
निवासमकरोद्व्यास तत्रैव स सुरोत्तमः ।। ६५ ।।
वामनेन कृतं तीर्थं वामनं कुण्डमुच्यते ।।
भाद्रे मासि सिते पक्षे द्वादशी श्रवणान्विता ।। ६६ ।।
वामन द्वादशी प्रोक्ता हत्याकोटिविनाशिनी ।।
अस्मिंस्तीर्थे नरः स्नात्वा ह्युपोष्यैकादशीं यदा ।। ६७ ।।
रात्रौ जागरणं कुर्याद्ब्रह्मभूयाय कल्पते ।।
द्वादश्यां वै विशेषेण महादानानि कुर्वते ।। ६८ ।।
न तेषां दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।।
एवं वै वामनं तीर्थं पुरा प्रोक्तं महर्षिणा ।। ।। ६९ ।।
सर्वपापहरं पुण्यं सर्वकामवरप्रदम् ।।
प्राप्यते तेन सर्वं हि नात्र कार्या विचारणा ।। 5.1.63.२७० ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये वामनकुण्डमहिमविष्णुसहस्रनामकथनंनाम त्रिषष्टितमोऽध्यायः ।। ६३ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६४

https://sa.wikisource.org/s/fk8



।। सनत्कुमार उवाच ।। ।।
अतः परं प्रवक्ष्यामि वीरेश्वरमथो शृणु ।।
तस्मिंस्तीर्थे नरः स्नात्वा वीरलोकमवाप्नुयात् ।। १ ।।
नागानां प्रवरं तीर्थं सर्वकामवरप्रदम् ।।
कालभैरवमित्याख्यं तच्च तीर्थं परं स्मृतम् ।। २ ।।
यस्य दर्शनमात्रेण सर्वदुःखातिगो भवेत् ।। ३ ।।
।। व्यास उवाच ।। ।।
कस्मिन्काले हि विख्यातं कालभैरवसंज्ञितम् ।।
तीर्थं मुनिवरश्रेष्ठ एतद्विस्तरतो वद ।। ४ ।।
।। सनत्कुमार उवाच ।। ।।
पुराऽयं भैरवो योगी योगिनीत्रासकारकः ।।
कालचक्रकृताः कृत्या योगिनीनां गणास्तदा ।। ५ ।।
तासां कालीति विख्याता योगिनी परमोत्तमा ।।
तयायं पालितो नित्यं पुत्रवद्भैरवोऽमलः ।। ६ ।।
तेनैते च विनिर्धूता दोषोत्पाताश्च सत्तम ।।
त्रिविधा भुवि विख्याताः सर्वविघ्नकराः पराः ।। ७ ।।
कालकृत्यास्तदा तेन भ्रंशिताः परमात्मना।।
महामारी पूतना कृत्या शकुनी रेवती खला।।८।।
कोटरी तामसी माया नवैता मातृकाः स्मृताः।।
दुष्टदोषवहा दुष्टाः सर्वप्राणिभयंकराः ।।९।।
वशीचक्रे स धर्मात्मा सर्वकामवरप्रदाः ।।
शिप्रातीरे स्थितो नित्यं कूले चोत्तरतः शुभे ।।5.1.64.१०।।
ऊषरस्य परे पूर्वे सोऽपि तिष्ठति सर्वदा ।।
आषाढस्य सिते पक्षे रविवारे समाहितः ।।११ ।।
नवमीं चाऽष्टमीं प्राप्य चतुर्दश्यां विशेषतः ।।
पूजां कुर्वंति ये केचिन्नरा निश्चलमानसाः ।। १२ ।।

विवाहे पुत्रजनने मांगल्ये च शुभे परम् ।।
पत्रपुष्पार्कगंधैश्च नैवेद्यैर्विविधैस्तथा ।। १३ ।।
तांबूलवासगंधाद्यैः पूजयेद्वरद रूपिणम् ।।
विप्राणां भोजनैर्होमैस्तर्पयेत्सततं विभुम् ।। १४ ।।
एतत्परमकल्याणमेतत्परममंगलम् ।।
नत्वा स्तुत्वा च तं देवं सर्वकामार्थसिद्धये ।। ।। १५ ।।
सकलकलुषहारी धूर्तदुष्टांऽतकारी सुचिरचरितचारी मुंडमौंजीप्रचारी ।।
करकलितकपाली कुण्डली दंडपाणिः स भवतु सुखकारी भैरवो भावहारी ।। १६ ।।
विविधरासविलासविलासितं नववधूरवधूतपराक्रमम् ।।
मदविघूर्णितगोष्पदगोष्पदं भवपदं सततं सततं स्मरे ।। १७ ।।
अमलकमलनेत्रं चारुचंद्रावतंसं सकलगुणगरिष्टं कामिनीकामरूपम् ।।
परिहृतपरितापं डाकिनीनाशहेतुं भज जन शिवरूपं भैरवं भूतनाथम् ।।। ।। १८ ।।
सबलबलविघातं क्षेत्रपालैकपालं विकटकटिकरालं ह्यट्टहासं विशालम् ।।
करगतकरवालं नागयज्ञोपवीतं भज जन शिवरूपं भैरवं भूतनाथम् ।। १९ ।।
भवभयपरिहारं योगिनीत्रासकारं सकलसुरगणेशं चारुचंद्रार्कनेत्रम् ।।
मुकुटरुचिरभालं मुक्तमालं विशालं भज जन शिवरूपं भैरवं भूतनाथम् ।। 5.1.64.२० ।।
चतुर्भुजं शंखगदाधराऽऽयुधं पीतांबरं सांद्रपयोदसौभगम् ।।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं शीलप्रदं शंकररक्षणं भजे ।। २१ ।।
लोकाऽभिरामं भुवनाभिरामं प्रियाभिरामं यशसाभिरामम् ।।
कीर्त्याभिरामं तपसाऽभिरामं तं भूतनाथं शरणं प्रपद्ये ।। २२ ।।
आद्यं ब्रह्मसनातनं शुचिपरं सिद्धिप्रदं कामदं सेव्यं भक्तिसमन्वितं हरिहरैः सृष्ट्यासहं साधुभिः ।।
योग्यं योगविचारितं युगधरं योग्याननं योगिनं वंदेहं सकलं कलंकरहितं सत्सेवितं भैरवम् ।। २३ ।।
भैरवाष्टकमिदं पुण्यं प्रातःकाले पठेन्नरः ।।
दुःस्वप्ननाशनं तस्य वांछितार्थफलं भवेत्। ।। २४ ।।
राजद्वारे विवादे च संग्रामे संकटेतथा।।
राज्ञा क्रुद्धेन चाऽऽज्ञप्ते शत्रुबंधगते तथा ।। २५ ।।
दारिद्र्यदुःखनाशाय पठितव्यं समाहितैः ।।
न तेषां जायते किंचिद्दुर्लभं भुवि वांछितम् ।।२६।।
।। इति भैरवाष्टकम् ।। ।।
अस्मिंस्तीर्थे प्रकर्तव्यं स्नानदानादिकं नरैः।।
संसारभयभीतैश्च पूजितो भैरवो वरः ।।

तस्मात्सर्वप्रयत्नेन कर्तव्यं तीर्थमुत्तमम्।। २७ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे ऽवन्तीक्षेत्रमाहात्म्ये कालभैरवतीर्थयात्रावर्णनंनाम चतुःषष्टितमोऽध्यायः ।। ६४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६५

https://sa.wikisource.org/s/fk7
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीक्षेत्रमाहात्म्यम्

।। व्यास उवाच ।। ।।
नागतीर्थं त्वया ब्रह्मन्पुरा प्रोक्तं यशस्विना ।।
तस्य तीर्थवरस्याऽपि महिमानं च सत्तम ।। १ ।।
भूयस्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।।
कियत्काले समाख्यातमेतद्विस्तरतो वद ।। २ ।।
।। सनत्कुमार उवाच।। ।।
शृणु ब्रह्मन्प्रवक्ष्यामि तवाग्रे नागतीर्थजाम् ।।
कथां पुण्यतमां तुभ्यं भुवि पापहरां पराम् ।। ३ ।।
यस्याः श्रवणमात्रेण शापमुक्तो भवेन्नरः ।।
पुरा नागाः परिभ्रष्टा मातुः शापात्परंतप ।। ४ ।।
जनमेजयेन दग्धास्ते मोक्षिता ह्यास्तिकेन च ।।
पप्रच्छुस्ते द्विजश्रेष्ठ जरत्कार्वात्मजं तदा ।। ५ ।।
।। नागा ऊचुः ।। ।।
ब्रह्मंस्तव प्रसादेन मोक्षिता हव्यवाहनात् ।।
जनमेजयस्य यज्ञेस्मिन्देवराजस्य संनिधौ ।। ६ ।।
अस्माकं भूतिमन्विच्छन्वासस्यार्थं परंतप ।।
यस्मिन्स्थाने सदा ब्रह्मन्निवासो जायतेऽभयः ।।७ ।।
।। आस्तीक उवाच ।। ।।
श्रूयतां मातुलश्रेष्ठा युष्माकं हितमुत्तमम् ।।
महाकालवने रम्ये या वै कुशस्थली स्मृता ।। ८ ।।
तस्यां हि दक्षिणे भागे पूर्वतीर्थं सना तनम्।।
नागालयं पुरा प्रोक्तं यत्र सन्निहितो हरिः ।। ९ ।।
योगनिद्रां समासाद्य शेते ब्रह्म सनातनम् ।।
शेषशायीति विख्यातः सर्वलोकेषु गीयते ।। १० ।।
कल्पदोषो न तत्रैव बाधते सवदेहिनाम्।।
बकदाल्भ्य ऋषिस्तत्र तपस्तेपे धृतव्रतः ।। 5.1.65.१० ।।

लोमशश्च महातेजास्तत्रैव प्रतितिष्ठति ।।
दीर्घायुष्ट्वं समापन्नो मार्कंडेयो महामुनिः ।। १२ ।।
न वर्तते कालचक्रं महाकालप्रतापतः ।।
कपिलः सिद्धिमापन्नो यत्र तीर्थवरोत्तमे ।।१३।।
हरिश्चंद्रो विमुक्तोऽभूद्गर्ह्यचण्डालयोनितः।।
सप्तर्षिप्रवरा ये ते निर्वाणपदवीं गताः ।।१४।।
एतस्मात्कारणात्सर्वैस्तत्र विश्रम्यतां सदा।।
मातुः शापोद्भवो दोषो युष्माकं नैव बाधते।।१५।।
एतत्ते वचनं श्रुत्वा महर्षेरास्तिकस्य च।।
आगच्छंस्तत्र ते शीघ्रं वासार्थं पन्नगोत्तमाः।।१६।।
एलापत्रः कंबलश्च कर्कोटकधनंजयौ।।
वासुकिः पन्नगश्रेष्ठस्तक्षको नील एव च।।१७।।
पद्मकश्चार्बुदश्चैव नागास्ते सर्व एव हि।।
अत्रागत्य स्वस्वस्थानानि चक्रुस्ते सुचिरव्रताः।।१८।।
तत्र रम्याणि तीर्थानि जातानि परमाणि च।।
नवानि चक्रुः कुंडानि तीर्थभूतानि सत्तम।।१९।।
महापुण्यप्रदान्याहुर्महापापहराणि च ।।
यत्र सिद्धाश्च गंधर्वा ऋषयः संशितव्रताः ।। 5.1.65.२० ।।
अप्सरोगणसंघैश्च सेव्यंते च सदा वरैः ।।
यत्र शेषो महानागः पुरा प्रोक्तो महर्षिणा ।। २१ ।।
शेषशायी ह्यलं विष्णुर्भगवान्कमलेक्षणः ।।
तत्र सर्वाणि तीर्थानि तिष्ठंति भुवि सर्वदा ।। २२ ।।
श्वेतद्वीपेति विख्याता मणिविक्रांतभूमिका ।।
यत्र पुण्याश्च वै वृक्षाः पुष्पिताश्चैव सर्वशः ।। २३ ।।
हंसकारंडकाकादि पिककोकिलसारसाः ।।
पद्मखंडगणास्तत्र नृत्यंति च शिखंडिनः ।। २४ ।।
निधिरेष महापद्मो नीलोत्पलसुगंधिना ।।
वासितो वायुना शुभ्रः किन्नरोद्गारनादितः ।। २५ ।।
यत्र सुसंस्कृता नार्यो विहरंति सुरांगनाः।।
नागकन्याभी रम्याभिर्मंडितं परमाद्भुतम् ।।२६।।
यत्र स्नात्वा नरो याति वैकुंठं धाम शोभनम् ।।
शेषशायी हरिर्यत्र शेते हि च रमापतिः ।। २७ ।।

तत्र रमासरो नाम तीर्थं परमशोभनम् ।।
यत्र स्नात्वा नरो नित्यं श्रीमान्भवति नाऽन्यथा ।।२८।।
एवं व्यास परं स्थानं सर्वपापहरं परम् ।।
अत्रैव च परं तीर्थं बलेराश्रममद्भुतम् ।। २९ ।।
अत्र स्नानादिकं कार्यं यत्र संनिहितो हरिः ।।
सर्वपापविशुद्धात्मा नरो भवति तत्क्षणात् ।। 5.1.65.३० ।।
कियत्प्रमाणमात्रां च ये ददति वसुंधराम् ।।
तनूरुहाणि यावन्ति तावत्कालसुसंख्यया ।। ३१ ।।
अक्षय्या लभ्यते वृद्धिस्तेषां लोकाः सनातनाः ।।
श्रावणे मासि दर्शे च पंचम्यां सोमवासरे ।। ३२ ।।
नागानां पूजनं कार्यं श्राद्धं दर्शे विधीयते ।।
अक्षयं जायते श्राद्धं वांछितार्थं भवेत्ततः ।। ३३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये तीर्थयात्रायां नागतीर्थमहिमवर्णनंनाम पंचषष्टितमोऽध्यायः ।। ६५ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६६



।। सनत्कुमार उवाच ।। ।।
भूयः शृणु परं व्यास तीर्थानामुत्तमं वरम् ।।।
तत्तीर्थं सर्वपापघ्नं नृसिंहस्य महात्मनः ।। १ ।।
यस्य दर्शनमात्रेण सर्वपापं समुत्तरेत् ।।
दैत्यराजः समाख्यातो हिरण्यकशिपुः पुरा ।। २ ।।
तेनेयं वसुधा सर्वा संप्राप्ता च दुरात्मना ।।
दुष्टदैत्यबलैर्व्याप्ता भाराक्रांता शुचार्दिता ।। ३ ।।
गौर्भूत्वाऽश्रुमुखी देवैर्ब्रह्माणं शरणं ययौ ।।
भाराक्रांतां धरां दृष्ट्वा ब्रह्मा लोकपितामहः ।। ४ ।।
उवाच श्लक्ष्णया वाचा तस्याः श्रमं व्यपोहितुम् ।।
श्रूयतां भोऽवने पुण्ये भवत्या उपकारकम् ।। ५ ।।
वचो वदामि ते तथ्यं देशकालोचितं तथा ।।
पुराऽनेन तपश्चीर्णं दुष्करं सर्वदेहिनाम् ।। ६ ।।
गायत्र्युपासना तेन कृता सुनियतात्मना ।।
मया चास्य वरो दत्तः प्रीतियुक्तेन चेतसा ।। ७ ।।
न दिवा न तथा रात्रौ नांतरिक्षे न भूतले ।।
नातिशुष्केण चार्द्रेण न चास्त्रशस्त्रघातनैः ।। ८ ।।
न देवासुर गंधर्वैर्न यक्षोरगकिन्नरैः ।।
पिशाचैर्गुह्यकाद्यैश्च राक्षसैर्न कदाचन ।। ९ ।।
मानवैः पक्षिजातैश्च न मे मृत्युर्भवेदिति ।।
एककरतलाघातैः सकुलबलवाहनम् ।। 5.1.66.१ ०।।
मारयिष्यति मां वीरः स मे मृत्युर्भविष्यति ।।
तथेत्युक्त्वाऽतिहृष्टात्मा तमहं च तदाऽवने ।।११।।
आगमं चैव लोकं स्वं स दैत्यो घोरशासनः ।।
बभूव सर्वलोकानां शास्ता चातुलविक्रमः ।। १२ ।।
तस्यैवाऽधिकृता लोके बभूवुर्विगतज्वराः ।।

त्रैलोक्यं बुभुजे नित्यं सर्वदैत्यजनेश्वरः ।।१३।।
तस्माद्यूयं वनं यात महाकालं महेशितुः ।।
तत्र तीर्थं महच्चासीत्सर्वतीर्थवरोतमम् ।।१४।।
संगमेश्वरस्य दक्षिणे कर्कराजोत्तरे तथा ।।
शिप्रातीरे शुभे देशे पूर्वं वैकुण्ठसन्निभम् ।। १५ ।।
नृसिंहाख्यं परं धाम तस्य तीर्थं प्रतिष्ठितम् ।।
तत्र गत्वा सुरश्रेष्ठाः स्नानदाना दिकाः क्रियाः ।। १६ ।।
कुरुत सत्वरं सर्वे पुनर्लोकानवाप्स्यथ ।।
ते तस्य वचनं श्रुत्वा देवा इन्द्रपुरोगमाः ।। १७ ।।
महाकालवनं प्राप्ता यत्र शिप्रा पयस्विनी ।।
नृसिंहतीर्थोपकूले उषित्वा शाश्वतीः समाः ।। १८ ।।
स्नानदानादिकं कृत्वा नृसिंहस्याऽर्चनं तथा ।।
एवं कृत्वा विधानेन परां सिद्धिमितो गताः ।। १९ ।।
नृसिंहस्य स्वरूपेण हतो दानवपुंगवः ।।
सभामध्ये तदा व्यास हरिणाऽमित्रघातिना ।। 5.1.66.२० ।।
करेणैकप्रहारेण हिर ण्यकशिपुर्हतः ।।
ततः सुरगणाः सर्वे स्वाधिकारान्ययुस्तदा ।। २१ ।।
तदारभ्य सुराः सर्वे मध्याह्नोह्नोपासनं सदा ।।
प्रकुर्वंति च तत्रैव यत्र तीर्थे हरिः परम् ।। २२ ।।
एवं तीर्थं परं व्यास अवंत्यां विद्यते भुवि ।।
अस्मिंस्तीर्थे द्विजश्रेष्ठ स्नानदानादिकाः क्रियाः ।। २३ ।।
ये कुर्वंति नराः पुण्यास्ते यांति परमां गतिम् ।।
सर्वदा सर्वकालेषु पुण्यदं तीर्थमुत्तमम् ।। २४ ।।
कदाचिन्नृसिंहतिथिं प्राप्य चैव चतुर्दशीम् ।।
स्नानं कृत्वाऽर्चनं तस्य नृसिंहस्य च धीमतः ।। २५।।
नृसिंहेश्वरदेवेशं पूजयेद्यः समाहितः ।।
तस्य हस्तगता लक्ष्मीर्भविष्यति न संशयः ।। २६ ।।
ततोऽगस्त्येश्वरं देवं यः पश्येत्युसमाहितः ।।
तस्य व्यास क्षितौ किंचिद्दुर्लभं नैव दृश्यते ।। २७ ।।
यत्र सिद्धिं परां प्राप्तो हनुमान्पवनात्मजः ।।
ब्रह्मचारी सदाचारो यतिः सर्वार्थसाधकः ।। २८ ।।
तिष्ठति परदैवज्ञः सर्वकामार्थसिद्धये ।।

यस्मिन्वटे पुरा तप्तं तपः परमदुश्चरम् ।। २९ ।।

मित्रावरुणपुत्रेण सिद्धिहेतोस्तपस्विना ।।

बोधी न्यग्रोध इत्याख्यो ह्यगस्तिवट एव च ।। 5.1.66.३० ।।

नरो नारीसमायुक्तः सावित्रीव्रतमाचरेत् ।।

सौभाग्यं लभते नित्यं सावित्र्याश्च परंतप ।।३१।।

यस्मिंस्तीर्थे नरः स्नात्वा दत्त्वा दानं च सौभगम् ।।

अष्टसौभाग्यसंपूर्णं वंशपात्रं सवासकम् ।। ।। ३२ ।।

सप्तधान्यसमोपेतं पंचरत्नपरिष्कृतम् ।।

सौगंध्यादीनि माल्यानि मौलिसूत्रसमायुतम् ।। ३३ ।।

सावित्रीं हाटकीं कृत्वा यथाशक्ति परंतप ।।

यो वै ददाति विप्राय वेदवेदांगधीमते ।। ३४ ।।

लभते विपुलां लक्ष्मीं बहुभोगकरीं शुभाम् ।।

भुक्त्वा वै विविधान्भोगान्पुनः स्वर्गमवाप्नुयात् ।। ३५ ।।

सावित्रीव्रतकृन्नारी जायते पतिवल्लभा ।।

पतिव्रता महाभागा विधवा न कदाचन ।। ३६ ।।

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे अवन्तीक्षेत्रमाहात्म्ये नृसिंहतीर्थमहिमवर्णनंनाम षट्षष्टितमोऽध्यायः ।। ६६ ।। ।। सनत्कुमार उवाच ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६७

https://sa.wikisource.org/s/fju



शृणु व्यास परं तीर्थं भुवि विख्यातमुत्तमम् ।।
कुटुम्बेश्वरेति विख्यातो नाम्ना चैव महेश्वरः ।। १ ।।
तस्य तीर्थवरं तीर्थं सर्वतीर्थफलप्रदम् ।।
यस्मिंस्तीर्थे नरः स्नात्वा कुटुम्बी जायते ध्रुवम् ।। २ ।।
कुटुम्बार्थं तपस्तेपे पुरा दक्षः प्रजापतिः ।।
नारदेन पुरा व्यास पुत्रषष्टिर्विवासिता ।। ३ ।।
प्रजाकामः स धर्मात्मा सुचिरं व्रतमाचरत् ।।
सपत्नीको महातेजा निराहारो जितेन्द्रियः ।। ४ ।।
अस्मिंस्तीर्थे शुचिः स्नातो जपन्ब्रह्म सनातनम् ।।
वर्षाणामयुतं व्यास तपस्तेपे सुदारुणम् ।। ५ ।।
तेन तीर्थप्रसादेन लभेत्स बहुलां प्रजाम्।। प्र
जापतिरिति ख्यातो जातो दक्षः प्रतापवान्।। ६ ।।
ब्रह्माऽपि तत्र वै पश्चात्तपः कृत्वा सुदुष्करम् ।।
निष्कलं कमलं रूपं प्राप्तवांस्तत्क्षणाद्विधिः ।। ७ ।।
महादेवोऽपि तत्रैव प्राप्तवान्ब्रह्मणः पदम् ।।
चतुर्मुखधरं लिंगं दृश्यतेऽद्यापि सत्तम ।। ८ ।।
भद्रपीठधरा देवी भद्रकालीति विश्रुता ।।
तत्रैव च सदा व्यास क्रीडति स्म धृतव्रता ।। ९ ।।
द्वारे तिष्ठति तत्रैव भैरवः क्षेत्रपालकः ।।
पादेन खंजतां यातः पुरा दैत्यवरार्दितः ।। 5.1.67.१० ।।
पुत्रवत्पालितो देव्या सदा तिष्ठति तत्स्थले ।।
ये ते देवगणाः सर्वे तस्मिंस्तीर्थे प्रतिष्ठिताः ।। ११ ।।
ऋषयोऽपि महाभागाः सदा पर्वणिपर्वणि ।।
आयांति चैव संध्यार्थं बहुपुत्रप्रदे सरे ।। १२ ।।
अस्मिंस्तीर्थे सदाचाराः स्नानं कुर्वन्ति ये नराः ।।
न तेषां दुर्लभं किंचिज्जायते जन्मजन्मनि ।। १३ ।।

महाबाधासु घोरासु महामारीषु तत्परैः ।।
हवनं क्रियते नित्यं सर्षपै राजिकैर्यवैः ।। १४ ।।
पायसै र्विविधैर्भोगैस्तेषां दोषो न जायते ।।
दुर्भिक्षे राज्यभ्रंशे च संग्रामे भृशदारुणे ।। १५ ।।
पूजयेत्क्षेत्त्रपालं च सर्वाऽऽपदि समाहितः ।।
सर्वदुःखवि निर्मुक्तो जायते नाऽत्र संशयः ।। १६ ।।
स्नात्वा कुटुंबके तीर्थे पूजयित्वा महेश्वरम् ।।
दानं कूष्मांडकं दद्याद्ब्राह्मणाय तपस्विने ।।१७।।
सौवर्णमणि मुक्ताभिर्वासोऽलंकारसंयुतम् ।।
धनधान्यसमायुक्तः कुटुंबी जायते नरः ।। १८ ।।
फाल्गुने च सिते पक्षे या वै चतुर्दशी भवेत् ।।
त्रयोदशीयुता व्यास शिवरात्रिस्तथोच्यते ।। १९ ।।
तद्दिने च नरः स्नात्वा रात्रौ जागरणं चरेत् ।।
बिल्वोदकेन गंधेन बहुपुष्पफलैस्तथा ।। 5.1.67.२० ।।
धूपैर्दीपैश्च नैवेद्यैर्वासोऽलंकारकादिभिः ।।
पूजयेद्यो नरो भक्त्या गिरीशं सगणं परम् ।। २१ ।।
तस्य पापं क्षयं याति शिवलोके महीयते ।।
द्वादशैकादशीपुण्यं लभते भुवि मानवः ।। २२ ।।
अश्वमेधफलं तस्य जागरे च क्षणेक्षणे ।।
ततस्तु प्रातरुत्थाय स्नानदानादिकाः क्रियाः ।। २३ ।।
कृत्वा तु विधिवद्व्यास शिवपूजाऽर्चनं तथा ।।
विप्रांश्च भोजयेत्सप्त तस्य पुण्यफलं शृणु ।। २४ ।।
कपिलानां सवत्सानां सहस्राणि चतुर्दश ।।
वाजपेय सहस्रस्य फलं प्राप्नोति नान्यथा ।। २५ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्र माहात्म्ये कुटुंबेश्वरमाहात्म्यवर्णनंनाम सप्तषष्टितमोऽध्यायः ।। ६७ ।। ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६८



।। सनत्कुमार उवाच ।। ।।
शृणु व्यास महापुण्यं तीर्थं परमशोभनम् ।।
देवप्रयागमाख्यातं सर्वपापप्रणाशनम् ।। १ ।।
देवानां च परं स्थानं यत्र तीर्थं परंतप ।।
सोमतीर्थोत्तरे भागे प्रयागस्य च दक्षिणे ।। २ ।।
क्षिप्रायाः पूर्वभागे च तत्र तीर्थं प्रतिष्ठितम् ।।
तत्र तीर्थे नरः स्नात्वा पश्येच्चैव सुरोत्तमम् ।। ३ ।।
देवं माधवमित्याख्यं भुवि सर्वफलप्रदम् ।।
ददाति तस्य देवेंद्रो वांछितार्थं जगत्पतिः ।। ४ ।।
आनंदभैरवस्तत्र सर्वदेवनमस्कृतः ।।
यस्य दर्शनमात्रेण सर्वपापक्षयो भवेत् ।। ।। ५ ।।
न तस्य जायते व्यास यातना भैरवी कदा ।।
स्वर्गद्वारे सदा व्यास जायते निर्भयः पुमान् ।। ६ ।।
ज्येष्ठे मासे सिते पक्षे दशम्यां बुध हस्तयोः ।।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ।।
दशाला जायते वत्स गंगाजन्म परं शुचि ।।७।।
तद्दिने च नरः स्नात्वा सर्वतीर्थफलं लभेत्।।
अखण्डं च परं तीर्थं शृणु व्यास ह्यतः परम् ।।८।।
यस्य श्रवणमात्रेण व्रतभंगो न जायते ।।
एक एव पुरा ब्रह्मन्ब्राह्मणो ब्रह्मवित्तमः।।९।।
धर्मशर्मेति विख्यातः सदाचाररतः शुचिः ।।
बहुव्रतधरो दांतो वेदवेदांगपारगः।। 5.1.68.१०।।
किंचिद्दोषप्रसंगेन व्रतपूर्तिर्न चाभवत् ।।
एवं बहुतिथे काले नारदो देवदर्श नः ।।११।।
तस्य गेहागतो ब्रह्मन्नातिथ्यार्थं महातपाः ।।
तदोत्थाय द्विजो नित्यं बहुमानपुरःसरम् ।।१२।।
सत्कृत्य नारदं भूमन्विधिदृष्टेन कर्मणा ।।

पूजयित्वा द्विजश्रेष्ठः पप्रच्छ मुनिसत्तम ।। १३ ।।
भगवन्भवता सर्वं विदितं ज्ञानचक्षुषा ।।
अस्माकं च परं दोषः किंचिज्जातः पुराऽनघ ।। १४ ।।
येन पापप्रसंगेन व्रतभंगोऽभवद्ध्रुवम् ।।
कारणं ब्रूहि मे नाथ किं दोषोऽत्र तु गण्यते ।। १५ ।।
।। नारद उवाच ।। ।।
श्रूयतां भो द्विजश्रेष्ठ भवद्भिश्च पुराकृतम् ।।
महाराष्ट्रे सुविख्यातो ब्राह्मणो धनसंचकः ।। १६ ।।
ब्रह्मदत्तेत्यसौ विप्रो वेदब्राह्मणनिंदकः ।।
धनलोभी पराक्रांतः सर्वधर्मबहिर्मुखः ।। ।। १७ ।।
नास्तिको देवतीर्थेषु परद्रव्यापहारकः ।।
परस्त्रीषु रतो नित्यं द्यूतवादी च तस्करः ।। १८ ।।
एवमायुःपरिक्षीणो धनहीनोऽभवत्तदा ।।
इतस्ततोऽभ्रमद्भ्रष्टो नदीतीरे सुविह्वलः ।। १९ ।।
गतश्चौर्यप्रसंगेन यात्रिकैः सह संगतः ।।
किंचित्कालेषु दुःशीलो मृतिं प्राप्तो रुजार्दितः ।। 5.1.68.२० ।।
नीतः संयमिनीं विप्रस्तत्कालं यमकिंकरैः ।।
यमराजपुरं प्राप्तो बहुपापकरो द्विजः ।।२१।।
दृष्टोऽसौ धर्मराजेन तदा पत्यपरायणः।।
निरीक्ष्य सहसोवाच धर्मपूर्वमिदं वचः ।।२२।।
शृणुध्वं किंकराः सर्वे यूयमेकाग्रमानसाः ।।
अनेनाचरितं सर्वं दुष्कर्म सर्वकिल्बिषम् ।। २३ ।।
गोदातीरे मृतः पापी तत्र नः कारणं न हि।।
तिस्रःकोट्योऽर्धकोटिश्च यानि तीर्थान्यहर्निशम् ।।२४।।
आयांति गौतमीतीरे सिंहस्थेऽपि बृहस्पतौ ।।
तेषां तु वायुसंस्पर्शो जातोस्यांते कलेवरे ।। २५ ।।
तेन पुण्यप्रभावेन नोऽस्माकं कारणं क्वचित् ।।
ग्राह्यो भवद्भिर्नैवायं मुच्यतां भोः पुरःसराः ।। २६ ।।
एवं तैर्मोचितो विप्रः पुनर्ब्रह्मगतिं गतः ।।
तेन पापप्रसंगेन व्रतभंगी गतो भुवि ।। २७ ।।
।। ब्राह्मण उवाच ।। ।।
ब्रह्मन्केन प्रकारेण सर्वपापक्षयो भवेत् ।।

किं तपः किं च दानं च किं तीर्थव्रतसेवनम् ।। २८ ।।
येन पुण्यप्रभावेन व्रतभंगो न जायते ।। २९ ।।
।। नारद उवाच ।। ।।
शृणु द्विजवरश्रेष्ठ महाकालवनं स्मृतम् ।।
यत्र रुद्रसरः प्रोक्तमृषिणा तत्त्वदर्शिना ।। 5.1.68.३० ।।
कोटिकोटिसुतीर्थानि वर्तंते द्विजसत्तम।।
कोटितीर्थेति विख्यातं तस्माद्द्विज सनातनम् ।। ३१ ।।
तत्तीर्थस्योत्तरे भागे सुतीर्थं सर्वकामदम् ।।
नाम्नाऽखंडसरः ख्यातमखंडेश्वरसन्निधौ ।। ३२ ।।
यस्य दर्शनमात्रेण सर्वयज्ञफलं लभेत् ।।
तस्माद्धि सर्वथा वत्स गच्छ त्वं तत्र मा चिरम् ।। ३३ ।।
इति तस्य वचः श्रुत्वा स द्विजोऽगात्कुमुद्वतीम् ।।
स्नात्वाऽखण्डसरे व्यास दृष्ट्वा देवं महेश्वरम् ।। ३४ ।।
सद्यः पुण्यवतांलोकान्प्राप्तो वै द्विजसत्तमः ।।
एवं व्यास महातीर्थमखंडेश्वरमुत्तमम् ।। ३५।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डेऽवन्तीक्षेत्रमाहात्म्येऽखंडेश्वरमहिमवर्णननामाष्टषष्टितमोऽध्या यः ।। ६८।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ६९



।। सनत्कुमार उवाच ।। ।।
भूयः शृणु परं तीर्थं सर्वतीर्थफलप्रदम् ।।
कीर्तितं ब्रह्मणा पूर्वं मार्कंडेयस्य पृच्छतः ।। १ ।।
शृणु वत्स महीपृष्ठे शिप्रा दिव्यतरा नदी ।।
तस्यास्तीरे वरं तीर्थं कर्कराजेतिविश्रुतम् ।। २ ।।
यस्य दर्शनमात्रेण महापापक्षयो भवेत् ।।
विकारा मानसाः सर्वे चंद्रो मानससंभवः।।३।।
तस्य स्थाने गतो भानुर्याम्यायनकरः परः।।
ऋतुत्रयं समाख्यातं विधूम्रार्चिस्तदुच्यते ।।४।।
तत्र मृताः प्रवर्तंते योगिनोऽपि परंतप।।
चातुर्मास्ये हरौ सुप्ते ये नरा व्रतवर्जिताः ।।५।।
न तेषां सद्गतिर्वत्स सत्यमेव ब्रवीमि ते ।।
चातुर्मास्ये मृता ये च ये मृता दक्षिणायने ।। ६ ।।
तेषामुद्धरणार्थाय तीर्थमेतद्विनिर्मितम् ।।
कर्कराज इति ख्यातं सर्वलोकेषु गीयते ।। ७ ।।
।। मार्कण्डेय उवाच ।। ।।
भगवन्भवता सर्वं निर्मितं विश्वमूर्तिना ।।
चराचरमिदं विश्वं जगत्सर्वं जगत्पते ।। ८ ।।
चातुमास्ये हरौ सुप्ते धर्माऽऽचारविधिः स्मृतः ।।
तदहं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।। ९ ।।
।। ब्रह्मोवाच ।। ।।
शृणु वत्स परं पुण्यं चातुर्मास्यफलं शुभम् ।।
यच्छ्रुत्वा भारते खण्डे नृणां मुक्तिर्न दुर्लभा ।। 5.1.69.१० ।।
मुक्तिप्रदोऽयं भगवान्संसारोत्तारकारणः ।।
यस्य स्मरणमात्रेण सर्वपापक्षयो भवेत् ।। ११ ।।
मानुष्यं दुर्लभं लोके तत्राऽपि च कुलीनता ।।
तत्राऽपि संयमित्वं च तत्र सत्संगमः शुभः ।। १२ ।।

सत्संगमो न यत्राऽस्ति विष्णुभक्तिर्व्रतानि न ।।
चातुर्मास्ये विशेषेण विष्णुव्रतकरः शुभः ।। १३ ।।
चातुर्मास्ये ऽव्रती यस्तु तस्य पुण्यं निरर्थकम्।।
सर्वतीर्थानि दानानि पुण्यान्यायतनानि च ।। १४ ।।
विष्णुमाश्रित्य तिष्ठंति चातुर्मास्ये समागते ।।
स विष्णुराश्रितो नित्यं कर्कराजं सुतीर्थकम्।। १५ ।।
सुपुष्टेन च देहेन जीवितं तस्य शोभनम् ।।
चातुर्मास्ये समायाते हरिर्येनाऽर्चितस्तदा ।। १६ ।।
कृतार्थास्तस्य विबुधा यावज्जीवं वरप्रदाः ।।
संप्राप्य मानुषं देहं चातुर्मास्ये पराङ्मुखः ।। १७ ।।
तस्य पापशतान्याहुर्देहस्थानि न संशयः ।।
मानुष्यं दुर्लभं लोके हरिभक्तिश्च दुर्लभा।।१८।।
चातुर्मास्ये विशेषेण सुप्ते देवे जनार्दने।।
चातुर्मास्ये नरः स्नात्वा कर्करात्रे द्विजोत्तम ।
देहशुद्धिं विधायाऽऽदौ मुक्तिमार्गमवाप्नुयात्।। १९।।
तत्राऽपि निर्झरे कूपे तडागे वा सरस्यपि।।
तस्मात्तदधिकं पुण्यं समाख्यातं सुरासुरैः।।5.1.69.२०।।
तेषु यः स्नाति वै नित्यं तस्य पापक्षयो भवेत्।। २२ ।।
तस्मान्नद्यधिका पुण्या समाख्याता सुरासुरैः ।।
पुष्करे च प्रयागे च यत्र क्वाऽपि महाजले ।।२३।।
चातुर्मास्ये तु यः स्नाति पुण्यसंख्या ततोऽधिका।। ।।
रेवायां भास्करे क्षेत्रे प्राच्यां सागरसंगमे ।। २४।।
एकाहमपि यः स्नाति चातुर्मास्ये न दुःखभाक्।।
दिनत्रयं च यः स्नाति नर्मदायां समाहितः।।२५।।
सुप्ते देवे जगन्नाथे पापं याति सहस्रधा।।
पक्षमेकं तु यः स्नाति गोदावर्यां दिनोदये।।२६।।
स भित्त्वा कर्मजं देहं याति विष्णोः सलोकताम्।।
अवंत्यां कर्कराजे तु साक्षाद्विष्णुर्भवेन्नरः।।
क्षणमेकं क्षणार्धं वा चातुर्मास्ये ऽतिलंघयेत् ।। २७ ।।
तिलोदकेनामलसंयुतेन बिल्वोदकेनापि च मज्जयेद्यः ।।
न तस्य जानामि फलाधिकं वै किं तस्य कीदृङ्मुनिभिः प्रणीतम् ।। २८ ।।
गंगां स्मरति यो नित्यमुदपानसमीपतः ।।

तद्गांगेयजलं जातं तेन स्नानं समाचरेत् ।। २९ ।।
गंगाऽपि देवदेवस्य चरणांऽगुष्ठवाहिनी ।।
पापहा सा सदा प्रोक्ता चातुर्मास्ये विशेषतः।। 5.1.69.३० ।।
चातुर्मास्ये जलगतो देवो नारायणो भवेत् ।।
सर्वतीर्थाऽधिकं स्नानं विष्णुतेजोंऽशसंगतम् ।।३१।।
स्नानं दशविधं कार्यं विष्णुनाम्ना महाफलम् ।।
सुप्ते देवे विशेषेण नरो देवत्वमाप्नुयात् ।। ३२ ।।
विना स्नानं तु यत्कर्म पुण्यकार्यमयं शुभ म् ।।
क्रियते विफलं ब्रह्मंस्तद्गृह्णन्ति हि राक्षसाः ।। ३३ ।।
स्नानेन सत्यमाप्नोति सत्ये धर्मः सनातनः ।।
धर्मान्मोक्षपथं प्राप्य पुनर्नैवावसीदति ।। ।। ३४ ।।
ये चाध्यात्मविदः पुण्या ये च वेदांतपारगाः ।।
सर्वदानप्रदाने च तेषां स्नानेन शुध्यति ।। ३५ ।।
कृतस्नानस्य हि हरिर्देहमाश्रित्य तिष्ठ ति ।।
सर्वक्रियाफलं येषु संपूर्णफलदं भवेत् ।। ३६ ।।
सर्वपापविनाशाय देवतातोषणाय च ।।
चातुर्मास्ये जलस्नानं सर्वपापक्षयावहम् ।। ३७ ।।
निशायां चैव न स्नायात्संध्यायां ग्रहणं विना ।।
उष्णोदकेन न स्नायाद्रात्रौ शुद्धिर्न जायते ।। ३८ ।।
भानुसंदर्शनाच्छुद्धिर्विहिता सर्वकर्मसु ।।
चातुर्मास्ये विशेषेण जलशुद्धिस्तु भाविनी ।। ३९ ।।
अशक्त्यां तु शरीरस्य भस्मस्नानेन शुध्यति ।।
मंत्रस्नानेन विप्रेंद्र विष्णुपादोदकेन वा ।। 5.1.69.४० ।।
नारायणाऽग्रतः स्नानं क्षेत्रे तीर्थे नदीषु च ।।
विशेषतोऽपि शिप्रायां तीर्थे कर्काभिधे वरे ।। ४१ ।।
यश्च स्नाति नरो नित्यं स याति वैष्णवं पदम्।।
तस्मात्त्वं भार्गवश्रेष्ठ तत्र गच्छस्व मा चिरम् ।। ४२ ।।
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।।
तानि सर्वाणि तिष्ठंति कर्कराजजले सदा ।। ४३ ।।
कर्कस्थे च दिवानाथे स्नानं कुर्वंति ये नरा ।।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। ४४ ।।
चातुर्मास्यं समासाद्य तत्रैव निवसाम्य हम् ।।

नास्ति रेवासमा पुण्या नदी ब्रह्मांडभूतले ।। ४५ ।।
महेशान्नाऽपरो देवो मुक्तिदो न जनार्दनात् ।।
उज्जयिनीसमा नास्ति पुरी कामवर प्रदा ।। ४६ ।।
कर्कराजसमं तीर्थं नास्ति वत्स महीतले ।।
यस्य दर्शनमात्रेण मुक्तिभागी भवेन्नरः ।। ४७ ।।
एवं व्यास समाख्यातं ब्रह्मणा भार्ग वाय च ।।
तस्मात्सर्वप्रयत्नेन महाकालवनं व्रज ।। ४८ ।।
अस्माकं चाऽपि तत्रैव स्थानं परमशोभनम् ।।
चातुर्मास्ये हरौ सुप्ते यावद्यायात्प्रबो धिनी ।। ४९ ।।
तावत्कालं हि तत्रैव मुक्तिरेव न संशयः ।।
चातुर्मास्ये हरौ सुप्ते जहाति चेत्कलेवरम् ।। 5.1.69.५० ।।
यमलोके चिरं वासो जायते नाऽत्र संशयः ।।
तस्मात्तुलसिकाभागे शालिग्रामे सुरालये ।। ५१ ।।
आत्मानं हि पणीकृत्य तत्रैव संनियोजयेत् ।।
यावत्प्रबोधिनी चैति द्वादशी द्विज्सत्तम ।।५२।।
पश्चाद्धृतसुवर्णेन मोचयित्वा स्वकं नयेत् ।।
चातुर्मास्योद्भवं दोषं बाधते न च मानवम् ।।५३।।
यस्य शिप्रोदके स्नानं कर्कराजेऽनुजायते ।।
एवं व्यास वरं तीर्थं सर्वतीर्थफलप्रदम् ।। ५४ ।।
पृथिव्यां यानि तीर्थानि सरितः सागराश्च ये ।।
ते सर्वे च समायांति चातुर्मास्ये द्विजोत्तम।। ५५ ।।
तस्माच्च तद्वरं तीर्थं कर्कराज इति स्मृतम् ।। ५६ ।।
य एतां वै कथां पुण्यां शृण्वंति श्रावयंति च ।।
न तेषां जायते दोषश्चातुर्मा स्योद्भवः कदा ।। ५७ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये कर्कराजतीर्थ महिमवर्णनंनामैकोनसप्ततितमोऽध्यायः ।। ६९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ७०



।। सनत्कुमार उवाच ।। ।।
मेरोश्च दक्षिणे भागे दुग्धकुण्डोत्तरे तथा ।।
ऋषभः पर्वतश्रेष्ठो देवगन्धर्वसेवितः ।। १ ।।
यत्र देवांगना रम्याः क्रीडन्ति सततं द्विज ।।
तत्र रम्यसरोनाम तिष्ठते सर्वकामदम् ।। २ ।।
तत्र तीर्थे नरः स्नात्वा सुभगो जायते ध्रुवम् ।।
देवैश्च क्रीडते नित्यं भुवि विख्यातकः परम् ।। ३ ।।
भाद्रपदसिताष्टमी मैत्रर्क्षेण समन्विता ।।
तद्दिनेऽत्र समागम्य स्नानदानादिकाः क्रियाः ।। ४ ।।
करोति सततं व्यास तेषां लोकाः सनातनाः ।।
मेरोश्चेशानके तीर्थं दिव्यं परम शोभनम् ।।५।।
बिन्दुसरेति विख्यातं सर्वकामवरप्रदम्।।
गंगा सरस्वती पुण्या शरयूश्च पयस्विनी ।।६।।
एताः सरिद्वरा यातास्तत्र सत्यवतीसुत ।।
ये सिद्धा ये च साध्याश्च तपस्विनो धृतव्रताः।।७।।
उपासांचक्रिरे तत्र तस्य तीर्थस्य सर्वदा ।।
तस्मिंस्तीर्थे नरः स्नात्वा सर्वार्थान्प्राप्नुते ध्रुवम् ।।८।।
भाद्रपदे च शुक्ला वै चतुर्थी या प्रकीर्तिता।।
सिद्धा सा सर्वदा प्रोक्ता यत्र जातो गणाधिपः।।९।।
मनःकामेश्वरः ख्यातः सर्वकामवरप्रदः ।।
तस्य तीर्थे नरः स्नात्वा दृष्ट्वा देवं गणेश्वरम्।।
मनोरथशतं प्राप्य कामचारी भवेन्नरः ।।5.1.70.१०।।
।। व्यास उवाच ।। ।।
अस्मिन्क्षेत्रे शुभे ब्रह्मन्महाकालवनोत्तमे ।।११।।
तीर्थानि कतिसंख्यानि देवतायतनानि च ।।
यानि कानि च ख्यातानि तानि नो वद विस्तरात्।। १२ ।।
।। सनत्कुमार उवाच ।। ।।

शृणु व्यास ऋषिश्रेष्ठ कथां पापहरां पराम् ।।
अवन्त्यां यानि तीर्थानि लिंगानि च महामुने ।। १३ ।।
तानि वर्णयितुं शक्तः स्वयंभूश्चतुराननः ।।
वर्षाणामयुतैः षड्भिर्न च वक्तुं कथंचन ।। १४ ।।
यावंतो मेघमालानां बिंदवो हि स्रवंति च ।।
धरित्र्यां तृणसंख्या वै पृथिव्यां सिकतास्तथा ।।१५।।
नभसो ज्योतिषां संख्यां वक्तुं कोऽपि न शक्नुते ।।
न हि तीर्थलिङ्गसंख्याः संत्यवंत्यां तपोधन ।।१६।।
अंतरिक्षे च मेदिन्यां तीर्थभूता पुरी त्वियम् ।।
वापीकूपतडागादि प्रस्रवोद्गरणानि च ।। १७ ।।
नद्यः सरांसि खाताश्च तीर्थभूतं हि सर्वशः ।।
तथापि देवयात्रायां प्रसंगेन निबोध मे ।। १८ ।।
यानि कानि च मुख्यानि तानि तुभ्यं वदाम्यहम् ।।
यज्ज्ञात्वा मोक्ष्यसे नित्यं पूर्वाऽऽचीर्णशुभाशुभैः ।। १९ ।।
प्रातरुत्थाय यो नित्यं शुचिः प्रयत मानसः ।।
विष्णुस्मरणसंपन्नः सर्वकामक्रियादिकम् ।। 5.1.70.२० ।।
कृत्वा वै सर्वगंधादितिलाक्षतसमन्वितः।।
स्नात्वा रुद्रसरे तात तथैव च व्रतं चरेत् ।। २१ ।।
ऊर्जमाधवयोश्चैव वैशाखाऽऽषाढयोस्तथा ।।
शिवरात्र्यां विशेषेण देवयात्रा प्रशस्यते ।।२२।।
यस्य देवस्य यत्तीर्थं यस्य देवस्य संनिधौ ।।।
तत्राभिषेकः कार्यो वै देवतायाश्च पूजनम् ।।२३।।
विधिवच्चाचरेद्यस्तु स सर्वंफलमश्नुते ।।
तस्मात्सर्वप्रयत्नेन देवयात्रां समाचरेत्।। २४ ।।
।। व्यास उवाच ।। ।।
ब्रह्मन्केन प्रकारेण देवयात्रां चरेन्नरः।।
तत्सर्वं श्रोतुमिच्छामि विस्तरेण तपोधन ।।२५।।
।। सनत्कुमार उवाच ।।।।
शृणु व्यास परं गुह्यं प्रवक्ष्यामि यथाश्रुतम् ।।
उमामहेश्वरसंवादं देवयात्रादिकर्मसु ।।२६।।
।। उमोवाच ।। ।।
प्रभावः कथ्यतां देव क्षेत्रस्याऽस्य महेश्वर ।।

यानि तीर्थानि विद्यंते यानि लिंगानि संति वै।।
तान्यादितो मे भूमंस्त्वं वदस्व वदतां वर।।२७।।
ईश्वर उवाच।।
शृणु देवि प्रयत्नेन प्रभावं पापनाशनम्।।२८।।
क्षेत्रमाद्यं महादेवि ममातीव प्रियं सदा।।
यत्र शिप्रा महापुण्या दिव्या नवनदी प्रिया।। २९।।
नीलगंगासंगमं च तथा गंधवती नदी।।
चतस्रो मे प्रिया नद्यः कुमुद्वत्यां हि सुव्रते ।। 5.1.70.३० ।।
ईश्वराश्चतुराशीतिस्तथाऽष्टौ संति भैरवाः ।।
एकादश तथा रुद्रा आदित्या द्वादश स्मृताः ।। ।। ३१ ।।
षड्वै विनायकाश्चाऽत्र देव्यश्च चतुर्विंशतिः ।।
यतोहमागतो भद्रे महाकालवनोत्तमे ।। ३२ ।।
विष्णुब्रह्मादयः सर्वे ह्यत्रैव निहिताः शुभे ।।
देवैर्व्याप्तमिदं क्षेत्रं देवि योजनमायतम् ।। ३३ ।।
दश विष्णुः समाख्यातास्तेषां नामानि मे शृणु ।।
वासुदेवो ह्यनंतश्च बलरामो जना र्दनः ।। ३४ ।।
नारायणो हृषीकेशो वाराहो धरणीधरः ।।
विष्णुर्वामनरूपेण शेषशायी श्रियालयः ।। ३५ ।।
दशैते वैष्णवाः प्रोक्ताः सर्वपापहराः पराः ।।३६।।
।। उमोवाच ।। ।।
भगवञ्च्छ्रोतुमिच्छामि देवानामनुपूर्वतः ।।
महाकालवने रम्ये ये वसंति सुरेश्वराः ।। ३७ ।।
विनायका भैरवा देव्यो ये संति पवनात्मजाः ।।
रुद्रादित्यास्तथा चाऽन्ये तेषां नामानि मे वद ।। ३८ ।।
।। ईश्वर उवाच ।। ।।
ऋद्धिदः सिद्धिदो नित्यं कामदो वै गणाधिपः।।
विघ्नहा च प्रमोदी च चतुर्थीव्रतकप्रियः।।३९।।
षडेते वै समाख्याता विघ्ननाशकराः पराः।।
उमा चंडीश्वरी गौरी ऋद्धिसिद्धिप्रदा नृणाम् ।।5.1.70.४०।।
वटयक्षिणी वीरभद्रा इत्येताश्चाष्ट मातरः।।।।
महामाया सती ख्याता कपालमातृका तथा ।।
अंबिका शीतला चैव एकानंशा च सिद्धिदा।।४२।।

ब्रह्माणी पार्वती चैव योगिनी योगशालिनी ।।
कौमारी भगवती चैव षट्कृत्तिकास्तथैव च ।। ४३ ।।
चर्पटामातृकाः ख्याता वटमातर एव च ।।
सरस्वती तथा ख्याता महालक्ष्मीश्च वै स्मृता ।। ४४ ।।
योगिनीमातृका ख्याताश्चतुषष्टिस्ततः स्मृताः।।
कालिका च महाकाली चामुण्ड ब्रह्मचा रिणी ।। ४५ ।।
वैष्णवी च समाख्याता वाराही विंध्यवासिनी ।।
अंबा अंबालिका चैव चतुर्विंशतिकाः पराः ।। ४६ ।।
हनूमान्ब्रह्मचारी च कुमारश्च महाबली ।।
चत्वारो वै समाख्याता मया ते पवनात्मजाः ।। ४७ ।।
दंडपाणिश्च विक्रांतो महाभैरवसिताऽसिताः ।।
बटुको बालको नंदी षट् पञ्चाशतिकोऽपरः ।। ४८ ।।
कालभैरवश्च विख्यातः क्षेत्रपालस्तथाष्टमः ।।
अष्टैव भैरवाः ख्याता महापापहराः पराः ।।
कपर्दी च कपाली च कला नाथो वृषासनः ।। ४९ ।।
त्र्यंबकः शूलपाणिश्च चीरवासा दिगम्बरः ।।
गिरीशः कामचारी च सर्वः सर्वांगभूषणः ।। 5.1.70.५० ।।
रुद्राश्चैकादश प्रोक्ताः शत्रुपक्षविनाशनाः ।।
अरुणः सूर्यो वेदांगो भानुरिन्द्रो रविरंशुमान् ।। ५१ ।।
सुवर्णरेताऽहःकर्ता मित्रो विष्णुः सनातनः ।।
इत्येते द्वादशाऽऽदित्याः सर्वरोगहराः पराः ।। ५२ ।।
अगस्त्येश्वरमुख्यानां लिंगानां चतुराशिनाम् ।।
हिमाचलसुते नित्यं नामानि गदतः शृणु ।। ५३ ।।
अगस्त्वेश्वर आख्यातो गुहेश्वरस्ततः परम् ।।
ढुंढेश्वरस्ततः प्रोक्तो डमरुकेश्वरश्च भामिनि ।।५४ ।।
अनादिकल्पेश्वरः शंभुः स्वर्णजालेश्वरः परः ।।
त्रिविष्टपेश्वरो देवः कपालेश्वरसंज्ञकः ।। ५५ ।।
कर्कोटकेश्वरः शंभुः सिद्धेश्वरस्ततः परम् ।।
स्वर्गद्वारेश्वरो रुद्रो लोकपालेश्वरोऽपरः ।। ५६ ।।।
कामेश्वर इति ख्यातः कुटुम्बेश्वरस्ततः परम्।।
इन्द्रद्युम्नेश्वरः ख्यात ईशानेशस्ततः परम् ।। ५७ ।।
अप्सरेश्वरइतिख्यातः कल्कलेश्वर एव च ।।।

नामचंडेश्वरो देवो दिवापापहरोऽपरः ।। ५८ ।।
प्रतिहारेश्वरश्चैव कुक्कुटेशस्ततः परम्।।
मेघनादेश्वरः पुण्यो महाकालेश्वरः परः ।। ५९ ।।।
मुक्तेश्वरः समाख्यातः सोमेश्वरस्ततः परम् ।।
अनरकेश्वरो देवो जटेश्वरस्ततः परम्।। 5.1.70.६० ।।
रामेश्वरो महादेवश्च्यवनेशस्ततः परम् ।।
अखंडेशः समाख्यातः पत्तनेशस्ततः स्मृतः ।। ६१ ।।
आनंदेशस्ततः प्रोक्तः कंथडेशस्ततः परम् ।।
इन्द्रेश्वर इति ख्यातो मार्कंडेशस्ततः परः ।। ६२ ।।
शिवेश्वर इति प्रोक्तः कुसुमेशस्ततः परम्।।
अक्रूरेण इति ख्यातः कुण्डेश्वरस्ततः परम् ।। ६३ ।।
लुम्पेश्वरः समाख्यातो गंगेश्वरस्ततः परम् ।।
शूलेश्वरेति विख्यात ओंकारेशस्ततः स्मृतः ।। ६४ ।।
कंटकेशो महारुद्रः सिंहेश्वरस्ततः परम् ।।
रेवंतेश्वरः परो देवो घंटेश्वरपुरःसरः ।। ६५ ।।
प्रयागेश्वरो महादेवः सिद्धेश्वरस्ततः परम् ।।
मातंगेश्वरः परो देवः सौभाग्येशस्ततो वरः ।। ६६ ।।
रूपेश्वरेति विख्यातो ब्रह्मेश्वरस्ततः परम् ।।
जल्पेश्वरस्ततो देवः केदारेश्वर एव च ।। ६७ ।।
पिशाचेश्वरशंभुश्च संगमेशस्ततः परः ।।
दुर्धर्षेशश्च विख्यातश्चंडादित्येश्वरस्ततः।। ६८ ।।
करभेश्वरः परः प्रोक्तो राजस्थलेश्वरः शिवः ।।
वडलेश्वरस्ततः प्रोक्तो ह्यरुणेशस्ततः स्मृतः ।। ६९ ।।
पुष्पदंतेश्वरो देवो ह्यविमुक्तेश्वरस्ततः ।।
हनुमतेश्वरो देवो विश्वेश्वर स्ततः कम् ।। 5.1.70.७० ।।
स्वप्नेश्वर इति ख्यातः सिद्धेश्वरस्ततः परः ।।
नीलकंठेश्वरो देवः स्थावरेशस्ततः परम् ।। ७१ ।।
कामेश्वर इति प्रोक्तः प्रतिहारेश्वरस्ततः ।।
पशुपतीश्वरः प्रोक्तो विश्वेश्वरस्ततः परः ।।
स्वर्णजालेश्वरः प्रोक्तो मनःकामेश्वरस्ततः ।। ७२ ।।
दुर्वासेश्वरनामासौ नागचंडेश्वरस्ततः ।।
खर्परेशश्च विख्यातो ब्रह्मेश्वरस्ततः परम् ।। ७३ ।।

पातालेश्वर आख्यातो गुप्तेश्वरस्ततः परः ।।
कपिलेश्वर इत्याख्यो योगयोगेश्वरः परः ।। ७४ ।।
भीमेश्वरेति विख्यातो धनुःसहस्राभिधः परः ।।
अग्नीश्वरः परः प्रोक्तो देवेश्वरस्ततः परः ।। ७५ ।।।
द्वादशार्कः समाख्यातो दशाश्वमेधिकेश्वरः ।।
गदाधरेश्वरः ख्यातो वैजनाथेति शंभुराट् ।। ७६ ।।
सोमनाथेश्वरः ख्यातो घुष्मेश्वरस्ततः परः।
भीमशंकर इत्याख्यो घंटेश्वरस्ततः परः ।। ७७ ।।
ऊषरेश्वरसंज्ञश्च चन्द्रादित्येश्वरः परः ।।
केशवार्कः समाख्यातः शक्तिभेदेश्वरः परः ।। ७८ ।।
रामेश्वरः परो देवो वाल्मीकेश्वरशंकरः ।।
ज्वालेश्वरः शिवः प्रोक्तो ह्यभयेशस्ततः परः ।। ७९ ।।
विघ्नहस्तेश्वरः प्रोक्तश्चंचलेशस्ततः परः ।।
पुरुषोत्तमेति विख्यातो वीरेश्वरस्ततः परः ।। 5.1.70.८० ।।
कर्णेश्वरश्च विख्यातः पृथुकेशस्ततः परम्।।
आनंदेशश्च विख्यातः कोटेश्वरस्ततः परः ।। ८१ ।।
अविमुक्तेश्वरः प्रोक्तो हनुमत्केश्वरः परः ।।
विमलेश्वरेति विख्यातश्चंद्रेश्वरस्ततः परः ।। ८२ ।।
बिंदुकेशश्च विख्यातो वालुकेश्वरसंज्ञकः ।।
बृहस्पतीश्वरो देवो ह्यसंख्यातेश्वरस्ततः ।। ८३ ।।
यानि कानि च तीर्थानि तानि लिंगानि सत्तम ।।
तिष्ठंति तत्र पूज्यानि तानि वंद्यानि सर्वशः ।। ८४ ।।
चत्वारो विदिताः सर्वे द्वारपाला महात्मभिः ।।
पिंगलेश्वरेति च ख्यातः पूर्वद्वारे द्विजोत्तम ।। ८५ ।।
दक्षिणे च तथा द्वारे कायावरोहणेश्वरः ।।
बिल्वकेश्वरेति विख्यातः पश्चिमद्वारमाश्रितः ।। ८६ ।।
दर्दुरेश्वरस्ततः प्रोक्तो द्वारे चोत्तरसंज्ञिके ।।
एते चाऽन्ये च बहवो लिंगाख्यास्त्रिभुवनेश्वराः ।। ८७ ।।
महाकालवने रम्ये समाख्याता हि पावनाः ।।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।। ८८ ।।
महाकालवने व्यास लिंगसंख्या न विद्यते ।।
तथाऽपि च प्राधान्येन मयाऽत्र परिकीर्तिताः ।। ८९ ।।

यस्य देवस्य यत्तीर्थं तन्नाम्ना परिकीर्तितम् ।।
स्नात्वा दत्त्वा च तद्दानं तत्तीर्थ स्यफलं लभेत् ।। 5.1.70.९० ।।
तथा नवग्रहाः पुण्याः समाख्याताः पुराऽनघ ।।
तेषां नामानि पुण्यानि तीर्थानि च तथा शृणु ।। ९१ ।।
नरादित्य इति ख्यातः सोमेश्वरस्ततः परः ।।
मंगलेश्वरः समाख्यातो बुधेश्वरस्ततः परम् ।। ९२ ।।
बृहस्पतीश्वरः प्रोक्तस्तथा शुक्रेश्वरः शिवः ।।
स्थावरेश्वरो महादेवः समाख्यातो मुनीश्वरैः ।। ९३ ।।
राहुकेतू समाख्यातौ तेषां तीर्थानि सत्तम ।।
तत्तीर्थेषु नरः स्नात्वा सर्वपापैः प्रमुच्यते ।। ७ ।।
ग्रहा राज्यं प्रयच्छंति ग्रहा राज्यं हरंति च ।।
ग्रहैस्तु व्यापितं सर्वं त्रैलोक्त्यं सचराचरम् ।। ९५ ।।
ग्रहतीर्थे नरः स्नात्वा ग्रहाणामर्चनं चरेत् ।।
न तस्य ग्रहपीडा वै बाधते हि कदाचन ।। ९६ ।।
एवं व्यास समाख्याता मया देवाश्च तीर्थकाः ।।
यात्रा पुण्यतरा श्रेष्ठा पवित्रा पापनाशिनी ।। ९७ ।।
ग्रहपीडासु चोग्रासु दारिद्र्ये घोरसंकटे ।।
तेषामुद्धरणार्थाय देवयात्रा प्रकीर्तिता ।। ९८ ।।
क्षेत्रस्यांतर्गृहीं नित्यं ये कुर्वंति नरोत्तमाः ।।
न तेषां दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।। ९९ ।।
अपुत्रो लभते पुत्रं निर्धनो धनमाप्नुयात् ।।
विद्यावाञ्जायते विप्रः क्षत्रियो विजयी भवेत् ।। 5.1.70.१०० ।।
अक्षया संततिस्तस्य शिवलोके महीयते ।। १०१ ।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे ऽवन्तीक्षेत्रमाहात्म्ये देवयात्रांऽतर्गृहीसर्वतीर्थयात्राऽनुक्रमणिकादिकथनंनाम सप्ततितमोऽध्यायः ।। ७० ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीक्षेत्रमाहात्म्यम्/अध्यायः ७१



।। व्यास उवाच ।। ।।
भगव न्भवता सर्वं कथितं देवमूर्तिना ।।
अवंतीतीर्थमाहात्म्यं पवित्रं वेदसंमितम् ।। १ ।।
भूयस्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।।
महाकालवने रम्ये अवंत्यां भुवि सत्तम ।।
तीर्थानि कतिसंख्यानि विद्यंते ह्यत्र सुव्रत ।। २ ।।
।। सनत्कुमार उवाच ।। ।।
श्रूयतां भो द्विजश्रेष्ठ कथां पापहरां पराम् ।। ।।३।।
उमामहेश्वरसंवादं नारदस्य च धीमतः ।।
नारदेन पुरा पृष्टं प्रश्नमेतद्द्विजोत्तम ।। ४ ।।
।। नारद उवाच ।। ।।
भगवञ्च्छ्रोतुमिच्छामि महाकाल वने शुभे ।।
तीर्थानि यानि वर्तंते तानि नो वद विस्तरात् ।। ५ ।।
इति पृष्टस्तदा विप्र नारदेन पुराऽनघ ।।
उवाच श्लक्ष्णया वाचा उमया सहितो हरः ।। ६ ।।
।। श्रीमहादेव उवाच ।। ।।
शृणुष्व भो ऋषिश्रेष्ठ महाकालवने शुभे ।।
तीर्थानि यानि तिष्ठंति तानि वक्ष्यामि सुव्रत ।। ७ ।।
पुष्कराद्यानि तीर्थानि यानि कानि महीतले ।।
तानि सर्वाणि वर्तंते महाकालवनोत्तमे ।। ८ ।।
असंख्यातसहस्राणि कोटिकोटीनि सत्तम ।।
रुद्रसरे निमज्जंति कोटितीर्थं तथोच्यते ।। ९ ।।
नीहारकणिकावृष्टिं गिरौ वर्षंति किन्नराः ।।
हेमंते चैव दृश्यंते तीर्थे पैशाचमोचने ।। 5.1.71.१० ।।
न हि संख्यां विजानामि तीर्थानां भुवि सत्तम ।।
कियन्ति संति तीर्थानि लिंगानि च तथैव च ।। ११ ।।
तथाऽपि च प्राधान्येन कथयिष्यामि सत्तम ।।

संवत्सरस्य यावंति अहानि च द्विजोत्तम ।। १२ ।।
तावंति प्रापणीयानि प्रसिद्धानि परंतप ।।
वत्सरे परिपूर्णे च जायतेऽवंतियात्रिका ।। १३ ।।
विधिवत्कुरुते यस्तु साक्षाच्छंभुर्भवेच्च सः ।।
मन्वंतरसहस्रेषु काशीवासे च यत्फलम् ।। १४ ।।
तत्फलं जायतेऽवंत्यां वैशाखे पंचभिर्दिनैः ।।
अवंती यात्रा कर्तव्या प्रयत्नेन मुमुक्षुणा ।। १५ ।।
माधवेऽपि विशेषेण ह्यवंतीस्नानमाचरेत् ।।
यो हि वैशाखमासाद्य अवंत्यां व्यास मानवः ।। १६ ।।
संवत्सरव्रती स्नातस्तीर्थेतीर्थे यथाविधि ।।
दत्त्वा दानानि सर्वाणि समूलं फलमश्नुते ।। १७ ।।
भुक्त्वा भोगान्सुविपुलाञ्छिवलोके महीयते ।।१८।।
माहात्म्यमेतच्छिवभक्तिवर्द्धनं यशस्करं पुण्यविवर्द्धनं च ।।
यः श्रावयेद्वा शृणुयाच्च भक्त्या कुलं समुद्धृत्य हरः पदं व्रजेत् ।। १९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखंडेऽवन्तीक्षेत्रमाहात्म्ये व्याससनत्कुमारसंवादे ऽवन्तीक्षेत्रमाहात्म्यवर्णनंनामैक सप्ततितमोऽध्यायः ।। ७१ ।। ।। छ ।।
।।
इति श्रीस्कांदे महापुराणे पञ्चम आवन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्यं प्रथमं सम्पूर्णम् ।। ( ५-१) ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०१



।।अथ श्रीस्कांदे महापुराणे पञ्चमआवन्त्यखंडे ऽवंतीस्थचतुरशीतिलिङ्गमाहात्म्यं द्वितीयं प्रारभ्यते।।(५-२)।।

।। श्रीगणेशाय नमः ।।

श्रीमहाकालाय नमः ।।

।। अथावन्त्यखण्डेऽवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यं प्रारभ्यते ।।

।। उमोवाच ।। ।।

पृथिव्यां यानि तीर्थानि पुण्याश्च सरितस्तथा ।।
कथ्यतां तानि यत्नेन श्राद्धं येषु प्रदीयते ।। १ ।।

।। ईश्वर उवाच ।। ।।

अस्ति लोकेषु विख्याता गंगा त्रिपथगामिनी ।।
सेविता देवगंधर्वैर्मुनिभिश्च निषेविता ।। २ ।।
तपनस्य सुता देवी यमुना लोकपावनी ।।
पितॄणां वल्लभा देवि महापातक हारिणी ।। ३ ।।
चन्द्रभागा वितस्ता च नर्मदाऽमरकंटके ।।
कुरुक्षेत्रं गया देवि प्रभासं नैमिषं तथा ।।४।।
केदारं पुष्करं चैव तथा कायावरोहणम् ।।
तथा पुण्यतमं देवि महाकालवनं शुभम् ।। ५ ।।
यत्रास्ते श्रीमहाकालः पापेंधनहुताशनः ।।
क्षेत्रं योजनपर्यंतं ब्रह्महत्याविनाशनम् ।। ६ ।।
भुक्तिदं मुक्तिदं क्षेत्रं कलिकल्मषनाशनम् ।।
प्रलयेऽप्यक्षयं देवि दुष्प्राप्यं त्रिदशैरपि ।। ७ ।।

।। उमोवाच ।। ।।

प्रभावः कथ्यतां देव क्षेत्रस्यास्य महेश्वर।। ८ ।।
यानि तीर्थानि वंद्यानि यानि लिंगानि संति वै ।।
तान्यहं श्रोतुमिच्छामि परं कौतूहलं हि मे ।। ९ ।।

।। ईश्वर उवाच ।। ।।

शृणु देवि प्रयत्नेन प्रभावं पापनाशनम् ।।
क्षेत्रमाद्यं महादेवि ममातीव प्रियं सदा ।। 5.2.1.१० ।।
यत्रास्ति च महापुण्या सर्वपापहरा परा ।।
तथा गंधवती पुण्या दिव्या नवनदीप्रिया ।। ११ ।।
नीलगंगा चतुर्थी तु श्रेष्ठा नद्यः प्रकीर्तिताः ।।
आसां तु संगमे स्नात्वा श्राद्धं यः कुरुते नरः ।। ।। १२ ।।
गंगायास्त्रिगुणं देवि चतुर्वर्गफलप्रदम् ।।
क्षेत्रं योजनपर्यंतमवंत्या विद्धि सुव्रते ।। १३ ।।
सिद्धलिंगानि तिष्ठंति भुक्तिमुक्तिकराणि च ।।
ईश्वराश्चतुराशीतिस्तथाष्टौ संति भैरवाः ।। १४ ।।
एकादश तथा रुद्रा आदित्या द्वादश स्मृताः ।।
षड्वै विनायकाश्चात्र चतुर्विंशतिमातरः ।। १५ ।।
यदाहं गतवांस्तत्र महाकालवने शुभे ।।
ब्रह्मविष्ण्वादयः सर्वे तत्राजग्मुर्मुदान्विताः ।। १६ ।।
एभिर्व्याप्तं क्षेत्रमिदं देवि योजनमायतम् ।।
दश स्थानगतो विष्णुः सर्वपापप्रणाशनः ।। १७ ।।
एतन्नामानि योऽधीते प्रभाते भक्तितः पुमान् ।।
विमुक्तः सर्वपापैस्तु रुद्रलोकं स गच्छति ।। १६ ।।
।। उमोवाच ।। ।।
चतुराशीतिलिंगानि त्वयोक्तानीह यानि तु।।
तानि विस्तरतो ब्रूहि सर्वपापहराणि तु ।। १९ ।।
।। हर उवाच ।। ।।
शृणु देवि प्रवक्ष्यामि तेषां नामानि यानि च ।।
ख्यातं पृथिव्यां प्रथममगस्त्येश्वरमुत्तमम् ।।
यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत् ।। 5.2.1.२० ।। ।।
।। उमोवाच ।। ।।
अगस्त्येश्वरनामेह कथं लब्धमनेन वै।।
कस्मिन्स्थाने कथं जातं विस्तराद्वक्तुमर्हसि ।। २१ ।।
।। हर उवाच ।। ।।
शृणु देवि महाभागे कथामस्य पुरातनीम् ।।
सर्वपापप्रशमनीं समीहितफलप्रदाम्।।२२।।
पुराऽसुरैर्जिता देवा निरुत्साहाश्च ते ततः।।

भागाश्चैषां हृताः सर्वे निराशाः पितरः कृता ।।
भ्रष्टैश्वर्य्यास्तदा देवि चेरुर्देवा महीतले ।। २३ ।।
ततः कदाचित्ते दीना दीप्तमादित्यवर्चसम्।।
ददृशुस्तेजसायुक्तमगस्त्यं विपुलव्रतम् ।। २४ ।।
अभिवाद्य ततो देवा दृष्ट्वा तं तेजसा वृतम् ।।
इदमूचुर्महात्मानमगस्त्यं लोकविश्रुतम् ।। २५।।
दानवैर्निर्जिता युद्धे सर्वे स्वर्गाच्च पातिताः ।।
ततस्त्वं नो भयात्तीव्रात्त्रायस्व मुनिपुंगव ।। २६ ।।
इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत् ।।
प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये ।। २७ ।।
तदा दीप्तांशुजालेन निर्दग्धा दानवास्तथा ।।
अंतरिक्षान्महादेवि पतिताश्च सहस्रशः ।। २८ ।।
दह्यमानास्ततो दैत्या स्तस्यागस्त्यस्य तेजसा ।।
ऋषेश्च दानवाः सर्वे पातालं वव्रजुर्भयात् ।। २९ ।।
ततो ऽगस्त्यो महात्मा वै तान्हत्वा शोकमूर्छितः ।।
बभूवातिशयं चासौ चिंतयोद्विग्नमानसः ।। 5.2.1.३० ।।
कृतं घोरं महत्पापं हता यद्दानवा मया ।।
अहिंसा परमो धर्मो मनुना कथ्यते यतः ।।
किं करोमि क्व गच्छामि कथं शुध्येय चाप्यहम् ।। ३१ ।।
एवं चिंतयतस्तस्य समागच्छत्पितामहः ।।
प्रोवाच स मुनिं तत्र कस्मात्त्वं शोकविह्वलः ।। ३२ ।।
लक्ष्यसे मुनिशार्दूल कारणं कथ्यतां त्वरम् ।।
स ब्रह्माणं नमस्कृत्य कथयामास पृच्छतः ।। ३३ ।।
देवदेव जगन्नाथ दाहोंतर्मानसं मम ।।
ब्रह्महत्या समायाता यन्मया दानवा हताः ।। ३४ ।।
ममोपायं समाचक्ष्व प्रसादत्सुरसत्तम ।।
बहुकालार्जितं देव गतं मे संक्षयं तपः ।।३५।।
प्रोवाचेदं सुरश्रेष्ठः शृणु त्वं यत्नतः परम्।।
उपायं सर्वपापस्य क्षयो येन भवेद्ध्रुवम्।।३६।।
महाकालवने दिव्ये यक्षगंधर्वसेविते।।
उत्तरे वटयक्षिण्या यत्तल्लिंगमनुत्तमम्।।३७।।
पिशाचस्यापि तीर्थस्य भागे दक्षिणतः स्थितम् ।।

तं समाराध्यतः सर्वं पापं नाशमवाप्नुयात् ।। ३८ ।।
आराधय शुभं लिंगं सर्वपापप्रणा शनम् ।।
बाढं प्रोवाच धर्मात्मा महाकालवनं ययौ ।।३९।।
तस्मिन्स लिंगे देवेशि समाराधनतत्परः ।।
बभूवाहर्निशं भक्त्या तद्ध्यानैकरतो मुनिः ।। 5.2.1.४० ।।
अहं तुष्टस्तदा देवि मुनेस्तस्य महात्मनः ।। ४१ ।।
प्रोक्तं मया महाभाग मुने शृणु समाहितः ।।
वरं वरय विप्रेंद्र यत्ते मनसि वर्त्तते ।। ४२ ।।
तुष्टोऽहमनया भक्त्या तपसा दुष्करेण तु ।।
लिंगस्यास्य प्रभावेण जातस्त्वं निर्मलोऽधुना ।।४३।।
प्रणष्टा ब्रह्महत्या ते दानवोत्था मुनीश्वर ।।
मदीयं वचनं श्रुत्वा तेनोक्तं वरवर्णिनि ।। ४४ ।।
यदि देव प्रसन्नस्त्वं शरणागतवत्सलः ।।
त्वदंघ्रियुगले भूयान्मम भक्तिर्महेश्वर ।। ४५ ।।
तपस्यथ तथा धर्मे न मे विघ्नो भवेदिति ।।
तस्य तद्वचनं श्रुत्वा कुंभयोनेर्महात्मनः ।।
मया प्रोक्तं विशालाक्षि मुने एवं भविष्यति ।। ४६ ।।
यस्त्वया पूजितो देवो ब्रह्महत्याविनाशनः ।।
त्वन्नाम्ना त्रिषु लोकेषु सोऽहं ख्यातो भविष्यति ।। ४७ ।।
अगस्त्येश्वरदेवोपि विख्यातो भुवनत्रये ।।
एवमुक्तो मया देवि स विप्रस्तत्र संस्थितः ।।
कृपया तस्य लिंगस्य पंचमुद्राविभूषितः ।। ४८ ।।
ये नरास्तन्महालिंगं निरीक्षिष्यंति भक्तितः ।।
सर्वपापविनिर्मुक्ताः सर्वकामैरलंकृताः।।४९।।
भविष्यंति महात्मानः पुत्रैश्वर्यसमन्विताः ।।
अंतकाले च मां यांति विमानैः सर्वकामदैः ।।5.2.1.५०।।
स्तुता गंधर्वमुख्यैश्च रुद्रलोके च शाश्वते ।।
येऽर्चयंति सदा देवमगस्त्वेश्वरसंज्ञकम्।।५१ ।।
कृतपुण्या नरा मर्त्यास्ते यांति परमं पदम् ।।
संस्मृते देवदे वेशे नराणां कोटिजन्मजम्।।५२।।
अशुभं क्षयमाप्नोति कस्तं न प्रणमेच्छिवम्।।
यः प्रणम्य नरो भक्त्या देवं तं च निषेवते।।५३।।

मुच्यते ब्रह्महत्यादिपा तकैर्नरकप्रदैः ।। ५४ ।।
राजसूयशतेनैव यत्पुण्यं च भविष्यति ।।
तत्पुण्यमधिकं देवि दर्शनाच्च भविष्यति ।। ५५ ।।
किं तीर्थैर्विविधैः स्नानैः किं दानैर्विविधैः कृतैः ।।
ते प्राप्स्यंति फलं सर्वे मत्प्रसादान्न संशयः ।।५६।।
अष्टम्यां च चतुर्द्दश्यां दिने सोमस्य शक्तितः ।।
यः करिष्यति लिंगस्य पूजा भक्तिसमन्वितः ।।
कुलानां तारयत्येव मातृकं पितृकं शतम् ।।५७।।
ये च पश्यंति पुरुषा भावहीनाः प्रसंगतः ।।
न ते पश्यंति संसारे नरकं वै कदा चन ।। ५८ ।।
एतत्ते कथितं देवि लिंगमहात्म्यमुत्तमम् ।।
प्रथमं कथितं लोके द्वितीयं शृणु यत्नतः।। ५९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्येऽगस्त्येश्वरमाहात्म्यवर्णनंनाम प्रथमोऽध्यायः ।। १ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०२



श्रीरुद्रउवाच ।। ।।
शृणु गुहेश्वरं लिंगं द्वितीयं पापनाशनम् ।।
यस्य दर्शनमात्रेण जायते सिद्धिरुत्तमा ।। १ ।।
पुरा राथंतरे कल्पे देवदारुवने शुभे ।।
ऋषिर्मंकणकोनाम वेदवेदांगपारगः ।।
योगाभ्यासरतो नित्यं शांतिदांतिसमास्थितिः ।। २ ।।
सिद्धिकामस्तपस्तेपे कथं सिद्धो भवाम्यहम् ।।
रक्तमयविकारोयं कथं यास्यति संक्षयम् ।। ३ ।।
इति संचिंत्य हृदये प्रारब्धं तप उत्तमम् ।।
बहून्यब्दसहस्राणि तस्यातीतानि पार्वति ।। ४ ।।
कस्मिंश्चिदथ काले तु विद्धस्य पर्वतात्मजे ।।
कराच्छाकरसो जातः कुशाग्रेण तदैव हि ।। ५ ।।
स च दृष्ट्वा तदाश्चर्यं विस्मयं परमं गतः ।।
मेने सिद्धिं परां प्राप्तां सगर्वो वाक्यमब्रवीत् ।। ६ ।।
अहो तपःप्रभावोऽयं प्राप्ता सिद्धिर्मयाद्य वै ।।
मत्तुल्यो नास्ति वै विप्रो येन सिद्धिः समागता ।। ७ ।।
शरीरं कुत्सितं चेदं मलमूत्रेण संयुतम् ।।
मन्त्रस्नायुवसापृक्तमांसशोणितपूरितम् ।।
हर्षेण महता युक्तः स ननर्त्त द्विजस्तथा ।। ८ ।।
एतस्मिन्नृत्यति विप्रे जगत्स्थावर जंगमम् ।।
अनृत्यद्रागसंयुक्तं प्रभावात्तस्य वै मुनेः ।। ९ ।।
न स्वाध्यायो वषट्कारः कर्मकांडो न च क्वचित् ।। 5.2.2.१० ।।
एतस्मिन्नंतरे देवा ब्रह्मविष्णु पुरःसराः ।।
मामूचुर्विस्मिताः सर्वे नाथ नृत्यं तदा कुरु ।। ११ ।।
ऋषौ मंकणके देव नृत्यति नृत्यति सर्वतः ।।
सदेवासुरमानुष्यं सर्वं लोकत्रयं विभो ।। १२ ।।
चलिताः पर्वताः स्थानात्क्षुभिता मेघपंक्तयः ।।

शिखराणि विशीर्यंते धरणी पीडिता भृशम् ।। १३ ।।
स्रोतोमात्रा महानद्यो ग्रहा उन्मार्गतः स्थिताः ।। १४ ।।
त्रैलोक्यं व्याकुलीभूतं यावन्नायाति संक्षयम् ।।
तावन्निवारयस्वैनं नान्यः शक्तो विना त्वया ।। १५ ।।
तेषां तद्वचनं श्रुत्वा त्रिदशानां यशस्विनि ।।
प्रतिज्ञातं मयात्यर्थं गत्वा तस्य समीपतः ।। १६ ।।
द्विजरूपं समास्थाय मया पृष्टो द्विजोत्तमः ।।
किमर्थं नृत्यसि ब्रह्मन्कस्मात्ते हर्ष आगतः ।। १७ ।।
विरुद्धमृषिधर्माणां कामरागेण नर्त्तनम् ।।
गीतं च नर्त्तनं चैव युवतीजनवल्लभम् ।। १८ ।।
ब्राह्मणस्य तपो भ्रंशः सदाचारस्य सत्तम ।।
इति मत्वा द्विजश्रेष्ठ किमर्थं नृत्यसे भृशम्।। १९ ।।
।। ऋषिरुवाच ।। ।।
किं न पश्यसि भो ब्रह्मन्कराच्छाकरसं च्युतम् ।।
अतएव हि मे नृत्यं सिद्धोऽहं नात्र संशयः ।। 5.2.2.२० ।।
तस्य तद्वचनं श्रुत्वा हासोऽतीव मया कृतः ।।
अंगुष्ठस्ताडितः स्वीयोंगुल्यग्रेण च पार्वति ।। २१ ।।
ततो विनिर्गतं भस्म तत्क्षणाद्धिमपांडुरम् ।।
हासेनोक्तो विशालाक्षि सगर्वो ब्राह्मणो मया ।। २२ ।।
पश्य मेंऽगुष्ठतो ब्रह्मन्भूरि भस्म विनिर्गतम् ।।
न नृत्येहं न मे हर्षस्तथापि मुनिस्सम ।। २३ ।।
तद्दृष्ट्वा महदाश्चर्यं लज्जितो द्विजसत्तमः ।।
धैर्यं च तादृशं दृष्ट्वा विस्मयं परमं गतः ।। २४ ।।
अब्रवीत्प्रांजलिर्भूत्वा विस्मितेनांतरात्मना ।।
नान्यं देवमहं मन्ये त्वां मुक्त्वा वृषभध्वजम् ।। २५ ।।
नान्यस्य विद्यते शक्ति रीदृशी भुवनत्रये ।।
तस्मात्क्षमस्व देवेश मयाज्ञानादनुष्ठितम् ।। २६ ।।
तपःक्षयकरं कर्म विरुद्धं नर्त्तनं सताम्।।
बहुकालार्जितं पुण्यं तपसा दुष्क रेण तु ।।
तद्गतं सहसा देव मदीयं नर्त्तनेन सु ।। २७ ।।
तस्य तद्वचनं श्रुत्वा मयोक्तो द्विजसत्तमः ।।
वरं वरय भद्रं ते तुष्टोऽहं द्विजसत्तम ।। २८ ।।

ज्ञानेनानेन विप्रेंद्र कं ते कामं करोम्यहम् ।।२९ ।।

ऋषिरुवाच ।। ।।

यदि देव प्रसन्नस्त्वं शरणागतवत्सल ।।

यथा न स्यात्तपोहानिस्तथा नीतिर्विधीयताम्।।5.2.2.३०।।

मया प्रोक्तं प्रसन्नेन तस्य विप्रस्य पार्वति ।।

तपस्ते वर्द्धतां विप्र महाकालवनं व्रज।।३१।।

तत्रास्ते सर्वदा पुण्या सप्तकल्पोद्भवा गुहा।।

पिशाचेश्वरदेवस्य उत्तरेण व्यवस्थिता ।। ३२ ।।

तत्र द्रक्ष्यसि यल्लिंगं सप्तकल्पोद्भवं शुभम्।।

तस्य दर्शनमात्रेण तपस्ते वृद्धिमेष्यति ।।३३।।

काम क्रोधोद्भवं पापं लोभमोहसमन्वितम् ।।

ईर्ष्यामत्सरजं चैव नाशं याति च किल्बिषम् ।।३४।।

मदीयं वचनं श्रुत्वा स विप्रो वेदपारगः ।।

श्रुत्वा च नियमं देवि मदुक्तं स ततो द्विजः ।। ३५ ।।

निःसृतो नियतो भूत्वा नमस्कृत्य पुनःपुनः ।।

आजगाम गुहा यत्र महाकालवनोत्तमे।। ३६।।

ददर्श तत्र तल्लिंगं तपसो वर्द्धनं परम् ।।

द्वादशादित्यसंकाशो जातो वै लिंगदर्शनात् ।।३७।।

एतस्मिन्नंतरे देवि देवैरुक्तं नभस्तले ।।

गोप्यं लिंगं गुहोत्थं तु दृष्टं मंकणकेन तु ।।३८।।

सिद्धिः प्राप्ता द्विजेनैव दर्शनेन सुदुर्लभा ।।

तस्माद्गुहेश्वरो देवि भविष्यति महीतले ।।३९।।

भक्त्या परमयोपेता ये द्रक्ष्यंति गुहेश्वरम् ।।

न तेषां जायते विघ्नो धर्मस्य तपसस्तथा ।। 5.2.2.४० ।।

अष्टम्यां वा चतुर्दश्यां दर्शनं यः करिष्यति ।।

ब्रह्मलोकं गमिष्यंति पितरस्तस्य देहिनः ।। ४१ ।।

अत्रागत्य प्रयत्नेन दर्शनं यः करिष्यति ।।

उद्धरिष्यति चात्मानं पुरुषानेकविंशतिम्।। ४२ ।।

कृत्वा पापसहस्राणि दर्शनं यः करिष्यति ।।

स याति परमं स्थानं यत्र देवो महेश्वरः ।। ४३ ।।

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ।।

दर्शनात्तस्यलिंगस्य सर्वं यास्यति संक्षयम् ।। ४४ ।।

यत्किंचिदशुभं कर्म जन्मकोटिशतार्जितम् ।।
क्षयं यास्यति तत्सर्वं स्पर्शमात्रेण नान्यथा ।। ४५ ।।
महापातकयुक्ता हि देहिनो ये महीतले ।।
तेऽपि लिंगं समासाद्य मुच्यंते सर्वपातकैः ।। ४६ ।।
इत्युक्त्वा स द्विजो देवि दिव्यो मंकणको मुनिः ।।
कृत्वाश्रमपदं पुण्यं तत्रैव तपसि स्थितः ।। ४७ ।।
एष वै कथितो देवि प्रभावः पापनाशनः ।।
श्रवणात्कीर्त्तनाद्वापि सर्वपापैः प्रमुच्यते ।। ४८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये गुहेश्वरमाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ।। २ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/f6h
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीरुद्र उवाच ।। ।।
ढुंढेश्वरं तृतीयं तु सुखस्वर्गफलप्रदम् ।।
सर्वपापहरं लिगं नृणां दुष्कृतनाशनम् ।। १ ।।
ढुंढश्चासीत्पुरा देवि कैलासे गणनायकः ।।
स च कामी दुराचारो व्यसनोपहतेन्द्रियः ।। २ ।।
गतोऽसौ शक्रलोकं तु कौतुकार्थं यदृच्छया ।।
यत्र नृत्यति सा रंभा शक्रस्याग्रे विवृण्वती ।। ।। ३ ।।
भावान्बहुविधान्रम्यान्दृष्टिहस्तादिकाञ्छुभान्।
सूचीविद्धादिकरणान्पताकादिकहस्तकान्।।
नृत्यं हस्तादिसंयुक्तं लयतालानुगं तथा ।।४।।
शक्रोऽपि त्रिदशैः सार्द्धं तन्मुखासक्तलोचनः ।।
बभूव हृष्टचेता वै हृषितांगरुहाननः ।। ५ ।।
एतस्मिन्नंतरे देवि ढुंढस्तल्ललितेन तु ।।
कामरागवशेनैव भाव्यर्थेन च मोहितः ।। ६ ।।
तेन रंगरता रंभा पुष्पगुच्छेन ताडिता ।।
स शप्तो वासवेनैव दृष्ट्वाऽन्यायं गणस्य तु ।। ७ ।।
पत त्वं मानुषं लोकं रंगभंगस्त्वया कृतः ।।
इति शप्तो गणो देवि शक्रेणामिततेजसा ।। ८ ।।
पतितो मानुषे लोके विसंज्ञो विह्वलेन्द्रियः ।।
कादिग्भूतो हतो त्साहो विललाप पुनःपुनः ।। ९ ।।
अहोऽन्यायफलं प्राप्तं मया मोहादनुष्ठितम् ।।
तस्मान्नीतिर्विधातव्या पुरुषेण विजानता ।। 5.2.3.१० ।।
न्यायमार्गं समाश्रित्य येन सिद्धिर्भवेन्मम ।। ११ ।।
इत्युक्त्वा स तपस्तेपे महेंद्रे पर्वतोत्तमे ।।
श्रीशैले मलये विंध्ये पारियात्रे यमालये ।। १२ ।।
नो सिद्धोऽसौ यदा देवि तदा गंगामहत्तटम् ।।

यमुनां चंद्रभागां च वितस्तां नर्मदां नदीम् ।। १३ ।।
गोदावरीं भीमरथीं कौशिकीं शारदां शिवाम् ।।
चर्मण्वतीं समासाद्य स्नात्वा त्यक्तक्रियोऽभवत् ।। १४ ।।
तीर्थं व्यर्थं तपो व्यर्थं तीर्थयात्राफलं यतः ।।
न प्राप्तं च मयाभीष्टमटता कर्मभूमिषु ।। १५ ।।
एतस्मिन्नंतरे देवि वागुवाचाशरीरिणी ।।
आश्वासयंती गणपं महाकालायने व्रज ।। १६ ।।
प्रयागाद्यानि तीर्थानि पृथिव्यां यानि संति वै ।।
सदा सिद्धिकरं तेषां महाकालं विशिष्यते ।। १७ ।।
तत्रास्ते सुमहापुण्यं लिंगं सर्वार्थसाधकम् ।।
पिशाचेश्वरसांनिध्ये तमाराधय सत्वरम् ।। १८ ।।
प्रसादात्तस्य लिंगस्य पुनर्यास्यसि शांकरम् ।।
लोकं तेजस्विनां गम्यं दुर्लभं पापिनां सदा ।। १९ ।।
इति श्रुत्वा ततो वाणीमाकाशस्थां गणस्तदा ।।
आजगाम मुदा युक्तो महाकालवनोत्तमे ।। 5.2.3.२० ।।
ददर्श तत्र तल्लिंगं सर्वसंपत्करं शुभम्।।
पूजयामास देवेशं भक्त्या परमया युतः ।। २१ ।।
लिंगमध्यात्ततो वाणी निःसृता पर्व तात्मजे ।।
अहो तुष्टोस्मि ते वत्स किं कामं प्रददाम्यहम् ।। २२ ।।
।। ढुंढ उवाच ।। ।।
यदि तुष्टोऽसि देवेश शरणागतवत्सल ।।
त्वत्पादपंकजे भूयाद्भक्तिर्मेऽविचला सदा ।। २३ ।।
वरमेनं प्रयच्छाशु यदि तुष्टो महेश्वरः ।। २४ ।।
ये च त्वां मानवा देव पश्यंति परमेश्वर ।।
पापात्सद्यो विनिर्मुक्तास्ते भवंतु महीतले ।। २५ ।।
ढुंढस्य भाषितं श्रुत्वा लिंगेनोक्तं यशस्विनि ।।
ये च मां पूजयिष्यंति श्रद्धया परया पुनः।।
ते भविष्यंति सततं सदा पातकवर्जिताः ।। २६ ।।
लप्स्यंति ते परान्कामान्भविष्यंति गणोत्तमाः।।
पूज्याः सर्वेषु लोकेषु सर्वालंकारभूषिताः ।।२७।।
एवं लब्धवरो ढुंढः प्रांजलिः पुनरब्रवीत् ।।
मन्नाम्ना प्रथितं लिंगं संभूयाद्भुवने सदा ।। २८ ।।

एवमस्त्विवति लिंगेन प्रोक्तं तुष्टेन पार्वति ।।
तदाप्रभृति विख्यातो देवो ढुंढे श्वरः परः ।। २९ ।।
यस्य दर्शनमात्रेण सदा सिद्धिर्भवेन्नृणाम्।। 5.2.3.३० ।।
भक्त्या ये पूजयिष्यंति देवं ढुंढेश्वरं परम् ।।
आजन्मप्रभवं पापं तेषां यास्य ति तत्क्षणात् ।।३१।।
स एव सुकृती लोके स एव मम वल्लभः।।
यः पश्यति नरो भक्त्या लिंगं ढुंढेश्वरं परम् ।। ३२ ।।
राजसूयशतेनैव यत्पुण्यं च भविष्यति ।।
ततो भविष्यत्यधिकं ढुंढेश्वरनिरीक्षणात्।।३३।।
मानसं वाचिकं वापि कायिकं गुह्यसंभवम् ।।
प्रकाशं वाऽप्रकाशं च प्रसंगादपि यत्कृ तम् ।।
तत्सर्वं यास्यति क्षिप्रं ढुंढेश्वरस्य दर्शनात्।।३४।।
इत्युक्तस्तु मया देवि स ढुंढो गणनायकः ।।
कृतो लिंगस्य माहात्म्याद्गतो लोके मदीयके ।।
रेजे च गणपैः सार्द्धं ममाभीष्टतरोऽभवत्।।३५।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
श्रवणात्कीर्तनाद्वापि मम लोके महीयते ।।३६।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये ढुंढेश्वरमाहात्म्यवर्णनंनाम तृतीयोऽध्यायः ।।३।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०४



श्रीमहादेव उवाच ।।

ख्यातोऽवंत्यां चतुर्थोऽसौ देवो डमरुकेश्वरः।।

दृष्टे यस्मिञ्जगन्नाथे याति पापं च संक्षयम् ।।१।।

पुरा वैवस्वते कल्पे रुरुर्नाम महासुरः ।।

तस्य पुत्रो महाबाहुर्वज्रोनाम महाबलः ।।

बभूव सुमहाकायस्तीक्ष्णदंष्ट्रो भयंकरः ।। २ ।।

तेन देवाः स्वाधिकाराच्चालितास्त्रिदशाल यात् ।। ३ ।।

ततो नीतं धनं तेषां ब्रह्माणं ते ततो ययुः ।।

ब्रह्मापि भयसंविग्नो बभूवाकुलितेंद्रियः ।। ४ ।।

ज्ञात्वावध्यं सुरैः सार्धं सर्वैः सोऽथमहा बलः ।।

तेषु नष्टेषु ये विप्रा यज्वानोऽथ तपस्विनः ।।

ताञ्जघान स दुष्टात्मा ये चान्ये धर्मचारिणः ।। ५ ।।

निःस्वाध्यायवषट्कारं तदासीद्धरणीत तलम्।।

नष्टयज्ञोत्सवं देवि हाहाभूतमचेतनम् ।। ६।।

ततः प्रव्यथिता देवास्तथा सर्वे महर्षयः ।।

समेत्यामंत्रयन्मंत्रं वधार्थं तस्य दुर्मतेः ।। ७ ।।

ततः कायोऽभवत्सद्यः सर्वेषां पुरतस्तदा ।।

तेषां चिंतयतां देवि तेजःपुंजेन चावृतः ।। ८ ।।

तस्मात्कृत्या समुत्पन्ना दिव्या कमललोचना ।।

द्योतयंती दिशः सर्वाः स्वतेजोभिः समंततः ।। ९ ।।

साब्रवीत्त्रिदशान्सर्वान्कस्मात्सृष्टा ह्यहं सुराः ।।

यत्कर्तव्यं मया कर्म तच्छीघ्रं संनिवेद्यताम् ।। 5.2.4.१० ।।

ततस्तु त्रिदशाः सर्वे श्रुत्वा तस्याः शुभा गिरः ।।

आचख्युः सकलं तस्यै तदा वज्रस्य चेष्टितम् ।। ११ ।।

श्रुत्वा जहास सा देवी साट्टहासं मुहुर् मुहुः ।।

तस्या हसंत्या निःसस्रुः कन्याः कमललोचनाः ।। १२ ।।

पाशांकुशधरा रौद्रा ज्वालामालावृताननाः ।।

फेत्कारेण च संनादैश्चालयंत्यश्चराचरम् ।। १३ ।।
गताः सर्वा महादेवि यत्र वज्रो महासुरः ।।
युद्धं तु तुमुलं जातं ताभिस्तस्य भयावहम् ।। १४ ।।
शस्त्रास्त्रैर्बहुधा मुक्तैर्व्याप्तं चैव दिगंतरम् ।।
संनद्धाखिलसैन्यास्ते युयुधुः समरे भृशम् ।। १५ ।।
ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ।।
ततो मातृगणं क्रुद्धं मर्द्दयन्तं महासु रान् ।।
पराङ्मुखं बलं दृष्ट्वा वज्रो मायामथासृजत् ।। १६ ।।
तामसींनाम दुःसाध्यां यया मुह्यति कन्यकाः ।। १७ ।।
तमोभूते ततस्तस्मिन्सा देवी भयविह्वला ।।
ताभिः सार्द्धं समायाता महाकालवनोत्तमम् ।। १८ ।।
कपालवान्हरो यत्र लिंगाकारेण संस्थितः ।।
ज्ञात्वा मातृगणं नष्टं ततो मायाप्रभावतः ।। १९ ।।
वज्रोऽपि त्रिदशाञ्ज्ञात्वा देव्या सार्द्धमथोपि(षि?)तान् ।।
आजगाम तमुद्देशं स्वसैन्यपरिवारितः ।। 5.2.4.२० ।।
महाकालवने दिव्ये रथकोटिशतैर्वृतः।।
समंताच्च वनं देवि तत्क्रुद्धो वाक्यमब्रवीत् ।।२१।।
अद्य देवान्हनिष्यामि तया साकं सुदुष्टया ।।
कन्याभिः सह या नष्टा तमोमायाबलेन तु।।२२।।
एतस्मिन्नंतरे काले नारदो मुनिसत्तमः।।
सोत्सुकस्तु समायातो मंदरे चारुकंदरे।। २३ ।।
कथयामास देवनां वज्राद्देवपराभवम्।।२४।।
महाकालवने देव ताडितास्त्त्रिदशाः प्रभो।।
वज्रेण रुरुपुत्रेण तस्माद्याहि महेश्वर।।२५।।
नारदस्य वचः श्रुत्वा ततोऽहं परमेश्वरि।।
मंदरादागतस्तूर्णं कृत्वा रूपं सुभैरवम्।।२६।।
सर्पैर्लसद्भिरत्युग्रैर्भीषणैर्गणसंवृतः।।
अग्रे दृष्टं महत्सैन्यं दानवानां भयावहम्।।२७।।
महाकालवनं रुद्धं समंतादसुरेण तु ।।
वज्रेण रुरुपुत्रेण दुःसहेन यशस्विनि ।। २८ ।।
तदागत्य मया ताड्य रौद्रं डमरुकं तथा ।।
मोहितं सहसा सैन्यं वज्रस्यैव दुरात्मनः ।। २९ ।।

डमरुकस्य नादेन ह्युत्थितं लिंगमुत्तमम् ।।
विदार्य वसुधां देवि ज्वालामालाकुलं तदा ।। 5.2.4.३० ।।
तस्य लिंगस्य च तदा महाज्वाला विनिर्गता ।।
एकदेशाद्वरारोहे ब्रह्मांडव्यापिनी तथा ।। ३१ ।।
लिंगस्यान्यप्रदेशात्तु वायुः समभवन्महान् ।। ३२ ।।
तेजोज्वालासमूहेन वातेन प्रेरितेन च ।।
सह चक्रेण तत्सैन्यं दग्धं भस्मत्वमागतम् ।। ३३ ।।
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ।।
नमश्चक्रुर्ह ते तस्मिन्नुरुपुत्रे महाबले ।। ३४ ।।
अस्य देवस्य माहात्म्याद्दग्धो वज्रो महाबलः ।।
ससैन्योभूत्ततस्तस्मादेष डमरुकेश्वरः ।।
ख्यातिं यास्यति लोकेस्मिन्सर्वकामफलप्रदः ।। ३५ ।।
डमरुकस्य तु नादेन जातो यस्मान्महीतले ।।
अतः पूज्यवरो देवो भविष्यति न संशयः ।। ३६ ।।
दृष्ट्वा ये पूजयिष्यंति देवं डमरुकेश्वरम् ।।
ते सर्वे दुःखनिर्मुक्ता भविष्यंति गतज्वराः ।। ३७ ।।
चांद्रायणानां विधिवच्छतानामथ यत्फलम् ।।
तत्फलं समवाप्नोति डमरुकेश्वरपूजनात् ।। ३८ ।।
अस्मिन्स्थाने स्थितं लिंगं भक्त्या डमरुकेश्वरम् ।।
प्रसंगादपि पश्यंति ह्यपि पापपरा नराः ।। ३९ ।।
तेऽप्यवश्यं तु यास्यंति रुद्रलोकं सनातनम् ।।
भक्ताः स्तोष्यंति ये लिंगं ख्यातं डमरुकेश्वरम् ।।5.2.4.४०।।
मानसैः पातकैर्मुक्ता यास्यंति परमं पदम् ।।
अश्वमेधसहस्रं तु वाजपेयशतं भवेत् ।।
गोसहस्रफलं चात्र दृष्ट्वा प्राप्स्यंति मानवाः ।। ४१ ।।
यो याति संगरे धीरो दृष्ट्वा डमरुकेश्वरम् ।।
जयेद्रिपूनथांते स रुद्रलोके महीयते ।। ४२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
स्तुतस्तु कीर्तितश्चैव सर्वाभीष्टफलप्रद ।। ४३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये डमरुकेश्वरूमाहात्म्यवर्णनंनाम चतुर्थोऽ ध्यायः ।। ४ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०५



।। श्रीरुद्र उवाच ।। ।।
अनादिकल्पेश्वरं देवं पंचमं विद्धि पार्वति ।।
सर्वपापहरं नित्यमनादिर्गीयते सदा ।। १ ।।
कल्पस्यादौ पुरा देवि लिंगमेतद्विनिर्गतम् ।।
यदा नाग्निर्न चादित्यो न भूमिर्न दिशो न खम् ।। २ ।।
न वायुर्न जलं चैव न द्यौर्ने न्दुर्ग्रहा न च ।।
न देवासुरगंधर्वा न पिशाचा न राक्षसाः ।। ३ ।।
अतो लिंगात्समुद्भूतं जगत्स्थावरजंगमम् ।।
कालेन च लयं याति लिंगेऽस्मिन्पर्वतात्मजे ।। ४ ।।
अस्माल्लिंगात्समुद्भूता वंशा देवर्षिपैतृकाः ।।
मन्वंतराणि वंशानि वंश्यानुचरितं च यत् ।। ५ ।।
यावत्यः सृष्टयश्चैव यावंतः प्रलयास्तथा ।।
समुद्राः पर्वताश्चैव निम्नगाः काननानि च ।। ६ ।।
भूर्लोकाद्याश्च ये लोकाः पातालाः सप्त ये स्मृताः ।।
गतिस्तथार्कसोमादिग्रहर्क्षं ज्योतिषामपि ।। ७ ।।
दृश्यादृश्यं च तत्सर्वमतो लिंगाद्वरानने ।।
अनादिकारणं यत्तदव्यक्ताख्यं महर्षयः ।।
यदाहुः पुरुषं सूक्ष्मं नित्यं सदसदा त्मकम् ।। ८ ।।
ध्रुवमक्षयमजरममेयं नान्यसंश्रयम् ।।
गंधरूपरसैर्हीनं शब्दस्पर्शविवर्जितम् ।। ९ ।।
अनाद्यंतं जगद्योनिं त्रिगुणप्रभवाव्ययम् ।।
असादृश्यमविज्ञेयं लिंगं प्रोक्तं महर्षिभिः ।। 5.2.5.१० ।।
प्रलयस्यांते तेनेदं दिव्यमासीदशेषतः ।। ११ ।।
अहमुर्व्यां प्रबुद्धस्तु जगदादिरनादिमान् ।।
सर्वहेतुरचिंत्यात्मा परः कोऽप्यपरक्रियः ।। १२ ।।
प्रकृतिं पुरुषं चैव प्रदर्श्याशु जगत्पतिः ।।
क्षोभयामास योगेन परेण परमेश्वरः ।। १३ ।।

यथा संनिधिमात्रेण गंधः क्षोभाय जायते ।।
मनसो नोपकर्तृत्वात्तथासौ परमेश्वरः ।।
अनादिः कथ्यते देवो जगत्कारणतत्परम् ।।१४।।
प्रधानं क्षोभ्यमाणं तु तेन लिंगेन पार्वति ।।
जायते भुवनाधारो ब्रह्मांड इति विश्रुतः ।। १५ ।।
यस्मिन्नंडे जगत्सर्वं सदेवासुरमानुषम् ।।
उत्पन्नं च विलीनं च यस्यांतोऽपि न लभ्यते ।।१६।।
स एव क्षोभकः पूर्वं स क्षोभ्यः पृथिवीपतिः ।।
स संकोचविकासाभ्यां प्रधानत्वे व्यवस्थितः ।। १७ ।।
उत्पन्नः स जगन्नाथो निर्गुणोऽपि रजोगुणः ।।
भुंजन्प्रवर्तते सर्गं ब्रह्मत्वं समुपागतः ।। १८ ।।
ब्रह्मत्वे सृजते लोकांस्ततः सत्त्वातिरेकतः ।।
विष्णुत्वमेत्य धर्मेण करोति परिपालनम् ।। १९ ।।
ततस्तमोगुणोद्भिन्नो रुद्रत्वेनाखिलं जगत् ।।
उपसंहृत्य वै शेते त्रैलोक्यं त्रिगुणोऽगुणः ।। 5.2.5.२० ।।
यथा प्राग्वापकः क्षेत्री पालको लावकस्तथा ।।
स संज्ञा याति तद्वच्च ब्रह्मविष्णुत्वरुद्रताः ।। २१ ।।
ब्रह्मत्वे सृजते लोकानुद्रत्वे संहरत्यपि ।।
विष्णुत्वे पाति तान्सर्वांस्तिस्रोऽवस्थाः स्मृताः सदा ।। २२ ।।
रजो ब्रह्मा तमो रुद्रः सत्त्वं विष्णुर्जगत्पतिः ।।
एत एव त्रयो वेदा एत एव त्रयो नराः ।। २३ ।।
कल्पे कल्पे ह्यनादिस्तु गीयते त्रिदशैः सदा ।।
पितृभिश्च गणैः सिद्धैरतोऽनादिकल्पेश्वरः ।। २४ ।।
नाम प्राप्तं विशालाक्षि महाकालवनं सदा ।।
यदा जातो विवादस्तु ब्रह्मणः केशवस्य च ।। २५ ।।
अहं ज्यायानहं ज्यायान्कल्पादौ सृष्टिकारणात् ।।
दिव्या समुत्थिता वाणी निरालंबा तदांबरात् ।। ।। २६ ।।
महाकालवने लिंगं कल्पेश्वरेति संज्ञकम् ।।
तस्यादिमथवांतं च यः पश्यति स च प्रभुः ।।
भविष्यति न संदेहो न वादः क्रियता मिति ।। २७ ।।
ततो देवि गतो ब्रह्मा ऊर्द्ध्वलोकमनंतकम् ।।
अधोलोकं गतो विष्णुस्तेन वाक्येन सत्वरम् ।। २८ ।।

नादिर्दृष्टो न चांतश्च ब्रह्मणा केशवेन तु ।।
तदा तौ विस्मयापन्नौ तुष्टुवाते परस्परम् ।। २९ ।।
वेदोक्तसूक्तैर्विविधैरभिनंद्य पुरःस्थितौ ।।
नादिरस्ति न चांतश्च न च कल्पोऽत्र दृश्यते ।। 5.2.5.३० ।।
तस्मादनादिकल्पोऽयमद्यप्रभृति भूतले ।।
ख्यातिं यास्यति नाम्ना च महाकालवनोत्तमे ।। ३१ ।।
पञ्चपातकसंयुक्तो यो मर्त्यो दुष्टमानसः ।।
सोऽपि गच्छेच्छिवं दृष्ट्वानादिकल्पेश्वरं शिवम् ।। ३२ ।।
शिवमस्तु सदा तेषां येषां त्वं दर्शनं गतः ।।
ते धन्या मानुषे लोके ये त्वां शरणागताः ।। ३३ ।।
सर्वतीर्थाभिषेकैस्तु यत्पुण्यं प्राप्यते नरैः ।।
तत्सर्वमधिकं देव लभ्यते तव दर्शनात् ।। ३४ ।।
तावत्पतंति संसारे सुखदुःखसमाकुले ।।
तावन्न दृश्यते देव संसारार्णवतारकः ।। ३५ ।।
यदा पापक्षयः पुंसां तदा त्वद्दर्शनं भवेत् ।। ३६ ।।
ब्रह्महा वा सुरापो वा स्तेयी च गुरुतल्पगः ।।
तत्संसर्गी नरो यस्तु महाकिल्बिषकारकः ।।
सोऽपि याति परं स्थानं पुनरावृत्तिवर्जितम् ।। ३७ ।।
यत्फलं चाश्वमेधेन राजसूयेन यत्फलम् ।।
तत्फलं समवाप्नोति तव देव समर्चनात् ।। ३८ ।।
ते नराः पशवो लोके तेषां जन्म निरर्थकम् ।।
यैर्न दृष्टो महादेवोऽना दिकल्पेश्वरः शिवः ।। ३९ ।।
इत्युक्त्वा केशवो देवो ब्रह्मा चैव वरानने ।।
वामे दक्षिणभागे च तस्य लिंगस्य संस्थितौ ।। 5.2.5.४० ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
यस्य श्रवणमात्रेण लभ्यते परमं पदम्।। ४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे चतुरशीतिलिंगमाहात्म्येऽनादिकल्पेश्वरमाहात्म्यवर्णनंनाम पंचमोऽध्यायः ।। ५ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/f6x
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीमहादेव उवाच ।। ।।।

स्वर्णज्वालेश्वरं षष्ठं विद्धि चात्र यशस्विनि ।।

यस्य दर्शनमात्रेण धनवानिह जायते ।। १ ।।

पुरा सार्द्धं त्वया देवि क्रीडतो मम मंदिरे ।।

जातं वर्षशतं दिव्यं सुरतैकरसस्य च ।। २ ।।

देवैः सर्वैस्ततो वह्निः प्रेरितो मम संनिधौ ।।

ततो वह्निः समायातस्त्रैलोक्यार्थे यशस्विनि।। ३ ।।

ततो वह्निमुखे क्षिप्तं वीर्यं स्वं क्रीडता मया ।।

दह्यमानस्तदा तेन गंगां वह्निर्जगाम ह ।। ४ ।।

तत्र गत्वा प्रचिक्षेप वीर्यमग्निः सुदुर्द्धरम् ।।

तथापि दह्यते वह्निर्वीर्यशेषेण पार्वति ।। ५ ।।

जातं रम्यं ततो दिव्यं वीर्यशेषेण कांचनम् ।।

ज्वलंतं चातितापेन दुःसहं दुर्द्धरं प्रिये ।। ६ ।।

अग्नेरपत्यं प्रथमं दृष्ट्वोत्पन्नं तु पार्वति ।।

लोभाभिभूता असुराः सुरा गन्धर्वकिन्नराः ।। ।। ७ ।।

यक्षाः साध्याः पिशाचाश्च मनुष्या राक्षसाः खगाः ।।

अभ्यधावन्सुसंरब्धास्ते सुवर्णजिघृक्षवः ।। ८ ।।

सुवर्णार्थे महान्नादो ममेदमिति जल्पताम् ।।

अज्ञानात्संगरश्चैव संजातः प्राणहारकः ।। ९ ।।

अथावरणमुख्यानि नानाप्रहरणानि च ।।

प्रगृह्याभ्यनदन्नादैर्देवैः सार्द्धं यशस्विनि ।। 5.2.6.१० ।।

असुरा असुरैः सार्द्धं मनुष्या मानुषैः सह ।।

गन्धर्वाः सह गन्धर्वैः किंनरैः सह किंनराः ।। ।। ११ ।।

भूतैः सार्द्धं च भूतानि राक्षसैः सह राक्षसाः ।।

वेतालैः सह वेताला युद्धं चक्रुः सुदारुणम् ।। १२ ।।

पुत्रस्तु पितरं द्वेष्टि पिता पुत्रं तथैव च ।।

हंति भार्या स्वभर्तारं भर्ता च स्वां प्रियां तथा ।। १३ ।।

मातरं स्वसुतो हंति माता पुत्रं हिनस्ति च ।।
ततो वैरविनिर्बंधः संजातः स्वर्णकारणात्।। १४ ।।
सुराणामसुराणां च सर्वं घोरतरं महत् ।।
प्रासाश्च विपुलास्तीक्ष्णा न्यपतंत सहस्रशः ।।
तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च ।। १५ ।।
सुवर्णार्थे महादेवि वमंतो रुधिरं बहु ।। १६ ।।
असिशक्तिगदाऋष्ट्यो निपेतुर्धरणीतले ।।
छिन्नानि पट्टिशैश्चैव शिरांसि युधि दारुणैः ।। १७ ।।
रुधिरेणावलिप्तांगा निहताश्च परस्परम् ।।
अद्रीणामिव कूटानि धातुयुक्तानि शेरते ।। १८ ।।
हाहाकारः समभवद्भयकृच्च सहस्रशः ।।
अन्योन्यं छिंदतां शस्त्रैः सुवर्णस्य च कारणात् ।। १९ ।।
परिघैरायसैः पाशैर्वज्रकल्पैश्च मुष्टिभिः ।।
निघ्नतां समरे ऽन्योन्यं शब्दो दिवमिवास्पृशत् ।। 5.2.6.२० ।।
छिंधिभिंधि प्रधाव त्वं पातयाधिसरेति च ।।
अश्रूयन्त महाघोराः शब्दास्तत्र समंततः ।। २१ ।।
एवं तु तुमुले युद्धे वर्त्तमाने महाभये ।।
कंपिता धरणी देवि देवास्त्रस्ताः सवासवाः ।। २२ ।।
क्षुभ्यंति स्म समुद्राश्च चेलुश्च धरणीधराः ।।
तस्यार्थे पीडितं सर्वं सदेवासुरमानुषम्।।२३।।
ऋषयो वालखिल्याद्या देवाः शक्रपुरोगमाः।।
बृहस्पतिं पुरस्कृत्य ब्रह्मलोकं गताः स्त्रियः।।२४।।
सोच्छ्वासा कथयामासुर्जर्जरीकृतमस्तकाः ।।
वृत्तांतं विस्तरात्सर्वं लोकत्रयविनाशनम् ।। २५ ।।
तच्छ्रुत्वा वचनं तेषां ब्रह्मा लोकपितामहः ।।
चिंतयित्वा च तैः सार्द्धमाजगाम ममांतिकम् ।। २६ ।।
मया पृष्टास्तु ते सर्वे केनैते जर्जरीकृताः ।।
शस्त्रास्त्रैः पीडिताः केन कस्माद्वो भयमागतम् ।। २७ ।।
कश्चासौ दानवो दुष्टो येन वै पीडिता भृशम् ।।
तत्सर्वं कथितं देवि ममाग्रे भयविह्वलैः ।। २८ ।।
ते मामूचुस्तदा देवा ब्रह्माद्या भयकारणम् ।। ।। २९ ।।
लोभात्सर्वे विनष्टाः स्म सुवर्णस्य च कारणात् ।।

पीडितं च जगत्सर्वं सदेवासुरमानुषम् ।। 5.2.6.३० ।।
इति तेषां वचः श्रुत्वा मया ज्ञातं वरानने ।।
तस्यार्थे कलहो घोरः संजातो हि परस्परम् ।। ३१ ।।
लोकत्रयविनाशश्च सहसा येन वै कृतः ।।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघात कम् ।। ३२ ।।
ब्रह्महा वह्निपुत्रस्तु यमुद्दिश्य मृतो जनः ।।
शरीरं शबलं चैव सविकारं भविष्यति ।। ३३ ।।
धातवो हि भविष्यंति तस्य देहे न संशयः ।।
लक्ष्यते दुःखमतुलं छेददाहादिघर्षणम् ।। ३४ ।।
एतस्मिन्नंतरे वह्निर्दृष्ट्वा पुत्रस्य चेष्टितम् ।।
ज्ञात्वा क्रोधं मदीयं तु भीतो वै पुत्रकार णात् ।। ३५ ।।
आजगाम सुवर्णेन सार्द्धं देवि ममांतिकम् ।।
प्रसादितोऽहं पुत्रार्थे वह्निना हि वरानने ।। ३६ ।।
रक्षणीयस्त्वया देव पुत्रोयं तव शंकर ।।
भाण्डागारे स्वकीये तु क्रियतां परमेश्वर ।। ३७ ।।
त्वयि तुष्टे महादेव प्राप्योऽयं नात्र संशयः ।।
इच्छया दीयतां देवि यस्य कस्य जनस्य च ।। ३८ ।।
इति तस्य वचः श्रुत्वा पितृदेवमुखस्य च ।।
तथेति च प्रतिज्ञातं मया लोभाद्यशस्विनि ।। ३९ ।
स्नेहान्मया वह्निपुत्र उत्संगे च कृतस्तदा ।।
स्नेहाद्वै चुंबितो मूर्ध्नि परिष्वक्तः पुनःपुनः ।। 5.2.6.४० ।।
ददामि ते महाभाग वरं वरय शोभनम् ।।
परितुष्टोऽस्मि वै कामं यथेष्टं समवाप्नुहि ।। ४१ ।।
अहमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि ।।
ममाभीष्टकरं स्थानं विद्यते पृथिवीतले ।। ४२ ।।
अक्षयं प्रलये पुत्र महाकालवनं शुभम् ।।
तत्रैव विद्यते लिंगं कर्कोटकस्य दक्षिणे ।। ४३ ।।
महापापहरं पुत्र दर्शनाद्दीप्सिदायकम् ।।
तस्य दर्शनमात्रेण कृतकृत्यो भविष्यसि ।। ४४ ।।
पुण्यश्चैव पवित्रेण दुर्लभश्च भविष्यति ।।
अकुलीनः कुलीनस्तु समलो निर्मलो नरः ।। ४५ ।।
विरूपो रूपवांश्चैव त्वत्प्रसादाद्भविष्यति ।।

दानानि परिपूर्णानि व्रतानि नियमास्तथा ।। ४६ ।।
यज्ञाश्चैवोपवासाश्च तीर्थं पिंडादिकं त्वया ।।
सुसंपूर्णा भविष्यंति तव दानेन सुव्रत ।। ४७ ।।
सर्वेषां चैव रत्नानामाधिपत्यं करिष्यसि ।।
प्रियाभीष्टो हि देवानां लोकानां च भविष्यसि ।।४८।।
इत्युक्तोऽसौ महादेवि दिव्यरूपो वरानने ।।
ज्वालामाला वृतः पुण्यो निर्मलो हि बभूव ह ।।४९।।
लिंगेनोक्तः सुवर्णस्तु दिष्ट्यादिष्ट्येति कांचनम् ।।
अद्यप्रभृति नाम्ना वै ख्यातिं यास्यसि भूतले ।। 5.2.6.५० ।।
स्थातव्यं मत्समीपे तु वह्निपुत्र त्वया सदा ।।
अक्षया भविता कीर्त्तिस्त्वदीया भुवनत्रये ।। ५१ ।।
इत्युक्तो देवि लिंगेन वह्निपुत्रोऽतिनिर्मलः ।।
ज्वालावृततनुर्जातः सूर्यकोटिसमप्रभः ।। ५२ ।।
दीप्तिर्लब्धा सुवर्णेन ज्वालामालाकुला तदा ।।
अतो देवि सुविख्यातः स्वर्णज्वालेश्वरः शिवः ।। ५३ ।।
यस्तमर्चयते भक्त्या स्वर्णज्वालेश्वरं शिवम् ।।
तस्य संजायते देवि विजयो राज्यमूर्जितम् ।।
ऐश्वर्यं दानशक्तिश्च पुत्रपौत्रमनंतकम् ।। ।। ५४ ।।
ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः ।।
तत्क्षालयति देहोत्थं दर्शनान्नात्र संशयः ।। ५५ ।।
यत्फलं पिंडदानेन गयायां लभते नरः ।।
तत्फलं द्विगुणं प्रोक्तं पूजया नात्र संशयः ।। ५६ ।।
गायत्र्याः शतसाहस्रैः सम्यग्जप्तैश्च यत्फलम्।।
तत्फलं समवाप्नोति स्वर्णज्वालेश्वरस्तुतेः ।। ५७ ।।
यत्पुण्यं सर्वदानेन दत्तेन विधिपूर्वकम् ।।
तत्फलं समवाप्नोति कीर्तनान्नात्र संशयः ।। ५८ ।।
पूजयंति चतुर्दश्यां स्वर्णज्वालेश्वरं तु ये ।।
पूज्यंते ते सदा लक्ष्म्या पूरयंत्या मनोरथान् ।। ५९ ।।
रक्षितं त्रिदशैर्देवि गणैर्नानाविधैस्तथा ।।
लिंगं कश्चिन्न जानाति मम मायाविमोहितः ।। 5.2.6.६० ।।
मम प्रसादात्तद्देवि दृश्यते लिंगमुत्तमम् ।।

एतत्ते कथितं सम्यगन्यच्छृणु वरानने ।। ६१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये स्वर्णज्वालेश्वरमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ।। ६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/f6i
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीमहादेव उवाच ।। ।।

त्रिविष्टपेश्वरं देवि सप्तमं पर्वतात्मजे ।।

यस्य दर्शनमात्रेण लभ्यते तत्त्रिविष्टपम् ।। १ ।।

पुरा वाराहकल्पे तु देवर्षिर्नारदोऽमलः ।।

त्रिविष्टपं गतो देवि द्रष्टुकामः शतक्रतुम् ।। २ ।।

तत्रोद्यानवने रम्ये कल्पवृक्षैर्विराजिते ।।

सर्वत्र कुसुमामोदसुखस्पर्शानिलाकुले ।। ३ ।।

वीणावेणुरवैर्घुष्टे देवगंधर्वसेविते ।।

वज्रेंद्रनीलवैदूर्यचंद्रकांतादिदीपिते ।। ४ ।।

ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणे शुभे ।।

ददर्श तत्र देवेशमुपविष्टं शतक्रतुम् ।।

स्तूयमानं मुदा देवैः सि द्धचारणकिन्नरैः ।। ५ ।।

पृष्टस्तु नारदो देवि वासवेन महामुनिः ।।

कथयामास माहात्म्यं महाकालवनस्य च ।। ६ ।।

महाकालवनं रम्यं सदानंदकरं शुभम् ।।

सेव्यं पुण्यं पवित्रं च तीर्थानामुत्तमोत्तमम् ।। ७ ।।

पुण्यं पश्यंति ये लोका महाकालवनं शुभम् ।।

ब्रह्महत्यादिकं पापं तेषां नश्यति निश्चि तम् ।। ८ ।।

स्वयं तिष्ठति देवोऽत्र सर्वभूतगणैर्वृतः ।।

तस्मात्तत्तीर्थमुख्यानां प्रवरं कथ्यते बुधैः ।। ९ ।।

पृथिव्यां नैमिषं पुण्यं सर्वपापप्रणाशनम् ।।

तस्माद्दशगुणं प्रोक्तं पुष्करं तीर्थमुत्तमम् ।। 5.2.7.१० ।।

ततो दशगुणं प्रोक्तं प्रयागं सर्वकामिकम् ।।

तस्माद्दशगुणं प्रोक्तं विख्यातममरेश्वरम् ।। ११ ।।

प्राची सरस्वती पुण्या तस्माद्दशगुणा स्मृता ।।

तस्मादशगुणं प्रोक्तं गयाकूपं विशिष्यते ।। १२ ।।

तस्माद्दशगुणं देवि कुरुक्षेत्रं विशिष्यते ।।

कुरुक्षेत्राद्दशगुणा पुण्या वाराणसी तथा ।। १३ ।।
तस्या दशगुणं श्रेष्ठं महाकालं विशिष्यते ।।
महाकालवनं शक्र किल त्रैलोक्यभूषणम् ।। १४ ।।
षष्टि कोटिसहस्राणि षष्टिकोटिशतानि च ।।
लिंगानि तत्र विद्यंते भुक्तिमुक्तिकराणि च ।। १५ ।।
शक्तयो नव कोट्यस्तु तस्मिन्क्षेत्रे वसन्ति हि।।१६।।
कृमिकीटपतंगाश्च मृता यत्र ततः क्रतौ ।।
यांति दिव्यैर्विमानैश्च रुद्रलोकं सनातनम् ।।
माहात्म्यमद्भुतं श्रुत्वा नारदात्सुरसत्तमः ।। १७ ।।
सर्वदेव गणैः सार्द्धमाजगाम त्वरान्वितः ।।
वासवः श्रीमहाकालवनं हर्षसमन्वितः ।। १- ।।
दृष्ट्वा तथाविधं रम्यं महाकालवनं शुभम् ।।
त्रिविष्टपादप्यधिकं प्रलयेऽप्यक्षयं स्मृतम् ।।१९।।
विचित्राणि च हर्म्याणि कांचनानि शुभानि च ।।
प्रासादाः शतशो भौममणिविद्रुमभूषिताः ।। 5.2.7.२०।।
वज्रेंद्रनीलरचिताः शुद्धस्फटिकसंनिभाः ।।
तोरणानि विचित्राणि माणिक्यरचितानि च ।।
दृष्ट्वा तथाविधं रम्यं महाकालवनोत्तमम् ।। २१ ।।
नारदं प्रशशंसुस्ते सर्वे देवा मुदान्विताः ।।
देवर्षीणां महाप्राज्ञा येनेयं कथिता कथा ।।२२।।
न कैलासं गमिष्यामो न च मेरुं तथाविधम् ।।
न मंदरं गमिष्यामो न यास्यामस्त्रिविष्टपम् ।। २३ ।।
एषामरावती श्रेष्ठा ह्येषा भोगवती शुभा ।।
एषा पैतामहो लोको विष्णुलोकस्तथैव च ।। २४ ।।
एतस्मिन्नंतरे देवि शून्यं जातं त्रिविष्टपम् ।।
ज्ञात्वा शून्यमथात्मानं चिंतयित्वा पुनःपुनः ।।
गमनाय मतिं चक्रे कृत्वा देहमथात्मनः ।। २५ ।।
त्यक्त्वा मां त्रिदशाः सर्वे महाकालवनं गताः।।
अहं तत्रैव यास्यामि यत्र ते त्रिदशा गताः ।।२६।।
इत्युक्त्वा तत्क्षणं प्राप्तो महाकालवनोत्तमे ।।
कौतुकात्सोऽथ वै श्रेष्ठं तीर्थं तत्रापि भूतले ।।
ददर्श रमणीयं तैर्देवैः परिवृतं तदा ।। २७ ।।

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ।।
भोभोस्त्रिविष्टपात्रैव स्वनाम्ना स्थापयस्व माम् ।।
कर्कोटकस्य पूर्वे तु महामायाश्च दक्षिणे ।।२८।।
इत्युक्तो देवदेवेन हृष्टस्तद्गतचेतसा ।।
स्वनाम्ना स्थापयामास देवं त्रिविष्टपेश्वरम् ।। २९ ।।
पूजयित्वा शुभैः पुष्पैरुवाचेदं वरानने ।।
अद्यप्रभृति भूर्लोको नाम्ना ख्यातिं गमिष्यति ।। 5.2.7.३० ।।
ये त्वां पश्यंति यत्नेन अपि दुष्कृत कारिणः ।।
ते यास्यंति परं स्थानं दिव्यालंकारभूषिताः ।। ३१ ।।
अष्टम्यां च चतुर्द्दश्यां संक्रांतौ वा विशेषतः ।।
यः करिष्यति पूजां च भक्तियुक्तो हि मानवः ।। ३२ ।।
विमानवरमास्थाय कामगं रत्नभूषितम् ।।
उदितादित्यसंकाशं मत्समीपे वसिष्यति ।। ३३ ।।
किं दानैर्विविधैर्दत्तैः किं यज्ञैर्विविधैः कृतैः ।।
ते प्राप्स्यंति फलं सर्वं ये त्वां द्रक्ष्यंति भक्तितः ।। ३४ ।।
यंयं काममभिध्याय पूजयिष्यंति मानवाः ।।
तत्तन्मनोरथप्राप्तिर्भविष्यति न संशयः ।। ३५ ।।
त्रिदशैश्च पुनः प्रोक्तं दृष्ट्वा मल्लिंगमुत्तमम् ।।
त्रिविष्टपेन धन्येन स्थापितं देवमीश्वरम् ।। ३६ ।।
पूजयिष्यंति ये धन्या देवं त्रिविष्टपेश्वरम् ।।
तेषां वासोऽक्षयो दिव्यो भविष्यति त्रिविष्टपे ।। ३७ ।।
इत्युक्त्वा पूजयामास भूयो लिंगं त्रिविष्टपम् ।।
सार्द्धं त्रिविष्टपेनैव पुनः स्थानं स्वकं गतः ।। ३८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
श्रवणात्कीर्त्तनाद्वापि स्वर्गलोकोऽक्षयो भवेत् ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये त्रिविष्टपेश्वरमाहात्म्यवर्णनंनाम सप्तमो ऽध्यायः ।। ७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०८



।। श्रीरुद्र उवाच ।। ।।

कपालेश्वरसंज्ञं च ह्यष्टमं विद्धि पार्वति ।।

यस्य दर्शनमात्रेण ब्रह्महत्या प्रणश्यति ।। १ ।।

पुरा वैवस्वते कल्पे त्रेताकाले समागते ।।

महाकालवने दिव्ये यजे पैतामहे प्रिये ।। २ ।।

उपविष्टेषु विप्रेषु हूयमाने हुताशने ।।

वेषं कापालिकं कृत्वा गतोऽहं तत्र संसदि ।। ३ ।।

जीर्णकंथावृतो देवि मुंडः खट्वांगधारकः ।।

चिताभस्मविलिप्तांगो विकृतो विकृताननः ।।

कपालं च करे कृत्वा कपालकृतभूषणः ।। ४ ।।

ब्राह्मणाश्च ततः क्रुद्धा दृष्ट्वा मां जाल्मरूपिणम् ।।

कपालधारिणं सर्वे धिक्छब्दैश्च जगर्हिरे ।। ५ ।।

असकृत्पापपापेति गच्छगच्छ विडंबिताः ।।

कथं च होमः क्रियते प्राप्ते कापालिके पुरः ।। ६ ।।

अकपालानि शौचानि इति वेदेषु गीयते ।।

यज्ञवेदिर्न तेर्हा तु मनुष्यास्थि धरस्य वै ।। ७ ।।

मया प्रोक्तास्तु ते विप्राः श्रूयतां द्विजसत्तमाः ।।

यूयं कारुणिकाः सर्वे परदुःखेन दुःखिताः ।। ८ ।।

कर्त्तव्या च दया सद्भिः सर्वदा सर्वदेहिनाम् ।।

सर्वेषामेव जंतूनां मित्रं ब्राह्मण उच्यते ।। ९ ।।

अहं कापालिको विप्रो भस्मभूषितविग्रहः ।।

कापालव्रतमास्थाय चरामि पृथिवीतले ।। 5.2.8.१० ।।

आराधयामि सततं महादेवं जगत्पतिम् ।।

ब्रह्महत्याविनाशाय व्रतं द्वादशवार्षिकम् ।। ११ ।।

अघघ्नं विश्रुतं लोके प्रारब्धं हि मया द्विजाः ।।

प्रायश्चित्तनिमित्तं तु शुद्धो यास्यामि सद्गतिम् ।। १२ ।।

मदीयं वचनं श्रुत्वा तैः प्रोक्तं द्विजसत्तमैः ।।

अतीव पापिष्ठतरो यो ह्येवं भाषसेऽधम ।। १३ ।।
कपालैर्भूषितो निंद्यो विशेषेण तु विप्रहः ।।
नाकारितो महादेवो दक्षयज्ञमहोत्सवे ।। १४ ।।
यस्मिन्यज्ञे समायाता आदित्या वसवस्तथा ।।
विश्वेदेवाश्च मरुतो गंधर्वाः किंनरास्तथा ।। १५ ।।
ब्रह्मा विष्णुः सहस्राक्षो वरुणो वायुरेव च ।।
धनदः सागरा नद्यः सरांसि सकलानि च ।। १६ ।।
सुपर्णा गिरयो नागाः सर्वे चाकारिताः क्रतौ ।।
सानुगास्ते सभार्याश्च ब्राह्मणा वेदपारगाः ।। १७ ।।
ब्रह्मर्षयो महाभागास्तथा देवर्षयोऽमलाः ।।
एवमुक्त्वा महादेवं मानुषास्थिविभूषितम् ।। १८ ।।
अपवित्रमिति ज्ञात्वा कथं त्वं वक्तुमर्हसि ।।
प्रवेशो दीयतां मह्यं विशेषेणासि ब्रह्महा ।। १९ ।।
इत्युक्तोऽहं यदा विप्रैर्मया प्रोक्तं वचस्तदा ।।
प्रतीक्ष्यतां मुहूर्तं तु भुक्त्वा यास्याम्यहं पुनः ।। 5.2.8.२० ।।
इत्युक्ते वचने देवि ताडितोऽहं भृशं तदा ।।
लोष्ठैर्लगुडकैः पादैर्मुष्टिभिश्च पुनःपुनः ।। २१ ।।
अथ प्रहस्य तत्क्षिप्त्वा तां वेदिं दर्भसंस्तृताम् ।।
कपालदीपवन्नष्टो न ज्ञातोऽहं द्विजोत्तमैः ।। २२ ।।
मयि नष्टे कपालं तत्क्षिप्तं मंडपबाह्यतः ।।
अथान्यत्तत्र संजातं तादृग्रूपं यशस्विनि ।। २३ ।।
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ।।
तत्र क्षिप्तानि जातानि ततस्ते विस्मयान्विताः ।। २४ ।।
अथाहुर्ज्ञानिनः सर्वे नेदमन्यस्य चेष्टितम् ।।
ऋते देवान्महादेवाद्गंगाचंद्रार्द्धशेखरात् ।। २५ ।।
ततोऽहं विविधैः स्तोत्रैः स्तुतो विप्रैः पृथक्पृथक् ।।
होमं चक्रुश्च ते वह्नौ मंत्रैश्च शतरुद्रियैः ।। २६ ।।
अहं तुष्टस्तदा देवि द्विजानामनुकंपया ।।
व्रियतां ब्राह्मणाः सर्वे वरं यन्मनसेप्सितम् ।। २७ ।।
तदा ते ब्राह्मणाः प्रोचुर्यदज्ञानाद्वधस्तव ।।
कृतस्तेन कृतास्माभिर्ब्रह्महत्या जगत्प्रभो ।। २८ ।।
ब्रह्महत्याविनाशाय प्रसादं कुरु नः प्रभो ।।

वरयामो वरं ह्येनं नान्यं वरमभीप्सितम् ।। २९ ।।
द्विजानां च तदा तेषामग्रे कथितवानिदम् ।।
यत्र राशिः कपालानां भवद्भिर्विहितो भुवि ।। 5.2.8.३० ।।
अनादिलिंगं तत्रासीच्छन्नं कालविपर्यये ।।
पश्यंतु विप्रास्तल्लिंगं ब्रह्महत्याविमोचनम् ।। ३१ ।।
कृता मयापि विप्रेंद्रा ब्रह्महत्या स्वयं पुरा ।।
छिंदता ब्रह्मणः शीर्षं पञ्चमं तेजसोत्कटम् ।। ३२ ।।
ब्रह्महत्या ततो जाता ममातीव सुदुःसहा ।।
कपालं च करे लग्नं तथा चातीव दुःसहम्।। ३३ ।।
दह्यमानस्ततश्चाहं व्याप्तो वै ब्रह्महत्यया ।।
नाशाय सत्वरं तस्याः स्वार्थयात्रामहं गतः ।। ३४ ।।
गतः सर्वेषु तीर्थेषु नैव मुक्तस्तु हत्यया ।।
ततो दुःखी सुसंतप्तो नैव लेभे सुखं क्वचित ।। ३५ ।।
एतस्मिन्नंतरे दैवी वागुवाचाशरीरिणी ।।
गच्छावन्तीं स्वयं नाथ किमर्थं खिद्यते वृथा ।। ३६ ।।
महाकालवनं पुण्यं त्वया नाथ विनिर्मितम् ।।
कपालकरसंस्थानं रुद्रमद्भुतदर्शनम् ।।
न जानासि कथं क्षेत्रं महापातकनाशनम् ।। ३७ ।।
तस्मिन्क्षेत्रे महल्लिंगं गजरूपस्य संनिधौ ।।
विद्यते पश्य देवेश ब्रह्महत्या प्रणश्यति ।। ३८ ।।
ततोऽहमागतस्तूर्णं वाक्यं श्रुत्वा तदोत्तमम्।।
महल्लिंगं मया दृष्टं(?) कपालकरसंस्थितम् ।। ३९ ।।
मम हस्तात्तदा विप्राः कपालमपतद्भुवि ।।
कपालेश्वरदेवोऽयमिति नाम मया कृतम्।। 5.2.8.४० ।।
पश्यंतु विप्रास्तं देवं कपालेश्वरसंज्ञ कम् ।।
यस्य दर्शनमात्रेण निष्कलंका भविष्यथ ।। ४१ ।।
लिंगं दृष्टं तदा तैस्तु कपालैर्बहुभिर्वृतम् ।।
कृतार्थास्ते तदा जातास्तस्य लिंगस्य दर्शनात् ।। ४२ ।।
अतोऽसौ भुवि विख्यातः कपालेश्वरसंज्ञकः ।।
येऽर्चयन्ति महादेवि कपालेश्वरसंज्ञकम्।। ४३ ।।
कृतपुण्या नरा देवि ते यांति परमं पदम् ।।
कृत्वापि पातकं घोरं ब्रह्महत्यादिकं नरः ।। ४४ ।।

तत्पापं विलयं याति लिंगस्यास्य च दर्शनात् ।।
कर्मणा मनसा वाचा यत्पापं समुपार्जितम् ।।
तत्क्षपयति देवोऽयं चतुर्द्दश्यां समर्चितः ।। ४५ ।।
प्रसंगादपि ये पूजां करिष्यंति वरानने ।।
तेऽपि कामानवाप्स्यंति यांश्च कांश्चित्सुदुर्लभान् ।।
ऐश्वर्यधर्ममतुलं दीर्घमायुररोगताम् ।। ४६ ।।
निःसपत्नत्वमतुलं यच्चान्यत्तदवाप्नुयात् ।।
अतीव पापिनो ये च क्रूरकर्मरता नराः ।। ४७ ।।
विपाप्मानो भविष्यंति गणेशाश्च मम प्रिये ।।
नियमेन प्रपश्यंति ये देवं वत्सरं प्रिये ।।
ते पश्यंति तनुं त्यक्त्वा मदीयं भवनं प्रियम् ।। ४८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
कपालेश्वरदेवस्य स्वर्गद्वारेश्वरं शृणु ।। ४९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये कपालेश्वरमाहात्म्यवर्णनंनामाष्टमोऽध्यायः ।। ८ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/f6k
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीरुद्र उवाच ।। ।।
स्वर्गद्वारेश्वरं लिंगं नवमं विद्धि पार्वति ।।
सर्वपापहरं देवि स्वर्गमोक्षफलप्रदम् ।। १ ।।
यदा देवि समायाताः कैलासे पर्वतोत्तमे ।।
अश्विन्याद्या भगिन्यस्तास्त्वां दृष्ट्वा विस्मयान्विताः ।। २ ।।
निर्मंत्रिता वयं यज्ञे सकांताः सपरिग्रहाः ।।
स्नेहेन देवि तातेन बहुमानपुरः सरम् ।। ३ ।।
कच्चित्स्मृता विशालाक्षि किं वा तातस्य विस्मृतिः ।।
कारणं किं समुद्दिश्य तातेन न निर्मंत्रिता ।। ४ ।।
तासां तद्वचनं श्रुत्वा अवमा नात्तदा त्वया ।।
प्राणा मुक्तास्तु योगेन पुरतस्तासु पार्वति ।।५।।
अथ ताः शोकसंतप्ता गता यत्र प्रजापतिः।।
आचख्युः सकलं वृत्तं दक्षस्याग्रे यथा तथम् ।।६।।
तच्छ्रुत्वा दारुणं वाक्यं दक्षो नोवाच किंचन ।।७।।
मया दृष्टा यदा देवि भूमौ पंचत्वमागता ।।
यज्ञप्रध्वंसनार्थाय तदा वै प्रेरिता गणाः।। ।।८।।
ते गत्वाथ गणा रौद्राः शतशोऽथ सहस्रशः ।।
विरूपा भीषणा रौद्रा नानाशस्त्रा महाबलाः ।।
मुमुचुः शरवर्षाणि कुर्वंतो भैरवान्रवान् ।। ९ ।।
ततो देवगणाः सर्वे वसवः सह भास्करैः ।।
विश्वेदेवाश्च साध्याश्च धनुर्हस्ता महाबलाः ।।5.2.9.१ ०।।
युद्धाय च विनिष्क्रांता मुमुचुः सायकान्सितान् ।।
ते समेत्याथ युयुधुः प्रमथा विबुधैः सह ।।
मुमुचुः शरवर्षाणि वारिधारा यथा घनाः ।। ११ ।।
तेषां मध्ये गणो नाम वीरभद्रो महाबलः ।।
स शक्रं ताडयामास शूलेन हृदये तथा ।। १२ ।।

स तु तेन प्रहारेण विसंज्ञो निषसाद ह ।।
अथ मुष्ट्या हतः कुम्भे नाग ऐरावतस्तथा ।।१३।।
स हतः सहसा तेन गजेंद्रो भैरवान्नवान् ।।
विनदन्भयमास्थाय यज्ञवाटमुपाद्रवत् ।। १४ ।।
एतस्मिन्नंतरे देवा कृतास्तेन पराङ्मुखाः ।।
ततस्ते शरणं जग्मुर्विष्णुं विश्वैकनायकम् ।। १५ ।।
ततः कोपसमाविष्टो विष्णुर्दृष्ट्वा दिवालयान् ।।
गणैर्विद्रावितान्सर्वान्मुमोचाशु सुदर्शनम् ।। १६ ।।
तदापतत्तु वेगेन चक्रं विष्णोः सुदर्शनम् ।।
प्रसार्य वक्त्रं सहसा ह्युदरस्थं चकार ह ।। १७ ।।
तस्मिंश्चक्रे तदा ग्रस्ते ह्यमोघे दैत्यसूदने ।।
क्रुद्धो नारायणो देवि वीरभद्रमुपाद्रवत् ।। १८ ।।
गृहीत्वा पादयोर्भूमौ निजघानातिदूरतः ।।
हन्यमानस्याथ भूमौ गदया च सुदर्शनम् ।। १९ ।।
रुधिरोद्गारसंयुक्तं वक्त्रात्तच्च विनिर्गतम् ।।
मत्तो लब्धवरो देवि वीरभद्रो गणोत्तमः ।।
न तु पंचत्वमापन्नो गदया ताडितोऽपि सः ।। 5.2.9.२० ।।
ततस्तु प्रमथाः सर्वे विष्णुवीर्यबलार्द्दिताः ।।
कृच्छ्रेण सहसा प्राप्ता यत्राहं देवि संस्थितः ।। २१ ।।
मां दृष्ट्वा शूलहस्तं तु विष्णुश्चांतरधीयत ।।
इंद्रोऽपि त्रिदशैः सार्द्धं पितृभिर्ब्राह्मणैः सह ।। २२ ।।
मत्तस्त्रासपरीतात्मा ततश्चादर्शनं गतः ।।
एवं विध्वंसिते यज्ञे नष्टो देवगणो यदा ।। २३ ।।
मया निरूपितो देवि स्वर्गद्वारे गणस्तदा ।।
प्रवेशो नैव दातव्यस्त्रिदशानां गणेश्वर ।। २४ ।।
द्वारावरोधः कर्त्तव्यो यत्नतः शासनान्मम ।।
यः कोपि दृश्यते देवः स हंतव्यो न संशयः ।। २५ ।।
उद्वसश्च ततो जातः स्वर्गो देवा विनिर्जिताः ।।२६।।
स्वर्गद्वारे निरुद्धे तु शक्राद्या भयविह्वलाः।।
ब्रह्मलोकं गता देवा मंत्रयित्वा पुनःपुनः ।। २७ ।।
तस्याग्रे कथितं सर्वं स्वर्गद्वारावरोधनम् ।।
महेश्वरगणैर्व्याप्तं स्वर्गद्वारं पितामह ।। २८ ।।

प्रवेशो दुर्लभो जातः कृते द्वारावरोधने ।।
केनोपायेन यास्यामः स्वर्गलोकं तथाविधम् २९ ।।
नास्माकं जायते प्रीतिर्विना स्वर्गं पितामह ।। ।। 5.2.9.३० ।।
इति तेषां वचः श्रुत्वा प्रोक्तं तु ब्रह्मणा तदा ।।
आराध्यः शंकरो देवो महादेवो जगत्पतिः ।। ३१ ।।
स्तुत्यो वंद्यो नमस्कार्यः सृष्टि संहारकारकः ।।
दुर्लभस्तु सुराः स्वर्गो विना तस्य प्रसादतः ।। ३२
गोप्ता स्रष्टा समर्थश्च स चास्माकं परा गतिः ।।
स एवाराधनीयस्तु स च पूज्यतमो मतः ।। ३३ ।।
तस्मात्सर्वप्रयत्नेन गम्यतां शरणं शिवः ।।
उपायं कथयिष्यामि श्रूयतां सावधानतः ।। ३४ ।।
त्रिदशैः सहितः शक्र तूर्णं गच्छ ममाज्ञया ।।
महाकालवने रम्ये कपालेश्वरपूर्वतः ।। ३५ ।।
स्वर्गद्वार परं लिंगं विद्यते तत्तु वासव ।।
लोकानामनुकंपार्थं महादेवेन निर्मितम् ।।
तमाराधयत क्षिप्रं स वः कामं प्रदास्यति ।। ३६ ।।
ब्रह्मणो वचनं श्रुत्वा त्रिदशा मुदिता भृशम् ।।
समायाता महादेवि महाकालवनं तदा ।। ३७ ।।
स्वर्गद्वारप्रदं पुण्यं ददृशुर्लिंगमुत्तमम् ।।
तस्य दर्शनमात्रेण स्वर्गद्वारमपावृतम् ।। ३८ ।।
स्वर्गलोकं गताः सर्वे यथापूर्वं यशस्विनि ।।
निःशंकांस्त्रिदशान्दृष्ट्वा विज्ञप्तोहं गणैस्तदा ।। ३९ ।।
मयाज्ञप्ताश्च ते सर्वे निवर्त्तध्वं गणोत्तमाः ।।
स्वयमेव प्रतिज्ञातं कथं मिथ्या भविष्यति ।। ।। 5.2.9.४० ।।
स्वर्गद्वारप्रदो देवो दृष्टो देवैर्न संशयः ।।
महाकालवने रम्ये कथितो हि विरंचिना ।। ४१ ।।
स्वर्गद्वारं गताः सद्यः शक्राद्यास्त्रिदशा गणाः ।।
अतः प्रभृति विख्यातः स्वर्गद्वारेश्वरः शिवः ।। ४२ ।।
ख्यातिं यास्यति भूलोके स्वर्गलोकप्रदायकः ।। ४३ ।।
ये पश्यंति नरा लोके स्वर्गद्वारेश्वरं शिवम् ।।
ते यांति स्वर्गलोकं हि स्वर्गद्वारेश्वरार्चनात् ।। ४४ ।।
स्वर्गद्वारेश्वरं देवं ये पश्यंति प्रसंगतः ।।

न तेषां भयमस्तीति कल्प कोटिशतैरपि ।। ४५ ।।
अश्वमेधसहस्रेण यत्पुण्यं समुदाहृतम् ।।
तत्पुण्यमधिकं देवि स्वर्गद्वारेश्वरार्चनात् ।। ४६ ।।
जन्मांतरसहस्रेण यत्पापं पूर्व संचितम् ।।
यत्पापं विलयं यांति लिंगस्यास्य च कीर्तनात् ।। ४७ ।।
अष्टम्यां वा चतुर्दश्यामथवा चंद्रवासरे ।।
ये पश्यंति नरा भक्त्या स्वर्गद्वारेश्वरं शिवम् ।।
ते देवि मे शरीरं तु प्रविष्टास्त्वपुनर्भवाः ।। ४८ ।।
दशकोटिसहस्राणि तस्मिँल्लिंगे तु पूजिते ।।
पूजितानि भवं तीह लिंगान्यंतःस्थितानि तु ।। ४९ ।।
स्पर्शनात्तस्य लिंगस्य कीर्त्तनाद्यजनात्तथा ।।
सुखेन स्वर्गमायांति यथा कामानवाप्नुयात् ।। 5.2.9.५० ।।
अकामावा सकामा वा ये पश्यंति दिने दिने ।।
तेऽपि पुण्या महाभागाः स्वर्गलोकं प्रयांति वै ।। ५१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये स्वर्गद्वारेश्वरमाहात्म्यवर्णनंनाम नवमोऽध्यायः ।। ९ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १०



।। श्रीमहादेव उवाच ।। ।।
कर्कोटेश्वरसंज्ञं च दशमं विद्धि पार्वति ।।
यस्य दर्शनमात्रेण विषैर्नैवाभिभूयते ।। १ ।।
मात्रा च भुजगाः शप्ताः स्ववचोभंगकारणात् ।।
मद्वचो न कृतं यस्माद्भवद्भिः पापकर्मणि ।। २ ।।
वह्निर्हि धक्ष्यते युष्मान्सत्रे जन्मेजयस्य हि ।।
श्रुत्वा शापं ततो मातुर्मृत्युभीताश्च पन्नगाः ।। ३ ।।
गताः सर्वे यथास्थानं जीवनार्थं यशस्विनि ।।
हिमशैलं गतः शेषस्तपः कर्तुं ततः प्रिये ।। ४ ।।
सर्पश्च कंबलोनाम लोकं पैतामहं गतः ।।
शंखचूडोऽथ नागेंद्रो मणिपूरं गतस्ततः ।। ५ ।।
यमुनांभसि संलीनः कालियो भयविह्वलः ।। ६ ।।
एवं ते सर्परा जानो नागाः सुस्मितशोभने ।।
कुरुक्षेत्रे गताः सर्वे तपश्चर्तुं यशस्विनि।।
धृतराष्ट्रस्तथा नागः प्रयागमगमत्प्रिये ४७।।।
एलापत्रस्तु नागेंद्रो ब्रह्मलोकं जगाम ह ।।
प्रणम्य तमथोवाच मातुरुत्संगसंस्थिताः ।। ८ ।।
मात्रा शप्ता वयं देव क्रुद्धया तव संनिधौ ।।
सा कथं शापकाले तु भवता न निवारि ता ।। ९ ।।
।। ब्रह्मोवाच ।। ।।
निषिद्धा नैव ते माता भाविकर्मबलान्मम ।।
सर्पसत्रो हि भविता राज्ञो जन्मेजयस्य च ।। 5.2.10.१० ।।
त्वं च वत्स ममादेशान्महाकालवनं व्रज ।।]
शांत्यर्थं सर्वनागानां भक्त्या युक्तस्तु सत्वरम् ।।११।।
समाराधय देवेशं महामायासमीपतः।।
भविता तत्र ते सिद्धि देवदेवप्रसादतः ।। १२ ।।
तत्र गत्वाथ कर्कोटः स्वयं देवि समाहितः ।।

देवमाराधयामास महामायापुरःस्थितः ।।
तस्य तुष्टोथ देवेशो वरं प्रादाद्य शस्विनि ।। १३ ।।
ये दंदशूकाः क्रूराश्च पापाचारा विषोल्बणाः ।।
तेषां विनाशो भविता न तु ये धर्मचारिणः ।। १४ ।।
भक्त्या तवाद्य तुष्टोस्मि त्वं मे सायुज्यतां व्रज ।।
देवे तत्र विलीनोथ नागः कर्कोटकः प्रिये ।। १५ ।।
कर्कोटकेश्वरः ख्यातस्ततो देवो महेश्वरः।।
तस्य दर्शनमात्रेण व्याधयो यांति संक्षयम् ।। १६ ।।
यस्तं पूजयते देवं भक्त्या युक्तो हि मानवः ।।
ऐश्वर्यं जायते तस्य कुलानां तारयेच्छतम् ।। १७ ।।
व्याधितो व्याधितो मुक्तो दुःखी दुःखात्प्रमुच्यते ।।
दर्शनात्तु भवेत्सद्य सर्वपातकवर्जितः ।। १८ ।।
नियमेन प्रपश्यंति ये च कर्कोटकेश्वरम् ।।
ते सर्वकामानाप्स्यंति वसंत्यंते च मत्पुरे ।। १९ ।।
पंचम्यां च चतुर्दश्यां ये पश्यंति रवेर्दिने ।।
न तेषां तु कुले सर्पाः पीडां कुर्वंति कर्हिचित् ।। 5.2.10.२० ।।
या नारी दुर्भगा सापि सौभाग्यं लभते सदा ।।
गुर्विणी लभते पुत्रमरोगं कुलभूषणम् ।।
शिशुग्रहाश्च नश्यंति नापमृत्युभयं भवेत् ।।२१।।
यंयं काममभिध्यायेन्मन सा भक्तिमान्नरः ।।
तंतं दुर्ल्लभमाप्नोति कर्कोटेश्वरदर्शनात् ।। २२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
कर्कोटेश्वरदेवस्य शृणु सिद्धेश्वरं परम् ।।२३।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये कर्कोटेश्वरमाहात्म्यवर्णनंनाम दशमोऽध्यायः ।। १०

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ११



।। ।। श्रीमहादेव उवाच ।। ।।
लिंगमेकादशं विद्धि देवि सिद्धेश्वरं शुभम् ।।
वीरभद्रसमीपे तु सर्वसिद्धिप्रदायकम् ।।१।।
देव दारुवने पूर्वं विप्रा योगसमन्विताः ।।
स्पर्द्धया सिद्धिलब्ध्यर्थं तपोऽकुर्वत संयताः।।२।।
शाकाहारा निराहाराः पर्णाहारास्तथापरे ।।
दंतोलूखलिनः केचिदश्मकुट्टास्तथा परे ।। ३ ।।
केचिद्वीरासनरता धूम्रपानरताः परे ।।
पादैरूर्ध्वैरधोवक्त्रैः केचिदभ्रावकाशिकाः ।। ४ ।।
कृच्छ्रचांद्रायणादीनि कुर्वन्त्यन्ये समाहिताः ।।
न चापि परमा प्राप्ता सिद्धिर्वर्षशतैरपि ।। ५ ।।
दुःखार्त्ताश्चिंतयामासुः कथं सिद्धिर्भविष्यति ।।
तपसा दुष्करेणैव सिद्धिर्न वात्र लभ्यते ।। ६ ।।
व्यर्था श्रुतिस्तथा जाता या गीता मुनिभिः पुरा ।।
तपसा लभ्यते सर्वं तपोमूलमिदं जगत् ।। ७ ।।
अंजनं गुटिका चैव पादुकागमनं तथा ।।
खड्गसिद्धिर्बिले वासश्चिंतामणिरपेक्षितम् ।। ८ ।।
एवं तेऽचिंतयसिद्धाः परमामर्षपूरिताः ।।
उत्सार्य तत्तपोधर्मं नास्तिक्यं भावमागताः ।। ९ ।।
एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ।।
आश्वासयंती तान्सिद्धान्माता पुत्रमिवौरसम् ।। 5.2.11.१० ।।
माऽवमन्यध्वमार्या हि श्रुतिर्व्यर्था महीतले ।।
तपो न निंद्यं धर्मो वा श्रूयतामत्र कारणम् ।। ११ ।।
भविता भवतां सिद्धिरत्र नैव तपोधनाः ।।
स्पर्द्धया सिद्धिकामैश्च तपस्तद्धि कृतं वृथा ।। १२ ।।
कामाच्च तपसो हानिरहंकाराच्च विस्मयः ।।
क्रोधाल्लोभात्तथा मोहाज्जायते नात्र संशयः ।। ।। १३ ।।

स्पर्द्धया रहितो यस्तु कामक्रोधविवर्जितः ।।
करोति कर्म भावेन स तपःफलमश्नुते ।। १४ ।।
वासनावासितो यस्तु एकचित्तः समाहितः ।।
आस्तिकः श्रद्दधानश्च स तपःफलमश्नुते ।। १५ ।।
मातृवत्परदाराणि परद्रव्याणि लोष्टवत् ।।
यः पश्यति नरो नित्यं स तपः फलमश्नुते ।। १६ ।।
ईदृशे पुरुषे विप्रास्तपःसिद्धिश्च दृश्यते ।।
भवंतः स्पर्द्धया चैव कृतवंतश्च दुष्करम् ।।१७।।
तस्माद्वर्षसहस्रेण नैव सिद्धिर्भविष्यति ।।
यदि मद्वचनं कार्यं निर्विकल्पेन चेतसा ।। १८ ।।
महाकालवनं गत्वा यूयं सर्वे समाहिताः ।।
आराधयध्वं देवेशं सदा सिद्धिप्रदायकम् ।। १९ ।।
दर्शनात्तस्य देवस्य लभ्यते सिद्धिरुत्तमा ।।
सनकादयोऽपि ये देवमासाद्य योगतत्पराः ।।
पूजयित्वापि भावेन संसिद्धिं परमां गताः ।। 5.2.11.२० ।।
राज्ञा वसुमता पूर्वं खड्गसिद्धिः सुदुर्लभा ।।
प्राप्ता दर्शनमात्रेण लिंगस्यास्य प्रभावतः ।।२१।।
पादुकागमनं लब्धं हैहयेन महात्मना ।।
कृतवीरात्मजेनैव वाहानां च सहस्रकम् ।।२२।।
अदृश्यकरणं चैव प्राप्तं चानूरुणा पुरा।।
स्वर्णसिद्धिश्च सिद्धेन पादलेपो रसायनम्।।
अंजनं च तथा लब्धं लिंगस्यास्य च दर्शनात्।।२३।।
आकाशवचनं श्रुत्वा ते सिद्धा विस्मयान्विताः।।
समायाता मुदा युक्ता महाकालवनोत्तमे।।२४।।
सर्वसिद्धिप्रदं चैव ददृशुर्लिंगमुत्तमम् ।।
दर्शनात्तस्य लिंगस्य संसिद्धिं परमां गताः ।। २५ ।।
ततःप्रभृति विख्यातो देवैः सिद्धेश्वरः परः ।।
ये पश्यंति नरा देवि देवं सिद्धेश्वरं परम् ।।
न तेषां दुर्लभा सिद्धिर्भविष्यति महीतले ।। २६ ।।
सिद्धेश्वरं गमिष्यंति भावहीनाः प्रसंगतः ।।
संसिद्धास्ते भविष्यंति नियता नात्र संशयः ।। २७ ।।
महापातकसंयुक्तो यस्तु सिद्धेश्वरं स्मरेत् ।।

संसिद्धस्तु भवेन्नूनं ज्ञानैश्वर्यसमन्वितः ।। २८ ।।
नियमेन तु यः पश्येद्देवं सिद्धेश्वरं परम् ।।
षण्मासाज्जायते सिद्धिर्वांछिता या भवेद्धृदि ।। २९ ।।
अष्टम्यां च चतुर्द्दश्यां कृष्णपक्षे विशेषतः ।।
सिद्धेश्वरं तु यः पश्येत्स पश्येन्मम मंदिरम् ।। 5.2.11.३० ।।
अपुत्रो लभते पुत्रं निर्धनस्तु धनं लभेत् ।।
विद्यार्थी लभते विद्यां भार्यार्थी लभते स्त्रियम् ।। ।। ३१ ।।
संक्रांतौ सोमवारे च ग्रहणे चैव योऽर्चयेत् ।।
कुलानां शतमुद्धृत्य पैतृकं स्वाधिकं प्रिये ।।
मोदते मम लोके च यावदिंद्राश्चतुर्दश ।।३२।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
सिद्धेश्वरस्य देवस्य लोकपालेश्वरं शृणु ।। ३३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनामैकादशोऽध्यायः ।। ११ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/fpu
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीहर उवाच ।।

द्वादशं विद्धि देवेशि लोकपालेश्वरं शिवम् ।।

यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।। १ ।।

पुरा दैत्यगणा देवि प्रादुर्भूताः सहस्रशः ।।

हिरण्यकशिपोर्वक्षःस्थलादतिपराक्रमाः ।। २ ।।

तैरियं वसुधा व्याप्ता सशैलवनकानना ।।

विध्वस्ताः स्वाश्रमाः सर्वे यज्ञा विध्वंसितास्तथा ।। ३ ।।

ब्राह्मणा भक्षिताश्चैव वेद वेदांगपारगाः ।।

पूरितान्यग्निकुण्डानि पांसुना मधुना तथा ।। ४ ।।

विध्वस्ताः कलशाः सर्वे मृद्भांडादि च चूर्णितम् ।।

निःस्वाध्यायवषट्कारा स्वधास्वाहाविवर्जिता ।। ५ ।।

कृता च धरणी देवि नष्टयज्ञोत्सवाभवत् ।।

लोकपालास्ततो भीता माधवं शरणं गताः ।। ६ ।।

ऊचुः प्रांजलयः सर्वे क्षुधार्ता दुःखिताः कृताः ।।

वयं ग्लानिं गता देव यज्ञभागं विना कृताः ।। ७ ।।

वयं त्रातास्त्वया पूर्वं नमुचेर्वृषपर्वणः ।।

हिरण्यकशिपो रौद्रान्नरकाच्च मुरोस्तथा ।। ८ ।।

तथा रक्ष सुरश्रेष्ठ भयं नः समुपस्थितम् ।। ९ ।।

तेषां तद्वचनं श्रुत्वा शंखचक्रगदाधरः ।।

जगाम स ततो दैत्याः प्रविष्टा वरुणालयम् ।।5.2.12.१ ०।।

ते निष्क्रम्य ततो रात्रौ निघ्नंति द्विजसत्तमान् ।।

तापसान्दीक्षितान्देवि धर्मव्रतपरायणान् ।। ११ ।।

अथ स्वर्गं गताः कांते जितः शक्रो मरुत्पतिः ।।

तथैव दक्षिणामाशां धर्मराजो जितस्ततः ।। १२ ।।

गत्वाथ पश्चिमामाशां जलराजो विनिर्जितः ।।

उत्तरे धनदो देवि तैर्दैत्यैः स विनिर्जितः ।। १३ ।।

ततस्ते व्याकुला जाता विष्णुं शरणमागताः ।।

उपायः कथितो देवि देवेभ्यो विष्णुना तदा ।। १४ ।।
महाकालवनं गत्वा देवा भक्त्या समाहिताः।।
आराधयत सर्वेशं शंकरं लोकशंकरम्।।१५।।
भवतां भविता सिद्धिस्तत्र तस्य प्रसादतः।। १६।।
इति तस्य वचः श्रुत्वा कृष्णस्यामिततेजसः ।।
प्रस्थिता लोकपालास्ते महाकालवने शुभे ।। १७ ।।
तावत्तत्रैव संरुद्धा दैत्यैः शस्त्रधरैस्तदा।।
भूयो नष्टाश्च संप्राप्ता यत्र देवो जनार्दनः ।। १८ ।।
कथयामासुरत्युग्रं यथा रुद्धं जगत्त्रयम् ।।
नारायणेन ते प्रोक्ता लोकपालाः पुनः पुनः ।। १९ ।।
यूयं व्रतधरा भूत्वा कपालैश्च विभूषिताः ।।
खट्वांगधारिणः शांताः पंचमुद्राविभूषिताः ।। 5.2.12.२० ।।
भस्मभूषितसर्वांगाः क्षुद्रघंटाविराजिताः ।।
महाव्रतधरा भूत्वा महाकालवनो त्तमम् ।।
गच्छध्वं ब्रह्मणा सार्द्धं पादबद्धैश्च नूपुरैः ।। २१ ।।
अथ ते लोकपालाश्च श्रुत्वा कृष्णस्य भाषितम् ।।
समायाता महादेवि कृत्वा कापालिकं वपुः ।। २२ ।।
तत्र दृष्टं महल्लिंगं तेजसां राशिमद्भुतम् ।।
स्तुतं च विविधैः स्तोत्रैर्लोकपालैः पुनःपुनः ।। २३ ।।
ततस्तु तस्य लिंगस्य वह्निज्वाला विनिःसृता ।।
यया ते दानवाः सर्वे दग्धा भस्मत्वमागताः ।। २४ ।।
ज्ञात्वा लिंगस्य माहात्म्यं नाम चक्रुः समाहिताः ।।
सेवितं लोकपालैस्तु लिंगं तेजोमयं परम् ।। २५ ।।
लोकपालेश्वरोनाम ख्यातिं यास्यति भूतले ।।
इत्युक्त्वा त्रिदशाः सर्वे लोकपालैः समावृताः ।।
स्वस्वस्थानं गता दिव्यं यथापूर्वं मुदान्विताः ।। २६ ।।
ये पश्यंति नरा देवि लोकपालेश्वरं शिवम् ।।
समृद्धिभिः सुसंपन्ना भवेयुर्जन्मजन्मसु ।। ।। २७ ।।
न दारिद्र्यं न च व्याधिर्नाकालमरणं तथा ।।
ऐश्वर्यं चातुलं तेषां जायते दर्शनात्सदा ।। २८ ।।
यो यमुद्दिश्य वै कामं दर्शनं तु करिष्यति ।।
तस्य तज्जायते सर्वं मृतस्य परमा गतिः ।। २९ ।।

अश्वमेधस्य यज्ञस्य सम्यगिष्टस्य यत्फलम् ।।
तत्फलं लभते देवि लोकपाले श्वरार्चनात् ।। 5.2.12.३० ।।
प्रसंगेनापि यः पश्येल्लोकपालेश्वरं शिवम् ।।
मोदते स्वर्गलोके स लोकपालैः समं सदा ।। ३१ ।।
संक्रांतौ सोमवारे च चतुर्दश्यां विशेषतः ।।
ये पश्यंति नरा भक्त्या ह्यष्टम्यामयनद्वये ।।३२।।
ते दुर्द्धर्षा भवंतीह शत्रूणां संगरे तथा ।।
मृता यांति विमानेन शक्रलोकं सुदुर्लभम् ।। ३३ ।।
क्रमेण वारुणं लोकं धनदस्य यथासुखम् ।।
पुनः पैतामहं यांति लोकं देवैः सुदुर्लभम् ।। ३४ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
दुर्लभः परमो गुह्यं कामेश्वरमथो शृणु ।। ३५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये लोकपालेश्वरमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ।। १२ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १३



।। हर उवाच ।। ।।
विद्धि कामेश्वरं देवि तत्र लिंगं त्रयोदशम् ।।
यस्य दर्शनमात्रेण सौभाग्यं जायते शुभम् ।। १ ।।
ब्रह्मणो ध्यायमानस्य प्रजाकामस्य पार्वति ।।
उत्पन्नोऽर्कप्रभाकारो लावण्यनिचयो महान् ।।
अलंकारावृतः कांतो दिव्यमंडनमंडितः ।। २ ।।
तं दृष्ट्वा परमं दिव्यं कांतं सौभाग्यशोभितम् ।।
अप्रतर्क्यमविज्ञेयं ब्रह्मा प्रोवाच तं तदा ।। ३ ।।
को भवान्किं निमित्तं तु इह वा किमुपागतः ।।
वद त्वं मन्मथाकार कंदर्प इव लक्ष्यमे ।। ४ ।।
ब्रह्मणो वचनं श्रुत्वा प्रोक्तं तेनैव सादरम् ।।
अहं ते सृष्टिकामस्य भावेन विहितोंशकः ।।
प्रजापते महाभाग किं करोमि दिशस्व माम् ।। ५
।। ब्रह्मोवाच ।। ।।
मया तु सृष्टिकामेन ये प्रजापतयः कृताः ।।
न ते शक्ताः प्रजाः स्रष्टुं कामैते सुखमाप्नुयुः ।। ६ ।।
त्वमग्रणीः प्रजासर्गे त्वदधीनमिदं जगत् ।।
कुरु सृष्टिं विचित्रां च कंदर्प मम शासनात्।।७।।
इत्युक्तो ब्रह्मणा देवि जगामादर्शनं स्मरः।।
क्रुद्धेन ब्रह्मणा शप्तो विनाशं यास्यसि ध्रुवम्।।८।।
मद्वचो न कृतं यस्माद्भवनेत्रोद्भवाग्निना।।
तच्छ्रुत्वा दारुणं शापं कंदर्पो भयविह्वलः।।
ब्रह्माणं प्रणतो भूत्वा प्रह्वः प्रांजलिरब्रवीत्।।९।।
प्रसीद देवदेवेश अनन्यगतिके मयि।।
नहि निर्भरतां यांति प्रभूणामाश्रिते रुषः।।5.2.13.१०।।
।।ब्रह्मोवाच।।
यस्माते भक्तिरतुला ममोपरि महामते ।।

तस्मात्स्थानानि दत्तानि तव द्वादश संख्यया ।। ११ ।।
कामिनीनां कटाक्षेषु केशपाशेषु चैव हि ।।
जघनस्तननाभौ तु दोर्मूलेऽधरपल्लवे ।। १२ ।।
वसंते कोकिलालापे ज्योत्स्नायां जलदागमे ।।
कामार्थे च मया दत्तौ सबलौ मधुमाधवौ ।। १३ ।।
स्त्रियोऽमृतमया धन्या संसारे सारकारणम् ।।
रतेश्चैव निधानानि संतानार्थं विनिर्मिताः ।। १४ ।।
एताभिर्वरनारीभिर्जगदेवं वशीकृतम् ।।
स्त्रीभिरासक्तमनसः कुतः पुंसो मनस्विता ।। १५ ।।
कृतश्चापि स्ववशता स्त्रीगौरवगतस्य च ।।
स्त्रिय एव विनाशाय पूर्वेषाममरद्विषाम् ।। १६ ।।
स्त्रिय एव हि देवानामिंद्रादीनां भयाश्रयाः ।।
नारीभिर्लब्धवृत्तेश्च पुरुषस्यापि सर्वतः ।। १७ ।।
पराभवः प्रभवति विवशत्वं च भीषणम् ।।
स्त्रीभिराजितचित्तस्य सुलभो विपदोदयः ।। १८ ।।
इत्युक्तो मन्मथो भद्रे ब्रह्मणा च विसर्जितः ।।
दत्त्वा वै पुष्पकं चापं तथा वै बाणपंचकम् ।। १९ ।।
रतिप्रीतिसमायुक्तो झषकेतुर्मनोभवः ।।
विडंबयति लोकांस्त्रीन्ससहायो धनुर्धरः ।। 5.2.13.२० ।।
पंडितांस्तापसान्वीरान्सुधियश्च जितेंद्रियान् ।।
काले कुशलभावज्ञान्देवान्पितृगणांस्तथा ।। २१ ।।
भूतप्रेतपिशाचांश्च यक्षगंधर्वकिंनरान् ।।
कृमिकीटपतंगांश्च भूतग्रामं चतुर्विधम् ।। २२ ।।
ममार्थे च कृतो यत्नश्चिंतयित्वा पुनःपुनः ।।
दुःसाध्यः शंकरो देवः श्रूयते भुवनत्रये ।।
तस्य देवस्य कः शक्तः क्षोभणार्थं मया विना ।। २३ ।।
इत्युक्त्वा तु समायातो यत्राहं तपसि स्थितः ।।
रत्या युतः स गर्वेण सख्याऽयं मधुनाश्रितः ।। ।। २४ ।।
दृष्टवान्मां तदा कामः पिंजकूटजटासटम् ।।
किंचिन्निमित्ततोऽनिद्रं भोगींद्रकृतभूषणम् ।। २५ ।।
प्रेक्षमाणमृजुस्थानं नासावंशाग्र लोचनम्।।
ततोऽवमरकाकारमालंब्याश्रयमात्रकम्।।२६।।

प्रविष्टः कररंध्रेण मदनो हृदये मम।।
रत्यर्थं कामतप्तेन संस्मृता भवती मया।।२७।।
समाधेर्भावना दिव्या लक्ष्यप्रत्यक्षरूपिणी ।।
गता मम विमलता तत्क्षणादेव पार्वति ।। २८ ।।
उन्मत्ततां गतोऽहं वै विकृतिं मदनात्मिकाम् ।।
निराकृतं मया देवि धैर्यमालंब्य यत्नतः ।। २९ ।।
दृष्टो मयात्महृदये मन्मथोऽपथ्यकारकः ।।
देहस्थं निर्दहिष्यामि प्रत्याहारप्रयोगतः ।। 5.2.13.३० ।।
अमानुषीं व्रजेद्योनिं योगिनं प्रविशेद्यदि ।।
बाह्याग्नौ धारणां कृत्वा देहसंस्थे विनिर्दहेत् ।। ३१ ।।
एतस्मिन्नंतरे सोऽपि संतप्तो मदनो भृशम्।।
इच्छाशरीरो दुर्ज्ञेयो निःसृतो व्यसनात्मकः ।। ३२ ।।
सहकारतरोर्मूले भूत्वा मधुसखस्तदा ।।
मुमोच मोहनं नाम मार्गणं मकरध्वजः ।। ३३ ।।
स चापि हृदये प्राप्तो मदीये लीलया शरः ।।
ततोहं कुपितो देवि नेत्रं कृत्वा तृतीयकम् ।। ३४ ।।
तन्नेत्रविस्फुलिंगेन क्रोशतां नाकवासिनाम्।।
गमितो भस्मसात्तूर्णं कंदर्पः कामिदर्पकः ।। ३५ ।।
तस्मिन्दग्धे ततः कामे रतिः शोकपरायणा ।।
विललाप सुदुःखार्ता पतिभक्तिपरायणा ।। ।। ३६ ।।
हा नाथ हा मम प्राण हा स्वामिन्किं जहासि माम् ।।
पतिव्रतां पतिप्राणां कस्मान्मां त्यजसि प्रभो ।। ३७ ।।
एवं च विलपंतीं तां वागुवा चाशरीरिणी ।।
मा त्वं रुद विशालाक्षि पुनरेष पतिस्तव ।।
प्रसादाद्देवदेवस्य उत्थास्यति शिवस्य च ।। ३८ ।।
प्रार्थितोऽहं ततो देवि तस्मिन्नवसरे प्रिये ।।
एष कामस्त्वया दग्धः क्रोधेन परमेश्वर ।। ३९ ।।
येनानेन प्रभो नष्टा सृष्टिर्वै धरणीतले ।।
कृपां विधेहि देवेश दीनायै देहि मे पतिम् ।। ।। 5.2.13.४० ।।
ततोऽहमब्रुवं देवि तां रतिं दीनभाषिणीम् ।।
अनेन मदनेनाद्य कृतं तरलितं मनः ।। ४१।।
ततो दग्धं मयास्यांगं जीवये त्वत्प्रसादतः।।

अंगं दग्धं मयास्याद्य तृतीयनेत्रवह्निना ।। ४२ ।।
तस्मादनंग एवैष प्रजासु विचरिष्यति ।।
अनंगोऽपि यदावंत्यां लिंगं संसेवयिष्यति ।। ४३ ।।
देवानामनुकंपार्थमनंगोऽसौ कृतो मया ।।
त्रिदशैश्च समादिष्टः कामोऽवंत्यां जगाम ह ।। ४४ ।।
तत्र गत्वा ह्यनंगोऽपि भक्तिभावसमन्वितः ।।
ददर्श परमं लिंगं समीहितफलप्रदम् ।। ४५ ।।
प्रोक्तं तुष्टेन लिंगेन काम काममवाप्स्यसि ।।
अनंगोऽपि समर्थस्त्वं भविष्यसि न संशयः ।। ४६ ।।
जन्म प्राप्स्यति रुक्मिण्या गर्भे कृष्णस्य संगमात् ।।
भविता विश्रुतो लोके नाम्ना शंबरसूदनः ।। ४७ ।।
अनंगेन त्वया यस्मान्मनसा तोषि तोऽपि सन्।।
तस्मात्ख्यातिं गमिष्यामि त्वन्नाम्ना काम सर्वदा ।। ४८ ।।
ये त्वां पश्यंति कंदर्पं भक्त्या परमया युताः ।।
प्राप्नुवंति गतिं नित्यं ते सदानंददायिकाम् ।। ४९ ।।
दीर्घायुषो भविष्यंति रूपं तेषां भविष्यति ।।
कुलं च निर्मलं तेषां ये त्वां पश्यंति मन्मथ ।। 5.2.13.५० ।।
ऐश्वर्यं परमान्भोगान्स्त्रियो दिव्यकलान्विताः ।।
अरोगा संततिस्तेषां भविष्यति न संशयः ।। ५१ ।।
चैत्रशुक्लत्रयोदश्यां ये मां पश्यंति भक्तितः ।।
देवलोकं समासाद्य मोदिष्यंति हि ते नराः ।। ५२ ।।
यक्षा गणेश्वराः सिद्धाः सिद्धगंधर्वसेविताः ।।
रुद्रलोकं गमिष्यंति विमानैः सर्वकामिकैः ।। ५३ ।।
इत्युक्तः कामदेवोपि लिंगेन परमेश्वरि ।।
तत्राश्रमपदं चक्रे तस्य लिंगस्य संनिधौ ।।५४ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
कामेश्वरस्य शृण्वग्रे कुटुंबेश्वरवैभवम् ।। ५५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये कामेश्वरमाहात्म्यवर्णनंनाम त्रयोदशोऽध्यायः ।। १३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १४



।। श्रीमहादेव उवाच ।। ।।

कुटुंबेश्वरसंज्ञं तु देवं विद्धि चतुर्दशम् ।।

यस्य दर्शनमात्रेण गोत्रवृद्धिश्च जायते ।। १ ।।

यदा देवासुरैः पूर्वं मथितः क्षीरसागरः ।।

तदा च निर्गतं देवि दुर्द्धरं दुःसहं विषम् ।। २ ।।

कालकूटमयं रौद्रं विषं ज्वालाविभीषणम् ।।

दह्यते च जगत्तेन सदेवासुरमानुषम् ।। ३ ।।

ततो देवगणाः सर्वे सासुरा यक्षराक्षसाः ।।

विषज्वालातिभीताश्च मामेव शरणं गताः ।। ४ ।।

स्तुतोहं विविधैः स्तोत्रैरिदमुक्तं वरानने ।।

अमृतार्थे कृतो यत्नः संप्राप्तं मरणं विभो ।। ५ ।।

अन्यथा चिंतितं कार्यं दैवेन कृतमन्यथा ।।

अतिमथितुमारब्धे लोभाद्वै क्षीरसागरम् ।।६।।

उत्पन्नं कालकूटं तु येन दग्धं चराचरम् ।।

ततोऽस्माकं भयं जातं कालकूटोद्भवं प्रभो ।। ।।७।।

रक्षां कुरु जगन्नाथ शरणागतवत्सल ।।

हितार्थं सर्वलोकानां यथा न प्रलयो भवेत् ।। ८ ।।

मया तेषां वचः श्रुत्वा त्रिदशानां यशस्विनि ।।

मायूरं रूपमास्थाय देवानामनुकंपया ।।

कंठे धृतं महारौद्रं कालकूटाह्वयं तदा ।। ९ ।।

त्वं भीता सहसा नष्टा रूपं दृष्ट्वा तु मामकम् ।।

विषवृक्षमसेव्यं तु ततोऽहं दुःखितोऽभवम् ।।5.2.14.१०।।

नदीसंघसमायुक्ता गंगा दृष्टा च पार्श्वतः ।।

सा च प्रोक्ता मया देवि सादरं स्तुतिपूर्वकम् ।। ११ ।।

कालकूटविषं गंगे वेगान्नय महोदधिम् ।।

नान्या शक्ता समानेतुं त्वां विना लोकपावनि ।। १२ ।।

।। गंगोवाच ।। ।।

नास्ति मे भगवञ्छक्तिर्विवोढुं च जगत्पते ।।

रौद्ररूपी च दुःसेव्यो दहत्येव न संशयः ।। १३ ।।

ततस्तु यमुना प्रोक्ता न समर्था सरस्वती ।।

अन्याश्च विविधा नद्यो मयाहूताः पृथ क्पृथक् ।। १४ ।।

अशक्तास्ताः समानेतुं कालकूटाह्वयं विषम् ।।

तदाहूता मया देवि शिप्रा ब्रह्मसमुद्भवा ।। १५ ।।

शिप्रे पुत्रि ममादेशान्महाकाल वनं व्रज ।।

गृहीत्वा कालकूटं तु पुरः कामेश्वरस्य हि ।।१६।।

विद्यते परमं लिंगं तस्मिल्लिगे नियोजय ।।

मया प्रोक्ता तदा प्राह ब्रह्मणः परमा कला ।। १७ ।।

एषास्मि प्रस्थिता देव तव वाक्यादसंशयम् ।।

दुःस्पर्शः कालकूटोऽयं नूनं मां भक्षयिष्यति ।। १८ ।।

असेव्याहं भविष्यामि दुष्टसंपर्क योगतः ।।

ततो मया पुनः प्रोक्ता शिप्रा पातकनाशिनी ।। १९ ।।

यानि तीर्थानि भूलोके पाताले यानि संति वै ।।

स्वर्गलोके ह्यंतरिक्षे पुण्यानि चारुहासिनि ।। 5.2.14.२० ।।

तानि सर्वाणि सेवार्थमागत्य मम वाक्यतः ।।

आज्ञां तव करिष्यंति गच्छ पुत्रि ममाज्ञया ।। २१ ।।

एवमुक्ता तदा शिप्रा गृहीत्वा कालकूटकम् ।।

समायाता वरारोहे यत्र लिंगमनुत्तमम् ।। २२ ।।

तद्विषं कालकूटाह्वं निक्षिप्तं लिंगमूर्द्धनि ।।

विषलिंगस्ततो जातो दृष्टो मृत्युप्रदायकः ।। २३ ।।

पशुः पक्षी नरो वापि यो हि पश्यति तं शिवम् ।।

म्रियते स तदा देवि तस्य देवस्य दर्शनात् ।। २४ ।।

तीर्थयात्रां ततः कर्तुं तत्रायातांस्तपोधनाः ।।

तं च देवं ततो दृष्ट्वा मृताः सर्वे च तत्क्षणात् ।। २५ ।।

ततो हाहाकृतं देवि त्रैलोक्यं सचराचरम्।।

हाहाकारं महच्छ्रुत्वा मया ते द्विजसत्तमाः ।।

संजीविताश्च वै सर्वे दृष्टिपातेन पार्वति ।। २६ ।।

तुष्टुवुः प्रणता विप्रा मामतो विविधैः स्तवैः ।।

मया प्रोक्तास्तु ते विप्रा वृणुध्वं वरमुत्तमम् ।। २७ ।।

तैरुक्तं प्रणतैर्देवि लोकानां च हितार्थतः ।।

संम्रियंते प्रजा देव लिंगेनानेन शंकर ।। २८ ।।

ताः संरक्ष जगन्नाथ ह्येषोऽस्माकं वरः प्रभो ।।

प्रतिज्ञातं मया देवि लोकानामनुकंपया ।। २९ ।।

क्षेमारोग्यकरं लिंगं भविष्यति न संशयः ।।

कायावरोहणाद्विप्राः स्वयमत्रागमिष्यति ।। 5.2.14.३० ।।

लकुलीशस्तदा चायं देवः स्पृश्यो भविष्यति ।।

वृद्धिकारी कुटुम्बस्य भविष्यति न संशयः ।।३१।।

कुटुंबेश्वर इति नाम्ना लोके ख्यातिं गमिष्यति ।।

इत्युक्तास्ते मया विप्रास्तत्रैव तपसि स्थिताः ।। ३२ ।।

लकुलीशोऽथ तल्लिंगमारुरोह ममाज्ञया ।।

जनयन्विस्मयं लोके कीर्तिं जनपदे तथा ।। ३३ ।।

कुटुम्बेश्वरसंज्ञं तु ये पश्यंति यशस्विनि ।।

तेषां कुले तु वृद्धिः स्यात्कुटुंबस्य न संशयः ।। ३४ ।।

आश्विनासितपंचम्यां दर्श नं यः करिष्यति ।।

बहुपुत्रो बहुधनो भविष्यति न संशयः ।। ३५ ।।

महतीं श्रियमाप्नोति रोगैश्चापि प्रमुच्यते ।।

सर्वकामसमृद्धोऽसौ मम लोके स मोदते ।।३६ ।।

दर्शनं ये करिष्यंति स्पर्शनं यजनं तथा ।।

ते सर्वे कामसंपूर्णाः प्रयांति मम मंदिरम् ।। ३७ ।।

समीपे तु सरिच्छिप्रा वापीकूपेन संयुता ।।

यस्या दर्शनमात्रेण नरः पापात्प्रमुच्यते ।।३८।।

सोमवारेर्कवारे च स्नात्वा तस्यां समाहितः।।

अष्टम्यां वा चतुर्दश्यां यः पश्येत्कुटुंबेश्वरम् ।। ।। ३९ ।।

राजसूयसहस्रस्य वाजपेयशतस्य च ।।

फलं स लभते देवि सत्यमेतन्मयोदितम् ।। 5.2.14.४० ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

कुटुंबेश्वरदेवस्य त्विंद्रद्युम्नेश्वरं शृणु ।। ४१ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये कुटुंबेश्वरमाहात्म्यवर्णनंनाम चतुर्दशोऽध्यायः ।।१४।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १५



।। श्रीमहादेव उवाच ।। ।।

इंद्रद्युम्नेश्वरं विद्धि शिवं पंचदशं प्रिये ।।

यस्य दर्शनमात्रेण यशः कीर्तिश्च जायते ।। १ ।।

आसीद्राजा पुरा देवि इंद्रद्युम्नो महीपतिः ।।

येनेयं रक्षिता पृथ्वी पिता पुत्रमिवौरसम् ।। २ ।।

दृष्ट्वा सोऽथ बहून्यज्ञान्भूमौ प्रचुरदक्षिणान्।।

गतः स्वर्गं महात्मा वै सर्वकामफलप्रदम् ।। ३ ।।

स चाथ प्रत्युतः स्वर्गान्नष्टकीर्तिर्यदा क्षितौ ।।

पपात भूमौ सहसा गतपुण्यो नरा धिपः ।।

पतितश्चिंतयामास भ्रशं शोकपरिप्लुतः ।। ४ ।।

कृतस्य कर्मणस्त्वत्र भुज्यते यत्फलं दिवि ।।

न चान्यत्क्रियते तद्यद्भूतलस्थेन भुज्यते ।।५।।

सोऽत्र दोषो मतस्तस्यामतस्तत्पतनं च यत् ।।

पतनात्तु महद्दुःखं परितापश्च जायते ।।६।।

स्वर्गभाजो भवंतीह यावत्कीर्तिश्च जायते ।।

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।।

यावत्स शब्दो भवति तावत्पुरुष उच्यते ।।७।।

अकीर्तिः कीर्त्यते यस्य लोके भूतस्य कस्यचित्।।

स पतत्यधमाँल्लोकान्यावच्छब्दोऽस्य कीर्त्तितः ।। ८ ।।

तस्मात्कल्याणवृत्तः स्यादन्यथा पतनं भुवि ।।

विधाय वृत्तं पापिष्ठं कीर्तिमेवाभिवर्द्धयेत् ।। ९ ।।

अत्यंतं श्लाघयाम्यत्र कीर्त्तिं स्वर्गकरां पराम् ।।

देवैरपि हि सा कीर्तिः कांक्ष्यते परमा यतः ।। 5.2.15.१० ।।

यावत्कीर्त्तिर्मनुष्याणां वर्त्तते भुवि चाक्षया ।।

तेजः पुंजेन युक्तानि शरीराणि भवंति हि ।। ११ ।।

न स्वेदो न च दौर्गंध्यं पुरीषं मूत्रमेव वा ।।

तेषां निर्वचनं राजा विधाता च त्रिविष्टपे ।।

उह्यंते ते विमानैश्च नानाभरणभूषिताः ।। १२ ।।

एवं विमृश्य नृपतिरिंद्रद्युम्नो वरानने ।।

स्वर्गकामो जगामाथ हिमवंतं नगोत्तमम् ।। १३ ।।

यत्र तेपे तपस्तीव्रं मार्कण्डेयो महामुनिः ।।

दृष्ट्वा प्रणम्य शिरसा साष्टांगं च पुनःपुनः ।।

पप्रच्छ विनयोपेतस्तमृषिं शंसितव्रतम् ।। १४ ।।

विदितास्तव धर्मज्ञ देवदानवराक्षसाः ।।

राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ।। १५ ।।

न तेऽस्त्यविदितं किञ्चिदस्मिँल्लोके द्विजोत्तम ।।

एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथ्यतां त्वया ।।

कथं कीर्तिर्ध्रुवा लोके जायते किं तपःफलात् ।। १६ ।।

।। मार्कण्डेय उवाच ।। ।।

हंत ते कथयिष्यामि यतः कीर्तिं समीहसे ।।

यावत्कीर्तिर्भूमिसंस्था तावद्वस सुरैः सह ।।

तद्गच्छ शीघ्रं धर्मज्ञ महाकालवनोत्तमम् ।। १७ ।।

कल्कलेश्वरदेवस्य समीपे वाम भागतः ।।

लिंगं पापहरं तत्र समाराधय यत्नतः ।। १८ ।।

तस्याभ्यर्चनमात्रेण लप्स्यसे कीर्तिमुत्तमाम् ।।

स्वर्गं सनातनं चैव यत्सुरैरपि दुर्ल्लभम् ।। ।। १९ ।।

गत्वा स पूजयामास तल्लिंगं कीर्तितं त्विदम् ।।

ततो देवाः सगन्धर्वाः प्रशस्य च मुदान्विताः ।। 5.2.15.२० ।।

अन्तरिक्षे विमानस्था प्रोचुर्वाचं नराधिपम् ।।

त्वत्कीर्तिर्निर्मला जाता लिंगस्यास्य समर्चनात् ।। २१ ।।

अद्यप्रभृति राजेंद्र लिंगं त्वन्नाम नामतः ।।

ख्यातिं यास्यति लोकेऽस्मिन्निंद्रद्युम्नेति निश्चितम्।। २२ ।।

इन्द्रद्युम्नेश्वरं देवं पूजयिष्यंति ये नराः ।।

सर्वपापविनिर्मुक्ता विमानैः सर्वकामिकैः ।। २३ ।।

स्वर्गं यास्यंति ते हृष्टाः स्तूयमानाः सुरर्षिभिः।।

किंचिच्च दुर्लभं लोके तेषां नैव भविष्यति।।२४।।

दर्शनं ये करिष्यंति लोभाद्वापि प्रसंगतः।।

तेषां कीर्तिर्यशः पुण्यं धर्मश्चैवं भविष्यति ।। २५ ।।

न स्वर्गात्पतनं तेषां यावदिंद्राश्चतुर्द्दश ।।

ये च पूजां करिष्यंति चतुर्दश्यां विशेषतः ।।

ते कुलं तारयिष्यंति मातृकं पैतृकं सदा ।। २६ ।।

इत्युक्ता त्रिदशाः सर्वे लिंगं संपूज्य यत्नतः ।।

इंद्रद्युम्नेन सहिताः पुनः स्वर्गं गताः प्रिये ।। २७ ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

इन्द्रद्युम्नेशदेवस्य श्रूयतामपरः प्रिये ।। २८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्य इन्द्रद्युम्नेश्वरमाहात्म्यवर्णनंनाम पंचदशोऽध्यायः ।। १५ ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/fom
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

ईशानेश्वरसंज्ञं तु षोडशं विद्धि पार्वति ।।

यस्य दर्शनमात्रेण ऐश्वर्यं जायते नृणाम्।। १ ।।

तुहुंडेन पुरा देवि सर्वे ह्युपद्रुताः सुराः ।।

ऋषयश्च महाभागा यक्षगन्धर्वकि न्नराः ।। २ ।।

नंदनाख्यं वनं सर्वं तदधीनमभूत्किल ।।

ऐरावणं द्विपेन्द्रं च जित्वा द्वारि समादधत् ।। ३ ।।

उच्चैःश्रवससंज्ञं तु हृतवान्दानवेश्वरः ।।

देवांगनानां सर्वासां विध्वंसं कर्तुमुद्यतः ।। ४ ।।

स्वर्गमार्गः खिलीभूतस्तद्भयेन ह्यभूत्सति ।।

हृताधिकारा देवाश्च मंत्रं समुपचक्रमुः ।। ५ ।।

तस्मिन्काले च कालज्ञो नारदोऽथ महामुनिः ।।

आजगाम महातेजा भ्रममाणश्च मंत्रिभिः ।। ६ ।।

देवैर्नमस्कृतः सोऽथ पूजितश्च यथाविधि ।।

निवेदितं यथावृत्तं तुहुण्डस्य विचेष्टितम् ।। ७ ।।

पप्रच्छुरथ ते मंत्रं नारदं मुनिसत्तमम् ।।

कथयस्व महाबुद्धे सर्वं जानासि सर्व्वतः ।। ८ ।।

ईदृक्काले समायाते किं कर्तव्यं महामुने ।।

नाज्ञातं त्रिषु लोकेषु किंचिद्देवर्षिसत्तम ।। ९ ।।

मुहूर्तं ध्यानमालंब्य किंचिन्मील्य च लोचने ।।

उपायं कथयामास सर्वदुःखविनाशनम् ।। 5.2.16.१० ।।

महाकालवने रम्ये शीघ्रं गच्छंतु विह्वलाः ।।

इन्द्रद्युम्नेश्वरस्यैव पश्चाद्भागे व्यवस्थिताः ।।

सेवध्वं परमं लिंगमीशानेश्वरसंज्ञकम् ।। ११ ।।

पुरा चेशानकल्पे तु ईशानेन सुखेन हि ।।

मुनिना श्रोत्रियेणैव वेदाभ्यासरतेन वै ।।

उत्तमांगपदं लब्धं शंकरस्य च मूर्द्धनि ।। १२ ।।

तस्याराधनमात्रेण मनोऽभीष्टं हि लभ्यते ।। १३ ।।

नारदस्य वचः श्रुत्वा देवा मुदितमानसाः ।।

जग्मुर्यत्र महल्लिंगं स्तुतिं सर्वेऽप्यकुर्वत ।। १४ ।।

ईशानेशान ईशान तत्पुरुष नमोऽस्तु ते ।।

नमो वाम महाघोर सद्योमुख नमोनमः ।। ।। १५ ।।

त्र्यक्ष भर्ग महादेव उमाकांत नमोनमः ।।

नमः शिव नमो भीम नमः सर्व नमोनमः ।। १६ ।।

नमः शंभो नमो रुद्र विरूपाक्ष नमोनमः ।।

त्वया देव प्रजाः सर्वाः सदेवासुरमानुषाः ।। १७ ।।

स्थावराणि च भूतानि जंगमानि चराणि च ।।

ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महेश्वर ।। १८।।

शिरस्ते गगनं देवा नेत्रे शशिदिवाकरौ ।।

निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युतः ।। १९ ।।

बाहवस्ते दिशः सर्वाः कुक्षिश्चैव महार्णवः ।।

उरू ते पर्वता देव चरणौ पृथिवी मता ।। 5.2.16.२० ।।

इंद्रसोमाग्निवरुणा देवासुरमहोरगाः ।।

प्रह्वास्त्वामनुतिष्ठंति स्तुवंतो विविधैः स्तवैः ।। २१ ।।

त्वया व्याप्तानि भूतानि सर्वाणि भुवनेश्वर ।।

त्वयि तुष्टे जगत्तुष्टं त्वयि क्रुद्धे महद्भयम् ।। २२ ।।

भयानामपनेतासि त्वमेकः शत्रुसूदनः ।।

असुराणां समर्थानां विनाशश्च त्वया कृतः ।। २३ ।।

न च विक्रमणैर्देव निर्वाणमगमत्परम् ।।

त्वं हि कर्त्ता विकर्त्ता च भूतानामिह सर्वशः ।। २४ ।।

आराधयित्वा सर्वे ते नमस्यंति च सर्वशः ।।

एतस्मिन्नंतरे देवि लिंगमध्यात्समुत्थिता ।। २५ ।।

धूमावृता महा ज्वाला यया दग्धः स दानवः ।।

तुहुण्डो मुंडपुत्रस्तु ससैन्यपरिवारितः ।। २६ ।।

स्वाधिकारांश्च संप्रापुर्लिंगस्यास्य प्रभावतः ।।

सुरैश्चाख्या समादिष्टा लिंगस्यास्यैव हर्षितः ।। २७ ।।

ऐश्वर्यशीलमस्यास्तीत्यस्माकं च विनिश्चितम् ।।

ईशान इति विख्यातस्त्रैलोक्ये च भविष्यति ।। २८ ।।

ईशानेश्वरसंज्ञं तु ये समाराधयंति च ।।

कीर्तिर्लक्ष्मीर्ध्रुवा तेषां सिद्धिः प्रीतिर्भविष्यति ।। २९ ।।

पूज्यमानः सदा देवैर्गंधर्वाप्सरसांगणैः ।।

स्वर्गलोकं गमिष्यंति विमानैरुज्ज्वलैर्मुदा ।। 5.2.16.३० ।।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः स्त्रियः कुमारिकाः ।।

यथाभिलषितान्कामानाप्नुवंति न संशयः ।।३१।।

यः करोति नरः सम्यग्दर्शनं नियमस्थितः ।।

न कुत्र तस्य हानिः स्याद्यावजन्मशतं भवेत् ।। ३२ ।।

सर्वदा सर्वकार्येषु ते समर्था यशस्विनि ।।

ईशानेश्वरसंज्ञं तु ये पश्यंति दिनेदिने ।। ३३ ।।

एवं ते कथितो देवि प्रभावः पापनाशनः ।।

ईशानेश्वरदेवस्य श्रूयतामप्सरेश्वरः ।। ३४ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्य ईशानेश्वरमाहात्म्यवर्णनंनाम षोडशोऽध्यायः ।। १६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १७



।। ईश्वर उवाच ।। ।।

देवं सप्तदशं विद्धि विख्यातमप्सरेश्वरम् ।।

यस्य दर्शनमात्रेण लोकोऽभीष्टानवाप्नुयात् ।। १ ।।

नंदनाख्ये वने देवि सर्वकामसमन्विते ।।

सिद्धचारणगंधर्वकिंनरोद्गीतनादिते ।। २ ।।

शुककोकिलचक्राह्वचकोरकुररावृते ।।

दिव्यलोकोपमस्थाने त्रिविष्टपवि भूषणे ।। ३ ।।

तत्रोपविष्टो वृत्रारिः सुरज्येष्ठश्च सेवितः ।।

ननर्त्त रंभा तस्याग्रे नृत्यभावान्विवृण्वती ।। ४ ।।

ततोन्यचित्ता संजाता किंचित्स्मृत्वा प्रमादतः ।।

लयतालविहीना च दृष्टा वै वासवेन सा ।। ५ ।।

चुकोप च सुरश्रेष्ठस्तस्याः शापं ददौ किल ।।

विस्मृतिर्मानुषं कर्म न दिव्यं क्वापि दृश्यते ।।

तस्मात्तु मानुषे लोके गच्छ त्वं निष्प्रभा सती ।। ६ ।।

अथेंद्रकोपसंक्षोभात्पतिता भुवि साप्सराः।।

निश्चेष्टा विकलीभूता रुदती विस्वरं बहु ।। ७ ।।

करुणं विलपंती च किं मया दुष्कृतं कृतम् ।।

निर्मलं न तपस्तप्तं कथं नाराधितः सुरः ।। ८ ।।

अथाप्सरोगणः सर्वः सखीगण समन्वितः ।।

रंभा यत्रैव पतिता समायातो वरानने ।।

तस्याः शोकाग्निदाहेन संतप्तोऽप्सरसां गणः ।। ९ ।।

सुसुप्ता पद्मिनी साभ्रे यथा नैव विराजते ।।

तथा शापेन विध्वस्ता रंभा नो राजते सदा ।। 5.2.17.१० ।।

सखीगणैः परिवृता रंभा दृष्टा वरानने ।।

देवर्षिणा नारदेन विस्मितेनांतरात्मना ।। ११ ।।

कस्मादप्सरसः सद्यो दृश्यंते शोकविह्वलाः ।।

कस्माच्च करुणं रंभा रोदित्येषा मुहुर्मुहुः ।। ।। १२ ।।

पप्रच्छ च समागत्य कस्मादप्सरसो वराः ।।
विषण्णवदना दीनाः कथ्यतां मम सादरम् ।। १३ ।।
वृत्तांतं कथयामासुस्ताश्च तस्मै पुरातनम् ।।
श्रुत्वा च नारदस्तत्र ध्यानासक्तोऽभवन्मुनिः ।। १४ ।।
उपायं कथयामास हितं तासां प्रयत्नतः ।।
गच्छंत्वप्सरसः सर्वा महाकालवनोत्तमे ।। १५ ।।
आराधयध्वं देवेशं लिंगं सर्वार्थसाधकम् ।।
पृच्छादेव्यास्तु पुरतः पुरा कल्पे प्रपूजितम् ।। १६ ।।
उर्वश्या मम वाक्येन भर्त्ता प्राप्तः पुरूरवाः ।।
नारदस्य वचः श्रुत्वा समाजग्मुर्गणास्तथा ।। १७ ।।
महाकालवने रम्ये लिंगाराधनकाम्यया ।।
ततस्तुष्टः स्वयं रुद्रस्तासां भक्त्या वरं ददौ ।। १८ ।।
रंभे प्राप्स्यसि सौभाग्यं स्वर्गलोकं यशस्विनि ।।
भविष्यसि महाभागे जिष्णोस्त्वं वल्लभा धुवम् ।। १९ ।।
तस्मात्त्रिविष्टपं गच्छ संघेनानेन पूजिता ।।
आराधितोऽप्सरोभिश्च पुरा स्वर्गार्थकाम्यया ।।
अतोप्सरेश्वरः ख्यातो ययौ ख्यातिं जगत्त्रये ।। 5.2.17.२० ।।
ये समाराधयिष्यंति भक्त्या चाप्सरसेश्वरम् ।।
ते सर्वकामसंपूर्णा भविष्यंति युगेयुगे ।। २१ ।।
प्रेरयिष्यंति ये लोके दर्शनार्थं यशस्विनि ।।
स्थानभ्रंशो वियोगश्च तेषां स्वप्ने न जायते ।। २२ ।।
किं दानैः किं तपोभिश्च किं यज्ञैर्बहुदक्षिणैः ।।
स्पर्शनाल्लभते राज्यं स्वर्गं मोक्षं क्रमेण तु ।। २३ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
अप्सरेश्वरदेवस्य श्रूयतां कल्कलेश्वरः ।। २४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्येऽप्सरेश्वरमाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ।। १७ ।। ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/fov



।। श्रीशिव उवाच ।। ।।

देवमष्टादशं विद्धि ख्यातं कलकलेश्वरम् ।।

यस्य दर्शनमात्रेण कलहो नैव जायते ।। १ ।।

सर्वदुःखोपशमनं सर्वपाप प्रमोचनम्।।

व्याधिसर्पाग्निचौराणां शमनं वांछितप्रदम् ।। २ ।।

मम देवि त्वया सार्द्धं कलहः समपद्यत ।।

पुरा विस्तरतो वच्मि शृण्वेकाग्रमनाः शुभे ।। ३ ।।

यदा त्वं हिमशैलस्य दुहिता वरवर्णिनि ।।

तदा विवाहितं कांते यथोक्तविधिना मया ।। ४ ।।

विनिवृत्ते विवाहे च त्वया सार्द्धं वरानने ।।

महाकालीति नाम्ना वै वर्णेनापि च तादृशी ।। ५ ।।

नीलोत्पलनिभप्रख्या नीलकुंचितमूर्द्धजा ।।

अप्येकस्मिंस्तदा त्वं हि मातृणां मंडपे शुभे ।।

मध्ये समुपविष्टासि कृष्णांजनसमप्रभा।। ६ ।।

कालि सुंदरि मत्पार्श्वे वल्लभे त्वमुपाविश ।।

शरीरे मम तन्वंगि सिते भास्यसितद्युतिः।।७।।

भुजंगीवासिता शुभ्रे संश्लिष्टा चंदने तरौ ।।

रजनीवासिते पक्षे दृष्टिदोषहरासि मे ।। ८ ।।

इत्युक्तासि मया देवि गिरिजे चारुहासिनि ।।

तदा प्रोक्तं त्वया वाक्यं मामुद्दिश्य सगद्गदम् ।। ९ ।।

यदा त्वया मदर्थे हि प्रेरिता वेदपारगाः ।।

सप्तर्षयो महाभागाः किंकृते न तदात्थ माम् ।। 5.2.१० ।।

तदा त्वया मदर्थेऽपि प्रार्थितो जनको मम ।।

हिमाद्रिराजो यत्नेन किं काली न तदात्थ माम् ।। ११ ।।

यदाप्युक्तं त्वया दैन्यान्मदर्थे गच्छ नारद ।।

प्रार्थ्यतां पार्वती शीघ्रं किं काली न तदात्थ माम् ।। १२ ।।

सत्येयं लौकिकी गाथा न वृथा परिजायते ।।

स्वकृतेन जनः सर्वो जाड्येन परि भूयते ।। १३ ।।
अवश्यमर्थी प्राप्नोति खंडनां तुंडमुंडनाम्।।
तपोतिदीर्घचारैर्तयत्त्वां प्रार्थितवत्यहम् ।। १४ ।।
तस्या मे नियतस्त्वेष ह्यवमानः पदेपदे ।।
नैवास्मि कुटिला रौद्रा विषमा न च धूर्जटे ।। १५ ।।
नाकुलीना वृथाचारा न दुष्टा न समत्सरा ।।
सविषस्त्वं यतः ख्यातो व्यक्तं दोषा कराश्रयः ।।१६।।
अकुलीनो वृथाचारो मात्सर्येणाश्रितः सदा ।।
नाहं मुष्णामि नयने तत्र हंता त्वमेव च ।।१७।।
आदित्यस्त्वां विजानातु भगवान्द्वादशात्मकः ।।
मया नोत्पाटिता दंताः कस्यापि निरपत्रप ।।१८।।
पूषादेवो विजानाति द्वादशात्मा दिवाकरः ।।
मूर्ध्नि शूलं तव यतः स्वैदोषैर्मामधिक्षिपः ।।१९।।
यत्तु मामाह कृष्णेति महाकालेति विश्रुतः।।
इत्यथापि प्रवादोऽयं प्रवरः ख्यामि ते हर ।।5.2.२०।।
निदर्शनार्थं न द्वेषाच्छ्रुत्वा तं क्षंतुमर्हसि।।
विरूपो यावदादर्शे नात्मनः पश्यते मुखम्।।२१।।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् ।।
यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते।।२२।।
तदेतरं विजानाति ह्यात्मानं नेतरं जनम्।।
सत्यधर्मच्युतात्पुंसः क्षुद्रादाशीविषादिव ।। २३ ।।
स नास्तिकोप्युद्विजते जनः किं पुनरास्तिकः ।।
इत्युक्तोऽहं त्वया देवि मया कोलाहलः कृतः ।। २४ ।।
अनात्मज्ञासि गिरिजे मृडे पंडितमानिनि ।।
सत्यं सर्वैरवयवैः स्तुतोऽपि सदृशः पितुः ।।२५।।
काठिन्यं कष्टमभ्येति धातुभ्यो बहुघातिता ।।
कुटिलत्वं च सर्वेभ्योऽसेव्यत्वं च हिमादिव ।।२६।।
इत्युक्ताऽसि मया देवि पुनः प्रोक्तं त्वया वचः ।।
तथापि दुष्टसंसर्गात्संक्रांतं सर्वमेव हि ।।२७।।
व्यालेभ्योऽनेकजिह्वत्वं भस्मतः स्नेहवर्जनम् ।।
हृत्कालुष्यं शशांकाद्वै दुर्बोधत्वं वृषादपि।।२८।।
श्मशानवासाद्भीरुत्वं नग्नत्वं च न लज्जया ।।
निर्घृणत्वं कपालाच्च दया ते विगता चिरम् ।। २९ ।।

एवं तदाभवद्रौद्रः कलहो भयकृच्छुभे ।।
एवं प्रवृत्ते तु तदा कंपितं भुवनत्रयम् ।। 5.2.३० ।।
भीताश्च देवगंधर्वा यक्षगंधर्वराक्षसाः ।।
तस्मात्कोलाहलो भूमिं भित्त्वा लिंगमभूत्तदा ।। ३१ ।।
लिंगमध्यात्समुत्पन्ना वाणी सुखकरी शुभा ।।
आश्वासयंती देवान्वै त्रैलोक्यं सचराचरम् ।। ३२ ।।
नामास्य चक्रुर्देवेशास्तदा कलकलेश्वरम् ।।
स्वरनामासौ ततोऽभूच्छङ्करो भुवि विश्रुतः ।। ३३ ।।
यस्तमर्चयते भक्त्या देवं कलकलेश्वरम्।।
न राक्षसाः पिशाचाश्च न भूता न विनायकाः ।।
विप्रं कुर्युर्वरारोहे कलहो न भवेद्गृहे ।। ३४ ।।
सुशीला गृहिणी तस्य सुरूपा सुभगा प्रिये ।।
बहुपुत्रा बहुधना जायते दर्शनात्तथा ।। ३५ ।।
ये पश्यंति चतुर्द्दश्यां देवं कलकलेश्वरम् ।।
न दुःखं न जराव्याधिर्नाकालमरणं तथा ।। ३६ ।।
न च शत्रुभयं तेषां जायते गिरिपुत्रके ।।
लोकोऽक्षयो भवेद्देवि यावदिंद्राश्चतुर्द्दश ।। ३७।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
यस्य श्रवणमात्रेण क्षेममत्र परत्र च ।। ३८ ।।
इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये कलकलेश्वरमाहात्म्यवर्णनंनामाष्टादशोऽध्यायः ।। १८ ।।।छ।।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः १९



।। ईश्वर उवाच ।। ।।

एकोनविंशतितमं नागचंडेश्वरं प्रिये ।।

निर्माल्यलंघनात्पापान्मुच्यते यस्य दर्शनात।।१।।

तस्य प्रभावं सुभगं कथयाम्यथ विस्तरात्।।

शृण्वेकाग्रमना देवि सर्वपापप्रणाशनम्।। २ ।।

पुरा देवर्षिगंधर्वाश्चारणा गुह्यकास्तथा ।।

उपविष्टाः सुधर्मायां कथयंतः शुभां कथाम् ।। ३ ।।

एतस्मिन्नंतरे शक्रो देवर्षिं नारदं मुनिम् ।।

पप्रच्छ सादरं देवि समायातं शुचिव्रतम् ।। ४ ।।

दृष्ट्वा विनयसंपन्नं ब्रह्मचर्यपरायणम् ।।

मेखलाजिनकौपीनं वीणादण्डविभूषितम्।।५।।

त्वया दृष्टमिदं सर्वं त्रैलोक्यं भूर्भुवादिकम्।।

उत्पाद्यमानमुत्पन्नं प्रलयच्च सहस्रशः ।।६।।

त्वत्तुल्यो नास्ति लोकेऽस्मिन्मु क्त्वैकं परमेष्ठिनम्।।

जगत्कारणमव्यक्तं नित्यं सदसदात्मकम्।। ७ ।।

योगेन तपसा भक्त्या यत्त्वया परितोषितः ।।

त्रैलोक्यमभिजानासि तत्सर्वं सर्वतः स्फुटम्।। ८ ।।

अतोऽहं प्रष्टुमिच्छामि कथ्यतां मम निश्चयम् ।।

पृथिव्यां प्रवरं क्षेत्रं पावनं भुक्तिमुक्तिदम् ।। ९ ।।

एवं श्रुत्वा तदा ध्यात्वा चिंतयामास नारदः ।।

चिंतयित्वा चिरं कालमिदं वचनमब्रवीत् ।।5.2.19.१०।।

देवराज स्मृतं पुण्यं क्षेत्रराजमनुत्तमम् ।।

क्षेत्राणामुत्तमं क्षेत्रं प्रयागं च प्रश स्यते ।। ११ ।।

तस्माद्दशगुणं क्षेत्रं महाकालस्य कथ्यते ।।

भुक्तिदं मुक्तिदं तच्च दर्शनादपि वासव ।। १२ ।।

एतच्छ्रुत्वा सहस्राक्षो वर्णयित्वा च तं मुनिम्।।

सर्वैर्देवगणैः सार्द्धं विमानस्थस्त्वरान्वितः ।। १३ ।।

अंतरिक्षस्थितो जिष्णुरद्राक्षीच्च सुरैः सह ।।
क्षेत्रं लिंगैः समाकीर्णमंगुलस्यांतरं न हि ।। १४ ।।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।।
महाकालवने रम्ये निर्माल्यं लंघ्यते कथम् ।। १५ ।।
निर्माल्यलंघनाद्दोषो महान्भवति निश्चितम्।।
इत्यालोच्य पुनर्देवि जग्मुः स्वर्गे मनोरमाः ।। १६ ।।
निर्माल्यदोषभीतास्ते क्षेत्रे न विविशुः सुराः ।।
एतस्मिन्नंतरे देवि विमानस्था गणोत्तमाः ।। १७ ।।
गणैर्नानाविधैः गेयैर्गीयमानश्च किंनरैः ।।
चारणैः स्तूयमानस्तु स्वर्गलोकं व्रजन्सुरैः ।। १८ ।।
प्रफुल्लनयनैर्दृष्टः कोऽयं धन्यो महातपाः ।।
तेजसा दीप्यमानोयम्पसरोभिश्च सेव्यते ।। १९ ।।
पप्रच्छुरमराः सर्वे कोऽयं रुद्रनिभो गणः ।।
याति कुत्र महाबाहो हृष्टात्मा प्रहसन्मुखः ।। 5.2.19.२० ।।
पृष्टस्तदा सुरैः सर्वैर्विस्मयाविष्टमानसैः ।।
कस्त्वं पुरुषशार्दूल किं त्वया सुकृतं कृतम् ।। २१ ।।
देवानां पुरतो देवि निःशेषं कथितं तदा ।।
महाकालो महादेवः पूजितो भक्तितः स्तुतः ।। २२ ।।
हृष्टेन तेन मे दत्तं गणत्वं यत्सुदुर्लभम् ।।
नाम दत्तं च सुभगं नागचंड इति ध्रुवम् ।। २३ ।।
पप्रच्छुरमरास्तच्च सादरं गणसत्तम ।।
नागचंड त्वया तत्र निर्माल्यं पतितं त्वथ ।। २४ ।।
महाकालवने पुण्ये लंघितं चरता त्वया ।।
संचारो नास्ति तत्रैव लिंगसंकीर्णता यतः ।। २५ ।।
उपायस्तेन कथितो देवानां पुरतस्तदा ।।
तत्र तिष्ठति देवेशा लिंगं सर्वफलप्रदम् ।। २६ ।।
ईशानेश्वरदेवस्य तिष्ठतीशानभागतः ।।
तस्य दर्शनमात्रेण न स गच्छति दुष्कृतम् ।। २७ ।।
निर्माल्यलंघनोद्भूतं यत्पापं जायते महत् ।।
तत्सर्वं नाशमायाति तस्य लिंगस्य दर्शनात् ।। २८ ।।
ततो देवगणाः सर्वे महाकालवने पुनः ।।
समायाता महाभागा महाकालश्च पूजितः ।। २९ ।।

यथा लिंगं च तद्दृष्टं सर्वदोषक्षयंकरम् ।।
तस्य दर्शनमात्रेण निर्माल्यलंघनादिभिः ।।
दोषो नष्टः सुराणां च ततो नामास्य चक्रिरे ।। 5.2.19.३० ।।
अस्माकं तेन कथितं नागचंडेन धीमता ।।
नागचंडेश्वराख्यानमतो लोके भविष्यति ।। ।। ३१ ।।
कृत्वास्य नाम ते देवा जग्मुः स्वर्गेहमुत्तमम् ।।
पूजयिष्यंति ये केचिन्नागचंडेश्वरं शिवम् ।।
निर्माल्यलंघनोद्भूतं तेषां नश्यति पातकम्।। ।। ३२ ।।
नागचंडेश्वरं देवं ये पश्यंति दिनेदिने ।।
अज्ञानाज्ज्ञानतः पापं तेषां नश्यति नान्यथा ।। ३३ ।।
आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चारुरूपताम् ।।
सप्त जन्मान्यवाप्नोति दर्शनेन न संशयः ।। ३४ ।।
प्राप्नोत्यभिमतान्कामान्देवानामपि दुर्लभान् ।।
कीर्त्तनान्नात्र संदेहो नागचंडेश्वरस्य च ।। ३५ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
नागचंडेश्वरस्यैव प्रतीहारेश्वरं शृणु ।। ३६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये नागचंडेश्वरमाहात्म्यवर्णनंनामैकोनविंशोऽध्यायः ।। १९ ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २०



।। ईश्वर उवाच ।। ।।

प्रतीहारेश्वरं देवि विद्धि विंशतिमं प्रिये ।।

यस्य दर्शनमात्रेण धनवानिह जायते ।। १ ।।

दक्षकोपात्त्वं च देवि पुरा प्राणैर्विसर्जितैः ।।

हिमाचले तथा जाता मया प्राप्ता पुनः प्रिये ।। २ ।।

प्रारब्धा च मया देवि त्वया सार्द्धं रतिस्तदा ।।

दिव्यं वर्षशतं जातं साग्रं देवि प्रमोदतः ।।

अनुरागवशाच्चैव मन्मथेन प्रपीडिता ।। ३ ।।

महारतिं समीक्ष्याथ देवाः संक्षुब्धमानसाः ।।

चक्रुर्मंत्रं यथाकालं वासवाद्या यथोचितम् ।। ४ ।।

दिव्यं वर्षशतं रुद्रो गौर्या सह सदा रतिम् ।।

कुर्वंस्तिष्ठति देवोऽसौ मंदरे चारुकंदरे ।। ५ ।।

अनयोर्बीजसंपत्योः पुत्रो यो हि भवेत्तदा ।।

विनश्येत्तेन त्रैलोक्यमखिलं च न संशयः ।। ६ ।।

तस्य तेजोपि नो वोढुं समर्था निश्चितं वयम् ।।

तस्मात्तत्क्रियतां कर्म रतिर्येनो पशाम्यति ।। ७ ।।

उपायं दृष्टवांस्तत्र देवानां गुरुरग्रणीः ।।

बृहस्पतिर्महातेजा वेदशास्त्रार्थपारगः ।। ८ ।।

गच्छंतु त्रिदशाः सर्वे शिवस्य तु समीपतः।।

स्वयं विज्ञाप्यतां देवस्तत्कर्म न करिष्यति।।९।।

इति निश्चित्य ते देवि जग्मुः शीघ्रं सुरास्तदा।।

मंदराद्रेः शुभे द्वारि स्थितास्ते विस्मयान्विताः।।5.2.20.१०।।

गणानामधिपो नंदी द्वारि तिष्ठति यत्नतः।।

त्वया सार्द्धमहं देवि कुर्वंस्तिष्ठामि तां रतिम्।।११।।

अथ प्रवेशो देवानां दुष्करो मम पार्श्वतः ।।

तदा चिंतयमानाश्च तत्र तिष्ठंति ते सुराः ।। १२ ।।

अग्निना तद्विितं वाक्यमुक्तं तेषां पुरः शुभम् ।।

हंसरूपं समास्थाय यास्यामि शिवसन्निधौ।।१३।।
वंचयित्वा प्रतीहारं कृतं तेन तथैव च।।
हंसरूपेण कथितं कर्णे मम शुचिस्मिते।।१४।।

इन्द्राद्या अमरा देवा द्वारि तिष्ठंति संयताः।।
श्रुत्वा तस्य च तद्वाक्यं ततोहं द्वारमागतः।।१५।।
ततश्च तै- कुतो मह्यं प्रणामश्च यथाक्रमम्।।
मया दृष्टाश्च ते देवा युष्माकं किं करोम्यहम्।।१६।।
तैरुक्तं त्यज्यतां चैव संभोगस्तु सुदारुणः।।
तथा मया कृतं देवि गतास्ते त्रिदिवं पुनः।।१७।।
ततः शप्तो मया नंदी भूलोकं गच्छ सत्वरम्।।
ततः शापपरिभ्रष्टः पृथिव्यां पतितस्तदा।।१८।।
सोच्छवासहृदयो दीनो दुःखव्याकुललोचनः।।
विलपंश्च तथा नंदी विलुठञ्छोकतो भुवि ।।१९।।
वंचितश्चाग्निना बाढं वासवेन विशेषतः।।
किं मया दुष्कृतं कर्म कृतं किं चित्पुरातनम् ।। 5.2.20.२० ।।
स दृष्टो लोकपालैस्तु तामवस्थां गतो गणः ।।
पृष्टश्च तैः कुतो नदिन्विलापं कुरुषे महत् ।। २१ ।।
सर्वं निवेदितं तेन तेषामग्रे च नंदिना ।।
उपायः कथितस्तैश्च महाकालवनं ततः ।। २२ ।।
ततश्च वचनं श्रुत्वा नंदी रोमांचकंचुकः ।।
महाकालवने देवि जगाम स तदा गणः ।।
पूजयामास विधिवद्धृत्वा कपालिकीं तनुम् ।। २३ ।।
अशरीरसमुत्पन्ना वाणी लिंगात्तदा प्रिये ।।
संजाता शापमोक्षस्ते प्रतीहार सुभक्तितः ।।
पूजितोऽसौ महाभक्त्या प्रतीहारेण नंदिना ।। २४ ।।
तदाप्रभृति लोकेस्मिन्प्रतीहारेश्वरेश्वरः ।।
मया ते कथितो देवि प्रतीहारेश्वरस्य च ।।
प्रभावः सर्वलोकानामत्यभीष्टफलप्रदः ।। २५ ।।
पूजयिष्यंति ये भक्त्या प्रतीहारेश्वरं शिवम् ।।
स्थानभ्रंशो वियोगश्च तेषां स्वप्नेऽपि नो भवेत् ।। २६ ।।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।।

तत्सर्वं नाशमायाति प्रतीहारेश्वरार्चनात् ।। २७ ।।
मनसा ये स्मरिष्यति प्रतीहारेश्वरं शिवम्।।
एवं तस्य कुलं सर्वं याति स्वर्गं न संशयः।।२८।।

इति श्री स्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये प्रतीहारेश्वरमाहात्म्यवर्णनंनाम विंशोध्यायः।।२०।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २१



ईश्वर उवाच।।
एकविंशतिकं विद्धि कुक्कुटेश्वरसंज्ञकम्।।
यस्य दर्शनमात्रेण तिर्यग्योनिर्न लभ्यते।।१।।
कौशिकोनाम राजाभूत्कुक्कुटो जायते सदा।।
दृश्यते वासरे भागे सर्वाभरणभूषितः।।२।।
व्याप्ता च पृथिवी तेन सशैलवनकानना ।।
पूर्वकर्मप्रभावेन प्राप्तं राज्यमकण्टकम् ।। ३ ।।
विशालानाम विख्याता भार्या तस्य महीपतेः ।।
रूपलावण्यसंयुक्ता चतुःषष्टिकलान्विता ।।४।।
तया चकार सहितः स राज्यं राजसत्तमः ।।
सा वल्लभापि नृपतेः प्राणेभ्योऽपि गरीयसी ।। ५ ।।
तया सार्द्धं कदाचिच्च सुरतं नास्ति पार्वति ।।
संतप्ता सर्वदा सा च रत्यभावाद्बभूव ह ।। ६ ।।
एवं गच्छति काले तु सह राज्ञा स्मरातुरा ।।
सर्वसत्त्वरुतज्ञा सा विशाला विपुलेक्षणा ।।
ददर्श कीटमिथुनमनंगकलहातुरम् ।। ७ ।।
प्रसादयंस्तथा कीटः स्वां प्रियां च मुहुर्मुहुः ।।
दासोऽस्मि तव कांतेऽहं रूपसौभाग्य सुन्दरि ।। ८ ।।
भजस्व मां यथाकाममनंगशरपीडितम् ।।
शिरसा प्रणतेनैव रचितस्ते मयांजलिः ।। ९ ।।
न त्वया सदृशी लोके कामिनी विद्यते क्वचित् ।।
सुवर्णवर्णसदृशी मद्भक्ता चारुहासिनी ।। 5.2.21.१० ।।
कुतो वा मयि दीने त्वं क्रुद्धेव प्रियवादिनि ।।
किमर्थं वद कल्याणि सरोषव दना स्थिता ।। ११ ।।
सा तमाह प्रकोपाच्च किमालपसि मां वृथा ।।
त्वया मोदकचूर्णं तु मां विहाय मनोरमाम् ।।
प्रदत्तं कामलुब्धेन अन्यस्य कीटकाधम ।। १२ ।।

नाहमेवं करिष्यामि कीटः प्राह पुनःपुनः ।।
स्पृशामि पादौ सत्येन प्रणतस्य प्रसीद मे ।। १३ ।।
इति तद्वचनं श्रुत्वा सा प्रसन्नाभवत्तदा ।।
आत्मानमर्पयामास कामनाय पिपीलिका ।। १४ ।।
दृष्ट्वा तन्महदाश्चर्यं सा राज्ञी विललाप ह ।।
धिग्राज्यं धिक्च मे रूपं धिक्च यौवनमद्य मे ।।
न कामिताहं कांतेन मरिष्यामि न संशयः ।। १५ ।।
एवं विलप्य बहुधा विनिःश्वस्य पुनःपुनः ।।
उन्मत्तेव विशालाक्षी गालवस्याश्रमं गता ।। १६ ।।
दृष्ट्वा तमृषिमासीनं तपोयोनिं दृढव्रतम् ।।
उवाच प्रणतांगी सा शोकसंतप्तमानसा ।। १७ ।।
एकोऽयं संशयो ब्रह्मन्हृदये परिवर्त्तते।।
वश्योऽपि हि च मे भर्त्ता रूपलावण्यवानपि।।
न जाने कारणं किं तु संगमो नोपजायते।।१८।।
यो गत्वा प्रमदाराज्यं जित्वा सर्वाः पुरा रणे।।
आजहार शुभास्तासां मध्यादष्टौ वरांगनाः।।
नैव कामयते तासु किमेतदिति सुव्रत।।१९।।
वाजिनो वारणाश्चैव धनधान्यमनंतकम्।।
वर्त्तते हि जनः सर्वो ममाज्ञां पालयन्क्षितौ।।5.2.21.२०।।
केन कर्मविपाकेन ममेदं यौवनं दृढम् ।।
व्यर्थं जातं द्विजश्रेष्ठ रतिं न कुरुते नृपः।। ।। २१ ।।
दृश्यते वासरे भागे रात्रौ चैव न दृश्यते ।।
इहजन्मकृतं चैतदाहोस्वित्पारलौकिकम् ।। २२ ।।
दुष्कृतावर्जनं ब्रह्मन्ममेदं वक्तुमर्हसि ।।
तस्यास्तद्वचनं श्रुत्वा गालवो वाक्यमब्रवीत्।। २३।।
शृणु पुत्रि पुरावृत्तं बालभावेन यत्कृतम्।।
अनेन राज्ञा धर्मज्ञे रात्रौ येन न दृश्यते।।२४।।
विदूरथस्य तनयस्तव भर्ता स निश्चितम्।।
मांसाहारी दोषरतिर्विषयासक्तमानसः।।२५।।
बहवः कुक्कुटास्तेन भक्षिता राजसूनुना ।। २६ ।।
एवं भक्षयतस्तस्य बहुशो वत्सरा गताः ।।
कालेन महता राज्ञा ताम्रचूडेन मंत्रिणः।।

पृष्टाः किं कारणं नात्र समायांति हि कुक्कुटाः ।। २७ ।।
अथ केनापि कथितं कुक्कुटानां च भक्षणम् ।।
विदूरथस्य पुत्रेण कौशिकेन दुरात्मना ।।
भक्षिताः कुक्कुटाः सर्वे विना कारणतो नृप ।। २८ ।।
ताम्रचूडोऽथ संक्रुद्धो ददौ शापं दुरात्मने ।।
कौशिकाय क्षयो रोगो भविष्यति भयावहः ।। ।। २९ ।।
तदाप्रभृत्यभूत्क्षीणो राजपुत्रो दिनेदिने ।।
औषधैरधिकोऽभ्येति व्याधिना पीडितो भृशम् ।। 5.2.21.३० ।।
अथ केनापि कामेन वामदेवाश्रमं गतः ।।
क्षयरोगाभिभूतोऽसौ मरणोत्सुकमानसः ।।
पप्रच्छ वामदेवं स नमस्कृत्य पुनःपुनः ।।३१।।
भगवन्केन पापेन क्षीयतेऽहर्निशं वपुः ।।
मदीयं पोष्यमाणं हि मांसेन विविधेन च ।। ३२ ।।
वामदेवोऽथ तं प्राह कुक्कुटा भक्षितास्त्वया ।।
ताम्रचूडेन शप्तोऽसि कुक्कुटानां नृपेण हि ।। ३३ ।।
तमेव शरणं गच्छ स उपायं वदिष्यति ।।
ततः स ताम्रचूडस्याभ्यर्णमागानृपात्मजः ।। ३४ ।।
दृष्ट्वा च ताम्रचूडं तं महाभक्त्या कृतांजलिः ।।
प्रोवाच प्रणतो भूत्वा पाहि मां शरणागतम्।।३५।।
अज्ञानाद्भक्षिता देव कुक्कुटाः पुष्टिकारणात् ।।
क्षंतुमर्हसि देवेश ममागः कृपणस्य च ।।३६।।
प्रोवाच ताम्रचूडोऽथ यस्मात्प्रार्थयसे नृप ।।
तस्मात्ते वासरे प्राप्ते पुरुषत्वं भविष्यति।।३७।।
शास्ता गोप्ता च लोकानां राजा दंडधरः प्रभुः ।।
कुक्कुटो भविता रात्रौ सर्वभोगविवर्जितः ।।३८।।
अतो न दृश्यते पुत्रि तिर्यग्भावं समाश्रितः।।३९।।
इति तस्य वचः श्रुत्वा गालवस्य महात्मनः ।।
सा संपूज्य विशालाक्षी गालवं मुनिसत्तमम् ।।
पप्रच्छ परया भक्त्या शापांतो हि कथं भवेत् ।। 5.2.21.४० ।।
गालवः कथयामास ध्यानेनालोक्य यत्नतः ।। ४१ ।।
महाकाल वने लिंगं पक्षियोनिविमोचनम् ।।
ज्वालेश्वरस्य देवस्य पूर्वभागे व्यवस्थितम् ।।

तस्य दर्शनमात्रेण शापस्यांतो भविष्यति ।। ४२ ।।
सा प्रणम्य मुनिश्रेष्ठमाजगाम त्वरान्विता ।।
यत्रास्ते नृपशार्दूलो विध्यन्बहुविधान्मृगान् ।। ४३ ।।
प्रफुल्लनयनाभ्यां सा दृष्टा लोलेक्षणा प्रिया ।।
आह्लादिता बहुविधैः कोमलैर्वचनामृतैः ।। ४४ ।।
ततस्तेन तदा राज्ञा प्रोक्ता सा मृगलोचना ।।
इदानीं कि मया कांते कार्यं भवति कथ्यताम् ।। ४५ ।।
तया प्रोक्तं महाराज गम्यतेऽद्य मया सह ।।
महाकालवने पुण्ये सर्वदुष्कृतनाशने ।। ४६ ।।
तस्यास्तद्वचनं श्रुत्वा त्वरमाणो मुदान्वितः ।।
तया नीतोऽथ नृपतिर्लिंगस्यास्य समीपतः ।। ४७ ।।
पूजयित्वाथ तल्लिंगं पक्षियोनिविमोचनम् ।।
तत्रैव च स्थितो राजा प्रियया सह पार्वति ।। ४८ ।।
तस्यां रात्रौ न संजातः कुक्कुटो यादृशः सदा ।।
शिवप्रसादादभवद्दिव्यरूपी मनोहरः ।। ४९ ।।
रूपेण निर्जितः कामस्तेनाप्रतिमतेजसा ।।
ततो विस्मयमापन्नश्चिंतयामास पार्थिवः ।।
कोऽयं प्रभावो येनाहं शापान्मुक्तः सुदुस्तरात् ।। 5.2.21.५० ।।
प्रियां पप्रच्छ नृपतिः पूर्णेन्दुवदनां भृशम् ।।
कथं शापाद्विमुक्तोऽहं केन पुण्येन कर्मणा ।। ५१ ।।
अथ सा कथयामास वृत्तांतं विस्तरान्मुदा ।।
गालवेन हि यत्प्रोक्तं यत्किंचिच्छापमोक्षणम् ।।५२।।
राजञ्छापाद्विमुक्तोऽसि लिंगस्यास्य प्रभावतः ।।
पुनः प्रसाद्य तल्लिंगं भुक्त्वा भोगांश्चिरं भुवि ।। ५३ ।।
तया सार्द्धं ययौ राजा स्वर्गं सुरगणैः स्तुतः ।।
तदाप्रभृति तल्लिंगं कुक्कुटेश्वरसंज्ञकम् ।। ५४ ।।
विख्यातं देवि लोकेऽस्मिन्सर्वकामफलप्रदम् ।।
तच्च ये पूजयिष्यंति कुक्कुटेश्वरसंज्ञकम् ।।
तिर्यग्योनिं न यास्यंति न वियोगो भविष्यति ।। ५५ ।।
न चापि नरकावाप्तिर्न दुःखं न जरा भयम् ।।
नाकाले मरणं नृणां न च कष्टं भवि ष्यति ।। ५६ ।।
रूपसौभाग्यसंपन्ना भविष्यंति युगेयुगे ।।

चतुर्द्दश्यां प्रपश्यति लिंगं ये कुक्कुटेश्वरम् ।।
तेषां कुले च ये केचित्पितरो निरयस्थिताः ।। ।। ५७ ।।
तिर्यग्योनिगता ये च पशुयोनिं तु ये गताः ।।
वृक्षत्वमथवा प्राप्तास्तेषां मोक्षो भविष्यति ।। ५८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये कुक्कुटेश्वरमाहात्म्यवर्णनंनामैकविंशोऽध्यायः ।। २१ ।। छ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २२

https://sa.wikisource.org/s/f73
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीविश्वनाथ उवाच ।। ।।
द्वाविंशतितमं विद्धि कर्कटेश्वरसंज्ञकम् ।।
यस्य दर्शनमात्रेण तिर्यग्योनिर्न दृश्यते ।। १ ।।
आसीत्पुरा बृहत्कल्पे धर्म मूर्तिर्जनाधिपः ।।
सुहृच्छक्रस्य निहता येन दैत्याः सहस्रशः ।। २ ।।
सोमसूर्यादयो यस्य तेजसा निष्प्रभाः कृताः ।।
प्रजाश्च पालिता येन निहत्य समरे द्विषः ।। ३ ।।
यथेच्छारूपधारी च संग्रामेष्वपराजितः ।।
तस्य भानुमतीनाम भार्या त्रैलोक्यसुंदरी ।। ४ ।।
राज्ञस्तस्याग्रमहिषी प्राणेभ्योऽपि गरीयसी ।।
दशनारीसहस्राणां मध्ये श्रीरिव राजिता ।। ५ ।।
नृपो नृपसहस्रेण न कदाचित्प्रमुच्यते ।।
कदाचिदेकांतगतः पप्रच्छ स्वपुरोहितम् ।।
विस्मयेनावृतमना वशिष्ठमृषिसत्तमम् ।। ६ ।।
भगवन्केन धर्मेण मम लक्ष्मीरनुत्तमा ।।
कस्माच्च विपुलं तेजो दुःसहं मम दृश्यते ।। ७ ।। ।।
।। वशिष्ठ उवाच ।। ।।
पुरा त्वमवनीपाऽऽसीः शूद्रजातिसमुद्भवः ।।
बहुदोषसमाविष्टो दुष्टया भार्ययाऽनया ।। ८ ।।
निवसन्दुष्टहृदयो वर्षाणि सुबहून्यपि ।।
महाक्रोधाभिभूतात्मा सदा निष्ठुरजल्पकः ।। ९ ।।
सदा ब्रह्मस्वहारी त्वं सदा वेदविनिंदकः ।।
सदा चासूयको राजन्सदा विश्वासघातकः ।। 5.2.22.१० ।।
अथ पंचत्वमापन्नः काले नरकमास्रवान् ।।
ताम्रभ्राष्ट्रे परं दग्धो दशवर्षाणि पंच च ।। ११ ।।
रौरवे कुम्भिपाके च महारौरवसंज्ञके ।।

सूक्ष्माणि तिलमात्राणि कृत्वा खंडान्यनेकशः ।। १२ ।।
मूषायां धीमतो राजन्नसिपत्रे च दारितः ।।
शेषपातकशुद्ध्यर्थं धराया मवतारितः।।१३।।
विधाय कार्कटं रूपं यमेन त्वयि पार्थिव ।।
शिवस्य सरो विख्यातं महाकालवनोत्तमे।।१४।।
दत्तं जप्तं कृतं यच्च हुतं देवार्चनादि यत्।।
सर्वं तदक्षयं कर्म तस्मिन्सरसि विश्रुतम् ।।१५।।
निक्षिप्तस्त्वं तदा तेन भाविपुण्येन कर्मणा।।
तत्र स्थितस्त्वं भूपाल वर्षाणां पंचकं तथा।।१६।।
कदाचित्तीरभूम्यां त्वं गतः संक्रीडितुं शनैः ।।
समीक्ष्य तत्र काकेन धृत्वा चंचुपुटेन च ।।१७।।
आकाशमार्गं चोड्डीनः स त्वया ताडितो भृशम्।।
त्वत्तीक्ष्णपातैश्चरणैस्ताडितो व्यथितस्तदा ।। १८ ।।
मुक्तस्त्वं चंचुपुटतो वायसेनाकुलेन तु ।।
स्वर्गद्वारस्य पूर्वे तु देव्यगारे सुपुण्यदे ।। १९ ।।
शिवस्य क्षिप्तस्त्वं शीघ्रं चञ्च्वाक्षेपप्रपीडितः ।।
मृतोऽसि संनिधौ तत्र देवस्य परमेष्ठिनः।।5.2.22.२०।।
विमुच्य देहं तज्जीर्णं यावत्तं कार्कटं पुरा।।
तत्क्षणाद्दिव्य देहश्च दिव्याभरणभूषितः ।। २१ ।।
तस्य लिंगस्य माहात्म्याद्भूत्वा विद्याधरेश्वरः ।।
कामगेन विमानेन पूज्यमानो गणेश्वरैः ।।२२।।
स्वर्गे व्रजंस्त्वं संपृष्टः सुरसंघैश्च सादरम्।।
कोयं महात्मा मुदितो याति दिव्यपथोंऽबरात् ।। २३ ।।
ततो रुद्रगणैः सर्वं सुराणां कथितं पुरा ।।
वृत्तांतं विस्तरात्सर्वं कार्कटत्वविमोचनूम् ।। २४ ।।
तस्य लिंगस्य देवेशाः प्रभावोऽयमुपस्थितः ।।
देवैः प्रोक्तं च सहसा लिंगस्यास्य प्रभावतः ।।२५।।
कार्कटीयोनि मुक्तस्य प्राप्तं स्वर्गसुखं यतः ।।
कर्कटेश्वरनामायमतो लोके भविष्यति ।। २६ ।।
तदाप्रभृति देवोऽयं कर्कटेश्वरसंज्ञकः ।।
त्वया स्वर्गे महाभोगा भुक्ता राजन्यथेच्छया ।। २७ ।।
आगतोऽसि पुनर्भूमौ लब्धं राज्यमकंटकम् ।।

तस्य लिंगस्य माहात्म्याज्जातं सर्वं तवाधुना ।। २८ ।।
तस्मात्पार्थिव भूयस्त्वं लिंगमाराधय द्रुतम् ।।
जातिस्मरत्वमापन्नो वशिष्ठवचनात्तदा ।। २९ ।।
पूर्वं कर्म स्मृतं तेन स्वकीयं पार्थिवेन तु ।।
पुनर्गत्वा च तल्लिंगं पूजयामास यत्नतः ।।5.2.22.३० ।।
तस्मिँल्लिंगे लयं प्राप्तः स्वशरीरेण पार्वति।।
येऽर्चयंति सदा भक्त्या कर्कटेश्वरसंज्ञकम्।।
भुक्त्वा भोगांश्चिरं भूमौ ते यांति परमां गतिम्।।३१।।
नियमेन प्रपश्यंति ये देवं कर्कटेश्वरम्।।
अष्टम्यां वा चतुर्दश्यां तेषां पुण्यफलं शृणु।।३२।।
सूर्यदीप्तिप्रतीकाशैर्विमानैः सार्वकामिकैः।।
मृता मम पुरं यांति त्रिसप्तकुलसंयुताः।।३३।
तत्र दिव्यैर्महाभोगैः स्त्रीसहस्रैर्मनोरमैः।।
कल्पकोटिशतैर्देवि सेव्यमाना वसंति हि ।। ३४ ।।
तदंते विष्णुभवने तावत्कालं च संति हि ।।
वैष्णवैर्विविधैर्भोगैः स्त्रीसहस्रैस्तु सेविताः ।। ३५ ।।
विष्णुलोकाद्ब्रह्मलोकं संप्राप्य मुदिताः पुनः ।।
भोगान्नानाविधान्भुक्त्वा ततो यांति परं पदम् ।। ३६ ।।
दशाश्वमेधैर्यत्पुण्यं तत्फलं तीर्थयात्रया ।।
कर्कटेश्वरदेवस्य मेघनादेश्वरं शृणु ।। ३७ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये कर्कटेश्वरमाहात्म्यवर्णनं नाम द्वाविंशोऽध्यायः ।। २२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २३



।। श्रीहर उवाच ।। ।।

मेघनादेश्वरं देवि त्रयोविंशतिमं शृणु ।।

यस्य दर्शनमात्रेण प्राप्यते सर्वसिद्धयः ।।१।।

राजमूला महादेवि योगक्षेमाः सुवृष्टयः।।

प्रजाश्च व्याधयश्चैव मरणं च भयानि च ।।२।।

राजा कृतं तथा त्रेता द्वापरश्च तथा कलिः ।।

राजमूलानि सर्वाणि राजाधर्मस्य कारणम् ।। ३ ।।

राजा बभूव लोकेऽस्मिन्मदांधोनाम पार्वति ।।

अहंकारावृतो दुष्टो देवब्राह्मणकंटकः ।। ४ ।।

कलि द्वापरयोः संधौ तस्य दोषाच्च भामिनि ।।

अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ।। ५ ।।

न ववर्ष सहस्राक्षः प्रतिलोमोऽभवत्प्रभुः ।।

नादृश्यन्तापि रात्र्यंते कुत एवाभ्रजातयः ।। ६ ।।

नद्यः संक्षिप्ततोयौघाः क्वचिदंतर्हितास्तदा ।।

निवृत्तयज्ञस्वाध्याया निर्वषट्कारमंगलाः ।। ७ ।।

उच्छिन्नकृषि गोरक्षा निवृत्तविपणास्तथा ।।

अस्थिकंकालसंकीर्णा हाहाभूतनराकुलाः ।। ८ ।।

शून्यभूयिष्ठनगरा दग्धग्रामनिवेशिनः ।।

गोजाश्वमहिषैर्हीना भक्ष्यमाणाः परस्परम् ।। ९ ।।

आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ।।

ब्राह्मणा दुःखबहुला मृता नष्टाश्च पार्वति ।। 5.2.23.१० ।।

सृष्टिरुन्मूलिता सर्वा जंगमा स्थावराखिला ।।

एतस्मिन्नंतरे देवाः शक्राद्या भयविह्वलाः ।। ११ ।।

शरण्यं शरणं जग्मुर्देवदेवं जनार्दनम् ।।

क्षीरोदस्योत्तरे कूले श्वेतद्वीपं मनोरमम् ।। १२ ।।

ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणं शुभम् ।।

सदानंदकरं शांतं सूर्यकोटिसमप्रभम् ।। १३ ।।

स्वेच्छाकल्पितवि न्यासप्रासादशयनासनम् ।।
वज्रेंद्रनीलवैडूर्यचंद्रकांतादिदीपितम् ।। १४ ।।
जरामृत्युभयोपेतसर्वव्याधिविवर्जितम् ।।
तस्मिन्द्वीपे ततो देवि सूर्य कोटिसमप्रभम् ।।
साष्टांगां प्रणतिं कृत्वा ते देवाः स्तुतिमब्रुवन् ।। १५ ।।
भवान्ब्रह्मा च रुद्रश्च महेंद्रो देवसत्तमः ।।
भवान्कर्त्ता विकर्त्ता च लोकानां प्रभवोऽव्ययः ।। १६ ।।
एवं च सत्यं परमं तपश्च परमं तथा ।।
पवित्रं परममार्गं यज्ञस्त्वं परमः प्रभो ।। १७ [।।
परं हौत्रं परं धाम त्वामाहुः पुरुषं परम् ।।
एवं स्तुतस्तदा तैस्तु देवदेवो वरानने ।। १८ ।।
प्राह देवांस्ततः कृष्णः किं करोम्यद्य वः सुराः ।।
विज्ञप्तस्तैर्हरिर्देवो ह्यनावृष्ट्या प्रपीडितैः ।। १९ ।।
उपायः कथ्यतां देव तुष्टिः धुष्टिर्यथा भवेत् ।।
ध्यानेन चिंतयित्वा च कथयामास केशवः ।। 5.2.23.२० ।।
गच्छध्वं त्रिदशाः सर्वे महाकालवने शुभे ।।
लिंगं वृष्टिकरं तत्र पुरा मेघैः प्रतिष्ठितम् ।। २१ ।।
मेघा वृष्टिकराः सर्वे तस्मिँल्लिंगे च संति वै ।।
तस्य लिंगस्य माहात्म्याद्वृष्टिरेव भविष्यति ।। २२ ।।
प्रतीहारेश्वराद्देवादीशाने विद्यते सुराः ।।
तस्य तद्वचनं श्रुत्वा वासुदेवस्य पार्वति ।।२३।।
महाकालवने प्राप्ता यत्रास्ते लिंगमुत्तमम् ।।
तुष्टुवुः परया भक्त्या दृष्ट्वा देवं मनोरमम् ।। २४ ।।
नमस्तेऽस्तु महेशाय नमोऽनंताय मालिने ।।
नमस्तैजसमूर्त्ताय नमः सौंदर्यशालिने ।। २५ ।।
नमो योगाय वेदाय नमः पिंगजटाय ते ।।
अनंतज्ञानदेहाय नम ईश्वरमूर्त्तये ।। २६ ।।
नमः शुभ्राट्टहासाय नमस्तेऽस्तु शिखंडिने ।।
शंकराय नमस्तेऽस्तु नमस्तेस्तु पिनाकिने ।। २७ ।।
नमोंऽतकाय भव्याय त्र्यंबकायास्तु ते नमः ।।
नमस्ते बहुरूपाय नमस्तेऽचिंत्यमूर्त्तये ।। २८ ।।
नमो योगशरीराय नमस्ते सर्व सर्वदा ।।

नष्टं देव जगत्सर्वमनावृष्ट्या प्रपीडितम् ।। २९ ।।
सुवृष्ट्या देवदेवेश पाहि नः शरणागतान् ।।
एतस्मिन्नंतरे मेघा पार्वणांगारवर्चसः ।। 5.2.23.३० ।।
लिंगमध्यात्समुत्तस्थुर्वादयंतो नभस्तलम् ।।
अन्योन्यवेगाभिहता ववृषुर्भूतले तदा ।। ३१ ।।
जातं विनिष्प्रभं सर्वं न प्राज्ञायत किंचन ।।
तिमिरौघपरिक्षिप्ता रेजुश्चाथ दिशो दश ।। ३२ ।।
ते तस्य देवदेवस्य माहात्म्येन प्रतोषिताः ।।
देवाः प्रीतिं परां जग्मुः सर्वेऽमृतमिवोत्तमाः ।। ३३ ।।
ततस्तमः संहरतो विनेशुश्च बलाहका ।।
प्रववुः शीतला वाताः प्रशांताश्च दिशो दश ।। ३४ ।।
शुद्धप्रभाणि ज्योतींषि सोमं चक्रुः प्रदक्षिणाम् ।।
अविग्रहं ग्रहाश्चक्रुः प्रशांताश्चापि सिन्धवः ।। ३५ ।।
महर्षयो विशोकाश्च गंधर्वाश्च कलं जगुः ।।
अभूत्सृष्टिः पुनः सर्वा लिंगस्यास्य प्रभावतः ।। ३६ ।।
सुरैः संपूज्य भक्त्या ते चक्रुर्नाम यथार्थतः ।।
अस्य लिंगस्य माहात्म्यं दृष्ट्वा प्रीताः सुरा बहु ।। ३७ ।।
मेघनादेश्वरं नाम भविष्यत्यस्य सर्वतः ।।
मेघनादेश्वराख्यानं मया ते कथितं प्रिये ।। ३८ ।।
भविष्यंति नरा भूमौ कृतार्थास्तत्प्रभावतः ।।
दर्शनादस्य लिंगस्य कामवृष्टिर्भविष्यति ।। ३९ ।।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।।
कुर्वंल्लिंगस्य स्नपनं रुद्रलोके महीयते ।। ४० ।।
प्रभावः पठ्यते यत्र मेघनादस्य पार्वति ।।
अतिवृष्टिश्चैव ततो भविष्यति च भूतले ।। ४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमआवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये मेघनादेश्वरमाहात्म्यवर्णनंनाम त्रयोविंशो ऽध्यायः ।। २३ ।। ।। अ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २४



।। ईश्वर उवाच ।। ।।

महालयं महाभागे चतुर्विंशतिकं शुभम् ।।

ब्रह्मादिस्तंबपर्यंतं त्रैलोक्यं सचरा चरम् ।। १ ।।

उत्पादितं धृतं व्याप्तं त्वया देव मया श्रुतम् ।।

त्वयैकेन विशुद्धेन सर्वगेन महात्मना ।। २ ।।

अत्यर्थं मुनयः सर्वे मुदिता मौनिनो ऽव्ययाः ।।

वदंति कारणं चास्य त्रैलोक्यस्य महेश्वर ।। ३ ।।

त्वया सर्वमिदं सृष्टं त्रैलोक्यं भूर्भुवादिकम् ।।

उत्पाद्यमानमुत्पन्नं प्रलीयच्च सहस्रशः ।। ४ ।।

देवदानवगंधर्वमुनिचारणभोगिनाम् ।।

उत्पत्तिस्थितिसंहारास्त्वया दृष्टा मुहुर्मुहुः ।। ५ ।।

जगच्चराचरं देव कुत्र स्थित्वासृजस्य लम् ।।

लीलया संहरस्येतत्प्रसादाद्वक्तुमर्हसि ।। ६ ।।

कोऽसौ महालयो रौद्रग्रहरूपी व्यवस्थितः ।।

यस्मिन्धृतं त्वया सर्वं त्रैलोक्यं भूर्भुवादिकम् ।। ।। ७ ।।

इति पृष्टस्त्वया देवि मया ते कथितं पुरा ।।

इदानीं कथयिष्यामि शृणुष्वैकाग्रमानसा ।। ८ ।।

पृथिव्यादीनि भूतानि महाकालवने प्रिये ।।

धृतानि प्रलयस्यांते एकोद्देशे महालये ।। ९ ।।

ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणं शुभम् ।।

स्थानं महालयं तत्र ममानंदकरं परम् ।। 5.2.24.१० ।।

परं ब्रह्ममयं लिंगं तत्र तिष्ठति सर्वदा ।।

तस्य लिंगस्य मध्ये तु धृतं कृत्स्नं चराचरम् ।। ११ ।।

तत्र ब्रह्मादयो देवा विष्णुस्तत्रैव संस्थितः ।।

लिंगस्याभ्यंतरे देवि सर्वमेवाधितिष्ठति ।।

तस्माल्लिंगात्समुत्पन्नो महानात्मा महामतिः ।। १२ ।।

भूतादिश्चाप्यहंकारो विष्णुः शंभुश्च पार्वति ।।

बुद्धिः प्रज्ञा धृतिः ख्यातिः स्मृतिर्लज्जा सरस्वती ।।१३।।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।१४।।
अस्माद्भूतानि लिंगानि महाभूतानि पञ्च वै ।।
पृथिवी वायुराकाशमापो ज्योतिः प्रलीयते ।। १५ ।।
स्थलमापस्तथाकाशं जन्म चापि चतुर्विधम्।।
अण्डजोद्भिज्जं च सस्वेदं जरायुजमथापि वा ।। १६ ।।
चतुर्द्धा जन्मचिह्नं यल्लिंगेस्मिन्नेव लक्ष्यते ।।
तपः कर्म च पुण्यं च व्रतं दानं तथैव च ।। १७ ।।
रजःसत्त्वं तमोभावस्तस्माल्लिंगाच्च जायते ।।
तस्मिंस्तच्छ्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ।। १८ ।।
अव्यक्तकारणं सूक्ष्मं यत्तत्सदसदात्मकम् ।।
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।। १९ ।।
विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि ।।
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितर स्तथा ।। 5.2.24.२० ।।
आपो द्यौः पृथिवी वायुरंतरिक्षं दिशस्तथा ।।
संवत्सरर्तवो मासाः पक्षाहोरात्रयस्तथा ।। २१ ।।
यच्चान्यदपि तत्सर्वं संभूतं लोक साक्षिकम् ।।
यदिदं दृश्यते किंचित्तस्यांते च प्रलीयते ।। २२ ।।
अतो महालयोनाम विख्यातो भुवनत्रये ।।
मुक्तीश्वरस्य देवस्य दक्षिणे संव्यव स्थितः ।। २३ ।।
यः पूजयति तल्लिंगं रुद्रमूर्त्या महालयम् ।।
त्रैलोक्यविजयी नित्यं कीर्त्तिमान्स नरो भवेत् ।। २४ ।।
महालयेश्वरे पुण्ये पूजिते परमेश्वरे ।।
भक्त्या परमया चैव सर्वे देवाः सुपूजिताः ।।
भवंतीह महाभागे यतस्तैरपि पूज्यते ।। २५ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये महालयेश्वरमाहात्म्यवर्णनंनाम चतुर्विंशोऽध्यायः ।। २४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २५



।। श्रीहर उवाच ।। ।।
पंचविंशतिकं देवं विद्धि मुक्तीश्वरं प्रिये ।।
यस्य दर्शनमात्रेण मुक्तिर्भवति पार्वति ।। १ ।।
पुरा राथंतरे कल्पे बभूव द्विजसत्तमः ।।
मुक्तिर्नाम महाभागे संशितात्मा जितेंद्रियः ।। २ ।।
महाकालसमीपे तु मुक्तिलिंगमनुत्तमम् ।।
महाकालवने रम्ये तत्रास्ते योगत त्परः ।। ३ ।।
ततस्तेपे जिताहारो वत्सराणि त्रयोदश ।।
कदाचित्सोऽभिषेकाय आजगाम महानदीम्।। ४ ।।
शिप्रां विप्रप्रियां पुण्यां महापातकना शिनीम् ।।
तत्र स्नात्वा जपन्विप्रो ददर्शायांतमग्रतः ।। ५ ।।
व्याधं महाधनुष्पाणिं रक्तनेत्रं सुभीषणम्।।
वदंतं हन्तुकामं वै वल्कलानां जिघृक्षया ।। ।। ६ ।।
तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मघ्नस्य भयादिति ।।
ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ।। ७ ।।
तं दृष्ट्वांतर्गतहरिर्व्याधो भीत इवाग्रतः ।।
विहाय सशरं चापं ततो वचनमब्रवीत् ।। ८ ।।
।। व्याध उवाच ।। ।।
हंतुमिच्छुरहं ब्रह्मन्भगवन्तमिहागतः ।।
इदानीं स्वगता बुद्धिस्त्वां दृष्ट्वैव महाप्रभम् ।। ९ ।।
ब्राह्मणानां सहस्राणि स्त्रीणामयुतशस्तथा ।।
निहतानि मया ब्रह्मन्वृत्तिहेतोः कुटुंबिना ।। 5.2.25.१० ।।
न च मे व्यथितं चित्तं कदाचिदपि जायते ।।
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ।। ११ ।।
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।।
एवमुक्तो ह्यसौ विप्रो नोत्तरं प्रत्यप द्यत ।। १२ ।।
ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुंगवः ।।

अनुक्तोऽपि स धर्मस्तु व्याधस्तत्रैव तस्थिवान्।। १३ ।।
स्नात्वा सद्यः समायातो मुक्ति लिंगसमीपतः ।।
द्विजेन सहितो देवि दृष्ट्वा देवं सनातनम् ।। १४ ।।
तत्क्षणाद्दिव्यदेहस्तु तस्मिँल्लिंगे लयं गतः ।।
दृष्ट्वा तन्महदाश्चर्यं मुक्तिर्विप्रो निजांतरे ।।
चिंतयामास सहसा मुक्तिः प्राप्ता वरानने ।। १५ ।।
व्याधेन पापयुक्तेन समाधिरहितेन च ।।
मया पुनः समाचीर्णं तपः परम दुष्करम् ।। १६ ।।
न प्राप्ता परमा मूर्तिर्मुक्तिर्नैव च लभ्यते ।।
एवं सचिंतयित्वाथ वैराग्याद्ब्राह्मणर्षभः ।।
अन्तर्जलगतो भूत्वा चचार विपुलं तपः ।। १७ ।।
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ।।
व्याघ्रो बुभुक्षितः साध्वि तं विहंतुं समुद्यतः ।। १८ ।।
अंतर्जलचरं विप्रं याव द्व्याघ्रो जिघृक्षति ।।
नमो नारायणायेति तावद्वाक्यं द्विजोऽब्रवीत् ।। १९ ।।
व्याघ्रेणापि श्रुतो मंत्रोऽजहात्प्राणांश्च तत्क्षणात् ।।
दिव्यांबरधरो देवि दिव्याभरणभूषितः ।।
दिव्यालंकारशोभाढ्यः पुरुषश्चाभवच्छुभः ।। 5.2.25.२० ।।
सोऽब्रवीद्यामि तं देशं यत्र विष्णुः सनातनः ।।
त्वत्प्रसादाद्द्विजश्रेष्ठ मुक्त्वा शापान्निरामयः ।। २१ ।।
इत्युक्ते ब्राह्मणः प्राह कोऽसि त्वं पुरुषर्षभ ।।
सोऽब्रवीदस्मि राजेंद्र प्रतापी पूर्वजन्मनि ।। २२ ।।
दीर्घबाहुरिति ख्यातः सर्वधर्मविशारदः ।।
अहं जानामि वेदांश्च शास्त्राणि विविधानि च ।। २३ ।।
शुभाशुभमहं वेद्मि सर्वज्ञोऽहं महीतले ।।
ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति ।। २४ ।।
तस्यैकस्मिन्दिने विप्राः सर्वे क्रोधसमन्विताः ।।
ददुः शापं दुराधर्षं क्रूरो व्याघ्रो भविष्यति ।। २५ ।।
अपमानेन विप्राणां मांसाहारी भयावहः ।।
संजातोऽस्मि द्विजश्रेष्ठ पश्य कालविपर्यये ।। २६ ।।
इत्युक्तोऽहं पुरा तैस्तु ब्राह्म णैर्वेदपारगैः ।।
दुर्धर्षोऽयं मया प्राप्तो ब्रह्मशापो द्विजर्षभ ।। २७ ।।

ततस्ते ब्राह्मणाः सर्वे प्रणिपत्य मया मुने ।।
प्रसादिता भृशं विप्र तदा गद्गद या गिरा ।। २८ ।।
जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।।
अपेयः सागरः क्रोधात्कृतो यैर्लवणोदकः ।।२९।।
तथैव दीप्ततपसां मुनीनां भावितात्मनाम्।।
येषां क्रोधाग्निरद्यापि कण्डके नोपशाम्यति ।। 5.2.25.३० ।।
ब्राह्मणानां परीभावाद्वातापिश्च दुरात्मवान् ।।
अगस्तिमृषिमासाद्य जीर्णः क्रूरो महासुरः ।। ३१।।
सर्वभक्षः कृतो वह्निर्भृगुणा कारणांतरे ।।
गौतमेन पुरा शक्रः स सहस्रभगः कृतः ।। ३२ ।।
दशधा केशवो जज्ञे ब्रह्मशा पात्सुदुस्तरात् ।।
प्रसन्नैर्वालखिल्यैश्च पक्षींद्रो गरुडः कृतः ।। ३३ ।।
अश्विनौ देवभिषजौ च्यवनेन महात्मना ।।
विष्टंभयित्वा कुलिशं कृतौ तौ सोमपायिनौ ।। ३४।।
कार्त्तवीर्यार्जुनेनैव बाहूनां च सहस्रकम् ।।
दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ।। ३५ ।।
पुरा सेंद्रा वशिष्ठेन रक्षितास्त्रि दिवौकसः ।।
ब्राह्मणप्रभवं सौख्यं कीर्तिरायुर्यशो वलम् ।। ३६ ।।
लोकालोकेश्वराश्चैव सर्वे ब्राह्मणपूर्वकाः ।।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ।। ३७ ।।
भस्मीकुर्युर्जगदिदं कुद्धाः प्रत्यक्षदर्शनाः ।।
प्रभावा बहवश्चापि श्रूयते ब्रह्मवदिनाम् ।। ३८ ।।
क्रोधश्च विपुलः सद्यः सद्यः प्रत्य यकारकः ।।
अहं कोपाद्द्विजेंद्राणां गतो निरययातनाम् ।। ३९ ।।
नित्यं क्रोधाच्छ्रियं रक्षेद्धनं रक्षेत्समत्सरात् ।।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ।।5.2.25.४०।।
मयाऽज्ञानात्कृतं पापं राजगर्वेण दैवतः ।।
क्षंतुमर्हथ विप्रेंद्रा भवतः शरणागतम् ।।४१।।
अथ तुष्टा द्विजाः सर्वे त ऊचुर्मामिदं मुदा।।
षष्ठान्नकालिकस्तेऽग्रे यदा स्थास्यति कश्चन ।। ४२ ।।
मांसभोक्ता च भविता कञ्चित्कालं नराधिप ।।
यदा शिप्रांतरे पुण्ये स्नातस्तु द्विजसत्तमः ।। ।। ४३ ।।

अंतर्जलगतेनोक्तो नमो नारायणेति च ।।
जिघृक्षुर्व्याघ्ररूपेण तदा मुक्तो भविष्यसि ।। ४४ ।।
एवं स भवता प्रोक्तो नमो नारायणेति च ।।
मंत्रः श्रुतो मया त्वत्तस्तस्येयं व्युष्टिरागता ।। ४५ ।।
जातोऽहं दिव्यदेहस्तु प्रसादात्तव सुव्रत ।।
स कृतार्थोऽस्मि संजातो भगवन्दर्शना त्तव ।। ४६ ।।
वरं च गृह्यतां मत्तो यश्च ते संशयो हृदि ।।
तं च ब्रूहि द्विजश्रेष्ठ सर्वं संपादयामि ते ।। ४७ ।।
तवोपदेशदानेन आनृण्यं गंतु मुत्सहे ।। ४८ ।।
इति तस्य वचः श्रुत्वा दिव्यदेहस्य स द्विजः ।।
प्रोवाच परया तुष्ट्या प्रफुल्लमुखपंकजः ।। ४९ ।।
अद्य मे सफलं ज्ञानमद्य मे सफलं तपः ।।
अद्य मे सफला जिह्वा सफलं चक्षुरद्य मे ।। 5.2.25.५० ।।
श्रुतं देवेन संप्रोक्तं स्नात्वा पश्यंति देहिनः ।।
प्राक्छरीरगतं तेऽद्य व्याघ्ररूपं तपोत्तम ।। ५१ ।।
तेजोमयं शरीरं तु ब्रह्मरूपं सनातनम् ।।
यदि त्वहमनुग्राह्यो यद्येवं कर्तुमर्हसि ।। ५२ ।।
कारणं श्रोतुमिच्छामि हृदि मे वर्त्तते चिरम् ।।
कथं मुक्तिर्महाभाग मुक्तिकामेन यत्नतः ।।५३।।
योगाभ्यासरतेनापि वत्सरांश्च त्रयोदश ।।
न लब्धा परमाश्चर्यं तपसा दुष्करेण तु ।।५४।।।
व्याधेनापि भृशं तेन प्राप्ता मुक्तिः क्षणेन तु ।।
अत्र मे संशयो जातः को हेतुः कथ्यतां भृशम् ।। ५५ ।।
तस्य तद्वचन श्रुत्वा ततो वचनमब्रवीत् ।।
कथयामि परं गुह्यं रहस्यं मुक्तिलक्षणम् ।। ५६ ।।
महादेवमुपास्याशु मुने मुक्तिः सुदुर्लभा ।।
पुरातनैस्तु विद्वद्भिरिदमुक्तं महात्मभिः ।। ५७ ।।
शृणुष्वैकमना विप्र कुरु यत्नं यथार्थतः ।।
मन्नियोगाद्द्विजश्रेष्ठ ततो मुक्तिमवाप्स्यसि ।। ५८ ।।
शप्तोऽहं तैर्यदा विप्रैस्तदा मे तोषिता भृशम् ।।
ममानुकंपया प्रोक्तं मुक्तिस्ते भविता नृप ।। ५९ ।।
मुक्तिकामो महाकाले मुक्तिर्ब्राह्मणसत्तमः ।।

विद्यते तपसा युक्तः स ते प्रश्नं करिष्यति ।। 5.2.25.६० ।।
मुक्तीश्वरं तदा लिंगं तस्याग्रे कथयिष्यसि ।।
तवापि तस्य मुक्तेश्च मुक्तिरेवं भविष्यति ।। ६१ ।।
पूर्वं हि चिह्नितं कर्म देहिनो न विमुंचति ।।
धात्रा विधिरयं दृष्टो बहुधा कर्मभिश्च यः ।। ६२ ।।
इति तस्य वचः श्रुत्वा स विप्रो ब्रह्मवित्तमः ।।
अंतर्जलात्समुत्थाय ततो वचनमब्र वीत् ।। ६३ ।।
दिष्ट्या त्वमागतो भूप दिष्ट्या ते संगतं मया ।।
ईदृशा दुर्लभा लोके नरा मुक्तिप्रदर्शकाः ।। ६४ ।।
इत्युक्त्वा नृपविप्रौ तौ मुक्तिलिंगं समा गतौ ।।
दर्शनार्थं विशालाक्षि दृष्ट्वा देवं सनातनम् ।। ६५ ।।
तत्क्षणात्सशरीरौ तौ तस्मिँल्लिंगे लयं गतौ ।।
ईदृशोऽयं मया देवि महिमा कथितस्तव ।। ६६ ।।
अस्य लिंगस्य संस्पर्शान्मुक्तिर्भवति नान्यथा ।।
येऽर्चयंति सदा भक्त्या मुक्तिलिंगं सनातनम् ।।
अपि पापसमायुक्तः स याति परमां गतिम् ।। ६७ ।।
रे मूढाः किं तपोभिश्च किं दानैर्नियमैश्च किम् ।।
कुरुध्वं मुक्तिलिंगस्य दर्शनं मुक्तिदायकम् ।। ६८ ।।
न मां विदुर्देवगणा नासुरा न महर्षयः ।।
परं रूपं विशालाक्षि यदश्मद्युति निर्मलम् ।। ६९ ।।
न मे वेत्ति परं रूपं स्वयं साक्षात्प्रजापतिः ।।
न विष्णुस्त्रिदशश्रेष्ठाः कुतोन्ये मुनयः प्रिये ।। 5.2.25.७० ।।
यदेतद्दृश्यते तेजो लिंगरूपं यशस्विनि ।।
एतदेव शुकाद्या हि ध्यायंति त्रिदशा अमी ।। ७१ ।।
अनेकजन्मसंशुद्धा योगिनोऽनुग्रहान्मम ।।
प्रविशंतु तनुं देवि मदीयां मुक्तिदायिकाम् ।। ७२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंन्यखण्डे चतुरशीतिलिंगमाहात्म्ये मुक्तीश्वरमाहात्म्यवर्णनंनाम पंचविंशतितमोऽध्यायः।।२५।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २६



ईश्वर उवाच ।।
विद्धि षड्विंशकं देवि देवं सोमेश्वरं परम्।।
यस्य दर्शनमात्रेण निष्कलंको नरो भवेत्।।१।।
अत्रिर्नाम महाभागो ब्रह्मणो मानसः सुतः।।
प्रजापतिरभूद्देवि कल्पे वाराहसंज्ञके।।२।।
तस्य पुत्रोऽभवत्सोमो दक्षोथ मातृभागतः।।
सप्तविंशतिर्याः कन्या दाक्षायण्यः प्रकीर्तिताः।।३।।
सोमपत्न्यो हि मंतव्यास्तासां श्रेष्ठा तु रोहिणी।।
तामेव भजते सोमो नेतरां इति शुश्रुम।। ।। ४ ।।
इतराः प्रोचुरागत्य दक्षस्याग्रे यथातथम् ।।
दक्षोऽथ स तदागत्य तमुवाच स नाकरोत् ।। ५ ।।
यदा न वारितस्तस्थौ दक्षः कुद्धस्तदा प्रिये ।।
शशाप सोमं संक्रुद्धः शीघ्रमंतर्हितो भव ।। ६ ।।
एवं शप्तस्तु सोमो वै तदा ह्यंतर्हितोऽभवत् ।।
शशाप सोमो दक्षं तु भवानपि भविष्यति ।। ।। ७ ।।
अनेकत्वं विहायैतज्जलदेहं सनातनम् ।।
अतः प्राचेतसो दक्षो ब्रह्मपुत्रोऽपि गीयते ।। ८ ।।
एवमंतर्हितः सोमो गतो वै दक्षशापतः ।।
देवाश्च नागा यक्षाश्च गंधर्वाः पितृभिः सह ।।
वैराजं ब्रह्मसदनं ब्रह्माणं समुपस्थिताः ।। ९ ।।
तस्याग्रे कथयामासुर्नमस्कृत्य पुनःपुनः ।।
भगवन्सर्वभूतानामादिकर्त्ता स्वयंभुवः।।5.2.26.१०।।
स्रष्टा च हव्यकव्यानां पाहि नः शरणागतान्।।
देवानां वचनं श्रुत्वा ज्ञात्वा देवः प्रजापतिः।।११।।
आश्वासयामास सुरान्सुश्लिष्टैर्वचनांबुभिः ।।
अवश्यं त्रिदशास्तेन प्राप्तव्यं कर्मणः फलम् ।। १२ ।।
शापांतं भगवान्देवो विष्णुरेव करिष्यति ।।

एतच्छ्रुत्वा ततो देवा वाक्यं पंकजजन्मनः ।।
शरण्यं शरणं विष्णुमुपतस्थुर्गतव्यथाः ।। १३ ।।
ब्रह्मणा सहिता देवि स्तुतिं चक्रुः समाहिताः ।।
नमस्ते देवदेवेश नमस्ते विश्वभावन ।।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १४ ।।
नारायण जगन्नाथ देवास्त्वां शरणं गताः ।।
त्वं हि नः परमो ध्येय स्त्वं हि नः परमो गुरुः ।। १५ ।।
त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम ।।
अंतर्धानं गतः सोमो दक्षशापाज्जनार्द्दन ।। १६ ।।
विना सोमेन चौषध्यो नष्टा देव महीतले ।।
तेषां तद्वचनं श्रुत्वा विष्णुर्वचनमव्रवीत् ।। १७ ।।
भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।।
नष्टं चंद्रमसं शीघ्रं मानयिष्याम्यसंशयम् ।। १८ ।।
एवमुक्त्वा तु भगवान्विसृज्य त्रिदशेश्वरान् ।।
सोमं सस्मार सहसा शंखचक्रगदाधरः ।। १९ ।।
यदा स्मृतो न चाभ्येति तदा क्रुद्धो जनार्दनः ।।
पुराणपुरुषो देवो ब्रह्माणमिदमव्रवीत् ।। 5.2.26.२० ।।
देवैरसुरसंघैश्च मथ्यतां कलशोदधिः ।।
भविष्यति पुनश्चंद्रो मथ्यमाने महोदधौ ।। २१ ।।
अमृतं तत्र लप्स्यध्वं रत्नानि विविधानि च ।।
तस्य तद्वचनं श्रुत्वा वासुदेवस्य पार्वति ।। २२ ।।
मंथानं मंदरं कृत्वा नेत्रं कृत्वा च वासुकिम् ।।
देवा मथितुमारब्धाः समुद्रं निधिमंभसाम् ।। २३ ।।
सोमार्थे च पुरा देवि तथैवासुरदानवाः ।।
एतैर्मुखमुपाश्लिष्टौ नाग राजो महेर्ष्यया ।। २४ ।।
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ।।
अतो वै भगवान्देवो यतो नारायणस्ततः ।। २५ ।।
शिरस्युद्यम्य नाग स्य पुनः पुनरवाक्षिपत् ।।
उदधौ मथ्यमाने वै महाञ्छब्दो बभूव ह ।। २६ ।।
तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा ।।
विलयं समुपाजग्मुः शतशोथ सहस्रशः ।। २७ ।।
तस्मिंस्तु मथिते देवि प्रयत्नात्केशवस्य च ।।

प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्वलः ।। २८ ।।
तमेव देवा मनुजाः पितरश्च यशस्विनि ।।
उपजीवंति वृक्षाश्च तथैवौषधयो विधुम् ।। २९ ।।
समुत्पन्नमथो दृष्ट्वा भगवान्प्राह केशवः ।।
पालयेमाः प्रजाश्चंद्र त्वं ज्येष्ठो जगतो भव ।। 5.2.26.३० ।।
इत्युक्तो वासुदेवेन प्रजाः पालयितुं शशी ।।
पूर्वं सोमोपि यो नष्टः प्रविष्टो गहनं वनम् ।। ३१ ।।
तस्याग्रे नारदः सर्वं कथयामास सत्वरम् ।।
देवर्षेर्वचनं श्रुत्वा नारदस्य महात्मनः ।। ३२ ।।
पीडितो दक्षशापेन सोमोऽप्यंतर्हितस्तदा ।।
जगाम शरणं देवि ब्रह्माणं परमेष्ठिनम् ।। ३३ ।।
तत्र गत्वा यथाशापं कथयामास गद्गदः ।।
पूर्वचंद्रवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ।। ३४ ।।
अयं मे प्रथमः पुत्रः पीडितः शशिना भृशम् ।।
नवेनोदधिजातेन किं मया क्रियते पुनः ।। ३५ ।।
विष्णुना च बलं दत्तमस्मै चंद्रमसे दृढम् ।।
तस्माद्यास्यामि तत्राहं यत्र देवो जनार्दनः ।। ३६ ।।
तं दृष्ट्वा मधुहंतारं ब्रह्मा विष्णुमुवाच ह ।।
त्वदादेशाजगन्नाथ एष चंद्रः कृतो मया ।। ३७ ।।
स चायं पीडितो देव शशांकेन नवेन वै ।।
इत्युक्तो ब्रह्मणा देवि वासुदेवो जगत्पतिः ।।
वृत्तांतं कथयामास ब्रह्माग्रे च पुनःपुन. ।। ३८ ।।
ब्रह्मापि पूर्वचंद्रार्थे विष्णुं लोकनमस्कृतम् ।।
तुष्टाव प्रणतो भूत्वा प्रांजलिः प्रणतः स्थितः ।। ३९ ।।
नमः कृष्ण नमो विष्णो नमो जिष्णो नमोनमः ।।
नमो वामन गोविंद नमोऽनंत नमोऽच्युत ।।5.2.26.४०।।
जयस्व गोविंद महानुभाव जयस्व विश्णो जय पद्मनाभ ।।
जयस्व सर्वाद्य गदाधरेश जयस्व विश्वेश्वर विश्वमूर्ते ।। ४१ ।।
एवं स्तुतस्तदा देवि ब्रह्मणा लोककारिणा ।।
समीपस्थं समालोक्य सोमं वचनम ब्रवीत् ।। ४२ ।।
गच्छ सोम ममादेशान्महाकालवनोत्तमे ।।
उत्तरे मुक्तिलिंगस्य लिंगं कातिकरं परम् ।।

तमाराधय यत्नेन स ते देहं प्रदास्यति ।। ।। ४३ ।।
इत्युक्तो वासुदेवेन ब्रह्मणा च पुनः पुनः ।।
आजगाम महादेवि महाकालवनोत्तमे ।।
लिंगं दृष्ट्वा च तुष्टाव स्तोत्रेणानेन सुव्रते ।। ४४ ।। ।।
।। चंद्र उवाच ।। ।।
नमो देवाधिदेवाय त्रिनेत्राय महात्मने ।।
रक्तपिंगलनेत्राय जटामुकुटधारिणे ।। ४५ ।।
भूतवेतालजुष्टाय महादेवाय शूलिने ।।
भीमाट्टहासयुक्ताय कपर्दिस्थाणवे नमः ।। ४६ ।।
पूष्णो दंतविनाशाय तथांधकविनाशिने ।।
कैलासवरवासाय सर्वदेवायते नमः ।। ।। ४७ ।।
विकरालोर्द्ध्वकेशाय भैरवाय नमोनमः ।।
अग्निज्वालाकरालाय कलिधर्मविवासिने ।। ४८ ।।
तथा दारुवनध्वंसकारिणे तिग्मशूलिने ।।
कृतकंकणभोगींद्रकंठसूत्राय शूलिने ।। ४९ ।।
प्रचंडदंडहस्ताय वडवाग्निमुखाय च ।।
वेदांतवेद्याय नमो यज्ञमूर्ते नमोनमः ।। 5.2.26.५० ।।
दक्षयज्ञविनाशाय जगद्भयकराय च ।।
विश्वेश्वराय देवाय स्थूलसूक्ष्माय शंभवे ।।
कपर्दिने करालाय सर्वदेवाय ते नमः ।। ५१ ।।
एवं स्तुतस्तदा देवि चंद्रेणांतर्हितेन च ।।
लिंगरूपी महादेवस्तुष्टो वाक्यमथाब्रवीत् ।। ५२ ।।
स्तोत्रेणानेन तुष्टोऽस्मि ब्रूहि सोम किमिच्छसि ।।
यत्तेभिलषितं सर्वं तत्कर्त्तास्मि न संशयः ।। ५३ ।।
।। सोम उवाच ।। ।।
यदि त्वहमनुग्राह्यो यदि तुष्टोऽसि मे प्रभो ।।
कांत्या दीप्त्या तथा मूर्त्या तथा रूपेण च प्रभो।। ।। ५४ ।।
स्वपदं कर्त्तुमिच्छामि त्वत्प्रसादान्महेश्वर ।।
एवमस्त्विति लिंगेन तत्क्षणाद्रजनीचर ।। ५५ ।।
द्विजराजेन तत्प्राप्तं लिंगस्यास्य प्रसादतः ।।
सोमेनाराधितो यस्माद्देवदेवो महेश्वरि ।। ५६ ।।
तेन सोमेश्वरोनाम विख्यातो भुवनत्रये ।।

येऽर्चयंति महादेवि देवं सोमेश्वरंपरम्।। ५७ ।।
कृत पुण्या नरा मर्त्यास्ते यांति परमं पदम् ।।
यः पश्यति नरो भक्त्या लिंगं सोमेश्वरं प्रिये ।। ५८ ।।
विमुक्तो जन्मदुःखाद्यैर्लीयते मयि मानवः ।।
ते नराः पशवो लोके किं तेषां जीविते फलम् ।। ५९ ।।
यैश्च सोमेश्वरो देवो न दृष्टो न च पूजितः ।।
संसारेऽस्मिन्महाघोरे जन्मरोगभयाकुले ।। 5.2.26.६० ।।
एकः सोमेश्वरः पूज्यः कुष्ठरोगविनाशनः ।।
स एव सुकृती लोके कुलं तेनाभ्यलंकृतम् ।। ६१ ।।
आधारः सर्वलोकानां येन सोमेश्वरो ऽर्चितः ।।
सकृदभ्यर्च्य सोमेशं बिल्वपत्रेण मानवः ।।
मुक्तो भोगी निरातंको मम लोके वसेच्चिरम् ।। ६२ ।।
कांचनैः कुसुमैर्देवि लिंगं सोमेश्वरं प्रिये ।।
पूजयंति नरा भक्त्या ते यांति परमां गतिम् ।। ६३ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
सोमेश्वरस्य देवस्य शृणुष्वानरकेश्वरम् ।। ६४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये सोमेश्वरमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः ।। २६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २७



।। श्रीमहादेव उवाच ।। ।।
सप्तविंशतिमं देव्यनरकेश्वरसंज्ञकम् ।।
यस्य दर्शनमात्रेण स्वप्नेपि नरकः कुतः ।। १ ।।
पुरा कलियुगे देवि कल्पे वाराहसंज्ञके ।।
कलुषं कालमासाद्य सत्ये च प्रलयं गते ।। २ ।।
निर्मर्यादा निराधारा निरौका नास्तिका जनाः ।।
वर्णाश्रमाश्च संजाता वंचयंति परस्परम् ।। ३ ।।
नार्चयंति सुरान्विप्राः कर्म कुर्वंति कुत्सितम् ।।
लोभमोहपरा भूत्वा कामासक्ताश्च मानवाः ।। ४ ।।
वैरबद्धाश्च संजाताः परस्परवधे रताः ।।
निवृत्तयज्ञस्वाध्यायपिंडोदकविवर्जिताः ।। ५ ।।
ब्राह्मणाः सर्वभक्ष्याश्च मृषावादपरायणाः ।।
भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते तदा ।। ६ ।।
दृश्यंते षोडशे वर्षे नराः पलितिनः प्रिये ।।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ।। ७ ।।
एवंविधाः समुद्भूता नरा नार्यश्च पातकैः ।।
नरकेषु प्रपद्यंते क्रमात्पापानुसारतः ।। ८ ।।
कुठारैर्भिन्नमूर्द्धानः क्रकचैः पाटिताः परे ।।
अग्निवर्णैश्च संदंशैरुत्पाटितविलोचनाः ।। ९ ।।
भिन्नाश्चायोमयैस्तीक्ष्णैरग्नितप्तैश्च कीलकैः ।।
पीड्यंते शैलशिखरैश्चूर्ण्यंते क्रूरभूधरैः ।। 5.2.27.१० ।।
क्षिप्यंते तप्तकुण्डेषु दह्यंते वह्निराशिषु ।।
अमेध्येऽधोमुखाश्चान्ये मर्दिता दंडपाणिना ।। ११ ।।
लौहैश्च शृङ्खलैर्बद्धा ह्यधोवक्त्रैश्च लंबितैः ।।
अंतरिक्षे परिक्षेपात्क्रंदंतोऽतीव दुःखिताः ।।१२।।
कृमिभिर्भ्रमरैस्तीक्ष्णैर्दंशैश्च मशकैस्तथा ।।
लोहतुंडैश्च विहगैर्निर्दयैर्भक्षिता नराः।।१३।।

केचित्कृत्ताः प्रधावंति तोयार्थं च तृषातुराः ।।
स्वमूत्रं पायिताश्चंडैः क्षुभिताश्चापि घातनैः ।। १४ ।।
यैश्चांगैः पतितं कर्म क्रियते पुरुषैर्भुवि ।।
तेषां तान्येव चांगानि शोध्यंते यातनागतैः ।। १५ ।।
ये पश्यंति गुरुं देवान्ब्राह्मणान्क्रुद्धचक्षुषा ।।
दुष्टेन परदारांश्च वीक्षंते लोचनेन ये ।।
तेषां नेत्राणि भिद्यंते कृष्यंते लोहशंकुभिः ।। १६ ।।
श्रवणौ च प्रपूर्यंते लौहेन शंकुना ततः ।।
पुनश्च शस्त्रैः कृष्यंते पुनस्तप्तैश्च कीलकैः ।। १७ ।।
लौहैर्वेगान्निखन्यंते यैः श्रुतं गुरुनिंदनम् ।।
मित्राणां देवतानां च साध्वीनामथवा क्वचित् ।। १८ ।।
शतशः पाट्यते जिह्वा वह्निवर्णैरयोमुखैः ।।
शंकुभि स्तीक्ष्णसूक्ष्माग्रैः पूर्यंते चानिलैः पुनः ।। १९ ।।
तद्वक्त्राणि बहून्वारान्येपवादरता नराः ।।
ये गुरुं मातरं वापि पारुष्येण वदंति वै ।। 5.2.27.२० ।।
ये निघ्नंति दुराचाराः सुरार्थायोपकल्पिते ।।
आरामे पुष्पपत्राणि तेषामंगानि कृंतति ।। २१ ।।
यैरप्यालिंगिता नारी परस्य च दुरात्मभिः ।।
तेषामयोमयी नारी वह्निवर्णा तु वक्षसि ।। २२ ।।
स्थाप्यते वध्यते चापि प्रचंडैर्यमकिंकरैः ।।
नार्यश्च पुरुषैस्तप्तैरालिंग्यंते ह्ययोमयैः ।। २३ ।।
तदा लोहमये गेहे ज्वलितानलसंस्तरे ।।
निक्षिप्यंते नरैः सार्द्धमासाद्य कालसंक्षयम् ।। २४ ।।
यावती वेदना देहे इह लोके प्रदृश्यते ।।
नराणामंगपीडा वै तस्माच्छतगुणा भवेत् ।। २५ ।।
काकैश्च वृश्चिकैर्गृध्रैर्भक्ष्यंतेऽप्यपरे नराः ।।
दह्यमाना विलपंति भ्रातस्तातेति चाकुलाः ।।
वदंत्यसकृदुद्विग्ना न च शांतिं लभंति वै ।। २६ ।।
दुःखानि ते प्राप्नुवंति यान्यसह्यानि पार्वति ।।
एवं ते यातनादुःखं प्राप्नुवंति सुनिश्चितम् ।।
निमिर्नाम महाभागो यममार्गं ददर्श ह ।। २७ ।।
रौद्रं भयानकं दुर्गं पूरितं पापकर्मभिः ।।

तमसा संवृतं चैव केशशैवालशाद्वलम् ।। २८ ।।
संपृक्तं पापकृद्गंधैर्मांसशोणितकर्द्दमैः ।।
वह्निज्वालेन दीप्तेन समंतात्परिवारितम् ।। २९ ।।
अधोमुखैश्च कर्कोटैर्गृध्रैश्च समभिद्रुतम् ।।
सूचीमुखैस्तथा प्रेतैर्विंध्यशैलोपमैर्वृतम् ।। ।। 5.2.27.३० ।।
वृक्षै रुधिरमांसैश्च छिन्नबाहूरुपाणिभिः ।।
निकृत्तोदरहस्तैश्च तत्रतत्र प्रचारितैः ।। ३१ ।।
वृतं कुणपदुर्गंधैरशिवं भोगवर्जितम् ।।
असिपत्र वनं चैव समंतात्परिवारितम् ।। ३२ ।।
करंभवालुकाकीर्णमायसीश्च शिलाः पृथक् ।।
ददर्श चापि देहोत्थयातनां पापकर्मणाम् ।। ३३ ।।
स तं दुर्गंधमालक्ष्य पुरुषं तमुवाच ह ।।
कियदध्वानमस्माभिर्गंतव्यमिदमब्रवीत् ।। ३४ ।।
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ।।
इत्युक्तो यमदूतस्तु दण्डहस्तोऽग्निसप्रभः ।।
पुरतो दर्शयन्मार्गमित एहीत्युवाच ह ।। ३५ ।।
भूयः स राजा तं प्राह किंकरं विनयान्वितः ।।
भो याम्यपुरुषाचक्ष्व किं मया दुष्कृतं कृतम् ।। ३६ ।।
येनेदं व्यसनं प्राप्तं मया च धार्मिकेण हि ।।
निमिर्नामाहं विख्यातो जनकानामहं कुले ।। ३७ ।।
जातो विदेहविषये सम्यग्मनुजपालकः ।।
चातुर्वर्ण्यं च धर्मस्थं कृत्वा संरक्षितं मया ।। ३८ ।।
धर्मप्रधानकल्पेन मनुनात्र यथा पुरा ।।
यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही ।। ३९ ।।
नोत्सृष्टश्चैव संग्रामो नातिथिर्विमुखोऽभवत् ।।
कृता स्पृहा च न मया परस्त्रीविभवादिषु ।। 5.2.27.४० ।।
सोऽहं कथमिमं प्राप्तो नरकं भृशदारुणम् ।।
इति पृष्टस्तदा तेन निमिना यमकिंकरः ।।
उवाच प्रणतो भूत्वा क्रूरोऽपि प्रश्रितं वचः ।। ४१ ।।
।। पुरुष उवाच ।। ।।
महाराज यथात्थ त्वं तथैतन्नात्र संशयः ।।
किन्तु स्वल्पं कृतं पापं भवंतं स्मारयामि तत् ।। ४२ ।।

उक्ता या दक्षिणा श्राद्धे न दत्ता सा त्वया नृप ।।
प्रमादाद्विस्मृता चैव तस्येदं कर्मणः फलम् ।। ४३ ।।
एतावदेव ते पापं नान्य त्किंचन विद्यते ।।
वैदेहागच्छ पुण्यानामुपभोगाय पार्थिव ।। ४४ ।।
एवं श्रुत्वा तु राजर्षिर्निमिर्दूतमथाब्रवीत् ।।
यास्यामि देवानुचर यत्र मां त्वं हि नेष्यसि ।। ४५ ।।
किंचित्पृच्छामि ते तत्त्वं यथावद्वक्तुमर्हसि ।।
वज्रतुंडास्त्वमी काकाः पुंसां नयनहारिणः ।। ४६ ।।
पुनः पुनश्च नेत्राणि तद्वत्तेषां भवंति हि ।।
किं कृतं कर्म दूतेंद्र कथयैतज्जुगुप्सितम् ।। ४७ ।।
हरंत्येषां तथा जिह्वां जायमानां पुनर्नवाम् ।।
करपत्रेण पाट्यंते कस्मादेते सुदुःखिताः ।। ४८ ।।
किमेते नष्टचित्ताश्च तुद्यंतेऽहर्निशं नराः ।।
एताश्चान्याश्च दृश्यंते यातनाः पापकर्मिणाम् ।।
कियत्कालं भविष्यंति तन्ममोद्दे शतो वद ।। ४९ ।।
।। पुरुष उवाच ।। ।।
यन्मां पृच्छसि भूपाल पापकर्मफलोदयम् ।।
तत्तेहं संप्रवक्ष्यामि संक्षेपेण यथातथम् ।। 5.2.27.५० ।।
पुण्या पुण्ये हि पुरुषः पर्यायेण समश्नुते ।।
भुंजतश्च क्षयं याति पुण्यं पापमथापि वा ।। ५१ ।।
न तु भोगादृते पुण्यं पापं कर्म च मानवः ।।
परित्यजति राजेन्द्र सत्यमेतदुदाहृतम् ।। ५२ ।।
एवमेते महापापा यातनाभिरहर्निशम् ।।
क्षपयंति महाघोरं नरकांतरवर्त्तिनः ।। ५३ ।।
देवत्वेऽथ मनुष्यत्वे तिर्यक्त्वेऽथ शुभाशुभम् ।।
पुण्यपापोद्भवं भुंक्ते सुखदुःखं न संशयः ।। ५४ ।।
एतदुद्देशतो राजन्भवता कथितं मया ।।
स्वकर्मफलमोक्षाणां पुण्यानां पापिनां तथा ।। ५५ ।।
तदेह्यन्यत्र गच्छावि यथा दृष्टं त्वयाधुना ।।
ततस्तमग्रतः कृत्वा स राजा गंतुमुद्यतः ।। ५६ ।।
तदा हि सर्वैरुद्धुष्टं यातना स्थायिभिर्नृभिः ।।
प्रसादं कुरु भूपेति तिष्ठ तावन्मुहूर्त्तकम् ।।

त्वदंगसंगी पवनो देहान्ह्लादयते हि नः ।। ५७ ।।
परितापं च गात्रेभ्यः पीडा बाधाश्च कृत्स्नशः ।।
अपहंति नरव्याघ्र कृपां कुरु महीपते ।। ५८ ।।
एतच्छ्रुत्वा वचस्तेषां तं याम्यपुरुषं नृपः ।।
पप्रच्छ कथमेतेषामाह्लादो मयि तिष्ठति ।।५९ ।।
किं मया कर्म तत्पुण्यं मर्त्यलोके महत्कृतम् ।।
प्रह्लादजननी दृष्टिर्यस्येयं तदुदीर्यताम् ।। 5.2.27.६० ।।
।। पुरुष उवाच ।। ।।
त्वया दृष्टो महाकाले विख्यातोऽनरकेश्वरः ।।
आश्विनस्य चतुर्दश्यां तस्येदं फलमीदृशम् ।। ६१ ।।
ततस्तद्गात्रसंसर्गी पवनो ह्लाददायकः ।।
पापकर्मकृतां राजन्यातना न प्रबाधते ।। ६२ ।।
।। राजोवाच ।। ।।
यदि मत्संनिधाने सा यातना न प्रबाधते ।।
ततो भद्रमुखात्राहं स्थास्ये स्थाणुरिवाचलः ।। ६३ ।।
।। पुरुष उवाच ।। ।।
एहि राजेंद्र गच्छावो निजपुण्यसमार्जितान् ।।
भुंक्ष्व भोगान्न यास्येतां यातनां पापकर्मणाम् ।। ।। ६४ ।।
।। राजोवाच ।। ।।
न स्वर्गे ब्रह्मलोके वा तत्सुखं प्राप्यते नरैः ।।
यदार्त्तजंतुं निर्वाणमानेतुमिति मे मतिः ।। ६५ ।।
तस्मान्न तावद्यास्यामि यावदेते सुदुःखिताः ।।
मत्संनिधानात्सुखिनो भवंतु नरकौकसः ।। ६६ ।।
प्राप्स्यंते ते यदि सुखं बहवो दुःखिते मयि ।।
किं तु प्राप्तं मया सर्वं तस्मात्त्वं व्रज मा चिरम् ।। ६७ ।।
।। पुरुष उवाच ।। ।।
एष धर्मश्च शक्रश्च त्वां नेतुं समुपागतौ ।।
अवश्यमस्माद्गंतव्यं तस्मात्पार्थिव गम्यताम्।। ६८ ।।
एतस्मिन्नंतरे धर्मः शक्रेण सहितोब्रवीत् ।।
निमे परमधर्मज्ञ प्रीता देवगणास्तव ।। ६९ ।।
एह्येहि पुरुषव्याघ्र कृतमेतावता प्रभो।।
सिद्धिः प्राप्ता त्वया राजँल्लोकाश्चाप्यक्षयान्विताः ।। 5.2.27.७० ।।

न च मन्युस्त्वया कार्यः शृणु मे वचनं विभो ।।
अवश्यं नरकस्तावद्द्रष्टव्यः सर्वराजभिः ।। ७१ ।।
नयामि त्वामहं स्वर्गं त्वया सम्यगुपासितः ।।
विमानवरमारुह्य विमलं चाद्य गम्यताम् ।। ७२ ।। ।।
।। निमिरुवाच ।। ।।
नरके मानवा धर्म पीड्यंतेऽत्र सहस्रशः ।।
त्राहीति वार्त्तां क्रंदंतो मामतो न व्रजाम्यहम् ।। ७३ ।।
।। इन्द्र उवाच ।। ।।
कर्मणा नरके प्राप्तिरेषां च पापकर्मणाम् ।।
स्वर्गे त्वयापि गंतव्यं नृप पुण्येन कर्मणा ।। ७४ ।।
।। राजोवाच ।। ।।
परिजानासि धर्मज्ञ त्वं वा शक्र शचीपते ।।
विशिष्टं मम किं पुण्यं शुभं तद्वक्तुमर्हसि ।। ७५ ।।
।। धर्म उवाच ।। ।।
आश्विनस्य तु मासस्य कृष्णपक्षे चतुर्दशी ।।
तस्यां त्वया महाबाहो महाकालवनोत्तमे ।।
दृष्टो देवः सुविख्यातः स्वर्गदोऽनरकेश्वरः ।। ७६ ।।
तद्विशिष्टं च ते पुण्यं तस्य संख्या न विद्यते ।।
स्वकर्मोपार्जितं पुण्यं भुंक्ष्व राजन्यथासुखम् ।।
एते नारकिकाः सर्वे क्षपयंतु स्वकर्मजाम् ।। ।। ७७ ।।
।। राजोवाच ।। ।।
कथं स्पृहां करिष्यंति सत्संगेषु च मानवाः ।।
यदि मत्संनिधावेषामुत्कर्षो नोपजायते ।। ७८ ।।
तस्माद्यत्सुकृतं किंचिद्विशिष्टतरमस्ति वै ।।
तेन मुच्यंतु नरकात्पापिनो यातनागताः ।। ७९ ।।
।। धर्म उवाच ।। ।।
राजंस्त्वया कृतं पूर्वेऽनरकेश्वरदर्शनम् ।।
तदुत्पन्नस्य पुण्यस्य कलामेभ्यः प्रयच्छ वै ।। 5.2.27.८० ।।
तत्पुण्यस्य प्रभावेण मोक्ष्यंते नरकादिमे ।।
तथा कृते ततस्तेन विमुक्ता नरकाच्च ते ।। ८१ ।।
ततोऽब्रवीद्धर्मराजो निमिं शक्रसमन्वितः ।।
एवं श्रेष्ठतरं स्थानं त्वया प्राप्तं महीपते ।। ८२ ।।

एतांश्च नारकान्पश्य विमुक्तान्पापकर्मणः।।
ततोऽपतत्पुष्पवृष्टिस्तस्योपरि महीपतेः ।। ८३ ।।
विमानं चाधिरोप्यैनं स्वर्लोकमनयद्धरिः ।।
येये तत्राभवन्पापा यातनाभ्यः परिच्युताः ।। ८४ ।।
प्रभावात्तस्य देवस्य स्वर्गलोकं गताः प्रिये ।।
अतो देवः सुविख्यातः सदेवोऽनरकेश्वरः ।। ८५ ।।
स्तुतो देवगणैः सर्वैर्नरकादवतारकः।।
जातः स एव सुकृती कुलं तेनैव पावितम्।।८६।।
यः पश्यति नरो नित्यं देवं चानरकेश्वरम्।।
तेषां विलीयते पापं पूर्वजन्मशतोद्भवम्।।८७।।
येनुमोदंति देवस्य दर्शनं पर्वतात्मजे।।
तेऽपि पापविनिर्मुक्ताः प्रयांति मम मंदिरे।।८८।।
समतीतं भविष्यच्च कुलानामयुतं नरः।।
मम लोकं नयत्याशु तस्य लिंगस्य दर्शनात्।।८९।।
शिवयोगसमायुक्ता कृष्णा या च चतुर्दशी ।।
सा प्रोक्ता वल्लभा तस्य सर्वपापप्रणाशिनी ।। 5.2.27.९०।।
ये चायाzति नरास्तस्यां देवं चानरकेश्वरम् ।।
उपोष्य पापैर्मुच्यंते ते नराः शतजन्मजैः ।। ९१ ।।
कर्मणा मनसा वाचा यत्पापं समुपार्जितम् ।।
तत्क्षालयति देवोसौ तिथौ तस्यां समर्चितः ।। ९२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
जटेश्वरस्य देवस्य शृणु माहात्म्यमुत्तमम् ।।९३।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्येऽनरकेश्वरमाहात्म्यवर्णनंनाम सप्तविंशोऽध्यायः ।। २७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/f6f
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीदेवदेव उवाच ।। ।।

अष्टाविंशतिकं विद्धि विख्यातं च जटेश्वरम् ।।

यस्य दर्शनमात्रेण मुक्तो भवति मानवः ।।. १ ।।

पुरा राथंतरे कल्पे वीरधन्वा महीपतिः ।।

धर्मात्मा च यशस्वी च बभूव भुवि विश्रुतः ।। २ ।।

स कदाचिद्वनं गत्वा मृगहेतोर्वरानने ।।

व्यापादयन्मृगगणान्धनुषा क्रोधविह्वलः ।। ३ ।।

जगाम तत्र यत्रासन्भ्रातरः पंच सुव्रताः ।।

संवर्तस्य सुता देवि मृगरूपेण संस्थिताः ।। ४ ।।

ते कदाचिद्वने पंच दृष्ट्वा हरिणपोतकान् ।।

श्वसतो जातमात्रांश्च कौतूहलसमन्विताः ।। ५ ।।

एकैकं जगृहुस्तत्र मृतास्ते त्वतिदुःखिताः ।।

ततः सर्वे च ते पंच ययुर्वै पितुरंतिकम् ।। ६ ।।

प्रायश्चित्तं समीहंतः संवर्त्तं सांसदैर्वृतम् ।।

ऊचुस्ते वचनं चेदं मृगहिंसाश्रितं तदा ।। ७ ।।

जातमात्रा मृगाः पंच अस्माभिर्निहताः प्रभो ।।

अकामतस्ततोऽस्माकं प्रायश्चित्तं विधीयताम् ।। ८ ।।

ऊचे स शुद्धिमाप्नोति प्रायश्चित्ते कृते सति ।।

अनधीत्य धर्मशास्त्रं प्रायश्चित्तं ददाति यः ।।

प्रायश्चित्ती भवेत्पूतः किल्विषं दातरि व्रजेत् ।। ९ ।।

धर्म शास्त्रसमारूढा वेदखड्गधरा द्विजाः ।।

क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ।। 5.2.28.१० ।।

ब्रह्मच्छिद्रं जपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ।।

अच्छिद्रं जायते सर्वं ब्राह्मणैरुपपादितम् ।। ११ ।।

अच्छिद्रमिति यद्वाक्यं वदंति क्षितिदेवताः ।।

प्रणश्यत्यखिलं पापमग्निष्टोमफलं भवेत् ।। १२ ।।

इत्येवं वदति श्रेष्ठे संवर्ते द्विजसत्तमे ।।

समागताश्च मुनयो भृग्वत्र्यंगिरसादयः ।। १३ ।।
तेषामर्थे यथावृत्तं कथयामासुरेव ते ।।
संवर्तस्य सुता दीना भक्तिनम्राः पुनःपुनः ।। १४ ।।
तेऽप्यूचुर्धर्मशास्त्राणि विहितानि यथार्थतः ।।
प्रायश्चित्तं यथोद्दिष्टं देशकालविभागतः ।। १९ ।।
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।।
प्रायश्चित्तार्द्धमर्हंति स्त्रियो वै व्याधितस्य च ।। १६ ।।
देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।।
प्रायश्चित्तं प्रकल्प्यं स्यादिति धर्मो व्यवस्थितः ।। १७ ।।
इदानीं मृगचर्माणि परिधाय धृतव्रताः ।।
चरध्वं पंच वर्षाणि ततः शुद्धा भविष्यथ ।।। ।।१८।।
एवमुक्तास्तु ते बाला मृगधर्मोपजीविनः।।
वनं विविशुरव्यग्रा ध्यायंतो ब्रह्म शाश्वतम्।।१९।।
ततो वर्षे ह्यतिक्रांते वीरधन्वा महीपतिः ।।
तत्राजगाम यस्मिंस्ते चरंति मृगरूपिणः ।। 5.2.28.२० ।।
ते चाप्येकतरोर्मूले मृगधर्मोपजीविनः ।।
जपंतः संस्थितास्ते हि राज्ञा दृष्टा मृगा इति ।। २१ ।।
मत्वा विद्धास्तु नाःराचैर्मृतास्ते ब्रह्मवादिनः ।।
तान्दृष्ट्वा च मृतान्राजा ब्राह्मणान्संशितव्रतान् ।।
भयेन वेपमानस्तु देवराताश्रमं ययौ ।। ०२ ।।
तत्रापृच्छद्ब्रह्मवध्या मम जाता महामुने ।।
आमूलांतं वधांतस्य कथयित्वा नराधिपः ।। २३ ।।
भृशं शोकपरीतात्मा रुरोद भृशदुःखितः ।।
स ऋषिर्देवकल्पस्तु रुदंतं नृपसत्तमम् ।। २४ ।।
उवाच मा भैर्नृपते अपनेष्यामि पातकम् ।।
पाताले सुतलाख्ये तु निमज्जंती यथा धरा ।। २५ ।।
उद्धृता देवदेवेन विष्णुना क्रोडमूर्त्तिना ।।
तद्वद्भवंतं राजेंद्र ब्रह्महत्यापरिप्लुतम् ।।
उद्धरिष्यति देवोऽसौ स्वयमेव जनार्दनः ।। २६ ।।
एवमुक्तस्ततो राजा दुरितो वाक्यमब्रवीत ।। २७ ।।
किमनेन द्विजेनैव निष्प्रभेण दुरात्मना ।।
उद्धर्तुं नैव शक्नोति स्वयमेव द्विजाधमः ।। २८ ।।

इत्युक्त्वा '? खड्गेनैव जघान तम् ।।
मृतं दृष्ट्वा द्विजं राजा क्रोधेन कलुषीकृतः ।। २९ ।।
तस्मिन्नेव वने देवि पापसंघेन मोहितः ।।
जघान कपिलां दोग्ध्रीं सवत्सां गालवस्य च ।। 5.2.28.३० ।।
क्षुधार्त्तश्च तृषार्त्तश्च बाल्यान्मोहाच्च साहसात् ।।
क्रूरा बुद्धिः समभवज्जटीभूतं च पातकम् ।। ३१ ।।
जटीभूतेन पापेन बभ्राम गहने वने ।।
स कदाचित्तुरंगेण हृतो दूरं महद्वनम् ।। ३२ ।।
व्याघ्रसिंहगजाकीर्णं मृगशंबरसेवितम् ।।
एकाकी तत्र राजासावश्वं मुक्त्वा तरोरधः ।। ३३ ।।
कुशोपरि तदा तत्र सुष्वाप च स निर्भयम् ।।
तत्र व्याधाः समचरन्दृष्ट्वा सुप्तं च निर्भयम् ।। ।। २४ ।।
ते गतास्त्वरिता व्याधाः स्वभर्तुः कथनाय वै ।।
स्वामिना तेन निर्दिष्टा निग्रहीतुं प्रचक्रमुः ।। ३५ ।।
तावद्राज्ञः शरीरात्तु श्वेताऽऽभरणभूषिता ।।
उत्थाय चक्रमादाय तया म्लेच्छाश्च पातिताः ।। ३६ ।।
दस्यून्निहत्य सा देवी तत्रैवादर्शनं गता ।। ३७ ।।
अथ राजा तया मुक्तः प्रतिबुद्धोऽथ तत्क्षणात् ।।
म्लेच्छांश्च निहतान्दृष्ट्वा चिंतयामास पार्थिवः ।। ३८ ।।
गोवध्या ब्रह्मवध्या च वने ह्यस्मिन्सुदारुणा ।।
कथं मया नृशंसेन प्राप्ता पापपरंपरा ।। ३९ ।।
एवं स चिंतयित्वाथ निःश्वस्य च पुनःपुनः ।।
तमेवाश्वं समारुह्य वामदेवाश्रमं ययौ ।। 5.2.28.४० ।।
मुनिना वामदेवेन दृष्टो राजा तथाविधः ।।
जटीभूतेन पापेन पीडितो दुःखितस्तदा ।। ४१ ।।
।। वामदेव उवाच ।। ।।
अयं स पुरुषव्याघ्रो वीरधन्वा महीपतिः ।।
सोमवंशसमुत्पन्नो दशां कष्टां समागतः ।। ४२ ।।
उद्धरिष्यामि राजानमेनं पुरुषसत्तमम्।।
इत्यालोच्य तदा विप्रो वामदेवो महातपाः ।।
प्रत्युवाच महीपालं वीरधन्वानमातुरम् ।। ४३ ।।
भोभो राजन्महीपाल वीरधन्वेति विश्रुतः ।।

विदूरथस्य तनयो विख्यातो भुवनत्रये ।। ४४ ।।
प्राग्भवे व्याधरूपेण निहिथा विपिने मृगान् ।।
दृढं जागरणं रात्रावामलक्यास्तरोरधः ।। ४५ ।।
फाल्गुनामलपक्षे त्वामलक्येकादशी शुभा ।।
पुष्यर्क्षयोगिनी तस्यां जामदग्न्यप्रदक्षिणा ।। ४६ ।।
पूजा लोकैः कृता दृष्टा विस्मयेन त्वया पुरा ।।
अकामादुपवासोऽभूत्तस्यां जागरणं पुनः ।। ४७ ।।
तत्प्रभावादभू राजा महाबलपराक्रमः ।।
तया संरक्षितो राजन्म्लेच्छवर्गाद्वनेऽधुना ।। ४८ ।।
निहताः शत्रवः सर्वे तयैव शुभमाप्स्यसि ।।
पूर्वकर्मविपाकेन ब्रह्महत्या समागता ।। ४९ ।।
ज्ञाता तपःप्रभावेन मया योगबलेन च ।।
जटीभूतं शरीरं ते पापसंघेन पार्थिव ।। 5.2.28.५० ।।
इदानीं पालयिष्यामि शृणु मे वचनं परम् ।। ५१ ।।
इत्युक्तो वामदेवेन् मुनिना स महीपतिः ।।
प्रणम्य प्रयतो भूत्वा पप्रच्छ च पुनःपुनः ।।५२।।
कथं यास्यंति मे हत्या गोब्राह्मणसमुद्भवाः ।।
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।।५३।।
तस्य तद्वचनं श्रुत्वा वाम देवो महामुनिः ।।
कथयामास माहात्म्यं लिंगस्यास्य यशस्विनि ।। ५४ ।।
महाकालवनं गच्छ महाराज ममाज्ञया ।।
तत्रास्ते देवदेवोऽपि जगद्व्यापी जटेश्वरः ।। ५५ ।।
पापसंघप्रहर्त्ता च सर्ववेदेषु पठ्यते ।।
देवस्यानरकेशस्य उत्तरे स व्यवस्थितः ।।५६।।
तस्य तद्वचनं श्रुत्वा वामदेवस्य पार्थिवः ।।
आजगाम त्वरायुक्तो महाकालवनोत्तमे ।।५७।।
तत्र दृष्ट्वा जगद्वंद्यं देवदेवं जटेश्वरम् ।।
स्तुतिं चकार राजेंद्रो भक्त्या परमया पुनः ।।५८।।
शिवाय ते नमो नित्यं विश्वकाय नमोनमः ।।
नमो दिव्याय गुह्याय गूढव्रतशरीरिणे ।।५९।।
नमो जटाय रामाय माययाक्रांतकारिणे ।।
नमोस्तु बहुरूपाय नमो नीलाभरूपिणे ।। 5.2.28.६० ।।

नमो भोगाय धूम्राय नमोऽस्तु गगनात्मने ।।
नमो वह्निसमूहाय नमस्ते निर्मलाकर ।। ६१ ।।
नमो महांधकारार्क नमस्ते शत्रुघातिने ।।
नमः संसारपाराय दिव्यरूपशरीरिणे ।।
नमः कनकवर्णाय नमो मोहितमोहिने ।। ६२ ।।
नमः सुरूपाय सुरार्चिताय नमो विरूपाय प्रकृतेः पराय ।।
नमोनमो रूपनिराश्रयाय श्यामासुरूपाय नमोनमस्ते ।। ६३ ।।
इति स्तुतस्तदा देवि महादेवो महेश्वरः ।।
जटावेष्टितसर्वांगो लिंगमध्याच्च निस्सृतः ।। ६४ ।।
भस्मचर्चितसर्वांगो भोगिभोगांगदोज्वलः ।।
हिमराशिनिभाकारो राजताचलनिर्मलः ।। ६५ ।।
मुक्तालतानिभाभिस्तु जटाभिर्भूषितो विभुः ।।
कपिलाभिः करालाभिर्विकटाभिश्च वेष्टितः ।। ६६ ।।
भोगींद्रफणबद्धाभिः सितपीतादिभिस्तथा ।।
नदीरूपाभिरूताभिः शोभितोऽसौ जटेश्वरः ।। ६७ ।।
राजानं प्रत्युवाचेदं वचनं पर्वतात्मजे ।।
स्तोत्रेणानेन राजेंद्र तुष्टोऽहं तोषितस्त्वया ।। ।। ६८ ।।
जटीभूतं च ते पापं गतं मद्दर्शनेन वै ।।
तस्मात्स्थानं परं गच्छ मदीयं शाश्वतं मुदा ।। ६९ ।।
इत्युक्तो देवदेवेन वीरधन्वा महीपतिः ।।
जगाम परमं स्थानं दाहप्रलयवर्जितम् ।। 5.2.28.७० ।।
कामगेन विमानेन स्तूयमानो गणैः प्रिये ।।
पापसंघेन मुक्तोऽसौ जटीभूतेशदर्शनात् ।। ७१ ।।
लिंगश्चातः समाख्यातो नाम्ना देवो जटेश्वरः ।।
जटेश्वरं वरारोहे ये पश्यंति सुभक्तितः ।।
तेषां पापं जटीभूतं तत्क्षणादेव नश्यति ।। ७२ ।।
येऽर्चयंति सदा देवि देवदेवं जटेश्वरम् ।।
तेषां बलं प्रभावश्च सौभाग्यं च भविष्यति ।। ७३ ।।
येप्यन्ये देवगन्धर्वा यक्षराक्षस मानवाः ।।
लिंगं च पूजयिष्यंतिं विधिवद्भक्तिभावतः ।। ७४ ।।
तेऽपि कामानवाप्स्यन्ति यांश्च कांश्च सुदुर्लभान् ।।
ऐश्वर्यं धर्ममतुलं दीर्घमायुररो गताम् ।। ७५ ।।

निःसपत्नत्वमतुलं यच्चान्यत्तदवाप्नुयात् ।।
पापिनः क्रूरकर्माणो येऽपि लिंगं समाश्रिताः ।।
तेपि पापविनिर्मुक्ता भविष्यंति गत ज्वराः ।। ७६ ।।
जटेश्वरं प्रपश्यंति भक्त्या ये च दिनेदिने ।।
ते धर्मधनसौभाग्यैर्भविष्यंति समन्विताः ।। ७७ ।।
व्याधितो व्याधिना मुक्तो दुःखी दुःखात्प्रमुच्यते ।।
दर्शनात्तु भवेत्सद्यः सर्वपातकवर्जितः ।। ७८ ।।
जटेश्वरस्य माहात्म्यं ये पठिष्यंति पार्वति ।।
श्रोष्यंति येऽपि मद्भक्त्या प्रयताः श्रद्धयान्विताः ।। ७९ ।।
ते सर्वकामानाप्स्यंति गतिमंते च मत्पुरे ।।
या नारी दुर्भगा सापि सौभाग्यं लभते सदा ।। 5.2.28.८० ।।
गुर्विणी लभते पुत्रमरोगं श्रुतिभूषणम् ।।
शिशुग्रहाश्च नश्यंति नापमृत्युभयं भवेत् ।। ८१ ।।
मांगल्यमिदमायुष्यं धर्मकामाश्रयं महत् ।।
दुःस्वप्नजं भयं घोरं पापजं याति संक्षयम् ।। ८२ ।।
दुर्भुक्तं दुर्जनस्पर्शं यच्चाल्पायुःकरं भवेत् ।।
लिंगाख्यानकथां श्रुत्वा विनश्यति न संशयः ।। ८३ ।।
श्राद्धेषु यः पठेदेतां जटेश्वरकथां शुभाम् ।।
तदक्षयं भवेच्छ्राद्धं पितॄणां प्रीतिवर्द्धनम् ।। ८४ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
जटेश्वरस्य देवस्य शृणु रामेश्वरं शिवम् ।। ८५ ।। ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये जटेश्वरमाहात्म्यवर्णनंनामाष्टाविंशोऽध्यायः ।। २८ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः २९



।। श्रीहर उवाच ।। ।।
एकोनत्रिंशतं विद्धि देवं रामेश्वरं प्रिये ।।
यस्य दर्शनमात्रेण मुच्यते ब्रह्महत्यया ।। १ ।।
पुरा त्रेतायुगे देवि रामः शस्त्रभृतां वरः ।।
शूरः सर्वगुणोपेतः पितृभक्तो बभूव ह ।। २ ।।
रेणुकागर्भसंभूतः स्वयं रामो बभूव ह ।।
विष्णुरेवावतीर्णोऽसौ भृगोः शापात्सुदुस्तरात् ।। ३ ।।
स कदाचिन्नियुक्तोऽसौ मुनिना जमदग्निना ।।
शिरश्छिन्धीत्युवाचेदं मातुस्ते विपुलं सुत ।। ४ ।।
स पितुर्वचनं श्रुत्वा भ्रातॄणां मातुरेव च ।।
शिरांसि चिच्छिदे रामो जमदग्निर्वरं ददौ ।। ५ ।।
सर्वेषां पृथिवीशानां त्वमजेयो भविष्यसि ।।
सर्वक्षयकरो भावी न चिरादेव भार्गव ।। ६ ।।
गृहाण परशुं पुत्र वह्निज्वालोद्भवं दृढम्।।
अनेन शितशस्त्रेण ततः ख्यातो भवि ष्यति ।। ७ ।।
अथ केनापि कालेन कार्त्तवीर्यार्जुनो नृपः ।।
हैहयानां कुले जातः सहस्रबाहुविश्रुतः ।। ८ ।।
जघान जमदग्निं तु कामधेनुकृते कुधीः ।।
पितरं निहतं दृष्ट्वा रामः क्रुद्धोऽब्रवीदिदम् ।। ९ ।।
अथ पश्यंतु मे वीर्यं त्रयो लोकाः सनातनम् ।।
स च पश्यतु दुर्बुद्धिर्ब्रह्महा कृतवीर्यजः ।। १० ।।
मत्पिता निहतो येन सत्कर्मनिरतः सदा ।।
तस्य बाहुसहस्रं तु छेत्स्यामीह न संशयः ।। ११ ।।
इत्युक्त्वा क्रोधरक्ताक्षः कार्त्तवी र्यार्जुनं भुवि ।।
धर्षयित्वा यथाकामं क्रोशमानं पुनःपुनः ।। १२ ।।
कृत्स्नं बाहुसहस्रं च चिच्छेद भृगुनंदनः ।।
परश्वधेन तीक्ष्णेन ज्ञातिभिः सहितं तदा ।। १३ ।।

रथस्थं पातयामास जघान नृपतिं प्रिये ।।
त्रिःसप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता ।। १४ ।।
कृत्वा निःक्षत्रियां चैव भार्गवः स महाबलः ।।
सर्वपापविनाशाय वाजिमेधेन चेष्टवान् ।। १५ ।।
तस्मिन्यज्ञे महादाने दक्षिणां भृगुनंदनः ।।
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम् ।। १६ ।।
वारुणांस्तुरगाञ्छुभ्रान्रथं च रथिनां वरः ।।
हिरण्यमक्षयं धेनूर्गजेंद्राश्च महामतिः ।। १७ ।।
तदा तस्मिन्महायज्ञे वाजिमेधे महायशाः ।।
तथापि न गता हत्या ह्यनेकप्राणिसंभवा ।। १८ ।।
एवं किल पुराणेषु सर्वागमभिदादिषु ।।
विश्वस्तघातिनां चैव निष्कृतिः श्रूयते यथा ।। १९ ।।
अश्वमेधेन यज्ञेन ब्रह्महत्या विनश्यति ।।
अथवा द्वादशाब्देन यद्येकाऽऽस्या कृता भुवि ।। २० ।।
मया पुनर्नृशंसेन बहवः प्राणिनो हताः ।।
विश्वस्ताश्च प्रमत्ताश्च गर्भस्थाश्च पुनःपुनः ।। २१ ।।
स्त्रियो वृद्धाश्च बालाश्च माता चैव विशेषतः ।।
इति दुःखान्वितो रामो विषादं परमं गतः ।। २२ ।।
चिंतयित्वा मुहूर्तं तु गतो रैवतकं गिरिम् ।।
तथा तपो ऽतपद्धोरं बहून्वर्षगणान्प्रिये ।। २३ ।।
तथापि न गता हत्या ह्यनेकप्राणिसंभवा ।।
अथ रामो जगामाथ महेन्द्रे मलये तथा ।। २४ ।।
सह्ये हिमालये रम्ये पुण्ये बदरिकाश्रमे ।।
चरित्वा पर्वतान्सर्वान्स्नानार्थं नर्मदां ययौ ।। २५ ।।
यमुनां चंद्रभागां च गंगां त्रिपथगामिनीम् ।।
इरावतीं वितस्तां च परां चर्मण्वतीं शुभाम् ।। २६ ।।
विशालां कपिलां दुर्गां गंभीरां गोमतीं शिवाम् ।।
गोदावरीं दशार्णां च पुण्यां भीमरथीं तथा ।। २७ ।।
गयां चैव कुरुक्षेत्रं नैमिषं पुष्करं तथा ।।
अट्टहासं प्रभासं च केदारममरेश्वरम् ।। २८ ।।
कृतयात्रोऽपि दुःखार्त्तश्चिंतयामास भार्गवः ।।
न नूनं तीर्थमाहात्म्यं दृश्यते भुवि सांप्रतम् ।। २९ ।।

न गता ब्रह्महत्या मे कृतो धर्मो निरर्थकः ।।
मिथ्या तत्कथ्यते शास्त्रे तीर्थदानादिभिः शुभैः ।।
यदि स्यात्सत्यमेतच्च नष्टं जातं कथं मम ।। 5.2.29.३० ।।
एतस्मिन्नेव काले तु नारदो मुनिपुंगवः ।।
आजगाम तमुद्देशं यत्र रामो व्यवस्थितः ।। ।। ३१ ।।
विषण्णवदनो दीनश्चिंतयानः पुनःपुनः ।।
दृष्ट्वा तथाविधो रामः प्रत्युवाचाथ नारदम् ।। ३२ ।।
भोभो नारद देवर्षे शृणु मे परमं वचः ।।
जननी निहता पूर्वं पितुर्वाक्याद्द्विजोत्तम ।। ३३ ।।
पितुः पराभवाद्भूमौ भूमिपाला मया हताः ।।
गर्भा विदारिताः स्त्रीणां बाला वृद्धाश्च योषितः।। ३४ ।।
निरंतरा हता लोका विशोकेनादयालुना ।।
पश्चाद्घृणा समुत्पन्ना परलोकं ममेक्षतः ।। ३५ ।।
यज्ञः कृतोऽश्वमेधश्च दत्तं दानमनेकधा।।
स्नातोहं सर्वतीर्थेषु सर्वप्रस्रवणेषु च।।३६।।
पर्वतेषु तपस्तप्तं हुतं जप्तं निरंतरम्।।
ब्रह्महत्याविनाशार्थं किं किं नात्र मया कृतम् ।।३७।।
परं नैव गता हत्या तस्मात्सर्वं निरर्थकम् ।। ३८ ।।
इति तस्य वचः श्रुत्वा नारदो भगवानृषिः ।।
प्रत्युवाच हितं सत्यं चिरं ध्यात्वा वचस्तदा ।।
भोभो राम किमात्मानं न स्मरस्यधुना हरिम् ।। ३९ ।।
त्वयैव कथितं पूर्वं ब्रह्महत्याविनाशनम् ।।
महाकालवने क्षेत्रे क्षेत्राणामुत्तमं परम् ।।
तस्मिन्क्षेत्रे महालिंगं ब्रह्महत्याविनाशनम् ।। 5.2.29.४० ।।
जटेश्वरो महाभाग विद्यते सर्वसिद्धिदम् ।।
कृतावतार राम त्वं तत्र गच्छाविलंबितम ।।
नारदस्य वचः श्रुत्वा स्मृत्वा क्षेत्रमनुत्तमम् ।। ४१ ।।
जगाम त्वरितं देवि महाकालवने ततः ।।
लिंगमाराधयामास ततो हत्या गता क्षयम् ।।
लिंगमध्यादहं देवि प्रसन्नो निर्गतस्तदा ।। ४२ ।।
जामदग्न्यो मया प्रोक्तः कांतकामं ददाम्यहम् ।।
स प्रोवाच ततो रामो भक्तिनम्रात्मकंधरः ।। ।। ४३ ।।

त्वत्पादपंकजे भूयाद्भक्तिर्मे विपुला सदा ।।
वरमेतं प्रयच्छाद्य यदि तुष्टो महेश्वर ।। ४४ ।।
इत्युक्तोऽहं तदा तेन यथा तुष्टेन पार्वति ।।
तस्मै दत्ता मयाभीष्टा वरा कीर्तिकरा स्थितिः ।। ४५ ।।
अद्यप्रभृति ते नाम्ना देवः ख्यातो भविष्यति ।।
तदा रामेश्वर इति त्रिषु लोकेषु गीयते ।। ४६ ।।
भक्त्या ये पूजयिष्यंति देवं रामेश्वरं परम् ।।
आजन्मप्रभवं पापं तेषां नश्यति तत्क्षणात् ।। ४७ ।।
स एव पुण्यवान्पूज्य इह लोके परत्र च ।।
यः पश्यति नरो भक्त्या देवं रामेश्वरं शिवम् ।। ४८ ।।
येऽनुमोदंति देवस्य दर्शनं यजनं तथा ।।
तेऽपि पापविनिर्मुक्ताः प्रयांति मम मंदिरम् ।। ।। ४९ ।।
यच्चापि पातकं घोरं ब्रह्महत्यासहस्रकम् ।।
तत्पापं विलयं याति रामेश्वरसमर्चनात्।। 5.2.29.५० ।।
दुष्प्राप्यं यत्फलं विप्रैर्वाजपेयादिभिर्मखैः ।।
प्राप्यते तत्सुखेनैव श्रीरामेश्वरदर्शनात् ।। ५१ ।।
ये हताभिमुखाः शूरा गोविप्रार्थे रणाजिरे।।
गतिरभ्यधिका तेभ्यो दृष्ट्वा रामेश्वरं शिवम् ।। ।। ५२ ।।
जितास्तेन सदा लोका रामेणेव जगत्त्रयम् ।।
दृष्टं येन सदा भक्त्या लिंगं रामेश्वरं शिवम् ।। ५३ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
रामेश्वरस्य देवस्य शृणु त्वं च्यवनेश्वरम् ।। ५४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य खण्डे चतुरशीतिलिंगमाहात्म्ये रामेश्वरमाहात्म्यवर्णनं नामैकोनत्रिंशोध्यायः।। २९।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३०



श्रीविश्वनाथ उवाच।।
त्रिंशत्तमं विजानीहि त्वं देवि च्यवनेश्वरम्।।
यस्य दर्शनमात्रेण स्वर्गभ्रंशो न जायते।।१।।
भृगोर्महर्षेः पुत्रश्च च्यवनो नाम पार्वति।।
स्थाणुभूतस्तपस्तेपे निराहारो महामुनिः ।। २ ।।
वितस्तायास्तटे रम्ये बहुवर्षगणान्किल ।।
सवल्मीकोऽभवद्विप्रो लताभिरभिसंवृतः ।। ३ ।।
कालेन महता देवि समाकीर्णः पिपीलकैः ।।
तथा स संवृतो धीमान्मृत्पिंड इव सर्वशः ।। ४ ।।
आजगाम तमुद्देशं विहर्तुं वन उत्तमे ।।
शर्यातिर्नाम धर्मात्मा सकुटुंबो मुदान्वितः ।। ५ ।।
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः ।।
एकैव तु सुता सुभ्रूः सुकन्यानाम नामतः ।। ६ ।।
सा सखीभिः परिवृता सर्वाभरणभूषिता ।।
सा भ्रम्यमाणा वल्मीके दृष्ट्वा भार्गवचक्षुषी ।। ७ ।।
सा कौतुकात्कण्टकेन बुद्धिमोहवती तदा ।।
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ।। ८ ।।
अभवत्स तया विद्धो नेत्रयोः परमार्तिमान् ।।
ततः शर्यातिसैन्यस्य शकृन्मूत्रं समारुणत् ।। ९ ।।
ततो रुद्धे शकृन्मूत्रे पर्यतप्यत पार्थिवः ।।
प्रत्युवाच ततः क्रुद्धो राजा गद्गदया गिरा ।। 5.2.30.१० ।।
केनापकृतमद्येह भार्गवस्य महात्मनः ।।
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।। ११ ।।
ज्ञातं वा यदि वाज्ञातं तदिदं ब्रूत मा चिरम् ।।
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।। १२ ।।
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।।
पर्यपृच्छत्स्ववर्गं च भूयोभूयः सुदुःखितः ।। १३ ।।

पितरं दुःखितं दृष्ट्वा सुकन्या तमथाब्रवीत् ।।
मया किंचिच्च वल्मीके दृष्टं सत्त्वमतिच्छवि ।। १४ ।।
खद्योतवदभिज्ञातं तन्मया विद्धमंतिकम् ।।
एतच्छ्रुत्वा तु शर्यातिर्वल्मीकं क्षिप्रमभ्यगात् ।। १५ ।।
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् ।।
प्रार्थयामास सैन्यार्थे प्रांजलिः स महीपतिः ।। १६ ।।
अज्ञानाद्बालया यत्तेऽपकृतं तु महीसुर ।।
इमामेव च ते कन्यां ददामि सुदृढव्रताम् ।। १७ ।।
भार्यार्थे त्वं गृहाणेमां प्रसीद द्विजसत्तम ।।
ततोब्रवीमहीपालं च्यवनो भार्गवस्तथा ।। १८ ।।
यद्येवं प्रतिगृह्यैतां क्षमिष्यामि महीपते ।।
ददौ दुहितरं तस्मै च्यवनाय महीपतिः ।। १९ ।।
प्रतिगृह्य च तां कन्यां भगवान्प्रससाद ह ।।
प्राप्ते प्रसादे राजाथ ससैन्यो विषयं गतः ।। 5.2.30.२० ।।
सुकन्यापि पतिं लब्ध्वा तपस्विनमनिंदिता ।।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ।। २१ ।।
कस्यचित्त्वथ कालस्य नासत्यावश्विनौ प्रिये ।।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ।। २२ ।।
तां दृष्ट्वा दर्शनीयांगीं देवराजसुतामिव ।।
ऊचतुः समुपद्रुत्य कस्य त्वमतिशोभने ।। २३ ।।
सा प्रोवाच महाभागा पतिव्रतपरायणा ।।
शर्यातितनयां चैव भार्यां च च्यवनस्य हि।। २४ ।।
ततोश्विनौ प्रहस्यैनामब्रूतां पुनरेव तु ।।
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ।।२५।।
त्वमपास्येह कल्याणि कामभोगबहिष्कृता ।।
वृद्धं च्यवनमुत्सृज्य वरयस्वैकमावयोः ।। २६ ।।
पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ।।
एवमुक्ता सुकन्या तु दस्रौताविदमब्रवीत् ।। २७ ।।
रताहं च्यवने देवे मैवं मा पर्यशंकतम् ।।
ततोऽब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ।। २८ ।।
युवानं रूपसंपन्नं करिष्यावः पतिं तव ।।
एतेन समयेनावामामंत्रय सुमध्यमे ।।२७।

सा तयोर्वचनं श्रुत्वा कथयामास भार्गवे ।।

तच्छ्रुत्वा च्यवनो भार्यां क्रियतामित्यभा षत ।। 5.2.30.३० ।।

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ।।

ततोऽप्सु च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।। ३१ ।।

अश्विनावपि तत्काले सरः प्राविशतां प्रिये ।।

ततो मुहूर्त्तादुत्तीर्णा सर्वे ते सरसस्तदा ।। ३२ ।।

दिव्यरूपधराः सर्वे युवानो दिव्यकुंडलाः ।।

तुल्यवेषधराश्चैव मनसः प्रीतिवर्द्धनाः ।। ।। ३३ ।।

तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभम् ।।

अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ।। ३४ ।।

सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरा न्स्थितान् ।।

निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ।। ३५।।

लब्ध्वा तु च्यवनो भार्यां वयो रूपं तु वांछितम् ।।

हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ।। ३६ ।।

यदहं रूपसंपन्नो वयसा च समन्वितः ।।

कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् ।। ३७ ।।

तस्माद्युवां करि ष्यामि प्रीत्याहं सोमपायिनौ ।।

सत्यमेतन्न संदेहो देवराजस्य पश्यतः ।। ३८ ।।

तच्छ्रुत्वा हृष्टमनसौ दिवं देवौ प्रजग्मतुः ।।

याजयामास सोमार्हौ नासत्यावश्विनाविति ।। ३९ ।।

भिषजौ देवतानां हि कर्मणा तेन गर्हितौ ।।

आभ्यामर्थाय सोमं त्वं प्रदास्यसि यदि स्वयम् ।। 5.2.30.४० ।।

वज्रं ते प्रहरिष्यामि घोररूपं सुदारुणम् ।।

एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः ।।

बलिनं वासवं ज्ञात्वा चिंतयामास सत्वरम् ।। ४१ ।।

देवमाराधयिष्यामि महादेवं महेश्वरम् ।।

यस्य कर्मकरः शक्रो यस्य देवा वशानुगाः ।।

यः समर्थो जगद्गोप्ता सृष्टिसंहारकारकः ।। ४२ ।।

इत्युक्त्वा च्यवनो देवि महाकालवनं गतः ।।

रामेश्वरस्य देवस्य लिंगमीशानतः स्थितम् ।।

श्रद्धयाराधितं तेन च्यवनेन महात्मना ।। ४३ ।।

तस्य प्रसन्नो रुद्रस्तु स वज्रादभयं ददौ ।।

तस्य प्रहरतो बाहुं स्तंभयामास भार्गवः ।। ४४ ।।
समाराधनतुष्टस्य लिंगस्यास्य प्रभावतः ।।
एतस्मिन्नंतरे ज्वाला निःसृता लिंगमध्यतः ।। ४६ ।।
तया देवगणाः सर्वे दह्यमाना विचेतसः ।।
प्रोचुर्गद्गदया वाचा धूमेनांधीकृते क्षणाः ।। ४६ ।।
क्रियेतां सोमपावेतावश्विनौ बलसूदन ।।
देवानां वचनं श्रुत्वा च्यवनं भयपीडितः ।।
प्रत्युवाच ततः शक्रः प्रणामानतकंधरः ।। ४७ ।।
सोमपावश्विनावेतावद्यप्रभृति भार्गव ।।
भविष्यतस्ततः सर्वमेतत्सत्यं ब्रवीमि ते ।। ४८ ।।
मा तेऽतिथ्याभिसंरंभो भविष्यति तपोधन ।। ।
लिंगस्यास्य प्रभावोऽयं यदहं निष्प्रभीकृतः ।। ४९ ।।
ततस्त्वन्नामधेयेन प्रसिद्धिर्भुवि यास्यति ।।
आराधितं यतो देवि च्यवनेन महात्मना ।। 5.2.30.५० ।।
च्यवनेश्वरमेतद्वै ख्यातं त्रिभुवनेऽभवत् ।।
भक्ता ये पूजयिष्यंति देवेशं च्यवनेश्वरम् ।।
आजन्मप्रभवं पापं तेषां नश्यति तत्क्षणात् ।। ५१ ।।
यः पश्यति नरो नित्यं च्यवनेश्वरसंज्ञकम् ।।
जन्मदुःखजरारोगैर्मुक्तो मुक्तिमवाप्नुयात् ।। ५२ ।।
यंयं काममभिध्यायेन्मनसाभिमतं नरः ।।
तंतं दुर्लभमाप्नोति च्यवनेश्वरदर्शनात् ।। ५३ ।।
नियमेन प्रपश्यंति ये देवं च्यवनेश्वरम् ।।
ते प्रयांति तनुं त्यक्त्वा मदीये भुवने प्रिये ।। ५४ ।।
यः शृणोति कथां पुण्यां सर्वपापहरां शुभाम् ।।
स पुण्यात्मा परं स्थानं याति दिव्यं न संशयः ।। ५५ ।।
भक्तिहीनः क्रियाहीनो यः पश्यति प्रसंगतः ।।
स पुण्यां गतिमाप्नोति योगिगम्यां यशस्विनि ।। ५६ ।।
पुष्पैर्विचित्रैर्ये देवं यजंते च्यवनेश्वरम् ।।
संसारार्णवमुल्लंघ्य ते यांति परमं पदम् ।। ५७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

च्यवनेश्वरदेवस्य शृणु खंडेश्वरं शिवे ।। ५८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये च्यवनेश्वरमाहात्म्यवर्णनंनाम त्रिंशोऽध्यायः ।। ३० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३१



।। श्रीमहादेव उवाच ।। ।।
एकत्रिंशत्तमं विद्धि देवं खंडेश्वरं प्रिये ।।
संपूर्णं जायते यस्य दर्शाद्दानव्रतादिकम् ।। १ ।।
आसीत्त्रेतायुगे देवि भद्राश्वोनाम पार्थिवः ।।
यस्य नाम्नाऽभवद्वर्षं भद्राश्वंनाम नामतः ।। २ ।।
तस्यागस्त्यः कदाचित्तु गृहमागम्य सत्तमः ।।
उवाच सप्तरात्रं तु वसामि भवतो गृहे ।। ३ ।।
तं राजा शिरसा नत्वा स्वास्यतामित्यभाषत ।।
तस्य कांतिमतीनाम भार्या परमशोभना ।। ४ ।।
तस्यास्तेजः समभवद्द्वादशादित्यसंनिभम् ।।
सपत्नीनां शतं तस्या विद्यते वरवर्णिनि ।। ५ ।।
ता दास्य इव कर्माणि कुर्वंत्यहरहः सदा ।।
कांतिमत्याः प्रभावेन भयोत्त्र स्ताः सुलोचनाः ।। ६ ।।
तामगस्त्यस्तथा दृष्ट्वा तन्मुखासक्तलोचनाम् ।।
एवंभूतां तथा दृष्ट्वा राज्ञीं परमशोभनाम् ।।
साधुसाधु जगन्नाथेत्यगस्त्यः प्राह हर्षितः ।। ७ ।।
द्वितीये दिवसेप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् ।।
अहो ह्यंगनया मुष्टं जगदेतच्चराचरम् ।। ८ ।।
इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्टेत्युवाच ह ।।
तृतीयेऽह्नि च तां दृष्ट्वा पुनरेवमुवाच ह ।। ९ ।।
अहो मूढा न जानंति लिंगमाहात्म्यमुत्तमम् ।।
महाकालवने क्षेत्रे च्यवनेशस्य पूर्वतः ।। 5.2.31.१० ।।
खंडव्रतानि जायंते पूर्णानि दर्शनाद्यदः ।।
चतुर्थे दिवसे हस्तावुत्क्षिप्य पुनरब्रवीत् ।।११।।
साधुसाधु जगन्नाथ साधु भद्राश्व सुव्रत ।।
पंचमे दिवसेऽप्येवं षष्ठे चैव पुनःपुनः ।। १२ ।।
नृत्यंतं सप्तमे दृष्ट्वा दिने पत्न्या समन्वितः ।।

प्रोवाच चैनं राजा स विस्मितेनांतरात्मना ।।
किं हर्षकारणं ब्रह्मन्येन नृत्यसमन्वितः ।। १३ ।।
।। अगस्त्य उवाच ।। ।।
अहो भूपाल मूढस्त्वं महामूर्खाश्च मंत्रिणः ।।
अहो पुरोहितो मुग्धो ये न जानंति मे मतम् ।। १४ ।।
ईदृशा अपि जायंते राजानो यस्य दर्शनात् ।।
एवमुक्तस्ततो राजा कृतांजलिरभाषत ।। १५ ।।
न जानीमो वयं ब्रह्मन्नभिप्रायं तवाधुना ।।
कथयस्व महाभाग यद्यनुग्रहकृद्भवान् ।। १६ ।।
।। अगस्त्य उवाच ।। ।।
इयं राज्ञी त्वदीयाभूद्दासी वैश्यस्य वैदिशे ।।
नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ।।
खंडव्रतप्रभावेन जातः कर्मकरो भवान् ।। १७ ।।
स च वैश्यो महाकाले गत्वा देवं महेश्वरम्।।
अर्चयामास विविवद्गंधपुष्पादिभिः शुभैः ।। १८ ।।
अभ्यर्च्य तु गृहं यावद्भवंतौ रक्षपालकौ ।।
ततः कालेन महता मृतौ द्वावपि दंपती ।। १९ ।।
तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ।।
इयं च पत्नी ते जाता पुरा वैश्यप्रदासिका ।। 5.2.31.२० ।।
परकीयप्रसंगेन संजाता भूभिरुत्तमा ।।
राज्यं पत्नी सुता साधुरित्युक्तं वचनं मया ।। २१ ।।
तस्य देवस्य माहात्म्याद्यजंतं विविधैर्मखैः ।।
पश्यामि त्वां महीपाल भूपालशतवेदितम् ।। २२ ।।
अतः साधुपुरा प्रोक्तं मया तव महीपते ।। २३ ।।
इति तस्य वचः श्रुत्वा कुंभयोनेर्महात्मनः ।।
महाकालवने गंतुं मतिं चक्रे महीपतिः ।।
ततः सांतःपुरः प्रायात्तेन सार्द्धं महर्षिणा ।।२४।।
अगस्त्यकथितं लिंगं ददर्श श्रद्धया पुनः ।।
पूजयामास विधिवत्पत्न्या सार्द्धं महीपतिः ।। २५ ।।
ततस्तुष्टस्तदा देवो नृपं प्राहामितद्युतिः ।।
मनोऽभीष्टं तपस्तेस्तु भोगमैश्वर्यमेव च ।। २६ ।।
कुलं प्रभावं सौभाग्यं दीर्घमायुररोगिताम् ।।

निःसपत्नं ततो राज्यं कृत्वा स्वर्गमवाप्स्यति ।। २७ ।।
इत्युक्तो देवदेवेन् गतोऽसौ विषयं स्वकम् ।।
निष्कंटकं ततो राज्यं कृत्वा स्वर्गं गतः प्रिये ।। २८ ।।
अनेकजन्मचरितं खंडव्रतकदम्बकम् ।।
संपूर्णमभवद्देवि लिंगस्यास्य प्रभावतः ।। २९ ।।
अतः खण्डेश्वरो देवो विख्यातो भुवनत्रये ।।
ये पश्यंति नरा देवि देवं खण्डेश्वरं शिवम् ।। 5.2.31.३० ।।
खण्डव्रतानि पूर्णानि तेषामाशु भवंति हि ।।
तपःखण्डं व्रते खण्डं दानखंडं च यत्कृ तम्।।
तत्सर्वं पूर्णतां याति श्रीखंडेश्वरदर्शनात् ।। ३१ ।।
दृष्ट्वा खंडेश्वरं देवं पापविघ्नैः प्रमुच्यते ।।
सप्तजन्मकृतैर्देवि मनोवाक्कायकर्मभिः ।। ३२ ।।
दृष्ट्वा खण्डेश्वरं देवं कृतकृत्यत्वमाप्यते ।।
तस्य नश्यति दौर्भाग्यं सप्तजन्मोद्भवं प्रिये ।। ३३ ।।
खंडेश्वरेऽर्चिते देवे सर्वे देवाः सवासवाः।।
संतुष्टा वरदाश्चैव भवंति वरवर्णिनि ।। ३४ ।।
देवं खंडेश्वरं ये वै यजंति श्रद्धया प्रिये ।।
पुण्यैर्नानाविधैः स्नानैः सुगन्धैश्च विशेषतः ।। ३५ ।।
धूप दीपैर्नमस्कारैर्जपैः स्तोत्रैः पृथग्विधैः ।।
ते सर्वे कामसंपन्नाः श्रीमन्तो राज्यसंयुताः ।। ३६ ।।
दीर्घायुषः शुभाचारा जायंते देहिनोऽमलाः ।।
अति श्रेष्ठा गतिस्तेषां विशोका नित्यमक्षयाः ।।
खंडेश्वरप्रसादेन जायंते नात्र संशयः ।। ३७ ।।
एते च विष्णुब्रह्मेंद्रकुवेरदहनादयः ।।
परां सिद्धिं सुसंप्राप्ताः खंडेश्वरसमर्चनात् ।। ३८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
खंडेश्वरस्य देवस्य शृणु वै पत्तनेश्वरम् ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये खण्डे श्वरमाहात्म्यवर्णनंनामैकत्रिंशोऽध्यायः ।। ।। ३१ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३२



।। ईश्वर उवाच ।। ।।

त्रिषु लोकेषु विख्यातं द्वात्रिंशत्तममुत्तमम् ।।

विद्धि सिद्धिप्रदं पुंसां पत्तनेश्वरमीश्वरम् ।। १ ।।

पुराऽहं पर्वते देवि मंदरे चारुकन्दर् ।।

क्रीडन्सार्द्धं त्वया पृष्टः कदाचिद्रहसि स्थितः ।। २ ।।

किमर्थं पर्वतं त्यक्त्वा कैलासं रमणीयकम् ।।

मुक्ता फलशिलाशुभ्रं शङ्खचन्द्रांशुनिर्मलम् ।। ३ ।।

सिद्धचारणगन्धर्वकिंनरोद्गीतनादितम् ।।

सदा पुष्पद्रुमच्छन्नं कदलीवनराजितम् ।। ४ ।।

अथ कोकिलचक्राह्वचकोरकुरराकुलम् ।।

पुऽण्यलोकोपमं स्थानं त्रिविष्टपविभूषणम् ।। ५ ।।

महाकालवने शून्ये नानागुल्मलतावृते ।।

गजेंद्रगजशार्दूल सिंहशम्बरसंकुले ।। ६ ।।

ऋक्षवानरगोमायुजन्तुकादिविराजिते ।।

मयूरसर्पमार्जारमूषिकादिविराजिते ।। ७ ।।

कथं वासः कृतो देव कौतूहलमिदं मम ।। ८ ।।

इति पृष्टस्त्वया देवि मंदरे चारुकन्दरे ।।

मया प्रोक्तं प्रसन्नेन पत्तनं च मम प्रिये ।। ९ ।।

महाकालवनं रम्यं स्वर्गात्सुखकरं परम् ।।.

स्मशानपीठसत्क्षेत्रवनोपरसमाश्रितम् ।। 5.2.32.१० ।।

अनौपम्यगुणं विद्धि पत्तनं पर्वतात्मजे ।।

एवं पत्तनदेवो वै न दृष्टो भुवनत्रये ।।

गीतवादित्रचातुर्यैः स्पर्द्धते यः सुरालयम् ।। ११ ।।

एतस्मिन्नंतरे देवि देवर्षिर्नारदो मुनिः ।।

द्रष्टुकामः समायातो मन्दरे मां यशस्विनि ।। १२ ।।

विनोदार्थं मया पृष्टस्त्वत्प्रियार्थं कुतूहलात् ।।

क्व त्वया गमितः कालः कल्पसंख्यो महामुने ।। १३ ।।

कस्मिन्नाश्रमसंस्थाने तपसः संचयः कृतः ।।
तीर्थानि कानि भ्रांतानि क्व ते रतिरभूच्चिरम् ।। १४ ।।
कौतुकं दृष्टपूर्वं तु वद मे मुनिसत्तम ।।
इति पृष्टो मया देवि ब्रह्मपुत्रो महामुनिः ।।
कथयामास वृत्तांतं पत्तनस्य प्रयत्नतः ।। १५ ।।
बहूनि संपरिक्रम्य तीर्थान्यायतनानि च ।।
पत्तनानि विचित्राणि देशाश्च नगराणि च ।। १६ ।।
अटनार्थं महादेव जंबूद्वीपे मनोरमे ।।
दृष्टः पत्तनराजश्च सदानंदकरः परः ।। १७ ।।
स्वेच्छाकल्पितविन्यासः प्रासादशतकल्पितः ।।
इच्छाकामफलावाप्तिर निर्देश्यसुखावहः ।। १८ ।।
सर्वर्तुकुसुमामोदसुखस्पर्शानिलावृतः ।।
वीणावेणुरवैर्घुष्टो मनःप्रह्लादकारकः ।। १९ ।।
वज्रेंद्रनीलवैडूर्यचन्द्रकांतादिदी पितः ।।
जरामृत्युभयोपेतः सर्वव्याधिविवर्जितः ।। 5.2.32.२० ।।
शक्राग्नियमरक्षोब्धिवायुसोमेशसेवितः ।।
ऊर्द्ध्वाधः सप्तलोकेषु पुण्येषु निवसंति हि ।। ।। २१ ।।
सदा प्रमुदिता देवास्तेऽपि कांक्षंति पत्तनन्न् ।।
तत्र शांता महात्मानो निवसंते महेश्वर ।। २२ ।।
विद्योतितदिशो दांताः सूर्य वैश्वानरप्रभाः ।।
दिव्यांबरधरा धीरा जगमुकुटधारिणः ।। २३ ।।
विप्रा माहेश्वराः पुण्याः क्षत्रिया हरतत्पराः ।।
मुमुक्षवस्तपोनिष्ठा वैश्या शूद्राश्चिरायुपः ।। २४ ।।
स शुभ्ररूपः स च लोहिताकृतिः स चापि पीतः ससितेतरः क्वचित् ।।
स नामधेयः स च नामवर्ज्यः सोऽदृ श्यरूपः स च दृष्टरूपः ।। २५ ।।
क्वचिद्रविसहस्राक्षः क्वचिदेकरविप्रभः ।।
क्वचिच्चन्द्राद्विशिष्येत क्वचिदंगुलिकांतिमान् ।। २६ ।।
जन्म मृत्युजरारोगैर्दुःखानि विविधानि च ।।
प्रयाति विलयं तानि प्रसन्ने पत्तनेश्वरे ।। २७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

पत्तनेशस्य देवस्य आनंदेशमतः शृणु ।। २८ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखंडे चतुरशीतिलिंगमाहात्म्ये पत्तनेश्वर माहात्म्यवर्णनंनाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३३



।। श्रीहर उवाच ।। ।।

त्रयस्त्रिंशत्तमं देवमानंदेश्वरमीश्वरम् ।।

विद्धि पापहरं पुण्यं सर्वसंपत्करं सदा ।। १ ।।

पुरा राथंतरे कल्पे बभूव पृथिवीपतिः ।।

अनमित्र इति ख्यातः सार्वभौमो महीतले ।।२।।

धर्मात्मा महात्मा च पराक्रमधनो नृपः ।।

अतीत्य सर्वभूतानि बभौ भानुरिवाव्ययः ।।३।।

समः शत्रौ च पुत्रे च मित्रे च परधर्म्मवित् ।।

गिरिभद्रा गिरेः पुत्री तेनोढा वरवर्णिनी ।।४।।

अतीव वल्लभा सा च प्राणेभ्योऽपि गरीयसी ।।

आनंद इति पुत्रोऽभूत्तस्य ज्ञानरतः सुधीः ।। ५ ।।

जातमात्रो निजोत्संगे स्थिरमुल्लाप्य वै पुनः ।।

परिष्वजति हार्देन उल्लापयति पुनःपुनः ।। ६ ।।

स जातिस्मरणो जातो मातुरुत्संगमास्थितः ।।

जहास च तदा माता संक्षुब्धा वाक्यमव्रवीत् ।। ७ ।।

भीतास्मि किमिदं वत्स हासो यद्वदने तव ।।

अकालबोधः संजातः किंस्वित्पश्यसि शोभनम् ।। ८ ।।

इत्युक्तो मातरं प्राह सर्वोऽपि स्वार्थमीहते ।।

मां नेतुमिच्छति पुरो मार्जारी किं न पश्यसि ।।

अंतर्धानगता चेयं द्वितीया जातहारिणी ।। ९ ।।

पुत्रप्रीत्या च मातस्त्वमतः स्वार्थं समीहसे ।।

उल्लाप्योल्लाप्य बहुशः परिष्वजसि मां बत ।। 5.2.33.१० ।।

उद्धूते बालके स्नेहात्संभ्रमात्स्त्रीजनोऽप्ययम् ।।

ततोयमागतो हासः शृणु चाप्यत्र कारणम् ।। ।। ११ ।।

स्वार्थे प्रसक्ता मार्जारी लोलुपा मामवेक्षते ।।

तथांतर्द्धानगा चेयं द्वितीया जातहारिणी ।। १२ ।।

त्वं तु क्रमेणोपभोग्यं मत्तः फलमभीप्सिसि ।।

न मां जानासि कोऽप्येवं न वै चोपकृतं मया ।। १३ ।।
संगतिर्नाति बालानां पंचसप्तदिनात्मकम् ।।
तथापि स्निह्यसि प्रीत्या परिष्व जसि संततम् ।। १४ ।।
ततेति वत्स भो भद्र इत्यलीकं ब्रवीषि माम् ।।
पुत्रस्य वचनं श्रुत्वा क्रुद्धा माताऽब्रवीदिदम् ।। १५ ।।
नाहं त्वामुपकारार्थं वत्स प्रीत्या परिष्वजे ।।
स्वार्थो मया परित्यक्तो यस्त्वत्तो मे भविष्यति ।। १६ ।।
इत्युक्त्वा सा तमुत्सृज्य निष्क्रांता सूतिकागृहात् ।।
जहार तत्परित्यक्तं सा तदा जातहारिणी ।। १७ ।।
सा हृत्वा तं तदा बालं पूर्वजातिस्मरं प्रिये ।।
हैमिन्याः शयने न्यस्यद्विक्रांतस्य महीभृतः ।। १८ ।।
मत्वा स्वकीयं पुत्रं तु विक्रांतेन महीभृता ।।
कृतं वै नामकरणमानंद इति विश्रुतम् ।। १९ ।।
विक्रांतस्य सुतो नीतो बोधस्य च द्विजन्मनः ।।
चैत्रनामा कृतस्तेन संस्कृतो वेदमंत्रकैः ।। 5.2.33.२० ।।
तृतीयं भक्षयामास बोधपुत्रं निशाचरी।।
जातिस्मरोऽप्यथानंदः कृतोपनयनस्तदा ।। २१ ।।
गुरुणा समनुज्ञातं क्रियतामभिवादनम् ।।
जनन्याः प्रागुपस्थानमित्युक्तो वाक्यमब्रवीत् ।। २२ ।।
वंद्या मे कतमा माता जनित्री पालिनी च वा ।।
आनंदस्य वचः श्रुत्वा गुरुर्वचनमब्रवीत् ।। २३ ।।
नन्वियं ते महाभाग जनित्री जनकात्मजा ।।
विक्रांतस्याग्रमहिषी हैमिनीनाम नामतः ।। २४ ।।
।। ।। आनंद उवाच ।। ।।
चैत्रस्य प्रसवित्रीयं चैत्रोऽयं द्विजवेश्मनि ।।
संस्कृतो ब्राह्मणैर्मंत्रैर्गिरिभद्रासुतस्त्वहम् ।। २५ ।।
गुरुराह ततः कस्त्वं चैत्रः को वा त्वयोच्यते ।।
ततः स कथयामास पूर्ववृत्तांतमादितः ।। २६ ।।
।। गुरुरुवाच ।। ।।
अतीव गहनं वत्स संकटं महदागतम् ।।
न वेद्मि किंचिन्मोहेन भ्रमंति मम बुद्धयः ।। २७ ।।
।। आनंद उवाच ।। ।।

मोहस्यावसरः कोऽत्र जगत्येवं व्यवस्थितः ।।
कः कस्य पुत्रो विप्रर्षे को वा कस्य न बांधवः ।। २८ ।।
अतः संसारता हंति संसारं प्राणिनामिह ।।
महामोहहतं चेतश्चित्रमत्र कथं गुरो ।। २९ ।।
ब्रह्मपुत्रस्य दुष्टस्य दुःसहस्य सुता भुवि ।।
जातहारिणिकानाम परिवर्त्तयते सुतान् ।। 5.2.33.३० ।।
मातृद्वयं मया प्राप्तमस्मिन्नेव हि जन्मनि ।।
मातृद्वयमथो प्राप्तं जातिं संस्मरता सता ।। ३१ ।।
सोऽहं तपः करिष्यामि चैत्र आनीयतामिति ।।
ततः सुविस्मितो राजा सभार्यः सह बंधुभिः ।।३२।।
तस्मान्निवर्त्त्य ममता मनुमेने च तं प्रति ।।
चैत्रमानीय तनयं राज्ययोग्यं चकार सः ।। ३३ ।।
सन्मान्य ब्राह्मणं येन पुत्रबुद्ध्या स पालितः ।।
सोऽप्यानंदस्तपस्तेपे महाकालवने शुभे ।। ३४ ।।
इंद्रेश्वरस्य देवस्य पश्चिमे लिंगमुत्तमम् ।।
भक्त्या ह्याराधयामास तपसा दुष्करेण तु ।। ३५ ।।
तपस्यंतं ततस्तं तु देवः प्राह शुचिस्मिते ।।
किमर्थं तप्यसे वत्स तपस्तीव्रं ब्रवीमि ते ।। ३६ ।।
मनुना भवता भाव्यं षष्ठेन व्रज तत्कुरु ।।
अलं ते तपसा तस्मिंस्ततो मुक्तिमवाप्स्यसि ।। ३७ ।।
इत्युक्तो देवदेवेन तथेत्याह महामतिः ।।
बभूव स मनुर्देवि ब्रह्मतुल्यो महायशाः ।। ३८ ।।
पुत्रानुत्पादयामास लिंगस्यास्य समर्चनात् ।।
कृतं नाम तदा देवैरानंदेश्वरमुत्तमम् ।।३९।।
आनंदेन यतः प्राप्ता सिद्धिर्देवि सुदुर्ल्लभा ।।
अतो नाम सुविख्यातमानंदेश्वरमीक्ष्यताम् ।।5.2.33.४०।।
ये पश्यंति विशालाक्षि आनंदेश्वरमीश्वरम् ।।
ते पुत्रपौत्रसंपन्ना भविष्यंति महीतले ।। ४१ ।।
येषां क्षीणं नृणां पापं कोटिजन्मशतोद्भवम् ।।
तेषां भवति सा भक्तिरानंदेश्वरदर्शनात् ।।४२।।
तदैव पुरुषो मुक्तो जन्ममृत्युजरादिभिः ।।
यदा पश्यति देवेशमानंदेश्वरसंज्ञकम् ।। ४३ ।।

मयोक्तं मुक्तिदं नृणामानन्देश्वरदर्शनम् ।।
स्वर्गापवर्गदं देवमानंदं लिंगमुत्तमम् ।।
अत्र देवैर्विशालाक्षि पूजितं लिंगमुत्तमम् ।। ।। ४४ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
आनंदेश्वरदेवस्य शृणु त्वं कंथडेश्वरम् ।। ४५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्य आनंदेश्वरमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३४



।। श्रीहर उवाच ।। ।।
चतुस्त्रिंशत्तमं विद्धि देवं वै कंथडेश्वरम् ।।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।। १ ।।
वितस्तायास्तटे रम्ये ब्राह्मणो निवसन्पुरा ।।
बभूव पांडवोनाम दरिद्रेणातिपीडितः ।। २ ।।
ज्ञातिभिश्च परित्यक्तो दुष्टया भार्यया तथा ।।
कंथाप्येका स्थिता यस्य सर्वस्वप्रेमधारिणी ।। ३ ।।
तेनाहं सुतकामेन तोषितो गिरिगह्वरे ।।
मयाप्युक्तं विशालाक्षि पुत्रस्तव भविष्यति ।। ४ ।।
तस्य पुत्रः समुत्पन्नः कंथामध्यादयो निजः ।।
शीतोष्णवारिणी कंथा तस्य पुत्रस्य साऽभवत् ।। ५।।
स च लब्धः प्रसादेन मदीयेन वरानने ।।
रुद्रेण च वरो दत्तः कंथाया भविता पुनः ।। ६ ।।
अथ षष्ठे गते वर्षे मौंजीबंधमचिंतयत् ।।
तदामंत्र्य मुनीन्सर्वान्प्रसाद्य च पुनः पुनः ।।
नमस्कृत्य ऋषीन्सर्वान्पूजयामास भक्तितः ।। ७ ।।
फलैर्वित्तानुसारेण मौंजी तस्याप्यबंधत ।।
तेऽप्युक्ता मुनयः सर्वे प्रसाद्य च पुनःपुन ।। ८ ।।
दीयतामाशिषो ह्यस्मै पुत्राय मुनिसत्तमाः ।।
मम पुत्रस्य पुत्रोऽयं दीर्घायुर्जायतां चिरम् ।। ९ ।।
तूष्णींभूयः स्थिताः सर्वे तच्छ्रुत्वा नोत्तरं ददुः ।।
यदा ते नोत्तरं प्रोचुस्तदा मुनिवरः स्वयम् ।।
ध्यानेन चिंतयामास नूनमल्पायुषं सुतम् ।। 5.2.34.१० ।।
इति ज्ञात्वा तु संमोहमगमत्सहसा मुनिः ।।
विललाप स दुःखार्त्तः सुतस्नेहेन दुःखितः ।। ११ ।।
।। वाडव उवाच।। ।।
दत्तः स्वयं महेशेन ममाल्पायुः कथं सुतः ।।

रुद्रेण च वरो दत्तः प्रसन्नेन पुरा मम ।। १२।।
मत्तुल्यवीर्यः पुत्रस्ते कंथामध्याद्भ विष्यति ।।
जातं च दत्त्वा ह्यल्पायुं मिथ्या त्र्यक्षस्य तद्वचः ।। १३ ।।
पितरं दुःखितं दृष्ट्वा तूष्णींभूतो मुनिस्तदा ।।
स बालः सहसा वाक्यं बभाषे हर्षवर्द्धनम् ।। १४ ।।
त्यजत भयमिदानीं यन्ममार्थे विषण्णा विनिहतनिजयत्नं प्रेतराजं करोमि ।।
शृणुत मम गिरं भोः सेश्वरा लोकपालाः पितृपतिविजयार्थं सत्प्रतिज्ञा ममैषा ।। १५ ।।
अतिविषमतपोभिः शंकरं तोषयित्वा स्वपितुरपि च भक्त्या हन्मि मृत्योर्जयाशाम् ।।
किमतिशयविषाद व्याकुलास्तात सर्वे सपदि पितृपतिं तं स्वे वशे स्थापयामि ।। १६ ।।
प्रयामि रुद्रं शरणं महेश्वरं देवं वरं चाप्युमयाऽविहीनम् ।।
शृण्वंतु सर्वे मुनयः समंतान्न मादृशे मृत्युपराभवोस्ति ।। १७ ।।
तपोभिरुग्रैः शितिकंठपादौ प्रसाद्य मृत्युं न चिराद्विनेष्ये ।।
कंथाजवाक्यामृतलोलनेत्राः संजातरोमां चलसत्स्वदेहाः ।। १८ ।।
पप्रच्छुरेनं मुनयः शिशुं तं जानासि रुद्रं परमं कथं त्वम् ।।
वयं चिरं कालमुपासमानास्तपोभिरुग्रैर्व्रतसंचयैश्च ।। १९ ।।
तथापि विद्मो न वयं महेशं ज्ञातस्त्वयासौ कथमर्भकेण ।।
ईहामहे तं किल पुत्र सम्यक्छ्रोतुं प्रहर्षाद्भुतजातरोमाः ।। 5.2.34.२० ।।
ज्ञातस्त्वया कुत्र कथं महेशो महेश्वरो वै भुवनैकनाथः ।। २१ ।।
इति तेषां वचः श्रुत्वा मुनीनां भावितात्मनाम् ।।
स बालः कथयामास वृत्तांतं पर्वतात्मजे ।। २२ ।।
ममात्र क्रीडतः सिद्धः सिद्धिदः समुपागतः ।।
विज्ञायाल्पायुषं मां तु वात्सल्यादब्रवीदिदम् ।। २३ ।।
गच्छ पुत्र ममादेशान्महाकालवनोत्तमे ।।
दक्षिणे चास्ति यल्लिंगमानंदेश्वरलिंगतः ।। २४ ।।
तमाराधय शीघ्रं त्वं चिरजीवी भविष्यसि ।।
तस्योपदेशदानेन ज्ञातं सम्यङ्महेश्वरात् ।। २५।।
नान्यो देवोस्ति लोकेषु सत्यं सत्यं मुनीश्वराः ।।
तस्मादद्यैव यास्यामि महाकालवने शुभे ।। २६ ।।
लिंगमाराधयिष्यामि विषादस्त्यज्यतामिह ।।
तस्य तद्वचनं श्रुत्वा तेन सार्द्धं महर्षयः ।। २७ ।।
पिता च विस्मितो देवि सर्व एव समागताः ।।
देवमाराधयामास बालः कालजिघांसया।। २८ ।।

लिंगमध्यात्ततो वाणी निःसृता पर्वतात्मजे ।।
अहो तुष्टोस्मि ते वत्स कं कामं प्रददाम्यहम् ।। २९ ।।
।। बाल उवाच ।। ।।
यदि तुष्टोऽसि मे देव ये त्वां पश्यंति शंकर ।।
पापकंथाविनिर्मुक्तास्ते संतु चिरजीविनः ।। 5.2.34.३० ।।
बालस्य भाषितं श्रुत्वा लिंगे नोक्तं यशस्विनि ।।
ये च मां पूजयिष्यंति श्रद्धया परया युताः ।।
ते भविष्यंति सततं जरामरणवर्जिताः ।। ३१ ।।
लप्स्यंते परमान्कामान्भविष्यंति गणोत्तम ।।
पूज्याः सर्वेषु लोकेषु सर्वालंकारभूषिताः ।। ३२ ।।
एवं लब्धवरः कंथः प्रांजलिः समुपस्थितः ।।
लिंगेनोक्तः प्रसन्नेन भूयो वरय सुव्रत ।। ३३ ।।
वरो वै दुर्लभो लोके देवदानवगुह्यकैः ।।
मयावतारितो यस्मान्नास्त्यदेयं तवाधुना ।। ३४ ।।
बालेनोक्तो महादेव यदि देयो वरः पुनः ।।
मन्नाम्ना देव ते ख्यातिर्भूयात्त्रिभुवने भुवि ।। ३५ ।।
एवमस्त्विवति लिंगेन प्रोक्तं तुष्टेन पार्वति ।।
तदाप्रभृति देवेशो विख्यातः कंथडेश्वरः ।।
यस्य दर्शनमात्रेण चिरायुर्जायते नरः ।। ३६ ।।
यः समीक्षति तल्लिंगं कंथडेश्वरमीश्वरम् ।। ३७ ।।
पापकंथाविनिर्मुक्तो मुक्तिं यास्यति गौरि सः ।।
पुण्यं यशस्यं गेयं तल्लिंगं पापप्रणाशनम् ।।
पुनाति पातकान्सर्वान्मम नामानुकीर्तनात् ।। ३८ ।।
तेऽधन्याः पुरुषा लोके तेषां जन्म निरर्थकम्।।
यैर्न दृष्टो महाकाले देवोऽसौ कंथडेश्वरः ।। ३९ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
कंथडेश्वरदेवस्य इन्द्रेश्वरमथो शृणु ।। 5.2.34.४० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये कंथडेश्वरमाहात्म्यवर्णनंनाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३५



।। श्रीमहादेव उवाच ।। ।।

पंचत्रिंशत्तमं देवर्मिद्रेश्वरमनुत्तमम् ।।

महासिद्धिप्रदं देवि ब्रह्महत्याविनाशनम् ।। १ ।।

आसीत्प्रजापतिस्त्वष्टा तस्य पुत्रः कुशध्वजः ।।

स्वकर्मनिरतो दांतो वासवेन निपातितः ।। २ ।।

तस्य पुत्रं हतं श्रुत्वा त्वष्टा क्रुद्धः प्रजापतिः ।।

अवलुच्य जटामेकामिदं वचनमब्रवीत् ।। ३ ।।

अद्य पश्यंतु मे वीर्यं त्रयो लोकाः सदेवताः ।।

स च पश्यतु दुर्बुद्धिर्ब्रह्महा पाकशासनः ।। ४ ।।

स्वकर्मनिरतो येन मत्सुतो विनिपातितः ।।

इत्युक्त्वा कोपरक्ताक्षो जटामग्नौ जुहाव ताम् ।। ५ ।।

ततो वृत्रः समुत्तस्थौ ज्वालामालासमाकुलः ।।

महाकायो महादंष्ट्रो भिन्नांजनचयप्रभः ।।६।।

इंद्रशत्रुरमेयात्मा त्वष्टुस्तेजोऽभिबृंहितः ।।

अहन्यहनि सोऽवर्द्धदिषुपातं महाबलम् ।।७।।

वधाय चात्मनो दृष्ट्वा वृत्रं शक्रो महासुरम्।।

चिंतयामास सहसा किं कृतं सुकृतं भवेत् ।। ८ ।।

एतस्मिन्नंतरे प्राप्तो वृत्रो बलवतां वरः ।।

ददर्श वासवं तत्र देवैः सार्द्धं वरानने ।। ९ ।।

दैत्यो वृत्रो महाकायश्चक्रे संग्राममुल्बणम् ।।

नानाशस्त्रास्त्रसंक्षोभं भटसंघट्टसंकटम् ।। 5.2.35.१० ।।

छिन्नभिन्नतनुत्राणक्रोधरक्तधरातलम् ।।

लूनाननाब्जप्रकरं करपल्लवदुर्गमम् ।।११।।

कबंधसंघघटनं घटितामरसैनिकम् ।।

विकीर्णाभरणस्फीतस्फुरद्योधांगभूषणम् ।। १२ ।।

कल्लोलरुधिरोद्गारपाटलीकृतदिङ्मुखम् ।।

तस्मिन्रणे महाभीमे देवान्भित्त्वा सगुह्यकान् ।। १३ ।।

वासवं बंधयित्वा तु स्वर्गलोकं जगाम ह ।।
राज्यं चकार निःशंको निस्सपत्नं वरानने ।। १४ ।।
ततस्तु बद्धे देवेंद्रे बृहस्पतिरुदारधीः ।।
आजगाम तमुद्देशं यत्र बद्धः शतक्रतुः ।। १५ ।।
दृष्ट्वा तथाविधं शक्रमाशीर्भिरभिनंद्य च ।।
बंधनान्मोचयित्वा तु प्रोवाचेदं वचस्तदा ।। १६ ।।
अनुकूलो न कालोयं सुरेशस्य तवाधुना ।।
उद्योगः सुमहान्दृष्टः संघातश्च सुरद्विषाम् ।।
दृष्टा हि प्रवराः सर्वे मया तत्र महासुराः ।। १७ ।।
एकैकोपि विजेतुं त्वां शक्तः स्यादिति मे मतिः ।।
न तादृक्संगमः शक्र कदाचित्सुरविद्विषाम् ।।
दृष्टो वापि श्रुतो वापि यादृशो ह्यवलोकितः ।। १८ ।।
बृहस्पतिवचः श्रुत्वा शक्रः संभ्रममागमत ।।
ध्यात्वा मुहूर्त्तं प्रोवाच बृहद्बुद्धे बृहस्पते ।।१९।।
किमत्र प्रतिकर्त्तव्यं वद तावद्बृहस्पते ।।
बहवो बलवंतश्च दानवाः स्वल्पकैर्दिनैः।।
मत्सकाशं समेष्यंति स च वृत्रो महा बलः ।। 5.2.35.२० ।।
इति शक्रवचः श्रुत्वा बृहस्पतिरुवाच तम् ।।
उपायः क्रियतां तूर्णं गच्छ शक्र ममाज्ञया ।। २१ ।।
महाकालवने रम्ये खंडेश्वरस्य दक्षिणे ।।
सर्वसंपत्करं लिंगं विद्यते तत्र वासव ।। २२ ।।
तदाराधय यत्नेन तत्ते कामं प्रदास्यति ।।
बृहस्पतिवचः श्रुत्वा शक्रः शीघ्रतरं गतः ।। २३ ।।
महाकालवने देवि दृष्ट्वा लिंगमनुत्तमम् ।।
स्तुतिं चकार सहसा भक्तिनम्रात्मकंधरः ।। २४ ।।
नमो देवाधिदेवाय शंकराय वृषाय च ।।
काम्याय बहुरूपाय व्यालयज्ञोपवीतिने ।।
वरेण्याय नमो नित्यं नमस्ते सर्वकामद ।। २५ ।।
आद्यः प्रजा सृष्टिकरस्त्वमेव कालः प्रजाः संहरसि त्वमेव ।।
अपांपतिर्भूतपतिस्त्वमेव धनेश्वरस्त्वं दहनस्त्वमेव ।। २६ ।।
चंद्रश्च सूर्यः पवन स्त्वमेव धाता विधाता परमः पुराणः ।।
जलाशयस्त्वं वरुणस्त्वमेव शैलोत्तमस्त्वं भुजगेश्वरश्च ।।

डिंडिर्महाकाल वृषस्त्वमेव विनायको गुह्यवरस्त्वमेव ।। २७ ।।
इतीरितां स्तुतिं श्रुत्वा लिंगेनोक्तः शतक्रतुः ।।
गच्छ शक्र ममादेशान्मत्तेजोबृंहितो रणे ।।
हनिष्यसि न संदेहो वृत्रं रिपुविदारण ।। २८ ।।
तस्य लिंगस्य माहात्म्यादपां फेनेन पार्वति ।।
जघान समरे वृत्रं पश्यतां त्रिदशद्विषाम् ।। २९ ।।
निहत्य दानवान्पश्चाल्लीलया रणकर्कशः ।।
उवाचेन्द्रस्तदा देवान्हतो वृत्रो महारणे ।। 5.2.35.३० ।।
त्रैलोक्याध्यक्षतां प्राप्ता भवंतो मत्पराक्रमात् ।।
एवमुक्तास्तु शक्रेण ते देवा विस्मयान्विताः ।। ३१ ।।
अस्य देवस्य माहात्म्याद्धतो वृत्रो महासुरः ।।
शरीरे च स्थिताः पापा दर्शनात्संक्षयं गताः ।। ३२ ।।
इन्द्रेणाराधितो यस्माद्देवदेवो महेश्वरः ।।
तस्मादिंद्रेश्वरोनाम ख्यातो भुवि भविष्यति ।। ३३ ।।
दर्शनादस्य लिंगस्य पुरीमिंद्रस्य शोभनाम् ।।
पापिनोपि गमिष्यंति सर्वपातकवर्जिताः ।। ३४ ।।
यः पश्यति नरो नित्यं श्रीइन्द्रेश्वरसंज्ञकम् ।।
स मुक्तः पातकैः सर्वैर्दिवि मोदिष्यते चिरम् ।। ३५ ।।
इंद्रेणाराधितं लिंगं भक्त्या यः पूजयिष्यति ।।
स याति वै परं स्थानं दिव्यकल्पचतुष्टयम् ।। ३६ ।।
येन चेंद्रेश्वरो देवो भक्त्या सम्यक्प्रपूजितः ।।
तेन विष्णुप्रभृतयो वयं सर्वे सवासवाः ।।
मुनयो लोकपालाश्च पूजिताः स्युर्न संशयः ।। ३७ ।।
इत्युक्तः स सुरैः शक्रो वैकुण्ठाद्यैः समंततः ।।
तैरेव सहितो देवो जगामाथ त्रिविष्टपम् ।। ३८ ।।
इंद्रेश्वरस्य देवस्य प्रभावः कथितस्त्वयम् ।।
मार्कंडेयेश्वरं देवं शृणु पार्वति सांप्रतम् ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्य इन्द्रेश्वरमाहात्म्यवर्णनंनाम पंचत्रिंशोऽध्यायः ।। ३५ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३६



।। श्रीहर उवाच ।। ।।
मार्कण्डेयेश्वरं विद्धि षट्त्रिंशत्तममीश्वरम् ।।
यस्य दर्शनमात्रेण पुत्रवाञ्जायते नरः ।। १ ।।
ब्रह्मवंशसमुत्पन्नो मृकण्डोनाम तापसः ।।
वेदाध्ययनसंपन्नः स चापुत्रो बभूव ह ।। २ ।।
पुत्रार्थं चिन्तयामाम कथं पुत्रो भवेदिति ।।
अपुत्रस्य कुतो लोक इति वेदेषु पठ्यते ।। ३ ।।
तस्मात्तपः करिष्यामि येन मे तनयो भवेत् ।।
एवं संचित्य बहुधा स जगाम हिमालयम् ।। ४ ।।
चकार वसतिं चापि तपसे भावितात्मवान् ।।
वायुभक्षोंबुभक्षश्च निराहारोर्ध्वपादकः ।। ५ ।।
शाकमूलफलाहारः पर्णाश्येकद्विपर्णभुक् ।।
एवमादीनि चान्यानि तपांसि सुबहून्यपि ।।६।।
चकार स मुनिस्तत्र वर्षाणि द्वादशैव तु ।।
न तुष्टोऽहं तदा देवि तपसा दुष्करेण तु ।।७।।
ततो ज्ञात्वा मतिं तस्य विज्ञप्तोऽहं तदा त्वया ।।
करोत्येव तपः क्रूरं पुत्रहेतोर्मुनिर्महान् ।।८।।
तेजसा दीपयञ्छैलं शोषयन्सलिलाशयान् ।।
तपसा दुष्करेणैव क्षुभिता नाकवासिनः।।९।।
समुद्राः क्षुभिताः सर्वे चन्द्रादित्यौ तथैव च ।।
ऋषयो विस्मृतिं प्राप्ताः कंपेते चापि रोदसी ।।
अकालप्रलयो देव भविष्यति न संशयः ।।5.2.36.१०।।
मुनये तन्मृकण्डाय पुत्रो वै दीयतामिति।।
मया प्रोक्तं वरारोहे पुत्रमिच्छत्ययोनिजम् ।।११।।
अक्षयं सुविशालाक्षि सहस्राक्षमिवापरम् ।।
चन्द्राभं चन्द्रवदनं चन्द्रवद्भुवनप्रियम् ।।१२।।
नीलोत्पलदलश्यामं नीलोत्पलदलेक्षणम् ।।

विशालचारुजघनं चारुकुण्डलमंडितम् ।।
पुत्रमिच्छति देवेशि मृकण्डोऽयं महामुनिः ।। १३ ।।
त्वयाप्युक्तं पुनर्देवि कारुण्याद्भक्तिवत्सले ।।
न ददासि मुनेः पुत्रं तप्यतो विषमं तपः ।। १४ ।।
फलस्य दाता तपसां कथं त्वं गीयसे बुधैः ।।
कस्त्वां नु शरणं गच्छेल्लोकानां सम्भवं भवम् ।। १५ ।।
करोषि सर्वदैत्यानां सर्वदेवाकुलाकुलम् ।।
त्वयाहं सुचिरं देवं सत्कृता करुणाकर ।। १६ ।।
नान्यो मामनुकम्पार्थं प्रयच्छेत्प्रवरं वरम् ।।
स त्वं सर्वजगन्नाथ प्रभुः कर्त्ता प्रशासिता ।। १७ ।।
हेतुः स्वामी महेशानो दयालुर्भक्तवत्सलः ।।
सर्वेश्वर स्तुतोऽभीष्टं किं न विप्राय दीयते ।। १८ ।।
तपसा क्षीणपापस्य ब्रह्मत्वे भावितात्मनः ।।
अस्य पुत्रप्रदानं त्वं कुरु मद्वचनाच्छिव ।। १९ ।।
मया त्वं वर्णिता देवि स्नेहाक्षरपदैः शुभैः ।।
लोलपंकजपत्राक्षि गौरि भूधरगात्रजे ।। 5.2.36.२० ।।
स्कंदमातः कलापूर्णचंद्रबिम्बनिभानने ।।
कृशोदरि विनिःस्पृष्टचामीकरनिभद्युते ।। २१ ।।
त्वयोक्तं प्रकरिष्यामि वाक्यं द्विरदगामिनि ।।
त्वं सिद्धिः साधका साध्यं त्वं क्रिया प्रक्रमाश्रया ।। २२ ।।
त्वं माया श्रीर्द्युतिः श्रीमच्छ्रद्धारुचिरसंततिः ।।
कृत्वा मानं बहुविधं मयैव सह सुन्दरि ।। २३ ।।
भ्राजसे विविधाकारा मोहयित्वाखिलं जगत् ।।
त्वयाप्युक्तं पुनर्देवि क्रियतां तु वचो मम ।।२४।।
मुनयेऽस्मै तपःक्षीणसर्वगात्राय सांप्रतम् ।।
वरः प्रदीयतामस्मै ब्राह्मणाय महेश्वर ।। २५ ।।
मयाप्युक्तं विशालाक्षि श्रूयतां वचनं मम ।।
असौ गच्छतु विप्रेंद्रो महाकालवनोत्तमे ।। २६ ।।
पत्तनेश्वरपूर्वे तु तत्रास्ते लिंगमुत्तमम् ।।
पुत्रप्रदं विशालाक्षि महापातकनाशनम् ।। २७ ।।
मदीयं वचनं श्रुत्वा त्वयाप्युक्तो द्विजोत्तमः ।।
महाकालवनं गच्छ पुत्रार्थमृषि सत्तम ।।

तत्र लिंगं समाराध्य लप्स्यसे पुत्रमुत्तमम् ।। २८ ।।
त्वया संप्रेरितो विप्रस्तथेति कृतनिश्चयः ।।
आशया परया युक्तः पुत्रकामो जगाम सः ।। २९ ।।
तत्र दृष्ट्वा महालिंगं पुत्रदं पापनाशनम् ।।
भक्त्या संसेवयामास तपसा दुष्करेण तु ।। 5.2.36.३० ।।
अथ केनापि कालेन निःसृतोऽहं त्वया सह।।
लिंगमध्याद्वरारोहे स च प्रोक्तो द्विजोत्तमः ।। ३१ ।।
शर्वोऽहमिति जानीहि ब्रूहि किं करवाणि ते ।।
आवां पुरा प्रसन्नौ ते ज्ञातं तव विचेष्टितम् ।।३२।।
यमिच्छसि वरं ब्रह्मंस्तदद्य प्रददामि ते ।।
मया प्रोक्तः प्रसन्नेन मुनिः परमविस्मितः ।। ३३ ।।
प्रह्वः प्राह सुहृदये स हृष्टो मुनि सत्तमः ।।
अपत्यहेतोर्देवेशौ किमलभ्यं भवेन्मम ।। ३४ ।।
मया प्रोक्तस्तदा देवि मृकण्डो मुनिसत्तमः ।।
अयोनिजस्ते तनयो मानुषो वै भवि ष्यति ।।
ऐश्वर्यज्ञानसंपन्नो दीर्घायुः सर्ववित्सुधीः ।। ३५ ।।
एतस्मिन्नंतरे देवि प्रादुर्भूतो महातपाः ।।
पुत्रः परमधर्मात्मा मार्कण्डेयो महामुनिः ।। ।। ३६ ।।
स जातमात्रो धर्मात्मा तत्रैव तपसि स्थितः ।।
देवमाराधयामास स तुष्टोऽथ वरं ददौ ।। ३७ ।।
त्वयाहं जातमात्रेण तपसा तोषितो यतः ।।
तस्मात्ख्यातिं गमिष्यामि त्वन्नाम्ना द्विजसत्तम ।। ३८ ।।
ये मां पश्यंति विप्रेंद्र भक्त्या परमया युताः ।।
प्राप्नुवंति गतिं नित्यं ते सदानंद दायिनीम् ।। ३९ ।।
प्रसंगाद्ये गमिष्यंति ते सदा दुःखवर्जिताः ।।
देवदेवं समाराध्य मोदिष्यंति हि ते नराः ।। 5.2.36.४० ।।
त्र्यक्षा गणेश्वराः सिद्धाः सिद्धगंधर्वसेविताः ।।
ते भविष्यंति सततं मम भक्ताश्च ये नराः ।। ४१ ।।
ये मां संपूजयिष्यंति हृद्यैः पुष्पैः सुगंधिभिः ।।
दीर्घायुषो भविष्यंति सदा दुःखविवर्जिताः ।। ४२ ।।
इत्युक्ते तेन लिंगेन मार्कण्डेयो महातपाः ।।
तपश्चचार तत्रैव महाकालवने स्थितः ।। ४३ ।।

प्रभावः कथितो देवि मार्कंडेयेश्वरस्य च ।।
शिवेश्वरस्य देवस्य माहात्म्यं शृणु सांप्रतम् ।। ४४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये मार्कंडेयेश्वरमाहात्म्यवर्णनंनाम षट्त्रिशोऽध्यायः ।। ३६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३७

https://sa.wikisource.org/s/f6w
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीहर उवाच ।। ।।
सप्तत्रिंशत्तमं विद्धि शिवेश्वरमनंतकम् ।।
यस्य दर्शनमात्रेण जायंते सर्वसंपदः ।। १ ।।
राजा रिपुंजयोनाम ब्रह्मकल्पे पुराभवत् ।।
महाकालवने रम्ये प्रजापालनतत्परः ।। २ ।।
देवपूजां व्रतं दानं ध्यानं स्वाध्यायसत्क्रियाम् ।।
प्रजापालनकं कृत्वा न स जानाति किंचन ।। ३ ।।
स प्रजाः पालयामास पुत्रवत्परिपालिताः ।।
प्रजास्ताः सुखसंवृद्धा जरामृत्युविवर्जिताः ।। ४ ।।
पुत्रिणो धनधान्याढ्याः सर्वकामसमन्विताः ।।
तस्यैव तेजसा व्याप्तं महाकालपुरं प्रिये ।। ५ ।।
एतस्मिन्नंतरे पृथ्वीं तस्मिञ्छासति पार्वति ।।
महाकालवनं देवि स्वपुरं चिह्नितं मया ।।
विना चोज्जयिनीं गंतुं न रतिं प्राप कुत्रचित् ।। ६ ।।
तदा मया गणेशस्तु शिवसंज्ञो गणाग्रणीः ।।
चिंतितस्तत्क्षणात्प्राप्तः किं करोमीत्युवाच ह ।। ७ ।।
मयाप्युक्तो गणेशो हि गच्छ पुत्र मम प्रियम् ।।
महाकालपुरं व्याप्तं राजा रिपुञ्जयेन हि ।। ८ ।।
इत्युक्तः स मया देवि तथेत्युक्त्वा कृतांजलिः ।।
गतोऽसौ मानुषे लोके ममाज्ञाहर्षिताननः ।। ९।।
गते शिवगणे देवि संतुष्टोऽहं शुचिस्मिते ।।
युक्तिज्ञानवृतो दक्षः प्रभोर्भृत्यो हि दुर्लभः ।। 5.2.37.१० ।।
ततः स भिक्षु रूपेण बह्वोषधिपरिग्रहः ।।
गृहीत्वा दुंदुभिं स्कंधे वचनं चेदमब्रवीत् ।। ११ ।।
कश्च भूतविषग्रस्तो नानादोषैः समाश्रितः ।।
कस्य को व्याधिरत्युग्रो यमहं प्रशमं नये ।। १२ ।।
कोऽपुत्रः पुत्रवानस्तु मन्मंत्रबलमाश्रितः ।।

वैद्योऽस्मि सर्वयुक्तिज्ञः सर्वकामप्रदायकः ।। १३ ।।
तस्य वाक्यं समाकर्ण्य कौतूहलसमन्वितः ।।
सवृद्धबालनारीको जनस्तमभिजग्मिवान् ।। १४ ।।
तेषां स नाशयामास व्याधिं दुर्जयमप्यति ।।
ते च तस्मै सुमहतीं पूजां चक्रुः सुहर्षिताः ।।
हेमरत्नांबरधनैर्धान्यग्रामपुरादिभिः ।। १५ ।।
एवं स न्यवसत्तत्र वर्षाणि च चतुर्द्दश ।।
नृपतेरंतरप्रेक्षी न चांतर मवाप सः ।। १६ ।।
अहोऽतिदुष्करो राजा अहो लोकपरायणः ।।
अहो तेजोनिधिर्वीरो दुर्जयोऽसौ महामतिः ।। १७ ।।
एवं स चिंतयंस्तत्र भिक्षु रूपी शिवो गणः ।।
जीर्णोद्यानलताजालगहने संवृतः स्थितः ।। १८ ।।
अत्रांतरे तु नृपतेस्तस्य लोकव्रतस्य तु ।।
महिषी निर्जरा राज्ञः प्राणेभ्योपि गरीयसी ।। १९ ।।
रूपेणाप्रतिमा लोके सा चापुत्रा सुतार्थिनी ।।
सपत्नीबहुला देवी श्रुत्वा भिक्षुं समाश्रिता।। 5.2.37.२० ।।
सर्वकामप्रदं ज्ञात्वा नाग राणां सकौतुकम्।।
स्वां सखीं प्रेषयामास सुनंदांनाम भामिनी ।। २१ ।।
भिक्षोरायतने गुप्तमंतःपुरमतंद्रिता ।।
तया चासादितो भिक्षुर्विचिंत्य नगरं तदा ।।
उवाच चिंतापरमं भिक्षुं भिक्षासमन्वितम् ।। २२ ।।
प्रणम्य प्रांजलिर्भूत्वा कार्यार्थं विगतव्यथा ।।
भगवन्महिषी राज्ञः प्राणेभ्योऽपि गरीयसी ।।
वंध्या पुत्रार्थिनी देवी गुप्तं त्वां द्रष्टुमिच्छति ।। २३ ।।
भवान्कृपाकरः प्रायः प्रजानामीहितप्रदः ।।
एवं श्रुत्वा शिवगणो लब्ध्वा रन्ध्र मुवाच ह ।। २४ ।।
।। भिक्षुरुवाच ।। ।।
भद्रे केयं तव मतिर्विपरीतप्रलापिनी ।।
अविज्ञातो नरपतेर्गृहमेहीति भाषसे ।।
अविज्ञातः पुरे दृष्टः साहसी पुरुषो भवेत् ।। २५ ।।
एवं मत्वा व्रज क्षिप्रं स्वमेवांतःपुरं शुभे ।।
नाहं तत्रागमिष्यामि यावन्न नृपतेर्वचः ।। २६ ।।

सा तु तस्य वचः श्रुत्वा भिक्षोः क्षुभितमानसा ।।
जगामान्तःपुरं तूर्णं देव्यै तच्च न्यवेदयत् ।। २७ ।।
सखीवचस्तु सा श्रुत्वा देवी दीना उवाच ताम् ।।
सुनन्दे क उपायोस्ति राजा येन प्रवर्त्तते ।।
भिक्षोरानयने क्षिप्रं यावन्नासौ व्रजेत्क्वचित् ।। २८ ।।
उवाच सा तां युक्त्यैव सुनंदा युक्तभाषिणी ।।
त्वं तस्य वल्लभा राज्ञः प्राणेभ्योपि गरीयसी ।। २९ ।।
तस्मादस्वस्थचित्तत्वं राज्ञः स्वं संप्रदर्शय ।।
हेतुना तेन राजा च वाक्यं तव करिष्यति ।। 5.2.37.३० ।।
एतस्मिन्नेव काले तु देव्या दर्शनलालसः ।।
जगामांतःपुरं राजा प्रियां दीनां ददर्श ह ।।
तामपृच्छत्ततो राजा स्नेहार्द्रीकृतमानसः ।। ३१ ।। ।।
।। राजोवाच ।। ।।
किमिदं देवि ते रूपं विमनस्केव भाषसे ।।
भग्नासि केन दुःखेन कस्यापकृतमीदृशम् ।। ३२ ।।
नृपस्य वचनं श्रुत्वा राज्ञी वचनमब्रवीत् ।।
न पुत्रा नृप मे संति तेन मे नास्ति निर्वृतिः ।। ३३ ।।
क्रीडनं पीडनायैव तेषां ये पुत्रवर्जिताः ।।
अपुत्रा जगतो दीना दुःखिताः पुत्रवर्जिताः ।।
अपुत्रे च गतिर्नास्ति सुतापुत्रविवर्जिते ।। ३४ ।।
सुखिनस्ते जना लोके ये बालं पांसुभूषितम् ।।
परिष्वजंति स्वसुतमस्फुटाक्षरभाषकम् ।। ३५ ।।
अनेन कारणेनास्मि निर्वेदं परमं गता ।।
उपायो हि मया दृष्टः पुत्रार्थे मम सांप्रतम् ।। ३६ ।।
इह भिक्षुः समायातो देवरूपी सनातनः ।।
तस्य चाव्याहता शक्तिः श्रूयते सर्ववस्तुषु ।। ३७ ।।
सस्त्रीबालो जनश्चात्र शरणं यस्य गच्छति ।।
तस्य भिक्षोः प्रसादेन सुतवत्यो वयं नृप ।।
भविष्यामोऽत्र संदेहो न मे मनसि वर्त्तते ।। ३८ ।।
तस्याः स वचनं श्रुत्वा जीर्णोद्यानं जगाम ह ।।
प्रियया सहितो राजा तं च भिक्षुं ददर्श ह ।। ३९ ।।
दृष्टमात्रो नृपतिना भिक्षुर्लिंगत्वमागतः ।।

दृष्ट्वा सुमहदाश्चर्यं भक्तिनम्रो महीपतिः ।।
पूजयामास विधिवत्तल्लिंगं भिक्षु रूपकम् ।। 5.2.37.४० ।।
अपुत्रोऽस्मीत्युवाचेदं धन्येयं महिषी मम ।।
देहि मे तनयं देव शिवो भवान्महेश्वरः ।। ४१ ।।
इत्युक्तो राजसिंहेन भिक्षुर्लिंगा कृतिस्तदा ।।
प्रत्युवाच महीपालं पुत्रस्ते भविता नृप ।। ४२ ।।
ततःप्रभृति राजासौ सकलत्रो महामतिः ।।
सर्वभावेन तं देवं जगाम शरणं मुदा ।। ४३ ।।
देवदेवस्य माहात्म्यात्पुत्रो जातो महाबलः ।।
धर्मात्मा च यशस्वी च सार्वभौमो गुणाधिकः ।। ४४ ।।
अथाहं मन्दराद्देवि कौतु- कात्तु समागतः ।।
लिंगाकारं गणं दृष्ट्वा राजानं सेवकं तथा ।।४५।।
योगैश्वर्येण च मया कृतं वै पुरमात्मनः ।।
नानारत्नप्रभोद्द्योतं नानासिद्धिनि षेवितम् ।।
तच्छिवं शाश्वतं स्थानं दत्तं देवि तदा मया ।। ४६ ।।
मार्कंडेयेश्वराद्देवादुत्तरे वरवर्णिनि ।।
तदाप्रभृति देवोऽसौ शिवेश्वर इति स्मृतः ।।. ।। ४७ ।।
येऽर्चयिष्यन्ति सततं शिवेश्वरमनुत्तमम्।।
निर्धूतसर्वपापास्ते भविष्यंति गणोत्तमाः ।। ४८ ।।
विदित्वार्भगुरुं लोकं ये द्रक्ष्यंति शिवेश्व रम् ।।
अन्तकाले प्रदास्यामि तेषां ज्ञानमनुत्तमम् ।।४९।।
मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् ।।
अपुनर्भवहेतुत्वात्संसेव्योऽसौ शिवेश्वरः ।। ।। 5.2.37.५० ।।
सर्वावस्थोऽपि यो मर्त्यः संश्रयेत्तं शिवेश्वरम् ।।
स तां गतिमवाप्नोति यज्ञैर्दानैर्हि या गतिः ।। ५१ ।।
आख्यानं प्रयतो मर्त्यो य इदं श्रावयेच्छुचिः ।।
पठेद्वा वाचयेद्वापि स मुच्येत्सर्वकिल्विषैः ।। ५२ ।।
एष ते कथिता देवि प्रभावः पापनाशनः ।।
शिवेश्वरस्य देवस्य कुसुमेश मतः शृणु ।। ५३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये शिवेश्वरमाहात्म्यवर्णनंनाम सप्तत्रिंशोऽध्यायः ।।३७।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३८

https://sa.wikisource.org/s/f6r
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।
अष्टात्रिंशत्तमं विद्धि कुसुमेश्वरसंज्ञकम् ।।
देवं स्वर्गप्रदं देवि महापातकना शनम् ।।१।।
पुरा वैवस्वते कल्पे प्राप्ते वाराहसंज्ञके ।।
प्रादुर्भूते विशालाक्षि कैलासादहमागतः ।। २।।
महाकालवने रम्ये रममाणस्य पार्वति ।।
त्वया सार्द्धं ममाक्षैश्च प्रादुरासीन्महास्वनः ।। ३ ।।
पृष्टोऽहं च तदा श्रुत्वा शब्दं चातीव दुःसहम् ।।
शब्दोत्पत्तिर्मया देवि कथिता सा त्वदग्रतः ।।४।।
एते गणेशाः क्रीडंति मध्ये वै वीरको गणः ।।
कुसुमैर्भूषितोऽत्यर्थं ममातीव सुवल्लभः ।।५।।
कुसुमैर्हन्यतेऽप्यर्थं पूज्यते कुसुमोत्करैः ।।
स एव वीरको देवि सदा मे हर्षदायकः ।।६।।
नानाश्चर्यगुणाधारो गणेश्वरशतार्चितः ।।
मदीयं वचनं श्रुत्वा त्वयाप्युक्तं वरानने ।।७।।
न दृश्यते विना पुण्यैः पुत्रस्याननपंकजम् ।।
ईदृशस्य सुतस्यापि ममोत्कण्ठा महेश्वर ।। ८ ।।
कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ।।
मया तव वचः श्रुत्वा हसित्वा च पुनःपुनः ।।
प्रोक्तं पार्वति पुत्रोऽयं प्रदत्तो वीरकोऽधुना ।। ९ ।।
एष एव सुतस्तेस्तु नयनानन्ददायकः ।।
त्वया मात्रा कृतार्थस्तु वीरकः कुसुमार्चितः ।। 5.2.38.१० ।।
मदीयं वचनं श्रुत्वा प्रेषिता विजया त्वया ।।
दत्तो हरेण मे पुत्रो विजये शीघ्रमानय ।। ११ ।।
विजयोवाच गणपं गणमध्ये च वर्त्तिनम् ।।
एहि वीरक चापल्यात्त्वया देवः प्रकोपितः ।।
किमुन्मत्तवदत्यर्थं नृत्यरागेण मोहितः ।। १२ ।।

इत्युक्तो भयसंत्रस्तः कुसुमैर्भूषितस्तदा ।।
त्वत्समीपं समायातो विजयानुगतः शनैः ।। १३ ।।
भूषितं कुसुमैर्दृष्ट्वा भयत्रस्तं च वीरकम् ।।
त्वया चाकारितो देवि गिरा मधुरवर्णया ।।१४।।
एह्येहि जातोऽसि मे पुत्रकस्त्वं देवेन दत्तोऽधुना वीरकोसि ।।
उक्तवत्येवमंके निधायाथ तं पर्यचुम्बः कपोले कलंवादिनम् ।। १५ ।।
मूर्धन्युपाघ्राय सम्मार्ज्य गात्राणि सा भूषयामास दिव्यैः स्वयं भूषणैः ।।
किंकिणीमेखलानूपुरैः सन्मणीनिष्ककेयूरहारोत्करैः सद्गुणैः ।। १६ ।।
कोमलैः पल्लवैश्चित्रितैश्चारुभिर्दिव्य मन्त्रोद्भवैस्तस्य शुभ्रैस्ततः ।।
भूतिभिश्चाकरोर्मिश्रसिद्धार्थकैरंगरक्षाविधींस्तस्यतुष्टा सती ।। १७ ।।
एवमाधाय चोवक्थ कृत्वा स्रजं मूर्ध्नि गोरोचनापत्रभंगोज्वलैः ।।
वत्स गच्छाधुना क्रीड सार्द्धं गणैरप्रमत्तो यथा बालचर्यां शनैः ।। १८ ।।
सोऽपि सिद्ध्याकुले गण्डशैले मिलद्रत्नजाले वृहच्छा लतालाकुले ।।
क्षणं फुल्लमालातमालालिमाले क्षणं वृक्षमूले विलोलालिमाले ।। १९ ।।
क्षणं स्वल्पपंके जले पंकजाले क्षणं वृक्षखण्डे शुभे निष्कलंके ।।
परिक्रीडते बालको वै विहारी गणेशाधिपो देवतानन्दकारी ।। 5.2.38.२० ।।
एवं विक्रीडतस्तस्य वीरकस्य गणस्य च ।।
संध्या तमो मयी प्राप्ता विज्ञप्तोऽहं त्वया प्रिये ।।२१।।
ऐश्वर्यं दीयतामस्य मम पुत्रस्य शंकर ।।
शरीरार्द्धं गणेशत्वं लोकपालत्वमग्रतः ।। २२ ।।
लिंगत्वमक्षयत्वं च स्थानं दिव्यं सुदुर्ल्लभम् ।।
वंद्यमानं यथा देव सिद्धगन्धर्वकिंनरैः ।।
ब्रह्मेन्द्रवरुणादित्यलोकपालेश्वरेश्वरैः ।। २३ ।।
एतैरेव गणैः सार्द्धं स्तूय मानं महात्मभिः ।।
अलंकृतो मया यस्मात्कुसुमैर्विविधैः शुभैः ।। २४ ।।
कुसुमेश्वरसंज्ञस्तु तस्मात्ख्यातो भवत्विति ।।
मयाप्युक्तं विशालाक्षि वीरकं दयितं मम ।। २५ ।।
मत्प्रभावसमं दिव्यं सेवितं गणपैः सदा ।।
शृणु गन्धर्वगीतानां माधुर्यममृतोपमम् ।। २६ ।।
पश्य किन्नरनारीणां गायन्तीनां मनोरमम् ।।
पश्याप्सरःसमूहस्यनृत्यमेतन्निरन्तरम् ।। २७ ।।
विद्याधरैः परिवृतः कुसुमेशो वरानने ।।

विशेषतो मया देवि प्रथमं प्रमथे श्वरः ।।
कुसुमेश्वरतां नीतो यदा कुसुममंडितः ।। २८ ।।
स्थानं दत्तं विशालाक्षि शिवलिंगस्य चोत्तरे ।।
वरो दत्तो बहुमतो दुष्प्राप्यस्त्रिदशैरपि ।। २९ ।।
ये त्वां द्रक्ष्यंति गणप कुसुमेश्वरसंज्ञकम् ।।
न तेषां जायते पापं पद्मपत्रे यथा जलम् ।। 5.2.38.३० ।।
कुसुमैरर्चयिष्यंति ये नराः कुसुमेश्वरम् ।।
मत्स्थानं ते समासाद्य मोदिष्यंति गतव्यथाः ।। ३१ ।।
योऽप्येकं दिवसं मर्त्यस्त्वां पश्यति समाहितः ।।
स मुक्तः पातकैः सर्वैर्मम लोकं गमिष्यति ।। ३२ ।।
यः पूजयति भावेन कुसुमैः कुसुमेश्वरम् ।।
स प्राप्स्यति परं स्थानं पुनरावृत्तिदुर्लभम् ।। ३३ ।।
एवमादिवरैः पुष्टः कृतोयं कुसु मेश्वरः ।।
कृतकृत्यो गणो देवि लिंगेनेश्वरतां गतः ।। ३४ ।।
कुसुमेश्वरदेवस्य प्रभावः कथितस्त्वयम् ।।
अक्रूरेशस्य देवस्य श्रूयतां तदनन्तरम् ।। ३५ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे कुसुमेश्वरमाहात्म्यवर्णनंनामाष्टात्रिंशोऽध्यायः ।। ३८ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ३९



।। हर उवाच ।। ।।

अक्रूरेश्वरमेकोनचत्वारिंशत्तमं शृणु ।।

यस्य दर्शनमात्रेण सुबुद्धिर्जायते नृणाम् ।। १ ।।

पुरा त्वयैव कल्पादौ परया शक्तिरूपया ।।

कृतं कृत्स्नं वरारोहे त्रैलोक्यं सचराचरम् ।। २ ।।

ततस्त्वं संस्तुता देवैः सकिंनरमहोरगैः ।।

प्रदक्षिणां प्रकुर्वंति गणा नानाविधास्तु ते ।। ३ ।।

नमस्कारं प्रकुर्वंति स्तोत्रं कुर्वंति चापरे ।।

न करोति नमस्कारमेको भृंगिरिटिस्तदा ।। ४ ।।

क्रूरां बुद्धिं समासाद्य गर्वेणतीव गर्वितः ।। ५ ।।

एको देवो महादेवः स्त्रिया किमनया मम ।।

यदा नायाति ते पार्श्वं तदा प्रोक्तस्त्वया गतः ।। ६ ।।

कस्मान्न कुरुषे पूजां प्रदक्षिणमथो स्तुतिम् ।।

मद्भक्तो मदधीनोऽसि मम पुत्रो मया कृतः ।।

इत्थंभूतगणेश त्वं किं वै लौल्येन वर्त्तसे ।। ७ ।।

इति भृंगिरिटिः श्रुत्वा क्रुद्धस्त्वामाह गर्वितः ।।

नाहं पार्वति ते पुत्रः पुत्रोऽहं शंकरस्य तु ।। ८ ।।

एष एव च मे माता एष एव च मे पिता ।।

एवं रात्रिदिनं यामि शरणं परमेष्ठिनम् ।।९।।

त्वमप्यस्यैव शरणं ननु पार्वति संस्थिता।।

यदि च त्वामहं वंदे तद्वंदे सकलान्गणान् ।।5.2.39.१०।।

इति भृंगिरिटेः श्रुत्वा वाक्यं कुपितया त्वया ।।

तस्योक्तं प्रमथेशस्य भीरु भृंगिरिटेरिदम् ।।११।।

सुतो भूत्वा भवान्कस्माददाक्षिण्यं ब्रवीषि माम् ।।

त्वङ्मांसशोणितांत्रं च मातृकं तनयस्य तु ।। १२ ।।

नखदंतास्थिसंघातः शिश्नं वाक्च शिरस्तथा ।।

तथैव शुक्रं गणप पैतृकं तु शरीरकम् ।। १३ ।।

इति भृंगिरिटिः श्रुत्वा सद्यो योगबलेन तु ।।
मांसादि त्यक्तवान्सर्वं मातृकं भागमेव हि ।। १४ ।।
ततः प्रभृति वामोरु नखदंतास्थिनासिकः ।।
स च क्रूरां मतिं कृत्वा क्रोधसंरक्तलोचनः।। ।। १५ ।।
त्वां परित्यज्य दुःखार्त्त आजगाम ममांतिकम् ।।
अथ त्वया तदा शप्तो गणो भृंगिरिटिः प्रिये ।। १६ ।।
क्रूरा बुद्धिः कृता यस्मात्त्वया कुमतिना भृशम् ।।
तस्मात्त्वं मानुषे लोके गमिष्यसि न संशयः ।। १७ ।।
इत्युक्तस्तु त्वया देवि गणो भृंगिरिटिस्तथा ।।
पपात मानुषं लोकं पुण्यांते सुकृती यथा ।। १८ ।।
स गत्वा पुष्करद्वीपं तपसे भावितात्मवान् ।।
तत्रैकपादूर्द्ध्वभुजो दशपद्मान्यवस्थितः ।।
दग्धीभूतं च तपसा जगद्वै दुष्करेण तु ।। १९ ।।
ततो ब्रह्मा च विष्णुश्च शक्रश्च त्रिदशैः सह ।।
वयं च चारुजघने तत्समीपं समागतः ।। 5.2.39.२० ।।
उपगम्य ततस्तस्य कथितं पुरतो मया ।।
अलं क्रूरेण तपसा लोकस्योत्सादनेन वै ।। २१ ।।
त्रैलोक्यमपि निःसंज्ञं जातमेवं स्थिते त्वयि ।।
संहरस्व तपो घोरं लोकसंतापनं महत्।।२२।।
प्रार्थ्यतां पार्वती पुत्र सा दास्यति वरं च ते।।
अस्याः प्रसादान्मुक्तिस्ते शापाच्चैव भविष्यति ।।
एवमुक्तस्तदा तेन प्रार्थिता त्वं महेश्वरि ।।
गणेन भृंगिरिटिना भक्तिनम्रेण सादरात् ।। २४ ।।
त्वया प्रोक्तं विशालाक्षि पुत्र गच्छ ममाज्ञया ।।
महाकालवने रम्ये तत्राऽक्रूरो भविष्यसि ।। २५ ।।
पुनः प्राप्स्यसि कैलासं सिद्धगंधर्वसेवितम्।।
अंकपादाग्रतो लिंगं सप्तकल्पानुगं महत् ।।
यस्य दर्शनमात्रेण शुभा बुद्धिः प्रजायते ।। २६ ।।
कृतघ्ना नास्तिकाः क्रूरा ये च विश्वासघातकाः ।।
महापातकिनो ये च ये च शापवशं गताः ।।
दर्शनात्तस्य लिंगस्य तेऽपि स्वर्ग भुजो नराः ।। २७ ।।
क्रूरां बुद्धिं समासाद्य कंसं हत्वा च केशिहा ।।

बलदेवेन सहितस्त्यक्त्वा तां मथुरां पुरीम् ।। २८ ।।
महाकालवनं गत्वा तोष यित्वा महेश्वरम्।।
अक्रूरत्वं च संप्राप्तं कीर्त्तिर्लब्धा च शाश्वती ।। २९ ।।
त्वदीयं वचनं श्रुत्वा गणो भृंगिरिटिस्तदा ।।
तथेति प्रत्ययी जातो महा कालवनं गतः ।।
देवमाराधयामास तपसा दुष्करेण तु ।। 5.2.39.३० ।।
एतस्मिन्नंतरे देवि लिंगमध्यात्त्वमुत्थिता ।।
अर्द्धांगं मामकं कृत्वा स्वकीयांगमथा र्द्धतः ।।
फणींद्रबद्धजूटार्द्धमर्द्धधमिल्लभूषितम्।। ३१ ।।
पत्रवल्लीविचित्रार्धमर्द्धचंद्रविराजितम् ।।
मुक्ताहारनिबद्धार्द्धमर्द्धं सर्पैश्च वेष्टितम् ।। ३२ ।।
ततो भृंगिरिटिर्देवि दृष्ट्वा तन्महदद्भुतम् ।।
चिंतयामास हृदये मयाऽज्ञानादनुष्ठितम् ।। ३३ ।।
उमा च शंकरश्चैव देहमेकं सनातनम् ।।
एका मूर्त्तिरनिर्देश्या द्विधा भेदेन दृश्यते ।। ३४ ।।
एवं चिंतयतस्तस्य भक्तिनम्रस्य पार्व्वति ।।
प्रोक्तं त्वया प्रसन्नाहं वरं वरय पुत्रक ।। ३५ ।।
तेनोक्तं यदि तुष्टासि मातर्मम महेश्वरि ।।
अस्य लिंगस्य माहात्म्यात्क्रूरा बुद्धिर्गता मम ।। ३६ ।।
अक्रूरेश्वरनामायं देवः ख्यातो भवत्विति ।।
त्वं देवि सर्वभावानामेका कारणमुच्यते ।।३७।।
त्वं मूर्ता पुण्यनिचया त्वं गतिः पुण्यसेविनाम्।।
पिता माता सुहृद्बन्धुस्त्वमेका कारणं परम् ।। ३८ ।।
कुरु पुण्यतमं स्थानं ब्रह्महत्यादिनाशनम् ।।
भुक्तिदं मुक्तिदं चैव वांछितार्थप्रदायकम्।। ३९ ।।
तथेति च त्वया प्रोक्तं गिरा मधुरया तदा ।।
यत्ते प्रियतमं वत्स तत्पूर्वं प्रकरोम्यहम् ।। 5.2.39.४० ।।
न मेऽस्ति दुष्करं पुत्र त्वत्कृते कनकप्रभ ।।
अस्मिन्स्थाने तु ये देवमकूरेश्वरसंज्ञकम् ।।
प्रसंगादपि पश्यंति अपि पापरता नराः ।।
तेऽप्यवश्यं भविष्यंति त्वत्समा नियतं गणाः ।।४१।।
भक्त्या स्तोष्यंति ये नाम लिंगस्यास्य च मानवाः ।।

मानसैः पातकैर्मुक्ता यास्यंति स्वर्गमक्षयम् ।।४२।।
स्नात्वा तु विधिवत्पूजां यः करिष्यति मानवः।।
स मुक्तः पातकैः सर्वैः प्राप्स्यते रविमंडलम् ।।४३।।
आयुरारोग्यमैश्वर्यं काममत्र हि वांछितम् ।।
गोसहस्रफलं चात्र स्पृष्ट्वा प्राप्स्यति मानवः ।।४४।।
स्नात्वा मंदाकिनीकुंडे योऽकूरेश्वरमीश्वरम् ।।
पूजयेद्विविधैः पुष्पैर्महापापहतोपि वा।।४५।।
विमानं दिव्यमारूढो यावत्कल्पचतुष्टयम् ।।
गंधर्वैर्गीयमानस्तु सोऽपि स्वर्गं गमिष्यति।। ४६ ।।
इत्युक्तः स गणो देवि मत्समीपमुपागतः ।।
शापान्मुक्तस्त्वया सार्धं विस्मृता किं वरानने ।। ४७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
अक्रूरेश्वरदेवस्य शृणु कुंडेश्वरं परम् ।। ४८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्येऽक्रूरेश्वरमाहात्म्यवर्णनंनामै कोनचत्वारिंशोऽध्यायः ।। ३९ ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४०



।। ईश्वर उवाच ।। ।।

चत्वारिंशत्तमं विद्धि कुंडेश्वरमतः शृणु ।।

यस्य दर्शनमात्रेण लभ्यते सद्गतिः परा ।। १ ।।

विज्ञप्तोऽहं त्वया देवि मंदरे चारुकंदरे ।।

वीरकं द्रष्टुमिच्छामि क्व गतो मम पुत्रकः ।। २ ।।

मया प्रोक्तं विशालाक्षि महाकालवनो त्तमे ।।

जलमध्ये स्थितस्तेपे तपः परमदारुणम्।।३।।

मुनिभिः सहितो धीमान्भ्राजमानोंऽशुमानिव ।।

गच्छामस्तत्र तं द्रष्टुं गणैः सार्द्धं वरानने ।। ।। ४ ।।

मदीयं वचनं श्रुत्वा त्वयाहं प्रेरितस्तदा ।।

उत्तिष्ठ शम्भो गच्छामो वृषमारुह सत्वरम् ।। ५ ।।

सप्रस्नवौ स्तनौ जातौ सद्यः संस्मृत्य वीरकम् ।।

मया स्मृतो वृषो देवि धर्मरूपी सनातनः ।। ६ ।।

मदीयं चिंतितं ज्ञात्वा ममपार्श्वमुपागतः ।।

आरूढोऽहं त्वया सार्द्धं तस्मिन्नेव वृषे तदा ।। ७ ।।

प्रस्थितस्तत्क्षणाच्छीघ्रं गणैर्नानाविधैः सह ।।

वेगात्प्रयातो वृषभस्कंधालंबितया त्वया ।। ८ ।।

रणद्वलयबाहुभ्यां गाढमालिंगितो ह्यहम्।।

त्वं भीता च तदा जाता यदातीव प्रणोदितः ।। ९ ।।

वृषो मया विशालाक्षि स कृष्टो गणपैस्तदा ।।

कृष्टं च सत्वरं दृष्ट्वा प्रोक्तं च भीतया तदा ।। 5.2.40.१० ।।

श्रांतास्मि सांप्रतं देव वेगेनानेन भीषिता ।।

तद्विश्रमितुमिच्छामि भूधरस्य तटे विभो ।। ११ ।।

क्षणं पद्भ्यां गमिष्यामि विषमोयं गिरिर्महान्।।

त्वदीयं वचनं श्रुत्वा बाढमुक्तं प्रिये मया ।। १२ ।।

मुहूर्तं चारुजघने शैलपादमुपाश्रिता ।।

कुरु श्रमापनयनं यावद्वेगात्प्रयाम्यहम् ।। ।। १३ ।।

पंथान त्वत्सुखं यत्र तं वयं मृगयावहे ।।
एष कुण्डो गणाध्यक्षस्त्वत्समीपे वसिष्यति ।।
त्वदाज्ञावशवर्त्ती च किंकरः स्थापितो मया ।। ।। १४ ।।
एवमुक्त्वा ततो देवि संस्थाप्य गणरक्षकम् ।।
आरूढोऽहं गिरेः प्रांतमुदयाद्रिं रविर्यथा ।। १५ ।।
ततोऽवलोकितोऽत्यर्थं रमणीयो महा गिरिः ।।
इदं रम्यमिदं रम्यमित्यस्मिन्वरपर्वते ।। १६ ।।
पश्यतो मम शैलेंद्रं गताः संवत्सरा दश ।।
त्वयाथ चिंतितं देवि क्व गतस्त्रिपुरांतकः।।१७।।
नूनं न मदनातप्तां वेत्ति मां रतिवर्जिताम् ।।
मां विहाय महादेवो निर्विशंकः क्व वर्त्तते ।। १८ ।।
हरस्य क्वापि यातस्य वैरं संस्मृत्य चित्तजः ।।
बाधते मामनंगोपि चापरोपितमार्गणः ।।
विलोकयंतीं हा दृष्ट्वा विलपंतीं पुनः पुनः ।। १९ ।।
ततः कुण्डो गणाध्यक्षो ज्ञात्वा भावं त्वदीयकम् ।।
उत्कृष्टेन स्वरेणोक्तं मा देवि विमना भव ।। 5.2.40.२० ।।
आयात एष ते भर्त्ता मा चेतः कलुषं कुरु ।।
एतच्छ्रुत्वा वचस्तस्य कुण्डस्य कमलानने ।। २१ ।।
दुःखार्त्तया त्वया प्रोक्तः कुण्ड वेद्मि न शंकरम् ।।
क्व गतः किं च कुरुते कालं दीर्घमिमं शिवः ।।
दर्शयस्व महादेवमित्युक्तोऽ सौ पुनःपुनः ।। २२ ।।
यदा न दर्शितस्तेन कुण्डेनाहं वरानने ।।
तदा शप्तस्त्वया देवि क्रुद्धया गणरक्षकः ।। २३ ।।
गच्छ त्वं मानुषं लोकं यस्मान्न कथितो हरः ।।
एतस्मिन्नंतरे देवि प्राप्तोऽहं त्वत्समीपतः ।। २४ ।।
पृष्टश्चाहं त्वया देवि विहाय क्व गतोऽसि माम् ।।
दुर्गमे पर्वते शून्ये तस्मात्त्य क्ष्यामि जीवितम् ।। २५ ।।
गत्वाग्रे भूधरस्यास्य किं कृतं च त्वया विभो ।।
मया तव वचः श्रुत्वा कथितं सर्वमेव तत् ।। २६ ।।
दुराधर्षतरः शैलः समंताद्दुरतिक्रमः ।।
त्वत्प्रियार्थं महाभागे मया मार्गोऽवलोकितः ।। २७ ।।
येन मार्गेण विश्रब्धं गमिष्यामः सुमध्यमे ।।

अयं कुण्डो गणो देवि विषण्णो व्याकुलः कृतः ।। २८ ।।
त्वयाप्युक्तं महादेव कुण्डः शप्तो मया गणः ।
ममाज्ञा न कृता यस्माद्विफलं न वचो मम ।।
तस्माद्यातु ममादेशा न्महाकालवनं शुभम् ।। २९ ।।
भैरवं रूपमास्थाय यत्र त्वं चोत्तरे स्थितः ।।
तस्याग्रतः स्थितं लिंगं वर्त्तते कामदं सदा ।। 5.2.40.३० ।।
तस्य दर्शन मात्रेण गणपोऽयं भविष्यति ।।
कुण्डेश्वरेति विख्यातः स देवो वै भविष्यति ।। ३१ ।।
इत्युक्तः स त्वया देवि समासाद्य पुनःपुनः ।।
प्रस्थापितस्त्वयादेशाद्व्रज कुण्ड ममाज्ञया ।। ३२ ।।
महाकालवनं शीघ्रं लिंगमाराध्य सत्वरम् ।।
कीर्तिस्ते भविता पुत्र त्रिषु लोकेषु शाश्वती ।। ३३।।
इत्युक्तस्तत्क्षणात्प्राप्तो दृष्ट्वा लिङ्गं तु शाश्वतम् ।।
उत्तरस्य शिवस्याग्रे पूजयामास भक्तितः ।। ३४ ।।
ततो देवाः सगंधर्वाः सिद्धाश्च परमर्षयः ।।
यक्षाश्चाप्सरसश्चैव समाजग्मुः सहस्रशः ।। ३५ ।।
अथाहं तत्क्षणात्प्राप्तस्त्वया सार्द्धं गणैर्वृतः ।।
दृष्ट्वा कुण्डं गणेशं तु लिंगाराधनतत्परम् ।। ३६ ।।
समाधिध्याननिरतं प्रोक्तमस्माभिरादरात् ।।
तुष्टा ते पार्वती पुत्र प्रार्थ्यतां वरमुत्तमम् ।। ३७ ।।
अक्षयं तु पदं प्राप्तं त्वया लिंगस्य दर्शनात् ।।
अद्यप्रभृति देवोऽयं ख्यातो भुवि भविष्यति ।।
नाम्ना कुण्डेश्वरो यस्मात्सर्वसंपत्करः सदा ।। ३८ ।।
कुण्डेश्वरमनादिं तु भक्त्या पश्यति यो नरः ।।
सोऽश्वमेधसहस्रस्य फलं प्राप्स्यति नान्यथा ।। ३९ ।।
तस्य दानफलं सर्वं सर्वतीर्थफलं सदा ।।
लिंगं कुण्डेश्वरं यस्तु भक्त्या संपूजयिष्यति।।5.2.40.४०।।
दशानामश्वमेधानामग्निष्टोमशतस्य च।।
स्पर्शनात्फलमाप्नोति कुण्डेश्वरस्य सर्वदा।।४१।।
प्रातः पश्यंति ये भक्त्या कृत्वा नियमपूर्वकम्।।
सिद्धिं सुकामिकीं हृष्टाः संप्राप्स्यंति न संशयः ।।४२।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

कुण्डेश्वरस्य देवस्य शृणु लुंपेश्वरं परम्।।४३।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये कुंडेश्वरमाहात्म्यवर्णनंनाम चत्वारिंशो ऽध्यायः ।। ४० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४१

https://sa.wikisource.org/s/f8y



।। श्रीमहादेव उवाच ।। ।।

चत्वारिंशत्तमं सैकमीश्वरं विद्धि पार्वति ।।

लुंपेश्वरमिति ख्यातं नाम यस्य महीतले ।। १ ।।

देशे म्लेच्छगणाकीर्णे बभूव जगतीपतिः ।।

लुंपाधिप इति ख्यातो महेंद्रसमविक्रमः ।। २ ।।

तस्यासीद्दयिता भार्या विशालानाम नामतः ।।

सा यौवनगुणोपेता रूपेणाप्रतिमा भुवि ।। ३ ।।

स युद्धकामो नृपतिः पर्यपृच्छद्द्विजोत्तमान् ।। ४ ।।

अथ केनापि कथितमाश्रमे सामगो द्विजः ।।।

तेन सार्द्धं महाबाहो युध्यस्व त्वं नृपोत्तम ।। ५ ।।

ततः स प्रस्थितो राजा म्लेच्छैः सार्द्धं सहस्रशः ।।

तुषारैर्बर्बरैर्लुंपैः पह्लवैः श्वगणैस्तथा ।। ६।।

दस्युभिः संवृतः क्रूरैः क्रोधेनाकुलितेंद्रियः ।।

आजगामाश्रमं पुण्यं सामगस्य मुनेस्तदा ।। ७ ।।

मुनिना पूजितस्तेन मधुपर्कादिविष्टरैः ।।

एतस्मिन्नन्तरे राजा होमधेनुं ददर्श ह ।। ८ ।।

प्रार्थयामास सहसा न दत्ता मुनिना तदा ।।

प्रमथ्य चाश्रमं तस्य होमधेनुं जहार सः ।।

वनं बभंज सकलं तस्य विप्रस्य पश्यतः ।। ९ ।।

काल्यमानां च गां दृष्ट्वा वत्सं चातीव दुःखितम् ।।

उवाच वचनं विप्रो मा राजन्साहसं कुरु ।। 5.2.41.१० ।।

एवं वदंतं विप्रेंद्रं शरैस्तीक्ष्णैर्जघान ह ।।

लुंपः क्रोधसमाविष्टो दुष्टो दुष्टजनैर्वृतः ।। ११ ।।

असकृत्पुत्रपुत्रेति विलपंतमनाथवत् ।।

हत्वा च सामगं विप्रं जगाम स्वगृहं नृपः ।। १२ ।।

एतस्मिन्नंतरे पुत्रः समित्पाणिरुपागतः ।।

दृष्ट्वा च पितरं विप्रं तदा मृत्युवशं गतम् ।।

अनागसं महात्मानं विललाप सुदुःखितः ।। १३ ।।
केनेदं कुत्सितं कर्म कृतं पापेन मे पिता ।।
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितेः ।। १४ ।।
विलप्यैवं सकरुणं बहुना नाविधं तथा ।।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे विधानतः ।। १५ ।।
ददाह पितरं चाग्नौ तोयमादाय सत्वरम् ।।
तस्य लुंपाधिपस्यापि ददौ शापं सुदारुणम् ।। १६ ।।
स्वधर्मनिरतो विद्वान्येन मे निहतः पिता ।।
स पापात्मा दुराचारः कुष्ठरोगमवाप्नुयात् ।। १७ ।।
एतस्मिन्ननन्तरे राजा कुष्ठरोगेण पीडितः ।।
अचंक्रमणतां प्राप्तो लुंपाधीशो वरानने ।। १८ ।।
औषधैरधिकोऽभ्येति ब्रह्मशापप्रभावतः ।।
वैराग्यान्मर्तुकामोऽसौ काष्ठान्यादाय दुःखितः ।। १९ ।।
चितां कर्तुं समारेभे समायातोऽथ नारदः ।।
पूजितो विधिना तेन दुःखितेन नृपेण हि ।। 5.2.41.२० ।।
अथ पप्रच्छ लुंपोऽसौ नारदं मुनिसत्तमम् ।।
अकस्मान्मम देवर्षे कुष्ठरोगो बभूव ह ।।
तेनाहं पीडितोऽतीव न च शांतिं व्रजत्यसौ ।। २१ ।।
औषधैर्वर्द्धते कस्मादेतदाख्यातुमर्हसि ।।
न तेस्त्वविदितं किंचिदिहलोके परत्र च ।। २२ ।।
तस्य तद्वचनं श्रुत्वा लुंपाधीशस्य नारदः ।।
कथयामास तत्सर्वं ब्रह्मशापं सुदुस्तरम्।। २३ ।।
ततः सभार्यो नृपतिः प्रार्थयामास नारदम् ।।
कथं मे भगवञ्छापो दुस्तरो यास्यति क्षयम् ।। २४ ।।
एवमुक्तस्तु लुम्पेन नारदो भगवानृषिः ।।
कारुण्यात्कथयामास सभार्यस्य यशस्विनि ।। २५ ।।
महाकालवने राजँल्लिंगं कुष्ठहरं परम् ।।
सर्वसंपत्करं तत्र विद्यते पापनाशनम् ।। २६ ।।
शिप्रायाश्च तटे रम्ये केशवार्कस्य पूर्वतः ।।
तत्र त्वं गच्छ राजेंद्र कांत्या युक्तो भविष्यसि ।। २७ ।।
एवमुक्तस्तु लुंपोऽसौ ह्याजगाम त्वरान्वितः ।।
महाकालवनं रम्यं महर्षिगणसेवितम् ।। २८ ।।

प्राप्तः स्वर्गोपमं भूपः शिप्रया परिशोभितम् ।।
विवेश च मुदा युक्तो दृष्ट्वा लिंगमनुत्तमम् ।। २९ ।।
स्नात्वा शिप्राजले पुण्ये महापातकनाशने ।।
दर्शनात्तस्य लिंगस्य दिव्यरूपो वभूव ह ।। 5.2.41.३० ।।
कुष्ठरोगेण मुक्तस्तु मुक्तो वै ब्रह्महत्यया ।।
कृतकृत्यो नृपो जातो दर्शनादेव पार्वति ।। ३१ ।।
स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः ।।
तापसानां परं चक्रे सत्कारं भार्यया सह ।। ३२ ।।
ततः कृतस्वस्त्वयनस्तापसैस्तैर्महात्मभिः ।।
दिव्यज्ञानान्वितैर्दिव्यैः सूर्यवैश्वानरप्रभैः ।। ३३ ।।
कृतं नाम तदा तस्य लिंगस्य कमलानने ।।
लुंपेनाराधितो यस्माद्देवोऽयं कुष्ठनाशनः ।।
लुम्पेश्वर इति ख्यातो भविष्यति महीतले ।। ३४ ।।
पूजयिष्यंति ये भक्त्या लिंगं लुम्पेश्वरं परम् ।।
स्नात्वा शिप्राजले पुण्ये ते यास्यंति परं पदम् ।। ३५ ।।
प्रार्थयिष्यंति यान्कामान्मनसा। चेप्सितान्प्रियान् ।।
तानाप्स्यंति न सन्देहो लुम्पेशस्य च दर्शनात् ।। ३६ ।।
महापापसमायुक्तो यः पश्यति समाहितः ।।
लिंगं लुम्पेश्वरं सोऽपि देवतुल्यो भविष्यति ।। ३७ ।।
गोघ्नश्चैव कृतघ्नश्च मातृहा गुरुतल्पगः ।।
दुष्टकर्मसमाचारो भ्रातृहा पितृहा तथा ।। ३८ ।।। ।
लुम्पेश्वरं सकृत्पश्यन्मुच्यते सर्वकिल्बिषैः ।।
पूजितोऽपि दहेत्पापं सप्तजन्मार्जितं च यत् ।। ३९ ।।
इत्युक्त्वा मुनयः सर्वे पूजयामासु रन्विताः ।।
कुष्ठरोगविनिर्मुक्तो राजा स्वविषयं गतः ।। 5.2.41.४० ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
लुम्पेश्वरस्य देवस्य शृणु गंगेश्वरं परम् ।। ४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये लुंपेश्वरमाहात्म्यव र्णनंनामैकोनचत्वारिंशोऽध्यायः ।। ४१ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४२



।। श्रीहर उवाच ।। ।।

द्वाचत्वारिंशतं देवं गंगेश्वरमथो शृणु ।।

यस्य दर्शनमात्रेण सर्वतीर्थफलं लभेत् ।।

ध्रुवाधारं जगद्योनेः पदं नारायणस्य तु ।। १ ।।

पदात्प्रवृत्ता या देवी गंगा त्रिपथगा नदी ।।

सा प्रविश्य सुधायोनिं सोममाधारमंभसाम् ।। २ ।।

ततः संवर्द्धमानार्करश्मिसंगतिपावनी ।।

पपात मेरुपृष्ठे च सा चतुर्धा ततो ययौ ।। ३ ।।

मेरुकूटतटान्तेभ्यो निपतन्ती यशस्विनी ।।

विकीर्यमाणसलिला निरालंबा पपात सा ।। ४ ।।

मन्दरादिषु शैलेषु प्रविभक्तोदका समम् ।।

तत्र सीतेति विख्याता ययौ चैत्ररथं वनम् ।। ५ ।।

तत्प्लायित्वा च ययावरुणोदं सरिद्वरा ।। ६ ।।

तथैवालकनन्दाख्या दक्षिणे गन्धमादने ।।

मेरुपादवनं गत्वा नन्दने देवनन्दने ।।७।।

मानसं च महावेगात्प्लावयित्वा सरोवरम् ।।

तस्माच्च शैलराजानं रम्यं त्रिशिखरं गता ।। ८ ।।

तस्माच्च पर्वताः सर्वे प्लावितास्तत्क्षणात्प्रिये ।।

तान्प्लावयित्वा संप्राप्ता हिमवन्तं महागिरिम् ।। ९ ।।

मया धृता च तत्रैव जटाजूटेन पार्वति ।।

न मुक्ता च यदा गंगा तदा क्रुद्धा ममोपरि ।। 5.2.42.१० ।।

गात्राणि प्लावयामास मदीयानि वरानने ।।

मया च रुद्धा क्रोधेन जटामध्ये यशस्विनि ।। ११ ।।

तत्रैव सा तपश्चक्रे बहुकल्पशतानि च ।।

भगीरथेनोपवासैः स्तुत्या चाराधितो ह्यहम् ।। १२ ।।

तदा मुक्ता मया देवि गंगा त्रिपथगामिनी ।।

महाकालमनुप्राप्ता प्लावयित्वोत्तरान्कुरून्।। १३ ।।

समुद्रमहिषी जाता प्राणेभ्योऽपि गरीयसी ।।
नदीनामुत्तमा गंगा समुद्रेण कृता तदा ।।
स तया सहितो रेमे समुद्रः सरितांपतिः ।। १४ ।।
ततः कदाचिद्ब्रह्माणमुपासांचक्रिरे सुराः ।।
तथार्णवो जगामाथ ब्रह्मलोकं सनातनम्।।
गंगया सहितो देवि दर्शनार्थं महोत्सवे ।। १५ ।।
अथ गंगा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।।
तस्या वासः समुद्भूतं मारुतेन शशिप्रभम् ।। १६ ।।
ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा ।।
महाभिषस्तु राजर्षिर्निःशंको दृष्टवान्नदीम् ।। १७ ।।
तस्य भावं विदित्वाऽथ ब्रह्मणा स तिरस्कृतः ।।
उक्तस्तु जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ।। १८ ।।
गंगा शप्ताथ क्रुद्धेन समुद्रेण यशस्विनि ।।
मां विहायान्यसक्तासि तस्माद्यास्यसि मानुषम् ।। १९ ।।
लोकमल्पायुषं दीना तत्र दुःखमवाप्स्यसि ।।
तं शापं दारुणं श्रुत्वा गंगा वचनमब्रवीत् ।। 5.2.42.२० ।।
विनापराधाच्छप्ताहं कस्माद्वै देवसंसदि ।।
पतिव्रता पतिप्राणा पतिना परमार्थतः ।। २१ ।।
प्रमादाद्वस्त्रमुद्भूतं वायुना व्यापकेन तु ।।
प्रत्युवाच ततो ब्रह्मा तां नदीं लोकपावनीम् ।। २२ ।।
वसूनां कारणाद्देवि शप्ता यस्मान्महानदि ।।
भाव्यर्थे तोयनिधिना तस्माच्छीघ्रं व्रजाधुना ।। २३ ।।
महाकालवने रम्ये सिद्धगंधर्वसेविते ।।
शिप्राया दक्षिणे भागे विद्यते लिंगमुत्तमम्।। २४ ।।
सर्वसिद्धिकरं पुण्यं सर्वपातकनाशनम् ।।
तमाराधय यत्नेन स ते दास्यति वांछितम्।।२५ ।।
पितामहवचः श्रुत्वा तुष्टा त्रिपथगामिनी ।।
गमनं तत्र मेऽभीष्ट विद्यते यत्सखी मम ।।
शिप्रापि मे प्रिया पुण्या महापातकनाशिनी ।। २६ ।।
इति संचिंत्य मनसा दिव्या देवनदी तदा ।।
आजगाम महाकाले ह्यपश्यल्लिंगमुत्तमम् ।। २७ ।।
पूजयामास पयसा दिव्येन विधिना तदा ।।

दृष्ट्वा शिप्रां सखीं तत्र संश्लेषं चाभवत्तयोः ।। २८ ।।
ततः प्रभृति संजाता सा शिप्रा पूर्ववाहिनी ।।
त्रिषु लोकेषु विख्यातो देवो गंगेश्वरः स्वयम् ।।
गंगयाराधितो यस्मात्समीहितफलप्रदः ।। २९ ।।
संस्तुता देवगंधर्वैर्गंगा देवनदी तदा ।।
ऋषिभिर्वालखिल्याद्यैस्तथान्यैर्मुनिभिर्मुदा ।। 5.2.42.३० ।।
समुद्रस्तत्र संप्राप्तो मानिता सा महानदी ।।
लिंगेनोक्ता तदा गंगा कलया स्थीयतामिति ।। ३१ ।।
तत्समीपे महापुण्ये यावत्तिष्ठति मेदिनी ।।
अंगीकृतं समुद्रेण यथोक्तं च तथा स्त्विति ।।३२।।
एवमुक्त्वा गता गंगा कलया तत्र संस्थिता ।।
गंगेश्वरं तु यः पश्येत्स्नात्वा शिप्रांभसि प्रिये ।। ३३ ।।
गोसहस्रफलं तस्य जायते नात्र संशयः ।।
सर्वतीर्थफलं तस्य सर्वधर्मफलं तथा।।३४।।
सर्वयज्ञफलं सम्यक्सर्वदानफलं तथा ।।
सर्वयोगफलं देवि प्राप्नोत्येव निरन्तरम्।।३५।।
तत्र तीर्थानि सुभगे पृथिव्यां यानि कानिचित्।।
धर्मारण्यं फल्गुतीर्थं पुष्करं नैमिषं गया ।। ३६ ।।
प्रयागं च कुरुक्षेत्रं केदारममरेश्वरम् ।।
चंद्रभागा विपाशा च सरयूर्देविका कुहू ।। ३७ ।।
गोदावरी शतद्रुश्च बाहुदा वेत्रवत्यपि ।।
सर्वा एवात्र सरितः संगताः संति गंगया ।। ३८ ।।
गुप्तानि पुण्यतीर्थानि सिद्धक्षेत्राणि चैव हि ।।
तत्र सर्वाणि तिष्ठंति कलामात्रेण पार्वति ।। ३९ ।।
एतेषां फलमाप्नोति यः पश्यति समाहितः ।।
स्नात्वा गंगेश्वरं देवं सत्यमेतन्मयोदितम् ।।
अतः पुण्यतमं स्थानं गीयते गणवंदिते ।।5.2.42.४०।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
गंगेश्वरस्य देवस्य शृण्वंगारेश्वरं परम् ।। ४१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये गंगेश्वर माहात्म्यवर्णनंनाम द्वाचत्वारिंशोऽध्यायः ।। ४२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४३

https://sa.wikisource.org/s/f8x
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीशिव उवाच ।। ।।

चत्वारिंशत्तमं विद्धि त्र्यधिकं पर्वतात्मजे ।।

यस्य दर्शनमात्रेण जायते सर्वसंपदः ।। १ ।।

आदिकल्पे पुरा जातो वक्रांगो लोहितच्छविः ।।

रौद्रस्त्वंगारसदृशो मम गात्राद्वरानने ।।

मया धृतो धरण्यां स विख्यातो भूमिपुत्रकः ।। २ ।।

जातमात्रे सुते तस्मिन्महाकाये भयावहे ।।

कंपिता धरणी देवी देवास्त्रस्ताः सवासवाः ।। ३ ।।

क्षोभं गताः समुद्राश्च चेलुश्च धरणीधराः ।।

तेनैव पीडितं सर्वं सदेवासुरमानुषम् ।। ४ ।।

ऋषयो वालखिल्याश्च देवाः शक्रपुरोगमाः ।।

बृहस्पतिं पुरस्कृत्य ब्रह्मलोकं गताः प्रिये ।। ५ ।।

सोच्छ्वाँसाः कथयामासुर्नमस्कृत्य पितामहम् ।।

वृत्तांतं विस्तरात्सर्वं लोकत्रयविनाशनम् ।। ६ ।।

हरगात्रोद्भवेनैव जातमात्रेण लीलया ।।

लोकत्रयं समाक्रांतं पीडितं भक्षितं तथा ।। ७ ।।

तच्छ्रुत्वा वचनं तेषां ब्रह्मा लोकपितामहः ।।

चिंतयित्वा तु तैः सार्द्धमाजगाम ममांतिकम् ।। ८ ।।

मया पृष्टास्तु ते सर्वे किमर्थं भयविह्वलाः ।।

सोच्छ्वासहृदया दीनाः कस्माद्वो भयमागतम् ।। ९ ।।

तैः सर्वं कथितं देवि ममाग्रे भयविह्वलैः ।।

त्वदंगसंभवेनैव देवदेव जगत्पते ।।

पीडितं भक्षितं चैव सदेवासुरमानवम् ।। 5.2.43.१० ।।

इति तेषां वचः श्रुत्वा क्षेमार्थं कृपया मया ।।

आकारितो मत्समीपमुवाच वदतां वरः ।। ११ ।।

आदेशो दीयतां देव किं करोमीत्युवाच सः ।।

नाकर्ष त्वं जगदिदं मया प्रोक्तः पुनःपुनः ।। १२ ।।

ममांगाद्रजसा जातस्तेनांगारक उच्यसे ।।
लोकानां स्वस्तये नित्यं मंगलोसि मया कृतः ।। १३ ।।
इदानीं वक्रतां यातो वक्रस्त्वं गीयसे बुधैः ।।
विज्ञप्तोऽहं तदा तेन मम वाक्यं श्रुतं यदा ।।
आहारेण विना देव कथं तृप्तिर्भविष्यति ।। १४ ।।
तस्मान्मे देहि सुस्थानमाधिपत्यं च देहि मे ।।
शक्तिं च देहि मे शीघ्रमाहारं देहि मे प्रभो ।। १५ ।।
तस्य तद्वचनं श्रुत्वा पुत्रोऽयं मम वल्लभः ।।
तस्माद्दास्यामि परमं स्थानमक्षयमुत्तमम् ।। १६ ।।
इति संचिन्त्य मनसा स्मृतं स्थानं मयोत्तमम् ।।
उत्संगे च सुतं कृत्वा प्रेम्णा प्रोक्तं पुनःपुनः ।। १७ ।।
दत्तं पुत्र मया स्थानं महाकालवनोत्तमे ।।
गंगेश्वरस्य पूर्वे तु प्रशस्यं स्थानमुत्तमम् ।। १८ ।।
खगर्ता चैव शिप्रा च संगमस्तत्र विद्यते ।। १९ ।।
यदा मया धृता गंगा तदा सा चन्द्रमण्डलात् ।।
प्रमादात्पतिता भूमौ महाकालवनोत्तमे ।। 5.2.43.२० ।।
खगर्तेति च विख्याता खाद्भ्रष्टा प्रापतत्क्षितौ ।।
अतो मयावतारस्तु सहसा तव वै कृतः ।। २१ ।।
लिंगमूर्तिरहं पुत्र तिष्ठामि सुरपूजितः ।।
तत्स्थानं दुर्लभं देवैस्तस्मात्त्वं गच्छ सत्वरम् ।। २२ ।।
पूजितोऽहं त्वया तत्र संगमे लोकपूजिते ।।
त्रिषु लोकेषु यास्यामि ख्यातिं वै तव नामतः ।। २३ ।।
मध्ये ग्रहाणां सर्वेषामाधिपत्यं मया तव ।।
दत्तं तृतीयकं स्थानं तत्र तृप्तिर्भविष्यति ।। २४ ।।
पूजां प्राप्स्यसि तत्रैव ग्रहमध्ये व्यवस्थितः ।।
तिथिर्दत्ता चतुर्थी ते तस्यां ये व्रततत्पराः ।। ।। २५।।
त्वामुद्दिश्य करिष्यंति पूजां शांतिं सदक्षिणाम् ।।
तेन सर्वेण ते तृप्तिर्भविष्यति न संशयः ।। २६ ।।
वारश्चैकश्च ते दत्तो मंगलार्थं मया तव ।।
नववस्त्रपरीधानं विद्यारंभं दिने तव ।।
तैलाभ्यंगं करिष्यंति न च प्राप्स्यंति ते बलम् ।। २७ ।।
इत्युक्तस्तु मया देवि वक्रांगो मंगलः सुतः ।।

अंगारकेति विख्यातस्तथेत्यंगीचकार सः ।। २८ ।।
सन्तुष्टस्तेन वाक्येन मदीयेन वरानने ।।
आजगाम मुदा युक्तो महाकालवनोत्तमे ।। २९ ।।
शिप्रायाश्च तटे रम्ये खगर्त्तासंगमांतिकम् ।।
दृष्टोऽहं लिंगरूपेण परां तुष्टिमुपागतः ।। ।। 5.2.43.३० ।।
मया चालिंगितः प्रेम्णा चुम्बितः शिरसि प्रिये ।।
वरो दत्तो विशालाक्षि वांछितं ते भविष्यति ।। ३१ ।।
दृष्टोऽहं च त्वया पुत्र भक्त्या चाराधितस्त्वया ।।
मम वाक्यं कृतं यस्मात्तस्मात्तुष्टोऽस्मि मंगल ।। ३२ ।।
अंगारेश्वरनामाहमद्यप्रभृति पुत्रक ।।
त्रिषु लोकेषु विख्या तो भविष्यामि न संशयः ।। ३३ ।।
ये मां पश्यंति सततं संगमेऽत्र व्यवस्थितम् ।।
न तेषां पुनरावृत्तिर्भविष्यति महीतले ।। ३४ ।।
ये मां संपूज यिष्यंति ह्यंगारकदिने नराः ।।
कलौ युगे कृतार्थास्ते भविष्यंति न संशयः ।। ३५ ।।
चतुर्थ्यां मंगलदिने ये मां पश्यंति सुव्रताः ।।
न ते यास्यंति संसारे घोरे दुःखशताकुले ।। ३६ ।।
अमावास्या च भौमश्च संयोगो दृश्यते यदा ।।
खगर्त्तायाश्च शिप्रायाः संगमे देवपूजिते ।। ३७ ।।
स्नात्वा तदा प्रपश्यंति मामत्रैव व्यवस्थितम् ।।
तेषां पुण्यफलं देवि समासाच्छृणु सांप्रतम् ।। ३८ ।।
वाराणस्यां प्रयागे च कुरुक्षेत्रे च यत्फलम् ।।
गयायां पुष्करे प्रोक्तं तत्पुण्यमधिकं भवेत् ।। ३९ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
अंगारेश्वरदेवस्य श्रूयतामुत्तरेश्वरम्।। 5.2.43.४० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्येंऽगारकेश्वरमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ।।४३।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४४

https://sa.wikisource.org/s/f8z
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

चत्वारिंशत्तमं विद्धि चतुर्भिरधिकं परम्।।

यस्य दर्शनमात्रेण समीहितफलं लभेत् ।।

उत्तरेशमिति ख्यातं समीहि तफलप्रदम्।।१।।

पुरा नियुक्ताः शक्रेण ये मेघा वृष्टिकारकाः ।।

तैः प्लावितं जगत्सर्वं सपर्वतमहीतलम्।।२।।

एकार्णवे ततो जाते देवा भीता वरानने ।।

निःस्वाध्यायवषट्काराः स्वधास्वाहाविवर्जिताः ।।३।।

नैवाप्यायनमस्माकं विना होमेन जायते।।

वयमाप्यायिता विप्रैर्यज्ञभागैर्यथोचितैः ।।४।।

तेषां वयं प्रयच्छामः कामान्यज्ञादिपूजिताः ।।

नास्ति तत्सर्वमेवैतदन्योन्यमवदन्सुराः ।। ५ ।।

दृष्ट्वा पृष्वीं जले मग्नां ब्रह्माणं शरणं गताः ।।

कथयामासुरत्युग्रं नमस्कृत्य पितामहम् ।।६।।

एकार्णवा मही जाता विनष्टाः क्रतवः प्रभो ।।

निःस्वाध्यायवषट्कारं जगज्जातं पितामह ।।७।।

देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।।

मुहूर्त्तं चिंतयामास किमेतदिति विस्मितः ।। ८ ।।

अकाले प्रलयः कस्मान्निमग्ना पृथिवी जले ।।

गता सृष्टिर्मदीया तु व्यर्थं जातं वचो मम ।। ९ ।।

इति संचिंत्य हृदये सस्मार बलसूदनम् ।।

स्मृतमात्रस्तु बलहा ह्याजगाम पितामहम् ।। 5.2.44.१० ।।

प्रोवाच वचनं श्रुत्वा नम स्कृत्य पितामहम् ।।

स्मृतोऽहं केन कार्येण देह्याज्ञां मे पितामह ।। ११ ।।

ब्रह्मणोक्तस्तदा शक्रः किमर्थं प्लाविता मही ।।

असंबद्धैस्त्वदीयैश्च मेघैः किं सहसा कृतम् ।। १२ ।।

ततः सर्वे समाहूता मेघाः शक्रेण पार्वति ।।

पितामहसमक्षं तु समायाताश्च तत्क्षणात् ।। १३ ।।
पितामहेन शक्रेण मर्यादा च कृता तदा ।।
गजोनाम महामेघः पूर्वस्यां दिशि निर्मितः ।। १४ ।।
गजाकारैस्ततो मेघैः सहस्रैर्दशभिर्वृतः ।।
गवयो दक्षिणामाशां षट् सहस्राधिपः कृतः ।। १५ ।।
शरभः पश्चिमामाशां सहस्राधिपतिः कृतः ।।
उत्तरोनाम यो मेघो मेघैः कोटिभिरावृतः ।। १६ ।।
उत्तरस्यां दिशि तदा प्रभुत्वे संप्रतिष्ठितः ।।
मर्यादा च कृता देवि ब्रह्मणा वासवेन तु ।। १७ ।।
प्रावृट्काले च वर्षध्वं नक्षत्रैर्जलजैर्द्रुतम् ।।
आर्द्रादिस्वातिपर्यंतं नक्षत्रद शकं स्मृतम्।। १८ ।।
ब्रह्मशक्रवचः श्रुत्वा तथेति कृतनिश्चयाः ।।
ववृषुर्नियते काले तन्नामानि भवंति हि ।। १९ ।।
एवं व्यवस्थिते लोके मर्यादायां स्थिता घनाः ।।
ब्राह्मणा विज्वरा जातास्त्रिदशा मुदिता भृशम्।। 5.2.44.२०।।
क्रूरग्रहैरथो रुद्धास्ते मेघा वृष्टिकारकाः ।।
शनैश्चरेण भौमेन भास्करेणाथ केतुना ।। २१ ।।
पीडिताः शरणं जग्मुर्वासवं भयविह्वलाः ।।
निवेदितं भयात्सर्वं नमस्कृत्य पुनःपुनः ।। २२ ।।
मेघानां वचनं श्रुत्वा संत्र स्तो वासवस्तदा ।।
उवाच वचनं तेषां नाहं शक्तो निवारणे ।।
ग्रहाणामसमर्थोऽहं सर्वदैव पयोधराः ।। २३ ।।
अहं राज्यात्परिभ्रष्टः कृतः क्रूरग्रहैः पुरा ।।
स्थापितोऽहं कदाचिच्च सुप्रसन्नैर्ग्रहैः पदे ।।२४ ।।
मम मान्याश्च पूज्याश्च ग्रहा एव यतोधिकाः ।।
ग्रहाः स्रर्वहराः प्रोक्ता इति मे वर्त्तते मतिः ।। ।। २५ ।।
एतस्मिन्नंतरे भूमौ संजाता शतवार्षिकी ।।
अनावृष्टिर्महारौद्रा सर्वप्राणिविनाशिनी ।। २६ ।।
अस्थिकंकालशकला श्वेतपर्वतसन्निभा ।।
पृथिवी तत्क्षणाज्जाता विना तोयेन पार्वति ।। २७ ।।
देवाः सर्वे पुनर्भीता ब्रह्माणं शरणं गताः ।।
ऊचुश्च प्रणताः सर्वे त्राहि नः शरणागतान् ।। ।।२८।।

अनावृष्ट्या जगत्सर्वं पीडितं च पितामह ।।
अकाले प्रलयो जातः पुनरेव च तादृशः ।।२९।।
त्वया च वासवेनैव नियुक्ता ये पयोधराः ।।
कूरग्रहैरतीवोग्रैः पीडितास्ते पितामह।। 5.2.44.३० ।।
देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।।
अहं बिभेमि भो देवा ग्रहैस्तैर्बलवत्तरैः ।। ३१ ।।
सर्वं जानामि माहात्म्यं ग्रहाणां क्रूरचेतसाम् ।।
शनैश्चरेण वक्रेण भवंतः पीडिताः सदा ।। ३२ ।।
वरुणो यादसां नाथो मंगलेन प्रपीडितः ।।
राज्यभ्रष्टस्तु बहुधा केतुना वासवः कृतः ।। ३३ ।।
शिरश्छेदो मया प्राप्तो वक्रेण रविणा पुरा ।।
एकैकशः समर्थास्ते किं पुनः संघशस्त्वमी ।।
तस्मात्सर्वे महादेवं गच्छामः शरणं वयम्।।३४।।
ब्रह्मणो वचनं श्रुत्वा सर्वे देवाः सवासवाः।.
ब्रह्माणं च पुरस्कृत्य मामव शरणं गताः।।३५।।
उक्तोऽहं त्रिदशैः सर्वैः पाहि नः शरणागतान् ।।
त्वं नो धाता विधाता च सृष्टिसंहारकारकः।।३६।।
क्रूरग्रहैर्महादेव रुद्धा मेघाः समंततः।।
न कुर्वंति प्रभो वृष्टिमनावृष्टिः सुदारुणा।।
सर्वप्राणिविनाशाय संजाता शतवार्षिकी।।
तेषां तद्वचनं श्रुत्वा मया ज्ञातं वरानने।।
क्रूरग्रहाणां सामर्थ्यं यथा च विदितं मम।।३८।।
इति ज्ञात्वा महादेवि उपायश्चिंतितो मया।।
उत्तरो नाम यो मेघो मेघैः कोटिभिरावृतः।।
आहूतस्तत्क्षणात्प्राप्तः किं करोमीत्युवाच ह ।। ३९ ।।
मया प्रोक्तो ममादेशाद्गच्छ त्वं घनसंयुतः ।।
महाकालवनं रम्यं वांछितार्थफलप्रदम् ।। 5.2.44.४० ।।
गंगेश्वरस्य देवस्य दक्षिणे लिंगमुत्तमम् ।।
तमाराधय यत्नेन स ते दास्यति वांछितम् ।। ४१ ।।
एवमुक्तो मया मेघ उत्तरो मेघसंयुतः ।।
जगाम त्वरया युक्तो महाकालवनोत्तमे ।। ४२ ।।
दृष्ट्वा वृष्टिकरं लिंगं पूजयामास भक्तितः ।।

शिप्राजलं गृहीत्वा तु स्नात्वा स्नात्वा प्रयत्नतः ।।
तावद्यावज्जलं शिप्रां पुनरेवागतं प्रिये ।। ४३ ।।
एतस्मिन्नंतरे तस्मादुद्भूतं धूममंडलम् ।।
लिंगमध्याद्वरारोहे ज्वालामालाकुलं महत् ।। ४४ ।।
ततो ज्वालामयं सर्व मभूदम्बरगोचरम् ।।
तस्य ज्वालासमूहेन दग्धं वै ग्रहमंडलम् ।। ४५ ।।
सनक्षत्रपथं यावत्ततो भीता ग्रहाः प्रिये ।।
तमेव शरणं प्राप्ता धूमज्वालाकुलाननाः ।। ४६ ।।
ततो ब्रह्मा च विष्णुश्च तद्दृष्ट्वा महदद्भुतम् ।।
देवैर्वृतः सहस्राक्षो लिंगांतिकमुपागतः ।। ४७ ।।
तल्लिंगं सुमहाज्वालं ज्वालाभिः पूरितांबरम् ।।
दुःप्रेक्ष्यं दुर्विदं भीमं वर्द्धमानं ददर्श सः ।। ४८ ।।
अक्ष्णोर्निमेषमात्रेण ववृधे योजनायुतम् ।।
दृष्ट्वा तु वर्द्धमानस्य लिंगस्यात्य द्भुताकृतिम् ।।
सुरेशो मोहमापन्नो विसंज्ञाश्च ग्रहास्तदा ।। ४९ ।।
ततस्तु तस्य लिंगस्य वारिधारा विनिःसृताः ।।
एकोद्देशाद्वरारोहे धरा त्वेकार्ण वीकृता ।। 5.2.44.५० ।।
लिंगस्यान्यप्रदेशात्तु वायुः समभवन्महान् ।।
इतरस्मिन्प्रदेशे तु समूहस्तडितामभूत् ।। ५१ ।।
सधूमा समभूज्ज्वाला लिंगस्यान्य प्रदेशतः ।। ५२ ।।
एवमत्यद्भुतं दृष्ट्वा वर्द्धमानं समंततः ।।
लिङ्गमव्यक्तमुद्भूतमापूरितनभोऽन्तरम् ।। ५३ ।।
ग्रहाश्च विह्वला जाता धूमेनाकुलिते न्द्रियाः ।।
तुष्टुवुश्च तदा लिगं दह्यमानाः समंततः ।। ५४ ।।
।। ग्रहा ऊचुः ।। ।।
नमः सुरूपाय सुरार्चिताय नमो विरूपप्रकृतिक्रियाय ।।
नमोनमो रूपनिराश्रयाय जलस्वरूपाय नमो नमस्ते ।। ५५ ।।
इति स्तुतो यदा देवि ग्रहैः क्रूरैस्तदा प्रिये ।।
लिंगात्प्रादुरभूत्खस्थः स्वरूपो विग्रहाकृतिः ।। ५६ ।।
भस्मधूसरसर्वांगो भोगिभोगांगदोज्ज्वलः ।।
हिमराशिनिभाकारो रजताचलनिर्मलः ।।
उवाच चैतान्प्रणतान्ग्रहान्कंपितक न्धरान ।। ५७ ।।

किं वा कामं मनोऽभीष्टं भवद्भ्यो यद्ददाम्यहम् ।।
ममामोघमिदं सर्वं दर्शनं चातिदुर्लभम् ।। ५८ ।।
भवद्भ्यो लोकतुष्ट्यर्थं दर्शनं हि ददाम्यहम् ।।
एवमुक्त्वा ग्रहाः सर्वे प्रोचुः प्रांजलयस्तदा ।। ५९ ।।
यदि देयो वरो देव यदि तुष्टोऽसि शंकर ।।
कर्मारंभेषु सर्वेषु पूजाऽ स्माकं यथा भवेत् ।।
तथा कुरु महादेव तेन तृप्तिर्भविष्यति ।। 5.2.44.६० ।।
एवं भविष्यतीत्युक्त्वा मेघं चोत्तरमुक्तवान् ।।
तुष्टोऽस्म्यहं तु ते वत्स गृहाण वरमीप्सितम् ।। ६१ ।।
तच्छ्रुत्वा वचनं तत्र ह्युत्तरः प्राह हर्षितः ।।
यन्मे तुष्टोऽसि भगवंस्तन्मह्यं दीयतां वरम् ।। ६२ ।।
यदास्माकं महाबाधां कदा कोपि करिष्यति ।।
तदा वृष्टिर्विधातब्या त्वया देव सदा भुवि ।। ६३ ।।
रक्षा कार्या च मेघानां रक्षणीयास्त्वया वयम्।।
एवमस्त्विवति तेनोक्तं लिंगेन नगगात्रजे ।। ६४ ।।
अद्यप्रभृति ते नाम्ना ख्यातिं यास्यामि भूतले.।।
उत्तरेश्वरसंज्ञोऽहं प्रभविष्यामि न संशयः ।। ६५ ।।
ये मां संपूजयिष्यंति भक्त्या परमया युताः ।।
तेषां दास्यामि सततं वांछितार्थफलं भुवि ।। ६६ ।।
पश्यंति प्रयता ये मां कृत्वा नियमपूर्वकम् ।।
ते यास्यंति पुरं शैवं यावत्कल्पाष्टकायुतम् ।। ६७ ।।
आरूढाः सूर्यसंकाशैर्विमानैः सार्वकामिकैः ।।
रुद्रकन्यासमाकीर्णैर्हंससारससंयुतैः ।। ६८ ।।
नृत्य वादित्रनिर्घुष्टैरुत्कटध्वनिनादितैः ।।
दोधूयमानैश्च नरैः स्तूयमानाः सुरासुरैः ।। ६९ ।।
प्रसंगाद्भक्तिहीनोऽपि यो मां पश्यत्यशाठ्यतः ।।
ऐश्वर्यं तस्य दास्यामि ह्युत्तरेषु कुरुष्वथ ।। 5.2.44.७० ।।
स्मरिष्यति च यो नित्यं प्रभाते चोत्तरेश्वरम् ।।
स याति परमं स्थानं दाहप्रलयवर्जितम्।। ७१ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

उत्तरेश्वरदेवस्य शृणु त्रिलोचनेश्वरम् ।। ७२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्य उत्तरेश्वरमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४५



।। श्रीदेवदेव उवाच ।।।

पंचचत्वारिकं विद्धि देवं त्रिलोचनेश्वरम् ।।

यस्य दर्शनमात्रेण सर्वसिद्धिरवाप्यते ।। १ ।।

इतिहासमिहासीद्यत्पीठे विरजसंज्ञके ।।

त्रिलोचनस्य प्रासादे मणिमाणिक्यनिर्मिते ।। २ ।।

नानाभंगिगवाक्षाढ्ये रत्नसानाविवापरे ।।

देदीप्यमानसौवर्णकलशेन विराजिते ।। ।। ३ ।।

पार्वणेन शशांकेन खेदादिव समासिते ।।

तत्र पारावतद्वंद्वं वसत्स्वैरं कृतालयम् ।। ४ ।।

प्रातः सायं च मध्याह्ने कुर्व न्नित्यप्रदक्षिणम् ।।

उड्डीयमानं परितः पक्षवातैरितस्ततः ।। ५ ।।

रजःप्रासादसंलग्नं दूरीकुर्वद्दिशो दश ।।

त्रिलोचनेति सततं नाम भक्तैरुदाहृतम् ।।

त्रिविष्टपेति च तथा तयोः कर्णातिथीभवेत् ।। ६ ।।

चतुर्विधानि वाद्यानि शंभुप्रीतिकराण्यलम् ।।

तयोः कर्णगुहां प्राप्य प्रतिशब्दं प्रतन्वते ।। ७ ।।

मंगलारात्रिकज्योतिस्त्रिसंध्यं पक्षिणोस्तयोः ।।

नेत्रांतं निर्विशन्नित्यं भक्तचेष्टां प्रदर्शयत् ।। ८ ।।

प्राणयात्रां विहायापि कदाचित्स्थिरमानसौ ।।

नोड्डीय वांछितं यातः पश्यंतौ कौतुकं खगौ ।। ९ ।।

तत्रासकृज्जनाकीर्णं प्रासादं परितोऽवनौ ।।

तंडुलादि चरंतौ तौ कुर्वंतौ च प्रदक्षिणम् ।। 5.2.45.१० ।।

देवदक्षिणदिग्भागे विष्णुदेहोद्भवं जलम् ।।

तृषार्त्तौ पिबतो नित्यं स्नात्वा चाजग्मतुश्च तौ ।। ११।।

तयोरित्थं विचरतोस्त्रिलोचनसमीपतः ।।

अगाद्बहुतिथः कालो द्विजयोः साधुचेष्टयोः ।। १२ ।।

अथ देवालयस्कंधे गवाक्षांतर्गतौ च तौ।।

श्येनेन केनचिद्दृष्टौ क्रूरदृष्ट्या सुखं स्थितौ ।। १३ ।।
तच्च पारावतद्वंद्वं श्येनः परिजिघृक्षया ।।
अवतीर्यांबरादाशु उपविष्टः शिवालये ।। १४ ।।
ततो विलोकयामास तदागमविनिर्गमौ ।।
केन मार्गेण विशतो दुर्गमेण पतत्रिणौ ।। १५ ।।
केनाध्वना च निर्यातः किंकाले कुरुतश्च किम् ।।
कथं युगपदेतौ मे ग्राह्यौ स्वैरं भविष्यतः ।। १६ ।।
दुर्बलोऽप्याकलयितुं सहसारिर्न शक्यते ।।
करिणां च सहस्रेण वराश्वानां च लक्षतः ।। १७ ।।
न कर्म सिद्ध्येन्नृपतेर्दुर्गेणैकेन यद्भवेत् ।।
दुर्गस्थो नाभिभूयेत विपक्षः केनचित्क्वचित्।।
स्वतंत्रं यदि दुर्गं स्यादपमार्गप्रकाशकम् ।।१८।।
इति दुर्गे बलं शंसञ्छ्येनो रोषारुणेक्षणः ।।
असाध्वसौ कलरवौ वीक्ष्य यातो नभोंगणे ।। १९ ।।
अथ पारावती दक्षा विपक्षक्षपणेक्षणम् ।।
महाबलं दुर्गबलात्प्राह पारा वतं पतिम् ।। 5.2.45.२० ।।
।। कलरव्युवाच ।। ।।
प्रिय पारावत प्राज्ञ सर्वकामसुखारव ।।
तव दृग्विषयं प्राप्तः श्येनोऽयं प्रबलो रिपुः ।। २१ ।।
स च तद्वाक्यमाकर्ण्य पारावत्याश्च सत्पतिः ।।
पारावतीमुवाचेदं का चिंतेति तव प्रिये ।। २२
।। पारावत उवाच ।। ।।
कति नाम न संतीह सुभगे व्योमचारिणः ।।
कति देवालयाद्येषु खगा नोपवसंति हि ।। २३ ।।
कति चैव न पश्यंति नौ सुखस्थाविह प्रिये ।।
तेभ्यो यदीह भेतव्यं कुतो नौ तत्सुखं प्रिये ।। २५ ।।
रम त्वं च मया सार्द्धं त्यज चिंतामिमां शुभे ।।
अस्य श्येनवराकस्य गणनापि न मे हृदि ।।२५।।
इत्थं पारावतवराच्छ्रुत्वा पारावती वचः ।।
मौनमालम्ब्य संतस्थे पत्युः पादार्पितेक्षणा ।। २६ ।।
हितवत्योपदिश्यापि प्रियं प्रियचिकीर्षया ।।
पत्न्या जोषं समास्थेयं कार्यं पत्युर्वचः सदा ।। २७ ।।

अन्येद्युरप्यथायातः श्येनः पश्यन्स दंपती ।।
अपरिच्छिन्नया दृष्ट्या यथा मृत्युर्गतायुषम् ।। २८ ।।
अथ मंडलगत्या स प्रासादं परितो भ्रमन् ।।
प्रोवाच प्रेयसी नाथ दृष्टो दुष्टस्त्वयाऽहितः ।। २९ ।।
तस्या वाक्यं समाकर्ण्य पुनः कलरवोऽब्रवीत् ।।
किं करिष्यत्यसौ मुग्धे मम व्योमविहारिणः ।। 5.2.45.३० ।।
दुर्गं च स्वर्गतुल्यं मे यत्र नास्त्यरितो भयम् ।।
अयं न तां गतिं वेत्ति यां वेदाहं नभोंगणे ।। ३१ ।।
प्रडीनोड्डीनसंडीनकांडव्यांडकपाटिका ।।
स्रंसिनी मंडलवती गतयोऽष्टावुदाहृताः ।। ३२ ।।
यथैतासु हि कौशल्यं मयि वर्त्तति च प्रिये ।।
गतिषु क्वापि कस्यापि पक्षिणो न तथांबरे।।
सुखेन तिष्ठ का चिंचा मयि जीवति ते प्रिये।।३३।।
इति तद्वचनं श्रुत्वा आस्थिता मूकवत्सती।।
अपरेद्युरपि श्येनस्तत्रायातः शिलातले।।
कियदंतरमासाद्य उपविष्टोऽतिहृष्टवत्।।
आयामांते च स स्थित्वा तत्कुलायकुलस्य च।३५।।
पुनः श्येनो विनिर्यातः सापि कांताऽब्रवीत्पुनः।।
प्रिय स्थानमिदं त्याज्यं दुष्टदृष्टिविदूषितम्।।३६।।
असौ क्रूरोऽतिनिकटमुपविष्टोऽतिहृष्टवत्।।
सावज्ञं स पुनः प्राह किं करिष्यत्यसौ प्रिये ।। ३७ ।।
मृगाक्षीणां स्वभावोयं प्रायशो भीरुवृत्तयः ।।
इतरेद्युरपि प्राप्तः स च श्येनो महाबलः ।। ।। ३८ ।।
तयोरभिमुखं तत्र स्थितो यामद्वयावधि ।।
पुनर्विलोक्य तद्वत्मं शीघ्रं यातो यथागतम् ।। ३९ ।।
गतेथ शकुनौ तस्मिन्सा बभाषे विहंगमम्।।
नाथ स्थानांतरं यावो मृत्युर्वै निकटेऽन्वगात् ।। 5.2.45.४० ।।
पुनर्दृष्टे प्रणष्टः स्यादावासश्च सुखं प्रिय ।।
प्रिय यस्यास्ति पक्षस्य गतिः सर्वत्र सिद्धिदा ।। ४१ ।।
स किं स्वदेशरागेण नाशं प्राप्नोति बुद्धिमान् ।।
सोपसर्गं निजं देशं त्यक्त्वा योन्यं तु न व्रजेत् ।। ४२ ।।
स पंगुर्ना शमाप्नोति कूलस्थित इव द्रुमः ।।

प्रियोदितं निशम्येति स भवित्रीदशार्द्दितः ।। ४३ ।।
तां वाक्यं पुनरप्याह प्रिये मा भैः खगार्दिता ।।
अपरस्मिन्नहनि च स श्येनः प्रातरेव हि ।।४४।।
तद्द्वारदेशमासाद्य सायं यावत्स्थितोऽचलः ।।
अस्ताचलस्य शिखरं याते भानौ गते खगे ।। ४५ ।।
कुलायाद्बाह्यमागत्योवाच पारावती पतिम् ।।
नाथ निर्गमनस्यायं कालः कालोऽस्ति दूरतः ।।४६।।
यावत्तावद्विनिर्याहि त्यक्त्वा मामपि शंसिनीम् ।।
त्वयि जीवति दुष्प्राप्यं न किंचिज्जगतीतले ।। ४७ ।।
पुनर्दाराः पुनः पुत्राः पुनर्वसु पुनर्गृहम् ।।
यद्यात्मारक्षितः पुंसां दारैपि धनैरपि ।। ४८ ।।
तदा सर्वं हरिश्चंद्रभूपतेरिव लभ्यते ।।
अयमात्मा प्रियो बंधुरयमात्मा महद्धनम् ।।४९।।
धर्मार्थकाममोक्षाणामयमात्मार्जकः परः ।।
यावदात्मनि वै क्षेमं ताव त्क्षेमं जगत्त्रये ।।5.2.45.५०।।
सोऽपि क्षेमः सुगतिना यशसा सह वांछ्यते ।।
यशोहीनं तु यत्क्षेमं तक्षेमान्निधनं वरम् ।।५१।।
तद्यशः प्राप्यते पुंभिर्नीतिमार्गं प्रवर्तिभिः ।।
अतो नीतिपथं चिंत्यं नाथ स्थानादितो व्रज।।
न व्रजिष्यसि चेत्प्रातस्ततो मां संस्मरिष्यसि ।।५२।।
इत्युक्तोऽपि स वै पत्न्या पारावत्या सुमेधया ।।
न निर्ययौ ततः स्थानाद्भवित्र्या प्रतिवारितः ।।५३।।
अथोषसि समागत्य श्येनेन बलिना तदा ।।
निर्गमद्वारमारुद्धं किंचिद्भक्ष्य वता तदा ।। ५४ ।।
दिनानि कतिचित्तत्रातिष्ठच्छ्येनो महाबलः ।।
पारावतमुवाचेदं धिक्त्वा पौरुषवर्जितम् ।। ५५ ।।
किं वा युध्यस्व दुर्बुद्धे किं वा निर्याहि मे गिरा ।।
क्षुधाक्षीणो मृतः पश्चान्निरयं पश्यसि धुवम् ।।
विधिरेव हि साहाय्यं न कुर्यात्तव नोदितम् ।। ५६ ।।
इत्थं श्येनेन स प्रोक्तः पत्न्या स सहितः खगः ।।
अयुध्यत्तेन श्येनेन स्वदुर्गद्वारमाश्रितः ।। ५७ ।।
क्षुधितस्तृषितः सोऽथ श्येनेन बलिना धृतः ।।

चरणेन दृढेनाशु चंच्वा सापि धृता खगी ।। ५८ ।।
तावादायोड्डयांचक्रे श्येनो व्योमनि सत्वरम् ।।
चिंतयन्भक्षणस्थानमन्यत्पक्षिविवर्जितम् ।। ५९ ।।
अथ पत्न्या कलरवः प्रोक्तस्तत्र सुमेधया।।
यतोऽवमानिता नाथ त्वयाहं स्त्रीति बुद्धितः।।5.2.45.६०।।
अतोऽवस्थामिमां प्राप्तः किं कुर्यामबला यतः।।
अधुनापि वचश्चैकं करोषि यदि मे प्रिय ।। ६१ ।।
तदा हितं ते वक्ष्यामि कुर्वे तदविचारितम् ।।
ममैकवाक्यकरणात्स्त्रीजितो न भविष्यसि ।। ६२ ।।
यावदास्यं गतास्म्यस्य यावत्खस्थो न भूमिगः ।।
तावदात्मविमुक्त्यै त्वं चंच्वा पादं दृढं दश ।। ६३ ।।
इति पत्नीवचः श्रुत्वा तथा स कृतवान्खगः ।।
स पीडितो दृढं पादे श्येनश्चीत्कृतवान्बहु ।। ६४ ।।
तेन चीत्करणेनाथ मुक्ता सा मुखसंपुटात ।।
पादांगुलीनां शून्यत्वे सोऽपि पारावतोऽपतत् ।। ।। ६५ ।।
विपद्यपि च प्राज्ञैर्न संत्याज्यः क्वचिदुद्यमः ।।
क्व च चंचुपुटस्तस्य क्व च तत्पादपीडनम् ।।६६।।
क्व च द्वयोस्तथाभूतं दूरे मोक्षणमद्भुतम्।।
दुर्बलेऽप्युद्यमः श्रेयानिति शास्त्रेषु गीयते ।। ६७ ।।
तस्माद्भाग्यानुसारेण फलत्येव सदोद्यमः ।।
प्रशंसंत्युद्यमं चातो विपद्यपि मनीषिणः ।। ६८ ।। ।
अथ तौ कालयोगेन जंबूमार्गे मृतौ तदा ।।
जंबूमार्गे मृता ये वै तेषां स्वर्गः सदाऽक्षयः ।। ६९ ।।
पुण्यशेषे तदा जातो गंधर्वतनयः शुभः ।।
मंदारदामतनयो नाम्ना परिमलालयः ।। 5.2.45.७० ।।
अनेकविद्यानिलयः कलाकौशलभाजनम् ।।
कौमारं वपुरासाद्य शिवभक्तिपरोऽभवत् ।। ७१ ।।
नियमं चापि जग्राह विजितेद्रियमानसः ।।।
एकपत्नीव्रतं नित्यं चरिष्यामीति निश्चितम् ।। ७२ ।।
परयोषित्समासक्तिरायुः कीर्तिं र्बलं सुखम् ।।
हरेत्स्वर्गगतिं चापि तस्मात्तां वर्जयेत्सुधीः ।। ७३ ।।
अपरं चापि नियमं स शुचिष्मान्समाददे ।।

गतजन्मांतराभ्यासाविलोचनसमाश्रयात् ।।७४।। ।
समस्तपुण्यनिलयः समस्तार्थप्रकाशकः ।।
समस्तकामजनकं परानंदैककारणम् ।। ७५ ।।
यावच्छरीरं निरुजं यावन्नेद्रियविप्लवः ।।
तावत्त्रिलोचनोवंत्यां मंतव्यो नात्र संशयः ।। ७६ ।।
इत्थं मंदारदामिः स काश्यां परिमलालयः ।।
नित्यं त्रिविष्टपं द्रष्टुं समागच्छेत्प्रयत्नतः ।।७७।।
पारावत्यपि संजाता रत्नदीपस्य मंदिरे ।।
नागराजस्य पाताले नाम्ना रत्नावलीति च ।। ७८ ।।
समस्तनागकन्यानां रूपशीलकलागुणैः ।।
एकैव रत्नभूताऽऽसीद्रत्न दीपोरगात्मजा ।। ७९ ।।
तस्याः सखीद्वयं चासीदेका नाम्ना प्रभावती ।।
कलावती तथान्या च नित्यं तदनुगे शुभे ।। 5.2.45.८० ।।
स्वदेहादनपायिन्यौ छायाकांती यथा तथा ।।
पूर्वे सख्यौ भवेतां हि रत्नावल्या महेश्वरि ।। ८१ ।।
सा तु बाल्ये व्यतिक्रांते किंचिदुद्भिन्नयौवना ।।
शिवभक्तं स्व पितरं दृष्ट्वा नियममग्रहीत् ।। ८२ ।।
पितस्त्रिलोचनं काश्यामर्चयित्वा दिनेदिने ।।
आभ्यां सखीभ्यां सहिता मौनं त्यक्ष्यामि नान्यथा ।। ।। ८३ ।।
एवं नागकुमारी सा सखीद्वयसमन्विता ।।
त्रिलोचनं समभ्यर्च्य गृहानहरहर्व्रजत् ।। ८४ ।।
मां प्रत्यग्रैः सुकुसुमैः सुशुभैरि ष्टगंधिभिः ।।
सुविचित्राणि माल्यानि परिगुंफ्यार्चयेद्विभुम् ।। ८५ ।।
तिस्रोऽपि गीतं गायंति ललितं चैव सुस्वरम् ।।
नारीमंडलभेदेन लास्यं तिस्रोऽपि र्वते ।। ८६ ।।
वीणावेणुमृदंगांश्च लयतालविचक्षणाः ।।
वादयंति मुदायुक्तास्तिस्रोऽपि विरमंति वै ।। ८७ ।।
इत्थमाराधयंतीशं तिस्रो नागकुमारिकाः ।।
विचित्रभंगीमालाभिरर्चयंत्यस्त्रिलोचनम् ।। ८८ ।।
प्रातश्चतुर्थ्यां ताः स्नात्वा तीर्थे पिलिपिले शुभे ।।
त्रिलोचनं समर्च्याथ प्रसुप्ता रंगमण्डपे ।। ८९ ।।
सुप्तासु तासु स शिवस्त्रिनेत्रः शशिभूषणः ।।

वामार्द्धविलसच्छक्तिर्नागयज्ञोपवीतकः ।। 5.2.45.९० ।।
लिंगादेव हि निर्गत्य गंगापन्नगमेखलः ।।
प्रत्युवाच ततः कन्या विभुरुत्तिष्ठतेति सः ।। ९१ ।।
उत्थाय ता विनिर्मथ्य लोचने श्रुतिसंगमे ।।
अंगमोटनवत्यश्च तदा निर्घूर्णितेक्षणाः ।। ९२ ।।
यावत्पश्यंति पुरतः संभ्रमापन्नमानसाः ।।
अतर्कितागमस्तावत्ताभिर्दृष्टस्त्रिलोचनः ।। ९३ ।।
ववंदिरेऽथ ता बाला ज्ञात्वा लक्ष्मभिरीश्वरम् ।।
तुष्टुवुश्च प्रहृष्टास्ताः सन्नकंठ्योऽतिविक्लवम् ।। ९४ ।।
जय शंभो जयेशान जय सर्वग सर्वद ।।
जय त्रिपुरसंहर्तर्जयांधकनिषूदन ।। ९५ ।।
जय जालंधरहर जय कंदर्पदर्पहृत् ।।
जय त्रैलोक्यजनक जय त्रैलोक्यवंदित ।।
जय भक्तजनाधीश जय प्रमथ नायक ।। ९६ ।।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ।।
त्रिलोचन नमस्तुभ्यं त्रिविष्टप नमोऽस्तु ते ।। ९७ ।।
इत्युक्त्वा दंडवद्भूमौ प्रणिपेतुः कुमारिकाः ।।
अथोत्थाप्य कुमारीस्ताः प्रोवाच शशिभूषणः ।। ९८ ।।
सुतो मंदारदाम्नश्च नाम्ना परिमलालयः ।।
पतिर्विद्याधरवरो भवतीनां भविष्यति ।। ९९ ।।
चिरं विद्याधरे लोके भोगान्भुक्त्वा समंततः ।।
ततो ह्यवंतिकां प्राप्य मां ध्यात्वा सिद्धिमाप्स्यथ ।। 5.2.45.१०० ।।
जन्मांतरेपि मे भक्तिर्भवतीभिश्च तेन च ।।
विहिता तेन वो जन्म निर्मलं भक्तिभावितम् ।। १०१ ।।
एतत्प्रभावतीस्तोत्रं ये पठिष्यंति मे पुरः ।।
तेभ्यः कामान्प्रदास्यामि भवतीनामयं वरः ।। १०२ ।।
इत्युक्तवति देवेशे ताः कन्या हृष्टमानसाः ।।
प्रणम्य प्रोचुरीशानं प्रबद्धकरसंपुटाः ।। १०३ ।। ।।
।। नागकन्या ऊचुः ।।
पृच्छामो ब्रूहि नो नाथ करुणाकर शंकर ।।
जन्मांतरे कथं सेवा चतुर्भिर्भवतः कृता ।। १०४ ।।
ततः प्राक्तनवृत्तांत मेतस्यापि कृतात्मनः ।।

अस्माकमपि चाख्याहि कृपां कुरु कृपानिधे ।। १०५ ।।
इति श्रुत्वा प्रणयतो बालोदीरितमीप्सितम् ।।
प्रोवाच तासामपि च भवांतरविचेष्टितम् ।। १०६ ।।
।। ईश्वर उवाच ।। ।।
शृणुध्वं नागतनयास्तिस्रोपि हि समाहिताः ।।
प्राग्भवं भवतीनां च तस्यापि कथयाम्यहम् ।।१०७।।
एषा रत्नावली पूर्वमासीत्पारावती खगी ।।
स च विद्याधरवरः पतिरस्याः खगोऽभवत् ।।१०८।।
प्रासादे च ममैताभ्यामुषितं सुचिरं सुखम्।।
रजः प्रासादसंलग्नं नुन्नं पक्षानिलैः पुनः ।। १०९ ।।
उपरिष्टादधस्ताच्च कृता भूरिप्रदक्षिणाः ।।
व्योम्नि संचरमाणाभ्यां संचीर्णं च ममाजिरे ।। 5.2.45.११० ।।
स्नातं चतुर्नदे तीर्थे पीतं तत्रांबु चासकृत् ।।
आभ्यां कलरवाभ्यां च कृताः कलरवा मुदा ।। १११ ।।
एताभ्यां स्थिरचित्ताभ्यां मुदिता त्वमतीव हि ।।
दृष्ट्वा हि कौतुकान्यत्र मम भक्तैः कृतान्यपि ।। ११२ ।।
अमूभ्यां बहुशो दृष्टा मम मंगलदीपिकाः ।।
पीतं श्रुतिपुटाभ्यां च मम नामाक्षरामृतम् ।।
तिर्यग्योनिप्रभावेन न मृतौ मम संनिधौ ।।११३।।
जंबूमार्गे मृतौ यस्मात्स्वर्गप्राप्तिकरे ध्रुवम् ।।
तस्मात्पारावती ह्येषा रत्नदीपसुताऽभवत् ।। ११४ ।।
पतिः पारावतोऽस्याश्च जातो विद्याधरांगजः ।।
एषा प्रभावती नागी नागराजस्य सद्मनि ।।
इह जन्मनि कन्यासीत्पूर्वजन्म ब्रवीमि च ।। ११५ ।।
त्रिशिखस्योरगेंद्रस्य सुता चेयं कलावती ।।
एतस्या अपि वृत्तांतं निशामय तु वच्म्यहम् ।। ।।११६ ।।
भवांतरे तृतीयेतः कन्ये चारायणस्य च ।।
आस्तां महर्षेः शीलाढ्ये प्रेमवत्यौ परस्परम् ।। ११७ ।।
पित्रा चारायणेनापि ताभ्यां संप्रेरितेन वै ।।
आमुष्यायणपुत्राय दत्ते नारायणाय हि ।। ११८ ।।
अप्राप्तयौवनोरण्ये समिदाहरणाय वै ।।
गतो विधिवशाद्दष्टो दंदशूकेन कानने ।। ११९ ।।

भवानीगौतमीनाम्न्यौ ते तु चारायणांगजे ।।
वैधव्यदुःखमापन्ने दैन्यग्रस्ते बभूवतुः ।। 5.2.45.१२० ।।
अत एव प्रयत्नेन परिणेता विवर्जयेत ।।
देवतासरिदाह्वानकन्यापाणिग्रहं सुधीः ।। १२१ ।।
अथर्षेः कस्यचिद्दैवादाश्रमे देवसन्निभे ।।
रंभाफलान्यदत्तानि मोहाज्जग्रहतुस्तदा ।। ।। १२२ ।।
कृत्वा नानोपवासादिव्रतानि ब्राह्मणांगजे ।।
अध्यास्य निधनं कालाच्छाखामृग्यौ बभूवतुः ।। १२३ ।।
फलचौर्यविपाकेन वानर त्वं तयोरभूत् ।।
शीलरक्षणभावेनावंत्यां जनिमवापतुः ।। १२४ ।।
स च नारायणो विप्रः पितृशुश्रूषणे रतः ।।
दष्टोऽपि दंदशूकेन काश्यां पारावतो भवत ।। १२५ ।।
एवं भवांतरे चासीदेतयोः पतिरेव सः ।।
तिसृणां भवतीनां च भावी भर्ता पुनः स वै ।। १२६ ।।
प्रासादस्यापि पार्श्वे तु न्यग्रोधश्च महानगः ।।
तस्मिञ्छाखिनि वासाढ्ये शाखामृग्यो बभूवतुः ।। १२७ ।।
विष्णुदेहजले तीर्थे क्रीडया च ममज्जतुः ।।
पपतुश्चापि पानीयं तस्मिंस्तीर्थे तृषातुरे ।। १२८ ।।
जातिस्वभावचापल्यात्कीडंत्यौ च प्रदक्षिणम् ।।
चक्रतुर्बहुकृत्वश्च लिंगं ददृश तुर्बहु ।। १२९ ।।
विचरंत्यावितः स्वैरं तत्र न्यग्रोधसंनिधौ ।।
केनचिद्योगवेषेण पाशेन च नियंत्रिते ।।5.2.45.१३०।।
भिक्षार्थं शिक्षिते तेन न प्लुतिर्न निवर्त्तनम् ।।
अथ ते क्वापि मर्कट्यौ कालधर्मवशंगते ।। १३१ ।।
अवन्तीवासपुण्येन त्रिलोचनस्य सेवया ।।
प्रादक्षिण्यानुरूपेण जाते नागसुते अपि ।। १३२ ।।
अधुना तं पतिं प्राप्य विद्याधरकुमारकम् ।।
निर्विश्य स्वर्गभोगांश्चावंत्यां निर्वृतिमाप्स्य ।। १३३ ।।
यैरल्पमपि चावंत्या कृतं कर्म शुभावहम् ।।
तस्य मोक्षः परीपाको निश्चितं मदनुग्रहात् ।।
त्रैलोक्येऽपि च सर्वस्मिञ्छ्रेष्ठाऽवन्तीपुरी सदा ।। १३४ ।।
ततोऽपि लिंगमोंकारं ततोऽप्यत्र त्रिलोचनम् ।।

तिष्ठगानोऽत्र लिंगेऽहं भुक्तिं मुक्तिं ददामि वै ।। १३५ ।।
अतः सर्वप्रयत्नेनावन्त्यां पूज्यस्त्रिलोचनः ।।
इत्युक्त्वा देवदेवेशस्तत्प्रासादांतरेऽविशत् ।।१३६।।
लिंगस्वरूपमासाद्य शुभं त्रिभुवनादपि ।।
ताश्च स्वसदनं प्राप्य तद्वृत्तांतमशेषतः ।।
स्वमातुः पुरतश्चोक्त्वा कृतकृत्या इवाभवन् ।। १३७ ।।
एकदा माधवे मासि सह सार्थाः समागताः ।।
विद्याधरास्तथा नागा मिलिताः सपरिच्छदाः ।। १३८ ।।
विरजस्के महाक्षेत्रे त्रिलोचनसमीपतः ।।
देवस्य वरदानाच्च पृष्ट्वान्योन्यं कुलावलिम् ।। १३९ ।।
विद्याधराय ताः कन्या नागैस्तिस्रोऽपि कल्पिताः ।।
मंदारदामा सन्तुष्टः प्राप्य तच्च स्नुशत्रयम् ।।5.2.45.१४०।।
रत्नदीपैश्च नागेन्द्रः पद्मी च भुजगेश्वरः ।।
विशिखोऽपि फणींद्रश्च हृष्टा एते त्रयोऽपि च ।।
जामातरं समासाद्य शुभं परिमलालयम् ।। १४१ ।।
अन्योऽन्यं स्वजनास्ते तु मुदा विकसितेक्षणाः ।।
विवाहोत्सवमारच्य स्वंस्वं भवनमाविशन् ।। १४२ ।।
त्रिलोचनस्य लिंगस्य वर्णयंतोऽपि गौरवम् ।।
स च विद्याधरः श्रीमान्नागीभिर्विपुलं सुखम् ।।
भुक्त्वावन्तीं ततः प्राप्य संसेव्य च त्रिलोचनम् ।। १४३ ।।
गायन्गीतं सुमधुरं नागीभिः सहितः कृती ।।
आत्मानं चातिविस्मृत्य मध्येलिंगं लयं गतः ।। १४४ ।।
त्रिलोचनस्य महिमा कलौ देवेन गोपितः ।।
ततोल्पसत्त्वा मनुजा न तल्लिमगमुपासते ।। १४५ ।।
त्रिलोचनकथामेतां श्रुत्वा पापान्वितोऽप्यहो ।।
विपापो जायते मर्त्यो लभते च परां गतिम् ।। १४६ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
त्रिलोचनस्य देवस्य शृणु वीरेश्वरं परम् ।। ।। १४७ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये त्रिलोचनमाहात्म्यवर्णनंनाम पंचचत्वारिंशोऽध्यायः ।। ४५ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४६



।। श्रीहर उवाच ।। ।।
षट्चत्वारिंशकं देवि वीरेश्वरमथो शृणु ।।
यस्य दर्शनमात्रेण कुलवृद्धिर्भवेद्ध्रुवम् ।। १ ।।
निशामय महा वि वीरेशाविर्भवं परम् ।।
यच्छ्रुत्वा पितरः पुण्यं प्राप्नुयुर्विपुलं शिवे ।। २ ।।
आसीदमित्रजिन्नाम राजा परपुरंजयः ।।
धार्मिकः सत्त्वसंपन्नः प्रजारंजनतत्परः ।। ३ ।।
यशोधनो वदान्यश्च सुधीर्ब्राह्मणदैवतः ।।
सदैवावभृथस्नातः परिक्लिन्नशिरोरुहः ।।४।।
विनीतो नीतिसंपन्नः कुशलः सर्वकर्मसु ।।
विद्याविशारदश्चाथ गुणवान्गुणिवत्सलः ।। ५ ।।
कृतज्ञो मधुरालापः पापकर्मपराङ्मुखः ।।
सत्यवाञ्छौचनिलयः सत्यवाग्विजितेंद्रियः ।। ६ ।।
रणांगणे कृतांतस्य संख्यावांश्च सदोजिरे ।।
कामिनीकेलिकालज्ञो युवापि स्थविरप्रियः ।। ७ ।।
धर्मार्थ धनकोशश्च समृद्धबलवाहनः ।।
सुभगश्च सुरूपश्च सुमेधाः सुप्रजाप्रियः ।। ८ ।।
स्थैर्यधैर्यसमापन्नो देशकालविचक्षणः ।।
मान्यानां मानदो नित्यं सर्वदूषणवर्जितः ।। ९ ।।
वासुदेवांघ्रियुगले चेतोवृत्तिं निधाय च ।।
चकार राज्यं निर्द्वंद्वं धिग्धिगीतिविवर्जितम ।। 5.2.46.१० ।।
अलंघ्यशासनः श्रीमान्विष्णुभक्तिपरायणः ।।
अभुनक्प्रवरान्भोगान्समंताद्विष्णुसंस्कृतान् ।। ११ ।।
हरेराराधनान्युच्चैः प्रतिसौधं पदेपदे ।।
तस्य राज्ये समभवन्महाभागनिधेः शिवे ।। १२ ।।
गोवृन्दगोपगोपालगोपीजनमनोहर ।।
गदापाणे गुणातीत गुणाश्च गरुडध्वज ।। १३ ।।

केशिहन्कैटभाराते कंसारे कमलापते ।।१४।।
कृष्ण केशव कंजाक्ष कीनाशभयनाशन ।।
पुरुषोत्तम पापारे पुण्डरीकविलोचन ।।१५।।
पीतकौशेयवसन पद्मनाभ परात्पर ।।
जनार्द्दनजगन्नाथ जाह्नवीजलजन्मभूः ।।१६।।
जन्मिनां जन्महरण जंजपूकौघनाशन ।।
श्रीवत्सवक्षः श्रीकंठ श्रीकर श्रेयसांनिधे ।। १७ ।।
श्रीरंग शार्ङ्गकोदंड शौरे शीतांशुलोचन।।
दैत्यारे दानवाराते दामोदर दुरंतक ।।१८।।
देवकीहृदयानंद दंदशूकेश्वरेशय ।।
विष्णो वैकुण्ठनिलय बाणारे विष्ट रश्रवः ।।१९।।
विष्वक्सेन विभो वीर वनमालिन्बलिप्रिय ।।
त्रिविक्रम त्रिलोकेश चक्रपाणे चतुर्भुज ।।5.2.46.२०।।
इत्यादीनि पवित्राणि नामानि प्रति मंदिरे ।।
स्त्रीवृद्धबालगोपालवदनोदीरितानि तु ।। २१ ।।
श्रूयंते यत्र कुत्रापि रम्याणि मधुविद्विषः ।।
सुरम्यकाननान्येव विलोक्यंते गृहेगृहे ।। ।। २२ ।।
विचित्राणि चरित्राणि गीयंते च गृहेगृहे ।।
सौधभित्तिषु दृश्यंते चित्राणि कृत्रिमाणि च ।। २३ ।।
ऋते हरिकथायास्तु नान्या वार्त्ता निशम्यते ।।
हरिणा नैव वध्यंते हरिणा मांसधारिणः ।। २४ ।।
तस्य राज्ञो भयाद्व्याधैररण्ये सुखचारिणः ।।
न मत्स्या नैव च बका वराहाश्च न केनचित् ।। २५ ।।
हन्यंते क्वापि तद्भीत्या मत्स्यमांसाशिनाऽपि व ।।
अपुत्रा न नरास्तस्य राष्ट्रेऽमित्रजितः क्वचित् ।। २६ ।।
स्तनपानं न कुर्वंति संप्राप्य हरिवासरम् ।।
पशवोऽपि तृणाहारं परित्यज्य हरेर्दिने ।।
उपोषणपरा जाता अन्येषां का कथा नृणाम् ।। २७ ।।
महामहोत्सवः सर्वैः पुरौकोभिर्वितन्यते ।।
अस्मिन्प्रशासति भुवं संप्राप्ते हरिवासरे ।। २८ ।।
यो विष्णुभक्तिरहितः प्राणैरपि धनैरपि ।।
स एव दण्ड्यो भुंक्ते यो राज्ञोऽमित्रजितः क्षितौ ।। २९ ।।

अन्त्यजा अपि तद्राष्ट्रे शंखचक्रांकधारिणः ।।
संप्राप्य वैष्णवीं दीक्षां दीक्षिता इति संस्थिताः ।। 5.2.46.३० ।।
शुभानि यानि कर्माणि क्रियंतेऽनुदिनं जनैः ।।
वासुदेवे समर्प्यंते तानि तैरफलेप्सुभिः ।। ३१ ।।
विना मुकुंदगोविंद परमानंदमच्युतम् ।।
नान्यो जप्येत नम्येत सभाज्येत जनः क्वचित् ।।
कृष्ण एव परो बंधुस्तस्यासीदवनीपतेः ।।३२।।
एवं तस्मिन्महीपाले राज्ये सम्यक्प्रशासति ।।
एकदा नारदः श्रीमांस्तं दिदृक्षुः समाययौ ।। ३३ ।।
राज्ञा समर्चितः सोऽथ मधुपर्कविधानतः ।।
नारदो वर्णयामास तममित्रजितं नृपम् ।। ३४ ।।
।। श्रीनारद उवाच ।। ।।
धन्योऽसि कृतकृत्योऽसि मान्योऽप्यसि दिवौकसाम् ।।
सर्वभूतेषु गोविंदं परिपश्यन्विशांपते ।। ३५ ।।
यो वेदपुरुषो विष्णुर्यो यज्ञपुरुषो हरिः ।।
योंऽतरात्मास्य जगतः कर्ता हर्ताविता विभुः ।। ३६ ।।
तन्मयं पश्यतो विश्वं तव भूपालसत्तम ।।
दर्शनं प्राप्य शुभदं शुचित्वमगमं परम् ।। ३७ ।।
एष एव हि सारोऽत्र संसारे क्षणभंगुरे ।।
कमलाकांतपादाब्जभक्तिभावोऽखिलप्रदः ।। ३८ ।।
परित्यज्य हि यः सर्वं विष्णुमेकं सदा भजेत् ।।
सुमेधसं भजंते तं पदार्थाः सर्व एव हि ।। ३९ ।।
हृषीकेशे हृषीकाणि यस्य स्थैर्यं गतान्यहो ।।
स एव स्थैर्यमाप्नोति ब्रह्मांडेऽतीव चंचले ।। 5.2.46.४० ।।
यौवनं धनमायुष्यं जलं पद्मदले यथा ।।
अतीव चंचलं ज्ञात्वाऽच्युतमेव सदाश्रयेत् ।। ४१ ।।
वाचि चेतसि कर्णेऽथ यस्य देवो जनार्दनः ।।
स एव सर्वदा वेद्यो नररूपी जनार्द्दनः ।।
निर्व्याजप्रणिधानेन शीलयित्वा श्रियःपतिम् ।। ४२ ।।
पुरुषोत्तमतां को न प्राप्तस्त्वमिव भूतले ।।
अनया विष्णुभक्त्या ते संतुष्टेंद्रियमानसः ।।
उपकर्तुमना ब्रूयां तन्निशामय भूपते ।। ४३ ।।

मालाविद्याधरसुता नाम्ना मलयगंधिनी ।।
क्रीडंती पितुराक्रोडे हृता कंकालकेतुना ।। ४४ ।।
कपालकेतुपुत्रेण दानवेन बलीयसा ।।
आगामिन्यां तृतीयायां तस्याः पाणिग्रहः किल ।। ४५ ।।
पाताले चंपकावत्यां नगर्यां सास्ति सांप्रतम् ।।
हाटकेशात्समागच्छंस्तयाऽहं साश्रुनेत्रया ।। ।। ४६ ।।
दृष्टः प्रणम्य विज्ञप्तो यथा तच्च निशामय ।।
ब्रह्मचारिन्मुनिश्रेष्ठ गंधमादनशैलतः ।। ४७ ।।
बालक्रीडनकासक्तां मां जह्रे त्रस्तमान साम् ।।
कंकालकेतुर्दुर्वृत्तस्तस्य नास्ति च पातकः ।। ४८ ।।
स स्वत्रिशूलघातेन म्रियते नान्यथा रणे ।।
जगत्पर्याकुलीकृत्य निद्रात्यथ विनिर्भयः ।। ४९ ।।
यदि कोपि कृतज्ञो मां हत्वेमं दुष्टदानवम् ।।
मद्दत्तेन त्रिशूलेन नयेद्भद्रं च वै कृतम् ।। 5.2.46.५० ।।
यद्यत्रोपचिकीर्षुस्त्वं रक्ष मां दुष्ट दानवात् ।।
ममापि हि वरो दत्तो भगवत्योमया पुरा ।।
विष्णुभक्तो युवा धीमान्पुत्रि त्वां परिणेष्यति ।। ५१ ।।
आतृतीयातिथि यथा तद्वाक्यं तथ्यतां व्रजेत्।।
तथा निमित्तमात्रं त्वं भव यत्नं समाचर ।। ५२ ।।
इति तद्वचनाद्राजन्विष्णुभक्तिपरायणम् ।।
युवानं चापि धीमन्तं त्वामनुप्राप्तवानहम् ।।५३।।
तद्गच्छ कार्यसिद्ध्यै त्वं हत्वा तं दुष्टदानवम्।।
आनयाशु महाबाहो शुभां मलयगंधिनीम्।।५४।।
सा तु विद्याधरी बाला विलोक्य त्वां नरेश्वर ।।
अवश्यमेव तच्छूलं दास्यतीति विनिश्चितम् ।।
पार्वतीवचनाद्दुष्टं घातयिष्यस्यसंशयम्।। ५५।।
इति नारदवाक्यं स निशम्यामित्रजिन्नृपः ।।
अनल्पोत्कलिको जातो विद्याधरसुतां प्रति।।
उपायं चापि पप्रच्छ गंतुं वै चंपकावतीम् ।।५६।।
नारदेन पुनः प्रोक्तः स राजा गिरिराजजे ।।
तूर्णमर्णवमासाद्य पूर्णिमादिवसे नृप ।।५७।।
भवान्द्रक्ष्यति पोतस्थकल्पवृक्षरथास्थिताम्।।

तत्र दिव्यांगनां कांचिद्दिव्यपर्यंकसुस्थिताम्।।
वीणामादाय गायंतीं गाथामत्यंतसुस्वरम् ।।५८।।
यत्कर्म विहितं येन शुभं वाप्यथवाऽशुभम् ।।
स एव भुंक्ते तत्तथ्यं विधिस्तत्र नियंत्रितः ।।५९।।
गाथामिमां तु संगीय सरथा समहीरुहा ।।
सपर्यंका क्षणादेव मध्येसिंधु प्रवेक्ष्यति ।।5.2.46.६०।।
भवानप्यविशंकं च ततः पोतान्महार्णवे ।।
तमनुव्रजतु क्षिप्रं यज्ञवाराहसा त्मवान् ।। ६१ ।।
ततो द्रक्ष्यसि पाताले नगरीं चंपकावतीम् ।।
महामनोहरा राजन्सनाथां बालया तया ।। ६२ ।।
इत्युक्त्वांतर्हितो देवि स चतुर्मु खनंदनः ।।
राजाप्यर्णवमासाद्य यथोक्तं परिलक्ष्य च ।। ६३ ।।
विवेशांतः समुद्रं च नगरीमाससाद ताम् ।।
सापि विद्याधरी बाला नेत्रयोः प्राघु णीकृता ।। ६४ ।।
तेन राज्ञा त्रिजगतीसौंदर्यश्रीरिवैकिका ।।
पाताले देवतेयं वा मम नेत्रोत्सवाय किम् ।। ६५ ।।
निरमायि प्रमोद्देशात्स्रष्टृसृष्टिर्वि लक्षणा ।।
कुहूराहुभयद्वेषात्कांतिश्चांद्रमसी किमु ।। ६६ ।।
योषिद्रूपं समाश्रित्य तिष्ठत्यत्राकुतोभया ।।
इत्थं क्षणं च निर्वर्ण्य स राजाऽगच्छदंति कम् ।। ६७ ।।
सा विलोक्याथ तं बालं नितरां मधुराकृतिम् ।।
विशालोरःस्थलतलप्रलंयतुलसीस्रजम् ।। ६८ ।।
शंखचक्रांकसुभगभुजद्वयविराजि तम् ।।
हरिनामाक्षरसुधासुधौतरदनावलिम् ।। ६९ ।।
भवानीभक्तिबीजोत्थभूरुहं पुरुषाकृतिम् ।।
अनेनात्र कृतं कस्य भवनं मधुराकृति ।। 5.2.46.७० ।।
इति पर्याकुलीकृत्य चक्षुषी च मुहुर्मुहुः ।।
कंकालकेतुर्दुर्वृत्तस्त्ववध्यः परहेतिभिः ।।७१।।
तावद्रुसं समातिष्ठ शस्त्रागारेऽत्र गह्वरे ।।
न मे कन्याव्रतं भग्नं सामर्थ्याच्चण्डिकावरात् ।।७२।।
आगामिन्यां तृतीयायां परश्वः पाणिपीडनम् ।।
स चिकीर्षति दुष्टात्मा गतायुर्मम शापतः ।।७३।।

मा तद्भीतिं कुरु युवंस्त्वत्कार्यं भविताचिरात् ।।
विद्याधर्येति चोक्तः स शस्त्रागारे निगूढवत् ।। ७४ ।।
स्थिरो वीरो महाबाहुर्दानवागमनेक्षणः ।। ७५ ।।
अथ सायं समायातो दानवो भीषणाकृतिः ।।
त्रिशूलं कलयन्पाणौ मृत्योरपि भयावहम् ।। ७६ ।।
आगत्य दानवो रौद्रः प्रलयांबुदनिस्वनः ।।
विद्याधरीं जगादेति मदाघूर्णितलोचनः ।।७७।।
गृहाणेमानि रत्नानि दिव्यानि वरवर्णिनि ।।
कन्यात्वं हि परश्वस्ते पाणिग्राहो भविष्यति ।। ७८ ।।
दासीनामयुतं प्रातर्दास्यामि तव सुंदरि ।।
आसुरीणां सुरीणां च दानवीनां मनोहरम् ।। ७९ ।।
गन्धर्वीणां किंनरीणां सततं परिचारिकाः ।।
विद्याधरीणां नागीनां यक्षीणां च शतानि षट् ।। 5.2.46.८० ।।
राक्षसीनां शतान्यष्टौ शतमप्सरसां वरम् ।।
एतास्ते परिचारिण्यो भविष्यंत्यमलाशये ।। ।। ८१ ।।
यावत्संपत्तिसंभारो दिक्पालानां गृहेषु वै ।।
मत्परिग्रहतां प्राप्तौ तावतस्त्वं महेश्वरी ।। ८२ ।।
दिव्यान्भोगान्मया सार्द्धं भोक्ष्यसे मत्परिग्र हात् ।।
कदा परश्वो भविता यस्मिन्वैवाहिको विधिः ।। ८३।।
त्वदंगसंगसंस्पर्शसुखस्वादातिमेदुरः ।।
परां निर्वृतिमाप्स्यामि परश्वो निकटं यदि ।। ।। ८४ ।।
मनोरथाश्चिरं यावद्ये मे हृदि समेधिताः ।।
तान्कृतार्थी करिष्यामि परश्वस्तव संगमात् ।। ८५ ।।
जित्वा देवान्रणे सर्वानिंद्रादीन्मृगलो चने।।
त्रैलोक्यैश्वर्यसंपत्तेस्त्वां करिष्यामि चेश्वरीम् ।।८६।।
आधायांके त्रिशूलं च सुष्वापेति प्रलप्य सः।।
नरमांसस्य स्वादेन प्रमत्तो वीतसाध्वसः।। ।। ८७ ।।
वरं स्मरंती सा गौर्या विद्याधरकुमारिका ।।
विज्ञाय तं प्रमत्तं च प्रसुप्तं चातिनिर्भयम् ।।
आहूय तं नरवरं वरं सर्वांगसुंदरम् ।। ८८ ।।
विष्णुभक्तिकृतत्राणं प्राणनाथेति जल्प्य च ।।
शूलं तदंकादादाय ददौ तस्मै च सुंदरी ।।८९।।

तमादाय त्रिशूलं च स तदामित्रजिन्नृपः ।।
संस्मरंश्चक्रिणं चित्ते जगद्रक्षामणिं हरिम्।। 5.2.46.९० ।।
जगादोत्तिष्ठ रे दुष्ट कन्यादूषणलालस ।।
युध्यस्व च मया सार्द्धं न सुप्तं हन्म्यहं रिपुम् ।। ९१ ।।
इति संश्रुत्य संप्राप्तः कस्य दृष्टोद्य चांतकः ।।
क आयुषाद्य संत्यक्तो यः प्राप्तो मम गोचरम् ।।९२।।
मम प्रचंडदोर्दंडकंडूकंडूयनक्षमः ।।
माल्यो नरोऽयं भविता किं त्रिशूलेन सुंदरि ।। ९३ ।।
मा भैर्मे कौतुकं पश्य भक्षोयं मम सांप्रतम् ।।
कालेन मत्तो भीतेन स्वयमेवोपढौकितः ।। ९४ ।।
इत्युक्त्वा मुष्टिघातेन तेनोच्चैर्दंडसूनुना ।।
हृदये निहतो राजा शिलातिकठिने द्रुतम् ।। ९५ ।।
स चक्रिणा कृतत्राणः पीडां नाल्पीयसीमपि ।।
विवेद कठिनोरस्कः करस्तस्य प्रपीडितः ।। ९६ ।।
अथ कोपवता राज्ञा हतो वक्त्रे चपेटया ।।
आघूर्णितशिरा भूमौ पतित्वा पुनरुत्थितः ।।
उवाच च वचो धैर्यमवष्टभ्य महाबली ।। ९७ ।।
।। दानव उवाच ।। ।।
ज्ञातं तत्त्वं मनुष्योसि नृरूपेण चतुर्भुजः ।।
ततस्त्वं छिद्रमासाद्य हंतुं मां दानवांतक ।। ।।९८।।
एवंविधो हि मधुभिद्यदि त्वं बलवानसि।।
विहायैतन्महच्छूलं युध्यस्व स्वायुधैर्मया।। ९९।।
त्वया कपटरूपेण बलिना कैटभादयः।।
न बलेन हताः संख्ये हता एव च्छलेन हि ।।5.2.46.१००।।
बलिं पातालमनयस्त्वं नृवामनतां दधत् ।।
नृमृगत्वेन भवता हिरण्यकशिपुर्हतः ।।१।।
तथा जटिलरूपेण लंकेशो विनिपातितः।।
गोपालवेषमालंब्य कंसाद्या घातितास्त्वया ।।
स्त्रीभूय चाहरस्त्वं हि विप्रतार्यासुरान्सुधाम् ।।२।।
यादोरूपेण भवता शंखाद्या निहता इह ।।
मायाविना त्वयाऽगण्याः सर्वमर्मज्ञ माधव ।। ३ ।।
न त्वत्तोऽहं बिभेम्यद्य सद्यः पातः शरीरिणाम् ।।

वरं तव श्रये मृत्युं बलेनापि छलेन वा ।। ४ ।।
न त्यक्ष्यसि त्रिशूलं त्वं न त्वां योत्स्याम्यहं रणे ।।
अवश्यमेव मर्त्तव्यं मया प्रातः शरीरिणा।। ५ ।।
इयं विद्याधरी कन्या न मया दूषिता सती ।।
साक्षाच्छ्रीरिव मंतव्या तवार्थं रक्षिता मया ।। ६ ।।
इत्युक्त्वा वामदोर्दंडप्रहारेणापि निष्ठुरम् ।।
निजघान दनोः सूनुस्तं शिलोच्चय घातिना ।। ७ ।।
नृपतिस्त्वथ संधार्य विषह्य रणमूर्द्धनि ।।
जघानाशु तदा क्रूरं त्रिशूलेनाथ वक्षसि ।।८ ।।
तत्प्रहारान्महाबाहुः पंचत्वमगम त्क्षणात् ।।
लक्ष्यीचकार तद्वक्त्रं त्रिशूलं तोलयन्करे ।। ९ ।।
पश्यतोऽस्य महाबाहोः स च प्राणाञ्जहौ क्षणात्।।
इत्थं कंकालकेतुं स निहत्य सुरकं पनम् ।।5.2.46.१०।।
विद्याधरीं प्रपश्यंतीं प्राह हृष्टतनूरुहः ।।
नारदस्य मुनेर्वाक्यात्तव सुश्रोणि वांछितम् ।। ११ ।।
कृतं मया कृतज्ञे किं करवाण्यधुना वद ।।
श्रुत्वेति तस्य सा वाक्यं प्राह गंभीरचेतसा ।। १२ ।।
।। मलयगंधिन्युवाच ।। ।।
अत्युदारमते वीर निजप्राणैः पणीकृताम् ।।
किं मां पृच्छसि युवतीं कुलकन्यामदूषिताम् ।। १३ ।।
इति ब्रुवंत्यां कन्यायां पुनः स्वैरचरो मुनिः ।।
अतर्कितागमः प्राप्तो नारदो देवलोकतः ।। ।। १४ ।।
ततस्तुष्टुवतुस्तौ तु तं दृष्ट्वा मुनिसत्तमम् ।।
कृतप्रणामौ मुनिना प्रतिज्ञाप्रापिताशिषौ ।। १५ ।।
पाणिग्रहेण विधिनाऽभिषिक्तौ नारदेन तु ।।
जग्मतुर्नारदादिष्टवर्त्मना कृतमंगलौ ।। १६ ।।
तया मलयगंधिन्या वृतः सोऽमित्रजिन्नृपः ।।
पुरीं चोज्जयिनीं प्राप्य पौरैर्विहितमंगलाम्।। ।। १७ ।।
तद्वीक्षणादपि नरो नारकीं नैव जातुचित् ।।
गतिं प्राप्नोति मेधावी तां पुरीमविशन्नृपः ।। १६ ।।
यस्यां पुर्यां प्रवेशं न लभन्ते वास वादयः ।।
कैवल्यजयजैत्र्यां हि तां पुरीमविशन्नृपः ।। १९ ।।

सापि विद्याधर्यवंतीं समृद्धां वीक्ष्य दूरतः ।।
निनिंद स्वर्गलोकं च पातालनगरी मपि ।। 5.2.46.१२० ।।
प्राप्यामित्रजितं कांतं तथा हृष्टा न सा वधूः ।।
यथा दृष्ट्वाप्यहोऽवंतीं परमानंददायिनीम् ।। २१ ।।
सा कृतार्थामिवात्मानं मन्य माना मनस्विनी ।।
तेन पत्योज्जयिन्यां च परां निर्वृतिमाप सा ।। २२ ।।
सोऽप्यमित्रजिदासाद्य पत्नीं मलयगंधिनीम् ।।
धर्मप्रधानं संसेव्य कामं प्रापोत्तमं सुखम् ।। २३ ।।
सा पतिं विष्णुभजने रतं प्रोवाच भामिनी ।। २४ ।।
।। राज्ञ्युवाच ।। ।।
भूपाभीष्टतृतीयायां चरिष्यामि महा व्रतम् ।।
।। राजोवाच ।। ।।
देव्यभीष्टतृतीयायां व्रतं कीदृग्भवेद्वद ।।२५।।
इति राज्ञोदिता राज्ञी प्रवक्तुमुपचक्रमे ।।
इति कर्तव्यतां तस्य व्रतस्य सविधानकाम्।। २६ ।।
।। राज्ञ्युवाच ।। ।।
पुरा देवर्षिणा चेदं व्रतं लक्ष्म्यै प्रतिश्रुतम् ।।
तया प्राप्तास्तु सकलाः कामाः स्वर्गापवर्गदाः ।। २७ ।।
मार्गशीर्षतृतीयायां शुक्लायां कलशोपरि ।।
ताम्रपात्रं निधायैव तंदुलैः परिपूरितम् ।। २८ ।।
अच्छिद्रं च नवीनं च रजनीरागरंजितम् ।।
वासः पात्रोपरि न्यस्य सूक्ष्मात्सूक्ष्मतरं परम् ।। २९ ।।
तस्योपरि शुभं पद्मं रविरश्मिप्रकाशितम् ।।
तत्कर्णिकाया उपरि चतुःस्वर्णविनिर्मितम् ।।
विधिं संपूजयेद्भक्त्या रक्तमाल्यांबरादिभिः ।। 5.2.46.१३० ।।
पुष्पैः सुगंधैः कर्पूरकस्तूर्यादिभिरर्चयेत् ।।
रात्रौ जागरणं कार्यं विप्राणां परमोत्सवैः ।।३१।।
होमः कार्यो महाभक्त्या सहस्रपरिसंख्यया ।।
नवप्रसूतां कपिलां दद्याच्च सुपयस्विनीम् ।। ३२ ।।
दद्यादाचार्यवर्याय सालंकारां सदक्षिणाम् ।।
उपोष्य दंपती भक्त्या नवांबरविभूषितौ ।। ३३ ।।
प्रातः स्नात्वा चतुर्थ्यां च संपूज्याचार्यमादितः ।।

वस्त्रैराभरणैर्माल्यैर्दक्षिणाभिर्मुदान्वितः ।।
सोपस्करां च तां मूर्तिमाचार्याय प्रदापयेत् ।। ३४ ।।
मंत्रः ।।
नमो विश्वविधानज्ञे विद्ये विविधकारिणि ।।
सुतं च शंकरं देहि तुष्टा ह्यस्माद्व्रतोत्तमात ।। ३५ ।।
सहस्रं भोजयित्वाथ द्विजानां भक्तिपूर्वकम् ।।
भुक्तशेषेण चान्नेन कुर्याद्वै पारणं ततः ।। ३६ ।।
इत्थमेतद्व्रतं नाथ चिकीर्षामि त्वदाज्ञया ।।
कुरु चैतत्प्रियं मह्यमभीष्टफललब्धये ।। ३७ ।।
इति भूपालवर्येण श्रुत्वा संहृष्टचेतसा ।।
तदा व्रतं समाचीर्णं सांतर्वत्नी बभूव ह ।। ३८ ।।
तयाथ प्रार्थिता गौरी गर्भिण्या भक्तितोषिता ।।
पुत्रं देहि महामाये साक्षाद्विष्ण्वंशसंभ वम् ।। ३९ ।।
जातमात्रो व्रजेत्स्वर्गं पुनरायाति चात्र वै ।।
भक्तः सदाशिवेऽत्यर्थं प्रसिद्धः सर्वभूतले ।।
विनैव स्तन्यपानेन षोडशाब्दाकृतिः क्षणात ।। 5.2.46.१४० ।।
एवंभूतः सुतो गौरि यथा स्यान्मे तथा कुरु ।।
मृडान्यापि तथेत्युक्ता राज्ञी भक्त्यातितुष्टया ।। ४१ ।।
अथ कालेन तनयं मूलर्क्षे साऽप्यजीजनत् ।।
हितैरमात्यैरथ सा विज्ञप्तारिष्टसंस्थिता ।। ४२ ।।
देवि राजार्थिनी त्वं तु त्यज दुष्टर्क्षजं सुतम् ।।
सा मंत्रिवाक्यमाकर्ण्य केवलं पतिदेवता ।। ४३ ।।
अत्याक्षीत्तं तथा प्राप्तं तनयं नयकोविदा ।।
धात्रिकां तु समाहूय प्राहेदं सा नृपांगना ।। ४४ ।।
पंचमुद्रे महापीठे विकटानाम मातृका ।।
तदग्रे स्थापयित्वामुं बालं धात्रि त्विदं वद ।। ४५ ।।
गौरि दत्तः शिशुरसौ तवाग्रे विनिवेदितः ।।
राज्न्या पत्युः प्रियैषिण्या मंत्रिविज्ञप्तिनुन्नया ।। ४६ ।।
सापि राज्न्युदितं श्रुत्वा बालं शिशुशशिप्रभम् ।।
विकटायाः पुरोभागे संस्थाप्य गृहमागता ।। ४७ ।।
अथ सा विकटा देवी समाहूय च योगिनीः ।।
उवाच नयत क्षिप्रं शिशुं मातृगणाग्रतः ।। ४८ ।।

तासामाज्ञां च कुरुत रक्षतामुं प्रयत्नतः ।।
योगिन्यो विकटावाक्यात्खेचर्यस्तत्क्षणेन तम् ।। ४९ ।।
निन्युर्गगनमार्गेण ब्राह्म्याद्या यत्र मातरः ।।
प्रणम्य योगिनीवृन्दं तं शिशुं सूर्यवर्चसम् ।। 5.2.46.१५० ।।
पुरो निधाय मातृणां प्रोचुश्च विकटोदितम् ।।
ब्रह्माणी वैष्णवी रौद्री वाराही नारसिंहिका ।।
कौमारी चापि माहेन्द्री चामुण्डा चैव चंडिका ।। ५१ ।।
दृष्ट्वा तं बालकं रम्यं विकटाप्रेषितं ततः ।।
पप्रच्छुर्युगपद्वाक्यं कस्ते बाल प्रमुख्यकः ।। ५२ ।।
मातृभि श्चेति पृष्टस्तु यदा किंचिन्न वक्ति सः ।।
तदा च योगिनीचक्रं प्राह मातृगणस्त्विवति ।। ५३ ।।
राज्ययोग्यो भवत्येष महालक्षणलक्षितः ।।
पुनस्तत्रैव नेतव्यो योगिन्यस्त्वविलंबितम् ।। ५४ ।।
पञ्चमुद्रा महादेवी तिष्ठते यत्र कामदा ।।
यस्याः संसेवनान्नृणां निर्वाणश्रीरदूरतः ।। ५५ ।।
तत्पीठसे वनादस्य षोडशाब्दाकृतेः शिशोः ।।
सिद्धिर्भवित्री परमा रुद्रस्यानुग्रहात्परा ।। ५६ ।।
एवं मातृगणात्सद्यो योगिनीभिः क्षणेन तु ।।
प्रापितो मातृवाक्येन पञ्चमुद्रांतिकं पुनः ।। ५७ ।।
संप्राप्य तन्महापीठं स्वर्गलोकादिहागतः ।।
महाकालवने पुण्ये तताप विपुलं तपः ।। ५८ ।।
तपसातीव तीव्रेण निश्चलेन्द्रियमानसः ।।
तस्य राजकुमारस्य प्रसन्नोऽभूदुमाधवः ।। ५९ ।।
आविर्बभूव पुरतो लिंगरूपेण शंकरः ।।
उवाच च प्रसन्नोस्मि वरं ब्रूहि नृपांगज ।। 5.2.46.१६० ।।
सर्वज्योतिर्मयं लिंगं पुरतो दृष्टवान्स्वयम् ।।
सप्तपातालमुद्भिद्योत्थितं बृहदनुग्रहात् ।। ६१ ।।
प्रणम्य दंडवद्भूमौ परि तुष्टाव धूर्जटिम् ।।
सूक्तैर्जन्मांतराभ्यासात्सुहृष्टो रुद्रदैवतैः ।।
वरं च प्रार्थयांचक्रे परिहृष्टतनूरुहः ।। ६२ ।।
देवदेव महादेव यदि देयो वरो मम ।।
तदत्र भवता स्थेयं भवतापहृता सदा ।। ६३ ।।

अस्मिँल्लिंगे स्थितः शंभो कुरु भक्तसमीहितम् ।।
विना मुद्रादिकरणं मंत्रेणापि विना विभो ।। ।। ६४ ।।
अस्य लिंगस्य ये भक्ता मनोवाक्कायकर्मभिः ।।
सदैवानुग्रहस्तेषु कर्तव्यो वर एष मे ।। ६५ ।।
इति तद्वरमाकर्ण्य लिंगरूपोऽवदत्प्रभुः ।।
एवमस्तु यदुक्तं ते वीर वैष्णवसूनुना ६६ ।।
वीर वीरेश्वरंनाम लिंगमेतत्त्वदाख्यया ।।
अवंत्यां संप्रदास्यामि भक्तानां चिंतितान्यहो ।। ६७ ।।
अत्र दत्तं हुतं जप्तं स्तुतमर्चितमेव च ।।
तदक्षयं भवेदत्र भक्तानां नात्र संशयः ।। ६८ ।।
त्वं तु राज्यं परं प्राप्य सर्वभूपालदुर्लभम् ।।
भुक्त्वा भोगांश्च विपुलानंते सिद्धिमवाप्स्यसि ।। ६९ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
वीरेश्वरस्य देवस्य नूपुरेशमथो शृणु ।। 5.2.46.१७० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिताया पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये वीरेश्वरमाहात्म्यवर्णनंनाम षट्चत्वारिंशो ऽध्यायः ।। ४६ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४७



।। श्रीदेवदेव उवाच ।। ।।

सप्ताधिकं विजानीहि नूपुरेश्वरसंज्ञकम् ।।

यस्य दर्शनमात्रेण प्राप्यंते सर्वसिद्धयः ।। ।। १ ।।

पुरा राथन्तरे कल्पे नूपुरोनाम वै गणः ।।

रुद्रभक्तिपरोनित्यं पंचमुद्राविभूषितः ।। २ ।।

स एकदा कुबेरस्य सभायां प्राप्य संस्थितः ।।

द्रष्टुं महोत्सवं तत्र अप्सरोभिः कृतं तदा ।। ३ ।।

ननृतुश्चापरास्तत्र ह्युर्वशी योषितां वरा ।।

रंभा तिलोत्तमा मेना ननृतुर्हर्षसंयुताः ।। ४ ।।

तासां नृत्यं तदा वीक्ष्य नूपुरो गणपस्तदा ।।

कामबाणार्दितो नूनं तासां मध्ये ननर्त्त ह ।। ५ ।।

नृत्यमानस्ततो हृष्टः पुष्पगु च्छेन वक्षसि ।।

उर्वशीं ताडयामास कामबाणप्रपीडितः ।। ६ ।।

उर्वशी तु ततः क्रुद्धा पुष्पगुच्छेन ताडिता ।।

जगाम शरणं देवं धनदं सर्वकामदम् ।। ७ ।।

उवाच धनदस्तत्र क्रोधेनाकुलमानसः ।। ८ ।।

यस्मात्त्वया रंगभंगः कृतः कामार्द्दितेन वै ।।

तस्मात्त्वं मानुषे लोके पतस्व पापपूरुष ।। ९ ।।

कुबेरस्य च शापात्तु जगाम धरणीतलम् ।।

विललाप सुदुःखार्त्तः किं कृतं पापिना मया ।। 5.2.47.१० ।।

विलप्य सुभृशं सोऽथ शरणं परमेश्वरीम् ।।

जगाम मनसा देवि त्वां स वै वरदायिनीम् ।। ११ ।।

त्वं तुष्टा तु तदा जाता प्रत्यक्षा परमेश्वरी ।।

उवाच गणपं प्रीत्या भक्तिनम्रं तदा भुवि ।। १२ ।।

गच्छ पुत्र ममादेशान्महाकालवनं शुभम् ।।

प्राचीसरस्वती तत्र वाप्याकारा च विद्यते ।। १३ ।।

तस्या दक्षिणतो वत्स विद्यते लिंगमुत्तमम् ।।

वाप्यां स्नात्वा च तल्लिंगं समाराधय भक्तितः ।।१४।।
सा प्राची स च देवेशस्त्वन्नाम्ना ख्यातिमेष्यति ।।
इत्युक्तो नूपुरो देवि महाकालवनं गतः ।। १५ ।।
त्वया च प्रेरितो देवि कीर्त्यर्थं तत्र गम्यताम् ।।
इत्युक्तो नूपुरो दिव्यो गणो हृष्टः कृतांजलिः ।। १६ ।।
महाकालवनं रम्यं देवगंधर्वसेवितम् ।।
ददर्श तत्र तल्लिंगं सुरगन्धर्वसेवितम् ।। १७ ।।
प्राची सरस्वती तत्र वाप्याकारा च संस्थिता ।।
तस्यां स्नात्वा ततो देवं पूजयामास नूपुरः ।। १८ ।।
ततो देवः प्रसन्नात्मा प्रत्युवाचाथ नूपुरम्।।
साधु नूपुर भद्रं ते स्वस्ति प्राप्नुहि सर्वदा ।। ।। १९ ।।
भविता वल्लभो देव्याः पार्वत्याः शंकरस्य च ।।
इत्युक्तस्तेन लिंगेन तत्क्षणान्नूपुरः प्रिये ।। 5.2.47.२० ।।
उदितादित्यसंकाशो विभावसुसम द्युतिः ।।
तेजोराशिश्च संजातो दुर्निरीक्ष्यस्त्रिविष्टपैः ।। २१ ।।
प्रभावं तादृशं दृष्ट्वा देवैरुक्तं वरानने ।।
अहो लिंगस्य माहात्म्यं दृश्यतेत्यद्भुतं भुवि ।। २२ ।।
प्राप्ता च कामिकी सिद्धिर्नूपुरेण च दर्शनात् ।।
अतो देवोऽद्यप्रभृति विख्यातो भूतलेऽभवत् ।। २३ ।।
सर्वकामप्रदो नित्यं नूपुरेश्वर नामतः ।।
दर्शनं ये करिष्यंति स्नात्वा वाप्यां समाहिताः ।। २४ ।।
नूपुरेश्वररुद्रस्य ते यांति परमं पदम् ।।
ये च पूजां करिष्यंति भक्तिभावसम न्विताः ।।
वसंति मुदिताः सर्वे यावदाभूतसंप्लवम् ।। २५ ।।
जन्ममृत्युजरारोगदुःखानि विविधानि च ।।
प्रयांति विलयं सद्यः पूजिते नूपुरेश्वरे ।। २६ ।।
वापी गंगासमा सा तु स्वयमेव शुभेक्षणे ।।
संगमस्तु वितस्तायां यमुनायास्तु सुव्रते ।।
प्रयागमेतज्जानीहि भूधरेंद्रांगसंभवे ।। २७ ।।।
सोमतीर्थं तदा देवि सर्वपातकनाशनम् ।।
तत्र स्नात्वा पुमान्देवि वाजपेयफलं लभेत् ।। २८ ।।
कृष्णाष्टम्यां च यः स्नात्वा पूजयेन्नूपुरेश्वरम् ।।

कुलं वै तारयेत्सोपि मातृकं पितृकं शतम् ।। २९ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
नूपुरेश्वरदेवस्य श्रूयतामभयेश्वरम् ।। 5.2.47.३० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये नूपुरेश्वरमाहात्म्यवर्णनंनाम सप्तचत्वारिंशो ऽध्यायः ।। ४७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४८



।। श्रीरुद्र उवाच ।। ।।

अष्टाधिकं विजानीहि चत्वारिंशत्तमं प्रिये ।।

यस्य दर्शनमात्रेण न भवस्य भयं भवेत् ।। १ ।।

कल्पावसाने प्रथमे पाद्मे पद्मनिभेक्षणे ।।

नष्टचंद्रार्कनक्षत्रे नष्टभूमित्रिविष्टपे ।।

ब्रह्मा वै चिंतयामास कथं सृष्टिर्भवेदिति ।। २ ।।

इत्याकुलितरूपस्य तस्य नेत्रद्वयात्तदा ।।

पपाताश्रुकणः स्थूलो नेत्राद्वामान्महात्मनः ।। ३ ।।

तस्मादश्रुकणाज्जातो हारवोनाम दानवः ।।

तीक्ष्णदंष्ट्रो महाकायो भिन्नांजनचयप्रभः ।। ४ ।।

दक्षिणान्नयनाज्जातः कालकेलीतिविश्रुतः ।।

कृष्णदेहोऽतिदीर्घश्च महादंष्ट्रोर्ध्वरोमकः ।। ५ ।।

करालवदनो दुष्टो यमरूपो दुरासदः ।।

कृष्णांजनचयाकारः पाशपाणिर्विभीषणः ।। ६ ।।

तौ तु दैत्यौ समागत्य कृतसंकेतकौ तदा ।।

ब्रह्माणं हंतुमिच्छंतौ प्रमत्तावभिधावितौ ।। ७ ।।

ततो ब्रह्मा भयाविष्टः कांदिशीकश्चचार ह ।।

ततो जलेऽतिगंभीरे सोऽपश्यदमितद्युतिम् ।। ८ ।।

पुरुषं पीतवसनं शंखचक्रगदाधरम् ।।

तमालोक्य ततो ब्रह्मा संत्रासं परमं गतः ।।

उवाच को भवाञ्छेते निःशेषेस्मिंश्चराचरे ।। ९ ।।

तमुवाच ततो विष्णुरहमेवं जगत्पिता ।।

लोककृल्लोकसंहर्त्ता लोकस्थितिविधायकः ।। 5.2.48.१० ।।

इत्युक्तः पद्मजस्तेन कृष्णेनाक्लिष्टकर्मणा ।।

प्रत्युवाच तदा ब्रह्मा स्रष्टाहं भुवनत्रये ।। ११ ।।

मया सृष्टं जगत्सर्वं सदेवासुरमानुषम् ।।

अत्रांतरे च तौ दैत्यावायातौ बलदर्पितौ ।। १२ ।।

भोक्तुकामौ क्षुधाविष्टौ दृष्ट्वा ब्रह्माब्रवीदिदम् ।।
कृष्णं कमलपत्राक्षं कंपिताधरपल्लवः ।। १३ ।।
यदि त्वं कारणं किंचिदस्य लोकस्य कथ्यसे ।।
तदा तावसुरौ भीमौ हंतुमर्हसि सांप्रतम् ।। १४ ।।
तच्छ्रुत्वा तु तदा विष्णुर्ज्ञात्वा दुःखं परस्परम् ।।
क्षणं विश्रम्यतां तावत्पश्चाद्द्वंद्वं भविष्यति ।। १५ ।।
इत्युक्त्वा कृतसंकेतौ तौ दैत्यौ बलगर्वितौ ।।
ब्रह्मनारायणौ हंतुं धावितौ तु त्वरान्वितौ ।। १६ ।।
ब्रह्मविष्णू तदा दृष्ट्वा दानवौ दुर्जयौ रणे ।।
संत्रासं जग्मतुस्तत्र स्वेदकंपपरिप्लुतौ ।। १७ ।।
अन्योन्यमूचतुस्तौ हि देशकालोचितं वचः ।।
कर्तव्यं किं नु वा कार्यं मम वा तव वा भवेत् ।। १८ ।।
उपस्थितं भयं घोरं तत्र किं कार्यमस्ति नौ ।।
आसन्नं मरणं दृष्ट्वा ब्रह्मा प्रोवाच केशवम् ।। १९ ।।
गम्यतां कृष्ण शीघ्रं वै महाकालवनोत्तमम् ।।
प्रलयेऽप्यक्षयं प्रोक्तं तत्र रक्षा भविष्यति ।।
अहं तत्र गमिष्यामि व्रज त्वं तत्र केशव ।। 5.2.48.२० ।।
इत्युक्तो ब्रह्मणा कृष्णो जगाम सह तेन वै ।।
महाकालवनं प्राप्तौ न च दृष्टो महेश्वरः ।।
तत्रापि दशसाहस्रकालः पर्यटतोस्तयोः ।। २१ ।।
ततो ज्वालामयं दिव्यं नूपुरेश्वरदक्षिणे ।।
दृष्ट्वा तल्लिंगमाहात्म्यं ब्रह्मविष्णू ततः स्वयम् ।।
प्रार्थयांचक्रतुर्देवमभयं देहि नौ प्रभो ।। २२ ।।
शरणं भव देवेश दानवाभ्यां प्रपीडितौ ।।
अभयं च ततो दत्तं तेन लिंगेन पार्वति ।। २३ ।।
शुश्राव गर्जितं ताभ्यां दानवाभ्यां पितामहः ।।
प्रत्युवाच भयत्रस्तो लिंगं कंपितकं धरः ।। २४ ।।
स एष मृत्युरस्माकमेति शीघ्रं भयावहः ।।
दीयतामभयं देव कृष्णेनोक्तं तदा प्रिये ।। २५ ।।
भयार्त्तवचनं श्रुत्वा ब्रह्मणः केशवस्य च ।।
तौ दैवौ तेन लिंगेन जठरे संनिवेशितौ ।। २६ ।।
दृष्टं ताभ्यां जगत्सर्वं सार्कचंद्रमहीधरम् ।।

ससिद्धगंधर्वकुलं शैलताललताकुलम् ।। २७ ।।
समुद्रपीठसंयुक्तं नानावर्णाश्रमोज्ज्वलम् ।।
सपातालतलं देवि सभुजंगमहीरुहम् ।। २८ ।।
ससप्तलोकविन्यासं सदेवासुरराक्षसम् ।।
पुनस्तौ निःसृतौ तस्माज्जठराद्विस्मयान्वितौ ।। २९ ।।
दृष्ट्वौ भस्मीकृतौ दैत्यौ तेन लिंगेन पार्वति ।।
तुष्टुवाते परं लिंगं भक्त्या परमया युतौ ।। 5.2.48.३० ।।
लिंगेनोक्तं प्रसन्नेन भवद्भ्यां किं ददाम्यहम्।।
ममामोघमिदं देवौ दर्शनं चातिदुर्लभम् ।। ३१ ।।
ततो ब्रह्मा च विष्णुश्च वरयामासतुर्वरम् ।।
यदि देयो वरोऽ स्माकं नृणामभयदो भव ।। ३२ ।।
ये च त्वां पूजयिष्यंति यक्ष्यंति च समाहिताः ।।
संस्मरिष्यंति सततं तेषामभयदो भवे ।। ३३ ।।
अभयेश्वरसंज्ञस्तु ख्यातो भुवि भविष्यसि ।।
ते कृतार्था भविष्यंति ये त्वां पश्यंति भक्तितः ।। ३४ ।।
भविष्यति भयं नैव संसारपतनं तथा ।।
धनपुत्रकलत्राणां वियोगो न भविष्यति ।। ३५ ।।
दुःखिता दुर्भगा नारी दर्शनं या करिष्यति ।।
सौभाग्यसुखसंयुक्ता भविष्यति न संशयः ।।
वीरं तु गुर्विणी कन्या पतिमाप्स्यति शोभनम् ।। ३६ ।।
यंयं काममभिध्याय ये त्वां पश्यंति मानवाः ।।
तंतं मनोरथं सर्वं गमिष्यंति न संशयः ।। ३७ ।।
एवं भविष्यतीत्युक्त्वा लिंगेन परमेश्वरि ।।
विसर्जितौ गतौ दैवौ ब्रह्मविष्णू स्वमालयम् ।। ३८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
अभयेश्वर देवस्य श्रूयतां पृथुकेश्वरम्।।३९।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्येऽभयेश्वरमाहात्म्यवर्णनंनामाष्टाचत्वारिंशोऽध्यायः।।४८।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ४९



।।ईश्वर उवाच।।

शृणु पंचाशदेकोनं देवेशं पृथुकेश्वरम्।।

यस्य दर्शनमात्रेण सार्वभौमो नरो भवेत् ।। १ ।।

वंशे स्वायंभुवे देवि ह्यंगो राजा बभूव ह ।।

मृत्योस्तु दुहिता तेन परिणीता सुदुर्मुखा ।।२ ।।

वेननामा सुतो जातो नास्तिको धर्मदूषकः ।।

देवब्रह्मस्वहारी च परभार्यापहारकः ।। ३ ।।

स च शप्तो द्विजैर्देवि तत्क्षणान्निधनं गतः ।।

तदूरोर्मथ्यमानात्तु निपेतुर्म्लेछजातयः ।। ४ ।।

शरीरे मातुरंशेन कृष्णांजनचयप्रभाः ।।

पितुरंशात्समुत्पन्नो धार्मिको द्विजसत्तमैः ।।

मथिताद्दक्षिणाद्धस्तात्पृथुः प्रथितविक्रमः ।। ५ ।।

स विप्रैरभिषिक्तश्च तपः कृत्वा सुदुष्करम् ।।

विष्णोर्वरेण महता प्रभुत्वमगमन्नृपः ।। ६ ।।

स च स्वाध्यायरहिता निर्वषट्कारनिर्द्धनाः ।।

हाहाभूताः प्रजा दृष्ट्वा ततोऽभूद्दुःखितो नृपः ।। ७ ।।

स दोग्धुमैच्छत्त्रैलोक्यं सदेवासुरमानुषम् ।। ८ ।।

एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तयः ।।

क्रोधाविष्टं पृथुं दृष्ट्वा वाक्यं चेदमुवाच ह ।। ९ ।।

लोकत्रयविनाशाय मा कोपं कुरु भूपते ।।

पृथ्व्यानया ग्रासितानि सस्यानि विविधानि च ।।

गिलितानि च अन्नानि विद्ध्येवैतन्मतं मम ।। 5.2.49.१० ।।

नारदस्य च वाक्येन क्रोधं चक्रे पृथुस्तदा ।।

निर्दग्धुमैच्छत्पृथिवीं सशै लवनकाननाम् ।। ११ ।।

मुमोच शस्त्रमाग्नेयं तेन सा धरणी तदा ।।

दह्यमाना भयार्त्ता च गौर्भूत्वा पृधुमभ्यगात् ।। १२ ।।

सा वध्यमाना तेनैव नृपं वचनमब्रवीत् ।।

शरणं समनुप्राप्ता गौरहं नृपसत्तम ।। १३ ।।
गौरवध्या महीपाल वत्सं कृत्वा च दुग्धि माम् ।। १४ ।।
तस्यास्तद्वचनं श्रुत्वा दुदोह नृपसत्तमः ।।
भास्वद्रत्नानि सस्यानि कृत्वा वत्सं हिमालयम् ।।१५।।
जाताः प्रजाश्च सुमुखाः प्रवृत्तश्च महोत्सवः ।।
प्रवृत्ता यागदानादि क्रिया मगलपूर्विकाः ।। १६ ।।
राजाथ चिंतयामास मया पापमिदं कृतम् ।।
अवध्याश्च स्त्रियः प्रोक्ता गौरवध्या द्विजस्तथा ।। १७ ।।
स्त्रीरूपधारिणी पृथ्वी मोहादेषा मया हता ।।
गोवधे च कृता बुद्धिरहो पापपरंपरा।।
तस्माद्वह्निं प्रवेक्ष्यामि चितां कृत्वा न संशयः ।। १६ ।।
एवं चिंतयतस्तस्य पृथोरमिततेजसः ।।
आजगाम पुनस्तत्र नारदो भगवानृषिः ।। १९ ।।
दृष्ट्वा तथाविधं दीनं चिंतयानं पृथुं प्रिये ।।
उवाच नारदो धीमान्किमेतदिति पार्थिव।। 5.2.49.२० ।।
ततः स कथयामास मया पापमिदं कृतम्।।
अवध्या स्त्री हता विप्र कृता बुद्धिश्च गोवधे ।। २१ ।।
काँल्लोकानु गमि ष्यामि कृत्वा कर्म सुदारुणम् ।।
मरिष्यामि न संदेहो ब्रह्महा पापपूरुषः ।। २२ ।।
अथ चेष्टोपदेशेन दुःखादुद्धर मां द्विज ।।
तस्य तद्वचनं श्रुत्वा कथयामास नारदः ।।
महापापप्रशमनं लिंगमाहात्म्यमुत्तमम् ।। २३ ।।
महाकालवने लिंगमभयेश्वरपश्चिमे ।।
महापापक्षयकरं विद्यते तत्र भूपते ।।
गच्छ त्वं सहसा राजंस्तत्र पूतो भविष्यसि ।। २४ ।।
नारदस्य वचः श्रुत्वा पृधुस्तत्र जगाम सः ।।
दृष्ट्वा लिंगं च वै रम्यं विपापस्तत्क्षणादभूत् ।। ।। २५ ।।
द्वादशादित्यसंकाशो बभूव पृथिवीपतिः ।। २६ ।।
ततोंऽतरिक्षगैर्देवि कृतं नाम वरानने ।।
पृथुना पूजितो यस्माद्भविष्यति महीतले ।।
अद्यप्रभृति विख्यातो देवोऽयं पृथुकेश्वरः ।। २७ ।।
ये च द्रक्ष्यंति देवेशं पृथुकेश्वरमीश्वरम् ।।

ते सर्वकामसंपूर्णा भविष्यंति महीतले ।। २८ ।।
अज्ञानाज्ज्ञानतो वापि यत्पापं जायते नृणाम्।।
तत्पापं यास्यति क्षिप्रं पृथुकेश्वरदर्शनात् ।। २९ ।।
वाचिकं मानसं वापि कायिकं गुह्यसंभवम् ।।
प्रकाशं वा कृतं पापं प्रसंगादपि यत्कृतम् ।।
तत्सर्वं यास्यति क्षिप्रं पुथुकेश्वरदर्शनात् ।। 5.2.49.३० ।।
पूजयिष्यंति ये भक्त्या देवं वै पृधुकेश्वरम् ।।
राज्यं प्राप्स्यंति ते सम्यङ्नृलोके च त्रिविष्टपे ।। ३१ ।।
भुक्त्वा राज्यं मनुष्याणां देवानां च महीतले ।।
यास्यंति परमं स्थानं ब्रह्मणः परमेष्ठिनः ।। ३२ ।।
इत्युक्त्वा देवसंघैश्च पूजितः पृथुकेश्वरः ।।
पृथुः शशास पृथिवीं सपत्तनां सपर्वताम् ।। ३३ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
पृथुकेश्वर देवस्य शृणु वै स्थावरेश्वरम् ।। ३४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्ये पृथुकेश्वरमाहात्म्यवर्णनंनामैकोनपंचाशत्तमोऽध्यायः।। ४९।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५०



।। श्रीमहादेव उवाच ।। ।।

शृणु देवि प्रयत्नेन पंचाशत्तममीश्वरम् ।।

यस्य दर्शनमात्रेण ग्रहबाधा न जायते ।। १ ।।

संज्ञानाम रवेर्भार्या सा सुता विश्वकर्मणः ।।

भर्त्तुस्तेजोऽसहंत्याथ कदाचिच्चैव संज्ञया ।।

छायामयी चात्मनस्तु निर्मिता तरसा तया ।। २ ।।

सा प्रोक्ता सादरेणैव स्थीयतां सूर्यसंनिधौ ।।

पृष्ट्यापि न वाच्यं ते मदीयं गमनं रवेः ।। ३ ।।

इत्युक्त्वा सा तदा संज्ञा जगाम भवनं पितुः ।।

संज्ञेयमिति मन्वानो द्वितीयायां दिवस्पतिः ।।

जनयामास तनयं नामतो यः शनैश्चरः ।। ४ ।।

तस्मिन्जाते भयं जग्मुः सदेवासुरमानुषाः ।।

त्रैलोक्यं जातमात्रेण आक्रांतं सचराचरम् ।। ५ ।।

इन्द्रोऽपि भयसंत्रस्तो ब्रह्माणं शरणं गतः ।।

सूर्यपुत्रस्य वृत्तांतं कथयामास गद्गदम् ।। ६ ।।

भिन्नं तु रोहिणीचक्रं व्याप्तं नक्षत्रमंडलम् ।।

जातमात्रेण चाक्रांतं त्रैलोक्यं रविसूनुना ।। ७ ।।

वासवस्य वचः श्रुत्वा ब्रह्मा लोकपितामहः ।।

आहूय सहसा सूर्यं वचनं चेदमब्रवीत् ।। ८ ।।

मर्यादा क्रियतां भानो वार्यतां पुत्र औरसः ।।

आक्रांतं तेजसा तेन त्रैलोक्यं भूर्भुवादिकम्।। ९ ।।

ब्रह्मणो वचनं श्रुत्वा रविणा प्रोक्तमीदृशः ।।

असाध्योऽयं मम सुतो वार्यतां स्वयमेव तम् ।। 5.2.50.१० ।।

पश्य मे चरणौ दग्धौ दृष्टिमात्रेण लीलया।।

ब्रह्मापि भयसंत्रस्तो जगाम मनसा हरिम् ।।११।।

सूर्यस्य वचनं श्रुत्वा हरिः प्राप्तस्तु तत्क्षणात् ।।

ब्रह्मणो वचनं श्रुत्वा भीतः कृष्णोऽब्रवीदिदम् ।। १२ ।।

गम्यतां तत्र यत्रास्ते देवदेवो महेश्वरः ।।
कृष्णस्य वचनात्सर्वे ममांतिकमुपागताः ।। १३ ।।
वृत्तांतः कथितः सर्वो रविपुत्रस्य पार्वति ।।
मया स्मृतस्तु संप्राप्तः सूर्यपुत्रस्तु तत्क्षणात् ।। १४ ।।
अधोदृष्टिर्मया दृष्टो वक्रांगो रूपतोऽसितः ।।
स्थैर्यं कृत्वा नमस्कृत्य विज्ञप्तोऽहं शनैःशनैः ।। १५ ।।
किमर्थं वै स्मृतो देव देह्याजां मम शंकर ।।
आदेशे तव तिष्ठामि किं करोमि प्रशाधि माम् ।। ।। १६ ।।
इत्युक्तोऽहं तदा तेन रविपुत्रेण पार्वति ।।
मया स वारितोऽत्यर्थं मा पीडय जगत्त्रयम् ।। १७ ।।
तेनोक्तं देहि मे स्थानं पानमाहारमेव च ।।
मया दत्तं विशालाक्षि पूजार्थं स्थानमुत्तमम् ।। १८ ।।
मेषादिराशिसंस्थः संस्त्रिंशन्मासान्प्रपीडय ।।
मानुषान्क्रमशो वत्स तत्र तृप्तिमवाप्स्यसि।। १९ ।।
अष्टमश्च चतुर्थश्च द्वितीयो जन्मसंस्थितः ।।
द्वादशराशिसंस्थोऽपि विरुद्धो भव सर्वदा ।। 5.2.50.२० ।।
एकादशो वा षष्ठो वा तृतीय स्थानगोथवा ।।
भव भव्यतरो नृणामतः पूजा भविष्यति ।। २१ ।।
पंचमो नवमश्चैव उदासीनस्तु सप्तमः ।।
भव राशिगतो नित्यं मानुषे कर्म भिर्युते ।। २२ ।।
पूजां प्राप्स्यसि चात्यर्थं ग्रहाणामधिकं सदा ।।
गतिः स्थिरा भवित्री ते वरः श्रेष्ठोभिधीयते ।। २३ ।।
अतस्ते स्थावरं नाम भविष्यति महीतले ।।
शनैश्चरस्त्वं राशिस्थो ग्रहाणामधिको यतः ।। २४ ।।
अतः शनैश्चरोनाम भविष्यसि सदा भुवि ।।
गजगण्डनिभाकारो मम कण्ठसमोपि च ।। २५ ।।
वर्णतो ह्यसितो नाम भविष्यसि महीतले ।।
ग्रहमध्ये ह्यधोदृष्टिर्गतिर्मंदा भविष्यति ।।
तुष्टो ददासि राज्यं च रुष्टो वै हरसि क्षणात् ।।२६।।
देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ।।
त्वत्क्रूरदृष्टिनिहता नाशं यास्यंति नान्यथा । २७ ।।
तव प्रसादात्प्राप्स्यंति मनोऽभीष्टं सुदुर्ल्लभम् ।।

अन्यच्च ते प्रदास्यामि स्थानं गुह्यं मनोहरम् ।। २८ ।।
मनोभीष्टकरं पुण्यं देवदानवदुर्लभम् ।।
प्रलयेऽप्यक्षयं प्रोक्तं महाकालवनं परम्।। २९ ।।
तत्र गच्छ ममादेशत्त्वपृथुकेश्वरपश्चिमे ।।
विद्यते तत्र यल्लिंगं तत्ते नाम्ना भविष्यति ।। 5.2.50.३० ।।
कीर्तिरेषा त्वदीयापि त्रैलोक्ये भविता धुवम्।। ३१ ।।
इत्युक्तः स्थावरो देवि ममाज्ञापालकस्तदा ।।
जगाम त्वरितो रम्यं महाकालवनं शुभम् ।। ३२ ।।
दृष्ट्वा तत्रैव तल्लिंगं स्थानं लब्धं सुशोभनम्।।
तल्लिंगं भुवने ख्यातं नामतः स्थावरेश्वरम् ।। ३३ ।।
शनिनोक्तं तदा देवि येऽत्र द्रक्ष्यंति भक्तितः ।।
मया प्रपूजितं लिंगं विख्यातं स्थावरेश्वरम् ।।
तेषां पीडा मदीया तु न भविष्यति कर्हिचित् ।। ३४ ।।
मदीये च दिने यो वै नियमेन प्रपश्यति ।।
तस्याहं सकलां बाधां शमयिष्याम्यसंशयम् ।।३५।।
धक्ष्यामि सततं पीडामन्यग्रहकृतामपि ।।
मदीयं च भयं तस्य स्वप्नेऽपि न भविष्यति ।। ३६ ।।
न ग्रहा न पिशाचाश्च न यक्षा न च राक्षसाः ।।
विघ्नं कुर्वंति तस्यापि मयि तुष्टे न संशयः ।। ३७ ।।
संक्रांतौ शनिवारे च व्यतीपातेऽयने तथा।।
ये पश्यंति नरा भक्त्या लिंगं वै स्थावरेश्वरम् ।।
भविष्यत्यक्षयस्तेषां स्थिरो वासस्त्रिविष्टपे ।। ३८ ।।
नियमेन प्रपश्यंति मम वारेऽत्र ये नराः ।।
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ।। ३९ ।।
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ।।
दास्यामि पुत्रकामस्य फलं पुत्रकृतं सदा ।। ।। 5.2.50.४० ।।
अधनस्य धनं चैव भयार्तस्याभयं तथा ।।
स्वर्गं वै स्वर्गकामस्य प्रयच्छामि च वांछितम् ।। ४१ ।।
इत्युक्त्वा पूजयामास भूयो लिंगं शनैश्चरः ।।
पूजयित्वा शुभैः पुष्पैर्भक्त्या तत्रैव संस्थितः ।। ४२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

स्थावरेश्वरदेवस्य शूलेश्वरमथो शृणु ।। ४३ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये स्थावरेश्वरमाहात्म्य वर्णनंनाम पंचाशत्तमोऽध्यायः ।। ५० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५१

https://sa.wikisource.org/s/f9e

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

एकाधिकं विजानीहि पंचाशत्तममीश्वरम् ।।

देवं शूलेश्वरं देवि सर्व व्याधिविनाशनम् ।। १ ।।

आद्ये कल्पे प्रवृत्ते च राज्यहेतोर्वरानने ।।

देवानां दानवानां च युद्धमासीत्सुदारुणम् ।।

दैत्यानामीश्वरे जंभे देवानां च शचीपतौ ।। २ ।।

ततो देवाः पराभूता दैत्या विजयिनोऽभवन् ।।

अंधको मंदरं प्राप्तो दूतं मे प्राहिणोत्तदा ।। ३ ।।

स दूतो मामुवाचोच्चैः सगर्वो दुष्टमानसः ।।

अन्धकेनाहमादिष्टः शृणु शंकर मद्वचः ।। ४ ।।

गौरीं मे देहि पत्न्यर्थं मंदरस्त्यज्यतामयम् ।।

एवं कृते कृतार्थस्त्वमन्यथा नास्ति ते गतिः ।। ५ ।।

उक्तोऽहं तेन दूतेन त्वया सह महागिरौ ।।

स्मिताननः क्षणं भूत्वा मया प्रोक्तमिदं वचः ।। ६ ।।

गच्छ दूत ममादेशादंधकं ब्रूहि सत्वरम्।।

इहाभ्येत्याहवं कृत्वा जित्वेमां सुन्दरीं नय ।। ७ ।।

इत्युक्तः प्रययौ दूतस्तेनाख्यातं वचो मम ।।

अन्धकोऽपि तदा दैत्यः समरार्थी तु मन्दरम् ।।

समायातः सहामात्यो बलेन चतुरंगिणा ।। ८ ।।

मया सह ततस्तस्य घोरं युद्धमभूच्चिरम् ।।

अन्धकस्य रथो घोरश्छिन्नो भिन्नः समं ततः ।। ९ ।।

ततः कुद्धोंऽधको देवि रथात्तस्मादवप्लुतः ।।

मद्रथं बलवान्गृह्य मया सह बलोत्कटः ।।

युयुधे स महादैत्यः शूलेन ताडितो मया ।। ।। 5.2.51.१० ।।

मया धृतोन्तरिक्षे स शूलप्रोतो महासुरः ।।

शूलप्रोतोऽथ वै दुष्टस्तावत्स भ्रामितो मया ।। ११ ।।

सुस्राव तस्य गात्रेभ्यः शोणितोघ स्ततो महान् ।।

बिन्दौबिन्दौ तु रक्तस्य तत्तुल्या दानवास्तथा ।। १२ ।।
संभूताः कोटिशो देवि तैरहं पुनरर्द्दितः ।।
किं कर्त्तव्यमिति ध्यायन्स्थि तोऽहं तत्र भामिनि ।। १३ ।।
मया चोत्पादिता दुर्गा रक्तदंता सुभीषणा ।।
अन्धकस्य तदा पीतं रक्तं वहुविधं तया ।। १४ ।।
तस्मिन्पीते ततो रक्ते नोत्तस्थुर्देवि चापरे ।।
पूर्वोत्थितास्तयैवाशु निहता दानवाधिपाः ।।
तेन शूलवरेणैव तत्क्षणान्निधनं गताः ।। १५ ।।
स मामुवाच हृष्टात्मा कृतां जलिपुटोंऽधकः ।।
त्वयि भक्तिः सदा मेस्तु दुर्लभं तव दर्शनम् ।। १६ ।।
स्वामिना निहतश्चाहं कोऽन्यो धन्यतरो हि मत् ।।
त्वच्छलेन विनिर्भिन्नो ह्यन्तरिक्षे ततोऽप्यहम् ।। १७ ।।
संकल्पाक्षेपविक्षेपं कल्पकार्यप्रवर्त्तकम् ।।
सहस्रवक्त्रशिरसं त्वामहं शरणं व्रजे ।। १८ ।।
गिरींद्रतनयानाथं गिरींद्रशिखरालयम् ।।
महालयकृतावासं त्वामहं शरणं व्रजे ।। १९ ।।
एवं स्तुतोऽहं दैत्येन शूलप्रोतेन सुन्दरि ।।
ततो मे करुणा जाता कृतोंधको गणस्तदा ।।5.2.51.२०।।
स च शूलवरो देवि मया प्रोक्तो मुदा तदा ।।
एहि शूल हतो दैत्यस्त्वया दुष्टोंधको मृधे ।।२१।।
परितुष्टः प्रयच्छामि परमं स्थान मुत्तमम्।।
न देवैर्न च गन्धर्वैर्नापि तत्परमर्षिभिः।।२२।।
संप्राप्यं मामनाराध्य तथा विध्वस्तकल्मषैः।।
मामुवाच ततः शूलः प्रणम्यानतकन्धरः ।।२३।।
यदि प्रसन्नो भगवन्करुणा मयि ते यदि ।।
कथयस्व परं स्थानं मनो मे यत्र शुद्ध्यति ।।
दुष्टसंपर्कसंजातमन्यत्पातकमात्मनः ।। २४ ।।
ततो मया समादिष्टः करुणाश्लिष्टचेतसा ।।
महाकालवनं रम्यमतिपुण्यफलप्रदम् ।। २५ ।।
तत्रास्मत्प्रासिदं लिंगं लोकानुग्रहकारकम् ।।
पृधुकेश्वरपूर्वेण तदाराधय यत्नतः ।। २६ ।।
मदीयं वचनं श्रुत्वा स जगाम त्वरान्वितः ।।

ददर्श तत्र तल्लिंगमनेकफलदायकम् ।। २७ ।।
लिंगेन च पुनर्दृष्टः शूलः शंकरवल्लभः ।।
संभूतोऽनेकवक्त्रस्तु हर्षाद्विस्मितमानसः ।। २८ ।।
स्नेहात्संश्लेषितोऽत्यर्थं पृष्टस्तु कुशलं पुनः ।।
कथितं तेन शूलेन दुष्टांधक वधं तदा ।। २९ ।।
प्रभुणा प्रेरितोऽत्यर्थं शुद्ध्यर्थं भवतोंतिके ।।
त्वद्दर्शनेन पूतोऽहं यास्यामि शिवसंनिधौ ।।
अद्यप्रभृति भूलोके मन्नाम्ना ख्या तिमेष्यसि ।। 5.2.51.३० ।।
ततो भविष्यत्यधिकं दर्शनात्ते वृणोम्यहम् ।।
किं तीर्थैर्विविधैः स्नातैः किं दानैर्विविधैः कृतैः ।। ३१ ।।
ते प्राप्स्यंति फलं सर्वं ये त्वां द्रक्ष्यंति भक्तितः ।। ३२ ।।
यः करिष्यति ते पूजां भक्तियुक्तोऽपि मानवः ।।
अष्टम्यां वा चतुर्दश्यां दिने भौमस्य भक्तितः ।। ।। ३३ ।।
विमानवरमास्थाय कामगं रत्नभूषितम् ।।
उदितादित्यसंकाशं स मुदा विचरिष्यति ।। ३४ ।।
त्वन्नाम ये ग्रहीष्यंति सर्वदा भयपीडिताः ।।
व्याधिभिः पीडिता नित्यं दुःखैर्वा क्लेशिता भृशम् ।।
न भविष्यति भीस्तेषां घोरसंसारसागरे ।। ३५ ।।
ये त्वां द्रक्ष्यंति पुरुषा भावहीनाः प्रसंगतः ।।
न पतिष्यंति संसारे नरके चातिदारुणे ।। ३६ ।।
इत्युक्तं तेन शूलेन लिंगमाश्लिष्य यत्नतः ।। ३७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
शूलेश्वरस्य देवस्य अथोंकारेश्वरं शृणु ।। ३८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये शूलेश्वरमाहात्म्यवर्णनंनामैकपञ्चाशत्तमोऽध्यायः ।। ५१ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५२



।। श्रीविश्वेश्वर उवाच ।। ।।

द्व्यधिकं देवि जानीहि पंचाशत्तममीश्वरम् ।।

ओंकारेश्वर इत्याख्या यस्यास्ति भुवनत्रये ।। १ ।।

प्राकृते कल्पसंज्ञे तु प्रथमे प्रथमं मया ।।

वक्त्रादुत्पादितो देवि पुरुषः कपिलाकृतिः ।। २ ।।

ततः स पुरुषो दिव्यः किं करोमीत्युपस्थितः ।।

विभजात्मानमित्युक्तो मयांतर्द्धानगोऽभवत् ।। ३ ।। ।

निर्वाणस्येव दीपस्य गतिस्तस्य न लक्षिता ।।

ततस्तस्याभवच्चिंता कथमात्मा विभज्यते ।। ४ ।।

एवं चिंतयतस्तस्य चतुर्मित्योत्थितस्ततः ।।

त्रिवर्णस्वररूपी च चतुर्वर्गफलप्रदः ।। ५ ।।

ऋग्यजुःसामनामा च ब्रह्मविष्णुशिवात्मकः ।।

व्याप्नुवन्सकलाँल्लोकान्प्रभावैः पृथुभिस्तदा ।। ६ ।।

ओंकार इति तस्याख्या मया दता प्रसादतः ।।

तदोक्ताभिरुदाराभिर्वाणीभिः समलंकृतः ।। ७ ।।

हृदयात्तस्य देवस्य वषट्कारः समुत्थितः ।।

छंदसां प्रवरा देवी चतुर्विंशाक्षरा परा ।। ८ ।।

षट्कुक्षिः सा त्रिपादा च पंचशीर्षोपलक्षिता ।।

समीपवर्त्तिनी देवी पार्श्वे तत्र व्यवस्थिता ।। ९ ।।

गायत्री मधुराभाषा सावित्री लोकविश्रुता ।।

स चोंकारो मया प्रोक्तो गायत्र्या सह पार्वति ।।

सृष्टिं कुरु ममादेशाद्विचित्रामनया सह ।। 5.2.52.१० ।।

इत्युक्तस्त्रिशिखो भूत्वा हिरण्यसदृशाकृतिः ।।

सृष्टिमुत्पादयामास स्वशरीरान्ममाज्ञया ।। ११ ।।

पूर्वं देवगणाश्चैव त्रयस्त्रिंशच्च देवताः ।।

मनुष्या ऋषयश्चैव वेदप्रामाण्यतः कृताः ।। १२ ।।

तेषां देहे प्रविष्टानां प्रादुर्भावः पुनर्भवेत् ।।

यथा सूर्यस्य सततमुदयास्तमनं भवेत् ।। १३ ।।
संहृत्योंकारमखिलान्सदेवासुरपन्नगान् ।।
कृतात्मगर्भे भगवानोंकारो जगतः प्रभुः ।। १४ ।।
ससर्ज सर्वभूतानि कल्पांते पर्वतात्मजे ।।
अव्यक्तः शाश्वतश्चैव तस्य सर्वमिदं जगत् ।। १५ ।।
कर्त्ता चैव विकर्त्ता च संहर्ता च महांस्तु यः ।।
ओंकारपूर्वका वेदा यज्ञाश्चोंकारपूर्वकाः ।। १६ ।।
ओंकारपूर्वकं ज्ञानं तपश्चोंकारपूर्वकम् ।।
स्वयंभूरिति विज्ञेयः स ब्रह्मा भुवनाधिपः ।। १७ ।।
स वायुरिति विज्ञेयः सर्वज्ञः स प्रजाकरः ।।
विश्वे देवास्तथा साध्या रुद्रादित्यास्तथाश्विनौ ।। १८ ।।
प्रजानां पतयश्चैव सप्त चैव महर्षयः ।।
वसवोऽप्सरसश्चैव गंधर्वाश्चैव राक्षसाः ।। १९ ।।
दैत्याः पिशाचा रक्षांसि भूतानि विविधानि च ।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा म्लेच्छादयो भुवि ।।
सर्वे चतुष्पदाश्चैव तिर्यग्योनिगतास्तदा ।। 5.2.52.२०।।
जंगमानि च सत्त्वानि यच्चान्यज्जीवसंज्ञकम्।।
कृत्वा सर्वमशेषं च ममांतिकमुपागतः।।२१।।
प्रणम्य प्रयतो भूत्वा वचनं चेदमब्रवीत् ।।
कृता सृष्टिर्मया देव त्वत्प्रसादान्महेश्वर ।।२२।।
देहि मे परमं स्थानं यथा कीर्त्तिर्ध्रुवा भवेत् ।।
ओंकारस्य वचः श्रुत्वा मया प्रोक्तं वरानने ।।२३।।
ममाभीष्टकरं स्थानं नित्यमव्ययमक्षयम् ।।
महाकालवनं दिव्यं सर्वसंपत्करं शुभम् ।।२४।।
तत्र ते भविता कीर्त्तिः शाश्वती नात्र संशयः ।।
शूलेश्वरस्य देवस्य पूर्वभागे व्यव स्थितम् ।।२५।।
त्रिकल्पप्रभवं लिंगं त्वन्नाम्ना ख्यातिमेष्यति ।।
ओंकारेश्वर इत्याख्या भविष्यति जगत्त्रये ।। २६ ।।
इत्युक्तो हि मया देवि ओंकारो हृष्टमानसः ।।
ददर्श तत्र तल्लिंगं तस्मिँल्लिंगे लयं गतः ।।२७।।
ततः प्रभृति वेदेषु ओंकारः क्रियते द्विजैः ।।
पुण्यार्थं मंगलार्थं च प्रथमं सर्ववस्तुषु ।। ।। २८ ।।

लयंगतो यदोंकारस्तदाप्रभृति पार्वति ।।
मयोच्यमानं लिंगस्य प्रभावातिशयं शृणु ।। २९ ।।
यद्युगादिसहस्रेषु व्यतीपातशतेषु च ।।
अयनानां सहस्रेषु यत्पुण्यं समुदाहृतम् ।।
तत्पुण्यमधिकं देवि ॐकारेश्वरदर्शनात् ।।5.2.52.३०।।
चतुर्ष्वपि च वेदेषु समधीतेषु यत्फलम् ।।
ततोऽधिकं फलं प्रोक्तमोंकारेश्वरदर्शनात् ।।३१।।
ब्रह्मचर्येण यत्पुण्यं यावज्जीवं कृतेन च ।।
तत्पुण्यमधिकं प्रोक्तमोंकारेश्वरदर्शनात् ।।३२।।
करीषसाधने पुण्यं यच्च पुण्यमनाशके ।।
तत्पुण्यमधिकं देवि ॐकारेश्वरदर्शनात् ।। ३३ ।।
पूजायां यत्फलं प्रोक्तं तस्य संख्या न विद्यते ।। ३४ ।।
किं यज्ञैर्बहुवित्ताढ्यैः किं तपोभिः सुदुष्करैः ।।
ॐकारदर्शनादेव तत्फलं लभते यतः ।। ३५ ।।
पूजनात्स्पर्शनाद्वापि कीर्त्तनाच्छ्रवणात्तथा ।।
ॐकारेश्वरदेवस्य नराः स्युर्मुक्तिभाजनाः ।। ३६ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
ॐकारेश्वरदेवस्य शृणु विश्वेश्वरं परम् ।। ३७ ।।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्य ॐकारेश्वरमाहात्म्यवर्णनंनाम द्विपंचाशत्तमोऽध्यायः ।। ५२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५३

https://sa.wikisource.org/s/f9b
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

त्रिपंचाशत्तमं विद्धि सुप्रसिद्धमथेश्वरम् ।।

परं विश्वेश्वरं ख्यातं विश्वेषु भुवनेष्वपि ।। १ ।।

बभूव नृपतिः पूर्वं विदर्भायां विदूरथः ।।

सोन्तःपुरायुतोपेतं चक्रे राज्यमकंटकम् ।। २ ।।

जघान तापसं सोऽथ प्रमादान्मृगया गतः ।।

कृष्णाजिनधरं शांतं ध्यायंतं ब्रह्म शाश्व तम् ।। ३ ।।

मृगं मत्वा महारण्ये ब्राह्मणं देवमोहितः ।।

तेन कर्मविपाकेन देहांते रौरवं गतः ।। ४ ।।

तत्रासौ यातना घोरां अनुभूयात्मकालतः ।।

तस्मादिहागतो मर्त्त्ये सर्पो विषधरोऽभवत् ।। ५ ।।

अदशत्सोऽपि कोपेन ब्राह्मणं चरणे प्रिये ।।

लकुटेन हतः सोऽपि पंचत्वं तत्क्षणाद्गतः ।। ६ ।।

च्युतस्तु नरकात्सिंहो द्वितीयेऽभूत्सुदारुणः ।।

राजानं भक्षयामास राजलोकैर्निपातितः ।। ७ ।।

पुनर्व्याघ्रो बभूवासौ तृतीयेऽपि भवांतरे ।।

तीक्ष्णपादनखैर्घोरैर्घातयामास सूकरान् ।। ८ ।।

तेनापि वैश्यो निधनं नीतः कश्चिद्वनांतरे ।।

निषादैर्निहतः सोऽपि बाणैः पंचत्वमागतः ।। ९ ।।

चतुर्थे ऽपि गजो जातः सिंहाद्वधमवाप्तवान् ।।

पंचमे मकरो जातः क्षारांभसि महोदधौ ।। । 5.2.53.१० ।।

स्नातुकामामथो रामामाजघानातिपापकृत् ।।

धीवरैः कृतधिक्कारैर्बडिशैः सन्निपातितः ।। ११ ।।

पुनः षष्ठे भवे जातः पिशाचः पिशिताशनः ।।

सिद्धमंत्रैरथोदग्रैरथर्वप्रभवैर्भृशम् ।। १२ ।।

मंत्री मंत्रविदां श्रेष्ठो ब्राह्मणस्तं जघान ह ।।

सप्तमे स पुनर्जातो दुर्निरीक्ष्यवपुर्भृशम् ।। १३ ।।

तीक्ष्णदंष्ट्रः करालास्यो मांसशोणितभोजनः ।।
शुष्कांगो मरुभूमीषु पापिष्ठो ब्रह्मराक्षसः ।। १४ ।।
आक्रम्य निमिराजेन राज्ञा राक्षसशत्रुणा ।।
समारोप्य धनुः संख्ये ब्रह्मास्त्रेण निपातितः ।।१५।।
दारुणः सारमेयोऽभूदतिकृष्णोऽष्टमे भवे ।।
स शूकरखुराघातव्रणैः पंचत्वमागतः ।। १६ ।।
नवमे जंबुको जातः श्मशाने स च मांसभुक् ।।
लौल्यात्स निधनं प्राप्तो दुःखार्त्तो दाववह्निना ।। १७ ।।
दशमे त्वभवद्गृध्रस्तीक्ष्णतुंडो भयावहः ।।
पूतिमांसवसाहारो रोगेण निधनं गतः ।। १८ ।।
एकादशे ऽपि चंडालो गतोऽवंत्यां वरानने ।।
द्रव्यस्य हरणार्थं वै प्रविष्टो द्विजवेश्मनि ।। १९ ।।
स दंडपाशिकेनैव प्राप्तो बद्धश्च तत्क्षणात् ।।
आनीतो हि वधार्थाय वृक्षाग्रे ह्यवलंबितः ।। 5.2.53.२० ।।
तत्रैव लिंगमासन्नं साध्वि शूलेश्वरोत्तरे ।।
तस्य दृष्टिपथं प्राप्तमतिविक्लवचेतसः ।। २१ ।।
क्षणेन निधनं प्राप्तः स गतस्त्रिदशालयम् ।।
तत्र भुक्त्वा वरान्भोगानवतीर्य च भूतले ।। २२ ।।
जातः ख्यातो विदर्भायां विश्वेशोनाम पार्थिवः ।।
जाति स्मरत्वमापन्नो लिंगदर्शनपुण्यतः ।। २३ ।।
दुर्लभान्बुभुजे भोगान्प्राप्तं राज्यं चकार सः ।।
सोऽभिषिच्य सुतं राज्ये विनीतमतिधर्मवित् ।।
संस्मरन्पूर्ववृत्तांतं जगामावंतिकां पुरीम् ।। २४ ।।
तत्र दृष्ट्वा महल्लिंगं दुर्दर्शमतितेजसा ।।
दिव्येन चक्षुषाऽपश्यल्लिंगमध्ये चराचरम् ।। २५ ।।
लिंगमध्ये स्थिताः सर्वे सागराः सरितस्तथा ।।
द्वीपाश्च पर्वताश्चैव तथान्या दिव्यभूतयः ।। २६ ।।
चंद्रमाः सह नक्षत्रैरादित्यश्चाग्निना सह ।।
धनदो वरुणश्चैव यमः शक्रो मरुत्पतिः ।। २७ ।।
मरुतो देवगंधर्वा ऋषयश्च तपोधनाः ।।
नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ।। २८ ।।
ब्रह्माद्या देवताश्चान्याः स्कंदो लंबोदरस्तथा।।

सर्वं त्रिभुवनं देवि लिंगमध्ये विलोकितम्।।२९।।
प्रभावं तस्य लिंगस्य ज्ञात्वा सम्यङ्महीपतिः।।
संयतः पूजयामास विश्वयोनिं महेश्वरम् ।।5.2.53.३०।।
प्रसन्नश्चाभवत्तस्य वचनं चेदमब्रवीत्।।
वरं वरय भद्रं ते किमभीष्टं ददामि ते।।३१।।
तेनोक्तं वचनं राज्ञा यदि तुष्टोसि मे प्रभो।।
ये त्वां पश्यंति मनुजाः श्रद्धयाऽश्रद्धयाऽथवा ।।३२।।
मा भूत्तेषां प्रपतनं घोरे संसारसागरे।।
विश्वेश्वरेति नाम्ना वै प्रसिद्धो भव भूतले ।।३३।।
इत्युक्ते वचने भूयो विश्वेशोऽलंकृतो गणैः ।।
 विमानेन सुदीप्तेन गतो लोकं मदीयकम् ।।३४।।
गणैर्नानाविधैः सार्द्धं स्तूयमानो वरानने ।।
किरीटी कुण्डली चैव मुक्ताहारविभूषितः ।।
विमानं तस्य तद्दिव्यं परिक्रम्य समंततः ।। ३५ ।।
समहेंद्रधनाध्यक्षनानानाकनिवासिनः ।।
मुनयः सिद्धगंधर्वास्तथा चाप्सरसां गणाः ।। ३६ ।।
नृत्येनामरनारीणां विलोकितविनोदकः ।।
युगकोटिसहस्रं तु मत्समीपे व्यवस्थितः ।। ३७ ।।
अतो देवि भुवि ख्यातो देवो विश्वेश्वरेश्वरः ।।
दृष्ट्वा लिंगं च विश्वेशं पातकैर्विप्रमुच्यते ।। ३८ ।।
सप्तजन्मकृतैर्देही मनोवाक्कायकर्मभिः ।।
दृष्ट्वा विश्वेश्वरं लिंगं कृतकृत्यत्वमाप्यते ।। ३९ ।।
तस्य नश्यति दौर्भाग्यमलक्ष्मीर्नाशमेति च ।।
प्राप्नोति देही कामांश्च समृद्धिं मानसीं सदा ।। 5.2.53.४० ।।
दुःस्वप्नो व्याधयः क्रूरा ग्रहा भूताश्च दारुणाः ।।
प्रणश्यन्ति वरारोहे विश्वेशे पूजिते सदा ।। ४१ ।।
ये केचिच्छ्रद्धया युक्ता लिंगमाराधयंति वै ।।
ते सर्वकाम संपन्ना जायंते च युगेयुगे ।। ४२ ।।
अंते गतिश्च सा दिव्या जायते मत्प्रसादतः ।।
यत्र संपूज्यते लिगं तस्मिन्देशे शुभाः क्रियाः ।। ४३ ।।
न तत्र दुर्भिक्षभयं नापमृत्युभयं क्वचित् ।।
प्रेतयोनौ च वेताला न नागा न च दंष्ट्रिणः ।। ४४ ।।

एते च विष्णुब्रह्मेंद्रकुबेरवरुणादयः ।।
लिंगार्चनेन संप्राप्ताः परां सिद्धिं महौजसः ।। ४५ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
विश्वेश्वरस्य देवस्य कण्टेश्वरमतः शृणु ।। ४६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये विश्वेश्वरमाहात्म्यवर्णनंनाम त्रिपंचा शत्तमोऽध्यायः ।। ५३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५४



।। श्रीमहादेव उवाच ।। ।।
चतुःपंचाशतं विद्धि देवं कंटेश्वरं प्रिये ।।
यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत ।। १ ।।
आद्यकल्पे पुरा देवि राजाभूत्सत्यविक्रमः ।।
स शत्रुभिर्जितः संख्ये हृतकोशोऽतिदुःखितः ।। २ ।।
वनं जगाम गहनमेकाकी श्रमकर्शितः ।।
तत्राश्रमं ददर्शाथ वसिष्ठस्य महात्मनः ।। ३ ।।
तेनर्षिणा वसिष्ठेन दृष्टमात्रः स भूपतिः ।।
पूजितो विष्टराद्येन राजार्हेण च सादरम् ।। ४ ।।
ज्ञात्वा तपःप्रभावेन सूर्यवंशोद्भवं नृपम् ।।
पप्रच्छागमनं देवि कुशलं च पुनः पुनः ।। ५ ।।
स नृपः कथयामास वसिष्ठाय सुदुःखितः ।।
राज्यं च सकलं ब्रह्मन्हृतं विद्वेषिभिर्मम ।। ६ ।।
त्वामहं शरणं प्राप्तो दुःखैकायतनो यतः ।।
निष्कण्टकं कथं राज्यं भविष्यति पुनः प्रभो ।।
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।। ७ ।।
तस्य तद्वचनं श्रुत्वा वसिष्ठो भगवानृषिः ।।
ध्यात्वा च कथयामास बहुकौतूहलान्वितः ।। ८ ।।
महाकालवनं भूप व्रज त्वं कार्यसिद्धये ।।
दिव्या नदी वने तत्र विश्रुता भुवनत्रये ।। ९ ।।
तस्यास्तीरे शुभं लिंगं पृथुकेश्वर दक्षिणे ।।
द्रक्ष्यसे नृपशार्दूल तपस्यंतं च तापसम् ।।
अस्थिचर्मावशेषं तु चीरवल्कलधारिणम् ।। 5.2.54.१० ।।
वचनात्तस्य विप्रस्य वसिष्ठस्य महा
त्मनः ।। जगाम सहसा राजा महाकालवनं शुभम् ।। ११ ।।
ददर्श तापसं तत्र चिरंजीविनमव्ययम् ।।
उपवासकृतक्षामं द्वादशादित्यवर्चसम् ।। ।। १२ ।।

तापसेन नृपो दृष्टो मित्रोऽयं मम वल्लभः ।।
प्राप्तो राज्यपरिभ्रष्टो ज्ञात्वा वचनमब्रवीत् ।। १३ ।।
एह्येहि नृपशार्दूल दिष्ट्या प्राप्तोऽसि मेंऽतिके ।।
इत्युक्त्वा तापसेनैव हुंकारश्च कृतस्तदा ।। १४ ।।
तद्धुंकारात्तु पातालं भित्त्वा पंच च कन्यकाः ।।
निर्ययुः कांचनं पीठमेका तासां प्रगृह्य वै ।। १५।।
भृंगारं तु गृहीत्वान्या निःसृता जलसंभृतम् ।।
पादप्रक्षालनार्थाय तृतीया समुपस्थिता ।। १६ ।।
अन्ये द्वे व्यजने गृह्य पार्श्वाभ्यां च व्यवस्थिते ।।
ततो हुंकारमकरोत्पुनरेव महातपाः ।। १७ ।।
तेन हुंकारशब्देन देवलोकात्समागतम् ।।
दृष्ट्वा चाप्सरसां संघं नृत्यगीतमनो हरम् ।। १८ ।।
अनंतरं ददर्शाथ लिंगं ज्योतिष्करं परम् ।।
उत्पन्नं च जगद्यस्मिँल्लीयते सचराचरम् ।। १९ ।।
तद्दृष्ट्वा विस्मयाविष्टो बभूव नृपसत्तमः ।।
प्रणम्य शिरसा विप्रं किमिदं द्विजसत्तम ।। 5.2.54.२० ।।
एवं पृष्टो नृपेणाथ स विप्रो वाक्यमब्रवीत् ।।
सप्तजन्मानि राजेंद्र त्वयाहं परितोषितः ।। २१ ।।
अतस्ते दर्शिता माया तपसा दुष्करेण तु ।।
लिंगस्यास्य प्रभावेण पश्य मे तपसो बलम् ।। २२ ।।
हुंकारेण कृता पृथ्वी जलपूर्णा तु तत्क्षणात् ।।
हुंकाराच्च जलं ग्रस्तं मुखादग्निरजायत ।। २३ ।।
हुंकारात्पृथिवी सर्वा जाता वह्निमयी तदा ।।
संहृत्य तत्क्षणाद्वह्निं मुखाद्वायुर्विनिर्ययौ ।। २४ ।।
हुंकारेण कृतं सर्वं तत्क्षणादेव पार्वति ।।
न दिशः प्रदिशो वापि न नक्षत्रग्रहास्तदा ।। २५ ।।
ततो बभ्राम तन्नास्ति स नृपो विस्मयान्वितः ।।
चिंतयामास सहसा क्व लिंगं क्व च तापसः ।। २६ ।।
एवं चिंतयतस्तस्य ततः शब्दो महानभूत् ।।
तस्माच्छब्दाच्च संजातं पुरं प्राकारसंवृतम् ।।२७ ।।
सुहर्म्यकक्ष्यारचितं विशालं विशुद्धजांबूनदभूषितं च ।।
दिव्यैर्जनैः सेवितमात्मविद्भिर्ददर्श राजा सहसा पुरं तत् ।। २८ ।।

भूयोभवन्महाशब्दस्तस्मात्स्त्रीयुगलं वभौ ।।
सितवस्त्रधरा चैका कृष्णवस्त्रधरा सिता ।। २९ ।।
पुनः शब्दो बभूवाथ तस्मात्पुरुषसत्तमः ।।
द्विशिराः षण्मुखश्चैव पादैर्द्वादशभिर्युतः ।। 5.2.54.३० ।।
पुनः शब्दाच्च संजज्ञे पुरुषः सप्तधा गतः ।।
संहृतं हि पुनस्तच्च दर्शयित्वा द्विजेन तु ।।
प्रोक्तमित्थं विशालाक्षि जातकंटकितं नृपम् ।। ३१ ।।
पश्य लोकमिमं मह्यं तपसा निर्मितं नृप ।।
त्वत्प्रियार्थमयं लोको दर्शितस्ते नृपोत्तम ।। ३२ ।।
एवमुक्तस्तदा तेन तापसेन नराधिपः ।।
विस्मयापन्नहृदयः पप्रच्छ प्रयतः सुधीः ।। ३३ ।।
भगवन्सितकृष्णे द्वे के स्त्रियौ द्विजस त्तम ।।
कोऽसौ द्वादशपाद्विप्र द्विशिराः षण्मुखः पुनः ।। ३४ ।।
कश्चासौ पुरुषो ब्रह्मन्य एकः सप्तधाऽभवत् ।।
तस्य तद्वचनं श्रुत्वा कथयामास तापसः ।। ३८ ।।
एते स्त्रियौ त्वया दृष्टे सितकृष्णे नृपोत्तम ।।
ते च रात्र्यहनी प्रोक्ते ब्रह्मणा निर्मिते पुरा ।। ३६ ।।
शीर्षद्वयं च यद्दृष्टं तेऽयने द्वे प्रकीर्तिते ।।
मुखानि यानि दृष्टानि षट् च ते ह्यृतवः स्मृताः ।।
पादा द्वादश ये दृष्टा मासा द्वादश ते स्मृताः ।। ३७ ।।
यः पुमान्सप्तधा जात एकीभूतो नरेश्वर ।।
स समुद्रस्तु विज्ञेयः सप्तधैको व्यवस्थितः ।। ३८८।।
एतत्संवत्सरं चक्रं त्वत्प्रियार्थं निदर्शितम् ।।
एवं विदित्वा राजेंद्र न शोकं कर्तुमर्हसि ।। ३९ ।।
सर्वो विनश्वरो लोकः सदेवासुरमानुषः ।।
मया दृष्टो हि बहुशो लिंगस्यास्य प्रभावतः ।। 5.2.54.४० ।।
कुरु शत्रुविनाशाय लिंग स्यास्य च दर्शनम् ।।
राज्यं निष्कण्टकं राजन्भविप्यति न संशयः ।। ४१ ।।
एवमुक्तस्तदा राजा दृष्टवाँल्लिंगमुत्तमम् ।।
दर्शनात्तस्य लिंगस्य कण्टका ये महीभृतः ।।
विद्वेषिणो मृतास्तेऽपि श्रुतास्तेन महीभृता ।। ४२ ।।
गतस्तं विषयं राजा चक्रवर्ती बभूव ह ।।

लिंगस्यास्य प्रभावेन राज्यं कृत्वा महाधनैः ।। ४३ ।।
यज्ञैश्च विविधैरिष्ट्वा परं निर्वाणमाप्तवान् ।।
तापसेन श्रुतं सर्वं दृष्टं ध्यानेन तेन वै ।। ४४ ।।
लब्धं निष्कण्टकं राज्यं लिंगस्यास्य च दर्शनात् ।।
मम मित्रेण सहसा राज्यभ्रष्टेन तेन वै ।। ४५ ।।
अतो नाम सुविख्यातं कण्टेश्वर इति क्षितौ ।।
भविष्यति न संदेहो दर्शनाद्राज्यदायकः ।। ४६ ।।
अद्यप्रभृति पश्यन्ति देवं कण्टेश्वरं शिवम् ।।
तेषां च कण्टकाः सद्यो विनश्यन्ति न संशयः ।। ४७ ।।
नैमिषेथ कुरुक्षेत्रे गंगाद्वारे च पुष्करे ।।
स्नानात्संसेवनाद्वापि यत्पुण्यं च भविष्यति ।।
तत्पुण्यं भविता सम्यक्छ्रीगणेश्वरदर्शनात् ।। ४८ ।।
गृहिणो लिंगिनो वापि ये पश्यंति यतव्रताः ।।
देवं कण्टेश्वरं भक्त्या तेषां सिद्धिर्भविष्यति ।। ४९ ।।
जन्मांतरसहस्रेण यत्पापं पूर्वसंचितम् ।।
तत्सर्वं यास्यति क्षिप्रं श्रीकण्टेश्वरदर्शनात् ।। 5.2.54.५० ।।
दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ।।
ध्यानमध्ययनं चैव सर्वं भवति चाक्षयम् ।। ५१ ।।
एवं ब्रुवाणं तं विप्रं तापसं संशितव्रतम् ।।
लिंगेनोक्तं विशालाक्षि तुष्टेन वरपूर्वकम् ।। ५२ ।।
जरारोगविनिर्मुक्तः सर्वशोकविवर्जितः ।।
भविष्यति गणाध्यक्षो वरदः सर्वपूजितः ।।
अवध्यश्चापि सर्वेषां योगैश्वर्यसमन्वितः ।। ५३ ।।
एवमुक्तोऽथ लिंगेन तापसो गणतां गतः ।।
गणैः परिवृतो देवि मम पार्श्वमुपागतः ।। ५४ ।।
अन्धकेन पुरा युद्धे सिंहनादो यदा कृतः ।।
तदा देवि मदीयं तु जातं कण्टकितं वपुः ।। ५५ ।।
उत्पन्नं च तदा लिंगमशेषारिविनाशनम् ।।
देवानां कण्टका ये च दग्धा लिंगाग्निना यतः ।।
अतः कंटेश्वरो देवो विख्यातो भुवनत्रये ।।५६।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।

कंटेश्वरस्य देवस्य शृणु सिंहेश्वरं परम् ।। ५७ ।।
इति श्रीस्कांदे महापुराण एकशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये कंटेश्वरमाहात्म्यवर्णनंनाम चतुःपञ्चाशत्तमोऽध्यायः ।। ५४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५५



।। ।। श्रीईश्वर उवाच ।। ।।

पंचाधिकं विजानीहि पंचाशत्तममीश्वरम् ।।

सिंहेश्वरं वरारोहे महाभयविनाशनम ।। १ ।।

सद्यःकल्पे त्वया देवि मदर्थं हि महत्तपः ।।

कृतं नीलोत्पलापांगि भीषणं संशितव्रतम् ।।

तपसा तव रौद्रेण दग्धं हि भुवनत्रयम् ।। २ ।।

दुष्करं हि तपो ज्ञात्वा भगवां श्चतुराननः ।।

आगत्योवाच देवेशो देवि त्वां शुभया गिरा ।। ३ ।।

किं पुत्रि प्राप्तुकामासि किमलभ्यं ददामि ते ।।

विरम्यतामतिक्लेशात्त पसोऽस्मान्ममाज्ञया ।। ४ ।।

त्वया च वचनं श्रुत्वा गुरोर्गौरवगर्भितम् ।।

प्रियं तथ्यं हितं तत्र वर्णनिर्णीतवांछितम् ।। ५ ।।

प्रत्युक्तः स तदा ब्रह्मा प्रणामनम्रया त्वया ।।

तपसा दुष्करेणाप्तः पतित्वे शंकरो मया ।। ६ ।।

स मां श्यामलवर्णेति बहुशः प्रोक्तवान्भवः ।।

श्यामाहं कांचनाकारा वल्लभेन च संयुता ।।

भर्त्ता भूतपतिर्वश्यः कथं स्यादिति मे तपः ।। ७ ।।

त्वदीयं वचनं श्रुत्वा वरार्हो वरदः प्रभुः ।।

एवं भविष्यतीत्याह ब्रह्मा लोकपितामहः ।। ८ ।।

कियता चैव कालेन वांछासिद्धिर्भविष्यति ।।

गौरीनाम्ना तु ते मूर्त्तिः कांत्या दीप्ता भविष्यति ।। ९ ।।

एतच्छ्रुत्वा त्वया वाक्यं ब्रह्मणः परमेष्ठिनः ।।

क्रुद्धा त्वं गिरिजेऽत्यर्थं कालेऽभीष्टं भविष्यति ।। 5.2.55.१० ।।

क्रोधात्सिंहः समुद्भूतो वदनात्ते भयावहः ।।

विवृतास्यो महारौद्रो जटाजटिलकंधरः ।। ११ ।।

प्रोद्धूतवल्गुलांगूलो दंष्ट्रोत्कटमुखोत्कटः ।।

तस्यास्ये पतितुं देवि व्यवसायः कृतस्त्वया ।। १२ ।।

सोऽपि सिंहः क्षुधाविष्टस्त्वां भक्षयितुमुद्यतः ।।
न चैवासौ समर्थोऽभूद्वीक्षितुं वा तपोधिकाम् ।। १३ ।।
स दह्यमानः सहसा तेजसा तपसा तव ।।
पराङ्मुखः समभवत्प्राणत्राणपरायणः ।। १४ ।।
ततस्तवाभूत्करुणा सिंहं प्रति यतव्रते ।।
क्षुधितस्य त्वया तस्य क्षीरं ह्यमृतसन्निभम् ।। १५ ।।
उत्पादितं स्तनाभ्यां तु तस्य सिंहस्य कारणात ।।
तथापि दह्यतेऽत्यर्थं दुष्टभावं यतो गतः ।। १६ ।।
तेनोक्तं दह्यमानेन मातर्दग्धोस्मि तेजसा ।।
त्वदीयेन दुराचारो दुष्टोहं पापविग्रहः ।। १७ ।।
त्वामत्तुकामो दुष्टात्मा त्वयाहं जनितोऽधुना ।।
तस्माद्यास्यामि नरकं मातृहा गुरुघातकः ।। ८ ।।
तस्य तद्वचनं श्रुत्वा दुःखितस्य सुतस्य तु ।।
ममत्वेन विशालाक्षि सिंहस्य कथितं त्वया ।।१९।।
अधमं विद्यते क्षेत्रं महाकालवनं सुत।।
तत्र गच्छ ममादे शाच्छीघ्रं देवविनिमितम् ।। 5.2.55.२० ।।
कंटेश्वरस्य देवस्य समीपे लिंगमुत्तमम् ।।
सिंहनादात्समुत्पन्नं शंकरस्य महात्मनः ।। २१ ।।
अंधकासुरयुद्धे वै पीडिते वासवे पुरा ।।
त्वदीयं वचनं श्रुत्वा सिंहस्त्वरितविक्रमः ।। २२ ।।
गतो महाकालवनं दृष्टो देवोऽथ तत्क्षणात्।।
दिव्यदेहो मृगारिस्तु जातो लिंगस्य दर्शनात् ।। २३ ।।
ममत्वात्तस्य लिंगस्य त्वं गता तत्र पार्वति ।।
सिंहिकारूपमास्थाय शीघ्रं सिंहस्त्वया प्रिये ।। २४ ।।
दृष्टो दिव्यशरीरस्तु लिंगस्यास्य प्रभावतः ।।
तव तुष्टिः परा जाता दृष्ट्वा सिंहं महाद्युतिम् ।। २५ ।।
कृतं नाम त्वया देवि लिंगस्यास्य वरानने ।।
दिव्यदेहस्तु सिहोयं जातो लिंगस्य दर्शनात् ।। २६ ।।
अतः सिंहेश्वरो देवो भुवि ख्यातो भविष्यति ।।
एतस्मिन्नंतरे ब्रह्मा संप्राप्तस्तत्र सुव्रते ।।
उवाच त्वां वरारोहे देवैः परिवृतस्तदा ।।२७।।
य एष सिंहः संभूतस्तव क्रोधात्सुतो यतः ।।

ततोऽसौ वाहनो देवि भविष्यति न संशयः ।। २८ ।।
लिंगं सिंहेश्वरं भक्त्या यः पश्यति समाहितः ।।
तस्य वासोऽक्षयो दिव्यो भविष्यति त्रिविष्टपे ।।२९।।
कीर्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति ।।
स्पर्शनादस्य लिंगस्य पुनात्यासप्तमं कुलम् ।। 5.2.55.३० ।।
मनसा चिंतितान्कामांस्तांश्च प्राप्नोति पुष्कलान् ।।
तदैव पुरुषो मुक्तो जन्मदुःखजरादिभिः ।। ३१ ।।
यदा पश्यति सिंहेशं संसारार्णवतारकम् ।।
व्यालव्याघ्रादयश्चौरास्तथा साहसिकाश्च ये ।।३२।।
तेभ्यो भयं न भवति श्रीसिंहेश्वरदर्शनात् ।।
यज्ञानां तपसां चैव दानादीनां च यत्फलम् ।।
तत्फलं जायते सम्यग्दृष्ट्वा सिंहेश्वरं शिवम् ।। ३३ ।।
मदीयं लोकमाप्नोति सुरासुरनमस्कृतम् ।।
यः पश्यति प्रयत्नेन देवं सिंहेश्वरं तदा ।। ३४ ।।
इत्युक्त्वासौ जगामाथ ब्रह्मा लोके स्वकं प्रिये ।।
यद्वपुस्तव पूर्वं स्यात्कालकांतिकलंकितम् ।।
प्रभावात्तपसस्तस्य गौरत्वं प्राप्तमद्भुतम् ।। ३५ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
सिंहेश्वरस्य देवस्य रेवंतेशमतः शृणु ।। ३६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखंडे चतुरशीतिलिंगमाहात्म्ये सिंहेश्वरमाहात्म्यवर्णनंनाम पंचपंचाशत्तमोऽध्यायः ।। ।। ५५ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५६



।। श्रीमहादेव उवाच ।। ।।
षट्पंचाशत्तमं विद्धि रेवंतेश्वरसंज्ञकम् ।।
यस्य दर्शनमात्रेण परा सिद्धिः प्रजायते ।। १ ।।
असहंती पुरा संज्ञा रवेस्तेजोऽतिदुःसहम् ।।
तपः कर्त्तुं गता देवि ज्ञाता सूर्येण सुव्रता ।। २ ।।
अश्वरूपं ततः कृत्वा जगामाथोत्तरान्कुरून् ।।
ददृशे तत्र संज्ञां च वडवारूपधारिणीम् ।। ३ ।।
गता सा सम्मुखं तस्य पृष्ठरक्षणतत्परा ।।
ततोभून्नासिकायोगस्तयोस्तत्र समेतयोः ।। ५ ।।
नासत्य दस्रौ तनयावश्ववक्त्रौ विनिर्गतौ ।।
रेतसोंऽते च रेवंतः खड्गी चर्मी तनुत्रधृक् ।। ६ ।।
अश्वारूढः समुद्भूतस्ततो बाणधनुर्द्धरः ।।
तेन वै जातमात्रेण अश्वारूढेन लीलया ।।
निर्जितं च जगच्चेदं सदेवासुरमानुषम् ।।७ ।।
ततो देवाः पराभूता ब्रह्माणं शरणं गताः ।।
प्रणम्य कथयामासुर्भयकंपितकं धराः ।। ८ ।।
अस्माकं विभवं तेजो रविपुत्रेण नाशितम् ।।
रेवंतेन सुरेंद्रेण शृणु लोकपितामह ।। ९ ।।
तस्य गात्रसमुद्भूतो वह्निर्धावति काल जित् ।।
ज्वलंति पादपास्तेन पतंति शिखराणि च ।। 5.2.56.१० ।।
सर्वतो व्याकुलीभूतं हाहाकारमचेतनम् ।।
तेनैव पीडितं सर्वं ज्वालामालासमाकुलम् ।। ११ ।।
दशदिक्षु प्रवृत्तोऽयं समृद्धो हव्यवाहनः ।।
सर्वं किंशुकसंकाशं प्रज्वलन्निव दृश्यते ।। १२ ।।
इति तेषां वचः श्रुत्वा ब्रह्मणोक्तं वरानने ।।
ज्ञातं मया सुरश्रेष्ठा भवतां कार्यमीदृशम् ।। १३ ।।
भविष्यति च वस्तच्च कांक्षितं यत्सुरोत्तमाः ।।

गच्छध्वं सहसा तस्माच्छंकरं शरणं सुराः ।। १४ ।।
ब्रह्मणो वचनं श्रुत्वा ममांतिकमुपागताः ।।
त्रिदशा भयसंत्रस्ता नत्वा मामि दमब्रुवन् ।। १५ ।।
आदित्यतनयेनैव रेवंतेन महेश्वर ।।
दग्धं त्रिभुवनं सर्वं शरीरस्थेन वह्निना ।।
तेजसा महता चैव विक्रमेण बलेन च ।। १६ ।।
असाध्यः किल सोऽस्माकं सर्वेषां देवसत्तम ।।
भवान्प्रभवते तस्य नान्यः शंकर कश्चन ।। १७ ।।
त्वां प्रपद्यामहे सर्वे भयार्त्ताः शरणार्थिनः ।।
शरणं वरदं देवं त्रिदशानां महेश्वर ।। १८ ।।
मया स्मृतः सूर्यपुत्रो रेवंतस्तत्क्षणात्प्रिये ।।
प्राप्तः प्रीतिप्रसन्नात्मा वचनं चेदमब्रवीत् ।। १९ ।।
किं मया देव कर्तव्यं ब्रूहि सर्वमशेषतः ।।
ततो मया सूर्यपुत्र उत्संगे च कृतस्तदा ।। 5.2.56.२० ।।
स्नेहादाचुंबितो मूर्ध्नि परिष्वक्तः पुनःपुनः ।।
ददामि ते महाभाग वरं वरय सुव्रत ।। २१ ।।
परितुष्टोस्मि ते कामं यथेष्टं काममाप्नुहि ।।
इदमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि ।। २२ ।।
ममाभीष्टं परं स्थानं विद्यते पृथिवीतले ।।
अक्षयं प्रलये पुत्र महाकालवनं शुभम् ।।
तत्र दास्यामि ते स्थानं तत्र कीर्त्तिर्भविप्यति ।। २३ ।।
पूर्वे कंटेश्वरस्यापि स्थानं परमदुर्ल्भम् ।।
तत्र त्वं वस रेवंत लिंगं द्रक्ष्यसि शाश्वतम् ।। २४ ।।
सर्वदा त्रिदशैः पूज्यो भविष्यसि न संशयः ।।
गुह्यकाधिपतिस्त्वं च स्वर्गलोके भविष्यसि ।। २५ ।।
अश्वशालासु सर्वासु पूजनीयो भविष्यसि ।।
नृपतीनां गृहे चैव वसिष्यसि सुपूजितः ।। २६ ।।
तेजो मदीयं तत्स्थानं लिंगाकारं सनातनम् ।।
पूजितं त्रिदशैस्तत्र संसेव्यं यत्नतस्त्वया ।। २७ ।।
एवमुक्तो मया देवि रेवंतो रविजस्तदा ।।
जगामाकाशमाविश्य महाकालवनं क्षणात् ।। २८ ।।
ददर्श तत्र तल्लिंगं ज्योतीरूपं सनातनम् ।।

सूर्यपुत्रस्तु रेवंतो दृष्टो लिंगेन पार्वति ।। २९ ।।
प्रोक्तः प्रणयपूर्वेण दिष्ट्या दृष्टोऽसि सूर्यज ।।
अद्यप्रभृति ते नाम्ना ख्यातिं यास्यामि भूतले ।। 5.2.56.३० ।।
स्थातव्यं मत्समीपे तु सूर्यपुत्र त्वया सदा ।।
अक्षया भविता कीर्त्तिस्त्वदीया भुवनत्रये ।। ३१ ।।
रेवंतेश्वरसंज्ञोऽहं भविष्यामि न संशयः ।।
ये मां द्रक्ष्यंति रेवंत भक्त्या परमया युताः ।।
तेषामश्वा भविष्यंति विजयो यश ऊर्जितम् ।। ३२ ।।
ऐश्वर्यं दानशक्तिश्च पुत्रपौत्रमनंतकम् ।।
गुह्यकानां पतिर्भूत्वा स्वर्गलोके स वत्स्यति ।। ३३ ।।
लिंगस्य वचनं श्रुत्वा प्रोक्तं वै रविसूनुना ।।
रेवंतेन विशालाक्षि संतुष्टेनांतरात्मना ।।३४।।
देहि मे ह्यचला भक्तिं देहि मे स्थानमुत्तमम् ।।
देहि मे परमं ज्ञानं ध्रुवां कीर्तिं च देहि मे ।। ३५ ।।
भगवन्भूतभव्येश भवबंधभयापह ।
संस्कृतार्थोऽस्मि संजातस्तव देवस्य दर्शनात् ।। ३६ ।।
जन्मकोटिसुसंशुद्धा ये त्वां पश्यंति देहिनः ।।
न तेषां पुनरावृत्तिर्घोरसंसारसागरे । ।। ३७ ।।
इत्युक्त्वा रविसूनुर्वै रेवंतो रविवल्लभः ।।
रेवंतेश्वरदेवस्य समीपे संव्यवस्थितः ।। ३८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।
रेवंतेश्वरदेवस्य घंटेश्वरमथो शृणु ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्ग माहात्म्ये रेवंतेश्वरमाहात्म्यवर्णनंनाम षट्पञ्चाशत्तमोऽयायः ।। ५६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५७

https://sa.wikisource.org/s/f9i
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।
सप्तपंचाशतं विद्धि घंटेश्वरमथो शृणु ।।
यस्य दर्शनमात्रेण कामावाप्तिश्च जायते।। १ ।।
घंटोनाम गणश्रेष्ठो बभूव मम वल्लभः ।।
चाक्षुषस्य मनोः काले कौतुकार्थं यदृच्छया ।।
प्रस्थितो ब्रह्मसदनं द्रष्टुं ब्रह्माणमव्ययम्।।२।।
अथायान्तं समालोक्य गन्धर्वं गीतकोविदम्।।
चित्रसेनं गणश्रेष्ठः पप्रच्छ कुशलं मुदा।।३।।
मया तत्रैव गन्तव्यं सदने परमेष्ठिनः।.
गीतैराराधयिष्यामि ब्रह्माणं जगतां पतिम्।।४।।
चित्रसेनोऽथ तं देवि प्रत्युक्तो घंटमब्रवीत्।।
पद्मयोनिः सुरैः सार्धं गुह्यं मन्त्रमचीकरत् ।। ५ ।।
एतच्छ्रुत्वा गणो घंटस्तस्थौ विस्मितमानसः ।।
मूहूर्तं चिंतयामास प्रतिहारनिवारितः ।। ६ ।।
हित्वा स्वामिनमीशानं द्रष्टुं ब्रह्माणमागतः ।।
प्रवेशोपि न लभ्येत प्रसादो दूरतः स्थितः ।। ७।।
एवं चिंतयतस्तस्य साग्रः संवत्सरो गतः ।।
घंटस्य ब्रह्मणो द्वारि प्रवेशो देवि नाभवत् ।। ८ ।।
निर्गच्छतमथालोक्य वीणाहस्तं समुत्सुकम् ।।
नारदं स गणश्रेष्ठः पद्मयोनिं गृहोदरात् ।। ९ ।।
प्रोक्तो घंटेन सहसा मां निवेदय नारद ।।
गणोऽहं गीततत्त्वज्ञो महादेवस्य वल्लभः ।। 5.2.57.१० ।।
दर्शनार्थं समायातो ब्रह्मणः परमेष्ठिनः ।।
घंटस्य वचनं श्रुत्वा प्रीतिमानभवन्मुनिः ।।
नारदः प्रत्युवाचेदं समाश्वास्य सकैतवम् ।। ११ ।।
अहं बृहस्पतेः पार्श्वे प्रेषितोऽस्मि गणाधिप ।।
किंचित्कार्यांतरं प्रष्टुं ब्रह्मणा लोककर्तृणा ।।

आयास्यामि क्षणेनैव तावत्कालं प्रतीक्ष्यताम् ।। १२ ।।
इत्युक्त्वा नारदो देवि मम पार्श्वमुपागतः।।
वृत्तांतं कथयामास घंटस्य मुनिसत्तमः।।१३।।
ईदृशो दुर्ल्लभो भृत्यो घंटेन सदृशः प्रभो ।।
यस्त्वां त्यक्त्वा गणो देव सेवायै परमेष्ठिनः।।
स्थितः संवत्सरं साग्रं प्रवेशं न च लब्धवान्।।१४
तच्छ्रुत्वा वचनं तस्य नारदस्य मुनेस्तदा।।
मया शप्तस्तु कोपेन पत घण्ट महीतले।।१५।।
मां त्यक्त्वा हि गतोन्यत्र सेवार्थं परवेश्मनि।।
मयेत्युक्ते च वचने ब्रह्माद्वारि स्थितोऽपि सन्।। १६।।
पतितो भूतले घंटो देवदारुवनांतिके ।।
आत्मानं पतितं दृष्ट्वा भूमौ घंटेन पार्वति ।। १७ ।।
प्रोक्तं शोकोत्तरेणैव वचनं गद्गदाक्षरम् ।।
सेवार्थं याति योऽन्यत्र परिहृत्य स्वकं प्रभुम् ।। १८ ।।
स याति नरकं घोरमपकीर्तिं च विंदति ।।
नारदेन मम त्वद्य वंचितस्य द्वयं गतम् ।।
यस्मात्स्वामी न मे ब्रह्मा न च देवो महेश्वरः ।। १९ ।।
एवं विलपतस्तस्य नारदो मुनिसत्तमः ।।
आजगाम तमुद्देशं यत्र घंटो व्यवस्थितः ।। 5.2.57.२० ।।
देवदारुवने देवि दर्शनार्थं तपस्विनाम् ।।
घंटेन नारदो दृष्टो भीतेनाकुलचेतसा ।। २१ ।।
अवस्थामीदृशीं कृत्वा किमन्यन्मे करिष्यति ।।
एवं तं चिंतयानं तु नारदो वाक्यमब्रवीत् ।। २२ ।।
गणाध्यक्ष न ते कार्यो मन्युः पुण्यविनाशनः ।।
कीर्त्यर्थं पतितो घंट प्रायश्चित्तार्थमेव च ।। २३ ।।
प्रायश्चित्तविशुद्धात्मा प्रभुं प्राप्स्यसि शंकरम् ।।
तस्माद्गच्छ ममादेशान्महाकालवनं शुभम् ।। २४ ।।
रेवंतेश्वर पूर्वे तु विद्यते लिंगमुत्तमम् ।।
सर्वसंपत्करं दिव्यं त्वन्नाम्ना ख्यातिमेष्यति ।। २५ ।।
इत्युक्तो नारदेनैव जैगीषव्यः समागतः ।।
तेनापि कथितं सर्वं सत्यमुक्तमनेन वै ।। २६ ।।
नारदेन गणाध्यक्ष कीर्त्तिस्ते भविताऽक्षया ।।

कश्यपेन मृकण्डेन कण्वेन जमदग्निना ।।२७।।
अत्रिणा भृगुणा देवि लोमशेन सुरर्षिणा ।।
प्रोक्तो घंटो गतः शीघ्रं महाकालवनं शुभम् ।। २८ ।।
यत्र घंटानिनादेन युध्यतो मम संयुगे ।।
पापक्षयकरं देवि संभूतं लिंगमुत्तमम् ।।
दृष्टं तत्र गणेनैव लिंगं तेजोमयं शुभम् ।। २९ ।।
दर्शनात्तस्य लिंगस्य भूयो घंटो गणोऽभवत् ।।
लक्ष्म्या कांत्या समायुक्तः सहस्रकिरणाकृतिः ।। 5.2.57.३० ।।
घण्टोभिनंदितोऽत्यर्थं विमानैः सार्वकामिकैः ।।
मम पार्श्वं समायातो ममातीव प्रियोऽभवत् ।। ३१ ।।
ये पश्यन्ति विशालाक्षि देवं घण्डेश्वरं शिवम् ।।
ते घण्टाभिर्नादितास्तु विमानैः सार्वकामिकैः ।।३२।।
यास्यंति सुचिरं कालं मम लोकं सनातनम् ।।
घण्टेश्वरं परं लिंगं नाख्येयं यस्यकस्यचित् ।। ३३ ।।
व्याधितो यदि वा दीनो दुःखितो वा भवेन्नरः ।।
यः पश्यति प्रसंगेन देवं घण्टेश्वरं प्रिये ।।
दीप्तकांचनवर्णाभैर्विमानैः सार्वकामिकैः ।। ३४ ।।
गंधर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ।।
ईप्सिताँल्लभते कामान्वीणावेणुविनोदितः ।। ३५ ।।
ततः स्वर्गात्परिभ्रष्टः सर्वैश्वर्यसमन्वितः ।।
हिरण्यधान्यसंपूर्णे समृद्धे जायते कुले ।।
राजा वा राजतुल्यो वा जंबूद्वीपपतिर्भवेत् ।। ३६ ।।
यः पूजयति देवेशं श्रद्धया परया युतः ।।
स याति परमं स्थानमपुनर्भवकारणम् ।। ३७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
घण्टेश्वरस्य देवस्य प्रयागेशमथो शृणु ।। ३८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये घण्टेश्वर माहात्म्यवर्णनंनाम सप्तपंचाशत्तमोऽध्यायः ।। ५७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५८



।। ईश्वर उवाच ।। ।।

प्रयागेश्वरसंज्ञं तु सर्वकामकरं परम् ।।

अष्टाधिकं विजानीहि पंचाशत्तममीश्वरम् ।। १ ।।

आसीत्प्रथमकल्पे तु मनुः स्वायंभुवः पुरा ।।

तस्य प्रियव्रतः पुत्रो यज्वा परमधार्मिकः ।। २ ।।

स चेष्ट्वा बहुभिर्यज्ञैः समाप्तवरदक्षिणैः ।।

सप्तद्वीपेषु संप्राप्य भरतादीन्सुतान्प्रिये ।। ३ ।।

स्वयं विशालां बदरीं गत्वा तेपे महत्तपः ।।

कालेन बहुना तत्र नारदः समुपस्थितः ।। ४ ।।

पूजितो विष्टरार्घेण राज्ञा प्रियव्रतेन च ।।

स पृष्टः पूजयित्वा तु किमाश्चर्यं वदस्व मे ।। ५ ।।

इत्युक्तः कथयामास नारदो मुनिसत्तमः ।।

श्वेतद्वीपे मया राजन्कन्या दृष्टा सरोवरे ।। ६ ।।

सा च पृष्टा विशालाक्षी कस्माद्वससि निर्जने ।।

कासि भद्रे कथं वासि किंवा कार्यमिह त्वया ।।७ ।।

कर्त्तव्यं चारुसर्वांगि तन्ममाचक्ष्व शोभने ।।

एवमुक्ता मया सा हि मां दृष्ट्वा मीलितेक्षणम् ।। ८ ।।

स्मृत्वा तूष्णीं स्थिता यावत्तावन्मे ज्ञानमुत्तमम् ।।

विस्मृताः सर्ववेदाश्च सर्वशास्त्राणि चैव हि ।।९।।

ततोऽहं विस्मयाविष्टश्चिंतामोहसमन्वितः ।।

तामेव शरणं गत्वा यावत्पश्यामि पार्थिव ।।5.2.58.१०।।

तावद्दिव्यः पुमांस्तस्याः शरीरे समदृश्यत ।।

तस्यापि पुंसो हृदये द्वितीयस्तस्य चोरसि ।।

तस्यापि हृदये चान्यस्तृतीयस्तु व्यवस्थितः ।।११।।

ततः पृष्टा मया देवी सा कुमारी कथंचन ।।

वेदा नष्टा ममाशेषा भद्रे किं ब्रूहि कारणम् ।।१२।।

।। कन्योवाच ।। ।।

माताहं सर्ववेदानां सावित्रीनाम नामतः ।।
मां न जानासि येन त्वमतो वेदा हृतास्तव ।। १३ ।।
एवमुक्ते मया पृष्टा विस्मयेन महीपते ।।
वेदानां त्वं तु माता वै कथयस्व ममानघे ।। १४ ।।
त्वदीय हृदये देवि क एते पुरुषास्त्रयः ।। १५ ।।
।। कन्योवाच ।। ।।
य एष मच्छरीरस्थः शुभांगश्चारु शोभनः ।।
एष ऋग्वेदनामा तु यजुर्वेदो द्वितीयकः ।। १६ ।।
सामवेदस्तृतीयस्तु त्रयो वेदा मयि स्थिताः ।।
त्रयोऽग्नयस्त्रयो देवा मच्छरीरे स्थिता द्विज ।। १७ ।।
इत्युक्त्वा सा तदा कन्या पश्यतो मम भूपते ।।
अंतर्द्धानं गता सद्यस्ततोऽहं विस्मितोऽभवम् ।। १८ ।।
किं करोमि क्व गच्छामि शरणं यामि कं प्रभुम् ।।
कथमाविर्भविष्यंति वेदाः शास्त्राणि सांप्रतम् ।। १९।।
कामिकस्तीर्थराजस्तु प्रयागः श्रूयते श्रुतौ ।।
अहं तत्र गमिष्यामि ज्ञानं सम्यग्भविष्यति ।। 5.2.58.२० ।।
नष्टवेदेन रैभ्येण प्राप्ता सिद्धिरनुत्तमा ।।
सावित्री श्रूयते तत्र अक्षय्यवटसन्निधौ ।। २१ ।।
एवं मनसि संध्याय गतोऽहं नृपसत्तम ।।
प्रयागं कामिकं तीर्थं सर्वदेवनमस्कृतम् ।। २२ ।।
तपस्तीव्रं मया तत्र तप्तं परमदुष्करम् ।।
अथाजगाम राजेंद्र प्रयागो मूर्तिमान्स्वयम् ।। २३ ।।
उक्तोऽहं प्रणयात्तेन न मां तापय नारद ।।
ब्रह्मपुत्र प्रयागोऽहं भीषितस्तपसा तव ।। २४ ।।
भवतः पार्श्वमायातः प्रणयेन तपोधन ।।
धन्योऽसि सर्वथा ब्रह्मंस्तपसा च विशेषतः ।। २५ ।।
मया सार्धं त्वया ब्रह्मन्गतिः कार्याऽविकल्पतः ।।
महाकालवने रम्ये तत्र ते ज्ञानमुत्तमम् ।।
भविष्यति न संदेहो मम कीर्तिश्च सुस्थिरा ।। २६ ।।
एवं हि ब्रुवतस्तस्य प्रयागस्य नृपोत्तम ।।
प्रादुर्बभूव सहसा पीतवासा जनार्द्दनः ।। २७ ।।
शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः ।।

उवाच मेघगंभीरं वाक्यं स पुरुषोत्तमः ।। २८ ।।
एहि नारद गच्छामः प्रयागो यत्र यास्यति ।।
कृष्णस्य वचनं श्रुत्वा मया प्रोक्तो जनार्दनः ।। २९ ।।
ज्ञानं मे देहि देवेश कथं यास्यामि तद्वनम्।।
महाकालं जगन्नाथ श्रुतज्ञानविवर्जितः ।। 5.2.58.३० ।।
इत्युक्तः श्रीधरेणाहं महाकालवनं नृप ।।
आनीतस्तत्क्षणाच्छीघ्रं प्रयागसहितस्तदा ।।३१ ।।।
घंटेश्वरस्य पूर्वे तु नवनद्यास्तु दक्षिणे ।।
तत्र लिंगमनादि तु ज्योतीरूपं सनातनम् ।। ३२ ।।
प्रयागः पूजयामास पश्यतो मम भूपते ।।
लिंगेनोक्तं प्रसन्नेन किमर्थं त्वमिहागतः ।।३३।।
प्रयाग प्रयतो भूत्वा प्रसन्नोऽहं सदा तव।।
दर्शनं च मदीयं तु विफलं न भविष्यति ।।३४।।
इत्युक्तस्तेन लिंगेन मदर्थं प्रार्थितस्तदा ।।
ज्ञानं देहि द्विजायास्मै नारदाय महात्मने ।। ३५ ।।
नष्टा वेदाश्च शास्त्राणि सावित्र्या दर्शनात्प्रभो ।। ३६ ।।
ततो लिंगात्समुत्तस्थौ ब्रह्मा वेदैर्वृतस्तदा ।।
षडंगैः सरहस्यैश्च पुराणैः सहितस्तदा ।। ३७ ।।
इत्युक्तोऽहं तदा देव्या सावित्र्या नृपसत्तम ।।
लिंगस्यास्य प्रभावेण प्रयागाभ्यर्थितस्य वै ।। ३८ ।।
प्रतिभास्यंति ते वेदा धर्मशास्त्राणि नारद ।।
इत्युक्ते वचने भूयः प्राप्ता वेदा मया नृप ।। ३९ ।।
ज्ञानं षडंगसहितं शास्त्राणि विविधानि च ।।
लब्धज्ञानेन राजेंद्र मया प्रोक्तं वचस्तदा ।। 5.2.58.४० ।।
प्रयागेनार्चितो देवो मम ज्ञानस्य कारणात् ।।
प्रयागेश्वरसंज्ञस्तु ख्यातिं लोकेषु यास्यति ।। ४१ ।।
तदाप्रभृति तल्लिंगं तीर्थकोटिशतैर्वृतम् ।।
स्वर्गापवर्गफलदं तत्र त्वं गंतुमर्हसि ।। ४२ ।।
किमनेनाश्वमेधेन इष्टेन नृपसत्तम ।।
अश्वमेधशतफलं जायते तस्य दर्शनात् ।। ४३ ।।
तपसा किं सुतप्तेन कायक्लेशकरेण तु ।।
वाञ्छितं लभते सद्यः प्रयागेश्वरदर्शनात् ।। ।। ४४ ।।

।। ईश्वर उवाच ।। ।।

नारदस्य वचः श्रुत्वा स्वायंभुवसुतो नृपः ।।

प्रियव्रतो महादेवि महाकालवनं गतः ।। ४५ ।।

ददर्श तत्र तल्लिंगं नवनद्यास्तु दक्षिणे ।।

दर्शनात्तस्य लिंगस्य मत्समीपं समागतः ।। ४६ ।।

मया संमानितो देवि गणानामधिपः कृतः ।।

ये पश्यंति नरा भक्त्या प्रयागेश्वरमीश्वरम् ।।

ते धन्या मानुषे लोके क्लिश्यन्त्यन्ये निरर्थकाः ।। ४७ ।।

या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः ।।

सा गतिर्जायते सम्यक्प्रयागेश्वरदर्शनात् ।। ४८ ।।

माघमासे समेष्यंति प्रयागेश्वरदर्शनम् ।।

कर्त्तुं ये मानुषास्तेषामश्वमेधः पदेपदे ।। ४९ ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

प्रयागेश्वरदेवस्य शृणु सिद्धेश्वरं परम् ।। 5.2.58.५० ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य खंडे चतुरशीतिलिङ्गमाहात्म्ये प्रयागेश्वरमाहात्म्यवर्णनंनामाष्टपंचाशत्तमोऽध्यायः ।। ५८ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ५९



।। श्रीमहादेव उवाच ।। ।।
एकोनषष्टिकं विद्धि देवं सिद्धेश्वरं प्रिये ।।
यस्य दर्शनमात्रेण सिद्धिः पुंसां प्रजायते ।। १ ।।
आसीदश्वशिरानाम राजा परमधार्मिकः ।।
सोऽश्वमेधेन यज्ञेन इष्ट्वा सबहुदक्षिणम् ।। २ ।।
स्नातश्चावभृथे हृष्टो ब्राह्मणैः परिवारितः ।।
यावदास्ते स राजर्षिस्तावत्सिद्धोऽतिदीप्तिमान् ।। ३ ।।
नानौषधिप्रभावज्ञो मंत्रतंत्र विशारदः ।।
आययौ कपिलः श्रीमान्जैगीषव्यश्च सिद्धराट् ।। ४ ।।
तयोस्त्वरितमुत्थाय स राजाभ्यागतक्रियाम् ।।
चकार परया युक्तो मुदा वै पृथि वीपतिः ।। ५ ।।
तावर्चितावासनस्थौ क्षमाशीलौ शुचिव्रतौ ।।
महौजसौ महाभागौ मुमुक्षू मुनिपुंगवौ ।। ।।
विद्याविनयसंपन्नौ ब्रह्मचर्यपरायणौ ।।
अनेकसृष्टिसंहारस्थितिकार्यपरायणौ ।। ७ ।।
उदयादित्यसंकाशौ विभावसुसमद्युती।।
तेजोराशिसमायुक्तौ दुर्निरीक्ष्यौ पृथग्जनैः ।।८।।
विनयेनोपसंगम्य प्रणिपत्याभिवाद्य च ।।
स राजा प्रांजलिर्भूत्वा प्रश्नमेनमपृच्छत ।। ९ ।।
।। अश्वशिरा उवाच ।। ।।
श्रुतं मया मुनिश्रेष्ठौ नान्यो देवो जनार्द्दनात् ।।
ध्यातोथ पूजितो नृणां मुक्तिदो भवबंधनात् ।। 5.2.59.१० ।।
संस्मृते तु हृषीकेशे नराणां कोटिजन्मजम् ।।
अशुभं क्षयमाप्नोति कथं न प्रणमेद्धरिम् ।। ११ ।।
समाराध्य जगन्नाथं शक्राद्यास्त्रिदिवौकसः ।।
वसंति मुदिताः स्वर्गे दिव्यद्युतिसमन्विताः ।। १२ ।।
जन्ममृत्युजरा रोगैर्दुःखानि विविधानि च ।।

प्रयांति विलयं सद्यः प्रसन्ने गरुडध्वजे ।। १३ ।।
इति पृष्टस्तदा तेन प्रार्थितेन यशस्विना ।।
ऊचतुस्तं नृपं सिद्धौ सिद्धिविज्ञानकोविदौ ।। १४ ।।
क एष प्रोच्यते राजंस्त्वया नारायणोऽधुना ।।
आवां नारायणौ द्वौ तु त्वत्प्रत्यक्षं गतौ नृप ।। १५ ।।
।। अश्वशिरा उवाच ।। ।।
भवंतौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्विषौ ।।
युवां नारायणौ कस्मादिति वाक्यमुवाच सः ।। १६ ।।
शंखचक्रगदापाणिः पीतवासा जनार्द्दनः ।।
गरुडस्थो हृषीकेशः कस्तस्य सदृशो भुवि ।। १७ ।।
तस्य राज्ञो वचः श्रुत्वा संसिद्धौ योगकोविदौ ।।
दर्शयामासतुस्तौ हि कृत्वा नारायणं वपुः ।। १८ ।।
कपिलो मंत्रमाहात्म्यात्स्वयं विष्णुर्बभूव ह ।।
शंखचक्रगदापाणिः पीतवासाश्च तत्क्षणात् ।। १९ ।।
जैगीषव्यश्च गरुडस्तत्क्षणात्समजायत ।।
ततः समभवत्तत्र राजवेश्मनि कौतुकम् ।। 5.2.59.२० ।।
दृष्ट्वा नारायणं देवं गरुडस्थं सनातनम् ।।
आश्चर्यं तादृशं दृष्ट्वा स राजा विस्मयान्वितः ।।
उवाच क्षाम्यतां सिद्धौ नायं विष्णुरथेदृशः ।। २१ ।।
तस्य ब्रह्मा समुत्पन्नो नाभिपंकजमध्यतः ।।
तस्मात्तु ब्रह्मणो रुद्रः स विष्णुः परमेश्वरः ।। २ ।।
इति राज्ञो वचः श्रुत्वा तदा तौ सिद्धसत्तमौ ।।
चक्रतुः परमां मायां योगाचार्यौ सुमांत्रिकौ ।। २३ ।।
कपिलः पद्मनाभस्तु पद्ममध्ये प्रजापतिः ।।
बभूव स्वयमेवात्र सहसा योगतस्तदा ।। २४ ।।
जैगीषव्योऽथ रुद्रस्तु तस्यैवांके व्यवस्थितः ।।
ददर्श महदाश्चर्यं स राजा योगमोहितः ।। २५ ।।
कौतुकात्प्रत्युवाचेदं भीतः कंपितकन्धरः ।।
नेत्थं भवति विश्वेशो माया योगिनां तदा ।।
सर्वरूपी हरिः श्रीमान्सर्वगः सर्वदः स्मृतः ।। २६ ।।
ततो वाक्यावसाने तु तस्य राज्ञश्च संसदि ।।
मशका मत्कुणा यूका भ्रमराः पक्षिणो मृगाः ।। २७ ।।

अश्वा गावो हयाः सिंहा व्याघ्रा गोमहिषास्तथा ।।
अन्येपि पशवः कीटा ग्राम्यारण्याश्च सर्वशः ।। २८ ।।
दृश्यंते राजभवने कोटिशः पर्वतात्मजे ।।
तं दृष्ट्वा भूतसंघातं राजा विस्मितमानसः ।। २९ ।।
यावच्चिंतयते किं स्यात्तावज्ज्ञातं नृपेण हि ।।
जैगीषव्यस्य माहात्म्यं कपिलस्य महात्मनः ।। 5.2.59.३० ।।
कृतांजलिपुटो भूत्वा स राजाऽश्वशिरास्तदा ।।
पप्रच्छ च द्विजौ भक्त्या किमिदं सिद्धसत्तमौ ।। ३१ ।।
सामर्थ्यमीदृशं लब्धं कस्माद्वै तपसो बलात् ।।
अद्य मे सफलोत्पत्तिरद्य मे सफलं श्रुतम् ।। ३२ ।।
सफला मे मनोवृत्तिर्युवयोर्दर्शनेन वै ।।
तस्य तद्वचनं श्रुत्वा कपिलो वाक्यमब्रवीत् ।। ३३ ।।
महाकालवने राजन्विद्यते लिंगमुत्तमम् ।।
ख्यातं सिद्धेश्वरं नाम्ना सिद्धैरभ्यर्चितं सदा ।। ३४ ।।
सौभाग्येश्वरपूर्वे तु सौभाग्यारोग्यदायकम् ।।
प्रभावात्तस्य लिंगस्य प्राप्ता सिद्धिरनुत्तमा ।। ३५ ।।
जैगीषव्येन सिद्धेन मया वैं नृपसत्तम ।।
तस्माद्व्रज महाबाहो महाकालवनं शुभम् ।। ३६ ।।
तत्र द्रक्ष्यसि सर्वेशं शंखचक्रगदाधरम ।।
लिंगमूर्त्तौ स्थितं विष्णुं यस्ते सिद्धिं प्रदास्यति ।। ३७ ।।
संसिद्धा बहवस्तत्र सनकाद्या नरेश्वर ।।
तस्य तद्वचनं श्रुत्वा कपिलस्य महात्मनः ।। ३८ ।।
जगाम सहसा तत्र स राजाश्वशिरास्तदा ।।
ददर्श चैव तौ सिद्धौ सिद्धेश्वरसमीपतः ।। ३९ ।।
अन्ये च बहवः सिद्धाः सिद्धनाथास्तथा परे ।।
ज्ञात्वा सिद्धेश्वरं देवं सिद्धसंघैः समर्चितम् ।। 5.2.59.४० ।।
लिंगमध्ये स्थित विष्णुं ज्ञात्वा स नृपसत्तमः ।।
पूजयामास भावेन परमेण समाधिना ।। ४१ ।।
ततस्तुष्टोऽब्रवीद्देवो वरं वरय सुव्रत ।।
यत्तेभिलषितं सर्वमहं दास्यामि भूपते ।। ४२ ।।
लिंगस्य वचनं श्रुत्वा नृपेणोक्तं च तच्छृणु ।।
यदि मेऽस्ति दया देव प्रसन्नोऽसि हि चेत्प्रभो ।। ४३ ।।

यत्ते रूपं परं नाथ तद्दर्शय ममाच्युत ।।
एतदेव हि मे देव सदाभिलषितं हृदि ।। ४४ ।।
आजन्मनो जगन्नाथ कदा द्रक्ष्ये जनार्द्दनम् ।।
एतदिच्छाम्यहं देव वराणां प्रवरं वरम् ।।
दीयमानं त्वयाभीष्टं ख्यातं सिद्धेश्वरं क्षितौ ।। ४५ ।।
नृपस्य वचनं श्रुत्वा लिंगेनोक्तं वरानने ।।
न मे विदुर्देवगणा नासुरा न महर्षयः ।। ४६ ।।
परं रूपं नृपश्रेष्ठ कृष्णोऽहं लिंगतां गतः ।।
ममलोकं तु ये प्राप्ता मुनयो मंत्रभूषिताः ।। ४७ ।।
न चैते मां विजानंति परमार्थेन पार्थिव ।।
यदेतद्दृश्यते तेजो लिंगरूपेण मामकम् ।। ४८ ।।
एतदेव हि ब्रह्माद्या ध्यायन्ति त्रिदशास्त्वमी ।।
अतो न मे परं रूपं द्रष्टुं कश्चित्क्षमो भवेत् ।। ४९ ।।
अनेकजन्मसंशुद्धा योगिनो मदनुग्रहात् ।।
प्रविशंति तनौ मह्यं मुक्ताः संसारबंधनैः ।।5.2.59.५०।।
एवं हि बुवतस्तस्य सिद्धिः प्राप्ता नृपेण हि।।
विष्णुरूपं समास्थाय तस्मिँल्लिंगे लयं गतः ।।५१।।
अतो देवि सुविख्यातं लिंगं सिद्धेश्वरं परम् ।।
ये पश्यंति नरा भक्त्या तेषां सिद्धिश्च शाश्वती ।। ५२ ।।
अंजनं पादलेपं च पादुकासिद्धिरेव च ।।
गुटिका खड्गसिद्धिश्च महासिद्धिः सुदुर्लभा ।। ५३ ।।
दिव्यौषधैश्च या सिद्धिर्मंत्रस्पर्शोद्भवा च या ।।
एतास्तु सिद्धयः प्रोक्ता अपरा लघिमादयः ।। ५४ ।।
धर्मार्थकाम सिद्धिश्च मोक्षसिद्धिरनुत्तमा ।।
जायते नात्र सन्देहः श्रीसिद्धेश्वरदर्शनात् ।। ५५ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
सिद्धेश्वरस्य देवस्य मतंगेशमथो शृणु ।। ५६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीति लिङ्गमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनामैकोनषष्टितमोऽध्यायः ।। ५९ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६०



।। श्रीमहादेव उवाच ।। ।।
मतंगेश्वर संज्ञं तु षष्टिसंख्याकमीश्वरम् ।।
विद्धि पापहरं देवि समीहितकरं सदा ।। १ ।।
सुगतिर्नाम विप्रेन्द्रो बभूव द्वापरे युगे ।।
सत्यवादी सदा दांतो वेदाध्ययनतत्परः ।। २ ।।
मतंगस्तस्य पुत्रोऽभूद्बाल्याद्दारुणतां गतः ।।
सबालं गर्दभं देवि तिष्ठन्तं मातुरंतिके ।।
दण्डकाष्ठेन सहसा ताडयामास चापलात् ।। ३ ।।
तं तु तीव्राहतं दृष्ट्वा गर्दभी पुत्रगृद्धिनी ।।
उवाच मा शुचः पुत्र चंडालोऽयं न वै द्विजः ।। ४ ।।
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते ।।
तुदन्पापाकृतिरयं बाले न कुरुते दयाम् ।। ५ ।।
स्वकीयां भजते चाथ प्रकृतिं मानवः सदा ।।
एतच्छ्रुत्वा मतंगस्तु दारुणं गर्द्दभीवचः ।। ६ ।।
दंडकाष्ठं परित्यज्य रासभीं प्रत्यभाषत ।।
ब्रूहि रासभि कल्याणि माता मे येन दूषिता ।। ७ ।।
कथं मां वेत्सि चंडालं यायावरकुलोद्भवम् ।।
केन जातोस्मि चंडालो ब्राह्मण्यं येन मे गतम् ।। ८ ।।
।। गर्दभ्युवाच ।। ।।
नापितेन प्रमत्तेन ब्राह्मण्यां वृषलेन हि ।।
ततस्त्वमसि चांडालो ब्राह्मण्यं तेन ते गतम् ।। ९ ।।
एवमुक्तो मतंगस्तु पितरं वाक्यमब्रवीत् ।।
ताताश्चर्यं श्रुतं मेऽद्य जातोऽहं नापितेन वै ।। 5.2.60.१० ।।
गर्दभ्या कथितं सम्यक्तस्मात्तप्स्ये महत्तपः ।।
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।।११।।
स गत्वा च ततोऽरण्यमतप्यत महत्तपः ।।

ततः संतापयामास विबुधांस्तपसान्वितः ।। १२ ।।
तं तथा तपसा युक्तमुवाच हरिवाहनः ।।
मतंग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान्।।
वरं ददामि तेऽहं तं वृणीष्व त्वं यदिच्छसि ।। १३ ।।
।। मतङ्ग उवाच ।। ।।
ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः ।।
देहि मे शाश्वतं शक्र वर एष वृतो मया ।। १४ ।।
एतच्छ्रुत्वा तु वचनं तमुवाच पुरंदरः ।।
ब्राह्मण्यं याचसे त्वं हि दुष्प्रापमकृतात्मभिः ।। ।। १५ ।।
नाशमेष्यसि दुर्बुद्धे तदुपारम मा चिरम्।।
चंडालयोनौ जातेन न तत्प्राप्यं कथंचन ।। १६ ।।
एवमुक्तो मतंगस्तु संशितात्मा यत व्रतः ।।
अतिष्ठदेकपादेन वर्षाणां शतसंख्यया ।। १७ ।।
तमुवाच ततः शक्रः पुनरेव महायशाः ।।
ब्राह्मण्यं दुर्लभं वीर मा कृथाः साहसं वृथा ।। १८ ।।
न हि शक्यं प्राप्तुमेवमचिरान्नाशमेष्यसि ।।
वृणु वा काममन्यं त्वं ब्राह्मणत्वं सुदुर्लभम् ।। १९ ।।
एवमुक्तो मतंगस्तु संशितात्मा दृढव्रतः ।।
सहस्रमेकं पादेन ततोऽब्दानामवर्त्तत ।।5.2.60.२०।।
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ।।
चंडालायौनौ जातेन नावाप्यं ते कथंचन ।। २१ ।।
अन्यं वरं वृणीष्व त्वं मा कृथास्तत्स्वयं श्रमम् ।।
एवमुक्तो मतंगस्तु भृशं शोकपरायणः ।। २२ ।।
अतिष्ठत गयां गत्वा सोंगुष्ठेन शतं समाः ।।
सुदुष्करं वहन्योगं प्राणायामपरायणः ।। २३ ।।
त्वगस्थिभूतो धर्मात्मा तताप परमं तपः ।।
तपंतं तमभिद्रुत्य परिजग्राह वासवः ।। २४ ।।
वराणामीश्वरो दाता सर्वभूतहिते रतः ।। २५ ।।
।। शक्र उवाच ।। ।।
मतंग ब्राह्मणत्वं हि विरुद्धमिह दृश्यते ।।
ब्राह्मण्यं दुर्ल्लभं तात ह्यसतां पापशीलिनाम् ।। २६ ।।
ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः ।।

तदुत्सृज्येह दुष्प्राप्यं ब्राह्मण्यमकृतात्मभिः ।। २७ ।।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ।। २८ ।।
।। मतंग उवाच ।। ।।
किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।।
तं तु शोचामि यो लब्ध्वा ब्राह्मण्यं नानुपालयेत्।।२९।।
ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैः शतक्रतो।।
तपसा च कथं लब्धं विश्वामित्रेण भूभुजा।।5.2.60.३०।।
वीतहव्यश्च राजर्षिस्तपसा विप्रतां गतः।।
तस्मात्तपः करिष्यामि निर्द्वंद्वो निष्परिग्रहः।। ३१।।
अहिंसादमसत्यस्थः कथं नार्हामि विप्रताम् ।।
दैवेन कृतमेतद्धि यद्यहं मातृदोषतः।।३२।।
एतामवस्थां संप्राप्तो दैवयोगात्पुरंदर ।।
नूनं दैवं न शक्यं तु पौरुषेण निवर्त्तितुम् ।। ३३ ।।
यदहं यत्नवानेवं न लभे विप्रतां विभो ।।
एवं ज्ञात्वा तु देवेश दातुमर्हसि मे परम्।।३४।।
यदि तेऽहमनुग्राह्यः किंचिद्वा सुकृतं मम।।
तदुपायं हि मे शंस कथं विप्रो भवामि वै।।३५।।
यथा ममाक्षया कीर्त्तिर्भवेद्वापि पुरंदर ।।
कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये । ३६ ।।
इत्युक्तो हि मतंगेन वासवो बलवृत्रहा ।।
कथयामास संतुष्टो लिंगमाहात्म्यमुत्तमम् ।। ३७ ।।
।। इन्द्र उवाच ।। ।।
महाकालवने लिंगं स्थापितं ब्रह्मणा पुरा ।।
दिव्यमूर्त्तिधरं दिव्यं श्रीसिद्धेश्वरपूर्वतः ।। ३८ ।।
तस्य दर्शनमात्रेण विप्रत्वं समवाप्स्यसि ।।
वासवस्य च वाक्येन मतंगो गतवांस्तदा ।। ३९ ।।
महाकालवनं रम्यं सिद्धक्षेत्रमथापरम् ।।
ददर्श तत्र तल्लिंगमशेषफलदायकम् ।। 5.2.60.४० ।।
दृष्ट्वा संपूजयामास पुष्पैर्नानाविधैस्तथा ।।
पूजितः प्रत्युवाचेदं मतंगं देवसत्तमः ।। ४१ ।।
अहो महान्सभाग्योसि यस्त्वया तोषितोऽस्म्यहम् ।।
मत्तः सर्वं समुद्भूतं ब्रह्मांडं भूर्भुवादिकम् ।। ४२ ।।

वरदोऽस्मि वरार्हाणां शापदोऽस्मि दुरात्मनाम ।।
ब्राह्मण्यं मत्प्रसादाच्च अक्षयं ते भविष्यति ।। ४३ ।।
ततोऽसौ विप्रतां यातो मतंगो लिंगदर्शनात ।।
पुनः पूजाप्रभावेण ब्रह्मलोकं गतो द्विज ।। ४४ ।।
ब्राह्मण्यं दुर्लभं लब्धं लिंगस्यास्य प्रभावतः ।।
मतंगेन वरारोहे तस्माद्देवो विगीयते ।। ४५ ।।
मतंगेश्वरको लोके ब्रह्मलोकप्रदायकः ।।
वर्णाश्रमेषु विद्विष्टाः पाषंडवचने रताः ।। ४६ ।।
निर्मर्यादा निराचारा निःशंकाश्चातिलोलुपाः ।।
निर्घृणाः क्रूरर्माणो धृष्टाः कलियुगे नराः।।
दर्शनात्तस्य लिंगस्य तेऽपि यांति त्रिविष्टपम् ।।४७।।
ये विशुद्धा महाभागा ध्यानिनो मुक्तिभागिनः ।।
ते पश्यंति कलौ देवि मतंगेश्वरमीश्वरम् ।।४८।।
ब्रह्मध्यानपरा ये च यज्ञदानक्रियारताः।।
ते पश्यंति कलौ देवि मतंगेश्वरमीश्वरम् ।। ४९ ।।
येऽर्चयंति महा देवि मतंगेश्वरमीश्वरम ।।
कृतपुण्या नरा मर्त्ये तेषां वासोऽक्षयो दिवि।।5.2.60.५०।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
मतंगेश्वरदेवस्य शृणु सौभाग्यमीश्वरम् ।। ५१ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिंगमाहात्म्ये मतंगेश्वरमाहात्म्य वर्णनंनाम षष्टितमोऽध्यायः ।। ६० ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६१

https://sa.wikisource.org/s/fpi
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

एकषष्टितमं विद्धि सौभाग्येश्वरमीश्वरम् ।।

यस्य दर्शनमात्रेण सौभाग्य मतुलं लभेत् ।। १ ।।

प्रधमं प्राकृते कल्पे राजाभूदश्ववाहनः ।।

प्राग्ज्योतिषपुरे रम्ये धर्मात्मा कीर्त्तिवर्द्धनः ।। २ ।।

अनेकयज्ञकृत्प्राज्ञः संग्रामेष्वप राजितः ।।

तस्य भार्या विशालाक्षि नाम्ना मदनमञ्जरी ।। ३ ।।

काशिराजसुता सुभ्रू रूपेणातीव शोभना ।।

दक्षा सुशीला धर्मिष्ठा गृहव्यापारको विदा ।। ४ ।।

चतुःषष्टिकलायुक्ता सदा भर्तृहिते रता ।।

पूर्णेन्दुवदना सौम्या सदा मधुरभाषिणी ।। ५ ।।

पूर्वकर्मवशाद्देवि दुर्भूगा समजायत ।।

सा नेष्टा तस्य नृपतेर्नेत्रोद्वेगकरी सदा ।। ६ ।।

श्रोत्रोद्वेगकरं वाक्यं तस्य राज्ञः करोति सा ।।

ददाह लोचने राजस्तस्याः संदर्शनं सदा ।। ७ ।।

मूर्छां प्राप्नोत्यसह्यां स तस्याः स्पर्शेन भूपतिः ।।

कदा चालोकितो राजा तया प्रेम्णा वरानने ।।

दह्यमानोऽतितीव्रेण वह्निना वाक्यमब्रवीत् ।। ।। ८ ।।

द्वास्थैतां दुर्भगां भार्यामादाय विपिने वने ।।

परित्यजाशु नैतत्ते विचार्यं वचनं मम ।। ९ ।।

ततो नृपस्य वचनमविचार्यमवेक्ष्य सः ।।

द्वास्थस्तत्याज तां सुभ्रूमारोप्य स्यंदनं वने ।। 5.2.61.१० ।।

सा च त्यक्ता वने शून्ये रुदती च मुहुर्मुहुः ।।

सस्मार तं महीपालं तममन्यत दैवतम् ।। ।। ११ ।।

अथ सा चारुसर्वांगी तत्रासक्तात्ममानसा ।।

निश्वासपरमा निन्ये दिनशेषं तथा निशाम् ।। १२ ।।

निश्वसन्त्यनवद्यांगी हाहेति रुदती मुहुः ।।

मन्दभाग्येति चात्मानं निनिन्द मदिरेक्षणा ।। १३ ।।
न विहारे न चाहारे रमणीये न तद्वने ।।
न कन्दरेषु शैलानां सा बबन्ध तदा रतिम् ।।
त्यक्ता तेन वरारोहे निनिन्द निजयौवनम् ।। १४ ।।
दुर्भगाहं क्व जातात्र दुष्टदैववशीकृता ।।
कथं प्राप्तः स मे भर्त्ता तादृशो नृपस त्तमः ।। १५ ।।
धन्योऽयमतिपुण्योऽयं योऽयं यौवनगोचरः ।।
अन्यासामसतीनां च रमिष्यति न संशयः ।। १६ ।।
अभीष्टा कस्यचित्कांता कांतः कस्याश्चिदीप्सितः ।।
परस्परानुरागाढयं दांपत्यमतिदुर्लभम् ।। १७ ।।
ममायं वल्लभो राजा न चाहं नृपवल्लभा ।।
परस्परानुरागो हि धन्यानामेव जायते ।। १८ ।।
यद्यद्य स महीपालो न मया संगमेष्यति ।।
तत्कामाग्निरवश्यं मां क्षपयिष्यति दुःसहः ।। १९ ।।
रमणीयमभूद्यतु पुंस्कोकिलनिनादितम् ।।
हीनं हि वल्लभेनैवं दहतीवाद्य मे वनम्।। 5.2.61.२० ।।
इत्थं सा मदनाविष्टा विलपन्ती पुनःपुनः ।।
ददर्श तापसं तत्र त्रिकालज्ञं दृढव्रतम् ।। २१ ।।
मेखलाजिनकौपीनदण्डकाष्ठोपजीवनम् ।।
महौजसं महाभागं मुमुक्षुं मुनिपुंगवम् ।।२२।।
उदयादित्यसंकाशं विभावसुसमद्युतिम् ।।
तं दृष्ट्वा सहसोत्थाय सा राज्ञी दुर्मता सती ।। २३ ।।
विनयेनोपसंयम्य प्रणिपत्याभिवाद्य च ।।
वियोगकारणं राज्ञः पप्रच्छ प्रणता सती ।। २४ ।।
भगवन्काशिराजस्य सुताहमतिवल्लभा ।।
भगिनी शत्रुसेनस्य मातुश्चातीव वल्लभा ।। २५ ।।
अश्ववाहनसंज्ञेन नृपेणोढा महामुने ।।
धर्मतो धर्मकल्पेन प्रजपतिसमेन तु ।। २६ ।।
सा किमर्थं न चाभीष्टा जाताऽहं तस्य भूपतेः ।।
स चातीव ममाभीष्टो नृपतिः सर्वदा विभो ।। ।। २७ ।।
दुर्भगाहं कथं जाता कर्मणा केन तापस ।।
कथं भवति वश्यो मे भर्त्ता नृपतिसत्तमः ।।

सौभाग्यं च कथं मे स्यादिति सत्यं च कथ्यताम् ।। २८ ।।
तस्यास्तद्वचनं श्रुत्वा स मुनिः संशितव्रतः ।।
ज्ञानेन कथयामास तस्या दौर्भाग्यकारणम् ।। २९ ।।
पाणिग्रहणकाले त्वं ग्रहैः पापैर्विलोकिता ।।
भर्ता ते नृपतिः पुत्रि ग्रहैः सौम्यैर्विलोकितः ।। 5.2.61.३० ।।
तेन ते वल्लभो राजा न त्वं भूपस्य वल्लभा ।।
इति तस्य वचः श्रुत्वा सा राज्ञी दीनमानसा ।।
पप्रच्छ विनयोपेता भक्तिनम्रात्मकन्धरा ।।३१।।
भगवन्केन दानेन स्नानेन नियमेन च ।।
कर्मणा केन सौभाग्यं परमं हि कथं भवेत् ।। ३२ ।।
इति तस्या वचः श्रुत्वा स मुनिः संशितव्रतः ।।
कथयामास माहात्म्यं सौभाग्यं येन लभ्यते ।। ३३ ।।
महाकालवने पुत्रि लिगं सौभाग्यदायकम्।।
मतंगेश्वरपार्श्वे तु विद्यतेऽभीष्टदायकम् ।।
तस्य दर्शनमात्रेण सौभाग्यं समवाप्स्यसि ।।३४।।
इंद्राण्याराधितं लिंगं पुरा सौभाग्यकारणात् ।।
सौभाग्यं परमं लब्धं नष्टः शक्रोऽपि लब्धवान् ।।
तस्माद्गच्छ ममादेशान्महाकालवनं शुभम् ।। ३५ ।।
सौभाग्यं भविता तत्र कांतेन सह दर्शनम्।।
पुत्रो भविष्यति शुभे तस्य लिंगस्य दर्शनात् ।। ३६ ।।
इत्युक्ता सा तदा तेन तापसेन वरानने ।।
विद्यते यत्र तल्लिंगं महाकालवनं गता ।।३७।।
ददर्श प्रणयोपेता लिंगं सौभाग्यदायकम् ।।
दर्शनात्तस्य लिंगस्य राजा सस्मार तां प्रियाम् ।। ३८ ।।
पप्रच्छ जमदग्निं तु क्व गता मे प्रिया विभो ।।
भक्षिता विपिने विप्र सिंहव्याघ्रनिशाचरैः ।। ३९ ।।
मया त्यक्ता नृशंसेन अहं तस्यास्तु वल्लभः ।।
एवं ब्रुवाणो नृपतिः प्रत्युक्तो जमदग्निना ।। 5.2.61.४० ।।
न भक्षिता सा भूपाल सिंहव्याघ्रनिशाचरैः ।।
सा चाविप्लुतचारित्रा त्वद्भक्ता च पतिव्रता ।। ।। ४१ ।।
महाकालवनं राजन्गता सौभाग्यकाम्यया ।।
भार्या रक्ष्या महीपाल इति सा श्रुतिरुत्तमा ।। ४२ ।।

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।।
आत्मा हि जायते तस्यां सा रक्ष्यातो नरेश्वर ।।४३।।
धर्महानिश्चानुदिनमभार्यस्य भवेन्नृप ।।
नित्यक्रियाया विभ्रंशः स चापि पतनाय वै ।। ४४ ।।
पत्न्यानुकूलया भाव्यं यथाशीलेऽपि भर्त्तरि ।।
दुःशीला दुर्भगा भार्या पोषणीया नरेश्वर ।। ४५ ।।
इति तस्य वचः श्रुत्वा समायातो नरेश्वरः ।।
महाकालवने रम्ये ददर्श स्वां प्रियां तदा ।। ४६ ।।
सौभाग्यालंकृतां सुभ्रू पूजयंतीं महेश्वरम् ।।
दृष्ट्वा स्नेहेन चालिंग्य प्रत्युवाच स तां प्रियाम्।। ४७ ।।
विरहेण त्वदीयेन संतप्तोऽहं वरानने ।।
अद्य मे सफलं चक्षुर्जीवितं च सुजीवितम् ।। ४८ ।।
यत्त्वां पश्यामि सुभगे कृतार्थोहं कृतस्त्वया ।।
एवं दृष्टातिहर्षेण सा ददर्श तदा पतिम् ।।
उवाच च प्रसीदेति भूयो भूयो मुदान्विता ।। ४९ ।।
ततः स राजा रभसात्परिष्वज्याह भामिनीम् ।।
प्रिये प्रसन्न एवाहं भूयो भूयो ब्रवीमि किम् ।। 5.2.61.५० ।।
ततः समागमो जातो जातः पुत्रोऽतिधार्मिकः ।।
तस्य लिंगस्य माहात्म्याद्दत्तोनाम स गीयते ।। ५१ ।।
सौभाग्यमतुलं लब्धं तया देव्या हिमात्मजे ।।
सौभाग्येश्वरसंज्ञं तु ततःप्रभृति भूतले ।। ५२।।
ये पश्यंति विशालाक्षि सौभाग्येश्वरमीश्वरम्।।
तेषां कुले न दौर्भाग्यं जायते पर्वतात्मजे ।। ५३ ।।
भविष्यति न दारिद्र्यं वियोगो न च बन्धुभिः ।।
पुत्रमित्रकलत्राणां लिंगस्य च समर्चनात् ॥ ५४॥
नोपसर्गभयं तेषां ये पश्यंति वरानने ॥
सौभाग्येश्वरसंज्ञं तु न ग्रहादिभयं भवेत् ॥ ५५ ॥
सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः ॥
मनुष्यो जायते देवि सौभाग्येश्वरदर्शनात् ॥
संपूज्यः सर्वलोकेषु सौभाग्येकनिधिर्भवेत् ॥ ५६ ॥।।
जायते भूपतिर्लोके सार्वभौमो वरानने ॥
नापुत्रा नाधना नारी न दीना न च दुःखिता ॥

जायते दुर्भगा नैव सौभाग्येश्वरदर्शनात् ॥ ५७ ॥
न वैधव्यं न च व्याधिर्नाकालमरणं श्रिये॥
न पुत्रभर्तृजं दुःखं जायते लिंगदर्शनात् ॥ ५८॥
यथा लक्ष्मीर्हरेर्नित्यं सावित्री ब्रह्मणः स्मृता ॥
रोहिणी वल्लभा चेंदोः शची शक्रस्य वल्लभा ॥
तथा सा जायते नारी सौभाग्येश्वरदर्शनात् ॥ ५९ ॥
एष ते कथितो देवि प्रभावः पापनाशनः ॥
सौभाग्येश्वरदेवस्य शृणु रूपेश्वरं प्रिये ॥ 5.2.61.६० ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीति लिंगमाहात्म्ये सौभाग्येश्वरमाहात्म्यवर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६२



॥ ईश्वर उवाच ॥ ॥

द्विषष्टिकं विजानीहि देवं रूपेश्वरं प्रिये॥

यस्य दर्शनमात्रेण रूपवाञ्जायते नरः ॥ १ ॥

पाद्मकल्पे महादेवि पद्मोनाम महीपतिः ॥

पद्मगर्भसमुद्भूतो बभूवातिपराक्रमी ॥

पृथिव्याश्चतुरंताया जातो धर्मरतो बली ॥ २ ॥

स कदाचिन्महाबाहुः प्रभूतबलवाहनः॥

वनं जगाम गहनं हयनागशतैर्वृतः ॥ ३ ॥

बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् ॥

मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥ ४॥

तत्र वन्यसहस्राणि हत्वा सबलवाहनः ॥

राजा मृगप्रसंगेन वनमन्यद्विवेश सः ॥ ९ ॥

एक एवोत्तमबलः क्षुत्पिपासासमन्वितः।

स वनस्यांतमासाद्य महदारण्यमासदत् ॥ ६॥

तच्चाप्यतीत्य नृपतिर्ददर्शाश्रममुत्तमम् ॥

मनःप्रह्लादजननं दृष्टिकांतमतीव च ॥ ७॥

पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥

ततोऽगच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ॥ ८॥

नापश्यदाश्रमे तस्मिंस्तमृषिं संशितव्रतम्॥

उवाच क इहेत्युच्चैर्वनं संनादयन्निव ॥९॥

श्रुत्वाथ तं तथा शब्दं कन्या श्रीरिव रूपिणी ॥

निश्चक्रामाश्रमात्तस्मात्तापसाकारधारिणी॥5.2.62.१०॥

सा तं दृष्ट्वैव राजानं पद्मगर्भसमुद्भवम्॥

आसनेनार्चयित्वा च पप्रच्छ नाम तं तदा ॥११॥

उवाच स्मयमानाथ किं कार्यं क्रियतामिति॥

तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्॥१२॥

दृष्ट्वा चैवानवद्यांगीं यथावत्प्रतिपूजितः ॥

आगतोऽहं महाभागे मुनिश्रेष्ठमुपासितुम् ॥ १३ ॥
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ॥
एवमुक्ता तु सा कन्या तेन राज्ञा तदाश्रमे ॥
हसंती प्रत्युवाचेदं वाक्यं समधुराक्षरम्॥ १४॥
कन्याहं पृथिवीपाल कौमारब्रह्मचारिणः ॥
तपस्विनो धृतिमतो धर्मज्ञस्य मनस्विनः ॥ १५॥
सुता कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ।।
कण्वं हि पितरमन्ये पितरं स्वमजानती ।। १६ ।।
तस्यास्तद्वचनं श्रुत्वा नृपेणोक्तं वरानने ।।
सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।। १७ ।।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ।।
सुवर्णरत्नवासांसि कुंडले परिहारके ।। १८ ।।
आहरामि तवाद्याहं भार्या मे भव शोभने ।।
गांधर्वेण च मां भीरु विवाहेनैव सुंदरि ।।
विवाहानां च रंभोरु गांधर्वः श्रेष्ठ उच्यते ।। १९ ।।
नृपस्य वचनं श्रुत्वा कन्या वचनमब्रवीत् ।।
मुहूर्तं संप्रतीक्षस्व स मां तुभ्यं प्रदास्यति ।। 5.2.62.२० ।।
।।राजोवाच ।। ।।
इच्छामि त्वां वरारोहे भजमानमनिंदिते ।।
तदर्थं मां स्थितं विद्धि त्वया मेऽपहृतं मनः ।। २१ ।।
आत्मनो बंधुरात्मैव गतिरात्मैव चात्मनः ।।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ।। ।। २२ ।।
।। कन्योवाच ।। ।।
यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।।
सत्यं मे प्रतिजानीहि दत्तमात्मानमद्य मे ।। २३ ।।
इति तस्या वचः श्रुत्वा परिणीता नृपेण हि ।।
गांधर्वेण विवाहेन कामासक्तेन पार्वति ।। २४ ।।
कामिता सा नृपेणेव ततो गंतुं समुद्यतः ।।
एतस्मिन्नंतरे देवि कण्वश्चाश्रममभ्यगात् ।। २५ ।।
सा कन्या पितरं दृष्ट्वा ह्रिया नोपजगाम तम् ।।
विज्ञायाथ च तां विप्रो दिव्यज्ञानो महातपाः ।। २६ ।।
उवाच परमं क्रुद्धस्तां कन्यां काममोहिताम् ।।

त्वयापि दुष्टे रहसि मामवज्ञाय यत्कृतः ।। २७ ।।
स्वयं स्वयंवरो मोहात्तस्मात्कृष्णा भविष्यसि ।।
कुत्सिता निर्घृणा दीना निर्लज्जा रूपवर्जिता ।। २८ ।।
अयं ते नृपतिर्भर्त्ता दुष्टरूपो भविष्यति ।। २९ ।।
इत्युक्ता तत्क्षणाज्जाता सा कन्या रूपवर्जिता ।।
कुरूपो नृपतिर्जातः शापात्तस्य महात्मनः ।। 5.2.62.३० ।।
अथ प्रसादयामास सा कन्या पितरं तदा ।।
बालानभिज्ञा मूढाहं मन्मथेन प्रपीडिता ।। ३१ ।।
अज्ञानाच्च कृतं पापं तात त्वं क्षंतुमर्हसि ।।
अयं महीपतिस्तात प्रत्यग्लीनो महाव्रतः ।। ३२ ।।
न चाहं प्रार्थिता तेन मयासौ प्रार्थितो नृपः ।।
तस्मादनुग्रहं तात कर्तुमर्हसि चावयोः ।। ३३ ।।
इति तस्या वचः श्रुत्वा स विप्रोऽतिकृपान्वितः ।।
उवाच स्वां दुहितरमाश्वास्यैवं पुनःपुनः ।। ३४ ।।
नैव वागनृतं पुत्रि यावदद्य स्मराम्यहम् ।।
दैवमत्र परं मन्ये धिग्बुद्धिं धिक्पराक्रमम् ।। ३५ ।।
अकार्यं कारितो येन बलादहमनिंदिते ।।
उपदेशं प्रदास्यामि तत्त्वं कर्तुमिहार्हसि ।। ३६ ।।
महाकालवने पुण्ये लिंगं रूपप्रदायकम् ।।
पशुपेश्वरपूर्वे तु विद्यतेऽभीष्टदायकम् ।।३७ ।।
तत्त्वं गच्छ त्वरा युक्ता सह भर्त्रा नृपेण हि ।।
रूपं प्राप्स्यसि दुष्प्राप्यं लिंगदर्शनमात्रतः ।। ३८ ।।
इत्युक्ता सा तदा कन्या सह भर्त्रा गता प्रिये ।।
महाकालवने रम्ये यत्र लिंगमनुत्तमम् ।। ३९ ।।
ददर्श परया भक्त्या स च राजा नरोत्तमः ।।
तत्क्षणाद्दिव्यदेहा सा रूपेणातिमनोहरा ।।
दिव्यवस्त्रपरीधाना दिव्यालंकारभूषिता ।। 5.2.62.४० ।।
स च राजा तथा जातः कंदर्पसदृशाकृतिः ।।
रूपेणाप्रतिमो लोके तस्य लिंगस्य दर्शनात् ।। ४१ ।।
अतो लोकेषु विख्यातो देवो रूपेश्वरः प्रिये ।।
रूपदो धनदोऽत्यर्थं पुत्रदः स्वर्गदस्तथा ।। ४२ ।।
स च राजा स्वकं प्राप्तो राष्ट्रं सस्यादिसंयुतम् ।।

प्रियया परया सार्धं चक्रे राज्यमकंटकम् ।। ४३ ।।
राज्यं कृत्वा गतः स्वर्गं भार्यया सह पार्वति ।।
देदीप्यमानो वपुषा द्वितीय इव भास्करः ।। ४४ ।।
विमानेन सुदीप्तेन वंद्यमानो दिवालये ।।
दर्शनात्तस्य लिंगस्य प्राप्तः पदमनामयम् ।। ४५ ।।
ये पश्यंति विशालाक्षि देवं रूपेश्वरं शिवम् ।।
न ते रूपेण हीयंते यशसा च कुलेन च ।। ४६ ।।
सदा रूपकरं लिंगं भुक्तिमुक्तिफलप्रदम् ।।
ये पश्यंति वरारोहे तेषां लोकाः सदाऽक्षयाः ।। ४७ ।।
येऽर्चयंति नरा नित्यं देवं रूपेश्वरं परम् ।।
तेऽर्चिता यांति यानेन मम लोकं सनातनम् ।। ४८ ।।
स एव सुकृती लोके कुलं तेनाप्यलंकृतम्।।
यः पूजयति रूपेशं रूपसौभाग्यदायकम् ।। ४९ ।।
यः पूजयति देवेशं प्रसंगादपि पार्वति ।।
धनवान्रूपवान्सोऽपि राजा भवति भूतले ।। 5.2.62.५० ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
रूपेश्वरस्य देवस्य धनुःसाहस्रकं ७ब् ।। ५१ ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां पंचम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्ये रूपेश्वरमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ।। ६२ ।। ।। छ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६३



।। श्रीहर उवाच ।। ।।

धनुःसाहस्रनामानमीश्वरं शृणु पार्वति ।।

त्रिषष्टिसंख्यकं दिव्यं दर्शनात्पापनाशनम् ।। १ ।।

विदूरथोनाम नृपः ख्यातकीर्त्तिरभूद्भुवि ।।

तस्य पुत्रद्वयं जातं सुनीतिः .सुमतिस्तथा ।। २ ।।

एकदा तु वनं यातो मृगयां स विदूरथः ।।

ददर्श गर्त्तं सुमहद्भूमेर्मुखमिवोद्गतम् ।। ३ ।।

तं दृष्ट्वा चिंतयामास किमेतदिति पार्थिवः ।।

पातालविवरं मन्ये वडवानलसंनिभम् ।। ४ ।।

चिंतयन्निव तत्रासौ ददर्श विजने वने ।।

ब्राह्मणं सुव्रतं नाम तपस्विनमकल्मषम् ।। ५ ।।

स तं पप्रच्छ नृपतिः किमेतदिति भो द्विज ।। ६ ।।

।। ब्राह्मण उवाच ।। ।।

दानवः सुमहावीर्यो वसत्युग्रो रसातले ।।

कुजंभोनाम विख्यातो भिनत्ति वसुधामिमाम् ।। ७ ।।

तमजित्वा कथं राज्यं भोक्ष्यसे वसुधाधिप ।।

तेन विध्वंसिता विप्रा रात्रौ निःसृत्य पार्थिव ।। ८ ।।

उपद्रुतास्तथा देशा ध्वस्ताश्चैव तथाश्रमाः ।।

आप्याययति दैत्योऽयं सबली मुशलायुधः ।। ९ ।।

यदि त्वं घातयस्येनं पातालांतरगोचरम् ।।

ततः समस्तवसुधापतिरेव भविष्यसि ।। 5.2.63.१० ।।

इति विप्र वचः श्रुत्वा मंत्रयामास पार्थिवः ।।

मंत्रिभिः सहितोऽमोघं श्रुत्वा मुशलमद्रिजे ।। ११ ।।

तं मंत्रं क्रियमाणं तु सूनुभ्यां सह मंत्रिभिः ।।

तत्पार्श्ववर्त्तिनी कन्या शुश्रावाथ मुदावती ।। १२ ।।

ततः कतिपयाहे तु तां कन्यां जलजेक्षणाम् ।।

जहारोपवनाद्दैत्यः कुजंभः स्वसखीवृताम् ।। १३ ।।

एतच्छ्रुत्वा महीपालः क्रोधपर्याकुलेक्षणः ।।
उवाच पुत्रौ जानेऽहं सकुजंभो महासुरः ।। १४ ।।
दृष्ट्वा भूमौ पुरा गर्त्ते तत्र संशयिते मयि ।।
कथितो द्विजमुख्येन मया पृष्टेन पुत्रकौ ।। १५ ।।
स हन्यतां सोऽपहर्त्ता मुदावत्याः सुदुर्मतिः ।।
प्रस्थितौ नृपभक्त्याथ स्वसैन्यपरिवारितौ ।। १६ ।।
तौ सुतौ तत्र संप्राप्तौ पाताले पितृशासनात्।।
युयुधाते कुजंभेन स्वशक्त्या सेनया वृतौ ।। १७ ।।
ततः परिघनिस्त्रिंशशक्तिशूलपरश्वधैः ।।
बाणैश्चिरतरं युद्धं तेषामासीत्सदारुणम्।। १८ ।।
ततो मायाबलवता तेन दैत्येन तत्क्षणात् ।।
अमोघेनाद्वितीयेन मुशलेन वरानने ।। १९ ।।
हत सैन्यौ रणे बद्धौ राजपुत्रौ महाबलौ ।। 5.2.63.२० ।।
ततः श्रुत्वा महीपालो विवर्णवदनोऽभवत् ।।
बद्धपुत्रः परामार्त्तिं जगाम गिरिपुत्रिके ।। २१ ।।
रुरोद बहुधात्यर्थं पुत्रस्नेहेन पार्थिवः ।।
ततो विलपतस्तस्य मार्कंडेयो महामुनिः ।।
अनेकसृष्टिसंहारदृष्टकार्यपरावरः ।। २२ ।।
उदितादित्यसंकाशः सप्तकल्पानुगो वशी ।।
आजगाम नृपाभ्याशे विलपंतं ददर्श सः ।।
राजानं कथयामास त्रिकालज्ञो महामुनिः ।। २३ ।।
मा शुचस्त्वं महीपाल क्षत्त्रियोऽसि दृढव्रतः ।।
क्व शोक क्व महीपालो दुर्जयो लोकपालवत् ।। २४ ।।
शोकं कुपुरुषाचीर्णं त्यज त्वं राजसत्तम ।।
उद्यमं कुरु राजेंद्र कुजंभं घातयिष्यसि ।। २५ ।।
नात्युच्चं मेरुशिखरं नातिनीचं रसातलम् ।।
व्यवसायः सखा यस्य नास्ति दूरे महोदधिः ।। २६ ।।
महाकालवने लिंगमाराधय समाहितः ।।
रूपेश्वरस्य देवस्य पार्श्वे दक्षिणतः स्थितम् ।। २७ ।।
धनुःसाहस्रतुल्यं तु मुशलस्य निवारणम् ।।
धनुः प्राप्स्यसि राजेंद्र कुजंभं विनिपातय ।। २८ ।।
धनुःसाहस्रहस्तैस्तु रक्षितं योधसत्तमैः ।।

लिंगं देवासुरैर्युद्धे सहस्राक्षेण सेवितम् ।।
इंद्रेण च धनुर्लब्धं जंभो वै येन पातितः ।।२९ ।।
तस्य तद्वचनं श्रुत्वा स राजाथ विदूरथः ।।
जगाम त्वरितो देवि महाकालवनं शुभम् ।। 5.2.63.३० ।।
ददर्श तत्र तल्लिंगं पूजयामास भक्तितः ।।
तस्य तुष्टस्तदा देवो ददौ दिव्यं धनुस्तदा ।। ३१ ।।
धनुःसाहस्रतुल्यं च मुशलस्य निवारणम् ।।
धनुर्लब्ध्वा तदा राजा बद्धगोधांगुलित्रवान्।।
जगाम धीरः पातालं तेन गर्तेन सत्वरम् ।। ३२ ।।
ततो ज्यास्वनमत्युग्रं स चक्रे पार्थिवस्तदा ।।
येन पातालमखिलमासीदापूरितांतरम्।। ३३ ।।
ततो ज्यास्वनमाकर्ण्य कुजंभो दानवेश्वरः ।।
आजगामातिकोपेन स्वसैन्यपरिवारितः ।। ३४ ।।
ततो युद्धमभूत्तस्य सह राज्ञा वरानने ।।
दिनानि त्रीणि स यदा योधितस्तेन दानवः ।। ३५ ।।
ततः कोपपरीतात्मा मुशलायाभ्यधावत ।।
गंधैर्माल्यैस्तथा धूपैः पूज्यमानः स तिष्ठति ।। ३६ ।।
यावद्गृह्णाति मुशलं तावत्सा च मुदावती ।।
पस्पर्श चंदनव्याजैरनेकैश्च पुनःपुनः ।। ३७ ।।
ततः स गत्वा युयुधे मुसलेनासुरेश्वरः ।।
तदा मुसलपातास्ते धनुषा निष्प्रभीकृताः ।। ३८ ।।
धनुर्ज्याघातशब्देन पतिते भूतले तदा ।।
गतो वैवस्वतं लोकं कुजंभोनाम दानवः ।। ३९ ।।
ततोऽपतत्पुष्पवृष्टिस्तस्योपरि महीपतेः ।।
जगुर्गंधर्वपतयो देववाद्यानि सस्वनुः ।। 5.2.63.४० ।।
स चापि राजा तं हत्वा पुत्रौ लब्ध्वा सुतां तदा ।।
मुदावतीं मुदा युक्तो हर्षगद्गदनिर्भरः ।। ४१ ।।
पुत्राभ्यां सहितो देवि सुसंपूर्णमनोरथः ।।
सांतःपुरपरीवारः पुनरायाद्वरानने ।। ४२ ।।
महाकालवने रम्ये यत्र तल्लिंगमुत्तमम्।।
पूजयामास रत्नैश्च वस्त्रैराभरणैस्तथा ।। ४३ ।।
ततः स पूजितो देवैः शक्रेण च पुनःपुनः ।।

अस्य लिंगस्य माहात्म्याद्धनुः प्राप्तं नृपेण ३ ।। ४४ ।।
कुजंभोऽपि हतो दैत्यो देवविद्वेषकारकः ।।
धनुःसाहस्रनामायमतः ख्यातिं गमिष्यति ।। ४५ ।।
भक्त्या ये पूजयिष्यंति धनुःसाहस्रमीश्वरम्।।
यास्यन्ति शत्रवस्तेषां क्षयं नैवात्र संशयः ।। ४६ ।।
अर्चिते देवदेवेशे धनुःसाहस्रिके शिवे ।।
अर्चिताः सर्वदेवाः स्युर्वरदाश्च न संशयः ।। ४७ ।।
प्रातर्मध्येऽपराह्ने च धनुःसाहस्रकं शिवम् ।।
ये नमन्ति नरा नित्यं न ते नरकभोगिनः ।।४८ ।।
तीर्थानां च यथा गंगा रक्षिता योधसत्तमैः ।।
तथायं रक्षको देवो नाम्ना धनुःसहस्रकः ।।४९।।
तत्र गंगादितीर्थानि विद्यन्ते विविधानि च ।।
सुरहस्यातिपुण्यानि सद्यः पापहराणि च ।। 5.2.63.५० ।।
तेषां फलं विनिर्दिष्टं ये पश्यन्ति तु भक्तितः ।।
धनुःसाहस्रकं नाम सदा शत्रुक्षयंकरम् ।। ५१ ।।
एष ते कथितो देवि प्रभावः पापना शनः ।।
धनुःसाहस्रदेवस्य देवं पशुपतिं शृणु ।। ५२ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीति लिङ्गमाहात्म्ये धनुःसाहस्रमाहात्म्यवर्णनंनाम त्रिषष्टितमोऽध्यायः ।। ६३ ।। ।। ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६४

https://sa.wikisource.org/s/f94

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।

शृणु त्वं पशुपत्याख्यं चतुःषष्टिकमीश्वरम्।।

यस्य दर्शनमात्रेण पशुयोनिर्न लभ्यते ।। १ ।।

पशुपालो महादेवि बभूव भुवि विश्रुतः ।।

राजा परम धर्मिष्ठः पशूनां पालने रतः ।।२।।

दिदृक्षुः स कदाचिच्च गतस्तोयनिधिं प्रति ।।

ददर्श तत्र पुरुषान्पंच प्राधान्यतः स्थितान् ।।

एका स्त्री मुक्तकेशा सा भ्रमन्ती च पुनःपुनः ।। ३ ।।

अथ राजा भयाविष्टो विसंज्ञः समपद्यत ।।

संवेष्टितो दस्युभिस्तैस्तया नार्या विशेषतः ।। ४ ।।

ततोन्ये समपातं च आगत्य नृपसत्तमम् ।।

संवेष्ट्य संस्थितैः सर्वैस्ततो रुद्धो महीपतिः ।। ५ ।।

रुद्धे राजनि ते सर्वे एकीभूतास्तु दस्यवः ।।

घातिताः पशुपालेन न मृताः पुनरुत्थिताः ।। ६ ।।

तस्य तां धृष्टतां ज्ञात्वा स्थैर्यं च नृपतेर्मृधे।।

तस्यैव नृपतेर्देहे लीनास्ते दश दस्यवः ।। ७ ।।

अमूर्ता इव ते सर्वे एकीभूतास्ततोऽभवन् ।।

तान्दृष्ट्वा दुःखितो राजा पशुपालोऽभवत्क्षणात् ।। ८ ।।

अथापश्यत्तदाऽऽयांतं नारदं मुनिपुंगवम् ।।

ब्रह्मपुत्रं तपोयुक्तं पप्रच्छ स नृपस्तदा ।। ९ ।।

।। पशु पाल उवाच ।। ।।

भगवन्ब्रह्मपुत्राद्य मया दृष्टं तु कौतुकम् ।।

अकस्मात्पुरुषाः पंच समायाता भयावहाः ।। 5.2.64.१० ।।

तैरहं वेष्टितो दुष्टैर्व्याकुलश्च कृतस्तदा ।।

मुष्टिभिर्हन्यमानोऽहं स्वस्थो जातो द्विज क्षणात् ।। ११ ।।

ततोऽन्ये पुरुषाः पञ्च समायाता नियुध्य माम् ।।

हन्यतां हन्यतामेष मुक्तिकामो नृपाधमः ।। १२ ।।

एवं तैः पीडितोऽत्यर्थं पुनर्मोहमुपागतः ।।
एतस्मिन्नन्तरे सा स्त्री मामुवाच पुनःपुनः ।। १३ ।।
दृढो भव महाराज मा विषादं कुरु प्रभो ।।
हीनवीर्या ह्यमी चोराः समर्थस्त्वं स्थिरो भव ।। १४ ।।
तस्या वाक्येन विप्रेंद्र मया धैर्येण संयुगे ।।
दश प्रधान पुरुषा जितास्ते न मृताः प्रभो ।। १५ ।।
प्रलीना मच्छरीरे तु केप्यते कापि साऽबला ।।
पशुपालवचः श्रुत्वा नारदो वाक्यमब्रवीत् ।। १६ ।।
ये त्वया पुरुषा दृष्टास्त्वयि लीना जिता मृधे ।।
बुद्धीन्द्रियाणि ते पञ्च पंच कर्मेन्द्रियाणि च ।।
भ्रमन्ती या च नारी सा त्वया दृष्टा नृपोत्तम ।। ।। १७ ।।
मनोरूपेण सा बुद्धिर्भ्रमत्येव हि न स्थिरा ।।
जितानि तानि पूर्वेण ब्रह्मणा लोककर्तृणा ।। १८ ।।
सोऽपि क्रोधवशं नीत इन्द्रियैर्विषयैः प्रियैः ।।
पितामहेन स्वे यज्ञे शम्भोर्भागो न कल्पितः ।। १९ ।।
महादेवो जगन्नाथः सृष्टिसंहारकारकः ।।
इंद्रियैर्मोहितो राजन्क्रोधं चक्रे सुरा न्प्रति ।। 5.2.64.२० ।।
सुरा विभूतयो यस्य क्रीडार्थं भुवनत्रयम् ।।
तेन भागनिमित्तार्थं चक्रे सज्यं धनुस्तदा ।। २१ ।।
पूष्णश्च दंताः संभग्ना मोहितश्च दिवाकरः ।।
नेत्रे भग्ने भगस्यापि विद्धो यज्ञो मृगाकृतिः ।। २२ ।।
पशवश्च कृता देवा मुनयो वेदवर्जिताः ।।
ऋषीणां धर्मशास्त्राणि हृतानि विभुना तथा ।। २३ ।।
दुर्जयानीन्द्रियाण्याहुर्मुनयो वेदपारगाः ।।
मनोरूपेण या बुद्धिः सा चातीव सुदुर्जया ।। २४ ।।
तस्माद्राजन्महाबाहो मा विषादं वृथा कृथाः ।।
तस्य तद्वचनं श्रुत्वा नारदस्य महात्मनः ।।
पशुपालो महादेवि वक्तुं समुपचक्रमे ।। २५ ।।
।। पशुपाल उवाच ।। ।।
कथं ते भगवन्मुक्ता देवाः शक्रपुरोगमाः ।।
पशुभावाच्च ब्रह्मापि श्रोतुमिच्छामि कथ्यताम् ।।२६।।
तस्य तद्वचनं श्रुत्वा नारदः पुनरब्रवीत् ।।

पशु त्वेऽपि गता देवा ऋषिभिर्मुनिभिः सह ।। २७ ।।
ब्रह्माणमग्रतः कृत्वा गताः शरणमीश्वरम् ।।
स्तुतिभिस्तोषितो देवो भक्तानुग्रहकारकः ।। २८ ।।
उवाच वचनं राजन्यत्कर्तव्यं तदुच्यताम्।।२९।।
देवा ऊचुः।।
वेदशास्त्राणि विज्ञानं देहि नो भव मा चिरम्।।
देवस्त्वं पूर्ववद्देव यदि तुष्टो महेश्वरः ।।5.2.64.३०।।
।।ईश्वर उवाच ।। ।।
भवंतः पशवः सर्वे मया सार्द्धं च गम्यताम् ।।
महाकालवने क्षेत्रे पशुभावविमोक्षके।।३१।।
अहं पतिर्वो भविता ततो मोक्षमवाप्स्यथ ।।
भवतामनुकंपार्थं लोकानुग्रहकारणम् ।।
लिंगरूपी भविष्यामि नाम्ना पशुपतीश्वरः ।। ३२ ।।
अथ ते त्रिदशाः सर्वे दृष्ट्वा देवं तमीश्वरम् ।।
पशुभावविनिर्मुक्ता गता हृष्टास्त्रिविष्टपम् ।।
ब्रह्मा पशुपतिं प्राह प्रसन्नेनांतरात्मना ।। ३३ ।।
ये त्वां पश्यन्ति देवेश भक्त्या परमया युताः ।।
तेषां कुले पशुत्वं च ये गताः पितरः प्रभो ।।
स्वकैः कर्मविपाकैश्च तेषां मोक्षो भविष्यति ।।३४।।
अज्ञानाज्ज्ञानतो वापि यत्पापं क्रियते नरैः ।।
तत्पापं विलयं यातु तस्य देवस्य पूजनात् ।। ३५ ।।
ते नराः पशवो लोके किं तेषां जीविते फलम् ।।
यैर्न दृष्टः पशुपतिः पशुयोनिविमोचकः ।। ३६ ।।
कौमारे यौवने बाल्ये वार्द्धके यदुपार्जितम् ।।
तत्पापं विलयं याति दृष्ट्वा पशुपतिं शिवम्।। ३७ ।।
पौषमासे तु संप्राप्ते ये त्वां पश्यंति मानवाः ।।
तेषां त्वं वरदो देव सदाभीष्टकरो भवेत् ।। ३८ ।।
सूर्यग्रहे यथा दत्तं कुरुक्षेत्रे विशेषतः ।।
पात्रे दानं सुवर्णस्य प्रोक्तमक्षय्यमव्ययम् ।। ३९ ।।
पौषमासे दिनैकेन नराणामधिकं तथा ।।
तद्दर्शनेन देवेश भविष्यति न संशयः ।। 5.2.64.४० ।।
इत्युक्त्वा भगवान्ब्रह्मा ब्रह्मलोकं गतो नृप ।।

कृतकृत्यः प्रहृष्टात्मा मुनिभिः कविभिः सह ।। ४१ ।।
तस्मात्त्वमपि राजेंद्र यदीच्छसि परां गतिम् ।।
समाराधय तल्लिंगं पशुयोनिविमोचनम् ।।
महाकालवनं गत्वा इन्द्रेश्वरस्य दक्षिणे ।।४२।।
तस्य तद्वचनं श्रुत्वा नारदस्य महात्मनः ।।
जगाम पशुपालोऽपि महाकालवनं प्रिये ।।
दर्शनात्तस्य लिंगस्य गतोऽसौ परमां गतिम् ।। ४३ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
पशुपत्याख्यदेवस्य शृणु ब्रह्मेश्वरं शिवम् ।। ४४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये पशुपती श्वरमाहात्म्यवर्णनंनाम चतुष्षष्टितमोऽध्यायः ।। ६४ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६५



।। श्रीहर उवाच ।। ।।

पंचषष्टिकसंख्याकं विद्धि ब्रह्मेश्वरं प्रिये ।।

यस्य दर्शनमात्रेण ब्रह्मलोको ह्यवाप्यते ।। १ ।।

पुलोमानाम दैत्येंद्रो महाबलपराक्रमः ।।

पौलोमानां सहस्रैस्तु पूज्यमानः स तिष्ठति ।। २ ।।

आनर्चुस्तेऽपि तं दैत्यं सुरेशं त्रिदशा इव ।।

स कदाचित्समक्षं तु दैत्यानामिदमब्रवीत् ।। ३ ।।

अद्यापि लोकपालानामर्केंदुज्वलनांभसाम् ।।

शतक्रतोर्द्धनेशस्य यमस्य वरुणस्य च।।४।।

यदि नाम ततः किं मे तपसा जीवितेन च।।

सोऽहं विद्रावयिष्यामि सर्वानेव दिवौकसः।।५।।

सर्वैरेतैः परिवृतः पौलोमैर्बलवत्तरैः।।

इत्युक्त्वा गतवान्देवि सागरं दैत्यसंवृतः।।

तावच्छयानं सहसा ह्यपश्यन्मधुसूदनम्।। ६।।

शारदाभ्रसमाभासं मध्येकालं यथा घनम् ।।

तमालोक्य ततो दैत्यानब्रवीदनुगांस्तथा ।। ७ ।।

अयं स दानवगिरिवज्रो हि मधुसूदनः ।।

कीर्त्तिकांताकलाकेलिवैधव्यादेशको द्विषाम्।। ८ ।।

दैत्यसीमंतिनीकांतपत्रवल्लीप्रभंजकः ।।

अयमस्मज्जयवधूवैधव्यादेशकः परः ।। ९ ।।

गतशंकः स्वपित्येकः सर्वदा कुटिलाशयः ।।

हंतव्यस्त्वरया दुष्टः कांक्षितो दर्शनं गतः ।। 5.2.65.१० ।।

इत्युक्त्वा स हि दैत्येंद्रः पुलोमातिरुषान्वितः ।।

अभिदुद्राव वेगेन तावदग्रे पितामहम् ।।

ददर्श नाभिकमले चिन्तयानं पुनःपुनः ।। ११ ।।

अथ व्याकुलतां प्राप्तो ब्रह्मा दृष्ट्वा तदद्भुतम् ।।

आयांतं दैत्यसिंहानां सैन्यं रणसुदुर्जयम् ।। ।। १२ ।।

अथ बोधं गतः क्षिप्रं कैटभारिर्महाबलः ।।
ददर्शाग्रे पुलोमं तु स्वसैन्यपरिवारितम् ।। १३ ।।
अजेयः संगरे धीरो ब्रह्माणमिदम ब्रवीत् ।। १४ ।।
।। विष्णुरुवाच ।। ।।
पुलोमस्य विनाशार्थमुद्योगः क्रियतामिति ।।
असौ लब्धवरो दैत्यः सहसा मां विजेष्यति ।। १५ ।।
तस्माद्गच्छ त्वरायुक्तो महाकालवने शुभे ।।
लिंगं द्रक्ष्यसि तत्रैव सप्तकल्पोद्भवं परम् ।। १६ ।।
उत्तरे च्यवनेशस्य शिवशक्तिसमन्वितम् ।।
तस्य लिंगस्य माहात्म्याद्बलं प्राप्स्यति शाश्वतम् ।। १७ ।।
कुण्डेश्वरकरस्पर्शकारि वारि निरंतरम् ।।
तदानय गृहीत्वा तु तेनायं वध्यतामिति ।। १८ ।।
इति तस्य वचः श्रुत्वा ब्रह्मा लोकपितामहः ।।
आजगाम मुहूर्तेन यत्र तल्लिंगमुत्तमम् ।। १९ ।।
स्तुतिं चकार सहसा दृष्ट्वा भक्त्या पितामहः ।। ।। 5.2.65.२० ।।
।। ब्रह्मोवाच ।। ।।
नमस्ते दिव्यरूपाय नमस्ते बहुरूपिणे ।।
नमोऽविषह्यवीर्याय नमो विश्वक्रियात्मने ।। २१ ।।
नमः पिंगकपर्द्दाय नमः खंडेंदुधारिणे।।
नमः कनकवर्णाय नमो वननिवासिने ।। २२ ।।
वंदे त्वां भूतभर्त्तारं सदा शत्रुविनाशनम् ।।
रणत्कनककेयूरं धृतपूर्णेंदुमंड लम् ।। २३ ।।
वन्दे त्वां त्रिदशाध्यक्षं विश्वाध्यक्षं महेश्वरम् ।।
क्षीणसंसारदुःखौघं मुनिध्यातपदं सदा ।। २४ ।।
वंदे त्वां सर्वदा देवं दैत्यसंघातनाशनम् ।।
टंकपट्टिशशूलाग्रधनुःखड्गगदाधरम् ।। २५ ।।
एवं स्तुतः स भगवाँल्लिंगरूपी महेश्वरः ।।
किंचित्स्मितमुखः प्राह ब्रह्माणं लोककारणम् ।। २६ ।।
किं तेऽभीष्टं करोम्यद्य किं ददामि पितामह ।।
कस्मात्स्तौषि मुनिश्रेष्ठ कस्मादार्तोऽसि दृश्यसे ।। ।। २७ ।।
इति लिंगवचः श्रुत्वा कथितं ब्रह्मणा तदा ।।
वृत्तांतं विस्तरात्सर्वं लिंगेनोक्तं तदा प्रिये ।। २८ ।।

जलं गृहाण वाणीश शस्त्रजं शत्रुवारणम् ।।
हनिष्यसि क्षणेनैव पुलोमं सहसैन्यकम् ।। २९ ।।
इत्युक्तः सत्वरो ब्रह्मा गतो यत्र जनार्द्दनः ।।
जलेन तेन तान्दै त्यान्पातयामास भूतले ।। 5.2.65.३० ।।
स पुलोमा महानासीत्स्वारोचिषेंऽतरे मनौ ।।
कृष्णोऽपि ब्रह्मणा सार्द्धमाजगाम कुशस्थलीम् ।। ३१ ।।
ददर्श तत्र तल्लिंगं नाम चक्रे जनार्द्दनः ।।
ब्रह्मणा संस्तुतो देवो ममानुग्रहकारणात् ।।
तस्माद्ब्रह्मेश्वरोनाम ख्यातिं लोकेषु यास्यति ।। ३२।।
ये द्रक्ष्यंति नरा भक्त्या देवं ब्रह्मेश्वरं शिवम्।।
ते ब्रह्मलोकमाक्रम्य समेष्यन्ति ममान्तिकम् ।। ३३ ।।
यस्तु पश्येत्प्रसंगेन देवं ब्रह्मेश्वरं शिवम् ।।
कृतकृत्यः स पुरुषो न शोचेन्मरणं सदा ।। ३४ ।।
यः पुष्करं नरो गत्वा तपो वर्षशतं चरेत् ।।
अन्यो ब्रह्मेश्वरं पश्येत्तस्य पुण्यं ततोऽधिकम् ।। ३५ ।।
पंचपातकसंयुक्तो यो मर्त्यो दुष्टमानसः ।।
सोपि गच्छेच्छिवं स्थानं दृष्ट्वा ब्रह्मेश्वरं शिवम् ।। ३६ ।।
चांद्रायणानां विधिवद्दशानामेव यत्फलम् ।।
तत्फलं समवाप्नोति ब्रह्मेश्वरस्य दर्शनात् ।। ३७ ।।
इत्युक्त्वा गतवान्विष्णुर्वैकुंठं शाश्वतं प्रिये ।।
ब्रह्मलोकं जगामाथ ब्रह्मा लोकपितामहः ।। ३८ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
ब्रह्मेश्वरस्य देवस्य जल्पेश्वरमथो शृणु ।। ३९ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनाम पंचषष्टितमोऽध्यायः ।।६५।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६६



।। ईश्वर उवाच ।। ।।

षट्षष्टितमकं विद्धि देवं जल्पेश्वरं प्रिये ।।

यस्य दर्शनमात्रेण महापापं शमं व्रजेत् ।। १ ।।

जल्पोनाम महादेवि राजाभूद्भुवि विश्रुतः ।।

सदा जल्परतो नित्यं जल्प वादप्रवर्तकः ।।२ ।।

विकल्पबहुलो नित्यं संसारगतिचिंतकः ।।

सुबाहुप्रमुखाः पंच पुत्रा जाता महाबलाः ।।३।।

तस्य राज्ञो वरारोहे मूर्ताः पंचाग्नयो यथा ।।

सुबाहुः शत्रुमर्द्दी च जयो विजय एव च ।।

विक्रांतः पंचमः पुत्रः सर्वे शस्त्रास्त्रपारगाः ।।।४।

पित्रा जल्पेन ते राज्ञा पृथग्राज्ये प्रतिष्ठिताः ।।

पृथक्पुत्रा हि ते सर्वे पृथग्देशाधिपाः कृताः ।।५।।

प्राच्यां सुबाहुर्नृपतिर्याम्यां वै शत्रुमर्दनः ।।

पश्चिमायां जयो राजा उत्तरे विजयो नृपः ।। ६ ।।

मध्ये विक्रांतसंज्ञस्तु स्वपदे विनियोजितः ।।

व्यवस्थामीदृशीं कृत्वा स्वयमेव वनं ययौ ।। ७ ।।

बभूवुर्मंत्रिणस्तेषां हिता वंशक्रमागताः ।।

बुभुजुः स्वस्वराज्यानि मंत्रिभिः सहितास्तदा ।। ८ ।।

विक्रांतस्य च यो मंत्री विकल्पैकपरायणः ।।

तेनोक्तं विजने देशे विक्रांतस्य महीभृतः ।। ९ ।।

यस्यैषा पृथिवी कृत्स्ना स समर्थः प्रकीर्तितः ।।

उद्यमेन पदं लब्धं वासवेन महात्मना ।। 5.2.66.१० ।।

त्रिदशैश्चामृतं लब्धमुद्यमेन महीपते ।। ११ ।।

हीनोद्यमा मानवा ये क्षत्रियाश्च विशेषतः ।।

ते हास्यास्पदतां यांति हीनवीर्या दिनेदिने ।। १२ ।।

स्नेहं च कुरुते भ्राता राज्यलुब्धोऽर्थकारणात् ।।

अर्थवीर्येण तेनैव संतोषं कुरुते नृपः।।

क्रियते न किमर्थं तु भूप मंत्रपरिग्रहः।।
भुज्यते सकलं राज्यं मया ते मंत्रिणा बलात्।।१४।।
परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः ।।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ।। १५ ।।
भूमिमेते निर्गिलंति सर्पा बिलशयानिव ।।
राजानमविरोद्धारं ब्राह्मणं चाप्रवासिनम् ।। १६ ।।
मायया मोहितं सर्वं को वा कस्य च बांधवः ।।
उद्यमः क्रियतां तस्माद्भ्रातॄणां निग्रहे द्रुतम् ।। १७ ।।
भ्रातृभिर्भ्रातरः सर्वे निहता राज्यकारणात् ।।
धर्मं च शाश्वतं ज्ञात्वा निहताश्चासुराः सुरैः ।। १८ ।।
इति मंत्रिवचः श्रुत्वा स राजा विस्मयान्वितः ।।
हसित्वा प्रत्युवाचेदं ममायं शत्रुरागतः ।। १९ ।।
।। विक्रान्त उवाच ।। ।।
वयं च भ्रातरः पंच पृथिवीं कामयामहे ।।
अतुष्टाः पृथगैश्वर्यं कथं कृत्स्ना भविष्यति ।।5.2.66.२०।।
ज्येष्ठो भ्राता सुबाहुश्च द्वितीयः शत्रुमर्दनः ।।
जयश्च विजयश्चैव तेषां लघुरहं यतः ।। २१ ।।
।। मंत्र्युवाच।। ।।।
राज्ये स्थितं पूजयंति ज्येष्ठं पूजार्हणैर्वरैः ।।
कनिष्ठज्येष्ठता केयं राज्यं प्रार्थयतां नृणाम् ।। २२ ।।
तथेति च प्रतिज्ञाते विक्रांतेन महीभृता।।
स मंत्री कारयामास अभिचारविधिं तदा ।। २३ ।।
अथर्वणेन मंत्रेण पुरोधाः प्रचकार ह ।।
ज्ञातं पुरोहितैस्तेषां तेऽपि चक्रुः समाहिताः ।। २४ ।।
अथ कृत्या समुत्पन्ना पश्चात्कृत्याचतुष्टयम् ।।
सपुरोहितभृत्यांस्तानग्रसंस्तु समं तदा ।। २५।।
ततः समस्तलोकस्य विस्मयश्चाभवन्महान् ।।
यदैक कालं नेशुस्ते पृथक्पुरनिवासिनः ।।२६।।
ततः श्रुत्वा च निधनं पुत्राणां जल्पको नृपः ।।
वने वशिष्ठं पप्रच्छ किमेतद्भगवन्प्रभो ।। २७ ।।
तेनापि कथितं सर्वं वशिष्ठेन महात्मना ।।
दिव्यज्ञानेन वृत्तांतं विकल्पं चाकरोन्नृपः ।। २८ ।।

।। राजोवाच ।। ।।
निमित्तोऽहं विनाशस्य धिग्धि ग्जन्म मदीयकम् ।।
सार्द्धं त्वमात्यपुत्रैश्च मृतं ब्राह्मणपंचकम् ।। २९ ।।
मत्तोऽन्यः कः पापरतो भविष्यति महान्भुवि ।।
यदि जन्म मदीयं स्या न्न च जातु महीतले ।। 5.2.66.३० ।।
ततस्ते न विनश्येयुर्मम पुत्रपुरोहिताः ।।
धिग्राज्यं धिक्च मे जन्म भूभुजां च महाकुले ।। ३१ ।।
कारणत्वं गतो योऽहं विनाशस्य द्विजन्मनाम् ।।
कुर्वन्तः स्वामिनस्तेऽर्थं पुत्राणां मम याजकाः ।।
नाशं ययुर्न दुष्टास्ते दुष्टोऽहं नाशकारणे ।। ३२ ।।
इत्थमुद्विग्नहृदयः स जल्पः पृथिवीपतिः ।।
पप्रच्छ च पुनः प्रह्वो वशिष्ठं ज्ञानिनां वरम् ।। ३३ ।। ।।
।। राजोवाच ।। ।।
भगवन्ब्रूहि मे तीर्थमवियोगकरं सदा ।।
सद्यः पापहरं विप्र लिंगं वा कथय प्रभो ।। ३४ ।।
तस्य तद्वचनं श्रुत्वा जल्पस्य पृथिवीपतेः ।।
वशिष्ठः कथयामास दिव्यज्ञानेन पार्वति ।। ३५ ।।
गच्छ जल्प ममादेशान्महाकालवनोत्तमम् ।।
कृत्वा निः क्षत्रियां पृथ्वीं यत्र रामस्तपस्यति ।।
तत्र लिंगमनाद्यं च कुक्कुटेश्वरपश्चिमे ।। ३६ ।।
तदाराधय राजेंद्र जामदग्न्याश्रमे स्थितः ।।
वशिष्ठस्य वचः श्रुत्वा जल्पोऽसौ पृथिवीपतिः ।। ३७ ।।
देवदारुवनं त्यक्त्वा महाकालवनं गतः ।।
ददर्श तत्र तल्लिंगमनाद्यं देवसंस्तुतम्।।
पूजयामास विधिवत्परमेण समाधिना ।। ३८ ।।
तत्र वाणी समुत्पन्ना लिंगमध्याद्वरानने ।।
न त्वं पापसमाचारो न त्वं मरणकारणम् ।।
पुत्राणां नृपविप्राणामदृष्टं तत्र कारणम् ।। ३९ ।।
विपाकेन स्वकीयेन गता वैवस्वतं पुरम् ।।
मा शोकं कुरु राजेंद्र गहना कर्मणो गतिः ।। 5.2.66.४० ।।
अनेन शुद्धभावेन तुष्टोऽहं नृपसत्तम ।।
यदभीष्टं वरं ब्रूहि तत्ते दास्यामि नान्यथा ।।४१।।

।। राजोवाच ।। ।।

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ।।

संसारसागरे घोरे मा भवेन्मम जन्म च ।। ४२ ।।

अक्षयां देहि मे कीर्त्तिं नाम्ना मे विश्रुतो भुवि ।।

अयं जल्पेश्वरो देवो जल्पेनाराधितो विभुः ।। ४३ ।।

वदंतु त्रिदशाः सर्वे एष मे दुर्लभो वरः ।।

ये त्वां पश्यंति मनुजा मन्नाम्ना ख्यातिमागतम्।।

तेषां वियोगो मा भूयात्पुत्रतो धनतोऽपि वा ।। ।। ४४ ।।

न संसारभयं तेषां दस्युतो नैव राजतः ।।

न भूतग्रहरोगेभ्यो भयमस्तु कदाचन ।। ४५ ।।

शिवमस्तु सदा तेषां येषां त्वं दर्शनं गतः ।।

ते धन्या मानुषे लोके ये त्वां शरणमागताः ।। ४६ ।।

सर्वतीर्थाभिषेकैस्तु यत्पुण्यं प्राप्यते नरैः ।।

तत्सर्वमधिकं देव लभ्यते तव दर्शनात ।। ।। ४७ ।।

तावत्पतंति संसारे घोरे दुःखशताकुले ।।

यावन्न दृश्यते देवः संसारार्णवतारकः ।। ४८ ।।

यदा पापक्षयः पुंसां तदा ते दर्शनं भवेत् ।।

महता सुकृतेनैव नाल्पेन तपसा प्रभो ।। ४९ ।।

एवं भविष्यतीत्युक्त्वा तेन लिंगेन पार्वति ।।

पश्यतां सर्वदेवानां स्वतनौ संनिवेशितः ।। 5.2.66.५० ।।

तस्मिँल्लिंगे लयं प्राप्ते नृपे जल्पे वरानने ।।

देवो जल्पेश्वरः ख्यातो देवैरुक्तो महीतले ।।

भुक्तिदो मुक्तिदश्चैव सदाभीष्टकरः स्मृतः ।। ५१ ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

जल्पेश्वरस्य देवस्य शृणु केदारसंज्ञकम् ।। ५२ ।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये जल्पेश्वरमाहात्म्यवर्णनंनाम षदषष्टितमोऽध्यायः ।। ६६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६७



।। ईश्वर उवाच ।।

सप्तषष्टिकसंख्याकं केदारेश्वरसंज्ञकम् ।।

देवं शृणु वरारोहे दर्शनात्पापनाशनम् ।। १ ।।

सृष्टिकाले पुरा देवि देवा व्याप्ता हिमेन हि ।।

शीतार्त्ता विह्वलाः सर्वे ब्रह्माणं शरणं गताः ।। २ ।।

हिमाद्रिणार्दिताः सर्वे वयं देव जगत्पते ।।

त्राहि भीतांश्चतुवक्त्र पितामह नमोऽस्तु ते ।। ३ ।।

देवानां वचनं श्रुत्वा प्रोक्तं वै ब्रह्मणा प्रिये ।।

पीडिता हिमशैलेन शंकरश्वशुरेण च ।। ४ ।।

नाहं यातुं समर्थोऽस्मि सत्यमेतन्मयोदितम्।। ।।

महादेव मृते देवा गतिरन्या न विद्यते ।। ५ ।।

स एव शरणं देवः सर्वेषां नो भविष्यति ।।

तस्याज्ञया मया सर्वे पर्वता रचिताः पुरा ।। ६ ।।

कृता बुद्धिर्विचित्रा च हिमाद्रिश्च मया कृतः ।।

असेव्यः सर्वजंतूनामधृष्यो दुर्गमो गिरिः ।। ७।।

हिमाचलस्य तस्यैव शास्ता देवो महेश्वरः ।।

तस्माद्यास्यामहे देवा कैलासं पर्वतोत्तमम्।। ८ ।।

यत्र तिष्ठति विश्वात्मा देवदेवो महेश्वरः ।।

एवमुक्त्वा गतो ब्रह्मा देवैः सार्द्धं ममांतिकम् ।।

दृष्टोहं पूजितस्तैस्तु स्तुतोऽहं विविधैः स्तवैः ।। ९ ।।

मया संमानिता देवाश्चतुवक्त्रः प्रपूजितः ।।

पूजयित्वा मया पृष्टो ब्रह्मा गमनकारणम् ।।5.2.67.१ ०।।

किं कार्यं त्रिदशैः सार्द्धमागतोऽसि पितामह ।।

कथितं ब्रह्मणा सर्वं श्रुतं सर्वं मया प्रिये ।। ११ ।।

हिमाचलं समाहूय मर्यादा च कृता मया ।।

शैलानां राजराजत्वे हिमाद्रिश्च प्रतिष्ठितः ।। १२ ।।

देवानां विषयाश्चैव गंधर्वाणां तथैव च ।।

यक्षाणामथ नागानां किंनराणां तथैव च ।। १३ ।।
विद्याधराणां क्रीडार्थं पृथक्पृथङ्निवेशिताः ।।
रूपतो भाति शैलेंद्रः शुद्धस्फटिकसंनिभः ।। १४ ।।
जाह्नवीनिर्झरोष्णीषः शर्वाणीजनकस्तथा ।। १५ ।।
सर्वदेवमयो दिव्यः सर्वतीर्थमयः कृतः ।।
सर्वाश्रमनिवासश्च सर्वामरनिषेवितः ।। १६ ।।
एवं संस्थाप्य शैलेंद्रं लिंगमूर्त्तिरहं स्थितः ।।
विख्यातस्त्रिषु लोकेषु केदारेश्वरनामतः ।। १७ ।।
उदकं निर्मितं तत्र मंत्रपूर्णं मया प्रिये ।।
माहात्म्यं विविधं प्रोक्तं लिंगस्य च जलस्य च ।। १८ ।।
योत्रागत्य नरो भक्त्या सम्यङ्मां पूजयिष्यति ।।
जलं योऽत्रैव गृह्णाति विधानेन वरानने ।।
तस्योदरे भविष्यामि लिंगरूपी न संशयः ।। १९ ।।
इत्युक्ते वचने देवि सदेवासुरपन्नगाः ।।
यक्षरक्षःपिशाचाश्च भूतवैतालकिंनराः ।। 5.2.67.२० ।।
विद्याधरगणाश्चैव मम दर्शनलालसाः ।।
समायाता वरारोहे पीत्वा तत्र जलं शुभम् ।। २१ ।।
दृष्टोऽहं विधिना तैस्तु लिंगमूर्त्तिगतः प्रिये ।।
मम तुल्याश्च ते जातास्तस्मिन्नद्रिवरे स्थिताः ।।
जनलोकगतैः सिद्धैः पूज्यमाना वरानने ।। २२ ।।
अथ कालेन बहुना श्रुत्वा माहात्म्यमुत्तमम् ।।
केदारेश्वरदेवस्य जलस्य च विशेषतः ।। २३ ।।
मनुष्याः समुपायातास्ते रजोबहुला यतः ।।
तमःप्राया विशालाक्षि तदाहं माहिषं वपुः ।। २४ ।।
कृतवांस्तद्भयार्थाय न च ते भीतिमागताः ।।
इह देवोत्र देवोऽत्र बभ्रमुस्ते दिदृक्षवः ।। २५ ।।
न तैर्दृष्टो महादेवि यतोऽहं महिषाकृतिः ।।
स्थितोऽस्म्यलक्ष्यरूपेण ततस्ते दीनमानसाः ।।
उद्विग्ना निश्वसन्तश्च वैराग्यं परमं गताः ।। २६ ।।
नात्र देवो न तीर्थानि न गंगा पुण्यदायिनी ।।
न धर्मो न परो लोकः सर्वमे तद्विडम्बनम् ।। २७ ।।
एवं किल पुराणेषु श्रूयते सर्वदा श्रुतौ ।।

हिमालये च केदारं लिंगं मोक्षप्रदायकम्।। २८ ।।
एवं तु वदतां तेषां मानुषाणां यशस्विनि ।।
आकाशादुत्थिता वाणी मया प्रोक्तानुकंपया ।। २९ ।।
अमार्गं मा वदत्वत्र न निंद्याः श्रुतयोऽव्ययाः ।।
पुराणं नान्यथा प्रोक्तं ब्रह्मणा लोककर्तृणा ।। 5.2.67.३० ।।
ये निंदंति पुराणानि धर्मशास्त्राणि नास्तिकाः ।।
ते यांति नरकं घोरं यावदाभूतसंप्लवम् ।। ३१ ।।
सदा देवोत्र केदारः स्वर्गमोक्षप्रदायकः ।।
विद्यते त्रिदशैः पूज्यः सततं नैव दृश्यते ।। ३२ ।।
करोति पूजां हिमवान्मासानष्टौ च शाश्वतान् ।।
हिमाद्रिस्तेन पुण्येन नगेन्द्रस्तु कृतो नगैः ।।
सेव्यश्च रमणीयश्च सर्वतीर्थनमस्कृतः ।। ३३ ।।
सर्वरत्ननिधानश्च देवानां वल्लभस्तथा ।।
ग्रीष्मे चैव वसन्ते च देवदेवोऽत्र दृश्यते ।। ३४ ।।
नियतेनैव कालेन मानुषाणां च सर्वदा ।।
यदि बुद्धिः परा जाता सर्वदा मम दर्शने ।। ३५ ।।
आख्यास्ये तदुपायं च श्रूयतां सावधानतः ।।
मा विकल्पोऽत्र कर्त्तव्यः सर्वान्कामानवाप्स्यथ ।। ३६ ।।
क्षेत्राणामुत्तमं क्षेत्रं भुक्तिमुक्तिप्रदायकम् ।।
प्रलयेऽप्यक्षयं प्रोक्तं महाकालवनं नराः ।। ३७ ।।
तत्राहं संभविष्यामि लोकानामनुकंपया ।।
लिंगरूपेण शिप्रायास्तटे पुण्ये सुशोभने ।। ३८ ।।
सोमेश्वरस्य देवस्य पश्चिमे स्थानमुत्तमम् ।।
प्रसिद्धमुपयास्यामि केदारेश्वरनामतः ।। ३९ ।।
सर्वदा दर्शनं तत्र मया सार्द्धं भविष्यति ।।
सर्वेषां च प्रदास्यामि सर्वा न्कामान्न संशयः ।। 5.2.67.४० ।।
इह यावत्फलं तस्माद्दास्यामि ह्यधिकं ततः ।।
इति ते मानवाः सर्वे श्रुत्वा वाणीं मनोरमाम् ।।
आकाशादुत्थितां दिव्यां मनःप्रह्लादकारिकाम् ।। ४१ ।।
गता वनं महाकालं संस्मरन्तो महेश्वरम् ।।
विकल्पेन विचित्रेण सत्यमेवेति नान्यथा ।। ४२ ।।
स्नात्वा शिप्राजले पुण्ये यावत्पश्यन्ति भास्करम् ।।

तावद्दृष्टिपथोत्पन्नं लिंगं पापप्रणाशनम् ।। ४३ ।।
अथ ते हर्षिताः प्रोचुः केदारोऽयं न संशयः ।।
दृष्टोऽस्माकं न सन्देहो गंगा शिप्राजले स्थिता ।। ४४ ।।
ततस्ते पूजयामासुः पुष्पैर्नानाविधैस्तथा ।।
पूजितोऽहं विशालाक्षि तेषां तुष्टो वरानने।। ।। ४५ ।।
दुर्लभोऽतिवरो दत्तः कैलासे स्थानमुत्तमम् ।।
अक्षयं च पदं दत्तं पुनरावृत्तिवर्जितम् ।। ४६ ।।
अतोऽहं त्रिदशैः प्रोक्तः केदारेश्वरना मतः ।।
प्रार्थितः परया भक्त्या लोकानामनुकंपया ।। ४७ ।।
इहागत्य नरा ये च त्वां पश्यंति सुभक्तितः ।।
तेषां फलं त्वया देव दातव्यमधिकं यतः ।। ४८ ।।
हिमाद्रौ हिमनाथस्य यात्रायाः प्रत्यहं फलम् ।।
लभन्ते च नरा नित्यं नात्र कार्या विचारणा ।। ४९ ।।
ब्रह्महा वा सुरापो वा स्ते यी वा गुरुतल्पगः ।।
तत्संपर्की नरो यस्तु त्वां दृष्ट्वा किल्विषाकरः ।। 5.2.67.५० ।।
सोऽपि याति परं स्थानं पुनरावृत्तिवर्जितम् ।।
चांद्रायणानां विधि वच्छ्रतानां चैव यत्फलम् ।।
तत्फलं समवाप्नोति केदारेश्वरदर्शनात् ।। ५१ ।।
ते नराः पशवो लोके तेषां जन्म निरर्थकम् ।।
यैर्न दृष्टो महाकाले केदारेश्वरसंज्ञकः ।। ५२ ।।
कौमारे यौवने बाल्ये वार्द्धके यदुपार्जितम्।।
तत्पापं संक्षयं याति केदारेश्वरदर्शनात् ।। ५३ ।।
हिमालयकृता यात्रा तस्याः प्रोक्तं च यत्फलम्।।
तत्फलं समवाप्नोति केदारेश्वरदर्शनात्।।५४।।
इत्युक्तोऽहं तदा देवि देवैः प्रणतिपूर्वकम् ।।
तथेति च मया प्रोक्तं तेऽपि देवा दिवं गताः ।। ५५ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
केदारेश्वरदेवस्य पिशाचाख्यमतः शृणु ।। ५६ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये केदारेश्वरमाहात्म्यवर्णनंनाम सप्तषष्टितमोऽध्यायः ।। ६७ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६८

https://sa.wikisource.org/s/fpn
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। ईश्वर उवाच ।। ।।
अष्टषष्टिकसंख्याकं पिशाचाख्यमथेश्वरम्।।
शृणु देवि प्रयत्नेन दर्शनात्पापनाशनम् ।। १ ।।
आदौ कलियुगे देवि शूद्रो बहुधनोऽभवत्।।
सोमो नाम सुविख्यातो नास्तिको वेदनिंदकः ।।२।।
अब्रह्मण्यो नृशंसश्च कदर्यो निरपत्रपः ।।
विश्वासघातकश्चैव परस्वहरणे रतः।। ।।३।।
त्रिवर्गहंता चान्येषामात्मकामानुवर्त्तकः ।।
स कदाचिन्मृतो देवि कष्टेन परमेण च ।। ४ ।।
मरुदेशे पिशाचोऽभून्नग्नो दीनो भयावहः ।।
नाशकृत्स पिशाचानां स्वपक्षोच्छेदकारकः ।।५।।
बहवो मर्द्दितास्तेन पिशाचा बलवत्तराः ।।६।।
अथ तेनैव मार्गेण कदाचिच्छाकटायनः ।।
स्वाध्यायनिरतो विद्वान्वाग्ग्मी शमपरायणः ।। ७ ।।
उदयादित्यसंकाशो विभावसुसमद्युतिः ।।
शकटेन सदा याति स पश्यन्पर्वतात्मजे ।। ८ ।।
गतो ददर्श तं रौद्रं पिशाचं च भयावहम्।।
स पिशाचः क्षुधाविष्टो भोक्तुकामोऽभ्यधावत ।। ९ ।।
दृष्ट्वा तं शकटारूढं ब्राह्मणं शाकटायनम् ।।.
शकटस्य ध्वनिं श्रुत्वा रूपं दृष्ट्वा द्विजस्य च ।। 5.2.68.१० ।।
तथारूपः पिशाचस्तु कर्णाभ्यां बधिरीकृतः ।।
आत्मत्राणपरो भूत्वा नष्टः कष्टेन पार्वति ।।
तं धावंतं समालोक्य पिशाचं ब्राह्मणोऽब्रवीत्।। ११ ।।
पिशाच त्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।।
क्व धावसि समाचक्ष्व कुतस्ते भयमागतम् ।। १२ ।। ।।
।। पिशाच उवाच ।। ।।

शकटस्यास्य महतो घोषं श्रुत्वा भयंकरम् ।।
कर्णाभ्यां बधिरो जातो विसंज्ञस्तव दर्शनात् ।। १३ ।। ।।
।।ब्राह्मण उवाच ।। ।।
पिशाचानां बलिष्ठाश्च श्रूयंते ब्रह्मराक्षसाः ।।
स त्वं मां भोक्तुकामोऽसि विख्यातो ब्रह्मराक्षसः ।।१४ ।। ।।
।।पिशाच उवाच ।।
पिशाचानां समर्थोऽस्मि नष्टोऽहं तव दर्शनात् ।।
दुःखं हि मृत्युः सर्वेषां जीवितं च सुदुर्ल्लभम् ।।
अतो भीतः पलायामि जीवहेतोः सुखार्थतः ।। १५ ।।
।। ब्राह्मण उवाच ।। ।।
कुतः पिशाच सौख्यं ते मरणं श्रेय एव ते ।।
पैशाची कुत्सिता योनिः पापिनामेव जायते।।१६।।
।।पिशाच उवाच।। ।।
सर्वत्र हि गतो जीवो भवत्येव सुखाश्रयः।।
तस्माज्जीवितुमिच्छामि प्रसीद ब्रह्मराक्षस।। ।।१७।।
।। ब्राह्मण उवाच।। ।।
नाहं त्वां भोक्तुकामोऽस्मि ब्राह्मणोऽहं न राक्षसः।।
सर्वभूतहितार्थाय विचरामि महीतले।।१८।।
सर्वेषामेव जंतूनां मैत्रो ब्राह्मण उच्यते ।।
मा कुरुष्व भयं मत्तो मित्रभावगतो ह्यहम् ।। १९ ।।
तस्य तद्वचनं श्रुत्वा पिशाचः स्वस्थमानसः ।।
प्रणम्य प्रत्युवाचेदं ब्राह्मणं शाकटायनम् ।। 5.2.68.२० ।।
यदि ते सर्वभूतानां दत्ता ह्यभयदक्षिणा ।।
कर्मणा मनसा वाचा मित्रभावं गतो यदि ।। २१ ।।
पृच्छामि त्वां महाभाग संशयो हृदये स्थितः ।।
श्रुत्वानुकंपया सम्यक्तन्मे व्याख्यातुमर्हसि ।। २२ ।।
केन कर्मविपाकेन पैशाचं याति मानवः ।।
पिशाचत्वात्कथं मुक्तिः प्राप्यते पापकर्मभिः ।।२३।।
इति तस्य वचः श्रुत्वा पिशाचस्य वरानने ।।
ममत्वेनावृतस्तस्मै प्रावोचच्छाकटायनः ।।२४।।
अपहृत्य च विप्रस्वं देवस्वं च विशेषतः ।।
तेन पापेन पापिष्ठाः पिशाचत्वं प्रयांति च ।। २५ ।।

पितरं मातरं चैव स्त्रियं बालं द्विजं तथा ।।
वंचयित्वा हरत्यर्थं स पिशाचो भवेन्नरः ।। २६ ।।
राजद्रव्यं गृहीत्वा तु न यजेन्न ददाति यः ।।
आत्मानमेव पुष्णाति पिशाचत्वं स गच्छति ।। २७ ।।
विश्वासघातका ये च परदाररताश्च ये ।।
प्राप्नुवंति पिशाचत्वं तथा ये वेदनिंदकाः ।। २८ ।।
निंदंति ये पुराणानि धर्मशास्त्राणि सर्वदा ।।
ते भवंति पिशाचाश्च ये सदा पिशुना नराः ।। २९ ।।
इति ते कथितं सर्वं वेदप्रामाण्यतोऽधुना ।।
इदानीं कथयिष्यामि यस्त्वं जातोसि तच्छृणु ।। ।। 5.2.68.३० ।।
सोमको नाम शूद्रस्त्वं परमर्मप्रकाशकः ।।
विश्वासघातको जातो देवब्राह्मणदूषकः ।। ३१ ।।
नास्तिको भिन्नमर्यादो जन्मन्यत्रापि सप्तमे ।।
सकुलं पातयित्वात्र नरके दारुणे भृशम् ।। ३२ ।।
पिशाचयोनिं संप्राप्तः पुनः प्राप्स्यसि रौरवम् ।।
महारौरवसंज्ञं तु क्रकचं कालसूत्रकम्।।
यंत्रपीडनकं रौद्रं मथनं कुम्भवालुकम् ।। ३३ ।।
इत्येवं वदतस्तस्य ब्राह्मणस्य यशस्विनि ।।
सस्मार प्राक्तनं जन्म सत्संगात्कुत्सितं स्वकम् ।। ।। ३४ ।।
दुःखाभिभूतो निश्चेष्टो धिग्धिगित्यसकृद्ब्रुवन् ।।
पतितो भूतले देवि इदं वाक्यमथाब्रवीत् ।। ३५ ।।
अहो केनापि पुण्येन भवता सह दर्शनम् ।।
जातं ममाल्पपुण्यस्य दीनस्य कृपणस्य च ।। ३६ ।।
नास्ति धर्मसमं मित्रं नास्ति धर्मसमा गतिः ।।
नास्ति धर्मसम् त्राणं स च नास्ति मम प्रभो ।। ३७ ।।
मग्नोऽहं दुःखजलधौ मग्नोऽहं पापकर्दमे ।।
भ्रांतोऽहमंधतमसि ततस्त्वां शरणं गतः ।। ३८ ।।
नमस्तेऽस्तु महाभाग किं करोमि प्रशाधि माम् ।।
तत्तपोबलनिर्दिष्टमिदं प्राप्तं मयाऽधुना ।। ३९ ।।
एवं निगदतस्तस्य पिशाचस्य वरानने ।।
कथयामास माहात्म्यं स विप्रः शाकटायनः ।। 5.2.68.४० ।।
पृथिव्यां यानि तीर्थानि आसमुद्रगतानि वै ।।

क्षेत्राणि यानि संतीह तेषां क्षेत्रं सुपुण्यदम् ।।४१।।
महाकालवनं क्षेत्रं प्रलयेऽप्यक्षयं गतम् ।।
लिंगं तत्र महाक्षेत्रे पिशाचत्वविनाशनम् ।। ४२ ।।
ढुंढेश्वरस्य देवस्य दक्षिणे त्रिदशार्चितम् ।।
पैशाचं विद्यते भूयः पिशाचयोनिनाशनम् ॥
तस्य दर्शनमात्रेण पिशाचत्वात्प्रमोक्ष्यसे ॥ ४३ ।
तस्य तद्वचनं श्रुत्वा स पिशाचो वरानने ॥
आजगाम त्वरायुक्तो नमस्कृत्य द्विजं तदा ॥४४॥
महाकालवने पुण्ये समीहितफलप्रदे॥
ददर्श तत्र तल्लिंगं स्नात्वा शिप्राजले शुभे॥४५॥
दर्शनात्तस्य लिंगस्य स पिशाचो वरानने ॥
तत्क्षणाद्दिव्यदेहस्तु दिव्याभरणभूषितः ॥ ४६ ॥
दिव्यं विमानमारूढो गतो लोके सनातने ॥
उद्धृत्य सकलं गोत्रं मातृकं पैतृकं तथा॥४७॥
दृष्ट्वा तन्महदाश्चर्यं माहात्म्यातिशयं श्रिये ॥
प्रोक्तं देवैर्विमानस्थैः सिद्धैराकाशगैस्तथा ॥ ४८॥
पिशाचोपि गतः स्वर्गमस्य लिंगस्य दर्शनात्।
अतो देवः स विख्यातो भविष्यति महीतले॥
पिशाचेश्वरसंज्ञस्तु सर्वपापप्रणाशनः ॥ ४९ ॥
ये पश्यंति नरा देवि पिशाचेश्वरसंज्ञकम् ।
तेषां हि पितरः सद्यो ये चापि निरये स्थिताः ॥
पिशाचत्वाद्विमुच्यंते स्वर्गं यांति न संशयः ॥ 5.2.68.५० ॥
अश्वमेधस्य यज्ञस्य सम्यगिष्टस्य यत्फलम् ॥
तत्फलं लभते सोऽपि पिशाचेश्वरदर्शनात् ॥ ५१ ।
गयायां पिंडदानेन यत्पुण्यं समुदाहृतम्॥
तत्पुण्यमधिकं ज्ञेयं पिशाचेश्वरदर्शनात् ॥ ५२॥
ये पश्यंति चतुर्दश्यां पिशाचेश्वरसंज्ञकम् ॥
प्रेतत्वं च पिशाचत्वं कुले तेषां न जायते ॥ ५३॥
न वियोनिं नरो याति नरकं च न पश्यति ॥
प्रसंगेनापि यः पश्येत्पिशाचेश्वरसंज्ञकम् ॥ ५४ ॥
सर्वैश्वर्यसमायुक्तः सर्वबन्धुसमन्वितः ॥
मोदते पितृलोके स पिशाचेश्वरदर्शनात् ॥ ५५ ॥

कीर्तनान्मुच्यते पापाद्दृष्ट्वा स्वर्गं च गच्छति ॥
स्पर्शनादस्य लिंगस्य पुनात्यासप्तमं कुलम्॥ ५६ ॥
तदैव स नरो मुक्तः संसारनिगडादिभिः ॥
यदैव वीक्षते लिंगं पिशाचेश्वरसंज्ञकम् ॥ ५७ ॥
यज्ञानां तपसां चैव दानानां चैव यत्फलम् ॥
तत्फलं कोटिगुणितं जायते तस्य दर्शनात् ॥ ५८॥
यदि पश्येच्चतुर्दश्यां वैशाखे कार्त्तिके तथा ।
तस्य पुण्यमसंख्यातं जायते नात्र संशयः॥ ५९ ॥
एष ते कथितो देवि प्रभावः पापनाशनः ॥
पिशाचेश्वरदेवस्य श्रूयतां संगमेश्वरम् ॥ 5.2.68.६० ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे पिशाचेश्वरमाहात्म्यवर्णनंनामाष्टषष्टितमोऽध्यायः ॥ ६८ । ।॥छ॥. ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ६९



ईश्वर उवाच।॥ ॥

एकोनसप्ततिं देवि शृणु पार्वति यत्नतः ॥

यस्य दर्शनमात्रेण संगमो जायते सदा ॥ १ ॥

कलिंगविषये देवि सुबाहुर्नाम पार्थिवः॥

बभूव भुवि विख्यातो यज्वा परमधार्मिकः ॥ २ ॥

तस्य पत्नी विशालाक्षी दुहिता दृढधन्वनः ॥

कांचीपुरनिवासस्य क्षात्रव्रतरतस्य च ॥ ३ ॥

परस्परानुरागत्वात्परा प्रीतिरभूत्तयोः ॥

तस्य राज्ञः शिरोऽर्त्तिस्तु मध्याह्ने जायते सदा ॥ ४ ॥

आयुर्वेदविदां मुख्यैः शरीरस्य चिकित्सकैः ॥

तैः प्रणीताः प्रिये योगा व्यथावृद्धिर्दिनेदिने ।। ५ ।।

एवं बहुतरे काले गते देवि महीपतिम् ।।

प्रत्युवाच विशालाक्षी भर्तुर्दुःखेन पीडिता ।। ६ ।।

कथमेषा शिरोरोगे जरा ते पृथिवीपते ।।

वैद्याश्च बहवो देव नानाशास्त्रविशारदाः ।।

प्रयतंतेऽस्य नाशाय तथाप्येष न शाम्यति ।। ७ ।।

एवं स प्रियया प्रोक्तः सुबाहुः पृथिवीपतिः ।।

प्रत्युवाच प्रियां भार्यां प्रेम्णा प्रणयवत्सलाम् ।। ८ ।।

सुखदुःखाश्रयं देवि शरीरं सर्वदेहिनाम् ।।

पूर्वकर्मानुसारेण सुखं दुःखं च जायते ।। ९ ।।

इति संबोधिता राज्ञी तेन राज्ञा वरानने ।।

पुनः प्रोवाच हार्द्देन तमेवार्थं सुदुःखिता ।। 5.2.69.१० ।।

यदा सा वारितात्यर्थं पृच्छत्येव पुनःपुनः ।।

तदा राजा प्रहस्यैव तां च राज्ञीमुवाच ह ।। ११ ।।

यदि त्वं श्रोतुकामासि रोगस्यास्य समुद्भवम् ।।

कारणं तत्त्वतो देवि नाख्यास्याम्यहमत्र वै ।। १२ ।।

महाकालवनं गत्वा सिद्धगंधर्वसेवितम् ।।

तत्र ते कथयिष्यामि यदि कौतूहलं तव ।। १३ ।।
श्वः प्रभाते गमिष्यामि त्वया सार्द्धं शुचिस्मिते ।।
इति तस्य वचः श्रुत्वा सा राज्ञी विस्मिता स्थिता।।
उत्सुका गमनार्थाय महाकालवनं शुभम् ।।१४।।
अथ सा रजनी वृत्ता प्रभाते नृपसत्तमः ।।
प्रतस्थे भार्यया सार्द्धं सैन्येन महता वृतः ।। १५ ।।
आजगाम क्रमेणैव महाकालवनं शुभम् ।।
आवासं विदधे धीमाच्छिप्रातीरे नृपस्तदा ।। १६ ।।
पातालवाहिनी तत्र गंगा त्रिपथगामिनी ।।
द्वितीया नीलगंगा च शिप्रया सह संगता ।। १७ ।।
तासां च संगमस्तत्र तल्लिंगं संगमेश्वरम् ।।
पूजितं गंगया सार्द्धं शिप्रया नीलगंगया ।। १८ ।।
अथ प्राप्ते सुबाहौ च सा राज्ञी विस्मयान्विता ।।
पप्रच्छ प्रणयोपेता कथ्यतामत्र कारणम् ।।
यत्त्वयोक्तं पुरा देव कथयिष्यामि तत्र वै ।। १९ ।।
एवमुक्तः सुबाहुस्तु प्रियया पृथिवीपतिः ।।
प्रत्युवाच प्रियां प्रेम्णा प्रहस्य च पुनःपुनः ।। 5.2.69.२० ।।
सुखं स्वपिहि भद्रांगि श्रांता वयमनिंदिते ।।
प्रभाते कथयिष्यामि शिरोरोगस्य कारणम् ।। २१ ।।
अथ सा रजनी वृत्ता प्रभाते नृपसत्तमः ।।
कथयामास माहात्म्यं देवस्य परमेष्ठिनः ।। २२ ।।
अहमासं कुशूद्रस्तु सर्वदा वेदनिंदकः ।।
विश्वासघातको नित्यं त्वमप्येवं तथाविधा ।। २३ ।।
पुत्रो जातस्तु दुःशीलो देवब्राह्मणवंचकः ।।
कुरूपः कर्कशो दुष्टः प्रकृत्या पापपूरुषः ।। २४ ।।
अथ दीर्घेण कालेन द्वादशाब्दं भयावहा ।।
अनावृष्टिस्तु संजाता सर्वप्राणिभयंकरी ।। २५ ।।
वियोगस्तु त्वया प्राप्तो मया सार्द्धं सुतेन च ।।
ततोऽहं दुःखसंतप्तो वैराग्यं परमं गतः ।। २६ ।।
इच्छता निधनं सद्यो मया प्रोक्तमिदं वचः ।।
मम पुण्यविहीनस्य पापध्यानरतस्य च।।२७।।
सुतेन भार्यया सार्द्धं संगमो दुर्लभः पुनः ।।

कथं स्वपिति पापिष्ठः कृत्वा पापं सुदारुणम् ।।२८।।
कुटुंबार्थे करोत्येवमेकाकी निस्तरत्यसौ ।।
धर्म एव परो बंधुर्धर्म एव परा गतिः।।
धर्मेण साध्यते सर्वं तस्माद्धर्मं समाश्रयेत् ।।२९।।
इति चिंतयतोऽत्यर्थं मम प्राणा गताः प्रिये ।।
विविधा यातना प्राप्ता मया नरककोटिषु ।। 5.2.69.३० ।।
अंतकालेऽपि धर्मस्य प्रशंसा या मया कृता ।।
मत्स्योऽहं तेन पुण्येन जातः शिप्राजले शुभे ।। ३१ ।।
त्वं च श्येनी ततो जाता तस्मिन्नेव वनोत्तमे ।।
प्रावृट्कालेऽथ संप्राप्ते आश्लेषानुगते रवौ ।। ३२ ।।
नदीत्रयरयेणैव निःसृतोऽहं जलात्ततः ।।
त्वया शिरसि संप्राप्तो नखैर्विद्धोऽस्मि सुंदरि ।। ३३ ।।
आनीतोऽहं त्वया देवि संगमेश्वरसंनिधौ ।।
कैवर्तैर्निधनं प्राप्तं त्वया सार्द्धं वरानने ।। ३४ ।।
म्रियमाणेन मे दृष्टो देवोऽसौ संगमेश्वरः ।।
शिप्रया स्नापितोऽत्यर्थं गंगया नीलगंगया ।। ३५ ।।
तस्य दर्शन मात्रेण जातोऽहं पृथिवीपतिः ।।
कलिंगविषये देवि सर्वभूपालवंदितः ।। ३६ ।।
सुता त्वं वल्लभा जाता कांचीपुरनिवासिनः ।।
क्षात्रव्रतरतस्यैव सुभगा दृढधन्वनः ।। ३७ ।।
आवां राजत्वमापन्नौ तस्य लिंगस्य दर्शनात् ।।
त्वया कररुहैर्विद्धो मारितो लगुडैश्च तैः ।। ३८ ।।
मध्याह्ने कदनं स्मृत्वा ततो मे शिरसि व्यथा ।।
स्मरामि जातिमात्मीयामस्य देवस्य दर्शनात् ।।३९ ।।
एतत्ते कथितं देवि पृष्टोऽहं यत्त्वया पुरा ।।
गच्छ सुंदरि भद्रं ते यत्र ते वर्त्तते मनः ।।5.2.69.४०।।
स्थातव्यं च मयात्रैव सेव्योऽसौ संगमेश्वरः ।।४१।।
ततः सा निरवद्यांगी नीलोत्पलविलोचना ।।
करुणं सुस्वरं कृत्वा भर्त्तार मिदमब्रवीत् ।। ४२ ।।
मयापि संस्मृतं देव पूर्वजन्मनि चेष्टितम् ।।
अस्य लिंगस्य माहात्म्यात्तिर्यग्योनिगतावपि ।। ४३ ।।
प्राप्तावावां मनुष्यत्वं निर्मलेषु कुलेषु च ।।

प्राप्ता श्रीरतुला लोके प्राप्तं राज्यमकंटकम् ।। ४४ ।।
प्राप्ता भार्या प्रियाहं ते त्वं च प्राप्तो मया नृप ।।
ख्यातोयं त्रिषु लोकेषु नामतः संगमेश्वरः ।। ४५ ।।
अस्य देवस्य माहात्म्याद्वियोगो न भविष्यति ।।
यथा कृष्णस्य लक्ष्म्या च पार्वत्या च शिवस्य च ।। ४६ ।।
पुनः प्रणम्य प्रणता सहसा मन्मथाकुला ।।
भर्त्ता सुबाहुर्मे भूयादन्यस्मिन्निह जन्मनि ।। ४७ ।।
तव देवप्रसादेन यदि त्वं संगमेश्वरः ।।
ततो विलोक्य सोन्मेषं कुसुमेषुतरंगिताम् ।।
कांतां पिबन्निव दृशा प्राह तां तरलेक्षणाम् ।। ४८ ।।
सहजेनाभिजन्येन गुणैः कांत्या विभूषिता ।।
मया प्राप्ता विशालाक्षि प्राप्तं मज्जन्मनः फलम्।।४९।।
ततस्तां भयसंत्रस्तां कंपिताधरपल्लवाम्।।
गृहीत्वा च करे कांतां जगामांतःपुरं निजम्।।5.2.69.५०।।
वदन्कंदर्पसर्पेण दष्टोऽहं दैवतोऽधुना।।
चचार तत्र निःसारं संसारं कलयन्धिया।।५१।।
पुरे मम वरारोहे चिरं रेमे तया सह।।
एवं राजा प्रियां प्राप्य निवेद्य च निजां कथाम् ।। ५२ ।।
भेजे राज्यं तया सार्द्धं विस्तारितमहोत्सवः ।।
अशाश्वतमिदं ज्ञात्वा अर्थिभ्योऽपि ददौ धनम् ।। ५३ ।।
अपूर्वत्यागिना तेन त्रैलोक्यं विस्मयं ययौ ।।
राज्यं कृत्वा चिरं कालं सभार्यो नृपसत्तमः ।।५४।।
भुक्त्वा च विपुलान्भोगांस्तस्मिँल्लिंगे लयं गतः ।।
अतो देवि सुविख्यातो देवोऽसौ संगमेश्वरः ।। ५५ ।।
यः पश्येत्परया भक्त्या तल्लिंगं संगमेश्वरम् ।।
न वियोगो भवेत्तस्य पुत्रभ्रातृप्रियादिभिः ।। ।।। ५६ ।।
नियमेन तु यः पश्येत्तल्लिंगं संगमेश्वरम् ।।
राजसूयसहस्रस्य फलं तस्याधिकं भवेत् ।। ५७ ।।
गांगं च सफलं पुण्यं यामुनं नामर्दं तथा।। ।
जायते चांद्रभागं च संगमेश्वरदर्शनात् ।। ५८ ।।
यः पश्येच्छ्रावणे मासि तल्लिंगं संगमेश्वरम् ।।
कार्तिकस्वामिनो यात्रा कृता तेन न संशयः ।। ।।। ५९।।

मासि चाश्वयुजे देवं यः पश्येत्संगमेश्वरम्।।
कृतं तेन सहस्रं तु वाजपेयं वरानने ।। 5.2.69.६० ।।
यः पश्येत्कार्त्तिके मासि तल्लिंगं संगमेश्वरम्।। ।
राजसूयसहस्रं तु कृतं तेन न संशयः ।। ६१ ।।
चतुरो वार्षिकान्मासान्यः पश्येत्संगमेश्वरम् ।।
स याति परमं स्थानं ममाभीष्टतरं प्रिये ।। ६२।। ।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
संगमेश्वरदेवस्य शृणु दुर्द्धर्षमीश्वरम्।। ६३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्ये संगमेश्वरमाहात्म्यवर्णनंनामैकोनसप्ततितमोऽध्यायः ।। ६९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७०



।। ईश्वर उवाच ।। ।।

शृणु सप्ततिकं देवं दुर्द्धरेश्वरमीश्वरम् ।।

यस्य दर्शनतो देवि नरः पापैः प्रमुच्यते ।। १ ।।

दुर्द्धर्षोनाम राजाभून्नेपालविषये पुरा ।।

पुण्यकेतुर्यशस्वी च सत्यसंधो दृढव्रतः ।। २ ।।

तिस्रस्तस्याभवन्भार्यास्तत्तुल्याः सुमनोहराः ।।

विहरन्त वनोद्याने वसन्ते पृथिवीपतिः ।। ३ ।।

कदा मृगरसाविष्टो देवाद्वै वातरंहसा।।

तुरगेणोहितः प्राप वनं रुचिरपादपम् ।।४।।

गजेंद्रमृगशार्दूलसिंहसंबरसंकुलम् ।।

ऋक्षवानरवाराहगण्डकादिविराजितम् ।।५ ।।

तस्मिन्वने सुविस्तीर्णं कदलीखंडमंडितम् ।।

हंसकारंडवाकीर्णं चक्रवाकोपशोभितम् ।। ६ ।।

ददर्श दर्पणस्वच्छं सरो नीरजराजितम् ।।

स्नातसिद्ध वधूवृन्दकुचकुंकुमपिंजरम् ।। ७ ।।

ददर्श कन्यां तत्रैव काननस्येव देवताम् ।।

स तां दृष्ट्वा सुचार्वंगीं मन्मथेन प्रपीडितः ।। ८ ।।

चित्रन्यस्त इव क्षिप्रमभूद्विस्मयनिश्चलः ।।

सा भुजंगीव संकृष्टा मन्त्रेणेवांतिकं ययौ ।। ९ ।।

कन्दर्पकोटिसदृशं विश्रान्तं नृपमब्रवीत् ।।

सुतां मां विद्धि राजेन्द्र कल्पस्य प्राणवल्लभाम् ।। 5.2.70.१० ।।

तपोरतस्य शांतस्य सर्वदा ब्रह्मचारिणः ।।

मदर्थे प्रार्थ्यतां विप्र स मां तुभ्यं प्रदास्यति ।। ११ ।।

इति तस्या वचः श्रुत्वा मन्मथेनाकुलीकृतः ।।

लज्जां त्यक्त्वा स भूपालो ययाचे विजने च ताम् ।। १२ ।।

मम प्राणव्ययः सुभ्रूस्त्वां विना समुपस्थितः ।।

कार्याकार्यविचारो हि कस्य जीवितशांतये ।। १३ ।।

त्यज्यते प्राप्तममृतं यदेतद्बुद्धिलाघवम् ।।
को जानीते परे लोके कस्य किं नु भविष्यति ।। ।। १४ ।।
भज मामनवद्यांगि तवेतद्वदनामृतम्।।
न पाययसि चेन्मह्यं मृतं जानीहि मे प्रिये ।। १५ ।।
स्वयं पिबामि चेद्विद्धि परलोकगतं हि माम् ।।
श्रुत्वेति चकिता तन्वी प्रोवाच विनयान्विता ।। १६ ।।
भ्रष्टायां मयि तातस्य विनष्टे कन्यकाफले ।।
कुलं पतति नः सर्वं तस्मादेतद्विचि न्त्यताम्।। १७ ।।
यदि ते परमं प्रेम ममोपरि महीपते ।।
मदर्थे प्रार्थ्यतां विप्र स मां नूनं प्रदास्यति ।। १८ ।।
तस्यास्तद्वचनं श्रुत्वा नान्यथा मे भविष्यति ।।
ज्ञात्वा कन्यां द्विजस्यैव कल्पस्य ब्रह्मचारिणः ।। १९ ।।
गत्वा ययाचे प्रणतः स्थितं निजतपोवने ।।
मुनीन्द्रश्चंद्रवदनां स चास्मै तां ददौ मुदा ।। 5.2.70.२० ।।
तत्रैव संगतो राजा मन्मथेन वशीकृतः ।।
रेमे रमणकैर्योगैर्न सस्मार निजं पुरम् ।। २१ ।।
कदलीखण्डकुञ्जेषु रम्यासु वनराजिषु ।।
बहुलाम्रकदंबेषु राजा भेजे नवां वधूम् ।।
सिषेवे चारु सुरतं स विदग्धोऽतिमुग्धया ।। २२ ।।
एवं हि वसतस्तस्य दुर्द्धर्षस्य वरा नने ।।
आजगाम सुदुर्द्धर्षो राक्षसोऽतिभयंकरः ।। २३ ।।
ज्वलितो विकटाकारो दंष्ट्रोत्कटकटाननः ।।
तं नृपं मोहयित्वा तु तरसा तरलेक्षणाम् ।।
जहार मन्मथाविष्टो रूपयौवनशालिनीम् ।। २४ ।।
राजा च तां हृतां दृष्ट्वा वियोगविषमूर्छितः ।।
स्मृत्वास्मृत्वा सुचार्वंगीं विललापाकुलेन्द्रियः ।। ।। २५ ।।
हा प्रिये प्रेमपीयूषे प्रणयामृतदीर्घिके ।।
हा सुन्दरि विशालाक्षि वक्व गता मां विहाय वै ।। २६ ।।
पुनरिन्दुमिवानंदं कदा द्रक्ष्यामि ते मुखम् ।।
इति प्रलापमकरोत्स्मरंस्तां चारुहासिनीम् ।।
उन्मत्त इव बभ्राम तत्र तत्र स्मरातुरः ।। २७ ।।
एवं विलपतस्तस्य दुर्दर्षस्य नृपस्य तु ।।

आजगाम तमुद्देशं कल्पो ब्राह्मणसत्तमः ।।
ददर्श नृपतिं तत्र भ्रमंतं भ्रमरं यथा ।। २८ ।।
ज्ञात्वा जामातरं सम्यक्समाश्वास्य वचोऽब्रवीत् ।।
एहि दुर्द्धर्ष राजेन्द्र गहना कर्मणो गतिः ।।
क्व गतो हि महीपाल नेपालविषयस्तव ।। २९ ।।
कुलीना रूपवत्यश्च तिस्रो भार्याः क्व वै गताः ।।
क्व ते राज्यं गतं भूप कुत्र पुत्री गता मम ।। 5.2.70.३० ।।
सर्वं विनश्वरं लोके गन्धर्वनगरोपमम् ।।
अनित्यं जीवितं भूप राज्यं वै बुद्बुदोपमम् ।। ३१ ।।
एवमाश्वासितो राजा कल्पेन च पुनःपुनः ।।
सस्मार तां सुचार्वंगी मन्मथेन प्रपीडितः ।। ३२ ।।
ब्रूहि मे भगवन्सम्यग्यदि तेऽस्ति दया मयि ।।
कथं राज्यं स्वकीयं स्यात्कथं मे सुहृदागमः।। ३३ ।।
तिस्रो भार्याः कथं विप्र पश्यामि पृथिवीतले ।।
लावण्यामृतशालिन्यस्तव पुत्र्या द्विजोत्तम ।।
कथं समागमो भूयो भविष्यति मया सह।।३४।।
इति तस्य वचः श्रुत्वा विप्रेणोक्तं वरानने।।
गच्छ भूपाल नेपालं महाकालं ततो व्रज।।३५।।
तस्मिन्क्षेत्रे तीर्थवरे लिंगं सर्वार्थसाधकम् ।।
विद्यते यत्र सूर्येण तपस्तप्तं सुदुष्करम्।। ३६ ।।
शिप्रायास्तु तटे रम्ये पुण्ये ब्रह्मेशपश्चिमे।।
तस्य दर्शनमात्रेण तवाभीष्टं भविष्यति ।। ३७ ।।
कल्पस्य वचनं श्रुत्वा सत्वरो नृपसत्तमः ।।
नेपालं च ततो गत्वा समाश्वास्य सुहृज्जनम्।। ३८ ।।
सांतःपुरपरीवारो महाकालवनं गतः ।।
सर्वदा सर्वसिद्धीनामाश्रयं विषयं श्रियः ।। ३९ ।।
तत्र स्नात्वा जले पुण्ये शिप्रायाश्चाशुसिद्धिदे ।।
सूर्येणाराधितं लिंगं ददर्श नृपसत्तमः ।। 5.2.70.४० ।।
पूजयामास रत्नैश्च दिव्यैर्वस्त्रैः सुभूषणैः ।।
कर्पूरेण सुगन्धेन लिंगपूजा कृता तदा ।। ४१ ।।
मुक्ताफलैः सुतारैश्च जलधाराभिरेव च ।।
भक्त्या ननर्त्त तस्याग्रे संस्तुवन्विविधैः स्तवैः ।। ४२ ।।

शुश्राव श्रोत्रपीयूषं गीतं देवगृहे शुभे ।।
तच्छ्रुत्वा कौतुकाविष्टो ध्वनिं श्रुत्वा मनोरमाम् ।।
प्रियामपश्यत्तत्रस्थां लावण्यललनावधिम् ।। ४३ ।।
तां दृष्ट्वा विस्मयोत्फुल्ललोचनस्तन्मयोऽभवत् ।।
क्षिप्रं तद्दर्शनेनैव स्मरेण तरलीकृतः ।। ४४ ।।
ज्ञात्वा मे सैव पत्नीयं दृष्टा देवप्रसादतः ।।
सापि लावण्यनलिनी राजहंसं विलोक्य तम् ।। ४५ ।।
क्षिप्रं पुलिकिता तस्या विरराज कुचस्थली ।।
एतस्मिन्नंतरे देवि वाणी लिंगात्समुत्थिता ।। ४६ ।।
विश्वावसोः सिद्धपतेः सुतैषा प्राणवल्लभा ।।
कल्पेन पालिता सम्यस्त्वदर्थं नृपसत्तम ।। ४७ ।।
आनीता ते मया पत्नी हत्वा तं राक्षसाधि पम् ।।
गृहाण च मया दत्तां भुंक्ष्व राज्यमकण्टकम् ।। ४८ ।।
इत्युक्तोऽसौ गतो देवि लब्ध्वा भार्यां प्रियां तदा ।।
सांतःपुरपरीवारो लिंगस्यास्य प्रभावतः ।। ४९ ।।
आराधितो नरेंद्रेण दुर्द्धर्षेण महात्मना ।।
तदाप्रभृति देवोऽयं दुर्द्धर्षेश्वरसंज्ञकः ।।
त्रिषु लोकेषु विख्यातो वांछितार्थफल प्रदः ।। 5.2.70.५० ।।
ये पश्यंति विशालाक्षि दुर्द्धर्षेश्वरसंज्ञकम् ।।
ते दुर्द्धर्षा भविष्यंति शत्रूणां समरे सदा ।। ५१ ।।
संक्रांतौ रविवारे च ग्रहणे चंद्र सूर्ययोः ।।
गत्वार्चयंति ये देवि देवं दुर्द्धर्षमीश्वरम्।।
ते प्रयांति विमानेन मदीयं स्थानमुत्तमम् ।। ५२ ।।
पापाचाराश्च ये जीवा दुष्कर्मनिरता नराः ।।
मुच्यंते पातकात्सद्यो दुर्द्धर्षेश्वरदर्शनात् ।। ५३ ।।
दर्शनात्स्पर्शनात्सद्यो नामसंकीर्तनादपि ।।
ब्रह्महत्यासहस्रं हि तत्क्षणादेव नश्यति ।। ।। ५४ ।।
कृतघ्नो निंदको दुष्टः पापकर्मा दुरात्मवान् ।।
परदाररतश्चौरो ब्रह्मघ्नो गुरुतल्पगः ।।
मुच्यते सर्वपापेभ्यो दुर्द्धर्षेश्वरदर्शनात् ।। ५५ ।।
अयने विषुवे चैव संप्राप्ते सोमपर्वणि ।।
ये पश्यंति च दुर्द्धर्षं स्नात्वा शिप्राजले शुभे ।।

गंगायास्त्रिगुणं पुण्यं जायते नात्र संशयः ।। ५६ ।।
तत्र यद्दीयते दानं तस्य संख्या न विद्यते ।।
पितरस्तोषितास्तेन आत्मा वै तोषितस्ततः ।। ५७ ।।
कल्पकोटिसहस्रं तु मत्पुरे पूजितो वसेत् ।।
यदा याति च भूलोके तदासौ भूपतिर्भवेत् ।। ५८ ।।
अधृष्यः शत्रुवर्गेण फलं प्राप्नोति चाक्षयम् ।।
पदं यत्त्रिदशैर्वंद्यं पुनरावृत्तिवर्जितम् ।। ।। ५९ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
दुर्द्धर्षेश्वरदेवस्य प्रयागेशमतः शृणु ।। 5.2.70.६० ।।
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिंगमाहात्म्य उमामहेश्वरसंवादे दुर्द्धर्षेश्वरमाहात्म्यवर्णनंनाम सप्ततितमोऽध्यायः ।। ७० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७१



।। ईश्वर उवाच ।। ।।

एकसप्ततिकं विद्धि प्रयागेश्वरसंज्ञकम् ।।

अद्वितीयं विजानीहि महापातकनाशनम् ।। १ ।।

हास्तिनेऽ भूत्पुरे श्रीमाञ्छंतनुर्नृपसत्तमः ।।

वैवस्वतेंऽतरे कल्पे युगे द्वापरसंज्ञके ।। २ ।।

स चाद्भुतमहावीर्यो वज्रसंहननो युवा ।।

सर्वशास्त्रेषु कुशलः कला पुंजविचक्षणः ।। ३ ।।

बलेन विष्णुसदृशस्तेजसा भास्करोपमः ।।

गंगामेष चचारैकः सिद्धचारणसेविताम् ।। ४ ।।

स कदाचिन्महाबाहुः प्रभूत बलवाहनः ।।

वनं जगाम गहनं हयनागशतैर्वृतः ।। ५ ।।

गत्वा तत्र मृगान्व्याघ्रान्घातयामास लीलया ।।

महिषाश्ववराहांश्च विनिघ्नन्राजसत्तमः ।। ।। ६ ।।

स कदाचिद्वने तस्मिन्ददर्श परमां स्त्रियम् ।।

जाज्वल्यमानां वपुषा साक्षात्पद्मामिवापराम् ।। ७ ।।

तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसंपदा ।।

पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ।। ८ ।।

सा दृष्ट्वैव च राजानं विचरंतं महाद्युतिम् ।।

स्नेहादागतसौहार्दान्नातृप्यत विलासिनी ।। ९।।

तामुवाच ततो राजा सांत्वयञ्छलक्ष्णया गिरा ।।

देवी वा दानवी त्वं च गंधर्वी यदि वाप्सराः ।। 5.2.71.१० ।।

यक्षी वा पन्नगी वा त्वं मानुषी वा सुमध्यमे ।।

याचे त्वांऽभोजगर्भाभे भार्या मे भव शोभने ।। ११ ।।

एतच्छ्रुत्वा वचो राज्ञः संस्तुतं मृदु वल्गु च ।।

अंगीकृतं तया देवि समयं प्रार्थितो नृपः ।। १२ ।।

वारिता विप्रिये वापि त्यजेयं त्वामसंशयम् ।।

न प्रष्टव्या त्वया राजन्कासि कस्येति सर्वथा ।। १३ ।।

एवमस्त्विति तेनोक्तं सत्येन सुकृतेन च ।।
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ।। १४ ।।
उपचारेण च रहस्तुतोष जगतीपतिः ।।
दिव्यरूपा हि सा देवी गंगा त्रिपथगा नदी ।। १५ ।।
मानुषं विग्रहं कृत्वा श्रीमंतं वरवर्णिनि ।।
राजानं रमयामास यथा रेमे तथैव च ।। १६ ।।
स राजा रति सक्तत्वादुत्तमस्त्रीगुणैर्हृतः ।।
संवत्सरानृतून्मासान्न बुबोध बहून्गतान्।। १७ ।।
रममाणस्तया सार्द्धं यथाकामं नरेश्वरः ।।
अष्टावजनयत्पुत्रां स्तस्याममरवर्णिनः ।। १८ ।।
जातं जातं च सा पुत्रं क्षिपत्यंभसि मुक्तये ।।
प्रीणामि त्वामहमिति गंगास्रोतसि पावने ।। १९ ।।
नास्य तत्तु प्रियं राज्ञः शंतनोर्ह्यभवत्तदा ।।
नोवाच किंचित्तां देवीं त्यागाद्भीतो महीपतिः ।। 5.2.71.२० ।।
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव ।।
उवाच राजा दुःखार्त्तः परीप्सन्पुत्रमात्मनः ।। २१ ।।
मा वधीः कस्य कासीति किं विध्वंसि सुतानिति ।।
पुत्रहिंसा महत्पापं मा प्राप्सीस्तिष्ठ गर्हिते ।। २२ ।।
।। गंगोवाच ।। ।।
पुत्रकामा न ते हन्मि पुत्रं पुत्रवतांवर ।।
जीर्णस्तु मम वासोऽयं यथा मे समयः कृतः ।। २३ ।।
अहं गंगा जह्नुसुता महर्षिगणसेविता ।।
देवकार्यार्थसिद्ध्यर्थमुषित्वाहं त्वया सह ।। २४ ।।
इमेऽष्टौ वसवो देवा महाभीमा महौजसः ।।
वशिष्ठशापदोषेण मानुषत्वमुपागताः ।। २५ ।।
तेषामानयिता नान्यस्त्वदृते भुवि विद्यते ।।
मद्विधा मानुषी धात्री न चैवास्ति कदाचन ।। २६ ।।
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।।
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रत ।। २७ ।।
सैवमुक्त्वा तदा गङ्गा विष्णुमायाविमोहिता ।।
रुरोद मानुषं भावमाश्रिता तनुमध्यमा ।। २८ ।।
अहो बत महत्कष्टं यदमी घातिताः सुताः ।।

मया नृशंसया मोहाज्जले क्षिप्तास्तु बालकाः ।। २९ ।।
हा वत्सा हा सुताः पुत्रा हा तातास्तनयाः क्व वै ।।
मां विहाय गताः कुत्र हृदयं किं न दीर्यते ।। 5.2.71.३० ।।
मातर्मातेति करुणं ब्रुवाणाः स्वयमागता ।।
उपगुह्ये कदा पुत्रान्वत्सवत्सेति सौहृदात् ।। ३१ ।।
कस्य जातु प्रणीतेन पिंगेन क्षितिरेणुना ।।
ममोत्तरीयमुत्संगं कदाङ्ग मलयिष्यति ।। ३२ ।।
अंगप्रत्यंगसंभूता मनोहृदयनंदनाः ।।
मया तु मात्रा हा वत्सा मारिता निधनं गताः ।। ३३ ।।
काँल्लोकान्नु गमिष्यामि कृत्वा कर्म सुदारुणम् ।।
कथं पुण्या भविष्यामि पुत्रघ्नी निर्दया सती ।। ।। ३४ ।।
इत्येवं करुणं कृत्वा रुदित्वा च पुनःपुनः ।।
मूर्छिता पतिताप्यार्ता निश्चेष्टा धरणीतले।। ३५।।
एतस्मिन्नंतरे देवि नारदो मुनिसत्तमः ।।
तस्या विलापशब्दं तमाकर्ण्य सहसा तदा।। ३६ ।।
विस्मयोप्फुल्लनयनः किमेतदिति चिंतयत् ।।
एषा सा जाह्नवी गंगा पावनी देववंदिता ।। ३७ ।।
समुद्रमहिषी दिव्या पुण्या त्रिपथगा नदी ।।
मानुषं भावमाश्रित्य कस्माद्रोदिति विह्वला ।। ३८ ।।
इत्येवं चिंतयित्वा च समीपमगमन्मुनिः ।।
गंगाया विलपन्त्याश्च ब्रह्मपुत्रस्तु नारदः ।।
उवाचोच्चैर्वियत्स्थोऽसौ देवि गंगे नमोऽस्तुते ।। ३९ ।।
नारदोऽहं महापुण्ये कस्माद्रोदिषि पावनि ।।
हिमाद्रिपुत्री विख्याता देवगंधर्वसेविता।। 5.2.71.४० ।।
धृता शिरसि देवेन शिवेन परमेष्ठिना ।। ४१ ।।
नारदस्य वचः श्रुत्वा दिव्या देवनदी तथा ।।
अवलोक्य विमानस्थं प्रत्युवाच महामुनिम् ।। ४२ ।।
मया नारद मोहेन कृतोऽधर्मो जुगुप्सितः ।।
जानंत्या सुमहत्पापं सप्तपुत्रा हता मया ।। ।। ४३ ।।
समुद्रेण वियोगस्तु संजातो मम दैवतः ।।
भार्या जाता मनुष्यस्य पुत्रा जाता हताश्च मे ।। ४४ ।।
अतो मया विलपितं मग्नया शोकसागरे।।

कथ्यतां मम देवर्षे येन पुण्या भवामि वै ।। ४५ ।।
इति तस्या वचः श्रुत्वा नारदो मुनिसत्तमः ।।
त्रिकालवेदी शुद्धात्मा गंगां वचनमब्रवीत्।। ४६ ।।
।। नारद उवाच।। ।।
किं विस्मृतो जगद्वंद्ये देवानां समयः शुभः ।।
प्रतिज्ञातं त्वया देवि वसूनां मोक्षकारणे ।। ४७ ।।
प्राप्तास्ते वसवो लोकान्प्रसादात्तव सुव्रते ।।
त्वयावतारितो देवि समुद्रः शंतनुः स्मृतः ।। ४८ ।।
इति तस्य वचः श्रुत्वा नारदस्य महात्मनः ।।
गंगा त्रिपथगा पुण्या प्रत्युवाच महामुनिम्।। ४९ ।।
सत्यमुक्तं त्वया ब्रह्मञ्ज्ञातं सर्वं मयाऽधुना ।।
किंतु योनिर्यतो लब्धा मानुषी तेन मोहिता ।। 5.2.71.५० ।।
अपवादभयाद्भीता भवंतं शरणं गता ।।
दीयतामुपदेशो मे कथ्यतां स्थानमुत्तमम् ।। ५१ ।।
।। नारद उवाच ।। ।।
किं विस्मृतो जगद्वंद्ये देवानां समयः कृतः ।।
अपवादभयाद्भीता यदि त्वं देवि पुण्यदे ।।
मां पृच्छसि परं स्थानं शृणु त्वं वच्मि सुव्रते ।। ५२ ।।
अवंती तु समाख्याता सप्त कल्पसनातनी ।।
तस्यां सखी त्वदीया तु शिप्रा विप्रप्रिया सदा ।। ५३ ।।
तस्यास्तीरे शुभं लिंगं दुर्द्धर्षेश्वरदक्षिणे ।।
विद्यते त्रिदशैः पूज्यं सर्वती र्थैश्च सेवितम् ।। ५४ ।।
तस्य दर्शनमात्रेण कृतकृत्या भविष्यसि ।।
तस्माद्गच्छ महापुण्ये गंगे देवर्षिसेविते ।। ५५ ।।
इत्युक्ता सा त्रिपथगा नारदेन महात्मना ।।
गता तत्र महापुण्या सखीं शिप्रां ददर्श ह ।। ५६ ।।
संश्लेषं च तदा कृत्वा लिंगं दृष्ट्वा सुपावनम् ।।
पूजयामास भावेन तत्रैव च चिरं स्थिता ।। ५७ ।।
अथ सूर्यसुता देवी यमुना पापनाशिनी ।।
तत्रायाता सुहार्द्देन यत्र गंगा व्यवस्थिता ।। ५८ ।।
ददर्श देवी तां गंगां ध्यायंती शंकरं शिवम्।।
सापि तत्रैव तिष्ठंती पूजयंती परं शिवम्।। ५९ ।।

अथ तेनैव कालेन प्राचीदेवी सरस्वती ।।
समायाता सुगुप्ता च गंगायमुनयो र्जले ।। 5.2.71.६० ।।
एतस्मिन्नंतरे देवि शक्रं .प्राह स नारदः ।।
न दृश्यते प्रयागस्तु महाकालवनं गतः ।। ६१ ।।
गंगायमुनयोर्मध्ये यत्र गुप्ता सरस्वती ।।
प्रयागः स तु विज्ञेयः सर्वपापप्रणाशनः ।। ६२ ।।
स सांप्रतं प्रयागस्तु महाकालवनोत्तमे ।।
केनापि कारणेनैव गतो न ज्ञायते मया।।६३।।
इति तस्य वचः श्रुत्वा नारदस्य महात्मनः।।
शक्रेण सहिताः सर्वे ह्यवंतीं तु समागताः।।६४।।
स्तुवंतो विविधैः स्तोत्रैर्गंगां त्रिपथगां शुभाम्।।
गंगे देवि नमस्तुभ्यं सर्वपापप्रणाशिनि।।६५।।
वसूनां जननी देवि वसूनां मोक्षदायिनि।।
त्रैलोक्यपावनी नित्यं हरेण शिरसा धृता ।। ६६ ।।
सेविता वालखिल्यैश्च कृष्णस्य परमा कला ।।
यमुने त्वां नमस्यामः कालिंदीं वरवाहिनीम्।। ६७।।
सुता त्वं पाविनी देवि मार्तंडस्य दिवस्पतेः।।
शिप्रे देवि नमस्तुभ्यं ब्रह्मदेहोद्भवे शुभे।।६८।।
प्राची त्वमेव विख्याता पुण्यदेहा सरस्वती ।।
या प्राची कौरवक्षेत्रे पुष्करे या महालये ।।
सा त्वं शिप्रा प्रसिद्धा च सर्वपातकनाशिनी।। ६९ ।।
त्वं दया सर्वजंतूनां स्वर्गः शरणं नृणाम् ।।
त्वं माता सर्वजंतूनां त्वं प्राची भुवि गीयसे ।। 5.2.71.७० ।।
बहुजन्मकलंकांकं दृष्ट्वा या देहिनां भुवि ।।
करोषि क्षालनं देवि सा त्वं त्रैलोक्यसंस्थिता ।। ७१ ।।
आसां च संगमो यस्तु स प्रयागो बुधैः स्मृतः ।।
अत्रागत्य तु युष्माभिः स्थापितः स्नापितोऽधुना ।। ७२ ।।
सोद्य प्रभृति देवोऽयं प्रयागेश्वरसंज्ञकः ।।
त्रिषु लोकेषु विख्यातः स्मरणात्पापनाशनः ।। ७३ ।।
अत्रागत्य प्रपश्यंति ये प्रयागेश्वरं ततः ।।
ते कृतार्था भविष्यंति सर्वपातकवर्जिताः ।। ७४ ।।
कुलं च तारितं तेषां पैतृकं मातृकं तथा ।।

गंगायास्त्रियुगं पुण्यं चतुर्वर्गफलप्रदम् ।।
जायते नात्र संदेहः प्रयागेश्वरदर्शनात् ॥ ७५ ॥
गंगायां च प्रयागे च देववदारुवने शुभे॥
नैमिषे पुष्करे चैव श्रीशैले च त्रिपुष्करे ॥ ७६ ॥
त्र्यंबके धौतपापे च महेन्द्रे भैरवे तथा॥
गोकर्णे च सुवर्णाख्ये रेवाकपिलसङ्गमे ॥७७॥
एतेषां दर्शनेनैव या सिद्धिर्द्वादशाब्दिका ॥
सा लभ्या मासमात्रेण प्रयागेश्वरदर्शनात् ॥ ७८॥
ये पश्यंति चतुर्द्दश्यामष्टम्यां च विशेषतः ।
भक्त्या च नियमं कृत्वा प्रयागेश्वरसंज्ञकम् ॥ ७९ ॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
भोगदं मोक्षदं लिंगं भविष्यति महीतले ॥ 5.2.71.८०॥
कलास्तिस्रो भविष्यंति लिंगेऽस्मिन्मोक्षदे शुभे ॥
गंगा च यमुना प्राची सर्वपातकनाशिनी ॥ ८१ ॥
एवमुक्त्वा स्तुता गंगा यमुना च सरस्वती ॥
देवैः प्रणतिपूर्वेण गताः स्थानं स्वकं तदा ॥ ८२ ॥
देवाः प्रहृष्टाः शकाद्याः प्रयागेश्वरसंज्ञकम् ॥
स्तुत्वा च विविधैः स्तोत्रैः पूजयित्वा दिवं गताः।।८३।।
एष ते कथितो देवि प्रभावः पापनाशनः।।
प्रयागेश्वर देवस्य चंद्रादित्येश्वरं शृणु ।। ८४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखंडे चतुरशीतिलिंगमाहात्म्ये उमामहेश्वरसंवादे प्रयागेश्वरमाहात्म्यवर्णनंनामैकसप्ततितमोऽध्यायः ।। ७१ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७२



।। ईश्वर उवाच ।। ।।
द्विसप्ततीश्वरं विद्धि चन्द्रादित्येश्वरं प्रिये ।।
यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत् ।। १ ।।
शंबरेण पुरा देवि निर्जिताः संगरे सुराः ।।
नष्टा रणं परित्यज्य प्राणत्राणपरायणाः ।। २ ।।
ग्रस्तं च राहुणा दृष्ट्वा शशांकं भयविह्वलम् ।।
विनतायाः सुतो ज्येष्ठः प्रोक्तः सूर्येण सारथिः ।। ३ ।।
वहारुण रथं शीघ्रं यत्र युद्धं न विद्यते ।।
श्रूयते चन्द्रसूर्यौ तौ दैत्यानां बलवत्तरौ ।। ४ ।।
राहुर्दंष्ट्राकरालस्तु स तृतीयो भयंकरः ।।
न ज्ञायते रणे चन्द्रो मृतो नष्टोऽथवा पुनः ।।५ ।।
स च न ज्ञायते शक्रः क्व गतो वरुणो रणे।।
यमो न ज्ञायते कुत्र धनदस्य च का कथा।।६।।
एवमुक्तोऽरुणो रुग्णो रविणा रणमध्यतः।।
रथं संप्रेरयामास यत्र युद्धं न विद्यते ।। ७ ।।
एतस्मिन्नंतरे चन्द्रः समायातस्तु तत्क्षणात् ।।
राहुग्रहगृहीतोऽपि यत्र देवो दिवस्पतिः ।। ८ ।।
संत्रस्तः स विलोलाक्षः क्षणमात्रमचेतनः ।।
बभूव सहसा चन्द्रो दृष्ट्वा देवं दिवाकरम् ।। ९ ।।
शंबरेण रणे रुद्धा रुद्राश्च भयविद्रुताः ।।
जग्मुर्दिशो दश भयादसुरेन्द्रविभीषिताः ।। 5.2.72.१० ।।
साध्याः सर्वे भयत्रस्ता गता यत्र न दानवाः ।।
तेषु भग्नेषु देवेषु हतशिष्टेषु संगरे ।। ११ ।।
व्यधमत्सर्वगात्राणि वर्माणि च जनक्षये ।।
पलायमानदेवानामसुरो बलवच्छरैः ।। १२ ।।
पृष्ठतो निजघानाथ निकृत्ताश्च सहस्रशः ।।
अहं नष्टच्छलेनैव व्यग्रीभूते ऽसुरे तदा ।। १३ ।।

आसुरं रूपमास्थाय प्राणत्राणपरायणः ।।
शीघ्रं च गम्यते तावद्यावन्नायाति शंबरः ।। १४ ।।
इत्युक्तं निशिनाथेन भयभीतेन पार्वति ।।
चन्द्रादित्यौ क्षणान्नीतावरुणेन रथेन वै ।। १५ ।।
यत्र देवो जगन्नाथो गरुडस्थो जनार्दनः ।।
सुरसंघातसंकेतकिंनराकीर्णकंदरे ।। ।। १६ ।।
मंदरे सुरनारीणां नंदने वरचन्दने ।।
दृष्ट्वा तत्र जगन्नाथं शंखचक्रगदाधरम् ।।
स्तुतिं तौ चक्रतुर्देवौ चन्द्रसूर्यौ यशस्विनि ।। १७ ।।
नमो लोकत्रयाध्यक्ष स्वप्रभाजितभास्कर ।।
नमो विष्णो नमो जिष्णो नमस्ते कैटभांतक ।। १८ ।।
नमः सर्वक्रियाकर्त्रे जगत्त्रात्रे च ते नमः ।।
नमश्चक्रायुधाधृष्य नमो दानवघातिने ।। १९ ।।
नमः क्रमत्रयाक्रांतत्रैलोक्यांतर्हितोद्भव ।।
नमः प्रचंडदैत्येंद्रकुलकाल महाबल ।। ।। 5.2.72.२० ।।
नमो नाभिह्रदोद्भूतपद्मगर्भमहाप्रभो ।।
जनिताशेषलोकेशविरंचाय महाद्युते ।। २१ ।।
अमरारिविनाशाय महासमरशालिने ।।
नमस्ते विबुधाधीश शरणं भव नः प्रभो ।। २२ ।।
चन्द्रसूर्यकृतं स्तोत्रं श्रुत्वा देवो जनार्दनः ।।
आश्वास्य स्तुतिपूर्वेण प्राह देवो ह्यधोक्षजः ।। २३ ।। ।।
।। विष्णुरुवाच ।। ।।
स्वागतं चन्द्रसूर्यौ भो भवंतौ स्तुतिभाजनौ ।।
किं कारणमिह प्राप्तौ तद्ब्रूतां विगतज्वरौ ।। २४ ।।
नारायणेनैवमुक्तौ प्रोचतुश्चंद्रभास्करौ ।।
समरे निर्जिता देवाः शंबरेण दुरात्मना ।। २५ ।।
न ज्ञाताः क्व गतास्ते च आवां नष्टौ प्रयत्नतः ।।
अरुणेन इहानीतौ दृष्टस्त्वं देव दैवतः ।। २६ ।।
शंबरेण जिता देवाः स च सर्वत्र दृश्यते ।।
स्थले चैव जले चैव शंबरः क्रूरपौरुषः ।। २७ ।।
नश्यतां त्रिदशेंद्राणां पृष्ठतः शरवृष्टिभिः ।।
चिच्छेद नरवर्माणि च्छत्राणि च धनूंषि च ।। २८ ।।

वर्माणि च विचित्राणि मुकुटानि महांति च ।।
पृथूनि चापि चापानि चर्माणि विविधानि च ।। २९ ।।
गजाश्च मदसंभिन्नकपोलाः कोटिशः सुराः ।।
वाजिनश्चामरापीडा रत्नपर्याणभूषणाः ।। 5.2.72.३० ।।
विबुधा ध्वस्तसन्नाहा विगजा विपदातिनः ।।
विपदामाकराकारा बभूव सुरवाहिनी ।। ३१ ।।
ततो दैत्याधिपो मानी परिवृत्तो महारणात् ।।
निर्जितारिर्महातेजा ज्वालावानिव पावकः ।। ३२ ।।
वंद्यमानो मुनिगणैः स्तूयमानो महर्षिभिः ।।
आनंदितो जयाशीर्भिः प्रवरैर्दैत्यपुंगवैः।। ३३।।
तत्र सर्वर्द्धिसंपूर्णमासनं हेमभूषणम् ।।
अध्यतिष्ठत दैत्येंद्रस्तत्र मंगलवेश्मनि ।।
तत्रोपविष्टः शुशुभे दैत्यराजो महायशाः ।। ३४ ।।
दिव्यचंदनपुष्टांगः सुरपुष्पसमुज्ज्वलः ।।
मुकुटाकारजुष्टांगः सितचामरवीजितः ।।
मृतोत्थितैस्तथा दैत्यैर्दैत्याधीशैरधिष्ठितः ।। ३५ ।।
क्रतुभिर्मूर्त्तिमद्भिश्च सेव्य मानो महाबलः ।।
सर्वपुष्पोत्करयुतैर्नानाविहगनादिभिः ।। ३६ ।।
तत्र श्रीरतुला लोके तत्र लक्ष्मीर्निरर्गला ।।
तत्र कांतिर्द्युतिः शोभा शंबरो यत्र दानवः ।। ३७ ।।
एवं स दैत्यनृपतिः सभृत्यस्तत्र मोदते ।।
स्वयमिंद्रस्तु संजातश्चंद्रसूर्यौ कृतौ स्वकौ ।। ३८।।
तयोरिति वचः श्रुत्वा स देवः पुरुषोत्तमः ।।
चिरं ध्यात्वा स्वमनसि तदावोचदिदं प्रिये ।। ३९ ।।
चंद्रसूर्यौ मया ज्ञातं शंबरस्य विचेष्टितम् ।।
ब्रह्मणो वरदानेन भोक्तव्यं तपसः फलम्।। 5.2.72.४० ।।
शंबराय पुरा क्षिप्तं वज्रं कुलिशपाणिना ।।
हृदये निहतः सोऽपि तथापि न मृतोऽसुरः ।। ४१ ।।
गम्यतां च मयाज्ञप्तौ महाका लवनोत्तमे ।।
चन्द्रसूर्यौ ममादेशात्तत्र सिद्धिं च लप्स्यथ ।। ४२ ।।
तत्रानंतो महाकालो लिंगरूपो महेश्वरः ।।
तस्य चोत्तरतो देशे लिंगं कामप्रदं शिवम् ।। ४३ ।।

तस्य दर्शनमात्रेण कृतकृत्यौ भविष्यथः ।।
तस्य ज्वालासमूहेन मरणं शंबरस्य च ।।
भविष्यति न संदेहस्तस्मात्तत्रैव गम्य ताम्।। ४४ ।।
इत्युक्तौ वासुदेवेन चंद्रसूर्यौ यशस्विनि ।।
सत्वरं हृष्टरोमाणौ महाकालवनं गतौ ।। ४५ ।।
तत्र दृष्ट्वा महादेवं तेजसो राशिमव्य यम् ।।
स्तुतं च विविधैः स्तोत्रैः पूजितं कुसुमैः शुभैः ।। ४६ ।।
एतस्मिन्नंतरे वाणी लिंगमध्यात्समुत्थिता ।।
आश्वासयंती तरसा चन्द्रसूर्यौ हिमात्मजे ।। ४७ ।।
हतः स शंबरो दैत्यो गतौ तौ चन्द्रभास्करौ ।।
दैत्यानां निर्मितौ दुष्टौ पातालांतरसंस्थितौ ।। ४८ ।।
राहुकेतू ग्रहांते तु कृतौ समयपूर्वकौ ।।
स्थापितः स्वपदे शक्रो देवैः सह न संशयः ।। ४९ ।।
स्वं स्वं स्थानं गताः सर्वे लोकपाला मुदा युताः ।।
कांतिप्रतापसंयुक्तौ भवन्तौ भुवनत्रये ।। 5.2.72.५० ।।
गगने ग्रहनक्षत्रैः सहितौ विचरिष्यथः ।।
पूर्ववत्पुण्यपापानां साक्षिभूतौ भविष्यथः ।। ५१ ।।
इत्युक्तौ चन्द्रसूर्यौ तु तया वाण्या वरानने ।।
सन्तुष्टौ कृतकृत्यौ तु संजातौ लिंगदर्शनात् ।। ५२ ।।
एतस्मिन्नंतरे देवा विमानस्था समागताः ।।
यत्र चंद्रश्च सूर्यश्च महाका लवने शुभौ ।। ५३ ।।
ज्ञात्वा लिंगस्य माहात्म्यं नाम चकुः समाहिताः ।।
सेवितं चंद्रसूर्याभ्यां लिंगं तेजोमयं परम् ।। ५४ ।।
चन्द्रादित्येश्वरंनाम ख्यातिं यास्यति भूतले ।।
लिंगस्यास्य समुत्थेन ज्वालासंघेन शंबरः।।
दग्धो भृत्यजनैः सार्द्धं चन्द्रसूर्यानुसेवनात्।। ५५ ।।
इत्युक्त्वा त्रिदशाः सर्वे समीपे सर्वतः स्थिताः।।
स्तुवन्तो विविधैः स्तोत्रैश्चंद्रादित्येश्वरं शिवम्।। ५६ ।।
चन्द्रादित्यौ च तत्रस्थौ स्थितौ लिंगसमीपतः ।।
आराधयन्तौ देवेशं पदं प्राप्तौ च पूर्ववत् ।। ५७ ।।
ये पश्यंति नरा भक्त्या चन्द्रादित्येचरं शिवम् ।।
ते यांति सूर्यलोकं तु चन्द्रलोकं तथैव च ।।५८।।।

विमानैः सूर्यसकाशैस्तथा चंद्रप्रभैः शुभैः ।।
यावच्चन्द्रश्च सूर्यश्च तावत्तेषां सुखं भवेत् ।। ५९ ।।
चन्द्रसूर्योपरागे तु चंद्रादित्येश्वरं शिवम् ।।
ये पश्यंति नरा भक्त्या स्नात्वा शिप्रां च पावनीम्।। 5.2.72.६० ।।
तेषां कुलशतं यावत्पैतृकं मातृकं तथा ।।
लोके चंद्रस्य सूर्यस्य मोदते शाश्वतीः समाः।। ।। ६१ ।।
अमासोमसमायोगे ये पश्यन्ति प्रसंगतः ।।
चन्द्रादित्येश्वरं देवं न ते यांति यमालयम् ।। ६२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
चन्द्रादित्येश्वरेशस्य श्रूयतां करभेश्वरम् ।। ६३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीति लिङ्गमाहात्म्य उमामहेश्वरसंवादे चद्रादित्येश्वरमाहात्म्यवर्णनंनाम द्विसप्ततितमोऽध्यायः ।। ७२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७३

https://sa.wikisource.org/s/f93
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीहर उवाच ।। ।।

त्रिसप्ततीश्वरं विद्धि करभेशं वरानने ।।

यस्य दर्शनमात्रेण कुयोनिर्नैव लभ्यते ।। १ ।।

वीरकेतुरभूद्धीमानयोध्याया महीपतिः ।।

विद्याविनयसौभाग्यलावण्यामृत पूरितः ।। २ ।।

स सम्यक्पालयामास प्रजाः पुत्रानिवौरसान् ।।

अतीतानागतज्ञानपरिनिष्ठितमानसः ।। ३ ।।

अथैकस्मिन्दिने राजा जगाम गहनं वनम्।।

मृगसिंहगजाकीर्णं व्याघ्रसंबरसंकुलम् ।। ४ ।।

स तत्र विविधान्वन्यान्विव्याध परवीरहा ।।

मृगांश्च महिषांश्चैव वराहांश्च सहस्रशः ।। ५।।

लोडितं तद्वनं सर्वं पशुपक्षिमृगाकुलम् ।।

रहितं श्वापदैः सर्वैः कृतं तेन महीभृता ।। ६ ।।

यदा न श्वापदास्तस्मिन्दृश्यते गहने वने ।।

तदा विद्धस्तु करभो बाणेनानतपर्वणा ।। ७ ।।

स चापि करभो देवि बाणमादाय सत्वरम् ।।

विद्धोऽपि निःसृतोऽत्यर्थं राज्ञस्तस्यैव पश्यतः ।।

स च राजा बली तूर्णं ससार करभं प्रति ।। ८ ।।

ततो निम्नस्थलं चैव स चोष्ट्रोऽद्रवदाशुगः ।।

मुहूर्तेन ततो देवि योजनानि बहून्यपि ।। ९ ।।

ततः स राजा तारुण्या दौरसेन बलेन च ।।

ससार बाणासनधृक्सखड्गः सहयो नृपः ।। 5.2.73.१० ।।

ततो नदान्नदीश्चैव पल्वलानि वनानि च ।।

अतिक्रम्यानतिक्रम्य ससारैव वनेचरम् ।। ११ ।।

स चापि करभो देवि आसाद्यासाद्य तं नृपम् ।।

पुनरप्येति जवनो जवेन महता ततः ।। १२ ।।

स तस्य बाणैर्बहुभिः करभो विह्वलीकृतः ।।

पृष्ठतः पार्श्वतश्चैव पुनरभ्येति चांतिकम् ।।
पुनश्च जवमास्थाय पार्श्वे चाग्रे च दृश्यते ।। १३ ।।
अथारण्यं महारौद्रं प्रविष्टः करभस्तदा ।।
अन्तर्धानं जगामाशु स च राजा वनेऽविशत् ।। १४ ।।
प्रविश्य च महारण्यं तापसानामथाश्रमम् ।।
आससाद ततो राजा श्रांताश्चोपा विशत्पुनः।।१५।।
तं कार्मुककरं दृष्ट्वा श्रमार्त्तं क्षुधितं तदा ।।
समभ्येत्यर्षयस्तस्मै पूजां चक्रुर्यथाविधि ।। १६ ।।
स पूजामृषिभिर्दत्तां प्रतिगृह्य यथाविधि ।।
अपृच्छत्तापसान्सर्वांस्तपसो वृद्धिमुत्तमाम् ।। १७ ।।
ते तस्य राज्ञो वचनं प्रतिगृह्य तपोधनाः ।।
ऋषयो राजशार्दूलं पप्रच्छुस्त त्प्रयोजनम्।। १८ ।।
केन भद्र सुखार्थेन संप्राप्तोऽसि तपोवनम् ।।
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर ।। १९ ।।
एतदिच्छामहे श्रोतुं कुतः प्राप्तोऽसि मानद ।।
कस्मिन्कुले च जातस्त्वं किं नामा ब्रूहि पार्थिव ।। 5.2.73.२० ।।
ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभः ।।
आचख्यौ तद्यथा न्यायं कुलं गोत्रं च तत्त्वतः ।। २१ ।।
इक्ष्वाकूणां कुले जातो वीरकेतुर्द्विजर्षभाः ।।
चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः ।। २२ ।।
बलेन महता युक्तः सामात्यः सपरिच्छदः ।।
यदा न लब्धो गहने मृगो वा सूकरोऽपि वा ।। २३ ।।
महिषश्चित्तलो वापि शशो वा शंबरो वने ।।
तदा मे करभो विद्धो बाणेनानतपर्वणा ।। २४ ।।
स प्रणष्टः क्षणेनैव सबाणो मम पश्यतः ।।
तं द्रवंतमनुप्राप्तो वनमेतद्यदृच्छया ।। २५ ।।
भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः ।।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ।।
भवंतः सुमहाभागास्तस्मात्पृच्छाभि संशयम् ।। २६ ।।
क्व गतः करभो विद्धो मया बाणेन सांप्रतम् ।।
क्व च प्राप्स्यामि सहसा ब्रूत तत्सुसमाहिताः ।। २७ ।।
ततस्तेषां समस्तानामृषीणामृषिसत्तमः ।।

ऋषभो देवि करभं स्मरन्निदमथाब्रवीत् ।। २८ ।।
गतः स करभो भूप महाकालवने शुभे ।।
गच्छ त्वं च महाराज महाकालवने शुभे ।। २९ ।।
यत्र देवो महादेवः कारभं रूपमास्थितः ।।
विनोदार्थं च देवानां लिंगमूर्त्तिरभूत्पुरा।।5.2.73.३०।।
पश्चिमे क्षेत्रपालस्य कैलासस्य महीपते ।।
समीपे तस्य विघ्नेशो मोदक प्रियसंज्ञकः ।। ३१ ।।
ब्रह्मणा पूजितो राजन्देवानामर्थसिद्धये ।।
स च धर्मध्वजो राजा हैहयानां कुलोद्वहः ।। ३२ ।।
तुरगेण कदाचित्तु नीतो बदरिकाश्रमम् ।।
प्रसिद्धं त्रिषु लोकेषु नरनारायणाश्रमम् ।। ३३ ।।
तत्र वीराजिनधरं कृशं विप्रं ददर्श ह ।।
शरीरमपि राजेंद्र न केनापि समं तदा ।।
दृष्ट्वा च हसितो विप्रस्तेन राज्ञा प्रमादतः ।। ३४ ।।
यस्माद्धससि मां दृष्ट्वा तस्मादुष्ट्रो भविष्यसि ।।
लंबोष्ठो लंबदंतश्च विस्वरो विकृता कृतिः ।। ३५ ।।
इत्युक्तस्तेन विप्रेण शप्तोपि नृपसत्तमः ।।
तं विप्रं प्रार्थयामास स च तुष्टोब्रवीदिदम् ।। ३६ ।।
न मे वागनृता भूप कदा चिदपि विद्यते ।।
अवश्यं करभो भूत्वा पश्चान्मुक्तिमवाप्स्यसि ।। ३७ ।।
यदा त्वं करभो जातो विद्धो वै वीरकेतुना ।।
अयोध्याधिपभूपेन गमिष्यसि शराहतः ।। ३८ ।।
महाकालवनं दिव्यं तत्र त्वं लिंगदर्शनात् ।।
गमिष्यसि परं स्थानं यत्र देवो महेश्वरः ।। ३९ ।।
स चेक्ष्वाकुकुलद्भूतो वीरकेतुर्महाबलः ।।
लिंगदर्शनतो भूप चक्रवर्तित्वमाप्स्यति ।। 5.2.73.४० ।।
इत्युक्तो नृप भूपालः करभत्वं समागतः ।।
स त्वयाभिहतो भूप बाणेनानतपर्वणा ।।
द्रक्ष्यसि त्वं विमानस्थं विमुक्तं लिंगदर्शनात् ।। ४१ ।।
इत्युक्तो नृपतिस्तेन ऋषभेण द्विजेन तु ।।
आजगाम त्वरायुक्तो महाकालवनं शुभम् ।। ४२ ।।
ददर्श तत्र तल्लिंगं पूजितं त्रिदशैः सदा ।।

एतस्मिन्नंतरे वाणी श्रुता तेन महीभृता ।। ।। ४३ ।।
विमानस्थेन या प्रोक्ता तूष्ट्रेण मधुरस्वरा ।।
भोभो राजेंद्र मां पश्य विमाने चोद्धृते शुभे ।। ४४ ।।
दर्शनादस्य लिंगस्य प्राप्ता मे परमा गतिः ।।
त्वया हतोऽहं बाणेन तेनाहं त्वागतो वने ।।
समीपमस्य लिंगस्य त्वं मे बंधुः परो यतः ।। ४५ ।।
इत्युक्त्वा स नृपं देवि वचः समधुराक्षरम्।।
गतस्तु परमं स्थानं नित्यमव्ययमक्षयम् ।। ४६ ।।
ततो देवगणा व्योम्नि सकिंनरमहोरगाः ।।
यक्षराक्षसगंधर्वाः सपिशाचाप्सरोगणाः ।।४७।।
ब्रह्मेंद्रहरिमुख्याश्च विमानैर्देवि संस्थिताः ।।
आजग्मुर्मुदितास्तत्र द्रष्टुं कौतुकमानसाः ।। ४८ ।।
विलोक्य करभं मुक्तं विमानस्थं विराजितम् ।।
लिंगदर्शनमात्रेण संस्तुतं विविधैः स्तवैः ।। ४९ ।।
अच्छरत्नसमूहेन मुकुटेनोज्वलत्विषा ।।
भासंतं रविकोटीनां जगदानंदकारकम् ।। 5.2.73.५० ।।
नाम चक्रुस्ततो देवा दृष्ट्वा माहात्म्यमुत्तमम् ।।
दर्शनादस्य लिंगस्य मुक्तोऽयं करभो यतः ।। ५१ ।।
तस्मात्त्रिष्वपि लोकेषु विख्यातः करभेश्वरः ।।
भविष्यति न संदेहः पशुयोनिविमोचकः ।। ५२ ।।
इत्युक्त्वा त्रिदशाः सर्वे गताः स्वं धिष्ण्यमुत्तमम् ।।
अयोध्याधिपतिर्वीरो वीरकेतुः स्वमालयम्।।
समृद्धं निःसपत्नं च ततो राज्यं चकार सः ।। ५३ ।।
यः पश्यति नरो देवि करभेश्वरसंज्ञकम् ।।
स प्रयात्यक्षयाँल्लोकान्पूज्यमानो गणाधिपः ।। ५४ ।।
यदा कालादिहायातो राजराजेश्वरो महान् ।।
पृथिव्यामेकराड्भूत्वा क्रमान्मोक्षमवाप्नुयात् ।। ।। ५५ ।।
न दुःखं जायते तस्य व्याधिशोकभयं तथा ।।
ये पश्यंति प्रसंगेन तल्लिंगं करभेश्वरम् ।। ५६ ।।
सर्वमेधेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।।
तत्फलं त्वधिकं देवि करभेश्वरदर्शनात्।।५७।।
व्याधयो नोपजायंते दारिद्र्यं न कदाचन।।

ऐश्वर्यं चातुलं तेषां जायते दर्शनात्सदा।।५८।।

पशुयोनिगता ये च पितरो दुःखितास्तु ये।।

तिष्ठंति चांबरे ते तु चिंतयंतः स्वगोत्रजम्।।५९।।

आगमिष्यति नः पुत्रो नप्ता वा संतताविह।।

कदा पश्यति देवेशं करभेश्वरमीश्वरम्।।

तेन दर्शनमात्रेण मुक्तिर्नो भविता ध्रुवम्।।5.2.73.६०।।

यो यमुद्दिश्य वै कामं दर्शनं तु करिष्यति।।

तस्य तज्जायते सर्वं मृतस्य परमा गतिः ।। ६१ ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

करभेशस्य देवस्य शृणु राजस्थलेश्वरम् ।। ६२ ।।।

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे करभेश्वरमाहात्म्य वर्णनंनाम त्रिसप्ततितमोऽध्यायः ।। ७३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७४



।। श्रीहर उवाच ।। ।।
चतुःसप्ततिकं विद्धि शिवं राजस्थलेश्वरम् ।।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।। १ ।।
विष्णुकल्पे पुरा वृत्ते मन्वंतरमुखप्रिये ।।
अराजके महीपृष्ठे ब्रह्मा चिंतापरोऽभवत् ।। २ ।।
न मनुष्यैर्विना देवाः समर्था लोकधारणे ।।
दानेज्याजपतोदेवा भजंते पुष्टिमुत्तमाम् ।। ३ ।।
योग्यो राजा प्रजापालः को भवेज्जनवत्सलः ।।
सोऽपश्यदथ राजर्षि स्तपस्यंतं रिपुंजयम् ।। ४ ।।
पृथ्व्यां सर्वगुणाकीर्णं धर्मनिष्ठं महाव्रतम् ।।
तमुवाचाथ देवेशो ब्रह्मा लोकपितामहः ।। ५ ।।
।। ब्रह्मोवाच ।। ।।
रिपुंजय निबोधेदं वचनं मम पुत्रक ।।
राज्यं च पाल्यतां वत्स एककल्पेन चेतसा ।। ६ ।।
अलं ते तपसा तात कष्टेनानेन सांप्रतम् ।।
धर्मेण विजिताः सर्वे त्वया लोका नरोत्तम ।। ७ ।।
क्रियतामधुना लोकपालनं तु ममाज्ञया ।।
यतः परोपकारो हि फलं देहस्य देहिनः ।। ८ ।।
न धर्मस्तादृशोऽन्योऽस्ति न चान्योऽर्थस्य साधकः ।।
निरयाप्तिरपि श्रेय उपकृत्य परस्य वै ।।९।।
नापकारेण भूतानामपि स्याद्भुवनेशता ।।
सततं लोक कार्यार्थं मदाज्ञागौरवेण च ।।
पृथ्वीं समुद्रवसनां प्रजाश्चैव प्रपालय ।। 5.2.74.१० ।।
इत्युक्तः स तु राजर्षिर्ब्रह्मणा पर्वतात्मजे ।।
प्रोवाच प्रांजलिर्भूत्वा ब्रह्माणं तु रिपुंजयः ।। ११ ।।
स्वभावेनाचला पृथ्वी त्वया पूर्वं विनिर्मिता ।।
विनैव पालकं ह्येषा कुत्र यास्यति मेदिनी ।। १२ ।।

यद्यवश्यं मया पृथ्वी पालनीया पितामह ।।
देहि मे नगरीं रम्यामवन्तीं सप्तकल्पगाम् ।।१३।।
मनुष्यलोके विख्याता सकले सामरावती ।।
स्वर्गच्युतानां देवानां निवासार्थं प्रतिष्ठिता ।। १४ ।।
मर्यादामनुवर्त्तेयुर्यदि मे नाकवासिनः ।।
अदत्ते च मया स्थाने न वासः कस्यचिद्भवेत् ।।
अनेन विधिना पृथ्वीं पालयिष्याम्यहं प्रभो ।। १५।।
।। ब्रह्मोवाच ।। ।।
भविष्यत्येष ते कामो यस्त्वयोक्तो नरोत्तम।।
ये केचित्त्रिदशाः संति मद्गौरववशेन ते ।।
तवादेशं करिष्यंति सदा त्वद्वशवर्त्तिनः ।। १६।।
देवनाथेति वै नाम भविष्यति च सुव्रत।।
इत्युक्त्वांतर्दधे ब्रह्मा हंसयानं समास्थितः ।।१७।।
अथ राजा प्रतिज्ञाय ब्रह्मणा भूमिपालनम्।।
पृथ्व्यामुद्घोषयामास प्रोवाच त्रिदिवौकसाम् ।।१८।।
भवतां विहितः स्वर्गो मनुजानां च भूतलम् ।।
ये चात्र कंद ररताः स्थले वा भूधरेषु च ।। १९।।
ये स्थिता यांतु ते देवा मनुजानामियं धरा ।।
तच्छ्रुत्वा घोषितं तस्य राज्ञो भयनिपीडिताः ।।
त्रिदशा ब्रह्मणो वाक्याद्गौरवात्त्रिदिवं गताः ।। 5.2.74.२० ।।
अथ प्रजाः स नृपतिर्धर्मेणावर्धयत्तदा ।।
पुत्रवत्स्नेहयुक्तेन हृदयेनातिनिर्वृताः।।२१।
प्रजास्तत्सुखसंवृद्धा जरामृ त्युविवर्जिताः ।।
पुत्रिणो धनधान्याढ्याः सर्वकामसमन्विताः ।।२२।।
यौवनस्थाश्च निर्द्वंद्वाः सततं धर्मसंश्रयाः ।।
नासीत्पुथिव्यां शैलस्तु स्थलो वा द्वीप एव च ।। २३ ।।
अकृष्टपच्या पृथिवी स्वादवद्भिः फलैर्युता ।।
देवलोक इवासीद्भूः सर्वकामगुणोज्ज्वला ।।२४।।
एवं व्रजति काले वै राज्ञि राज्यं प्रकुर्वति ।।
महामर्षपरा देवा विप्रकार्यार्थमुद्यताः ।।२५।।
प्रजानां बहुदुःखानि मुहुः कुर्वंत्यनेकशः ।।
अथानावृष्टिमकरोत्सुदीर्घां पाकशासनः ।।२६।।

तथा संह्रियमाणेषु लोकेषु नृपसत्तमः।।
मेघो भूत्वा दिवं प्राप्य सुवृष्टिमकरोन्नृपः ।।२७।।
तेनैवाप्यायितो लोकः सुखी जातो यशस्विनि।।
ततः काले तु कस्मिंश्चिद्वर्षत्पाकशासनः ।।
संवर्त्तो वारिदो भूत्वा मेघान्वै विन्यपातयत् ।। २८ ।।
ततस्तु मारुतो भूत्वा नृपतिस्तामधारयत् ।।
ततोनलः प्रनष्टोऽभूत्सर्वतः पृथिवीतलात् ।। २९ ।।
न यज्ञा न जपो होमो न च पक्तिरवर्त्तत ।।
लोकश्च व्याधिसंक्षुब्धस्तदाभूद्विषमे स्थितः ।। 5.2.74.३० ।।
ततः स राजा तं दृष्ट्वा त्वभवद्धव्यवाहनः ।।
सोऽधारयत्प्रजाः सर्वा यज्ञांश्च त्रिदिवौकसः ।। ३१ ।।
एतस्मिन्नंतरे देवि त्वया सार्द्धं समागतः ।।
दर्शनार्थं स्वनगरीमहं भूतगणैर्वृतः ।। ३२ ।।
ततो देवगणाः सर्वे सकिंनरमहोरगाः ।।
सयक्षरक्षोगन्धर्वाः सिद्धविद्याधरोरगाः ।। ३३ ।।
भूताः प्रेताः पिशाचाश्च ये चान्ये गगनेचराः ।।
चत्वारः सागराश्चैव क्षारक्षीरादिसिंधवः ।। ३४ ।।
गंगा च यमुना सिंधुश्चंद्रभागा सरस्वती ।।
चर्मण्वती भीम रथी पुण्या गोदावरी नदी ।। ३५ ।।
विपाशा देविका पुण्या शरयूः कौशिकी तथा ।।
गोमती धूतपापा च बाहुदा च दृषद्वती ।। ३६ ।।
पारा वेद स्मृतिश्चैव वेत्रघ्नी नर्मदा शिवा ।।
तापी पयोष्णी निर्विन्ध्या सर्वास्तत्र समागताः ।। ३७ ।।
पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा ।।
पृथुतीर्थोदकश्चैव तथैवामरकंटकः । ३८ ।।
गंगाद्वारः कुशावर्त्तो बिल्वको नीलपर्वतः ।।
वाराहपर्वतश्चैव तीर्थं कनखलं तथा ।। ३९ ।।
भृगुतुंगः सुकुक्षश्चाप्यजगंधश्च पार्वति ।।
कालिंजरः सकेदारो रुद्रकोटिर्महालयः ।। 5.2.74.४० ।।
स्थानानि च समस्तानि पुण्यान्यायतनानि च ।।
मेरुर्महेंद्रो मलयो मंदरो गंधमादनः ।। ४१ ।।
मुनयो वालखिल्याश्च वेदाश्चत्वार एव च ।।

एते चान्ये च बहवः समायाता मया सह ।। ४२ ।।
अनंतरं मया मेरुः स्थलाकारः कृतस्ततः ।।
तस्मिन्स्थले स्थितो देवि उपविष्टः सुरैर्वृतः ।।
नियुक्ताः सागराः पार्श्वे चत्वारो लवणादयः ।। ४३ ।।
अथ व्याकुलतां प्राप्तः स च राजा रिपुंजयः।।
स्वस्थलस्थं मां दृष्ट्वा समायातस्तु मां प्रति।।४४।।
तेजसा दह्यमानोऽपि मदीयेन वरानने ।।
भीतोऽपि तोषयामास कोऽसि देव नमोऽस्तु ते ।। ४५ ।।
स्थलेस्मिन्नृप राजाहं मयाप्युक्तं विनोदतः ।।
चतुर्वर्गश्चतुर्मूर्तिश्चतुर्द्धा संस्थितो नृपः ।। ४६ ।।
तेनाहं सर्वतो दृष्टो वाङ्मये सचराचरे ।।
अनंतरं स्तुतस्तेन भक्त्या परमया प्रिये ।। ४७ ।।
प्रभावमतुलं दृष्ट्वा मदीयं व्यापकं परम् ।।
भक्त्या परमया देवि स च मां शरणं गतः।।
भूयःस्तुतोऽपि तेनाहं तुष्टो वै तस्य भूपतेः ।।
तेनोक्तं यदि मे देव तुष्टस्त्वं परमेश्वर ॥ ४९ ॥
भक्तिर्मे सुदृढा भूयात्त्वयि सर्वेश शाश्वती।
तुष्टोहं तेन वाक्येन पुनः प्रोक्तो मया नृप ॥ 5.2.74.५० ॥
एवं भविष्यतीत्युक्त्वा पुनर्मां ब्रूहि पार्थिव ।
हृदि स्थितश्च ते कामः सर्वकालं भविष्यति ॥ ५१ ॥
अधृष्यः सर्वेदेवानां सर्वदा संभविष्यसि ॥
तेनाहं प्रार्थितो देवि भूयो वरमनुत्तमम् ॥ ५२ ॥
अतीव राजते देव स्थलोऽयं तव सन्निधौ ॥
मेरुरेष न संदेहो वृल्लभः सर्वदा तव ॥ ५३॥
राजस्थलेश्वरोऽसि त्वं विख्यातो भुवनत्रये॥
भविष्यसि यथा देव तथा त्वं कर्तुमर्हसि ॥ ५४॥
अत्रागत्य च यो देव भक्त्या परमया युतः ॥
यात्रां करोति भावेन पुराणोक्तविधानतः ॥५५ |॥
तस्य त्वया प्रदातव्यं सर्वं मनसि चिंतितम् ।
अणिमादिगुणाः सर्वे गुटिकासिद्धिरंजनम्॥ ५६॥
खड्गं च पादुकां चैव जलवासं रसायनम्॥
राजस्थलेश्वरं यस्तु भक्त्या पश्यति मानवः ॥ ५७॥

दशम्यां तु विशेषेण कृत्वा नियमपूर्वकम्॥
देवानामपि देवत्वं संप्राप्नोति महेश्वरः ॥ ५८ ॥
पूजनीयस्तु त्रिदिवैर्यथा देवः पुरंदरः॥
दृष्ट्वा राजस्थले देवं योऽत्र यात्रां करिष्यति ॥५९॥
तस्य श्रीर्विजयश्चैव भवत्येव वरो मम ॥
शत्रवः संक्षयं यांतु संपद्यतां मनोरथाः ॥ 5.2.74.६०॥
वृद्धिर्भवतु वंशे च दर्शनात्तव शंकर॥
सर्वेऽत्र देवास्तिष्ठंतु मेरुरत्रैव तिष्ठतु ॥
तिष्ठंतु सागराः सर्वे तव देव समीपतः ॥ ६१ ॥
इत्युक्तोऽहं तदा तेन मया चोक्तं वरानने॥
सुद्युम्नोनाम भूपालो यदात्रैवागमिष्यति ॥ ६२ ॥
पुत्रार्थं भार्यया सार्द्धं तदा दास्यामि वांछितम् ॥
तदा समुद्राश्चत्वारः स्थास्यन्ति सफलाः स्वयम् ॥६३॥
तस्याराधनतो भूप पुत्रं दास्यामि शोभनम्॥
ये चात्र मानवा राजन्यात्रां कुर्वंति भक्तितः ॥
तेषां मनोरथावाप्तिर्भविष्यति न संशयः ॥ ६४ ।
राजा रिपुंजयो भक्त्या गणाधीशः कृतो मया।॥ ६५॥
एष ते कथितो देवि प्रभावः पापनाशनः ॥
राजस्थलेश्वरेशस्य श्रूयतां वडलेश्वरम् ॥ ६६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्ये राजस्थलेश्वरमाहात्म्यवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७५

https://sa.wikisource.org/s/f9k
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

॥ईश्वर उवाच ॥ ॥

पञ्चसप्ततिकं देवं वडलेश्वरसंज्ञकम्॥

विद्धि पापहरं देवि दर्शनात्कामदं नृणाम् ॥ १ ॥

धनदस्य सखा देवि मणिभद्रो बभूव ह ।।

ईर्ष्याप्रभावस्तत्पुत्रो वडलोनाम कोपनः ।। २ ।।

रूपवान्सर्वदा कामी सदा मत्तो बलाधिकः ।।

कदाचित्स गतो रम्यां नलिनीं धनदस्य च ।। ३ ।।

रत्यर्थं कामसेवार्थं गुप्तां रहसि निर्मिताम् ।।

ददर्श कुसुमैश्छन्नां वज्रवैडूर्यभूषिताम् ।। ४ ।।

तां वै विद्रुमसंछन्नां मुक्तादामविरा जिताम् ।।

सुरम्यां विपुलच्छायां स्वर्णपंकजशोभिताम् ।। ५ ।।

कुबेरभवनाभ्याशे वल्लभां धनदस्य च ।।

आक्रीडं राजराजस्य कुबेरस्य महा त्मनः ।। ६ ।।

राक्षसैः किंनरैश्चैव गुप्तां खड्गधरैः सदा ।।

तां दृष्ट्वा परमप्रीतो बभूव वडलस्तदा ।। ७ ।।

प्रियया सहितो रेमे स्थाने गुप्ते मनोहरे ।।

रेमे रमणकैर्योगैरनंगेन वशीकृतः ।। ८ ।।

तत्र गुप्ता रणे शूरा राक्षसा रणकोविदाः ।।

रक्षंति शतसाहस्रं सर्वायुधपरिच्छदाः ।। ९ ।।

ते तु दृष्ट्वैव वडलं मणिभद्रसुतं प्रिये ।।

भक्ष्यैः संपूरितमुखं दिव्यचन्दनभूषितम् ।। 5.2.75.१० ।।

केतकीगर्भपत्राभैर्दंतैर्दिव्यतराननम् ।।

युद्धार्थे बद्धनिस्त्रिंशं शक्तियुक्तमरिंदमम् ।। ११ ।।

भार्यासहायमुन्मत्तं पर्यंके च स्थितं सदा ।।

रत्यर्थमागतं ज्ञात्वा अन्योन्यमभिचुक्रुशुः ।। १२ ।।

मा वीरानेन मार्गेण सभार्यो गन्तुमर्हसि ।।

आक्रीडोऽयं कुबेरस्य धनदस्य महात्मनः ।। १३ ।।

देवा देवर्षयो यक्षा गन्धर्वाः किंनरास्तथा ।।
आमन्त्र्य यक्षप्रवरं विहरंति रमंति च ।। १४ ।।
नेह शक्यं विनादेशाद्विहर्तुं क्रीडितुं चिरम्।।
भ्रात्रामात्येन सुहृदा केनापि च सुतेन च ।। १५ ।।
येनकेनचिदन्यायादवमन्य धनेश्वरम् ।।
विहारः क्रियते दर्पात्स विनश्येदसंशयम् ।। १६ ।।
एवं स राक्षसैर्घोरैर्वडलो विनिवारितः ।।
मा मैवमिति सक्रोधं भर्त्सयद्भिः समंततः ।। १७ ।।
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः ।।
व्यगाहत महातेजास्ते सर्वे तं न्यवारयन् ।। १८ ।।
गृह्णीत बध्नीत निकृन्ततैनं पिबाम खादाम च वृत्तहीनम् ।।
क्रुद्धा ब्रुवंतो ह्यपतन्द्रुतं ते शस्त्राणि चोद्यम्य विवृत्तनेत्राः ।। १९ ।।
ततः स गुर्वीं यमदण्डकल्पां महागदां कांचनपट्टनद्धाम् ।।
प्रगृह्य तामभ्यपतत्तरस्वी ततोऽब्रवीत्तिष्ठत तिष्ठतेति ।। 5.2.75.२० ।।
ते तस्य वीर्यं च वलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव ।।
न शक्नुवंतः सहितुं समेता हताः प्रवीराः सहसा निवृत्ताः ।। २१ ।।
विदार्यमाणास्तत एव तूर्णमाकाशमास्थाय विमूढसंज्ञाः ।।
कैलासशृंगाण्यभि दुद्रुवुस्ते यक्षार्दिता रक्षपालाः प्रभग्नाः ।। २२ ।।
स शक्रवद्दानवदैत्यसंघान्विक्रम्य जित्वा मदनाभितप्तः ।।
विगाह्य तां पुष्करिणीं समर्थः कामं स चिक्रीडति यक्षपुत्रः ।। २३ ।।
ततस्तु ते रक्षपालाः समेत्य धनेश्वरं वै वडलेन नुन्नाः ।।
यक्षस्य धैर्यं सुबलं च संख्ये यथावदाचख्युरतीव भीताः ।। ।। २४ ।।
तेषां तु वचनं श्रुत्वा मणिभद्रो महायशाः ।।
शशाप पुत्रं दयितं वडलं प्रभुकारणात् ।। २५ ।।
यस्मात्सा नलिनी रम्या सेविता वडलेन तु।।
दयिता धनदस्यापि यथा माता तथैव सा ।।२६।।
तस्मात्पुत्रो मदीयस्तु सर्वभागविवर्जितः।।
पंग्वन्धो बधिरो दीनः क्षयरोगमवाप्स्यति।। ।। २७ ।।
इति शप्तस्तदा जातो वडलो भोगवर्जितः ।।
पतितो भूतले चैव तस्मिन्स्थाने गतोऽपि सन् ।। २८ ।।
पीडितः क्षयरोगेण न शशाक विचेष्टितुम् ।।
अन्धोऽथ बधिरो जातो गुरुशापहतस्तदा ।। २९ ।।

चिंतयामास सहसा शापमत्यद्भुतं महत् ।।
शप्तोऽहं केन सहसा जीवन्योन्यंतरं गतः ।। 5.2.75.३० ।।
कथं शप्तोऽस्मि तातेन मणिभद्रेण वल्लभः ।।
पुत्रो युवा च शूरश्च शत्रुपक्षक्षयंकरः ।। ३१ ।।
धन्योऽसौ मणिभद्रोऽपि मत्तातो येन भूतले ।।
प्रभुभक्त्या निजः पुत्रः शप्तस्त्यक्तश्च तत्क्षणात् ।। ३२ ।।
वडलेन पुनः प्रोक्तं धन्योऽहं प्रभुकारणात्।।
उत्सवो निधनंनाम भर्तृपिण्डोपजीविनाम् ।। ३३ ।।
अन्यायेन यथाकामं प्रारब्धः संचितश्चिरम्।।
तेनाहं शापतां प्राप्तो यास्यामि नरकं ध्रुवम्।। ३४ ।।
एवं विलपतस्तस्य वडलस्य वरानने ।।
आजगाम तमुद्देशं मणिभद्रो महाबलः ।।
ददर्श पुत्रं पंग्वंधं क्षयरोगप्रपीडितम् ।। ३५ ।।
निःश्वसंतं सुदुःखार्तं विल पंतं पुनःपुनः ।।
प्रत्युवाच सुतं यक्षो मणिभद्रोऽतिदुःखितः ।।
मया कुपित्रा हा वत्स शप्तस्त्वं प्रभुकारणात् ।। ३६ ।।
त्वयेयं नलिनी रम्या धन दस्यातिवल्लभा ।।
सेविता कामतप्तेन प्रवरा राक्षसा हताः ।। ३७ ।।
तस्मात्पुत्र मया शप्तो न मिथ्या स भविष्यति ।।
प्रभुर्देवः प्रभुः स्वामी प्रभुर्माता प्रभुः पिता ।। ३८ ।।
स्वाम्यर्थे यः प्रियान्प्राणान्परित्यजति संगरे ।।
स याति परमं स्थानं ब्रह्मलोकं सनातनम्।। ३९ ।।
न मन्त्रसाध्यः शापोयं नौषधेन व्रतेन च ।।
नियमेन च दानेन तस्मान्मद्वचनं कुरु ।। 5.2.75.४० ।।
मया श्रुतं शक्रलोके पुराणं स्कंदकीर्त्तितम् ।।
ब्रुवतो नारदस्यैव देवानां संनिधौ पुरा ।। ४१ ।।
प्रभावो वर्णितस्तेन महाकालवनस्य च ।।
क्षेत्रे ह्यस्मिन्महालिंगं स्वर्गद्वारस्य दक्षिणे ।। ४२ ।।
विद्यते व्याधिशमनं रूपसौभाग्यदायकम् ।।
तत्राहं त्वां च नेष्यामि विमानेनाशुगामिना ।। ४३ ।।
इत्युक्त्वा मणिभद्रेण समानीतः सुतस्तदा ।।
यत्र देवाधिदेवोऽसौ स्वर्गद्वारस्य दक्षिणे।। ४४ ।।

स्पर्शनात्तस्य लिंगस्य चक्षुष्मान्रूपवान्बली ।।
सुपादः श्रुतिसंयुक्तस्तत्क्षणादभवत्तदा ।।४५।।
दृष्ट्वा सुमहदाश्चर्यं मणिभद्रेण पार्वति।।
कृतं नाम सुहृष्टेन स्वीयपुत्रस्य नामतः।।
चक्षुष्मान्वडलो जातो लिंगस्यास्य प्रभावतः।।४६।।
अद्यप्रभृति देवोऽयं वडलेश्वरसंज्ञकः।।
भविष्यति त्रिलोकेषु विख्यातो नेत्रदायकः।।४७।।
पूजयिष्यंति ये देवं वडलेश्वरसंज्ञकम्।।
लिंगं लोकेषु विख्यातं ते प्राप्स्यंति मनोरथम्।।४८।।
दृष्टो हरति पापानि स्पृष्टो राज्यं प्रयच्छति।।
अर्चितो भक्तिभावेन मोक्षं दद्यान्न संशयः।।४९।।
कार्तिके शुक्लपक्षस्य तिथिर्वै द्वादशी भवेत् ।।
तस्यां ये पूजयिष्यंति वडलेश्वरसंज्ञकम् ।।5.2.75.५० ।।
दानं तैः सततं दत्तं ते यांति परमं पदम् ।।
प्रयागे च प्रभासे च गंगासागरसंगमे ।।५१।।
तपस्तप्तं भवेत्तैस्तु ते मुक्ता नात्र संशयः ।।
गर्भवासे न जायंते सर्वसौख्यसमन्विताः ।। ५२ ।।
गाणपत्या भविष्यंति शंकरस्य सदा प्रियाः ।।
सौभाग्यरूपसंपन्नाः पुत्रपौत्रैश्च संयुताः ।।
जायंते मानवा लोके वडलेश्वरदर्शनात् ।। ५३ ।।
गर्भवासे महाकष्टे यस्य वासो न रोचते ।।
सोऽभ्यर्चयतु भावेन वडलेश्वरमीश्वरम् ।। ५४ ।।
न लिंगेन विना सिद्धिर्दुर्लभं परमं पदम् ।।
गतिर्न जायते स्वर्गे यावल्लिंगं तु नार्चयेत् ।।५५।।
लिंगार्चन विहीनानां सिद्धिश्चापि सुदुर्लभा ।।
मम पुत्रेण संप्राप्तमीप्सितं लिंगतो यतः ।। ५६ ।।
इत्युक्त्वा मणिभद्रोऽपि सुतेन सहितो ययौ ।।
यत्र देवो धनाध्यक्षः स्थानं स्वं परमं गतः ।। ५७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
वडलेश्वरदेवस्य श्रूयतामरुणेश्वरम् ।। ५८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे वडलेश्वरमाहात्म्यवर्णनं नाम पंचसप्ततितमोऽध्यायः ।। ७५ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७६



।। ईश्वर उवाच ।। ।।
षट्सप्ततितमं देवमरुणेश्वरसंज्ञकम् ।।
विद्धि पापहरं देवि दर्शनात्कामदं नृणाम् ।। १ ।।
पुरा देवयुगे देवि प्रजापतिसुते शुभे ।।
आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघे ।। २ ।।
ते भार्ये कश्यपस्यास्तां कद्रूश्च विनता तथा ।।
प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ।। ३ ।।
कश्यपो धर्मपत्नीभ्यां मुदा परमया युतः ।।
वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं तु ते ।। ४ ।।
हर्षादभ्यधिकां प्रीतिं प्रापतुः स्म वरस्त्रियौ ।।
वव्रे कद्रूः सुतान्नागान्सहस्रं तुल्यवर्चसः ।। ५ ।।
द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले ।।
ओजसा तेजसा चैव विक्रमेणाधिकौ च तौ ।। ६ ।।
तस्यै भर्त्ता वरं प्रादाल्लप्स्यसे पुत्रकोत्तमौ ।।
एवमस्त्विवति तां चाह कश्यपो विनतां तदा ।। ७ ।।
यथा च प्रार्थितं लब्ध्वा वरं तुष्टाऽभवत्तदा ।।
कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ ।। ८ ।।
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यतेजसाम् ।।
धार्यौ गर्भौ प्रयत्नेन इत्युक्त्वा स महातपाः ।। ९ ।।
ते भार्ये वरसंहृष्टे कश्यपो वनमाविशत् ।।
कालेन महता कद्रूर्नागानां सा शतीर्दश ।।
जनयामास चार्वंगी द्वे चांडे विनता तदा ।। 5.2.76.१० ।।
तयोरंडानि निदधुः प्रहृष्टाः परिचारिकाः ।।
सोपस्वेदेषु भांडेषु पंचवर्षशतानि च ।। ११ ।।
ततः पंचशते काले कद्रूपुत्रा विनिर्गताः ।।
अंडभ्यां विनतायास्तु मिथुनं न व्यदृश्यत ।। १२ ।।
ततः पुत्रार्थिनी देवी व्रीडिता सा तपस्विनी ।।

अंडं बिभेद विनता तत्र पुत्रं ददर्श ह ।। १३ ।।
पूर्वार्द्धकायसंपन्नमितरेणा प्रकाशितम् ।।
स पुत्रो रोषसंरब्धः शशापैनामिति श्रुतम् ।। १४ ।।
योऽहमेवं कृतो मातस्त्वया लोभपरीतया ।।
शरीरेणासमग्रेण तस्माद्दासी भविष्यसि ।। १५ ।।
पंचवर्षशतान्यस्या यया विस्पर्द्धसे सदा ।।
एष ते च सुतो मातर्दास्याद्वै मोक्षयिष्यति ।। १६ ।।
यद्येनमपि मातस्त्वं मामिवांडविभेदनात् ।।
न करिष्यस्यनंगं वा पुत्रं चाति तरस्विनम् ।।१७।।
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया।।
विशिष्टबलमीप्संत्या पंचवर्षशतान्यतः।।१८।।
एवं शस्वा ततो देवि विनतां मातरं स्वकम् ।।
अरुणो विललापाथ वाष्पशोकपरिप्लुतः ।। १९ ।।
हाहा मया नृशंसेन माता स्वजननी स्वका ।।
शप्ता विनापराधेन कथं यास्यामि सद्गतिम् ।।
माता देहारणिः पुंसां माता दुःखसहा परा ।।5.2.76.२०।।
गर्भक्लेशे परं दुःखं माता जानाति यादृशम् ।।
वात्सल्यं चाधिकं मातुर्दृश्यते न तु पैतृकम् ।। २१ ।।
गुरूणामेव सर्वेषां माता गुरुतरा स्मृता ।।
एकस्यापि सुतस्यैव न दृष्टा निष्कृतिः श्रुतौ ।।२२।।
यदि पिंडप्रदानं तु गयायां कुरुते सुतः ।।
गते पितरि पंचत्वं माता पुत्रस्य निर्वृतिः ।।
न च मातृविहीनस्य ममत्वं कुरुते पिता ।।२३।।
विकलो मातृहीनस्तु पुत्रो हि प्रोच्यते तदा ।।
यदा स वृद्धो भवति तदा भवति दुःखितः ।।
तदा शून्यं जगत्सर्वं यदा माता वियुज्यते ।। २४ ।।
सोऽहं पापसमाचारो जातो मातृविहिंसकः ।।
मरिष्यामि न संदेहः साधयित्वा हुताशनम् ।। २५ ।।
जातोऽहं विकलांगस्तु प्राक्कृतेनैव कर्मणा ।।
न माता कारणं यस्मात्स्वकीयं कर्म भुज्यते ।। ।। २६ ।।
एवं विलपतस्तस्य कश्यपस्य सुतस्य च ।।
अरुणस्य विशालाक्षि नारदः समुपागतः ।। २७ ।।

दृष्ट्वारुणं सुदुःखार्त्तं विलपंतं पुनः पुनः ।।
प्रत्युवाच प्रसन्नात्मा नारदः प्रहसन्निव।।२८।।
अरुणोऽयमहो रौति कश्यपस्यात्मसंभवः ।।
विनतायाः सुतो ज्येष्ठः संभूतस्तपसां निधिः ।। ।। २९ ।।
उत्पादितोऽयमल्पाहैरर्द्धकायो महाबलः ।।
एनमाश्वासयिष्यामि विनतागर्भसंभवम् ।।
मोहेन विलपंतं च श्रेयो मे भविता धुवम् ।। ।। 5.2.76.३० ।।
इति संचिंत्य मनसि वाक्यैर्मध्वमृतोपमैः ।।
प्रत्युवाचारुणं तत्र नारदो द्विजसत्तमः ।। ३१ ।।
तात कश्यपदायाद विनतागर्भसंभव ।।
तेजोराशे दुराधर्ष संतापं मा कृथा वृथा।। ३२ ।।
भाविनोऽर्था भवंतीह दुःखस्य च सुखस्य च ।।
यत्त्वया विनता शप्ता रहस्यं देवनिर्मितम्।। ।। ३३ ।।
यदि तेस्ति घृणा चित्ते शप्तात्मजननी त्वया ।।
तदा गच्छ ममादेशान्महाकालवनं शुभम् ।।३४।।
उत्तरे देवदेवस्य यात्रेशस्य च पुण्यदम्।।
विद्यते त्रिदशैः पूज्यं सर्वदा सर्वदं शिवम् ।। ३५ ।।
अरुणस्त्वेवमुक्तस्तु नारदेन महात्मना ।।
आजगाम क्षणार्द्धेन महाकालवनं शुभम् ।। ३६ ।।
ददर्श तत्र तल्लिंगं तेजःकूटोपमं शुभम् ।।
पूजयामास विधिवत्पुष्पैर्भावसमन्वितः ।। ३७ ।।
लिंगेनोक्तोऽरुणो देवि सारथ्यं कुरु सर्वदा ।।
सूर्यस्य भ्रमतस्तस्य त्वत्तुल्यो नास्ति सारथिः ।। ३८ ।।
मया दत्तं तु सामर्थ्यं सूर्यस्य पुरतः सदा ।।
उदयस्तेऽरुण प्राग्वै पश्चात्सूर्य उदेष्यति ।। ३९ ।।
त्वन्नाम्ना त्रिषु लोकेषु ख्यातोऽहमरुणेश्वरः ।।
भविष्यामि न संदेहो नृणामर्थप्रदायकः ।। 5.2.76.४० ।।
ये मां पश्यंति सततं त्वन्नाम्ना चारुणेश्वरम् ।।
ते यास्यंति परं स्थानं दाहप्रलयवर्जितम् ।। ४१ ।।
मोदिष्यंति कुलैः सार्द्धं पितृमातृसमुद्भवैः ।।
कल्पकोटिसहस्रं तु ये पश्यंति समाहिताः ।। ४२ ।।
न दुःखं जायते तेषां ये पश्यंति रवेर्द्दिने।।

संसारसागरोत्थं वै यावदिंद्राश्चतुर्दश ।।४३।।
यः पश्यति चतुर्दश्यां कृष्णायामरुणेश्वरम् ।।४४।।
स नेष्यति पितॄन्स्वर्गे नरकस्थान्न संशयः ।।
संक्रांतौ रविवारे च यः पश्येदरुणेश्वरम् ।।
शुंडीरस्वामिनो यात्रा कृता तेन न संशयः ।।४५।।
इत्युक्तस्तेन लिंगेन विनतानंदनस्तदा।।
आगतः कृतकृत्यात्मा यत्र देवो दिवस्पतिः ।।४६।।
अस्य लिंगस्य माहात्म्यात्कश्यपस्यात्मसंभवः ।।
अरुणो दृश्यते व्योम्नि सूर्यस्य पुरतः सदा ।। ४७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
अरुणेश्वरदेवस्य पुष्पवंतेश्वरं शृणु ।। ४८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्येऽरुणेश्वरमाहात्म्यवर्णनंनाम षट्सप्ततितमोऽध्यायः ।। ७६ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७७

https://sa.wikisource.org/s/fak
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्

।। श्रीमहादेव उवाच ।। ।।
सप्तसप्ततिकं देवि पुष्पदंतेश्वरं शृणु ।।
यस्य दर्शनमात्रेण गर्भवासो न जायते ।। १ ।।
शिनिर्नाम द्विजो देवि स चापुत्रोऽभवत्पुरा ।।
पुत्रार्थं चिंतयामास स तपांसि बहूनि ह ।। २ ।।
वायुभक्षोंऽबुभक्षश्च निराहारोर्ध्वबाहुकः ।।
शाकमूलफलाहारः पर्णाश्येकद्वि पर्णभुक् ।। ३ ।।
एवमादीनि चान्यानि तपांसि श्रेयसे परम् ।।
एतेषां तपसां मध्ये तप एकं समाश्रये ।। ४ ।।
परं विघ्नोपशांत्यर्थं तोषयिष्येऽहमी श्वरम् ।।
एवं संचिंत्य मनसा ऊर्ध्वबाहूर्ध्वपादकः ।।
आभ्यां न स दुरासाद्यो नापराधो भविष्यति ।। ५ ।।
तथा चकार स मुनिर्वर्षाणां द्वादशैव हि ।।
तपस्यंतं च तं दृष्ट्वा नियमे परमे स्थितम् ।। ६ ।।
विज्ञप्तोहं त्वया देवि मंदरे चारुकंदरे ।।
करोत्येष तपः क्रूरं पुत्रहेतोर्मुनिर्म हान् ।। ७ ।।
तेजसा दीपयच्छैलं शोषयन्सलिलाशयान् ।।
तपसा दुष्करेणैव क्षुभिता नाकवासिनः ।। ८ ।।
व्यालेंद्रा व्याकुलीभूता लुलिताश्चाचलेश्वराः ।।
मुनयो विस्मृतिं प्राप्ताः कंपेते चापि रोदसी ।। ९ ।।
अयोनिजः शिनिर्विप्रः पुत्रमिच्छत्ययोनिजम् ।।
त्वं योनिर्गुणसंघानां त्वं योनिस्तपसामपि ।। 5.2.77.१० ।।
त्वं तपस्त्वं परं धाम शिखिचंद्रार्कलोचन ।।
सर्वेश्वर सुतोऽभीष्टः किं न विप्राय दीयते ।। ११ ।।
सुरासुरगुरो किं न पुत्रमस्मै प्रयच्छसि ।।
तपसा क्षीणदोषस्य ब्रह्मत्वे भावितात्मनः ।। १२ ।।
शिनेः पुत्रप्रदानं त्वं कुरु मद्वचनाच्छिव ।।

तपसा दुष्करेणैव गाढं क्लिष्टो महामुनिः ।। १३ ।।
तेजांसि ज्योतिषामेव महतां च विधिस्थितः ।।
अहरत्तेजसा स्वेन तमांसीव दिवाकरः ।। १४ ।।
त्वद्भक्तस्य च देवेश व्यर्थः कस्मात्परिश्रमः ।।
उदितेऽर्के तमांसीह न भवंति कदाचन ।। १५ ।।
त्वत्परस्य न देवश युक्ता दुःखविभीषिका ।।
इत्यहं प्रार्थितो देवि त्वया पर्वतपुत्रिके ।। १६ ।।
विप्रार्थमनुकंपार्थं पुत्रार्थं च विशेषतः ।।
आकारिता मया देवि गणास्त्व द्गौरवेण तु ।। १७ ।।
रुद्राश्च हरभक्ताश्च कूष्मांडा गगनेचराः ।।
रोमरौद्रा महानीलाः शिखावंतः सकोकिलाः ।। १८ ।।
अन्ये च विविधाकाराः कालास्या हरिपिंगलाः ।।
जटाजूटधराश्चित्रा वीथिनक्षत्रचारिणः ।। १९ ।।
नीलग्रीवा कृष्णमुखाः पिंगधौतजटासटाः ।।
ज्वरो डिंडिर्महाकालो लांगुलिश्च महेश्वरः ।। 5.2.77.२० ।।
घंटाकर्णो विशाखश्च परिशेषा गणाश्च ये ।।
वृषारूढाः कामतुल्याः कामरूपबलास्तथा ।। २१ ।।
शूलचंद्रधराः सर्वे सर्वे तुल्यपराक्रमाः ।।
ममादेशात्समायाताः कृतांजलिपुटाः स्थिताः ।। २२ ।।
स्तुवंतो विविधैः स्तोत्रैरूचुरेवं समाहिताः ।।
किं कर्तव्यमिहास्माभिरादेशो दीयतां प्रभो ।। २३ ।।
गणानां वचनं श्रुत्वा ज्ञात्वा भक्तिं च तादृशीम् ।।
महातपःप्रभावोऽयं शिनिविप्रस्य कीर्त्तितः ।। २४ ।।
पुत्रार्थं तप्यति तपः शिनिर्ब्राह्मणसत्तमः ।।
मद्वाक्यात्को नु विप्रस्य पुत्रत्वं संप्रदास्यति ।। २५ ।।
तस्याहं संप्रदास्यामि सर्वान्कामा न्यथेप्सितान् ।।
अमरं चाजरं पुत्रं मुनिर्वांछति सांप्रतम् ।। २६ ।।
मद्वाक्यं क्रियतां सद्यो विप्रः क्लेशाद्विमुच्यताम्।।
मद्भक्तस्य न संकल्पो मिथ्या भवितुमर्हति।। २७ ।।
मदीयं वचनं श्रुत्वा सर्वे कंपितकंधराः ।।
सर्वे चावाङ्मुखा जाताः सर्वे ध्यानपरायणाः ।। २८ ।।
न कश्चिद्भाषते किंचिन्न कश्चिद्वीक्षते तदा ।।

अथोक्तं पुष्पदंतेन रभसान्मानितेन तु ।। २९ ।।
मम चित्तमविज्ञाय गणानामनुकंपया ।।
न यास्यंति गणा देव त्वां विहाय महीतलम् ।। 5.2.77.३० ।।
इह स्थास्यंति सततं त्वत्समीपे न संशयः ।।
कथं योनिं प्रयास्यंति संप्राप्य मुदमुत्तमाम् ।। ३१ ।।
हीनां रजोऽधिकां दीनां तमोबहुलधारिणीम् ।।
कथं स्वर्गं परित्यज्य यास्यामो नरकं परम् ।। ३२ ।।
ब्रुवन्नेवं भ्रमेणैव भाव्यर्थेन प्रणोदितः ।।
उक्तो मया विशालाक्षि पुष्पदंतो गणाग्रणीः ।। ३३ ।।
पत त्वं मानुषे लोके यस्मान्मे विप्रियं कृतम् ।।
शप्त्वा तं पुष्पदंतं तु वीरकः प्रेरितो मया ।। ।। ३४ ।।
विप्रस्य पुत्रतां तूर्णं पुत्र गच्छ ममाज्ञया ।।
ततस्ते संप्रदास्यामि सर्वान्कामान्यथेप्सितान् ।। ३५ ।।
इत्युक्तो वीरको देवि गतो विप्रस्य पुत्रताम् ।।
पुष्पदंतोऽपि करुणं विललाप सुदुःखितः ।। ३६ ।।
पश्चात्तापेन संयुक्तो निश्वस्य च पुनःपुनः ।।
अहो तत्सफलं जन्म यदाज्ञा क्रियते नरैः ।। ३७ ।।
प्रभूणामेकचित्तेन ते भृत्या दुर्लभाः स्मृताः ।।
तेषामर्थश्च धर्मश्च कुलं चैव च तारितम् ।। ३८ ।।
प्रसन्नास्त्रिदशास्तेषां प्रभु भक्ताश्च ये नराः ।।
सेवाधर्मो हि गहनो योगिनामपि दुष्करः ।। ३९ ।।
न ज्ञेयः केन तत्त्वेन दुराराध्यः प्रभुर्भवेत् ।।
एकेनाप्यपराधेन प्रकोपं कुरुते प्रभुः ।। 5.2.77.४० ।।
विनश्यंत्युपकाराणि तस्मात्सेवा सुदुष्करा ।।
स्वामी सर्पश्च वह्निश्च तप्तभावं व्रजंति हि ।। ४१ ।।
तस्माद्यत्नेन संसेव्या आत्मरक्षणतत्परैः ।।
सोऽहं भूमौ निपतितः प्रभोरादेशभंजकः ।। ४२ ।।
कांस्तु लोकान्गमिष्यामि कलुषी भ्रूणहा इव ।।
एवं विलप्य बहुशो मामेव शरणं गतः ।।
उवाच दीनया वाचा प्रणिपत्य पुनःपुनः ।। ४३ ।।
दीनोऽस्मि ज्ञानहीनोऽस्मि प्रणतोऽस्मि च शंकर ।।
कुरु प्रसादं देवेश अपराधं क्षमस्व मे ।। ४४ ।।

न हि निर्वहणं यांति प्रभूणामाश्रिता रुषः ।।
प्रसीद देवदेवेश दीनस्य कृपणस्य च ।। ४५ ।।
अपि कीट पतंगत्वं गच्छेयं तव शासनात ।।
भक्तोहं सर्वदा देव पुत्रत्वे हि प्रतिष्ठितः ।। ४६ ।।
इति तस्य वचः श्रुत्वा पुष्पदंतस्य पार्वति ।।
ममत्वेन तदा देवि प्रोक्तमित्थं त्वया वचः ।। ४७ ।।
गच्छ पुत्र ममादेशान्महाकालवनं शुभम् ।।
लिंगमाराधय क्षिप्रं तत्त्वन्नाम्ना भविष्यति ।। ४८ ।।
कीर्त्तिस्ते भविता पुत्र यावदाभूतसंप्लवम् ।।
इत्युक्ते तु त्वया देवि मयाप्युक्तं वरानने।४९।।
न मे मिथ्या वचः पुत्र भविष्यति कथंचन ।।
दर्शनादेव लिंगस्य ममाभीष्टो भविष्यसि ।। 5.2.77.५० ।।
विमाने पुष्पपादे तु समारूढो भविष्यसि ।।
पुष्पैः संपूज्यमानस्तु पदं प्राप्स्यसि शाश्वतम् ।। ५१ ।।
गणैः सार्द्धं मया चैव मुदितो विचरिष्यसि ।।
ममापि न रतिर्वत्स भविष्यति त्वया विना ।। ५२ ।।
अहं तत्रागमिष्यामि महाकालवने शुभे ।।
तुष्टोऽहं सर्वदा वत्स गणानामग्रणीः कृतः ।।५३।।
अनया शुद्धया भक्त्या लोकानामुपकारकः ।।
भविष्यसि न संदेहस्तस्मिन्क्षेत्रे गतो ध्रुवम्।।५४।।
इत्युक्तो हि मया देवि पुष्पदंतो गणाग्रणीः ।।
मानी ममाज्ञया मौनी महाकालवने शुभम् ।। ५५ ।।
लिंगमाराधयामास दुर्वासेशादथोत्तरे ।।
लिंगेनोक्तस्तु सहसा तुष्टोऽहं गणसत्तम ।।
त्वन्नाम्ना ख्यातिमेष्यामि प्रसादस्ते कृतोऽधुना ।। ५६ ।।
एतस्मिन्ननन्तरे देवि त्वया सार्द्धमहं गतः ।।
शक्राद्यैस्त्रिदशैः सार्द्धं गणैर्नानाविधैस्तथा ।। ५७ ।।
हृष्टस्तु पुष्पदंतोऽपि पुष्पपट्टासने शुभे ।।
पुष्पैः प्रकीर्यमाणोऽपि पुनः प्राप्तो ममांतिकम् ।। ५८ ।।
मया संश्लेषितः स्नेहादुत्संगेऽप्यधिरोपितः ।।
स्थानं दत्तं विशालाक्षि इदमुक्तं मया तदा ।। ५९ ।।
ये पश्यंति नरा लिंगं त्वया संपूजितं भुवि ।।

ते यास्यंति पुष्पकेण क्रीडन्तो वै त्रिविष्टपम् ।। 5.2.77.६० ।।
गणाध्यक्षा भविष्यंति सर्वकामैरलंकृताः ।।
मम लोके गणाध्यक्षा यावदिंद्राश्चतुर्दश ।। ६१ ।।
दर्शनात्क्षीयते पापमैहिकं पूर्वकं तथा ।।
ततः प्रसादान्मे सर्वं ज्ञानं सम्यग्भविष्यति ।। ६२ ।।
यः पूजयेच्चतुर्द्दश्यामष्टम्यां सोमवासरे ।।
अमरैः सह संहृष्टो मोदते दिवि सर्वदा ।। ६३ ।।
पैतृकैर्मातृकैः सार्द्धं कुलैस्तु सप्तभिर्युतः ।।
न वदेत्केनचित्सार्द्धं नरो यः प्रातरुत्थितः ।। ६४ ।।
पुष्पदंतेश्वरं दृष्ट्वा सोऽश्वमेधफलंलभेत् ।।
मुच्यते पातकाद्यैश्च यः शाठ्येनापि पश्यति ।। ६५ ।।
मृतो गांधर्वलोके तु याति विद्याधरैर्वृतः ।।
न तस्य संतति च्छेदो यः पश्यति दिनेदिने ।।
नियमेन गणाध्यक्ष जायते ब्रह्मणो दिनम्।। ६६ ।।
ऐश्वर्यं सप्तलोकेषु भुक्त्वा भोगान्यथाक्रमम्।।
पृथिव्यामेकराड्भूत्वा ममांगे संभविष्यति ।। ६७ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
पुष्पदन्तेश्वरेशस्य अविमुक्तेश्वरं शृणु ।। ६८ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम् आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे पुष्पदन्तेश्वरमाहात्म्यवर्णनंनाम सप्त सप्ततितमोऽध्यायः ।। ७७ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७८



।। ईश्वर उवाच ।। ।।
अष्टसप्ततिकं विद्धि अविमुक्तेश्वरं प्रिये ।।
यस्य दर्शनमात्रेण तीर्थयात्राफलं लभेत् ।। १ ।।
शाकले नगरे देवि चित्रसेनो महीपतिः ।।
बभूव भुवि विख्यातो रूपवान्मन्मथाधिकः ।। २ ।।
तस्य चन्द्रप्रभा भार्या प्राणे भ्योऽपि गरीगसी ।।
पतिव्रता धर्मशीला रूपयौवनशालिनी ।। ३ ।।
अपुत्रस्यापि नृपतेः पुत्री जाता मनोरमा ।।
तस्या नाम तदा चक्रे पिता पार्थिवसत्तमः ।। ४ ।।
सर्वलक्षणसंपन्ना कन्या लावण्यवत्यपि ।।
सापि जातिस्मरा देवी सस्मार च पुरातनम् ।। ५।।
वैराग्याद्ब्रह्मचर्यं च चचार तनुमध्यमा ।।
कदाचिद्यौवनं प्राप्ता सा च पृष्टा नृपेण वै ।। ६ ।।
उत्संगे च निजे कृत्वा मूर्ध्नि चाघ्राय हर्षितः ।।
पुत्रि प्रदानकालस्ते कस्मै देया वराय च ।। ७ ।।
नृपाय नृपपुत्राय संमताय द्विजाय वा ।।
वृद्धाय बहुभार्याय ग्रामीणाय च पुत्रिणे ।।
हर्षेण चावृतो राजा पुनः पप्रच्छ तां सुताम् ।। ८ ।।
पृष्टा च सा यदा देवी न चोवाच नृपं प्रति ।।
अधोमुखी च संजाता पुनः प्रोक्ता नृपेण तु ।। ९ ।।
यदि मद्वचनं पुत्रि प्रतिभाति न सांप्रतम् ।।
वरणं स्वेच्छया पुत्रि कुरु तर्हि स्वयंवरम्।।5.2.78.१०।।
इत्युक्ता सा नृपतिना पित्रा प्रोक्ता पुनःपुनः ।।
रुरोद सा वै करुणं श्रुत्वा तां कुत्सितां गतिम् ।। ११ ।।
जहास चातिहासेन पुनः श्वासांश्च मुंचति ।।
प्रहर्षं च पुनः क्षिप्रं प्राप्य वाष्पं च मुंचति ।। १२ ।।
तामवस्थां गतां दृष्ट्वा पुत्री मुन्मत्ततां गताम्।।

किमेतदिति भूपालो ग्रसिता किं ग्रहेण वै ।। १३ ।।
भूतेन वा पिशाचेन मत्सुता लक्षणैर्युता ।।
इति चिन्तापरो राजा यदा जातो यशस्विनि ।। १४ ।।
तदा प्रोक्तस्तया पुत्र्या मा तात विमना भव ।।
नाहं ग्रस्ता ग्रहेणेह न भूतेन न रक्षसा ।। १५ ।।
न पिशाचेन यक्षेण तव कन्या महीपते ।।
जातिस्मराहमुत्पन्ना श्रूयतां मम जन्म च ।। १६ ।।
प्राग्ज्योतिषे पुरे विप्रो हरस्वामी बभूव ह ।।
भार्याहं दुर्भगा जाता तस्य विप्रस्य पार्थिव ।। १७ ।।
रूपयौवनसंपन्ना तस्य नाहं प्रिया विभो ।।
सदा विद्वेषसंयुक्तो मयि निष्ठुरजल्पकः ।। १८ ।।
नान्यस्य कस्यचिद्द्वेष्टा मुक्त्वा मां पृथिवीपते ।।
पाणिग्रहणकाले तु ग्रहैः पापैर्विलोकिता ।। १९ ।।
अहमूढां कुलीनेन द्विजेनातिगुणेन च ।।
स चावलोकितो विप्रो ग्रहैः पुण्यैर्नराधिप ।। 5.2.78.२० ।।
तेन मे वल्लभो राजन्न चाहं तस्य वल्लभा ।।
स सदाचारसंयुक्तो वेदाध्ययनतत्परः ।। २१ ।।
नान्यत्र कुरुते भावं ब्रह्मचर्यव्रते स्थितः ।।
ततोऽहं क्रोधसंयुक्ता वशीकरणलंपटा ।।
अपृच्छं प्रमदास्तात यास्त्यक्ताः पतिभिः किल ।। २२ ।।
ताभिरुक्ता ह्यहं भूप वश्यो भर्त्ता भविष्यति ।।
अस्माकं प्रत्ययो जातस्तस्मात्त्वं कर्तुमर्हसि ।। २३ ।।
भेषजैर्विविधैश्चूर्णैर्मंत्रैर्मोहकरैः परैः ।।
तैस्तैस्तु कृतलेपोऽपि भविता दासवत्पतिः ।। २४ ।।
ततोऽहं त्वरिता गत्वा तासां वाक्येन भूपते ।।
चूर्णं मन्त्रं गृहीत्वा च प्राप्ता भर्तृगृहं पुनः ।। २५ ।।
प्रदोषे पयसा युक्तश्चूर्णो भर्त्तरि योजितः ।।
ग्रीवायां च मया मन्त्रो न्यस्तः सर्वांगसंधिषु ।। २६ ।।
यदा पीतश्च चूर्णस्तु मन्त्रेणातीव गुंठितः ।।
वशगस्तत्क्षणाज्जातो मंत्रचूर्णप्रभावतः ।। २७ ।।
द्वारदेशे स्थितः क्रंदन्दासोऽस्मि तव शोभने ।।
त्राहि मां शरणं प्राप्तं त्वद्वशोहं च शोभने ।। २८ ।।

तत्तस्य रुदितं ज्ञात्वा मंत्रमाहात्म्यतो नृप ।।
स्वस्थीकरणयोगेन तदा स्वस्थः कृतः पतिः ।। २९ ।।
ततः प्रभृति कांतो मे वश्योऽभूद्भवने स्थितः ।।
पंचत्वं च गता काले तथा नारकयातनाम्।।5.2.78.३०।।
ताम्रभ्राष्ट्रे च दग्धाहं युगानि दश पंच च।।
सूक्ष्माणि तिलमात्राणि कृत्वा खंडान्यनेकशः।।
छेदिता कालसूत्रेण पीडिता घ्राणयंत्रके।।३१।।
क्वाथीभूता तप्ततैलैर्घटे दर्व्याथ लोडिता।।
पिष्टा चैव शिलापृष्ठे कुट्टिता लोहमुद्गरैः।।३२।।
दलिता दंतदलने दग्धाहं रौरवे भृशम्।।
अधोमुखी विनिक्षिप्ता त्वमेध्ये पूयशोणिते ।। ३३ ।।
यान्यापि युवती तात भर्तुर्वश्यं समाचरेत् ।।
वृथा धर्मादुराचारा पच्यते नरके भृशम् ।।३४।।
भर्त्ता नाथो गुरुर्भर्ता भर्त्ता वै दैवतं परम् ।।
भर्त्ता स्वमी सुहृद्भर्त्ता भर्ता च परमं पदम् ।। ३५ ।।
तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ।।
विमुखे विमुखाः सर्वे तस्मात्सेव्यः सदा पतिः ।।
भस्मीभवति सा नारी यया भर्त्ता न तोषितः ।। ३६ ।।
यस्य प्रसादात्प्राप्यंते भोगाश्च विविधाः सदा ।।
तं वश्यं कुरुते या च सा कथं सुखमाप्नुयात् ।। ३७ ।।
तिर्यग्योनिशतं याति कृमिपक्षिशतानि च ।।
तस्मात्तत्सदा कार्यं स्त्रीभिर्भर्तृवचः किल ।। ३८ ।।
एवं पुनर्मया भुक्ता नरका भृशदारुणाः ।।
तिर्यग्योनिसहस्रं तु कर्मणा कुत्सितेन च ।। ।। ३९ ।।
किंचित्पातकशुद्ध्यर्थं चंडालस्य च वेश्मनि ।।
जाताहमतिरूपेण पीडिता विविधैर्व्रणैः।।5.2.78.४०।।
सारमेयैर्वृता दीना भक्ष्यमाणा पुनःपुनः ।।
दुष्टाहं भक्ष्यमाणापि मार्गे रुद्धा वृकैरहम् ।।
तैरहं तुद्यमानापि महाकालवनं गता ।।४१।।
दृष्टो मया महादेवो दैवतो मृगमाणया ।।
समीपे देवदेवस्य पिप्पलादेश्वरस्य च ।। ४२ ।।
तस्य दर्शनमात्रेण गता शक्रपुरं प्रति ।।

विमानेन सुदीप्तेन किंकिणीजालमालिना ।।
दिव्यांबरधरा दिव्या दिव्यमालाविभूषणा ।। ४३ ।।
तत्राहं पूजिता देवैः स्तुताहं चारणैस्तथा ।।
दर्शनात्तस्य लिंगस्य जाताहं तव वेश्मनि ।। ४४ ।।
वल्लभा रूपसंपन्ना शाकले नगरे शुभे ।।
स्मृत्वा तु कुत्सितां योनिं विलापश्च कृतो मया ।। ४५ ।।
स्मृत्वा लिंगस्य माहात्म्यं हर्षो जातस्तु तत्क्षणात् ।।
तन्मे नैव च वातूल्यं गृहीता न ग्रहेण च ।। ४६ ।।
जाता जातिस्मरा तात ब्रह्मचर्यव्रते स्थिता ।।
अतो यास्यामि तं देवं दर्शनार्थं पुनः प्रभो ।।
यथा न भूयो मे जन्म स्याच्च संसारसागरे ।। ४७ ।।
इति पुत्रीवचः श्रुत्वा चित्रसेनो महीपतिः ।।
सभृत्यमंत्रिसहितो महाकालवनं गतः ।। ४८ ।।
ददर्श तत्र तल्लिंगं पूजयामास भक्तितः ।।
सापि दृष्ट्वैव तल्लिंगं तस्मिंल्लिंगे लयं गता ।। ४९ ।।
राजा च पुत्रवाञ्जातो लिंगदर्शनतः प्रिये ।।
बभूव चक्रवर्ती स यथा स्वायंभुवो मनुः ।। 5.2.78.५० ।।
एतस्मिन्नंतरे देवि दृष्ट्वा देवे लयं गताम् ।।
राजपुत्रीं महादेवि कृतं नाम मुदान्वितैः ।। ५१ ।।
अविमुक्तस्य लिंगस्य दर्शनादेव तत्क्षणात् ।।
अविमुक्तेश्वरो देव इति ख्यातो भवत्विति ।।५२।।
योऽसौ काश्यां प्रसिद्धोऽस्ति देवो विश्वेश्वरः शिवः ।।
स चैवात्र सुविख्यातोऽविमुक्तेश्वरसंज्ञया ।। ५३ ।।
वाराणसी यथा पुण्या तथावंती च मुक्तिदा ।।
तस्या दशगुणं पुण्यं श्रूयतेऽत्र विशेषतः ।। ५४ ।।
तस्माद्विश्वेश्वरो देवः समायातः कुशस्थलीम्।।
यत्रागत्य सुविद्वांसो मानवाः शंसितव्रताः ।।५५।।
पश्यंति परया भक्त्या ह्यविमुक्तेश्वरं शिवम् ।।
तेषां मुक्तिर्न संदेहो भविष्यति सुनिश्चला ।। ५६ ।।
अमुक्ता नैव पश्यंति मुक्ताः पश्यंति सर्वदा ।।
ब्रह्मचर्यव्रतैः सम्यगिष्टैः सर्वमखैर्भवेत् ।। ५७ ।।
तत्फलं प्राप्यते सम्यगविमुक्तेशदर्शनात् ।।

नैःश्रेयसी गतिः पुण्या दर्शनादेव जायते ।। ५८ ।।

या गतिः प्राप्यते सांख्यैयोगैर्वा या गतिर्भवेत् ।।

सा गतिः नाप्यते सम्यगविमुक्तेशदर्शनात् ।। ५९ ।।

जन्ममृत्युभयं हित्वा स याति परमां गतिम् ।।

यः पूजयति भावेन ह्यविमुक्तेश्वरं शिवम् ।। ।। 5.2.78.६० ।।

ब्रह्महापि च यो गच्छेदविमुक्तेश्वरं यजेत् ।।

तस्य लिंगस्य माहात्म्यात्सर्व्वपापान्निवर्त्तते ।। ६१ ।।

शाठ्येनापि च यः पश्येदविमुक्ते श्वरं शिवम्।।

स मुंचति जरां मृत्युं जन्म चैतदशाश्वतम् ।। ६२ ।।

स्मृतः संपूजितो भक्त्या स्तुतो वा विविधैः स्तवैः ।।

मुक्तिं ददाति देवेशो ह्यवि मुक्तेश्वरः शिवः ।। ६३ ।।

एष ते कथितो देवि प्रभावः पापनाशनः ।।

अविमुक्तेश्वरेशस्य हनुमत्केश्वरं शृणु ।। ६४ ।।

इति श्रीस्कांदे महापुराण

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ७९



।। श्रीमहादेव उवाच ।। ।।

एकोनाशीतिकं विद्धि हनुमत्केश्वरं प्रिये ।।

यस्य दर्शनमात्रेण समीहितफलं लभेत् ।। १ ।।

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते ।।

आगता मुनयो देवि राघवं प्रतिनंदितुम् ।। २ ।।

रामेण पूजिताः सर्वे ह्यगस्तिप्रमुखा द्विजाः ।।

प्रहृष्टमनसो विप्रा रामं वचनमब्रुवन् ।। ३ ।।

दिष्ट्या तु निहतो राम रावणः पुत्रपौत्रवान् ।।

दिष्ट्या विजयिनं त्वाऽद्य पश्यामः सह भार्यया ।। ४ ।।

हनूमता च सहितं वानरेण महात्मना ।।

दिष्ट्या पवनपुत्रेण राक्षसांतकरेण च ।। ५ ।।

चिरं जीवतु दीर्घायुर्वानरो हनुमान्सदा ।।

अंजनीगर्भसंभूतो रुद्रांशो हि धरातले ।। ६ ।।

आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ।।

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।।

ब्रह्मणा सहिताश्चैव दिक्पालाः पातु सर्वदा ।। ७ ।।

श्रुत्वा तेषां तु वचनं मुनीनां भावितात्मनाम् ।।

विस्मयं परमं गत्वा रामः प्रांजलिरब्रवीत् ।। ८ ।।

किमर्थं लक्ष्मणं त्यक्त्वा वानरोऽयं प्रशंसितः ।।

कीदृशः किंप्रभावो वा किंवीर्यः किंपराक्रमः ।। ९ ।।

अथोचुः सत्यमेवैतत्कारणं वानरोत्तमे ।।

न त्वस्य सदृशो वीर्ये विद्यते भुवनत्रये ।। 5.2.79.१० ।।

एष देव महाप्राज्ञो योजनानां शतं प्लुतः ।।

धर्षयित्वा पुरीं लंकां रावणांतःपुरं गतः ।। ११ ।।

प्रादेशमात्रप्रतिमं कृतं रूपमनेन वै ।।

दृष्टा संभाषिता सीता पृष्टा विश्वासिता तथा ।। १२ ।।

सेनाग्रगा मंत्रिपुत्राः किंकरा रावणात्मजाः ।।

हता हनुमता तत्र ताडिता रावणालये ।। १३ ।।
भूयो बन्धविमुक्तेन संभाष्य तु दशाननम् ।।
लंका भस्मीकृता तेन पातकेनेव मेदिनी ।। १४ ।।
न कालस्य न शक्रस्य न विष्णोर्वेधसोऽपि वा ।।
श्रूयंते तानि कर्माणि यादृशानि हनूमतः ।। १५ ।। ।।।
।। राम उवाच ।। ।।
एतस्य बाहुवीर्येण लंका सीता च लक्ष्मणः ।।
प्राप्तो मम जयश्चैव राज्यं मित्राणि बान्धवाः ।। १६ ।।
सखायं वानरपतिर्मुक्त्वैनं हरिपुंगवम् ।।
प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान्भवेत् ।। १७ ।।
वाली किमर्थमेतेन सुग्रीवप्रियकाम्यया ।।
तदा वैरे समुत्पन्ने न दग्धस्तृणवत्कथम् ।। १८ ।।
नायं विदितवान्मन्ये हनुमानात्मनो बलम् ।।
उपेक्षितः क्लिश्यिमाने किमर्थं वानराधिपे ।। १९ ।।
एवं ब्रुवाणं रामं तु मुनयो वाक्यमब्रुवन् ।।
सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः ।। 5.2.79.२० ।।
न बले विद्यते तुल्यो न गतौ न मतावपि ।।
अमोघवाक्यैः शापस्तु दत्तोऽस्य मुनिभिः पुरा ।। २१ ।।
न ज्ञातं हि बलं येन बलिना वालिमर्दने ।।
बाल्येऽप्यनेन यत्कर्म कृतं नाम महात्मना ।। २२ ।।
तन्न वर्णयितुं शक्यमेतस्य तु बलं महत् ।।
यदि श्रोतुं तवेच्छास्ति निशामय वदामहे ।। २३ ।।
असौ हि जातमात्रोऽपि बालार्क इव मूर्त्तिमान् ।।
ग्रहीतुकामो बालार्कं पुप्लावांबरमध्यतः ।। २४ ।।
तूर्णमाधावतो राम शक्रेण विदितात्मना ।।
हनुस्तेनास्य सहसा कुलिशेनैव ताडितः ।। २५ ।।
ततो गिरौ पपातैष शक्रवज्राभिताडितः ।।
पततोस्य महावेगाद्वामो हनुरभज्यत ।।
अस्मिंस्तु पतिते बाले मृतकल्पेऽशनिक्षतात् ।। २६ ।।
ततो वायुः समादाय महा कालवनं गतः ।।
लिंगमाराधयामास पुत्रार्थं पवनस्तदा ।। २७ ।।
स्पृष्टमात्रस्तु लिंगेन समुत्तस्थौ प्लवंगमः ।।

जलसिक्तं यथा सस्यं पुनर्जीवि तमाप्तवान् ।। २८ ।।
प्राणवंतमिमं दृष्ट्वा पवनो हर्षितस्तदा ।।
प्रत्युवाच प्रसन्नात्मा पुत्रमादाय सत्वरम् ।। २९ ।।
स्पर्शनादस्य लिंगस्य मम पुत्रः समुत्थितः ।।
हनुमत्केश्वरो देवो विख्यातोऽयं भविष्यति ।। 5.2.79.३० ।।
एतस्मिन्नंतरे शक्रः समायातः सुरैर्वृतः ।।
नीलोत्पलमयीं मालां संप्रगृह्येदमब्रवीत् ।। ३१ ।।
मत्करोत्सृष्टवज्रेण यस्मादस्यहनुर्हतः ।।
तदेष कपिशार्दूलो हनुमांस्तु भविष्यति ।। ३२ ।।
वरुणोऽस्व वरं प्रादान्नास्य मृत्युर्भविष्यति ।।
यमो दंडादवध्यत्वमारोग्यं धनदो ददौ ।। ३३ ।।
सूर्येण च प्रभा दत्ता पवनेन गतिर्द्रुता ।।
लिंगेन च वरो दत्तो देवानां संनिधौ तदा ।। ३४ ।।
आयुधानां हि सर्वेषामवध्योऽयं भविष्यति ।।
अजरश्चामरश्चैव भविष्यति न संशयः ।। ३५ ।।
अमित्रभयदो ह्येष मित्राणामभय प्रदः ।।
अजेयो भविता युद्धे लिंगेनोक्तं पुनःपुनः ।। ३६ ।।
शत्रोर्बलोत्सादनाय राघवप्रीतये सदा ।।
कियत्कालं बलं स्वीयं न स्मरिष्यति शापतः ।। ३७ ।।
हते तु रावणे भूयो रामस्यानुमते स्थितः ।।
विभीषणं प्रार्थयित्वा मामत्र स्थापयिष्यति ।। ३८ ।।
ततो मां त्रिदशाः सर्वे पूजयिष्यंति भाविताः ।।
तेनैव नाम्ना विख्यातिं पुनर्यास्यामि भूतले ।। ३९ ।।
अथ गंधवहः पुत्रं प्रगृह्य गृहमानयत् ।।
अंजनायै तदाचख्यौ वरलब्धिं च लिंगतः ।। 5.2.79.४० ।।
एवं लिंगप्रभावाच्च बलवान्मारुतात्मजः ।।
स जातस्त्रिषुलोकेषु राम तस्मात्प्रशस्यते ।। ४१ ।।
पराक्रमोत्साहमति प्रतापैः सौशील्यमाधुर्यनयादिकैश्च ।।
गांभीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकोऽस्ति लोके ।। ४२ ।।
ममेव विक्षोभितसागरस्य लोकान्दि धक्षोरिव पावकस्य ।।
प्रजा जिहीर्षोरिव चातकस्य हनूमतः स्थास्यति कः पुरस्तात् ।। ४३ ।।
एतद्वै कथित तुभ्यं यन्मां त्वं परि पृच्छसि ।।

हनूमतोऽस्य बालस्य कर्माण्यद्भुतविक्रम ।। ४४ ।।
दृष्टः सभाजितश्चापि राम गच्छामहे वयम् ।।
एवमुक्त्वा गताः सर्वे मुनयोऽवंतिमण्डलम् ।।
पूजयामासुरीशानं हनुमत्केश्वरं शिवम् ।। ।।
समर्चयंति ये भक्त्या लिंगं त्रिदशपूजितम् ।।
हनुमत्केश्वरं देवं ते कृतार्थाः कलौ युगे ।। ४६ ।।
व्रजंत्येव सुदुष्प्राप्यं ब्रह्मसायुज्यमव्ययम्।
संप्राप्य तु पुनर्जन्म लभंते मोक्षमव्ययम् ।। ४७ ।।
यः पश्यति नरो लिंगं हनुमत्केश्वरे प्रिय ।।
सोऽधिकं फलमाप्नोति सर्वदुःखविवर्जितः ।। ४८ ।।
सर्वलोकेषु तस्यैव गतिर्न प्रतिहन्यते ।।
दिव्येनैश्वर्ययोगेन युज्यते नात्र संशयः ।। ४९ ।।
बालसूर्यप्रतीकाशविमानेन सुवर्चसा ।।
वृतः स्त्रीणां सहस्रैस्तु स्वच्छन्दगमनागमः ।। 5.2.79.५० ।।
विचरत्यविचारेण सर्वलोकान्दिवौकसाम् ।।
स्पृहणीयतमः पुंसां सर्ववर्णोत्तमोधुना ।। ५१ ।।
स्वर्गाच्च्युतः प्रजायेत कुले महति रूपवान् ।।
धर्मज्ञो रुद्रभक्तश्च सर्वविद्यार्थपारगः ।।५२।।
राजा वा राजतुल्यो वा दर्शनादस्य जायते ।।
स्पर्शनात्परमं पुण्यं यजनात्परमं पदम् ।।५३।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
हनुमत्केश्वरेशस्य स्वप्नेश्वरमथो शृणु ।। ५४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे चतुरशीतिलिंगमाहात्म्य उमामहेश्वरसंवादे हनुमत्केश्वरमाहात्म्यवर्णनंनामैकोनाशीतितमोऽध्यायः ।। ७९ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ८०



।। ईश्वर उवाच ।।

आशीतिकं विजानीहि देवं स्वप्नेश्वरं प्रिये ।।

यस्य दर्शनमात्रेण दुःस्वप्नं नश्यति ध्रुवम् ।। १ ।।

कल्माषपादेति ख्यातो लोके राजा बभूव ह ।।

इक्ष्वाकुवंशजो देवि तेजसा सूर्यवद्भुवि ।। २ ।।

स कदाचिद्वने राजा वशिष्ठसुतमौरसम् ।।

शक्तिं परमधर्मज्ञं ददर्श विजितेंद्रियम् ।।

मार्गस्थितं तपोनिष्ठमपगच्छेति चाब्रवीत् ।। ३ ।।

अमुंचंतं तु पंथानं तमृषिं नृपसत्तमः ।।

जघान कशया मोहात्तदा राक्षसवन्मुनिम् ।। ४ ।।

कशाप्रहाराभिहतस्ततः स मुनिपुंगवः ।।

तं शशाप रुषाविष्टो वाशिष्ठः क्रोधमूर्छितः ।। ५ ।।

हंसि राक्षसवद्यस्माद्राजापसद तापसम् ।।

तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यति।।६।।

सततं पिशितासक्तश्चरिष्यसि महीमिमाम्।।

स तु शप्तस्तदा तेन तत्क्षणाद्वै नृपोत्तमः ।।७।।

जगाम शरणं शक्तिं प्रसादयितुम हेयत्।।

यदा न तुष्टो विप्रर्षिः शक्तिः परमकोपनः ।।

प्रसाद्यमानो भूपेन तदा तेनापि भक्षितः ।। ८ ।।

शक्तिं तं भक्षयित्वा तु वशिष्ठस्यापरान्तु तान् ।।

भक्षयामास सहसा सिंहः क्षुद्रमृगानिव ।। ९ ।।

तदाप्रभृति संजातः पुरुषादो नृपोत्तमः ।।

रात्रौ पश्यति दुःस्वप्नान्पापसंघेन मोहितः ।। ।। 5.2.80.१० ।।

दृष्ट्वा भयानकान्स्वप्नान्स राजा पर्य्यतप्यत ।।

पश्चात्तापेन संयुक्तो विललाप सुदुःखितः ।। ११ ।।

अथाप्युक्तममात्यैश्च किं करोषि महीपते ।।

कस्मात्ते निष्प्रभा कांतिर्विवर्णो हरिणः कृशः ।। १२ ।।

स राजा कथयामास दुःस्वप्नाननुपूर्वशः ।।
स्वप्नेऽहं सागरं शुष्कं चन्द्रं च पतितं भुवि ।। १३ ।।
उपरुद्धां च जगतीं घनेन तमसा वृताम्।।
आत्मानं चाहमद्राक्षं मलिनं मुक्तमूर्द्धजम् ।। १४ ।।
पतंतमद्रिशिखरात्कलुषे गोमये ह्रदे ।।
पिबन्नंजलिना तैलं हसन्निव मुहुर्मुहुः ।। १५ ।।
तैलेनाभ्यक्तसर्वांगस्तैलमेवावगाहयन् ।।
पीठे कार्ष्णायसे चैव निषण्णोऽहमधो मुखः ।। १६ ।।
गायंति प्रमदा रक्ता रक्तमाल्यानुलेपनाः ।।
कृष्णांबरधराश्चान्याः कृष्णमाल्यानुलेपनाः ।। १७ ।।
ताभिराकृष्यमाणोऽपि नीतोऽहं दक्षिणां दिशम् ।।
बद्ध्वा रज्ज्वा सुवर्णस्य लोहस्य रजतस्य च ।। १८ ।।
पांसुकर्दमयोर्मध्ये मग्नोहं लोहयंत्रितः ।।
कपोतैस्तुद्यमानोऽहं गृध्रैः काकैश्च दारुणैः ।। १९ ।।
सृगालैर्भक्ष्यमाणश्च स्थितो मद्गुरमस्तके ।।
ऋक्षवानरयानस्थो गतोऽहं दक्षिणां दिशम् ।। 5.2.80.२० ।।
नदीं निमग्नो निश्चेष्टो जलहीनां महीसमाम्।।
दंतैर्विदारितो रात्रौ रासभेनाहमर्द्दितः ।। २१ ।।
ताडितो हदयेत्यर्थं चरणैर्वज्रसंनिभैः ।।
दृष्टिश्च हन्यतेऽत्यर्थं वेतालैर्लोहशं कुभिः ।।२२।।
करालैः कंटकैः कृष्णैः पुरुषैरुद्यतायुधैः।।
स्वप्नेहं ताडितोत्यर्थमप्रमाणैः शितैः शरैः ।।२३।।
एवमेतन्मया दृष्टमिमांरात्रिं भयावहाम्।।
संख्यां कर्तुं न शक्येत दुःस्वप्नानपरान्बहून् ।।२४।।
इमां तु दुःस्वप्नगतिं निरीक्ष्य वै ह्यनेकरूपामविचिंतितां पुरा ।।
भयं महन्मे हृदयं न शुद्ध्यति प्रगृह्य बाहू विलपाम्यनाथवत् ।। २५ ।।
नृपस्य वचनं श्रुत्वा अमात्या भृशदुःखिताः ।।
पश्यंतो दुर्निमित्ताश्च उल्कापातादिकास्तदा ।। २६ ।।
सौरि सूर्यकुजाक्रांतं नगरं दृश्यतेऽधुना।।
नागं चतुष्पदं विष्टिं किंस्तुघ्नं शकुनिं तथा ।।२७।।
करणानि न शस्यंते मुहूर्त्ता दारुणाभवन् ।।
विदित्वा नृपभंगं तु देशभंगकुलक्षयम्।।२८।।

आश्वासयंतो राजानमिदं वचनमब्रुवन् ।।
अलं शोकेन काकुत्स्थ सत्यासत्या हि विभ्रमाः ।।२९।।
दृश्यंते भाविताः पुंसि स्वप्ने धातुवशेन हि ।।
तथा पित्रादिदेवांश्च पूजय ब्राह्मणांस्तथा ।। 5.2.80.३० ।।
एभिस्ततो मोक्ष्यसे त्वं मानसादधिविभ्रमात् ।।
यस्माद्दैवोपघातानां दैवमेव हि रक्षणम्।।३१।।
एवमाश्वासितो भूपो ह्यमात्यैर्धर्मकोविदैः ।।
तत्पापं कथयामास गुरुपुत्रवधादिकम् ।।३२।।
वशिष्ठस्य सुतो ज्येष्ठः शक्ति वै भक्षितो मया ।।
नृशंसेन तथामात्या एकोनं भक्षितं शतम् ।। ३३ ।।
तेन पापेन संतप्तः कथं स्वस्थो भवामि वै ।।
एकापि ब्रह्महत्याया सापि दैवात्सुदुष्करा ।। ३४ ।।
मया पुनर्नृशंसेन सा तथा न तु वर्जिता ।।
कांस्तु लोकान्गमिष्यामि कृत्वा कर्म सुदारुणम् ।।
राक्षसोऽहमनेनैव शरीरेण कुलांतकृत्।। ३५ ।।
जातः कुले रघूणां वै पापात्मा पापसंभवः ।।
सोऽहमत्र मरिष्यामि साधयित्वा हुताशनम् ।। ३६ ।।
इति तस्य वचः श्रुत्वा सौदासस्य सुविस्मिताः ।।
अमात्या वेदतत्त्वज्ञाः सर्वशास्त्रविशारदाः ।। ३७।।
अहो पापमिदं भूरि कृतं पापेन सर्वथा ।।
प्रायश्चित्तं न जानीमो वशिष्ठेन विनाऽधुना ।। ३८ ।।
तस्मादद्यैव गंतव्यमस्य भूपस्य कारणात् ।।
यत्र तिष्ठति विप्रर्षिर्वशिष्ठो भगवान्मुनिः ।। ३९ ।।
इत्युक्त्वा सहितास्तेन तेऽमात्या भृशदुःखिताः ।।
गत्वा यत्राश्रमे विप्रो वशिष्ठो भगवानृषिः ।। 5.2.80.४० ।।
अदृश्यंतीं वधूं दीनां यत्राश्वासयति प्रभुः ।।
अदृश्यंती तु तं दृष्ट्वा कूरकर्माणमग्रतः ।।
भयसंविग्नया वाचा वशिष्ठमिदमब्रवीत् ।। ४१ ।।
असौ मृत्युरिवोग्रेण दण्डेन वहुगर्वितः ।।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति भीषणः ।।४२।।
तन्निवारयितुं शक्तो नान्यो वै भुवि कश्चन ।।
त्वामृतेऽद्य महाभाग सर्ववेदविदां वर ।। ४३ ।।

त्राहि मां भग वन्पापादस्माद्दारुणदर्शनात् ।।
राक्षसोऽयमिहागत्य नूनमावां समीहते ।। ४४ ।।
।। वशिष्ठ उवाच ।। ।।
मा भैः पुत्रि न भेतव्यं राक्षसात्ते कथंचन ।।
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम्।।
राजा कल्माषपादोऽयममात्यैः सहितो विभुः ।। ४५ ।।
स एषोऽस्मिन्वनोद्देशे समा यातो ममांतिकम् ।।
तमायांतमथालक्ष्य वशिष्ठो भगवानृषिः ।।
वारयामास तेजस्वी हुंकारेण नृपोत्तमम् ।।४६।।
मन्त्रपूतेन च ततः समभ्युक्ष्य च वारिणा ।।
मोक्षयामास वै भावाद्राक्षसाद्राजसत्तमम्।। ४७ ।।
प्रतिलभ्य ततः संज्ञामभिवाद्य कृतांजलिः।।
उवाच नृपतिः काले वशिष्ठमृषिसत्त मम् ।। ४८ ।।
सौदासोऽहं महाभाग दासोऽहं तव सुव्रत ।।
अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ।। ४९ ।।
तस्य तद्वचनं श्रुत्वा नृपस्य द्विजसत्तमः ।।
ज्ञात्वा तपोबलेनैव विश्वामित्रस्य चेष्टितम् ।।
राजानं प्रत्युवाचेदं विनयावनतं तथा ।। 5.2.80.५० ।।
ज्ञातमेव यथाकालं गच्छ राजन्कुश स्थलीम्।।
महाकालसमीपे तु लिंगं दुःस्वप्ननाशनम्।। ५१ ।।
राजसंपत्करं दिव्यं पुत्रपौत्रविवर्द्धनम् ।।
ब्रह्महत्यासहस्राणां स्फोटनं पापनाश नम् ।।
तस्य दर्शनमात्रेण विपाप्मा च भविष्यसि ।। ५२ ।।
दुःस्वप्नजं भयं घोरं विनंक्ष्यति न संशयः ।।
ग्रहाश्च सानुकूलास्ते भविष्यन्ति नृपो त्तम ।।५३।।
इत्युक्तो गुरुणा भूयो वशिष्ठेन महात्मना ।।
जगाम त्वरितो देवि महाकालवनं शुभम् ।।
ददर्श तत्र तल्लिंगं दुष्टदुःस्वप्ननाशनम् ।।५४।।
नष्टाः सर्वेपि दुःस्वप्नाः सुस्वप्नाश्चाभवंस्तदा ।।
राजा निष्कल्मषो भूत्वा पुनः प्राप्नोन्निजं पदम् ।।
अयोध्यायां गतो राज्यं चकार मुदितस्तदा ।। ।। ५५ ।।
तदाप्रभृति देवोऽयं सुस्वप्नेश्वरसंज्ञकः ।।

बभूव भुवने ख्यातः सर्वदुःस्वप्ननाशनः ।।५६।।
अष्टम्यां च चतुर्दश्यां देवं स्वप्नेश्वरं शिवम् ।।
दर्शनं ये करिष्यंति स्नात्वा शिप्राजले शुभे।।
आजन्मप्रभवं तेषां दुःस्वप्नं च विनश्यति।।५७।।
स एव सर्वदा पूज्य इह लोके परत्र च ।।
यः पश्यति नरो भक्त्या देवं स्वप्नेश्वरं शिवम् ।। ५८ ।।
यं यं काममभिध्याय मनसाभिमतं नरः ।।
तं तं दुर्ल्लभमाप्नोति सुस्वप्नेश्वरदर्शनात् ।। ५९ ।।
नियमेन प्रपश्यंति देवं स्वप्नेश्वरं सदा ।।
ते प्रयांति तनुं त्यक्त्वा मदीयं भवनं प्रिये ।। 5.2.80.६० ।।
भक्तिहीनः क्रियाहीनो यः पश्यति प्रसंगतः ।।
सुपुण्यां गतिमाप्नोति योगिगम्यां यशस्विनि ।। ६१ ।।
ये च पुष्पैर्विचित्रैश्च पूजयन्ति च पर्वसु ।।
ते सर्वकामसंपन्नाः श्रीबलारोग्यसंयुताः ।।
दीर्घायुषः शुभाचारा जायन्ते देहिनोऽमलाः ।। ६२ ।।
एते च ब्रह्मविष्णिवंद्रकुबेरदहनादयः ।।
सुस्वप्नं परमं प्राप्ताः श्रीस्वप्नेश्वरदर्शनात् ।।६३।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
स्वप्नेश्वरस्य देवस्य शृणु लिंगचतुष्टयम् ।। ६४ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे उमामहेश्वरसंवादे स्वप्नेश्वरमाहात्म्यवर्णनं नामाशीतितमोऽध्यायः ।। ८० ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ८१



।। ईश्वर उवाच ।। ।।
चतुर्द्वारस्थितं देवि शृणु लिंगचतुष्टयम् ।।
यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत् ।। १ ।।
अहं पृष्टस्त्वया देवि कौतुकाच्च वरानने ।।
अतीव रमणीयं च स्थलं दर्शय मे प्रभो ।। २ ।।
सेवितं बहुभिः सिद्धैः पुनरावृत्तिकांक्षिभिः ।।
यद्गुह्यं च पवित्रं च प्रलयेऽप्यविनाशि यत् ।। ३ ।।
अनन्यसदृशं दिव्यं यत्तीर्थं यत्तपोवनम् ।।
असंख्येयगुणोपेतं भुक्तिमुक्तिकरं शुभम् ।। ४ ।।
सुवर्णशृंगाः प्रासादा हर्म्याणि विविधानि च ।।
उद्यानानि विचित्राणि मार्गाश्च विविधाः शुभाः ।। ५ ।।
समीहितफलावाप्तिर्यत्र लभ्या सुखेन वै ।।
सिद्धचारणगन्धर्वकिंनरोद्गीतनादितम् ।। ६ ।।
पुण्यलोको पमस्थानं त्रिविष्टपविभूषणम् ।।
एवमभ्यर्थितो देवि मंदरे चारुकन्दरे ।। ८० ।।
मया प्रोक्तं प्रसन्नेन स्थानं शृणु सनातनम् ।।
महाकालवनं रम्यं स्वर्गात्सुखकरं परम् ।। ८ ।।
अनौपम्यगुणोपेतं भुक्तिमुक्तिकरं शुभम् ।।
तत्समः कोऽपि धन्योऽन्यो न दृष्टो भुवनत्रये ।। ९ ।।
देवगन्धर्व्वसिद्धैश्च सेव्यं वै मुक्तिकांक्षिभिः ।।
विनोदार्थं मया सृष्टं त्वत्प्रियार्थं कुतूहलात् ।। 5.2.81.१० ।।
तिलकं सर्वतीर्थानां जंबूद्वीपे मनोरमे ।।
इच्छाकामफलावाप्तिरनायासेन लभ्यते ।। ११ ।।
जरारोगभयैर्हीनं सर्वव्याधिविवर्जितम् ।।
शक्राग्नियमरक्षोंबुवायुसोमेशसेवितम् ।।
स्वर्गे प्रमुदिता देवास्तेऽपि कांक्षंति सर्वदा ।। १२ ।।
असंख्येयफलं त्वत्र अक्षया च गतिः सदा ।।

यैर्न संसेवितं स्थानं वंचितास्ते नरा भुवि ।। १३ ।।
क्षेत्रस्य च गुणान्वक्तुं देवदानवमानवैः ।।
न शक्यते प्रयत्नाच्च स्वयं यत्र स्थितो ह्यहम् ।। १४ ।।
यत्किंचिदशुभं कर्म कृतं मानुषकर्मणा ।।
महाकालवनं प्राप्य तत्सर्वं भस्मसाद्भवेत् ।। १५ ।।
न सा गतिः कुरुक्षेत्रे गंगाद्वारे त्रिपुष्करे ।।
या गतिर्विहिता पुंसां महाकालवने सदा ।। १६ ।।
तिर्यग्योनिगता गत्वा महाकालवने स्थिताः ।।
तत्रैव निधनं प्राप्तास्ते यांति परमां गतिम् ।। १७ ।।
मेरुमंदरमात्रोपि राशिः पापस्य कर्मणः।।
महाकालवनं प्राप्य सर्वोपि व्रजति क्षयम् ।। १८ ।।
श्मशानमिति चाख्यातं महाकालवनं प्रिये ।।
तत्र ब्रह्मादयो देवा नारायणपुरोगमाः ।। १९ ।।
योगिनश्च तथा सांख्याः सिद्धाश्च सनकादयः ।।
उपासते च मां भक्त्या मद्भक्त्या मत्परायणाः ।। 5.2.81.२० ।।
या गतिर्योगतपसां या गतिर्यज्ञयाजिनाम् ।।
महाकालवने क्षेत्रे सा गतिर्विहिता मया ।। २१ ।।
संहरामि च तत्रस्थस्त्रैलोक्यं सचराचरम् ।।
अतो देवि समाख्यातं महाकालवनं शुभम् ।। २२ ।।
एवं बहुविधाञ्छ्रुत्वा गुणान्बहुविधांस्तथा ।।
देवि त्वं विस्मिता जाता गमनाय मनो दधे ।। २३ ।।
क्षेत्रस्यालोकने चित्तं जातमुत्कंठितं तव ।।
त्वया सार्द्धं समा गत्य महाकालवने शुभे ।। २४ ।।
पश्य देवि विचित्राख्यं यन्मया कथितं तव ।।
अमरेशपुरस्पर्द्धि वर्द्धितानंदसुंदरम् ।।
वर्णितं यन्मया देवि भुक्ति मुक्तिकरं परम् ।। २५ ।।
त्वया प्रोक्तं विशालाक्षि दृष्ट्वा क्षेत्रमनुत्तमम् ।।
अस्य स्थानस्य रक्षार्थं भक्तं गणचतुष्टयम् ।।
नियुज्यतां महादेव संतोषाय मम प्रभो ।। २६ ।।
द्वाराणि तत्र चत्वारि क्रियतां परमेश्वर ।।
चत्वारः कलशाश्चैव हैमाः कार्या दृढाः शुभाः ।। २७ ।।
पूर्वादिक्रमयोगेन चतुर्वर्गो नियोज्यताम् ।।
धर्मश्चार्थश्च कामश्च मोक्षश्चैव महेश्वर ।। २८ ।।

त्वदीयं वचनं श्रुत्वा मया देवि प्रयत्नतः ।।
अस्य क्षेत्रस्य रक्षार्थं स्मृतं गणचतुष्ट यम् ।। २९ ।।
चत्वार ईश्वरास्तेऽपि स्थापितास्तदनंतरम् ।।
पिंगलेशो धनाध्यक्षस्तथा कायावरोहणः ।। 5.2.81.३० ।।
बिल्वेश्वरो गणश्रेष्ठो दुर्दर्शो गण नायकः ।।
एते मया नियुक्ता वै समर्थाः क्षेत्ररक्षणे ।। ३१ ।।
पूर्वादिक्रमयोगेन त्वत्प्रियार्थं वरानने ।।
नियुक्तास्त्वन्मतेनैव पूर्वस्यां दिशि पिंगलः ।। ।। ३२ ।।
दक्षिणस्यां दिशि तथा प्रिये कायावरोहणः ।।
बिल्वेश्वरः प्रतीच्यां तु दुर्द्दर्शश्चोत्तरे तथा ।। ३३ ।।
मानवा ये म्रियंतेऽत्र क्षेत्रमध्ये गणो त्तमाः ।।
तेषां रक्षा परा कार्या भवद्भिर्मम शासनात्।।३४।।
कथां शृणु प्रयत्नेन पिंगलेश्वरसंभवाम् ।।
यस्याः श्रवणमात्रेण कृतकृत्यो नरो भवेत् ।। ।।। ३५ ।।
पिंगला कन्यका देवि कान्यकुब्जे बभूव ह ।।
सुशीला च सुवेषा च सौंदर्येणातिनिर्मिता ।।३६।।
पिता तस्या महाप्राज्ञः सर्वशास्त्रार्थतत्त्व वित् ।।
ज्ञानध्यानरतश्चैव स्वाध्यायपरिनिष्ठितः ।। ३७।।
पिंगलोनाम विप्रेंद्रो भार्या तस्य पतिव्रता ।।
पिंगाक्षी विश्रुता लोके सा च पंचत्वमा गता ।। ३८ ।।
ततस्तेन स दुःखेन गृहस्थाश्रमनिःस्पृहः ।।
तपोवनं जगामाथ गृहीत्वा तनयां स्वकाम् ।। ३९ ।।
ऋषिभिः सेवितं पुण्यं शाकमूल फलाशनैः।।
स तत्र मुनिभिः सार्द्धं ध्यानयोगपरायणः ।। 5.2.81.४० ।।
निवासं कृतवान्देवि पिंगलायाश्च रक्षणम् ।।
पालयामास धर्मात्मा पुत्रिकां हृदयोपमाम् ।। ४१ ।।
तामेव सततं साध्वी मन्यमानो महातपाः ।।
न पाणिं ग्राहयामास मातृहीनेति चिंतयन् ।। ४२ ।।
विरक्तोऽपि महाभाग संसारा त्सर्वधर्म्मवित् ।।
पुत्रिकां प्रेक्षयन्सम्यक्संन्यासं नाकरोद्वशी ।। ४३ ।।
अथ संरक्षयन्बालां मातृहीनां तपस्विनीम् ।।
संयुक्तः कालधर्मेण स विप्रः स्वर्जगाम ह ।।४४ ।।
ततः सा पिंगला दीना हीना पित्रा सुदुःखिता।।

विललापातुरा देवि पतिता शोकसागरे ।। ४५ ।।
पिंगलोवाच ।। ।।
अद्य मे च पिता दैवात्कालधर्ममुपेयिवान् ।।
मां त्यक्त्वा गतवानेको दयालुर्निःस्पृहो यथा ।।४६।।
स समः सर्वभूतेषु ममात्यंतं हिते रतः ।।
मामेकां संपरित्यज्य परलोकमितो गतः ।। ४७ ।।
साऽहं परमदुःखार्ता पितृशोकेन विह्वला ।।
शरीरं धारयामीदं कृपणं व्यर्थजीवितम् ।। ४८ ।।
ब्रह्मज्ञोपि हि तातो मे शांतो दांतो जितेंद्रियः ।।
मामेव पालयामास मातृहीनेति चिंतयन् ।। ४९ ।।
येन संरक्षिता बाल्ये येनास्मि परिवर्धिता ।।
तेन पित्रा वियुक्ताहं न जीविष्ये कदाचन ।। 5.2.81.५० ।।
नद्यां वा निपतिष्यामि समिद्धे वा हुताशने ।।
पर्वताद्वा पतिष्यामि पितृहीना निराश्रया ।। ५१ ।।
इति शोकातुरा बाला विलपंती पुनःपुनः ।।
बोध्यमाना महाभागैः सदारैर्ऋषिसत्तमैः ।।५२।।
कन्यकाभी रुदंतीभिर्वयस्याभिः समंततः।।
आलिंग्यालिंग्य बहुशः पीड्यमाना सुदुःखिता ।।
आगत्य करुणाविष्टो धर्मः परहिते रतः ।। ५३ ।।
स्थविरो ब्राह्मणो भूत्वा प्रोवाचेदं वचस्तदा ।।
अलं बाले विशालाक्षि रोदनैरतिदारुणैः ।।
न भूयः प्राप्यते तातस्तस्मान्नार्हसि शोचितुम् ।। ५४ ।।
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।।
प्रियैः सह च संवासस्तन्न शोचन्ति पंडिताः ।। ५५ ।।
त्वया वै तत्कृतं कर्म पूर्वजन्मनि शोभने ।।
येन पित्रा वियोगः स्यादरण्ये मुनिसेविते ।। ५६ ।।
त्वां विहाय गतः क्वापि पश्य बाले विधेर्बलम् ।।
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।। ५७ ।।
एवमीहा समासक्तं मृत्युः प्रकुरुते वशे ।।
तस्माद्दुःखं समुत्सृज्य श्रोतुमर्हसि शोभने ।। ५८ ।।
पितृभ्यां च वियोगश्च येनाभूत्तव कर्मणा ।।
पुरा त्वं सुन्दरी नाम वेश्यारूपेण सुन्दरी ।। ५९ ।।
नृत्यगेयादि निपुणा वीणावेणुविचक्षणा।।

आदिश्च पण्यनारीणां भूषणाच्छादनादिभिः ।।5.2.81.६०।।
तां दृष्ट्वा रूपसंपन्नां सुवेषां सुविभूषिताम् ।।
ब्राह्मणो गुणवान्क श्चिद्बभूव मदनातुरः ।। ६१ ।।
तं विदित्वा तथाभूतं ब्राह्मणं मदनातुरम् ।।
समाश्वतस्त्रस्तेन त्वं रमिता कामिना ततः ।। ६२ ।।
सोऽथ पापरतिर्मूढो ब्राह्मणो विषयात्मकः ।।
हतः शूद्रेण केनापि कामिना तव वेश्मनि ।। ६३ ।।
विहाय भार्यामप्रौढां शुभां द्वादशवार्षिकीम् ।।
प्रयातो नरकं घोरं शूद्रासंपर्कदूषितः ।।६४।।
ततस्तस्य पिता विद्वान्मातातीव च दुःखिता ।।
आर्त्ता पुत्रवियोगेन शापो दत्तो भयावहः ।। ६५ ।।
।। मातोवाच ।। ।।
औषधादि प्रयुक्तं च वशीकर्तुं ममात्मजम् ।।
यदस्माकं वियोगाय वंचितो दुष्टचारिणि ।। ६६ ।।
यस्माच्च मम पुत्रेण सा वियोगमकारयत् ।।
तेन जन्मांतरे दीना पतिहीना भवत्वसौ ।। ६७ ।।
।। पितोवाच ।। ।।
बाल्ये वयसि वर्त्तंती मातृहीना सुदुःखिता ।।
बहिष्कृता विवाहेन पितृहीना भविष्यसि ।। ६८ ।।
।। धर्म्म उवाच ।। ।।
तस्मात्पूर्वकृतेनैव कर्मणा वरवर्णिनि ।।
इदं दुःखमनुप्राप्ता कन्यका भवती सती ।। ।। ६९ ।।
।। पिंगलोवाच ।। ।।
त्वया जन्मांतरे वृत्तं मम प्रोक्तं द्विजोत्तम ।।
तस्माद्ब्रूहि भवन्प्रश्नं पृच्छंत्या निश्चयं स्वकम् ।। 5.2.81.७० ।।
इत्थं सुघोरपापाहं पापाचारा तथाऽधमा ।।
कथं तु ब्राह्मणेनाहमुत्पन्ना ब्रह्मवादिना ।। ७१ ।।
दशसूनासमश्चक्री दशचक्रिसमो ध्वजः ।।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ।।७२।।
एवं वदंति धर्मज्ञा ब्राह्मणाः संशितव्रताः ।।
तस्माद्द्विजोत्तमादस्मात्कथं जन्माभवन्मम ।।७३।।
।। ब्राह्मण उवाच ।। ।।
पापाचारपरापि त्वं ब्राह्मणानां कुले शुभे ।।

उत्पन्ना तत्र वक्ष्यामि कारणं शृणु पिंगले ।। ७४ ।।
ब्राह्मणो विषयासक्तः कश्चिद्बद्धो नृपाज्ञया ।।
चौर्यं कर्म कृतं तेन वेश्यालुब्धेन सुन्दरि ।। ७५ ।।
मुच्यतां च त्वयाप्युक्तं न चौरो नैव पातकम् ।।
यद्यनेन कृतं चौर्यं तन्मयैव कृतं भवेत् ।। ।। ७६ ।।
ददामि वित्तमधिकं मुच्यतां द्विजसत्तमः ।।
इत्युक्त्वा गृहमानीय तेनैव सहिता पुनः ।। ७७ ।।
गृहं च कल्पितं शुभ्रं पुष्पधूपादिवा सितम् ।।
रमितश्च त्वया विप्रो यथासुखमनुत्तमम् ।। ७८ ।।
तस्य पुण्यस्य माहात्म्याद्गता स्वर्गमनुत्तमम् ।।
समुत्पन्ना कुले पुत्री ब्राह्मणस्य विशेषतः ।। ७९ ।।
शापाच्चैव वियोगं त्वं प्राप्ता पुत्र्यधुना परम् ।। 5.2.81.८० ।।
।। पिंगलोवाच ।। ।।
पूर्वजन्मनि वेश्याहं जाता दुष्कृतकारिणी ।।
परद्रव्यपरा दुष्टा शौचाचारविवर्जिता ।।
इदानीं दुःखिता जाता पितृमातृवियोगतः ।। ८१ ।।
पाणिग्रहणधर्मेण वर्जिता शापतः प्रभो ।।
प्रसादं कुरु मे विप्र को भवान्कथयस्व मे ।। ८२ ।।
कथं जन्म न मे भूयात्कथं मुक्तिर्भवेन्मम ।।
भवबन्धविनिर्मुक्ता कथं यास्यामि सद्गतिम् ।। ।। ८३ ।।
।। विप्र उवाच ।। ।।
धर्मोहं द्विजरूपेण त्वां जिज्ञासुरिहागतः ।।
ममोपदेशात्तन्वंगि लिंगस्यैकस्य दर्शनात् ।।
क्षेत्रस्य च प्रसादात्त्वं परां मुक्तिमवाप्स्यसि ।। ८४ ।।
।। पिंगलोवाच ।। ।।
कस्मिन्क्षेत्रे परा मुक्तिः कस्य लिंगस्य दर्शनात् ।।
लभ्यते सहसा धर्म एतदिच्छामि वेदितुम् ।। ८५ ।।
।। धर्म उवाच ।। ।।
अस्ति गुप्ततमं क्षेत्रं महाकालवनं शुभम् ।।
सर्वेषामेव जंतूनां हेतुर्मोक्षस्य सर्वदा ।। ८६ ।।
तस्मिन्क्षेत्रवरे पुण्ये स्थाने योजनविस्तृते ।।
लिंगं मोक्षप्रदं पुत्रि पूर्वस्यां दिशि संस्थितम् ।।
तस्य दर्शनमात्रेण मुक्तिमाप्स्यसि पिंगले ।। ८७ ।।

तस्य तद्वचनं श्रुत्वा धर्मस्य च यशस्विनि ।।
जगाम पिंगला तूर्णं यत्र तल्लिंगमुत्तमम् ।।
ददर्श परया भक्त्या पस्पर्श च पुनःपुनः ।। ८८ ।।
दर्शनात्तस्य लिंगस्य तस्मिंल्लिंगे लयं गता ।।
अत्र चावसरे देवाः प्रोचुस्तत्रैव संस्थिताः ।। ८९ ।।
अन्यजन्मनि पापिष्ठा मुक्ता त्वं पिंगलेक्षणा ।। 5.2.81.९० ।।
अतो लोकेषु विख्यातः पिंगलेश्वरसंज्ञकः ।।
भविष्यति न संदेहो महापातकनाशनः ।। ९१ ।।
दिशि पश्यंति ये गत्वा पूर्वस्यां पिंगलेश्वरम् ।।
तेषां शतक्रतुस्तुष्टः पूजां सम्यग्विधास्यति ।। ९२ ।।
देवा वश्या भविष्यंति स्वर्गस्तेषां न संशयः ।।
भविष्यति च वशगा नगरी चामरावती ।। ९३ ।।
धर्मो धनेन सहितः कुले तेषां न नश्यति ।।
लोको धर्मेण चरतां वशगः संभ विष्यति ।।
पितॄणामक्षया तृप्तिर्भविष्यति न संशयः ।। ९४ ।।
अश्वमेधसहस्रेण यत्पुण्यं समुदाहृतम् ।।
तत्सर्वं भविता सम्य क्पिंगलेश्वरदर्शनात् ।। ९५ ।।
यानि लिंगानि क्षेत्रेऽस्मिन्गोप्यानि प्रकटानि च ।।
पूजितानि भवंतीह पिंगलेश्वरदर्शनात् ।। ९६ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
पिंगलेश्वरदेवस्य शृणु कायावरोहणम् ।। ९७ ।।
इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये पिंगलेश्वरमाहात्म्यवर्णनंनामैकाशीतितमोऽध्यायः ।। ८१ ।। ।। छ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ८२



।। महादेव उवाच ।। ।।

कायावरोहणस्यापि उत्पत्तिं शृणु पार्वति ।।

यस्याः श्रवणमात्रेण न नरः कायवान्भवेत् ।। १ ।।

ब्रह्मणः सृष्टिकामस्य मनोर्वैवस्वतेंऽतरे ।।

दक्षस्त्व जायतांगुष्ठाद्दक्षिणात्स प्रजापतिः ।। २ ।।

वामादजायतांगुष्ठाद्भार्या तस्य महात्मनः ।।

तस्यां पञ्चाशतं कन्याः स एवाजनयत्प्रभुः ।। ३ ।।

ताः सर्वाश्चानवद्यांगीः कन्याः कमललोचनाः ।।

पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ।। ४ ।।

ददौ स दश धर्माय कश्यपाय त्रयोदश ।।

दिव्येन विधिना देवि सप्तविंशतिमिंदवे ।। ५ ।।

रोहिणी वल्लभा जाता तस्य चन्द्रस्य सर्वदा ।।

षड्विंशतिकृते चन्द्रः शप्तो दक्षेण पार्वति ।। ६ ।।

चंद्रेणापि तथा शप्तो दक्षः प्राचेतसः कृतः ।।

अयजत्सोऽश्वमेधेन भूत्वा प्राचेतसात्मजः ।। ७ ।।

नामंत्रितोऽहं मोहेन दक्षेण पर्वतात्मजे ।।

तत्र देवनिकायानां यज्ञभागानशेषतः ।। ८ ।।

हव्यवाहस्तदा युक्तो वहन्मंत्रैः समीरितः ।।

त्वया दृष्टो विशालाक्षि निरालंबेंऽबरे स्थितः ।। ९ ।।

स्मरंत्या पूर्ववैरं तु विज्ञप्तोऽहं त्वया प्रिये ।।

त्वं देवः सर्वदेवानां गतिश्च शरणं तथा ।। ५.२.८२.१० ।।

त्वं यज्ञस्त्वं वषट्कारो होताऽध्वर्युस्त्वमेव च ।।

त्वया विना कथं यज्ञो वर्त्तते सर्वदेवप ।। ११ ।।

देवानां भागधेयानि वहत्यग्निरयं भयात् ।।

सगर्वश्चावलिप्तश्च दक्षः प्राचेतसः किल ।। १२ ।।

अनुस्मरन्पूर्ववैरं नैव दास्यत्यशासितः ।।

कायहीनश्च कर्त्तव्यो दक्षो वह्निस्तथैव च ।। १३ ।।

ये च यज्ञे समानीता देवा दक्षस्य शंकर ।।
ते सर्वे कायरहिताः कार्या स्त्रिपुरसूदन ।। १४ ।।
एवमुक्ते त्वया देवि मयाप्युक्तं वरानने ।।
पूर्वजन्मनि दक्षोऽयं पिता तव शुचिस्मिते ।। १५ ।।
वह्निश्चादेशकारी च देवाः क्रीडनकाः प्रिये ।।
मदीयं वचनं श्रुत्वा कृतः क्रोधस्त्वया प्रिये ।। १६ ।।
ललाटे भ्रुकुटीं कृत्वा प्रोच्छ्वसंत्या पुनःपुनः ।।
क्रोधात्करेण नासाग्रं मर्दितं बहुशस्तदा ।। १७ ।।
तस्मिन्संमर्द्यमाने तु नासाग्रे पर्वतात्मजे ।।
जाता स्त्री भ्रुकुटीवक्रा चतुर्दंष्ट्रा त्रिलोचना ।। १८ ।।
बद्धगोधांगुलित्रा च कवचाबद्धमेखला ।।
सखड्गा सधनुष्का च सतूणा सपताकिनी ।। १९ ।।
सहस्रास्या शतभुजा सहस्रचरणोदरी ।।
प्रतिकूलैः पदैर्देवि कंपयंती तथा भुवम् ।। ५.२.८२.२० ।।
कृतं नाम त्वया देवि तां दृष्ट्वा च तमोमयीम् ।।
भद्रकाली च माया च सर्वलोकनमस्कृते ।। २१ ।।
मया सृष्टस्तु पुरुषस्तादृशो लोमहर्षणः ।।
स चापि प्रांजलिर्भूत्वा मामुवाच पुनःपुनः।।
आज्ञापय सुरेशान किं करोमि जगत्प्रभो ।।२२।।
ततो देवि मयाज्ञप्तो भावं ज्ञात्वा त्वदीयकम् ।।
कृत्वा नाम मनोज्ञं तु वीरभद्र इति स्मृतः ।। २३ ।।
वीरभद्र ममादेशाद्भद्रकाल्या सहानया ।।
प्राचेतसात्मजं दक्षं सगर्वं सहदैवतम् ।। २४ ।।
विध्वंसय गणाध्यक्ष सयज्ञं सपरिग्रहम् ।।
दत्तं मया महत्सैन्यमसंख्येयगुणस्य च ।। २५ ।।
त्वयापि भद्रकाल्यास्तु दत्तं सैन्यं भयावहम् ।।
कपालकर्त्रिकाहस्तं मातॄणां गणमक्षयम् ।। २६ ।।
ततस्तौ तेन सैन्येन महतातिसमावृतौ ।।
जग्मतुस्तत्र यत्रास्ते दक्षः प्राचेतसो यजन् ।। २७ ।।
देवैः परिवृतो देवि सदस्यैर्ब्राह्मणैः सह ।।
ततो देवाः सुरुद्धास्ते तेन सैन्येन पार्वति ।।
विश्रब्धा मंत्रपूतं तु पिबंतः सोममध्वरे ।। ।। २८ ।।

त्रिनेत्रेण त्रिशूलेन त्रिदशाधिप ईश्वरः ।। त्रा
सितः सहसा शक्रो गणेनाध्वरमध्यगः ।। २९ ।।
यमाख्येन गणेनैव यमकल्पप्रभेण च ।।
सोमपाने प्रसक्तश्च यमश्चाकर्षितोऽध्वरे।।५.२.८२.३०।।
पाशेन वरुणो बद्धः पाशेन गणपेन तु ।।
पश्चिमाशाधिपो वीरः प्राणेन परमेश्वरि ।।३१।।
ताडितोऽनिल एवाथ उत्तरे नरवाहनः ।।
उत्तराशाधिपो देवि निधानैः सहितोऽध्वरे ।।
वीरभद्रनियुक्तास्ते चक्रुर्युद्धं सुदारुणम् ।। ३२ ।।
अथ युद्धं चकारो च्चैर्भद्रकाली भयावहा ।।
विकराली महाकाली कालिका कलशोदरी ।। ३३ ।।
प्रज्वालज्वलनाकारा शुष्कमांसातिभैरवा ।।
एताश्चान्याश्च शतशो नरमालाविभूषणाः ।। ३४ ।।
कपालकर्त्रिकाहस्ता जघ्नुर्देवगणास्तदा ।।
इति मातृगणं क्रुद्धं मर्दयंतं सुरास्तदा ।।
दृष्ट्वाभ्युपगता देवास्तुषिता युद्धलालसा ।।३५।।
केचिच्च चिक्षिपुः शक्तीः केचित्प्रासांस्तथापरे ।।
केचिच्च तोमरैस्तीक्ष्णैः केचित्खड्गैश्च पट्टिशैः ।।३६।।
अर्दितो मातृसंघस्तु पीडिताः प्रमथा यदा ।।
भद्रकाली तदा क्रुद्धा गदया शरवृष्टिभिः।।३७ ।।
खड्गादिभिः षडर्कांशुः पीडयामास संयुगे ।।
भगस्य नेत्रे पूष्णस्तु दशनाः सूदिता मुखात् ।। ३८ ।।
करान्दिनकरस्यैव चरणौ भास्करस्य च ।।
मुशलेन हता येऽष्टौ वसवो रणकोविदाः ।। ३९ ।।
वमन्तो रुधिरं तेऽपि नष्टा जर्जर मस्तकाः ।।
विदेहाश्च कृता युद्धे तुषिता रणगर्विताः ।। ५.२.८२.४० ।।
बद्धः प्राचेतसो दक्षः पाशेन सुदृढेन च ।।
शेषाश्च त्रिदशा भीता ब्रह्माणं शरणं गताः ।। ४१ ।।
वृत्तांतः कथितः सर्वो विस्तरेण यथा तथा ।।
आद्या ये तुषिता देवा विदेहाश्चैव ते कृताः ।। ४२ ।।
नष्टाश्च वसवो देवाः पीडिता भास्करा रणे ।।
न ज्ञायते सहस्राक्षो न यमो न धनेश्वरः ।।

वरुणो यादसां नाथः क्व गतः परमेश्वरः ।। ४३ ।।
भद्रकाल्या हतं सर्वं वीरभद्रगणेन च ।।
भग्नश्च यज्ञयूपो वै विध्वस्तं कलशं तदा ।। ४४ ।।
प्रदीपिता महाशाला भग्नं वै यज्ञतोरणम् ।।
तेषां तु वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।।
आजगाम कृपाविष्टो यत्राहं मन्दरे स्थितः ।। ४५ ।।
स्तुतिं कृत्वा मदीयां तु वाक्यमुक्तमिदं तदा।।
आद्या ये तुषिता देवा विदेहाश्चैव ते कृताः ।। ।। ४६ ।।
भद्रकाल्या महादेव वसवो जर्जरीकृताः ।।
पीडिता भास्करा युद्धे शेषा नष्टा दिशो गताः ।। ४७ ।।
कायावरोहणं देव तुषितानां कथं भवेत्।।
ब्रह्मणो वचनं श्रुत्वा मया प्रोक्तं वरानने ।। ४८ ।।
महाकालवने क्षेत्रे गच्छन्तु तुषितास्त्वमी ।।
लकुटीशो गतो यत्र कायावरोहणादग्र हम्।। ४९ ।।
ब्राह्मणाश्च ममादेशाच्चतुःशिष्यैः समन्विताः ।।
द्वापरे समतिक्रांते प्राप्ते कलियुगे तथा ।। ५.२.८२.५० ।।
तत्र कायमनुप्राप्ता मम शिष्या ममो पमाः ।।
अवसंत क्षितौ धन्या रक्षणार्थं द्विजन्मनाम् ।। ५१ ।।
क्षेत्रस्य दक्षिणे तस्य विद्यते लिंगमुत्तमम् ।।
सर्वसंपत्करं दिव्यं सिद्धानां काय दायकम्।। ५२ ।।
प्रसादात्तस्य लिंगस्य कायान्प्राप्स्यंत्यमी सुराः ।।
मदीयं वचनं श्रुत्वा गतास्ते तुषिताः प्रिये ।। ५३ ।।
मुदिता ब्रह्मणा सार्द्धं यत्र तल्लिंगमुत्तमम्।।
प्रसादात्तस्य लिंगस्य प्राप्तं कायमनुत्तमम् ।। ५४ ।।
पुनस्ते तादृशा जातास्तुषिता यादृशाऽभवन् ।।
अतो देवैः कृतं नाम कायावरोहणेश्वरः ।।
समीहितप्रदो नित्यं ख्यातो देवो भविष्यति ।। ५५ ।।
ये गत्वा दक्षिणामाशां देवं कायावरोहणम् ।।
पश्यन्ति परया भक्त्या यमस्तेषां पिता भवेत्।। ५६ ।।
जन्मकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ।।
तत्सर्वं नाशमायाति दर्शनादेव नान्यथा ।। ५७ ।।
स्वकर्मणा गता ये च नरके पितरो गणाः।।

दर्शनात्तस्य लिंगस्य तेषां मुक्तिर्भविष्यति ।।५८।।
ये पश्यंति प्रसंगेन देवं कायारोहणम् ।।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। ५९ ।।
स्पर्शनात्तस्य लिंगस्य पापिनोपि हि ये नराः ।।
ते यास्यंति परं स्थानं सर्वपापविवर्जितम् ।। ५.२.८२.६० ।।
शाठ्येन पूजितो देवः कायावरोहणेश्वरः ।।
ददाति राज्यं भोगांश्च स्वर्गलोकं सनातनम् ।। ६१ ।।
द्वादश्यां ये प्रपश्यंति स्नात्वा कायावरोहणम् ।।
ते भित्त्वा ब्रह्मसदनं यास्यन्ति परमां गतिम्।। ६२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
कायावरोहणेशस्य बिल्वेश्वरमथो शृणु ।। ६३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे कायावरोहणेश्वरमाहात्म्यवर्ण नंनाम द्वयशीतितमोऽध्यायः ।। ८२ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ८३



।। श्रीहर उवाच ।। ।।

बिल्वेश्वरस्य माहात्म्यं शृणु सुन्दरि सादरम् ।।

यस्य श्रवणमात्रेण मुच्यते सर्वपातकैः ।। १ ।।

आदिकल्पे महादेवि लोकानामनुकम्पया ।।

कल्पवृक्षास्ततो जाता ब्रह्मणो ध्यायतः पुरा ।। २ ।।

तेषां मध्ये बिल्ववृक्षः श्रीवृक्ष इति गीयते ।।

अधस्तात्तस्य वृक्षस्य पुरुषः कांचनप्रभः ।। ३ ।।

उपविष्टस्तदा दृष्टो ब्रह्मणा लोककर्तृणा।।

फलानि तस्य पत्राणि विविधानि निरन्तरम् ।। ४ ।।

भक्षयत्यतिसंहृष्टो हृद्यानि च मृदूनि च ।।

बद्धगोधांगुलित्रश्च शरी धन्वी तथैव च ।। ५ ।।

खड्गी किरीटमाली च कुण्डली कवची तथा ।।

महोरस्को महोत्साहः सिंहसंहननो युवा ।। ६ ।।

ब्रह्मणा च कृतं नाम बिल्व इत्यभिविश्रुतम् ।।

तमिन्द्रो वरयामास राजा त्वं भूतले भव ।। ७ ।।

त्रिविष्टपस्य भूमिस्थः सखाभूतो मम प्रियः ।।

ददामि ते वैजयन्तीं मालामम्लानपंकजाम् ।। ८ ।।

यस्याः प्रभावतः शस्त्रं रणे न प्रभविष्यति।।

सोऽब्रवीद्यदि मे वज्रमायुधं त्वं प्रयच्छसि ।।९।।

तत्स्यां पृथिव्यां राजाहं नान्यथा रोचते मम।।

ततोऽहं पालयिष्यामि सत्येनेमां वसुन्ध राम्।।५.२.८३.१० ।।

इंद्र उवाच ।। ।।

एवं भवतु भद्रं ते भव राजा प्रजाहितः ।।

स्मरणादेव वज्रस्ते करे यास्यति नान्यथा ।।११।।

स एवमुक्तस्तेजस्वी बिल्वो राजा बभूव ह।।

कपिलोनाम धर्मात्मा वेदवेदांगपारगः ।।१२।।

सखा बभूव बिल्वस्य तस्य विप्रर्षिसत्तमः ।।

स तेन सह संगम्य सुखासीनो वरानने ।।१३।।
चक्रे कथा विचित्रार्थाः प्रीयमाणः पुनःपुनः ।।
तथा कथान्तरे वादः परस्परमभूत्तयोः ।।१४।।
दानं प्रधानं तीर्थं तु बिल्वेनोक्तं पुनःपुनः ।।
ब्रह्म श्रेष्ठं तपः श्रेष्ठमित्युक्तं कपिलेन तु।।१५।।
बिल्व उवाच।।
दानाद्राज्यं सुखं भोगा ऐश्वर्यं स्वर्गमक्षयम्।।
प्राप्यते द्विजशार्दूल कथं ब्रह्म प्रशंससि।।१६।।
कपिल उवाच।।
वेदाद्यज्ञाः प्रवर्त्तंते वेदादिष्टिश्च कामिका।।
प्रवर्त्तंते क्रिया वेदाद्वेदमूलमिदं जगत्।।१७।।
।। ।। बिल्व उवाच ।। ।।
संसारे पार्थिवाः श्रेष्ठाः समर्था लोकपालने ।।
लोकपालोपमा लोके कथं ब्रह्म प्रशंससि ।। १८ ।।
।। कपिल उवाच ।। ।।
मुख्या वै ब्राह्मणाः प्रोक्ताः शापानुग्रहकारकाः ।।
पितरः पार्थिवानां तु किं त्वं बिल्व न मन्यसे ।। १९ ।।
एवं कौतूहले जाते कपिलो द्विजसत्तमः ।।
बिल्वेन ताडितो मूर्ध्नि वज्रेणानतपर्वणा ।। ५.२.८३.२० ।।
वज्रेण स द्विधा छिन्नः कपिलो ब्रह्मविद्यया ।।
संधार्य स्वशरीरं तु ममांतिकमुपागतः ।। २१ ।।
स्तुतोऽहं विविधैः स्तोत्रैः सम्यगाराधितो ह्यहम् ।।
मया दत्तमव्ययत्वं कुलिशाद्ब्राह्मणस्य तु ।। २२ ।।
द्विजः समागतो बिल्वं पुनः सख्यमभूत्तयोः ।।
पुनस्तु तादृशो वादः संजातः पर्वतात्मजे ।। २३ ।।
वामपादेन चाप्येनं बिल्वो विप्रमताडयत् ।।
पुनश्च वज्रमादाय जघानैनं तदा दृढम्।। २४ ।।
न मृतिं न व्यथां तस्य तद्वज्रमकरोत्पुनः ।।
अवध्यत्वमथो ज्ञात्वा बिल्वस्तस्य महात्मनः ।। २५ ।।
नारायणमथासाद्य प्रार्थयामास चेप्सितम्।।
वरदोऽस्मीति तुष्टेन विष्णुना स च मोदितः ।।
प्रोवाच प्रणतो विष्णुमिदं देवि महामनाः ।। २६ ।।

।। बिल्व उवाच ।। ।।
कपिलोनाम विप्रर्षिरवध्योऽक्षय एव च ।।
सखा मम हृषीकेश स च मामाह नित्यशः ।।
बिभेम्यहं न देवस्य राक्षसस्यासुरस्य च ।। ।। २७ ।।
पिशाचस्यापि यक्षस्य न चैवान्यस्य कस्यचित् ।।
बिभेमीति यथा ब्रूयां तथा त्वं कर्त्तुमर्हसि ।। २८ ।।
एवमुक्तस्तु बिल्वेन स देवः पुरुषोत्तमः ।।
एवं भविष्यतीत्युक्त्वा कपिलस्याश्रमं गतः ।।२९।।
स प्रविश्याश्रमं देवं कपिलेन प्रपूजितः ।।
कपिलं प्रत्युवाचेदं सामपूर्वं जनार्द्दनः ।। ।। ५.२.८३.३० ।।
भगवन्ब्राह्मणश्रेष्ठ वेदवेदांगपारग ।।
वरमेकं वृणोम्यद्य विप्रेंद्र दातुमर्हसि ।। ३१ ।।
प्रसादितोऽहं बिल्वेन नृपेंद्रेण पुनःपुनः ।।
वरदोऽ स्मीति चाप्युक्तो वरं वव्रे महामुने ।। ३२ ।।
त्वया प्रोक्तं बिभेमीति ब्रूहि तस्मादनुग्रहात् ।।
अभीतस्त्वं तथाप्यद्य मदर्थं तु वद प्रभो ।। ३३ ।।
कपिलस्त्वेवमुक्तो वै विष्णुना मधुरं वचः ।।
उवाच न बिभेमीति भूयोभूयो जनार्दन ।। ३४ ।।
नाहं वक्ष्ये बिभेमीति तेनोक्तं नोच्यते मया ।।
एतच्छ्रुत्वा वचस्तस्य कपिलस्य जनार्द्दनः ।।
उवाच चक्रमुद्यम्य भयं विप्रस्य दर्शयन् ।। ३५ ।।
न चेद्वक्ष्यसि भीतोऽहं चक्रं ते प्रहरामि वै ।। ३६ ।। ।।
।। कपिल उवाच ।। ।।
किं वृथा प्रियचक्रस्य विष्णो क्लेशमिहेच्छसि ।।
नाहं चक्रस्य ते गम्यः प्रसादात्त्र्यंबकस्य हि ।। ३७ ।।
ततः स मुष्टिमादाय कुशानां कपिलस्तदा ।।
वासुदेवं समासाद्य तिष्ठतिष्ठेत्यभाषत ।। ३८ ।।
अद्य गर्वं च दर्पं च बलं यच्च तवाद्भुतम् ।।
तत्सर्वं नाशयिष्यामि तिष्ठेदानीं जनार्दन ।। ३९ ।।
ततो युद्धं समभवत्तुमुलं लोमहर्षणम् ।।
निमेषांतरमात्रं तु कृष्णस्य कपिलस्य च ।। ५.२.८३.४० ।।
दिव्यास्त्राणां कुशानां च युद्धं समभवद्दृढम् ।।

निरालंबेंऽबरे देवि देवानां भयमाविशत् ।। ४१ ।।
एतस्मिन्नंतरे ब्रह्मा सुरैः परिवृतस्तदा ।।
आजगामाति संतप्तः कृष्णं वचनमब्रवीत् ।। ४२ ।।
भगवन्भूतभव्येश भवबंधभयापह ।।
हृषीकेश हृषीकेश सृष्टिसंहारकारक ।। ४३ ।।
समाराध्य जगन्नाथ शक्रा द्यास्त्रिदिवौकसः ।।
वसंति मुदिताः सर्वे सर्वकामसमन्विताः ।। ४४ ।।
आब्रह्मस्तंबपर्यंतं त्रैलोक्यं सचराचरम् ।।
उत्पादितं धृतं व्याप्तं विष्णुना प्रभविष्णुना ।। ४५ ।।
तेनैकेन विशुद्धेन सर्वगेन महात्मना ।।
इति स्म मुनयः सर्वे उदिता मुनिसत्तमाः ।। ४६ ।।
वदंति कारणं चास्य त्रैलोक्यस्य जनार्द्दनः ।।
देवदानवदैत्यैश्च मुनिचारणपन्नगैः ।। ४७ ।।
वरार्थिभिश्च प्रवरैः पूज्यसे गरुडध्वज ।।
किं भवानेव गोविंद वृथा युध्यसि स द्विजैः ।। ।। ४८ ।।
कपिलस्य च विप्रस्य हराल्लब्धवरस्य च ।।
किं न वेत्सि यथा ह्येष प्रसादात्पारमेश्वरात्।। ४९।।
अवध्यत्वमनुप्राप्तो ह्यजेयत्वं च संयुगे ।।
न चैवं त्वद्विधा देव ब्राह्मणेषु विकुर्वते ।। ५.२.८३.५० ।।
ब्रह्म च ब्रह्मणो मूलं त्वयैव प्राक्प्रतिश्रुतम् ।।
तस्मादाशु निवर्तस्व मत्वैनं ब्राह्मणं विभो ।। ५१ ।।
इत्थं निशम्य देवेशो वाक्यं ब्रह्ममुखाच्च्युतम् ।।
योगेन तद्बलं ज्ञात्वा कपिलस्य तु शंकरम् ।। ५२ ।।
जगाम परमं लोकं पूज्यमानस्त्रिविष्टपैः ।।
गते जनार्दने बिल्वो विललाप पुनः पुनः ।। ५३ ।।
युद्धं सुदारुणं श्रुत्वा कृष्णस्य कपिलस्य च ।।
कथं जेष्यामि कपिलं कथं मे निर्वृतिर्भवेत् ।।
कस्याहं शरणं यामि को मे त्राता भविष्यति ।। ५४ ।।
न जितः कपिलो युद्धे विष्णुना प्रभविष्णुना ।।
मया संस्पर्द्धते नित्यं कथं जेयो भविष्यति ।। ५५ ।।
अजेया ब्राह्मणा युद्धे शापानुग्रहकारकाः ।।
भस्म कुर्युर्जगत्सर्वं सदेवा सुरमानुषम् ।। ५६ ।।

ब्राह्मं हि परमं तेजो देवैरपि दुरासदम् ।।
एवं विलपतस्तस्य वासवः समुपागतः ।। ५७ ।।
विलपंतं कृशं बिल्वं वज्र हस्तमवेक्ष्य सः ।।
ममत्वाकृष्टहृदयः प्रत्युवाच पुरंदरः ।।५८।।
अलं शोकेन भूपाल शृणु मे वचनं परम्।।
यदाहं पीडितो युद्धे शंबरेण दुरात्मना ।।
बलिष्ठेन सगर्वेण तदा पृष्टो मया गुरुः ।।५९।।
बृहस्पतिर्महातेजास्तेनोक्तं तु तदा नृप ।।
गच्छ शक्र ममादेशान्महाकालवनं शुभम् ।। ५.२.८३.६० ।।
यत्र संति सुदिव्यानि लिंगानि विविधानि च ।।
भुक्तिमुक्तिकराण्येव वांछितार्थप्रदानि च।।६१।।
तेषां मध्ये लिंगमेकमाराधय शचीपते ।।
यस्य दर्शनमात्रेण रणे धृष्टो भविष्यसि ।।
तस्य तद्वचनाद्बिल्व सम्यगाराधना कृता ।। ६२ ।।
मया लिंगस्य हर्षेण जितो वै शंबरस्तदा ।।
प्रसिद्धिं तु गता देवः स चैंद्रेश्वरसंज्ञकः ।। ६३ ।।
तस्मात्त्वं पश्चिमामाशां गत्वा क्षेत्रस्य तस्य वै ।।
समाराधय यत्नेन लिंगं वरुणपूजितम् ।।६४।।
तल्लिंगं त्रिषु लोकेषु त्वन्नाम्ना ख्यातिमेष्यति ।।
कपिलस्त्वत्सखा विप्रो जितोऽस्मीति वदिष्यति ।।
तस्य लिंगस्य माहात्म्यान्मित्रभावं गमिष्यति ।। ६५ ।।
इत्युक्त्वा तु गते शक्रे देवलोकं यशस्विनि ।।
पूजयामास भावेन पुष्पैर्दिव्यैः सुगंधिभिः ।। ६६ ।।
जगाम बिल्वो भूपालो महाकालवनं शुभम् ।।
ददर्श पश्चिमे भागे लिंगं त्रिदशपूजितम् ।। ६७ ।।
मुक्ताफलैश्च रत्नैश्च वासोभिर्भूषणैस्तथा ।।
एतस्मिन्नंतरे चैव कपिलोऽपि समागतः ।। ६८ ।।
ददर्श बिल्वं भूपालं पूजयंतं पुनःपुनः ।।
शरीरे तस्य बिल्वस्य मदीयं रूपमुत्तमम् ।।
दृष्ट्वा मत्वा महादेवं जितोऽस्मीति द्विजोऽब्रवीत् ।।६९।।
प्रार्थयामि त्वया सख्यमनंतं शिवसंनिधौ ।।
एवमुक्तस्तदा बिल्वः कपिलेन महात्मना ।। ५.२.८३.७० ।।

प्रसन्नः प्रांजलिर्भूत्वा कपिलं द्विजसत्तमम् ।।
एवं भवतु भद्रं ते कृतार्थोऽहं महात्मना ।।७१।।
सख्यं तदेव भवतु शश्वद्वदसि मन्यसे ।।
एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमम् ।।७२।।
चिक्रीडतुश्चिरं कालं परं हर्षमुपागतौ ।।
तस्य लिंगस्य माहात्म्याद्भूयो राज्यं चकार सः ।। ७३ ।।
स हि मित्रेण भूपालो बिल्वो देवि मुदान्वितः ।।
तदाप्रभृति विख्यातो देवो बिल्वेश्वरः क्षितौ ।।
बिल्वेनाराधितो लोके वांछितार्थफलप्रदः ।। ७४ ।।
ये पश्यंति विशालाक्षि देवं बिल्वेश्वरं परम् ।।
ते कृतार्था भविष्यंति सर्वपातकवर्जिताः।।७५।।
येऽनुमोदंति देवस्य दर्शनं पर्वतात्मजे ।।
तेऽपि पापविनिर्मुक्ताः प्रयांति मम मंदिरे ।।७६।।
समतीतं भविष्यं च कुलानामयुतं नरः।।
मम लोकं नयत्याशु तस्य लिंगस्य दर्शनात् ।। ७७ ।।
प्रयांति पितरो हृष्टा मम लोके ह्यतंद्रिताः ।।
विमुक्ताः पातकैर्घोरैः कृत्वा लिंगस्य दर्शनम ।।७८।।
कृत्वापि पातकं घोरं ब्रह्महत्यादिकं नरः ।।
तत्पापं विलयं याति श्रीबिल्वेश्वरदर्शनात् ।। ७९ ।।
या तिथिः श्रूयते देवि कृष्णपक्षे त्रयोदशी ।।
सा प्रोक्ता वल्लभा तस्य सर्वपातकनाशिनी ।। ५.२.८३.८० ।।
येऽर्चयंति नरास्तस्यां देवं बिल्वेश्वरं प्रिये ।।
न तेषां पुनरावृत्ति र्घोरसंसारगह्वरे ।। ८१ ।।
कर्मणा मनसा वाचा यत्पापं समुपार्जितम् ।।
तत्क्षालयति देवोऽसौ तिथौ तस्यां समर्चितः ।। ८२ ।।
एष ते कथितो देवि प्रभावः पापनाशनः ।।
बिल्वेश्वरस्य देवस्य श्रूयतामुत्तरेश्वरम्।। ८३ ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे चतुरशीतिलिङ्गमाहात्म्ये बिल्वेश्वरमाहात्म्यवर्णनंनाम त्र्यशीतितमोऽध्यायः ।। ८३ ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/अवन्तीस्थचतुरशीतिलिङ्गमाहात्म्यम्/अध्यायः ८४



।। श्रीमहादेव उवाच ।। ।।

उत्तरेश्वरमाहात्म्यमशेषपापनाशनम्।।

जन्ममृत्युजराव्याधिस्फोटनं शृणु पार्वति ।। १ ।।

अयोध्यायामतिख्यातकुलोत्पन्नश्च पार्थिवः ।।

सुधीः परीक्षिन्नामा च मृगयामगमत्स च ।। २ ।।

मृगमनुससाराथ मृगो दूरमपासरत् ।। ३ ।।

तदाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतः कस्मिंश्चिद्वनोद्देशे नीलवनमपश्यच्चाविवेश ।। ४ ।।

तस्य वनखण्डस्य दक्षिणभागे सरो दृष्ट्वा साश्व एव व्यगाहत ।। ५ ।।

अथाश्वस्थः सन्मृणालमश्वस्याग्रतो निक्षिप्य पुष्करिणीं समुपाविशत् ।। ६ ।।

शयितस्ततः शयानो गीतमशृणोत् ।। ७ ।।

स श्रुत्वाचिंतयन्नेह मनुष्यगतिं प्रपश्यामि ।। ८ ।।

कस्य खल्वयं गीतशब्द इत्यवलोकयामास ।। ९ ।।

अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाणि विचिन्वंतीं चाथ राजा समीपे पर्यक्रामत् ।। ५.२.८४.१० ।।

तामब्रवीद्राजा कस्यासि त्वं कन्या परमरूपदर्शनीया पुष्पाणि विचिन्वती ।। ११ ।।

साथ राजसमीपे गत्वेति प्रोवाच कन्यास्मीति ।। १२ ।। ।।

।। राजोवाच ।। ।।

अर्थी तवास्मीति ।। १३ ।।

अथोवाच कन्या ।।

समयेनाहं त्वया शक्योपालब्धुं नान्यथेति ।। १४ ।।

तां राजा समपृच्छत्कस्ते समय इति ।। १५ ।।

ततः कन्या तमुवाच नोदकं दर्शयितव्यमिति ।। १६ ।।

राजा बाढमित्युक्ता तां समागम्य तया सहास्ते ।। १७ ।।

तत्रैवासन्ने राजनि सेना त्वागच्छत् तया सहोपविष्टं राजानं परिवार्य चातिष्ठत् ।। १८ ।।

सभाजितश्च राजा तथैव शिबि कया प्रायात् ।।

अथ झटिति तया सह स्वं नगरमनुप्राप्य रहसि तया सह रममाणः सन्नान्यं किंचिदपश्यदथ प्रधानोमात्यस्तस्याभ्याशचरास्ताः स्त्रियोऽभ्यपृच्छत् ।। १९ ।।

किमत्र प्रयोजनं विद्यते इत्यब्रुवंस्ताः स्त्रियो पूर्वमेव पश्यामस्तदुदकं नात्राश्रियत इति ।। ५.२.८४.२० ।।

अथामा त्यश्च निरुदकं कारयित्वा दारुवृक्षं वृद्धपुष्पफलं शरद्युपलभ्य राजानामब्रवीत् ।।
वनमिदमनुदकं साध्वत्र रम्यतामिति ।। २१ ।।
स तस्य वचनात्त यैव सह देव्या वनं प्राविशत् ।। २२ ।।
सकलत्रस्तस्मिन्वने रम्ये तयैव सह रेमे ।। २३ ।।
प्रविश्य च राजा सह प्रियया सुधाधवलसलिलपूर्णां वापीमपश्यत् ।। २४ ।।
वापीं दर्दुरैः पूर्णां दृष्ट्वैव च तां तस्या एव तीरे तया देव्यातिष्ठत् ।। २५ ।।
अथ तां देवीं राजाब्रवीत् ।।
शांततरं वापीसलिलमिति ।। २६ ।।
सा च तद्वचः श्रुत्वा तीर्थवापीं न्यमज्जन्न पुनरुदमज्जत् ।।
तां मृगयमाणो राजा नापश्यत् ।। २७ ।।
वापीं दर्दुरैर् पूर्णां दृष्ट्वा आज्ञापयामास भृत्यान्सर्वदर्दुरवधः क्रियतामिति ।। २८ ।।
यो ममार्थी स तैर्ददुरैरुपायनैर्मामनुतिष्ठेत् ।। २९ ।।
अथ कश्चिन्महान्दर्दुरो दर्दुरवधे क्रियमाणे सर्वासु दिक्ष्वभ्यगात् ।। ५.२.८४.३० ।।
उपेत्य चैनमुवाचेदं ज्ञात्वा क्रोधवशंगतम् ।।
प्रसादं कुरु नार्हसि दर्दुराणामनपराधिनां वधं कर्तुमिति ।। ।। ३१ ।।
श्लोकश्चात्र भवति ।।
मा दुर्दुरान्प्रभिंद्यास्त्वं कोपं संधारयाच्युत ।।
प्रक्षीयते महाधर्मो जनानां परिजानताम् ।। ३२ ।।
तमेवं वादिनमिष्टजनवियोगे शाकपरीतात्मानं स राजा प्रोवाच ।।
नहि काममप्येतन्निष्कामेन निबर्हणीया इति ।।३३।।
एतैर्दुरात्मभिर्म स्त्री भक्षिता सर्वथैव त्विम वध्या दर्दुराः ।।
नार्हसि विद्वन्नुपरोद्धुमिति ।। ३४ ।।
स तद्वाक्यमुपश्रुत्य व्यथितेंद्रियमनाः प्रोवाच प्रसीद राजन्नहमायुर्नामभूपालः ।। ३५ ।।
प्राप्ता सा मम दुहिता ।।
सा कन्या नागलोकं गता ।।
अत्रास्ते नागचूडो नागराजः ।।
स्मृता आगमिष्यति ।। ३६ ।।
तामब्रवीद्राजा तां स्मृत्वानीय मे दीयतामिति ।। ३७ ।।
अथैनां स्मृत्वा राज्ञे अदात् ।।
अब्रवीच्च ।। ३८ ।।
मयावहसितो गालवो महान्मुनिः तपसा कर्शितांगः ।।
क्षमेश्वरो दर्दुरबाल्यात्प्रकोपितः तेनाहं शप्तः यन्मामनादृत्य दर्दुरबाल्यादवहसितस्तस्माद्दर्दुरो

भविष्यसि ।। ३९ ।।
प्रसादितस्तु विप्रः प्रत्युवाच ।। ।। ५.२.८४.४० ।।
अवितथोऽयं मम शापस्तस्मादन्यजन्मनि दर्दुरराजो भूत्वा त्वं हि दुहितरमिक्ष्वाकुकुलोत्पन्नाय सर्वगुणान्विताय दत्त्वा यदा यास्यसि महाकालवने तस्योत्तरदिग्भागे तदा लिंगस्य दर्शनेन मुक्तिमवाप्स्यसि ।। ४१ ।।
दुहिता कियत्पातालं यास्यति स्मृता चागमिष्यति ।।
स्वस्ति तेऽस्तु साधयिष्यामि कार्याणि, इत्युक्त्वा दर्दुरो महाकालवनमगच्छत् ।। ४२ ।।
तस्योत्तरे लिंगं ददर्श तस्य दर्शनादनेकमा णिक्यरचितं सिद्धगन्धर्वसेवितं विमानवरमारुह्य शक्रलोकं गतः ।। ४३ ।।
तस्य माहात्म्यमवलोक्य देवाचार्यो बृहस्पतिर्वाक्यं जगाद ।। ४४ ।।
अहो लिंगस्य माहात्म्यमहो लिंगस्य वैभवम् ।।
संप्राप्तो वासवं लोकं शापभ्रष्टो हि दर्दुरः ।। ४५ ।।
आयुराख्यो हि भूपालो मुक्तो दर्दुरतां गतः ।। ।। ४६ ।।
इति तद्वचनं श्रुत्वा देवाचार्यस्य पार्वति ।।
देवास्ते हृष्टमनसो नाम चक्रुः समाहिताः ।। ४७ ।।
यस्माद्दर्दुरभूपालो मुक्तो दर्दुरयोनितः ।।
दर्शनात्तस्य लिंगस्य तस्मात्ख्यातो भविष्यति ।। ४८ ।।
उत्तरेश्वरदेवश्च शापपापप्रणोदकः ।।
इत्युक्त्वा त्रिदशैः सर्वैः पूजितो ह्युत्तरेश्वरः ।। ।। ४९ ।।
भुक्तिमुक्तिप्रदो देवि महापातकनाशनः ।।
क्षेत्रस्य रक्षणार्थाय नियुक्तो यो मया गणः ।।
दर्दुरो हि दुराधर्षः स चापीश्वरतां गतः ।। ।। ५.२.८४.५० ।।
उत्तराशामथो गत्वा यः पश्येदुत्तरेश्वरम् ।।
स सर्वैश्वर्यसंयुक्तो याति लोकमथोत्तरम् ।। ५१ ।।
सुभगः सर्वदा दांतः सुरूपः पुत्रवानिति ।।
नीरोगः पुण्यशीलश्च जायते सप्तजन्म च ।। ५२ ।।
या वृद्धिस्तु कुबेरस्य शक्रस्य च यमस्य च ।।
वरुणस्य च या वृद्धिः सा वृद्धिरुत्तरोत्तरा ।।
जायते नात्र सन्देह उत्तरेश्वरदर्शनात ।। ५३ ।।
कृष्णपक्षे चतुर्दश्यां ये पश्यंति यशस्विनि ।।
उत्तरेश्वरसंज्ञं तु ते कृतार्थाः कलौ युगे ।। ५४ ।।
किं दानैः किं तपोभिश्च किं यज्ञैर्बहुदक्षिणैः ।।

दर्शनाल्लभते राज्यं स्वर्गं मोक्षं क्रमेण तु ।। ५५ ।।
आजन्म च कृतं पापं स्वल्पं वा यदि वा बहु ।।
तत्सर्वं नाशमायाति उत्तरेश्वरदर्शनात् ।। ५६ ।।
इत्येवं चतुराशीतिः संख्याता ईश्वरास्तव ।।
कथिता ये त्वया पृष्टा महाकालवने मया ।। ५७ ।।
य एतेषां देवि यात्रां प्रतिलोमानुलोमतः ।।
करिष्यंति नरा भक्त्या ते यास्यंति परं पदम् ।।। ५८ ।।
यश्चापि पूजयेत्तत्र लिंगं भक्त्या तु मानवः ।।
स कुलं तारयत्येव पैतृकं मातृकं शतम् ।। ५९ ।।
एष ते कथितो देवि प्रभावः पाप नाशनः ।।
चतुराशीतिलिंगानां किं भूयः श्रोतुमिच्छसि ।। ५.२.८४.६० ।।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवाद उत्तरेश्वरलिंगमाहात्म्यवर्णनपूर्वक चतुरशीतिलिंगमाहात्म्यवर्णनंनाम चतुरशीतितमोऽध्यायः ।। ८४ ।।
इति श्रीस्कांदे महापुराणे पंचम आवन्त्यखण्डे द्वितीयमवन्तीस्थचतुरशीतिलिंगमाहात्म्यं समाप्तम् ।। ( ५-२) ।।

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००१



अध्याय १

श्रीगणेशाय नमः ॥ १.१ ॥

ओं नमः श्रीपुरुषोत्तमाय ।

ओं नमः श्रीनर्मदायै ।

ओं नमो हरिहरहिरण्यगर्भेभ्यो नमो व्यासवाल्मीकिशुकपराशरेभ्यो नमो गुरुगोब्राह्मणेभ्यः ।

ओं मज्जन्मातङ्गगण्डच्युतमदमदिरामोदमत्तालिमालं स्नानैः सिद्धाङ्गनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गम् ।

सायं प्रातर्मुनीनां कुसुमचयसमाच्छन्नतीरस्थवृक्षं पायाद्वो नर्मदाम्भः करिमकरकराक्रान्तरहंस्तरंगम् ॥ १.२ ॥

उभयतटपुण्यतीर्था प्रक्षालितसकललोकदुरितौघा ।

देवमुनिमनुजवन्द्या हरतु सदा नर्मदा दुरितम् ॥ १.३ ॥

नाशयतु दुरितमखिलं भूतं भव्यं भवच्च भुवि भविनाम् ।

सकलपवित्रि तव सुधा पुण्यजला नर्मदा भवति ॥ १.४ ॥

तटपुलिनं शिवदेवा यस्या यतयोऽपि कामयन्ते वा ।

मुनिनिवहविहितसेवा शिवाय मम जायतां रेवा ॥ १.५ ॥

नारायणं नमस्कृत्वा नरं चैव नरोत्तमम् ।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १.६ ॥

नैमिषे पुण्यनिलये नानाऋषिनिषेविते ।

शौनकः सत्रमासीनः सूत पप्रच्छ विस्तरात् ॥ १.७ ॥

मन्येऽहं धर्मनैपुण्यं त्वयि सूत सदार्चितम् ।

पुण्यामृतकथावक्ता व्याससशिष्यस्त्वमेव हि ॥ १.८ ॥

अतस्त्वां परिपृच्छामि धर्मतीर्थाश्रयं कवे ।

बहूनि सन्ति तीर्थानि बहुशो मे श्रुतानि च ॥ १.९ ॥

श्रुता दिव्यनदी ब्राह्मी तथा विष्णुनदी मया ।

तृतीया न मया क्वापि श्रुता रौद्री सरिद्वरा ॥ १.१० ॥

तां वेदगर्भां विख्यातां विबुधौघाभिवन्दिताम् ।

वद मे त्वं महाप्राज्ञ तीर्थपूगपरिष्कृताम् ॥ १.११ ॥

कं देशमाश्रिता रेवा कथं श्रीरुद्रसंभवा ।
तत्संश्रितानि तीर्थानि यानि तानि वदस्व मे ॥ १.१२ ॥
सूत उवाच -
साधु पृष्टं कुलपते चरित्रं नर्मदाश्रितम् ।
चित्रं पवित्रं दोषघ्नं श्रुतमुक्तं च सत्तम ॥ १.१३ ॥
वेदोपवेदवेदाङ्गादीन्यभिव्यस्य पूरितः ।
अष्टादशपुराणानां वक्ता सत्यवतीसुतः ॥ १.१४ ॥
तं नमस्कृत्य वक्ष्यामि पुराणानि यथाक्रमम् ।
येषामभिव्याहरणादभिवृद्धिर्वृषायुषोः ॥ १.१५ ॥
श्रुतिः स्मृतिश्च विप्राणां चक्षुषी परिकीर्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥ १.१६ ॥
श्रुतिस्मृतिपुराणानि विदुषां लोचनत्रयम् ।
यस्त्रिभिर्नयनैः पश्येत्सोऽंशो माहेश्वरो मतः ॥ १.१७ ॥
आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता ।
शौनकीया च पौराणी धर्मशास्त्रात्मिका च या ॥ १.१८ ॥
तिस्रो विद्या इमा मुख्याः सर्वशास्त्रविनिर्णये ।
पुराणं पञ्चमो वेद इति ब्रह्मानुशासनम् ॥ १.१९ ॥
यो न वेद पुराणं हि न स वेदात्र किंचन ।
कतमः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम् ॥ १.२० ॥
अन्यद्वा तत्किमत्राह पुराणे यन्न दृश्यते ।
वेदाः प्रतिष्ठिताः पूर्वं पुराणे नात्र संशयः ॥ १.२१ ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
इतिहासपुराणैश्च कृतोऽयं निश्चयः पुरा ॥ १.२२ ॥
आत्मा पुराणं वेदानां पृथगंगानि तानि षट् ।
यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ॥ १.२३ ॥
उभाभ्यां यत्तु दृष्टं हि तत्पुराणेषु गीयते ।
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणः स्मृतम् ॥ १.२४ ॥
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।
पुराणमेकमेवासीदस्मिन् कल्पान्तरे मुने ॥ १.२५ ॥
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।
स्मृत्वा जगाद च मुनीन्प्रति देवश्चतुर्मुखः ॥ १.२६ ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः ॥ १.२७ ॥

व्यासरूपं विभुः कृत्वा संहरेत्स युगे युगे ।
अष्टलक्षप्रमाणे तु द्वापरे द्वापरे सदा ॥ १.२८ ॥
तदष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रभाष्यते ।
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥ १.२९ ॥
तथात्र चतुर्लक्षं संक्षेपेण निवेशितम् ।
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणु त्वमृषिसत्तम ॥ १.३० ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ १.३१ ॥
ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥ १.३२ ॥
पाद्मं च पञ्चपञ्चाशत्सहस्राणि निगद्यते ।
तृतीयं वैष्णवंनाम त्रयोविंशतिसंख्यया ॥ १.३३ ॥
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ।
शिवभक्तिसमायोगाच्छैवं तच्चापराख्यया ॥ १.३४ ॥
चतुर्विंशतिसंख्यातं सहस्राणि तु शौनक ।
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं पञ्चमं तथा ॥ १.३५ ॥
चतुर्दशसहस्राणि तथा पञ्च शतानि तत् ।
मार्कण्डं नवसाहस्रं षष्ठं तत्परिकीर्तितम् ॥ १.३६ ॥
आग्नेयं सप्तमं प्रोक्तं सहस्राणि तु षोडश ।
अष्टमं नारदीयं तु प्रोक्तं वै पञ्चविंशतिः ॥ १.३७ ॥
नवमं भगवन्नाम भागद्वयविभूषितम् ।
तदष्टादशसाहस्रं प्रोच्यते ग्रन्थसंख्यया ॥ १.३८ ॥
दशमं ब्रह्मवैवर्तं तावत्संख्यमिहोच्यते ।
लैङ्गमेकादशं ज्ञेयं तथैकादशसंख्यया ॥ १.३९ ॥
भागद्वयं विरचितं तल्लिङ्गमृषिपुंगव ।
चतुर्विंशतिसाहस्रं वाराहं द्वादशं विदुः ॥ १.४० ॥
विभक्तं सप्तभिः खण्डैः स्कान्दं भाग्यवतां वर ।
तदेकाशीतिसाहस्रं संख्यया वै निरूपितम् ॥ १.४१ ॥
ततस्तु वामनं नाम चतुर्दशतमं स्मृतम् ।
संख्यया दशसाहस्रं प्रोक्तं कुलपते पुरा ॥ १.४२ ॥
कौर्मं पञ्चदशं प्राहुर्भागद्वयविभूषितम् ।
दशसप्तसहस्राणि पुरा सांख्यपते कलौ ॥ १.४३ ॥

मात्स्यं मत्स्येन यत्प्रोक्तं मनवे षोडशं क्रमात् ।
तच्चतुर्दशसाहस्रं संख्यया वदतां वर ॥ १.४४ ॥
गारुडं सप्तदशमं स्मृतं चैकोनविंशतिः ।
अष्टादशं तु ब्रह्माण्डं भागद्वयविभूषितम् ॥ १.४५ ॥
तच्च द्वादशसाहस्रं शतमष्टसमन्वितम् ।
तथैवोपपुराणानि यानि चोक्तानि वेधसा ॥ १.४६ ॥
इदं ब्रह्मपुराणस्य सुलभं सौरमुत्तमम् ।
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ॥ १.४७ ॥
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ।
सनत्कुमारनाम्ना हि तद्विख्यातं महामुने ॥ १.४८ ॥
द्वितीयं नारसिंहं च पुराणे पाद्मसंज्ञिते ।
शौकेयं हि तृतीयं तु पुराणे वैष्णवे मतम् ॥ १.४९ ॥
बार्हस्पत्यं चतुर्थं च वायव्यं संमतं सदा ।
दौर्वाससं पञ्चमं च स्मृतं भागवते सदा ॥ १.५० ॥
भविष्ये नारदोक्तं च सूरिभिः कथितं पुरा ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥ १.५१ ॥
ब्रह्माण्डं वारुणं चाथ कालिकाद्वयमेव च ।
माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ॥ १.५२ ॥
पाराशरं भागवतं कौर्मं चाष्टादशं क्रमात् ।
एतान्युपपुराणानि मयोक्तानि यथाक्रमम् ॥ १.५३ ॥
पुराणसंहितामेतां यः पठेद्वा शृणोति च ।
सोऽनन्तपुण्यभागी स्यान्मृतो ब्रह्मपुरं व्रजेत् ॥ १.५४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पुराणसंहितावर्णनां प्रथमोऽध्यायः ॥

अध्याय २
सूत उवाच ॥ २.१ ॥
नर्मदायास्तु माहात्म्यं कृष्णद्वैपायनोऽब्रवीत् ।
तत्तेऽहं सम्प्रवक्ष्यामि यत्त्वया परिपृच्छितम् ॥ २.२ ॥
विस्तरं नर्मदायास्तु तीर्थानां मुनिसत्तम ।
कोऽन्यः शक्तोऽस्ति वै वक्तुमृते ब्रह्माणमीश्वरम् ॥ २.३ ॥
एतमेव पुरा प्रश्नं पृष्टवाञ्जनमेजयः ।
वैशंपायनसंज्ञं तु शिष्यं द्वैपायनस्य ह ॥ २.४ ॥
रेवातीर्थाश्रितं पुण्यं तत्ते वक्ष्यामि शौनक ।
पुरा पारीक्षितो राजा यज्ञादीक्षासु दीक्षितः ॥ २.५ ॥
संभृते तु हविर्द्रव्ये वर्तमानेषु कर्मसु ।
आसीनेषु द्विजाग्र्येषु हूयमाने हुताशने ॥ २.६ ॥
वर्तमानासु सर्वत्र तथा धर्मकथासु च ।
श्रूयमाणे तथा शब्दे जनैरुक्ते त्वहर्निशम् ॥ २.७ ॥
यज्ञभूमौ कुलपते दीयतां भुज्यतामिति ।
विविधांश्च विनोदान्वै कुर्वाणेषु विनोदिषु ॥ २.८ ॥
एवंविधे वर्तमाने यज्ञे स्वर्गसदःसमे ।
वैशंपायनमासीनं पप्रच्छ जनमेजयः ॥ २.९ ॥

जनमेजय उवाच -
द्वैपायनप्रसादेन ज्ञानवानसि मे मतः ।
वैशंपायन तस्मात्त्वां पृच्छामि ऋषिसन्निधौ ॥ २.१० ॥
ब्रूहि मे त्वं पुरावृत्तं पितृणां तीर्थसेवनम् ।
चिरं नानाविधान्क्लेशान् प्राप्तास्त इति मे श्रुतम् ॥ २.११ ॥
कथं द्यूतजिताः पार्था मम पूर्वपितामहाः ।
आसमुद्रां महीं विप्र भ्रमन्तस्तीर्थलोभतः ॥ २.१२ ॥
केन ते सहितास्तात भूमिभागाननेकशः ।
चेरुः कथय तत्सर्वं सर्वज्ञोऽसि मतो मम ॥ २.१३ ॥
वैशंपायन उवाच ॥ २.१४ ॥
कथयिष्यामि भूनाथ यत्पृष्टं तु त्वयाऽनघ ।
नमस्कृत्य विरूपाक्षं वेदव्यासं महाकविम् ॥ २.१५ ॥
पितामहास्तु ते पञ्च पाण्डवाः सह कृष्णया ।
उषित्वा ब्राह्मणैः सार्धं काम्यके वन उत्तमे ॥ २.१६ ॥

प्रधानोद्दालके तत्र कश्यपोऽथ महामतिः ।
विभाण्डकश्च राजेन्द्र मुरुश्चैव महामुनिः ॥ २.१७ ॥
पुलस्त्यो लोमशश्चैव तथान्ये पुत्रपौत्रिणः ।
स्नात्वा निःशेषतीर्थेषु गतास्ते विन्ध्यपर्वतम् ॥ २.१८ ॥
ते च तत्राश्रमं पुण्यं सर्वैर्वृक्षैः समाकुलम् ।
चम्पकैः कर्णकारैश्च पुन्नागैर्नागकेसरैः ॥ २.१९ ॥
बकुलैः कोविदारैश्च दाडिमैरुपशोभितम् ।
पुष्पितैरर्जुनैश्चैव बिल्वपाटलकेतकैः ॥ २.२० ॥
कदम्बाम्रमधूकैश्च निम्बजम्बीरतिन्दुकैः ।
नालिकेरैः कपित्थैश्च खर्जूरपनसैस्तथा ॥ २.२१ ॥
नानाद्रुमलताकीर्णं नानावल्लीभिरावृतम् ।
सपुष्पं फलितं कान्तं वनं चैत्ररथं यथा ॥ २.२२ ॥
जलाश्रयैस्तु विपुलैः पद्मिनीखण्डमण्डितम् ।
सितोत्पलैश्च संछन्नं नीलपीतैः सितारुणैः ॥ २.२३ ॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
आडीकाकबलाकाभिः सेवितं कोकिलादिभिः ॥ २.२४ ॥
सिंहैर्व्याघ्रैर्वराहैश्च गजैश्चैव महोत्कटैः ।
महिषैश्च महाकायैः कुरङ्गैश्चित्रकैः शशैः ॥ २.२५ ॥
गण्डकैश्चैव खड्गैश्च गोमायुसुरभी युतम् ।
सारङ्गैर्मल्लकैश्चैव द्विपदैश्च चतुष्पदैः ॥ २.२६ ॥
तथाच कोकिलाकीर्णं मनःकान्तं सुशोभितम् ।
जीवंजीवकसंघैश्च नानापक्षिसमायुतम् ॥ २.२७ ॥
दुःखशोकविनिर्मुक्तं सत्त्वोत्कटमनोरमम् ।
क्षुत्तृषारहितं कान्तं सर्वव्याधिविवर्जितम् ॥ २.२८ ॥
सिंहीस्तनं पिबन्त्यत्र कुरंगाः स्नेहसंयुतम् ।
मार्जारमूषकौ चोभाववलेहत उन्मुखौ ॥ २.२९ ॥
पञ्चास्याः पोतकेभाश्च भोगिनस्तु कलापिनः ।
दृष्ट्वा तद्विपिनं रम्यं प्रविष्टाः पाण्डुनन्दनाः ॥ २.३० ॥
मार्कण्डं दृष्टवांस्तत्र तरुणादित्यसन्निभम् ।
ऋषिभिः सेव्यमानं तु नानाशास्त्रविशारदैः ॥ २.३१ ॥
कुलीनैः सत्त्वसम्पन्नैः शौचाचारसमन्वितैः ।
धीसंगतैः क्षमायुक्तैस्त्रिसंध्यं जपतत्परैः ॥ २.३२ ॥
ऋग्यजुःसामविहितैर्मन्त्रैर्होमपरायणैः ।

केचित्पञ्चाग्निमध्यस्थाः केचिदेकान्तसंस्थिताः ॥ २.३३ ॥
ऊर्ध्वबाहुनिरालम्बा आदित्यभ्रमणाः परे ।
सायंप्रातर्भुजश्चान्ये एकाहारास्तथा परे ॥ २.३४ ॥
द्वादशाहात्तथा चान्ये अन्ये मासार्धभोजनाः ।
दर्शे दर्शे तथा चान्ये अन्ये शैवालभोजनाः ॥ २.३५ ॥
पिण्याकमपरेऽभुजन् केचित्पालाशभोजनाः ।
अपरे नियताहारा वायुभक्ष्याम्बुभोजनाः ॥ २.३६ ॥
एवंभूतैस्तथा वृद्धैः सेव्यते मुनिपुंगवैः ।
ततो धर्मसुतः श्रीमानाश्रमं तं प्रविश्य सः ॥ २.३७ ॥
दृष्ट्वा मुनिवरं शान्तं ध्यायमानं परं पदम् ।
प्रादक्षिण्येन सहसा दण्डवत्पतितोऽग्रतः ॥ २.३८ ॥
भक्त्यानुपतितं दृष्ट्वा चिरादादाय लोचनम् ।
को भवानित्युवाचेदं धर्मं धीमानपृच्छत ॥ २.३९ ॥
तस्य तद्वचनं श्रुत्वा दारकस्तत्समीपगः ।
आहायं धर्मराजस्ते दर्शनार्थं समागतः ॥ २.४० ॥
तच्छ्रुत्वादारकेणोक्तं वचनं प्राह सादरः ।
एह्येहि वत्सवत्सेति किंचित्स्थानाच्चलन्मुनिः ।
तं तु स्नेहादुपाघ्राय आसने उपवेशयत् ॥ २.४१ ॥
उपविष्टे सभायां तु पूजां कृत्वा यथाविधि ।
वन्यैर्धान्यैः फलैर्मूलै रसैश्चैव पृथग्विधैः ॥ २.४२ ॥
पाण्डवा ब्राह्मणैः सार्द्धं यथायोग्यं प्रपूजिताः ।
मुहूर्तादथ विश्रम्य धर्मपुत्रो युधिष्ठिरः ॥ २.४३ ॥
पृच्छति स्म मुनिश्रेष्ठं कौतूहलसमन्वितः ।
भगवन्सर्वलोकानां दीर्घायुस्त्वं मतो मम ॥ २.४४ ॥
सप्तकल्पानशेषेण कथयस्व ममानघ ।
कल्पक्षयेऽपि लोकस्य स्थावरस्येतरस्य च ॥ २.४५ ॥
न विनष्टोऽसि विप्रेन्द्र कथं वा केन हेतुना ।
गङ्गाद्याः सरितः सर्वाः समुद्रान्ताश्च या मुने ॥ २.४६ ॥
तासां मध्ये स्थिताः काः स्वित्काश्चैव प्रलयं गताः ।
का नु पुण्यजला नित्यं कानु न क्षयमागता ॥ २.४७ ॥
एतत्कथय मे तात प्रसन्नेनान्तरात्मना ।
श्रोतुमिच्छाम्यशेषेण ऋषिभिः सह बान्धवैः ॥ २.४८ ॥

श्रीमार्कण्डेय उवाच -

साधुसाधु महाप्राज्ञ धर्मपुत्र युधिष्ठिर ।
कथयामि यथा न्यायं यत्पृच्छसि ममानघ ॥ २.४९ ॥
सर्वपापहरं पुण्यं पुराणं रुद्रभाषितम् ।
यः शृणोति नरो भक्त्या तस्य पुण्यफलं शृणु ॥ २.५० ॥
अश्वमेध सहस्रेण वाजपेयशतेन च ।
तत्फलं समवाप्नोति राजन्नास्त्यत्र संशयः ॥ २.५१ ॥
ब्रह्मघ्नश्च सुरापी च स्तेयी गोघ्नश्च यो नरः ।
मुच्यते सर्वपापेभ्यो रुद्रस्य वचनं यथा ॥ २.५२ ॥
गङ्गा तु सरितां श्रेष्ठा तथा चैव सरस्वती ।
कावेरी देविका चैव सिन्धुः सालकुटी तथा ॥ २.५३ ॥
सरयूः शतरुद्रा च मही चर्मिलया सह ।
गोदावरी तथा पुण्या तथैव यमुना नदी ॥ २.५४ ॥
पयोष्णी च शतद्रुश्च तथा धर्मनदी शुभा ।
एताश्चान्याश्च सरितः सर्वपापहराः स्मृताः ॥ २.५५ ॥
किं तु ते कारणं तात वक्ष्यामि नृपसत्तम ।
समुद्राः सरितः सर्वाः कल्पे कल्पे क्षयं गताः ॥ २.५६ ॥
सप्तकल्पक्षये क्षीणे न मृता तेन नर्मदा ।
नर्मदैकैव राजेन्द्र परं तिष्ठेत्सरिद्वरा ॥ २.५७ ॥
तोयपूर्णा महाभाग मुनिसंघैरभिष्टुता ।
गंगाद्याः सरितश्चान्याः कल्पे कल्पे क्षयं गताः ॥ २.५८ ॥
एषा देवी पुरा दृष्टा तेन वक्ष्यामि तेऽनघ ॥ २.५९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रेवामाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००३



अध्याय ३

युधिष्ठिर उवाच -
सप्तकल्पक्षया घोरास्त्वया दृष्टा महामुने ।
न चापीहास्ति भगवन्दीर्घायुरिह कश्चन ॥ ३.१ ॥
त्वया ह्येकार्णवे सुप्तः पद्मनाभः सुरारिहा ।
दृष्टः सहस्रचरणः सहस्रनयनोदरः ॥ ३.२ ॥
त्वं किलानुग्रहात्तस्य दह्यमाने चराचरे ।
न क्षयं समनुप्राप्तो वरदानान्महात्मनः ॥ ३.३ ॥
किं त्वयाश्चर्यभूतं हि दृष्टं च भ्रमतानघ ।
एतदाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ ३.४ ॥
सम्प्राप्ते च महाघोरे युगस्यान्ते महाक्षये ।
अनावृष्टिहते लोके पुरा वर्षशताधिके ॥ ३.५ ॥
औषधीनां क्षये घोरे देवदानववर्जिते ।
निर्वीर्ये निर्वषट्कारे कलिना दूषिते भृशम् ॥ ३.६ ॥
सरित्सरस्तडागेषु पल्वलोपवनेषु च ।
संशुष्केषु तदा ब्रह्मन्निराकारे युगक्षये ॥ ३.७ ॥
जनं प्राप्ते महर्लोके ब्रह्मक्षत्रविशादयः ।
ऋषयश्च महात्मानो दिव्यतेजःसमन्विताः ॥ ३.८ ॥
स्थितानि कानि भूतानि गतान्येव महामुने ।
एतत्सर्वं महाभाग कथयस्व पृथक्पृथक् ॥ ३.९ ॥
भूतानि कानि विप्रेन्द्र कथं सिद्धिमवाप्नुयात् ।
ब्रह्मविष्ण्विन्द्ररुद्राणां काले प्राप्ते सुदारुणे ॥ ३.१० ॥
एवमुक्तस्ततः सोऽथ धर्मराजेन धीमता ।
मार्कण्डः प्रत्युवाचेदमृषिसंघैः समावृतः ॥ ३.११ ॥

श्रीमार्कण्डेय उवाच -

शृण्वन्तु ऋषयः सर्वे त्वया सह नरेश्वर ।
महत्पुराणं पूर्वोक्तं शंभुना वायुदैवते ॥ ३.१२ ॥
वायोः सकाशात्स्कन्देन श्रुतमेतत्पुरातनम् ।
वसिष्ठः श्रुतवांस्तस्मात्पराशरस्ततः परम् ॥ ३.१३ ॥
तस्माच्च जातूकर्ण्येन तस्माच्चैव महर्षिभिः ।
एवं परम्पराप्रोक्तं शतसंख्यैर्द्विजोत्तमैः ॥ ३.१४ ॥
संहिता शतसाहस्री पुरोक्ता शंभुना किल ।
आलोड्य सर्वशास्त्राणि वदार्थं तत्त्वतः पुरा ॥ ३.१५ ॥
युगरूपेण सा पश्चाच्चतुर्धा विनियोजिता ।
मदप्रज्ञानुसारेण नराणां तु महर्षिभिः ॥ ३.१६ ॥
आराध्य पशुभर्तारं मया पूर्वं महेश्वरम् ।
पुराणं श्रुतमेतद्धि तत्ते वक्ष्याम्यशेषतः ॥ ३.१७ ॥
यच्छ्रुत्वा मुच्यते जन्तुः सर्वपापैर्नरेश्वर ।
मानसैः कर्मजैश्चैव सप्तजन्मसु संचितैः ॥ ३.१८ ॥
सप्तकल्पक्षया घोरा मया दृष्टाः पुनःपुनः ।
प्रसादाद्देवदेवस्य विष्णोश्च परमेष्ठिनः ॥ ३.१९ ॥
द्वादशादित्यनिर्दग्धे जगत्येकार्णवीकृते ।
श्रान्तोऽहं विभ्रमंस्तत्र तरन्बाहुभिरर्णवम् ॥ ३.२० ॥
अथाहं सलिले राजन्नादित्यसमरूपिणम् ।
पुरा पुरुषमद्राक्षमनादिनिधनं प्रभुम् ॥ ३.२१ ॥
शृङ्गं चैवाद्रिराजस्य भासयन्तं दिशो दश ।
द्वितीयोऽन्यो मनुर्दृष्टः पुत्रपौत्रसमन्वितः ॥ ३.२२ ॥
अगाधे भ्रमते सोऽपि तमोभूते महार्णवे ।
अविश्रमन्मुहूर्तं तु चक्रारूढ इव भ्रमन् ॥ ३.२३ ॥
अथाहं भयादुद्विग्नस्तरन्बाहुभिरर्णवम् ।
तत्रस्थोऽहं महामत्स्यमपश्यं मदसंयुतम् ॥ ३.२४ ॥
ततोऽब्रवीत्स मां दृष्ट्वा एह्येहीति च भारत ।
परं प्रधानः सर्वेषां मत्स्यरूपो महेश्वरः ॥ ३.२५ ॥
ततोऽहं त्वरया गत्वा तन्मुखे मनुजेश्वर ।
सुश्रान्तो विगतज्ञानः परं निर्वेदमागतः ॥ ३.२६ ॥
ततोऽद्राक्षं समुद्रान्ते महदावर्तसंकुलाम् ।
उद्यत्तरंगसलिलां फेनपुञ्जाट्टहासिनीम् ॥ ३.२७ ॥
नदीं कामगमां पुण्यां झषमीनसमाकुलाम् ।

नद्यास्तस्यास्तु मध्यस्था प्रमदा कामरूपिणी ॥ ३.२८ ॥
नीलोत्पलदलश्यामा महत्प्रक्षोभवाहिनी ।
दिव्यहाटकचित्राङ्गी कनकोज्ज्वलशोभिता ॥ ३.२९ ॥
द्वाभ्यां संगृह्य जानुभ्यां महत्पोतं व्यवस्थिता ।
तां मनुः प्रत्युवाचेदं का त्वं दिव्यवराङ्गने ॥ ३.३० ॥
तिष्ठसे केन कार्येण त्वमत्र सुरसुन्दरि ।
सुरासुरगणे नष्टे भ्रमसे लीलयार्णवे ॥ ३.३१ ॥
सरितः सागराः शैलाः क्षयं प्राप्ता ह्यनेकशः ।
त्वमेका तु कथं साध्वि तिष्ठसे कारणं महत् ।
श्रोतुमिच्छाम्यहं देवि कथयस्व ह्यशेषतः ॥ ३.३२ ॥

अबलोवाच -
ईश्वराङ्गसमुद्भूता ह्यमृतानाम विश्रुता ।
सरित्पापहरा पुण्या मामाश्रित्य भयं कुतः ॥ ३.३३ ॥
साहं पोतमिमं तुभ्यं गृहीत्वा ह्यागता द्विज ।
न ह्यस्य पोतस्य क्षयो यत्र तिष्ठति शंकरः ॥ ३.३४ ॥
तस्यास्तद्वचनं श्रुत्वा विस्मयोत्फुल्ललोचनः ।
मनुना सह राजेन्द्र पोतारूढो ह्यहं तदा ॥ ३.३५ ॥
कृताञ्जलिपुटो भूत्वा प्रणम्य शिरसा विभुम् ।
व्यापिनं परमेशानमस्तौषमभयप्रदम् ॥ ३.३६ ॥
सद्योजाताय देवाय वामदेवाय वै नमः ।
भवे भवे नमस्तुभ्यं भक्तिगम्याय ते नमः ॥ ३.३७ ॥
भूर्भुवाय नमस्तुभ्यं रामज्येष्ठाय वै नमः ।
नमस्ते भद्रकालाय कलिरूपाय वै नमः ॥ ३.३८ ॥
अचिन्त्याव्यक्तरूपाय महादेवाय धामने ।
विद्महे देवदेवाय तन्नो रुद्र नमोनमः ॥ ३.३९ ॥
जगत्सृष्टिविनाशानां कारणाय नमोनमः ।
एवं स्तुतो महादेवः पूर्वं सृष्टया मयानघ ॥ ३.४० ॥
प्रसन्नो मावदत्पश्चाद्वरं वरय सुव्रत ॥ ३.४१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये मार्कण्डेयधर्मराजसंवादे कल्पक्षये मार्कण्डेयकृतपोतार्धारोहणवृत्तान्तवर्णनंनाम तृतीयोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००४

https://sa.wikisource.org/s/fd3
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४

श्रीमार्कण्डेय उवाच -
ततोऽर्णवात्समुत्तीर्य त्रिकूटशिखरे स्थितम् ।
महाकनकवर्णाभे नानावर्णशिलाचिते ॥ ४.१ ॥
महाशृङ्गे समासीनं रुद्रकोटिसमन्वितम् ।
महादेवं महात्मानमीशानमजमव्ययम् ॥ ४.२ ॥
सर्वभूतमयं तात मनुना सह सुव्रत ।
भूयो ववन्दे चरणौ सर्वदेवनमस्कृतौ ॥ ४.३ ॥
तत्काले युगसाहस्रं सह रुद्रेण मानद ।
तस्मिन्नेकार्णवे घोरे स्थितोऽहं कुरुनंदन ॥ ४.४ ॥

युधिष्ठिर उवाच -
एतच्छ्रुत्वा तु मे तात परं कौतूहलं हृदि ।
जातं तत्कथयस्वेति शृण्वतः सह बान्धवैः ॥ ४.५ ॥
का सा पद्मपलाशाक्षी तमोभूते महार्णवे ।
योगिवद्भ्रमते नित्यं रुद्रजां स्वां च याब्रवीत् ॥ ४.६ ॥

श्रीमार्कण्डेय उवाच -
एतमेव मया प्रश्नं पुरा पृष्टो मनुः स्वयम् ।
तदेव तेऽद्य वक्ष्यामि अबलायाः समुद्भवम् ॥ ४.७ ॥
व्यतीतायां निशायां तु ब्रह्मणः परमेष्ठिनः ।
ततः प्रभाते विमले सृज्यमानेषु जन्तुषु ॥ ४.८ ॥
मनुं प्रणम्य शिरसा पृच्छाम्येतद्युधिष्ठिर ।
केयं पद्मपलाशाक्षी श्यामा चंद्रनिभानना ॥ ४.९ ॥
एकार्णवे भ्रमत्येका रुद्रजास्मीति वादिनी ।
सावित्री वेदमाता च ह्यथवा सा सरस्वती ॥ ४.१० ॥

मन्दाकिनी सरिच्छ्रेष्ठा लक्ष्मीर्वा किमथो उमा ।
कालरात्रिर्भवेत्साक्षात्प्रकृतिर्वा सुखोचिता ॥ ४.११ ॥
एतदाचक्ष्व भगवन्का सा ह्यमृतसंभवा ।
चरत्येकार्णवे घोरे प्रनष्टोरगराक्षसे ॥ ४.१२ ॥

मनुरुवाच -
शृणु वत्स यथान्यायमस्या वक्ष्यामि संभवम् ।
यया रुद्रसमुद्भूता या चेयं वरवर्णिनी ॥ ४.१३ ॥
पुरा शिवः शान्ततनुश्चचार विपुलं तपः ।
हितार्थं सर्वलोकानामुमया सह शंकरः ॥ ४.१४ ॥
ऋक्षशैलं समारुह्य तपस्तेपे सुदारुणम् ।
अदृश्यः सर्वभूतानां सर्वभूतात्मको वशी ॥ ४.१५ ॥
तपतस्तस्य देवस्य स्वेदः समभवत्किल ।
तं गिरिं प्लावयामास स स्वेदो रुद्रसंभवः ॥ ४.१६ ॥
तस्मादासीत्समुद्भूता महापुण्या सरिद्वरा ।
या सा त्वयार्णवे दृष्टा पद्मपत्रायतेक्षणा ॥ ४.१७ ॥
स्त्रीरूपं समवस्थाय रुद्रमाराधयत्पुरा ।
आद्ये कृतयुगे तस्मिन्समानामयुतं नृप ॥ ४.१८ ॥
ततस्तुष्टो महादेव उमया सह शंकरः ।
ब्रूहि त्वं तु महाभागे यत्ते मनसि वर्तते ॥ ४.१९ ॥

सरिदुवाच -
प्रलये समनुप्राप्ते नष्टे स्थावरजंगमे ।
प्रसादात्तव देवेश अक्षयाहं भवे प्रभो ॥ ४.२० ॥
सरित्सु सागरेष्वेव पर्वतेषु क्षयिष्वपि ।
तव प्रसादाद्देवेश पुण्या क्षय्या भवे प्रभो ॥ ४.२१ ॥
पापोपपातकैर्युक्ता महापातकिनोऽपि ये ।
मुच्यन्ते सर्वपापेभ्यो भक्त्या स्नात्वा तु शंकर ॥ ४.२२ ॥
उत्तरे जाह्नवीदेशे महापातकनाशिनी ।
भवामि दक्षिणे मार्गे यद्येवं सुरपूजिता ॥ ४.२३ ॥
स्वर्गादागम्य गंगेति यथा ख्याता क्षितौ विभो ।
तथा दक्षिणगङ्गेति भवेयं त्रिदशेश्वर ॥ ४.२४ ॥
पृथिव्यां सर्वतीर्थेषु स्नात्वा यल्लभते फलम् ।

तत्फलं लभते मर्त्यो भक्त्या स्नात्वा महेश्वर ॥ ४.२५ ॥
ब्रह्महत्यादिकं पापं यदास्ते संचितं क्वचित् ।
मासमात्रेण तद्देव क्षयं यात्ववगाहनात् ॥ ४.२६ ॥
यत्फलं सर्ववेदेषु सर्वयज्ञेषु शंकर ।
अवगाहेन तत्सर्वं भवत्विति मतिर्मम ॥ ४.२७ ॥
सर्वदानोपवासेषु सर्वतीर्थावगाहने ।
तत्फलं मम तोयेन जायतामिति शंकर ॥ ४.२८ ॥
मम तीरे नरा ये तु अर्चयन्ति महेश्वरम् ।
ते गतास्तव लोकं स्युरेतदेव भवेच्छिव ॥ ४.२९ ॥
मम कूले महेशान उमया सह दैवतैः ।
वस नित्यं जगन्नाथ एष एव वरो मम ॥ ४.३० ॥
सुकर्मा वा विकर्मा वा शान्तो दान्तो जितेन्द्रियः ।
मृतो जन्तुर्मम जले गच्छतादमरावतीम् ॥ ४.३१ ॥
त्रिषु लोकेषु विख्याता महापातकनाशिनी ।
भवामि देवदेवेश प्रसन्नो यदि मन्यसे ॥ ४.३२ ॥
एतांश्चान्यान्वरान्दिव्यान्प्रार्थितो नृपसत्तम ।
नर्मदया ततः प्राह प्रसन्नो वृषवाहनः ॥ ४.३३ ॥

श्रीमहेश उवाच -
एवं भवतु कल्याणि यत्त्वयोक्तमनिन्दिते ।
नान्या वरार्हा लोकेषु मुक्त्वा त्वां कमलेक्षणे ॥ ४.३४ ॥
यदैव मम देहात्त्वं समुद्भूता वरानने ।
तदैव सर्वपापानां मोचिनी त्वं न संशयः ॥ ४.३५ ॥
कल्पक्षयकरे काले काले घोरे विशेषतः ।
उत्तरं कूलमाश्रित्य निवसन्ति च ये नराः ॥ ४.३६ ॥
अपि कीटपतङ्गाश्च वृक्षगुल्मलतादयः ।
आ देहपतनाद्देवि तेऽपि यास्यन्ति सद्गतिम् ॥ ४.३७ ॥
दक्षिणं कूलमाश्रित्य ये द्विजा धर्मवत्सलाः ।
आ मृत्योर्निवसिष्यन्ति ते गताः पितृमन्दिरे ॥ ४.३८ ॥
अहं हि तव वाक्येन कस्मिंश्चित्कारणान्तरे ।
त्वत्तीरे निवसिष्यामि सदैव ह्युमया समम् ॥ ४.३९ ॥
एवं देवि महादेवि एवमेव न संशयः ।
ब्रह्मेन्द्रचन्द्रवरुणैः साध्यैश्च सह विष्णुना ॥ ४.४० ॥

उत्तरे देवि ते कूले वसिष्यन्ति ममाज्ञया ।
दक्षिणे पितृभिः सार्द्धं तथान्ये सुरसुन्दरि ॥ ४.४१ ॥
वसिष्यन्ति मया सार्द्धमेष ते वर उत्तमः ।
गच्छ गच्छ महाभागे मर्त्यान्पापाद्विमोचय ॥ ४.४२ ॥
सहिता ऋषिसंघैश्च तथा सिद्धसुरासुरैः ।
एवमुक्त्वा महादेव उमया सहितो विभुः ॥ ४.४३ ॥
वन्द्यमानोऽथ मनुना मया चादर्शनं गतः ।
तेन चैषा महापुण्या महापातकनाशिनी ॥ ४.४४ ॥
कथिता पृच्छयते या ते मा ते भवतु विस्मयः ।
एषा गंगा महापुण्या त्रिषु लोकेषु विश्रुता ॥ ४.४५ ॥
दशाभिः पञ्चभिः स्रोतैः प्लावयन्ती दिशो दश ।
शोणो महानदश्चैव नर्मदा सुरसा कृता ॥ ४.४६ ॥
मन्दाकिनी दशार्णा च चित्रकूटा तथैव च ।
तमसा विदिशा चैव करभा यमुना तथा ॥ ४.४७ ॥
चित्रोत्पला विपाशा च रञ्जना वालुवाहिनी ।
ऋक्षपादप्रसूतास्ताः सर्वा वै रुद्रसंभवाः ॥ ४.४८ ॥
सर्वपापहराः पुण्याः सर्वमंगलदाः शिवाः ।
इत्येतैर्नामभिर्दिव्यैः स्तूयते वेदपारगैः ॥ ४.४९ ॥
पुराणज्ञैर्महाभागैराज्यपैः सोमपैस्तथा ।
इत्येतत्सर्वमाख्यातं महाभाग्यं नरोत्तम ॥ ४.५० ॥
मनुनोक्तं पुरा मह्यममृतायाः समुद्भवम् ।
पुण्यं पवित्रमतुलं रुद्रोद्गीतमिदं शुभम् ॥ ४.५१ ॥
ये नराः कीर्तयिष्यन्ति भक्त्या शृण्वन्ति येऽपि च ।
प्रातरुत्थाय नामानि दश पञ्च च भारत ॥ ४.५२ ॥
ते नराः सकलं पुण्यं लभिष्यन्त्यवगाहजम् ।
विमानेनार्कवर्णेन घण्टाशतनिनादिना ॥ ४.५३ ॥
त्यक्त्वा मानुष्यकं भावं यास्यन्ति परमां गतिम् ॥ ४.५४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदापञ्चदशनामवर्णनं नाम चतुर्थोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००५



अध्याय ५

युधिष्ठिर उवाच -
आश्चर्यमेतदखिलं कथितं भो द्विजोत्तम ।
विस्मयं परमापन्ना ऋषिसंघा मया सह ॥ ५.१ ॥
अहो भगवती पुण्या नर्मदेयमयोनिजा ।
रुद्रदेहाद्विनिष्क्रान्ता महापापक्षयंकरी ॥ ५.२ ॥
सप्तकल्पक्षये प्राप्ते त्वयेयं सह सुव्रत ।
न मृता च महाभागा किमतः पुण्यमुत्तमम् ॥ ५.३ ॥
के ते कल्पाः समुद्दिष्टाः सप्त कल्पक्षयंकराः ।
न मृता चेदियं देवी त्वं चैव ऋषिपुंगव ॥ ५.४ ॥
अपक्षिगणसंघाते जगत्येकार्णवीकृते ।
कीदृग्रूपः समभवन्महादेवो युगक्षये ॥ ५.५ ॥
कथं संहरते विश्वं कथं चास्ते महार्णवे ।
कथं च सृजते विश्वं कथं धारयते प्रजाः ॥ ५.६ ॥
कीदृग्रूपा भवेद्देवी सरिदेकार्णवीकृते ।
किमर्थं नर्मदा प्रोक्ता रेवती च कथं स्मृता ॥ ५.७ ॥
अञ्जनेति किमर्थं वा किमर्थं सुरसेति च ।
मन्दाकिनी किमर्थं च शोणश्चेति कथं भवेत् ॥ ५.८ ॥
त्रिकूटेति किमर्थं वा किमर्थं वालुवाहिनी ।
कोटिकोट्यो हि तीर्थानां प्रविष्टा या महार्णवम् ॥ ५.९ ॥
कियत्यः सरितां कोट्यो नर्मदां समुपासते ।
यज्ञोपवीतैरृषिभिर्देवताभिस्तथैव च ॥ ५.१० ॥
विभक्तेयं किमर्थं च श्रूयते मुनिसत्तम ।
वैष्णवीति पुराणज्ञैः किमर्थमिह चोच्यते ॥ ५.११ ॥
केषु स्थानेषु तीर्थेषु पूजनीया सरिद्वरा ।
तीर्थानि च पृथग्ब्रूहि यत्र संनिहितो हरः ॥ ५.१२ ॥

यत्प्रमाणा च सा देवी या रुद्रेण विनिर्मिता ।
कीदृशानि च कर्माणि रुद्रेण कथितानि ते ॥ ५.१३ ॥
कथं म्लेच्छसमाकीर्णो देशोऽयं द्विजसत्तम ।
एतदाचक्ष्व मां ब्रह्मन्मार्कण्डेय महामते ॥ ५.१४ ॥

श्रीमार्कण्डेय उवाच -
शृण्वन्तु ऋषयः सर्वे त्वं च तात युधिष्ठिर ।
पुराणं नर्मदायां तु कथितं च त्रिशूलिना ॥ ५.१५ ॥
वायोः सकाशाच्च मया तेनापि च महेश्वरात् ।
अशक्यत्वान्मनुष्याणां संक्षिप्तमृषिभिः पुरा ॥ ५.१६ ॥
मायूरं प्रथमं तात कौर्म्यं च तदनन्तरम् ।
पुरं तथा कौशिकं च मात्स्यं द्विरदमेव च ॥ ५.१७ ॥
वाराहं यन्मया दृष्टं वैष्णवं चाष्टमं परम् ।
न्यग्रोधाख्यमतः चासीदाकाङ्क्षं पुनरुत्तमम् ॥ ५.१८ ॥
पद्मं च तामसं चैव संवर्तोद्वर्तमेव च ।
महाप्रलयमित्याहुः पुराणे वेदचिन्तकाः ॥ ५.१९ ॥
एतत्संक्षेपतः सर्वं संक्षिप्तं तैर्महात्मभिः ।
विभक्तं च चतुर्भागैर्ब्रह्माद्यैश्च महर्षिभिः ॥ ५.२० ॥
तदहं सम्प्रवक्ष्यामि पुराणार्थविशारद ।
सप्त कल्पा महाघोरा यैरियं न मृता सरित् ॥ ५.२१ ॥
आ जङ्गमं तमोभूतमप्रज्ञातमलक्षणम् ।
नष्टचन्द्रार्ककिरणमासीद्भूतविवर्जितम् ॥ ५.२२ ॥
तमसोऽतो महानाम्ना पुरुषः स जगद्गुरुः ।
चचार तस्मिन्नेकाकी व्यक्ताव्यक्तः सनातनः ॥ ५.२३ ॥
स चौंकारमयोऽतीतो गायत्रीमसृजद्द्विजः ।
स तया सार्द्धमीशानश्चिक्रीड पुरुषो विराट् ॥ ५.२४ ॥
स्वदेहादसृजद्विश्वं पञ्चभूतात्मसंज्ञितम् ।
क्रीडन्समसृजद्विश्वं पञ्चभूतात्मसंज्ञितम् ॥ ५.२५ ॥
क्रीडन् सृजद्विराट्संज्ञः सबीजं च हिरण्मयम् ।
तच्चाण्डमभवद्दिव्यं द्वादशादित्यसन्निभम् ॥ ५.२६ ॥
तद्भित्त्वा पुरुषो जज्ञे चतुर्वक्त्रः पितामहः ।
सोऽसृजद्विश्वमेवं तु सदेवासुरमानुषम् ॥ ५.२७ ॥
सतिर्यक्पशुपक्षीकं स्वेदाण्डजजरायुजम् ।

एतदण्डं पुराणेषु प्रथमं परिकीर्तितम् ॥ ५.२८ ॥
पूर्वकल्पे नृपश्रेष्ठ क्रीडन्त्या परमेष्ठिना ।
उमया सह रुद्रस्य क्रीडतश्चार्णवीकृतः ॥ ५.२९ ॥
हर्षाज्जज्ञे शुभा कन्या उमायाः स्वेदसंभवा ।
शर्वस्योरःस्थलाज्जज्ञे उमा कुचविमर्दनात् ॥ ५.३० ॥
स्वेदाद्विजज्ञे महती कन्या राजीवलोचना ।
द्वितीयः संभवो यस्या रुद्रदेहाद्युधिष्ठिर ॥ ५.३१ ॥
सा परिभ्रमते लोकान् सदेवासुरमानवान् ।
त्रैलोक्योन्मादजननी रूपेणऽप्रतिमा तदा ॥ ५.३२ ॥
तां दृष्ट्वा देवदैत्येन्द्रा मोहिता लभते कथम् ।
मृगयन्ति स्म तां कन्यामितश्चेतश्च भारत ॥ ५.३३ ॥
हावभावविलासैश्च मोहयत्यखिलं जगत् ।
भ्रमते दिव्यरूपा सा विद्युत्सौदामिनी यथा ॥ ५.३४ ॥
मेघमध्ये स्थिता भाभिः सर्वयोषिदनुत्तमा ।
ततो रुद्रं सुराः सर्वे दैत्याश्च सह दानवैः ॥ ५.३५ ॥
वरयन्ति स्म तां कन्यां कामेनाकुलिता भृशम् ।
ततोऽब्रवीन्महादेवो देवदानवयोर्द्वयोः ॥ ५.३६ ॥
बलेन तेजसा चैव ह्यधिको यो भविष्यति ।
स इमां प्राप्स्यते कन्यां नान्यथा वै सुरोत्तमाः ॥ ५.३७ ॥
ततो देवासुराः सर्वे कन्यां वै समुपागमन् ।
अहमेनां ग्रहीष्यामि अहमेनामिति ब्रुवन् ॥ ५.३८ ॥
पश्यतामेव सर्वेषां सा कन्यान्तरधीयत ।
पुनस्तां ददृशुः सर्वे योजनान्तरधिष्ठिताम् ॥ ५.३९ ॥
जग्मुस्ते त्वरिताः सर्वे यत्र सा समदृश्यत ।
त्रिभिश्चतुर्भिश्च तथा योजनैर्दशभिः पुनः ॥ ५.४० ॥
धिष्ठितां समपश्यंस्ते सर्वे मातंगगामिनीम् ।
योजनानां शतैर्भूयः सहस्रैश्चाप्यधिष्ठिताम् ॥ ५.४१ ॥
तथा शतसहस्रेण लघुत्वात्समदृश्यत ।
अग्रतः पृष्ठतश्चैव दिशासु विदिशासु च ॥ ५.४२ ॥
तां पश्यन्ति वरारोहामेकधा बहुधा पुनः ।
दिव्यवर्षसहस्रं तु भ्रामितास्ते तया पुरा ॥ ५.४३ ॥
न चावाप्ता तु सा कन्या महादेवाङ्गसंभवा ।
सहोमया ततो देवो जहासोच्चैः पुनःपुनः ॥ ५.४४ ॥

गणास्तालकसंपातैर्नृत्यन्ति च मुदान्विताः ।
अकस्माद्दृश्यते कन्या शंकरस्य समीपगा ॥ ५.४५ ॥
तां दृष्ट्वा विस्मयापन्ना देवा यान्ति पराङ्मुखाः ।
तस्याश्चक्रे ततो नाम स्वयमेव पिनाकधृक् ॥ ५.४६ ॥
नर्म चैभ्यो ददे यस्मात्तत्कृतैश्चेष्टितैः पृथक् ।
भविष्यसि वरारोहे सरिच्छ्रेष्ठा तु नर्मदा ॥ ५.४७ ॥
स्वरूपमास्थितो देवः प्राप हास्यं यतो भुवि ।
नर्मदा तेन चोक्तेयं सुशीतलजला शिवा ॥ ५.४८ ॥
सप्तकल्पक्षये जाते यदुक्तं शंभुना पुरा ।
न मृता तेन राजेन्द्र नर्मदा ख्यातिमागता ॥ ५.४९ ॥
ततस्तामददात्कन्यां शीलवतीं सुशोभनाम् ।
महार्णवाय देवेशः सर्वभूतपतिः प्रभुः ॥ ५.५० ॥
ततः सा ऋक्षशैलेन्द्रात्फेनपुञ्जाट्टहासिनी ।
विवेश नर्मदा देवी समुद्रं सरितां पतिम् ॥ ५.५१ ॥
एवं ब्राह्मे पुरा कल्पे समुद्भूतेयमीश्वरात् ।
मात्स्ये कल्पे मया दृष्टा समाख्याता मया शृणु ॥ ५.५२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पञ्चमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००६



अध्याय ६

मार्कण्डेय उवाच -
पुनर्युगान्ते सम्प्राप्ते तृतीये नृपसत्तम ।
दादशार्कवपुर्भूत्वा भगवान्नीललोहितः ॥ ६.१ ॥
सप्तद्वीपसमुद्रान्तां सशैलवनकाननाम् ।
निर्दग्धां तु महीं कृत्स्नां कालो भूत्वा महेश्वरः ॥ ६.२ ॥
ततो महाघनो भूत्वा प्लावयामास वारिणा ।
कृष्णं कृष्णवपुस्त्वेनां विद्युच्चन्द्रायुधाङ्किताम् ॥ ६.३ ॥
प्लावयित्वा जगत्सर्वं तस्मिन्नेकार्णवीकृते ।
सुष्वाप विमले तोये जगत्संक्षिप्य मायया ॥ ६.४ ॥
ततोऽहं भ्रममास्तु तमोभूते महार्णवे ।
दिव्यं वर्षसहस्रं तु वायुभूते महेश्वरे ॥ ६.५ ॥
ओंकृत्वा देवदेवेशं येनेदं गहनीकृतम् ।
ध्यायमानस्ततो देवं राजेन्द्र विमले जले ॥ ६.६ ॥
तस्मिन्महार्णवे घोरे नष्टे स्थावरजङ्गमे ।
मयूरं स्वर्णपत्राढ्यमपश्यंसहसा जले ।
विचित्रचन्द्रकोपेतं नीलकंठं सुलोचनम् ॥ ६.७ ॥
ततो मयूरः स महार्णवान्ते विक्षोभयित्वा हि महास्वेण ।
चचार देवस्त्रिशिखी शिखण्डी त्रैलोक्यगोप्ता स महानुभावः ॥ ६.८ ॥
शिवश्च रौद्रेण मयूररूपिणा विक्षोभ्यमाणे सलिलेऽपि तस्मिन् ।
सह भ्रमन्तीं च महार्णवान्ते सरिन्महौघां सुमहान्ददर्श ॥ ६.९ ॥
स तां महादेवमयूररूपो दृष्ट्वा भ्रमन्तीं सहसोर्मिजालैः ।
का त्वं शुभे शाश्वतदेहभूता क्षयं न यातासि महाक्षयान्ते ॥ ६.१० ॥
देवासुरगणे नष्टे सरित्सरमहार्णवे ।
का त्वं भ्रमसि पद्माक्षि क्व गतासि च न क्षयम् ॥ ६.११ ॥

नर्मदोवाच -
तव प्रसादाद्देवेश मृत्युर्मम न विद्यते ।
सृज देव पुनर्विश्वं शर्वरी क्षयमागता ॥ ६.१२ ॥
एवमुक्तो महादेवो व्यधुनोत्पक्षपञ्जरम् ।
तावत्पञ्जरमध्यान्ते तस्य पक्षाद्विनिःसृताः ॥ ६.१३ ॥
तावन्तो देवदैत्येन्द्राः पक्षाभ्यां तस्य जज्ञिरे ।
तेषां मध्ये पुनः सा तु नर्मदा भ्रमते सरित् ॥ ६.१४ ॥
ततश्चान्यो महाशैलो दृश्यते भरतर्षभ ।
त्रिभिः कूटैः सुविस्तीर्णैः शृङ्गवानिव गोवृषः ॥ ६.१५ ॥
त्रिकूटस्तु इति ख्यातः सर्वरत्नैर्विभूषितः ।
ततस्तस्मात्त्रिकूटाच्च प्लावयन्ती महीं ययौ ॥ ६.१६ ॥
त्रिकूटी तेन विख्याता पित्ःणां त्रायणी परा ।
द्वितीयाच्च ततो गङ्गा विस्तीर्णा धरणीतले ॥ ६.१७ ॥
तृतीयं च ततः शृङ्गं सप्तधा खण्डशो गतम् ।
जम्बूद्वीपे तु संजाताः सप्त ते कुलपर्वताः ॥ ६.१८ ॥
चन्द्रनक्षत्रसहिता ग्रहग्रामनदीनदाः ।
अण्डजं स्वेदजं जातमुद्भिज्जं च जरायुजम् ॥ ६.१९ ॥
एवं जगदिदं सर्वं मयूरादभवत्पुरा ।
समस्तं नरशार्दूल महादेवसमुद्भवम् ॥ ६.२० ॥
ततो नदीः समुद्रांश्च संविभज्य पृथक्पृथक् ।
नर्मदामाह देवेशो गच्छ त्वं दक्षिणां दिशम् ॥ ६.२१ ॥
एवं सा दक्षिणा गंगा महापातकनाशिनी ।
उत्तरे जाह्नवी देशे पुण्या त्वं दक्षिणे शुभा ॥ ६.२२ ॥
यथा गंगा महापुण्या मम मस्तकसंभवा ।
तद्विशिष्टा महाभागे त्वं चैवेति न संशयः ॥ ६.२३ ॥
त्वया सह भविष्यामि एकेनांशेन सुव्रते ।
महापातकयुक्तानामौषधं त्वं भविष्यसि ॥ ६.२४ ॥
एवमुक्ता तु देवेन महापातकनाशिनी ।
दक्षिणं दिग्विभागं तु सा जगामाशु विक्रमा ॥ ६.२५ ॥
ऋक्षशैलेन्द्रमासाद्य चन्द्रमौलेरनुग्रहात् ।
वार्यौघैः प्रस्थिता यस्मान्महादेवप्रणोदिता ॥ ६.२६ ॥
महता चापि वेगेन यस्मादेषा समुच्छ्रिता ।
महती तेन सा प्रोक्ता महादेवान्महीपते ॥ ६.२७ ॥

तपतस्तस्य देवस्य शूलाग्राद्बिन्दवोऽपतन् ।
तेनैषा शोणसंज्ञा तु दश सप्त च ताः स्मृताः ॥ ६.२८ ॥
सर्वेषां नर्मदा पुण्या रुद्रदेहाद्विनिःसृता ।
सर्वाभ्यश्च सरिद्भ्यश्च वरदानान्महात्मनः ॥ ६.२९ ॥
शंकरानुग्रहाद्देवी महापातकनाशिनी ।
यस्मान्महार्णवे घोरे दृश्यते महती च सा ॥ ६.३० ॥
सुव्यक्ताङ्गी महाकाया महती तेन सा स्मृता ।
तस्माद्विक्षोभ्यमाणा हि दिग्गजैरम्बुदोपमैः ॥ ६.३१ ॥
कलुषत्वं नयत्येव रसेन सुरसा तथा ।
कृपां करोति सा यस्माल्लोकानामभयप्रदा ॥ ६.३२ ॥
संसारार्णवमग्नानां तेन चैषा कृपा स्मृता ।
पुरा कृतयुगे पुण्ये दिव्यमन्दारभूषिता ॥ ६.३३ ॥
कल्पवृक्षसमाकीर्णा रोहीतकसमाकुला ।
वहत्येषा च मन्देन तेन मन्दाकिनी स्मृता ॥ ६.३४ ॥
भित्त्वा महार्णवं क्षिप्रं यस्माल्लोकमिहागता ।
पूज्या सुरैश्च सिद्धैश्च तस्मादेषा महार्णवा ॥ ६.३५ ॥
विचित्रोत्पलसंघातैरृक्षद्विपसमाकुला ॥ ६.३६ ॥
भित्त्वा शैलं च विपुलं प्रयात्येवं महार्णवम् ।
भ्रामयन्ती दिशः सर्वा रवेण महता पुरा ॥ ६.३७ ॥
प्लावयन्ती विराजन्ती तेन रेवा इति स्मृता ।
भार्यापुत्रसुदुःखाढ्यान्नराञ्छापैः समावृतान् ॥ ६.३८ ॥
विपापान्कुरुते यस्माद्विपापा तेन सा स्मृता ।
विण्मूत्रनिचयां घोरां पांशुशोणितकर्दमाम् ॥ ६.३९ ॥
पाशैर्नित्यं तु सम्बाधां यस्मान्मोचयते भृशम् ।
विपाशेति च सा प्रोक्ता संसारार्णवतारिणी ॥ ६.४० ॥
नर्मदा विमलाम्भा च विमलेन्दुशुभानना ।
तमोभूते महाघोरे यस्मादेषा महाप्रभा ॥ ६.४१ ॥
विमला तेन सा प्रोक्ता विद्वद्भिर्नृपसत्तम ।
करैरिन्दुकरप्रख्यैः सूर्यरश्मिसमप्रभा ॥ ६.४२ ॥
क्षरन्ती मोदते विश्वं करभा तेन चोच्यते ।
यस्माद्रञ्जयते लोकान्दर्शनादेव भारत ॥ ६.४३ ॥
रञ्जनाद्रञ्जना प्रोक्ता धात्वर्थे राजसत्तम ।
तृणवीरुधगुल्माद्यास्तिर्यञ्चः पक्षिणस्तथा ।

तानुद्धृतान्नयेत्स्वर्गं तेनोक्ता वायुवाहिनी ॥ ६.४४ ॥
एवं यो वेत्ति नामानि निर्गमं च विशेषतः ।
स याति पापविर्मुक्तो रुद्रलोकं न संशयः ॥ ६.४५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये सहैतुकरेवानाममाहात्म्यवर्णने मयूरकल्पसमुद्भवो नाम षष्ठोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००७



अध्याय ७

श्रीमार्कण्डेय उवाच -
पुनरेकार्णवे घोरे नष्टे स्थावरजंगमे ।
सलिलेनाप्लुते लोके निरालोके तमोद्भवे ॥ ७.१ ॥
ब्रह्मैको विचरंस्तत्र तमीभूते महार्णवे ।
दिव्यवर्षसहस्रं तु खद्योत इव रूपवान् ॥ ७.२ ॥
शेते योजनसाहस्रमप्रमेयमनुत्तमम् ।
द्वादशादित्यसंकाशं सहस्रचरणेक्षणम् ॥ ७.३ ॥
प्रसुप्तं चार्णवे घोरे ह्यपश्यत्कूर्मरूपिणम् ।
तं दृष्ट्वा विस्मयापन्नो ब्रह्मा बोधयते शनैः ॥ ७.४ ॥
स्तुतिभिर्मंगलैश्चैव वेदवेदांगसंभवैः ।
वाचस्पते विबुध्यस्व महाभूत नमोऽस्तु ते ॥ ७.५ ॥
तवोदरे जगत्सर्वं तिष्ठते परमेश्वर ।
तद्विमुञ्च महासत्त्व यत्पूर्वं संहृतं त्वया ॥ ७.६ ॥
व्यतीता रजनी ब्राह्मी दिनं समनुवर्तते ।
निरीक्ष्य सर्वलोकेश येन संभवते जगत् ॥ ७.७ ॥
स निशम्य वचस्तस्य उत्थितः परमेश्वरः ।
समुद्गिरन् स लोकांस्त्रीन् ग्रस्तान् कल्पक्षये तदा ॥ ७.८ ॥
देवदानवगन्धर्वाः सयक्षोरगराक्षसाः ।
सचन्द्रार्कग्रहाः सर्वे शरीरात्तस्य निर्गताः ॥ ७.९ ॥
ततो ह्येकार्णवं सर्वं विभज्य परमेश्वरः ।
विस्तीर्णोपलतोयौघां सरित्सरविवर्धिताम् ॥ ७.१० ॥
पश्यते मेदिनीं देवः सवृक्षौषधिपल्वलाम् ।
हिमवन्तं गिरिश्रेष्ठं श्वेतं पर्वतमुत्तमम् ॥ ७.११ ॥
शृङ्गवन्तं महाशैलं ये चान्ये कुलपर्वताः ।
जंबुद्वीपं कुशं क्रौञ्चं सगोमेदं सशाल्मलम् ॥ ७.१२ ॥

पुष्करान्ताश्च ये द्वीपा ये च सप्तमहार्णवाः ।
लोकालोकं महाशैलं सर्वं च पुरतः स्थितम् ॥ ७.१३ ॥
चतुःप्रकृतिसंयुक्तं जगत्स्थावरजंगमम् ।
युगान्ते तु विनिष्क्रान्तमपश्यत्स महेश्वरः ॥ ७.१४ ॥
विप्रकीर्णशिलाजालामपश्यत्स वसुंधराम् ।
कूर्मपृष्ठोपगां देवीं महार्णवगतां प्रभुः ॥ ७.१५ ॥
तस्मिन् विशीर्णशैलाग्रे सरित्सरोविवर्जिते ।
नानातरंगभिन्नोद आवर्तोद्वर्तसंकुले ॥ ७.१६ ॥
नानौषधिप्रज्वलिते नानोत्पलशिलातले ।
नानाविहंगसंघुष्टां मत्स्यकूर्मसमाकुलाम् ॥ ७.१७ ॥
दिव्यमायामयीं देवीमुत्कृष्टाम्बुदसन्निभाम् ।
नदीमपश्यद्देवेशो ह्यनौपम्यजलाशयाम् ॥ ७.१८ ॥
मध्ये तस्याम्बुदश्यामां पीनोरुजघनस्तनीम् ।
वस्त्रैरनुपमैर्दिव्यैर्नानाभरणभूषिताम् ॥ ७.१९ ॥
सनूपुररवोद्दामां हारकेयूरमण्डिताम् ।
तादृशीं नर्मदां देवीं स्वयं स्त्रीरूपधारिणीम् ॥ ७.२० ॥
योगमायामयैश्चित्रैर्भूषणैः स्वैर्विभूषिताम् ।
अव्यक्ताङ्गीं महाभागामपश्यत्स तु नर्मदाम् ॥ ७.२१ ॥
अर्धोद्यतभुजां बालां पद्मपत्रायतेक्षणाम् ।
स्तुवन्तीं देवदेवेशमुत्थितां तु जलात्तदा ॥ ७.२२ ॥
विस्मयाविष्टहृदयो ह्यहमुद्वीक्ष्य तां शुभाम् ।
स्नात्वा जले शुभे तस्याः स्तोतुमभ्युद्यतस्ततः ॥ ७.२३ ॥
अर्चयामास संहृष्टो मन्त्रैर्वेदांगसंभवैः ।
सृष्टं च तत्पुरा राजन्पश्येयं सचराचरम् ॥ ७.२४ ॥
सदेवासुरगन्धर्वं सपन्नगमहोरगम् ।
पश्याम्येषा महाभागा नैव याता क्षयं पुरा ॥ ७.२५ ॥
महादेवप्रसादाच्च तच्छरीरसमुद्भवा ।
भूयो भूयो मया दृष्टा कथिता ते नृपोत्तम ॥ ७.२६ ॥
प्रादुर्भावमिमं कौर्म्यं येऽधीयन्ते द्विजोत्तमाः ।
येऽपि शृण्वन्ति विद्वांसो मुच्यन्ते तेऽपि किल्बिषैः ॥ ७.२७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कूर्मकल्पसमुद्भवो नाम सप्तमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००८



अध्याय ८

मार्कण्डेय उवाच -
नष्टे लोके पुनश्चान्ये सलिलेन समावृते ।
महार्णवस्य मध्यस्थो बाहुभ्यामतरं जलम् ॥ ८.१ ॥
दिव्ये वर्षशते पूर्णे श्रान्तोऽहं नृपसत्तम ।
ध्यातुं समारभं देवं महदर्णवतारणम् ॥ ८.२ ॥
ध्यायमानस्ततः काले अपश्यं पक्षिणं परम् ।
हारकुन्देन्दुसंकाशं बकं गोक्षीरपाण्डुरम् ॥ ८.३ ॥
ततोऽहं विस्मयाविष्टस्तं बकं समुदीक्ष्य वै ।
अस्मिन्महार्णवे घोरे कुतोऽयं पक्षिसंभवः ॥ ८.४ ॥
तरन्बाहुभिरश्रान्तस्तं बकं प्रत्यभाषिषि ।
पाक्षरूपं समास्थाय कस्त्वमेकार्णवीकृते ॥ ८.५ ॥
भ्रमसे दिव्ययोगात्मन्मोहयन्निव मां प्रभो ।
एतत्कथय मे सर्वं योऽसि सोऽसि नमोऽस्तु ते ॥ ८.६ ॥
सोऽब्रवीन्मां महादेवो ब्रह्माहं विष्णुरेव च ।
जगत्सर्वं मया वत्स संहृतं किं न बुध्यसे ॥ ८.७ ॥
तव माता पिताहं वै विश्वस्य च महामुने ।
कारुण्यं मम संजातं दृष्ट्वा मग्नं महार्णवे ॥ ८.८ ॥
पक्षिरूपं समास्थाय अतोऽत्राहं समागतः ।
किमर्थमातुरो भूत्वा भ्रमसीत्थं महार्णवे ॥ ८.९ ॥
शीघ्रं प्रविश मत्पक्षौ येन विश्रमसे द्विज ।
एवमुक्तस्ततस्तेन देवेनाहं नरेश्वर ॥ ८.१० ॥
ततोऽहं तस्य पक्षान्ते प्रलीनस्तु भ्रमञ्जले ।
काले युगसाहस्रान्ते अश्रान्तोऽर्णवमध्यगः ॥ ८.११ ॥
ततः शृणोमि सहसा दिक्षु सर्वासु सुव्रत ।
किंचिन्नूपुरसंमिश्रमद्भुतं शब्दमुत्तमम् ॥ ८.१२ ॥

तदार्णवजलं सर्वं संक्षिप्तं सहसाभवत् ।
किमेतदिति संचिन्त्य दिशः समवलोकयम् ॥ ८.१३ ॥
दश कन्यास्ततो दिक्षु आगताश्च महार्णवे ।
वस्त्रालंकारसहिता दिग्भ्यो नूपुरभूषिताः ॥ ८.१४ ॥
काचिच्चन्द्रसमाभासा काचिदादित्यसप्रभा ।
काचिदंजनपुञ्जाभा काचिद्रक्तोत्पलप्रभा ॥ ८.१५ ॥
नानारूपधरा सौम्या नानाभरणभूषिता ।
अर्घ्यपाद्यादिभिर्माल्यैर्बकमभ्यर्च्य सुव्रताः ॥ ८.१६ ॥
ततस्तं पर्वताकारं गुह्यं पक्षिणमव्ययम् ।
प्रविवेश महाघोरं पर्वतो ह्यर्णवं स्वराट् ॥ ८.१७ ॥
योजनानां सहस्राणि तावन्त्येव शतानि च ।
त्रिंशद्योजनसाहस्रं यावद्भूमण्डलं त्विति ॥ ८.१८ ॥
ततो भूमण्डलं दिव्यं पञ्चरत्नसमाकुलम् ।
दिव्यस्फटिकसोपानं रुक्मस्तंभमनोरमम् ॥ ८.१९ ॥
योजनानां सहस्रं तु विस्तराद्द्विगुणायतम् ।
वापीकूपसमाकीर्णं प्रासादाट्टालकावृतम् ॥ ८.२० ॥
कल्पवृक्षसमाकीर्णं ध्वजयष्टिविभूषितम् ।
तस्मिन्पुरवरे रम्ये नानारत्नोपशोभितम् ॥ ८.२१ ॥
तथान्यच्च पुरं रम्यं पताकोज्ज्वलवेदिकम् ।
शतयोजनविस्तीर्णं तावद्द्विगुणमायतम् ॥ ८.२२ ॥
पुरमध्ये ततस्तस्मिन्नदी परमशोभना ।
महती पुण्यसलिला नानारत्नशिला तथा ॥ ८.२३ ॥
तस्यास्तीरे मया दृष्टं तडित्सूर्यसमप्रभम् ।
इन्द्रनीलमहानीलैश्चितं रत्नैः समन्ततः ॥ ८.२४ ॥
क्वचिद्वह्निसमाकारं क्वचिदिन्द्रायुधप्रभम् ।
क्वचिद्धूम्रं क्वचित्पीतं क्वचिद्रक्तं क्वचित्सितम् ॥ ८.२५ ॥
नानावर्णैः समायुक्तं लिङ्गमद्भुतदर्शनम् ।
ब्रह्मविष्ण्विन्द्रसाध्यैश्च समन्तात्परिवारितम् ॥ ८.२६ ॥
नन्दीश्वरगणाध्यक्षैश्चेन्द्रादित्यैश्च तद्वृतम् ।
पश्यामि लिङ्गमीशानं महालिङ्गं तमेव च ॥ ८.२७ ॥
परिवार्य ततस्तं तु प्रसुप्तान्देवदानवान् ।
निमीलिताक्षान्पश्यामि दिव्याभरणभूषितान् ॥ ८.२८ ॥
ततस्ताः पद्मपत्राक्ष्यो नार्यः परमसंमताः ।

नद्यास्तस्या जले स्नात्वा दिव्यपुष्पैर्मनोरमैः ॥ ८.२९ ॥
दत्त्वार्घपाद्यं विधिवल्लिंगस्य सह पक्षिणा ।
अर्चयन्तीर्वरारोहा दश ताः प्रमदोत्तमाः ॥ ८.३० ॥
ततस्त्वभ्यर्च्य तल्लिङ्गं तस्मिन्नेव पुरोत्तमे ।
सर्वा अदर्शनं जग्मुर्विद्युतोऽभ्रगणेष्विव ॥ ८.३१ ॥
न चासौ पक्षिराट्तस्मिन्न स्त्रियो न च देवताः ।
तदेवैकं स्थितं लिङ्गमर्चयन्विस्मयान्वितः ॥ ८.३२ ॥
ततोऽहं दुःखमूढात्मा रुद्रमायेति चिन्तयन् ।
ततः कन्याः समुत्तीर्य दिव्यांबरविभूषणाः ॥ ८.३३ ॥
भासयन्त्यो जगत्सर्वं विद्युतोऽभ्रगणानिव ।
पद्मैर्हिरण्मयैर्दिव्यैरर्चयित्वा शुभाननाः ॥ ८.३४ ॥
विविशुस्तज्जलं क्षिप्रं समंताद्वरभूषणाः ।
तस्मिन्पुरवरे चान्ये तामेवाहं पुनःपुनः ॥ ८.३५ ॥
पश्यामि ह्यमरां कन्यामर्चयन्तीं महेश्वरम् ।
ततोऽहं तां वरारोहामपृच्छं कमलेक्षणाम् ॥ ८.३६ ॥
का त्वमस्मिन्पुरे देवि वससे शिवमर्चती ।
ताश्चागताः स्त्रियः सर्वाः क्व गतास्ते गणेश्वराः ॥ ८.३७ ॥
नमोऽस्तु ते महाभागे ब्रूहि पुण्ये महेश्वरि ।
तव प्रसादाद्विज्ञातुमेतदिच्छामि सुव्रते ।
दयां कृत्वा महादेवि कथयस्व ममानघे ॥ ८.३८ ॥

श्र्युवाच -
विस्मृताहं कथं विप्र दृष्ट्वा कल्पे पुरातने ।
मा तेऽभूत्स्मृतिविभ्रंशः सा चाहं कल्पवाहिनी ॥ ८.३९ ॥
नर्मदा नाम विख्याता रुद्रदेहाद्विनिःसृता ।
यास्ताः कन्यास्त्वया दृष्टा ह्यर्चयन्त्यो महेश्वरम् ॥ ८.४० ॥
याभिस्त्विह समानीतः पक्षिराजसमन्विताः ।
दिशस्ता विद्धि सर्वेशाः सर्वास्त्वं मुनिसत्तम ॥ ८.४१ ॥
तिर्यक्पक्षिस्वरूपेण महायोगी महेश्वरः ।
एभिः शिवपुराद्विप्र आनीतः स महेश्वरः ॥ ८.४२ ॥
सैष देवो महादेवो लिङ्गमूर्तिर्व्यवस्थितः ।
अर्च्यते ब्रह्मविष्ण्विन्द्रैः सुरासुरजगद्गुरुः ॥ ८.४३ ॥
लयमायाति यस्माद्धि जगत्सर्वं चराचरम् ।

तेन लिङ्गमिति प्रोक्तं पुराणज्ञैर्महर्षिभिः ॥ ८.४४ ॥
तेन देवगणाः सर्वे संक्षिप्ता मायया पुरा ।
प्रलीनाश्चैव लोकेश न दृश्यन्ते हि सांप्रतम् ॥ ८.४५ ॥
पुनर्दृश्या भविष्यन्ति सृजमानाः स्वयंभुवा ।
साहं लिङ्गार्चनपरा नर्मदा नाम नामतः ॥ ८.४६ ॥
कालं युगसहस्रस्य रुद्रस्य परिचारिका ।
अस्य प्रसादादमरस्तथा त्वं द्विजपुंगव ॥ ८.४७ ॥
सत्यार्जवदयायुक्तः सिद्धोऽसि त्वं शिवार्चनात् ।
एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ॥ ८.४८ ॥
ताः स्त्रियः स च देवेशो बकरूपो महेश्वरः ।
तस्यास्तद्वचनं श्रुत्वा अवतीर्य महानदीम् ॥ ८.४९ ॥
स्नात्वा समर्चय त्वं हि विधिना मन्त्रपूर्वकम् ।
ततोऽहं सहसा तस्मात्समुत्तीर्य जलाशयात् ॥ ८.५० ॥
न च पश्यामि तल्लिङ्गं न च तां निम्नगां नृप ।
तदैव लोकाः संजाताः क्षितिश्चैव सकानना ॥ ८.५१ ॥
ऋक्षचन्द्रार्कविततं तदेव च नभस्तलम् ।
यथापूर्वमदृष्टं तु तथैव च पुनः कृतम् ।
नतोऽहं मनसा देवमपूजयं महेश्वरम् ॥ ८.५२ ॥
एवं बके पुरा कल्पे मया दृष्टेयमव्यया ।
नर्मदा मर्त्यलोकस्य महापातकनाशिनी ॥ ८.५३ ॥
तस्माद्धर्मपरैर्विप्रैः क्षत्रशूद्रविशादिभिः ।
सदा सेव्या महाभागा धर्मवृद्ध्यर्थकारिभिः ॥ ८.५४ ॥
येऽपि भक्तया सकृत्तोये नर्मदाया महेश्वरम् ।
स्नात्वा ते सर्वं पापं नाशयन्त्यसंशयम् ॥ ८.५५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये बककल्पसमुद्भवो नामाष्टमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ००९



अध्याय ९

श्रीमार्कण्डेय उवाच -
पुनर्युगान्तं ते चान्यं सम्प्रवक्ष्यामि तच्छृणु ।
सूर्यैरादीपिते लोके जङ्गमे स्थावरे पुरा ॥ ९.१ ॥
सरित्सरःसमुद्रेषु क्षयं यातेषु सर्वशः ।
निर्मानुषवषट्कारे ह्यमर्यादगतिं गते ॥ ९.२ ॥
नानारूपैस्ततो मेघैः शक्रायुधविराजितैः ।
सर्वमापूरितं व्योम वार्यौघैः पूरिते तदा ॥ ९.३ ॥
ततस्त्वेकार्णवीभूते सर्वतः सलिलावृते ।
जगत्कृत्वोदरे सर्वं सुष्वाप भगवान्हरः ॥ ९.४ ॥
प्रकृतिं स्वामवष्टभ्य योगात्मा स प्रजापतिः ।
शेते युगसहस्रान्तं कालमाविश्य सार्णवम् ॥ ९.५ ॥
तत्र सुप्तं महात्मानं ब्रह्मलोकनिवासिनः ।
भृग्वादिऋषयः सर्वे ये चान्ये सनकादयः ॥ ९.६ ॥
पर्यङ्के विमले शुभ्रे नानास्तरणसंस्तृते ।
शयानं ददृशुर्देवं सपत्नीकं वृषध्वजम् ॥ ९.७ ॥
विश्वरूपा तु सा नारी विश्वरूपो महेश्वरः ।
गाढमालिङ्ग्य सुप्तस्तां ददृशे चाहमव्ययम् ॥ ९.८ ॥
पादमूले ततस्तस्य श्यामां तां पद्मलक्षणाम् ।
कन्यां पश्यामि सुश्रोणीं चरणौ तस्य मृद्नतीम् ॥ ९.९ ॥
विमलाम्बरसंवीतां व्यालयज्ञोपवीतिनीम् ।
श्यामां कमलपत्राक्षीं सर्वाभरणभूषिताम् ॥ ९.१० ॥
सकलं युगसाहस्रं नर्मदेयं विजानती ।
प्रसुप्तं देवदेवेशमुपास्ते वरवर्णिनी ॥ ९.११ ॥
हृतैर्वेदैश्चतुर्भिश्च ब्रह्माप्येवं महेश्वरः ।
भृग्वाद्यैर्मानसैः पुत्रैः स्तौति शङ्करमव्ययम् ॥ ९.१२ ॥

भक्त्या परमया राजंस्तत्र शम्भुमनामयम् ।
स्तुवन्तस्तत्र देवेशं मन्त्रैरीश्वरसम्भवैः ॥ ९.१३ ॥
प्रसुप्तं देवमीशानं बोधयन्समुपस्थितः ।
उत्तिष्ठ हर पिङ्गाक्ष महादेव महेश्वर ॥ ९.१४ ॥
मम वेदा हृताः सर्वे अतोऽहं स्तोतुमुद्यतः ।
वेदैर्व्याप्तं जगत्सर्वं दिव्यादिव्यं चराचरम् ॥ ९.१५ ॥
अतीतं वर्तमानं च स्मरामि च सृजाम्यहम् ।
तैर्विना चाहमेकस्तु मूकोऽधो जडवत्सदा ॥ ९.१६ ॥
गतिर्वीर्यं बलोत्साहौ तैर्विना न प्रजायते ।
तैर्विना देवदेवेश नाहं किंचित्स्मरामि वै ॥ ९.१७ ॥
तान्वेदान्देवदेवेश शीघ्रं मे दातुमर्हसि ।
जडान्धबधिरं सर्वं जगत्स्थावरजङ्गमम् ॥ ९.१८ ॥
स्थानादि दश चत्वारि न शोभन्ते सुरेश्वर ।
प्रणमाम्यल्पवीर्यत्वाद्वेदहीनः सुरेश्वर ॥ ९.१९ ॥
वेदेभ्यः सकलं जातं यत्किंचित्सचराचरम् ।
तावच्छोभन्ति शास्त्राणि समस्तानि जगद्गुरो ॥ ९.२० ॥
यावद्वेदनिधिरयं नोपतिष्ठेत्सनातनः ।
यथोदितेन सूर्येण तमो याति विनाशताम् ॥ ९.२१ ॥
एवं समस्तपापानि यान्ति वेदस्य धारणात् ।
वेदे रहसि यत्सूक्ष्मं यत्तद्ब्रह्म सनातनम् ॥ ९.२२ ॥
हृदिस्थं देव जानामि गतं तद्वेदगर्जनात् ।
वेदानुच्चरतो मेऽद्य तव शङ्कर चाग्रतः ॥ ९.२३ ॥
अकस्मात्ते गता वेदा न सृजेयं विभो भुवम् ।
तेऽपि सर्वे महादेव प्रविष्टाः सम्मुखार्णवम् ॥ ९.२४ ॥
ते याच्यमाना देवेश तिष्ठन्तु स्मरणे मम ।
दुहितेयं विशालाक्षी सर्वः सर्वं विजानते ॥ ९.२५ ॥
जायती युगसाहस्रं नान्या काचिद्भवेद्दृशी ।
ऋषिश्चायं महाभागो मार्कण्डो धीमतां वरः ॥ ९.२६ ॥
कल्पे कल्पे महादेव त्वामयं पर्युपासते ।
जगत्त्रयहितार्थाय चरते व्रतमुत्तमम् ॥ ९.२७ ॥
एवमुक्तस्तु देवेशो ब्रह्मणा परमेष्ठिना ।
उवाच श्लक्ष्णया वाचा नर्मदां सरितां वराम् ॥ ९.२८ ॥
कथयस्व महाभागे ब्रह्मणस्त्वं तु पृच्छतः ।

केन वेदा हृताः सर्वे वेधसो जगतीगुरोः ॥ ९.२९ ॥
एवमुक्ता तु रुद्रेण उवाच मृगलोचना ।
ब्रह्मणो जपतो वेदांस्त्वयि सुप्ते महेश्वर ॥ ९.३० ॥
भवतश्छिद्रमासाद्य घोरेऽस्मिन्सलिलावृते ।
पूर्वकल्पसमुद्भूतावसुरौ सुरदुर्जयौ ॥ ९.३१ ॥
श्रियावृत्तौ महादेव त्वया चोत्पादितौ पुरा ।
सुरासुरसुदुर्जेयौ दानवौ मधुकैटभौ ॥ ९.३२ ॥
तौ वायुभूतौ सूक्ष्मौ च पठतोऽस्मात्पितामहात् ।
तावाशु हृत्वा वेदांश्च प्रविष्टौ च महार्णवम् ॥ ९.३३ ॥
एतच्छ्रुत्वा महातेजा ह्यमृतायास्ततो वचः ।
सस्मार स च देवेशं शङ्खचक्रगदाधरम् ॥ ९.३४ ॥
स विवेश महाराज भूतलं ससुरोत्तमः ।
दानवान्तकरो देवः सर्वदैवतपूजितः ॥ ९.३५ ॥
मीनरूपधरो देवो लोडयामास चार्णम् ।
वेदांश्च ददृशे तत्र पाताले निहितान्प्रभुः ॥ ९.३६ ॥
तौ च दैत्यौ महावीर्यौ दृष्टवान्मधुसूदनः ।
महावेगौ महाबाहू सूदयामास तेजसा ॥ ९.३७ ॥
वेदांस्तत्रापि तोयस्थानानिनाय जगद्गुरुः ।
चतुर्वक्त्राय देवायाददाच्चक्रविभूषितः ॥ ९.३८ ॥
ततः प्रहृष्टो भगवान् वेदांल्लब्ध्वा पितामहः ।
जनयामास निखिलं जगद्भूयश्चराचरम् ॥ ९.३९ ॥
सा च देवी नदी पुण्या रुद्रस्य परिचारिका ।
पावनी सर्वभूतानां प्रोवाह सलिलं तदा ॥ ९.४० ॥
तस्यास्तीरे ततो देवा ऋषयश्च तपोधनाः ।
यजन्ति त्र्यम्बकं देवं प्रहृष्टेनान्तरात्मना ॥ ९.४१ ॥
एका मूर्तिर्महेशस्य कारणान्तरगता ।
त्रैगुण्या कुरुते कर्म ब्रह्मचक्रीशरूपतः ॥ ९.४२ ॥
एतेषां तु पृथग्भावं ये कुर्वन्ति सुमोहिताः ।
तेषां धर्मः कुतः सिद्धिर्जायते पापकर्मिणाम् ॥ ९.४३ ॥
एवमेता महानद्यस्तिस्रो रुद्रसमुद्भवाः ।
एका एव त्रिधा भूता गङ्गा रेवा सरस्वती ॥ ९.४४ ॥
गङ्गा तु वैष्णवी मूर्तिः सर्वपापप्रणाशिनी ।
रुद्रदेहसमुद्भूता नर्मदा चैवमेव तु ॥ ९.४५ ॥

ब्राह्मी सरस्वती मूर्तिस्त्रिषु लोकेषु विश्रुता ।
दिव्या कामगमा देवी वाग्विभूत्यै तु संस्थिता ॥ ९.४६ ॥
नर्मदा परमा काचिन्मर्त्यमूर्तिकला शिवा ।
दिव्या कामगमा देवी सर्वत्र सुरपूजिता ॥ ९.४७ ॥
व्यापिनी सर्वभूतानां सूक्ष्मात्सूक्ष्मतरा स्मृता ।
अक्षया ह्यमृता ह्येषा स्वर्गसोपानमुत्तमा ॥ ९.४८ ॥
सृष्टा रुद्रेण लोकानां संसारार्णवतारिणी ॥ ९.४९ ॥
सीरजलं येऽपि पिबन्ति लोके मुच्यन्ति ते पापविशेषसङ्घैः ।
व्रजन्ति संसारमनादिभावं त्यक्त्वा चिरं मोक्षपदं विशुद्धम् ॥ ९.५० ॥
यथा गङ्गा तथा रेवा तथा चैव सरस्वती ।
समं पुण्यफलं प्रोक्तं स्नानदर्शनचिन्तनैः ॥ ९.५१ ॥
वरदानान्महाभागा ह्यधिका चोच्यते बुधैः ।
कारुण्यान्तरभावेन न मृता समुपागता ॥ ९.५२ ॥
मुच्यन्ते दर्शनात्तेन पातकैः स्नानमङ्गलैः ।
नर्मदायां नृपश्रेष्ठ ये नमन्ति त्रिलोचनम् ॥ ९.५३ ॥
उमारुद्राङ्गसम्भूता येन चैषा महानदी ।
लोकान्प्रापयते स्वर्गं तेन पुण्यत्वमागता ॥ ९.५४ ॥
य एवमीशानवरस्य देहं विभज्य देवीमिह संशृणोति ।
स याति रुद्रं महतारवेण गन्धर्वयक्षैरिव गीयमानः ॥ ९.५५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदोत्पत्तितत्स्नानफलादिकथनं नाम नवमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१०



अध्याय १०

युधिष्ठिर उवाच -
कस्मिन्कल्पे महाभागा नर्मदेयं द्विजोत्तम ।
विभक्ता ऋषिभिः सर्वैस्तपोयुक्तैर्महात्मभिः ॥ १०.१ ॥
एतद्विस्तरतः सर्वं ब्रूहि मे वदतां वर ।
कल्पान्ते यद्भवेत्कष्टं लोकानां तत्त्वमेव च ॥ १०.२ ॥
अतीते तु पुरा कल्पे यथेयं वर्ततेऽनघ ।
अस्यान्त्यस्य च कल्पस्य व्यवस्थां कथय प्रभो ।
एवमुक्तः सभामध्ये मार्कण्डो वाक्यमब्रवीत् ॥ १०.३ ॥

मार्कण्डेय उवाच -
वक्ष्येऽहं श्रूयतां सर्वैः कथेयं पूर्वतः श्रुता ॥ १०.४ ॥
महत्कथेयं वैशिष्टी कल्पादस्मात्परं तु या ।
लोकक्षयकरो घोर आसीत्कालः सुदारुणः ॥ १०.५ ॥
तस्मिन्नपि महाघोरे यथेयं वा मृता सती ।
परितुष्टैर्विभक्ता च शृणुध्वं तां कथामिमाम् ॥ १०.६ ॥
युगान्ते समनुप्राप्ते पितामहदिनत्रये ।
मानसा ब्रह्मणः पुत्राः साक्षाद्ब्रह्मेव सत्तमाः ॥ १०.७ ॥
सनकाद्या महात्मानो ये च वैमानिका गणाः ।
यमेन्द्रवरुणाद्याश्च लोकपाला दिनत्रये ॥ १०.८ ॥
कालापेक्षास्तु तिष्ठन्ति लोकवृत्तान्ततत्पराः ।
ततः कल्पक्षये प्राप्ते तेषां ज्ञानमनुत्तमम् ॥ १०.९ ॥
सर्वेषां नश्यते चायुर्युगरूपानुसारतः ।
भूर्लोकं ते परित्यज्य अगमंश्च भुवं तदा ॥ १०.१० ॥
स्वर्लोकं च महश्चैव जनश्चैव तपस्तदा ।
आश्रयं सत्यलोकं च सर्वलोकमनुत्तमम् ॥ १०.११ ॥

कालं युगसहस्रान्तं पुत्रपौत्रसमन्विताः ।
सत्यलोके च तिष्ठन्ति यावत्संजायते जगत् ॥ १०.१२ ॥
ब्रह्मपुत्राश्च ये केचित्कल्पादौ न भवन्ति ह ।
त्रैलोक्यं ते परित्यज्य अनाधारं भवन्ति च ॥ १०.१३ ॥
तैः सार्धं ये तु ते विप्रा अन्ये चापि तपोधनाः ।
यक्षरक्षःपिशाचाश्च अन्ये वैमानिका गणाः ॥ १०.१४ ॥
ऋषयश्च महाभागा वर्णाश्चान्ये पृथग्विधाः ।
सीदन्ति भूम्यां सहिता ये चान्ये तलवासिनः ॥ १०.१५ ॥
अनावृष्टिरभूत्तत्र महती शतवार्षिकी ।
लोकक्षयकरी रौद्रा वृक्षवीरुद्विनाशिनी ॥ १०.१६ ॥
त्रैलोक्यसंक्षोभकरी सप्तार्णवविशोषणी ।
ततो लोकाः क्षुधाविष्टा भ्रमन्तीव दिशो दश ॥ १०.१७ ॥
कंदैर्मूलैः फलैर्वापि वर्तयन्ते सुदुःखिताः ।
सरितः सागराः कूपाः सेवन्ते पावनानि च ॥ १०.१८ ॥
तत्रापि सर्वे शुष्यन्ति सरिद्भिः सह सागराः ।
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ॥ १०.१९ ॥
तान्येवाग्रे प्रलीयन्ते भिन्नान्युरुजलेन वै ।
अथ संक्षीयमाणासु सरित्सु सह सागरैः ॥ १०.२० ॥
ऋषीणां षष्टिसाहस्रं कुरुक्षेत्रनिवासिनाम् ।
ये च वैखानसा विप्रा दन्तोलूखलिनस्तथा ॥ १०.२१ ॥
हिमाचलगुहागुह्ये ये वसन्ति तपोधनाः ।
सर्वे ते मामुपागम्य क्षुत्तृषार्तास्तपोधनाः ॥ १०.२२ ॥
ऊचुः प्राञ्जलयः सर्वे सीदयामो महामुने ।
सरित्सागरशैलान्तं जगत्संशुष्यते द्विज ॥ १०.२३ ॥
कुत्र यास्याम सहिता यावत्कालस्य पर्ययः ।
दीर्घायुरसि विप्रेन्द्र न मृतस्त्वं युगक्षये ॥ १०.२४ ॥
भूतं भव्यं भविष्यच्च सर्वं तव हृदि स्थितम् ।
तस्मात्त्वं वेत्सि सर्वं च कथयस्व महाव्रत ॥ १०.२५ ॥
कीदृक्कालं महाभाग क्षपिष्यामोऽथ सुव्रत ।
अनावृष्टिहतं सर्वं सीदते सचराचरम् ॥ १०.२६ ॥
परित्राहि महाभाग न यथा याम संक्षयम् ।
ततः संचिन्त्य मनसा त्वरन्विप्रानथाब्रवम् ॥ १०.२७ ॥
कुरुक्षेत्रं त्यजध्वं च पुत्रदारसमन्विताः ।

त्यक्त्वोदीचीं दिशं सर्वे यामो याम्यामनुत्तमाम् ॥ १०.२८ ॥
नगरग्रामघोषाढ्यां पुरपत्तनशोभिताम् ।
गच्छामो नर्मदातीरं बहुसिद्धनिषेवितम् ॥ १०.२९ ॥
रुद्राङ्गीं तां महापुण्यां सर्वपापप्रणाशिनीम् ।
पश्यामस्तां महाभागां न्यग्रोधावारसंकुलाम् ॥ १०.३० ॥
माहेश्वरैर्भागवतैः सांख्यैः सिद्धैः सुसेविताम् ।
अनावृष्टिभयाद्भीताः कूलयोरुभयोरपि ॥ १०.३१ ॥
आश्रमे ह्याश्रमान्दिव्यान्कारयामो जितव्रताः ।
एवमुक्तास्तु ते सर्वे समेतानुचरैः सह ॥ १०.३२ ॥
नर्मदातीरमासाद्य स्थिताः सर्वेऽकुतोभयाः ।
किंचित्पूर्वमनुस्मृत्य पुरा कल्पादिभिर्भयम् ॥ १०.३३ ॥
प्राप्तास्तु नर्मदातीरमादावेव कलौ युगे ।
ततो वर्षशतं पूर्णं दिव्यं रेवातटेऽवसन् ॥ १०.३४ ॥
षड्विंशच्च सहस्राणि वर्षाणां मानुषाणि च ।
तत्राश्चर्यं मया दृष्टमृषीणां वसतां नृप ॥ १०.३५ ॥
अनावृष्टिहते लोके संशुष्के स्थावरे चरे ।
भिन्ने युगादिकलने हाहाभूते विचेतने ॥ १०.३६ ॥
चातुर्वर्ण्ये प्रलीने तु नष्टे होमबलिक्रमे ।
निःस्वाहे निर्वषट्कारे शौचाचारविवर्जिते ॥ १०.३७ ॥
इयमेका सरिच्छ्रेष्ठा ऋषिकोटिनिषेविता ।
नान्या काचित्त्रिलोकेऽपि रमणीया नरेश्वर ॥ १०.३८ ॥
यथेयं पुण्यसलिला इन्द्रस्येवामरावती ।
देवतायतनैः शुभ्रैराश्रमैश्च सुकल्पितैः ॥ १०.३९ ॥
शोभते नर्मदा देवी स्वर्गे मन्दाकिनी यथा ।
यावद्वृक्षा महाशैला यावत्सागरसंभवा ॥ १०.४० ॥
उभयोः कूलयोस्तावन्मण्डितायतनैः शुभैः ।
हूयद्भिरग्निहोत्रैश्च हविर्धूमसमाकुला ॥ १०.४१ ॥
बभूव नर्मदा देवी प्रावृट्काल इव शर्वरी ।
देवतायतनैर्नैकैः पूजासंस्कारशोभिता ॥ १०.४२ ॥
सरिद्भिर्भ्राजते श्रेष्ठा पुरी शाक्री च भास्करी ।
केचित्पञ्चाग्नितपसः केचिदप्यग्निहोत्रिणः ॥ १०.४३ ॥
केचिद्धूमकमश्नन्ति तपस्युग्रे व्यवस्थिताः ।
आत्मयज्ञरताः केचिदपरे भक्तिभागिनः ॥ १०.४४ ॥

वैष्णवज्ञानमासाद्य केचिच्छैवं व्रतं तथा ।
एकरात्रं द्विरात्रं च केचित्षष्ठाहभोजनाः ॥ १०.४५ ॥
चान्द्रायणविधानैश्च कृच्छ्रिणश्चातिकृच्छ्रिणः ।
एवंविधैस्तपोभिश्च नर्मदातीरशोभितैः ॥ १०.४६ ॥
यजद्भिः शंकरं देवं केशवं भाति नित्यदा ।
एकत्वे च पृथक्त्वे च यजतां च महेश्वरम् ॥ १०.४७ ॥
कलौ युगे महाघोरे प्राप्ताः सिद्धिमनुत्तमाम् ।
यस्य यस्य हि या भक्तिर्विज्ञानं यस्य यादृशम् ॥ १०.४८ ॥
यस्मिन्यस्मिंश्च देवे तु तांतामीशोऽददात्प्रभुः ।
स्वभावैकतया भक्त्या तामेत्यान्तः प्रलीयते ॥ १०.४९ ॥
संसारे परिवर्तन्ते ये पृथग्भाजिनो नराः ।
ये महावृक्षमीशानं त्यक्त्वा शाखावलम्बिनः ॥ १०.५० ॥
पुनरावर्तमानास्ते जायन्ते हि चतुर्युगे ।
देवान्ते स्थावरान्ते च संसारे चाभ्रमन्क्रमात् ॥ १०.५१ ॥
पुनर्जन्म पुनः स्वर्गे पुनर्घोरे च रौरवे ।
ये पुनर्देवमीशानं भवं भक्तिसुसंस्थिताः ॥ १०.५२ ॥
यजन्ति नर्मदातीरे न पुनस्ते भवन्ति च ।
आ देहपतनात्केचिदुपासन्तः परं गताः ॥ १०.५३ ॥
केचिद्द्वादशभिर्वर्षैः षड्भिरन्ये तपोधनाः ।
त्रिभिः संवत्सरैः केचित्केचित्संवत्सरेण तु ॥ १०.५४ ॥
षड्भिर्मासैस्तु संसिद्धास्त्रिभिर्मासैस्तथापरे ।
मुनयो देवमाश्रित्य नर्मदां च यशस्विनीम् ॥ १०.५५ ॥
छित्त्वा संसारदोषांश्च अगमन्ब्रह्म शाश्वतम् ।
एवं कलियुगे घोरे शतशोऽथ सहस्रशः ॥ १०.५६ ॥
नर्मदातीरमाश्रित्य मुनयो रुद्रमाविशन् ॥ १०.५७ ॥
ये नर्मदातीरमुपेत्य विप्राः शैवे व्रते यत्नमुपप्रपन्नाः ।
त्रिकालमम्भः प्रविगाह्य भक्त्या देवं समभ्यर्च्य शिवं व्रजन्ति ॥ १०.५८ ॥
ध्यानार्चनैर्जाप्यमहाव्रतैश्च नारायणं वा सततं स्मरन्ति ।
ते धौतपाण्डुरपटा इव राजहंसाः संसारसागरजलस्य तरन्ति पारम् ॥ १०.५९ ॥
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ १०.६० ॥
यो वा हरं पूजयते जितात्मा मासं च पक्षं च वसेन्नरेन्द्र ।
रेवां समाश्रित्य महानुभावः स देवदेवोऽथ भवेत्पिनाकी ॥ १०.६१ ॥

कीटाः पतंगाश्च पिपीलिकाश्च ये वै म्रियन्तेऽम्भसि नर्मदायाः ।
ते दिव्यरूपास्तु कुलप्रसूताः शतं समा धर्मपरा भवन्ति ॥ १०.६२ ॥
कालेन वृक्षाः प्रपतन्ति येऽपि महातरंगौघनिकृत्तमूलाः ।
ते नर्मदांभोभिरपास्तपापा देदीप्यमानास्त्रिदिवं प्रयान्ति ॥ १०.६३ ॥
अकामकामाश्च तथा सकामा रेवान्तमाश्रित्य म्रियन्ति तीरे ।
जडान्धमूकास्त्रिदिवं प्रयान्ति किमत्र विप्रा भवभावयुक्ताः ॥ १०.६४ ॥
मासोपवासैरपि शोषिताङ्गा न तां गतिं यान्ति विमुक्तदेहाः ।
म्रियन्ति रेवाजलपूतकायाः शिवार्चने केशवभावयुक्ताः ॥ १०.६५ ॥
नीवारश्यामाकयवेङ्गुदाद्यैरन्यैर्मुनीन्द्रा इह वर्तयन्ति ।
आप्रित्य कूलं त्रिदशानुगीतं ते नर्मदाया न विशन्ति मृत्युम् ॥ १०.६६ ॥
भ्रमन्ति ये तीरमुपेत्य देव्यास्त्रिकालदेवार्चनसत्यपूताः ।
विण्मूत्रचर्मास्थितिरोपधानाः कुक्षौ युवत्या न वसन्ति भूयः ॥ १०.६७ ॥
किं यज्ञदानैर्बहुभिश्च तेषां निषेवितैस्तीर्थवरैः समस्तैः ।
रेवातटं दक्षिणमुत्तरं वा सेवन्ति ते रुद्रचरानुपूर्वम् ॥ १०.६८ ॥
ते वञ्चिताः पङ्गुजडान्धभूता लोकेषु मर्त्याः पशुभिश्च तुल्याः ।
ये नाश्रिता रुद्रशरीरभूतां सोपानपङ्क्तिं त्रिदिवस्य रेवाम् ॥ १०.६९ ॥
युगं कलिं घोरमिमं य इच्छेद्द्रष्टुं कदाचिन्न पुनर्द्विजेन्द्रः ।
स नर्मदातीरमुपेत्य सर्वं सम्पूजयेत्सर्वविमुक्तसंगः ॥ १०.७० ॥
विघ्नैरनेकैरतियोज्यमाना ये तीरमुझन्ति न नर्मदायाः ।
ते चैव सर्वस्य हितार्थभूता वन्द्याश्च ते सर्वजनस्य मान्याः ॥ १०.७१ ॥
भृग्वत्रिगार्गेयवशिष्ठकङ्काः शतैः समेतैर्नियतास्त्वसंख्यैः ।
सिद्धिं परां ते हि जलप्लुताङ्गाः प्राप्तास्तु लोकान्मरुतां न चान्ये ॥ १०.७२ ॥
ज्ञानं महत्पुण्यतमं पवित्रं पठन्त्यदो नित्यविशुद्धसत्त्वाः ।
गतिं परां यान्ति महानुभावा रुद्रस्य वाक्यं हि यथा प्रमाणम् ॥ १०.७३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदास्नानफलश्रुतिकथनं नाम दशमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०११



अध्याय ११

युधिष्ठिर उवाच -
अहो महत्पुण्यतमा विशिष्टा क्षयं न याता इह या युगान्ते ।
तस्मात्सदा सेव्यतमा मुनीन्द्रैर्ध्यानार्चनस्नानपरायणैश्च ॥ ११.१ ॥
यामाश्रित्य गता मोक्षमृषयो धर्मवत्सलाः ।
ये त्वयोक्तास्तु नियमा ऋषीणां वेदनिर्मिताः ॥ ११.२ ॥
मोक्षावाप्तिर्भवेद्येषां नियमैश्च पृथग्विधैः ।
दशद्वादशभिर्वापि षड्भिरष्टाभिरेव वा ॥ ११.३ ॥
त्रिभिस्तथा चतुर्भिर्वा वर्षैर्मासैस्तथैव च ।
मुच्यन्ते कलिदोषैस्ते देवेशानसमर्चनात् ॥ ११.४ ॥
ब्रह्माणं वा सुरश्रेष्ठ केशवं वा जगद्गुरुम् ।
अर्चयन्पापमखिलं जहात्येव न संशयः ॥ ११.५ ॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ ।
यस्मिन्संसारगहने निमग्नाः सर्वजन्तवः ।
ते कथं त्रिदिवं प्राप्ता इति मे संशयो वद ॥ ११.६ ॥

श्रीमार्कण्डेय उवाच -
जन्मान्तरैरनेकैस्तु मानुष्यमुपलभ्यते ।
भक्तिरुत्पद्यते चात्र कथंचिदपि शङ्करे ॥ ११.७ ॥
तीर्थदानोपवासानां यज्ञैर्देवद्विजार्चनैः ।
अवाप्तिर्जायते पुंसां श्रद्धया परया नृप ॥ ११.८ ॥
तस्माच्छ्रद्धा प्रकर्तव्या मानवैर्धर्मवत्सलैः ।
ईशोऽपि श्रद्धया साध्यस्तेन श्रद्धा विशिष्यते ॥ ११.९ ॥
अन्यथा निष्फलं सर्वं श्रद्धाहीनं तु भारत ।
तस्मात्समाश्रयेद्भक्तिं रुद्रस्य परमेष्ठिनः ॥ ११.१० ॥
तेषांहि सफलं जन्म येषां भक्तिरचञ्चला ।

सा चैव त्रिविधा भक्तिः सात्त्विकी राजसी तथा ॥ ११.११ ॥
तामसी सर्वलोकस्य त्रिविधं च फलं लभेत् ।
ते कर्मफलसंयोगादावर्तन्ते पुनःपुनः ॥ ११.१२ ॥
जन्मान्तरशतैस्तेषां ज्ञानिनां देवयाजिनाम् ।
देवत्रये भवेद्भक्तिः क्षयात्पापस्य कर्मणः ॥ ११.१३ ॥
ईशानात्तु पुनर्मोक्षो जायते छिन्नसंशयः ।
ये पुनर्नर्मदातीरमाश्रित्य द्विजपुंगवाः ॥ ११.१४ ॥
त्रयीमार्गमसन्दिग्धास्ते यान्ति परमां गतिम् ।
एकाग्रमनसो ये तु शङ्करं शिवमव्ययम् ॥ ११.१५ ॥
अर्चयन्तीह निरताः क्षिप्रं सिध्यन्ति ते जनाः ।
कालेन महता सिद्धिर्जायतेऽन्यत्र देहिनाम् ॥ ११.१६ ॥
नर्मदायाः पुनस्तीरे क्षिप्रं सिद्धिरवाप्यते ।
षड्भिर्वर्षैस्तु सिध्यन्ति ये तु सांख्यविदो जनाः ॥ ११.१७ ॥
वैष्णवा ज्ञानसम्पन्नास्तेऽपि सिध्यन्ति चाग्रतः ।
सर्वयोगविदो ये च समुद्रमिव सिन्धवः ॥ ११.१८ ॥
एकीभवन्ति कल्पान्ते योगे माहेश्वरे गताः ।
सर्वेषामेव योगानां योगो माहेश्वरो वरः ॥ ११.१९ ॥
तमासाद्य विमुच्यन्ते येऽपि स्युः पापयोनयः ।
शिवमर्च्य नदीकूले जायन्ते ते न योनिषु ॥ ११.२० ॥
गतिरेषा दुरारोहा सर्वपापक्षयंकरी ।
मुच्यन्ते मङ्क्षु संसाराद्रेवामाश्रित्य जन्तवः ॥ ११.२१ ॥
तस्मात्स्नायी भवेन्नित्यं तथा भस्मविलेपनः ।
नर्मदातीरमासाद्य क्षिप्रं सिद्धिमवाप्नुयात् ॥ ११.२२ ॥
त्रिकालं पूजयेच्छान्तो यो नरो लिङ्गमादरात् ।
सर्वरोगविनिर्मुक्तः स याति परमां गतिम् ॥ ११.२३ ॥
षड्भिः सिध्यति मसैस्तु यद्यपि स्यात्स पापकृत् ।
ये पुनः शुद्धमनसो मासैः शुध्यन्ति ते त्रिभिः ॥ ११.२४ ॥
यथा दिनकरस्पृष्टं हिमं शैलाद्विशीर्यन्ते ।
तद्वद्विलीयते पापं स्पृष्टं भस्मकणैः शुभैः ॥ ११.२५ ॥
वैनतेयभयत्रस्ता यथा नश्यन्ति पन्नगाः ।
तद्वत्पापानि नश्यन्ति भस्मनाभ्युक्षितानि ह ॥ ११.२६ ॥
नर्मदातोयपूतेन भस्मनोद्धूलयन्ति ये ।
सद्यस्ते पापसङ्घाच्च मुच्यन्ते नात्र संशयः ॥ ११.२७ ॥

व्रतं पाशुपतं भक्त्या यथोक्तं पालयन्ति ये ।
शूद्रान्नेन विहीनास्तु ते यान्ति परमां गतिम् ॥ ११.२८ ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यान्नमन्नमेव स्याच्छूद्रान्नं रुधिरं स्मृतम् ॥ ११.२९ ॥
शूद्रान्नरससंपुष्टा ये म्रियन्ते द्विजोत्तमाः ।
ते तपोज्ञानहीनास्तु काका गृध्रा भवन्ति ते ॥ ११.३० ॥
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥ ११.३१ ॥
विशेषाद्यतिधर्मेण तपोलौल्यं समाश्रिताः ।
नरकं यान्त्यसन्दिग्धमित्येवं शङ्करोऽब्रवीत् ॥ ११.३२ ॥
ईदृग्रूपाश्च ये विप्राः पाशुपत्ये व्यवस्थिताः ।
ते महत्पापसंघातं दहन्त्येव न संशयः ॥ ११.३३ ॥
विडम्बेन च संयुक्ता लौलुप्येन च पीडिताः ।
असंग्राह्या इत्येवं श्रुतिनोदना ॥ ११.३४ ॥
मातापितृकृतैर्दोषैरन्ये केचित्स्वकर्मजैः ।
नष्टा ज्ञानावलेपेन अहङ्कारेणऽपरे ॥ ११.३५ ॥
शाङ्करे प्रस्थिता धर्मे ये स्मृत्यर्थबहिष्कृताः ।
क्लिश्यमानास्तु कलेन ते यान्ति परमां गतिम् ॥ ११.३६ ॥
अश्रद्दधानाः पुरुषा मूर्खा दम्भविवर्धिताः ।
न सिध्यन्ति दुरात्मानः कुदृष्टान्तार्थकीर्तनाः ॥ ११.३७ ॥
महाभाग्येऽपि तीर्थस्य शाङ्करं व्रतमास्थिताः ।
वियोनिं यान्त्यसन्दिग्धं लौलुप्येन समन्विताः ॥ ११.३८ ॥
न तीर्थैर्न च दानैश्च दुष्कृतं हि विलुप्यते ।
अज्ञानाच्च प्रमादाच्च कृतं पापं विनश्यति ॥ ११.३९ ॥
एवं ज्ञात्वा तु विधिना वर्तितव्यं द्विजातिभिः ।
परं ब्रह्म जपद्भिश्च वार्तितव्यं मुहुर्मुहुः ॥ ११.४० ॥
ऊर्ध्वरूपं विरूपाक्षं योऽधीते रुद्रमेव च ।
ईशानं पश्यते साक्षात्षण्मासात्सङ्गवर्जितः ॥ ११.४१ ॥
संहिताया दशावृत्तीर्यः करोति सुसंयतः ।
नर्मदातटमाश्रित्य स मुच्येत्सर्वपातकैः ॥ ११.४२ ॥
पुराणसंहितां वापि शैवीं वा वैष्णवीमपि ।
यः पठेन्नर्मदातीरे शिवाग्रे स शिवात्मकः ॥ ११.४३ ॥
आ भूतसंक्षयं यावत्स्वर्गलोके महीयते ।

संसाख्यसनं हातुं पुरा प्रोक्तं तु नन्दिना ॥ ११.४४ ॥
देवर्षिसिद्धगन्धर्वसमवाये शिवालये ।
नन्दिगीतामिमां राजञ्छृणुष्वैकमनाः शुभाम् ॥ ११.४५ ॥
स्वर्गमोक्षप्रदां पुण्यां संसारभयनाशिनीम् ॥ ११.४६ ॥
संसारगह्वरगुहां प्रविहातुमेतां चेदिच्छथ प्रतिपदं भवतापखिन्नाः ।
नानाविधैर्निजकृतैर्बहुकर्मपाशैर्बद्धाः सुखाय शृणुतैकहितं मयोक्तम् ॥ ११.४७ ॥
शक्र वक्रगतिं मा गा मा कृथा यम यातनाम् ।
चेतः प्रचेतः शमय लौलुप्यं त्यज वित्तप ॥ ११.४८ ॥
दीनानाथविशिष्टेभ्यो धनं सर्वं परित्यज ।
यदि संसारजलधेर्वीचीप्रेङ्खोल्लनातुरः ॥ ११.४९ ॥
जन्मोद्विग्नं मृतेस्त्रस्तं ग्रस्तं कामादिभिर्नरम् ।
स्रस्तं यो न यमादिभ्यः पिनाकी पाति पावनः ॥ ११.५० ॥
मा धेहि गर्वं कीनाश हास्यं यास्यसि पीडयन् ।
प्राणिनं सर्वशरणं तद्भावि शरणं तव ॥ ११.५१ ॥
कालः करालको बालः को मृत्युः को यमाधमः ।
शिवविष्णुपराणां हि नराणां किं भयं भवेत् ॥ ११.५२ ॥
भवभारार्तजन्तूनां रेवातीरनिवासिनाम् ।
भर्गश्च भगवांश्चैव भवभीतिविभेदनौ ॥ ११.५३ ॥
शिवं भज शिवं ध्याय शिवं स्तुहि शिवं यज ।
शिवं नम वराक त्वं ज्ञानं मोक्षं यदीच्छसि ॥ ११.५४ ॥
पठ पञ्चाननं शास्त्रं मन्त्रं पञ्चाक्षरं जप ।
धेहि पञ्चात्मकं तत्त्वं यज पञ्चाननं परम् ॥ ११.५५ ॥
किं तैः कर्मगणैः शोच्यैर्नानाभावविशेषितैः ।
यदि पञ्चाननः श्रीमान् सेव्यते सर्वथा शिवः ॥ ११.५६ ॥
किं संसारगजोन्मत्तबृंहितैर्निभृतैरपि ।
यदि पञ्चाननो देवो भावगन्धोपसेवितः ॥ ११.५७ ॥
रे मूढ किं विषादेन प्राप्य कर्मकदर्थनाम् ।
भवानीवल्लभं भीमं जप त्वं भयनाशनम् ॥ ११.५८ ॥
नर्मदातीरनिलयं दुःखौघविलयंकरम् ।
स्वर्गमोक्षप्रदं भर्गं भज मूढ सुरेश्वरम् ॥ ११.५९ ॥
विहाय रेवां सुरसिन्धुसेव्यां तत्तीरसंस्थं च हरं हरिं च ।
उन्मत्तवद्भावविवर्जितस्त्वं क्व यासि रे मूढ दिगन्तराणि ॥ ११.६० ॥
भज रेवाजलं पुण्यं यज रुद्रं सनातनम् ।

जप पञ्चाक्षरीं विद्यां व्रज स्थानं च वाञ्छितम् ॥ ११.६१ ॥
क्लेशयित्वा निजं कायमुपायैर्बहुभिस्तु किम् ।
भज रेवां शिवं प्राप्य सुखसाध्यं परं पदम् ॥ ११.६२ ॥
एवं कैलासमासाद्य नदीं स शिवसन्निधौ ।
जगौ यल्लोकपालानां तन्मयोक्तं तवाधुना ॥ ११.६३ ॥

मार्कण्डेय उवाच -
स्नानदानपरो यस्तु नित्यं धर्ममनुव्रतः ।
नर्मदातीरमाश्रित्य मुच्यते सर्वपातकैः ॥ ११.६४ ॥
विधिहीनो जपेन्नित्यं वेदान्सर्वाञ्छतं समाः ।
मृत्युलाङ्गलजाप्येन समो योऽप्यधिको गुणैः ॥ ११.६५ ॥
बीजयोन्यविशुद्धस्तु यथा रुद्रं न विन्दति ।
तथा लाङ्गलमन्त्रोऽपि न तिष्ठति गतायुषि ॥ ११.६६ ॥
गायत्रीजपसंयुक्तः संयमी ह्यधिको गुणैः ।
अग्निमीडे इषेत्वो वा अग्न आयाहि नित्यदा ॥ ११.६७ ॥
शन्नो देवीति कूलस्थो जपेन्मुच्येत किल्बिषैः ॥ ११.६८ ॥
साङ्गोपाङ्गांस्तथा वेदाञ्जपन्नित्यं समाहितः ।
न तत्फलमवाप्नोति गायत्र्या संयमी यथा ॥ ११.६९ ॥
रुद्राध्यायं सकृज्जप्त्वा विप्रो वेदसमन्वितः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ११.७० ॥
अन्यद्वै जप्यसंस्थानं सूक्तमारण्यकं तथा ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ११.७१ ॥
यत्किंचित्क्रियते जाप्यं यच्च दानं प्रदीयते ।
नर्मदाजलमाश्रित्य तत्सर्वं चाक्षयं भवेत् ॥ ११.७२ ॥
एवंविधैर्व्रतैर्नित्यं नर्मदां ये समाश्रिताः ।
ते मृता वैष्णवं यान्ति पदं वा शैवमव्ययम् ॥ ११.७३ ॥
सत्यलोकं नराः केचित्सूर्यलोकं तथापरे ।
अप्सरोगणसंवीता यावदाभूतसम्प्लवम् ॥ ११.७४ ॥
एवं वै वर्तमानेऽस्मिंल्लोके तु नृपपुंगव ।
ऋषीणां दशकोट्यस्तु कुरुक्षेत्रनिवासिनाम् ॥ ११.७५ ॥
मया सह महाभाग नर्मदातटमाश्रिताः ।
फलमूलकृताहारा अर्चयन्तः स्थिताः शिवम् ॥ ११.७६ ॥
तच्च वर्षशतं दिव्यं कालसंख्यानुमानतः ।

षड्विंशतिसहस्राणि तानि मानुषसंख्यया ॥ ११.७७ ॥
ततस्तस्यामतीतायां सन्ध्यायां नृपसत्तम ।
शेषं मानुष्यमेकं तु काले वर्षशतं स्थितम् ॥ ११.७८ ॥
ततोऽभवदनावृष्टिर्लोकक्षयकरी तदा ।
यया यातं जगत्सर्वं क्षयं भूयो हि दारुणम् ॥ ११.७९ ॥
ये पूर्वमिह संसिद्धा ऋषयो वेदपारगाः ।
तेषां प्रभावाद्भगवान् ववर्ष बलवृत्रहा ॥ ११.८० ॥
महती भूरिसलिला समन्ताद्वृष्टिराहिता ।
ततो वृष्ट्या तु तेषां वै वर्तनं समजायत ॥ ११.८१ ॥
पुनर्युगान्ते सम्प्राप्ते किंचिच्छेषे कलौ युगे ।
निःशेषमभवत्सर्वं शुष्कं स्थावरजङ्गमम् ॥ ११.८२ ॥
निर्वृक्षौषधगुल्मं च तृणवीरुद्विवर्जितम् ।
अनावृष्टिहतं सर्वं भूमण्डलमभूद्भृशम् ॥ ११.८३ ॥
ततस्ते ऋषयः सर्वे क्षुत्तृषार्ताः सहस्रशः ।
युगस्वभावमाविष्टा हीनसत्त्वा अभवन्नृप ॥ ११.८४ ॥
नष्टहोमस्वधाकारे युगान्ते समुपस्थिते ।
किं कार्यं क्व नु यास्यामः कोऽस्माकं शरणं भवेत् ॥ ११.८५ ॥
तानहं प्रत्युवाचेदं मा भैष्टेति पुनःपुनः ।
ईदृग्विधा मया दृष्टा बहवः कालपर्ययाः ॥ ११.८६ ॥
नर्मदातीरमाश्रित्य ते सर्वे गमिता मया ।
एषा हि शरणं देवी सम्प्राप्ते हि युगक्षये ॥ ११.८७ ॥
नान्या गतिरिहास्माकं विद्यते द्विजसत्तमाः ।
जनित्री सर्वभूतानां विशेषेण द्विजोत्तमाः ॥ ११.८८ ॥
पितामहा ये पितरो ये चान्ये प्रपितामहाः ।
ते समस्ता गताः स्वर्गं समाश्रित्य महानदीम् ॥ ११.८९ ॥
भृग्वाद्याः सप्त ये त्वासन्मम पूर्वपितामहाः ।
धौमृणी च महाभागा मम भार्या शुचिस्मिता ।
मनस्वती च या मता भार्गवोऽङ्गिरसस्तथा ॥ ११.९० ॥
पुलस्त्यः पुलहश्चैव वसिष्ठात्रेयकाश्यपाः ।
तथान्ये च महाभागा नियमव्रतचारिणः ।
अन्ये च शतसाहस्रा अत्र सिद्धिं समागताः ॥ ११.९१ ॥
तस्मादियं महाभागा न मोक्तव्या कदाचन ।
नान्या काचिन्नदी शक्ता लोकत्रयफलप्रदा ॥ ११.९२ ॥

द्वन्द्वैरनेकैर्बहुभिः क्षुत्तृषाद्यैर्महाभयैः ।
मुच्यन्ते ते नराः सद्यो नर्मदातीरवासिनः ॥ ११.९३ ॥
तस्मात्सर्वप्रयत्नेन सेवितव्या सरिद्वरा ।
वाञ्छद्भिः परमं श्रेय इह लोके परत्र च ॥ ११.९४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्यवर्णनं नाम एकादशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१२



अध्याय १२

श्रीमार्कण्डेय उवाच -
एतच्छ्रुत्वा वचो राजन्संहृष्टा ऋषयोऽभवन् ।
नर्मदां स्तोतुमारब्धाः कृताञ्जलिपुटा द्विजाः ॥ १२.१ ॥
नमोऽस्तु ते पुण्यजले नमो मकरगामिनि ।
नमस्ते पापमोचिन्यै नमो देवि वरानने ॥ १२.२ ॥
नमोऽस्तु ते पुण्यजलाश्रये शुभे विशुद्धसत्त्वं सुरसिद्धसेविते ।
नमोऽस्तु ते तीर्थगणैर्निषेविते नमोऽस्तु रुद्राङ्गसमुद्भवे वरे ॥ १२.३ ॥
नमोऽस्तु ते देवि समुद्रगामिनि नमोऽस्तु ते देवि वरप्रदे शिवे ।
नमोऽस्तु लोकद्वयसौख्यदायिनि ह्यनेकभूतौघसमाश्रितेऽनघे ॥ १२.४ ॥
सरिद्वरे पापहरे विचित्रिते गन्धर्वयक्षोरगसेविताङ्गे ।
सनातनि प्राणिगणानुकम्पिनि मोक्षप्रदे देवि विधेहि शं नः ॥ १२.५ ॥
महागजैर्धमहिषैर्वराहैः संसेविते देवि महोर्मिमाले ।
नताः स्म सर्वे वरदे सुखप्रदे विमोचयास्मान्पशुपाशबन्धात् ॥ १२.६ ॥
पापैरनेकैरशुभैर्विबद्धा भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महानिलोद्धूततरङ्गभूतं यावत्तवाम्भो हि न संस्पृशन्ति ॥ १२.७ ॥
अनेकदुःखौघभयार्दितानां पापैरनेकैरभिवेष्टितानाम् ।
गतिस्त्वमम्भोजसमानवक्त्रे द्वन्द्वैरनेकैरपि संवृतानाम् ॥ १२.८ ॥
नद्यश्च पूता विमला भवन्ति त्वां देवि सम्प्राप्य न संशयोऽत्र ।
दुःखातुराणामभयं ददासि शिष्टैरनेकैरभिपूजितासि ॥ १२.९ ॥
स्पृष्टं करैश्चन्द्रमसो रवेश्च तदैव दद्यात्परमं पदं तु ।
यत्रोपलाः पुण्यजलाप्लुतास्ते शिवत्वमायान्ति किमत्र चित्रम् ॥ १२.१० ॥
भ्रमन्ति तावन्नरकेषु मर्त्या दुःखातुराः पापपरीतदेहाः ।
महानिलोद्धूततरङ्गभङ्गं यावत्तवाम्भो न हि संश्रयन्ति ॥ १२.११ ॥
म्लेच्छाः पुलिन्दास्त्वथ यातुधानाः पिबन्ति येऽम्भस्तव देवि पुण्यम् ।
मुक्ता भवन्तीह भयात्तु घोरान्निःसंशयं तेऽपि किमत्र चित्रम् ॥ १२.१२ ॥

सरांसि नद्यः क्षयमभ्युपेता घोरे युगेऽस्मिन् हि कलौ प्रदूषिते ।
त्वं भ्राजसे देवि जलौघपूर्णा दिवीव नक्षत्रपथे च गङ्गा ॥ १२.१३ ॥
तव प्रसादाद्वरदे वरिष्ठे कालं यथेमं परिपालयित्वा ।
यामोऽथ रुद्रं तव सुप्रसादाद्वयं तथा त्वं कुरु वै प्रसादम् ॥ १२.१४ ॥
गतिस्त्वमम्बेव पितेव पुत्रांस्त्वं पाहि नो यावदिमं युगान्तम् ।
कालं त्वनावृष्टिहतं सुघोरं यावत्तरामस्तव सुप्रसादात् ॥ १२.१५ ॥
पठन्ति ये स्तोत्रमिदं द्विजेन्द्राः शृण्वन्ति ये चापि नराः प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन यानेन दिव्याम्बरभूषिताश्च ॥ १२.१६ ॥
ये स्तोत्रमेतत्सततं पठन्ति स्नात्वा तु तोये खलु नर्मदायाः ।
अन्ते हि तेषां सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ १२.१७ ॥
प्रातः समुत्थाय तथा शयानो यः कीर्तयेतानुदिनं स्तवं च ।
स मुक्तपापः सुविशुद्धदेहः समाश्रयं याति महेश्वरस्य ॥ १२.१८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये नर्मदास्तोत्रकथनं नाम द्वादशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१३

https://sa.wikisource.org/s/fn4
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १३

श्रीमार्कण्डेय उवाच -

एवं भगवती पुण्या स्तुता सा मुनिपुंगवैः ।
चिन्तयामास सर्वेषां दास्यामि वरमुत्तमम् ॥ १३.१ ॥
ततः प्रसुप्तांस्ताञ्ज्ञात्वा रात्रौ देवी जगाम ह ।
एकैकस्य ऋषेः स्वप्ने दर्शनं चारुहासिनी ॥ १३.२ ॥
ततोऽर्धरात्रे सम्प्राप्त उत्थिता जलमध्यतः ।
विमलाम्बरसंवीता दिव्यमालाविभूषिता ॥ १३.३ ॥
घृतातपत्रा सुश्रोणी पद्मरागविभूषिता ।
जगाद मा भैरिति तानेकैकं तु पृथक्पृथक् ॥ १३.४ ॥
वसध्वं मम पार्श्वे तु भयं त्यक्त्वा क्षुधादिजम् ॥ १३.५ ॥
एवमुक्त्वा तदा देवी स्वप्नान्ते तान्महामुनीन् ।
जगामादर्शनं पश्चात्प्रविश्य जलमात्मिकम् ॥ १३.६ ॥
ततः प्रभाते मुनयो मिथ ऊचुर्मुदन्विताः ।
तथा दृष्टा मया दृष्टा स्वप्ने देवी सुदर्शना ॥ १३.७ ॥
अभयं दत्तमस्माकं सिद्धिश्चाप्यचिरेण तु ।
प्रशस्तं दर्शनं तस्या नर्मदाया न संशयः ॥ १३.८ ॥
अथान्यदिवसे राजन्मत्स्यानां रूपमुत्तमम् ।
पश्यन्ति सपरीवाराः स्वकीयाश्रमसन्निधौ ॥ १३.९ ॥
तान्दृष्ट्वा विस्मयाविष्टा मत्स्यांस्तत्र महर्षयः ।
पूजयामासुरव्यग्रा हव्यकव्येन देवताः ॥ १३.१० ॥
तान्मत्स्यसङ्घान्सम्प्राप्य महादेव्याः प्रसादतः ।
सपुत्रदारभृत्यास्ते वर्तयन्ति पृथक्पृथक् ॥ १३.११ ॥
दिने दिने तथाप्येवमाश्रमेषु द्विजातयः ।
मत्स्यानां सञ्चयं दृष्ट्वा विस्मिताश्चाभवंस्तदा ॥ १३.१२ ॥
मृतांस्तांस्तु सुपुष्टाङ्गान् पाठीनांश्च विशेषतः ।
द्वारे द्वारे चाश्रमाणां तापसानां युधिष्ठिर ॥ १३.१३ ॥
हृष्टपुष्टास्तदा सर्वे नर्मदातीरवासिनः ।

ऋषयस्ते भयं सर्वे तत्यजुः क्षुत्तृषोद्भवम् ॥ १३.१४ ॥
ते जपन्तस्तपन्तश्च तिष्ठन्ति भरतर्षभ ।
अर्चयन्ति पित्ःन्देवान्नर्मदातटमाश्रिताः ॥ १३.१५ ॥
तैर्जपद्भिस्तपद्भिश्च सततं द्विजसत्तमैः ।
भ्राजते सा सरिच्छ्रेष्ठा ताराभिर्द्यौर्ग्रहैरिव ॥ १३.१६ ॥
तत्र तैर्बहुलैः शुभ्रैर्ब्राह्मणैर्वेदपरागैः ।
नर्मदा धर्मदा पूर्वं संविभक्ता यथाक्रमम् ॥ १३.१७ ॥
ऋषिभिर्दशकोटिभिर्नर्मदातीरवासिभिः ।
विभक्तेयं विभक्ताङ्गी नर्मदा शर्मदा नृणाम् ॥ १३.१८ ॥
यज्ञोपवीतैश्च शुभैरक्षसूत्रैश्च भारत ।
कूलद्वये महापुण्या नर्मदोदधिगामिनी ॥ १३.१९ ॥
पृथगायतनैः शुभ्रैर्लिङ्गैर्वालुकमृन्मयैः ।
भ्राजते या सरिच्छ्रेष्ठा नक्षत्रैरिव शर्वरी ॥ १३.२० ॥
एवं त ऋषयः सर्वे तर्पयन्तः सुरान्पित्ःन् ।
न्यवसन्नर्मदातीरे यावदाभूतसम्प्लवम् ॥ १३.२१ ॥
किंचिद्गते ततस्तस्मिन्घोरे वर्षशताधिके ।
अर्धरात्रे तदा कन्या जलादुत्तीर्य भारत ॥ १३.२२ ॥
विद्युत्पुंजसमाभासा व्यालयज्ञोपवीतिनी ।
त्रिशूलाग्रकरा सौम्या तानुवाच ऋषींस्तदा ॥ १३.२३ ॥
आगच्छध्वं मुनिगणा विशध्वं मामयोनिजाम् ।
समेताः पुत्रदारैश्च ततः सिद्धिमवाप्स्यथ ॥ १३.२४ ॥
यस्य यस्य हि या वाञ्छा तस्य तां तां ददाम्यहम् ।
विष्णुं ब्रह्माणमीशानमन्यं वा सुरमुत्तमम् ॥ १३.२५ ॥
तत्र सर्वान्नयिष्यामि प्रसन्ना वरदा ह्यहम् ।
प्राणायामपरा भूत्वा मां विशध्वं समाहिताः ॥ १३.२६ ॥
सह पुत्रैश्च दारैश्च त्यक्त्वाश्रमपदानि च ।
कालक्षेपो न कर्तव्यः प्रलयोऽयमुपस्थितः ॥ १३.२७ ॥
संहारः सर्वभूतानां कल्पदाहः सुदारुणः ।
एकाहमभवं पूर्वं महाघोरे जनक्षये ॥ १३.२८ ॥
शेषा नद्यः समुद्राश्च सर्व एव क्षयंगताः ।
वरदानान्महेशस्य तेनाहं न क्षयं गता ॥ १३.२९ ॥
अमृतः शाश्वतो देवः स्थाणुरीशः सनातनः ।
स पूजितः प्रार्थितो वा किं न दद्याद्द्विजोत्तमाः ॥ १३.३० ॥

एवमुक्त्वा ऋषीन्देवा प्रविवेश जलं ततः ।
करात्तशूला सा देवी व्यालयज्ञोपवीतिनी ॥ १३.३१ ॥
ततस्ते तद्वचः श्रुत्वा विस्मयापन्नमानसाः ।
अभिवन्द्य च मां सर्वे क्षामयन्तः पुनः पुनः ॥ १३.३२ ॥
क्षम्यतां नो यदुक्तं हि वसतां तव संश्रये ।
गृहांस्त्यक्त्वा महाभागाः सशिष्याः सहबान्धवाः ॥ १३.३३ ॥
जप्त्वा चैकाक्षरं ब्रह्म हृदि ध्यात्वा महेश्वरम् ।
स्नात्वा च मन्त्रपूताभिरथ चाद्भिर्जितव्रताः ॥ १३.३४ ॥
विविशुर्नर्मदातोयं सपक्षा इव पर्वताः ।
द्योतयन्तो दिशः सर्वाः कुशहस्ताः सहाग्रयः ॥ १३.३५ ॥
गतेषु तेषु राजेन्द्र अहमेकः स्थितस्तदा ।
अमरेशं समासाद्य पूजयन्नर्मदां नदीम् ॥ १३.३६ ॥
अनुभूताः सप्तकल्पा मायूराद्या मया नृप ।
प्रसादाद्वेधसः सर्वे रेवया सह भारत ॥ १३.३७ ॥
जन्मतोऽद्य दिनं यावन्न जानेऽस्याः पुरास्थितिम् ॥ १३.३८ ॥
इयं हि शांकरी शक्तिः कला शम्भोरिलाह्वया ।
नर्मदा दुरितध्वंसकारिणी भवतारिणी ॥ १३.३९ ॥
यदाहमपि नाभूवं पुराकल्पेषु पाण्डव ।
चतुर्दशसु कल्पेषु तेष्वियं सुखसंस्थिता ॥ १३.४० ॥
चतुर्दश पुरा कल्पा न मृता येषु नर्मदा ।
तानहं सम्प्रवक्ष्यामि देवी प्राह यथा मम ॥ १३.४१ ॥
कापिलं प्रथमं विद्धि प्राजापत्यं द्वितीयकम् ।
ब्राह्मं सौम्यं च सावित्रं बार्हस्पत्यं प्रभासकम् ॥ १३.४२ ॥
माहेन्द्रमग्निकल्पं च जयन्तं मारुतं तथा ।
वैष्णवं बहुरूपं च ज्यौतिषं च चतुर्दशम् ॥ १३.४३ ॥
एते कल्पा मया ख्याता न मृता येषु नर्मदा ।
मायूरं पञ्चदशमं कौर्मं चैवात्र षोडशम् ॥ १३.४४ ॥
बकं मात्स्यं च पाद्मं च वटकल्पं च भारत ।
एकविंशतिमं चैतं वाराहं सांप्रतीनकम् ॥ १३.४५ ॥
इमे सप्त मया साकं रेवया परिशीलिताः ।
एकविंशतिकल्पास्तु नर्मदायाः शिवाङ्गतः ॥ १३.४६ ॥
संजाताया नृपश्रेष्ठ मया दृष्टा ह्यनेकशः ।
कथिता नृपतिश्रेष्ठ भूयः किं कथयामि ते ॥ १३.४७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्य एकविंशतिकल्पकथानकवर्णनं नाम त्रयोदशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१४

https://sa.wikisource.org/s/faz
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १४

युधिष्ठिर उवाच -
ततस्त ऋषयः सर्वे महाभागास्तपोधनाः ।
गतास्तु परमं लोकं ततः किं जातमद्भुतम् ॥ १४.१ ॥

श्रीमार्कण्डेय उवाच -
ततस्तेषु प्रयातेषु नर्मदातीरवासिषु ।
बभूव रौद्रसंहारः सर्वभूतक्षयंकरः ॥ १४.२ ॥
कैलासशिखरस्थं तु महादेवं सनातनम् ।
ब्रह्माद्याः प्रास्तुवन् देवमृग्यजुःसामभिः शिवम् ॥ १४.३ ॥
संहर त्वं जगद्देव सदेवासुरमानुषम् ।
प्राप्तो युगसहस्रान्तः कालः संहरणक्षमः ॥ १४.४ ॥
मद्रूपं तु समास्थाय त्वया चैतद्विनिर्मितम् ।
वैष्णवीं मूर्तिमास्थाय त्वयैतत्परिपालितम् ॥ १४.५ ॥
एका मूर्तिस्त्रिधा जाता ब्राह्मी शैवी च वैष्णवी ।
सृष्टिसंहाररक्षार्थं भवेदेवं महेश्वर ॥ १४.६ ॥
एतच्छ्रुत्वा वचस्तथ्यं विष्णोश्च परमेष्ठिनः ।
सगणः सपरीवारः सह ताभ्यां सहोमया ॥ १४.७ ॥
समलोकान्विभिद्येमान्भगवान्नीललोहितः ।
भूराद्यब्रह्मलोकान्तं भित्त्वाण्डं परतः परम् ॥ १४.८ ॥
शैवं पदमजं दिव्यमाविशत्सह तैर्विभुः ।
न तत्र वायुर्नाकाशं नाग्निस्तत्र न भूतलम् ॥ १४.९ ॥
यत्र संतिष्ठे देव उमया सह शङ्करः ।
न सूर्यो न ग्रहास्तत्र न ऋक्षाणि दिशस्तथा ॥ १४.१० ॥
न लोकपाला न सुखं न च दुःखं नृपोत्तम ॥ १४.११ ॥
ब्राह्मं पदं यत्कवयो वदन्ति शैवं पदं यत्कवयो वदन्ति ।

क्षेत्रज्ञमीशं प्रवदन्ति चान्ये सांख्याश्च गायन्ति किलादिमोक्षम् ॥ १४.१२ ॥
यद्ब्रह्म आद्यं प्रवदन्ति केचिद्यं सर्वमीशानमजं पुराणम् ।
तमेकरूपं तमनेकरूपमरूपमाद्यं परमव्ययाख्यम् ॥ १४.१३ ॥
अवर्णमप्यर्थमनामगोत्रं तुर्यं पदं यत्कवयो वदन्ति ।
ध्यानार्थविज्ञानमयं सुसूक्ष्ममात्मस्थमीशानवरं वरेण्यम् ॥ १४.१४ ॥
ततस्त्रयस्ते भगवन्तमीशं सम्प्राप्य संक्षिप्य भवन्त्यर्थकम् ।
पृथक्स्वरूपैस्तु पुनस्त एव जगत्समस्तं परिपालयन्ति ॥ १४.१५ ॥
संहारं सर्वभूतानां रुद्रत्वे कुरुते प्रभुः ।
विष्णुत्वे पालयेल्लोकान्ब्रह्मत्वे सृष्टिकारकः ॥ १४.१६ ॥
प्रकृत्या सह संयुक्तः कालो भूत्वा महेश्वरः ।
विश्वरूपा महाभागा तस्य पार्श्वे व्यवस्थिता ॥ १४.१७ ॥
यामाहुः प्रकृतिं तज्ज्ञाः पदार्थानां विचक्षणाः ।
पुरुषत्वे प्रकृतित्वे च कारणं परमेश्वरः ॥ १४.१८ ॥
तस्मादेतज्जगत्सर्वं चराचरम् ।
तस्मिन्नेव लयं याति युगान्ते समुपस्थिते ॥ १४.१९ ॥
भगलिङ्गाङ्कितं सर्वं व्याप्तं वै परमेष्ठिना ।
भगरूपो भवेद्विष्णुर्लिङ्गरूपो महेश्वरः ॥ १४.२० ॥
भाति सर्वेषु लोकेषु गीयते भूर्भुवादिषु ।
प्रविष्टः सर्वभूतेषु तेन विष्णुर्भगः स्मृतः ॥ १४.२१ ॥
विशनाद्विष्णुरित्युक्तः सर्वदेवमयो महान् ।
भासनाद्गमनाच्चैव भगसंज्ञा प्रकीर्तिता ॥ १४.२२ ॥
ब्रह्मादिस्तम्बपर्यन्तं यस्मिन्नेति लयं जगत् ।
एकभावं समापन्नं लिङ्गं तस्माद्विदुर्बुधाः ॥ १४.२३ ॥
महादेवस्ततो देवीमाह पार्श्वे स्थितां तदा ।
संहरस्व जगत्सर्वं मा विलम्बस्व शोभने ॥ १४.२४ ॥
त्यज सौम्यमिदं रूपं सितचन्द्रांशुनिर्मलम् ।
रुद्रं रूपं समास्थाय संहरस्व चराचरम् ॥ १४.२५ ॥
रौद्रैर्भूतगणैर्घोरैर्देवि त्वं परिवारिता ।
जीवलोकमिमं सर्वं भक्षयस्वाम्बुजेक्षणे ॥ १४.२६ ॥
ततोऽहं मर्दयिष्यामि प्लावयिष्ये तथा जगत् ।
कृत्वा चैकार्णवं भूयः सुखं स्वप्स्ये त्वया सह ॥ १४.२७ ॥

श्रीदेव्युवाच -

नाहं देव जगच्चैतत्संहरामि महाद्युते ।
अम्बा भूत्वा विचेष्टं न भक्षयामि भृशातुरम् ॥ १४.२८ ॥
स्त्रीस्वभावेन कारुण्यं करोति हृदयं मम ।
कथं वै निर्दहिष्यामि जगदेतज्जगत्पते ॥ १४.२९ ॥
तस्मात्त्वं स्वयमेवेदं जगत्संहर शङ्कर ।
अथैवमुक्तस्तां देवीं धूर्जटिर्नीललोहितः ॥ १४.३० ॥
क्रुद्धो निर्भर्त्सयामास हुङ्कारेण महेश्वरीम् ।
ओं हुंफट्त्वं स इत्याह कोपाविष्टैरथेक्षणैः ॥ १४.३१ ॥
हुंकारिता विशालाक्षी पीनोरुजघनस्थला ।
तत्क्षणाच्चाभवद्रौद्रा कालरात्रीव भारत ॥ १४.३२ ॥
हुंकुर्वती महानादैर्नादयन्ती दिशो दश ।
व्यवर्धत महारौद्रा विद्युत्सौदामिनी यथा ॥ १४.३३ ॥
विद्युत्सम्पातदुष्प्रेक्ष्या विद्युत्संघातचञ्चला ।
विद्युज्ज्वालाकुला रौद्रा विद्युदग्निनिभेक्षणा ॥ १४.३४ ॥
मुक्तकेशी विशालाक्षी कृशग्रीवा कृशोदरी ।
व्याघ्रचर्माम्बरधरा व्यालयज्ञोपवीतिनी ॥ १४.३५ ॥
वृश्चिकैरग्निपुञ्जाभैर्गोनसैश्च विभूषिता ।
त्रैलोक्यं पूरयामास विस्तारेणोच्छ्रयेण च ॥ १४.३६ ॥
भासुराङ्गा तु संवृत्ता कृष्णसर्पैककुण्डला ।
चित्रदण्डोद्यतकरा व्याघ्रचर्मोपसेविता ॥ १४.३७ ॥
व्यवर्धत महारौद्रा जगत्संहारकारिणी ।
सृक्किणी लेलिहाना च क्रूरफूत्कारकारिणी ॥ १४.३८ ॥
व्यात्तास्या घुर्घुरारावा जगत्संक्षोभकारिणी ।
खेलद्भूतानुगा क्रूरा निःश्वासोच्छ्वासकारिणी ॥ १४.३९ ॥
जाताट्टअहासा दुर्नासा वह्निकुण्डसमेक्षणा ।
प्रोद्यत्किलकिलारावा ददाह सकलं जगत् ॥ १४.४० ॥
दह्यमानाः सुरास्तत्र पतन्ति धरणीतले ।
पतन्ति यक्षगन्धर्वाः सकिन्नरमहोरगाः ॥ १४.४१ ॥
पतन्ति भूतसङ्घाश्च हाहाहैहैविराविणः ।
बुम्बापातैः सनिर्घातैरुदितार्तस्वरैरपि ॥ १४.४२ ॥
व्याप्तमासीत्तदा विश्वं त्रैलोक्यं सचराचरम् ।
संपतद्भिः पतद्भिश्च ज्वलद्भूतगणैर्मही ॥ १४.४३ ॥
जातैश्चटचटाशब्दैः पतद्भिर्गिरिसानुभिः ।

तत्र रौद्रोत्सवे जाता रुद्रानन्दविवर्धिनी ॥ १४.४४ ॥
विहिंसमाना भूतानि चर्वमाणाचरानपि ।
तत्तद्गन्धमुपादाय शिवारावविराविणी ॥ १४.४५ ॥
गलच्छोणितधाराभिमुखा दिग्धकलेवरा ।
चण्डशीलाभवच्चण्डी जगत्संहारकर्मणि ॥ १४.४६ ॥
येऽपि प्राप्ता महर्लोकं भृग्वाद्याश्च महर्षयः ।
तेऽपि नश्यन्ति शतशो ब्रह्मक्षत्त्रविशादयः ॥ १४.४७ ॥
देवासुरा भयत्रस्ताः सयक्षोरगराक्षसाः ।
विशन्ति केऽपि पातालं लीयन्ते च गुहादिषु ॥ १४.४८ ॥
सा च देवी दिशः सर्वा व्याप्य मृत्युरिव स्थिता ।
युगक्षयकरे काले देवेन विनियोजिता ॥ १४.४९ ॥
एकापि नवधा जाता दशधा दशधा तथा ।
चतुःषष्टिस्वरूपा च शतरूपाट्टहासिनी ॥ १४.५० ॥
जज्ञे सहस्ररूपा च लक्षकोटितनुः शिवा ।
नानारूपायुधाकारा नानावादनचारिणी ॥ १४.५१ ॥
एवंरूपाऽभवद्देवी शिवस्यानुज्ञया नृप ।
दिक्षु सर्वासु गगने विकटायुधशीलिनः ॥ १४.५२ ॥
रुन्धन्तो नश्यमानांस्तान्गणा माहेश्वराः स्थिताः ।
विचरन्ति तया सार्द्धं शूलपट्टिशपाणयः ॥ १४.५३ ॥
ततो मातृगणाः केचिद्विनायकगणैः सह ।
व्यवर्धन्त महारौद्रा जगत्संहारकारिणः ॥ १४.५४ ॥
ततस्तस्या व्यवर्धन्त दंष्ट्राः कुन्देन्दुसन्निभाः ।
योजनानां सहस्राणि अयुतान्यर्बुदानि च ॥ १४.५५ ॥
दंष्ट्रावलिः कररुहाः क्रूरास्तीक्ष्णाश्च कर्कशाः ।
वियद्दिशो लिखन्त्येव सप्तद्वीपां वसुंधराम् ॥ १४.५६ ॥
तस्या दंष्ट्राभिसम्पातैश्चूर्णिता वनपर्वताः ।
शिलासंचयसंघाता विशीर्यते सहस्रशः ॥ १४.५७ ॥
हिमवान्हेमकूटश्च निषधो गन्धमादनः ।
माल्यवांश्चैव नीलश्च श्वेतश्चैव महागिरिः ॥ १४.५८ ॥
मेरुमध्यमिलापीठं सप्तद्वीपं च सार्णवम् ।
लोकालोकेन सहितं प्राकम्पत नृपोत्तम ॥ १४.५९ ॥
दंष्ट्राशनिविस्पृष्टाश्च विशीर्यन्ते महाद्रुमाः ।
उत्पातैश्च दिशो व्याप्ता घोररूपैः समन्ततः ॥ १४.६० ॥

तारा ग्रहगणाः सर्वे ये च वैमानिका गणाः ।
शिवासहस्रैराकीर्णा महामातृगणैस्तथा ॥ १४.६१ ॥
सा चचार जगत्कृत्स्नं युगान्ते समुपस्थिते ।
भ्रमद्भिश्च ब्रुवद्भिश्च क्रोशद्भिश्च समन्ततः ॥ १४.६२ ॥
प्रमथद्भिर्ज्वलद्भिश्च रौद्रैर्व्याप्ता दिशो दश ।
विस्तीर्णं शैलसङ्घातं विघूर्णितगिरिद्रुमम् ॥ १४.६३ ॥
प्रभिन्नगोपुरद्वारं केशशुष्कास्थिसंकुलम् ।
प्रदग्धग्रामनगरं भस्मपुंजाभिसंवृतम् ॥ १४.६४ ॥
चिताधूमाकुलं सर्वं त्रैलोक्यं सचराचरम् ।
हाहाकाराकुलं सर्वमहहस्वननिस्वनम् ॥ १४.६५ ॥
जगदेतदभूत्सर्वमशरण्यं निराश्रयम् ॥ १४.६६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कल्पानुकथने कालरात्रिकृतजगत्संहरणवर्णनं नाम चतुर्दशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१५



अध्याय १५

श्रीमार्कण्डेय उवाच -
ततो मातृसहस्रैश्च रौद्रैश्च परिवारिता ।
कालरात्रिर्जगत्सर्वं हरते दीप्तलोचना ॥ १५.१ ॥
ततस्ता मातरो घोरा ब्रह्मविष्णुशिवात्मिकाः ।
वाय्विन्द्रानलकौबेरा यमतोयेशशक्तयः ॥ १५.२ ॥
स्कन्दक्रोडनृसिंहानां विचरन्त्यो भयानकाः ।
चक्रशूलगदाखड्गवज्रशक्त्यृष्टिपट्टिशैः ॥ १५.३ ॥
खट्वाङ्गैरुल्मुकैर्दीप्तैर्व्यचरन्मातरः क्षये ।
उमासंनोदिता सर्वाः प्रधावन्त्यो दिशो दश ॥ १५.४ ॥
तासां चरणविक्षेपैर्हुङ्कारोद्गारनिस्वनैः ।
त्रैलोक्यमेतत्सकलं विप्रदग्धं समन्ततः ॥ १५.५ ॥
हाहारवाक्रन्दितनिस्वनैश्च प्रभिन्नरथ्यागृहगोपुरैश्च ।
बभूव घोरा धरणी समन्तात्कपालकोशाकुलकर्बुराङ्गी ॥ १५.६ ॥
यदेतच्छतसाहस्रं जम्बूद्वीपं निगद्यते ।
सर्वमेव तदुच्छन्नं समाधृष्य नृपोत्तम ॥ १५.७ ॥
जम्बुं शाकं कुशं क्रौञ्चं गोमेदं शाल्मलिस्तथा ।
पुष्करद्वीपसहिता ये च पर्वतवासिनः ॥ १५.८ ॥
ते ग्रस्ता मृत्युना सर्वे भूतैर्मातृगणैस्तथा ।
महासुरकपालैश्च मांसमेदोवसोत्कटैः ॥ १५.९ ॥
रुधिरोद्गारशोणाङ्गी महामाया सुभीषणा ।
पिबन्ती रुधिरं तत्र महामांसवसाप्रिया ॥ १५.१० ॥
कपालहस्ता विकटा भक्षयन्ती सुरासुरान् ।
नृत्यन्ती च हसन्ती च विपरीता महारवा ॥ १५.११ ॥
त्रैलोक्यसंत्रासकरी विद्युत्संस्फोटहासिनी ।
सप्तद्वीपसमुद्रान्तां भक्षयित्वा च मेदिनीम् ॥ १५.१२ ॥

ततः स्वस्थानमगमद्यत्र देवो महेश्वरः ।
नर्मदातीरमाश्रित्यावसन्मातृगणैः सह ॥ १५.१३ ॥
अमराणां कटे तुङ्गे नृत्यन्ती हसितानना ।
अमरा देवताः प्रोक्ताः शरीरं कटमुच्यते ॥ १५.१४ ॥
तैः कटैरावृतो यस्मात्पर्वतोऽयं नृपोत्तम ।
छिन्नभिन्नास्थिनिकरैर्वसामेदोऽस्रविप्लुतैः ॥ १५.१५ ॥
अमरंकट इत्येवं तेन प्रोक्तो मनीषिभिः ।
महापवित्रो लोकेषु शम्भुना स विनिर्मितः ॥ १५.१६ ॥
नित्यं संनिहितस्तत्र शङ्करो ह्युमया सह ।
ततोऽहं नियतस्तत्र तस्य पादाग्रसंस्थितः ॥ १५.१७ ॥
प्रह्वः प्रणतभावेन स्तौमि तं नीललोहितम् ।
ततस्तालकसम्पातैर्गणैर्मातृगणैः सह ॥ १५.१८ ॥
संप्रनृत्यति संहृष्टो मृत्युना सह शङ्करः ।
खट्वाङ्गैरुल्मुकैश्चैव पट्टिशैः परिघैस्तथा ॥ १५.१९ ॥
मांसमेदोवसाहस्ता हृष्टा नृत्यन्ति संघशः ।
वामना जटिला मुण्डा लम्बग्रीवोष्ठमूर्द्धजाः ॥ १५.२० ॥
महाशिश्नोदरभुजा नृत्यन्ति च हसन्ति च ।
विकृतैराननैर्घोरैरभुजोल्बणमुखादिभिः ॥ १५.२१ ॥
अमरं कण्टकं चक्रुः प्राप्ते कालविपर्यये ।
तेषां मध्ये महाघोरं जगत्सन्त्रासकारणम् ॥ १५.२२ ॥
मृत्युं पश्यामि नृत्यन्तं तडित्पिङ्गलमूर्द्धजम् ।
तस्य पार्श्वे स्थितां देवीं विमलाम्बरभूषिताम् ॥ १५.२३ ॥
कुण्डलोद्घुष्टगण्डां तां नागयज्ञोपवीतिनीम् ।
विचित्रैरुपहारैश्च पूजयन्तीं महेश्वरम् ॥ १५.२४ ॥
अपश्यं नर्मदां तत्र मातरं विश्ववन्दिताम् ।
नानातरङ्गां सावर्तां सुवेलार्णवसंनिभाम् ॥ १५.२५ ॥
महासरःसरित्पातैरदृश्यां दृश्यरूपिणीम् ।
वन्द्यमानां सुरैः सिद्धैर्मुनिसङ्घैश्च भारत ॥ १५.२६ ॥
एतस्मिन्नन्तरे घोरां सप्तसप्तकसंज्ञिताम् ।
महावीच्यौघफेनाढ्यां कुर्वन्तीं सजलं जगत् ॥ १५.२७ ॥
दृष्टवान्नर्मदां देवीं मृगकृष्णाम्बरां पुनः ।
सधूमाशनिनिर्ह्लादैर्वहन्तीं सप्तधा तदा ॥ १५.२८ ॥
इति संहारमतुलं दृष्टवान्राजसत्तम ।

नष्टचन्द्रार्ककिरणमभूदेतच्चराचरम् ॥ १५.२९ ॥
महोत्पातसमुद्भूतं नष्टनक्षत्रमण्डलम् ।
अलातचक्रवत्तूर्णमशेषं भ्रामयंस्ततः ॥ १५.३० ॥
विमानकोटिसंकीर्णः स किंनरमहोरगः ।
महावातः सनिर्घातो येनाकम्पच्चराचरम् ॥ १५.३१ ॥
रुद्रवक्त्रात्समुद्भूतः संवर्तो नाम विश्रुतः ।
वायुः संशोषयामास विततन् सप्तसागरान् ॥ १५.३२ ॥
उद्धूलिताङ्गः कपिलाक्षमूर्द्धजो जटाकलापैरवबद्धमूर्द्धजः ।
महारवो दीप्तविशालशूलधृक्स पातु युष्मांश्च दिने दिने हरः ॥ १५.३३ ॥
शूली धनुष्मान्कवची किरीटी श्मशानभस्मोक्षितसर्वगात्रः ।
कपालमालाकुलकण्ठनालो महाहिसूत्रैरवबद्धमौलिः ॥ १५.३४ ॥
स गोनसौघैः परिवेष्टिताङ्गो विषाग्निचन्द्रामरसिन्धुमौलिः ।
पिनाकखण्टूवाङ्गकरालपाणिः स कृत्तिवासा डमरुप्रणादः ॥ १५.३५ ॥
स सप्तलोकान्तरनिःसृतात्मा महभुजावेष्टितसर्वगात्रः ।
नेत्रेण सूर्योदयसन्निभेन प्रवालकाङ्कूरनिभोदरेण ॥ १५.३६ ॥
सन्ध्याभ्ररक्तोत्पलपद्मरागसिन्दूरविद्युत्प्रकरारुणेन ।
ततेन लिङ्गेन च लोचनेन चिक्रीडमानः स युगान्तकाले ॥ १५.३७ ॥
हिरण्मयेनैव समुत्सृजन् स दण्डेन यद्वद्भगवान् समेरुः ।
पादाग्रविक्षेपविशीर्णशैलः कुर्वञ्जगत्सोऽपि जगाम तत्र ॥ १५.३८ ॥
संहर्तुकामस्त्रिदिवं त्वशेषं प्रमुञ्चमानो विकृताट्टहासम् ।
जहार सर्वं त्रिदिवं महात्मा संक्षोभयन्वै जगदीश एकः ॥ १५.३९ ॥
तं देवमीशानमजं वरेण्यं दृष्ट्वा जगत्संहरणं महेशम् ।
सा कालरात्रिः सह मातृभिश्च गणाश्च सर्वे शिवमर्चयन्ति ॥ १५.४० ॥
नन्दी च भृङ्गी च गणादयश्च तं सर्वभूतं प्रणमन्ति देवम् ।
जागद्वरं सर्वजनस्य कारणं हरं स्मरारातिमहर्निशं ते ॥ १५.४१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये सृष्टिसंहरणसंरम्भवर्णनं नाम पञ्चदशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१६



अध्याय १६

श्रीमार्कण्डेय उवाच -
समातृभिर्भूतगणश्च घोरैर्वृतः समन्तात्स ननर्त शूली ।
गजेन्द्रचर्मावरणे वसानः संहर्तुकामश्च जगत्समस्तम् ॥ १६.१ ॥
महेश्वरः सर्वसुरेश्वराणां मन्त्रैरनेकेखबद्धमाली ।
मेदोवसारक्तविचर्चिताङ्गस्त्रैलोक्यदाहे प्रणनर्त शम्भुः ॥ १६.२ ॥
स कालरात्र्या सहितो महात्मा काले त्रिलोकीं सकलां जहार ।
संवर्तकाख्यः सहभानुभावः शम्भुर्महात्मा जगतो वरिष्ठः ॥ १६.३ ॥
स विस्फुलिङ्गोत्करधूममिश्रं महोल्कवज्राशनिवाततुल्यम् ।
ततोऽट्टहासं प्रमुमोच घोरं विवृत्य वक्त्रं वडवामुखाभम् ॥ १६.४ ॥
सहस्रवज्राशनिसंनिभेन तेनाट्टहासेन हरोद्गतेन ।
आपूरितास्तत्र दिशो दशैव संक्षोभिताः सर्वमहार्णवाश्च ॥ १६.५ ॥
स ब्रह्मलोकं प्रजगाम शब्दो ब्रह्माण्डभाण्डं प्रचचाल सर्वम् ।
किमेतदित्याकुलचेतनास्ते वित्रस्तरूपा ऋषयो बभूवुः ॥ १६.६ ॥
प्रणम्य सर्वे सहसैव भीता ब्रह्माणमूचुः परमेश्वरेशम् ।
भीताश्च सर्वे ऋषयस्ततस्ते सुरासुरैश्चैव महोरगैश्च ॥ १६.७ ॥
विद्युत्प्रभाभासुरभीषणाङ्गः क एष चिक्रीडति भूतलस्थः ।
कालानलं गात्रमिदं दधानो यस्याट्टहासेन जगद्विमूढम् ॥ १६.८ ॥
वित्रस्तरूपं प्रबभौ क्षणेन संहर्तुमिच्छेत्किमयं त्रिलोकीम् ।
सार्धं त्वया सप्तभिरर्णकैश्च जनस्तपः सत्यमभिप्रयाति ॥ १६.९ ॥
संहर्तुकामो हि क एष देव एतत्समस्तं कथयाप्रमेय ।
न दृष्टमेतद्विषमं कदापि जानासि तत्त्वं परमो मतो नः ॥ १६.१० ॥
निशम्य तद्वाक्यमथाबभाषे ब्रह्मा समाश्वास्य सुरादिसङ्घान् ॥ १६.११ ॥

श्रीब्रह्मोवाच -
स एष कालस्त्रिदिवं त्वशेषं संहर्तुकामो जगदक्षयात्मा ।

पूर्णे च शेते परिवत्सराणां भविष्यतीशानविभुर्न चित्रम् ॥ १६.१२ ॥
संवत्सरोऽयं परिवत्सरश्च उद्वत्सरो वत्सर एष देवः ।
दृष्टोऽप्यदृष्टः प्रहुतः प्रकाशी स्थूलश्च सूक्ष्मः परमाणुरेषः ॥ १६.१३ ॥
नातः परं किंचिदिहास्ति लोके परापरोऽयं प्रभुरात्मवादी ।
तुष्येत मे कालसमानरूप इत्येवमुक्त्वा भगवान्सुरेशः ॥ १६.१४ ॥
सनत्कुमारप्रमुखैः समेतः संतोषयामास ततो यतात्मा ॥ १६.१५ ॥

ब्रह्मोवाच -
नमोऽस्तु सर्वाय सुशान्तमूर्तये ह्यघोररूपाय नमोनमस्ते ।
सर्वात्मने सर्व नमोनमस्ते महात्मने भूतपते नमस्ते ॥ १६.१६ ॥
ओङ्कार हुङ्कारपरिष्कृताय स्वधावषट्कार नमोनमस्ते ।
गुणत्रयेशाय महेश्वराय ते त्रयीमयाय त्रिगुणात्मने नमः ॥ १६.१७ ॥
त्वं शङ्करत्वं हि महेश्वरोऽसि प्रधानमग्र्यं त्वमसि प्रविष्टः ।
त्वं विष्णुरीशः प्रपितामहश्च त्वं सप्तजिह्वस्त्वमनन्तजिह्वः ॥ १६.१८ ॥
स्रष्टासि सृष्टिश्च विभो त्वमेव विश्वस्य वेद्यं च परं निधानम् ।
आहुर्द्विजा वेदविदो वरेण्यं परात्परस्त्वं परतः परोऽसि ॥ १६.१९ ॥
सूक्ष्मातिसूक्ष्मं प्रवदन्ति यच्च वाचो निवर्तन्ति मनो यतश्च ॥ १६.२० ॥

श्रीमहादेव उवाच -
त्वया स्तुतोऽहं विविधैश्च मन्त्रैः पुष्णामि शान्तिं तव पद्मयोने ।
ईक्षस्व मां लोकमिमं ज्वलन्तं वक्त्रैरनेकैः प्रसभं हरन्तम् ॥ १६.२१ ॥
एवमुक्त्वा स देवेशो देव्या सह जगत्पतिः ।
पितामहं समाश्वास्य तत्रैवान्तरधीयत ॥ १६.२२ ॥
इदं महत्पुण्यतमं वरिष्ठं स्तोत्रं निशम्येह गतिं लभन्ते ।
पापैरनेकैः परिवेष्टिता ये प्रयान्ति रुद्रं विमलैर्विमानैः ॥ १६.२३ ॥
भयं च तेषां न भवेत्कदाचित्पठन्ति ये तात इदं द्विजाग्र्याः ।
सङ्ग्रामचौराग्निवने तथाब्धौ तेषां शिवस्त्राति न संशयोऽत्र ॥ १६.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये ब्रह्मकृतशिवस्तुतिवर्णनं नाम षोडशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१७



अध्याय १७

श्रीमार्कण्डेय उवाच -
एवं संस्तूयमानस्तु ब्रह्माद्यैर्मुनिपुंगवैः ।
ब्रह्मलोकगतैस्तत्र संजहार जगत्प्रभुः ॥ १७.१ ॥
स तद्भीमं महारौद्रं दक्षिणं वक्त्रमव्ययम् ।
महादंष्ट्रोत्कटारावं पातालतलसंनिभम् ॥ १७.२ ॥
विद्युज्ज्वलनपिङ्गाक्षं भैरवं लोमहर्षणम् ।
महाजिह्वं महादंष्ट्रं महासर्पशिरोधरम् ॥ १७.३ ॥
महासुरशिरोमालं महाप्रलयकारणम् ।
ग्रसत्समुद्रनिहितवातवारिमयं हविः ॥ १७.४ ॥
वडवामुखसङ्काशं महादेवस्य तन्मुखम् ।
जिह्वाग्रेण जगत्सर्वं लेलिहानमपश्यत ॥ १७.५ ॥
योजनानां सहस्राणि सहस्राणां शतानि च ।
दिशो दश महाघोरा मांसमेदोवसोत्कटाः ॥ १७.६ ॥
तस्य दंष्ट्रा व्यवर्धत शतशोऽथ सहस्रशः ।
सासुरान्सुरगन्धर्वान् सयक्षोरगराक्षसान् ॥ १७.७ ॥
तस्य दंष्ट्राग्रसंलग्नान्स ददर्श पितामहः ।
दन्तयन्त्रान्तसंविष्टं विचूर्णितशिरोधरम् ॥ १७.८ ॥
जगत्पश्यामि राजेन्द्र विशन्तं व्यादिते मुखे ।
नानातरङ्गभङ्गाङ्गा महाफेनौघसंकुलाः ।
यथा नद्यो लयं यान्ति समुद्रं प्राप्य सस्वनाः ॥ १७.९ ॥
तथा ततं विश्वमिदं समस्तमनेकजीवार्णवदुर्विगाह्यम् ।
विवेश रुद्रस्य मुखं विशालं ज्वलत्तदुग्रं घननादघोरम् ॥ १७.१० ॥
ज्वालास्ततस्तस्य मुखात्सुघोराः सविस्फुलिङ्गा बहुलाः सधूमाः ।
अनेकरूपा ज्वलनप्रकाशाः प्रदीपयन्तीव दिशोऽखिलाश्च ॥ १७.११ ॥
ततो रविज्वालसहस्रमालि बभूव वक्त्रं चलजिह्वदंष्ट्रम् ।

महेश्वरस्याद्भुतरूपिणस्तदा स द्वादशात्मा प्रबभूव एकः ॥ १७.१२ ॥
ततस्ते द्वादशादित्या रुद्रवक्त्राद्विनिर्गताः ।
आश्रित्य दक्षिणामाशां निर्दहन्तो वसुंधराम् ॥ १७.१३ ॥
भौमं यज्जीवनं किंचिन्नानावृक्षतृणालयम् ।
शुष्कं पूर्वमनावृष्ट्या सकलाकुलभूतलम् ॥ १७.१४ ॥
तद्दीप्यमानं सहसा सूर्यैस्तै रुद्रसम्भवैः ।
धूमाकुलमभूत्सर्वं प्रणष्टग्रहतारकम् ॥ १७.१५ ॥
जज्वाल सहसा दीप्तं भूमण्डलमशेषतः ।
ज्वालामालाकुलं सर्वमभूदेतच्चराचरम् ॥ १७.१६ ॥
सप्तद्वीपसमुद्रेषु सरित्सु च सरस्सु च अग्निरत्ति जगत्सर्वमाज्याहुतिमिवाध्वरे ॥ १७.१७ ॥
विशालतेजसा दीप्ता महाज्वालासमाकुलाः ।
ददहुर्वै जगत्सर्वमादित्या रुद्रसम्भवाः ॥ १७.१८ ॥
आदित्यानां रश्मयश्च संस्पृष्टा वै परस्परम् ।
एवं ददाह भगवांस्त्रैलोक्यं सचराचरम् ॥ १७.१९ ॥
सप्तद्वीपप्रमाणस्तु सोऽग्निर्भूत्वा महेश्वरः ।
सप्तद्वीपसमुद्रान्तां निर्ददाह वसुंधराम् ॥ १७.२० ॥
सुमेरुमन्दरान्तां च निर्दहुर्वसुधां तदा ।
भित्त्वा तु सप्तपातालं नागलोकं ततोऽदहत् ॥ १७.२१ ॥
भूम्यधः सप्तपातालान्निर्दहंस्तारकैः सह ।
चचाराग्निः समन्तात्तु निर्दहन्वै युधिष्ठिर ॥ १७.२२ ॥
धम्यमान इवाङ्गारैर्लोहरात्रिरिव ज्वलन् ।
तथा तत्प्राज्वलत्सर्वं संवर्ताग्निप्रदीपितम् ॥ १७.२३ ॥
निर्वृक्षा निस्तृणा भूमिर्निर्निर्झररसरः सरित् ।
विशीर्णशैलशृङ्गौघा कूर्मपृष्ठोपमाभवत् ॥ १७.२४ ॥
ज्वालामालाकुलं कृत्वा जगत्सर्वं चिदामकम् ।
महारूपधरो रुद्रो व्यतिष्ठत महेश्वरः ॥ १७.२५ ॥
समातृगणभूयिष्ठा सयक्षोरगराक्षसा ।
ततो देवी महादेवं विवेश हरिलोचना ॥ १७.२६ ॥
निर्वाणं परमापन्ना शान्तेव शिखिनः शिखा ।
जगत्सर्वं हि निर्दग्धं त्रिभिर्लोकैः सहानघ ॥ १७.२७ ॥
रुद्रप्रसादान्मुक्त्वा मां नर्मदां चाप्ययोनिजाम् ।
युगानामयुतं देवो मया चाद्य बुभक्षणात् ॥ १७.२८ ॥
पुरा ह्याराधितः शूली तेनाहमजरामरः ।

अघमर्षणघोरं च वामदेवं च त्र्यम्बकम् ॥ १७.२९ ॥
ऋषभं त्रिसुपर्णं च दुर्गां सावित्रमेव च ।
बृहदारण्यकं चैव बृहत्साम तथोत्तरम् ॥ १७.३० ॥
रौद्रीं परमगायत्रीं शिवोपनिषदं तथा ।
यथा प्रतिरथं सूक्तं जप्त्वा मृत्युंजयं तथा ॥ १७.३१ ॥
सरित्सागरपर्यन्ता वसुधा भस्मसात्कृता ।
वर्जयित्वा महाभागां नर्मदाममृतोपमाम् ॥ १७.३२ ॥
महेन्द्रो मलयः सह्यो हेमकूटोऽथ माल्यवान् ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ १७.३३ ॥
द्वादशादित्यनिर्दग्धाः शैलाः शीर्णशिलाः पृथक् ।
भस्मीभूतास्तु दृश्यन्ते न नष्टा नर्मदा तदा ॥ १७.३४ ॥
हिमवान्हेमकूटश्च निषधो गन्धमादनः ।
माल्यवांश्च गिरिश्रेष्ठो नीलः श्वेतोऽथ शृङ्गवान् ॥ १७.३५ ॥
एते पर्वतरा जानो देवगन्धर्वसेविताः ।
युगान्ताग्निविनिर्दग्धाः सर्वे शीर्णमहाशिलाः ॥ १७.३६ ॥
एवं मया पुरा दृष्टो युगान्ते सर्वसंक्षयः ।
वर्जयित्वा महापुण्यां नर्मदां नृपसत्तम ॥ १७.३७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये द्वादशादित्यरूपेण जगत्संहरणवर्णनं नाम सप्तदशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१८



अध्याय १८

श्रीमार्कण्डेय उवाच -
निर्दग्धेऽस्मिंस्ततो लोके सूर्यैरीश्वरसम्भवैः ।
सप्तभिश्चार्णवैः शुष्कैर्द्वीपैः सप्तभिरेव च ॥ १८.१ ॥
ततो मुखात्तस्य घना महोल्बणा निश्चेरुरिन्द्रायुधतुल्यरूपाः ।
घोराः पयोदा जगदन्धकारं कुर्वन्त ईशानवरप्रयुक्ताः ॥ १८.२ ॥
नीलोत्पलाभाः क्वचिदंजनाभा गोक्षीरकुन्देन्दुनिभाश्च केचित् ।
मयूरचन्द्राकृतयस्तथाऽन्ये केचिद्विधूमानलसप्रभाश्च ॥ १८.३ ॥
केचिन्महापर्वतकल्परूपाः केचिन्महामीनकुलोपमाश्च ।
केचिद्गजेन्द्राकृतयः सुरूपाः केचिन्महाकूटनिभाः पयोदाः ॥ १८.४ ॥
चलत्तरङ्गोर्मिसमानरूपा महापुरोधाननिभाश्च केचित् ।
सगोपुराट्टालकसंनिकाशाः सविद्युदुल्काशनिमण्डितान्ताः ॥ १८.५ ॥
समावृताङ्गः स बभूव देवः संवर्तकोनाम गणः स रौद्रः ।
प्रवर्षमाणो जगदप्रमाणमेकार्णवं सर्वमिदं चकार ॥ १८.६ ॥
ततो महामेघविवर्धमानमीशानमिन्द्राशनिभिर्वृताङ्गम् ।
ददर्श नाहं भयविह्वलाङ्गो गङ्गाजलौघैश्च समावृताङ्गः ॥ १८.७ ॥
गजाः पुनश्चैव पुनः पिबन्तो जगत्समन्तात्परिदह्यमानम् ।
आपूरितं चैव जगत्समन्तात्सर्वैश्च तैर्जग्मुरदर्शनं च ते ॥ १८.८ ॥
महार्णवाः सप्त सरांसि द्वीपा नद्योऽथ सर्वा अथ भूर्भुवश्च ।
आपूर्यमाणाः सलिलौघजालैरेकार्णवं सर्वमिदं बभूव ॥ १८.९ ॥
न दृश्यते किंचिदहो चराचरं निरग्निचन्द्रार्कमयेऽपि लोके ।
प्रणष्टनक्षत्रतमोऽन्धकारे प्रशान्तवातास्तमितैकनीडेः ॥ १८.१० ॥
महाजलौघेऽस्य विशुद्धसत्त्वा स्तुतिर्मया भूप कृता तदानीम् ।
ततोऽहमित्येव विचिन्तयानः शरण्यमेकं क्व नु यामि शान्तम् ॥ १८.११ ॥
स्मरामि देवं हृदि चिन्तयित्वा प्रभुं शरण्यं जलसंनिविष्टः ।
नमामि देवं शरणं प्रपद्ये ध्यानं च तस्येति कृतं मया च ॥ १८.१२ ॥

ध्यात्वा ततोऽहं सलिलं ततार तस्य प्रसादादविमूढचेताः ।
ग्लानिः श्रमश्चैव मम प्रणष्टौ देव्याः प्रसादेन नरेन्द्रपुत्र ॥ १८.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्यवर्णनं नामाष्टादशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०१९



अध्याय १९

श्रीमार्कण्डेय उवाच -

ततस्त्वेकार्णवे तस्मिन्मुमूर्षुरहमातुरः ।

काकूच्छ्वासस्तरंस्तोयं बाहुभ्यां नृपसत्तम ॥ १९.१ ॥

शृणोम्यर्णवमध्यस्थो निःशब्दस्तिमिते तदा ।

अम्भोरवमनौपम्यं दिशो दश विनादिनम् ॥ १९.२ ॥

हंसकुदेन्दुसंकाशां हारगोक्षीरपाण्डुराम् ।

नानारत्नविचित्राङ्गीं स्वर्णशृङ्गां मनोरमाम् ॥ १९.३ ॥

सुरैः प्रवालकमयैर्लाङ्गुलध्वजशोभिताम् ।

प्रलम्बघोणां नर्दन्तीं खुरैरर्णवगाहिनीम् ॥ १९.४ ॥

गां ददर्शाहमुद्विग्नो मामेवाभिमुखीं स्थिताम् ।

किंकिणीजालमुक्ताभिः स्वर्णघण्टासमावृताम् ॥ १९.५ ॥

तस्याश्चरणविक्षेपैः सर्वमेकार्णवं जलम् ।

विक्षिप्तफेनपुञ्जौघैर्नृत्यन्तीव समं ततः ॥ १९.६ ॥

रराास सलिलोत्क्षेपैः क्षोभयन्ती महार्णवम् ।

सा मामाह महाभाग श्लक्ष्णगम्भीरया गिरा ॥ १९.७ ॥

मा भैषीर्वत्स वत्सेति मृत्युस्तव न विद्यते ।

महादेवप्रसादेन न मृत्युस्ते ममापि च ॥ १९.८ ॥

ममाश्रयस्व लाङ्गूलं त्वामतस्तारयाम्यहम् ।

घोरादस्माद्भयाद्विप्र यावत्संप्लवते जगत् ॥ १९.९ ॥

क्षुत्तृषाप्रतिघातार्थं स्तनौ मे त्वं पिबस्व ह ।

पयोऽमृताश्रयं दिव्यं तत्पीत्वा निर्वृतो भव ॥ १९.१० ॥

तस्यास्तद्वचनं श्रुत्वा हर्षात्पीतो मया स्तनः ।

न क्षुत्तृषा पीतमात्रे स्तने मह्यं तदाभवत् ॥ १९.११ ॥

दिव्यं प्राणबलं जज्ञे समुद्रप्लवनक्षमम् ।

ततस्तां प्रत्युवाचेदं का त्वमेकार्णवीकृते ॥ १९.१२ ॥

भ्रमसे ब्रूहि तत्त्वेन विस्मयो मे महान्हृदि ।

भ्रमतोऽत्र ममार्तस्य मुमूर्षोः प्रहतस्य ॥ १९.१३ ॥

त्वं हि मे शरणं जाता भाग्यशेषेण सुव्रते ॥ १९.१४ ॥

गौरुवाच -
किमहं विस्मृता तुभ्यं विश्वरूपा महेश्वरी ।
नर्मदा धर्मदा न्ःणां स्वर्गशर्मबलप्रदा ॥ १९.१५ ॥
दृष्ट्वा त्वां सीदमानं तु रुद्रेणाहं विसर्जिता ।
तं द्विजं तारयस्वार्ये मा प्राणांस्त्यजतां जले ॥ १९.१६ ॥
गोरूपेण विभोर्वाक्यात्त्वत्सकाशमिहागता ।
मा मृषावचनः शम्भुर्भवेदिति च सत्वरा ॥ १९.१७ ॥
एवमुक्तस्तयाहं तु इन्द्रायुधनिभं शुभम् ।
लाङ्गूलमव्ययं ज्ञात्वा भुजाभ्यामवलम्बितः ॥ १९.१८ ॥
ततोऽतरं तं जलधिं लाङ्गूलध्वजमाश्रितः ।
असौ देवो महादेव इति मां प्रत्यभाषत ॥ १९.१९ ॥
ततो युगसहस्रान्तमहं कालं तया सह ।
व्यचरं वै तमोभूते सर्वतः सलिलावृते ॥ १९.२० ॥
महार्णवे ततस्तस्मिन् भ्रमन्गोः पुच्छमाश्रितः ।
निर्वाते चान्धकारे च निरालोके निरामये ॥ १९.२१ ॥
अकस्मात्सलिले तस्मिन्नतसीपुष्पसन्निभम् ।
विभिन्नांजनसङ्काशमाकाशमिव निर्मलम् ॥ १९.२२ ॥
नीलोत्पलदलश्यामं पीतवाससमव्ययम् ।
किरीटेनार्कवर्णेन विद्युद्विद्योतकारिणा ॥ १९.२३ ॥
भ्राजमानेन शिरसा खमिवात्यन्तरूपिणम् ।
कुण्डलोद्घष्टगल्लं तु हारोद्द्योतितवक्षसम् ॥ १९.२४ ॥
जाम्बूनदमयैर्दिव्यैर्भूषणैरुपशोभितम् ।
नागोपधानशयनं सहस्रादित्यवर्चसम् ॥ १९.२५ ॥
अनेकबाहूरुधरं नैकवक्त्रं मनोरमम् ।
सुप्तमेकार्णवे वीरं सहस्राक्षशिरोधरम् ॥ १९.२६ ॥
जटाजूटेन महता स्फुरद्विद्युत्समार्चिषा ।
एकार्णवं जगत्सर्वं व्याप्य देवं व्यवस्थितम् ॥ १९.२७ ॥
ग्रसित्वा शङ्करः सर्वं सदेवासुरमानवम् ।
प्रपश्याम्यहमीशानं सुप्तमेकार्णवे प्रभुम् ॥ १९.२८ ॥
सर्वव्यापिनमव्यक्तमनन्तं विश्वतोमुखम् ।
तस्य पादतलाभ्याशे स्वर्णकेयूरमण्डिताम् ॥ १९.२९ ॥

विश्वरूपां महाभागां विश्वमायावधारिणीम् ।
श्रीमयीं ह्रीमयीं देवीं धीमयीं वाङ्मयीं शिवाम् ॥ १९.३० ॥
सिद्धिं कीर्तिं रतिं ब्राह्मीं कालरात्रिमयोनिजाम् ।
तामेवाहं तदात्यन्तमीश्वरान्तिकमास्थिताम् ॥ १९.३१ ॥
अद्राक्षं चन्द्रवदनां धृतिं सर्वेश्वरीमुमाम् ॥ १९.३२ ॥
शान्तं प्रसुप्तं नवहेमवर्णमुमासहायं भगवन्तमीशम् ।
तमोवृतं पुण्यतमं वरिष्ठं प्रदक्षिणीकृत्य नमस्करोमि ॥ १९.३३ ॥
ततः प्रसुप्तः सहसा विबुद्धो रात्रिक्षये देववरः स्वभावात् ।
विक्षोभयन् बाहुभिरर्णवाम्भो जगत्प्रणष्टं सलिले विमृश्य ॥ १९.३४ ॥
किं कार्यमित्येव विचिन्तयित्वा वाराहरूपोऽभवदद्भुताङ्गः ।
महाघनाम्भोधरतुल्यवर्चाः प्रलम्बमालाम्बरनिष्कमाली ॥ १९.३५ ॥
सशङ्खचक्रासिधरः किरीटी सवेदवेदाङ्गमयो महात्मा ।
त्रैलोक्यनिर्माणकरः पुराणो देवत्रयीरूपधरश्च कार्ये ॥ १९.३६ ॥
स एव रुद्रः स जगज्जहार सृष्ट्यर्थमीशः प्रपितामहोऽभूत् ।
संरक्षणार्थं जगतः स एव हरिः सुचक्रासिगदाब्जपाणिः ॥ १९.३७ ॥
तेषां विभागो न हि कर्तुमर्हो महात्मनामेकशरीरभाजाम् ।
मीमांसाहेत्वर्थविशेषतर्कैर्यस्तेषु कुर्यात्प्रविभेदमज्ञः ॥ १९.३८ ॥
स याति घोरं नरकं क्रमेण विभागकृद्द्वेषमतिर्दुरात्मा ।
या यस्य भक्तिः स तयैव नूनं देहं त्यजन् स्वं ह्यमृतत्वमेति ॥ १९.३९ ॥
संमोहयन्मूर्तिभिरत्र लोकं स्रष्टा च गोप्ता क्षयकृत्स देवः ।
तस्मान्न मोहात्मकमाविशेत द्वेषं न कुर्यात्प्रविभिन्नमूर्तिः ॥ १९.४० ॥
वाराहमीशानवरोऽप्यतोऽसौ रूपं समास्थाय जगद्विधाता ।
नष्टे त्रिलोकेऽर्णवतोयमग्ने विमार्गितोयौघमयेऽन्तरात्मा ॥ १९.४१ ॥
भित्त्वार्णवं तोयमथान्तरस्थं विवेश पातालतलं क्षणेन ।
जले निमग्नां धरणीं समस्तां समस्पृशत्पङ्कजपत्रनेत्राम् ॥ १९.४२ ॥
विशीर्णशैलोपलशृङ्गकूटां वसुंधरां तां प्रलये प्रलीनाम् ।
दंष्ट्रैकया विष्णुरतुल्यसाहसः समुद्दधार स्वयमेव देवः ॥ १९.४३ ॥
सा तस्य दंष्ट्राग्रविलम्बिताङ्गी कैलासशृङ्गाग्रगतेव ज्योत्स्ना ।
विभ्राजते साप्यसमानमूर्तिः शशाङ्कशृङ्गे च तडिद्विलग्ना ॥ १९.४४ ॥
तामुज्जहारार्णवतोयमग्नां करी निमग्नामिव हस्तिनीं हठात् ।
नावं विशीर्णामिव तोयमध्यादुदीर्णसत्त्वोऽनुपमप्रभावः ॥ १९.४५ ॥
स तां समुत्तार्य महाजलौघात्समुद्रमार्यो व्यभजत्समस्तम् ।
महार्णवेष्वेव महार्णवाम्भो निक्षेपयामास पुनर्नदीषु ॥ १९.४६ ॥

शीर्णाश्च शैलान्स चकार भूयो द्वीपान्समस्तांश्च तथार्णवांश्च ।
शैलोपलैर्ये विचिताः समन्ताच्छिलोच्चयांस्तान्स चकार कल्पे ॥ १९.४७ ॥
अनेकरूपं प्रविभज्य देहं चकार देवेन्द्रगणान्समस्तान् ।
मुखाच्च वह्निर्मनसश्च चन्द्रश्चक्षोश्च सूर्यः सहसा बभूव ॥ १९.४८ ॥
जज्ञेऽथ तस्येश्वरयोगमूर्तेः प्रध्यायमानस्य सुरेन्द्रसङ्घः ।
वेदाश्च यज्ञाश्च तथैव वर्णास्तथा हि सर्वौषधयो रसाश्च ॥ १९.४९ ॥
जगत्समस्तं मनसा बभूव यत्स्थावरं किंचिदिहाण्डजं वा ।
जरायुजं स्वेदजमुद्भिज्जं वा यत्किंचिदा कीटपिपीलकाद्यम् ॥ १९.५० ॥
ततो विजज्ञे मनसा क्षणेन अनेकरूपाः सहसा महेशा ।
चकार यन्मूर्तिभिरव्ययात्मा अष्टाभिराविश्य पुनः स तत्र ॥ १९.५१ ॥
लीलां चकाराथ समृद्धतेजा अतोऽत्र मे पश्यत एव विप्राः ।
तेषां मया दर्शनमेव सर्वं यावन्मुहूर्तात्समकारि भूप ॥ १९.५२ ॥
कृत्वा त्वशेषं किल लीलयैव स देवदेवो जगतां विधाता ।
सर्वत्रदृक्सर्वग एव देवो जगाम चादर्शनमादिकर्ता ॥ १९.५३ ॥
यत्तन्मुहूर्तादिह नामरूपं तावत्प्रपश्यामि जगत्तथैव ।
द्वीपैः समुद्रैरभिसंवृतं हि नक्षत्रतारादिविमानकीर्णम् ॥ १९.५४ ॥
वियत्पयोदग्रहचक्रचित्रं नानाविधैः प्राणिगणैर्वृतं च ।
तां वै न पश्यामि महानुभावां गोरूपिणीं सर्वसुरेश्वरीं च ॥ १९.५५ ॥
क्व सांप्रतं सेति विचिन्त्य राजन्विभ्रान्तचित्तस्त्वभवं तदैव ।
दिशो विभागानवलोकयानृते पुनस्तां कथमीश्वराङ्गीम् ॥ १९.५६ ॥
पश्यामि तामत्र पुनश्च शुभ्रां महाभ्रनीलां शुचिशुभ्रतोयाम् ।
वृक्षैरनेकैरुपशोभिताङ्गीं गजैस्तुरङ्गैर्विहगैर्वृतां च ॥ १९.५७ ॥
यथा पुरातीरमुपेत्य देव्याः समास्थितश्चाप्यमरकण्टके तु ।
तथैव पश्यामि सुखोपविष्ट आत्मानमव्यग्रमवाप्तसौख्यम् ॥ १९.५८ ॥
तथैव पुण्या मलतोयवाहां दृष्ट्वा पुनः कल्पपरिक्षयेऽपि ।
अम्बामिवार्यामनुकम्पमानामक्षीणतोयां विरुजां विशोकः ॥ १९.५९ ॥
एवं महत्पुण्यतमं च कल्पं पठन्ति शृण्वन्ति च ये द्विजेन्द्राः ।
महावराहस्य महेश्वरस्य दिने दिने ते विमला भवन्ति ॥ १९.६० ॥
अशुभशतसहस्रं ते विधूय प्रपन्नास्त्रिदिवममरजुष्टं सिद्धगन्धर्वयुक्तम् ।
विमलशशिनिभाभिः सर्व एवाप्सरोभिः सह विविधविलासैः स्वर्गसौख्यं लभन्ते ॥ १९.६१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये वाराहकल्पवृत्तान्तवर्णनं नामैकोनविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२०



युधिष्ठिर उवाच -
श्रुता मे विविधा धर्माः संहारास्त्वत्प्रसादतः ।
कृता देवेन सर्वेण ये च दृष्टास्त्वयानघ ॥ २०.१ ॥
साम्प्रतं श्रोतुमिच्छामि प्रभावं शार्ङ्गधन्वनः ।
त्वयानुभूतं विप्रेन्द्र तन्मे त्वं वक्तुमर्हसि ॥ २०.२ ॥

श्रीमार्कण्डेय उवाच -
अतः परं प्रवक्ष्यामि प्रजासंहारलक्षणम् ।
यच्चिह्नं दृश्यते तत्र यथा कल्पो विधीयते ॥ २०.३ ॥
उल्कापाताः सनिर्घाता भूमिकम्पस्तथैव च ।
पतते पांशुवर्षं च निर्घोषश्चैव दारुणः ॥ २०.४ ॥
यक्षकिन्नरगन्धर्वाः पिशाचोरगराक्षसाः ।
सर्वे ते प्रलयं यान्ति युगान्ते समुपस्थिते ॥ २०.५ ॥
पर्वताः सागरा नद्यः सरांसि विविधानि च ।
वृक्षाः शेषं समायान्ति वल्लीजातं तृणानि च ॥ २०.६ ॥
एवं हि व्याकुलीभूते सर्वौषधिजलोज्झिते ।
काष्ठभूते तु संजाते त्रैलोक्ये सचराचरे ॥ २०.७ ॥
यावत्पश्यामि मध्याह्ने स्नानकाल उपस्थिते ।
त्रैलोक्यं ज्वलनाकारं दुर्निरीक्षं दुरासदम् ॥ २०.८ ॥
द्वौ सूर्यौ पूर्वतस्तात पश्चिमोत्तरयोस्तथा ।
तथैव दक्षिणे द्वौ च सूर्यौ दृष्टौ प्रतापिनौ ॥ २०.९ ॥
द्वौ सूर्यौ नागलोकस्थौ मध्ये द्वौ गगनस्य च ।
इत्येते द्वादशादित्यास्तपन्ते सर्वतो दिशम् ॥ २०.१० ॥
पृथिवीमदहन्सर्वां सशैलवनकाननाम् ।
नादग्धं दृश्यते किंचिदृते रेवां च मां तथा ॥ २०.११ ॥
पृथिव्यां दह्यमानायां हविर्गन्धश्च जायते ।
ततो मे शुष्यते गात्रं तृषाप्येवं दुरासदा ॥ २०.१२ ॥

न हि विन्दामि पानीयं शोषितं च दिवाकरैः ।
यावत्कमण्डलुं वीक्षे शुष्कं तत्रापि तज्जलम् ॥ २०.१३ ॥
ततोऽहं शोकसंतप्तो विशेषात्क्षुत्तृषार्दितः ।
उत्पपात क्षितेरूर्ध्वं पश्यमानो दिवं प्रति ॥ २०.१४ ॥
तावत्पश्यामि गगने गृहं शृङ्गारभूषितम् ।
ततस्तज्ज्ञातुकामोऽहं प्रस्थितो राजसत्तम ॥ २०.१५ ॥
प्राकारेण विचित्रेण कपाटार्गलभूषितम् ।
विचित्रशिखरोपेतं द्वारदेशमुपागतः ॥ २०.१६ ॥
षडशीतिसहस्राणि योजनानां समुच्छ्रये ।
तदर्धं तु पृथक्त्वेन काञ्चनं रत्नभूषितम् ॥ २०.१७ ॥
तत्र मध्ये परां शय्यां पश्यामि नृपसत्तम ।
शय्योपरि शयानं तु पुरुषं दिव्यमूर्धजम् ॥ २०.१८ ॥
विकुञ्चिताग्रकेशान्तं समस्तं योजनायतम् ।
मुकुटेन विचित्रेण दीप्तिकान्तेन शोभितम् ॥ २०.१९ ॥
श्यामं कमलपत्राभं सुप्रभं च सुनासिकम् ।
सिंहास्यमायतभुजं गल्लश्मश्रुवराङ्कितम् ॥ २०.२० ॥
त्रिवलीभङ्गसुभगं कर्णकुण्डलभूषितम् ।
विशालाभं सुपीनाङ्गं पार्श्वस्वावर्तभूषितम् ॥ २०.२१ ॥
शोभितं कटिभागेन विभक्तं जानुजङ्घयोः ।
पद्माङ्किततलं देवमाताम्रसुनखाङ्गुलिम् ॥ २०.२२ ॥
मेघनादसुगम्भीरं सर्वावयवसुन्दरम् ।
शय्यामध्यगतं देवमपश्यं पुरुषोत्तमम् ॥ २०.२३ ॥
शङ्खचक्रगदापाणिं शयानं दक्षिणेन तु ।
अक्षसूत्रोद्यतकरं सूर्यायुतसमप्रभम् ॥ २०.२४ ॥
तं दृष्ट्वा भक्तिमान्देवं स्तोतुकामो व्यवस्थितः ।
जयेश जय वागीश जय दिव्याङ्गभूषण ॥ २०.२५ ॥
जय देवपते श्रीमन्साक्षाद्ब्रह्म सनातन ।
तव लोकाः शरीरस्थास्त्वं गतिः परमेश्वर ॥ २०.२६ ॥
त्वदाधारा हि देवेश सर्वे लोका व्यवस्थिताः ।
त्वं श्रेष्ठः सर्वसत्त्वानां त्वं कर्ता धरणीधरः ॥ २०.२७ ॥
त्वं हौत्रमग्निहोत्राणां सूत्रमन्त्रस्त्वमेव च ।
गोकर्णं भद्रकर्णं च त्वं च माहेश्वरं पदम् ॥ २०.२८ ॥
त्वं कीर्तिः सर्वकीर्तीनां दैन्यपापप्रणाशिनी ।

त्वं नैमिषं कुरुक्षेत्रं त्वं च विष्णुपदं परम् ॥ २०.२९ ॥
त्वया तु लीलया देव पदाक्रान्ता च मेदिनी ।
त्वया बद्धो बलिर्देव त्वयेन्द्रस्य पदं कृतम् ॥ २०.३० ॥
त्वं कलिर्द्वापरं देव त्रेता कृतयुगं तथा ।
प्रलम्बदमनश्च त्वं स्रष्टा त्वं च विनाशकृत् ॥ २०.३१ ॥
त्वया वै धार्यते लोकास्त्वं कालः सर्वसंक्षयः ।
त्वया हि देव सृष्टास्ताः सर्वा वै देवयोनयः ॥ २०.३२ ॥
त्वं पन्थाः सर्वलोकानां त्वं च मोक्षः परा गतिः ।
ब्रह्मा त्वदुद्भवो देवो रजोरूपः सनातनः ।
रुद्रः क्रोधोद्भवोऽप्येवं त्वं च सत्त्वे व्यवस्थितः ॥ २०.३३ ॥
एतच्चराचरं देव क्रीडनार्थं त्वया कृतम् ।
एवं संतप्तदेहेन स्तुतो देवो मया प्रभुः ॥ २०.३४ ॥
भक्त्या परमया राजन्सर्वभूतपतिः प्रभुः ।
स्तुवन्वै तत्र पश्यामि वारिपूर्णास्ततो घटान् ॥ २०.३५ ॥
ततो मया विस्मृता या तृषा सा वर्धिता पुनः ।
उपासर्पं ततस्तस्य पार्श्वं वै पुरुषस्य हि ॥ २०.३६ ॥
पानीयं पातुकामेन चिन्तितं च मया पुनः ।
नापश्यत हि मां चैष सुप्तोऽपि न च बुध्यते ॥ २०.३७ ॥
यस्तु पापेन संमूढः सुखं सुप्तं प्रबोधयेत् ।
जायते तस्य पापस्य ब्रह्महत्याफलं महत् ॥ २०.३८ ॥
एवं संचिन्त्यमाने तु द्वितीयो ह्यागतः पुमान् ।
नेक्षते जल्पते किंचिद्वामस्कन्धे मृगाजिनी ॥ २०.३९ ॥
जटी कमण्डलुधरो दण्डी मेखलया वृतः ।
भस्मोन्मृदितसर्वाङ्गो महातेजास्त्रिलोचनः ॥ २०.४० ॥
यावत्तं स्तोतुकामोऽहमपश्यं स्वच्छचक्षुषा ।
तावत्सर्वाङ्गसम्भूत्यामहत्या रूपसम्पदा ॥ २०.४१ ॥
अपश्यं संवृतां नारीं सर्वाभरणभूषिताम् ।
दृष्ट्वा तां पतितो भूमौ जयस्वेति ब्रुवंस्ततः ॥ २०.४२ ॥
जय रुद्राङ्गसम्भूते जयवाहिनि सनातनि ।
जय कौमारि माहेन्द्रि वैष्णवी वारुणी तथा ॥ २०.४३ ॥
जय कौबेरि सावित्रि जय धात्रि वरानने ।
तृष्णया तप्तदे हस्य रक्षां कुरु चराचरे ॥ २०.४४ ॥

श्रीदेव्युवाच -
प्रसन्ना विप्रशार्दूल तव वाक्यैः सुशोभनैः ।
वर्तते मानसे यत्ते मया ज्ञातं द्विजोत्तम ॥ २०.४५ ॥
शृणु विप्र ममाप्यस्ति व्रतमेतत्सुदारुणम् ।
स्त्रीलघुत्वान्मयारब्धं दुष्करं मन्दमेधया ॥ २०.४६ ॥
यदि भावी च मे पुत्रो धर्मिष्ठो लोकविश्रुतः ।
विप्रस्य तु स्तनं दत्त्वा पश्चाद्दास्यामि बालके ॥ २०.४७ ॥
स मे पुत्रः समुत्पन्नो यथोक्तो मे महामुने ।
स्तनं पिब त्वं विप्रेन्द्र यदि जीवितुमिच्छसि ॥ २०.४८ ॥

श्रीमार्कण्डेय उवाच -
अकार्यमेतद्विप्राणां यस्त्विमं पिबते स्तनम् ।
पुनश्चैवोपनयनं व्रतसिद्धिं न गच्छति ॥ २०.४९ ॥
ब्राह्मणत्वं त्रिभिर्लोकैर्दुर्लभं पद्मलोचने ।
संस्कारैः संस्कृतो विप्रो यैश्च जायेत तच्छृणु ॥ २०.५० ॥
प्रथमं चैव नारीषु संस्कारैर्बीजवापतम् ।
बीजप्रक्षेपणादेव बीजक्षेपः स उच्यते ॥ २०.५१ ॥
तदन्ते च महाभागे गर्भाधानं द्वितीयकम् ।
पुंसवनं तृतीयं तु सीमन्तं च चतुर्थकम् ॥ २०.५२ ॥
पञ्चमं जातकर्म स्यान्नाम वै षष्ठमुच्यते ।
निष्क्रामः सप्तमश्चैव ह्यन्नप्राशनमष्टमम् ॥ २०.५३ ॥
नवमं वै चूडकर्म दशमं मौञ्जिबन्धनम् ।
ऐषिकं दार्विकं चैव सौमिकं भौमिकं तथा ॥ २०.५४ ॥
पत्नीसंयोजनं चान्यद्दैवकर्म ततः परम् ।
मानुष्यं पितृकर्म स्याद्दशमाष्टासु शोभने ॥ २०.५५ ॥
भूतं भव्यं तथेष्टं च पार्वणं च ततः परम् ॥ २०.५६ ॥
श्राद्धं श्रावण्यामाग्रयणं च चैत्राश्वयुज्यां दशपौर्णमास्याम् ।
निरूढपशुसवनसौत्रामण्यग्निष्टोमात्यग्निष्टोमाः ॥ २०.५७ ॥
षोडशीवाजपेयातिरात्राप्तोर्यामोदशवाजपेयाः ।
सर्वभूतेषु क्षान्तिरनसूया शौचमङ्गलमकार्पण्यमस्पृहेति ॥ २०.५८ ॥
एभिरष्टचत्वारिंशद्भिः संस्कारैः संकृतो ब्राह्मणो भवति ॥ २०.५९ ॥
एवं ज्ञात्वा महाभागे न तु मां पातुमर्हसि ।
शिशुपेयं स्तनं भद्रे कथं वै मद्विधः पिबेत् ॥ २०.६० ॥

ममैतद्वचनं श्रुत्वा नारी वचनमब्रवीत् ॥ २०.६१ ॥
यदि त्वं न पिबेः स्तन्यं पयो बालो मरिष्यति ।
श्रूयते त्रिषु लोकेषु वेदेषु च स्मृतिष्वपि ।
मुच्यते सर्वपापेभ्यो भ्रूणहत्या न मुञ्चति ॥ २०.६२ ॥
भवित्री तव हत्या च महाभागवतः पुनः ।
जन्मानि च शतान्यष्टौ क्लिश्यते भ्रूणहत्यया ॥ २०.६३ ॥
मृतः शुनत्वं चाप्नोति वर्षाणां तु शतत्रयम् ।
ततस्तस्य क्षये जाते काकयोनिं व्रजेत्पुनः ॥ २०.६४ ॥
तत्रापि च शतान्यष्टौ क्लिश्यते पापकर्मणि ।
वराहो दश जन्मानि तदन्ते जायते कृमिः ॥ २०.६५ ॥
ततश्चारोहिणीं प्राप्य गोगजाश्वनृजन्मभाक् ।
श्रूयते श्रुतिशास्त्रेषु वेदेषु च परंतप ॥ २०.६६ ॥
सर्वपापाधिकं पापं बालहत्या द्विजोत्तम ।
बालहत्यायुतो विप्रः पच्यते नरके ध्रुवम् ॥ २०.६७ ॥
वर्षाणि च शतान्यष्टौ प्राप्नोति यमयातनाम् ।
तस्मादल्पतरो दोषः पिबतो मे स्तनं तव ॥ २०.६८ ॥
तथैवापिबतः पापं जायते बहुवर्षिकम् ।
क्षुधातृषाविरामस्ते पुण्यं च पिबतः स्तनम् ॥ २०.६९ ॥
अतो न चेतः संदिग्धं कर्तव्यमिह कर्हिचित् ।
एहि विप्र यथाकामं बालार्थे पिब मे स्तनम् ॥ २०.७० ॥
ततोऽहं वचनं श्रुत्वा स्तनं पातुं समुद्यतः ।
न च तृप्तिं विजानामि पिबतः स्तनमुत्तमम् ॥ २०.७१ ॥
त्रिंशद्वर्षसहस्राणि भारतैवं शतानि च ।
ततः प्रबुद्धोत्सङ्गेऽहं मायानिद्राविमोहितः ॥ २०.७२ ॥
निद्राविगतमोहोऽहं यावत्पश्यामि पाण्डव ।
तावत्सुप्तं न पश्यामि न च तं बालकं विभो ॥ २०.७३ ॥
चतुरस्तांश्च वै कुम्भान् पश्यामि तत्र भारत ।
न च पश्यामि तां देवीं गता वै कुत्रचिच्च ते ॥ २०.७४ ॥
एवं विमृश्यमानस्य चिन्तयानस्य तिष्ठतः ।
ईषद्धसितया वाचा देवी वचनमब्रवीत् ॥ २०.७५ ॥

श्रीदेव्युवाच -
कृष्णः स पुरुषः सुप्तो द्वितीयोऽप्यागतो हरः ।

ये चत्वारश्च ते कुम्भाः समुद्रास्ते द्विजोत्तम ॥ २०.७६ ॥
यश्च बालस्त्वया दृष्टो ब्राह्मा लोकपितामहः ।
अहं च पृथिवी ज्ञेया सप्तद्वीपा सर्वता ॥ २०.७७ ॥
या गता त्वां परित्यज्य भूतले सुप्रतिष्ठिता ।
इमां च प्रेक्षसे विप्र नर्मदां सरितां वराम् ॥ २०.७८ ॥
सर्वसत्त्वोपकाराय बृहते पुण्यलक्षणा ।
रेवानदी तु विख्याता न मृता तेन नर्मदा ॥ २०.७९ ॥
एवं ज्ञात्वा शमं गच्छ स्वस्थो भव महामुने ।
इत्युक्त्वा मां तदा देवी तत्रैवान्तरधीयत ॥ २०.८० ॥
एवं हि शेते भगवान्सत्त्वस्थः प्रलये सदा ।
सत्त्वरूपो महादेवो यदाधारे जगत्स्थितम् ॥ २०.८१ ॥
एवं मयानुभूतं तु दृष्टमाश्चर्यमुत्तमम् ।
सर्वपापहरं पुण्यं कथितं ते नरोत्तम ॥ २०.८२ ॥
विष्णोश्चरितमित्युक्तं यत्त्वया परिपृच्छितम् ।
भूय एव महाबाहो किमन्यच्छ्रोतुमिच्छसि ॥ २०.८३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे वाराहकल्पवृत्तान्तवर्णनं नाम विंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२१

https://sa.wikisource.org/s/fau



अध्याय २१

युधिष्ठिर उवाच -
श्रुतं मे विविधाश्चर्यं त्वत्प्रसादाद्द्विजोत्तम ।
भूयश्च श्रोतुमिच्छामि तन्मे कथय सुव्रत ॥ २१.१ ॥
कथमेषा नदी पुण्या सर्वनदीषु चोत्तमा ।
नर्मदा नाम विख्याता भूयो मे कथयानघ ॥ २१.२ ॥

श्रीमार्कण्डेय उवाच -
नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी ।
तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥ २१.३ ॥
नर्मदायास्तु माहात्म्यं यत्पूर्वेण मया श्रुतम् ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ २१.४ ॥
गङ्गा कनखले पुण्या कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ॥ २१.५ ॥
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥ २१.६ ॥
कलिङ्गदेशात्पश्चार्धे पर्वतेऽमरकण्टके ।
पुण्या च त्रिषु लोकेषु रमणीया पदे पदे ॥ २१.७ ॥
तत्र देवाश्च गन्धर्वा ऋषयश्च तपोधनाः ।
तपस्तप्त्वा महाराज सिद्धिं परमिकां गताः ॥ २१.८ ॥
तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ २१.९ ॥
सिद्धिक्षेत्रं परं तात पर्वतो ह्यमरंकटः ।
सर्वदेवाश्रितो यस्मादृषिभिः परिसेवितः ॥ २१.१० ॥
सिद्धविद्याधरा भूतगन्धर्वाः स्थानमुत्तमम् ।
दृश्यादृश्याश्च राजेन्द्र सेवन्ते सिद्धिकाङ्क्षिणः ॥ २१.११ ॥
अहं च परमं स्थानं ततः प्रभृति संश्रितः ।
अत्र प्रणवरूपो वै स्थाने तिष्ठत्युमापतिः ॥ २१.१२ ॥
श्रीकण्ठः सगणः सर्वभूतसङ्घैर्निषेवितः ।
अस्माद्गिरिवराद्भूप वक्ष्ये तीर्थस्य विस्तरम् ॥ २१.१३ ॥
यानि सन्तीह तीर्थानि पुण्यानि नृपसत्तम ।
यानि यानीह तीर्थानि नर्मदायास्तटद्वये ॥ २१.१४ ॥
न तेषां विस्तरं वक्तुं शक्तो ब्रह्मापि भूपते ।
योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥ २१.१५ ॥
विस्तरेण तु राजेन्द्र अर्धयोजनमायता ।
षष्टितीर्थसहस्राणि षष्टिकोट्यस्तथैव च ॥ २१.१६ ॥
पर्वतादुदधिं यावदुभे कूले न संशयः ॥ २१.१७ ॥
सप्तषष्टिसहस्राणि सप्तषष्टिशतानि च ।
सप्तषष्टिस्तथा कोट्यो वायुस्तीर्थानि चाब्रवीत् ॥ २१.१८ ॥
परं कृतयुगे तानि यान्ति प्रत्यक्षतां नृप ।
पश्यन्ति मानवाः सर्वे सततं धर्मबुद्धयः ॥ २१.१९ ॥
यथायथा कलिर्घोरो वर्तते दारुणो नृप ।
तथातथाल्पतां यान्ति हीनसत्त्वा यतो नराः ॥ २१.२० ॥
जालेश्वरादितीर्थानि पर्वतेऽस्मिन्नराधिप ।
पितृतृप्तिप्रदान्याहुः स्वर्गमोक्षप्रदानि च ॥ २१.२१ ॥
श्रेष्ठं दारुवनं तत्र चरुकासंगमः शुभः ।

उत्तरे नर्मदायास्तु चरुकेश्वरमुत्तमम् ॥ २१.२२ ॥
दारुकेश्वरतीर्थं च व्यतीपातेश्वरं तथा ।
पातालेश्वरतीर्थं च कोटियज्ञं तथैव च ॥ २१.२३ ॥
इति चैवोत्तरे कूले रेवाया नृपसत्तम ।
अमरेश्वरपार्श्वे च लिङ्गान्यष्टोत्तरं शतम् ॥ २१.२४ ॥
वरुणेश्वरमुख्यानि सर्वपापहराणि च ॥ २१.२५ ॥
मान्धातृपुरपार्श्वे च सिद्धेश्वरयमेश्वरौ ।
ओङ्कारात्पूर्वभागे च केदारं तीर्थमुत्तमम् ॥ २१.२६ ॥
तत्समीपे महाराज स्वर्गद्वारमघापहम् ।
नाम्ना ब्रह्मेश्वरं पुण्यं सप्तसारस्वतं पुरः ॥ २१.२७ ॥
रुद्राष्टकं च सावित्रं सोमतीर्थं तथैव च ।
एतानि दक्षिणे तीरे रेवाया भरतर्षभ ॥ २१.२८ ॥
अस्मिंस्तु पर्वते तात रुद्राणां कोटयः स्थिताः ।
स्नानैस्तुष्टिर्भवेत्तेषां गन्धमाल्यानुलेपनैः ॥ २१.२९ ॥
प्रीतास्तेऽपि भवन्त्यत्र रुद्रा राजन्न संशयः ।
जपेन पापसंशुद्धिर्ध्यानेनानन्त्यमश्नुते ॥ २१.३० ॥
दानेन भोगानाप्नोति इत्येवं शङ्करोऽब्रवीत् ।
पर्वतात्पश्चिमे देशे स्वयं देवो महेश्वरः ।
स्थितः प्रणवरूपोऽसौ जगदादिः सनातनः ॥ २१.३१ ॥
तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
पितृकार्यं प्रकुर्वीत विधिदृष्टेन कर्मणा ॥ २१.३२ ॥
तिलोदकेन तत्रैव तर्पयेत्पितृदेवताः ।
आ सप्तमं कुलं तस्य स्वर्गे मोदति पाण्डव ॥ २१.३३ ॥
आत्मना सह भोगांश्च विविधान् लभते सुखी ।
षष्टिवर्षसहस्राणि क्रीडते सुरपूजितः ॥ २१.३४ ॥
मोदते सुचिरं कालं पितृपूजाफलधितः ।
ततः स्वर्गात्परिभ्रष्टो जायते विमले कुले ॥ २१.३५ ॥
धनवान्दानशीलश्च नीरोगो लोकपूजितः ।
पुनः स्मरति तत्तीर्थं गमनं कुरुते पुनः ॥ २१.३६ ॥
द्वितीये जन्मनि भवेद्ध्रदस्यानुचरोत्कटः ।
तथैव ब्रह्मचर्येण सोपवासो जितेन्द्रियः ॥ २१.३७ ॥
सर्वहिंसानिवृत्तस्तु लभते फलमुत्तमम् ।
एवं धर्मसमाचारो यस्तु प्राणान्परित्यजेत् ॥ २१.३८ ॥
तस्य पुण्यफलं यद्वै तन्निबोध नराधिप ।
शतं वर्षसहस्राणि स्वर्गे मोदति पाण्डव ॥ २१.३९ ॥
अप्सरोगणसंकीर्णे दिव्यशब्दानुनादिते ।
दिव्यगन्धानुलिप्ताङ्गो दिव्यालङ्कारभूषितः ॥ २१.४० ॥
क्रीडते दैवतैः सार्द्धं सिद्धगन्धर्वसंस्तुतः ।
ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् ॥ २१.४१ ॥
हस्त्यश्वरथयानैश्च धर्मज्ञः शास्त्रतत्परः ।
गृहे स्तम्भशताकीर्णे सौवर्णे रजतान्विते ॥ २१.४२ ॥
सप्ताष्टभूमिसुद्वारे दासीदाससमाकुले ।
मत्तमातङ्गनिःश्वासैर्वाजिहेषितनादितैः ॥ २१.४३ ॥
क्षुभ्यते तस्य तद्द्वारमिन्द्रस्य भुवनं यथा ।
राजराजेश्वरः श्रीमान्सर्वस्त्रीजनवल्लभः ॥ २१.४४ ॥
तस्मिन्गृहे वसित्वा तु क्रीडाभोगसमन्वितः ।
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ २१.४५ ॥
एवं तेषां भवेत्सर्वं ये मृता ह्यमरेश्वरे ।
अग्निप्रवेशं यः कुर्याद्भक्त्या ह्यमरकण्टके ॥ २१.४६ ॥
स मृतः स्वर्गमाप्नोति यास्यते परमां गतिम् ।
स्नानं दानं जपो होमः शुभं वा यदि वाशुभम् ॥ २१.४७ ॥
पुराणे श्रूयते राजन्सर्वं कोटिगुणं भवेत् ।
तस्यास्तीरे तु ये वृक्षाः पतिताः कालपर्यये ॥ २१.४८ ॥
नर्मदातोयसंस्पृष्टास्ते यान्ति परमां गतिम् ।
अनिवृत्तिका गतिस्तस्य पवनस्याम्बरे यथा ॥ २१.४९ ॥

पतनं कुरुते यस्तु तस्मिंस्तीर्थे नराधिप ।
कन्यास्त्रीणि सहस्राणि पाताले भोगभागिनः ॥ २१.५० ॥
तिष्ठन्ति भवने तस्य प्रेषणे प्रार्थयन्ति च ।
दिव्यभोगैः सुसम्पन्नः क्रीडते कालम् ॥ २१.५१ ॥
पृथिव्यां ह्यासमुद्रायां तादृशो नैव जायते ।
यादृशोऽयं नरश्रेष्ठ पर्वतोऽमरकण्टकः ॥ २१.५२ ॥
तत्र तीर्थं तु विज्ञेयं पर्वतस्यानु पश्चिमे ।
ह्रदो जालेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ २१.५३ ॥
तत्र पिण्डप्रदानेन सन्ध्योपासनकेन तु ।
पितरो द्वादशाब्दानि तर्पितास्तु भवन्ति वै ॥ २१.५४ ॥
दक्षिणे नर्मदातीरे कपिला तु महानदी ।
सरलार्जुनसंछन्ना खदिरैरुपशोभिता ॥ २१.५५ ॥
माधवीसल्लकीभिश्च वल्लीभिश्चाप्यलंकृता ।
श्वापदैर्गर्जमानैश्च गोमायुवानरादिभिः ॥ २१.५६ ॥
पक्षिजातिविशेषैश्च नित्यं प्रमुदिता नृप ।
साग्रं कोटिशतं तत्र ऋषीणामिति शुश्रुम ॥ २१.५७ ॥
तपस्तप्त्वा गतं मोक्षं येषां जन्म न चागमः ।
येन तत्र तपस्तप्तं कपिलेन महात्मना ॥ २१.५८ ॥
तत्र तच्चाभवत्तीर्थं पुण्यं सिद्धनिषेवितम् ।
येन सा कापिलैस्तात सेविता ऋषिभिः पुरा ॥ २१.५९ ॥
तेन सा कपिला नाम गीता पापक्षयंकरी ।
तत्र कोटिशतं साग्रं तीर्थानाममरेश्वरे ॥ २१.६० ॥
अहोरात्रोषितो भूत्वा मुच्यते सर्वकिल्बिषैः ।
दानं च विधिवद्दत्त्वा यथाशक्त्या द्विजोत्तमे ॥ २१.६१ ॥
ईश्वरानुग्रहात्सर्वं तत्र कोटिगुणं भवेत् ।
यस्मादनक्षरं रूपं प्रणवस्येह भारत ॥ २१.६२ ॥
शिवस्वरूपस्य ततः कृतमात्राक्षरं भवेत् ।
तिर्यञ्चः पशवश्चैव वृक्षा गुल्मलतादयः ॥ २१.६३ ॥
तेऽपि तत्र क्षयं याताः स्वर्गं यान्ति न संशयः ।
विशल्या तत्र या प्रोक्ता तत्रैव तु महानदी ॥ २१.६४ ॥
स्नात्वा दत्त्वा यथान्यायं तत्रापि सुकृती भवेत् ।
तत्र देवगणाः सर्वे सकिन्नरमहोरगाः ॥ २१.६५ ॥
यक्षराक्षसगन्धर्वा ऋषयश्च तपोधनाः ।
सर्वे समागतास्तां वै पश्यन्ति ह्यमरेश्वरे ॥ २१.६६ ॥
तैश्च सर्वैः समागम्य वन्दितौ तौ शुभौ कटौ ।
पुरा युगे महाघोरे सर्वलोकभयंकरे ॥ २१.६७ ॥
नर्मदायाः सुतस्तत्र सशल्यो विशलीकृतः ।
सर्वदेवैश्च ऋषिभिर्विशल्या तेन सा स्मृता ॥ २१.६८ ॥

युधिष्ठिर उवाच -
उत्पन्ना तु कथं तात विशल्या कपिला कथम् ।
कथं वा नर्मदापुत्रः शल्ययुक्तोऽभवन्मुने ॥ २१.६९ ॥
आश्चर्यभूतं लोकस्य श्रोतुमिच्छामि सुव्रत ॥ २१.७० ॥

श्रीमार्कण्डेय उवाच -
पुरा दाक्षायणी नाम सहिता शूलपाणिना ।
क्रीडित्वा नर्मदातोये परया च मुदा नृप ॥ २१.७१ ॥
जलादुत्तीर्य सहसा वस्त्रमन्यत्समाहरत् ।
देव्यास्तु स्नानवस्त्रं तत्पीडितं लीलया नृप ॥ २१.७२ ॥
सहितानुचरीभिस्तु इन्द्रायुधनिभं भृशम् ।
तस्मिन्निष्पीड्यमाने तु वारि यन्निःसृतं तदा ॥ २१.७३ ॥
तस्मादियं सरिज्जज्ञे कपिलाख्या महानदी ।
संयोगादङ्गरागस्य वस्त्रोद्यत्कपिलं जलम् ॥ २१.७४ ॥
गलितं तेन कपिला वर्णतो नामतोऽभवत् ।
तथा गन्धरसैर्युक्तं नानापुष्पैस्तु वासितम् ॥ २१.७५ ॥

नानावर्णारुणं शुभ्रं वस्त्राद्यद्वारि निःसृतम् ।
पीड्यमानं करैः शुभ्रैस्तैस्तु पल्लवकोमलैः ॥ २१.७६ ॥
कपिलं जलमिश्रैस्तु तस्मादेषा सरिद्वरा ।
कपिला चोच्यते तज्ज्ञैः पुराणार्थविशारदैः ॥ २१.७७ ॥
एषा वै वस्त्रसम्भूता नर्मदातोयसम्भवा ।
महापुण्यतमा ज्ञेया कपिला सरिदुत्तमा ॥ २१.७८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कपिलासरित्सम्भववर्णनं नामैकविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२२



श्री मार्कण्डेय उवाच -
अतः परं प्रवक्ष्यामि सा विशल्या ह्यभूद्यथा ।
आश्चर्यभूता लोकस्य सर्वपापक्षयंकरी ॥ २२.१ ॥
ब्रह्मणो मानसः पुत्रो मुख्यो ह्यग्निरजायत ।
मुख्यो वह्निरितिप्रोक्त ऋषिः परमधार्मिकः ॥ २२.२ ॥
तस्य स्वाहाभवत्पत्नी स्मृता दाक्षायणी तु सा ।
तस्यां मुख्या महाराज त्रयः पुत्रास्तदाऽभवन् ॥ २२.३ ॥
अग्निराहवनीयस्तु दक्षिणाग्निस्तथैव च ।
गार्हपत्यस्तृतीयस्तु त्रैलोक्यं यैश्च धार्यते ॥ २२.४ ॥
तथा वै गार्हपत्योऽग्निर्जज्ञे पुत्रद्वयं शुभम् ।
पद्मकः शङ्कुनामा च तावुभावग्निसत्तमौ ॥ २२.५ ॥
वसन्नग्निर्नदीतीरे समाश्रित्य महत्तपः ।
रुद्रमाराधयामास जितात्मा सुसमाहितः ॥ २२.६ ॥
दशवर्षसहस्राणि चचार विपुलं तपः ।
तमुवाच महादेवः प्रसन्नो वृषभध्वजः ॥ २२.७ ॥
भोभो ब्रूहि महाभाग यत्ते मनसि वर्तते ।
दाता ह्यहमसंदेहो यद्यपि स्यात्सुदुर्लभम् ॥ २२.८ ॥

अग्निरुवाच -
नर्मदेयं महाभागा सरितो याश्च षोडश ।
भवन्तु मम पत्न्यस्तास्त्वत्प्रसादान्महेश्वर ॥ २२.९ ॥
तासु वै चिन्तितान् पुत्रानग्र्यानुत्पादयाम्यहम् ।
एष एव वरो देव दीयतां मे महेश्वर ॥ २२.१० ॥

ईश्वर उवाच -
एतास्तु धिष्णिनाम्न्यो वै भविष्यन्ति सरिद्वराः ।

पत्न्यस्तव विशालाक्ष्यो वेदे ख्याता न संशयः ॥ २२.११ ॥
तासां पुत्रा भविष्यन्ति ह्यग्नयो येऽध्वरे स्मृताः ।
धिष्ण्यानाम सुविख्याता यावदाभूतसम्प्लवम् ॥ २२.१२ ॥
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
नर्मदा च सरिच्छ्रेष्ठा तस्य भार्या बभूव ह ॥ २२.१३ ॥
कावेरी कृष्णवेणी च रेवा च यमुना तथा ।
गोदावरी वितस्ता च चन्द्रभागा इरावती ॥ २२.१४ ॥
विपाशा कौशिकी चैव सरयूः शतरुद्रिका ।
शिप्रा सरस्वती चैव ह्लादिनी पावनी तथा ॥ २२.१५ ॥
एताः षोडशा नद्यो वै भार्यार्थं संव्यवस्थिताः ।
तदात्मानं विभज्याशु धिष्णीषु स महाद्युतिः ॥ २२.१६ ॥
व्यभिचारात्तु भर्तुर्वै नर्मदाद्यासु धिष्णिषु ।
उत्पन्नाः शुचयः पुत्राः सर्वे ते धिष्ण्यपाः स्मृताः ॥ २२.१७ ॥
तस्याश्च नर्मदायास्तु धिष्णीन्द्रो नाम विश्रुतः ।
बभूव पुत्रो बलवान्रूपेणाप्रतिमो नृप ॥ २२.१८ ॥
ततो देवासुरं युद्धमभवल्लोमहर्षणम् ।
मयतारकमित्येवं त्रिषु लोकेषु विश्रुतम् ॥ २२.१९ ॥
तत्र दैत्यैर्महाघोरैर्मयतारपुरोगमैः ।
ताडितास्ते सुरास्त्रस्ता विष्णुं वै शरणं ययुः ॥ २२.२० ॥
त्रायस्व नो हृषीकेशा घोरादस्मान्महाभयात् ।
दैत्यान्सर्वान्संहरस्व मयतारपुरोगमान् ॥ २२.२१ ॥
एवमुक्तः स भगवान्दिशो दश व्यलोकयत् ।
ततो भगवता दृष्टौ रणे पावकमारुतौ ॥ २२.२२ ॥
आहूतौ विष्णुना तौ तु सकाशं जग्मतुः क्षणात् ।
स्थितौ तौ प्रणतौ चाग्रे देवदेवस्य धीमतः ॥ २२.२३ ॥
ततो धिष्णिः पावकेन्द्रो देवेनोक्तो महात्मना ।
निर्दहेमान्महाघोरान्नार्मदेय महासुरान् ॥ २२.२४ ॥
अथैवमुक्तौ तौ देवौ रणे पावकमारुतौ ।
दैत्यान् ददहतुः सर्वान्मयतारपुरोगमान् ॥ २२.२५ ॥
दह्यमानास्तु ते सर्वे शस्त्रैरग्निं त्ववेष्टयन् ।
दिव्यैरग्न्यर्कसङ्काशैः शतशोऽथ सहस्रशः ॥ २२.२६ ॥
तांश्चाग्निः शस्त्रनिकरैर्निर्ददाह महासुरान् ।

ज्वालामालाकुलं सर्वं वायुना निर्मितं तदा ॥ २२.२७ ॥
दह्यमानास्ततो दैत्या अग्निज्वालासमावृताः ।
प्रविश्य पातालतलं जले लीनाः सहस्रशः ॥ २२.२८ ॥
ततः कुमारमग्निं तु नर्मदापुत्रमव्ययम् ।
पूजयित्वा सुराः सर्वे जग्मुस्ते त्रिदशालयम् ॥ २२.२९ ॥
सशल्यस्तु महातेजा रेवापुत्रो वृतोऽग्निभिः ।
नर्मदामागतः क्षिप्रं मातरं द्रष्टुमुत्सुकः ॥ २२.३० ॥
तं दृष्ट्वा पुत्रमायान्तं शस्त्रौघेण परिक्षतम् ।
नर्मदा पुण्यसलिला अभ्युत्थाय सुविस्मिता ॥ २२.३१ ॥
पर्यष्वजत बाहुभ्यां प्रस्नवापीडितस्तनी ।
सशल्यं पुत्रमादाय कापिलं ह्रदमाविशत् ॥ २२.३२ ॥
प्रविष्टमात्रे तु ह्रदे कापिले पापनाशिनि ।
सशल्यं तं विशल्यं च क्षणात्कृतवती तदा ॥ २२.३३ ॥
स विशल्योऽभवद्यस्मात्प्राप्य तस्याः शिवं जलम् ।
कपिला नामतस्तेन विशल्या चोच्यते बुधैः ॥ २२.३४ ॥
अन्येऽपि तत्र ये स्नाताः शुचयस्तु समाहिताः ।
पापशल्यैः प्रमुच्यन्ते मृता यान्ति सुरालयम् ॥ २२.३५ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं पुरा त्वया ।
उत्पत्तिकारणं तात विशल्याया नरेश्वर ॥ २२.३६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये विशल्यासम्भवो नाम द्वाविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२३



अध्याय २३

मार्कण्डेय उवाच -
तत्रैव सङ्गमे राजन्भक्त्या परमया नृप ।
प्राणांस्त्यजन्ति ये मर्त्यास्ते यान्ति परमां गतिम् ॥ २३.१ ॥
संन्यस्तसर्वसंकल्पो यस्तु प्राणान्परित्यजेत् ।
अमरेश्वरमासाद्य स स्वर्गे नियतं वसेत् ॥ २३.२ ॥
शैलेन्द्रं यः समासाद्य आत्मानं मुञ्चते नरः ।
विमानेनार्कवर्णेन स गच्छेदमरावतीम् ॥ २३.३ ॥
नरं पतन्तमालोक्य नगादमरकण्टकात् ।
ब्रुवन्त्यप्सरसः सर्वा मम भर्ता भवेदिति ॥ २३.४ ॥
समं जलं धर्मविदो वदन्ति सारस्वतं गाङ्गमिति प्रबुद्धाः ।
तस्योपरिष्टात्प्रवदन्ति तज्ज्ञा रेवाजलं नात्र विचारणास्ति ॥ २३.५ ॥
अनेकविद्याधरकिन्नराद्यैरध्यासितं पुण्यतमाधिवासैः ।
रेवाजलं धारयतो हि मूर्ध्ना स्थानं सुरेन्द्राधिपतेः समीपे ॥ २३.६ ॥
नर्मदा सर्वदा सेव्या बहुनोक्तेन किं नृप ।
यदीच्छेन्न पुनर्द्रष्टुं घोरं संसारसागरम् ॥ २३.७ ॥
त्रयाणामपि लोकानां महती पावनी स्मृता ।
यत्र तत्र मृतस्यापि ध्रुवं गाणेश्वरी गतिः ॥ २३.८ ॥
अनेकयज्ञायतनैर्वृताङ्गी न ह्यत्र किंचिद्यदतीर्थमस्ति ।
तस्यास्तु तीरे भवता यदुक्तं तपस्विनो वाप्यतपस्विनो वा ॥ २३.९ ॥
म्रियन्ति ये पापकृतो मनुष्यास्ते स्वर्गमायान्ति यथाऽमरेन्द्राः ॥ २३.१० ॥
एवं तु कपिला चैव विशल्या राजसत्तम ।
ईश्वरेण पुरा सृष्टा लोकानां हितकाम्यया ॥ २३.११ ॥
तत्र स्नात्वा नरो राजन्सोपवासो जितेन्द्रियः ।
अश्वमेधस्य महतोऽसंशयं फलमाप्नुयात् ॥ २३.१२ ॥

अनाशकं च यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
सर्वपापविनिर्मुक्तो याति वै शिवमन्दिरम् ॥ २३.१३ ॥
पृथिव्यां सागरान्तायां स्नानदानेन यत्फलम् ।
विशल्यासङ्गमे स्नात्वा सकृत्तत्फलमश्नुते ॥ २३.१४ ॥
एवं पुण्या पवित्रा च कथिता तव भूपते ।
भूयो मां पृच्छसि च यत्तच्चैव कथयाम्यहम् ॥ २३.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे विशल्यासङ्गममाहात्म्यवर्णनं नाम त्रयोविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२४



अध्याय २४

श्रीमार्कण्डेय उवाच -
सङ्गमः करनर्मदयोः पुरे मान्धातृसंज्ञिते ।
गत्वा स्नात्वा तपयित्वा पितॄन्विष्णुपुरं नयेत् ॥ २४.१ ॥
मर्दयित्वा करौ पूर्वं विष्णुर्दैत्यजिघांसया ।
चक्रं जग्राह तत्रैव स्वेदाज्जाता सरिद्वरा ॥ २४.२ ॥
संगता रेवया तत्र स्नात्वा पापैः प्रमुच्यते ॥ २४.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये करनर्मदासङ्गममाहात्म्यवर्णनं नाम चतुर्विंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२५



अध्याय २५

श्रीमार्कण्डेय उवाच -
ओंकारात्पूर्वभागे वै सङ्गमो लोकविश्रुतः ।
रेवया संगता यत्र नीलगङ्गा नृपोत्तम ॥ २५.१ ॥
तत्र स्नात्वा जपित्वा च कोऽर्थोऽलभ्यो भवेद्भुवि ।
षष्टिर्वर्षसहस्राणि नीलकण्ठपुरे वसेत् ॥ २५.२ ॥
तर्पयित्वा पितॄञ्श्राद्धे तिलमिश्रैर्जलैरपि ।
उद्धरेदात्मना सार्धं पुरुषानेकविंशतिम् ॥ २५.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नीलगङ्गायाः सङ्गममाहात्म्यवर्णनंनाम पञ्चविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२६



युधिष्ठिर उवाच -
जालेश्वरेऽपि यत्प्रोक्तं त्वया पूर्वं द्विजोत्तम ।
तत्कथं तु भवेत्पुण्यमृषिसिद्धनिषेवितम् ॥ २६.१ ॥

श्रीमार्कण्डेय उवाच -
जालेश्वरात्परं तीर्थं न भूतं न भविष्यति ।
तस्योत्पत्तिं कथयतः शृणु त्वं पाण्डुनन्दन ॥ २६.२ ॥
पुरा ऋषिगणाः सर्वे सेन्द्राश्चैव मरुद्गणाः ।
तापिता असुरैः सर्वैः क्षयं नीता ह्यनेकशः ॥ २६.३ ॥
बाणासुरप्रभृतिभिर्जम्भशुम्भपुरोगमैः ।
वध्यमाना ह्यनेकैश्च ब्रह्माणं शरणं गताः ॥ २६.४ ॥
विमानैः पर्वताकारैर्हयैश्चैव गजोपमैः ।
स्यन्दनैर्नगराकारैः सिंहशार्दूलयोजितैः ॥ २६.५ ॥
कच्छपैर्मकरैश्चान्ये जग्मुरन्ये पदातयः ।
प्राप्य ते परमं स्थानमशक्यं यदधार्मिकैः ॥ २६.६ ॥
दृष्ट्वा पद्मोद्भवं देवं सर्वलोकस्य शङ्करम् ।
ते सर्वे तत्र गत्वा तु स्तुतिं चक्रुः समाहिताः ॥ २६.७ ॥
देवा ऊचुः ।
जयामेय जयाभेद जय सम्भूतिकारक ।
पद्मयोने सुरश्रेष्ठ त्वां वयं शरणं गताः ॥ २६.८ ॥
तच्छ्रुत्वा तु वचो देवो देवानां भावितात्मनाम् ।
मेघगम्भीरया वाचा प्रत्युवाच पितामहः ॥ २६.९ ॥
किं वो ह्यागमनं देवाः सर्वेषां च विवर्णता ।
केनावमानिताः सर्वे शीघ्रं कथयतामराः ॥ २६.१० ॥
देवा ऊचुः ।
बाणो नाम महावीर्यो दानवो बलदर्पितः ।
तेनास्माकं हृतं सर्वं धनरत्नैर्वियोजिताः ॥ २६.११ ॥

देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
चिन्तयामास देवेशस्तस्य नाशाय या क्रिया ॥ २६.१२ ॥
अवध्यो दानवः पापः सर्वेषां वै दिवौकसाम् ।
मुक्त्वा तु शङ्करं देवं न मया न च विष्णुना ॥ २६.१३ ॥
तत्रैव सर्वे गच्छामो यत्र देवो महेश्वरः ।
स गतिश्चैव सर्वेषां विद्यतेऽन्यो न कश्चन ॥ २६.१४ ॥
एवमुक्त्वा सुरैः सर्वैर्ब्रह्मा वेदविदांवरः ।
ब्राह्मणैः सह विद्वद्भिरतो यत्र महेश्वरः ॥ २६.१५ ॥
स्तुतिभिश्च सुपुष्टाभिस्तुष्टाव परमेश्वरम् ॥ २६.१६ ॥
देवा ऊचुः ।
जय त्वं देवदेवेश जयोमार्धशरीरधृक् ।
वृषासन महाबाहो शशाङ्ककृतभूषण ॥ २६.१७ ॥
नमः शूलाग्रहस्ताय नमः खट्वाङ्गधारिणे ।
जय भूतपते देव दक्षयज्ञविनाशन ॥ २६.१८ ॥
पञ्चाक्षर नमो देव पञ्चभूतात्मविग्रह ।
पञ्चवक्त्रमयेशान वेदैस्त्वं तु प्रगीयसे ॥ २६.१९ ॥
सृष्टिपालनसंहारांस्त्वं सदा कुरुषे नमः ।
अष्टमूर्ते स्मरहर स्मर सत्यं यथा स्तुतः ॥ २६.२० ॥
पञ्चात्मिका तनुर्देव ब्राह्मणैस्ते प्रगीयते ।
सद्यो वामे तथाघोरे ईशो तत्पुरुषे तथा ॥ २६.२१ ॥
हेमजाले सुविस्तीर्णे हंसवत्कूजसे हर ।
एवं स्तुतो मुनिगणैर्ब्रह्माद्यैश्च सुरासुरैः ॥ २६.२२ ॥
प्रहृष्टः सुमना भूत्वा सुरसङ्घानुवाच ह ॥ २६.२३ ॥

ईश्वर उवाच -
स्वागतं देवविप्राणां सुप्रभाताद्य शर्वरी ।
किं कुर्मो वदत क्षिप्रं कोऽन्यः सेव्यः सुरासुरैः ॥ २६.२४ ॥
किं दुःखं को नु सन्तापः कुतो वो भयमागतम् ।
कथयध्वं महाभागाः कारणं यन्मनोगतम् ॥ २६.२५ ॥
एवमुक्तास्तु रुद्रेण प्रत्यवोचन्सुरर्षभाः ।
स्वान्स्वान्देहान्दर्शयन्तो लज्जमाना अधोमुखाः ॥ २६.२६ ॥
अस्ति घोरो महावीर्यो दानवो बलदर्पितः ।

बाणो नामेति विख्यातो यस्य तत्त्रिपुरं महत् ॥ २६.२७ ॥
तेन वै सुतपस्तप्तं दशवर्षशतानि हि ।
तस्य तुष्टोऽभवद्ब्रह्मा नियमेन दमेन च ॥ २६.२८ ॥
पुराणि तान्यभेद्यानि ददौ कामगमानि वै ।
आयसं राजतं चैव सौवर्णं च तथापरम् ॥ २६.२९ ॥
त्रिपुरं ब्रह्मणा सृष्टं भ्रमत्तत्कामगामि च ।
तस्यैव तु बलोत्कृष्टास्त्रिपुरे दानवाः स्थिताः ॥ २६.३० ॥
त्रैलोक्यं सकलं देव पीडयन्ति महासुराः ।
दण्डपाशासिशस्त्राणि अविकारे विकुर्वते ।
त्रिपुरं दानवैर्जुष्टं भ्रमत्तच्चक्रसंनिभम् ॥ २६.३१ ॥
क्वचिद्दृश्यमदृश्यं वा मृगतृष्णैव लक्ष्यते ॥ २६.३२ ॥
यस्मिन्पतति तद्दिव्यं दृप्तस्य त्रिपुरं महत् ।
न तत्र ब्राह्मणा देवा गावो नैव तु जन्तवः ॥ २६.३३ ॥
न तत्र दृश्यते किंचित्पतेद्यत्र पुरत्रयम् ।
नद्यो ग्रामाश्च देशाश्च बहवो भस्मसात्कृताः ॥ २६.३४ ॥
सुवर्णं रजतं चैव मणिमौक्तिकमेव च ।
स्त्रीरत्नं शोभनं यच्च तत्सर्वं कर्षते बलात् ॥ २६.३५ ॥
न शस्त्रेण न चास्त्रेण न दिवा निशि वा हर ।
शक्यते देवसङ्घैश्च निहन्तुं स कथंचन ॥ २६.३६ ॥
तद्दहस्व महादेव त्वं हि नः परमा गतिः ।
एवं प्रसादं देवेश सर्वेषां कर्तुमर्हसि ॥ २६.३७ ॥
येन देवाश्च गन्धर्वा ऋषयश्च तपोधनाः ।
परां धृतिं समायान्ति तत्प्रभो कर्तुमर्हसि ॥ २६.३८ ॥

ईश्वर उवाच -
एतत्सर्वं करिष्यामि मा विषादं गमिष्यथ ।
अचिरेणैव कालेन कुर्यां युष्मत्सुखावहम् ॥ २६.३९ ॥
आश्वासयित्वा तान्देवान्सर्वानिन्द्रपुरोगमान् ।
चिन्तयामास देवेशस्त्रिपुरस्य वधं प्रति ॥ २६.४० ॥
कथं केन प्रकारेण हन्तव्यं त्रिपुरं मया ।
तमेकं नारदं मुक्त्वा नान्योपायो विधीयते ॥ २६.४१ ॥
एवं संस्तभ्य चात्मानं ततो ध्यातः स नारदः ।

तत्क्षणादेव सम्प्राप्तो वायुभूतो महातपाः ॥ २६.४२ ॥
कमण्डलुधरो देवस्त्रिदण्डी ज्ञानकोविदः ।
योगपट्टाक्षसूत्रेण छत्रेणैव विराजितः ॥ २६.४३ ॥
जटाजूटाबद्धशिरा ज्वलनार्कसमप्रभः ।
त्रिधा प्रदक्षिणीकृत्य दण्डवत्पतितो भुवि ॥ २६.४४ ॥
कृताञ्जलिपुटो भूत्वा नारदो भगवान्मुनिः ।
स्तोत्रेण महता शर्वः स्तुतो भक्त्या महामनाः ॥ २६.४५ ॥

नारद उवाच -
जय शम्भो विरूपाक्ष जय देव त्रिलोचन ।
जय शङ्कर ईशान रुद्रेश्वर नमोऽस्तु ते ॥ २६.४६ ॥
त्वं पतिस्त्वं जगत्कर्ता त्वमेव लयकृद्विभो ।
त्वमेव जगतां नाथो दुष्टातकनिषूदनः ॥ २६.४७ ॥
त्वं नः पाहि सुरेशान त्रयीमूर्ते सनातन ।
भवमूर्ते भवारे त्वं भजतामभयो भव ॥ २६.४८ ॥
भवभावविनाशार्थं भव त्वां शरणं भजे ।
किमर्थं चिन्तितो देव आज्ञा मे दीयतां प्रभो ॥ २६.४९ ॥
कस्य संक्षोभये चित्तं को वाद्य पततु क्षितौ ।
कमद्य कलहेनाहं योजये जयतांवर ॥ २६.५० ॥
नारदस्य वचः श्रुत्वा देवदेवो महेश्वरः ।
उत्फुल्लनयनो भूत्वा इदं वचनमब्रवीत् ॥ २६.५१ ॥
स्वागतं ते मुनिश्रेष्ठ सदैव कलहप्रिय ।
वीणावादनतत्त्वज्ञ ब्रह्मपुत्र सनातन ॥ २६.५२ ॥
गच्छ नारद शीघ्रं त्वं यत्र तत्त्रिपुरं महत् ।
बाणस्य दानवेन्द्रस्य सर्वलोकभयावहम् ॥ २६.५३ ॥
भर्तारो देवतातुल्याः स्त्रियस्तत्राप्सरःसमाः ।
तासां वै तेजसा चैव भ्रमते त्रिपुरं महत् ॥ २६.५४ ॥
न शक्यते कथं भेत्तुं सर्वोपायैर्द्विजोत्तम ।
गत्वा त्वं मोहय क्षिप्रं पृथग्धर्मैरनेकधा ॥ २६.५५ ॥

नारद उवाच -
तव वाक्येन देवेश भेदयामि पुरोत्तमम् ।

अभेद्यं बहुधोपायैर्यत्तु देवैः सवासवैः ॥ २६.५६ ॥
एवमुक्त्वा गतो भूप शतयोजनमायतम् ।
बाणस्य तत्पुरश्रेष्ठमृद्धिवृद्धिसमायुतम् ॥ २६.५७ ॥
कृतकौतुकसम्बाधं नानाधातुविचित्रितम् ।
अनेकहर्म्यसंछन्नमनेकायतनोज्ज्वलम् ॥ २६.५८ ॥
द्वारतोरणसंयुक्तं कपाटार्गलभूषितम् ।
बहुयन्त्रसमोपेतं प्राकारपरिखोज्ज्वलम् ॥ २६.५९ ॥
वापीकूपतडागैश्च देवतायतनैर्युतम् ।
हंसकारण्डवाकीर्णं पद्मिनीखण्डमण्डितम् ॥ २६.६० ॥
अनेकवनशोभाढ्यं नानाविहगमण्डितम् ।
एवं गुणगणाकीर्णं बाणस्य पुरमुत्तमम् ॥ २६.६१ ॥
तस्य मध्ये महाकायं सप्तकक्षं सुशोभितम् ।
बाणस्य भवनं दिव्यं सर्वं काञ्चनभूषितम् ॥ २६.६२ ॥
मौक्तिकादामशोभाढ्यं वज्रवैडूर्यभूषितम् ।
रुक्मपट्टतलाकीर्णं रत्नभूम्या सुशोभितम् ॥ २६.६३ ॥
मत्तमातङ्गनिःश्वासैः स्यन्दनैः संकुलीकृतम् ।
हयहेषितशब्दैश्च नारीणां नूपुरस्वनैः ॥ २६.६४ ॥
खड्गतोमरहस्तैश्च वज्राङ्कुशशरायुधैः ।
रक्षितं घोररूपैश्च दानवैर्बलदर्पितैः ॥ २६.६५ ॥
एवं गुणगणाकीर्णं बाणस्य भवनोत्तमम् ।
कैलासशिखरप्रख्यं महेन्द्रभवनोपमम् ॥ २६.६६ ॥
नारदो गगने शीघ्रमगमत्पुरसंमुखः ।
द्वारदेशं समासाद्य क्षत्तारं वाक्यमब्रवीत् ॥ २६.६७ ॥
भोभोः क्षत्तर्महाबुद्धे राजकार्यविशारद ।
शीघ्रं बाणाय चाचक्ष्व नारदो द्वारि तिष्ठति ॥ २६.६८ ॥
स वन्दयित्वा चरणौ नारदस्य त्वरान्वितः ।
सभामध्यगतं बाणं विज्ञप्तुमुपचक्रमे ॥ २६.६९ ॥
वेपमानाङ्गयष्टिस्तु करेणापिहिताननः ।
शृण्वतां सर्वयोधानामिदं वचनमब्रवीत् ॥ २६.७० ॥
वन्दितो देवगन्धर्वैर्यक्षकिन्नरदानवैः ।
कलिप्रियो दुराराध्यो नारदो द्वारि तिष्ठति ॥ २६.७१ ॥
द्वारपालस्य तद्वाक्यं श्रुत्वा बाणस्त्वरान्वितः ।

द्वाःस्थमाह महादैत्यः सविस्मयमिदं तदा ॥ २६.७२ ॥

बाण उवाच -
ब्रह्मपुत्रं सतेजस्कं दुःसहं दुरतिक्रमम् ।
प्रवेशय महाभागं किमर्थं वारितो बहिः ॥ २६.७३ ॥
श्रुत्वा प्रभोर्वचस्तस्य प्रावेशयदुदीरितम् ।
गत्वा वेगेन महता नारदं गृहमागतम् ॥ २६.७४ ॥
दृष्ट्वा देवर्षिमायान्तं नारदं सुरपूजितम् ।
साहसोत्थाय संहृष्टो ववन्दे चरणौ मुनेः ॥ २६.७५ ॥
ददौ चासनमर्घ्यं च पाद्यं पूजां यथाविधि ।
न्यवेदयच्च तद्राज्यमात्मानं बान्धवैः सह ॥ २६.७६ ॥
पप्रच्छ कुशलं चापि मुनिं बाणासुरः स्वयम् ॥ २६.७७ ॥

नारद उवाच -
साधु साधु महाबाहो दनोर्वंशविवर्द्धन ।
कोऽन्यस्त्रिभुवने श्लाघ्यस्त्वां मुक्त्वा दनुपुंगव ॥ २६.७८ ॥
पूजितोऽहं दनुश्रेष्ठ धनरत्नैः सुशोभनैः ।
राज्येन चात्मना वापि ह्येवं कः पूजयेत्परः ॥ २६.७९ ॥
न मे कार्यं हि भोगेन भुङ्क्ष्व राज्यमनामयम् ।
त्वद्दर्शनोत्सुकः प्राप्तो दृष्ट्वा देवं महेश्वरम् ॥ २६.८० ॥
भ्रमते त्रिपुरं लोके स्त्रीसतीत्वान्मया श्रुतम् ।
तान्द्रष्टुकामः सम्प्राप्तस्त्वद्दारान्दानवेश्वर ॥ २६.८१ ॥
मन्यसे यदि मे शीघ्रं दर्शयस्व च माचिरम् ।
नारदस्य वचः श्रुत्वा कञ्चुकिं समुदीक्ष्य वै ॥ २६.८२ ॥
अन्तःपुरचरं वृद्धं दण्डपाणिं गुणान्वितम् ।
उवाच राजा हृष्टात्मा शब्देनापूरयन्दिशः ॥ २६.८३ ॥
नारदाय महादेवीं दर्शयस्वेह कञ्चुकिन् ।
अन्तःपुरचरैः सर्वैः समेतामविशङ्कितः ॥ २६.८४ ॥
नाथस्याज्ञां पुरस्कृत्य गृहीत्वा नारदं करे ।
प्रविश्याकथयद्देव्यै नारदोऽयं समागतः ॥ २६.८५ ॥
दृष्ट्वा देवी मुनिश्रेष्ठं कृत्वा पादाभिवन्दनम् ।
आसनं काञ्चनं शुभ्रमर्घ्यपाद्यादिकं ददौ ॥ २६.८६ ॥

तस्यै स भगवांस्तुष्टो ह्याशीर्वादमदात्परम् ।
नान्या देवि त्रिलोकेऽपि त्वत्समा दृश्यतेऽङ्गना ॥ २६.८७ ॥
पतिव्रता शुभाचारा सत्यशौचसमन्विता ।
यस्याः प्रभावात्त्रिपुरं भ्रमते चक्रवत्सदा ॥ २६.८८ ॥
तच्छ्रुत्वा वचनं देवी नारदस्य सुदान्वितम् ।
पर्यपृच्छदृषिं भक्त्या धर्मं धर्मभृतांवरा ॥ २६.८९ ॥

राज्ञ्युवाच -
भगवन्मानुषे लोके देवास्तुष्यन्ति कैर्व्रतैः ।
कानि दानानि दीयन्ते येषां च स्यान्महत्फलम् ॥ २६.९० ॥
उपवासाश्च ये केचित्स्त्रीधर्मे कथिता बुधैः ।
यैः कृतैः स्वर्गमायान्ति सुकृतिन्यः स्त्रियो यथा ॥ २६.९१ ॥
यत्तत्सर्वं महाभाग कथयस्व यथातथम् ।
श्रोतुमिच्छाम्यहं सर्वं कथयस्वाविशङ्कितः ॥ २६.९२ ॥

नारद उवाच -
साधु साधु महाभागे प्रश्नोऽयं वेदितस्त्वया ।
यं श्रुत्वा सर्वनारीणां धर्मवृद्धिस्तु जायते ॥ २६.९३ ॥
उपवासैश्च दानैश्च पतिपुत्रौ वशानुगौ ।
बान्धवैः पूज्यते नित्यं यैः कृतैः कथयामि ते ॥ २६.९४ ॥
दुर्भगा सुभगा यैस्तु सुभगा दुर्भगा भवेत् ।
पुत्रिणी पुत्ररहिता ह्यपुत्रा पुत्रिणी तथा ॥ २६.९५ ॥
भर्तारं लभते कन्या तथान्या भर्तृवर्जिता ।
कृताकृतैश्च जायन्ते तन्निबोधस्व सुन्दरि ॥ २६.९६ ॥
तिलधेनुं सुवर्णं च रूप्यं गा वाससी तथा ।
पानीयं भूमिदानं च गन्धधूपानुलेपनम् ॥ २६.९७ ॥
पादुकोपानहौ छत्रं पुण्यानि व्यञ्जनानि च ।
पादाभ्यङ्गं शिरोऽभ्यङ्गं स्नानं शय्यासनानि च ॥ २६.९८ ॥
एतानि ये प्रयच्छन्ति नोपसर्पन्ति ते यमम् ।
मधु माषं पयः सर्पिर्लवणं गुडमौषधम् ॥ २६.९९ ॥
पानीयं भूमिदानं च शालीनिक्षुरसांस्तथा ।
आरक्तवाससी क्ष्लक्ष्णे दम्पत्योर्ललितादिने ॥ २६.१०० ॥

सौभाग्यं जायते चैव इह लोके परत्र च ।
ब्राह्मणे वृत्तसम्पन्ने सुरूपे च गुणान्विते ॥ २६.१०१ ॥
तिथौ यस्यामिदं देयं तत्ते राज्ञि वदाम्यहम् ।
प्रतिपत्सु च या नारी पूर्वाह्णे च शुचिव्रता ॥ २६.१०२ ॥
इन्धनं ब्राह्मणे दद्यात्प्रीयतां मे हुताशनः ।
तस्या जन्मानि षट्त्रिंशदङ्गप्रत्यङ्गसन्धिषु ॥ २६.१०३ ॥
न रजो नैव सन्तापो जायते राजवल्लभे ।
द्वितीयायां तु या नारी नवनीतमुदान्विता ॥ २६.१०४ ॥
ददाति द्विजमुख्याय सुकुमारतनुर्भवेत् ।
लवणं विप्रवर्याय तृतीयायां प्रयच्छति ॥ २६.१०५ ॥
गौरी मे प्रीयतां देवी तस्याः पुण्यफलं शृणु ।
कौमारिका पतिं प्राप्य तेन सार्द्धमुमा यथा ॥ २६.१०६ ॥
क्रीडत्यविधवा चापि लभते सा महद्यशः ।
नक्तं कृत्वा चतुर्थ्यां वै दद्याद्विप्राय मोदकान् ॥ २६.१०७ ॥
प्रीयतां मम देवेशो गणनाथो विनायकः ।
तस्यास्तेन फलेनाशु सर्वकर्मसु भामिनि ॥ २६.१०८ ॥
विघ्नं न जायते क्वापि एवमाह पितामहः ।
पञ्चमीं तु ततः प्राप्य ब्राह्मणे तिलदा तु या ॥ २६.१०९ ॥
सा भवेद्रूपसम्पन्ना यथा चैव तिलोत्तमा ।
षष्ठ्यां तु या मधूकस्य फलदा तु भवेत्सदा ॥ २६.११० ॥
उद्दिश्य चाग्निजं देवं ब्राह्मणे वेदपारगे ।
तस्याः पुत्रो यथा स्कन्दो देवसङ्घेषु चोत्तमः ॥ २६.१११ ॥
उत्पद्यते महाराजः सर्वलोकेषु पूजितः ।
सप्तम्यां या द्विजश्रेष्ठं सुवर्णेन प्रपूजयेत् ॥ २६.११२ ॥
उद्दिश्य जगतो नाथं देवदेवं दिवाकरम् ।
तस्य पुण्यफलं यद्वै कथितं द्विजसत्तमैः ॥ २६.११३ ॥
तत्ते राज्ञि प्रवक्ष्यामि शृणुष्वैकमनाः सति ।
दद्रूचित्रककुष्ठानि मण्डलानि विचर्चिका ॥ २६.११४ ॥
न भवन्तीह चाङ्गेषु पूर्वकर्मार्जितान्यपि ।
कृष्णां धेनुं तथाष्टम्यां या प्रयच्छति भामिनी ॥ २६.११५ ॥
ब्राह्मणे वृत्तसम्पन्ने प्रीयतां मे महेश्वरः ।
तस्या जन्मार्जितं पापं नश्यते विभवान्विता ॥ २६.११६ ॥

जायते नात्र सन्देहो यस्माद्दानमनुत्तमम् ।
गन्धधूपं तु या नारी भक्त्या विप्राय दापयेत् ॥ २६.११७ ॥
कात्यायनीं समुद्दिश्य नवम्यां शृणु यत्फलम् ।
तस्या भ्राता पिता पुत्रः पतिर्वा रणमुत्तमम् ॥ २६.११८ ॥
प्राप्यते नैव सीदन्ति तेन दानेन रक्षिताः ।
इक्षुदण्डरसं देवि दशम्यां या प्रयच्छति ॥ २६.११९ ॥
लोकपालान्समुद्दिश्य ब्राह्मणे व्यङ्गवर्जिते ।
तेन दानेन सा नित्यं सर्वलोकस्य वल्लभा ॥ २६.१२० ॥
जायते नात्र सन्देह इत्येवं शङ्करोऽब्रवीत् ।
एकादश्यामुपोष्याथ द्वादश्यामुदकप्रदा ॥ २६.१२१ ॥
नारायणं समुद्दिश्य ब्राह्मणे विष्णुतत्परे ।
सा सदा स्पर्शसम्भाषैर्द्रावयेद्भावयेज्जनम् ॥ २६.१२२ ॥
यस्माद्दानं महर्लोके ह्यनन्तमुदके भवेत् ।
पादाभ्यङ्गं शिरोऽभ्यङ्गं काममुद्दिश्य वै द्विजे ॥ २६.१२३ ॥
ददाति च त्रयोदश्यां भक्त्या परमयाङ्गना ।
यस्यां यस्यां मृता जायेद्भूयो योन्यां तु जन्मनि ॥ २६.१२४ ॥
तस्यां तस्यां तु सा भर्तुर्न वियुज्येत कर्हिचित् ।
तथाप्येवं चतुर्दश्यां दद्यात्पात्रमुपानहौ ॥ २६.१२५ ॥
ब्रह्मणे धर्ममुद्दिश्य तस्या लोका ह्यनामयाः ।
एवं च पक्षपक्षान्ते श्राद्धे तर्पेद्द्विजोत्तमान् ॥ २६.१२६ ॥
अव्युच्छिन्ना सदा राज्ञि सन्ततिर्जायते भुवि ।
एवं ते तिथिमाहात्म्यं दानयोगेन भाषितम् ॥ २६.१२७ ॥
तथा वनस्पतीनां तु आराधनविधिं शृणु ।
जम्बूं निम्बतरुं चैव तिन्दुकं मधुकं तथा ॥ २६.१२८ ॥
आम्रं चामलकं चैव शाल्मलिं वटपिप्पलौ ।
शमीबिल्वामलीवृक्षं कदलीं पाटलीं तथा ॥ २६.१२९ ॥
अन्यान्पुण्यतमान्वृक्षानुपेत्य स्वर्गमाप्नुयात् ॥ २६.१३० ॥

नारद उवाच -
चैत्रे मासे तु या नारी कुर्याद्व्रतमनुत्तमम् ।
तस्य व्रतस्य चान्यानि कलां नार्हन्ति षोडशीम् ॥ २६.१३१ ॥
श्रुतेन येन सुभगे दुर्भगत्वं न पश्यति ।

यथा हिमं रविं प्राप्य विलयं याति भूतले ॥ २६.१३२ ॥
तथा दुःखं च दौर्भाग्यं व्रतादस्माद्विलीयते ।
मधुकाख्यां तु ललितामाराधयति येन वै ॥ २६.१३३ ॥
विधिं तं शृणु सुभगे कथ्यमानं सुखावहम् ।
चैत्रे शुक्लतृतीयायां सुस्नाता शुद्धमानसा ॥ २६.१३४ ॥
प्रतिमां मधुवृक्षस्य शाङ्करीमुमया सह ।
कारयित्वा द्विजवरैः प्रतिष्ठाप्य यथाविधि ॥ २६.१३५ ॥
सुगन्धिकुसुमैर्धूपैस्तथा कर्पूरकुङ्कुमैः ।
पूजयेद्विधिना देवं मन्त्रयुक्तेन भामिनी ॥ २६.१३६ ॥
पादौ नमः शिवायेति मेढ्रे वै मन्मथाय च ।
कालोदरायेत्युदरं नीलकंठाय कण्ठकम् ॥ २६.१३७ ॥
शिरः सर्वात्मने पूज्य उमां पश्चात्प्रपूजयेत् ।
क्षामोदरायैह्युदरं सुकण्ठायै च कण्ठकम् ॥ २६.१३८ ॥
शिरः सौभाग्यदायिन्यै पश्चादर्घ्यं प्रदापयेत् ॥ २६.१३९ ॥
नमस्ते देवदेवेश उमावर जगत्पते ।
अर्घ्येणानेन मे सर्वं दौर्भाग्यं नाशय प्रभो ।
इति अर्घ्यमन्त्रः ॥ २६.१४० ॥
अर्घ्यं दत्त्वा ततः पश्चात्करकं वारिपूरितम् ।
मधूकपात्रोपभृतं सहिरण्यं तु शक्तितः ॥ २६.१४१ ॥
करकं वारिसम्पूर्णं सौभाग्येन तु संयुतम् ।
दत्तं तु ललिते तुभ्यं सौभाग्यादिविवर्धनम् ।
इति करकदानमन्त्रः ॥ २६.१४२ ॥
मन्त्रेणानेन विप्राय दद्यात्करकमुत्तमम् ।
लवणं वर्जयेच्छुक्लां यावदन्यां तृतीयिकाम् ॥ २६.१४३ ॥
क्षमाप्य देवीं देवेशां नक्तमद्यात्स्वयं हविः ।
अनेन विधिना सार्धं मासि मासि ह्यपक्रमेत् ॥ २६.१४४ ॥
फाल्गुनस्य तृतीयायां शुक्लायां तु समाप्यते ।
वैशाखे लवणं देयं ज्येष्ठे चाज्यं प्रदीयते ॥ २६.१४५ ॥
आषाढे मासि निष्पावाः पयो देयं तु श्रावणे ।
मुद्गा देया नभस्ये तु शालिमाश्वयुजे तथा ॥ २६.१४६ ॥
कार्त्तिके शर्करापात्रं करकं रससंभृतम् ।
मार्गशीर्षे तु कार्पासं करकं घृतसंयुतम् ॥ २६.१४७ ॥

पौषे तु कुङ्कुमं देयं माघे पात्रं तिलैर्भृतम् ।
फाल्गुने मासि सम्प्राप्ते पात्रं मोदकसंभृतम् ॥ २६.१४८ ॥
पश्चात्तृतीयादेयं यत्तत्पूर्वस्यां विवर्जयेत् ।
विधानमासां सर्वासां सामान्यं मनसः प्रिये ॥ २६.१४९ ॥
प्रतिमां मधुवृक्षस्य तामेव प्रतिपूजयेत् ।
तस्मै सर्वं तु विप्राय आचार्याय प्रदीयते ॥ २६.१५० ॥
ततः संवत्सरस्यान्ते उद्यापनविधिं शृणु ।
मधुवृक्षं ततो गत्वा बहुसम्भारसंवृतः ॥ २६.१५१ ॥
निखनेत्प्रतिमां मध्ये माधूकीं मधुकस्य च ।
तत्रस्थं पूजयेत्सर्वमुमादेहार्द्धधारिणम् ॥ २६.१५२ ॥
पूजोपहारैर्विपुलैः कुङ्कुमेन पुनःपुनः ।
श्लक्ष्णाभिः पुष्पमालाभिः कौसुम्भैः केसरेण च ॥ २६.१५३ ॥
कौसुम्भे वाससी शुभ्रे अतसीपुष्पसन्निभे ।
परिधाप्य तां प्रतिमां दम्पती रविसंख्यया ॥ २६.१५४ ॥
उपानद्युगलैश्छत्रैः कण्ठसूत्रैः सकण्ठिकैः ।
कटकैरङ्गुलीयैश्च शयनीयैः शुभास्तृतैः ॥ २६.१५५ ॥
कुङ्कुमेन विलिप्ताङ्गौ बहुपुष्पैश्च पूजितौ ।
भोजयेद्विविधै रत्नैर्मधूकावासके स्थितौ ॥ २६.१५६ ॥
भुक्तोत्थितौ तु विश्राम्य शय्यासु च क्षमापयेत् ।
गुरुमूलं यतः सर्वं गुरुर्ज्ञेयो महेश्वरः ॥ २६.१५७ ॥
प्रीते गुरौ ततः सर्वं जगत्प्रीतं सुरासुरम् ।
यद्यदिष्टतमं लोके यत्किंचिद्दयितं गृहे ॥ २६.१५८ ॥
तत्सर्वं गुरवे देयमात्मनः श्रेय इच्छता ।
इदं तु धनिभिर्देयमन्यैर्देयं यथोच्यते ॥ २६.१५९ ॥
दाम्पत्यमेकं विधिवत्प्रतिपूज्य शुभव्रतैः ।
द्वितीयं गुरुदाम्पत्यं वित्तशाठ्यं विवर्जयेत् ॥ २६.१६० ॥
ततः क्षमापयेद्देवीं देवं च ब्राह्मणं गुरुम् ।
यथा त्वं देवि ललिते न वियुक्तासि शम्भुना ॥ २६.१६१ ॥
तथा मे पतिपुत्राणामवियोगः प्रदीयताम् ।
अनेन विधिना कृत्वा तृतीयां मधुसंज्ञिकाम् ॥ २६.१६२ ॥
इन्द्राणी चेन्द्रपत्नीत्वमवाप सुतमुत्तमम् ।
सौभाग्यं सर्वलोकेषु सर्वर्द्धिसुखमुत्तमम् ॥ २६.१६३ ॥

अनेन विधिना या तु कुमारी व्रतमाचरेत् ।
शोभनं पतिमाप्नोति यथेन्द्राण्या शतक्रतुः ॥ २६.१६४ ॥
दुर्भगा सुभगत्वं च सुभगा पुत्रिणी भवेत् ।
पुत्रिण्यक्षयमाप्नोति न शोकं पश्यति क्वचित् ॥ २६.१६५ ॥
अनेकजन्मजनितं दौर्भाग्यं नश्यति ध्रुवम् ।
मृता तु त्रिदिवं प्राप्य उमया सह मोदते ॥ २६.१६६ ॥
कल्पकोटिशतं साग्रं भुक्त्वा भोगान् यथेप्सितान् ।
पुनस्तु सम्भवे लोके पार्थिवं पतिमाप्नुयात् ॥ २६.१६७ ॥
सुभगा रूपसम्पन्ना पार्थिवं जनयेत्सुतम् ॥ २६.१६८ ॥
एतत्ते कथितं सर्वं व्रतानामुत्तमं व्रतम् ।
अन्यत्पृच्छस्व सुभगे वाञ्छितं यद्धृदि स्थितम् ॥ २६.१६९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये मधूकतृतीयाव्रतविधानमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२७



अध्याय २७

श्रीमार्कण्डेय उवाच -
नारदस्य वचः श्रुत्वा राज्ञी वचनमब्रवीत् ।
प्रसादं कुरु विप्रेन्द्र गृह्ण दानं यथेप्सितम् ॥ २७.१ ॥
सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ।
तत्ते दारयामि विप्रेन्द्र यच्चान्यदपि दुर्लभम् ॥ २७.२ ॥
राज्यास्तु वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ।
अन्येषां दीयतां भद्रे ये द्विजाः क्षीणवृत्तयः ॥ २७.३ ॥
वयं तु सर्वसम्पन्ना भक्तिग्राह्याः सदैव हि ।
इत्युक्ता सा तदा राज्ञी वेदवेदाङ्गपारगान् ॥ २७.४ ॥
आहूय ब्राह्मणान्निःस्वान्दातुं समुपचक्रमे ।
यत्किंचिन्नारदेनोक्तं दानसौभाग्यवर्धनम् ॥ २७.५ ॥
तेन दानेन मे नित्यं प्रीयेतां हरिशङ्करौ ।
ततो राज्ञी च सा प्राह नारदं मुनिपुंगवम् ॥ २७.६ ॥

राज्युवाच -
दानं दत्तं त्वयोक्तं यद्भर्तृकर्मपरं हि तत् ।
आजन्मजन्म मे भर्ता भवेद्बाणो द्विजोत्तम ॥ २७.७ ॥
नान्यो हि दैवतं तात मुक्त्वा बाणं द्विजोत्तम ।
तेन सत्येन मे भर्ता जीवेच्च शरदां शतम् ॥ २७.८ ॥
नान्यो धर्मो भवेत्स्त्रीणां दैवतं हि पतिर्यथा ।
तथापि तव वाक्येन दानं दत्तं यथाविधि ॥ २७.९ ॥
स्वकं कर्म करिष्यामो भर्तारं प्रति मानद ।
ब्रह्मर्षे गच्छ चेदानीं त्वमाशीर्वादः प्रदीयताम् ॥ २७.१० ॥
तथेति तामनुज्ञाप्य नारदो नृपसत्तम ।

सर्वासां मानसं हृत्वा अन्यतः कृतमानसः ॥ २७.११ ॥
जगामादर्शनं विप्रः पूज्यमानस्तु खेचरैः ।
ततो गतमनस्कास्ता भर्तारं प्रति भारत ॥ २७.१२ ॥
विवर्णा निष्प्रभा जाता नारदेन विमोहिताः ॥ २७.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये त्रिपुरक्षोभणवर्णनं नाम सप्तविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२८





मार्कण्डेय उवाच -

एतस्मिन्नन्तरे रुद्रो नर्मदातटमास्थितः ।

क्रीडते ह्युमया सार्द्धं नारदस्तत्र चागतः ॥ २८.१ ॥

प्रणम्य देवदेवेशमुमया सह शङ्करम् ।

व्यज्ञापयत्तदा देवं यद्वृत्तं त्रिपुरे तदा ॥ २८.२ ॥

गतोऽहं स्वामिनिर्देशाद्यत्र तद्बाणमन्दिरम् ।

दृष्ट्वा बाणं यथान्यायं गतो ह्यन्तःपुरं महत् ॥ २८.३ ॥

तत्र भार्यासहस्राणि दृष्ट्वा बाणस्य धीमतः ।

यथायोग्यं यथाकाममागतः क्षोभ्य तत्पुरम् ॥ २८.४ ॥

नारदस्य वचः श्रुत्वा साधु साध्विति पूजयन् ।

चिन्तयामास देवेशो भ्रमणं त्रिपुरस्य हि ॥ २८.५ ॥

करमुक्तं यथा चक्रं विष्णुना प्रभविष्णुना ।

महावेगं महायामं रक्षितं तेजसा मम ॥ २८.६ ॥

स च मे भक्तिनिरतो बाणो लोके च विश्रुतः ।

भारती च मया दत्ता ब्राह्मणानां विशेषतः ॥ २८.७ ॥

एवं स सुचिरं कालं देवदेवो महेश्वरः ।

चिन्तयित्वा सुनिर्वाणं कार्यं प्रति जनेश्वरः ॥ २८.८ ॥

ततोऽसौ मन्दरं ध्यात्वा चापे कृत्वा गुणे महीम् ।

विष्णुं सनातनं देवं बाणे ध्यात्वा त्रिलोचनः ॥ २८.९ ॥

फले हुताशनं देवं ज्वलन्तं सर्वतोमुखम् ।

सुपर्णं पुङ्खयोर्मध्ये जवे वायुं प्रकल्प्य च ॥ २८.१० ॥

रथं महीमयं कृत्वा धुरि तावश्विनावुभौ ।

अक्षे सुरेश्वरं देवमग्रकील्यां धनाधिपम् ॥ २८.११ ॥

यमं तु दक्षिणे पार्श्वे वामे कालं सुदारुणम् ।

आदित्यचन्द्रौ चक्रे तु गन्धर्वानारकादिषु ॥ २८.१२ ॥

यन्तारं च सुरज्येष्ठं वेदान्कृत्वा हयोत्तमान् ।

खलीनादिषु चाङ्गानि रश्मींश्छन्दांसि चाकरोत् ॥ २८.१३ ॥

कृत्वा प्रतोदमोंकारं मुखग्राह्यं महेश्वरः ।

धातारं चाग्रतः कृत्वा विधातारं च पृष्ठतः ॥ २८.१४ ॥

मारुतात्सर्वतो दिग्भ्य ऊर्ध्वयन्त्रे तथैव च ।

महोरगपिशाचांश्च सिद्धविद्याधरांस्तथा ॥ २८.१५ ॥

गणांश्च भूतसङ्घांश्च सर्वे सर्वाङ्गसंधिषु ।

युगमध्ये स्थितो मेरुर्युगस्याधो महागिरिः ॥ २८.१६ ॥

सर्पा यन्त्रस्थिता घोराः शम्ये वरुणनैरृतौ ।

गायत्री चैव सावित्री स्थिते ते रश्मिबन्धने ॥ २८.१७ ॥

सत्यं रथध्वजे शौचं दमं रक्षां समन्ततः ।

रथं देवमयं कृत्वा देवदेवो महेश्वरः ॥ २८.१८ ॥

संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।

बद्धा परिकरं गाढं जटाजूटं नियम्य च ॥ २८.१९ ॥

सज्जं कृत्वा धनुर्दिव्यं योजयित्वा रथोत्तमम् ।

रथमध्ये स्थितो देवः शुशुभे च युधिष्ठिर ॥ २८.२० ॥

धनुषः शब्दनादेनाकम्पयच्च जगत्त्रयम् ।

स्थानं कृत्वा तु वैशाखं निभृतं संस्थितो हरः ॥ २८.२१ ॥

निरीक्ष्य सुचिरं कालं कोपसंरक्तलोचनः ।

ध्यात्वा तं परमं मन्त्रमात्मानं च निरुध्य सः ॥ २८.२२ ॥

मुमोच सहसा बाणं पुरस्य वधकाङ्क्षया ।

यदा त्रीणि समेतानि अन्तरिक्षस्थितानि तु ॥ २८.२३ ॥

ततः कालनिमेषार्धं दृष्ट्वैक्यं त्रिपुरस्य च ।

त्रिपर्वणा त्रिशल्येन ततस्तान्यवसादयत् ॥ २८.२४ ॥

ततो लोका भयत्रस्तास्त्रिपुरे भरतोत्तम ।

सर्वासुरविनाशाय कालरूपा भयावहाः ॥ २८.२५ ॥

अट्टहासान् प्रमुञ्चन्ति कष्टरूपा नरास्तदा ।

निमेषोन्मेषणं चैव कुर्वन्ति लिपिकर्मसु ॥ २८.२६ ॥

निष्पन्दनयना मर्त्याश्चित्रेष्वालिखिता इव ।

देवायतनगा देवा रटन्ति प्रहसन्ति च ।

स्वप्ने पश्यन्ति चात्मानं रक्ताम्बरविभूषितम् ॥ २८.२७ ॥

रक्तमाल्योत्तमाङ्गाश्च पतन्तः कार्दमे ह्रदे ।

पश्यन्ति नाम चात्मानं सतैलाभ्यङ्गमस्तकम् ॥ २८.२८ ॥

पश्यन्ति यानमारूढं रासभैश्च नृपोत्तम ।

संवर्तको महावायुर्युगान्तप्रतिमो महान् ॥ २८.२९ ॥

गृहानुन्मूलयामास वृक्षजातीननेकशः ।

भूमिकम्पाः सनिर्घाता उल्कापाताः सहस्रशः ॥ २८.३० ॥

रुधिरं वर्षते देवो मिश्रितं कर्करैर्बहु ।

अग्निकुण्डेषु विप्राणां हुतः सम्यग्घुताशनः ॥ २८.३१ ॥

ज्वलते धूमसंयुक्तो विस्फुलिङ्गकणैः सह ।

कुंजरा विमदा जातास्तुरगाः सत्त्ववर्जिताः ॥ २८.३२ ॥

अवादितानि वाद्यन्ते वादित्राणि सहस्रशः ।

ध्वजा ह्यकम्पिताः पेतुश्छत्राणि विविधानि च ॥ २८.३३ ॥

ज्वलति पादपास्तत्र पर्णानि च सभं ततः ।

सर्वं तद्व्याकुलीभूतं हाहाकारसमन्वितम् ॥ २८.३४ ॥

उद्यानानि विचित्राणि प्रबभञ्ज प्रभञ्जनः ।

तेन संप्रेरिताः सर्वे ज्वलन्ति विशिखाः शिखाः ॥ २८.३५ ॥

वृक्षगुल्मलतावल्ल्यो गृहाणि च समन्ततः ।

दिग्विभागैश्च सर्वैश्च प्रवृत्तो हव्यवाहनः ॥ २८.३६ ॥

सर्वं किंशुकपर्णाभं प्रज्वलच्चैव दृश्यते ।

गृहाद्गृहं तदा गन्तुं नैव धूमेन शक्यते ॥ २८.३७ ॥

हरकोपाग्निनिर्दग्धाः क्रन्दन्ते त्रिपुरे जनाः ।

प्रदीप्तं सर्वतो दिक्षु दह्यते त्रिपुरं परम् ॥ २८.३८ ॥

पतन्ति शिखराग्राणि विशीर्णानि सहस्रशः ।

पावको धूमसंपृक्तो दह्यमानः समन्ततः ॥ २८.३९ ॥

नृत्यन्वै व्याप्तदिग्देशः कान्तारेष्वभिधावति ।

देवागारेषु सर्वेषु गृहेष्वट्टालकेषु च ॥ २८.४० ॥

प्रवृत्तो हुतभुक्तत्र पुरे कालप्रचोदितः ।

ददाह लोकान्सर्वत्र हरकोपप्रकोपितः ॥ २८.४१ ॥

दहते त्रैपुरं लोकं बालवृद्धसमन्वितम् ।

सपुरं सगृहद्वारं सवाहनवनं नृप ॥ २८.४२ ॥

केचिद्भोजनसक्ताश्च पानासक्तास्तथापरे ।

अपरा नृत्यगीतेषु संसक्ता वारयोषितः ॥ २८.४३ ॥

अन्योन्यं च परिष्वज्य हुताशनशिखार्दिताः ।

दह्यमाना नृपश्रेष्ठ सर्वे गच्छन्त्यचेतनाः ॥ २८.४४ ॥

अथान्ये दानवास्तत्र दह्यन्तेऽग्निविमोहिताः ।

न शक्ताश्चान्यतो गन्तुं धूमेनाकुलिताननाः ।

हंसकारण्डवाकीर्णा नलिन्यो हेमपङ्कजाः ॥ २८.४५ ॥

दह्यन्ते विविधास्तत्र वाप्यः कूपाश्च भारत ।

दृश्यन्तेऽनलदग्धानि पुरोद्यानानि दीर्घिकाः ।

अम्लानैः पङ्कजैश्छन्ना विस्तीर्णावसुयोजनाः ॥ २८.४६ ॥

गिरिकूटनिभास्तत्र प्रासादा रत्नशोभिताः ।

दृश्यन्तेऽनलसंदग्धा विशीर्णा धरणीतले ॥ २८.४७ ॥

नरस्त्रीबालवृद्धेषु दह्यमानेषु सर्वतः ।

निर्दयं ज्वलते वह्निर्हाहाकारो महानभूत् ।

काचिच्च सुखसंसुप्ताप्रमत्तान्या नृपोत्तम ॥ २८.४८ ॥

क्रीडित्वा च सुविस्तीर्णशयनस्था वराङ्गना ।

काचित्सुप्ता विशालाक्षी हारावलिविभूषिता ।

धूमेनाकुलिता दीना न्यपतद्धव्यवाहने ॥ २८.४९ ॥

काचित्तस्मिन्पुरे दीप्ते पुत्रस्नेहानुलालसा ।

पुत्रमालिङ्गते गाढं दह्यते त्रिपुरेऽग्निना ॥ २८.५० ॥

काचित्कनकवर्णाभा इन्द्रनीलविभूषिता ।

भर्तारं पतितं दृष्ट्वा पतिता तस्य चोपरि ॥ २८.५१ ॥

काचिदादित्यवर्णाभा प्रसुप्ता तु प्रियोपरि ।

अग्निज्वालाहता गाढं कंठमालिङ्गते नृप ॥ २८.५२ ॥

मेधवर्णा परा नारी चलत्कनकमेखला ।

श्वेतवस्त्रोत्तरीया तु पपात धरणीतले ॥ २८.५३ ॥

काचित्कुन्देन्दुवर्णाभा नीलरत्नविभूषिता ।

शिरसा प्राञ्जलिर्भूत्वा विज्ञापयति पावकम् ॥ २८.५४ ॥

कस्याश्चिज्ज्वलते वस्त्रं केशाः कस्याश्च भारत ।

ज्वलज्ज्वलनसङ्काशैर्हेमभाण्डैस्त्रसंहित च ॥ २८.५५ ॥

काचित्प्रभूतदुःखार्ता विललाप वराङ्गना ।

भस्मीभूतं पतिं दृष्ट्वा क्रन्दन्ती कुररी यथा ॥ २८.५६ ॥

आलिङ्ग्य गाढं सहसा पतिता तस्य मूर्धनि ।

काचिच्च बहुदुःखार्ता व्यलपत्स्त्री स्ववेश्मनि ॥ २८.५७ ॥

भस्मसाच्च कृतं दृष्ट्वा क्रन्दते कुररी यथा ।

मातरं पितरं काचिद्दृष्ट्वा विगतचेतनम् ॥ २८.५८ ॥

वेपते पतिता भूमौ खेदिता वडवा यथा ।

इतश्चेतश्च काचिच्च दह्यमाना वराङ्गना ॥ २८.५९ ॥

नापश्यद्बालमुत्सङ्गे विपरीतमुखी स्थिता ।

कुम्भिलस्य गृहं दग्धं पतितं धरणीतले ॥ २८.६० ॥

कूष्माण्डस्य च धूम्रस्य कुहकस्य बकस्य च ।

विरूपनयनस्यापि विरूपाक्षस्य चैव हि ॥ २८.६१ ॥

शुम्भो डिम्भश्च रौद्रश्च प्रह्लादश्चासुरोत्तमः ।

दण्डपाणिर्विपाणिश्च सिंहवक्त्रस्तथानघ ॥ २८.६२ ॥

दुन्दुभश्चैव संह्लादो डिण्डिर्मुण्डिस्तथैव च ।

बाणभ्राता च बाणश्च क्रव्यादव्याघ्रवक्त्रकौ ॥ २८.६३ ॥

एवमन्येऽपि ये केचिद्दानवा बलदर्पिताः ।

तेषां गृहे तथा वह्निर्ज्वलते निर्दयो नृप ।

दह्यमानाः स्त्रियस्तात विलपन्ति गृहे गृहे ॥ २८.६४ ॥

करुणाक्षरवादिन्यो निराधारा गताः शिवम् ।

यदि वैरं सुरारेश्च पुरुषोपरिपावक ॥ २८.६५ ॥

स्त्रियः किमपराध्यन्ति गृहपञ्जरकोकिलाः ।

अनिर्दयो नृशंसस्त्वं कस्ते कोपः स्त्रियं प्रति ॥ २८.६६ ॥

किं त्वया न श्रुतं लोके अवध्याः सर्वथा स्त्रियः ।

किं तु तुभ्यं गुणो ह्यस्ति दहने पवनेरितः ॥ २८.६७ ॥

न कारुण्यं त्वया किंचिद्दाक्षिण्यं च स्त्रियं प्रति ।

दयां म्लेच्छा हि कुर्वन्ति वचनं वीक्ष्य योषिताम् ॥ २८.६८ ॥

म्लेच्छानामपि च म्लेच्छो दुर्निवार्यो ह्यचेतनः ।

एवं विलपमानानां स्त्रीणां तत्रैव भारत ॥ २८.६९ ॥

ज्वालाकलापबहुलः प्रज्वलत्येव पावकः ।

एवं दृष्ट्वा ततो बाणो दह्यमान उवाच ह ॥ २८.७० ॥

अवज्ञाय विनष्टोऽहं पापात्मा हरमञ्जसा ।

मया पापेन मूर्खेण ये लोका नाशिता ध्रुवम् ॥ २८.७१ ॥

गोब्राह्मणा हता नित्यमिह लोके परत्र च ।

नाशितान्यन्नपानानि मठारामाश्रमास्तथा ॥ २८.७२ ॥

ऋषीणामाश्रमाश्चैव देवारामा गणालयाः ।

तेन पापेन मे ध्वंसस्तपसश्च बलस्य च ॥ २८.७३ ॥

किं धनेन करिष्यामि राज्येणान्तःपुरेण च ॥ २८.७४ ॥

वरं शङ्करपादौ च शरणं यामि मूढधीः ।

न माता न पिता चैव न बन्धुर्नापरो जनः ॥ २८.७५ ॥

मुक्त्वा चैव महेशानं परमार्तिहरं परम् ।

आत्मना च कृतं पापमात्मनैव तु भुज्यते ॥ २८.७६ ॥

अहं पुनः समस्तैश्च दह्यामि सह साधुभिः ।

एवमुक्त्वा शिवं लिङ्गं कृत्वा तन्मस्तकोपरि ॥ २८.७७ ॥

निर्जगाम गृहाच्छीघ्रं पावकेनावगुण्ठितः ।

स खिन्नः स्विन्नगात्रस्तु प्रस्खलंस्तु मुहुर्मुहुः ॥ २८.७८ ॥

हरं गद्गदया वाचा स्तुवन्वै शरणं ययौ ।

त्वत्कोपानलनिर्दग्धो यदि वध्योऽस्मि शङ्कर ॥ २८.७९ ॥

त्वत्प्रसादान्महादेव मा मे लिङ्गं प्रणश्यतु ।

अर्चितं मे सुरश्रेष्ठ ध्यातं भक्त्या मया विभो ॥ २८.८० ॥

प्राणादिष्टतमं देव तस्माद्रक्षितुमर्हसि ।

यदि तेऽहमनुग्राह्यो वध्यो वा सुरसत्तम ॥ २८.८१ ॥

प्रतिजन्म महादेव त्वद्भक्तिरचलास्तु मे ।

पशुकीटपतङ्गेषु तिर्यग्योनिगतेषु च ।

स्वकर्मणा महादेव त्वद्भक्तिरचलास्तु मे ॥ २८.८२ ॥

एवमुक्त्वा महाभागो बाणो भक्तिमतां वरः ।

स्तोत्रेण देवदेवेशं छन्दयामास भारत ॥ २८.८३ ॥

बाण उवाच -

शिव शङ्कर सर्वहराय नमो भवभीतभयार्तिहराय नमः ।

कुसुमायुधदेहविनाशंकर प्रमदाप्रियकामक देव नमः ॥ २८.८४ ॥

जय पार्वतीश परमार्थसार जय विरचितभीमभुजङ्गहार ।

जय निर्मलभस्मविलिप्तगात्र जय मन्त्रमूल जगदेकपात्र ॥ २८.८५ ॥

जय विषधरकपिलजटाकलाप जय भैरवविघृतपिनाकचाप ।

जय विषमनयनपरिमुक्तसङ्ग जय शङ्कर धृतगाङ्गतरङ्ग ॥ २८.८६ ॥

जय भीमरूप खट्वाङ्गहस्त शशिशेखर जय जगतां प्रशस्त ।

जय सुखरेश सुरलोकसार जय सर्वसकलनिर्दग्धसार ॥ २८.८७ ॥

जय कीर्तनीय जगतां पवित्र जय वृषाङ्क बहुविधचरित्र ।

जय विरचितनरकङ्कालमाल अघासुरदेहकङ्कालकाल ॥ २८.८८ ॥

जय नीलकंठ वरवृषभगमन जय सकललोकदुरितानुशमन ।

जय सिद्धसुरासुरविनतचरण जय रुद्र रौद्रभवजलधितरण ॥ २८.८९ ॥

जय गिरिश सुरेश्वरमाननीय जय सूक्ष्मरूप संचितनीय ।

जय दग्धत्रिपुर विश्वसत्त्व जय सकलशास्त्रपरमार्थतत्त्व ॥ २८.९० ॥

जय दुरवबोध संसारतार कलिकलुषमहार्णवघोरतार ।

जय सुरासुरदेवगणेश नमो हयवानरसिंहगजेन्द्रमुख ॥ २८.९१ ॥

अतिह्रस्वस्थूलसुदीर्घतम उपलब्धिर्न शक्यते ते ह्यमरैः ।

प्रणतोऽस्मि निरञ्जन ते चरणौ जय साम्ब सुलोचनकान्तिहर ॥ २८.९२ ॥

अप्राप्य त्वां किमत्यन्तमुच्छ्रयी न विनाशयेत् ।

अतिप्रमाथि च तदा तपो महत्सुदारुणम् ॥ २८.९३ ॥

न पुत्रबान्धवा दारा न समस्तः सुहृज्जनः ।

सङ्कटेऽभ्युपगच्छन्ति व्रजन्तमेकगामिनम् ॥ २८.९४ ॥

यदेव कर्म कैवल्यं कृतं तेन शुभाशुभम् ।

तदेव सार्थवत्तस्य भवत्यग्रे तु गच्छतः ॥ २८.९५ ॥

निर्धनस्यैव चरतो न भयं विद्यते क्वचित् ।

धनीभयैर्न मुच्येत धनं तस्मात्त्यजाम्यहम् ॥ २८.९६ ॥

लुब्धाः पापानि कुर्वन्ति शुद्धांशा नैव मानवाः ।

श्रुत्वा धर्मस्य सर्वस्वं श्रुत्वा चैवावधार्य तत् ॥ २८.९७ ॥

त्वं विष्णुस्त्वं जगन्नाथो ब्रह्मरूपः सनातनः ।

इन्द्रस्त्वं देवदेवेश सुरनाथ नमोऽस्तु ते ॥ २८.९८ ॥

त्वं क्षितिर्वरुणश्चैव पवनस्त्वं हुताशनः ।

त्वं दीक्षा यजमानश्च आकाशं सोम एव च ॥ २८.९९ ॥

त्वं सूर्यस्त्वं तु वित्तेशो यमस्त्वं गुरुरेव च ।

त्वया व्याप्तं जगत्सर्वं त्रैलोक्यं भास्वता यथा ॥ २८.१०० ॥

एतद्बाणकृतं स्तोत्रं श्रुत्वा देवो महेश्वरः ।

क्रोधं मुक्त्वा प्रसन्नात्मा तदा वचनमब्रवीत् ॥ २८.१०१ ॥

ईश्वर उवाच -

न भेतव्यं न भेतव्यमद्यप्रभृति दानव ।

सौवर्णे भवने तिष्ठ मम पार्श्वेऽथवा पुनः ॥ २८.१०२ ॥

पुत्रपौत्रप्रपौत्रैश्च बान्धवैः सह भार्यया ।

अद्यप्रभृति वत्स त्वमवध्यः सर्वशत्रुषु ॥ २८.१०३ ॥

मार्कण्डेय उवाच -

भूयस्तस्य वरो दत्तो देवदेवेन भारत ।

स्वर्गे मर्त्ये च पाताले पूजितः ससुरासुरैः ॥ २८.१०४ ॥

अक्षयश्चाव्ययश्चैव वस त्वं वै यथासुखम् ।

ततो निवारयामास रुद्रः सप्तशिखं तदा ॥ २८.१०५ ॥

तृतीयं रक्षितं तस्य पुरं देवेन शम्भुना ।

ज्वालामालाकुलं चान्यत्पतितं धरणीतले ॥ २८.१०६ ॥

अर्धेन प्रस्थितादूर्ध्वं तस्य ज्वाला दिवं गताः ।

हाहाकारो महांस्तत्र ऋषिसङ्घैरुदीरितः ॥ २८.१०७ ॥

दैवतैश्च महाभागैः सिद्धविद्याधरादिभिः ।

एकं तु पतितं तत्र श्रीशैले खण्डमुत्तरम् ॥ २८.१०८ ॥

द्वितीयं पतितं राजञ्छैले ह्यमरकण्टके ।

प्रज्वलत्पतितं तत्र तेन ज्वालेश्वरं स्मृतम् ॥ २८.१०९ ॥

दग्धे तु त्रिपुरे राजन्पतिते खण्ड उत्तमे ।

रुद्रो देवः स्थितस्तत्र ज्वालामालानिवारकः ॥ २८.११० ॥

हाहाकारपराणां तु ऋषीणां रक्षणाय च ।

स्वयं मूर्तिर्महेशानुमावृषभसंयुतः ॥ २८.१११ ॥

मनसापि स्मरेद्यस्तु भक्त्या ह्यमरकण्टकम् ।

चान्द्रायणाधिकं पुण्यं स लभेन्नात्र संशयः ॥ २८.११२ ॥

अतिपुण्यो गिरिश्रेष्ठो यस्माद्भरतसत्तम ।

अस्मान्नित्यं भवेद्राजन्सर्वपापक्षयंकरः ॥ २८.११३ ॥

नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ।

नानागुल्मलताकीर्णो नानावल्लीभिरावृतः ॥ २८.११४ ॥

सिंहव्याघ्रसमाकीर्णो मृगयूथैरलंकृतः ।

श्वापदानां च घोषेण नित्यं प्रमुदितोऽभवत् ॥ २८.११५ ॥

ब्रह्मेन्द्रविष्णुप्रमुखैर्ह्यमरैश्च सहस्रशः ।

सेव्यते देवदेवेशः शङ्करस्तत्र पर्वते ॥ २८.११६ ॥

पतनं कुरुते योऽस्मिन्पर्वतेऽमरकण्टके ।

क्रीडते क्रमशो राजन्भुवनानि चतुर्दश ॥ २८.११७ ॥

ऐन्द्रं वाह्नं च कौबेरं वायव्यं याम्यमेव च ।

नैरृत्यं वारुणं चैव सौम्यं सौरं तथैव च ॥ २८.११८ ॥
ब्राह्मं च पदमक्लिष्टं वैष्णवं तदनन्तरम् ।
उमारुद्रं महाभाग ऐश्वरं तदनन्तरम् ॥ २८.११९ ॥
परं सदाशिवं शान्तं सूक्ष्मं ज्योतिरतीन्द्रियम् ।
तस्मिन्याति लयं धीरो विधिना नात्र संशयः ॥ २८.१२० ॥

युधिष्ठिर उवाच -
कोऽप्यत्र विधिरुद्दिष्टः पतने ऋषिसत्तम ।
एतन्मे सर्वमाचक्ष्व संशयोऽस्ति महामुने ॥ २८.१२१ ॥

श्रीमार्कण्डेय उवाच -
शृणुष्व कथयिष्यामि तं विधिं पाण्डुनन्दन ।
यत्कृत्वा प्रथमं कर्म निपतेत्तदनन्तरम् ॥ २८.१२२ ॥
कृत्वा कृच्छ्रत्रयं पूर्वं जप्त्वा लक्षं दशैव तु ।
शाकयावकभुक्चैव शुचिस्त्रिषवणो नृप ॥ २८.१२३ ॥
त्रिकालमर्चयेदीशं देवदेवं त्रिलोचनम् ।
दशांशेन तु राजेन्द्र होमं तत्रैव कारयेत् ॥ २८.१२४ ॥
लक्षवारं जपेद्देवं गन्धमाल्यैश्च पूजयेत् ।
रात्रौ स्वप्ने तदा पश्येद्विमानस्थं ततः क्षिपेत् ॥ २८.१२५ ॥
अनेनैव विधानेन आत्मानं यस्तु निक्षिपेत् ।
स्वर्गलोकमनुप्राप्य क्रीडते त्रिदशैः सह ॥ २८.१२६ ॥
त्रिंशद्वर्षसहस्राणि त्रिंशत्कोट्यस्तथैव च ।
मुक्त्वा मनोरमान्भोगांस्तदा गच्छेन्महीतलम् ॥ २८.१२७ ॥
पृथिवीमेकच्छत्रेण भुनक्ति लोकपूजितः ।
व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ २८.१२८ ॥
ज्वालेश्वरं तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र ज्वाला नदी पार्थ प्रसुता शिवनिर्मिता ॥ २८.१२९ ॥
निर्वाप्य तद्बाणपुरं रेवया सह संगता ।

तत्र स्नात्वा महाराज विधिना मन्त्रसंयुतः ॥ २८.१३० ॥

तिलसंमिश्रतोयेन तर्पयेत्पितृदेवताः ।

पिण्डदानेन च पित्ःन् पैण्डरीकफलं लभेत् ॥ २८.१३१ ॥

अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।

मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ २८.१३२ ॥

अमराणां शतैश्चैव सेवितो ह्यमरेश्वरः ।

तथैव ऋषिसङ्घैश्च तेन पुण्यतमो महान् ॥ २८.१३३ ॥

समन्ताद्योजनं तीर्थं पुण्यं ह्यमरकण्टकम् ।

रुद्रकोटिसमोपेतं तेन तत्पुण्यमुत्तमम् ॥ २८.१३४ ॥

तस्य पर्वतराजस्य यः करोति प्रदक्षिणम् ।

प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ॥ २८.१३५ ॥

वाचिकं मानसं चैव कायिकं त्रिविधं च यत् ।

नश्यते पातकं सर्वमित्येवं शङ्करोऽब्रवीत् ॥ २८.१३६ ॥

अमरेश्वरपार्श्वे च तीर्थं शक्रेश्वरं नृप ।

तपस्तप्त्वा पुरा तत्र शक्रेण स्थापितं किल ॥ २८.१३७ ॥

कुशावर्तं नाम तीर्थं ब्रह्मणा च कृतं शुभम् ।

ब्रह्मकुण्डमिति ख्यातं हंसतीर्थं तथा परम् ॥ २८.१३८ ॥

अम्बरीषस्य तीर्थं च महाकालेश्वरं तथा ।

कावेर्याः पूर्वभागे च तीर्थं वै मातृकेश्वरम् ॥ २८.१३९ ॥

एतानि दक्षिणे तीरे रेवाया भरतर्षभ ।

संसेवनस्नानदानैः पापसङ्घहराणि च ॥ २८.१४० ॥

भृगुतुङ्गे महाराज प्रसिद्धो भैरवः शिवः ।

तस्य याम्यविभागे च तीर्थं वै चपलेश्वरम् ॥ २८.१४१ ॥

एतौ स्थितौ दुःखहरौ रेवाया उत्तरे तटे ।

तावभ्यर्च्य तथा नत्वा सम्यग्यात्राफलं भवेत् ।

अदृष्टपूजितौ तौ हि नराणां विघ्नकारकौ ॥ २८.१४२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे त्रिपुरविध्वंसने ज्वालेश्वरतीर्थामरेश्वतीर्थमाहात्म्यवर्णनं नामाष्टाविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०२९



अध्याय २९

युधिष्ठिर उवाच -
कावेरीति च विख्याता त्रिषु लोकेषु सत्तम ।
माहात्म्यं श्रोतुमिच्छामि तस्या मार्कण्ड तत्त्वतः ॥ २९.१ ॥
कीदृशं दर्शनं तस्याः फलं स्पर्शेऽथवा विभो ।
स्नाने जाप्येऽथवा दान उपवासे तथा मुने ॥ २९.२ ॥
कथयस्व महाभाग कावेरीसङ्गमे फलम् ।
धर्मः श्रुतोऽथ दृष्टो वा कथितो वा कृतोऽपि वा ॥ २९.३ ॥
अनुमोदितो वा विप्रेन्द्र पुनातीति श्रुतं मया ।
यथा धर्मप्रसङ्गे तु मुने धर्मोऽपि जायते ॥ २९.४ ॥
स्वर्गश्च नरकश्चैव इत्येवं वैदिकी श्रुतिः ॥ २९.५ ॥

श्रीमार्कण्डेय उवाच -
साधु साधु महाभाग यत्पृष्टोऽहं त्वयाधुना ।
शृणुष्वैकमना भूत्वा कावेरीफलमुत्तमम् ॥ २९.६ ॥
अस्ति यक्षो महासत्त्वः कुबेरोनाम विश्रुतः ।
सोऽपि तीर्थप्रभावेन राजन्यक्षाधिपोऽभवत् ॥ २९.७ ॥
तच्छृणुष्व विधानेन भक्त्या परमया नृप ।
सिद्धिं प्राप्तो महाभाग कावेरीसङ्गमेन तु ॥ २९.८ ॥
कावेर्या नर्मदायास्तु सङ्गमे लोकविश्रुते ।
तत्र स्नात्वा शुचिर्भूत्वा कुबेरः सत्यविक्रमः ॥ २९.९ ॥
विधिवन्नियमं कृत्वा शास्त्रयुक्त्या नरोत्तम ।
आराधयन्महादेवमेकचित्तः सनातनम् ॥ २९.१० ॥
एकाहारो वसन्मासं तथा षष्ठाह्नकालिकः ।
पक्षोपवासी न्यवसत्कंचित्कालं नृपोत्तम ॥ २९.११ ॥

मूलशाकफलैश्चान्यं कालं नयति बुद्धिमान् ।
किंचित्कालं वसंस्तत्र तीर्थे शैवालभोजनः ॥ २९.१२ ॥
पराकेणानयत्कालं कृच्छ्रेणापि च मानद ।
चान्द्रायणेन चाप्यन्यमन्यं वाय्वम्बुभोजनः ॥ २९.१३ ॥
एवं तत्र नरश्रेष्ठ कामरागविवर्जितः ।
स्थितो वर्षशतं साग्रं कर्षयन्स्वं तथा वपुः ॥ २९.१४ ॥
ततो वर्षशतस्यान्ते देवदेवो महेश्वरः ।
तुष्टस्तु परया भक्त्या तमुवाच हसन्निव ॥ २९.१५ ॥
भोभो यक्ष महासत्त्व वरं वरय सुव्रत ।
परितुष्टोऽस्मि ते भक्त्या तव दास्ये यथेप्सितम् ॥ २९.१६ ॥

यक्ष उवाच -
यदि तुष्टोऽसि देवेश उमया सह शङ्कर ।
अद्यप्रभृति सर्वेषां यक्षाणामधिपो भवे ॥ २९.१७ ॥
अक्षयश्चाव्ययश्चैव तव भक्तिपुरःसरः ।
धर्मे मतिं च मे नित्यं ददस्व परमेश्वर ॥ २९.१८ ॥

ईश्वर उवाच -
यत्त्वया प्रार्थितं सर्वं फलं धर्मस्य तत्तथा ।
इत्येवमुक्त्वा तं तत्र जगामादर्शनं हरः ॥ २९.१९ ॥
सोऽपि स्नात्वा विधानेन संतर्प्य पितृदेवताः ।
आमन्त्रयित्वा तत्तीर्थं कृतार्थश्च गृहं ययौ ॥ २९.२० ॥
पूजितस्तत्र यक्षैस्तु सोऽभिषिक्तो विधानतः ।
चकार विपुलं तत्र राज्यमीप्सितमुत्तमम् ॥ २९.२१ ॥
तत्र चान्ये सुराः सिद्धा यक्षगन्धर्वकिंनराः ।
गणाश्चाप्सरसां तत्र ऋषयश्च तथानघ ॥ २९.२२ ॥
कावेरीसङ्गमं तेन सर्वपापहरं विदुः ।
स्वर्गाणामपि सर्वेषां द्वारमेतद्युधिष्ठिर ॥ २९.२३ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
कावेरीसङ्गमे स्नात्वा यैर्दत्तं हि तिलोदकम् ॥ २९.२४ ॥
दश पूर्वे परे तात मातृतः पितृतस्तथा ।
पितरः पितामहास्तेन उद्धृता नरकार्णवात् ॥ २९.२५ ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नायीत मानवः ।
अर्चयेदीश्वरं देवं यदीच्छेच्छाश्वतीं गतिम् ॥ २९.२६ ॥
कावेरीसङ्गमे राजन्स्नानदानार्चनं नरैः ।
कृतं भक्त्या नरश्रेष्ठ अश्वमेधाधिकं फलम् ॥ २९.२७ ॥
होमेन चाक्षयः स्वर्गो जपादायुर्विवर्धते ।
ध्यानतो नित्यमायाति पदं शिवकलात्मकम् ॥ २९.२८ ॥
अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नरेश्वर ।
अग्निलोके वसेत्तावद्यावदाभूतसम्प्लवम् ॥ २९.२९ ॥
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
तस्य पुण्यफलं यद्वै तच्छृणुष्व नरोत्तम ॥ २९.३० ॥
गन्धर्वाप्सरःसंकीर्णे विमाने सूर्यसन्निभे ।
वीज्यमानो वरस्त्रीभिर्दैवतैः सह मोदते ॥ २९.३१ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
क्रीडते रुद्रलोकस्थस्तदन्ते भुवि चागतः ॥ २९.३२ ॥
भोगवान्दानशीलश्च जायते पृथिवीपतिः ।
आधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ २९.३३ ॥
एवं गुणगणाकीर्णा कावेरी सा सरिन्नृप ।
त्रिषु लोकेषु विख्याता नर्मदासङ्गमे सदा ॥ २९.३४ ॥
जितवाक्कायचित्ताश्च ध्येयध्यानरतास्तथा ।
कावेरीसङ्गमे तात तेऽपि मोक्षमवाप्नुयुः ॥ २९.३५ ॥
शृणु तेऽन्यत्प्रवक्ष्यामि आश्चर्यं नृपसत्तम ।
त्रिषु लोकेषु का त्वन्या दृश्यते सरिता समा ॥ २९.३६ ॥
लब्धं यैर्नर्मदातोयं ये च कुर्युः प्रदक्षिणम् ।
ये पिबन्ति जलं तत्र ते पुण्या नात्र संशयः ॥ २९.३७ ॥
न तेषां सन्ततिच्छेदो दश जन्मानि पञ्च च ।
तेषां पापं विलीयेत हिमं सूर्योदये यथा ॥ २९.३८ ॥
गङ्गायमुनसङ्गे वै यत्फलं लभते नरः ।
तत्फलं लभते मर्त्यः कावेरीस्नानमाचरन् ॥ २९.३९ ॥
भौमे तु भूतजायोगे व्यतीपाते च संक्रमे ।
राहुसोमसमायोगे तदेवाष्टगुणं स्मृतम् ॥ २९.४० ॥
अशीतिश्च यवाः प्रोक्ता गङ्गायामुनसङ्गमे ।
कावेरीनर्मदायोगे तदेवाष्टगुणं स्मृतम् ॥ २९.४१ ॥

गङ्गा षष्टिसहस्रैस्तु क्षेत्रपालैः प्रपूज्यते ।
तदर्धैरन्यतीर्थानि रक्षन्ते नात्र संशयः ॥ २९.४२ ॥
अमरेश्वरे तु सरितां ये योगाः परिकीर्तिताः ।
ते त्वशीतिसहस्रैस्तु क्षेत्रपालैस्तु रक्षिताः ॥ २९.४३ ॥
तथामरेश्वरे याम्ये लिङ्गं वै चपलेश्वरम् ।
द्वितीयं चण्डहस्ताख्यं द्वे लिङ्गे तीर्थरक्षके ॥ २९.४४ ॥
शिवेन स्थापिते पूर्वं कावेर्याद्यभिरक्षके ।
लक्षेण रक्षिता देवी नर्मदा बहुकल्पगा ॥ २९.४५ ॥
धनुषां षष्ट्यभियुतैः पुरुषैरीशयोजितैः ।
ओं कारशतसाहस्रैः पर्वतश्चाभिरक्षितः ॥ २९.४६ ॥
अन्यदेशकृतं पापमस्मिन् क्षेत्रे विनश्यति ।
अस्मिंस्तीर्थे कृतं पापं वज्रलेपो भविष्यति ॥ २९.४७ ॥
एषा ते कथिता तात कावेरी सरितां वरा ।
रुद्रदेहसमुत्पन्ना तेन पुण्या सरिद्वरा ॥ २९.४८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कावेरीसङ्गममाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३०



अध्याय ३०

श्रीमार्कण्डेय उवाच -
नर्मदोत्तरकूले तु दारुतीर्थमनुत्तमम् ।
यत्र सिद्धो महाभाग तपस्तप्त्वा द्विजोत्तमः ॥ ३०.१ ॥

युधिष्ठिर उवाच -
कोऽसौ द्विजवरश्रेष्ठः सिद्धस्तत्र महामुने ।
दारुकेति सुतः कस्य एतन्मे वक्तुमर्हसि ॥ ३०.२ ॥

श्रीमार्कण्डेय उवाच -
भार्गवे विपुले वंशे धीमतो देवशार्मणः ।
दारुर्नाम महाभागो वेदवेदाङ्गपारगः ॥ ३०.३ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो विधिक्रमात् ।
यतिधर्मविधानेन चचार विपुलतपः ॥ ३०.४ ॥
ध्यायन्वै स महादेवं निराहारो युधिष्ठिर ।
उवास तीर्थे तस्मिन् वै यावत्प्राणपरिक्षयम् ॥ ३०.५ ॥
तस्य नाम्ना तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा विधानेन अर्चयेत्पितृदेवताः ॥ ३०.६ ॥
सत्यवादी जितक्रोधः सर्वभूतहिते रतः ।
सर्वान्कामानवाप्नोति राजन्नत्रैव सवर्था ॥ ३०.७ ॥
यः कुर्यादुपवासं च सत्यशौचपरायणः ।
सौत्रामणिफलं चास्य सम्भवत्यविचारितम् ॥ ३०.८ ॥
ऋग्वेदजापी ऋग्वेदी साम वा सामपारगः ।
यजुर्वेदी यजुर्जप्त्वा लभते फलमुत्तमम् ॥ ३०.९ ॥
प्राणांस्त्यजति यो मर्त्यस्तस्मिंस्तीर्थे विधानतः ।

अनिवर्तिका गतिस्तस्य इत्येवं शङ्करोऽब्रवीत् ॥ ३०.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दारुतीर्थमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३१

https://sa.wikisource.org/s/fcm


अध्याय ३१

श्रीमार्कण्डेय उवाच -
ततो गच्छेच्च राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
ब्रह्मावर्तमिति ख्यातं सर्वपापप्रणाशनम् ॥ ३१.१ ॥
तत्र संनिहितो ब्रह्मा नित्यसेवी युधिष्ठिर ।
ऊर्ध्वबाहुर्निरालम्बचकार भ्रमणं सदा ॥ ३१.२ ॥
एकाहारवशेऽतिष्ठद्द्वादशाब्दं महाव्रती ।
अत्र तीर्थे विधानेन चिन्तयन् वै महेश्वरम् ॥ ३१.३ ॥
तेन तत्पुण्यमाख्यातं ब्रह्मावर्तमिति प्रभो ।
तत्र स्नात्वा विधानेन तर्पयेत्पितृदेवताः ॥ ३१.४ ॥
अर्चयेद्देवमीशानं विष्णुं वा परमेश्वरम् ।
यत्फलं सर्वयज्ञानां विधिवद्दक्षिणावताम् ॥ ३१.५ ॥
तत्फलं समवाप्नोति तत्तीर्थस्य प्रभावतः ।
यस्मिंस्तीर्थे तु यो देवो दानवो वा द्विजोऽथ वा ॥ ३१.६ ॥
सिद्धस्तेनैव तन्नाम्ना ख्यातं लोके महच्च तत् ।
न जलं न स्थलं नाम क्षेत्रं वा ह्यूषराणि च ॥ ३१.७ ॥
पवित्रत्वं लभन्त्येते पौरुषेण विना नृणाम् ।
सामर्थ्यान्निश्चयाद्धैर्यात्सिध्यन्ति पुरुषा नृप ॥ ३१.८ ॥
प्रमादात्तस्य लोभेन पतन्ति नरके ध्रुवम् ॥ ३१.९ ॥
संनिरुध्येन्द्रियग्रामं यत्र यत्र वसेन्मुनिः ।
तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ ३१.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे ब्रह्मावर्ततीर्थमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३२

https://sa.wikisource.org/s/fcv
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ३२

श्रीमार्कण्डेय उवाच -
पत्त्रेश्वरं ततो गच्छेत्सर्वपापप्रणाशनम् ।
यत्र सिद्धो महाभागश्चित्रसेनसुतो बली ॥ ३२.१ ॥

युधिष्ठिर उवाच -
कोऽसौ सिद्धस्तदा ब्रह्मंस्तस्मिंस्तीर्थे महातपाः ।
पुत्रः कस्य तु को हेतुरेतदिच्छामि वेदितुम् ॥ ३२.२ ॥

श्रीमार्कण्डेय उवाच -
चित्रोनाम महातेजा इन्द्रस्य दयितः पुरा ।
तस्य पुत्रो नृपश्रेष्ठ पत्त्रेश्वर इति श्रुतः ॥ ३२.३ ॥
रूपवान् सुभगश्चैव सर्वशत्रुभयंकरः ।
इन्द्रस्य दयितोऽत्यर्थं जय इत्येव चापरः ॥ ३२.४ ॥
स कदाचित्सभामध्ये सर्वदेवसमागमे ।
मेनकानृत्यगीतेन मोहितः सुचिरं किल ॥ ३२.५ ॥
तिष्ठते गतमर्यादो गतप्राण इव क्षणात् ।
तावत्सुरपतिर्देवः शशापाथाजितेन्द्रियम् ॥ ३२.६ ॥
यस्मात्त्वं स्वर्गसंस्थोऽपि मर्त्यधर्ममुपेयिवान् ।
तस्मान्मर्त्ये चिरं कालं क्षपयिष्यस्यसंशयम् ॥ ३२.७ ॥
एवमुक्तः सुरेन्द्रेण चित्रसेनसुतो युवा ।
वेपमानः सुरश्रेष्ठः कृताञ्जलिरुवाच ह ॥ ३२.८ ॥

पत्त्रेश्वर उवाच -
मया पापेन मूढेन अजितेन्द्रियचेतसा ।

प्राप्तं वै यत्फलं तस्य प्रसादं कर्तुमर्हसि ॥ ३२.९ ॥

शक्र उवाच -
नर्मदातटमाश्रित्य द्वादशाब्दं जितेन्द्रियः ।
आराधय शिवं शान्तं पुनः प्राप्स्यसि सद्गतिम् ॥ ३२.१० ॥
सत्यशौचरतानां च धर्मिष्ठानां जितात्मनाम् ।
लोकोऽयं पापिनां नैव इति शास्त्रस्य निश्चयः ॥ ३२.११ ॥
एवमुक्ते महाराज सहस्राक्षेण धीमता ।
गन्धर्वतनयो धीमान्प्रणम्यागात्तु भूतलम् ॥ ३२.१२ ॥
रेवाया विमले तोये ब्रह्मावर्तसमीपतः ।
स्नात्वा जप्त्वा विधानेन अर्चयित्वा च शङ्करम् ॥ ३२.१३ ॥
वाय्वम्बुपिण्याकफलैश्च पुष्पैः पर्णैश्च मूलाशनयावकेन ।
तताप पञ्चाग्नितपोभिरुग्रैस्ततश्च तोषं समगात्स देवः ॥ ३२.१४ ॥
पिनाकपाणिं वरदं त्रिशूलिनमुमापतिं ह्यन्धकनाशनं च ।
चन्द्रार्धमौलिं गजकृत्तिवाससं दृष्ट्वा पपाताग्रगतं समीक्ष्य ॥ ३२.१५ ॥

ईश्वर उवाच -
वरं वृणीष्व भद्रं ते वरदोऽहं तवानघ ।
यमिच्छसि ददाम्यद्य नात्र कार्या विचारणा ॥ ३२.१६ ॥

पत्त्रेश्वर उवाच -
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
अत्र त्वं सततं तीर्थे मम नाम्ना भव प्रभो ॥ ३२.१७ ॥
एतच्छ्रुत्वा महादेवो हर्षगद्गदया गिरा ।
तथेत्युक्त्वा ययौ हृष्ट उमया सह शङ्करः ॥ ३२.१८ ॥
सोऽपि तत्तीर्थमाप्लुत्य गते देवे दिवं प्रति ।
स्नात्वा जाप्यविधानेन तर्पयित्वा पित्ःन् पुनः ॥ ३२.१९ ॥
स्थापयामास देवेशं तस्मिंस्तीर्थे विधानतः ।
पत्त्रेश्वरं तु विख्यातं त्रिषु लोकेषु भारत ॥ ३२.२० ॥
इन्द्रलोकं गतः शापान्मुक्तः सोऽपि नरेश्वर ।
हृष्टः प्रमुदितो रम्यं जयशब्दादिमङ्गलैः ॥ ३२.२१ ॥
एष ते कथितः प्रश्नः पृष्टो यो वै युधिष्ठिर ।

तत्र स्नानेन चैकेन सर्वपापैः प्रमुच्यते ॥ ३२.२२ ॥
यस्त्वर्चयेन्महादेवं तस्मिंस्तीर्थे युधिष्ठिर ।
स्नात्वाभ्यर्च्य पितॄन् देवान् सोऽश्वमेधफलं लभेत् ॥ ३२.२३ ॥
मृतो वर्षशतं साग्रं क्रीडित्वा च शिवे पुरे ।
राजा वा राजतुल्यो वा पश्चान्मर्त्येषु जायते ॥ ३२.२४ ॥
वेदवेदाङ्गतत्त्वज्ञो जीवेच्च शरदः शतम् ।
व्याधिशोकविनिर्मुक्तः पुनः स्मरति तज्जलम् ॥ ३२.२५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पत्रेश्वरतीर्थमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३३

https://sa.wikisource.org/s/fct
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ३३

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र अग्नितीर्थमनुत्तमम् ।
यत्र संनिहितो ह्यग्निर्गतः कामेन मोहितः ॥ ३३.१ ॥

युधिष्ठिर उवाच -
कथं देवो जगद्धाता कामेन कलुषीकृतः ।
कथं च नित्यदा वास एकस्थानेषु जायते ॥ ३३.२ ॥
एतत्त्वाश्चर्यमतुलं सर्वलोकेष्वनुत्तमम् ।
कथयस्व महाभाग परं कौतूहलं मम ॥ ३३.३ ॥

श्रीमार्कण्डेय उवाच -
साधु साधु महाप्राज्ञ पृष्टः प्रश्नस्त्वयानघ ।
कथयामि यथापूर्वं श्रुतमेतन्महेश्वरात् ॥ ३३.४ ॥
आसीत्कृतयुगे राजा नाम्ना दुर्योधनो महान् ।
हस्त्यश्वरथसम्पूर्णो मेदिनीपरिपालकः ॥ ३३.५ ॥
रूपयौवनसम्पन्नं दृष्ट्वा तं पृथिवीपतिम् ।
दिव्योपभोगसम्पन्नं प्रार्थयामास नर्मदा ॥ ३३.६ ॥
स तु तां चकमे कन्यां त्यक्त्वाऽन्यं प्रमदाजनम् ।
मुदा परमया युक्तो माहिष्मत्याः पतिर्नृप ॥ ३३.७ ॥
रमते स तया सार्द्धं काले वै नृपसत्तम ।
नर्मदा जनयामास कन्यां पद्मदलेक्षणाम् ॥ ३३.८ ॥
अङ्गप्रत्यङ्गसम्पन्ना यस्माल्लोकेषु विश्रुता ।
तस्यां पिता च माता च चक्रतुः प्रेमबन्धनम् ॥ ३३.९ ॥
कालेनातिसुदीर्घेण यौवनस्था वराङ्गना ।

प्रार्थ्यमानापि राजन्वै नात्मानं दातुमिच्छति ॥ ३३.१० ॥
ततोऽन्यदिवसे वह्निर्द्विजरूपो महातपाः ।
राजानं प्रार्थयामास रहो गत्वा शनैः शनैः ॥ ३३.११ ॥
भोभो रघुकुलश्रेष्ठ द्विजोऽहं मन्दसन्ततिः ।
दरिद्रो ह्यसहायश्च भार्यार्थे वरयामि ताम् ॥ ३३.१२ ॥
कन्या सुदर्शना नाम रूपेणाप्रतिमा भुवि ।
तां ददस्व महाभाग वर्धते तव मन्दिरे ॥ ३३.१३ ॥
ब्रह्मचर्येण निर्विण्ण एकाकी कामपीडितः ।
याचमानस्य मे तात प्रसादं कर्तुमर्हसि ॥ ३३.१४ ॥

राजोवाच -
नाहं द्रव्यविहीनस्य असवर्णस्य कर्हिचित् ।
दास्यामि स्वां सुतां शुभ्रां गम्यतां द्विजपुंगव ॥ ३३.१५ ॥
एवमुक्तस्तदा वह्निः परां पीडामुपागतः ।
न किंचिदुक्त्वा राजानं तत्रैवान्तरधीयत ॥ ३३.१६ ॥
गते चादर्शनं विप्रे राजा मन्त्रिपुरोहितैः ।
मन्त्रयित्वाथ काले तु तुष्टो मखमुखे स्थितः ॥ ३३.१७ ॥
यजतश्च मखे भक्त्या ब्राह्मणैः सह भारत ।
ततश्चादर्शनं वह्निः सर्वेषां पश्यतामगात् ॥ ३३.१८ ॥
विप्रा दुर्मनसो भूत्वा गता राज्ञो हि मन्दिरम् ।
वह्निनाशं विमनसो राजानमिदमब्रुवन् ॥ ३३.१९ ॥
ब्राह्मणा ऊचुः ।
दुर्योधन महाराज श्रूयतां महदद्भुतम् ।
न श्रुतं न च दृष्टं वा कौतुकं नृपपुंगव ॥ ३३.२० ॥
अग्निकार्यप्रवृत्तानां सर्वेषां विधिवन्नृप ।
केनापि हेतुना वह्निर्दृश्यते न ज्वलत्युत ॥ ३३.२१ ॥
तच्छ्रुत्वा विप्रियं घोरं राजा विप्रमुखाच्च्युतम् ।
आसनात्पतितो भूमौ छिन्नमूल इव द्रुमः ॥ ३३.२२ ॥
आश्वस्य च मुहूर्तेन उन्मत्त इव संस्तदा ।
निरीक्ष्य च दिशः सर्वा इदं वचनमब्रवीत् ॥ ३३.२३ ॥
किमेतदाश्चर्यपरमिति भोभो द्विजोत्तमाः ।
कथ्यतां कारणं सर्वं शास्त्रदृष्ट्या विभाव्य च ॥ ३३.२४ ॥

मम वा दुष्कृतं किंचिदुताहो भवतामिह ।
येन नष्टोऽग्निशालायां हुतभुक्केन हेतुना ॥ ३३.२५ ॥
मन्त्रच्छिद्रमथान्यद्वा नैव किंचिददक्षिणम् ।
क्रियाहीनं कृतं वाथ केन वह्निर्न दृश्यते ॥ ३३.२६ ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
दातारं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ ३३.२७ ॥
ब्राह्मणा ऊचुः ।
न मन्त्रहीना हि वयं न च राजन्व्रतैस्तथा ।
द्रव्येण च न हीनस्त्वमन्यत्पापं विचिन्त्यताम् ॥ ३३.२८ ॥

राजोवाच -
तथापि यूयं सहिता उपायं चिन्तयन्त्विति ।
येन श्रेयो भवेन्नित्यमिह लोके परत्र च ॥ ३३.२९ ॥
एवमुक्तास्ततः सर्वे ब्राह्मणाः कृतनिश्चयाः ।
निराहाराः स्थिताः शर्वे यत्र नष्टो हुताशनः ॥ ३३.३० ॥
ततः स्वप्ने महातेजा हुतभुग्ब्राह्मणांस्तदा ।
उवाच श्रूयतां सर्वैर्मम नाशस्य कारणम् ॥ ३३.३१ ॥
प्रार्थितोऽयं मया राजा सुतां दातुं न चेच्छति ।
तेन नष्टोऽग्निशरणादहं भो द्विजसत्तमाः ॥ ३३.३२ ॥
यदि मे स्वसुतां राजा ददाति परमार्चिताम् ।
तदास्य ज्वलमानोऽहं गृहे तिष्ठामि नान्यथा ॥ ३३.३३ ॥
तच्छ्रुत्वा वचनं विप्रा वैश्वानरमुखोद्गतम् ।
विस्मयोत्फुल्लनयना राजानमिदमब्रुवन् ॥ ३३.३४ ॥
भवतो मतमाज्ञाय सर्वे गत्वाग्निमन्दिरम् ।
निराहाराः स्थिता रात्रौ पश्यामो जातवेदसम् ॥ ३३.३५ ॥
तेनोक्ताः स्वसुतां चेत्तु राजा मे दातुमिच्छति ।
ततोऽस्य भूयोऽपि गृहे ज्वलेऽहं नान्यथा द्विजाः ॥ ३३.३६ ॥
एवं ज्ञात्वा महाराज स्वसुतां दातुमर्हसि ॥ ३३.३७ ॥

राजोवाच -
भवतां तस्य वा कार्यं देवस्य वचनं हृदि ।
समयं कर्तुमिच्छामि कन्यादाने ह्यनुत्तमम् ॥ ३३.३८ ॥

मम संनिहितो नित्यं गृहे तिष्ठतु पावकः ।
दादामि रुचिरापाङ्गीं नान्यथा करवाणि वै ॥ ३३.३९ ॥
एवं ते ब्राह्मणाः श्रुत्वा तथाग्निं प्राप्य सत्वरम् ।
कथयित्वा विवाहेन योजयामासुराशु वै ॥ ३३.४० ॥
सुदर्शनाया लाभेन परितुष्टो हुताशनः ।
ज्वलते सन्निधौ नित्यं माहिष्मत्यां युधिष्ठिर ॥ ३३.४१ ॥
ततः प्रभृति तत्तीर्थमग्नितीर्थं प्रचक्षते ।
ये तत्र पक्षसन्धौ तु स्नानदानैस्तु भाविताः ॥ ३३.४२ ॥
तर्पयन्ति पितॄन् देवांस्तेऽश्वमेधफलैर्युताः ।
सुवर्णं ये प्रयच्छन्ति तस्मिंस्तीर्थे नराधिप ॥ ३३.४३ ॥
पृथ्वीदानफलं तत्र जायते नात्र संशयः ।
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ३३.४४ ॥
स मृतो ह्यग्निलोके तु क्रीडते सुरपूजितः ।
एष ते ह्यग्नितीर्थस्य सम्भवः कथितो मया ॥ ३३.४५ ॥
सर्वपापहरः पुण्यः श्रुतमात्रो नरोत्तम ।
धन्यः पापहरो नित्यमित्येवं शङ्करोऽब्रवीत् ॥ ३३.४६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डेऽग्नितीर्थमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३४



अध्याय ३४

श्रीमार्कण्डेय उवाच -
तत्रैव तु भवेदन्यदादित्यस्य महात्मनः ।
कीर्तयामि नरश्रेष्ठ यदि ते श्रवणे मतिः ॥ ३४.१ ॥

युधिष्ठिर उवाच -
एतदाश्चर्यमतुलं श्रुत्वा तव मुखोद्गतम् ।
विस्मयाद्धृष्टरोमाहं जातोऽस्मि मुनिसत्तम ॥ ३४.२ ॥
सहस्रकिरणो देवो हर्ता कर्ता निरञ्जनः ।
अवतारेण लोकानामुद्धर्ता नर्मदातटे ॥ ३४.३ ॥
पुरुषाकारो भगवानुताहो तपसः फलात् ।
कस्य गोत्रे समुत्पन्नः कस्य देवोऽभवद्वशी ॥ ३४.४ ॥

श्रीमार्कण्डेय उवाच -
कुलिकान्वयसम्भूतो ब्राह्मणो भक्तिमाञ्छुचिः ।
ईक्ष्यामीति रविं तत्र तीर्थे यात्राकृतोद्यमः ॥ ३४.५ ॥
योजनानां शतं साग्रं निराहारो गतोदकः ।
प्रस्थितो देवदेवेन स्वप्नान्ते वारितः किल ॥ ३४.६ ॥
भोभो मुने महासत्त्व अलं ते व्रतमीदृशम् ।
सर्वं व्याप्य स्थितं पश्य स्थावरं जङ्गमं च माम् ॥ ३४.७ ॥
तपाम्यहं ततो वर्षं निगृह्णाम्युत्सृजामि च ।
न मृ(भृ?)तं चैव मृत्युं च यः पश्यति स पश्यति ॥ ३४.८ ॥
वरं वरय भद्रं त्वमात्मनो यस्तवेप्सितम् ॥ ३४.९ ॥

ब्राह्मण उवाच -

यदि तुष्टोऽसि मे देव देयो यदि वरो मम ।
उत्तरे नर्मदाकूले सदा संनिहितो भव ॥ ३४.१० ॥
ये भक्त्या परया देव योजनानां शते स्थिताः ।
स्मरिष्यन्ति जितात्मानस्तेषां त्वं वरदो भव ॥ ३४.११ ॥
कुब्जान्धबधिरा मूका ये केचिद्विकलेन्द्रियाः ।
तव पादौ नमस्यन्ति तेषां त्वं वरदो भव ॥ ३४.१२ ॥
शीर्णघ्राणा गतधियो ह्यस्थिचर्मावशेषिताः ।
तेषां त्वं करुणां देव अचिरेण कुरुष्व ह ॥ ३४.१३ ॥
येऽपि त्वां नर्मदातोये स्नात्वा तत्र दिने दिने ।
अर्चयन्ति जगन्नाथ तेषां त्वं वरदो भव ॥ ३४.१४ ॥
प्रभाते ये स्तविष्यन्ति स्तवैर्वैदिकलौकिकैः ।
अभिप्रेतं वरं देव तेषां त्वं दद भोच्युत ॥ ३४.१५ ॥
तवाग्रे वपनं देव कारयन्ति नरा भुवि ।
स्वामिंस्तेषां वरो देय एष मे परमो वरः ॥ ३४.१६ ॥
एवमस्त्विवति तं चोक्त्वा मुनिं करुणया पुनः ।
शतभागेन राजेन्द्र स्थित्वा चादर्शनं गतः ॥ ३४.१७ ॥
तत्र तीर्थे नरो भक्त्या गत्वा स्नानं समाचरेत् ।
तर्पयेत्पितृदेवांश्च सोऽग्निष्टोमफलं लभेत् ॥ ३४.१८ ॥
अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
द्योतयन्वै दिशः सर्वा अग्निलोकं स गच्छति ॥ ३४.१९ ॥
यस्तत्तीर्थं समासाद्य त्यजतीह कलेवरम् ।
स गतो वारुणं लोकमित्येवं शङ्करोऽब्रवीत् ॥ ३४.२० ॥
तत्र तीर्थे तु यः कश्चित्संन्यासेन तनुं त्यजेत् ।
षष्टिवर्षसहस्राणि स्वर्गलोके महीयते ॥ ३४.२१ ॥
अप्सरोगणसंकीर्णे दिव्यशब्दानुनादिते ।
उषित्वायाति मर्त्ये वै वेदवेदाङ्गविद्भवेत् ॥ ३४.२२ ॥
व्याधिशोकविनिर्मुक्तो धनकोटिपतिर्भवेत् ।
पुत्रदारसमोपेतो जीवेच्च शरदः शतम् ॥ ३४.२३ ॥
प्रातरुत्थाय यस्तत्र स्मरते भास्करं तदा ।
आजन्मजनितात्पापान्मुच्यते नात्र संशयः ॥ ३४.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रवितीर्थवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३५



अध्याय ३५

युधिष्ठिर उवाच -
जलमध्ये महादेवः केन तिष्ठति हेतुना ।
उत्तरं दक्षिणं कूलं वर्जयित्वा द्विजोत्तम ॥ ३५.१ ॥

श्रीमार्कण्डेय उवाच -
एतदाख्यानमतुलं पुण्यं श्रुतिमुखावहम् ।
पुराणे यच्छ्रुतं तात तत्ते वक्ष्याम्यशेषतः ॥ ३५.२ ॥
त्रेतायुगे महाभाग रावणो देवकण्टकः ।
त्रैलोक्यविजयी रौद्रः सुरासुरभयंकरः ॥ ३५.३ ॥
देवदानवगन्धर्वैरृषिभिश्च तपोधनैः ।
अवध्योऽथ विमानेन यावत्पर्यटते महीम् ॥ ३५.४ ॥
तावद्विन्ध्यगिरेर्मध्ये दानवो बलदर्पितः ।
मयो नामेति विख्यातो गुहावासी तपश्चरन् ॥ ३५.५ ॥
तस्य पार्श्वगतो रक्षो विनयादवनिं गतः ।
पूजितो दानसन्मानैरिदं वचनमब्रवीत् ॥ ३५.६ ॥
कस्येयं पद्मपत्राक्षी पूर्णचन्द्रनिभानना ।
किंनामधेया तपति तप उग्रं कथं विभो ॥ ३५.७ ॥

मय उवाच -
दानवानां पतिः श्रेष्ठो मयोऽहं नाम नामतः ।
भार्या तेजोवती नाम तस्यास्तु तनया शुभा ॥ ३५.८ ॥
मन्दोदरीति विख्याता तपते भर्तृकारणात् ।
आराधयन्ती भर्तारमुमाया दयितं शुभम् ॥ ३५.९ ॥
तच्छ्रुत्वा वचनं तस्य रावणो मदमोहितः ।

प्रसृतः प्रणतो भूत्वा मयं वचनमब्रवीत् ॥ ३५.१० ॥
पौलस्त्यान्वयसंजातो देवदानवदर्पहा ।
प्रार्थयामि महाभाग सुतां त्वं दातुमर्हसि ॥ ३५.११ ॥
ज्ञात्वा पैतामहं वृत्तं मयेनापि महात्मना ।
रावणाय सुता दत्ता पूजयित्वा विधानतः ॥ ३५.१२ ॥
गृहीत्वा तां तदा रक्षोऽभ्यर्च्यमानो निशाचरैः ।
देवोद्याने विमानैश्च क्रीडते स तया सह ॥ ३५.१३ ॥
केनचित्त्वथ कालेन रावणो लोकरावणः ।
पुत्रं पुत्रवतां श्रेष्ठो जनयामास भारत ॥ ३५.१४ ॥
तेनैव जातमात्रेण रावो मुक्तो महात्मना ।
संवर्तकस्य मेघस्य तेन लोका जडीकृताः ॥ ३५.१५ ॥
श्रुत्वा तन्नर्दितं घोरं ब्रह्मा लोकपितामहः ।
नाम चक्रे तदा तस्य मेघनादो भविष्यति ॥ ३५.१६ ॥
एवंनामा कृतः सोऽपि परमं व्रतमास्थितः ।
तोषयामास देवेशमुमया सह शङ्करम् ॥ ३५.१७ ॥
व्रतैर्नियमदानैश्च होमजाप्यविधानतः ।
कृच्छ्रचान्द्रायणैर्नित्यं कृशं कुर्वन्कलेवरम् ॥ ३५.१८ ॥
एवमन्यद्दिने तात कैलासं धरणीधरम् ।
गत्वा लिङ्गद्वयं गृह्य प्रस्थितो दक्षिणामुखः ॥ ३५.१९ ॥
नर्मदातटमाश्रित्य स्नातुकामो महाबलः ।
निक्षिप्य पूजयन् देवं कृतजाप्यो नरेश्वर ॥ ३५.२० ॥
तत्रायतनावासेन स्नातो हुतहुताशनः ।
कृतकृत्यमिवात्मानं मानयित्वा निशाचरः ॥ ३५.२१ ॥
गन्तुकामः परं मार्गं लङ्कायां नृपसत्तम ।
एकमुद्धरतो लिङ्गं प्रणतः सव्यपाणिना ॥ ३५.२२ ॥
द्वितीयं तु द्वितीयेन भक्त्या पौलस्त्यनन्दनः ।
तावदेव महालिङ्गं पतितं नर्मदांभसि ॥ ३५.२३ ॥
याहि याहीति चेत्युक्त्वा जलमध्ये प्रतिष्ठितः ।
नमित्वा रावणिस्तस्य देवस्य परमेष्ठिनः ॥ ३५.२४ ॥
जगामाकाशमाविश्य पूज्यमानो निशाचरैः ।
तदा प्रभृति तत्तीर्थं मेघनादेति विश्रुतम् ॥ ३५.२५ ॥
पूर्वं तु गर्जनं नाम सर्वपापक्षयंकरम् ।

तस्मिंस्तीर्थे तु राजेन्द्र यस्तु स्नानं समाचरेत् ॥ ३५.२६ ॥
अहोरात्रोषितो भूत्वा अश्वमेधफलं लभेत् ।
पिण्डदानं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ३५.२७ ॥
यत्फलं सत्त्रयज्ञेन तद्भवेन्नात्र संशयः ।
तेन द्वादशवर्षाणि पितरः संप्रतर्पिताः ॥ ३५.२८ ॥
यस्तु भोजयते विप्रं षड्रसान्नेन भारत ।
अक्षयपुण्यमाप्नोति तत्र तीर्थे नरोत्तम ॥ ३५.२९ ॥
प्राणत्यागं तु यः कुर्याद्भावितो भावितात्मना ।
स वसेच्छाङ्करे लोके यावदा भूतसम्प्लवम् ॥ ३५.३० ॥
एषा ते नरशार्दूल गर्जनोत्पत्तिरुत्तमा ।
कथिता स्नेहबन्धेन सर्वपापक्षयकरी ॥ ३५.३१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मेघनादतीर्थमाहात्म्यवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३६



मार्कण्डेय उवाच -
ततो गच्छेच्च राजेन्द्र दारुतीर्थमनुत्तमम् ।
दारुको यत्र संसिद्ध इन्द्रस्य दयितः पुरा ॥ ३६.१ ॥

युधिष्ठिर उवाच -
दारुकेण कथं तात तपश्चीर्णं पुरानघ ।
विधानं श्रोतुमिच्छामि त्वत्सकाशाद्द्विजोत्तम ॥ ३६.२ ॥

श्रीमार्कण्डेय उवाच -
हन्त ते कथयिष्यामि विचित्रं यत्पुरातनम् ।
वृत्तं स्वर्गसभामध्ये ऋषीणां भावितात्मनाम् ॥ ३६.३ ॥
सूतो वज्रधरस्येष्टो मातलिर्नाम नामतः ।
स पुत्रं शप्तवान्पूर्वं कस्मिंश्चित्कारणान्तरे ॥ ३६.४ ॥
शापाहतो वेपमान इन्द्रस्य चरणौ शुभौ ।
प्रपीड्य मूर्ध्ना देवेशं विज्ञापयति भारत ॥ ३६.५ ॥
तमुवाचाभिशप्तं चाप्यनाथं च सुरेश्वरः ।
कर्मणा केन शापस्य घोरस्यान्तो भविष्यति ॥ ३६.६ ॥
नर्मदातटमाश्रित्य तोषयन्वै महेश्वरम् ।
तिष्ठ यावद्युगस्यान्तं पुनर्जन्म ह्यवाप्स्यसि ॥ ३६.७ ॥
पुनर्भूत्वा तु पूतस्त्वं दारुको नाम विश्रुतः ।
संसेव्य परमं देवं शङ्खचक्रगदाधरम् ॥ ३६.८ ॥
मानुषं भावमापन्नस्ततः सिद्धिमवाप्स्यसि ।
एवमुक्तस्तु देवेन सहस्राक्षेण धीमता ॥ ३६.९ ॥
प्रणम्य शिरसा भूमिमागतोऽसौ ह्यचेतनः ।
नर्मदातटमाश्रित्य कर्षयन्निजविग्रहम् ॥ ३६.१० ॥
व्रतोपवाससंखिन्नो जपहोमरतः सदा ।
महादेवं महात्मानं वरदं शूलपाणिनम् ॥ ३६.११ ॥
भक्त्या तु परया राजन्यावदाभूतसम्प्लवम् ।
अंशावतरणाद्विष्णोः सूतो भूत्वा महामतिः ॥ ३६.१२ ॥
तोषयन् वै जगन्नाथं ततो यातो हि सद्गतिम् ॥ ३६.१३ ॥
एष तत्सम्भवस्तात दारुतीर्थस्य सुव्रत ।
कथितोऽयं मया पूर्वं यथा मे शङ्करोऽब्रवीत् ॥ ३६.१४ ॥
ततो युधिष्ठिरः श्रुत्वा विस्मयं परमं गतः ।
भ्रात्ःन् विलोकयामास हृष्टरोमा मुहुर्मुहुः ॥ ३६.१५ ॥
श्रीमार्कण्डेय उवाच -
तस्मिंस्तीर्थे नरः स्नात्वा विधिपूर्वं नरेश्वर ।
उपास्य संध्यां देवेशमर्चयेद्यश्च शङ्करम् ॥ ३६.१६ ॥
वेदाभ्यासं तु तत्रैव यः करोति समाहितः ।
सोऽश्वमेधफलं राजंल्लभते नात्र संशयः ॥ ३६.१७ ॥
तस्मिंस्तीर्थे तु यो भक्त्या भोजयेद्ब्राह्मणाञ्छुचिः ।
स तु विप्रसहस्रस्य लभते फलमुत्तमम् ॥ ३६.१८ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।
यत्कृतं शुद्धभावेन तत्सर्वं सफलं भवेत् ॥ ३६.१९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दारुकतीर्थमाहात्म्यवर्णनं नाम षट्त्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३७

https://sa.wikisource.org/s/fcq
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ३७

श्रीमार्कण्डेय उवाच -
ततो गच्छेत राजेन्द्र देवतीर्थमनुत्तमम् ।
येन देवास्त्रयस्त्रिंशत्स्नात्वा सिद्धिं परां गताः ॥ ३७.१ ॥

युधिष्ठिर उवाच -
कथं तात सुराः सर्वे दानवैर्बलवत्तरैः ।
निर्जितास्तत्र तीर्थे च स्नात्वा सिद्धिं परां गताः ॥ ३७.२ ॥

मार्कण्डेय उवाच -
पुरा दैत्यगणैरुग्रैर्युद्धेऽतिबलवत्तरैः ।
इन्द्रो देवगणैः सार्द्धं स्वराज्याच्च्यावितो नृप ॥ ३७.३ ॥
हस्त्यश्वरथयानौघैर्मर्दयित्वा वरूथिनीम् ।
विध्वस्ता भेजिरे मार्गं प्रहारैर्जर्जरीकृताः ॥ ३७.४ ॥
जम्भशुम्भैश्च कूष्माण्डकुहकादिभिः ।
वेपमानार्दिताः सर्वे ब्रह्माणमुपतस्थिरे ॥ ३७.५ ॥
प्रणम्य शिरसा देवं ब्रह्माणं परमेष्ठिनम् ।
तदा विज्ञापयामासुर्देवा वह्निपुरोगमाः ॥ ३७.६ ॥
पश्य पश्य महाभाग दानवैः शकलीकृताः ।
वियोजिताः पुत्रदारैस्त्वामेव शरणं गताः ॥ ३७.७ ॥
परित्रायस्व देवेश सर्वलोकपितामह ।
नान्या गतिः सुरेशान त्वां मुक्त्वा परमेश्वर ॥ ३७.८ ॥

ब्रह्मोवाच -
दानवानां विघातार्थं नर्मदातटमास्थिताः ।

तपः कुरुध्वं स्वस्थाः स्थ तपो हि परमं बलम् ॥ ३७.९ ॥
नान्योपायो न वै मन्त्रो विद्यते न च मे क्रिया ।
विना रेवाजलं पुण्यं सर्वपापक्षयंकरम् ॥ ३७.१० ॥
दारिद्र्यव्याधिमरणबन्धनव्यसनानि च ।
एतानि चैव पापस्य फलानीति मतिर्मम ॥ ३७.११ ॥
एवं ज्ञात्वा ततश्चैव तपः कुरुत दुष्करम् ।
तथा चैव सुराः सर्वे देवा ह्यग्निपुरोगमाः ॥ ३७.१२ ॥
तच्छ्रुत्वा वचनं तथ्यं ब्रह्मणः परमेष्ठिनः ।
नर्मदामागताः सर्वे देवा ह्यग्निपुरोगमाः ॥ ३७.१३ ॥
चेरुर्वै तत्र विपुलं तपः सिद्धिमवाप्नुवन् ।
तदाप्रभृति तत्तीर्थं देवतीर्थमनुत्तमम् ॥ ३७.१४ ॥
गीयते त्रिषु लोकेषु सर्वपापक्षयंकरम् ।
तत्र गत्वा च यो मर्त्यो विधिना संयतेन्द्रियः ॥ ३७.१५ ॥
स्नानं समाचरेद्भक्त्या स लभेन्मौक्तिकं फलम् ।
यस्तु भोजयते विप्रांस्तस्मिंस्तीर्थे नराधिप ॥ ३७.१६ ॥
स लभेन्मुख्यविप्राणां फलं साहस्रिकं नृप ।
तत्र देवशिला रम्या महापुण्यविवर्धिनी ॥ ३७.१७ ॥
संन्यासेन मृता ये तु तेषां स्यादक्षया गतिः ।
अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ३७.१८ ॥
रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम् ।
एवं स्नानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ ३७.१९ ॥
सुकृतं दुष्कृतं वाऽपि तत्र तीर्थेऽक्षयं भवेत् ।
एष ते विधिरुद्दिष्ट उत्पत्तिश्चैव भारत ॥ ३७.२० ॥
देवतीर्थस्य निखिला यथा वै शङ्कराच्छ्रुता ।
पठन्ति ये पापहरं सर्वदुःखविमोचनम् ॥ ३७.२१ ॥
देवतीर्थस्य चरितं देवलोकं व्रजन्ति ते ॥ ३७.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३८

https://sa.wikisource.org/s/fck
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ३८

श्रीमार्कण्डेय उवाच -
ततो गच्छेत राजेन्द्र गुहावासीति चोत्तमम् ।
यत्र सिद्धो महादेवो गुहावासी समार्बुदम् ॥ ३८.१ ॥

युधिष्ठिर उवाच -
केन कार्येण भो तात महादेवो जगद्गुरुः ।
गुहायामनयत्कालं सुदीर्घं द्विजसत्तम ॥ ३८.२ ॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ ।
श्रोतुमिच्छाम्यहं सर्वपरं कौतूहलं हि मे ॥ ३८.३ ॥

मार्कण्डेय उवाच -
साधु प्रश्नो महाराज पृष्टो यो वै त्वयोत्तमः ।
पुराणे विस्तरो ह्यस्य न शक्यो हि मयाधुना ॥ ३८.४ ॥
कथितुं वृद्धभावत्वादतीतो बहुकालिकः ।
संक्षेपात्तेन ते तात कथयामि निबोध मे ॥ ३८.५ ॥
पुरा कृतयुगे राजन्नासीद्दारुवनं महत् ।
नानाद्रुमलताकीर्णं नानावल्ल्युपशोभितम् ॥ ३८.६ ॥
सिंहव्याघ्रवराहैश्च गजैः खड्गैर्निषेवितम् ।
बहुपक्षियुतं दिव्यं यथा चैत्ररथं वनम् ॥ ३८.७ ॥
तत्र केचिन्महाप्राज्ञा वसन्ति संशितव्रताः ।
वसन्ति परया भक्त्या चतुराश्रमभाविताः ॥ ३८.८ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
स्वधर्मनिरताः सर्वे वाञ्छन्तः परमं पदम् ॥ ३८.९ ॥
तावद्वसन्तसमये कस्मिंश्चित्कारणान्तरे ।

विमानस्थो महादेवो गच्छन्वै ह्युमया सह ॥ ३८.१० ॥
ददर्श तोय आवासमृक्सामयजुर्नादितम् ।
अलक्ष्यागतनिर्गम्यं सर्वपापक्षयंकरम् ॥ ३८.११ ॥
तं दृष्ट्वा मुदिता देवी हर्षगङ्गदया गिरा ।
पप्रच्छ देवदेवेशं शशाङ्ककृतभूषणम् ॥ ३८.१२ ॥

देव्युवाच -
कस्यायमाश्रमो देव वेदध्वनिनिनादितः ।
यं दृष्ट्वा क्षुत्पिपासाद्यैः श्रमैश्च परिहीयते ॥ ३८.१३ ॥

महेश्वर उवाच -
किं त्वया न श्रुतं देवि महादारुवनं महत् ।
बहुविप्रजनो यत्र गृहधर्मेण वर्तते ॥ ३८.१४ ॥
अत्र यः स्त्रीजनः कश्चिद्भर्तृशुश्रूषणे रतः ।
नान्यो देवो न वै धर्मो ज्ञायते शैलनन्दिनि ॥ ३८.१५ ॥
एतच्छ्रुत्वा परं वाक्यं देवदेवेन भाषितम् ।
कौतूहलसमाविष्टा शङ्करं पुनरब्रवीत् ॥ ३८.१६ ॥
यत्त्वयोक्तं महादेव पतिधर्मरताः स्त्रियः ।
तासां त्वं मदनो भूत्वा चारित्रं क्षोभय प्रभो ॥ ३८.१७ ॥

ईश्वर उवाच -
यत्त्वयोक्तं च वचनं न हि मे रोचते प्रिये ।
ब्राह्मणा हि महद्भूतं न चैषां विप्रियं चरेत् ॥ ३८.१८ ॥
मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः ।
चक्रात्क्रूरतरो मन्युस्तस्माद्विप्रं न कोपयेत् ॥ ३८.१९ ॥
न ते देवा न ते लोका न ते नगा न चासुराः ।
दृश्यन्ते त्रिषु लोकेषु ये तैर्दृष्टैर्न नाशिताः ॥ ३८.२० ॥
तेषां मोक्षस्तथा स्वर्गो भूमिर्मर्त्ये फलानि च ।
येषां तुष्टा महाभागा ब्राह्मणाः क्षितिदेवताः ॥ ३८.२१ ॥
एवं ज्ञात्वा महाभागे असद्ग्राहं परित्यज ।
तत्र लोके विरुद्धं वै कुप्यन्ते येन वै द्विजाः ॥ ३८.२२ ॥

देव्युवाच -
नाहं ते दयिता देव नाहं ते वशवर्तिनी ।
अकृत्वाधश्च वै तासां मानं सुरसुपूजितम् ॥ ३८.२३ ॥
लोकलोके महादेव अशक्यं नास्ति ते प्रभो ।
क्रियतां मम चैवैकमेतत्कार्यं सुरोत्तम ॥ ३८.२४ ॥
एवमुक्तो महादेवो देव्या वाक्यहिते रतः ।
कृत्वा कापालिकं रूपं ययौ दारुवनं प्रति ॥ ३८.२५ ॥
महाहितजटाजूटं नियम्य शशिभूषणम् ।
कण्ठत्राणं परं कृत्वा धारयन् कर्णकुण्डले ॥ ३८.२६ ॥
व्याघ्रचर्मपरीधानो मेखलाहारभूषितः ।
नूपुरध्वनिनिर्घोषैः कम्पयन् वै वसुंधराम् ॥ ३८.२७ ॥
महानूर्द्ध्वजटामाली कृत्तिभस्मानुलेपनः ।
कृत्वा हस्ते कपालं तु ब्रह्मणश्च महात्मनः ॥ ३८.२८ ॥
महाडमरुघोषेण कम्पयन् वै वसुंधराम् ।
प्रभातसमये प्राप्तो महादारुवनं प्रति ॥ ३८.२९ ॥
तावत्पुण्यजनः सर्वपुष्पपत्रफलार्थिकः ।
निर्गतो बहुभिः सार्द्धं पवमानः समन्ततः ॥ ३८.३० ॥
तद्दृष्ट्वा महदाश्चर्यं रूपं देवस्य भारत ।
युवतीनां मनस्तासां कामेन कलुषीकृतम् ॥ ३८.३१ ॥
शोभनं पुरुषं दृष्ट्वा सर्वा अपि वराङ्गनाः ।
क्लेदभावं ततो जग्मुर्मुदा दारुवनस्त्रियः ॥ ३८.३२ ॥
विकारा बहवस्तासां देवं दृष्ट्वा महाद्भुतम् ।
संजाता विप्रपत्नीनां तदा तासु नरोत्तम ॥ ३८.३३ ॥
परिधानं न जानन्ति काश्चिद्दृष्ट्वा वराङ्गनाः ।
उत्तरीयं तथा चान्या महामोहसमन्विताः ॥ ३८.३४ ॥
केशभारपरिभ्रष्टा काचिदेवासनोत्थिता ।
दातुकामा तदा भैक्ष्यं चेष्टितुं नैव चाशकत् ॥ ३८.३५ ॥
काचिद्दृष्ट्वा महादेवं रूपयौवनगर्विता ।
उत्सङ्गे संस्थितं बालं विस्मृता पायितुं स्तनम् ॥ ३८.३६ ॥
कामबाणहता चान्या बाहुभ्यां पीड्य सुस्तनौ ।
निःश्वसन्ती तदा चोष्णं न किंचित्प्रतिजल्पति ॥ ३८.३७ ॥
एवं संक्षोभ्य तं सर्वं स्त्रीजनं परमेश्वरः ।

जगाम तत्र वै तासां क्षोभं कृत्वा महाद्भुतम् ॥ ३८.३८ ॥
तावत्ते ब्राह्मणाः सर्वे भ्रमित्वा काननं महत् ।
आगताः स्वगृहे दारान् ददृशुश्च हतौजसः ॥ ३८.३९ ॥
यासां पूर्वतरा भक्तिः पातिव्रत्ये पतीन्प्रति ।
चलितास्ता विदित्वाशु निर्जग्मुर्द्विजसत्तमाः ॥ ३८.४० ॥
संविदं परमां कृत्वा ज्ञात्वा देवं महेश्वरम् ।
क्षोभयित्वा मनस्तासां ततश्चादर्शनं गतम् ॥ ३८.४१ ॥
क्रोधाविष्टो द्विजः कश्चिद्दण्डमुद्यम्य धावति ।
कल्माषयष्टिमन्ये च तथान्ये दर्भमुष्टिकाम् ॥ ३८.४२ ॥
इतश्चेतश्च ते सर्वे भ्रमित्वा काननं नृप ।
एकीभूत्वा महात्मानो व्याजह्रुश्च रुषा गिरम् ॥ ३८.४३ ॥
यदिदं च हुतं किंचिद्गुरवस्तोषिता यदि ।
तेन सत्येन देवस्य लिङ्गं पततु चोत्तमम् ॥ ३८.४४ ॥
आश्रमादाश्रमं सर्वे न त्यजामो विधिक्रमात् ।
तेन सत्येन देवस्य लिङ्गं पततु भूतले ॥ ३८.४५ ॥
एवं सत्यप्रभावेन त्रिरुक्तेन द्विजन्मनाम् ।
शिवस्य पश्यतो लिङ्गं पतितं धरणीतले ॥ ३८.४६ ॥
हाहाकारो महानासील्लोकालोकेऽपि भारत ।
देवस्य पतिते लिङ्गे जगतश्च महाक्षये ॥ ३८.४७ ॥
पतमानस्य लिङ्गस्य शब्दोऽभूच्च सुदारुणः ।
उल्कापाता दिशां हाहा भूमिकम्पाश्च दारुणाः ॥ ३८.४८ ॥
पतन्ति पर्वताग्राणि शोषं यान्ति च सागराः ।
देवस्य पतिते लिङ्गे देवा विमनसोऽभवन् ॥ ३८.४९ ॥
समेत्य सहिताः सर्वे ब्रह्माणं परमेष्ठिनम् ।
कृताञ्जलिपुटाः सर्वे स्तुवन्ति विविधैः स्तवैः ॥ ३८.५० ॥
ततस्तुष्टो जगन्नाथश्चतुर्वदनपङ्कजः ।
आर्तान्प्राह सुरान्सर्वान्मा विषादं गमिष्यथ ॥ ३८.५१ ॥
ब्रह्मशापाभिभूतोऽसौ देवदेवस्त्रिलोचनः ।
तुष्टैस्तैस्तपसा युक्तैः पुनर्मोक्षं गमिष्यति ॥ ३८.५२ ॥
एतच्छ्रुत्वा ययुर्देवा यथागतमरिन्दम ।
भावयित्वा ततः सर्वे मुनयश्चैव भारत ॥ ३८.५३ ॥
विश्वामित्रवसिष्ठाद्या जाबालिरथ कश्यपः ।

समेत्य सहिताः सर्वे तमूचुस्त्रिपुरान्तकम् ॥ ३८.५४ ॥
ब्रह्मतेजो हि बलवद्द्विजानां हि सुरेश्वर ।
क्षान्तियुक्तस्तपस्तस्त्वा भविष्यसि गतक्लमः ॥ ३८.५५ ॥
यतः क्षोभादृषीणां च तदेवं लिङ्गमुत्तमम् ।
पतितं ते महादेव न तत्पूज्यं भविष्यति ॥ ३८.५६ ॥
न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते ।
प्राप्नुवन्ति च यच्छ्रेयो मानवा लिङ्गपूजने ॥ ३८.५७ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
वचनेन तु विप्राणामेतत्पूज्यं भविष्यति ॥ ३८.५८ ॥
ब्रह्मविष्ण्विन्द्रचन्द्राणामेतत्पूज्यं भविष्यति ।
यत्फलं तव लिङ्गस्य इह लोके परत्र च ॥ ३८.५९ ॥
एवमुक्तो जगन्नाथः प्रणिपत्य द्विजोत्तमान् ।
मुदा परमया युक्तः कृताञ्जलिरभाषत ॥ ३८.६० ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम् ।
येषां वाक्योदकेनैव शुध्यन्ति मलिनो जनाः ॥ ३८.६१ ॥
न तत्क्षेत्रं न तत्तीर्थमूषरं पुष्कराणि च ।
ब्राह्मणे मन्युमुत्पाद्य यत्र गत्वा स शुध्यति ॥ ३८.६२ ॥
न तच्छास्त्रं यन्न विप्रप्रणीतं न तद्दानं यन्न विप्रप्रदेयम् ।
न तत्सौख्यं यन्नविप्रप्रसादान्न तद्दुःखं यन्न विप्रप्रकोपात् ॥ ३८.६३ ॥
पृथिव्यां यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
एकस्य विप्रवाक्यस्य कलां नार्हन्ति षोडशीम् ॥ ३८.६४ ॥
अभिनन्ध द्विजान्सर्वाननुज्ञातो महर्षिभिः ।
ततोऽगमत्तदा देवो नर्मदातटमुत्तमम् ॥ ३८.६५ ॥
परमं व्रतमास्थाय गुहावासी समार्बुदम् ।
तपश्चचार भगवाञ्जपस्नानरतः सदा ॥ ३८.६६ ॥
समाप्ते नियमे तात स्थापयित्वा महेश्वरम् ।
वन्द्यमानः सुरैः सार्द्धं कैलासमगमत्प्रभुः ॥ ३८.६७ ॥
नर्मदायास्तटे तेन स्थापितः परमेश्वरः ।
तेनैव कारणेनासौ नर्मदेश्वर उच्यते ॥ ३८.६८ ॥
योऽर्चयेन्नर्मदेशानं यतिर्वै संजितेन्द्रियः ।
स्नात्वा चैव महादेवमश्वमेधफलं लभेत् ॥ ३८.६९ ॥
ददाति यः पितृभ्यस्तु तिलपुष्पकुशोदकम् ।

त्रिःसप्तपूर्वजास्तस्य स्वर्गे मोदन्ति पाण्डव ॥ ३८.७० ॥
यस्तु भोजयते विप्रांस्तस्मिंस्तीर्थे नराधिप ।
पायसं घृतमिश्रं तु स लभेत्कोटिजं फलम् ॥ ३८.७१ ॥
सुवर्णं रजतं वापि ब्राह्मणेभ्यो युधिष्ठिर ।
ददाति तोयमध्यस्थः सोऽग्निष्टोमफलं लभेत् ॥ ३८.७२ ॥
अष्टम्यांवा चतुर्दश्यां निराहारो वसेत्तु यः ।
नर्मदेश्वरमासाद्य प्राप्नुयाज्जन्मनः फलम् ॥ ३८.७३ ॥
अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
तस्य व्याधिभयं न स्यात्सप्तजन्मसु भारत ॥ ३८.७४ ॥
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
अनिवर्तिका गतिस्तस्य रुद्रलोके भविष्यति ॥ ३८.७५ ॥
एष ते विधिरुद्दिष्टस्तस्योत्पत्तिर्नरोत्तम ।
पुराणे विहिता तात संज्ञा तस्य तु विस्तरात् ॥ ३८.७६ ॥
एतं कीर्तयते यस्तु नर्मदेश्वरसम्भवम् ।
भक्त्या शृणोति च नरः सोऽपि स्नानफलं लभेत् ॥ ३८.७७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टत्रिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०३९





अध्याय ३९

श्रीमार्कण्डेय उवाच -

ततो गच्छेच्च राजेन्द्र कपिलातीर्थमुत्तमम् ।

स्नानमात्रान्नरो भक्त्या मुच्यते सर्वकिल्बिषैः ॥ ३९.१ ॥

युधिष्ठिर उवाच -

आश्चर्यभूतं लोकेषु कथितं द्विजसत्तम ।

नर्मदेश्वरमाहात्म्यं कापिलं कथयस्व मे ॥ ३९.२ ॥

यस्मिन् कालेऽथ सम्बन्धे उत्पन्नं तीर्थमुत्तमम् ।

सर्वपापहरं पुण्यं तीर्थं जातं कथं प्रभो ॥ ३९.३ ॥

मार्कण्डेय उवाच -

शृणु वक्ष्येऽद्य ते राजन्कपिलातीर्थमुत्तमम् ।

येन ते विस्मयः सर्वः श्रुत्वा गच्छति भारत ॥ ३९.४ ॥

पुरा कृतयुगस्यादौ ब्रह्मा लोकपितामहः ।

उत्पादयित्वा सकलं भूतग्रामं चतुर्विधम् ॥ ३९.५ ॥

जपहोमपरो भक्त्या क्षणं ध्यात्वा च तिष्ठति ।

ज्वलमानात्तु कपिला तावत्कुण्डात्समुत्थिता ॥ ३९.६ ॥

अग्निज्वालोज्ज्वलैः शृङ्गैस्त्रिनेत्रा सुपयस्विनी ।

अग्निपूर्णा ह्यग्निमुखा अग्निघ्राणाग्निलोचना ॥ ३९.७ ॥

अग्निखुरा ह्यग्निपृष्ठा अग्निसर्वाङ्गसंस्थितिः ।

सर्वलक्षणसम्पूर्णा घण्टाललितनिःस्वना ॥ ३९.८ ॥

दृष्ट्वा तु तां महाभागां कपिलां कुण्डमध्यगाम् ।

ब्रह्मा लोकगुरुस्तात प्रणम्येदमुवाच ह ॥ ३९.९ ॥
नमस्ते कपिले पुण्ये सर्वलोकनमस्कृते ।
मङ्गल्ये मङ्गले देवि त्रिषु लोकेष्वनुपमे ॥ ३९.१० ॥
त्वं लक्ष्मीस्त्वं स्मृतिर्मेधा त्वं धृतिस्त्वं वरानने ।
उमादेवीति विख्याता त्वं सती नात्र संशयः ॥ ३९.११ ॥
वैष्णवी त्वं महादेवी ब्रह्माणी त्वं वरानने ।
कुमारी त्वं महाभागे भक्तिः श्रद्धा तथैव च ॥ ३९.१२ ॥
कालरात्रिस्तु भूतानां कुमारी परमेश्वरी ।
त्वं लवस्त्वं त्रुटिश्चैव मुहूर्तं लक्षमेव च ॥ ३९.१३ ॥
संवत्सरस्त्वं मासस्त्वं कालस्त्वं च क्षणस्तथा ।
नास्ति किंचित्त्वया हीनं त्रैलोक्ये सचराचरे ॥ ३९.१४ ॥
एवं स्तुता तु मानेन कपिला परमेष्ठिना ।
तमुवाच महाभागं प्रहृष्य पद्मसम्भवम् ॥ ३९.१५ ॥
प्रसन्ना तव वाक्येन देवदेव जगद्गुरो ।
किं करोमि प्रियं तेऽद्य ब्रूहि सर्वं पितामह ॥ ३९.१६ ॥

ब्रह्मोवाच -
जगद्धिताय जनिता मया त्वं परमेश्वरि ।
स्वर्गान्मर्त्यं ततो याहि लोकानां हितकाम्यया ॥ ३९.१७ ॥
सर्वदेवमयी त्वं तु सर्वलोकमयी तथा ।
विधिना ये प्रदास्यन्ति तेषां वासस्त्रिविष्टपे ॥ ३९.१८ ॥
एवमुक्त्वा ततो देवी ब्रह्माणं परमेश्वरी ।
वन्द्यमाना सुरैः सिद्धैराजगाम धरातलम् ॥ ३९.१९ ॥

युधिष्ठिर उवाच -
यदायातेह सा तात ब्राह्मणो वचनाच्छुभा ।
तदा देवाश्च लोकाश्च कथमङ्गेषु संस्थिताः ॥ ३९.२० ॥
कथं वा संस्थितागत्य कपिला सा द्विजोत्तम ।

तीर्थे वा ह्यूषरे क्षेत्र एतन्मे कथय द्विज ॥ ३९.२१ ॥

मार्कण्डेय उवाच -

सा तदा ब्रह्मणा चोक्ता धात्रा लोकस्य भारत ।

ब्रह्मलोकाद्गता पुण्यां नर्मदां लोकपावनीम् ॥ ३९.२२ ॥

तपः कृत्वा सुविपुलं नर्मदातटमाश्रिता ।

चचार पृथिवीं सर्वां सशैलवनकाननाम् ॥ ३९.२३ ॥

तदाप्रभृति राजेन्द्र कपिलातीर्थमुत्तमम् ।

सर्वपापहरं ख्यातमृषिसङ्घैर्निषेवितम् ॥ ३९.२४ ॥

तत्तीर्थे विधिवत्स्नात्वा कपिलायाः प्रयच्छति ।

पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ ३९.२५ ॥

तां तु पश्यति यो भक्त्या दीयमानां द्विजोत्तमे ।

तस्य वर्षशतं पापं नश्यते नात्र संशयः ॥ ३९.२६ ॥

भूर्भुवः स्वर्महश्चैव जनः सत्यं तपस्तथा ।

ते तत्पृष्ठं समाश्रित्य स्थिता लोका नृपोत्तम ॥ ३९.२७ ॥

मुखे ह्यग्निः स्थितो देवो दन्तेषु च भुजङ्गमाः ।
धाता विधाता ह्योष्ठौ च जिह्वायां तु सरस्वती ॥ ३९.२८ ॥
सहस्रकिरणौ देवौ चन्द्रादित्यौ सुलोचनौ ।
नासिकामध्यगश्चैव मारुतो नृपसत्तम ॥ ३९.२९ ॥
ललाटे तु महादेवो ह्यश्विनौ कर्णसंस्थितौ ।
नरनारायणौ शृङ्गे शृङ्गमध्ये पितामहः ॥ ३९.३० ॥
कम्बलोऽधिगतस्तात पाशधृग्वरुणस्तथा ।
यमश्च भगवान्देव आश्रित्य चोदरं श्रितः ॥ ३९.३१ ॥
खुरेषु पन्नगाश्चैवं पुच्छाग्रे सूर्यरश्मयः ।
एवम्भूतां हि कपिलां सर्वदेवमयीं नृप ॥ ३९.३२ ॥
ये धारयन्ति च गृहे धन्यास्ते नात्र संशयः ।
प्रातरुत्थाय यस्तस्याः कुरुते तु प्रदक्षिणाम् ॥ ३९.३३ ॥
प्रदक्षिणा कृता तेन सशैलवनकानना ।
कपिलापञ्चगव्येन यः स्नापयति शङ्करम् ॥ ३९.३४ ॥
उपवासपरो यस्तु तस्मिंस्तीर्थे नराधिप ।
स्नात्वा ह्युक्तविधानेन तर्पयेत्पितृदेवताः ॥ ३९.३५ ॥
तस्य ते वंशजाः सर्वे दश पूर्वे दशापरे ।
तृप्ता रोहन्ति वै स्वर्गे ध्यायन्तोऽस्य मनोरथान् ॥ ३९.३६ ॥
एष ते विधिरुद्दिष्टः सम्भवो नृपसत्तम ।
तीर्थस्य च फलं पुण्यं किमन्यत्परिपृच्छसि ॥ ३९.३७ ॥
धन्यं यशस्यमायुष्यं सर्वदुःखघ्नमुत्तमम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ३९.३८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये कपिलातीर्थमाहात्म्यवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४०

https://sa.wikisource.org/s/fd7
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४०

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र करञ्जेश्वरमुत्तमम् ।
यत्र सिद्धो महाभागो दैत्यो लोकेषु विश्रुतः ॥ ४०.१ ॥

युधिष्ठिर उवाच -
योऽसौ सिद्धो महाभाग तत्र तीर्थे महातपाः ।
कस्य पुत्रः कथं सिद्धः कस्मिन्काले वद द्विज ॥ ४०.२ ॥

मार्कण्डेय उवाच -
पुरा कृतयुगे राजन्मानसो ब्रह्मणः सुतः ।
वेदवेदाङ्गतत्त्वज्ञो मरीचिर्नाम नामतः ॥ ४०.३ ॥
तस्यापि तपसो राशेः कालेन महतानघ ।
पुत्रोऽथ मानसो जातः साक्षाद्ब्रह्मेव चापरः ॥ ४०.४ ॥
क्षमा दमो दया दानं सत्यं शौचमथार्जवम् ।
मरीचेश्च गुणा ह्येते सन्ति तस्य च भारत ॥ ४०.५ ॥
एवं गुणगणाकीर्णं कश्यपं द्विजसत्तमम् ।
ज्ञात्वा प्रजापतिर्दक्षो भार्यार्थे स्वसुतां ददौ ॥ ४०.६ ॥
अदितिर्दितिर्दनुश्चैव तथाप्येवं दशापराः ।
यासां पुत्राश्च संजाताः पौत्राश्च भरतर्षभ ॥ ४०.७ ॥
अदितिर्जनयामास पुत्रानिन्द्रपुरोगमान् ।
जातास्तस्य महाबाहो कश्यपस्य प्रजापतेः ॥ ४०.८ ॥
यैस्तु लोकत्रयं व्याप्तं स्थावरं जङ्गमं महत् ।
तथान्यस्य महाभागो दनोः पुत्रो व्यजायत ॥ ४०.९ ॥
सर्वलक्षणसम्पन्नः करञ्जो नाम नामतः ।

बाल एव महाभाग चचार स महत्तपः ॥ ४०.१० ॥
नर्मदातटमाश्रित्य चातिघोरमनुत्तमम् ।
दिव्यं वर्षसहस्रं च कृच्छ्रचान्द्रायणं नृप ॥ ४०.११ ॥
शाकमूलफलाहारः स्नानहोमपरायणः ।
ततस्तुष्टो महादेव उमया सहितः किल ॥ ४०.१२ ॥
वरेण छन्दयामास त्रिपुरान्तकरः प्रभुः ।
भोः करञ्ज महासत्त्व परितुष्टोऽस्मि तेऽनघ ॥ ४०.१३ ॥
वरं वृणीष्व ते दद्मि ह्यमरत्वमृते मम ॥ ४०.१४ ॥

करञ्ज उवाच -
यदि तुष्टो महादेव यदि देयो वरो मम ।
तर्हि पुत्राश्च पौत्राश्च सन्तु मे धर्मवत्सलाः ॥ ४०.१५ ॥
तथेत्युक्त्वा महादेव उमया सहितस्तदा ।
वृषारूढो गणैः सार्द्धं तत्रैवान्तरधीयत ॥ ४०.१६ ॥
गते चादर्शनं देवे सोऽपि दैत्यो मुदान्वितः ।
स्वनाम्नात्र महादेवं स्थापयित्वा ययौ गृहम् ॥ ४०.१७ ॥
तदाप्रभृति तत्तीर्थं सर्वतीर्थेष्वनुत्तमम् ।
स्नानमात्रानरस्तत्र मुच्यते सर्वपातकैः ॥ ४०.१८ ॥
तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
सोऽग्निष्टोमस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ ४०.१९ ॥
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
अनिवर्त्या गतिस्तस्य रुद्रलोकं स गच्छति ॥ ४०.२० ॥
अथवाग्निजले प्राणान्यस्त्यजेद्धर्मनन्दन ।
अयुतद्वितयं वस्ते वर्षाणां शिवमन्दिरे ॥ ४०.२१ ॥
ततश्चैव क्षये जाते जायते विमले कुले ।
वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ ४०.२२ ॥
राजा वा राजतुल्यो वा जीवेच्च शरदः शतम् ।
पुत्रपौत्रसमोपेतः सर्वव्याधिविवर्जितः ॥ ४०.२३ ॥
एवं ते सर्वमाख्यातं पृष्टं यद्यत्त्वयानघ ।
तीर्थस्य तु फलं तस्य स्नानदानेषु भारत ॥ ४०.२४ ॥
एतत्पुण्यं पापहरं धन्यं दुःस्वप्ननाशनम् ।
पठतां शृण्वतां चैव तीर्थमाहात्म्यमुत्तमम् ॥ ४०.२५ ॥

यस्तु श्रावयते श्राद्धे पठेत्पितृपरायणः ।
अक्षयं जायते पुण्यमित्येवं शङ्करोऽब्रवीत् ॥ ४०.२६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये करञ्जेश्वरतीर्थमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४१

https://sa.wikisource.org/s/fcj
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४१

श्रीमार्कण्डेय उवाच -
ततो गच्छेच्च राजेन्द्र कुण्डलेश्वरमुत्तमम् ।
यत्र सिद्धो महायक्षः कुण्डधारो नृपोत्तम ॥ ४१.१ ॥
तपः कृत्वा सुविपुलं सुरासुरभयंकरम् ।
पौलस्त्यमन्दिरे चैव चिक्रीड नृपसत्तम ॥ ४१.२ ॥

युधिष्ठिर उवाच -
कस्मिन्युगे समुत्पन्नः कस्य पुत्रो महामतिः ।
तपस्तस्वा सुविपुलं तोषितो येन शङ्करः ॥ ४१.३ ॥
एतद्विस्तरतस्तात कथयस्व ममानघ ।
शृण्वतश्च न तृप्तिर्मे कथामृतमनुत्तमम् ॥ ४१.४ ॥

श्रीमार्कण्डेय उवाच -
त्रेतायुगे ब्रह्मसमः पौलस्त्योनाम विश्रवाः ।
तपः कृत्वा सुविपुलं भरद्वाजसुतोद्भवः ॥ ४१.५ ॥
पुत्रं पौत्रगणैर्युक्तं पत्न्या भक्त्या सुतोषितः ।
धनदं जनयामास सर्वलक्षणलक्षितम् ॥ ४१.६ ॥
जातमात्रं तु तं ज्ञात्वा ब्रह्मा लोकपितामहः ।
चकार नाम सुप्रीत ऋषिदेवसमन्वितः ॥ ४१.७ ॥
यस्माद्विश्रवसो जातो मम पौत्रत्वमागतः ।
तस्माद्वैश्रवणो नाम तव दत्तं मयानघ ॥ ४१.८ ॥
तथा त्वं सर्वदेवानां धनगोप्ता भविष्यसि ।
चतुर्थो लोकपालानामक्षयश्चाव्ययो भुवि ॥ ४१.९ ॥
तस्य भार्या महाराज ईश्वरीति च विश्रुता ।

यक्षो यक्षाधिपः श्रेष्ठस्तस्य कुण्डोऽभवत्सुतः ॥ ४१.१० ॥
स च रूपं परं प्राप्य मातापित्रोरनुज्ञया ।
तपश्चचार विपुलं नर्मदातटमाश्रितः ॥ ४१.११ ॥
ग्रीष्मे पञ्चाग्निसंतप्तो वर्षासु स्थण्डिलेशयः ।
हेमन्ते जलमध्यस्थो वायुभक्षः शतं समाः ॥ ४१.१२ ॥
एवं वर्षशते पूर्णे एकाङ्गुष्ठेऽभवन्नृप ।
अस्थिभूतः परं तात ऊर्ध्वबाहुस्ततः परम् ॥ ४१.१३ ॥
अतपच्च घृतश्वासः कुण्डलो भरतर्षभ ।
चतुर्थे वर्षशतके तुतोष वृषवाहनः ॥ ४१.१४ ॥
वरं वृणीष्व भो वत्स यत्ते मनसि रोचते ।
ददामि ते न सन्देहस्तपसा तोषितो ह्यहम् ॥ ४१.१५ ॥

कुण्डल उवाच -
यक्षाधिपप्रसादेन तस्यैवानुचरः पुरे ।
विचरामि यथाकाममवध्यः सर्वशत्रुषु ॥ ४१.१६ ॥
तथेत्युक्त्वा महादेवः सर्वलोकनमस्कृतः ।
जगामाकाशमाविश्य कैलासं धरणीधरम् ॥ ४१.१७ ॥
गते चादर्शनं देवे सोऽपि यक्षो मुदान्वितः ।
स्थापयामास देवेशं कुण्डलेश्वरमुत्तमम् ॥ ४१.१८ ॥
अलंकृत्वा जगन्नाथं पुष्पधूपानुलेपनैः ।
विमानैश्चामरैश्छत्रैस्तथा वै लिङ्गपूरणैः ॥ ४१.१९ ॥
तर्पयित्वा द्विजान्सम्यगन्नपानादिभूषणैः ।
प्रीणयित्वा महादेवं ततः स्वभवनं ययौ ॥ ४१.२० ॥
तदाप्रभृति तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
उत्तमं परमं पुण्यं कुण्डलेश्वरनामतः ॥ ४१.२१ ॥
तत्र तीर्थे तु यः कश्चिदुपवासपरायणः ।
अर्चयेद्देवमीशानं सर्वपापैः प्रमुच्यते ॥ ४१.२२ ॥
सुवर्णं रजतं वापि मणिं मौक्तिकमेव च ।
दद्याद्भोज्यं ब्राह्मणेभ्यः स सुखी मोदते दिवि ॥ ४१.२३ ॥
तत्र तीर्थे तु यः स्नात्वा ऋग्यजुःसामगोऽपि वा ।
ऋचमेकां जपित्वा तु सकलं फलमश्नुते ॥ ४१.२४ ॥
गां प्रयच्छति विप्रेभ्यस्तत्फलं शृणु पाण्डव ।

यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ॥ ४१.२५ ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
स्वर्गे वासो भवेत्तस्य पुत्रपौत्रैः समन्वितः ॥ ४१.२६ ॥
तावन्ति वर्षाणि महानुभावः स्वर्गे वसेत्पुत्रपौत्रैश्च सार्द्धम् ।
तत्रान्नदो याति महेशलोकमसंख्यवर्षाणि न संशयोऽत्र ॥ ४१.२७ ॥
स वै सुखी मोदते स्वर्गलोके गन्धर्वसिद्धाप्सरःसम्प्रगीते ।
एवं तु ते धर्मसुत प्रभावस्तीर्थस्य सर्वः कथितश्च पार्थ ॥ ४१.२८ ॥
श्रुत्वा स्तुवन्मुच्यते सर्वपापैः पुनस्त्रिलोकीमिह तत्प्रभावात् ॥ ४१.२९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कुण्डलेश्वरतीर्थमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४२

https://sa.wikisource.org/s/fd5
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४२

श्रीमार्कण्डेय उवाच -
ततो गच्छेतु राजेन्द्र पिप्पलेश्वरमुत्तमम् ।
यत्र सिद्धो महायोगी पिप्पलादो महातपाः ॥ ४२.१ ॥

युधिष्ठिर उवाच -
पिप्पलादस्य चरितं श्रोतुमिच्छाम्यहं विभो ।
माहात्म्यं तस्य तीर्थस्य यत्र सिद्धो महातपाः ॥ ४२.२ ॥
कस्य पुत्रो महाभाग किमर्थं कृतवांस्तपः ।
एतद्विस्तरतः सर्वं कथयस्व ममानघ ॥ ४२.३ ॥

मार्कण्डेय उवाच -
मिथिलास्थो महाभागो वेदवेदाङ्गपारगः ।
याज्ञवल्क्यः पुरा तात चचार विपुलं तपः ॥ ४२.४ ॥
तापसी तस्य भगिनी याज्ञवल्क्यस्य धीमतः ।
सा सप्तमेऽपि वर्षे च वैधव्यं प्राप दैवतः ॥ ४२.५ ॥
पूर्वकर्मविपाकेन हीनाभूत्पितृमातृतः ।
नाभूत्तत्पतिपक्षेऽपि कोऽपीत्येकाकिनी स्थिता ॥ ४२.६ ॥
भूमौ भ्रमन्ती भ्रातुः सा समीपमगमच्छनैः ।
चचार च तपः सोऽपि परलोकसुखेप्सया ॥ ४२.७ ॥
चचार सापि तत्रस्था शुश्रूषन्ती महत्तपः ।
कस्मिंश्चित्समये साथ स्नाताहनि रजस्वला ॥ ४२.८ ॥
अन्तर्वासो धृतवती दृष्ट्वा कर्पटकं रहः ।
याज्ञवल्क्योऽपि तद्रात्रौ सुप्तो यत्र सुसंवृतः ॥ ४२.९ ॥
स्वप्नं दृष्ट्वात्यजच्छुक्रं कौपीने रक्तबिन्दुवत् ।

विराजितेन तपसा सिद्धं तदनलप्रभम् ॥ ४२.१० ॥
यावत्प्रबुद्धो विप्रोऽसौ वीक्ष्योच्छिष्टं तदंशुकम् ।
चिक्षेप दूरतोऽस्पृश्यं शौचं कृत्वा विधानतः ॥ ४२.११ ॥
निषिद्धं तु निशि स्नानमिति सुष्वाप स द्विजः ।
निशीथे सापि तद्वस्त्रं भगस्यावरणं व्यधात् ॥ ४२.१२ ॥
प्रातरन्वेषयामास मुनिर्वस्त्रमितस्ततः ।
ततः सा ब्राह्मणी प्राह किं अन्वेषयसे प्रभो ।
केन कार्यं तव तथा वदस्व मम तत्त्वतः ॥ ४२.१३ ॥

याज्ञवल्क्य उवाच -
अपवित्रो मया भद्रे स्वप्नो दृष्टोऽद्य वै निशि ।
सक्लेदं तत्र मे वस्त्रं निक्षिप्तं तन्न दृश्यते ॥ ४२.१४ ॥
तच्छ्रुत्वा ब्राह्मणी वाक्यं भीतभीतावदन्नृप ।
तद्वस्त्रं तु मया विप्र स्नात्वा ह्यन्तः कृतं महत् ॥ ४२.१५ ॥
तस्यास्तद्वचनं श्रुत्वा हाहेत्युक्त्वा महामुनिः ।
निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ ४२.१६ ॥
किमेतदिति सेत्युक्त्वा ह्याकाशमिव निर्मला ।
आश्वासयन्ती तं विप्रं प्रोवाच वचनं तदा ॥ ४२.१७ ॥
वदस्व कारणं तात गुह्याद्गुह्यतरं यदि ।
प्रतीकारोऽस्य येनैव विमृश्य क्रियते त्वरा ॥ ४२.१८ ॥
ततः स सुचिरं ध्यात्वा लब्धवाग्वै ततः क्षणम् ।
प्रोवाच साध्वसमना यत्तच्छृणु नरेश्वर ॥ ४२.१९ ॥
नात्र दोषोऽस्ति ते कश्चिन्मम चैव शुभव्रते ।
तवोदरे तु गर्भो यस्तत्र दैवं परायणम् ॥ ४२.२० ॥
तस्य तत्त्वेन रक्षा च त्वया कार्या सदैव हि ।
विनाशी नैव कर्तव्यो यावत्कालस्य पर्ययः ॥ ४२.२१ ॥
तथेति व्रीडिता साध्वी दूयमानेन चेतसा ।
अपालयच्च तं गर्भं यावत्पुत्रो ह्यजायत ॥ ४२.२२ ॥
जातमात्रं च तं गर्भं गृहीत्वा ब्राह्मणी च सा ।
अश्वत्थच्छायामाश्रित्य तमुत्सृज्य वचोऽब्रवीत् ॥ ४२.२३ ॥
यानि सत्त्वानि लोकेषु स्थावराणि चराणि च ।
तानि सर्वाणि रक्षन्तु त्यक्तं वै बालकं मया ॥ ४२.२४ ॥

एवमुक्त्वा गता सा तु ब्राह्मणी नृपसत्तम ।
तथागतः स तु शिशुस्तत्र स्थित्वा मुहूर्तकम् ॥ ४२.२५ ॥
पाणिपादौ विनिक्षिप्य निकुञ्च्य नयने शुभे ।
आस्यं तु विकृतं कृत्वा रुरोद विकृतैः स्वरैः ॥ ४२.२६ ॥
तेन शब्देन वित्रस्ताः स्थावरा जङ्गमाश्च ये ।
आकम्पिता महोत्पातैः सशैलवनकानना ॥ ४२.२७ ॥
ततो ज्ञात्वा महद्भूतं क्षुधाविष्टं द्विजर्षभम् ।
न जहाति नगश्छायां पानार्थाय ततः परम् ।
अपिबच्च सुतं तस्मादमृतं चैव भारत ॥ ४२.२८ ॥
एवं स वर्धितस्तत्र कुमारो निजचेतसि ।
चिन्तयामास विश्रब्धः किं मम ग्रहगोचरम् ॥ ४२.२९ ॥
ततः क्रूरसभाचारः क्रूरं दृष्ट्वा निरीक्षितः ।
पपात सहसा भूमौ शनैश्चारी शनैश्चरः ॥ ४२.३० ॥
उवाच च भयत्रस्तः कृताञ्जलिपुटस्तदा ।
किं मयापकृतं विप्र पिप्पलाद महामुने ॥ ४२.३१ ॥
चरन्वै गगनाद्येन पातितो धरणीतले ।
सौरिणा ह्येवमुक्तस्तु पिप्पलादो महामुनिः ॥ ४२.३२ ॥
क्रोधरूपोऽब्रवीद्वाक्यं तच्छृणुष्व नराधिप ।
पितृमातृविहीनस्य मम बालस्य दुर्मते ।
पीडां करोषि कस्मात्त्वं सौरे ब्रूहि ह्यशेषतः ॥ ४२.३३ ॥

शनैश्चर उवाच -
क्रूरस्वभावः सहजो मम दृष्टिस्तथेदृशी ।
मुञ्चस्व मां तथा कर्ता यद्ब्रवीषि न संशयः ॥ ४२.३४ ॥

पिप्पलाद उवाच -
अद्यप्रभृति बालानां वर्षादा षोडशाद्ग्रह ।
पीडा त्वया न कर्तव्या एष ते समयः कृतः ॥ ४२.३५ ॥
एवमस्त्विवति चोक्त्वा स जगाम पुनरागतः ।
देवमार्गं शनैश्चारी प्रणम्य ऋषिसत्तमम् ॥ ४२.३६ ॥
गते चादर्शनं तत्र सोऽपि बालो महाग्रहः ।
विचिन्तयन्वै पितरं क्रोधेन कलुषीकृतः ॥ ४२.३७ ॥

आग्नेयीं धारणां ध्यात्वा जनयामास पावकम् ।
कृत्यामन्त्रैर्जुहावाग्नौ कृत्या वै संभवत्विति ॥ ४२.३८ ॥
तावज्झटिति सा कन्या ज्वालामालाविभूषिता ।
हुतभुक्सदृशाकारा किं करोमीति चाब्रवीत् ॥ ४२.३९ ॥
शोषयामि समुद्रान् किं चूर्णयामि च पर्वतान् ।
अवनिं वेष्टयामीति पातये किं नभस्तलम् ॥ ४२.४० ॥
कस्य मूर्ध्नि पतिष्यामि घातयामि च कं द्विज ।
शीघ्रमादिश्यतां कार्यं मा मे कालात्ययो भवेत् ॥ ४२.४१ ॥
तस्यास्तद्वचनं श्रुत्वा पिप्पलादो महातपाः ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ४२.४२ ॥
महता क्रोधवेगेन मया त्वं चिन्तिता शुभे ।
पिता मे याज्ञवल्क्यश्च तस्य त्वं पत माचिरम् ॥ ४२.४३ ॥
एवमुक्त्वागमच्छीघ्रं स्फोटयन्ती नभस्तलम् ।
मिथिलास्थो महाप्राज्ञस्तपस्तेपे महामनाः ॥ ४२.४४ ॥
यावत्पश्यति दिग्भागं ज्वलनार्कसमप्रभम् ।
याज्ञवल्क्यो महातेजा महद्भूतमुपस्थितम् ॥ ४२.४५ ॥
तद्दृष्ट्वा सहसायान्तं भीतभीतो महामुनिः ।
अनुयुक्तोऽथ भूतेन जनकं नृपतिं ययौ ॥ ४२.४६ ॥
शरण्यं मामनुप्राप्तं विद्धि त्वं नृपसत्तम ।
महद्भूतभयाद्रक्ष यदि शक्नोषि पार्थिव ॥ ४२.४७ ॥
ब्रह्मतेजोभवं भूतमनिवार्यं दुरासदम् ।
न च शक्नोम्यहं त्रातुं राजा वचनमब्रवीत् ॥ ४२.४८ ॥
ततश्चान्यं नृपश्रेष्ठं शरणार्थी महातपाः ।
जगाम तेन मुक्तोऽसौ चेन्द्रस्य सदनं भयात् ॥ ४२.४९ ॥
देवराज नमस्तेऽस्तु महाभूतभयान्नृप ।
कम्पमानोऽब्रवीद्विप्रो रक्षस्वेति पुनःपुनः ॥ ४२.५० ॥
तस्य तद्वचनं श्रुत्वा देवराजोऽब्रवीदिदम् ।
न शक्नोमि परित्रातुं ब्रह्मकोपादहं मुने ॥ ४२.५१ ॥
ततः स ब्रह्मभवनं ब्राह्मणो ब्रह्मवित्तमः ।
जगाम विष्णुलोकं च तेनापीत्युक्त एव सः ॥ ४२.५२ ॥
ततः स मुनिरुद्विग्नो निराशो जीविते नृप ।
अनुगम्यमानो भूतेन अगच्छच्छङ्करालयम् ॥ ४२.५३ ॥

तस्य योगबलोपेतो महादेवस्य पाण्डव ।
नखमांसान्तरे गुप्तो यथा देवो न पश्यति ॥ ४२.५४ ॥
तदन्ते चागमद्भूतं ज्वलनार्कसमप्रभम् ।
मुञ्च मुञ्चेति पुरुषं देवदेवं महेश्वरम् ॥ ४२.५५ ॥
एवमुक्तो महादेवस्तेन भूतेन भारत ।
योगीन्द्रं दर्शयामास नखमांसान्तरे तदा ॥ ४२.५६ ॥
संस्थाप्य भूतं भूतेशः परमापद्गतं मुनिम् ।
उवाच मा भैस्त्वं विप्र निर्गच्छस्व महामुने ॥ ४२.५७ ॥
ततः सुसूक्ष्मदेहस्थं भूतं दृष्ट्वाब्रवीदिदम् ।
किमस्य त्वं महाभूत करिष्यसि वदस्व मे ॥ ४२.५८ ॥

कृत्योवाच -
क्रोधाविष्टेन देवेश पिप्पलादेन चिन्तिता ।
अस्य देहं हनिष्यामि हिंसार्थं विद्धि मां प्रभो ॥ ४२.५९ ॥
एतच्छ्रुत्वा महादेवो भूतस्य वदनाच्च्युतम् ।
कटिस्थं याज्ञवल्क्यं च मन्त्रयामास मन्त्रवित् ॥ ४२.६० ॥
योगीश्वरेति विप्रस्य कृत्वा नाम युधिष्ठिर ।
विसर्जयित्वा देवेशस्तत्रैवान्तरधीयत ॥ ४२.६१ ॥
प्रेषयित्वा तु तं भूतं पिप्पलादोऽपि दुर्मनाः ।
पितृमातृसमुद्विग्नो नर्मदातटमाश्रितः ॥ ४२.६२ ॥
एकाङ्गुष्ठो निराहारो वर्षादा षोडशान्नृप ।
तोषयामास देवेशमुमया सह शङ्करम् ॥ ४२.६३ ॥
ततस्तत्तपसा तुष्टः शङ्करो वाक्यमब्रवीत् ॥ ४२.६४ ॥

ईश्वर उवाच -
परितुष्टोऽस्मि ते विप्र तपसानेन सुव्रत ।
वरं वृणीष्व ते दद्मि मनसा चेप्सितं शुभम् ॥ ४२.६५ ॥

पिप्पलाद उवाच -
यदि मे भगवांस्तुष्टो यदि देयो वरो मम ।
अत्र संनिहितो देव तीर्थे भव महेश्वर ॥ ४२.६६ ॥
एवमुक्तस्तथेत्युक्त्वा पिप्पलादं महामुनिम् ।

जगामादर्शनं देवो भूतसङ्घसमन्वितः ॥ ४२.६७ ॥
पिप्पलादो गते देवे स्नात्वा तत्र महाम्भसि ।
स्थापयित्वा महादेवं जगामोत्तरपर्वतम् ॥ ४२.६८ ॥
तत्र तीर्थे नरो भक्त्या स्नात्वा मन्त्रयुतं नृप ।
तर्पयित्वा पित्ःन् देवान् पूजयेच्च महेश्वरम् ॥ ४२.६९ ॥
अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
मृतो रुद्रपुरं याति नात्र कार्या विचारणा ॥ ४२.७० ॥
अथ यो भोजयेद्विप्रान् पित्ःनुद्दिश्य भारत ।
तस्य ते द्वादशाब्दानि मोदन्ते दिवि तर्पिताः ॥ ४२.७१ ॥
संन्यासेन तु यः कश्चित्तत्र तीर्थे तनुं त्यजेत् ।
अनिवर्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ ४२.७२ ॥
एतत्सर्वं समाख्यातं यत्पृष्टे हि त्वयानघ ।
माहात्म्यं पिप्पलादस्य तीर्थस्योत्पत्तिरेव च ॥ ४२.७३ ॥
एतत्पुण्यं पापहरं धन्यं दुःस्वप्ननाशनम् ।
पठतां शृण्वतां चैव सर्वपापक्षयो भवेत् ॥ ४२.७४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये पिप्पलादतीर्थमाहात्म्यवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४३



अध्याय ४३

श्रीमार्कण्डेय उवाच -
ततो गच्छेतु राजेन्द्र विमलेश्वरमुत्तमम् ।
तत्र देवशिला रम्या स्वयं देवैर्विनिर्मिता ॥ ४३.१ ॥
तत्र स्नात्वा तु यो भक्त्या ब्राह्मणान्पूजयेन्नृप ।
स्वल्पेनापि हि दानेन तस्य चान्तो न विद्यते ॥ ४३.२ ॥

युधिष्ठिर उवाच -
कानि दानानि विप्रेन्द्र शस्तानि धरणीतले ।
यानि दत्त्वा नरो भक्त्या मुच्यते सर्वपातकैः ॥ ४३.३ ॥

श्रीमार्कण्डेय उवाच -
सुवर्णं रजतं ताम्रं मणिमौक्तिकमेव च ।
भूमिदानं च गोदानं मोचयत्पशुभान्नरम् ॥ ४३.४ ॥
तत्र तीर्थे तु यः कश्चित्कुरुते प्राणसंक्षयम् ।
रुद्रलोके वसेत्तावद्यावदा भूतसम्प्लवम् ॥ ४३.५ ॥
ततः पुष्करिणीं गच्छेत्सर्वपापक्षयंकरीम् ।
तत्र स्नात्वार्चयेद्देवं तेजोराशिं दिवाकरम् ॥ ४३.६ ॥
ऋचमेकां जपेत्साम्नः सामवेदफलं लभेत् ।
यजुर्वेदस्य जपनादृग्वेदस्य तथैव च ॥ ४३.७ ॥
अक्षरं वा जपेन्मन्त्रं ध्यायमानो दिवाकरम् ।
आदित्यहृदयं जप्त्वा मुच्यते सर्वकिल्बिषैः ॥ ४३.८ ॥
तत्र तीर्थे तु यः स्नात्वा विधिना जपेद्द्विजान् ।
तस्य कोटिगुणं पुण्यं जायते नात्र संशयः ॥ ४३.९ ॥
अनाशकेनाग्निगत्या जले वा देहपातनात् ।

तस्मिंस्तीर्थे मृतो यस्तु स याति परमां गतिम् ॥ ४३.१० ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा नृपसत्तम ।
विहितं कर्म कुर्वाणः स गच्छेत्परमां गतिम् ॥ ४३.११ ॥

युधिष्ठिर उवाच -
व्याधिं सत्त्वक्षयं मोहं ज्ञात्वा वर्णा द्विजोत्तम ।
पापेभ्यो विप्रमुच्यन्ते केन तत्साधनं वद ॥ ४३.१२ ॥

श्रीमार्कण्डेय उवाच -
तिलोदकी तिलस्नायी कामक्रोधविवर्जितः ।
ब्राह्मणोऽनशनैः प्राणांस्त्यजल्लभति सद्गतिम् ॥ ४३.१३ ॥
सङ्ग्रामे सद्गतिं तात क्षत्रियो निधने लभेत् ।
तदभावान्महाप्राज्ञ सेवमानो लभेदिति ॥ ४३.१४ ॥
व्याधिग्रहगृहीतो वा वृद्धो वा विकलेन्द्रियः ।
आत्मानं दाहयित्वाग्नौ विधिना सद्गतिं लभेत् ॥ ४३.१५ ॥
वैश्योऽपि हि त्यजन्प्राणानेवं वै शुभभाग्भवेत् ।
जले वा शुद्धभावेन त्यक्त्वा प्राणाञ्छिवो भवेत् ॥ ४३.१६ ॥
शूद्रोऽपि द्विजशुश्रूषुस्तोषयित्वा महेश्वरम् ।
विमुच्य नान्यथा पापः पतते नरके ध्रुवम् ॥ ४३.१७ ॥
अथवा प्रणवाशक्तो द्विजेभ्यो गुरवे तथा ।
पञ्चाग्नौ शोषयेद्देहमापृच्छ्य द्विजसत्तमान् ॥ ४३.१८ ॥
शान्तदान्तजितक्रोधाञ्छास्त्रयुक्तान् विचक्षणान् ।
तेषां चैवोपदेशेन करीषाग्निं प्रसाधयेत् ॥ ४३.१९ ॥
एवं वर्णा यथात्वेन मूढाहङ्कारमोहिताः ।
पतन्ति नरके घोरे यथान्धो गिरिगह्वरे ॥ ४३.२० ॥
ये शास्त्रविधिमुत्सृज्य वर्तन्ते कामचारतः ।
कृमियोनिं प्रपद्यन्ते तेषां पिण्डो न च क्रिया ॥ ४३.२१ ॥
श्रुतिस्मृत्युदितं धर्मं त्यक्त्वा यथेच्छाचारसेविनः ।
अष्टाविंशतिर्वै कोट्यो नरकाणां युधिष्ठिर ॥ ४३.२२ ॥
प्रत्येकं वा पतन्त्येते मग्ना नरकसागरे ।
दुर्लभं मानुषं जन्म बहुधर्मार्जितं नृप ॥ ४३.२३ ॥
तल्लब्ध्वा मदमात्सर्यं यो वै त्यजति मानवः ।

संनियम्य सदात्मानं ज्ञानचक्षुर्नरो हि सः ॥ ४३.२४ ॥
अज्ञानतिमिरान्धस्य ज्ञानांजनशलाकया ॥ ४३.२५ ॥
यस्य नोन्मीलितं चक्षुर्ज्ञेयो जात्यन्ध एव सः ।
एतत्ते कथितं सर्वं यत्पृष्टं नृपसत्तम ॥ ४३.२६ ॥
तथानिष्टतराणां हि रुद्रस्य वचनं यथा ।
नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ॥ ४३.२७ ॥
तारयेत्सर्वभूतानि स्थावराणि चराणि च ।
सर्वदेवाधिदेवेन ईश्वरेण महात्मना ॥ ४३.२८ ॥
लोकानां च हितार्थाय महापुण्यावतारिता ।
मानसं वाचिकं पापं स्नानान्नश्यति कर्मजम् ॥ ४३.२९ ॥
रुद्रदेहाद्विनिष्क्रान्ता तेन पुण्यतमा हि सा ।
प्रातरुत्थाय यो नित्यं भूमिमाक्रम्य भक्तितः ॥ ४३.३० ॥
एतन्मन्त्रं जपेत्तात स्नानस्य लभते फलम् ।
नमः पुण्यजले देवि नमः सागरगामिनि ॥ ४३.३१ ॥
नमोऽस्तु पापनिर्मोचे नमो देवि वरानने ॥ ४३.३२ ॥
नमोऽस्तु ते ऋषिवरसङ्घसेविते नमोऽस्तु ते त्रिनयनदेहनिःसृते ।
नमोऽस्तु ते सुकृतवतां सदा वरे नमोऽस्तु ते सततपवित्रपावनि ॥ ४३.३३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४४

https://sa.wikisource.org/s/fcy
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

तीर्थानां परमं तीर्थं तच्छृणुष्व नराधिप ।

रेवाया दक्षिणे कूले निर्मितं शूलपाणिना ॥ ४४.१ ॥

मोक्षार्थं मानवेन्द्राणां निर्मितं नृपसत्तम ।

युधिष्ठिर उवाच -

श्रुता मे विविधा धर्मास्तीर्थानि विविधानि च ।

दानधर्माः समस्ताश्च त्वत्प्रसादाद्द्विजोत्तम ॥ ४४.२ ॥

अन्यच्च श्रोतुमिच्छामि संसारश्छिद्यते यथा ।

पुनरागमनं नास्ति मोक्षप्राप्तिर्भवेद्यथा ॥ ४४.३ ॥

एतदाख्याहि मे सर्वं प्रसादाद्द्विजसत्तम ॥ ४४.४ ॥

मार्कण्डेय उवाच -

शृणुष्वैकमना भूत्वा तीर्थात्तीर्थान्तरं महत् ।

श्रुते यस्य प्रभावे तु मुच्यते चाब्दिकादघात् ॥ ४४.५ ॥

वाचिकैर्मानसैर्वापि शारीरैश्च विशेषतः ।

कीर्तनात्तस्य तीर्थस्य मुच्यते सर्वपातकैः ॥ ४४.६ ॥

पञ्चक्रोशप्रमाणं तु तच्च तीर्थं महीपते ।

भुक्तिमुक्तिप्रदं दिव्यं प्राणिनां पापकर्मिणाम् ॥ ४४.७ ॥

रेवाया दक्षिणे कूले पर्वतो भृगुसंज्ञितः ।

तस्य मूर्ध्नि च तत्तीर्थं स्थापितं चैव शम्भुना ॥ ४४.८ ॥

शूलभेदेति विख्यातं त्रिषु लोकेषु भूपते ।

तत्र स्थिताश्च ये वृक्षास्तीर्थाच्चैव चतुर्दिशम् ॥ ४४.९ ॥

पतिता निलयं यान्ति रुद्रस्य नात्र संशयः ।

मृतास्तत्रैव ये केचिज्जन्तवो भुवि पक्षिणः ॥ ४४.१० ॥

ते यान्ति परमं लोकं तत्र तीर्थे न संशयः ।

पातालान्निःसृता गङ्गा भोगवतीतिसंज्ञिता ॥ ४४.११ ॥

निष्क्रान्ता शूलभेदाच्च सर्वपापक्षयंकरी ।

या सा गीर्वाणनाम्न्यन्या वहेत्पुण्या महानदी ॥ ४४.१२ ॥

पतिता कुण्डमध्ये तु यत्र भिन्नं त्रिशूलिना ।

शम्भुना च पुरा तात उत्पाद्य च सरस्वती ॥ ४४.१३ ॥

सा तत्र पतिता राजन् प्राचीनाघविमोचिनी ।

भास्वत्या त्रितयं यत्र शिला गीर्वाणसंज्ञिता ॥ ४४.१४ ॥

तत्र तीर्थे च तत्तीर्थं न भूतं न भविष्यति ।

केदारं च प्रयागं च कुरुक्षेत्रं गया तथा ॥ ४४.१५ ॥

अन्यानि च सुतीर्थानि कलां नार्हन्ति षोडशीम् ।

पञ्च स्थानानि तीर्थानि पृथग्भूतानि यानि च ॥ ४४.१६ ॥

वक्ष्यामि च समासेन एकैकं च पृथक्पृथक् ।

गया नाभ्यां यथा पुण्या चक्रतीर्थं च तत्समम् ॥ ४४.१७ ॥

धर्मारण्ये यथा कूपं शूलभेदं च तत्समम् ।

ब्रह्मयूपं यथा पुण्यं देवनद्यास्तथैव च ॥ ४४.१८ ॥

यथा गयाशिरः पुण्यं सुराणां च यथा शिला ।

यथा च पुष्करं स्थानं मार्कण्डह्रद एव च ॥ ४४.१९ ॥

दत्त्वा पिण्डोदकं तत्र पिण्डाणां च तथाक्षयम् ।

यस्तत्र कुरुते श्राद्धं तोयं पिबति नित्यशः ।

मुच्यते सर्वपापैस्तु उरगः कञ्चुकैरिव ।

अनिन्द्यान्पूजयेद्विप्रान् दम्भक्रोधविवर्जितान् ॥ ४४.२० ॥

त्रयोदशदिनं दानं त्रयोदशगुणं भवेत् ।

अभ्यर्चितं सुरं दृष्ट्वा गणनाथं गजाननम् ॥ ४४.२१ ॥

सर्वे विघ्ना विनश्यन्ति दृष्ट्वा कम्बलक्षेत्रपम् ॥ ४४.२२ ॥

पूजयेत्परया भक्त्या शूलपाणिं महेश्वरम् ॥ ४४.२३ ॥

देवस्य पूर्वभागे तु उमा पूज्या प्रयत्नतः ।

मार्कण्डेशं ततो भक्त्या पूजयेद्गुहवासिनम् ॥ ४४.२४ ॥

मुच्यन्ते पातकैः सर्वैरज्ञानज्ञानसंचितैः ।

गुहामध्ये प्रविष्टस्तु जपेत्सूक्तं तु त्र्यक्षरम् ॥ ४४.२५ ॥

नीलपर्वतजं पुण्यं षष्ठांशेन लभेत सः ।

त्रिनरास्तत्र तिष्ठन्ति सादित्यमरुतैः सह ॥ ४४.२६ ॥

सर्वदेवमयं स्थानं कोटिलिङ्गमनुत्तमम् ।

यथा नदीनदाः सर्वे सागरे यान्ति संक्षयम् ॥ ४४.२७ ॥

तथा पापानि नश्यन्ति शूलभेदस्य दर्शनात् ।

प्रत्यक्षो दृश्यतेऽद्यापि प्रत्ययो ह्यवनीपते ॥ ४४.२८ ॥

विस्फुलिङ्गा लिङ्गमध्ये स्पन्दन्ते स्नानयोगतः ।

द्वितीयः प्रत्ययस्तत्र तैलबिन्दुर्न सर्पति ॥ ४४.२९ ॥

एवं हि प्रत्ययस्तत्र शूलभेदप्रभावजः ।

यः स्मरेच्छूलभेदं तु त्रिकालं नित्यमेव च ॥ ४४.३० ॥

स पूतश्च भवेत्साक्षात्सबाह्याभ्यन्तरो नृप ।

न कस्यचिन्मया ख्यातं पृष्टोऽहं त्रिदशैरपि ॥ ४४.३१ ॥

गुह्याद्गुह्यतरं तीर्थं सदा गोप्यं कृतं मया ।

सर्वपापहरं पुण्यं सर्वदोषघ्नमुत्तमम् ॥ ४४.३२ ॥

सर्वतीर्थमयं तीर्थं शूलभेदं जनेश्वर ।

श्रुते यस्य प्रभावे तु मुच्यते सर्वपातकैः ॥ ४४.३३ ॥

शूलभेदं मया तात संक्षेपात्कथितं तव ।

यः शृणोति नरो भक्त्या मुच्यते सर्वपातकैः ॥ ४४.३४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदप्रशंसावर्णनं नाम चतुश्चत्वारिंशोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४५

https://sa.wikisource.org/s/fcx



अध्याय ४५

श्रीमार्कण्डेय उवाच -
एष एव पुरा प्रश्नः परिपृष्टो महेश्वरम् ।
राज्ञा चोत्तानपादेन ऋषिदेवसमागमे ॥ ४५.१ ॥

उत्तानपाद उवाच -
इदं तीर्थं महापुण्यं सर्वदेवमयं परम् ।
गुह्याद्गुह्यतरं स्थानं न दृष्टं न श्रुतं हर ॥ ४५.२ ॥
शूलभेदं कथं जातं केनैवोत्पादितं पुरा ।
माहात्म्यं तस्य तीर्थस्य विस्तराच्छंस मे प्रभो ॥ ४५.३ ॥

ईश्वर उवाच -
आसीत्पुरा महावीर्यो दानवो बलदर्पितः ।
मर्त्ये न तादृशः कश्चिद्विक्रमेण बलेन वा ॥ ४५.४ ॥
सूनुर्ब्रह्मसुतस्यायमन्धको नाम दुर्मदः ।
निजस्थाने वसन् पापः कुर्वन् राज्यमकण्टकम् ॥ ४५.५ ॥
हृष्टपुष्टो वसन्मर्त्ये स सुरैर्नाभिभूयते ।
भवनं तस्य पापस्य वह्नेरुपवनं यथा ॥ ४५.६ ॥
एतस्मिन्नन्धकः काले चिन्तयामास भारत ।
तोषयामि महादेवं येन सानुग्रहो भवेत् ॥ ४५.७ ॥
प्रार्थयामि वरं दिव्यं यो मे मनसि वर्तते ।
परं स निश्चयं कृत्वा सोऽन्धको निर्गतो गृहात् ॥ ४५.८ ॥
रेवातटं समासाद्य दानवस्तपसि स्थितः ।
उग्रं तपश्चचारासौ दारुणं लोमहर्षणम् ॥ ४५.९ ॥
दिव्यं वर्षसहस्रं स निराहारोऽभवत्ततः ।

द्वितीयं तु सहस्रं स न्यवसद्वारिभोजनः ॥ ४५.१० ॥
तृतीयं तु सहस्रं स धूमपानरतोऽभवत् ।
चतुर्थं वर्षसाहस्रं योगाभ्यासेन संस्थितः ॥ ४५.११ ॥
कोपीह नेदृश चक्रे तपः परमदारुणम् ।
अस्थिचर्मावशेषोऽसौ यावत्तिष्ठति भारत ॥ ४५.१२ ॥
तस्य मूर्ध्नि ततो राजन् धूमवार्त्तिर्विनिःसृता ।
देवलोकमतीत्यासौ कैलासं व्याप्य संस्थिता ॥ ४५.१३ ॥
तावद्देवसमीपस्था उमा वचनमब्रवीत् ।
कोऽस्त्ययं मानुषे लोके तपसोग्रेण संस्थितः ॥ ४५.१४ ॥
चतुर्वर्षसहस्राणि व्यतीयुः परमेश्वर ।
न केनापीदृशं तप्तं तपो दृष्टं श्रुतं तथा ॥ ४५.१५ ॥
अवज्ञां कुरुषे देव किमत्र नियमान्विते ।
सर्वस्य दत्से शीघ्रं त्वमल्पेन तपसा विभो ॥ ४५.१६ ॥
नाक्षक्रीडां करिष्येऽद्य त्वया सह महेश्वर ।
यावन्नोत्थाप्यते ह्येष दानवो भक्तवत्सल ॥ ४५.१७ ॥

ईश्वर उवाच -
साधु साधु महादेवि सर्वलक्षणलक्षिते ।
अहं तं न विजानामि क्लिश्यन्तं दानवेश्वरम् ॥ ४५.१८ ॥
योगाभ्यासे स्थितो भद्रे ध्यायंस्तत्परमं पदम् ।
तत्रागच्छ मया सार्द्धं यत्र तप्यत्यसौ तपः ॥ ४५.१९ ॥
उमया सहितो देवो गतस्तत्र महेश्वरः ।
अस्थिचर्मावशेषस्तु दृष्टो देवेन शम्भुना ॥ ४५.२० ॥
प्रत्युवाच प्रसन्नोऽसौ देवदेवो महेश्वरः ।
भोभोः कष्टं कृतं भीमं दारुणं लोमहर्षणम् ॥ ४५.२१ ॥
ईदृशं च तपो घोरं कस्माद्वत्स त्वया कृतम् ।
वरं दास्याम्यहं वत्स यस्ते मनसि वर्तते ॥ ४५.२२ ॥

अन्धक उवाच -
यदि तुष्टोऽसि मे देव वरदो यदि शङ्कर ।
सुरान् सर्वान् विजेष्यामि त्वत्प्रसादान्महेश्वर ॥ ४५.२३ ॥

ईश्वर उवाच -
स्वप्नेऽपि त्रिदशाः सर्वे न योद्धव्याः कदाचन ।
असंभाव्यं न वक्तव्यं मनसो यन्न रोचते ॥ ४५.२४ ॥
अन्यं किमपि याचस्व यस्ते मनसि वर्तते ।
स्वर्गे वा यदि वा मर्त्ये पातालेषु च संस्थितान् ॥ ४५.२५ ॥
मर्त्येषु विविधान् भोगान् भोक्ष्यसि त्वं यथेप्सितान् ।
कुरु निष्कण्टकं राज्यं स्वर्गे देवपतिर्यथा ॥ ४५.२६ ॥
देवस्य वचनं श्रुत्वा सोऽन्धको विमनाः स्थितः ।
वृथा क्लेशश्च मे जातो न किंचित्साधितं मया ॥ ४५.२७ ॥
निश्वासं परमं मुक्त्वा निपपात धरातले ।
मूलच्छिन्नो यथा वृक्षो निरुच्छ्वासस्तदाभवत् ॥ ४५.२८ ॥
मूर्च्छापन्नं ततो दृष्ट्वा देवी वचनमब्रवीत् ।
यं कामं कामयत्येष तमस्मै देहि शङ्कर ॥ ४५.२९ ॥
भक्तानुपेक्षमाणस्य तवाकीर्तिर्भविष्यति ॥ ४५.३० ॥

ईश्वर उवाच -
यदि दास्ये वरं देवि इच्छाभूतं कदाचन ।
ततो न मंस्यते विष्णुं न ब्रह्माणं न मामपि ॥ ४५.३१ ॥
उच्चत्वमाप्तो देवेशि अन्यानपि सुरासुरान् ॥ ४५.३२ ॥

देव्युवाच -
कमप्युपायमाश्रित्य उत्थापय महेश्वर ।
विष्णुवर्जं सुरान्सर्वाञ्जयस्वेति वरं वद ॥ ४५.३३ ॥

ईश्वर उवाच -
उपायः शोभनो देवि यो मे मनसि वर्तते ।
तमेवास्मै प्रदास्यामि यस्त्वया कथितो वरः ॥ ४५.३४ ॥
ततोऽमृतेन संसिक्तः स्वस्थोऽभूत्तत्क्षणादयम् ।
तथा पुनर्नवो जातः सर्वावयवशोभितः ॥ ४५.३५ ॥
शृणुष्वैकमना भूत्वा गृहाण वरमुत्तमम् ।
विष्णुवर्जं प्रदास्यामि यत्तवाभिमतं प्रियम् ॥ ४५.३६ ॥
सर्वं च सफलं तुभ्यं मा धर्मस्तेऽन्यथा भवेत् ।

ददामीति वरं तुभ्यं मन्यसे यदि चासुर ॥ ४५.३७ ॥
विष्णुवर्जं सुरान् सर्वाञ्जेष्यसि त्वं च मां विना ॥ ४५.३८ ॥

अन्धक उवाच -
भवत्वेवमिति प्राह बलमास्थाय केवलम् ।
विष्णुवर्जं विजेष्येऽहं स्वबलेन महेश्वर ॥ ४५.३९ ॥
कृतार्थोऽहं हि संजात इत्युक्त्वा प्रणतिं गतः ।
गच्छ देवोमयासार्द्धं कैलासशिखरं वरम् ॥ ४५.४० ॥
वृषपुंगवमारुह्य देवोऽसावुमया सह ।
वरं दत्त्वा स तस्यैवं तत्रैवान्तरधीयत ॥ ४५.४१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अन्धकवरप्रदानवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४६



अध्याय ४६

श्रीमार्कण्डेय उवाच -
स दानवो वरं लब्ध्वा जगाम स्वपुरं प्रति ।
ददर्श स्वपुरं राजञ्छोभितं चित्रचत्वरैः ॥ ४६.१ ॥
उद्यानैश्चैव विविधैः कदलीखण्डमण्डितैः ।
पनसैर्बकुलैश्चैवाम्रातैराम्रैश्च चम्पकैः ॥ ४६.२ ॥
अशोकैर्नालिकेरैश्च मातुलिङ्गैः सदाडिमैः ।
नानावृक्षैश्च शोभाढ्यं तडागैरुपशोभितम् ॥ ४६.३ ॥
देवतायतनैर्दिव्यैर्ध्वजमालासुशोभितैः ।
वेदाध्ययननिर्घोषैर्मङ्गलाद्यैर्विनादितम् ॥ ४६.४ ॥
प्राविशद्भवने दिव्ये काञ्चने रुक्ममालिनि ।
अपश्यत्स सुतान् भार्याममात्यान् दासभृत्यकान् ॥ ४६.५ ॥
ततो जयप्रदान् सर्वानितश्चेतश्च धावतः ।
हृच्छोभां च प्रकुर्वाणान् वै जयन्तीभिरुच्चकैः ॥ ४६.६ ॥
केचित्तोरणमाबध्य केचित्पुष्पाण्यवाकिरन् ।
मातुलिङ्गकराश्चान्ये धावन्ति ह्यन्धकं प्रति ॥ ४६.७ ॥
पुरे जनाश्च दृश्यन्ते भाजनैरन्नपूरितैः ।
पूर्णहस्ताः प्रदृश्यन्ते तत्रैव बहवो जनाः ॥ ४६.८ ॥
साक्षतैर्भाजनैस्तत्र शतसाहस्रयोषितः ।
मन्त्रान् पठन्ति विप्राश्च मङ्गलान्यपि योषितः ॥ ४६.९ ॥
अमात्याश्चैव भृत्याश्च गजांश्चाढौकयन्ति च ।
वर्धापयन्ति ते सर्वे ये केचित्पुरवासिनः ॥ ४६.१० ॥
हृष्टस्तुष्टोऽवसत्तत्र सचिवैः सह सोऽन्धकः ।
ददर्श स जगत्सर्वं तुरङ्गांश्च पदातिकान् ॥ ४६.११ ॥
तथैव विविधान् कोशांस्तत्र काञ्चनपूरितान् ।

महिषीर्गा वृषांश्चैवापश्यच्छत्राण्यनेकधा ॥ ४६.१२ ॥
स एवमन्धकस्तत्र कियन्तं कालमावसत् ।
हृष्टस्तुष्टो वसन्मर्त्ये स सुरैर्नाभ्यभूयत ॥ ४६.१३ ॥
वरं लब्धं तु तं ज्ञात्वा शङ्किताः स्वर्गवासिनः ।
एकीभूताश्च ते सर्वे वासवं शरणं गताः ॥ ४६.१४ ॥

शक्र उवाच -
कथमागमनं वोऽत्र सर्वेषामपि नाकिनाम् ।
कस्माद्वो भयमुत्पन्नमागताः शरणं कथम् ॥ ४६.१५ ॥
ततस्ते ह्यमराः सर्वे शक्रमेतद्वचोऽब्रुवन् ॥ ४६.१६ ॥
देवा ऊचुः ।
सुरनाथान्धको नाम दैत्यः शम्भुवरोर्जितः ।
अजेयः सर्वदेवानां किं नु कार्यमतः परम् ॥ ४६.१७ ॥
तत्त्वं चिन्तय देवेश क उपायो विधीयताम् ।
इत्थं वदन्ति ते देवाः शक्राग्रे मन्त्रणोद्यताः ॥ ४६.१८ ॥
मन्त्रयन्ति च यावद्वै तावच्चारमुखेरितम् ।
ज्ञात्वा तत्र स देवौघं दानवो निर्गतो गृहात् ॥ ४६.१९ ॥
एकाकी स्यन्दनारूढ आयुधैर्बहुभिर्वृतः ।
दुर्गमं मेरुपृष्ठं स लीलयैव गतो नृप ॥ ४६.२० ॥
स्वर्णप्राकारसंयुक्तं शोभितं विविधाश्रमैः ।
दुर्गमं शत्रुवर्गस्य तदा पार्थिवसत्तम ॥ ४६.२१ ॥
प्रविवेशासुरस्तत्र लीलया स्वगृहे यथा ।
वृत्रहा भयमापन्नः स्वकीयं चासनं ददौ ॥ ४६.२२ ॥
उपविष्टोऽन्धकस्तत्र शक्रस्यैवासने शुभे ।
आस्थानं कलयामास सर्वतस्त्रिदशावृतम् ॥ ४६.२३ ॥

शक्र उवाच -
किं तवागमनं चात्र किं कार्यं कथयस्व मे ।
यदस्मदीयं वित्तं हि तत्ते दास्यामि दानव ॥ ४६.२४ ॥

अन्धक उवाच -
नाहं वै कामये कोशं न गजांश्च सुरेश्वर ।

स्वकीयं दर्शयस्वाद्य स्वर्गशृङ्गारभूषितम् ॥ ४६.२५ ॥
ऐरावतं महानागं तं चैवोच्चैःश्रवोहयम् ।
उर्वश्यादीनि रत्नानि मम दर्शय गोपते ॥ ४६.२६ ॥
पारिजातकपुष्पाणि वृक्षजातीननेकशः ।
वादित्राणि च सर्वाणि दर्शयस्व शचीपते ॥ ४६.२७ ॥
तस्य तद्वचनं श्रुत्वा शक्रश्चिन्तितवानिदम् ।
योऽमुं निहन्ति पाप्मानं न तं पश्यामि कर्हिचित् ॥ ४६.२८ ॥
नास्ति रक्षाप्रदः कश्चित्स्वर्गलोकस्य दुःखिनः ।
भयत्रस्तो ददावन्यद्वादित्राद्यप्सरोगणैः ॥ ४६.२९ ॥
रङ्गभूमावुपाविश्य कारयामास ताण्डवम् ।
उपविष्टाः सुराः सर्वे यममारुतकिन्नराः ॥ ४६.३० ॥
उर्वश्याद्या अप्सरसो गीतवादित्रयोगतः ।
ननृतुः पुरतस्तस्य सर्वा एकैकशो नृप ॥ ४६.३१ ॥
न व्यश्राम्यत तच्चित्तं दृष्ट्वा चाप्सरसस्तदा ।
शचीं प्रति मनस्तस्य सकाममभवन्नृप ॥ ४६.३२ ॥
गृहीत्वा शक्रभार्यां स प्रस्थितः स्वपुरं प्रति ।
ततः प्रववृते युद्धमन्धकस्य सुरैः सह ॥ ४६.३३ ॥
तेन देवगणाः सर्वे ध्वस्ताः पार्थिवसत्तम ।
संग्रामे विविधैः शस्त्रैश्चक्रवज्रादिभिर्घनैः ॥ ४६.३४ ॥
संतापिताः सुराः सर्वे क्षयं नीता ह्यनेकशः ।
सर्वेऽपि मरुतस्तेन भग्नाः संग्राममूर्धनि ॥ ४६.३५ ॥
यथा सिंहोगजान् सर्वान् विचित्य विचरेद्वनम् ।
तद्वदेकेन ते देवा जिताः सर्वे पराङ्मुखाः ॥ ४६.३६ ॥
बालोऽधिपो यथा ग्रामे स्वेच्छया पीडयेज्जनान् ।
स्वैरमाक्रम्य गृह्णाति कोशवासांसि चासकृत् ॥ ४६.३७ ॥
गतं न पश्यत्यात्मानं प्रजासंतापनेन च ।
गृहीत्वा शक्रभार्यां स गतो वै दानवोत्तमः ॥ ४६.३८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये शचीहरणवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४७

https://sa.wikisource.org/s/fd4
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४७

श्रीमार्कण्डेय उवाच -
गीर्वाणाश्च ततः सर्वे ब्रह्माणं शरणं गताः ।
गजैर्गिरिवराकारैर्हयैश्चैव गजोपमैः ॥ ४७.१ ॥
स्यन्दनैर्नगराकारैः सिंहशार्दूलयोजितैः ।
कच्छपैर्महिषैश्चान्यैर्मकरैश्च तथापरे ॥ ४७.२ ॥
ब्रह्मलोकमनुप्राप्ता देवाः शक्रपुरोगमाः ।
दृष्ट्वा पद्मोद्भवं देवं साष्टाङ्गं प्रणताः सुराः ॥ ४७.३ ॥
देवा ऊचुः ।
जय देव जगद्वन्द्य जय संसृतिकारक ।
पद्मयोने सुरश्रेष्ठ त्वामेव शरणं गताः ॥ ४७.४ ॥
सोद्वेगं भाषितं श्रुत्वा देवानां भावितात्मनाम् ।
मेघगम्भीरया वाचा देवराजमुवाच ह ॥ ४७.५ ॥
किमत्रागमनं देवाः सर्वेषां वै विवर्णता ।
केनापमानिताः सर्वे शीघ्रं मे कथ्यतां स्वयम् ॥ ४७.६ ॥
देवा ऊचुः ।
अन्धकाख्यो महादैत्यो बलवान् पद्मसम्भव ।
तेन देवगणाः सर्वे धनरत्नैर्वियोजिताः ॥ ४७.७ ॥
हत्वा देवगणांस्तावदसिचक्रपरद्द्विश्वधैः ।
गृहीत्वा शक्रभार्यां स दानवोऽपि गतो बलात् ॥ ४७.८ ॥
देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
चिन्तयामास राजेन्द्र वधार्थं दानवस्य ह ॥ ४७.९ ॥
अवध्यो दानवः पापः सर्वेषां वो दिवौकसाम् ।
स त्राता सर्वजगतां नान्यो विद्येत कुत्रचित् ॥ ४७.१० ॥
एवमुक्ताः सुराः सर्वे ब्रह्मणा तदनन्तरम् ।

ब्रह्माणं ते पुरस्कृत्य गता यत्र स केशवः ।
तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्माद्याश्चक्रपाणिनम् ॥ ४७.११ ॥
देवा ऊचुः ।
जय त्वं देवदेवेश लक्ष्म्या वक्षःस्थलाश्रितः ।
असुरक्षय देवेश वयं ते शरणं गताः ॥ ४७.१२ ॥
स्तूयमानः सुरैः सर्वैर्ब्रह्माद्यैश्च जनार्दनः ।
सम्प्रहृष्टमना भूत्वा सुरसङ्घमुवाच ह ॥ ४७.१३ ॥

श्रीवासुदेव उवाच -
स्वागतं देवविप्राणां सुप्रभाताद्य शर्वरी ।
किं कार्यं प्रोच्यतां क्षिप्रं कस्य रुष्टा दिवौकसः ॥ ४७.१४ ॥
किं दुःखं कश्च संतापः कुतो वा भयमागतम् ।
कथयन्तु महाभागाः कारणं यन्मनोगतम् ॥ ४७.१५ ॥
पराभवः कृतो येन सोऽद्य यातु यमालयम् ।
एवमुक्तास्तु कृष्णेन कथयामासुरस्य तत् ॥ ४७.१६ ॥
दर्शयन्तः स्वकान्देहान् लज्जमाना ह्यधोमुखाः ।
हृतराज्या ह्यन्धकेन कृता निस्तेजसः प्रभो ॥ ४७.१७ ॥
पितेव पुत्रं परिरक्ष देव जहीन्द्रशत्रुं सह पुत्रपौत्रैः ।
तथेति चोक्तः कमलासनेन सुरासुरैर्वन्दितपादपद्मः ॥ ४७.१८ ॥
शङ्खं चक्रं गदां चापं संगृह्य परमेश्वरः ।
उत्थितो भोगपर्यङ्काद्देवानां पुरतस्तदा ॥ ४७.१९ ॥

श्रीवासुदेव उवाच -
पाताले यदि वा मर्त्ये नाके वा यदि तिष्ठति ।
तं हनिष्याम्यहं पापं येन संतापिताः सुराः ॥ ४७.२० ॥
स्वं स्थानं यान्तु गीर्वाणाः संतुष्टा भावितौजसः ।
विष्णोस्तद्वचनं श्रुत्वा ब्रह्माद्यास्ते सवासवाः ॥ ४७.२१ ॥
स्वयानैस्तु हरिं नत्वा हृदि तुष्टा दिवं ययुः ॥ ४७.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गीर्वाणस्वर्गमनवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४८

https://sa.wikisource.org/s/fcu
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ४८

उत्तानपाद उवाच -
कस्मिन्स्थानेऽवसद्देव सोऽन्धको दैत्यपुंगवः ।
सर्वान्देवांश्च निर्जित्य कस्मिन्स्थाने समास्थितः ॥ ४८.१ ॥

श्रीमहेश उवाच -
प्रविष्टो दानवो यत्र कथयामि नराधिप ।
पाताललोकमाश्रित्य कन्या विध्वंसते तु सः ॥ ४८.२ ॥
तत्र स्थितं तं विज्ञाय चापमादाय केशवः ।
व्यसृजद्बाणमाग्नेयं दह्यतामिति चिन्तयन् ॥ ४८.३ ॥
दह्यमानोऽग्निना सोऽपि वारुणास्त्रं स संदधे ।
वारुणास्त्रेण महता आग्नेयं शमितं तदा ॥ ४८.४ ॥
ततोऽसौ चिन्तयामास केन बाणो विसर्जितः ।
कस्यैषा पौरुषी शक्तिः को यास्यति यमालयम् ॥ ४८.५ ॥
ततोऽन्धको मृधे क्रुद्धो बाणमार्गेण निर्गतः ।
स दृष्ट्वा बाणमार्गेण चापहस्तं जनार्दनम् ॥ ४८.६ ॥

अन्धक उवाच -
न शर्म लप्स्यसे ह्यद्य मया दृष्ट्याभिवीक्षितः ।
न शक्नोषि तथा गन्तुं नागः शार्दूलदर्शनात् ॥ ४८.७ ॥
आगच्छति यथा भक्ष्यं मार्जारस्य च मूषिकः ।
न शक्नोषि तथा यातुं संस्थितस्त्वं ममाग्रतः ॥ ४८.८ ॥
अहं त्वां प्रेषयिष्यामि यममार्गे सुदारुणे ।
अहमन्वेषयिष्यामि किल यास्यामि ते गृहम् ॥ ४८.९ ॥
उपनीतोऽसि कालेन सङ्ग्रामे मम केशव ।

ये त्वया निर्जिताः पूर्वं दानवा अप्यनेकशः ॥ ४८.१० ॥
न भवन्ति पुमांसस्ते स्त्रियस्ताश्चैव केशव ।
परं न शस्त्रसङ्ग्रामं करिष्यामि त्वया सह ॥ ४८.११ ॥
वदतो दानवेन्द्रस्य न चुकोप स केशवः ।
अयुध्यमानं तं दृष्ट्वा चिन्तयामास दानवः ॥ ४८.१२ ॥
द्वन्द्वयुद्धं करिष्यामि निश्चित्य युयुधे नृप ।
स कृष्णेन पदाक्षिप्तः पतितः पृथिवीतले ॥ ४८.१३ ॥
मुहूर्तात्स समाश्वस्य उत्थायेदं व्यचिन्तयत् ।
अशक्तो द्वन्द्वयुद्धाय ततः साम प्रयुक्तवान् ।
पाणिभ्यां सम्पुटं कृत्वा साष्टाङ्गं प्रणतः शुचिः ॥ ४८.१४ ॥

अन्धक उवाच -
जय कृष्णाय हरये विष्णवे जिष्णवे नमः ।
हृषीकेश जगद्धात्रे अच्युताय महात्मने ॥ ४८.१५ ॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
जनार्दनाय श्रीशाय श्रीपते पीतवाससे ॥ ४८.१६ ॥
गोविन्दाय नमो नित्यं नमो जलधिशायिने ।
नमः करालवक्त्राय नरसिंहाय नादिने ॥ ४८.१७ ॥
शार्ङ्गिणे सितवर्णाय शङ्खचक्रगदाभृते ।
नमो वामनरूपाय यज्ञरूपाय ते नमः ॥ ४८.१८ ॥
नमो वराहरूपाय क्रान्तलोकत्रयाय च ।
व्याप्ताशेषदिगन्ताय केशवाय नमोनमः ॥ ४८.१९ ॥
वासुदेव नमस्तुभ्यं नमः कैटभनाशिने ।
लक्ष्म्यालय सुरश्रेष्ठ नमस्ते सुरनायक ॥ ४८.२० ॥
विष्णोर्देवाधिदेवस्य प्रमाणं येऽपि कुर्वते ।
प्रजापतेर्जगद्धातुस्तेषामपि नमाम्यहम् ॥ ४८.२१ ॥
समस्तभूतदेवस्य वासुदेवस्य धीमतः ।
प्रणामं ये प्रकुर्वन्ति तेषामपि नमाम्यहम् ॥ ४८.२२ ॥
तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं ये प्रकुर्वन्ति तेषामपि नमाम्यहम् ॥ ४८.२३ ॥
गुणानां हि निधानाय नमस्तेऽस्तु पुनःपुनः ।
कारुण्याम्बुनिधे देव सर्वभक्तिप्रियाय च ॥ ४८.२४ ॥

श्रीभगवानुवाच -
तुष्टस्ते दानवेन्द्राहं वरं वृणु यथेप्सितम् ।
ददामि ते वरं नूनमपि त्रैलोक्यदुर्लभम् ॥ ४८.२५ ॥

अन्धक उवाच -
यदि तुष्टोऽसि मे देव वरं दास्यसि चेप्सितम् ।
तदा ददस्व मे देव युद्धं परमशोभनम् ।
अवद्धस्तपूतो येनाहं लोकान्गन्तास्मि शोभनान् ॥ ४८.२६ ॥

श्रीभगवानुवाच -
कथं ददामि ते युद्धं तोषितोऽहं त्वया पुनः ।
न त्वां तु प्रभवेत्कोपः कथं युध्यामि तेऽन्धक ॥ ४८.२७ ॥
यदि ते वर्तते बुद्धिर्युद्धं प्रति न संशयः ।
ततो गच्छस्व युद्धाय देवं प्रति महेश्वरम् ॥ ४८.२८ ॥

अन्धक उवाच -
न तत्र सिध्यते कार्यं देवं प्रति महेश्वरम् ॥ ४८.२९ ॥

श्रीभगवानुवाच -
पुत्र त्वं शिखरं गत्वा धूनयस्व बलेन च ॥ ४८.३० ॥
विधूते तत्र देवेशः कोपं कर्ता सुदारुणम् ।
कोपितः शङ्करो रौद्रं युद्धं दास्यति दानव ॥ ४८.३१ ॥
विष्णुवाक्यादसौ पापो गतो यत्र महेश्वरः ।
कैलासशिखरं प्राप्य धुनोति स्म मुहुर्मुहुः ॥ ४८.३२ ॥
धूनिते तत्र शिखरे कम्पितं भुवनत्रयम् ।
निपेतुः शिखराग्राणि कम्पमानान्यनेकशः ॥ ४८.३३ ॥
चत्वारः सागराः क्षिप्रमेकीभूता महीपते ।
निपेतुरुल्कापाताश्च पादपा अप्यनेकशः ॥ ४८.३४ ॥
उमया सहितो देवो विस्मयं परमं गतः ।
गाढमालिङ्ग्य गिरिजा देवं वचनमब्रवीत् ॥ ४८.३५ ॥
किमर्थं कम्पते शैलः किमर्थं कम्पते धरा ।

किमर्थं कम्पते नागो मर्त्यः पातालमेव च ।
किं वा युगक्षयो देव तन्ममाख्यातुमर्हसि ॥ ४८.३६ ॥

ईश्वर उवाच -
कस्यैषा दुर्मतिर्जाता क्षिप्तः सर्पमुखे करः ।
ललाटे च कृतं वर्म स यास्यति यमालयम् ॥ ४८.३७ ॥
कैलासमाश्रितो येन सुप्तोऽहं येन बोधितः ।
तं वधिष्ये न सन्देहः सम्मुखो वा भवेद्यदि ॥ ४८.३८ ॥
चिन्तयामास देवेशो ह्यन्धकोऽयं न संशयः ।
उपायं चिन्तयामास येनासौ वध्यते क्षणात् ॥ ४८.३९ ॥
आगताश्च सुराः सर्वे ब्रह्माद्या वसुभिः सह ।
रथं देवमयं कृत्वा सर्वलक्षणसंयुतम् ॥ ४८.४० ॥
केचिद्देवाः स्थिताश्चक्रे केचित्तुण्डाग्रपार्श्वयोः ।
केचिन्नाभ्यां स्थिता देवाः केचिद्धुर्येषु संस्थिताः ॥ ४८.४१ ॥
धुरीषु निश्चलाः केचित्केचिद्यूपेषु संस्थिताः ।
केचित्स्यन्दनसंस्तम्भाः केचित्स्यन्दनवेष्टकाः ॥ ४८.४२ ॥
आमलसारकेऽन्येऽपि अन्येऽपि कलशे स्थिताः ।
रिपोर्भयंकरं दिव्यं ध्वजमालादिशोभितम् ॥ ४८.४३ ॥
रथं देवमयं कृत्वा तमारूढो जगद्गुरुः ।
निर्ययौ दानवो यत्र कोपाविष्टो महेश्वरः ॥ ४८.४४ ॥
तिष्ठ तिष्ठेत्युवाचाथ क्व प्रयास्यसि दुर्मते ।
शरासनं करे गृह्य शरांश्चिक्षेप दानवे ॥ ४८.४५ ॥
दानवेऽधिष्ठिते युद्धे शरैश्चिच्छेद सायकान् ।
शरासनेण तत्रैव अन्धकश्छादितस्तदा ॥ ४८.४६ ॥
न तत्र दृश्यते सूर्यो नाकाशं न च चन्द्रमाः ।
आग्नेयमस्त्रं व्यसृजद्दानवोऽपि शिवं प्रति ॥ ४८.४७ ॥
दह्यमानाः शराङ्गारैस्तत्रसुः सर्वदेवताः ।
रक्ष रक्ष महादेव दह्यमानांस्तु दानवात् ॥ ४८.४८ ॥
ततो देवाधिदेवोऽसौ वारुणास्त्रमयोऽजयत् ।
वारुणास्त्रेण निमिषादाग्नेयं नाशितं तदा ॥ ४८.४९ ॥
दानवेन तदा मुक्तं वायव्यास्त्रं रणाजिरे ।
वारुणं च गतं तात वायव्यास्त्रविनाशितम् ॥ ४८.५० ॥

देवो व्यसर्जयत्सार्पं क्रोधाविष्टेन चेतसा ।
मारुतं नाशितं बाणैः सर्पैस्तत्र न संशयः ॥ ४८.५१ ॥
दानवेन ततो मुक्तं गरुडास्त्रं च लीलया ।
गारुडास्त्रं च तद्दृष्ट्वा सार्पं नैव व्यदृश्यत ॥ ४८.५२ ॥
ततो देवाधिदेवेन नारसिंहं विसर्जितम् ।
नारसिंहास्त्रबाणेन गारुडास्त्रं प्रशामितम् ॥ ४८.५३ ॥
अस्त्रमस्त्रेण शम्येत न बाध्येत परस्परम् ।
महद्युद्धमभूत्तातसुरासुरभयंकरम् ॥ ४८.५४ ॥
चक्रनालीकनाराचैस्तोमरैः खड्गमुद्गरैः ।
वत्सदन्तैस्तथा भल्लैः कर्णिकारैश्च शोभनैः ॥ ४८.५५ ॥
एवं न शक्यते हन्तुं दानवो विविधायुधैः ।
तदा ज्वालाकरालाश्च खड्गनाराचतोमराः ॥ ४८.५६ ॥
वृषाङ्केन विमुक्तास्तु समरे दानवं प्रति ।
न संस्पृशन्ति शस्त्राणि गात्रं गौडवधूरिव ॥ ४८.५७ ॥
आयुधानि ततस्त्यक्त्वा बाहुयुद्धमुपस्थितौ ।
करं करेण संगृह्य प्रहरन्तौ स्वमुष्टिभिः ।
रणप्रयोगैर्युध्यन्तौ युयुधाते शिवान्धकौ ॥ ४८.५८ ॥

श्रीमार्कण्डेय उवाच -
अन्धकं प्रति देवेशश्चिन्तयामास निग्रहम् ।
हनिष्यामि न सन्देहो दुष्टात्मानं न संशयः ॥ ४८.५९ ॥
स शिवेन यदा क्षिप्तः पतितः पृथिवीतले ।
ऊर्ध्वबाहुरधोवक्त्रो दानवो नृपसत्तम ॥ ४८.६० ॥
क्रोधाविष्टेन देवेशः सङ्ग्रामे देवशत्रुणा ।
कक्षयोः कुहरे क्षिप्त्वा बन्धेनाक्रम्य पीडितः ॥ ४८.६१ ॥
निस्पन्दश्चाभवद्देवो मूर्च्छायुक्तो महेश्वरः ।
मूर्च्छापन्नं तु तं ज्ञात्वा चिन्तयामास दानवः ॥ ४८.६२ ॥
हाहा कष्टं कृतं मेऽद्य दुष्कृतं पापकर्मणा ।
किं करोमि कथं कर्म कस्मिन्स्थाने तु मोचये ॥ ४८.६३ ॥
गृहीत्वा देवमुत्सङ्गे गतः कैलासपर्वतम् ।
शय्यायां शङ्करं न्यस्य निर्ययौ दैत्यराट्ततः ॥ ४८.६४ ॥
शय्यायां पतितो देवः प्रपेदे वेदनां ततः ।

तावद्ददर्श चात्मानं स्वकीयभवनस्थितम् ॥ ४८.६५ ॥
पराभवः कृतो मह्यं कथं तेन दुरात्मना ।
क्रोधवेगसमाविष्टो निर्ययौ दानवं प्रति ॥ ४८.६६ ॥
आयसीं लगुडीं गृह्य प्रभुर्भारसहस्रजाम् ।
दानवं च ततो दृष्ट्वा प्राक्षिपत्तस्य मूर्धनि ॥ ४८.६७ ॥
खड्गेन ताडयामास दानवः प्रहसन्रणे ।
देवेनाथस्मृतं चास्त्रं कौच्छेराख्यं महाहवे ॥ ४८.६८ ॥
दीप्यमानं समुत्सृज्य हृदये ताडितः क्षणात् ।
ततः स ताडितस्तेन रुधिरोद्गारमुद्वमन् ॥ ४८.६९ ॥
पतितोऽधोमुखो भूत्वा ततः शूलेन भेदितः ।
पुनश्च देवदेवेन शूलेन द्विदलीकृतः ॥ ४८.७० ॥
शूलाग्रेऽसौ स्थितः पापो भ्रान्तवांश्चक्रवत्तदा ।
ये ये भूम्यां पतन्ति स्म तत्कायाद्रक्तबिन्दवः ॥ ४८.७१ ॥
ते ते सर्वे समुत्तस्थुर्दानवाः शास्त्रपाणयः ।
व्याकुलस्तु ततो देवो दानवेन तरस्विना ॥ ४८.७२ ॥
देवेनाथ स्मृता दुर्गा चामुण्डा भीषणानना ।
आयाता भीषणाकारा नानायुधविराजिता ॥ ४८.७३ ॥
महादंष्ट्रा महाकाया पिङ्गाक्षी लम्बकर्णिका ।
आदेशो दीयतां देव को यास्यति यमालयम् ॥ ४८.७४ ॥

ईश्वर उवाच -
पिबास्य रुधिरं भद्रे यथेष्टं दानवस्य च ।
निपतद्रुधिरं भूमौ दुर्गे गृह्णीष्व माचिरम् ॥ ४८.७५ ॥
निहन्मि दानवं यावत्साहाय्यं कुरु सुन्दरि ।
एवमुक्ता तु सा दुर्गा पपौ च रुधिरं ततः ॥ ४८.७६ ॥
निहता दानवाः सर्वे देवेशेन सहस्रशः ।
अन्धकोऽपि च तान् दृष्ट्वा दानवानवनिं गतान् ।
ततो वाग्भिः प्रतुष्टाव देवदेवं महेश्वरम् ॥ ४८.७७ ॥

अन्धक उवाच -
जयस्व देवदेवेश उमार्धार्धाशरीरधृक् ।
नमस्ते देवदेवेश सर्वाय त्रिगुणात्मने ॥ ४८.७८ ॥

वृषभासनमारूढ शशाङ्ककृतशेखर ।
जय खट्वाङ्गहस्ताय गङ्गाधर नमोऽस्तु ते ॥ ४८.७९ ॥
नमो डमरुहस्ताय नमः कपालमालिने ।
स्मरदेहविनाशाय महेशाय नमोऽस्तु ते ॥ ४८.८० ॥
पूष्णो दन्तनिपाताय गणनाथाय ते नमः ।
जय स्वरूपदेहाय अरूपबहुरूपिणे ॥ ४८.८१ ॥
उत्तमाङ्गविनाशाय विरिञ्चेरपि शङ्कर ।
श्मशानवासिने नित्यं नित्यं भैरवरूपिणे ॥ ४८.८२ ॥
त्वं सर्वगोऽसि त्वं कर्ता त्वं हर्ता नान्य एव च ।
त्वं भूमिस्त्वं दिशश्चैव त्वं गुरुर्भार्गवस्तथा ॥ ४८.८३ ॥
सौरिस्त्वं देवदेवेश भूमिपुत्रस्तथैव च ।
ऋक्षग्रहादिकं सर्वं यद्दृश्यं तत्त्वमेव च ॥ ४८.८४ ॥
एवं स्तुतिं तदा कृत्वा देवं प्रति स दानवः ।
संहताभ्यां तु पाणिभ्यां प्रणनाम महेश्वरम् ॥ ४८.८५ ॥

ईश्वर उवाच -
साधु साधु महासत्त्व वरं याचस्व दानव ।
दाताहं याचकस्त्वं हि ददामीह यथेप्सितम् ॥ ४८.८६ ॥

अन्धक उवाच -
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
तदात्मसदृशोऽहं ते कर्तव्यो नापरो वरः ॥ ४८.८७ ॥
भस्मी जटी त्रिनेत्री च त्रिशूली च चतुर्भुजः ।
व्याघ्रचर्मोत्तरीयश्च नागयज्ञोपवीतकः ॥ ४८.८८ ॥
एतदिच्छाम्यहं सर्वं यदि तुष्टो महेश्वर ॥ ४८.८९ ॥

ईश्वर उवाच -
ददामि ते वरं ह्यद्य यस्त्वया याचितोऽनघ ।
गणेषु मे स्थितः पुत्र भृङ्गीशस्त्वं भविष्यसि ॥ ४८.९० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डेऽन्धकवधतद्वरप्रदानवर्णनं नामाष्टचत्वारिंशोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०४९



अध्याय ४९

मार्कण्डेय उवाच -
अन्धकं तु निहत्याथ देवदेवो महेश्वरः ।
उमया सहितो रुद्रः कैलासमगमन्नगम् ॥ ४९.१ ॥
आगताश्च ततो देवा ब्रह्माद्याश्च सवासवाः ।
हृष्टास्तुष्टाश्च ते सर्वे प्रणेमुः पार्वतीपतिम् ॥ ४९.२ ॥

ईश्वर उवाच -
उपाविशन्तु ते सर्वे ये केचन समागताः ।
निहतो दानवो ह्येष गीर्वाणार्थे पितामह ॥ ४९.३ ॥
रक्तेन तस्य मे शूलं निर्मलं नैव जायते ।
शुभव्रततपोजप्यरतो ब्रह्मन्मया हतः ॥ ४९.४ ॥
कर्तुमिच्छाम्यहं सम्यक्तीर्थयानं चतुर्मुख ।
आगच्छन्तु मया सार्द्धं ये यूयमिह संगताः ॥ ४९.५ ॥
इत्युक्त्वा देवदेवेशः प्रभासं प्रतिनिर्ययौ ।
प्रभासाद्यानि तीर्थानि गङ्गासागरमध्यतः ॥ ४९.६ ॥
अवगाह्यापि सर्वाणि नैर्मल्यं नाभवन्नृप ।
नर्मदायां ततो गत्वा देवो देवैः समन्वितः ॥ ४९.७ ॥
उत्तरं दक्षिणं कूलमवागाहत्प्रियव्रतः ।
गतस्तु दक्षिणे कूले पर्वते भृगुसंज्ञितम् ॥ ४९.८ ॥
तत्र स्थित्वा महादेवो देवैः सह महीपते ।
भ्रान्त्वा भ्रान्त्वा चिरं श्रान्तो निर्विण्णो निषसाद ह ॥ ४९.९ ॥
मनोहारि यतः स्थानं सर्वेषां वै दिवौकसाम् ।
तीर्थं विशिष्टं तन्मत्वा स्थितो देवो महेश्वरः ॥ ४९.१० ॥
गिरिं विव्याध शूलेन भिन्नं तेन रसातलम् ।

निर्मलं चाभवच्छूलं न लेपो दृश्यते क्वचित् ॥ ४९.११ ॥
देवैराह्वानिता तत्र महापुण्या च भारती ।
पर्वतान्निःसृता तत्र महापुण्या सरस्वती ॥ ४९.१२ ॥
द्वितीयः सङ्गमस्तत्र यथा वेण्यां सितासितः ।
तत्र ब्रह्मा स्वयं देवो ब्रह्मेशं लिङ्गमुत्तमम् ॥ ४९.१३ ॥
संस्थापयामास पुण्यं सर्वदुःखघ्नमुत्तमम् ।
तस्य याम्ये दिशो भागे स्वयं देवो जनार्दनः ॥ ४९.१४ ॥
तिष्ठते च सदा तत्र विष्णुपादाग्रसंस्थिता ।
अम्भसो न भवेन्मार्गः कुण्डमध्यस्थितस्य च ॥ ४९.१५ ॥
शूलाग्रेण कृता रेखा ततस्तोयं वहेन्नृप ।
तत्तोयं च गतं तत्र यत्र रेवा महानदी ॥ ४९.१६ ॥
जललिङ्गं महापुण्यं चकतीर्थं नृपोत्तम ।
शूलभेदे च देवेशः स्नानं कुर्याद्यथाविधि ॥ ४९.१७ ॥
आत्मानं मन्यते शुद्धं न किंचित्कल्मषं कृतम् ।
तस्यैवोत्तरकाष्ठायां देवदेवो जगद्गुरुः ॥ ४९.१८ ॥
आत्मना देवदेवेशः शूलपाणिः प्रतिष्ठितः ।
सर्वतीर्थेषु तत्तीर्थं सर्वदेवमयं परम् ॥ ४९.१९ ॥
सर्वपापहरं पुण्यं सर्वदुःखघ्नमुत्तमम् ।
तत्र तीर्थे प्रतिष्ठाप्य देवदेवं जगद्गुरुः ॥ ४९.२० ॥
रक्षापालांस्ततो मुक्त्वा शतं साष्टविनायकान् ।
क्षेत्रपालाः शतं साष्टं तद्रक्षन्ति प्रयत्नतः ॥ ४९.२१ ॥
विघ्नास्तस्योपजायन्ते यस्तत्र स्थातुमिच्छति ।
केचित्कुटुम्बात्ततासु व्याग्राः केचित्कृषीषु च ॥ ४९.२२ ॥
केचित्सभां प्रकुर्वन्ति केचिद्द्रव्यार्जने रताः ।
परोक्षवादं कुर्वन्ति केऽपि हिंसारताः सदा ॥ ४९.२३ ॥
परदाररताः केचित्केचिद्वृत्तिविहिंसकाः ।
अन्ये केचिद्वदन्त्येवं कथं तीर्थेषु गम्यते ॥ ४९.२४ ॥
क्षुधया पीड्यते भार्या पुत्रभृत्यादयस्तदा ।
मोहजालेषु योज्यन्ते एवं देवगणैर्नराः ॥ ४९.२५ ॥
पापाचाराश्च ये मर्त्याः स्नानं तेषां न जायते ।
संरक्षन्ति च तत्तीर्थं देवभृत्यगणाः सदा ॥ ४९.२६ ॥
धन्याः पुण्याश्च ये मर्त्यास्तेषां स्नानं प्रजायते ।

सरस्वत्या भोगवत्या देवनद्या विशेषतः ॥ ४९.२७ ॥
अयं तु सङ्गमः पुण्यो यथा वेण्यां सितासितः ।
दृष्ट्वा तीर्थं तु ते सर्वे गीर्वाणा हृष्टचेतसः ॥ ४९.२८ ॥
देवस्य सन्निधौ भूत्वा वर्णयामासुरुत्तमम् ।
इदं तीर्थं तु देवेश गयातीर्थेन ते समम् ॥ ४९.२९ ॥
गुह्याद्गुह्यतमं तीर्थं न भूतं न भविष्यति ।
शूलपाणिः समभ्यर्च्य इन्द्राद्यैरप्सरोगणैः ॥ ४९.३० ॥
यक्षकिन्नरगन्धर्वैर्दिक्पालैर्लोकपैरपि ।
नृत्यगीतैस्तथा स्तोत्रैः सर्वैश्चापि सुरासुरैः ॥ ४९.३१ ॥
पूज्यमानो गणैः सर्वैः सिद्धैर्नागैर्महेश्वरः ।
देवेन भेदितं तत्र शूलाग्रेण नराधिप ॥ ४९.३२ ॥
त्रिधा यत्रेक्ष्यतेऽद्यापि ह्यावर्तः सुरपूरितः ।
कुण्डत्रयं नरव्याघ्र महत्कलकलान्वितम् ॥ ४९.३३ ॥
सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् ।
तत्र तीर्थे तु यः स्नाति उपवासपरायणः ॥ ४९.३४ ॥
दीक्षामन्त्रविहीनोऽपि मुच्यते चाब्दिकादघात् ।
ये पुनर्विधिवत्स्नान्ति मन्त्रैः पञ्चभिरेव च ॥ ४९.३५ ॥
वेदोक्तैः पञ्चभिर्मन्त्रैः सहिरण्यघटैः शुभैः ।
अक्षरैर्दशभिश्चैव षड्भिर्वा त्रिभिरेव वा ॥ ४९.३६ ॥
पृथग्भूतैर्द्विजातीनां तीर्थे कार्यं नराधिप ।
ब्रह्मक्षत्रविशां वापि स्त्रीशूद्राणां तथैव च ॥ ४९.३७ ॥
पुरुषाणां त्रयीं ध्यात्वा स्नानं कुर्याद्यथाविधि ।
दशाक्षरेण मन्त्रेण ये पिबन्ति जलं नराः ॥ ४९.३८ ॥
ते गच्छन्ति परं लोकं यत्र देवो महेश्वरः ।
केदारे च यथा पीतं रुद्रकुण्डे तथैव च ॥ ४९.३९ ॥
पञ्चरेफसमायुक्तं क्षकारं सुरपूजितम् ।
ओङ्कारेण समायुक्तमेतद्देयं प्रकीर्तितम् ॥ ४९.४० ॥
यस्तत्र कुरुते स्नानं विधियुक्तो जितेन्द्रियः ।
तिलमिश्रेण तोयेन तर्पयेत्पितृदेवताः ॥ ४९.४१ ॥
कुलानां तारयेद्विंशं दशपूर्वान्दशापरान् ।
गयादिपञ्चस्थानेषु यः श्राद्धं कुरुते नरः ॥ ४९.४२ ॥
स तत्र फलमाप्नोति शूलभेदे न संशयः ।

यस्तत्र विधिना युक्तो दद्याद्दानानि भक्तितः ॥ ४९.४३ ॥
तुदक्षयं फलं तत्र सुकृतं दुष्कृतं तथा ।
गयाशिरो यथा पुण्यं पितृकार्येषु सर्वदा ॥ ४९.४४ ॥
शूलभेदं तथा पुण्यं स्नानदानादितर्पणैः ।
भक्त्या ददाति यस्तत्र काञ्चनं गां महीं तिलान् ॥ ४९.४५ ॥
आसनोपानहौ शय्यां वराश्वान् क्षत्रियस्तथा ।
वस्त्रयुग्मं च धान्यं च गृहं पूर्णं प्रयत्नतः ॥ ४९.४६ ॥
सयोक्त्रं लाङ्गलं दद्यात्कृष्टां चैव वसुंधराम् ।
दानान्येतानि यो दद्याद्ब्राह्मणे वेदपारगे ॥ ४९.४७ ॥
श्रोत्रिये कुलसम्पन्ने शुचिष्मति जितेन्द्रिये ।
श्रुताध्ययनसम्पन्ने दम्भहीने क्रियान्विते ।
त्रयोदशाहःस्वेकैकं त्रयोदशगुणं भवेत् ॥ ४९.४८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदोत्पत्तिमाहात्म्यवर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०५०

https://sa.wikisource.org/s/fmu



अध्याय ५०

उत्तानपाद उवाच -

द्विजाश्च कीदृशाः पूज्या अपूज्याः कीदृशाः स्मृताः ।
श्राद्धे वैवाहिके कार्ये दाने चैव विशेषतः ॥ ५०.१ ॥
यदि श्रद्धा भवेद्दैवयोगाच्छ्राद्धादिके विधौ ।
एतदाख्याहि मे देव कस्य दानं न दीयते ॥ ५०.२ ॥

ईश्वर उवाच -

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ५०.३ ॥
यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ ५०.४ ॥
यथाऽनृणे बीजमुप्त्वा वप्ता न लभते फलम् ।
तथानृचे हविर्दत्त्वा न दाता लभते फलम् ॥ ५०.५ ॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी श्यावदन्तः सर्वाशी वृषलीपतिः ॥ ५०.६ ॥
मित्रध्रुक्पिशुनः सोमविक्रयी परनिन्दकः ।
पितृमातृगुरुत्यागी नित्यं ब्राह्मणनिन्दकः ॥ ५०.७ ॥
शूद्रान्नं मन्त्रसंयुक्तं यो विप्रो भक्षयेन्नृप ।
सोऽस्पृश्यः कर्मचाण्डालः स्पृष्ट्वा स्नानं समाचरेत् ॥ ५०.८ ॥
कुनखी वृषली स्तेयी वार्द्धुष्यः कुण्डगोलकौ ।
महादानरतो यश्च यश्चात्महनने रतः ॥ ५०.९ ॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
एते विप्राः सदा त्याज्याः परिभाव्य प्रयत्नतः ॥ ५०.१० ॥
प्रतिग्रहं गृहीत्वा तु वाणिज्यं यस्तु कारयेत् ।

तस्य दानं न दातव्यं वृथा भवति तस्य तत् ॥ ५०.११ ॥
श्रुताध्ययनसम्पन्ना ये द्विजा वृत्ततत्पराः ।
तेषां यद्दीयते दानं सर्वमक्षयतां व्रजेत् ॥ ५०.१२ ॥
दरिद्रान्भर भूपाल मा समृद्धान् कदाचन ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ५०.१३ ॥

उत्तानपाद उवाच -
कीदृशोऽथ विधिस्तत्र तीर्थश्राद्धस्य का क्रिया ।
दानं च दीयते यद्वत्तन्ममाख्याहि शङ्कर ॥ ५०.१४ ॥

ईश्वर उवाच -
श्राद्धं कृत्वा गृहे भक्त्या शुचिश्चापि जितेन्द्रियः ।
गुरुं प्रदक्षिणीकृत्य भोज्य सीमान्तके ततः ॥ ५०.१५ ॥
वाग्यतः प्रव्रजेत्तावद्यावत्सीमां न लङ्घयेत् ।
शूलभेदं ततो गत्वा स्नानं कुर्याद्यथाविधि ॥ ५०.१६ ॥
पञ्चस्थानेषु च श्राद्धं हव्यकव्यादिभिः क्रमात् ।
पिण्डदानं च यः कुर्यात्पायसैर्मधुसर्पिषा ॥ ५०.१७ ॥
पितरस्तस्य तृप्यन्ति द्वादशाब्दानि पञ्च च ।
अक्षतैर्बदरैर्बिल्वैर्गुदमधुसर्पिषा ॥ ५०.१८ ॥
सापि तत्फलमाप्नोति तीर्थेऽस्मिन्नात्र संशयः ।
उपानहौ च यो दद्याद्ब्राह्मणेभ्यः प्रयत्नतः ॥ ५०.१९ ॥
सोऽपि स्वर्गमवाप्नोति हयारूढो न संशयः ।
शय्यामश्वं च यो दद्याच्छत्त्रिकां वा विशेषतः ॥ ५०.२० ॥
गच्छेद्विमानमारूढः सोऽप्सरोवृन्दवेष्टितः ।
उत्तमं यो गृहं दद्यात्सप्तधान्यसमन्वितम् ॥ ५०.२१ ॥
स्वेच्छया मे वसेल्लोके काञ्चने भवने हि सः ।
तिलधेनुं च यो दद्यात्सवत्सां वस्त्रसंप्लुताम् ॥ ५०.२२ ॥
नाकपृष्ठे वसेत्तावद्यावदाभूतसम्प्लवम् ।
गृहे वा यदि वारण्ये तीर्थवर्त्मनि वा नृप ॥ ५०.२३ ॥
तोयमन्नं च यो दद्याद्यमलोकं स नेक्षते ।
सर्वदानानि दीयन्ते तेषां फलमवाप्यते ॥ ५०.२४ ॥
उदकं चात्र दानं च दद्यादभयमेव च ।

अन्नदानात्परं दानं न भूतं न भविष्यति ॥ ५०.२५ ॥
कन्यादानं तु यः कुर्याद्वृषं वा यः समुत्सृजेत् ।
तस्य वासो भवेत्तत्र यत्राहमिति नान्यथा ॥ ५०.२६ ॥

उत्तानपाद उवाच -
कन्यादानं कथं स्वामिन् कर्तव्यं धार्मिकैः सदा ।
परिग्रहो यथा पोष्यः कन्योद्वाहस्तथैव च ॥ ५०.२७ ॥
अन्यत्पृच्छामि देवेश कस्य कन्या न दीयते ।
दातव्यं कुत्र तद्देव कस्मै दत्तमथाक्षयम् ॥ ५०.२८ ॥
उत्तमं मध्यमं वापि कनीयः स्यात्कथं विभो ।
राजसं तामसं वापि निःश्रेयसमथापि वा ॥ ५०.२९ ॥

ईश्वर उवाच -
सर्वेषामेव दानानां कन्यादानं विशिष्यते ।
यो दद्यात्परया भक्त्याभिगम्य तनयां निजाम् ॥ ५०.३० ॥
कुलीनाय सुरूपाय गुणज्ञाय मनीषिणे ।
सुलग्ने सुमुहूर्ते च दद्यात्कन्यामलंकृताम् ॥ ५०.३१ ॥
अश्वान्ना गांश्च वासांसि योऽत्र दद्यात्स्वशक्तितः ।
तस्य वासो भवेत्तत्र पदं यत्र निरामयम् ॥ ५०.३२ ॥
येनात्र दुहिता दत्ता प्राणेभ्योऽपि गरीयसी ।
तेन सर्वमिदं दत्तं त्रैलोक्यं सचराचरम् ॥ ५०.३३ ॥
यः कन्यार्थं ततो लब्ध्वा भिक्षते चैव तद्धनम् ।
स भवेत्कर्मचण्डालः काष्ठकीलो भवेन्मृतः ॥ ५०.३४ ॥
गृहेऽपि तस्य योऽश्नीयाज्जिह्वालौल्यात्कथंचन ।
चान्द्रायणेन शुध्येत तप्तकृच्छ्रेण वा पुनः ॥ ५०.३५ ॥

उत्तानपाद उवाच -
वित्तं न विद्यते यस्य कन्यैवास्ति च यद्गृहे ।
कथं चोद्वाहनं तस्य न याञ्चां कुरुते यदि ॥ ५०.३६ ॥

ईश्वर उवाच -
अवित्तेनैव कर्तव्यं कन्योद्वहनकं नृप ।

कन्यानाम समुच्चार्य न दोषाय कदाचन ॥ ५०.३७ ॥
अभिगम्योत्तमं दानं यच्च दानमयाचितम् ।
भविष्यति युगस्यान्तस्तस्यान्तो नैव विद्यते ॥ ५०.३८ ॥
अभिगम्योत्तमं दानं स्मृतमाहूय मध्यमम् ।
याच्यमानं कनीयः स्याद्देहि देहीति चाधमम् ॥ ५०.३९ ॥
यथैवाश्माश्मनाबद्धो निक्षिप्तो वारिमध्यतः ।
द्वावेतौ निधनं यातस्तद्वदन्नमपात्रके ॥ ५०.४० ॥
असमर्थे ततो दानं न प्रदेयं कदाचन ।
दातारं नयतेऽधस्तादात्मानं च विशेषतः ॥ ५०.४१ ॥
समर्थस्तारयेद्द्वौ तु काष्ठं शुष्कं यथा जले ।
यथा नौश्च तथा विद्वान्प्रापयेदपरं तटम् ॥ ५०.४२ ॥
आहिताग्निश्च गृह्णाति यः शूद्राणां प्रतिग्रहम् ।
इह जन्मनि शूद्रोऽसौ मृतः श्वा चोपजायते ॥ ५०.४३ ॥
वृथा क्लेशश्च जायेत ब्राह्मणे ह्यग्निहोत्रिणि ।
असत्प्रतिग्रहं कुर्वन्गुप्तं नीचस्य गर्हितम् ॥ ५०.४४ ॥
अभोज्यः स भवेन्मर्त्यो दह्यते कारिषाग्निना ।
कटकारो भवेत्पश्चात्सप्त जन्म न संशयः ॥ ५०.४५ ॥
लज्जादाक्षिण्यलोभाच्च यद्दानं चोपरोधजम् ।
भृत्येभ्यश्च तु यद्दानं तद्वृथा निष्फलं भवेत् ॥ ५०.४६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये पात्रापात्रपरीक्षादानादिनियमवर्णनं नाम पञ्चाशत्तमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०५१

https://sa.wikisource.org/s/fnc

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ५१

उत्तानपाद उवाच -
काले तत्क्रियते कस्मिञ्छ्राद्धं दानं तथेश्वर ।
यात्रा तत्र प्रकर्तव्या तिथौ यस्यां वदाशु तत् ॥ ५१.१ ॥

ईश्वर उवाच -
पितृतीर्थं यथा पुण्यं सर्वकामिकमुत्तमम् ।
इदं तीर्थं तथा पुण्यं स्नानदानादितर्पणैः ॥ ५१.२ ॥
विशेषेण तु कुर्वीत श्राद्धं सर्वयुगादिषु ।
मन्वन्तरादयो वत्स श्रूयन्तां च चतुर्दश ॥ ५१.३ ॥
अश्वयुक्छुक्लनवमी द्वादशी कार्त्तिकस्य च ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ ५१.४ ॥
आषाढस्यैव दशमी माघस्यैव तु सप्तमी ।
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ॥ ५१.५ ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥ ५१.६ ॥
मन्वन्तरादयश्चैते अनन्तफलदाः स्मृताः ।
अयने चोत्तरे राजन्दक्षिणे श्राद्धमाचरेत् ॥ ५१.७ ॥
कार्त्तिकी च तथा माघी वैशाखस्य तृतीयिका ।
पौर्णमासी च चैत्रस्य ज्येष्ठस्य च विशेषतः ॥ ५१.८ ॥
अष्टकासु च संक्रान्तौ व्यतीपाते तथैव च ।
श्राद्धकाला इमे सर्वे दत्तमेष्वक्षयं स्मृतम् ॥ ५१.९ ॥
मधुमासे सिते पक्ष एकादश्यामुपोषितः ।
निशि जागरणं कुर्याद्विष्णुपादसमीपतः ॥ ५१.१० ॥
धूपदीपादिनैवेद्यैः स्रङ्मालागुरुचन्दनैः ।

अर्चां कुर्वन्ति ये विष्णोः पठेयुः प्राक्तनीं कथाम् ॥ ५१.११ ॥
ऋग्यजुःसाममन्त्रोक्तं सूक्तं जपति यो द्विजः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ५१.१२ ॥
प्रातः श्राद्धं प्रकुर्वीत द्विजान् सम्पूज्य यत्नतः ।
दानं दद्याद्यथाशक्ति गोहिरण्याम्बरादिकम् ॥ ५१.१३ ॥
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ।
श्राद्धदस्तु व्रजेत्तत्र यत्र देवो जनार्दनः ॥ ५१.१४ ॥
त्रयोदश्यां ततो गच्छेद्गुहावासिनि लिङ्गके ।
दृष्ट्वा मार्कण्डमीशानं मुच्यते सर्वपातकैः ॥ ५१.१५ ॥

उत्तानपाद उवाच -
गुहामध्ये महादेव लिङ्गं परमशोभितम् ।
येन प्रतिष्ठितं देव तन्ममाख्यातुमर्हसि ॥ ५१.१६ ॥

ईश्वर उवाच -
त्रिषु लोकेषु विख्यातो मार्कण्डेयो मुनीश्वरः ।
दिव्यं वर्षसहस्रं स तपस्तेपे सुदारुणम् ॥ ५१.१७ ॥
गुहामध्यं प्रविष्टोऽसौ योगाभ्यासमुपाश्रितः ।
लिङ्गं तु स्थापितं तेन मार्कण्डेश्वरसंज्ञितम् ॥ ५१.१८ ॥
तत्र स्नात्वा च यो भक्त्या सोपवासो जितेन्द्रियः ।
तत्र जागरणं कुर्वन् दद्याद्दीपं प्रयत्नतः ॥ ५१.१९ ॥
देवस्य स्नपनं कुर्यान्मृतैः पञ्चभिस्तथा ।
यथा शक्त्या समालभ्य पूजां कुर्याद्यथाविधि ॥ ५१.२० ॥
स्वशाखोत्पन्नमन्त्रैश्च जपं कुर्युर्द्विजातयः ।
सावित्र्यष्टसहस्रं तु शताष्टकमथापि वा ॥ ५१.२१ ॥
एतत्कृत्वा नृपश्रेष्ठ जन्मनः फलमाप्नुयात् ।
चतुर्दश्यां तु वै स्नात्वा पूजां कृत्वा यथाविधि ॥ ५१.२२ ॥
पात्रं परीक्ष्य दातव्यमात्मनः श्रेय इच्छता ।
पितरस्तस्य तृप्यन्ति द्वादशाब्दान्यसंशयम् ॥ ५१.२३ ॥
दाता स गच्छते तत्र यत्र भोगाः सनातनाः ।
गुहामध्ये प्रविष्टस्तु लोटयेच्चैव शक्तितः ॥ ५१.२४ ॥
नीले गिरौ हि यत्पुण्यं तत्समस्तं लभन्ति ते ।

शूलभेदे तु यः कुर्याच्छ्राद्धं पर्वणि पर्वणि ॥ ५१.२५ ॥
विशेषाच्चैत्रमासान्ते तस्य पुण्यफलं शृणु ।
केदारे चैव यत्पुण्यं गङ्गासागरसङ्गमे ॥ ५१.२६ ॥
सितासिते तु यत्पुण्यमन्यतीर्थे विशेषतः ।
अर्बुदे विद्यते पुण्यं पुण्यं चामरपर्वते ॥ ५१.२७ ॥
गयादिसर्वतीर्थानां फलमाप्नोति मानवः ।
विधिमन्त्रसमायुक्तस्तर्पयेत्पितृदेवताः ॥ ५१.२८ ॥
कुलानां तारयेद्विंशं दश पूर्वान् दशापरान् ।
दक्षिणस्यां ततो मूर्तौ शुचिर्भूत्वा समाहितः ॥ ५१.२९ ॥
न्यासं कृत्वा तु पूर्वोक्तं प्रदद्यादष्टपुष्पिकाम् ।
शास्त्रोक्तैरष्टभिः पुष्पैर्मानसैः शृणु तद्यथा ॥ ५१.३० ॥
वारिजं सौम्यमाग्नेयं वायव्यं पार्थिवं पुनः ।
वानस्पत्यं भवेत्षष्ठं प्राजापत्यं तु सप्तमम् ॥ ५१.३१ ॥
अष्टमं शिवपुष्पं स्यादेषां शृणु विनिर्णयम् ।
वारिजं सलिलं ज्ञेयं सौम्यं मधुघृतं पयः ॥ ५१.३२ ॥
आग्नेयं धूपदीपाद्यं वायव्यं चन्दनादिकम् ।
पार्थिवं कन्दमूलाद्यं वानस्पत्यं फलात्मकम् ॥ ५१.३३ ॥
प्राजापत्यं तु पाठाद्यं शिवपुष्पं तु वासना ।
अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ॥ ५१.३४ ॥
तृतीयं तु दया पुष्पं क्षमा पुष्पं चतुर्थकम् ।
ध्यानपुष्पं तपः पुष्पं ज्ञानपुष्पं तु सप्तमम् ॥ ५१.३५ ॥
सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यन्ति देवताः ।
भक्त्या तपस्विनः पूज्या ज्ञानिनश्च नराधिप ॥ ५१.३६ ॥
छत्रमावरणं दद्यादुपानद्युगलं तथा ।
तेन पूजितमात्रेण पूजिताः पुरुषास्त्रयः ॥ ५१.३७ ॥
स्वर्गलोके वसेत्तावद्यावदाभूतसम्प्लवम् ।
शूलपाणेस्तु भक्त्या वै जाप्यं कुर्वन्ति ये नराः ॥ ५१.३८ ॥
पञ्चामृतैः पञ्चगव्यैर्यक्षकर्दमकुङ्कुमैः ।
समालभेत देवेशं श्रीखण्डागुरुचन्दनैः ॥ ५१.३९ ॥
नानाविधैश्च ये पुष्पैरर्चां कुर्वन्ति शूलिनः ।
निशि जागरणं कुर्युर्दीपदानं प्रयत्नतः ॥ ५१.४० ॥
धूपनैवेद्यकं दद्यात्पठेत्पौराणिकीं कथाम् ।

तत्र स्थाने स्थिता भक्त्या जपं कुर्वन्ति ये नराः ॥ ५१.४१ ॥
श्रीसूक्तं पौरुषं सूक्तं पावमानं वृषाकपिम् ।
वेदोक्तैश्चैव मन्त्रैश्च रौद्रीं वा बहुरूपिणीम् ॥ ५१.४२ ॥
ब्राह्मणान् पूजयेद्भक्त्या पूजयित्वा प्रणम्य च ।
नानाविधैर्महाभोगैः शिवलोके महीयते ॥ ५१.४३ ॥
अग्निमित्यादि जाप्यानि ऋग्वेदी जपते तु यः ।
रुद्रान् पुरुषसूक्तं च श्लोकाध्यायं च शुक्रियम् ॥ ५१.४४ ॥
इषेत्वा दिकमन्त्रौघं ज्योतिर्ब्राह्मणमेव च ।
गायत्र्यं वै मधु चैव मण्डलब्राह्मणानि च ॥ ५१.४५ ॥
एताञ्जप्यांस्तु यो भक्त्या यजुर्वेदी जपेद्यदि ।
देवव्रतं वामदेव्यं पुरुषर्षभमेव च ॥ ५१.४६ ॥
बृहद्रथान्तरं चैव यो जपेद्भक्तितत्परः ।
स प्रयाति नरः स्थानं यत्र देवो महेश्वरः ॥ ५१.४७ ॥
पादशौचं तथाभ्यङ्गं कुरुते योऽत्र भक्तितः ।
गोदाने चैव यत्पुण्यं लभते नात्र संशयः ॥ ५१.४८ ॥
ब्राह्मणान् भोजयेत्तत्र मधुना पायसेन च ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥ ५१.४९ ॥
सुवर्णं रजतं वस्त्रं दद्याद्भक्त्या द्विजोत्तमे ।
तर्पितास्तेन देवाः स्युर्मनुष्याः पितरस्तथा ॥ ५१.५० ॥
चन्द्रसूर्यग्रहे भक्त्या स्नानं कुर्वन्ति ये नराः ।
देवार्चनं ये च कुर्युर्जपं होमं विशेषतः ।
दद्याद्दानं यथाशक्ति ब्राह्मणे वेदपारगे ॥ ५१.५१ ॥
अश्वं रथं गजं यानं तुलापुरुषमेव च ।
शकटं यः प्रदद्याद्वा सप्तधान्यप्रपूरितम् ॥ ५१.५२ ॥
सयोक्त्रं लाङ्गलं दद्याद्युवानौ तु धुरंधरौ ।
गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥ ५१.५३ ॥
अपात्रे विदुषा किंचिन्न देयं भूतिमिच्छता ।
यतोऽसौ सर्वभूतानि दधाति धरणी किल ॥ ५१.५४ ॥
ततो विप्राय सा देया सर्वसस्यौघमालिनी ।
अथान्यच्छृणु राजेन्द्र गोदानस्य तु यत्फलम् ॥ ५१.५५ ॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ५१.५६ ॥

येन केनाप्युपायेन ब्राह्मणे तां समर्पयेत् ।
पृथ्वी दत्ता भवेत्तेन सशैलवनकानना ॥ ५१.५७ ॥
तारयेन्नियतं दत्ता कुलानामेकविंशतिम् ।
रौप्यखुरीं कांस्यदोहां सवस्त्रां च पयस्विनीम् ॥ ५१.५८ ॥
ये प्रयच्छन्ति कृतिनो ग्रस्ते सूर्ये निशाकरे ।
तेषां संख्यां न जानामि पुण्यस्याब्दशातैरपि ॥ ५१.५९ ॥
सर्वस्यापि हि दानस्य संख्यास्तीह नराधिप ।
चन्द्रसूर्योपरागे च दानसंख्या न विद्यते ॥ ५१.६० ॥
यत्र गौर्दृश्यते राजन् सर्वतीर्थानि तत्र हि ।
तत्र पर्व विजानीयान्नात्र कार्या विचारणा ॥ ५१.६१ ॥
पुनः स्मृत्वा तु तत्तीर्थं यः कुर्याद्गमनं नरः ।
अथवा म्रियते योऽत्र रुद्रस्यानुचरो भवेत् ॥ ५१.६२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदे दानधर्मप्रशंसावर्णनं नामैकपञ्चाशत्तमोऽध्यायः ॥

अध्याय ५२

ईश्वर उवाच -
अन्यदाख्यानकं वक्ष्ये पुरा वृत्तं नराधिप ।
सकुटुम्बो गतः स्वर्गं मुनिर्यत्र महातपाः ॥ ५२.१ ॥

उत्तानपाद उवाच -
कथं नाकं गतो विप्रः सकुटुम्बो महानृषिः ।
कौतुकं परमं देव कथयस्व मम प्रभो ॥ ५२.२ ॥

ईश्वर उवाच -
चित्रसेन इति ख्यातः काशीराजः पुराभवत् ।
शूरो दाता सुधर्मात्मा सर्वकामसमृद्धिमान् ॥ ५२.३ ॥
सा पुरी जनसंकीर्णा नानारत्नोपशोभिता ।
वाराणसीति विख्याता गङ्गातीरमुपाश्रिता ॥ ५२.४ ॥
शरच्चन्द्रप्रतीकाशा विद्वज्जनविभूषिता ।
इन्द्रयष्टिसमाकीर्णा गोपगोकुलसंवृता ॥ ५२.५ ॥
बहुध्वजसमाकीर्णा वेदध्वनिनिनादिता ।
वणिग्जनैर्बहुविधैः क्रयविक्रयशालिनी ॥ ५२.६ ॥
यन्त्रादानैः प्रतोलीभिरुच्चैश्चान्यैः सुशोभिता ।
देवतायतनैर्दिव्यैराश्रमैर्गहनैर्युता ॥ ५२.७ ॥
नानापुष्पफलैर्रम्या कदलीखण्डमण्डिता ।
पनसैर्बकुलैस्तालैरशोकैराम्रकैस्तथा ॥ ५२.८ ॥
राजवृक्षकपित्थैश्च दाडिमैरुपशोभिता ।
वेदाध्ययननिर्घोषैः पवित्रीकृतमङ्गला ॥ ५२.९ ॥
तस्या उत्तरदिग्भागे आश्रमोऽभूत्सुशोभनः ।
तन्मन्दारवनं नाम त्रिषु लोकेषु विश्रुतम् ॥ ५२.१० ॥
बहुमन्दारसंयुक्तं तेन मन्दारकं विदुः ।
विप्रो दीर्घतपा नाम सर्वदा तत्र तिष्ठति ॥ ५२.११ ॥
तपस्तपति सोऽत्यर्थं तेन दीर्घतपाः स्मृतः ।
स तिष्ठति सपत्नीकः ससुतः सस्नुषस्तथा ॥ ५२.१२ ॥
शुश्रूषन्ति सदा तस्य पुत्राः पञ्च प्रयत्नतः ।
तस्य पुत्रः कनीयांस्तु ऋक्षशृङ्गो महातपाः ॥ ५२.१३ ॥
वेदाध्ययनसम्पन्नो ब्रह्मचारी गुणान्वितः ।

योगाभ्यासरतो नित्यं कन्दमूलफलाशनः ॥ ५२.१४ ॥
तिष्ठते मृगरूपेण मृगयूथचरस्तदा ।
दिनान्ते च दिनान्ते च मातापित्रोः समीपगः ॥ ५२.१५ ॥
अभिवादयते नित्यं भक्तिमान्मुनिपुत्रकः ।
पुनर्गच्छति तत्रैव कानने गिरिगह्वरे ॥ ५२.१६ ॥
क्रीडन्बालमृगैः सार्द्धं प्रत्यहं स मुनेः सुतः ।
कदाचिद्दैवयोगेन ऋक्षशृङ्गो ममार सः ॥ ५२.१७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये ऋक्षशृङ्गचरित्रे दीर्घतपोमुन्याख्यानवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥

अध्याय ५३

उत्तानपाद उवाच -
आश्रमे वसतस्तस्य स दीर्घतपसो मुनेः ।
कनीयांस्तनयो देव कथं मृत्युमुपागतः ॥ ५३.१ ॥

ईश्वर उवाच -
शृणुष्वैकमना भूत्वा कथां दिव्यां महीपते ।
श्रवणादेव यस्यास्तु मुच्यते सर्वकिल्बिषैः ॥ ५३.२ ॥
काशीराजो महावीर्यो महाबलपराक्रमः ।
चित्रसेन इति ख्यातां धरण्यां स नराधिप ॥ ५३.३ ॥
तस्य राज्ये सदा धर्मो नाधर्मो विद्यते क्वचित् ।
वेदधर्मरतो नित्यं प्रजा धर्मेण पालयन् ॥ ५३.४ ॥
स्वधर्मनिरतश्चैव युद्धातिथ्यप्रियः सदा ।
क्षत्रधर्मं समाश्रित्य भोगान्भुङ्क्ते स कामतः ॥ ५३.५ ॥
कोशस्यान्तो न विद्येत हस्त्यश्वरथपत्तिमान् ।
इतिहासपुराणज्ञैः पण्डितैः सह संकथाम् ॥ ५३.६ ॥
कथयन्राजते राजा कैलास इव शङ्करः ।
एवं स पालयन्राज्यं राजा मन्त्रिणमब्रवीत् ॥ ५३.७ ॥
मृगयायां गमिष्यामि तिष्ठध्वं राज्यपालने ।
गम्यतां सचिवैः प्रोक्ते गतोऽसौ वसुधाधिपः ॥ ५३.८ ॥
अश्वारूढाश्च धावन्तो राजानो मण्डलाधिपाः ।
छत्रैश्छत्राणि घृष्यन्तोऽनुजग्मुः काननं प्रति ॥ ५३.९ ॥
रजस्तत्रोत्थितं भौमं गजवाजिपदाहतम् ।
तेनैतच्छादितं सर्वं सदिङ्मार्तण्डमंलम् ॥ ५३.१० ॥
न तत्र दृश्यते सूर्यो न काष्ठा न च चन्द्रमाः ।
पादपाश्च न दृश्यन्ते गिरिशृङ्गाणि सर्वतः ॥ ५३.११ ॥
परस्परं न पश्यन्ति निशार्द्धे वार्षिके यथा ।
तत्रासौ सुमहद्यूथं मृगाणां समलक्ष्यत ॥ ५३.१२ ॥
अधावत्सहितः सर्वैः स राजा राजपुत्रकैः ।
वृन्दास्फोटोऽभवत्तेषां शीघ्रं जग्मुर्दिशो दश ॥ ५३.१३ ॥
एकमार्गगतो राजा चित्रसेनो महीपतिः ।
एकाकी स गतस्तत्र यत्र यत्र च ते मृगाः ॥ ५३.१४ ॥
प्रविष्टोऽसौ ततो दुर्गं काननं गिरिगह्वरम् ।

वल्लीगुल्मसमाकीर्णं स्थितो यत्र न लक्ष्यते ॥ ५३.१५ ॥
अदृश्यांस्तु मृगान्मत्वा दिशो राजा व्यलोकयत् ।
कां दिशं नु गमिष्यामि क्व मे सैन्यसमागमः ॥ ५३.१६ ॥
एवं कष्टं गतो राजा चित्रसेनो नराधिपः ।
वृक्षच्छायां समाश्रित्य विश्राममकरोन्नृपः ॥ ५३.१७ ॥
क्षुत्तृषार्तो भ्रमन्दुर्गे कानने गिरिगह्वरे ।
ततोऽपश्यत्सरो दिव्यं पद्मिनीखण्डमण्डितम् ॥ ५३.१८ ॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
ततो दृष्ट्वा स राजेन्द्रः सम्प्रहृष्टतनूरुहः ॥ ५३.१९ ॥
कमलानि गृहीत्वा तु ततः स्नानं समाचरत् ।
तर्पयित्वा पितृदेवान्मनुष्यांश्च यथाविधि ॥ ५३.२० ॥
आच्छाद्य शतपत्रैश्च पूजयामास शङ्करम् ।
ययौ पानीयममलं यथावत्स समाहितः ॥ ५३.२१ ॥
उत्तीर्य सलिलात्तीरे दृष्ट्वा वृक्षं समीपगम् ।
उत्तरीयमधः कृत्वोपविष्टो धरणीतले ॥ ५३.२२ ॥
चिन्तयन्नुपविष्टोऽसौ किमद्य प्रकरोम्यहम् ।
तत्रासीनो ददर्शाथ वनोद्देशे मृगान्बहून् ॥ ५३.२३ ॥
केचित्पूर्वमुखास्तत्र चापरे दक्षिणामुखाः ।
वारुण्यमिमुखाः केचित्केचित्कौबेरदिङ्मुखाः ॥ ५३.२४ ॥
केचिन्निद्रापराः केचिदूर्ध्वकर्णाः स्थिताः परे ।
मृगमध्ये स्थितो योगी ऋक्षशृङ्गो महातपाः ॥ ५३.२५ ॥
मृगान्दृष्ट्वा ततो राजा आहारार्थमचिन्तयत् ।
हत्वैतेषु मृगं कंचिद्भक्षयामि यदृच्छया ॥ ५३.२६ ॥
स्वस्थावस्थो भविष्यामि मृगमांसस्य भक्षणात् ।
काशीं प्रति गमिष्यामि मार्गमन्विष्य यत्नतः ॥ ५३.२७ ॥
विचिन्त्यैवं ततो राजा वृक्षमूलमुपाश्रितः ।
चापं गृह्य कराग्रेण स शरं संदधे ततः ॥ ५३.२८ ॥
विचिक्षेप शरं तत्र यत्र ते बहवो मृगाः ।
तेषां मध्ये स वै विद्ध ऋक्षशृङ्गो महातपाः ॥ ५३.२९ ॥
जग्मुस्त्रस्तास्तु ते सर्वे शब्दं कृत्वा वनौकसः ।
स ऋषिः पतितस्तत्र कृष्ण कृष्णेति चाब्रवीत् ॥ ५३.३० ॥
हाहा कष्टं कृतं तेन येनाहं घातितोऽधुना ।
कस्यैषा दुर्मतिर्जाता पापबुद्धेर्ममोपरि ॥ ५३.३१ ॥

मृगमध्ये स्थितश्चाहं न कंचिदुपरोधये ।
तां वाचं मानुषीं श्रुत्वा स राजा विस्मयान्वितः ॥ ५३.३२ ॥
शीघ्रं गत्वा ततोऽपश्यद्ब्राह्मणं ब्रह्मतेजसा ।
हाहा कष्टं कृतं मेऽद्य येनासौ घातितो द्विजः ॥ ५३.३३ ॥

चित्रसेन उवाच -
अकामाद्घातितस्त्वं तु मृगभ्रान्त्या मयानघ ।
गृहीत्वा बहुदारूणि स्वतनुं दाहयाम्यहम् ॥ ५३.३४ ॥
दृष्टादृष्टं तु यत्किंचिन्न समं ब्रह्महत्यया ।
अन्यथा ब्रह्महत्यायाः शुद्धिर्मे न भविष्यति ॥ ५३.३५ ॥

ऋक्षशृङ्ग उवाच -
न ते सिद्धिर्भवेत्काचिन्मयि पञ्चत्वमागते ।
बह्व्यो हत्या भविष्यन्ति विनाशे मम साम्प्रतम् ॥ ५३.३६ ॥
जननी मे पिता वृद्धो भ्रातरश्च तपस्विनः ।
भ्रातृजाया मरिष्यन्ति मयि पञ्चत्वमागते ॥ ५३.३७ ॥
एता हत्या भविष्यन्ति कथं शुद्धिर्भवेत्तव ।
उपायं कथयिष्यामि तं कर्तुं यदि मन्यसे ॥ ५३.३८ ॥

चित्रसेन उवाच -
उपायः कथ्यतां मेऽद्य यस्ते मनसि वर्तते ।
करिष्ये तमहं सर्वं यत्नेनापि महामुने ॥ ५३.३९ ॥

ऋक्षशृङ्ग उवाच -
पृच्छामि त्वां कथं को वा कुतस्त्वमिह चागतः ।
ब्रह्मक्षत्रविशां मध्ये को भवानुत शूद्रजः ॥ ५३.४० ॥

चित्रसेन उवाच -
नाहं शूद्रोऽस्मि भोस्तात न वैश्यो ब्राह्मणो न वा ।
न चान्त्यजोऽस्मि विप्रेन्द्र क्षत्रियोऽस्मि महामुने ॥ ५३.४१ ॥
धर्मज्ञश्च कृतज्ञश्च सर्वसत्त्वहिते रतः ।
अकामात्पातकं जातं कथं शुद्धिर्भविष्यति ॥ ५३.४२ ॥

ऋक्षशृङ्ग उवाच -
मां गृहीत्वा आश्रमं गच्छ यत्र तौ पितरौ मम ।

आवेदयस्व चात्मानं पुत्रघातिनमातुरम् ॥ ५३.४३ ॥
ते दृष्ट्वा मां करिष्यन्ति कारुण्यं च तवोपरि ।
उपायं कथयिष्यन्ति येन शान्तिर्भविष्यति ॥ ५३.४४ ॥
तस्य तद्वचनं श्रुत्वा चित्रसेनो नृपोत्तम ।
स्कन्धे कृत्वा तु तं विप्रं जगामाश्रमसन्निधौ ॥ ५३.४५ ॥
न शक्नोति यदा वोढुं विश्राम्यति पुनःपुनः ।
तावत्पश्यति तं विप्रं मूर्छितं विकलेन्द्रियम् ॥ ५३.४६ ॥
मुमोच चित्रसेनस्तं छायायां वटभूरुहः ।
वस्त्रं चतुर्गुणं कृत्वा चक्रे वातं मुहुर्मुहुः ॥ ५३.४७ ॥
पश्यतस्तस्य राजेन्द्र ऋक्षशृङ्गो महातपाः ।
पञ्चत्वमगमच्छीघ्रं ध्यानयोगेन योगवित् ॥ ५३.४८ ॥
दाहयामास तं विप्रं विधिदृष्टेन कर्मणा ।
स्नानं कृत्वा स शोकार्तो विललाप मुहुर्मुहुः ॥ ५३.४९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये ऋक्षशृङ्गस्वर्गगमनवर्णनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥

अध्याय ५४

ईश्वर उवाच -
ततश्चानन्तरं राजा जगामोद्वेगमुत्तमम् ।
कथं यामि गृहं त्वद्य वाराणस्यामहं पुनः ॥ ५४.१ ॥
ब्रह्महत्यासमाविष्टो जुहोम्यग्नौ कलेवरम् ।
अथवा तस्य वाक्येन तं गच्छाम्याश्रमं प्रति ॥ ५४.२ ॥
कथयामि यथावृत्तं गत्वा तस्य महामुनेः ।
एवं संचिन्त्य राजासौ जगामाश्रमसन्निधौ ॥ ५४.३ ॥
ऋक्षशृङ्गस्य चास्थीनि गृहीत्वा स नृपोत्तमः ।
दृष्टिमार्गे स्थितस्तस्य महर्षेर्भावितात्मनः ॥ ५४.४ ॥

दीर्घतपा उवाच -
आगच्छ स्वागतं तेऽस्तु आसनेऽत्रोपविश्यताम् ।
अर्घं ददाम्यहं येन मधुपर्कं सविष्टरम् ॥ ५४.५ ॥

चित्रसेन उवाच -
अर्घस्यास्य न योग्योऽहं महर्षे नास्मि भाषणे ।
मृगमध्यस्थितो विप्रस्तव पुत्रो मया हतः ॥ ५४.६ ॥
पुत्रघ्नं विद्धि मां विप्र तीव्रदण्डेन दण्डय ।
मृगभ्रान्त्या हतो विप्र ऋक्षशृङ्गो महातपाः ॥ ५४.७ ॥
इति मत्वा मुनिश्रेष्ठ कुरु मे त्वं यथोचितम् ।
माता तद्वचनं श्रुत्वा गृहान्निष्क्रम्य विह्वला ॥ ५४.८ ॥
हा हतास्मीत्युवाचेदं पपात धरणीतले ।
विललाप सुदुःखार्ता पुत्रशोकेन पीडिता ॥ ५४.९ ॥
हा हता पुत्र पुत्रेति करुणं कुररी यथा ।
विललापातुरा माता क्व गतो मां विहाय वै ।
मुखं दर्शय चात्मीयं मातरं मां हि मानय ॥ ५४.१० ॥
श्रुताध्ययनसम्पन्नं जपहोमपरायणम् ।
आगतं त्वां गृहद्वारे कदा द्रक्ष्यामि पुत्रक ॥ ५४.११ ॥
लोकोक्त्या श्रूयते चैतच्चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ ५४.१२ ॥
किं चन्दनेन पीयूपबिन्दुना किं किमिन्दुना ॥ ५४.१३ ॥
पुत्रगात्रपरिष्वङ्गपात्रं गात्रं भवेद्यदि ॥ ५४.१४ ॥

परिष्वजितुमिच्छामि त्वामहं पुत्र सुप्रिय ।
पञ्चत्वमनुयास्यामि त्वद्विहीनाद्य दुःखिता ॥ ५४.१५ ॥
एवं विलपती दीना पुत्रशोकेन पीडिता ।
मूर्छिता विह्वला दीना निपपात महीतले ॥ ५४.१६ ॥
भार्यां च पतितां दृष्ट्वा पुत्रशोकेन पीडिताम् ।
चुकोप स मुनिस्तत्र चित्रसेनाय भूभृते ॥ ५४.१७ ॥

दीर्घतपा उवाच -
याहि याहि महापाप मा मुखं दर्शयस्व मे ।
किं त्वया घातितो विप्रो ह्यकामाच्च सुतो मम ॥ ५४.१८ ॥
ब्रह्महत्या भविष्यन्ति बह्व्यस्ते वसुधाधिप ।
सकुटुम्बस्य मे त्वं हि मृत्युरेष उपस्थितः ॥ ५४.१९ ॥
एवमुक्त्वा ततो विप्रो विचिन्त्य च पुनःपुनः ।
परित्यज्य तदा क्रोधं मुनिभावाज्जगाद ह ॥ ५४.२० ॥

दीर्घतपा उवाच -
उद्वेगं त्यज भो वत्स दुरुक्तं गदितो मया ।
पुत्रशोकाभिभूतेन दुःखतप्तेन मानद ॥ ५४.२१ ॥
किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः ।
प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ ५४.२२ ॥
अनेनैव विधानेन पञ्चत्वं विहितं मम ।
हत्यास्तव भविष्यन्ति पूर्वमुक्ता न संशयः ॥ ५४.२३ ॥
ब्रह्मक्षत्रविशां मध्ये शूद्रचण्डालजातिषु ।
कस्त्वं कथय सत्यं मे कस्माच्च निहतो द्विजः ॥ ५४.२४ ॥

चित्रसेन उवाच -
विज्ञापयामि विप्रर्षे क्षन्तव्यं ते ममोपरि ।
नाहं विप्रोऽस्मि वै तात न वैश्यो न च शूद्रजः ॥ ५४.२५ ॥
न व्याधश्चान्त्यजातो वा क्षत्रियोऽहं महामुने ।
काशीराजो मृगान् हन्तुमागतो वनमुत्तमम् ॥ ५४.२६ ॥
भ्रान्त्या निपातितो ह्येष मृगरूपधरो मुनिः ।
इदानीं तव पादान्ते संश्रितः पातकान्वितः ॥ ५४.२७ ॥
किं कर्तव्यं मया विप्र उपायं कथयस्व मे ॥ ५४.२८ ॥

दीर्घतपा उवाच -

ब्रह्महत्या न शक्येताप्येका निस्तरितुं प्रभो ।
दशैका च कथं शक्यास्ताः शृणुष्व नरेश्वर ॥ ५४.२९ ॥
चत्वारो मे सुता राजन् सभार्या मातृपूर्वकाः ।
मया सह न जीवन्ति ऋक्षशृङ्गस्य कारणे ॥ ५४.३० ॥
उपायं शोभनं तात कथयिष्ये शृणुष्व तम् ।
शक्रोऽपि यदि तं कर्तुं सुखोपायं नरेश्वर ॥ ५४.३१ ॥
सकुटुम्बं समस्तं मां दाहयित्वानले नृप ।
अस्थीनि नर्मदातोये शूलभेदे विनिक्षिप ॥ ५४.३२ ॥
नर्मदादक्षिणे कूले शूलभेदं हि विश्रुतम् ।
सर्वपापहरं तीर्थं सर्वदुःखघ्नमुत्तमम् ॥ ५४.३३ ॥
शुचिर्भूत्वा ममास्थीनि तत्र तीर्थे विनिक्षिप ।
मोक्ष्यसे सर्वपापैस्त्वं मम वाक्यान्न संशयः ॥ ५४.३४ ॥

राजोवाच -
आदेशो दीयतां तात करिष्यामि न संशयः ।
समस्तं मेऽस्ति यत्किंचिद्राज्यं कोशः सुहृत्सुताः ॥ ५४.३५ ॥
तवाधीनं महाविप्र प्रयच्छामि प्रसीद मे ।
परस्परं विवदतोर्विप्र राज्ञोस्तदा नृप ॥ ५४.३६ ॥
स्फुटित्वा हृदयं शीघ्रं मुनिभार्या मृता तदा ।
पुत्रशोकसमाविष्टा निर्जीवा पतिता क्षितौ ॥ ५४.३७ ॥
पुत्राश्च मातृशोकेन सर्वे पञ्चत्वमागताः ।
स्नुषाश्चैव तदा सर्वा मृताश्च सह भर्तृभिः ॥ ५४.३८ ॥
पञ्चत्वं च गताः सर्वे मुनिमुख्या नृपोत्तम ।
विप्रानाह्वापयामास ये तत्राश्रमवासिनः ॥ ५४.३९ ॥
तेभ्यो निवेदयामास यथावृत्तं नृपोत्तमः ।
स तैस्तदाभ्यनुज्ञातः काष्ठान्यादाय यत्नतः ॥ ५४.४० ॥
दाहं संचयनं चक्रे चित्रसेनो महीपतिः ।
ऋक्षशृङ्गादिसर्वेषां गृहीत्वास्थीनि यत्नतः ॥ ५४.४१ ॥
याम्याशां प्रस्थितो राजा पादचारी महीपते ।
न शक्नोति यदा गन्तुं छायामाश्रित्य तिष्ठति ॥ ५४.४२ ॥
विश्रम्य च पुनर्गच्छेद्भाराक्रान्तो महीपतिः ।
सचैलं कुरुते स्नानं मुक्त्वास्थीनि पदे पदे ॥ ५४.४३ ॥
पिबेज्जलं निराहारः स गच्छन् दक्षिणामुखः ।
अचिरेणैव कालेन संगतो नर्मदातटम् ॥ ५४.४४ ॥

आश्रमस्थान् द्विजान् दृष्ट्वा पप्रच्छ पृथिवीपतिः ॥ ५४.४५ ॥

चित्रसेन उवाच -
कथ्यतां शूलभेदस्य मार्गं मे द्विजसत्तमाः ।
येन यामि महाभागाः स्वकार्यार्थस्य सिद्धये ॥ ५४.४६ ॥
मुनय ऊचुः ।
इतः क्रोशान्तरादर्वाक्तीर्थं परमशोभनम् ।
नर्मदादक्षिणे कूले ततो द्रक्ष्यसि नान्यथा ॥ ५४.४७ ॥
ऋषिवाक्येन राजासौ शीघ्रं गत्वा नरेश्वरः ।
स ददर्श ततः शीघ्रं बहुद्विजसमाकुलम् ॥ ५४.४८ ॥
बहुद्रुमलताकीर्णं बहुपुष्पोपशोभितम् ।
ऋक्षसिंहसमाकीर्णं नानाव्रतधरैः शुभैः ॥ ५४.४९ ॥
एकपादास्थिताः केचिदपरे सूर्यदृष्टयः ।
एकाङ्गुष्ठ स्थिताः केचिदूर्ध्वबाहुस्थिताः परे ॥ ५४.५० ॥
दिनैकभोजनाः केचित्केचित्कन्दफलाशनाः ।
त्रिरात्रभोजनाः केचित्पराकव्रतिनोऽपरे ॥ ५४.५१ ॥
चान्द्रायणरताः केचित्केचित्पक्षोपवासिनः ।
मासोपवासिनः केचित्केचिद्दत्त्वन्तपारणाः ॥ ५४.५२ ॥
योगाभ्यासरताः केचित्केचिद्ध्यायन्ति तत्पदम् ।
शीर्णपर्णाशिनः केचित्केचिच्च कटुकाशनाः ॥ ५४.५३ ॥
शैवालभोजनाः केचित्केचिन्मारुतभोजनाः ।
गार्हस्थ्ये च स्थिताः केचित्केचिच्चैवाग्निहोत्रिणः ॥ ५४.५४ ॥
एवंविधान् द्विजान् दृष्ट्वा जानुभ्यामवनिं गतः ।
प्रणम्य शिरसा राजन्राजा वचनमब्रवीत् ॥ ५४.५५ ॥

चित्रसेन उवाच -
कस्मिन्देशे च तत्तीर्थं सत्यं कथयत द्विजाः ।
येनाभिवाञ्छिता सिद्धिः सफला मे भविष्यति ॥ ५४.५६ ॥
ऋषय ऊचुः ।
धन्वन्तरशतं गच्छ भृगुतुङ्गस्य मूर्धनि ।
कुण्डं द्रक्ष्यसि तत्पूर्णं विस्तीर्णं पयसा शिवम् ॥ ५४.५७ ॥
तेषां तद्वचनं श्रुत्वा गतः कुण्डस्य सन्निधौ ।
दृष्ट्वा चैव तु तत्तीर्थं भ्रान्तिर्जाता नृपस्य वै ॥ ५४.५८ ॥
ततो विस्मयमापन्नश्चिन्तयन्वै मुहुर्मुहुः ।

आकाशस्थं ददर्शासौ सामिषं कुररं नृपः ॥ ५४.५९ ॥
भ्रममाणं गृहीताहिं वध्यमानं निरामिषैः ।
परस्परं च युयुधुः सर्वेऽप्यामिषकाङ्क्षया ॥ ५४.६० ॥
हतश्चञ्चुप्रहारेण स ततः पतितोऽभसि ।
शूलेन शूलिना यत्र भूभागो भेदितः पुरा ॥ ५४.६१ ॥
तत्तीर्थस्य प्रभावेण स सद्यः पुरुषोऽभवत् ।
विमानस्थं ददर्शासौ पुमांसं दिव्यरूपिणम् ॥ ५४.६२ ॥
गन्धर्वाप्सरसो यक्षास्तं यान्तं तुष्टुवुर्दिवि ।
अप्सरोगीयमाने तु गते सूर्यस्य मूर्धनि ।
चित्रसेनस्ततस्तस्मिन्नाश्चर्यं परमं गतः ॥ ५४.६३ ॥
ऋषिणा कथितं यद्वत्तद्वत्तीर्थं न संशयः ।
हृष्टरोमाभवद्दृष्ट्वा प्रभावं तीर्थसम्भवम् ॥ ५४.६४ ॥
ममाद्य दिवसो धन्यो यस्मादत्र समागतः ।
अस्थीनि भूमौ निक्षिप्य स्नानं कृत्वा यथाविधि ॥ ५४.६५ ॥
तिलमिश्रेण तोयेनातर्पयत्पितृदेवताः ।
गृह्यास्थीनि ततो राजा चिक्षेपान्तर्जले तदा ॥ ५४.६६ ॥
क्षणमेकं ततो वीक्ष्य राजोर्द्ध्ववदनः स्थितः ।
तान् ददर्श पुनः सर्वान् दिव्यरूपधराञ्छुभान् ॥ ५४.६७ ॥
दिव्यवस्त्रैश्च संवीतान् दिव्याभरणभूषितान् ।
विमानैर्विविधैर्दिव्यैरप्सरोगणसेवितैः ॥ ५४.६८ ॥
पृथग्भूतांश्च तान् सर्वान् विमानेषु व्यवस्थितान् ।
उत्पत्तिवत्समालोक्य राजा संहर्षी सोऽभवत् ॥ ५४.६९ ॥
ऋषिर्विमानमारूढश्चित्रसेनमथाब्रवीत् ।
भोभोः साधो महाराज चित्रसेन महीपते ॥ ५४.७० ॥
त्वत्प्रसादान्नृपश्रेष्ठ गतिर्दिव्या ममेदृषी ।
जातेयं यत्त्वया कार्यं कृतं परमशोभनम् ॥ ५४.७१ ॥
स्वसुतोऽपि न शक्नोति पितॄणां कर्तुमीदृशम् ।
मदीयवचनात्तात निष्पापस्त्वं भविष्यसि ॥ ५४.७२ ॥
फलं प्राप्स्यसि राजेन्द्र कामिकं मनसेप्सितम् ।
आशीर्वादांस्ततो दत्त्वा चित्रसेनाय धीमते ।
स्वर्गं जगाम ससुतस्ततो दीर्घतपा मुनिः ॥ ५४.७३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमावन्त्यखण्डे रेवाखण्डे दीर्घतपसः स्वर्गारोहणवर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥

अध्याय ५५

उत्तानपाद उवाच -
माहात्म्यं तीर्थजं दृष्ट्वा चित्रसेनो नरेश्वरः ।
किं चकार क्व वा वासं किमाहारो बभूव ह ॥ ५५.१ ॥

ईश्वर उवाच -
भृगुतुङ्गं समारुह्य ऐशानीं दिशमाश्रितः ।
तपश्चचार विपुलं कुण्डे तत्र नृपोत्तमः ॥ ५५.२ ॥
सर्वान् देवान् हृदि ध्यात्वा ब्रह्मविष्णुमहेश्वरान् ।
विचिक्षेप यदात्मानं प्रत्यक्षौ रुद्रकेशवौ ।
करे गृहीत्वा राजानं रुद्रो वचनमब्रवीत् ॥ ५५.३ ॥

ईश्वर उवाच -
प्राणत्यागं महाराज मा काले त्वं कृथा वृथा ।
अद्याप्यसि युवा त्वं वै न युक्तं मरणं तव ॥ ५५.४ ॥
स्वस्थानं गच्छ शीघ्रं त्वं भुक्त्वा भोगान्यथेप्सितान् ।
कुरु निष्कण्टकं राज्यं नाके शक्र इवापरः ॥ ५५.५ ॥

चित्रसेन उवाच -
न राज्यं कामये देव न पुत्रान्न च बान्धवान् ।
न भार्यां न च कोशं च न गजान्न तुरंगमान् ॥ ५५.६ ॥
मुञ्च मुञ्च महादेव मा विघ्नः क्रियतां मम ।
स्वर्गप्राप्तिर्ममाद्यैव त्वत्प्रसादान्महेश्वर ॥ ५५.७ ॥

ईश्वर उवाच -
यस्याग्रतो भवेद्ब्रह्मा विष्णुः शम्भुस्तथैव च ।
स्वर्गेण तस्य किं कार्यं स गतः किं करिष्यति ॥ ५५.८ ॥
तुष्टा वयं त्रयो देवा वृणीष्व वरमुत्तमम् ।
यथेप्सितं महाराज सत्यमेतदसंशयम् ॥ ५५.९ ॥

चित्रसेन उवाच -
यदि तुष्टास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
अद्यप्रभृति युष्माभिः स्थातव्यमिह सर्वदा ॥ ५५.१० ॥
गयाशिरो यथा पुण्यं कृतं युष्माभिरेव च ।

तथैवेदं प्रकर्तव्यं शूलभेदं च पावनम् ॥ ५५.११ ॥
यत्रयत्र स्थिता यूयं तत्रतत्र वसाम्यहम् ।
गणानां चैव सर्वेषामाधिपत्यमथास्तु मे ॥ ५५.१२ ॥

ईश्वर उवाच -
अद्यप्रभृति तिष्ठामः शूलभेदे नरेश्वर ।
त्रिकालां हि त्रयो देवाः कलांशेन वसामहे ॥ ५५.१३ ॥
नन्दिसंज्ञो गणाधीशो भविष्यति भवान्ध्रुवम् ।
मत्समीपे तु भवत आदौ पूजा भविष्यति ॥ ५५.१४ ॥
प्रक्षिप्य तानि चास्थीनि यत्र दीर्घतपा ययौ ।
सकुटुम्बो विमानस्थः स्वर्गतस्त्वं तथा कुरु ॥ ५५.१५ ॥
एवं देवा वरं दत्त्वा चित्रसेनाय पार्थिव ।
कुण्डमूर्धनि याम्यायां त्रयो देवास्तदा स्थिताः ॥ ५५.१६ ॥
परस्परं वदन्त्येवं पुण्यतीर्थमिदं परम् ।
यथा हि गयाशिरः पुण्यं पूर्वमेव पठ्यते ।
तथा रेवातटे पुण्यं शूलभेदं न संशयः ॥ ५५.१७ ॥

ईश्वर उवाच -
इदं तीर्थं तथा पुण्यं यथा पुण्यं गयाशिरः ।
सकृत्पिण्डोदकेनैव नरो निर्मलतां व्रजेत् ॥ ५५.१८ ॥
एकं गयाशिरो मुक्त्वा सर्वतीर्थानि भूपते ।
शूलभेदस्य तीर्थस्य कलां नार्हन्ति षोडशीम् ॥ ५५.१९ ॥
कुण्डमुदीच्यां याम्यायां दशहस्तप्रमाणतः ।
रौद्रवारुणकाष्ठायां प्रमाणं चैकविंशति ॥ ५५.२० ॥
एतत्प्रमाणं तत्तीर्थं पिण्डदानादिकर्मसु ।
नाधर्मनिरता दातुं लभन्ते दानमत्र हि ॥ ५५.२१ ॥
विष्णुस्तु पितृरूपेण ब्रह्मरूपी पितामहः ।
प्रपितामहो रुद्रोऽभूदेवं त्रिपुरुषाः स्थिताः ॥ ५५.२२ ॥
कदा पश्यति तीर्थं वै कदा नस्तारयिष्यति ।
इति प्रतीक्षां कुर्वन्ति पुत्राणां सततं नृप ।
शूलभेदे नरः स्नात्वा दृष्ट्वा शूलधरं सकृत् ॥ ५५.२३ ॥
नापुत्रो नाधनो रोगी सप्तजन्मसु जायते ।
एकविंशतिं पितुः पक्षे मातुश्चैवेकविंशतिम् ॥ ५५.२४ ॥
भार्यापक्षे दशैवेह कुलान्येतानि तारयेत् ।

शूलभेदवने राजञ्छाकमूलफलैरपि ॥ ५५.२५ ॥
एकस्मिन्भोजिते विप्रे कोटीर्भवति भोजिता ।
पञ्चस्थानेषु यः श्राद्धं कुरुते भक्तिमान्नरः ॥ ५५.२६ ॥
कुलानि प्रेतभूतानि सर्वाण्यपि हि तारयेत् ।
द्विजदेवप्रसादेन पितॄणां च प्रसादतः ॥ ५५.२७ ॥
श्राद्धदो निवसेत्तत्र यत्र देवो महेश्वरः ।
स्युरात्मघातिनो ये च गोब्राह्मणहनाश्च ये ॥ ५५.२८ ॥
दंष्ट्रिभिर्जलपाते च विद्युत्पातेषु ये मृताः ।
न येषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ ५५.२९ ॥
तत्र तीर्थे तु यस्तेषां श्राद्धं कुर्वीत भक्तितः ।
मोक्षावाप्तिर्भवेत्तेषां युगमेकं न संशयः ॥ ५५.३० ॥
अज्ञानाद्यत्कृतं पापं बालभावाच्च यत्कृतम् ।
तत्सर्वं नाशयेत्पापं स्नानमात्रेण भूपते ॥ ५५.३१ ॥
रजकेन यथा धौतं वस्त्रं भवति निर्मलम् ।
तथा पापोऽपि तत्तीर्थे स्नातो भवति निर्मलः ॥ ५५.३२ ॥
संन्यासं कुरुते योऽत्र तीर्थे विधिसमन्वितम् ।
ध्यायन्नित्यं महादेवं स गच्छेत्परमं पदम् ॥ ५५.३३ ॥
क्रीडित्वा स यथाकामं स्वेच्छया शिवमन्दिरे ।
वेदवेदाङ्गतत्त्वज्ञो जायतेऽसौ शुभे कुले ॥ ५५.३४ ॥
रूपवान्सुभगश्चैव सर्वव्याधिविवर्जितः ।
राजा वा राजपुत्रो वाचारसमन्वितः ॥ ५५.३५ ॥
एतत्ते कथितं राजंस्तीर्थस्य फलमुत्तमम् ।
यच्छ्रुत्वा मानवो नित्यं मुच्यते सर्वकिल्बिषैः ॥ ५५.३६ ॥
य इदं श्रावयेन्नित्यमाख्यानं द्विजपुंगवान् ।
श्राद्धे देवकुले वापि पठेत्पर्वणि पर्वणि ॥ ५५.३७ ॥
गीर्वाणास्तस्य तुष्यन्ति मनुष्याः पितृभिः सह ।
पठतां शृण्वतां चैव नश्यते सर्वपातकम् ॥ ५५.३८ ॥
लिखित्वा तीर्थमाहात्म्यं ब्राह्मणेभ्यो ददाति यः ।
जातिस्मरत्वं लभते प्राप्नोत्यभिमतं फलम् ॥ ५५.३९ ॥
रुद्रलोके वसेत्तावद्यावदक्षरमन्वितम् ॥ ५५.४० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये काशीराजमोक्षगमनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥

अध्याय ५६

उत्तानपाद उवाच -
अन्यच्च श्रोतुमिच्छामि केन गङ्गावतारिता ।
रुद्रशीर्षे स्थिता देवी पुण्या कथमिहागता ॥ ५६.१ ॥
पुण्या देवाशिला नाम तस्या माहात्म्यमुत्तमम् ।
एतदाख्याहि मे सर्वं प्रसन्नो यदि शङ्कर ॥ ५६.२ ॥

ईश्वर उवाच -
शृणुष्वैकमना भूत्वा यथा गङ्गावतारिता ।
देवैः सर्वैर्महाभागा सर्वलोकहिताय वै ॥ ५६.३ ॥
अस्ति विन्ध्यो नगो नाम याम्याशायां महीपते ।
गीर्वाणास्तु गताः सर्वे तस्य मूर्ध्नि नरेश्वर ॥ ५६.४ ॥
तत्र चाह्वानिता गङ्गा ब्रह्माद्यैरखिलैः सुरैः ।
अभ्यर्च्येशं जगन्नाथं देवदेवं जगद्गुरुम् ॥ ५६.५ ॥
जटामध्यस्थितां गङ्गां मोचयस्वेति भूतले ।
भास्वन्ती सा ततो मुक्ता रुद्रेण शिरसा भुवि ॥ ५६.६ ॥
तत्र स्थाने महापुण्या देवैरुत्पादिता स्वयम् ।
ततो देवनदी जाता सा हिताय नृणां भुवि ॥ ५६.७ ॥
वसन्ति ये तटे तस्याः स्नानं कुर्वन्ति भक्तितः ।
पिबन्ति च जलं नित्यं न ते यान्ति यमालयम् ॥ ५६.८ ॥
यत्र सा पतिता कुण्डे शूलभेदे नराधिप ।
देवनद्याः प्रतीच्यां तु तत्र प्राची सरस्वती ॥ ५६.९ ॥
याम्यायां शूलभेदस्य तत्र तीर्थमनुत्तमम् ।
तत्र देवशिला पुण्या स्वयं देवेन निर्मिता ॥ ५६.१० ॥
तत्र स्नात्वा तु यो भक्त्या तर्पयेत्पितृदेवताः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ॥ ५६.११ ॥
तत्र स्नात्वा तु यो भक्त्या ब्राह्मणान् भोजयेन्नृप ।
स्वल्पान्नेनापि दत्तेन तस्य चान्तो न विद्यते ॥ ५६.१२ ॥

उत्तानपाद उवाच -
कानि दानानि दत्तानि शस्तानि धरणीतले ।
यानि दत्त्वा नरो भक्त्या मुच्यते सर्वपातकैः ॥ ५६.१३ ॥
देवशिलाया माहात्म्यं स्नानदानादिजं फलम् ।

व्रतोपवासनियमैर्यत्प्राप्यं तद्वदस्व मे ॥ ५६.१४ ॥

ईश्वर उवाच -
आसीत्पुरा महावीर्यश्चेदिनाथो महाबलः ।
वीरसेन इति ख्यातो मण्डलाधिपतिर्नृप ॥ ५६.१५ ॥
राष्ट्रे तस्य रिपुर्नास्ति न व्याधिर्न च तस्कराः ।
न चाधर्मोऽभवत्तत्र धर्म एव हि सर्वदा ॥ ५६.१६ ॥
सदा मुदान्वितो राजा सभार्यो बहुपुत्रकः ।
एकासीद्दुहिता तस्य सुरूपा गिरिजा यथा ॥ ५६.१७ ॥
इष्टा सा पितृमातृभ्यां बन्धुवर्गजनस्य च ।
कृतं वैवाहिकं कर्म काले प्राप्ते यथाविधि ॥ ५६.१८ ॥
अनन्तरं चेदिपतिर्द्वादशाब्दमखे स्थितः ।
ततस्तस्यास्तु यो भर्ता स मृत्युवशमागतः ॥ ५६.१९ ॥
विधवां तां सुतां दृष्ट्वा राजा शोकसमन्वितः ।
उवाच वचनं तत्र स्वभार्यां दुःखपीडिताम् ॥ ५६.२० ॥
प्रिये दुःखमिदं जातं यावज्जीवं सुदुःसहम् ।
नैषा रक्षयितुं शक्या रूपयौवनगर्विता ॥ ५६.२१ ॥
दूषयेत कुलं क्वापि कथं रक्ष्या हि बालिका ।
नोपायो विद्यते क्वापि भानुमत्याश्च रक्षणे ।
परस्परं विवदतोः श्रुत्वा तत्कन्यकाब्रवीत् ॥ ५६.२२ ॥

भानुमत्युवाच -
न लज्जामि तवाग्रेऽहं जल्पन्ती तात कर्हिचित् ।
सत्यं नोत्पद्यते दोषो मदर्थे ते नराधिप ॥ ५६.२३ ॥
अद्यप्रभृत्यहं तात धारयिष्ये न मूर्धजान् ।
स्थूलवस्त्रपटार्द्धं तु धारयिष्यामि ते गृहे ॥ ५६.२४ ॥
करिष्यामि व्रतान्याशु पुराणविहितानि च ।
आत्मानं शोषयिष्यामि तोषयिष्ये जनार्दनम् ॥ ५६.२५ ॥
ममैषा वर्तते बुद्धिर्यदि त्वं तात मन्यसे ।
भानुमत्या वचः श्रुत्वा राजा संहर्षितोऽभवत् ॥ ५६.२६ ॥
तीर्थयात्रां समुद्दिश्य कोशं दत्त्वा सुपुष्कलम् ।
विसृज्य पुरुषान्वृद्धान् कृत्वा तस्याः सुरक्षणे ॥ ५६.२७ ॥
पुरुषान् सायुधांश्चापि ब्राह्मणान्सपुरोहितान् ।
दासीदासान्पदातींश्च चास्याः संरक्षणक्षमान् ॥ ५६.२८ ॥

ततः पितुर्मतेनैव गङ्गातीरं गता सती ।
अवगाह्य तटे द्वे तु गङ्गायाः स नराधिप ॥ ५६.२९ ॥
नित्यं सम्पूज्य सद्विप्रान्गन्धमाल्यादिभूषणैः ।
द्वादशाब्दानि सा तीरे गङ्गायाः समवस्थिता ॥ ५६.३० ॥
त्यक्त्वा गङ्गां तदा राज्ञी गता काष्ठां तु दक्षिणाम् ।
प्राप्ता सा सचिवैः सार्द्धं यत्र रेवा महानदी ॥ ५६.३१ ॥
समाः पञ्च स्थिता तत्र ओङ्कारेऽमरकण्टके ।
उदग्याम्येषु तीर्थेषु तीर्थात्तीर्थं जगाम सा ॥ ५६.३२ ॥
स्नात्वा स्नात्वा पूज्य विप्रान् भक्तिपूर्वमतन्द्रिता ।
वारुणीं सा दिशं गत्वा देवनद्याश्च सङ्गमे ॥ ५६.३३ ॥
ददर्श चाश्रमं पुण्यं मुनिसङ्घैः समाकुलम् ।
दृष्ट्वा मुनिसमूहं सा प्रणिपत्येदमब्रवीत् ॥ ५६.३४ ॥
माहात्म्यमस्य तीर्थस्य नाम चैवास्य कीदृशम् ।
कथयन्तु महाभागाः प्रसादः क्रियतां मम ॥ ५६.३५ ॥
ऋषय ऊचुः ।
चक्रतीर्थं तु विख्यातं चक्रं दत्तं पुरा हरेः ।
महेश्वरेण तुष्टेन देवदेवेन शूलिना ॥ ५६.३६ ॥
अत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
अनिवर्तिका गतिस्तस्य जायते नात्र संशयः ॥ ५६.३७ ॥
द्वितीयेऽह्नि ततो गच्छेच्छूलभेदे तपस्विनि ।
पूर्वोक्तेन विधानेन स्नानं कुर्याद्यथाविधि ॥ ५६.३८ ॥
जन्मत्रयकृतैः पापैर्मुच्यते नात्र संशयः ।
जलेन तिलमात्रेण प्रदद्यादञ्जलित्रयम् ॥ ५६.३९ ॥
तृप्यन्ति पितरस्तस्य द्वादशाब्दान्यसंशयम् ।
यः श्राद्धं कुरुते भक्त्या श्रोत्रियैर्ब्राह्मणैर्नृप ॥ ५६.४० ॥
वार्द्धुष्याद्यास्तु वर्ज्यन्ते पित्ःणां दत्तमक्षयम् ।
अपरेऽह्णि ततो गच्छेत्पुण्यां देवशिलां शुभाम् ॥ ५६.४१ ॥
वीक्ष्यते जाह्नवी पुण्या देवैरुत्पादिता पुरा ।
स्नात्वा तत्र जलं दद्यात्तिलमिश्रं नराधिप ॥ ५६.४२ ॥
सकृत्पिण्डप्रदानेन मुच्यते ब्रह्महत्यया ।
एकादश्यामुपोषित्वा पक्षयोरुभयोरपि ॥ ५६.४३ ॥
क्षपाजागरणं कुर्यात्पठेत्पौराणिकीं कथाम् ।
विष्णुपूजां प्रकुर्वीत पुष्पधूपनिवेदनैः ॥ ५६.४४ ॥

प्रभाते भोजयेद्विप्रान् दानं दद्यात्सशक्तितः ।
चतुर्थेऽह्नि ततो गच्छेद्यत्र प्राची सरस्वती ॥ ५६.४५ ॥
ब्रह्मदेहाद्विनिष्क्रान्ता पावनार्थं शरीरिणाम् ।
तत्र स्नात्वा नरो भक्त्या तर्पयेत्पितृदेवताः ॥ ५६.४६ ॥
श्राद्धं कृत्वा यथान्यायमनिन्द्यान् भोजयेद्द्विजान् ।
पितरस्तस्य तृप्यन्ति द्वादशाब्दान्यसंशयम् ॥ ५६.४७ ॥
सर्वदेवमयं स्थानं सर्वतीर्थमयं तथा ।
देवकोटिसमाकीर्णं कोटिलिङ्गोत्तमोत्तमम् ॥ ५६.४८ ॥
त्रिरात्रं कुरुते योऽत्र शुचिः स्नात्वा जितेन्द्रियः ।
पक्षं मासं च षण्मासमब्दमेकं कदाचन ॥ ५६.४९ ॥
न तस्य सम्भवो मर्त्ये तस्य वासो भवेद्दिवि ।
नियमस्थो विमुच्येत त्रिजन्मजनितादघात् ॥ ५६.५० ॥
विना पुंसा तु या नारी द्वादशाब्दं शुचिव्रता ।
तिष्ठते साक्षयं कालं रुद्रलोके महीयते ॥ ५६.५१ ॥
मुनीनां वचनं श्रुत्वा मुदा परमया ययौ ।
ततोऽवगाहय तत्तीर्थमहर्निशमतन्द्रिता ॥ ५६.५२ ॥
दृष्ट्वा तीर्थप्रभावं तु पुनर्वचनमब्रवीत् ।
श्रूयतां वचनं मेऽद्य ब्राह्मणाः सपुरोहिताः ॥ ५६.५३ ॥
न त्यजामीदृशं स्थानं यावज्जीवमहर्निशम् ।
मत्पितुश्च तथा मातुः कथयध्वमिदं वचः ॥ ५६.५४ ॥
त्वत्कन्या शूलभेदस्था नियता व्रतचारिणी ।
एवमुक्त्वा स्थिता सा तु तत्र भानुमती नृपः ॥ ५६.५५ ॥
एकान्तरोपवासस्था शनैर्मासोपवासिता ।
देवशिलास्थिता नित्यं दध्यौ सा चक्रपाणिनम् ॥ ५६.५६ ॥
अहर्निशं दहेद्धूपं चन्दनं च सदीपकम् ।
पादशौचं स्वयं कृत्वा स्वयं भोजयते द्विजान् ।
द्वादशाब्दानि सा राज्ञी सुव्रता तत्र संस्थिता ॥ ५६.५७ ॥

ईश्वर उवाच -
अन्यद्देवशिलायास्तु माहात्म्यं शृणु भूपते ।
कथयामि महाबाहो सेतिहासं पुरातनम् ॥ ५६.५८ ॥
कश्चिद्वनेचरो व्याधः शबरः सह भार्यया ।
दुर्भिक्षपीडितस्तत्र आमिषार्थं वनं गतः ॥ ५६.५९ ॥
नापश्यत्पक्षिणस्तत्र न मृगान्न फलानि च ।

सरस्ततो ददर्शाथ पद्मिनीखण्डमण्डितम् ॥ ५६.६० ॥
दृष्ट्वा सरोवरं तत्र शबरी वाक्यमब्रवीत् ।
कुमुदानि गृहाण त्वं दिव्यान्याहारसिद्धये ॥ ५६.६१ ॥
देवस्य पूजनार्थं तु शूलभेदस्य यत्नतः ।
विक्रयो भविता तत्र धर्मशीलो जनो यतः ॥ ५६.६२ ॥
भार्याया वचनं श्रुत्वा जग्राह कुमुदानि सः ।
उत्तीर्णस्तु तटे यावद्दृष्ट्वा श्रीवृक्षमग्रतः ॥ ५६.६३ ॥
श्रीफलानि गृहीत्वा तु सुपक्वानि विशेषतः ।
शूलभेदं स सम्प्राप्तो ददर्श सुबहूञ्जनान् ॥ ५६.६४ ॥
चैत्रमासे सिते पक्षे एकादश्यां नराधिप ।
तस्मिन्नहनि नाश्नीयुर्बाला वृद्धास्तथा स्त्रियः ॥ ५६.६५ ॥
मण्डपं ददृशे तत्र कृतं देवशिलोपरि ।
वस्त्रैः संवेष्टितं दिव्यं स्रङ्माल्यैरुपशोभितम् ॥ ५६.६६ ॥
ऋषयश्चागतास्तत्र ये चाश्रमनिवासिनः ।
सोपवासाः सनियमाः सर्वे साग्निपरिग्रहाः ॥ ५६.६७ ॥
देवनद्यास्तटे रम्ये मुनिसङ्घैः समाकुले ।
आगच्छद्भिर्नृपश्रेष्ठ मार्गस्तत्र न लभ्यते ॥ ५६.६८ ॥
दृष्ट्वा जनपदं तत्र तां भार्यां शबरोऽब्रवीत् ।
गच्छ पृच्छस्व किमपि किमद्य स्नानकारणम् ॥ ५६.६९ ॥
पर्वाणि यानि श्रूयन्ते किंस्वित्सूर्येन्दुसम्प्लवः ।
अयनं किं भवेदद्य किं वाक्षयतृतीयका ॥ ५६.७० ॥
ततः स्वभर्तुर्वचनाच्छबरी प्रस्थिता तदा ।
पप्रच्छ नारीं दृष्ट्वाग्रे दत्त्वाग्रे कमले शुभे ॥ ५६.७१ ॥
तिथिरद्यैव का प्रोक्ता किं पर्व कथयस्व मे ।
किमयं स्नाति लोकोऽयं किं वा स्नानस्य कारणम् ॥ ५६.७२ ॥

नार्युवाच -
अद्य चैकादशी पुण्या सर्वपापक्षयंकरी ।
उपोषिता सकृद्येन नाकप्राप्तिं करोति सा ॥ ५६.७३ ॥
तस्यास्तद्वचनं श्रुत्वा शबरी शाबराय वै ।
कथयामास चाव्यग्रा स्त्रीवाक्यं नृपसत्तम ॥ ५६.७४ ॥
अद्य त्वेकादशी पुण्या बालवृद्धैरुपोषिता ।
मदनैकादशी नाम सर्वपापक्षयंकरी ॥ ५६.७५ ॥
नियता श्रूयते तत्र राजपुत्री सुशोभना ।

व्रतस्था नियताहारा नाम्ना भानुमती सती ॥ ५६.७६ ॥
नैतया सदृशी काचित्त्रिषु लोकेषु विश्रुता ।
दृश्यते सा वरारोहा ह्यवतीर्णा महीतले ॥ ५६.७७ ॥
भार्याया वचनं श्रुत्वा शबरस्तां जगाद ह ।
कमलानि यथालाभं दत्त्वा भुङ्क्ष्व हि सत्वरम् ॥ ५६.७८ ॥
ममैषा वर्तते बुद्धिर्न भोक्तव्यं मया ध्रुवम् ।
न मयोपार्जितं भद्रे पापबुद्ध्या शुभं क्वचित् ॥ ५६.७९ ॥

शबर्युवाच -
न पूर्वं तु मया भुक्तं कस्मिंश्चैव तु वासरे ।
भुक्तशेषं मया भुक्तं यावत्कालं स्मराम्यहम् ॥ ५६.८० ॥
भार्याया निश्चयं ज्ञात्वा स्नानं कर्तुं जगाम ह ।
अर्धोत्तरीयवस्त्रेण स्नानं कृत्वा तु भक्तितः ॥ ५६.८१ ॥
सर्वान् देवान्नमस्कृत्य गतो देवशिलां प्रति ।
तस्थौ स शङ्कमानोऽपि नमस्कृत्य जनार्दनम् ॥ ५६.८२ ॥
यस्यास्तु कुमुदे दत्ते तया राज्यै निवेदितम् ।
तद्दृष्ट्वा पद्मयुगलं तां दासीं साब्रवीत्तदा ॥ ५६.८३ ॥
कुत्र पद्मद्वयं लब्धं कथ्यतामग्रतो मम ।
शीघ्रं तत्रैव गत्वा च पद्मानानय चापरान् ॥ ५६.८४ ॥
धान्येन वसुना वापि कमलानि समानय ।
भानुमत्या वचः श्रुत्वा गता सा शबरं प्रति ॥ ५६.८५ ॥
श्रीफलानि च पुष्पाणि बहून्यन्यानि देहि मे ॥ ५६.८६ ॥

शबर्युवाच -
श्रीफलानि सपुष्पाणि दास्यामि च विशेषतः ।
न लोभो न स्पृहा मेऽस्ति गत्वा राज्ञीं निवेदय ॥ ५६.८७ ॥
तया च सत्वरं गत्वा यथावृत्तं निवेदितम् ।
शबर्युक्तं पुरस्तस्याः सविस्तरपरं वचः ॥ ५६.८८ ॥
तस्यास्तु वचनं श्रुत्वा राज्ञी तत्र स्वयं गता ।
उवाच शबरीं प्रीत्या देहि पद्मानि मूल्यतः ॥ ५६.८९ ॥

शबर्युवाच -
न मूल्यं कामये देवि फलपुष्पसमुद्भवम् ।
श्रीफलानि च पुष्पाणि यथेष्टं मम गृह्यताम् ॥ ५६.९० ॥

अर्चां कुरु यथान्यायं वासुदेवे जगत्पतौ ॥ ५६.९१ ॥

राज्ञ्युवाच -
विना मूल्यं न गृह्णामि कमलानि तवाधुना ।
धान्यस्य खारिकामेकां ददामि प्रतिगृह्यताम् ॥ ५६.९२ ॥
दश विंशत्यथ त्रिंशच्चत्वारिंशदथापि वा ।
गृहाण वा खारिशतं दुर्भिक्षां बोधिमुत्तर ॥ ५६.९३ ॥
वसु रत्नं सुवर्णं च अन्यत्ते यदभीप्सितम् ।
तत्सर्वं सम्प्रदास्यामि कमलार्थे न संशयः ॥ ५६.९४ ॥

शबर्युवाच -
नाहारं चिन्तयाम्यद्य मुक्त्वा देवं वरानने ।
देवकार्यं विना भद्रे नान्या बुद्धिः प्रवर्तते ॥ ५६.९५ ॥

राज्ञ्युवाच -
न त्वयान्नं परित्याज्यं सर्वमन्ने प्रतिष्ठितम् ।
तस्मात्सर्वप्रयत्नेन ममान्नं प्रतिगृह्यताम् ॥ ५६.९६ ॥
तपस्विनो महाभागा ये चारण्यनिवासिनः ।
गृहस्थद्वारि ते सर्वे याचन्तेऽन्नमतन्द्रिताः ॥ ५६.९७ ॥

शबर्युवाच -
निषेधश्च कृतः पूर्वं सर्वं सत्ये प्रतिष्ठितम् ।
सत्येन तपते सूर्यः सत्येन ज्वलतेऽनलः ॥ ५६.९८ ॥
सत्येन तिष्ठत्युदधिर्वायुः सत्येन वाति हि ।
सत्येन पच्यते सस्यं गावः क्षीरं स्रवन्ति च ॥ ५६.९९ ॥
सत्याधारमिदं सर्वं जगत्स्थावरजङ्गमम् ।
तस्मात्सर्वप्रयत्नेन सत्यं सत्येन पालयेत् ॥ ५६.१०० ॥
देवकार्यं तु मे मुक्त्वा नान्या बुद्धिः प्रवर्तते ।
गृहाण राज्ञि पुष्पाणि कुरु पूजां गदाभृतः ॥ ५६.१०१ ॥
श्रूयते द्विजवाक्यैस्तु न दोषो विद्यते क्वचित् ।
कुशाः शाकं पयो मत्स्या गन्धाः पुष्पाक्षता दधि ।
मांसं शय्यासनं धानाः प्रत्याख्येया न वारि च ॥ ५६.१०२ ॥

राज्ञ्युवाच -
आरामोपहृतं पुष्पमारण्यं पुष्पमेव च ।

क्रीतं प्रतिग्रहे लब्धं पुष्पमेवं चतुर्विधम् ॥ ५६.१०३ ॥
उत्तमं पुष्पमारण्यं गृहीतं स्वयमेव च ।
मध्यमं फलमारामे त्वधमं क्रीतमेव च ।
प्रतिग्रहेण यल्लब्धं निष्फलं तद्विदुर्बुधाः ॥ ५६.१०४ ॥

पुरोहित उवाच -
गृहाण राज्ञि पुष्पाणि कुरु पूजां गदाभृतः ।
उपकारः प्रकर्तव्यो व्यपदेशेन कर्हिचित् ॥ ५६.१०५ ॥

ईश्वर उवाच -
श्रीफलानि सपद्मानि दत्तानि शबरेण तु ।
गृहीत्वा तानि राज्ञी सा पूजां चक्रे सुशोभनाम् ॥ ५६.१०६ ॥
क्षपाजागरणं चक्रे श्रुत्वा पौराणिकीं कथाम् ।
शबरस्तु ततो भार्यामिदं वचनमब्रवीत् ॥ ५६.१०७ ॥
दीपार्थं गृह्यतां स्नेहो यथालाभेन सुन्दरि ।
कृत्वा दीपं ततस्तौ तु कृत्वा पूजां हरेः शुभाम् ॥ ५६.१०८ ॥
चक्रतुर्जागरं रात्रौ ध्यायन्तो धरणीधरम् ।
ततः प्रभातसमये दृष्ट्वा स्नानोत्सुकं जनम् ॥ ५६.१०९ ॥
स्नाति वै शूलभेदे तु देवनद्यां तथापरे ।
सरस्वत्यां नराः केचिन्मार्कण्डस्य ह्रदेऽपरे ॥ ५६.११० ॥
चक्रतीर्थं गताश्चक्रुः स्नानं केचिद्विधानतः ।
शुचयस्ते जनाः सर्वे स्नात्वा देवाशिलोपरि ॥ ५६.१११ ॥
श्राद्धं चक्रुः प्रयत्नेन श्रद्धया पूतचेतसा ।
तान्दृष्ट्वा शबरो बिल्वैः पिण्डांश्चक्रे प्रयत्नतः ॥ ५६.११२ ॥
भानुमत्या तथा भर्तुः पिण्डनिर्वपणं कृतम् ।
अनिन्द्या भोजिता विप्रा दम्भवार्द्धुष्यवर्जिताः ॥ ५६.११३ ॥
हविष्यान्नैस्तथा दध्ना शर्करामधुसर्पिषा ।
पायसेन तु गव्येन कृतान्नेन विशेषतः ॥ ५६.११४ ॥
भोजयित्वा तथा राज्ञी ददौ दानं यथाविधि ।
पादुकोपानहौ छत्रं शय्यां गोवृषमेव च ॥ ५६.११५ ॥
विविधानि च दानानि हेमरत्नधनानि च ।
चक्रतीर्थे महाराज कपिलां यः प्रयच्छति ।
पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ ५६.११६ ॥

उत्तानपाद उवाच -
यानि यानि च दत्तानि शस्तानि जगतीपतेः ।
तानि सर्वाणि देवेश कथयस्व प्रसादतः ॥ ५६.११७ ॥

ईश्वर उवाच -
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदः स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः ॥ ५६.११८ ॥
गृहदो रोगरहितो रूप्यदो रूपवान् भवेत् ।
वासोदश्चन्द्रसालोक्यमर्कसायुज्यमश्वदः ॥ ५६.११९ ॥
वृषदस्तु श्रियं पुष्टां गोदाता च त्रिविष्टपम् ।
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥ ५६.१२० ॥
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ।
वार्यन्नपृथिवीवासस्तिलकाञ्चनसर्पिषाम् ॥ ५६.१२१ ॥
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
येन येन हि भावेन यद्यद्दानं प्रयच्छति ॥ ५६.१२२ ॥
तेन तेन स भावेन प्राप्नोति प्रतिपूजितम् ।
दृष्ट्वा दानानि सर्वाणि राज्ञी दत्तानि यानि च ॥ ५६.१२३ ॥
उवाच शबरो भार्यां यत्तच्छृणु नरेश्वर ।
पुराणं पठितं भद्रे ब्राह्मणैर्वेदपारगैः ॥ ५६.१२४ ॥
श्रुतं च तन्मया सर्वं दानधर्मफलं शुभम् ।
पूर्वजन्मार्जितं पापं स्नानदानव्रतादिभिः ॥ ५६.१२५ ॥
शरीरं दुस्त्यजं मुक्त्वा लभते गतिमुत्तमाम् ।
संसारसागराद्भीतः सत्यं भद्रे वदामि ते ॥ ५६.१२६ ॥
अनेकानि च पापानि कृतानि बहुशो मया ।
घातिता जन्तवो भद्रे निर्दग्धाः पर्वताः सदा ॥ ५६.१२७ ॥
तेन पापेन दग्धोऽहं दारिद्र्यं न निवर्तते ।
तीर्थावगाहनं पूर्वं पापेन न कृतं मया ॥ ५६.१२८ ॥
तेनाहं दुःखितो भद्रे दारिद्र्यमनिवर्तिकम् ।
मातुर्गृहं प्रयाहि त्वं त्यज स्नेहं ममोपरि ।
नगशृङ्गं समारुह्य मोक्तुमिच्छाम्यहं तनुम् ॥ ५६.१२९ ॥

शबर्युवाच -
मात्रा पित्रा न मे कार्यं नापि स्वजनबान्धवैः ।
या गतिस्तव जीवेश सा ममापि भविष्यति ॥ ५६.१३० ॥

न स्त्रीणामीदृशो धर्मो विना भर्त्रा स्वजीवितम् ।
श्रूयन्ते बहवो दोषा धर्मशास्त्रेष्वनेकधा ॥ ५६.१३१ ॥
पारणं कुरु भोजेन्द्र व्रतं येन न नश्यति ।
यत्तेऽभिवाञ्छितं किंचिद्विष्णवे कर्तुमर्हसि ॥ ५६.१३२ ॥
भार्याया वचनं श्रुत्वा मुमुदे शबरस्ततः ।
गृहीत्वा श्रीफलं शीघ्रं होमं कृत्वा यथाविधि ॥ ५६.१३३ ॥
सर्वदेवान्नमस्कृत्य भुक्तोऽपि च तया सह ।
चैत्र्यां तु विषुवं ज्ञात्वा तस्थौ तत्र दिनत्रयम् ॥ ५६.१३४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे व्याधवाक्योपदेशकथनपूर्वकदानादिफलवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०५७

https://sa.wikisource.org/s/fn0
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ५७

ईश्वर उवाच -
भानुमती द्विजान्भोज्य बुभुजे भुक्तशेषतः ।
भुक्त्वा सुसुखमास्थाय तदन्नं परिणाम्य च ॥ ५७.१ ॥
त्रयोदश्यां ततो गत्वा मदनाख्यतिथौ तदा ।
मार्कण्डस्य ह्रदे स्नात्वानर्च्य देवं गुहाशयम् ॥ ५७.२ ॥
कृतोपवासनियमा स्नापयित्वा महेश्वरम् ।
पञ्चामृतसुगन्धेन धूपदीपनिवेदनैः ॥ ५७.३ ॥
आर्चयद्विविधैः पुष्पैर्नैवेद्यैश्च सुशोभनैः ।
क्षपाजागरणं कृत्वा श्रुत्वा पौराणिकीं कथाम् ॥ ५७.४ ॥
नृत्यगीतैस्तथा स्तोत्रैर्दध्यौ देवं महेश्वरम् ।
अन्नं विस्तारितं सर्वं देवस्याग्रे यथाविधि ॥ ५७.५ ॥
चातुर्वर्ण्यसुताः सर्वे भोजिताः सपरिच्छदाः ।
चतुर्दश्यां दिनं यावत्सम्पूज्य वृषभध्वजम् ॥ ५७.६ ॥
शङ्खवादित्रभेरीभिः पटहध्वनिनादितम् ।
क्षपाजागरणं कृत्वा प्रभूतजनसंकुलम् ॥ ५७.७ ॥
नृत्यगीतैस्तथा स्तोत्रैः प्रेरिता सा निशा तदा ।
प्रभाते भोजिता विप्राः पायसैर्मधुसर्पिषा ॥ ५७.८ ॥
दत्त्वा दानानि विप्रेभ्यः शक्त्या विप्रानुसारतः ।
अर्चयित्वा महापुष्पैः सुगन्धैर्मदनेन च ॥ ५७.९ ॥
विचित्रैः सूक्ष्मवस्त्रैश्च देवः सम्पूज्य वेष्टितः ।
स्रग्दामलम्बमानैश्च बहुदीपसमुज्ज्वलैः ॥ ५७.१० ॥
पक्वान्नैर्विविधैर्भक्ष्यैः सुवृत्तैर्मोदकादिभिः ।
ततस्ते ब्राह्मणाः सर्वे वेदाध्ययनतत्पराः ॥ ५७.११ ॥
तत्पर्व कीर्तयांश्चक्रुः पद्मकं नाम नामतः ।

आदित्यस्य दिनं त्वद्य तिथिः पञ्चदशी तथा ॥ ५७.१२ ॥
त्वाष्ट्रमेव च नक्षत्रं संक्रान्तिर्विषुवन्तथा ।
व्यतीपातस्तथा योगः करणविष्टिरेव च ॥ ५७.१३ ॥
पद्मकं नाम पर्वैतदयनादिचतुर्गुणम् ।
अत्र दत्तं हुतं जप्तं सर्वं भवति चाक्षयम् ॥ ५७.१४ ॥
ते द्विजा भानुमत्याथ शूलभेदं गताः सह ।
ददृशुः शबरं कुण्डे भार्यया सह संस्थितम् ॥ ५७.१५ ॥
ऐशानीं स दिशं गत्वा पर्वते भृगुमूर्धनि ।
पतितुं च समारूढो भार्यया सह पार्थिव ॥ ५७.१६ ॥

भानुमत्युवाच -
तिष्ठ तिष्ठ महासत्त्व शृणुष्व वचनं मम ।
किमर्थं त्यजसि प्राणानद्यापि च युवा भवान् ॥ ५७.१७ ॥
कः सन्तापः क उद्वेगः किं दुःखं व्याधिरेव च ।
शिशुः संदृश्यसेऽद्यापि कारणं कथ्यतामिदम् ॥ ५७.१८ ॥

शबर उवाच -
कारणं नास्ति मे किंचिन्न दुःखं किंचिदेव तु ।
संसारभयभीतोऽहं नान्या बुद्धिः प्रवर्तते ॥ ५७.१९ ॥
दुःखेन लभ्यते यस्मान्मानुष्यं जन्म भाग्यतः ।
मानुष्यं जन्म चासाद्य या न धर्मं समाचरेत् ॥ ५७.२० ॥
स गच्छेन्निरयं घोरमात्मदोषेण सुन्दरि ।
तस्मात्पतितुमिच्छामि तीर्थेऽस्मिन्पापनाशने ॥ ५७.२१ ॥

राज्ञ्युवाच -
अद्यापि वर्तते कालो धर्मस्योपार्जने तव ।
कृतापकृतकर्मा वै व्रतदानैर्विशुध्यति ॥ ५७.२२ ॥
अहं दास्यामि धान्यं वा वासांसि द्रविणं बहु ।
नित्यमाचर धर्मं त्वं ध्यायन्नित्यं महेश्वरम् ॥ ५७.२३ ॥

शबर उवाच -
नैवाहं कामये वित्तं न धान्यं वस्त्रमेव च ।

यो यस्यैवान्नमश्नाति स तस्याश्नाति किल्बिषम् ॥ ५७.२४ ॥

राज्न्युवाच -
कन्दमूलफलाहारो भ्रमित्वा भैक्ष्यमुत्तमम् ।
अवगाह्य सुतीर्थानि सर्वपापैः प्रमुच्यते ॥ ५७.२५ ॥
ततो विमुक्तपापस्तु यत्किंचित्कुरुते शुचिः ।
कर्मणा तेन पूतस्त्वं सद्गतिं प्राप्स्यसि ध्रुवम् ॥ ५७.२६ ॥

शबर उवाच -
अन्नमद्य मया त्यक्तं प्राणेभ्योऽपि महत्तरम् ।
सत्यं न लोपयेद्देवि निश्चितात्र मतिर्मम ॥ ५७.२७ ॥
प्रसादः क्रियतां देवि क्षमस्वाद्य जनैः सह ।
अर्धोत्तरीयवस्त्रेण संयम्यात्मानमुद्यतः ॥ ५७.२८ ॥
भार्यया सहितो व्याधो हरिं ध्यात्वा पपात ह ।
नगार्धात्पतितो यावद्गतजीवो नराधिप ॥ ५७.२९ ॥
चूर्णीभूतौ हि तौ दृष्ट्वा कुण्डस्योपरि भूमिप ।
त्रिमुहूर्ते गते काले शबरो भार्यया सह ॥ ५७.३० ॥
दिव्यं विमानमारूढो गतश्चानुत्तमां गतिम् ॥ ५७.३१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे व्याधस्वर्गगमनवर्णनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०५८



अध्याय ५८

उत्तानपाद उवाच -
अथातो देवदेवेश भानुमत्यकरोच्च किम् ।
एष मे संशयो देव कथयस्व प्रसादतः ॥ ५८.१ ॥

ईश्वर उवाच -
चिन्तयित्वा मुहूर्तं सा गता कुण्डस्य सन्निधौ ।
दृष्ट्वा कुण्डस्य माहात्म्यं राज्ञी हर्षेण पूरिता ॥ ५८.२ ॥
विप्रान् बहून् समाहूय पूजयामास तत्क्षणात् ।
दत्त्वा तु विधिवद्दानं ब्राह्मणेभ्यो नृपात्मज ॥ ५८.३ ॥
निश्चयं परमं कृत्वा स्थिता शान्तेन चेतसा ।
ततः सम्पूज्य विधिवत्पितॄन्देवान्नराधिप ॥ ५८.४ ॥
क्षपयित्वा पक्षमेकं मधुमासस्य सा स्थिता ।
अमावास्यां ततो राज्ञी गता पर्वतसन्निधौ ॥ ५८.५ ॥
नगशृङ्गं समारुह्य कृत्वा मुकुलितौ करौ ।
विज्ञाप्य ब्राह्मणान् सर्वानिदं वचनमब्रवीत् ॥ ५८.६ ॥
मम माता पिता भ्राता ये चान्ये सखिबान्धवाः ।
क्षमापयित्वा सर्वांस्तान्वचनं मम कथ्यताम् ॥ ५८.७ ॥
त्वत्पुत्री शूलभेदे तु तपः कृत्वा स्वशक्तितः ।
विसृज्य चैव सात्मानं तस्मिंस्तीर्थे दिवं ययौ ॥ ५८.८ ॥
ब्राह्मणा ऊचुः ।
संदेशं कथयिष्यामस्त्वयोक्तं शोभनव्रते ।
मातापितृभ्यां सुश्रोणि मा तेऽभूदत्र संशयः ॥ ५८.९ ॥
ततो विसृज्य तांल्लोकान् स्थिता पर्वतमूर्धनि ।
अर्धोत्तरीयवस्त्रेण गाढं बद्धा पुनःपुनः ॥ ५८.१० ॥

ततश्चिक्षेप सात्मानमेकचित्ता नराधिप ।
नगार्द्धे पतिता यावत्तावद्दृष्टाः सुराङ्गनाः ॥ ५८.११ ॥
भोभो वत्से महाभागे भानुमत्यतितापसि ।
दिव्यं विमानमारुह्य कैलासं प्रति गम्यताम् ॥ ५८.१२ ॥
ततः सा पश्यतां तेषां जनानां त्रिदिवं गता ॥ ५८.१३ ॥

मार्कण्डेय उवाच -
इति ते कथितः सर्वः शूलभेदस्य विस्तरः ।
यः श्रुतः शङ्करात्पूर्वमृषिदेवसमागमे ॥ ५८.१४ ॥
य इदं पठते भक्त्या तीर्थे देवकुलेऽपि वा ।
स मुच्यते महापापादपि जन्मशतार्जितात् ॥ ५८.१५ ॥
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
गोघाती स्त्रीविघाती च देवब्रह्मस्वहारकः ॥ ५८.१६ ॥
स्वामिद्रोही मित्रघाती तथा विश्वासघातकः ।
परन्यासापहारी च परनिक्षेपलोपकः ॥ ५८.१७ ॥
रसभेदी तुलाभेदी तथा वार्द्धुषिकस्तु यः ।
यः कन्याविघ्नकर्ता च तथा विक्रयकारकः ॥ ५८.१८ ॥
परभार्या भ्रातृभार्या गौः स्नुषा कन्यका तथा ।
अभिगामी परद्वेषी तथा धर्मप्रदूषकः ॥ ५८.१९ ॥
मुच्यन्ते सर्वे एवैते शूलभेदप्रभावतः ॥ ५८.२० ॥
य इदं श्रावयेच्छ्राद्धे विप्राणां भुञ्जतां नृप ।
मुदं प्रयान्ति संहृष्टाः पितरस्तस्य सर्वशः ॥ ५८.२१ ॥
यश्चेदं शृणुयाद्भक्त्या पठ्यमानं नरो वशी ।
स मुक्तः सर्वपापेभ्यः सर्वकल्याणभाग्भवेत् ॥ ५८.२२ ॥
इदं यशस्यमायुष्यमिदं पावनमुत्तमम् ।
पठतां शृण्वतां नृणामायुःकीर्तिविवर्धनम् ॥ ५८.२३ ॥
इति कथितमिदं ते शूलभेदस्य पुण्यं महिमन हि मनुष्यैः श्रूयते यत्सपापैः ।
मदनरिपुतटिन्या याम्यकूलस्थितस्य प्रबलदुरितकन्दोच्छेदकुद्दालकल्पम् ॥ ५८.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेदतीर्थमाहात्म्यवर्णनं नामाष्टपञ्चाशत्तमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०५९

https://sa.wikisource.org/s/fn9
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ५९

श्रीमार्कण्डेय उवाच -
ततः पुष्करिणीं गच्छेत्सर्वपापप्रणाशिनीम् ।
श्रुते यस्याः प्रभावे तु सर्वपापैः प्रमुच्यते ॥ ५९.१ ॥
रेवाया उत्तरे कूले तीर्थं परमशोभनम् ।
यत्रास्ते सर्वदा देवो वेदमूर्तिर्दिवाकरः ॥ ५९.२ ॥
कुरुक्षेत्रं यथा पुण्यं सार्वकामिकमुत्तमम् ।
इदं तीर्थं तथा पुण्यं सर्वकामफलप्रदम् ॥ ५९.३ ॥
कुरुक्षेत्रे यथा वृद्धिर्दानस्य जगतीपते ।
पुष्करिण्यां तथा दानं वर्धते नात्र संशयः ॥ ५९.४ ॥
यवमेकं तु यो दद्यात्सौवर्णं मस्तके नृप ।
पुष्करिण्यां तथा स्थानं यथा स्थानं नरे स्मृतम् ॥ ५९.५ ॥
सूर्यग्रहे तु यः स्नात्वा दद्याद्दानं यथाविधि ।
हस्त्यश्वरथरत्नादि गृहं गाश्च युगंधरान् ॥ ५९.६ ॥
सुवर्णं रजतं वापि ब्राह्मणेभ्यो ददाति यः ।
त्रयोदश दिनं यावत्त्रयोदशगुणं भवेत् ॥ ५९.७ ॥
तिलमिश्रेण तोयेन तर्पयेत्पितृदेवताः ।
द्वादशाब्दे भवेत्प्रीतिस्तत्र तीर्थे महीपते ॥ ५९.८ ॥
यस्तत्र कुरुते श्राद्धं पायसैर्मधुसर्पिषा ।
श्राद्धदो लभते स्वर्गं पित्ृणां दत्तमक्षयम् ॥ ५९.९ ॥
अक्षतैर्बदरैर्बिल्वैरिङ्गुदैर्वा तिलैः सह ।
अक्षयं फलमाप्नोति तस्मिंस्तीर्थे न संशयः ॥ ५९.१० ॥
तत्र स्नात्वा तु यो देवं पूजयेच्च दिवाकरम् ।
आदित्यहृदयं जप्त्वा पुनरादित्यमर्चयेत् ।
स गच्छेत्परमं लोकं त्रिदशैरपि वन्दितम् ॥ ५९.११ ॥

ऋचमेकां जपेद्यस्तु यजुर्वा साम एव च ।
स समग्रस्य वेदस्य फलमाप्नोति वै नृप ॥ ५९.१२ ॥
यस्त्र्यक्षरं जपेन्मन्त्रं ध्यायमानो दिवाकरम् ।
आदित्यहृदयं जप्त्वा मुच्यते सर्वपातकैः ॥ ५९.१३ ॥
यस्तत्र विधिवत्प्राणांस्त्यजते नृपसत्तम ।
स गच्छेत्परमं स्थानं यत्र देवो दिवाकरः ॥ ५९.१४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पुष्करिण्यामादित्यतीर्थमाहात्म्यवर्णनं नामैकोनषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६०



अध्याय ६०

श्रीमार्कण्डेय उवाच -
भूयोऽप्यहं प्रवक्ष्यामि आदित्येश्वरमुत्तमम् ।
सर्वदुःखहरं पार्थ सर्वविघ्नविनाशनम् ॥ ६०.१ ॥
आयुःश्रीवर्द्धनं नित्यं पुत्रदं स्वर्गदं शिवम् ।
यस्य तीर्थस्य चान्यानि तीर्थानि कुरुनन्दन ॥ ६०.२ ॥
नालभन्त श्रियं नाके मर्त्ये पातालगोचरे ।
कुरुक्षेत्रं गया गङ्गा नैमिषं पुष्करं तथा ॥ ६०.३ ॥
वाराणसी च केदारं प्रयागं रुद्रनन्दनम् ।
महाकालं सहस्राक्षं शुक्लतीर्थं नृपोत्तम ॥ ६०.४ ॥
रवितीर्थस्य सर्वाणि कलां नार्हन्ति षोडशीम् ।
रवितीर्थे हि यद्वृत्तं तच्छृणुष्व नृपोत्तम ॥ ६०.५ ॥
स्नेहात्ते कथयिष्यामि वार्द्धकेनातिपीडितः ।
शृण्वन्तु ऋषयः सर्वे तपोनिष्ठा महौजसः ॥ ६०.६ ॥
श्रुतं मे रुद्रसांनिध्ये नन्दिस्कन्दगणैः सह ।
पार्वत्या पृष्टः शम्भुश्च रवितीर्थस्य यत्फलम् ॥ ६०.७ ॥
शम्भुना च यदाख्यातं गिरिजायाः ससम्भ्रमम् ।
तत्सर्वमेकचित्तेन रुद्रोद्गीतं श्रुतं मया ॥ ६०.८ ॥
तत्तेऽहं सम्प्रवक्ष्यामि शृणु यत्नेन पाण्डव ।
दुर्भिक्षोपहता विप्रा नर्मदां तु समाश्रिताः ॥ ६०.९ ॥
उद्दालको वशिष्ठश्च माण्डव्यो गौतमस्तथा ।
याज्ञवल्क्योऽथ गर्गश्च शाण्डिल्यो गालवस्तथा ॥ ६०.१० ॥
नाचिकेतो विभाण्डश्च वालखिल्यादयस्तथा ।
शातातपश्च शङ्खश्च जैमिनिर्गोभिलस्तथा ॥ ६०.११ ॥
जैगीषव्यः शतानीकः सर्व एव समागताः ।

तीर्थयात्रा कृता तैस्तु नर्मदायाः समन्ततः ॥ ६०.१२ ॥
आदित्येश्वरमायाताः प्रसङ्गादृषिपुंगवाः ।
वृक्षैः संछादितं शुभ्रं धवतिन्दुकपाटलैः ॥ ६०.१३ ॥
जम्बीरैरर्जुनैः कुब्जैः शमीकेसरकिंशुकैः ।
तस्मिंस्तीर्थे महापुण्ये सुगन्धिकुसुमाकुले ॥ ६०.१४ ॥
पुन्नागनालिकेरैश्च खदिरैः कल्पपादपैः ।
अनेकश्चापदाकीर्णं मृगमार्जारसंकुलम् ॥ ६०.१५ ॥
ऋक्षहस्तिसमाकीर्णं चित्रकैश्चोपशोभितम् ।
प्रविष्टा ऋषयः सर्वे वने पुष्पसमाकुले ॥ ६०.१६ ॥
वनान्ते च स्त्रियो दृष्ट्वा रक्ता रक्ताम्बरान्विताः ।
रक्तमाल्यानुशोभाढ्या रक्तचन्दनचर्चिताः ॥ ६०.१७ ॥
रक्ताभरणसंयुक्ताः पाशहस्ता भयावहाः ।
तासां समीपगा दृष्टाः कृष्णजीमूतसन्निभाः ॥ ६०.१८ ॥
महाकाया भीमवक्त्राः पाशहस्ता भयावहाः ।
अनावृष्ट्युपमा दृष्टा आतुराः पिङ्गलोचनाः ॥ ६०.१९ ॥
दीर्घजिह्वा करालास्या तीक्ष्णदंष्ट्रा दुरासदा ।
वृद्धा नारी कुरुश्रेष्ठ दृष्टान्या ऋषिपुंगवैः ॥ ६०.२० ॥
ततः समीपगा वृद्धा तस्य वृन्दस्य भारत ।
स्वाध्यायनिरता विप्रा दृष्टास्तैः पापकर्मभिः ॥ ६०.२१ ॥
ऊचुस्ते तु समूहेन ब्राह्मणांस्तपसि स्थितान् ।
अस्माकं स्वामिनः सर्वे तिष्ठन्ते तीर्थमध्यतः ।
ते प्रस्थाप्या महाभागाः सर्वथैव त्वरान्विताः ॥ ६०.२२ ॥
तच्छ्रुत्वा वचनं तेषां सर्वे चैव त्वरान्विताः ।
जग्मुस्ते नर्मदाकक्षं दृष्ट्वा रेवां द्विजोत्तमाः ॥ ६०.२३ ॥
ततः केचित्स्तुवन्त्यन्ये जय देवि नमोऽस्तु ते ॥ ६०.२४ ॥
नमोऽस्तु ते सिद्धगणैर्निषेविते नमोऽस्तु ते सर्वपवित्रमङ्गले ।
नमोऽस्तु ते विप्रसहस्रसेविते नमोऽस्तु रुद्राङ्गसमुद्भवे वरे ॥ ६०.२५ ॥
नमोऽस्तु ते सर्वपवित्रपावने नमोऽस्तु ते देवि वरप्रदे शिवे ।
नमामि ते शीतजले सुखप्रदे सरिद्वरे पापहरे विचित्रिते ॥ ६०.२६ ॥
अनेकभूतौघसुसेविताङ्गे गन्धर्वयक्षोरगपाविताङ्गे ।
महागजौघैर्महिषैर्वराहैरापीयसे तोयमहोर्मिमाले ॥ ६०.२७ ॥
नमामि ते सर्ववरे सुखप्रदे विमोचयास्मानघपाशबद्धान् ॥ ६०.२८ ॥

भ्रमन्ति तावन्नरकेषु मर्त्या यावत्तवाम्भो नहि संश्रयन्ति ।
स्पृष्टं करैश्चन्द्रमसो रवेश्चेत्तद्देवि दद्यात्परमं पदं तु ॥ ६०.२९ ॥
अनेकसंसारभयार्दितानां पापैरनेकैरभिवेष्टितानाम् ।
गतिस्त्वमम्भोजसमानवक्त्रे द्वन्द्वैरनेकैरभिसंवृतानाम् ॥ ६०.३० ॥
नद्यश्च पूता विमला भवन्ति त्वां देवि सम्प्राप्य न संशयोऽत्र ।
दुःखातुराणामभयं ददासि शिष्टैरनेकैरभिपूजितासि ॥ ६०.३१ ॥
विण्मूत्रदेहाश्च निमग्नदेहा भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महाबलध्वस्ततरङ्गभङ्गं जलं न यावत्तव संस्पृशन्ति ॥ ६०.३२ ॥
म्लेच्छाः पुलिन्दास्त्वथ यातुधानाः पिबन्ति येऽम्भस्तव देवि पुण्यम् ।
तेऽपि प्रमुच्यन्ति भयाच्च घोरात्किमत्र विप्रा भवपाशभीताः ॥ ६०.३३ ॥
सरांसि नद्यः क्षयमभ्युपेता घोरे युगेऽस्मिन्कलिनावसृष्टे ।
त्वं भ्राजसे देवि जलौघपूर्णा दिवीव नक्षत्रपथे च गङ्गा ॥ ६०.३४ ॥
तव प्रासादाद्वरदे विशिष्टे कालं यथेमं परिपालयित्वा ।
यास्याम मोक्षं तव सुप्रसादाद्वयं यथा त्वं कुरु नः प्रसादम् ॥ ६०.३५ ॥
त्वामाश्रिता ये शरणं गताश्च गतिस्त्वमम्बेव पितेव पुत्रान् ।
त्वत्पालिता यावदिमं सुघोरं कालं त्वनावृष्टिहतं क्षिपामः ॥ ६०.३६ ॥
एवं स्तुता तदा देवी नर्मदा सरितां वरा ।
प्रत्यक्षा सा परा मूर्तिर्ब्राह्मणानां युधिष्ठिर ॥ ६०.३७ ॥

श्रीमार्कण्डेय उवाच -
पठन्ति ये स्तोत्रमिदं नरेन्द्र शृण्वन्ति भक्त्या परया प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन यानेन दिव्याम्बरभूषिताङ्गाः ॥ ६०.३८ ॥
ये स्तोत्रमेतत्सततं जपन्ति स्नात्वा च तोयेन तु नर्मदायाः ।
तेभ्योऽन्तकाले सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ ६०.३९ ॥
प्रातः समुत्थाय तथा शयानो यः कीर्तयेतानुदिनं स्तवेन्द्रम् ।
देहक्षयं स्वे सलिले ददाति समाश्रयं तस्य महानुभाव ॥ ६०.४० ॥
पापैर्विमुक्ता दिवि मोदमानाः सम्भोगिनश्चैव तु नान्यथा च ॥ ६०.४१ ॥
प्रसन्ना नर्मदा देवी स्तोत्रेणानेन भारत ।
जलेनाप्यायितान् विप्रान् दक्षिणापथवाहिनी ॥ ६०.४२ ॥
अमृतत्वं तु वो दद्मि योगिभिर्यन्न गम्यते ।
दुर्लभं यत्सुरैः सर्वैर्मत्प्रसादाल्लभिष्यथ ॥ ६०.४३ ॥
इति ते ब्राह्मणा राजंल्लब्धा वरमनुत्तमम् ।

गमिष्यन्तः प्रीतचित्ता ददृशुश्चित्रमद्भुतम् ॥ ६०.४४ ॥

श्रीमार्कण्डेय उवाच -
दृष्टास्तैः पुरुषाः पार्थ नर्मदातटसंस्थिताः ।
स्नानदेवार्चनासक्ताः पञ्च एव महाबलाः ॥ ६०.४५ ॥
ते दृष्टा ब्राह्मणैः सर्वैर्वेदवेदाङ्गपारगैः ।
संपृष्टास्तैर्महाराज यथा तदवधारय ॥ ६०.४६ ॥
विप्रा ऊचुः ।
वनान्ते स्त्रीयुगं दृष्ट्वा महारौद्रं भयावहम् ।
वृद्धाश्च पुरुषास्तत्र पाशहस्ता भयावहाः ॥ ६०.४७ ॥
दुर्धर्षा दुर्निरीक्ष्याश्च इतश्चेतश्च चञ्चलाः ।
व्याहरन्तः शुभां वाचं न तत्र गतिरस्ति वै ॥ ६०.४८ ॥
अपरस्परयोः सर्वे निरीक्षन्तः पुनःपुनः ।
तैस्तु यद्वचनं प्रोक्तं तत्सर्वं कथ्यतामिति ॥ ६०.४९ ॥
अस्माकं पुरुषाः पञ्च तिष्ठन्ति तत्र सत्तमाः ।
ते प्रस्थाप्या महाभागाः सर्वथैव त्वरान्विताः ॥ ६०.५० ॥
अथ ते पुरुषाः पञ्च श्रुत्वा वाक्यमिदं शुभम् ।
परस्परं निरीक्षन्तो वदन्ति च पुनःपुनः ॥ ६०.५१ ॥
क्व ते कस्य कुतो याताः किमुक्तं तैर्भयावहैः ॥ ६०.५२ ॥
पुरुषा ऊचुः ।
तीर्थावगाहनं सर्वैः पूर्वदक्षिणपश्चिमैः ।
उत्तरैश्च कृतं भक्त्या न पापं तैर्व्यपोहितम् ॥ ६०.५३ ॥
निष्पापाश्चाथ संजातास्तीर्थस्यास्य प्रभावतः ।
शृण्वन्तु ऋषयः सर्वे वह्निकालोपमा द्विजाः ॥ ६०.५४ ॥
पातकानि च घोराणि यान्यचिन्त्यानि देहिनाम् ।
पापिष्ठेन तु चैकेन गुरुदारा निषेविता ॥ ६०.५५ ॥
हृतं चान्येन मित्रस्वं सुवर्णं च धनं तथा ।
ब्रह्महत्या महारौद्रा कृता चान्येन पातकम् ॥ ६०.५६ ॥
सुरापानं तु चान्यस्य संजातं चाप्यकामतः ।
गोवध्या चाप्यकामेन कृता चैकेन पापिना ॥ ६०.५७ ॥
अकामतोऽपि सर्वेषां पातकानि नराधिप ।
ब्राह्मणानां तु ते श्रुत्वा वाक्यं तद्विस्मयान्विताः ॥ ६०.५८ ॥

सद्य एव तदा जाताः पापिष्ठा गतकल्मषाः ।
तीर्थस्यास्य प्रभावेन नर्मदायाः प्रभावतः ॥ ६०.५९ ॥
न क्वचित्पातकानां तु प्रवेशश्चात्र जायते ।
एवं संचित्य ते सर्वे पापिष्ठाश्च परस्परम् ॥ ६०.६० ॥
चित्रभानुः स्मृतस्तैस्तु विचिन्त्य हृदये हरिम् ।
स्नात्वा रेवाजले पुण्ये तर्पिताः पितृदेवताः ॥ ६०.६१ ॥
नत्वा तु भास्करं देवं हृदि ध्यात्वा जनार्दनम् ।
प्रदक्षिणं तु तं भक्त्या ज्वलन्तं जातवेदसम् ॥ ६०.६२ ॥
पतिताः पाण्डवश्रेष्ठ पापोद्विग्ना महीपते ।
सात्त्विकीं वासनां कृत्वा त्यक्त्वा रजस्तमस्तथा ॥ ६०.६३ ॥
हतं तैः पावके सर्वं रेवाया उत्तरे तटे ।
विमानस्थास्तदा दृष्टा ब्राह्मणैस्ते युधिष्ठिर ॥ ६०.६४ ॥
आश्चर्यमतुलं दृष्टमृषिभिर्नर्मदातटे ।
तदाप्रभृति ते सर्वे रागद्वेषविवर्जिताः ॥ ६०.६५ ॥
रवितीर्थं द्विजा हृष्टाः सेवन्ते मोक्षकाङ्क्षया ।
तीर्थस्यास्य च यत्पुण्यं तच्छृणुष्व नराधिप ॥ ६०.६६ ॥
पीडितो वृद्धभावेन भक्त्या प्रीतो नरेश्वर ।
उद्देशं कथयिष्यामि द्विक्रोशाभ्यन्तरे स्थितः ॥ ६०.६७ ॥
कुरुक्षेत्रं यथा पुण्यं रवितीर्थं श्रुतं मया ।
ईश्वरेण पुरा ख्यातं षण्मुखस्य नराधिप ॥ ६०.६८ ॥
श्रुतं रुद्राच्च तैः सर्वैरहं तत्र समीपगः ।

ईश्वर उवाच -
मार्तण्डग्रहणे प्राप्ते ये व्रजन्ति षडानन ।
रवितीर्थे कुरुक्षेत्रे तुल्यमेतत्फलं लभेत् ॥ ६०.६९ ॥
स्नाने दाने तथा जप्ये होमे चैव विशेषतः ।
कुरुक्षेत्रे समं पुण्यं नात्र कार्या विचारणा ॥ ६०.७० ॥
ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ।
रवितीर्थे विशेषेण रेवा पुण्यफलप्रदा ॥ ६०.७१ ॥
षष्ठ्यां सूर्यदिने भक्त्या व्यतीपाते च वै धृतौ ।
संक्रान्तौ ग्रहणेऽमायां ये व्रजन्ति जितेन्द्रियाः ॥ ६०.७२ ॥
कामक्रोधैर्विमुक्ताश्च रागद्वेषैस्तथैव च ।

उपोष्य परया भक्त्या देवस्याग्रे नराधिप ॥ ६०.७३ ॥
रात्रौ जागरणं कृत्वा दीपं देवस्य बोधयेत् ।
कथां वै वैष्णवीं पार्थ वेदाभ्यसनमेव च ॥ ६०.७४ ॥
ऋग्वेदं वा यजुर्वेदं सामवेदमथर्वणम् ।
ऋचमेकां जपेद्यस्तु स वेदफलमाप्नुयात् ॥ ६०.७५ ॥
गायत्र्या च चतुर्वेदफलमाप्नोति मानवः ।
प्रभाते पूजयेद्विप्रानन्नदानहिरण्यतः ॥ ६०.७६ ॥
भूमिदानेन वस्त्रेण अन्नदानेन शक्तितः ।
छत्रोपानहशय्यादिगृहदानेन पाण्डव ॥ ६०.७७ ॥
ग्रामधूर्वहदानेन गजकन्याहयेन च ।
विद्याशकटदानेन सर्वेषामभयं भवेत् ॥ ६०.७८ ॥
शत्रुश्च मित्रतां याति विषं चैवामृतं भवेत् ।
ग्रहा भवन्ति सुप्रीताः प्रीतस्तस्य दिवाकरः ॥ ६०.७९ ॥
एतत्ते सर्वमाख्यातं रवितीर्थफलं नृप ।
ये शृण्वन्ति नरा भक्त्या रवितीर्थफलं शुभम् ॥ ६०.८० ॥
तेऽपि पापविनिर्मुक्ता रविलोके वसन्ति हि ।
गोदानेन च यत्पुण्यं यत्पुण्यं भृगुदर्शने ॥ ६०.८१ ॥
केदार उदकं पीत्वा तत्पुण्यं जायते नृणाम् ।
अब्दमश्वत्थसेवायां तिलपात्रप्रदो भवेत् ॥ ६०.८२ ॥
तत्फलं समवाप्नोति आदित्येश्वरकीर्तनात् ।
श्रुते यस्य प्रभावे न जायते यन्नृपात्मज ॥ ६०.८३ ॥
तत्सर्वं कथयिष्यामि भक्त्या तव महीपते ।
पापानि च प्रलीयन्ते भिन्नपात्रे यथा जलम् ॥ ६०.८४ ॥
तीर्थस्याभिमुखो नित्यं जायते नात्र संशयः ।
गुह्याद्गुह्यतरं तीर्थं कथितं तव पाण्डव ॥ ६०.८५ ॥
पापिष्ठानां कृतघ्नानां स्वामिमित्रावघातिनाम् ।
तीर्थाख्यानं शुभं तेषां गोपितव्यं सदा बुधैः ॥ ६०.८६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनं नाम षष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६१

https://sa.wikisource.org/s/fmw
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ६१

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्परं पुण्यं नर्मदादक्षिणे तटे ।
शक्रतीर्थं सुविख्यातमशेषाघविनाशनम् ॥ ६१.१ ॥
पुरा शक्रेण तत्रैव तपो वै दुरतिक्रमम् ।
प्रारब्धं परया भक्त्या देवं प्रति महेश्वरम् ॥ ६१.२ ॥
ततः संतोषितो देव उमापतिर्नराधिप ।
देवेन्द्रत्वं वरं राज्यं दानवानां वधं ददौ ॥ ६१.३ ॥
लब्धं शक्रेण नृपते नर्मदातीर्थभावतः ।
ततः पुण्यतमं तीर्थं संजातं वसुधातले ॥ ६१.४ ॥
कार्तिकस्य तु मासस्य कृष्णपक्षे त्रयोदशीम् ।
उपोष्य वै नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ ६१.५ ॥
दुःस्वप्नसम्भवैः पापैर्दुर्निमित्तसमुद्भवैः ।
ग्रहशाकिनिसम्भूतैर्मुच्यते पाण्डुनन्दन ॥ ६१.६ ॥
शक्रेश्वरं नृपश्रेष्ठ ये प्रपश्यन्ति भक्तितः ।
तेषां जन्मकृतं पापं नश्यते नात्र संशयः ॥ ६१.७ ॥
अगम्यागमने चैव अवाह्ये चैव वाहिते ।
स्वामिमित्रविघाते यन्नश्यते नात्र संशयः ॥ ६१.८ ॥
गोप्रदानं प्रकर्तव्यं शुभं ब्राह्मणपुंगवे ।
धुर्यं वा दापयेत्तस्मिन् सर्वाङ्गरुचिरं नृप ॥ ६१.९ ॥
दातव्यं परया भक्त्या स्वर्गे वासमभीप्सता ।
एतत्ते सर्वमाख्यातं शक्रेश्वरफलं नृप ॥ ६१.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शक्रेश्वरतीर्थमाहात्म्यवर्णनं नामैकषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६२



अध्याय ६२

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र करोडीश्वरमुत्तमम् ।
यत्र वै निहतास्तात दानवाः सपदानुगाः ॥ ६२.१ ॥
इन्द्रादिदेवैः संहृष्टैः सततं जयबुद्धिभिः ।
तेषां ये पुत्रपौत्राश्च पूर्ववैरमनुस्मरम् ॥ ६२.२ ॥
क्रुद्धैर्देवसमूहैश्च दानवा निहता रणे ।
तेषां शिरांसि संगृह्य सर्वे देवाः सवासवाः ॥ ६२.३ ॥
निक्षिप्य नर्मदातोये बन्धुभावमनुस्मरम् ।
तत्र स्नात्वा सुराः सर्वे स्थापयित्वा उमापतिम् ॥ ६२.४ ॥
इन्द्रेण सहिताः सर्वेऽपूजयंल्लोकसिद्धये ।
हृष्टचित्ताः सुराः सर्वे जग्मुराकाशमण्डलम् ॥ ६२.५ ॥
दानवानां महाभाग सूदिता कोटिरुत्तमा ।
तदा प्रभृति तत्तीर्थं करोडीति महीतले ॥ ६२.६ ॥
विख्यातं तु तदा लोके पापघ्नं पाण्डुनन्दन ।
अष्टम्यां च चतुर्दश्यामुभौ पक्षौ च भक्तितः ।
उपोष्य शूलिनश्चाग्रे रात्रौ कुर्वीत जागरम् ॥ ६२.७ ॥
सत्कथापाठसंयुक्तो वेदाध्ययनसंयुतः ।
प्रभाते विमले प्राप्ते पूजयेत्त्रिदशेश्वरम् ॥ ६२.८ ॥
पञ्चामृतेन संस्नाप्य श्रीखण्डेन च गुण्ठयेत् ।
शस्तैः पल्लवपुष्पैश्च पूजयेत्तु प्रयत्नतः ॥ ६२.९ ॥
बहुरूपं जपन्मन्त्रं दक्षिणाशां व्यवस्थितः ।
यथोक्तेन विधानेन नाभिमात्रे जले क्षिपेत् ॥ ६२.१० ॥
तिलाञ्जलिं तु प्रेताय दक्षिणाशामुपस्थितः ।
श्राद्धं तत्रैव विप्राय कारयेद्विजितेन्द्रियः ॥ ६२.११ ॥
विषमैरग्रजातैश्च वेदाभ्यसनतत्परैः ।

गोहिरण्येन सम्पूज्य ताम्बूलैर्भोजनैस्तथा ॥ ६२.१२ ॥
भूषणैः पादुकाभिश्च ब्राह्मणान्पाण्डुनन्दन ।
भवेत्कोटिगुणं तस्य नात्र कार्या विचारणा ॥ ६२.१३ ॥
तस्मिंस्तीर्थे तु यः कश्चित्त्यजेद्देहं विधानतः ।
तस्य भवति यत्पुण्यं तच्छृणुष्व नराधिप ॥ ६२.१४ ॥
यावदस्थीनि तिष्ठन्ति मर्त्यस्य नर्मदाजले ।
तावद्वसति धर्मात्मा शिवलोके सुदुर्लभे ॥ ६२.१५ ॥
ततः कालाच्च्युतस्तस्मादिह मानुषतां गतः ।
कोटिधनपतिः श्रीमाञ्जायते राजपूजितः ॥ ६२.१६ ॥
सर्वधर्मसमायुक्तो मेधावी बीजपुत्रकः ।
विख्यातो वसुधापृष्ठे दीर्घायुर्मानवो भवेत् ॥ ६२.१७ ॥
पुनः स्मरति तत्तीर्थं तत्र गत्वा नृपोत्तम ।
करोडेश्वरमभ्यर्च्य प्राप्नोति परमां गतिम् ॥ ६२.१८ ॥
इन्द्रचन्द्रयमैरुद्रैरादित्यैर्वसुभिस्तथा ।
विश्वेदेवैस्तथा सर्वैः स्थापितस्त्रिदशेश्वरः ॥ ६२.१९ ॥
रेवाया उत्तरे कूले लोकानां हितकाम्यया ।
मानवो भक्तिसंयुक्तः प्रासादं कारयेत्तु यः ॥ ६२.२० ॥
तस्मिंस्तीर्थे नरश्रेष्ठ सद्गतिं समवाप्नुयात् ।
न्यायोपात्तधनेनैव दारुपाषाणकेष्टकैः ॥ ६२.२१ ॥
ब्राह्मणः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिश्च शक्तितः ।
तेऽपि यान्ति नरा लोके शांकरे सुरपूजिते ॥ ६२.२२ ॥
यः शृणोति सदा भक्त्या माहात्म्यं तीर्थजं नृप ।
तस्य पापं प्रणश्येत षण्मासाभ्यन्तरं च यत् ॥ ६२.२३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे करोडीश्वरतीर्थमाहात्म्यवर्णनं नाम द्विषष्टितमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६३



अध्याय ६३

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र कुमारेश्वरमुत्तमम् ।
प्रसिद्धं सर्वतीर्थानामगस्त्येश्वरसन्निधौ ॥ ६३.१ ॥
षण्मुखेन पुरा तात सर्वपातकनाशनम् ।
आराध्य परया भक्त्या सिद्धिः प्राप्ता नराधिप ॥ ६३.२ ॥
देवसैन्याधिपो जातः सर्वशत्रुनिबर्हणः ।
उग्रतेजा महात्मासौ संजातस्तीर्थसेवनात् ॥ ६३.३ ॥
तदाप्रभृति तत्तीर्थं संजातंनर्मदातटे ।
तत्र तीर्थे तु यो गत्वा एकचित्तो जितेन्द्रियः ॥ ६३.४ ॥
कार्त्तिकस्य चतुर्दश्यामष्टम्यां च विशेषतः ।
स्नापयेद्गिरिजानाथं दधिदुग्धेन सर्पिषा ॥ ६३.५ ॥
गीतं तत्र प्रकर्तव्यं पिण्डदानं यथाविधि ।
ब्राह्मणैः श्रोत्रियैः पार्थ षट्कर्मनिरतैः शुभैः ॥ ६३.६ ॥
यत्किंचिद्दीयते तत्र अक्षयं पाण्डुनन्दन ।
सर्वतीर्थमयं तीर्थं निर्मितं शिखिना नृप ॥ ६३.७ ॥
एतत्ते सर्वमाख्यातं कुमारेश्वरजं फलम् ।
कुमारदर्शनात्पुण्यं प्राप्यते पाण्डुनन्दन ॥ ६३.८ ॥
मृतः स्वर्गमवाप्नोति सत्यमीश्वरभाषितम् ॥ ६३.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुमारेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६४



अध्याय ६४

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।
नराणां पापनाशाय अगस्त्येश्वरमुत्तमम् ॥ ६४.१ ॥
तत्र स्नात्वा नरो राजन्मुच्यते ब्रह्महत्यया ।
कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशी ॥ ६४.२ ॥
घृतेन स्नापयेद्देवं समाधिस्थो जितेन्द्रियः ।
एकविंशतिकुलोपेतो च्यवेदैश्वरात्पदात् ॥ ६४.३ ॥
धनं चोपानहौ छत्रं दद्याच्च घृतकम्बलम् ।
भोजनं चैव सर्वेषां सर्वं कोटिगुणं भवेत् ॥ ६४.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अगस्त्येश्वरतीर्थमाहात्म्यवर्णनं नाम चतुःषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६५

https://sa.wikisource.org/s/fmg

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ६५

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र आनन्देश्वरमुत्तमम् ।
तत्तीर्थं कथयिष्यामि सर्वपापक्षयंकरम् ॥ ६५.१ ॥

युधिष्ठिर उवाच -
आनन्दश्चैव संजातो रुद्रस्य द्विजसत्तम ।
कथ्यतां मे च तत्सर्वं संक्षेपात्सह बान्धवैः ॥ ६५.२ ॥

श्रीमार्कण्डेय उवाच -
कथयामि नृपश्रेष्ठ आनन्देश्वरमुत्तमम् ।
दानवानां वधं कृत्वा देवदेवो महेश्वरः ॥ ६५.३ ॥
पूजितो दैवतैः सर्वैः किन्नरैर्यक्षपन्नगैः ।
आनन्दसंयुतो देवो ननर्त वृषवाहनः ॥ ६५.४ ॥
भैरवं रूपमास्थाय गौर्या चार्द्धाङ्गसंस्थितः ।
भूतवेतालकङ्कालैर्भैरवैर्भैरवो वृतः ॥ ६५.५ ॥
ननर्त नर्मदातीरे दक्षिणे पाण्डुनन्दन ।
तुष्टैर्मरुद्गणैः सर्वैः स्थापितः कमलासनः ॥ ६५.६ ॥
तदाप्रभृति तत्तीर्थमानन्देश्वरमुच्यते ।
अष्टम्यां च चतुर्दश्यां पौर्णमास्यां नराधिप ॥ ६५.७ ॥
विधिवच्चार्चयेद्देवं सुगन्धेन विलेपयेत् ।
ब्राह्मणान्पूजयेत्तत्र यथाशक्त्या युधिष्ठिर ॥ ६५.८ ॥
गोदानं तत्र कर्तव्यं वस्त्रदानं शुभावहम् ।
वसन्तस्य त्रयोदश्यां श्राद्धं तत्रैव कारयेत् ॥ ६५.९ ॥
इङ्गुदैर्बदरैर्बिल्वैरक्षतैश्च जलेन वा ।
प्रेतानां कारयेच्छ्राद्धमानन्देश्वर उत्तमे ॥ ६५.१० ॥

आनन्दिता भवेयुस्ते यावदाभूतसम्प्लवम् ।
सन्ततेर्वै न विच्छेदः सप्तजन्मसु जायते ।
आनन्दो हि भवत्तेषां प्रतिजन्मनि भारत ॥ ६५.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आनन्देश्वरतीर्थमाहात्म्यवर्णनं नाम पञ्चषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६६

https://sa.wikisource.org/s/fna
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ६६

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र मातृतीर्थमनुत्तमम् ।
सङ्गमस्य समीपस्थं नर्मदादक्षिणे तटे ॥ ६६.१ ॥
मातरस्तत्र राजेन्द्र संजाता नर्मदातटे ।
उमार्धनारिर्देवेशो व्यालयज्ञोपवीतधृक् ॥ ६६.२ ॥
उवाच योगिनीवृन्दं कष्टंकष्टमहो हर ।
अजेयाः सर्वदेवानां त्वत्प्रसादान्महेश्वर ॥ ६६.३ ॥
तीर्थमत्र विधानेन प्रख्यातं वसुधातले ।
एवं भवतु योगिन्य इत्युक्त्वान्तरधाच्छिवः ॥ ६६.४ ॥

श्रीमार्कण्डेय उवाच -
तत्र तीर्थे तु यो भक्त्या नवम्यां नियतः शुचिः ।
उपोष्य परया भक्त्या पूजयेन्मातृगोचरम् ॥ ६६.५ ॥
तस्य स्युर्मातरः प्रीताः प्रीतोऽयं वृषवाहनः ।
वन्ध्याया मृतवत्साया अपुत्राया युधिष्ठिर ॥ ६६.६ ॥
स्नापनं चारभेत्तत्र मन्त्रशास्त्रविदुत्तमः ।
सहिरण्येन कुम्भेन पञ्चरत्नफलान्वितः ॥ ६६.७ ॥
स्नापयेत्पुत्रकामायाः कांस्यपात्रेण देशिकः ।
पुत्रं सा लभते नारी वीर्यवन्तं गुणान्वितम् ॥ ६६.८ ॥
यो यं काममभिध्यायेत्ततः स लभते नृप ।
मातृतीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ ६६.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मातृतीर्थमाहात्म्यवर्णनं नाम षट्षष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६७

https://sa.wikisource.org/s/fni


अध्याय ६७

श्रीमार्कण्डेय उवाच -
तस्यैवानन्तरं तात जलमध्ये व्यवस्थितम् ।
लुङ्केश्वरमिति ख्यातं सुरासुरनमस्कृतम् ॥ ६७.१ ॥
इदं तीर्थं महापुण्यं नानाश्चर्यं महीतले ।
अस्य तीर्थस्य माहात्म्यमुत्पत्तिं शृणु भारत ॥ ६७.२ ॥
आसीत्पुरा महावीर्यो दानवो बलदर्पितः ।
कालपृष्ठ इति ख्यातः सुतो ब्रह्मसुतस्य च ॥ ६७.३ ॥
गङ्गातटं समाश्रित्य चचार विपुलं तपः ।
अधोमुखोऽपि संस्थित्वापिबद्धूममहर्निशम् ॥ ६७.४ ॥
ततश्चानन्तरं देवस्तिष्ठते ह्युमया सह ।
दृष्ट्वा तं पार्वती सा तु तपस्युग्रे व्यवस्थितम् ॥ ६७.५ ॥
पश्य पश्य महादेव धूमाशी तिष्ठते नरः ।
प्रसीद तं कुरुष्वाद्य देहि शीघ्रं वरं विभो ॥ ६७.६ ॥

ईश्वर उवाच -
यदुक्तं वचनं देवि न तन्मे रोचते प्रिये ।
स्वकार्यं च सदा चिन्त्यं परकार्यं विसर्जयेत् ॥ ६७.७ ॥
मूर्खस्त्रीबालशत्रूणां यश्छन्देनानुवर्तते ।
व्यसने पतते घोरे सत्यमेतदुदीरितम् ॥ ६७.८ ॥

देव्युवाच -
भार्ययाभ्यर्थितो भर्ता कारणं बहु भाषते ।
लघुत्वं याति सा नारी एवं शास्त्रेषु पठ्यते ॥ ६७.९ ॥
प्राणत्यागं करिष्यामि यदि मां त्वं न मन्यसे ।
पार्वत्या प्रेरितो देवो गतोऽसौ दानवं प्रति ॥ ६७.१० ॥

ईश्वर उवाच -
किमर्थं पिबसे धूमं किमर्थं तप्यसे तपः ।
किं दुःखं किं नु सन्तापो वद कार्यमभीप्सितम् ॥ ६७.११ ॥
युवा त्वं दृश्यसेऽद्यापि वर्षविंशतिरेव च ।
तदाचक्ष्व हि मे सर्वं तपसः कारणं महत् ॥ ६७.१२ ॥

दानव उवाच -
अचला दीयतां भक्तिर्मम स्थैर्यं तवोपरि ।
अपरं वर्षसाहस्रं निर्विघ्नं मे गतं विभो ॥ ६७.१३ ॥
दिवसानां सहस्रे द्वे पूर्णे त्वत्तपसा मम ॥ ६७.१४ ॥

ईश्वर उवाच -
याचयाभीप्सितं कार्यं तुष्टोऽहं तव सुव्रत ।
देवस्य वचनं श्रुत्वा चिन्तयामास दानवः ॥ ६७.१५ ॥
किं नाकं याचयाम्यद्य किमद्य सकलां महीम् ।
एवं संचिन्तयामास कामबाणेन पीडितः ॥ ६७.१६ ॥

दानव उवाच -
यदि तुष्टोऽसि मे देव वरं दास्यसि मे प्रभो ।
सङ्ग्रामैस्तु न तुष्टोऽहं बलं नास्तीति किंचन ॥ ६७.१७ ॥
यस्य मूर्धन्यहं देव पाणिना समुपस्पृशे ।
देवदानवगन्धर्वो भस्मसाद्यातु तत्क्षणात् ॥ ६७.१८ ॥

ईश्वर उवाच -
यत्त्वया चिन्तितं किंचित्तत्सर्वं सफलं तव ।
उत्तिष्ठ गच्छ शीघ्रं त्वं भवनं प्रति दानव ॥ ६७.१९ ॥

दानव उवाच -
स्थीयतां देवदेवेश यावज्ज्ञास्यामि ते वरम् ।
युष्मन्मूर्ध्नि न्यसे पाणिं प्रत्ययो मे भवेद्यथा ॥ ६७.२० ॥
ततश्चानन्तरं देवश्चिन्तयानो महेश्वरः ।
न स्कन्दो न हरिर्ब्रह्मा यः कार्येषु क्षमोऽधुना ॥ ६७.२१ ॥

ज्ञात्वा चैवापदं प्राप्तां देवः प्रार्थयते वृषम् ।
अनेन सह पापेन युध्यस्व साम्प्रतं क्षणम् ॥ ६७.२२ ॥
करं प्रासारयद्दैत्यो देवं मूर्ध्नि किल स्पृशेत् ।
लाङ्गूलेनाहतो दैत्यो विषण्णः पतितो भुवि ॥ ६७.२३ ॥
देवस्तु दक्षिणामाशां गतश्चैवोमया सह ।
भयभीतो निरीक्षेत ग्रीवां भज्य पुनःपुनः ॥ ६७.२४ ॥
गते चादर्शनं देवे युयुधे वृषभेण सः ।
द्वावेतौ बलिनां श्रेष्ठौ युयुधाते महाबलौ ॥ ६७.२५ ॥
प्रहारैर्वज्रसदृशैः कोपेन घटिकात्रयम् ।
पाणिभ्यां न स्पृशेद्यो वै वृषभस्य शिरस्तथा ॥ ६७.२६ ॥
हत्वा लाङ्गूलपातेन आगतो वृषभस्तदा ।
उत्थितश्चाप्यसौ दैत्यो व्रजते वृषपृष्ठतः ॥ ६७.२७ ॥
वायुवेगेन सम्प्राप्तो यत्र देवो महेश्वरः ।
आगतं दानवं दृष्ट्वा वृषो वचनमब्रवीत् ॥ ६७.२८ ॥
आरुह्य पृष्ठे मे देव शीघ्रमेव हि गम्यताम् ।
आरुह्य वृषभं देवो जगाम चोमया सह ॥ ६७.२९ ॥
नाकं प्राप्तस्ततो देवो गतः शक्रस्य मन्दिरम् ।
नात्यजद्देवपृष्ठं तु दानवो बलदर्पितः ॥ ६७.३० ॥
इन्द्रलोकं परित्यज्य ब्रह्मलोकं गतस्तदा ।
यत्रयत्र व्रजेद्देवो भयात्सह दिवौकसैः ॥ ६७.३१ ॥
अपश्यत्तत्र तत्रैव पृष्ठे लग्नं तु दानवम् ।
सर्वाँल्लोकान् भ्रमित्वा तु देवो विस्मयमागतः ॥ ६७.३२ ॥
न स्थानं विद्यते किंचिद्यत्र विश्रम्यते क्षणम् ।
देवदानवयोस्तत्र युद्धं ज्ञात्वा सुदारुणम् ॥ ६७.३३ ॥
हर्षितात्मा मुनिस्तत्र चिरं नृत्यति नारदः ।
धन्योऽहमद्य मे जन्म जीवितं च सुजीवितम् ॥ ६७.३४ ॥
महान्तं च कलिं दृष्ट्वा संतोषः परमोऽभवत् ।
देवदानवयोस्तत्र युद्धं त्यक्त्वा च नारदः ॥ ६७.३५ ॥
आजगाम ततो विप्रो यत्र देवो महेश्वरः ।
दृष्ट्वा देवोऽथ तं विप्रं प्रतिपूज्याब्रवीदिदम् ॥ ६७.३६ ॥
भो नारद मुनिश्रेष्ठ जानीषे केशवं क्वचित् ।
गत्वा तत्र च शीघ्रं त्वं केशवाय निवेदय ॥ ६७.३७ ॥

नारद उवाच -
देवदानवसिद्धानां गन्धर्वोरगरक्षसाम् ।
सर्वेषामेव देवेशो हरते ध्रुवमापदम् ॥ ६७.३८ ॥
असंभाव्यं न वक्तव्यं मनसापि न चिन्तयेत् ।
ईदृशीं नैव बुध्यामि आपदं च विभो तव ॥ ६७.३९ ॥

ईश्वर उवाच -
गच्छ नारद शीघ्रं त्वं यत्र देवो जनार्दनः ।
विदितं च त्वया सर्वं यत्कृतं दानवेन तु ॥ ६७.४० ॥
अवध्यो दानवो ह्येष सेन्द्रैरपि मरुद्गणैः ।
गत्वा तु केशवं देवं निवेदय महामुने ॥ ६७.४१ ॥

नारद उवाच -
न तु गच्छाम्यहं देव सुप्तः क्षीरोदधौ सुखी ।
केशवः प्रेरणे ह्येषामादेशो दीयतां प्रभो ॥ ६७.४२ ॥
मात्रा स्वस्रा दुहित्रा वा राजानं च तथा प्रभुम् ।
गुरुं चैवादितः कृत्वा शयानं न प्रबोधयेत् ॥ ६७.४३ ॥

ईश्वर उवाच -
यदि क्वचिदगारेषु वह्निरुत्पद्यते महान् ।
निधनं यान्ति तत्रस्था यद्बुध्येरन्नसूरयः ॥ ६७.४४ ॥

नारद उवाच -
शीघ्रं गच्छ महादेव आत्मानं रक्ष सुप्रभो ।
गच्छाम्यहं न सन्देहो यत्र देवो जनार्दनः ॥ ६७.४५ ॥
ततो नन्दिमहाकालौ स्तम्भहस्तौ भयानकौ ।
जघ्नतुर्दानवं तत्र मुद्गरादिभिरायुधैः ॥ ६७.४६ ॥
त्रयोऽपि च महाकायाः सप्ततालप्रमाणकाः ।
न शमो जायते तेषां युध्यतां च परस्परम् ॥ ६७.४७ ॥
ततश्चानन्तरं विप्रोऽगच्छत्तं केशवं प्रति ।
सुप्तं क्षीरार्णवेऽपश्यच्छेषपर्यङ्कसंस्थितम् ॥ ६७.४८ ॥
लक्ष्म्या पादयुगं गृह्य ऊरूपरि निवेशितम् ।
अप्सरोगीयमानं तु भक्त्यानम्य च केशवम् ॥ ६७.४९ ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
उत्थापयस्व देवेशं लक्ष्मि त्वमविशङ्किता ॥ ६७.५० ॥
नारदस्य वचः श्रुत्वा पदाङ्गुष्ठं व्यमर्दयत् ।
नारदस्तिष्ठते द्वारि उत्तिष्ठ मधुसूदन ॥ ६७.५१ ॥
देवोऽपि नारदं दृष्ट्वा परं हर्षमुपागतः ।
स्वागतं तु मुनिश्रेष्ठ सुप्रभाताद्य शर्वरी ॥ ६७.५२ ॥

नारद उवाच -
अद्य मे सफलं देव प्रभातं तव दर्शनात् ।
कुशलं च न देवानां शीघ्रमुत्तिष्ठ गम्यताम् ॥ ६७.५३ ॥

श्रीविष्णुरुवाच -
ब्रह्मा चेन्द्रश्च रुद्रश्च ये चान्ये तु मरुद्गणाः ।
आपदः कारणं यच्च तत्समाख्यातुमर्हसि ॥ ६७.५४ ॥

नारद उवाच -
दानवेन महातीव्रं तपस्तप्तं सुदारुणम् ।
रुद्रेण च वरो दत्तो भस्मत्वं मनसेप्सितम् ॥ ६७.५५ ॥
वरदानबलेनैव स देवं हन्तुमर्हति ।
ईदृशं चेष्टितं ज्ञात्वा नीतो देवोऽमरैः सह ॥ ६७.५६ ॥
नारदस्य वचः श्रुत्वा जगाम समुनिर्हरिः ।
दृष्ट्वा देवस्तमीशानं गच्छन्तं दिशमुत्तराम् ॥ ६७.५७ ॥
दृष्ट्वा देवं च रुद्रोऽथ परिष्वज्य पुनःपुनः ।
नमस्कृत्य जगन्नाथं देवं च मधुसूदनः ॥ ६७.५८ ॥

विष्णुरुवाच -
भयस्य कारणं देव कथ्यतां च महेश्वर ।
देवदानवयक्षाणां प्रेषयेयं यमालयम् ॥ ६७.५९ ॥
ललाटे च कृतो धर्मो युष्माकं च महेश्वर ।
छित्त्वा शिरस्तथाङ्गानि इन्द्रियाणि न संशयः ॥ ६७.६० ॥

ईश्वर उवाच -
नास्ति सौख्यं च मूर्खेषु नास्ति सौख्यं च रोगिषु ।

पराधीनेन सौख्यं तु स्त्रीजिते च विशेषतः ॥ ६७.६१ ॥
स्त्रीजितेन मया विष्णो वरो दत्तस्तु दानवे ।
यस्य मूर्ध्नि न्यसेत्पाणिं स भवेद्भस्मपुंजवत् ॥ ६७.६२ ॥
अजेयश्चामरश्चैव मया ह्युक्तः स केशव ।
हन्तुमिच्छति मां पाप उपायस्तव विद्यते ॥ ६७.६३ ॥

विष्णुरुवाच -
गच्छन्तु अमराः सर्वे युष्माभिः सह शङ्कर ।
उपायं सर्जयाम्यद्य वधार्थं दानवस्य च ॥ ६७.६४ ॥
रेवायाश्च तटे तिष्ठ देव त्वममरैः सह ।
कालक्षेपो न कर्तव्यो गम्यतां त्वरितं प्रभो ॥ ६७.६५ ॥
दक्षिणा यत्र गङ्गा च रेवा चैव महानदी ।
यत्रयत्र च दृश्येत प्राची चैव सरस्वती ॥ ६७.६६ ॥
तत्समं च महातीर्थं न मर्त्ये चैव दृश्यते ।
स्नानं ये तत्र कुर्वन्ति दानं चैव तु भक्तितः ॥ ६७.६७ ॥
सप्तजन्मकृतं पापं नश्यते नात्र संशयः ।
एतत्तीर्थं महापुण्यं सर्वपातकनाशनम् ॥ ६७.६८ ॥
गम्यतां तत्र देवेश लुङ्केशं त्वं सहामरैः ।
विष्णोस्तु वचनादेव प्रविष्टो ह्रदमुत्तमम् ॥ ६७.६९ ॥
रतिं सुमहतीं चक्रे सह तत्र मरुद्गणैः ।
ततश्चानन्तरं देवो मायां कृत्वा ह्यनेकधा ॥ ६७.७० ॥
वसन्तमासं संसृज्य उद्यानवनशोभितम् ।
अशोकैर्बकुलैश्चैव ब्रह्मवृक्षैः सुशोभनैः ॥ ६७.७१ ॥
श्रीवृक्षैश्च कपित्थैश्च शिरीषैर्राजचम्पकैः ।
श्रीफलैश्च तथा तालैः कदम्बोदुम्बरैस्तथा ॥ ६७.७२ ॥
अश्वत्थादिद्रुमैश्चैव नानावृक्षैरनेकशः ।
नानापुष्पैः सुगन्धाढ्यैर्भ्रमरैश्च निनादितम् ॥ ६७.७३ ॥
तस्मिन्मध्ये महावृक्षो न्यग्रोधश्च सुशोभनः ।
बहुपक्षिसमायुक्तः कोकिलारावनादितः ॥ ६७.७४ ॥
कृष्णेन च कृतं तस्मिन्कन्यारूपं च तत्क्षणात् ।
न तस्याः सदृशी कन्या त्रैलोक्ये सचराचरे ॥ ६७.७५ ॥
अन्याश्च कन्यकाः सप्त सुरूपाः शुभलोचनाः ।
दिव्यरूपधराः सर्वा दिव्याभरणभूषिताः ॥ ६७.७६ ॥

पुमांसमभिकाङ्क्षन्त्यो यद्येकः कामयेत्स्त्रियः ।
मौक्तिकैर्रत्नमाणिक्यैर्वैडूर्यैश्च सुशोभनैः ॥ ६७.७७ ॥
कामहारैश्च वंशैश्च बद्धो हिन्दोलकः कृतः ।
आरूढाश्च महाकन्या गायन्ते सुस्वरं तदा ॥ ६७.७८ ॥
मारुतः शीतलो वाति वनं स्पृष्ट्वा सुशोभनम् ।
वातेन प्रेरितो गन्धो दानवो घ्राणपीडितः ॥ ६७.७९ ॥
ततः कुसुमगन्धेन विस्मयं परमं गतः ।
आघ्राय चेदृशं पुण्यं न दृष्टं न श्रुतं मया ॥ ६७.८० ॥
वने चिन्तयतः किंचिद्ध्वनिगीतं सुशोभनम् ।
गीतस्य च ध्वनिं श्रुत्वा मोहितो मायया हरेः ॥ ६७.८१ ॥
व्याधस्यैव महाकूटे पतन्ति च यथा मृगाः ।
कालस्पृष्टस्तथा कृष्णे पतितश्च नराधिप ॥ ६७.८२ ॥
दृष्ट्वा कन्यां च तां दैत्यो मूर्च्छया पतितो भुवि ।
पतितेन तु दृष्टैका कन्या वटतले स्थिता ॥ ६७.८३ ॥
आस्यं दृष्ट्वा तु नारीणां पुनः कामेन पीडितः ।
गृहीत्वा हेमदण्डं तु तां पातयितुमिच्छति ॥ ६७.८४ ॥

कन्योवाच -
मा मानुस्पर्शयत्वं हि कुमार्यहं कुलोत्तम ।
भो मुञ्च मुञ्च मां शीघ्रं यावद्गच्छाम्यहं गृहम् ॥ ६७.८५ ॥

दानव उवाच -
अहं विवाहमिच्छामि त्वया सह सुशोभने ।
भूपृष्ठे सकले राज्ञी भवस्येवं न संशयः ॥ ६७.८६ ॥

कन्योवाच -
पिता रक्षति कौमार्ये भर्ता रक्षति यौवने ।
पुत्रो रक्षति वृद्धत्वे न स्त्री स्वातन्त्र्यमर्हति ॥ ६७.८७ ॥
न स्वातन्त्र्यं ममैवास्ति उत्पन्नाहं महत्कुले ।
याच्यस्तु मत्पिता भ्राता मातापि हि तथैव च ॥ ६७.८८ ॥

दानव उवाच -
यदि मां नेच्छसे त्वद्य स्वातन्त्र्यं नावलम्बसे ।

ममापि च तदा हत्या सत्यं च शुभलोचने ॥ ६७.८९ ॥

कन्योवाच -
विश्वासो नैव कर्तव्यो यादृशे तादृशे नरे ।
नराः स्त्रीषु विचित्राश्च लम्पटाः काममोहिताः ॥ ६७.९० ॥
परिणीय तु मां त्वं हि भुङ्क्ष्व भोगान्मया सह ।
जन्मनाशो भवेत्पश्चान्न त्वं नान्यो भवेन्मम ॥ ६७.९१ ॥
ब्राह्मणी क्षत्रिणी वैशी शूद्री यावत्तथैव च ।
द्वितीयो न भवेद्भर्ता एकाकी चेह जन्मनि ॥ ६७.९२ ॥

दानव उवाच -
यत्त्वया गदितं वाक्यं तन्मया धारितं हृदि ।
प्रत्ययं मे कुरुष्वाद्य यत्ते मनसि रोचते ॥ ६७.९३ ॥

कन्योवाच -
जानीष्व गोपकन्यां मां क्रीडामि सखिभिः सह ।
अस्मत्कुलेषु यद्दिव्यं तत्कुरुष्व यथाविधि ॥ ६७.९४ ॥
न तद्दिव्यं कुलेऽस्माकं विषं कोशं न तत्तुला ।
गोपान्वयेषु सर्वेषु हस्तः शिरसि दीयते ॥ ६७.९५ ॥
कामान्धेनैव राजेन्द्र निक्षिप्तो मस्तके करः ।
तत्क्षणाद्भस्मसाद्भूतो दग्धस्तृणचयो यथा ॥ ६७.९६ ॥
केशवोपरि देवैस्तु पुष्पवृष्टिः शुभा कृता ।
हृष्टाः सर्वेऽगमन्देवाः स्वस्थानं विगतज्वराः ॥ ६७.९७ ॥
क्षीरोदं केशवो गच्छत्कालपृष्ठे निपातिते ।
य इदं शृणुयाद्भक्त्या चरितं दानवस्य च ॥ ६७.९८ ॥
स जयी जायते नित्यं शङ्करस्य वचो यथा ।
एतस्मात्कारणाद्राजंल्लिङ्गेश्वरमिति श्रुतम् ॥ ६७.९९ ॥
लीनं च पातकं यस्मात्स्नानमात्रेण नश्यति ।
त्वगस्थि शोणितं मांसं मेदःस्नायुस्तथैव च ॥ ६७.१०० ॥
मज्जाशुक्रगतं पापं नश्यते जन्मकोटिजम् ।
लुङ्केश्वरे महाराज तोयं पिबति भक्तितः ॥ ६७.१०१ ॥
त्रिभिः प्रसृतिमात्राभिः पापं याति सहस्रधा ।
विशेषेण चतुर्दश्यामुभौ पक्षौ तु चाष्टमी ॥ ६७.१०२ ॥

उपोष्य यो नरो भक्त्या पित्ःणां पाण्डुनन्दन ।
उद्धृतास्तेन ते सर्वे नारकीयाः पितामहाः ॥ ६७.१०३ ॥
काकिणीं चैव यो दद्याद्ब्राह्मणे वेदपारगे ।
तेन दानफलं सर्वं कुरुक्षेत्रादिकं च यत् ॥ ६७.१०४ ॥
प्राप्तं तु नान्यथा राजञ्छङ्करो वदते त्विदम् ।
स्पर्शलिङ्गमिदं राजञ्छङ्करेण तु निर्मितम् ॥ ६७.१०५ ॥
स्पर्शमात्रे मनुष्याणां रुद्रवासोऽभिजायते ।
तेन दानफलं सर्वं कुरुक्षेत्रादिकं च यत् ॥ ६७.१०६ ॥
एतस्मात्कारणाद्राजंल्लोकपालाश्च रक्षकाः ।
दुर्गा च रक्षणे सृष्टा चतुर्हस्तधरा शुभा ॥ ६७.१०७ ॥
धनदो लोकपालेशो रक्षकश्चेश्वरस्य च ।
रक्षति च सदा कालं ग्रहव्यापाररूपतः ॥ ६७.१०८ ॥
पुत्रभ्रातृसमारूपैः स्वामिसम्बन्धरूपिभिः ।
लङ्केश्वरं च राजेन्द्र देवैर्नाद्यापि मुच्यते ॥ ६७.१०९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे लुङ्केश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६८



अध्याय ६८

श्रीमार्कण्डेय उवाच -
धनदस्य तु तत्तीर्थं ततो गच्छेद्युधिष्ठिर ।
नर्मदादक्षिणे कूले सर्वपापक्षयंकरम् ॥ ६८.१ ॥
सर्वतीर्थफलं तत्र प्राप्यते नात्र संशयः ।
चैत्रमासत्रयोदश्यां शुक्लपक्षे जितेन्द्रियः ॥ ६८.२ ॥
उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम् ।
पञ्चामृतेन राजेन्द्र स्नापयेद्धनदं बुधः ॥ ६८.३ ॥
दीपं घृतेन दातव्यं गीतं वाद्यं च कारयेत् ।
प्रभाते पूजयेद्विप्रानात्मनः श्रेय इच्छति ॥ ६८.४ ॥
प्रतिग्रहसमर्थांश्च विद्यासिद्धान्तवादिनः ।
श्रौतस्मार्तक्रियायुक्तान् परदारपराङ्मुखान् ॥ ६८.५ ॥
पूजयेद्गोहिरण्येन वस्त्रोपानहभोजनैः ।
छत्रशय्याप्रदानेन सर्वपापक्षयो भवेत् ॥ ६८.६ ॥
त्रिजन्मजनितं पापं वरदस्य प्रभावतः ।
स्वर्गदं दुर्विनीतानां विनीतानां च मोक्षदम् ॥ ६८.७ ॥
अन्नदं च दरिद्राणां भवेज्जन्मनिजन्मनि ।
कुलीनत्वं दुःखहानिः स्वभावाजायते नरे ॥ ६८.८ ॥
व्याधिध्वंसो भवेत्तेषां नर्मदोदकसेवनात् ।
धनदस्य तु यस्तीर्थे विद्यादानं प्रयच्छति ॥ ६८.९ ॥
स याति भास्करे लोके सर्वव्याधिविवर्जिते ।
देवद्रोणीं च तत्रैव स्वशक्त्या पाण्डुनन्दन ॥ ६८.१० ॥
ये प्रकुर्वन्ति भूयिष्ठां रेवाया दक्षिणे तटे ।
ते यान्ति शांकरे लोके सर्वदुःखविवर्जिते ॥ ६८.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे धनदतीर्थमाहात्म्यवर्णनं नामाष्टषष्टितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०६९



अध्याय ६९

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र मङ्गलेश्वरमुत्तमम् ।
स्थापितं भूमिपुत्रेण लोकानां हितकाम्यया ॥ ६९.१ ॥
तोषितः परया भक्त्या शङ्करः शशिशेखरः ।
चतुर्दश्यां गुरुर्देवः प्रत्यक्षो मङ्गलेश्वरः ॥ ६९.२ ॥
ब्रूहि पुत्र वरं शुभ्रं तं ते दास्यामि मङ्गल ॥ ६९.३ ॥

मङ्गल उवाच -
प्रसादं कुरु मे शम्भो प्रतिजन्मनि शङ्कर ।
त्वदङ्गस्वेदसम्भूतो ग्रहमध्ये वसाम्यहम् ॥ ६९.४ ॥
त्वत्प्रसादेन ईशान पूज्योऽहं सर्वदैवतैः ।
कृतार्थो ह्यद्य संजातस्तव दर्शनभाषणात् ॥ ६९.५ ॥
स्थानेऽस्मिन् देवदेवेश मम नाम्ना महेश्वरः ।
एवं भवतु ते पुत्रेत्युक्त्वा चान्तरधीयत ॥ ६९.६ ॥
मङ्गलोऽपि महात्मा वै स्थापयित्वा महेश्वरम् ।
आत्मयोगबलेनैव शूलिनापूजयत्ततः ॥ ६९.७ ॥
सर्वदुःखहरं लिङ्गं नाम्ना वै मङ्गलेश्वरम् ।
तत्र तीर्थे तु वै राजन्ब्राह्मणान्प्रीणयेत्सुधीः ॥ ६९.८ ॥
सपत्नीकान्नृपश्रेष्ठ चतुर्थ्यङ्गारके व्रते ।
पत्नीभर्तारसंयुक्तं विद्वांसं श्रोत्रियं द्विजम् ॥ ६९.९ ॥
व्रतान्ते चैव गौर्धुर्यैः शिवमुद्दिश्य दीयते ।
प्रीयतां मे महादेवः सपत्नीको वृषध्वजः ॥ ६९.१० ॥
वस्त्रयुग्मं प्रदातव्यं लोहितं पाण्डुनन्दन ।
धूर्वहौ रक्तवर्णौ च शुभ्रं कृष्णं तथैव च ॥ ६९.११ ॥
छत्रं शय्यां शुभां चैव रक्तमाल्यानुलेपनम् ।

दातव्यं पाण्डवश्रेष्ठ विशुद्धेनान्तरात्मना ॥ ६९.१२ ॥
चतुर्थ्यां तु तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
श्राद्धं तत्रैव कर्तव्यं वित्तशाठ्येन वर्जितः ॥ ६९.१३ ॥
प्रेता भवन्ति सुप्रीता युगमेकं महीपते ।
सपुत्रो जायते मर्त्यः प्रतिजन्म नृपोत्तम ॥ ६९.१४ ॥
तस्य तीर्थस्य भावेन सर्वाङ्गरुचिरो नृप ।
मङ्गलं भवते वंशो नाशुभं विद्यते क्वचित् ॥ ६९.१५ ॥
भक्त्या यः कीर्तयेन्नित्यं तस्य पापं व्यपोहति ॥ ६९.१६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मङ्गलेश्वरतीर्थमाहात्म्यवर्णनं नामैकोनसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७०



अध्याय ७०

श्रीमार्कण्डेय उवाच -
रेवाया उत्तरे कूले तीर्थं परमशोभनम् ।
रविणा निर्मितं पार्थ सर्वपापक्षयंकरम् ॥ ७०.१ ॥
स्वांशेन भास्करस्तत्र तिष्ठते चोत्तरे तटे ।
सर्वव्याधिहरः पुंसां नर्मदायां व्यवस्थितः ॥ ७०.२ ॥
षष्ठ्यांषष्ठ्यां नृपश्रेष्ठ ह्यष्टम्यां च चतुर्दशीम् ।
स्नानं यः कारयेन्मर्त्यः श्राद्धं प्रेतेषु भक्तितः ।
तस्य पापक्षयः पार्थ सूर्यलोके महीयते ॥ ७०.३ ॥
ततः स्वर्गाच्च्युतः सोऽपि जायते विमले कुले ।
धनाढ्यो व्याधिनिर्मुक्तो जीवेज्जन्मनिजन्मनि ॥ ७०.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रवितीर्थमाहात्म्यवर्णनं नाम सप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७१



अध्याय ७१

श्रीमार्कण्डेय उवाच -
कामेश्वरं ततश्चान्यच्छृणु पाण्डवसत्तम ।
सिद्धो यत्र गणाध्यक्षो गौरीपुत्रो महाबलः ॥ ७१.१ ॥
तत्र तीर्थे तु यो भक्त्या भक्तियुक्तो जितेन्द्रियः ।
पञ्चामृतेन संस्नाप्य धूपनैवेद्यपूजनैः ॥ ७१.२ ॥
प्रसाद्य जगतामीशं सर्वपापैः प्रमुच्यते ।
अष्टम्यां मार्गशीर्षस्य तत्र स्नात्वा युधिष्ठिर ॥ ७१.३ ॥
यो येन यजते तत्र स तं काममवाप्नुयात् ॥ ७१.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कामेश्वरतीर्थमाहात्म्यवर्णनं नामैकसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७२



अध्याय ७२

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र मणिनागेश्वरं शुभम् ।
उत्तरे नर्मदाकूले सर्वपापक्षयंकरम् ।
स्थापितं मणिनागेन लोकानां हितकाम्यया ॥ ७२.१ ॥

युधिष्ठिर उवाच -
आशीविषेण सर्पेण ईश्वरस्तोषितः कथम् ।
क्षुद्राः सर्वस्य लोकस्य भयदा विषशालिनः ॥ ७२.२ ॥
कथ्यतां तात मे सर्वं पातकस्योपशान्तिदम् ।
मम सन्तापजं दुःखं दुर्योधनसमुद्भवम् ॥ ७२.३ ॥
कर्णभीष्मोद्भवं रौद्रं दुःखं पाञ्चालिसम्भवम् ।
तव वक्त्राम्बुजौघेन प्लावितं निर्वृतिं गतः ॥ ७२.४ ॥
श्रुत्वा तव मुखोद्गीतां कथां वै पापनाशिनीम् ।
अयुक्तमिदमस्माकं द्विज क्लेशो न शाम्यति ॥ ७२.५ ॥
अथवा प्राप्स्यते तात विद्यादानस्य यत्फलम् ।
तत्फलं प्राप्यते नित्यं कथाश्रवणतो हरेः ॥ ७२.६ ॥

श्रीमार्कण्डेय उवाच -
यथायथा त्वं नृप भाषसे च तथातथा मे सुखमेति भारती ।
शैथिल्यता वा जरयान्वितस्य त्वत्सौहृदं नश्यति नैव तात ।
शृणुष्व तस्मात्सह बान्धवैश्च कथामिमां पापहरां प्रशस्ताम् ॥ ७२.७ ॥
कथयामि यथावृत्तमितिहासं पुरातनम् ॥ ७२.८ ॥
कथितं पूर्वतो वृत्तैः पारम्पर्येण भारत ॥ ७२.९ ॥
द्वे भार्ये कश्यपस्यास्तां सर्वलोकेष्वनुत्तमे ।
गरुत्मन्तं च विनतासूत कद्रूरहीनथ ॥ ७२.१० ॥

संतोषेण च ते तात तिष्ठतः काश्यपे गृहे ।
कद्रूश्च विनता नाम हृष्टे च वनिते सदा ॥ ७२.११ ॥
ताभ्यां सार्द्धं क्रीडते च कश्यपोऽपि प्रजापतिः ।
ततस्त्वेकदिने प्राप्ते आश्रमस्था शुभानना ॥ ७२.१२ ॥
उच्चैःश्रवं हयं दृष्ट्वा मनोवेगसमन्वितम् ।
पश्य पश्य हि तन्वङ्गी हयं सर्वत्र पाण्डुरम् ॥ ७२.१३ ॥
धावमानमविश्रान्तं जवेन मनसोपमम् ।
तं दृष्ट्वा सहसा चाश्वमीर्ष्याभावेन चाब्रवीत् ॥ ७२.१४ ॥

कद्रूरुवाच -
ब्रूहि भद्रे सहस्रांशोरश्वः किंवर्णको भवेत् ।
अहं ब्रवीमि कृष्णोऽयं त्वं किं वदसि तद्वद ॥ ७२.१५ ॥

विनतोवाच -
पश्यसे ननु नेत्रैश्च कृष्णं श्वेतं न पश्यसि ।
असत्यभाषणाद्भद्रे यमलोकं गमिष्यसि ॥ ७२.१६ ॥
सत्यानृते तु वचने पणस्तव ममैव तु ।
सहस्रं चैव वर्षाणां दास्यहं तव मन्दिरे ॥ ७२.१७ ॥
असत्या यदि मे वाणी कृष्ण उच्चैःश्रवा यदि ।
तदाहं त्वद्गृहे दासी भवामि सर्पमातृके ॥ ७२.१८ ॥
यदि उच्चैःश्रवाः श्वेतोऽहं दासी च तवैव तु ।
एवं परस्परं द्वाभ्यां संवादोऽयं व्यवर्धत ॥ ७२.१९ ॥
आश्रमेषु गता बाला रात्रौ चिन्तापरा स्थिता ।
बन्धुवर्गस्य कथितं समस्तं तद्विचेष्टितम् ॥ ७२.२० ॥
पुत्राणां कथितं पार्थ पणं चैव मया कृतम् ।
हाहाकारः कृतः सर्पैः श्रुत्वा मात्रा पणं कृतम् ॥ ७२.२१ ॥
जाता दासी न सन्देहः श्वेतो भास्करवाहनः ।
उच्चैःश्रवा हयः श्वेतो न कृष्णो विद्यते क्वचित् ॥ ७२.२२ ॥

कद्रूरुवाच -
यथाहं न भवे दासी तत्कार्यं च विचिन्त्यताम् ।
विशध्वं रोमकूपेषु ह्युच्चैःश्रवहयस्य तु ॥ ७२.२३ ॥
एकं मुहूर्तमात्रं तु यावत्कृष्णः स दृश्यते ।

क्षणमात्रेण चैकेन दासी सा भवते मम ॥ ७२.२४ ॥
दासीं कृत्वा तु तां तन्वीं विनतां सत्यगर्विताम् ।
ततः स्वस्थानगाः सर्वे भविष्यथ यथासुखम् ॥ ७२.२५ ॥
सर्पा ऊचुः ।
यथा त्वं जननी चाम्ब सर्वेषां भुवि पूजिता ।
तथा सापि विशेषेण वञ्चितव्या न मातरः ॥ ७२.२६ ॥
माता च पितृभार्या च मातृमाता पितामही ।
कर्मणा मनसा वाचा हितं तासां समाचरेत् ॥ ७२.२७ ॥
सा ततस्तेन वाक्येन क्रुद्धा कालानलोपमा ।
मम वाक्यमकुर्वाणा ये केचिद्भुवि पन्नगाः ॥ ७२.२८ ॥
हव्यवाहमुखे सर्वे ते यास्यन्त्यविचारितम् ।
मातुस्तद्वचनं श्रुत्वा सर्वे चैव भुजङ्गमाः ॥ ७२.२९ ॥
केचित्प्रविष्टा रोमेषु उच्चैःश्रवहयस्य च ।
नष्टाः केचिद्दशदिशं कद्रूशापभयात्ततः ॥ ७२.३० ॥
केचिद्गङ्गाजले नष्टाः केचिन्नष्टाः सरस्वतीम् ।
केचिन्महोदधौ लीनाः प्रविष्टा विन्ध्यकन्दरे ॥ ७२.३१ ॥
आश्रित्य नर्मदातोये मणिनागोत्तमो नृप ।
तपश्चचार विपुलमुत्तरे नर्मदातटे ॥ ७२.३२ ॥
मातृशापभयात्पार्थ ध्यायते कामनाशनम् ।
अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ७२.३३ ॥
वायुभक्षः शतं साग्रं तदर्धं रविवीक्षकः ।
एवं ध्यानरतस्यैव प्रत्यक्षस्त्रिपुरान्तकः ॥ ७२.३४ ॥
साधु साधु महाभाग सत्त्ववांस्तु भुजंगम ।
त्वया भक्त्या गृहीतोऽहं प्रीतस्ते ह्युरगेश्वर ।
वरं याचय मे क्षिप्रं यस्ते मनसि वर्तते ॥ ७२.३५ ॥

मणिनाग उवाच -
मातृशापभयान्नाथ क्लिष्टोऽहं नर्मदातटे ।
त्वत्प्रसादेन मे नाथ मातृशापो भवेद्वृथा ॥ ७२.३६ ॥

ईश्वर उवाच -
हव्यवाहमुखं वत्स न प्राप्स्यसि ममाज्ञया ।
मम लोके निवासश्च तव पुत्र भविष्यति ॥ ७२.३७ ॥

मणिनाग उवाच -
अत्र स्थाने महादेव स्थीयतामंशभागतः ।
सहस्रांशेन भागेन स्थीयतां नर्मदाजले ।
उपकाराय लोकानां मम नाम्नैव शङ्कर ॥ ७२.३८ ॥

ईश्वर उवाच -
स्थापयस्व परं लिङ्गमाज्ञया मम पन्नग ।
इत्युक्त्वान्तर्हितो देवो जगाम ह्युमया सह ॥ ७२.३९ ॥

मार्कण्डेय उवाच -
तत्र तीर्थे तु ये गत्वा शुचिप्रयतमानसाः ।
पञ्चम्यां वा चतुर्दश्यामष्टम्यां शुक्लकृष्णयोः ॥ ७२.४० ॥
अर्चयन्ति सदा पार्थ नोपसर्पन्ति ते यमम् ।
दध्ना च मधुना चैव घृतेन क्षीरयोगतः ॥ ७२.४१ ॥
स्नापयन्ति विरूपाक्षमुमादेहार्धधारिणम् ।
कामाङ्गदहनं देवमघासुरनिषूदनम् ॥ ७२.४२ ॥
स्नाप्यमानं च ये भक्त्वा पश्यन्ति परमेश्वरम् ।
ते यान्ति च परे लोके सर्वपापविवर्जितैः ॥ ७२.४३ ॥
श्राद्धं प्रेतेषु ये पार्थ चाष्टम्यां पञ्चमीषु च ।
ब्राह्मणैश्च सदा योग्यैर्वेदपाठकचिन्तकैः ॥ ७२.४४ ॥
स्वदारनिरतैः श्लक्ष्णैः परदारविवर्जितैः ।
षट्कर्मनिरतैस्तात शूद्रप्रेषणवर्जितैः ॥ ७२.४५ ॥
खञ्जाश्च दर्दुराः षण्ढा वार्द्धुष्याश्च कृषीवलाः ।
भिन्नवृत्तिकराः पुत्र नियोज्या न कदाचन ॥ ७२.४६ ॥
वृषलीमन्दिरे यस्य महिषीं यस्तु पालयेत् ।
स विप्रो दूरतस्त्याज्यो व्रते श्राद्धे नराधिप ॥ ७२.४७ ॥
काणाष्टुंटाश्च मण्टाश्च वेदपाठविवर्जिताः ।
न ते पूज्या द्विजाः पार्थ मणिनागेश्वरे शुभे ॥ ७२.४८ ॥
यदीच्छेदूर्ध्वगमनमात्मनः पितृभिः सह ।
सर्वाङ्गरुचिरां धेनुं यो दद्यादग्रजन्मने ॥ ७२.४९ ॥
स याति परमं लोकं यावदाभूतसम्प्लवम् ।
ततः स्वर्गाच्च्युतः सोऽपि जायते विमले कुले ॥ ७२.५० ॥

ये पश्यन्ति परं भक्त्या मणिनागेश्वरं नृप ।
न तेषां जायते वंशे पन्नगानां भयं नृप ॥ ७२.५१ ॥
पन्नगः शङ्कते तेषां मणिनागप्रदर्शनात् ।
सौपर्णरूपिणस्ते वै दृश्यन्ते नागमण्डले ॥ ७२.५२ ॥
फलानि चैव दानानां शृणुष्वाथ नृपोत्तम ।
अन्नं संस्कारसंयुक्तं ये ददन्ते नरोत्तमाः ॥ ७२.५३ ॥
तोयं शय्यां तथा छत्रं कन्यां दासीं सुभाषिणीम् ।
पात्रे देयं यतो राजन् यदीच्छेच्छ्रेय आत्मनः ॥ ७२.५४ ॥
सुरभीणि च पुष्पाणि गन्धवस्त्राणि दापयेत् ।
दीपं धान्यं गृहं शुभ्रं सर्वोपस्करसंयुतम् ॥ ७२.५५ ॥
ये ददन्ते परं भक्त्या ते व्रजन्ति त्रिविष्टपम् ।
मणिनागे नृपश्रेष्ठ यच्च दानं प्रदीयते ॥ ७२.५६ ॥
तस्य दानस्य भावेन स्वर्गे वासो भवेद्ध्रुवम् ।
पातकानि प्रलीयन्ते आमपात्रे यथा जलम् ॥ ७२.५७ ॥
नर्मदातोयसंसिद्धं भोज्यं विप्रे ददाति यः ।
सोऽपि पापैर्विनिर्मुक्तः क्रीडते दैवतैः सह ॥ ७२.५८ ॥
ततः स्वर्गच्युतानां हि लक्षणं प्रवदाम्यहम् ।
दीर्घायुषो जीवपुत्रा धनवन्तः सुशोभनाः ॥ ७२.५९ ॥
सर्वव्याधिविनिर्मुक्ताः सुतभृत्यैः समन्विताः ।
त्यागिनो भोगसंयुक्ता धर्माख्यानरताः सदा ॥ ७२.६० ॥
देवद्विजगुरोर्भक्तास्तीर्थसेवापरायणाः ।
मातापितृवशा नित्यं द्रोहक्रोधविवर्जिताः ॥ ७२.६१ ॥
एभिरेव गुणैर्युक्ता ये नराः पाण्डुनन्दन ।
सत्यं ते स्वर्गादायाताः स्वर्गे वासं व्रजन्ति ते ॥ ७२.६२ ॥
सर्वतीर्थवरं तीर्थं मणिनागं नृपोत्तम ।
तीर्थाख्यानमिदं पुण्यं यः पठेच्छृणुयादपि ॥ ७२.६३ ॥
सोऽपि पापैर्विनिर्मुक्तः शिवलोके महीयते ।
न विषं क्रमते तेषां विचरन्ति यथेच्छया ॥ ७२.६४ ॥
भाद्रपद्यां च यत्षष्ठ्यां पुण्यं सूर्यस्य दर्शने ।
तत्फलं समवाप्नोति आख्यानश्रवणेन तु ॥ ७२.६५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मणिनागेश्वरतीर्थमाहात्म्यवर्णनं नाम द्विसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७३



अध्याय ७३

श्रीमार्कण्डेय उवाच -
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ।
सर्वपापहरं पार्थ गोपारेश्वरमुत्तमम् ।
गोदेहान्निःसृतं लिङ्गं पुण्यं भूमितले नृप ॥ ७३.१ ॥

युधिष्ठिर उवाच -
गोदेहान्निःसृतं कस्माल्लिङ्गं पापक्षयंकरम् ।
दक्षिणे नर्मदाकूले मणिनागसमीपतः ।
संक्षेपात्कथ्यतां विप्र गोपारेश्वरसम्भवम् ॥ ७३.२ ॥

श्रीमार्कण्डेय उवाच -
कामधेनुस्तपस्तत्र पुरा पार्थ चकार ह ।
ध्यायते परया भक्त्या देवदेवं महेश्वरम् ॥ ७३.३ ॥
तुष्टस्तस्या जगन्नाथ कपिलाय महेश्वरः ।
निःसृतो देहमध्यात्तु अच्छेद्यः परमेश्वरः ॥ ७३.४ ॥
तुष्टो देवि जगन्मातः कपिले परमेश्वरि ।
आराधनं कृतं यस्मात्तद्वदाशु शुभानने ॥ ७३.५ ॥

सुरभ्युवाच -
लोकानामुपकाराय सृष्टाहं परमेष्ठिना ।
लोककार्याणि सर्वाणि सिध्यन्ति मत्प्रसादतः ॥ ७३.६ ॥
लोकाः स्वर्गं प्रयास्यन्ति मत्प्रसादेन शङ्कर ।
तीर्थे त्वं भव मे शम्भो लोकानां हितकाम्यया ॥ ७३.७ ॥
तथेति भगवानुक्त्वा तीर्थे तत्रावसन्मुदा ।
तदाप्रभृति तत्तीर्थं विख्यातं वसुधातले ।

स्नानेनैकेन राजेन्द्र पापसङ्घं व्यपोहति ॥ ७३.८ ॥
गोपारेश्वरगोदानं यस्तु भक्त्या च कारयेत् ।
योग्ये द्विजोत्तमे देया योग्या धेनुः सकाञ्चना ॥ ७३.९ ॥
सवत्सा तरुणी शुभ्रा बहुक्षीरा सवस्त्रका ।
कृष्णपक्षे चतुर्दश्यामष्टम्यां वा प्रदापयेत् ॥ ७३.१० ॥
सर्वेषु चैव मासेषु कार्त्तिके च विशेषतः ।
दापयेत्परया भक्त्या द्विजे स्वाध्यायतत्परे ॥ ७३.११ ॥
विधिना च प्रदद्याद्यो विधिना यस्तु गृह्णते ।
तावुभौ पुण्यकर्माणौ प्रेक्षकः पुण्यभाजनम् ॥ ७३.१२ ॥
पिण्डदानं प्रकुर्याद्यः प्रेतानां भक्तिसंयुतः ।
पिण्डेनैकेन राजेन्द्र प्रेता यान्ति परां गतिम् ॥ ७३.१३ ॥
भक्त्या प्रणामं रुद्रस्य ये कुर्वन्ति दिने दिने ।
तेषां पापं प्रलीयेत भिन्नपात्रे जलं यथा ॥ ७३.१४ ॥
तत्र तीर्थे तु यो राजन्वृषभं च समुत्सृजेत् ।
पितरश्चोद्धृतास्तेन शिवलोके महीयते ॥ ७३.१५ ॥

युधिष्ठिर उवाच -
वृषोत्सर्गे कृते तात फलं यज्जायते नृणाम् ।
तत्सर्वं कथयस्वाशु प्रयत्नेन द्विजोत्तम ॥ ७३.१६ ॥

श्रीमार्कण्डेय उवाच -
सर्वलक्षणसम्पूर्णे वृषे चैव तु यत्फलम् ।
तदहं सम्प्रवक्ष्यामि शृणुष्व धर्मनन्दन ॥ ७३.१७ ॥
कार्त्तिके चैव वैशाखे पूर्णिमायां नराधिप ।
रुद्रस्य सन्निधौ भूत्वा शुचिः स्नातो जितेन्द्रियः ॥ ७३.१८ ॥
वृषस्यैव समुत्सर्गं कारयेत्प्रीयतां हरः ।
सांनिध्ये कारयेत्पुत्र चतस्रो वत्सिकाः शुभाः ॥ ७३.१९ ॥
दत्त्वा तु विप्रमुख्याय सर्वलक्षणसंयुताः ।
प्रीयतां च महादेवो ब्रह्मा विष्णुर्महेश्वरः ॥ ७३.२० ॥
वृषभे रोमसंख्या या सर्वाङ्गेषु नराधिप ।
तावद्वर्षप्रमाणं तु शिवलोके महीयते ॥ ७३.२१ ॥
शिवलोके वसित्वा तु यदा मर्त्येषु जायते ।
कुले महति सम्भूतिर्धनधान्यसमाकुले ॥ ७३.२२ ॥

नीरोगो रूपवांश्चैव विद्याढ्यः सत्यवाक्शुचिः ।
गोपारेश्वरमाहात्म्यं मया ख्यातं युधिष्ठिर ।
गोदेहान्निःसृतं लिङ्गं नर्मदादक्षिणे तटे ॥ ७३.२३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गोपारेश्वरमाहात्म्यवर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७४



अध्याय ७४

श्रीमार्कण्डेय उवाच -
रेवाया उत्तरे कूले तीर्थं परमशोभनम् ।
सर्वपापहरं मर्त्ये नाम्ना वै गौतमेश्वरम् ॥ ७४.१ ॥
स्थापितं गौतमेनैव लोकानां हितकाम्यया ।
स्वर्गसोपानरूपं तु तीर्थं पुंसां युधिष्ठिर ॥ ७४.२ ॥
तत्र गच्छ परं भक्त्या यत्र देवो जगद्गुरुः ।
पातकस्य विनाशार्थं स्वर्गवासप्रदस्तथा ॥ ७४.३ ॥
सौभाग्यवर्द्धनं तीर्थं जयदं दुःखनाशनम् ।
पिण्डदानेन चैकेन कुलानामुद्धरेत्त्रयम् ॥ ७४.४ ॥
यत्किंचिद्दीयते भक्त्या स्वल्पं वा यदि वा बहु ।
तत्सर्वं शतसाहस्रमाज्ञया गौतमस्य हि ॥ ७४.५ ॥
तीर्थानां परमं तीर्थं स्वयं रुद्रेण भाषितम् ॥ ७४.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमावन्त्यखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुःसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७५



श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ।

शङ्खचूडस्य नाम्ना वै प्रसिद्धं भूमिमण्डले ॥ ७५.१ ॥

शङ्खचूडः स्वयं तत्र संस्थितः पाण्डुनन्दन ।

वैनतेयभयात्पार्थ सुखदनर्मदातटे ॥ ७५.२ ॥

तत्र तीर्थे तु यो भक्त्या शुचिर्भूत्वा समाहितः ।

स्नापयेच्छङ्खचूडं तु क्षीरक्षौद्रेण सर्पिषा ॥ ७५.३ ॥

रात्रौ जागरणं कुर्याद्देवस्याग्रे नराधिप ।

दधिभक्तेन सम्पूज्य ब्राह्मणाञ्छंसितव्रतान् ।

गोप्रदाने द्विजेन्द्रोऽयं सर्वपापक्षयंकरः ॥ ७५.४ ॥

तस्मिंस्तीर्थे तु यः पार्थ सर्पदष्टं प्रतर्पयेत् ।

स याति परमं लोकं शङ्करस्य वचो यथा ॥ ७५.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शङ्खचूडतीर्थमाहात्म्यवर्णनं नाम पञ्चसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७६

https://sa.wikisource.org/s/feg



अध्याय ७६

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र पारेश्वरमनुत्तमम् ।
पराशरो महात्मा वै नर्मदायास्तटे शुभे ॥ ७६.१ ॥
तपश्चचार विपुलं पुत्रार्थं पाण्डुनन्दन ।
हिमवद्दुहिता तेन गौरी नारायणी नृप ॥ ७६.२ ॥
तोषिता परया भक्त्या नर्मदोत्तरके तटे ।
तस्य तुष्टा महादेवी शङ्करार्धाङ्गधारिणी ॥ ७६.३ ॥
भोभो ऋषिवर श्रेष्ठ तुष्टाहं तव भक्तितः ।
वरं याचय मे विप्र पराशर महामते ॥ ७६.४ ॥

पराशर उवाच -
परितुष्टासि मे देवि यदि देयो वरो मम ।
देहि पुत्रं भगवति सत्यशौचगुणान्वितम् ॥ ७६.५ ॥
वेदाभ्यसनशीलं हि सर्वशास्त्रविशारदम् ।
तीर्थे चात्र भवेद्देवि सन्निधानवरेण तु ॥ ७६.६ ॥
लोकोपकारहेतोश्च स्थीयतां गिरिनन्दिनि ।
पराशराभिधानेन नर्मदादक्षिणे तटे ॥ ७६.७ ॥

श्रीदेव्युवाच -
एवं भवतु ते विप्र तत्रैवान्तरधीयत ।
पराशरो महात्मा वै स्थापयामास पार्वतीम् ॥ ७६.८ ॥
शङ्करं स्थापयामास सुरासुरनमस्कृतम् ।
अच्छेद्यमप्रतर्क्यं च देवानां तु दुरासदम् ॥ ७६.९ ॥
पराशरो महात्मा वै कृतार्थो ह्यभवन्नृप ॥ ७६.१० ॥
तत्र तीर्थे तु यो भक्त्या शुचिः प्रयतमानसः ।

स्त्र्यथवा पुरुषो वापि कामक्रोधविवर्जितः ॥ ७६.११ ॥
माघे चैत्रेऽथ वैशाखे श्रावणे नृपनन्दन ।
मासि मार्गशिरे चैव शुक्लपक्षे तु सर्वदा ॥ ७६.१२ ॥
तत्र गत्वा शुभे स्थाने नर्मदादक्षिणे तटे ॥ ७६.१३ ॥
उपोष्य परया भक्त्या व्रतमेतत्समाचरेत् ।
रात्रौ जागरणं कृत्वा दीपदानं स्वशक्तितः ॥ ७६.१४ ॥
गीतं नृत्यं तथा वाद्यं कामक्रोधविवर्जितः ।
प्रभाते विमले प्राप्ते द्विजाः पूज्याः स्वशक्तितः ॥ ७६.१५ ॥
सम्पूज्य ब्राह्मणान् पार्थ धनदानहिरण्यतः ।
वस्त्रेण छत्रदानेन शय्याताम्बूलभोजनैः ॥ ७६.१६ ॥
प्रीणयेन्नर्मदातीरे ब्राह्मणाञ्छंसितव्रतान् ।
श्राद्धं कार्यं नृपश्रेष्ठ आमैः पक्वैर्जलेन च ॥ ७६.१७ ॥
स्त्रीणां चैव तु शूद्राणामामश्राद्धं प्रशस्यते ।
आमं चतुर्गुणं देयं ब्राह्मणानां युधिष्ठिर ॥ ७६.१८ ॥
वेदोक्तेन विधानेन द्विजाः पूज्याः प्रयत्नतः ।
हस्तमात्रैः कुशैश्चैव तिलैश्चैवाक्षतैर्नृप ॥ ७६.१९ ॥
विप्रा उदङ्मुखाः कार्याः स्वयं वै दक्षिणामुखः ।
दर्भेषु निक्षिपेदन्नमित्युच्चार्य द्विजाग्रतः ॥ ७६.२० ॥
प्रेता यान्तु परे लोके तीर्थस्यास्य प्रभावतः ।
पापं मे प्रशमं यातु एतु वृद्धिं शुभं सदा ॥ ७६.२१ ॥
वृद्धिं यातु सदा वंशो ज्ञातिवर्गो द्विजोत्तम ।
एवमुच्चार्य विप्राय दानं देयं स्वशक्तितः ॥ ७६.२२ ॥
गोभूतिसहिरण्यादि चान्नं वस्त्रं स्वशक्तितः ।
दातव्यं पाण्डवश्रेष्ठ पारेश्वरवराश्रमे ॥ ७६.२३ ॥
ये शृण्वन्ति परं भक्त्या मुच्यन्ते सर्वपातकैः ॥ ७६.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पारेश्वरतीर्थमाहात्म्यवर्णनं नाम षट्सप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७७

https://sa.wikisource.org/s/fef


अध्याय ७७

श्रीमार्कण्डेय उवाच -
भीमेश्वरं ततो गच्छेत्सर्वपापक्षयंकरम् ।
सेवितं ऋषिसङ्घैश्च भीमव्रतधरैः शुभैः ॥ ७७.१ ॥
तत्र तीर्थे तु यः स्नात्वा सोपवासो जितेन्द्रियः ।
जपेदेकाक्षरं मन्त्रमूर्ध्वबाहुर्दिवाकरे ॥ ७७.२ ॥
तस्य जन्मार्जितं पापं तत्क्षणादेव नश्यति ।
सप्तजन्मार्जितं पापं गायत्र्या नश्यते ध्रुवम् ॥ ७७.३ ॥
दशभिर्जन्मभिर्जातं शतेन तु पुरा कृतम् ।
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति किल्बिषम् ॥ ७७.४ ॥
वैदिकं लौकिकं वापि जाप्यं जप्तं नरेश्वर ।
तत्क्षणाद्दहते सर्वं तृणं तु ज्वलनो यथा ॥ ७७.५ ॥
न देवबलमाश्रित्य कदाचित्पापमाचरेत् ।
अज्ञानान्नश्यते क्षिप्रं नोत्तरं तु कदाचन ॥ ७७.६ ॥
तत्र तीर्थे तु यो दानं शक्तिमाश्रित्य चाचरेत् ।
तदक्षय्यफलं सर्वं जायते पाण्डुनन्दन ॥ ७७.७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भीमेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७८



अध्याय ७८

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र नरदेश्वरमुत्तमम् ।
तीर्थानां परमं तीर्थं निर्मितं नारदेन तु ॥ ७८.१ ॥

युधिष्ठिर उवाच -
नारदेन मुनिश्रेष्ठ कस्मात्तीर्थं विनिर्मितम् ।
एतदाख्याहि मे सर्वं प्रसन्नो यदि सत्तम ॥ ७८.२ ॥

श्रीमार्कण्डेय उवाच -
परमेष्ठिसुतः पार्थ नारदो मुनिसत्तमः ।
रेवायाश्चोत्तरे कूले तपस्तेन पुरा कृतम् ॥ ७८.३ ॥
नवनाडीनिरोधेन काष्ठावत्यां गतेन च ।
तोषितः पशुभर्ता वै नारदेन युधिष्ठिर ॥ ७८.४ ॥

ईश्वर उवाच -
तुष्टोऽहं तव विप्रेन्द्र योगिनाथ अयोनिज ।
वरं प्रार्थय मे वत्स यस्ते मनसि वर्तते ॥ ७८.५ ॥

नारद उवाच -
त्वत्प्रसादेन मे शम्भो योगश्चैव प्रसिध्यतु ।
अचला ते भवेद्भक्तिः सर्वकालं ममैव तु ॥ ७८.६ ॥
स्वेच्छाचारी भवे देव वेदवेदाङ्गपारगः ।
त्रिकालज्ञो जगन्नाथ गीतज्ञोऽहं सदा भवे ॥ ७८.७ ॥
दिने दिने यथा युद्धं देवदानवमानुषैः ।
पाताले मर्त्यलोके वा स्वर्गे वापि महेश्वर ॥ ७८.८ ॥

पश्येयं त्वत्प्रसादेन भवन्तं पार्वतीं तथा ।
तीर्थं लोकेषु विख्यातं सर्वपापक्षयंकरम् ॥ ७८.९ ॥

ईश्वर उवाच -
एवं नारद सर्वं तु भविष्यति न संशयः ।
चिन्तितं मत्प्रसादेन सिध्यते नात्र संशयः ॥ ७८.१० ॥
स्वेच्छाचारो भवेर्वत्स स्वर्गे पातालगोचरे ।
मर्त्ये वा भ्रम वै योगिन्न केनापि निवार्यसे ॥ ७८.११ ॥
सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
ताना एकोनपञ्चाशत्प्रसादान्मे तव ध्रुवम् ॥ ७८.१२ ॥
मम प्रियंकरं दिव्यं नृत्यगीतं भविष्यति ।
कलिं च पश्यसे नित्यं देवदानवकिन्नरैः ॥ ७८.१३ ॥
त्वत्तीर्थं भूतले पुण्यं मत्प्रसादाद्भविष्यति ।
वेदवेदाङ्गतत्त्वज्ञो ह्यशेषज्ञानकोविदः ।
एकस्त्वमसि निःसङ्गो मत्प्रसादेन नारद ॥ ७८.१४ ॥
इत्युक्त्वान्तर्दधे देवो नारदस्तत्र शूलिनम् ।
स्थापयामास राजेन्द्र सर्वसत्त्वोपकारकम् ॥ ७८.१५ ॥
पृथिव्यामुत्तमं तीर्थं निर्मितं नारदेन तु ।
तत्र तीर्थे नृपश्रेष्ठ यो गच्छेद्विजितेन्द्रियः ॥ ७८.१६ ॥
मासि भाद्रपदे पार्थ कृष्णपक्षे चतुर्दशी ।
उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम् ॥ ७८.१७ ॥
छत्रं तत्र प्रदातव्यं ब्राह्मणे शुभलक्षणे ।
शस्त्रेण तु हता ये वै तेषां श्राद्धं प्रदापयेत् ।
ते यान्ति परमं लोकं पिण्डदानप्रभावतः ॥ ७८.१८ ॥
कपिला तत्र दातव्या पितॄनुद्दिश्य भारत ।
इत्युच्चार्य द्विजे देया यान्तु ते परमां गतिम् ॥ ७८.१९ ॥
अस्य श्राद्धस्य भावेन ब्राह्मणस्य प्रसादतः ।
नर्मदातोयभावेन न्यायार्जितधनस्य च ।
तेषां चैव प्रभावेन प्रेता यान्तु परां गतिम् ॥ ७८.२० ॥
इत्युच्चार्य द्विजे देया दक्षिणा च स्वशक्तितः ।
हविष्यान्नं विशालाक्ष द्विजानां चैव दापयेत् ॥ ७८.२१ ॥
दीपं भक्त्या प्रदातव्यं नृत्यं गीतं च कारयेत् ।
अवाप्तं तेन वै सर्वं यः करोतीश्वरालये ॥ ७८.२२ ॥

स याति रुद्रसांनिध्यमिति रुद्रः स्वयं जगौ ।
विद्यादानेन चैकेन अक्षयां गतिमाप्नुयात् ॥ ७८.२३ ॥
धूर्वहास्तत्र दातव्या भूमिः सस्यवती नृप ।
चित्रभानुं शुभैर्मन्त्रैः प्रीणयेत्तत्र भक्तितः ॥ ७८.२४ ॥
आज्येन सुप्रभूतेन होमद्रव्येण भारत ।
ये यजन्ति सदा भक्त्या त्रिकालं नृत्यमेव च ॥ ७८.२५ ॥
तीर्थे नारदनामाख्ये रेवायाश्चोत्तरे तटे ।
चित्रभानुमुखा देवाः सर्वदेवमय ऋषिः ॥ ७८.२६ ॥
ऋषिणा प्रीणिताः सर्वे तस्मात्प्रीत्यो हुताशनः ।
पूजिते हव्यवाहे तु दारिद्र्यं नैव जायते ॥ ७८.२७ ॥
धनेन विपुला प्रीतिर्जायते प्रतिजन्मनि ।
कुलीनाश्च सुवेषाश्च सर्वकालं धनेन तु ॥ ७८.२८ ॥
प्लवो नदीनां पतिरङ्गनानां राजा च सद्वृत्तरतः प्रजानाम् ।
धनं नराणामृतवस्तरूणां गतं गतं यौवनमानयन्ति ॥ ७८.२९ ॥
धनदत्वं धनेशेन तस्मिंस्तीर्थे ह्युपार्जितम् ।
यमेन च यमत्वं हि इन्द्रत्वं चैव वज्रिणा ॥ ७८.३० ॥
अन्यैरपि महीपालैः पार्थिवत्वमुपार्जितम् ।
नारदेश्वरमाहात्म्याद्ध्रुवो निश्चलतां गतः ॥ ७८.३१ ॥
सर्वतीर्थवरं तीर्थं निर्मितं नारदेन तु ।
पृथिव्यां सागरान्तायां रेवायाश्चोत्तरे तटे ।
तद्वरं सर्वतीर्थानां महापातकनाशनम् ॥ ७८.३२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नारदेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टसप्ततितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०७९

https://sa.wikisource.org/s/fed
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थद्वयमनुत्तमम् ।
दधिस्कन्दं मधुस्कन्दं सर्वपापक्षयंकरम् ॥ ७९.१ ॥
दधिस्कन्दे नरः स्नात्वा यस्तु दद्याद्द्विजे दधि ।
उपतिष्ठेत्ततस्तस्य सप्तजन्मनि भारत ॥ ७९.२ ॥
न व्याधिर्न जरा तस्य न शोको नैव मत्सरः ।
दशचन्द्रशतं यावज्जायते विमले कुले ॥ ७९.३ ॥
मधुस्कन्देऽपि मधुना मिश्रितान्यस्तिलान्ददेत् ।
नासौ वैवस्वतं देवं पश्येद्वै जन्मसप्ततिम् ॥ ७९.४ ॥
मधुना सह सम्मिश्रं पिण्डं यस्तु प्रदापयेत् ।
तस्य पौत्रप्रपौत्रेभ्यो दारिद्र्यं नैव जायते ॥ ७९.५ ॥
दधिभिः सह संमिश्रं पिण्डं यस्तु प्रदापयेत् ।
तस्मिंस्तीर्थे नरः स्नात्वा विधिवद्दक्षिणामुखः ॥ ७९.६ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
द्वादशाब्दानि तुष्यन्ति नात्र कार्या विचारणा ॥ ७९.७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दधिस्कन्दमधुस्कन्दतीर्थमाहात्म्यवर्णनं नामैकोनाशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८०



अध्याय ८०

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र नन्दिकेश्वरमुत्तमम् ।
यत्र सिद्धो महानन्दी तत्ते सर्वं वदाम्यहम् ॥ ८०.१ ॥
रेवायां पुरतः कृत्वा पुरा नन्दी गणेश्वरः ।
तपस्तपञ्जयं कुर्वंस्तीर्थात्तीर्थं जगाम ह ॥ ८०.२ ॥
दधिस्कन्दं मधुस्कन्दं यावत्त्यक्त्वा तु गच्छति ।
तावत्तुष्टो महादेवो नन्दिनाथमुवाच ह ॥ ८०.३ ॥

ईश्वर उवाच -
भोभोः प्रसन्नो नन्दीश वरं वृणु यथेप्सितम् ।
तपसा तेन तुष्टोऽहं तीर्थयात्राकृतेन ते ॥ ८०.४ ॥

नन्दीश्वर उवाच -
न चाहं कामये वित्तं न चाहं कुलसन्ततिम् ।
मुक्त्वा न कामये कामं तव पादाम्बुजात्परम् ॥ ८०.५ ॥
कृमिकीटपतङ्गेषु तिर्यग्योनिं गतस्य वा ।
जन्म जन्मान्तरेऽप्यस्तु भक्तिस्त्वयि ममाचला ॥ ८०.६ ॥
तथेत्युक्त्वा महादेवः परया कृपया नृप ।
गृहीत्वा तं करे सिद्धं जगाम निलयं हरः ॥ ८०.७ ॥
तस्मिंस्तीर्थे तु यः स्नात्वा भक्त्या त्र्यक्षं प्रपूजयेत् ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ८०.८ ॥
तत्र तीर्थे तु यः स्नात्वा प्राणत्यागं करोति चेत् ।
शिवस्यानुचरो भूत्वा मोदते कल्पमक्षयम् ॥ ८०.९ ॥
ततः कालेन महता जायते विमले कुले ।
वेदवेदाङ्गतत्त्वज्ञो जीवेच्च शरदां शतम् ॥ ८०.१० ॥

एतत्ते कथितं तात तीर्थमाहात्म्यमुत्तमम् ।
दुर्लभं मर्त्यसंज्ञस्य सर्वपापक्षयंकरम् ॥ ८०.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नन्दिकेश्वरतीर्थमाहात्म्यवर्णनं नामाशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८१



अध्याय ८१

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज वरुणेश्वरमुत्तमम् ।
यत्र सिद्धो महादेवो वरुणो नृपसत्तम ॥ ८१.१ ॥
पिण्याकशाकपर्णैश्च कृच्छ्रचान्द्रायणादिभिः ।
आराध्य गिरिजानाथं ततः सिद्धिं परां गतः ॥ ८१.२ ॥
तत्र तीर्थे तु यः स्नात्वा संतर्प्य पितृदेवताः ।
पूजयेच्छङ्करं भक्त्या स याति परमां गतिम् ॥ ८१.३ ॥
कुण्डिकां वर्धनीं वापि महद्वा जलभाजनम् ।
अन्नेन सहितं पार्थ तस्य पुण्यफलं शृणु ॥ ८१.४ ॥
यत्फलं लभते मर्त्यः सत्रे द्वादशवार्षिके ।
तत्फलं समवाप्नोति नात्र कार्या विचारणा ॥ ८१.५ ॥
सर्वेषामेव दानानामन्नदानं परं स्मृतम् ।
सद्यः प्रीतिकरं तोयमन्नं च नृपसत्तम ॥ ८१.६ ॥
तत्रतीर्थे मृतानां तु नराणां भावितात्मनाम् ।
वरुणस्य पुरे वासो यावदाभूतसंप्लवम् ॥ ८१.७ ॥
पश्चात्पूर्णे ततः काले मर्त्यलोके प्रजायते ।
अन्नदानप्रदो नित्यं जीवेद्वर्षशतं नरः ॥ ८१.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे वरुणेश्वरतीर्थमाहात्म्यवर्णनं नामैकाशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८२



अध्याय ८२

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल वह्नितीर्थमनुत्तमम् ।
यत्र सिद्धो महातेजास्तपः कृत्वा हुताशनः ॥ ८२.१ ॥
सर्वभक्ष्यः कृतो योऽसौ दण्डके मुनिना पुरा ।
नर्मदातटमाश्रित्य पूतो जातो हुताशनः ॥ ८२.२ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयित्वा महेश्वरम् ।
अग्निप्रवेशं कुरुते स गच्छेदग्निसाम्यताम् ॥ ८२.३ ॥
भक्त्या स्नात्वा तु यस्तत्र तर्पयेत्पितृदेवताः ।
अग्निष्टोमस्य यज्ञस्य फलमाप्नोत्यसंशयम् ॥ ८२.४ ॥
तस्यैवानन्तरं राजन्कौबेरं तीर्थमुत्तमम् ।
कुबेरो यत्र संसिद्धो यक्षाणामधिपः पुरा ॥ ८२.५ ॥
तत्र तीर्थे नरः स्नात्वा समभ्यर्च्य जगद्गुरुम् ।
उमया सहितं भक्त्या सर्वपापैः प्रमुच्यते ॥ ८२.६ ॥
तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय कांचनम् ।
नाभिमात्रे जले तिष्ठन्स लभेतार्बुदं फलम् ॥ ८२.७ ॥
दधिस्कन्दे मधुस्कन्दे नन्दीशे वरुणालये ।
आग्नेये यत्फलं तात स्नात्वा तत्फलमाप्नुयात् ॥ ८२.८ ॥
ते वन्द्या मानुषे लोके धन्याः पूर्णमनोरथाः ।
यैस्तु दृष्टं महापुण्यं नर्मदातीर्थपञ्चकम् ॥ ८२.९ ॥
ते यान्ति भास्करे लोके परमे दुःखनाशने ।
भास्करादैश्वरे लोके चैश्वरादनिवर्तके ॥ ८२.१० ॥
नीयते स परे लोके यावदिन्द्राश्चतुर्दश ।
ततः स्वर्गाच्च्युतो मर्त्यो राजा भवति धार्मिकः ॥ ८२.११ ॥
सर्वरोगविनिर्मुक्तो भुनक्ति सचराचरम् ।

विष्णुश्च देवता येषां नर्मदातीर्थसेविनाम् ॥ ८२.१२ ॥
अखण्डितप्रतापास्ते जायन्ते नात्र संशयः ।
गङ्गा कनखले पुण्या कुरुक्षेत्रे सरस्वती ॥ ८२.१३ ॥
ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ।
रेवातीरे वसेन्नित्यं रेवातोयं सदा पिबेत् ॥ ८२.१४ ॥
स स्नातः सर्वतीर्थेषु सोमपानं दिने दिने ।
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
कल्पान्ते संक्षयं यान्ति न मृता तेन नर्मदा ॥ ८२.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दधिस्कन्दादिपञ्चतीर्थमाहात्म्यवर्णनं नाम द्व्यशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८३

https://sa.wikisource.org/s/fe8
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ८३

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज तीर्थं परमशोभनम् ।
ब्रह्महत्याहरं प्रोक्तं रेवातटसमाश्रयम् ।
हनूमताभिधं ह्यत्र विद्यते लिङ्गमुत्तमम् ॥ ८३.१ ॥

युधिष्ठिर उवाच -
हनूमन्तेश्वरं नाम कथं जातं वदस्व मे ।
ब्रह्महत्याहरं तीर्थं रेवादक्षिणसंस्थितम् ॥ ८३.२ ॥

श्रीमार्कण्डेय उवाच -
साधु साधु महाबाहो सोमवंशविभूषण ।
गुह्याद्गुह्यतरं तीर्थं नाख्यातं कस्यचिन्मया ॥ ८३.३ ॥
तव स्नेहात्प्रवक्ष्यामि पीडितो वार्द्धकेन तु ।
पूर्वं जातं महद्युद्धं रामरावणयोरपि ॥ ८३.४ ॥
पुलस्त्यो ब्रह्मणः पुत्रो विश्रवास्तस्य वै सुतः ।
रावणस्तेन संजातो दशास्यो ब्रह्मराक्षसः ॥ ८३.५ ॥
त्रैलोक्यविजयी भूतः प्रसादाच्छूलिनः स च ।
गीर्वाणा विजिताः सर्वे रामस्य गृहिणी हृता ॥ ८३.६ ॥
वारितः कुम्भकर्णेन सीतां मोचय मोचय ।
विभीषणेन वै पापो मन्दोदर्या पुनःपुनः ॥ ८३.७ ॥
त्वं जितः कार्तवीर्येण रैणुकेयेन सोऽपि च ।
स रामो रामभद्रेण तस्य संख्ये कथं जयः ॥ ८३.८ ॥

रावण उवाच -

वानरैश्च नरैरृक्षैर्वराहैश्च निरायुधैः ।
देवासुरसमूहैश्च न जितोऽहं कदाचन ॥ ८३.९ ॥

श्रीमार्कण्डेय उवाच -
सुग्रीवहनुमद्भ्यां च कुमुदेनाङ्गदेन च ।
एतैरन्यैः सहायैश्च रामचन्द्रेण वै जितः ॥ ८३.१० ॥
रामचन्द्रेण पौलस्त्यो हतः संख्ये महाबलः ।
वनं भग्नं हताः शूराः प्रभञ्जनसुतेन च ॥ ८३.११ ॥
रावणस्य सुतो जन्ये हतश्चाक्षकुमारकः ।
आयामो रक्षसां भीमः सम्पिष्टो वानरेण तु ॥ ८३.१२ ॥
एवं रामायणे वृत्ते सीतामोक्षे कृते सति ।
अयोध्यां तु गते रामे हनुमान्स महाकपिः ॥ ८३.१३ ॥
कैलासाख्यं गतः शैलं प्रणामाय महेशितुः ।
तिष्ठ तिष्ठेत्यसौ प्रोक्तो नन्दिना वानरोत्तमः ॥ ८३.१४ ॥
ब्रह्महत्यायुतस्त्वं हि राक्षसानां वधेन हि ।
भैरवस्य सभा नूनं न द्रष्टव्या त्वया कपे ॥ ८३.१५ ॥

हनुमानुवाच -
नन्दिनाथ हरं पृच्छ पातकस्योपशान्तिदम् ।
पापोऽहं प्लवगो यस्मात्संजातः कारणान्तरात् ॥ ८३.१६ ॥

नन्द्युवाच -
रुद्रदेहोद्भवा किं ते न श्रुता भूतले स्थिता ।
श्रवणाज्जन्मजनितं द्विगुणं कीर्तनाद्व्रजेत् ॥ ८३.१७ ॥
त्रिंशज्जन्मार्जितं पापं नश्येद्रेवावगाहनात् ।
तस्मात्त्वं नर्मदातीरं गत्वा चर तपो महत् ॥ ८३.१८ ॥
गन्धर्वाहसुतोऽप्येवं नन्दिनोक्तं निशम्य च ।
प्रयातो नर्मदातीरमौर्व्यादक्षिणसङ्गमम् ॥ ८३.१९ ॥
दध्यौ सुदक्षिणे देवं विरूपाक्षं त्रिशूलिनम् ।
जटामुकुटसंयुक्तं व्यालयज्ञोपवीतिनम् ॥ ८३.२० ॥
भस्मोपचितसर्वाङ्गं डमरुस्वरनादितम् ।
उमार्द्धाङ्गहरं शान्तं गोनाथासनसंस्थितम् ॥ ८३.२१ ॥
वत्सरान् सुबहून् यावदुपासांचक्र ईश्वरम् ।

तावत्तुष्टो महादेव आजगाम सहोमया ॥ ८३.२२ ॥
उवाच मधुरां वाणीं मेघगम्भीरनिस्वनाम् ।
साधु साध्वित्युवाचेशः कष्टं वत्स त्वया कृतम् ॥ ८३.२३ ॥
न च पूर्वं त्वया पापं कृतं रावणसंक्षये ।
स्वामिकार्यरतस्त्वं हि सिद्धोऽसि मम दर्शनात् ॥ ८३.२४ ॥
हनुमांश्च हरं दृष्ट्वा उमार्द्धाङ्गहरं स्थिरम् ।
साष्टाङ्गं प्रणतोऽवोचज्जय शम्भो नमोऽस्तु ते ।
जयान्धकविनाशाय जय गङ्गाशिरोधर ॥ ८३.२५ ॥
एवं स्तुतो महादेवो वरदो वाक्यमब्रवीत् ।
वरं प्रार्थय मे वत्स प्राणसम्भवसम्भव ॥ ८३.२६ ॥

श्रीहनुमानुवाच -
ब्रह्मरक्षोवधाज्जाता मम हत्या महेश्वर ।
न पापोऽहं भवेदेव युष्मत्सम्भाषणे क्षणात् ॥ ८३.२७ ॥

ईश्वर उवाच -
नर्मदातीर्थमाहात्म्याद्धर्मयोगप्रभावतः ।
मन्मूर्तिदर्शनात्पुत्र निष्पापोऽसि न संशयः ॥ ८३.२८ ॥
अन्यं च ते प्रयच्छामि वरं वानरपुंगव ।
उपकाराय लोकानां नामानि तव मारुते ॥ ८३.२९ ॥
हनूमानं जनिसुतो वायुपुत्रो महाबलः ।
रामेष्टः फाल्गुनो गोत्रः पिङ्गाक्षोऽमितविक्रमः ॥ ८३.३० ॥
उदधिक्रमणश्रेष्ठो दशग्रीवस्य दर्पहा ।
लक्ष्मणप्राणदाता च सीताशोकनिवर्तनः ॥ ८३.३१ ॥
इत्युक्त्वान्तर्दधे देव उमया सह शङ्करः ।
हनूमानीश्वरं तत्र स्थापयामास भक्तितः ॥ ८३.३२ ॥
आत्मयोगबलेनैव ब्रह्मचर्यप्रभावतः ।
ईश्वरस्य प्रसादेन लिङ्गं कामप्रदं हि तत् ।
अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ८३.३३ ॥

श्रीमार्कण्डेय उवाच -
हनूमन्तेश्वरे पुत्र प्रत्यक्षप्रत्ययं शृणु ।
यद्वृत्तं द्वापरस्यादौ त्रेतान्ते पाण्डुनन्दन ॥ ८३.३४ ॥

सुपर्वा नाम भूपालो बभूव वसुधातले ।
तस्य राज्ञः सदा सौख्यं नरा दीर्घायुषः सदा ॥ ८३.३५ ॥
स पुत्रधनसंयुक्तश्चौरोपद्रववर्जितः ।
शतबाहुर्बभूवास्य पुत्रो भीमपराक्रमः ॥ ८३.३६ ॥
आसक्तोऽसौ सदा कालं पापधर्मैर्नरेश्वर ।
अटाट्यत धरां सर्वां पर्वतांश्च वनानि च ॥ ८३.३७ ॥
वधार्थं मृगयूथानामागतो विन्ध्यपर्वतम् ।
तरुजातिसमाकीर्णे हस्तियूथसमाचिते ॥ ८३.३८ ॥
सिंहचित्रकशोभाढ्ये मृगवाराहसंकुले ।
क्रीडित्वा स वने राजा नर्मदामानतः क्वचित् ॥ ८३.३९ ॥
हनूमन्तवने प्राप्तः शतक्रोशप्रमाणके ।
चिञ्चिणीवनशोभाढ्ये कदम्बतरुसंकुले ॥ ८३.४० ॥
नित्यं पालाशजम्बीरैः करंजखदिरैस्तथा ।
पाटलैर्बदरैर्युक्तैः शमीतिन्दुकशोभितम् ॥ ८३.४१ ॥
मृगयूथैः समाछन्नशिखण्डिस्वरनादितम् ।
पारावतकसङ्घानां समन्तात्स्वरशोभितम् ॥ ८३.४२ ॥
शरत्कालेऽरमद्राजा बहुले चाश्विनस्य सः ।
वनमध्यं गतोऽद्राक्षीद्भ्रमन्तं पिङ्गलद्विजम् ॥ ८३.४३ ॥
पुस्तिकाकरसंस्थं च पप्रच्छ चपलं द्विजम् ॥ ८३.४४ ॥

शतबाहुरुवाच -
एकाकी त्वं वने कस्माद्भ्रमसे पुस्तिकाकरः ।
इतस्ततोऽपि सम्पश्यन् कथयस्व द्विजोत्तम ॥ ८३.४५ ॥

ब्राह्मण उवाच -
कान्यकुब्जात्समायातः प्रेषितो राजकन्यया ।
अस्थिक्षेपाय वै राजन्हनूमन्तेश्वरे जले ॥ ८३.४६ ॥

राजोवाच -
अस्थिक्षेपो जले कस्माद्धनूमन्तेश्वरे द्विज ।
क्रियते केन कार्येण साश्चर्यं कथ्यतां मम ॥ ८३.४७ ॥
सुपर्वणः सुतो यानं त्यक्त्वा भूमौ प्रणम्य च ।
कृताञ्जलिपुटो भूत्वा ब्राह्मणाय नरेश्वर ।

समस्तं कथयामास वृत्तान्तं स्वं पुरातनम् ॥ ८३.४८ ॥

ब्राह्मण उवाच -
शिखण्डी नाम राजास्ति कन्यकुब्जे प्रतापवान् ।
अपुत्रोऽसौ महीपालः कन्या जाता मनोरथैः ॥ ८३.४९ ॥
जातिस्मरा सुचार्वङ्गी नर्मदायाः प्रभावतः ।
पित्रा च सैकदा कन्या विवाहाय प्रजल्पिता ॥ ८३.५० ॥
अनित्ये पुत्रि संसारे कन्यादानं ददाम्यहम् ।
श्वःकृत्यमद्य कुर्वीत पूर्वाह्ने चापराह्निकम् ।
न हि प्रतीक्षते मृत्युः कृतं चास्य न चाकृतम् ॥ ८३.५१ ॥

कन्योवाच -
इच्छेयं यत्र कले हि तत्र देया त्वया पितुः ।
पुत्रीवाक्यादसौ राजा विस्मितो वाक्यमब्रवीत् ॥ ८३.५२ ॥

शिखण्ड्युवाच -
कथ्यतां मे महाभागे साश्चर्यं भाषितं त्वया ।
पितुर्वाक्येन सा बालोत्तमा ह्यागतान्तिकम् ॥ ८३.५३ ॥
कथयामास यद्वृत्तं हनूमन्तेश्वरे नृप ।
कलापिनी ह्यहं तात युता भर्त्रावसं तदा ॥ ८३.५४ ॥
रेवौर्व्यासङ्गमन्तिस्था रेवाया दक्षिणे तटे ।
हनूमन्तवने पुण्ये चिक्रीडाहं यदृच्छया ॥ ८३.५५ ॥
भर्तृयुक्ता च संसुप्ता रजन्यां सरले नगे ।
आगता लुब्धकास्तत्र क्षुधार्ता वनमुत्तमम् ॥ ८३.५६ ॥
भर्तृयोगयुता पापैर्दृष्टाहं वधचिन्तकैः ।
पाशबन्धं समादाय बद्धाहं स्वामिना सह ॥ ८३.५७ ॥
ग्रीवां ते मोटयामासुः पिच्छाछोटनकं कृतम् ।
हुताशनमुखे तैस्तु सह कान्तेन लुब्धकैः ॥ ८३.५८ ॥
परिभर्ज्यावयोर्मांसं भक्षयित्वा यथेष्टतः ।
सुप्ताः स्वस्थेन्द्रिया रात्रौ सा गता शर्वरी क्षयम् ॥ ८३.५९ ॥
प्रभाते मांसशेषं च जम्बुकैर्गृध्रघातिभिः ।
मच्छरीरोद्भवं चास्थि स्नायुमांसेन चावृतम् ॥ ८३.६० ॥
गृहीतं घातिनैकेन चाकाशात्पतितं तदा ।

तं मांसभक्षणं दृष्ट्वा परे पक्षिण आगताः ॥ ८३.६१ ॥
दृष्ट्वा पक्षिसमूहं तु अस्थिखण्डं व्यसर्जयत् ।
विहगानां समस्तानां धावतां चैव पश्यताम् ॥ ८३.६२ ॥
पतितं नर्मदातोये हनूमन्तेश्वरे नृप ।
मदीयमस्थिखण्डं च पतितं नर्मदाजले ॥ ८३.६३ ॥
तस्य तीर्थस्य पुण्येन जाताहं पुत्रिका तव ।
भूपकन्या त्वहं जाता पूर्णचन्द्रनिभानना ॥ ८३.६४ ॥
जातिस्मरा नरेन्द्रस्य संजाता भवतः कुले ।
तस्माद्विवाहं नेच्छामि मम भर्ता नृपोत्तम ॥ ८३.६५ ॥
विषमे वर्ततेऽद्यापि शकुन्तमृगजातिषु ।
तस्यास्थिशेषं राजेन्द्र तस्मिंस्तीर्थे भविष्यति ॥ ८३.६६ ॥
तत्क्षेपणार्थं वै तात प्रेषयाद्य द्विजोत्तमम् ।
एतत्ते सर्वमाख्यातं कारणं नृपसत्तम ॥ ८३.६७ ॥
मद्भर्ता विषमे स्थाने शकुन्तमृगजातिषु ।
यदि प्रेषयसे तात कंचित्त्वं नर्मदातटे ॥ ८३.६८ ॥
तस्याहं कथयिष्यामि स्थानैश्चिह्नैश्च लक्षितम् ।
शिखण्डिनाप्यहं तत्र ह्याहूतो ह्यवनीपते ॥ ८३.६९ ॥
दास्यामि विंशतिग्रामान्गच्छ त्वं नर्मदातटे ।
प्रेषणं मे प्रतिज्ञातमलक्ष्म्या पीडितेन तु ॥ ८३.७० ॥

कन्योवाच -
गच्छ त्वं नर्मदां पुण्यां सर्वपापक्षयंकरीम् ।
आग्नेय्यां सोमनाथस्य हनूमन्तेश्वरः परः ॥ ८३.७१ ॥
अर्धक्रोशेन रेवाया विस्तीर्णो वटपादपः ।
करंजः कटहश्चैव सन्निधाने वटस्य च ॥ ८३.७२ ॥
न्यग्रोधमूलसांनिध्ये सूक्ष्मान्यस्थीनि द्रक्ष्यसि ।
समूह्य तानि संगृह्य गच्छ रेवां द्विजोत्तम ॥ ८३.७३ ॥
आश्विनस्यासिते पक्षे त्रिपुरारिस्तु वै तिथौ ।
स्नाप्य त्रिशूलिनं भक्त्या रात्रौ त्वं कुरु जागरम् ॥ ८३.७४ ॥
क्षिपेः प्रभाते तानि त्वं नाभिमात्रजलस्थितः ।
इत्युच्चार्य द्विजश्रेष्ठ विमुक्तिस्तस्य जायताम् ॥ ८३.७५ ॥
क्षिप्त्वास्थीनि पुनः स्नानं कर्तव्यं त्वघनाशनम् ।
एवं कृते तु राजेन्द्र गतिस्तस्य भविष्यति ॥ ८३.७६ ॥

कथितं कन्यया यच्च तत्सर्वं पुस्तिकाकृतम् ।
आगतोऽहं नृपश्रेष्ठ तीर्थेऽत्र दुरितापहे ॥ ८३.७७ ॥
सोऽभिज्ञानं ततो दृष्ट्वा नीत्वास्थीनि नरेश्वर ।
पूर्वोक्तेन विधानेन प्राक्षिपं नार्मदा मसिपुष्पवृष्टिःऽशु साधु साध्विति पाण्डव ।
विमानं च ततो दिव्यमागतं बर्हिणस्तदा ॥ ८३.७८ ॥
दिव्यरूपधरो भूत्वा गतो नाके कलापवान् ।
एवं तु प्रत्ययं दृष्ट्वा हनूमन्तेश्वरे नृप ॥ ८३.७९ ॥
चकारानशनं विप्रः शतबाहुश्च भूपतिः ।
शोषयामासतुस्तौ स्वमीश्वराराधने रतौ ॥ ८३.८० ॥
ध्यायन्तौ तस्थतुर्देवं शतबाहुद्विजोत्तमौ ।
मासार्धेन मृतो राजा शतबाहुर्महामनाः ॥ ८३.८१ ॥
किङ्कणीजालशोभाढ्यं विमानं तत्र चागतम् ।
साधु साधु नृपश्रेष्ठ विमानारोहणं कुरु ॥ ८३.८२ ॥

शतबाहुरुवाच -
नायामि स्वर्गमार्गाग्रं विप्रो यावन्न संस्थितः ।
उपदेशप्रदो मह्यं गुरुरूपी द्विजोत्तमः ॥ ८३.८३ ॥
अप्सरस ऊचुः ।
लोभावृतो ह्ययं विप्रो लोभात्पापस्य संग्रहः ।
हनूमन्तेश्वरे राजन्ये मृताः सत्त्वमास्थिताः ॥ ८३.८४ ॥
ते यान्ति शांकरे लोके सर्वपापक्षयंकरे ।
नैव पापक्षयश्चास्य ब्राह्मणस्य नरेश्वर ॥ ८३.८५ ॥
गृहं च गृहिणी चित्ते ब्राह्मणस्य प्रवर्तते ।
शतबाहुस्ततो विप्रमुवाच विनयान्वितः ॥ ८३.८६ ॥
त्यज मूलमनर्थस्य लोभमेनं द्विजोत्तम ।
इत्युक्त्वा स्वर्ययौ राजा स्वर्गकन्यासमावृतः ॥ ८३.८७ ॥
दिनैः कैश्चिद्गतो विप्रः स्वर्गं वैतालिकैर्वृतः ।
बर्ही च काशीराजस्य पुत्रस्तीर्थप्रभावतः ॥ ८३.८८ ॥
आत्मानं कन्यया दत्तं पूर्वजन्म व्यचिन्तयन् ।
सा च तं प्रौढमालोक्य पितुराज्ञामवाप्य च ।
स्वयंवरे स्वभर्तारं लेभे साध्वी नृपात्मजम् ॥ ८३.८९ ॥

श्रीमार्कण्डेय उवाच -

एतद्वृत्तान्तमभवत्तस्मिंस्तीर्थे नृपोत्तम ।
एतस्मात्कारणान्मेध्यं तीर्थमेतत्सदा नृप ॥ ८३.९० ॥
अष्टम्यां वा चतुर्दश्यां सर्वकालं नरेश्वर ।
विशेषाच्चाश्विने मासि कृष्णपक्षे चतुर्दशीम् ॥ ८३.९१ ॥
स्नापयेदीश्वरं भक्त्या क्षौद्रक्षीरेण सर्पिषा ।
दध्ना च खण्डयुक्तेन कुशतोयेन वै पुनः ॥ ८३.९२ ॥
श्रीखण्डेन सुगन्धेन गुण्ठयेच्च महेश्वरम् ।
ततः सुगन्धपुष्पैश्च बिल्वपत्रैश्च पूजयेत् ॥ ८३.९३ ॥
मुचकुन्देन कदेन जातीकाशकुशोद्भवैः ।
उन्मत्तमुनिपुष्पौघैः पुष्पैस्तत्कालसम्भवैः ॥ ८३.९४ ॥
अर्चयेत्परया भक्त्या हनूमन्तेश्वरं शिवम् ।
घृतेन दापयेद्दीपं तैलेन तदभावतः ॥ ८३.९५ ॥
श्राद्धं च कारयेत्तत्र ब्राह्मणैर्वेदपारगैः ।
सर्वलक्षणसम्पूर्णैः कुलीनैर्गृहपालकैः ॥ ८३.९६ ॥
तर्पयेद्ब्राह्मणान् भक्त्या वसनान्नहिरण्यतः ।
नरकस्था दिवं यान्तु प्रोच्येति प्रणमेद्द्विजान् ॥ ८३.९७ ॥
पतितान् वर्जयेद्विप्रान् वृषली यस्य गेहिनी ।
स्ववृषं चापरित्यज्य वृषैरन्यैर्वृषायते ॥ ८३.९८ ॥
वृषलीं तां विदुर्देवा न शूद्री वृषली भवेत् ।
ब्रह्महत्या सुरापानं गुरुदारनिषेवणम् ॥ ८३.९९ ॥
सुवर्णहरणन्यासमित्रद्रोहोद्भवं तथा ।
नश्यते पातकं सर्वमित्येवं शङ्करोऽब्रवीत् ॥ ८३.१०० ॥

श्रीमार्कण्डेय उवाच -
वाक्प्रलापेन भो वत्स बहुनोक्तेन किं मया ।
सर्वपातकसंयुक्तो दद्याद्दानं द्विजन्मने ॥ ८३.१०१ ॥
गोदानं च प्रकर्तव्यमस्मिंस्तीर्थे विशेषतः ।
गोदानं हि यतः पार्थ सर्वदानाधिकं स्मृतम् ॥ ८३.१०२ ॥
सर्वदेवमया गावः सर्वे देवास्तदात्मकाः ।
शृङ्गाग्रेषु महीपाल शक्रो वसति नित्यशः ॥ ८३.१०३ ॥
उरः स्कन्दः शिरो ब्रह्मा ललाटे वृषभध्वजः ।
चन्द्रार्कौ लोचने देवौ जिह्वायां च सरस्वती ॥ ८३.१०४ ॥
मरुद्गणाः सदा साध्या यस्या दन्ता नरेश्वर ।

हुङ्कारे चतुरो वेदान् विद्यात्साङ्गपदक्रमान् ॥ ८३.१०५ ॥
ऋषयो रोमकूपेषु ह्यसंख्यातास्तपस्विनः ।
दण्डहस्तो महाकायः कृष्णो महिषवाहनः ॥ ८३.१०६ ॥
यमः पृष्ठस्थितो नित्यं शुभाशुभपरीक्षकः ।
चत्वारः सागराः पुण्याः क्षीरधाराः स्तनेषु च ॥ ८३.१०७ ॥
विष्णुपादोद्भवा गङ्गा दर्शनात्पापनाशनी ।
प्रस्रावे संस्थिता यस्मात्तस्माद्वन्द्या सदा बुधैः ॥ ८३.१०८ ॥
लक्ष्मीश्च गोमये नित्यं पवित्रा सर्वमङ्गला ।
गोमयालेपनं तस्मात्कर्तव्यं पाण्डुनन्दन ॥ ८३.१०९ ॥
गन्धर्वाप्सरसो नागाः खुराग्रेषु व्यवस्थिताः ।
पृथिव्यां सागरान्तायां यानि तीर्थानि भारत ।
तानि सर्वाणि जानीयाद्गौर्गव्यं तेन पावनम् ॥ ८३.११० ॥

युधिष्ठिर उवाच -
सर्वदेवमयी धेनुर्गीर्वाणाद्यैरलंकृता ।
एतत्कथय मे तात कस्माद्गोषु समाश्रिताः ॥ ८३.१११ ॥

श्रीमार्कण्डेय उवाच -
सर्वदेवमयो विष्णुर्गावो विष्णुशरीरजाः ।
देवास्तदुभयात्तस्मात्कल्पिता विविधा जनैः ॥ ८३.११२ ॥
श्वेता वा कपिला वापि क्षीरिणी पाण्डुनन्दन ।
सवत्सा च सुशीला च सितवस्त्रावगुण्ठिता ॥ ८३.११३ ॥
कांस्यदोहनिका देया स्वर्णशृङ्गी सुभूषिता ।
हनूमन्तेश्वरस्याग्रे भक्त्या विप्राय दापयेत् ॥ ८३.११४ ॥
नियमस्थेन सा देया स्वर्गमानन्त्यमिच्छता ।
असमर्थाय ये दद्युर्विष्णुलोके प्रयान्ति ते ॥ ८३.११५ ॥
असौ लोके च्युतो राजन्भूतले द्विजमन्दिरे ।
कुशलो जायते पुत्रो गुणविद्याधनर्द्धिमान् ॥ ८३.११६ ॥
सर्वपापहरं तीर्थं हनूमन्तेश्वरं नृप ।
शृण्वन्विमुच्यते पापाद्वर्णसंकरसंभवात् ॥ ८३.११७ ॥
दूरस्थश्चिन्तयन् पश्यन्मुच्यते नात्र संशयः ॥ ८३.११८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे हनूमन्तेश्वरतीर्थमाहात्म्यवर्णनं नाम त्र्यशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८४

https://sa.wikisource.org/s/fe7
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ८४

श्रीमार्कण्डेय उवाच -
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
कैलासे पृच्छते भक्त्या षण्मुखाय शिवोदितम् ॥ ८४.१ ॥

ईश्वर उवाच -
पूर्वं त्रेतायुगे स्कन्द हतो रामेण रावणः ।
चतुर्दश तदा कोट्यो निहता ब्रह्मरक्षसाम् ॥ ८४.२ ॥
हतेषु तेषु वै तत्र रक्षणाय दिवौकसाम् ।
महानन्दस्तदा जातस्त्रिषु लोकेषु पुत्रक ॥ ८४.३ ॥
ततः सीतां समासाद्य समं वानरपुंगवैः ।
रामोऽप्ययोध्यामायातो भरतेन कृतोत्सवः ।
तस्मै समर्पयामास स राज्यं लक्ष्मणाग्रजः ॥ ८४.४ ॥
तस्मिन्प्रशासति ततो राज्यं निहतकण्टकम् ।
कृतकार्योऽथ हनुमान्कैलासमगात्पुरा ॥ ८४.५ ॥
ततो नन्दी प्रतीहारो रुद्रांशमपि तं कपिम् ।
न च संगमयामास रुद्रेणाघौघहारिणा ॥ ८४.६ ॥
तेन पृष्टस्तदा नन्दी किं मया पातकं कृतम् ।
येन रुद्रवपुः पुण्यं न पश्याम्यम्बिकान्वितम् ॥ ८४.७ ॥

नन्द्युवाच -
त्वयावतरणं चक्रे कपीन्द्रामरहेतुना ।
तथापि हि कृतं पापमुपभोगेन शाम्यति ॥ ८४.८ ॥

हनुमानुवाच -

किं मयाकारि तत्पापं नन्दिन्देवार्थकारिणा ।
राक्षसाश्च हता दुष्टा विप्रयज्ञाङ्गघातिनः ॥ ८४.९ ॥
ततस्तदालापकुतूहली हरो निजांशभाजं कपिमुग्रतेजसम् ।
उवाच द्वारान्तरदत्तदृष्टिः पुरःस्थितं प्रेक्ष्य कपीश्वरं पुनः ॥ ८४.१० ॥

ईश्वर उवाच -
गङ्गा गया कपे रेवा यमुना च सरस्वती ।
सर्वपापहरा नद्यस्तासु स्नानं समाचर ॥ ८४.११ ॥
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ।
सोमनाथसमीपस्थं तत्र त्वं गच्छ वानर ॥ ८४.१२ ॥
तत्र स्नात्वा महापापं गमिष्यति ममाज्ञया ।
उत्पत्य वेगाद्धनुमाञ्छ्रीरेवादक्षिणे तटे ॥ ८४.१३ ॥
जगाम सुमहानादस्तपश्चक्रे सुदुष्करम् ।
तस्य वै तप्यमानस्य रक्षोवधकृतं तमः ॥ ८४.१४ ॥
विलीनं पार्थ कालेन कियतेशप्रसादतः ।
ततो देवैः समं देवस्तत्तीर्थमगमद्धरः ॥ ८४.१५ ॥
कपिमालिङ्गयामास वरं तस्मै प्रदत्तवान् ।
अद्यप्रभृति ते तीर्थं भविष्यति न संशयः ॥ ८४.१६ ॥
कपितीर्थं ततो जातं तस्थौ तत्र स्वयं हरः ।
हनूमन्तेश्वरो नाम्ना सर्वहत्याहरस्तदा ॥ ८४.१७ ॥
तत्र तीर्थे तु यः स्नात्वा भक्त्या लिङ्गं प्रपूजयेत् ।
सर्वपापानि नश्यन्ति हरस्य वचनं यथा ॥ ८४.१८ ॥
तत्रास्थीनि विलीयन्ते पिण्डदानेऽक्षया गतिः ।
यत्किंचिद्दीयते तत्र तद्धि कोटिगुणं भवेत् ॥ ८४.१९ ॥
हनुमानप्ययोध्यायां रामं द्रष्टुमथागमत् ।
चकार कुशलप्रश्नं स्वस्वरूपं न्यवेदयत् ॥ ८४.२० ॥

श्रीराम उवाच -
कुर्वतो देवकार्यं ते मम कार्यं च कुर्वतः ।
ततोऽहमपि पापीयांस्तपस्तप्स्याम्यसंशयम् ॥ ८४.२१ ॥
तत्रैव दक्षिणे कूले रेवायाः पापहारिणि ।
चतुर्विंशतिवर्षाणि तपस्तेपेऽथ राघवः ॥ ८४.२२ ॥

ज्योतिष्मतीपुरीसंस्थः श्रीरेवास्नानमाचरन् ।
तस्य शुश्रूषणं चक्रे लक्ष्मणोऽपि तदाज्ञया ॥ ८४.२३ ॥
स्थापयामासतुर्लिङ्गे तौ तदा रामलक्ष्मणौ ।
प्रभावात्सत्यतपसो रेवातीरे महामती ।
निष्पापतां तदा वीरौ जग्मतू रामलक्ष्मणौ ॥ ८४.२४ ॥
ततस्तदा देवपुरोगमो हरो गतो हि वै पुण्यमुनीश्वरैः सह ।
आगत्य तीर्थं च वरं ददौ तदा निजां कलां तत्र विमुच्य तीर्थे ॥ ८४.२५ ॥
मुनिभिः सर्वतीर्थानां क्षिप्तं कुम्भोदकं भुवि ।
एकस्थं लिङ्गनामाथ कलाकुम्भस्तथाभवत् ॥ ८४.२६ ॥
कुम्भेश्वर इति ख्यातस्तदा देवगणार्चितः ।
रामोऽपि पूजयामास तल्लिङ्गं देवसेविवतम् ॥ ८४.२७ ॥
ततो वरं ददौ देवो रामकीर्त्यभिवृद्धये ।
चतुर्विंशतिमे वर्षे रामो निष्पापतां गतः ॥ ८४.२८ ॥
यदा कन्यागतः पङ्गुर्गुरुणा सहितो भवेत् ।
तदेव देवयात्रेयमिति देवा जगुर्मुदा ॥ ८४.२९ ॥
यथा गोदावरीतीर्थे सर्वतीर्थफलं भवेत् ।
तथात्र रेवास्नानेन लिङ्गानां दर्शनैर्न्ःणाम् ॥ ८४.३० ॥
करिष्यन्त्यत्र ये श्राद्धं पित्ःणां नर्मदातटे ।
कुम्भेश्वरसमीपस्थास्तत्फलं शृणु षण्मुख ॥ ८४.३१ ॥
यावन्तो रोमकूपाः स्युः शरीरे सर्वदेहिनाम् ।
तावद्वर्षप्रमाणेन पित्ःणामक्षया गतिः ॥ ८४.३२ ॥
पृथिव्यां देवताः सर्वाः सर्वतीर्थानि यानि तु ।
लभन्ते तत्फलं मर्त्या लिङ्गत्रयविलोकनात् ॥ ८४.३३ ॥
अपुत्रो लभते पुत्रं निर्धनो धनमाप्नुयात् ।
सरोगो मुच्यते रोगान्नात्र कार्या विचारणा ॥ ८४.३४ ॥
सिंहराशिं गते जीवे यत्स्याद्गोदावरीफलम् ।
तद्द्वादशगुणं स्कन्द कुम्भेश्वरसमीपतः ॥ ८४.३५ ॥
ये जानन्ति न पश्यन्ति कुम्भशम्भुमुमापतिम् ।
नर्मदादक्षिणे कूले तेषां जन्म निरर्थकम् ॥ ८४.३६ ॥
यथा गोदावरीयात्रा कर्तव्या मुनिशासनात् ।
चतुर्विंशतिमे वर्षे तथेयं देवभाषितम् ॥ ८४.३७ ॥
यावच्चन्द्रश्च सूर्यश्च यावद्वै दिवि तारकः ।

तावत्तदक्षयं दानं रेवाकुम्भेश्वरान्तिके ॥ ८४.३८ ॥
महादानानि देयानि तत्र लौकैर्विचक्षणैः ।
गोदानमत्र शंसन्ति सौवर्णं राजतं तथा ॥ ८४.३९ ॥
यस्याः स्मरणमात्रेण नश्यते पापसञ्चयः ।
स्नानेन किं पुनः स्कन्द ब्रह्महत्यां व्यपोहति ॥ ८४.४० ॥
तत्र तीर्थे तु यः स्नात्वा श्राद्धं कुर्याद्युधिष्ठिर ।
एकोत्तरं कुलशतमुद्धरेच्छिवशासनात् ॥ ८४.४१ ॥
यानि कानि च तीर्थानि चासमुद्रसरांसि च ।
शिवलिङ्गार्चनस्येह कलां नार्हन्ति षोडशीम् ॥ ८४.४२ ॥
एवं देवा वरं दत्त्वा हरीश्वरपुरोगमाः ।
स्वस्थानमगमन् पूर्वं मुक्त्वा तन्नाम चोत्तमम् ॥ ८४.४३ ॥
तीर्थस्यास्य वरं दत्त्वा स रामो लक्ष्मणाग्रजः ।
अयोध्यां प्रविवेशासौ निष्पापो नर्मदाजलात् ॥ ८४.४४ ॥
सौवर्णीं च ततः कृत्वा सीतां यज्ञं चकार सः ।
अनुमन्त्र्य मुनींल्लोकान्देवताश्च निजं कुलम् ॥ ८४.४५ ॥
पुरा त्रेतायुगे जातं तत्तीर्थं स्कन्दनामकम् ।
नियमेन ततो लोकैः कर्तव्यं लिङ्गदर्शनम् ॥ ८४.४६ ॥
तावत्पापानि देहेषु महापातकजान्यपि ।
यावन्न प्रेक्षते जन्तुस्तत्तीर्थं देवसेवितम् ॥ ८४.४७ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
ज्योतिष्मतीपुरीसंस्थं ये द्रक्ष्यन्ति हरं परम् ॥ ८४.४८ ॥
तस्मान्मोहं परित्यज्य जनैर्गन्तव्यमादरात् ।
तीर्थाशेषफलावाप्त्यै तीर्थं कुम्भेश्वराह्वयम् ॥ ८४.४९ ॥

मार्कण्डेय उवाच -
श्रुत्वेति शम्भुवचसा स षडाननोऽथ नत्वा पितुः पदयुगाम्बुजमादरेण ।
सम्प्राप्य दक्षिणतटं गिरिशस्रवन्त्याः कीशाग्र्यरामकलशाख्यशिवान् ददर्श ॥ ८४.५० ॥
॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कपितीर्थरामेश्वरलक्ष्मणेश्वरकुम्भेश्वरमाहात्म्यवर्णनं नाम चतुरशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८५



अध्याय ८५

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र नर्मदायाः पुरातनम् ।
ब्रह्महत्याहरं तीर्थं वाराणस्या समं हि तत् ॥ ८५.१ ॥

युधिष्ठिर उवाच -
आश्चर्यं कथ्यतां ब्रह्मन्यद्वृत्तं नर्मदातटे ।
वाराणस्या समं कस्मादेतत्कथय मे प्रभो ॥ ८५.२ ॥
निमग्नो दुःखसंसारे हृतराज्यो द्विजोत्तम ।
युष्मद्वाणीजलस्नातो निर्दुःखः सह बान्धवैः ॥ ८५.३ ॥

श्रीमार्कण्डेय उवाच -
साधु साधु महाबाहो सोमवंशविभूषण ।
पृष्टोऽस्मि दुर्लभं तीर्थं गुह्याद्गुह्यतरं परम् ॥ ८५.४ ॥
आदौ पितामहस्तावत्समस्तजगतः प्रभुः ।
मनसा तस्य संजाता दशैव ऋषिपुंगवाः ॥ ८५.५ ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ ८५.६ ॥
जज्ञे प्राचेतसं दक्षं महातेजाः प्रजापतिः ।
दक्षस्यापि तथा जाताः पञ्चाशद्दुहिताः किल ॥ ८५.७ ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
तथैव स महाभागः सप्तविंशतिमिन्दवे ॥ ८५.८ ॥
रोहिणी नाम या तासामभीष्टा साभवद्विधोः ।
शेषासु करुणां कृत्वा शप्तो दक्षेण चन्द्रमाः ॥ ८५.९ ॥
क्षयरोग्यभवच्चन्द्रो दक्षस्यायं प्रजापतेः ।

स च शापप्रभावेण निस्तेजाः शर्वरीपतिः ॥ ८५.१० ॥
गतः पितामहं सोमो वेपमानोऽमृतांशुमान् ।
पद्मयोने नमस्तुभ्यं वेदगर्भ नमोऽस्तु ते ।
शरणं त्वां प्रसन्नोऽस्मि पाहि मां कमलासन ॥ ८५.११ ॥

ब्रह्मोवाच -
निस्तेजाः शर्वरीनाथ कलाहीनश्च दृश्यसे ।
उद्विग्नमानसस्तात संजातः केन हेतुना ॥ ८५.१२ ॥

सोम उवाच -
दक्षशापेन मे ब्रह्मन्निस्तेजस्त्वं जगत्पते ।
निर्हारश्चास्य शापस्य कथ्यतां मे पितामह ॥ ८५.१३ ॥

ब्रह्मोवाच -
सर्वत्र सुलभा रेवा त्रिषु स्थानेषु दुर्लभा ।
ओङ्कारेऽथ भृगुक्षेत्रे तथा चैवौर्वसंगमे ॥ ८५.१४ ॥
तत्र गच्छ क्षपानाथ यत्र रेवान्तरं तटम् ।
त्वरितोऽसौ गतस्तत्र यत्र रेवौर्विसंगमः ॥ ८५.१५ ॥
काष्ठावस्थः स्थितः सोमो दध्यौ त्रिपुरवैरिणम् ।
यावद्वर्षशतं पूर्णं तावत्तुष्टो महेश्वरः ॥ ८५.१६ ॥
प्रत्यक्षः सोमराजस्य वृषासन उमापतिः ।
साष्टाङ्गं प्रणिपत्योच्चैर्जय शम्भो नमोऽस्तु ते ॥ ८५.१७ ॥
जय शङ्कर पापहराय नमो जय ईश्वर ते जगदीश नमः ।
जय वासुकिभूषणधार नमो जय शूलकपालधराय नमः ॥ ८५.१८ ॥
जय अन्धकदेहविनाश नमो जय दानववृन्दवधाय नमः ।
जय निष्कलरूप सकलाय नमो जय काल कामदहाय नमः ॥ ८५.१९ ॥
जय मेचककण्ठधराय नमो जय सूक्ष्मनिरञ्जनशब्द नमः ।
जय आदिरनादिरनन्त नमो जय शङ्कर किंकरमीश भज ॥ ८५.२० ॥
एवं स्तुतो महादेवः सोमराजेन पाण्डव ।
तुष्टस्तस्य नृपश्रेष्ठ शिवया शङ्करोऽब्रवीत् ॥ ८५.२१ ॥

ईश्वर उवाच -

वरं प्रार्थय मे भद्र यत्ते मनसि वर्तते ।
साधु साधु महासत्त्व तुष्टोऽहं तपसा तव ॥ ८५.२२ ॥

सोम उवाच -
दक्षशापेन दग्धोऽहं क्षीणसत्त्वो महेश्वर ।
शापस्योपशमं देव कुरु शर्म मम प्रभो ॥ ८५.२३ ॥

ईश्वर उवाच -
तव भक्तिगृहीतोऽहमुमया सह तोषितः ।
निष्पापः सोमनाथस्त्वं संजातस्तीर्थसेवनात् ॥ ८५.२४ ॥
इत्यूचे देवदेवेशः क्षणं ध्यात्वेन्दुना ततः ।
स्थापितं परमं लिङ्गं कामदं प्राणिनां भुवि ।
सर्वदुःखहरं तत्तु ब्रह्महत्याविनाशनम् ॥ ८५.२५ ॥

युधिष्ठिर उवाच -
सोमनाथप्रभावं मे संक्षेपात्कथय प्रभो ।
दुःखार्णवनिमग्नानां त्राता प्राप्तो द्विजोत्तम ॥ ८५.२६ ॥

श्रीमार्कण्डेय उवाच -
शृणु तीर्थप्रभावं ते संक्षेपात्कथयाम्यहम् ।
यद्वृत्तमुत्तरे कूले रेवाया उरिसंगमे ॥ ८५.२७ ॥
शम्बरो नाम राजाभूत्तस्य पुत्रस्त्रिलोचनः ।
त्रिलोचनसुतः कण्वः स पापर्द्धिपरोऽभवत् ॥ ८५.२८ ॥
वने नित्यं भ्रमन्सोऽथ मृगयूथं ददर्श ह ।
मृगयूथं हतं तत्तु त्रिलोचनसुतेन च ॥ ८५.२९ ॥
मृगरूपी द्विजो मध्ये चरते निर्जने वने ।
स हतस्तेन सङ्गेन कण्वेन मुनिसत्तम ॥ ८५.३० ॥
ब्रह्महत्यान्वितः कण्वो निस्तेजा व्यचरन्महीम् ।
व्यचरंश्चैव सम्प्राप्तो नर्मदामुरिसंगमे ॥ ८५.३१ ॥
किंशुकाशोकबहले जम्बीरपनसाकुले ।
कदम्बपाटलाकीर्णे बिल्वनारङ्गशोभिते ॥ ८५.३२ ॥
चिञ्चिणीचम्पकोपेते ह्यगस्तितरुछादिते ।

प्रभूतभूतसंयुक्तं वनं सर्वत्र शोभितम् ॥ ८५.३३ ॥
चित्रकैर्मृगमार्जारैर्हिंस्रैः शम्बरशूकरैः ।
शशैर्गवयसंयुक्तैः शिखण्डिखरमण्डितम् ॥ ८५.३४ ॥
प्रविष्टस्तु वने कण्वस्तृषार्तः श्रमपीडितः ।
स्नातो रेवाजले पुण्ये सङ्गमे पापनाशने ॥ ८५.३५ ॥
अर्चितः परया भक्त्या सोमनाथो युधिष्ठिर ।
पपौ सुविमलं तोयं सर्वपापक्षयंकरम् ॥ ८५.३६ ॥
फलानि च विचित्राणि चखाद सह किंकरैः ।
सुप्तः पादपच्छायायां श्रान्तो मृगवधेन च ॥ ८५.३७ ॥
तावत्तीर्थवरं विप्रः स्नानार्थं सङ्गमं गतः ।
मार्गगो ब्राह्मणो हर्षोद्युक्तस्तद्गतमानसः ॥ ८५.३८ ॥
अबला तमुवाचेदं तिष्ठ तिष्ठ द्विजोत्तम ।
त्रस्तो निरीक्षते यावद्दिशः सर्वा नरेश्वर ॥ ८५.३९ ॥
तावद्वृक्षसमारूढां स्त्रियं रक्ताम्बरावृताम् ।
रक्तमाल्यां तदा बालां रक्तचन्दनचर्चिताम् ।
रक्ताभरणशोभाढ्यां पाशहस्तां ददर्श ह ॥ ८५.४० ॥

स्त्र्युवाच -
संदेशं श्रूयतां विप्र यदि गच्छसि सङ्गमे ।
मद्भर्ता तिष्ठते तत्र शीघ्रमेव विसर्जय ॥ ८५.४१ ॥
एकाकिनी च ते भार्या तिष्ठते वनमध्यगा ।
इत्याकर्ण्य गतो विप्रः सङ्गमं सुरदुर्लभे ॥ ८५.४२ ॥
वृक्षच्छायान्वितः कण्वो ब्राह्मणेनावलोकितः ।
उवाच तं प्रति तदा वचनं ब्राह्मणोत्तमः ॥ ८५.४३ ॥

ब्राह्मण उवाच -
वनान्तरे मया दृष्टा बाला कमललोचना ।
रक्ताम्बरधरा तन्वी रक्तचन्दनचर्चिता ॥ ८५.४४ ॥
रक्तमाल्या सुशोभाढ्या पाशहस्ता मृगेक्षणा ।
वृक्षारूढावदद्वाक्यं मद्भर्ता प्रेष्यतामिति ॥ ८५.४५ ॥

कण्व उवाच -

कस्मिन्स्थाने तु विप्रेन्द्र विद्यते मृगलोचना ।
कस्य सा केन कार्येण सर्वमेतद्वदाशु मे ॥ ८५.४६ ॥

ब्राह्मण उवाच -
सङ्गमादर्धक्रोशे सा उद्यानान्ते हि विद्यते ।
वचनाद्ब्रह्मणस्यैषा न ज्ञाता पार्थिवेन तु ॥ ८५.४७ ॥
तदा स कण्वभूपालः स्वकं दूतं समादिशत् ।

कण्व उवाच -
गच्छ त्वं पृच्छतां तां क्वागता क्वच गमिष्यसि ।
प्रेषितस्त्वरितो दूतो गतो नारीसमीपतः ॥ ८५.४८ ॥
वृक्षस्थां ददृशो बालामुवाच नृपसत्तम ।
मन्नाथः पृच्छति त्वां तु कासि त्वं क्व गमिष्यसि ॥ ८५.४९ ॥

कन्योवाच -
गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
इह प्रच्छन्न पापानां शास्ता वैवस्वतो यमः ॥ ८५.५० ॥
ब्रह्महत्या च संजाता मृगरूपधरद्विजात् ।
मया युक्तोऽपि ते राजा मुक्तस्तीर्थप्रभावतः ॥ ८५.५१ ॥
अर्धक्रोशान्तरान्मध्ये ब्रह्महत्या न संविशेत् ।
सोमनाथप्रभावोऽयं वाराणस्याः समः स्मृतः ॥ ८५.५२ ॥
गच्छ त्वं प्रेष्यतां राजा शीघ्रमत्र न संशयः ।
गतो भृत्यस्ततः शीघ्रं वेपमानः सुविह्वलः ॥ ८५.५३ ॥
समस्तं कथयामास यद्वृत्तं हि पुरातनम् ।
तस्य वाक्यादसौ राजा पतितो धरणीतले ॥ ८५.५४ ॥

भृत्य उवाच -
कस्मात्त्वं शोचसे नाथ पूर्वोपात्तं शुभाशुभम् ।
इत्याकर्ण्य वचस्तस्य राजा वचनमब्रवीत् ॥ ८५.५५ ॥
प्राणत्यागं करिष्यामि सोमनाथसमीपतः ।
शीघ्रमानीयतां वह्निरिन्धनानि बहूनि च ॥ ८५.५६ ॥
आनीतं तत्क्षणात्सर्वं भृत्यैस्तद्वशवर्तिभिः ।

स्नानं कृत्वा शुभे तोये सङ्गमे पापनाशने ॥ ८५.५७ ॥
अर्चितः परया भक्त्या सोमनाथो महीभृता ।
त्रिःप्रदक्षिणतः कृत्वा ज्वलन्तं जातवेदसम् ॥ ८५.५८ ॥
प्रविष्टः कण्वराजासौ हृदि ध्यात्वा जनार्दनम् ।
पीताम्बरधरं देवं जटामुकुटधारिणम् ॥ ८५.५९ ॥
श्रिया युक्तं सुपर्णस्थं शङ्खचक्रगदाधरम् ।
सुरारिसूदनं दध्यौ सुगतिर्मे भवत्विति ॥ ८५.६० ॥
पपात पुष्पवृष्टिस्तु साधु साधु नृपात्मज ।
आश्चर्यमतुलं दृष्ट्वा निरीक्ष्य च परस्परम् ॥ ८५.६१ ॥
मृतं तैः पावके भृत्यैर्हृदि ध्यात्वा गदाधरम् ।
विमानस्थास्ततः सर्वे संजाताः पाण्डुनन्दन ॥ ८५.६२ ॥
निष्पापास्ते दिवं याताः सोमनाथप्रभावतः ।
ब्राह्मणे सङ्गमे तत्र ध्यायमाने वृषध्वजम् ॥ ८५.६३ ॥

श्रीमार्कण्डेय उवाच -
सोमनाथप्रभावोऽयं शृणुष्वैकमना विधिम् ।
अष्टम्यां वा चतुर्दश्यां सर्वकालं रवेर्दिने ॥ ८५.६४ ॥
विशेषाच्छुक्लपक्षे चेत्सूर्यवारेण सप्तमी ।
उपोष्य यो नरो भक्त्या रात्रौ कुर्वीत जागरम् ॥ ८५.६५ ॥
पञ्चामृतेन गव्येन स्नापयेत्परमेश्वरम् ।
श्रीखण्डेन ततो गुण्ठ्य पुष्पधूपादिकं ददेत् ॥ ८५.६६ ॥
घृतेन बोधयेद्दीपं नृत्यं गीतं च कारयेत् ।
सोमवारे तथाष्टम्यां प्रभाते पूजयेद्द्विजान् ॥ ८५.६७ ॥
जितक्रोधानात्मवतः परनिन्दाविवर्जितान् ।
सर्वाङ्गरुचिराञ्छस्तान् स्वदारपरिपालकान् ॥ ८५.६८ ॥
गायत्रीपाठमात्रांश्च विकर्मविरतान् सदा ।
पुनर्भूवृषलीशूद्री चरेयुर्यस्य मन्दिरे ॥ ८५.६९ ॥
दूरतोऽसौ द्विजस्त्याज्य आत्मनः श्रेय इच्छता ।
हीनाङ्गानतिरिक्ताङ्गान् येषां पूर्वापरं न हि ॥ ८५.७० ॥
व्रते श्राद्धे तथा दाने दूरतस्तान् विवर्जयेत् ।
आयसी तरुणी तुल्या द्विजाः स्वाध्यायवर्जिताः ॥ ८५.७१ ॥
आत्मानं सह याज्येन पातयन्ति न संशयः ।

शाल्मलीनावतुल्याः स्युः षट्कर्मनिरता द्विजाः ॥ ८५.७२ ॥
दातारं च तथात्मानं तारयन्ति तरन्ति च ।
श्राद्धं सोमेश्वरे पार्थ यः कुर्याद्गतमत्सरः ॥ ८५.७३ ॥
प्रेतास्तस्य हि सुप्रीता यावदाभूतसम्प्लवम् ।
अन्नं वस्त्रं हिरण्यं च यो दद्यादग्रजन्मने ॥ ८५.७४ ॥
स याति शाङ्करे लोक इति मे सत्यभाषितम् ।
हयं यो यच्छते तत्र सम्पूर्णं तरुणं सितम् ॥ ८५.७५ ॥
रक्तं वा पीतवर्णं वा सर्वलक्षणसंयुतम् ।
कुङ्कुमेन विलिप्ताङ्गावग्रजन्महयावपि ॥ ८५.७६ ॥
स्रग्दामभूषितौ कार्यौ सितवस्त्रावगुण्ठितौ ।
अङ्घ्रिः प्रदीयतां स्कन्धे मदीये हयमारुह ॥ ८५.७७ ॥
आरूढे ब्राह्मणे ब्रूयाद्भास्करः प्रीयतामिति ।
स याति शांकरं लोकं सर्वपापविवर्जितः ॥ ८५.७८ ॥
उपरागे तु सोमस्य तीर्थं गत्वा जितेन्द्रियः ।
सत्यलोकाच्च्युतश्चापि राजा भवति धार्मिकः ॥ ८५.७९ ॥
तस्य वासः सदा राजन्न नश्यति कदाचन ।
दीर्घायुर्जायते पुत्रो भार्या च वशवर्तिनी ॥ ८५.८० ॥
जीवेद्वर्षशतं साग्रं सर्वदुःखविवर्जितः ।
सोपवासो जितक्रोधो धेनुं दद्याद्द्विजन्मने ॥ ८५.८१ ॥
सवत्सां क्षीरसंयुक्तां श्वेतवस्त्रावलोकिताम् ।
शबलां पीतवर्णां च धूम्रां वा नीलकर्बुराम् ॥ ८५.८२ ॥
कपिलां वा सवत्सां च घण्टाभरणभूषिताम् ।
रूप्यखुरां कांस्यदोहां स्वर्णशृङ्गीं नरेश्वर ॥ ८५.८३ ॥
श्वेतया वर्धते वंशो रक्ता सौभाग्यवर्धिनी ।
शबला पीतवर्णा च दुःखघ्न्यौ संप्रकीर्तिते ॥ ८५.८४ ॥
कपिला नाशयेत्पापं सप्तजन्मसमुद्भवम् ।
सत्यलोकमवाप्नोति गोप्रदायी नरेश्वर ॥ ८५.८५ ॥
पक्षान्तेऽथ व्यतीपाते वै धृतौ रविसंक्रमे ।
दिनक्षये गजच्छायां ग्रहणे भास्करस्य च ॥ ८५.८६ ॥
ये व्रजन्ति महात्मानः सङ्गमे सुरदुर्लभे ।
मृदावगुण्ठयित्वा तु चात्मानं सङ्गमे विशेत् ॥ ८५.८७ ॥
हृदयान्तर्जले जाप्या प्राणायामोऽथवा नृप ।

गायत्री वैष्णवी चैव सौरी शैवी यदृच्छया ।
तेऽपि पापैः प्रमुच्यन्त इत्येवं शङ्करोऽब्रवीत् ॥ ८५.८८ ॥
जगतीं सोमनाथस्य यस्तु कुर्यात्प्रदक्षिणाम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ॥ ८५.८९ ॥
ब्रह्महत्या सुरापानं गुरुदारनिषेवणम् ।
भ्रूणहा स्वर्णहर्ता च मुच्यन्ते नात्र संशयः ॥ ८५.९० ॥
तीर्थाख्यानमिदं पुण्यं यः शृणोति जितेन्द्रियः ।
व्याधितो मुच्यते रोगी चारोगी सुखमाप्नुयात् ॥ ८५.९१ ॥
यत्ते संदह्यते चेतः शृणु तन्मे युधिष्ठिर ।
नैकापि नृप लोकेऽस्मिन् भ्रूणहत्या सुदुस्त्यजा ॥ ८५.९२ ॥
किमु षड्विंशतिं पार्थ प्राप याः क्षणदाकरः ।
सोऽपि तीर्थमिदं प्राप्य तपस्तप्त्वा सुदुश्चरम् ॥ ८५.९३ ॥
विमुक्तः सर्वपापेभ्यः शीतरश्मिरभूत्सुखी ।
श्रूयते नृप पौराणी गाथा गीता महर्षिभिः ॥ ८५.९४ ॥
लिङ्गं प्रतिष्ठितं ह्येकं दशभ्रूणहनं भवेत् ।
अतो लिङ्गत्रयं सोमः स्थापयामास भारत ॥ ८५.९५ ॥
रेवौरिसंगमे ह्याद्यं द्वितीयं भृगुकच्छके ।
ततः सिद्धिं परां प्राप्य प्रभासे तु तृतीयकम् ॥ ८५.९६ ॥
इति ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ।
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं संशुद्धिकृन्नृणाम् ॥ ८५.९७ ॥
पुत्रार्थी लभते पुत्रान्निष्कामः स्वर्गमाप्नुयात् ।
मुच्यते सर्वपापेभ्यस्तीर्थं कृत्वा परं नृप ॥ ८५.९८ ॥
एतत्ते सर्वमाख्यातं सोमनाथस्य यत्फलम् ।
श्रुत्वा पुत्रमवाप्नोति स्नात्वा चाष्टौ न संशयः ॥ ८५.९९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सोमनाथतीर्थमाहात्म्यवर्णनं नाम पञ्चाशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८६

https://sa.wikisource.org/s/fe5



अध्याय ८६

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महाराज पिङ्गलावर्तमुत्तमम् ।

सङ्गमस्य समीपस्थं रेवाया उत्तरे तटे ।

हव्यवाहेन राजेन्द्र स्थापितः पिङ्गलेश्वरः ॥ ८६.१ ॥

युधिष्ठिर उवाच -

हव्यवाहेन भगवन्नीश्वरः स्थापितः कथम् ।

एतदाख्याहि मे सर्वं प्रसादाद्वक्तुमर्हसि ॥ ८६.२ ॥

मार्कण्डेय उवाच -

शम्भुना रेतसा राजंस्तर्पितो हव्यवाहनः ।

प्राप्तसौख्येन रौद्रेण गौर्याक्रीडनचेतसा ॥ ८६.३ ॥

हव्यवाहमुखे क्षिप्तं रुद्रेणामिततेजसा ।

रुद्रस्य रेतसा दग्धस्तीर्थयात्राकृतादरः ॥ ८६.४ ॥

सागरांश्च नदीर्गत्वा क्रमाद्रेवां समागतः ।

चचार परया भक्त्या ध्यानमुग्रं हुताशनः ॥ ८६.५ ॥

वायुभक्षः शतं साग्रं यावत्तेपे हुताशनः ।

तावत्तुष्टो महादेवो वरदो जातवेदसः ।

संनिधौ समुपेत्याथ वचनं चेदमब्रवीत् ॥ ८६.६ ॥

ईश्वर उवाच -

वरं वृणीष्व हव्याश यस्ते मनसि वर्तते ॥ ८६.७ ॥

वह्निरुवाच -

नमस्ते सर्वलोकेश उग्रमूर्ते नमोऽस्तु ते ।

रेतसा तव संदग्धः कुष्ठी जातो महेश्वर ।
कृपां कुरु महादेव मम रोगं विनाशय ॥ ८६.८ ॥

ईश्वर उवाच -
हव्यवाह भवारोगो मत्प्रसादाच्च सत्वरम् ।
अत्र तीर्थे कृतस्नानः स्वरूपं प्रतिपत्स्यसे ॥ ८६.९ ॥
इत्युक्त्वा च महादेवस्तत्रैवान्तरधीयत ।
अनन्तरं हव्यवाहः सस्नौ रेवाजले त्वरन् ॥ ८६.१० ॥
तदैव रोगनिर्मुक्तोऽभवद्दिव्यस्वरूपवान् ।
स्थापयामास देवेशं स वह्निः पिङ्गलेश्वरम् ॥ ८६.११ ॥
नाम्ना संपूजयामास तुष्टाव स्तुतिभिर्मुदा ।
ततो जगाम देशं स्वं देवानां हव्यवाहनः ॥ ८६.१२ ॥
हव्यवाहेन भूपैवं स्थापितः पिङ्गलेश्वरः ।
जितक्रोधो हि यस्तत्र उपवासं समाचरेत् ॥ ८६.१३ ॥
अतिरान्त्रफलं तस्य अन्ते रुद्रत्वमाप्नुयात् ।
गुणान्विताय विप्राय कपिलां तत्र भारत ॥ ८६.१४ ॥
अलंकृत्य सवत्सां च शक्त्यालङ्कारभूषिताम् ।
यः प्रयच्छति राजेन्द्र स गच्छेत्परमां गतिम् ॥ ८६.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पिङ्गलेश्वरतीर्थमाहात्म्यवर्णनं नाम षडशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८७



अध्याय ८७

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तीर्थं परमशोभनम् ।
स्थापितं मुनिसङ्घैर्यद्ब्रह्मवंशसमुद्भवैः ॥ ८७.१ ॥
ऋणमोचनमित्याख्यं रेवातटसमाश्रितम् ।
षण्मासं मनुजो भक्त्या तर्पयन् पितृदेवताः ॥ ८७.२ ॥
देवैः पितृमनुष्यैश्च ऋणमात्मकृतं च यत् ।
मुच्यते तत्क्षणान्मर्त्यः स्नातो वै नर्मदाजले ॥ ८७.३ ॥
प्रत्यक्षं दुरितं तत्र दृश्यते फलरूपतः ।
तत्र तीर्थे तु यो राजन्नेकचित्तो जितेन्द्रियः ॥ ८७.४ ॥
स्नात्वा दानं च वै दद्यादर्चयेद्गिरिजापतिम् ।
ऋणत्रयविनिर्मुक्तो नाके दीप्यति देववत् ॥ ८७.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे ऋणत्रयमोचनतीर्थमाहात्म्यवर्णनं नाम सप्ताशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८८



अध्याय ८८

श्रीमार्कण्डेय उवाच -
तस्यैवानन्तरं पार्थ कापिलं तीर्थमाश्रयेत् ।
स्थापितं कपिलेनैव सर्वपातकनाशनम् ॥ ८८.१ ॥
अष्टम्यां च सिते पक्षे चतुर्दश्यां नरेश्वर ।
स्नापयेत्परया भक्त्या कपिलाक्षीरसर्पिषा ॥ ८८.२ ॥
श्रीखण्डेन सुगन्धेन गुण्ठयेत महेश्वरम् ।
ततः सुगन्धपुष्पैश्च श्वेतैश्च नृपसत्तम ॥ ८८.३ ॥
येऽर्चयन्ति जितक्रोधा न ते यान्ति यमालयम् ।
असिपत्त्रवनं घोरं यमचुल्ही सुदारुणा ॥ ८८.४ ॥
दृश्यते नैव विद्वद्भिः कपिलेश्वरपूजनात् ।
स्नात्वा रेवाजले पुण्ये भोजयेद्ब्राह्मणाञ्छुभान् ॥ ८८.५ ॥
गोप्रदानेन वस्त्रेण तिलदानेन भारत ।
छत्रशय्याप्रदानेन राजा भवति धार्मिकः ॥ ८८.६ ॥
तीव्रतेजा विघोरश्च जीवत्पुत्रः प्रियंवदः ।
शत्रुवर्गो न तस्य स्यात्कदाचित्पाण्डुनन्दन ॥ ८८.७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कपिलेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टाशीतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०८९



अध्याय ८९

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र पूतिकेश्वरमुत्तमम् ।
नर्मदादक्षिणे कूले सर्वपापक्षयंकरम् ॥ ८९.१ ॥
स्थापितं जाम्बुवन्तेन लोकानां तु हितार्थिना ।
राजा प्रसेनजिन्नाम तस्यां वक्षस्थलान्मणौ ॥ ८९.२ ॥
समुत्क्षिप्ते तु तेनैव सपूतिरभवद्व्रणः ।
तत्र तीर्थे तपस्तप्त्वा निर्व्रणः समजायत ॥ ८९.३ ॥
तेन तत्स्थापितं लिङ्गं पूतिकेश्वरमुत्तमम् ।
यस्तत्र मनुजो भक्त्या स्नायाद्भरतसत्तम ॥ ८९.४ ॥
सर्वान्कामानवाप्नोति सम्पूज्य परमेश्वरम् ।
कृष्णाष्टम्यां चतुर्दश्यां सर्वकालं नराधिप ।
येऽर्चयन्ति सदा देवं ते न यान्ति यमालयम् ॥ ८९.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पूतिकेश्वरतीर्थमाहात्म्यवर्णनं नामैकोननवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९०

https://sa.wikisource.org/s/feo
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ९०

श्रीमार्कण्डेय उवाच -
रेवाया उत्तरे कूले वैष्णवं तीर्थमुत्तमम् ।
जलशायीति वै नाम विख्यातं वसुधातले ॥ ९०.१ ॥
दानवानां वधं कृत्वा सुप्तस्तत्र जनार्दनः ।
चक्रं प्रक्षालितं तत्र देवदेवेन चक्रिणा ।
सुदर्शनं च निष्पापं रेवाजलसमाश्रयात् ॥ ९०.२ ॥

युधिष्ठिर उवाच -
चक्रतीर्थं समाचक्ष्व मुनिसंघैश्च वन्दितम् ।
विष्णोः प्रभावमतुलं रेवायाश्चैव यत्फलम् ॥ ९०.३ ॥

श्रीमार्कण्डेय उवाच -
साधु साधु महाप्राज्ञ विरक्तस्त्वं युधिष्ठिर ।
गुह्याद्गुह्यतरं तीर्थं निर्मितं चक्रिणा स्वयम् ॥ ९०.४ ॥
तत्तेऽहं सम्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ।
आसीत्पुरा महादैत्यस्तालमेघ इति श्रुतः ॥ ९०.५ ॥
तेन देवा जिताः सर्वे हृतराज्या नराधिप ।
यज्ञभागान् स्वयं भुङ्क्ते अहं विष्णुर्न संशयः ॥ ९०.६ ॥
धनदस्य हृतं चित्तं हृतः शक्रस्य वारणः ।
इन्द्राणीं वाञ्छते पापो हयरत्नं रवेरपि ॥ ९०.७ ॥
तालमेघभयात्पार्थ रविरुद्राः सवासवाः ।
यमः स्कन्दो जलेशोऽग्निर्वायुर्देवो धनेश्वरः ॥ ९०.८ ॥
सवाक्पतिमहेशाश्च नष्टचित्ताः पितामहम् ।
गता देवा ब्रह्मलोकं तत्र दृष्ट्वा पितामहम् ॥ ९०.९ ॥

तुष्टुवुर्विविधैः स्तोत्रैर्वागीशप्रमुखाः सुराः ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ९०.१० ॥
दृष्ट्वा देवान्निरुत्साहान् विवर्णानवनीपते ।
प्रसादाभिमुखो देवः प्रत्युवाच दिवौकसः ॥ ९०.११ ॥

ब्रह्मोवाच -
स्वागतं सुरसङ्घस्य कान्तिर्नष्टा पुरातनी ।
हिमक्लिष्टप्रभावेण ज्योतींषीव मुखानि वः ॥ ९०.१२ ॥
प्रशमादर्चिषामेतदनुद्गीर्णं सुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठितश्रीव लक्ष्यते ॥ ९०.१३ ॥
किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ ९०.१४ ॥
कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगतो वायुर्भग्नशाख इव द्रुमः ॥ ९०.१५ ॥
यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघोऽपि निर्वाणालातलाघवम् ॥ ९०.१६ ॥
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ ९०.१७ ॥
तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।
किमागमनकृत्यं वो ब्रूत निःसंशयं सुराः ॥ ९०.१८ ॥
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ।
ततो मन्दानिलोद्धूतकमलाकरशोभिना ॥ ९०.१९ ॥
गुरुं नेत्रसहस्रेण प्रेरयामास वृत्रहा ।
स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ॥ ९०.२० ॥
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ।
युष्मद्वंशोद्भवस्तात तालमेघो महाबलः ॥ ९०.२१ ॥
उपतापयते देवान्धूमकेतुरिवोच्छ्रितः ।
तेन देवगणाः सर्वे दुःखिता दानवेन च ॥ ९०.२२ ॥
तालमेघो दैत्यपतिः सर्वान्नो बाधते बली ।
तस्मात्त्वां शरणं प्राप्ताः शरणं नो विधे भव ॥ ९०.२३ ॥
ततः प्रसन्नो भगवान् वेधास्तानब्रवीद्वचः ॥ ९०.२४ ॥

ब्रह्मोवाच -
तालमेघेन वो मध्ये बली तेन समः सुराः ।
विना माधवदेवेन साध्यो मे नैव दानवः ॥ ९०.२५ ॥
ततः सुरगणाः सर्वे विरिञ्चिप्रमुखा नृप ।
क्षीरोदं प्रस्थिताः सर्वे दुःखितास्तेन वैरिणा ॥ ९०.२६ ॥
त्वरिताः प्रस्थिता देवाः केशवं द्रष्टुकाम्यया ।
क्षीरोदं सागरं गत्वास्तुवंस्ते जलशायिनम् ॥ ९०.२७ ॥
देवा ऊचुः ।
जगदादिरनादिस्त्वं जगदन्तोऽप्यनन्तकः ।
जगन्मूर्तिरमूर्तिस्त्वं जय गीर्वाणपूजित ॥ ९०.२८ ॥
जय क्षीरोदशयन जय लक्ष्म्या सदा वृत ।
जय दानवनाशाय जय देवकिनन्दन ॥ ९०.२९ ॥
जय शङ्खगदापाणे जय चक्रधर प्रभो ।
इति देवस्तुतिं श्रुत्वा प्रबुद्धो जलशाय्यथ ॥ ९०.३० ॥
उवाच मधुरां वाणीं मेघगम्भीरनिस्वनाम् ।
किमर्थं बोधितो ब्रह्मन् समर्थैर्वः सुरासुरैः ॥ ९०.३१ ॥

ब्रह्मोवाच -
तालमेघभयात्कृष्ण सम्प्राप्तास्तव मन्दिरम् ।
न वध्यः कस्यचित्पापस्तालमेघो जनार्दन ॥ ९०.३२ ॥
त्वमेव जहि तं दुष्टं मृत्युं यास्यति नान्यथा ॥ ९०.३३ ॥

श्रीकृष्ण उवाच -
स्वस्थानं गम्यतां देवाः स्वकीयां लभत प्रजाम् ।
दुष्टात्मानं हनिष्यामि तालमेघं महाबलम् ॥ ९०.३४ ॥
स्थानं ब्रुवन्तु मे देवा वसेद्यत्र स दानवः ॥ ९०.३५ ॥
देवा ऊचुः ।
हिमाचलगुहायां स वसते दानवेश्वरः ।
चतुर्विंशतिसाहस्रैः कन्याभिः परिवारितः ॥ ९०.३६ ॥
तुरङ्गैः स्यन्दनैः कृष्ण संख्या तस्य न विद्यते ।
नटा नानाविधास्तत्र असंख्यातगुणा हरे ॥ ९०.३७ ॥
द्विरदाः पर्वताकारा हयाश्च द्विरदोपमाः ।

महाबलो वसेत्तत्र गीर्वाणभयदायकः ॥ ९०.३८ ॥
श्रुत्वा देवो वचस्तेषां देवानामातुरात्मनाम् ।
अचिन्तयद्गरुत्मन्तं शत्रुसङ्घविनाशनम् ॥ ९०.३९ ॥
चक्रं करेण संगृह्य गदाचक्रधरः प्रभुः ।
शार्ङ्गं च मुशलं सीरं करैर्गृह्य जनार्दनः ॥ ९०.४० ॥
आरूढः पक्षिराजेन्द्रं वधार्थं दानवस्य च ।
दानवस्य पुरे पेतुरुत्पाता घोररूपिणः ॥ ९०.४१ ॥
गोमायुर्गृध्रमध्ये तु कपोतैः सममाविशत् ।
विना वातेन तस्यैव ध्वजदण्डः पपात ह ॥ ९०.४२ ॥
सर्पसूषकयोर्युद्धं तथा केसरिनागयोः ।
उन्मार्गाः सरितस्तत्रावहन्रक्तविमिश्रिताः ।
अकालतरुपुष्पाणि दृश्यन्ते स्म समन्ततः ॥ ९०.४३ ॥
ततः प्राप्तो जगन्नाथो हिमवन्तं नगेश्वरम् ।
पाञ्चजन्यश्वसहसा पूरितः पुरसन्निधौ ॥ ९०.४४ ॥
तेन शब्देन महता ह्यारूढो दानवेश्वरः ।
उवाच च तदा वाक्यं तालमेघो महाबलः ॥ ९०.४५ ॥

तालमेघ उवाच -
कोऽयं मृत्युवशं प्राप्तो ह्यज्ञात्वा मम विक्रमम् ।
धुन्धुमाराज्ञया ह्याशु स्वसैन्यपरिवारितः ॥ ९०.४६ ॥
बलादानय तं बद्ध्वा ममाग्रे बहुशालिनम् ॥ ९०.४७ ॥

धुन्धुमार उवाच -
आनयामि न सन्देहः सुरो यक्षोऽथ किन्नरः ।
स्यन्दनौघैः समायुक्तो गजवाजिभटैः सह ॥ ९०.४८ ॥
हृष्टस्ततो जगद्योनिः सुपर्णस्थो महाबलः ।
गृह्यतां गृह्यतामेष इत्युक्तास्तेन किंकराः ॥ ९०.४९ ॥
चतुर्दिक्षु प्रधावन्त इतश्चेतश्च सर्वतः ।
सुपर्णेनाग्निरूपेण दग्धास्ते शलभा यथा ॥ ९०.५० ॥
धुन्धुमारोऽपि कृष्णेन शरघातेन ताडितः ।
हतो वक्षःस्थले पापो मृतावस्थो रथोपरि ॥ ९०.५१ ॥
हाहाकारं ततः सर्वे दानवाश्चक्रुरातुराः ।

तालमेघस्ततः क्रुद्धो रथारूढो विनिर्गतः ।
ददृशे केशवं पार्थ शङ्खचक्रगदाधरम् ॥ ९०.५२ ॥

तालमेघ उवाच -
अन्ये ते दानवाः कृष्ण ये हताः समरे त्वया ।
हिरण्यकशिपुप्रख्यानपुमांसो हि तेऽच्युत ॥ ९०.५३ ॥
इत्युक्त्वा दानवः पार्थ वर्षयामास सायकैः ।
दानवस्य शरान्मुक्तान् छेदयामास केशवः ॥ ९०.५४ ॥
गरुत्मानवधीत्सैन्यमवध्यं यत्सुरासुरैः ।
कृष्णेन द्विगुणास्तस्य प्रेषिताः स्वशिलीमुखाः ॥ ९०.५५ ॥
द्विगुणं द्विगुणीकृत्य प्रेषयामास दानवः ।
तानप्यष्टगुणैः कृष्णश्छादयामास सायकैः ॥ ९०.५६ ॥
ततः क्रुद्धेन दैत्येन ह्याग्नेयं बाणमुत्तमम् ॥ ९०.५७ ॥
वारुणं प्रेषयामास त्वाग्नेयं शमितं ततः ।
वारुणेनैव वायव्यं तालमेघो व्यसर्जयत् ॥ ९०.५८ ॥
सार्पं चैव हृषीकेशो वायव्यस्य प्रशान्तये ।
नारसिंहं नृसिंहोऽपि प्रेषयामास पाण्डव ॥ ९०.५९ ॥
नारसिंहं ततो दृष्ट्वा तालमेघो महाबलः ।
उत्तीर्य स्यन्दनाच्छीघ्रं गृहीत्वा खड्गचर्मणी ॥ ९०.६० ॥
कृष्ण त्वां प्रेषयिष्यामि यममार्गं सुदारुणम् ।
इत्युक्त्वा दानवः पार्थ आगतः केशवं प्रति ॥ ९०.६१ ॥
खड्गेनाताडयद्दैत्यो गदापाणिं जनार्दनम् ।
मण्डलाग्रं ततो गृह्य केशवो हृष्टमानसः ॥ ९०.६२ ॥
जघनोरःस्थले पार्थ तालमेघं महाहवे ।
जनार्दनस्तदा दैत्यं दैत्यो हरिमहन्मृधे ॥ ९०.६३ ॥
जनार्दनस्ततः क्रुद्धस्तालमेघाय भारत ।
अमोघं चक्रमादाय मुक्तं तस्य च मूर्धनि ॥ ९०.६४ ॥
निपपात शिरस्तस्य पर्वताश्च चकम्पिरे ।
समुद्राः क्षुभिताः पार्थ नद्य उन्मार्गगामिनीः ॥ ९०.६५ ॥
पुष्पवृष्टिं ततो देवा मुमुचुः केशवोपरि ।
अवध्यः सुरसङ्घानां सूदितः केशव त्वया ॥ ९०.६६ ॥
स्वस्थाश्चैव ततो देवास्तालमेघे निपातिते ।

जनार्दनोऽपि कौन्तेय नर्मदातटमाश्रितः ॥ ९०.६७ ॥
क्षीरोदां नर्मदां मत्वा अनन्तभुजगोपरि ।
लक्ष्म्या समन्वितः कृष्णो निलीनश्चोत्तरे तटे ॥ ९०.६८ ॥
चक्रं विभीषणं मर्त्ये ज्वालामालासमन्वितम् ।
पतितं नर्मदातोये जलशायिसमीपतः ॥ ९०.६९ ॥
निर्धूतकल्मषं जातं नर्मदातोययोगतः ।
तालमेघवधोत्पन्नं यत्पापं नृपनन्दन ॥ ९०.७० ॥
तत्सर्वं क्षालितं सद्यो नर्मदांभसि भारत ।
तदाप्रभृति लोकेऽस्मिञ्जलशायी महीपते ॥ ९०.७१ ॥
चक्रतीर्थं वदन्त्यन्ये केचित्कालाघनाशनम् ।
विख्यातं भारते वर्षे नर्मदायां महीपते ॥ ९०.७२ ॥
तत्तीर्थस्य प्रभावोऽयं श्रूयतामवनीपते ।
यथाऽनन्तो हि नागानां देवानां च जनार्दनः ॥ ९०.७३ ॥
मासानां मार्गशीर्षोऽस्ति नदीनां नर्मदा यथा ।
मासि मार्गशिरे पार्थ ह्येकादश्यां सितेऽहनि ॥ ९०.७४ ॥
गत्वा यो मनुजो भक्त्या कामक्रोधविवर्जितः ।
वैष्णवीं भावनां कृत्वा जलेशं तु व्रजेत वै ॥ ९०.७५ ॥
एकभुक्तं च नक्तं च तथैवायाचितं नृप ।
उपवासं तथा दानं ब्राह्मणानां च भोजनम् ॥ ९०.७६ ॥
करोति च कुरुश्रेष्ठ न स याति यमालयम् ।
यमलोकभयाद्भीता ये लोकाः पाण्डुनन्दन ॥ ९०.७७ ॥
ते पश्यन्तु श्रियः कान्तं नागपर्यङ्कशायिनम् ।
गोपीजनसमावृत्तं योगनिद्रां समाश्रितम् ।
विश्वरूपं जगन्नाथं संसारभयनाशनम् ॥ ९०.७८ ॥
स्नापयेत्परया भक्त्या क्षौद्रक्षीरेण सर्पिषा ।
खण्डेन तोयमिश्रेण जगद्योनिं जनार्दनम् ॥ ९०.७९ ॥
स्नाप्यमानं च पश्यन्ति ये लोका गतमत्सराः ।
ते यान्ति परमं लोकं सुरासुरनमस्कृतम् ॥ ९०.८० ॥
घृतेन बोधयेद्दीपमथवा तैलपूरितम् ।
रात्रौ जागरणं कृत्वा दैवस्याग्रे विमत्सराः ॥ ९०.८१ ॥
ये कथां वैष्णवीं भक्त्या शृण्वन्ति च नृपोत्तम ।
ब्रह्महत्यादिपापानि नश्यन्ते नात्र संशयः ॥ ९०.८२ ॥

प्रदक्षिणन्ति ये मर्त्या जलशायिजगद्गुरुम् ।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुंधरा ॥ ९०.८३ ॥
ततः प्रभाते विमले पित्ःन् संतर्पयेज्जलैः ।
श्राद्धं च ब्राह्मणैस्तत्र योग्यैः पाण्डव मानवाः ॥ ९०.८४ ॥
स्वदारनिरतैः शान्तैः परदारविवर्जकैः ।
वेदाभ्यसनशीलैश्च स्वकर्मनिरतैः शुभैः ॥ ९०.८५ ॥
नित्यं यजनशीलैश्च त्रिसन्ध्यापरिपालकैः ।
श्रद्धया कारयेच्छ्राद्धं यदीच्छेच्छ्रेय आत्मनः ॥ ९०.८६ ॥
ते धन्या मानुषे लोके वन्द्या हि भुवि मानवाः ।
ये वसन्ति सदाकालं पादपद्माश्रया हरेः ॥ ९०.८७ ॥
जलशायं प्रपश्यन्ति प्रत्यक्षं सुरनायकम् ।
पक्षोपवासं पाराकं व्रतं चान्द्रायणं शुभम् ॥ ९०.८८ ॥
मासोपवासमुग्रं च षष्ठान्नं पञ्चमं व्रतम् ।
तत्र तीर्थे तु यः कुर्यात्सोऽक्षयां गतिमाप्नुयात् ॥ ९०.८९ ॥

श्रीमार्कण्डेय उवाच -
अतः परं प्रवक्ष्यामि तिलधेनोश्च यत्फलम् ।
यथा यस्मिन्यदा देया दाने तस्याः शुभं फलम् ॥ ९०.९० ॥
एतत्कथान्तरं पुण्यमृषेर्द्वैपायनात्पुरा ।
श्रुतं हि नैमिषे पुण्ये नारदाद्यैरनेकधा ॥ ९०.९१ ॥
इदं परममायुष्यं मङ्गल्यं कीर्तिवर्धनम् ।
विप्राणां श्रावयन्विद्वान्फलानन्त्यंसमश्नुते ॥ ९०.९२ ॥
बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येता दातारं नाप्नुवन्ति च ॥ ९०.९३ ॥
एकमेतत्प्रदातव्यं न बहूनां युधिष्ठिर ।
सा च विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ९०.९४ ॥
यथालाभा तु सर्वेषां चतुर्द्रोणा तु गौः स्मृता ।
द्रोणस्य वत्सकः कार्यो बहूनां वापि कामतः ॥ ९०.९५ ॥
यस्मिन्देशे तु यन्मानं विषये वा विचारितम् ।
तेन मानेन तां कुर्वन्नक्षयं फलमश्नुते ॥ ९०.९६ ॥
सुखपूर्वं शुचौ भूमौ पुष्पधूपाक्षतैस्तथा ।
कर्णाभ्यां रत्ने दातव्ये दीपौ नेत्रद्वये तथा ॥ ९०.९७ ॥

श्रीखण्डमुरसि स्थाप्यं ताभ्यां चैव तु काञ्चनम् ।
ऊर्ध्वे मधु घृतं देयं कुर्यात्सर्षपरोमकम् ॥ ९०.९८ ॥
कम्बले कम्बलं दद्याच्छ्रोण्यां मधु घृतं तथा ।
यवसं पायसं दद्याद्घृतं क्षौद्रसमन्वितम् ॥ ९०.९९ ॥
स्वर्णशृङ्गी रूप्यशिफारुक्मलाङ्गूलसंयुता ।
रत्नपृष्ठी तु दातव्या कांस्यपात्रावदोहिनी ॥ ९०.१०० ॥
यत्स्याद्बाल्यकृतं पापं यद्वा कृतमजानता ।
वाचा कृतं कर्मकृतं मनसा यद्विचिन्तितम् ॥ ९०.१०१ ॥
जले निष्ठीवितं चैव मुशलं वापि लङ्घितम् ।
वृषलीगमनं चैव गुरुदारनिषेवणम् ॥ ९०.१०२ ॥
कन्याया गमनं चैव सुवर्णस्तेयमेव च ।
सुरापानं तथा चान्यत्तिलधेनुः पुनाति हि ॥ ९०.१०३ ॥
अहोरात्रोपवासेन विधिवत्तां विसर्जयेत् ।
या सा यमपुरे घोरे नदी वैतरणी स्मृता ॥ ९०.१०४ ॥
वालुकायोऽश्मस्थला च पच्यते यत्र दुष्कृती ।
अवीचिर्नरको यत्र यत्र यामलपर्वतौ ॥ ९०.१०५ ॥
यत्र लोहमुखाः काका यत्र श्वानो भयंकराः ।
असिपत्त्रवनं चैव यत्र सा कूटशाल्मली ॥ ९०.१०६ ॥
तान्सुखेन व्यतिक्रम्य धर्मराजालयं व्रजेत् ।
धर्मराजस्तु तं दृष्ट्वा सूनृतं वक्ति भारत ॥ ९०.१०७ ॥
विमानमुत्तमं योग्यं मणिरत्नविभूषितम् ।
अत्रारुह्य नरश्रेष्ठ प्रयाहि परमां गतिम् ॥ ९०.१०८ ॥
मा च चाटु भटे देहि मैव देहि पुरोहिते ।
मा च काणे विरूपे च न्यूनाङ्गे न च देवले ॥ ९०.१०९ ॥
अवेदविदुषे नैव ब्राह्मणे सर्वविक्रये ।
मित्रघ्ने च कृतघ्ने च मन्त्रहीने तथैव च ॥ ९०.११० ॥
वेदान्तगाय दातव्या श्रोत्रियाय कुटुम्बिने ।
वेदान्तगसुते देया श्रोत्रिये गृहपालके ॥ ९०.१११ ॥
सर्वाङ्गरुचिरे विप्रे सद्वृत्ते च प्रियंवदे ।
पूर्णिमायां तु माघस्य कार्त्तिक्यामथ भारत ॥ ९०.११२ ॥
वैशाख्यां मार्गशीर्ष्यां वाषाढ्यां चैत्र्यामथापि वा ।
अयने विषुवे चैव व्यतीपाते च सर्वदा ॥ ९०.११३ ॥

षडशीतिमुखे पुण्ये छायायां कुंजरस्य वा ।
एष ते कथितः कल्पस्तिलधेनोर्मयानघ ॥ ९०.११४ ॥
व्रजन्ति वैष्णवं लोकं दत्त्वा पादं यमोपरि ।
प्राणत्यागात्परं लोकं वैष्णवं नात्र संशयः ।
भित्त्वाशु भास्करं यान्ति नात्र कार्या विचारणा ॥ ९०.११५ ॥
एतत्ते सर्वमाख्यातं चक्रतीर्थफलं नृप ।
यच्छ्रुत्वा मानवो भक्त्या सर्वपापैः प्रमुच्यते ॥ ९०.११६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे जलशायितीर्थमाहात्म्यवर्णनं नाम नवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९१



अध्याय ९१

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तीर्थपरमपावनम् ।
चण्डादित्यं नृपश्रेष्ठ स्थापितं चण्डमुण्डयोः ॥ ९१.१ ॥
आस्तां पुरा महादैत्यौ चण्डमुण्डौ सुदारुणौ ।
नर्मदातीरमाश्रित्य चेरतुर्विपुलं तपः ॥ ९१.२ ॥
ध्यायन्तौ भास्करं देवं तमोनाशं जगत्त्रये ।
तुष्टस्तत्तपसा देवः सहस्रांशुरुवाच ह ॥ ९१.३ ॥
साधु साध्विति तौ पार्थ नर्मदायाः शुभे तटे ।
वरं प्रार्थयतं वीरौ यथेष्टं चेतसेच्छितम् ॥ ९१.४ ॥
चण्डमुण्डावूचतुः ।
अजेयौ सर्वदेवानां भूयास्वावां समाहितौ ।
सर्वरोगैः परित्यक्तौ सर्वकालं दिवाकर ॥ ९१.५ ॥
एवमस्त्विति तौ प्राह भास्करो वारितस्करः ।
इत्युक्त्वान्तर्दधे भानुर्दैत्याभ्यां तत्र भास्करः ॥ ९१.६ ॥
स्थापितः परया भक्त्या तं गच्छेदात्मसिद्धये ।
गीर्वाणांश्च मनुष्यांश्च पितॄंस्तत्रापि तर्पयेत् ॥ ९१.७ ॥
स वसेद्भास्करे लोके विरिञ्चिदिवसं नृप ।
घृतेन बोधयेद्दीपं षष्ठ्यां स च नरेश्वर ।
मुच्यते सर्वपापैस्तु प्रतियाति पुरं रवेः ॥ ९१.८ ॥
उत्पत्तिं चण्डभानोर्यः शृणोति भरतर्षभ ।
विजयी स सदा नूनमाधिव्याधिविवर्जितः ॥ ९१.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे चण्डादित्यतीर्थमाहात्म्यवर्णनं नामैकनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९२



श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र यमहास्यमनुत्तमम् ।

सर्वपापहरं तीर्थं नर्मदातटमाश्रितम् ॥ ९२.१ ॥

युधिष्ठिर उवाच -

यमहास्यं कथं जातं पृथिव्यां द्विजपुंगव ।

एतत्सर्वं ममाख्याहि परं कौतूहलं हि मे ॥ ९२.२ ॥

श्रीमार्कण्डेय उवाच -

साधु साधु महाप्राज्ञ पृष्टोऽहं नृपनन्दन ।

स्नानार्थं नर्मदां पुण्यामागतस्ते पिता पुरा ॥ ९२.३ ॥

रजकेन यथा धौतं वस्त्रं भवति निर्मलम् ।

तथासौ निर्मलो जातो धर्मराजो युधिष्ठिर ॥ ९२.४ ॥

स पश्यन्निर्मलं देहं हसन्प्रोवाच विस्मितः ॥ ९२.५ ॥

यम उवाच -

मत्पुरं कथमायान्ति मनुजाः पापबृंहिताः ।

स्नानेनैकेन रेवायाः प्राप्यते वैष्णवं पदम् ॥ ९२.६ ॥

समर्था ये न पश्यन्ति रेवां पुण्यजलां शुभाम् ।

जात्यन्धैस्ते समा ज्ञेया मृतैः पङ्गुभिरेव वा ॥ ९२.७ ॥

समर्था ये न पश्यन्ति रेवां पुण्यजलां नदीम् ।

एतस्मात्कारणाद्राजन्हसितो लोकशासनः ॥ ९२.८ ॥

स्थापयित्वा यमस्तत्र देवं स्वर्गं जगाम ह ।

यमहासेश्वरे राजञ्जितक्रोधो जितेन्द्रियः ॥ ९२.९ ॥

विशेषाच्चाश्विने मासि कृष्णपक्षे चतुर्दशीम् ।

उपोष्य परया भक्त्या सर्वपापैः प्रमुच्यते ॥ ९२.१० ॥

रात्रौ जागरणं कुर्याद्दीपं देवस्य बोधयेत् ।

घृतेन चैव राजेन्द्र शृणु तत्रास्ति यत्फलम् ॥ ९२.११ ॥

मुच्यते पातकैः सर्वैरगम्यागमनोद्भवैः ।

अभक्ष्यभक्षणोद्भूतैरपेयापेयजैरपि ॥ ९२.१२ ॥

अवाह्यवाहिते यत्स्याददोह्यादोहने यथा ।

स्नानमात्रेण तस्यैवं यान्ति पापान्यनेकधा ॥ ९२.१३ ॥

यमलोकं न वीक्षेत मनुजः स कदाचन ।

पित्ःणां परमं गुह्यमिदं भूमौ नरेश्वर ॥ ९२.१४ ॥

ददतामक्षयं सर्वं यमहास्ये न संशयः ।

अमावास्यां जितक्रोधो यस्तु पूजयते द्विजान् ॥ ९२.१५ ॥

हिरण्यभूमिदानेन तिलदानेन भूयसा ।

कृष्णाजिनप्रदानेन तिलधेनुप्रदानतः ॥ ९२.१६ ॥

विधानोक्तद्विजाग्र्याय ये प्रदास्यन्ति भक्तितः ।

हयं वा कुंजरं वाथ धूर्वहौ सीरसंयुतौ ॥ ९२.१७ ॥

कन्यां वसुमतीं गां च महिषीं वा पयस्विनीम् ।

ददते ये नृपश्रेष्ठ नोपसर्पन्ति ते यमम् ॥ ९२.१८ ॥

यमोऽपि भवति प्रीतः प्रतिजन्म युधिष्ठिर ।

यमस्य वाहो महिषो महिष्यस्तस्य मातरः ॥ ९२.१९ ॥

तासां दानप्रभावेण यमः प्रीतो भवेद्ध्रुवम् ।

नासौ यममवाप्नोति यदि पापैः समावृतः ॥ ९२.२० ॥

एतस्मात्कारणादत्र महिषीदानमुत्तमम् ।

तस्याः शृङ्गे जलं कार्यं धूम्रवस्त्रानुवेष्टिता ॥ ९२.२१ ॥

आयसस्य खुराः कार्यास्ताम्रपृष्ठाः सुभूषिताः ।

लवणाचलं पूर्वस्यामाग्नेय्यां गुडपर्वतम् ॥ ९२.२२ ॥

कार्पासं याम्यभागं तु नवनीतं तु नैरृते ।

पश्चिमे सप्तधान्यानि वायव्ये तंदुलाः स्मृताः ॥ ९२.२३ ॥

सौम्ये तु काञ्चनं दद्यादीशाने घृतमेव च ।

प्रदद्याद्यमराजो मे प्रीयतामित्युदीरयन् ॥ ९२.२४ ॥

इत्युच्चार्य द्विजस्याग्रे यमलोकं महाभयम् ।

असिपत्त्रवनं घोरं यमचुल्ली सुदारुणा ॥ ९२.२५ ॥

रौद्रा वैतरणी चैव कुम्भीपाको भयावहः ।

कालसूत्रो महाभीमस्तथा यमलपर्वतौ ॥ ९२.२६ ॥

क्रकचं तैलयन्त्रं च श्वानो गृध्राः सुदारुणाः ।

निरुच्छ्वासा महानादा भैरवो रौरवस्तथा ॥ ९२.२७ ॥

एते घोरा याम्यलोके श्रूयन्ते द्विजसत्तम ।

त्वत्प्रसादेन ते सोम्यास्तीर्थस्यास्य प्रभावतः ॥ ९२.२८ ॥

दानस्यास्य प्रभावेण यमराजप्रसादतः ।

नरकेऽहं न यास्यामि द्विज जन्मनि जन्मनि ॥ ९२.२९ ॥

यमहास्यस्य चाख्यानमिदं शृण्वन्ति ये नराः ।

तेऽपि पापविनिर्मुक्ता न पश्यन्ति यमालयम् ॥ ९२.३० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे यमहास्यतीर्थमाहात्म्यवर्णनं नाम द्विनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९३

https://sa.wikisource.org/s/fdw
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ९३

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र कल्होडीतीर्थमुत्तमम् ।
विख्यातं भारते लोके गङ्गायाः पापनाशनम् ॥ ९३.१ ॥
दुर्लभं मनुजैः पार्थ रेवातटसमाश्रितम् ।
प्राणिनां पापनाशाय ऊषरं पुष्करं तथा ॥ ९३.२ ॥
तत्तु तीर्थमिदं पुण्यमित्येवं शूलिनो वचः ।
जाह्नवी पशुरूपेण तत्र स्नानार्थमागता ॥ ९३.३ ॥
अतस्तद्विश्रुतं लोके कल्होडीतीर्थमुत्तमम् ।
त्रिरात्रं कारयेत्तत्र पूर्णिमायां युधिष्ठिर ॥ ९३.४ ॥
रजस्तमस्तथा क्रोधं दम्भं मात्सर्यमेव च ।
एतांस्त्यजति यः पार्थ तेनाप्तं मोक्षजं फलम् ॥ ९३.५ ॥
पयसा स्नापयेद्देवं त्रिसन्ध्यं च त्र्यहं तथा ।
पयो गोसम्भवं सद्यः सवत्सा जीवपुत्रिणी ॥ ९३.६ ॥
कृत्वा तत्ताम्रजे पात्रे क्षौद्रेण चैव योजिते ।
ओं नमः श्रीशिवायेति स्नानं देवस्य कारयेत् ॥ ९३.७ ॥
स याति त्रिदशस्थानं नाकस्त्रीभिः समावृतः ।
यस्तत्र विधिवत्स्नात्वा दानं प्रेतेषु यच्छति ॥ ९३.८ ॥
शुक्लां गां दापयेत्तत्र प्रीयतां मे पितामहाः ।
ब्राह्मणे शौचसम्पन्ने स्वदारनिरते सदा ॥ ९३.९ ॥
सवत्सां वस्त्रसंयुक्तां हिरण्योपरि संस्थिताम् ।
सत्त्वयुक्तो ददद्राजञ्छाम्भवं लोकमाप्नुयात् ॥ ९३.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कल्होडीतीर्थमाहात्म्यवर्णनं नाम त्रिनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९४



अध्याय ९४

श्रीमार्कण्डेय उवाच -
तस्यैवानन्तरं राजन्नन्दितीर्थं व्रजेच्छुभम् ।
सर्वपापहरं पुंसां नन्दिना निर्मितं पुरा ॥ ९४.१ ॥
पापौघहतजन्तूनां मोक्षदं नर्मदातटे ।
अहोरात्रोषितो भूत्वा नन्दिनाथे युधिष्ठिर ॥ ९४.२ ॥
पञ्चोपचारपूजायामर्चयेन्नन्दिकेश्वरम् ।
रत्नानि चैव विप्रेभ्यो यो दद्याद्धर्मनन्दन ॥ ९४.३ ॥
स याति परमं स्थानं यत्र वासः पिनाकिनः ।
सर्वसौख्यसमायुक्तोऽप्सरोभिः सह मोदते ॥ ९४.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नन्दिकेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुर्नवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९५



अध्याय ९५

श्रीमार्कण्डेय उवाच -
ततो गच्छेतु राजेन्द्र बदर्याश्रममुत्तमम् ।
सर्वतीर्थवरं पुण्यं कथितं शंभुना पुरा ॥ ९५.१ ॥
यश्चैष भारतस्यार्थे तत्र सिद्धः किरीटभृत् ।
भ्राता ते फाल्गुनो नाम विद्ध्येनं नरदैवतम् ॥ ९५.२ ॥
नरनारायणौ द्वौ तावागतौ नर्मदातटे ।
ज्ञानं तस्यैव यो राजन्भक्तिमान्वै जनार्दने ॥ ९५.३ ॥
समं पश्यति सर्वेषु स्थावरेषु चरेषु च ।
ब्राह्मणं श्वपचं चैव तत्र प्रीतो जनार्दनः ॥ ९५.४ ॥
ऐकात्म्यं पश्य कौन्तेय मयि चात्मनि नान्तरम् ।
नरनारायणाभ्यां हि कृतं बदरिकाश्रमम् ॥ ९५.५ ॥
स्थापितः शङ्करस्तत्र लोकानुग्रहकारणात् ।
त्रिमूर्तिस्थापितं लिङ्गं स्वर्गमार्गानुमुक्तिदम् ॥ ९५.६ ॥
तत्र गत्वा शुचिर्भूत्वा ह्येकरात्रोपवासकृत् ।
रजस्तमस्तथा त्यक्त्वा सात्त्विकं भावमाश्रयेत् ॥ ९५.७ ॥
रात्रौ जागरणं कृत्वा मधुमासाष्टमीदिने ।
अथवा च चतुर्दश्यामुभौ पक्षौ च कारयेत् ॥ ९५.८ ॥
आश्विनस्य विशेषेण कथितं तव पाण्डव ।
स्नापयेत्परया भक्त्या क्षीरेण मधुना सह ॥ ९५.९ ॥
दध्ना शर्करया युक्तं घृतेन समलंकृतम् ।
पञ्चामृतमिदं पुण्यं स्नापयेद्वृषभध्वजम् ॥ ९५.१० ॥
स्नाप्यमानं शिवं भक्त्या वीक्षते यो विमत्सरः ।
तस्य वासः शिवोपान्ते शक्रलोके न संशयः ॥ ९५.११ ॥
शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणिने ।

संसारमूलबद्धानामुद्वेष्टनकरो हि यः ॥ ९५.१२ ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनौं नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥ ९५.१३ ॥
यः पुनः स्नापयेद्भक्त्या एकभक्तो जितेन्द्रियः ।
तस्यापि यत्फलं पार्थ वक्ष्ये तल्लेशतस्तव ॥ ९५.१४ ॥
पीडितो वृद्धभावेन तव भक्त्या वदाम्यहम् ।
ते यान्ति परमं स्थानं भित्त्वा भास्करमण्डलम् ॥ ९५.१५ ॥
संसारे सर्वसौख्यानां निलयास्ते भवन्ति च ।
आश्चर्यं ज्ञातिवर्गाणां धर्माणां निलयास्तु ते ॥ ९५.१६ ॥
सम्पन्नाः सर्वकामैस्ते पृथिव्यां पृथिवीपते ।
श्राद्धं तत्रैव यः कुर्यान्नर्मदोदकमिश्रितम् ॥ ९५.१७ ॥
योग्यैश्च ब्राह्मणैर्राजन्कुलीनैर्वेदपारगैः ।
सुरूपैश्च सुशीलैश्च स्वदारनिरतैः शुभैः ॥ ९५.१८ ॥
आर्यदेशप्रसूतैश्च श्लक्ष्णैश्चैव सुरूपिभिः ।
कारयेत्पिण्डदानं वै भास्करे कुतपस्थिते ॥ ९५.१९ ॥
पित्ःणां परमं लोकं यदीच्छेद्धर्मनन्दन ।
वर्जयेत्तान्प्रयत्नेन काणान्दुष्टांश्च दाम्भिकान् ॥ ९५.२० ॥
तस्मात्सर्वप्रयत्नेन योग्यं विप्रं समाश्रयेत् ।
नरकान्मोचयेत्प्रेतान्कुम्भीपाकपुरोगमान् ॥ ९५.२१ ॥
मोक्षो भवति सर्वेषां पित्ःणां नृपनन्दन ।
विप्रेभ्यः काञ्चनं दद्यात्प्रीयतां मे पितामहः ॥ ९५.२२ ॥
अन्नं च दापयेत्तत्र भक्त्या वस्त्रं च भारत ।
गां वृषं मेदिनीं दद्याच्छत्रं शस्तं नृपोत्तम ॥ ९५.२३ ॥
स पुमान्स्वर्गमाप्नोति इत्येवं शङ्करोऽब्रवीत् ।
प्राणत्यागं तु यः कुर्याच्छिखिना सलिलेन वा ॥ ९५.२४ ॥
अनाशकेन वा भूयः स गच्छेच्छिवमन्दिरम् ।
नरनारायणीतीरे देवद्रोण्यां च यो नृप ॥ ९५.२५ ॥
स वसेदीश्वरस्याग्रे यावदिन्द्राश्चतुर्दश ।
पुनः स्वर्गाच्च्युतः सोऽपि राजा भवति वीर्यवान् ॥ ९५.२६ ॥
सर्वैश्वर्यगुणैर्युक्तः प्रजापालनतत्परः ।
ततः स्मरति तत्तीर्थं पुनरेवागमिष्यति ॥ ९५.२७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नारायणीतीर्थमाहात्म्यवर्णनं नाम पञ्चनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९६

https://sa.wikisource.org/s/fdt
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ९६

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थं कोटीश्वरं परम् ।
ऋषिकोटिः समायाता यत्र वै कुरुनन्दन ॥ ९६.१ ॥
कृष्णद्वैपायनस्यैव क्षेमार्थं मुनिपुंगवाः ।
मन्त्रयित्वा द्विजैः सर्वैर्वेदमङ्गलपाठकैः ॥ ९६.२ ॥
स्थापितः शङ्करस्तत्र कारणं बन्धनाशनम् ।
संसारच्छेदकरणं प्राणिनामार्तिनाशनम् ॥ ९६.३ ॥
कोटीश्वरमिति प्रोक्तं पृथिव्यां नृपनन्दन ।
स्नापयेत्तं तु यो भक्त्या पूर्णिमायां नृपोत्तम ॥ ९६.४ ॥
पित्ःणां तर्पणं कृत्वा पिण्डदानं यथाविधि ।
श्रावणस्य विशेषेण पूर्णिमायां युधिष्ठिर ॥ ९६.५ ॥
पित्ःणामक्षया तृप्तिर्यावदाभूतसम्प्लवम् ।
पित्ःणां परमं गुह्यं रेवातटसमाश्रितम् ।
मोक्षदं सर्वजन्तूनां निर्मितं मुनिसत्तमैः ॥ ९६.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटीश्वरतीर्थमाहात्म्यवर्णनं नाम षण्णवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९७



अध्याय ९७

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल व्यासतीर्थमनुत्तमम् ।

दुर्लभं मनुजैः पुण्यमन्तरिक्षे व्यवस्थितम् ॥ ९७.१ ॥

युधिष्ठिर उवाच -

कस्माद्वै व्यासतीर्थं तदन्तरिक्षे व्यवस्थितम् ।

एतदाख्याहि संक्षेपात्त्यज ग्रन्थस्य विस्तरम् ॥ ९७.२ ॥

श्रीमार्कण्डेय उवाच -

साधु साधु महाबाहो धर्मवान्साधुवत्सल ।

स्वकर्मनिरतः पार्थ तीर्थयात्राकृतादरः ॥ ९७.३ ॥

दुर्लभं सर्वजन्तूनां व्यासतीर्थं नरेश्वर ।

पीडितो वृद्धभावेन अकल्पोऽहं नृपात्मज ॥ ९७.४ ॥

विसंज्ञो गतवित्तस्तु संजातः स्मृतिवर्जितः ।

गुह्याद्गुह्यतरं तीर्थं नाख्यातं कस्यचिन्मया ॥ ९७.५ ॥

कलिस्तत्रैव राजेन्द्र न विशेद्व्याससंश्रयात् ।

अन्तरिक्षे तु संजातं रेवायाश्चेष्टितेन तु ॥ ९७.६ ॥

विरिञ्चिर्नैव शक्नोति रेवाया गुणकीर्तनम् ।

कथं ज्ञास्याम्यहं तात रेवामाहात्म्यमुत्तमम् ॥ ९७.७ ॥

व्यासतीर्थं विशेषेण लवमात्रं ब्रवीम्यतः ।

प्रत्यक्षः प्रत्ययो यत्र दृश्यतेऽद्य कलौ युगे ॥ ९७.८ ॥

विहङ्गो गच्छते नैव भित्त्वा शूलं सुदारुणम् ।

तस्योत्पत्तिं समासेन कथयामि नृपात्मज ॥ ९७.९ ॥

आसीत्पूर्वं महीपाल मुनिर्मान्यः पराशरः ।

तेनात्युग्रं तपश्चीर्णं गङ्गाम्भसि महाफलम् ॥ ९७.१० ॥

प्राणायामेन संतस्थौ प्रविष्टो जाह्नवीजले ।

पूर्णे द्वादशमे वर्षे निष्क्रान्तो जलमध्यतः ॥ ९७.११ ॥

भिक्षार्थी संचरेद्ग्रामं नावा यत्रैव तिष्ठति ।

तत्र तेन परा दृष्टा बाला चैव मनोहरा ॥ ९७.१२ ॥

तां दृष्ट्वा स च कामार्त उवाच मधुरं तदा ।

मां नयस्व परं पारं कासि त्वं मृगलोचने ॥ ९७.१३ ॥

नावारूढे नदीतीरे मम चित्तप्रमाथिनि ।

एवमुक्ता तु सा तेन प्रणम्य ऋषिपुंगवम् ॥ ९७.१४ ॥

कथयामास चात्मानं दृष्ट्वा तं काममोहितम् ।

कैवर्तानां गृहे दासी कन्याहं द्विजसत्तम ॥ ९७.१५ ॥

नावासंरक्षणार्थाय आदिष्टा स्वामिना विभो ।

मया विज्ञापितं वृत्तमशेषं ज्ञातुमर्हसि ॥ ९७.१६ ॥

एवमुक्तस्तया सोऽथ क्षणं ध्यात्वाब्रवीदिदम् ॥ ९७.१७ ॥

पराशर उवाच -

अहं ज्ञानबलाद्भद्रे तव जानामि सम्भवम् ।

कैवर्तपुत्रिका न त्वं राजकन्यासि सुन्दरि ॥ ९७.१८ ॥

कन्योवाच -

कः पिता कथ्यतां ब्रह्मन्कस्या वा ह्युदरोद्भवा ।

कस्मिन्वंशे प्रसूताहं कैवर्ततनया कथम् ॥ ९७.१९ ॥

पराशर उवाच -

कथयामि समस्तं यत्त्वया पृष्टमशेषतः ।
वसुर्नामेति भूपालः सोमवंशविभूषणः ॥ ९७.२० ॥
जम्बूद्वीपाधिपो भद्रे शत्रूणां भयवर्धनः ।
शतानि सप्त भार्याणां पुत्राणां च दशैव तु ॥ ९७.२१ ॥
धर्मेण पालयेल्लोकानीशवत्पूज्यते सदा ।
म्लेच्छास्तस्याविधेयाश्च क्षीरद्वीपनिवासिनः ॥ ९७.२२ ॥
तेषामुत्सादनार्थाय ययावुल्लङ्घ्य सागरम् ।
संयुक्तः पुत्रभृत्यैश्च पौरुषे महति स्थितैः ॥ ९७.२३ ॥
समरं तैः समारब्धं म्लेच्छैश्च वसुना सह ।
जिता म्लेच्छाः समस्तास्ते वसुना मृगलोचने ॥ ९७.२४ ॥
करदास्ते कृतास्तेन सपुत्रबलवाहनाः ।
प्रधाना तस्य सा राज्ञी तव माता मृगेक्षणे ॥ ९७.२५ ॥
प्रवासस्थे महीपाले संजाता सा रजस्वला ।
नारीणां तु सदाकालं मन्मथो ह्यधिको भवेत् ॥ ९७.२६ ॥
विशेषेण ऋतोः काले भिद्यन्ते कामसायकैः ।
मन्मथेन तु संतप्ताचिन्तयत्सा शुभेक्षणा ॥ ९७.२७ ॥
दूतं वै प्रेषयाम्यद्य वसुराज्ञः समीपतः ।
आहूतः सत्वरं दूत गच्छ त्वं नृपसन्निधौ ॥ ९७.२८ ॥

दूत उवाच -
परतीरं गतो देवि वसुराजारिशासनः ।
तत्र गन्तुमशक्येत जलयानैर्विना शुभे ॥ ९७.२९ ॥
तानि यानानि सर्वाणि गृहीतानि परे तटे ।
दूतवाक्येन सा राज्ञी विषण्णा कामपीडिता ॥ ९७.३० ॥
तत्सखी तामुवाचाथ कस्मात्त्वं परितप्यसे ।
स्वलेखः प्रेष्यतां देवि शुकहस्ते यथार्थतः ॥ ९७.३१ ॥
समुद्रं लङ्घयित्वा तु शकुन्ता यान्ति सुन्दरि ।
सखिवाक्येन सा राज्ञी स्वस्था जाता नराधिप ॥ ९७.३२ ॥

व्याहृतो लेखकस्तत्र लिख लेखं ममाज्ञया ।
त्वद्धीना सत्यभामाद्य वसो राजन्न जीवति ॥ ९७.३३ ॥
ऋतुकालोऽद्य संजातो लिख लेखं तु लेखकं ।
लिखिते भूर्जपत्रे तु लेखे वै लेखकेन तु ॥ ९७.३४ ॥
शुकः पञ्जरमध्यस्थ आनीतोद्वैव सन्निधौ ॥ ९७.३५ ॥

सत्यभामोवाच -
नीत्वा लेखं गच्छ शीघ्रं वसुराज्ञः समीपतः ।
शकुनिः प्रणतो भूत्वा गृहीत्वा लेखमुत्तमम् ॥ ९७.३६ ॥
उत्पत्य सहसा राजञ्जगामाकाशमण्डलम् ।
ततः पक्षी गतः शीघ्रं वसुराजसमीपतः ॥ ९७.३७ ॥
क्षिप्ते लेखे शुकेनैव सत्यभामाविसर्जिते ।
वसुराज्ञा ततो लेखो गृह्य हस्तेऽवधारितः ॥ ९७.३८ ॥
लेखार्थं चिन्तयित्वा तु गृह्य वीर्यं नरेश्वरः ।
अमोघं पुटिकां कृत्वा प्रतिलेखेन मिश्रितम् ॥ ९७.३९ ॥
शुकस्य सोऽपयामास गच्छ राज्ञीसमीपतः ।
प्रणम्य वसुराजानं बीजं गृह्योत्पपात ह ॥ ९७.४० ॥
समुद्रोपरि सम्प्राप्तः शुकः श्येनेन वीक्षितः ।
सामिषं तं शुकं ज्ञात्वा श्येनस्तमभ्यधावत ॥ ९७.४१ ॥
हतश्चञ्चुप्रहारेण शुकः श्येनेन भारत ।
मूर्च्छया तस्य तद्बीजं पतितं सागराम्भसि ॥ ९७.४२ ॥
मत्स्येन गिलितं तच्च बीजं वसुमहीपतेः ।
कन्या मत्स्योदरे जाता तेन बीजेन सुन्दरि ॥ ९७.४३ ॥
प्राप्तोऽसौ लुब्धकैर्मत्स्य आनीतः स्वगृहं ततः ।
यावद्विदारितो मत्स्यस्तावद्दृष्टा त्वमुत्तमे ॥ ९७.४४ ॥
शशिमण्डलसङ्काशा सूर्यतेजःसमप्रभा ।
दृष्ट्वा त्वां हर्षिताः सर्वे कैवर्ता जाह्नवीतटे ॥ ९७.४५ ॥
हर्षितास्ते गताः सर्वे प्रधानस्य च मन्दिरम् ।

स्त्रीरत्नं कथयामासुर्गृहाण त्वं महाप्रभम् ॥ ९७.४६ ॥

गृहीता तेन तन्वङ्गी ह्यपुत्रेण मृगेक्षणा ।

भार्यां स्वामाह तन्वङ्गि पालयस्व मृगेक्षणे ॥ ९७.४७ ॥

ततः सा चिन्तयामास पराशरवचस्तदा ।

एवमुक्त्वा तु सा तेन दत्तात्मानं नरेश्वर ॥ ९७.४८ ॥

उवाच साधु मे ब्रह्मन्मत्स्यगन्धोऽनु वर्तते ।

ततस्तेन तु सा बाला दिव्यगन्धाधिवासिता ॥ ९७.४९ ॥

कृता योगबलेनैव ज्वालयित्वा विभावसुम् ।

कृत्वा प्रदक्षिणं वह्निमूढा तेन रसात्तदा ॥ ९७.५० ॥

जलयानस्य मध्ये तु कामस्थानान्यसंस्पृशत् ।

ज्ञात्वा कामोत्सुकं विप्रं भीता सा धर्मनन्दन ॥ ९७.५१ ॥

हसन्ती तमुवाचाथ देव त्वं लोकसन्निधौ ।

न लज्जसे कथं धीमन्कुर्वाणः पामरोचितम् ॥ ९७.५२ ॥

ततस्तेन क्षणं ध्यात्वा संस्मृता हृदि तामसी ।

आगता तामसी माया यया व्याप्तं चराचरम् ॥ ९७.५३ ॥

ततः सा विस्मिता तेन कर्मणैव तु रञ्जिता ।

ब्रह्मचर्याभितप्तेन स्त्रीसौख्यं क्रीडितं तदा ॥ ९७.५४ ॥

ततः सा तत्क्षणादेव गर्भभारेण पीडिता ।

प्रसूता बालकं तत्र जटिलं दण्डधारिणम् ॥ ९७.५५ ॥

कमण्डलुधरं शान्तं मेखलाकटिभूषितम् ।

उत्तरीयकृतस्कन्धं विष्णुमायाविवर्जितम् ॥ ९७.५६ ॥

ततोऽपि शङ्किता पार्थ दृष्ट्वा तं कलबालकम् ।

वेपमाना ततो बाला जगाम शरणं मुनेः ॥ ९७.५७ ॥

रक्ष रक्ष मुनिश्रेष्ठ पराशर महामते ।

जातं मेऽत्यद्भुतं पुत्रं कौपीनवरमेखलम् ।

दण्डहस्तं जटायुक्तमुत्तरीयविभूषितम् ॥ ९७.५८ ॥

पराशर उवाच -

मा भैषीः स्वसुते जाते कुमारी त्वं भविष्यसि ।
नाम्ना योजनगन्धेति द्वितीयं सत्यवत्यपि ॥ ९७.५९ ॥
शंतनुर्नाम राजा यः स ते भर्ता भविष्यति ।
प्रथमा महिषी तस्य सोमवंशविभूषणा ॥ ९७.६० ॥
गच्छ त्वं स्वाश्रयं शुभ्रे पूर्वरूपेण संस्थिता ।
मा विषादं कुरुष्वात्र दृष्टं ज्ञानस्य मे बलम् ॥ ९७.६१ ॥
इत्युक्त्वा प्रययौ विप्रः सा बाला पुत्रमाश्रिता ।
नत्वोचे मातरं भक्त्या साष्टाङ्गं विनयानतः ॥ ९७.६२ ॥
क्षम्यतां मातरुक्तं मे प्रसादः क्रियतामपि ।
ईश्वराराधने यत्नं करिष्याम्यहमम्बिके ॥ ९७.६३ ॥
ततः सा पुत्रवाक्येन विषण्णा वाक्यमब्रवीत् ॥ ९७.६४ ॥

योजनगन्धोवाच -
मा त्यक्त्वा गच्छ वत्साद्य मातरं मामनागसम् ।
त्वद्वियोगेन मे पुत्र पञ्चत्वं भाव्यसंशयम् ॥ ९७.६५ ॥
नास्ति पुत्रसमः स्नेहो नास्ति भ्रातृसमं कुलम् ।
नास्ति सत्यपरो धर्मो नानृतात्पातकं परम् ॥ ९७.६६ ॥
बालभावे मया जात आधारः किल जायसे ।
न मे भर्ता न मे पुत्रः पश्य कर्मविडम्बनम् ॥ ९७.६७ ॥

व्यास उवाच -
मा विषादं कुरुष्वान्तः सत्यमेतन्मयोरितम् ।
आपत्कालेऽस्मि ते देवि स्मर्तव्यः कार्यसिद्धये ॥ ९७.६८ ॥
आपदस्तारयिष्यामि क्षम्यतां मे दुरुत्तरम् ।
इत्युक्त्वा प्रययौ व्यासः कन्या सापि गता गृहम् ॥ ९७.६९ ॥
पराशरसुतस्तत्र विषण्णो वनमध्यतः ।
त्रेतायुगावसाने तु द्वापरादौ नरेश्वर ॥ ९७.७० ॥
व्यासार्थं चिन्तयामासुर्देवाः शक्रपुरोगमाः ।

आख्यातो नारदेनैव पुत्रः पराशरस्य सः ॥ ९७.७१ ॥

कैवर्तपुत्रिकाजातो ज्ञानी जह्नुसुतातटे ।

ततो नारदवाक्येन आगताः सुरसत्तमाः ॥ ९७.७२ ॥

रामः पितामहः शक्रो मुनिसङ्घैः समावृताः ।

आस्यादिकं पृथग्दत्त्वा साधु साध्वित्युदीरयन् ॥ ९७.७३ ॥

पितामहेन वै बालो गर्भाधानादिसंस्कृतः ।

द्वीपायनो द्वीपजन्मा पाराशर्यः पराशरात् ॥ ९७.७४ ॥

कृष्णांशात्कृष्णनामायं व्यासो वेदान्व्यसिष्यति ।

विरञ्चिनाभिषिक्तोऽसौ मुनिसङ्घैः पुनःपुनः ॥ ९७.७५ ॥

व्यासस्त्वं सर्वलोकेषु इत्युक्त्वा प्रययुः सुराः ।

तीर्थयात्रा समारब्धा कृष्णद्वैपायनेन तु ॥ ९७.७६ ॥

गङ्गावगाहिता तेन केदारश्च सपुष्करः ।

गया च नैमिषं तीर्थं कुरुक्षेत्रं सरस्वती ॥ ९७.७७ ॥

उज्जयिन्यां महाकालं सोमनाथं प्रभासके ।

पृथिव्यां सागरान्तायां स्नात्वा यातो महामुनिः ॥ ९७.७८ ॥

अमृतां नर्मदां प्राप्तो रुद्रदेहोद्भवां शुभाम् ।

साह्लादो नर्मदां दृष्ट्वा चित्तविश्रान्तिमाप च ॥ ९७.७९ ॥

तपश्चचार विपुलं नर्मदातटमाश्रितः ।

ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥ ९७.८० ॥

सार्द्रवासाश्च हेमन्ते तिष्ठन्दध्यौ महेश्वरम् ।

स्वान्तर्हृत्कमले स्थाप्य ध्यायते परमेश्वरम् ॥ ९७.८१ ॥

सृष्टिसंहारकर्तारमछेद्यं वरदं शुभम् ।

नित्यं सिद्धेश्वरं लिङ्गं पूजयेद्ध्यानतत्परः ॥ ९७.८२ ॥

अर्चनात्सिद्धलिङ्गस्य ध्यानयोगप्रभावतः ।

प्रत्यक्षः शङ्करो जातः कृष्णद्वैपायनस्य सः ॥ ९७.८३ ॥

ईश्वर उवाच -

तोषितोऽहं त्वया वत्स वरं वरय शोभनम् ॥ ९७.८४ ॥

व्यास उवाच -

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ।

प्रत्यक्षो नर्मदातीरे स्वयमेव भविष्यसि ।

अतीतानागतज्ञोऽहं त्वत्प्रसादादुमापते ॥ ९७.८५ ॥

ईश्वर उवाच -

एवं भवतु ते पुत्र मत्प्रसादादसंशयम् ।

त्वयि भक्तिगृहीतोऽहं प्रत्यक्षो नर्मदातटे ॥ ९७.८६ ॥

सहस्रांशार्धभावेन प्रत्यक्षोऽहं त्वदाश्रमे ।

इत्युक्त्वा प्रययौ देवः कैलासं नगमुत्तमम् ॥ ९७.८७ ॥

पत्नीसंग्रहणं जातं कृष्णद्वैपायनस्य तु ।

शास्त्रोक्तेन विधानेन पत्नी पालयतस्तथा ॥ ९७.८८ ॥

पुत्रो जातो ह्यपुत्रस्य पराशरसुतस्य च ।

देवैर्वर्धापितः सर्वैरिन्चेन्द्रपुरोगमैः ॥ ९७.८९ ॥

पुत्रजन्मन्यथाजग्मुर्वशिष्ठाद्या मुनीश्वराः ।

तीर्थयात्राप्रसङ्गेन पराशरपुरोगमाः ॥ ९७.९० ॥

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।

यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ ९७.९१ ॥

एवमादिसहस्राणि लक्षकोटिशतानि च ।

सशिष्याश्च महाभागा नर्मदातटमाश्रिताः ॥ ९७.९२ ॥

व्यासाश्रमे शुभे रम्ये संतुष्टा आययुर्नृप ।

दृष्ट्वा तान्सोऽपि विप्रेन्द्रानभ्युत्थानकृतोद्यमः ॥ ९७.९३ ॥

पितुः पूर्वं प्रणम्यादौ सर्वेषां च यथाविधि ।

आसनानि ददौ भक्त्या पाद्यमर्घं न्यवेदयत् ॥ ९७.९४ ॥

कृताञ्जलिपुटो भूत्वा वाक्यमेतदुवाच ह ।

उद्धृतोऽहं न सन्देहो युष्मत्सम्भाषणार्चनात् ॥ ९७.९५ ॥

आरण्यानि च शाकानि फलान्यारण्यजानि च ।

तानि दास्यामि युष्माकं सर्वेषां प्रीतिपूर्वकम् ॥ ९७.९६ ॥

न्यमन्त्रयत तान्सर्वान्प्रत्येकं प्रणिपत्य च ।

ततस्ते प्रणतं दृष्ट्वा कृष्णद्वैपायनं मुनिम् ॥ ९७.९७ ॥

वर्धयित्वा जयाशीर्भिरवलोक्य परस्परम् ।

पराशरः समस्तैश्च वीक्षितो मुनिपुंगवैः ॥ ९७.९८ ॥

उत्तरं दीयतां तात कृष्णद्वैपायनस्य च ।

एवमुक्तस्तु तैः सर्वैर्भगवान्स पराशरः ।

प्रोवाच स्वात्मजं व्यासमृषीणां यच्चिकीर्षितम् ॥ ९७.९९ ॥

श्रीपराशर उवाच -

नेच्छन्ति दक्षिणे कूले व्रतभङ्गभयादथ ।

भोजनं भोक्तुकामास्ते श्राद्धे चैव विशेषतः ॥ ९७.१०० ॥

व्यास उवाच -

करोमि भवतामुक्तमत्रैव स्थीयतां क्षणम् ।

यावत्प्रसाद्य सरितं करोमि विधिमुत्तमम् ॥ ९७.१०१ ॥

एवमुक्त्वा शुचिर्भूत्वा नर्मदातटमास्थितः ।

स्तोत्रं जगाद सहसा तन्निबोध नरेश्वर ॥ ९७.१०२ ॥

जय भगवति देवि नमो वरदे जय पापविनाशिनी बहुफलदे ।

जय शुम्भनिशुम्भकपालधरे प्रणमामि तु देवनरार्तिहरे ॥ ९७.१०३ ॥

जय चन्द्रदिवाकरनेत्रधरे जय पावकभूषितवक्त्रवरे ।

जय भैरवदेहनिलीनपरे जय अन्धकरक्तविशोषकरे ॥ ९७.१०४ ॥

जय महिषविमर्दिनि शूलकरे जय लोकसमस्तकपापहरे ।

जय देवि पितामहरामनते जय भास्करशक्रशिरोऽवनते ॥ ९७.१०५ ॥

जय षण्मुखसायुध ईशनुते जय सागरगामिनि शम्भुनुते ।

जय दुःखदरिद्रविनाशकरे जय पुत्रकलत्रविवृद्धिकरे ॥ ९७.१०६ ॥

जय देवि समस्तशरीरधरे जय नाकविदर्शिनि दुःखहरे ।

जय व्याधिविनाशिनि मोक्षकरे जय वाञ्छितदायिनि सिद्धवरे ॥ ९७.१०७ ॥

एतद्व्यासकृतं स्तोत्रं यः पठेच्छिवसन्निधौ ।
गृहे वा शुद्धभावेन कामक्रोधविवर्जितः ॥ ९७.१०८ ॥
तस्य व्यासो भवेत्प्रीतः प्रीतश्च वृषवाहनः ।
प्रीता स्यान्नर्मदा देवी सर्वपापक्षयंकरी ॥ ९७.१०९ ॥
न ते यान्ति यमालोकं यैः स्तुता भुवि नर्मदा ।
पितामहोऽपि मुह्येत देवि त्वद्गुणकीर्तनात् ॥ ९७.११० ॥
वाक्पतिर्नैव ते वक्तुं स्वरूपं वेद नर्मदे ।
कथं गुणानहं देवि त्वदीयाञ्ज्ञातुमुत्सहे ॥ ९७.१११ ॥
इति ज्ञात्वा शुचिं भावं वाङ्मनःकायकर्मभिः ।
प्रसन्ना नर्मदादेवी ततो वचनमब्रवीत् ॥ ९७.११२ ॥
सत्यवादेन तुष्टाहं भोभो व्यास महामुने ।
यदीच्छसि वरं किंचित्तं ते सर्वं ददाम्यहम् ॥ ९७.११३ ॥

व्यास उवाच -
यदि तुष्टासि मे देवि यदि देयो वरो मम ।
आतिथ्यमुत्तरे कूले ऋषीणां दातुमर्हसि ॥ ९७.११४ ॥

नर्मदोवाच -
अयुक्तं याचितं व्यास विमार्गे यत्प्रवर्तनम् ।
इन्द्रचन्द्रयमैः शक्यमुन्मार्गे न प्रवर्तितुम् ॥ ९७.११५ ॥
याचस्वान्यं वरं पुत्र यत्किंचिद्भुवि दुर्लभम् ।
एतच्छ्रुत्वा वचो देव्या व्यासो मूर्च्छां यतस्तदा ॥ ९७.११६ ॥
वृथा क्लेशोऽद्य मे जात इति मत्वा पपात ह ।
धरणी चलिता सर्वा सशैलवनकानना ॥ ९७.११७ ॥
मूर्च्छापन्नं ततो व्यासं दृष्ट्वा देवाः सवासवाः ।
हाहाकारमुखाः सर्वे तत्राजग्मुः सहस्रशः ॥ ९७.११८ ॥
व्यासमुत्थापयामासुर्वेदव्यसनतत्परम् ।
ब्राह्मणार्थे च संक्लिष्टो नात्महेतोः सरिद्वरे ॥ ९७.११९ ॥

गवार्थे ब्राह्मणार्थे च सद्यः प्राणान्परित्यजेत् ।
एवं सा नर्मदा प्रोक्ता ब्रह्माद्यैः सुरसत्तमैः ॥ ९७.१२० ॥
सुशीतलैस्तं बहुभिश्च वातैरेवाभ्यषिञ्चत्स्वजलेन भीता ।
सचेतनः सत्यवतीसुतोऽपि प्रणम्य देवान्सरितं जगाद ॥ ९७.१२१ ॥

व्यास उवाच -
तीर्थैः समस्तैः किल सेवनाय फलं प्रदिष्टं मम मन्दभाग्यात् ।
यद्देवि पुण्या विफला ममाशा आरण्यपुष्पाणि यथा जनानाम् ॥ ९७.१२२ ॥

नर्मदोवाच -
यतो यतो मां हि महानुभाव निनीषते चित्तमिलातलेऽत्र ।
विन्ध्येन सार्द्धं तव मार्गमद्य यास्याम्यहं दण्डधरस्य पृष्ठे ॥ ९७.१२३ ॥
एवमुक्तो महातेजा व्यासः सत्यवतीसुतः ।
दक्षिणे चालयामास स्वाश्रमस्य सरिद्वराम् ॥ ९७.१२४ ॥
दण्डहस्तो महातेजा हुङ्कारमकरोन्मुनिः ।
व्यासहुङ्कारभीता सा चलिता रुद्रनन्दिनी ॥ ९७.१२५ ॥
दण्डेन दर्शयन्मार्गं देवी तत्र प्रवर्तिता ।
व्यासमार्गं गता देवी दृष्टा शक्रपुरोगमैः ॥ ९७.१२६ ॥
पुष्पवृष्टिं ततो देवा व्यमुञ्चन् सह किंकरैः ।
किं कुर्मो ब्रूहि मे पुत्र कर्मणा ते स्म रञ्जिताः ॥ ९७.१२७ ॥

व्यास उवाच -
तपश्च विपुलं कृत्वा दानं दत्त्वा महाफलम् ।
एतदेव नरैः कार्यं साधूनां यत्सुखावहम् ॥ ९७.१२८ ॥
यदि तुष्टा महाभागा अनुग्राह्यो ह्यहं यदि ।
तस्मान्ममाश्रमे सर्वैः स्थीयतां नात्र संशयः ॥ ९७.१२९ ॥
आतिथ्यं शाकपर्णेन रेवामृतविमिश्रितम् ।
प्रतिपन्नं समस्तैर्वः पराशरमुखैर्मम ।

स्थातव्यं स्वाश्रमे सर्वैरेवाया उत्तरे तटे ॥ ९७.१३० ॥

मार्कण्डेय उवाच -

स्नानतर्पणनित्यानि कृतानि द्विजसत्तमैः ।

व्यासकुण्डे ततो गत्वा होमः सर्वैः प्रकल्पितः ॥ ९७.१३१ ॥

श्रीफलैर्बिल्वपत्रैश्च जुहुवुर्जातवेदसम् ।

गौतमो भृगुर्माण्डव्यो नारदो लोमशस्तथा ॥ ९७.१३२ ॥

पराशरस्तथा शङ्खः कौशिकश्च्यवनो मुनिः ।

पिप्पलादो वसिष्ठश्च नाचिकेतो महातपाः ॥ ९७.१३३ ॥

विश्वामित्रोऽप्यगस्त्यश्च उद्दालकयमौ तथा ।

शाण्डिल्यो जैमिनिः कण्वो याज्ञवल्क्योशनोऽङ्गिराः ॥ ९७.१३४ ॥

शातातपो दधीचिश्च कपिलो गालवस्तथा ।

जैगीषव्यस्तथा दक्षो भरतो मुद्गलस्तथा ॥ ९७.१३५ ॥

वात्स्यायनो महातेजाः संवर्तः शक्तिरेव च ।

जातूकर्ण्यो भरद्वाजो वालखिल्यारुणिस्तथा ॥ ९७.१३६ ॥

एवमादिसहस्राणि जुह्वते जातवेदसम् ।

अक्षमालाकरोत्कीर्णा ध्यानयोगपरायणाः ॥ ९७.१३७ ॥

एकचित्ता द्विजाः सर्वे चक्रुर्होमक्रियां तदा ।

ततः समुत्थितं लिङ्गं मोक्षदं व्याधिनाशनम् ॥ ९७.१३८ ॥

अच्छेद्यं परमं देवं दृष्ट्वा व्यासस्तुतोष च ।

पुष्पवृष्टिं ददुर्देवा आशीर्वादान्द्विजोत्तमाः ॥ ९७.१३९ ॥

साष्टाङ्गं प्रणतो व्यासो देवं दृष्ट्वा त्रिलोचनम् ।

ब्राह्मणान्पूजयामास शाकमूलफलेन च ॥ ९७.१४० ॥

पितृपूर्वं द्विजाः सर्वे भोजिताः पाण्डुनन्दन ।

आशीर्वादांस्ततः पुण्यान् दत्त्वा विप्रा ययुः पुनः ॥ ९७.१४१ ॥

तदा प्रभृति तत्तीर्थं व्यासाख्यं प्रोच्यते बुधैः ॥ ९७.१४२ ॥

युधिष्ठिर उवाच -

व्यासतीर्थस्य यत्पुण्यं तत्सर्वं कथयस्व मे ।
स्नानदानविधानं च यस्मिन्काले महाफलम् ॥ ९७.१४३ ॥

श्रीमार्कण्डेय उवाच -
कथयामि समस्तं ते भ्रातृभिः सह पाण्डव ।
कार्त्तिकस्य सिते पक्षे चतुर्दश्यां जितेन्द्रियः ॥ ९७.१४४ ॥
उपोष्य यो नरो भक्त्या रात्रौ कुर्वीत जागरम् ।
स्नापयेदीश्वरं भक्त्या क्षौद्रक्षीरेण सर्पिषा ॥ ९७.१४५ ॥
दध्ना च खण्डयुक्तेन कुशतोयेन वै पुनः ।
श्रीखण्डेन सुगन्धेन गुण्ठयेत्परमेश्वरम् ॥ ९७.१४६ ॥
ततः सुगन्धकुसुमैर्बिल्वपत्रैश्च पूजयेत् ।
मुचुकुन्देन कुन्देन कुशजातीप्रसूनकैः ॥ ९७.१४७ ॥
उन्मत्तमुनिपुष्पैश्च तथान्यैः कालसम्भवैः ।
अर्चयेत्परया भक्त्या द्वीपेश्वरमनुत्तमम् ॥ ९७.१४८ ॥
इक्षुगडुकदानेन तुष्यते परमेश्वरः ।
गडुकाष्टकदानेन पातकं यात्यहोर्जितम् ॥ ९७.१४९ ॥
मासर्जितं च नश्येत गडुकाष्टशतेन च ।
षाण्मासिकं सहस्रेण द्विगुणैरब्दिकं तथा ॥ ९७.१५० ॥
आजन्मजनितं पापमयुतेन प्रणश्यति ।
द्विगुणैर्नश्यते व्याधिस्त्रिगुणैः स्याद्धनागमः ॥ ९७.१५१ ॥
षड्गुणैर्जायते वाग्मी सिद्धस्तद्द्विगुणैस्तथा ।
रुद्रत्वं दशलक्षैश्च जायते नात्र संशयः ॥ ९७.१५२ ॥
पौर्णमास्यां नृपश्रेष्ठ स्नानं कुर्वीत भक्तितः ।
मन्त्रोक्तेन विधानेन सर्वपापक्षयंकरम् ॥ ९७.१५३ ॥
वारुणं च तथाग्नेयं ब्राह्मयं चैवाक्षयंकरम् ।
देवान्पित्ःन्मनुष्यांश्च विधिवत्तर्पयेद्बुधः ॥ ९७.१५४ ॥
ऋचा ऋग्वेदजं पुण्यं साम्ना सामफलं लभेत् ।
यजुर्वेदस्य यजुषा गायत्र्या सर्वमाप्नुयात् ॥ ९७.१५५ ॥

अक्षरं च जपेन्मन्त्रं सौरं वा शिवदैवतम् ।
अथवा वैष्णवं मन्त्रं द्वादशाक्षरसंज्ञितम् ॥ ९७.१५६ ॥
पूजयेद्ब्राह्मणान्भक्त्या सर्वलक्षणलक्षितान् ।
स्वदारनिरतान्विप्रान्दम्भलोभविवर्जितान् ॥ ९७.१५७ ॥
भिन्नवृत्तिकरान् पापान् पतिताञ्छूद्रसेवनान् ।
शूद्रीग्रहणसंयुक्तान्वृषली यस्य मन्दिरे ॥ ९७.१५८ ॥
परोक्षवादिनो दुष्टान्गुरुनिन्दापरायणान् ।
वेदद्वेषणशीलांश्च हैतुकान् बकवृत्तिकान् ॥ ९७.१५९ ॥
ईदृशान्वर्जयेच्छ्राद्धे दाने सर्वव्रतेषु च ।
गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ॥ ९७.१६० ॥
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ।
ईदृशान्पूजयेद्विप्रानन्नदानहिरण्यतः ॥ ९७.१६१ ॥
उपानहौ च वस्त्राणि शय्यां छत्रमथासनम् ।
यो दद्याद्ब्राह्मणे भक्त्या सोऽपि स्वर्गे महीयते ॥ ९७.१६२ ॥
प्रत्यक्षा सुरभी तत्र जलधेनुस्तथाघृता ।
तिलधेनुः प्रदातव्या महिष्यश्च तथैव च ॥ ९७.१६३ ॥
कृष्णाजिनप्रदाता यो दाता यस्तिलसर्पिषोः ।
कन्यापुस्तकयोर्दाता सोऽक्षयं लोकमाप्नुयात् ॥ ९७.१६४ ॥
धूर्वाहौ खुरसंयुक्तौ धान्योपस्करसंयुतौ ।
दापयेत्स्वर्गकामस्तु इति मे सत्यभाषितम् ॥ ९७.१६५ ॥
सूत्रेण वेष्टयेद्द्वीपमथवा जगतीं शुभम् ।
मन्दिरं परया भक्त्या परमेशमथापि वा ॥ ९७.१६६ ॥
प्रदक्षिणां विधानेन यः करोत्यत्र मानवः ।
जम्बूप्लाक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो नृप ॥ ९७.१६७ ॥
कुशः क्रौञ्चस्तथा काशः पुष्करश्चैव सप्तमः ।
सप्तसागरपर्यन्ता वेष्टिता तेन भारत ॥ ९७.१६८ ॥
द्वीपेश्वरे महाराज वृषोत्सर्गं च कारयेत् ।
वृषेणारुणवर्णेन माहेशं लोकमाप्नुयात् ॥ ९७.१६९ ॥

यस्तु वै पाण्डुरो वक्त्रे ललाटे पादयोस्तथा ।

लाङ्गूले यस्तु वै शुभ्रः स वै नाकस्य दर्शकः ॥ ९७.१७० ॥

नीलोऽयमीदृशः प्रोक्तो यस्तु द्वीपेश्वरे त्यजेत् ।

स समाः रोमसंख्याता नाके वसति भारत ॥ ९७.१७१ ॥

सौरं च शांकरं लोकं वैरञ्चं वैष्णवं क्रमात् ।

भुनक्ति स्वेच्छया राजन्व्यासतीर्थप्रभावतः ॥ ९७.१७२ ॥

सपत्नीकं ततो विप्रं पूजयेत्तत्र भक्तितः ।

सितरक्तानि वस्त्राणि यो दद्यादग्रजन्मने ॥ ९७.१७३ ॥

कृत्वा प्रदक्षिणं युग्मं प्रीयतां मे जगद्गुरुः ।

नास्ति विप्रसमो बन्धुरिह लोके परत्र च ॥ ९७.१७४ ॥

यमलोके महाघोरे पतन्तं योऽभिरक्षति ।

इतिहासपुराणज्ञं विष्णुभक्तं जितेन्द्रियम् ॥ ९७.१७५ ॥

पूजयेत्परया भक्त्या सामगं वा विशेषतः ।

द्वीपेश्वरं च ये भक्त्या संस्मरन्ति गृहे स्थिताः ॥ ९७.१७६ ॥

न तेषां जायते शोको न हानिर्न च दुष्कृतम् ।

प्रथमं पूजयेत्तत्र लिङ्गं सिद्धेश्वरं ततः ॥ ९७.१७७ ॥

यत्र सिद्धो महाभागो व्यासः सत्यवतीसुतः ।

अस्यैव पूजनात्सिद्धो धारासर्पो महामतिः ॥ ९७.१७८ ॥

तत्र तीर्थे तु यो राजन्प्राणत्यागं करोति च ।

सूर्यलोकमसौ भित्त्वा प्रयाति शिवसन्निधौ ॥ ९७.१७९ ॥

समाः सहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ।

महाहवे षष्टिरशीति गोग्रहे ह्यनाशके भारत चाक्षया गतिः ॥ ९७.१८० ॥

पिता पितामहश्चैव तथैव प्रपितामहः ।

वायुभूतं निरीक्षन्ते ह्यागच्छन्तं स्वगोत्रजम् ॥ ९७.१८१ ॥

अस्मद्गोत्रेऽस्ति कः पुत्रो यो नो दद्यात्तिलोदकम् ।

कार्तिक्यां च विशेषेण वेशाख्यां वा तथैव च ॥ ९७.१८२ ॥

स्वर्गतिं च प्रयास्यामस्तत्र तीर्थोपसेवनात् ।

एतत्ते कथितं सर्वं द्वीपेश्वरमनुत्तमम् ॥ ९७.१८३ ॥

यः पठेत्परया भक्त्या शृणुयात्तद्गतो नृप ।
सोऽपि पापविनिर्मुक्तो मोदते शिवमन्दिरे ॥ ९७.१८४ ॥
ऊषरं सर्वतीर्थानां निर्मितं मुनिपुंगवैः ।
कामप्रदं नृपश्रेष्ठ व्यासतीर्थं न संशयः ॥ ९७.१८५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे व्यासतीर्थमाहात्म्यवर्णनं नाम सप्तनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९८



श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र प्रभासेश्वरमुत्तमम् ।
विख्यातं त्रिषु लोकेषु स्वर्गसोपानमुत्तमम् ॥ ९८.१ ॥

युधिष्ठिर उवाच -
प्रभासं तात मे ब्रूहि कथं जातं महाफलम् ।
स्वर्गसोपानदं दृश्यं संक्षेपात्कथयस्व मे ॥ ९८.२ ॥

श्रीमार्कण्डेय उवाच -
दुर्भगा रविपत्नी च प्रभानामेति विश्रुता ।
तया चाराधितः शम्भुरुग्रेण तपसा पुरा ॥ ९८.३ ॥
वायुभक्षा स्थिता वर्षं वर्षं ध्यानपरायणा ।
ततस्तुष्टो महादेवः प्रभायाः पाण्डुनन्दन ॥ ९८.४ ॥

ईश्वर उवाच -
कस्मात्संक्लिश्यसे बाले कथ्यतां यद्विवक्षितम् ।
अहं हि भास्करोऽप्येको नानात्वं नैव विद्यते ॥ ९८.५ ॥

प्रभोवाच -
नान्यो देवः स्त्रियः शम्भो विना भर्त्रा क्वचित्प्रभो ।
सगुणो निर्गुणो वापि धनाढ्यो वाप्यकिंचनः ॥ ९८.६ ॥
प्रियो वा यदि वा द्वेष्यः स्त्रीणां भर्तैव दैवतम् ।
दुर्भगत्वेन दग्धाहं सखीमध्ये सुरेश्वर ।
भर्त्तर्यल्लब्धसौख्यास्मि तेन क्लिश्याम्यहं भृशम् ॥ ९८.७ ॥

ईश्वर उवाच -
वल्लभा भास्करस्यैव मत्प्रसादाद्भविष्यसि ॥ ९८.८ ॥

पार्वत्युवाच -
अप्रमाणं भवद्वाक्यं भास्करोऽपि करिष्यति ।
वृथा क्लेशो भवेदस्याः प्रभायाः परमेश्वर ॥ ९८.९ ॥
उमावाक्यान्महेशानध्यातस्तिमिरनाशनः ।
आगतो गगनाद्भानुर्नर्मदोत्तररोधसि ॥ ९८.१० ॥

भानुरुवाच -
आहूतोऽस्मि कथं देव ह्यघासुरनिषूदन ॥ ९८.११ ॥

ईश्वर उवाच -
प्रभां पालय भो भानो संतोषेण परेण हि ॥ ९८.१२ ॥

उमोवाच -
प्रभाया मन्दिरे नित्यं स्थीयतां हिमनाशन ।
अग्रपत्नी समस्तानां भार्याणां क्रियतां रवे ॥ ९८.१३ ॥

भानुरुवाच -
एवं देवि करिष्यामि तव वाक्यं वरानने ।
एतच्छ्रुत्वा प्रभाहूता प्रत्युवाच महेश्वरम् ॥ ९८.१४ ॥

प्रभोवाच -
स्वांशेन स्थीयतां देव मन्मथारे उमापते ।
एकांशः स्थाप्यतामत्र तीर्थस्योन्मीलनाय च ॥ ९८.१५ ॥

श्रीमार्कण्डेय उवाच -
सर्वदेवमयं लिङ्गं स्थापितं तत्र पाण्डव ।
प्रभासेश इति ख्यातं सर्वलोकेषु दुर्लभम् ॥ ९८.१६ ॥
अन्यानि यानि तीर्थानि काले तानि फलन्ति वै ।
प्रभासेशस्तु राजेन्द्र सद्यः कामफलप्रदः ॥ ९८.१७ ॥
माघमासे सिते पक्षे सप्तम्यां च विशेषतः ।
अश्वं यः स्पर्शयेत्तत्र यथोक्तब्राह्मणे नृप ॥ ९८.१८ ॥

इन्द्रत्वं प्राप्यते तेन भास्करस्याथवा पदम् ।
स्नात्वा परमया भक्त्या दानं दद्याद्द्विजातये ॥ ९८.१९ ॥
गोप्रदाता लभेत्स्वर्गं सत्यलोकं वरेश्वर ।
सर्वाङ्गसुन्दरीं शुभ्रां क्षीरिणीं तरुणीं शुभाम् ॥ ९८.२० ॥
सवत्सां घण्टासंयुक्तां कांस्यपात्रावदोहिनीम् ।
ददते ये नृपश्रेष्ठ न ते यान्ति यमालयम् ॥ ९८.२१ ॥
अथ यः परया भक्त्या स्नानं देवस्य कारयेत् ।
स प्राप्नोति परं लोकं यावदाभूतसम्प्लवम् ॥ ९८.२२ ॥
दौर्भाग्यं नाशमायाति स्नानमात्रेण पाण्डव ।
तत्र तीर्थे तु यो भक्त्या कन्यादानं प्रयच्छति ॥ ९८.२३ ॥
ब्राह्मणाय विवाहेन दापयेत्पाण्डुनन्दन ।
समानवयसे देया कुलशीलधनैस्तथा ॥ ९८.२४ ॥
ये ददन्ते महाराज ह्यपि पातकसंयुताः ।
तेषां पापानि लीयन्ते ह्युदके लवणं यथा ॥ ९८.२५ ॥
स्वामिद्रोहकृतं पापं निक्षेपस्यापहारिणि ।
मित्रघ्ने च कृतघ्ने च कूटसाक्ष्यसमुद्भवम् ॥ ९८.२६ ॥
तद्ग्रामोद्यानभेदोत्थं परदारनिषेवणम् ।
वार्द्धुषिकस्य यत्पापं यत्पापं स्तेयसम्भवम् ॥ ९८.२७ ॥
कूपभेदोद्भवं यच्च बैडालव्रतधारिणः ।
दाम्भिकं वृक्षच्छेदोत्थं विवाहस्य निषेधजम् ॥ ९८.२८ ॥
आरामस्थतरुच्छेदमगम्यागमनोद्भवम् ।
स्वभार्यात्यजने यच्च परभार्यासमीहनात् ॥ ९८.२९ ॥
ब्रह्मस्वहरणे यच्च गरदे गोविघातिनि ।
विद्याविक्रयणोत्थं च संसर्गाद्यच्च पातकम् ॥ ९८.३० ॥
श्वबिडालवधाद्घोरं सर्पशूद्रोद्भवं तथा ।
भूमिहर्तुश्च यत्पापं भूमिहारिणि चैव हि ॥ ९८.३१ ॥
मा ददस्वेति यत्पापं गोवह्निब्राह्मणेषु च ।
तत्पापं याति विलयं कन्यादानेन पाण्डव ॥ ९८.३२ ॥
स गत्वा भास्करं लोकं रुद्रलोके शुभे व्रजेत् ।
क्रीडते रुद्रलोकस्थो यावदिन्द्राश्चतुर्दश ॥ ९८.३३ ॥
सर्वपापक्षये जाते शिवे भवति भावना ।
एतद्व्रजति यस्तीर्थं प्रभासं पाण्डुनन्दन ॥ ९८.३४ ॥

सर्वतीर्थफलं प्राप्य सोऽश्वमेधफलं लभेत् ।
गोप्रदानं महापुण्यं सर्वपापक्षयं परम् ।
प्रशस्तं सर्वकालं हि चतुर्दश्यां विशेषतः ॥ ९८.३५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे प्रभासतीर्थमाहात्म्यवर्णनं नामाष्टनवतितमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ०९९



अध्याय ९९

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल नर्मदादक्षिणे तटे ।
स्थापितं वासुकीशं तु समस्ताघौघनाशनम् ॥ ९९.१ ॥

युधिष्ठिर उवाच -
कस्माच्च कारणात्तात रेवाया दक्षिणे तटे ।
वासुकीशस्थापितो वै विस्तराद्वद मे गुरो ॥ ९९.२ ॥

श्रीमार्कण्डेय उवाच -
एतत्सर्वं समास्थाय नृत्यं शम्भुश्चकार वै ॥ ९९.३ ॥
श्रमादजायत स्वेदो गङ्गातोयविमिश्रितम् ।
पतन्तमुरगोऽश्नाति हरमौलिविनिर्गतम् ॥ ९९.४ ॥
मन्दाकिनी ततः क्रुद्धा व्यालस्योपरि भारत ।
प्राप्नुह्यजगरत्त्वं हि भुजङ्ग क्षुद्रजन्तुक ॥ ९९.५ ॥

वासुकिरुवाच -
अनुग्राह्योऽस्मि ते पापो दुर्नयोऽहं हराद्दते ।
त्रैलोक्यपावनी पुण्या सरित्त्वं शुभलक्षणा ॥ ९९.६ ॥
संसारच्छेदनकरी ह्यार्तानामार्तिनाशनी ।
स्वर्गद्वारे स्थिता त्वं हि दयां कुरु मयीश्वरि ॥ ९९.७ ॥

गङ्गोवाच -
कुरुष्व विपुलं विन्ध्यं तपस्त्वं शङ्करं प्रति ।
ततः प्राप्स्यसि स्वं स्थानं पन्नगत्वं ममाज्ञया ॥ ९९.८ ॥

श्रीमार्कण्डेय उवाच -

ततोऽसौ त्वरितो विन्ध्यं नागो गत्वा नगं शुभम् ।
तपस्तप्तुं समारेभे शङ्कराराधनोद्यतः ॥ ९९.९ ॥
नित्यं दध्यौ महादेवं त्र्यक्षं डमरुकोद्यतम् ।
ततो वर्षशते पूर्ण उपरुद्धो जगद्गुरुः ।
आगतस्तत्समीपं तु श्लक्ष्णां वाणीमुदाहरत् ॥ ९९.१० ॥
वरं वरय मे वत्स पन्नग त्वं कृतादर ॥ ९९.११ ॥

वासुकिरुवाच -

यदि तुष्टोऽसि मे देव वरं दास्यसि शङ्कर ।
प्रसादात्तव देवेश भूयान्निष्पापता मम ।
तीर्थं किंचित्समाख्याहि सर्वपापप्रणाशनम् ॥ ९९.१२ ॥

ईश्वर उवाच -

पन्नग त्वं महाबाहो रेवां गच्छ शुभंकरीम् ।
याम्ये तस्यास्तटे पुण्ये स्नानं कुरु यथाविधि ॥ ९९.१३ ॥
इत्युक्त्वान्तर्दधे देवो वासुकिस्त्वरयान्वितः ।
रूपेणाजगरेणैव प्रविष्टो नर्मदाजलम् ॥ ९९.१४ ॥
मार्गेण तस्य संजातं जाह्नव्याः स्रोत उत्तमम् ।
निर्धूतकल्मषः सर्पः संजातो नर्मदाजले ॥ ९९.१५ ॥
स्थापितः शङ्करस्तत्र नर्मदायां युधिष्ठिर ।
ततो नागेश्वरं लिङ्गं प्रसिद्धं पापनाशनम् ॥ ९९.१६ ॥
अष्टम्यां वा चतुर्दश्यां स्नापयेन्मधुना शिवम् ।
विमुक्तकल्मषः सद्यो जायते नात्र संशयः ॥ ९९.१७ ॥
अपुत्रा ये नराः पार्थ स्नानं कुर्वन्ति सङ्गमे ।
ते लभन्ते सुताञ्छ्रेष्ठान् कार्त्तवीर्योपमाञ्छुभान् ॥ ९९.१८ ॥
श्राद्धं तत्रैव यः कुर्यादुपवासपरायणः ।
कुर्वन्प्रमोचयेत्प्रेतान्नरकान्नृपनन्दन ॥ ९९.१९ ॥
सर्पाणां च भयं वंशे ज्ञातिवर्गे न जायते ।
निर्दोषं नन्दते तस्य कुलं नागप्रसादतः ॥ ९९.२० ॥
एतत्ते सर्वमाख्यातं तव स्नेहान्नृपोत्तम ॥ ९९.२१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णनं नामैकोनशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १००

https://sa.wikisource.org/s/fac
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १००

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तीर्थं परमरोचनम् ।
मार्कण्डेशमिति ख्यातं नर्मदादक्षिणे तटे ॥ १००.१ ॥
उत्तमं सर्वतीर्थानां गीर्वाणैर्वन्दितं शिवम् ।
गुह्याद्गुह्यतरं पुत्र नाख्यातं कस्यचिन्मया ॥ १००.२ ॥
स्थापितं तु मया पूर्वं स्वर्गसोपानसंनिभम् ।
ज्ञानं तत्रैव मे जातं प्रसादाच्छङ्करस्य च ॥ १००.३ ॥
अन्यस्तत्रैव यो गत्वा द्रुपदामन्तर्जले जपेत् ।
स पातकैरशेषश्च मुच्यते पाण्डुनन्दन ॥ १००.४ ॥
वाचिकैर्मानसैश्च वा कर्मजैरपि पातकैः ।
पिण्डिकां चाप्यवष्टभ्य याम्यामाशां च संस्थितः ॥ १००.५ ॥
योजयेच्छूलिनं भक्त्या द्वात्रिंशद्बहुरूपिणम् ।
देहपाते शिवं गच्छेदिति मे निश्चयो नृप ॥ १००.६ ॥
आज्येन बोधयेद्दीपमष्टम्यां निशि भारत ।
स्वर्गलोकमवाप्नोति इत्येवं शङ्करोऽब्रवीत् ॥ १००.७ ॥
श्राद्धं तत्रैव यो भक्त्या कुर्वीत नृपनन्दन ।
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ॥ १००.८ ॥
इङ्गुदैर्बदरैर्बिल्वैरक्षतेन जलेन वा ।
तर्पयेत्तत्र यो वंश्यानाप्नुयाज्जन्मनः फलम् ॥ १००.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनं नाम शततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०१



अध्याय १०१

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।
उत्तरे नर्मदाकूले यज्ञवाटस्य मध्यतः ॥ १०१.१ ॥
संकर्षणमिति ख्यातं पृथिव्यां पापनाशनम् ।
तपश्चीर्णं पुरा राजन्बलभद्रेण तत्र वै ॥ १०१.२ ॥
गीर्वाणा अपि तत्रैव संनिधौ नृपनन्दन ।
उमया सहितः शम्भुः स्थितस्तत्रैव केशवः ॥ १०१.३ ॥
बलभद्रेण राजेन्द्र प्राणिनामुपकारतः ।
स्थापितः परया भक्त्या शङ्करः पापनाशनः ॥ १०१.४ ॥
यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रियः ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ १०१.५ ॥
श्राद्धं तत्रैव यो भक्त्या पित्ःणामथ दापयेत् ।
स याति परमं स्थानं बलभद्रवचो यथा ॥ १०१.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे संकर्षणतीर्थमाहात्म्यवर्णनं नामैकाधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०२

https://sa.wikisource.org/s/fah



अध्याय १०२

मार्कण्डेय उवाच -

मन्मथेशं ततो गच्छेत्सर्वदेवनमस्कृतम् ।

स्नानमात्रान्नरो राजन्यमलोकं न पश्यति ॥ १०२.१ ॥

अनपत्या या च नारी स्नायाद्वै पाण्डुनन्दन ।

पुत्रं सा लभते पार्थ सत्यसङ्घं दृढव्रतम् ॥ १०२.२ ॥

तत्र स्नात्वा नरो राजञ्छुचिः प्रयतमानसः ।

उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १०२.३ ॥

कामिकं तीर्थराजं तु तादृशं न भविष्यति ।

त्रिरात्रं कुरुते राजन्स गोलक्षफलं लभेत् ॥ १०२.४ ॥

तत्र नृत्यं प्रकर्तव्यं तुष्यते परमेश्वरः ।

गीतवादित्रनिर्घोषै रात्रौ जागरणेन च ॥ १०२.५ ॥

एरण्ड्यां च महादेवो दृष्टो मे मन्मथेश्वरः ।

किं समर्थो यमो रुष्टो भद्रो भद्राणि पश्यति ॥ १०२.६ ॥

कामेन स्थापितः शम्भुरेतस्मात्कामदो नृप ।

सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ १०२.७ ॥

विशेषश्चात्र सन्ध्यायां श्राद्धदाने च भारत ।

अन्नदानेन राजेन्द्र कीर्तितं फलमुत्तमम् ॥ १०२.८ ॥

एतत्ते सर्वमाख्यातं तव भक्त्या तु भारत ।

पृथिव्यां सागरान्तायां प्रख्यातो मन्मथेश्वरः ॥ १०२.९ ॥

गोदानं पाण्डवश्रेष्ठ त्रयोदश्यां प्रकारयेत् ।

चैत्रे मासि सिते पक्षे तत्र गत्वा जितेन्द्रियः ॥ १०२.१० ॥

रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम ।

दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ १०२.११ ॥

स्त्र्यथ वा पुरुषो वापि सममेतत्फलं स्मृतम् ॥ १०२.१२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनं नाम द्व्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०३

https://sa.wikisource.org/s/fab


अध्याय १०३

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल एरण्डीसङ्गमं परम् ।
यच्छ्रुतं वै मया राजञ्छिवस्य वदतः पुरा ॥ १०३.१ ॥
एतदेव पुरा प्रश्नं गौर्या पृष्टस्तु शङ्करः ।
प्रोवाच नृपशार्दूल गुह्याद्गुह्यतरं शुभम् ॥ १०३.२ ॥

ईश्वर उवाच -
शृणु देवि परं गुह्यं नाख्यातं कस्यचिन्मया ।
रेवायाश्चोत्तरे कूले तीर्थं परमशोभनम् ।
भ्रूणहत्याहरं देवि कामदं पुत्रवर्धनम् ॥ १०३.३ ॥

पार्वत्युवाच -
कथयस्व महादेव तीर्थं परमशोभनम् ।
भ्रूणहत्याहरं कस्मात्कामदं स्वर्गदर्शनम् ॥ १०३.४ ॥

ईश्वर उवाच -
अत्रिर्नाम महादेवि मानसो ब्रह्मणः सुतः ।
अग्निहोत्ररतो नित्यं देवतातिथिपूजकः ॥ १०३.५ ॥
सोमसंस्थाश्च सप्तैव कृता विप्रेण पार्वति ।
अनसूयेति विख्याता भार्या तस्य गुणान्विता ॥ १०३.६ ॥
पतिव्रता पतिप्राणा पत्युः कार्यहिते रता ।
एवं याति ततः काले न पुत्रा न च पुत्रिका ॥ १०३.७ ॥
अपराह्णे महादेवि सुखासीनौ तु सुन्दरि ।
वदन्तौ सुखदुःखानि पूर्ववृत्तानि यानि च ॥ १०३.८ ॥

अत्रिरुवाच -
सौम्ये शुभे प्रिये कान्ते चारुसर्वाङ्गसुन्दरि ।
विद्याविनयसम्पन्ने पद्मपत्रनिभेक्षणे ॥ १०३.९ ॥
पूर्णचन्द्रनिभाकारे पृथुश्रोणिभरालसे ।
न त्वया सदृशी नारी त्रैलोक्ये सचराचरे ॥ १०३.१० ॥
रतिपुत्रफला नारी पठ्यते वेदवादिभिः ।
पुत्रहीनस्य यत्सौख्यं तत्सौख्यं मम सुन्दरि ॥ १०३.११ ॥
यथाहं न तथा पुत्रः समर्थः सर्वकर्मसु ।
पुन्नामनरकाद्भद्रे जातमात्रेण सुन्दरि ॥ १०३.१२ ॥
पतन्तं रक्षयेद्देवि महापातकिनं यदि ।
महाघोरे गता वापि दुष्टकर्मपितामहाः ॥ १०३.१३ ॥
तद्धरन्ति सुपुत्राश्च वैतरण्यां गतानपि ।
पुत्रेण लोकाञ्जयति पौत्रेण परमा गतिः ॥ १०३.१४ ॥
अथ पुत्रस्य पौत्रेण प्रगच्छेद्ब्रह्म शाश्वतम् ।
नास्ति पुत्रसमो बन्धुरिह लोके परत्र च ॥ १०३.१५ ॥
अहश्च मध्यरात्रे च चिन्तयानस्य सर्वदा ।
शुष्यन्ति मम गात्राणि ग्रीष्मे नद्युदकं यथा ॥ १०३.१६ ॥

अनसूयोवाच -
यत्त्वया शोचितं विप्र तत्सर्वं शोचयाम्यहम् ।
तवोद्वेगकरं यच्च तन्मे दहति चेतसि ॥ १०३.१७ ॥
येन पुत्रा भविष्यन्ति आयुष्मन्तो गुणान्विताः ।
तत्कार्यं च समीक्षस्व येन तुष्येत्प्रजापतिः ॥ १०३.१८ ॥

अत्रिरुवाच -
तपस्तप्तं मया भद्रे जातमात्रेण दुष्करम् ।
व्रतोपवासनियमैः शाकाहारेण सुन्दरि ॥ १०३.१९ ॥
क्षीणदेहस्तु तिष्ठामि ह्यशक्तोऽहं महाव्रते ।
तेन शोचामि चात्मानं रहस्यं कथितं मया ॥ १०३.२० ॥

अनसूयोवाच -

भर्तुः पतिव्रता नारी रतिपुत्रविवर्धिनी ।
त्रिवर्गसाधना सा च श्लाघ्या च विदुषां जने ॥ १०३.२१ ॥
जपस्तपस्तीर्थयात्रा मृडेज्यामन्त्रसाधनम् ।
देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ १०३.२२ ॥
ईदृशं तु महादोषं स्त्रीणां तु व्रतसाधने ।
वदन्ति मुनयः सर्वे यथोक्तं वेदभाषितम् ॥ १०३.२३ ॥
अनुज्ञाता त्वया ब्रह्मंस्तपस्तप्स्यामि दुष्करम् ।
पुत्रार्थित्वं समुद्दिश्य तोषयामि सुरोत्तमान् ॥ १०३.२४ ॥

अत्रिरुवाच -
साधु साधु महाप्राज्ञे मम संतोषकारिणि ।
आज्ञाता त्वं मया भद्रे पुत्रार्थं तप आश्रय ॥ १०३.२५ ॥
देवतानां मनुष्याणां पितृःणामनृणो भवे ।
न भार्यासदृशो बन्धुस्त्रिषु लोकेषु विद्यते ॥ १०३.२६ ॥
तेन देवाः प्रशंसन्ति न भार्यासदृशं सुखम् ।
सन्मुखे मन्मुखाः पुत्राः विलोमे तु पराङ्मुखाः ॥ १०३.२७ ॥
तेन भार्यां प्रशंसन्ति सदेवासुरमानुषाः ।
महाव्रते महाप्राज्ञे सत्त्ववति शुभेक्षणे ॥ १०३.२८ ॥
तपस्तपस्व शीघ्रं त्वं पुत्रार्थं तु ममाज्ञया ।
एतद्वाक्यावसाने तु साष्टाङ्गं प्रणताब्रवीत् ॥ १०३.२९ ॥
त्वत्प्रसादेन विप्रेन्द्र सर्वान्कामानवाप्नुयाम् ।
हंसलीलागतिः सा च मृगाक्षी वरवर्णिनी ॥ १०३.३० ॥
नियमस्था ततो भूत्वा सम्प्राप्ता नर्मदां नदीम् ।
शिवस्वेदोद्भवां देवीं सर्वपापप्रणाशनीम् ॥ १०३.३१ ॥
यस्या दर्शनमात्रेण नश्यते पापसञ्चयः ।
स्नानमात्रेण वै यस्या अश्वमेधफलं लभेत् ॥ १०३.३२ ॥
ये पिबन्ति महादेवि श्रद्दधानाः पयः शुभम् ।
सोमपानेन तत्तुल्यं नात्र कार्या विचारणा ॥ १०३.३३ ॥
ये स्मरन्ति दिवा रात्रौ योजनानां शतैरपि ।
मुच्यन्ते सर्वपापेभ्यो रुद्रलोकं प्रयान्ति ते ॥ १०३.३४ ॥
नर्मदायाः समीपे तु तावुभौ योजनद्वये ।
न पश्यन्ति यमं तत्र ये मृता वरवर्णिनि ॥ १०३.३५ ॥

ततस्तदुत्तरे कूले एरण्ड्याः सङ्गमे शुभे ।
नियमस्था विशालाक्षी शाकाहारेण सुन्दरि ॥ १०३.३६ ॥
तोषयन्ती त्रींश्च देवाञ्छुभैः स्तोत्रैर्व्रतैस्तथा ।
ग्रीष्मेषु च महादेवि पञ्चाग्निं साधयेत्ततः ॥ १०३.३७ ॥
वर्षाकाले चार्द्रवासाश्चरेच्चान्द्रायणानि च ।
हेमन्ते तु ततः प्राप्ते तोयमध्ये वसेत्सदा ॥ १०३.३८ ॥
प्रातःस्नानं ततः सन्ध्यां कुर्याद्देवर्षितर्पणम् ।
देवानामर्चनं कृत्वा होमं कुर्याद्यथाविधि ॥ १०३.३९ ॥
यजते वैष्णवांल्लोकान् स्नानजाप्यहुतेन च ।
एवं वर्षशते प्राप्ते रुद्रविष्णुपितामहाः ॥ १०३.४० ॥
सम्प्राप्ता द्विजरूपैस्तु एरण्ड्याः सङ्गमे प्रिये ।
पुरतः संस्थितास्तस्या वेदमभ्युद्धरन्ति च ॥ १०३.४१ ॥
अनसूया जपं त्यक्त्वा निरीक्ष्य तान्मुहुर्मुहुः ।
उत्थिता सा विशालाक्षी अर्घं दत्त्वा यथाविधि ॥ १०३.४२ ॥
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
दर्शनेन तु विप्राणां सर्वपापैः प्रमुच्यते ॥ १०३.४३ ॥
प्रदक्षिणं ततः कृत्वा साष्टाङ्गं प्रणताब्रवीत् ।
कन्दमूलफलं शाकं नीवारानपि पावनान् ।
प्रयच्छाम्यहमद्यैव मुनीनां भावितात्मनाम् ॥ १०३.४४ ॥
विप्रा ऊचुः ।
तपसा तु विचित्रेण तपःसत्येन सुव्रते ।
तृप्ताः स्म सर्वकामैस्तु सुव्रते तव दर्शनात् ॥ १०३.४५ ॥
अस्माकं कौतुकं जातं तापसेन व्रतेन यत् ।
स्वर्गमोक्षसुतस्यार्थे तपस्तपसि दुष्करम् ॥ १०३.४६ ॥

अनसूयोवाच -
तपसा सिध्यते स्वर्गस्तपसा परमा गतिः ।
तपसा चार्थकामौ च तपसा गुणवान्सुतः ।
तप एव च मे विप्राः सर्वकामफलप्रदम् ॥ १०३.४७ ॥
विप्रा ऊचुः ।
तन्वी श्यामा विशालाक्षी स्निग्धाङ्गी रूपसंयुता ।
हंसलीलागतिगमा त्वं च सर्वाङ्गसुन्दरी ॥ १०३.४८ ॥

किं च ते तपसा कार्यमात्मानं शोच्यसे कथम् ॥ १०३.४९ ॥

अनसूयोवाच -
यदि रुद्रश्च विष्णुश्च स्वयं साक्षात्पितामहः ।
गूढरूपधराः सर्वे तच्चिह्नमुपलक्षये ॥ १०३.५० ॥
तस्या वाक्यावसाने तु स्वरूपं दर्शयन्ति ते ।
स्वस्वरूपैः स्थिता देवाः सूर्यकोटिसमप्रभाः ॥ १०३.५१ ॥
चतुर्भुजो महादेवि शङ्खचक्रगदाधरः ।
अतसीपुष्पवर्णस्तु पीतवासा जनार्दनः ॥ १०३.५२ ॥
गरुत्मान्वाहनं यस्य श्रिया च सहितो हरिः ।
प्रसन्नवदनः श्रीमान्स्वयंरूपो व्यवस्थितः ॥ १०३.५३ ॥
पीतवासा महादेवि चतुर्वदनपङ्कजः ।
हंसोपरि समारूढो ह्यक्षमालाकरोद्यतः ॥ १०३.५४ ॥
आगतो नर्मदातीरे ब्रह्मा लोकपितामहः ।
योऽसौ सर्वजगद्व्यापी स्वयं साक्षान्महेश्वरः ॥ १०३.५५ ॥
वृषभं तु समारूढो दशबाहुसमन्वितः ।
भस्माङ्गरागशोभाढ्यः पञ्चवक्त्रस्त्रिलोचनः ॥ १०३.५६ ॥
जटामुकुटसंयुक्तः कृतचन्द्रार्द्धशेखरः ।
एवंरूपधरो देवः सर्वव्यापी महेश्वरः ॥ १०३.५७ ॥
अनसूया निरीक्ष्यैतद्देवानां दर्शनं परम् ।
वेपमाना ततः साध्वी सुरान्दृष्ट्वा मुहुर्मुहुः ॥ १०३.५८ ॥

अनसूयोवाच -
किं व्यापारस्वरूपास्तु विष्णुरुद्रपितामहाः ।
एतद्वै श्रोतुमिच्छामि ह्यशेषं कथयन्तु मे ॥ १०३.५९ ॥

ब्रह्मोवाच -
प्रावृट्कालो ह्यहं ब्रह्मा आपश्चैव प्रकीर्तिताः ।
मेघरूपो ह्यहं प्रोक्तो वर्षयामि च भूतले ॥ १०३.६० ॥
अहं सर्वाणि बीजानि प्राक्सन्ध्यासूदिते रवौ ।
एतद्वै कारणं सर्वं रहस्यं कथितं परम् ॥ १०३.६१ ॥

विष्णुरुवाच -
हेमन्तश्च भवेद्विष्णुर्विश्वरूपं चराचरम् ।
पालनाय जगत्सर्वं विष्णोर्माहात्म्यमुत्तमम् ॥ १०३.६२ ॥

रुद्र उवाच -
ग्रीष्मकालो ह्यहं प्रोक्तः सर्वभूतक्षयंकरः ।
कर्षयामि जगत्सर्वं रुद्ररूपस्तपस्विनि ॥ १०३.६३ ॥
एवं ब्रह्मा च विष्णुश्च रुद्रश्चैव महाव्रते ।
त्रयो देवास्त्रयः सन्ध्यास्त्रयः कालास्त्रयोऽग्नयः ॥ १०३.६४ ॥
तथा ब्रह्मा च विष्णुश्च रुद्रश्चैकात्मतां गतः ।
वरं दद्युश्च ते भद्रे यस्त्वया मनसीप्सितम् ॥ १०३.६५ ॥

अनसूयोवाच -
धन्या पुण्या ह्यहं लोके श्लाघ्या वन्द्या च सर्वदा ।
ब्रह्मा विष्णुश्च रुद्रश्च प्रसन्नवदनाः शुभाः ॥ १०३.६६ ॥
यदि तुष्टास्त्रयो देवा दयां कृत्वा ममोपरि ।
अस्मिंस्तीर्थे तु सांनिध्याद्वरदाः सन्तु मे सदा ॥ १०३.६७ ॥

रुद्र उवाच -
एवं भवतु ते वाक्यं यत्त्वया प्रार्थितं शुभे ।
प्रत्यक्षा वैष्णवी माया एरण्डीनाम नामतः ॥ १०३.६८ ॥
यस्या दर्शनमात्रेण नश्यते पापसञ्चयः ।
चैत्रमासे तु सम्प्राप्ते अहोरात्रोषितो भवेत् ॥ १०३.६९ ॥
एरण्ड्याः सङ्गमे स्नात्वा ब्रह्महत्यां व्यपोहति ।
रात्रौ जागरणं कुर्यात्प्रभाते भोजयेद्द्विजान् ॥ १०३.७० ॥
यथोक्तेन विधानेन पिण्डं दद्याद्यथाविधि ।
प्रदक्षिणां ततो दद्याद्धिरण्यं वस्त्रमेव च ॥ १०३.७१ ॥
रजतं च तथा गावो भूमिदानमथापि वा ।
सर्वं कोटिगुणं प्रोक्तमिति स्वायम्भुवोऽब्रवीत् ॥ १०३.७२ ॥
ये म्रियन्ति नरा देवि एरण्ड्याः सङ्गमे शुभे ।
यावद्युगसहस्रं तु रुद्रलोके वसन्ति ते ॥ १०३.७३ ॥
अहोरात्रोषितो भूत्वा जपेद्रुद्रांश्च वैदिकान् ।

एकादशैकसंज्ञांश्च स याति परमां गतिम् ॥ १०३.७४ ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रांल्लभेत्कामान् यथेप्सितान् ॥ १०३.७५ ॥
एरण्ड्याः सङ्गमे स्नात्वा रेवाया विमले जले ।
महापातकिनो वापि ते यान्ति परमां गतिम् ॥ १०३.७६ ॥

अनसूयोवाच -
यदि तुष्टास्त्रयो देवा मम भक्तिप्रचोदिताः ।
मम पुत्रा भवन्त्वेव हरिरुद्रपितामहाः ॥ १०३.७७ ॥

विष्णुरुवाच -
पूज्या यत्पुत्रतां यान्ति न कदाचिच्छ्रुतं मया ।
शुभे ददामि पुत्रांस्ते देवतुल्यपराक्रमान् ।
रूपवन्तो गुणोपेतान्यज्विनश्च बहुश्रुतान् ॥ १०३.७८ ॥

अनसूयोवाच -
ईप्सितं तच्च दातव्यं यन्मया प्रार्थितं हरे ।
नान्यथा चैव कर्तव्या मम पुत्रैषणा तु या ॥ १०३.७९ ॥

विष्णुरुवाच -
पूर्वं तु भृगुसंवादे गर्भवास उपार्जितः ।
तस्याहं चैव पारं तु नैव पश्यामि शोभने ॥ १०३.८० ॥
स्मरमाणः पुरावृत्तं चिन्तयामि पुनःपुनः ।
एवं संचिन्त्य ते देवाः पितामहमहेश्वराः ॥ १०३.८१ ॥
अयोनिजा भविष्यामस्तव पुत्रा वरानने ।
योनिवासे महाप्राज्ञि देवा नैव व्रजन्ति च ॥ १०३.८२ ॥
सांनिध्यात्सङ्गमे देवि लोकानां तु वरप्रदाः ।
एरण्डी वैष्णवी माया प्रत्यक्षा त्वं भविष्यसि ॥ १०३.८३ ॥
त्रयो देवाः स्थिताः पाथ रेवाया उत्तरे तटे ।
वरप्राप्ता तु सा देवी गता माहेन्द्रपर्वतम् ॥ १०३.८४ ॥
क्षीणाङ्गी शुक्लदेहा च रूक्षकेशी सुदारुणा ।
कृतयज्ञोपवीता सा तपोनिष्ठा शुभेक्षणा ॥ १०३.८५ ॥

शिलातलनिविष्टोऽसौ दृष्टः कान्तो महायशाः ।
हृष्टचित्तोऽभवद्देवि उत्तिष्ठोत्तिष्ठ साब्रवीत् ॥ १०३.८६ ॥

अत्रिरुवाच -
साधु साधु महाप्राज्ञे ह्यनसूये महाव्रते ।
अचिन्त्यं गालवादीनां वरं प्राप्तासि दुर्लभम् ॥ १०३.८७ ॥

अनसूयोवाच -
त्वत्प्रसादेन देवर्षे वरं प्राप्तास्मि दुर्लभम् ।
तेन देवाः प्रशंसन्ति सिद्धाश्च ऋषयोऽमलाः ॥ १०३.८८ ॥
एवमुक्ता तु सा देवी हर्षेण महता युता ।
आलोकयेत्ततः कान्तं तेनापि शुभदर्शना ॥ १०३.८९ ॥
ईक्षणाच्चैव संजातं ललाटे मण्डलं शुभम् ।
नवयोजनसाहस्रं मण्डलं रश्मिभिर्वृतम् ॥ १०३.९० ॥
कदम्बगोलकाकारं त्रिगुणं परिमण्डलम् ।
तस्य मध्ये तु देवेशि पुरुषो दिव्यरूपधृक् ॥ १०३.९१ ॥
हेमवर्णोऽमृतमयः सूर्यकोटिसमप्रभः ।
आद्यः पुत्रोऽनसूयायाः स्वयं साक्षात्पितामहः ॥ १०३.९२ ॥
चन्द्रमा इति विख्यातः सोमरूपो नृपात्मज ।
इष्टापूर्ते च संपाति कलाषोडशकेन तु ॥ १०३.९३ ॥
प्रतिपच्च द्वितीया च तृतीया च महेश्वरि ।
चतुर्थी पञ्चमी चैव अव्यया षोडशी कला ॥ १०३.९४ ॥
चतुर्विधस्य लोकस्य सूक्ष्मो भूत्वा वरानने ।
आप्रीणाति जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ १०३.९५ ॥
सर्वे ते ह्युपजीवन्ति हुतं दत्तं शशिस्थितम् ।
वनस्पतिगते सोमे धनवांश्च वरानने ॥ १०३.९६ ॥
भुञ्जन् परगृहे मूढो ददेदब्दकृतं शुभम् ।
वनस्पतिगते सोमे यस्तु छिन्द्याद्वनस्पतीन् ।
तेन पापेन देवेशि नरा यान्ति यमालयम् ॥ १०३.९७ ॥
वनस्पतिगते सोमे मैथुनं यो निषेवते ।
ब्रह्महत्यासमं पापं लभते नात्र संशयः ॥ १०३.९८ ॥
वनस्पतिगते सोमे मन्थानं योऽधिवाहयेत् ।

गावस्तस्य प्रणश्यन्ति याश्च वै पूर्वसंचिताः ॥ १०३.९९ ॥
वनस्पतिगते सोमे ह्यध्वानं योऽधिगच्छति ।
भवन्ति पितरस्तस्य तं मासं रेणुभोजनाः ॥ १०३.१०० ॥
अमावस्यां महादेवि यस्तु श्राद्धप्रदो भवेत् ।
अब्दमेकं विशालाक्षि तृप्तास्तत्पितरो ध्रुवम् ॥ १०३.१०१ ॥
हिरण्यं रजतं वस्त्रं यो ददाति द्विजातिषु ।
सर्वं लक्षगुणं देवि लभते नात्र संशयः ॥ १०३.१०२ ॥
एवं गुणविशिष्टोऽसौ सोमरूपः प्रजापतिः ।
संजातः प्रथमः पुत्रो ह्यनसूयासुनन्दनः ॥ १०३.१०३ ॥
द्वितीयस्तु महादेवि दुर्वासा नाम नामतः ।
सृष्टिसंहारकर्ता च स्वयं साक्षान्महेश्वरः ॥ १०३.१०४ ॥
ऋषिमध्यगतो देवि तपस्तपति दुष्करम् ।
सोऽपि रुद्रत्वमायाति सम्प्राप्ते भूतविप्लवे ॥ १०३.१०५ ॥
इन्द्रोऽपि शप्तस्तेनैव दुर्वाससा वरानने ।
द्वितीयस्य तु पुत्रस्य सम्भवः कथितो मया ॥ १०३.१०६ ॥
दत्तात्रेयस्वरूपेण भगवान्मधुसूदनः ।
जगद्व्यापी जगन्नाथः स्वयं साक्षाज्जनार्दनः ॥ १०३.१०७ ॥
एते देवास्त्रयः पुत्रा अनसूयाया महेश्वरि ।
वरदानेन ते देवा ह्यवतीर्णा महीतले ॥ १०३.१०८ ॥
पुत्रप्राप्तिकरं तीर्थं रेवायाश्चोत्तरे तटे ।
अनसूयाकृतं पार्थ सर्वपापक्षयं परम् ॥ १०३.१०९ ॥

श्रीमार्कण्डेय उवाच -
आश्चर्यभूतं लोकेऽस्मिन्नर्मदायां पुरातनम् ।
भ्रूणहत्या गता तत्र ब्राह्मणस्य नराधिप ॥ १०३.११० ॥

युधिष्ठिर उवाच -
इतिहासं द्विजश्रेष्ठ कथयस्व ममानघ ।
सर्वपापहरं लोके दुःखार्तस्य च कथ्यताम् ॥ १०३.१११ ॥

श्रीमार्कण्डेय उवाच -
सुवर्णशिलके ग्रामे गौतमान्वयसम्भवः ।

कृषीवलो महादेवि भार्यापुत्रसमन्वितः ॥ १०३.११२ ॥
वसते तत्र गोविन्दः संजातो विपुले कुले ।
पुत्रदारसमोपेतो गृहक्षेत्ररतः सदा ॥ १०३.११३ ॥
शकटं पूरयित्वा तु काष्ठानामगमद्गृहम् ।
प्रक्षिप्तानि च काष्ठानि ह्येकाकी क्षुधयान्वितः ॥ १०३.११४ ॥
रिङ्गमाणस्तदा पुत्रः पितुः शब्दात्समागतः ।
न दृष्टस्तेन वै पुत्रः काष्ठैः संछादितोऽवशः ॥ १०३.११५ ॥
आगतस्त्वरितो गेहे पिपासार्तो नराधिप ।
शकटं मोच्य तद्द्वारि सवृषं रज्जुसंयुतम् ॥ १०३.११६ ॥
भार्या तस्यैव या दृष्टा चित्तज्ञा वशवर्तिनी ।
दृष्ट्वा निपातितं पुत्रं काष्ठैर्निर्भिन्नमस्तकम् ॥ १०३.११७ ॥
अजल्पमानाकरुणं निक्षिप्तं ज्ञोलिकां शिशुम् ।
शुश्रूषणे रता साध्वी प्रियस्य च नराधिप ॥ १०३.११८ ॥
ततः स्नानादिकं कृत्वा भोजनाच्छयनं शुभम् ।
पुत्रं पुत्रवतां श्रेष्ठा ह्युत्थापयति शासनैः ॥ १०३.११९ ॥
यदा च नोत्थितः सुप्तः पुत्रः पञ्चत्वमागतः ।
तदा सा दीनवदना रुरोद च मुमोह च ॥ १०३.१२० ॥
तच्छ्रुत्वा रुदितं शब्दं गोविन्दस्त्रस्तमानसः ।
किमेतदिति चोक्त्वा तु पतितो धरणीतले ॥ १०३.१२१ ॥
द्वावेतौ मुक्तकेशौ तु भूमौ निपतितौ नृप ।
विलेपाते च राजेन्द्र निःश्वासोच्छ्वासितेन च ॥ १०३.१२२ ॥
कं पश्ये प्राङ्गणे पुत्रं दृष्ट्वा क्रीडन्तमातुरम् ।
संधारयिष्ये हृदयं स्फुटितं तव कारणे ॥ १०३.१२३ ॥
त्वज्जन्मान्तं यशो नित्यमक्षयां कुलसन्ततिम् ।
दृष्ट्वा किमनृणीभूतो यास्यामि परमां गतिम् ॥ १०३.१२४ ॥
मम वृद्धस्य दीनस्य गतिस्त्वं किल पुत्रक ।
एते मनोरथाः सर्वे चिन्तिता विफला गताः ॥ १०३.१२५ ॥
इमां तु विकलां दीनां विहीनां सुतबान्धवैः ।
रुदन्तीं पतितां पाहि मातरं धरणीतले ॥ १०३.१२६ ॥
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तेन पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ १०३.१२७ ॥
अपुत्रस्य गृहं शून्यं दिशः शून्या ह्यबान्धवाः ।

मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥ १०३.१२८ ॥
मृषायं वदते लोकश्चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ १०३.१२९ ॥
श्मश्रुग्रहणक्रीडन्तं धूलिधूसरिताननम् ।
पुण्यहीना न पश्यन्ति निजोत्सङ्गसमास्थितम् ॥ १०३.१३० ॥
दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्यहीना न पश्यन्ति गङ्गाधरमिवात्मजम् ॥ १०३.१३१ ॥
वीणावाद्यस्वरो लोके सुस्वरः श्रूयते किल ।
रुदितं बालकस्यैव तस्मादाह्लादकारकम् ॥ १०३.१३२ ॥
मृगपक्षिषु काकेषु पशूनां स्वरयोनिषु ।
पुत्रं तेषु समस्तेषु वल्लभं ब्रुवते बुधाः ॥ १०३.१३३ ॥
मत्स्याश्वप्रकराश्चैव कूर्मग्राहादयोऽपि वा ।
पुत्रोत्पत्तौ च हृष्यन्ति विपत्तौ यान्ति दुःखिताम् ॥ १०३.१३४ ॥
देवगन्धर्वयक्षाश्च हृष्यन्ते पुत्रजन्मनि ।
पञ्चत्वे तेऽपि शोचन्ति मन्दभाग्योऽस्मि पुत्रक ॥ १०३.१३५ ॥
ऋषिमेलापकं चक्रे पुत्रार्थे राघवो नृप ।
इन्द्रस्थाने स्थितस्तस्य प्रोक्षते ह्यासनं यतः ॥ १०३.१३६ ॥
स्वर्गवासं सुताद्बाह्यं विद्यते न तु पाण्डव ।
चक्रे दशरथस्तस्मात्पुत्रार्थं यज्ञमुत्तमम् ॥ १०३.१३७ ॥
रामो लक्ष्मणशत्रुघ्नौ भरतस्तत्र सम्भवात् ।
कार्तवीर्यो जितो येन रामेणामिततेजसा ॥ १०३.१३८ ॥
स रामो रामचन्द्रेण अष्टवर्षेण निर्जितः ।
एकाकिना हतो वाली प्लवगः शत्रुदुर्जयः ॥ १०३.१३९ ॥
रावणो ब्रह्मपुत्रो यस्त्रैलोक्यं यस्य शङ्कते ।
हतः स रामचन्द्रेण सपुत्रः सहबान्धवः ॥ १०३.१४० ॥
एवं पुत्रं विना सौख्यं मर्त्यलोके न विद्यते ।
वंशार्थे मैथुनं यस्य स्वर्गार्थे यस्य भारती ॥ १०३.१४१ ॥
मृष्टान्नं ब्राह्मणस्यार्थे स्वर्गे वासं तु यान्ति ते ।
ब्रह्महत्याश्वमेधाभ्यां न परं पापपुण्ययोः ॥ १०३.१४२ ॥
पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः ।
किं ब्रवीमीति भो वत्स न तु सौख्यं सुतं विना ॥ १०३.१४३ ॥
एवं बहुविधं दुःखं प्रलपित्वा पुनःपुनः ।

जनैश्चाश्वासितो विप्रो बालं गृह्य बहिर्गतः ॥ १०३.१४४ ॥
ततः संस्कृत्य तं बालं विधिदृष्टेन कर्मणा ।
समवेतौ तु दुःखार्तावागतौ स्वगृहं पुनः ॥ १०३.१४५ ॥
एवं गृहागते विप्रे रात्रिर्जाता युधिष्ठिर ।
भूमौ प्रसुप्तो गोविन्दः पुत्रशोकेन पीडितः ॥ १०३.१४६ ॥
यावन्निरीक्षते भार्या भर्तारं दुःखपीडितम् ।
कृमिराशिगतं सर्वं गोविन्दं समपश्यत ॥ १०३.१४७ ॥
दुःखाद्दुःखतरे मग्ना दृष्ट्वा तं पातकान्वितम् ।
एवं दुःखनिमग्नायाः शर्वरी विगता तदा ॥ १०३.१४८ ॥
पशुपालस्तु महिषीमुक्त्वारण्येऽगमद्गृहात् ।
अरण्ये महिषीः सर्वा रक्षयित्वा गृहागतः ॥ १०३.१४९ ॥
विज्ञप्तः पशुपालेन गोविन्दो ब्राह्मणोत्तमः ।
यावद्भोक्ष्याम्यहं स्वामिन्महिषीस्त्वं च रक्षसे ॥ १०३.१५० ॥
ततः स त्वरितो विप्रो जगाम महिषीः प्रति ।
न तत्र महिषीः पश्येत्पश्चात्क्षेत्राभिसम्मुखम् ॥ १०३.१५१ ॥
धावमानश्च विप्रस्तु एरण्डीसङ्गमे गतः ।
ततः प्रविष्टस्तु जले रेवैरण्ड्योस्तु सङ्गमे ॥ १०३.१५२ ॥
तज्जलं पीतमात्रं तु त्वरया चातितर्षितः ।
अकामात्सलिलं पीत्वा प्रक्षाल्य नयने शुभे ॥ १०३.१५३ ॥
आजगाम ततः पश्चाद्भवनं दिवसक्षये ।
भुक्त्वा दुःखान्वितो रात्रौ गोविन्दः शयनं ययौ ॥ १०३.१५४ ॥
निद्राभिभूतः शोकेन श्रमेणैव तु खेदितः ।
पुनस्तच्चार्धरात्रे तु तस्य भार्या युधिष्ठिर ॥ १०३.१५५ ॥
कृमिभिर्वेष्टितं गान्त्रं क्वचित्पश्यत्यवेष्टितम् ।
पुनः सा विस्मयाविष्टा तस्य भार्या गुणान्विता ।
उवाच दुष्कृतं तस्य साध्वसाविष्टचेतसा ॥ १०३.१५६ ॥

भार्योवाच -
अतीते पञ्चमे चाह्नि त्विन्धनं क्षिपतस्तु ते ।
गृहपश्चाद्गतो बालो ह्यज्ञानाद्घातितस्त्वया ॥ १०३.१५७ ॥
मया तत्पातकं घोरं रहस्यं न प्रकाशितम् ।
तेन प्रच्छन्नपापेन दह्यमाना दिवानिशम् ॥ १०३.१५८ ॥

न सुखं तव गात्रस्य पश्यामि न हि चात्मनः ।
निद्रा मम शमं याता रतिश्चैव त्वया सह ॥ १०३.१५९ ॥
श्रूयते मानवे शास्त्रे श्लोको गीतो महर्षिभिः ।
स्मृत्वा स्मृत्वा तु तं चित्ते परितापो न शाम्यति ॥ १०३.१६० ॥
कीर्तनान्नश्यते धर्मो वर्धतेऽसौ निगूहनात् ।
इह लोके परे चैव पापस्याप्येवमेव च ॥ १०३.१६१ ॥
एवं संचित्यमानाहं स्थिता रात्रौ भयातुरा ।
कृमिराशिगतं त्वां हि कस्याहं कथयामि किम् ॥ १०३.१६२ ॥
पुनस्त्वं चाद्य मे दृष्टो भ्रूणहत्याकृमिश्रितः ।
क्वचिद्भिन्दन्ति ते गात्रं क्वचिन्नष्टाः समन्ततः ॥ १०३.१६३ ॥
एतत्संस्मृत्य संस्मृत्य विमृशामि पुनःपुनः ।
न जाने कारणं किंचित्पृच्छन्त्याः कथयस्व मे ॥ १०३.१६४ ॥
तडागं वा सरिद्वापि तीर्थं वा देवतार्चनम् ।
यं गतोऽसि प्रभावोऽयं तस्य नान्यस्य मे स्थितम् ॥ १०३.१६५ ॥
एवमुक्तस्तु विप्रोऽसौ कथयामास भारत ।
भार्याया यद्दिवा वृत्तं शङ्कमानो नृपोत्तम ॥ १०३.१६६ ॥
अद्याहं महिषीसार्थं एरण्डीसङ्गमं गतः ।
नाभिमात्रे जले गत्वा पीतवान्सलिलं बहु ॥ १०३.१६७ ॥
नान्यत्तीर्थं विजानामि सरितं सर एव वा ।
सत्यं सत्यं पुनः सत्यं कथितं तव भामिनि ॥ १०३.१६८ ॥
एवं ज्ञात्वा तु सा सर्वमुपवासकृतक्षणा ।
सपत्नीको गतस्तत्र सङ्गमे वरवर्णिनि ॥ १०३.१६९ ॥
स्नात्वा तत्र जले रम्ये नत्वा देवं तु भास्करम् ।
स्नापयामास देवेशं शङ्करं चोमया सह ॥ १०३.१७० ॥
पञ्चगव्यघृतक्षीरैर्दधिक्षौद्रघृतैर्जलैः ।
गन्धमाल्यादिधूपैश्च नैवेद्यैश्च सुशोभनैः ॥ १०३.१७१ ॥
पूज्य त्रयीमयं लिङ्गं देवीं कात्यायनीं शुभाम् ।
रात्रौ जागरणं कृत्वा पत्यासि पतिव्रता ॥ १०३.१७२ ॥
ततः प्रभाते विमले द्विजान्सम्पूज्य यत्नतः ।
गोदानेन हिरण्येन वस्त्रेणान्नेन भारत ॥ १०३.१७३ ॥
गोविन्दः पूजयामास स्वशक्त्या ब्राह्मणाञ्छुभान् ।
मुक्तपापो गृहायातः स्वभार्यासहितो नृप ॥ १०३.१७४ ॥

एवं यः शृणुते भक्त्या गोविन्दाख्यानमुत्तमम् ।
पठते परया भक्त्या भ्रूणहत्या प्रणश्यति ॥ १०३.१७५ ॥
क्रीडते शांकरे लोके यावदाभूतसम्प्लवम् ।
यश्चैवाश्वयुजे मासि चैत्रे वा नृपसत्तम ॥ १०३.१७६ ॥
सप्तम्यां च सिते पक्षे सोपवासो जितेन्द्रियः ।
सात्त्विकीं वासनां कृत्वा यो वसेच्छिवमन्दिरे ॥ १०३.१७७ ॥
ध्यायमानो विरूपाक्षं त्रिशूलकरसंस्थितम् ।
कंसासुरनिहन्तारं शङ्खचक्रगदाधरम् ॥ १०३.१७८ ॥
पक्षिराजसमारूढं त्रैलोक्यवरदायकम् ।
पितामहं ततो ध्यायेद्धंसस्थं चतुराननम् ॥ १०३.१७९ ॥
सर्गप्रदं समस्तस्य कमलाकरशोभितम् ।
यो ह्येवं वसते तत्र त्रियमे स्थान उत्तमे ॥ १०३.१८० ॥
ततः प्रभाते विमले ह्यष्टम्यां च नराधिप ।
ब्राह्मणान् पूजयेद्भक्त्या सर्वदोषविवर्जितान् ॥ १०३.१८१ ॥
सर्वावयवसम्पूर्णान्सर्वशास्त्रविशारदान् ।
वेदाभ्यासरतान्नित्यं स्वदारनिरतान्सदा ॥ १०३.१८२ ॥
श्राद्धे दाने व्रते योग्यान् ब्राह्मणान् पाण्डुनन्दन ।
प्रेतानां पूजनं तत्र देवपूर्वं समारभेत् ॥ १०३.१८३ ॥
प्रेतत्वान्मुच्यते शीघ्रमेरण्ड्यां पिण्डतर्पणैः ।
दानानि तत्र देयानि ह्यन्नमुख्यानि सर्वदा ॥ १०३.१८४ ॥
हिरण्यभूमिकन्याश्च धूर्वाहौ शुभलक्षणौ ।
सीरेण सहितौ पार्थ धान्यं द्रोणकसंख्यया ॥ १०३.१८५ ॥
अलंकृतां सवत्सां च क्षीरिणीं तरुणीं सिताम् ।
रक्तां वा कृष्णवर्णां वा पाटलां कपिलां तथा ॥ १०३.१८६ ॥
कांस्यदोहनसंयुक्तां रुक्मखुरविभूषणाम् ।
स्वर्णशृङ्गीं सवत्सां च ब्राह्मणायोपपादयेत् ॥ १०३.१८७ ॥
प्रीयतां मे जगन्नाथा हरकृष्णपितामहाः ।
संसाररक्षणी देवी सुरभी मां समुद्धरेत् ॥ १०३.१८८ ॥
पुत्रार्थं याः स्त्रियः पार्थ ह्येरण्डीसङ्गमे नृप ।
स्नाप्यन्ते रुद्रसूक्तैश्च चतुर्वेदोद्भवैस्तथा ॥ १०३.१८९ ॥
चतुर्भिर्ब्राह्मणैः शस्तं द्वाभ्यां योग्यैश्च कारयेत् ।
एकेन सार्द्रकुम्भेन दाम्पत्यमभिषेचयेत् ॥ १०३.१९० ॥

दैवज्ञेनैव चैकेन अथवा सामगेन वा ।
पञ्चरत्नसमायुक्तं कुम्भे तत्रैव कारयेत् ॥ १०३.१९१ ॥
गन्धतोयसमायुक्तं सर्वौषधिविमिश्रितम् ।
आम्रपल्लवसंयुक्तमश्वत्थमधुकं तथा ॥ १०३.१९२ ॥
गुण्ठितं सितवस्त्रेण सितचन्दनचर्चितम् ।
सितपुष्पैस्तु संछन्नं सिद्धार्थकृतमध्यमम् ॥ १०३.१९३ ॥
कांस्यपात्रे तु संस्थाप्य पुत्रार्थी देशिकोत्तमः ।
अङ्गलग्नं तु यद्वस्त्रं कटकाभरणं तथा ॥ १०३.१९४ ॥
तत्सर्वं मण्डले त्याज्यं सिद्ध्यर्थं चात्मनस्तदा ।
प्रणम्य भास्करं पश्चादाचार्यं रुद्ररूपिणम् ॥ १०३.१९५ ॥
मधुरं च ततोऽश्नीयाद्देव्या भुवन उत्तमे ।
फलदानं च विप्राय छत्रं ताम्बूलमेव च ॥ १०३.१९६ ॥
उपानहौ च यानं च स भवेद्दुःखवर्जितः ।
भास्करे क्रीडते लोके यावदाभूतसम्प्लवम् ॥ १०३.१९७ ॥
दानं कोटिगुणं सर्वं शुभं वा यदि वाशुभम् ।
यथा नदीनदाः सर्वे सागरे यान्ति संक्षयम् ॥ १०३.१९८ ॥
एवं पापानि नश्यन्ति ह्येरण्डीसङ्गमे नृणाम् ।
समन्ताच्छस्त्रपातेन ह्येरण्डीसङ्गमे नृप ॥ १०३.१९९ ॥
भ्रूणहत्यासमं पापं नश्यते शङ्करोऽब्रवीत् ।
प्राणत्यागं च यो भक्त्या जातवेदसि कारयेत् ॥ १०३.२०० ॥
अनाशकं नृपश्रेष्ठ जले वा तदनन्तरम् ।
पञ्चसाहस्रिकं मानं वर्षाणां जातवेदसि ॥ १०३.२०१ ॥
जले त्रीणि सहस्राण्यनाशके षष्टिं भुञ्जते ।
काका बकाः कपोताश्च ह्युलूकाः पशवस्तथा ॥ १०३.२०२ ॥
संगमोदकसंस्पृष्टास्ते यान्ति परमां गतिम् ।
वृक्षाश्च तत्पदं ज्ञात्वा यां गतिं यान्ति योगिनः ॥ १०३.२०३ ॥
एरण्डिका मया देवी दृष्टो मे मन्मथेश्वरः ।
किं समर्थो यमो रुष्टो भद्रो भद्राणि पश्यति ॥ १०३.२०४ ॥
मृत्तिकां सङ्गमोद्भूतां ये च गुण्ठन्ति नित्यशः ।
भ्रूणहत्यादिपापानि नश्यन्ते नात्र संशयः ॥ १०३.२०५ ॥
एरण्डीसङ्गमे मर्त्यो लुण्ठ्यमानो नराधिप ।
सर्वपापैर्विनिर्मुक्तः पदं गच्छत्यनामयम् ॥ १०३.२०६ ॥

एरण्ड्याः सङ्गमं मर्त्याः कीर्तयन्त्याश्रमस्थिताः ।
विमुक्तपापा जायन्ते सत्यं शङ्करभाषितम् ॥ १०३.२०७ ॥
एरण्डीपादपाग्रैस्तु दृष्टैः पापं व्यपोहति ॥ १०३.२०८ ॥
तीर्थाख्यानमिदं पुण्यं ये पठिष्यन्ति मानवाः ।
शृण्वन्ति चापरे भक्त्या मुक्तपापा भवन्ति ते ॥ १०३.२०९ ॥
एतत्ते सर्वमाख्यातमेरण्डीसङ्गमं नृप ।
भूयश्चान्यत्प्रवक्ष्यामि सर्वपापक्षयंकरम् ॥ १०३.२१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे एरण्डीसङ्गमतीर्थफलमाहात्म्यवर्णनं नाम त्र्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०४



अध्याय १०४

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपालं सौवर्णशिलमुत्तमम् ।
प्रख्यातमुत्तरे कूले सर्वपापक्षयंकरम् ॥ १०४.१ ॥
समन्ताच्छतपातेन मुनिसङ्घैः पुरा कृतम् ।
रेवायां दुर्लभं स्थानं सङ्गमस्य समीपतः ॥ १०४.२ ॥
विभक्तं हस्तमात्रं च पुण्यक्षेत्रं नराधिप ।
सुवर्णशिलके स्नात्वा पूजयित्वा महेश्वरम् ॥ १०४.३ ॥
नत्वा तु भास्करं देवं होतव्यं च हुताशने ।
बिल्वेनाज्यविमिश्रेण बिल्वपत्रैरथापि वा ॥ १०४.४ ॥
प्रीयतां मे जगन्नाथो व्याधिर्नश्यतु मे ध्रुवम् ।
द्विजाय काञ्चने दत्ते यत्फलं तच्छृणुष्व मे ॥ १०४.५ ॥
बहुस्वर्णस्य यत्प्रोक्तं यागस्य फलमुत्तमम् ।
तथासौ लभते सर्वं काञ्चनं यः प्रयच्छति ॥ १०४.६ ॥
तेन दानेन पूतात्मा मृतः स्वर्गमवाप्नुयात् ।
रुद्रस्यानुचरस्तावद्यावदिन्द्राश्चतुर्दश ॥ १०४.७ ॥
ततः स्वर्गावतीर्णस्तु जायते विशदे कुले ।
धनधान्यसमोपेतः पुनः स्मरति तज्जलम् ॥ १०४.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सुवर्णशिलातीर्थमाहात्म्यवर्णनं नाम चतुरधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०५



अध्याय १०५

श्रीमार्कण्डेय उवाच -
करञ्जाख्यं ततो गच्छेत्सोपवासो जितेन्द्रियः ।
तत्र स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥ १०५.१ ॥
अर्चयित्वा महादेवं दत्त्वा दानं तु भक्तितः ।
सुवर्णं रजतं वापि मणिमौक्तिकविद्रुमान् ॥ १०५.२ ॥
पादुकोपानहौ छत्रं शय्यां प्रावरणानि च ।
कोटिकोटिगुणं सर्वं जायते नात्र संशयः ॥ १०५.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे करञ्जतीर्थमाहात्म्यवर्णनं नाम पञ्चाधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०६



अध्याय १०६

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तीर्थं परमशोभनम् ।
सौभाग्यकरणं दिव्यं नरनारीमनोरमम् ॥ १०६.१ ॥
तत्र या दुर्भगा नारी नरो वा नृपसत्तम ।
स्नात्वार्चयेदुमारुद्रौ सौभाग्यं तस्य जायते ॥ १०६.२ ॥
तृतीयायामहोरात्रं सोपवासो जितेन्द्रियः ।
निमन्त्रयेद्द्विजं भक्त्या सपत्नीकं सुरूपिणम् ॥ १०६.३ ॥
गन्धमाल्यैरलंकृत्य वस्त्रधूपादिवासितम् ।
भोजयेत्पायसान्नेन कृसरेणाथ भक्तितः ॥ १०६.४ ॥
भोजयित्वा यथान्यायं प्रदक्षिणमुदाहरेत् ।
प्रीयतां मे महादेवः सपत्नीको वृषध्वजः ॥ १०६.५ ॥
यथा ते देवदेवेश न वियोगः कदाचन ।
ममापि करुणां कृत्वा तथास्त्विवति विचिन्तयेत् ॥ १०६.६ ॥
एवं कृते ततस्तस्य यत्पुण्यं समुदाहृतम् ।
तत्ते सर्वं प्रवक्ष्यामि यथा देवेन भाषितम् ॥ १०६.७ ॥
दौर्भाग्यं दुर्गतिश्चैव दारिद्र्यं शोकबन्धनम् ।
वन्ध्यत्वं सप्तजन्मानि जायते न युधिष्ठिर ॥ १०६.८ ॥
ज्येष्ठमासे सिते पक्षे तृतीयायां विशेषतः ।
तत्र गत्वा तु यो भक्त्या पञ्चाग्निं साधयेत्ततः ॥ १०६.९ ॥
सोऽपि पापैरशेषैस्तु मुच्यते नात्र संशयः ।
गुग्गुलं दहते यस्तु द्विधा चित्तविवर्जितः ॥ १०६.१० ॥
शरीरं भेदयेद्यस्तु गौर्याश्चैव समीपतः ।
तस्मिन्कर्मप्रविष्टस्य उत्क्रान्तिर्जायते यदि ॥ १०६.११ ॥
देहपाते व्रजेत्स्वर्गमित्येवं शङ्करोऽब्रवीत् ।

सितरक्तैस्तथा पीतैर्वस्त्रैश्च विविधैः शुभैः ॥ १०६.१२ ॥
ब्राह्मणीं ब्राह्मणं चैव पूजयित्वा यथाविधि ।
पुष्पैर्नानाविधैश्चैव गन्धधूपैः सुशोभनैः ॥ १०६.१३ ॥
कण्ठसूत्रकसिन्दूरैः कुङ्कुमेन विलेपयेत् ।
कल्पयेत स्त्रियं गौरीं ब्राह्मणं शिवरूपिणम् ॥ १०६.१४ ॥
तेषां तद्रूपकं कृत्वा दानमुत्सृज्यते ततः ।
कङ्कणं कर्णवेष्टं च कण्ठिकां मुद्रिकां तथा ॥ १०६.१५ ॥
सप्तधान्यं तथा चैव भोजनं नृपसत्तम ।
अन्यान्यपि च दानानि तस्मिंस्तीर्थे ददाति यः ॥ १०६.१६ ॥
सर्वदानैश्च यत्पुण्यं प्राप्नुयान्नात्र संशयः ।
सहस्रगुणितं सर्वं नात्र कार्या विचारणा ॥ १०६.१७ ॥
शङ्करेण समं तस्माद्भोगं भुङ्क्ते ह्यनुत्तमम् ।
सौभाग्यं तस्य विपुलं जायते नात्र संशयः ॥ १०६.१८ ॥
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
राजेन्द्र कामदं तीर्थं नर्मदायां व्यवस्थितम् ॥ १०६.१९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कामदतीर्थमाहात्म्यवर्णनं नाम षडुत्तरशततमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०७



अध्याय १०७

श्रीमार्कण्डेय उवाच -
ततो गच्छेत राजेन्द्र भण्डारीतीर्थमुत्तमम् ।
दरिद्रच्छेदकरणं युगान्येकोनविंशतिः ॥ १०७.१ ॥
धनदेन तपस्तप्त्वा प्रसन्ने पद्मसम्भवे ।
तत्रैव स्वल्पदानेन प्राप्तं वित्तस्य रक्षणम् ॥ १०७.२ ॥
तत्र गत्वा तु यो भक्त्या स्नात्वा वित्तं प्रयच्छति ।
तस्य वित्तपरिच्छेदो न कदाचिद्भविष्यति ॥ १०७.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भण्डारीतीर्थमाहात्म्यवर्णनं नाम सप्तोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०८



अध्याय १०८

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल रोहिणीतीर्थमुत्तमम् ।
विख्यातं त्रिषु लोकेषु सर्वपापहरं परम् ॥ १०८.१ ॥

युधिष्ठिर उवाच -
रोहिणीतीर्थमाहात्म्यं सर्वपापप्रणाशनम् ।
श्रोतुमिच्छामि तत्त्वेन तन्मे त्वं वक्तुमर्हसि ॥ १०८.२ ॥

श्रीमार्कण्डेय उवाच -
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
उदधौ च शयानस्य देवदेवस्य चक्रिणः ॥ १०८.३ ॥
नाभौ समुत्थितं पद्मं रविमण्डलसन्निभम् ।
कर्णिकाकेसरोपेतं पत्रैश्च समलंकृतम् ॥ १०८.४ ॥
तत्र ब्रह्मा समुत्पन्नश्चतुर्वदनपङ्कजः ।
किं करोमीति देवेश आज्ञा मे दीयतां प्रभो ॥ १०८.५ ॥
एवमुक्तस्तु देवेशः शङ्खचक्रगदाधरः ।
उवाच मधुरां वाणीं तदा देवं पितामहम् ॥ १०८.६ ॥
सरस्वत्यां महाबाहो लोकं कुरु ममाज्ञया ।
भूतग्राममशेषस्य उत्पादनविधिक्षयम् ॥ १०८.७ ॥
एतच्छ्रुतं तु वचनं पद्मनाभस्य भारत ।
चिन्तयामास भगवान्सप्तर्षीन्हितकाम्यया ॥ १०८.८ ॥
क्रमात्ते चिन्तिताः प्राज्ञाः पुलस्त्यः पुलहः क्रतुः ।
प्राचेतसो वसिष्ठश्च भृगुर्नारद एव च ॥ १०८.९ ॥
यज्ञे प्राचेतसो दक्षो महातेजाः प्रजापतिः ।

दक्षस्यापि तथा जाताः पञ्चाशद्दुहितरोऽनघ ॥ १०८.१० ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
तथैव स महाभागः सप्तविंशतिमिन्दवे ॥ १०८.११ ॥
रोहिणीनाम या तासां मध्ये तस्य नराधिप ।
अनिष्टा सर्वनारीणां भर्तुश्चैव विशेषतः ॥ १०८.१२ ॥
ततः सा परमं कृत्वा वैराग्यं नृपसत्तम ।
आगत्य नर्मदातीरे चचार विपुलं तपः ॥ १०८.१३ ॥
एकरात्रैस्त्रिरात्रैश्च षड्द्वादशभिरेव च ।
पक्षमासोपवासैश्च कर्शयन्ति कलेवरम् ॥ १०८.१४ ॥
आराधयन्ती सततं महिषासुरनाशिनीं ।
देवीं भगवतीं तात सर्वार्तिविनिवारणीम् ॥ १०८.१५ ॥
स्नात्वा स्नात्वा जले नित्यं नर्मदायाः शुचिस्मिता ।
ततस्तुष्टा महाभागा देवी नारायणी नृप ॥ १०८.१६ ॥
प्रसन्ना ते महाभागे व्रतेन नियमेन च ।
एतच्छ्रुत्वा तु वचनं रोहिणी शशिनः प्रिया ॥ १०८.१७ ॥
यथा भवामि न चिरात्तथा भवतु मानदे ।
एवमस्त्विति सा चोक्त्वा भवानी भक्तवत्सला ॥ १०८.१८ ॥
स्तूयमाना मुनिगणैस्तत्रैवान्तरधीयत ।
तदाप्रभृति तत्तीर्थं रोहिणी शशिनः प्रिया ॥ १०८.१९ ॥
संजाता सर्वकालं तु वल्लभा नृपसत्तम ।
तत्र तीर्थे तु या नारी नरो वा स्नानि भक्तितः ॥ १०८.२० ॥
वल्लभा जायते सा तु भर्तुर्वै रोहिणी यथा ।
तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करोति वै ॥ १०८.२१ ॥
सप्तजन्मानि दाम्पत्यवियोगो न भवेत्क्वचित् ॥ १०८.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रोहिणीसोमनाथतीर्थमाहात्म्यवर्णनं नामाष्टोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १०९



अध्याय १०९

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल चक्रतीर्थमनुत्तमम् ।
सेनापुरमितिख्यातं सर्वपापक्षयंकरम् ॥ १०९.१ ॥
सैनापत्याभिषेकाय देवदेवेन चक्रिणा ।
आनीतश्च महासेनो देवैः सेन्द्रपुरोगमैः ॥ १०९.२ ॥
दानवानां वधार्थाय जयाय च दिवौकसाम् ।
भूमिदानेन विप्रेन्द्रांस्तर्पयित्वा यथाविधि ॥ १०९.३ ॥
शङ्खभेरीनिनादैश्च पटहानां च निस्वनैः ।
वीणावेणुमृदङ्गैश्च झल्लरीस्वरमङ्गलैः ॥ १०९.४ ॥
ततः कृत्वा स्वनं घोरं दानवो बलदर्पितः ।
रुरुर्नाम विघातार्थमभिषेकस्य चागतः ॥ १०९.५ ॥
हस्त्यश्वरथपत्त्योघैः पूरयन्वै दिशो दश ।
तत्र तेन महद्युद्धं प्रवृत्तं किल भारत ॥ १०९.६ ॥
शक्त्यृष्टिपाशमुशलैः खड्गैस्तोमरटङ्कनैः ।
भल्लैः कर्णिकनाराचैः कबन्धपटसंकुलैः ॥ १०९.७ ॥
ततस्तु तां शत्रुबलस्य सेनां क्षणेन चापन्च्युतबाणघातैः ।
विध्वस्तहस्त्यश्वरथान्महात्मा जग्राह चक्रं रिपुसङ्घनाशनः ॥ १०९.८ ॥
ज्वलच्च चक्रं निशितं भयंकरं सुरासुराणां च सुदर्शनं रणे ।
चकर्त दैत्यस्य शिरस्तदानीं करात्प्रमुक्तं मधुघातिनश्च तत् ॥ १०९.९ ॥
तं दृष्ट्वा सहसा विघ्नमभिषेके षडाननः ।
त्यक्त्वा तु तत्र संस्थानं चचार विपुलं तपः ॥ १०९.१० ॥
मुक्तं चक्रं विनाशाय हरिणा लोकधारिणा ।
द्विदलं दानवं कृत्वा पपात विमले जले ॥ १०९.११ ॥
तदा प्रभृति तत्तीर्थं चक्रतीर्थमिति श्रुतम् ।

सर्वपापविनाशाय निर्मितं विश्वमूर्तिना ॥ १०९.१२ ॥
चक्रतीर्थे तु यः स्नात्वा पूजयेद्देवमच्युतम् ।
पुण्डरीकस्य यज्ञस्य फलमाप्नोति मानवः ॥ १०९.१३ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेद्ब्राह्मणाञ्छुभान् ।
शान्तदान्तजितक्रोधान्स लभेत्कोटिजं फलम् ॥ १०९.१४ ॥
तत्र तीर्थे तु यो भक्त्या त्यजते देहमात्मनः ।
विष्णुलोकं मृतो याति जयशब्दादिमङ्गलैः ॥ १०९.१५ ॥
क्रीडयित्वा यथाकामं देवगन्धर्वपूजितः ।
इहागत्य च भूयोऽपि जायते विपुले कुले ॥ १०९.१६ ॥
एतत्पुण्यं पापहरं धन्यं दुःखप्रणाशनम् ।
कथितं ते महाभाग भूयश्चान्यच्छृणुष्व मे ॥ १०९.१७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सेनापुरे चक्रतीर्थमाहात्म्यवर्णनं नाम नवोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११०



अध्याय ११०

श्रीमार्कण्डेय उवाच -
धौतपापं ततो गच्छेन्महापातकनाशनम् ।
समीपे चक्रतीर्थस्य विष्णुना निर्मितं पुरा ॥ ११०.१ ॥
निहतैर्दानवैर्घोरैर्देवदेवो जनार्दनः ।
तत्पापस्य विनाशार्थं दानवान्तोद्भवस्य च ॥ ११०.२ ॥
तत्र तीर्थे जितक्रोधश्चचार विपुलं तपः ।
दुश्चरं मौनमास्थाय ह्यशक्यं देवदानवैः ॥ ११०.३ ॥
स्नात्वा दत्त्वा द्विजातिभ्यो दानानि विविधानि च ।
तत्क्षणात्सुपापस्तु गतस्तद्वैष्णवं पदम् ॥ ११०.४ ॥
एवं युक्तस्तु यस्तत्र पापं कृत्वा सुदारुणम् ।
स्नात्वा जप्त्वा विधानेन मुच्यते सर्वपातकैः ॥ ११०.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनं नाम दशोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १११

https://sa.wikisource.org/s/fm8
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १११

श्रीमार्कण्डेय उवाच -
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ।
स्कन्देन निर्मितं पूर्वं तपः कृत्वा सुदारुणम् ॥ १११.१ ॥

युधिष्ठिर उवाच -
स्कन्दस्य चरितं सर्वमाजन्म द्विजसत्तम ।
तीर्थस्य च विधिं पुण्यं कथयस्व यथार्थतः ॥ १११.२ ॥

श्रीमार्कण्डेय उवाच -
देवदेवेन वै तप्तं तपः पूर्वं युधिष्ठिर ।
विज्ञप्तेन सुरैः सर्वैरुमादेवी विवाहिता ॥ १११.३ ॥
नास्ति सेनापतिः कश्चिद्देवानां सुरसत्तम ।
नीयन्ते दानवैर्घोरैः सर्वे देवाः सवासवाः ॥ १११.४ ॥
यथा निशा विना चन्द्रं दिवसो भास्करं विना ।
न शोभते मुहूर्तं वै तथा सेना विनायका ॥ १११.५ ॥
एवं ज्ञात्वा महादेव परया दयया विभो ।
सेनानीर्दीयतां कश्चित्त्रिषु लोकेषु विश्रुतः ॥ १११.६ ॥
एतच्छ्रुत्वा शुभं वाक्यं देवानां परमेश्वरः ।
कामयान उमां देवीं सस्मार मनसा स्मरम् ॥ १११.७ ॥
तेन मूर्छितसर्वाङ्गः कामरूपो जगद्गुरुः ।
कामयामास रुद्राणीं दिव्यं वर्षशतं किल ॥ १११.८ ॥
देवराजस्ततो ज्ञात्वा महामैथुनगं हरम् ।
संमन्त्र्य दैवतैः सार्द्धं प्रैषयज्जातवेदसम् ॥ १११.९ ॥
तेन गत्वा महादेवः परमानन्दसंस्थितः ।

सहसा तेन दृष्टोऽसौ हाहेत्युक्त्वा समुत्थितः ॥ १११.१० ॥
ततः क्रुद्धा महादेवी शापवाचमुवाच ह ।
वेपमाना महाराज शृणु यत्ते वदाम्यहम् ॥ १११.११ ॥
अहं यस्मात्सुरैः सर्वैर्याचिता पुत्रजन्मनि ।
कृता रतिश्च विफला संप्रेष्य जातवेदसम् ॥ १११.१२ ॥
तस्मात्सर्वे पुत्रहीना भविष्यन्ति न संशयः ।
हरेणोक्तस्ततो वह्निरस्माकं बीजमावह ॥ १११.१३ ॥
यथा भवति लोकेषु तथा त्वं कर्तुमर्हसि ।
मम तेजस्त्वया शक्यं गृहीतुं सुरसत्तम ।
देवकार्यार्थसिद्ध्यर्थं नान्यः शक्तो जगत्त्रये ॥ १११.१४ ॥

अग्निरुवाच -
तेजसस्तव मे देव का शक्तिर्धारणे विभो ।
करोति भस्मसात्सर्वं त्रैलोक्यं सचराचरम् ॥ १११.१५ ॥

ईश्वर उवाच -
उदरस्थेन बीजेन यदि ते जायते रुजा ।
तदा क्षिपस्व तत्तेजो गङ्गातोये हुताशन ॥ १११.१६ ॥
एवमुक्त्वा महादेवोऽमोघं बीजमुत्तमम् ।
हव्यवाहमुखे सर्वं प्रक्षिप्यान्तरधीयत ॥ १११.१७ ॥
गते चादर्शनं देवे दह्यमानो हुताशनः ।
गङ्गातोये विनिक्षिप्य जगाम स्वंनिवेशनम् ॥ १११.१८ ॥
असहन्ती तु तत्तेजो गङ्गापि सरितां वरा ।
शरस्तम्बे विनिक्षिप्य जगामाशु यथागतम् ॥ १११.१९ ॥
तत्र जातं तु तद्दृष्ट्वा सर्वे देवाः सवासवाः ।
कृत्तिकां प्रेषयामासुः स्तन्यं पाययितुं तदा ॥ १११.२० ॥
दृष्ट्वा ता आगताः सर्वा गङ्गागर्भे महामतेः ।
षण्मुखैः षण्मुखो भूत्वा पिपासुरपिबत्स्तनम् ॥ १११.२१ ॥
जातकर्मादिसंस्कारान्वेदोक्तान्पद्मसम्भवः ।
चकार सर्वान्दाजेन्द्र विधिदृष्टेन कर्मणा ॥ १११.२२ ॥
षण्मुखात्षण्मुखो नाम कार्त्तिकेयस्तु कृत्तिकात् ।
कुमारश्च कुमारत्वाद्गङ्गागर्भोऽग्निजोऽपरः ॥ १११.२३ ॥

एवं कुमारः सम्भूतो ह्यनधीत्य स वेदवित् ।
शास्त्राण्यनेकानि वेद चचार विपुलं तपः ॥ १११.२४ ॥
देवारण्येषु सर्वेषु नदीषु च नदेषु च ।
पृथिव्यां यानि तीर्थानि समुद्राद्यानि भारत ॥ १११.२५ ॥
ततः पर्याययोगेन नर्मदातटमाश्रितः ।
नर्मदादक्षिणे कूले चचार विपुलं तपः ॥ १११.२६ ॥
ऋग्यजुःसामविहितं जपञ्जाप्यमहर्निशम् ।
ध्यायमानो महादेवं शुचिर्धमनिसंततः ॥ १११.२७ ॥
ततो वर्षसहस्रान्ते पूर्णे देवो महेश्वरः ।
उमया सहितः काले तदा वचनमब्रवीत् ॥ १११.२८ ॥

ईश्वर उवाच -
अहं ते वरदस्तात गौरी माता पिता ह्यहम् ।
वरं वृणीष्व यच्चेष्टं त्रिषु लोकेषु दुर्लभम् ॥ १११.२९ ॥

षण्मुख उवाच -
यदि तुष्टो महादेव उमया सह शङ्कर ।
वृणोमि मातापितरौ नान्या गतिर्मतिर्मम ॥ १११.३० ॥
एतच्छ्रुत्वा शुभं वाक्यं पुत्रस्य वदनाच्च्युतम् ।
तथेत्युक्त्वा तु स्नेहेन प्रेम्णा तं परिषस्वजे ॥ १११.३१ ॥
ततस्तं मूर्ध्न्युपाघ्राय ह्युमयोवाच शङ्करः ॥ १११.३२ ॥

ईश्वर उवाच -
अक्षयश्चाव्ययश्चैव सेनानीस्त्वं भविष्यसि ॥ १११.३३ ॥
शिखी च ते वाहनं दिव्यरूपो दत्तो मया शक्तिधरस्य संख्ये ।
सुरासुरादींश्च जयेति चोक्त्वा जगाम कैलासवरं महात्मा ॥ १११.३४ ॥
गते चादर्शनं देवे तदा स शिखिवाहनः ।
स्थापयित्वा महादेवं जगाम सुरसन्निधौ ॥ १११.३५ ॥
तदाप्रभृति तत्तीर्थं स्कन्दतीर्थमिति श्रुतम् ।
सर्वपापहरं पुण्यं मर्त्यानां भुवि दुर्लभम् ॥ १११.३६ ॥
तत्र तीर्थे तु यो राजन्भक्त्या स्नात्वार्चयेच्छिवम् ।
गन्धमाल्याभिषेकैश्च याज्ञिकं स लभेत्फलम् ॥ १११.३७ ॥

स्कन्दतीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।
तिलमिश्रेण तोयेन तस्य पुण्यफलं शृणु ॥ १११.३८ ॥
पिण्डदानेन चैकेन विधियुक्तेन भारत ।
द्वादशाब्दानि तुष्यन्ति पितरो नात्र संशयः ॥ १११.३९ ॥
तत्र तीर्थे तु राजेन्द्र शुभं वा यादि वाशुभम् ।
इह लोके परे चैव तत्सर्वं जायतेऽक्षयम् ॥ १११.४० ॥
तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति ।
शास्त्रयुक्तेन विधिना स गच्छेच्छिवमन्दिरम् ॥ १११.४१ ॥
कल्पमेकं वसित्वा तु देवगन्धर्वपूजितः ।
अत्र भारतवर्षे तु जायते विमले कुले ॥ १११.४२ ॥
वेदवेदाङ्गतत्त्वज्ञः सर्वव्याधिविवर्जितः ।
जीवेद्वर्षशतं साग्रं पुत्रपौत्रसमन्वितः ॥ १११.४३ ॥
इदं ते कथितं राजन्स्कन्दतीर्थस्य सम्भवम् ।
धन्यं यशस्यमायुष्यं सर्वदुःखघ्नमुत्तमम् ।
सर्वपापहरं पुण्यं देवदेवेन भाषितम् ॥ १११.४४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे स्कन्दतीर्थमाहात्म्यवर्णनं नामैकादशोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११२



अध्याय ११२

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थमाङ्गिरसस्य तु ।
उत्तरे नर्मदाकूले सर्वपापविनाशनम् ॥ ११२.१ ॥
पुरासीदङ्गिरानाम ब्राह्मणो वेदपारगः ।
पुत्रहेतोर्युगस्यादौ चचार विपुलं तपः ॥ ११२.२ ॥
नित्यं त्रिषवणस्नायी जपन्देवं सनातनम् ।
पूजयंश्च महादेवं कृच्छ्रचान्द्रायणादिभिः ॥ ११२.३ ॥
द्वादशाब्दे ततः पूर्णे तुतोष परमेश्वरः ।
वरेण छन्दयामास द्विजमाङ्गिरसं वरम् ॥ ११२.४ ॥
वव्रे स तु महादेवं पुत्रं पुत्रवतां वरम् ।
वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम् ॥ ११२.५ ॥
देवानां मन्त्रिणं राजन् सर्वलोकेषु पूजितम् ।
ब्रह्मलक्ष्म्याः सदावासमक्षयं चाव्ययं सुतम् ॥ ११२.६ ॥
तथाभिलषितः पुत्रः सर्वविद्याविशारदः ।
भविष्यति न सन्देहश्चैवमुक्त्वा ययौ हरः ॥ ११२.७ ॥
वरैरङ्गिरसश्चापि बृहस्पतिरजायत ।
यथाभिलषितः पुत्रो वेदवेदाङ्गपारगः ॥ ११२.८ ॥
जाते पुत्रेऽङ्गिरास्तत्र स्थापयामास शङ्करम् ।
हृष्टतुष्टमना भूत्वा जगामोत्तरपर्वतम् ॥ ११२.९ ॥
तत्र चाङ्गिरसे तीर्थे यः स्नात्वा पूजयेच्छिवम् ।
सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ ११२.१० ॥
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
इच्छते यश्च यं कामं स तं लभति मानवः ॥ ११२.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डेऽग्निरसतीर्थमाहात्म्यवर्णनं नाम द्वादशाधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११३



अध्याय ११३

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र कोटितीर्थमनुत्तमम् ।
ऋषिकोटिर्गता तत्र परां सिद्धिमुपागता ॥ ११३.१ ॥
तत्र तीर्थे तु यः स्नात्वा भोजयेद्ब्राह्मणाञ्छुचिः ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ११३.२ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।
पूजिते तु महादेवे वाजपेयफलं लभेत् ॥ ११३.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनं नाम त्रयोदशाधिकशाततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११४



अध्याय ११४

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।
अयोनिजं महापुण्यं सर्वपापप्रणाशनम् ॥ ११४.१ ॥
अयोनिजे नरः स्नात्वा पूजयेत्परमेश्वरम् ।
पितृदेवार्चनं कृत्वा मुच्यते सर्वकिल्बिषैः ॥ ११४.२ ॥
तत्र तीर्थे तु विधिना प्राणत्यागं करोति यः ।
स कदाचिन्महाराज योनिद्वारं न पश्यति ॥ ११४.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अयोनिसम्भवतीर्थमाहात्म्यवर्णनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११५



अध्याय ११५

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज तीर्थमङ्गारकं परम् ।
रूपदं सर्वलोकानां विश्रुतं नर्मदातटे ॥ ११५.१ ॥
अङ्गारकेण राजेन्द्र पुरा तप्तं तपः किल ।
अर्बुदं च निखर्वं च प्रयुतं वर्षसंख्यया ॥ ११५.२ ॥
ततस्तुष्टो महादेवः परया कृपया नृप ।
प्रत्यक्षदर्शी भगवानुवाच क्षितिनन्दनम् ॥ ११५.३ ॥
वरदोऽस्मि महाभाग दुर्लभं त्रिदशैरपि ।
वरं दास्याम्यहं वत्स ब्रूहि यत्ते विवक्षितम् ॥ ११५.४ ॥

अङ्गारक उवाच -
तव प्रसादाद्देवेश सर्वलोकमहेश्वर ।
ग्रहमध्यगतो नित्यं विचरामि नभस्तले ॥ ११५.५ ॥
यावद्धराधरो लोके यावच्चन्द्रदिवाकरौ ।
नद्यो नदाः समुद्राश्च वरो मे चाक्षयो भवेत् ॥ ११५.६ ॥
एवमस्त्विति देवेशो दत्त्वा वरमनुत्तमम् ।
जगामाकाशमाविश्य वन्द्यमानः सुरासुरैः ॥ ११५.७ ॥
भूमिपुत्रस्ततस्तस्मिन्स्थापयामास शङ्करम् ।
गतः सुरालये लोके ग्रहभावे निवेशितः ॥ ११५.८ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
हुतहोमो जितक्रोधः सोऽश्वमेधफलं लभेत् ॥ ११५.९ ॥
चतुर्थ्यङ्गारके यस्तु स्नात्वा चाभ्यर्चयेद्ग्रहम् ।
अङ्गारकं विधानेन सप्तजन्मानि भारत ॥ ११५.१० ॥
दशयोजनविस्तीर्णे मण्डले रूपवान् भवेत् ।

तत्रैव ता मृतो जन्तुः कामतोऽकामतोऽपि वा ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ ११५.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अङ्गारकतीर्थमाहात्म्यवर्णनं नाम पञ्चदशोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११६



अध्याय ११६

मार्कण्डेय उवाच -
पाण्डुतीर्थं ततो गच्छेत्सर्वपापविनाशनम् ।
तत्र स्नात्वा नरो राजन्मुच्यते सर्वकिल्बिषैः ॥ ११६.१ ॥
तत्र तीर्थे तु यः स्नात्वा दापयेत्काञ्चनं शुचिः ।
भ्रूणहत्यादिपापानि नश्यन्ते नात्र संशयः ॥ ११६.२ ॥
पिण्डोदकप्रदानेन वाजपेयफलं लभेत् ।
पितरः पितामहाश्च नृत्यन्ते च प्रहर्षिताः ॥ ११६.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पाण्डुतीर्थमाहात्म्यवर्णनं नाम षोडशाधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११७

https://sa.wikisource.org/s/fme
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ११७

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र पुण्यं तीर्थं त्रिलोचनम् ।
तत्र तिष्ठति देवेशः सर्वलोकनमस्कृतः ॥ ११७.१ ॥
तत्र तीर्थे तु यः स्नात्वा भक्त्यार्चयति शङ्करम् ।
रुद्रस्य भवनं याति मृतो नास्त्यत्र संशयः ॥ ११७.२ ॥
कल्पक्षये ततः पूर्णे क्रीडित्वा च इहागतः ।
आवियोगेन तिष्ठेत पूज्यमानः शतं समाः ॥ ११७.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे त्रिलोचनतीर्थमाहात्म्यवर्णनं नाम सप्तदशोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११८



श्रीमार्कण्डेय उवाच -
ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।
इन्द्रतीर्थेतिविख्यातं नर्मदादक्षिणे तटे ॥ ११८.१ ॥

युधिष्ठिर उवाच -
नर्मदादक्षिणे कूले इन्द्रतीर्थं कथं भवेत् ।
श्रोतुमिच्छामि विप्रेन्द्र ह्यादिमध्यान्तविस्तरैः ॥ ११८.२ ॥
एतच्छ्रुत्वा तु वचनं धर्मपुत्रस्य धीमतः ।
कथयामास तद्वृत्तमितिहासं पुरातनम् ॥ ११८.३ ॥

श्रीमार्कण्डेय उवाच -
विश्वासयित्वा सुचिरं धर्मशत्रुं महाबलम् ।
वृत्रं जित्वाथ हत्वा तु गच्छमानं शचीपतिम् ॥ ११८.४ ॥
निष्क्राममाणं मार्गेण ब्रह्महत्या दुरासदा ।
अहोरात्रमविश्रान्ता जगाम भुवनत्रयम् ॥ ११८.५ ॥
यतोयतो ब्रह्महणं याति यानेन शोभनम् ।
दिशो भागं सुरैः सार्द्धं ततो हत्या न मुञ्चति ॥ ११८.६ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वगनागमः ।
पातकानां गतिर्दृष्टा न तु विश्वासघातिनाम् ॥ ११८.७ ॥
पापकर्ममुखं दृष्ट्वा स्नानदानैर्विशुध्यति ।
नारी वा पुरुषो वापि नैव विश्वासघातिनः ॥ ११८.८ ॥
एवमादीनि चान्यानि श्रुत्वा वाक्यानि देवराट् ।
वचनं तद्विधैरुक्तं विषादमगमत्परम् ॥ ११८.९ ॥
त्यक्त्वा राज्यं सुरैः सार्धं जगाम तप उत्तमम् ।
पुत्रदारगृहं राज्यं वसूनि विविधानि च ॥ ११८.१० ॥
फलान्येतानि धर्मस्य शोभयन्ति जनेश्वरम् ।

फलं धर्मस्य भुञ्जेति सुहृत्स्वजनबान्धवाः ॥ ११८.११ ॥
पश्यतां सर्वमेतेषां पापमेकेन भुज्यते ।
परं हि सुखमुत्सृज्य कर्शयन्वै कलेवरम् ॥ ११८.१२ ॥
देवराजो जगामासौ तीर्थान्यायतनानि च ।
गङ्गातीर्थेषु सर्वेषु यामुनेषु तथैव च ॥ ११८.१३ ॥
सारस्वतेषु सर्वेषु सामुद्रेषु पृथक्पृथक् ।
नदीषु देवखातेषु तडागेषु सरःसु च ॥ ११८.१४ ॥
पापं न मुञ्चते सर्वे पश्चाद्देवसमागमे ।
रेवाप्रभवतीर्थेषु कूलयोरुभयोरपि ॥ ११८.१५ ॥
पूजयन्वै महादेवं स्कन्दतीर्थं समासदत् ।
तव स्थित्वोपवासैश्च कृच्छ्रचान्द्रायणादिभिः ॥ ११८.१६ ॥
कर्शयन्वै स्वकं देहं न लेभे शर्म वै क्वचित् ।
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥ ११८.१७ ॥
आर्द्रवासास्तु हेमन्ते चचार विपुलं तपः ।
एवं तु तपतस्तस्य इन्द्रस्य विदितात्मनः ॥ ११८.१८ ॥
वत्सराणां सहस्राणि गतानि दश भारत ।
ततस्त्वेकादशे प्राप्ते वर्षे तु नृपसत्तम ॥ ११८.१९ ॥
सहसा भगवान्देवस्तु तुतोष परमेश्वरः ।
तथा ब्रह्मर्षयः सिद्धा ब्रह्मविष्णुपुरोगमाः ॥ ११८.२० ॥
तत्राजग्मुः सुराः सर्वे यत्र देवः शतक्रतुः ।
दृष्ट्वा समागतान् देवानृषींश्चैव महामतिः ॥ ११८.२१ ॥
उवाच प्रणतो भूत्वा सर्वदेवपुरोहितः ।
विदितं सर्वमेतेषां यथा वृत्रवधः कृतः ॥ ११८.२२ ॥
युष्माकं चाज्ञया पूर्वं ब्रह्मविष्णुमहेश्वराः ।
तथाप्येवं ब्रह्महणं मत्वा पापस्य कारिणम् ॥ ११८.२३ ॥
भ्रमन्तं सर्वतीर्थेषु ब्रह्महत्या न मुञ्चति ।
न नन्दति जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ११८.२४ ॥
यथा विहीनचन्द्रार्कं तथा राज्यमनायकम् ।
तस्मात्सर्वे सुरश्रेष्ठा विज्ञाप्यं मम सम्प्रति ॥ ११८.२५ ॥
कुर्वन्तु शक्रं निर्दोषं तथा सर्वे महर्षयः ।
बृहस्पतिमुखोद्गीर्णं श्रुत्वा तद्वचनं शुभम् ॥ ११८.२६ ॥
ततः प्रोवाच भगवान्ब्रह्मा लोकपितामहः ।

एतत्पापं महाघोरं ब्रह्महत्यासमुद्भवम् ॥ ११८.२७ ॥
दैवतेभ्योऽथ भूतेभ्यश्चतुर्भागं क्षिपाम्यहम् ।
एवं मुक्त्वा क्षिपच्चैनो जलोपरि महामतिः ॥ ११८.२८ ॥
अवगाह्य ततः पेया आपो वै नान्यथा बुधैः ।
धरायामक्षिपद्भागं द्वितीयं पद्मसंभवः ॥ ११८.२९ ॥
अभक्ष्या तेन संजाता सदाकालं वसुंधरा ।
तदार्धमर्द्धं नारीणां द्वितीयेऽह्नि युधिष्ठिर ॥ ११८.३० ॥
निक्षिप्य भगवान्देवः पुनरन्यज्जगाद ह ।
असंग्राह्या त्वसंग्राह्या तेन जाता रजस्वला ॥ ११८.३१ ॥
चतुर्दिनानि सा प्राज्ञैः पापस्य महतो महात् ।
चतुर्थं तु ततो भागं विभज्य परमेश्वरः ॥ ११८.३२ ॥
कृषिगोरक्ष्यवाणिज्यैः शूद्रसेवाकरे द्विजे ।
ततोऽभिनन्दयामासुः सर्वे देवा महर्षयः ॥ ११८.३३ ॥
देवेन्द्रं वाग्भिरिष्टाभिर्नर्मदाजलसंस्थितम् ।
वरेण छन्दयामास ततस्तुष्टो महेश्वरः ॥ ११८.३४ ॥
वरं दास्यामि देवेश वरं वृणु यथेप्सितम् ॥ ११८.३५ ॥

इन्द्र उवाच -
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
अत्र संस्थापयिष्यामि सदा संनिहितो भव ॥ ११८.३६ ॥
एवमस्त्विवति चोक्त्वा तं ब्रह्मविष्णुमहेश्वराः ।
जग्मुराकाशमाविश्य स्तूयमाना महर्षिभिः ॥ ११८.३७ ॥
गतेषु देवदेवेषु देवराजः शतक्रतुः ।
स्थापयित्वा महादेवं जगाम त्रिदशालयम् ॥ ११८.३८ ॥
इन्द्रतीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
महापातकयुक्तोऽपि मुच्यते सर्वपातकैः ॥ ११८.३९ ॥
इन्द्रतीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
सोऽश्वमेधस्य यज्ञस्य पुष्कलं फलमश्नुते ॥ ११८.४० ॥
एतत्ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ।
श्रुतमात्रेण येनैव मुच्यन्ते पातकैर्नराः ॥ ११८.४१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे इन्द्रतीर्थमाहात्म्यवर्णनं नामाष्टादशोत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः ११९

https://sa.wikisource.org/s/fmv
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय ११९

श्रीमार्कण्डेय उवाच -
ततो गच्छेतु राजेन्द्र कह्लोडीतीर्थमुत्तमम् ।
रेवायाश्चोत्तरे कूले सर्वपापविनाशनम् ॥ ११९.१ ॥
हितार्थं सर्वभूतानामृषिभिः स्थापितं पुरा ।
तपसा तु समुद्धृत्य नर्मदायां महाम्भसि ॥ ११९.२ ॥
स्नात्वा तु कपिलातीर्थे कपिलां यः प्रयच्छति ।
श्रुत्वा चाख्यानकं दिव्यं ब्राह्मणाञ्छृणु यत्फलम् ॥ ११९.३ ॥
सर्वेषामेव दानानां कपिलादानमुत्तमम् ।
ब्राह्मणान्वेषितं पूर्वमृषिदेवसमागमे ॥ ११९.४ ॥
सद्यः प्रसूतां कपिलां शोभनां यः प्रयच्छति ।
सोपवासो जितक्रोधस्तस्य पुण्यफलं शृणु ॥ ११९.५ ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
दत्ता चैव महाबाहो पृथिवी नात्र संशयः ॥ ११९.६ ॥
वाचिकं मानसं पापं कर्मणा यत्पुरा कृतम् ।
नश्यते कपिलां दत्त्वा सप्तजन्मार्जितं नृप ॥ ११९.७ ॥
भूमिदानं धनं धान्यं हस्त्यश्वकनकादिकम् ।
कपिलादानस्यैकस्य कलां नार्हन्ति षोडशीम् ॥ ११९.८ ॥
तत्र तीर्थे नरः स्नात्वा कपिलां यः प्रयच्छति ।
मृतो विष्णुपुरं याति गीयमानोऽप्सरोगणैः ॥ ११९.९ ॥
यावन्ति तस्या रोमाणि सवत्सायास्तु भारत ।
तावद्वर्षसहस्राणि स स्वर्गे क्रीडते चिरम् ॥ ११९.१० ॥
ततोऽवकीर्णकालेन त्विह मानुष्यतां गतः ।
धनधान्यसमोपेतो जायते विपुले कुले ॥ ११९.११ ॥
वेदविद्या व्रतस्नातः सर्वशास्त्रविशारदः ।

व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ११९.१२ ॥
एतत्ते सर्वमाख्यातं कल्होडीतीर्थमुत्तमम् ।
यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ११९.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कह्लोडीतीर्थमाहात्म्यवर्णनं नामैकोनविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२०



अध्याय १२०

श्रीमार्कण्डेय उवाच -
अतः परं प्रवक्ष्यामि कम्बुकेश्वरमुत्तमम् ।
हिरण्यकशिपुर्दैत्यो दानवो बलदर्पितः ॥ १२०.१ ॥
अवध्यः सर्वलोकानां त्रिषु लोकेषु विश्रुतः ।
तस्य पुत्रो महातेजाः प्रह्लादो नाम नामतः ॥ १२०.२ ॥
विष्णुप्रसादाद्भक्त्या च तस्य राज्ये प्रतिष्ठितः ।
विरोचनस्तस्य सुतस्तस्यापि बलिरेव च ॥ १२०.३ ॥
बलिपुत्रोऽभवद्बाणस्तस्मादपि च शम्बरः ।
शम्बरस्यान्वये जातः कम्बुर्नाम महासुरः ॥ १२०.४ ॥
ज्ञात्वा विष्णुमयं घोरं महद्भयमुपस्थितम् ।
दानवानां विनाशाय नान्यो हेतुः कदाचन ॥ १२०.५ ॥
स त्यक्त्वा पुत्रदारांश्च सुहृद्बन्धुपरिग्रहान् ।
चचार मौनमास्थाय तपः कम्बुर्महामतिः ॥ १२०.६ ॥
अक्षसूत्रकरो भूत्वा दण्डी मुण्डी च मेखली ।
शाकयावकभक्षश्च वल्कलाजिनसंवृतः ॥ १२०.७ ॥
स्नात्वा नित्यं धृतिपरो नर्मदाजलमाश्रितः ।
पूजयंस्तु महादेवमर्बुदं वर्षसंख्यया ॥ १२०.८ ॥
ततस्तुतोष भगवान्देवदेवो महेश्वरः ।
उवाच दानवं काले मेघगम्भीरया गिरा ॥ १२०.९ ॥
भोभोः कम्बो महाभाग तुष्टोऽहं तव सुव्रत ।
इष्टं व्रतानां परमं मौनं सर्वार्थसाधनम् ॥ १२०.१० ॥
चरितं च त्वया लोके देवदानवदुश्चरम् ।
वरं वृणीष्व भद्रं ते यत्ते मनसि रोचते ॥ १२०.११ ॥

कम्बुरुवाच -

यदि प्रसन्नो देवेश यदि देयो वरो मम ।
अक्षय्यश्चाव्ययश्चैव स्वेच्छया विचराम्यहम् ॥ १२०.१२ ॥
दैत्यदानवसङ्घानां संयुगेष्वपलायिता ।
भयं चान्यन्न विद्येत मुक्त्वा देवं गदाधरम् ॥ १२०.१३ ॥
तस्याहं संयुगे साध्यो येनोपायेन शङ्कर ।
भवामि न सदा कालं तं वदस्व वरं मम ॥ १२०.१४ ॥

ईश्वर उवाच -
मम संनिहितो यत्र त्वं भविष्यसि दानव ।
तत्र विष्णुभयं नास्ति वसात्र विगतज्वरः ॥ १२०.१५ ॥
तस्य देवाधिदेवस्य वेदगर्भस्य संयुगे ।
शङ्खचक्रधरस्येशा नाहं सर्वे सुरासुराः ॥ १२०.१६ ॥
किं पुनर्यो द्विषत्येनं लोकालोकप्रभुं हरिम् ।
स सुखी वर्तते कालं न निमेषं मतं मम ॥ १२०.१७ ॥
तस्मात्त्वं परया भक्त्या सर्वभूतहिते रतः ।
वसिष्यसि चिरं कालमित्युक्त्वादर्शनं गतः ॥ १२०.१८ ॥
गते चादर्शनं देवे तत्र तीर्थे महामतिः ।
स्थापयामास देवेशं शिवं शान्तमनामयम् ॥ १२०.१९ ॥
तस्मिंस्तीर्थे महादेवं स्थापयित्वा दिवं गतः ।
तदाप्रभृति तत्पार्थ कम्बुतीर्थमिति श्रुतम् ।
विख्यातं सर्वलोकेषु महापातकनाशनम् ॥ १२०.२० ॥
कम्बुतीर्थे नरः स्नात्वा विधिनाभ्यर्च्य भास्करम् ।
ऋग्यजुःसाममन्त्रैश्च स्तूयमानो नृपोत्तम ॥ १२०.२१ ॥
तस्य पुण्यं समुद्दिष्टं ब्राह्मणैर्वेदपारगैः ।
तत्सर्वं तु शृणुष्वाद्य ममैव गदतो नृप ॥ १२०.२२ ॥
ऋग्यजुःसामगीतेषु साङ्गोपाङ्गेषु यत्फलम् ।
तत्फलं समवाप्नोति गायत्रीमात्रमन्त्रवित् ॥ १२०.२३ ॥
तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
पूजयेद्देवमीशानं सोऽग्निष्टोमफलं लभेत् ॥ १२०.२४ ॥
अकामो वा सकामो वा तत्र तीर्थे कलेवरम् ।
यस्त्यजेन्नात्र सन्देहो रुद्रलोकं स गच्छति ॥ १२०.२५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कम्बुकेश्वरतीर्थमाहात्म्यवर्णनं नाम विंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२१



अध्याय १२१

मार्कण्डेय उवाच -
ततो गच्छेन्महीपाल चन्द्रहासमतः परम् ।
यत्र सिद्धिं परां प्राप्तः सोमराजः सुरोत्तमः ॥ १२१.१ ॥

युधिष्ठिर उवाच -
कथं सिद्धिं परां प्राप्तः सोमनाथो जगत्पतिः ।
तत्सर्वं श्रोतुमिच्छामि कथयस्व ममानघ ॥ १२१.२ ॥

श्रीमार्कण्डेय उवाच -
पुरा शप्तो मुनीन्द्रेण दक्षेण किल भारत ।
असेवनाद्धि दाराणां क्षयरोगी भविष्यसि ॥ १२१.३ ॥
उद्वाहितानां पत्नीनां ये न कुर्वन्ति सेवनम् ।
या निष्ठा जायते नृणां तां शृणुष्व नराधिप ॥ १२१.४ ॥
ऋतावृतौ हि नारीणां सेवनाज्जायते सुतः ।
सुतात्स्वर्गश्च मोक्षश्च इत्येवं श्रुतिभाषितम् ॥ १२१.५ ॥
तत्कालोचितधर्मेण वेष्टितो रौरवे पतेत् ।
तस्यास्तद्रुधिरं पापः पिबते कालमीप्सितम् ॥ १२१.६ ॥
ततोऽवतीर्णः कालेन यां यां योनिं प्रयास्यति ।
तस्यां तस्यां स दुष्टात्मा दुर्भगो जायते सदा ॥ १२१.७ ॥
नारीणां तु सदा कामोऽभ्यधिकाः परिवर्तते ।
विशेषेण ऋतौ काले पीड्यते कामसायकैः ॥ १२१.८ ॥
परिभूता हिता भर्त्रा ध्यायन्तेऽन्यं पतिं स्त्रियः ।
ततः पुत्रः समुत्पन्नो ह्यटते कुलमुत्तमम् ॥ १२१.९ ॥
स्वर्गस्थास्तेन पितरः पूर्वजास्ते पितामहाः ।

पतन्ति जातमात्रेण कुलटस्तेन चोच्यते ॥ १२१.१० ॥
तेन कर्मविपाकेन क्षयरोग्यभवच्छशी ।
त्यक्त्वा लोकं सुरेन्द्राणां मर्त्यलोकमुपागतः ॥ १२१.११ ॥
ततस्तीर्थान्यनेकानि पुण्यान्यायतनानि च ।
भ्रमन्वै नर्मदां प्राप्तः सर्वपापप्रणाशनीम् ॥ १२१.१२ ॥
उपवासं च दानानि व्रतानि नियमांस्तथा ।
चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥ १२१.१३ ॥
स्नापयित्वा महादेवं सर्वपातकनाशनम् ।
जगाम प्रभया पूर्णः स च लोकमनुत्तमम् ॥ १२१.१४ ॥
येनैव स्थापितो देवः पूज्यते वर्षसंख्यया ।
तावद्वर्षसहस्राणि रुद्रलोके स पूज्यते ॥ १२१.१५ ॥
तेन देवान्विधानोक्तान्स्थापयन्ति नरा भुवि ।
अक्षयं चाव्ययं यस्मात्कालं भुञ्जन्ति मानवाः ॥ १२१.१६ ॥
सोमतीर्थे नरः स्नात्वा पूजयेद्देवमीश्वरम् ।
स भ्राजते नरो लोके सोमवत्प्रियदर्शनः ॥ १२१.१७ ॥
चन्द्रहासे तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः ।
स्नानं समाचरेद्भक्त्या मुच्यते सर्वकिल्बिषैः ॥ १२१.१८ ॥
तत्र स्नानं च दानं च चन्द्रहासे शुभाशुभम् ।
कृतं नृपवरश्रेष्ठ सर्वं भवति चाक्षयम् ॥ १२१.१९ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
चन्द्रहासे तु ये स्नात्वा पश्यन्ति ग्रहणं नराः ॥ १२१.२० ॥
वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ।
स्नानमात्रेण राजेन्द्र तत्र तीर्थे प्रणश्यति ॥ १२१.२१ ॥
बहवस्तं न जानन्ति महामोहसमन्विताः ।
देहस्थमिव सर्वेषां परमानन्दरूपिणम् ॥ १२१.२२ ॥
पश्चिमे सागरे गत्वा सोमतीर्थे तु यत्फलम् ।
तत्समग्रमवाप्नोति चन्द्रहासे न संशयः ॥ १२१.२३ ॥
संक्रान्तौ च व्यतीपाते अयने विषुवे तथा ।
चन्द्रहासे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ १२१.२४ ॥
ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ।
चन्द्रहासं न जानन्ति ये रेवायां व्यवस्थितम् ॥ १२१.२५ ॥
चन्द्रहासे तु यः कश्चित्संन्यासं कुरुते द्विजः ।

अनिवर्तिका गतिस्तस्य सोमलोकान्न संशयः ॥ १२१.२६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सोमतीर्थमाहात्म्यवर्णनं नामैकविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२२

https://sa.wikisource.org/s/fne
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १२२

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल कोहनस्वेति विश्रुतम् ।
सर्वपापहरं पुण्यं तीर्थं मृत्युविनाशनम् ॥ १२२.१ ॥
पुरा तत्र द्विजः कश्चिद्वेदवेदाङ्गपारगः ।
पत्नीपुत्रसुहृद्वर्गैः स्वकर्मनिरतोऽवसत् ॥ १२२.२ ॥

युधिष्ठिर उवाच -

ब्राह्मणस्य तु यत्कर्म उत्पत्तिः क्षत्रियस्य तु ।
वैश्यस्यापि च शूद्रस्य तत्सर्वं कथयस्व मे ॥ १२२.३ ॥
धर्मस्यार्हस्य कामस्य मोक्षस्य च परं विधिम् ।
निखिलं ज्ञातुमिच्छामि नान्यो वेत्ता मतिर्मम ॥ १२२.४ ॥

मार्कण्डेय उवाच -

उत्पत्तिकारणं ब्रह्मा देवदेवः प्रकीर्तितः ।
प्रथमं सर्वभूतानां चराचरजगद्गुरुः ॥ १२२.५ ॥
द्विजातयो मुखाज्जाताः क्षत्रिया बाहुयन्त्रतः ।
ऊरुप्रदेशाद्वैश्यास्तु शूद्राः पादेष्वथाभवन् ॥ १२२.६ ॥
ततस्त्वन्ये पृथग्वर्णाः पृथग्धर्मान् समाचरन् ।
पर्यायेण समुत्पन्ना ह्यनुलोमविलोमतः ॥ १२२.७ ॥
तेषां धर्मं प्रवक्ष्यामि श्रुतिस्मृत्यर्थचोदितम् ।
येन सम्यक्कृतेनैव सर्वे यान्ति परां गतिम् ॥ १२२.८ ॥
गतिर्ध्यानं विना भक्तैर्ब्राह्मणैः प्राप्यते नृप ।
अध्यापयन्यतो वेदान्वेदं वापि यथाविधि ॥ १२२.९ ॥
कुलजां रूपसम्पन्नां सर्वलक्षणलक्षिताम् ।
उद्वाहयेत्ततः पत्नीं गुरुणानुमते तदा ॥ १२२.१० ॥

ततः स्मार्तं विवाहाग्निं श्रौतं वा पूजयेत्क्रमात् ।
प्रतिग्रहधनो भूत्वा दम्भलोभविवर्जितः ॥ १२२.११ ॥
पञ्चयज्ञविधानानि कारयेद्वै यथाविधि ।
वनं गच्छेत्ततः पश्चाद्द्वितीयाश्रमसेवनात् ॥ १२२.१२ ॥
पुत्रेषु भार्यां निक्षिप्य सर्वसङ्गविवर्जितः ।
इष्टांल्लोकानवाप्नोति न चेह जायते पुनः ॥ १२२.१३ ॥
क्षत्रियस्तु स्थितो राज्ये पालयित्वा वसुंधराम् ।
शश्वद्धर्ममनाश्चैव प्राप्नोति परमां गतिम् ॥ १२२.१४ ॥
वैश्यधर्मो न सन्देहः कृषिगोरक्षणे रतः ।
सत्यशौचसमोपेतो गच्छते स्वर्गमुत्तमम् ॥ १२२.१५ ॥
न शूद्रस्य पृथग्धर्मो विहितः परमेष्ठिना ।
न मन्त्रो न च संस्कारो न विद्यापरिसेवनम् ॥ १२२.१६ ॥
न शब्दविद्यासमयो देवताभ्यर्चनानि च ।
यथा जातेन सततं वर्तितव्यमहर्निशम् ॥ १२२.१७ ॥
स धर्मः सर्ववर्णानां पुरा सृष्टः स्वयम्भुवा ।
मन्त्रसंस्कारसम्पन्नास्त्रयो वर्णा द्विजातयः ॥ १२२.१८ ॥
तेषां मतमनादृत्य यदि वर्तेत कामतः ।
स मृतो जायते श्वा वै गतिरूर्ध्वा न विद्यते ॥ १२२.१९ ॥
न तेषां प्रेषणं नित्यं तेषां मतमनुस्मरन् ।
यशोभागी स्वधर्मस्थः स्वर्गभागी स जायते ॥ १२२.२० ॥
एवं गुणगणाकीर्णोऽवसद्विप्रः स भारत ।
हनस्वेति हनस्वेति शृणोति वाक्यमीदृशम् ॥ १२२.२१ ॥
ततो निरीक्षते चोर्ध्वमधश्चैव दिशो दश ।
वेपमानः स भीतश्च प्रस्खलंश्च पदे पदे ॥ १२२.२२ ॥
शृङ्खलायुधहस्तैश्च पाशैश्चैव सुदारुणैः ।
वेष्टितं महिषारूढं नरं पश्यति मन्मुखम् ॥ १२२.२३ ॥
कृष्णांजनचयप्रख्यं कृष्णाम्बरविभूषितम् ।
रक्ताक्षमायतभुजं सर्वलक्षणलक्षितम् ॥ १२२.२४ ॥
दृष्ट्वा तं तु समायान्तं निरीक्ष्यात्मानमात्मना ।
जपञ्जाप्यं च परमं शतरुद्रीयसंस्तवम् ॥ १२२.२५ ॥
ततः प्रोवाच भगवान्यमः संयमनो महान् ।
शृणु वाक्यमतो ब्रह्मन्यमोऽहं सर्वजन्तुषु ॥ १२२.२६ ॥

संहरस्व महाभाग रुद्रजाप्यं सुदुर्भिदम् ।
येनाहं कालपाशैस्त्वां संयमामि गतव्यथः ॥ १२२.२७ ॥
तच्छ्रुत्वा निष्ठुरं वाक्यं यमस्य मुखनिर्गतम् ।
महाभयसमोपेतो ब्राह्मणः प्रपलायितः ॥ १२२.२८ ॥
तस्य मार्गे गताः सर्वे यमेन सह किंकराः ।
तिष्ठ तिष्ठेति तं विप्रमूचुस्ते सोऽप्यधावत ॥ १२२.२९ ॥
त्वरमाणः परिश्रान्तो हा हतोऽहं दुरात्मभिः ।
रक्ष रक्ष महादेव शरणागतवत्सल ॥ १२२.३० ॥
एवमुक्त्वापतद्भूमौ लिङ्गमालिङ्ग्य भारत ।
गतसत्त्वः स विप्रेन्द्रः समाश्रित्य सुरेश्वरम् ॥ १२२.३१ ॥
तं दृष्ट्वा पतितं भूमौ देवदेवो महेश्वरः ।
को हनिष्यति माभैस्त्वं हुङ्कारमकरोत्तदा ॥ १२२.३२ ॥
तेन ते किंकराः सर्वे यमेन सह भारत ।
हुङ्कारेण गताः सर्वे मेघा वातहता यथा ॥ १२२.३३ ॥
तदाप्रभृति तत्तीर्थं कोहनस्वेति विश्रुतम् ।
सर्वपापहरं पुण्यं सर्वतीर्थेष्वनुत्तमम् ॥ १२२.३४ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
अग्निष्टोमस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ १२२.३५ ॥
तत्र तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः ।
न पश्यति यमं देवमित्येवं शङ्करोऽब्रवीत् ॥ १२२.३६ ॥
अग्निप्रवेशं यः कुर्याज्जले वा नृपसत्तम ।
अग्निलोके वसेत्तावद्यावत्कल्पशतत्रयम् ॥ १२२.३७ ॥
एवं वरुणलोकेऽपि वसित्वा कालमीप्सितम् ।
इह लोकमनुप्राप्तो महाधनपतिर्भवेत् ॥ १२२.३८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोहनतीर्थमाहात्म्यवर्णनं नाम द्वाविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२३

https://sa.wikisource.org/s/fn7
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १२३

मार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र कर्मदीतीर्थमुत्तमम् ।

यत्र तिष्ठति विघ्नेशो गणनाथो महाबलः ॥ १२३.१ ॥

तत्र तीर्थे नरः स्नात्वा चतुर्थ्यां वा ह्युपोषितः ।

विघ्नं न विद्यते तस्य सप्तजन्मनि भारत ॥ १२३.२ ॥

तत्र तीर्थे हि यत्किंचिद्दीयते नृपसत्तम ।

तदक्षयफलं सर्वं जायते नात्र संशयः ॥ १२३.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कर्मदेश्वरतीर्थमाहत्म्यवर्णनं नाम त्रयोविंशत्युत्तरशततमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२४



अध्याय १२४

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल नर्मदेश्वरमुत्तमम् ।

तत्र तीर्थे नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥ १२४.१ ॥

अग्निप्रवेशश्च जलेऽथवा मृत्युरनाशके ।

अनिवर्तिका गतिस्तस्य यथा मे शङ्करोऽब्रवीत् ॥ १२४.२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२५



अध्याय १२५

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल रवितीर्थमनुत्तमम् ।

यत्र देवः सहस्रांशुस्तपस्तप्त्वा दिवं गतः ॥ १२५.१ ॥

युधिष्ठिर उवाच -

कथं देवो जगद्धाता सर्वदेवनमस्कृतः ।

तपस्तपति देवेशस्तापसो भास्करो रविः ॥ १२५.२ ॥

आराध्यः सर्वभूतानां सर्वदेवैश्च पूजितः ।

प्रत्यक्षो दृश्यते लोके सृष्टिसंहारकारकः ॥ १२५.३ ॥

आदित्यत्वं कथं प्राप्तः कथं भास्कर उच्यते ।

सर्वमेतत्समासेन कथयस्व ममानघ ॥ १२५.४ ॥

मार्कण्डेय उवाच -

महाप्रश्नो महाराज यस्त्वया परिपृच्छितः ।

तत्सर्वं सम्प्रवक्ष्यामि नमस्कृत्य स्वयम्भुवम् ॥ १२५.५ ॥

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।

अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ १२५.६ ॥

ततस्तेजश्च दिव्यं च तप्तपिण्डमनुत्तमम् ।

आकाशात्तु यथैवोल्का सृष्टिहेतोरधोमुखी ॥ १२५.७ ॥

तत्तेजसोऽन्तः पुरुषः संजातः सर्वभूषितः ।

स शिवोऽपाणिपादश्च येन सर्वमिदं ततम् ॥ १२५.८ ॥

तस्योत्पन्नस्य भूतस्य तेजो रूपस्य भारत ।
पश्चात्प्रजापतिर्भूयः कालः कालान्तरेण वै ॥ १२५.९ ॥
अग्निर्जातः स भूतानां मनुष्यासुररक्षसाम् ।
सर्वदेवाधिदेवश्च आदित्यस्तेन चोच्यते ॥ १२५.१० ॥
आदौ तस्य नमस्कारोऽन्येषां च तदनन्तरम् ।
क्रियते दैवतैः सर्वैस्तेन सर्वैर्महर्षिभिः ॥ १२५.११ ॥
तिस्रः सन्ध्यास्त्रयो देवाः सांनिध्याः सूर्यमण्डले ।
नमस्कृतेन सूर्येण सर्वे देवा नमस्कृताः ॥ १२५.१२ ॥
न दिवा न भवेद्रात्रिः षण्मासा दक्षिणायनम् ।
अयनं चोत्तरं चापि भास्करेण विना नृप ॥ १२५.१३ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।
न वर्तते विना सूर्यं तेन पूज्यतमो रविः ॥ १२५.१४ ॥
शब्दगाः श्रुतिमुख्याश्च ब्रह्मविष्णुमहेश्वराः ।
प्रत्यक्षो भगवान्देवो दृश्यते लोकपावनः ॥ १२५.१५ ॥
उत्पत्तिः प्रलयस्थानं निधानं बीजमव्ययम् ।
हेतुरेको जगन्नाथो नान्यो विद्येत भास्करात् ॥ १२५.१६ ॥
एवमात्मभवं कृत्वा जगत्स्थावरजङ्गमम् ।
लोकानां तु हितार्थाय स्थापयेद्धर्मपद्धतिम् ॥ १२५.१७ ॥
नर्मदातटमाश्रित्य स्थापयित्वात्मनस्तनुम् ।
सहस्रांशुं निधिं धाम्नां जगामाकाशमव्ययम् ॥ १२५.१८ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
सहस्रकिरणं देवं नाममन्त्रविधानतः ॥ १२५.१९ ॥
तेन तप्तं हुतं तेन तेन सर्वमनुष्ठितम् ।
तेन सम्यग्विधानेन सम्प्राप्तं परमं पदम् ॥ १२५.२० ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
स्नात्वा ये नर्मदातोये देवं पश्यन्ति भास्करम् ॥ १२५.२१ ॥
तथा देवस्य राजेन्द्र ये कुर्वन्ति प्रदक्षिणम् ।
अनन्यभक्त्या सततं त्रिरक्षरसमन्विताः ॥ १२५.२२ ॥

तेन पूतशरीरास्ते मन्त्रेण गतपातकाः ।

यत्पुण्यं च भवेत्तेषां तदिहैकमनाः शृणु ॥ १२५.२३ ॥

ससमुद्रगुहा तेन सशैलवनकानना ।

प्रदक्षिणीकृता सर्वा पृथिवी नात्र संशयः ॥ १२५.२४ ॥

मन्त्रमूलमिदं सर्वं त्रैलोक्यं सचराचरम् ।

तेन मन्त्रविहीनं तु कार्यं लोके न सिध्यति ॥ १२५.२५ ॥

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।

कार्यार्थं नैव सिध्येत तथा कर्म ह्यमन्त्रकम् ॥ १२५.२६ ॥

भस्महुतं पार्थ यथा तोयविवर्जितम् ।

निष्फलं जायते दानं तथा मन्त्रविवर्जितम् ॥ १२५.२७ ॥

काष्ठपाषाणलोष्टेषु मृन्मयेषु विशेषतः ।

मन्त्रेण लोके पूजां तु कुर्वन्ति न ह्यमन्त्रतः ॥ १२५.२८ ॥

द्वादशाब्दान्नमस्काराद्भक्त्या यल्लभते फलम् ।

मन्त्रयुक्तनमस्कारात्सकृतल्लभते फलम् ॥ १२५.२९ ॥

संक्रान्तौ च व्यतीपाते अयने विषुवे तथा ।

नर्मदाया जले स्नात्वा यस्तु पूजयते रविम् ॥ १२५.३० ॥

द्वादशाब्देन यत्पापमज्ञानज्ञानसंचितम् ।

तत्क्षणान्नश्यते सर्वं वह्निना तु तुषं यथा ॥ १२५.३१ ॥

चन्द्रसूर्यग्रहे स्नात्वा सोपवासो जितेन्द्रियः ।

तत्रादित्यमुखं दृष्ट्वा मुच्यते सर्वकिल्बिषैः ॥ १२५.३२ ॥

माघमासे तु सम्प्राप्ते सप्तम्यां नृपसत्तम ।

सोपवासो जितक्रोध उषित्वा सूर्यमन्दिरे ॥ १२५.३३ ॥

प्रातः स्नात्वा विधानेन ददात्यर्घं दिवाकरे ।

विधिना मन्त्रयुक्तेन स लभेत्पुण्यमुत्तमम् ॥ १२५.३४ ॥

पितृदेवमनुष्याणां कृत्वा ह्युदकतर्पणम् ।

मन्दिरे देवदेवस्य ततः पूजां समाचरेत् ॥ १२५.३५ ॥

गन्धैः पुष्पैस्तथा धूपैर्दीपनैवेद्यशोभनैः ।

पूजयित्वा जगन्नाथं ततो मन्त्रमुदीरयेत् ॥ १२५.३६ ॥

विष्णुः शक्रो यमो धाता मित्रोऽथ वरुणस्तथा ।

विवस्वान्सविता पूषा चण्डांशुर्भर्ग एव च ॥ १२५.३७ ॥

इति द्वादशनामानि जपन्कृत्वा प्रदक्षिणाम् ।

यत्फलं लभते पार्थ तदिहैकमनाः शृणु ॥ १२५.३८ ॥

दरिद्रो व्याधितो मूको बधिरो जड एव च ।

न भवेत्सप्त जन्मानि इत्येवं शङ्करोऽब्रवीत् ॥ १२५.३९ ॥

एवं ज्ञात्वा विधानेन जपन्मन्त्रं विचक्षणः ।

आराधयेद्रविं भक्त्या य इच्छेत्पुण्यमुत्तमम् ॥ १२५.४० ॥

मन्त्रहीनां तु यः कुर्याद्भक्तिं देवस्य भारत ।

स विडम्बति चात्मानं पशुकीटपतङ्गवत् ॥ १२५.४१ ॥

तत्र तीर्थे तु यः कश्चित्त्यजते देहमुत्तमम् ।

स गतस्तत्र देवैस्तु पूज्यमानो महर्षिभिः ॥ १२५.४२ ॥

स्वेच्छया सुचिरं कालमिह लोके नृपो भवेत् ॥ १२५.४३ ॥

पुत्रपौत्रसमायुक्तो हस्त्यश्वरथसङ्कुलः ।

दासीदासशतोपेतो जायते विपुले कुले ॥ १२५.४४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रवितीर्थमाहात्म्यवर्णनं नाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२६



अध्याय १२६

मार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र परं तीर्थमयोनिजम् ।

स्नातमात्रो नरस्तत्र न पश्येद्योनिसङ्कटम् ॥ १२६.१ ॥

तत्र तीर्थे नरः स्नात्वा पूजयेद्देवमीश्वरम् ।

अयोनिजो महादेव यथा त्वं परमेश्वर ॥ १२६.२ ॥

तथा मोचय मां देव सम्भवाद्योनिसङ्कटात् ।

गन्धपुष्पादिधूपैश्च स मुच्येत्सर्वपातकैः ॥ १२६.३ ॥

तस्य देवस्य यो भक्त्या कुरुते लिङ्गपूरणम् ।

स वसेद्देवदेवस्य यावत्सिक्थस्य संख्यया ॥ १२६.४ ॥

अयोनिजे महादेवं स्नापयेद्गन्धवारिणा ।

मधुक्षीरेण दध्ना वा स लभेद्विपुलां श्रियम् ॥ १२६.५ ॥

अष्टम्यां च सिते पक्षे असितां वा चतुर्दशीम् ।

पूजयित्वा महादेवं प्रीणयेद्गीतवाद्यकैः ॥ १२६.६ ॥

वसेत्स च शिवे लोके ये कुर्वन्ति मनोहरम् ।

ते वसन्ति शिवे लोके यावदाभूतसम्प्लवम् ॥ १२६.७ ॥

तस्य देवस्य भक्त्या तु यः करोति प्रदक्षिणाम् ।

विज्ञापयंश्च सततं मन्त्रेणानेन भारत ॥ १२६.८ ॥

तस्य यत्फलमुद्दिष्टं पारम्पर्येण मानवैः ।

सकाशाद्देवदेवस्य तच्छृणुष्व समाधिना ॥ १२६.९ ॥

अयोनिजो महादेव यथा त्वं परमेश्वर ।

तथा मोचय मां शर्व सम्भवाद्योनिसङ्कटात् ॥ १२६.१० ॥

किं तस्य बहुभिर्मन्त्रैः कंठशोषणतत्परैः ।

येनौंनमः शिवायेति प्रोक्तं देवस्य संनिधौ ॥ १२६.११ ॥

तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।

येनौंनमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥ १२६.१२ ॥

न तत्फलमवाप्नोति सर्वदेवेषु वै द्विजः ।

यत्फलं समवाप्नोति षडक्षर उदीरणात् ॥ १२६.१३ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेच्छिवयोगिनम् ।

द्विजानामयुतं साग्रं स लभेत्फलमुत्तमम् ॥ १२६.१४ ॥

अथवा भक्तियुक्तस्तु तेषां दान्ते जितेन्द्रिये ।

संस्कृत्य ददते भिक्षां फलं तस्य ततोऽधिकम् ॥ १२६.१५ ॥

यतिहस्ते जलं दद्याद्भिक्षां दत्त्वा पुनर्जलम् ।

सा भिक्षा मेरुणा तुल्या तज्जलं सागरोपमम् ॥ १२६.१६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अयोनिप्रभवतीर्थमाहात्म्यवर्णनं नाम षड्विंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२७

https://sa.wikisource.org/s/fma
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १२७

मार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र अग्नितीर्थमनुत्तमम् ।

तत्र स्नात्वा तु पक्षादौ मुच्यते सर्वकिल्बिषैः ॥ १२७.१ ॥

तत्र तीर्थे तु यः कन्यां दद्यात्स्वयमलंकृताम् ।

तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नरोत्तम ॥ १२७.२ ॥

अग्निष्टोमातिरात्राभ्यां शतं शतगुणीकृतम् ।

प्राप्नोति पुरुषो दत्त्वा यथाशक्त्या ह्यलंकृताम् ॥ १२७.३ ॥

तस्याः पुत्रप्रपौत्राणां या भवेद्रोमसंगतिः ।

स याति तेन मानेन शिवलोके परां गतिम् ॥ १२७.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अग्नितीर्थमाहात्म्यवर्णनं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२८



अध्याय १२८

मार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र भृकुटेश्वरमुत्तमम् ।

यत्र सिद्धो महाभागो भृगुः परमकोपनः ॥ १२८.१ ॥

तेन वर्षशतं साग्रं तपश्चीर्णं पुरानघ ।

पुत्रार्थं वरयामास पुत्रं पुत्रवतां वरः ॥ १२८.२ ॥

वरो दत्तो महाभाग देवेनान्धकघातिना ।

तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ १२८.३ ॥

अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत् ।

भृकुटेशं तु यः कश्चिद्घृतेन मधुना सह ॥ १२८.४ ॥

पुत्रार्थी स्नापयेद्भक्त्या स लभेत्पुत्रमीप्सितम् ।

तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय काञ्चनम् ॥ १२८.५ ॥

गोदानं वा महीं वापि तस्य पुण्यफलं शृणु ॥ १२८.६ ॥

ससमुद्रगुहा तेन सशैलवनकानना ।

दत्ता पृथ्वी न सन्देहस्तेन सर्वा नृपोत्तम ॥ १२८.७ ॥

तेन दानेन स स्वर्गे क्रीडयित्वा यथासुखम् ।

मर्त्ये भवति राजेन्द्रो ब्राह्मणो वा सुपूजितः ॥ १२८.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भृकुटेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १२९



अध्याय १२९

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल ब्रह्मतीर्थमनुत्तमम् ।

अन्येषां चैव तीर्थानां परात्परतरं महत् ॥ १२९.१ ॥

तत्र तीर्थे सुरश्रेष्ठो ब्रह्मा लोकपितामहः ।

चतुर्णामपि वर्णानां नर्मदातटमाश्रितः ॥ १२९.२ ॥

वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ।

तत्क्षालयति देवेशो दर्शनादेव पातकम् ॥ १२९.३ ॥

श्रुतिस्मृत्युदितान्येव तत्र स्नात्वा द्विजर्षभाः ।

प्रायश्चित्तानि कुर्वन्ति तेषां वासस्त्रिविष्टपे ॥ १२९.४ ॥

ये पुनः शास्त्रमुत्सृज्य कामलोभप्रपीडिताः ।

प्रायश्चित्तं वदिष्यन्ति ते वै निरयगामिनः ॥ १२९.५ ॥

स्नात्वादौ पातकी ब्रह्मन्नत्वा तु कीर्तयेदघम् ।

तस्य तन्नश्यते क्षिप्रं तमः सूर्योदये यथा ॥ १२९.६ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।

अग्निष्टोमस्य यज्ञस्य स लभेत्फलमुत्तमम् ॥ १२९.७ ॥

तत्र तीर्थे तु यद्दानं ब्रह्मोद्दिश्य प्रयच्छति ।

तदक्षयफलं सर्वमित्येवं शङ्करोऽब्रवीत् ॥ १२९.८ ॥

गायत्रीसारमात्रोऽपि तत्र यः क्रियते जपः ।

ऋग्यजुःसामसहितः स भवेन्नात्र संशयः ॥ १२९.९ ॥

तत्र तीर्थे तु यो भक्त्या त्यजेद्देहं सुदुस्त्यजम् ।

अनिवर्तिका गतिस्तस्य ब्रह्मलोकान्न संशयः ॥ १२९.१० ॥

यावदस्थीनि तिष्ठन्ति ब्रह्मतीर्थे च देहिनाम् ।

तावद्वर्षसहस्राणि देवलोके महीयते ॥ १२९.११ ॥

अवतीर्णस्ततो लोके ब्रह्मज्ञो जायते कुले ।

उत्तमः सर्ववर्णानां देवानामिव देवता ॥ १२९.१२ ॥

विद्यास्थानानि सर्वाणि वेत्ति वेदाङ्गपारगः ।

जायते पूजितो लोके राजभिः स न संशयः ॥ १२९.१३ ॥

पुत्रपौत्रसमोपेतः सर्वव्याधिविवर्जितः ।

जीवेद्वर्षशतं साग्रं ब्रह्मतीर्थप्रभावतः ॥ १२९.१४ ॥

एतत्पुण्यं पापहरं तीर्थं ज्ञानवतां वरम् ।

ये पश्यन्ति महात्मानो ह्यमृतत्वं प्रयान्ति ते ॥ १२९.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे ब्रह्मतीर्थमाहात्म्यवर्णनं नामैकोनत्रिंशदधिकशततमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३०



अध्याय १३०

श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे कूले देवतीर्थमनुत्तमम् ।

तत्र देवैः समागत्य तोषितः परमेश्वरः ॥ १३०.१ ॥

तत्र तीर्थे तु यः स्नात्वा कामक्रोधविवर्जितः ।

स लभेन्नात्र सन्देहो गोसहस्रफलं ध्रुवम् ॥ १३०.२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनं नाम त्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३१



अध्याय १३१

श्रीमार्कण्डेय उवाच -
नर्मदादक्षिणे कूले नागतीर्थमनुत्तमम् ।
यत्र सिद्धा महानागा भये जाते ततो नृप ॥ १३१.१ ॥

युधिष्ठिर उवाच -
महाभयानां लोकस्य नागानां द्विजसत्तम ।
कथं जातं भयं तीव्रं येन ते तपसि स्थिताः ॥ १३१.२ ॥
भूतं भव्यं भविष्यच्च यत्सुरासुरमानवे ।
तात ते विदितं सर्वं तेन मे कौतुकं महत् ॥ १३१.३ ॥
मम संतापजं दुःखं दुर्योधनसमुद्भवम् ।
तव वक्त्राम्बुजौघेन प्लावितं निर्वृतिं गतम् ॥ १३१.४ ॥
श्रुत्वा तव मुखोद्गीतां कथां पापप्रणाशनीम् ।
भूयो भूयः स्मृतिर्जाता श्रवणे मम सुव्रत ॥ १३१.५ ॥
न क्लेशत्वं द्विजे युक्तं न चान्यो जानते फलम् ।
विद्यादानस्य महतः श्रावितस्य सुतस्य च ॥ १३१.६ ॥
एवं ज्ञात्वा यथान्यायं यः प्रश्नः पृच्छितो मया ।
कथा तु कथ्यतां विप्र दयां कृत्वा ममोपरि ॥ १३१.७ ॥

मार्कण्डेय उवाच -
यथा यथा त्वं नृप भाषसे च तथा तथा मे सुखमेति भारती ।
शैथिल्यभावाज्जरयान्वितस्य त्वत्सौहृदं नश्यति नैव तात ॥ १३१.८ ॥
कथयामि यथावृत्तमितिहासं पुरातनम् ।
कथितं पूर्वतो वृद्धैः पारम्पर्येण भारत ॥ १३१.९ ॥
द्वे भार्ये कश्यपस्यास्तां सर्वलोकेष्वनुत्तमे ।

गरुत्मतो वै विनता सर्पाणां कद्रुरेव च ॥ १३१.१० ॥
अश्वसंदर्शनात्ताभ्यां कलिरूपं व्यवस्थितम् ।
प्रभातकाले राजेन्द्र भास्कराकारवर्चसम् ॥ १३१.११ ॥
तं दृष्ट्वा विनता रूपमश्वं सर्वत्र पाण्डुरम् ।
अथ तां कद्रूमवोचत्सा पश्य पश्य वरानने ॥ १३१.१२ ॥
उच्चैःश्रवसः सादृश्यं पश्य सर्वत्र पाण्डुरम् ।
धावमानमविश्रान्तं जवेन पवनोपमम् ॥ १३१.१३ ॥
तं दृष्ट्वा सहसा यान्तमीर्ष्याभावेन मोहिता ।
कृष्णं मत्वा तथाजल्पत्तया सह नृपोत्तम ॥ १३१.१४ ॥
विनते त्वं मृषा लोके नृशंसे कुलपांसनि ।
कृष्णं चैनं वद श्वेतं नरकं यास्यसे परम् ॥ १३१.१५ ॥

विनतोवाच -
सत्यानृते तु वचने पणोऽयं ते ममैव तु ।
सहस्रं वत्सरान्दासी भवेयं तव वेश्मनि ॥ १३१.१६ ॥
तथेति ते प्रतिज्ञाय रात्रौ गत्वा स्वकं गृहम् ।
परित्यज्य उभे ते तु क्रोधमूर्छितमूर्छिते ॥ १३१.१७ ॥
बन्धुगर्वस्य गत्वा तु कथयामास तं पणम् ।
कद्रूर्विनतया सार्द्धं यद्वृत्तं प्रमदालये ॥ १३१.१८ ॥
तच्छ्रुत्वा बान्धवाः सर्वे कद्रूपुत्रास्तथैव च ।
न मन्यन्ते हितं कार्यं कृतं मात्रा विगर्हितम् ॥ १३१.१९ ॥
अकृष्णः कृष्णतामम्ब कथं गच्छेद्धयोत्तमः ।
दासत्वं प्राप्स्यसे त्वं हि पणेनानेन सुव्रते ॥ १३१.२० ॥

कद्रूरुवाच -
भवेयं न यथादासी तत्कुरुध्वं हि सत्वरम् ।
विशध्वं रोमकूपेषु तस्याश्वस्य मतिर्मम ॥ १३१.२१ ॥
क्षणमात्रं कृते कार्ये सा दासी च भवेन्मम ।
ततः स्वस्थोरगाः सर्वे भविष्यथ यथासुखम् ॥ १३१.२२ ॥
सर्पा ऊचुः ।
यथा त्वं जननी देवि पन्नगानां मता भुवि ।
तथापि सा विशेषेण वञ्चितव्या न कर्हिचित् ॥ १३१.२३ ॥

कद्रूरुवाच -
मम वाक्यमकुर्वाणा ये केचिद्भुवि पन्नगाः ।
हव्यवाहमुखं सर्वे ते यास्यन्त्यविचारिताः ॥ १३१.२४ ॥
एतच्छ्रुत्वा तु वचनं घोरं मातृमुखोद्भवम् ।
केचित्प्रविष्टा रोमाणि तथान्ये गिरिसंस्थिताः ॥ १३१.२५ ॥
केचित्प्रविष्टा जाह्नव्यामन्ये च तपसि स्थिताः ॥ १३१.२६ ॥
ततो वर्षसहस्रान्ते तुतोष परमेश्वरः ।
महादेवो जगद्धाता ह्युवाच परया गिरा ॥ १३१.२७ ॥
भो भोः सर्पा निवर्तध्वं तपसोऽस्य महत्फलम् ।
यमिच्छथ ददाम्यद्य नात्र कार्या विचारणा ॥ १३१.२८ ॥
सर्पा ऊचुः ।
कद्रूशापभयाद्भीता देवदेव महेश्वर ।
तव पार्श्वे वसिष्यामो यावदाभूतसम्प्लवम् ॥ १३१.२९ ॥

देवदेव उवाच -
एकश्चायं महाबाहुर्वासुकिर्भुजगोत्तमः ।
मम पार्श्वे वसेन्नित्यं सर्वेषां भयरक्षकः ॥ १३१.३० ॥
अन्येषां चैव सर्पाणां भयं नास्ति ममाज्ञया ।
आप्लुत्य नर्मदातोये भुजगास्ते च रक्षिताः ॥ १३१.३१ ॥
नास्ति मृत्युभयं तेषां वसध्वं यत्र चेप्सितम् ।
कद्रूशापभयं नास्ति ह्येष मे विस्तरः परः ॥ १३१.३२ ॥
एवं दत्त्वा वरं तेषां देवदेवो महेश्वरः ।
जगामाकाशमाविश्य कैलासं धरणीधरम् ॥ १३१.३३ ॥
गते चादर्शनं देवे वासुकिप्रमुखा नृप ।
स्थापयित्वा तथा जग्मुर्देवदेवं महेश्वरम् ॥ १३१.३४ ॥
तत्र तीर्थे तु यः कश्चित्पञ्चम्यामर्चयेच्छिवम् ।
तस्य नागकुलान्यष्टौ न हिंसन्ति कदाचन ॥ १३१.३५ ॥
मृतः कालेन महता तत्र तीर्थे नरेश्वर ।
शिवस्यानुचरो भूत्वा वसते कालमीप्सितम् ॥ १३१.३६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३२



अध्याय १३२

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र उत्तरे नर्मदातटे ।

सर्वपापहरं तीर्थं वाराहं नाम नामतः ॥ १३२.१ ॥

तत्र देवो जगद्धाता वाराहं रूपमास्थितः ।

स्थितो लोकहितार्थाय संसारार्णवतारकः ॥ १३२.२ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेद्धरणीधरम् ।

गन्धमाल्यविशेषैश्च जयशब्दादिमङ्गलैः ॥ १३२.३ ॥

उपवासपरो भूत्वा द्वादश्यां नृपसत्तम ।

वृषलाः पापकर्माणस्तथैवान्धपिशाचिनः ॥ १३२.४ ॥

आलापाद्गात्रसंपर्कान्निःश्वासात्सहभोजनात् ।

पापं संक्रमते यस्मात्तस्मात्तान् परिवर्जयेत् ॥ १३२.५ ॥

ब्राह्मणान् पूजयेद्भक्त्या यथाशक्त्या यथाविधि ।

रात्रौ जागरणं कार्यं कथायां तत्र भारत ॥ १३२.६ ॥

प्रभाते विमले स्नात्वा तत्र तीर्थे जगद्गुरुम् ।

ये पश्यन्ति जितक्रोधास्ते मुक्ताः सर्वपातकैः ॥ १३२.७ ॥

यथा तु दृष्ट्वा भुजगाः सुपर्णं नश्यन्ति मुक्त्वा विषमुग्रतेजः ।

नश्यन्ति पापानि तथैव शीघ्रं दृष्ट्वा मुखं शूकररूपिणस्तु ॥ १३२.८ ॥

नभोगतं नश्यति चान्धकारं दृष्ट्वा रविं देववरं तथैव ।

नश्यन्ति पापानि सुदुस्तराणि दृष्ट्वा मुखं पार्थ धराधरस्य ॥ १३२.९ ॥

किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।

नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥ १३२.१० ॥

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।

दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ १३२.११ ॥

ध्यायमाना महात्मानो रूपं नारायणं हरेः ।

ये त्यजन्ति स्वकं देहं तत्र तीर्थे जितेन्द्रियाः ॥ १३२.१२ ॥

ते गच्छन्त्यमलं स्थानं यत्सुरैरपि दुर्लभम् ।

क्षराक्षरविनिर्मुक्तं तद्विष्णोः परमं पदम् ॥ १३२.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आदिवाराहतीर्थमाहात्म्यवर्णनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३३



श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल परं तीर्थचतुष्टयम् ।

येषां दर्शनमात्रेण सर्वपापक्षयो भवेत् ॥ १ ॥

कौबेरं वारुणं याम्यं वायव्यं तु ततः परम् ।

यत्र सिद्धा महाप्राज्ञा लोकपाला महाबलाः ॥ २ ॥

युधिष्ठिर उवाच -

किमर्थं लोकपालैश्च तपश्चीर्णं पुरानघ ।

नर्मदातटमाश्रित्य ह्येतन्मे वक्तुमर्हसि ॥ ३ ॥

श्रीमार्कण्डेय उवाच -

अधिष्ठानं समिच्छन्ति ह्यचलं निर्बले सति ।

संसारे सर्वभूतानां तृणबिन्दुवदस्थिरे ॥ ४ ॥

कदलीसारनिःसारे मृगतृष्णेव चञ्चले ।

स्थावरे जङ्गमे सर्वे भूतग्रामे चतुर्विधे ॥ ५ ॥

धर्मो माता पिता धर्मो धर्मो बन्धुः सुहृत्तथा ।

आधारः सर्वभूतानां त्रैलोक्ये सचराचरे ॥ ६ ॥

एवं ज्ञात्वा तु ते सर्वे लोकपालाः कृतक्षणाः ।

तपस्ते चक्रुरतुलं मारुताहारतत्पराः ॥ ७ ॥

ततस्तुष्टो महादेवः कृतस्यार्द्धे गते तदा ।

अनुरूपेण राजेन्द्र युगस्य परमेश्वरः ॥ ८ ॥

वरेण छन्दयामास लोकपालान्महाबलान् ।

यो यमिच्छति कामं वै तं तं तस्य ददाम्यहम् ॥ ९ ॥

एतच्छ्रुत्वा वचस्तस्य लोकपाला जगद्धिताः ।

वरदं प्रार्थयामासुर्देवं वरमनुत्तमम् ॥ १० ॥

कुबेर उवाच -

यदि तुष्टो महादेव यदि देयो वरो मम ।

यक्षाणामीश्वरश्चाहं भवामि धनदस्त्विति ॥ ११ ॥

ततः प्रोवाच देवेशं यमः संयमने रतः ।

तत्र प्रधानो भगवान् भवेयं सर्वजन्तुषु ॥ १२ ॥

वरुणोऽनन्तरं प्राह प्रणम्य तु महेश्वरम् ।

क्रीडेयं वारुणे लोके यादोगणसमन्वितः ॥ १३ ॥

जगादाशु ततो वायुः प्रणम्य तु महेश्वरम् ।

व्यापकत्वं त्रिलोकेषु प्रार्थयामास भारत ॥ १४ ॥

तेषां यदीप्सितं काममुमया सह शङ्करः ।

सर्वेषां लोकपालानः दत्वा चादर्शनं गतः ॥ १५ ॥

गते महेश्वरे देवे यथास्थानं तु ते स्थिताः ।

स्थापना च कृता सर्वैः स्वनाम्नैव पृथक्पृथक् ॥ १६ ॥

कुबेरश्च कुबेरेशं यमश्चैव यमेश्वरम् ।

वरुणो वरुणेशं तु वातो वातेश्वरं नृप ॥ १७ ॥

तर्पणं विदधुः सर्वे मन्त्रैश्च विविधैः शुभैः ।

सर्वे सर्वेश्वरं देव पूजयित्वा यथाविधि ॥ १८ ॥

आह्वयामासुस्तान् विप्रान्सर्वे सर्वेश्वरा इव ।

क्षान्तदान्तजितक्रोधान्सर्वभूताभयप्रदान् ॥ १९ ॥

वेदविद्याव्रतस्नातान् सर्वशास्त्रविशारदान् ।

ऋग्यजुःसामसंयुक्तांस्तथाथर्वविभूषितान् ॥ २० ॥

चातुर्विध्यं तु सर्वेषां दानं दास्याम गृह्णत ।

एवमुक्त्वा तु सर्वेषां विप्राणां दानमुत्तमम् ॥ २१ ॥

तत्र स्थाने ददुस्तेषां भूमिदानमनुत्तमम् ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ २२ ॥

तावद्दानं तु युष्माकं परिपन्थी न कश्चन ।

राजा वा राजतुल्यो वा लोकपालैरनुत्तमम् ॥ २३ ॥

दत्तं लोपयते मूढः श्रूयतां तस्य यो विधिः ।

शोषयेद्धनदो वित्तं तस्य पापस्य भारत ॥ २४ ॥

शरीरं वरुणो देवः संततीं श्वसनस्तथा ।

आयुर्नयति तस्याशु यमः संयमनो महान् ॥ २५ ॥

निःशेषं भस्मसात्कृत्वा हुतभुग्याति भारत ।

तस्मात्सर्वप्रयत्नेन ब्राह्मणेभ्यो युधिष्ठिर ।

भक्तिः कार्या नृपैः सर्वैरिच्छद्भिः श्रेय आत्मनः ॥ २६ ॥

राजा वृक्षो ब्राह्मणास्तस्य मूलं भृत्याः पर्णा मन्त्रिणस्तस्य शाखाः ।

तस्मान्मूलं यत्नतो रक्षणीयं मूले गुप्ते नास्ति वृक्षस्य नाशः ॥ २७ ॥

षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।

आच्छेत्ता चावमन्ता च तान्येव नरके वसेत् ॥ २८ ॥

स्वदत्ता परदत्ता वा पालनीया वसुंधरा ।

यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २९ ॥

देवताज्ञामनुस्मृत्य राजानो येऽपि तां नृप ।

पालयिष्यन्ति सततं तेषां वासस्त्रिविष्टपे ॥ ३० ॥

स्वदत्ता परदत्ता वा यत्नाद्रक्ष्या युधिष्ठिर ।

मही महीक्षिता नित्यं दानाच्छ्रेयोऽनुपालनम् ॥ ३१ ॥

आयुर्यशो बलं वित्तं संततिश्चाक्षया नृप ।

तेषां भविष्यते नूनं ये प्रजापालने रताः ॥ ३२ ॥

एवमुक्त्वा तु तान् सर्वाल्लोकपालान् द्विजोत्तमान् ।

पूजयित्वा विधानेन प्रणिपत्य व्यसर्जयन् ॥ ३३ ॥

गतेषु विप्रमुख्येषु स्नात्वा हुतहुताशनाः ।

लोकपालाः क्षुधाविष्टाः पर्यटन्भैक्षमात्मनः ॥ ३४ ॥

अस्थिचर्मावशेषाङ्गाः कपालोद्धृतपाणयः ।

अलब्धग्रासमर्द्धार्धं निर्ययुर्नगराद्बहिः ॥ ३५ ॥

शापं दत्त्वा तदा क्रोधाद्ब्राह्मणाय युधिष्ठिर ।

दरिद्राः सततं मूर्खा भवेयुश्च ययुर्गृहान् ॥ ३६ ॥

तदाप्रभृति ते सर्वे ब्राह्मणा धनवर्जिताः ।

शापदोषेण कौबेर्यां संजाता दुःखभाजनाः ॥ ३७ ॥

न धनं पैतृकं पुत्रैर्न पिता पुत्रपौत्रिकम् ।

भुञ्जते सकलं कालमित्येवं शङ्करोऽब्रवीत् ॥ ३८ ॥

कुबेरेशे नरः स्नात्वा यस्तु पूजयते शिवम् ।

गन्धधूपनमस्कारैः सोऽश्वमेधफलं लभेत् ॥ ३९ ॥

यमतीर्थे तु यः स्नात्वा सम्पश्यति यमेश्वरम् ।

सर्वपापैः प्रमुच्येत सप्तजन्मान्तरार्जितैः ॥ ४० ॥

पूर्णमास्याममावास्यां स्नात्वा तु पितृतर्पणम् ।

यः करोति तिलैः स्नानं तस्य पुण्यफलं शृणु ॥ ४१ ॥

सुतृप्तास्तेन तोयेन पितरश्च पितामहाः ।

स्वर्गस्था द्वादशाब्दानि क्रीडन्ति प्रपितामहाः ॥ ४२ ॥

वरुणेशे नरः स्नात्वा ह्यर्चयित्वा महेश्वरम् ।

वाजपेयस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ ४३ ॥

मृतां कालेन महता लोके यत्र जलेश्वरः ।

स गच्छेत्तत्र यानेन गीयमानोऽप्सरोगणैः ॥ ४४ ॥

वातेश्वरे नरः स्नात्वा सम्पूज्य च महेश्वरम् ।

जायते कृतकृत्योऽसौ लोकपालानवेक्षयन् ॥ ४५ ॥

किं तस्य बहुभिर्यज्ञैर्दानैर्वा बहुदक्षिणैः ।

स्नात्वा चतुष्टये लोके अवाप्तं जन्मनः फलम् ॥ ४६ ॥

ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।

नित्यं वसन्ति कौरिल्यां लोकपालान्निमन्त्र्य ये ॥ ४७ ॥

एतत्पुण्यं पापहरं धन्यमायुर्विवर्धनम् ।

पठतां शृण्वतां चैव सर्वपापक्षयो भवेत् ॥ ४८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुबेरादितीर्थचतुष्टयमाहात्म्यवर्णनं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३४



अध्याय १३४

श्रीमार्कण्डेय उवाच -
नर्मदादक्षिणे कूले रामेश्वरमनुत्तमम् ।
तीर्थं पापहरं पुण्यं सर्वदुःखघ्नमुत्तमम् ॥ १३४.१ ॥
तत्र तीर्थे तु ये स्नात्वा पूजयन्ति महेश्वरम् ।
महादेवं महात्मानं मुच्यन्ते सर्वकिल्बिषैः ॥ १३४.२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रामेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३५



अध्याय १३५

श्रीमार्कण्डेय उवाच -
तस्यैवानन्तरं चान्यत्सिद्धेश्वरमनुत्तमम् ।
तीर्थं सर्वगुणोपेतं सर्वलोकेषु पूजितम् ॥ १३५.१ ॥
तत्र तीर्थे तु यः स्नात्वा ह्युमारुद्रं प्रपूजयेत् ।
वाजपेयस्य यज्ञस्य स लभेत्फलमुत्तमम् ॥ १३५.२ ॥
तेन पुण्येन महता मृतः स्वर्गमवाप्नुयात् ।
अप्सरोगणसंवीतो जयशब्दादिमङ्गलैः ॥ १३५.३ ॥
सहस्रवत्सरांस्तत्र क्रीडयित्वा यथासुखम् ।
धनधान्यसमोपेते कुले महति जायते ॥ १३५.४ ॥
पूज्यमानो नरश्रेष्ठ वेदवेदाङ्गपारगः ।
व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १३५.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सिद्धेश्वरमाहात्म्यवर्णनं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३६



अध्याय १३६

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल चाहल्येश्वरमुत्तमम् ।
यत्र सिद्धा महाभागा त्वहल्या तापसी पुरा ॥ १३६.१ ॥
गौतमो ब्राह्मणस्त्वासीत्साक्षाद्ब्रह्मेव चापरः ।
सत्यधर्मसमायुक्तो वानप्रस्थाश्रमे रतः ॥ १३६.२ ॥
तस्य पत्नी महाभागा ह्यहल्या नाम विश्रुता ।
रूपयौवनसम्पन्ना त्रिषु लोकेषु विश्रुता ॥ १३६.३ ॥
अस्या अप्यतिरूपेण देवराजः शतक्रतुः ।
मोहितो लोभयामास ह्यहल्यां बलसूदनः ॥ १३६.४ ॥
मां भजस्व वरारोहे देवराजमनिन्दिते ।
क्रीडयस्व मया सार्द्धं त्रिषु लोकेषु पूजिता ॥ १३६.५ ॥
किं करिष्यसि विप्रेण शौचाचारकृशेन तु ।
तपःस्वाध्यायशीलेन क्लिश्यन्तीव सुलोचने ॥ १३६.६ ॥
एवमुक्ता वरारोहा स्त्रीस्वभावात्सुचञ्चला ।
मनसाध्याय शक्रं सा कामेन कलुषीकृता ॥ १३६.७ ॥
तस्या विदित्वा तं भावं स देवः पाकशासनः ।
गौतमं वञ्चयामास दुष्टभावेन भावितः ॥ १३६.८ ॥
विदित्वा चान्तरं तस्य गृहीत्वा वेषमुत्तमम् ।
अहल्यां रमयामास विश्वस्तां मन्दिरान्तिके ॥ १३६.९ ॥
क्षणमात्रान्तरे तत्र देवराजस्य भारत ।
आजगाम मुनिश्रेष्ठो मन्दिरं त्वरयान्वितः ॥ १३६.१० ॥
आगतं गौतमं दृष्ट्वा भीतभीतः पुरंदरः ।
निर्गतः स ततो दृष्ट्वा शक्रोऽयमिति चिन्तयन् ॥ १३६.११ ॥
ततः शशाप देवेन्द्रं गौतमः क्रोधमूर्छितः ।

अजितेन्द्रियोऽसि यस्मात्त्वं तस्माद्बहुभगो भव ॥ १३६.१२ ॥
एवमुक्तस्तु देवेन्द्रस्तत्क्षणादेव भारत ।
भगानां तु सहस्रेण तत्क्षणादेव वेष्टितः ॥ १३६.१३ ॥
त्यक्त्वा राज्यं सुरैः सार्द्धं गतश्रीको जगाम ह ।
तपश्चचार विपुलं गौतमेन महीतले ॥ १३६.१४ ॥
अहल्यापि ततः शप्ता यस्मात्त्वं दुष्टचारिणी ।
प्रेक्ष्य मां रमसे शक्रं तस्मादश्ममयी भव ॥ १३६.१५ ॥
गते वर्षसहस्रान्ते रामं दृष्ट्वा यशस्विनम् ।
तीर्थयात्राप्रसङ्गेन धौतपापा भविष्यसि ॥ १३६.१६ ॥
एवं गते ततः काले दृष्टा रामेण धीमता ।
विश्वामित्रसहायेन त्यक्त्वा साश्ममयीं तनुम् ॥ १३६.१७ ॥
पूजयित्वा यथान्यायं गतपापा विमत्सरा ।
आगता नर्मदातीरे तीर्थे स्नात्वा यथाविधि ॥ १३६.१८ ॥
कृतं चान्द्रायणं मासं कृच्छ्रं चान्यं ततः परम् ।
ततस्तुष्टो महादेवो दत्त्वा वरमनुत्तमम् ॥ १३६.१९ ॥
जगामादर्शनं भूयो रेमे चोमापतिश्चिरम् ।
अहल्या तु गते देवे स्थापयित्वा जगद्गुरुम् ॥ १३६.२० ॥
अहल्येश्वरनामानं स्वगृहे चागमत्पुनः ।
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ १३६.२१ ॥
स मृतः स्वर्गमाप्नोति यत्र देवो महेश्वरः ।
क्रीडयित्वा यथाकामं तत्र लोके महातपाः ॥ १३६.२२ ॥
गते वर्षसहस्रान्ते मानुष्यं लभते पुनः ।
धनधान्यचयोपेतः पुत्रपौत्रसमन्वितः ॥ १३६.२३ ॥
वेदविद्याश्रयो धीमाञ्जायते विमले कुले ।
रूपसौभाग्यसम्पन्नः सर्वव्याधिविवर्जितः ।
जीवेद्वर्षशतं साग्रमहल्यातीर्थसेवनात् ॥ १३६.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अहल्यातीर्थमाहात्म्यवर्णनं नाम षट्त्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३७



अध्याय १३७

मार्कण्डेय उवाच -
धर्मपुत्र ततो गच्छेत्कर्कटेश्वरमुत्तमम् ।
उत्तरे नर्मदाकूले सर्वपापक्षयंकरम् ॥ १३७.१ ॥
तत्र स्नात्वा विधानेन यस्तु पूजयते शिवम् ।
अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ १३७.२ ॥
तस्य तीर्थस्य माहात्म्यं पुराणे यच्छ्रुतं मया ।
न तद्वर्णयितुं शक्यं संक्षेपेण वदाम्यतः ॥ १३७.३ ॥
तत्र तीर्थे तु यः कुर्यात्किंचित्कर्म शुभाशुभम् ।
हर्षान्मदान्महाराज तत्सर्वं जायतेऽक्षयम् ॥ १३७.४ ॥
तत्र तीर्थे तपस्तप्त्वा वालखिल्या मरीचयः ।
रमन्तेऽद्यापि लोकेषु स्वेच्छया कुरुनन्दन ॥ १३७.५ ॥
तत्रस्थास्तन्न जानन्ति नराज्ञानबहिष्कृताः ।
शरीरस्थमिवात्मानमक्षयं ज्योतिरव्ययम् ॥ १३७.६ ॥
तत्र तीर्थे नृपश्रेष्ठ देवी नारायणी पुरा ।
अद्यापि तपते घोरं तपो यावत्किलार्बुदम् ॥ १३७.७ ॥
तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
तस्य ते द्वादशाब्दानि तृप्तिं यान्ति पितामहाः ॥ १३७.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कर्कटेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३८



अध्याय १३८

श्रीमार्कण्डेय उवाच -
ततो गच्छेत्पाण्डुपुत्र शक्रतीर्थमनुत्तमम् ।
यत्र सिद्धो महाभागो देवराजः शतक्रतुः ॥ १३८.१ ॥
गौतमेन पुरा शप्तं ज्ञात्वा देवाः सुरेश्वरम् ।
ब्रह्माद्या देवताः सर्व ऋषयश्च तपोधनाः ॥ १३८.२ ॥
गौतमं प्रार्थयामासुर्वाक्यैः सानुनयैः शुभैः ।
गतराज्यं गतश्रीकं शक्रं प्रति मुनीश्वर ॥ १३८.३ ॥
इन्द्रेन रहितं राज्यं न कश्चित्कामयेद्द्विज ।
देवो वा मानवो वापि एतत्ते विदितं प्रभो ॥ १३८.४ ॥
तस्य त्वं भगयुक्तस्य दयां कुरु द्विजोत्तम ।
गतश्चादर्शनं शक्रो दूषितः स्वेन पाप्मना ॥ १३८.५ ॥
देवानां वचनं श्रुत्वा गौतमो वेदवित्तमः ।
तथेति कृत्वा शक्रस्य वरं दातुं प्रचक्रमे ॥ १३८.६ ॥
एतद्भगसहस्रं तु पुरा जातं शतक्रतो ।
तल्लोचनसहस्रं तु मत्प्रसादाद्भविष्यति ॥ १३८.७ ॥
एवमुक्तः सहस्राक्षः प्रणम्य मुनिसत्तमम् ।
ब्राह्मणांस्तान्महाभागान्नर्मदां प्रत्यगात्ततः ॥ १३८.८ ॥
स्नात्वा स विमले तोये संस्थाप्य त्रिपुरान्तकम् ।
जगाम त्रिदशावासं पूज्यमानोऽप्सरोगणैः ॥ १३८.९ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
परदाराभिगमनान्मुच्यते पातकान्नरः ॥ १३८.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शक्रतीर्थमाहात्म्यवर्णनं नामाष्टत्रिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १३९



अध्याय १३९

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज सोमतीर्थमनुत्तमम् ।
यत्र सोमस्तपस्तप्त्वा नक्षत्रपथमास्थितः ॥ १३९.१ ॥
तत्र तीर्थे तु यः स्नायादाचम्य विधिपूर्वकम् ।
कृतजाप्यो रविं ध्यायेत्तस्य पुण्यफलं शृणु ॥ १३९.२ ॥
ऋग्वेदयजुर्वेदाभ्यां सामवेदेन भारत ।
जपतो यत्फलं प्रोक्तं गायत्र्या चात्र तत्फलम् ॥ १३९.३ ॥
तत्र तीर्थे तु यो भक्त्या ब्राह्मणान् भोजयेच्छुचिः ।
तेन सम्यग्विधानेन कोटिर्भवति भोजिता ॥ १३९.४ ॥
पादुकोपानहौ छत्रं वस्त्रकम्बलवाजिनः ।
यो दत्ते विप्रमुख्याय तस्य तत्कोटिसंमितम् ॥ १३९.५ ॥
सहस्रं तु सहस्राणामनृचां यस्तु भोजयेत् ।
एकस्य मन्त्रयुक्तस्य कलां नार्हति षोडशीम् ॥ १३९.६ ॥
एवं तु भोजयेत्तत्र बह्वृचं वेदपारगम् ।
शाखान्तर्गमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥ १३९.७ ॥
अग्निहोत्रसहस्रस्य यत्फलं प्राप्यते बुधैः ।
समं तद्वेदविदुषा तीर्थे सोमस्य तत्फलम् ॥ १३९.८ ॥
भोजयेद्यः शतं तेषां सहस्रं लभते नरः ।
एकस्य योगयुक्तस्य तत्फलं कवयो विदुः ॥ १३९.९ ॥
संनिरुध्येन्द्रियग्रामं यत्रयत्र वसेन्मुनिः ।
तत्रतत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १३९.१० ॥
तस्मात्सर्वप्रयत्नेन ग्रहणे चन्द्रसूर्ययोः ।
संक्रान्तौ च व्यतीपाते योगी भोज्यो विशेषतः ॥ १३९.११ ॥
संन्यासं कुरुते यस्तु तत्र तीर्थे युधिष्ठिर ।

विमानेन महाभागाः स याति त्रिदिवं नरः ॥ १३९.१२ ॥
सोमस्यानुचरो भूत्वा तेनैव सह मोदते ॥ १३९.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सोमतीर्थमाहात्म्यवर्णनं नामैकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४०



अध्याय १४०

मार्कण्डेय उवाच -
ततो गच्छेन्महाराज नन्दाह्रदमनुत्तमम् ।
यत्र सिद्धा महाभागा नन्दा देवी वरप्रदा ॥ १४०.१ ॥
महिषासुरे महाकाये पुरा देवभयंकरे ।
शूलिन्या शूलभिन्नाङ्गे कृते दानवसत्तमे ॥ १४०.२ ॥
येनैकादशरुद्राश्च ह्यादित्याः समरुद्गणाः ।
वसवो वायुना सार्द्धं चन्द्रादित्यौ सुरेश्वर ॥ १४०.३ ॥
बलिना निर्जिता येन ब्रह्मविष्णुमहेश्वराः ।
सङ्ग्रामे सुमहाघोरे कृते देवभयंकरे ॥ १४०.४ ॥
कृत्वा तत्कदनं घोरं नन्दा देवी सुरेश्वरी ।
यस्मात्स्नाता विशालाक्षी तेन नन्दाह्रदः स्मृतः ॥ १४०.५ ॥
तत्र तीर्थे तु यः स्नात्वा नन्दामुद्दिश्य भारत ।
ददाति दानं विप्रेभ्यः सोऽश्वमेधफलं लभेत् ॥ १४०.६ ॥
भैरवं चैव केदारं तथा रुद्रं महालयम् ।
नन्दाह्रदश्चतुर्थः स्यात्पञ्चमं भुवि दुर्लभम् ॥ १४०.७ ॥
बहवस्तं न जानन्ति कामरागसमन्विताः ।
नर्मदाया ह्रदं पुण्यं सर्वपातकनाशनम् ॥ १४०.८ ॥
तत्र तीर्थे तु यः स्नात्वा नन्दां देवीं प्रपूजयेत् ।
किं तस्य हिमवन्मध्यगमनेन प्रयोजनम् ॥ १४०.९ ॥
परमार्थमविज्ञाय पर्यटन्ति तमोवृताः ।
तेषां समागमे पार्थ श्रम एव हि केवलम् ॥ १४०.१० ॥
पृथिव्यां सागरान्तायां स्नानदानेन यत्फलम् ।
तत्फलं समवाप्नोति स्नात्वा नन्दाह्रदे नृप ॥ १४०.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नन्दाह्रदतीर्थमाहात्म्यवर्णनं नाम चत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४१



अध्याय १४१

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तापेश्वरमनुत्तमम् ।
यत्र सा हरिणी सिद्धा व्याधभीता नरेश्वर ॥ १४१.१ ॥
जले प्रक्षिप्य गात्राणि ह्यन्तरिक्षं गता तु सा ।
व्याधो विस्मितचित्तस्तु तां मृगीमवलोक्य च ॥ १४१.२ ॥
विमुच्य सशरं चापं प्रारेभे तप उत्तमम् ।
दिव्यं वर्षसहस्रं तु व्याधेनाचरितं तपः ॥ १४१.३ ॥
अतीते तु ततः काले परितुष्टो महेश्वरः ।
वरं ब्रूहि महाव्याध यत्ते मनसि रोचते ॥ १४१.४ ॥

व्याध उवाच -
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
तव पार्श्वे महादेव वासो मे प्रतिदीयताम् ॥ १४१.५ ॥

ईश्वर उवाच -
एवं भवतु ते व्याध यस्त्वया काङ्क्षितो वरः ।
दैवदेवो महादेव इत्युक्त्वान्तरधीयत ।
गते चादर्शनं देवे स्थापयित्वा महेश्वरम् ॥ १४१.६ ॥
पूजयित्वा विधानेन गतो व्याधस्ततो दिवम् ।
तदाप्रभृति तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १४१.७ ॥
व्याधानुतापसंजातं तापेश्वरमिति श्रुतम् ।
तत्र तीर्थे तु यः स्नात्वा सम्पूजयति शङ्करम् ॥ १४१.८ ॥
शिवलोकमवाप्नोति मामुवाच महेश्वरः ।
ये स्नाता नर्मदातोये तीर्थे तापेश्वरे नराः ॥ १४१.९ ॥

तापत्रयविमुक्तास्ते नात्र कार्या विचारणा ।
अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः ॥ १४१.१० ॥
स्नानं समाचरेन्नित्यं सर्वपातकशान्तये ॥ १४१.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तापेश्वरतीर्थमाहात्म्यवर्णनं नामैकचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४२

https://sa.wikisource.org/s/fdn
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १४२

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज रुक्मिणीतीर्थमुत्तमम् ।
यत्रैव स्नानमात्रेण रूपवान्सुभगो भवेत् ॥ १४२.१ ॥
अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः ।
स्नानं समाचरेत्तत्र न चेह जायते पुनः ॥ १४२.२ ॥
यः स्नात्वा रुक्मिणीतीर्थे दानं दद्यात्तु कांचनम् ।
तत्तीर्थस्य प्रभावेन शोकं नाप्नोति मानवः ॥ १४२.३ ॥

युधिष्ठिर उवाच -
तीर्थस्यास्य कथं जातो महिमेदृङ्मुनीश्वर ।
रूपसौभाग्यदं येन तीर्थमेतद्ब्रवीहि मे ॥ १४२.४ ॥

मार्कण्डेय उवाच -
कथयामि यथावृत्तमितिहासं पुरातनम् ।
कथितं पूर्वतो वृद्धैः पारम्पर्येण भारत ॥ १४२.५ ॥
तं तेऽहं सम्प्रवक्ष्यामि शृणुष्वैकाग्रमानसः ।
नगरं कुण्डिनं नाम भीष्मकः परिपाति हि ॥ १४२.६ ॥
हस्त्यश्वरथसम्पन्नो धनाढ्योऽति प्रतापवान् ।
स्त्रीसहस्रस्य मध्यस्थः कुरुते राज्यमुत्तमम् ॥ १४२.७ ॥
तस्य भार्या महादेवी प्राणेभ्योऽपि गरीयसी ।
तस्यामुत्पादयामास पुत्रमेकं च रुक्मकम् ॥ १४२.८ ॥
द्वितीया तनया जज्ञे रुक्मिणी नाम नामतः ।
तदाशरीरिणी वाचा राजानं तमुवाच ह ॥ १४२.९ ॥
चतुर्भुजाय दातव्या कन्येयं भुवि भीष्मक ।
एवं तद्वचनं श्रुत्वा जहर्ष प्रियया सह ॥ १४२.१० ॥

ब्राह्मणैः सह विद्वद्भिः प्रविष्टः सूतिकागृहम् ।
स्वस्तिकं वाचयित्वास्याश्चक्रे नामेति रुक्मिणी ॥ १४२.११ ॥
यतः सुवर्णतिलको जन्मना सह भारत ।
ततः सा रुक्मिणीनाम ब्राह्मणैः कीर्तिता तदा ॥ १४२.१२ ॥
ततः सा कालपर्यायादष्टवर्षा व्यजायत ।
पूर्वोक्तं चैव तद्वाक्यमशरीरिण्युदीरितम् ॥ १४२.१३ ॥
स्मृत्वा स्मृत्वाथ नृपतिश्चिन्तयामास भूपतिः ।
कस्मै देया मया बाला भविता कश्चतुर्भुजः ॥ १४२.१४ ॥
एतस्मिन्नन्तरे तावद्रैवतात्पर्वतोत्तमात् ।
मुख्यश्चेदिपतिस्तत्र दमघोषः समागतः ॥ १४२.१५ ॥
प्रविष्टो राजसदनं यत्र राजा स भीष्मकः ।
तं दृष्ट्वा चागतं गेहे पूजयामास भूपतिः ॥ १४२.१६ ॥
आसनं विपुलं दत्त्वा सभां गत्वा निवेशितः ।
कुशलं तव राजेन्द्र दमघोष श्रियायुत ॥ १४२.१७ ॥
पुण्याहमद्य संजातमहं त्वद्दर्शनोत्सुकः ।
कन्या मदीया राजेन्द्र ह्यष्टवर्षा व्यजायत ॥ १४२.१८ ॥
चतुर्भुजाय दातव्या वागुवाचाशरीरिणी ।
भीष्मकस्य वचः श्रुत्वा दमघोषोऽब्रवीदिदम् ॥ १४२.१९ ॥
चतुर्भुजो मम सुतस्त्रिषु लोकेषु विश्रुतः ।
तस्येयं दीयतां कन्या शिशुपालस्य भीष्मक ॥ १४२.२० ॥
तस्य तद्वचनं श्रुत्वा दमघोषस्य भूमिप ।
भीष्मकेन ततो दत्ता शिशुपालाय रुक्मिणी ॥ १४२.२१ ॥
प्रारब्धं मङ्गलं तत्र भीष्मकेण युधिष्ठिर ।
दिक्षु देशान्तरेष्वेव ये वसन्ति स्वगोत्रजाः ॥ १४२.२२ ॥
निमन्त्रितास्तु ते सर्वे समाजग्मुर्यथाक्रमम् ।
ततो यादववंशस्य तिलकौ बलकेशवौ ॥ १४२.२३ ॥
निमन्त्रितौ समायातौ कुण्डिनं भीष्मकस्य तु ।
भीष्मकेण यथान्यायं पूजितौ तौ यदूत्तमौ ॥ १४२.२४ ॥
ततः प्रदोषसमये रुक्मिणी काममोहिनी ।
सखीभिः सहिता याता पूर्बहिश्चाम्बिकार्चने ॥ १४२.२५ ॥
सापश्यत्तत्र देवेशं गोपवेषधरं हरिम् ।
तं दृष्ट्वा मोहमापन्ना कामेन कलुषीकृता ॥ १४२.२६ ॥
केशवोऽपि च तां दृष्ट्वा संकर्षणमुवाच ह ।

स्त्रीरत्नप्रवरं तात हर्तव्यमिति मे मतिः ॥ १४२.२७ ॥
केशवस्य वचः श्रुत्वा संकर्षण उवाच ह ।
गच्छ कृष्ण महाबाहो स्त्रीरत्नं चाशु गृह्यताम् ॥ १४२.२८ ॥
अहं च तव मार्गेण ह्यागमिष्यामि पृष्ठतः ।
दानवानां च सर्वेषां कुर्वंश्च कदनं महत् ॥ १४२.२९ ॥
संकर्षणमतं प्राप्य केशवः केशिसूदनः ।
ययौ कन्यां गृहीत्वा तु रथमारोप्य सत्वरम् ॥ १४२.३० ॥
निर्गतः सहसा राजन्वेगेनैवानिलो यथा ।
हाहाकारस्तदा जातो भीष्मकस्य पुरे महान् ॥ १४२.३१ ॥
निर्गता दानवाः क्रुद्धा वेला इव महोदधेः ।
गर्जन्तः सायुधाः सर्वे धावन्तो रथवर्त्मनि ॥ १४२.३२ ॥
बलदेवं ततः प्राप्ता रथमार्गानुगामिनम् ।
तेषां युद्धं बलस्यासीत्सर्वलोकक्षयंकरम् ॥ १४२.३३ ॥
यथा तारामये पूर्वं सङ्ग्रामे लोकविश्रुते ।
गदाहस्तो महाबाहुस्त्रैलोक्येऽप्रतिमो बलः ॥ १४२.३४ ॥
हलेनाकृष्य सहसा गदापातैरपातयत् ।
अशक्यो दानवैर्हन्तुं बलभद्रो महाबलः ॥ १४२.३५ ॥
बभञ्ज दानवान्सर्वांस्तस्थौ गिरिरिवाचलः ।
तं दृष्ट्वा च बलं क्रुद्धं दुर्धर्षं त्रिदशैरपि ॥ १४२.३६ ॥
भीष्मपुत्रो महातेजा रुक्मीनां महयशाः ।
नराणामतिशूराणामक्षौहिण्या समन्वितः ॥ १४२.३७ ॥
बलभद्रमतिक्रम्य ततो युद्धे निराकरोत् ।
तद्युद्धं वञ्चयित्वा तु रथमार्गेण सत्वरम् ॥ १४२.३८ ॥
केशवोऽपि तदा देवो रुक्मिण्या सहितो ययौ ।
विन्ध्यं तु लङ्घयित्वाग्रे त्रैलोक्यगुरुरव्ययः ॥ १४२.३९ ॥
नर्मदातटमापेदे यत्र सिद्धः पुरा पुनः ।
अजेयो येन संजातस्तीर्थस्यास्य प्रभावतः ॥ १४२.४० ॥
एतस्मात्कारणात्तात योधनीपुरमुच्यते ।
रुक्मोऽपि दानवेन्द्रोऽसौ प्राप्तः ॥ १४२.४१ ॥
प्रत्युवाचाच्युतं क्रुद्धस्तिष्ठ तिष्ठेति मा व्रज ।
अद्य त्वां निशितैर्बाणैर्नेष्यामि यमसादनम् ॥ १४२.४२ ॥
एवं परस्परं वीरौ जगर्जतुरुभावपि ।
तयोर्युद्धमभूद्घोरं तारकाग्निजसन्निभम् ॥ १४२.४३ ॥

चिक्षेप शरजालानि केशवं प्रति दानवः ।
नानुचिन्त्य शरांस्तस्य केशवः केशिसूदनः ॥ १४२.४४ ॥
ततो विष्णुः स्वयं क्रुद्धश्चक्रं गृह्य सुदर्शनम् ।
सम्प्रहरत्यमुं यावद्रुक्मिण्यात्र निवारितः ॥ १४२.४५ ॥
त्वां न जानाति देवेशं चतुर्बाहुं जनार्दनम् ।
दर्शयस्व स्वकं रूपं दयां कृत्वा ममोपरि ॥ १४२.४६ ॥
एवमुक्तस्तु रुक्मिण्या दर्शयामास भारत ।
देवा दृष्ट्वापि तद्रूपं स्तुवन्त्याकाशसंस्थिताः ।
दिव्यं चक्षुस्तदा देवो ददौ रुक्मस्य भारत ॥ १४२.४७ ॥

रुक्म उवाच -
यन्मया पापनिष्ठेन मन्दभाग्येन केशव ।
सायकैराहतं वक्षस्तत्सर्वं क्षन्तुमर्हसि ॥ १४२.४८ ॥
पूर्वं दत्ता स्वयं देव जानकी जनकेन वै ।
मया प्रदत्ता देवेश रुक्मिणी तव केशव ॥ १४२.४९ ॥
उद्वाहय यथान्यायं विधिदृष्टेन कर्मणा ।
रुक्मस्य वचनं श्रुत्वा ततस्तुष्टो जगद्गुरुः ॥ १४२.५० ॥
बभाषे देवदेवेशो रुक्मिणं भीष्मकात्मजम् ।
गच्छ स्वकं पुरं मा भैः कुरु राज्यमकण्टकम् ॥ १४२.५१ ॥
केशवस्य वचः श्रुत्वा रुक्मो दानवपुंगवः ।
तं प्रणम्य जगन्नाथं जगाम भवनं पितुः ॥ १४२.५२ ॥
गते रुक्मे तदा कृष्णः समामन्त्र्य द्विजोत्तमान् ।
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥ १४२.५३ ॥
वसिष्ठं च महाभागमित्येते सप्त मानसाः ।
इत्येते ब्राह्मणाः सप्त पुराणे निश्चयं गताः ॥ १४२.५४ ॥
क्षमावन्तः प्रजावन्तो महर्षिभिरलंकृताः ।
इत्येवं ब्रह्मपुत्राश्च सत्यवन्तो महामते ॥ १४२.५५ ॥
नर्मदातटमाश्रित्य निवसन्ति जितेन्द्रियाः ।
तपःस्वाध्यायनिरता जपहोमपरायणाः ॥ १४२.५६ ॥
निमन्त्रितास्तु राजेन्द्र केशवेन महात्मना ।
श्राद्धं कृत्वा यथान्यायं ब्रह्मोक्तविधिना ततः ॥ १४२.५७ ॥
हरिस्तान्पूजयामास सप्तब्रह्मर्षिपुंगवान् ।
प्रददौ द्वादश ग्रामांस्तेभ्यस्तत्र जनार्दनः ॥ १४२.५८ ॥

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावद्दानं मया दत्तं परिपन्थी न कश्चन ॥ १४२.५९ ॥
मद्दत्तं पालयिष्यन्ते ये नृपा गतकल्मषाः ।
तेभ्यः स्वस्ति करिष्यामि दास्यामि परमां गतिम् ॥ १४२.६० ॥
यावद्धि यान्ति लोकेषु महाभूतानि पञ्च च ।
तावत्ते दिवि मोदन्ते मद्दत्तपरिपालकाः ॥ १४२.६१ ॥
यस्तु लोपयते मूढो दत्तं वः पृथिवीतले ।
नरके तस्य वासः स्याद्यावदाभूतसम्प्लवम् ॥ १४२.६२ ॥
स्वदत्ता परदत्ता वा पालनीया वसुंधरा ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ १४२.६३ ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥ १४२.६४ ॥
अन्यायेन हृता भूमिरन्यायेन च हारिता ।
हर्ता हारयिता चैव विष्ठायां जायते कृमिः ॥ १४२.६५ ॥
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥ १४२.६६ ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यरूपप्रतिमानि तानि को नाम साधुः पुनराददाति ॥ १४२.६७ ॥
एवं तान्पूजयित्वा तु सम्यङ्न्यायेन पाण्डव ।
रुक्मिण्या विधिवत्पाणिं जग्राह मधुसूदनः ॥ १४२.६८ ॥
मुशली च ततः सर्वाञ्जित्वा दानवपुंगवान् ।
स्वस्थानमगमत्तत्र कृत्वा कार्यं सुशोभनम् ॥ १४२.६९ ॥
प्रयातौ द्वारवत्यां तौ कृष्णसंकर्षणावुभौ ।
गच्छमानं तु तं दृष्ट्वा केशवं क्लेशनाशनम् ॥ १४२.७० ॥
ब्राह्मणाः सत्यवन्तश्च निर्गताः शंसितव्रताः ।
आगच्छमानांस्तौ वीक्ष्य रथमार्गेण ब्राह्मणान् ॥ १४२.७१ ॥
मुहूर्तं तत्र विश्रम्य केशवो वाक्यमब्रवीत् ।
किमागमनकार्यं वो ब्रूत सर्वं द्विजोत्तमाः ॥ १४२.७२ ॥
कुर्वाणाः स्वीयकर्माणि मम कृत्यं तु तिष्ठते ।
देवस्य वचनं श्रुत्वा मुनयो वाक्यमब्रुवन् ॥ १४२.७३ ॥
कल्पकोटिसहस्रेण सत्यभावात्तु वन्दितः ।
दुष्प्राप्योऽसि मनुष्याणां प्राप्तः किं त्यजसे हि नः ॥ १४२.७४ ॥
ब्राह्मणानां वचः श्रुत्वा भगवानिदमब्रवीत् ।

मथुरायां द्वारवत्यां योधनीपुर एव च ॥ १४२.७५ ॥
त्रिकालमागमिष्यामि सत्यं सत्यं पुनः पुनः ।
एवं ते ब्राह्मणाः श्रुत्वा योधनीपुरमागताः ॥ १४२.७६ ॥
अवतीर्णस्त्रिभागेन प्रादुर्भावे तु माथुरे ।
एतत्ते कथितं सर्वं तीर्थस्योत्पत्तिकारणम् ॥ १४२.७७ ॥
भूतं भव्यं भविष्यच्च वर्तमानं तथापरम् ।
यं श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १४२.७८ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेद्बलकेशवौ ।
तेन देवो जगद्धाता पूजितस्त्रिगुणात्मवान् ॥ १४२.७९ ॥
उपवासी नरो भूत्वा यस्तु कुर्यात्प्रदक्षिणम् ।
मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ १४२.८० ॥
तत्र तीर्थे तु ये वृक्षास्तान्पश्यन्त्यपि ये नराः ।
तेऽपि पापैः प्रमुच्यन्ते भ्रूणहत्यासमैरपि ॥ १४२.८१ ॥
प्रातरुत्थाय ये केचित्पश्यन्ति बलकेशवौ ।
तेन ते सदृशाः स्युर्वै देवदेवेन चक्रिणा ॥ १४२.८२ ॥
ते पूज्यास्ते नमस्कार्यास्तेषां जन्म सुजीवितम् ।
ये नमन्ति जगन्नाथं देवं नारायणं हरिम् ॥ १४२.८३ ॥
तत्र तीर्थे तु यद्दानं स्नानं देवार्चनं नृप ।
तत्सर्वमक्षयं तस्य इत्येवं शङ्करोऽब्रवीत् ॥ १४२.८४ ॥
प्रविश्याग्नौ मृतानां च यत्फलं समुदाहृतम् ।
तच्छृणुष्व नृपश्रेष्ठ प्रोच्यमानमशेषतः ॥ १४२.८५ ॥
विमानेनार्कवर्णेन किंकिणीजालमालिना ।
आग्नेये भवते तत्र मोदते कालमीप्सितम् ॥ १४२.८६ ॥
जले चैवा मृतानां तु योधनीपुरमध्यतः ।
वसन्ति वारुणे लोके यावदाभूतसम्प्लवम् ॥ १४२.८७ ॥
अनाशके मृतानां तु तत्र तीर्थे नराधिप ।
अनिवर्तिका गतिर्नृणां नात्र कार्या विचारणा ॥ १४२.८८ ॥
तत्र तीर्थे तु यो दद्यात्कपिलादानमुत्तमम् ।
विधानेन तु संयुक्तं शृणु तस्यापि यत्फलम् ॥ १४२.८९ ॥
यावन्ति तस्या रोमाणि तत्प्रसूतेश्च भारत ।
तावन्ति दिवि मोदन्ते सर्वकामैः सुपूजिताः ॥ १४२.९० ॥
यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः ।
स्वर्गाच्च्युतश्चापि ततस्त्रिलोक्यां कुले समुत्पत्स्यति गोमतां सः ॥ १४२.९१ ॥

तत्र तीर्थे तु यो दद्याद्रूप्यं काञ्चनमेव वा ।
काञ्चनेन विमानेन विष्णुलोके महीयते ॥ १४२.९२ ॥
तस्मिंस्तीर्थे तु यो दद्यात्पादुके वस्त्रमेव च ।
दानस्यास्य प्रभावेन लभते स्वर्गमीप्सितम् ॥ १४२.९३ ॥
ऋग्यजुःसामवेदानां पठनाद्यत्फलं भवेत् ।
तत्र तीर्थे तु राजेन्द्र गायत्र्या तत्फलं लभेत् ॥ १४२.९४ ॥
प्रयागे यद्भवेत्पुण्यं गयायां च त्रिपुष्करे ।
कुरुक्षेत्रे तु राजेन्द्र राहुग्रस्ते दिवाकरे ॥ १४२.९५ ॥
सोमेश्वरे च यत्पुण्यं सोमस्य ग्रहणे तथा ।
तत्फलं लभते तत्र स्नानमात्रान्न संशयः ॥ १४२.९६ ॥
द्वादश्यां तु नरः स्नात्वा नमस्कृत्य जनार्दनम् ।
उद्धृताः पितरस्तेन अवाप्तं जन्मनः फलम् ॥ १४२.९७ ॥
संक्रान्तौ च व्यतीपाते द्वादश्यां च विशेषतः ।
ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता ॥ १४२.९८ ॥
पृथिव्यां यानि तीर्थानि ह्यासमुद्राणि पाण्डव ।
तानि सर्वाणि तत्रैव द्वादश्यां पाण्डुनन्दन ॥ १४२.९९ ॥
क्षयं यान्ति च दानानि यज्ञहोमबलिक्रियाः ।
न क्षीयते महाराज तत्र तीर्थे तु यत्कृतम् ॥ १४२.१०० ॥
यद्भूतं यद्भविष्यच्च तीर्थमाहात्म्यमुत्तमम् ।
कथितं ते मया सर्वं पृथग्भावेन भारत ॥ १४२.१०१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रुक्मिणीतीर्थमाहात्म्यवर्णनं नाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४३



अध्याय १४३

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज योजनेश्वरमुत्तमम् ।
यत्र सिद्धौ पुरा कल्पे नरनारायणावृषी ॥ १४३.१ ॥
तत्र तीर्थे तपस्तस्त्वा सङ्ग्रामे देवदानवैः ।
जयं प्राप्तौ महात्मानौ नरनारायणावुभौ ॥ १४३.२ ॥
पुनस्त्रेतायुगे प्राप्ते तौ देवौ रामलक्ष्मणौ ।
तत्र तीर्थे पुनः स्नात्वा रावणो दुर्जयो हतः ॥ १४३.३ ॥
पुनः पार्थ कलौ प्राप्ते तौ देवौ बलकेशवौ ।
वसुदेवकुले जातौ दुष्करं कर्म चक्रतुः ॥ १४३.४ ॥
नरकं कालनेमिं च कंसं चाणूरमुष्टिकौ ।
शिशुपालं जरासंधं जघ्नतुर्बलकेशवौ ॥ १४३.५ ॥
ततस्तत्र रिपून्संख्ये भीष्मद्रोणपुरःसरान् ।
कर्णदुर्योधनादींश्च निहनिष्यति स प्रभुः ॥ १४३.६ ॥
धर्मक्षेत्रे कुरुक्षेत्रे तत्र युध्यन्ति ते क्षणम् ।
भीमार्जुननिमित्तेन शिष्यौ कृत्वा परस्परम् ॥ १४३.७ ॥
तत्र तीर्थे पुनर्गत्वा तपः कृत्वा सुदुष्करम् ।
पूजयित्वा द्विजान्भक्त्या यास्येते द्वारकां पुनः ॥ १४३.८ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेद्बलकेशवौ ।
तेन देवो जगद्धाता पूजितस्त्रिगुणात्मवान् ॥ १४३.९ ॥
उपवासी नरो भूत्वा यस्तु कुर्यात्प्रजागरम् ।
मुच्यते सर्वपापेभ्यो गायंस्तस्य शुभां कथाम् ॥ १४३.१० ॥
यावतस्तत्र तीर्थे तु वृक्षान् पश्यन्ति मानवाः ।
ब्रह्महत्यादिकं पापं तावदेषां प्रणश्यति ॥ १४३.११ ॥
प्रातरुत्थाय ये केचित्पश्यन्ति बलकेशवौ ।

तेनैव सदृशाः सर्वे देवदेवेन चक्रिणा ॥ १४३.१२ ॥
ते पूज्यास्ते नमस्कार्यास्तेषां जन्म सुजीवितम् ।
ये नमन्ति जगत्पूज्यं देवं नारायणं हरिम् ॥ १४३.१३ ॥
तत्र तीर्थे तु यद्दानं स्नानं देवार्चनं नृप ।
क्रियते तत्फलं सर्वमक्षयायोपकल्पते ॥ १४३.१४ ॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च भुवं च दद्यात् ॥ १४३.१५ ॥
एतत्ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ।
अतीतं च भविष्यच्च वर्तमानं महाबलम् ॥ १४३.१६ ॥
श्रुत्वा वापि पठित्वेदं श्रावयिपत्वाथ धार्मिकान् ।
मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ १४३.१७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे योजनेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४४



अध्याय १४४

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज द्वादशीतीर्थमुत्तमम् ।
क्षरन्ति सर्वदानानि जपहोमबलिक्रियाः ॥ १४४.१ ॥
न क्षीयते तु राजेन्द्र चक्रतीर्थे तु यत्कृतम् ।
यद्भूतं यद्भविष्यच्च तीर्थमाहात्म्यमुत्तमम् ॥ १४४.२ ॥
कथितं तन्मया सर्वं पृथग्भावेन भारत ॥ १४४.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे द्वादशीतीर्थमहात्म्यवर्णनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४५

https://sa.wikisource.org/s/fdk
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १४५

मार्कण्डेय उवाच -

ततो गच्छेद्धरापाल शीवतीर्थमनुत्तमम् ।

दर्शनाद्यस्य देवस्य मुच्यते सर्वकिल्बिषैः ॥ १४५.१ ॥

शिवतीर्थे तु यः स्नात्वा जितक्रोधो जितेन्द्रियः ।

पूजयेत महादेवं सोऽग्निष्टोमफलं लभेत् ॥ १४५.२ ॥

तत्र तीर्थे तु यो भक्त्या सोपवासोऽर्चयेच्छिवम् ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ १४५.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शिवतीर्थमाहात्म्यवर्णनं नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४६

https://sa.wikisource.org/s/fdj

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १४६

मार्कण्डेय उवाच -

अस्माहकं ततो गच्छेत्पितृतीर्थमनुत्तमम् ।

प्रेतत्वाद्यत्र मुच्यन्ते पिण्डेनैकेन पूर्वजाः ॥ १४६.१ ॥

युधिष्ठिर उवाच -

अस्माहकस्य माहात्म्यं कथयस्व ममानघ ।

स्नानदानेन यत्पुण्यं तथा पिण्डोदकेन च ॥ १४६.२ ॥

श्रीमार्कण्डेय उवाच -

पुरा कल्पे नृपश्रेष्ठ ऋषिदेवसमागमे ।

प्रश्नः पृष्टो मया तात यथा त्वमनुपृच्छसि ॥ १४६.३ ॥

एकत्र सागराः सप्त सप्रयागाः सपुष्कराः ।

नास्य साम्यं लभन्ते ते नात्र कार्या विचारणा ॥ १४६.४ ॥

सोमनाथं तु विख्यातं यत्सोमेन प्रतिष्ठितम् ।

तत्र सोमग्रहे पुण्यं तत्पुण्यं लभते नरः ॥ १४६.५ ॥

मासान्ते पितरो नृणां वीक्षन्ते सन्ततिं स्वकाम् ।

कश्चिदस्मत्कुलेऽस्माकं पिण्डमत्र प्रदास्यति ॥ १४६.६ ॥

प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी ।

एवं ब्रुवन्ति देवाश्च ऋषयः सतपोधनाः ॥ १४६.७ ॥

सकृत्पिण्डोदकेनैव शृणु पार्थिव यत्फलम् ।

द्वादशाब्दानि राजेन्द्र योगं भुक्त्वा सुशोभनम् ॥ १४६.८ ॥

युगे युगे महाराज अस्माहके पितामहाः ।

सर्वदा ह्यवलोकन्त आगच्छन्तं स्वगोत्रजम् ॥ १४६.९ ॥

भविष्यति किमस्माकममावास्याप्यमाहके ।
स्नानं दानं च ये कुर्युः पितॄणां तिलतर्पणम् ॥ १४६.१० ॥
ते सर्वपापनिर्मुक्ताः सर्वान्कामांल्लभति वै ।
जलमध्येऽत्र भूपाल अग्नितीर्थं च तिष्ठति ॥ १४६.११ ॥
दर्शनात्तस्य तीर्थस्य पापराशिर्विलीयते ।
स्नानमात्रेण राजेन्द्र ब्रह्महत्यां व्यपोहति ॥ १४६.१२ ॥
शुक्लाम्बरधरो नित्यं नियतः स जितेन्द्रियः ।
एककालं तु भुञ्जानो मासं तीर्थस्य सन्निधौ ॥ १४६.१३ ॥
सुवर्णालंकृतानां तु कन्यानां शतदानजम् ।
फलमाप्नोति सम्पूर्णं पितृलोके महीयते ॥ १४६.१४ ॥
पृथिव्यामासमुद्रायां महाभोगपतिर्भवेत् ।
धनधान्यसमायुक्तो दाता भवति धार्मिकः ॥ १४६.१५ ॥
उपवासी शुचिर्भूत्वा ब्रह्मलोकमवाप्नुयात् ।
अस्माहकं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ १४६.१६ ॥
कोटिवर्षसहस्राणि रुद्रलोके महीयते ।
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ १४६.१७ ॥
सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् ।
कृत्वाभिषेकविधिना हयमेधफलं लभेत् ॥ १४६.१८ ॥
धनाढ्यो रूपवान्दक्षो दाता भवति धार्मिकः ।
चतुर्वेदेषु यत्पुण्यं सत्यवादिषु यत्फलम् ॥ १४६.१९ ॥
तत्फलं लभते नूनं तत्र तीर्थेऽभिषेचनात् ।
तीर्थानां परमं तीर्थं निर्मितं शम्भुना पुरा ॥ १४६.२० ॥
हृदयेशः स्वयं विष्णुर्जपेद्देवं महेश्वरम् ।
गन्धर्वाप्सरसश्चैव मरुतो मारुतास्तथा ॥ १४६.२१ ॥
विश्वेदेवाश्च पितरः सचन्द्राः सदिवाकराः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ १४६.२२ ॥
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च ।
च्यवनो गालवश्चैव वामदेवो महामुनिः ॥ १४६.२३ ॥

वालखिल्याश्च गन्धारास्तृणबिन्दुश्च जाजलिः ।

उद्दालकश्चर्ष्यशृङ्गो वसिष्ठश्च सनन्दनः ॥ १४६.२४ ॥

शुक्रश्चैव भरद्वाजो वात्स्यो वात्स्यायनस्तथा ।

अगस्तिर्मित्रावरुणौ विश्वामित्रो मुनीश्वरः ॥ १४६.२५ ॥

गौतमश्च पुलस्त्यश्च पौलस्त्यः पुलहः क्रतुः ।

सनातनस्तु कपिलो वाह्निः पञ्चशिखस्तथा ॥ १४६.२६ ॥

अन्येऽपि बहवस्तत्र मुनयः शंसितव्रताः ।

क्रीडन्ति देवताः सर्व ऋषयः सतपोधनाः ॥ १४६.२७ ॥

मनुष्याश्चैव योगीन्द्राः पितरः सपितामहाः ।

अस्माहकेऽत्र तिष्ठन्ति सर्व एव न संशयः ॥ १४६.२८ ॥

पितरः पितामहाश्चैव तथैव प्रपितामहाः ।

येषां दत्तमुपस्थायि सुकृतं वापि दुष्कृतम् ॥ १४६.२९ ॥

अक्षयं तत्र तत्सर्वं यत्कृतं योधनीपुरे ।

मातरं पितरं त्यक्त्वा सर्वबन्धुसुहृज्जनान् ॥ १४६.३० ॥

धनं धान्यं प्रियान्पुत्रांस्तथा देहं नृपोत्तम ।

गच्छते वायुभूतस्तु शुभाशुभसमन्वितः ॥ १४६.३१ ॥

अदृश्यः सर्वभूतानां परमात्मा महत्तरः ।

शुभाशुभगतिं प्राप्तः कर्मणा स्वेन पार्थिव ॥ १४६.३२ ॥

युधिष्ठिर उवाच -

शुभाशुभं न बन्धूनां जायते केन हेतुना ।

एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥ १४६.३३ ॥

एको हि भुङ्क्ते सुकृतमेक एव हि दुष्कृतम् ॥ १४६.३४ ॥

मार्कण्डेय उवाच -

एष त्वयोक्तो नृपते महाप्रश्नः स्मृतो मया ॥ १४६.३५ ॥

पितामहमुखोद्गीतं श्रुतं ते कथयाम्यहम् ।

यन्मे पितामहात्पूर्वं विज्ञातमृषिसंसदि ॥ १४६.३६ ॥

न माता न पिता बन्धुः कस्यचिन्न सुहृत्क्वचित् ।

कस्य न ज्ञायते रूपं वायुभूतस्य देहिनः ॥ १४६.३७ ॥

यद्येवं न भवेत्तात लोकस्य तु नरेश्वर ।
अमर्यादं भवेन्नूनं विनश्यति चराचरम् ॥ १४६.३८ ॥
एवं ज्ञात्वा पूरा राजन्समस्तैर्लोककर्तृभिः ।
मर्यादा स्थापिता लोके यथा धर्मो न नश्यति ॥ १४६.३९ ॥
धर्मे नष्टे मनुष्याणामधर्मोऽभिभवेत्पुनः ।
ततः स्वधर्मचलनान्नरके गमनं ध्रुवम् ॥ १४६.४० ॥
लोको निरङ्कुशः सर्वो मर्यादालङ्घने रतः ।
मर्यादा स्थापिता तेन शास्त्रं वीक्ष्य महर्षिभिः ॥ १४६.४१ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।
पिण्डोदकप्रदानं च तथैवातिथिपूजनम् ॥ १४६.४२ ॥
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
त्रयो देवाः स्मृतास्तात ब्रह्मविष्णुमहेश्वराः ॥ १४६.४३ ॥
पूजितैः पूजिताः सर्वे तथा मातामहास्त्रयः ।
तस्मात्सर्वप्रयत्नेन श्रुतिस्मृत्यर्थनोदितान् ॥ १४६.४४ ॥
धर्मं समाचरन्नित्यं पापांशेन न लिप्यते ।
श्रुतिस्मृत्युदितं धर्मं मनसापि न लङ्घयेत् ॥ १४६.४५ ॥
इह लोके परे चैव यदीच्छेच्छ्रेय आत्मनः ।
पितापुत्रौ सदाप्येकौ बिम्बाद्बिम्बमिवोद्धृतौ ॥ १४६.४६ ॥
विभक्तौ वाविभक्तौ वा श्रुतिस्मृत्यर्थतस्तथा ।
उद्धरेदात्मनात्मानमात्मानमवसादयेत् ॥ १४६.४७ ॥
पिण्डोदकप्रदानाभ्यामृते पार्थ न संशयः ।
एवं ज्ञात्वा प्रयत्नेन पिण्डोदकप्रदो भवेत् ॥ १४६.४८ ॥
आयुर्धर्मो यशस्तेजः सन्ततिश्चैव वर्धते ।
पृथिव्यां सागरान्तायां पितृक्षेत्राणि यानि च ॥ १४६.४९ ॥
तानि ते सम्प्रवक्ष्यामि येषु दत्तं महाफलम् ।
गयायां पुष्करे ज्येष्ठे प्रयागे नैमिषे तथा ॥ १४६.५० ॥
संनिहत्यां कुरुक्षेत्रे प्रभासे कुरुनन्दन ।
पिण्डोदकप्रदानेन यत्फलं कथितं बुधैः ॥ १४६.५१ ॥

अस्माहके तदाप्नोति नर्मदायां न संशयः ।
तत्र ब्रह्मा मुरारिश्च रुद्रश्च उमया सह ॥ १४६.५२ ॥
इन्द्राद्या देवताः सर्वे पितरो मुनयस्तथा ।
सागराः सरितश्चैव पर्वताश्च बलाहकाः ॥ १४६.५३ ॥
तिष्ठन्ति पितरः सर्वे सर्वतीर्थाधिकं ततः ।
स्थिता ब्रह्मशिला तत्र गजकुम्भनिभा नृप ॥ १४६.५४ ॥
कलौ न दृश्या भवति प्रधानं यद्गयाशिरः ।
वैशाखे मासि सम्प्राप्तेऽमावास्यां नृपोत्तम ॥ १४६.५५ ॥
व्याप्य सा तिष्ठते तीर्थं गजकुम्भनिभा शिला ।
तच्च गव्यूतिमात्रं हि तीर्थं ततः प्रवक्षते ॥ १४६.५६ ॥
तस्मिन्दिने तत्र गत्वा यस्तु श्राद्धप्रदो भवेत् ।
पितृणामक्षया तृप्तिर्जायते शतवार्षिकी ॥ १४६.५७ ॥
अन्यस्यामप्यमावास्यां यः स्नात्वा विजितेन्द्रियः ।
करोति मनुजः श्राद्धं विधिवन्मन्त्रसंयुतम् ॥ १४६.५८ ॥
तस्य पुण्यफलं यत्स्यात्तच्छृणुष्व नराधिप ।
अग्निष्टोमाश्वमेधाभ्यां वाजपेयस्य यत्फलम् ॥ १४६.५९ ॥
तत्फलं समवाप्नोति यथा मे शङ्करोऽब्रवीत् ।
रौरवादिषु सर्वेषु नरकेषु व्यवस्थिताः ॥ १४६.६० ॥
पिता पितामहाद्याश्च पितृके मातृके तथा ।
पिण्डोदकेन चैकेन तर्पणेन विशेषतः ॥ १४६.६१ ॥
क्रीडन्ति पितृलोकस्था यावदाभूतसम्प्लवम् ।
ये कर्मस्था विकर्मस्था ये जाताः प्रेतकल्मषाः ॥ १४६.६२ ॥
पिण्डेनैकेन मुच्यन्ते तेऽपि तत्र न संशयः ।
अस्माहके शिला दिव्या तिष्ठते गजसन्निभा ॥ १४६.६३ ॥
ब्रह्मणा निर्मिता पूर्वं सर्वपापक्षयंकरी ।
उपर्यस्या यथान्यायं पितॄनुद्दिश्य भारत ॥ १४६.६४ ॥
दक्षिणाग्रेषु दर्भेषु दद्यात्पिण्डान्विचक्षणः ।
भूमौ चान्नेन सिद्धेन श्राद्धं कृत्वा यथाविधि ॥ १४६.६५ ॥

श्राद्धिभ्यो वस्त्रयुग्मानि छत्रोपानत्कमण्डलु ।
दक्षिणा विविधा देया पितॄनुद्दिश्य भारत ॥ १४६.६६ ॥
यो ददाति द्विजश्रेष्ठ तस्य पुण्यफलं शृणु ।
तस्य ते द्वादशाब्दानि तृप्तिं यान्ति न संशयः ॥ १४६.६७ ॥
अस्माहके महाराज पितरश्च पितामहाः ।
वायुभूता निरीक्षन्ते आगच्छन्तं स्वगोत्रजम् ॥ १४६.६८ ॥
अत्र तीर्थे सुतोऽभ्येत्य स्नात्वा तोयं प्रदास्यति ।
श्राद्धं वा पिण्डदानं वा तेन यास्याम सद्गतिम् ॥ १४६.६९ ॥
स्नाने कृते तु ये केचिज्जायन्ते वस्त्रविप्लुषः ।
प्रीणयेन्नरकस्थांस्तु तैः पितॄन्नात्र संशयः ॥ १४६.७० ॥
केशोदबिन्दवस्तस्य ये चान्ये लेपभाजिनः ।
तृप्यन्त्यनग्निनसंस्कारा यं मृताः स्युः स्वगोत्रजाः ॥ १४६.७१ ॥
तत्र तीर्थे तु ये केचिच्छ्राद्धं कृत्वा विधानतः ।
नरकादुद्धरन्त्याशु जपन्तः पितृसंहिताम् ॥ १४६.७२ ॥
वनस्पतिगते सोमे यदा सोमदिनं भवेत् ।
अक्षयाल्लभते लोकान्पिण्डेनैकेन मानवः ॥ १४६.७३ ॥
अक्षयं तत्र वै सर्वं जायते नात्र संशयः ।
नरकादुद्धरन्त्याशु जपन्ते पितृसंहिताम् ॥ १४६.७४ ॥
तस्मिंस्तीर्थे त्वमावास्यां पितॄनुद्दिश्य भारत ।
नीलं सर्वाङ्गसम्पूर्णं योऽभिषिच्य समुत्सृजेत् ॥ १४६.७५ ॥
तस्य पुण्यफलं वक्तुं न तु वाचस्पतिः क्षमः ।
अस्माहके वृषोत्सर्गाद्यत्पुण्यं समवाप्यते ॥ १४६.७६ ॥
तव शुश्रूषणात्सर्वं तत्प्रवक्ष्यामि भारत ।
रौरवादिषु ये किंचित्पच्यन्ते तस्य पूर्वजाः ॥ १४६.७७ ॥
वृषोत्सर्गेण तान्सर्वांस्तारयेदेकविंशतिम् ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ॥ १४६.७८ ॥
पिङ्गः खुरविषाणाभ्यां स नीलो वृष उच्यते ।
यस्तु सर्वाङ्गपिङ्गश्च श्वेतः पुच्छखुरेषु च ॥ १४६.७९ ॥

स पिङ्गो वृष इत्याहुः पितॄणां प्रीतिवर्धनः ।
पारावतसवर्णश्च ललाटे तिलको भवेत् ॥ १४६.८० ॥
तं वृषं बभ्रुमित्याहुः पूर्णं सर्वाङ्गशोभनम् ।
सर्वाङ्गेष्वेकवर्णो यः पिङ्गः पुच्छखुरेषु च ॥ १४६.८१ ॥
खुरपिङ्गं तमित्याहुः पितॄणां सद्गतिप्रदम् ।
नीलं सर्वशरीरेण स्वारक्तनयनं दृढम् ॥ १४६.८२ ॥
तमेव नीलमित्याहुर्नीलः पञ्चविधः स्मृतः ।
यस्तु वैश्यगृहे जातः स वै नीलो विशिष्यते ॥ १४६.८३ ॥
न वाहयेद्गृहे जातं वत्सकं तु कदाचन ।
तेनैव च वृषोत्सर्गे पितॄणामनृणो भवेत् ॥ १४६.८४ ॥
जातं तु स्वगृहे वत्सं द्विजन्मा यस्तु वाहयेत् ।
पतन्ति पितरस्तस्य ब्रह्मकोकगता अपि ॥ १४६.८५ ॥
यथायथा हि पिबति पीत्वा धूनाति मस्तकम् ।
पिबन्पितॄन् प्रीणयति नरकादुद्धरेद्धुनन् ॥ १४६.८६ ॥
यथा पुच्छाभिघातेन स्कन्धं गच्छन्ति बिन्दवः ।
नरकादुद्धरन्त्याशु पतितान् गोत्रिणस्तथा ॥ १४६.८७ ॥
गर्जन्प्रावृषि काले तु विषाणाभ्यां भुवं लिखन् ।
खुरेभ्यो या मृदुद्भूता तया संप्रीणयेदृषीन् ॥ १४६.८८ ॥
पिबन्पितॄन् प्रीणयते खादनोल्लेखने सुरान् ।
गर्जन्नृषिमनुष्यांश्च धर्मरूपो हि धर्मज ॥ १४६.८९ ॥
भूतैर्वापि पिशाचैर्वा चातुर्थिकज्वरेण वा ।
गृहीतोऽस्माहकं गच्छेत्सर्वेषामाधिनाशनम् ॥ १४६.९० ॥
स्नात्वा तु विमले तोये दर्भग्रन्थिं निबन्धयेत् ।
मस्तके बाहुमूले वा नाभ्यां वा गलकेऽपि वा ॥ १४६.९१ ॥
गत्वा देवसमीपं च प्रादक्षिण्येन केशवम् ।
ततः समुच्चरन्मन्त्रं गायत्र्या वाथ वैष्णवम् ॥ १४६.९२ ॥
नारायणं शरण्येशं सर्वदेवनमस्कृतम् ।
नमो यज्ञाङ्गसम्भूत सर्वव्यापिन्नमोऽस्तु ते ॥ १४६.९३ ॥

नमो नमस्ते देवेश पद्मगर्भ सनातन ।
दामोदर जयानन्त रक्ष मां शरणागतम् ॥ १४६.९४ ॥
त्वं कर्ता त्वं च हर्ता च जगत्यस्मिंश्चराचरे ।
त्वं पालयसि भूतानि भुवनं त्वं बिभर्षि च ॥ १४६.९५ ॥
प्रसीद देवदेवेश सुप्तमङ्गं प्रबोधय ।
त्वद्ध्याननिरतो नित्यं त्वद्भक्तिपरमो हरे ॥ १४६.९६ ॥
इति स्तुतो मया देव प्रसादं कुरु मेऽच्युत ।
मां रक्ष रक्ष पापेभ्यस्त्रायस्व शरणागतम् ॥ १४६.९७ ॥
एवं स्तुत्वा च देवेशं दानवान्तकरं हरिम् ।
पुनरुक्तेन वै स्नात्वा ततो विप्रांस्तु भोजयेत् ॥ १४६.९८ ॥
वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि ।
पिण्डनिर्वपणं कृत्वा वाचयेत्स्वस्तिकं ततः ॥ १४६.९९ ॥
एवं स्तुत्वा च देवेशं दानवान्तकरं हरिम् ।
पुनरुक्तेन वै स्नात्वा ततो विप्रांस्तु भोजयेत् ॥ १४६.१०० ॥
वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि ।
एवं तान्वाचयित्वा तु ततो विप्रान्विसर्जयेत् ॥ १४६.१०१ ॥
यत्तत्रोच्चरितं किंचित्तद्विप्रेभ्यो निवेदयेत् ।
तत्र तीर्थे नरः स्नात्वा नारी वा भक्तितत्परा ।
शक्तितो दक्षिणां दद्यात्कृत्वा श्राद्धं यथाविधि ॥ १४६.१०२ ॥
तत्र तीर्थे नरो यावत्स्नापयेद्विधिपूर्वकम् ।
क्षीरेण मधुना वापि दध्ना वा शीतवारिणा ॥ १४६.१०३ ॥
तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम् ।
अयने विषुवे चैव युगादौ सूर्यसंक्रमे ॥ १४६.१०४ ॥
पुष्पैः सम्पूज्य देवेशं नैवेद्यं यः प्रदापयेत् ।
सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ १४६.१०५ ॥
तत्र तीर्थे तु यो राजन् सूर्यग्रहणमाचरेत् ।
सूर्यतेजोनिभैर्यानैर्विष्णुलोके महीयते ॥ १४६.१०६ ॥
तत्र तीर्थे तु यः श्राद्धं पितृभ्यः सम्प्रयच्छति ।

सत्पुत्रेण च तेनैव सम्प्राप्तं जन्मनः फलम् ॥ १४६.१०७ ॥

इति श्रुत्वा ततो देवाः सर्वे शक्रपुरोगमाः ।

ब्रह्मविष्णुमहेशाश्च स्थापयांचक्रुरीश्वरम् ॥ १४६.१०८ ॥

सर्वरोगोपशमनं सर्वपातकनाशनम् ।

यस्तु संवत्सरं पूर्णममावास्यां तु भावितः ॥ १४६.१०९ ॥

पितृभ्यः पिण्डदानं च कुर्यादस्माहके नृप ।

त्रिपुष्करे गयायां च प्रभासे नैमिषे तथा ॥ १४६.११० ॥

यत्पुण्यं श्राद्धकर्तॄणां तदिहैव भवेद्ध्रुवम् ।

तिलोदकं कुशैर्मिश्रं यो दद्याद्दक्षिणामुखः ॥ १४६.१११ ॥

मन्वादौ च युगादौ च व्यतीपाते दिनक्षये ।

यो दद्यात्पितृमातृभ्यः सोऽश्वमेधफलं लभेत् ॥ १४६.११२ ॥

अस्माहके नरो यस्तु स्नात्वा सम्पूजयेद्धरिम् ।

ब्रह्माणं शङ्करं भक्त्या कुर्याज्जागरणक्रियाम् ॥ १४६.११३ ॥

सर्वपापविनिर्मुक्तः शक्रातिथ्यमवाप्नुयात् ।

तत्र तीर्थे नरः स्नात्वा यः पश्यति जनार्दनम् ॥ १४६.११४ ॥

विशेषविधिनाभ्यर्च्य प्रणम्य च पुनःपुनः ।

सपुत्रेण च तेनैव पितॄणां विहिता गतिः ॥ १४६.११५ ॥

एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।

सत्कार्यकारणोपेताः सुसूक्ष्माः सुमहाफलाः ॥ १४६.११६ ॥

एतत्ते कथितं राजन्महापातकनाशनम् ।

अस्माहकस्य माहात्म्यं किमन्यत्परिपृच्छसि ॥ १४६.११७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अस्माहकतीर्थमाहात्म्यवर्णनं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४७

https://sa.wikisource.org/s/fdi


अध्याय १४७

मार्कण्डेय उवाच -
ततो गच्छेन्महीपाल सिद्धेश्वरमनुत्तमम् ।
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ १४७.१ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेद्वृषभध्वजम् ।
सर्वपापविनिर्मुक्तो गतिं यात्यश्वमेधिनाम् ॥ १४७.२ ॥
तत्र तीर्थे तु यः स्नात्वा श्राद्धं कुर्यात्प्रयत्नतः ।
पितॄणां प्रीणनार्थाय सर्वं तेन कृतं भवेत् ॥ १४७.३ ॥
तत्र तीर्थे मृतानां तु जन्तूनां नृपसत्तम ।
गर्भवासे मतिस्तेषां न जायेत कदाचन ॥ १४७.४ ॥
गर्भवासो हि दुःखाय न सुखाय कदाचन ।
तत्तीर्थवारिणा स्नातुर्न पुनर्भवसम्भवः ॥ १४७.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४८

https://sa.wikisource.org/s/fdh

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १४८

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महीपाल तीर्थमङ्गारकं शिवम् ।
उत्तरे नर्मदाकूले सर्वपापक्षयंकरम् ॥ १४८.१ ॥
चतुर्थ्यङ्गारकदिने संकल्प्य कृतनिश्चयः ।
स्नायादस्तं गते सूर्ये सन्ध्योपासनतत्परः ॥ १४८.२ ॥
पूजयेल्लोहितं भक्त्या गन्धमाल्यविभूषणैः ।
संस्थाप्यस्थण्डिले देवं रक्तचन्दनचर्चितम् ॥ १४८.३ ॥
अङ्गारकायेति नमः कर्णिकायां प्रपूजयेत् ।
कुजाय भूमिपुत्राय रक्ताङ्गाय सुवाससे ॥ १४८.४ ॥
हरकोपोद्भवायेति स्वेदजायातिबाहवे ।
सर्वकामप्रदायेति पूर्वादिषु दलेषु च ॥ १४८.५ ॥
एवं सम्पूज्य विधिवद्दद्यादर्घ्यं विधानतः ।
भूमिपुत्र महावीर्य स्वेदोद्भव पिनाकिनः ॥ १४८.६ ॥
अङ्गारक महातेजा लोहिताङ्ग नमोऽस्तु ते ।
करकं वारिसंयुक्तं शालितंदुलपूरितम् ॥ १४८.७ ॥
सहिरण्यं सवस्त्रं च मोदकोपरि संस्थितम् ।
ब्राह्मणाय निवेद्यं तत्कुजो मे प्रीयतामिति ॥ १४८.८ ॥
अर्घं दत्त्वा विधानेन रक्तचन्दनवारिणा ।
रक्तपुष्पसमाकीर्णं तिलतंदुलमिश्रितम् ॥ १४८.९ ॥
कृत्वा ताम्रमये पात्रे मण्डले वर्तुले शुभे ।
कृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं गतः ॥ १४८.१० ॥
मन्त्रपूतं महाभाग दद्यादर्घ्यं विचक्षणः ।
ततो भुञ्जीत मौनेन क्षारतिलाम्लवर्जितम् ॥ १४८.११ ॥
स्निग्धं मृदुसमधुरमात्मनः श्रेय इच्छता ।

एवं चतुर्थे सम्प्राप्ते चतुर्थ्यङ्गारके नृप ॥ १४८.१२ ॥
सौवर्णं कारयेद्देवं यथाशक्ति सुरूपिणम् ।
स्थापयेत्ताम्रके पात्रे गुडपीठसमन्विते ॥ १४८.१३ ॥
गन्धपुष्पादिभिर्देवं पूजयेद्गुडसंस्थितम् ।
ईशान्यां स्थापयेद्देवं गुडतोयसमन्वितम् ॥ १४८.१४ ॥
कासारेण तथाग्नेय्यां स्थापयेत्करकं परम् ।
रक्ततन्दुलसंमिश्रं नैरृत्यां वायुगोचरे ॥ १४८.१५ ॥
स्थापयेन्मोदकैः सार्धं चतुर्थं करकं बुधः ।
सूत्रेण वेष्टितग्रीवं गन्धमाल्यैरलंकृतम् ॥ १४८.१६ ॥
शङ्खतूर्यनिनादेन जयशब्दादिमङ्गलैः ।
रक्ताम्बरधरं विप्रं रक्तमाल्यानुलेपनम् ॥ १४८.१७ ॥
वेदिमध्यगतं वापि महदासनसंस्थितम् ।
सुरूपं सुभगं शान्तं सर्वभूतहिते रतम् ॥ १४८.१८ ॥
वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम् ।
पूजयित्वा यथान्यायं वाचयेत्पाण्डुनन्दन ॥ १४८.१९ ॥
रक्तां गां च ततो दद्याद्रक्तेनानडुहा सह ।
प्रीयतां भूमिजो देवः सर्वदैवतपूजितः ॥ १४८.२० ॥
विप्रं प्रदक्षिणीकृत्य पत्नीपुत्रसमन्वितः ।
पितृमातृसुहृत्सार्द्धं क्षमाप्य च विसर्जयेत् ॥ १४८.२१ ॥
एवं कृतस्य तस्याथ तस्मिंस्तीर्थे विशेषतः ।
यत्पुण्यं फलमुद्दिष्टं तत्ते सर्वं वदाम्यहम् ॥ १४८.२२ ॥
सप्त जन्मानि राजेन्द्र सुरूपः सुभगो भवेत् ।
तीर्थस्यास्य प्रभावेन नात्र कार्या विचारणा ॥ १४८.२३ ॥
अकामो वा सकामो वा तत्र तीर्थे मृतो नरः ।
अङ्गारकपुरं याति देवगन्धर्वपूजितः ॥ १४८.२४ ॥
उपभुज्य यथान्यायं दिव्यान्भोगाननुत्तमान् ।
इह मानुष्यलोके वै राजा भवति धार्मिकः ॥ १४८.२५ ॥
सुरूपः सुभगश्चैव सर्वव्याधिविवर्जितः ।
जीवेद्वर्षशतं साग्रं सर्वलोकनमस्कृतः ॥ १४८.२६ ॥

॥ इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मङ्गलेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टाचत्वारिंशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १४९

https://sa.wikisource.org/s/fdg
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्
अध्याय १४९

श्रीमार्कण्डेय उवाच -
तस्यैवानन्तरं तीर्थं लिङ्गेश्वरमिति श्रुतम् ।
दर्शनाद्देवदेवस्य यत्र पापं प्रणश्यति ॥ १४९.१ ॥
कृत्वा तु कदनं घोरं दानवानां युधिष्ठिर ।
वाराहं रूपमास्थाय नर्मदायां व्यवस्थितः ॥ १४९.२ ॥
तत्र तीर्थे तु यः स्नानं कृत्वा देवं नमस्यति ।
स मुच्यते नृपश्रेष्ठ महापापैः पुराकृतैः ॥ १४९.३ ॥
द्वादश्यां कृष्णपक्षस्य शुक्ले च समुपोषितः ।
गन्धमाल्यैर्जगन्नाथं पूजयेत्पाण्डुनन्दन ॥ १४९.४ ॥
ब्राह्मणांश्च महाभाग दानसंमानभोजनैः ।
पूजयेत्परया भक्त्या तस्य पुण्यफलं शृणु ॥ १४९.५ ॥
सत्रयाजिफलं जन्तुर्लभते द्वादशाब्दकैः ।
ब्राह्मणान्भोजयंस्तत्र तदेव लभते फलम् ॥ १४९.६ ॥
तर्पयित्वा पितॄन् देवान् स्नात्वा तद्गतमानसः ।
जपेद्द्वादशनामानि देवस्य पुरतः स्थितः ॥ १४९.७ ॥
मासि मासि निराहारो द्वादश्यां कुरुनन्दन ।
केशवं पूजयेन्नित्यं मासि मार्गशिरे बुधः ॥ १४९.८ ॥
पौषे नारायणं देवं माघमासे तु माधवम् ।
गोविन्दं फाल्गुने मासि विष्णुं चैत्रे समर्चयेत् ॥ १४९.९ ॥
वैशाखे मधुहन्तारं ज्येष्ठे देवं त्रिविक्रमम् ।
वामनं तु तथाषाढे श्रावणे श्रीधरं स्मरेत् ॥ १४९.१० ॥
हृषीकेशं भाद्रपदे पद्मनाभं तथाश्विने ।
दामोदरं कार्त्तिके तु कीर्तयन्नावसीदति ॥ १४९.११ ॥
वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ।
तन्नश्यति न सन्देहो मासनामानुकीर्तनात् ॥ १४९.१२ ॥

स्वयं विनुद्धः सततमुन्मिषन्निमिषंस्तथा ।
शीघ्रं प्रपश्य भुञ्जानो मन्त्रहीनं समुद्गिरेत् ॥ १४९.१३ ॥
परमापद्गतस्यापि जन्तोरेषा प्रतिक्रिया ।
यन्मासाधिपतेर्विष्णोर्मासनामानुकीर्तनम् ॥ १४९.१४ ॥
ता निशास्ते च दिवसास्ते मासास्ते च वत्सराः ।
नराणां सफला येषु चिन्तितो भगवान्हरिः ॥ १४९.१५ ॥
परमापद्गतस्यापि यस्य देवो जनार्दनः ।
नावसर्पति हृत्पद्मात्स योगी नात्र संशयः ॥ १४९.१६ ॥
ते भाग्यहीना मनुजाः सुशोच्यास्ते भूमिभाराय कृतावताराः ।
अचेतनास्ते पशुभिः समाना ये भक्तिहीना भगवत्यनन्ते ॥ १४९.१७ ॥
ते पूर्णकार्याः पुरुषाः पृथिव्यां ते स्वाङ्गपाताद्भुवनं पुनन्ति ।
विचक्षणा विश्वविभूषणास्ते ये भक्तियुक्ता भगवत्यनन्ते ॥ १४९.१८ ॥
स एव सुकृती तेन लब्धं जन्मतरोः फलम् ।
चित्ते वचसि काये च यस्य देवो जनार्दनः ॥ १४९.१९ ॥
एतत्तीर्थवरं पुण्यं लिङ्गो यत्र जनार्दनः ।
वञ्चयित्वा रिपून्संख्ये क्रोधो भूत्वा सनातनः ॥ १४९.२० ॥
उपप्लवे चन्द्रमसो रवेश्च यो ह्यष्टकानामयनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ १४९.२१ ॥
घोणोन्मीलितमेरुरन्ध्रनिवहो दुःखाब्धिमज्जत्प्लवः प्रादुर्भूतरसातलोदरबृहत्पङ्कार्धमग्नक्षुरः ।
फूत्कारोत्करनुन्नवातविदलद्दिग्दन्तिनादश्रुतिन्यस्तस्तब्धवपुः श्रुतिर्भवतु वः क्रोडो हरिः शान्तये ॥ १४९.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे लिङ्गवाराहतीर्थमाहात्म्यवर्णनं नामैकोनपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५०

https://sa.wikisource.org/s/fmr
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १५०

श्रीमार्कण्डेय उवाच -
ततो गच्छेन्महाराज कुसुमेश्वरमुत्तमम् ।
दक्षिणे नर्मदाकूले उपपातकनाशनम् ॥ १५०.१ ॥
कामेन स्थापितो देवः कुसुमेश्वरसंज्ञितः ।
ख्यातः सर्वेषु लोकेषु देवदेवः सनातनः ॥ १५०.२ ॥
कामो मनोभवो विश्वः कुसुमायुधचापभृत् ।
स कामान् ददाति सर्वान् पूजितो मीनकेतनः ॥ १५०.३ ॥
तेन निर्दग्धकायेन चाराध्य परमेश्वरम् ।
अनङ्गेन तथा प्राप्तमङ्गित्वं नर्मदातटे ॥ १५०.४ ॥

युधिष्ठिर उवाच -
अङ्गिभृतस्य नाशत्वमनङ्गस्य तु मे वद ।
न श्रुतं न च मे दृष्टं भूतपूर्वं कदाचन ॥ १५०.५ ॥
एतत्सर्वं यथा वृत्तमाचक्ष्व द्विजसत्तम ।
श्रोतुमिच्छामि विप्रेन्द्र भीमार्जुनयमैः सह ॥ १५०.६ ॥

श्रीमार्कण्डेय उवाच -
आदौ कृतयुगे तात देवदेवो महेश्वरः ।
तपश्चचार विपुलं गङ्गासागरसंस्थितः ॥ १५०.७ ॥
तेन सम्पादिता लोकास्तपसा ससुरासुराः ।
जग्मुस्ते शरणं सर्वे देवदेवं शचीपतिम् ॥ १५०.८ ॥
व्यापकः सर्वभूतानां देवदेवो महेश्वरः ।
संतापयति लोकांस्त्रींस्तन्निवारय गोपते ॥ १५०.९ ॥
श्रुत्वा तद्वचनं तेषां देवानां बलवृत्रहा ।

चिन्तयामास मनसा तपोविघ्नायचादिशत् ॥ १५०.१० ॥
अप्सरां मेनकां रम्भां घृताचीं च तिलोत्तमाम् ।
वसन्तं कोकिलं कामं दक्षिणानिलमुत्तमम् ॥ १५०.११ ॥
गत्वा तत्र महादेवं तपश्चरणतत्परम् ।
क्षोभयध्वं यथान्यायं गङ्गासागरवासिनम् ॥ १५०.१२ ॥
एवमुक्तास्तु ते सर्वे देवराजेन भारत ।
देवाप्सरःसमोपेता जग्मुस्ते हरसन्निधौ ॥ १५०.१३ ॥
वसन्तमासे कुसुमाकराकुले मयूरदात्यूहसुकोकिलाकुले ।
प्रनृत्य देवाप्सरगीतसंकुले प्रवाति वाते यमनैरृताकुले ॥ १५०.१४ ॥
तेन संमूर्छिताः सर्वे संसर्गाच्च खगोत्तमाः ।
मधुमाधवगन्धेन सकिन्नरमहोरगाः ॥ १५०.१५ ॥
यावदालोकते तावत्तद्वनं व्याकुलीकृतम् ।
वीक्षते मदनाविष्टं दशावस्थागतं जनम् ॥ १५०.१६ ॥
देवदेवोऽपि देवानामवस्थात्रितयं गतः ।
सात्त्विकीं राजसीं राजंस्तामसीं तां शृणुष्व मे ॥ १५०.१७ ॥
एकं योगसमाधिना मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या जघनस्थलस्तनतटे शृङ्गारभारालसम् ।
अन्यद्दूरनिरस्तचापमदनक्रोधानलोद्दीपितं शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १५०.१८ ॥
एवं दृष्टः स देवेन सशरः सशरासनः ।
भस्मीभूतो गतः कामो विनाशः सर्वदेहिनाम् ॥ १५०.१९ ॥
कामं दृष्ट्वा क्षयं यातं तत्र देवाप्सरोगणाः ।
भीता यथागतं सर्वे जग्मुश्चैव दिशो दश ॥ १५०.२० ॥
कामेन रहिता लोकाः ससुरासुरमानवाः ।
ब्रह्माणं शरणं जग्मुर्देवा इन्द्रपुरोगमाः ॥ १५०.२१ ॥
सीदमानं जगद्दृष्ट्वा तमूचुः परमेष्ठिनम् ।
जानासि त्वं जगच्छेषं प्रभो मैथुनसम्भवात् ॥ १५०.२२ ॥
प्रजाः सर्वा विशुष्यन्ति कामेन रहिता विभो ॥ १५०.२३ ॥
एतच्छ्रुत्वा वचस्तेषां देवानां प्रपितामहः ।
जगाम सहितस्तत्र यत्र देवो महेश्वरः ॥ १५०.२४ ॥
अतोषयज्जगन्नाथं सर्वभूतमहेश्वरम् ।
स्तुतिभिस्तण्डकैः स्तोत्रैर्वेदवेदाङ्गसम्भवैः ॥ १५०.२५ ॥
ततस्तुष्टो महादेवो देवानां परमेश्वरः ।
उवाच मधुरां वाणीं देवान्ब्रह्मपुरोगमान् ॥ १५०.२६ ॥

किं कार्यं कश्च सन्तापः किं वागमनकारणम् ।
देवतानामृषीणां च कथ्यतां मम माचिरम् ॥ १५०.२७ ॥
देवा ऊचुः ।
कामनाशाज्जगन्नाशो भवितायं चराचरे ।
त्रैलोक्यं त्वं पुनः शम्भो उत्पादयितुमर्हसि ॥ १५०.२८ ॥
एतच्छ्रुत्वा वचस्तेषां विमृश्य परमेश्वरः ।
चिन्तयामास कामस्य विग्रहं भुवि दुर्लभम् ॥ १५०.२९ ॥
आजगाम ततः शीघ्रमनङ्गो ह्यङ्गतां गतः ।
प्राणदः सर्वभूतानां पश्यतां नृपसत्तम ॥ १५०.३० ॥
ततः शङ्खनिनादेन भेरीणां निःस्वनेन च ।
अभ्यनन्दंस्ततो देवं सुरासुरमहोरगाः ॥ १५०.३१ ॥
नमस्ते देवदेवेश कृतार्थाः सुरसत्तमाः ।
विसर्जिताः पुनर्जग्मुर्यथागतमरिन्दम ॥ १५०.३२ ॥
गतेषु सर्वदेवेषु कामदेवोऽपि भारत ।
तपश्चचार विपुलं नर्मदातटमाश्रितः ॥ १५०.३३ ॥
तपोजपकृशीभूतो दिव्यं वर्षशतं किल ।
महाभूतैर्विघ्नकरैः पीड्यमानः समन्ततः ॥ १५०.३४ ॥
आत्मविघ्नविनाशार्थं संस्मृतः कुण्डलेश्वरः ।
चकार रक्षां सर्वत्र शरपाते नृपोत्तम ॥ १५०.३५ ॥
ततस्तुष्टो महादेवो दृढभक्त्या वरप्रदः ।
वरेण छन्दयामास कामं कामविनाशनः ॥ १५०.३६ ॥
ज्ञात्वा तुष्टं महादेवमुवाच झषकेतनः ।
प्रणतः प्राञ्जलिर्भूत्वा देवदेवं त्रिलोचनम् ॥ १५०.३७ ॥
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
अत्र तीर्थे जगन्नाथ सदा संनिहितो भव ॥ १५०.३८ ॥
तथेति चोक्त्वा वचनं देवदेवो महेश्वरः ।
जगामाकाशमाविश्य स्तूयमानोऽप्सरोगणैः ॥ १५०.३९ ॥
गते चादर्शनं देवे कामदेवो जगद्गुरुम् ।
स्थापयामास राजेन्द्र कुसुमेश्वरसंज्ञितम् ॥ १५०.४० ॥
तत्र तीर्थे तु यः स्नात्वा ह्युपवासपरायणः ।
चैत्रमासे चतुर्दश्यां मदनस्य दिनेऽथवा ॥ १५०.४१ ॥
प्रभाते विमले प्राप्ते स्नात्वा पूज्य दिवाकरम् ।

तिलमिश्रेण तोयेन तर्पयेत्पितृदेवताः ॥ १५०.४२ ॥
कृत्वा स्नानं विधानेन पूजयित्वा च तं नृप ।
पिण्डनिर्वपणं कुर्यात्तस्य पुण्यफलं शृणु ॥ १५०.४३ ॥
सत्त्रयाजिफलं यच्च लभते द्वादशाब्दिकम् ।
पिण्डदानात्फलं तच्च लभते नात्र संशयः ॥ १५०.४४ ॥
अङ्कुल्लमूले यः पिण्डं पित्ःनुद्दिश्य दापयेत् ।
तस्य ते द्वादशाब्दानि तृप्तिं यान्ति पितामहाः ॥ १५०.४५ ॥
कृमिकीटपतङ्गा ये तत्र तीर्थे युधिष्ठिर ।
प्राप्नुवन्ति मृताः स्वर्गं किं पुनर्ये नरा मृताः ॥ १५०.४६ ॥
संन्यासं कुरुते योऽत्र जितक्रोधो जितेन्द्रियः ।
कुसुमेशे नरो भक्त्या स गच्छेच्छिवमन्दिरम् ॥ १५०.४७ ॥
तत्र दिव्याप्सरोभिश्च देवगन्धर्वगायनैः ।
क्रीडते सेव्यमानस्तु कल्पकोटिशतं नृप ॥ १५०.४८ ॥
पूर्णे चैव ततः काल इह मानुष्यतां गतः ।
जायते राजराजेन्द्रैः पूज्यमानो नृपो महान् ॥ १५०.४९ ॥
सुरूपः सुभगो वाग्मी विक्रान्तो मतिमाञ्छुचिः ।
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ १५०.५० ॥
एतत्पुण्यं पापहरं तीर्थकोटिशताधिकम् ।
कुसुमेशेति विख्यातं सर्वदेवनमस्कृतम् ॥ १५०.५१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुसुमेश्वरतीर्थमाहात्म्यवर्णनं नाम पञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५१



श्रीमार्कण्डेय उवाच -

उत्तरे नर्मदाकूले तीर्थं परमशोभनम् ।

जयवाराहमाहात्म्यं सर्वपापप्रणाशनम् ॥ १५१.१ ॥

उद्धृता जगती येन सर्वदेवनमस्कृता ।

लोकानुग्रहबुद्ध्या च संस्थितो नर्मदातटे ॥ १५१.२ ॥

तत्र तीर्थे तु यः स्नात्वा वीक्षते मधुसूदनम् ।

मुच्यते सर्वपापेभ्यो दशजन्मानुकीर्तनात् ॥ १५१.३ ॥

मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।

रामो रामश्च कृष्णश्च बुद्धः कल्किश्च ते दश ॥ १५१.४ ॥

युधिष्ठिर उवाच -

मत्स्येन किं कृतं तात कूर्मेण मुनिसत्तम ।

वराहेण च किं कर्म नरसिंहेन किं कृतम् ॥ १५१.५ ॥

वामनेन च रामेण राघवेण च किं कृतम् ।

बुद्धरूपेण किं वापि कल्किना किं कृतं वद ॥ १५१.६ ॥

एवमुक्तस्तु विप्रेन्द्रो धर्मपुत्रेण धीमता ।

उवाच मधुरां वाणीं तदा धर्मसुतं प्रति ॥ १५१.७ ॥

श्रीमार्कण्डेय उवाच -

मीनो भूत्वा पुरा कल्पे प्रीत्यर्थं ब्रह्मणो विभुः ।

समर्पयत्समुद्धृत्य वन्दान्मग्नान्महार्णवे ॥ १५१.८ ॥

अमृतोत्पादने राजन्कूर्मो भूत्वा जगद्गुरुः ।

मन्दरं धारयामास तथा देवीं वसुंधराम् ॥ १५१.९ ॥

उज्जहार धरां मग्नां पातालतलवासिनीम् ।

वाराहं रूपमास्थाय देवदेवो जनार्दनः ॥ १५१.१० ॥

नरस्यार्द्धतनुं कृत्वा सिंहस्यार्द्धतनुं तथा ।

हिरण्यकशिपोर्वक्षो विददार नखाङ्कुशैः ॥ १५१.११ ॥

जटी वामनरूपेण स्तूयमानो द्विजोत्तमैः ।

तद्दिव्यं रूपमास्थाय क्रमित्वा मेदिनीं क्रमैः ॥ १५१.१२ ॥

कृतवांश्च बलिं पश्चात्पातालतलवासिनम् ।

स्थापयित्वा सुरान् सर्वान् गतो विष्णुः स्वकं पुरम् ॥ १५१.१३ ॥

जमदग्निसुतो रामो भूत्वा शस्त्रभृतां वरः ।

क्षत्रियान् पृथिवीपालानवधीद्धैहयादिकान् ॥ १५१.१४ ॥

कश्यपाय महीं दत्त्वा सपर्वतवनाकराम् ।

तपस्तपति देवेशो महेन्द्रेऽद्यापि भारत ॥ १५१.१५ ॥

ततो दाशरथी रामो रावणं देवकण्टकम् ।

सगणं समरे हत्वा राज्यं दत्त्वा विभीषणे ॥ १५१.१६ ॥

पालयित्वा नयाद्भूमिं मखैः संतर्प्य देवताः ।

स्वर्गं गतो महातेजा रामो राजीवलोचनः ॥ १५१.१७ ॥

वसुदेवगृहे भूयः संकर्षणसहायवान् ।

अवतीर्णो जगन्नाथो वासुदेवो युधिष्ठिर ॥ १५१.१८ ॥

सोऽवधीत्तव सामर्थ्याद्वधार्थं दुष्टभूभृताम् ।

चाणूरकंसकेशीनां जरासंधस्य भारत ॥ १५१.१९ ॥

तेन त्वं सुसहायेन हत्वा शत्रून्नरेश्वर ।

भोक्ष्यसे पृथिवीं सर्वां भ्रातृभिः सह संभृताम् ॥ १५१.२० ॥

तथा बुद्धत्वमपरं नवमं प्राप्स्यतेऽच्युतः ।

शान्तिमान्देवदेवेशो मधुहन्ता मधुप्रियः ॥ १५१.२१ ॥

तेन बुद्धस्वरूपेण देवेन परमेष्ठिना ।

भविष्यति जगत्सर्वं मोहितं सचराचरम् ॥ १५१.२२ ॥

न श्रोष्यन्ति पितुः पुत्रास्तदाप्रभृति भारत ।

न गुरोर्बान्धवाः शिष्या भविष्यत्यधरोत्तरम् ॥ १५१.२३ ॥

जितो धर्मो ह्यधर्मेण चासत्येन ऋतं जितम् ।

जिताश्चौरैश्च राजानः स्त्रीभिश्च पुरुषा जिताः ॥ १५१.२४ ॥

सीदन्ति चाग्निहोत्राणि गुरौ पूजा प्रणश्यति ।

सीदन्ति मानवा धर्माः कलौ प्राप्ते युधिष्ठिर ॥ १५१.२५ ॥

द्वादशे दशमे वर्षे नारी गर्भवती भवेत् ।

कन्यास्तत्र प्रसूयन्ते ब्राह्मणो हरिपिङ्गलः ॥ १५१.२६ ॥

भविष्यति ततः कल्किर्दशमे जन्मनि प्रभुः ॥ १५१.२७ ॥

एतत्ते कथितं राजन्देवस्य परमेष्ठिनः ।

कारणं दश जन्मनां सर्वपापक्षयंकरम् ॥ १५१.२८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्वेतवाराहतीर्थमाहात्म्यवर्णनं नामैकपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५२



अध्याय १५२

श्रीमार्कण्डेय उवाच -

ततो गच्छेद्धरापाल भार्गलेश्वरमुत्तमम् ।

शङ्करं जगतः प्राणं स्मृतमात्राघनाशनम् ॥ १५२.१ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १५२.२ ॥

तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ १५२.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भार्गलेश्वरतीर्थमाहात्म्यवर्णनं नाम द्विपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५३

https://sa.wikisource.org/s/fm2
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १५३

मार्कण्डेय उवाच -
तस्यैवानन्तरं चान्यद्रवितीर्थमनुत्तमम् ।
यस्य संदर्शनादेव मुच्यन्ते पातकैर्नराः ॥ १५३.१ ॥
रवितीर्थे तु यः स्नात्वा नरः पश्यति भास्करम् ।
तस्य यत्फलमुद्दिष्टं स्वयं देवेन तच्छृणु ॥ १५३.२ ॥
नान्धो न मूको बधिरः कुले भवति कश्चन ।
कुरूपः कुनखी वापि तस्य जन्मानि षोडश ॥ १५३.३ ॥
दद्रुचित्रककुष्ठानि मण्डलानि विचर्चिका ।
नश्यन्ति देवभक्तस्य षण्मासान्नात्र संशयः ॥ १५३.४ ॥
चरितं तस्य देवस्य पुराणे यच्छ्रुतं मया ।
न तत्कथयितुं शक्यं संक्षेपेण नृपोत्तम ॥ १५३.५ ॥
तत्र तीर्थे तु यद्दानं रविमुद्दिश्य दीयते ।
विधिना पात्रविप्राय तस्यान्तो नास्ति कर्हिचित् ॥ १५३.६ ॥
अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
रवितीर्थे प्रदत्तानां दानानां फलमुत्तमम् ॥ १५३.७ ॥
संक्रान्तौ यानि दानानि हव्यकव्यानि भारत ।
अपामिव समुद्रस्य तेषामन्तो न लभ्यते ॥ १५३.८ ॥
येन येन यदा दत्तं येन येन यदा हुतम् ।
तस्य तस्य तदा काले सविता प्रतिदायकः ॥ १५३.९ ॥
सप्त जन्मानि तान्येव ददात्यर्कः पुनः पुनः ।
शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये ॥ १५३.१० ॥
संक्रान्तौ शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥ १५३.११ ॥
युधिष्ठिर उवाच -
रवितीर्थं कथं तात पुण्यात्पुण्यतरं स्मृतम् ।
विस्तरेण ममाख्याहि श्रवणौ मम लम्पटौ ॥ १५३.१२ ॥

श्रीमार्कण्डेय उवाच -
शृणुष्वावहितो भूत्वा ह्यादित्येश्वरमुत्तमम् ।
उत्तरे नर्मदाकूले सर्वव्याधिविनाशनम् ॥ १५३.१३ ॥
पुरा कृतयुगस्यादौ जाबालिर्ब्राह्मणोऽभवत् ।
वसिष्ठान्वयसम्भूतो वेदशास्त्रार्थपारगः ॥ १५३.१४ ॥
पतिव्रता साधुशीला तस्य भार्या मनस्विनी ।
ऋतुकाले तु सा गत्वा भर्तारमिदमब्रवीत् ॥ १५३.१५ ॥
वर्तते ऋतुकालो मे भर्तारं त्वामुपस्थिता ।
भज मां प्रीतिसंयुक्तः पुत्रकामां तु कामिनीम् ॥ १५३.१६ ॥
एवमुक्तो द्विजः प्राह प्रियेऽद्याहं व्रतान्वितः ।
गच्छेदानीं वरारोहे दास्य ऋत्वन्तरे पुनः ॥ १५३.१७ ॥
पुनर्द्वितीये सम्प्राप्ते ऋतुकालेऽप्युपस्थिता ।
पुनः सा छन्दिता तेन व्रतस्थोऽद्येति भारत ॥ १५३.१८ ॥
इत्थं वा बहुशस्तेन छन्दिता च पुनः पुनः ।
निराशा चाभवत्तत्र भर्तारं प्रति भामिनी ॥ १५३.१९ ॥
दुःखेन महताविष्टा विधायानशनं मृता ।
तेन भ्रूणहतेनैव पापेन सहसा द्विजः ॥ १५३.२० ॥
शीर्णघ्राणाङ्घ्रिरभवत्तपः सर्वं ननाश च ।
दृष्ट्वात्मानं स कुष्ठेन व्याप्तं ब्राह्मणसत्तमः ॥ १५३.२१ ॥
विषादं परमं गत्वा नर्मदातटमाश्रितः ।
अपृच्छद्भास्करं तीर्थं द्विजेभ्यो द्विजसत्तमः ॥ १५३.२२ ॥
आरोग्यं भास्करादिच्छेदिति संचिन्त्य चेतसि ।
कुतस्तद्भास्करं तीर्थं भो द्विजाः कथ्यतां मम ॥ १५३.२३ ॥
तपस्तप्याम्यहं गत्वा तस्मिंस्तीर्थे सुभावितः ॥ १५३.२४ ॥
द्विजा ऊचुः ।
रेवाया उत्तरे कूले आदित्येश्वरनामतः ।
विद्यते भास्करं तीर्थं सर्वव्याधिविनाशनम् ॥ १५३.२५ ॥
तत्र याह्यविचारेण गन्तुं चेच्छक्यते त्वया ।
एवमुक्तो द्विजैर्विप्रो गन्तुं तत्र प्रचक्रमे ॥ १५३.२६ ॥
व्याधिना परिभूतस्तु घोरेण प्राणहारिणा ।
यदा गन्तुं न शक्नोति तदा तेन विचिन्तितम् ॥ १५३.२७ ॥
सामर्थ्यं ब्राह्मणानां हि विद्यते भुवनत्रये ।
लिङ्गपातः कृतो विप्रैर्देवदेवस्य शूलिनः ॥ १५३.२८ ॥

समुद्रः शोषितो विप्रैर्विन्ध्यश्चापि निवारितः ।
अहमप्यत्र संस्थस्तु ह्यानयिष्यामि भास्करम् ॥ १५३.२९ ॥
तपोबलेन महता ह्यादित्येश्वरसंज्ञितम् ।
इति निश्चित्य मनसा ह्युग्रे तपसि संस्थितः ॥ १५३.३० ॥
वायुभक्षो निराहारो ग्रीष्मे पञ्चाग्निमध्यगः ।
शिशिरे तोयमध्यस्थो वर्षास्वप्रावृताकृतिः ॥ १५३.३१ ॥
साग्रे वर्षशते पूर्णे रविस्तुष्टोऽब्रवीदिदम् ॥ १५३.३२ ॥
सूर्य उवाच -
वरं वरय भद्रं ते किं ते मनसि वाञ्छितम् ।
अदेयमपि दास्यामि ब्रूहि मां त्वं चिरं कृथाः ॥ १५३.३३ ॥
किमसाध्यं हि ते विप्र इदानीं तपसि स्थितः ॥ १५३.३४ ॥
जाबालिरुवाच -
यदि तुष्टोऽसि देवेश यदि देयो वरो मम ।
मम प्रतिज्ञा देवेश ह्यादित्येश्वरदर्शने ॥ १५३.३५ ॥
कृता तां पारितुं देव न शक्तो व्याधिना वृतः ।
शुक्लतीर्थेऽत्र तिष्ठ त्वमादित्येश्वरमूर्तिधृक् ॥ १५३.३६ ॥
एवमुक्ते तु देवेशो बहुरूपो दिवाकरः ।
उत्तरे नर्मदाकूले क्षणादेव व्यदृश्यत ॥ १५३.३७ ॥
तदाप्रभृति भूपाल तद्धि तीर्थं प्रचक्षते ।
सर्वपापहरं प्रोक्तं सर्वदुःखविनाशनम् ॥ १५३.३८ ॥
यस्तु संवत्सरं पूर्णं नित्यमादित्यवासरे ।
स्नात्वा प्रदक्षिणाः सप्त दत्त्वा पश्यति भास्करम् ॥ १५३.३९ ॥
यत्फलं लभते तेन तच्छृणुष्व मयोदितम् ।
प्रसुप्तं मण्डलानीह दद्रुकुष्ठविचर्चिकाः ॥ १५३.४० ॥
नश्यन्ति सत्वरं राजंस्तूलराशिरिवानले ।
धनपुत्रकलत्राणां पूरयेद्वत्सरत्रयात् ॥ १५३.४१ ॥
यस्तु श्राद्धप्रदस्तत्र पित्ःनुद्दिश्य संक्रमे ।
तृप्यन्ति पितरस्तस्य पितृदेवो हि भास्करः ॥ १५३.४२ ॥
इति ते कथितं सर्वमादित्येश्वरमुत्तमम् ।
सर्वपापहरं दिव्यं सर्वरोगविनाशनम् ॥ १५३.४३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५४



अध्याय १५४

श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे कूले तीर्थं कलकलेश्वरम् ।

विख्यातं सर्वलोकेषु स्वयं देवेन निर्मितम् ॥ १५४.१ ॥

अन्धकं समरे हत्वा देवदेवो महेश्वरः ।

सहितो देवगन्धर्वैः किन्नरैश्च महोरगैः ॥ १५४.२ ॥

शङ्खतूर्यनिनादैश्च मृदङ्गपणवादिभिः ।

वीणावेणुरवैश्चान्यैः स्तुतिभिः पुष्कलादिभिः ॥ १५४.३ ॥

गायन्ति सामानि यजूंषि चान्ये छन्दांसि चान्ये ऋचमुद्गिरन्ति ।

स्तोत्रैरनेकैरपरे गृणन्ति महेश्वरं तत्र महानुभावाः ॥ १५४.४ ॥

प्रमथानां निनादेन कल्कलेन च बन्दिनाम् ।

यस्मात्प्रतिष्ठितं लिङ्गं तस्माज्जातं तदाख्यया ॥ १५४.५ ॥

तत्र तीर्थे तु यः स्नात्वा वीक्षेत्कलकलेश्वरम् ।

वाजपेयात्परं पुण्यं स लभेन्मानवो भुवि ॥ १५४.६ ॥

तेन पुण्येन पूतात्मा प्राणत्यागाद्दिवं व्रजेत् ।

आरूढः परमं यानं गीयमानोऽप्सरोगणैः ॥ १५४.७ ॥

उपभुज्य महाभोगान्कालेन महता ततः ।

मर्त्यलोके महात्मासौ जायते विमले कुले ॥ १५४.८ ॥

ब्राह्मणः सुभगो लोके वेदवेदाङ्गपारगः ।

व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १५४.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कलकलेश्वरतीर्थफलमाहात्म्यवर्णनं नाम चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५५



श्रीमार्कण्डेय उवाच -
अतः परं प्रवक्ष्यामि सर्वतीर्थादनुत्तमम् ।
उत्तरे नर्मदाकूले शुक्लतीर्थं युधिष्ठिर ॥ १५५.१ ॥
तस्य तीर्थस्य चान्यानि पुण्यत्वाच्छुभदर्शनात् ।
पृथिव्यां सर्वतीर्थानि कलां नार्हन्ति षोडशीम् ॥ १५५.२ ॥

युधिष्ठिर उवाच -
तस्य तीर्थस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ।
भ्रातृभिः सहितः सर्वैस्तथान्यैर्द्विजसत्तमैः ॥ १५५.३ ॥

श्रीमार्कण्डेय उवाच -
शुक्लतीर्थस्य चोत्पत्तिमाकर्णय नरेश्वर ।
यस्य संदर्शनादेव ब्रह्महत्या प्रलीयते ॥ १५५.४ ॥
नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी ।
यच्च बाल्यं कृतं पापं दर्शनादेव नश्यति ॥ १५५.५ ॥
मोक्षदानि न सर्वत्र शुक्लतीर्थमृते नृप ।
शुक्लतीर्थस्य माहात्म्यं पुराणे यच्छ्रुतं मया ॥ १५५.६ ॥
समागमे मुनीनां तु देवानां हि तथैव च ।
कथितं देवदेवेन शितिकण्ठेन भारत ।
कैलासे पर्वतश्रेष्ठे तत्ते संकथयाम्यहम् ॥ १५५.७ ॥
पुरा कृतयुगस्यादौ तोषितुं गिरिजापतिम् ।
तपश्चचार विपुलं विष्णुर्वर्षसहस्रकम् ।
वायुभक्षो निराहारः शुक्लतीर्थे व्यवस्थितः ॥ १५५.८ ॥
ततः प्रत्यक्षतामागाद्देवदेवो महेश्वरः ।
प्रादुर्भूतस्तु सहसा तत्र तीर्थे नराधिप ॥ १५५.९ ॥
क्रोशद्वयमिदं चक्रे भुक्तिमुक्तिप्रदायकम् ।
तस्मिंस्तीर्थे नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥ १५५.१० ॥

गङ्गा कनखले पुण्या कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ॥ १५५.११ ॥
सर्वौषधीनामशनं प्रधानं सर्वेषु पेयेषु जलं प्रधानम् ।
निद्रा सुखानां प्रमदा रतीनां सर्वेषु गात्रेषु शिरः प्रधानम् ॥ १५५.१२ ॥
स्नातस्यापि यथा पुण्यं ललाटं नृपसत्तम ।
शुक्लतीर्थं तथा पुण्यं नर्मदायां युधिष्ठिर ॥ १५५.१३ ॥
सरितां च यथा गङ्गा देवतानां जनार्दनः ।
शुक्लतीर्थं तथा पुण्यं नर्मदायां व्यवस्थितम् ॥ १५५.१४ ॥
चतुष्पदानां सुरभिर्वर्णानां ब्राह्मणो यथा ।
प्रधानं सर्वतीर्थानां शुक्लतीर्थं तथा नृप ॥ १५५.१५ ॥
ग्रहाणां तु यथादित्यो नक्षत्राणां यथा शशी ।
शिरो वा सर्वगात्राणां धर्माणां सत्यमिष्यते ॥ १५५.१६ ॥
तथैव पार्थ तीर्थानां शुक्लतीर्थमनुत्तमम् ।
दुर्विज्ञेयो यथा लोके परमात्मा सनातनः ॥ १५५.१७ ॥
सुसूक्ष्मत्वादनिर्देश्यः शुक्लतीर्थं तथा नृप ।
मन्दप्रज्ञत्वमापन्ने महामोहसमन्वितः ॥ १५५.१८ ॥
शुक्लतीर्थं ना जानाति नर्मदातटसंस्थितम् ।
बहुनात्र किमुक्तेन धर्मपुत्र पुनः पुनः ॥ १५५.१९ ॥
शुक्लतीर्थं महापुण्यं सम्प्राप्तं कल्मषक्षयात् ।
योऽत्र दत्ते शुचिर्भूत्वा एकं रेवाजलाञ्जलिम् ॥ १५५.२० ॥
कल्पकोटिसहस्राणि पितरस्तेन तर्पिताः ॥ १५५.२१ ॥
एकः पुत्रो धरापृष्ठे पितृ‍णामार्तिनाशनः ।
चाणक्यो नाम राजाभूच्छुक्लतीर्थं च वेद सः ॥ १५५.२२ ॥

युधिष्ठिर उवाच -
कोऽसौ द्विजवरश्रेष्ठ चाणक्यो नाम नामतः ।
शुक्लतीर्थस्य यो वेत्ता नान्यो वेत्ता हि कश्चन ॥ १५५.२३ ॥
केनोपायेन तत्तीर्थं तेन ज्ञातं धरातले ।
तदहं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ १५५.२४ ॥

श्रीमार्कण्डेय उवाच -
इक्ष्वाकुप्रभवो राजा नप्ता शुद्धोदनस्य च ।
चाणक्यो नाम राजर्षिर्बुभुजे पृथिवीमिमाम् ॥ १५५.२५ ॥

विक्रान्तो मतिमाञ्छूरः सर्वलोकैरवञ्चितः ।
वञ्चितः सहसा धूर्तवायसाभ्यां नृपोत्तमः ॥ १५५.२६ ॥

युधिष्ठिर उवाच -
कथं स वञ्चितो राजा वायसाभ्यां कुतोऽथवा ।
पुरा येन प्रतिज्ञातं धीगर्भेण महात्मना ॥ १५५.२७ ॥
न जीवे वञ्चितोऽन्येन प्राणांस्त्यक्ष्ये न संशयः ।
एतन्मे वद विप्रेन्द्र परं कौतूहलं मम ॥ १५५.२८ ॥

श्रीमार्कण्डेय उवाच -
आत्मानं वञ्चितं ज्ञात्वा तदा संगृह्य वायसौ ।
प्रेषयामास तीव्रेण दण्डेन यमसादनम् ॥ १५५.२९ ॥
वायसावूचतुः ।
सुन्दोपसुन्दयोः पुत्रावावां काकत्वमागतौ ।
मा वधीस्त्वं महाभाग कस्मिंश्चित्कारणान्तरे ॥ १५५.३० ॥
तावावां कृतसंकल्पौ त्वया कोपेन मानद ।
निरस्तावनिरस्तौ वा यास्यावः परमां गतिम् ॥ १५५.३१ ॥
तदादेशय राजेन्द्र कृत्वा तव महत्प्रियम् ।
मुक्तशापौ भविष्यावो ब्रह्मणो वचनं तथा ॥ १५५.३२ ॥
तच्छ्रुत्वा काकवचनं चाणक्यो नृपसत्तमः ।
नाहं जीवे विदित्वैवं वञ्चितः केन कर्हिचित् ॥ १५५.३३ ॥
तस्मात्तीर्थं विजानीतं यमस्य सदने द्विजौ ।
प्रेषयामि यथान्यायं श्रुत्वा तत्कथयिष्यथः ॥ १५५.३४ ॥
तेनैव मुक्तौ तौ काकौ स्रक्चन्दनविभूषितौ ।
शीघ्रगौ प्रेषयामास यमस्य सदनं प्रति ॥ १५५.३५ ॥

राजोवाच -
तत्र धर्मपुरं गत्वा विचरन्तावितस्ततः ।
यदि पृच्छति धर्मात्मा यमः संयमनो महान् ॥ १५५.३६ ॥
कुतो वामागतं ब्रूतं केन वा भूषितावुभौ ।
मदीया भारती तस्य कथनीया ह्यशङ्कितम् ॥ १५५.३७ ॥
इक्ष्वाकुसंभवो राजा चाणक्यो नाम धार्मिकः ।
द्वादशाहे मृतस्यास्य तर्पितावशनादिना ॥ १५५.३८ ॥

तच्छ्रुत्वा वचनं राज्ञो गतौ तौ यमसादनम् ।
क्रीडितौ प्राङ्गणे तस्य स्रक्चन्दनविभूषितौ ।
धर्मराजेन तौ दृष्टौ पृष्टौ धृष्टौ च वायसौ ॥ १५५.३९ ॥

यम उवाच -
कुतः स्थानात्समायातौ केन वा भूषितावुभौ ।
वृत्तं वै कथ्यतामेतद्वायसावविशङ्कया ॥ १५५.४० ॥
काकावूचतुः ।
इक्ष्वाकुसम्भवो राजा चाणक्यो नाम धार्मिकः ।
द्वादशाहे मृतस्यास्य तर्पितावशनादिभिः ॥ १५५.४१ ॥
तयोस्तद्वचनं श्रुत्वा सदा वैवस्वतो यमः ।
चित्रगुप्तं कलिं कालं वीक्ष्यतामिदमब्रवीत् ॥ १५५.४२ ॥
अण्डजस्वेदजातीनां भूतानां सचराचरे ।
विहितं लोककर्त्ःणां सान्निध्यं ब्रह्मणा मम ॥ १५५.४३ ॥
गतः कुत्र दुराचारश्चाणक्यो नामतस्त्विह ।
अन्विष्यतां पुराणेषु त्वितिहासेषु या गतिः ॥ १५५.४४ ॥
ततस्तैर्धर्मपालैस्तु धर्मराजप्रचोदितैः ।
निरीक्षिता पुराणोक्ता कर्मजा गतिरागतिः ॥ १५५.४५ ॥
ततः प्रोवाच वचनं धर्मो धर्मभृतां वरः ।
शृण्वतां धर्मपालानां मेघगम्भीरया गिरा ॥ १५५.४६ ॥
शुक्लतीर्थे मृतानां तु नर्मदाविमले जले ।
अण्डजस्वेदजातीनां न गतिर्मम सन्निधौ ॥ १५५.४७ ॥
तत्तीर्थं धार्मिकं लोके ब्रह्मविष्णुमहेश्वरैः ।
निर्मितं परया भक्त्या लोकानां हितकाम्यया ॥ १५५.४८ ॥
पापोपपातकैर्युक्ता ये नरा नर्मदाजले ।
शुक्लतीर्थे मृताः शुद्धा न ते मद्विषयाः क्वचित् ॥ १५५.४९ ॥
एतच्छ्रुत्वा तु वचनं तौ काकौ यमभाषितम् ।
आगतौ शीघ्रगौ पार्थ दृष्ट्वा यमपुरं महत् ॥ १५५.५० ॥
पृष्टौ तौ प्रणतौ राज्ञा यथावृत्तं यथाश्रुतम् ।
कथयामासतुः पार्थ दानवौ काकतां गतौ ॥ १५५.५१ ॥
अस्मात्स्थानाद्गतावावां यमस्य पुरमुत्तमम् ।
पृथिव्या दक्षिणे भागे ह्यतीत्य बहुयोनिजम् ॥ १५५.५२ ॥
तत्पुरं कामगं दिव्यं स्वर्णप्राकारतोरणम् ।

अनेकगृहसम्बाधं मणिकाञ्चनभूषितम् ॥ १५५.५३ ॥
चतुष्पथैश्चत्वरैश्च घण्टामार्गोपशोभितम् ।
उद्यानवनसंछन्नं पद्मिनीखण्डमन्दितम् ॥ १५५.५४ ॥
हंससारससंघुष्टं कोकिलाकुलसंकुलम् ।
सिंहव्याघ्रगजाकीर्णमृक्षवानरसेवितम् ॥ १५५.५५ ॥
नरनारीसमाकीर्णं नित्योत्सवविभूषितम् ।
शंखदुन्दुभिनिर्घोषैर्वीणावेणुनिनादितम् ॥ १५५.५६ ॥
यममार्गेऽपि विहितं स्वर्गलोकमिवापरम् ।
गतौ तत्र पुनश्चान्यैर्यमदूतैर्यमाज्ञया ॥ १५५.५७ ॥
विदितौ प्रेषितौ तत्र यत्र देवो जगत्प्रभुः ।
प्राणस्य भीत्या दृष्टोऽसौ सिंहासनगतः प्रभुः ॥ १५५.५८ ॥
महाकायो महाजङ्घो महास्कन्धो महोदरः ।
महावक्षा महाबाहुर्महावक्त्रेक्षणो महान् ॥ १५५.५९ ॥
महामहिषमारूढो महामुकुटभूषितः ।
तत्रान्यश्च कलिः कालश्चित्रगुप्तो महामतिः ॥ १५५.६० ॥
समागतौ तदा दृष्टौ मध्ये ज्वलितपावकौ ।
पुण्यपापानि जन्तूनां श्रुतिस्मृत्यर्थपारगौ ॥ १५५.६१ ॥
विचारयन्तौ सततं तिष्ठाते तौ दिवानिशम् ।
ततो ह्यावां प्रणामान्ते यमेन यममूर्तिना ॥ १५५.६२ ॥
पृष्टावागमने हेतुं तमब्रूव शृणुष्व तत् ।
उज्जयिन्यां महीपालश्चाणक्योऽभूत्प्रतापवान् ॥ १५५.६३ ॥
द्वादशाहे मृतस्यास्य भुक्त्वा प्राप्तौ यमालयम् ।
ततोऽस्माकं वचः श्रुत्वा कम्पयित्वा शिरो यमः ॥ १५५.६४ ॥
उवाच वचनं सत्यं सभामध्ये हसन्निव ।
अस्ति तत्कारणं येन चाणक्यः पापपूरुषः ॥ १५५.६५ ॥
नायातो मम लोके तु सर्वपापभयंकरे ।
शुक्लतीर्थे मृतानां तु नर्मदायां परं पदम् ॥ १५५.६६ ॥
जायते सर्वजन्तूनां नात्र काचिद्विचारणा ।
अवशः स्ववशो वापि जन्तुस्तत्क्षेत्रमण्डले ॥ १५५.६७ ॥
मृतः स वै न सन्देहो रुद्रस्यानुचरो भवेत् ।
तद्धर्मवचनं श्रुत्वा निर्गत्य नगराद्बहिः ॥ १५५.६८ ॥
पश्यन्तौ विविधां घोरां नरके लोकयातनाम् ।
त्रिंशत्कोट्यो हि घोराणां नरकाणां नृपोत्तम ॥ १५५.६९ ॥

दृष्टा भीतौ परामार्तिगतौ तत्र महापथि ।
नरको रौरवस्तत्र महारौरव एव च ॥ १५५.७० ॥
पेषणः शोषणश्चैव कालसूत्रोऽस्थिभञ्जनः ।
तामिस्रश्चान्धतामिस्रः कृमिपूतिवहस्तथा ॥ १५५.७१ ॥
दृष्टश्चान्यो महाज्वालस्तत्रैव विषभोजनः ।
नरकौ दंशमशकौ तथा यमलपर्वतौ ॥ १५५.७२ ॥
नदी वैतरणी दृष्टा सर्वपापप्रणाशिनी ।
शीतलं सलिलं यत्र पिबन्ति ह्यमृतोपमम् ॥ १५५.७३ ॥
तदेव नीरं पापानां शोणितं परिवर्तते ।
असिपत्रवनं चान्यद्दृष्टान्या महती शिला ॥ १५५.७४ ॥
अग्निपुंजनिभाकारा विशाला शाल्मली परा ।
इत्यादयस्तथैवान्ये शतसाहस्रसंज्ञिताः ॥ १५५.७५ ॥
घोरघोरतरा दृष्टाः क्लिश्यन्ते यत्र मानवाः ।
वाचिकैर्मानसैः पापैः कर्मजैश्च पृथग्विधैः ॥ १५५.७६ ॥
अहंकारकृतैर्दोषैर्मायावचनपूर्वकैः ।
पिता माता गुरुर्भ्राता अनाथा विकलेन्द्रियाः ॥ १५५.७७ ॥
भ्रमन्ति नोद्धृता येषां गतिस्तेषां हि रौरवे ।
तत्र ते द्वादशाब्दानि क्षपित्वा रौरवेऽधमाः ॥ १५५.७८ ॥
इह मानुष्यके लोके दीनान्धाश्च भवन्ति ते ।
देवब्रह्मस्वहर्त्ःणां नराणां पापकर्मणाम् ॥ १५५.७९ ॥
महारौरवमाश्रित्य ध्रुवं वासो यमालये ।
ततः कालेन महता पापाः पापेन वेष्टिताः ॥ १५५.८० ॥
जायन्ते कण्टकैर्भिन्नाः कोशे वा कोशकारकाः ।
मृगपक्षिविहङ्गानां घातका मांसभक्षकाः ॥ १५५.८१ ॥
पेषणं नरकं यान्ति शोषणं जीवबन्धनात् ।
तत्रत्यां यातनां घोरां सहित्वा शास्त्रचोदिताम् ॥ १५५.८२ ॥
इह मानुष्यतां प्राप्य पङ्ग्वन्धबधिरा नराः ।
गवार्थे ब्राह्मणार्थे च ह्यनृतं वदतामिह ॥ १५५.८३ ॥
पतनं जायते पुंसां नरके कालसूत्रके ।
तत्रत्या यातना घोरा विहिता शास्त्रकर्तृभिः ॥ १५५.८४ ॥
भुक्त्वा समागता ह्यत्र ते यास्यन्त्यन्त्यजां गतिम् ।
बन्धयन्ति च ये जीवांस्त्यक्त्वात्मकुलसन्ततिम् ॥ १५५.८५ ॥
पतन्ति नात्र सन्देहो नरके तेऽस्थिभञ्जने ।

तत्र वर्षशतस्यान्त इह मानुष्यतां गताः ॥ १५५.८६ ॥
कुब्जा वामनकाः पापा जायन्ते दुःखभागिनः ।
ये त्यजन्ति स्वकां भार्यां मूढाः पण्डितमानिनः ॥ १५५.८७ ॥
ते यान्ति नरकं घोरं तामिस्रं नात्र संशयः ।
तत्र वर्षशतस्यान्ते इह मानुष्यतां गताः ॥ १५५.८८ ॥
दुश्चर्माणो दुर्भगाश्च जायन्ते मानवा हि ते ।
मानकूटं तुलाकूटं कूटकं तु वदन्ति ये ॥ १५५.८९ ॥
नरके तेऽन्धतामिस्रे प्रपच्यन्ते नराधमाः ।
शतसाहस्रिकं कालमुषित्वा तत्र ते नराः ॥ १५५.९० ॥
इह शत्रुगृहे त्वन्धा भ्रमन्ते दीनमूर्तयः ।
पितृदेवद्विजेभ्योऽन्नमदत्त्वा येऽत्र भुञ्जते ॥ १५५.९१ ॥
नरके कृमिभक्ष्ये ते पतन्ति स्वात्मपोषकाः ।
ततः प्रसूतिकाले हि कृमिभुक्तश्च सव्रणः ॥ १५५.९२ ॥
जायतेऽशुचिगन्धोऽत्र परभाग्योपजीवकः ।
स्वकर्मविच्युताः पापा वर्णाश्रमविवर्जिताः ॥ १५५.९३ ॥
नरके पूयसम्पूर्णे क्लिश्यन्ते ह्ययुतं समाः ।
पूर्णे तत्र ततः काले प्राप्य मानुष्यकं भवम् ॥ १५५.९४ ॥
उद्वेजनीया भूतानां जायन्ते व्याधिभिर्वृताः ।
अग्निदो गरदश्चैव लोभमोहान्वितो नरः ॥ १५५.९५ ॥
नरके विषसम्पूर्णे निमज्जति दुरात्मवान् ।
तत्र वर्षशतात्कालादुन्मज्जनमवस्थितः ॥ १५५.९६ ॥
भुवि मानुषतां प्राप्य कृपणो जायते पुनः ।
पादुकोपानहौ छत्रं शय्यां प्रावरणानि च ॥ १५५.९७ ॥
अदत्त्वा दंशमशकैर्भक्ष्यन्ते जन्यसप्ततिम् ।
पितुर्द्रव्यापहर्तारस्ताडनक्रोशने रताः ॥ १५५.९८ ॥
पीडनं क्रियते तेषां यत्र तौ युग्मपर्वतौ ।
या सा वैतरणी घोरा नदी रक्तप्रवाहिनी ॥ १५५.९९ ॥
पिबन्ति रुधिरं तत्र येऽभियान्ति रजस्वलाम् ।
असिपत्रवने घोरे पीड्यन्ते पापकारिणः ॥ १५५.१०० ॥
परपीडाकरा नित्यं ये नरोऽन्त्यजगामिनः ।
गुरुदाररतानां तु महापातकिनामपि ॥ १५५.१०१ ॥
शिलावगूहनं तेषां जायते जन्मसप्ततिम् ।
ज्वलन्तीमायसीं घोरां बहुकण्टकसंवृताम् ॥ १५५.१०२ ॥

शाल्मलीं तेऽवगूहन्ति परदाररता हि ये ।
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ॥ १५५.१०३ ॥
अरण्ये निर्जले देशे स भवेत्क्रूरराक्षसः ।
देवस्वं ब्राह्मणस्वं च लोभेनैवाहरेच्च यः ॥ १५५.१०४ ॥
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ।
एवमादीनि पापानि भुञ्जन्ते यमशासनात् ॥ १५५.१०५ ॥
येषां तु दर्शनादेव श्रवणाज्जायते भयम् ।
तथा दानफलं चान्ये भुञ्जाना यममन्दिरे ॥ १५५.१०६ ॥
दृष्टाः श्रुतं कथयतां दूतानां च यमाज्ञया ।
रथैरन्ये गजैरन्ये केचिद्वाजिभिरावृताः ॥ १५५.१०७ ॥
दृष्टास्तत्र महाभाग तपःसंचयसंस्थिताः ।
गोदाता स्वर्णदाता च भूमिरत्नप्रदा नराः ॥ १५५.१०८ ॥
शय्याशनगृहादीनां स लोकः कामदो नृणाम् ।
अन्नं पानीयसहितं ददते येऽत्र मानवाः ॥ १५५.१०९ ॥
तत्र तृप्ताः सुसंतुष्टाः क्रीडन्ते यमसादने ।
अत्र यद्दीयते दानमपि वालाग्रमात्रकम् ॥ १५५.११० ॥
तदक्षयफलं सर्वं शुक्लतीर्थे नृपोत्तम ।
एतत्ते कथितं सर्वं यद्दृष्टं यच्च वै श्रुतम् ॥ १५५.१११ ॥
कुरुष्व यदभिप्रेतं यदि शक्नोषि मुच्यताम् ।
तयोस्तद्वचनं श्रुत्वा चाणक्यो हृष्टमानसः ॥ १५५.११२ ॥
विसर्जयामास खगावभिनन्द्य पुनःपुनः ।
ताभ्यां गताभ्यां सर्वस्वं दत्त्वा विप्रेषु भारत ॥ १५५.११३ ॥
कामक्रोधौ परित्यज्य जगामामरपर्वतम् ।
तत्र बद्ध्वोडुपं गाढं कृष्णरज्ज्वावलम्बितम् ॥ १५५.११४ ॥
प्लवमानो जगामाऽशु ध्यायन्देवं जनार्दनम् ।
आरोग्यं भास्करादिच्छेद्धनं वै जातवेदसः ॥ १५५.११५ ॥
प्राप्नोति ज्ञानमीशानान्मोक्षं प्राप्नोति केशवात् ।
नीलं रक्तं तदभवन्मेचकं यद्धि सूत्रकम् ॥ १५५.११६ ॥
शुद्धस्फटिकसङ्काशं दृष्ट्वा रज्जुं महामतिः ।
आप्लुत्य विमले तोये गतोऽसौ वैष्णवं पदम् ॥ १५५.११७ ॥
गायन्ति यद्वेदविदः पुराणं नारायणं शाश्वतमच्युताह्वयम् ।
प्राप्तः स तं राजसुतो महात्मा निक्षिप्य देहं शुभशुक्लतीर्थे ॥ १५५.११८ ॥
एषा ते कथिता राजन्सिद्धिश्चाणक्यभूभृतः ।

तथान्यत्तव वक्ष्यामि शृणुष्वैकाग्रमानसः ॥ १५५.११९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे चाणक्यसिद्धिप्राप्तिवर्णनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५६



अध्याय १५६

श्रीमार्कण्डेय उवाच -

नास्ति लोकेषु तत्तीर्थं पृथिव्यां यन्नरेश्वर ।

शुक्लतीर्थेन सदृशमुपमानेन गीयते ॥ १५६.१ ॥

शुक्लतीर्थं महातीर्थं नर्मदायां व्यवस्थितम् ।

प्रागुदक्प्रवणे देशे मुनिसङ्घनिषेवितम् ॥ १५६.२ ॥

वैशाखे च तथा मासि कृष्णपक्षे चतुर्दशी ।

कैलासादुमया सार्द्धं स्वयमायाति शङ्करः ॥ १५६.३ ॥

मध्याह्नसमये स्नात्वा पश्यत्यात्मानमात्मना ।

ब्रह्मविष्णिवन्द्रसहितः शुक्लतीर्थे समाहितः ॥ १५६.४ ॥

कार्त्तिक्यां तु विशेषेण वैशाख्यां च नरोत्तम ।

ब्रह्मविष्णुमहादेवान् स्नात्वा पश्यति तद्दिने ॥ १५६.५ ॥

देवराजः सुरैः सार्द्धं वायुमार्गव्यवस्थितः ।

कृष्णपक्षे चतुर्दश्यां स्नात्वा पश्यति शङ्करम् ॥ १५६.६ ॥

गन्धर्वाप्सरसो यक्षाः सिद्धविद्याधरोरगाः ।

तद्दिने तेऽपि देवेशं दृष्ट्वा मुञ्चन्ति किल्बिषम् ॥ १५६.७ ॥

अर्धयोजनविस्तारं तदर्द्धेनैव चायतम् ।

शुक्लतीर्थं महापुण्यं महापातकनाशनम् ॥ १५६.८ ॥

यत्र स्थितैः प्रदृश्यन्ते वृक्षाग्राणि नरोत्तमैः ।

तत्र स्थिता महापापैर्मुच्यन्ते पूर्वसंचितैः ॥ १५६.९ ॥

पापोपपातकैर्युक्तो नरः स्नात्वा प्रमुच्यते ।

उपार्जिता विनश्येत भ्रूणहत्यापि दुस्त्यजा ॥ १५६.१० ॥

यस्मात्तत्रैव देवेश उमया सह तिष्ठति ।

वैशाख्यां च विशेषेण कैलासादेति शङ्करः ॥ १५६.११ ॥

तेन तीर्थं महापुण्यं सर्वपातकनाशनम् ।

कथितं ब्रह्मणा पूर्वं मया तव तथा नृप ॥ १५६.१२ ॥

रजकेन यथा धौतं वस्त्रं भवति निर्मलम् ।

तथा तत्र वपुःस्नानं पुरुषस्य भवेच्छुचि ॥ १५६.१३ ॥

पूर्वे वयसि पापानि कृत्वा पुष्टानि मानवः ।

अहोरात्रोषितो भूत्वा शुक्लतीर्थे व्यपोहति ॥ १५६.१४ ॥

शुक्लतीर्थे महाराज राकां रेवाजलाञ्जलिम् ।

कल्पकोटिसहस्राणि दत्त्वा स्युः पितरः शिवाः ॥ १५६.१५ ॥

न माता न पिता बन्धुः पतनं नरकार्णवे ।

उद्धरन्ति यथा पुण्यं शुक्लतीर्थे नरेश्वर ॥ १५६.१६ ॥

तपसा ब्रह्मचर्येण न तां गच्छन्ति सद्गतिम् ।

शुक्लतीर्थे मृतो जन्तुर्देहत्यागेन यां लभेत् ॥ १५६.१७ ॥

कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशीम् ।

घृतेन स्नापयेद्देवमुपोष्य प्रयतो नरः ॥ १५६.१८ ॥

स्नात्वा प्रभाते रेवायां दद्यात्सघृतकम्बलम् ।

सहिरण्यं यथाशक्ति देवमुद्दिश्य शङ्करं ॥ १५६.१९ ॥

देवस्य पूरणं कुर्याद्घृतेन घृतकम्बलम् ।

स गच्छति महातेजाः शिवलोकं मृतो नरः ॥ १५६.२० ॥

एकविंशकुलोपेतो यावदाभूतसम्प्लवम् ।

शुक्लतीर्थे नरः स्नात्वा ह्युमां रुद्रं च योऽर्चयेत् ॥ १५६.२१ ॥

गन्धपुष्पादिधूपैश्च सोऽश्वमेधफलं लभेत् ।

मासोपवासं यः कुर्यात्तत्र तीर्थे नरेश्वर ॥ १५६.२२ ॥

मुच्यते स महत्पापैः सप्तजन्मसुसंचितैः ।

उष्ट्रीक्षीरमविक्षीरं नवश्राद्धे च भोजनम् ॥ १५६.२३ ॥

वृषलीगमनं चैव तथाभक्ष्यस्य भक्षणम् ।

अविक्रयेऽनृते पापं माहिषेऽयाज्ययाजके ॥ १५६.२४ ॥

वार्द्धुष्ये पङ्क्तिगरदे देवब्राह्मणदूषके ।
एवमादीनि पापानि तथान्यान्यपि भारत ॥ १५६.२५ ॥
चान्द्रायणेन नश्यन्ति शुक्लतीर्थे न संशयः ।
शुक्लतीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ १५६.२६ ॥
तस्य ते द्वादशाब्दानि तृप्तिं यान्ति सुतर्पिताः ।
पादुकोपानहौ छत्रं शय्यामासनमेव च ॥ १५६.२७ ॥
सुवर्णं धनधान्यं च श्राद्धं युक्तहलं तथा ।
अन्नं पानीयसंहितं तस्मिंस्तीर्थे ददन्ति ये ॥ १५६.२८ ॥
हृष्टाः पुष्टा मृता यान्ति शिवलोकं न संशयः ।
तत्र तीर्थे तु यो भक्त्या शिवमुद्दिश्य भारत ॥ १५६.२९ ॥
भिक्षामात्रं तथान्नं ये तेऽपि स्वर्यान्ति वै नराः ।
यज्विनां व्रतिनां चैव तत्र तीर्थनिवासिनाम् ॥ १५६.३० ॥
अपि वालाग्रमात्रं हि दत्तं भवति चाक्षयम् ।
अग्निप्रवेशं यः कुर्याच्छुक्लतीर्थे समाहितः ॥ १५६.३१ ॥
रागद्वेषविनिर्मुक्तो हृदि ध्यात्वा जनार्दनम् ।
सर्वकामसुसम्पूर्णः स गच्छेद्वारुणं पुरम् ॥ १५६.३२ ॥
न रोगो न जरा तत्र यत्र देवोऽभसां पतिः ।
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे युधिष्ठिर ॥ १५६.३३ ॥
अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ।
अवशः स्ववशो वापि जन्तुस्तत्क्षेत्रमण्डले ॥ १५६.३४ ॥
मृतः स तु न सन्देहो रुद्रस्यानुचरो भवेत् ।
शुक्लतीर्थे तु यः कन्यां शक्त्या दद्यादलंकृताम् ॥ १५६.३५ ॥
विधिना यो नृपश्रेष्ठ कुरुते वृषमोक्षणम् ।
तस्य यत्फलमुद्दिष्टं पुराणे रुद्रभाषितम् ॥ १५६.३६ ॥
तदहं सम्प्रवक्ष्यामि शृणुष्वैकमना नृप ।
यावन्तो रोमकूपाः स्युः सर्वाङ्गेषु पृथक्पृथक् ॥ १५६.३७ ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
शुक्लतीर्थे तु यद्दत्तं ग्रहणे चन्द्रसूर्ययोः ॥ १५६.३८ ॥

वर्धते तद्गुणं तावद्दिनानि दश पञ्च च ।
शुक्लतीर्थे शुचिर्भूत्वा यः करोति प्रदक्षिणम् ॥ १५६.३९ ॥
पृथ्वी प्रदक्षिणा तेन कृता यत्तस्य तत्फलम् ।
शोभनं मिथुनं यस्तु रुद्रमुद्दिश्य पूजयेत् ॥ १५६.४० ॥
सप्त जन्मानि तस्यैव वियोगो न च वै क्वचित् ।
एतत्ते कथितं राजन् संक्षेपेण फलं महत् ॥ १५६.४१ ॥
शुक्लतीर्थस्य यत्पुण्यं यथा देवाच्छ्रुतं मया ।
य इदं शृणुयाद्भक्त्या पुराणे विहितं फलम् ॥ १५६.४२ ॥
स लभेन्नात्र सन्देहः सत्यं सत्यं पुनः पुनः ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ १५६.४३ ॥
मोक्षार्थी लभते मोक्षं स्नानदानफलं महत् ॥ १५६.४४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शुक्लतीर्थमाहात्म्यवर्णनं नाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५७



अध्याय १५७

श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं राजञ्छुक्लतीर्थसमीपतः ।

वासुदेवस्य तीर्थं तु सर्वलोकेषु पूजितम् ॥ १५७.१ ॥

तद्धि पुण्यं सुविख्यातं नर्मदायां पुरातनम् ।

यत्र हुङ्कारमात्रेण रेवा क्रोशं जगाम सा ॥ १५७.२ ॥

यदा प्रभृति राजेन्द्र हुङ्कारेण गता सरित् ।

तदाप्रभृति स स्वामी हुङ्कारः शब्दितो बुधैः ॥ १५७.३ ॥

हुङ्कारतीर्थे यः स्नात्वा पश्यत्यव्ययमच्युतम् ।

स मुच्यते नरः पापैः सप्तजन्म कृतैरपि ॥ १५७.४ ॥

संसारार्णवमग्नानां नराणां पापकर्मिणाम् ।

नैवोद्धर्ता जगन्नाथं विना नारायणं परः ॥ १५७.५ ॥

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् ।

तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १५७.६ ॥

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।

येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ १५७.७ ॥

यदन्यद्देवतार्चायाः फलं प्राप्नोति मानवः ।

साष्टाङ्गप्रणिपातेन तत्फलं लभते हरेः ॥ १५७.८ ॥

रेणुगुण्ठितगात्रस्य यावन्तोऽस्य रजःकणाः ।

तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥ १५७.९ ॥

सम्मार्जनाभ्युक्षणलेपनेन तदालये नश्यति सर्वपापम् ।

नारी नराणां परया तु भक्त्या दृष्ट्वा तु रेवां नरसत्तमस्य ॥ १५७.१० ॥

येनार्चितो भगवान्वासुदेवो जन्मार्जितं नश्यति तस्य पापम् ।
स याति लोकं गरुडध्वजस्य विधूतपापः सुरसङ्घपूज्यताम् ॥ १५७.११ ॥
शाठ्येनापि नमस्कारं प्रयुञ्जंश्चक्रपाणिनः ।
सप्तजन्मार्जितं पापं गच्छत्याशु न संशयः ॥ १५७.१२ ॥
पूजायां प्रीयते रुद्रो जपहोमैर्दिवाकरः ।
शङ्खचक्रगदापाणिः प्रणिपातेन तुष्यति ॥ १५७.१३ ॥
भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ १५७.१४ ॥
हुङ्कारतीर्थे राजेन्द्र शुभं वा यदि वाशुभम् ।
यत्कृतं पुरुषव्याघ्र तन्नश्यति न कर्हिचित् ॥ १५७.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे हुङ्कारस्वामितीर्थमाहात्म्यवर्णनं नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५८



अध्याय १५८

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्परं तीर्थं सङ्गमेश्वरमुत्तमम् ।

नर्मदादक्षिणे कूले सर्वपापभयापहम् ॥ १५८.१ ॥

धनदस्तत्र विश्रान्तो मुहूर्तं नृपसत्तम ।

पितृलोकात्समायातः कैलासं धरणीधरम् ॥ १५८.२ ॥

प्रत्ययार्थं नृपश्रेष्ठ ह्यद्यापि धरणीतले ।

कृष्णवर्णा हि पाषाणा दृश्यन्ते स्फटिकोज्ज्वलाः ॥ १५८.३ ॥

विन्ध्यनिर्झरनिष्क्रान्ता पुण्यतोया सरिद्वरा ।

प्रविष्टा नर्मदातोये सर्वपापप्रणाशने ॥ १५८.४ ॥

सङ्गमे तत्र यः स्नात्वा पूजयेत्सङ्गमेश्वरम् ।

अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ १५८.५ ॥

घण्टापताकावितनं यो ददेत्सङ्गमेश्वरे ।

हंसयुक्तविमानस्थो दिव्यस्त्रीशतसंवृतः ॥ १५८.६ ॥

स रुद्रपदमाप्नोति रुद्रस्यानुचरो भवेत् ।

दधि भक्ते न देवस्य यः कुर्याल्लिङ्गपूरणम् ॥ १५८.७ ॥

सिक्थसंख्यं शिवे लोके स वसेत्कालमीप्सितम् ।

श्रीफलैः पूरयेल्लिङ्गं निःस्वो भूत्वा भवस्य तु ॥ १५८.८ ॥

सोऽपि तत्फलमाप्नोति गतः स्वर्गे नरेश्वर ।

अक्षया सन्ततिस्तस्य जायते सप्तजन्मसु ॥ १५८.९ ॥

स्नपनं देवदेवस्य दध्ना मधुघृतेन वा ।

यः करोति विधानेन तस्य पुण्यफलं शृणु ॥ १५८.१० ॥

घृतक्षीरवहा नद्यो यत्र वृक्षा मधुस्रवाः ।

तत्र ते मानवा यान्ति सुप्रसन्ने महेश्वरे ॥ १५८.११ ॥

पत्रं पुष्पं फलं तोयं यस्तु दद्यान्महेश्वरे ।

तत्सर्वं सप्तजन्मानि ह्यक्षयं फलमश्नुते ॥ १५८.१२ ॥

सर्वेषामेव पात्राणां महापात्रं महेश्वरः ।

तस्मात्सर्वप्रयत्नेन पूजनीयो महेश्वरः ॥ १५८.१३ ॥

ब्रह्मचर्यस्थितो नित्यं यस्तु पूजयते शिवम् ।

इह जीवन्स देवेशो मृतो गच्छेदनामयम् ॥ १५८.१४ ॥

शिवे तु पूजिते पार्थ यत्फलं प्राप्यते बुधैः ।

योगीन्द्रे चैव तत्पार्थ पूजिते लभते फलम् ॥ १५८.१५ ॥

ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।

येषां गृहेषु भुञ्जन्ति शिवभक्तिरता नराः ॥ १५८.१६ ॥

संनिरुध्येन्द्रियग्रामं यत्रयत्र वसेन्मुनिः ।

तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १५८.१७ ॥

यत्फलं वेदविदुषि भोजिते शतसंख्यया ।

तत्फलं जायते पार्थ ह्येकेन शिवयोगिना ॥ १५८.१८ ॥

यत्र भुञ्जति भस्माङ्गी मूर्खो वा यदि पण्डितः ।

तत्र भुञ्जति देवेशः सपत्नीको वृषध्वजः ॥ १५८.१९ ॥

विप्राणां वेदविदुषां कोटिं संभोज्य यत्फलम् ।

भिक्षामात्रप्रदानेन तत्फलं शिवयोगिनाम् ॥ १५८.२० ॥

सङ्गमेश्वरमासाद्य प्राणत्यागं करोति यः ।

न तस्य पुनरावृत्तिः शिवलोकात्कदाचन ॥ १५८.२१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सङ्गमेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १५९



श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महाराज तीर्थं परमपावनम् ।

नर्मदायां सुदुष्प्रापं सिद्धं ह्यनरकेश्वरम् ॥ १५९.१ ॥

तस्मिंस्तीर्थे नरः स्नात्वा पापकर्मापि भारत ।

न पश्यति महाघोरं नरकद्वारसंज्ञिकम् ॥ १५९.२ ॥

युधिष्ठिर उवाच -

शुभाशुभफलैस्तात भुक्तभोगा नरास्त्विह ।

जायन्ते लक्षणैर्यैस्तु तानि मे वद सत्तम ॥ १५९.३ ॥

यथा निर्गच्छते जीवस्त्यक्त्वा देहं न पश्यति ।

तथा गच्छन्पुनर्देहं पञ्चभूतसमन्वितः ॥ १५९.४ ॥

त्वगस्थिमांसमेदोऽसृक्केशस्नायुशतैः सह ।

विण्मूत्ररेतःसङ्घाते का संज्ञा जायते नृणाम् ॥ १५९.५ ॥

एवमुक्तः स मार्कण्डः कथयामास योगवित् ।

ध्यात्वा सनातनं सर्वं देवदेवं महेश्वरम् ॥ १५९.६ ॥

मार्कण्डेय उवाच -

शृणु पार्थ महाप्रश्नं कथयामि यथाश्रुतम् ।

सकाशाद्ब्रह्मणः पूर्वमृषिदेवसमागमे ॥ १५९.७ ॥

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।

इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ १५९.८ ॥

अचीर्णप्रायश्चित्तानां यमलोके ह्यनेकधा ।

यातनाभिर्वियुक्तानामनेकां जीवसन्ततिम् ॥ १५९.९ ॥

गत्वा मनुष्यभावे तु पापचिह्ना भवन्ति ते ।

तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ १५९.१० ॥

सहित्वा यातनां सर्वां गत्वा वैवस्वतक्षयम् ।

विस्तीर्णयातना ये तु लोकमायान्ति चिह्निताः ॥ १५९.११ ॥

गद्गदोऽनृतवादी स्यान्मूकश्चैव गवानृते ।

ब्रह्महा जायते कुष्ठी श्यावदन्तस्तु मद्यपः ॥ १५९.१२ ॥

कुनखी स्वर्णहरणाद्दुःश्चर्मा गुरुतल्पगः ।

संयोगी हीनयोनिः स्याद्दरिद्रोऽदत्तदानतः ॥ १५९.१३ ॥

ग्रामशूकरतां याति ह्ययाज्ययाजको नृप ।

खरो वै बहुयाजी स्याच्छ्वानिमन्त्रितभोजनात् ॥ १५९.१४ ॥

अपरीक्षितभोजी स्याद्वानरो विजने वने ।

वितर्जकोऽथ मार्जारः खद्योतः कक्षदाहतः ॥ १५९.१५ ॥

अविद्यां यः प्रयच्छेत बलीवर्दो भवेद्धि सः ।

अन्नं पर्युषितं विप्रे ददानः क्लीबतां व्रजेत् ॥ १५९.१६ ॥

मात्सर्यादथ जात्यन्धो जन्मान्धः पुस्तकं हरन् ।

फलान्याहरतोऽपत्यं म्रियते नात्र संशयः ॥ १५९.१७ ॥

मृतो वानरतां याति तन्मुक्तोऽथ गलाडवान् ।

अदत्त्वा भक्षयंस्तानि ह्यनपत्यो भवेन्नरः ॥ १५९.१८ ॥

हरन्वस्त्रं भवेद्गोधा गरदः पवनाशनः ।

प्रव्राजी गमनाद्राजन् भवेन्मरुपिशाचकः ॥ १५९.१९ ॥

वातको जलहर्ता च धान्यहर्ता च मूषकः ।

अप्राप्तयौवनां गच्छन् भवेत्सर्प इति श्रुतिः ॥ १५९.२० ॥

गुरुदाराभिलाषी च कृकलासो भवेच्चिरम् ।

जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ १५९.२१ ॥

अविक्रेयान् विक्रयन् वै विकटाक्षो भवेन्नरः ।

अयोनिगो वृको हि स्यादुलूकः क्रयवञ्चनात् ॥ १५९.२२ ॥

मृतस्यैकादशाहे तु भुञ्जानः श्वोपजायते ।

प्रतिश्रुत्य द्विजायार्थमददन्मधुको भवेत् ॥ १५९.२३ ॥

राज्ञीगमाद्भवेद्दुष्टतस्करो विड्वराहकः ।

परिवादी द्विजातीनां लभते काच्छपीं तनुम् ॥ १५९.२४ ॥

व्रजेद्देवलको राजन्योनिं चाण्डालसंज्ञिताम् ।

दुर्भगः फलविक्रेता वृश्चिको वृषलीपतिः ॥ १५९.२५ ॥

मार्जारोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ।

सोदर्यागमनात्षण्ढो दुर्गन्धश्च सुगन्धहृत् ॥ १५९.२६ ॥

ग्रामभट्टो दिवाकीर्तिर्दैवज्ञो गर्दभो भवेत् ।

कुपण्डितः स्यान्मार्जारो भषणो व्यास एव च ॥ १५९.२७ ॥

स एव दृश्यते राजन्प्रकाशात्परमर्मणाम् ।

यद्वा तद्वापि पारक्यं स्वल्पं वा यदि वा बहु ॥ १५९.२८ ॥

कृत्वा वै योनिमाप्नोति तैरश्चीं नात्र संशयः ।

एवमादीनि चान्यानि चिह्नानि नृपसत्तम ॥ १५९.२९ ॥

स्वकर्मविहितान्येव दृश्यन्ते यैस्तु मानवाः ।

ततो जन्म ततो मृत्युः सर्वजन्तुषु भारत ॥ १५९.३० ॥

जायते नात्र सन्देहः समीभूते शुभाशुभे ।

स्त्रीपुंसोः सम्प्रयोगेण विषुद्धे शुक्रशोणिते ॥ १५९.३१ ॥

पञ्चभूतसमोपेतः सषष्ठः परमेश्वरः ।

इन्द्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ॥ १५९.३२ ॥

धारणं प्रेरणं दुःखमिच्छाहङ्कार एव च ।

प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ॥ १५९.३३ ॥

तस्येदमात्मनः सर्वमनादेरादिमिच्छतः ।

प्रथमे मासि स क्लेदभूतो धातुविमूर्छितः ॥ १५९.३४ ॥

मास्यर्बुदं द्वितीये तु तृतीये चेन्द्रियैर्युतः ।

आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रबलादिकम् ।

वायोस्तु स्पर्शनं चेष्टां दहनं रौक्ष्यमेव च ॥ १५९.३५ ॥

पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशनम् ।

सलिलाद्रसनां शैत्यं स्नेहं क्लेदं समार्दवम् ॥ १५९.३६ ॥

भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च ।

आत्मा गृह्णात्यजः पूर्वं तृतीये स्पन्दते च सः ॥ १५९.३७ ॥

दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।

वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥ १५९.३८ ॥

स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ।

षष्ठे बलं च वर्णश्च नखरोम्णां च सम्भवः ॥ १५९.३९ ॥

मनसा चेतनायुक्तो नखरोमशतावृतः ।

सप्तमे चाष्टमे चैव त्वचावान् स्मृतिवानपि ॥ १५९.४० ॥

पुनर्गर्भं पुनर्धात्रीमेनस्तस्य प्रधावति ।

अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥ १५९.४१ ॥

नवमे दशमे वापि प्रबलैः सूतिमारुतैः ।

निर्गच्छते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ १५९.४२ ॥

शरीरावयवैर्युक्तो ह्यङ्गप्रत्यङ्गसंयुतः ।

अष्टोत्तरं मर्मशतं तत्रास्था तु शतत्रयम् ॥ १५९.४३ ॥

सप्त शिरःकपालानि विहितानि स्वयम्भुवा ।

तिस्रः कोट्योऽर्धकोटी च रोम्णामङ्गेषु भारत ॥ १५९.४४ ॥

द्वासप्ततिसहस्राणि हृदयादभिनिसृताः ।

हितानाम हि ता नाड्यस्तासां मध्ये शशिप्रभा ॥ १५९.४५ ॥

एवं प्रवर्तते चक्रं भूतग्रामे चतुर्विधे ।

उत्पत्तिश्च विनाशश्च भवतः सर्वदेहिनाम् ॥ १५९.४६ ॥

गतिरूर्ध्वा च धर्मेण ह्यधर्मेण त्वधोगतिः ।

जायते सर्ववर्णानां स्वधर्मचलनान्नृप ॥ १५९.४७ ॥

देवत्वे मानवत्वे च दानभोगादिकाः क्रियाः ।

दृश्यन्ते या महाराज तत्सर्वं कर्मजं फलम् ॥ १५९.४८ ॥

स्वकर्म विहिते घोरे कामक्सोधार्जिते शुभे ।

निमज्जेन्नरके घोरे यस्योत्तारो न विद्यते ॥ १५९.४९ ॥

उत्तारणाय जन्तूनां नर्मदातटसंस्थितम् ।

एवमेतन्महातीर्थं नरकेश्वरमुत्तमम् ॥ १५९.५० ॥

नरकापहं महापुण्यं महापातकनाशनम् ।

तत्तीर्थं सर्वतीर्थानामुत्तमं भुवि दुर्लभम् ॥ १५९.५१ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेत महेश्वरम् ।

महापातकयुक्तोऽपि नरकं नैव पश्यति ॥ १५९.५२ ॥

तत्र तीर्थे तु यो दद्याद्धेनुं वैतरणीं शुभाम् ।
स मुच्यते सुखेनैव वैतरण्यां न संशयः ॥ १५९.५३ ॥
युधिष्ठिर उवाच -
यमद्वारे महाघोरे या सा वैतरणी नदी ।
किंरूपा किंप्रमाणा सा कथं सा वहति द्विज ॥ १५९.५४ ॥
कथं तस्याः प्रमुच्यन्ते केषां वासस्तु संततम् ।
केषां तु सानुकूला सा ह्येतद्विस्तरतो वद ॥ १५९.५५ ॥
श्रीमार्कण्डेय उवाच -
धर्मपुत्र महाबाहो शृणु सर्वं मयोदितम् ।
या सा वैतरणी नाम यमद्वारे महासरित् ॥ १५९.५६ ॥
अगाधा पाररहिता दृष्टमात्रा भयावहा ।
पूयशोणिततोया सा मांसकर्दमनिर्मिता ॥ १५९.५७ ॥
तत्तोयं भ्रमते तूर्णं तापीमध्ये घृतं यथा ।
कृमिभिः सङ्कुलं पूयं वज्रतुण्डैरयोमुखैः ॥ १५९.५८ ॥
शिशुमारैश्च मकरैर्वज्रकर्तरिसंयुतैः ।
अन्यैश्च जलजीवैः सा सुहिंस्रैर्मर्मभेदिभिः ॥ १५९.५९ ॥
तपन्ति द्वादशादित्याः प्रलयान्त इवोल्बणाः ।
पतन्ति तत्र वै मर्त्याः क्रन्दन्तो भृशदारुणम् ॥ १५९.६० ॥
हा भ्रातः पुत्र हा मातः प्रलपन्ति मुहुर्मुहुः ।
असिपत्रवने घोरे पतन्तं योऽभिरक्षति ॥ १५९.६१ ॥
प्रतरन्ति निमज्जन्ति ग्लानिं गच्छन्ति जन्तवः ।
चतुर्विधैः प्राणिगणैर्द्रष्टव्या सा महानदी ॥ १५९.६२ ॥
तरन्ति तस्यां सद्दानैरन्यथा तु पतन्ति ते ।
मातरं ये न मन्यन्ते ह्याचार्यं गुरुमेव च ॥ १५९.६३ ॥
अवजानन्ति मूढा ये तेषां वासस्तु संततम् ।
पतिव्रतां साधुशीलामूढां धर्मेषु निश्चलाम् ॥ १५९.६४ ॥
परित्यजन्ति ये पापाः संततं तु वसन्ति ते ।
विश्वासप्रतिपन्नानां स्वामिमित्रतपस्विनाम् ॥ १५९.६५ ॥

स्त्रीबालवृद्धदीनानां छिद्रमन्वेषयन्ति ये ।

पच्यन्ते तत्र मध्ये वै क्रन्दमानाः सुपापिनः ॥ १५९.६६ ॥

श्रान्तं बुभुक्षितं विप्रं यो विघ्नयति दुर्मतिः ।

कृमिभिर्भक्ष्यते तत्र यावत्कल्पशतत्रयम् ॥ १५९.६७ ॥

ब्राह्मणाय प्रतिश्रुत्य यो दानं न प्रयच्छति ।

आहूय नास्ति यो ब्रूते तस्य वासस्तु संततम् ॥ १५९.६८ ॥

अग्निदो गरदश्चैव राजगामी च पैशुनी ।

कथाभङ्गकरश्चैव कूटसाक्षी च मद्यपः ॥ १५९.६९ ॥

वज्रविध्वंसकश्चैव स्वयंदत्तापहारकः ।

सुक्षेत्रसेतुभेदी च परदारप्रधर्षकः ॥ १५९.७० ॥

ब्राह्मणो रसविक्रेता वृषलीपतिरेव च ।

गोकुलस्य तृषार्तस्य पालीभेदं करोति यः ॥ १५९.७१ ॥

कन्याभिदूषकश्चैव दानं दत्त्वा तु तापकः ।

शूद्रस्तु कपिलापानी ब्राह्मणो मांसभोजनी ॥ १५९.७२ ॥

एते वसन्ति सततं मा विचारं कृथा नृप ।

सानुकूला भवेद्येन तच्छृणुष्व नराधिप ॥ १५९.७३ ॥

अयने विषुवे चैव व्यतीपाते दिनक्षये ।

अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ॥ १५९.७४ ॥

कृष्णां वा पाटलां वापि कुर्याद्वैतरणीं शुभाम् ।

स्वर्णशृङ्गीं रूप्यखुरां कांस्यपात्रस्य दोहिनीम् ॥ १५९.७५ ॥

कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ।

कुर्यात्सद्रोणशिखर आसीनां ताम्रभाजने ॥ १५९.७६ ॥

यमं हैमं प्रकुर्वीत लोहदण्डसमन्वितम् ।

इक्षुदण्डमयं बद्ध्वा ह्युडुपं पट्टबन्धनैः ॥ १५९.७७ ॥

उडुपोपरि तां धेनुं सूर्यदेहसमुद्भवाम् ।

कृत्वा प्रकल्पयेद्विद्वाञ्छत्त्रोपानद्युगान्विताम् ॥ १५९.७८ ॥

अङ्गुलीयकवासांसि ब्राह्मणाय निवेदयेत् ।

इममुच्चारयेन्मन्त्रं संगृह्यास्याश्च पुच्छकम् ॥ १५९.७९ ॥

ओं यमद्वारे महाघोरे या सा वैतरणी नदी ।

तर्तुकामो ददाम्येनां तुभ्यं वैतरणि नमः ।

इत्यधिवासनमन्त्रः ॥ १५९.८० ॥

गावो मे चाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।

गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ १५९.८१ ॥

ओं विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन ।

सदक्षिणा मया दत्ता तुभ्यं वैतरणि नमः ।

इति दानमन्त्रः ॥ १५९.८२ ॥

ब्राह्मणं धर्मराजं च धेनुं वैतरणीं शिवाम् ।

सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ १५९.८३ ॥

पुच्छं संगृह्य सुरभेरग्रे कृत्वा द्विजं ततः ॥ १५९.८४ ॥

धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ।

उत्तितीर्षुरहं धेनो वैतरण्यै नमोऽस्तु ते ।

इत्यनुव्रजमन्त्रः ॥ १५९.८५ ॥

अनुव्रजेत गच्छन्तं सर्वं तस्य गृहं नयेत् ।

एवं कृते महीपाल सरित्स्यात्सुखवाहिनी ॥ १५९.८६ ॥

तारयते तया धेन्वा सा सरिज्जलवाहिनी ।

सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः ॥ १५९.८७ ॥

रोगी रोगाद्विमुक्तः स्याच्छाम्यन्ति परमापदः ।

स्वस्थे सहस्रगुणितमातुरे शतसंमितम् ॥ १५९.८८ ॥

मृतस्यैव तु यद्दानं परोक्षे तत्समं स्मृतम् ।

स्वहस्तेन ततो देयं मृते कः कस्य दास्यति ।

इति मत्वा महाराज स्वदत्तं स्यान्महाफलम् ॥ १५९.८९ ॥

इत्येवमुक्तं तव धर्मसूनो दानं मया वैतरणीसमुत्थम् ।

शृणोति भक्त्या पठतीह सम्यक्स याति विष्णोः पदमप्रमेयम् ॥ १५९.९० ॥

श्रीमार्कण्डेय उवाच -

प्राप्ते चाश्वयुजे मासि तस्मिन्कृष्णा चतुर्दशी ।

स्नात्वा कृत्वा ततः श्राद्धं सम्पूज्य च महेश्वरम् ॥ १५९.९१ ॥

पितृभ्यो दीयते दानं भक्तिश्रद्धासमन्वितैः ।

पश्चाज्जागरणं कुर्यात्सत्कथाश्रवणादिभिः ॥ १५९.९२ ॥

ततः प्रभातसमये स्नात्वा वै नर्मदाजले ।

तर्पणं विधिवत्कृत्वा पित्ःणां देवपूर्वकम् ॥ १५९.९३ ॥

सौवर्णे घृतसंयुक्तं दीपं दद्याद्द्विजातये ।

पश्चात्संभोजयेद्विप्रान् स्वयं चैव विमत्सरः ॥ १५९.९४ ॥

एवं कृते नरश्रेष्ठ न जन्तुर्नरकं व्रजेत् ।

अवश्यमेव मनुजैर्द्रष्टव्या नारकी स्थितिः ॥ १५९.९५ ॥

अनेन विधिना कृत्वा न पश्येन्नरकान्नरः ।

तत्र तीर्थे मृतानां तु नराणां विधिना नृप ॥ १५९.९६ ॥

मन्वन्तरं शिवे लोके वासो भवति दुर्लभे ।

विमानेनार्कवर्णेन किंकिणीशतशोभिना ॥ १५९.९७ ॥

स गच्छति महाभाग सेव्यमानोऽप्सरोगणैः ।

भुनक्ति विविधान्भोगानुक्तकालं न संशयः ॥ १५९.९८ ॥

पूर्णे चैव ततः काल इह मानुष्यतां गतः ।

सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १५९.९९ ॥

प्राप्य चाश्वयुजे मासि कृष्णपक्षे चतुर्दशीम् ।

अहोरात्रोषितो भूत्वा पूजयित्वा महेश्वरम् ।

महापातकयुक्तोऽपि मुच्यते नात्र संशयः ॥ १५९.१०० ॥

अष्टाविंशतिकोट्यो वै नरकाणां युधिष्ठिर ।

विमुक्ता नरकैर्दुःखैः शिवलोकं व्रजन्ति ते ॥ १५९.१०१ ॥

तत्र भुक्त्वा महाभोगान्दिव्यैश्वर्यसमन्वितान् ।

लभन्ते मानुषं जन्म दुर्लभं भुवि मानवाः ॥ १५९.१०२ ॥

॥ इति श्रीस्कन्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डेऽनरकेश्वरतीर्थमाहात्म्यवर्णनं नामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६०

https://sa.wikisource.org/s/ffa
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १६०

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्पाण्डुपुत्र मोक्षतीर्थमनुत्तमम् ।

सेवितं देवगन्धर्वैर्मुनिभिश्च तपोधनैः ॥ १६०.१ ॥

बहवस्तन्न जानन्ति विष्णुमायाविमोहिताः ।

यत्र सिद्धा महाभागा ऋषयः सतपोधनाः ॥ १६०.२ ॥

पुलस्त्यः पुलहो विद्वान्क्रतुश्चैव महामतिः ।

प्राचेतसो वसिष्ठश्च दक्षो नारद एव च ॥ १६०.३ ॥

एते चान्ये महाभागाः सप्तसाहस्रसंज्ञिताः ।

मोक्षं गताः सह सुतैस्तत्तीर्थं तेन मोक्षदम् ॥ १६०.४ ॥

तत्र प्रवाहमध्ये तु पतिता तमहा नदी ।

तत्र तत्सङ्गमं तीर्थं सर्वपापक्षयंकरम् ॥ १६०.५ ॥

ऋग्यजुःसामसंज्ञानामभ्यस्तानां तु यत्फलम् ।

सम्यग्जस्वा तु विधिना गायत्रीं तत्र तल्लभेत् ॥ १६०.६ ॥

तत्र दत्तं हुतं जप्तं तीर्थसेवार्जितं फलम् ।

सर्वमक्षयतां याति मोक्षसाधनमुत्तमम् ॥ १६०.७ ॥

तत्र तीर्थे मृतानां तु संन्यासेन द्विजन्मनाम् ।

अनिवर्तिका गतिस्तेषां मोक्षतीर्थप्रभावतः ॥ १६०.८ ॥

एष ते विधिरुद्दिष्टः संक्षेपेण मयानघ ।

व्युष्टिस्तीर्थस्य महती पुराणे याभिधीयते ॥ १६०.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मोक्षतीर्थमाहात्म्यवर्णनं नाम षष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६१

https://sa.wikisource.org/s/ffb
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १६१

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महाराज सर्पतीर्थमनुत्तमम् ।

यत्र सिद्धा महासर्पास्तपस्तप्त्वा युधिष्ठिर ॥ १६१.१ ॥

वासुकिस्तक्षको घोरः सार्प ऐरावतस्तथा ।

कालियश्च महाभागः कर्कोटकधनंजयौ ॥ १६१.२ ॥

शङ्खचूडो महातेजा धृतराष्ट्रो वृकोदरः ।

कुलिको वामनश्चैव तेषां ये पुत्रपौत्रिणः ॥ १६१.३ ॥

तत्र तीर्थे महापुण्ये तपस्तप्त्वा सुदुष्करम् ।

भुञ्जन्ति विविधान्भोगान्क्रीडन्ति च यथासुखम् ॥ १६१.४ ॥

तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।

वाजपेयफलं तस्य पुरा प्रोवाच शङ्करः ॥ १६१.५ ॥

स्नातानां सर्पतीर्थे तु नराणां भुवि भारत ।

सर्पवृश्चिकजातिभ्यो न भयं विद्यते क्वचित् ॥ १६१.६ ॥

मृतो भोगवतीं गत्वा पूज्यमानो महोरगैः ।

नागकन्यापरिवृतो महाभोगपतिर्भवेत् ॥ १६१.७ ॥

मार्गशीर्षस्य मासस्य कृष्णपक्षे च याष्टमी ।

सोपवासः शुचिर्भूत्वा लिङ्गं सम्पूरयेत्तिलैः ।

यथाविभवसारेण गन्धपुष्पैः समर्चयेत् ॥ १६१.८ ॥

एवं विधाय विधिवत्प्रणिपत्य क्षमापयेत् ।

तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नरेश्वर ॥ १६१.९ ॥

तिलास्तत्र च यत्संख्याः पत्रपुष्पफलानि च ।

तावत्स्वर्गपुरे राजन्मोदते कालमीप्सितम् ॥ १६१.१० ॥

ततः स्वर्गात्परिभ्रष्टो जायते विमले कुले ।

सुरूपः सुभगश्चैव धनकोटिपतिर्भवेत् ॥ १६१.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सर्पतीर्थमाहात्म्यवर्णनं नामैकषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६२



अध्याय १६२

श्रीमार्कण्डेय उवाच -

गोपेश्वरं ततो गच्छेत्सर्पक्षेत्रादनन्तरम् ।

यत्र स्नानेन चैकेन मुच्यन्ते पातकैर्नराः ॥ १६२.१ ॥

तत्र तीर्थे तु यः स्नात्वा कुरुते प्राणसंक्षयम् ।

स गच्छेद्यदि युक्तोऽपि पापेन शिवमन्दिरम् ॥ १६२.२ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेद्देवमीश्वरम् ।

मुच्यते सर्वपापैश्च रुद्रलोकं स गच्छति ॥ १६२.३ ॥

क्रीडित्वा च यथाकामं रुद्रलोके महातपाः ।

इह मानुष्यतां प्राप्य राजा भवति धार्मिकः ॥ १६२.४ ॥

हस्त्यश्वरथसम्पन्नो दासीदाससमन्वितः ।

पूज्यमानो नरेन्द्रैश्च जीवेद्वर्षशतं सुखी ॥ १६२.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनं नाम द्विषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६३



अध्याय १६३

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महाराज नागतीर्थमनुत्तमम् ।

आश्विनस्य सिते पक्षे पञ्चम्यां नियतः शुचिः ॥ १६३.१ ॥

रात्रौ जागरणं कृत्वा गन्धधूपनिवेदनैः ।

प्रभाते विमले स्नात्वा श्राद्धं कृत्वा यथाविधि ॥ १६३.२ ॥

मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ।

तत्र तीर्थे तु यो राजन्प्राणत्यागं करिष्यति ॥ १६३.३ ॥

अनिवर्तिका गतिस्तस्य प्रोवाचेति शिवः स्वयम् ॥ १६३.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नागतीर्थमाहात्म्यवर्णनं नाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६४

https://sa.wikisource.org/s/ff7
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १६४

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महाराज सांवौरं तीर्थमुत्तमम् ।

यत्र संनिहितो भानुः पूज्यमानः सुरासुरैः ॥ १६४.१ ॥

तत्र ये पङ्गुतां प्राप्ताः शीर्णघ्राणनखा नराः ।

दद्रुमण्डलभिन्नाङ्गा मक्षिकाकृमिसंकुलाः ॥ १६४.२ ॥

मातापितृभ्यां रहिता भ्रातृभार्याविवर्जिताः ।

अनाथा विकला व्यङ्गा मग्ना ये दुःखसागरे ॥ १६४.३ ॥

तेषां नाथो जगद्योनिर्नर्मदातटमाश्रितः ।

सांवौरनाथो लोकानामार्तिहा दुःखनाशनः ॥ १६४.४ ॥

तत्र तीर्थे तु यः स्नात्वा मासमेकं निरन्तरम् ।

पूजयेद्भास्करं देवं तस्य पुण्यफलं शृणु ॥ १६४.५ ॥

यत्फलं चोत्तरे पार्थ तथा वै पूर्वसागरे ।

दक्षिणे पश्चिमे स्नात्वा तत्र तीर्थे तु तत्फलम् ॥ १६४.६ ॥

कौमारे यौवने पापं वार्द्धके यच्च संचितम् ।

तत्प्रणश्यति सांवौरे स्नानमात्रान्न संशयः ॥ १६४.७ ॥

न व्याधिर्नैव दारिद्र्यं न चैवेष्टवियोजनम् ।

सप्तजन्मानि राजेन्द्र सांवौरपरिसेवनात् ॥ १६४.८ ॥

सप्तम्यामुपवासेन तद्दिने चाप्युपोषिते ।

स तत्फलमवाप्नोति तत्र स्नात्वा न संशयः ॥ १६४.९ ॥

रक्तचन्दनमिश्रेण यदर्घ्येण फलं स्मृतम् ।

तत्र तीर्थे नृपश्रेष्ठ स्नात्वा तत्फलमाप्नुयात् ॥ १६४.१० ॥

नर्मदासलिलं रम्यं सर्वपातकनाशनम् ।

निरीक्षितं विशेषेण सांवौरेण महात्मना ॥ १६४.११ ॥

ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।

स्नात्वा पश्यन्ति देवेशं सांवौरेश्वरमुत्तमम् ॥ १६४.१२ ॥

सूर्यलोके वसेत्तावद्यावदाभूतसम्प्लवम् ॥ १६४.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सांवौरेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६५



अध्याय १६५

श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे कूले सिद्धेश्वरमिति श्रुतम् ।

तीर्थं परं महाराज सिद्धैः कृतमिति प्रभो ॥ १६५.१ ॥

तत्र तीर्थं महापुण्यं सर्वतीर्थेषु पावनम् ।

नर्मदाया महाराज दक्षिणं कूलमाश्रितम् ॥ १६५.२ ॥

तत्र तीर्थे नरः स्नात्वा तर्पयेत्पितृदेवताः ।

श्राद्धं तत्रैव यो दद्यात्पित्ःनुद्दिश्य भारत ॥ १६५.३ ॥

तृप्यन्ति पितरस्तस्य द्वादशाब्दान्न संशयः ।

तत्र तीर्थे तु यो भक्त्या स्नात्वा पूजयते शिवम् ॥ १६५.४ ॥

रात्रौ जागरणं कृत्वा पठेत्पौराणिकीं कथाम् ।

ततः प्रभाते विमले स्नानं कुर्याद्यथाविधि ॥ १६५.५ ॥

वीक्षते गिरिजाकान्तं स गच्छेत्परमां गतिम् ।

पुरा सिद्धा महाभागाः कपिलाद्या महर्षयः ॥ १६५.६ ॥

जपन्तश्च परं ब्रह्म योगसिद्धा महाव्रताः ।

सिद्धिं ते परमां प्राप्ता नर्मदायाः प्रभावतः ॥ १६५.७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६६



अध्याय १६६

मार्कण्डेय उवाच -

ततः सिद्धेश्वरी देवी वैष्णवी पापनाशिनी ।

आनन्दं परमं प्राप्ता दृष्ट्वा स्थानं सुशोभनम् ॥ १६६.१ ॥

तत्र तीर्थे नरः स्नात्वा पूजयेत्पितृदेवताः ।

देवीं पश्यति यो भक्त्या मुच्यते सर्वपातकैः ॥ १६६.२ ॥

मृतवत्सा तु या नारी वन्ध्या स्त्रीजननी तथा ।

पुत्रं सा लभते नारी शीलवन्तं गुणान्वितम् ॥ १६६.३ ॥

तत्र तीर्थे तु यः स्नात्वा पश्येद्देवीं सुभक्तितः ।

अष्टम्यां वा चतुर्दश्यां सर्वकालेऽथवा नृप ॥ १६६.४ ॥

सङ्गमे तु ततः स्नाता नारी वा पुरुषोऽपि वा ।

पुत्रं धनं तथा देवी ददाति परितोषिता ॥ १६६.५ ॥

गोत्ररक्षां प्रकुरुते दृष्टा देवी सुपूजिता ।

प्रजां च पाति सततं पूज्यमाना न संशयः ॥ १६६.६ ॥

नवम्यां च महाराज स्नात्वा देवीमुपोषितः ।

पूजयेत्परया भक्त्या श्रद्धापूतेन चेतसा ॥ १६६.७ ॥

स गच्छेत्परमं लोकं यः सुरैरपि दुर्लभः ॥ १६६.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६७



अध्याय १६७

युधिष्ठिर उवाच -

नर्मदादक्षिणे कूले त्वच्चिह्नेनोपलक्षितम् ।

तीर्थमेतन्ममाख्याहि सम्भवं च महामुने ॥ १६७.१ ॥

मार्कण्डेय उवाच -

पुरा कृतयुगस्यादौ दक्षिणे गिरिमुत्तमम् ।

विन्ध्यं सर्वगुणोपेतं नियतो नियताशनः ॥ १६७.२ ॥

ऋषिसङ्घैः कृतातिथ्यो दण्डके न्यवसं चिरम् ।

उषित्वा सुचिरं कालं वर्षाणामयुतं सुखी ॥ १६७.३ ॥

तानृषीन् समनुज्ञाप्य शिष्यैरनुगतस्ततः ।

निवृत्तः सुमहाभाग नर्मदाकूलमागतः ॥ १६७.४ ॥

पुण्यं च रमणीयं च सर्वपापविनाशनम् ।

कृत्वाहमास्पदं तत्र द्विजसंघसमायुतः ॥ १६७.५ ॥

ब्रह्मचारिभिराकीर्णं गार्हस्थ्ये सुप्रतिष्ठितैः ।

वानप्रस्थैश्च यतिभिर्यताहारैर्यतात्मभिः ॥ १६७.६ ॥

तपस्विभिर्महाभागैः कामक्रोधविवर्जितैः ।

तत्राहं वर्षमयुतं तपः कृत्वा सुदारुणम् ॥ १६७.७ ॥

आराधयं वासुदेवं प्रभुं कर्तारमीश्वरम् ।

जपंस्तपोभिर्नियमैर्नर्मदाकूलमाश्रितः ॥ १६७.८ ॥

ततस्तौ वरदौ देवौ समायातौ युधिष्ठिर ।

प्रत्यक्षौ भास्करौ राजन्नुमाश्रीभ्यां विभूषितौ ॥ १६७.९ ॥

प्रणम्याहं ततो देवौ भक्तियुक्तो वचोऽब्रुवम् ।
भवन्तौ प्रार्थयामि स्म वरार्हौ वरदौ शिवौ ॥ १६७.१० ॥
धर्मस्थितिं महाभागौ भक्तिं वानुत्तमां युवाम् ।
अजरो व्याधिरहितः पञ्चविंशतिवर्षवत् ।
अस्मिन्स्थाने सदा स्थेयं सह देवैरसंशयम् ॥ १६७.११ ॥
एवमुक्तौ मया पार्थ तौ देवौ कृष्णशङ्करौ ।
मामूचतुः प्रहृष्टौ तौ निवासार्थं युधिष्ठिर ॥ १६७.१२ ॥
देवावूचतुः ।
अस्मिन्स्थाने स्थितौ विद्धि सह देवैः सवासवैः ।
एवमुक्त्वा ततो देवौ तत्रैवान्तरधीयताम् ॥ १६७.१३ ॥
अहं च स्थापयित्वा तौ शङ्करं कृष्णमव्ययम् ।
कृतकृत्यस्ततो जातः सम्पूज्य सुसमाहितः ॥ १६७.१४ ॥
तस्मिंस्तीर्थे नरः स्नात्वा पूजयेत्परमेश्वरम् ।
मार्कण्डेश्वरनाम्ना वै विष्णुं त्रिभुवनेश्वरम् ॥ १६७.१५ ॥
स गच्छेत्परमं स्थानं वैष्णवं शैवमेव च ।
घृतेन पयसा वाथ दध्ना च मधुना तथा ॥ १६७.१६ ॥
नार्मदेनोदकेनाथ गन्धधूपैः सुशोभनैः ।
पुष्पोपहारैश्च तथा नैवेद्यैर्नियतात्मवान् ॥ १६७.१७ ॥
एवं विष्णोः प्रकुर्वीत जागरं भक्तितत्परः ।
स्नानादीनि तथा राजन्प्रयतः शुचिमानसः ॥ १६७.१८ ॥
ज्येष्ठे मासि सिते पक्षे चतुर्दश्यामुपोषितः ।
द्वादश्यां कारयेद्देवपूजनं वैष्णवो नरः ॥ १६७.१९ ॥
एवं कृत्वा चतुर्दश्यामेकादश्यां नरोत्तम ।
वैष्णवं लोकमाप्नोति विष्णुतुल्यो भवेन्नरः ॥ १६७.२० ॥
माहेश्वरे च राजेन्द्र गणवन्मोदते पुरे ।
श्राद्धं च कुरुते तत्र पितॄनुद्दिश्य सुस्थिरः ॥ १६७.२१ ॥
तस्य ते ह्यक्षयां तृप्तिं प्राप्नुवन्ति न संशयः ।
नर्मदायां द्विजः स्नात्वा मौनी नियतमानसः ॥ १६७.२२ ॥

उपास्य सन्ध्यां तत्रस्थो जपं कृत्वा सुशोभनम् ।
तर्पयित्वा पितॄन्देवान्मनुष्यांश्च यथाविधि ॥ १६७.२३ ॥
कृष्णस्य पुरतः स्थित्वा मार्कण्डेशस्य वा पुनः ।
ऋग्यजुःसाममन्त्रांश्च जपेदत्र प्रयत्नतः ॥ १६७.२४ ॥
ऋचमेकां जपेद्यस्तु ऋग्वेदस्य फलं लभेत् ।
यजुर्वेदस्य यजुषा साम्ना सामफलं लभेत् ॥ १६७.२५ ॥
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ।
मृतप्रजा तु या नारी वन्ध्या स्त्रीजननी तथा ॥ १६७.२६ ॥
रुद्रांस्तु विधिवज्जप्त्वा ब्राह्मणो वेदतत्त्ववित् ।
लिङ्गस्य दक्षिणे पार्श्वे स्थापयेत्कलशं शिवम् ॥ १६७.२७ ॥
रुद्रैकादशभिर्मन्त्रैः स्नापयेत्कलशाम्भसा ।
पुत्रमाप्नोति राजेन्द्र दीर्घायुषमकल्मषम् ॥ १६७.२८ ॥
मार्कण्डेश्वरवृक्षान्यो दूरस्थानपि पश्यति ।
ब्रह्महत्यादिपापेभ्यो मुच्यते शङ्करोऽब्रवीत् ॥ १६७.२९ ॥
य इदं शृणुयाद्भक्त्या पठेद्वा नृपसत्तम ।
सर्वपापविशुद्धात्मा जायते नात्र संशयः ॥ १६७.३० ॥
इदं यशस्यमायुष्यं धन्यं दुःखप्रणाशनम् ।
पठतां शृण्वतां वापि सर्वपापप्रमोचनम् ॥ १६७.३१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६८



अध्याय १६८

श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे रोधस्यङ्कूरेश्वरमुत्तमम् ।

तीर्थं सर्वगुणोपेतं त्रिषु लोकेषु विश्रुतम् ॥ १६८.१ ॥

यत्र सिद्धं महारक्ष आराध्य तु महेश्वरम् ।

शङ्करं जगतः प्राणं स्मृतिमात्रावहारिणम् ॥ १६८.२ ॥

युधिष्ठिर उवाच -

किं तद्रक्षो द्विजश्रेष्ठ किंनाम कस्य वान्वये ।

एतद्विस्तरतः सर्वं कथयस्व ममानघ ॥ १६८.३ ॥

अज्ञानतिमिरान्धा ये पुमांसः पापकारिणः ।

युष्मद्विधैर्दीपभूतैः पश्यन्ति सचराचरम् ॥ १६८.४ ॥

धर्मपुत्रवचः श्रुत्वा मार्कण्डेयो मुनीश्वरः ।

स्मितं कृत्वा बभाषे तां कथां पापप्रणाशनीम् ॥ १६८.५ ॥

मार्कण्डेय उवाच -

मानसो ब्रह्मणः पुत्रः पुलस्त्यो नाम पार्थिव ।

वेदशास्त्रप्रवक्ता च साक्षाद्वेधा इवापरः ॥ १६८.६ ॥

तृणबिन्दुसुता तस्य भार्यासीत्परमेष्ठिनः ।

तस्य धर्मप्रसङ्गेन पुत्रो जातो महामनाः ॥ १६८.७ ॥

यस्माद्वेदेतिहासैश्च सषडङ्गपदक्रमाः ।

विश्रान्ता ब्रह्मणा दत्ता नाम विश्रवसेति च ॥ १६८.८ ॥

कस्मिंश्चिदथ काले च भरद्वाजो महामुनिः ।

स्वसुतां प्रददौ राजन्मुदा विश्रवसे नृप ॥ १६८.९ ॥

स तया रमते सार्धं पौलोम्या मघवा इव ।

मुदा परमया राजन्ब्राह्मणो वेदवित्तमः ॥ १६८.१० ॥

केनचित्त्वथ कालेन पुत्रः पुत्रगुणैर्युतः ।

जज्ञे विश्रवसो राजन्नाम्ना वैश्रवणः श्रुतः ॥ १६८.११ ॥

सोऽपि मौनव्रतं कृत्वा बालभावाद्युधिष्ठिर ।

सर्वभूताभयं दत्त्वा चचार परमं व्रतम् ॥ १६८.१२ ॥

तस्य तुष्टो महादेवो ब्रह्मा ब्रह्मर्षिभिः सह ।

सखित्वं चेश्वरो दत्त्वा धनदत्वं जगाम ह ॥ १६८.१३ ॥

यमेन्द्रवरुणानां च चतुर्थस्त्वं भविष्यसि ।

ब्रह्माप्युक्त्वा जगामाशु लोकपालत्वमीप्सितम् ॥ १६८.१४ ॥

ततस्त्वनन्तरे काले कैकसी नाम राक्षसी ।

पातालं भूतलं त्यक्त्वा विश्रवं चकमे पतिम् ॥ १६८.१५ ॥

पुत्रोऽथ रावणो जातस्तस्या भरतसत्तम ।

कुम्भकर्णो महारक्षो धर्मात्मा च विभीषणः ॥ १६८.१६ ॥

कुम्भश्चैव विकुम्भश्च कुम्भकर्णसुतावुभौ ।

महाबलौ महावीर्यौ महान्तौ पुरुषोत्तम ॥ १६८.१७ ॥

अङ्कूरो राक्षसश्रेष्ठः कुम्भस्य तनयो महान् ।

विभीषणं च गुणवद्दृष्ट्वैवं राक्षसोत्तमः ॥ १६८.१८ ॥

ततः स यौवनं प्राप्य ज्ञात्वा रक्षः पितामहम् ।

परं निर्वेदमापन्नश्चचार सुमहत्तपः ॥ १६८.१९ ॥

दक्षिणं पश्चिमं गत्वा सागरं पूर्वमुत्तरम् ।

नर्मदायां प्रसङ्गेन ह्यङ्कूरो राक्षसेश्वरः ॥ १६८.२० ॥

तपश्चचार सुमहद्दिव्यं वर्षशतं किल ।

ततस्तुष्टो महादेवः साक्षात्परपुरंजयः ॥ १६८.२१ ॥

वरेण छन्दयामास राक्षसं वृषकेतनः ।

वरं वृणीष्व भद्रं ते तव दास्यामि सुव्रत ॥ १६८.२२ ॥

प्रोवाच राक्षसो वाक्यं देवदेवं महेश्वरम् ।

वरदं सोऽग्रतो दृष्ट्वा प्रणम्य च पुनःपुनः ॥ १६८.२३ ॥

यदि तुष्टो महादेव वरदोऽसि सुरेश्वर ।

दुर्लभं सर्वभूतानाममरत्वं प्रयच्छ मे ॥ १६८.२४ ॥

मम नाम्ना स्थितोऽनेन वरेण त्रिपुरान्तक ।

सदा संनिहितोऽप्यत्र तीर्थे भवितुमर्हसि ॥ १६८.२५ ॥

ईश्वर उवाच -

यावद्विभीषणमतं यावद्धर्मनिषेवणम् ।

करिष्यसि दृढात्मा त्वं तावदेतद्भविष्यति ॥ १६८.२६ ॥

एवमुक्त्वा ययौ देवः सर्वदैवतपूजितः ।

विमानेनार्कवर्णेन कैलासं धरणीधरम् ॥ १६८.२७ ॥

गते चादर्शनं देवे स्नात्वाचम्य विधानतः ।

स्थापयामास राजेन्द्र ह्यङ्कूरेश्वरमुत्तमम् ॥ १६८.२८ ॥

गन्धपुष्पैस्तथा धूपैर्वस्त्रालङ्कारभूषणैः ।

पताकैश्चामरैश्छत्रैर्जयशब्दादिमंगलैः ॥ १६८.२९ ॥

पूजयित्वा सुरेशानं स्तोत्रैर्हृद्यैः सुपुष्कलैः ।

जगाम भवनं रक्षो यत्र राजा विभीषणः ॥ १६८.३० ॥

पूजितः स यथान्यायं दानसन्मानगौरवैः ।

सौदर्ये स्थापितो भावे सोऽवात्सीत्परयामुदा ॥ १६८.३१ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।

अङ्कूरेश्वरनामानं सोऽश्वमेधफलं लभेत् ॥ १६८.३२ ॥

माण्डव्यखातमारभ्य सङ्गमं वापि यच्छुभम् ।

रेवाया आमलक्याश्च देवक्षेत्रं महेश्वरम् ॥ १६८.३३ ॥

माण्डव्यखातात्पश्चिमतस्तीर्थं तदङ्कूरेश्वरम् ।

तत्र तीर्थे नरः स्नात्वा शुचिः प्रयतमानसः ॥ १६८.३४ ॥

सन्ध्यामाचम्य यत्नेन जपं कृत्वाथ भारत ।

तर्पयित्वा पितॄन्देवान्मनुष्यान् भरतर्षभ ॥ १६८.३५ ॥

सचैलः क्लिन्नवसनो मौनमास्थाय संयतः ।

अष्टम्यां वा चतुर्दश्यामुपोष्य विधिवन्नरः ॥ १६८.३६ ॥

पूजां यः कुरुते राजंस्तस्य पुण्यफलं शृणु ।

साग्रं तु योजनशतं तीर्थान्यायतनानि च ॥ १६८.३७ ॥

भवन्ति तानि दृष्टानि ततः पापैः प्रमुच्यते ।

तत्र तीर्थे तु यद्दानं देवमुद्दिश्य दीयते ॥ १६८.३८ ॥

स्नात्वा तु विधिवत्पात्रे तदक्षयमुदाहृतम् ।

होमाद्दशगुणं प्रोक्तं फलं जाप्ये ततोऽधिकम् ॥ १६८.३९ ॥

त्रिगुणं चोपवासेन स्नानेन च चतुर्गुणम् ।

संन्यासं कुरुते यस्तु प्राणत्यागं करोति वा ॥ १६८.४० ॥

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ।

कृमिकीटपतङ्गानां तत्र तीर्थे युधिष्ठिर ।

अङ्कूरेश्वरनामाख्ये मृतानां सुगतिर्भवेत् ॥ १६८.४१ ॥

एतत्ते कथितं राजन्नङ्कूरेश्वरसम्भवम् ।

तीर्थं सर्वगुणोपेतं परमं पापनाशनम् ॥ १६८.४२ ॥

येऽपि शृण्वन्ति भक्त्येदं कीर्त्यमानं महाफलम् ।

लभन्ते नात्र सन्देहः शिवस्य भुवनं हि ते ॥ १६८.४३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अङ्कूरेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १६९



अध्याय १६९

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्परं तीर्थं पुण्यं पापप्रणाशनम् ।

माण्डव्यो यत्र संसिद्ध ऋषिर्नारायणस्तथा ॥ १६९.१ ॥

नारायणेन शुश्रूषा शूलस्थेन कृता पुरा ।

तत्र स्नात्वा महाराज मुच्यते पापकञ्चुकात् ॥ १६९.२ ॥

युधिष्ठिर उवाच -

आश्चर्यमेतल्लोकेषु यत्त्वया कथितं मुने ।

न दृष्टं न श्रुतं तात शूलस्थेन तपः कृतम् ॥ १६९.३ ॥

एतत्सर्वं कथय मे ऋषिभिः सहितस्य वै ।

अस्य तीर्थस्य माहात्म्यं माण्डव्यस्य कुतूहलात् ॥ १६९.४ ॥

श्रीमार्कण्डेय उवाच -

शृणु राजन्यथावृत्तपुरा त्रेतायुगे क्षितौ ।

लोकपालोपमो राजा देवपन्नो महामतिः ॥ १६९.५ ॥

धर्मज्ञश्च कृतज्ञश्च यज्वा दानरतः सदा ।

प्रजा ररक्ष यत्नेन पिता पुत्रानिवौरसान् ॥ १६९.६ ॥

दात्यायनी प्रिया भार्या तस्य राज्ञो वशानुगा ।

हारनूपुरघोषेण झङ्काररवनादिता ॥ १६९.७ ॥

परस्परं तयोः प्रीतिर्वर्धतेऽनुदिनं नृप ।

वंशस्तम्बे स्थितो राजा संशास्ति पृथिवीमिमाम् ॥ १६९.८ ॥

हस्त्यश्वरथसम्पूर्णां धनवाहनसंयुताम् ।

अलंकृतो गुणैः सर्वैरनपत्यो महीपतिः ॥ १६९.९ ॥

दुःखेन महताविष्टः संतप्तः सन्ततिं विना ।

स्नानहोमरतो नित्यं द्वादशाब्दानि भारत ॥ १६९.१० ॥

व्रतोपवासनियमैः पत्नीभिः सह तस्थिवान् ।

आराधयद्भगवतीं चामुण्डां मुण्डमर्दिनीम् ॥ १६९.११ ॥

स्तोत्रैरनेकैर्भक्त्या च पूजाविधिसमाधिना ।

जय वाराहि चामुण्डे जय देवि त्रिलोचने ॥ १६९.१२ ॥

ब्राह्मि रौद्रि च कौमारि कात्यायनि नमोऽस्तु ते ।

प्रचण्डे भैरवे रौद्रि योगिन्याकाशगामिनि ॥ १६९.१३ ॥

नास्ति किंचित्त्वया हीनं त्रैलोक्ये सचराचरे ।

राज्ञा स्तुता च संतुष्टा देवी वचनमब्रवीत् ॥ १६९.१४ ॥

वरयस्व यथाकामं यस्ते मनसि वर्तते ।

आराधिता त्वया भक्त्या तुष्टा दास्यामि ते वरम् ॥ १६९.१५ ॥

देवपन्न उवाच -

यदि तुष्टासि देवेशि वरार्हो यदि वाप्यहम् ।

पुत्रसन्तानरहितं संतप्तं मां समुद्धर ॥ १६९.१६ ॥

सन्तानं नय मे वृद्धिं गोत्ररक्षां कुरुष्व मे ।

अपुत्रिणां गृहाणीह श्मशानसदृशानि हि ॥ १६९.१७ ॥

पितरस्तस्य नाश्नन्ति देवता ऋषिभिः सह ।

क्रियमाणेऽप्यहरहः श्राद्धे मत्पितरः सदा ॥ १६९.१८ ॥

दर्शयन्ति सदात्मानं स्वप्ने क्षुत्पीडितं मम ।

इति राज्ञो वचः श्रुत्वा देवी ध्यानमुपागता ॥ १६९.१९ ॥

दिव्येन चक्षुषा दृष्टं त्रैलोक्यं सचराचरम् ।

प्रसन्नवदना देवी राजानमिदमब्रवीत् ॥ १६९.२० ॥

सन्तानं नास्ति ते राजंस्त्रैलोक्ये सचराचरे ।

यजस्व यज्ञपुरुषमपत्यं नास्ति तेऽन्यथा ॥ १६९.२१ ॥

मया दृष्टं महीपाल त्रैलोक्यं दिव्यचक्षुषा ।
एवमुक्त्वा गता देवी राजा स्वगृहमागमत् ॥ १६९.२२ ॥
इयाज यज्ञपुरुषं संजाता कन्यका ततः ।
तेजस्विनी रूपवती सर्वलोकमनोहरा ॥ १६९.२३ ॥
देवगन्धर्वलोकेऽपि तादृशी नास्ति कामिनी ।
तस्या नाम कृतं पित्रा हर्षात्कामप्रमोदिनी ॥ १६९.२४ ॥
ततः कालेन ववृधे रूपेणास्तम्भयज्जगत् ।
हंसलीलागतिः सुभ्रूः स्तनभारावनामिता ॥ १६९.२५ ॥
रक्तमाल्याम्बरधरा कुण्डलाभरणोज्ज्वला ।
दिव्यानुलेपनवती सखीभिः सा सुरक्षिता ॥ १६९.२६ ॥
कुचमध्यगतो हारो विद्युन्मालेव राजते ।
भ्रमराञ्चितकेशी सा बिम्बोष्ठी चारुहासिनी ॥ १६९.२७ ॥
कर्णान्तप्राप्तनेत्राभ्यां पिबन्तीवाथ कामिनः ।
चन्द्रताम्बूलसौरभ्यैराकर्षन्तीव मन्मथम् ॥ १६९.२८ ॥
कम्बुग्रीवा चारुमध्या ताम्रपादाङ्गुलीनखा ।
निम्ननाभिः सुजघना रम्भोरू सुदती शुभा ॥ १६९.२९ ॥
मातापितृसुहृद्वर्गे क्रीडानन्दविवर्धिनी ।
एकस्मिन्दिवसे बाला सखीवृन्दसमन्विता ॥ १६९.३० ॥
चन्दनागरुतांबूलधूपसौमनसाञ्चिता ।
गृहीत्वा पुष्पधूपादि गता देवीप्रपूजने ॥ १६९.३१ ॥
तडागतट उत्सृज्य भूषणान्यङ्गवेष्टकान् ।
चक्रुः सरसिताः क्रीडां जलमध्यगतास्तदा ॥ १६९.३२ ॥
क्रीडन्तीं तामवेक्ष्याथ ससखीं विमले जले ।
राक्षसः शम्बरो नाम श्येनरूपेण चागमत् ॥ १६९.३३ ॥
गृहीता जलमध्यस्था तेन सा काममोदिनी ।
खमुत्पपात दुष्टात्मा गृहीत्वाभरणान्यपि ॥ १६९.३४ ॥
वायुमार्गं गतः सोऽथ कामिन्या सह भारत ।
अपतन्कुण्डलादीनि यत्र तोये महामुनिः ॥ १६९.३५ ॥

माण्डव्यो नर्मदातीरे काष्ठवत्संजितेन्द्रियः ।
लीनो माहेश्वरे स्थाने नारायणपदे परे ॥ १६९.३६ ॥
तस्य चानुचरो भ्राता भ्रातुः शुश्रूषणे रतः ।
तपोजपकृशीभूतो दध्यौ देवं जनार्दनम् ॥ १६९.३७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे काममोदिनीहरणवर्णनं नामैकोनसप्तत्यधिशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७०

https://sa.wikisource.org/s/ffj



अध्याय १७०

श्रीमार्कण्डेय उवाच -

कामप्रमोदिनीसख्यो नीयमानां च तेन तु ।

दृष्ट्वा ताश्चुक्रुशुः सर्वा निःसृत्य जलमध्यतः ॥ १७०.१ ॥

गता राजगृहे सर्वाः कथयन्ति सुदुःखिताः ।

कामप्रमोदिनी राजन्हृता श्येनेन पक्षिणा ॥ १७०.२ ॥

क्रीडन्ती च जलस्थाने तडागे देवसन्निधौ ।

अन्वेष्या च त्वया राजंस्तस्य मार्गं विजानता ॥ १७०.३ ॥

तासां तद्वचनं श्रुत्वा देवपन्नः सुदुःखितः ।

हाहेत्युक्त्वा समुत्थाय रुदमानो वरासनात् ॥ १७०.४ ॥

मन्त्रिभिः सहितस्तस्मिंस्तडागे जलसन्निधौ ।

न चिह्नं न च पन्थानं दृष्ट्वा दुःखान्मुमोह च ॥ १७०.५ ॥

तस्य राज्ञस्तु दुःखेन दुःखितो नागरो जनः ।

क्षणेनाश्वासितो राजा मन्त्रिभिः सपुरोहितैः ॥ १७०.६ ॥

किं कुर्म इत्युवाचेदमस्मिन्काले विधीयताम् ।

सर्वैस्तत्संविदं कृत्वा वाहिनीं चतुरङ्गिणीम् ॥ १७०.७ ॥

प्रेषयामि दिशः सर्वा हस्त्यश्वरथसंकुला ।

वादित्राणि च वाद्यन्ते व्याकुलीभूतसंकुले ॥ १७०.८ ॥

नाराचैस्तोमरैर्भल्लैः खड्गैः परश्वधादिभिः ।

राजा संनाहबद्धोऽभूद्वनं ग्रसते किल ॥ १७०.९ ॥

न देवो न च गन्धर्वो न दैत्यो न च राक्षसः ।

किं करिष्यति राजाद्य न जाने रोषनिष्कृतिम् ॥ १७०.१० ॥

नागरोऽपि जनस्तत्र दृष्ट्वा चकितमानसः ।

चतुर्दशसहस्राणि दन्तिनां सृणिधारिणाम् ॥ १७०.११ ॥

अश्वारोहसहस्राणि ह्यशीतिः शस्त्रपाणिनाम् ।

रथानां त्रिसहस्राणि विंशतिर्भरतर्षभ ॥ १७०.१२ ॥

सङ्ग्रामभेरीनिनदैः खुररेणुर्नभोगता ।

एतस्मिन्नन्तरे तात रक्षको नगरस्य हि ॥ १७०.१३ ॥

गृहीत्वाभरणं तस्यास्त्वङ्गप्रत्यङ्गिकं तथा ।

कुण्डलाङ्गदकेयूरहारनूपुरझल्लरीः ॥ १७०.१४ ॥

निवेद्याकथयद्राज्ञे मया दृष्टं त्ववेक्षणात् ।

तापसानामाश्रमे तु माण्डव्यो यत्र तिष्ठति ॥ १७०.१५ ॥

तापसैर्वेष्टितो यत्र ददृशे तत्र सन्निधौ ।

दण्डवासिवचः श्रुत्वा प्रत्यक्षाङ्गविभूषणम् ॥ १७०.१६ ॥

स क्रोधरक्तनयनो मन्त्रिणो वीक्ष्य नैगमान् ।

ईदृग्भूतसमाचारो ब्राह्मणो नगरे मम ॥ १७०.१७ ॥

चौरचर्यां व्रतच्छन्नः परद्रव्यापहरकः ।

तेन कन्या हृता मेऽद्य तपस्विपापकर्मिणा ॥ १७०.१८ ॥

शाकुन्तं रूपमास्थाय जलस्थो गगनं ययौ ।

पाखण्डिनो विकर्मस्थान् बिडालव्रतिकाञ्छठान् ॥ १७०.१९ ॥

चाटुतस्करदुर्वृत्तान् हन्यान्नस्त्यस्य पातकम् ।

न द्रष्टव्यो मया पापः स्तेयी कन्यापहारकः ॥ १७०.२० ॥

शूलमारोप्यतां क्षिप्रं न विचारस्तु तस्य वै ।

स च वध्यो मया दुष्टो रक्षोरूपी तपोधनः ॥ १७०.२१ ॥

एवं ब्रुवंश्चलन्क्रोधादादिश्य दण्डवासिनम् ।

कार्याकार्यं न विज्ञाय शूलमारोपयद्द्विजम् ॥ १७०.२२ ॥

पौरा जानपदाः सर्वे अश्रुपूर्णमुखास्तदा ।

हाहेत्युक्त्वा रुदन्त्यन्ये वदन्ति च पृथक्पृथक् ॥ १७०.२३ ॥

कुत्सितं च कृतं कर्म राज्ञा चण्डालचारिणा ।

ब्राह्मणो नैव वध्यो हि विशेषेण तपोवृतः ॥ १७०.२४ ॥

यदि रोषसमाचारो निर्वास्यो नगराद्बहिः ।

न जातु ब्राह्मणं हन्यात्सर्वपापेऽप्यवस्थितम् ॥ १७०.२५ ॥

राष्ट्रादेनं बहिष्कुर्यात्समग्रधनमक्षतम् ।

नाश्नाति च गृहे राजन्नाग्निर्नगरवासिनाम् ।

सर्वेऽप्युद्विग्नमनसो गृहव्याप्तिविवर्जिताः ॥ १७०.२६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे माण्डव्यशूलारोपणवर्णनं नाम सप्तत्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७१





अध्याय १७१

श्रीमार्कण्डेय उवाच -

कथितं ब्राह्मणं द्रष्टुं शूले क्षिप्तं तपोधनैः ।

नारायणसमीपे तु गताः सर्वे महर्षयः ॥ १७१.१ ॥

नारदो देवलो रैभ्यो यमः शातातपोऽङ्गिराः ।

वसिष्ठो जमदग्निश्च याज्ञवल्क्यो बृहस्पतिः ॥ १७१.२ ॥

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽरुणिर्मुनिः ।

वालखिल्यादयोऽन्ये च सर्वेऽप्यृषिगणान्वयाः ॥ १७१.३ ॥

ददृशुः शूलमारूढं माण्डव्यमृषिपुंगवाः ।

प्रोचुर्नारायणं विप्रं किं कुर्मस्तव चेप्सितम् ॥ १७१.४ ॥

सर्वे ते तत्र सांनिध्यान्माण्डव्यस्य महात्मनः ।

संभ्रान्ता आगता ऊचुः किं मृतः किं नु जीवति ॥ १७१.५ ॥

अवस्थां तस्य ते दृष्ट्वा विषादमगमन्परम् ।

असहित्वा तु तद्दुःखं सर्वे ते मनसा द्विजाः ॥ १७१.६ ॥

पृच्छ्यतां यदि मन्येत राजानं भस्मसात्कुरु ।

तेषां तद्वचनं श्रुत्वा वाक्यं नारायणोऽब्रवीत् ॥ १७१.७ ॥

मयि जीवति मद्भ्राता ह्यवस्थामीदृशीं गतः ।

धिग्जीवितं च मे किंतु तपसो विद्यते फलम् ॥ १७१.८ ॥

दृष्ट्वा शूलस्थितं ज्येष्ठं मन्मनो नु विदीर्यते ।

परं किं तु करिष्यामि येन राष्ट्रं सराजकम् ॥ १७१.९ ॥

भस्मसाच्च करोम्यद्य भवद्भिः क्षम्यतामिह ।

एवमुक्त्वा गृहीत्वासौ करस्थमभिमन्त्रयेत् ॥ १७१.१० ॥

क्रोधेन पश्यते यावत्तावद्धुंकारकोऽभवत् ।

तेन हुङ्कारशब्देन ऋषयो विस्मितास्तदा ॥ १७१.११ ॥

माण्डव्यस्य समीपे तु ह्यपृच्छंस्ते द्विजोत्तमाः ।

निवारयसि किं विप्र शापं नृपजिघांसनम् ॥ १७१.१२ ॥

अपापस्य तु येनेह कृतमस्य जिघांसनम् ।

ऋषीणां वचनं श्रुत्वा कृच्छ्रान्माण्डव्यकोऽब्रवीत् ॥ १७१.१३ ॥

अभिवन्दामि वो मूर्ध्ना स्वागतं ऋषयः सदा ।

अर्घ्यसन्मानपूजार्हाः सर्वेऽत्रोपविशन्तु ते ॥ १७१.१४ ॥

निविष्टैकाग्रमनसा सर्वान्माण्डव्यकोऽब्रवीत् ॥ १७१.१५ ॥

प्राप्तं दुःखं मया घोरं पूर्वजन्मार्जितं फलम् ।

मा विषादं कुरुध्वं भोः कृतं पापं तु भुज्यते ॥ १७१.१६ ॥

ऋषय ऊचुः ।

केन कर्मविपाकेन इह जात्यन्तरं व्रजेत् ।

दानधर्मफलेनैव केन स्वर्गं च गच्छति ॥ १७१.१७ ॥

माण्डव्य उवाच -

अदत्तदाना जायन्ते परभाग्योपजीविनः ।

न स्नानं न जपो होमो नातिथ्यं न सुरार्चनम् ॥ १७१.१८ ॥

न पर्वणि पितृश्राद्धं न दानं द्विजसत्तमाः ।

व्रजन्ति नरके घोरे यान्ति ते त्वन्त्यजां गतिम् ॥ १७१.१९ ॥

पुनर्दरिद्राः पुनरेव पापाः पापप्रभावान्नरके वसन्ति ।

तेनैव संसरिणि मर्त्यलोके जीवादिभूते कृमयः पतङ्गाः ॥ १७१.२० ॥

ये स्नानशीला द्विजदेवभक्ता जितेन्द्रिया जीवदयानुशीलाः ।

ते देवलोकेषु वसन्ति हृष्टा ये धर्मशीला जितमानरोषाः ॥ १७१.२१ ॥

विद्याविनीता न परोपतापिनः स्वदारतुष्टाः परदारवर्जिताः ।

तेषां न लोके भयमस्ति किंचित्स्वभावशुद्धा गतकल्मषा हि ते ॥ १७१.२२ ॥

ऋषय ऊचुः ।

पूर्वजन्मनि विप्रेन्द्र किं त्वया दुष्कृतं कृतम् ।

येन कष्टमिदं प्राप्तं सन्धानं शूलगर्हितम् ॥ १७१.२३ ॥

शूलस्थं त्वां समालक्ष्य ह्यागताः सर्व एव हि ।
जीवन्तं त्वां प्रपश्याम त्वन्तरन्नवतारयन् ।
रुजासंतापजं दुःखं सोढ्वापि त्वमवेदनः ॥ १७१.२४ ॥

माण्डव्य उवाच -
स्वयमेव कृतं कर्म स्वयमेवोपभुज्यते ।
सुकृतं दुष्कृतं पूर्वे नान्ये भुञ्जन्ति कर्हिचित् ॥ १७१.२५ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमुपगच्छति ॥ १७१.२६ ॥
न माता न पिता भ्राता न भार्या न सुताः सुहृत् ।
न कस्य कर्मणां लेपः स्वयमेवोपभुज्यते ॥ १७१.२७ ॥
श्रूयतां मम वाक्यं च भवद्भिः पृच्छितो ह्यहम् ।
पूर्वे वयसि भो विप्रा मलस्नानकृतक्षणः ॥ १७१.२८ ॥
अज्ञानाद्बालभावेन यूका कण्टेऽधिरोपिता ।
तैलाभ्यक्तशिरोगात्रे मया यूका घृता न हि ॥ १७१.२९ ॥
कङ्कतीं रोप्य केशेषु सासा कण्टेऽधिरोपिता ।
तेषु पापं कृतं सद्यः फलमेतन्ममाभवत् ॥ १७१.३० ॥
किंचित्कालं क्षपित्वाहं प्राप्स्ये मोक्षं निरामयम् ।
भवन्तस्त्विह सन्तापं मां कुरुध्वं महर्षयः ॥ १७१.३१ ॥
इमामवस्थां भुक्त्वाहं कंचिच्छपे न चोच्चरे ।
अहनि कतिचिच्छूले क्षपयिष्यामि किल्बिषम् ॥ १७१.३२ ॥
प्राक्तनं कर्म भुञ्जामि यन्मया संचितं द्विजाः ।
क्षन्तव्यमस्य राज्ञोऽथ कोपश्चैव विसर्ज्यताम् ॥ १७१.३३ ॥
श्रुत्वा तु तस्य तद्वाक्यं माण्डव्यस्य महर्षयः ।
प्रहर्षमतुलं लब्ध्वा साधु साध्वित्यपूजयन् ॥ १७१.३४ ॥

नारायण उवाच -
इदं जलं मन्त्रपूतं कस्मिन्स्थाने क्षिपाम्यहम् ।

येन राजा भवेद्भस्म सराष्ट्रः सपुरोहितः ॥ १७१.३५ ॥

माण्डव्य उवाच -

इदं जलं च रक्षस्व कालकूटविषोपमम् ।

समुद्रे क्षिपयिष्यामि देवकार्यं समुत्थितम् ॥ १७१.३६ ॥

अथ ते मुनयः सर्वे माण्डव्यं प्रणिपत्य च ।

आमन्त्रयित्वा हर्षाच्च कश्यपाद्या गृहान्ययुः ॥ १७१.३७ ॥

गच्छमानास्तु ते चोक्ताः पञ्चमेऽहनि तापसाः ।

आगन्तव्यं भवद्भिश्च मत्सकाशं प्रतिज्ञया ॥ १७१.३८ ॥

तथेति ते प्रतिज्ञाय नारदाद्या अदर्शनम् ।

गतेषु विप्रमुख्येषु शाण्डिली च तपोधना ॥ १७१.३९ ॥

द्वितीयेऽह्नि समायाता न तु बुद्ध्वाथ तं ऋषिम् ।

भर्तारं शिरसा धार्य रात्रौ पर्यटते स्म सा ॥ १७१.४० ॥

न दृष्टः शूलके विप्रो भराक्रान्त्या युधिष्ठिर ।

स्खलिता तस्य जानुभ्यां शूलस्थस्य पतिव्रता ॥ १७१.४१ ॥

सर्वाङ्गेषु व्यथा जाता तस्याः प्रस्खलनान्मुनेः ।

ईदृशीं वर्तमानां च ह्यवस्थां पूर्वदैविकीम् ॥ १७१.४२ ॥

पुनः पापफलं किंचिद्वा कष्टं मम वर्तते ।

व्यथितोऽहं त्वया पापे किमर्थं सूनकर्मणि ॥ १७१.४३ ॥

स्वैरिणीं त्वां प्रपश्यामि राक्षसी तस्करी नु किम् ।

एवमुक्त्वा क्षणं मोहात्क्रन्दमानो मुहुर्मुहुः ॥ १७१.४४ ॥

तपस्विनोऽथ ऋषयः सर्वे संत्रस्तमानसाः ।

पश्यमाना मुनेः कष्टं पृच्छन्ते ते युधिष्ठिर ॥ १७१.४५ ॥

पर्यटसे किमर्थं त्वं निशीये वहनं नु किम् ।

क्षिप्तं तु झोलिकाभारं किंवागमनकारणम् ।

व्यथामुत्पाद्य ऋषये दुःखाद्दुःखविलासिनि ॥ १७१.४६ ॥

शाण्डिल्युवाच -

नासुरीं न च गन्धर्वीं न पिशाचीं न राक्षसीम् ।

पतिव्रतां तु मां सर्वे जानन्तु तपसि स्थिताम् ॥ १७१.४७ ॥

न मे कामो न मे क्रोधो न वैरं न च मत्सरः ।

अज्ञानाद्दृष्टिमान्द्याच्च स्खलनं क्षन्तुमर्हथ ॥ १७१.४८ ॥

वहनं भर्तृसौख्याय दिवा सम्पीड्यते रुजा ।

अयं भर्ता विजानीथ झोलिकासंस्थितः सदा ॥ १७१.४९ ॥

भरणं पानं वस्त्रं च ददाम्येतस्य रोगिणः ।

ऋषिः शौनकमुख्योऽसौ शाण्डिलीं मां विजानत ॥ १७१.५० ॥

स्वभर्तृधर्मिणीं कोपं मा कुरुष्वातिथिं कुरु ।

सतां समीपं सम्प्राप्तां सर्वं मे क्षन्तुमर्हथ ॥ १७१.५१ ॥

ऋषय ऊचुः ।

परव्यथां न जानीषे व्यचरन्ती यदृच्छया ।

प्रभातेऽभ्युदिते सूर्ये तव भर्ता मरिष्यति ॥ १७१.५२ ॥

आत्मदुःखात्परं दुःखं न जानासि कुलाधमे ।

तेन वाक्येन घोरेण शाण्डिली विमनाभवत् ॥ १७१.५३ ॥

परं विषादमापन्ना क्षणं ध्यात्वाब्रवीद्वचः ।

कोपात्संरक्तनयना निरीक्षन्ती मुनींस्तदा ॥ १७१.५४ ॥

सतां गेहे किल प्राप्ता भवतां चापकारिणी ।

सामेनातिथिपूजायां शिष्टे च गृहमागते ॥ १७१.५५ ॥

भवद्भिरीदृगातिथ्यं कृतं चैव ममैव तु ।

स्वर्गापवर्गधर्मश्च भवद्भिर्न निरीक्षितम् ॥ १७१.५६ ॥

प्राजापत्यामिमां दृष्ट्वा मां यथा प्राकृताः स्त्रियः ।

भवन्तः स्त्रीबलं मेऽद्य पश्यन्तु दिवि देवताः ॥ १७१.५७ ॥

मरिष्यति न मे भर्ता ह्यादित्यो नोदयिष्यति ।

अन्धकारं जगत्सर्वं क्षीयते नाद्य शर्वरी ॥ १७१.५८ ॥

एवमुक्ते तया वाक्ये स्तम्भितेऽर्के तमोमयम् ।

न च प्रजायते सर्वं निर्वषट्कारसत्क्रियम् ॥ १७१.५९ ॥

स्वाहाकारः स्वधाकारः पञ्चयज्ञविधिर्नहि ।

स्नानं दानं जपो नास्ति सन्ध्यालोपव्यतिक्रमः ।
षण्मासं च तदा पार्थ लुप्तपिण्डोदकक्रियम् ॥ १७१.६० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शाण्डिलीऋषिसंवादवर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७२

https://sa.wikisource.org/s/ff1



अध्याय १७२

श्रीमार्कण्डेय उवाच -

अथ ते ऋषयः सर्वे देवाश्चेन्द्रपुरोगमाः ।

माण्डव्यस्याश्रमे पुण्ये समीयुर्नर्मदातटे ॥ १७२.१ ॥

शङ्खदुन्दुभिनादेन दीपिकाज्वलनेन च ।

अप्सरोगीतनादेन नृत्यन्त्यो वारयोषितः ॥ १७२.२ ॥

कथानकैः स्तुवत्यन्ये तस्य शूलाग्रधारिणः ।

अष्टाशीतिसहस्राणि स्नातकानां तपस्विनाम् ॥ १७२.३ ॥

समाजे त्रिदशैः सार्द्धं तत्र ते च दिदृक्षया ।

ब्रह्मविष्णुमहेशानास्तत्र हर्षात्समागताः ॥ १७२.४ ॥

मातरो मल्लिकाद्याश्च क्षेत्रपाला विनायकाः ।

दिक्पाला लोकपालाश्च गङ्गाद्याश्च सरिद्वराः ॥ १७२.५ ॥

ऋषिदेवसमाजे तु नित्यं हर्षप्रमोदने ।

तत्र राजा समायातः पौरजानपदैः सह ॥ १७२.६ ॥

दृष्ट्वा कौतूहलं तत्र व्याकुलीकृतमानसम् ।

वित्रस्तमनसो भूत्वा भयात्सर्वे समास्थिताः ॥ १७२.७ ॥

तस्मिन्समागमे दिव्ये ब्रह्मविष्णवीशमब्रुवन् ।

भो माण्डव्य महासत्त्व वरदास्तेऽमरैः सह ॥ १७२.८ ॥

अनेककष्टतपसा तव सिद्धिर्भविष्यति ।

प्रार्थयस्व यथाकामं यस्ते मनसि रोचते ॥ १७२.९ ॥

अनादित्यमयं लोकं निर्वषट्कारमाकुलम् ।

नष्टधर्मं विजानीहि प्रकृतिस्थं कुरुष्व च ।

अनुग्रहं तु शाण्डिल्याः प्रार्थयाम द्विजोत्तम ॥ १७२.१० ॥

एष ते कष्टदो राजा समायातस्तवाग्रतः ।
संभूषयस्व विप्रर्षे जनं देवासुरं गणम् ॥ १७२.११ ॥

माण्डव्य उवाच -
यदि प्रसन्ना मे देवाः समायाताः सुरैः सह ।
त्रिकालमत्र तीर्थे च स्थातव्यमृषिभिः सह ॥ १७२.१२ ॥
भवतां तु प्रसादेन रुजा मे शाम्यतां सदा ।
एवमस्त्विवति देवेशा यावज्जल्पन्ति पाण्डव ॥ १७२.१३ ॥
तावद्रक्षो गृहीत्वाऽग्रे कन्यां कामप्रमोदिनीम् ।
उवाच भगवञ्छापं पुरा दत्त्वोर्वशी मम ॥ १७२.१४ ॥
यदा कन्यां हरे रक्षःशापान्तस्ते भविष्यति ।
तेन मे गर्हितं कर्म शापेनाकृतबुद्धिना ॥ १७२.१५ ॥
क्षन्तव्यमिति चोक्त्वा च गतश्चादर्शनं पुनः ।
गते चैव तु सा कन्या दृष्ट्वा पद्मदलेक्षणा ॥ १७२.१६ ॥
मन्त्रयित्वा सुरैः सर्वैर्दत्ता माण्डव्यधीमते ।
तां वज्रशूलिकां प्लाव्य पवित्रैर्नर्मदोदकैः ॥ १७२.१७ ॥
माण्डव्यमृषिमुत्तार्य जयशब्दादिमङ्गलैः ।
विवाहयित्वा तां कन्यां माण्डव्यर्षिपुंगवः ॥ १७२.१८ ॥
अभिवाद्य च तान् सर्वान् दानसन्मानगौरवैः ।
अथ राजा समीपस्थो रत्नैश्च विविधैरपि ॥ १७२.१९ ॥
धिग्वादैर्निन्दितः सर्वैस्तैर्जनैर्भूषितः पुनः ।
राज्ञा च ब्राह्मणाः सर्वे भूषणाच्छादनाशनैः ॥ १७२.२० ॥
सुवर्णकोटिदानेन तुष्टान्कृत्वा क्षमापिताः ।
वृत्ते विवाह आहूय शाण्डिलीं तामथाब्रवीत् ॥ १७२.२१ ॥
मानयस्व इमान् विप्रान्मोचयस्व दिवाकरम् ।
अपहृत्य तमो येन कृपा सद्यः प्रवर्तते ॥ १७२.२२ ॥
ऋषीणां वचनं श्रुत्वा शाण्डिली दुःखिताब्रवीत् ।
उदितेऽर्के तु मे भर्ता मृत्युं यास्यति भो द्विजाः ॥ १७२.२३ ॥

तं कथं मोचयामीह ह्यात्मनोऽनिष्टसिद्धये ।

क्रियाप्रवर्तनाच्चाद्य किं कार्यं मे महर्षयः ॥ १७२.२४ ॥

निःपुंसी स्त्री ह्यनाथाहं भवामि भवतो मतम् ।

तिष्ठ त्वमन्धकारे तु नेच्छामि रविणोदयम् ॥ १७२.२५ ॥

तेन वाक्येन ते सर्वे देवासुरमहर्षयः ।

शिरःसंचालनाः सर्वे साधु साध्विति चाब्रुवन् ॥ १७२.२६ ॥

पतिव्रते महाभागे शृणु वाक्यं तपोधने ।

मन्यसे यदि नः सर्वान्कुरुष्व वचनं च यत् ॥ १७२.२७ ॥

शाण्डिल्युवाच -

येन मे न मरेद्भर्ता येन सत्यं मुनेर्वचः ।

तत्कुरुध्वं विचार्याशु येन संवर्धते सुखम् ॥ १७२.२८ ॥

तस्यास्तद्वचनं श्रुत्वा स्वप्नावस्थाकृतो ह्यृषिः ।

अन्तर्हितो मुहूर्तं च शाण्डिल्याश्च प्रपश्य ताम् ॥ १७२.२९ ॥

पुनरादाय ते सर्वे कृत्वा निर्व्रणसत्तनुं स्नापितो नर्मदातोये शाण्डिल्यायै समर्पितः ॥ १७२.३० ॥

ततः सा हृष्टमनसा पतिं दृष्ट्वा तु तैजसम् ।

प्रणम्य तानृषीन् देवान् विमलार्कं जगत्कृतम् ॥ १७२.३१ ॥

क्रियाप्रवर्तिताः सर्वे देवगन्धर्वमानुषाः ।

हृष्टतुष्टा गताः सर्वे स्वमाश्रमपदं महत् ॥ १७२.३२ ॥

पतिव्रता स्वभर्त्रा सा मासमेवाश्रमे स्थिता ।

माण्डव्येनाप्यनुज्ञाता ययौ नत्वा स्वमाश्रमम् ॥ १७२.३३ ॥

गतेषु तेषु सर्वेषु स्थापयामास चाच्युतम् ।

माण्डव्येश्वरनामानं नारायण इति स्मृतम् ॥ १७२.३४ ॥

दिव्यं वर्षसहस्रं तु पूजयामास भारत ।

गतोऽसावृषिसङ्घैश्च सहितोऽमरपर्वतम् ॥ १७२.३५ ॥

तपस्तपन्तौ तौ तत्र ह्यद्यापि किल भारत ।

भ्रातरौ संयतात्मानौ ध्यायतः परमं पदम् ॥ १७२.३६ ॥

तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।

पितरस्तस्य तृप्यन्ति पिण्डदानाद्दशाब्दिकम् ॥ १७२.३७ ॥

देवगृहे तु पक्षादौ यः करोति विलेपनम् ।

गोदानशतसाहस्रे दत्ते भवति यत्फलम् ॥ १७२.३८ ॥

उपलेपनेन द्विगुणमर्चने तु चतुर्गुणम् ।

दीपप्रज्वलने पुण्यमष्टधा परिकीर्तितम् ॥ १७२.३९ ॥

दिव्यनेत्रधरो भूत्वा त्रैलोक्ये सचराचरे ।

दध्ना मधुघृतैर्देवं पयसा नर्मदोदकैः ॥ १७२.४० ॥

स्नपनं ये प्रकुर्वन्ति पुष्पमालाविलेपनैः ।

येऽर्चयन्ति विरूपाक्षं देवं नारायणं हरिम् ॥ १७२.४१ ॥

तेऽपि दिव्यविमानेन क्रीडन्ते कल्पसंख्यया ।

दीपाष्टकं तु यः कुर्यादष्टमीं च चतुर्दशीम् ॥ १७२.४२ ॥

एकादश्यां तु कृष्णस्य न पश्यन्ति यमं तु ते ।

फलैर्नानाविधैः शुभ्रैर्यः कुर्याल्लिङ्गपूरणम् ॥ १७२.४३ ॥

तेऽपि यान्ति विमानेन सिद्धचारणसेविताः ।

घण्टा चैव पताका च विमाने पुष्पमालिका ॥ १७२.४४ ॥

वादित्राणि यथार्हाणि प्रान्ते च गच्छते शिवम् ।

देवालयं तु यः कुर्याद्वैष्णवं माण्डवेश्वरम् ॥ १७२.४५ ॥

स्वर्गे वसति धर्मात्मा यावदाभूतसम्प्लवम् ।

माण्डव्यनारायणाख्ये विप्रान् भोजयतेऽग्रतः ॥ १७२.४६ ॥

एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ।

आश्विने मासि सम्प्राप्ते शुक्लपक्षे चतुर्दशीम् ॥ १७२.४७ ॥

कृतोपवासनियमो रात्रौ जागरणेन च ।

दीपमालां चतुर्दिक्षु पूजां कृत्वा तु शक्तितः ॥ १७२.४८ ॥

नारी वा पुरुषो वापि नृत्यगीतप्रवादनैः ।

प्रभाते विमले सूर्ये स्नानादिकविधिं नृप ॥ १७२.४९ ॥

अभिनिर्वर्त्य मौनेन पश्यते देवमीदृशम् ।

सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥ १७२.५० ॥

अथवा मार्गशीर्षे च चैत्रवैशाखयोरपि ।

श्रावणे वा महाराज सर्वकालेऽथवापि च ॥ १७२.५१ ॥
शिवरात्रिसमं पुण्यमित्येवं शिवभाषितम् ।
वाजपेयाश्वमेधाभ्यां फलं भवति नान्यथा ॥ १७२.५२ ॥
दुर्भगा दुःखिता वन्ध्या दरिद्रा च मृतप्रजा ।
स्नाति रुद्रघटैर्या स्त्री सर्वान्कामानवाप्नुयात् ॥ १७२.५३ ॥
कृमिकीटपतङ्गाश्च तस्मिंस्तीर्थे तु ये मृताः ।
स्वर्गं प्रयान्ति ते सर्वे दिव्यरूपधरा नृप ॥ १७२.५४ ॥
अनाशके जलेऽग्नौ तु ये मृता व्याधिपीडिताः ।
अनिवर्तिका गतिस्तेषां रुद्रलोके ह्यसंशयम् ॥ १७२.५५ ॥
नित्यं नमति यो राज शिवनारायणावुभौ ।
गोदानफलमाप्नोति तस्य तीर्थप्रभावतः ॥ १७२.५६ ॥
देवालये तु राजेन्द्र यश्च कुर्यात्प्रदक्षिणाम् ।
प्रदक्षिणीकृता तेन ससागरधरा धरा ॥ १७२.५७ ॥
सार्द्धं शतं च तीर्थानि मल्लिकाभवनाद्बहिः ।
तस्य तीर्थप्रमाणं तु विस्तरं राजसत्तम ॥ १७२.५८ ॥
सूत्रेण वेष्टयेत्क्षेत्रमथवा शिवमन्दिरम् ।
अथवा शिवलिङ्गं च तस्य पुण्यफलं शृणु ॥ १७२.५९ ॥
जम्बूद्वीपश्च कृतस्नश्च शाल्मली कुशक्रौञ्चकौ ।
शाकपुष्करगोमेदैः सप्तद्वीपा वसुंधरा ॥ १७२.६० ॥
भूषिता तेन राजेन्द्र सशैलवनकानना ।
रेवायां दक्षिणे भागे शिवक्षेत्रात्समीपतः ॥ १७२.६१ ॥
देवखातं महापुण्यं निर्मितं त्रिदशैरपि ।
तस्मिन् यः कुरुते स्नानं मुच्यते सर्वपातकैः ॥ १७२.६२ ॥
पूर्णिमायाममावस्यां व्यतीपातेऽर्कसंक्रमे ।
श्राद्धं च संग्रहे कुर्यात्स गच्छेत्परमां गतिम् ॥ १७२.६३ ॥
देवखाते त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
तिष्ठन्ति ऋषिभिः सार्द्धं पितृदेवगणैः सह ॥ १७२.६४ ॥
तत्र तीर्थेऽश्विने मासि चतुर्दश्यां विशेषतः ।

वायुमार्गे स्थितः शक्रस्तिष्ठते दैवतैः सह ॥ १७२.६५ ॥

पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।

विंशति तानि सर्वाणि देवखाते दिनद्वयम् ॥ १७२.६६ ॥

गयाशिरे च यत्पुण्यं प्रयागे मकरकण्टके ।

प्रयागे सोमतीर्थे च तत्पुण्यं माण्डवेश्वरे ॥ १७२.६७ ॥

पट्टबन्धेन यत्पुण्यं मात्रायां लकुलेश्वरे ।

आश्विन्यामश्विनीयोगे तत्पुण्यं माण्डवेश्वरे ॥ १७२.६८ ॥

उज्जयिन्यां महाकाले वाराणस्यां त्रिपुष्करे ।

संनिहत्यां रविग्रस्ते माण्डव्याख्ये सनातनम् ॥ १७२.६९ ॥

इति ज्ञात्वा महाराज सर्वतीर्थेषु चोत्तमम् ।

पित्ःन्देवान् समभ्यर्च्य स्नानदानादिपूजनैः ॥ १७२.७० ॥

चतुर्दश्यां निराहारः स्थितो भूत्वा शुचिव्रतः ।

पूजयेत्परया भक्त्या रात्रौ जागरणे शिवम् ॥ १७२.७१ ॥

स्नानैश्च विविधैर्देवं पुष्पागरुविलेपनैः ।

प्रभाते पौर्णमास्यां तु स्नानादिविधितर्पणैः ॥ १७२.७२ ॥

श्राद्धेन हव्यकव्येन शिवपूजार्चनेन च ।

अग्निष्टोमादियज्ञैश्च विधिवच्चाप्तदक्षिणैः ॥ १७२.७३ ॥

धौतपापो विशुद्धात्मा फलते फलमुत्तमम् ।

गोसहस्रप्रदानेन दत्तं भवति भारत ॥ १७२.७४ ॥

स्नानाद्यैर्विधिवत्तत्र तद्दिने शिवसन्निधौ ।

हिरण्यं वृषभं धेनुं भूमिं गोमिथुनं हयम् ॥ १७२.७५ ॥

शिवमुद्दिश्य वै वस्त्रयुग्मे दद्यात्सुरूपिणे ।

पादुकोपानहौ छत्रं भाजनं रक्तवाससी ॥ १७२.७६ ॥

होमं जाप्यं तथा दानमक्षयं सर्वमेव तत् ।

ऋचमेकां तु ऋग्वेदे यजुर्वेदे यजुस्तथा ॥ १७२.७७ ॥

सामैकं सामवेदे तु जपेद्देवाग्रसंस्थितः ।

सम्यग्वेदफलं तस्य भवेद्वै नात्र संशयः ॥ १७२.७८ ॥

गायत्रीजाप्यमात्रस्तु वेदत्रयफलं लभेत् ।

कुलकोटिशतं साग्रं लभते तु शिवार्चनात् ॥ १७२.७९ ॥

स्नाने दाने तथा श्राद्धे जागरे गीतवादिते ।

अनिवर्तिका गतिस्तस्य शिवलोकात्कदाचन ॥ १७२.८० ॥

कालेन महताविष्टो मर्त्यलोके समाविशेत् ।

राजा भवति मेधावी सर्वव्याधिविवर्जितः ॥ १७२.८१ ॥

जीवेद्वर्षशतं साग्रं पुत्रपौत्रधनान्वितः ।

तच्च तीर्थं पुनः स्मृत्वा लीयमानो महेश्वरे ॥ १७२.८२ ॥

उपास्ते यस्तु वै सन्ध्यां तस्मिंस्तीर्थे च पर्वणि ।

साङ्गोपाङ्गैश्चतुर्वेदैर्लभते फलमुत्तमम् ॥ १७२.८३ ॥

तत्र सर्वं शिवक्षेत्राच्छरपातं समन्ततः ।

न संचरेद्भयोद्विग्ना ब्रह्महत्या नराधिप ॥ १७२.८४ ॥

यत्र तत्र स्थितो वृक्षान् पश्यते तीर्थतत्परः ।

विविधैः पातकैर्मुक्तो मुच्यते नात्र संशयः ॥ १७२.८५ ॥

श्वभ्री तत्र महाराज जलमध्ये प्रदृश्यते ।

कथानिका पुराणोक्ता वानरी तीर्थसेवनात् ॥ १७२.८६ ॥

तत्र कूपो महाराज तिष्ठते देवनिर्मितः ।

शिवस्य पश्चिमे भागे शिवक्षेत्रमनुत्तमम् ॥ १७२.८७ ॥

वृषोत्सर्गं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।

क्रीडन्ति पितरस्तस्य स्वर्गलोके यदृच्छया ॥ १७२.८८ ॥

अगम्यागमने पापमयाज्ययाजने कृते ।

स्तेयाच्च ब्रह्मगोहत्यागुरुघाताच्च पातकम् ।

तत्सर्वं नश्यते पापं वृषोत्सर्गे कृते तु वै ॥ १७२.८९ ॥

माण्डव्यतीर्थमाहात्म्यं यः शृणोति समाधिना ।

मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ १७२.९० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये माण्डव्यतीर्थमाहात्म्यवर्णनं नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७३



अध्याय १७३

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।

नर्मदादक्षिणे कूले सर्वपापप्रणाशनम् ॥ १७३.१ ॥

सिद्धेश्वरमिति ख्यातं महापातकनाशनम् ।

यत्र शुद्धिं परां प्राप्तो देवदेवो महेश्वरः ।

पुरा हत्यायुतः पार्थ देवदेवस्त्रिशूलधृक् ॥ १७३.२ ॥

पुरा पञ्चशिरा आसीद्ब्रह्मा लोकपितामहः ।

तेनानृतं वचश्चोक्तं कस्मिंश्चित्कारणान्तरे ॥ १७३.३ ॥

तच्छ्रुत्वा सहसा तस्मै चुकोप परमेश्वरः ।

छेदयामास भगवान्मूर्धानं करजैस्तदा ॥ १७३.४ ॥

तस्य तत्करसंलग्नं च्यवते न कदाचन ।

ततो हि देवदेवेशः पर्यटन् पृथिवीमिमाम् ॥ १७३.५ ॥

ततो वाराणसीं प्राप्तस्तस्यां तदपतच्छिरः ।

पतिते तु कपाले च ब्रह्महत्या न मुञ्चति ॥ १७३.६ ॥

ततस्तु सागरे गत्वा पूर्वे च दक्षिणे तथा ।

पश्चिमे चोत्तरे पार्थ देवदेवो महेश्वरः ॥ १७३.७ ॥

पर्यटन्सर्वतीर्थेषु ब्रह्महत्या न मुञ्चति ।

नर्मदादक्षिणे कूले सुतीर्थं प्राप्तवान् प्रभुः ॥ १७३.८ ॥

कुलकोटिं समासाद्य प्रार्थयामास चात्मवान् ।

प्रायश्चित्तं ततः कृत्वा बभूव गतकल्मषः ॥ १७३.९ ॥

ततो निष्कल्मषो जातो देवदेवो महेश्वरः ।

हत्वा सुरेभ्यस्तत्स्थानं ततश्चान्तर्दधे प्रभुः ॥ १७३.१० ॥

तदाप्रभृति तत्तीर्थं शुद्धरुद्रेति कीर्तितम् ।

विख्यातं त्रिषु लोके ब्रह्महत्याहरं परम् ॥ १७३.११ ॥

मासे मासे सिते पक्षेऽमावास्यायां युधिष्ठिर ।

स्नात्वा तत्र विधानेन तर्पयेत्पितृदेवताः ॥ १७३.१२ ॥

दद्यात्पिण्डं पित्ःणां तु भावितेनान्तरात्मना ।

तस्य ते द्वादशाब्दानि सुतृप्ताः पितरो नृप ॥ १७३.१३ ॥

गन्धधूपप्रदीपाद्यैरभ्यर्च्य परमेश्वरम् ।

शुद्धेश्वराभिधानं तु शिवलोके महीयते ॥ १७३.१४ ॥

एतत्ते कथितं राजञ्छुद्धरुद्रमनुत्तमम् ।

मया श्रुतं यथा देवसकाशाच्छूलपाणिनः ।

मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ १७३.१५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शुद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७४

https://sa.wikisource.org/s/fez
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १७४

श्रीमार्कण्डेय उवाच -

गोपेश्वरं ततो गच्छेदुत्तरे नर्मदातटे ।

यत्र स्नानेन चैकेन मुच्यन्ते पातकैर्नराः ॥ १७४.१ ॥

तत्र तीर्थे तु यः स्नात्वा कुरुते प्राणसंक्षयम् ।

बर्हियुक्तेन यानेन स गच्छेच्छिवमन्दिरे ॥ १७४.२ ॥

क्रीडित्वा सुचिरं कालं शिवलोके नराधिप ।

इह मानुष्यतां प्राप्य राजा भवति वीर्यवान् ॥ १७४.३ ॥

हस्त्यश्वरथसम्पन्नो दासीदाससमन्वितः ।

पूज्यमानो नरेन्द्रैश्च जीवेद्वर्षशतं नरः ॥ १७४.४ ॥

सम्प्राप्ते कार्त्तिके मासि नवम्यां शुक्लपक्षतः ।

सोपवासः शुचिर्भूत्वा दीपकांस्तत्र दापयेत् ॥ १७४.५ ॥

गन्धपुष्पैः समभ्यर्च्य रात्रौ कुर्वीत जागरम् ।

तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नराधिप ॥ १७४.६ ॥

यावत्पुण्यं फलं संख्या दीपकानां तथैव च ।

तावद्युगसहस्राणि शिवलोके महीयते ॥ १७४.७ ॥

तस्मिंस्तीर्थे तु राजेन्द्र लिङ्गपूरणकं विधिम् ।

तथैव पद्मकैश्चैव दधिभक्तैस्तथैव च ॥ १७४.८ ॥

यस्तु कुर्यान्नरश्रेष्ठ तस्य पुण्यफलं शृणु ।

यावन्ति तिलसंख्यानि दधिभक्तं तथैव च ॥ १७४.९ ॥

पद्मसंख्या शिवे लोके मोदते कालमीप्सितम् ।

तस्मिंस्तीर्थे तु राजेन्द्र यत्किंचिद्दीयते नृप ॥ १७४.१० ॥

सर्वं कोटिगुणं तस्य संख्यातुं वा न शक्यते ।

एवं ते कथितं सर्वं सर्वतीर्थमनुत्तमम् ॥ १७४.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७५



अध्याय १७५

श्रीमार्कण्डेय उवाच -

उत्तरे नर्मदाकूले भृगुक्षेत्रस्य मध्यतः ।

कपिलेश्वरं तु विख्यातं विशेषात्पापनाशनम् ॥ १७५.१ ॥

योऽसौ सनातनो देवः पुराणे परिपठ्यते ।

वासुदेवो जगन्नाथः कपिलत्वमुपागतः ॥ १७५.२ ॥

पातालं सुतलं नाम तस्यैव नितलं ह्यधः ।

गभस्तिगं च तस्याधो ह्यन्धतामिस्रमेव च ॥ १७५.३ ॥

पातालं सप्तमं यच्च ह्यधस्तात्संस्थितं महत् ।

वसते तत्र वै देवः पुराणः परमेश्वरः ॥ १७५.४ ॥

स ब्रह्मा स महादेवः स देवो गरुडध्वजः ।

पूज्यमानः सुरैः सिद्धैस्तिष्ठते ब्रह्मवादिभिः ॥ १७५.५ ॥

वसतस्तस्य राजेन्द्र कपिलस्य जगद्गुरोः ।

विनाशं चाग्रतः प्राप्ताः क्षणेन सगरात्मजाः ॥ १७५.६ ॥

भस्मीभूतांस्तु तान्दृष्ट्वा कपिलो मुनिसत्तमः ।

जगाम परमं शोकं चिन्त्यमानोऽथ किल्बिषम् ॥ १७५.७ ॥

सर्वसङ्गपरित्यागे चित्ते निर्विषयीकृते ।

अयुक्तं षष्टिसहस्राणां कर्तं मम विनाशनम् ॥ १७५.८ ॥

कृतस्य करणं नास्ति तस्मात्पापविनाशनम् ।

गत्वा तु कापिलं तीर्थं मोचयाम्यघमात्मनः ॥ १७५.९ ॥

पातालं तु ततो मुक्त्वा कपिलो मुनिसत्तमः ।

तपश्चचार सुमहन्नर्मदातटमास्थितः ॥ १७५.१० ॥

व्रतोपवासैर्विविधैः स्नानदानजपादिकैः ।

परं निर्वाणमापन्नः पूजयन्रुद्रमव्ययम् ॥ १७५.११ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
गोसहस्रफलं तस्य लभते नात्र संशयः ॥ १७५.१२ ॥
ज्येष्ठमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्दशी ।
तत्र स्नात्वा विधानेन भक्त्या दानं प्रयच्छति ॥ १७५.१३ ॥
पात्रभूताय विप्राय स्वल्पं वा यदि वा बहु ।
अक्षयं तत्फलं प्रोक्तं शिवेन परमेष्ठिना ॥ १७५.१४ ॥
अङ्गारकदिने प्राप्ते चतुर्थ्यां नवमीषु च ।
स्नानं करोति पुरुषो भक्त्योपोष्य वराङ्गना ॥ १७५.१५ ॥
रूपमैश्वर्यमतुलं सौभाग्यं संततिं पराम् ।
लभते सप्तजन्मानि नित्यं नित्यं पुनः पुनः ॥ १७५.१६ ॥
पौर्णमास्याममावास्यां स्नात्वा पिण्डं प्रयच्छति ।
तस्य ते द्वादशाब्दानि तृप्ता यान्ति सुरालयम् ॥ १७५.१७ ॥
तत्र तीर्थे तु यो भक्त्या दद्याद्दीपं सुशोभनम् ।
जायते तस्य राजेन्द्र महादीप्तिः शारीरजा ॥ १७५.१८ ॥
तत्र तीर्थे मृतानां तु जन्तूनां सर्वदा किल ।
अनिवर्तिका भवेत्तेषां गतिस्तु शिवमन्दिरात् ॥ १७५.१९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कपिलेश्वरतीर्थमाहात्म्यवर्णनं नाम पञ्चसप्ताधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७६

https://sa.wikisource.org/s/fex
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्यायः १७६

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल पिङ्गलावर्तमुत्तमम् ।

तीर्थं सर्वगुणोपेतं कामिकं भुवि दुर्लभम् ॥ १७६.१ ॥

वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ।

पिङ्गलेश्वरमासाद्य तत्सर्वं विलयं व्रजेत् ॥ १७६.२ ॥

तत्र स्नानं च दानं च देवखाते कृतं नृप ।

अक्षयं तद्भवेत्सर्वमित्येवं शङ्करोऽब्रवीत् ॥ १७६.३ ॥

पृथिव्यां सर्वतीर्थेषु समुद्धृत्य शुभोदकम् ।

मुक्तं तत्र सुरैः खात्वा देवखातं ततोऽभवत् ॥ १७६.४ ॥

युधिष्ठिर उवाच -

कथं तु देवखातं तत्संजातं द्विजसत्तम ।

सुराः सर्वे कथं तत्र मुमुचुर्वारि तीर्थजम् ।

सर्वं कथय मे विप्र श्रवणे लम्पटं मनः ॥ १७६.५ ॥

श्रीमार्कण्डेय उवाच -

यदा तु शूलशुद्ध्यर्थं रुद्रो देवगणैः सह ।

बभ्राम पृथिवीं सर्वां कमण्डलुधरः शुभाम् ॥ १७६.६ ॥

प्रभासाद्येषु तीर्थेषु स्नानं चक्रुः सुरास्तदा ।

सर्वतीर्थोत्थितं तोयं पात्रे वै निहितं तु तैः ॥ १७६.७ ॥

शूलभेदमनुप्राप्य शूलं शुद्धं तु शूलिनः ।

तत्रोत्थमुदकं गृह्य आगता भृगुकच्छके ॥ १७६.८ ॥

तत्रापश्यंस्ततो ह्यग्निं च पिङ्गलाक्षं च रोगिणम् ।
तपस्युग्रे व्यवसितं ध्यायमानं महेश्वरम् ॥ १७६.९ ॥
हविर्भागैस्तु विप्राणां राज्ञां चैवामयाविनाम् ।
दृष्ट्वा तु बहुरोगार्तमग्निं देवमुखं सुराः ।
प्राहुस्ते सहिता देवं शङ्करं लोकशङ्करम् ॥ १७६.१० ॥
देवा ऊचुः ।
प्रसादः क्रियतां शम्भो पिङ्गलस्यामयाविनः ।
यथा हि नीरुजः कायो हविषां ग्रहणक्षमः ।
पुनर्भवति पिङ्गस्तु तथा कुरु महेश्वर ॥ १७६.११ ॥

ईश्वर उवाच -
भोभोः सुरा हि तपसा तुष्टोऽहं वो विशेषतः ।
वचनाच्च विशेषेण ददाम्यभिमतं वरम् ॥ १७६.१२ ॥

पिङ्गल उवाच -
यदि तुष्टोऽसि देवेश दीयते देव चेप्सितम् ।
चन्द्रादित्यौ च नयने कृत्वात्र कलया स्थितः ॥ १७६.१३ ॥
तथा पुनर्नवः कायो भवेद्वै मम शङ्कर ।
तथा कुरु विरूपाक्ष नमस्तुभ्यं पुनः पुनः ॥ १७६.१४ ॥

मार्कण्डेय उवाच -
ततः स भगवाञ्छम्भुर्मूर्तिमादित्यरूपिणीम् ।
कृत्वा तु तस्य तद्रोगमपानुदत शङ्करः ॥ १७६.१५ ॥
ततः पुनर्नवीभूतः पुनः प्रोवाच शङ्करम् ।
अत्रैव स्थीयतां शम्भो तथैव भास्करः स्वयम् ॥ १७६.१६ ॥
प्राणिनामुपकाराय रोगाणामुपशान्तये ।
पापानां ध्वंसनार्थाय श्रेयसां चैव वृद्धये ॥ १७६.१७ ॥
एवमुक्तस्तु भगवान्पिङ्गलेन महात्मना ।

अवतारं च कृतवान् गीर्वाणानिदमब्रवीत् ॥ १७६.१८ ॥

ईश्वर उवाच -

मुञ्चध्वमुदकं देवास्तीर्थेभ्यो यत्समाहृतम् ।

मम चोत्तरतः कृत्वा खातं देवमयं शुभम् ॥ १७६.१९ ॥

तत्र निक्षिप्यतां वारि सर्वरोगविनाशनम् ।

सर्वपापहरं दिव्यं सर्वैरपि सुरादिभिः ॥ १७६.२० ॥

एवमुक्ताः सुराः सर्वे खातं कृत्वा तथोत्तरे ।

वयस्त्रिंशत्कोटिगणैर्मुक्तं तत्तीर्थजं जलम् ॥ १७६.२१ ॥

प्रोचुस्ते सहिताः सर्वे विरूपाक्षपुरोगमाः ।

यः कश्चिद्देवखातेऽस्मिन्मृदालम्भनपूर्वकम् ॥ १७६.२२ ॥

स्नानं कृत्वा रविदिने संस्नाय नर्मदाजले ।

श्राद्धं कृत्वा पितृभ्यो वै दानं दत्त्वा स्वशक्तितः ॥ १७६.२३ ॥

पूजयिष्यति पिङ्गेशं तस्य वासस्त्रिविष्टपे ।

भविष्यति सुरैरुक्तं शृणोति सकलं जगत् ॥ १७६.२४ ॥

आमया भुवि मर्त्यानां क्षयरोगविचर्चिकाः ।

व्याधयो विकृताकाराः कासश्वासज्वरोद्भवाः ॥ १७६.२५ ॥

एकद्वित्रिचतुर्थाहा ये ज्वरा भूतसम्भवाः ।

ये चान्ये विकृता दोषा दद्रुश्च कामलं तथा ॥ १७६.२६ ॥

दिनैस्ते सप्तभिर्यान्ति नाशं स्नानैर्रवेर्दिने ।

शतभेदप्रभिन्ना ये कुष्ठा बहुविधास्तथा ॥ १७६.२७ ॥

शतमादित्यवाराणां स्नायादष्टोत्तरं तु यः ।

सम्पूज्य शङ्करं दद्यात्तिलपात्रं द्विजातये ॥ १७६.२८ ॥

नश्यन्ति तस्य कुष्ठानि गरुडेनेव पन्नगाः ।

एवमुक्त्वा गताः सर्वे त्रिदशास्त्रिदशालयम् ॥ १७६.२९ ॥

मार्कण्डेय उवाच -

नदीषु देवखातेषु तडागेषु सरित्सु च ।

स्नानं समाचरेन्नित्यं नरः पापैः प्रमुच्यते ॥ १७६.३० ॥

षष्टितीर्थसहस्रेषु षष्टितीर्थशतेषु च ।

यत्फलं स्नानदानेषु देवखाते ततोऽधिकम् ॥ १७६.३१ ॥

देवखातेषु यः स्नात्वा तर्पयित्वा पितॄन्नृप ।

पूजयेद्देवदेवेशं पिङ्गलेश्वरमुत्तमम् ॥ १७६.३२ ॥

सोऽश्वमेधस्य यज्ञस्य वाजपेयस्य भारत ।

द्वयोः पुण्यमवाप्नोति नात्र कार्या विचारणा ॥ १७६.३३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पिङ्गलेश्वरतीर्थमाहात्म्यवर्णनं नाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७७

https://sa.wikisource.org/s/few
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १७७

श्रीमार्कण्डेय उवाच -

भूतीश्वरं ततो गच्छेत्सर्वतीर्थेष्वनुत्तमम् ।

दर्शनादेव राजेन्द्र यस्य पापं प्रणश्यति ॥ १७७.१ ॥

तत्र स्थाने पुरा पार्थ देवदेवेन शूलिना ।

उद्धूलनं कृतं गात्रे तेन भूतीश्वरं तु तत् ॥ १७७.२ ॥

पुष्ये वा जन्मनक्षत्रे अमावास्यां विशेषतः ।

भूतीश्वरे नरः स्नात्वा कुलकोटिं समुद्धरेत् ॥ १७७.३ ॥

तत्र स्थाने तु यो भक्त्या कुरुते ह्यङ्गगुण्ठनम् ।

तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नराधिप ॥ १७७.४ ॥

यावन्तो भूतिकणिका गात्रे लग्नाः शिवालये ।

तावद्वर्षसहस्राणि शिवलोके महीयते ॥ १७७.५ ॥

सर्वेषामेव स्नानानां भस्मस्नानं परं स्मृतम् ।

पुराणैरृषिभिः प्रोक्तं सर्वशास्त्रेष्वनुत्तमम् ॥ १७७.६ ॥

एककालं द्विकालं वा त्रिकालं चापि यः सदा ।

स्नानं करोति चाग्नेयं पापं तस्य प्रणश्यति ॥ १७७.७ ॥

दिव्यस्नानाद्वरं स्नानं वायव्यं भरतर्षभ ।

वायव्यादुत्तमं ब्राह्म्यं वरं ब्राह्म्यात्तु वारुणम् ॥ १७७.८ ॥

आग्नेयं वारुणाच्छ्रेष्ठं यस्मादुक्तं स्वयम्भुवा ।

तस्मात्सर्वप्रयत्नेन ह्याग्नेयं स्नानमाचरेत् ॥ १७७.९ ॥

युधिष्ठिर उवाच -

आग्नेयं वारुणं ब्राह्म्यं वायव्यं दिव्यमेव च ।

किमुक्तं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ १७७.१० ॥

मार्कण्डेय उवाच -

आग्नेयं भस्मना स्नानमवगाह्य च वारुणम् ।

आपोहिष्ठेति च ब्राह्म्यं वायव्यं गोरजः स्मृतम् ॥ १७७.११ ॥

सूर्ये दृष्टे तु यत्स्नानं गङ्गातोयेन तत्समम् ।

तत्स्नानं पञ्चमं प्रोक्तं दिव्यं पाण्डवसत्तम ॥ १७७.१२ ॥

तस्मात्सर्वप्रयत्नेन स्नात्वा भूतीश्वरे तु यः ।

पूजयेद्देवमीशानं स बाह्याभ्यन्तरः शुचिः ॥ १७७.१३ ॥

तत्र स्थाने तु ये नित्यं ध्यायन्ति परमं पदम् ।

सूक्ष्मं चातीन्द्रियं नित्यं ते धन्या नात्र संशयः ॥ १७७.१४ ॥

मुक्तितीर्थं तु तत्तीर्थं सर्वतीर्थेष्वनुत्तमम् ।

दर्शनादेव यस्यैव पापं याति महत्क्षयम् ॥ १७७.१५ ॥

जायते पूजया राज्यं तत्र स्तुत्वा महेश्वरम् ।

जपेन पापसंशुद्धिर्ध्यानेनानन्त्यमश्नुते ॥ १७७.१६ ॥

ओं ज्योतिः स्वरूपमनादिमध्यमनुत्पाद्यमानमनुचार्यमाणाक्षरम् ।

सर्वभूतस्थितं शिवं सर्वयोगेश्वरं सर्वलोकेश्वरं मोहशोकहीनं महाज्ञानगम्यम् ॥ १७७.१७ ॥

तत्र तीर्थे तु यो गत्वा स्नानं कुर्यान्नरेश्वर ।

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।

एवम्भूतं न जानन्ति मोक्षापेक्षणिका नराः ॥ १७७.१८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भूतीश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तसप्तत्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७८



श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र गङ्गावाहकमुत्तमम् ।

नर्मदायां महापुण्यं भृगुतीर्थसमीपतः ॥ १७८.१ ॥

तत्र गङ्गा महापुण्या चचार विपुलं तपः ।

पुरा वर्षशतं साग्रं परमं व्रतमास्थिता ॥ १७८.२ ॥

ध्यात्वा देवं जगद्योनिं नारायणमकल्मषम् ।

आत्मानं परमं धाम सरित्सा जगतीपते ॥ १७८.३ ॥

ततो जनार्दनो देव आगत्येदमुवाच ह ॥ १७८.४ ॥

विष्णुरुवाच -

तपसा तव तुष्टोऽहं मत्पादाम्बुजसम्भवे ।

मत्तः किमिच्छसे देवि ब्रूहि किं करवाणि ते ॥ १७८.५ ॥

गङ्गोवाच -

त्वत्पादकमलाद्भ्रष्टा गङ्गा सहचरा विभो ।

यदृच्छया त्रिलोकेश वन्द्यमाना दिवौकसैः ॥ १७८.६ ॥

नृपो भगीरथस्तस्मात्तपः कृत्वा सुदुष्करम् ।

समाराध्य जगन्नाथं शङ्करं लोकशङ्करम् ॥ १७८.७ ॥

अवतारयामास हि मां पृथिव्यां धरणीधर ।

मया वै युवयोर्वाक्यादवतारः कृतो भुवि ॥ १७८.८ ॥

वैष्णवीमिति मां मत्वा जनः सर्वाप्लुतो मयि ।

ये वै ब्रह्मणो लोके ये च वै गुरुतल्पगाः ॥ १७८.९ ॥

त्यागिनः पितृमातृभ्यां ये च स्वर्णहरा नराः ।

गोघ्ना ये मनुजा लोके तथा ये प्राणिहिंसकाः ॥ १७८.१० ॥

अगम्यागामिनो ये च ह्यभक्ष्यस्य च भक्षकाः ।

ये चानृतप्रवक्तारो ये च विश्वासघातकाः ॥ १७८.११ ॥

देवब्राह्मणवित्तानां हर्तारो ये नराधमाः ।

देवब्रह्मगुरुस्त्रीणां ये च निन्दाकरा नराः ॥ १७८.१२ ॥

ब्रह्मशापप्रदग्धा ये ये चैवात्महनो द्विजाः ।

भ्रष्टानशनसंन्यासनियतव्रतचारिणः ॥ १७८.१३ ॥

तथैवापेयपेयाश्च ये च स्वगुरुनिन्दकाः ।

निषेधका ये दानानां पात्रदानपराङ्मुखाः ॥ १७८.१४ ॥

ऋतुघ्ना ये स्वपत्नीनां पित्रोः सेहपरा न हि ।

बान्धवेषु च दीनेषु करुणा यस्य नास्ति वै ॥ १७८.१५ ॥

क्षेत्रसेतुविभेदी च पूर्वमार्गप्रलोपकः ।

नास्तिकः शास्त्रहीनस्तु विप्रः सन्ध्याविवर्जितः ॥ १७८.१६ ॥

अहुताशी ह्यसंतुष्टः सर्वाशी सर्वविक्रयी ।

कदर्या नास्तिकाः क्रूराः कृतघ्ना ये द्विजायः ॥ १७८.१७ ॥

पैशुन्या रसविक्रेयाः सर्वकालविनाकृताः ।

स्वगोत्रां परगोत्रां वा ये भुञ्जन्ति द्विजाधमाः ॥ १७८.१८ ॥

ते मां प्राप्य विमुच्यन्ते पापसङ्घैः सुसंचितैः ।

तत्पापक्षारतप्ताया न शर्म मम विद्यते ॥ १७८.१९ ॥

तथा कुरु जगन्नाथ यथाहं शर्म चाप्नुयाम् ।

एवमुक्तस्तु देवेशस्तुष्टः प्रोवाच जाह्नवीम् ॥ १७८.२० ॥

विष्णुरुवाच -

अहमत्र वसिष्यामि गङ्गाधरसहायवान् ।

प्रविशस्व सदा रेवां त्वमत्रैव च मूर्तिना ॥ १७८.२१ ॥

मम पादतलं प्राप्य वह त्रिपथगामिनि ।

यदा बहूदककाले नर्मदाजलसंभृता ॥ १७८.२२ ॥

प्रावृट्कालं समासाद्य भविष्यति जलाकुला ।

प्लाव्योभयतटं देवी प्राप्य मामुत्तरस्थितम् ॥ १७८.२३ ॥

प्लावयिष्यति तोयेन यदा शङ्खं करे स्थितम् ।

तदा पर्वशतोद्युक्तं वैष्णवं पर्वसंज्ञितम् ॥ १७८.२४ ॥

न तेन सदृशं किंचिद्व्यतीपातादिसंक्रमम् ।

अयने द्वे च न तथा पुण्यात्पुण्यतरं यथा ॥ १७८.२५ ॥

तस्मिन्पर्वणि देवेशि शङ्खं संस्पृश्य मानवः ।

स्नानमाचरते तोये मिश्रे गाङ्गेयनार्मदे ॥ १७८.२६ ॥

पुण्यं त्वशेषपुण्यानां मङ्गलानां च मङ्गलम् ।

विष्णुना विधृतो येन तस्माच्छान्तिः प्रचक्रमे ॥ १७८.२७ ॥

तत्रान्तं पापसङ्घस्य ध्रुवमाप्नोति मानवः ।

शङ्खोद्धारे नरः स्नात्वा तर्पयेत्पितृदेवताः ॥ १७८.२८ ॥

तृप्तास्ते द्वादशाब्दानि सिद्धिं च सार्वकामिकीम् ।

गङ्गावहे तु यः श्राद्धं शङ्खोद्धारे प्रदास्यति ॥ १७८.२९ ॥

तेन पिण्डप्रदानेन नृत्यन्ति पितरस्तथा ।

शङ्खोद्धारे नरः स्नात्वा पूजयेद्बलकेशवौ ॥ १७८.३० ॥

रात्रौ जागरणं कृत्वा शुद्धो भवति जाह्नवि ।

यत्त्वं लोककृतं कर्म मन्यसे भुवि दुःसहम् ॥ १७८.३१ ॥

तस्मिन्पर्वणि तत्सर्वं तत्र स्नात्वा व्यपोहय ।

एवमुक्त्वा नरश्रेष्ठ विष्णुश्चान्तरधीयत ॥ १७८.३२ ॥

तदाप्रभृति तत्तीर्थं गङ्गावाहकमुत्तमम् ।

ब्रह्माद्यैरृषिभिस्तात पारम्पर्यक्रमागतैः ॥ १७८.३३ ॥

तत्र तीर्थे तु यः स्नात्वा भक्तिभावेन भारत ।

गङ्गातीर्थे तु स स्नातः समस्तेषु न संशयः ॥ १७८.३४ ॥

तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ।

अनिवर्तिका गतिस्तेषां विष्णुलोकात्कदाचन ॥ १७८.३५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गङ्गावहकतीर्थमाहात्म्यवर्णनं नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १७९



अध्याय १७९

मार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र गौतमेश्वरमुत्तमम् ।

सर्वपापहरं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १७९.१ ॥

गौतमेन तपस्तप्तं तत्र तीर्थे युधिष्ठिर ।

दिव्यं वर्षसहस्रं तु ततस्तुष्टो महेश्वरः ॥ १७९.२ ॥

प्रणम्य शिरसा तत्र स्थापितः परमेश्वरः ।

स्थापितो गौतमेनेशो गौतमेश्वर उच्यते ॥ १७९.३ ॥

तत्र देवैश्च गन्धर्वैरृषिभिः पितृदैवतैः ।

सम्प्राप्ता ह्युत्तमा सिद्धिराराध्य परमेश्वरम् ॥ १७९.४ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।

पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥ १७९.५ ॥

बहवस्तन्न जानन्ति विष्णुमायाविमोहिताः ।

तत्र संनिहितं देवं शूलपाणिं महेश्वरम् ॥ १७९.६ ॥

ब्रह्मचारी तु यो भूत्वा तत्र तीर्थे नरेश्वर ।

स्नात्वार्चयेन्महादेवं सोऽश्वमेधफलं लभेत् ॥ १७९.७ ॥

ब्रह्मचारी तु यो भूत्वा तर्पयेत्पितृदेवताः ।

पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥ १७९.८ ॥

तत्र तीर्थे तु यो दानं भक्त्या दद्याद्द्विजातये ।

तदक्षयफलं सर्वं नात्र कार्या विचारणा ॥ १७९.९ ॥

मासे चाश्वयुजे राजन् कृष्णपक्षे चतुर्दशीम् ।

स्नात्वा तत्र विधानेन दीपकानां शतं ददेत् ॥ १७९.१० ॥

पूजयित्वा महादेवं गन्धपुष्पादिभिर्नरः ।

मुच्यते सर्वपापेभ्यो मृतः शिवपुरं व्रजेत् ॥ १७९.११ ॥
अष्टम्यां च चतुर्दश्यां कार्त्तिक्यां तु विशेषतः ।
उपोष्य प्रयतो भूत्वा घृतेन स्नापयेच्छिवम् ॥ १७९.१२ ॥
पञ्चगव्येन मधुना दध्ना वा शीतवारिणा ।
स च सर्वस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १७९.१३ ॥
भक्त्या तु पूजयेत्पश्चात्स लभेत्फलमुत्तमम् ।
बिल्वपत्रैरखण्डैश्च पुष्पैरुन्मत्तकोद्भवैः ॥ १७९.१४ ॥
कुशापामार्गसहितैः कदम्बद्रोणजैरपि ।
मल्लिकाकरवीरैश्च रक्तपीतैः सितासितैः ॥ १७९.१५ ॥
पुष्पैरन्यैर्यथालाभं यो नरः पूजयेच्छिवम् ।
नैरन्तर्येण षण्मासं योऽर्चयेद्गौतमेश्वरम् ।
सर्वान्कामानवाप्नोति मृतः शिवपुरं व्रजेत् ॥ १७९.१६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णनं नाम एकोनाशीत्यधिकशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८०



अध्याय १८०

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल दशाश्वमेधिकं परम् ।

तीर्थं सर्वगुणोपेतं महापातकनाशनम् ॥ १८०.१ ॥

यत्र गत्वा महाराज स्नात्वा सम्पूज्य चेश्वरम् ।

दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ १८०.२ ॥

युधिष्ठिर उवाच -

अश्वमेधो महायज्ञो बहुसम्भारदक्षिणः ।

अशक्यः प्राकृतैः कर्तुं कथं तेषां फलं लभेत् ॥ १८०.३ ॥

अत्याश्चर्यमिदं तत्त्वं त्वयोक्तं वदता सता ।

यथा मे जायते श्रद्धा दीर्घायुस्त्वं तथा वद ॥ १८०.४ ॥

मार्कण्डेय उवाच -

इदमाश्चर्यभूतं हि गौर्या पृष्टस्त्रियम्बकः ।

ततेऽहं सम्प्रवक्ष्यामि पृच्छते निपुणाय वै ॥ १८०.५ ॥

पुरा वृषस्थो देवेश ह्युमया सह शङ्करः ।

कदाचित्पर्यटन्पृथिवीं नर्मदातटमाश्रितः ॥ १८०.६ ॥

दशाश्वमेधिकं तीर्थं दृष्ट्वा देवो महेश्वरः ।

तीर्थं प्रत्यञ्जलिं बद्ध्वा नमश्चक्रे त्रिलोचनः ॥ १८०.७ ॥

कृताञ्जलिपुटं देवं दृष्ट्वा देवीदमब्रवीत् ॥ १८०.८ ॥

देव्युवाच -

किमेतद्देवदेवेश चराचरनमस्कृत ।
प्रह्वनम्राञ्जलिं बद्ध्वा भक्त्या परमया युतः ॥ १८०.९ ॥
एतदाश्चर्यमतुलं सर्वं कथय मे प्रभो ॥ १८०.१० ॥

ईश्वर उवाच -
प्रत्यक्षं पश्य तीर्थस्य फलं मा विस्मिता भव ।
वियत्स्था मे भुविस्थस्य क्षणं देवि स्थिरा भव ॥ १८०.११ ॥
एवमुक्त्वा तु देवेशो गौरवर्णो द्विजोऽभवत् ।
क्षुत्क्षामकण्ठो जटिलः शुष्को धमनिसंततः ॥ १८०.१२ ॥
उपविश्य भुवः पृष्ठे सुस्वरं मन्त्रमुच्चरन् ।
क्रमप्रियो महादेवो माधुर्येण प्रमोदयन् ॥ १८०.१३ ॥
श्रुत्वा तां मधुरां वाणीं स्वयं देवेन निर्मिताम् ।
संभ्रान्ता ब्राह्मणाः सर्वे स्नातुं ये तत्र चागताः ॥ १८०.१४ ॥
नित्यक्रिया च सर्वेषां विस्मृता श्रुतिविभ्रमात् ।
तं दृष्ट्वा पठमानं तु क्षुत्पिपासाभिपीडितम् ॥ १८०.१५ ॥
द्विजोऽन्यमन्त्रयत्कश्चिद्भक्त्या तं भोजनाय वै ।
प्रसादः क्रियतां ब्रह्मन्भोजनाय गृहे मम ॥ १८०.१६ ॥
अद्य मे सफलं जन्म ह्यद्य मे सफलाः क्रियाः ।
सर्वान्कामान्प्रदास्यन्ति प्रीता मेऽद्य पितामहाः ॥ १८०.१७ ॥
त्वयि भुक्ते द्विजश्रेष्ठ प्रसीद त्वं ध्रुवं मम ।
एवमुक्तो महादेवो द्विजरूपधरस्तदा ॥ १८०.१८ ॥
प्रहस्य प्रत्युवाचेदं ब्राह्मणं श्लक्ष्णया गिरा ।
मया वर्षसहस्रं तु निराहारं तपः कृतम् ॥ १८०.१९ ॥
इदानीं तु गृहे तस्य करिष्ये द्विजसत्तम ।
दशभिर्वाजिमेधैश्च येनेष्टं पारणं तथा ॥ १८०.२० ॥
इत्युक्तो देवदेवेन ब्राह्मणो विस्मयान्वितः ।
उत्तमाङ्गं विधुन्वन्वै जगाम स्वगृहं प्रति ॥ १८०.२१ ॥
एवं ते बहवो विप्राः प्रत्याख्याते निमन्त्रणे ।

पुराणार्थमजानन्तो नास्तिका बहवो गताः ॥ १८०.२२ ॥

अथ कश्चिद्द्विजो विद्वान्पुराणार्थस्य तत्त्ववित् ।

देवं निमन्त्रयामास द्विजरूपधरं शिवम् ॥ १८०.२३ ॥

तथैव सोऽपि देवेन प्रोक्तः स प्राह तं पुनः ।

मनसा चिन्तयित्वा तु पुराणोक्तं द्विजोत्तमः ॥ १८०.२४ ॥

स्मृतिवेदपुराणेषु यदुक्तं तत्तथा भवेत् ।

इति निश्चित्य तं विप्रमुवाच प्रहसन्निव ॥ १८०.२५ ॥

भोभो विप्र प्रतीक्षस्व यावदागमनं पुनः ।

इत्युक्त्वा तु द्विजो गत्वा दशाश्वमेधिकं परम् ॥ १८०.२६ ॥

स्नानं महालम्भनादि कृतं तेन द्विजन्मना ।

जपं श्राद्धं तथा दानं कृत्वा धर्मानुसारतः ॥ १८०.२७ ॥

संकल्प्य कपिलां तत्र पुराणोक्तविधानतः ।

समायात्त्वरितं तत्र यत्रासौ तिष्ठते द्विजः ॥ १८०.२८ ॥

अथागत्य द्विजं प्राह वाजिमेधः कृतो मया ।

उत्तिष्ठ मे गृहं रम्यं भोजनार्थं हि गम्यताम् ॥ १८०.२९ ॥

इत्युक्तः शङ्करस्तेन ब्राह्मणेनातिविस्मितः ।

उवाच ब्राह्मणं देव इदानीं त्वमितो गतः ॥ १८०.३० ॥

द्विजवर्य कथं चेष्टा दश यज्ञा महाधनाः ॥ १८०.३१ ॥

द्विज उवाच -

न विचारस्त्वया कार्यः कृता यज्ञा न संशयः ।

यदि वेदाः प्रमाणं तं भुवि देवा द्विजास्तथा ॥ १८०.३२ ॥

दशाश्वमेधिकं तीर्थं तथा सत्यं द्विजोत्तम ।

यदि वेदपुराणोक्तं वाक्यं निःसंशयं भवेत् ॥ १८०.३३ ॥

तदा प्राप्तं मया सर्वं नात्र कार्या विचारणा ।

एवमुक्तस्तु देवेश आस्तिक्यं तस्य चेतसः ॥ १८०.३४ ॥

विमृश्य बहुभिः किंचिदुत्तरं न प्रपद्यत ।

जगाम तद्गृहं रम्यं पठन्ब्रह्म सनातनम् ॥ १८०.३५ ॥

सम्प्राप्तं तं द्विजं भक्त्या पाद्यार्घ्येण तमर्चयत् ।

षड्रसं भोजनं तेन दत्तं पश्चाद्यथाविधि ॥ १८०.३६ ॥

ततो भुक्ते महादेवे सर्वदेवमये शिवे ।

पुष्पवृष्टिः पपाताशु गगनात्तस्य मूर्धनि ।

तस्यास्तिक्यं तु संलक्ष्य तुष्टः प्रोवाच शङ्करः ॥ १८०.३७ ॥

ईश्वर उवाच -

किं तेऽद्य क्रियतां ब्रूहि वरदोऽहं द्विजोत्तम ।

अदेयमपि दास्यामि एकचित्तस्य ते ध्रुवम् ॥ १८०.३८ ॥

ब्राह्मण उवाच -

यदि प्रीतोऽसि मे देव यदि देयो वरो मम ।

अस्मिंस्तीर्थे महादेव स्थातव्यं सर्वदैव हि ॥ १८०.३९ ॥

उपकाराय देवेश एष मे वर उत्तमः ।

एवमुक्तस्तु देवेन आरुरोह द्विजोत्तमः ॥ १८०.४० ॥

गन्धर्वाप्सरःसम्बाधं विमानं सार्वकामिकम् ।

पूज्यमानो गतस्तत्र यत्र लोका निरामयाः ॥ १८०.४१ ॥

मार्कण्डेय उवाच -

एतदाश्चर्यमतुलं दृष्ट्वा देवी सुविस्मिता ।

विस्मयोत्फुल्लनयना पुनः पप्रच्छ शङ्करम् ॥ १८०.४२ ॥

पार्वत्युवाच -

कथमेतद्भवेत्सत्यं यत्रेदमसमञ्जसम् ।

स्नानं कुर्वन्ति बहवो लोका ह्यत्र महेश्वर ॥ १८०.४३ ॥

तेषां तु स्वर्गगमनं यथैष स्वर्गतिं गतः ।

कथमेतत्समाचक्ष्व विस्मयः परमो मम ॥ १८०.४४ ॥

एतच्छ्रुत्वा तु देवेशः प्रहसन्प्रत्युवाच ताम् ।

वेदवाक्ये पुराणार्थे स्मृत्यर्थे द्विजभाषिते ॥ १८०.४५ ॥
विस्मयो हि न कर्तव्यो ह्यनुमानं हि तत्तथा ।
असंभाव्यं हि लोकानां पुराणे यत्प्रगीयते ॥ १८०.४६ ॥
यदि पक्षं पुरस्कृत्य लोकाः कुर्वन्ति पार्वति ।
तस्मान्न सिद्धिरेतेषां भवत्येको न विस्मयः ॥ १८०.४७ ॥
नास्तिका भिन्नमर्यादा ये निश्चयबहिष्कृताः ।
तेषां सिद्धिर्न विद्येत आस्तिक्याद्भवते ध्रुवम् ॥ १८०.४८ ॥
श्रुत्वाख्यानमिदं देवी ववन्दे तीर्थमुत्तमम् ।
सर्वपापहरं पुण्यं नर्मदायां व्यवस्थितम् ॥ १८०.४९ ॥

मार्कण्डेय उवाच -
दशाश्वमेधं राजेन्द्र सर्वतीर्थोत्तमोत्तमम् ।
तीर्थं सर्वगुणोपेतं महापातकनाशनम् ॥ १८०.५० ॥
तत्रागता महाभागा स्नातुकामा सरस्वती ।
पुण्यानां परमा पुण्या नदीनामुत्तमा नदी ॥ १८०.५१ ॥
नाममात्रेण यस्यास्तु सर्वपापैः प्रमुच्यते ।
स्नातास्तत्र दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ १८०.५२ ॥
दशाश्वमेधे सा राजन्नियता ब्रह्मचारिणी ।
आराधयित्वा देवेशं परं निर्वाणमागतीः ॥ १८०.५३ ॥
कालुष्यं ब्रह्मसम्भूता संवत्सरसमुद्भवम् ।
प्रक्षालयितुमायाति दशम्यामाश्विनस्य च ॥ १८०.५४ ॥
उपोष्य रजनीं तां तु सम्पूज्य त्रिपुरान्तकम् ।
राजन्निष्कल्मषा यान्ति श्वोभूते शाश्वतं पदम् ॥ १८०.५५ ॥

युधिष्ठिर उवाच -
सरस्वती महापुण्या नदीनामुत्तमा नदी ।

श्रीमार्कण्डेय उवाच -

राजन्नाश्वयुजे मासि दशम्यां तद्विशिष्यते ।

पार्थिवेषु च तीर्थे तु सर्वेष्वेव न संशयः ॥ १८०.५६ ॥

दशाश्वमेधिके राजन्नित्यं हि दशमी शुभा ।

विशेषादाश्विने शुक्ला महापातकनाशिनी ॥ १८०.५७ ॥

तस्या स्नात्वार्चयेद्देवानुपवासपरायणः ।

श्राद्धं कृत्वा विधानेन पश्चात्सम्पूजयेच्छिवम् ॥ १८०.५८ ॥

तत्रस्थां पूजयेद्देवीं स्नातुकामां सरस्वतीम् ।

नमो नमस्ते देवेशि ब्रह्मदेहसमुद्भवे ॥ १८०.५९ ॥

कुरु पापक्षयं देवि संसारान्मां समुद्धर ।

गन्धधूपैश्च सम्पूज्य ह्यर्चयित्वा पुनःपुनः ॥ १८०.६० ॥

दश प्रदक्षिणा दत्त्वा सूत्रेण परिवेष्टयेत् ।

कपिलां तु ततो विप्रे दद्याद्विगतमत्सरः ॥ १८०.६१ ॥

सर्वलक्षणसम्पन्नां सर्वोपस्करसंयुताम् ।

दत्त्वा विप्राय कपिलां न शोचति कृताकृते ॥ १८०.६२ ॥

पश्चाज्जागरणं कुर्याद्धृतेनाज्वाल्य दीपकम् ।

पुराणपठनेनैव नृत्यगीतविवादनैः ॥ १८०.६३ ॥

वेदोक्तैश्चैव पूजयेच्छशिशेखरम् ।

प्रभाते विमले पश्चात्स्नात्वा वै नर्मदाजले ॥ १८०.६४ ॥

ब्राह्मणान् भोजयेद्भक्त्या शिवभक्तांश्च योगिनः ।

एवं कृते ततो राजन् सम्यक्तीर्थफलं लभेत् ॥ १८०.६५ ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेच्छङ्करं नरः ।

दशाश्वमेधावभृथं लभते पुण्यमुत्तमम् ॥ १८०.६६ ॥

पूतात्मा तेन पुण्येन रुद्रलोकं स गच्छति ।

आरूढः परमं यानं कामगं च सुशोभनम् ॥ १८०.६७ ॥

तत्र दिव्याप्सरोभिस्तु वीज्यमानोऽथ चामरैः ।

क्रीडते सुचिरं कालं जयशब्दादिमङ्गलैः ॥ १८०.६८ ॥

ततोऽवतीर्णः कालेन इह राजा भवेद्ध्रुवम् ।

हस्त्यश्वरथसम्पन्नो महाभोगी परंतपः ॥ १८०.६९ ॥

दशाश्वमेधे यद्दानं दीयते शिवयोगिनाम् ।

दशाश्वमेधसदृशं भवेत्तन्नात्र संशयः ॥ १८०.७० ॥

सर्वेषामेव यज्ञानामश्वमेधो विशिष्यते ।

दुर्लभः स्वल्पवित्तानां भूरिशः पापकर्मणाम् ॥ १८०.७१ ॥

तत्र तीर्थे तु राजेन्द्र दुर्लभोऽपि सुरासुरैः ।

प्राप्यते स्नानदानेन इत्येवं शङ्करोऽब्रवीत् ॥ १८०.७२ ॥

अकामो वा सकामो वा मृतस्तत्र नरेश्वर ।

देवत्वं प्राप्नुयात्सोऽपि नात्र कार्या विचारणा ॥ १८०.७३ ॥

अग्निप्रवेशं यः कुर्यात्तत्र तीर्थे नरोत्तम ।

अग्निलोके वसेत्तावद्यावदाभूतसम्प्लवम् ॥ १८०.७४ ॥

जलप्रवेशं यः कुर्यात्तत्र तीर्थे नराधिप ।

ध्यायमानो महादेवं वारुणं लोकमाप्नुयात् ॥ १८०.७५ ॥

दशाश्वमेधे यः कश्चिच्छूरवृत्त्या तनुं त्यजेत् ।

अक्षया नु गतिस्तस्य इत्येवं श्रुतिनोदना ॥ १८०.७६ ॥

न तां गतिं यान्ति भृगुप्रपातिनो न दण्डिनो नैव च सांख्ययोगिनः ।

ध्वजाकुले दुन्दुभिशङ्खनादिते क्षणेन यां यान्ति महाहवे मृताः ॥ १८०.७७ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।

अक्षयांल्लभते लोकान्यदि क्लीबं न भाषते ॥ १८०.७८ ॥

दशाश्वमेधे संन्यासं यः करोति विधानतः ।

अनिवर्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ १८०.७९ ॥

दशाश्वमेधे यत्पुण्यं संक्षेपेण युधिष्ठिर ।

कथितं परया भक्त्या सर्वपापप्रणाशनम् ॥ १८०.८० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दशाश्वमेधतीर्थमाहात्म्यवर्णनं नामाशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८१

https://sa.wikisource.org/s/ffd
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

अतः परं प्रवक्ष्यामि भृगुतीर्थस्य विस्तरम् ।

यं श्रुत्वा ब्रह्महा गोघ्नो मुच्यते सर्वपातकैः ॥ १८१.१ ॥

तत्र तीर्थे तु विख्यातं वृषखातमिति श्रुतम् ।

भृगुणा तत्र राजेन्द्र तपस्तप्तं पुरा किल ॥ १८१.२ ॥

युधिष्ठिर उवाच -

भृगुकच्छे स विप्रेन्द्रो निवसन् केन हेतुना ।

तपस्तप्त्वा सुविपुलं परां सिद्धिमुपागतः ॥ १८१.३ ॥

को वा वृष इति प्रोक्तस्तत्खातं येन खानितम् ।

एतत्सर्वं यथान्यायं कथयस्व ममानघ ॥ १८१.४ ॥

श्रीमार्कण्डेय उवाच -

एष प्रश्नो महाराज यस्त्वया परिपृच्छितः ।

तत्सर्वं कथयिष्यामि शृणुष्वैकमना नृप ॥ १८१.५ ॥

षष्ठस्तु ब्रह्मणः पुत्रो मानसो भृगुसत्तमः ।

तपश्चचार विपुलं श्रीवृते क्षेत्र उत्तमे ॥ १८१.६ ॥

दिव्यं वर्षसहस्रं तु संशुष्को मुनिसत्तमः ।

निराहारो निरानन्दः काष्ठपाषाणवत्स्थितः ॥ १८१.७ ॥

ततः कदाचिद्देवेशो विमानवरमास्थितः ।

उमया सहितः श्रीमांस्तेन मार्गेण चागतः ॥ १८१.८ ॥

दृष्ट्वा तत्र महाभागं भृगुं वल्मीकवत्स्थितम् ।

उवाच देवी देवेशं किमिदं दृश्यते प्रभो ॥ १८१.९ ॥

ईश्वर उवाच -

भृगुर्नाम महादेवि तपस्तस्त्वा सुदारुणम् ।

दिव्यं वर्षसहस्रं तु मम ध्यानपरायणः ॥ १८१.१० ॥

जलबिन्दु कुशाग्रेण मासे मासे पिबेच्च सः ।

संवत्सरशतं साग्रं तिष्ठते च वरानने ॥ १८१.११ ॥

तच्छ्रुत्वा वचनं गौरी क्रोधसंवर्तितेक्षणा ।

उवाच देवी देवेशं शूलपाणिं महेश्वरम् ॥ १८१.१२ ॥

सत्यमुग्रोऽसि लोके त्वं ख्यापितो वृषभध्वज ।

निष्कारुण्यो दुराराध्यः सर्वभूतभयंकरः ॥ १८१.१३ ॥

दिव्यं वर्षसहस्रं तु ध्यायमानस्य शङ्करम् ।

ब्राह्मणस्य वरं कस्मान्न प्रयच्छसि शंस मे ॥ १८१.१४ ॥

एवमुक्तोऽथ देवेशः प्रहस्य गिरिनन्दिनीम् ।

उवाच नरशार्दूल मेघगम्भीरया गिरा ॥ १८१.१५ ॥

स्त्री विनश्यति गर्वेण तपः क्रोधेन नश्यति ।

गावो दूरप्रचारेण शूद्रान्नेन द्विजोत्तमाः ॥ १८१.१६ ॥

क्रोधान्वितो द्विजो गौरी तेन सिद्धिर्न विद्यते ।

वर्षायुतैस्तथा लक्षैर्न किंचित्कारणं प्रिये ॥ १८१.१७ ॥

एवम्भूतस्य तस्यापि क्रोधस्य चरितं महत् ।

एवमुक्त्वा ततः शम्भुर्वृषं दध्यौ च तत्क्षणे ॥ १८१.१८ ॥

वृषो हि भगवन्ब्रह्मा वृषरूपी महेश्वरः ।

ध्यानप्राप्तः क्षणादेव गर्जयन् वै मुहुर्मुहुः ॥ १८१.१९ ॥

किं करोमि सुरश्रेष्ठ ध्यातः केनैव हेतुना ।

करोमि कस्य निधनमकाले परमेश्वर ॥ १८१.२० ॥

ईश्वर उवाच -

कोपयस्व द्विजश्रेष्ठं गत्वा त्वं भृगुसत्तमम् ।

येन मे श्रद्दधत्येषा गौरी लोकैकसुन्दरी ॥ १८१.२१ ॥

एतच्छ्रुत्वा वृषो गत्वा धर्षणार्थं द्विजोत्तमम् ।

नर्मदायास्तटे रम्ये समीपे चाश्रमे भृगुः ॥ १८१.२२ ॥
ततः शृङ्गैर्गृहीत्वा तु प्रक्षिप्तो नर्मदाजले ।
ततः क्रुद्धो भृगुस्तत्र दण्डहस्तो महामुनिः ॥ १८१.२३ ॥
पशुवत्ते वधिष्यामि दण्डघातेन मस्तके ।
शिखायज्ञोपवीते च परिधानं वरासने ॥ १८१.२४ ॥
सुसंवृतं कृतं तेन धावन्वै पृष्ठतो ब्रवीत् ॥ १८१.२५ ॥

भृगुरुवाच -
पापकर्मन्दुराचार कथं यास्यसि मे वृष ।
अवमानं समुत्पाद्य कृत्वा गर्तं खुरैस्तथा ॥ १८१.२६ ॥
गर्जयित्वा महानादं ततो विप्रमपातयत् ।
आत्मानं पातितं ज्ञात्वा वृषेण परमेष्ठिना ॥ १८१.२७ ॥
भृगुः क्रोधेन जज्वाल हुताहुतिरिवानलः ।
करे गृह्य महादण्डं ब्रह्मदण्डमिवापरम् ॥ १८१.२८ ॥
हन्तुकामो वृषं विप्रोऽभ्यधावत युधिष्ठिर ।
धावमानं ततो दृष्ट्वा स वृषः पूर्वसागरे ॥ १८१.२९ ॥
जम्बूद्वीपं कुशां क्रौञ्चं शाल्मलिं शाकमेव च ।
गोमेदं पुष्करं प्राप्तः पूर्वतो दक्षिणापथम् ॥ १८१.३० ॥
उत्तरं पश्चिमं चैव द्वीपाद्द्वीपं नरेश्वर ।
पातालं सुतलं पश्चाद्वितलं च तलातलम् ॥ १८१.३१ ॥
तामिस्रमन्धतामिस्रं पातालं सप्तमं ययौ ।
ततो जगाम भूर्लोकं प्राणार्थी स वृषोत्तमः ॥ १८१.३२ ॥
भुवः स्वश्चैव च महस्तपः सत्यं जनस्तथा ।
अनुगम्यमानो विप्रेण न शर्म लभते क्वचित् ॥ १८१.३३ ॥
पापं कृत्वैव पुरुषः कामक्रोधबलार्दितः ।
ततो जगाम शरणं ब्रह्माणं विष्णुमेव च ॥ १८१.३४ ॥
इन्द्रं चन्द्रं तथादित्यैर्याम्यवारुणमारुतैः ।
यदा सर्वैः परित्यक्तो लोकालोकैः सुरेश्वरैः ॥ १८१.३५ ॥

तदा देवं नमस्कृत्वा रक्ष रक्षस्व चाब्रवीत् ।
वध्यमानं महादेवो भृगुणा परमेष्ठिना ॥ १८१.३६ ॥
सर्वलोकैः परित्यक्तमनाथमिव तं प्रभो ।
दृष्ट्वा श्रान्तं वृषं देवः पतितं चरणाग्रतः ॥ १८१.३७ ॥
ततः प्रोवाच भगवान् स्मितपूर्वमिदं वचः ॥ १८१.३८ ॥

ईश्वर उवाच -
पश्य देवि महाभागे शमं विप्रस्य सुन्दरि ॥ १८१.३९ ॥

पार्वत्युवाच -
यावद्विप्रो न चास्माकं कुप्यते परमेश्वर ।
तावद्वरं प्रयच्छाशु यदि चेच्छसि मत्प्रियम् ॥ १८१.४० ॥
ततो भस्मी जटी शूली चन्द्रार्धकृतशेखरः ।
उमार्द्धदेहो भगवान्भूत्वा विप्रमुवाच ह ॥ १८१.४१ ॥
भोभो द्विजवरश्रेष्ठ क्रोधस्ते न शमं गतः ।
यस्मात्तस्मादिदं तात क्रोधस्थानं भविष्यति ॥ १८१.४२ ॥
ततो दृष्ट्वा च तं शम्भुं भृगुः श्रेष्ठं त्रिलोचनम् ।
जानुभ्यामवनिं गत्वा इदं स्तोत्रमुदैरयत् ॥ १८१.४३ ॥

भृगुरुवाच -
प्रणिपत्य भूतनाथं भवोद्भवं भूतिदं भयातीतम् ।
भवभीतो भुवनपते विज्ञप्तुं किंचिदिच्छामि ॥ १८१.४४ ॥
त्वद्गुणनिकरान्वक्तुं का शक्तिर्मानुषस्यास्य ।
वासुकिरपि न तावद्वक्तुं वदनसहस्रं भवेद्यस्य ॥ १८१.४५ ॥
भक्त्या तथापि शङ्कर शशिधर करजालधवलिताशेष ।
स्तुतिमुखरस्य महेश्वर प्रसीद तव चरणनिरतस्य ॥ १८१.४६ ॥
सत्त्वं रजस्तमस्त्वं स्थित्युत्पत्तिविनाशनं देव ।
भवभीतो भुवनपते भुवनेश शरणनिरतस्य ॥ १८१.४७ ॥

यमनियमयज्ञदानं वेदाभ्यासश्च धारणायोगः ।
त्वद्भक्तेः सर्वमिदं नार्हन्ति वै कलासहस्रांशम् ॥ १८१.४८ ॥
उत्कृष्टरसरसायनखड्गां जनविवरपादुकासिद्धिः ।
चिह्नं हि तव नतानां दृश्यत इह जन्मनि प्रकटम् ॥ १८१.४९ ॥
शाठ्येन यदि प्रणमति वितरसि तस्यापि भूतिमिच्छया देव ।
भवति भवच्छेदकरी भक्तिर्मोक्षाय निर्मिता नाथ ॥ १८१.५० ॥
परदारपरस्वरतं परपरिभवदुःखशोकसंतप्तम् ।
परवदनवीक्षणपरं परमेश्वर मां परित्राहि ॥ १८१.५१ ॥
अधिकाभिमानमुदितं क्षणभङ्गुरविभवविलसन्तम् ।
क्रूरं कुपथाभिमुखं शङ्कर शरणागतं परित्राहि ॥ १८१.५२ ॥
दीनं द्विजं वरार्थे बन्धुजने नैव पूरिता ह्याशा ।
छिन्द्धि महेश्वर तृष्णां किं मूढं मां विडम्बयसि ॥ १८१.५३ ॥
तृष्णां हरस्व शीघ्रं लक्ष्मीं दद हृदयवासिनीं नित्यम् ।
छिन्द्धि मदमोहपाशं मामुत्तारय भवाच्च देवेश ॥ १८१.५४ ॥
करुणाभ्युदयं नाम स्तोत्रमिदं सर्वसिद्धिदं दिव्यम् ।
यः पठति भृगुं स्मरति च शिवलोकमसौ प्रयाति देहान्ते ॥ १८१.५५ ॥
एतच्छ्रुत्वा महादेवः स्तोत्रं च भृगुभाषितम् ।
उवाच वरदोऽस्मीति देव्या सह वरोत्तमम् ॥ १८१.५६ ॥

भृगुरुवाच -
प्रसन्नो देवदेवेश यदि देयो वरो मम ।
सिद्धिक्षेत्रमिदं सर्वं भविता मम नामतः ॥ १८१.५७ ॥
भवद्भिः सन्निधानेन स्थातव्यं हि सहोमया ।
देवक्षेत्रमिदं पुण्यं येन सर्वं भविष्यति ॥ १८१.५८ ॥
अत्र स्थाने महास्थानं करोमि जगदीश्वर ।
तव प्रसादाद्देवेश पूर्यन्तां मे मनोरथाः ॥ १८१.५९ ॥

ईश्वर उवाच -

श्रिया कृतमिदं पूर्वं किं न ज्ञातं त्वया द्विज ।

अनुमान्य श्रियं देवीं यदीयं मन्यते भवान् ॥ १८१.६० ॥

कुरुष्व यदभिप्रेतं त्वत्कृतं नः तदन्यथा ।

एवमुक्त्वा गते देवे स्नात्वा गत्वा भृगुः श्रियम् ॥ १८१.६१ ॥

कृत्वा च पारणं तत्र वसन्विप्रस्तया सह ।

श्रिया च सहितः काल इदं वचनमब्रवीत् ॥ १८१.६२ ॥

भृगुरुवाच -

यदि ते रोचते भद्रे दुःखासीनं च ते यदि ।

त्वया वृते महाक्षेत्रे स्वीयं स्थानं करोम्यहम् ॥ १८१.६३ ॥

श्रीरुवाच -

मम नाम्ना तु विप्रर्षे तव नाम्ना तु शोभनम् ।

स्थानं कुरुष्वाभिप्रेतमविरोधेन मे मतिः ॥ १८१.६४ ॥

भृगुरुवाच -

कच्छपाधिष्ठितं ह्येतत्तस्य पृष्ठिगतं रमे ।

संमन्त्र्य सहितं तेन शोभनं भवती कुरु ॥ १८१.६५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भृगुकच्छोत्पत्तिवर्णनं नामैकाशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८२



अध्याय १८२

श्रीमार्कण्डेय उवाच -

ततो भृगुः श्रिया चैव समेतः कच्छपं गतः ।

अभिनन्द्य यथान्यायमुवाच वचनं शुभम् ॥ १८२.१ ॥

त्वया धृता धरा सर्वा तथा लोकाश्चराचराः ।

तथैव पुण्यभावत्वात्स्थितस्तत्र महामते ॥ १८२.२ ॥

चातुर्विद्यस्य संस्थानं करोमि रमया सह ।

यदि त्वं मन्यसे देव तदादेशय मां विभो ॥ १८२.३ ॥

कूर्म उवाच -

एवमेव द्विजश्रेष्ठ मम नामाङ्कितं पुरम् ।

भविष्यति महत्कालं ममोपरि सुसंस्थितम् ॥ १८२.४ ॥

अचलं सुस्थिरं तात न भीः कार्या सुलोचने ।

एतच्छ्रुत्वा शुभं वाक्यं कच्छपस्य मुखाच्च्युतम् ॥ १८२.५ ॥

हृष्टस्तुष्टः श्रिया सार्द्धं पद्मयोनिसुतो भृगुः ।

अभीचि उदये प्राप्ते कृतकौतुकमङ्गलः ॥ १८२.६ ॥

नन्दने वत्सरे माघे पञ्चम्यां भरतर्षभ ।

शस्ते तु ह्युत्तरायोगे कुम्भस्थे शशिमण्डले ॥ १८२.७ ॥

रेवाया उत्तरे तीरे गम्भीरे चाभिवारुणि ।

प्रागुदक्प्रवणे देशे कोटितीर्थसमन्वितम् ॥ १८२.८ ॥

क्रोशप्रमाणं तत्क्षेत्रं प्रासादशतसंकुलम् ।

अचिरेणैव कालेन तपोबलसमन्वितः ।

विचिन्त्य विश्वकर्माणं चकार भृगुसत्तमः ॥ १८२.९ ॥

ब्राह्मणा वेदविद्वांसः क्षत्रिया राज्यपालकाः ।

वैश्या वृत्तिरतास्तत्र शूद्राः शुश्रूषकास्त्रिषु ॥ १८२.१० ॥

एवं श्रिया वृतं क्षेत्रं परमानन्दनन्दितम् ।

निर्मितं भृगुणा तात सर्वपातकनाशनम् ।

इति भृगुकच्छोत्पत्तिः ॥ १८२.११ ॥

मार्कण्डेय उवाच -

ततः कालेन महता कस्मिंश्चित्कारणान्तरे ।

देवलोकं जगामाशु लक्ष्मीरृषिसमागमे ॥ १८२.१२ ॥

समर्प्य कुञ्चिकाट्टालं भृगवे ब्रह्मवादिने ।

पालयस्व यथार्थं वै स्थानकं मम सुव्रत ॥ १८२.१३ ॥

देवकार्याण्यशेषाणि कृत्वा श्रीः पुनरागता ।

आजगाम रमा देवी भृगुकच्छं त्वरान्विता ॥ १८२.१४ ॥

प्रार्थितं कुञ्चिकाट्टालं स्वगृहं सपरिग्रहम् ।

भृगुर्यदा तदा पार्थ मिथ्या नास्ति तदा वदत ॥ १८२.१५ ॥

एव विवादः सुमहान्संजातश्च नरेश्वर ।

ममेति मम चैवेति परस्परसमागमे ॥ १८२.१६ ॥

ततः कालेन महता भृगुणा परमर्षिणा ।

चातुर्विद्यप्रमाणार्थं चकार महतीं स्थितिम् ॥ १८२.१७ ॥

अस्मदीयं यथा सर्वं नगरं मृगलोचने ।

चातुर्विद्या द्विजाः सर्वे तथा जानन्ति सुन्दरि ॥ १८२.१८ ॥

श्रीरुवाच -

प्रमाणं मम विप्रेन्द्र चातुर्वण्या न संशयः ।

मदीयं वा त्वदीयं वा कथयन्तु द्विजोत्तमाः ॥ १८२.१९ ॥

ततः समस्तैर्विबुधैः सम्प्रधार्य परस्परम् ।

द्विधा तैर्वाक्स्थलं दृष्ट्वा ब्राह्मणा नृपसंहितम् ॥ १८२.२० ॥

अष्टादशसहस्राणि नोचुर्वै किंचिदुत्तरम् ।

अष्टादशसहस्रेषु भृगुकोपभयान्नृप ।

उक्तं च तालकं हस्ते यस्य तस्येदमुत्तरम् ॥ १८२.२१ ॥

एतच्छ्रुत्वा तु सा देवी निगमं नैगमैः कृतम् ।

क्रोधेन महताविष्टा शशाप द्विजपुंगवान् ॥ १८२.२२ ॥

श्रीदेव्युवाच -

यस्मात्सत्यं समुत्सृज्य लोभोपहतमानसैः ।

मदीयं लोपितं स्थानं तस्माच्छृण्वन्तु मे गिरम् ॥ १८२.२३ ॥

त्रिपौरुषा भवेद्विद्या त्रिपुरुषं न भवेद्धनम् ।

न द्वितीयस्तु वो वेदः पठितो भवति द्विजाः ॥ १८२.२४ ॥

गृहाणि न द्विभौमानि न च भूतिः स्थिरा द्विजाः ।

पक्षपातेन वो धर्मो न च निःश्रेयभावतः ॥ १८२.२५ ॥

इष्टो गोत्रजनः कश्चिल्लोभेनावृतमानसः ।

न च द्वैधं परित्यज्य ह्येकं सत्यं भविष्यति ॥ १८२.२६ ॥

अद्यप्रभृति सर्वेषामहङ्कारो द्विजन्मनाम् ।

न पिता पुत्रवाक्येन न पुत्रः पितृकर्मणि ॥ १८२.२७ ॥

अहङ्कारकृताः सर्वे भविष्यन्ति न संशयः ।

इति शस्वा रमादेवी तदैव च दिवं ययौ ॥ १८२.२८ ॥

ततो गतायां वै लक्ष्म्यां देवा ब्रह्मर्षयोऽमलाः ।

क्रोधलोभमिदं स्थानं तेऽपि चोक्त्वा दिवं ययुः ॥ १८२.२९ ॥

गतां दृष्ट्वा ततो देवीमृषींश्चैव तपोधनान् ।

भृगुश्च परमेष्ठी स विषादमगमत्परम् ।

प्रसादयामास पुनः शङ्करं त्रिपुरान्तकम् ॥ १८२.३० ॥

तपसा महता पार्थ ततस्तुष्टो महेश्वरः ।

उवाच वचनं काले हर्षयन् भृगुसत्तमम् ॥ १८२.३१ ॥

किं विषण्णोऽसि विप्रेन्द्र किं वा सन्तापकारणम् ।

मयि प्रसन्नेऽपि तव ह्येतत्कथय मेऽनघ ॥ १८२.३२ ॥

भृगुरुवाच -

शापयित्वा द्विजान्सर्वान्पुरा लक्ष्मीर्विनिर्गता ।
अपवित्रमिदं चोक्त्वा ततो देवा विनिर्गताः ॥ १८२.३३ ॥

ईश्वर उवाच -
पुरा मया यथा प्रोक्तं तत्तथा न तदन्यथा ।
क्रोधस्थानमसंदेहं तथान्यदपि तच्छृणु ॥ १८२.३४ ॥
तत्र स्थानसमुद्भूता महद्भयविवर्जिताः ।
ब्राह्मणा मत्प्रसादेन भविष्यन्ति न संशयः ॥ १८२.३५ ॥
वेदविद्याव्रतस्नाताः सर्वशास्त्रविशारदाः ।
येऽपि ते शतसाहस्रास्त्वरिता ह्यागतास्त्विह ॥ १८२.३६ ॥
अपठस्यापि मूर्खस्य सर्वावस्थां गतस्य च ।
उत्तरादुत्तरं शक्रो दातुं न तु भृगूत्तम ॥ १८२.३७ ॥
कोटितीर्थमिदं स्थानं सर्वपापप्रणाशनम् ।
अद्यप्रभृति विप्रेन्द्र भविष्यति न संशयः ॥ १८२.३८ ॥
मत्प्रसादाद्देवगणैः सेवितं च भविष्यति ।
भृगुक्षेत्रे मृता ये तु कृमिकीटपतंगकाः ॥ १८२.३९ ॥
वासस्तेषां शिवे लोके मत्प्रसादाद्भविष्यति ।
वृषखाते नरः स्नात्वा पूजयित्वा महेश्वरम् ॥ १८२.४० ॥
सर्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ।
भृगुतीर्थे नरः स्नात्वा तर्पयेत्पितृदेवताः ॥ १८२.४१ ॥
तस्य ते द्वादशाब्दानि शान्तिं गच्छन्ति तर्पिताः ।
दधिक्षीरेण तोयेन घृतेन मधुना सह ॥ १८२.४२ ॥
ये स्नपन्ति विरूपाक्षं तेषां वासस्त्रिविष्टपे ।
मत्प्रसादाद्द्विजश्रेष्ठ सर्वदेवानुसेवितम् ॥ १८२.४३ ॥
भविष्यति भृगुक्षेत्रं कुरुक्षेत्रादिभिः समम् ।
मार्तण्डग्रहणे प्राप्ते यवं कृत्वा हिरण्मयम् ॥ १८२.४४ ॥
दत्त्वा शिरसि यः स्नाति भृगुक्षेत्रे द्विजोत्तम ।
अविचारेण तं विद्धि संस्नातं कुरुजाङ्गले ॥ १८२.४५ ॥

अहं चैव वसिष्यामि अम्बिका च मम प्रिया ।
सर्वदुःखापहा देवी नाम्ना सौभाग्यसुन्दरी ॥ १८२.४६ ॥
वसिष्यामि तया देव्या सहितो भृगुकच्छके ।
एवमुक्त्वा स्थितो देवो भृगुकच्छेऽम्बिका तथा ॥ १८२.४७ ॥
भृगुस्तु स्वपुरं प्रायाद्ब्रह्मघोषनिनादितम् ।
ऋग्यजुःसामघोषेण ह्यथर्वणनिनादितम् ॥ १८२.४८ ॥
तत्र तीर्थे तु यः स्नात्वा वृषमुत्सृजते नरः ।
स याति शिवसायुज्यमित्येवं शङ्करोऽब्रवीत् ॥ १८२.४९ ॥
तत्र तीर्थे तु यः स्नात्वा चैत्रे मासि समाचरेत् ।
दद्याच्च लवणं विप्रे पूज्य सौभाग्यसुन्दरीम् ॥ १८२.५० ॥
गोभूहिरण्यं विप्रेभ्यः प्रीयेतां ललिताशिवौ ।
न दुःखं दुर्भगत्वं च वियोगं पतिना सह ॥ १८२.५१ ॥
प्राप्नोति नारी राजेन्द्र भृगुतीर्थाप्लवेन च ।
यस्तु नित्यं भृगुं देवं पश्येद्वै पाण्डुनन्दन ॥ १८२.५२ ॥
आ ब्रह्मसदनं यावत्तत्रस्थैर्दैवतैः सह ।
यत्फलं समवाप्नोति तच्छृणुष्व नृपोत्तम ॥ १८२.५३ ॥
सुवर्णशृङ्गीं कपिलां पयस्विनीं साध्वीं सुशीलां तरुणीं सवत्साम् ।
दत्त्वा द्विजे सर्वव्रतोपपन्ने फलं च यत्स्यात्तदिहैव नूनम् ॥ १८२.५४ ॥
समाः सहस्राणि तु सप्त वै जले म्रियेल्लभेद्द्वादशवह्निमध्ये ।
त्यजंस्तनुं शूरवृत्त्या नरेन्द्र शक्रातिथ्यं याति वै मर्त्यधर्मा ॥ १८२.५५ ॥
आख्यानमेतच्च सदा यशस्यं स्वर्ग्यं धन्यं पुत्र्यमायुष्यकारि ।
शृण्वंल्लभेत्सर्वमेतद्धि भक्त्या पर्वणि पर्वण्याजमीढस्सदैव ॥ १८२.५६ ॥
संन्यासं कुरुते यस्तु भृगुतीर्थे विधानतः ।
स मृतः परमं स्थानं गच्छेद्वै यच्च दुर्लभम् ॥ १८२.५७ ॥
एतच्छ्रुत्वा भृगुश्रेष्ठो देवदेवेन भाषितम् ।
प्रहृष्टवदनो भूत्वा तत्रैव संस्थितो द्विजः ॥ १८२.५८ ॥
तिरोभावं गते देवे भृगुः श्रेष्ठो द्विजोत्तमः ।
स्वमूर्ति तत्र मुक्त्वा तु ब्रह्मलोकं जगाम ह ॥ १८२.५९ ॥

भृगुकच्छस्य चोत्पत्तिः कथिता तव पाण्डव ।

संक्षेपेण महाराज सर्वपामप्रणाशनी ॥ १८२.६० ॥

एतत्पुण्यं पापहरं क्षेत्रं देवेन कीर्तितम् ।

चतुर्युगसहस्रेण पितामहदिनं स्मृतम् ॥ १८२.६१ ॥

प्राप्ते ब्रह्मदिने विप्रा जायते युगसम्भवः ।

न पश्यामि त्विदं क्षेत्रमिति रुद्रः स्वयं जगौ ॥ १८२.६२ ॥

यः शृणोति त्विदं भक्त्या नारी वा पुरुषोऽपि वा ।

स याति परमं लोकमिति रुद्रः स्वयं जगौ ॥ १८२.६३ ॥

देवखाते नरः स्नात्वा पिण्डदानादिसत्क्रियाम् ।

यां करोति नृपश्रेष्ठ तामक्षयफलां विदुः ॥ १८२.६४ ॥

य इमं शृणुयाद्भक्त्या भृगुकच्छस्य विस्तरम् ।

कोटितीर्थफलं तस्य भवेद्वै नात्र संशयः ॥ १८२.६५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भृगुकच्छतीर्थमाहात्म्यवर्णनं नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८३



अध्याय १८३

श्रीमार्कण्डेय उवाच -

अतः परं महाराज गच्छेत्केदारसंज्ञकम् ।

यत्र गत्वा महाराज श्राद्धं कृत्वा पिबेज्जलम् ।

सम्पूज्य देवदेवेशं केदारोत्थं फलं लभेत् ॥ १८३.१ ॥

युधिष्ठिर उवाच -

कथमत्र सुरश्रेष्ठ केदाराख्यः स्थितः स्वयम् ।

उत्तरे नर्मदाकूले एतद्विस्तरतो वद ॥ १८३.२ ॥

श्रीमार्कण्डेय उवाच -

पुरा कृतयुगस्यादौ शङ्करस्तु महेश्वरः ।

भृगुणाराधितः शप्तः श्रिया च भृगुकच्छके ॥ १८३.३ ॥

अपवित्रमिदं क्षेत्रं सर्ववेदविवर्जितम् ।

भविष्यति नृपश्रेष्ठ गतेत्युक्त्वा हरिप्रिया ॥ १८३.४ ॥

तपश्चचार विपुलं भृगुर्वर्षसहस्रकम् ।

वायुभक्षो निराहारश्चिरं धमनिसंततः ॥ १८३.५ ॥

ततः प्रत्यक्षतामागाल्लिङ्गीभूतो महेश्वरः ।

प्रादुर्भूतस्तु सहसा भित्त्वा पातालसप्तकम् ॥ १८३.६ ॥

ददर्शाथ भृगुर्देवमौत्पलीं केलिकामिव ।

स्तुतिं चक्रे स देवाय स्थाणवे त्र्यम्बकेति च ॥ १८३.७ ॥

एवं स्तुतः स भगवान् प्रोवाच प्रहसन्निव ।

पुनः पुनर्भृगुं मत्तः किंतु प्रार्थयसे मुने ॥ १८३.८ ॥

भृगुरुवाच -

पञ्चक्रोशमिदं क्षेत्रं पद्मया शापितं विभो ।

उपवित्रमिदं क्षेत्रं सर्ववेदविवर्जितम् ।

भविष्यतीति च प्रोच्य गता देवी विदं प्रति ॥ १८३.९ ॥

पुनः पवित्रतां याति यथेदं क्षेत्रमुत्तमम् ।

तथा कुरु महेशान प्रसन्नो यदि शङ्कर ॥ १८३.१० ॥

ईश्वर उवाच -

केदाराख्यमिदं ब्रह्मंल्लिङ्गमाद्यं भविष्यति ।

कृत्वेदमादिलिङ्गानि भविष्यन्ति दशैव हि ॥ १८३.११ ॥

एकादशमदृश्यं हि क्षेत्रमध्ये भविष्यति ।

पावयिष्यति तत्क्षेत्रमेकादशः स्वयं विभुः ॥ १८३.१२ ॥

तथा वै द्वादशादित्या मत्प्रसादात्तु मूर्तितः ।

वसिष्यन्ति भृगुक्षेत्रे रोगदुःखनिबर्हणाः ॥ १८३.१३ ॥

दुर्गाः ह्यष्टादश तथा क्षेत्रपालास्तु षोडश ।

भृगुक्षेत्रे भविष्यन्ति वीरभद्राश्च मातरः ॥ १८३.१४ ॥

पवित्रीकृतमेतद्धि नित्यं क्षेत्रं भविष्यति ।

नाघमासे ह्युषःकाले स्नात्वा मासं जितेन्द्रियः ॥ १८३.१५ ॥

यः पूजयति केदारं स गच्छेच्छिवमन्दिरम् ।

तस्मिंस्तीर्थे नरः स्नात्वा पित्ःनुद्दिश्य भारत ।

श्राद्धं ददाति विधिवत्तस्य प्रीताः पितामहाः ॥ १८३.१६ ॥

इति ते कथितं सम्यक्केदाराख्यं सविस्तरम् ।

सर्वपापहरं पुण्यं सर्वदुःखप्रणाशनम् ॥ १८३.१७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे केदारेश्वरतीर्थमाहात्म्यवर्णनं नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८४



अध्याय १८४

श्रीमार्कण्डेय उवाच -

धौतपापं ततो गच्छेद्भृगुतीर्थसमीपतः ।

वृषेण तु भृगुस्तत्र भूयोभूयो धुतस्ततः ॥ १८४.१ ॥

धौतपापं तु तत्तेन नाम्ना लोकेषु विश्रुतम् ।

तत्र स्थितो महादेवस्तुष्ट्यर्थं भृगुसत्तमे ॥ १८४.२ ॥

तत्र तीर्थे तु यः स्नात्वा शाठ्येनापि नरेश्वर ।

मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ १८४.३ ॥

यस्तु सम्यग्विधानेन तत्र स्नात्वार्चयेच्छिवम् ।

देवान्पितॄन्समभ्यर्च्य मुच्यते सर्वपातकैः ॥ १८४.४ ॥

ब्रह्महत्या गवां वध्या तत्र तीर्थे युधिष्ठिर ।

प्रविशेन्न सदा भीता प्रविष्टापि क्षयं व्रजेत् ॥ १८४.५ ॥

युधिष्ठिर उवाच -

आश्चर्यभूतं लोकेऽस्मिन्कथयस्व द्विजोत्तम ।

प्रविशेन्न ब्रह्महत्या यथा वै धौतपाप्मनि ॥ १८४.६ ॥

ब्रह्महत्यासमं पापं भविता नेह किंचन ।

कथं वा धौतपापे तु प्रविष्टं नश्यते द्विज ।

एतद्विस्तरतः सर्वं पृच्छामि वद कौतुकात् ॥ १८४.७ ॥

मार्कण्डेय उवाच -

आदिसर्गे पुरा शम्भुर्ब्रह्मणः परमेष्ठिनः ।

विकारं पञ्चमं दृष्ट्वा शिरोऽश्वमुखसन्निभम् ॥ १८४.८ ॥

अङ्गुष्ठाङ्गुलियोगेन तच्छिरस्तेन कृन्तितम् ।

कृत्तमात्रे तु शिरसि ब्रह्महत्याऽभवत्तदा ॥ १८४.९ ॥

ब्रह्महत्यायुतश्चासीदुत्तरे नर्मदातटे ।

धुनितं तु यतो राजन्वृषेण धर्ममूर्तिना ॥ १८४.१० ॥

तत्र धौतेश्वरीं देवीं स्थापितां वृषभेण तु ।

ददर्श भगवाञ्छम्भुः सर्वदैवतपूजिताम् ॥ १८४.११ ॥

दृष्ट्वा धौतेश्वरीं दुर्गां ब्रह्महत्याविनाशिनीम् ।

तत्र विश्रममाणश्च शङ्करस्त्रिपुरान्तकः ॥ १८४.१२ ॥

स शङ्करो ब्रह्महत्याविहीनं मेने त्मानं तस्य तीर्थस्य भावात् ।

सुविस्मितो देवदेवो वरेण्यो दृष्ट्वा दूरे ब्रह्महत्यां च तीर्थात् ॥ १८४.१३ ॥

विधौतपापं महितं धर्मशक्त्या विशेन्न हत्या देवीभयात्प्रभीता ।

रक्ताम्बरा रक्तमाल्योपयुक्ता कृष्णा नारी रक्तदामप्रसक्ता ॥ १८४.१४ ॥

मां वाञ्छन्ती स्कन्धदेशं रहस्ये दूरे स्थिता तीर्थवर्यप्रभावात् ।

संचिन्त्य देवो मनसा स्मरारिर्वासाय बुद्धिं तत्र तीर्थे चकार ॥ १८४.१५ ॥

विमृश्य देवो बहुशः स्थितः स्वयं विधौतपापः प्रथितः पृथिव्याम् ।

बभूव तत्रैव निवासकारी विधूतपापनिकटप्रदेशे ॥ १८४.१६ ॥

तदाप्रभृति राजेन्द्र ब्रह्महत्याविनाशनम् ।

विधौतपापं तत्तीर्थं नर्मदायां व्यवस्थितम् ॥ १८४.१७ ॥

आश्वयुक्शुक्लनवमी तत्र तीर्थे विशिष्यते ।

दिनत्रयं तु राजेन्द्र सप्तम्यादिविशेषतः ॥ १८४.१८ ॥

समुपोष्याष्टमीं भक्त्या साङ्गं वेदं पठेत्तु यः ।

अहोरात्रेण चैकेन ऋग्यजुःसामसंज्ञकम् ॥ १८४.१९ ॥

अभ्यसन्ब्रह्महत्याया मुच्यते नात्र संशयः ।

वृषलीगमनं चैव यश्च गुर्वङ्गनागमः ॥ १८४.२० ॥

स्नात्वा ब्रह्मरसोत्कृष्टे कुम्भेनैव प्रमुच्यते ।

वन्ध्या स्त्रीजननी या तु काकवन्ध्या मृतप्रजा ॥ १८४.२१ ॥

सापि कुम्भोदकैः स्नाता जीवत्पुत्रा प्रजावती ।

अपठस्तु नरोपोष्य ऋग्यजुःसामसम्भवाम् ॥ १८४.२२ ॥

ऋचमेकां जपन्विप्रस्तथा पर्वणि यो नृप ।

अनृचोपोष्य गायत्रीं जपेद्वै वेदमातरम् ॥ १८४.२३ ॥

जपन्नवम्यां विप्रेन्द्रो मुच्यते पापसञ्चयात् ।

एवं तु कथितं तात पुराणोक्तं महर्षिभिः ॥ १८४.२४ ॥

धौतपापं महापुण्यं शिवेन कथितं मम ।

प्राणत्यागं तु यः कुर्याज्जले वाग्नौ स्थलेऽपि वा ॥ १८४.२५ ॥

स गच्छति विमानेन ज्वलनार्कसमप्रभः ।

हंसबर्हिप्रयुक्तेन सेव्यमानोऽप्सरोगणैः ॥ १८४.२६ ॥

शिवस्य परमं स्थानं यत्सुरैरपि दुर्लभम् ।

क्रीडते स्वेच्छया तत्र यावच्चन्द्रार्कतारकम् ॥ १८४.२७ ॥

धौतपापे तु या नारी कुरुते प्राणसंक्षयम् ।

तत्क्षणादेव सा पार्थ पुरुषत्वमवाप्नुयात् ॥ १८४.२८ ॥

अथ किं बहुनोक्तेन शुभं वा यदि वाशुभम् ।

तदक्षयफलं सर्वं धौतपापे कृतं नृप ॥ १८४.२९ ॥

संन्यसेन्नियमेनान्नं संन्यसेद्विषयादिकम् ।

फलमूलादिकं चैव जलमेकं न संत्यजेत् ॥ १८४.३० ॥

एवं यः कुरुते पार्थ रुद्रलोकं स गच्छति ।

तत्र भुक्त्वाखिलान्भोगाञ्जायते भुवि भूपतिः ॥ १८४.३१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनं नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८५



अध्याय १८५

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल एरण्डीतीर्थमुत्तमम् ।

स्नानमात्रेण तत्रैव ब्रह्महत्या प्रणश्यति ॥ १८५.१ ॥

मासि चाश्वयुजे तत्र शुक्लपक्षे चतुर्दशीम् ।

उपोष्य प्रयतः स्नातस्तर्पयेत्पितृदेवताः ॥ १८५.२ ॥

पुत्रर्द्धिरूपसम्पन्नो जीवेच्च शरदां शतम् ।

शिवलोकं मृतो याति नात्र कार्या विचारणा ॥ १८५.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे एरण्डीतीर्थमाहात्म्यवर्णनं नाम पञ्चाशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८६



अध्याय १८६

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल तीर्थं कनखलोत्तमम् ।

गरुडेन तपस्तप्तं पूजयित्वा महेश्वरम् ॥ १८६.१ ॥

दिव्यं वर्षशतं यावज्जातमात्रेण भारत ।

तपोजपैः कृशीभूतो दृष्टो देवेन शम्भुना ॥ १८६.२ ॥

ततस्तुष्टो महादेवो वैनतेयं मनोजवम् ।

उवाच परमं वाक्यं विनतानन्दवर्धनम् ॥ १८६.३ ॥

प्रसन्नस्ते महाभाग वरं वरय सुव्रत ।

दुर्लभं त्रिषु लोकेषु ददामि तव खेचर ॥ १८६.४ ॥

गरुड उवाच -

इच्छामि वाहनं विष्णोर्द्विजेन्द्रत्वं सुरेश्वर ।

प्रसन्ने त्वयि मे सर्वं भवत्विति मतिर्मम ॥ १८६.५ ॥

श्रीमहेश उवाच -

दुर्लभः प्राणिनां तात यो वरः प्रार्थितोऽनघ ।

देवदेवस्य वाहनं द्विजेन्द्रत्वं सुदुर्लभम् ॥ १८६.६ ॥

नारायणोदरे सर्वं त्रैलोक्यं सचराचरम् ।

त्वया स कथमूह्येत देवदेवो जगद्गुरुः ॥ १८६.७ ॥

तेनैव स्थापितश्चेन्द्रस्त्रैलोक्ये सचराचरे ।

कथमन्यस्य चेन्द्रत्वं भवतीति सुदुर्लभम् ॥ १८६.८ ॥

तथापि मम वाक्येन वाहनं त्वं भविष्यसि ।

शङ्खचक्रगदापाणेर्वहतोऽपि जगत्त्रयम् ॥ १८६.९ ॥

इन्द्रस्त्वं पक्षिणां मध्ये भविष्यसि न संशयः ।
इति दत्त्वा वरं तस्मा अन्तर्धानं गतो हरः ॥ १८६.१० ॥
ततो गते महादेवे ह्यरुणस्यानुजो नृप ।
आराधयामास तदा चामुण्डां मुण्डमण्डिताम् ॥ १८६.११ ॥
श्मशानवासिनीं देवीं बहुभूतसमन्विताम् ।
योगिनीं योगसंसिद्धां वसामांसासवप्रियाम् ॥ १८६.१२ ॥
ध्यातमात्रा तु तेनैव प्रत्यक्षा ह्यभवत्तदा ।
जालंधरे च या सिद्धिः कौलीने उड्डिशे परे ॥ १८६.१३ ॥
समग्रा सा भृगुक्षेत्रे सिद्धक्षेत्रे तु संस्थिता ।
चामुण्डा तत्र सा देवी सिद्धक्षेत्रे व्यवस्थिता ॥ १८६.१४ ॥
संस्तुता ऋषिभिर्देवैर्योगक्षेमार्थसिद्धये ।
विनतानन्दजननस्तत्र तां योगिनीं नृप ।
भक्त्या प्रसादयामास स्तोत्रैर्वैदिकलौकिकैः ॥ १८६.१५ ॥

गरुड उवाच -
ओं या सा क्षुत्क्षामकण्ठा नवरुधिरमुखा प्रेतपद्मासनस्था भूतानां वृन्दवृन्दैः पितृवननिलया क्रीडते शूलहस्ता ।
शस्त्रध्वस्तप्रवीरव्रजरुधिरगलन्मुण्डमालोत्तरीया देवी श्रीवीरमाता विमलशशिनिभा पातु वश्चर्ममुण्डा ॥ १८६.१६ ॥
या सा क्षुत्क्षामकण्ठा विकृतभयकरी त्रासिनी दुष्कृतानां मुञ्चज्ज्वालाकलापैर्दशनकसमसैः खादति प्रेतमांसम् ।
या सा दोर्दण्डचण्डैर्डमरुरणरणाटोपटंकारघण्टैः कल्पान्तोत्पातवाताहतपटुपटहैर्वल्गते भूतमाता ।
क्षुत्क्षामा शुष्ककुक्षिः खवरतरनरवरैः क्षोदति प्रेतमांसं मुञ्चन्ती चाट्टहासं घुरघुरितरवा पातु वश्चर्ममुण्डा ॥ १८६.१७ ॥
या सा निम्नोदराभा विकृतभवभयत्रासिनी शूलहस्ता चामुण्डा मुण्डघाता रणरणितरणझल्लरीनादरम्या ।
त्रैलोक्यं त्रासयन्ति ककहकहकहकैर्घोररावैरनेकैर्नृत्यन्ती मातृमध्ये पितृवननिलया पातु वश्चर्ममुण्डा ॥ १८६.१८ ॥

या धत्ते विश्वमखिलं निजांशेन महोज्ज्वला ।

कनकप्रसवे लीना पातु मां कनकेश्वरी ॥ १८६.१९ ॥

हिमाद्रिसम्भवा देवी दयादर्शितविग्रहा ।

शिवप्रिया शिवे सक्ता पातु मां कनकेश्वरी ॥ १८६.२० ॥

अनादिजगदादिर्या रत्नगर्भा वसुप्रिया ।

रथाङ्गपाणिना पद्मा पातु मां कनकेश्वरी ॥ १८६.२१ ॥

सावित्री या च गायत्री मृडानी वागथेन्दिरा ।

स्मर्त्ःणां या सुखं दत्ते पातु मां कनकेश्वरी ॥ १८६.२२ ॥

सौम्यासौम्यैः सदा रूपैः सृजत्यवति या जगत् ।

परा शक्तिः परा बुद्धिः पातु मां कनकेश्वरी ॥ १८६.२३ ॥

ब्रह्मणः सर्गसमये सृज्यशक्तिः परा तु या ।

जगन्माया जगद्धात्री पातु मां कनकेश्वरी ॥ १८६.२४ ॥

विश्वस्य पालने विष्णोर्या शक्तिः परिपालिका ।

मदनोन्मादिनी मुख्या पातु मां कनकेश्वरी ॥ १८६.२५ ॥

विश्वसंलयने मुख्या या रुद्रेण समाश्रिता ।

रौद्री शक्तिः शिवानन्ता पातु मां कनकेश्वरी ॥ १८६.२६ ॥

कैलाससानुसंरूढ कनकप्रसवेशया ।

भस्मकाभिहृता पूर्वं पातु मां कनकेश्वरी ॥ १८६.२७ ॥

पतिप्रभावमिच्छन्ती त्रस्यन्ती या विना पतिम् ।

अबला त्वेकभावा च पातु मां कनकेश्वरी ॥ १८६.२८ ॥

विश्वसंरक्षणे सक्ता रक्षिता कनकेन या ।

आ ब्रह्मस्तम्बजननी पातु मां कनकेश्वरी ॥ १८६.२९ ॥

ब्रह्मविष्णवीश्वराः शक्त्या शरीरग्रहणं यया ।

प्रापिताः प्रथमा शक्तिः पातु मां कनकेश्वरी ॥ १८६.३० ॥

श्रुत्वा तु गरुडेनोक्तं देवीवृत्तचतुष्टयम् ।

प्रसन्ना संमुखी भूत्वा वाक्यमेतदुवाच ह ॥ १८६.३१ ॥

श्रीचामुण्डोवाच -

प्रसन्ना ते महासत्त्व वरं वरय वाञ्छितम् ।

ददामि ते द्विजश्रेष्ठ यत्ते मनसि रोचते ॥ १८६.३२ ॥

गरुड उवाच -

अजरश्चामरश्चैव अधृष्यश्च सुरासुरैः ।

तव प्रसादाच्चैवान्यैरजेयश्च भवाम्यहम् ॥ १८६.३३ ॥

त्वया चात्र सदा देवि स्थातव्यं तीर्थसन्निधौ ।

मार्कण्डेय उवाच -

एवं भविष्यतीत्युक्त्वा देवी देवैरभिष्टुता ॥ १८६.३४ ॥

जगामाकाशमाविश्य भूतसङ्घसमन्विता ।

यदा लक्ष्म्या नृपश्रेष्ठ स्थापितं पुरमुत्तमम् ॥ १८६.३५ ॥

अनुमान्य तदा देवीं कृतं तस्यां समर्पितम् ।

लक्ष्मीरुवाच -

रक्षणाय मया देवि योगक्षेमार्थसिद्धये ॥ १८६.३६ ॥

मातृवत्प्रतिपाल्यं ते सदा देवि पुरं मम ।

गरुडोऽपि ततः स्नात्वा सम्पूज्य कनकेश्वरीम् ॥ १८६.३७ ॥

तीर्थं तत्रैव संस्थाप्य जगामाकाशमुत्तमम् ।

तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ १८६.३८ ॥

सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।

गन्धपुष्पादिभिर्यस्तु पूजयेत्कनकेश्वरम् ॥ १८६.३९ ॥

तस्य योगैश्वर्यसिद्धिर्योगपीठेषु जायते ।

मृतो योगेश्वरं लोकं जयशब्दादिमङ्गलैः ।

स गच्छेन्नात्र सन्देहो योगिनीगणसंयुतः ॥ १८६.४० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कनखलेश्वरतीर्थमाहात्म्यवर्णनं नाम षडशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८७



अध्याय १८७

श्रीमार्कण्डेय उवाच -

जालेश्वरं ततो गच्छेल्लिङ्गमाद्यं स्वयम्भुवः ।

कालाग्निरुद्रं विख्यातं भृगुकच्छे व्यवस्थितम् ॥ १८७.१ ॥

सर्वपापप्रशमनं सर्वोपद्रवनाशनम् ।

क्षेत्रपापविनाशाय कृपया च समुत्थितम् ॥ १८७.२ ॥

पुरा कल्पेऽसुरगणैराक्रान्ते भुवनत्रये ।

वेदोक्तकर्मनाशे च धर्मे च विलयं गते ॥ १८७.३ ॥

देवर्षिमुनिसिद्धेषु विश्वासपरमेषु च ।

कालाग्निरुद्रादुत्पन्नो धूमः कालोद्भवोद्भवः ॥ १८७.४ ॥

धूमात्समुत्थितं लिङ्गं भित्त्वा पातालसप्तकम् ।

अवटं दक्षिणे कृत्वा लिङ्गं तत्रैव तिष्ठति ॥ १८७.५ ॥

तत्र तीर्थे नृपश्रेष्ठ कुण्डं ज्वालासमुद्भवम् ।

यत्र सा पतिता ज्वाला शिवस्य दहतः पुरम् ॥ १८७.६ ॥

तत्रावटं समुद्भूतं धूमावर्तस्ततोऽभवत् ।

तस्मिन्कुण्डे तु यः स्नानं कृत्वा वै नर्मदाजले ॥ १८७.७ ॥

कुर्याच्छ्राद्धं पितृभ्यो वै पूजयेच्च त्रिलोचनम् ।

कालाग्निरुद्रनामानि स गच्छेत्परमां गतिम् ॥ १८७.८ ॥

यत्किंचित्कामिकं कर्म ह्याभिचारिकमेव वा ।

रिपुसंक्षयकृद्वापि सांतानिकमथापि वा ।

अत्र तीर्थे कृतं सर्वमचिरात्सिध्यते नृप ॥ १८७.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कालाग्निरुद्रतीर्थमाहात्म्यवर्णनं नाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८८



अध्याय १८८

श्रीमार्कण्डेय उवाच -

ततः परं महाराज चत्वारिंशत्क्रमान्तरे ।

शालग्रामं ततो गच्छेत्सर्वदैवतपूजितम् ॥ १८८.१ ॥

यत्रादिदेवो भगवान्वासुदेवस्त्रिविक्रमः ।

स्वयं तिष्ठति लोकात्मा सर्वेषां हितकाम्यया ॥ १८८.२ ॥

नारदेन तपस्तप्त्वा कृता शाला द्विजन्मनाम् ।

सिद्धिक्षेत्रं भृगुक्षेत्रं ज्ञात्वा रेवातटे स्वयम् ॥ १८८.३ ॥

शालग्रामाभिधो देवो विप्राणां त्वधिवासितः ।

साधूनां चोपकाराय वासुदेवः प्रतिष्ठितः ॥ १८८.४ ॥

योगिनामुपकाराय योगिध्येयो जनार्दनः ।

शालग्रामेति तेनैव नर्मदातटमाश्रितः ॥ १८८.५ ॥

मासि मार्गशिरे शुक्ला भवत्येकादशी यदा ।

स्नात्वा रेवाजले पुण्ये तद्दिनं समुपोषयेत् ॥ १८८.६ ॥

रात्रौ जागरणं कुर्यात्सम्पूज्य च जनार्दनम् ।

पुनः प्रभातसमये द्वादश्यां नर्मदाजले ॥ १८८.७ ॥

स्नात्वा संतर्प्य देवांश्च पितॄन्मातॄंस्तथैव च ।

श्राद्धं कृत्वा ततः पश्चात्पितृभ्यो विधिपूर्वकम् ॥ १८८.८ ॥

शक्तितो ब्राह्मणान्पूज्य स्वर्णवस्त्रान्नदानतः ।

क्षमापयित्वा तान्विप्रांस्तथा देवं खगध्वजम् ॥ १८८.९ ॥

एवं कृते महाराज यत्पुण्यं च भवेन्नृणाम् ।

शृणुष्वावहितो भूत्वा तत्पुण्यं नृपसत्तम ॥ १८८.१० ॥

न शोकदुःखे प्रतिपत्स्यतीह जीवन्मृतो याति मुरारिसाम्यम् ।

महान्ति पापानि विसृज्य दुग्धं पुनर्न मातुः पिबते स्तनोद्यत् ॥ १८८.११ ॥

शालग्रामं पश्यते यो हि नित्यं स्नात्वा जले नार्मदेऽघौघहारे ।
स मुच्यते ब्रह्महत्यादिपापैर्नारायणानुस्मरणेन तेन ॥ १८८.१२ ॥
वसन्ति ये संन्यसित्वा च तत्र निगृह्य दुःखानि विमुक्तसङ्घाः ।
ध्यायन्तो वै सांख्यवृत्त्या तुरीयं पदं मुरारेस्तेऽपि तत्रैव यान्ति ॥ १८८.१३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शालग्रामतीर्थमहात्म्यवर्णनं नामाष्टाशीत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १८९

https://sa.wikisource.org/s/ffu
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्याय १८९

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ।

उदीर्णो यत्र वाराहो ह्यभवद्धरणीधरः ॥ १८९.१ ॥

धन्वदंष्ट्रां करालाग्रां बिभ्रच्च पृथिवीमिमाम् ।

स एव पञ्चमः प्रोक्तो वाराहो मुक्तिदायकः ॥ १८९.२ ॥

युधिष्ठिर उवाच -

कथमुदीर्णरूपोऽभूद्वाराहो धरणीधरः ।

वाराहत्वं गतः केन पञ्चमः केन संज्ञितः ॥ १८९.३ ॥

मार्कण्डेय उवाच -

आदिकल्पे पुरा राजन्क्षीरोदे भगवान् हरिः ।

शेते स भोगिशयने योगनिद्राविमोहितः ॥ १८९.४ ॥

बभूव नृपतिश्रेष्ठ गत्वा वै देवसंनिधौ ।

अवोचद्भारखिन्नाहं गमिष्यामि रसातलम् ॥ १८९.५ ॥

दृष्ट्वा देवाः समुद्विग्ना गता यत्र जनार्दनः ।

तुष्टुवुर्वाग्भिरिष्टाभिः केशवं जगत्पतिम् ॥ १८९.६ ॥

देवा ऊचुः ।

नमो नमस्ते देवेश सुरार्तिहर सर्वग ।

विश्वमूर्ते नमस्तुभ्यं त्राहि सर्वान्महद्भयात् ॥ १८९.७ ॥

इत्युक्तो दैवतैर्देवो ह्युवाच किमुपस्थितम् ।

कार्यं वदध्वं मे देवा यत्कृत्यं मा चिरं कृथाः ॥ १८९.८ ॥

देवा ऊचुः ।

धरा धरित्री भूतानां भारोद्विग्ना निमज्जति ।
तामुद्धर हृषीकेश लोकान्संस्थापय स्थितौ ॥ १८९.९ ॥
एवमुक्तः सुरैः सर्वैः केशवः परमेश्वरः ।
वाराहं रूपमास्थाय सर्वयज्ञमयं विभुः ॥ १८९.१० ॥
दंष्ट्राकरालं पिङ्गाक्षं समाकुञ्चितमूर्धजम् ।
कृत्वाऽनन्तं पादपीठं दंष्ट्राग्रेणोद्धरन्भुवम् ॥ १८९.११ ॥
सपर्वतवनामुर्वीं समुद्रपरिमेखलाम् ।
उद्धृत्य भगवान् विष्णुरुदीर्णः समजायत ॥ १८९.१२ ॥
दर्शयन्पञ्चधात्मानमुत्तरे नर्मदातटे ।
तथाद्यं कोरलायां तु द्वितीयं योधनीपुरे ॥ १८९.१३ ॥
जयक्षेत्राभिधाने तु जयेति परिकीर्तितम् ।
असुरान्मोहयल्लिङ्गस्तृतीयः परिकीर्तितः ॥ १८९.१४ ॥
पावनाय जगद्धेतोः स्थितो यस्माच्छशिप्रभः ।
अतस्तु नृपशार्दूल श्वेत इत्याभिधीयते ॥ १८९.१५ ॥
उद्धृत्य जगतां देवीमुदीर्णो भृगुकच्छके ।
ततः पञ्चम उदीर्णो वराह इति संज्ञितः ॥ १८९.१६ ॥
इति पञ्चवराहास्ते कथितः पाण्डुनन्दन ।
युगपद्दर्शनं चैषां ब्रह्महत्यां व्यपोहति ॥ १८९.१७ ॥
ज्येष्ठे मासि सिते पक्ष एकादश्यां विशेषतः ।
गत्वा ह्यादिवराहं तु सम्प्राप्ते दशमीदिने ॥ १८९.१८ ॥
हविष्यमन्नं भुञ्जीयाल्लघुसायं गते रवौ ।
रात्रौ जागरणं कुर्याद्वाराहे ह्यादिसंज्ञके ॥ १८९.१९ ॥
ततः प्रभाते ह्युषसि संस्नात्वा नर्मदाजले ।
संतर्प्य पितृदेवांश्च तिलैर्यवविमिश्रितैः ॥ १८९.२० ॥
धेनुं दद्याद्द्विजे योग्ये सर्वाभरणभूषिताम् ।
निर्ममो निरहङ्कारो दानं दद्याद्द्विजातये ॥ १८९.२१ ॥
गत्वा सम्पूजयेद्देवं वाराहं ह्यादिसंज्ञितम् ।
अनेन विधिना पूज्य पश्चाद्गच्छेज्जयं त्वरन् ॥ १८९.२२ ॥

त्वरितं तु जयं गत्वा पूर्वकं विधिमाचरेत् ।
अश्वं दद्याद्द्विजाग्र्याय जयपूर्वाभिनिर्गतम् ॥ १८९.२३ ॥
लिङ्गे चैव तिला देयाः श्वेते हिरण्यमेव च ।
उदीर्णे च भुवं दद्यात्पूर्वकं विधिमाचरेत् ॥ १८९.२४ ॥
अनस्तमित आदित्ये वराहान्पञ्च पश्यतः ।
यत्फलं लभते पार्थ तदिहैकमनाः शृणु ॥ १८९.२५ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
एभिस्तु सह संयोगो विश्वस्तानां च वञ्चनम् ॥ १८९.२६ ॥
स्वसृदुहितृभगिनीकुलदारोपबृंहणम् ।
आ जन्ममरणाद्यावत्पापं भरतसत्तम ॥ १८९.२७ ॥
तीर्थपञ्चकपूतस्य वैष्णवस्य विशेषतः ।
युगपच्चविनश्येत तूलराशिरिवानलात् ॥ १८९.२८ ॥
नारायणानुस्मरणाज्जपध्यानाद्विशेषतः ।
विप्रणश्यन्ति पापानि गिरिकूटसमान्यपि ॥ १८९.२९ ॥
दृष्ट्वा पञ्च वराहान्वै पौरुषे महति स्थितः ।
आप्लवन्नर्मदातोये श्राद्धं कृत्वा यथाविधि ॥ १८९.३० ॥
उदयास्तमनादर्वाग्यः पश्येल्लोटणेश्वरम् ।
कलेवरविमुक्तः स इत्येवं शङ्करोऽब्रवीत् ॥ १८९.३१ ॥
मुक्तिं प्रयाति सहसा दुष्प्रापां परमेश्वरीम् ।
पौरुषे क्रियमाणेऽपि न सिद्धिर्जायते यदि ॥ १८९.३२ ॥
ब्रुवन्ति स्वर्गगमनमपि पापान्वितस्य च ।
यत्र तत्र गतस्यैव भवेत्पञ्चवराहकी ॥ १८९.३३ ॥
ज्येष्ठस्यैकादशीतिथौ ध्रुवं तत्र वसेन्नरः ।
आदिं जयं तथा श्वेतं लिङ्गमुदीर्णमेव च ॥ १८९.३४ ॥
आश्रित्य तस्या द्रष्टव्या वराहास्तु यतस्ततः ।
ज्येष्ठस्यैकादशीतिथौ विष्णुना प्रभुविष्णुना ॥ १८९.३५ ॥
वाराहं रूपमास्थाय उद्धृता धरणी विभो ।
पुण्यात्पुण्यतमा तेन ह्यशेषाघौघनाशिनी ॥ १८९.३६ ॥

दृष्ट्वा पञ्चवराहान्वै क्रोडमुदीर्णरूपिणम् ।

पूजयित्वा विधानेन पश्चाज्जागरणं चरेत् ॥ १८९.३७ ॥

सपञ्चवर्तिकान् दीपान् घृतेनोज्ज्वाल्य भक्तितः ।

पुराणश्रवणैर्नृत्यैर्गीतवाद्यैः सुमङ्गलैः ॥ १८९.३८ ॥

वेदजाप्यैः पवित्रैश्च क्षपयित्वा च शर्वरीम् ।

यत्पुण्यं लभते मर्त्यो ह्याजमीढ शृणुष्व तत् ॥ १८९.३९ ॥

रेवाजलं पुण्यतमं पृथिव्यां तथा च देवो जगतां पतिर्हरिः ।

एकादशी पापहरा नरेन्द्र बह्वायासैर्लभ्यते मानवानाम् ॥ १८९.४० ॥

एकैकशो ब्रह्महत्यादिकानि शक्तानि हन्तुं पापसङ्घानि राजन् ।

नैते सर्वे युगपद्वै समेता हन्तुं शक्ताः किं न तद्ब्रूहि राजन् ॥ १८९.४१ ॥

यथेदमुक्तं तव धर्मसूनो श्रुतं च यच्छङ्कराच्चन्द्रमौलेः ।

श्रुत्वेदमिच्छन्मुच्यते सर्वपापैः पठन्पदं याति हि वृत्रशत्रोः ॥ १८९.४२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये उदीर्णवराहतीर्थमाहात्म्यवर्णनं नामैकोननवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९०



अध्याय १९०

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल सोमतीर्थमनुत्तमम् ।

चन्द्रहासेति विख्यातं सर्वदैवतपूजितम् ॥ १९०.१ ॥

यत्र सिद्धिं परां प्राप्तः सोमो राजा सुरोत्तमः ॥ १९०.२ ॥

युधिष्ठिर उवाच -

कथं सिद्धिमनुप्राप्तः सोमो राजा जगत्पतिः ।

तत्सर्वं श्रोतुमिच्छामि कथयस्व ममानघ ॥ १९०.३ ॥

मार्कण्डेय उवाच -

पुरा शप्तो मुनीन्द्रेण दक्षेण किल भारत ।

असेवनाद्धि दाराणां क्षयरोगी भविष्यसि ॥ १९०.४ ॥

उद्वाहितानां पत्नीनां ये न कुर्वन्ति सेवनम् ।

या निष्ठा जायते तेषां तां शृणुष्व नरोत्तम ॥ १९०.५ ॥

ऋतुकाले तु नारीणां सेवनाज्जायते सुतः ।

सुतात्स्वर्गश्च मोक्षश्च हीत्येवं श्रुतिनोदना ॥ १९०.६ ॥

तत्कालोचितधर्मेण ये न सेवन्ति तां नराः ।

तेषां ब्रह्मघ्नजं पापं जायते नात्र संशयः ॥ १९०.७ ॥

तेन पापेन घोरेण वेष्टतो रौरवे पतेत् ।

तस्य तद्रुधिरं पापाः पिबन्ते कालमीप्सितम् ॥ १९०.८ ॥

ततोऽवतीर्णकालेन यां यां योनिं प्रयास्यति ।

तस्यां तस्यां स दुष्टात्मा दुर्भगो जायते सदा ॥ १९०.९ ॥

नारीणां तु सदा कामो ह्यधिकः परिवर्तते ।

विशेषेण ऋतोः काले भिद्यते कामसायकैः ॥ १९०.१० ॥
परिभूता हि सा भर्त्रा ध्यायतेऽन्यं पतिं ततः ।
तस्याः पुत्रः समुत्पन्नो ह्यटते कुलमुत्तमम् ॥ १९०.११ ॥
स्वर्गस्थास्तेन पितरः पूर्वं जाता महीपते ।
पतन्ति जातमात्रेण कुलटस्तेन चोच्यते ॥ १९०.१२ ॥
तेन कर्मविपाकेन क्षयरोगी शशी ह्यभूत् ।
त्यक्त्वा लोकं सुरेन्द्राणां मर्त्यलोकमुपागतः ॥ १९०.१३ ॥
तत्र तीर्थान्यनेकानि पुण्यान्यायतनानि च ।
भ्रमित्वा नर्मदां प्राप्तः सर्वपापप्रणाशिनीम् ॥ १९०.१४ ॥
उपवासस्तु दानानि व्रतानि नियमाश्च ये ।
चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥ १९०.१५ ॥
स्थापयित्वा महादेवं सर्वपातकनाशनम् ।
जगाम प्रभया पूर्णः सोमलोकमनुत्तमम् ॥ १९०.१६ ॥
येनैव स्थापितो देवः पूज्यते वर्षसंख्यया ।
तावद्युगसहस्राणि तस्य लोकं समश्नुते ॥ १९०.१७ ॥
तेन देवान् विधानोक्तान् स्थापयन्ति नरा भुवि ।
अक्षयं चाव्ययं यस्मात्फलं भवति नान्यथा ॥ १९०.१८ ॥
सोमतीर्थे तु यः स्नात्वा पूजयेद्देवमीश्वरम् ।
जायते स नरो भूत्वा सोमवित्प्रियदर्शनः ॥ १९०.१९ ॥
चन्द्रप्रभासे यो गत्वा स्नानं विधिवदाचरेत् ।
व्याधिना नाभिभूतः स्यात्क्षयरोगेण वा युतः ॥ १९०.२० ॥
चन्द्रहास्ये नरः स्नात्वा द्वादश्यां तु नरेश्वर ।
चतुर्दश्यामुपोष्यैव क्षीरस्य जुहुयाच्चरुम् ॥ १९०.२१ ॥
मन्त्रैः पञ्चभिरीशानं पुरुषस्त्र्यम्बकं यजेत् ।
हविःशेषं स्वयं प्राश्य चन्द्रहास्येशमीक्षयेत् ॥ १९०.२२ ॥
अनेन विधिना राजंस्तुष्टो देवो महेश्वरः ।
विधिना तीर्थयोगेन क्षयरोगाद्विमुच्यते ॥ १९०.२३ ॥
सप्तभिः सोमवारैर्यः स्नानं तत्र समाचरेत् ।

स वै कर्णकृताद्रोगान्मुच्यते पूजयञ्छिवम् ॥ १९०.२४ ॥
अक्षिरोगस्तथा राजंश्चन्द्रहास्ये विनश्यति ।
चन्द्रहास्ये तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः ।
स्नानं समाचरेद्भक्त्या मुच्यते सर्वपातकैः ॥ १९०.२५ ॥
तत्र स्नानं च दानं च चन्द्रहास्ये शुभशुभम् ।
कृतं नृपवरश्रेष्ठ सर्वं भवति चाक्षयम् ॥ १९०.२६ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
चन्द्रहास्ये तु ये स्नात्वा पश्यन्ति ग्रहणं नराः ॥ १९०.२७ ॥
वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ।
स्नानमात्रात्तु राजेन्द्र तत्र तीर्थे प्रणश्यति ॥ १९०.२८ ॥
बहवस्तन्न जानन्ति महामोहसमन्विताः ।
देहस्थ इव सर्वेषां परमात्मेव संस्थितम् ॥ १९०.२९ ॥
पश्चिमे सागरे गत्वा सोमतीर्थे तु यत्फलम् ।
तत्समग्रमवाप्नोति चन्द्रहास्ये न संशयः ॥ १९०.३० ॥
संक्रान्तौ च व्यतीपाते विषुवे चायने तथा ।
चन्द्रहास्ये नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ १९०.३१ ॥
ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ।
चन्द्रहास्यं न जानन्ति नर्मदायां व्यवस्थितम् ॥ १९०.३२ ॥
चन्द्रहास्ये तु यः कश्चित्संन्यासं कुरुते नृप ।
अनिवर्तिका गतिस्तस्य सोमलोकात्कदाचन ॥ १९०.३३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे चन्द्रहास्यतीर्थमहात्म्यवर्णनं नाम नवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९१



अध्याय १९१

श्रीमार्कण्डेय उवाच -

सिद्धेश्वरं ततो गच्छेत्तस्यैव तु समीपतः ।

अमृतस्राविं तल्लिङ्गमाद्यं स्वायम्भुवं तथा ॥ १९१.१ ॥

दृष्टमात्रेण येनेह ह्यनृणो जायते नरः ।

पुरा वर्षशतं साग्रमाराध्य परमेश्वरम् ॥ १९१.२ ॥

प्राप्नुयुः परमां सिद्धिमादित्या द्वादशैव तु ।

अतः सिद्धेश्वरः प्रोक्तः सिद्धिदः सिद्धिकाङ्क्षिणाम् ॥ १९१.३ ॥

युधिष्ठिर उवाच -

कथं सिद्धेश्वरे प्राप्ताः सिद्धिं देवा द्विजोत्तम ।

आदित्या इति यच्चोक्तं तन्मे विस्मापनं कृतम् ॥ १९१.४ ॥

तपस्युग्रे व्यवसिता आदित्याः केन हेतुना ।

सम्प्राप्तास्तु द्विजश्रेष्ठ सिद्धिं चैवाभिलाषिकीम् ॥ १९१.५ ॥

संक्षिप्य तु मया पृष्टं विस्तराद्द्विज शंस मे ॥ १९१.६ ॥

मार्कण्डेय उवाच -

अदितेर्द्वादशादित्या जाताः शक्रपुरोगमाः ।

इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा ॥ १९१.७ ॥

विवस्वान्सविता पूषा ह्यंशुमान्विष्णुरेव च ।

त इमे द्वादशादित्या इच्छन्तो भास्करं पदम् ॥ १९१.८ ॥

नर्मदातटमाश्रित्य तपस्युग्रे व्यवस्थिताः ।

सिद्धेश्वरे महाराज काश्यपेयैर्महात्मभिः ॥ १९१.९ ॥

परा सिद्धिरनुप्राप्ता द्वादशादित्यसंज्ञितैः ।

स्थापितश्च जगद्धाता तस्मिंस्तीर्थे दिवाकरः ॥ १९१.१० ॥

स्वकीयांशविभागेन द्वादशादित्यसंज्ञितैः ।

तदाप्रभृति तत्तीर्थं राजन्ख्यातिं गतं भुवि ॥ १९१.११ ॥

प्रलये समनुप्राप्ते ह्यादित्या द्वादशैव ते ।

द्वादशादित्यतो राजन् सम्भवन्ति युगक्षये ॥ १९१.१२ ॥

इन्द्रस्तपति पूर्वेण धाता चैवाग्निगोचरे ।

गभस्तिपतिर्वै याम्ये त्वष्टा नैरृतदिङ्मुखः ॥ १९१.१३ ॥

वरुणः पश्चिमे भागे मित्रस्तु वायवे तथा ।

विष्णुश्च सौम्यदिग्भागे विवस्वानीशगोचरे ॥ १९१.१४ ॥

ऊर्ध्वतश्चैव सविता ह्यधः पूषा विशोषयन् ।

अंशुमांस्तु तथा विष्णुर्मुखतो निर्गतं जगत् ॥ १९१.१५ ॥

प्रदहन्वै नरश्रेष्ठ बभ्रमुश्च इतस्ततः ।

यथैव ते महाराज दहन्ति सकलं जगत् ॥ १९१.१६ ॥

तथैव द्वादशादित्या भक्तानां भावसाधनाः ।

प्रातरुत्थाय यः स्नात्वा द्वादशादित्यसंज्ञितम् ॥ १९१.१७ ॥

पश्यते देवदेवेशं शृणु तस्यैव यत्फलम् ।

वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ॥ १९१.१८ ॥

नश्यते तत्क्षणादेव द्वादशादित्यदर्शनात् ।

प्रदक्षिणं तु यः कुर्यात्तस्य देवस्य भारत ॥ १९१.१९ ॥

प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ।

तत्र तीर्थे तु सप्तम्यामुपवासेन यत्फलम् ॥ १९१.२० ॥

अन्यत्र सप्तसप्तम्यां लभन्ति न लभन्ति च ।

षष्ठ्यां वारे दैनकरे द्वादशादित्यदर्शनात् ॥ १९१.२१ ॥

प्रदक्षिणं तु यः कुर्यात्तस्य पापं तु नश्यति ।

अरोगी सप्तजन्मानि भवेद्वै नात्र संशयः ॥ १९१.२२ ॥

यस्तु प्रदक्षिणशतं दद्याद्भक्त्या दिने दिने ।

दद्रूपिटककुष्ठानि मण्डलानि विचर्चिकाः ॥ १९१.२३ ॥

नश्यन्ति व्याधयः सर्वे गरुडेनेव पन्नगाः ।

पुत्रप्राप्तिर्भवेत्तस्य षष्ट्या वासरसेवनात् ॥ १९१.२४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे द्वादशादित्यतीर्थमाहात्म्यवर्णनं नामैकनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९२

https://sa.wikisource.org/s/ffl



अध्याय १९२

मार्कण्डेय उवाच -

तस्यैवानन्तरं तात देवतीर्थमनुत्तमम् ।

दृष्ट्वा तु श्रीपतिं पापैर्मुच्यते मानवो भुवि ॥ १९२.१ ॥

महर्षेस्तस्य जामाता भृगोर्देवो जनार्दनः ॥ १९२.२ ॥

युधिष्ठिर उवाच -

कोऽयं श्रियः पतिर्देवो देवानामधिपो विभुः ।

कथं जन्माभवत्तस्य देवेषु त्रिषु वा मुने ॥ १९२.३ ॥

सम्बन्धी च कथं जातो भृगुणा सह केशवः ।

एतद्विस्तरतो ब्रह्मन् वक्तुमर्हसि भार्गव ॥ १९२.४ ॥

मार्कण्डेय उवाच -

संक्षेपात्कथयिष्यामि साध्यस्य चरितं महत् ।

न हि विस्तरतो वक्तुं शक्ताः सर्वे महर्षयः ॥ १९२.५ ॥

नारायणस्य नाभ्यब्जाज्जातो देवश्चतुर्मुखः ।

तस्य दक्षोऽङ्गजो राजन् दक्षिणाङ्गुष्ठसम्भवः ॥ १९२.६ ॥

धर्मः स्तनान्तात्संजातस्तस्य पुत्रोऽभवत्किल ।

नारायणसहायोऽसावजोऽपि भरतर्षभ ॥ १९२.७ ॥

मरुत्वती वसुर्जाना लम्बा भानुमती सती ।

संकल्पा च मुहूर्ता च साध्या विश्वावती ककुप् ॥ १९२.८ ॥

धर्मपत्न्यो दशैवैता दाक्षायण्यो महाप्रभाः ।

तासां साध्या महाभागा पुत्रानजनयन्नृप ॥ १९२.९ ॥

नरो नारायणश्चैव हरिः कृष्णस्तथैव च ।

विष्णोरंशांशका ह्येते चत्वारो धर्मसूनवः ॥ १९२.१० ॥

तथा नारायणनरौ गन्धमादनपर्वते ।

आत्मन्यात्मानमाधाय तेपतुः परमं तपः ॥ १९२.११ ॥

ध्यायमानावनौपम्यं स्वं कारणमकारणम् ।

वासुदेवमनिर्देश्यमप्रतर्क्यमनन्तरम् ॥ १९२.१२ ॥

योगयुक्तौ महात्मानावास्थितावुरुतापसौ ।

तयोस्तपःप्रभावेण न ततापं दिवाकरः ॥ १९२.१३ ॥

ववाह शङ्कितो वायुः सुखस्पर्शो ह्यशङ्कितः ।

शिशिरोऽभवदत्यर्थं ज्वलन्नपि विभावसुः ॥ १९२.१४ ॥

सिंहव्याघ्रादयः सौम्याश्चेरुः सह मृगैर्गिरौ ।

तयोर्गौरिव भारार्ता पृथिवी पृथिवीपते ॥ १९२.१५ ॥

चेरुश्च भूधराश्चैव चुक्षुभे च महोदधिः ।

देवाश्च स्वेषु धिष्ण्येषु निष्प्रभेषु हतप्रभाः ।

बभूवुरवनीपाल परमं क्षोभमागताः ॥ १९२.१६ ॥

देवराजस्तथा शक्रः संतप्तस्तपसा तयोः ।

युयोजाप्सरसस्तत्र तयोर्विघ्नचिकीर्षया ॥ १९२.१७ ॥

इन्द्र उवाच -

रम्भे तिलोत्तमे कुब्जे घृताचि ललिते शुभे ।

प्रम्लोचे सुभ्रु सुम्लोचे सौरभेयि महोद्धते ॥ १९२.१८ ॥

अलम्बुषे मिश्रकेशि पुण्डरीके वरूथिनि ।

विलोकनीयं बिभ्राणा वपुर्मन्मथबोधनम् ॥ १९२.१९ ॥

गन्धमादनमासाद्य कुरुध्वं वचनं मम ।

नरनारायणौ तत्र तपोदीक्षान्वितौ द्विजौ ॥ १९२.२० ॥

तेपाते धर्मतनयौ तपः परमदुश्चरम् ।

तावस्माकं वरारोहाः कुर्वाणौ परमं तपः ॥ १९२.२१ ॥

कर्मातिशयदुःखार्तिप्रदावायतिनाशनौ ।

तद्गच्छत न भीः कार्या भवतीभिरिदं वचः ॥ १९२.२२ ॥

स्मरः सहायो भविता वसन्तश्च वराङ्गनाः ।
रूपं वयः समालोक्य मदनोद्दीपनं परम् ।
कन्दर्पवशमभ्येति विवशः को न मानवः ॥ १९२.२३ ॥

मार्कण्डेय उवाच -
इत्युक्त्वा देवराजेन मदनेन समं तदा ।
जग्मुरप्सरसः सर्वा वसन्तश्च महीपते ॥ १९२.२४ ॥
गन्धमादनमासाद्य पुंस्कोकिलकुलाकुलम् ।
चचार माधवो रम्यं प्रोत्फुल्लवनपादपम् ॥ १९२.२५ ॥
प्रववौ दक्षिणाशायां मलयानुगतोऽनिलः ।
भृङ्गमालारुतरवै रमणीयमभूद्वनम् ॥ १९२.२६ ॥
गन्धश्च सुरभिः सद्यो वनराजिसमुद्भवः ।
किन्नरोरगयक्षाणां बभूव घ्राणतर्पणः ॥ १९२.२७ ॥
वराङ्गनाश्च ताः सर्वा नरनारायणावृषी ।
विलोभयितुमारब्धा वागङ्गललितस्मितैः ॥ १९२.२८ ॥
जगौ मनोहरं काचिन्ननर्त तत्र चाप्सराः ।
अवादयत्तथैवान्या मनोहरतरं नृप ॥ १९२.२९ ॥
हावैर्भावैः सृतैर्हास्यैस्तथान्या वल्गुभाषितैः ।
तयोः क्षोभाय तन्वङ्ग्यश्चक्रुरुद्यममङ्गनाः ॥ १९२.३० ॥
तथापि न तयोः कश्चिन्मनसः पृथिवीपते ।
विकारोऽभवदध्यात्मपारसम्प्राप्तचेतसोः ॥ १९२.३१ ॥
निवातस्थौ यथा दीपावकम्पौ नृप तिष्ठतः ।
वासुदेवार्पणस्वस्थे तथैव मनसी तयोः ॥ १९२.३२ ॥
पूर्यमाणोऽपि चाम्भोभिर्भुवमन्यां महोदधिः ।
यथा न याति संक्षोभं तथा तन्मानसं क्वचित् ॥ १९२.३३ ॥
सर्वभूतहितं ब्रह्म वासुदेवमयं परम् ।
मन्यमानौ न रागस्य द्वेषस्य च वशंगतौ ॥ १९२.३४ ॥
स्मरोऽपि न शशाकाथ प्रवेष्टुं हृदयं तयोः ।

विद्यामयं दीपयुतमन्धकार इवालयम् ॥ १९२.३५ ॥

पुष्पोज्ज्वलांस्तरुवरान् वसन्तं दक्षिणानिलम् ।

ताश्चैवाप्सरसः सर्वाः कन्दर्पं च महामुनी ॥ १९२.३६ ॥

यच्चारब्धं तपस्ताभ्यामात्मानं गन्धमादनम् ।

ददर्शातेऽखिलं रूपं ब्रह्मणः पुरुषर्षभ ॥ १९२.३७ ॥

दाहाय नामलो वह्नेर्नापः क्लेदाय चाम्भसः ।

तदद्रव्यमेव तदद्रव्यविकाराय न वै यतः ॥ १९२.३८ ॥

ततो विज्ञाय विज्ञाय परं ब्रह्म स्वरूपतः ।

मधुकन्दर्पयोषित्सु विकारो नाभवत्तयोः ॥ १९२.३९ ॥

ततो गुरुतरं यत्नं वसन्तमदनौ नृप ।

चक्राते ताश्च तन्वङ्ग्यस्तत्क्षोभाय पुनःपुनः ॥ १९२.४० ॥

अथ नारायणो धैर्यं संधायोदीर्णमानसः ।

ऊरोरुत्पादयामास वराङ्गीमबलां तदा ॥ १९२.४१ ॥

त्रैलोक्यसुन्दरीरत्नमशेषमवनीपते ।

गुणैर्लाघवमभ्येति यस्याः संदर्शनादनु ॥ १९२.४२ ॥

तां विलोक्य महीपाल चकम्पे मनसानिलः ।

वसन्तो विस्मयं यातः स्मरः सस्मार किंचन ॥ १९२.४३ ॥

रम्भातिलोत्तमाद्याश्च वैलक्ष्यं देवयोषितः ।

न रेजुरवनीपाल तल्लक्ष्यहृदयेक्षणाः ॥ १९२.४४ ॥

ततः कामो वसन्तश्च पार्थिवाप्सरसश्च ताः ।

प्रणम्य भगवन्तौ तौ तुष्टुवुर्मुनिसत्तमौ ॥ १९२.४५ ॥

वसन्तकामाप्सरस ऊचुः ।

प्रसीदतु जगद्धाता यस्य देवस्य मायया ।

मोहिताः स्म विजानीमो नान्तरं विद्यते द्वयोः ॥ १९२.४६ ॥

प्रसीदतु स वां देवो यस्य रूपमिदं द्विधा ।

धामभूतस्य लोकानामनादेरप्रतिष्ठतः ॥ १९२.४७ ॥

नरनारायणौ देवौ शङ्खचक्रायुधावुभौ ।

आस्तां प्रसादसुमुखावस्माकमपराधिनाम् ॥ १९२.४८ ॥

निधानं सर्वविद्यानां सर्वपापवनानलः ।
नारायणोऽतो भगवान् सर्वपापं व्यपोहतु ॥ १९२.४९ ॥
शार्ङ्गचिह्नायुधः श्रीमानात्मज्ञानमयोऽनघः ।
नरः समस्तपापानि हतात्मा सर्वदेहिनाम् ॥ १९२.५० ॥
जटाकलापबद्धोऽयमनयोर्नः क्षमावतोः ।
सौम्यास्यदृष्टिः पापानि हन्तुं जन्मार्जितानि वै ॥ १९२.५१ ॥
तथात्मविद्यादोषेण योऽपराधः कृतो महान् ।
त्रैलोक्यवन्द्यौ यौ नाथौ विलोभयितुमागताः ॥ १९२.५२ ॥
प्रसीद देव विज्ञानधन मूढदृशामिव ।
भवन्ति सन्तः सततं स्वधर्मपरिपालकाः ॥ १९२.५३ ॥
दृष्ट्वैतन्नः समुत्पन्नं यथा स्त्रीरत्नमुत्तमम् ।
त्वयि नारायणोत्पन्ना श्रेष्ठा पारवती मतिः ॥ १९२.५४ ॥
तेन सत्येन सत्यात्मन्परमात्मन्सनातन ।
नारायण प्रसीदेश सर्वलोकपरायण ॥ १९२.५५ ॥
प्रसन्नबुद्धे शान्तात्मन्प्रसन्नवदनेक्षण ।
प्रसीद योगिनामीश नर सर्वगताच्युत ॥ १९२.५६ ॥
नमस्यामो नरं देवं तथा नारायणं हरिम् ।
नमो नराय नम्याय नमो नारायणाय च ॥ १९२.५७ ॥
प्रसन्नानामनाथानां तथा नाथवतां प्रभो ।
शं करोतु नरोऽस्माकं शं नारायण देहि नः ॥ १९२.५८ ॥

मार्कण्डेय उवाच -
एवमभ्यर्चितः स्तुत्या रागद्वेषादिवर्जितः ।
प्राहेशः सर्वभूतानां मध्ये नारायणो नृप ॥ १९२.५९ ॥

नारायण उवाच -
स्वागतं माधवे कामे भवत्वप्सरसामपि ।
यत्कार्यमागतानां च इहास्माभिस्तदुच्यताम् ॥ १९२.६० ॥

यूयं संसिद्धये नूनमस्माकं बलशत्रुणा ।
संप्रेषितास्ततोऽस्माकं नृत्ययोगादिदर्शनम् ॥ १९२.६१ ॥
न वयं गीतनृत्येन नाङ्गचेष्टादिभाषितैः ।
लुब्धा वै विषयैर्मन्ये विषया दारुणात्मकाः ॥ १९२.६२ ॥
शब्दादिसङ्गदुष्टानि यदा नाक्षाणि नः शुभाः ।
तदा नृत्यादयो भावाः कथं लोभप्रदायिनः ॥ १९२.६३ ॥
ते सिद्धाः स्म न वै साध्या भवतीनां स्मरस्य च ।
माधवस्य च शाक्रोऽपि स्वास्थ्यं यात्वविशङ्किताः ॥ १९२.६४ ॥
योऽसौ परश्च परमः पुरुषः परमेश्वरः ।
परमात्मा समस्तस्य स्थावरस्य चरस्य च ॥ १९२.६५ ॥
उत्पत्तिहेतुरेते च यस्मिन्सर्वं प्रलीयते ।
सर्वावासीति देवत्वाद्वासुदेवेत्युदाहृतः ॥ १९२.६६ ॥
वयमंशांशकास्तस्य चतुर्व्यूहस्य मानिनः ।
तदादेशितवार्त्मानौ जगद्बोधाय देहिनाम् ॥ १९२.६७ ॥
तत्सर्वभूतं सर्वेशं सर्वत्र समदर्शिनम् ।
कुतः पश्यन्तौ रागादीन्करिष्यामो विभेदिनः ॥ १९२.६८ ॥
वसन्ते मयि चेन्द्रे च भवतीषु तथा स्मरे ।
यदा स एव भूतात्मा तदा द्वेषादयः कथम् ॥ १९२.६९ ॥
तन्मयान्यविभक्तानि यदा सर्वेषु जन्तुषु ।
सर्वेश्वरेश्वरो विष्णुः कुतो रागादयस्ततः ॥ १९२.७० ॥
ब्रह्माणमिन्द्रमीशानमादित्यमरुतोऽखिलान् ।
विश्वेदेवानृषीन् साध्यान्वसून्पितृगणांस्तथा ॥ १९२.७१ ॥
यक्षराक्षसभूतादीन्नागान्सर्पान्सरीसृपान् ।
मनुष्यपक्षिगोरूपगजसिंहजलेचरान् ॥ १९२.७२ ॥
मक्षिकामशकान्दंशाञ्छलभाञ्जलजान् कृमीन् ।
गुल्मवृक्षलतावल्लीत्वक्सारतृणजातिषु ॥ १९२.७३ ॥
यच्च किंचिददृश्यं वा दृश्यं वा त्रिदशाङ्गनाः ।
मन्यध्वं जातमेकस्य तत्सर्वं परमात्मनः ॥ १९२.७४ ॥

जायमानः कथं विष्णुमात्मानं परमं च यत् ।
रागद्वेषौ तथा लोभं कः कुर्यादमराङ्गनाः ॥ १९२.७५ ॥
सर्वभूतमये विष्णौ सर्वगे सर्वधातरि ।
निपात्य तं पृथग्भूते कुतो रागादिको गुणः ॥ १९२.७६ ॥
एवमस्मासु युष्मासु सर्वभूतेषु चाबलाः ।
तन्मथैकत्वभूतेषु रागाद्यवसरः कुतः ॥ १९२.७७ ॥
सम्यग्दृष्टिरियं प्रोक्ता समस्तैक्यावलोकिनी ।
पृथग्विज्ञानमात्रैव लोकसंव्यवहारवत् ॥ १९२.७८ ॥
भूतेन्द्रियान्तः करणप्रधानपुरुषात्मकम् ।
जगद्वै ह्येतदखिलं तदा भेदः किमात्मकः ॥ १९२.७९ ॥
भवन्ति लयमायान्ति समुद्रसलिलोर्मयः ।
न वारिभेदतो भिन्नास्तथैवैक्यादिदं जगत् ॥ १९२.८० ॥
यथाग्नेरर्चिषः पीताः पिङ्गलारुणधूसराः ।
तथापि नाग्नितो भिन्नास्तथैतद्ब्रह्मणो जगत् ॥ १९२.८१ ॥
भवतीभिश्च यत्क्षोभमस्माकं स पुरंदरः ।
कारयत्यसदेतच्च विवेकाचारचेतसाम् ॥ १९२.८२ ॥
भवन्त्यः स च देवेन्द्रो लोकाश्च ससुरासुराः ।
समुद्राद्रिवनोपेता मद्देहान्तरगोचराः ॥ १९२.८३ ॥
यथेयं चारुसर्वाङ्गी भवतीनां मयाग्रतः ।
दर्शिता दर्शयिष्यामि तथा चैवाखिलं जगत् ॥ १९२.८४ ॥
प्रयातु शक्रो मा गर्वमिन्द्रत्वं कस्य सुस्थिरम् ।
यूयं च मा स्मयं यात सन्ति रूपान्विताः स्त्रियः ॥ १९२.८५ ॥
किं सुरूपं कुरूपं वा यदा भेदो न दृश्यते ।
तारतम्यं सुरूपत्वे सततं भिन्नदर्शनात् ॥ १९२.८६ ॥
भवतीनां स्मयं मत्वा रूपौदार्यगुणोद्भवम् ।
मयेयं दर्शिता तन्वी ततस्तु शममेष्यथ ॥ १९२.८७ ॥
यस्मान्मदूरोर्निष्पन्ना त्वियमिन्दीवरेक्षणा ।
उर्वशी नाम कल्याणी भविष्यति वराप्सराः ॥ १९२.८८ ॥

तदियं देवराजस्य नीयतां वरवर्णिनी ।

भवत्यस्तेन चास्माकं प्रेषिताः प्रीतिमिच्छता ॥ १९२.८९ ॥

वक्तव्यश्च सहस्राक्षो नास्माकं भोगकारणात् ।

तपश्चर्या न वाप्राप्यफलं प्राप्तुमभीप्सता ॥ १९२.९० ॥

सन्मार्गमस्य जगतो दर्शयिष्ये करोम्यहम् ।

तथा नरेण सहितो जगतः पालनोद्यतः ॥ १९२.९१ ॥

यदि कश्चित्तवाबाधां करोति त्रिदशेश्वर ।

तमहं वारयिष्यामि निवृत्तो भव वासव ॥ १९२.९२ ॥

कर्तासि चेत्त्वमाबाधां न दुष्टस्येह कस्यचित् ।

तं चापि शास्ता तदहं प्रवर्तिष्याम्यसंशयम् ॥ १९२.९३ ॥

एतज्ज्ञात्वा न सन्तापस्त्वया कार्यो हि मां प्रति ।

उपकाराय जगतामवतीर्णोऽस्मि वासव ॥ १९२.९४ ॥

या चेयमुर्वशी मत्तः समुद्भूता पुरंदर त्रेताग्निहेतुभूतेयं एवं प्राप्य भविष्यति ॥ १९२.९५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये श्रीपत्युत्पत्तिवर्णनं नाम द्विनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९३



अध्याय १९३

श्रीमार्कण्डेय उवाच -

इत्युक्तेऽप्सरसः सर्वाः प्रणिपत्य पुनः पुनः ।

ऊचुर्नारायणं देवं तद्दर्शनसमीहया ॥ १९३.१ ॥

वसन्तकामाप्सरस ऊचुः ।

भगवन्भवता योऽयमुपदेशो हितार्थिना ।

प्रोक्तः स सर्वो विज्ञातो माहात्म्यं विदितं च ते ॥ १९३.२ ॥

यत्त्वेतद्भवता प्रोक्तं प्रसन्नेनान्तरात्मना ।

दर्शितेयं विशालाक्षी दर्शयिष्यामि वो जगत् ॥ १९३.३ ॥

तत्रार्थे सर्वभावेन प्रपन्नानां जगत्पते ।

दर्शयात्मानमखिलं दर्शितेयं यथोर्वशी ॥ १९३.४ ॥

यदि देवापराधेऽपि नास्मासु कुपितं तव ।

नमस्ते जगतामीश दर्शयात्मानमात्मना ॥ १९३.५ ॥

नारायण उवाच -

पश्यतेहाखिलांल्लोकान्मम देहे सुराङ्गनाः ।

मधुं मदनमात्मानं यच्चान्यद्द्रष्टुमिच्छथ ॥ १९३.६ ॥

श्रीमार्कण्डेय उवाच -

इत्युक्त्वा भगवान्देवस्तदा नारायणो नृप ।

उच्चैर्जहास स्वनवत्तत्राभूदखिलं जगत् ॥ १९३.७ ॥

ब्रह्मा प्रजापतिः शक्रः सह रुद्रैः पिनाकधृक् ।

आदित्या वसवः साध्या विश्वेदेवा महर्षयः ॥ १९३.८ ॥

नासत्यदस्रावनिलः सर्वशश्च तथाग्नयः ।

यक्षगन्धर्वसिद्धाश्च पिशाचोरगकिन्नराः ॥ १९३.९ ॥

समस्ताप्सरसो विद्याः साङ्गा वेदास्तदुक्तयः ।

मनुष्याः पशवः कीटाः पक्षिणः पादपास्तथा ॥ १९३.१० ॥

सरीसृपाश्चाथ सूक्ष्मा यच्चान्यज्जीवसंज्ञितम् ।

समुद्राः सकलाः शैलाः सरितः काननानि च ॥ १९३.११ ॥

द्वीपान्यशेषाणि तथा तथा सर्वसरांसि च ।

नगरग्रामपूर्णा च मेदिनी मेदिनीपते ।

देवाङ्गनाभिर्देवस्य देहे दृष्टं महात्मनः ॥ १९३.१२ ॥

नक्षत्रग्रहताराभिः सुसम्पूर्णं नभस्तलम् ।

ददृशुस्ताः सुचार्वङ्ग्यस्तस्यान्तर्विश्वं रूपिणः ॥ १९३.१३ ॥

ऊर्ध्वं न तिर्यङ्नाधस्ताद्यदान्तस्तस्य दृश्यते ।

तमनन्तमनादिं च ततस्तास्तुष्टुवुः प्रभुम् ॥ १९३.१४ ॥

मदनेन समं सर्वा मधुना च वराङ्गनाः ।

ससाध्वसा भक्तिपराः परं विस्मयमागताः ॥ १९३.१५ ॥

वसन्तकामाप्सरस ऊचुः ।

पश्याम नादिं तव देव नान्तं न मध्यमव्याकृतरूपपारम् ।

परायणं त्वां जगतामनन्तं नताः स्म नारायणमात्मभूतम् ॥ १९३.१६ ॥

महीनभोवायुजलाग्नयस्त्वं शब्दादिरूपस्तु परापरात्मन् ।

त्वत्तो भवत्यच्युते सर्वमेतद्भेदादिरूपोऽसि विभो त्वमात्मन् ॥ १९३.१७ ॥

द्रष्टासि रूपस्य परस्य वेत्ता श्रोता च शब्दस्य हरे त्वमेकः ।

स्रष्टा भवान् सर्वगतोऽखिलस्य घ्राता च गन्धस्य पृथक्शरीरी ॥ १९३.१८ ॥

सुरेषु सर्वेषु न सोऽस्ति कश्चिन्मनुष्यलोकेषु न सोऽस्ति कश्चित् ।

पश्वादिवर्गेषु न सोऽस्ति कश्चिद्यो नांशभूतस्तव देवदेव ॥ १९३.१९ ॥

ब्रह्माम्बुधीन्दुप्रमुखानि सौम्य शक्रादिरूपाणि तवोत्तमानि ।

समुद्ररूपं तव धैर्यवत्सु तेजः स्वरूपेषु रविस्तथाग्निः ॥ १९३.२० ॥

क्षमाधनेषु क्षितिरूपमग्र्यं शीघ्रो बलवत्सु वायुः ।

मनुष्यरूपं तव राजवेषो मूढेषु सर्वेश्वर पादपोऽसि ॥ १९३.२१ ॥

सर्वानयेष्वच्युत दानवस्त्वं सनत्सजातश्च विवेकवत्सु ।

रसस्वरूपेण जलस्थितोऽसि गन्धस्वरूपं भवतो धरित्र्याम् ॥ १९३.२२ ॥

दृश्यस्वरूपश्च हुताशनस्त्वं स्पर्शस्वरूपं भवतः समीरे ।

शब्दादिकं ते नभसि स्वरूपं मन्तव्यरूपो मनसि प्रभो त्वम् ॥ १९३.२३ ॥

बोधस्वरूपश्च मतौ त्वमेकः सर्वत्र सर्वेश्वर सर्वभूत ।

पश्यामि ते नाभिसरोजमध्ये ब्रह्माणमीशं च हरं भृकुट्याम् ॥ १९३.२४ ॥

तवाश्विनौ कर्णगतौ समस्तास्तवास्थिता बाहुषु लोकपालाः ।

घ्राणोऽनिलो नेत्रगतौ रवीन्दु जिह्वा च ते नाथ सरस्वतीयम् ॥ १९३.२५ ॥

पादौ धरित्री जठरं समस्तांल्लोकान् हृषीकेश विलोकयामः ।

जङ्घे वयं पादतलाङ्गुलीषु पिशाचयक्षोरगसिद्धसङ्घाः ॥ १९३.२६ ॥

पुंस्त्वे प्रजानां पतिरोष्ठयुग्मे प्रतिष्ठितास्ते क्रतवः समस्ताः ।

सर्वे वयं ते दशनेषु देव दंष्ट्रासु देवा ह्यभवंश्च दन्ताः ॥ १९३.२७ ॥

रोमाण्यशेषास्तव देवसङ्घा विद्याधरा नाथ तवाङ्घ्रिरेखाः ।

साङ्गाः समस्तास्तव देव वेदाः समास्थिताः सन्धिषु बाहुभूताः ॥ १९३.२८ ॥

वराहभूतं धरणीधरस्ते नृसिंहरूपं च सदा करालम् ।

पश्याम ते वाजिशिरस्तथोच्चैस्त्रिविक्रमे यच्च तदाप्रमेयम् ॥ १९३.२९ ॥

अमी समुद्रास्तव देव देहे मौर्वालयः शैलधरास्तथामी ।

इमाश्च गङ्गाप्रमुखाः स्रवन्त्यो द्वीपाण्यशेषाणि वनादिदेशाः ॥ १९३.३० ॥

स्तुवन्ति चेमे मुनयस्तवेश देहे स्थितास्त्वन्महिमानमग्र्यम् ।

त्वामीशितारं जगतामनन्तं यजन्ति यज्ञैः किल यज्ञिनोऽमी ॥ १९३.३१ ॥

त्वत्तोहि सौम्यं जगतीह किंचित्त्वत्तो न रौद्रं च समस्तमूर्ते ।

त्वत्तो न शीतं च न केशवोष्णं सर्वस्वरूपातिशयी त्वमेव ॥ १९३.३२ ॥

प्रसीद सर्वेश्वर सर्वभूत सनातनात्मपरमेश्वरेश ।

त्वन्मायया मोहितमानसाभिर्यत्तेऽपराद्धं तदिदं क्षमस्व ॥ १९३.३३ ॥

किं वापराद्धं तव देवदेव यन्मायया नो हृदयं तवापि ।

मायाभिशङ्किप्रणतार्तिहन्तर्मनो हि नो विह्वलतामुपैति ॥ १९३.३४ ॥

न तेऽपराद्धं यदि तेऽपराद्धमस्माभिरुन्मार्गविवर्तिनीभिः ।

तत्क्षम्यतां सृष्टिकृतस्तवैव देवापराधः सृजतो विवेकम् ॥ १९३.३५ ॥

नमो नमस्ते गोविन्द नारायण जनार्दन ।

त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ १९३.३६ ॥

नमोऽनन्त नमस्तुभ्यं विश्वात्मन्विश्वभावन ।

त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ १९३.३७ ॥

वरेण्य यज्ञपुरुष प्रजापालन वामन ।

त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ १९३.३८ ॥

नमोऽस्तु तेऽब्जनाभाय प्रजापतिकृते हर ।

त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ १९३.३९ ॥

संसारार्णवपोताय नमस्तुभ्यमधोक्षज ।

त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ १९३.४० ॥

नमः परस्मै श्रीशाय वासुदेवाय वेधसे ।

स्वेच्छया गुणयुक्ताय सर्गस्थित्यन्तकारिणे ॥ १९३.४१ ॥

उपसंहर विश्वात्मन्रूपमेतत्सनातनम् ।

वर्धमानं न नो द्रष्टुं समर्थं चक्षुरीश्वर ॥ १९३.४२ ॥

प्रलयाग्निसहस्रस्य समा दीप्तिस्तवाच्युत ।

प्रमाणेन दिशो भूमिर्गगनं च समावृतम् ॥ १९३.४३ ॥

न विद्मः कुत्र वर्तामो भवान्नाथोपलक्ष्यते ।

सर्वं जगदिऐकस्थं पिण्डितं लक्षयामहे ॥ १९३.४४ ॥

किं वर्णयामो रूपं ते किं प्रमाणमिदं हरे ।

माहात्म्यं किं नु ते देव यज्जिह्वाया न गोचरे ॥ १९३.४५ ॥

वक्तारो वायुतेनापि बुद्धीनामयुतायुतैः ।

गुणनिर्वर्णनं नाथ कर्तुं तव न शक्यते ॥ १९३.४६ ॥

तदेतद्दर्शितं रूपं प्रसादः परमः कृतः ।

छन्दतो जगतामीश तदेतदुपसंहर ॥ १९३.४७ ॥

मार्कण्डेय उवाच -

इत्येवं संस्तुतस्ताभिरप्सरोभिर्जनार्दनः ।

दिव्यज्ञानोपपन्नानां तासां प्रत्यक्षमीश्वरः ॥ १९३.४८ ॥

विवेश सर्वभूतानि स्वैरंशैर्भूतभावनः ।

तं दृष्ट्वा सर्वभूतेषु लीयमानमधोक्षजम् ॥ १९३.४९ ॥
विस्मयं परमं चक्रुः समस्ता देवयोषितः ।
स च सर्वेश्वरः शैलान्पादपान्सागरान्भुवम् ॥ १९३.५० ॥
जलमग्निं तथा वायुमाकाशं च विवेश ह ।
काले दिक्ष्वथ सर्वात्म ह्यात्मनश्चान्यथापि च ॥ १९३.५१ ॥
आत्मरूपस्थितं स्वेन महिम्ना भावयञ्जगत् ।
देवदानवरक्षांसि यक्षीविद्याधरोरगाः ॥ १९३.५२ ॥
मनुष्यपशुकीटादिमृगपश्चन्तरिक्षगाः ।
येऽन्तरिक्षे तथा भूमौ दिवि ये च जलाश्रयाः ॥ १९३.५३ ॥
तान्विवेश स विश्वात्मा पुनस्तद्रूपमास्थितः ।
नरेण सार्धं यत्ताभिर्दृष्टपूर्वमरिन्दम ॥ १९३.५४ ॥
ताः परं विस्मयं जग्मुः सर्वास्त्रिदशयोषितः ।
प्रणेमुः साध्वसात्पाण्डुवदना नृपसत्तम ॥ १९३.५५ ॥
नारायणोऽपि भगवानाह तास्त्रिदशाङ्गनाः ॥ १९३.५६ ॥

नारायण उवाच -
नीयतामुर्वशी भद्रा यत्रासौ त्रिदशेश्वरः ।
भवतीनां हितार्थाय सर्वभूतेष्वसाविति ॥ १९३.५७ ॥
ज्ञानमुत्पादितं भूयो लयं भूतेषु कुर्वता ।
तद्गच्छध्वं समस्तोऽयं भूतग्रामो मदंशकः ॥ १९३.५८ ॥
अहमद्यात्मभूतस्य वासुदेवस्य योगिनः ।
अस्मात्परतरं नास्ति योऽनन्तः परिपथ्यते ॥ १९३.५९ ॥
तमजं सर्वभूतेशं जानीत परमं पदम् ।
अहं भवत्यो देवाश्च मनुष्याः पशवश्च ये ।
एतत्सर्वमनन्तस्य वासुदेवस्य वै कृतम् ॥ १९३.६० ॥
एवं ज्ञात्वा समं सर्वं सदेवासुरमानुषम् ।
सपश्वादिगुणं चैव द्रष्टव्यं त्रिदशाङ्गनाः ॥ १९३.६१ ॥

मार्कण्डेय उवाच -

इत्युक्तास्तेन देवेन समस्तास्ताः सुरस्त्रियः ।

प्रणम्य तौ समदनाः सवसन्ताश्च पार्थिव ॥ १९३.६२ ॥

आदाय चोर्वशीं भूयो देवराजमुपागताः ।

आचख्युश्च यथावृत्तं देवराजाय तत्तथा ॥ १९३.६३ ॥

मार्कण्डेय उवाच -

तथा त्वमपि राजेन्द्र सर्वभूतेषु केशवम् ।

चिन्तयन्समतां गच्छ समतैव हि मुक्तये ॥ १९३.६४ ॥

राजन्नेवं विशेषेण भूतेषु परमेश्वरम् ।

वासुदेव कथं दोषांल्लोभादीन्न प्रहास्यसि ॥ १९३.६५ ॥

सर्वभूतानि गोविन्दाद्यदा नान्यानि भूपते ।

तदा वैरादयो भावाः क्रियतां न तु पुत्रक ॥ १९३.६६ ॥

इति पश्य जगत्सर्वं वासुदेवात्मकं नृप ।

एतदेव हि कृष्णेन रूपमाविष्कृतं नृप ॥ १९३.६७ ॥

परमेश्वरेति यद्रूपं तदेतत्कथितं तव ।

जन्मादिभावरहितं तद्विष्णोः परमं पदम् ॥ १९३.६८ ॥

संक्षेपेणाथ भूपाल श्रूयतां यद्वदामि ते ।

यन्मतं पुरुषः कृत्वा परं निर्वाणमृच्छति ॥ १९३.६९ ॥

सर्वो विष्णुसमासो हि भावाभावौ च तन्मयौ ।

सदसत्सर्वमीशोऽसौ महादेवः परं पदम् ॥ १९३.७० ॥

भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।

विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ १९३.७१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनं नाम त्रिनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९४



अध्याय १९४

श्रीमार्कण्डेय उवाच -

तच्छ्रुत्वानान्तदेवेन विश्वरूपमुदाहृतम् ।

देवराजस्तथा देवाः परं विस्मयमागताः ॥ १९४.१ ॥

दृष्ट्वा चाप्सरसं पुण्यामुर्वशीं कमलाननाम् ।

संत्रस्तो विस्मितश्चाभूदिन्द्रो राजश्रिया वृतः ॥ १९४.२ ॥

न किंचिदुत्तरं वाक्यमुक्तवाञ्जोषमास्थितः ।

इति वृत्तान्तभूतं हि नारायणविचेष्टितम् ॥ १९४.३ ॥

भृगोः खात्यां(?) समुत्पन्ना लक्ष्मीः श्रुत्वा तु वै नृप ।

वैश्वरूपं परं रूपं विस्मिताचिन्तयत्तदा ॥ १९४.४ ॥

केनोपायेन स स्यान्मे भर्ता नारायणः प्रभुः ।

व्रतेन तपसा वापि दानेन नियमेन च ॥ १९४.५ ॥

वृद्धानां सेवनेनाथ देवताराधनेन वा ।

इति चिन्तापरां कन्यां सती ज्ञात्वा युधिष्ठिर ॥ १९४.६ ॥

प्राह प्राप्तो मया भर्ता शङ्करस्तपसा किल ।

प्रजापतिश्च गायत्र्या ह्यन्याभिरभिवाञ्छिताः ॥ १९४.७ ॥

तपसैव हि ते प्राप्यस्तस्मात्तच्चर सुव्रते ।

तपस्त्वं हि महच्चोग्रं सर्ववाञ्छितदायकम् ॥ १९४.८ ॥

मार्कण्डेय उवाच -

सागरान्तं समासाद्य लक्ष्मीः परपुरंजय ।

चचार विपुलं कालं तपः परमदुश्चरम् ॥ १९४.९ ॥

स्थाणुवत्संस्थिता साभूद्दिव्यं वर्षसहस्रकम् ।

तत इन्द्रादयो देवाः शङ्खचक्रगदाधराः ॥ १९४.१० ॥

भूत्वा जग्मुस्तदर्थं ते सा तु पृष्टवती सुरान् ।
विश्वरूपं वैष्णवं यत्तद्दर्शयत माचिरम् ॥ १९४.११ ॥
विलक्षा व्रीडिता देवा गत्वा नारायणं तदा ।
अब्रुवन् वैश्वरूपं नो शक्ता दर्शयितुं वयम् ॥ १९४.१२ ॥
ततो यथेष्टं ते जग्मुः स च विष्णुरचिन्तयत् ।
उग्ररूपा स्थिता देवी देहं दहति भार्गवी ॥ १९४.१३ ॥
तां तस्मात्तत्र गत्वाहं वरं दत्त्वा तु वाञ्छितम् ।
पुनस्तपः करिष्यामि दर्शयिष्यामि वा पुनः ।
वैष्णवं विश्वरूपं यद्दुर्दश्यं देवदानवैः ॥ १९४.१४ ॥

मार्कण्डेय उवाच -
ततो गत्वा हृषीकेशः सागरान्तस्थितां श्रियम् ।
प्राह तुष्टोऽस्मि ते देवि वरं वृणु यथेप्सितम् ॥ १९४.१५ ॥

श्रीरुवाच -
यदि तुष्टोऽसि मे देव प्रपन्नाया जनार्दन ।
तदा दर्शय यद्दृष्टमप्सरोभिस्तवानघ ॥ १९४.१६ ॥
विश्वरूपमनन्तं च भूतभावन केशव ।
गन्धमादनमासाद्य कृतं यच्च तपस्त्वया ॥ १९४.१७ ॥
तद्वदस्व विभो विष्णो न मिथ्या यदि केशव ।
श्रद्दधामि न चैवाहं रूपस्यास्य कथंचन ॥ १९४.१८ ॥
बहुभिर्यक्षरक्षोभिर्मायाचारिप्रचारिभिः ।
छन्दिता मम जानद्भिर्भावमन्तर्गतं हरौ ॥ १९४.१९ ॥
भूत्वा विष्णुस्वरूपास्ते चक्रिणश्च चतुर्भुजाः ।
सुव्रीडिता गताः सर्वे विश्वरूपो सहायतः ॥ १९४.२० ॥

मार्कण्डेय उवाच -
नारायणोऽथ भगवाञ्छङ्खचक्रगदाभृतम् ।

तया तथोक्तस्तद्रूपं मुक्त्वा वै सुरपूजितम् ॥ १९४.२१ ॥
रूपं परं यथोक्तं वै विश्वरूपमदर्शयत् ।
दर्शयित्वा वचः प्राह पञ्चरात्रविधानतः ॥ १९४.२२ ॥
योऽर्चयिष्यति मां नित्यं स पूज्यः स च पूजितः ।
धनधान्यसमायुक्तः सर्वभोगसमन्वितः ॥ १९४.२३ ॥
मूलं हि सर्वधर्माणां ब्रह्मचर्यं परं तपः ।
तेनाहं तत्र स्थास्यामि मूलश्रीपतिसंज्ञितः ॥ १९४.२४ ॥
मूलश्रीः प्रोच्यते ब्राह्मी ब्रह्मचर्यस्वरूपिणी ।
सर्वयोगमयी पुण्या सर्वपापहरी शुभा ॥ १९४.२५ ॥
पतिस्तस्याः प्रभुरहं वरदः प्राणिनां प्रिये ।
रेवाजले नरः स्नात्वा योऽर्चयेन्मां यतव्रतः ॥ १९४.२६ ॥
मूलश्रीपतिनामानं वाञ्छिते प्राप्नुयात्फलम् ।
दानानि तत्र यो दद्यान्महादानानि च प्रिये ॥ १९४.२७ ॥
सहस्रगुणितं पुण्यमन्यस्थानादवाप्यते ।
दृष्टं त्वया तत्र देशे सम्यक्चैवावधारितम् ।
तदर्चित्वा परान् कामानाप्स्यसि त्वं न संशयः ॥ १९४.२८ ॥
वरं वृणीष्व देवेशि वाञ्छितं दुर्लभं सुरैः ।
दुर्गसंसारकान्तारपतितैः परमेश्वरि ॥ १९४.२९ ॥

श्रीरुवाच -
नारायण जगद्धातर्नारायण जगत्पते ।
नारायण परब्रह्म नारायणपरायण ॥ १९४.३० ॥
प्रसीद पाहि मां भक्त्या सम्यक्सर्गे नियोजय ।
प्रियो ह्यसि प्रियाहं ते यथा स्यां तत्तथा कुरु ॥ १९४.३१ ॥
गृहं धर्मार्थकामानां कारणं देव संमतम् ।
तदास्थायाश्रमं पुण्यं मां श्रेयसि नियोजय ॥ १९४.३२ ॥

नारायण उवाच -

नारायणगिरा देवि विज्ञप्तोऽस्मि यतस्त्वया ।
नारायणगिरिर्नाम तेन मेऽत्र भविष्यति ॥ १९४.३३ ॥
नारायणस्मृतौ याति दुरितं जन्मकोटिजम् ।
यस्माद्गिरति तस्माच्च गिरिरित्येव शब्दितम् ॥ १९४.३४ ॥
तस्मात्सर्वाश्रयो देवि गिरिः पर्वतराड्भवेत् ।
सुरासुरमनुष्याणां यथाहमपि चाश्रयः ॥ १९४.३५ ॥
य एतत्पूजयिष्यन्ति मण्डलस्थं परं मम ।
नारायणगिरिर्नाम देवरूपं शुभेक्षणे ॥ १९४.३६ ॥
ते दिव्यज्ञानसम्पन्ना दिव्यदेहविचेष्टिताः ।
दिव्यं लोकमवाप्स्यन्ति दिव्यभोगसमन्विताः ॥ १९४.३७ ॥

मार्कण्डेय उवाच -
तयोरेवं संवदतोर्देवा इन्द्रपुरोगमाः ।
समागता वनोद्देशं सागरान्ते महर्षयः ॥ १९४.३८ ॥
ततो भृगुं देवराजो नारायणविचिन्तितम् ।
वव्रे ज्ञात्वा तु तत्कन्यां धर्मात्मा स ददौ च ताम् ॥ १९४.३९ ॥
धर्मोऽपि विधिवद्वत्स विवाहं समकारयत् ।
देवदेवस्य राजर्षे देवतार्थे समाहितः ॥ १९४.४० ॥

युधिष्ठिर उवाच -
धर्मो विवाहमकरोद्विधिवद्यत्त्वयोदितम् ।
को विधिस्तत्र का दत्ता दक्षिणा भृगुणापि च ॥ १९४.४१ ॥
विवाहयज्ञे समभूत्स्रुक्स्रुवग्रहणे च कः ।
ऋत्विजः के सदस्याश्च तस्यासन् द्विजसत्तम ॥ १९४.४२ ॥
किं तस्यावभृथं त्वासीत्तत्सर्वं वद विस्तरात् ।
त्वद्वाक्यामृतपानेन तृप्तिर्मम न विद्यते ॥ १९४.४३ ॥

मार्कण्डेय उवाच -

नारायणविवाहस्य यज्ञस्य च युधिष्ठिर ।

तपसस्तस्य देवस्य सम्यगाचरणस्य च ॥ १९४.४४ ॥

वक्तुं समर्थो न गुणान्ब्रह्मापि परमेश्वरः ।

तथाप्युद्देशतो वच्मि शृणु भूत्वा समाहितः ॥ १९४.४५ ॥

ब्रह्मा सप्तर्षयस्तत्र स्रुक्स्रुवग्रहणे रताः ।

अग्नीञ्जुहुविरे राजन्वेदिर्धात्री ससागरा ॥ १९४.४६ ॥

ददुः समुद्रा रत्नानि ब्रह्मर्षिभ्यो नृपोत्तम ।

धनदोऽपि ददौ वित्तं सर्वब्राह्मणवाञ्छितम् ॥ १९४.४७ ॥

विश्वकर्माऽपि देवानां ब्रह्मर्षीणां परंतप ।

वेश्मानि सुविचित्राणि सर्वरत्नमयानि च ॥ १९४.४८ ॥

कृत्वा प्रदर्शयामास देवेन्द्राय यशस्विने ।

शतक्रतुस्ततो विप्रान्कापिष्ठलपुरोगमान् ॥ १९४.४९ ॥

शौनकादींश्च पप्रच्छ बष्कलाञ्छागलानपि ।

आत्रेयानपि राजेन्द्र वृणुध्वमभिवाञ्छितम् ॥ १९४.५० ॥

दृष्ट्वा ते चित्ररत्नानि प्राहुः सर्वेश्वरेश्वरम् ।

देवानां च ऋषीणां च सङ्गमोऽयं सुपुण्यकृत् ॥ १९४.५१ ॥

अस्मिन्पुण्ये सुरेशान वस्तुं वाञ्छामहे सदा ।

शतक्रतुः प्राह पुनर्वासो वात्र भविष्यति ।

सत्यधर्मरता यूयं यावत्कालं भविष्यथ ॥ १९४.५२ ॥

मार्कण्डेय उवाच -

पृष्टं यद्राजशार्दूल के मखे होत्रिणोऽभवन् ।

तत्प्रोच्यमानमधुना शृणु भूत्वा समाहितः ॥ १९४.५३ ॥

सनत्कुमारप्रमुखाः सदस्यास्तस्य चाभवन् ।

औद्गात्रमत्र्यङ्गिरसौ मरीचिश्च चकार ह ॥ १९४.५४ ॥

हौत्रं धर्मवसिष्ठौ च ब्रह्मत्वं सनको मुनिः ।

षट्त्रिंशद्ग्रामसाहस्रं प्रादात्तेभ्यः शतक्रतुः ॥ १९४.५५ ॥

लक्ष्मीर्भर्त्रा च संयुक्ताभवत्तत्कृतवान्प्रभुः ।

ब्रह्मणो जुह्वतो वह्निं यावद्देशस्थितैः सुरैः ॥ १९४.५६ ॥
दृष्टं ललाटं देशोऽसौ ललाट इति संज्ञितः ।
स देशः श्रीपतेः क्षेत्रपुण्यं देवर्षिसेवितम् ॥ १९४.५७ ॥
सर्वाश्चर्यमयं दिव्यं दिव्यसिद्धिसमन्वितम् ।
ब्राह्मणानां ततः पङ्क्तिं निवेशयितुमुद्यता ॥ १९४.५८ ॥
लक्ष्मीः श्रीपतिनामानमाह देवं वचस्तदा ।

श्रीरुवाच -
य एते ब्राह्मणाः शिष्या भृग्वादीनां यतव्रताः ॥ १९४.५९ ॥
तान्निवेशयितुमिच्छामि त्वत्प्रसादादधोक्षज ।
मरीच्यादयः सुरेन्द्रेण स्थापिता गरुडध्वज ॥ १९४.६० ॥
नैष्ठिकव्रतिनो विप्रा बहवोऽत्र यतव्रताः ।
प्राजापत्ये व्रते ब्राह्मे केचिदत्र व्यवस्थिताः ।
तानहं स्थापयिष्यामि त्वत्प्रसादादधोक्षज ॥ १९४.६१ ॥

मार्कण्डेय उवाच -
ततः कौतूहलधरो भगवान्वृषभध्वजः ।
पप्रच्छ व्रतिनः सर्वान्वृत्तिभेदे व्यवस्थितान् ॥ १९४.६२ ॥
नारदोऽपि महादेवमुपेत्य च सतीपतिम् ।
प्राह कृष्णाजिनधरो नैष्ठिका ब्राह्मणा ह्यमी ॥ १९४.६३ ॥
अमी कार्याः सुवस्त्रेण छन्नगुह्या द्विजोत्तमाः ।
प्राजापत्याश्चतुर्विंशसहस्राणि नरेश्वर ॥ १९४.६४ ॥
ब्रह्मचर्यव्रतस्थानां व्रतब्रह्मविचारिणाम् ।
द्वादशैषां सहस्राणि सन्ति वै वृषभध्वज ॥ १९४.६५ ॥
नारदस्य वचः श्रुत्वा देवा देवर्षयोऽपि च ।
साधु साध्वित्यमन्यन्त नोचुः केचन किंचन ॥ १९४.६६ ॥
समाह्वयत्ततो लक्ष्मीस्तान् विप्रान् भक्तिसंयुता ।
उवाच चरणान्गृह्य प्रसादः क्रियतां मयि ॥ १९४.६७ ॥

षट्त्रिंशच्च सहस्राणि वेश्मनामत्र संस्थितिः ।
विश्वकर्मकृतानां तु तेषु तिष्ठन्तु वोऽखिलाः ॥ १९४.६८ ॥
ते तथेति प्रतिज्ञाय स्थिताः संप्रीतमानसाः ।
धनधान्यसमृद्धाश्च वाञ्छितप्राप्तिलक्षणाः ।
सर्वकामसमृद्धाश्च ह्यनारम्भेषु कर्मणाम् ॥ १९४.६९ ॥
इति संस्थाप्य तान् विप्रान् सा स्थिता पर्यपालयत् ।
चतुर्धा तु स्थितो विष्णुः श्रिया देव्याः प्रिये रतः ॥ १९४.७० ॥
एवं वैवाहिकमखे निवृत्ते ऋषयस्तु तम् ।
ऊचुश्चावभृथस्नानं कुत्र कुर्मो जनार्दन ॥ १९४.७१ ॥
इति श्रुत्वा तु वचनं श्रीपतिः पादपङ्कजात् ।
मुमोच जाह्नवीतोयं रेवामध्यगमं शुचि ॥ १९४.७२ ॥
हरेः पादोदकं दृष्ट्वा निःसृतं मुनयस्तु ते ।
विस्मिताः समपद्यन्त जानन्तस्तस्य गौरवम् ॥ १९४.७३ ॥
रुद्रेण सहिताः सर्वे देवता ऋषयस्तथा ।
संकथा विस्मिताश्चक्रुर्विधुन्वन्तः शिरांसि च ॥ १९४.७४ ॥
ऋषय ऊचुः ।
ब्रूहि शम्भो किमत्रायं अकस्माद्वारिसम्भवः ।
विष्णोः पादाम्बुजोत्थश्च सम्मोहकरणः परः ॥ १९४.७५ ॥

ईश्वर उवाच -
पादोदकमिदं विष्णोरहं जानामि वै सुराः ।
दशाश्वमेधावभृथैः स्नानमत्रातिरिच्यते ॥ १९४.७६ ॥
युष्माभिः श्रीपतिः पूज्यः स्नानं चावभृथं कुतः ।
भविष्यतीति तेनाशु इदं वोऽर्थे विनिर्मितम् ॥ १९४.७७ ॥
स्नात्वात्र त्रिदशेशाना यत्फलं सम्प्रपद्यते ।
वक्तुं न केनचिद्याति ततः किमुत्तरं वचः ॥ १९४.७८ ॥

मार्कण्डेय उवाच -

एवमुक्त्वा तु ते सर्वे स्नानं कृत्वा यथागतम् ।
जग्मुर्देवा महेशानपुरोगा भरतर्षभ ॥ १९४.७९ ॥
ब्राह्मणाश्च ततः सर्वे स्ववेश्मान्येव भेजिरे ।
देवतीर्थे महाराज सर्वपापप्रणाशने ॥ १९४.८० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीपतिविवाहवर्णनं नाम चतुर्नवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९५



अध्याय १९५

युधिष्ठिर उवाच -

देवतीर्थे तु किं नाम माहात्म्यं समुदाहृतम् ।

फलं किं स्नानदानादिकारिणां जायते मुने ॥ १९५.१ ॥

मार्कण्डेय उवाच -

पृथिव्यां यानि तीर्थानि देवैर्मुनिगणैरपि ।

सेवितानि महाबाहो तानि ध्यातानि विष्णुना ॥ १९५.२ ॥

समागतान्येकतां वै तत्र तीर्थे युधिष्ठिर ।

तत्तीर्थं वैष्णवं पुण्यं देवतीर्थमिति श्रुतम् ॥ १९५.३ ॥

कुरुक्षेत्रं भुवि परमन्तरिक्षे त्रिपुष्करम् ।

पुरुषोत्तमं दिवि परं देवतीर्थं परात्परम् ॥ १९५.४ ॥

देवतीर्थसमं नास्ति तीर्थमत्र परत्र च ।

यत्प्राप्य मनुजस्तप्येन्न कदाचिद्युधिष्ठिर ॥ १९५.५ ॥

देवैरुक्तानि तीर्थानि योऽत्र स्नानं समाचरेत् ।

देवतीर्थे स सर्वत्र स्नातो भवति मानवः ॥ १९५.६ ॥

एवमस्त्विवति तैरुक्ता देवा ऋषिगणा अपि ।

संतुष्टाः श्रीशमभ्यर्च्य स्वं स्वं स्थानं तु भेजिरे ॥ १९५.७ ॥

सूर्यग्रहेऽत्र वै क्षेत्रे स्नात्वा यत्फलमश्नुते ।

स्नात्वा श्रीशं समभ्यर्च्य समुपोष्य यथाविधि ॥ १९५.८ ॥

यद्ददाति हिरण्यानि दानानि विधिवन्नृप ।

तदनन्तफलं सर्वं सूर्यस्य ग्रहणे यथा ॥ १९५.९ ॥

भूमिदानं धेनुदानं स्वर्णदानमनन्तकम् ।

वज्रदानमनन्तं च फलं प्राह शतक्रतुः ॥ १९५.१० ॥

सोमो वै वस्त्रदानेन मौक्तिकानां च भार्गवः ।
सुवर्णस्य रविर्दानं धर्मराजो ह्यनन्तकम् ॥ १९५.११ ॥
देवतीर्थे तु यद्दानं श्रद्धायुक्तेन दीयते ।
तदनन्तफलं प्राह बृहस्पतिरुदारधीः ॥ १९५.१२ ॥
देवतीर्थे भृगुक्षेत्रे सर्वतीर्थाधिक नृप ।
देवतीर्थे नरः स्नात्वा श्रीपतिं योऽनुपश्यति ॥ १९५.१३ ॥
सोमग्रहे कुलशतं स समुद्धृत्य नाकभाक् ।
दानानि द्विजमुख्येभ्यो देवतीर्थे नराधिप ॥ १९५.१४ ॥
यैर्दत्तानि नरैर्भोगभागिनः प्रेत्य चेह ते ।
देवतीर्थे विप्रभोज्यं हरिमुद्दिश्य यश्चरेत् ॥ १९५.१५ ॥
स सर्वाह्लादमाप्नोति स्वर्गलोके युधिष्ठिर ।
देवतीर्थे नरो नारी स्नात्वा नियतमानसौ ॥ १९५.१६ ॥
उपोष्यैकादशीं भक्त्या पूजयेद्यः श्रियः पतिम् ।
रात्रौ जागरणं कृत्वा घृतेनोद्बोध्य दीपकम् ॥ १९५.१७ ॥
द्वादश्यां प्रातरुत्थाय तथा वै नर्मदाजले ।
विप्रदाम्पत्यमभ्यर्च्य विधिवत्कुरुनन्दन ॥ १९५.१८ ॥
वस्त्राभरणताम्बूलपुष्पधूपविलेपनैः ।
अक्षये विष्णुलोकेऽसौ मोदते चरितव्रतः ॥ १९५.१९ ॥
यः सदैकादशीतिथौ स्नात्वोपोष्यार्चयेद्धरिम् ।
रात्रौ जागरणं कुर्याद्वेदशास्त्रविधानतः ॥ १९५.२० ॥
धर्मराजकृतां पापां न स पश्यति यातनाम् ।
पञ्चरात्रविधानेन श्रीपतिं योऽर्चयिष्यति ॥ १९५.२१ ॥
दीक्षामवाप्य विधिवद्वैष्णवीं पापनाशिनीम् ।
स्वर्गमोक्षप्रदां पुण्यां भोगदां वित्तदामथ ॥ १९५.२२ ॥
राज्यदां वा महाभाग पुत्रदां भाग्यदामथ ।
सुकलत्रप्रदां वापि विष्णोर्भक्तिप्रदामिति ॥ १९५.२३ ॥
तरिष्यति भवाम्भोधिं स नरः कुरुनन्दन ।
योऽर्चयिष्यति तत्रैव देवतीर्थे श्रियः पतिम् ॥ १९५.२४ ॥

विश्वरूपमथो सम्यङ्मूलश्रीपतिमेव वा ।
नारायणगिरिं वापि गृहे वैकादशीतिथौ ॥ १९५.२५ ॥
भक्तिमाञ्छ्रद्धया युक्तः क्षीरैस्तीर्थोदकैरपि ।
सुसूक्ष्मैरहतैर्वस्त्रैर्महाकौशेयकैर्नृप ॥ १९५.२६ ॥
विचित्रैर्नेत्रजैर्वापि धूपैरगुरुचन्दनैः ।
गुग्गुलैर्घृतमिश्रैश्च नैवेद्यैर्विविधैरपि ॥ १९५.२७ ॥
पायसाद्यैर्मनुष्येन्द्र पयसा वा युधिष्ठिर ।
पिष्टदीपैः सुविमलैर्वर्धमानैर्मनोहरैः ॥ १९५.२८ ॥
पूजयित्वा नरो याति यथा तच्छृणु भारत ।
शङ्खी चक्री गदी पद्मी भूत्वासौ गरुडध्वजः ॥ १९५.२९ ॥
देवलोकानतिक्रम्य विष्णुलोकं प्रपद्यते ।
यस्तु वै परया भक्त्या श्रीपतेः पादपङ्कजम् ॥ १९५.३० ॥
चतुर्धाधिष्ठितं पश्येच्छ्रियं त्रैलोक्यमातरम् ।
नृत्यगीतविनोदेन मुच्यते पातकर्ध्रुवम् ॥ १९५.३१ ॥
नीराजने तु देवस्य प्रातर्मध्ये दिने तथा ।
सायं च नियतो नित्यं यः पश्येत्पूजयेद्धरिम् ॥ १९५.३२ ॥
स तीर्त्वा ह्यापदं दुर्गां नैवार्तिं समवाप्नुयात् ।
आयुःश्रीवर्धनं पुंसां चक्षुषामपि पूरकम् ॥ १९५.३३ ॥
उपपापहरं चैव सदा नीराजनं हरेः ।
तदा नीराजनाकाले यो हरेः पठति स्तवम् ॥ १९५.३४ ॥
स धन्यो देवदेवस्य प्रसन्नेनान्तरात्मना ।
हरेर्नीराजनाशेषं पाणिभ्यां यः प्रयच्छति ॥ १९५.३५ ॥
संगृह्य चक्षुषी तेन योजयेन्मार्जयन्मुखम् ।
तिमिरादीनक्षिरोगान्नाशयेद्दीप्तिमन्मुखम् ॥ १९५.३६ ॥
भवत्यशेषदुष्टानां नाशायालं नरोत्तम ।
दीपप्रज्वलनं यस्य नित्यमग्रे श्रियः पतेः ॥ १९५.३७ ॥
स्नात्वा रेवाजले पुण्ये प्रदद्यादधिकं व्रती ।
सप्तद्वीपवती तेन ससागरवनापगा ॥ १९५.३८ ॥

प्रदक्षिणीकृता स्याद्वै धरणी शङ्करोऽब्रवीत् ।
इदं यः पठ्यमानं तु शृणुयात्पठतेऽपि वा ॥ १९५.३९ ॥
स्मरणं सोऽतसमये विपाप्मा प्राप्नुयाद्धरेः ।
इदं यशस्यमायुष्यं स्वर्ग्यं पितृगुणप्रियम् ॥ १९५.४० ॥
माहात्म्यं श्रावयेद्विप्राञ्छ्रीपतेः श्राद्धकर्मणि ।
घृतेन मधुना तेन तर्पिताः स्युः पितामहाः ॥ १९५.४१ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनं नाम पञ्चनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९६



अध्याय १९६

श्रीमार्कण्डेय उवाच -

ततो गच्छेद्धराधीश हंसतीर्थमनुत्तमम् ।

यत्र हंसस्तपस्तप्त्वा ब्रह्मवाहनतां गतः ॥ १९६.१ ॥

हंसतीर्थे नरः स्नात्वा दानं दत्त्वा च काञ्चनम् ।

सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ १९६.२ ॥

हंसयुक्तेन यानेन तरुणादित्यवर्चसा ।

सर्वकामसमृद्धेन सेव्यमानोऽप्सरोगणैः ॥ १९६.३ ॥

तत्र भुक्त्वा यथाकामं सर्वान् भोगान् यथेप्सितान् ।

जातिस्मरो हि जायेत पुनर्मानुष्यमागतः ॥ १९६.४ ॥

संन्यासेन त्यजेद्देहं मोक्षमाप्नोति भारत ॥ १९६.५ ॥

एतत्ते कथितं पार्थ हंसतीर्थस्य यत्फलम् ।

सर्वपापहरं पुण्यं सर्वदुःखविनाशनम् ॥ १९६.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे हंसतीर्थमाहात्म्यवर्णनं नाम षण्णवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९७



अध्याय १९७

श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं गच्छेत्सूर्यतीर्थमनुत्तमम् ।

मूलस्थानमिति ख्यातं पद्मजस्थापितं शुभम् ॥ १९७.१ ॥

मूलश्रीपतिना देवी प्रोक्ता स्थापय भास्करम् ।

श्रुत्वा देवोदितं देवी स्थापयामास भास्करम् ॥ १९७.२ ॥

प्रोच्यते नर्मदातीरे मूलस्थानाख्यभास्करः ॥ १९७.३ ॥

तत्र तीर्थे नरो यस्तु स्नात्वा नियतमानसः ।

संतर्प्य पितृदेवांश्च पिण्डेन सलिलेन च ॥ १९७.४ ॥

मूलस्थानं ततः पश्येत्स गच्छेत्परमां गतिम् ।

गुह्याद्गुह्यतरस्तत्र विशेषस्तु श्रुतो मया ॥ १९७.५ ॥

समागमे मुनीनां तु शङ्कराच्छशिशेखरात् ।

सदा वै शुक्लसप्तम्यां मूलमादित्यवासरः ॥ १९७.६ ॥

तदा रेवाजलं गत्वा स्नात्वा संतर्प्य देवताः ।

पित्ःंश्च भरतश्रेष्ठ दत्त्वा दानं स्वशक्तितः ॥ १९७.७ ॥

करवीरैस्ततो गत्वा रक्तचन्दनवारिणा ।

संस्थाप्य भास्करं भक्त्या सम्पूज्य च यथाविधि ॥ १९७.८ ॥

ततः सागुरुकैर्धूपैः कुन्दरैश्च विशेषतः ।

धूपयेद्देवदेवेशं दीपान् बोध्य दिशो दश ॥ १९७.९ ॥

उपोष्य जागरं कुर्याद्गीतवाद्यं विशेषतः ।

एवं कृते महीपाल न भवेदुग्रदुःखभाक् ॥ १९७.१० ॥

सूर्यलोके वसेत्तावद्यावत्कल्पशतत्रयम् ।

गन्धर्वैरप्सरोभिश्च सेव्यमानो नृपोत्तम ॥ १९७.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मूलस्थानतीर्थमाहात्म्यवर्णनं नाम सप्तनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९८



अध्याय १९८

मार्कण्डेय उवाच -
ततो गच्छेन्महीपाल भद्रकालीतिसङ्गमम् ।
शूलतीर्थमिति ख्यातं स्वयं देवेन निर्मितम् ॥ १९८.१ ॥
पञ्चायतनमध्ये तु तिष्ठते परमेश्वरः ।
शूलपाणिर्महादेवः सर्वदेवतपूजितः ॥ १९८.२ ॥
स सङ्गमो नृपश्रेष्ठ नित्यं देवैर्निषेवितः ।
दर्शनात्तस्य तीर्थस्य स्नानदानाद्विशेषतः ॥ १९८.३ ॥
दौर्भाग्यं दुर्निमित्तं च ह्यभिशापो नृपग्रहः ।
यदन्यद्दुष्कृतं कर्म नश्यते शङ्करोऽब्रवीत् ॥ १९८.४ ॥

युधिष्ठिर उवाच -
कथं शूलेश्वरी देवी कथं शूलेश्वरो हरः ।
प्रथितो नर्मदातीरे एतद्विस्तरतो वद ॥ १९८.५ ॥

मार्कण्डेय उवाच -
बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः ।
वृत्तिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ १९८.६ ॥
अशोकाश्रममध्यस्थो वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महातेजास्तस्थौ मौनव्रतान्वितः ॥ १९८.७ ॥
तस्य कालेन महता तीव्रे तपसि वर्ततः ।
तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः ॥ १९८.८ ॥
अनुसर्प्यमाणा बहुभिः पुरुषैर्भरतर्षभ ।
ते तस्यावसथे लोप्त्रं न्यदधुः कुरुनन्दन ॥ १९८.९ ॥
निधाय च तदा लीनास्तत्रैवाश्रममण्डले ।
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ॥ १९८.१० ॥
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ।
तमपृच्छंस्तदा वृत्तं रक्षिणस्तं तपोधनम् ॥ १९८.११ ॥

वद केन पथा याता दस्यवो द्विजसत्तम ।
तेन गच्छामहे ब्रह्मन् यथा शीघ्रतरं वयम् ॥ १९८.१२ ॥
तथा तु वचनं तेषां ब्रुवतां स तपोधनः ।
न किंचिद्वचनं राजन्नवदत्साध्वसाधु वा ॥ १९८.१३ ॥
ततस्ते राजपुरुषा विचिन्वन्तस्तमाश्रमम् ।
संयम्यैनं ततो राज्ञे सर्वान् दस्यून्न्यवेदयन् ॥ १९८.१४ ॥
तं राजा सहितैश्चोरैरन्वशाद्वध्यतामिति ।
सम्बध्य तं च तैर्राजञ्छूले प्रोतो महातपाः ॥ १९८.१५ ॥
ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपाल धनान्यादाय तान्यथ ॥ १९८.१६ ॥
शूलस्थः स तु धर्मात्मा कालेन महता तदा ।
ध्यायन्देवं त्रिलोकेशं शङ्करं तमुमापतिम् ॥ १९८.१७ ॥
बहुकालं महेशानं मनसाध्याय संस्थितः ।
निराहारोऽपि विप्रर्षिर्मरणं नाभ्यपद्यत ॥ १९८.१८ ॥
धारयामास विप्राणामृषभः स हृदा हरिम् ।
शूलाग्रे तप्यमानेन तपस्तेन कृतं तदा ॥ १९८.१९ ॥
सन्तापं परमं जग्मुः श्रुत्वैतन्मुनयोऽखिलाः ।
ते रात्रौ शकुना भूत्वा संन्यवर्तन्त भारत ॥ १९८.२० ॥
दर्शयन्तो मुनेः शक्तिं तमपृच्छन् द्विजोत्तमम् ।
श्रोतुमिच्छाम ते ब्रह्मन् किं पापं कृतवानसि ॥ १९८.२१ ॥

श्रीमार्कण्डेय उवाच -
ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ।
दोषतः किं गमिष्यामि न हि मेऽन्यो पराध्यति ॥ १९८.२२ ॥
एवमुक्त्वा ततः सर्वानाचचक्षे ततो मुनिः ।
मुनयश्च ततो राज्ञे द्वितीयेऽह्नि न्यवेदयन् ॥ १९८.२३ ॥
राजा तु तमृषिं श्रुत्वा निष्क्रान्तः सह बन्धुभिः ।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ १९८.२४ ॥

राजोवाच -
यन्मयाऽपकृतं तात तवाज्ञानवशाद्बहु ।
प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि ॥ १९८.२५ ॥
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः ।

कृतप्रसादं राजा तं ततः समवतारयत् ॥ १९८.२६ ॥
अवतीर्यमाणस्तु मुनिः शूले मांसत्वमागते ।
अतिसंपीडितो विप्रः शङ्करं मनसागमत् ॥ १९८.२७ ॥
संध्यातः शङ्करस्तेन बहुकालोपवासतः ।
प्रादुर्भूतो महादेवः शूलं तस्य तथाच्छिनत् ॥ १९८.२८ ॥
शूलमूलस्थितः शम्भुस्तुष्टः प्राह पुनःपुनः ।
ब्रूहि किं क्रियतां विप्र सत्त्वस्थानपरायण ॥ १९८.२९ ॥
अदेयमपि दास्यामि तुष्टोऽस्म्यद्योमया सह ।
किं तु सत्यवतां लोके सिद्धिर्न स्याच्च भूयसी ॥ १९८.३० ॥
स्वकर्मणोऽनुरूपं हि फलं भुञ्जन्ति जन्तवः ।
शुभेन कर्मणा भूतिर्दुःखं स्यात्पातकेन तु ॥ १९८.३१ ॥
बहुभेदप्रभिन्नं तु मनुष्येषु विपच्यते ।
केषां दरिद्रभावेन केषां धनविपत्तिजम् ॥ १९८.३२ ॥
सन्तत्यभावजं केषां केषांचित्तद्विपर्ययः ।
तथा दुर्वृत्तितस्तेषां फलमाविर्भवेन्नृणाम् ॥ १९८.३३ ॥
केषांचित्पुत्रमरणे वियोगात्प्रियमित्रयोः ।
राजचौराग्नितः केषां दुःखं स्याद्दैवनिर्मितम् ॥ १९८.३४ ॥
तच्छरीरे तु केषांचित्कर्मणा सम्प्रदृश्यते ।
जराश्च विविधाः केषां दृश्यन्ते व्याधयस्तथा ॥ १९८.३५ ॥
दृश्यन्ते चाभिशापाश्च पूर्वकर्मानुसंचिताः ।
कष्टाः कष्टतरावस्था गताः केचिदनागसः ॥ १९८.३६ ॥
पूर्वकर्मविपाकेन धर्मेण तपसि स्थिताः ।
दान्ताः स्वदारनिरता भूरिदाः परिपूजकाः ॥ १९८.३७ ॥
ह्रीमन्तो नयसंयुक्ता अन्ये बहुगुणैर्युताः ।
दुर्गमामापदं प्राप्य निजकर्मसमुद्भवाम् ॥ १९८.३८ ॥
न संज्वरन्ति ये मर्त्या धर्मनिन्दां न कुर्वते ।
इदमेव तपो मत्वा क्षिपन्ति सुविचेतसः ॥ १९८.३९ ॥
हा भ्रातर्मातः पुत्रेति कष्टेषु न वदन्ति ये ।
स्मरन्ति मां महेशानमथवा पुष्करेक्षणम् ॥ १९८.४० ॥
दुष्कृतं पूर्वजं भोक्तुं ध्रुवं तदुपशाम्यति ॥ १९८.४१ ॥
दिनानि यावन्ति वसेत्स कष्टे यथाकृतं चिन्तयद्देवमीशम् ।
तावन्ति सौम्यानि कृतानि तेन भवन्ति विप्र श्रुतिनोदनैषा ॥ १९८.४२ ॥
यस्मात्त्वया कष्टगतेन नित्यं स्मृतश्चाहं मनसा पूजितश्च ।

गौरीसहायस्तेन इहागतोऽस्मि ब्रूह्यद्य कृत्यं क्रियतां किं नु विप्र ॥ १९८.४३ ॥

माण्डव्य उवाच -
तुष्टो यद्युमया सार्धं वरदो यदि शङ्कर ।
तदा मे शूलसंस्थस्य संशयं परमं वद ॥ १९८.४४ ॥
न रुजा मम कापि स्याच्छूलसंप्रोतितेऽगके ।
अमृतस्रावि तच्छूलं प्रभावात्कस्य शंस मे ॥ १९८.४५ ॥

श्रीशूलपाणिरुवाच -
शूलस्थेन त्वया विप्र मनसा चिन्तितोऽस्मि यत् ।
अनयानां निहन्ताहं दुःखानां विनिबर्हणः ॥ १९८.४६ ॥
ध्यातमात्रो ह्यहं विप्र पाताले वापि संस्थितः ।
शूलमूले त्वहं शम्भुरग्रे देवी स्वयं स्थिता ।
जगन्माताम्बिका देवी त्वामृतेनान्वपूरयत् ॥ १९८.४७ ॥

माण्डव्य उवाच -
पूर्वमेव स्थितो यस्माच्छूलं व्याप्योमया सह ।
प्रसादप्रवणो मह्यमिदानीं चानया सह ॥ १९८.४८ ॥
यस्याः संस्मरणादेव दौर्भाग्यं प्रलयं व्रजेत् ।
न दौर्भाग्यात्परं लोके दुःखाद्दुःखतरं किल ॥ १९८.४९ ॥
किलैवं श्रूयते गाथा पुराणेषु सुरोत्तम ।
त्रैलोक्यं दहतस्तुभ्यं सौभाग्यमेकतां गतम् ॥ १९८.५० ॥
विष्णोर्वक्षःस्थलं प्राप्य तत्स्थितं चेति नः श्रुतम् ।
पीतं तद्वक्षसस्त्रस्तदक्षेण परमेष्ठिना ॥ १९८.५१ ॥
तस्मात्सतीति संजज्ञ इयमिन्दीवरेक्षणा ।
यजतस्तस्य देवेश तव मानावखण्डनात् ॥ १९८.५२ ॥
जुहावाग्नौ तु सा देवी ह्यात्मानं प्राणसंज्ञिकम् ।
आत्मानं भस्मसात्कृत्वा प्रालेयाद्रेस्ततः सुता ॥ १९८.५३ ॥
मेनकायां प्रभो जाता साम्प्रतं या ह्युमाभिधा ।
अनादिनिधना देवी ह्यप्रतर्क्या सुरेश्वर ॥ १९८.५४ ॥
यदि तुष्टोऽसि देवेश ह्युमा मे वरदा यदि ।
उभावप्यत्र वै स्थाने स्थितौ शूलाग्रमूलयोः ॥ १९८.५५ ॥
अवतारो यत्र तत्र संस्थितिं वै ततः कुरु ॥ १९८.५६ ॥

श्रीमार्कण्डेय उवाच -
तेनैवमुक्ते सहसा कृत्वा भूमण्डलं द्विधा ।
निःसृतौ शूलमूलाग्राल्लिङ्गार्चाप्रतिरूपिणौ ॥ १९८.५७ ॥
प्रद्योतयद्दिशः सर्वा लिङ्गं मूले प्रदृश्यते ।
वामतः प्रतिमा देवी तदा शूलेश्वरी स्थिता ॥ १९८.५८ ॥
विलोभयन्ती च जगद्भाति पूरयती दिशः ।
दृष्ट्वा कृताञ्जलिपुटः स्तुतिं चक्रे द्विजोत्तमः ॥ १९८.५९ ॥

माण्डव्य उवाच -
त्वमस्य जगतो माता जगत्सौभाग्यदेवता ।
न त्वया रहितं किंचिद्ब्रह्माण्डेऽस्ति वरानने ॥ १९८.६० ॥
प्रसादं कुरु धर्मज्ञे मम त्वाज्ञसुमर्हसि ।
ईदृशेनैव रूपेण केषु स्थानेषु तिष्ठसि ।
प्रसादप्रवणा भूत्वा वद तानि महेश्वरि ॥ १९८.६१ ॥

श्रीदेव्युवाच -
सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि ।
सर्वलोकेषु यत्किंचिद्विहितं न मया विना ॥ १९८.६२ ॥
तथापि येषु स्थानेषु द्रष्टव्या सिद्धिमीप्सुभिः ।
स्मर्तव्या भूतिकामेन तानि वक्ष्यामि तत्त्वतः ॥ १९८.६३ ॥
वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी ।
प्रयागे ललिता देवी कामुका गन्धमादने ॥ १९८.६४ ॥
मानसे कुमुदा नाम विश्वकाया तथाऽपरे ।
गोमन्ते गोमती नाम मन्दरे कामचारिणी ॥ १९८.६५ ॥
मदोत्कटा चैत्ररथे हयन्ती हास्तिने पुरे ।
कान्यकुब्जे स्थिता गौरी रम्भा ह्यमलपर्वते ॥ १९८.६६ ॥
एकाम्रके कीर्तिमती विश्वां विश्वेश्वरे विदुः ।
पुष्करे पुरुहूता च केदारे मार्गदायिनी ॥ १९८.६७ ॥
नन्दा हिमवतः प्रस्थे गोकर्णे भद्रकर्णिका ।
स्थानेश्वरे भवानी तु बिल्वके बिल्वपत्त्रिका ॥ १९८.६८ ॥
श्रीशैले माधवी नाम भद्रे भद्रेश्वरीति च ।
जया वराहशैले तु कमला कमलालये ॥ १९८.६९ ॥

रुद्रकोट्यां तु कल्याणी काली कालञ्जरे तथा ।
महालिङ्गे तु कपिला माकोटे मुकुटेश्वरी ॥ १९८.७० ॥
शालिग्रामे महादेवी शिवलिङ्गे जलप्रिया ।
मायापुर्यां कुमारी तु संताने ललिता तथा ॥ १९८.७१ ॥
उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ।
गयायां विमला नाम मङ्गला पुरुषोत्तमे ॥ १९८.७२ ॥
विपाशायाममोघाक्षी पाटला पुण्ड्रवर्धने ।
नारायणी सुपार्श्वे तु त्रिकूटे भद्रसुन्दरी ॥ १९८.७३ ॥
विपुले विपुला नाम कल्याणी मलयाचले ।
कोटवी कोटितीर्थेषु सुगन्धा गन्धमादने ॥ १९८.७४ ॥
गोदाश्रमे त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया ।
शिवचण्डे सभानन्दा नन्दिनी देविकातटे ॥ १९८.७५ ॥
रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने ।
देवकी मथुरायां तु पाताले परमेश्वरी ॥ १९८.७६ ॥
चित्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ।
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चण्डिका ॥ १९८.७७ ॥
रमणा रामतीर्थे तु यमुनायां मृगावती ।
करवीरे महालक्ष्मी रूपादेवी विनायके ॥ १९८.७८ ॥
आरोग्या वैद्यनाथे तु महाकाले महेश्वरी ।
अभयेत्युष्णतीर्थे तु मृगी वा विन्ध्यकन्दरे ॥ १९८.७९ ॥
माण्डव्ये माण्डुकी नाम स्वाहा माहेश्वरे पुरे ।
छागलिङ्गे प्रचण्डा तु चण्डिकामरकण्टके ॥ १९८.८० ॥
सोमेश्वरे वरारोहा प्रभासे पुष्करावती ।
वेदमाता सरस्वत्यां पारा पारातटे मुने ॥ १९८.८१ ॥
महालये महाभागा पयोष्ण्यां पिङ्गलेश्वरी ।
सिंहिका कृतशौचे तु कर्तिके चैव शांकरी ॥ १९८.८२ ॥
उत्पलावर्तके लोला सुभद्रा शोणसङ्गमे ।
मता सिद्धवटे लक्ष्मीस्तरंगा भारताश्रमे ॥ १९८.८३ ॥
जालन्धरे विश्वमुखी तारा किष्किन्धपर्वते ।
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले ॥ १९८.८४ ॥
भीमादेवी हिमाद्रौ तु पुष्टिर्वस्त्रेश्वरे तथा ।
कपालमोचने शुद्धिर्माता कायावरोहणे ॥ १९८.८५ ॥
शङ्खोद्धारे ध्वनिर्नाम धृतिः पिण्डारके तथा ।

काला तु चन्द्रभागायामच्छोदे शक्तिधारिणी ॥ १९८.८६ ॥
वेणायाममृता नाम बदर्यामुर्वशी तथा ।
ओषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ॥ १९८.८७ ॥
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी ।
अश्वत्थे वन्दिनीका तु निधिर्वैश्रवणालये ॥ १९८.८८ ॥
गायत्री वेदवदने पार्वती शिवसन्निधौ ।
देवलोके तथेन्द्राणी ब्रह्मास्ये तु सरस्वती ॥ १९८.८९ ॥
सूर्यबिम्बे प्रभा नाम मातॄणां वैष्णवी मता ।
अरुन्धती सतीनां तु रामासु च तिलोत्तमा ॥ १९८.९० ॥
चित्रे ब्रह्मकला नाम शक्तिः सर्वशरीरिणाम् ।
शूलेश्वरी भृगुक्षेत्रे भृगौ सौभाग्यसुन्दरी ॥ १९८.९१ ॥
एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ।
अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ॥ १९८.९२ ॥
इदमेव परं विप्र सर्वेषां तु भविष्यति ।
पठत्यष्टोत्तरशतं नाम्नां यः शिवसन्निधौ ॥ १९८.९३ ॥
स मुच्यते नरः पापैः प्राप्नोति स्त्रियमीप्सिताम् ।
स्नात्वा नारी तृतीयायां मां समभ्यर्च्य भक्तितः ॥ १९८.९४ ॥
न सा स्याद्दुःखिनी जातु मत्प्रभावान्नरोत्तम ।
नित्यं मद्दर्शने नारी नियताया भविष्यति ॥ १९८.९५ ॥
पतिपुत्रकृतं दुःखं न सा प्राप्स्यति कर्हिचित् ।
मदालये तु या नारी तुलापुरुषसंज्ञितम् ॥ १९८.९६ ॥
सम्पूज्य मण्डयेद्देवांल्लोकपालांश्च साग्निकान् ।
सपत्नीकान्द्विजान्पूज्य वासोभिर्भूषणैस्तथा ॥ १९८.९७ ॥
भूतेभ्यस्तु बलिं दद्यादृत्विग्भिः सह देशिकः ।
ततः प्रदक्षिणीकृत्य तुलामित्यभिमन्त्रयेत् ॥ १९८.९८ ॥
शुचिरक्ताम्बरो वा स्याद्गृहीत्वा कुसुमाञ्जलिम् ।
नमस्ते सर्वदेवानां शक्तिस्त्वं परमा स्थिता ॥ १९८.९९ ॥
साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ।
त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता ॥ १९८.१०० ॥
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन्नुमामुखम् ।
ततोऽपरे तुलाभागेन्यसेयुर्द्विजपुंगवाः ॥ १९८.१०१ ॥
द्रव्यमष्टविधं तत्र ह्यात्मवित्तानुसारतः ।
मन्दशभूते विप्रेन्द्र पृथिव्यां यदधिष्ठितम् ॥ १९८.१०२ ॥

सुवर्णं चैव निष्पावांस्तथा राजिकुसुम्भकम् ।
तृणराजेन्दुलवणं कुङ्कुमं तु तथाष्टमम् ॥ १९८.१०३ ॥
एषामेकतमं कुर्याद्यथा वित्तानुसारतः ।
साम्यादभ्यधिकं यावत्काञ्चनादि भवेद्द्विज ॥ १९८.१०४ ॥
तावत्तिष्ठेन्नरो नारी पश्चादिदमुदीरयेत् ।
नमो नमस्ते ललिते तुलापुरुषसंज्ञिते ॥ १९८.१०५ ॥
त्वमुमे तारयस्वास्मानस्मात्संसारकर्दमात् ।
ततोऽवतीर्य मुरवे पूर्वमर्द्धं निवेदयेत् ॥ १९८.१०६ ॥
ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ।
तेभ्यो लब्धा ततोऽनुज्ञां दद्यादन्येषु चार्थिषु ॥ १९८.१०७ ॥
सपत्नीकं गुरुं रक्तवाससी परिधापयेत् ।
अन्यांश्च ऋत्विजः शक्त्या गुरुं केयूरकङ्कणैः ॥ १९८.१०८ ॥
शुक्लां गां क्षीरिणीं दद्याल्ललिता प्रीयतामिति ।
अनेन विधिना या तु कुर्यान्नारी ममालये ॥ १९८.१०९ ॥
मत्तुल्या सा भवेद्राज्ञां तेजसा श्रीरिवामला ।
सावित्रीव च सौन्दर्ये जन्मानि दश पञ्च च ॥ १९८.११० ॥

श्रीमार्कण्डेय उवाच -
एवं निशम्य वचनं गौर्या द्विजवरोत्तमः ।
नमस्कृत्य जगामाशु धर्मराज निवेशनम् ॥ १९८.१११ ॥
तदा प्रभृति तत्तीर्थं ख्यातं शूलेश्वरीति च ।
तस्मिंस्तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ १९८.११२ ॥
ब्राह्मणानन्नवासोभिः पिण्डैः पितृपितामहान् ।
भक्तोपहारैर्देवेशमुमया सह शङ्करं ॥ १९८.११३ ॥
धूपगुग्गुलदानैश्च दीपदानैः सुबोधितैः ।
सर्वपापविनिर्मुक्तः स गच्छेच्छिवसन्निधिम् ॥ १९८.११४ ॥
तस्मिंस्तीर्थे तु यः कश्चिदभियुक्तो नरेश्वर ।
अम्भिशापि तथा स्नातस्त्रिदिनं मुच्यते नरः ॥ १९८.११५ ॥
कृष्णपक्षे चतुर्दश्यां रात्रौ जागर्ति यो नरः ।
उपवासपरः शुद्धः शिवं सम्पूजयेन्नरः ।
प्रमुच्य पापसंमोहं रुद्रलोकं स गच्छति ॥ १९८.११६ ॥
त्रिनेत्रश्च चतुर्बाहुः साक्षाद्रुद्रोऽपरः ।
क्रीडते देवकन्याभिर्यावच्चन्द्रार्कतारकम् ॥ १९८.११७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलेश्वरतीर्थमाहात्म्यवर्णनं नामाष्टनवत्युत्तरशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः १९९



अध्याय १९९

श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं राजन्नाश्विनं तीर्थमुत्तमम् ।

कामिकं सर्वतीर्थानां प्राणिनां सिद्धिदायकम् ॥ १९९.१ ॥

तत्र तीर्थेऽश्विनौ देवौ सुरूपौ भिषजां वरौ ।

तपः कृत्वा सुविपुलं संजातौ यज्ञभागिनौ ॥ १९९.२ ॥

संमतौ सर्वदेवानामादित्यतनयावुभौ ।

नासत्यौ सत्त्वसंपन्नौ सर्वदुःखघ्नसत्तमौ ॥ १९९.३ ॥

युधिष्ठिर उवाच -

आदित्यस्य सुतौ तात नासत्यौ येन हेतुना ।

संजातौ श्रोतुमिच्छामि निर्णयं परमं द्विज ॥ १९९.४ ॥

मार्कण्डेय उवाच -

पुराणे भास्करे तात एतद्विस्तरतो मया ।

संश्रुतं देवदेवस्य मार्तण्डस्य महात्मनः ॥ १९९.५ ॥

तत्ते संक्षेपतः सर्वं भक्तियुक्तस्य भारत ।

कथयामि न सन्देहो वृद्धभावेन कर्शितः ॥ १९९.६ ॥

अतितेजोरवेर्दृष्ट्वा राज्ञी देवी नरोत्तम ।

चचार मेरुकान्तारे वडवा तप उल्बणम् ॥ १९९.७ ॥

ततः कतिपयाहस्य कालस्य भगवान्रविः ।

दृष्ट्वा तु रूपमुत्सृज्य परमं तेज उज्ज्वलम् ॥ १९९.८ ॥

मनोभववशीभूतो हयो भूत्वा लघुक्रमः ।

विस्फुरन्ती यथाप्राणं धावमाना इतस्ततः ॥ १९९.९ ॥

हेषमाणः स्वरेणासौ मैथुनायोपचक्रमे ।

सम्मुखी तु ततो देवी निवृत्ता लघुविक्रमा ॥ १९९.१० ॥

यथा तथा नासिकायां प्रविष्टं बीजमुत्तमम् ।

ततो नासागते बीजे संजातो गर्भ उत्तमः ॥ १९९.११ ॥

जातौ यतः सुतौ पार्थ नासत्यौ विश्रुतौ ततः ।

सुसमौ सुविभक्ताङ्गौ बिम्बाद्बिम्बमिवोद्यतौ ॥ १९९.१२ ॥

अधिकौ सर्वदेवानां रूपैश्वर्यसमन्वितौ ।

नर्मदातटमाश्रित्य भृगुकच्छे गतावुभौ ।

परां सिद्धिमनुप्राप्तौ तपः कृत्वा सुदुश्चरम् ॥ १९९.१३ ॥

तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।

सुरूपः सुभगः पार्थ जायते यत्र तत्र च ॥ १९९.१४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आश्विनतीर्थमाहात्म्यवर्णनं नामैकोनद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २००



अध्याय २००

श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं पार्थ सावित्रीतीर्थमुत्तमम् ।

यत्र सिद्धा महाभागा सावित्री वेदमातृका ॥ २००.१ ॥

युधिष्ठिर उवाच -

सावित्री का द्विजश्रेष्ठ कथं वाराध्यते बुधैः ।

प्रसन्ना वा वरं कं च ददाति कथयस्व मे ॥ २००.२ ॥

श्रीमार्कण्डेय उवाच -

पद्मा पद्मासनस्थेनाधिष्ठिता पद्मयोगिनी ।

सावित्रतेजःसदृशी सावित्री तेन चोच्यते ॥ २००.३ ॥

पद्मानना पद्मवर्णा पद्मपत्रनिभेक्षणा ।

ध्यातव्या ब्राह्मणैर्नित्यं क्षत्रवैश्यैर्यथाविधि ॥ २००.४ ॥

ब्रह्महत्याभयात्सा हि न तु शूद्रैः कदाचन ।

उच्चारणाद्धारणाद्वा नरके पतति ध्रुवम् ॥ २००.५ ॥

वेदोच्चारणमात्रेण क्षत्रियैर्धर्मपालकैः ।

जिह्वाछेदोऽस्य कर्तव्यः शूद्रस्येति विनिश्चयः ॥ २००.६ ॥

बाला बालेन्दुसदृशी रक्तवस्त्रानुलेपना ।

उषःकाले तु ध्यातव्या सन्ध्या सन्धान उत्तमे ॥ २००.७ ॥

उत्तुङ्गपीवरकुचा सुमुखी शुभदर्शना ।

सर्वाभरणसम्पन्ना श्वेतमाल्यानुलेपना ॥ २००.८ ॥

श्वेतवस्त्रपरिच्छन्ना श्वेतयज्ञोपवीतिनी ।

मध्याह्नसन्ध्या ध्यातव्या तरुणा भुक्तिमुक्तिदा ॥ २००.९ ॥

प्रदोषे तु पुनः पार्थ श्वेता पाण्डुरमूर्धजा ।
सुमृता तु दुर्गकान्तारे मातृवत्परिरक्षति ॥ २००.१० ॥
विशेषेण तु राजेन्द्र सावित्रीतीर्थमुत्तमम् ।
स्नात्वाचम्य विधानेन मनोवाक्कायकर्मभिः ॥ २००.११ ॥
प्राणायामैर्दहेद्दोषान् सप्तजन्मार्जितान्बहून् ।
आपोहिष्ठेति मन्त्रेण प्रोक्षयेदात्मनस्तनुम् ॥ २००.१२ ॥
नवषट्च तथा तिस्रस्तत्र तीर्थे नृपोत्तम ।
आपोहिष्ठेति त्रिरावृत्य प्रतिग्राहैर्न लिप्यते ॥ २००.१३ ॥
अघमर्षणं त्र्यृचं तोयं यथावेदमथापि वा ।
उपपापैर्न लिप्येत पद्मपत्रमिवाम्भसा ॥ २००.१४ ॥
त्र्यापं हि कुरुते विप्र उल्लेखत्रयमाचरेत् ।
चतुर्थं कारयेद्यस्तु ब्रह्महत्यां व्यपोहति ॥ २००.१५ ॥
द्रुपदाख्यश्च यो मन्त्रो वेदे वाजसनेयके ।
अन्तर्जले सकृज्जप्तः सर्वपापक्षयंकरः ॥ २००.१६ ॥
उदुत्यमिति मन्त्रेण पूजयित्वा दिवाकरम् ।
गायत्रीं च जपेद्देवीं पवित्रां वेदमातरम् ॥ २००.१७ ॥
गायत्रीं तु जपेद्देवीं यः सन्ध्यानन्तरं द्विजः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ २००.१८ ॥
दशभिर्जन्मभिर्लब्धं शतेन तु पुराकृतम् ।
त्रियुगं तु सहस्रेण गायत्री हन्ति किल्बिषम् ॥ २००.१९ ॥
गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ २००.२० ॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते किंचिन्न तस्य फलभाग्भवेत् ॥ २००.२१ ॥
सन्ध्यां नोपासते यस्तु ब्राह्मणो मन्दबुद्धिमान् ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा सम्प्रजायते ॥ २००.२२ ॥
सावित्रीतीर्थमासाद्य सावित्रीं यो जपेद्द्विजः ।
त्रैविद्यं तु फलं तस्य जायते नात्र संशयः ॥ २००.२३ ॥

पित्ःनुद्दिश्य यः स्नात्वा पिण्डनिर्वपणं नृप ।

कुरुते द्वादशाब्दानि तृप्यन्ति तत्पितामहाः ॥ २००.२४ ॥

सावित्रीतीर्थमासाद्य यः कुर्यात्प्राणसंक्षयम् ।

ब्रह्मलोकं वसेत्तावद्यावदाभूतसम्प्लवम् ॥ २००.२५ ॥

पूर्णे चैव ततः काल इह मानुष्यतां गतः ।

चतुर्वेदो द्विजो राजञ्जायते विमले कुले ॥ २००.२६ ॥

धनधान्यचयोपेतः पुत्रपौत्रसमन्वितः ।

व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ २००.२७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सावित्रीतीर्थमाहात्म्यवर्णनं नाम द्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०१



अध्याय २०१

श्रीमार्कण्डेय उवाच -

ततो गच्छेन्महीपाल देवतीर्थमनुत्तमम् ।

यत्र सिद्धा महाभागा देवाः सेन्द्रा युधिष्ठिर ॥ २०१.१ ॥

स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।

तत्र तीर्थप्रभावेन कृतमानन्त्यमश्नुते ॥ २०१.२ ॥

विशेषाद्भाद्रपदे तु कृष्णपक्षे त्रयोदशीम् ।

प्रधानं सर्वतीर्थानां देवैरध्यासितं पुरा ॥ २०१.३ ॥

स्नात्वा त्रयोदशीदिने श्राद्धं कृत्वा विधानतः ।

देवैः संस्थापितं देवं सम्पूज्य वृषभध्वजम् ।

सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ॥ २०१.४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनं नामैकोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०२



अध्यायः २०२

मार्कण्डेय उवाच -

तस्यैवानन्तरं चान्यच्छिखितीर्थमनुत्तमम् ।

प्रधानं सर्वतीर्थानां पञ्चायतनमुत्तमम् ॥ २०२.१ ॥

तत्र तीर्थे तपस्तप्त्वा शिखार्थं हव्यवाहनः ।

शिखां प्राप्य शिखी भूत्वा शिखाख्यं स्थापयञ्छिवम् ॥ २०२.२ ॥

प्रतिपच्छुक्लपक्षे या भवेदाश्वयुजे नृप ।

तदा तीर्थवरे गत्वा स्नात्वा वै नर्मदाजले ॥ २०२.३ ॥

देवानृषीन् पितॄंश्चान्यांस्तर्पयेत्तिलवारिणा ।

हिरण्यं ब्राह्मणे दद्यात्संतर्प्य च हुताशनम् ॥ २०२.४ ॥

गन्धमाल्यैस्तथा धूपैस्ततः सम्पूजयेच्छिवम् ।

अनेन विधिनाभ्यर्च्य शिखितीर्थे महेश्वरम् ॥ २०२.५ ॥

विमानेनार्कवर्णेन ह्यप्सरोगणसंवृतः ।

गीयमानस्तु गन्धर्वैरुद्रलोकं स गच्छति ॥ २०२.६ ॥

शत्रुक्षयमवाप्नोति तेजस्वी जायते भुवि ॥ २०२.७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शिखितीर्थमाहात्म्यवर्णनं नाम द्व्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०३



अध्यायः २०३

श्रीमार्कण्डेय उवाच -

ततो गच्छेद्धराधीश कोटितीर्थमनुत्तमम् ।

यत्र सिद्धा महाभागाः कोटिसंख्या महर्षयः ॥ २०३.१ ॥

तपः कृत्वा सुविपुलमृषिभिः स्थापितः शिवः ।

तथा कोटीश्वरी देवी चामुण्डा महिषार्दिनी ॥ २०३.२ ॥

कृष्णपक्षे चतुर्दश्यां मासि भाद्रपदे नृप ।

तीर्थकोटीः समाहूय मुनिभिः स्थापितः शिवः ॥ २०३.३ ॥

तस्यां तिथौ च हस्तर्क्षे सर्वपापप्रणाशनम् ।

तत्र तीर्थे तदा गत्वा स्नानं कृत्वा समाहितः ॥ २०३.४ ॥

नरकादुद्धरत्याशु पुरुषानेकविंशतिम् ।

तिलोदकप्रदानेन किमुत श्राद्धदो नरः ॥ २०३.५ ॥

स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।

तस्य तीर्थस्य योगेन सर्वं कोटिगुणं भवेत् ॥ २०३.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनं नाम त्र्युत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०४

https://sa.wikisource.org/s/feo
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्यायः २०४

श्रीमार्कण्डेय उवाच -

भृगुतीर्थं ततो गच्छेत्तीर्थराजमनुत्तमम् ।

पैतामहं महापुण्यं सर्वपातकनाशनम् ॥ २०४.१ ॥

ब्रह्मणा तत्र तीर्थे तु पुरा वर्षशतत्रयम् ।

आराधनं कृतं शम्भोः कस्मिंश्चित्कारणान्तरे ॥ २०४.२ ॥

युधिष्ठिर उवाच -

किमर्थं मुनिशार्दूल ब्रह्मा लोकपितामहः ।

आराधयद्देवदेवं महाभक्त्या महेश्वरम् ॥ २०४.३ ॥

आराध्यः सर्वभूतानां जगद्धर्ता जगद्गुरुः ।

श्रोतव्यं श्रोतुमिच्छामि महदाश्चर्यमुत्तमम् ॥ २०४.४ ॥

धर्मपुत्रवचः श्रुत्वा मार्कण्डेयो मुनीश्वरः ।

कथयामास तद्वृत्तमितिहासं पुरातनम् ॥ २०४.५ ॥

मार्कण्डेय उवाच -

स्वपुत्रिकामभिगन्तुमिच्छन्पूर्वं पितामहः ।

शप्तस्तु देवदेवेन कोपाविष्टेन सत्तम ॥ २०४.६ ॥

वेदास्तव विनश्यन्ति ज्ञानं च कमलासन ।

अपूज्यः सर्वलोकानां भविष्यसि न संशयः ॥ २०४.७ ॥

एवं दत्ते ततः शापे ब्रह्मा खेदावृतस्तदा ।

रेवाया उत्तरे कूले स्नात्वा वर्षशतत्रयम् ।

तोषयामास देवेशं तुष्टः प्रोवाच शङ्करः ॥ २०४.८ ॥

पूज्यस्त्वं भविता लोके प्राप्ते पर्वणि पर्वणि ।

अहमत्र च वत्स्यामि देवैश्च पितृभिः सह ॥ २०४.९ ॥

श्रीमार्कण्डेय उवाच -

तदाप्रभृति तत्तीर्थं ख्यातिं प्राप्तं पितामहात् ।

सर्वपापहरं पुण्यं सर्वतीर्थेष्वनुत्तमम् ॥ २०४.१० ॥

तत्र भाद्रपदे मासि कृष्णपक्षे विशेषतः ।

अमावास्यां तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ २०४.११ ॥

पिण्डदानेन चैकेन तिलतोयेन वा नृप ।

तृप्यन्ति द्वादशाब्दानि पितरो नात्र संशयः ॥ २०४.१२ ॥

कन्यागते तु यस्तत्र नित्यं श्राद्धप्रदो भवेत् ।

अवाप्य तृप्तिं तत्पूर्वे वल्गन्ति च हसन्ति च ॥ २०४.१३ ॥

सर्वेषु पितृतीर्थेषु श्राद्धं कृत्वास्ति यत्फलम् ।

तत्फलं समवाप्नोति दर्शे तत्र न संशयः ॥ २०४.१४ ॥

पैतामहे नरः स्नात्वा पूजयन्पार्वतीपतिम् ।

मुच्यते नात्र सन्देहः पातकैश्चोपपातकैः ॥ २०४.१५ ॥

तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ।

अनिवर्तिका गती राजन्रुद्रलोकादसंशयम् ॥ २०४.१६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पैतामहतीर्थमाहात्म्यवर्णनं नाम चतुरधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०५



अध्यायः २०५

श्रीमार्कण्डेय उवाच -

गच्छेत्ततः क्षोणिनाथ तीर्थं परमशोभनम् ।

कुर्कुरीनाम विख्यातं सर्वपापप्रणाशनम् ॥ २०५.१ ॥

यं यं प्रार्थयते कामं पशुपुत्रधनादिकम् ।

तं तं ददाति देवेशी कुर्कुरी तीर्थदेवता ॥ २०५.२ ॥

क्षेत्रपालो वसेत्तत्र ढौण्ढेशो नाम नामतः ।

तस्य चाराधनं कृत्वा नारी वा पुरुषोऽपि वा ॥ २०५.३ ॥

वन्दनादपि राजेन्द्र दौर्भाग्यं नाशमाप्नुयात् ।

अपुत्रो लभते पुत्रमधनो धनमुत्तमम् ॥ २०५.४ ॥

नारी नरस्तथाप्येवं लभते काममुत्तमम् ।

स्पर्शनाद्दर्शनात्तस्य तीर्थस्य विधिपूर्वकम् ॥ २०५.५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुर्कुरीतीर्थमाहात्म्यवर्णनं नाम पञ्चाधिकद्विशततमोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०६



अध्यायः २०६

श्रीमार्कण्डेय उवाच -

गच्छेत्ततः क्षोणिनाथ तीर्थं परमशोभनम् ।

सर्वपापहरं पुण्यं दशकन्येति विश्रुतम् ।

महादेवकृतं पुण्यं सर्वकामफलप्रदम् ॥ २०६.१ ॥

तत्र तीर्थे महादेवो दशकन्या गुणान्विताः ।

ब्रह्मणो वरयामास ह्युद्वाहेन युयोज ह ॥ २०६.२ ॥

तदाप्रभृति तत्तीर्थं दशकन्येति विश्रुतम् ।

सर्वपापहरं पुण्यमक्षयं कीर्तितं फलम् ॥ २०६.३ ॥

तत्र तीर्थे तु यः कन्यां ददाति समलंकृताम् ।

प्राप्नोति पुरुषो दत्त्वा यथाशक्त्या स्वलंकृताम् ॥ २०६.४ ॥

तेन दानोत्थपुण्येन पूतात्मानो नराधिप ।

वसन्ति रोमसंख्यानि वर्षाणि शिवसन्निधौ ॥ २०६.५ ॥

ततः कालेन महता त्विह लोके नरेश्वर ।

मानुष्यं प्राप्य दुष्प्राप्यं धनकोटीपतिर्भवेत् ॥ २०६.६ ॥

तत्र तीर्थे तु यो भक्त्या स्नात्वा विप्राय काञ्चनम् ।

सम्प्रयच्छति शान्ताय सोऽत्यन्तं सुखमश्नुते ॥ २०६.७ ॥

वाचिकं मानसं वापि कर्मजं यत्पुरा कृतम् ।

तत्सर्वं विलयं याति स्वर्णदानेन भारत ॥ २०६.८ ॥

नरो दत्त्वा सुवर्णं चापि वालाग्रमात्रकम् ।

तत्र तीर्थे दिवं याति मृतो नास्त्यत्र संशयः ॥ २०६.९ ॥

तत्र विद्याधरैः सिद्धैर्विमानवरमास्थितः ।

पूज्यमानो वसेत्तावद्यावदाभूतसम्प्लवम् ॥ २०६.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दशकन्यातीर्थमाहात्म्यवर्णनं नाम षड्उत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०७



अध्यायः २०७

श्रीमार्कण्डेय उवाच -

तस्याग्रे पावनं तीर्थं स्वर्णबिन्द्विति विश्रुतम् ।

यत्र स्नात्वा दिवं यान्ति मृताश्च न पुनर्भवम् ॥ २०७.१ ॥

तत्र तीर्थे तु यः स्नात्वा दत्ते विप्राय काञ्चनम् ।

तेन यत्तु फलं प्रोक्तं तच्छृणुष्व महीपते ॥ २०७.२ ॥

सर्वेषामेव रत्नानां काञ्चनं रत्नमुत्तमम् ।

अग्नितेजःसमुद्भूतं तेन तत्परमं भुवि ॥ २०७.३ ॥

तेनैव दत्ता पृथिवी सशैलवनकानना ।

सपत्तनपुरा सर्वा काञ्चनं यः प्रयच्छति ॥ २०७.४ ॥

मानसं वाचिकं पापं कर्मणा यत्पुरा कृतम् ।

तत्सर्वं नश्यति क्षिप्रं स्वर्णदानेन भारत ॥ २०७.५ ॥

स्वर्णदानं तु यो दत्त्वा ह्यपि वालाग्रमात्रकम् ।

तत्र तीर्थे मृतो याति दिवं नास्त्यत्र संशयः ॥ २०७.६ ॥

तत्र विद्याधरैः सिद्धैर्विमानवरमास्थितः ।

पूज्यमानो वसेत्तावद्यावदाभूतसम्प्लवम् ॥ २०७.७ ॥

पूर्णे तत्र ततः काले प्राप्य मानुष्यमुत्तमम् ।

सुवर्णकोटिसहिते गृहे वै जायते द्विजः ॥ २०७.८ ॥

सर्वव्याधिविनिर्मुक्तः सर्वलोकेषु पूजितः ।

जीवेद्वर्षशतं साग्रं राजसं सत्सु विश्रुतः ॥ २०७.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सुवर्णबिन्दुतीर्थमाहात्म्यवर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०८



अध्यायः २०८

श्रीमार्कण्डेय उवाच -

भूमिपाल ततो गच्छेत्तीर्थं परमशोभनम् ।

विख्यातं त्रिषु लोकेषु पित्ःणामृणमोचनम् ॥ २०८.१ ॥

तत्र स्नात्वा विधानेन संतर्प्य पितृदेवताः ।

मनुष्यश्च नृपश्रेष्ठ दानं दत्त्वानृणो भवेत् ॥ २०८.२ ॥

इच्छन्ति पितरः सर्वे स्वार्थहेतोः सुतं यतः ।

पुन्नाम्नो नरकात्पुत्रोऽस्मानयं मोचयिष्यति ॥ २०८.३ ॥

पिण्डदानं जलं तात ऋणमुत्तममुच्यते ।

पित्ःणां तद्धि वै प्रोक्तमृणं दैवमतः परम् ॥ २०८.४ ॥

अग्निहोत्रं तथा यज्ञाः पशुबन्धास्तथेष्टयः ।

इति देवर्णं प्रोक्तं शृणु मानुष्यकं ततः ॥ २०८.५ ॥

ब्राह्मणेषु च तीर्थेषु देवायतनकर्मसु ।

प्रतिश्रुत्य ददेत्तत्तद्व्यवहारः कृतो यथा ॥ २०८.६ ॥

ऋणत्रयमिदं प्रोक्तं पुत्राणां धर्मनन्दन ।

सत्पुत्रास्ते तु राजेन्द्र स्नाता य ऋणमोचने ॥ २०८.७ ॥

ऋणत्रयाद्विमुच्यन्ते ह्यपुत्राः पुत्रिणस्तथा ।

तस्मात्तीर्थवरं प्राप्य पुत्रेण नियतात्मना ।

पितृभ्यस्तर्पणं कार्यं पिण्डदानं विशेषतः ॥ २०८.८ ॥

तत्र तीर्थे हुतं दत्तं गुरवस्तोषिता यदि ।

मृतानां सप्त जन्मानि फलमक्षयमश्नुते ॥ २०८.९ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे ऋणमोचनतीर्थमाहात्म्यवर्णनं नामाष्टोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २०९



श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं पार्थ पुष्कलीतीर्थमुत्तमम् ।

तत्र तीर्थे नरः स्नात्वा ह्यश्वमेधफलं लभेत् ॥ २०९.१ ॥

क्षमानाथं ततो गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।

दानवगन्धर्वैरप्सरोभिश्च सेवितम् ॥ २०९.२ ॥

तत्र तिष्ठति देवेशः साक्षाद्रुद्रो महेश्वरः ।

भारेण महता जातो भारभूतिरिति स्मृतः ॥ २०९.३ ॥

युधिष्ठिर उवाच -

भारभूतीति विख्यातं तीर्थं सर्वगुणान्वितम् ।

श्रोतुमिच्छामि विप्रेन्द्र परं कौतूहलं हि मे ॥ २०९.४ ॥

श्रीमार्कण्डेय उवाच -

भारभूतिसमुत्पत्तिं शृणु पाण्डवसत्तम ।

विस्तरेण यथा प्रोक्ता पुरा देवेन शम्भुना ॥ २०९.५ ॥

आसीत्कृतयुगे विप्रो वेदवेदाङ्गपारगः ।

विष्णुशर्मेति विख्यातः सर्वशास्त्रार्थपारगः ॥ २०९.६ ॥

क्षमा दमो दया दानं सत्यं शौचं धृतिस्तथा ।

विद्या विज्ञानमास्तिक्यं सर्वं तस्मिन्प्रतिष्ठितम् ॥ २०९.७ ॥

ईदृग्गुणा हि ये विप्रा भवन्ति नृपसत्तम ।

पतितान्नरके घोरे तारयन्ति पितॄंस्तु ते ॥ २०९.८ ॥

इन्द्रियं लोलुपा विप्रा ये भवन्ति नृपोत्तम ।

पतन्ति नरके घोरे रौरवे पापमोहिताः ॥ २०९.९ ॥

ये क्षान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।

प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २०९.१० ॥

एवं गुणगणाकीर्णो ब्राह्मणो नर्मदातटे ।

वसते ब्राह्मणैः सार्धं शिलोञ्छवृत्तिजीवनः ॥ २०९.११ ॥

तादृशं ब्राह्मणं ज्ञात्वा देवदेवो महेश्वरः ।

द्विजरूपधरो भूत्वा तस्याश्रममगात्स्वयम् ॥ २०९.१२ ॥

दृष्ट्वा तं ब्राह्मणैः सार्धमुच्चरन्तं पदक्रमम् ।

अभिवादयते विप्रं स्वागतेन च पूजितः ॥ २०९.१३ ॥

प्रोवाच तं मुहूर्तेन ब्राह्मणो विस्मयान्वितः ।

किमथ तद्बटो ब्रूहि किं करोमि तवेप्सितम् ॥ २०९.१४ ॥

बटुरुवाच -

विद्यार्थिनमनुप्राप्तं विद्धि मां द्विजसत्तम ।

ददासि यदि मे विद्यां ततः स्थास्यामि ते गृहे ॥ २०९.१५ ॥

ब्राह्मण उवाच -

सर्वेषामेव विप्राणां बटो त्वं गोत्र उत्तमे ।

दानानां परमं दानं कथं विद्या च दीयते ॥ २०९.१६ ॥

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।

अथवा विद्यया विद्या भवतीह फलप्रदा ॥ २०९.१७ ॥

बटुरुवाच -

यथान्ये बालकाः स्नाताः शुश्रूषन्ति ह्यहर्निशम् ।

तथाहं बटुभिः सार्धं शुश्रूषामि न संशयः ॥ २०९.१८ ॥

तथेति चोक्त्वा विप्रेन्द्रः पाठयंस्तं दिने दिने ।

वर्तते सह शिष्यैः स शिलोञ्छानुपहारयन् ॥ २०९.१९ ॥

ततः कतिपयाहोभिः प्रोक्तो बटुभिरीश्वरः ।

पचनाद्यं बटो कर्म कुरु क्रमत आगतम् ॥ २०९.२० ॥

तथेति चोक्तो देवेशो भारग्राममुपागतः ।

ध्यात्वा वनस्पतीः सर्वा इदं वचनमब्रवीत् ॥ २०९.२१ ॥

यावदागच्छते विप्रो बटुभिः सह मन्दिरम् ।

अदर्शनाभिः कर्तव्यं तावदन्नं सुसंस्कृतम् ॥ २०९.२२ ॥

एवमुक्त्वा तु ताः सर्वा विश्वरूपो महेश्वरः ।

क्रीडनार्थं गतस्तत्र बटुवेषधरः पृथक् ॥ २०९.२३ ॥

दृष्ट्वा समागतं तत्र बटुवेषधरं पृथक् ।

धिक्त्वां च परुषं वाक्यमूचुस्ते गिरिसन्निधौ ॥ २०९.२४ ॥

क्षुत्क्षामकंठाः सर्वे च गत्वा तु किल मन्दिरम् ।

त्वया सिद्धेन चान्नेन तृप्तिं यास्यामहे वयम् ॥ २०९.२५ ॥

तद्वृथा चिन्तितं सव त्वयागत्य कृतं द्विज ।

मिथ्याप्रतिज्ञेन सता दुरनुष्ठितमद्य ते ॥ २०९.२६ ॥

बटुरुवाच -

सन्तापमनुतापं वा भोजनार्थं द्विजर्षभाः ।

मा कुरुध्वं यथान्यायं सिद्धेऽग्रे गृहमेष्यथा ॥ २०९.२७ ॥

बटुरुवाच -

दिनशेषेण चास्माकं पञ्चतां च दिने दिने ।

निष्पत्तिं याति वा नेति तदसिद्धमशेषतः ॥ २०९.२८ ॥

असिद्धं सिद्धमस्माकं यत्त्वया समुदाहृतम् ।

दृष्ट्वानृतं गतास्तत्र त्वां बद्धाम्भसि निक्षिपे ॥ २०९.२९ ॥

बटुरुवाच -

भोभोः शृणुध्व सर्वेऽत्र सोपाध्याया द्विजोत्तमाः ।

प्रतिज्ञां मम दुर्धर्षां यां श्रुत्वा विस्मयो भवेत् ॥ २०९.३० ॥

यदि सिद्धमिदं सर्वमन्नं स्यादाश्रमे गुरोः ।

यूयं बद्ध्वा मया सर्वे क्षेप्तव्या नर्मदाम्भसि ॥ २०९.३१ ॥

अथवान्नं न सिद्धं स्याद्भवद्भिर्दृढबन्धनैः ।

गुरोस्तु पश्यतो बद्ध्वा क्षेप्तव्योऽहं नर्मदाह्रदे ॥ २०९.३२ ॥

तथेति कृत्वा ते सर्वे समयं गुरुसन्निधौ ।

स्नात्वा जाप्यविधानेन भूतग्रामं ततो ययुः ॥ २०९.३३ ॥

दृष्ट्वा ते विस्मयं जग्मुर्विस्तृते भक्ष्यभोजने ।

षड्रसेन नृपश्रेष्ठ भुक्त्वा हुत्वा पृथक्पृथक् ॥ २०९.३४ ॥

ततः प्रोवाच वचनं हृष्टपुष्टो द्विजोत्तमः ।

वरदोऽस्मि वरं वत्स वृणु यत्तव रोचते ॥ २०९.३५ ॥

साङ्गोपाङ्गास्तु ते वेदाः शास्त्राणि विविधानि च ।

प्रतिभास्यन्ति ते विप्र मदीयोऽस्तु वरस्त्वयम् ॥ २०९.३६ ॥

प्रणम्य बटुभिः सार्धं स चिक्रीड यथासुखम् ।

द्वितीये तु ततः प्राप्ते दिवसे नर्मदाजले ॥ २०९.३७ ॥

क्रीडनार्थं गताः सर्वे सोपाध्याया युधिष्ठिर ।

ततः स्मृत्वा पणं सर्वे भाषयित्वा विधानतः ॥ २०९.३८ ॥

उपाध्यायमथोवाच नत्वा देवः कृताञ्जलिः ।

जले प्रक्षेपयाम्यद्य निष्प्रतिज्ञान् बटून् प्रभो ॥ २०९.३९ ॥

तद्देवस्य वचः श्रुत्वा नष्टास्ते बटवो नृप ।

गुरोस्तु पश्यतो राजन्धावमाना दिशो दश ॥ २०९.४० ॥

वायुवेगेन देवेन लुञ्जितास्ते समन्ततः ।

भारं बद्ध्वा तु सर्वेषां बटूनां च नरेश्वर ॥ २०९.४१ ॥

शापानुग्रहको देवोऽक्षिपत्तोये यथा गृहे ।

ततो विषादमगमद्दृष्ट्वा तान्नर्मदाजले ॥ २०९.४२ ॥

गुरुणा बटुरुक्तोऽथ किमेतत्साहसं कृतम् ।

एतेषां मातृपितरो बालकानां गृहेऽङ्गनाः ॥ २०९.४३ ॥

यदि पृच्छन्ति ते बालान् क्व गतान् कथयाम्यहम् ।

एवं स्थिते महाभाग यदि कश्चिन्मरिष्यति ॥ २०९.४४ ॥

तदा स्वकीयजीवेन त्वं योजयितुमर्हसि ।

मृतेषु तेषु विप्रेषु न जीवे निश्चयो मृतः ॥ २०९.४५ ॥

ब्रह्महत्याश्च ते बह्व्यो भविष्यन्ति मृते मयि ।

द्विजबन्धनमात्रेण नरको भवति ध्रुवम् ॥ २०९.४६ ॥

मरणाद्यां गतिं यासि न तां वेद्मि द्विजाधम ।

एवमुक्तः स्मितं कृत्वा देवदेवो महेश्वरः ॥ २०९.४७ ॥

भारभूतेश्वरे तीर्थ उज्जहार जलाद्द्विजान् ।

मुक्त्वा भारं तु देवेन छादयित्वा तु तान्द्विजान् ॥ २०९.४८ ॥

लिङ्गं प्रतिष्ठितं तत्र भारभूतेति विश्रुतम् ।

मृतांस्तान् वै द्विजान् दृष्ट्वा ब्रह्महत्या निराकृता ॥ २०९.४९ ॥

गतानि पञ्च वै दृष्ट्वा ब्रह्महत्याशतानि वै ।

ततः स विस्मयाविष्टो दृष्ट्वा तान्बालकान् गुरुः ॥ २०९.५० ॥

नान्यस्य कस्यचिच्छक्तिरेवं स्यादीश्वरं विना ।

ज्ञात्वा तं देवदेवेशं प्रणाममकरोद्द्विजः ॥ २०९.५१ ॥

अज्ञानेन मया सव यदुक्तं परमेश्वर ।

अप्रियं यत्कृतं सर्वं क्षन्तव्यं तन्मम प्रभो ॥ २०९.५२ ॥

देव उवाच -

भगवन्गुरुर्भवान्देवो भवान्मम पितामहः ।

वेदगर्भ नमस्तेऽस्तु नास्ति कश्चिद्व्यतिक्रमः ॥ २०९.५३ ॥

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।

अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ २०९.५४ ॥

एवमुक्त्वा जगन्नाथो विष्णुशर्माणमानतः ।

तत्र तीर्थे जगामाशु कैलासं धरणीधरम् ॥ २०९.५५ ॥

तदाप्रभृति तत्तीर्थं भारभूतीति विश्रुतम् ।

विख्यातं सर्वलोकेषु महापातकनाशनम् ॥ २०९.५६ ॥

तत्र तीर्थे पुनर्वृत्तमितिहासं ब्रवीमि ते ।

सर्वपापहरं दिव्यमेकाग्रस्त्वं शृणुष्व तत् ॥ २०९.५७ ॥

पुरा कृतयुगस्यादौ वैश्यः कश्चिन्महामनाः ।

सुकेश इति विख्यातस्तस्य पुत्रोऽतिधार्मिकः ॥ २०९.५८ ॥

सोमशर्मेति विख्यातो मृतः पृथुललोचनः ।

स सखायं वणिक्पुत्रं कंचिच्चक्रे दरिद्रिणम् ॥ २०९.५९ ॥

सुदेवमिति ख्यातं सर्वकर्मसु कोविदम् ।

एकदा तु समं तेन व्यवहारमचिन्तयत् ॥ २०९.६० ॥

सखे समुद्रयानेन गच्छावोत्तरणैः शुभैः ।

भाण्डं बहु समादाय मदीये द्रव्यसाधने ॥ २०९.६१ ॥

परं तीरं गमिष्याव उत्कर्षस्त्वावयोः समः ।

इति तौ मन्त्रयित्वा तु मन्त्रवत्समभीप्सितम् ॥ २०९.६२ ॥

सर्वं प्रयाणकं गृह्य ह्यारूढौ लवणोदधिम् ।

तौ गत्वा तु परं भाण्डं विक्रीय पुरतस्तदा ॥ २०९.६३ ॥

प्राप्तौ बहु सुवर्णं च रत्नानि विविधानि च ।

नावं तां संगतां कृत्वा पश्चात्तावारुरोहतुः ॥ २०९.६४ ॥

नावमन्तर्जले दृष्ट्वा निशीथे स्वर्णसंभृताम् ।

दृष्ट्वा तु सोमशर्माणमुत्सङ्गे कृतमस्तकम् ॥ २०९.६५ ॥

शयानमतिविश्वस्तं सहदेवो व्यचिन्तयत् ।

एष निद्रावशं यातो मयि प्राणान्निधाय वै ॥ २०९.६६ ॥

अस्याधीनमिदं सर्वं द्रव्यरत्नमशेषतः ।

उत्कर्षार्द्धं तु मे दद्यात्तत्र गत्वेति वा न वा ॥ २०९.६७ ॥

इति निश्चित्य मनसा पापस्तं लवणोदधौ ।

चिक्षेप सोमशर्माणं पापध्यातेन चेतसा ॥ २०९.६८ ॥

उत्तीर्य तरणात्तस्माद्गत्वा संगृह्य तद्धनम् ।

ततः कतिपयाहोभिः संयुक्तः कालधर्मणा ॥ २०९.६९ ॥

गतो यमपुरं घोरं गृहीतो यमकिंकरैः ।

स नीतस्तेन मार्गेण यत्र संतपते रविः ॥ २०९.७० ॥

कृत्वा द्वादशधात्मानं सम्प्राप्ते प्रलये यथा ।

सुतीक्ष्णाः कण्टका यत्र यत्र श्वानः सुदारुणाः ॥ २०९.७१ ॥

तीक्ष्णदंष्ट्रा महाव्याला व्याघ्रा यत्र महावृकाः ।

सुतप्ता वालुका यत्र क्षुधा तृष्णा तमो महत् ॥ २०९.७२ ॥

पानीयस्य कथा नास्ति न छाया नाश्रमः क्वचित् ।

अन्नं पानीयसहितं यावत्तद्दीयते विषम् ॥ २०९.७३ ॥
छायां संप्रार्थमानानां भृशं ज्वलति पावकः ।
तैर्दह्यमाना बहुशो विलपन्ति मुहुर्मुहुः ॥ २०९.७४ ॥
हा भ्रातर्मातः पुत्रेति पतन्ति पथि मूर्छिताः ।
इत्थंभूतेन मार्गेण स गीतो यमकिंकरैः ॥ २०९.७५ ॥
यत्र तिष्ठति देवेशः प्रजासंयमनो यमः ।
ते द्वारदेशे तं मुक्त्वाचक्षुर्यमकिंकराः ॥ २०९.७६ ॥
बद्ध्वा तं गलपाशेन ह्यासीनं मित्रघातिनम् ।
अवधारय देवेश बुध्यस्व यदनन्तरम् ॥ २०९.७७ ॥

यम उवाच -
न तु पूर्वं मुखं दृष्टं मया विश्वासघातिनाम् ।
ये मित्रद्रोहिणः पापास्तेषां किं शासनं भवेत् ॥ २०९.७८ ॥
ऋषयोऽत्र विचारार्थं नियुक्ता निपुणाः स्थिताः ।
ते यत्र ब्रुवते तत्र क्षिपध्वं मा विचार्यताम् ॥ २०९.७९ ॥
इत्युक्तास्ते तमादाय किंकराः शीघ्रगामिनः ।
मुनीशांस्तत्र तानूचुस्तं निवेद्य यमाज्ञया ॥ २०९.८० ॥
द्विजा अनेन मित्रं स्वं प्रसुप्तं निशि घातितम् ।
विश्वस्तं धनलोभेन को दण्डोऽस्य भविष्यति ॥ २०९.८१ ॥
मुनय ऊचुः ।
अदृष्टपूर्वमस्माभिर्वदनं मित्रघातिनाम् ।
कृत्वा पटान्तरे ह्येनं शृण्वन्तु गतिमस्य ताम् ॥ २०९.८२ ॥
ते शास्त्राणि विचार्याथ ऋषयश्च परस्परम् ।
आहूय यमदूतांस्तानूचुर्ब्राह्मणपुंगवाः ॥ २०९.८३ ॥
आलोकितानि शास्त्राणि वेदाः साङ्गाः स्मृतीरपि ।
पुराणानि च मीमांसा दृष्टमस्माभिरत्र च ॥ २०९.८४ ॥
ब्रह्मघ्ने च सुरापे च स्तेये गुर्वङ्गनागमे ।
निष्कृतिर्विहिता शास्त्रे कृतघ्ने नास्ति निष्कृतिः ॥ २०९.८५ ॥

ये स्त्रीघ्नाश्च गुरुघ्नाश्च ये बालब्रह्मघातिनः ।
विहिता निष्कृतिः शास्त्रे कृतघ्ने नास्ति निष्कृतिः ॥ २०९.८६ ॥
वापीकूपतडागानां भेत्तारो ये च पापिनः ।
उद्यानवाटिकानां च छेत्तारो ये च दुर्जनाः ॥ २०९.८७ ॥
दावाग्निदाहका ये च सततं येऽसुहिंसकाः ।
न्यासापहारिणो ये च गरदाः स्वामिवञ्चकाः ॥ २०९.८८ ॥
मातापितृगुरूणां च त्यागिनो दोषदायिनः ।
स्वभर्तृवञ्चनपरा या स्त्री गर्भप्रघातिनी ॥ २०९.८९ ॥
विवेकरहिता या स्त्री यास्नाता भोजने रता ।
द्विकालभोजनरतास्तथा वैष्णववासरे ॥ २०९.९० ॥
तासां स्त्रीणां गतिर्दृष्टा न तु विश्वासघातिनाम् ।
विश्वासघातिनां पुंसां मित्रद्रोहकृतां तथा ॥ २०९.९१ ॥
तेषां गतिर्न वेदेषु पुराणेषु च का कथा ।
इति स्थितेषु पापेषु गतिरेषां न विद्यते ॥ २०९.९२ ॥
नान्या गतिर्मित्रहनने विश्वस्तघ्ने च नः श्रुतम् ।
इतो नीत्वा यमदूता एनं विश्वस्तघातिनम् ॥ २०९.९३ ॥
कल्पकोटिशतं साग्रं पर्यायेण पृथक्पृथक् ।
नरकेषु च सर्वेषु त्रिंशत्कोटिषु संख्यया ॥ २०९.९४ ॥
क्षिप्यतामेष मित्रघ्नो विचारो मा विधीयताम् ।
इति ते वचनं श्रुत्वा किंकरास्तं निगृह्य च ॥ २०९.९५ ॥
यत्र ते नरका घोरास्तत्र क्षेप्तुं गतास्ततः ।
ते तमादाय हि नरके घोरे रौरवसंज्ञिते ॥ २०९.९६ ॥
चिक्षिपुस्तत्र पापिष्ठं क्षिप्ते रावोऽभवन्महान् ।
नरकस्थितभूतेषु मोक्तव्यो नैष पापकृत् ॥ २०९.९७ ॥
अस्य संस्पर्शनादेव पीडा शतगुणा भवेत् ।
यथा व्यथासिकाष्ठैश्च समिद्धैर्दहनात्मकैः ॥ २०९.९८ ॥
भवति स्पर्शनात्तस्य किमेतेन कृतामलम् ।
यथा दुर्जनसंसर्गात्सुजनो याति लाघवम् ॥ २०९.९९ ॥

सन्निधानात्तथास्याशु क्षते क्षारावसेचनम् ।

प्रसादः क्रियतामाशु नीयतां नरकेऽन्यतः ॥ २०९.१०० ॥

एवमुक्तास्ततस्तैस्तु गतास्ते त्वशुचिं प्रति ।

तत्र ते नारकाः सन्ति पूर्ववत्तेऽपि चुक्रुशुः ॥ २०९.१०१ ॥

एवं ते किंकराः सर्वे पर्यटन्नरकमण्डले ।

नरकेऽपि स्थितिस्तस्य नास्ति पापस्य दुर्मतेः ॥ २०९.१०२ ॥

यदा तदा तु ते सर्वे तं गृह्य यमसन्निधौ ।

गत्वा निवेद्य तत्सर्वं यदुक्तं नारकैर्नरैः ।

नरके न स्थितिर्यस्य तस्य किं क्रियतां वद ॥ २०९.१०३ ॥

यम उवाच -

पापिष्ठ एष वै यातु योनिं तिर्यङ्निषेविताम् ।

कालं मुनिभिरुद्दिष्टः तिर्यग्योनिं प्रवेश्यताम् ॥ २०९.१०४ ॥

एवमुक्ते तु वचने प्रजासंयमनेन च ।

स गतः कृमितां पापो विष्ठासु च पृथक्पृथक् ॥ २०९.१०५ ॥

ततोऽसौ दंशमशकान् पिपीलिकसमुद्भवान् ।

यूकामत्कुणकाढ्यांश्च गत्वा पक्षित्वमागतः ॥ २०९.१०६ ॥

स्थावरत्वं गतः पश्चात्पाषाणत्वं ततः परम् ।

सरीसृपानजगरवराहमृगहस्तिनः ॥ २०९.१०७ ॥

वृकश्वानखरोष्ट्रांश्च सूकरीं ग्रामजातिकाम् ।

योनिमाश्वतरीं प्राप्य तथा महिषसम्भवाम् ॥ २०९.१०८ ॥

एताश्चान्याश्च बह्वीर्वै प्राप योनीः क्रमेण वै ।

स ता योनीरनुप्राप्य धुर्योऽभूद्भारवाहकः ॥ २०९.१०९ ॥

स गृहे पार्थिवेशस्य धार्मिकस्य यशस्विनः ।

स दृष्ट्वा कार्त्तिकीं प्राप्तामेकदा नृपसत्तमः ॥ २०९.११० ॥

पुरोहितं समाहूय ब्राह्मणांश्च तथा बहून् ।

न गृहे कार्त्तिकीं कुर्यादेतन्मे बहुशः श्रुतम् ॥ २०९.१११ ॥

समेताः कुत्र यास्याम इति ब्रूत द्विजोत्तमाः ।

यो गृहे कार्त्तिकीं कुर्यात्स्नानदानादिवर्जितः ॥ २०९.११२ ॥

संवत्सरकृतात्पुण्यात्स बहिर्भवति श्रुतिः ।

तस्मात्सर्वप्रयत्नेन तीर्थं सर्वगुणान्वितम् ॥ २०९.११३ ॥

सहितास्तत्र गच्छामः स्नातुं दातुं च शक्तितः ।

एवमुक्ते तु वचने पार्थिवेन द्विजोत्तमाः ॥ २०९.११४ ॥

ऊचुः श्रेष्ठं नृपश्रेष्ठ रेवाया उत्तरे तटे ।

भारेश्वरेति विख्यातं मुक्तितीर्थं नृपोत्तम ॥ २०९.११५ ॥

तत्र यामो वयं सर्वे सर्वपापक्षयावहम् ।

एवमुक्तः स नृपतिर्गृहीत्वा प्रचुरं वसु ॥ २०९.११६ ॥

शकटं संभृतं कृत्वा तत्र युक्तः स धूर्वहः ।

यः कृत्वा मित्रहननं गोयोनिं समुपागतः ॥ २०९.११७ ॥

इत्थं स नर्मदातीरे सम्प्राप्तस्तीर्थमुत्तमम् ।

गत्वा चतुर्दशीदिने ह्युपवासकृतक्षणः ॥ २०९.११८ ॥

गत्वा स नर्मदातीरे नाम रुद्रेत्यनुस्मरन् ।

शुचिप्रदेशाच्च मृदं मन्त्रेणानेन गृह्यताम् ॥ २०९.११९ ॥

उद्धृतासि वराहेण रुद्रेण शतबाहुना ।

अहमप्युद्धरिष्यामि प्रजया बन्धनेन च ॥ २०९.१२० ॥

स एवं तां मृदं नीत्वा मुक्त्वा तीरे तथोत्तरे ।

ददर्श भास्करं पश्चान्मन्त्रेणानेन चालभेत् ॥ २०९.१२१ ॥

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ।

मृत्तिके हर मे पापं जन्मकोटिशतार्जितम् ॥ २०९.१२२ ॥

तत एवं विगाह्यापो मन्त्रमेतमुदीरयेत् ।

त्वं नर्मदे पुण्यजले तवाम्भः शङ्करोद्भवम् ॥ २०९.१२३ ॥

स्नानं प्रकुर्वतो मेऽद्य पापं हरतु चार्जितम् ।

स स्नात्वानेन विधिना संतर्प्य पितृदेवताः ॥ २०९.१२४ ॥

ययौ देवालयं पश्चादुपहारैः समन्वितः ।

भक्त्या संचिन्त्य सान्निध्ये शङ्करं लोकशङ्करम् ॥ २०९.१२५ ॥

पुराणोक्तविधानेन पूजां समुपचक्रमे ।

पूजाचतुष्टयं देवि शिवरात्र्यां निगद्यते ॥ २०९.१२६ ॥

संस्नाप्य प्रथमे यामे पञ्चगव्येन शङ्करम् ।

घृतेन पूरणं पश्चात्कृतं नृपवरेण तु ॥ २०९.१२७ ॥

धूपदीपनैवेद्याद्यं संकल्प्य च यथाविधि ।

अर्घेणानेन देवेशं मन्त्रेणानेन शङ्करम् ॥ २०९.१२८ ॥

नमस्ते देवदेवेश शम्भो परमकारण ।

गृहाणार्घमिमं देव संसाराघमपाकुरु ॥ २०९.१२९ ॥

वित्तानुरूपतो दत्तं सुवर्णं मन्त्रकल्पितम् ।

अग्निर्हि देवाः सर्वे सुवर्णं च हुताशनात् ॥ २०९.१३० ॥

अतः सुवर्णदानेन प्रीताः स्युः सर्वदेवताः ।

तदर्घं सर्वदा दातुः प्रीतो भवतु शङ्करः ॥ २०९.१३१ ॥

अनेन विधिना तेन पूजितः प्रथमे शिवः ।

यामे द्वितीये तु पुनः पूर्वोक्तविधिना चरेत् ॥ २०९.१३२ ॥

स्नापयामास दुग्धेन गव्येन त्रिपुरान्तकम् ।

तंदुलैः पूरणं पश्चात्कृतं लिङ्गस्य शूलिनः ॥ २०९.१३३ ॥

कृत्वा विधानं पूर्वोक्तं दत्तं वस्त्रयुगं सितम् ।

श्वेतवस्त्रयुगं यस्माच्छङ्करस्यातिवल्लभम् ॥ २०९.१३४ ॥

प्रीतो भवति वै शम्भुर्दत्तेन श्वेतवाससा ।

यामं तृतीयं सम्प्राप्तं दृष्ट्वा नृपतिसत्तमः ॥ २०९.१३५ ॥

देवं संस्नाप्य मधुना पूरणं चक्रिवांस्तिलैः ।

तिलद्रोणप्रदानं च कुर्यान्मन्त्रमुदीरयन् ॥ २०९.१३६ ॥

तिलाः श्वेतास्तिलाः कृष्णाः सर्वपापहरास्तिलाः ।

तिलद्रोणप्रदानेनु संसारश्छिद्यतां मम ॥ २०९.१३७ ॥

अनेन विधिना राजा यामिनीयामपूजनम् ।

अतिवाह्य विनोदेन ब्रह्मघोषेण जागरम् ॥ २०९.१३८ ॥

चकार पूजनं शम्भोर्बहुपुण्यप्रसाधकम् ।

ये जागरे त्रिनेत्रस्य शिवरात्र्यां शिवस्थिताः ॥ २०९.१३९ ॥

ते यां गतिं गताः पार्थ न तां गच्छन्ति यज्विनः ।

पापानि यानि कानि स्युः कोटिजन्मार्जितान्यपि ॥ २०९.१४० ॥

हरकेशवयोः स्नान्ति जागरे यान्ति संक्षयम् ।

यावन्तो निमिषा नृणां भवन्ति निशि जाग्रताम् ॥ २०९.१४१ ॥

निमिषे निमिषे राजन्नश्वमेधफलं ध्रुवम् ।

उपवासपराणां च देवायतनवासिनाम् ॥ २०९.१४२ ॥

शृण्वतां धर्ममाख्यानं ध्यायतां हरकेशवौ ।

न तां बहुसुवर्णेन क्रतुना गतिमाप्नुयुः ॥ २०९.१४३ ॥

शिवरात्रिस्तिथिः पुण्या कार्त्तिकी च विशेषतः ।

रेवाया उत्तरं कूलं तीरं भारेश्वरेति च ॥ २०९.१४४ ॥

जागृतश्चातिदुःखेन कथं पापं न हास्यति ।

इत्थंस जागरं कृत्वा शिवरात्र्यां नरेश्वरः ॥ २०९.१४५ ॥

प्रभाते विमले गत्वा नर्मदातीरमुत्तमम् ।

स्नापितास्तेन ते सर्वे वाहनानि गजादयः ॥ २०९.१४६ ॥

यैस्तु वाहैर्गतस्तीर्थं स्नातोऽहं स्नापयामि तान् ।

तत्र मध्यस्थितः स्नातस्तिर्यक्त्वान्निर्गतो वणिक् ॥ २०९.१४७ ॥

दानं ददौ तानुद्दिश्य किंचिच्छक्त्यनुरूपतः ।

तेन वाहकृताद्दोषान्मुक्तो भवति मानवः ॥ २०९.१४८ ॥

अन्यथासौ कृतो लाभः कृतो व्रजति तान् प्रति ।

संस्नाप्य तं ततो राजा स्वयं स्नात्वा विधानतः ॥ २०९.१४९ ॥

संतर्प्य पितृदेवांश्च कृत्वा श्राद्धं यथाविधि ।

कृत्वा पिण्डान्पितृभ्यश्च वृषमुत्सृज्य लक्षणम् ॥ २०९.१५० ॥

गत्वा देवालयं पश्चाद्देवं तीर्थोदकेन च ।

संस्नाप्य पञ्चगव्येन ततः पञ्चामृतेन च ॥ २०९.१५१ ॥

सर्वौषधिजलेनैव ततः शुद्धोदकेन च ।

चन्दनेन सुगन्धेन समालभ्य च शङ्करम् ॥ २०९.१५२ ॥

कुङ्कुमैश्च सकर्पूरैर्गन्धैश्च विविधैस्तथा ।

पुष्पौघैश्च सुगन्धाढ्यैश्चतुर्थं लिङ्गपूरणम् ॥ २०९.१५३ ॥

कृतं नृपवरेणात्र कुर्वता पूर्वकं विधिम् ।

गोदानं च कृतं पश्चाद्विधिदृष्टेन कर्मणा ॥ २०९.१५४ ॥

धेनुके रुद्ररूपासि रुद्रेण परिनिर्मिता ।

अस्मिन्नगाधे संसारे पतन्तं मां समुद्धर ॥ २०९.१५५ ॥

धेनुं स्वलंकृतां दद्यादनेन विधिना ततः ।

क्षमाप्य देवदेवेशं ब्राह्मणान् भोजयेद्बहून् ॥ २०९.१५६ ॥

षड्विधैर्भोजनैर्भक्ष्यैर्वासोभिस्तान् समर्चयेत् ।

दक्षिणाभिर्विचित्राभिः पूजयित्वा क्षमापयेत् ॥ २०९.१५७ ॥

स स्वयं बुभुजे पश्चात्परिवारसमन्वितः ।

तामेव रजनीं तत्र न्यवसज्जगतीपतिः ॥ २०९.१५८ ॥

तस्य तत्रोषितस्यैवं निशीथेऽथ नरेश्वर ।

आकाशे सोऽति शुश्राव दिव्यवाणीसमीरितम् ॥ २०९.१५९ ॥

वागुवाच -

राजन्समं ततो लोके फलं भवति साम्प्रतम् ।

संसारसागरे ह्यत्र पतितानां दुरात्मनाम् ॥ २०९.१६० ॥

यदि संनिधिमात्रेण फलं तत्रोच्यते कथम् ।

यदि शंतनुवंशस्य तत्रोन्मादकरं भवेत् ॥ २०९.१६१ ॥

य एष त्वद्गृहे वोढा ह्यतिभारधुरंधरः ।

अनेन मित्रहननं पापं विश्वासघातनम् ॥ २०९.१६२ ॥

कृतं जन्मसहस्राणामतीते परिजन्मनि ।

गतेन पाप्मनात्मानं नरकेषु च संस्थितिः ॥ २०९.१६३ ॥

ततो योनिसहस्रेषु गतिस्तिर्यक्षु चैव हि ।

गोयोनिं समनुप्राप्तस्त्वद्गृहे स सुदुर्मतिः ॥ २०९.१६४ ॥

स्नापितश्च त्वया तीर्थे ह्यस्मिन् पर्वसमागमे ।

दृष्ट्वा पूजां त्वया क्लृप्तां कृता जागरणक्रिया ॥ २०९.१६५ ॥

तेन निष्कल्मषो जातो मुक्त्वा देहं तवाग्रतः ।

स्वर्गं प्रति विमानस्थः सोऽद्य राजन्गमिष्यति ॥ २०९.१६६ ॥

श्रीमार्कण्डेय उवाच -

एवमुक्ते निपतितो धुर्यः प्राणैर्व्ययुज्यत ।

विमानवरमारूढस्तत्क्षणात्समदृश्यत ॥ २०९.१६७ ॥

स तं प्रणम्य राजेन्द्रमुवाच प्रहसन्निव ॥ २०९.१६८ ॥

वृष उवाच -

भोभो नृपवरश्रेष्ठ तीर्थमाहात्म्यमुत्तमम् ।

यत्र चास्मद्विधस्तीर्थे मुच्यते पातकैर्नरः ।

मया ज्ञातमशेषेण मत्समो नास्ति पातकी ॥ २०९.१६९ ॥

अतः परं किं तु कुर्यां परं तीर्थानुकीर्तनम् ।

भवान्माता भवन्भ्राता भवांश्चैव पितामहः ॥ २०९.१७० ॥

क्षन्तव्यं प्रणतोऽस्म्यद्य यस्मिंस्तीर्थे हि मादृशाः ।

गतिमीदृग्विधां यान्ति न जाने तव का गतिः ॥ २०९.१७१ ॥

समाराध्य महेशानं सम्पूज्य च यथाविधि ।

का गतिस्तव संभाष्या देह्यनुज्ञां मम प्रभो ॥ २०९.१७२ ॥

त्वरयन्ति च मां ह्येते दिविस्थाः प्रणयाद्गणाः ।

स्वस्त्यस्तु ते गमिष्यामीत्युक्त्वा सोऽन्तर्दधे क्षणात् ॥ २०९.१७३ ॥

श्रीमार्कण्डेय उवाच -

गते चादर्शनं तत्र स राजा विस्मयान्वितः ।

तीर्थमाहात्म्यमतुलं वर्णयन्स्वपुरं गतः ॥ २०९.१७४ ॥

इत्थंभूतं हि तत्तीर्थं नर्मदायां व्यवस्थितम् ।

सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् ॥ २०९.१७५ ॥

उपपापानि नश्यन्ति स्नानमात्रेण भारत ।

कार्त्तिकस्य चतुर्दश्यामुपवासपरायणः ॥ २०९.१७६ ॥

चतुर्धा पूरयेल्लिङ्गं तस्य पुण्यफलं शृणु ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ २०९.१७७ ॥

महापापानि चत्वारि चतुर्भिर्यान्ति संक्षयम् ।

सोऽश्वमेधस्य यज्ञस्य लभते फलमुत्तमम् ॥ २०९.१७८ ॥

कार्त्तिके शुक्लपक्षस्य चतुर्दश्यामुपोषितः ।

स्वर्णदानाच्च तत्तीर्थे यज्ञस्य लभते फलम् ॥ २०९.१७९ ॥

अष्टम्यां वा चतुर्दश्यां वैशाखे मासि पूर्ववत् ।

दीपं पिष्टमयं कृत्वा पितॄन् सर्वान् विमोक्षयेत् ॥ २०९.१८० ॥

तत्र यद्दीयते दानमपि वालाग्रमात्रकम् ।

तदक्षयफलं सर्वमेवमाह महेश्वरः ॥ २०९.१८१ ॥

भारभूत्यां मृतानां तु नराणां भावितात्मनाम् ।

अनिवर्तिका गती राजञ्छिवलोकान्निरन्तरम् ॥ २०९.१८२ ॥

अथवा लोकवृत्त्यर्थं मर्त्यलोकं जिगीषति ।

साङ्गवेदज्ञविप्राणां जायते विमले कुले ॥ २०९.१८३ ॥

धनधान्यसमायुक्तो वेदविद्यासमन्वितः ।

सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ २०९.१८४ ॥

पुनस्तत्तीर्थमासाद्य ह्यक्षयं पदमाप्नुयात् ॥ २०९.१८५ ॥

एतत्पुण्यं पापहरं कथितं ते नृपोत्तम ।

भारतेदं महाख्यानं शृणु चैव ततः परम् ॥ २०९.१८६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भारभूतितीर्थमाहात्म्यवर्णनं नाम नवाधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१०



अध्यायः २१०

श्रीमार्कण्डेय उवाच -

तस्यैवानन्तरं तात पुङ्खिलं तीर्थमुत्तमम् ।

तत्र तीर्थे पुरा पुङ्खः पार्थ सिद्धिमुपागतः ॥ २१०.१ ॥

जामदग्न्यो महातेजाः क्षत्रियान्तकरः प्रभुः ।

तपः कृत्वा सुविपुलं नर्मदोत्तरतीरभाक् ॥ २१०.२ ॥

ततः प्रभृति विख्यातं पुङ्खतीर्थं नरेश्वर ।

तत्र तीर्थे तु यः स्नात्वा ह्याराध्य परमेश्वरम् ॥ २१०.३ ॥

इहलोके बलैर्युक्तः परे मोक्षमवाप्नुयात् ।

देवान्पित्ःन् समभ्यचर्च्य पित्ःणामनृणी भवेत् ॥ २१०.४ ॥

तत्र तीर्थे नरो यस्तु प्राणत्यागं करोति वै ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ २१०.५ ॥

तत्र तीर्थे नरः स्नात्वा हयमेधफलं लभेत् ॥ २१०.६ ॥

तत्र तीर्थे नरो यस्तु ब्राह्मणान् भोजयेन्नृप ।

एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥ २१०.७ ॥

तत्र तीर्थे तु यः कश्चित्पूजयेद्वृषभध्वजम् ।

वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ २१०.८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पुङ्खिलतीर्थमाहात्म्यवर्णनं नाम दशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २११

https://sa.wikisource.org/s/ffy
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

अध्यायः २११

श्रीमार्कण्डेय उवाच -

आश्चर्यभूतं लोकस्य देवदेवेन यत्कृतम् ।

तत्ते सर्वं प्रवक्ष्यामि नर्मदातटवासिनाम् ॥ २११.१ ॥

द्विजान् सुकृत्पणान् देवः कुष्ठी भूत्वा ययाच ह ।

श्राद्धकाले तु सम्प्राप्ते रक्तगन्धानुलेपनः ॥ २११.२ ॥

स्रवद्बुद्बुदगात्रस्तु मक्षिकाकृमिसंवृतः ।

दुश्चर्मा दुर्मुखो गन्धी प्रस्खलंश्च पदे पदे ॥ २११.३ ॥

ब्राह्मणावसथं गत्वा स्खलन्द्वारेऽब्रवीदिदम् ।

भोभो गृहपते त्वद्य ब्राह्मणैः सह भोजनम् ॥ २११.४ ॥

त्वद्गृहे कर्तुमिच्छामि ह्येभिः सह सुसंस्कृतम् ।

ततस्तं ब्रह्माणं दृष्ट्वा यजमानसमन्विताः ॥ २११.५ ॥

स्रवन्तं सर्वगात्रेषु धिग्धिगित्येवमब्रुवन् ।

निर्गच्छस्वाशु दुर्गन्ध गृहाच्छीघ्रं द्विजाधम ॥ २११.६ ॥

अभोज्यमेतत्सर्वेषां दर्शनात्तव सत्कृतम् ।

एवमेव तथेत्युक्त्वा देवदेवो महेश्वरः ॥ २११.७ ॥

जगामाकाशममलं दृश्यमानो द्विजोत्तमैः ।

गते चादर्शनं देवे स्नात्वाभ्युक्ष्य समन्ततः ॥ २११.८ ॥

भुञ्जतेऽस्म द्विजा राजन्यावत्पात्रे पृथक्पृथक् ।

यत्रयत्र च पश्यन्ति तत्रतत्र कृमिर्बहुः ॥ २११.९ ॥

दृष्ट्वा विस्मयमापन्नाः सर्वे किमिति चाब्रुवन् ।

ततः कश्चिदुवाचेदं ब्राह्मणो गुणवानजः ॥ २११.१० ॥

योगीन्द्रः शङ्कया तत्र बहुविप्रसमागमे ।

योऽत्र पूर्वं समायातः स योगी परमेश्वरः ॥ २११.११ ॥

तस्येदं क्रीडितं मन्ये भर्त्सितस्य विपाकजम् ।
फलं भवति नान्यस्य ह्यतिथेः शास्त्रनिश्चयात् ॥ २११.१२ ॥
सम्पूज्य परमात्मा वै ह्यतिथिश्च विशेषतः ।
श्राद्धकाले तु सम्प्राप्तमतिथिं यो न पूजयेत् ॥ २११.१३ ॥
पिशाचा राक्षसास्तस्य तद्विलुम्पन्त्यसंशयम् ।
रूपान्वितं विरूपं वा मलिनं मलिनाम्बरम् ॥ २११.१४ ॥
योगीन्द्रं श्वपचं वापि अतिथिं न विचारयेत् ।
तच्छ्रुत्वा वचनं तस्य यजमानपुरोगमाः ॥ २११.१५ ॥
ब्राह्मणा द्विजमन्वेष्टुं धाविताः सर्वतोदिशम् ।
तावत्कथंचित्केनापि गहनं वनमाश्रितः ॥ २११.१६ ॥
दृष्टो दृष्ट इति प्रोक्तं तेन ते सर्व आगताः ।
ततः पश्यन्ति तं विप्रं स्थाणुवन्निश्चलं स्थितम् ॥ २११.१७ ॥
क्रन्दते न चलति स्पन्दते न च पश्यति ।
जल्पन्ति करुणं केचित्स्तुवन्ति च तथापरे ॥ २११.१८ ॥
वाग्भिः सततमिष्टाभिः स्तूयमानस्त्रिलोचनः ।
क्षुधार्दितानां देवेश ब्राह्मणानां विशेषतः ।
विनष्टमन्नं सर्वेषां पुनः संकर्तुमर्हसि ॥ २११.१९ ॥
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिर ।
परया कृपया देवः प्रसन्नस्तानुवाच ह ॥ २११.२० ॥
मया प्रसन्नेन महानुभावास्तदेव वोऽन्नं विहितं सुधेव ।
भुञ्जन्तु विप्राः सह बन्धुभृत्यैरर्चन्तु नित्यं मम मण्डलं च ॥ २११.२१ ॥
ततश्चायतनं पार्थ देवदेवस्य शूलिनः ।
मुण्डिनामेति विख्यातं सर्वपापहरं शुभम् ।
कार्त्तिक्यां तु विशेषेण गयातीर्थेन तत्समम् ॥ २११.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मुण्डितीर्थमाहात्म्यवर्णनं नामैकादशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१२



श्रीमार्कण्डेय उवाच -

अथान्यत्सम्प्रवक्ष्यामि देवस्य चरितं महत् ।

श्रुतमात्रेण येनाशु सर्वपापैः प्रमुच्यते ॥ २१२.१ ॥

भिक्षुरूपं परं कृत्वा देवदेवो महेश्वरः ।

एकशालां गतो ग्रामं भिक्षार्थी क्षुत्पिपासितः ॥ २१२.२ ॥

अक्षसूत्रोद्यतकरो भस्मगुण्ठितविग्रहः ।

स्फुरत्त्रिशूलो विश्वेशो जटाकुण्डलभूषितः ॥ २१२.३ ॥

कृत्तिवासा महाकायो महाहिकृतभूषणः ।

वादयन्वै डमरुकं डिण्डिमप्रतिमं शुभम् ॥ २१२.४ ॥

कपालपाणिर्भगवान्बालकैर्बहुभिर्वृतः ।

क्वचिद्गायन्हसंश्चैव नृत्यन्वदन् क्वचित्क्वचित् ॥ २१२.५ ॥

यत्र यत्र गृहे देवो लीलया डिण्डमं न्यसेत् ।

भाराक्रान्तं गृहं पार्थ तत्रतत्र विनश्यति ॥ २१२.६ ॥

एवं सम्प्रचरन् देवो वेष्टितो बहुभिर्जनैः ।

दृश्यादृश्येन रूपेण निर्जगाम बहिः प्रभुः ॥ २१२.७ ॥

इतश्चेतश्च धावन्तं न पश्यन्ति यदा जनाः ।

विस्मितास्ते स्थिताः शम्भुर्भविष्यति ततोऽस्तुवन् ॥ २१२.८ ॥

तेषां तु स्तुवतां भक्त्या शङ्करं जगतां पतिम् ।

डिण्डिरूपो हि भगवांस्तदासौ प्रत्यदृश्यत ॥ २१२.९ ॥

तदाप्रभृति देवेशो डिण्डिमेश्वर उच्यते ।

दर्शनात्स्पर्शनाद्राजन् सर्वपापैः प्रमुच्यते ॥ २१२.१० ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे एकशालडिण्डिमेश्वरतीर्थमाहात्म्यवर्णनं नाम द्वादशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१३



श्रीमार्कण्डेय उवाच -

पुनरन्यत्प्रवक्ष्यामि देवस्य चरितं महत् ।

श्रुतमात्रेण येनैव सर्वपापैः प्रमुच्यते ॥ २१३.१ ॥

अबालो बालरूपेण ग्रामण्यैर्बालकैः सह ।

आमलैः क्रीडते शम्भुस्तत्ते वक्ष्यामि भारत ॥ २१३.२ ॥

सर्वैस्तैरामलाः क्षिप्ता ये ते देवेन पाण्डव ।

आनीतास्तत्क्षणादेव ततः पश्चात्क्षिपेद्धरः ॥ २१३.३ ॥

यावद्गत्वा दिशो दिग्भ्य आगच्छन्ति पृथक्पृथक् ।

तावत्तमामलं भूतं पश्यन्ति परमेश्वरम् ॥ २१३.४ ॥

तृतीये चैव यत्कर्म देवदेवस्य धीमतः ।

स्थानानां परमं स्थानमामलेश्वरमुत्तमम् ॥ २१३.५ ॥

तेन पूजितमात्रेण प्राप्यते परमं पदम् ॥ २१३.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आमलेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१४

https://sa.wikisource.org/s/fg1

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

चतुर्थं सम्प्रवक्ष्यामि देवस्य चरितं महत् ।

श्रुतमात्रेण येनैव सर्वपापैः प्रमुच्यते ॥ २१४.१ ॥

कपाली कान्थिको भूत्वा यथा स व्यचरन्महीम् ।

पिशाचैर्राक्षसैर्भूतैर्डाकिनीयोगिनीवृतः ॥ २१४.२ ॥

भैरवं रूपमास्थाय प्रेतासनपरिग्रहः ।

त्रैलोक्यस्याभयं दत्त्वा चचार विपुलं तपः ॥ २१४.३ ॥

आषाढी तु कृता तत्र ह्याषाढीनाम विश्रुतम् ।

कन्था मुक्ता ततोऽन्यत्र देवेन परमेष्ठिना ॥ २१४.४ ॥

तदाप्रभृति राजेन्द्र स कन्थेश्वर उच्यते ।

तस्य दर्शनमात्रेण ह्यश्वमेधफलं लभेत् ॥ २१४.५ ॥

देवो मार्गे पुनस्तत्र भ्रमते च यदृच्छया ।

विक्रीणाति बलाकारो दृष्ट्वा चोक्तो हरेण तु ॥ २१४.६ ॥

यदि भद्र न चेत्कोपं करोषि मयि साम्प्रतम् ।

बलाभिर्भर मे लिङ्गं ददामि बहु ते धनम् ॥ २१४.७ ॥

एवमुक्तोऽथ देवेन स वणिग्लोभमोहितः ।

योजयामास बलका लिङ्गे चोत्तममध्यमान् ॥ २१४.८ ॥

तावद्यावत्क्षयं सर्वे गताः काले सुसंचिताः ।

स्थितं समुन्नतं लिङ्गं दृष्ट्वा शोकमुपागमत् ॥ २१४.९ ॥

कृत्वा तु खण्डखण्डानि स देवः परमेश्वरः ।

उवाच प्रहसन्वाक्यं तं दृष्ट्वा गतसाध्वसम् ॥ २१४.१० ॥

न च मे पूरितं लिङ्गं यास्यामि यदि मन्यसे ।

ददामि तत्र वित्तं ते यदि लिङ्गं प्रपूरितम् ॥ २१४.११ ॥

वणिगुवाच -

अधन्यः कृतपुण्योऽहं निग्राह्यः परमेश्वर ।

तव प्रियमकुर्वाणः शोचिष्ये शाश्वतीः समाः ॥ २१४.१२ ॥

एतच्छ्रुत्वा वचस्तस्य वणिक्पुत्रस्य भारत ।

असंक्षयं धनं दत्त्वा स्थितस्तत्र महेश्वरः ॥ २१४.१३ ॥

तदा प्रभृति राजेन्द्र बलाकैरिव भूषितम् ।

प्रत्ययार्थं स्थितं लिङ्गं लोकानुग्रहकाम्यया ॥ २१४.१४ ॥

देवेन रचितं पार्थ क्रीडया सुप्रतिष्ठितम् ।

देवमार्गमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ।

पश्यन् प्रपूजयन् वापि सर्वपापैः प्रमुच्यते ॥ २१४.१५ ॥

देवमार्गे तु यो गत्वा पूजयेद्बलाकेश्वरम् ।

पञ्चायतनमासाद्य रुद्रलोकं स गच्छति ॥ २१४.१६ ॥

देवमार्गे मृतानां तु नराणां भावितात्मनाम् ।

न भवेत्पुनरावृत्ती रुद्रलोकात्कदाचन ॥ २१४.१७ ॥

देवमार्गस्य माहात्म्यं भक्त्या श्रुत्वा नरोत्तम ।

मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ २१४.१८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीकपालतीर्थमाहात्म्यवर्णनं नाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१५



श्रीमार्कण्डेय उवाच -

शृङ्गितीर्थं ततो गच्छेन्मोक्षदं सर्वदेहिनाम् ।

मृतानां तत्र राजेन्द्र मोक्षप्राप्तिर्न संशयः ॥ २१५.१ ॥

तत्रैव पिण्डदानेन पितॄणामनृणो भवेत् ।

तेन पुण्येन पूतात्मा लभेद्वाणेश्वरीं गतिम् ॥ २१५.२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शृङ्गितीर्थमाहात्म्यवर्णनं नाम पञ्चदशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१६

https://sa.wikisource.org/s/fg3
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

अषाढीतीर्थमागच्छेत्ततो भूपालनन्दन ।

कामिकं रूपमास्थाय स्थितो यत्र महेश्वरः ॥ २१६.१ ॥

चातुर्युगमिदं तीर्थं सर्वतीर्थेष्वनुत्तमम् ।

तत्र स्नात्वा नरो राजन् रुद्रस्यानुचरो भवेत् ॥ २१६.२ ॥

तत्र तीर्थे तु यः कश्चित्कुरुते प्राणमोक्षणम् ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ २१६.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अषाढीतीर्थमाहात्म्यवर्णनं नाम षोडशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१७

https://sa.wikisource.org/s/fg4



श्रीमार्कण्डेय उवाच -

एरण्डीसङ्गमं गच्छेत्सुरासुरनमस्कृतम् ।

तत्तु तीर्थं महापुण्यं महापातकनाशनम् ॥ २१७.१ ॥

उपवासपरो भूत्वा नियतेन्द्रियमानसः ।

तत्र स्नात्वा विधानेन मुच्यते ब्रह्महत्यया ॥ २१७.२ ॥

तत्र तीर्थे तु यो भक्त्या प्राणत्यागपरो भवेत् ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ २१७.३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे एरण्डीतीर्थमाहात्म्यवर्णनं नाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१८

https://sa.wikisource.org/s/fg5

< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

ततो गच्छेद्धराधीश तीर्थं परमशोभनम् ।

जमदग्निरिति ख्यातं यत्र सिद्धो जनार्दनः ॥ २१८.१ ॥

युधिष्ठिर उवाच -

कथं सिद्धो द्विजश्रेष्ठ वासुदेवो जगद्गुरुः ।

मानुषं रूपमास्थाय लोकानां हितकाम्यया ॥ २१८.२ ॥

एतत्सर्वं यथान्यायं देवदेवस्य चक्रिणः ।

चरितं श्रोतुमिच्छामि कथ्यमानं त्वयानघ ॥ २१८.३ ॥

श्रीमार्कण्डेय उवाच -

आसीत्पूर्वं महाराज हैहयाधिपतिर्महान् ।

कार्तवीर्य इति ख्यातो राजा बाहुसहस्रवान् ॥ २१८.४ ॥

हस्त्यश्वरथसम्पन्नः सर्वशस्त्रभृतां वरः ।

वेदविद्याव्रतस्नातः सर्वभूताभयप्रदः ॥ २१८.५ ॥

माहिष्मत्याः पतिः श्रीमान्राजा ह्यक्षौहिणीपतिः ।

स कदाचिन्मृगान्हन्तुं निर्जगाम महाबलः ॥ २१८.६ ॥

बहुभिर्दिवसैः प्राप्तो भृगुकच्छमनुत्तमम् ।

जमदग्निर्महातेजा यत्र तिष्ठति तापसः ॥ २१८.७ ॥

रेणुकासहितः श्रीमान्सर्वभूताभयप्रदः ।

तस्य पुत्रोऽभवद्रामः साक्षान्नारायणः प्रभुः ॥ २१८.८ ॥

सर्वक्षत्रगुणैर्युक्तो ब्रह्मविद्ब्राह्मणोत्तमः ।

तोषयन्परया भक्त्या पितरौ परमार्थवत् ॥ २१८.९ ॥

तं तदा चार्जुनं दृष्ट्वा जमदग्निः प्रतापवान् ।

चरन्तं मृगयां गत्वा ह्यातिथ्येन न्यमन्त्रयत् ॥ २१८.१० ॥
तथेति चोक्त्वा स नृपः सभृत्यबलवाहनः ।
जगाम चाश्रमं पुण्यमृषेस्तस्य महात्मनः ॥ २१८.११ ॥
तत्क्षणादेव सम्पन्नं श्रिया परमया वृतम् ।
विस्मयं परमं तत्र दृष्ट्वा राजा जगाम ह ॥ २१८.१२ ॥
गतमात्रस्तु सिद्धेन परमान्नेन भोजितः ।
सभृत्यबलवान्राजा ब्राह्मणेन यदृच्छया ।
किमेतदिति पप्रच्छ कारणं शक्तिमेव च ॥ २१८.१३ ॥
कामधेनोः प्रभावं तं ज्ञात्वा प्राह ततो द्विजम् ।
दक्षिणां देहि मे विप्र कल्मषां धेनुमुत्तमाम् ॥ २१८.१४ ॥
शतं शतसहस्राणामयुतं नियुतं परम् ।
भूषितानां च धेनूनां ददामि तव चार्बुदम् ॥ २१८.१५ ॥

जमदग्निरुवाच -
अयुतैः प्रयुतैर्नाहं शतकोटिभिरुत्तमाम् ।
कामधेनुमिमां तात न दद्मि प्रतिगम्यताम् ॥ २१८.१६ ॥
एवमुक्तः स राजेन्द्रस्तेन विप्रेण भारत ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ २१८.१७ ॥
यस्येदृशः कामचारो मय्यपि द्विजपांसन ।
अहं ते पश्यतस्तस्मान्नयामि सुरभिं गृहात् ॥ २१८.१८ ॥

द्विज उवाच -
कः क्रीडति सरोषेण निर्भयो हि महाहिना ।
मृत्युदृष्टोतरेणापि मम धेनुं नयेत यः ॥ २१८.१९ ॥
एवमुक्त्वा महादण्डं ब्रह्मदण्डमिवापरम् ।
गृहीत्वा परमक्रुद्धो जमदग्निरुवाच ह ॥ २१८.२० ॥
यस्यास्ति शक्तिस्तेजो वा क्षत्रियस्य कुलाधमः ।
धेनुं नयतु मे सद्यः क्षीणायुः सपरिच्छदः ॥ २१८.२१ ॥

एतच्छ्रुत्वा वचः क्रूरं हैहयः शतशो वृतः ।
धावमानः क्षितितले ब्रह्मदण्डहतोऽपतत् ॥ २१८.२२ ॥
हुंकृतेन ततो धेन्वाः खड्गपाशासिपाणयः ।
निर्गच्छन्तः प्रदृश्यन्ते कल्मषायाः सहस्रशः ॥ २१८.२३ ॥
नासापुटाग्राद्रोमाग्रात्किराता मागधा गुदात् ।
रन्ध्रान्तरेषु चोत्पन्नाः शतशोऽथ सहस्रशः ॥ २१८.२४ ॥
एवमन्योऽन्यमाहत्य हैहयष्टङ्कणान्दहन् ।
विनाशं सह विप्रेण गता ह्यर्जुनतेजसा ॥ २१८.२५ ॥
कार्तवीर्यो जयं लब्ध्वा संख्ये हत्वा द्विजोत्तमम् ।
जगाम स्वां पुरीं हृष्टः कृतान्तवशमोहितः ॥ २१८.२६ ॥
ततस्त्वरान्वितः प्राप्तः पश्चाद्रामो गते रिपौ ।
आक्रन्दमानां जननीं ददर्श पितुरन्तिके ॥ २१८.२७ ॥

राम उवाच -
केनेदमात्मनाशाय ह्यज्ञानात्साहसं कृतम् ।
मम तातं जिघांसुर्यो द्रष्टुं मृत्युमिहेच्छति ॥ २१८.२८ ॥
ततः सा रामवाक्येन गतसत्त्वेव विह्वला ।
उदरं करयुग्मेन ताडयन्ती ह्युवाच तम् ॥ २१८.२९ ॥
अर्जुनेन नृशंसेन क्षत्रियैरपरैः सह ।
इहागत्य पिता तेन निहतो बाहुशालिना ॥ २१८.३० ॥
तं पश्य निहतं तातं गतासुं गतचेतसम् ।
संस्कृत्य विधिवत्पुत्र तर्पयस्व यथातथम् ॥ २१८.३१ ॥
एतच्छ्रुत्वा स वचनं जननीमभिवाद्य ताम् ।
प्रतिज्ञामकरोद्यां तां शृणुष्व च नराधिप ॥ २१८.३२ ॥
त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रियकुलान्वयाम् ।
स्नात्वा च तेषामसृजा तर्पयिष्यामि ते पतिम् ॥ २१८.३३ ॥
तस्यापि परशुना बाहून् कार्तवीर्यस्य दुर्मतेः ।
छित्त्वा पास्यामि रुधिरमिति सत्यं शृणुष्व मे ॥ २१८.३४ ॥

एवं प्रतिज्ञां कृत्वासौ जामदग्न्यः प्रतापवान् ।
क्रोधेन महताविष्टः संस्कृत्य पितरं ततः ॥ २१८.३५ ॥
माहिष्मतीं पुरीं रामो जगाम क्रोधमूर्छितः ।
छित्त्वा बाहुवनं तस्य हत्वा तं क्षत्रियाधमम् ॥ २१८.३६ ॥
जगाम क्षत्रियान्ताय पृथिवीमवलोकयन् ।
सप्तद्वीपार्णवयुतां सशैलवनकाननाम् ॥ २१८.३७ ॥
पूर्वतः पश्चिमामाशां दक्षिणोत्तरतः कुरून् ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ २१८.३८ ॥
स तेषु रुधिराम्भस्तु ह्रदेषु क्रोधमूर्छितः ।
पितॄन् संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ २१८.३९ ॥
अथर्चीकादय उपेत्य पितरो ब्राह्मणर्षभम् ।
तं क्षमस्वेति जगदुस्ततः स विरराम ह ॥ २१८.४० ॥
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समं तपं चक्रमिति पुण्यं तत्परिकीर्तितम् ॥ २१८.४१ ॥
निवर्त्य कर्मणस्तस्मात्पित्ःन् प्रोवाच पाण्डव ।
रामः परमधर्मात्मा यदिदं रुधिरं मया ॥ २१८.४२ ॥
क्षिप्तं पञ्चसु तीर्थेषु तद्भूयात्तीर्थमुत्तमम् ।
तथेत्युक्त्वा तु ते सर्वे पितरोऽदृश्यतां गताः ॥ २१८.४३ ॥
एवं रामस्य संसर्गो देवमार्गे युधिष्ठिर ।
सर्वपापक्षयकरो दर्शनात्स्पर्शनान्नृणाम् ॥ २१८.४४ ॥
रेणुकाप्रत्ययार्थाय अद्यापि पितृदेवताः ।
दृश्यन्ते देवमार्गस्थाः सर्वपापक्षयंकराः ॥ २१८.४५ ॥
तत्र तीर्थे तु राजेन्द्र नर्मदोदधिसङ्गमे ।
स्थानं कृत्वा विधानेन मुच्यन्ते पातकैर्नराः ॥ २१८.४६ ॥
कुशाग्रेणापि कौन्तेय न स्पृष्टव्यो महोदधिः ।
अनेन तत्र मन्त्रेण स्नातव्यं नृपसत्तम ॥ २१८.४७ ॥
नमस्ते विष्णुरूपाय नमस्तुभ्यमपां पते ।
सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ।

इति स्पर्शनमन्त्रः ॥ २१८.४८ ॥

अग्निश्च तेजो मृडया च देहे रेतोऽथ विष्णुरमृतस्य नाभिः ।

एतदब्रुवन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥ २१८.४९ ॥

पञ्चरत्नसमायुक्तं फलपुष्पाक्षतैर्युतम् ।

मन्त्रेणानेन राजेन्द्र दद्यादर्घं महोदधेः ॥ २१८.५० ॥

सर्वरत्ननिधानस्त्वं सर्वरत्नाकराकरः ।

सर्वामरप्रधानेश गृहाणार्घं नमोऽस्तु ते ।

इत्यर्घमन्त्रः ॥ २१८.५१ ॥

आ जन्मजनितात्पापान्मामुद्धर महोदधे ।

याह्यर्चितो रत्ननिधे पर्वतान् पार्वणोत्तम ।

इति विसर्जनमन्त्रः ॥ २१८.५२ ॥

कोऽपरः सागराद्देवात्स्वर्गद्वारविपाटन ।

तत्र सागरपर्यन्तं महातीर्थमनुत्तमम् ॥ २१८.५३ ॥

जामदग्न्येन रामेण तत्र देवः प्रतिष्ठितः ।

यत्र देवाः सगन्धर्वा मुनयः सिद्धचारणाः ॥ २१८.५४ ॥

उपासते विरूपाक्षं जमदग्निमनुत्तमम् ।

रेणुकां चैव ये देवीं पश्यन्ति भुवि मानवाः ॥ २१८.५५ ॥

प्रियवासे शिवे लोके वसन्ति कालमीप्सितम् ।

तत्र स्नात्वा नरो राजंस्तर्पयन्पितृदेवताः ॥ २१८.५६ ॥

तारयेन्नरकाद्घोरात्कुलानां शतमुत्तरम् ।

स्नात्वा दत्त्वात्र सहिताः श्रुत्वा वै भक्तिपूर्वकम् ॥ २१८.५७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे जामदग्न्यतीर्थमाहात्म्यवर्णनं नामाष्टादशाधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २१९



श्रीमार्कण्डेय उवाच -

नर्मदादक्षिणे कूले तीर्थं कोटीश्वरं परम् ।

यत्र स्नानं च दानं च सर्वं कोटिगुणं भवेत् ॥ २१९.१ ॥

तत्र देवाः सगन्धर्वा ऋषयो ये तथामलाः ।

कोटितीर्थे परां सिद्धिं सम्प्राप्ता भुवि दुर्लभाम् ॥ २१९.२ ॥

स्थापितश्च महादेवस्तत्र कोटीश्वरो नृप ।

तं दृष्ट्वा देवदेवेशं सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ २१९.३ ॥

तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाशुभम् ।

क्रियते तन्नृपश्रेष्ठ सर्वं कोटिगुणं भवेत् ॥ २१९.४ ॥

तत्र दक्षिणमार्गस्था ये केचिन्मुनिसत्तमाः ।

सिद्धा मृताः पदं यान्ति पितृलोकं ध्रुवं हि ते ॥ २१९.५ ॥

उत्तरं नर्मदाकूलं ये श्रेष्ठा मुनिपुंगवाः ।

देवलोकं गताः पूर्वमिति शास्त्रस्य निश्चयः ॥ २१९.६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनं नामैकोनविंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२०



श्रीमार्कण्डेय उवाच -

ततो गच्छेद्धराधीश लोटणेश्वरमुत्तमम् ।

उत्तरे नर्मदाकूले सर्वपातकनाशनम् ॥ २२०.१ ॥

तत्क्षणादेव तत्सर्वं सप्तजन्मार्जितं त्वघम् ।

नश्यते देवदेवस्य दर्शनादेव तन्नृप ॥ २२०.२ ॥

बाल्यात्प्रभृति यत्पापं यौवने चापि यत्कृतम् ।

तत्सर्वं विलयं याति देवदेवस्य दर्शनात् ॥ २२०.३ ॥

युधिष्ठिर उवाच -

आश्चर्यभूतं लोकेषु नर्मदाचरितं महत् ।

त्वया वै कथितं विप्र सकलं पापनाशनम् ॥ २२०.४ ॥

यदेकं परमं तीर्थं सर्वतीर्थफलप्रदम् ।

श्रोतुमिच्छामि तत्सर्वं दयां कृत्वा वदाशु मे ॥ २२०.५ ॥

ये केचिद्दुर्लभाः प्रश्नास्त्रिषु लोकेषु सत्तम ।

त्वत्प्रसादेन ते सर्वे श्रुता मे सह बान्धवैः ॥ २२०.६ ॥

एतमेकं परं प्रश्नं सर्वप्रश्नविदां वर ।

श्रुत्वाहं त्वत्प्रसादेन यत्र यामि सबान्धवः ॥ २२०.७ ॥

श्रीमार्कण्डेय उवाच -

साधुसाधु महाप्राज्ञ यस्य ते मतिरीदृशी ।

दुर्लभं त्रिषु लोकेषु तस्य ते नास्ति किंचन ॥ २२०.८ ॥

धर्ममर्थं च कामं च मोक्षं च भरतर्षभ ।

काले काले च यो वेत्ति कर्तव्यस्तेन धीमता ॥ २२०.९ ॥

तस्मात्ते सम्प्रवक्ष्यामि प्रश्नस्यास्योत्तरं शुभम् ।

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते भुवि मानवाः ॥ २२०.१० ॥

नर्मदा सरितां श्रेष्ठा सर्वतीर्थमयी शुभा ।

विशेषः कथितस्तस्या रेवासागरसङ्गमे ॥ २२०.११ ॥

आगच्छन्तीं नृपश्रेष्ठ दृष्ट्वा रेवां महोदधिः ।

प्रणम्य च पुनर्देवीं सङ्गमे रेवया सह ॥ २२०.१२ ॥

संचिन्त्य मनसा केयमिति मां वै सरिद्वरा ।

ज्ञात्वा संचिन्त्य मनसा रेवां लिङ्गोद्भवां पराम् ॥ २२०.१३ ॥

लुठन्वै सम्मुखस्तात गतो रेवां महोदधिः ।

समुद्रे नर्मदा यत्र प्रविष्टास्ति महानदी ॥ २२०.१४ ॥

तत्र देवाधिदेवस्य समुद्रे लिङ्गमुत्थितम् ।

लिङ्गोद्भूता महाभागा नर्मदा सरितां वरा ॥ २२०.१५ ॥

लयं गता तत्र लिङ्गे तेन पुण्यतमा हि सा ।

नर्मदायां वसन्नित्यं नर्मदाम्बु पिबन्सदा ।

दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने ॥ २२०.१६ ॥

सङ्गमे तत्र यः स्नात्वा लोटणेश्वरमर्चयेत् ।

सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ २२०.१७ ॥

वाचिकं मानसं पापं कर्मणा यत्कृतं नृप ।

लोटणेश्वरमासाद्य सर्वं विलयतां व्रजेत् ॥ २२०.१८ ॥

कार्त्तिक्यां तु विशेषेण कथितं शङ्करेण तु ।

तच्छृणुष्व नृपश्रेष्ठ सर्वपापापनोदनम् ॥ २२०.१९ ॥

सम्प्राप्तां कार्त्तिकीं दृष्ट्वा गत्वा तत्र नृपोत्तम ।

चतुर्दश्यामुपोष्यैव स्नात्वा वै नर्मदाजले ॥ २२०.२० ॥

संतर्प्य पितृदेवांश्च श्राद्धं कृत्वा यथाविधि ।

रात्रौ जागरणं कुर्यात्सम्पूज्य लोटणेश्वरम् ॥ २२०.२१ ॥

सफलं जीवितं तस्य सफलं तस्य चेष्टितम् ।

पङ्गवस्ते न सन्देहो जन्म तेषां निरर्थकम् ॥ २२०.२२ ॥

एकाग्रमनसा यैस्तु न दृष्टो लोटणेश्वरः ।

पिशाचत्वं वियोनित्वं न भवेत्तस्य वै कुले ॥ २२०.२३ ॥

सङ्गमे तत्र यो गत्वा स्नानं कृत्वा यथाविधि ।
पुण्यैश्चैव तथा कुर्याद्गीतैर्नृत्यैः प्रबोधनम् ॥ २२०.२४ ॥
ततः प्रभातां रजनीं दृष्ट्वा नत्वा महोदधिम् ।
आमन्त्र्य स्नानविधिना स्नानं तत्र तु कारयेत् ॥ २२०.२५ ॥
ओं नमो विष्णुरूपाय तीर्थनाथाय ते नमः ।
सान्निध्यं कुरु मे देव समुद्र लवणाम्भसि ।
इत्यामन्त्रणमन्त्रः ॥ २२०.२६ ॥
अग्निश्च तेजो मृडया च देहो रेतोऽधा विष्णुरमृतस्य नाभिः ।
एवं ब्रुवन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ।
इति स्नानमन्त्रः ॥ २२०.२७ ॥
आजन्मशतसाहस्रं यत्पापं कृतवान्नरः ।
सकृत्स्नानाद्व्यपोहेत पापौघं लवणाम्भसि ॥ २२०.२८ ॥
अन्यथा हि कुरुश्रेष्ठ देवयोनिरसौ विभुः ।
कुशाग्रेणापि विबुधैर्न स्प्रष्टव्यो महार्णवः ॥ २२०.२९ ॥
सर्वरत्नप्रधानस्त्वं सर्वरत्नाकराकर ।
सर्वामरप्रधानेश गृहाणार्घं नमोऽस्तु ते ।
इति अर्वमन्त्र ॥ २२०.३० ॥
पितृदेवमनुष्यांश्च संतर्प्य तदनन्तरम् ।
उत्तीर्य तीरे तस्यैव पञ्चभिर्द्विजपुंगवैः ॥ २२०.३१ ॥
श्राद्धं समाचरेत्पश्चाल्लोकपालानुरूपिभिः ।
कृत्वाग्रे लोकपालांस्तु प्रतिष्ठाप्य यथाविधि ॥ २२०.३२ ॥
सम्पूज्य च यथान्यायं तानेव ब्राह्मणैः सह ।
सुकृतं दुष्कृतं पश्चात्तेभ्यः सर्वं निवेदयेत् ॥ २२०.३३ ॥
बाल्यात्प्रभृति यत्पापं कृतं वार्धकयौवने ।
प्रख्यापयित्वा तेभ्योऽग्रे लोकपालान्निमन्त्रयेत् ॥ २२०.३४ ॥
बाल्यात्प्रभृति यत्किंचित्कृतमा जन्मतोऽशुभम् ।
विप्रेभ्यः कथितं सर्वं तत्सांनिध्यं स्थितेषु मे ॥ २२०.३५ ॥
इत्युक्त्वा स लुठेत्पश्चात्तेभ्योऽग्रेण च सम्मुखम् ।

अनुमान्य च तान्पञ्च पश्चात्स्नानं समाचरेत् ॥ २२०.३६ ॥

श्राद्धं च कार्यं विधिवत्पितृभ्यो नृपसत्तम ।

एवं कृते नृपश्रेष्ठ सर्वपापक्षयो भवेत् ॥ २२०.३७ ॥

जिज्ञासार्थं तु यः कश्चिदात्मानं ज्ञातुमिच्छति ।

शुभाशुभं च यत्कर्म तस्य निष्ठामिमां शृणु ॥ २२०.३८ ॥

स्नात्वा तत्र महातीर्थे लुठमानो व्रजेन्नरः ।

पापकर्मान्यतो याति धर्मकर्मा व्रजेन्नदीम् ॥ २२०.३९ ॥

पापकर्मा ततो ज्ञात्वा पापं मे पूर्वसंचितम् ।

स्नात्वा तीर्थवरे तस्मिन्दानं दद्याद्यथाविधि ॥ २२०.४० ॥

लोटणेश्वरमभ्यर्च्य सर्वपापैः प्रमुच्यते ।

अवक्रगमनं गत्वा मुच्यते सर्वपातकैः ॥ २२०.४१ ॥

तस्मात्सर्वप्रयत्नेन ज्ञात्वैवं नृपसत्तम ।

स्नातव्यं मानवैस्तत्र यत्र संनिहितो हरः ॥ २२०.४२ ॥

एवं स्नात्वा विधानेन ब्राह्मणान् वेदपारगान् ।

पूजयेत्पृथिवीपाल सर्वपापोपशान्तये ॥ २२०.४३ ॥

एवं गुणविशिष्टं हि तत्तीर्थं नृपसत्तम ।

तस्य तीर्थस्य माहात्म्यं शृणुष्वैकमना नृप ॥ २२०.४४ ॥

तत्र तीर्थे नरः स्नात्वा संतर्प्य पितृदेवताः ।

श्राद्धं यः कुरुते तत्र पित्ःणां भक्तिभावितः ॥ २२०.४५ ॥

दानं ददाति विप्रेभ्यो गोभूतिलहिरण्यकम् ।

षष्टिवर्षसहस्राणि कोटिर्वर्षशतानि च ॥ २२०.४६ ॥

विमानवरमारूढः स्वर्गलोके महीयते ।

नर्मदासर्वतीर्थेभ्यः स्नाने दाने च यत्फलम् ॥ २२०.४७ ॥

तत्फलं समवाप्नोति रेवासागरसङ्गमे ।

सुवर्णं रजतं ताम्रं मणिमौक्तिकभूषणम् ॥ २२०.४८ ॥

गोवृषं च महीं धान्यं तत्र दत्त्वाक्षयं फलम् ।

शुभस्याप्यशुभस्यापि तत्र तीर्थे न संशयः ॥ २२०.४९ ॥

तत्र तीर्थे नरः कश्चित्प्राणत्यागं युधिष्ठिर ।

करोति भक्त्या विधिवत्तस्य पुण्यफलं शृणु ॥ २२०.५० ॥

कोटिवर्षं तु वर्षाणां क्रीडित्वा शिवमन्दिरे ।

वेदवेदाङ्गविद्विप्रो जायते विमले कुले ॥ २२०.५१ ॥

पुत्रपौत्रसमृद्धोऽसौ धनधान्यसमन्वितः ।

सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदांशतम् ॥ २२०.५२ ॥

अपि द्वादशयात्रासु सोमनाथे यदर्चिते ।

कार्त्तिक्यां कृत्तिकायोगे तत्पुण्यं लोटणेश्वरे ॥ २२०.५३ ॥

गया गङ्गा कुरुक्षेत्रे नैमिषे पुष्करे तथा ।

तत्पुण्यं लभते पार्थ लोटणेश्वरदर्शनात् ॥ २२०.५४ ॥

यः शृणोति नरो भक्त्या पठ्यमानमिदं शुभम् ।

सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ २२०.५५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे लोटणेश्वरतीर्थमाहात्म्यवर्णनं नाम विंशत्युत्तरद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२१

https://sa.wikisource.org/s/fg8
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

ततो गच्छेत्तु राजेन्द्र रेवाया दक्षिणे तटे ।

क्रोशद्वयान्तरे तीर्थं मतृतीर्थादनुत्तमम् ॥ २२१.१ ॥

नाम्ना हंसेश्वरं पुण्यं वैमनस्यविनाशनम् ।

कश्यपस्य कुले जातो हंसो दाक्षायणीसुतः ॥ २२१.२ ॥

ब्रह्मणो वाहनं जातः पुरा तप्त्वा तपो महत् ।

सैकदा विधिनिर्देशं विना वैयग्र्यमास्थितः ॥ २२१.३ ॥

अभिभूतः शिवगणैः प्रणनाश युधिष्ठिर ।

दक्षयज्ञप्रमथने कांदिशीको विधिं विना ॥ २२१.४ ॥

ब्रह्मणा संस्मृतोऽप्याशु नायाति स यदा खगः ।

तदा तं शप्तवान्ब्रह्मा पातयामास वै पदात् ॥ २२१.५ ॥

ततः स शप्तमात्मानं मत्वा हंसस्त्वरान्वितः ।

पितामहमुपागम्य प्रणिपत्येदमब्रवीत् ॥ २२१.६ ॥

हंस उवाच -

तिर्यग्योनिसमुत्पन्नं भवाञ्छप्तुं न चार्हति ।

स्वभाव एव तिर्यक्षु विवेकविकलं मनः ॥ २२१.७ ॥

तथापि देव पापोऽस्मि यदहं स्वामिनं त्यजे ।

किं तु धावद्भिरत्युग्रैर्गणैः शार्वैः पितामह ।

सहसाहं भयाक्रान्तस्त्रस्तस्त्यक्त्वा पलायितः ॥ २२१.८ ॥

अद्यापि भयमेवाहं पश्यन्नस्मि विभो पुरः ।

तेन स्मृतोऽपि भवता नाव्रजं भवदन्तिके ॥ २२१.९ ॥

श्रीमार्कण्डेय उवाच -

इति ब्रुवन्नेव हि धातुरग्रे हंसः श्वसत्यक्षिपूज्यः सुदीनः ।
तिर्यञ्चं मां पापिनं मूढबुद्धिं प्रभो पुरः पतितं पाहि पाहि ॥ २२१.१० ॥
एको देवस्त्वं हि सर्गस्य कर्ता नानाविधं सृष्टमेतत्त्वयैव ।
अहं सृष्टस्त्वीदृशो यत्त्वया वै सोऽयं दोषो धातरद्धा तवैव ॥ २२१.११ ॥
शापस्य वानुग्रहस्यापि शक्तस्त्वत्तो नान्यः शरणं कं व्रजामि ।
सेवाधर्माद्विच्युतं दासभूतं चपेटैर्हन्तव्यं वै तात मां त्राहि भक्तम् ॥ २२१.१२ ॥
विद्याविद्ये त्वत्त एवाविरास्तां धर्माधर्मौ सदसद्युर्निशे च ।
नानाभावाञ्जगतस्त्वं विधत्सेस्तं त्वामेकं शरणं वै प्रपद्ये ॥ २२१.१३ ॥
एकोऽसि बहुरूपोऽसि नानाचित्रैककर्मतः ।
निष्कर्माखिलकर्मासि त्वामतः शरणं व्रजे ॥ २२१.१४ ॥
नमोनमो वरेण्याय वरदाय नमोनमः ।
नमो धात्रे विधात्रे च शरण्याय नमोनमः ॥ २२१.१५ ॥
शिक्षाक्षरवियुक्तेयं वाणी मे स्तौति किं विभो ।
का शक्तिः किं परिज्ञानमिदमुक्तं क्षमस्व मे ॥ २२१.१६ ॥

श्रीमार्कण्डेय उवाच -
एवं वदति हंसे वै ब्रह्मा प्राह प्रसन्नधीः ।
शिक्षा दत्ता तवैवेयं मा विषादं कृथाः खग ॥ २२१.१७ ॥
तपसा शोधयात्मानं यथा शापान्तमाप्नुयाः ।
रेवासेवां कुरु स्नात्वा स्थापयित्वा महेश्वरम् ।
अचिरेणैव कालेन ततः संस्थानमाप्स्यसि ॥ २२१.१८ ॥
यच्चेष्ट्वा बहुभिर्यज्ञैः समाप्तवरदक्षिणैः ।
गोस्वर्णकोटिदानैश्च तत्फलं स्थापिते शिवे ॥ २२१.१९ ॥
ब्रह्मघ्नो वा सुरापो वा स्वर्णहृद्गुरुतल्पगः ।
रेवातीरे शिवं स्थाप्य मुच्यते सर्वपातकैः ॥ २२१.२० ॥
तस्माद्धर्गसरित्तीरे स्थापयित्वा त्रियम्बकम् ।
वियुक्तः सर्वदोषैस्त्वं यास्यसे पदमुत्तमम् ॥ २२१.२१ ॥
एवमुक्तः स विधिना हृष्टतुष्टः खगोत्तमः ।

तथेत्युक्त्वा जगामाशु नर्मदातीरमुत्तमम् ॥ २२१.२२ ॥

तपस्तप्त्वा कियत्कालं स्थापयामास शङ्करम् ॥ २२१.२३ ॥

स्वनाम्ना भरतश्रेष्ठ हंसेश्वरमनुत्तमम् ।

पूजयित्वा परं स्थानं प्राप्तवान्खगसत्तमः ॥ २२१.२४ ॥

तत्र हंसेश्वरे तीर्थे गत्वा स्नात्वा युधिष्ठिर ।

पूजयेत्परमेशानं स पापैः परिमुच्यते ॥ २२१.२५ ॥

स्तुवन्नेकमना देवं न दैन्यं प्राप्नुयात्क्वचित् ।

श्राद्धं दीपप्रदानं च ब्राह्मणानां च भोजनम् ।

दत्त्वा शक्त्या नृपश्रेष्ठ स्वर्गलोके महीयते ॥ २२१.२६ ॥

त्रिकालमेककालं वा यो भक्त्या पूजयेच्छिवम् ।

नवप्रसूतां धेनुं च दत्त्वा पार्थ द्विजोत्तमे ।

षष्टिवर्षसहस्राणि शिवलोके महीयते ॥ २२१.२७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे हंसेश्वरतीर्थमाहात्म्यवर्णनं नामैकविंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२२

https://sa.wikisource.org/s/fg9
< स्कन्दपुराणम् | खण्डः ५ (अवन्तीखण्डः) | रेवा खण्डम्

श्रीमार्कण्डेय उवाच -

ततः क्रोशान्तरे गच्छेत्तिलादं तीर्थमुत्तमम् ।

तिलप्राशनकृद्यत्र जाबालिः शुद्धिमाप्तवान् ॥ २२२.१ ॥

पितृमातृपरित्यागी भ्रातुर्भार्याभिलाषकृत् ।

पुत्रविक्रयकृत्पापश्छलकृद्गुरुणा सह ॥ २२२.२ ॥

एवं दोषसमाविष्टो यत्र यत्रापि गच्छति ।

तत्र तत्रापि धिक्कारं लभते सत्सु भारत ।

न कोऽपि संगतिं धत्ते तेन सार्द्धं सभास्वपि ॥ २२२.३ ॥

इति लज्जान्वितो विप्रः काले न महता नृप ।

चिन्तामवाप महतीमगतिज्ञो हि पावने ॥ २२२.४ ॥

चकार सर्वतीर्थानि रेवां चाप्यवगाहयत् ॥ २२२.५ ॥

अणिवापान्तमासाद्य दक्षिणे नर्मदातटे ।

तस्थौ यत्र व्रती पार्थ जाबालिः प्राशयंस्तिलान् ॥ २२२.६ ॥

तिलैरेकाशनं कुर्वंस्तथैवैकान्तराशनम् ।

त्र्यहषड्द्वादशाहाशी पक्षमासाशनस्तथा ॥ २२२.७ ॥

कृच्छ्रचान्द्रायणादीनि व्रतानि च तिलैरपि ।

तिलादत्वमनुप्राप्तो ह्यब्ददद्वासप्ततिं क्रमात् ॥ २२२.८ ॥

कालेन गच्छता तस्य प्रसन्नोऽभवदीश्वरः ।

प्रादादिहामुत्रिकीं तु शुद्धिं सालोक्यमात्मकम् ॥ २२२.९ ॥

तेन स स्थापितो देवः स्वनाम्ना भरतर्षभ ।

तिलादेश्वरसंज्ञां च प्राप लोकादपि प्रभुः ॥ २२२.१० ॥

तदा प्रभृति विख्यातं तीर्थं पापप्रणाशनम् ।

तत्र तीर्थे नरः स्नात्वा चतुर्दश्यष्टमीषु च ॥ २२२.११ ॥

उपवासपरः पार्थ तथैव हरिवासरे ।

तिलहोमी तिलोद्वर्ती तिलस्नायी तिलोदकी ॥ २२२.१२ ॥

तिलदाता च भोक्ता च नानापापैः प्रमुच्यते ।

तिलैरापूरयेल्लिङ्गं तिलतैलेन दीपदः ।

रुद्रलोकमवाप्नोति पुनात्या सप्तमं कुलम् ॥ २२२.१३ ॥

तिलपिण्डप्रदानेन श्राद्धे नृपतिसत्तम ।

विकर्मस्थाश्च गच्छन्ति गतिमिष्टां हि पूर्वजाः ॥ २२२.१४ ॥

स्वर्गलोकस्थिताः श्राद्धैर्ब्राह्मणानां च भोजनैः ।

अक्षयां तृप्तिमासाद्य मोदन्ते शाश्वतीः समाः ॥ २२२.१५ ॥

पितुः कुलं मातृकुलं तथा भार्याकुलं नृप ।

कुलत्रयं समुद्धृत्य स्वर्गं नयति वै नरः ॥ २२२.१६ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तिलादेश्वरतीर्थमाहात्म्यवर्णनं नाम द्वाविंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२३



मार्कण्डेय उवाच -

ततः क्रोशान्तरे पार्थ वासवं तीर्थमुत्तमम् ।

वसुभिः स्थापितं तत्र स्थित्वा वै द्वादशाब्दकम् ॥ २२३.१ ॥

धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ।

प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविमे पुरा ॥ २२३.२ ॥

पितृशापपरिक्लिष्टा गर्भवासाय भारत ।

नार्मदं तीर्थमासाद्य तपश्चक्रुर्यतेन्द्रियाः ॥ २२३.३ ॥

आराधयन्तः परमं भवानीपतिमव्ययम् ।

द्वादशाब्दानि राजेन्द्र ततस्तुष्टो महेश्वरः ॥ २२३.४ ॥

प्रत्यक्षः प्रददौ तेभ्यस्त्वभीष्टं वरमुत्तमम् ।

ततः स्वनाम्ना संस्थाप्य वसवस्तं महेश्वरम् ।

जग्मुराकाशमाविश्य प्रसन्ने सति शङ्करे ॥ २२३.५ ॥

ततः प्रभृति विख्यातं तीर्थं तद्वासवाह्वयम् ।

तस्मिंस्तीर्थे महाराज यो भक्त्या पूजयेच्छिवम् ।

यथालब्धोपहारैश्च दीपं दद्यात्प्रयत्नतः ॥ २२३.६ ॥

शुक्लपक्षे तदाष्टम्यां प्रत्यहं वापि शक्तितः ।

अष्टौ वर्षसहस्राणि स वसेच्छिवसंनिधौ ॥ २२३.७ ॥

ततः शिवालयं याति गर्भवासं न पश्यति ।

पुष्पैर्वा पल्लवैर्वापि फलैर्धान्यैस्तथापि वा ॥ २२३.८ ॥

पूजयेद्देवमीशानं स दैन्यं नाप्नुयात्क्वचित् ।

सर्वशोकविनिर्मुक्तः स्वर्गलोके महीयते ॥ २२३.९ ॥

एकाहमपि कौन्तेय यो वसेद्वासवेश्वरे ।

पापराशिं विनिर्धूय भानुवद्दिवि मोदते ॥ २२३.१० ॥

विप्रांश्च भोजयेद्भक्त्या दद्याद्वासांसि दक्षिणाम् ॥ २२३.११ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे वासवेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२४



मार्कण्डेय उवाच -

ततः क्रोशान्तरे पार्थ तीर्थं कोटीश्वरं परम् ।

यत्र स्नानं च दानं च जपहोमार्चनादिकम् ।

भक्त्या कृतं नरैस्तत्र सर्वं कोटिगुणं भवेत् ॥ २२४.१ ॥

तत्र देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ।

जलधिं प्रतिगच्छन्ति नर्मदां वीक्षितुं किल ॥ २२४.२ ॥

मिलिताः कोटिशो राजन्रेवासागरसङ्गमे ।

विनोदमतुलं दृष्ट्वा रेवार्णवसमागमे ॥ २२४.३ ॥

स्नात्वा शिवं च संस्थाप्य पूजयित्वा महेश्वरम् ।

कोटीश्वराभिधानं तु स्वस्वभक्त्या विधानतः ॥ २२४.४ ॥

कोटीतीर्थे परां सिद्धिं सम्प्राप्ताः सर्वतोषणात् ।

तेन तत्पुण्यमतुलं सर्वतीर्थेषु चोत्तमम् ॥ २२४.५ ॥

तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाशुभम् ।

क्रियते नृपशार्दूल सर्वं कोटिगुणं भवेत् ॥ २२४.६ ॥

तत्र तीर्थे तु मार्गस्था ये केचिदृषिसत्तमाः ।

सिद्धामृतपदं यान्ति पितृलोकं तथोत्तमम् ॥ २२४.७ ॥

उत्तरे नर्मदातीरे दक्षिणे चाश्रिताश्च ये ।

देवलोकं गतास्तत्र इति मे निश्चिता मतिः ॥ २२४.८ ॥

बिल्वार्कपुष्पैर्धत्तूरकुशकाशप्रसूनकैः ।

ऋतूद्भवैस्तथान्यैश्च पूजयित्वा महेश्वरम् ॥ २२४.९ ॥

नानोपचारैर्विधिवन्मन्त्रपूर्वं युधिष्ठिर ।

धूपदीपार्धनैवेद्यैस्तोषयित्वा च धूर्जटिम् ॥ २२४.१० ॥

शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ।

पौषकृष्णाष्टमीयोगे विशेषः पूजने स्मृतः ॥ २२४.११ ॥

नित्यं च नृपतिश्रेष्ठ चतुर्दश्यष्टमीषु च ।
शिवमभ्यर्च्य विप्रांश्च भोजयेद्भक्तितो वरान् ॥ २२४.१२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटीश्वरतीर्थमाहात्म्यवर्णनं नाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२५

https://sa.wikisource.org/s/fgc



श्रीमार्कण्डेय उवाच -

ततः क्रोशान्तरे गच्छेदलिकातीर्थमुत्तमम् ।

अलिका नाम गान्धर्वी कुशीला कुटिलाशया ॥ २२५.१ ॥

चित्रसेनस्य दौहित्री विद्यानन्दमृषिं गता ।

वव्रे ते स्वीकृता तेन दशवर्षाणि तं श्रिता ॥ २२५.२ ॥

पतिं जघान तं सुप्तं कस्मिंश्चित्कारणान्तरे ।

गत्वा निवेदयामास पितरं रत्नवल्लभम् ॥ २२५.३ ॥

पित्रा मात्रा च संत्यक्ता बहुभिर्भर्त्सिता नृप ।

गर्भघ्नी त्वं पतिघ्नी त्वमिति दर्शय मा मुखम् ॥ २२५.४ ॥

ब्रह्मघ्नी याहि पापिष्ठे परित्यक्ता गृहाद्व्रज ॥ २२५.५ ॥

मार्कण्डेय उवाच -

इति दुःखान्विता मूढा ताभ्यां निर्भर्त्सिता सती ।

तनुं त्यक्तुं मनश्चक्रे प्राप्य तीर्थान्तरं क्वचित् ॥ २२५.६ ॥

संपृच्छ्यमाना तीर्थानि ब्राह्मणेभ्यो युधिष्ठिर ।

श्रुत्वा पापहरं तीर्थं रेवासागरसङ्गमे ॥ २२५.७ ॥

तत्र पार्थ तपश्चक्रे निराहारा जितव्रता ।

कृच्छ्रातिकृच्छ्रपाराकमहासांतपनादिभिः ॥ २२५.८ ॥

चान्द्रायणैर्ब्रह्मकूर्चैः कर्शयामास वै तनुम् ।

एवं वर्षशतं सार्द्धं व्यतीतं तपसा नृप ॥ २२५.९ ॥

तस्या विशुद्धिमिच्छन्त्याः शिवध्यानार्चनादिभिः ।

ततः कतिपयाहोभिस्तस्या ज्ञात्वा हठं परम् ।

परितुष्टः शिवः प्राह पार्वत्या परिचोदितः ॥ २२५.१० ॥

ईश्वर उवाच -

पुत्रि मा साहसं कार्षीः शुद्धदेहासि साम्प्रतम् ।

तुष्टोऽहं तपसा तेऽद्य वरं वरय वाञ्छितम् ॥ २२५.११ ॥

अलिकोवाच -

यदि तुष्टोऽसि देवेश वरार्हा यद्यहं मता ।

नानापापाग्नितप्ताया देहि शुद्धिं परां मम ॥ २२५.१२ ॥

त्वं मे नाथो ह्यनाथायास्त्वमेव जगतां गुरुः ।

दीनानाथसमुद्धर्ता शरण्यः सर्वदेहिनाम् ॥ २२५.१३ ॥

ईश्वर उवाच -

त्वं भद्रे शुद्धदेहासि मा किंचिदनुशोचिथाः ।

स्वनाम्ना स्थापयित्वेह मां ततः स्वर्गमेष्यसि ॥ २२५.१४ ॥

इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ।

अलिकापि ततो भक्त्या स्नात्वा संस्थाप्य शङ्करम् ॥ २२५.१५ ॥

दत्त्वा दानं च विप्रेभ्यो लोकमाप महोत्कटम् ।

पितरं च समासाद्य मातरं च युधिष्ठिर ॥ २२५.१६ ॥

तैश्च संमानिता प्रीत्या बन्धुभिः सालिका ततः ।

विमानवरमारूढा दिव्यमालान्विता नृप ॥ २२५.१७ ॥

गौरीलोकमनुप्राप्तसखित्वेऽद्यापि मोदते ।

ततः प्रभृति तत्पार्थ विख्यातमलिकेश्वरम् ॥ २२५.१८ ॥

तत्र तीर्थे तु या नारी पुरुषो वा युधिष्ठिर ।

स्नात्वा सम्पूजयेद्भक्त्या महादेवमुमायुतम् ॥ २२५.१९ ॥

स पापैर्विविधैर्मुक्तो लोकमाप्नोति शांकरम् ।

मानसं वाचिकं पापं कायिकं यत्पुरा कृतम् ॥ २२५.२० ॥

सर्वं तद्विलयं याति भोजयित्वा द्विजान्सदा ।

दीपं दत्त्वा च देवाग्रे न रोगैः परिभूयते ॥ २२५.२१ ॥

धूपपात्रं विमानं च घण्टां कलशमेव च ।

दत्त्वा देवाय राजेन्द्र शाक्रं लोकमवाप्नुयात् ॥ २२५.२२ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रेवासागरसङ्गमेऽलिकेश्वरतीर्थमाहात्म्यवर्णनं नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२६



मार्कण्डेय उवाच -

ततः क्रोशान्तरे पुण्यं तीर्थं तद्विमलेश्वरम् ।

यत्र स्नानेन दानेन जपहोमार्चनादिभिः ॥ २२६.१ ॥

विमलेश्वरमाराध्य यो यदिच्छेत्स तल्लभेत् ।

स्वर्गलाभादिकं वापि पार्थिवं वा यथेप्सितम् ॥ २२६.२ ॥

पुरा त्रिशिरसं हत्वा त्वष्टुः पुत्रं शतक्रतुः ।

यस्य तीर्थस्य माहात्म्याद्वैमल्यं परमं गतः ॥ २२६.३ ॥

यत्र वेदनिधिर्विप्रो महत्तप्त्वा तपः पुरा ।

नानाकर्ममलैः क्षीणैर्विमलोऽभवदर्कवत् ॥ २२६.४ ॥

महादेवप्रसादेन सोमवत्प्रियदर्शनः ।

पुरा भानुमतीं भानुः सुतां स्मरशरार्दितः ॥ २२६.५ ॥

चकमे तेन दोषेण कुष्ठरोगार्दितोऽभवत् ।

स चाप्यत्र तपस्तप्त्वा विमलत्वमुपागतः ॥ २२६.६ ॥

महादेवेन तुष्टेन स्वस्थानं मुदितोऽभजत् ।

तथैव च पुरा पार्थ विभाण्डकसुतो मुनिः ॥ २२६.७ ॥

योगिसङ्गं वने प्राप्य पुरे च नृपतेस्तथा ।

राजसंसर्गदोषाद्वै मालिन्यं परमात्मनः ॥ २२६.८ ॥

विचारयन्नभ्युपेत्य रेवासागरसङ्गमम् ।

शान्तया भार्यया सार्द्धं तप्त्वा द्वादशवत्सरान् ॥ २२६.९ ॥

कृच्छ्रचान्द्रायणैर्देवं तोषयंस्त्र्यम्बकं मुनिः ।

महादेवेन तुष्टेन सोऽपि वैमल्यमाप्तवान् ॥ २२६.१० ॥

शर्वाण्या प्रेरितः शर्वः पुरा दारुवने नृप ।

मोहनान्मुनिपत्नीनां स्वं दीक्ष्य विमलं किल ॥ २२६.११ ॥

विचार्य परमस्थानं नर्मदोदधिसङ्गमम् ।

तत्र स्थित्वा महाराज तपस्तप्त्वा सहोमया ॥ २२६.१२ ॥

विमलोऽसौ यतो जातस्तेनासौ विमलेश्वरः ।

तेन नाम्ना स्वयं तस्थौ लोकानां हितकाम्यया ॥ २२६.१३ ॥

ततस्तिलोत्तमां सृष्ट्वा ब्रह्मा लोकपितामहः ।

प्रजानाथोऽपि तां सृष्ट्वा दृष्ट्वाग्रे सुमनोहराम् ॥ २२६.१४ ॥

भावियोगबलाक्रान्तः स तस्यामभिकोऽभवत् ।

तेन वीक्ष्य सदोषत्वं रेवातीरद्वयं श्रितः ॥ २२६.१५ ॥

तीर्थान्यनुसरन्मौनी त्रिस्नायी संस्मरञ्छिवम् ।

रेवार्णवसमायोगे स्नात्वा सम्पूज्य शङ्करम् ।

कालेनाल्पेन राजर्षे ब्रह्माप्यमलतां गतः ॥ २२६.१६ ॥

एवमन्येऽपि बहुशो देवर्षिनृपसत्तमाः ।

त्यक्त्वा दोषमलं तत्र विमला बहवोऽभवन् ॥ २२६.१७ ॥

तथा त्वमपि राजेन्द्र तत्र स्नात्वा शिवार्चनात् ।

अमलोऽपि विशेषेण वैमल्यं प्राप्स्यसे परम् ॥ २२६.१८ ॥

तत्र स्नात्वा नरो नारी पूजयित्वा महेश्वरम् ।

पापदोषविनिर्मुक्तो ब्रह्मलोके महीयते ॥ २२६.१९ ॥

तत्रोपवासं यः कृत्वा पश्येत विमलेश्वरम् ।

अष्टम्यां च चतुर्दश्यां सर्वपर्वसु पार्थिव ॥ २२६.२० ॥

सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ।

श्राद्धं कृत्वा विधानेन पित्ःणामनृणी भवेत् ।

ब्राह्मणान् भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ २२६.२१ ॥

यद्यदिष्टतमं लोके यच्चैवात्महितं गृहे ।

तत्तद्गुणवते देयं तत्रैवाक्षयमिच्छता ।

स्वर्णधान्यानि वासांसि छत्रोपानत्कमण्डलुम् ॥ २२६.२२ ॥

गृहं देवस्य वै शक्त्या कृत्वा स्याद्भुवि भूपतिः ।

गीतनृत्यकथाभिश्च तोषयेत्परमेश्वरम् ॥ २२६.२३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनं नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२७



मार्कण्डेय उवाच -

एतानि तव संक्षेपात्प्राधान्यात्कथितानि च ।

न शक्तो विस्तराद्वक्तुं संख्यां तीर्थेषु पाण्डव ॥ २२७.१ ॥

एषा पवित्रा विमला नदी त्रैलोक्यविश्रुता ।

नर्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥ २२७.२ ॥

मनसा संस्मरेद्यस्तु नर्मदां सततं नृप ।

चान्द्रायणशतस्याशु लभते फलमुत्तमम् ॥ २२७.३ ॥

अश्रद्दधानाः पुरुषा नास्तिकाश्चात्र ये स्थिताः ।

पतन्ति नरके घोरे प्राहैवं परमेश्वरः ॥ २२७.४ ॥

नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः ।

तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥ २२७.५ ॥

इयं माहेश्वरी गङ्गा महेश्वरतनूद्भवा ।

प्रोक्ता दक्षिणगङ्गेति भारतस्य युधिष्ठिर ॥ २२७.६ ॥

जाह्नवी वैष्णवी गङ्गा ब्राह्मी गङ्गा सरस्वती ।

इयं माहेश्वरी गङ्गा रेवा नास्त्यत्र संशयः ॥ २२७.७ ॥

यथा हि पुरुषे देवस्त्रैमूर्तत्वमुपाश्रितः ।

ब्रह्मविष्णुमहेशाख्यं न भेदस्तत्र वै यथा ।

तथा सरित्त्रये पार्थ भेदं मनसि मा कृथाः ॥ २२७.८ ॥

कोटिशो ह्यत्र तीर्थानि लक्षशश्चापि भारत ।

तथा सहस्रशो रेवातीरद्वयगतानि तु ॥ २२७.९ ॥

वृक्षान्तरिक्षसंस्थानि जलस्थलगतानि च ।

कः शक्तस्तानि निर्णेतुं वागीशो वा महेश्वरः ॥ २२७.१० ॥

स्मरणाज्जन्मजनितं दर्शनाच्च त्रिजन्मजम् ।

सप्तजन्मकृतं नश्येत्पापं रेवावगाहनात् ॥ २२७.११ ॥

देवकार्यं कृतं तेन अग्नयो विधिवद्धुताः ।
वेदा अधीताश्चत्वारो येन रेवावगाहिता ॥ २२७.१२ ॥
प्राधान्याच्चापि संक्षेपात्तीर्थान्युक्तानि ते मया ।
न शक्यो विस्तरः पार्थ श्रोतुं वक्तुं च वै मया ॥ २२७.१३ ॥

युधिष्ठिर उवाच -
विधानं च यमांश्चैव नियमांश्च वदस्व मे ।
प्रायश्चित्तार्थगमने को विधिस्तं वदस्व मे ॥ २२७.१४ ॥

श्रीमार्कण्डेय उवाच -
साधु पृष्टं महाराज यच्छ्रेयः पारलौकिकम् ।
शृणुष्वावहितो भूत्वा यथाज्ञानं वदामि ते ॥ २२७.१५ ॥
अध्रुवेण शरीरेण ध्रुवं कर्म समाचरेत् ।
अवश्यमेव यास्यन्ति प्राणाः प्राघूर्णिका इव ॥ २२७.१६ ॥
दानं वित्तादृतं वाचः कीर्तिधर्मौ तथा ख्युषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥ २२७.१७ ॥
अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता ॥ २२७.१८ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ २२७.१९ ॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ २२७.२० ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २२७.२१ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २२७.२२ ॥
सन्तीह विविधोपाया नृणां देहविशोधनाः ।
तीर्थसेवासमं नास्ति स्वशरीरस्य शोधनम् ॥ २२७.२३ ॥

कृच्छ्रचान्द्रायणाद्यैर्वा द्वितीयं तीर्थसेवया ।

यदा तीर्थं समुद्दिश्य प्रयाति पुरुषो नृप ।

तदा देवाश्च पितरस्तं व्रजन्त्यनु खेचराः ॥ २२७.२४ ॥

परमा मोदपूर्णास्ते प्रयान्त्यस्यानुयायिनः ।

कृत्वाभ्युदयिकं श्राद्धं समापृच्छय तु देवताम् ॥ २२७.२५ ॥

इष्टबन्धूंश्च विष्णुं च शङ्करं सगणेश्वरम् ।

व्रजेद्द्विजाभ्यनुज्ञातो गृहीत्वा नियमानपि ॥ २२७.२६ ॥

एकाशनं ब्रह्मचर्यं भूशय्यां सत्यवादिताम् ।

वर्जनं च परान्नस्य प्रतिग्रहविवर्जनम् ॥ २२७.२७ ॥

वर्जयित्वा तथा द्रोहवञ्चनादि नृपोत्तम ।

साधुवेषं समास्थाय विनयेन विभूषितः ॥ २२७.२८ ॥

दम्भाहङ्कारमुक्तो यः स तीर्थफलमश्नुते ।

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ २२७.२९ ॥

विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ।

अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ॥ २२७.३० ॥

आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ २२७.३१ ॥

वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ।

स्नानं सुरार्चनं चैव श्राद्धे वै पिण्डपातनम् ॥ २२७.३२ ॥

विप्राणां भोजनं शक्त्या सर्वतीर्थेष्वयं विधिः ।

प्रायश्चित्तनिमित्तं च यो व्रजेद्यतमानसः ॥ २२७.३३ ॥

तस्यापि च विधिं वक्ष्ये शृणु पार्थ समाहितः ।

एकाशनं ब्रह्मचर्यमक्षारलवणाशनम् ॥ २२७.३४ ॥

स्नात्वा तीर्थाभिगमनं हविष्यैकान्नभोजनम् ।

वर्जयेत्पतितालापं बहुभाषणमेव च ॥ २२७.३५ ॥

परीवादं परान्नं च नीचसङ्गं विवर्जयेत् ।

व्रजेच्च निरुपानत्को वसानो वाससी शुचिः ॥ २२७.३६ ॥

संकल्पं मनसा कृत्वा ब्राह्मणानुज्ञया व्रजेत् ।

तीर्थे गत्वा तथा स्नात्वा कृत्वा चैव सुरार्चनम् ॥ २२७.३७ ॥

दुष्कर्मतो विमुक्तः स्यादनुतापी भवेद्यदि ।

वेदे तीर्थे च देवे च दैवज्ञे चौषधे गुरौ ॥ २२७.३८ ॥

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

उक्ततीर्थफलानां च पुराणेषु स्मृतिष्वपि ॥ २२७.३९ ॥

अर्थवादभवां शङ्कां विहाय भरतर्षभ ।

कृत्वा विचारं शास्त्रोक्तं परिकल्प्य यथोचितम् ॥ २२७.४० ॥

कायेन कृच्छ्रचरणे ह्यशक्तानां विशुद्धये ।

ज्ञात्वा तीर्थाविशेषं हि प्रायश्चित्तं समाचरेत् ॥ २२७.४१ ॥

तच्छृणुष्व महाराज नर्मदायां यथोचितम् ।

चतुर्विंशतिसंख्येभ्यो योजनेभ्यो व्रजेन्नरः ॥ २२७.४२ ॥

चतुर्विंशतिकृच्छ्राणां फलमाप्नोति शोभनम् ।

अत ऊर्ध्वं योजनेषु पादकृच्छ्रमुदाहृतः ॥ २२७.४३ ॥

तन्मध्ये च महाराज यो व्रजेच्छुद्धिकाङ्क्षया ।

योजने योजने तस्य प्रायश्चित्तं विदुर्बुधाः ॥ २२७.४४ ॥

प्रणवाख्ये महाराज तथा रेवोरिसंगमे ।

भृगुक्षेत्रे तथा गत्वा फलं तद्द्विगुणं स्मृतम् ॥ २२७.४५ ॥

सङ्गमे देवनद्याश्च शूलभेदे नृपोत्तम ।

द्विगुणं पादहीनं स्यात्करजासंगमे तथा ॥ २२७.४६ ॥

एरण्डीसङ्गमे तद्वत्कपिलायाश्च संगमे ।

केचित्त्रिगुणितं प्राहुः कुब्जारेवोत्थसङ्गमे ॥ २२७.४७ ॥

ओंकारे च महाराज तदपि स्यात्समञ्जसम् ।

सङ्गमेषु तथान्यासां नदीनां रेवया सह ॥ २२७.४८ ॥

प्राहुस्ते सार्धकृच्छ्रं वै फलं पूर्वं युधिष्ठिर ।

त्रिगुणं कृच्छ्रमाप्नोति रेवासागरसङ्गमे ॥ २२७.४९ ॥

कृच्छ्रं चतुर्गुणं प्रोक्तं शुक्लतीर्थे युधिष्ठिर ।

योजने योजने गत्वा चतुर्विंशतियोजनम् ।

तत्र तत्र वसेद्यस्तु सुचिरं नृवरोत्तम ॥ २२७.५० ॥

रेवासेवासमाचारः संयुक्तः शुद्धबुद्धिमान् ।
दम्भाहङ्काररहितः शुद्ध्यर्थं स विमुच्यते ॥ २२७.५१ ॥
इति ते कथितं पार्थ प्रायश्चित्तार्थलक्षणम् ।
रेवायात्राविधानं च गुह्यमेतद्युधिष्ठिर ॥ २२७.५२ ॥

युधिष्ठिर उवाच -
योजनस्य प्रमाणं मे वद त्वं मुनिसत्तम ।
यज्ज्ञात्वा निश्चितं मे स्यान्मनःशुद्धेस्तु कारणम् ॥ २२७.५३ ॥

मार्कण्डेय उवाच -
शृणु पाण्डव वक्ष्यामि प्रमाणं योजनस्य यत् ।
तथा यात्राविशेषेण विशेषं कृच्छ्रसम्भवम् ॥ २२७.५४ ॥
तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्याहुर्वितस्तिर्द्वादशांगुला ॥ २२७.५५ ॥
वितस्तिद्वितयं हस्तश्चतुर्हस्तं धनुः स्मृतम् ।
स एव दण्डो गदितो विशेषज्ञैर्युधिष्ठिर ॥ २२७.५६ ॥
धनुःसहस्रे द्वे क्रोशश्चतुःक्रोशं च योजनम् ।
एतद्योजनमानं ते कथितं भरतर्षभ ॥ २२७.५७ ॥
येन यात्रां व्रजन् वेत्ति फलमानं निजार्जितम् ।
उक्तं कृच्छ्रफलं तीर्थे जलरूपे नृपोत्तम ॥ २२७.५८ ॥
यथाविशेषं ते वच्मि पूर्वोक्ते तत्र तत्र च ।
तन्मे शृणु महीपाल श्रद्दधानाय कथ्यते ॥ २२७.५९ ॥
यस्मिंस्तीर्थे हि यत्प्रोक्तं फलं कृच्छ्रादिकं नृप ।
तत्राप्युपोषणात्कृच्छ्रफलं प्राप्नोत्यथाधिकम् ॥ २२७.६० ॥
दिनजाप्याच्च लभते फलं कृच्छ्रस्य शक्तितः ।
तत्र विख्यातदेवेशं स्नात्वा दृष्ट्वाभिपूज्य च ॥ २२७.६१ ॥
प्रणम्य लभते पार्थ फलं कृच्छ्रभवं सुधीः ।
तीर्थे मुख्यफलं स्नानाद्द्वितीयं चाप्युपोषणात् ॥ २२७.६२ ॥

तृतीयं ख्यातदेवस्य दर्शनाभ्यर्चनादिभिः ।

चतुर्थं जाप्ययोगेन देहशक्त्या त्वहर्निशम् ॥ २२७.६३ ॥

पञ्चमं सर्वतीर्थेषु कल्पनीयं हि दूरतः ।

तीरस्थो योजनादर्वाग्दशांशं लभते फलम् ॥ २२७.६४ ॥

उक्ततीर्थफलात्पार्थ नात्र कार्या विचारणा ॥ २२७.६५ ॥

उपवासेन सहितं महानद्यां हि मज्जनम् ।

अप्यर्वाग्योजनात्पार्थ दद्यात्कृच्छ्रफलं नृणाम् ॥ २२७.६६ ॥

षड्योजनवहा कुल्य नद्योऽल्पा द्वादशैव च ।

चतुर्विंशतिगा नद्यो महानद्यस्ततोऽधिकाः ॥ २२७.६७ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तीर्थयात्रादिविधानविशेषकथनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२८



युधिष्ठिर उवाच -

परार्थं तीर्थयात्रायां गच्छतः कस्य किं फलम् ।

कियन्मात्रं मुनिश्रेष्ठ तन्मे ब्रूहि कृपानिधे ॥ २२८.१ ॥

मार्कण्डेय उवाच -

परार्थं गच्छतस्तन्मे वदतः शृणु पार्थिव ।

यथा यावत्फलं तस्य यात्रादिविहितं भवेत् ॥ २२८.२ ॥

उत्तमेनेह वर्णेन द्रव्यलोभादिना नृप ।

नाधमस्य क्वचित्कार्यं तीर्थयात्रादिसेवनम् ॥ २२८.३ ॥

धर्मकर्म महाराज स्वयं विद्वान्समाचरेत् ।

शरीरस्याथवा शक्त्या अन्यद्वा कार्ययोगतः ॥ २२८.४ ॥

धर्मकर्म सदा प्रायः सवर्णेनैव कारयेत् ।

पुत्रपौत्रादिकैर्वापि ज्ञातिभिर्गोत्रसम्भवैः ॥ २२८.५ ॥

श्रेष्ठं हि विहितं प्राहुर्धर्मकर्म युधिष्ठिर ।

तैरेव कारयेत्तस्मान्नोत्तमैर्नाधमैरपि ॥ २२८.६ ॥

अधमेन कृतं सम्यङ्न भवेदिति मे मतिः ।

उत्तमश्चाधमार्थे वै कुर्वन्दुर्गतिमाप्नुयात् ॥ २२८.७ ॥

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।

न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ २२८.८ ॥

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।

देवताराधनं दीक्षा स्त्रीशूद्रपतनानि षट् ॥ २२८.९ ॥

पतिवत्नी पतत्येव विधवा सर्वमाचरेत् ।

सभर्तृकाशके पत्यौ सर्वं कुर्यादनुज्ञया ॥ २२८.१० ॥

गत्वा परार्थं तीर्थादौ षोडशांशफलं लभेत् ।

गच्छतश्च प्रसङ्गेन तीर्थमर्द्धफलं स्मृतम् ॥ २२८.११ ॥

अनुसङ्गेन तीर्थस्य स्नाने स्नानफलं विदुः ।

नैव यात्राफलं तज्ज्ञाः शास्त्रोक्तं कल्मषापहम् ॥ २२८.१२ ॥

पित्रर्थं च पितृव्यस्य मातुर्मातामहस्य च ।

मातुलस्य तथा भ्रातुः श्वशुरस्य सुतस्य च ॥ २२८.१३ ॥

पोषकार्थादयोश्चापि मातामह्या गुरोस्तथा ।

स्वसुर्मातृष्वसुः पैत्र्या आचार्याध्यापकस्य च ॥ २२८.१४ ॥

इत्याद्यर्थे नरः स्नात्वा स्वयमष्टांशमाप्नुयात् ।

साक्षात्पित्रोः प्रकुर्वाणश्चतुर्थांशमवाप्नुयात् ॥ २२८.१५ ॥

पतिपत्न्योर्मिथश्चार्द्धं फलं प्राहुर्मनीषिणः ।

भागिनेयस्य शिष्यस्य भ्रातृव्यस्य सुतस्य च ।

षट्त्रिपञ्चचतुर्भागान्फलमाप्नोति वै नरः ॥ २२८.१६ ॥

इति ते कथितं पार्थ पारम्पर्यक्रमागतम् ।

कर्तव्यं ज्ञातिवर्गस्य परार्थे धर्मसाधनम् ॥ २२८.१७ ॥

वर्षाऋतुसमायोगे सर्वा नद्यो रजस्वलाः ।

मुक्त्वा सरस्वतीं गङ्गां नर्मदां यमुनानदीम् ॥ २२८.१८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे परार्थतीर्थयात्राफलकथनं नामाष्टविंशत्यधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २२९



श्रीमार्कण्डेय उवाच -

एवं ते कथितं राजन्पुराणं धर्मसंहितम् ।

शिवप्रीत्या यथा प्रोक्तं वायुना देवसंसदि ॥ २२९.१ ॥

षष्टितीर्थसहस्राणि षष्टिकोटिस्तथैव च ।

आदिमध्यावसानेषु नर्मदायां पदे पदे ॥ २२९.२ ॥

मया द्वादशसाहस्री संहिता या श्रुता पुरा ।

देवदेवस्य गदतः साम्प्रतं कथिता तव ॥ २२९.३ ॥

पृष्टस्त्वयाहं भूपाल पर्वतेऽमरकण्टके ।

स्थितः संक्षेपतः सर्वं मया तत्कथितं तव ॥ २२९.४ ॥

नर्मदाचरितं पुण्यं शृणु तस्यास्ति यत्फलम् ।

यत्फलं सर्ववेदैः स्यात्सषडङ्गपदक्रमैः ॥ २२९.५ ॥

पठितैश्च श्रुतैर्वापि तस्माद्बहुतरं भवेत् ।

सत्रयाजी फलं यत्र लभते द्वादशाब्दिकम् ॥ २२९.६ ॥

चरिते तु श्रुते देव्या लभते तादृशं फलम् ।

सर्वतीर्थेषु यत्पुण्यं स्नात्वा सागरमादितः ॥ २२९.७ ॥

सकृत्स्नात्वा तथा श्रुत्वा नर्मदायां फलं हि तत् ।

आदिमध्यावसानेन नर्मदाचरितं शुभम् ॥ २२९.८ ॥

यः शृणोति नरो भक्त्या तस्य पुण्यफलं शृणु ।

स प्राप्य शिवसंस्थानं रुद्रकन्यासमावृतः ॥ २२९.९ ॥

रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ।

एतद्धर्ममुपाख्यानं सर्वशास्त्रेषु सत्तमम् ॥ २२९.१० ॥

देशे वा मण्डले वापि वा ग्रामे नगरेऽपि वा ।

गृहे वा तिष्ठते यस्य चातुर्वर्ण्यस्य भारत ॥ २२९.११ ॥

स ब्रह्मा स शिवः साक्षात्स च देवो जनार्दनः ।

त्रिविधं कारणं लोके धर्मपन्थानमुत्तमम् ॥ २२९.१२ ॥
देवतानां गुरुं शास्त्रं परमं सिद्धिकारणम् ।
श्रुत्वेश्वरमुखात्पार्थ मयापि तव कीर्तितम् ॥ २२९.१३ ॥
दक्षिणे चोत्तरे कूले यानि तीर्थानि कानिचित् ।
प्रधानतः सुपुण्यानि कथितानि विशेषतः ॥ २२९.१४ ॥
स्पर्शनाद्दर्शनात्तेषां कीर्तनाच्छ्रवणात्तथा ।
मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ २२९.१५ ॥
इदं यः शृणुयान्नित्यं पुराणं शिवभाषितम् ।
ब्राह्मणो वेदविद्यावान् क्षत्रियो विजयी भवेत् ॥ २२९.१६ ॥
धनभागी भवेद्वैश्यः शूद्रो वै धर्मभाग्भवेत् ।
सौभाग्यं सन्ततिं स्वर्गं नारी श्रुत्वाप्नुयाद्धनम् ॥ २२९.१७ ॥
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
माहात्म्यं नर्मदायास्तु श्रुत्वा पापबहिष्कृताः ॥ २२९.१८ ॥
पापभेदी कृतघ्नश्च स्वामिविश्वासघातकः ।
गोघ्नश्च गरदश्चैव कन्याविक्रयकारकः ॥ २२९.१९ ॥
एते श्रुत्वैव पापेभ्यो मुच्यन्ते नात्र संशयः ।
ये पुनर्भावितात्मानः शृण्वन्ति सततं नृप ॥ २२९.२० ॥
पूजयन्त इदं देवाः पूजिता गुरवश्च तैः ।
नर्मदा पूजिता तेन भगवांश्च महेश्वरः ॥ २२९.२१ ॥
तस्मात्सर्वप्रयत्नेन गन्धपुष्पविभूषणैः ।
पूजितं परया भक्त्या शास्त्रमेतत्फलप्रदम् ॥ २२९.२२ ॥
लेखापयित्वा सकलं नर्मदाचरितं शुभम् ।
उत्तमं सर्वशास्त्रेभ्यो यो ददाति द्विजन्मने ॥ २२९.२३ ॥
नर्मदासर्वतीर्थेषु स्नाने दाने च यत्फलम् ।
तत्फलं समवाप्नोति स नरो नात्र संशयः ॥ २२९.२४ ॥
एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् ।
स्वर्गदं पुत्रदं धन्यं यशस्यं कीर्तिवर्धनम् ॥ २२९.२५ ॥
सर्वपापहरं पार्थ दुःखदुःस्वप्ननाशनम् ।

पठतां शृण्वतां राजन् सर्वकामार्थसिद्धिदम् ॥ २२९.२६ ॥

शान्तिरस्तु शिवं चास्तु लोकाः सन्तु निरामयाः ।

गोब्राह्मणेभ्यः स्वस्त्यस्तु धर्मं धर्मात्मजाश्रयः ॥ २२९.२७ ॥

नरकान्तकरी रेवा सतीर्था विश्वपावनी ।

नर्मदा धर्मदा चास्तु शर्मदा पार्थ ते सदा ॥ २२९.२८ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मार्कण्डेययुधिष्ठिरसंवादे रेवाखण्डपठनश्रवणदानादिफलश्रुतिवर्णनं नामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २३०



सूत उवाच -

इत्युक्त्वोपररामथ पाण्डोः पुत्राय वै मुनिः ।

मृकण्डतनयो धीमान्सप्तकल्पस्मरः पुरः ॥ २३०.१ ॥

मार्कण्डमुनिना प्रोक्तं यथा पार्थाय सत्तमाः ।

तथा वः कथितं सर्वं रेवामाहात्म्यमुत्तमम् ॥ २३०.२ ॥

इयं पुण्या सरिच्छ्रेष्ठा रेवा विश्वैकपावनी ।

रुद्रदेहसमुद्भूता सर्वभूताभयप्रदा ॥ २३०.३ ॥

ओङ्कारजलधिं यावदुवाच भृगुनन्दनः ।

तीर्थसङ्गमभेदान्वै धर्मपुत्राय पृच्छते ॥ २३०.४ ॥

समासेनैव मुनयस्तथाहं कथयामि वः ।

सप्तषष्टिसहस्राणि षष्टिकोट्यस्तथैव च ॥ २३०.५ ॥

कथं केनात्र शक्यन्ते वक्तुं वर्षशतैरपि ।

तथाप्यत्र मुनिश्रेष्ठाः प्रोक्तं पार्थाय वै यथा ॥ २३०.६ ॥

तीर्थमोंकारमारभ्य वक्ष्ये तीर्थावलिं शुभाम् ।

प्रोच्यमानां समासेन तां शृणुध्वं महर्षयः ॥ २३०.७ ॥

नत्वा सोमं महेशानं नत्वा ब्रह्माच्युतावुभौ ।

सरस्वतीं गणेशानं देव्यासाङ्घ्रिपङ्कजम् ॥ २३०.८ ॥

पूर्वाचार्यांस्तथा सर्वान्दृष्ट्वादृष्टार्थवेदिनः ।

प्रणम्य नर्मदां देवीं वक्ष्ये तीर्थावलिं त्विमाम् ॥ २३०.९ ॥

ओं नमो विश्वरूपाय ओङ्कारायाखिलात्मने ।

यमारभ्ये प्रवक्ष्यामि रेवातीर्थावलिं द्विजाः ॥ २३०.१० ॥

अस्मिन्मार्कण्डगदिते रेवातीर्थक्रमे शुभे ।

पुराणसंहिताध्याया मार्कण्डाश्रमवर्णनम् ॥ २३०.११ ॥

ततः प्रश्नाधिकारश्च प्रशंसा नर्मदोद्भवा ।

तथा पञ्चदशानां च प्रवाहानां प्रकीर्तनम् ॥ २३०.१२ ॥

नामनिर्वचनं तद्वत्तथा कल्पसमुद्भवाः ।

एकविंशतिकल्पानां तद्वन्नामानुकीर्तनम् ॥ २३०.१३ ॥

मार्कण्डेयानुभूतानां सप्तानां लक्षणानि च ।

माहात्म्यं चैव रेवायाः शिवविष्ण्वोस्तथैव च ॥ २३०.१४ ॥

संहारलक्षणं तद्वदोङ्कारस्य च सम्भवः ।

तथैवौंकारमाहात्म्यममरकण्टकीर्तनम् ॥ २३०.१५ ॥

अमरेश्वरतीर्थं च तथा दारुवनं महत् ।

दारुकेश्वरतीर्थं च तीर्थं वै चरुकेश्वरम् ॥ २३०.१६ ॥

चरुकासङ्गमस्तद्व्यद्वतीपातेश्वरं तथा ।

पातालेश्वरतीर्थं च कोटियज्ञाह्वयं तथा ॥ २३०.१७ ॥

वरुणेश्वरतीर्थं च लिङ्गान्यष्टोत्तरं शतम् ।

सिद्धेश्वरं यमेशं च ब्रह्मेश्वरमतः परम् ॥ २३०.१८ ॥

सारस्वतं चाष्टरुद्रं सावित्रं सोमसंज्ञितम् ।

शिवखातं महातीर्थं रुद्रावर्तं द्विजोत्तमाः ॥ २३०.१९ ॥

ब्रह्मावर्तं परं तीर्थं सूर्यावर्तमतः परम् ।

पिप्पलावर्ततीर्थं च पिप्पल्याश्चैव सङ्गमः ॥ २३०.२० ॥

अमरकण्टमाहात्म्यं कपिलासङ्गमस्तथा ।

विशल्यासम्भवश्चापि भृगुतुङ्गाद्रिकीर्तनम् ॥ २३०.२१ ॥

विशल्यासङ्गमः पुण्यः करमर्दासमागमः ।

करमर्देश्वरं तीर्थं चक्रतीर्थमनुत्तमम् ॥ २३०.२२ ॥

सङ्गमो नीलगङ्गायाः विध्वंसस्त्रिपुरस्य च ।

कीर्तनं तीर्थदानानां मधुकतृतीयाव्रतम् ॥ २३०.२३ ॥

अप्सरेश्वरतीर्थं च देहक्षेपे विधिस्ततः ।

तीर्थं ज्वालेश्वरं नाम ज्वालायाः सङ्गमस्तथा ॥ २३०.२४ ॥

शक्रतीर्थं कुशावर्तं हंसतीर्थं तथैव च ।

अम्बरीषस्य तीर्थं च महाकालेश्वरं तथा ॥ २३०.२५ ॥

मातृकेश्वरतीर्थं च भृगुतुङ्गानुवर्णनम् ।

तत्र भैरवमाहात्म्यं चपलेश्वरकीर्तनम् ॥ २३०.२६ ॥
चण्डपाणेश्च माहात्म्यं कावेरीसङ्गमस्तथा ।
कुबेरेश्वरतीर्थं च वाराहीसङ्गमस्तथा ॥ २३०.२७ ॥
सङ्गमश्चण्डवेगायास्तीर्थं चण्डेश्वरं तथा ।
एरण्डीसङ्गमः पुण्य एरण्डेश्वरमुत्तमम् ॥ २३०.२८ ॥
पितृतीर्थं च तत्रैव ओङ्कारस्य च सम्भवम् ।
माहात्म्यं पञ्चलिङ्गानामोङ्कारस्य मुनीश्वराः ॥ २३०.२९ ॥
कोटितीर्थस्य माहात्म्यं तीर्थं काकह्रदं तथा ।
जम्बुकेश्वरतीर्थं च सारस्वतमतः परम् ॥ २३०.३० ॥
कपिलासङ्गमस्तद्वत्तीर्थं च कपिलेश्वरम् ।
दैत्यसूदनतीर्थं च चक्रतीर्थं च वामनम् ॥ २३०.३१ ॥
तीर्थलक्षं विदुः पूर्वे कपिलायास्तु सङ्गमे ।
स्वर्गस्य नरकस्यापि लक्षणं मुनिभाषितम् ॥ २३०.३२ ॥
व्यवस्थानं शरीरस्य गोप्रदानानुवर्णनम् ।
अशोकवनिकातीर्थं मतङ्गाश्रमवर्णनम् ॥ २३०.३३ ॥
अशोकेश्वरतीर्थं च मतङ्गेश्वरमुत्तमम् ।
तथा मृगवनं पुण्यं तत्र तीर्थं मनोरथम् ॥ २३०.३४ ॥
सङ्गमोऽङ्गारगर्ताया अङ्गारेश्वरमुत्तमम् ।
तथा मेघवनं तीर्थं देव्या नामानुकीर्तनम् ॥ २३०.३५ ॥
सङ्गमश्चापि कुब्जायास्तीर्थं कुब्जेश्वरं तथा ।
बिल्वाम्रकं तथा तीर्थं पूर्णद्वीपमतः परम् ॥ २३०.३६ ॥
तथा हिरण्यगर्भायाः सङ्गमः पुण्यकीर्तनः ।
द्वीपेश्वरं नाम तीर्थं पुण्यं यज्ञेश्वरं तथा ॥ २३०.३७ ॥
माण्डव्याश्रमतीर्थं च विशोकासङ्गमस्तथा ।
वागीश्वरं नाम तीर्थं पुण्यो वै वागुसङ्गमः ॥ २३०.३८ ॥
सहस्रावर्तकं तत्र तीर्थं सौगन्धिकं तथा ।
सङ्गमश्च सरस्वत्या ईशानं तीर्थमुत्तमम् ॥ २३०.३९ ॥
देवतात्रयतीर्थं च शूलखातं ततः परम् ।

ब्रह्मोदं शाङ्करं सौम्यं सारस्वतमतः परम् ॥ २३०.४० ॥

सहस्रयज्ञतीर्थं च कपालमोचनं तथा ।

आग्नेयमदितीशं च वाराहं तीर्थमुत्तमम् ॥ २३०.४१ ॥

तथा देवपथं तीर्थं तीर्थं यज्ञसहस्रकम् ।

शुक्लतीर्थं दीप्तिकेशं विष्णुतीर्थं च योधनम् ॥ २३०.४२ ॥

नर्मदेश्वरतीर्थं च वरुणेशं च मारुतम् ।

योगेशं रोहिणीतीर्थं दारुतीर्थं च सत्तमाः ॥ २३०.४३ ॥

ब्रह्मावर्तं च पत्त्रेशं वाह्नं सौरं च कीर्त्यते ।

मेघनादं दारुतीर्थं देवतीर्थं गुहाश्रयम् ॥ २३०.४४ ॥

नर्मदेश्वरसंज्ञं तत्कपिलातीर्थमुत्तमम् ।

करञ्जेशं कुण्डलेशं पिप्पलादमतः परम् ॥ २३०.४५ ॥

विमलेश्वरतीर्थं च पुष्करिण्याश्च सङ्गमः ।

प्रशंसा शूलभेदस्य तत्रैवान्धकविक्रमः ॥ २३०.४६ ॥

देवाश्वासनदानं च तथैवान्धकनिग्रहः ।

शूलभेदस्य चोत्पत्तिस्तथा पात्रपरीक्षणम् ॥ २३०.४७ ॥

प्रशंसा दानधर्मस्य ऋषिशृङ्गानुभावनम् ।

स्वर्गतिं दीर्घतपसो भानुमत्यास्तथेङ्गितम् ॥ २३०.४८ ॥

शबरस्वर्गगमनं माहात्म्यं शूलभेदजम् ।

कपिलेश्वरतीर्थं च मोक्षतीर्थमतः परम् ॥ २३०.४९ ॥

सङ्गमो मोक्षनद्याश्च तीर्थं च विमलेश्वरम् ।

तथैवोलूकतीर्थं च पुष्करिण्याश्च सङ्गमः ॥ २३०.५० ॥

आदित्येश्वरतीर्थं च तीर्थं वै सङ्गमेश्वरम् ।

सङ्गमो भीमकुल्यायास्तीर्थं भीमेश्वरं शुभम् ॥ २३०.५१ ॥

मार्कण्डेश्वरतीर्थं च तथा वै पिप्पलेश्वरम् ।

करोटीश्वरतीर्थं च तीर्थमिन्द्रेश्वरं शुभम् ॥ २३०.५२ ॥

अगस्त्येशं कुमारेशं व्यासेश्वरमनुत्तमम् ।

वैद्यनाथं च केदारमानन्देश्वरसंज्ञितम् ॥ २३०.५३ ॥

मातृतीर्थं च मुण्डेशं चौरं कामेश्वरं तथा ।

सङ्गमश्चानुदुह्या वै तीर्थे भीमार्जुनाह्वये ।
तीर्थं धर्मेश्वरं नाम लुङ्केश्वरमतः परम् ॥ २३०.५४ ॥
ततो धनदतीर्थं च जटेशं मङ्गलेश्वरम् ।
कपिलेश्वरतीर्थं च गोपारेश्वरमुत्तमम् ॥ २३०.५५ ॥
मणिनागेश्वरं नाम मणिनद्याश्च सङ्गमः ।
तिलकेश्वरतीर्थं च गौतमेशमतः परम् ॥ २३०.५६ ॥
तत्रैव मातृतीर्थं च मुनिनोक्तं मुनीश्वराः ।
शङ्खचूडं च केदारं पाराशरमतः परम् ॥ २३०.५७ ॥
भीमेश्वरं च चन्द्रेशमश्ववत्याश्च सङ्गमः ।
बह्वीश्वरं नारदेशं वैद्यनाथं कपीश्वरम् ॥ २३०.५८ ॥
कुम्भेश्वरं च मार्कण्डं रामेशं लक्ष्मणेश्वरम् ।
मेघेश्वरं मत्स्यकेशमप्सराह्रदसंज्ञकम् ॥ २३०.५९ ॥
दधिस्कन्दं मधुस्कन्दं नन्दिकेशं च वारुणम् ।
पावकेश्वरतीर्थं च तथैव कपिलेश्वरम् ॥ २३०.६० ॥
नारायणाह्वयं तीर्थं चक्रतीर्थमनुत्तमम् ।
चण्डादित्यं परं तीर्थं चण्डिकातीर्थमुत्तमम् ॥ २३०.६१ ॥
यमहासाह्वयं तीर्थं तथा गङ्गेश्वरं शुभम् ।
नन्दिकेश्वरसंज्ञं च नरनारायणाह्वयम् ॥ २३०.६२ ॥
नलेश्वरं च मार्कण्डं शुक्लतीर्थमतः परम् ।
व्यासेश्वरं परं तीर्थं तत्र सिद्धेश्वरं तथा ॥ २३०.६३ ॥
कोटितीर्थं प्रभातीर्थं वासुकीश्वरमुत्तमम् ।
सङ्गमश्च करञ्जाया मार्कण्डेश्वरमुत्तमम् ॥ २३०.६४ ॥
तीर्थं कोटीश्वरं नाम तथा संकर्षणाह्वयम् ।
कनकेशं मन्मथेशं तीर्थं चैवानसूयकम् ॥ २३०.६५ ॥
एरण्डीसङ्गमः पुण्यो मातृतीर्थं च शोभनम् ।
तीर्थं स्वर्णशलाकाख्यं तथा चैवाम्बिकेश्वरम् ॥ २३०.६६ ॥
करञ्जेशं भारतेशं नागेशं मुकुटेश्वरम् ।
सौभाग्यसुन्दरी तीर्थं धनदेश्वरमुत्तमम् ॥ २३०.६७ ॥

रोहिण्यं चक्रतीर्थं च उत्तरेश्वरसंज्ञितम् ।
भोगेश्वरं च केदारं निष्कलङ्कमतः परम् ॥ २३०.६८ ॥
मार्कण्डं धौतपापं च तीर्थमाङ्गिरसेश्वरम् ।
कोटवीसङ्गमः पुण्यं कोटितीर्थं च तत्र वै ॥ २३०.६९ ॥
अयोनिजं परं तीर्थमङ्गारेश्वरमुत्तमम् ।
स्कान्दं च नार्मदं ब्राह्मं वाल्मीकेश्वरसंज्ञितम् ॥ २३०.७० ॥
कोटितीर्थं कपालेशं पाण्डुतीर्थं त्रिलोचनम् ।
कपिलेशं कम्बुकेशं प्रभासं कोहनेश्वरम् ॥ २३०.७१ ॥
इन्द्रेशं वालुकेशं च देवेशं शक्रमेव च ।
नागेश्वरं गौतमेशमहल्यातीर्थमुत्तमम् ॥ २३०.७२ ॥
रामेश्वरं मोक्षतीर्थं तथा कुशलवेश्वरौ ।
नर्मदेशं कपर्दीशं सागरेशमतः परम् ॥ २३०.७३ ॥
धौरादित्यं परं तीर्थं तीर्थं चापरयोनिजम् ।
पिङ्गलेश्वरतीर्थ च भृग्वीश्वरमनुत्तमम् ॥ २३०.७४ ॥
दशाश्वमेधिकं तीर्थं कोटितीर्थं च सत्तमाः ।
मार्कण्डं ब्रह्मतीर्थं च आदिवाराहमुत्तमम् ॥ २३०.७५ ॥
आशापूराभिधं तीर्थं कौबेरं मारुतं तथा ।
वरुणेशं यमेशं च रामेशं कर्कटेश्वरम् ॥ २३०.७६ ॥
शक्रेशं सोमतीर्थं च नन्दाह्रदमनुत्तमम् ।
वैष्णवं चक्रतीर्थं च रामकेशवसंज्ञितम् ॥ २३०.७७ ॥
तथैव रुक्मिणीतीर्थं शिवतीर्थमनुत्तमम् ।
जयवाराहतींर्थं च तीर्थमस्माहकाह्वयम् ॥ २३०.७८ ॥
अङ्गारेशं च सिद्धेशं तपेश्वरमतः परम् ।
पुनः सिद्धेश्वरं नामतीर्थं च वरुणेश्वरम् ॥ २३०.७९ ॥
पराशरेश्वरं पुण्यं कुसुमेशमनुत्तमम् ।
कुण्डलेश्वरतीर्थं च तथा कलकलेश्वरम् ॥ २३०.८० ॥
न्यङ्कुवाराहसंज्ञं च अङ्कोलं तीर्थमुत्तमम् ।
श्वेतवाराहतीर्थं च भार्गलं सौरमुत्तमम् ॥ २३०.८१ ॥

हुङ्कारस्वामितीर्थं च शुक्लतीर्थं च शोभनम् ।
सङ्गमो मधुमत्याश्च तीर्थं वै सङ्गमेश्वरम् ॥ २३०.८२ ॥
नर्मदेश्वरसंज्ञं च नदीत्रितयसङ्गमः ।
अनेकेश्वरतीर्थं च शर्भेशं मोक्षसंज्ञितम् ॥ २३०.८३ ॥
कावेरीसङ्गमः पुण्यस्तीर्थं गोपेश्वराह्वयम् ।
मार्कण्डेशं च नागेशमुदम्बर्याश्च सङ्गमः ॥ २३०.८४ ॥
साम्बादित्याह्वयं तीर्थमुदम्बर्याश्च सङ्गमः ।
सिद्धेश्वरं च मार्कण्डं तथा सिद्धेश्वरीकृतम् ॥ २३०.८५ ॥
गोपेशं कपिलेशं च वैद्यनाथमनुत्तमम् ।
पिङ्गलेश्वरतीर्थं च सैन्धवायतनं महत् ॥ २३०.८६ ॥
भूतीश्वराह्वयं तीर्थं गङ्गावाहमतः परम् ।
गौतमेश्वरतीर्थं च दशाश्वमेधिकं तथा ॥ २३०.८७ ॥
भृगुतीर्थं तथा पुण्यं ख्याता सौभाग्यसुन्दरी ।
वृषखातं च तत्रैव केदारं धूतपातकम् ॥ २३०.८८ ॥
तीर्थं धूतेश्वरीसङ्गमेरण्डीसंज्ञकं तथा ।
तीर्थं च कनकेश्वर्या ज्वालेश्वरं ततः परम् ॥ २३०.८९ ॥
शालग्रामाह्वयं तीर्थं सोमनाथमनुत्तमम् ।
तथैवोदीर्णवाराहं तीर्थं चन्द्रप्रभासकम् ॥ २३०.९० ॥
द्वादशादित्यतीर्थं च तथा सिद्धेश्वराभिधम् ।
कपिलेश्वरतीर्थं च तथा त्रैविक्रमं शुभम् ॥ २३०.९१ ॥
विश्वरूपाह्वयं तीर्थं नारायणकृतं तथा ।
मूलश्रीपतितीर्थं च चौलश्रीपतिसंज्ञकम् ॥ २३०.९२ ॥
देवतीर्थं हंसतीर्थ प्रभासं तीर्थमुत्तमम् ।
मूलस्थानं च कण्ठेशमट्टहासमतः परम् ॥ २३०.९३ ॥
भूर्भुवेश्वरतीर्थं च ख्याता शूलेश्वरी तथा ।
सारस्वतं दारुकेशमश्विनोस्तीर्थमुत्तमम् ॥ २३०.९४ ॥
सावित्रीतीर्थमतुलं वालखिल्येश्वरं तथा ।
नर्मदेशं मातृतीर्थं देवतीर्थमनुत्तमम् ॥ २३०.९५ ॥

मच्छकेश्वरतीर्थं च शिखितीर्थं च शोभनम् ।
कोटितीर्थं मुनिश्रेष्ठास्तत्र कोटीश्वरी मृडा ॥ २३०.९६ ॥
तीर्थं पैतामहं नाम माण्डव्ये श्वरसंज्ञितम् ।
तत्र नारायणेशं च अक्रूरेशमतः परम् ॥ २३०.९७ ॥
देवखातं सिद्धरुद्रं वैद्यनाथमनुत्तमम् ।
तथैव मातृतीर्थं च उत्तरेशमतः परम् ॥ २३०.९८ ॥
तथैव नर्मदेशां च मातृतीर्थं तथा पुनः ।
तथा च कुररीतीर्थं ढौण्ढेशं दशकन्यकम् ॥ २३०.९९ ॥
सुवर्णबिन्दुतीर्थं च ऋणपापप्रमोचनम् ।
भारभूतेश्वरं तीर्थं तथा मुण्डीश्वरं विदुः ॥ २३०.१०० ॥
एकशालं डिण्डिपाणिं तीर्थं चाप्सरसं परम् ।
मुन्यालयं च मार्कण्डं गणितादेवताह्वयम् ॥ २३०.१०१ ॥
आमलेश्वरतीर्थं च तीर्थं कन्थेश्वरं तथा ।
आषाढीतीर्थमित्याहुः शृङ्गीतीर्थं तथैव च ॥ २३०.१०२ ॥
बकेश्वरतीर्थं च कपालेशं तथैव च ।
मार्कण्डं कपिलेशं च एरण्डीसङ्गमस्तथा ॥ २३०.१०३ ॥
एरण्डीदेवतातीर्थं रामतीर्थमतःपरम् ।
जमदग्नेः परं तीर्थं रेवासागरसङ्गमः ॥ २३०.१०४ ॥
लोटनेश्वरतीर्थ तल्लुङ्केशनामकं तथा ।
वृषरखातं तत्र कुण्डं तथैव ऋषिसत्तमाः ॥ २३०.१०५ ॥
तथा हंसेश्वरंनाम तिलादं वासवेश्वरम् ।
तथा कोटीश्वरं तीर्थमलिकातीर्थमुत्तमम् ।
विमलेश्वरतीर्थं च रेवासागरसङ्गमे ॥ २३०.१०६ ॥
एवं तीर्थावलिः पुण्या मया प्रोक्ता महर्षयः ।
तीर्थसुक्तावलिः पुण्या ग्रथिता तटरज्जुना ॥ २३०.१०७ ॥
नर्मदानीरनिर्णिक्ता मार्कण्डेयविनिर्मिता ।
मण्डनायेह साधूनां सर्वलोकहिताय च ॥ २३०.१०८ ॥
दरितध्वान्तशमनीधार्या धर्मार्थिभिः सदा ।

अहोरात्रकृतं पापं सकृज्जस्वाशु नाशयेत् ॥ २३०.१०९ ॥

त्रिकालं जस्वा मासोत्थं शिवाग्रे च त्रिमासिकम् ।

मासं जस्वाथ वर्षोत्थं वर्षं जस्वा शताब्दिकम् ॥ २३०.११० ॥

श्राद्धकाले च विप्राणां भुञ्जतां पुरतः स्थितः ।

पठंस्तीर्थावलिं पुण्यां गयाश्राद्धप्रदो भवेत् ॥ २३०.१११ ॥

पूजाकाले च देवानां श्रद्धया पुरतः पठन् ।

प्रीणयेत्सर्वदेवांश्च पुनाति सकलं कुलम् ॥ २३०.११२ ॥

एवं तीर्थावलिः पुण्या रेवातीरद्वयाश्रिता ।

मया प्रोक्ता मुनिश्रेष्ठास्तथैवशृणुतानघाः ॥ २३०.११३ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तीर्थावलिकथनं त्रिंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २३१



अध्याय २३१

श्रीसूत उवाच -

तथैव तीर्थस्तबकान् वक्ष्येऽहमृषिसत्तमाः ।

यैस्तु तीर्थावलीगुम्फः पूर्वोक्तैरेकतः कृतः ॥ २३१.१ ॥

विभक्तो भक्तलोकानामानन्दप्रथनः शुभः ।

मृकण्डतनयः पूर्वं प्राह पार्थाय पृच्छते ॥ २३१.२ ॥

यथा तथाहं वक्ष्यामि तीर्थानां स्तबकानिह ।

शिवाम्बुपानजा पुण्या रेवा कल्पलता किल ॥ २३१.३ ॥

तीरद्वयोद्भूततीर्थप्रसूनैः पुष्पिता शुभा ।

यत्पुण्यगन्धलक्ष्म्या वै त्रैलोक्यं सुरभीकृतम् ॥ २३१.४ ॥

तत्पुष्पमकरन्दस्य रसास्वादविदुत्तमः ।

भ्रमरः खलु मार्कण्डो मुनिर्मतिमतां वरः ॥ २३१.५ ॥

तत्पुष्पमालां हृदये तीर्थस्तबकचित्रिताम् ।

दधाति सततं पुण्यां मुनिर्भृगुकुलोद्वहः ।

तस्याः स्तबकसंस्थानं वक्ष्येऽहमृषिसत्तमाः ॥ २३१.६ ॥

ओङ्कारतीर्थमारभ्य यावत्पश्चिमसागरम् ।

संगमाः पञ्चत्रिंशद्वै नदीनां पापनाशनाः ॥ २३१.७ ॥

दशैकमुत्तरे तीरे सत्रिविंशति दक्षिणे ।

पञ्चत्रिंशत्तमः श्रेष्ठो रेवासागरसङ्गमः ॥ २३१.८ ॥

सङ्गमः सहितान्येवं रेवातीरद्वयेऽपि च ।

चतुःशतानि तीर्थानि प्रसिद्धानि द्विजोत्तमाः ॥ २३१.९ ॥

त्रिशतं शिवतीर्थानि त्रयीस्त्रिंशत्समन्वितम् ।

तत्रापि व्यक्तितो वक्ष्ये शृणुध्वं तानि सत्तमाः ॥ २३१.१० ॥

मार्कण्डेश्वरतीर्थानि दश तेषु मुनीश्वराः ।

दशादित्यभवान्यत्र नवैव कपिलेश्वराः ॥ २३१.११ ॥

सोमसंस्थापितान्यष्टौ तावन्तो नर्मदेश्वराः ।

कोटितीर्थान्यथाष्टौ च सप्त सिद्धेश्वरास्तथा ॥ २३१.१२ ॥

नागेश्वराश्च सप्तैव रेवातीरद्वयेऽपि तु ।

सप्तैव वह्निविहितान्यथाप्यावर्तसप्तकम् ॥ २३१.१३ ॥

केदारेश्वरतीर्थानि पञ्च पञ्चेन्द्रजानि च ।

वरुणेशाश्च पञ्चैव पञ्चैव धनदेश्वराः ॥ २३१.१४ ॥

देवतीर्थानि पञ्चैव चत्वारो वै यमेश्वराः ।

वैद्यनाथाश्च चत्वारश्चत्वारो वानरेश्वराः ॥ २३१.१५ ॥

अङ्गारेश्वरतीर्थानि तावन्त्येव मुनीश्वराः ।

सारस्वतानि चत्वारि चत्वारो दारुकेश्वराः ॥ २३१.१६ ॥

गौतमेश्वरतीर्थानि त्रीणि रामेश्वरास्त्रयः ।

कपालेश्वरतीर्थानि त्रीणि हंसकृतानि च ॥ २३१.१७ ॥

त्रीण्येव मोक्षतीर्थानि त्रयो वै विमलेश्वराः ।

सहस्रयज्ञतीर्थानि त्रीण्येव मुनिरब्रवीत् ॥ २३१.१८ ॥

भीमेश्वरास्त्रयः ख्याताः स्वर्णतीर्थानि त्रीणि च ।

धौतपापद्वयं प्रोक्तं करञ्जेशद्वयं तथा ॥ २३१.१९ ॥

ऋणमोचनतीर्थे द्वे तथा स्कन्देश्वरद्वयम् ।

दशाश्वमेधतीर्थे द्वे नन्दीतीर्थद्वयं द्विजाः ॥ २३१.२० ॥

मन्मथेशद्वयं चैव भृगुतीर्थद्वयं तथा ।

पराशरेश्वरौ द्वौ च अयोनीसंभवद्वयम् ॥ २३१.२१ ॥

व्यासेश्वरद्वयं प्रोक्तं पितृतीर्थद्वयं तथा ।

नन्दिकेश्वरतीर्थे द्वे द्वौ च गोपेश्वरौ स्मृतौ ॥ २३१.२२ ॥

मारुतेशद्वयं तद्वद्द्वौ च ज्वालेश्वरौ स्मृतौ ।

शुक्लतीर्थद्वयं पुण्यमप्सरेशद्वयं तथा ॥ २३१.२३ ॥

पिप्पलेश्वरतीर्थे द्वे माण्डव्येश्वरसंज्ञिते ।

द्वीपेश्वरद्वयं चैव प्राह तद्वद्भृगूद्वहः ।

उत्तरेश्वरतीर्थे द्वे अशोकेशद्वयी तथा ॥ २३१.२४ ॥

द्वे योधनपुरे चैव रोहिणीतीर्थकद्वयम् ।

लुङ्केश्वरद्वयं ख्यातमाख्यानं मुनिना तथा ॥ २३१.२५ ॥

सैकोनविंशतिशतं तीर्थान्येकैकशो द्विजाः ।

स्तबकेषु कृतं तीर्थं द्विशतं सचतुर्दशम् ॥ २३१.२६ ॥

शैवान्येतानि तीर्थानि वैष्णवानि च सत्तमाः ।

शृणुध्वं प्रोच्यमानानि ब्राह्मशाक्तानि च क्रमात् ॥ २३१.२७ ॥

अष्टविंशतितीर्थानि वैष्णवान्यब्रवीन्मुनिः ।

तेषु वाराहतीर्थानि षडेव मुनिसत्तमाः ॥ २३१.२८ ॥

चत्वारि चक्रतीर्थानि शेषाण्यष्टादशैव हि ।

विष्णुनाधिष्ठितान्येव प्राह पूर्वं मृकण्डजः ॥ २३१.२९ ॥

तथैव ब्रह्मणा सिद्ध्यै सप्ततीर्थान्यवीवदत् ।

त्रिषु च ब्रह्मणः पूजा ब्रह्मेशाश्चतुरोऽपरे ।

अष्टाविंशन्मया ख्याता यथासङ्ख्यं यथाक्रमम् ॥ २३१.३० ॥

एतत्पवित्रमतुलं ह्येतत्पापहरं परम् ।

नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम् ॥ २३१.३१ ॥

सूत उवाच -

एवमुद्देशतः प्रोक्तो रेवातीर्थक्रमो मया ।

यथा पार्थाय संक्षेपान्मार्कण्डो मुनिरब्रवीत् ॥ २३१.३२ ॥

अवान्तराणि तीर्थानि तेषु गुप्तान्यनेकशः ।

यत्र यावत्प्रमाणानि तान्याकर्णयतानघाः ॥ २३१.३३ ॥

ओङ्कारतीर्थपरितः पर्वतादमरकण्टात् ।

क्रोशद्वये सर्वदिक्षु सार्धकोटीत्रयी मता ॥ २३१.३४ ॥

तीर्थानां संख्यया गुप्तप्रकटानां द्विजोत्तमाः ।

कोटिरेका तु तीर्थानां कपिलासङ्गमे पृथक् ॥ २३१.३५ ॥

अशोकवनिकायाश्च तीर्थं लक्षं प्रतिष्ठितम् ।

शतमं गारगर्तायाः सङ्गमे मुनिसत्तमाः ॥ २३१.३६ ॥

तीर्थानामयुतं तद्वत्कुब्जायाः सङ्गमे स्थितम् ।

शतं हिरण्यगर्भायाः सङ्गमे समवस्थितम् ॥ २३१.३७ ॥

तीर्थानामष्टषष्टिश्च विशोकासङ्गमे स्थिता ।

तथा सहस्रं तीर्थानां संस्थितं वागुसङ्गमे ॥ २३१.३८ ॥

शतं सरस्वतीसङ्गे शुक्लतीर्थे शतद्वयम् ।

सहस्रं विष्णुतीर्थेषु महिष्मत्यामथायुतम् ॥ २३१.३९ ॥

शूलभेदे च तीर्थानां साग्रं लक्षं स्थितं द्विजाः ।

देवग्रामे सहस्रं च तीर्थानां मुनिरब्रवीत् ॥ २३१.४० ॥

लुङ्केश्वरे च तीर्थानां साग्रा सप्तशती स्थिता ।

तीर्थान्यष्टोत्तरशतं मणिनद्याश्च सङ्गमे ।

वैद्यनाथे च तीर्थानां शतमष्टाधिकं विदुः ॥ २३१.४१ ॥

एवं तावत्प्रमाणानि तीर्थे कुम्भेश्वरे द्विजाः ।

साग्रं लक्षं च तीर्थानां स्थितं रेवोरसङ्गमे ॥ २३१.४२ ॥

ततश्चाप्यधिकानि स्युरिति मार्कण्डभाषितम् ।

अष्टाशीतिसहस्राणि व्यासद्वीपाश्रितानि च ॥ २३१.४३ ॥

सङ्गमे च करञ्जायाः स्थितमष्टोत्तरायुतम् ।

एरण्डीसङ्गमे तद्वत्तीर्थान्यष्टाधिकं शतम् ॥ २३१.४४ ॥

धूतपापे च तीर्थानां षष्टिरष्टाधिका स्थिता ।

स्कन्दतीर्थे शतं पुण्यं तीर्थानां मुनिरुक्तवान् ॥ २३१.४५ ॥

कोहनेश च तीर्थानां षष्टिरष्टाधिका स्थिता ।

सार्धकोटी च तीर्थानां स्थिता वै कोरिलापुरे ॥ २३१.४६ ॥

रामकेशवतीर्थे च सहस्रं साग्रमुक्तवान् ।

अस्माहके सहस्रं च तीर्थानि निवसन्ति हि ॥ २३१.४७ ॥

लक्षाष्टकं सहस्रे द्वे शुक्लतीर्थे द्विजोत्तमाः ।

तीर्थानि कथयामास पुरा पार्थाय भार्गवः ॥ २३१.४८ ॥

शतमष्टाधिकं प्राह प्रत्येकं सङ्गमेषु च ।

नदीनामवशिष्टानां कावेरीसङ्गमं विना ॥ २३१.४९ ॥

कावेर्याः सङ्गमे विप्राः स्थिता पञ्चशती तथा ।

तीर्थानां पर्वसु तथा विशेषो मुनिनोदितः ॥ २३१.५० ॥

मोक्षतीर्थं हि सत्प्राहुः पुराणपुरुषाश्रितम् ।
भृगोः क्षेत्रे च तीर्थानां कोटिरेका समाश्रिता ॥ २३१.५१ ॥
साधिकानामृषिश्रेष्ठा वक्तुं शक्तो हि को भवेत् ।
सर्वामराश्रयं प्रोक्तं सर्वतीर्थाश्रयं तथा ॥ २३१.५२ ॥
त्रिषु लोकेषु विख्यातं पूजितं सिद्धिसाधनम् ।
भारभूत्यां च तीर्थानां स्थितमष्टोत्तरं शतम् ॥ २३१.५३ ॥
अक्रूरेश्वरतीर्थे च सार्धं तीर्थशतं स्थितम् ।
विमलेश्वरतीर्थे तु रेवासागरसङ्गमे ।
दशायुतानि तीर्थानां साधिकान्यब्रवीन्मुनिः ॥ २३१.५४ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तीर्थसंख्यापरिगणनवर्णनं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ५ (अवन्तीखण्डः)/रेवा खण्डम्/अध्यायः २३२



सूत उवाच -

इति वः कथितं विप्रा रेवामाहात्म्यमुत्तमम् ।

यथोपदिष्टं पार्थाय मार्कण्डेयेन वै पुरा ॥ २३२.१ ॥

तथा तीर्थकदम्बाश्च तेषु तीर्थविशेषतः ।

प्राधान्येन मया ख्याता यथासङ्ख्यं यथाक्रमम् ॥ २३२.२ ॥

एतत्पवित्रमतुलं ह्येतत्पापहरं परम् ।

नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम् ॥ २३२.३ ॥

सप्तकल्पानुगो विप्रो नर्मदायां मुनीश्वराः ।

मृकण्डतनयो धीमान्परमार्थविदुत्तमः ॥ २३२.४ ॥

संसेव्य सर्वतीर्थानि नदीः सर्वाश्च वै पुरा ।

बहुकल्पस्मरां रेवामालक्ष्य शिवदेहजाम् ॥ २३२.५ ॥

मे कलेति च शर्वोक्तां शरणं शर्वजां ययौ ।

अजराममरां देवीं दैत्यध्वंसकरीं पराम् ॥ २३२.६ ॥

महाविभवसंयुक्तां भवघ्नीं भवजाह्नवीम् ।

तस्यामाबध्य सत्प्रेम जातः सोऽप्यजरामरः ॥ २३२.७ ॥

षष्टितीर्थसहस्राणि षष्टिकोट्यश्च सत्तमाः ।

व्यवस्थितानि रेवायास्तीरयुग्मे पदे पदे ॥ २३२.८ ॥

सारितः परितः सन्ति सतीर्थास्तु सहस्रशः ।

न तुलां यान्ति रेवायास्ताश्च मन्ये मुनीश्वराः ॥ २३२.९ ॥

एतद्वः कथितं सर्वं यत्पृष्टमखिलं द्विजाः ।

यन्महेशमुखाच्छ्रुत्वा वायुराह ऋषीन्प्रति ॥ २३२.१० ॥

तद्वन्मृकण्डतनयोऽप्यनुभूयाखिलां नदीम् ।

सतीर्थां पदशः प्राह पाण्डुपुत्राय पावनीम् ॥ २३२.११ ॥

एतच्च कथितं सर्वं संक्षेपेण द्विजोत्तमाः ।

नर्मदाचरितं पुण्यं त्रिषु लोकेषु दुर्लभम् ॥ २३२.१२ ॥

किमन्यैः सरितां तोयैः सेवितैस्तु सहस्रशः ।

यदि संसेव्यते तोयं रेवायाः पापनाशनम् ॥ २३२.१३ ॥

मेकलाजलसंसेवी मुक्तिमाप्नोति शाश्वतीम् ॥ २३२.१४ ॥

यथा यथा भजेन्मर्त्यो यद्यदिच्छति तीर्थगः ।

तत्तदाप्नोति नियतं श्रद्धयाश्रद्धयापि च ॥ २३२.१५ ॥

इदं ब्रह्मा हरिरिदमिदं साक्षात्परो हरः ।

इदं ब्रह्म निराकारं कैवल्यं नर्मदाजलम् ॥ २३२.१६ ॥

तावद्गर्जन्ति तीर्थानि नद्यो हृदयफलप्रदाः ।

यावन्न स्मर्यते रेवा सेवाहेवा कलौ नरैः ॥ २३२.१७ ॥

ध्रुवं लोके हितार्थाय शिवेन स्वशरीरतः ।

शक्तिः कापि सरिद्रूपा रेवेयमवतारिता ॥ २३२.१८ ॥

तावद्गर्जन्ति यज्ञाश्च वनक्षेत्रादयो भृशम् ।

यावन्न नर्मदानामकीर्तनं क्रियते कलौ ॥ २३२.१९ ॥

गरिमा गाण्यते तावत्तपोदानव्रतादिषु ।

नरैर्वा प्राप्यते यावद्भुवि भर्गभवा धुनी ॥ २३२.२० ॥

ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते ।

वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम् ॥ २३२.२१ ॥

धन्यास्ते देशवर्यास्ते येषु देशेषु नर्मदा ।

नरकान्तकरी शश्वत्संश्रिता शर्वनिर्मिता ॥ २३२.२२ ॥

कृतपुण्याश्च ते लोकाः शोकाय न भवन्ति ते ।

ये पिबन्ति जलं पुण्यं पार्वतीपतिसिन्धुजम् ॥ २३२.२३ ॥

इदं पवित्रमतुलं रेवायाश्चरितं द्विजाः ।

शृणोति यः कीर्तयते मुच्यते सर्वपातकः ॥ २३२.२४ ॥

यत्फलं सर्ववेदैश्च सषडङ्गपदक्रमैः ।

श्रुतैश्च पठितैस्तस्मात्फलमष्टगुणं भवेत् ॥ २३२.२५ ॥

सत्रयाजी फलं यच्च लभते द्वादशाब्दिकम् ।

श्रुत्वा सकृच्च रेवायाश्चरितं तत्फलं लभेत् ॥ २३२.२६ ॥

सर्वतीर्थावगाहाच्च यत्फलं सागरादिषु ।
सकृच्छ्रुत्वा च माहात्म्यं रेवायास्तत्फलं लभेत् ॥ २३२.२७ ॥
एतद्धर्म्यमुपाख्यानं सर्वशास्त्रेष्वनुत्तमम् ।
देशे वा मण्डले वापि नगरे ग्राममध्यतः ॥ २३२.२८ ॥
गृहे वा तिष्ठते यस्य लिखितं सार्ववार्णिकम् ।
स ब्रह्मा स शिवः साक्षात्स च देवो जनार्दनः ॥ २३२.२९ ॥
धर्मार्थकाममोक्षाणां मार्गोऽयं देवसेवितः ।
गुरूणां च गुरुः शास्त्रं परमं सिद्धिकारणम् ॥ २३२.३० ॥
यश्चेदं शृणुयान्नित्यं पुराणं देवभाषितम् ।
ब्राह्मणो वेदवान्भूयात्क्षत्रियो विजयी भवेत् ॥ २३२.३१ ॥
धनाढ्यो जायते वैश्यः शूद्रो वै धर्मभाग्भवेत् ॥ २३२.३२ ॥
सौभाग्यसन्ततिं नारी श्रुत्वैतत्समवाप्नुयात् ।
श्रियं सौख्यं स्वर्गवासं जन्म चैवोत्तमे कुले ॥ २३२.३३ ॥
रसभेदी कृतघ्नश्च स्वामिध्रुङ्मित्रवञ्चकः ।
गोघ्नश्च गरदश्चैव कन्याविक्रयकारकः ॥ २३२.३४ ॥
ब्रह्मघ्नश्च सुरापी च स्तेयी च गुरुतल्पगः ।
नर्मदाचरितं शृण्वंस्तामब्दं योऽभिषेवते ॥ २३२.३५ ॥
सर्वपापविनिर्मुक्तो जायते नात्र संशयः ।
पाकभेदी वृथापाकी देवब्राह्मणनिन्दकः ॥ २३२.३६ ॥
परीवादी गुरोः पित्रोः साधूनां नृपतेस्तथा ।
तेऽपि श्रुत्वा च पापेभ्यो मुच्यन्ते नात्र संशयः ॥ २३२.३७ ॥
ये पुनर्भावितात्मानः शस्त्रं शृण्वन्ति नित्यशः ।
पूजयन्ति च तच्छास्त्रं नार्मदं वस्त्रभूषणैः ॥ २३२.३८ ॥
पुष्पैः फलैश्चन्दनाद्यैर्भोजनैर्विविधैरपि ।
शास्त्रेऽस्मिन्पूजिते देवाः पूजिता गुरवस्तथा ॥ २३२.३९ ॥
इह लोके परे चैव नात्र कार्या विचारणा ।
तस्मात्सर्वप्रयत्नेन गन्धवस्त्रादिभूषणैः ॥ २३२.४० ॥
पूजयेत्परया भक्त्या वाचकं शास्त्रमेव च ।

वेदपाठैश्च यत्पुण्यमग्निहोत्रैश्च पालितैः ॥ २३२.४१ ॥

तत्फलं समवाप्नोति नर्मदाचरिते शुभे ।

कुरुक्षेत्रे च यत्पुण्यं प्रभासे पुष्करे तथा ॥ २३२.४२ ॥

रुद्रावर्ते गयायां च वाराणस्यां विशेषतः ।

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ २३२.४३ ॥

एवमादिषु तीर्थेषु यत्पुण्यं जायते नृणाम् ।

नर्मदाचरितं श्रुत्वा तत्पुण्यं सकलं लभेत् ॥ २३२.४४ ॥

आदिमध्यावसानेषु नर्मदाचरितं शुभम् ।

यः शृणोति नरो भक्त्या शृणुध्वं तत्फलं महत् ॥ २३२.४५ ॥

समाप्य शिवसंस्थानं देवकन्यासमावृतः ।

रुद्रस्यानुचरो भूत्वा शिवेन सह मोदते ॥ २३२.४६ ॥

धर्माख्यानमिदं पुण्यं सर्वाख्यानेष्वनुत्तमम् ।

गृहेऽपि पठ्यते यस्य चतुर्वर्णस्य सत्तमाः ॥ २३२.४७ ॥

धन्यं तस्य गृहं मन्ये गृहस्थं चापि तत्कुलम् ।

पुस्तकं पूजयेद्यस्तु नर्मदाचरितस्य तु ॥ २३२.४८ ॥

नर्मदा पूजिता तेन भगवांश्च महेश्वरः ।

वाचके पूजिते तद्वद्देवाश्च ऋषयोऽर्चिताः ॥ २३२.४९ ॥

लेखयित्वा च सकलं रेवाचरितमुत्तमम् ।

भूषणं सर्वशास्त्राणां यो ददाति द्विजन्मने ॥ २३२.५० ॥

नर्मदासर्वतीर्थेषु स्नानदानेन यत्फलम् ।

तत्फलं समवाप्नोति स नरो नात्र संशयः ॥ २३२.५१ ॥

एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् ।

स्वर्गदं पुत्रदं धन्यं यशस्यं कीर्त्तिवर्धनम् ॥ २३२.५२ ॥

धर्म्यमायुष्यमतुलं दुःखदुःस्वप्ननाशनम् ।

पठतां शृण्वतां चापि सर्वकामार्थसिद्धिदम् ॥ २३२.५३ ॥

यत्प्रदत्तमिदं पुण्यं पुराणं वाच्यते द्विजैः ।

शिवलोके स्थितिस्तस्य पुराणाक्षरवत्सरी ॥ २३२.५४ ॥

इति निगदितमेतन्नर्मदायाश्चरित्रं पवनगदितमग्र्यं शर्ववक्त्रादवाप्य ।

त्रिभुवनजनवन्द्यं त्वेतदादौ मुनीनां कुलपतिपुरतस्तत्सूतमुख्येन साधु ॥ २३२.५५ ॥

॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रेवाखण्डसमाप्तिरेवाखण्डपुस्तकदानादिमाहात्म्यवर्णनं नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००१




ॐनमः पुरुषोत्तमाय॥

॥अथ स्कान्दे महापुराणे षष्ठनागरखण्डप्रारम्भः॥

॥व्यास उवाच॥

स धूर्जटि जटाजूटो जायतां विजयाय वः।

यत्रैकपलितभ्रांतिं करोत्यद्यापि जाह्नवी॥६.१.१॥

ऋषय ऊचुः।

हरस्य पूज्यते लिंगं कस्मादतन्महामते

विशेषात्संपरित्यज्य शेषांगानि सुरासुरैः॥६.१.२॥

तस्मादेतन्महाबाहो यथावद्वक्तुमर्हसि।

सांप्रतं सूत कात्स्न्र्येन परं कौतूहलं हि नः॥६.१.३॥

सूत उवाच।

प्रश्नभारो महानेष यो भवद्भिरुदाहृतः।

कीर्तयिष्ये तथाप्येनं नमस्कृत्य स्वयंभुवे॥६.१.४॥

आनर्तविषये चास्ति वनं मुनिजनाश्रयम्।

मनोज्ञं सर्वसत्त्वानां सर्वर्तुफलितद्रुमम्॥६.१.५॥

तत्राश्रमपदं रम्यं सौम्यसत्त्वनिषेवितम्॥

अस्ति तापससंकीर्णं वेदध्वनिविराजितम्॥६.१.६॥

अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशिभिस्तथा।

दन्तोलूखलिभिर्विप्रैः सेवितं चाश्मकुट्टकैः॥६.१.७॥

स्नानहोमपरैश्चैव जपस्वाध्यायतत्परैः।

वानप्रस्थैस्त्रिदण्डैश्च हंसैश्चापि कुटीचरैः॥६.१.८॥

स्नातकैर्यतिभिर्दान्तैस्तथा पंचाग्निसाधकैः।

कस्यचित्त्वथ कालस्य भगवांस्त्रिपुरांतकः॥६.१.९॥

सतीवियोगसंतप्तो भ्रममाण इतस्ततः।

तस्मिन्वने समायातः सौम्यसत्वनिषेविते॥६.१.१०॥

क्रीडंति नकुला यत्र सार्धं सर्पैःप्रहर्षिताः।

पञ्चाननाश्च मातंगैर्वृषदंशास्तथाखुभिः।

काकाः कौशिकसंघैश्च वैरभावविवर्जिताः॥६.१.११॥

ततश्च भगवान्रुद्रो दृष्ट्वाश्रमपदं तदा।

नग्नः कपालमादाय भिक्षार्थं प्रविवेश सः॥६.१.१२॥

अथ तस्य समालोक्य रूपं गात्रसमुद्भवम्।

अदृष्टपूर्वं तापस्यः सर्वाः कामवशं गताः॥६.१.१३॥

गृहकर्म परित्यज्य गुरुशुश्रूषणानि च।

मिथः संभाषणं चक्रुः स्थानेस्थाने च ताः स्थिताः॥६.१.१४॥

एका सा कापि धन्या या चक्रे तस्यावगूहनम्।

विश्रब्धा सर्वगात्रेषु तापसस्य महात्मनः॥६.१.१५॥

तथान्याः कौतुकाविष्टा धावंत्यः सर्वतोदिशम्।

दृश्यंते तं समुद्दिश्य विस्तारितविलोचनाः॥६.१.१६॥

काश्चिदर्द्धानुलिप्तांग्यः काश्चिदेकांजितेक्षणाः।

अर्धसंयमितैः कैशैस्तथान्यास्त्यक्तबालकाः॥६.१.१७॥

एवमालोक्यमानः स कामिनीभिर्महेश्वरः।

बभ्राम राजमार्गेण भिक्षां देहीति कीर्तयन्॥६.१.१८॥

अथ ते मुनयो दृष्ट्वा तं तथा विगतांबरम्।

कामोद्भवकरंस्त्रीणां प्रोचुः कोपारुणेक्षणाः॥६.१.१९॥

यस्मात्पाप त्वयास्माकमाश्रमोऽयं विडंबितः।

तस्माल्लिंगं पतत्वाशु तवैव वसुधातले॥६.१.२०॥

एतस्मिन्नंतरे भूमौ लिंगं तस्य पपात तत्।

भित्त्वाथ धरणीपृष्ठं पातालं प्रविवेश ह॥६.१.२१॥

सोऽपि लिंगपरित्यक्तो लज्जायुक्तो महेश्वरः।

गर्तां गुर्वीं समाश्रित्य भ्रूणरूपः समाविशत्॥६.१.२२॥

अथ लिंगस्य पातेन त्रैलोक्यभयशंसिनः।

उत्पाता दारुणास्तस्थुः सर्वत्र द्विजसत्तमाः॥६.१.२३॥

शीर्यते गिरिशृङ्गाणि पतंत्युल्का दिवापि च।

त्यजंति सागराः सर्वे मर्यादां च शनैः शनैः॥६.१.२४॥

अथ देवगणाः सर्वे भयसंत्रस्तमानसाः।

शक्रविष्णुमुखा जग्मुर्यत्र देवः पितामहः॥६.१.२५॥

प्रोचुश्च प्रणताः स्तुत्वा स्तोत्रैः सुश्रुतिसंभवैः।

त्रैलोक्ये सृष्टिरूपं यत्कमलासनसंस्थितम्॥६.१.२६॥

किमिदं किमिदं देव वर्तते ह्यधरोत्तरम्।

त्रैलोक्यं सकलं येन व्याकुलत्वमुपागतम्॥६.१.२७॥

प्रलयस्येव चिह्नानि दृश्यंते पद्मसंभव।

किं सांप्रतमकालेऽपि भविष्यति परिक्षयः॥६.१.२८॥

सर्वेषां सुरमर्त्यानां दैत्यानां मन्त्रकोविदः।

गतिर्भयार्तदेहानां सर्वलोकपितामहः॥६.१.२९॥

तेषां तद्वचनं श्रुत्वा देवानां चतुराननः।

उवाच सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा॥६.१.३०॥

प्रलयस्य न कालोऽयं सांप्रतं सुरसत्तमाः।

शृणुध्वं यन्निमित्तोत्था महोत्पाता भवन्त्यमी॥६.१.३१॥

ऋषिभिः पातितं लिंगं देवदेवस्य शूलिनः।

शापेनानर्तके देशे कलत्रार्थे महात्मभिः॥६.१.३२॥

तेनैतद्व्याकुलीभूतं त्रैलोक्यं सचराचरम्।

तस्माद्गच्छामहे तत्र यत्र देवो महेश्वरः॥६.१.३३॥

येनास्मद्वचनाच्छीघ्रं तल्लिंगं निदधाति सः।

नो चेद्भविष्यति व्यक्तमकाले चापि संक्षयः।

त्रैलोक्यस्यापि कृत्स्नस्य सत्यमेतन्मयोदितम्॥६.१.३४॥

अथ देवगणाः सर्वे ब्रह्मविष्णुपुरःसराः।

आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ॥६.१.३५॥

प्रजग्मुस्त्वरितास्तत्र यत्र देवो महेश्वरः।

गर्तामध्यगतः सुप्तो लज्जया परया वृतः॥६.१.३६॥

देवा ऊचुः।

नमस्ते देवदेवेश भक्तानामभयप्रद।

नमस्ते जगदाधार शशिराजितशेखर॥६.१.३७॥

त्वं यज्ञस्त्वं वषट्कारस्त्वमापस्त्वं मही विभो।

त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम्॥६.१.३८॥

त्वं पासि च सुरश्रेष्ठ तथा नाशं नयिष्यसि।

त्वं विष्णुस्त्वं चतुर्वक्त्रस्त्वं चंद्रस्त्वं दिवाकरः॥६.१.३९॥

त्वया विना महादेव न किंचिदिह विद्यते।

अपि कृत्वा महत्पापं नरो देव धरातले॥६.१.४०॥

तव नामापि संकीर्त्य प्रयाति त्रिदिवालयम्।

महादेव महादेव महादेवेति कीर्तनात्॥६.१.४१॥

कोटयो ब्रह्महत्यानामगम्यागमकोटयः।

सद्यः प्रलयमायांति महादेवेति कीर्तनात्॥६.१.४२॥

विप्रो यथा मनुष्याणां नदीनां वा महार्णवः।

तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः॥६.१.४३॥

नक्षत्राणां यथा चंद्रः प्रदीप्तानां दिवाकरः।

तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः॥६.१.४४॥

धातूनां कांचनं यद्वद्गंधर्वाणां च नारदः।

तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः॥६.१.४५॥

ओषधीनां यथा सस्यं नगानां हेमपर्वतः।

तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः॥६.१.४६॥

तस्मात्कुरु प्रसादं नः सर्वेषां च नृणां विभो।

संधारय पुनर्लिंगं स्वकीयं सुरसत्तम॥६.१.४७॥

नोचेज्जगत्त्रयं देव नूनं नाशममुपेष्यति।

यद्येतद्भूतले लिङ्गं पतति स्थास्यति प्रभो॥६.१.४८॥

सूत उवाच।

तेषां तद्वचनं श्रुत्वा भगवान्बृषभध्वजः।

प्रोवाच प्रणतान्सर्वांस्तान्देवान्व्रीडयान्वितः॥६.१.४९॥

मया सतीवियोगार्तियुक्तेन सुरसत्तम।

लिंगमेतत्परित्यक्तं शापव्याजाद्द्विजन्मनाम्॥६.१.५०॥

कोऽलं पातयितुं लिंगं ममैतद्भुवनत्रये।

देवो वा ब्राह्मणो वापि वेत्थ यूयमपि स्फुटम्॥६.१.५१॥

तस्मान्नैव धरिष्यामि लिंगमेतद्धरातलात्।

किमनेन करिष्यामि भार्यया परिवर्जितः॥६.१.५२॥

देवा ऊचुः।

तव कांता सती नाम या मृता प्राक्सुरोत्तम।

सा जाता मेनकागर्भे गौरी नाम हिमाचलात्॥६.१.५३॥

भविष्यति पुनर्भार्या तवैव त्रिपुरांतक।

तस्माल्लिंगं समादाय कुरु क्षेमं दिवौकसाम्॥६.१.५४॥

देवदेव उवाच।

अद्यप्रभृति मे लिंगं यदि देवा द्विजातयः।

पूजयंति प्रयत्नेन तर्हीदं धारयाम्यहम्॥६.१.५५॥

ब्रह्मोवाच।

अहं तव स्वयं लिंगं पूजयिष्यामि शंकर।

तथान्ये विबुधाः सर्वे किं पुनर्भुवि मानवाः॥६.१.५६॥

ततः प्रविश्य पातालं देवैः सार्धं पितामहः।

स्वयमेवाकरोत्पूजां तस्य लिंगस्य भक्तितः॥६.१.५७॥

तस्मादनंतरं विष्णुः श्रद्धापूतेन चेतसा।

तथान्ये विबुधाः सर्वे शक्राद्याः श्रद्धयान्विताः॥६.१.५८॥

ततस्तुष्टो महादेवः पितामहमिदं वचः।

प्रोवाच वासुदेवं च विनयावनतं स्थितम्॥६.१.५९॥

भवद्भ्यां परितुष्टोऽस्मि तस्मान्मत्तः प्रगृह्यताम्।

वरमिष्टं महाभागौ यद्यपि स्यात्सुदुर्लभम्॥६.१.६०॥

तावूचतुः।

यदि तुष्टोसि देवेश त्रिभागेन समाश्रयम्।

आवाभ्यां देहि लिंगेन येनैकत्राश्रयो भवेत्॥६.१.६१॥

सूत उवाच।

स तथेति प्रतिज्ञाय लिंगमादाय च प्रभुः।

स्थाने नियोजयामास सर्वदेवाधिपूजितम्॥६.१.६२॥

ततो हाटकमादाय तदाकारं पितामहः।

कृत्वा लिंगं स्वयं तत्र स्थापयामास हर्षितः॥६.१.६३॥

प्रोवाच चाथ भो विप्राः साधुनादेन नादयन्।

लोकत्रयं समस्तानां शृण्वतां त्रिदिवौकसाम्॥६.१.६४॥

मया ह्याद्यं त्विदं लिंगं हाटकेन विनिर्मितम्।

ख्यातिं यास्यति सर्वत्र पाताले हाटकेश्वरम्॥६.१.६५॥

तथान्ये मनुजा ये च हाटकादीनि भक्तितः।

मणिमुक्तासुरत्नैश्च कृत्वा लिंगानि कृत्स्नशः॥६.१.६६॥

त्रिकालं पूजयिष्यंति ते यास्यंति परां गतिम्।

मृन्मयं संपरित्यज्य नीचधातुमयं तथा॥६.१.६७॥

एवमुक्त्वा चतुर्वक्त्रः सह सर्वैर्दिवालयैः।

जगाम त्रिदिवं सोऽपि कैलासं शशिशेखरः॥६.१.६८॥

एतस्मात्कारणाल्लिंगं पूज्यतेऽत्र सुरासुरैः।

हरस्य चोत्तमांगानि परित्यज्य विशेषतः॥६.१.६९॥

ततः प्रभृति तल्लिंगं स्वयं ब्रह्मा व्यवस्थितः।

भगवान्वासुदेवश्च तेन पूज्यं शिवं हि तत्॥६.१.७०॥

यस्तु पूजयते नित्यं श्रद्धायुक्तेन चेतसा।

त्र्यंबकाच्युतब्रह्माद्यास्तेन स्युः पूजितास्त्रयः॥६.१.७१॥

तस्मात्सर्वप्रयत्नेन शिवलिंगं प्रपूजयेत्।

स्पर्शयेदीक्षयेन्नित्यं कीर्तयेच्च द्विजोत्तमाः॥६.१.७२॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये लिंगोत्पत्तिवर्णनं नाम प्रथमोऽध्यायः॥१॥

सूत उवाच।
तस्मिन्नुत्पाटिते लिंगे भूतलाद्द्विजसत्तमाः।
पातालाज्जाह्नवीतोयं तेन मार्गेण निःसृतम्।
सर्वपापहरं नृणां सर्वकामप्रदायकम्॥६.२.१॥
तत्र स्वयमभूत्पूर्वं यत्तद्द्विजवरोत्तमाः।
शृणुध्वं वदतो मेऽद्य लोकविस्मयकारकम्॥६.२.२॥
त्रिशंकुर्नाम राजेंद्रश्चंडालत्वं समागतः।
तत्र स्नातः पुनर्लेभे शरीरं पार्थिवोचितम्॥६.२.३॥
ऋषयः ऊचुः।
चंडालत्वं कथं प्राप्तस्त्रिशंकुर्नृपसत्तमः।
एतत्त्वं सर्वमाचक्ष्व विस्तरात्सूतनन्दन॥६.२.४॥
सूत उवाच।
अहं वः कीर्तयिष्यामि कथामेतां पुरातनीम्।
सर्वपापहरां मेध्यां त्रिशंकुनृपसंभवाम्॥६.२.५॥
सूर्यवंशोद्भवः पूर्वं त्रिशंकुरिति विश्रुतः।
आसीत्पार्थिवशार्दूलः शार्दूलसमविक्रमः॥६.२.६॥
वसिष्ठस्य मुनेः शिष्यो यज्वा दानपतिः प्रभुः।
तेनेष्टं च मखैः सर्वैरग्निष्टोमादिभिः सदा॥६.२.७॥
संपूर्णदक्षिणैरेव वत्सरं वत्सरं प्रति।
तथा दानानि सर्वाणि प्रदत्तानि महात्मना॥६.२.८॥
ब्राह्मणेभ्यो विशिष्टेभ्यो दीनेभ्यश्च विशेषतः।
व्रतानि च प्रचीर्णानि रक्षिताः शरणागताः॥६.२.९॥
पुत्रवल्लालिता लोकाः शत्रवश्च निषूदिताः।
भ्रांतानि भूतले यानि तीर्थान्यायतनानि च।
तपस्विभ्यो यथाकामं यच्छता वांछितं धनम्॥६.२.१०॥
कस्यचित्त्वथ कालस्य वसिष्ठो भगवान्मुनिः।
तेन प्रोक्तः सभामध्ये संस्थितो नतिपूर्वकम्॥६.२.११॥
त्रिशंकुरुवाच।
भगवन्यष्टुमिच्छामि तेन यज्ञेन सांप्रतम्।
गम्यते त्रिदिवं येन सशरीरेण सत्वरम्॥६.२.१२॥
तस्मात्कुरु प्रसादं मे संभारानाहर द्रुतम्।
तस्य यज्ञस्य सिद्ध्यर्थं यथार्हान्ब्राह्मणांस्तथा॥६.२.१३॥
वसिष्ठ उवाच।

न स कश्चित्क्रतुर्येन गम्यते त्रिदिवं नृप।
अनेनैव शरीरेण सत्यमेतद्ब्रवीम्यहम्॥६.२.१४॥
अग्निष्टोमादयो यज्ञा ये प्रोक्ताः प्राक्स्वयंभुवा।
अन्यदेहांतरे स्वर्गः प्राप्यते तैः कृतैर्नृप॥६.२.१५॥
यदि वा पृथिवीपाल त्वया यज्ञप्रभावतः।
पार्थिवो वा द्विजो वाथ वैश्यो वान्यतरोऽपि वा॥६.२.१६॥
स्वयं दृष्टः श्रुतो वापि संजातोऽत्र धरातले।
स्वर्गं गतः शरीरेण सहितस्तत्प्रकीर्तय॥६.२.१७॥
त्रिशंकुरुवाच।
नासाध्यं विद्यते ब्रह्मंस्तवाहं वेद्मि तत्त्वतः।
तस्मात्कुरु प्रसादं मे यथा स्यान्मनसेप्सितम्॥६.२.१८॥
वसिष्ठ उवाच।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि हि जिह्वया।
तस्मान्नास्ति मखः कश्चित्सत्यं त्वं यष्टुमिच्छसि॥६.२.१९॥
त्रिशंकुरुवाच।
यदि मां विप्रशार्दूल न त्वं याजयितुं क्षमः।
स्वर्गप्रदेन यज्ञेन वपुषानेन वै विभो॥६.२.२०॥
तत्किं ते तपसः शक्त्या ब्राह्मणस्य विचक्षण।
अपरं शृणु मे वाक्यं यद्ब्रवीमि परिस्फुटम्।
शृण्वतां मुनिवृन्दानां तथान्येषां द्विजोत्तम॥६.२.२१॥
यदि मे न करोषि त्वं वचनं वदतोऽसकृत्।
तेन यज्ञेन यक्ष्येऽहं तत्कृत्वान्यं द्विजं गुरुम्॥६.२.२२॥
सूत उवाच।
तस्य तद्वचनं श्रुत्वा वसिष्ठो भगवांस्ततः।
तमुवाच विहस्योच्चैः कुरुष्वैवं महीपते॥६.२.२३॥
इति श्रीस्कान्दे महापुराण ेकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये त्रिशंकूपाख्याने त्रिशंकुवसिष्ठसंवादवर्णनं नाम द्वितीयोऽध्यायः॥२॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००३

https://sa.wikisource.org/s/fi5
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

सूत उवाच।

ततः प्रणम्य भूयः स वसिष्ठं मुनिपुंगवम्।

ययौ तत्र सुतास्तस्य यत्र ते शतसंख्यकाः॥६.३.१॥

तानपि प्राह नत्वा स तमेवार्थं नराधिपः।

वसिष्ठवचनं कृत्स्नं तस्य तैरपि शंसितम्॥६.३.२॥

ततस्तान्स पुनः प्राह युष्माकं जनकोऽधुना।

अशक्तो मा दिवं नेतुं सशरीरं विसर्जितः॥६.३.३॥

तस्माद्यदि न मां यूयं याजयिष्यथ सांप्रतम्।

परित्यज्य करिष्यामि शीघ्रमन्यं पुरोहितम्॥६.३.४॥

यो मां यज्ञप्रभावेन नयिष्यति सुरालयम्।

अनेनैव शरीरेण सहितं गुरुपुत्रकाः॥६.३.५॥

तस्य तद्वचनं श्रुत्वा सर्वे ते मुनिसत्तमाः।

परं कोपं समाविष्टास्तमूचुः परुषाक्षरैः॥६.३.६॥

यस्मात्त्वया गुरुस्त्यक्तो हितकृत्पापवानसि।

तस्माद्भवाधुना पाप चंडालो लोकनिंदितः॥६.३.७॥

अथ तद्वचनांते स तत्क्षणात्पृथिवीपतिः।

बभूवांत्यजरूपाढ्यो विकृताकारदेहभृत्॥६.३.८॥

यवमध्यः कृशग्रीवः पिंगाक्षो भुग्ननासिकः।

कृष्णांगः शंकुवर्णश्च दुर्गंधेन समावृतः॥६.३.९॥

अथात्मानं समालोक्य विकृतं स नराधिपः।

चण्डालधर्मिणं सद्यो लज्जयाऽधोमुखः स्थितः॥६.३.१०॥

याहियाहीति विप्रैस्तैर्भत्स्र्यमानो मुहुर्मुहुः।

सर्वतः सारमेयैश्च क्लिश्यमानो निरर्गलैः।

काककोकिलसंकाशो जीर्णवस्त्रावगुंठितः॥६.३.११॥

ततः स चिन्तयामास दुःखेन महता वृतः।
किं करोमि क्व गच्छामि कथं शांतिर्भविष्यति॥६.३.१२॥
किं मयैतत्सुमूर्खेण वांछितं दुर्लभं पदम्।
तत्प्रभावेन विभ्रष्टः कुलधर्मोऽपि मे स्वकः॥६.३.१३॥
किं जलं प्रविशाम्यद्य किं वा दीप्तं हुताशनम्।
भक्षयामि विषं किं वा कथं स्यान्मृत्युरद्य मे॥६.३.१४॥
अनेन वपुषा दारान्वीक्षयिष्यामि तान्कथम्।
तादृशेन शरीरेण याभिः संक्रीडितं मया॥६.३.१५॥
कथं पुत्रांस्तथा पौत्रान्सुहृत्संबंधिबांधवान्।
वीक्षयिष्यामि तान्भूयस्तथान्यं सेवकं जनम्॥६.३.१६॥
ये मया निर्जिताः सर्वे रिपवः संगरे पुरा॥१५॥
तेऽद्य मामीदृशं श्रुत्वा हर्षं यास्यंति निर्भयाः॥६.३.१७॥
ये मया तर्पिता दानैर्ब्राह्मणा वेदपारगाः।
तेऽद्य मामीदृशं श्रुत्वा संभविष्यंति दुःखिताः॥६.३.१८॥
तथा ये सुहृदोऽभीष्टा नित्यं मम हिते रताः।
कामवस्थां प्रयास्यन्ति दृष्ट्वा मां स्थितमीदृशम्॥६.३.१९॥
भद्रजात्या गजा ये मे मदान्धाः षष्टिहायनाः।
मया विना मिथो युद्धे कस्तानद्य नियोक्ष्यति॥६.३.२०॥
अश्वास्तित्तिरकल्माषाः सुदांताः सादिभिर्दृढैः।
कस्तांश्चित्रपदन्यासैर्नियाम्यति मया विना॥६.३.२१॥
तथा मे भृत्यवर्गास्ते कुलीना युद्धदुर्मदाः।
मां विना कस्य यास्यंति समीपेऽद्य सुदुःखिताः॥६.३.२२॥
संख्याहीनस्तथा कोशस्तादृङ्मे बहुरत्नभाक्।
कस्य यास्यति संभोगं मया हीनस्तु रक्षितः॥६.३.२३॥
तथा मे संख्यया हीनं धान्यं गोजाविकं महत्।
भविष्यति कथं हीनं मयाभीष्टैस्तु रक्षितम्॥६.३.२४॥
एवं बहुविधं राजा स विलप्य च दुःखितः।
जगाम नगराभ्याशं पद्भ्यामेव शनैःशनैः॥६.३.२५॥

ततो रात्रौ समासाद्य स्वं पुरं जनवर्जितम्।
द्वारे स्थित्वा समाहूय पुत्रं मंत्रिभिरन्वितम्॥६.३.२६॥
कथयामास वृत्तांतं सर्वं शापसमुद्भवम्।
दूरे स्थितः स पुत्राणां वसिष्ठस्य महात्मनः॥६.३.२७॥
वज्रपातोपमं वाक्यं तेऽपि तस्य निशम्य तत्।
बाष्पपर्याकुलैरास्यै रुरुदुः शोकसंयुताः॥६.३.२८॥
हा नाथ हा महाराज हा नित्यं धर्मवत्सल।
त्वया हीना भविष्यामः कथमद्य सुदुःखिताः॥६.३.२९॥
किमेतद्युज्यते तेषां वासिष्ठानां दुरात्मनाम्।
शापं ददुः स्वयाज्यस्य विशेषाद्विनतस्य च॥६.३.३०॥
ते वयं राजशार्दूल परित्यज्य गृहादिकम्।
अन्त्यजत्वं गमिष्यामस्त्वया सार्धमसंशयम्॥६.३.३१॥
त्रिशंकुरुवाच।
भक्तिश्चेदस्ति युष्माकं ममोपरि निरर्गल।
तन्मे पुत्रस्य मंत्रित्वं सर्वे कुरुत सांप्रतम्॥६.३.३२॥
हरिश्चंद्रः सुपुत्रोयं मम ज्येष्ठः सुवल्लभः।
नियोजयध्वमव्यग्राः पदव्यां मम सत्वरम्॥६.३.३३॥
अहं पुनः करिष्यामि यन्मे मनसि संस्थितम्।
मृत्युं वा संप्रयास्यामि सदेहो वा सुरालयम्॥६.३.३४॥
एवमुक्त्वा परित्यज्य सर्वांस्तान्स महीपतिः।
जगामारण्यमाश्रित्य पद्भ्यामेव शनैः शनैः॥६.३.३५॥
तेपि सन्मंत्रिणस्तूर्णं पुत्रं तस्य सुसम्मतम्।
राज्ये नियोजयासमासुर्नादवादित्रनिःस्वनैः॥६.३.३६॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने हरिश्चन्द्रराज्योपलंभोनाम तृतीयोऽध्यायः॥३॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००४



सूत उवाच।

त्रिशंकुरिति संचिन्त्य विश्वामित्रं महामुनिम्।

मनसा सुचिरं कालं ततश्चक्रे विनिश्चयम्॥६.४.१॥

विश्वामित्रं परित्यज्य नान्योस्ति भुवनत्रये।

यः कुर्यान्मे परित्राणं दुःखादस्मात्सुदारुणात्॥६.४.२॥

कुरुक्षेत्रं समुद्दिश्य प्रतस्थे स ततः परम्।

सुश्रांतः क्षुत्पिपासार्तो मार्गपृच्छापरायणः॥६.४.३॥

ततः कालेन संप्राप्य कुरुक्षेत्रं स पार्थिवः।

यत्नेनान्वेषयामास विश्वामित्राश्रमं ततः॥६.४.४॥

एवं चान्वेषमाणेन तेन भूमिभृता तदा।

सुदूरादेव संदृष्टं नीलद्रुमकदम्बकम्॥६.४.५॥

उपरिष्टाद्बकैर्हंसैर्भ्रममाणैः समंततः।

आटिभिर्मद्गुभिश्चैव समन्ताज्जलपक्षिभिः॥६.४.६॥

स मत्वा सलिलं तत्र पिपासार्तो महीपतिः।

प्रतस्थे सत्वरो हृष्टो जलवातहृतक्लमः॥६.४.७॥

अथापश्यन्मनोहारि सौम्यसत्त्वनिषेवितम्।

आश्रमं नदितीरस्थं मनःशोकविनाशनम्॥६.४.८॥

पुष्पितैः फलितैर्वृक्षैः समंतात्परिवारितम्।

विविधैर्मधुरारावैर्नादितं विहगोत्तमैः॥६.४.९॥

क्रीडंति नकुलाः सर्पैरूलूका यत्र वायसैः।

मूषकैर्वृषदंशाश्च द्वीपिनो विविधैर्मृगैः॥६.४.१०॥

अथापश्यन्नदीतीरे स तपस्विगणावृतम्।

स्वाध्यायनिरतं दांतं विश्वामित्रं तपोनिधिनम्॥६.४.११॥

तेजसा तपसातीव दीप्यमानमिवानलम्।

चीरवल्कलसंवीतं शालवृक्षं समाश्रितम्॥६.४.१२॥

अथ गत्वा स राजेन्द्रो दूरस्थोऽपि प्रणम्य तम्।

अष्टांगेन प्रणामेन स्वनाम परिकीर्तयन्॥६.४.१३॥

तथान्यानपि तच्छिष्यान्कृताञ्जलिपुटः स्थितः।

यथाक्रमं यथाज्येष्ठं श्रद्धया परया युतः॥६.४.१४॥

धूलिधूसरितांगं तं ते तु दृष्ट्वा महीपतिम्।

चंडाल इति मन्वानाश्चिह्नैर्गात्रसमुद्भवैः॥६.४.१५॥

भर्त्सयामासुरेवाथ वचनैः परुषाक्षरैः।

धिक्छब्दैश्च तथैवान्ये याहियाहीति चासकृत्॥६.४.१६॥

कस्त्वं पापेह संप्राप्तो मुनीनामाश्रमोत्तमे।

वेदध्वनिसमाकीर्णे साधूनामपि दुर्लभे॥६.४.१७॥

तस्माद्गच्छ द्रुतं यावन्न कश्चित्तापसस्तव।

दत्त्वा शापं करोत्याशु प्राणानामपि संक्षयम्॥६.४.१८॥

त्रिशंकुरुवाच।

त्रिशंकुर्नाम भूपोऽहं सूर्यवंशसमुद्भवः।

शप्तो वसिष्ठपुत्रैश्च चंडालत्वे नियोजितः॥६.४.१९॥

सोऽहं शरणमापन्नः शापमुक्त्यै द्विजोत्तमाः।

विश्वामित्रं जगन्मित्रं नान्या मेऽस्ति गतिः परा॥६.४.२०॥

विश्वामित्र उवाच।

वसिष्ठस्य भवान्याज्यस्तत्पुत्राणां विशेषतः।

तत्कस्मादीदृशे पापे तैस्त्वमद्य नियोजितः॥६.४.२१॥

कोऽपराधस्त्वया तेषां कृतः पार्थिवसत्तम।

प्राणद्रोहः कृतः किं वा दारधर्षणसंभवः॥६.४.२२॥

त्रिशंकुरुवाच।

अनेनैव शरीरेण स्वर्गाय गमनं प्रति।

मया संप्रार्थितो यज्ञो वसिष्ठान्मुनिसत्तमात्॥६.४.२३॥

तेनोक्तं न स यज्ञोऽस्ति येन स्वर्गे प्रगम्यते।

अनेनैव शरीरेण मुक्त्वा देहांतरं नृप॥६.४.२४॥

तच्छ्रुत्वा स मया प्रोक्तो यदि मां न नयिष्यति।

स्वर्गं चानेन कायेन सद्यो यज्ञप्रभावतः॥६.४.२५॥

तदन्यं गुरुमेवाद्य कर्ताहं नास्ति संशयः।

एतज्ज्ञात्वा मुनिः प्राह यत्क्षेमं तत्समाचर॥६.४.२६॥

ततोऽहं तेन संत्यक्तस्तत्पुत्रान्प्राप्य निष्ठुरान्।

प्रोक्तवानथ तत्सर्वं यद्वसिष्ठस्य कीर्तितम्॥६.४.२७॥

ततस्तैः शोकसंतप्तैः शप्तोस्मि मुनिसत्तम।

नीतश्चेमां दशां पापां चंडालत्वे नियोजितः॥६.४.२८॥

सोऽहं त्वां मनसा ध्यात्वा सुदूरादिहरागतः(?)।

आशां गरीयसीं कृत्वा कुरुक्षेत्रे मुनीश्वर॥६.४.२९॥

नासाध्यं विद्यते किंचित्त्रिषु लोकेषु ते मुने।

तस्मात्कुरु प्रतीकारं दुःखितस्य ममाधुना॥६.४.३०॥

सूत उवाच।

तस्य तद्वचनं श्रुत्वा विश्वामित्रो मुनीश्वरः।

वसिष्ठस्पर्धयोवाच मुनिमध्ये व्यवस्थितः॥६.४.३१॥

अहं त्वां याजयिष्यामि तेन यज्ञेन पार्थिव।

गच्छसि त्रिदिवं येन इष्टमात्रेण तत्क्षणात्॥६.४.३२॥

त्वमेवं विहितो भूप वासिष्ठैरंत्यजस्तु तैः।

मया भूयोऽपि भूपालः कर्तव्यो नात्र संशयः॥६.४.३३॥

तस्मादागच्छ भूपाल तीर्थयात्रां मया सह।

कुरु तीर्थप्रभावेण येन त्वं स्याः शुचिः पुनः॥६.४.३४॥

तथा यज्ञक्रियार्हश्च चंडालत्वविवर्जितः।

नास्ति तत्पातकं यच्च तीर्थस्नानान्न नश्यति॥६.४.३५॥

सूत उवाच।

एवं स निश्चयं कृत्वा गाधिपुत्रो मुनीश्वरः।

त्रिशंकुं पृष्ठतः कृत्वा तीर्थयात्रामथाव्रजत्॥६.४.३६॥

कुरुक्षेत्रं सरस्वत्यां प्रभासे कुरुजांगले।

पृथूदके गयाशीर्षे नैमिषे पुष्करत्रये॥६.४.३७॥

वाराणस्यां प्रयागे च केदारे श्रवणे नदे।
चित्रकूटे च गोकर्णे शालिग्रामेऽचलेश्वरे॥६.४.३८॥
शुक्लतीर्थे सुराज्याख्ये दृषद्वति नदे शुभे।
अथान्येषु सुपुण्येषु तीर्थेष्वायतनेषु च॥६.४.३९॥
एवं तस्य नरेंद्रस्य सार्धं तेन महात्मना।
अतिक्रांतो महान्कालो भ्रममाणस्य भूतले॥६.४.४०॥
मुच्यते न च पापेन चंडालत्वेन स द्विजाः।
एवंविधेषु तीर्थेषु स्नातोपि च पृथक्पृथक्॥६.४.४१॥
ततः क्रमात्समायातः सोऽर्बुदं पर्वतं प्रति।
तत्रारुह्य समालोक्य पापघ्नमचलेश्वरम्॥६.४.४२॥
यावदायतनात्तस्मान्निर्गच्छति मुनीश्वरः।
तावत्तेनेक्षितो नाममार्कंडो मुनिसत्तमः॥६.४.४३॥
सोऽपि दृष्ट्वा जगन्मित्रं विश्वामित्रं मुनीश्वरम्।
प्रोवाचाथ कुतः प्राप्तः सांप्रतं त्वं मुनीश्वर॥६.४.४४॥
कोऽयं तवानुगो रौद्रो दृश्यते चांत्यजाकृतिः।
एतत्सर्वं समाचक्ष्व पृच्छतो मम सन्मुने॥६.४.४५॥
विश्वामित्र उवाच।
एष पार्थिवशार्दूलस्त्रिशंकुरिति विश्रुतः।
वसिष्ठस्य सुतैर्नीतश्चंडालत्वं प्रकोपतः॥६.४.४६॥
मया चास्य प्रतिज्ञातं सप्तद्वीपवतीं महीम्।
प्रभ्रमिष्याम्यहं यावन्मेध्यत्वं त्वमुपेष्यसि॥६.४.४७॥
भ्रांतोऽहं भूतले यानि तीर्थान्यायतनानि च।
नचैष मेध्यतां प्राप्तः परिश्रांतोस्मि सांप्रतम्॥६.४.४८॥
तस्मात्सर्वां महीं त्यक्त्वा लज्जया परया युतः।
द्वीपान्महार्णवांस्त्यक्त्वा संप्रयास्याम्यतः परम्॥६.४.४९॥
मा वसिष्ठस्य पुत्राणामुपहासपदं गतः।
प्रतिज्ञारहितो विप्र सत्यमेदब्रवीम्यहम्॥६.४.५०॥
श्रीमार्कंडेय उवाच।

यद्येवं मुनिशार्दूल कुरुष्व वचनं मम।

सप्तद्वीपवतीं पृथ्वीं मा त्यक्त्वा कुत्रचिद्व्रज॥६.४.५१॥

एतस्मात्पर्वतात्क्षेत्रं हाटकेश्वरसंज्ञितम्।

अस्ति नैर्ऋतदिग्भागे देशे चानर्तसंज्ञके॥६.४.५२॥

तत्राद्यं स्थापितं लिंगं हाटकेन सुरोत्तमैः।

यत्तत्संकीर्त्यते लोके पाताले हाटकेश्वरम्॥६.४.५३॥

पातालजाह्नवीतोयं यत्रैवास्ति द्विजोत्तम।

उद्धृते शंभुना लिंगे विनिष्क्रांतं रसातलात्॥६.४.५४॥

तत्र प्रविश्य यत्नेन पातालं वसुधाधिपः।

करोतु जाह्नवीतोये स्नानं श्रद्धासमन्वितः॥६.४.५५॥

पश्चात्पश्यतु तल्लिंगं हाटकेश्वरसंज्ञितम्।

भविष्यति ततः शुद्धश्चंडालत्वविवर्जितः॥६.४.५६॥

त्वमपि प्राप्स्यसि श्रेयः परं हृदयसंस्थितम्।

ततोन्यदपि यत्किंचित्तत्रैव तपसि स्थितः॥६.४.५७॥

सूत उवाच।

तस्य तद्वचनं श्रुत्वा विश्वामित्रो मुनीश्वरः।

त्रिशंकुना समायुक्तो गतस्तत्र द्रुतं ततः॥६.४.५८॥

पाताले देवमार्गेण प्रविश्य नृपसत्तमम्।

त्रिशंकुं स्नापयामास विधिदृष्टेन कर्मणा॥६.४.५९॥

स्नातमात्रोथ राजा स हाटकेश्वदर्शनात्।

चंडालत्वेन निर्मुक्तो बभूवार्कसमद्युतिः॥६.४.६०॥

ततस्तं स मुनिः प्राह प्रणतं गतकल्मषम्।

दिष्ट्या मुक्तोसि राजेंद्र चंडालत्वेन सांप्रतम्॥६.४.६१॥

दिष्ट्या प्राप्तः परं तेजो दिष्ट्या प्राप्तः परं तपः।

तस्माद्यजस्व सत्रेण विधिवद्दक्षिणावता॥६.४.६२॥

येन संप्राप्स्यसे सिद्धिं नित्यं या हृदये स्थिता।

त्वत्कृते प्रार्थयिष्यामि स्वयं गत्वा पितामहम्॥६.४.६३॥

मखांशं सर्वदेवाद्यो येन गृह्णाति ते मखे।

तस्मादत्रैव संभारान्सर्वान्यज्ञसमुद्भवान्।
आनय ब्रह्मलोकाच्च यावदागमनं मम॥६.४.६४॥
बाढमित्येव सोऽप्याह स मुनिः संशितव्रतः।
पितामहमुपागम्य प्रणिपत्याब्रवीद्वचः॥६.४.६५॥
याजयिष्याम्यहं भूपं त्रिशंकुं प्रपितामह।
मानुषेण शरीरेण येन गच्छति ते पदम्॥६.४.६६॥
तस्मादागच्छ तत्र त्वं यज्ञवाटं पितामह।
सर्वैः सुरगणैः सार्धं शिवविष्णुपुरःसरैः॥६.४.६७॥
प्रगृहाण स्वहस्तेन यज्ञभागं यथोचितम्।
सशरीरो दिवं याति येनासौ त्वत्प्रसादतः॥६.४.६८॥
ब्रह्मोवाच।
न यज्ञकर्मणा स्वर्गःस्वेन कायेन लभ्यते।
मुक्त्वा देहांतरं ब्रह्मंस्तस्मान्मैवं वदस्व माम्॥६.४.६९॥
वयमग्निमुखाः सर्वे हविर्गृह्णामहे मखे।
वेदोक्तविधिना सम्यग्यजमानहिताय वै॥६.४.७०॥
तस्माद्वह्निमुखे भूयः स जुहोति हविर्द्विज।
ततः संप्राप्स्यति स्वर्गं त्वत्प्रसादादसंशयम्॥६.४.७१॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रकृतत्रिशंकुयाजनोपक्रमवर्णनंनाम चतुर्थोऽध्यायः॥४॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००५



सूत उवाच।

तच्छ्रुत्वा ब्रह्मणो वाक्यं विश्वामित्रो रुषान्वितः।

पितामहमुवाचेदं पश्य मे तपसो बलम्॥६.५.१॥

याजयित्वा त्रिशंकुं तं विधिवद्दक्षिणावता।

यज्ञेनात्रा(?) नयिष्यामि पश्यतस्ते पितामह॥६.५.२॥

एवमुक्त्वा द्रुतं गत्वा विश्वामित्रो धरातलम्।

चकार याजने यत्नं त्रिशंकोः सुमहात्मनः॥६.५.३॥

ददौ दीक्षां समाहूय ब्राह्मणान्वेदपारगान्।

यत्रकर्मोचिते काले तस्मिन्नेव वने शुभे॥६.५.४॥

बभूव स स्वयं धीमानध्वर्युर्यज्ञकर्मणि।

तस्मिन्होता च शांडिल्यो ब्रह्मा गौतम एव च॥६.५.५॥

आग्नीध्रश्च्यवनो नाम मैत्रावरुणः कार्मिकः।

उद्गाता याज्ञवल्क्यश्च प्रतिहर्ता च जैमिनिः॥६.५.६॥

प्रस्तोता शंकुवर्णश्च तथोन्नेता च गालवः।

पुलस्त्यो ब्राह्मणाच्छंसी होता गर्गो मुनीश्वरः॥६.५.७॥

नेष्टा चैव तथात्रिस्तु अच्छावाको भृगुः स्वयम्।

तान्सर्वानृत्विजश्चक्रे त्रिशंकुः श्रद्धयान्वितः॥६.५.८॥

वासोभिर्मुकुटैश्चैव केयूरैः समलंकृतान्।

कृत्वा केशपरित्यागं दधत्कृष्णाजिनं तथा॥६.५.९॥

ऐणशृङ्गसमायुक्तः पयोव्रतपरायणः।

दीर्घसत्राय तान्सर्वान्योजयामास वै ततः॥६.५.१०॥

एवं तस्मिन्प्रवृत्ते च दीर्घसत्रे यथोचिते।

आजग्मुर्ब्राह्मणा दिव्या वेदवेदांगपारगाः॥६.५.११॥

तथान्ये तार्किकाश्चैव गृहस्थाः कौतुकान्विताः।

दीनांधकृपणाश्चैव ये चान्ये नटनर्तकाः॥६.५.१२॥

दीयतां दीयतामाशु एतेषामेतदेव हि।

भुज्यतांभुज्यतां लोकाः प्रसादः क्रियतामिति॥६.५.१३॥

इत्येष निनदस्तत्र श्रूयते सततं महान्।

यज्ञवाटे सदा तस्मिन्नान्यश्चैव कदाचन॥६.५.१४॥

तत्र सस्यमयाः शैला दृश्यंते परिकल्पिताः।

सुवर्णस्य च रूप्यस्य रत्नानां च विशेषतः॥६.५.१५॥

दानार्थं ब्राह्मणेंद्राणामसंख्याश्चापि धेनवः।

तथैव वाजिनो दांता मदोन्मत्ता महागजाः॥६.५.१६॥

समंतात्कल्पितास्तत्र दृश्यंते पर्वतोपमाः।

वर्तमाने महायज्ञे तस्मिन्नेव सुविस्तरे॥६.५.१७॥

आहूता यज्ञभागाय नाभिगच्छंति देवताः।

केवलं वह्निवक्त्रेण तस्य गृह्णंति तद्धविः॥६.५.१८॥

एवं द्वादशवर्षाणि यजतस्तस्य भूपतेः।

व्यतीतानि न संप्राप्तमभीष्टं मनसः फलम्॥६.५.१९॥

ततश्चावभृथस्नानं कृत्वा सत्रसमाप्तिजम्।

ऋत्विजस्तर्पयित्वा तान्दक्षिणाभिर्यथार्हतः॥६.५.२०॥

विससर्ज समस्तांश्च तथान्यानपि संगतान्।

संबंधिनो वयस्यांश्च त्रिशंकुर्मुनिसत्तमाः॥६.५.२१॥

ततः प्रोवाच विनतो विश्वामित्रं मुनीश्वरम्।

स भूपो व्रीडया युक्तः प्रणिपातपुरः सरम्॥६.५.२२॥

त्वत्प्रसादान्मया प्राप्तं दीर्घसत्रसमुद्भवम्।

परिपूर्णफलं ब्रह्मन्दुर्लभं सर्वमानवैः॥६.५.२३॥

तथा जातिः पुनर्लब्धा भूयो नष्टापि सन्मुने।

त्वत्प्रसादेन विप्रर्षे चंडालत्वं प्रणाशितम्॥६.५.२४॥

परं मे दुःखमेवैकं हृदि शल्यमिवार्पितम्।

अनेनैव शरीरेण यन्न प्राप्तं त्रिविष्टपम्॥६.५.२५॥

उपहासं करिष्यंति वसिष्ठस्य सुता मुने।

अद्य व्यर्थ श्रमं श्रुत्वा मामप्राप्तं त्रिविष्टपम्॥६.५.२६॥

तथा तद्वचनं सत्यं वसिष्ठस्य व्यवस्थितम्।

यत्तेनोक्तं न यज्ञेन सदेहैर्गम्यते दिवि॥६.५.२७॥

सोऽहं तपः करिष्यामि सांप्रतं वनमाश्रितः।

न करिष्यामि भूयोऽपि राज्यं पुत्रनिवेदितम्॥६.५.२८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रेण त्रिशंकोः सशरीरस्वर्गारोहणाय द्वादशवार्षिकयज्ञकरणंनाम पञ्चमोऽध्यायः॥५॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००६



सूत उवाच।

तच्छ्रुत्वा वचनं तस्य त्रिशंकोर्मुनिपुंगवः।

विश्वामित्रोऽब्रवीद्वाक्यं किंचिल्लज्जासमन्वितः॥६.६.१॥

मा विषादं महीपाल विषयेऽत्र करिष्यसि।

अनेनैव शरीरेण त्वां नयिष्याम्यहं दिवम्॥६.६.२॥

तत्तत्कर्म करिष्यामि स्वर्गार्थे नृपसत्तम।

तवाभीष्टं करिष्यामि किं वा यास्यामि संक्षयम्॥६.६.३॥

एवमुक्त्वा परं कोपं कृत्वोपरि दिवौकसाम्।

उवाच च ततो रौद्रं प्रत्यक्षं तस्य भूपतेः॥६.६.४॥

यथा मया द्विजत्वं हि स्वयमेवार्जितं बलात्।

तथा सृष्टिं करिष्यामि स्वकीयां नात्र संशयः॥६.६.५॥

ततस्तं स समालोक्य शंकरं शशिशेखरम्।

प्रणम्य विधिवद्भक्त्या स्तुतिं चक्रे महामुनिः॥६.६.६॥

विश्वामित्र उवाच।

जय देव जयाचिंत्य जय पार्वतिवल्लभ।

जय कृष्ण जगन्नाथ जय कृष्ण जगद्गुरो॥६.६.७॥

जयाचिंत्य जयामेय जयानंत जयाच्युत।

जयामर जयाजेय जयाव्यय सुरेश्वर॥६.६.८॥

जय सर्वग सर्वेश जय सर्वसुराश्रय।

जय सर्वजनध्येय जय सर्वाघनाशन॥६.६.९॥

त्वं धाता च विधाता च त्वं कर्ता त्वं च रक्षकः।

चतुर्विधस्य देवेश भूतग्रामस्य शंकर॥६.६.१०॥

यथा तिलस्थितं तैलं यथा दधिगतं घृतम्।

तथैवाधिष्ठितं कृत्स्नं त्वया गुप्तेन वै जगत्॥६.६.११॥

त्वं ब्रह्मा त्वं हृषीकेशस्त्वं शक्रस्त्वं हुताशनः।

त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्दुस्त्वं दिवाकरः॥६.६.१२॥

अथवा बहुनोक्तेन किं स्तवेन तव प्रभो।

समासादेव वक्ष्यामि विभूतिं श्रुतिनोदिताम्॥६.६.१३॥

यत्किंचित्त्रिषु लोकेषु स्थावरं जंगमं विभो।

तत्सर्वं भवता व्याप्तं काष्ठं हव्यभुजा यथा॥६.६.१४॥

श्रीभगवानुवाच।

परितुष्टोऽस्मि भद्रं ते वरं प्रार्थय सन्मुने।

यत्ते हृदि स्थितं नित्यं सर्वं दास्याम्यसंशयम्॥६.६.१५॥

विश्वामित्र उवाच।

यदि तुष्टोसि देवेश यदि देयो वरो मम।

तन्मे स्यात्सृष्टिमाहात्म्यं त्वत्प्रसादान्महेश्वर॥६.६.१६॥

एवमस्त्विवति तं चोक्त्वा भगवान्वृषभध्वजः।

सर्वैर्गणैः समायुक्तस्ततश्चादर्शनं गतः॥६.६.१७॥

विश्वामित्रोऽपि तत्रैव स्थितो ध्यानपरायणः।

चक्रे चतुर्विधां सृष्टिं स्पर्द्धया हंसगामिनः॥६.६.१८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रवरलब्धिर्नाम षष्ठोऽध्यायः॥६॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००७



॥ सूत उवाच ॥ ॥

एवं ध्यायमानेन जलमाविश्य काम्यया ॥

सृष्टं संध्याद्वयं तच्च दृश्यतेऽद्यापि वै द्विजाः ॥ १ ॥

ततो देवगणाः सर्वे सृष्टास्तेन महात्मना ॥

वैमानिकाश्च ये केचिन्नक्षत्राणि ग्रहास्तथा ॥ २ ॥

मनुष्योरगरक्षांसि वीरुधो वृक्षसंयुताः ॥

सप्तर्षयो ध्रुवाद्याश्च ये चान्ये गगनेचराः ॥ ३ ॥

एवं हि भगवान्सृष्ट्वा विश्वामित्रः स मन्युमान् ॥

स्वकीयेष्वथ कृत्येषु योजयामास तांस्ततः ॥ ४ ॥

एतस्मिन्नेव काले तु द्वौ सूर्यो युगपद्दिवि ॥

उदितौ रात्रिनाथौ च जाताश्च द्विगुणा ग्रहाः ॥

द्विगुणानि च भान्येव सह सप्तर्षिभिर्द्विजाः ॥ ५ ॥

एवं वियति ते सर्वे स्पर्द्धमानाः परस्परम् ॥

दृश्यंते द्विगुणीभूता जनविभ्रमकारकाः ॥ ६ ॥

एतस्मिन्नन्तरे शक्रः सह सर्वैर्दिवालयैः ॥

जगाम तत्र यत्रास्ते भगवान्कमलासनः ॥ ७

प्रोवाचाथ प्रणम्योच्चैः कृतांजलिपुटः स्थितः ॥

स्तुतिं कृत्वा सुरैः सार्धं वेदोक्तैः स्तवनैर्द्विजाः ॥ ८ ॥

सृष्टिः कृता सुरश्रेष्ठ विश्वामित्रेण सांप्रतम् ॥

मनुष्ययक्षसर्पाणां देवगंधर्वरक्षसाम् ॥ ९ ॥

तस्माद्वारय तं गत्वा स्वयमेव पितामह ॥

यावन्न व्याप्यते सर्वं तत्सष्ट्येदं चराचरम् ॥ १०

तस्य तद्वचनं श्रुत्वा तेनैव सहितो विधिः ॥

गत्वोवाच जगन्मित्रं विश्वामित्रं मुनीश्वरम् ॥ ११ ॥

निवृत्तिं कुरु विप्रर्षे सांप्रतं वचनान्मम ॥
सृष्टैर्यावन्न नश्यंति सर्वे देवाः सवासवाः ॥ १२ ॥ ॥
विश्वामित्र उवाच ॥ ॥
अनेनैव शरीरेण त्रिशंकुर्नृपसत्तमः॥
यदि गच्छति ते लोके तत्सृष्टिं न करोम्यहम् ॥ १३ ॥
॥ ब्रह्मोवाच ॥ ॥
एष गच्छतु भूपालो मया सह त्रिविष्टपम् ॥
अनेनैव शरीरेण त्वत्प्रसादान्मुनीश्वर ॥ १४
विरामं कुरु सृष्टेस्त्वं नैतदन्यः करिष्यति ॥
न कृतं केनचिल्लोके तत्कर्म भवता कृतम्॥ १५ ॥
॥ विश्वामित्र उवाच ॥ ॥
यन्मया कोपयुक्तेन कृतेयं सृष्टिरब्जज ॥
तत्क्षतव्यं त्वया देव सर्वलोकपितामह ॥।६॥
तथाऽक्षयास्तु मे देव सृष्टिस्तव प्रसादतः ॥
या कृता न करिष्यामि भूयो ऽन्यां पद्मसंभव ॥ १७ ॥
॥ व्रह्मोवाच ॥ ॥
भविष्यति ध्रुवा विप्र सृष्टिर्या भवता कृता ॥
परं सर्वेषु कृत्येषु यज्ञार्हा न भविष्यति ॥ १८ ॥ ???
एवमुक्त्वा समादाय त्रिशंकुं प्रपितामहः ॥
ब्रह्मलोकं गतो हृष्टो मुनिस्तत्रैव संस्थितः ॥ १९ ॥
इति स्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठेनागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने त्रिशंकुस्वर्गप्राप्तिवर्णनंनाम सप्तमोऽध्यायः ॥७॥ ॥९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००८

https://sa.wikisource.org/s/fhh
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं स्वर्गमनुप्राप्ते त्रिशंकौ नृपसत्तमे ॥

सशरीरे द्विजश्रेष्ठा विश्वामित्रसमुद्यमात् ॥ ६.८.१ ॥

तत्तीर्थं ख्यातिमायातं समस्ते भुवनत्रये ॥

ततःप्रसूति लोकानां धर्मकामार्थमोक्षदम् ॥ २ ॥

अस्पृष्टं कलिदोषेण तथान्यैरुपपातकैः ॥

ब्रह्महत्यादिकैश्चैवत्रिपुरारेः प्रभावतः ॥ ३ ॥

यस्तत्र त्यजति प्राणाञ्छ्रद्धा युक्तेन चेतसा ॥

स मोक्षमाप्नुयान्मर्त्यो यद्यपि स्यात्सुपापकृत् ॥ ४ ॥

कृमिपक्षिपतंगा ये पशवः पक्षिणो मृगाः ॥

तेऽपि तत्र मृता यांति शिवलोकमसंशयम्॥ ५ ॥

स्नानं ये तत्र कुर्वंति श्रद्धापूतेन चेतसा ॥

त्रिशंकुरिव ते स्वर्गे प्रयांत्यपि विधर्मिणः ॥ ६ ॥

घर्मार्त्ता वा तृषार्ता वा येऽवगाहंति तज्जलम्॥

तेऽपि यांति परं स्थानं यत्र देवो महेश्वरः ॥ ७ ॥

विश्वामित्रोऽपि तद्दृष्ट्वा तीर्थमाहात्म्यमुत्तमम् ॥

कुरुक्षेत्रं परित्यज्य तत्र वासमथाकरोत्॥ ८ ॥

तथान्ये मुनयः शांतास्त्यक्त्वा तीर्थानि दूरतः॥

तत्राश्रमपदं कृत्वा प्रयाताः परमं पदम् ॥ ९ ॥

तथैव मनुजाः सर्वे दूरादागत्य सत्वराः ॥

तत्र स्नात्वा दिवं यांति कृत्वा पापशतान्यपि ॥ ६.८.१० ॥

एवं तस्य प्रभावेण तीर्थस्य द्विजसत्तमाः ॥

गच्छमानेषु लोकेषु सुखेन त्रिदिवालयम् ॥ ११ ॥

अग्निष्टोमादिका सर्वाः समुच्छेदं गताः क्रियाः ॥

न कश्चिद्यजते मर्त्यो न व्रतं कुरुते नरः ॥ १२ ॥

न यच्छति तथा दानं न च तीर्थं निषेवते ॥

केवलं कुरुते स्नानं लिंगभेदे समाहितः ॥ १३ ॥

ततः प्रगच्छति स्वर्गं विमानवरमाश्रितः ॥ १४ ॥

ततः प्रपूरिताः सर्वे स्वर्गलोका नरैर्द्विजाः ॥

ब्रह्मविष्णुशिवेन्द्रादीन्स्पर्धमानैः सुरोत्तमान् ॥ १५ ॥

ततो देवगणाः सर्वे यज्ञभागविवर्जिताः ॥

कृच्छ्रं परमनुप्राप्ता मन्त्रं चक्रुः परस्परम्॥१६॥

हाटकेश्वरमाहात्म्यात्स्वर्गलोकः प्रपूरितः ॥

ऊर्ध्वबाहुभिराकीर्णः स्पर्धमानैः समंततः ॥ १७ ॥

तस्मात्तत्क्रियतां कर्म येनोच्छेदं प्रगच्छति ॥

तीर्थमेद्धरापृष्ठे हाटकेश्वरसंज्ञितम्॥ १८ ॥

ततः संवर्तको वायुः शक्रादेशात्समंततः ॥

तत्क्षेत्रं पूरयामास पांसुभिर्द्विजसत्तमाः ॥ १९ ॥

एवं नाशमनुप्राप्ते तस्मिंस्तीर्थे स्थलोच्चये ॥

जाते जाताः क्रियाः सर्वा भूयोऽपि क्रतुसंभवाः ॥ ६.८.२० ॥

ततः कालेन महता वल्मीकः समपद्यत ॥

तस्मिन्क्षेत्रे स पाताले संप्रयातः शनैःशनैः ॥ २१ ॥

अथ पातालतो नागास्तेन मार्गेण कौतुकात् ॥

मर्त्यलोकं समायांति भ्रमंति च धरातले॥२२॥

तत्र ते मानवान्भोगान्भुक्त्वा चैव यथेच्छया॥

पुनर्निर्यांति तेनैव मार्गेण निजमंदिरम्॥२३॥

ततो नागबिलः ख्यातः स सर्वस्मिन्धरातले ॥

गतागतेन नागानां स वल्मीको द्विजोत्तमाः ॥ २४ ॥

कस्यचित्त्वथ कालस्य भगवान्पाकशासनः ॥

ब्रह्महत्यासमोपेतो निस्तेजाः समपद्यत ॥ २५ ॥

ततः पितामहादेशं लब्ध्वा मार्गेण तेन सः ॥

प्रविश्य चेक्षयामास पाताले हाट केश्वरम् ॥ २६ ॥

अथाऽभूत्पापनिर्मुक्तस्तत्क्षणात्तस्य दर्शनात्॥

तेजसा च समायुक्तः पुनः प्राप त्रिविष्टपम् ॥ २७ ॥

स दृष्ट्वा तत्प्रभावं तल्लिंगं देवस्य शूलिनः ॥

हाटकेश्वरसंज्ञस्य भयं चक्रे नरोद्भवम् ॥ २८ ॥

यदि कश्चित्पुमानत्र त्रिशंकुरिव भूपतिः ॥

पूजयिष्यति तल्लिंगं विपाप्मा श्रद्धया सह ॥ २९ ॥

यापयिष्यति तन्नूनं मामस्मात्त्रिदशालयात् ॥

तस्मात्संपूरयाम्येनं मार्गं पाताललसंभवम् ॥ ६.८.३० ॥

ततश्च त्वरया युक्तो रक्तशृंगं नगोत्तमम् ॥

प्रचिक्षेप बिले तस्मिन्स्वयमेव शतक्रतुः ॥ ३१ ॥

॥ ऋषय ऊचुः ॥॥ ॥ ॥

ब्रह्महत्या कथं जाता देवेन्द्रस्य महात्मनः ॥

कस्मिन्काले च सर्वं नो विस्तरात्सूत कीर्तय ॥ ३२ ॥

रक्तशृंगो गिरिः कोऽयं संक्षिप्तस्तत्र तेन यः ॥

मानुषाणां भयं तस्य कतमस्य शचीपतेः ॥ ३३ ॥

॥ सूत उवाच ॥ ॥

पुरा त्वष्ट्रा द्विजश्रेष्ठा हिरण्यकशिपोः सुता ॥

विवाहिता रमानाम श्रेष्ठरूपगुणान्विता ॥ ३४ ॥

अथ तस्या ययौ कालः सुप्रभूतः सुतं विना ॥

ततो वैराग्यसंपन्ना सुतार्थं तपसि स्थिता ॥। ॥ ३५ ॥

ध्यायमाना सुराधीशं देवदेवं महेश्वरम् ॥

बलिपूजोपहारेण सम्यक्छ्रद्धासमन्विता ॥ ३६ ॥

नियता नियताहारा स्नानजप्यपरायणा ॥

यच्छमाना द्विजाग्र्येभ्यो दानानि विविधानि च ॥ ३७ ॥

ततो वर्षसहस्रांते तस्यास्तुष्टो महेश्वरः ॥

उवाच वरदोऽस्मीति वृणुष्व यदभीप्सितम् ॥ ३८ ॥

सा वव्रे मम पुत्रोऽस्तु भगवंस्त्वत्प्रसादतः ॥

शूरः शस्त्रैरवध्यश्च विप्रदानवरूपधृक् ॥ ३९ ॥

वेदाध्ययन संपन्नो यज्ञकर्मसमुद्यतः ॥

तेजसा यशसा ख्यातः सर्वेषामपि देहिनाम् ॥ ६.८.४० ॥

॥ भगवानुवाच ॥ ॥

भविष्यति न संदेहः पुत्रस्ते बलवान्सुधीः ॥

अवध्यः सर्वशस्त्राणां महातेजोभिरन्वितः ॥ ४१ ॥

यज्वा दानपतिः शूरो वेदवेदांगपारगः ॥

ब्राह्मणोक्ताः क्रियाः सर्वाः करिष्यति स कृत्स्नशः ॥

अजेयः संगरे चैव कृत्स्नैरपि सुरासुरैः ॥ ४२ ॥

एवमुक्त्वा स देवेशस्ततश्चादर्शनं गतः ॥

ऋतौ सापि दधे गर्भं सकाशाद्विश्वकर्मणः ॥ ॥ ४३ ॥

ततश्च सुषुवे पुत्रं दशमे मासि शोभनम् ॥

द्वादशार्कप्रतीकाशं सर्वलक्षणलक्षितम् ॥ ४४ ॥

तस्य चक्रे पिता नाम प्राप्ते द्वादशमे दिने ॥।

प्रसिद्धं वृत्र इत्येव पूजयित्वा द्विजोत्तमान् ॥ ४५ ॥

अथासौ ववृधे बालः शुक्लपक्षे यथोडुराट् ॥

पितृमातृकृतानंदो बन्धुवर्गेण लालितः ॥ ४६॥

ततोऽस्य प्रददौ काले व्रतं विप्रजनोचितम् ॥

समभ्येत्य स्वयं शुक्रो दानवस्यापि संद्विजः ॥ ४७ ॥

स चापि चतुरो वेदान्ब्रह्मचारिव्रते स्थितः ॥

वेदांगैः सहितान्वृत्रः पपाठ गुरुवत्सलः ॥ ४८ ॥

ततो यौवनमासाद्य भूमिपालानशेषतः ॥

जित्वा धरां वशे चक्रे पातालं तदनंत रम्॥ ४९ ॥

ततश्चेंद्रजयाकांक्षी समासाय सुरालयम् ॥

सहस्राक्षमुखान्देवान्युद्धे चक्रे पराङ्मुखान् ॥ ६.८.५० ॥

अथ तेन समं वज्री चक्रेऽष्टादश संयुगान्॥

एकस्मिन्नपि नो लेभे विजयं द्विजसत्तमाः ॥ ५१ ॥

हतशेषैः सुरैः सार्धं सर्वांगक्षतविक्षतैः ॥

ततो जगाम वित्रस्तो ब्रह्मलोकं दिवा लयात्॥ ५२ ॥

वृत्रोऽपि बुभुजे कृत्स्नं त्रैलोक्यं सचराचरम् ॥
शाक्रं पदं समास्थाय निहताशेषकंटकम् ॥ ५३ ॥
यज्ञभागभुजश्चक्रे दानवान्बल गर्वितान् ॥
देवस्थानेषु सर्वेषु यथोक्तेषु महाबलः ॥ ५४ ॥
एवं त्रैलोक्यराज्येऽपि लब्धे तस्य द्विजोत्तमाः ॥
न संतोषश्च संजज्ञे ब्रह्मलोकाभि कांक्षया ॥ ५५ ॥
ततः शुक्रं समाहूय प्रोवाच मधुरं वचः ॥
विनयावनतो भूत्वा चतुर्भिः सचिवैः सह ॥ ५६ ॥
॥ वृत्र उवाच ॥ ॥
ब्रह्मलोकं गतः शक्रो भयाद्गुरुकुलोद्वह ॥
कथं गतिर्भवेत्तत्र मम ब्रूहि यथातथम् ॥ ५७ ॥
येन शक्रं विरंचिं च सूदयिष्ये तथाखिलम् ॥
तुभ्यं दत्त्वा ब्रह्म लोकं भोक्ष्यामि त्रिदिवं स्वयम् ॥ ५८ ॥
॥ शुक्र उवाच ॥ ॥
न गतिर्विद्यते तत्र तव दानवसत्तम ॥
तस्मात्त्रैलोक्यराज्येन संतोषं कर्तुम र्हसि ॥ ५९ ॥
॥ वृत्र उवाच ॥ ॥
यावत्तिष्ठति सुत्रामा तावन्नास्ति सुखं मम ॥
तस्मान्निष्कंटकार्थाय यतिष्येऽहं द्विजोत्तम ॥ ६.८.६० ॥
कथं शक्रस्य संजाता गतिस्तत्र भृगूद्वह ॥
न भविष्यति मे ब्रूहि कथं साऽद्य महामते ॥ ६१ ॥
॥ शुक्र उवाच ॥ ॥
तेन पूर्वं तपस्तप्तं नैमिषे दानवोत्तम ॥
यावद्वर्षसहस्रांतं ध्यायमानेन शंकरम्॥ ६२ ॥
तत्प्रभावाद्गतिस्तस्य तत्र जाता सदैव हि ॥
सभृत्यपरिवारस्य नान्यदस्तीह कारणम्॥ ६३ ॥
योऽन्योऽपि नैमिषारण्ये तद्रूपं कुरुते तपः ॥
ब्रह्मलोके गतिस्तस्य जायते नात्र संशयः ॥ ६४ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा सत्वरं गत्वा नैमिषं तीर्थमुत्तमम् ॥

तपश्चक्रे ततस्तीव्रं ध्यायमानो महेश्वरम् ॥ ६५ ॥

त्रैलोक्यरक्षणार्थाय संनिरूप्य दनूत्त मान्॥

महाबलसमोपेताञ्छक्राधिकपराक्रमान् ॥ ६६ ॥

वर्षास्वाकाशस्थायी स हेमन्ते सलिलाश्रयः ॥

पंचाग्निसाधको ग्रीष्मे स वभूवा निलाशनः ॥ ६७ ॥

एवं तस्य व्रतस्थस्य जग्मुर्वर्षशतानि च ॥

तत्र भीतास्ततो देवा ब्रह्मविष्णुपुरःसराः ॥ ६८ ॥

चक्रुश्च सततं मंत्रं तद्विनाशाय केवलम् ॥

वीक्षयंति च च्छिद्राणि न च पश्यंति दुःखिताः ॥ ६९ ॥

अथाब्रवीत्स्वयं विष्णुश्चिरं निश्चित्य चेतसा ॥

वधोपायं समालोक्य वृत्रस्य प्रमुदान्वितः । ६.८.७० ॥

॥ विष्णुरुवाच ॥ ॥

तस्य शक्र वधोपायो मया ज्ञातोऽधुना ध्रुवम् ॥

तच्छ्रुत्वा कुरु शीघ्रं त्वमुपायो नास्ति कश्चन ॥ ७१ ॥

अवध्यः सर्वशस्त्राणां स कृतः शूलपाणिना ॥

तस्मादस्थिमयं वज्रं तद्वधार्थं निरूपय ॥ ७२ ॥

॥ इन्द्र उवाच ॥ ॥

अस्थिभिः कस्य जीवस्य वज्रं देव भविष्यति ॥

गजस्य शरभस्याथ किं वान्यस्य वदस्व मे ॥ ७३ ॥

॥ विष्णुरुवाच ॥ ॥

शतहस्तप्रमाणं तत्षडस्रि च सुराधिप ॥

मध्ये क्षामं तु पार्श्वाभ्यां स्थूलं रौद्रसमाकृति ॥ ७४ ॥

॥ इंद्र उवाच ॥ ॥

न तादृग्दृश्यते सत्त्वं त्रैलोक्येपि सुरेश्वर ॥

यस्यास्थिभिर्विधीयेत वजमेवंविधाकृति ॥ ७५ ॥

॥ विष्णुरुवाच ॥ ॥

दधीचिर्नाम विप्रोऽस्ति तपः परममा स्थितः ॥

द्विगुणं च तथा दीर्घः सरस्वत्यां कृताश्रमः ॥ ७६ ॥

तं गत्वा प्रार्थयाशु त्वं स्वान्यस्थीनि प्रदास्यति ॥

नादेयं विद्यते किंचित्तस्य संप्रार्थितस्य हि ॥ ७७ ।

ततः शक्रः सुरैः सार्धं गत्वा तस्य तदाश्रमम् ॥

प्राचीसरस्वतीतीरे पुष्करे द्विजसत्तमाः ॥ ७९ ।

अथ देवान्समा लोक्य संप्राप्तान्निजमंदिरे ॥

दधीचिः संप्रहृष्टात्मा सत्वरः संमुखं ययौ ॥ ७९ ॥

स प्रणम्य सहस्राक्षं तथान्यानपि सन्मुनिः ॥

अर्घ्यादिभिस्ततः पूजां चक्रे तेषां ततः परम् ॥ ६.८.८० ॥

ततः प्रोवाच हृष्टात्मा विनयावनतः स्थितः ॥

स्वयमेव सहस्राक्षं प्रणिपत्य मुहुर्मुहुः ॥ ८१ ॥ ॥

॥ दधीचिरुवाच ॥ ॥

किमर्थमागता देवाः कृत्यं चाशु निवेद्यताम् ॥

धन्योऽहमागतो यस्य गृहे त्वं बलसूदन ॥ ८२ ॥

॥ शक्र उवाच ॥ ॥

वृत्रेण निर्जिताः सर्वे वयं ब्राह्मणसत्तम ॥

स वध्यो नहि शस्त्राणां सर्वेषां वरपुष्टितः । ८३ ॥

सोऽस्थिसंभववज्रस्य वध्यः स्यादब्रवीद्धरिः॥

शतहस्तप्रमाणस्य न च जीवोस्ति तादृशः ॥ ८४ ॥

त्वां मुक्त्वा ब्राह्मणश्रेष्ठ तस्मादस्थीनि यच्छ नः ॥

स्वकीयानि भवेद्येन वज्रं तस्य विनाशकम् ॥ ८५ ॥

कुरु कृत्यं द्विजश्रेष्ठ देवानामार्तिनाशनम् ॥

अन्यथा विबुधाः सर्वे नाशं यास्यंति कृत्स्नशः ॥ ८६ ॥

॥ सूत उवाच ॥

तच्छ्रुत्वा संप्रहृष्टात्मा दधीचिर्भगवान्मुनिः ॥

अत्यजज्जीवितं तेषां हितार्थाय दिवौकसाम् ॥ ८७ ॥

ततो देवाः प्रहृष्टास्ते गृहीत्वास्थीनि कृत्स्नशः ॥

ततश्चक्रुर्महावज्रं यादृशं विष्णुनोदितम् ॥ ८८ ॥

अथ शक्रस्तदादाय नैमिषाभिमुखो ययौ ॥

भयेन महता युक्तो वेपमानो निशागमे ॥ ८९ ॥

तत्र ध्यानस्थितं वृत्रं दूरस्थस्त्रिदशाधिपः ॥

वज्रेण ताडयामास पलायनपरायणः ॥ ६.८.९० ॥

सोऽपि वजप्रहारेण भस्मसात्सम पद्यत ॥

वृत्रो दानवशार्दूलो वह्निं प्राप्य पतंगवत् ॥ ९१ ॥

शक्रोऽपि भयसंत्रस्तो गत्वा सागरमध्यगम् ॥

पर्वतं सुदुरारोहं तुंगशृंगं समाश्रितः ॥ ॥ ९२ ॥

न जानाति हतं वृत्रं वज्रघातेन तेन तम् ॥

केवलं वीक्षते मार्गं वृत्रागमनसंभवम् ॥ ९३ ॥

एतस्मिन्नंतरे देवाः संप्रहृष्टतनूरुहाः ।

सूत्रं विनिहतं दृष्ट्वा तुष्टुवुस्त्रिदशाधिपम् ॥ ९४ ॥

न जानंति भयान्नष्टं तस्मिन्सागरपर्वते ।

अन्विष्य चिरकालेन कृच्छ्रात्संप्राप्य तं ततः॥ ९५ ॥

वीक्षांचक्रुः समासीनं विषमे गिरिगह्वरे ॥

तेजोहीनं तथा दीनं ब्रह्महत्यापरिप्लुतम् ॥ ९६ ॥

गात्रदुर्गंधितासंगैः पूरयन्तं दिशो दश ॥ ९७ ॥

अथोवाच चतुर्वक्त्रो दृष्ट्वा शक्रं तथाविधम् ॥

समस्तान्देवसंघातान्दूरस्थः पापशंकया ॥ ९८ ॥

शक्रोऽयं विबुधश्रेष्ठा ब्रह्महत्यापरिप्लुतः ।

तस्मातत्त्याज्यः सुदूरेण नो चेत्पापमवाप्स्यथ ॥ ९९ ॥

पश्यध्वं सर्वलिंगानि ब्रह्महत्यान्वितानि च ॥

अस्य गात्रेषु दृश्यंते तस्माद्गच्छामहे दिवि ॥ ६.८.१०० ॥

पितामहमुखान्दृष्ट्वा देवान्प्राप्तान्सुराधिपः ॥

पराङ्मुखानकस्माच्च संजातान्विस्मयान्वितः ॥॥॥।

ततः प्रोवाच संभ्रांतः किमिदं गम्यते सुराः ॥

दृष्ट्वापि मामनाभाष्य कच्चित्क्षेमं गृहे मम ॥ १०२ ॥

कच्चित्स निहतस्तेन मम वज्रेण दानवः ॥

कच्चिन्न मां स युद्धार्थमन्वेष यति दुर्मतिः ॥ १०३ ॥

॥ ब्रह्मोवाच ॥ ॥

निहतः स त्वया शक्र तेन वज्रेण दानवः ॥

गतो मृत्युवशं पापो न भयं कर्तुमर्हसि ॥ १०४ ॥

परं तस्य वधाज्जाता ब्रह्महत्या सुगर्हिता ॥

तव शक्र न तेनाद्य स्पृशामोऽस्पृश्यतां गतम् ॥ १०५ ॥

॥ इन्द्र उवाच ॥ ॥

मया विनिहताः पूर्वं बहवः किल दानवाः ॥

ब्रह्महत्या न संजाता मम हत्याधुना कथम् ॥ १०६ ॥

॥ ब्रह्मोवाच ॥ ॥

ते त्वया निहता युद्धे क्षात्रधर्मेण वासव ॥

विशुद्धा दानवाः सर्वे तेन जातं न पातकम् ॥ १०७ ॥

एष यज्ञोपवीताढ्यो विशेषात्तपसि स्थितः।

छलेन निहतः शक्र तेन त्वं पापसंयुतः ॥ १०८ ॥ ॥

॥ इन्द्र उवाच ॥ ॥

जानाम्यहं चतुर्वक्त्र स्वं कायं पापसंयुतम् ॥

चिह्नैर्ब्रह्मवधोद्भूतैस्तस्माच्छुद्धिं वदस्व मे ॥ १०९ ॥

यया याति द्रुतं पापं ब्रह्महत्यासमुद्भवम् ॥

स्पृश्यो भवामि सर्वेषां देवानां प्रपितामह ॥ ६.८.११० ।

॥ ब्रह्मोवाच ॥ ॥

तीर्थयात्रां सुरश्रेष्ठ तदर्थं कर्तुमर्हसि ।

तया विना न ते पापं नाशमायाति कृत्स्नशः ॥ १११ ॥

॥ सूत उवाच ॥ ॥

ततस्तद्वचनाच्छक्रस्तीर्थयात्रापरायणः ॥

बभ्राम सकलां पृथ्वीं स्नानं कुर्वन्पृथक्पृथक् ॥ ११२ ॥

तीर्थेषु सुप्रसिद्धेषु नदीनदयुतेषु च ॥

वाराणस्यां प्रयागे च प्रभासे कुरुजांगले ॥ ११३ ॥

तथान्येषु सहस्राक्षो विपाप्मा न व्यजायत ॥
ततो वैराग्यमापन्नश्चिन्तयामास चेतसि ॥।१४॥
अहं स्नातः समस्तेषु तीर्थेषु धरणीतले॥
न च पापेन निर्मुक्तः किं करोमि च सांप्रतम् ॥ ११५ ॥
किं पतामि गिरेः शृंगाद्विषं वा भक्षयामि किम् ॥
त्रैलोक्यराज्यविभ्रष्टो नाहं जीवितुमुत्सहे ॥ ११६ ॥
एवं वैराग्यमापन्नो गिरिमारुह्य वासवः ॥
यावत्क्षिपति चात्मानं मरणे कृतनिश्चयः । ११७ ॥
तावद्देवोत्थिता वाणी गगनाद्द्विजसत्तमाः ॥
मा शक्र साहसं कार्षीर्वैराग्यं प्राप्य चेतसि ॥ ११८ ॥
त्वया राज्यं प्रकर्तव्यं स्वर्गेऽद्यापि युगाष्टकम् ॥
तस्मात्पापविशुद्ध्यर्थं शृणु शक्र समा हितः ॥ ११९ ॥
कुरुष्व वचनं शीघ्रं भावनीयं न चान्यथा ॥
यत्त्वया पांसुभिः पूर्वं विवरं परिपूरितः ॥ ६.८.१२० ॥
हाटकेश्वरजे क्षेत्रे यत्र देवः स्वयं हरः ॥
तत्र नागबिलो जातो वल्मीकात्त्रिदशाधिप ॥ १२१ ॥
येन नागा धरापृष्ठे निर्गच्छंति व्रजंति च ॥
तेन मार्गेण गत्वा त्वं पाताले हाटकेश्वरम् ॥
स्नात्वा पातालगंगायां पूजयस्व महेश्वरम् ॥ १२२ ॥
ततः पापविनिर्मुक्तो भविष्यसि न संशयः ॥
संप्राप्स्यसि च भूयोऽपि देवराज्यमकण्टकम् ॥ १२३ ॥
॥ सूत उवाच ॥ ॥
अथ शक्रः समाकर्ण्य तां गिरं गगनोत्थिताम् ॥
जगाम सत्वरं तत्र यत्र नागबिलः स च ॥ १२४ ॥
ततः प्रविश्य पातालं गंगातोयपरिप्लुतः ॥
पूजयामास तल्लिंगं हाटकेश्वरसंज्ञितम् ॥ १२५ ॥
अथ तस्य क्षणाज्जातं शरीरं मलवर्जितम् ॥
दुर्गन्धश्च गतो नाशं तेजोवृद्धिर्बभूव ह ॥ १२६ ॥

एतस्मिन्नंतरे प्राप्ता ब्रह्मविष्णुमुखाः सुराः ॥

प्रोचुश्च देवराजं तं मुक्तपापं प्रहर्षिताः ॥ १२७ ॥

प्राप्तस्तु मेध्यतां शक्र विमुक्तो ब्रह्महत्यया ॥

तस्मादागच्छ गच्छामः सहितास्त्रिदशालयम् ॥ १२८ ॥

एतन्नाग बिलं शक्र पुनः पूरय पांसुभिः ॥

नो चेदागत्य चानेन मानुषाः सिद्धिहेतवः ॥ १२९ ॥

एतल्लिंगं समभ्यर्च्य स्नात्वा भागीरथीजले ॥

अपि पापसमायुक्ता यास्यंति परमां गतिम् ॥ ६.८.१३० ॥

ततस्ते त्रिदशाः सर्वे स च देवं शतक्रतुः ॥

प्रणिपत्य पुनः प्रोच्चैः प्रजग्मुस्त्रिदशालयम् ॥।३॥।

ततो जज्ञे महांस्तत्र स्वर्गे वृत्रवधोत्सवः ॥

देवेन्द्रत्वमनुप्राप्ते पुनः शक्रे द्विजोत्तमाः ॥ १३२ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं हाटकेश्वरसंभवम् ॥

माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ १३३ ॥

यश्चैतत्कीर्तयेद्भक्त्या शृणोति च समाहितः ॥

स याति परमं स्थानं जरा मरणवर्जितम्॥ १३४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वृत्रवधवर्णनंनामाष्टमो ऽध्यायः ॥ ८ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ००९



॥ सूत उवाच ॥ ॥

अथ शक्रः समाहूय प्रोचे संवर्तकानिलम् ॥

हाटकेश्वरजेक्षेत्रे महान्नागबिलोऽस्ति वै ॥ १ ॥

तं पूरय ममादेशाद्द्रुतं गत्वाऽभिपांसुभिः ॥

येन न स्याद्गतिस्तत्र कस्यचिन्मृत्युधर्मिणः ॥२॥

॥ वायुरुवाच ॥ ॥

तवादेशान्मया पूर्वं पूरितो विवरो यदा ॥।

लिंगोद्भवस्तदा शापः प्रदत्तो मे पुरारिणा ॥ ३ ॥

यस्माल्लिंगं ममैतद्वै त्वया पांसुभिरावृतम् ॥

तस्मात्समानधर्मा त्वं गन्धवाहो भविष्यसि ॥ ४ ।

यद्वत्कर्पूरजं गन्धं समग्रं त्वं हि वक्ष्यसि ॥

अमेध्यसंभवं तद्वन्मम वाक्यादसंशयम् ॥५॥

तस्मात्कुरु प्रसादं मे विदित्वैतत्सुरेश्वर ॥

कृत्येऽस्मिन्स्म र्यतामन्यस्त्रिपुरारेर्बिभेम्यहम् ॥६॥

ततः संचिंतयामास पूरणं त्रिदशाधिपः ॥

तस्य नागबिलस्यैव नैव किंचिदवैक्षत ॥७॥

ततस्तं प्राह देवेज्यःस्वय मेव शतक्रतुम् ॥

कस्मात्त्वं व्याकुलीभूतः कृत्येऽस्मिंस्त्रिदशाधिप ॥ ८ ॥

अस्ति पर्वतमुख्योऽत्र नाम्ना ख्यातो हिमालयः ॥

तस्य पुत्रत्रयं जातं तच्च शक्र शृणुष्व मे ॥ ९ ॥

मैनाकः प्रथमः प्रोक्तो द्वितीयो नंदिवर्धनः॥

रक्तशृंगस्तृतीयस्तु पर्वतः परिकीर्तितः ॥ ६.९.१० ॥

स मैनाकः समुद्रांतः प्रविष्टः शक्र ते भयात् ॥

पक्षाभ्यां सहितोऽद्यापि स तत्रैव व्यवस्थितः ॥ ११ ॥

नंदिवर्धन इत्येष द्वितीयः परिकीर्तितः ॥
वसिष्ठाश्रमजो रन्ध्रस्ते न कृत्स्नः प्रपूरितः ॥ १२ ॥
हिमाचलसमादेशाद्वसिष्ठस्य च सन्मुनेः ॥
देवभूमिं परित्यज्य स गतस्तत्र सत्वरम् ॥ १३ ॥
तृतीयस्तिष्ठतेऽद्यापि रक्तशृंगः स्मृतोऽत्र यः ॥
तमानय सहस्राक्ष बिलं सार्पं प्रपूरय ॥ १४ ॥
नान्यथा पूरितुं शक्यो बिलोऽयं त्रिदशाधिप ॥
तं मुक्त्वा पर्वत श्रेष्ठं सत्यमेतन्मयोदितम् ॥ १५ ॥
॥ सूत उवाच ॥
तच्छ्रुत्वा देवपूज्यस्य वचनं त्रिदशाधिपः ॥
जगाम सत्वरं तत्र स यत्रास्ते हिमालयः ॥ ॥ १६ ॥
ततः प्रोवाच तं गत्वा सामपूर्वमिदं वचः ॥
हिमाचलं गिरिश्रेष्ठं सिद्धचारणसेवितम् ॥ १७ ॥
॥ इन्द्र उवाच ॥ ॥
हाटकेश्वरजे क्षेत्रे महान्नागबिलः स्थितः ॥
तेन गत्वा नरा देवं पाताले हाटकेश्वरम् ॥ १८ ॥
पूजयिष्यंति ये केचिदपि पापपरायणाः ॥
मया सार्धं करिष्यंति ततः स्पर्द्धां नगोत्तम ॥ १९ ॥
तस्मात्पुत्रमिमं तत्र रक्तशृंगं हिमालय ॥
प्रेषयस्व बिलो येन पूर्यते सोऽहिसंभवः ॥ ६.९.२० ॥
कुरुष्व त्वं ममातिथ्यं गृहप्राप्तस्य पर्वत ॥
आत्मपुत्रप्रदानेन कीर्तिं प्राप्स्यस्यलौकिकीम् ॥ २१ ॥
बाढमित्येव सोऽप्युक्त्वा पूजयित्वा च देवपम् ॥
ततः प्रोवाच तं पुत्रं रक्तशृंगं हिमालयः ॥ २२ ॥
तवार्थाय सहस्राक्षः पुत्र प्राप्तो ममांतिकम् ॥
तस्माद्गच्छ द्रुतं तत्र यत्र नागबिलः स्थितः ॥ २३ ॥
पूरयित्वा ममादेशात्तं त्वं शक्रस्य कृत्स्नशः ॥
सुखी भव सहानेन तथान्यैः सुरसत्तमैः ॥ २४ ॥

॥ रक्तशृंग उवाच ॥ ॥

नाहं तत्र गमिष्यामि मर्त्य भूमौ कथंचन ॥

यत्र कण्टकिनो वृक्षा रूक्षाः फलविवर्जिताः ॥ २५ ॥

न सिद्धा न च गंधर्वा न देवा न च किंनराः ॥

न च तीर्थानि रम्याणि न नद्यो विमलोदकाः ॥ २६ ॥

तथा पापसमाचारा मनुष्याः शीलवर्जिताः ॥

दुष्टचित्ताः सदा सर्वे तिर्यग्योनिगता अपि ॥ २७ ॥

तथा मम नगश्रेष्ठ पक्षौ द्वावपि कर्तितौ ॥

शक्रेण तेन नो शक्तिर्गंतुमस्ति कथंचन ॥ २८ ॥

तस्मात्कंचित्सहस्राक्ष उपायं तत्कृते परम् ॥

चिंतयत्वेव मां मुक्त्वा सत्यमेतन्मयोदितम् ॥ २९ ॥

॥ शक्र उवाच॥ ॥

अह त्वां तत्र नेष्यामि स्वहस्तेन विदारितम् ॥

तत्रापि सुशुभा वृक्षा भविष्यंति तवाश्रयाः ॥ ६.९.३० ॥

तथा पुण्यानि तीर्थानि देवतायतनानि च ॥

समंतात्ते भविष्यंति मुनीनामाश्रमास्तथा ॥ ३१ ॥

अत्रस्थस्य प्रभावो यस्तव पर्वत नंदन ॥

मद्वाक्यात्तत्र संस्थस्य कोटिसंख्यो भविष्यति ॥ ३२ ॥

तथा ये मानवास्तत्र पापात्मानोऽपि भूतले ॥

विपाप्मानो भविष्यंति सहसा तव दर्शनात् ॥ ३३ ॥

तस्माद्गच्छ द्रुतं तत्र मया सार्धं नगात्मज ॥

न चेद्वज्रप्रहारेण करिष्यामि सहस्रधा ॥ ३४ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा रक्तशृंगो भयान्वितः॥

प्रविष्टः सहसागत्य तस्मिन्नागबिले गतः ॥ ३५ ॥

निमग्नो ब्राह्मणश्रेष्ठा नासाग्रं यावदेव हि ॥

शृंगैर्मनोरमैस्तुं गैः समग्रैः सहितस्तदा ॥

वृक्षगुल्मलताकीर्णै रम्यपक्षिनिषेवितैः ॥ ३६ ॥

एवं संस्थाप्य तं शक्रो हिमाचलसुतं नगम् ॥

ततः प्रोवाच सहृष्टो वरो मत्तः प्रगृह्यताम् ॥ ३७ ॥

॥ रक्तशृंग उवाच ॥ ॥

एष एव वरोऽस्माकं यत्त्वं तुष्टः सुरेश्वर ॥

किं वरेण करिष्यामि त्वत्प्रसादादहं सुखी ॥ ३८ ॥ ॥

॥ इन्द्र उवाच ॥ ॥

न वृथा दर्शनं मे स्यादपि स्वप्ने नगात्मज ॥

किं पुनर्दर्शने जाते कृते कृत्ये विशेषतः॥३९॥

॥ रक्तशृंग उवाच ॥ ॥

अवश्यं यदि देयो मे वरः सर्वसुराधिप ॥

विभवो मे द्विजार्थाय सर्वः स्यात्सर्वदा विभो ॥६.९.४॥।

॥ इन्द्र उवाच ॥ ॥

भविष्यति महीपालश्चमत्कार इति स्मृतः ॥

तव मूर्धनि विप्रार्थं स पुरं स्थापयिष्यति ॥ ४१ ॥

तत्र ब्राह्मणशार्दूला वेदवेदांगपारगाः॥

विभवं तव निःशेषं भजिष्यंति प्रहर्षिताः ॥ ४२ ॥

तथाहं चैत्रमासस्य चतुर्दश्यां नगात्मज॥

कृष्णायां स्वयमागत्य शृंगे मुख्यतमे तव॥४३॥

पूजयिष्यामि देवेशं हाटकेश्वरसंज्ञितम् ॥

सर्वैर्देवगणैः सार्धं तथा किंनरगुह्यकैः ॥४४॥

तमेकं दिवसं चात्र शृंगे तव हरः स्वयम्॥

अस्माभिः सहितस्तुष्टो निवासं प्रकरिष्यति ॥ ४५ ॥

प्रभावस्तेन ते मुख्य स्त्रैलोक्येऽपि भविष्यति ॥

स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदिवालयम्॥४६॥

॥ सूत उवाच ॥॥

एवमुक्त्वा सहस्राक्षस्ततः प्राप्तस्त्रिविष्टपम्॥

रक्तशृंगोऽपि तस्थौ च व्याप्य नागबिलं तदा ॥४७॥

तस्योपरि सुमुख्यानि तीर्थान्यायतनानि च ॥

संजातानि मुनीनां च संजाताश्च तथाऽऽश्रमाः ॥ ॥४८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागबिलपूर्तिवर्णनंनाम नवमोऽध्यायः॥९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१०

https://sa.wikisource.org/s/fh0
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥

आनर्त्ताधिपतिर्भूपश्चमत्कार इति स्मृतः ॥

एतस्मिन्नंतरे प्राप्तस्तत्र हंतुं वने मृगान् ॥॥।

स ददर्श मृगीं दूरान्निश्चलांगीं तरोरधः ॥

स्तनं सुताय यच्छंतीं विश्वस्तामकुतोभयाम् ॥ २ ॥

अथ तां पार्थिवस्तूर्णं शरेणानतपर्वणा ॥

जघानाकर्णकृष्टेन मर्मस्थाने प्रहर्षितः ॥ ३ ॥

सहसा सा हता तेन गार्द्ध्रपत्रेण पत्रिणा ॥

दिशो विलोकयामास समंताद्व्यथयार्दिता ॥ ४ ॥

अथ दृष्ट्वा महीपालं नातिदूरे धनुर्धरम् ॥

प्रोवाचाश्रुपरिक्लिन्नवदना सुतवत्सला ॥ ५ ॥

॥ मृग्युवाच ॥ ॥

अयुक्तं पृथिवीपाल यत्त्वयैतदनुष्ठितम् ॥

हताऽहं बालवत्साऽद्य शरेणानतपर्वणा ॥६॥

नाऽहं शोचामि भूपाल मरणं स्वशरीरगम् ॥

यथेमं वालकं दीनं क्षीरास्वादनलंपटम् ॥ ७ ॥

यस्मात्त्वयेदृशं कर्म निर्दयं समनुष्ठितम् ॥

कुष्ठव्याधिसमायुक्तस्तस्मात्सद्यो भविष्यसि ॥ ८ ॥

॥ राजोवाच ॥ ॥

स्वधर्म एष भूपानां कुर्वंति मृगसंक्षयम् ॥

तस्मात्स्वधर्मसंयुक्तं न मां त्वं शप्तुमर्हसि ॥ ९ ॥

॥ मृग्युवाच ॥ ॥

सत्यमेतन्महीपाल यत्त्वया परिकीर्तितम् ॥

क्षत्त्रियाणां वधार्थाय मृगाः सृष्टाः स्वयंभुवा ॥ ६.१०.१०॥

परं तेन विधिस्तेषांकृतो यस्तं महीपते ॥

शृणुष्वाऽवहितो भूत्वा वदंत्या मम सांप्रतम् ॥ ११ ॥
सुप्तं मैथुनसंयुक्तं स्तनपानक्रियोद्यतम् ॥
हत्वा मृगं जलासक्तं नरः पापेन लिप्यते ॥ १२ ॥
एतस्मात्कारणाच्छापस्तव दत्तो मया नृप ॥
न कामतो न मृत्योर्वा सत्येनात्मानमालभे ॥ १३ ॥
एवमुक्त्वा मृगी प्राणान्सा मुमोच व्यथान्विता ॥
कुष्ठव्याधिसमायुक्तः सोऽपि राजा बभूव ह ॥ १४ ॥
स दृष्ट्वा कुष्ठसंयुक्तं पार्थिवः स्वं कलेवरम्॥
ततः स्वान्सेवकानाह समाहूय सुदुःखितः ॥ १५ ॥
अहं तपश्चरिष्यामि पूजयिष्यामि शंकरम् ॥
तावद्यावत्प्रणाशो मे कुष्ठव्याधेर्भविष्यति ॥ १६ ॥
यत्किंचित्त्रिषु लोकेषु प्रार्थयंति नराः सुखम् ॥
तत्सर्वं तपसा साध्यं तस्मात्कार्यं मया तपः ॥ १७ ॥
अधुनैकोऽहमैकाहमेकैकस्मिन्वनस्पतौ ॥
चरन्भैक्षं तु नियमैश्चरिष्यामि धरातले॥१८॥
पांसुना समवच्छन्ने शून्यागारे प्रतिश्रयः ॥
वृक्षमूलनिकेते वा मुक्तसर्वप्रियाप्रियः ॥१९॥
समः शत्रुषु मित्रेषु समलोष्टाश्मकांचनः ॥
भूत्वा कालं नयिष्यामि यावत्कालस्य संस्थितिः ॥६.१०.२०॥
एवं तान्सेवकान्भूपः सोऽभिधाय विसृज्य च ॥
तीर्थयात्रा परो भूत्वा बभ्राम वसुधातले॥२१॥
ततः कालेन महता प्राप्य विप्रसमुद्भवम् ॥
उपदेशं नृपः प्राप्तः शंखतीर्थं महोदयम्॥२२॥
हाटकेश्वरजे क्षेत्रे सर्वव्याधिविनाशकम् ॥
विख्यातं त्रिषु लोकेषु पूरितं स्वच्छवारिणा ॥ २३ ॥
तत्राऽसौ स्नानमात्रेण तत्क्षणात्पार्थिवोतमः ॥
कुष्ठव्याधिवि निर्मुक्तः संजातः सुमहाद्युतिः ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शंखतीर्थमाहात्म्ये चमत्कारनृपतिकुष्ठनिर्वृत्तिवृत्तान्तवर्णनंनाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०११

https://sa.wikisource.org/s/fzr
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

ऋषय ऊचुः ॥ ॥

चमत्कारः कथं राजा मुक्तः कुष्ठेन सूतज ॥

कथं तेन तपस्तप्तं कियत्कालं च भूभुजा ॥ १ ॥

कतमे ब्राह्मणास्ते वै शंखतीर्थं प्रदर्शितम् ॥

यैस्तस्य रोगमुक्त्यर्थं दुःखितस्य महात्मनः ॥ २ ॥

कतमं शंखतीर्थं तत्कस्मिन्स्थाने व्यवस्थितम् ॥

किंप्रभावं च निःशेषं सर्वं विस्तरतो वद ॥ ३ ॥

॥ सूत उवाच ॥ ॥

अहं वः कीर्तयिष्यामि कथामेतां मनोहराम् ॥

सर्वपापहरां विप्राश्चमत्कारनृपोद्भवाम् ॥ ४ ॥

स भ्रांतः सर्वतीर्थानि प्रभासाद्यानि कृत्स्नशः ॥

तपस्वी नियताहारो भिक्षान्नकृतभोजनः ॥५॥

पृच्छमानो भिषग्मुख्यानौषधानि मुहुर्मुहुः ॥

मंत्रान्मंत्रविदश्चैव रोगनाशाय नित्यतः ॥ ॥ ६ ॥

न लेभे किंचिदिष्टं वा स मंत्रं भेषजं च वा ॥

तीर्थं वा नृपशार्दूलो येन स्याद्व्याधिसंक्षयः ॥ ७ ॥

ततश्च पार्थिवश्रेष्ठो वैराग्यं परमं गतः ॥

एकाकी यतचित्तात्मा सर्वसत्त्वविराजिते ॥ ९७ ॥

निवासमकरोत्तस्मिन्क्षेत्रे पुण्यतमे चिरम् ॥

शीर्णपर्णफलाहारो भूमौ शेते सदा निशि ॥

अन्य स्याऽन्यस्य वृक्षस्य मदाहंकारवर्जितः ॥ ९ ॥

ततः कतिपयाहस्य भ्रममाणो महीपतिः ॥

सोऽपश्यद्ब्राह्मणश्रेष्ठांस्तीर्थयात्राश्रयान्बहून् ॥ 6.11.१० ॥

ततः प्रणम्य तान्विप्रानुपविष्टान्धरातले ॥

विश्वामित्राश्रमस्यांते प्रोवाच विनयान्वितः ॥।॥

॥ राजोवाच ॥ ॥

अहं नाम्ना चमत्कारः पार्थिवः सूर्यवंशजः ॥

आनर्त्ताधिपतिर्व्याप्तः कुष्ठेन द्विजसत्तमाः ॥।२॥

अस्ति कश्चिदुपायोऽत्र दैवो वा मानुषोऽपि वा ॥

भेषजं वाऽथ मंत्रो वा येन कुष्ठं प्रशाम्यति ॥ १३ ॥

ममोपरि दयां कृत्वा वदध्वं द्विजसत्तमाः ॥

कुष्ठग्रस्तशरीरं च परं कृच्छ्रमुपागतम् ॥।४॥

अथवा वित्थ नो यूयं त्यक्ष्यामीह कलेवरम् ॥

प्रविश्याग्निं जलं वाऽपि भक्षयित्वाऽथ वा विषम्॥ १५ ॥

तस्य तद्वचनं श्रुत्वा सर्वे ते द्विजसत्तमाः ॥

प्रोचुः कृपासमाविष्टास्ततस्तं पृथिवीश्वरम् ॥ १६ ॥

अस्ति पार्थिवशार्दूल स्थानादस्माददूरतः ॥

शंखतीर्थमिति ख्यातं सर्वरोगक्षयावहम् ॥ १७ ॥

ये नरा व्याधिना ग्रस्ताः काणाश्चांधास्तथा जडाः ॥

हीनांगाश्चाऽधिकांगाश्च कुरूपा विकृताननाः ॥ १८ ॥

तेऽपि चैत्रस्य कृष्णादौ स्नातास्तत्राकृताशनाः ॥

भवंति नीरुजः सद्यश्चित्रासंस्थे निशाकरे ॥ १९ ॥

अस्माभिः शतशो दृष्टा द्वादशार्कसमप्रभाः ॥

कामदेवसमाकारास्तेजोवीर्यसमायुताः ॥ 6.11.२० ॥

॥ ॥ राजोवाच ॥ ॥

शंखतीर्थं कथं ज्ञेयं मया ब्राह्मणसत्तमाः ॥

कथं चैव समुत्पन्नं वदध्वं मम विस्तरात् ॥ २१ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

आसीत्पूर्वं मुनिश्रेष्ठो लिखिताख्यो महीतले ॥

शांडिल्यस्य मुनेः पुत्रस्तपोवीर्यसमन्वितः ॥ २२ ॥

अथ तस्यानुजो जज्ञे शंखाख्यो धर्मशास्त्रवित् ॥

कन्दमूलफलाहारः सदैव तपसि स्थितः ॥ २३ ॥

कस्यचित्त्वथ कालस्य लिखितस्याऽऽश्रमं ययौ ॥

शंखः स्वादुफलार्थाय पीडितोतिबुभुक्षया ॥ २४ ॥

स शून्यमाश्रमं प्राप्य लिखितस्य महात्मनः ॥

आत्मीयानीति मन्वानः फलानि जगृहे ततः ॥ २५ ॥

भक्षयामास भूरीणि पक्वानि मधुराणि च ॥

एतस्मिन्नन्तरे प्राप्तो लिखितः शिष्यसंयुतः ॥२६ ॥

स गृहीतफलं दृष्ट्वा शंखं प्रोवाच कोपतः ॥ २७ ॥

अदत्तानि मया पाप फलानि हृतवानसि ॥

कस्मात्त्वं चौर्यरूपेण नानुबन्धमवेक्षसे ॥ २८ ॥

॥ शंख उवाच ॥॥ ॥ ॥

सत्यमेतद्द्विजश्रेष्ठ यत्त्वया परिकीर्तितम् ॥

फलानि प्रगृहीतानि विजनेऽत्र तवाश्रमे ॥ २९ ॥

तस्मात्कुरु यथार्हं मे निग्रहं चौर्यसंभवम् ॥।

इह लोकः परश्चैव येन मे स्यात्सुखावहः ॥ 6.11.३० ॥

ततः स हस्तमादाय हस्ते शंखस्य तत्क्षणात् ॥

चकर्त कोपमाविष्टो वार्यमाणोऽपि तापसैः ॥। ॥ ३१ ॥

छिन्नहस्तोऽपि शंखस्तु तपश्चक्रे सुदारुणम् ॥

विशेषेण समासाद्य स्वाश्रमे भूय एव तु ॥ ३२ ॥

ततस्तुष्टो महादेवस्तस्य कालेन केन चित् ॥

प्रोवाच दर्शनं गत्वा तं च शंखमुनीश्वरम् ॥ ३३ ॥

॥ महेश्वर उवाच ॥ ॥

भोभो मुने महासत्त्व दुष्करं कृतवानसि ॥

वरं गृहाण मत्तस्त्वं मनसा समभीप्सितम्॥ ३४ ॥

॥ शंख उवाच ॥ ॥

यदि तुष्टोसि मे देव वरं चेद्यच्छसि प्रभो ॥

स्यातां मे तादृशौ हस्तौ भूयोऽपि सुरसत्तम ॥ ३५ ॥

तथेदं मम नामांकं तीर्थं स्यात्सुरसत्तम ॥

विख्यातं सर्वलोकेषु सर्वपापहरं नृणाम् ॥ ३६ ॥

हीनांगो वाधिकांगो वा व्याधिना ग्रस्त एव च ॥

अत्र स्नानं करोत्याशु स भूयः स्यात्पुनर्नवः ॥ ३७ ॥

॥ भगवानुवाच ॥ ॥

एतत्तीर्थं तु विख्यातं तव नाम्ना भविष्यति ॥

अद्यप्रभृति विप्रेन्द्र देहिनां पापनाशनम् ॥ ३८ ॥

हीनांगो वाधिकांगो वा योऽत्र स्नानं करिष्यति ॥

चैत्रे शुक्ले निराहारश्चित्रासंस्थे निशाकरे ॥

सुवर्णांगः स तेजस्वी भविष्यति न संशयः ॥ ३९ ॥

सकामो यदि विप्रेंद्र ध्यायमानः सुरूपताम् ॥

निष्कामो वा परं स्थानं गमि ष्यति शिवात्मकम्॥ 6.11.४० ॥

अत्र श्राद्धे कृते ब्रह्मंश्चतुर्दश्यां निशाकरे ॥

चित्रास्थिते प्रयास्यंति पितरस्तृप्तिमुत्तमाम् ॥ ४१ ॥

अद्यैव विप्रशार्दूल चैत्रशुक्लांत उत्तमः ॥

अपराह्ले निशानाथश्चित्रायोगं प्रयास्यति ॥ ४२ ॥

तत्रोपवासयुक्तस्य सम्यक्स्नातस्य तत्क्षणात् ॥

स्यातां हस्तौ सुरूपाढ्यौ यथा पूर्वं तथा हि तौ ॥ ४३ ॥

एवमुक्त्वा स भगवांस्ततश्चादर्शनं गतः ॥

शंखोऽपि कुतपे काले तत्र स्नानमथाकरोत् ॥ ४४ ॥

ततश्च तत्क्षणाज्जातौ हस्तौ तस्य यथा पुरा ॥

रक्तोत्पलनिभौ कांतौ मत्स्यचिह्नेन चिह्नितौ ॥ ४५ ॥

॥ब्राह्मणा ऊचुः॥

एवं तद्धरणीपृष्ठे तीर्थं जातं नृपोत्तम ॥

प्रभावाद्देवदेवस्य चंद्रांकस्य शुभावहम् ॥ ४६ ॥

तस्मात्त्वमपि राजेंद्र तत्र स्नानं समाचर ॥

चैत्रे शुक्लचतुर्दश्यां चित्रासंस्थे निशाकरे ॥ ॥ ४७ ॥

भविष्यसि न संदेहः सर्वरोगविवर्जितः॥

वयं ते दर्शयिष्यामः प्राप्ते काले यथोदिते ॥४८॥

॥ सूत उवाच ॥ ॥

ततः कतिपयाहेन चैत्रकृष्णादिरागतः ॥
चित्रासंस्थे निशानाथे संप्राप्ता च चतुर्दशी ॥ ४९ ॥
ततस्ते ब्राह्मणा भूपं समादाय च तत्क्षणात् ॥
शंखतीर्थं समुद्दिश्य गतास्तस्य हितैषिणः ॥ 6.11.५० ॥
ततः स मनसि ध्यात्वा कुष्ठव्याधिपरिक्षयम् ॥
स्नानं चक्रे यथान्यायं श्रद्धया परया युतः ॥ ५१ ॥
ततः कुष्ठविनिर्मुक्तो द्वादशार्कसमप्रभः ।
निष्क्रांतः सलिलात्तस्माद्धर्षेण महतान्वितः ॥ ५२ ॥
ततः प्रणम्य तान्सर्वान्ब्राह्मणान्वेदपारगान् ॥
कृतांजलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥ ५३ ॥
प्रसादेन हि युष्माकं मुक्तोऽहं ब्राह्मणोत्तमाः ॥
कुष्ठव्याधेर्महाकालं गर्हितोस्म्येव देहिनाम् ॥ ५४ ॥
तस्मान्नाहं करिष्यामि राज्यं ब्राह्मणसत्तमाः ॥
तीर्थेऽत्रैवाधुना नित्यं चरिष्यामि महत्तपः ॥ ५५ ॥
एतद्राज्यं च देशं च हस्त्यश्वादि तथापरम् ॥
यत्किंचिद्विद्यते मह्यं तद्गृह्णंतु द्विजोत्तमाः ॥ ५६ ॥
ममैवानुग्रहार्थाय दयां कृत्वा बृहत्तराम् ॥
दीनस्य भक्तियुक्तस्य विरक्तस्य विशेषतः ॥ ५७ ॥ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
न वयं रक्षितुं शक्ता राज्यं पार्थिवसत्तम ॥
तत्किं तेन गृहीतेन येन स्याद्राज्यविप्लवः ॥ ५८ ॥
जामदग्न्येन रामेण पुरा दत्ता वसुन्धरा ॥
त्रिःसप्त क्षत्रियैर्हीनां कृत्वास्माकं नृपोत्तम ॥ ५९ ॥
सा भूयोपि हृताऽस्माकं क्षत्रियैर्बलवत्तरैः॥
तिरस्कृत्य द्विजान्सर्वांल्लीलयापि मुहुर्मुहुः ॥ 6.11.६० ॥
॥ राजोवाच ॥ ॥
अहं वः प्रकरिष्यामि रक्षां ब्राह्मणसत्तमाः ॥
तपस्थितोऽपि कार्येऽत्र न भीः कार्या कथंचन ॥ ६१ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

अवश्यं यदि ते श्रद्धा विद्यते दानसंभवा ।

क्षेत्रेऽत्रापि महापुण्ये कृत्वा देहि पुरोत्तमम् ॥ ॥। ६२ ॥

सर्वेषां ब्राह्मणेंद्राणां प्राकारपरिखान्वितम् ॥

सुखेन येन तिष्ठामः स्नात्वा तीर्थैः पृथग्विधैः ॥

गृहस्थधर्मिणः सर्वे स्वाध्यायनिरता सदा । ६३ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा स महीपालस्तथेत्युक्त्वा प्रहर्षितः ॥

नगरं कल्पयामास स्थाने तत्र महत्तमम् ॥ ६४ ॥

प्राकारेण सुतुंगेन परिखाद्येन सर्वतः ॥

आयामव्यासतश्चैव क्रोशमात्रं मनोहरम् ॥ ६५ ॥

त्रिकचत्वरसंशुद्धं शोभितं सर्वतो ध्वजैः ॥

प्रासादैः प्रोन्नतैः कान्तैः समंतात्सुधया वृतैः ॥ ६६ ॥

मत्तवारणकोपेतैर्बहुभिर्भूभिरेव च ॥

संपूर्णं सत्यकामाद्यैः साधुलोकप्रशंसितैः ॥ ६७ ॥

ततो गृहाणि सर्वाणि पूरयित्वा स भूमिपः ॥

सुवर्णमणिमुक्तादिपदार्थैरपरैरपि ॥ ६८ ॥

ब्राह्मणेभ्यः कुलीनेभ्यो वेदविद्भ्यो विशेषतः ॥

श्रोत्रियेभ्यश्च दांतेभ्यः स तु श्रद्धासमन्वितः ॥ ६९ ॥

यथाज्येष्ठं यथाश्रेष्ठं प्रक्षाल्य चरणौ ततः ॥

शास्त्रोक्तेन विधानेन प्रददौ द्विजसत्तमाः ॥ 6.11.७० ॥

इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शंखतीर्थोत्पत्तिमाहात्म्यवर्णने चमत्कारभूपतिना व्राह्मणेभ्यो नगरदानवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१२

https://sa.wikisource.org/s/fgs
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं स वसुधापालो ब्राह्मणेभ्यः स्वशक्तितः ॥

ददौ तु नगरं कृत्वा पुरंदरपुरोपमम् ॥ १ ॥

मुक्ताप्रवालवैडूर्यरत्नहेमविचित्रितैः ॥

भ्राजमानं गृहश्रेष्ठैर्द्यौर्नक्षत्रगणैरिव ॥२॥

प्रासादैः स्फाटिकैश्चैव कैलासशिखरोपमैः ॥

पताकाशोभितैर्दिव्यैः समंतात्परिवारितम् ॥ ३ ॥

कांचनैः सुविचित्रैश्च प्रोन्नतैरमलैः शुभैः ॥

तोरणानां सहस्रैश्च शोभितं सुमनोहरम् ॥। ॥ ४ ॥

मणिसोपानशोभाभिर्दीर्घिकाभिः समंततः ॥

आरामकूपयंत्राद्यैः सर्वोपकरणैर्युतम् ॥

निवेद्य ब्राह्मणेंद्राणां कृतकृत्यो बभूव सः॥ ५ ॥।

शंखतीर्थे स्थितो नित्यं समाहूय ततः सुतान्॥

पुत्रान्पौत्रांस्तथा भृत्यान्वाक्यमेतदुवाच ह ॥ ६ ॥

एतत्पुरं मया कृत्वा ब्राह्मणेभ्यो निवेदितम् ॥

भवद्भिर्मम वाक्येन रक्षणीयं प्रयत्नतः । ७ ॥

यथा स्युर्ब्राह्मणाः सर्वे सुखिनो हृष्टमानसाः ॥

युष्माभिः पालनं कार्यं तथा सर्वैः समाहितैः॥

यश्चैतान्भक्तिसंयुक्तः पालयिष्यति भूमिपः ।

अन्योऽपि परमं तेजः स संप्राप्स्यति भूतले ॥ ९ ॥

अजेयः सर्वशत्रूणां प्रतापी स्फी तिसंयुतः ॥

भविष्यति न सन्देहो ब्राह्मणानां स पालनात् ॥ ६.१२.१० ॥

पुत्रपौत्रसुभृत्याढ्यो दीर्घायू रोगवर्जितः ॥

ब्राह्मणानां प्रसादेन मम वाक्याद्भविष्यति ॥ ११ ॥

यः पुनर्द्वेषसंयुक्तः संतापं चैव नेष्यति ॥

एतान्ब्राह्मणशार्दूलान्नरकं स प्रयास्यति ॥ १२ ॥

तथा दुःखानि संप्राप्य दृष्ट्वा नैकान्पराभवान् ॥

वियोगानिष्टबन्धूनां व्याधिग्रस्तो विगर्हितः ॥ १३ ॥

वंशोच्छेदं समासाद्य गमिष्यति यमालयम् ॥

तस्मात्सर्वप्रयत्नेन रक्षणीयमिदं पुरम् ॥

मम वाक्याद्विशेषेण हितमिच्छद्भिरात्मनः ॥ १४ ॥

एवं स भूपतिः सर्वांस्ता नुक्त्वा तपसि स्थितः ॥

तेऽपि सर्वे तथा चक्रुर्यथा तेन च शिक्षिताः ॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चमत्कारभूपेन पुरस्थित्यर्थं निजपुत्रादीनामुपदेशकरणवर्णनंनाम द्वादशोऽध्याय ॥ १२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१३




॥ ॥सूत उवाच ॥ ॥

एवं निवेद्य पुत्राणां स राज्यं पृथिवीपतिः ॥

पुरं च तद्द्विजातिभ्यः प्रदाय स्वयमेव हि ॥ १ ॥

तत आराधयामास देवदेवं महेश्वरम् ॥

कृत्वा तदाऽऽश्रमं तत्र श्रद्धया परया युतः ॥ २ ॥

स बभूव फलाहारो यावद्वर्षशतं नृपः ॥

शीर्णपर्णाशनः पश्चात्तावत्कालं समाहितः ॥ ३ ॥

ततः परं जलाहारो जातो वर्षशतं हि सः ॥

वायुभक्षस्ततोऽभूत्स यावद्वर्षशतं परम्॥ ४ ॥

ततस्तुष्टो महादेवस्तस्य वर्षशते गते ॥

चतुर्थे वायुभक्षस्य दर्शने समुपस्थितः ॥ ५ ॥

प्रोवाच परितुष्टोऽस्मि मत्तः प्रार्थय वांछितम् ॥

अहं ते संप्रदास्यामि दुर्लभं त्रिदशैरपि ॥ ६ ॥

॥ राजोवाच ॥ ॥

एतत्पुण्यतमं क्षेत्रं नानातीर्थसमाश्रयम् ॥

हाटकेश्वरमाहात्म्यात्सर्वपापक्षयापहम् ॥ ७ ॥

तस्मात्तव निवासेन भूयान्मेध्यतमं पुनः ॥

एतन्मे वांछितं देव देहि तुष्टिं गतो यदि ॥ ८ ॥

मयैतदग्र्यं निर्माय ब्राह्मणेभ्यो निवेदितम् ॥

पुरं शर्वाऽमराधीश श्रद्धापूतेन चेतसा ॥ ९ ॥

तस्मिंस्त्वया सदा वासः कर्तव्यो मम वाक्यतः ॥

निश्चलत्वेन येन स्याद्गुणैः सर्वैः समन्वितम् ॥ ६.१३.१० ॥

॥ भगवानुवाच ॥ ॥

अचलोऽहं भविष्यामि स्थानेऽत्र तव भूमिप ॥

अचलेश्वर इत्येव नाम्ना ख्यातो जगत्त्रये ॥ ११ ॥

यो मामत्र स्थितं मर्त्यो वीक्षयिष्यति भक्तितः ॥

भविष्यंत्यचलास्तस्य सर्वदैव विभूतयः ॥१२॥

माघशुक्लचतुर्दश्यां मम लिंगस्य यो नरः ॥

श्रद्धया परया युक्तः कर्ता यो घृतकंबलम् ॥१३॥

बाल्ये वयसि यत्पापं वार्धके यौवनेऽपि वा ॥

तद्यास्यति क्षयं तस्य तमः सूर्योदये यथा ॥ १४ ॥

तस्मात्स्थापय मे लिंगं त्वमत्रैव महीपते ॥

अहं येन करोम्येव तत्र वासं सदाचलः ॥ १५ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा स देवेशस्ततश्चादर्शनं गतः ॥

सोऽपि राजा चकाराशु प्रासादं सुमनोहरम् ॥ १६ ॥

तत्र संस्थापयामास लिंगं देवस्य शूलिनः ॥

श्रद्धया परया युक्तः सर्वलक्षणलक्षितम् ॥।७॥

यस्मिन्दृष्टेऽथवा स्पृष्टे ध्याते वा पूजितेऽपि वा ॥

नरो विमुच्यते पापादाजन्ममरणांतिकात् ॥।८॥

ततः संचिंतयामास भूपालः किं महेश्वरः ॥

सांनिध्यं निश्चलो भूत्वा लिंगेऽत्रैव करिष्यति ॥ १९ ॥

एतस्मिन्नंतरे जाता वाणी गगनगोचरा ॥

हर्षयन्ती महीपालं चमत्कारं सुनिस्वना ॥ ६.१३.२० ॥

मा त्वं भूमिपशार्दूल कार्यचिन्तां करिष्यसि ॥

अस्मिन्वासं सदात्रैव लिंगे कर्तास्मि नित्यशः ॥ २१ ॥

तथान्यदपि ते वच्मि प्रत्ययार्थं वचो नृप ॥

तच्छ्रुत्वा निर्वृतिं गच्छ वीक्षस्वैव च यत्नतः ॥ २२ ॥।

सदा मे निश्चला छाया लिंगस्यास्य भविष्यति ॥

एकैव पृष्ठदेशस्था न दिक्संस्था भविष्यति ॥ २३ ॥

॥ सूत उवाच ॥ ॥

ततः स वीक्षयामास तां छायां लिंगसंभवाम् ॥

तद्रूपां निश्चलां नित्यं तद्दिक्संस्थे दिवाकरे ॥ २४ ॥

ततो हर्षं परं गत्वा प्रणिपत्य च तं भुवि ॥

कृतकृत्यमिवात्मानं स मेने पार्थिवोत्तमः ॥ २५ ॥

अद्यापि दृश्यते छाया तादृग्रूपा सदा हि सा ॥

तस्य लिंगस्य विप्रेन्द्रा जाता विस्मयकारिणी ॥ २६ ॥

षण्मासाभ्यंतरे मृत्युर्यस्य स्याद्भुवि भो द्विजाः ॥

न स पश्यति तां छायामेषोऽन्यः प्रत्ययः परः ॥ २७ ॥

॥ सूत उवाच ॥ ॥

एवं स भगवांस्तत्र सर्वदैव व्यवस्थितः ॥

अचलेश्वररूपेण चमत्कारपुरांतिके ॥ २८ ॥

निश्चलत्वेन देवेशोह्यष्टषष्टिषु मध्यमः ॥

क्षेत्राणां वसते तत्र तस्य वाक्यान्महेश्वरः ॥ २९ ॥

तेन तत्पावनं क्षेत्रं सर्वेषामिह कीर्तितम् ॥

कामदं मुक्तिदं चैव जायते सर्वदेहिनाम् ॥ ६.१३.३० ॥

तथान्यदपि यद्वृत्तं वृत्तांतं तत्प्रभावजम् ॥

तदहं संप्रवक्ष्यामि श्रूयतां द्विजसत्तमाः ॥ ३१ ॥

अचलेश्वरमाहात्म्यात्तस्मिन्क्षेत्रे नरा द्रुतम्॥

वांछितं मनसः सर्वे लभंते सकलं फलम् ॥ ३२ ॥

स्वर्गमेके परे मोक्षं धनधान्यसुतांस्तथा ॥

यो यं काममभिध्याय पूजयेदचलेश्वरम्॥

तंतं स लभते मर्त्यः स्वल्पायासेन च द्रुतम् ॥ ३३ ॥

अथ दृष्ट्वा सहस्राक्षः सर्वे पापनरा भुवि ॥

स्वर्गं यांति तथा मोक्षं प्राप्नुवन्ति च सम्मुखम् ॥ ३४ ॥

ततः क्रोधं च कामं च लोभं द्वेषं भयं रतिम् ॥

मोहं च व्यसनं दुर्गं मत्सरं रागमेव च ॥ ३५ ॥

सर्वान्मूर्तान्समाहूय ततः प्रोवाच सादरम्॥

स्वयमेव सहस्राक्षो रहस्ये द्विजसत्तमाः ॥ ३६ ।

नरो वा यदि वा नारी चमत्कारपुरं प्रति ॥

यो गच्छति धरापृष्ठे युष्माभिर्वार्य एव सः ॥ ३७ ॥

तत्रैव वसमानोऽपि यो गच्छेदचलेश्वरम् ॥

मद्वाक्यात्स विशेषेण सर्वैर्वार्यः प्रयत्नतः ॥ ३८ ॥

ते तथेति प्रतिज्ञाय गत्वा शक्रस्य शासनात् ॥

चक्रुस्ततः समुच्छिन्नं तन्माहात्म्यं गतं भुवि ॥ ३९ ॥

एतद्वः सर्वमाख्यातमाख्यानं पापनाशनम् ॥

अचलेश्वरदेवस्य तस्मिन्क्षेत्रे निवासिनः ॥ ६.१३.४० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽचलेश्वरमाहात्म्यवर्णनंनाम त्रयोदशोध्यायः ॥ ॥ १३ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१४



॥ सूत उवाच ॥ ॥

यदन्यत्तत्र सञ्जातमाश्चर्यं द्विजसत्तमाः ॥

तदहं कीर्तयिष्यामि रहस्यं हृदि संस्थितम् ॥ १ ॥

चमत्कारपुरे कश्चिद्वैश्यजातिसमुद्भवः ॥

बभूव पुरुषो मूको दरिद्रेण समन्वितः ॥ २ ॥

यो दौःस्थ्यात्सर्वलोकानां करोति पशुरक्षणम् ॥

कुटुम्बभरणार्थाय संतुष्टो येनकेनचित् ॥ ३ ॥

कदाचिद्रक्षतस्तस्य पशूंस्तान्वनभूमिषु ॥

पशुरेको विनिष्क्रांतः स्वयूथात्तृणलोभतः ॥४॥।

कृष्ण पक्षे चतुर्दश्यां चैत्रमासे द्विजोत्तमाः ॥

न तदा लक्षितस्तेन गच्छमानो यदृच्छया ॥ ५ ॥

अथ यावद्गृहं प्राप्तः स मूकः पशुपालकः ॥

तावत्तस्य च गोः स्वामी भर्त्सयन्समुपागतः ॥ ६ ॥

किं पाप न समायातः पशुरेकोऽद्य नो यथा ॥

नूनं त्वया हतः सोऽपि विक्रीतोऽपिहितोऽथवा ॥

तस्मा दानय मे क्षिप्रं निराहारोऽपि गां त्वरात् ॥ ७ ॥

तच्छ्रुत्वा भयसंत्रस्तः स मूकः पशुपालकः ॥

निष्क्रांतो यष्टिमादाय निराहारोऽपि मन्दिरात् ॥ ॥ ८ ॥

ततोऽरण्यं समासाद्य वीक्षांचक्रे समंततः ॥

सूक्ष्मदृष्ट्या स दुर्गाणि गहनानि वनानि च । ९ ॥

अथ तेन क्वचिद्दृष्टं पदं तस्य पशोः स्फुटम् ॥

अटव्यां भ्रममाणेन परिज्ञातं च कृत्स्नशः ॥ ६.१४.१० ॥

ततश्च तत्पदान्वेषी स जगाम वनाद्वनम् ॥

चमत्कारपुरस्यास्य समंताद्द्विजसत्त माः ॥ ११ ॥

एवं प्रदक्षिणा तस्य जाता पशुदिदृक्षया ॥
स्थानस्य चैव निर्वेशे पशोश्चापिद्विजोत्तमाः ॥ १२ ॥
प्रदक्षिणावसाने च पशुर्लब्धो हि तेन सः ॥
निशांतेऽथ गृहं नीत्वा स्वामिने विनिवेदितः ॥ १३ ॥
चैत्रे पुण्यतमे मासि कृष्णपक्षे चतुर्दशीम् ॥
क्षेत्रे पुण्यतमे देवास्तीर्थान्या यांति सर्वशः ॥ १४ ॥
एवमज्ञानभावेन कृता ताभ्यां प्रदक्षिणा ॥
पशुपालपशुभ्यां वै सुपुण्ये तत्र वासरे ॥ १५ ॥
निराहारस्य मूकस्य साहारस्य पशोस्तथा ॥ १६ ॥
विना स्नानेन भक्षाच्च दैवाद्द्विजवरोत्तमाः ॥
ततः काले व्यतिक्रांते कियन्मात्रे स्वकर्मतः ॥
उभौ पंचत्वमापन्नौ पृथक्त्वेनायुषः क्षये ॥ १७ ॥
ततश्च पशुपालस्तु दशार्णाधिपतेः सुतः ॥
संजातस्तत्प्रभावेन पूर्वजातिमनुस्मरन् ॥ १८ ॥
सोऽपि जज्ञे पशुस्तस्य सचिवो द्विजसत्तमाः ।
जातिस्मरो यथा राजा सर्वदा नृपसंमतः॥।९॥
अथागत्य स राजेंद्रस्तेनैव सह मंत्रिणा ॥
कृष्णपक्षे चतुर्दश्यां पुरस्तस्याः प्रदक्षिणाम् ॥ ६.१४.२० ॥
चक्रे संवत्सरस्यांते श्रद्धया परया युतः ॥
निराहारश्च मौनेन पदातिर्द्विजसत्तमाः ॥ २१ ॥
एकदा तत्र चाऽऽयाता मुनयः शंसितव्रताः ॥
तीर्थे पापहरे पुण्ये विश्वामित्रसमुद्भवे ॥ २२ ॥
याज्ञवल्क्यो भरद्वाजः शुनःशेपोऽथ गालवः ॥
देवलो भागुरिर्धौम्यः कश्य पश्च्यवनो भृगुः ॥ २३ ॥
तथान्ये शंसिताऽऽत्मानो ब्रह्मचर्यपरायणाः ॥
तीर्थयात्राप्रसंगेन तस्मिन्क्षेत्रे समागताः ॥ २४ ॥
तान्दृष्ट्वा स महीपालः प्रणिपत्य कृतांजलिः ॥
यथाज्येष्ठं यथाश्रेष्ठं पूजयामास भक्तितः ॥ २५ ॥

ततस्तेषां स मध्ये च संनिविष्टो महीपतिः ॥
तथागतः स भूपालः सर्वै स्तैश्चाभिनंदितः ॥ २६ ॥
ततश्चक्रुः कथा दिव्या मुनयस्ते महीपतेः ।
पुरतो मुनिमुख्यानां चरितानि महात्मनाम् ॥ २७ ॥
राजर्षीणां पुराणानां धर्मशास्त्रसमुद्भवाः ॥
आनंदं तस्य राजर्षेर्जनयंतो द्विजोत्तमाः ॥ २८ ॥
अथ क्वाऽपि कथांते स पार्थिवस्तैर्महर्षिभिः ॥
पृष्टः कौतूहलाविष्टैर्दत्त्वा श्रौतीस्तदाशिषः ॥ २९ ॥
॥ ऋषय ऊचुः ॥ ॥
वर्षेवर्षे महीपाल त्वमत्राऽऽगत्य यत्नतः ॥
करोषि मंत्रिणा सार्धं पुरस्याऽस्य प्रदक्षिणाम् ॥ ॥ ६.१४.३० ॥
अस्मिन्क्षेत्रे सुतीर्थानि संति पार्थिवसत्तम ॥
तथाऽन्यानि प्रसिद्धानि देवतायतनानि च । ३१ ॥
आदरस्तेषु वै राजन्नास्ति स्वल्पो ऽपि कर्हिचित् ॥
एतन्नः कौतुकं जातं न चेद्गुह्यं प्रकीर्तय ॥ ३२ ॥
॥ सूत उवाच ॥ ॥
तेषां तद्वचनं श्रुत्वा विनयाऽवनतः स्थितः ॥
स प्रोवाच वचो भूपः किंचिद्व्रीडासमन्वितः॥३३॥
यत्पृष्टोऽस्मि द्विजश्रेष्ठा युष्माभिः सांप्रतं मम ॥
तद्गुह्यं न मयाऽऽख्यातं कस्यचिद्धरणीतले ॥३४॥
तथाऽपि हि प्रकर्तव्यं युष्माकं सत्यमेव हि ॥
अपि गुह्यतमं चेत्स्याच्छृण्वंतु मुनिसत्तमाः ॥ ३५ ॥
॥ सूत उवाच ॥ ॥
ततः स कथयामास पूर्वजातिसमुद्भवम् ॥
वृत्तांतं तन्मुनींद्राणां तेषां ब्राह्मणसत्तमाः ॥ ३६ ॥
यथा नष्टः पशुस्तस्य कृता यद्वदवेक्षणा ॥
यथा प्रदक्षिणा जाता चमत्कारपुरस्य तु । ३७ ॥
जातिस्मृतिर्यथा जाता प्राक्तनी तत्प्रभावतः ॥

राज्यप्राप्तिर्विभूतिश्च तथेष्टाप्तिः पदेपदे ॥ ३८ ॥

तच्छ्रुत्वा मुनयः सर्वे प्रहृष्टाः पृथिवीपतेः ॥

आशीर्वादान्बहून्दत्त्वा साधुसाध्विति चाऽब्रुवन् ॥ ३९ ॥

समुत्थाय ततश्चक्रुः पुरस्तस्याः प्रदक्षिणाम् ॥

यथोक्तविधिना सर्वे श्रद्धया परया युताः ॥ ६.१४.४० ॥

गताश्च परमां सिद्धिं तत्प्रभावात्सुदुर्लभाम् ॥

जपयज्ञप्रदानैर्या तीर्थसेवादिकैरपि ॥ ४१ ॥

सोऽपि राजा स मन्त्री च जातौ वैमानिकौ सुरौ ॥

अद्याऽपि तौ हि दृश्येते तारारूपौ नभस्तले ॥ ४२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चमत्कारपुरप्रदक्षिणामाहात्म्यवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१५



पञ्चदशोऽध्यायः

नारद उवाच-

नारायणस्तदा देवो जटावल्कलधार्यथ
द्वितीयोऽनुचरस्तस्य ह्याययौ फलहस्तवान् १
तौ दृष्ट्वा स्मरदूती सा विललाप मृगेक्षणा
तच्छ्रुत्वा वचनं तस्याः प्रोचतुस्तां च तावुभौ २
भयं मा गच्छ कल्याणि त्वामावां त्रातुमागतौ
वने घोरे प्रविष्टासि कथं दुष्टनिषेविते ३
एवमाश्वास्य तां तन्वीं राक्षसं प्राह माधवः
मुंचेमामधमाचार मृद्वंगीं चारुहासिनीम् ४
रेरे मूर्ख दुराचार किं कर्तुं त्वं व्यवस्थितः
सर्वस्वं लोकनेत्राणामाहारं कर्तुमुद्यतः ५
भव पुण्यप्रभावेयं हंस्येतां मंडनं भुवः
अद्यलोकं निरालोकं कंदर्पं दर्पवर्जितम् ६
करिष्यस्यधुना त्वं च हत्वा वृंदारिकां वने
तस्मादिमां विमुंचाशु सुखप्रासाददेवताम् ७
इति श्रुत्वा हरेर्वाक्यं राक्षसः कुपितोऽब्रवीत्
समर्थस्त्वं यदि तदा मोचयाद्यैव मत्करात् ८
इत्युक्तमात्रे वचने माधवेन क्रुधेक्षितः
पपात भस्मसाद्भूतस्त्यक्त्वा वृंदां सुदूरतः ९
अथोवाच प्रमुग्धा सा मायया जगदीशितुः
कस्त्वं कारुण्यजलधिर्येनाहमिह रक्षिता १०
शारीरं मानसं दुःखं सतापं तपसां निधे
त्वया मधुरया वाचा हृतं राक्षसनाशनात् ११
तवाश्रमे तपः सौम्य करिष्यामि तपोधन १२

तापस उवाच-

भरद्वाजात्मजश्चाहं देवशर्मेति विश्रुतः
विहाय भोगानखिलान्वनं घोरमुपागतः १३

अनेन बटुनासार्धं मम शिष्येण कामगाः
बहुशः संति चान्येऽपि मच्छिष्याः कामरूपिणः १४
त्वं चेन्ममाश्रमे स्थित्वा चिकीर्षसि तपः शुभे
एहि राज्यपरं यामो वनं दूरस्थितं यतः १५
इत्युक्त्वा राजपत्नीं तां ययौ प्राचीं दिशं हरिः
वनं प्रेतपिशाचाढ्यं मंदगत्या नराधिप १६
वृंदारिकाश्रुपूर्णाक्षी तस्य पृष्ठानुगा ययौ
स्मरदूती च तत्पृष्ठे मां प्रतीक्षेति वादिनी १७
अत्रांतरे दुराचारः कोपि पापाकृतिर्वने
जालं प्रसारयामास तद्यदा जीवपूरितम् १८
ततः संकोचयामास तज्जालं पापनायकः
जालस्थांस्तु तदा जीवानुपाहृत्य मुमोच ह १९
स च व्याधः स्त्रियौ दृष्ट्वा स्मरदूती जगाद ताम्
देवि मामत्तुमायाति करे गृह्णातु मां सखी २०
वृंदा तयोक्तं श्रुत्वैनं विकृतास्यं व्यलोकयत्
वीक्ष्यतं भयवातेन निर्धूता सिंधुजप्रिया २१
दुद्राव विकलं शुभ्रं स्मरदूत्या समं वने
विद्रवंती समं सख्या तापसाश्रममागता २२
सा तापसवने तस्मिन्ददर्शात्यंतमद्भुतम्
पक्षिणः कांचनीयांगान्नानाशब्दसमाकुलान् २३
सापश्यद्धेमपद्माढ्यां वापीं तु स्वर्णभूमिकाम्
क्षीरं वहंति सरितः स्रवंति मधु भूरुहः २४
शर्कराराशयस्तत्र मोदकानां च संचयाः
भक्ष्याणि स्वादुसर्वाणि बहून्याभरणानि च २५
बहुशस्त्राणि दिव्यानि नभसः संपतंति च
क्रीडंति हरयस्तृप्ता उत्पतंति पतंति च २६
मठेति सुंदरं वृंदा तं ददर्श तपस्विनम्
व्याघ्रचर्मासनगतं भासयंतं जगत्त्रयम् २७
तमुवाच विभो पाहि पाहि पापर्द्धिकादथ
तपसा किं च धर्मेण मौनेन च जपेन च २८
भीतत्राणात्परं नान्यत्पुण्यमस्ति तपोधन
एवमुक्तवती भीता सालसांगी तपस्विनम् २९

तावत्प्राप्तः सदुष्टात्मा सर्वजीवप्रबंधकः
वृंदादेवी भयत्रस्ता हरिकंठे समाश्लिषत् ३०
सुखस्पर्शं भुजाभ्यां सा शोकवल्लीव लिंगिता
तवालिंगनभावेन पुनरेव भविष्यति ३१
शिरः सर्वांगसंपन्नं त्वद्भर्तुरधिकं गुणैः
अथ त्वं प्रमदे गच्छ पत्यर्थे चित्रशालिकाम् ३२
सा चित्रशालामित्युक्ता विवेश मुनिना तदा
दिव्यपर्यंकमारूढा गृह्य कांतस्य तच्छिरः ३३
चकाराधरपानं सा मीलिताक्ष्यतिलोलुपा
यावत्तावदभूद्राजन्रूपं जालंधराकृति ३४
तत्कांतसदृशाकारस्तद्वक्षस्तद्वदुन्नतिः
तद्वाक्यस्तन्मनोभावस्तदासीज्जगदीश्वरः ३५
अथ संपूर्णकायं तं प्रियं वीक्ष्य जगाद सा
तव कुर्वे प्रियं स्वामिन्ब्रूहि त्वं स्वरणं च मे ३६
वृंदावचनमाकर्ण्य प्राह मायासमुद्भवः
शृणु देवि यथा युद्धं वृत्तं शंभोर्मया सह ३७
प्रिये रुद्रेण रौद्रेण छिन्नं चक्रेण मे शिरः
तावत्वत्सिद्धियोगाच्च त्वद्गतेन ममात्मना ३८
छिन्नं तदत्र चानीतं जीवितं तेंगसंगतः
प्रिये त्वं मद्वियोगेन बाले जातासि दुःखिता ३९
क्षंतव्यं विप्रियं मह्यं यत्त्वां त्यक्त्वा रणं गतः
इत्यादि वचनैस्तेन वृंदा संस्मारिता तदा ४०
तांबूलैश्च विनोदैश्च वस्त्रालंकरणैः शुभैः
अथ वृंदारिका देवी सर्वभोगसमन्विता ४१
प्रियं गाढं समालिंग्य चुचुंब रतिलोलुपा
मोक्षादप्यधिकं सौख्यं वृंदा मोहनसंभवम् ४२
मेने नारायणो देवो लक्ष्मीप्रेमरसाधिकम्
वृंदां वियोगजं दुःखं विनोदयति माधवे ४३
तत्क्रीडाचारुविलसद्वापिका राजहंसके
तद्रूपभावात्कृष्णोऽसौ पद्मायां विगतस्पृहः ४४
अभूद्वृंदावने तस्मिंस्तुलसीरूप धारिणी
वृंदांगस्वेदतो भूम्यां प्रादुर्भूताति पावनी ४५

वृंदांग संगजं चेदमनुभूय सुखं हरिः
दिनानि कतिचिन्मेने शिवकार्यं जगत्पतिः ४६
एकदा सुरतस्यांते सा स्वकंठे तपस्विनम्
वृंदा ददर्श संलग्नं द्विभुजं पुरुषोत्तमम् ४७
तं दृष्ट्वा प्राह सा कंठाद्विमुच्य भुजबंधनम्
कथं तापसरूपेण त्वं मां मोहितुमागतः ४८
निशम्य वचनं तस्याः सांत्वयन्प्राह तां हरिः
शृणु वृंदारिके त्वं मां विद्धि लक्ष्मीमनोहरम् ४९
तव भर्ता हरं जेतुं गौरीमानयितुं गतः
अहं शिवः शिवश्चाहं पृथक्त्वे न व्यवस्थितौ 6.15.५०
जालंधरो हतः संख्ये भज मामधुनानघे
नारद उवाच-
इति विष्णोर्वचः श्रुत्वा विषण्णवदनाभवत्
ततो वृंदारिका राजन्कुपिता प्रत्युवाच ह ५१
रणे बद्धोऽसि येन त्वं जीवन्मुक्तः पितुर्गिरा
विविधैः सत्कृतो रत्नैर्युक्तं तस्य हृता वधूः ५२
पतिर्धर्मस्य यो नित्यं परदाररतः कथम्
ईश्वरोऽपि कृतं भुंक्ते कर्मेत्याहुर्मनीषिणः ५३
अहं मोहं यथानीता त्वया माया तपस्विना
तथा तव वधूं माया तपस्वीकोऽपि नेष्यति ५४
इति शप्तस्तथा विष्णुर्जगामादृश्यतां क्षणात्
सा चित्रशालापर्यंकः स च तेऽथप्लवंगमाः ५५
नष्टं सर्वं हरौ याते वनं शून्यं विलोक्य सा
वृंदा प्राह सखीं प्राप्य जिह्मं तद्विष्णुना कृतम् ५६
त्यक्तं पुरं गतं राज्यं कांतः संदेहतां गतः
अहं वने विदित्वैतत्क्व यामि विधिनिर्मिता ५७
मनोरथानां विषयमभून्मे प्रियदर्शनम्
प्राह निःश्वस्य चैवोष्णं राज्ञी वृंदातिदुःखिता ५८
मम प्राप्तं हि मरणं त्वया हि स्मरदूतिके
इत्युक्ता सा तया प्राह मम त्वं प्राणरूपिणी ५९
तस्यास्तथोक्तमाकर्ण्य इतिकर्त्तव्यतां ततः
वने निश्चित्य सा वृंदा गत्वा तत्र महत्सरः ६०

विहाय दुःखमकरोद्गात्रक्षालनमंबुना
तीरे पद्मासनं बद्ध्वा कृत्वा निर्विषयं मनः ६१
शोषयामास देहं स्वं विष्णुसंगेन दूषितम्
तपश्चचारसात्युग्रं निराहारा सखीसमम् ६२
गंधर्वलोकतो वृंदामथागत्याप्सरोगणः
प्राह याहीति कल्याणि स्वर्गं मा त्यज विग्रहम् ६३
गांधर्वं शस्त्रमेतत्त्रिभुवनविजयं श्रीपतिस्तोषमग्र्यं
नीतो येनेह वृंदे त्यजसि कथमिदं तद्वपुः प्राप्तकामम्
कांतं ते विद्धि शूलिप्रवरशरहतं पुण्यलाभस्य भूषास्वर्गस्य त्वं
भवाद्य द्रुतममरवनं चंडिभद्रे भज त्वम् ६४
श्रुत्वा शास्त्रं वधूनां जलधिजदयिता वाक्यमाह प्रहस्य
स्वर्गादाहृत्य मुक्तात्रिदशपति वधूश्चातिवीरेण पत्या
आदौ पात्रं सुखानामहममरजिता प्रेयसा तद्वियुक्तानिर्दुष्टा तद्य
तिष्ये प्रियममृतगतं प्राप्नुयां येन चैव ६५
इत्युक्त्वा ससखी वृंदा विससर्जाप्सरोगणान्
तत्प्रीतिपाशबद्धास्ता नित्यमायांति यांति च ६६
योगाभ्यासेन वृंदाथ दग्ध्वा ज्ञानाग्निना गुणान्
विषयेभ्यः समाहृत्य मनः प्राप ततः परम् ६७
दृष्ट्वा वृंदारिकां तत्र महांतश्चाप्सरोगणाः
तुष्टुवुर्नभसस्तुष्टा ववृषुः पुष्पवृष्टिभिः ६८
शुष्ककाष्ठचयं कृत्वा तत्र वृंदाकलेवरम्
निधायाग्निं च प्रज्वाल्य स्मरदूती विवेश तम् ६९
दग्धं वृंदांगरजसां बिंबं तद्गोलकात्मकम्
कृत्वा तद्भस्मनः शेषं मंदाकिन्यां विचिक्षिपुः ७०
यत्र वृंदा परित्यज्य देहं ब्रह्मपथं गता
आसीद्वृंदावनं तत्र गोवर्द्धनसमीपतः ७१
देव्योऽथ स्वर्गमेत्य त्रिदशपतिवधूसत्त्वसंपत्तिमाहुर्देवीभ्यस्तन्निशम्य प्रमुदितमनसो निर्जराद्याश्च सर्वे
शत्रोर्दैत्यस्य हित्वा प्रबलतरभयं भीमभेर्यो निजघ्नुः श्रुत्वा तत्रासनस्थः
परिजननिवहोवापशोभां शुभस्य ७२
इति श्रीपाद्मे महापुराणे उत्तरखंडे पंचपंचाशतसहस्रसंहितायां जालंधरोपाख्याने वृंदाया ब्रह्मपदप्राप्तिर्नाम पंचदशोऽध्यायः १५

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१६



॥ ॥ सूत उवाच ॥ ॥

तस्मात्सर्वप्रयत्नेन त्यक्त्वाऽन्या निखिलाः क्रियाः ॥

रक्तशृंगस्य सांनिध्यं सेवनीयं विचक्षणैः ॥ १ ॥

किं दानैः किं क्रियाकांडैः किं यज्ञैः किं व्रतैरपि ॥

तत्क्षेत्रं सेवयेद्भक्त्या हाटकेश्वरसंभवम् ॥२॥

अग्निष्टोमादयो यज्ञाः सर्वे संपूर्णदक्षिणाः ॥

तस्य क्षेत्रस्य पुरतः कलां नार्हंति षोडशीम् ॥ ३ ॥

चान्द्रायणानि कृच्छ्राणि तथा सांतपनानि च ॥

तस्य क्षेत्रस्य पुरतः कलां नार्हंति षोडशीम्॥४॥

प्रभासाद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ॥

तस्य क्षेत्रस्य पुरतः कलां नार्हंति षोडशीम्॥५॥

भूमिदानानि सर्वाणि धर्माः सर्वे दयादिकाः॥

तस्य क्षेत्रस्य पुरतः कलां नार्हंति षोडशीम्॥६॥

तत्र राजर्षयः पूर्वं प्रभूताः सिद्धिमागताः ॥

पशवः पक्षिणः सर्पाः सिंहव्याघ्रा मृगादयः ॥७॥

तत्र कालवशान्नष्टास्तेऽपि प्राप्ता दिवालयम् ॥

यस्तत्र व्रतहीनोऽपि कृषिकर्मरतोऽपि वा ॥९॥

निवासं कुरुते विप्रा मृतस्तत्र दिवं व्रजेत् ॥

किंवा च बहुनोक्तेन भूयोभूयो द्विजोत्तमाः ॥९॥

श्रूयतां परमं गुह्यं तस्य क्षेत्रस्य संभवम् ॥

पुनंति क्षेत्रतीर्थानि संवासादिह मानवान् ॥ ६.१६.१० ॥

हाटकेश्वरजं क्षेत्रं पुनाति स्मरणादपि ॥

किं पुनर्दर्शनाद्विप्राः स्पर्शनाच्च विशेषतः ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये रक्तशृङ्गसांनिध्यसेवनफलश्रैष्ठ्यवर्णनंनाम षोडशोऽ ध्यायः॥१६॥ ॥॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१७

https://sa.wikisource.org/s/gy2
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

चमत्कारपुरोत्पत्तिः श्रुता त्वत्तो महामते ॥

तत्क्षेत्रस्य प्रमाणं यत्तदस्माकं प्रकीर्तय ॥१॥

यानि तत्र च पुण्यानि तीर्थान्यायतनानि च ॥

सहितानि प्रभावेण तानि सर्वाणि कीर्तय ॥ २ ॥

॥ सूत उवाच ॥ ॥

पञ्चक्रोशप्रमाणेन क्षेत्रं ब्राह्मणसत्तमाः ॥

आयामव्यासतश्चैव चमत्कारपुरोत्तमम् ॥ ३ ॥

प्राच्यां तस्य गयाशीर्षं पश्चिमेन हरेः पदम् ॥

दक्षिणोत्तरयोश्चैव गोकर्णेश्वरसंज्ञितौ ॥४॥

हाटकेश्वर संज्ञं तु पूर्वमासीद्द्विजोत्तमाः ॥

तत्क्षेत्रं प्रथितं लोके सर्वपातकनाशनम् ॥ ५ ॥

यतः प्रभृति विप्रेभ्यो दत्तं तेन महात्मना ॥

चमत्कारेण तत्स्थानं नाम्ना ख्यातिं ततो गतम् ॥ ६ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तस्य पूर्वे गयाशिरः ॥

माहात्म्यं तस्य नो ब्रूहि सूतपुत्र सविस्तरम् ॥ ७ ॥

॥ सूत उवाच ॥ ॥

आसीद्विदूरथोनाम हैहयाधिपतिः पुरा ॥

यो वै दानपतिर्दक्षः शत्रुपक्षक्षयावहः ॥ ८ ॥

स कदाचिन्मृगान्हंतुं नृपः सेनावृतो ययौ ॥

नानावृक्षलताकीर्णं वनं श्वापदसंकुलम् ॥ ९ ॥

स जघान मृगांस्तत्र शरैराशीविषोपमैः ॥

महिषांश्चवराहांश्च तरक्षूञ्च्छम्बरान्रुरून् ॥ ६.१७.१० ॥

सिंहान्व्याघ्रान्गजान्मत्ताञ्छतशोऽथ सहस्रशः ॥

अथ तेन मृगो विद्धः शरेणाऽऽनतपर्वणा ॥ ११ ॥

न पपात धरापृष्ठे सशरो दुद्रुवे द्रुतम्॥

ततः स कौतुकाविष्टस्तस्य पृष्ठे हयोत्तमम् ॥

प्रेरयामास वेगेन मनोमारुतवेगधृक् ॥ १२ ॥

ततः सैन्यं समुत्सज्य मृगं लिप्सुर्महीपतिः ॥

अन्यद्वनांतरं प्राप्तो रौद्रं चित्तभयावहम् ॥ १३ ॥

कण्टकीबदरीप्रायं शाल्मलीवनसंकुलम् ॥

तथान्यैः कण्टकाकीर्णै रूक्षै र्वृक्षैः समन्वितम् ॥ १४ ॥

तत्र रूक्षाऽखिला भूमिर्निर्जला तमसा वृता ॥

चीरिकोलूकगृधाढ्या शीर्षच्छायाविवर्जिता ॥ १५ ॥

ग्रीष्मे मध्यगते सूर्ये मृगाकृष्टः स पार्थिवः ॥

दूराध्वानं जगामाऽथ प्रासपाणिर्वराश्वगः ॥ १६ ॥

तेन तस्यानुगा भृत्याः सर्वे सुश्रांतवाहनाः ॥

क्षुत्पिपासाकुलाः श्रांताः स्थाने स्थाने समाश्रिताः ॥ १७ ॥

सिंहव्याघ्रैस्तथा चान्यैः पतिता नष्टचेतनाः ॥

भक्ष्यंते चेतयन्तोऽपि तथाऽन्ये चलनाक्षमाः ॥ १८ ॥

ततः सोऽपि महीपालः क्षुत्पिपासासमाकुलः ॥

दृष्ट्वा तद्व्यसनं प्राप्तमात्मनः सेवकैः समम् ॥ १९ ॥

कांतारस्यांतमन्विच्छन्प्रेरयामास तं हयम्॥

जात्यं सर्वगुणोपेतं कशाघातैः प्रताडयन् ॥ ६.१७.२० ॥

ततः स नृपतिस्तेन वायुवेगेन वाजिना ॥

नीतो दूरं दुर्गमार्गं सर्वजंतुविवर्जितम् ॥ २१ ॥

एवं तस्य नरेन्द्रस्य कांदिशीकेऽनवस्थिते ॥

सोऽश्वोऽपतद्धरापृष्ठे सोऽप्यधस्तात्तुरंगमात् ॥ २२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विदूरथमृगयावर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१८



सूत उवाच ॥ ॥

ततः सोऽपि महीपालः क्षुत्पिपामासमाकुलः ॥

पपात धरणीपृष्ठे पद्भ्यां गत्वा वनांतरम् ॥ १ ॥

अथाऽपश्यद्वियत्स्थानात्स त्रीन्प्रेतान्सु दारुणान् ॥

ऊर्ध्वकेशान्सुरक्ताक्षान्कृष्णदन्तान्कृशोदरान् ॥ २ ॥

तान्दृष्ट्वा भयसंत्रस्तो विशेषेण स भूपतिः ॥

निराशो जीविते कृच्छ्रादिदं वचनमब्रवीत् ॥ ३ ॥

के यूयं विकृताकारा मया दृष्टा न कर्हिचित् ॥

एवंविधा नृलोकेऽत्र भ्रमता प्राग्विभीषणाः ॥ ४ ॥

विदूरथो नरेन्द्रोऽहं क्षुत्पिपासातिपीडितः ॥

मृगलिप्सुरिह प्राप्तो वने जन्तुविवर्जिते ॥ ५ ॥

ततस्तेषां तु यो ज्येष्ठो मांसादः प्रत्युवाच तम् ॥

कृतांजलिपुटो भूत्वा विनयावनतः स्थितः । ६ ॥

वयं प्रेता महाराज निवसामोऽत्र कानने ॥

स्वकर्मजनिताद्दोषाद्दुःखेन महता वृताः ॥ ७ ॥

अहं मांसादकोनाम द्वितीयोऽयं विदैवतः ॥

कृतघ्नश्च तृतीयस्तु त्रयाणामेष पापकृत् ॥ ८ ।

॥राजोवाच ॥ ॥

सर्वेषां देहि नां नाम जायते पितृमातृजम् ॥

किमेतत्कारणं येन सर्वे यूयं स्वनामकाः ॥ ९ ॥

तच्छ्रुत्वा प्राह मांसादः कर्मनामानि पार्थिव ॥

मिथः कृतानि संज्ञार्थमस्माभिः स्वयमेव हि । ६.१८.१० ॥

शृणुष्वाऽवहितो भूत्वा सर्वेषां नः पृथक्पृथक् ॥

कर्मणा येन संजातं प्रेतत्वमिह भूमिप ॥ ११ ॥

वयं हि ब्राह्मणा जात्या वैदिशाख्ये पुरे नृप ॥

देवरातस्य विप्रस्य गृहे जाता महात्मनः ॥ १२ ॥

नास्तिका भिन्नमर्यादाः परदाररताः सदा ॥

पाप कर्मरतास्तत्र शुभकर्मविवर्जिताः ॥ १३ ॥

जिह्वालौल्यप्रसंगेन मया भुक्तं सदाऽऽमिषम् ॥

तेन मे कर्मजं नाम मांसादाख्यं व्यवस्थितम् ॥ १४ ॥

द्वितीयोऽयं महाराज यस्तिष्ठति तवाऽग्रतः ॥

अनेनाऽन्नं सदा भुक्तमकृत्वा देवतार्चनम् ॥ १५ ॥

तेन कर्मविपाकेन प्रेतयोनिं समाश्रितः ॥

विदैवत इति ख्यातो द्वितीयोऽयं सुपापकृत् ॥ १६ ॥

सदैवाऽनुष्ठिताऽनेन सुपापेन कृतघ्नता ॥

कृतघ्नः प्रोच्यते तेन कर्मणा नृपसत्तम ॥ १७ ॥ ॥

॥ राजोवाच ॥ ॥

आहारेण नृलोकेऽस्मिन्सर्वे जीवन्ति जन्तवः ॥

युष्माकं कतमो योऽत्र प्रोच्यतां मे सविस्तरम् ॥ १८ ॥

॥ मांसाद उवाच ॥ ॥

भोज्यकाले गृहे यत्र स्त्रीणां युद्धं प्रवर्तते ।

अपि मन्त्रौषधीप्रायं प्रेता भुंजति तत्र हि ॥ १९ ॥

भुज्यते यत्र भूपाल वैश्वदेवं विना नरैः ॥

पाकस्याग्रमदत्त्वा च प्रेता भुंजति तत्र च ॥ ६.१८.२० ॥

रात्रौ यत्क्रियते श्राद्धं दानं वा पर्ववर्जितम्॥

तत्सर्वं नृपशार्दूल प्रेतानां भोजनं भवेत्॥ ॥ २१ ॥

यस्मिन्नो मार्जनं हर्म्ये क्रियते नोपलेपनम् ॥

न मांगल्यं च सत्कारः प्रेता भुंजति तत्र हि ॥ २२ ॥

भिन्नभाण्डपरित्यागो यत्र न क्रियते गृहे ॥

न च वेदध्वनिर्यत्र प्रेता भुञ्जंति तत्र हि ॥२३॥

यच्छ्राद्धं दक्षिणाहीनं क्रियाहीनं च वा नृप ॥

तथा रजस्वलादृष्टं तदस्माकं प्रजायते॥२४॥

हीनांगा ह्यधिकांगा वा यस्मिञ्च्छ्राद्धे द्विजातयः ॥
भुंजते वृषलीनाथास्तदस्माकं प्रजायते ॥ २५ ॥
अतिथिर्यत्र संप्राप्तः श्राद्धकाल उपस्थिते ॥
अपूजितो गृहाद्याति तच्छ्राद्धं प्रेततृप्तिदम् ॥२६॥
किं वा ते बहुनोक्तेन शृणु संक्षेपतो नृप ॥
अस्माकं भोजनं नित्यं यत्त्वं श्रुत्वा विगर्हसि ॥२७॥
यदन्नं केशसूत्रास्थिश्लेष्मादिभिरुपप्लुतम् ॥
हीनजात्यैश्च संस्पृष्टं तदस्माकं प्रजायते ॥ २८ ॥
॥ राजोवाच ॥ ॥
केन कर्मविपाकेन प्रेतत्वं जायते नृणाम्॥
एतन्मे सर्वमाचक्ष्व मांसाद मम पृच्छतः ॥२९॥
॥ मांसाद उवाच ॥ ॥
यो भवेन्मानवः क्षुद्रस्तथा पैशुन्यसूचकः ॥
मृष्टमांसाशने सक्तः स प्रेतो जायते नरः ॥६.१८.३॥।
अकृत्वा देवकार्यं च तथा च पितृतर्पणम्॥
योऽश्नात्यदत्त्वा भृत्येभ्यः स प्रेतो जायते नरः ॥३॥।
परदाररतश्चैव परवित्तापहारकः ॥
परापवादसंतुष्टः स प्रेतो जायते नरः ॥३२॥
कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया ॥
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥ ३३ ॥
कुले जातां विनीतां च धर्मपत्नीं सुखोच्छ्रिताम् ॥
यस्त्यजेद्दोषनिर्मुक्तां स प्रेतो जायते नरः ॥ ३४ ॥
देवस्त्रीगुरुवित्तानि यो गृहीत्वा न यच्छति ॥
विशेषाद्ब्राह्मणस्वं च स प्रेतो जायते नरः ॥ ३५ ॥
परव्यसनसंतुष्टः कृतघ्नो गुरुतल्पगः ॥
दूषको देवविप्राणां स प्रेतो जायते नरः ॥ ३६ ॥
दीयमानस्य वित्तस्य ब्राह्मणेभ्यः सुपापकृत् ॥
विघ्नमारभते यस्तु स प्रेतो जायते नरः ॥ ३७ ॥

शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि ॥
स प्रेतो जायते राजन्यद्यपि स्यात्षडंगवित् ॥ ३८ ॥
कुलदेशोचितं धर्मं यस्त्यक्त्वाऽन्यत्समाचरेत् ॥
कामाद्वा यदि वा लोभात्स प्रेतो जायते नरः ॥ ३९ ॥
एतत्ते सर्वमाख्यातं मया पार्थिवसत्तम ॥
येन कर्मविपाकेन प्रेतः संजायते नरः ॥ ६.१८.४० ॥
॥ राजोवाच ॥ ॥
कृतेन कर्मणा येन न प्रेतो जायते नरः ॥
तन्मे कीर्तय मांसाद विस्तरेण विशेषतः ॥ ४१ ॥
॥ मांसाद उवाच ॥ ॥
मातृवत्परदारान्यः परद्रव्याणि लोष्टवत् ॥
यः पश्यत्यात्मवज्जंतून्न प्रेतो जायते नरः ॥ ४२ ॥
अन्नदानपरो नित्यं विशेषेणातिथिप्रियः ॥
स्वाध्यायव्रतशीलो यो न प्रेतो जायते नरः ॥ ४३ ॥
समः शत्रौ च मित्रे च समलोष्टाश्मकांचनः ॥
समो मानापमानेषु न प्रेतो जायते नरः ॥ ४४ ॥
दानधर्मप्रवृत्तानां धर्ममार्गा नुयायिनाम् ॥
प्रोत्साहं वर्धयेद्यस्तु न प्रेतो जायते नरः ॥ ४९ ॥
यूकामत्कुणदंशादीन्सर्वसत्त्वानि यो नरः ॥
पुत्रवत्पालयेन्नित्यं न प्रेतो जायते नरः ॥ ४६ ॥
सदा यज्ञक्रियोपेतः सदा तीर्थपरायणः ॥
शास्त्रश्रवणसंयुक्तो न प्रेतो जायते नरः ॥ ४७ ॥
वापीकूपतडागानामारामाणां विशे षतः ॥
आरोपकः प्रपाणां च न प्रेतो जायते नरः ॥ ४८ ॥
एतद्वः सर्वमाख्यातं स्वगुह्यं वसुधाधिप ॥
निर्विण्णाः प्रेतभावेन तस्मात्त्वं नो गतिर्भव ॥ ४९ ॥
गत्वा गयाशिरः पुण्यमेकैकस्य पृथक्पृथक् ॥
श्राद्धं देहि महीपाल त्रयाणामपि सादरम् ॥ ६.१८.५० ॥

प्रेतत्वं याति येनेदं त्वत्प्र सादात्सुदारुणम् ॥
नाऽन्यथा मुक्तिरस्माकं भविष्यति कथंचन ॥ ५१ ॥
॥ राजोवाच ॥ ॥
ईदृग्जातिस्मृतिर्यस्यां प्रेतयोनौ च खे गतिः ॥
धर्माधर्मपरिज्ञानं तच्च कस्मात्प्रनिंदसि ॥ ५२ ॥
॥ मांसाद उवाच ॥ ॥
प्रेतयोनिरियं राजन्नवमी देवसंज्ञिता ॥
गुणत्रयसमायुक्ता शेषैर्दोषैः समंततः ॥ ५३ ॥
एका जातिस्मृतिः सम्यगस्यामेवप्रजायते ॥
खेचरत्वं तथैवान्यद्धर्माधर्मविनिश्चयः ॥ ५४ ॥
एतद्गुणत्रयं प्रोक्तं प्रेतयोनौ नृपोत्तम ॥
दोषानपि च ते वच्मि ताञ्च्छृणुष्व समाहितः ॥ ५५ ॥
यदि तावद्वनादस्माद्यामोन्यत्र वयं नृप ॥
अदृष्टमुद्गराघातैर्नूनं हन्यामहे ततः ॥ ॥ ५६ ॥
तथा धर्मक्रियाः सर्वा मानुषाणामुदाहृताः ॥
न प्रेतानां न देवानां नान्येषां मानुषं विना ॥ ५७ ॥
पश्यामो दूरतो राजञ्जलपूर्णाञ्जला शयान् ॥
पिपासाकुलिताः श्रांता भास्करे वृषसंस्थिते ॥ ५८ ॥
गच्छामः संनिधौ तेषां यदि पार्थिवसतम ॥
अदृष्टमुद्गराघातैर्वयं हन्यामहे ततः ॥ ५९ ॥
तथा रसवती सिद्धाः पश्यामो दूरसंस्थिताः ॥
क्षुधाविष्टा गृहस्थानां गृहेषु विविधा नृप ॥ ६.१८.६० ॥
तथा सुफलिनो वृक्षान्कलपक्षिभिरावृतान् ॥
स्निग्धान्सच्छाययोपेतान्सेवितुं न लभामहे ॥ ६१ ॥
किंवा ते बहुनोक्तेन यद्यत्कर्म विगर्हितम् ॥
क्लेशदं च तदस्माकं स्वयमेवोपतिष्ठते ॥ ६२ ॥
न च्छिद्रेण विनाऽस्माकं प्राणयात्रा प्रजायते ॥
न जलानि न च च्छाया न यानं न च वाहनम् ॥ ६३ ॥

एतस्मात्कारणान्नित्यं भ्रमामश्छिद्रहेतवे ॥
प्राप्ते रात्रिमुखे राजन्न प्रातर्न च वासरे ॥ ६४ ॥
यत्त्वं शंससि चाऽस्माकं खेचरत्वं महीपते ॥
व्यर्थं तदपि न श्रेयः शृणु तत्रापि कारणम् ॥ ६५ ॥
क्रियते खेचरत्वेन किंकिं धर्मं विनिश्चयैः ॥
यतो न सिध्यते मोक्षो जाति स्मृत्यादिकं तथा ॥ ६६ ॥
तस्माद्दोषादिमे राजन्गुणा यद्यपि कीर्तिताः ॥
प्रेतानां यान्समाश्रित्य काचित्सिद्धिर्न जायते ॥ ६७ ॥
विषादो जायते भूयो गुणैरेतैर्नराधिप ॥
अशक्ताः प्रेतयोगाद्वै सर्वस्य शुभकर्मणः ॥ ६८ ॥
॥ राजोवाच । ॥
यदि यास्यामि भूयोऽहं गृहमस्मान्महावनात् ॥
तत्करिष्यामि सर्वेषां गयाश्राद्धमसंशयम् ॥ ६९ ॥
तारयिष्यामि सर्वांश्च सर्वपापैः प्रयत्नतः ॥
अप्यात्मदेहदानेन सत्येनात्मानमालभे ॥ ॥ ६.१८.७० ॥
यस्माद्धृद्गतशंका मे हृता युष्माभिरद्य वै ॥
येन तत्प्राप्य युष्माकमुपकारं करोम्यहम् ॥ ७१ ॥
॥ मांसाद उवाच ॥ ॥
इतः स्थानान्महाराज नातिदूरे जलाशयः ।
अस्ति नानाद्रुमोपेतश्चित्ताह्लादकरः परः ॥ ७२ ॥
तस्मादुदङ्मुखो गच्छ यत्र ते जलपक्षिणः ॥
दृश्यंते व्योममार्गेण प्रगच्छतः समंततः ॥ ७३ ॥
॥ सूत उवाच ॥ ॥
अथासौ नृपशार्दूलः समुत्थाय शनैःशनैः ॥
सौम्यां दिशं समुद्दिश्य प्रतस्थे स तु दुःखितः ॥ ७४ ॥
एवं प्रगच्छता तेन क्षुत्पिपासाकुलेन च ।
अदूरादेव संदृष्टं नीलं द्रुमकदंबकम् ॥
भ्रममाणैर्बकैर्हंसैः सारसैर्मद्गुभिस्तथा ॥७६॥

स गत्वा सलिलं तत्र तद्वातेन महीपतिः ॥
आहूत इव शीतेन प्रययौ त्वरयान्वितः ॥ ७६ ॥
अथाऽपश्यन्मनोहारि सौम्यसत्त्वनिषेवितम् ॥
आश्रमं ह्रदतीरस्थं तापसैः सर्वतो वृतम् ॥ ७७ ॥
पुष्पितैः फलितैर्वृक्षैः समंतात्परिवेष्टितम् ॥
विचित्रैर्मधुरारावैर्नादितं विहगोत्तमैः ॥ ७८ ॥
तत्रापश्यन्नगाधस्तात्तपस्विगणसेवितम् ॥
शिवधर्मपरं शांतं जैमिनिं मुनिसत्तमम्॥ ७९ ।
अथ गत्वा स राजेंद्रः प्रणिपत्य मुनीश्वरम् ॥
तथान्यानपि तच्छिष्यान्निपपात धरातले ॥ ६.१८.८० ॥
ते दृष्ट्वाऽदृष्टपूर्वं तं राजलक्षणलक्षितम्॥
धूलिधूसरितांगं च भस्मावृतमिवाचलम् ॥ ८१ ॥
मन्यमाना महीपालं विस्मयोत्फुल्ललोचनाः ॥
प्रोचुश्च मधुरैर्वाक्यैराशीर्वादपुरःसरैः ॥ ८२ ॥
कुतस्त्वमनुसंप्राप्तो वनेऽस्मिञ्जनवर्जिते ॥
एकाकी सुकुमारांगः पदातिः श्रमविह्वलः ॥ ९३ ॥
पार्थिवस्येव लिंगानि दृश्यंते तव भूरिशः ॥
न विद्मो निश्चयं तस्माद्वदागमनकारणम् ॥ ८४ ॥
अथोवाच नृपः कृच्छ्रात्पिपासा मां प्रबाधते ॥
तस्माद्वदत पानीयं यत्पीत्वा कीर्तयाम्यहम् ॥ ८५ ॥
ततस्तैर्दर्शितं तोयं समीपे यन्महीपतेः ॥
सोऽपि पीत्वाऽवगाह्याथ वितृष्णः समपद्यत ॥ ८६ ॥
ततः फलानि पक्वानि तरूणां पतितान्यधः ॥
सुमृष्टानि समादाय भक्षयामास वांछया ॥ ८७ ॥
ततस्तृप्तिं परां प्राप्य गत्वा जैमिनिसंनिधौ ॥
उपविष्टः प्रणम्योच्चैस्तथान्यांश्च मुनीन्क्रमात् ॥ ८८ ॥
उवाच च निजां वार्तां कृतांजलिपुटः स्थितः ॥
स पृष्टस्तापसैः सर्वैः सुविस्मयसमन्वितैः ॥ ८९ ॥

विदूरथो महीपोऽहं माहिष्मत्यां कृतास्पदः ॥

मृगलिप्सुर्वने घोरे प्रविष्टः सैनिकैः सह ॥ ६.१८.९० ॥

ततो मे भ्रममाणस्य प्रणष्टाः सर्वसैनिकाः ॥

गुल्मैरंतरिताश्चाऽन्ये न जानेऽहं कथं स्थिताः ॥ ९१ ॥

आसीद्धयो ममाऽधस्ताज्जात्यः सर्वगुणान्वितः ॥

सोऽपि कर्मविपाकेन पञ्चत्वं समुपस्थितः ।ा ९२ ॥

भ्रममाणस्त्वहं प्राप्त आयुःशेषतयात्र च ॥

तद्ब्रूत कः प्रदेशोऽयं कियद्दूरे च मे पुरी ॥ ९३ ॥

ततस्ते तापसाः प्रोचुर्विद्महे न वयं पुरीम् ॥

त्वां च देशं च ते राजन्कोऽयं देशश्च कीर्त्यते ॥ ९४ ॥

नरेन्द्रैर्नैव नः कार्यं न दिशैर्न पुरैर्नृप ॥

वनेचरा वयं नित्यं शिवाराधनतत्पराः ॥ ९५ ॥

सर्वे शीर्णानि वृक्षाणां पुष्पाणि च फलानि च ॥

भक्षयामोऽथ पत्राणि शरी रस्थितिहेतुना ॥ ९६ ॥

मानुषैः सह संसर्गं संभाषं च नराधिप ॥

न कुर्मो न च पश्यामो गच्छामोऽन्यत्र दूरतः ॥ ९७ ॥

एकैकस्य तरोर्मूले दिवसं वा दिनद्वयम्॥

तिष्ठामो न भवेद्येन ममत्वं तत्समुद्भवम् ॥९८॥

कारणात्तव राजेंद्र निशामेतां वनस्पतौ ॥

नेष्यामोऽन्यत्र यास्यामः प्रभा तेऽन्यत्र कानने ॥ ९९ ॥

एकाकिनं पदातिं च विशस्त्रं श्रमविह्वलम् ॥

त्वां दृष्ट्वा भूपतेऽस्माकं दया जाता ततोऽधिका ॥६.१८.॥॥।

एकाकी पार्थिवेन्द्रोऽयं नेष्यति च कथं निशाम् ॥

वनेऽस्मिन्मंत्रयित्वैवं ततोऽत्रैव व्यवस्थिताः ॥ १०१ ॥

तस्मादत्रैव नेष्यामः समेताः शर्वरीमिमाम्॥

गंतव्यं प्रातरुत्थाय ततः सर्वैर्यदृच्छया १०२ ॥

एवं संवदतां तेषां भगवांस्तीक्ष्णदीधितिः ॥

अस्ताचलमनुप्राप्तः कुंकुमक्षोदसंनिभः ॥ १०३ ॥

अथ तास्तापसान्राजा प्रोवाच प्रणतः स्थितः ॥

संध्याकालः समायातः सांप्रतं मुनिसत्तमाः ॥

तस्मात्संध्याविधिः कार्यः सर्वैरेव यथोचितः ॥ १०४ ॥

अथ ते मुनयः सर्वे स च राजा तथा द्विजाः ॥

चक्रुः सायंतनं कर्म यथोद्दिष्टं पुरातनैः ॥ १०५ ॥

कामिभिः कामिनीलोकैः प्रियोक्तैरभिवांछिता ॥

असत्स्त्रीभिर्विशेषेण संप्राप्ता रजनी ततः ॥ १०६ ॥

पीयूषार्णववेलेव विषवृक्षलतेव च ॥

उलूकैश्चक्रवाकैश्च युगपद्या विलोक्यते ॥ १०७॥

उलूका राक्षसाश्चौराः कामिनः कुलटांऽगनाः ॥

यां वांछंति सदा सोत्काः सुवृष्टिमिव कर्षुकाः ॥ १०८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मांसादवचनादृष्याश्रमपदं प्राप्तस्य विदूरथस्य मुनिभिः सह संवादपूर्वकसांयतनकर्मादिविधानवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०१९

https://sa.wikisource.org/s/g2t
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे प्राप्तास्तस्य भूपस्य सेवकाः ॥

केचिच्च दैवयो गेन श्वापदैरर्धभक्षिताः ॥ १ ॥

क्षुत्पिपासातुरा दीना दुःखेन महताऽन्विताः ॥

पदपद्धतिमार्गेण येन यातः स भूपतिः ॥ २ ॥

ते दृष्ट्वा पार्थिवं तत्र दिष्ट्यादिष्ट्येति सादरम् ॥

ब्रुवंतः पादयोस्तस्य पतिता हर्षसंयुताः ॥ ३ ॥

ततस्तस्य नरेन्द्रस्य व्यसनं सैन्यसंभवम् ॥

प्रोचुश्चैव यथादृष्टम नुभूतं यथाश्रुतम् ॥४॥

अथ ते तापसाः सर्वे स च राजा ससेवकः ॥

प्रसुप्ताः पादपस्याधः पर्णान्यास्तीर्यभूतले ॥५॥

ततस्तेषां प्रसुप्तानां सर्वेषां तत्र कानने ॥

अतिक्रांता सुखेनैव रजनी सा महात्मनाम् ॥ ६ ॥

ततः स प्रातरुत्थाय कृतपूर्वाह्णिकक्रियः ॥

तं मुनिं प्रणिपत्योच्चैरनुज्ञाप्य मुहु र्मुहुः ॥ ७ ॥

निजैस्तैः सेवकैः सार्धं प्रस्थितः स्वपुरीं प्रति ॥

माहिष्मतीं समुद्दिश्य दृष्ट्वा मार्गे शनैःशनैः ॥ ८ ॥

ततो निजगृहं प्राप्य कञ्चि त्कालं महीपतिः ॥

विश्रम्य प्रययौ पश्चात्तूर्णं पुण्यं गयाशिरः ॥ ९ ॥

तच्च कालेन संप्राप्य स्नात्वा धौतांबरः शुचिः ॥

मांसादाय ददौ श्राद्धं श्रद्धापूतेन चेतसा ॥ ६.१९.१० ॥

अथाऽसौ पृथिवीपालः स्वप्नांते च ददर्श तम् ॥

दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ॥

विमानवरमारूढं स्तूयमानं च किंनरैः ॥ ११ ॥

॥ मांसाद उवाच ॥ ॥

प्रसादात्तव भूपाल मुक्तोऽहं प्रेतयोनितः ॥

स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदिवा लयम्॥ १२ ॥

ततः स प्रातरुत्थाय हर्षाविष्टो महीपतिः ॥

विदैवतं समुद्दिश्य चक्रे श्राद्धं यथोचितम् ॥ १३

सोऽपि तेनैव रूपेण तस्य संदर्शनं गतः ॥

स्वप्नांऽते भूमिपालस्य तद्वच्चोक्त्वा दिवं गतः ॥ १४ ॥

ततः प्रातस्तृतीयेऽह्नि कृतघ्नस्य महीपतिः ॥

चक्रे श्राद्धं यथापूर्वं श्रद्धापूतेन चेतसा ॥ १५ ॥

ततः सोऽपि समायातस्तस्य स्वप्ने महीपतेः ॥

तेनैव प्रेतरूपेण दुःखेन महता वृतः ॥ १६ ॥

॥ कृतघ्न उवाच ॥

न मे गतिर्महाराज संजाता पापकर्मिणः ॥

तडागवित्तचौरस्य कृतघ्नस्य तथैव च ॥ १७ ॥

तस्मात्संजायते मुक्तिर्यथा मे पार्थिवोत्तम ॥

तथैव त्वं कुरुष्याऽद्य सत्यवाक्यपरो भव ॥ १८ ॥

सत्यमेव परं ब्रह्म सत्यमेव परं तपः ॥

सत्यमेव परं ज्ञानं सत्यमेव परं श्रुतम् ॥ १९ ॥

सत्येन वायु र्वहति सत्येन तपते रविः ॥

सागरः सत्यवाक्येन मर्यादां न विलंघयेत् ॥ ६.१९.२० ॥

तीर्थसेवा तपो दानं स्वाध्यायो गुरुसेवनम् ॥

सर्वं सत्यविहीनस्य व्यर्थं संजायते यतः ॥ २१ ॥

सर्वे धर्मा धृताः पूर्वमेकत्राऽन्यत्र चाप्यृतम् ॥

तुलायां कौतुकाद्देवैर्जातं तत्र ऋतं गुरु ॥ २२ ॥

तस्मात्सत्यं पुरस्कृत्य मां तारय महामते ॥

एतत्ते परमं श्रेयस्तपसोऽपि भविष्यति ॥ २३ ॥

॥ विदूरथ उवाच ॥ ॥

कथं ते जायते मुक्तिर्वद मे प्रेत सत्वरम् ॥

करोमि येन तत्कर्म यद्यपि स्यात्सुदुष्करम् ः। २४ ॥

॥ प्रेत उवाच ॥ ॥

चमत्कारपुरे भूप श्रीक्षेत्रे हाटकेश्वरे ॥

आस्ते पांसुभिराच्छन्नं कलेर्भीतं गयाशिरः ॥ २५ ॥

अधस्तात्प्लक्षवृक्षस्य दर्भस्थानैः समंततः ॥

कालशाकैस्तथानेकैस्तिलैश्चारण्यसंभवैः ॥ ॥ २६ ॥

तत्र गत्वा तिलैस्तैस्त्वं तैः शाकैस्तैः कुशैस्तथा ॥

श्राद्धं देहि द्रुतं येन मुक्तिः संजायते मम ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा स दीनस्य दयान्वितः॥

जगाम तत्र यत्राऽऽस्ते स वृक्षः प्लक्षसंज्ञकः॥ २८ ॥

दृष्ट्वा शाकांस्तिलांस्तांस्तु दर्भांस्तेन यथोदितान्॥

अखनत्तत्र देशे च जलार्थे लघु कूपिकाम् ॥ २९ ॥

ततः कृतघ्नमुद्दिश्य श्राद्धं चक्रे यथोदितम् ॥

आनीय ब्राह्मणाञ्छ्रेष्ठान्वेदवेदांगपारगान् ॥ ६.१९.३. ॥

कृतमात्रे ततः श्राद्धे दिव्य रूपधरः पुमान्॥

विमानवरमारूढो विदूरथमथाऽब्रवीत् ॥ ३१ ॥

मुक्तोऽहं त्वत्प्रसादाच्च प्रेतत्वाद्दारुणाद्विभो ॥

स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदशालयम् ॥ ३२ ॥

॥ सूत उवाच ॥ ॥

ततः प्रभृति सा तत्र कूपिका ख्यातिमागता ॥

पितॄणां पुष्टिदा नित्यं गयाशीर्षसमुद्भवा॥ ३३ ॥

प्रेतपक्षस्य दर्शायां यस्तस्यां श्राद्धमाचरेत् ॥

कालशाकेन विप्रेंद्रास्तथारण्योद्भवैस्तिलैः ॥ ३४ ॥

कृंतितैश्च तथा दर्भैः सम्यक्छ्रद्धासमन्वितः ।

स प्राप्नोति फलं कृत्स्नं कृतघ्नप्रेततीर्थतः ॥ ३५ ॥

अग्निष्वात्ताः पितृगणास्तथा बर्हिषदश्च ये ॥

तत्र संनिहिता नित्यमाज्यपाः सोमपास्तथा ॥ ३६ ॥

तस्मात्सर्वप्रयत्नेन श्राद्धं तत्र समाचरेत् ॥

काले वा

यदि वाऽकाले पितॄणां तुष्टये सदा ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मांसादादिप्रेतत्रयस्य विदूरथकृतश्राद्धद्वारा मुक्तिदाने पितृकूपिकातीर्थमाहात्म्यवर्णनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२०

https://sa.wikisource.org/s/fy7
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्र दाशरथी रामो वनवासाय दीक्षितः ॥

भ्रममाणो धरापृष्ठे सीतालक्ष्मणसंयुतः ॥ १ ॥

समाऽऽयातो द्विजश्रेष्ठा यत्र सा पितृकूपिका ॥

तृषार्तश्च श्रमार्तश्च निषसाद धरातले ॥ २ ॥

एतस्मिन्नंतरे प्राप्तो भगवान्दिननायकः ॥

अस्ताचलं जपापुष्पसन्निभो द्विजसत्तमाः ॥ ३ ॥

ततः प्लक्षनगाधस्तात्पर्णान्यास्तीर्य भूतले ॥

सायंतनं विधिं कृत्वा सुष्वाप रघुनन्दनः ॥ ४ ॥

अथाऽवलोकयामास स्वप्ने दशरथं नृपम् ॥

यद्वत्पूर्वं प्रियाऽऽलापसंसक्तं हृष्टमानसम् ॥ ५ ॥

ततः प्रभाते विमले प्रोद्गते रविमण्डले ॥

विप्रानाहूय तत्सर्वं कथयामास राघवः ॥ ६ ॥

अद्य स्वप्ने मया विप्राः प्रियालापपरः पिता ॥

अतिहृष्टमना दृष्टः श्वेतमाल्यानुलेपनः ॥ ७ ॥

तत्कीदृक्परिणामोऽस्य स्वप्नस्य द्विजसत्तमाः ॥

भविष्यति प्रजल्पध्वं परं कौतूहलं यतः ॥ ८ ॥ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

पितरः श्राद्धकामा ये वृद्धिं पश्यंति वा नृप ॥

ते स्वप्ने दर्शनं यांति पुत्राणामिति नः श्रुतम् ॥ ९ ॥

तदस्यां कूपिकायां च स्वयमेव गया स्थिता ॥

तेन त्वया पिता दृष्टः स्वप्ने श्राद्धस्य वांछकः ॥ ६.२०.१० ॥

तस्मात्कुरु रघुश्रेष्ठ श्राद्धमत्र यथोदितम् ॥

नीवारैः शाक मूलैश्च तथाऽरण्योद्भवैस्तिलैः ॥ ११ ॥

अथैवामन्त्रयामास तान्विप्रान्रघुसत्तमः ॥
श्राद्धेषु श्रद्धया युक्तः प्रसादः क्रियतामिति ॥ १२ ॥
बाढमित्येव ते चोक्त्वा स्नानार्थं द्विजसत्तमाः ॥
गताः सर्वे सुसंहृष्टा स्वकीयानाश्रमान्प्रति व १३ ॥
अथ तेषु प्रयातेषु ब्राह्मणेषु रघूत्तमः ॥
प्रोवाच लक्ष्मणं पार्श्वे विनयावनतं स्थितम् ॥ १४ ॥
शाकमूलफलान्याशु श्राद्धार्थं समुपानय ॥
सौमित्रानय वैदेही स्वयं पचति भामिनी ॥ १५ ॥
तच्छ्रुत्वा लक्ष्मणस्तूर्णं जगामाऽरण्यमेव हि ॥
श्राद्धार्थमानिनायाऽऽशु फलानि विविधानि च ॥ १६ ॥
धात्रीफलानि चाऽऽम्राणि चिर्भटानीं गुदानि च ॥
करीराणि कपित्थानि तथैवाऽन्यानि भूरिशः ॥ १७ ॥
ततश्च पाचयामास तदर्थे जनकोद्भवा ॥
रामादेशात्स्वयं साध्वी विनयेन समन्विता ॥ १८ ॥
ततश्च कुतपे प्राप्ते काले ते द्विजसत्तमाः ॥
कृताह्निकाः समायाता रामभक्तिसमन्विताः ॥ १९ ॥
एतस्मिन्नंतरे सीता प्लक्षवृक्षांतरे स्थिता॥
आत्मानं गोपयामास यथा वेत्ति न राघवः॥६.२०.२०
स तां सीतेति सीतेति व्याहृत्याथ मुहुर्मुहुः॥
स्त्रीधर्मिणीति मत्वा तु लक्ष्मणं चेदमब्रवीत् ॥ २१ ॥
वत्स लक्ष्मण शुश्रूषां विप्राणां श्राद्धसंभवाम्॥
पादप्रक्षालनाद्यां त्वं यथावत्कर्तुमर्हसि ॥ २२ ॥
बाढमित्येव संप्रोक्तो लक्ष्मणः शुभलक्षणः ॥
चक्रे सर्वं तथा कर्म यथा नारी विचक्षणा ॥ २३ ॥
ततो निर्वर्तिते श्राद्धे ब्राह्मणेषु गतेष्वथ ॥
जनकस्य सुता साध्वी तत्क्षणात्समुपस्थिता ॥ २४ ॥
तां दृष्ट्वा राघवः सीतां कोपसंरक्तलोचनः ॥
प्रोवाच परुषैर्वाक्यैर्भर्त्सयमानो मुहुर्मुहुः॥ २५ ॥

आयातेषु द्विजातेषु श्राद्धकाल उपस्थिते ॥
क्व गता वद पापे त्वं मां परित्यज्य दूरतः ॥ २६ ॥
नैतद्युक्तं कुलस्त्रीणां विशेषादत्र कानने ॥
विहर्तुं दूरतः शून्ये तस्मात्त्याज्याऽसि मैथिलि ॥ २७ ॥
तस्य तद्वचनं श्रुत्वा भीता सा जनकोद्भवा ॥
उवाच वेपमानांगी प्रस्खलंत्या गिरा ततः ॥ २८ ॥
न मामर्हसि कार्येऽस्मिन्गर्हितुं रघुसत्तम ॥
यस्मादहमतिक्रान्ता स्थानादस्माच्छृणुष्व तत् ॥ २९ ॥
पिता तव मया दृष्टः साक्षाद्दशरथः स्वयम् ॥
ब्राह्मणस्य शरीरस्थो द्वितीयश्च पितामहः ॥ ६.२०.३० ॥
पितुः पितामहोऽन्यस्य तृतीयस्य रघूत्तम ॥
त्रयाणां च तथान्येषां त्रयोऽन्ये नृपसंनिभाः ॥ ३१ ॥
ब्राह्मणानां मया दृष्टाः शरीरस्थाः सुहर्षिताः ॥
मातामहानहं मन्ये तानपि त्रीनहं स्फुटम् ॥ ३२ ॥
ततो ऽहं लज्जया नष्टा दृष्ट्वा श्वशुरसंगमान् ॥
येन भुक्तानि भोज्यानि पुरा मृष्टान्यनेकशः ॥ ३३ ॥
तथा खाद्यानि लेह्यानि चोष्याणि च विशेषतः ॥
पिता तव कथं सोऽद्य कषायाणि कटूनि च ॥
भक्षयिष्यति दत्तानि स्वहस्तेन मया विभो ॥ ३४ ॥
एतस्मात्कारणान्नष्टा त्वत्समीपादहं विभो ॥
श्राद्धकालेऽपि संप्राप्ते सत्येनात्मानमालभे ॥ ३५८ ॥
तच्छ्रुत्वा संप्रहृष्टात्मा रामो राजीवलोचनः ॥
साधुसाध्विति तां प्राह परिष्वज्य मुहुर्मुहुः ॥ ३६ ॥
ततो भुक्त्वा स्वयं रामो लक्ष्मणेन समन्वितः ॥
सायाह्ने समनुप्राप्ते संध्याकार्यं विधाय च ॥ ३७ ॥
प्रोवाच लक्ष्मणं वत्स पर्णान्यास्तीर्य भूतले ॥
शय्यां कुरु समानीय पादशौचाय सज्जलम् ॥ ३८ ॥
ततः कोपपरीतात्मा सौमित्रिः प्राह राघवम् ॥

नाहं शय्यां करिष्यामि पादप्रक्षालनं न च ॥ ३९ ॥

तथाऽन्यदपि यत्किंचित्कर्म स्वल्पमपि प्रभो ॥

त्वां वा त्यक्त्वा गमिष्यामि कुत्रचित्पीडितो भृशम्॥ ॥ ६.२०.४० ॥

प्रेष्यत्वेन रघुश्रेष्ठ सत्यमेतन्मयोदितम् ॥

सीतायाः किं समादेश्यं न किंचित्संप्रयच्छसि ॥

अपि स्वल्पतरं राम मया त्वं किं करिष्यसि ॥ ४१ ॥

तस्य तद्वचनं श्रुत्वा विकृतं चापि राघवः ॥

तूष्णीं बभूव मेधावी हास्यं कृत्वा मनाक्ततः ॥ ४२ ॥

ततः स्वयं समुत्थाय कृत्वा स्वा स्तरकं शुभम् ॥

सीतया क्षालितांघ्रिस्तु सुष्वाप तदनंतरम् ॥ ४३ ॥

लक्ष्मणोऽपि विदूरस्थः कोपसंरक्तलोचनः ॥

वृक्षमूलं समाश्रित्य सुप्तश्चित्ते व्यचिंतयत् ॥ ४४ ॥

हत्वैनं राघवं सुप्तं सीतां पत्नीं विधाय च॥

किं गच्छामि निजं स्थानं विदेशं वाऽपिदूरतः ॥ ४५ ॥

एवं चिंतयतस्तस्य बहुधा लक्ष्मणस्य सा ॥

व्यतिक्रांता निशा विप्राः कृच्छ्रेण महता ततः ॥ ४६ ॥

न तस्य निश्चयो जज्ञे तस्मिन्कृत्ये कथंचन ॥

कोपात्प्रणष्टनिद्रस्य सोष्णं निःश्वसतो मुहुः ॥ ४७ ॥

ततः प्रभाते विमले कृतपूर्वाह्णिकक्रियः ॥

रामः सीतां समादाय प्रस्थितो दक्षिणां दिशम्॥ ४८ ॥

लक्ष्मणोऽपि धनुः सज्यं कृत्वा संधाय सायकम् ॥

अनुव्रजति पृष्ठस्थस्तस्य च्छिद्रं विलोकयन् ॥ ४९ ॥

ततो गोकर्णमासाद्य प्रणम्य च महेश्वरम् ॥

प्रतस्थे राघवो यावत्सौमित्रिस्तावदागतः ॥ ६.२०.५० ॥

बाष्पपर्याकुलाक्षश्च व्रीडयाऽधोमुखः स्थितः ॥

प्रणम्य शिरसा रामं ततः प्राह सुदुः खितः ॥ ५१ ॥

कुरु मे निग्रहं नाथ स्वामिद्रोहसमुद्भवम् ॥

अतिपापस्य दुष्टस्य कृतघ्नस्य रघूत्तम ॥ ५२॥

उत्तराणि विरुद्धानि तव दत्तानि भूरिशः ॥

मया विनाऽपराधेन वधोपायश्च चिंतितः ॥ ५३ ॥

ततश्च तं परिष्वज्य रामोऽपि निजबांधवम् ॥

बाष्पक्लिन्नमुखः प्राह क्षांतं वत्स मया तव ॥ ५४ ॥

न ते त्वन्यः प्रियः कश्चिन्मां मुक्त्वा वेद्म्यहं स्फुटम्॥

तस्मादागच्छ गच्छामो मार्गं वेलाधिका भवेत् ॥५५॥

॥ लक्ष्मण उवाच ॥ ॥

यदि मे निग्रहं नाथ न करिष्यसि सांप्रतम् ॥

प्राणत्यागं करिष्यामि वह्नावात्मविशुद्धये॥ ५६ ॥

रामलक्ष्मणयोरेवं वदतोस्तत्र कानने ॥

आजगाम मुनिश्रेष्ठो मार्कंड इति यः स्मृतः ॥ ५७ ॥

ततः प्रणम्य तं रामः सीतालक्ष्मणसंयुतः ॥

प्रोवाच स्वागतं तेस्तु कुतः प्राप्तोऽसि सन्मुने ॥ ५८ ॥ ॥

॥ मार्कंडेय उवाच ॥ ॥

प्रभासादहमायातः सांप्रतं रघुनंदन ॥

स्वमाश्रमं गमिष्यामि क्षेत्रेऽत्रैव व्यवस्थितम् ॥ ५९॥

मया राघव तत्राऽस्ति स्थापितः प्रपितामहः ॥

तस्याऽद्य दिवसे यात्रा बहुश्रेयःप्रदा स्मृता ॥ ६.२०.६० ॥

तस्मात्त्वमपि तत्रैव तूर्णमेव मया सह ॥

ममाश्रमपदे स्थित्वा पश्य देवं पितामहम् ॥ ६१ ॥

येन स्याः सर्वशत्रूणामगम्यस्त्वं रघूद्वह ॥

ज्येष्ठपञ्चदशीयोगे ज्येष्ठपुत्रः समाहितः ॥ ६२ ॥

यस्तत्र कुरुते स्नानं तस्य मृत्युभयं कुतः ॥

साऽद्य पंचदशी राम ज्येष्ठमाससमुद्भवा ॥

ज्येष्ठानक्षत्रसंयुक्ता तस्मात्स्नातुं त्वमर्हसि ॥ ६३ ॥

ततः संप्रस्थितं रामं दृष्ट्वा प्रोवाच लक्ष्मणः ॥

कुरु मे निग्रहं तावद्गच्छ तीर्थं ततः प्रभो ॥ ६४ ॥

॥ राम उवाच ॥ ॥

स्थितेऽस्मिन्मुनिशार्दूले समीपे वत्स लक्ष्मण ॥

अनर्हा निष्कृतिः कर्तुं तस्मादेनं प्रयाचय ॥ ६५ ॥

॥ लक्ष्मण उवाच ॥ ॥

स्वामिद्रोहे कृते ब्रह्मन्प्रायश्चित्तं यदीक्ष्यते ॥

तन्मे देहि स्फुटं येन कायशुद्धिः प्रजायते ॥ ६६ ॥

॥ मार्कंडेय उवाच ॥ ॥

ममाऽऽश्रमसमीपेऽस्ति सुतीर्थं बालमंडनम् ॥

स्वामिद्रोहरताः स्नाता मुच्यंते तत्र पातकैः ॥ ६७ ॥।

तत्र शक्रो विपाप्माभूद्धत्वा गर्भं दितेः पुरा ॥

विश्वस्ताया विशेषेण मातुः काकुत्स्थसत्तम ॥

तस्मात्तत्र द्रुतं गत्वा स्नानं कुरु महामते ॥ ६८ ॥

ततः प्रमुच्यसे पापात्स्वामिद्रोहसमुद्भवात् ॥

अपरं नास्ति ते दोषो मनसा पातकं कृतम् ॥ ६९ ॥

मनस्तापेन शुध्येत मतमेतन्मनीषिणाम् ॥

त्वया तु मनसा द्रोहः कृतो रामकृते यतः ॥ ६.२०.७० ॥

ईदृक्षान्मनसस्तापात्तस्माच्छुद्धोऽसि लक्ष्मण ॥

अपरं शृणु मे वाक्यं नास्ति दोषस्तवा नघ ॥ ७१ ॥

ईदृक्क्षेत्रप्रभावोऽयं सौभ्रात्रेण विवर्जितः ॥

पंचक्रोशात्मके क्षेत्रे ये वसन्त्यत्र लक्ष्मण ॥ ७२ ॥

अपि स्वल्पं न सौभ्रात्रं तेषां संजायते क्वचित् ॥ ७३ ॥

तावत्स्नेहपरो मर्त्यस्तावद्वदति कोमलम् ॥

चमत्कारोद्भवं क्षेत्रं यावन्न स्पृशतेंऽघ्रिभिः ॥ ७४ ॥

येऽन्येपि निवसंत्यत्र पशवः पक्षिणो मृगाः ॥

तेऽपि सौहार्दनिर्मुक्ताः सस्पर्द्धा इतरेतरम् ॥ ७५ ॥

कस्यचित्केनचित्सार्धं सौहार्दं नैव विद्यते ॥

तस्मान्नैवास्ति ते दोष ईदृक्क्षे त्रस्य संस्थितिः ॥ ७६ ॥

तथापि यदि ते काचिच्छंका चित्ते व्यवस्थिता ॥

तत्स्नानं कुरु गत्वा तु तस्मिंस्तीर्थे सुशोभने ॥ ७७ ॥

यत्र शक्रो विपाप्माऽभूद्द्रोहं कृत्वा सुदारुणम्॥

विश्वस्ताया दितेः पूर्वं गर्भपातसमुद्रवम् ॥ ७८ ॥

एवमुक्तस्तु सौमित्रिर्गत्वा तत्र द्विजोत्तमाः ॥

तीर्थे स्नानाच्च संपन्नो विशुद्धः शक्रसेविते ॥

रामोऽपि तत्र गत्वाशु मार्कंडेयवराश्रमे ॥ ७९ ॥

स्नानं कृत्वा यथान्यायं ददर्शाऽथ पितामहम् ॥

जगामाऽथ दिशं याम्यां सीतालक्ष्मणसंयुतः ॥ ६.२०.८० ॥

तत्प्रभावाज्जघानाऽथ खरादीन्राक्षसोत्तमान् ॥

तथा वै रावणं रौद्रं मेघनादसमन्वितम् ॥ ८३ ॥

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये रामकृतयाम्यदिशाप्रयाणे बालमंडनतीर्थमाहात्म्य वर्णनंनाम विंशोऽध्यायः ॥ २० ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२१

https://sa.wikisource.org/s/fzw
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ब्राह्मणा ऊचुः ॥ ॥

मार्कंडेन कदा तत्र स्थापितः प्रपितामहः ॥

कस्मिन्स्थाने कृतस्तेन स्वाश्रमो मुनिना वद ॥ १ ॥

॥ सूत उवाच ॥ ॥

मृकण्डाख्यो द्विजश्रेष्ठ आसीद्वेदविदां वरः ॥

चमत्कारपुराभ्याशेवानप्रस्याश्रमे स्थितः ॥ २ ॥

शांतात्मा नियमोपेतश्चकार सुमहत्तपः ॥

तस्यैवं वर्तमानस्य वानप्रस्थस्य चाश्रमे ॥ ३ ॥

पश्चिमे वयसि प्राप्ते पुत्रो जज्ञे सुशोभनः ॥

सर्वलक्षणसंपूर्णः पूर्णचंद्रसमप्रभः ॥ ४ ॥

मार्कंड इति नामाऽथ तस्य चक्रे पिता स्वयम् ॥

सोऽतीव ववृधे बालस्तस्मिन्नाश्रम उत्तमे॥५॥

शुक्लपक्षं समासाद्य तारापतिरिवांबरे॥

वर्धमानस्य तस्यैवमतीताः पंच वत्सराः॥

बालक्रीडाप्रसक्तस्य पितुरुत्सङ्गवर्तिनः॥६॥

कस्यचित्त्वथ कालस्य कश्चित्तत्र समागतः॥

सामुद्रिकस्य कृत्स्नस्य वेत्ता ज्ञानविधानभू_॥७॥

स तं शिशुं समालोक्य नखाग्रान्मूर्द्धजावधिम्॥

विस्मयोत्फुल्लनयन ईषद्धास्यमथाऽकरोत् ॥ ८ ॥

मृकंडोऽपि समालोक्य ज्ञानिनं सस्मिताननम् ॥

पप्रच्छ विनयोपेतः किंचित्तुष्टेन चेतसा ॥ ॥ ९ ॥

॥ मृकण्ड उवाच ॥ ॥

कस्मात्त्वं विप्रशार्दूल वीक्ष्येमं मम दारकम् ॥

सुचिरं विस्मयाविष्टस्ततोऽभूः सस्मिताननः ॥ ६.२१.१० ॥

॥ सूत उवाच ॥ ॥

असकृत्तेन संपृष्टः सकृद्ब्राह्मणसत्तमः ॥

ततश्च कथयामास हास्यकारणमेव हि ॥ ११ ॥

॥ ब्राह्मण उवाच ॥ ॥

लक्षणानि शिशोरस्य दृश्यंते यानि सन्मुने ॥

गात्रस्थानि भवेत्सत्यं तैः पुमानजरामरः ॥ १२ ॥

अस्य भावि पुनश्चाऽस्माद्दिवसान्निधनं शिशोः ॥

षड्भिर्मासैर्न सन्देहः सत्यमेतन्मयोदितम् ॥ १३ ॥

एवं ज्ञात्वा द्विजश्रेष्ठ कुरुष्वाऽस्य हितं च यत् ॥

इह लोके परे चैव बालकस्य ममाऽऽज्ञया ॥ १४ ॥

एवमुक्त्वा स विप्रेंद्रो जगामाऽभीप्सितां दिशम् ॥

मृकण्डोऽपि ततस्तस्य चक्रे मौंजीनिबन्धनम् ॥ १५ ॥

अकालेऽपि कुमारस्य किंचिद्ध्यात्वा निजे हृदि ॥

कारणं कारणज्ञः स ततः प्रोवाच तं सुतम् ॥ १६ ॥

यं कं चिद्वीक्षसे पुत्र भ्रममाणं द्विजोत्तमम् ॥

तस्यावश्यं त्वया कार्यं विनयादभि वादनम् ॥ १७ ॥

एवं तस्य व्रतस्थस्य षण्मासा दिवसैस्त्रिभिः ॥

हीनाः स्युर्ब्राह्मणेंद्राणां नमस्कारपरस्य च ॥ १९ ॥

एतस्मिन्नंतरे प्राप्ता अग्नि तीर्थपरायणाः ॥

सप्तर्षयः स्थितो यत्र मार्कंडो धृतमेखलः ॥ १९ ॥

तान्दृष्ट्वा स मुनीन्सर्वान्नमश्चक्रे मुनेः सुतः ॥

दीर्घायुर्भव तैरुक्तः सर्वैरपि पृथक्पृथक् ॥ ६.२१.२० ॥

अथ तं बालभावेन कौतुकाद्ब्रह्मचारिणः ॥

चिरं दृष्ट्वाऽब्रवीद्वाक्यं वसिष्ठो मुनिपुंगवः ॥ २१ ॥

सर्वैरेष शिशुः प्रोक्तो दीर्घा युरिति सादरम्॥

तृतीयेऽह्नि पुनः प्राणांस्त्यक्ष्यत्ययमसंशयः ॥ २२ ॥

तन्न युक्तं भवेदीदृगस्माकं वचनं द्विजाः ॥

तस्मात्तत्क्रियतां कर्म येनायं स्याच्चिरायुधृक् ॥ २३ ॥

ततो मिथः समालोच्य सर्वे ते मुनिपुंगवाः ॥
प्रोचुर्न जीवनोपायो भवेन्मुक्त्वा पितामहम् ॥ २४ ॥
तस्मात्तस्य पुरो नीत्वा बालोऽयं क्षीणजीवितः ॥
क्रियतां तस्य वाक्येन यथा स्याच्चिरजीवभाक् ॥ २५ ॥
ततस्तु ते समादाय सत्वरं ब्रह्मचारिणम् ॥
ब्रह्मलोकं समाजग्मुस्त्यक्त्वा तीर्थपराक्रमम् ॥ २६ ॥
ततः प्रणम्य तं देवं वेदोक्तैः स्तवनैर्द्विजाः ॥
स्तुत्वाऽथ संविधे तस्य निषेदुस्तदनन्तरम् ॥ २७ ॥
तेषामनंतरं सोऽपि नमश्चक्रे पितामहम् ॥
बालः प्रोक्तश्च दीर्घायुर्भवेति च स्वयंभुवा ॥ २८ ॥
अथोवाच मुनीन्सर्वान्विश्रांतान्पद्मयोनिजः ॥
कुतो यूयं समायाताः सांप्रतं केन हेतुना ॥ २९ ॥
प्रोच्यतां चापि यत्कृत्यं युष्माकं क्रियतेऽधुना ॥
मद्गृहे संप्रयातानां कोऽयं बालोऽपि सद्व्रती ॥ ६.२१.३० ॥
॥ मुनय ऊचुः ॥ ॥
तीर्थयात्राप्रसंगेन भ्रममाणा महीतलम् ः।
चमत्कारपुराभ्याशे वयं प्राप्ताः पितामह ॥ ३१ ॥
तत्रानेन वयं देव बालकेनाऽभिवादिताः ॥
क्रमात्सर्वेरपि प्रोक्तो दीर्घायुरिति सादरम् ॥ ३२ ॥
एतस्य तु पुनः शेषमायुषो दिवसत्र यम् ॥
विद्यते विबुधश्रेष्ठ व्रीडितास्तेन वै वयम् ॥ ३३ ॥
ततश्चैनं समादाय वयं प्राप्तास्तवांतिकम् ॥
भवताऽपि तथा प्रोक्तो दीर्धायु र्बालकोऽस्त्वयम् ॥ ३४ ॥
तस्माद्यथा वयं सत्या भवता सह पद्मज ॥
भवाम कुरु तत्कृत्यमेतस्मादागता वयम् ॥ ३५ ॥
॥ सूत उवाच ॥ ॥
तेषां तद्वचनं श्रुत्वा मुनीनां पद्मसंभवः ॥
प्रोवाच प्रहसन्वाक्यं समादाय च बालकम् ॥ ३६ ॥

मत्प्रसादादयं बालोजरामृत्युवि वर्जितः ॥
भविष्यति न संदेहो वेदविद्याविचक्षणः ॥ ३७ ॥
तस्मात्प्राग्धरणीपृष्ठं व्रजध्वं मुनिसत्तमाः ॥
बालमेनं समादाय तस्मिन्नेवास्य मंदिरं ॥ ३८ ॥
यावदस्य पिता वृद्धः पुत्रदर्शनविह्वलः ॥
न याति निधनं सार्धं धर्मपत्न्या द्विजोत्तमाः ॥ ३९. ॥
अथाऽऽयाताश्च तं बालं सर्वे ते मुनि सत्तमाः ॥
आगत्य वसुधापृष्ठं तस्यैवाश्रमसंनिधौ ॥ ६.२१.४० ॥
अमुंचन्नग्नितीर्थे तं समाभाष्य ततः परम् ॥
तीर्थयात्राकृते पश्चाज्जग्मुरन्यत्र सत्वरम् ॥ ॥ ४१ ॥
एतस्मिन्नंतरे विप्रो मृकंडः सुतवत्सलः ॥
नापश्यत्स्वसुतं पश्चाद्विललाप सुदुःखितः ॥ ४२ ॥
अहो मे तनयोऽभीष्टः कथमद्य न दृश्यते॥
कूपांतः पतितः किं नु किं व्यालैर्वा निपातितः ॥ ४३ ॥
कृत्वा मां दुःखसंतप्तं मातरं चापि पुत्रकः ॥
प्रस्थितो दीर्घमध्वानं विरुद्धं कृतवान्विधिः ॥ ॥ ४४ ॥
पश्य ब्राह्मणि पापेन मया दुष्कृतकारिणा ॥
न बालस्य मुखं दृष्टं प्रस्थितस्य यमालये ॥४५॥
कथितं ज्ञानिना तेन मम पूर्वं महात्म ना ॥
षड्भिर्मासैः सुतस्तेऽयं देहत्यागं करिष्यति ॥ ४६ ॥
सोऽहं पुत्रस्य दुःखेन साधयिष्ये हुताशनम् ॥
यावच्छोकाग्निना कायो दह्यते न वरान ने ॥ ४७ ॥
॥ ब्राह्मण्युवाच ॥ ॥
ममापि मतमेतद्धि यत्त्वया परिकीर्तितम् ॥
तत्किं चिरयसि ब्रह्मञ्छीघ्रं दारूणि चानय ॥ ४८ ॥
येनाऽहं भवता सार्धं प्रवेक्ष्यामि हुताशनम् ॥
पुत्रशोकेन संतप्ता सुभृशं दुःखशांतये ॥ ४९ ॥
॥ सूत उवाच ॥ ॥

एवं तयोः प्रवदतोर्दंपत्योर्द्विज सत्तमाः ॥
आजगामाऽथ संहृष्टः स बालः सन्निधिं तयोः ॥ ६.२१.५० ॥
तं दृष्ट्वा ब्राह्मणो हृष्टो ब्राह्मण्या सहितस्तदा ॥
आनंदाश्रुप्लुताक्षोऽथ सम्मुख स्तमुपाद्रवत् ॥ ५१ ॥
भूयोभूयः परिष्वज्य सभार्यः पृष्टवांस्तदा ॥
क्व गतः स्वाश्रमाद्वत्स चिरात्कस्मादिहाऽऽगतः॥ ५२ ॥
शोकार्णवे परिक्षिप्य मां सभार्यं वयोऽधिकम् ॥
तन्मा पुत्रक भूयस्त्वमीदृक्कर्म करिष्यसि ॥ ५३ ॥
॥ मार्कंडेय उवाच ॥ ॥
अत्राऽद्य मुनयः प्राप्ता मया ते चाभिवादिताः ॥
क्रमेण विनयात्तात स्मरमाणेन ते वचः ॥ ५४
दीर्घायुर्भव तैरुक्तः सर्वैरेव द्विजोत्तमैः ॥
दृष्ट्वा मां विस्मयाविष्टैर्बालकं व्रतिनं विभो ॥ ५५ ॥
अथ तात समालोक्य तेषां मध्यगतो मुनिः ॥
वसिष्ठस्तान्मुनीन्सर्वान्प्रोवाच प्रहसन्निव ॥ ५६ ॥
॥ वसिष्ठ उवाच ॥ ॥
दीर्घायुर्भव यः प्रोक्तो युष्माभिर्मुनिपुंगवाः ॥
तृतीये दिवसे सोऽयं बालः पंचत्वमेष्यति ॥ ५७ ॥
ततस्ते मुनयो भीता असत्यात्तात तत्क्षणात् ॥
समादाय ययुस्तत्र यत्र ब्रह्मा व्यवस्थितः ॥ ५८ ॥
नमस्कृतेन तेनाऽपि प्रोक्तोऽहं पद्मयोनिना ॥
दीर्घायुर्भव पृष्टश्च कुतस्त्वमिह चागतः ५९ ॥
अथ तैर्मुनिभिः सर्वैर्वृत्तांतं तस्य कीर्तितम्॥
आशीर्वादोद्भवं प्रोक्तं ततो वयमिहागताः॥ ६.२१.६० ॥
यथाऽयं बालको देव त्वत्प्रसादात्पितामह ॥
दीर्घायुर्जायते लोके तथा त्वं कर्तुमर्हसि ॥ ६१ ॥
ततोऽहं ब्रह्मणा तात जरामरणवर्जितः ॥
विहितः प्रेषितस्तूर्णं स्वगृहं प्रति तैः समम् ॥ ६२ ॥

ते तु मां मुनयोत्रैव प्रमुच्याश्रमसन्निधौ ॥
स्नानार्थं विविशुः सर्वे ह्रदेऽत्रैव सुशोभने ॥ ६३ ॥
तच्छ्रुत्वा वचनं तस्य मृकंडो हर्षसंयुतः ॥
प्रययौ सत्वरं तत्र यत्र ते मुनयः स्थिताः ॥ ६४ ॥
प्रणम्य तान्मुनीन्सर्वान्कृताञ्जलिपुटः स्थितः ॥
प्रोवाच वः प्रसादेन कुलं मे वृद्धिमागतम् ॥ ६५ ॥
साधु प्रोक्तमिदं कैश्चिदाचार्यैर्मुनिसत्तमाः ॥
साधुलोकं समाश्रित्य विख्यातं च जगत्त्रये ॥ ६६ ॥
साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ॥
तीर्थं फलति कालेन सद्यः साधुसमागमः ॥ ६७ ॥
तस्मादतिथयः प्राप्ता यूयं सर्वेऽद्य मे गृहम् ॥
प्रकरोमि किमातिथ्यं प्रोच्यतां द्विजसत्तमाः ॥ ६८ ॥
॥ ऋषय ऊचुः ॥ ॥
एतदेव मुनेऽस्माकमातिथ्यं कोटिसंमितम् ॥
अल्पायुरपि ते बालो यज्जातो मृत्युवर्जितः ॥ ६९ ॥
॥ मृकण्ड उवाच ॥ ॥
मृत्युनाऽऽलिंगितं बालमस्मदीयं मुनीश्वराः ॥
भवद्भिरद्य संरक्ष्य कुलं कृत्स्नं समुद्धृतम् ॥ ६.२१.७० ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥
निष्कृतिर्विहिता सद्भिः कृतघ्ने नाऽस्ति निष्कृतिः ॥ ७१ ॥।
तस्मात्कृतघ्नतादोषो न स्यान्मम मुनीश्वराः ॥
यथा कार्यं भवद्भिश्च तथा सर्वैर्न संशयः ॥ ७२ ॥
॥ ऋषय ऊचुः ॥ ॥
यदि प्रत्युपकाराय मन्यसे त्वं द्विजोत्तम ॥
गृहं कुरुष्व नो वाक्याद्देवस्य परमेष्ठिनः ॥ ७३ ॥
येनाऽयं बालकस्तेऽद्य कृतो मृत्युविवर्जितः ॥
तस्मात्स्थापय तीर्थेन देवं तं प्रपितामहम्॥७४॥
पुत्रेण सहितः पश्चादाराधय दिवानिशम्॥

वयमेव त्वया सार्धं तं च देवं पितामहम्॥७५॥

नित्यं प्रपूजयिष्यामस्तथान्येऽपि द्विजोत्तमाः॥

बालेनाऽनेन सार्धं ते सख्यमत्र स्थितं यतः॥

बालसख्यमिति ख्यातं नाम्ना तेन भविष्यति॥७६॥

तीर्थमन्यैरिति ख्यातं बालकानां हितावहम्॥

रोगार्तानां भयार्तानामस्माकं वचनात्सदा॥७७॥

अस्मिंस्तीर्थे शिशुं लोकाः स्नापयिष्यंति ये द्विज॥

रोगार्तं वा भयार्तं वा पीडितं वा ग्रहादिभिः॥७८॥

भविष्यति न संदेहः सर्वदोषविवर्जितः ॥

पितामहप्रसादेन तथाऽस्मद्वचनाद्द्विज ॥ ७९ ॥

ये पुनर्मानुषा विप्र निष्कामाः श्रद्धयान्विताः ॥

स्नानमात्रं करिष्यंति ते यांति परमां गतिम्॥ ६.२१.८० ॥

एवमुक्त्वाथ ते सर्वे मुनयः शंसितव्रताः ॥

तमामंत्र्य मुनिं जग्मुस्तीर्थान्यन्यानि सत्वराः ॥ ८१ ॥

मृकण्डोऽपि सपुत्रश्च तस्मिन्स्थाने पितामहम् ॥

स्थापयामास संहृष्टो ज्येष्ठे ज्येष्ठास्थिते विधौ ॥ ८२ ॥

ततश्चाऽऽराधयामास दिवारात्रमतंद्रितः ॥

सपुत्रः श्रद्धया युक्तः संप्राप्तश्च परां गतिम् ॥ ८३ ॥

॥ सूत उवाच ॥ ॥

ततःप्रभृति तत्तीर्थं बालसख्यमिति स्मृतम्॥

पावनं सर्वजंतूनां बालानां रोगनाशनम्॥ ८४ ॥

ज्येष्ठे ज्येष्ठासु यो बालस्तत्र स्नानं समाचरेत् ॥

न स पीडामवाप्नोति यावत्संवत्सरं द्विजाः ॥ ८५ ॥

ग्रहभूतपिशाचानां शाकिनीनां विशेषतः ॥

अगम्यः सर्वदुष्टानां तथाऽन्येषां प्रजायते ॥८६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये बालसख्यतीर्थमाहात्म्यवर्णनंनामैकविंशोऽध्यायः॥ ॥ २१ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२२

https://sa.wikisource.org/s/g2u
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तीर्थे शक्रसमुद्रवम्॥

स्वामिद्रोहकृतात्पापान्निर्मुक्तो यत्र लक्ष्मणः ॥ १ ॥

कथं तत्र पुरा शक्रः स्वामिद्रोहसमुद्भवात् ॥

पातकादेव निर्मुक्तः कस्मिन्काले च सूतज॥२॥

कस्माद्दितेर्महेन्द्रेण कृतं कृत्यं तथाविधम् ॥

येन संसूदितो गर्भः सर्वं विस्तरतो वद ॥३॥

॥ सूत उवाच ॥ ॥

ब्रह्मणो दक्षिणांगुष्ठाज्जज्ञे दक्षः प्रजापतिः ॥

स च संजनयामास पचाशत्कन्यकाः शुभाः ॥४॥

ददौ च दश धर्माय कश्यपाय त्रयोदश ॥

दिव्येन विधिना दक्षः सप्तविंशतिमिंदवे ॥ ५ ॥

अदितिश्च दितिश्चैव द्वे भार्ये मुख्यतां गते ॥

कश्यपस्य द्विजश्रेष्ठाः प्राणेभ्योऽपि प्रिये सदा ॥ ६ ॥

ततः स जनयामास देवाञ्च्छक्रपुरःसरान्॥

अदित्यां चैव दैत्यांश्च दित्यां स बलवत्तरान् ॥७॥

तेषां त्रैलोक्यराज्यार्थं मिथो जज्ञे महाहवः ॥

तत्र शक्रेण ते दैत्याः संग्रामे विनिपातिताः ॥ ८ ॥

ततः शोकपरा चक्रे दितिर्व्रतमनुत्तमम् ॥

पुत्रार्थं नियमोपेता क्षेत्रेऽत्रैव समाहिता ॥ ९ ॥

ततो वर्षसहस्रांते तस्यास्तुष्टो महेश्वरः ॥

उवाच परितुष्टोऽस्मि वरं प्रार्थय वांछितम् ॥ ६.२२.१० ॥

साऽब्रवीद्यदि मे तुष्टस्त्वं देव शशिशेखर ॥

तत्पुत्रं देहि देवानां सर्वेषां बलवत्तरम्॥

यज्ञभागप्रभोक्तारं देवानां दर्पनाशनम् ॥ ११ ॥

अवध्यं संगरे पूर्वैः सर्वैर्देवैः सवासवैः ॥

स तथेति प्रतिज्ञाय जगामादर्शनं हरः ॥ १२ ॥

दितिश्चैवाऽदधाद्गर्भं कश्यपान्मुनिपुंगवात् ॥

ततः शक्रो भयं चक्रे ज्ञात्वा तं गर्भसंभवम्॥

वदतो मुनिमुख्यस्य नारदस्य महात्मनः ॥ १३ ॥

ततो दुष्टां मतिं कृत्वा तस्य गर्भस्य नाशने ॥

चक्रे तस्याः स शुश्रूषां दिवारात्रमतंद्रितः ॥ १४ ॥

छिद्रमन्वेषमाणस्तु सुसूक्ष्ममपि च द्विजाः ॥

न तस्या लभते क्वाऽपि गता मासा नवैव तु ॥ १५ ॥

ततश्च दशमे मासि संप्राप्ते प्रसवोद्भवे ॥

गर्भालसा निशावक्त्रे सुप्ता सा दक्षिणामुखी ॥ १६ ॥

निद्रावशं तु संप्राप्ता विसंज्ञा समपद्यत॥

शक्रहस्तावमर्दोत्थपादसौख्येन निश्चला ॥ १७ ॥

तां विसंज्ञामथो वीक्ष्य त्यक्त्वा पादौ शतक्रतुः ॥

प्रविवेशोदरं तस्यास्तीक्ष्णं शस्त्रं करे दधत् ॥

तेनाऽसौ सप्तधा चके गर्भं शस्त्रेण देवपः ॥ १८ ॥

अथाऽपश्यत्क्षणात्सप्त वालकान्पूर्णविग्रहान् ॥

ततस्तानपि सप्तैव सप्तधा कृतवान्हरिः ॥ १९ ॥

जाता एकोनपञ्चाशदथ तत्रैव बालकाः ॥

तान्दृष्ट्वा वृद्धिमापन्नांस्ततो भीतः शतक्रतुः ॥

निश्चक्रामोदरातूर्णं दित्या यावन्न लक्षितः ॥ ६.२२.२० ॥

ततः प्रभाते विमले प्रोद्गते रविमंडले ॥

दितिः संजनयामास सप्तधा सप्त बालकान्॥ २१ ॥

ततोऽभ्येत्य सहस्राक्षो दुर्गंधेन समावृतः ॥

निस्तेजा म्लानवक्त्रश्च लज्जयाऽ धोमुखः स्थितः ॥ २२ ॥

तं दृष्ट्वा तादृशं शक्रं दितिः प्रोवाच सादरम् ॥

प्रणतं संस्थितं पार्श्वे भयव्याकुलचेतसम् ॥ २३ ॥

किं त्वं शक्र निरु त्साहस्तेजोद्युतिविवर्जितः ॥
शरीरात्तव दुर्गन्धः कस्मादीदृक्प्रजायते ॥ २४ ॥
किं त्वया निहतो विप्रोगुरुर्वाबालकोऽथवा ॥
नारी वा येन ते नष्टं तेजो गात्रसमुद्भवम् ॥ २५ ॥
हतो नखांभसा वा त्वं घृष्टः शूर्पानिलेन च ॥
अजामार्जनिकोत्थैश्चरजोभिर्वा समाश्रितः ॥ २६ ॥
॥ शक्र उवाच ॥ ॥
सत्यमेतन्महाभागे यत्त्वयोक्तोऽस्मि सांप्रतम् ॥
रात्रौ प्रविष्टः सुप्ताया जठरे तव पापकृत् ॥ २७ ॥
कृन्तश्चैकोनपञ्चाशत्कृत्वो गर्भो मया शुभे ॥
तावन्मात्रास्ततो जाता बालकाः सर्व एव ते ॥ २८ ॥
ततो भीत्या विनिष्क्रान्तस्त्वया देवि न लक्षितः ॥
एतस्मात्कारणाज्जाता तेजोहानिरनिन्दिते ॥ २९ ॥
॥ दितिरुवाच ॥ ॥
यस्मात्सत्यं त्वया प्रोक्तं पुरतो मम देवप ॥
तस्मात्प्रार्थय मत्तस्त्वं वरं यन्मनसेप्सि तम् ॥ ६.२२.३० ॥
॥ शक्र उवाच ॥ ॥
एते तव सुता देवि च्छिद्यमाना मयासिना ॥
रुदन्तो वारिता मन्दं मा रुदन्तु मुहुर्मुहुः ॥ ३१ ॥
मरुतो नामविख्यातास्तस्मात्संतुजगत्त्रये ॥
दैत्यभावविनिर्मुक्ता मद्विधेया मम प्रियाः ॥ ३२ ॥
यज्ञभागभुजः सर्वे भविष्यंति मया सह ॥
यस्मादेतन्मया तीर्थं बालकैस्तव मंडितम् ॥ ३३ ॥
बहुभिर्यास्यति ख्यातिं बालमंडनमित्यतः ॥
या च स्त्री गर्भसंयुक्ता स्नानं भक्त्या करिष्यीत ॥
न भविष्यंति छिद्राणि तस्या गर्भे कथंचन ॥ ३४ ॥
प्राप्ते प्रसवकाले तु या जलं प्राशयिष्यति ॥
तीर्थस्यास्य सुखेनैव प्रसविष्यति सा सुतम् ॥ ३५ ॥ ॥

॥ दितिरुवाच ॥ ॥

तवोच्छेदाय देवेश याचितः प्राज्ञया हरः ॥

एकं देव सुतं देहि सर्वदेवनिबर्हणम् ॥ ३६ ॥

त्वया चैकोनपंचाशत्प्रकारः स विनिर्मितः ॥

यस्माद्दतं त्वया प्रोक्तं तस्मादेतद्भविष्यति ॥ ३७ ॥

॥ सूत उवाच ॥ ॥

ततः प्रभृति ते जाता मरुतो विबुधैः समम् ॥

यज्ञभागस्य भोक्तारो दितेः शक्रस्य शासनात् ॥ ३८॥

अथ प्राह सहस्राक्षो देवाचार्यं बृहस्पतिम् ॥

मातुर्द्रोहकृतं पापं कथं यास्यति संक्ष यम्॥ ३९ ॥

॥ बृहस्पतिरुवाच ॥ ॥

अत्रैव कुरु देवेन्द्र तपः पापविशुद्धये ॥

तीर्थे यत्र कृतं पापं सर्वपातकनाशने ॥६.२२.४॥।

न यज्ञैर्न च दानेन नान्यैस्तीर्थसमाश्रयैः ॥

मातुर्द्रोहकृतं पापं नाशं याति पुरंदर ॥

एवमेतत्परित्यज्य तीर्थं मातुस्तवाऽऽश्रयम् ॥४॥।

॥ सूत उवाच ॥ ॥

ततस्तूर्णं सह साक्षः सहस्राक्षेशसंज्ञितम् ॥

लिंगं संस्थापयामास स्वयमेव द्विजोत्तमाः ॥ ४२ ॥

त्रिकालं पूजयामासपुष्पधूपानुलेपनैः ॥

तथान्यैर्बलिसत्का रैर्गीतैर्नृत्यैःपृथग्विधैः ॥ ४३ ॥

ततो वर्षसहस्रांते तुष्टस्तस्य महेश्वरः ॥

प्रोवाच वरदोऽस्मीति शक्र प्रार्थय वांछितम् ॥ ४४ ॥

॥ शक्र उवाच ॥ ॥।

मातुर्द्रोहकृतं पापं यातु मे त्रिपुरांतक ॥

तथाऽन्येषां मनुष्याणां येऽत्र त्वां श्रद्धयान्विताः ॥

पूजयिष्यंति सद्भक्त्या स्नानं कृत्वा समाहिताः ॥ ४५ ॥ ॥

॥ सूत उवाच ॥ ॥

स तथेति प्रतिज्ञाय जगामादर्शनं हरः ॥
शक्रोऽपि रहितः पापैर्जगाम त्रिदशालयम् ॥ ४६ ॥
एवं तत्र समुत्पन्नं तीर्थं तद्बालमंडनम् ॥।
स्वामिद्रोहकृतात्पापान्मुच्यंते यत्र मानवाः ॥ ४७ ॥
एतद्वः सर्वमाख्यातं बालमंडनसंभवम् ॥
माहात्म्यं तु द्विज श्रेष्ठाः शृणुध्वमथ सादरम् ॥ ४८ ॥
आश्विनस्य सिते पक्षे दशम्यादि यथाक्रमम् ॥
यस्तत्र कुरुते श्राद्धं यावत्पंचदशी तिथिः ॥ ४९ ॥
तीर्थानां स हि सर्वेषां स्नानजं लभते फलम् ॥
श्राद्धस्य करणाद्वापि वाजिमेधफलं द्विजाः ॥ ६.२२.५० ॥
तस्मिन्काले सहस्राक्षः समागच्छति भूतले ॥
भागानां मर्त्यजातानां सेवनाय सदैव हि ॥ ५१ ॥
यावद्भूमितले शक्रस्तिष्ठत्येवं द्विजोत्तमाः ॥
तीर्थे तीर्थानि सर्वाणि तावत्तिष्ठन्ति तत्र वै॥५२॥।
तस्मात्सर्वप्रयत्नेन तस्मिन्काले विशेषतः ॥
स्नात्वा तत्र शुभे तीर्थे शक्रेश्वरमथाऽर्चयेत् ॥ ५३ ॥
अत्र श्लोकौ पुरा गीतौ नारदैन सुर षिंणा॥
शृण्वंतु मुनयः सर्वे कीर्त्यमानौ मया हि तौ ॥ ५४ ॥
बालमंडनके स्नात्वा शक्रेश्वरमथेक्षयेत् ॥
यः पुमानाश्विने मासि प्राप्ते श्रवण पञ्चके ॥
स पापैर्मुच्यते सर्वैराजन्ममरणाद्भुवि ॥ ५५ ॥
प्रभावात्तस्य तीर्थस्य सत्यमेतद्द्विजोत्तमाः ॥ ५६ ॥
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये बालमण्डनतीर्थमाहात्म्यवर्णनंनाम द्वाविंशोऽध्यायः॥२२॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२३




सूत उवाच॥

तस्यैव पश्चिमे भागे मृगतीर्थमनुत्तमम्॥

अस्ति पुण्यतमं ख्यातं समस्ते धरणीतले॥॥।

तत्र ये मानवास्तीर्थे सम्यक्छ्रद्धासमन्विताः ॥

चैत्रशुक्लचतुर्दश्यां स्नानं कुर्वंतिभास्करे ॥ २ ॥

मध्ये स्थिते न ते यांति तिर्यग्योनौ कथंचन ॥

अपि पापसमोपेता दोषैः सर्वैः समन्विताः ॥ ३ ॥

कृतघ्ना नास्तिकाश्चौरा मर्यादाभेदकास्तथा ॥

स्नाता ये तत्र सत्तीर्थे ते यांति परमां गतिम् ॥

विमानवरमारूढाः स्तूयमानाश्च किंनरैः ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

मृगतीर्थं कथं तत्र संजातं सूतनंदन ॥

किं प्रभावं समाचक्ष्व परं कौतूहलं हि नः ॥ ॥ ५ ॥

॥ सूत उवाच ॥ ॥

पूर्वं तत्र महारण्ये नानामृगगणावृते ॥

नानाविहंगसंघुष्टे नानावृक्षसमाकुले ॥ ६ ॥

समायाता महारौद्रा लुब्ध काश्चापपाणयः ॥

कृष्णांगा भ्रममाणास्ते यमदूता इवाऽपरे ॥ ७ ॥

एतस्मिन्नंतरे दृष्टं मृगयूथं तरोरधः ॥

उपविष्टं सुविश्रब्धं तैस्तदा द्विज सत्तमाः ॥ ८ ॥

अथ ताँल्लुब्धकान्दृष्ट्वा दूरतोऽपि भयातुराः ॥

पलायनपराः सर्वे मृगा जग्मुर्द्रुतं ततः ॥ ९ ॥

अथ ते सन्निधौ दृष्ट्वा गंभीरं सलिलाशयम् ॥

प्रविष्टा हरिणाः सर्वे भयार्ताः शरपीडिताः ॥ ६.२३.१० ॥

ततस्तत्सलिलस्यांतस्ते मृगाः सर्व एव हि ॥

मानुषत्वमनुप्राप्तास्तत्प्रभावा द्द्विजोत्तमाः ॥ ११ ॥

अथ तान्मानुषीभूतान्पप्रच्छुर्लुब्धका मृगान्॥

मृगयूथं समायातं मार्गेणानेन सांप्रतम् ॥

केन मार्गेण निर्यातं तस्माद्वदत मा चिरम् ॥ १२ ॥

॥ मानुषा ऊचुः ॥ ॥

वयं ते हरिणाः सर्वे मानुषत्वं सुदुर्लभम् ॥

तीर्थस्याऽस्य प्रभावेन प्राप्ताः सत्यं न संशयः ॥ १३ ॥

तच्छ्रुत्वा विस्मयाविष्टास्ततस्ते लुब्धका द्रुतम् ॥

त्यक्त्वा धनूंषि बाणांश्च स्नानं तत्र प्रचक्रिरे ॥।४॥

स्नानमात्रात्ततः सर्वे दिव्यमाल्यानुलेपनाः ॥

दिव्यगात्रधरा सर्वे संजाताः पार्थिवोत्तमाः ॥ १५ ॥

॥ ऋषय ऊचुः ॥ ॥

अत्याश्चर्यमिदं सूत यत्त्वया परिकीर्तितम् ॥

स्नानमात्रेण ते प्राप्ता लुब्धकास्तादृशं वपुः ॥ १६ ॥

तथा मानुष्यमापन्ना मृगास्तोयावगाहनात् ॥

तत्कथं मेदिनीपृष्ठे तत्तीर्थं संबभूव ह ॥ १७ ॥

॥ सूत उवाच ॥ ॥

लिंगभेदोद्भवं तोयं यत्पुरा वः प्रकीर्तितम् ॥

आच्छन्नं पांसुभिः कृत्स्नं वायुना शक्रशासनात् ॥ १८ ॥

वल्मीकरंध्रमासाद्य तन्निष्क्रांतं पुनर्द्विजाः ॥

कालेन महता तत्र प्रदेशे स्वल्पमेव हि ॥ १९ ॥

यत्र स्नातः पुरा सद्यस्त्रिशंकुः पृथिवीपतिः ॥

दिव्यं वपुः पुनः प्राप्त श्चंडालत्वेन संस्थितः ॥ ६.२३.२० ॥

एतस्मात्कारणात्तत्र स्नाताः सारंगलुब्धकाः ॥

सर्वे पापविनिर्मुक्ताः संप्राप्ताः परमं वपुः ॥ २१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मृगतीर्थमाहात्म्यवर्णनंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥छ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२४

https://sa.wikisource.org/s/fhf
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्र विष्णुपदं नाम तीर्थं तीर्थे शुभे स्थितम् ॥

अपरं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ १ ॥

अयने दक्षिणे प्राप्ते यस्तत्पूज्य समाहितः ॥

निवेदयेत्तथात्मानं सम्यक्छ्रद्धासमन्वितः ॥ २ ॥

स मृतोऽप्ययने याम्ये तद्विष्णोः परमं पदम् ॥

प्राप्नोति नात्र संदेहस्तत्प्रभावाद्द्विजोत्तमाः ॥ ३ ॥

तथा चैवोत्तरे प्राप्ते पूजयित्वा यथाविधि ॥

सम्यङ्निवेदयेद्भक्त्या आत्मानं यः समाहितः ॥

सोऽपि विष्णोः पदं पुण्यं प्राप्य संजायते सुखी ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं तत्र पदं जातं विष्णोरव्यक्तजन्मनः ॥

कथं निवेद्यते तत्र सम्यगात्माऽ यनद्वये ॥ ५ ॥

तस्मिन्दृष्टेऽथवा स्पृष्टे यत्फलं लभ्यते नरैः ॥

तत्सर्वं सूतज ब्रूहि परं कौतूहलं हि नः ॥ ६ ॥

॥ सूत उवाच ॥ ॥

बलिर्बद्धो यदा तेन विष्णुना प्रभविष्णुना ॥

तदा क्रमैस्त्रिभिर्व्याप्तं त्रैलोक्यं सचराचरम् ॥ ७ ॥

हाटकेश्वरजे क्षेत्रे संन्यस्तः प्रथमः क्रमः ॥

महर्लोके द्विती यस्तु तदा तेन महात्मना ॥ ८ ॥

तृतीयस्य समुद्योगं यदा चक्रे स चक्रधृक् ॥

तदा भिन्नं द्विजश्रेष्ठा ब्रह्मांडं लघुतां गतम् ॥ ९ ॥

पादाग्रेणाथ संभिन्ने ब्रह्मांडे निर्मलं जलम् ॥

अंगुष्ठाग्रेण संप्राप्तं क्रमेण धरणीतले ॥ 6.24.१० ॥

ब्रह्मलोकं तदा कृत्स्नं प्लावयित्वा जलं हि तत् ॥
शुद्धस्फटिकसंकाशं कुन्देन्दुसदृशद्युति ॥
मत्स्यकच्छपसंकीर्णं ग्राहयूथैः समाकुलम् ॥ ११ ॥
ततः प्रभृति सा लोके गंगा विष्णुपदी स्मृता ॥
पवित्रमपि तत्क्षेत्रं नयन्ती सा पवित्रताम् ॥ १२ ॥
एवं विष्णोः पदं तत्र संजातं मुनिसत्तमाः ॥
सर्वपापहरं पुंसां तदा विष्णुपदी स्मृता ॥ १३ ॥
यस्तस्यां श्रद्धया युक्तः स्नानं कृत्वा यथोदितम् ॥
स्पर्शयेत्तत्पदं विष्णोः स याति परमं पदम् ॥ १४ ॥
यस्तत्रकुरुते श्राद्धं सम्यक्छ्रद्धासमन्वितः ॥
स्नात्वा विष्णुपदीतोये गयाश्राद्धफलं लभेत् ॥ १५ ॥
माघमासे नरः स्नानं प्रातरुत्थाय तत्र यः ॥
करोति सततं मर्त्यः स प्रयागफलं लभेत् ॥ १६ ॥
अथवा वत्सरं यावत्क्षणं कृत्वात्र भक्तितः ॥
तत्र स्नानं च यः कुर्यात्स मुक्तिं लभते नरः ॥ १७ ॥
यस्यास्थीनि जले तत्र क्षिप्यंते मनुजस्य च ॥
अपि पाप समाचारः स प्राप्नोति परां गतिम् ॥ १८ ॥
अपि पक्षिपतंगा ये पशवः कृमयो मृगाः ॥
प्रविष्टाः सलिले तस्मिंस्तृषार्ता भक्तिवर्जिताः ॥ १९ ॥
तेऽपि पापविनिर्मुक्ता देहांते चातिदुर्लभम् ॥
चक्रिणस्तत्पदं यांति जरामरणवर्जितम् ॥ 6.24.२० ॥
किं पुनः श्रद्धयोपेताः पर्वकाल उपस्थिते ॥
दत्त्वा दानं द्विजेन्द्राणां नरा वेदविदां द्विजाः ॥ २१ ॥
तत्र गाथा पुरा गीता नारदेन महर्षिणा ॥
विष्णुपद्याः समालोक्य प्रभावं पापनाशनम् ॥ २२ ॥
किं व्रतैर्नियमैर्वापि तपोभिर्विविधैर्मखैः ॥
कृतैर्विष्णुपदीतोये संस्थिते धरणीतले ॥ २३ ॥
एकः सर्वेषु तीर्थेषु स्नानं मर्त्यः समाचरेत् ॥

एको विष्णुपदीतोये स्नाति द्वाभ्यां समं फलम् ॥ २४ ॥

एको दानानि सर्वाणि ब्राह्मणेभ्यः प्रयच्छति ॥

एको विष्णुपदीतोये स्नाति द्वाभ्यां समं हि तत् ॥ २५ ॥

पञ्चाग्निसाधको ग्रीष्मे वर्षास्वाकाशमाश्रितः ॥

जलाश्रयश्च हेमंत एकः स्यात्पुरुषः क्षितौ ॥ २६ ॥

अन्यो विष्णुपदीतोये स्नात्वा विष्णुपदं स्पृशेत् ॥

तावुभावपि निर्दिष्टौ समौ पुरुषसत्तमौ ॥ २७ ॥

एकांतरोपवासी य एकः स्याज्जीविताविधि ॥

एकोविष्णुपदीतोये स्नाति द्वाभ्यां समं फलम् ॥ २८ ॥

त्रिरात्रोपोषितस्त्वेको यावद्वर्षशतं नरः ॥

एको विष्णुपदीतोये स्नाति द्वाभ्यां समं फलम् ॥ २९ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा मुनिश्रेष्ठो नारदो द्विजसत्तमाः ॥

विरराम मुनीनां स बहूनां पुरतोऽसकृत् ॥ 6.24.३० ॥

तस्मात्सर्व प्रयत्नेन स्नानं तत्र समाचरेत ॥

संस्पृशेच्च पदं विष्णोर्य इच्छेच्छ्रेय आत्मनः ॥ ३१ ॥

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तमात्मानं विनिवेदयेत् ॥

विष्णोः पदस्य संप्राप्ते अयने दक्षिणोत्तरे ॥ ३२ ॥

तत्केन विधिना सूत मन्त्रैश्च वद सत्वरम् ॥

वयं येन च तत्कुर्मः सर्वं भक्तिसमन्विताः ॥ ३३ ॥

॥ सूत उवाच ॥

दक्षिणे चोत्तरे चापि संप्राप्ते चायनद्वये ॥

पूजयित्वा पदं विष्णोरिमं मन्त्रमुदीरयेत् ॥ ३४ ॥

षण्मासाभ्यंतरे मृत्युर्यद्यकस्माद्भवेन्मम ॥

तत्ते पदं गतिर्मे स्यादहं ते भृत्यतां गतः ॥ ३५ ॥

एवं प्रोच्य हरिं पश्चात्पूजयेद्ब्राह्मणांस्ततः ॥

अथ तैः सममश्नीयात्ततः प्राप्नोति सद्गतिम् ॥ ३६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विष्णुपदीतीर्थोत्पत्तिवर्णनंनाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२५

https://sa.wikisource.org/s/fi2
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्राश्चर्यमभूत्पूर्वं यत्तद्ब्राह्मणसत्तमाः ॥

तद्वोऽहं संप्रवक्ष्यामि गंगामाहात्म्यसंभवम् ॥ १ ॥

चमत्कारपुरे विप्रः पुरासीत्संशितव्रतः ॥

चंडशर्मेति विख्यातो रूपौदार्यगुणान्वितः ॥ २ ॥

स यदा यौवनोपेतस्तदा वेश्यानुरागकृत् ॥

श्रोत्रियोऽप्यभवद्विप्रो यौवनोद्गारपीडितः ॥ ३ ॥

स कदाचिन्निशीथेऽथ तृषार्तश्च समुत्थितः ॥

प्रार्थयामास तां वेश्यां पानीयं पातुमुत्सहे ॥ ४ ॥

अथ सा सलिलभ्रांत्या करकं मद्यसंभवम् ॥

समादाय ददौ पानं तस्मै निद्राकुलाय च ॥ ५ ॥

मुखमध्यगते मद्ये सोऽपि तां कोपसंयुतः॥

वेश्यां प्रभर्त्सयामास धिग्धिक्शब्दैर्मुहुर्मुहुः ॥६॥

किमिदंकिमिदं पापे त्वया कर्म विगर्हितम् ॥

कृतं यन्मुखमध्ये मे प्रक्षिप्ता निंदिता सुरा ॥ ७ ॥

ब्राह्मण्यमद्य मे नष्टं मद्यपानादसंशयम् ॥

प्रायश्चित्तं करिष्यामि तस्मादात्मविशुद्धये ॥ ८ ॥

एवमुक्त्वा विनिष्क्रम्य तद्गृहाद्दुःखसंयुतः ॥

रुरोदाथ तदा गत्वा करुणं निर्जने वने ॥ ९ ॥

ततः प्रभातवेलायां स्नात्वा वस्त्रसमन्वितः ॥

त्यक्त्वा गात्रस्य रोमाणि समस्तानि द्विजोत्तमाः ॥ ६.२५.१० ॥

संप्राप्तो विप्रमुख्यानां सभा यत्र व्यवस्थिता ॥

पठंति सर्वशास्त्राणि वेदांतानि च कृत्स्नशः ॥ ११ ॥

अथासौ प्रणिपत्योच्चैः प्रोवाच द्विजसत्तमान्॥

जलभ्रांत्या सुरा पीता मया कुरुत निग्रहम् ॥ १२ ॥

अथ ते धर्मशास्त्राणि प्रविचार्य पुनःपुनः ॥

तमूचुर्ब्राह्मणाः सर्वे प्रायश्चित्तकृते स्थितम्॥ १३ ॥

॥ ब्राह्मणा ऊचुः ॥

अज्ञानाज्ज्ञानतो वापि सुरां चेद्ब्राह्मणः पिबेत्॥

अग्निवर्णं घृतं पीत्वा तावन्मात्रंविशु ध्यति ॥ १४ ॥

स त्वं वांछसि चेच्छुद्धिमग्निवर्णं घृतं पिब ॥

यावन्मात्रा सुरा पीता तावन्मात्रं विशुद्धये ॥ १५ ॥

स तथेति प्रतिज्ञाय घृतमादाय तत्क्षणात् ॥

चक्रे वह्निसमं यावत्पानार्थं द्विजसत्तमाः॥ १६ ॥

तावत्तस्य पिता प्राप्तः श्रुत्वा वार्तां सभार्यकः ॥

किमिदं किमिदं पुत्र ब्रुवाणो दुःख संयुतः ॥

अश्रुपूर्णेक्षणो दीनो वाष्पगद्गदया गिरा ॥ १७ ॥

ततः स कथयामास सर्वरात्रिसमुद्भवम्॥

वृत्तांतं तच्च विप्राणां प्रायश्चित्तं यथोचितम् ॥ ॥।८॥

अथ स ब्राह्मणान्प्राह सर्वांस्तान्द्विजसत्तमाः ॥

प्रायश्चित्तं सुतायास्मै ममान्यत्संप्रदीयताम् ॥।९॥

संचिन्त्य धर्मशास्त्राणि विचार्य च पुनः पुनः ॥

सर्वस्वमपि दास्यामि पुत्रहेतोरसंशयम् ॥ ६.२५.२० ॥

ततस्ते ब्राह्मणाः सर्वे भूयोभूयश्च सादरम् ॥

विचिंत्य धर्मशास्त्राणि तमूचुर्मुनिसत्तमाः ॥ ॥२॥।

नान्यदस्ति सुरापाने प्रायश्चित्तं द्विजन्मनाम् ॥

मौंजीहोमं विना विप्र यद्युक्तं तत्समाचर ॥२२॥

ततः स स्वसुतं प्राह नैव त्वं कर्तुमर्हसि ॥

यच्छ दानानि विप्रेभ्यस्तीर्थयात्रां समाचर ॥ २३ ॥

ततः शुद्धिं समाप्नोषि क्रमान्नियमसंयुतः ॥

व्रतैश्च विविधैश्चीर्णैः सत्यमेतद्ब्रवीम्यहम् ॥ २४ ॥

न ब्राह्मणसमादिष्टं प्रायश्चित्त विशुद्धये ॥ २५ ॥

॥ पुत्र उवाच ॥ ॥

एतन्मम महाभागा यद्ब्रुवंति व्रतादिकम् ॥

तस्मात्कार्यो मया तात मौंजीहोमो न संशयः ॥ २६ ॥

यन्मया तु कृतं बाल्ये तत्सर्वं क्षंतुमर्हसि ॥ २७ ॥

॥ सूत उवाच ॥ ॥

तस्य तं निश्चयं ज्ञात्वा स पिता सुतवत्सलः ॥

सर्वस्वं प्रददौ रुष्टो मरणे कृतनिश्चयः ॥ २८ ॥

साऽपि तस्य सती भार्या कृत्वा मृत्युविनिश्चयम् ॥

तमुवाच सुतं दृष्ट्वा सर्वं दत्त्वा गृहादिकम्॥ २९ ॥

आवाभ्यां संप्रविष्टाभ्यां वह्नौ पुत्र ततस्तदा ॥

मौंजीहोमस्त्वया कार्यो मां तातं यदि मन्यसे ॥ ६.२५.३० ॥

ततस्तौ दम्पती हृष्टौ यावद्वह्निसमीपगौ ॥

संजातौ मरणार्थाय स च ताभ्यां समुद्भवः ॥ ३१ ॥

तावत्प्राप्तो मुनिर्नाम शांडिल्यो वेदपारगः ॥

तीर्थयात्राप्रसंगेन तत्र देशे द्विजोत्तमाः ॥ ३२ ॥

स वृत्तांतं समाकर्ण्य कोपसंरक्तलोचनः ॥

अब्रवीद्ब्राह्मणान्सर्वान्भर्त्सयमानो मुहुर्मुहुः ॥ ३३ ॥

अहो मूढतमा यूयं यदेतद्ब्राह्मणत्रयम् ॥

वृथा मृत्युमवाप्नोति निग्रहे सुगमे सति॥३४॥

अत्र कात्यायनेनोक्तं यद्वचः सुमहात्मना ॥

तच्छृण्वन्तु द्विजाः सर्वे प्रायश्चित्ती तथाप्ययम् ॥ ३५ ॥

चांद्रायणानि कृच्छ्राणि तथा सांतपनानि च ॥

प्रायश्चित्तानि दीयंते यत्र गंगा न विद्यते ॥ ३६ ॥

अत्र विष्णुपदी गंगा तत्क्षेत्रे तु द्विजोत्तमाः ॥

तस्यां स्नानं करोत्वेष ततः शुद्धिमवाप्स्यति ॥ ३७ ॥

मौंजीहोमः प्रमाणं स्यान्मुनिवाक्येन चेद्भवेत् ॥

तदेतदपि वाक्यं हि कात्यायनमुनेः स्फुटम् ॥ ३८ ॥

ततस्ते ब्राह्मणाः सर्वे हर्षेण महतान्विताः ॥

साधुसाध्विति तं प्रोच्य प्रोचुः सत्यमिदं मुने ॥ ३९ ॥

ततः प्रबोध्य तं विप्रं निन्युस्तत्र द्विजोत्तमाः ॥

यत्र विष्णुपदी गंगा स्वयमेव व्यवस्थिता ॥ ६.२५.४० ॥

तत्र स ब्राह्मणो यावद्गंगातोयसमुद्भवम् ॥

गंडूषं कुरुते वक्त्रे तावच्छुद्धो बभूव सः ॥

उदरादखिलं तोयं निष्क्रांतं द्विजसत्तमाः ॥ ४१ ॥

ततोऽवगाहते यावत्तस्यास्तोयं सुशोभनम् ॥

तावदाकाशसंभूता गम्भीरोवाच भारती ॥ ४२ ॥

शुद्धोऽयं ब्राह्मणः साक्षाद्विष्णुपद्याः समागमात् ॥

स्नानादाचमनादेव तस्माद्यातु गृहं निजम् ॥ ॥ ४३ ॥

ततस्ते ब्राह्मणाः सर्वे चंडशर्मादयश्च ये ॥

दिष्ट्यादिष्ट्येति जल्पन्तः स्वानि हर्म्याणि भेजिरे ॥ ४४ ॥

॥ सूत उवाच ॥ ॥

एवं प्रभावा सा विप्रा गंगा विष्णुपदी स्थिता ॥

तस्य क्षेत्रस्य सीमांते पश्चिमे पापनाशिनी ॥ ४५ ॥

एतद्वः सर्वमाख्यातं विष्णुपद्याः समुद्भवम् ॥

माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये विष्णुपदीगंगामाहाम्यवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२६



॥ सूत उवाच ॥ ॥

यत्पूर्वापरसीमान्तं तन्मया संप्रकीर्तितम् ॥

दक्षिणोत्तरसंभूतं तद्वो वक्ष्यामि सांप्रतम् ॥ १ ॥

अस्ति भूमितले ख्याता मधुराख्या महापुरी ॥

नानाविप्रसमाकीर्णा यमुनातटसंश्रया ॥ २ ॥

तस्यामासीद्द्विजश्रेष्ठो गोकर्ण इति विश्रुतः ॥

वेदाध्ययनसंपन्नः सर्वशास्त्रविचक्षणः ॥ ३ ॥

अथापरोऽस्ति तन्नामा तत्र विप्रो वयोऽन्वितः ॥

सोऽपि च ब्राह्मणः श्रेष्ठः सर्वविद्यासु पारगः ॥ ४ ॥

कस्यचित्त्वथकालस्य यमः प्राह स्वकिंकरम् ॥

ऊर्ध्वकेशं सुरक्ताक्षं कृष्णदन्तं भयानकम् ॥ ५ ॥

अद्य गच्छ द्रुतं दूत मथुराख्यां महापुरीम् ॥

आनयस्व द्विजश्रेष्ठं तस्यां गोकर्णसंज्ञकम् ॥ ६ ॥

तस्यायुषः क्षयो जातो मध्याह्नेऽद्यतने दिने ॥

त्याज्योऽन्योऽस्ति च तत्रैव चिरायुस्तादृशो द्विजः ॥ .७ ॥

॥ सूत उवाच ॥ ॥

अथ दूतो द्रुतं गत्वा तां पुरीं यमशासनात् ॥

विभ्रमादानयामास गोकर्णं च चिरायुषम्॥ ८ ॥

ततः कोपपरीतात्मा यमः प्रोवाच किंकरम् ॥

दीर्घायुरेष आनीतो धिक्पाप किमिदं कृतम् ॥९॥

तस्मात्प्रापय तत्रैव यावदस्य च बन्धुभिः ॥

नो गात्रं दह्यते शोकात्सुसमिद्धेन वह्निना ॥ ६.२६.१० ॥

॥ ॥ ब्राह्मण उवाच ॥ ॥

नाहं तत्र गमिष्यामि दिष्ट्या प्राप्तोस्मि तेंऽतिकम्॥

वांछमानः सदा मृत्युं दारिद्र्येण कदर्थितः ॥ ११ ॥

॥ यम उवाच ॥ ॥

निमिषेणापि नो मर्त्यमानयामि महीतलात् ॥

आयुःशेषेण विप्रेन्द्र पूर्णेनाथ त्यजामि न॥ १२ ॥

तत एव हि मे नाम धर्मराज इति स्मृतम्॥

समत्वात्सर्वजंतूनां पक्षपातविवर्जनात् ॥ १३ ॥

तस्माद्गच्छ गृहं विप्र यावद्गात्रं न दह्यते ॥

बंधुभिस्तव शोकार्तैर्नाधुना तत्र ते स्थितिः ॥ १४ ॥

प्रार्थयस्व मनोऽभीष्टं वरं ब्राह्मणसत्तम ॥

न वृथा दर्शनं मे स्यात्कथंचिदपि देहिनाम् ॥ १५ ॥

॥ ब्राह्मण उवाच ॥ ॥

अवश्यं यदि गंतव्यं मया देव गृहं पुनः ॥

तन्ममाचक्ष्व पृच्छामि वरश्चैष भवेन्मम ॥ १६ ॥

एते ये नरका रौद्राः सेविताः पापकर्मभिः ॥

दृश्यंते वद कः केन कर्मणा सेव्यते जनैः ॥ १७ ॥

॥ यम उवाच ॥ ॥

असंख्या नरका विप्र यथा प्राणिगणाः क्षितौ ॥

कृत्स्नशः कथितुं शक्या नैववर्षशतैरपि ॥ १८ ॥

कीर्तयिष्यामि तेषां ते प्राधान्येन द्विजोत्तम ॥

एकविंशतिसंख्या ये पापिलोककृते कृताः ॥ १९ ॥

आद्योऽयं रौरवो नाम नरको द्विजसत्तम ॥

प्रतप्ततैलकुंभेषु पच्यंते यत्र जंतवः ॥ ६.२६.२० ॥

हा मातस्तात पुत्रेति प्रकुर्वंति सुदारुणम्॥

परपाकरताः क्षुद्राः परद्रव्या पहारकाः ॥ २१ ॥

द्वितीय एष विप्रेंद्र महारौरवसंज्ञितः ॥

कृतघ्नैः सेव्यते नित्यं तथा च गुरुतल्पगैः॥२२ ॥

रोरूयमाणैर्दाहार्तैः पच्यमानै र्हविर्भुजा ॥

खंडशः क्रियमाणैश्च तीक्ष्णशस्त्रैरनेकधा ॥ २३ ॥

तृतीयोऽधतमोनाम नरकः सुभयावहः ॥
अत्र ये पुरुषा यांति तांश्च वक्ष्यामि सुद्विज ॥ २४ ॥
दुष्टेन चक्षुषा दृष्टाः परदारा नराधमैः ॥
सुलोहास्याः खगास्तेषां हरंत्यत्र विलोचने ॥ २९ ॥
चतुर्थोऽयं प्रतप्ताख्यो नरकः संप्रकीर्तितः ॥
अत्र ते यातनां भुक्त्वा तथा शुद्धा भवंति च ॥ २६ ॥
यैः कृता सततं निंदा गुरुदेवतपस्वि नाम्॥
तेषामुत्पाट्यते जिह्वा जाताजाताऽत्र भूरिशः ॥ २७ ॥
एषोऽन्यः पंचमो नाम सुप्रसिद्धो विदारकः ॥
मित्रद्रोहरताश्चात्र च्छिद्यंते करपत्रकैः ॥ २८ ॥
प्रतप्तवालुकापूर्णो ध्मायते यश्च वह्निना ॥
निकुम्भ इति विख्यातः षष्ठो लोकभयावहः ॥ २९ ॥
प्राणांतिकं पुरा दत्तं यैर्दुःखं प्राणिनां नरैः ॥
अपराधं विना तेऽत्र पच्यंते वालुकोत्करैः ॥ ६.२६.३० ॥
बीभत्सुरिति विख्यातः सप्तमो नरकाधमः ॥
मूत्रामेध्य समाकीर्णः समंतादतिगर्हितः ॥ ३१ ॥
राजगामि च पैशुन्यं यैः कृतं सुदुरात्मभिः ॥
अमेध्यपूर्णवक्त्रास्ते धार्यंतेऽत्र नराधमाः ॥ ३२ ॥
कुत्सितोनाम विख्यातो द्विजायं चाष्टमोऽधमः ॥
श्लेष्ममूत्राभिसंपूर्णैस्तथा गन्धैश्च कुत्सितैः ॥ ३३ ॥
गुरुदेवातिथिभ्यश्च स्वभृत्येभ्यो विशेषतः ॥
अदत्त्वा भोजनं यैस्तु कृतं तेऽत्र व्यवस्थिताः ॥ ३४ ॥
एष दुर्गमनामा च नवमो द्विजसत्तम ॥
तीक्ष्णकंटकसंकीर्णः सर्पवृश्चिकसंकुलः ॥ ॥ ३५ ॥
एकसार्थप्रयाताय क्षुत्क्षामायावसीदते ॥
अदत्त्वा भोजनं यैश्च कृतं तेऽत्र व्यवस्थिताः ॥ ३६ ॥
दशमोऽयं सुविख्यातो नरको नामदुः सहः ॥
तप्तलोहमयैः स्तंभैः समंतात्परिवारितः ॥ ३७ ॥

ये पापाः परदारेषु रक्ता मिष्टामिषेषु वा ॥
तप्तलोहमयान्स्तंभांस्तेऽत्रालिंगंति मानवाः ॥ ॥ ३८ ॥
एकादशोऽपरश्चायमाकर्षाख्यः प्रकीर्तितः ॥
नरको विप्रशार्दूल तप्तसंदंशसंकुलः ॥ ३९ ॥
स्त्रीविप्रगुरुदेवानां वित्तं चाश्नंति ये नराः ॥
संदंशैरपि कृष्यंते तत्र तप्तैः समंततः ॥ ६.२६.४० ॥
संदंशो द्वादशश्चायं तथाऽभक्ष्यप्रभक्षकाः ॥
लोहदंतमुखैर्गृधैर्भक्ष्यंतेऽत्र नराधमाः ॥ ४१ ॥
एष त्रयोदशोनाम सुविख्यातो नियंत्रकः ॥
समंतात्कृमिभिर्व्याप्तस्तथा च दृढबन्धनैः ॥ ४२ ॥
न्यासापहारकाः पापास्तत्र बद्धाश्च बंधनैः ॥
कृमिवृश्चिक कीटाद्यैर्भक्ष्यते द्विजसत्तम ॥ ४३ ॥
तथा चतुर्दशोनाम नरकोऽधोमुखः स्थितः ॥
नरकाणां समस्तानामेष रौद्रतमाकृतिः ॥ ४४ ॥
अत्र चाधोमुखा बद्धा वृक्षशाखावलंबिताः ॥
पच्यंते वह्निनाऽधस्ताद्ब्रह्मघ्ना ये च मानवाः ॥ ४५ ॥
यूकामत्कुणदंशाद्यैः संकीर्णोऽयं द्विजोत्तम ॥
नरको भीषणो नाम ख्यातः पञ्चदशो महान् ॥ ४६ ॥
कूटसाक्ष्यरतानां च तथैवानृतवादिनाम् ॥
अत्राश्रयो मया दत्तस्तथान्येषां कुकर्मिणाम् ॥ ४७ ॥
एष षोडश उद्दिष्टो नरको नाम क्षुद्रदः ॥
युधार्तैर्मानवैर्व्याप्तः समंताद्द्विजसत्तम ॥४९॥
मृष्टमांसानि यैः पापैर्भक्षितानि द्विजन्मभिः ॥
क्षुधार्तास्ते निजं कायं भक्षयंत्यत्र संस्थिताः ॥ ४९ ॥
तथा सप्तदशश्चायं क्षाराख्यो नरकः स्मृतः ॥
सुक्षारेण समाकीर्णः सर्वप्राणिभयावहः ॥ ६.२६.५० ॥
व्रतभंगकरा ये च ये च पाषण्डिनो नराः ॥
तेऽत्रागत्य शितैः शस्त्रैः पिष्यंते पापकृत्तमाः ॥ ५१ ॥

एष चाष्टादशो नाम कथितश्च निदाघकः ॥
ज्वलितांगारसंकीर्णो दुःसेव्यः सर्वदेहिनाम् ॥ ५२ ॥
दूषयंति च ये शास्त्रं काव्यं विप्रं च कन्यकाम् ॥
अंगारांतः स्थितातेऽत्र ध्रियंते मानवा द्विज ॥ ॥ ५३ ॥
एकोनविंशतिश्चायं प्रख्यातः कूटशाल्मलिः ॥
सुतीक्ष्णकंटकाकीर्णः समंताद्द्विजसत्तम ।ा ५४ ॥
नास्तिका भिन्नमर्यादा ये च विप्रस्य घातकाः ॥
ते सर्वेऽत्र नरा नित्यमारुहंति पतंति च ॥९५॥
एष विंशतिमो नाम नरको द्विजसत्तम ॥
असिपत्रवनाख्यश्च कष्टसेव्यो दुरात्मभिः ॥ ॥ ५६ ॥
अत्र यांति नरा विप्र पररंध्रनिरीक्षकाः ॥
कूटकर्मरता ये च शास्त्रविक्रयकारकाः ॥ ५७ ॥
एकविंशतिमा चैषा नाम्ना वैतरणी नदी ॥
सर्वैरेव नरैर्गम्या धर्मपापानुयायिभिः ॥ ५८ ॥
मृत्युकाले समुत्पन्ने धेनुं यच्छंति ये नराः ॥
तस्या लांगूलमाश्रित्य तारयंति सुखेन च ॥ ५९ ॥
अदत्त्वा गां च ये मर्त्या म्रियंते द्विजसत्तम ॥
तीर्त्वा हस्तादिभिर्दुर्गा त इमां संतरंति च ॥ ६.२६.६०॥।
एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तम ॥
विस्तरेण तव प्रीत्या स्वरूपं नरकोद्भवम्॥६१॥।
तस्माद्गच्छ गृहं शीघ्रं यावद्गात्रं न दह्यते॥
बन्धुभिस्तव शोकार्तैर्गृहीत्वा वांछितं धनम् ॥ ६२ ॥ ॥
॥ ब्राह्मण उवाच ॥ ॥
यदि देव मया सम्यग्गंतव्यं निजमंदिरम् ॥
तद्ब्रूहि कर्मणा येन नरकं याति नो नरः ॥ ६३ ॥
॥ यम उवाच ॥ ॥ ॥
तीर्थयात्रापरो नित्यं देवतातिथिपूजकः ॥
ब्रह्मण्यश्च शरण्यश्च न याति नरकं नरः ॥ ६४ ॥

परोपकारसंयुक्तो नित्यं जपपरायणः ॥

स्वाध्यायनिरतश्चैव न याति नरकं द्विज ॥ ६५ ॥

वापीकूपतडागानि देवतायतनानि च ॥

यः करोति नरो नित्यं नरकं न स पश्यति ॥ ६६ ॥

हेमंते वह्निदो यः स्यात्तथा ग्रीष्मे जलप्रदः ॥

वर्षास्वाश्रयदो यश्च नरकं न स पश्यति ॥ ६७ ॥

व्रतोपवाससंयुक्तः शांतात्मा विजितेंद्रियः ॥

ब्रह्मचारी सदा ध्यानी नरकं याति नो नरः ॥ ६८ ॥

अन्नप्रदो नरो यः स्याद्विशेषेण तिलप्रदः ॥

अहिंसानिरतश्चैव नरकं न स पश्यति ॥६९॥

वेदाध्ययनसंपन्नः शास्त्रासक्तः सुमृष्टवाक् ॥

धर्माख्यानपरो नित्यं नरकं न स पश्यति ॥ ६.२६.७० ॥

॥ ब्राह्मण उवाच ॥ ॥

एतन्मूर्खोऽपि जानाति शुभकर्मकरः पुमान् ॥

न याति नरकं स्वर्गे तथा पापक्रियारतः ॥ ७१ ॥

तस्मादशुभकर्मापि कर्मणा येन पातकम् ॥

स्वल्पेनापि निहन्त्याशु याति स्वर्गं नरस्ततः ॥ ७२ ॥

तन्मेब्रूहि सुरश्रेष्ठ व्रतं नियममेव वा ॥

तीर्थं वा जपहोमं वा सर्वलोकसुखावहम् ॥ ७३ ॥

॥ यम उवाच ॥ ॥

अत्र ते सुमहद्गुह्यं कीर्तयिष्ये द्विजोत्तध ॥

गोपनीयं प्रयत्नेन वचनान्मम सर्वदा ॥७४॥

महापातकयुक्तोऽपि पुरुषो येन कर्मणा ॥

अनुष्ठितेन नो याति नरकं क्लेशकारकम्॥ ७५ ॥

आनर्तविषये रम्यं सर्वतीर्थमयं शुभम् ॥

हाटकेश्वरजं क्षेत्रं महापातकनाशनम्॥७६॥

तत्रैकमपि मासार्धं यो भक्त्या पूजयेद्धरम्॥

स सर्वपापयुक्तोऽपि शिवलोके महीयते ॥ ७७ ॥

तस्मात्तत्र द्रुतं गत्वा त्वमाराधय शंकरम् ॥

येन गच्छसि निर्वाणं दशभिः पुरुषैः सह॥ ७८ ॥

॥सूत उवाच॥ ॥

उपदेशं समाकर्ण्य स यदा प्रस्थितो गृहम्॥

धर्मराजस्य संहृष्टो मधुरां नगरीं प्रति ॥७९॥

तावद्द्वितीयं गो कर्णं दूत आदाय संगतः ॥

दर्शयामास धृत्वाग्रे धर्मराजस्य सत्वरम् ॥ ६.२६.८० ॥

ततः प्रोवाच तं दूतं धर्मराजः प्रहर्षितः ॥

गोकर्णं पुरतो दृष्ट्वा द्वितीयं प्रस्थितं गृहम् ॥८१॥।

यस्मात्कालात्ययं कृत्वाऽऽनीतोऽयं ब्राह्मणस्त्वया ॥

तस्मादेनमपि क्षिप्रं द्वितीयेन समं त्यज ॥८२॥

ततस्तौ तत्क्षणान्मुक्तौ गोकर्णौ ब्राह्मणौ समम् ॥

स्वंस्वं कलेवरं प्राप्य सहसाथ समन्वितौ ॥ ८३ ॥

ततः स कथयामास गोकर्णः प्रथमो द्विजः ॥

यमोपदेशसंजुष्टो द्वितीयाय सविस्तरम् ॥ ८४ ॥

ततो गृहं परित्यज्य गोकर्णौ द्वावपि स्थितौ ॥

देवतायतनैर्व्याप्तं क्षेत्रं दृष्ट्वाऽखिलं ततः ॥ ८५ ॥

लिंगे संस्थापिते ताभ्यां सीमांते दक्षिणोत्तरे ॥

हाटकेश्वरजं क्षेत्रं संप्राप्य तपसि द्रुतम् ।। ८६ ॥

ततः शिवं समाराध्य तपः कृत्वा यथोचितम् ॥

सशरीरौ दिवं प्राप्तौ तत्प्रभावाद्विजोत्तमाः ॥ ८७ ॥

ताभ्यां मार्गचतुर्दश्यां कृष्णायां जागरः कृतः ॥

यः करोति नरो भक्त्या स गच्छति शिवालयम् ॥ ८८ ॥

अपुत्रो लभते पुत्रान्धनार्थी धनमाप्नुयात् ॥

निष्कामस्तु पुनर्मोक्षं नरो याति न संशयः ॥ ८९ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं सीमांतं द्विजसत्तमाः ॥

क्षेत्रस्यास्य प्रमाणं च विस्तरेण चतुर्दिशम् ॥ ६.२६.९० ॥

अत्रांतरे नरा ये च निवसंति द्विजोत्तमाः ॥
कृषिकर्मोद्यताश्चापि यांति ते परमां गतिम् ॥
किं पुनर्नियतात्मानः शांता दांता जितेंद्रियाः ॥ ९१ ॥
अपि कीटपतंगा ये पशवः पक्षिणो मृगाः ॥
तस्मिन्क्षेत्रे मृता यांति स्वर्गलोकं न संशयः ॥ ९२ ॥
किं पुनर्ये नरास्तत्र कृत्वा प्रायोपवेशनम् ॥
संन्यस्ताः श्रद्धयोपेता हृदयस्थे जनार्दने ॥ ९३ ॥
तस्मात्सर्व प्रयत्नेन तत्क्षेत्रं सेव्यमेव हि ॥
विशेषेण कलौ प्राप्ते युगे पापसमावृते ॥ ९४ ॥
पुनंति स्नानदानाभ्यां सर्वतीर्थान्यसंशयम् ॥
हाटकेश्वरजं क्षेत्रं पुनर्वासात्पुनाति च ॥ ९५ ॥
वापीकूपतडागेषु यत्रयत्र जलं द्विजाः ॥
तत्रतत्र नरः स्नातः सर्वपापैः प्रमुच्यते ॥ ९६ ॥
किं य्रज्ञैः किं वृथा दानैः क व्रतैः किं जपैरपि ॥
वरं तत्र कृतो वासः क्षेत्रे स्वर्गमभीप्सुभिः ॥ ९७ ॥
एतत्पवित्रमायुष्यं मांगल्यं पापनाशनम् ॥
हाटकेश्वरजक्षेत्रमाहात्म्यं शृण्वतां सदा ॥ ९८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गोकर्णतीर्थमाहात्म्य वर्णनंनाम षड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२७

https://sa.wikisource.org/s/fhy
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

चतुर्युगस्वरूपं तु माहात्म्यं चैव सूतज ॥

प्रमाणं वद कात्स्न्र्येन परं कौतूहलं हि नः ॥ १ ॥

॥ सूत उवाच ॥ ॥

इममर्थं पुरा पृष्टो वासवेन बृहस्पतिः ॥

यथा प्रोवाच विप्रेंद्रास्तद्वो वक्ष्यामि सांप्रतम् ॥ २ ॥

पुरा शक्रं समासीनं सभायां त्रिदशैः सह ॥

सह शच्या महात्मानमुपासांचक्रिरे सुराः ॥ ३ ॥

गन्धर्वाप्सरसश्चैव सिद्धविद्याधराश्च ये ॥

गुह्यकाः किंनरा दैत्या राक्षसा उरगास्तथा ॥ ४ ॥

कलाः काष्ठानिमेषाश्च नक्षत्राणि ग्रहास्तथा ॥

सांगा वेदास्तथा मूर्तास्तीर्थान्यायतनानि च ॥ ५ ॥।

तथा चक्रुः कथाश्चित्रा देवदानवरक्षसाम् ॥

राजर्षीणां पुराणानां ब्रह्मर्षीणां विशेषतः ॥ ६ ॥

कस्मिंश्चिदथ संप्राप्ते प्रस्तावे त्रिदशेश्वरः ॥

पप्रच्छ विनयोपेतो विप्रश्रेष्ठं बृहस्पतिम् ॥ ७ ॥

भगवञ्छ्रोतुमिच्छामि प्रमाणं युगसंभवम् ॥

माहात्म्यं च स्वरूपं च यथावद्वक्तुमर्हसि ॥ ८ ॥

॥ बृहस्पति रुवाच ॥ ॥

अहं ते कीर्तयिष्यामि माहात्म्यं युगसंभवम् ॥

यत्प्रमाणं स्वरूपं च शृणुष्वावहितः स्थितः ॥ ९ ॥

अष्टाविंशतिसहस्राणि लक्षाः सप्तदशैव तु ॥

प्रमाणेन कृतं प्रोक्तं यत्र शुक्लो जनार्दनः॥६.२७.१०॥॥

चतुष्पादस्तथा धर्मः सुसंपूर्णा वसुन्धरा ॥

कामक्रोधविनिर्मुक्ता भयद्वेषविवर्जिताः॥॥॥
जनाश्चिरायुषस्तत्र शान्तात्मानो जितेन्द्रियाः ॥
पञ्चतालप्रमाणाश्च दीप्तिमन्तो बहुश्रुताः ॥ १२ ॥
तत्र षोडशसाहस्रं बालत्वं जायते नृणाम् ॥
ततश्च यौवनं प्रोक्तं द्वात्रिंशद्यावदेव हि ॥ १३ ॥
ततः परं च वार्द्धक्यं शनैः संजायते नृणाम्॥
लक्षांते परमं यावदन्येषामधिकं क्वचित् ॥ १४ ॥
तत्र सत्त्वाश्च ये केचित्पशवः पक्षिणो मृगाः ॥
दैवीं वाचं प्रजल्पंति न विरोधं व्रजंति च ।ा१५॥
क्रीडंति नकुलैः सर्पा बिडाला मूषकैः समम् ॥
पञ्चाननैर्मृगा नित्यमुलूकाश्चापि वायसैः ॥।६॥
अकृष्टा च मही सस्यं जनयत्यति भूरिशः ॥
व्रीहिमुद्गयवप्रायं सुस्वादु बलवृद्धिदम् ॥।७॥
सर्वर्तुफलिनो वृक्षाः सपुष्पफलधारिणः ॥
सुपत्राः कंटकैर्हीनाः कल्पपादपसंनिभाः॥।८॥
धेनवश्च प्रयच्छंति वांछितं स्वादु सत्पयः ॥
सर्वेष्वपि हि कालेषु भूरि सर्प्पिःप्रदं नृणाम्॥ १९ ॥
न तत्र विधवा नारी जायते न च दुर्भगा ॥
काकवंध्या सुतैर्हीना न च शीलविवर्जिता ॥६.२७.२०॥।
यथाजन्म तथा मृत्युः क्रमात्संजायते नृणाम् ॥
न वीक्षते पिता पुत्रं मृतं क्वापि कदाचन ॥ २१ ॥
न प्रेतत्वं च लोकानां मृतानां तत्र जायते ॥
न चापि नरके वासो न च रोगव्यथा क्वचित् ॥ २२ ॥
वेदांतगा द्विजाः सर्वे नित्यं स्वाध्यायशीलिनः ॥
वेदव्याख्यानसंहृष्टा ब्रह्मज्ञानविचक्षणाः ॥ २३ ॥
क्षत्रियाश्चापि भूपालमेकं कृत्वा सुभक्तितः ॥
तदादेशात्प्रभुंजंति महीं धर्मेण नित्यशः ॥२४॥
वैश्या वैश्यजनार्हाणि चक्रुः कर्माणि भूरिशः ॥

पशुपालनपूर्वाणि क्रयविक्रयजानि च ॥ २५ ॥

मुक्त्वैकां द्विजशुश्रूषा न शूद्रास्तत्र चक्रिरे ॥

किंचित्कर्म सुरश्रेष्ठ श्रद्धया परया युताः ॥ २६ ॥

न तत्र चांत्यजो जज्ञे न च संकरसंभवः ॥

नापवित्रो न वर्णानां पञ्चमो दृश्यते भुवि ॥ २७ ॥

यजनं याजनं दानं व्रतं नियम एव च ॥

तीर्थयात्रां नरास्तत्र निष्कामा एव कुर्वते ॥ २८ ॥

एवंविधं सहस्राक्ष मया ते परिकीर्तितम् ॥

आद्यं कृतयुगं पुण्यं सर्वलोकसुखावहम् ॥ २९ ॥

ततस्त्रेतायुगं नाम द्वितीयं संप्रवर्तते ॥

वर्षाणां षण्णवत्याढ्या लक्षा द्वादश संख्यया ॥ ६.२७.३० ॥

सोऽपि साक्षाजगन्नाथः श्वेतद्वीपाश्रयाश्रितः ॥

तत्र रक्तत्वमायाति भग वान्गरुडध्वजः ॥ ३१ ॥

त्रिपादस्तत्र धर्मः स्यात्पादेनैकेन पातकम् ॥

तेनापि जायते स्पर्द्धा वर्णानामितरेतरम् ॥ ३२ ॥

ततः फलानि वांछंति तीर्थयात्रोद्भवानि ते ॥

व्रतानां नियमानां च स्वर्गवासादिहेतवः ॥ ३३ ॥

ततः कामवशान्मोहं सर्वे गच्छंति मानवाः ॥

मोहाद्द्रोहं ततो गत्वा पापं कुर्वंत्यनुक्रमात् ॥ ३४ ॥

ततस्तु रौरवादीनि नरकाणि यमः स्वयम् ॥

सज्जीकरोति देवेन्द्र ह्येकविंशतिसंख्यया ॥ ३५ ॥

कर्मानुसारतस्तानि सेवयंति नराधमाः ॥

केचिदन्ये महेन्द्रादिलोकान्मोक्षं तथा परे ॥ ३६ ॥

त्रिविधाः पुरुषास्तत्र श्रेष्ठाश्चाधममध्यमाः ॥

त्रिविधानि च कर्माणि प्रकुर्वंति सुरेश्वर ॥ ३७ ॥

उन्नतास्तालमात्रेण तेजोवीर्यसमन्विताः ॥

चक्रुश्च कृषिकर्माणि वैश्याश्चैवान्नलिप्सया ॥ ३८ ॥

उप्तक्षेत्रं सकृच्चापि सप्तवारं लुनंति ते ॥

यथर्तु फलिनो वृक्षा यथर्तु कुसुमान्विताः ॥ ३९ ॥
यथर्तु पत्रसंयुक्तास्तत्र स्युः सुमनोहराः ॥
अग्निष्टोमादिका यज्ञाः प्रवर्तंते सहस्रशः ॥ ६.२७.४० ॥
इतरेतरसंस्पर्धैः क्रियमाणा नृपोत्तमैः ॥
ब्राह्मणैश्च सुरश्रेष्ठ स्वर्गलोकमभीप्सुभिः ॥ ४१ ॥
तीर्थयात्रां व्रतं दानं नियमं संयमं तथा ॥
परलोकमभीप्संतस्तत्र कुर्वंति मानवाः ॥ ४२ ॥
सहस्रेण तु वर्षाणां तत्र स्याद्यौवनं नृणाम् ॥
सहस्रपञ्चकं यावदूर्ध्वं वार्द्धक मुच्यते ॥ ४३ ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ॥
कैवर्त्तमेदभिल्लाश्च चंडालाः शूद्रमानवाः ॥ ४४ ॥
संभवंति युगे तस्मिन्यो निसंसर्गतो विभो ॥
तथान्ये संख्यया हीना एतेभ्यो निंदिता नराः ॥ ४५८ ॥
॥ इन्द्र उवाच ॥ ॥
उत्पत्तिः कथमेतेषामंत्यजानां द्विजो त्तम ॥
यथावद्वद कात्स्न्र्येन अत्र कौतूहलं महत् ॥ ४६ ॥
॥ बृहस्पतिरुवाच ॥ ॥
एतेषामष्टधा सृष्टिर्जायतेंऽत्यजसंभवा ॥
योनि दोषात्सुरश्रेष्ठ जातेर्वक्ष्याम्यहं स्फुटम् ॥ ४७ ॥
ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्यभिधीयते ॥
सूतेन रजकश्चैव रजकेन च चर्मकृत् ॥ ॥ ४८ ॥
चर्मकारेण संजज्ञे नटश्चांत्यजसंज्ञकः ॥
चत्वारः क्षेत्रसंभूता एते क्षेत्रे द्विजन्मनाम् ॥ ४९ ॥
तथा च मागधो जज्ञे वैश्येन द्विजसंभवे ॥
क्षेत्रे मागधवीर्येण बुरुडो मरुदुत्तम ॥ ६.२७.५० ॥
बुरुडेन च कैवर्तः कैवर्तेन च मेदकः ॥
चत्वारो वैश्यसंभूता एते क्षेत्रे द्विजन्मनाम् ॥
प्रजायन्ते सुरश्रेष्ठ सवकर्मसु गर्हिताः ॥ ५१ ॥

तथा शूद्रेण संजज्ञे ब्राह्मण्यां सुरसत्तम ॥
भिल्लाख्यश्चापि भिल्लेन चंडालश्च प्रजायते ॥ ५२ ॥
एतौ द्वावपि शूद्रेण भवतो द्विजसंभवे ॥
क्षेत्रे सर्वसुराधीश सत्यमेतन्मयोदितम् ॥ ५३ ॥
एतत्त्रेतायुगे प्रोक्तं मया ते सुरसत्तम ॥
आकर्णय प्रयत्नेन द्वापरस्याधुना स्थितिम् ॥ ५४ ॥
लक्षाष्टकप्रमाणेन तद्युगं परिकीर्तितम् ॥
चतुःषष्टिसहस्राणि वर्षाणां परिसं ख्यया ॥
कपिशो जायते तत्र भगवान्गरुडध्वजः ॥ ५५ ॥
द्वौ पादौ चैव धर्मस्य द्वौ पापस्य व्यवस्थितौ ॥
तत्र स्याद्यौवनं नृणां गते वर्षशतेऽ खिले ॥ ५६ ॥
ततोऽन्यैः समतिक्रांतैर्वार्धक्यं पञ्चभिः शतैः ॥
तत्र सत्यानृता लोका देवा भूपास्तथा परे ॥ ५७ ॥
नार्यश्चापि सुरश्रेष्ठ तत्स्व रूपाः प्रकीर्तिताः ॥
पंचहस्तप्रमाणेन चतुर्हस्तास्तथा परं ॥ ५८ ॥
नातिरूपेण संयुक्ता न च रूपविवर्जिताः ॥
अव्यक्तजल्पकाश्चापि पशवः पक्षिणो मृगाः ॥ ५९ ॥
नातिपुष्पफलैर्युक्ता वृक्षाश्चापिसुरेश्वर ॥
सस्यानि तानि जायन्ते तत्र चोप्तानिकर्षुकैः ॥ ६.२७.६० ॥
वर्षंति जलदाः कामं भवन्त्योषधयोऽखिलाः ॥
यत्किंचिद्भूतले ज्ञानं शास्त्रं वा सुरसत्तम ॥
तत्तत्र समभावेन न सत्यं नैव चानृतम् ॥ ६१ ॥
तीर्थानां च मखानां च द्वापरे सुरसत्तम ॥
फलं भावानुरूपेण दानानां च प्रजायते ॥ ६२ ॥
एतत्तव समाख्यातं युगं द्वापरसंज्ञकम् ॥
मया सर्वं सुराधीश यथादृष्टं यथा श्रुतम् ॥ ६३ ॥
शृणुष्वावहितो भूत्वा वदतो मम सांप्रतम् ॥
रौद्रं कलियुगंनाम यत्र कृष्णो जनार्दनः ॥ ६४ ॥

द्वात्रिंशच्च सहस्राणि वर्षाणां कथितं विभो ॥
तथा लक्षचतुष्केण साधुलोकविवर्जितम् ॥६५॥
तत्रैकपादयुक्तश्च धर्मः पापं त्रिभिः स्मृतम् ॥
पूर्वार्धेभ्यः परं सर्वं संभविष्यति पात कम् ॥ ६६ ॥
न शृण्वंति पितुः पुत्रा न स्नुषा भ्रातरो न च ॥
न भृत्या न कलत्राणि यत्र द्वेषः परस्परम् ॥ ६७ ॥
यत्र षोडशमे वर्षे नराः पलित यौवनाः ॥
तत्र द्वादशमे वर्षे गर्भं धास्यति चांगना ॥ ६८ ॥
आयुः परं मनुष्याणां शतसंख्यं सुरेश्वर ॥
नागानां च तरूणां च वर्षाणां यत्र नाधिकम् ॥ ६९ ॥
द्वात्रिंशद्धयमुख्यानां चतुर्विंशतिः खरोष्ट्रयोः ॥
अजानां षोडश प्रोक्तं शुनां द्वादशसंख्यया ॥ ६.२७.७० ॥
चतुष्पदानामन्येषां विंशतिः पंचभिर्युता ॥
यत्र काकाश्च गृध्राश्च कौशिकाश्चिरजीविनः ॥ ७१ ॥
तथा पापपरा लोका दुःस्थिताश्च विशेषतः ॥
तथा कण्टकिनो वृक्षा रूक्षाः पुष्पफलच्युताः ॥
सेवितास्तेऽपि गृध्राद्यैर्यत्र च्छायाविवर्जिताः ॥ ७२ ॥
यत्र धर्मो ह्यधर्मेण पीड्यते सुरसत्तम ॥
असत्येन तथा सत्यं भूपाश्चौरैः सदैव तु ॥ ७३ ॥
गुरवश्च तथा शिष्यैः स्त्रीभिश्च पुरुषाधमाः ॥
स्वामिनो भृत्यवर्गैश्च मूर्खैश्चापि बहुश्रुताः ॥ ७४ ॥
यत्र सीदंति धर्मिष्ठा नराः सत्यपरायणाः ॥
दान्ता विवेकिनः शान्तास्तथा परहिते रताः ॥ ७५ ॥
आधयो व्याधयश्चैव तथा पीडा महाद्भुता ॥
सदैव संस्थिता यत्र साधुपीडनवांछया ॥ ७६ ॥
अल्पायुषस्तथा मर्त्या जायंते वर्णसंकरात् ॥
ये केचन प्रजीवंति दुःखेन ते समन्विताः ॥७७॥
न वर्षति घनः काले संप्राप्तेऽपि यथोचिते ॥

न सस्यं स्यात्सुवृष्टेपि कर्षुकस्यापि वांछितम् ॥ ७८ ॥

न च क्षीरप्रदा गावो यद्यपि स्युः सुपोषिताः ॥

न भवंति प्रभू ताश्च यत्नेनापि सुरक्षिताः ॥ ७९ ॥ ॥

आविकानां तथोष्ट्रीणां यत्र क्षीरप्रशंसकाः ॥

लोका भवंति निःश्रीकास्तथा ये च मलिम्लुचाः ६.२७.८० ॥

तथा तपस्विनः शूद्राः शूद्रा धर्मपरायणाः ॥

शूद्रा वेदविचारज्ञा यज्ञकर्मणि चोद्यताः ॥ ८१ ॥

शूद्राः प्रतिग्रहीतारः शूद्रा दानप्रदास्तथा ॥

शूद्राश्चापि तथा वन्द्याः शद्रास्तीर्थेषु संस्थिताः ॥ ८२ ॥

पंचगर्तान्खनंत्येव मृत्युकाले नराधमाः ॥

शिरसा हस्तपादाभ्यां मोहात्संनष्टचेतनाः ॥ ८३ ॥

वेदविक्रयकर्तारो ब्राह्मणाः शौचवर्जिताः ॥ ८४ ॥

स्वाध्यायरहिताश्चैव शूद्रान्ननिरताः सदा ॥

असत्प्रतिग्रहाः प्रायो जिह्वालौल्यसमुत्सुकाः ॥ ८५ ॥

पाखंडिनो विकर्मस्थाः परदारोपजीविनः॥

कार्यकारणमाश्रित्य यत्र स्नेहः प्रजायते॥८६॥

न स्वभावात्सहस्राक्ष कथंचिदपि देहिनाम्॥

यास्यंति म्लेच्छभावं च सर्वे वर्णा द्विजातयः॥८७॥

नष्टोत्सवाविधर्माणो नित्यं संकरकारकाः॥

सार्धहस्तत्रयाः पूर्वं भविष्यंति युगादितः॥८८॥

ततो ह्रासं प्रयास्यंति वृद्धिं याति कलौ युगे ॥

भविष्यन्ति ततश्चांते मनुष्या बिलशायिनः ॥ ८९ ॥

अल्पत्वाद्दुर्लभत्वाच्च अशक्ता गृहकर्मणि ॥

भविष्यंत्यफला यज्ञास्तथा वेदव्रतानि च ॥ ६.२७.९० ॥

नियमाः संयमाः सर्वे मंत्रवादास्तथैव च ॥

तीर्थानि म्लेच्छसंस्पर्शाद्दूषितानि शतक्रतो ॥ ॥ ९१ ॥

स्वस्वभावविहीनानि हीनानि च तथा जलैः ॥

कुत्सिता मंत्रवादा ये कुत्सिताश्च तपस्विनः ॥ ९२ ॥

तत्र ते संभविष्यंति कुत्सिता ये च मानवाः ॥
कुलीनमपि संत्यज्य वरं रूपवयोन्वितम् ॥ ९३ ॥
वित्तलोभात्प्रदास्यंति कुत्सिताय नराः सुताम् ॥
कन्यकाः प्रसविष्यंति कन्यकाः सुरतोत्सुकाः ॥ ९४ ॥
कन्यकाः प्रकरिष्यंति पुरुषैः सह संगतिम् ॥
भर्तारं वंचयिष्यंति कुलीना अपि योषितः ॥ ९५ ॥
सर्वकृत्येषु दुःशीलाः। सुयत्नेनापि रक्षिताः ॥
निर्दयाश्चापि भूपालाः पीडयिष्यंति कर्षुकान् ॥ ९६ ॥
पीडयिष्यंति निर्दोषान्वित्तलोभादसंशयम् ॥
वधार्हमपि संप्राप्य वित्तलोभान्मलिम्लुचम् ॥ ९७ ॥
संत्यक्ष्यंति युगे तस्मिन्प्राणिद्रोहेऽपि वर्तिनम् ॥
क्षात्रधर्मं परित्यज्य करिष्यंति तथा रणम् ॥ ९८ ॥
॥ बृहस्पतिरुवाच ॥ ॥
एतद्वः सर्वमाख्यातं युगानां लक्षणं मया ॥
प्रमाणं च सुरश्रेष्ठ चतुर्णामप्यसंशयम् ॥ ९९ ॥
यश्चैतत्कीर्तयेन्मर्त्यः सदैव सुसा माहितः ॥
स नूनं मुच्यते पापादाजन्ममरणांतिकात् ॥ ६.२७.१०० ॥
शृणुयाद्वा नरो यश्च श्रद्धापूतेन चेतसा ॥
सोऽपि मुच्येन्न सन्देहः पापाच्च दिवसोद्भवात् ॥ १०१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये चतुर्युगस्वरूपवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२८



॥ सूत उवाच ॥ ॥

तस्यां देवसभायां च संस्थिता ये द्विजोत्तमाः ॥

प्रभासादीनि तीर्थानि मूर्तानि सकलानि च ॥ १ ॥

तानि श्रुत्वा वचस्तस्य देवाचार्यस्य तादृशम् ॥

भयं कृत्वा महच्चित्ते प्रोचुश्च त्रिदिवेश्वरम् ॥ २ ॥

यद्येवं देवदेवेश भविष्य त्यशुभं युगम् ॥

वयं नाशं समेष्यामो न स्थास्यामो जगत्त्रये ॥ ३ ॥

पुरंदराद्य चास्माकं स्थानं किंचित्प्रदर्शय ॥

तस्मात्कीर्तय नः स्थानं किंचित्क्वापि पुरंदर ॥ ४ ॥

यदाश्रित्य नयिष्यामो रौद्रं कलियुगं विभो ॥

अस्पृष्टानि नरैर्म्लेच्छैः प्रभावसहितानि च ॥

पाताले स्वर्गलोके वा मर्त्ये वा सुरसत्तम ॥ ५ ॥

तेषां तद्वचनं श्रुत्वा कृपाविष्टः शतक्रतुः ॥

प्रोवाच ब्राह्मणश्रेष्ठं भूय एव बृहस्पतिम् ॥ ६ ॥

अस्पृष्टं कलिना स्थानं किंचि द्वद बृहस्पते ॥

समाश्रयाय तीर्थानां यदि वेत्सि जगत्त्रये ॥ ७ ॥

शक्रस्य तद्वचः श्रुत्वा चिरं ध्यात्वा वृहस्पतिः ॥

तत्र प्रोवाच तीर्थानि भया द्भीतानि हर्षयन्॥ ८ ॥

हाटकेश्वरमित्युक्तमस्ति क्षेत्रमनुत्तमम् ॥

लिंगस्य पतनाज्जातं देवदेवस्य शूलिनः ॥ ९ ॥

यत्र पूर्वं तपस्तप्तं विश्वामित्रेण धीमता ॥

त्रिशंकोर्भूमिपालस्य कृते तीर्थे महात्मना ॥ ६.२८.१० ॥

यत्र स्थित्वा सभूपालस्त्रिशंकुः पापवर्जितः ॥

चण्डालत्वं परित्यज्य सदेह स्त्रिदिवं गतः ॥ ११ ॥

यत्र शक्रसमादेशात्पूरितं पांसुभिः पुरा ॥
संवर्तकेन रौद्रेण वायुना तीर्थमुत्तमम् ॥ १२ ॥
यत्र रक्षत्यधस्ताच्च स स्वयं हाटकेश्वरः ॥
उपरिष्टात्प्रदेशं च कलौ देवोऽचलेश्वरः ॥ १३ ॥
हाटकेश्वरमाहात्म्यादस्पृष्टं कलिना हि तत् ॥
पंचक्रोशप्रमाणेन अचलेश्वरजेन च ॥ १४ ॥
तस्मास्वांशेन गच्छंतु तत्र तीर्थान्यशेषतः ॥
तेषां कलिभयं शक्र नैव तत्रास्त्यसंशयम् ॥ १५ ॥
तच्छ्रुत्वा वचनं तस्य सर्वतीर्थानि तत्क्षणात् ॥
हाटकेश्वरसंज्ञं तत्क्षेत्रं जग्मुर्द्विजोत्तमाः ॥ १६ ॥
यज्ञोपवीतमात्राणि कृत्वा स्थानानि चात्मनः ॥
क्षेत्रमासादयामासुस्तत्सर्वहि द्विजोत्तमाः ॥ १७ ॥
एतस्मात्कारणाजात क्षेत्रं पुण्यतमं हि तत् ॥
हाटकेश्वरदेवस्य महापातकनाशनम् ॥ १८ ॥
॥ ऋषय ऊचुः ॥ ॥
अत्याश्चर्यमिदं सूत यत्त्वयैतदुदाहृतम् ॥
संगमं सर्वतीर्थानां क्षेत्रे तत्र प्रकीर्तितम् ॥ १९ ॥
तावन्मात्रप्रभावाणि तत्स्थानि प्रभवंति किम् ॥
तानि तीर्थानि नो ब्रूहि विस्तरेण महामते ॥ ६.२८.२० ॥
नामतः स्थानतश्चैव तथा चैव प्रभावतः ॥
सर्वाण्यपिमहाभाग परं कौतूहलं हि नः ॥ ॥ २१ ॥
॥ सूत उवाच ॥ ॥
तिस्रः कोट्योऽर्धकोटिश्च तीर्थानां द्विजसत्तमाः ॥
हाटकेश्वरजं क्षेत्रं व्याप्य सर्वं व्यवस्थिताः ॥ ॥ २२ ॥
न तेषां कीर्तनं शक्यं कर्तुं वर्षशतैरपि ॥
तथा स्वायंभुवस्यादौ कल्पस्य प्रथमस्य च ॥ २३ ॥
कृतः समाश्रयस्तत्र क्षेत्रे तीर्थैः शुभावहे ॥
बहुत्वादथ कालस्य बहूनि द्विजसत्तमाः ॥ २४ ॥

उच्छेदं संप्रयातानि तीर्थान्यायतनानि च ॥

यान्यहं वेद कार्त्स्न्येन प्रभावसहितानि च ॥

तानि वः कीर्तयिष्यामि शृणुध्वं सुसमाहिताः ॥ २५ ॥

येषां संश्रवणादेव नरः पापात्प्रमुच्यते

ध्यानात्स्नानात्तथा दानात्स्पर्शनाद्विजसत्तमाः ॥ २६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये हाटकेश्वरक्षेत्रे सर्वतीर्थसमाश्रयवर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०२९

https://sa.wikisource.org/s/fi6
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं सर्वेषु तीर्थेषु संस्थितेषु द्विजोत्तमाः ॥

तत्क्षेत्रं ख्यातिमापन्नं समस्ते धरणीतले ॥ १ ॥

समस्तेभ्यस्ततोऽदूरान्मुनयः शंसितव्रताः ॥

संश्रयंति ततो भूपास्तपोऽर्थं जरयाऽन्विताः ॥ २ ॥

तथा ते लिंगिनो दान्ताः सिद्धिकामाः समंततः ॥

समाश्रयंति तत्क्षेत्रं सवर्तीर्थसमा श्रयम् ॥ ३ ॥

तत्र सिद्धेश्वरंनाम लिंगमस्ति द्विजोत्तमाः ॥

सर्वसिद्धिप्रदं नृणां स्वयं सिद्धिप्रदायकम्॥ ४ ॥

निर्विद्य भूतले शर्वः सर्वव्यापी सदा शिवः ॥

हाटकेश्वरसंज्ञेऽस्मिन्क्षेत्रे देवः स्वयं स्थितः ॥ ५ ॥

लिंगरूपेण भगवान्प्रादुर्भूतः स्वयं हरः॥

स्मरणाद्दर्शनाच्चैव सर्वसिद्धिप्रदः सदा ॥६॥

सिद्धेनाराधितो यस्मात्तस्मात्सिद्धेश्वरः स्मृतः ॥

तस्यैव वरदानाद्धि अत्रैवावस्थितो हरः ॥ ७ ॥

यस्तं पश्यति सद्भक्त्या शुचिः स्पृशति वा नरः ॥

वांछितं लभते सद्यो यद्यपि स्यात्सुदुर्लभम् ॥ ८ ॥

तत्र सिद्धिं गताः पूर्वं शतशः पुरुषा भुवि ॥

दर्शनात्स्पर्शनाच्चान्ये प्रणामादपरे नराः ॥ ९ ॥

दक्षिणामूर्तिमासाद्य मन्त्रं तस्य षडक्षरम् ॥

यो जपेच्छ्रद्धयोपेतस्तस्यायुः संप्रवर्धते ॥ ६.२९.१० ॥

यावत्संख्यं जपेन्मत्रं तावत्संख्यान्यहानि सः ॥

आयुषः परतो मर्त्यो जीवते नात्र संशयः ॥ ११ ॥

॥ ऋषय ऊचुः ॥ ॥ अत्याश्चर्यमिदं सूत यत्त्वया परिकीर्तितम् ॥

आयुषोऽप्यधिकं मर्त्यो जीवते यदि मानवः ॥ १२ ॥

॥ सूत उवाच । ॥

अत्र वः कीर्तयिष्यामि स्वयमेव मया श्रुतम् ॥

वदतस्तत्समुद्दिश्य यद्वत्सस्य महात्मनः ॥ १३ ॥

पुरा मे वसमानस्य पुरतोऽत्र पितुर्गृहे ॥

आयातः स मुनिस्तत्र वत्सो नाम महाद्युतिः ॥ १४ ॥

वहमानो युवावस्थां द्वादशार्कस मद्युतिः ॥

अंगैः सर्वैस्तु रूपाढ्यः कामदेव इवापरः ॥ १५ ॥

मत्पित्रा स तदा दृष्टस्ततो भक्त्याऽभिवादितः ॥

अर्घ्यं दत्त्वा ततः प्रोक्तो विश्रांतो विनयेन च ॥ १६ ॥

स्वागतं तव विप्रेंद्र कुतस्त्वमिह चागतः ॥

आदेशो दीयतां मह्यं किं करोमि यथोचितम् ॥ १७ ॥

॥ वत्स उवाच ॥ ॥

तवाश्रमपदे सूत चातुर्मास्यसमुद्भवम् ॥

कर्तुमिच्छाम्यनुष्ठानं शुश्रूषां चेत्करोषि मे ॥ १८ ॥

॥ लोमहर्षण उवाच ॥ ॥

एवं विप्र करिष्यामि तवादेशमसंशयम् ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्त्वं मे गृहमागतः ॥ १९ ॥

एवमुक्ताथ मामाह स पिता द्विजसत्तमाः ॥

त्वया वत्सस्य कर्तव्या शुश्रूषा नित्यमेव हि ॥ ६.२९.२० ॥

ततोऽहं विनयोपेतस्तस्य कृत्यानि कृत्स्नशः ॥

करोमि स च मे रात्रौ चित्राः कीर्तयते कथाः ॥ २१ ॥

राजर्षीणां पुराणानां देवदानवरक्षसाम् ॥

द्वीपानां पर्वतानां च स्वयं दृष्ट्वा सहस्रशः ॥ २२ ॥

एकदा तु मया पृष्टः कथांते प्राप्य कौतुकम् ॥

विस्मयाविष्टचित्तेन स द्विजो द्विजसत्तमाः ॥ २३ ॥

भगवन्सुकुमारं ते शरीरं प्रथमं वयः ॥

द्वीपानां च करोषि त्वं कथा श्चित्राः पृथक्पृथक् ॥ २४ ॥

कथं सर्वं धरापृष्ठं ससमुद्रं निरीक्षितम् ॥

स्वल्पेन वयसा तात ( ?) विस्तरतो वद ॥ २५ ॥

त्वया ये कीर्तिता द्वीपाः समुद्राः पर्वतास्तथा ॥

मनसापि न शक्यास्ते गन्तुं मर्त्यैः कथंचन ॥ २६ ॥

अत्र कौतूहलं जातमश्रद्धेयं वचस्तथा ॥

श्रुत्वा श्रद्धेयवाक्यस्य तस्मात्सत्यं प्रकीर्तय ॥ २७ ॥

तपसः किं प्रभावोऽयं किं वा मंत्रपराक्रमः ॥

येन पृथ्वीतलं कृत्स्नं त्वया दृष्टं मुनीश्वर ॥ २८ ॥

किं वा देवप्रसादस्तु तवौषधिकृतोऽथवा ॥

तच्च पुण्यतमं तात त्वं मे ब्रूहि सविस्तरम् ॥ २९ ॥

अथ मां स मुनिः प्राह विहस्य मुनिसत्तमाः ॥

सत्यमेतत्त्वया ज्ञातं मम मंत्रपराक्रमम् ॥ ६.२९.३० ॥

सदाहमष्टसंयुक्तं सहस्रं शिवसन्निधौ ॥

जपामि शिवमंत्रस्य षडक्षरमितस्य च ॥ ३१ ॥

त्रिकालं तेन मे जातं सुस्थिरं यौवनं मुने ॥

अतीतानागतं ज्ञानं जीवितं च सुखोदयम् ॥ ३२ ॥

मम वर्षसहस्राणि बहूनि प्रयुतानि च ॥

संजातानि महाभाग दृश्यते प्रथमं वयः ॥ ३३ ॥

अत्र ते कीर्तयिष्यामि विस्तरेण महामते ॥

यथा सिद्धिर्मया प्राप्ता प्रसादाच्छंकरस्य च ॥ ३४ ॥

अहं हि ब्राह्मणो नाम्ना वत्सः ख्यातो महीतले ॥

नानाशास्त्रकृताभ्यासः पुराऽऽसं वेदपारगः ॥ ३५ ॥

एतस्मिन्नेव काले तु मेनका च वराप्सराः ॥

वसंतसमये प्राप्ता मर्त्यलोके यदृच्छया ॥ ३६ ॥

सा गता भ्रममाणाथ काम्यकंनाम तद्वनम् ॥

मत्तकोकिलनादाढ्यं मनोज्ञद्रुमसं कुलम् ॥ ३७ ॥

यत्रास्ते मुनिशार्दूलो देवरात इति स्मृतः ॥

व्रतस्वाध्यायसंपन्नस्तपसा ध्वस्तकिल्विषः ॥ ३८ ॥

उपविष्टो नदीतीरे देवताच्चोपरा यणः ॥

श्रद्धया परया युक्त एकाकी निर्जने वने ॥ ३९ ॥

अथ सा पश्यतस्तस्य विवस्त्रा प्राविशज्जलम् ॥

दिव्यरूपसमोपेता घर्मार्ता वरवर्णिनी ॥ ॥ ६.२९.४० ॥

अथ तस्य मुनींद्रस्य रेतश्चस्कन्द तत्क्षणात् ॥

दृष्ट्वा तां चारुसर्वांगीं जलमध्यं समाश्रिताम् ॥ ४१ ॥

एतस्मिन्नंतरे प्राप्ता सारंगी सुपिपा सिता ॥

जलमिश्रं तया रेतः पीतं सर्वमशेषतः ॥ ४२ ॥

अथ साऽपि दधे गर्भं मानुषं वै प्रभावतः ॥

अमोघरेतसो मासे सुषुवे दशमे ततः॥४३॥

जनयामास दीप्तांगी कन्यां पद्मदलेक्षणाम् ॥

तस्मिन्नेव जले पुण्ये देवराताश्रमं प्रति ॥ ४४ ॥

अथ तां स मुनिर्ज्ञात्वा स्वज्ञानेन स्ववीर्यजाम् ॥

कृपया परयाविष्टो जग्राह च पुपोष च ॥ ४५ ॥

स्नेहेन महता युक्तः कृतकौतुकमंगलः ॥

रक्षमाणो वने चैनां श्वापदेभ्यः प्रयत्नतः ॥ ४६ ॥।

आजहार सुमृष्टानि तत्कृते सुफलानि सः ॥

स्वयं गत्वा सुदूरं च कानने श्वापदाकुले ॥ ४७ ॥

तत्रस्था ववृधे सा च नाम्ना ख्याता मृगावती ॥

शुक्लपक्षे यथा व्योम्नि कलेव शशलक्ष्मणः ॥ ४८ ॥

अथ सा भ्रममाणेन मया दृष्टा मृगेक्षणा ॥

ततोऽहं कामबाणेन तत्क्षणात्ताडितो हृदि ॥ ॥ ४९ ॥

विज्ञाय च कुमारीं तां सवर्णां चारुहासिनीम् ॥

आदरेण गृहं गत्वा स मुनिर्याचितस्ततः ॥ ६.२९.५० ॥

प्रयच्छैनां मम ब्रह्मन्पत्न्यर्थं निज कन्यकाम् ॥

यथात्मा पोषयिष्यामि भोजनाच्छादनादिभिः ॥ ५१ ॥

ततस्तेन प्रदत्ता मे तत्क्षणादेव सुन्दरी ॥

विधिना शास्त्रदृष्टेन नक्षत्रे भग दैवते ॥ ५२ ॥

ततः कतिपयाहस्य मयोढा सा सुविस्मिता ॥

सखीजनसमायुक्ता फलार्थं निर्गता वने ॥ ५३ ॥

अथ वीरुधसंछन्ने वने तस्मि न्सुसंस्थिते ॥

तया न्यस्तं पदं मूर्ध्नि तृणाच्छन्नस्य भोगिनः ॥ ५४ ॥

सा दष्टा सहसा तेन पतिता वसुधातले ॥

विषार्दिता गतप्राणा तत्क्षणादेव भामिनी ॥ ५५ ॥

अथ सख्यः समागत्य तस्या दुःखेन दुःखिताः ॥

शशंसुस्ता यथावृत्तं रुदन्त्यो मम सूतज ॥ ५६ ॥

ततोऽहं सत्वरं गत्वा दृष्ट्वा तां पतितां भुवि ॥

विलापान्कृतवान्दीनो रुदितं करुणस्वरम् ॥ ५७ ॥

इयं मे सुविशालाक्षी मनःप्राणसमा प्रिया ॥

मृता भूमौ यया हीनो नाहं जीवितुमुत्सहे ॥ ५८ ॥

सोऽहमद्य गमिष्यामि परलोकं सहानया ॥

प्रियारहितहर्म्यस्य जीवितस्य च किं फलम् ॥ ५९ ॥

पुत्रपौत्रवधूभिश्च भृत्यवर्गयुतस्य च ॥

पत्नीहीनानि नो रेजुर्गृहाणि गृहमेधिनाम् ॥ ६.२९.६० ॥

यदीयं कर्णनेत्रांता तन्वंगी मधुरस्वरा॥

न जीवति पृथुश्रोणी मरिष्येऽ हमसंशयम् ॥ ६१ ॥

एवं विलपमानस्य मम सूत कुलोद्वह ॥

आगताः सुहृदः सर्वे रुरुदुस्तेऽपि दुःखिताः ॥ ६२ ॥

रुदित्वा सुचिरं तत्र तैः समं महतीं चिताम् ॥

कृत्वा तां संनिधायाथ प्रदत्तो हव्यवाहनः ॥ ६३ ॥

तत आदाय मां कृच्छ्रान्निन्युश्च स्वगृहं प्रति ॥

रुदन्तं प्रस्खलन्तं च मुह्यमानं पदेपदे ॥ ६४ ॥

ततो निशावशेषेऽहमुत्थाय त्वरयाऽन्वितः ॥

कांतादुःखपरीतात्मा गतोऽरण्यं तदेव हि ॥ ६५ ॥

कामेनोन्मत्ततां प्राप्तो भ्रममाण इतस्ततः ॥

विलपन्नेव दुःखार्तो वने जनविवर्जिते ॥ ६६ ॥

क्व गतासि विशालाक्षि विजनेऽस्मिन्विहाय माम् ॥
नाहं गृहं गमिष्यामि मम दुःखाय निर्दयः ॥ ६७ ॥
एषोऽरुणकरस्पर्शात्स्वाभां त्यजति चंद्रमाः ॥
निशाक्षये निरुत्साहो यथाहं विधिना कृतः ॥ ६८ ॥
अयं तनुः समायाति सविता रक्तमंडलः॥
निगदिष्यति मे वार्तां नूनं कच्चित्त्वदुद्भवाम् ॥ ६९ ॥
गगनं व्यापयन्सूर्यः संतापयति मां भृशम् ॥
बाह्ये चाभ्यंतरे कामः कथं वक्ष्यामि जीवितम् ॥ ६.२९.७० ॥
करींदः स्वयमभ्येति तत्कुचाभौ समुद्वहन् ॥
कुम्भौ गत्वा तु पृच्छामि यदि शंसति तां प्रियाम् ॥ ७१ ॥
एवं प्रलपमानस्य मम मोहो महानभूत् ॥
भास्करांशुप्रतप्तस्य मदनाकुलितस्य च ॥ ७२ ॥
यंयं पश्यामि तत्राहं भ्रममाणो महावने ॥
वृक्षं वा प्राणिनो वापि तंतं पृच्छामि मोहतः ॥ ७३ ॥
त्वद्दंतमुसलप्रख्यं यस्या ऊरुयुगं गज ॥
तां बालां वद चेद्दृष्टा दयां कृत्वा ममोपरि ॥ ७४
त्वया जंबूक चेद्दृष्टा बिंबाफलनिभाधरा ॥
दयिता मम तद्ब्रूहि श्रेयस्ते भविता महत् ॥ ७५ ॥
अथवा बिल्व शंस त्वं यदि बिल्वोपमस्तनी ॥
भ्रममाणा वने दृष्टा मम प्राणसमा प्रिया ॥७६॥
त्वत्पुष्पसदृशांगी सा मम भार्या मनस्विनी ॥
स त्वं चंपक जानीषे यदि त्वं शंस मे द्रुतम् ॥७७॥
मधूक तव पुष्पेण दयितायाः समौ शुभौ ॥
कपोलौ पांडुरच्छायौ दृष्ट्वा त्वां स्मृतिमागतौ ॥७८॥
कदलीस्तंभ सुव्यक्तं प्रियायाश्च सुकोमलौ ॥
ऊरू त्वत्तोऽपि तन्वंग्याः सत्येनात्मानमालभे ॥७९॥
भोभो मृग न मे भार्या त्वया दृष्टाऽत्र कानने ॥
त्वत्समे लोचने स्पष्टे कज्जलेन समावृते ॥ ६.२९.८० ॥

तृणादोऽपि सुवृद्धोऽपि वने वृद्धोऽपि यः पशुः ॥

सोऽपि कांतापरित्यक्तो न मृगो रमते क्षणम्॥८॥।

कांतायाः पुरतो नित्यं विधत्तेऽगं कलापकृत् ॥

विहंगयोनि जातोऽपि वृद्ध्यर्थं पुष्पधन्वनः॥८२॥

योऽयं संदृश्यते हंसो हंसीमनुस्मरत्यसौ ॥

गतिस्तादृङ्न चाप्यस्य मत्प्रियायाश्च यादृशी ॥८३॥

एक एव सुधन्योऽयं चक्रवाको विहंगमः ॥

मुहूर्तमपि योऽभीष्टां न त्यजेच्चक्रवाकिकाम् ॥ ८४ ॥

य एष श्रूयते रावो विभ्रमं जनयन्मम ॥

किंवा पिकसमुत्थो ऽयं किं वा मे दयितोद्भवः॥ ८५ ॥

मां दृष्ट्वाऽयं मृगो याति तं मृगी याति पृष्ठतः ॥

धावमाना ममाप्येवमनुयाति पुरा प्रिया ॥८६॥

वारणोऽयं प्रियां कांतामनुरागानुयायिनीम् ॥

स्पर्शयत्यग्रहस्तेन मम संस्मारयन्प्रियाम ॥ ८७ ॥

हा प्रिये मृगशावाक्षि तप्तकांचनसंनिभे ॥

कथं मां न विजानासि भ्रमंतमिह कानने ॥ ८८ ॥

क्व सा भक्तिः क्व सा प्रीतिः क्व सा तुष्टिः क्व सा दया ॥

निगदन्तं सुदीनं मां संभाषयसि नो यतः ॥ ८९ ॥

एवं प्रलपमानस्य मम प्राप्ताः सुहृज्जनाः ॥

अन्वेषंतः पदं तत्र वनेषु विषमेषु च ॥ ६.२९.९० ॥

ततस्तैः कोपरक्ताक्षैः प्रोक्तोऽहं सूतनंदन ॥

भर्त्सद्भिः परुषैर्वाक्यैर्धिक्त्वां काममयाधुना ॥ ९१ ॥

त्वं किं शोचसि मूढात्मन्नशोच्यं जीवितं नृणाम् ॥

यतस्त्वामपि शोचंतं शोचयिष्यंति चापरे ॥ ९२॥

यूयं वयं तथा चान्ये संजाताः प्राणिनो भुवि ॥

सर्व एव मरिष्यामस्तत्र का परिदेवना ॥ ९३ ॥

अदर्शनात्प्रिया प्राप्ता पुनश्चादर्शनं गता ॥

न सा तव न तस्यास्त्वं वृथा किमनुशोचसि ॥ ९४ ॥

नायमत्यंतसंवासः कस्यचित्केनचित्सह ॥
अपि स्वेन शरीरेण किमुतान्यैर्वृथा जनैः ॥ ९५ ॥
मृतं वा यदि वा नष्टं योतीतमनुशोचति ॥
स दुःखेन लभेद्दुःखं द्वावनर्थौ प्रपद्यते ॥ ९६ ॥
एवं संबोधयित्वा मां गृहीत्वा ते मुहुर्जनैः ॥
निन्यु र्गृहं ततः सर्वे वनात्तस्मात्सुदारुणात् ॥ ९७ ॥
ततो मम गृहस्थस्य स्मरमाणस्य तां प्रियाम् ॥
उत्पन्नः सुमहान्कोपः सर्पान्प्रति महामते ॥ ९८ ॥
ततः कोपपरीतेन प्रतिज्ञातं मया स्फुटम् ॥
सर्पानुद्दिश्य यत्सर्वं तन्निबोधय दारुणम् ॥ ९९ ॥
अद्यप्रभृति चेन्नाहं सर्पं दृष्टिवशं गतम् ॥
निहन्मि दण्डघातेन तत्पापं स्याद्ध्रुवं मम ॥ ६.२९.१०० ॥
यच्च निक्षेपहर्तॄणां यच्च विश्वासघातिनाम् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०१ ॥
यत्पापं साधुनिंदायां मातापितृवधे च यत् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०२ ॥
परदाररतानां च यत्पापं जीवघातिनाम् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०३ ॥
उक्तौ चाभिरतानां च यत्पापं गरदायिनाम् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०४ ॥
कृतघ्नानां च यत्पापं परवित्तापहारिणाम् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०५ ॥
यत्पापं शस्त्रकर्तॄणां तथा वह्निप्रदायिनाम्॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०६ ॥
व्रतभंगेन यत्पापं व्रतिनां निंदयापि यत् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०७ ॥
यत्पापं भ्रूणहत्यायां मृष्टमांसाशिनां च यत् ॥
तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०८ ॥

वृक्षच्छेद प्रसक्तानां यत्पापं शल्यकारिणाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १०९ ॥

पाखंडिनां च यत्पापं नास्तिकानां च यद्भवेत् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ६.२९.११० ॥

मांसमद्यप्रसक्तानां यत्पापं विटभोजिनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ १११ ॥

मृषावादप्रसक्तानां पररंध्रावलोकिनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११२ ॥

यत्पापं साक्ष्यकर्तॄणां धान्यसंग्रहकारिणाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११३ ॥

आखेटकरतानां च यत्पापं पाशदायिनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११४ ॥

नित्यं प्रेषणकर्तॄणां यत्पापं मधुजीविनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ॥ ११५ ॥

अदृष्टदेववक्त्राणां यत्पापं मत्स्यजीविनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११६ ॥

विवादे पृच्छमानानां पक्षपातेन जल्पताम् ॥

भयाद्वा यदि वा लोभाद्द्वेषाद्वा कामतोऽपि वा ॥ ११७ ॥

यत्पापं तु भवेत्तेषां निर्दयानां दुरात्मनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११८ ॥

कन्याविक्रयकर्तॄणां यत्पापं पापसंगिनाम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ११९ ॥

विद्याविक्रयकर्तॄणां यत्पापं समुदाहृतम् ॥

तन्मे स्याद्यदि नो हन्मि सर्पं दृष्टिवशं गतम् ॥ ६.२९.१२० ॥

एवं मया प्रतिज्ञाय कोपाविष्टेन सूतज ॥

गृहीतो लगुडः स्थूलो वधार्थं पवनाशिनाम् ॥ १२१ ॥

ततःप्रभृत्यहं भूमौ भ्रमामि लगुडायुधः ॥

ब्राह्मीं वृत्तिं परित्यज्य मार्गमाणो भुजंग मान् ॥ १२२ ॥

मया कोपपरीतेन बहवः पन्नगा हताः ॥
विषोल्बणा महाकायास्तथान्ये मध्यमाधमाः ॥ १२३ ॥
एकदाहं वनं प्राप्तो गहनं लगु डायुधः ॥
शयानं तत्र चापश्यं जलसर्पं वयोऽधिकम् ॥ १२४ ॥
ततोऽहं दंडमुद्यम्य कालदंडोपमं रुषा ॥
हन्मि तं यावदेवाहं स मां प्रोवाच पन्नगः ॥ १२५ ॥
नापराध्यामि ते किंचिदहं ब्राह्मणसत्तम ॥
संरंभात्तत्किमर्थं मां जिघांससि वयोऽधिकम् ॥ १२६ ॥
ततो मया स संप्रोक्तः कोपात्सलि लपन्नगः ॥
महामन्युपरीतेन स्मृत्वा भार्यां मृगावतीम् ॥
मम भार्या प्रिया पूर्वं सर्पेणासीद्विनाशिता ॥१२७ ॥
ततोऽहं तेन वैरेण सूदयामि महो रगान् ॥
अद्य त्वामपि नेष्यामि वैवस्वतगृहं प्रति ॥
हत्वा दंडप्रहारेण तस्मादिष्टतमं स्मर ॥१२८॥
ततः स मां पुनः प्राह भयेन महतावृतः॥
शृणु तावद्वचोऽस्माकं ततः कुरु यथोचितम् ॥१२९॥
अन्ये ते पन्नगा विप्र ये दशंतीह मानवान् ॥
वयं सलिलसंभूता निर्विषाः सर्परूपिणः ॥ ६.२९.१३० ॥
एवं प्रजल्पमानोऽपि स दंडेन मया हतः ॥
सूत तत्सूदनार्थाय निर्विकल्पेन चेतसा ॥ १३१ ॥
अथासौ लगुडस्पर्शात्तत्क्षणादेव पन्नगः॥
द्वादशार्क प्रतीकाशो बभूव पुरुषो महान्॥ १३२ ॥
तदाश्चर्यं समालोक्य ततोऽहं विस्मयान्वितः ॥
उक्तवांस्तं प्रणम्योच्चैः क्षम्यतामिति सादरम् ॥ १३३ ॥
को भवान्किमिदं रूपं कृतं सर्पमयं विभो ॥
किं वा ते ब्रह्मशापोऽयं किं वा क्रीडा सदेदृशी ॥ १३४ ॥
ततः प्रोवाच मां हृष्टः स नरः प्रश्रयान्वितः॥
शृणुष्वावहितो भूत्वा वृत्तांतं स्वं वदामि ते ॥ १३५ ॥

अहमासं पुरा विप्र चमत्कारपुरोत्तमे ॥

युवा परमतेजस्वी धनवान्सुसमृद्धिभाक् ॥ १३६ ॥

तत्रैव नगरे रम्ये ह्यस्ति पुण्यं शिवालयम् [।

सिद्धेश्वरस्य देवस्य पताकाभिरलंकृतम ॥।३७॥

कस्यचित्त्वथ कालस्य तत्र यात्रा व्यजायत ॥

तत्र वादित्रघोषेण नादितं भुवनत्रयम् ॥ १३८ ॥

अथ तत्र समायाता मुनयः संशितव्रताः ॥

देवस्य दर्शनार्थाय शतशोऽथ सहस्रशः ॥ १३९ ॥

शैवाः पाशुपताश्चैव तथा कापालिकाश्च ये ॥

महाव्रतधराश्चान्ये शिवभक्तिपरायणाः ॥ ६.२९.१४० ॥

एकाहारा निराहारा वायुभक्षास्तथापरे ॥

अब्भक्षाः फल भक्षाश्च शीर्णपर्णाशिनस्तथा ॥ १४१ ॥

तेऽभिवन्द्य यथान्यायं देवदेवं महेश्वरम् ॥

उपाविष्टाः पुरस्तस्य कथाश्चक्रुः पृथग्विधाः ॥ १४२ ॥

राजर्षीणां पुराणानां देवेन्द्राणां च हर्षिताः ॥

दयाधर्मसमोपेतास्तथान्येऽपि च भूरिशः ॥ १४३ ॥

केचित्तत्र प्रनृत्यंति गायंति च तथाऽपरे ॥

साधवो भक्तिसंयुक्ता वाद्यं चक्रुश्च भूरिशः ॥।९४॥

अन्ये दानानि यच्छंति धनिनः श्रद्धयान्विताः ॥

दीनांधकृपणेभ्यश्च तपस्विभ्यो विशेषतः ॥।४५॥

एवं महोत्सवे तत्र वर्तमाने महोदये ॥

आगतो बहुभिः सार्धमहं यौवनगर्वितः ॥ १४६ ॥

शिवदर्शनविद्वेषी तमसा संवृताशयः ॥

यात्रोत्सव विनाशाय प्रेरितोऽन्यैः सुदुर्जनैः ॥ १४७ ॥

जलसर्पं समादाय सुदीर्घं भीषणाकृतिम् ॥

लेलिहानं मुहुर्जिह्वां जरया परया वृतम् ॥ १४८ ॥

ततश्च क्षिप्तवांस्तत्र महाजनसमागमे ॥

तं दृष्ट्वा विद्रुताः सर्वे जना मृत्युभयार्दिताः ॥ १४९ ॥

तत्रासीत्तापसो नाम्ना सुप्रभः शंसितव्रतः ॥

समाधिस्थः सुशिष्याढ्यस्तपसा दग्धकिल्बिषः ॥ ६.२९.१५० ॥

निष्कंपां सुदृढामृज्वीं नातिस्तब्धां न कुंचिताम् ॥

ग्रीवां दधत्स्थिरां यत्नाद्गात्रयष्टिं च सर्वतः ॥ १५१ ॥

संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥

तालुमध्यगतेनैव जिह्वाग्रेणाचलेन च ॥ १५२ ॥

आवर्तपंकजांतःस्थमष्टपत्र मधोमुखम्॥

तन्मध्यकर्णिकासंस्थं संपश्यन्रविमंडलम् ॥।५८३॥

तस्यापि मध्यतश्चान्यं नरमंगुष्ठमात्रकम् ॥

द्वादशार्कप्रतीकाशमप्रतर्क्यतमाकृतिम्॥।५४॥

पश्यन्पद्मासनस्थं च वैदनाथं महेश्वरम्॥

यमक्षरं वदंत्येव सर्वगं सर्ववेदिनम् ॥ १५५ ॥

अनिंद्यं चाप्यभेद्यं च जरामरणवर्जितम् ॥

पुलकांचितसर्वांगो योगनिद्रावशंगतः ॥ १५६ ॥

आनंदाश्रुपरिक्लिन्नः संनिरुद्धेंद्रियाकृतिः ॥

कुंभयित्वोदरांतःस्थं स्वभ्यासाद्वायुपञ्चकम् ॥।५७॥

अंगुष्ठतर्जनीयोगं कृत्वा हृदयसंगतम् ॥

एवं तत्रोपविष्टस्य स सर्पस्तस्य विग्रहम् ॥ १५८ ॥

वेष्टयामास भोगेन निश्चलस्य महात्मनः ॥

एतस्मिन्नंतरे शिष्यस्तस्यासीत्सुतपोऽन्वितः ॥ १५९ ॥

श्रीवर्धनइतिख्यातो नानाशास्त्रकृतश्रमः ॥

स दृष्ट्वा सर्पभोगेन समंताद्वेष्टितं गुरुम् ॥ ६.२९.१६० ॥

नातिदूरस्थितं मां च ज्ञात्वा तत्कर्मकारिणम्॥

उवाच परुषं वाक्यं कोपसंरक्तलोचनः ॥ १६१ ॥

स्फुरताधरयुग्मेन बाष्पगद्गदया गिरा ॥

मया चेत्सुतपस्तप्तं गुरुशुश्रूषया सदा ॥ १६२ ॥

निर्विकल्पेन चित्तेन यदि ध्यातो महेश्वरः ॥

तेन सत्येन दुष्टोऽयं पापात्मा ब्राह्मणाधमः ॥

ईदृक्कायो भवत्वाशु गुरुर्मे येन धर्षितः ॥ १६३ ॥

अथाहं सर्पतां प्राप्तस्तत्क्षणादेव दारुणाम् ॥

पश्यतां सर्वलोकानां वदतां साधुसाध्विति ॥ १६४ ॥।

अथ गत्वा समाधेः स पर्यंतं संयतो मुनिः ॥

ददर्श निज गात्रस्थं द्विजिह्वं दारुणाकृतिम् ॥ १६५ ॥

अथ सर्पाकृतिं मां च दुःखेन महतान्वितम् ॥॥

तटस्थं भयसंत्रस्तं तथा सर्वजनं तदा ॥१६६ ॥

ततो विज्ञाय तत्सर्वं स मुनिर्ज्ञानचक्षुषा ॥

अब्रवीत्कृपायाविष्टः शिष्यं श्रीवर्धनं रुषा ॥।६७ ॥॥

न मे प्रियं कृतं शिष्य त्वयैतत्कर्म कुर्वता॥

शपता ब्राह्मणं दीनंनैष धर्मस्तपस्विनाम्॥१६८॥

समो मानेऽपमाने च समलोष्टाश्मकांचनः॥

तपस्वी सिद्धिमायाति सुहृच्छत्रुसमाकृतिः॥१६९॥

तस्मादजानता वत्स शप्तोऽयं ब्राह्मणस्त्वया॥

बाल्यभावात्प्रसादोऽस्य भूयोयुक्तो ममाज्ञया॥ ६.२९.१७० ॥

अथ श्रीवर्धनः प्राह प्रणिपत्य निजं गुरुम् ॥

अमर्षवशमापन्नः कृतांजलिपुटः स्थितः ॥ १७१ ॥

अज्ञानाद्यदिवा ज्ञानान्मया यद्व्याहृतं वचः ॥

तत्तथैव न संदेहस्तस्मान्मौनं गुरो कुरु ॥ १७२ ॥

न मृषा वचनं प्रोक्तं स्वैरेणापि गुरो मया ॥

किं पुनर्यत्तवार्थाय तस्मान्मौनं समाचर ॥ १७३ ॥

पश्चादुदयते सूर्यः शोषं याति महार्णवः ॥

अपि मेरुश्च शीर्येत न मे स्यादन्यथा वचः ॥ १७४ ॥

तमुवाच गुरुः शिष्यं स पुनः श्लक्ष्णया गिरा ॥

जानाम्यहं न ते वाणी कथंचिज्जायतेऽन्यथा ॥ १७५ ॥

सदा शिष्यो वयःस्थोपि शासनीयः प्रयत्नतः ॥।

किं पुनर्बाल एव त्वं तेन त्वां वच्मि भूरिशः ॥ १७६ ॥

धर्मं न व्ययते कोऽपि मुनीनां पूर्वसंचितम् ॥

तपोधर्मविहीनानां गतिस्तेषां न विद्यते ॥ १७७ ॥

क्षमैका सिद्धिदा प्रोक्ता यतीनां च विशेषतः ३॥

तस्मात्क्षमां पुरस्कृत्य वर्तितव्यं तपस्विभिः ॥ १७८ ॥

न पापं प्रति पापः स्याद्बुद्धिरेषा सनातनी॥

आत्मनैव हतः पापो यः पापं तु समाचरेत्॥१७९॥

दग्धः स दहते भूयो हतमेवनिहंति च॥

सम्यग्ज्ञानपरित्यक्तो यः पापे पापमाचरेत्॥६.२९.१८०॥।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः॥

अपकारिषु यः साधुः कीर्त्यते जनैः॥ १८१॥।

एवमुक्त्वा स तं शिष्यं ततो मामिदमब्रवीत् ॥

दयया परया युक्तः सुव्रतः शंसितव्रतः ॥ १८२ ॥

नान्यथा वचनं भावि मम शिष्यस्य पन्नग ॥

कञ्चित्कालं प्रतीक्षस्व तस्मात्सर्पवपुःस्थितः ॥ १८३ ॥

॥ सर्प उवाच ॥ ॥

कस्मिन्काले मुनिश्रेष्ठ शापो मेऽस्तमुपैष्यति ॥

प्रसादं कुरु दीनस्य शापस्याज्ञानिनस्तथा ॥ १८४ ॥

॥ सुव्रत उवाच ॥ ॥

मुहूर्तमपि गीतादि यः करोति शिवालये ॥

न तस्य शक्यते कर्तुं संख्या धर्मस्य भद्रक ॥ १८५ ॥

मुहूर्तमपि यो विघ्नं करोति च महोत्सवे ॥

तस्य पापस्य नो संख्या कर्तुं शक्या हि केनचित् ॥ १८६ ॥

तस्मात्त्वं पापको विप्रो नैव मुक्तिमवाप्स्यसि ॥

वार्तासंगेन दुर्बुद्धे तस्माच्छृणु वचो मम ॥।८७॥

शैवं षडक्षरं मंत्रं योजपेच्छ्रद्धयान्वितः ॥

अपि ब्रह्मवधा त्पापं जातं तस्य प्रणश्यति ॥ १८८ ॥

दशभिर्दिनजं पापं विंशत्या वत्सरोद्भवम् ॥

षडक्षरस्य जाप्येन पापं क्षालयते नरः ॥ १८९ ॥

तस्मात्त्वं जलमध्यस्थस्तं मंत्रं जप सादरम् ॥

येन पापं क्षयं याति कृतमप्यन्यजन्मनि ॥ ६.२९.१९० ॥

यदा त्वां जलमध्यस्थं वत्सोनाम द्विजो रुषा ॥

ताडयिष्यति दण्डेन तदा मोक्षमवाप्स्यसि ॥ १९१ ॥

तस्माद्गच्छ द्रुतं सर्प स्थानादस्माज्जलाशये ॥

किञ्चिदिष्टं मया प्रोक्तो विरराम स सन्मुनिः ॥ १९२ ॥

ततोऽहं दुःखसंयुक्तः संप्राप्तोऽत्र जलाशये ॥

षडक्षरं जपन्मन्त्रं नित्यमेव व्यवस्थितः ॥ १९३ ॥

त्वत्प्रसादादहं मुक्तः सर्पत्वाद्ब्राह्मणोत्तम ॥

किं करोमि प्रियं तेऽद्य तस्माच्छीघ्रतरं वद ॥ १९४ ॥

वत्सोनाम न सन्देहः स त्वं यः कीर्तितो मम ॥

सुव्रतेन विमानं मे पश्यैतदुपसर्पति ॥ १९५ ॥

ततः प्रोक्तो मया सम्यक्स सर्पो दिव्यरूपधृक् ॥

भगवन्नुपदेशं मे किञ्चिद्देहि शुभाव हम् ॥ १९६ ॥

येन नो जायते दुःखं प्रियलोपसमुद्भवम् ॥

न दारिद्यं न च व्याधिर्न च शत्रुपराभवः ॥ १९७ ॥

अथोवाच स मां भूयः सोत्सुकः पुरुषोत्तमः ॥

प्रश्नभारः समाख्यातस्त्वया मम द्विजोत्तम ॥ १९८ ॥

न चैतच्छक्यते वक्तुं विमाने समुपस्थिते ॥

विस्तरात्तु ततो वच्मि संक्षेपेण तव द्विज ॥ १९९ ॥

शैवः षडक्षरो मन्त्रो नृणामशुभहारकः ॥

स त्वया शक्तितो विप्र जपनीयो दिवानिशम् ॥ ॥ ६.२९.२०० ॥

ततः प्राप्स्यत्यसंदिग्धं यद्यद्वांछसि चेतसा ॥

स्वर्गं वा यदि वा मोक्षं विमुक्तः सर्वपातकैः ॥ २०१ ॥

मया हि सुमहत्पापं सर्वदा समनुष्ठितम् ॥

तत्रापि मंत्रमाहात्म्यात्प्राप्ता लोका महोदयाः ॥ २०२ ॥

एको दानानि सर्वाणि यच्छति श्रद्धयान्वितः ॥

षडक्षरं जपेन्मंत्रमन्यस्ताभ्यां समं फलम् ॥ २०३ ॥

सर्वतीर्थाभिषेकं च कुरुतेऽन्यो नरो द्विज ॥

षडक्षरं जपेन्मंत्रमन्यस्ताभ्यां समं फलम् ॥ २०४ ॥

चांद्रायणसहस्रं तु कुरुतेऽन्यो यथोचितम् ॥

षडक्षरं जपेदन्यो मंत्रं ताभ्यां समं फलम् ॥ २०५ ॥

वर्षास्वाकाशशायी च हेमंते सलिलाशयः ॥

पञ्चाग्निसाधको ग्रीष्मे यावद्वर्षशतं नरः ॥ २०६ ॥

अन्यः षडक्षरं मन्त्रं शुचिः श्रद्धासमन्वितः ॥

जपेदहर्निशं मर्त्यः फलं ताभ्यां समं स्मृतम् ॥ ॥ २०७ ॥

पितृपक्षे सदा चैको गयायां श्राद्धमाचरेत् ॥

अन्यः षडक्षरं मन्त्रं जपेत्ताभ्यां समं फलम् ॥ २०८ ॥

गोसहस्रं ददात्येकः कार्तिक्यां ज्येष्ठपुष्करे ॥

षडक्षरं जपेन्मंत्रमन्यस्ताभ्यां समं फलम् ॥ २०९ ॥

संनिहित्यां नरः स्नाति राहुग्रस्ते दिवाकरे ॥

एको अन्यस्तु जपेन्मन्त्रं षडर्णं तुल्यमेव तत् ॥ ६.२९.२१० ॥

सोमे सोमग्रहेऽन्यस्तु सोमनाथं प्रपश्यति ॥

अन्यः षडक्षरं मन्त्रं जपेत्ताभ्यां समं फलम् ॥ २११ ॥

एकश्चण्डीश्वरं पश्येदयने चोत्तरे नरः ॥

अन्यः षडक्षरं मन्त्रं जपेत्ताभ्यां समं फलम् ॥ २१२ ॥

भृगुपातं पतेदेकः केदारं वीक्ष्य भक्तितः ॥

अन्यः षडक्षरं मंत्रं जपेत्ताभ्यां समं फलम् ॥ २१३ ॥

करीषं साधयेदन्यो दत्त्वा सर्वस्वमादितः ॥

षडक्षरं जपेन्मंत्रमन्यस्ताभ्यां समं फलम् ॥ २१४ ॥

सर्व संगपरित्यागं कृत्वैको ज्ञानमाप्नुयात् ॥

अन्यः षडक्षरं मन्त्रं जपेत्ताभ्यां समं फलम् ॥ २१५ ॥

एतत्ते परमं गुह्यं मया विप्र प्रकीर्तितम् ॥

नास्तिकाय न दातव्यं भक्तिहीनाय नैव च ॥ २१६ ॥

तथान्यदपि वक्ष्यामि हितबुद्ध्या द्विजोत्तम ॥

मम वाक्यं कुरुष्वाद्य यदीच्छसि परां गतिम्॥ २१७ ॥

अहिंसा परमो धर्मः सर्ववेदे प्रकीर्तितः ॥

ब्राह्मणस्य विशेषेण तस्मात्सर्पवधं त्यज ॥ २१८॥

अहिंसकानि भूतानि यो हिनस्ति सुनिर्दयः ॥

स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ २१९ ॥

चराचराणां भूतानामभयं यः प्रयच्छति ॥

सर्वदा सर्वसौख्याढ्यो जायते दिवि चेह च ॥ ६.२९.२२० ॥

नास्ति भर्गसमो देवो नास्ति गंगासमा नदी ॥

नास्ति हिंसासमं पापं नास्ति धर्मो दयापरः ॥ २२१ ॥

अथाहमब्रुवं तं च तच्छ्रुत्वा तस्य जल्पितम् ॥

अहिंसालक्षणं धर्मं परलोकभयातुरः ॥ २२२ ॥

मन्यते वृद्धलोकानामेतद्वाक्यं श्रुतं मया ॥

भूपतेर्नैव दोषः स्याद्वने व्यापादितैर्मृगैः ॥ २२३ ।

प्रवदंति तथा वैद्या वैद्यशास्त्रविचक्षणाः ॥

भवंति पुष्टिसंयुक्ता मांसादाश्चिरजीविनः ॥ २२४ ॥

तदत्र विषये ब्रूहि परं निःश्रेयसं वचः ॥

सर्वं कर्तास्म्यसंदिग्धं तव वक्त्राद्विनिर्गतम् ॥ २२५ ॥

अथ मां स पुनः प्राह वद मैवं द्विजोत्तम ॥

मतमेतद साधूनां पापानां मांसगृद्धिनाम् ॥ २२६ ॥

अहो शोच्यतमा लोके पापात्मानः सुनिर्दयाः ॥

सर्वदोषाकरं मांसं मूढाः स्वादंति ये नराः ॥ ॥। २२७ ॥

न मांसमायुषो हेतुरारोग्यस्य बलस्य वा ॥

सर्वमेतदसत्यं स्याच्छ्रणुष्वाद्य निदर्शनम् ॥ २२८ ॥

मांसाशिनोऽपि दृश्यंते रोगार्ता दुर्बलास्तथा ॥

स्वल्पायुषश्च मत्वैवं मांसं वर्जय दूरतः ॥ २२९ ॥

अमांसादा अपि क्ष्मायां दृश्यंते रोगवर्जिताः ॥

चिरायुषश्च पीनांगास्त स्मान्मांसं विवर्जयेत् ॥ ६.२९.२३० ॥

यो भक्षयति मांसानि सत्त्वानां जीवितैषिणाम् ॥

स याति नरकं घोरं तत्रस्थो भक्ष्यते च तैः ॥ २३१ ॥

न हि मांसं तृणात्काष्ठादुपलादपि जायते ॥

हते जंतौ भवेन्मांसं तस्मात्तत्परिवर्जयेत् ॥ २३२ ॥

एतदेव हि दृष्टांतं मांसस्य परिवर्जने ॥

यदंगं ह्रियते स्वं च कंटकेनापि विक्षतम् ॥२३३॥

आत्मौपम्येन भूतानि तस्मात्सर्वाणि पंडितैः ॥

द्रष्टव्यानि न हिंस्यानि रक्षणीयानि शक्तितः ॥ २३४ ॥

हंता चैवानुमंता च विशस्ता क्रयविक्रयी ॥

संस्कर्ता चोपहर्ता च खादकश्चाष्ट घातकाः ॥ २३५ ॥

धनेन क्रयकृद्धंति भक्षणेन च खादकः ॥

घातको वधबंधाभ्यामित्यन्यस्त्रिविधो वधः ॥ २३६ ॥

कर्मणा मनसा वाचा यो हिनस्ति न किंचन ॥

स प्राप्नोति परं स्थानं जरा मरणवर्जितम् ॥ २३७ ॥

शाकमूलफलाहारो ब्रह्मचर्यपरायणः ॥

न तस्य फलमाप्नोति यदि हिंसापरो नरः ॥ २३८ ॥

एको वर्षशतं साग्रं तपस्तपति दुस्तरम् ॥

अहिंसानिरतो यस्तु तयोः श्रेष्ठो दयान्वितः ॥ २३९ ॥

यंयं कामयते कामं दुष्प्रापमपि मानवः ॥

तं तमाप्नोत्यसंदिग्धं यदि स्यात्सुदयान्वितः ॥ ६.२९.२४० ॥

कामगेन विमानेन दिव्यस्त्रीशतसेवितः ॥

देववन्मोदते स्वर्गे सवभूताभयप्रदः ॥ २४१ ॥

एवमुक्त्वा महात्मा स पश्यतो मम सूतज ॥

विमानवरमारुह्य गतश्च त्रिदिवालयम् ॥ २४२ ॥

गन्धर्वैर्गीयमानस्तु स्तूयमानश्च किन्नरैः ॥

षडक्षरस्य मंत्रस्य माहात्म्ये न महामते ॥ २४३ ॥

तस्मिन्गते तदा स्वर्गं दुःखं मे समुपस्थितम् ॥

स्मृत्वा पूर्वं हतान्सर्पान्भग्नगात्रोऽभवं तदा ॥ २४४ ॥

ततोऽहं कृतवांस्तत्र विप्रलापाननेकशः ॥

स्वकर्मभयसंत्रस्तस्तस्मिन्नेव महावने ॥ २४५ ॥

अहो मया नृशंसेन बहवः प्राणिनो हताः ॥

निन्दितश्च महादेवो नर कार्तिर्भविष्यति ॥ २४६ ॥

सोऽहं हिंसां परित्यज्य चरिष्यामि महत्तपः ॥

शिवदीक्षां समासाद्य पूजयिष्ये महेश्वरम् ॥ २४७ ॥

यत्किंचित्त्रिषु लोकेषु प्रार्थयंति नराः सुखम् ॥

तत्सर्वं तपसा साध्यं तस्मात्कार्यं मया तपः ॥ २४८ ॥

अधुनैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ॥

चरन्भैक्षं मुनिर्मौनी चरिष्याम्याश्रमानिमान् ॥ २४९ ॥

पांसुना समवच्छन्नः शून्यागारप्रतिश्रयः ॥

वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ ६.२९.२५० ॥

एवं विलप्य यत्नेन मया सूतकुलोद्वह ॥

गृहीतं भक्तियुक्तेन शिवदीक्षाव्रतं ततः ॥ २५१ ॥

षडक्षरस्य मंत्रस्य अयुतं प्रजपाम्यहम् ॥

त्रिसन्ध्यं श्रद्धया युक्तः सिद्धेश्वरसमीपतः ॥ २५२ ॥

तत्प्रभावेन मे स्थैर्यं संजातं यौवनोद्भवम् ॥

तथा लोकातंरज्ञानं खेचरत्वं च सूतज ॥ २५३ ॥

सिद्धेश्वरं प्रयास्यामि द्वापरांते ह्यवस्थिते ॥

सदाशिवं प्रयास्यामि सत्यमेतन्मयोदितम् ॥ २५४ ॥

एतत्ते सर्वमाख्यातं मया सूतज मोक्षदम् ॥

षडक्षरस्य माहात्म्यं सर्वपापप्रणाशनम् ॥ २५५ ॥

यश्चैतच्छृणुयान्नित्यं सम्यक्छ्रद्धासमन्वितः ॥

आजन्ममरणात्पापात्सोऽपि मुच्येत मानवः ॥। ॥ २५६ ॥

तस्मात्त्वं हि महाभाग मन्त्रमेनं सदा जप ॥

संप्राप्स्यसि परान्कामान्मनसा वांछितान्सदा ॥ २५७ ॥

सूत उवाच ॥ ॥

एतच्छ्रुतं मया पूर्वं सकाशात्तस्य सद्गुरोः ॥

षडक्षरस्य माहात्म्यं यद्युष्माकं प्रकीर्तितम् ॥ २५८ ॥

धन्यं यशस्यमायुष्यं शत्रुपक्षक्षयावहम् ॥

पठतां शृण्वतां नित्यं सर्वकामाभयप्रदम् ॥ २५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये षडक्षरमन्त्रमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३०

https://sa.wikisource.org/s/fil
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

तोषितः केन सिद्धेन तत्र सिद्धेश्वरो विभुः ॥

एतत्सर्वं समाचक्ष्व विस्तरात्सूतनन्दन ॥ १ ॥

॥ सूत उवाच ॥ ॥

आसीत्सिद्धाधिपोनाम पुरा हंस इति स्मृतः ॥

अनपत्यतया तस्य कालश्चक्राम भूरिशः ॥ २ ॥

ततश्चिन्ता प्रपन्नः स गत्वा देवपुरोहितम् ॥

पप्रच्छागिरसः पुत्रं विप्रश्रेष्ठं बृहस्पतिम् ॥ ३ ॥

भगवंश्चानपत्यस्य वार्द्धकं मे समागतम् ॥

तस्मादपत्यलाभाय ममोपायं प्रकीर्तय ॥ ४ ॥

तीर्थयात्रां व्रतं वापि शांतिकं वा द्विजोत्तम ॥

येन स्यात्संततिः शीघ्रं त्वत्प्रसादाद्बृहस्पते ॥ ५ ॥

बृहस्पतिश्चिरं ध्यात्वा सिद्धं प्राह ततः परम् ॥

चमत्कारपुरं क्षेत्रं गत्वा तत्र तपः कुरु ॥ ६ ॥

ततः प्राप्स्यसि सत्पुत्रं वंशोद्धारक्षमं शुभम् ॥

नान्यं पश्यामि सिद्धेश सुतोपायं शुभावहम् ॥ ७ ॥

ततस्तत्क्षेत्रमासाद्य स सिद्धः श्रद्धयान्वितः ॥

लिंगं संपूजयामास यथोक्तविधिना स्वयम् ॥ ८ ॥

ततश्चाराधयामास दिवानक्तमतंद्रितः ॥

बलि पूजोपहारेण गीतवाद्योच्छ्रयादिभिः ॥ ९ ॥

चांद्रायणैस्तथा कृच्छ्रैः पाराकैर्द्विजसत्तमाः ॥

तथा मासोपवासैश्च तोषयामास शंकरम् ॥ ६.३०.१० ॥

ततो वर्षसहस्राभ्यां तस्य तुष्टो महेश्वरः ॥

प्रोवाच दर्शनं गत्वा वृषारूढः सहोमया ॥ ११ ॥

हंसाद्य तव तुष्टोऽहं तस्मात्प्रार्थय वांछितम् ॥

अहं ते संप्रदास्यामि दुष्प्राप्यमपि निश्चितम् ॥ १२ ॥

॥ हंस उवाच ॥ ॥

अपत्यार्थं समारंभो मयाऽद्य विहितः पुरा ॥

तस्मात्त्वं देहि मे पुत्रान्वंशोद्धारक्ष मान्विभो ॥ १३ ॥

त्वया चैव सदा लिंगे स्थेयमत्र सुरोत्तम ॥

मम वाक्यादसंदिग्धं सर्वलोकहितार्थतः ॥ १४ ॥

॥ श्रीभगवानुवाच ॥

अद्यप्रभृति लिंगेस्मिन्नाश्रयो मे भविष्यति ॥

तव वाक्येन सिद्धेश सत्यमेतन्मयोदितम् ॥।५॥

यो मामत्र स्थितं मर्त्यः पूजयिष्यति भक्तितः ॥

तस्याहं संप्रदास्यामि चित्तस्थं सकलं फलम् ॥ १६ ॥

यो मे लिंगस्य याम्याशां स्थित्वा मंत्रं जपिष्यति ॥

षडक्षरं प्रदास्यामि तस्यायुष्यं सुतान्वितम् ॥॥ ॥ १७ ॥

एवमुक्त्वा महादेवस्ततश्चादर्शनं गतः ॥

हंसोऽपि च गृहं गत्वा पुत्रानाप महोदयान्॥ १८ ॥

तस्मात्सर्वप्रयत्नेन तल्लिंगं यत्नतो द्विजाः ॥

स्पर्शनीयं च पूज्यं च नमस्कार्यं प्रयत्नतः ॥ १९ ॥

षडक्षरेण मन्त्रेण कीर्तनीयं च शक्तितः ॥

वांछद्भिर्वांछितान्कामान्दुर्लभांस्त्रिदशैरपि ॥६.३०.२०॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सिद्धेश्वरोत्पत्तिवृत्तान्तवर्णनंनाम त्रिंशोऽध्यायः ॥ ॥ ३० ॥ ॥ व ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३१



॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति नागतीर्थमनुत्तमम्॥

यत्र स्नातस्य सर्पाणां न भयं जायते क्वचित्॥ १ ॥

तत्र श्रावणपञ्चम्यां यो नरः स्नानमाचरेत् ॥

कृष्णायां न भयं तस्य कुलेऽपि स्यादहेः क्वचित् ॥ २ ॥

तत्र पूर्वं तपस्तप्तं मातुः शापप्रपीडितैः ॥

शेष प्रभृतिनागैस्तु मुक्तिहेतोर्हुताशनात् ॥ ३ ॥

कम्बलाश्वतरौ नागौ तथा ख्यातौ धरातले ॥

तत्र तप्त्वा तपस्तीव्रं संसिद्धिं परमां गतौ ॥ ४ ॥

अनंतो वासुकिश्चैव तक्षकश्च महावलः ॥

कर्कोटश्चैव नागेन्द्रो मणिकण्ठस्तथापरः ॥५॥

ऐरावतस्तथा शंखः पुण्डरीको महाविषः ॥

शेषपूर्वाः स्मृता नागा एतेऽत्र नव नायकाः ॥ ६ ॥

एतेषां पुत्रपौत्राश्च तेषामपि विभूतिभिः ॥

असंख्याभिरिदं व्याप्तं समस्तं धरणीतलम्॥ ७ ॥

अथ ते कुटिला दुष्टा भक्षयंति सदा जनान् ॥

बहुत्वादपि संस्पर्शादपराधं विनापि च ॥ ८ ॥

ततः प्रजा इमाः सर्वा ब्रह्माणं शरणं गताः ॥

पीडिताः स्म सुरश्रेष्ठ सर्पेभ्यो रक्ष सत्वरम् ॥ ९ ॥

यावन्न शून्यतां याति सकलं वसुधातलम् ॥

व्याप्तं सर्वैस्ततः सर्पैर्विषाढ्यैरतिभीषणैः ॥ ६.३१.१० ॥

अथ तानब्रवीद्ब्रह्मा शेषाद्यान्नवनायकान्॥

स्वसंततेः प्ररक्षध्वं भक्ष्यमाणा इमाः प्रजाः ॥ ११ ॥

ते तथेति प्रतिज्ञाय जग्मुः सर्वे भुजंगमाः ॥।२॥

अथ तेषां बहुत्वाच्च नैव रक्षा प्रजायते ॥

वारिता अपि ते यस्मात्प्रकुर्वंति प्रजाक्षयम् ॥ १३ ॥

ततः कोपपरीतात्मा तानाहूय कुलाधिपान्॥

तानुवाच स्वयं ब्रह्मा सर्वदेवसमागमे ॥ १४ ॥
भक्षयंति यतः सर्पा अपराधं विना प्रजाः ॥
वारिता अपि ते तस्मात्तान्निगृह्णामि सांप्रतम् ॥ १५ ॥
भविष्यति महीपालो भूतले जनमेजयः॥
चित्रभानुर्मखे तस्य सर्पान्संभक्षयिष्यति ॥।६॥
मातुः शापाद्विशेषेण मंत्राकृष्टा द्विजोत्तमैः ॥
स्वयमेव पतिष्यंति सुसमिद्धे हुताशने ॥।७॥
तच्छ्रुत्वा वेपमानास्ते सर्पाणां नवनायकाः ॥
प्रोचुः प्रांजलयः सद्यः प्रणिपत्य पितामहम्॥ १८ ॥
भगवन्कुटिला ज्ञातिरस्माकं भवता कृता ॥
तत्कस्मात्कुरुषे कोपं जातिधर्मानुवर्तिनाम्॥।९॥
ब्रह्मोवाच॥
यदि नाम मया सृष्टा यूयं दिष्ट्या विषोल्बणाः ०।
अपराधं विना कस्माद्भक्षयध्व इमाः प्रजाः ॥ ६.३१.२० ॥
॥ नागा ऊचुः ॥ ॥
मर्यादां कुरु देवेश अस्माकं मानवैः सह ॥
अथवा संप्रयच्छस्व स्थानं मानुषवर्जितम् ॥ ॥ २१ ॥
पारिक्षितमखे तस्मिन्सर्पाणां चित्रभानुना ॥
समंताद्दह्यमानानां रक्षोपायं प्रचिंतय ॥ २२ ॥
यथा न संततिच्छेदो जायते प्रपितामह ॥
अस्माकं सर्वलोकेषु तथा त्वं कर्तुमर्हसि ॥ २३ ॥
॥ ब्रह्मोवाच॥ ॥
जरत्कारुरिति ख्यातो भविष्यति क्वचिद्द्विजः ॥
स संतानकृते भार्यां भूमावन्वेषयिष्यति ॥ २४ ॥
भाविनी च भवद्वंशे जरत्कन्या सुशोभना ॥
सा देया चादरात्तस्मै पुत्रार्थं वरवर्णिनी ॥ २५ ॥
ताभ्यां यो भविता पुत्रः स शेषान्रक्षयिष्यति ॥
सर्पाञ्छुद्धसमाचारान्मर्यादासु व्यवस्थितान् ॥ २६ ॥
सुतलं नितलं चैव तथैव वितलं च यत् ॥
तस्याधस्ताच्चतुर्थे च वसतिर्वो धरातले ॥ २७ ॥
मया दत्तेऽतिरम्ये च सर्वभोगसमन्विते ॥

तस्माद्व्रजत तत्रैव परित्यज्य महीतलम् ॥ २८ ॥
तत्र भुंजथ सद्भोगा न्गत्वाऽऽशु मम शासनात् ॥
पुत्रपौत्रसमोपेतांस्त्रिदशैरपि दुर्लभान् ॥ २९ ॥
॥ नागा ऊचुः ॥ ॥
भोगानपि प्रभुंजाना न वयं तत्र पद्मज ॥
शक्नुमो वस्तुमुर्व्यां नस्तस्मात्स्थानं प्रदर्शय ॥
मर्यादया वर्तयामो यत्रस्था मानवैः समम् ॥ ६.३१.३० ॥
॥ ब्रह्मोवाच ॥ ॥
एषा तिथिर्मया दत्ता युष्माकं धरणीतले ॥
पंचमी शेषकालस्तु नेयस्तत्रं रसातले ॥ ३१ ॥
तत्रागतैर्न हंतव्या मानवा दोषवर्जिताः ॥
मंत्रसंरक्षितांगाश्च तथौषधिकृतादराः ॥ ३२ ॥
चमत्कारपुरे क्षेत्रे मया दत्ता स्थितिः सदा ॥
पृथिव्यां कुलमुख्यानां नागानां नागसत्तमाः ॥ ३३ ॥
॥ सूत उवाच ॥ ॥
एवमुक्ताश्च ते नागा ब्रह्मणा सत्वरं ययुः ॥
पातालं कुलमुख्याश्च तस्मिन्क्षेत्रे व्यवस्थिताः ॥ ३४ ॥
तत्र श्रावणपंचम्यां यस्तान्पूजयते नरः ॥
स प्राप्नोति नरोऽभीष्टं तेषामेव प्रसादतः ॥ ३५ ॥
तस्य वंशेऽपि सर्पाणां न भयं स्यान्न किल्बिषम् ॥
न रोगो नोपसर्गश्च न च भूतभयं क्वचित् ॥ ३६ ॥
अपुत्रस्तत्र यः श्राद्धं करोति सुतवांछया ॥
पुत्रं विशिष्टमासाद्य पितॄणामनृणो हि सः ॥ ३७ ॥
तथा वंध्या च या नारी पंचम्यां भास्करोदये ॥
श्रावणे कुरुते स्नानं कृष्णपक्षे विशेषतः ॥
सा सद्यो लभते पुत्रं स्ववंशोद्धरणक्षमम् ॥ ३८ ॥
सर्वरोगविनिर्मुक्तं सुरूपं विनयान्वितम् ॥
भ्रष्टराज्यो नरो यो वा तत्र स्नानं समाचरेत् ॥ ३९ ॥
ततः पूजयते नागाञ्छ्रावणे पंचमीदिने ॥
स हत्वाऽरिगणा न्सर्वान्भूयोराज्यमवाप्नुयात् ॥ ६.३१.४० ॥
येषां मृत्युर्मनुष्याणां जायते सर्पभक्षणात् ॥

न तेषां जायते मुक्तिः प्रेतभावात्कथंचन ॥ ४१ ॥
यावन्न क्रियते श्राद्धं तस्मिंस्तीर्थे द्विजोत्तमाः ॥
तस्मात्सर्वप्रयत्नेन मृतस्याहिप्रदंक्षणात् ॥
श्राद्धं कार्यं प्रयत्नेन तस्मिंस्तीर्थेऽहिसंभवे ॥ ४२ ॥
अत्र वः कीर्तयिष्यामि पुरावृत्तां कथां शुभाम् ॥
इन्द्रसेनस्य राजर्षेः सर्वपातकनाशिनीम् ॥ ४३ ॥
इन्द्रसेनो महीपालः पुरासीद्रिपुदर्पहा ॥
अश्वमेधसहस्रेण इष्टं तेन महात्मना ॥ ४४ ॥
ततः स दैवयोगेन प्रसुप्तः शयने शुभे ॥
दष्टः सर्पेण मुक्तश्च इन्द्रसेनो महीपतिः ॥
वियुक्तश्चैव सहसा जीवितव्येन तत्क्षणात् ॥ ४५ ॥
ततस्तस्य सुतोऽभीष्टस्तस्योद्देशेन कृत्स्नशः ॥
चकार प्रेतकार्याणि स्मृत्युक्तानि च भक्तितः ॥ ॥ ४६ ॥
गंगायामस्थिपातं च कृत्वा श्राद्धानि षोडश ॥
गयां गत्वा ततश्चक्रे श्राद्धं श्रद्धासमन्वितः ॥ ४७ ॥
अथ स्वप्नांतरे प्राप्तः पिता तस्य स भूपतिः ॥
प्रोवाच दुःखितः पुत्रं बाष्पव्याकुललोचनम् ॥ ४८ ॥
सर्पमृत्योः सकाशान्मे प्रेतत्वं पुत्र संस्थितम् ॥
तेन मे भवता दत्तं न किञ्चिदुपतिष्ठते ॥ ४९ ॥
चमत्कारपुरं क्षेत्रं तस्मात्त्वं गच्छ सत्वरम् ॥
तत्र तीर्थे कुरु श्राद्धं सर्पाणां मत्कृते सुत ॥ ६.३१.५० ॥
येन संजायते मोक्षः प्रेतत्वा द्दारुणान्मम ॥
स ततः प्रातरुत्थाय तत्स्मृत्वा नृपतेर्वचः ॥ ५१ ॥
प्रेतरूपस्य दुःखार्तस्तत्तीर्थं सत्वरं गतः ॥
चकार च ततः श्राद्धं श्रावणे पंच मीदिने ॥ ५२ ॥
स्नात्वा श्रद्धासमोपेतः संनिवेश्य पुरोधसम् ॥
ततः स दर्शनं प्राप्तो भूयोऽपि च यथा पुरा ॥ ५३ ॥ प्रे
तरूपेण दुःखार्तो वाक्यमेतदुवाच ह ॥
न मयाऽऽसादितं किञ्चिद्यत्त्वया मत्कृते कृतम् ॥ ५४ ॥
फलं श्राद्धस्य चात्र त्वं कारणं शृणु पुत्रक ॥
श्राद्धार्हा ब्राह्मणाश्चात्र चमत्कारपुरोद्भवाः ॥ ५५ ॥

क्षेत्रेऽपि गर्हिताः श्राद्धे येऽन्यत्र व्यंगकादयः ॥
अत्र यत्क्रियते किञ्चिद्दानं वा व्रतमेव च ॥ ५६ ॥
तथान्यदपि विप्रार्हं कर्म यज्ञसमुद्भवम्॥
तत्तेषां वचनात्सर्वं पूर्णं स्यादपि खंडितम् ॥
परोक्षे वापि संपूर्णं वृथा संजायते स्फुटम् ॥ ५७ ॥
तस्मादस्मात्पुराद्विप्रान्समानीय ततः परम् ॥
मम नाम्ना कुरु श्राद्धं येन मुक्तिः प्रजायते ॥ ५८ ॥
अथासौ प्रातरुत्थाय स्मरमाणः पितुर्वचः ॥
दुःखेन महताविष्टः प्रविवेश पुरोत्तमे ॥ ५९ ॥
ततश्चान्वेषयामास श्राद्धार्हान्ब्राह्मणान्नृपः ॥
यत्नतोऽपि न लेभे स धनाढ्या ब्राह्मणा यतः ॥ ६.३१.६० ॥
न तत्र दुःखितः कश्चिद्दरिद्रोऽपि न दुःखितः ॥
नाकर्मनिरतो वापि पाखण्डनिरतोऽथवा ॥ ६१ ॥
स्थानेस्थाने महानादा उत्सवाश्च गृहेगृहे ॥
वेदविद्याविनोदाश्च स्मृति वादास्तथैव च ॥ ६२ ॥
श्रूयंते याज्ञिकानां च यज्ञकर्मसमुद्भवाः॥
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम्. ॥
न मृत्युः कस्यचित्तत्र पुरे ब्राह्मण सेविते ॥ ६३ ॥
यथर्तुवर्षी पर्जन्यः सस्यानि गुणवन्ति च ॥
भूरिक्षीरस्रवा गावः क्षीराण्याजाविकानि च ॥ ६४ ॥
यंयं प्रार्थयते विप्रं स श्राद्धार्थं महीपतिः ॥
स स तं भर्त्सयामास दुरुक्तैः कोपसंयुतः ॥ ६५ ॥
धिग्धिक्पापसमाचार क्षत्रियापसदात्मक ॥
किं कश्चिद्ब्राह्मणोऽश्नाति प्रेतश्राद्धे विशेषतः ॥ ६६ ॥
तस्माद्गच्छ द्रुतं यावन्न कश्चिच्छपते द्विजः ॥
निहन्ति वा प्रकोपेन स्वर्गमार्गनिरोधकम् ॥ ६७ ॥
॥ सूत उवाच ॥ ॥
ततः स दुःखितो राजा निश्चक्राम भयार्दितः ॥
चमत्कारपुरात्तस्माद्वैलक्ष्यं परमं गतः ॥ ६८ ॥
चिन्तयामास राजेंद्र स्मृत्वावस्थां पितुश्च ताम् ॥
किं करोमि क्व गच्छामि कथं मे स्यात्पितुर्गतिः ॥ ६९ ॥

ततः स सचिवान्सर्वान्प्रेषयित्वा गृहं प्रति ॥
एकाकी भिक्षुरूपेण स्थितस्तत्रैव सत्पुरे ॥६.३१.७०॥।
स ज्ञात्वा नगरे तत्र ब्राह्मणं शंसितव्रतम् ॥
सर्वेषां ब्राह्मणेंद्राणां मध्ये दाक्षिण्यभाजनम् ॥ ७१ ॥
देवशर्माभिधानं तु शरणागतवत्सलम् ॥
आहिताग्निं चतुर्वेदं स्मृतिमार्गानुयायिनम् ॥ ७२ ॥
ततस्तु प्रातरुत्थाय कृत्वांत्यजमयं वपुः ॥
शोधयामास कृच्छ्रेण मलोत्सर्गनिकेतनम् ॥ ७३ ॥ ।
अथ यः कुरुते कर्म तत्र विष्ठाप्रशोधनम् ॥
सोऽभ्येत्य तमुवाचेदं कोपसंरक्तलोचनः ॥ ७४ ॥
कुतस्त्वमिह संप्राप्तो मद्वृत्तेरुपघातकृत् ॥
तस्माद्गच्छ द्रुतं नो चेन्नयिष्ये यमसादनम् ॥ ७५ ॥
तस्यैवं वदतोऽप्याशु बलात्स पृथिवीपतिः ॥
शोधयामास तत्स्थानं देवशर्मसमुद्भवम् ॥ ७६ ॥
ततः संवत्सरस्यांते चंडालेन द्विजोत्तमाः ॥
स प्रोक्त उचिते काले प्रणिपत्य च दूरतः ॥ ७७ ॥
स्वामिंस्तव कुलेप्येवं गूथाशोधनकर्मकृत् ॥
तदस्माकं न चान्यस्य तत्किमन्यः प्रवेशितः ॥ ७८ ॥
अथ श्रुत्वा च तद्वाक्यं स प्राह द्विजसत्तमः ॥
न मया कश्चिदन्योऽत्र निर्दिष्टो गोप्यकर्मणि॥
अधिकारस्त्वयात्मीयस्तथा कार्यो यथा पुरा ॥ ७९ ॥
तदान्यदिवसे प्राप्ते सोंऽत्यजः कोपसंयुतः ॥
शस्त्रमादाय संप्राप्तो वधार्थं तस्य भूपतेः ॥६.३१.८०॥
शस्त्रोद्यतकरं दृष्ट्वा प्रहारेकृतनिश्चयम् ॥
ततस्तं लीलया भूयो मुष्टिना मूर्ध्न्यताडयत् ॥ ८१ ॥
ततस्तस्य विनिष्क्रांते लोचने तत्क्षणाद्द्विजाः ॥
सुस्राव रुधिरं पश्चात्पपात गतजीवितः ॥ ८२ ॥
तं श्रुत्वा निहतं तेन चंडालं निजकिंकरम् ॥
देवशर्मातिकोपेन तद्वधार्थमुपागतः ॥ ८३ ॥
ततः पुत्रैश्च पौत्रैश्च सहितोऽन्यैश्च बन्धुभिः ॥
लोष्टैस्तं ताडयामास भर्त्समानो मुहुर्मुहुः ॥ ८४ ॥

सोऽपि संताड्यमानस्तु प्रहारैर्जर्जरीकृतः ॥
वेदोच्चारं ततश्चक्रे दर्शयित्वोपवीतकम् ॥ ८५ ॥
अथ ते विस्मिताः सर्वे देवशर्मपुरःसराः ॥
ब्राह्मणास्तं समुद्वीक्ष्य वेदोच्चारपरायणम् ॥ ८६ ॥
पृष्टश्च किमिदं कर्म तवांत्यजजनोचितम् ॥
एषा वेदात्मिका वाणी स्पष्टाक्षरकलस्वना ॥
तत्किं शापपरिभ्रष्टस्त्वं कश्चिद्ब्राह्मणोत्तमः ॥ ८७ ॥
येनैवं कुरुषे कर्म गर्हितं चांत्यजैरपि ॥
ततः स प्रहसन्नाह क्षत्रियोऽहं महीपतिः ॥
विष्णुसेन इति ख्यातो हैहयान्वयसंभवः ॥ ८८ ॥
सोहमाराधनार्थाय त्वस्मिन्स्थान उपागतः॥
अद्य संवत्सरो जातः कर्मण्यस्मिन्नतस्य च॥८९॥
॥ सूत उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा स विप्रः कृपयान्वितः ॥
कृतांजलिपुटो भूत्वा तमुवाच महीपतिम्॥६.३१.९०॥
किं तत्कृत्यं समुद्दिश्य त्वयैतत्कर्म गर्हितम् ॥
कृतं कीर्तय येनाशु तवाभीष्टं करोम्यहम् ॥९॥।
नास्ति मे किञ्चिदप्राप्तं तथाऽसाध्यं महीपते ॥
तस्मात्तव करिष्यामि कृत्यं यद्यपि दुर्लभम् ॥ ९२ ॥
॥ राजोवाच ॥ ॥
पिता ममाहिना दष्टः प्रेतत्वं समुपागतः ॥
सोऽत्र नागह्रदे श्राद्धे कृते मुक्तिमवाप्नुयात् ॥ ९३ ॥
तस्मात्तत्तारणार्थाय विप्रकृत्यं समाचर ॥
एतदर्थं मयैतत्ते कृतं कर्म विगर्हितम् ॥ ९४ ॥ ॥
॥ देवशर्मोवाच ॥ ॥
एवं कुरु नृपश्रेष्ठ श्राद्धेऽहं ते पितुः स्वयम् ॥
ब्राह्मणः संभविष्यामि तस्माच्छ्राद्धं समाचर ॥ ९५ ॥
॥ सूत उवाच ॥ ॥
अथ ते सुहृदस्तस्य पुत्राः पौत्राश्च बांधवाः ॥
प्रोचुर्नैतत्प्रयुक्तं ते श्राद्धं भोक्तुं विगर्हितम् ॥ ९६ ॥
तस्माद्यदि भवानस्य श्राद्धे भोक्ता ततः स्वयम् ॥

सर्वे भवन्तं त्यक्षामस्तथान्येऽपि द्विजोत्तमाः ॥ ९७ ॥
॥ देवशर्मोवाच ॥ ॥
कामं त्यजत मां सर्वे यूयमन्येऽपि ये द्विजाः ॥
मयैवास्य प्रतिज्ञातं भोक्तुं श्राद्धे महीपतेः ॥ ९८ ॥
एवमुक्त्वा स विप्रेंद्रस्तेनैव सहितस्तदा ॥
नागह्रदं समासाद्य श्राद्धे वै भुक्तवानथ ॥ ९९ ॥
भुक्तमात्रे ततस्तस्मिन्वागुवाचाशरीरिणी ॥
नादयंती जगत्सर्वं हर्षयंती महीपतिम् ॥ ६.३१.१०० ॥
प्रेतभावाद्विनिर्मुक्तः पुत्राहं त्वत्प्रभावतः ॥
स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदिवालयम् ॥ १०१ ॥
तत्कृत्वा नृपतिर्हृष्टस्तं प्रणम्य द्विजोत्तमम् ॥
प्रोवाच कुरु मे वाक्यं यद्ब्रवीमि द्विजोत्तम ॥ १०२ ॥
अस्ति माहिष्मतीनाम नगरी नर्मदातटे ॥
सा चास्माकं राजधानी पितृपर्यागता विभो ॥ १०३ ॥
अहं यच्छामि ते ब्रह्मन्समस्तविषयान्विताम्॥
मया भृत्येन तत्रस्थः कुरु राज्यमकंटकम् ॥ १०४ ॥
॥ देवशर्मोवाच ॥ ॥
न चैतद्युज्यते वक्तुं न विप्रो राज्यमर्हति ॥
तस्माद्गच्छ निजं राज्यं परिपालय पार्थिव ॥॥५॥
॥ सूत उवाच ॥ ॥
एवं विसर्जितस्तेन जगाम स महापतिः ॥
स्वं देशं हर्षसंयुक्तः कृतकृत्यो द्विजोत्तमाः ॥ ॥ १०६ ॥
सोऽपि सर्वैः परित्यक्तो ब्राह्मणैः पुरवासिभिः ॥
देवशर्मा समुद्दिश्य दोषं श्राद्धसमुद्भवम् ॥ १०७ ॥
ततो नागह्रदे तस्मिन्स कृत्वा निजमन्दिरम् ॥
निवासमकरोत्तत्र स्वाध्यायनिरतः शुचिः ॥ १०८ ॥
तत्रस्थस्य निरस्तस्य ये पुत्राः स्युर्द्विजोत्तमाः ॥
तेषां संततयो ऽद्यापि ते प्रोक्ता बाह्यवासिनः ॥ १०९ ॥
एतद्वः सर्वमाख्यातं नागतीर्थसमुद्भवम् ॥
माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ ६.३१.११० ॥
यश्चैतत्पठते भक्त्या संप्राप्ते पंचमीदिने ॥

शृणुयाद्वा न वंशेऽपि तस्य स्यात्सार्पजं भयम् ॥ १११ ॥
तथा विमुच्यते पापाद्वृक्षजातान्न संशयः ॥
कृतादज्ञानतो विप्राः सत्यमेतन्मयोदितम् ॥ ११२ ॥
तस्मात्सर्वप्रयत्नेन नागतीर्थमनुत्तमम् ॥
माहात्म्यं पठनीयं वा श्रोतव्यं वा समाहितैः ॥ ११३ ॥
श्राद्धकाले तु संप्राप्ते यश्चैतत्पठते द्विजः ॥
स प्राप्नोति फलं कृत्स्नं गयाश्राद्धसमुद्भवम् ॥ ११४ ॥
तथा ये कीर्तिता दोषाः श्राद्धे द्रव्यसमुद्भवाः ॥
व्रतवैक्लव्यजाश्चापि तथा ब्राह्मणसंभवाः ॥ ११५ ॥
ते सर्वे नाशमायांति कीर्त्यमाने समाहितैः ॥
नागह्रदस्य माहात्म्ये श्राद्धकाल उपस्थिते ॥ ११६ ॥
तथा विनिहता गोभिर्ब्राह्मणैः श्वापदैरपि ॥
एतस्मिन्पठिते श्राद्धे गच्छंति परमां गतिम् ॥ ११७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागह्रदमाहात्म्यवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३२

https://sa.wikisource.org/s/fht
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्योऽस्ति द्विजश्रेष्ठास्तस्मिन्क्षेत्रे शुभावहे ॥

सप्तर्षीणां सुविख्यात आश्रमः सर्वकामदः ॥ १ ॥

तत्र श्रावणमासस्य पंचदश्यां समाहितः ॥

यः करोति नरः स्नानं स लभेद्वांछितं फलम् ॥ २ ॥

कन्दमूलफलैः शाकैर्यस्तत्र श्राद्धमाचरेत् ॥

स प्राप्नोति फलं कृत्स्नं राजसूयाश्वमेधयोः ॥ ३ ॥

पंचम्यां शुक्लपक्षे तु मासि भाद्रपदे द्विजाः ॥

यस्तान्पूजयते भक्त्या पुष्पधूपानुलेपनैः ॥

विधिनानेन विप्रेन्द्राः सर्वानेव यथाक्रमम् ॥ ४ ॥

ॐ अत्रये नमः ॥

ॐ वसिष्ठाय नमः ॥

ॐ कश्यपाय नमः ॥

ॐ भरद्वाजाय नमः ॥

ॐ गौतमाय नमः ॥

ॐ कौशिकाय नमः ॥

ॐ जमदग्नये नमः ॥

ॐ अरुंधत्यै नमः ॥

॥ पूजामंत्रः ॥ ॥

जह्नुकन्यापवित्रांगा गृहीतजपमालिकाः ॥

गृह्णंत्वर्घं मया दत्तमृषयः सर्वकामदाः ॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

तत्र सप्तर्षिभिस्तीर्थं कस्मिन्काले व्यवस्थितम् ॥

विस्तरात्सूतज ब्रूहि परं कौतूहलं हि नः ॥ ६ ॥

॥ सूत उवाच ॥ ॥

अनावृष्टिः पुरा जाता लोके द्वादशवार्षिकी ॥

सर्वोषधिक्षयो जातस्ततो लोकाः क्षयार्दिताः ॥ ७ ॥

अस्थिशेषा निरुत्साहास्त्यक्तधर्मव्रतक्रियाः ॥

अभक्ष्यभक्षणपरास्तथैवापेयपायिनः ॥ ८ ॥

त्यजंति मातरः पुत्रान्कलत्राणि तथा नराः ॥

भृत्यान्स्वानपि वित्तेशाः का कथान्यसमुद्भवान् ॥ ९ ॥

संत्यक्तान्यग्निहोत्राणि ब्राह्मणैर्याजकैरपि ॥

व्रतानि व्रतिभिर्दांतैरपि वृद्धतमैर्द्विजाः ॥ ६.३२.१० ॥

दृश्यते चैव यत्रैव सस्यं वापि कथंचन ॥

ह्रियते लज्जया हीनैस्तत्र क्षुत्क्षामकैर्नरैः ॥ ११ ॥

एवमन्नक्षये जाते पीडिते धरणीतले ॥

सप्तर्षयः क्षुधाविष्टा बभ्रमुस्तत्रतत्र च॥ १२ ॥

अत्रिश्चैव वसिष्ठश्च कश्यपः सुमहातपाः ॥

भरद्वाजस्तथा चान्यो गौतमः संशितव्रतः॥

कौशिको जमदग्निश्च तथैवारुंधती सती ॥ १३ ॥

अथ तेषां समस्तानां चंडाभूत्परिचारिका ॥

पशुवक्त्रस्तथा भृत्यो विनयेन समवितः ॥ १४ ॥

ततस्ते विषयं प्राप्ता वृषादर्भिमहीपतेः ॥

क्षुत्क्षामा मुनयोऽत्यर्थं देशे चानर्तसंज्ञके ॥ १५ ॥

तत्र भिक्षाकृते भ्रांतास्ततश्चैव गृहाद्गृहम् ॥

न ग्रासमपि सस्यस्य प्राप्नुवंस्ते द्विजोत्तमाः ॥।६॥

ततस्तैः पतितो भूमौ दृष्टो मृतकुमारकः ॥

मंत्रयित्वा मिथः पश्चाद्गृहीतो भक्षणाय च ॥ १७ ॥

अपचन्यावदग्नौ तं क्षुधया परिपीडिताः ॥

वृषादर्भिर्नृपः प्राप्तः श्रुत्वा तेषां विचेष्टितम् ॥ १८ ॥

॥ वृषादर्भिरुवाच ॥ ॥

किमिदं गर्हितं कर्म क्रियते मुनिसत्तमाः ॥

राक्षसानामयं धर्मो महामांसस्य भक्षणम् ॥ १९ ॥

सोऽहं सस्यं प्रदास्यामि ग्रामान्व्रीहीन्यवानपि॥

मम वाक्यादसंदिग्धं त्यजध्वं मृतबालकम् ॥ ६.३२.२० ॥

॥ ऋषय ऊचुः ॥ ॥

प्रायश्चित्तं समादिष्टं महामांसस्य भक्षणात् ॥

प्रतिग्रहस्य भूपाला दापत्कालेऽपि नो नृप ॥ २१ ॥

पश्चात्तपश्चरिष्यामो महामांससमुद्भवम् ॥

पातकं नाशयिष्यामो भक्षयामो वयं ततः ॥ २२ ॥

॥ वृषादर्भि रुवाच ॥ ॥

प्रतिग्रहो द्विजातीनां प्रोक्ता वृत्तिरनिंदिता ॥

ग्राह्यो मत्तस्ततः सर्वैर्नात्र कार्या विचारणा ॥ २३ ॥

॥ ऋषय ऊचुः ॥ ॥

राज प्रतिग्रहो घोरो मध्वास्वादो विषोपमः ॥

स दूराद्ब्राह्मणैस्त्याज्यो विशेषात्कृतिभिर्नृप ॥ २४ ॥

दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ॥

दश ध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ २५ ॥

दशसूनासहस्रेण तुल्यो राजप्रतिग्रहः ॥

कस्तस्य प्रतिगृह्णाति लोभाढ्यो ब्राह्मणो यथा ॥ २६ ॥

रौरवादिषु सर्वेषु नरकेषु स पच्यते ॥

तस्माद्गच्छ गृहे भूप स्वस्ति तेऽस्तु सदैव हि ॥ २७ ॥

वयमन्यत्र यास्यामो ग्रहीष्यामो न ते धनम् ॥

एवमुक्त्वाथ ते सर्वे मुनयः शंसितव्रताः ॥ २८ ॥

परित्यज्य कुमारं तं मृतं तमपि भूमिपम् ॥

चमत्कारपुरं क्षेत्रं समुद्दिश्य ततो ययुः ॥ २९ ॥

सोऽपि राजा ततस्तैस्तु भर्त्सितोऽतिरुषान्वितः ॥

जिज्ञासार्थं ततस्तेषां चक्रे कर्म द्विजोत्तमाः ॥ ६.३२.३० ॥

ततः सुवर्णपूर्णानि विधायोदुम्बराणि च ॥

तेषां मार्गाग्रतो भूमौ समंतादथ चाक्षिपत् ॥ ३१ ॥

॥ सूत उवाच ॥ ॥

अथ ते मुनयो दृष्ट्वा पतितानि धरातले ॥

उदुम्बराणि संदृष्ट्वा जगृहुः क्षुधयार्दिताः ॥ ३२ ॥

अथ तानि समालक्ष्य गुरूणि मुनिसत्तमाः ॥

अत्रिरेकं परिस्फोट्य सुवर्णं वीक्ष्य चाब्रवीत्॥३३॥ ॥

॥ अत्रिरुवाच ॥ ॥

नास्माकं मुनयोऽज्ञानं नास्माकं गृहबुद्धयः ॥

हैमानिमान्विजानंतो ग्रहीष्याम उदुम्बरान् ॥ ३४ ॥

तस्मादेतानि संत्यज्य हेमगर्भाणि दूरतः ॥

उदुम्बराणि यास्यामः फलानि विगतस्पृहाः ॥ ३५ ॥

सार्वभौमो महीपाल एकोऽन्यश्च निरीहकः ॥

सुभगस्तु तयोर्नित्यं भूयाद्भूयो निरीहकः ॥ ३६ ॥

धर्मार्थमपि विप्राणां संचयोऽर्थस्य गर्हितः ॥

प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ॥ ॥ ३७ ॥

त्यजतः संचयान्सर्वान्यांति हानिमुपद्रवाः ॥

न हि सर्वार्थवान्कश्चिद्दृश्यते निरुपद्रवः ॥ ३८ ॥

निर्धनत्वं तथा राज्यं तुलायां धारयेद्बुधः ॥

अकिंचनत्वमधिकं जायते संमतिर्मम ॥ ३९ ॥

॥ कश्यप उवाच ॥ ॥

अनर्थोऽयं मुने प्राप्तो यदर्थस्य परिग्रहः ॥

अर्थैश्वर्यविमूढात्मा श्रेयसा मुच्यते हि सः ॥ ६.३२.४० ॥

अर्थसंपद्विमोहाय विमोहो नरकाय च ॥

तस्मादर्थं प्रयत्नेन श्रेयोऽर्थी दूरतस्त्यजेत् ॥ ॥४१ ॥

योर्थेन साध्यते धर्मः क्षयिष्णुः स प्रकीर्तितः ॥

यः पुनस्तपसा साध्यः स मोक्षायेति मे मतिः ॥ ४२ ॥

॥ भरद्वाज उवाच ॥ ॥

जीर्यंति जीर्यतः केशा दंता जीर्यंति जीर्यतः ॥

चक्षुः श्रोत्रे तथा पुंसस्तृष्णैका तरुणायते ॥ ४३ ॥

सूच्या सूत्रं यथा वस्त्रं संचारयति सूचिका ॥

तद्वत्संसारसूत्रं च वांछयात्मा नयत्यसौ ॥। ४४ ॥

यथा शृंगं हि कायेन वर्द्धमानेन वर्धते।

तद्वत्तृष्णापि वित्तेन वर्द्धमानेन वर्द्धते॥४५॥

अनंतपारा दुष्पूरा तृष्णा दुःखशतावहा॥

अधर्मबहुला चैव तस्मात्तां परिवर्जयेत्॥४६॥

गौतम उवाच॥

संतुष्टः केन चाल्योऽस्ति फलैरपि विवर्जितः॥

सर्वोपीन्द्रियलौल्येन संकटे भ्रमति द्विजाः॥४७॥

सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम्॥

उपानद्गूढपादस्य ननु चर्मास्तृतेव भूः॥४८॥

संतोषामृततृप्तानां यत्सुखं शांतचेतसाम् ॥

कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ४९ ॥

असंतोषः परं दुःखं संतोषः परमं सुखम् ॥

सुखार्थी पुरुषस्तस्मात्संतुष्टः सततं भवेत् ॥ ६.३२.५० ॥

॥ विश्वामित्र उवाच ॥ ॥

कामं कामयमानस्य यदि कामः स सिध्यति ॥

तथान्यो जायते पुंसस्तत्क्षणादेव कल्पितः ॥ ५१ ॥

न जातु कामी कामानां सहस्रैरपि तुष्यति ॥

हविषा कृष्णवर्त्मेव वांछा तस्य विवर्धते ॥ ॥५२ ॥

कामानभिलषन्मोहान्न नरः सुखमाप्नुयात् ॥

श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः ॥ ५३ ॥

नित्यं सागरपर्यन्तां यो भुङ्क्ते पृथिवीमिमाम् ॥

तुल्याश्मकाञ्चनश्चैव स कृतार्थो महीपतेः ॥ ५४ ॥

॥ जमदग्निरुवाच ॥ ॥

योऽर्थं प्राप्याधमो विप्रः शोचितव्येपि हृष्यति ॥

न च पश्यति मन्दात्मा नरकं चा कुतोभयः॥ ५५ ॥

प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात् ॥

य एव ददतां लोकास्त एवाप्रतिगृह्णताम्॥५६॥

अरुन्धत्युवाच॥

बिसतंतुर्यथाऽनन्तो नालमासाद्य संस्थितः॥

तृष्णा चैवमनाद्यन्ता स्थिता देहे शरीरिणाम्॥५७॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः॥

याऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥५८॥

चण्डोवाच॥ सर्पादिवद्धनाद्यस्माद्विभ्यतीमे ममेश्वराः ॥

यतस्ततो विशेषेण कस्मात्तस्माद्भयं मम ॥५६॥ ॥

पशुमुख उवाच॥ यदाचरन्ति विद्वांसः सदा धर्मपरायणाः।.

तदेव विदुषा कार्यमात्मनो हितमिच्छता॥६.३२.६०॥

सूत उवाच॥

इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि च॥

ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः ॥६॥।

चमत्कारपुरेक्षेत्रे विविशुस्ते ततः परम् ॥

ददृशुः सहसा प्राप्तं परिव्राजं शुनोमुखम् ॥ ६२ ॥

तेनैव सहितास्तत्र गत्वा किञ्चिद्वनान्तरम्॥

दृष्टवन्तस्ततो हृद्यं सरः पंकजशोभितम् ॥ ६३ ॥

ततो बुभुक्षयाविष्टा बिसान्यादाय भूरिशः ॥

तीरे निक्षिप्य सरसश्चक्रुः पुण्यां जल क्रियाम् ॥ ६४ ॥

अथोत्तीर्यजलात्सर्वे ते समेत्य परस्परम् ॥

बिसानि तान्यपश्यन्त इदं वचनमब्रुवन् ॥ ६५ ॥

॥ऋषय ऊचुः ॥ ॥

केन क्षुधाभितप्तानामस्माकं निर्दयात्मना ॥

मृणालानि समस्तानि स्थानादस्माद्धृतानि च ॥ ६६ ॥

ते शंकमाना अन्योन्यमृषयः शंसितव्रताः ॥

प्रचक्रुः शपथान्रौद्रानात्मनः प्रविशुद्धये ॥ ६७ ॥

॥ कश्यप उवाच ॥ ॥

सर्वभक्षः सदा सोऽस्तु न्यासलोभं करोतु वा ॥

कूटसाक्षित्वमभ्ये तु बिसस्तैन्यं करोति यः ॥ ६८ ॥

धर्मं करोतु दंभेन राजानं चोपसेवताम् ॥

मधुमांसं सदाश्नातु बिसस्तैन्यं करोति यः ॥ ६९ । ॥

॥ वसिष्ठ उवाच ॥ ॥

अनृतौ मैथुनं यातु दिवा वाप्यथ पर्वणि ॥

अतिथिः स्यात्ततोऽन्योन्यं बिसस्तैन्यं करोति यः ॥ ६.३२.७० ॥ ॥

॥ भरद्वाज उवाच ॥ ॥

योधिगम्य गुरोः शास्त्रं निष्क्रयं न प्रयच्छति ॥

तस्यैनसा स युक्तोस्तु बिसस्तैन्यं करोति यः ॥ ७१ ॥

नृशंसोऽस्तु स सर्वत्र समृद्ध्या चाप्यहंकृतः ॥

मत्सरी पिशुनश्चैव बिसस्तैन्यं करोति यः ॥ ७२ ॥

॥ विश्वामित्र उवाच ॥ ॥

एकाकी मृष्टम श्नातु प्रशंस्यादथ चात्मनः ॥

वेदविक्रयकर्तास्तु बिसस्तैन्यं करोति यः ॥ ७३ ॥

॥ जमदग्निरुवाच ॥ ॥

कन्यां यच्छतु वृद्धाय स भूयाद्वृषली पतिः ॥

अस्तु वार्धुषिको नित्यं बिसस्तैन्यं करोति यः ॥ ७४

॥ गौतम उवाच ॥ ॥

स गृह्णात्वविकादानं करोतु हयविक्रयम्॥

प्रकरो तु गुरोर्निंदां बिसस्तैन्यं करोति यः ॥७५ ॥

॥ अत्रिरुवाच ॥ ॥

मातरं पितरं नित्यं दुर्मतिः सोऽवमन्यताम् ॥

शूद्रं पृच्छतु धर्मार्थं बिसस्तैन्यं करोति यः ॥ ७६ ॥

प्रतिश्रुत्य न यो दद्याद्ब्राह्मणाय गवादिकम् ॥

तस्यैनसा स युज्येत बिसस्तैन्यं करोति यः ॥-७७ ॥

॥ अरुंधत्युवाच ॥ ॥

करोतु पत्युः पूर्वं सा भोजनं शयनं तथा ॥

नारी दुष्टसमाचारा बिसस्तैन्यं करोति या ॥ ७८ ॥

॥ चण्डोवाच ॥ ॥

स्वामिनः प्रतिकूलास्तु धर्मद्वेषं करोतु च॥

साधुद्वेषपरा चैव बिसस्तैन्यं करोति या ॥ ७९ ॥

पशुमुख उवाच ॥ ॥

स्वामिद्रोहरतो नित्यं स भूयात्पापकृन्नरः ॥

साधु द्वेषपरश्चैव बिसस्तैन्यं करोति यः ॥ ६.३२.८० ॥

॥ शुनोमुख उवाच ॥ ॥

वेदान्स पठतु न्यायाद्गृहस्थः स्यात्प्रियातिथिः ॥

सत्यं वदतु चाजस्रं बिसस्तैन्यं करोति यः ॥ ८१ ॥

॥ ऋषय ऊचुः ॥ ॥

इष्ट एव द्विजातीनां यस्त्वया शपथः कृतः ॥

बिसस्तैन्यं हि चास्माकं तन्नूनं भवता कृतम् ॥ ८२ ॥

॥ शुनोमुख उवाच ॥ ॥

मया हृतानि सर्वेषां बिसानीमानि वो द्विजाः ॥

धर्मान्वै श्रोतुकामेन मां जानीत पुरंदरम् ॥ ८३ ॥

युष्माकं परितुष्टोऽस्मि लोभाभावाद्द्विजोत्तमाः ॥

तस्मात्स्वर्गं मया सार्द्धं शीघ्रमागम्यतामिति ।ा ८४ ॥

॥ ऋषय ऊचुः ॥ ॥

मोक्षमार्गं समासक्ता न वयं स्वर्गलिप्सवः ॥

तस्मात्तपश्चरिष्यामः सरसीह विमुक्तये ॥ ८५ ॥

पूर्णा सागरपर्यंतां चरित्वा पृथिवी मिमाम् ॥

प्राणयात्रां प्रकुर्वाणा मृणालैर्मुनिसत्तमाः ॥

तस्माद्गच्छ तव श्रेयो भूयादस्मात्समागमात् ॥ ८६ ॥

॥ शक्र उवाच ॥ ॥

न वृथा दर्शनं मे स्यात्कदाचिदपि सुव्रताः ॥

तस्माद्गृह्णीत यच्चित्ते सदाभीष्टं व्यवस्थितम् ॥ ८७ ॥

॥ ऋषय ऊचुः ॥ ॥ ,

आश्रमोऽयं सुविख्यातो भूयाच्छक्र महीतले ॥

नाम्नास्माकं तथा नृणां सर्वपातकनाशनः ॥ ८८ ॥

वयं स्थास्यामहे नित्यमत्रैव सुरसत्तम ॥

तपोऽर्थं भावितात्मानो यावन्मोक्षगतिर्ध्रुवा ॥ ८९ ॥

॥ इन्द्र उवाच ॥ ॥

त्रैलोक्येऽपि सुविख्यात आश्रमो वो भविष्यति ॥

तथा कामप्रदश्चैव लोकानां संभविष्यति ॥ ६.३२.९० ॥

यो यं काममभिध्याय श्राद्धमत्र करिष्यति ॥

श्रावणे पौर्णमास्यां च स तं सर्वमवा प्स्यति ॥ ९१ ॥

निष्कामो वा नरो यस्तु श्राद्धं दानमथापि वा ॥

प्रकरिष्यति मोक्षं स समवाप्स्यत्यसंशयम् ॥ ९२ ॥

ये चात्र देहं त्यक्ष्यंति युष्माकं चाश्रमे शुभे ॥

अपि पापसमायुक्तास्ते यास्यंति परां गतिम् ॥ ९३ ॥

इंगुदैर्बदरैर्वापि बिल्वैर्भल्लातकैरपि ॥

पितॄनुद्दिश्य यः श्राद्धं करिष्यति समाहितः ॥ ९४ ॥

स यास्यति परां सिद्धिं दुर्लभां त्रिदशैरपि ॥

सर्वपापविनिर्मुक्तः स्तूयमानश्च किंनरैः ॥ ९५ ॥ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा सहस्राक्षस्तैः सर्वैरभिनंदितः ०।

जगामादर्शनं तेऽपि स्थितास्तत्र द्विजोत्तमाः ॥ ९६ ॥

ततः काले गते तेऽपि कृत्वा तीव्रं महत्तपः ॥

संप्राप्ताः परमं स्थानं जरामरणवर्जितम् ॥ ९७ ॥

तैस्तत्र स्थापितं लिङ्गं देवदेवस्य शूलिनः ॥

तस्य संदर्शनादेव नरः पापाद्विमुच्यते ॥ ९८ ॥

यस्तल्लिंगं पुनर्भक्त्या पुष्पधूपानुलेपनैः ॥

अर्चयेत्स ध्रुवं मुक्तिं प्राप्नोति द्विजसत्तमाः ॥ ९९ ॥

एतत्पवित्र मायुष्यं सर्वपातकनाशनम्॥

सप्तर्षीणां समाख्यातमाश्रमस्यानुकीर्तनम् ॥ ६.३२.१०० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सप्तर्ष्याश्रममाहात्म्यवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३३

https://sa.wikisource.org/s/fih
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

अगस्त्यस्याश्रमोऽन्योस्ति तथा तत्र द्विजोत्तमाः ॥

यत्र तिष्ठति विश्वात्मा स्वयं देवो महेश्वरः ॥ १ ॥

शुक्लपक्षे चतुर्दश्यां चैत्रमासे दिवाकरः ॥

स्वयमभ्येत्य देवेशं पूजयत्येव शंकरम् ॥ २ ॥

तस्मादन्योऽपि यस्तस्यां भक्त्या चागत्य शंकरम् ॥

तमेव पूजयेद्भक्त्या स याति देवमन्दिरम् ॥ ॥ ३ ॥

यस्तत्र कुरुते श्राद्धं सम्यक्छ्रद्धासमन्वितः ॥

पितरस्तस्य तृप्यंते पितृमेधे कृते यथा ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

अगस्त्यस्याश्रमं प्राप्य कस्माद्देवो दिवाकरः ॥

प्रदक्षिणां प्रकुरुते वदैतन्मे सुविस्तरम् ॥ ५ ॥

॥ सूत उवाच ॥ ॥

कथयामि कथामेतां शृणुत द्विज सत्तमाः ॥

अस्ति विंध्य इति ख्यातः पर्वतः पृथिवीतले ॥ ६ ॥

यस्य वृक्षाग्रशाखायां संलग्नास्तरणेः कराः ॥

पुष्पपूगा इवाधःस्थैर्लक्ष्यंते मुग्धसि द्धकैः ॥ ७ ॥

अनभिज्ञास्तमिस्रस्य यस्य सानुनिवासिनः ॥

रत्नप्रभाप्रणुन्नस्य कृष्णपक्षनिशास्वपि ॥ ८ ॥

यस्य सानुषु मुंचंतो भांति पुष्पाणि पादपाः ॥

वायुवेगवशान्नूनं नीरौघ नीरदा इव ॥ ९ ॥

यस्मिन्नानामृगा भांति धावमाना इतस्ततः ॥

कलत्रपुत्रपुष्ट्यर्थं लोभार्थं मानवा इव ॥ ॥ ६.३३.१० ॥

निर्यासच्छद्मना बाष्पं वासिताशेषदिङ्मुखम् ॥

मुञ्चंति तरवो यत्र दन्तिदन्तक्षतत्वचः॥ ११ ॥

चीरिकाविरुतैर्दीर्घै रुदंत इव चापरे ॥

हस्तिहस्तहता वृक्षा मन्यन्ते यस्य सानुषु ॥ १२ ॥

इतश्चेतश्च गच्छद्भिर्निर्झरांभोभिरावृतः ॥

शुशुभे सितवस्त्राढ्यैः पुमानिव विभूषितः ॥ ॥ १३ ॥

यस्य स्पर्द्धा समुत्पन्ना पूर्वं सह सुमेरुणा ॥

ततः प्राह सहस्रांशुं गत्वा स क्रोधमूर्च्छितः ॥ १४ ॥

कस्माद्भास्कर मेरोस्त्वं प्रकरोषि प्रदक्षिणाम् ॥

कुलपर्वतसंज्ञेऽपि न करोषि कथं मयि ॥ १५ ॥

॥ भास्कर उवाच ॥ ॥

न वयं श्रद्धया तस्य गिरेः कुर्मः प्रदक्षिणाम् ॥

एष मे विहितः पन्था येनेदं विहितं जगत् ॥ १६ ॥

तस्य तुंगानि शृंगाणि व्याप्य खं संश्रितानि च ॥

तेन संजायते तस्य बलादेव प्रद क्षिणा ॥ १७ ॥

एतच्छ्रुत्वा विशेषेण संक्रुद्धो विंध्यपर्वतः ॥

प्रोवाच पश्य भानो त्वं तर्हि तुंगत्वमद्य मे ॥

रुरोधाथ नभोमार्गं येन गच्छति भास्करः ॥ १८ ॥

अथ रुद्धं समालोक्य मार्गं वासरनायकः ॥

चिन्तयामास चित्ते स्वे सांप्रतं किं करोम्यहम् ॥ १९ ॥

करोमि यद्यहं चास्य पर्वतस्य प्रदक्षिणाम् ॥

तद्भविष्यति कालस्य चलनं भुवनत्रये ॥ ६.३३.२० ॥

मासर्तुभुवनानां च तथा भावी विपर्ययः ॥

अग्निष्टोमादिकाः सर्वाः क्रिया यास्यंति संक्षयम् ॥

नष्टयज्ञोत्सवे लोके देवानां स्यान्महाव्यथा ॥ २१ ॥

एवं संचिन्त्य चित्तेन बहुधा तीक्ष्णदीधितिः ॥

जगाम मनसा भीतः सोऽगस्त्यं मुनिपुंगवम् ॥ २२ ॥

नान्योस्ति वारणे शक्तो विंधस्यास्य हि तं विना ॥

अगस्त्यं ब्राह्मणश्रेष्ठं मित्रावरुणसंभवम् ॥ २३ ॥

ततो द्विजमयं रूपं स कृत्वा तीक्ष्णदीधितिः ॥

चमत्कारपुरक्षेत्रे तस्याश्रमपदं ययौ ॥ २४ ॥

ततस्तु वैश्वदेवांते वेदोच्चारपरायणः ॥

प्रोवाच सोऽतिथिः प्राप्तस्तवाहं मुनिसत्तम ॥ २५ ॥

ततोऽगस्त्यः कृतानन्दः स्वागतं ते महामुने ॥

मनोरथ इवाध्यातो योऽग्निकार्यांत आगतः ॥ २६ ॥

तत्त्वं ब्रूहि मुनिश्रेष्ठ यद्ददामि तवेप्सितम् ॥

अदेयं नास्ति मे किञ्चित्कालेऽस्मिन्प्रार्थितस्य च ॥ २७ ॥

॥ भास्कर उवाच ॥ ॥

अहं भास्कर आयातो विप्ररूपेण सन्मुने ॥

सर्वकार्यक्षमं मत्वा त्वामेकं भुवनत्रये ॥ २८ ॥

त्वया पूर्वं सुरार्थाय प्रपीतः पयसांनिधिः ॥

वातापिश्च तथा दैत्यो भक्षितो द्विजकण्टकः ॥ २९ ॥

तस्माद्गतिर्भवास्माकं सांप्रतं मुनिसत्तम ॥

देवानामिह वर्णानां त्वमेव शरणं यतः ॥ ६.३३.३० ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा स मुनिर्विप्रा विशेषेण प्रहर्षितः ॥

अर्घ्यं दत्त्वा दिनेशाय ततः प्रोवाच सादरम् ॥ ३१ ॥

धन्योऽस्म्यनुगृहीतोस्मि यन्मे त्वं गृहमागतः ॥

तस्माद्ब्रूहि करिष्यामि तव वाक्यमखंडितम् ॥ ३२ ॥

॥ भास्कर उवाच ॥ ॥

एष विंध्याचलोऽस्माकं मार्गमावृत्य संस्थितः ॥ ।

स्पर्द्धया गिरिमुख्यस्य सुमेरोर्मुनिसतम ॥ ३३ ॥

सामाद्यैर्विविधोपायैस्तस्मादेनं निवारय ॥

कालात्ययो यथा न स्याद्गतेर्भंगस्तथा कुरु ॥ ३४ ॥। ॥

॥ अगस्त्य उवाच ॥ ॥

अहं ते वारयिष्यामि वर्धमानं कुलाचलम् ॥

स्वस्थानं गच्छ तस्मात्त्वं सुखीभव दिवाकर ॥ ३५ ॥

ततः स प्रेषितस्ते न भास्करस्तीक्ष्णदीधितिः ॥

स्वं स्थानं प्रययौ हृष्टस्तमामंत्र्य मुनीश्वरम् ॥ ३६ ॥

अगस्त्योऽपि द्रुतं गत्वा विंध्यं प्रोवाच सादरम् ॥

न्यूनतां व्रज मद्वाक्याच्छीघ्रं पर्वतसत्तम ॥३७॥

दाक्षिणात्येषु तीर्थेषु स्नाने जाताद्य मे मतिः ॥

तवायत्ता गिरे सैव तत्कुरुष्व यथोचितम् ॥ ३८ ॥

स तस्य वचनं श्रुत्वा विंध्यः पर्वतसत्तमः ॥

अभजन्निम्नतां सद्यो विनयेन समन्वितः॥३९॥

अगस्त्योऽपि समासाद्य तस्यांतं दक्षिणं द्विजाः॥

त्वयैवं संस्थितेनाथ() स्थातव्यमित्युवाच तम् ॥ ६.३३.४० ॥

यावदागमनं मह्यं नात्र कार्या विचारणा ॥

नो चेच्छापं प्रदास्यामि येन संयास्यसि क्षयम् ॥४॥।

स तथेति प्रतिज्ञाय शापाद्भीतो नगोत्तमः॥

न जगाम पुनर्वृद्धिं तस्यागमनवांछया॥४२॥

सोऽपि तेनैवमार्गेण निवृत्तिं न करोति च॥

यावदद्यापि विप्रेंद्रा दक्षिणां दिशमाश्रित तः ॥४३॥

अथ तत्रैव चानीय लोपामुद्रां मुनीश्वरः ॥

समाहूय सहस्रांशुं ततः प्रोवाच सादरम् ॥ ४४ ॥

तव वाक्यान्मया त्यक्तः स्वाश्रमस्तीक्ष्णदी धिते ॥

तवार्थे च न गंतव्यं भूयस्तत्र कथंचन ॥ ४५ ॥

तस्मान्मद्वचनाद्भानो चतुर्दश्यां मधौ सिते ॥

यन्मया स्थापितं तत्र लिंगं पूज्यं हि तत्त्व या ॥ ४६ ॥

॥ भास्कर उवाच ॥ ॥

एवं मुने करिष्यामि तव वाक्यादसंशयम् ॥

पूजयिष्यामि तल्लिंगं वर्षांते स्वयमेव हि ॥ ४७ ॥

योऽन्यो हि तद्दिने लिंगं पूजयिष्यति मानवः ॥

मम लोकं समासाद्य स भविष्यति मुक्तिभाक् ॥ ४८॥

॥ सूत उवाच ॥ ॥

एतस्मात्कारणात्तत्र भगवांस्तीक्ष्णदीधितिः ॥

चैत्रशुक्लचतुर्दश्यां सांनिध्यं कुरुते सदा ॥ ४९ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोस्मि द्विजोत्तमाः ॥

भूयो वदत वै कश्चित्संदेहश्चे ह्रृदि स्थितः ॥ ६.३३.५० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ऽगस्त्याश्रममाहात्म्यवर्णनं नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३४

https://sa.wikisource.org/s/fhs
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तं मुनिं प्रति सूतज ॥

त्वया पुरा सुरार्थाय प्रपीतः पयसांनिधिः ॥ १ ॥

तत्त्वं सूतज नो ब्रूहि विस्तरेण महामते ॥

यथा तेन पुरा पीतो मुनिना पयसांनिधिः ॥ २ ॥

॥ सूत उवाच ॥ ॥

कालेया इति विख्याताः पुरा दानवसत्तमाः ॥

संभूताः सर्वदेवानां वीर्योत्साहप्रणाशकाः ॥ ३ ॥

ततस्तैः पीडितं दृष्ट्वा विष्णुना प्रभविष्णुना ॥

त्रैलोक्यं शक्तियोगेन प्रोक्तो देवो महेश्वरः ॥४॥

एतदीशान दैतेयैस्त्रैलोक्यं परिपीडितम्॥

कालिकेयैर्महावीर्येस्तस्मात्कार्यो महाहवः॥

अद्यैव तैः समं देव समासाद्य धरातलम्॥ ५ ॥

ततो विष्णुश्च रुद्रश्च सहस्राक्षः सुरैः सह ॥

शितशस्त्रधराः सर्वे संप्राप्ता धरणीतलम् ॥ ६ ॥

अथ ते दानवाः सर्वे श्रुत्वा देवान्स- मागतान् ॥

युद्धार्थं सहसा जग्मुः संमुखाः कोपसंयुताः ॥ ७ ॥

ततोऽभवन्महायुद्धं देवानां दानवैः सह ॥

त्रैलोक्यं कंपितं येन समस्तं भय विह्वलम्॥ ८ ॥

अथ कालप्रभोनाम दानवो बलगर्वितः ॥

स शक्रं पुरतो दृष्ट्वा वज्रोच्छ्रितकरं स्थितम्॥

प्रोवाच प्रहसन्वाक्यं मेघगम्भीरनिःस्वनः ॥ ९ ॥

मुंच वज्र सहस्राक्ष पश्यामि तव पौरुषम् ॥

चिरात्प्राप्तोऽसि मे दृष्टिं दिष्ट्या त्वं त्रिदिवेश्वरः ॥ ६.३४.१० ॥

ततश्चिक्षेप संक्रुद्धस्तस्य वज्रं शतक्रतुः ॥

सोऽपि तल्लीलया धृत्वा जगृहे सव्यपाणिना ॥ ११ ॥

ततः शक्रं समुद्दिश्य गदां गुर्वी मुमोच सः ॥

सर्वायसमयीं रौद्रां यमजिह्वामिवापराम् ॥ १२ ॥

तया हतः सहस्राक्षो विसंज्ञो रुधिरप्लुतः ॥

ध्वजयष्टिं समाश्रित्य संनिविष्टो रथोपरि ॥ १३ ॥

अथ तं मातलिर्दृष्ट्वा विसंज्ञं वलघातिनम्॥

प्राङ्मुखं च रथं चक्रे संस्मरन्सारथेर्नयम् ॥ १४ ॥

ततः पराङ्मुखीभूते रथे शक्रस्य संगरे ॥

दुद्रुवुर्भयसंत्रस्ताः सर्वे देवाः समंततः ॥ १५ ॥

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥

व्रीडां विहाय विध्वस्ताः पृष्ठदेशे शितैः शरैः ॥ १६ ॥

अथ भग्नं बलं दृष्ट्वा दानवैर्मधुसूदनः ॥

आरुह्य गरुडं तूर्णं कालप्रभमुपाद्रवत् ॥ १७ ॥

ततस्ते दानवाः सर्वे परिवार्य शितैः शरैः ॥

सम्यगाच्छादयामासुर्गर्जमाना मुहुर्मुहुः॥।८ ॥

स तैराच्छादितो विष्णुः शुशुभे च समंततः ॥

सम्यक्पुलकितांगश्च रक्ताचल इवापरः ॥ १९ ॥

ततः शार्ङ्गविनिर्मुक्तैः शरैः कंकपतत्रिभिः ॥

छेदयित्वेषुजालानि दैतेयान्निजघान सः ॥ ६.३४.२० ॥

ततो दैत्यगणाः सर्वे हन्यमाना सुरारिणा ॥

त्रातारं नाभ्यगच्छंत मृगाः सिंहार्दिता इव ॥ २१ ॥

एतस्मिन्नंतरे दैत्यः कालखंज इति स्मृतः॥

स कोपवशमापन्नो वासुदेवमुपाद्रवत् ॥ २२ ॥

स हत्वा पञ्चभिर्बाणैर्वासुदेवं शिला शितैः ॥

जघान गरुडं क्रुद्धो दशभिर्नतपर्वभिः॥२३॥

ततः सुदर्शनं चक्रं तस्य दैत्यस्य माधवः ।]

प्रमुमोच वधार्थाय ज्वालामालासमावृतम् ॥२४॥

सोऽपि तच्चक्रमालोक्य वासुदेवकराच्च्युतम् ॥
आगच्छंतं प्रसार्यास्यं ग्रस्तुं तत्संमुखो ययौ ॥ २५ ॥
अग्रसच्च महादैत्यस्तिष्ठतिष्ठेति चाब्रवीत् ॥
वासुदेवं समुद्दिश्य ततश्चिक्षेप सायकान् ॥ २६ ॥
ततश्चक्री स दैत्येन ग्रस्तचक्रेण ताडितः ॥
सुपर्णेन समायुक्तो जगाम विषमां व्यथाम् ॥ २७ ॥
एतस्मिन्नंतरे क्रुद्धो भगवांस्त्रिपुरांतकः ॥
दृष्ट्वा हरिं तथाभूतं शक्रं चापि पराङ्मुखम् ॥ २८ ॥
ततः शूलप्रहारेण तं निहत्य दनोः सुतम् ॥
शरैः पिनाकनिर्मुक्तैर्जघानोच्चैस्तथा परान् ॥ २९ ॥
कालप्रभं प्रकालं च कालास्यं कालविग्रहम् ॥
जघान भगवाञ्छंभुस्तथान्यानपि नायकान् ॥६.३४.३०॥
ततः प्रधानास्ते सर्वे दानवा अपिदारुणाः ॥
पलायनपरा जाता निरुत्साहा द्विषज्जये ॥ ३१ ॥
ततः शक्रश्च विष्णुश्च लब्धसंज्ञौ धृतायुधौ ॥
श्लाघयंतौ महादेवं संस्थितौ रणमूर्धनि ॥ ३२ ॥
एतस्मिन्नंतरे भग्नान्समुद्वीक्ष्य दनोः सुतान् ॥
जघ्नुः शरशतैः शस्त्रैः सर्वे देवाः सवासवाः ॥ ३३ ॥
अथ ते हतभूयिष्ठा दानवा बलवत्तराः ॥
हन्यमानाः शितैर्बाणैस्त्रिदशैर्जितकाशिभिः ॥ ३४ ॥
अगम्यं मनसा तेषां प्रविष्टा वरुणालयम् ॥
शस्त्रैश्च क्षतसर्वांगा हतनाथाः सुदुःखिताः ॥ ३५ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽगस्त्याश्रममाहात्म्येऽगस्त्यकृतसमुद्रप्राशनवृत्तान्ते देवासुरसंग्रामवर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३५

https://sa.wikisource.org/s/fig
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं तेषु प्रभग्नेषु हतेषु च सुरोत्तमाः ॥

प्रहृष्टमनसः सर्वे स्तुत्वा देवं महेश्वरम् ॥ १ ॥

तेनैव चाथ निर्मुक्ताः प्रणम्य च मुहुर्मुहुः ॥

स्वंस्वं स्थानमथाजग्मुः शक्रविष्णुपुरःसराः ॥ २ ॥

तेऽपि दानवशार्दूला हताशाश्च सुरोत्तमैः ॥

मंत्रं प्रचक्रिरे सर्वे नाशाय त्रिदिवौकसाम् ॥ ३ ॥

तेषां मंत्रयतामेष निश्चयः समपद्यत ॥

नान्यत्र धर्मविध्वंसाद्देवानां जायते क्षयः ॥ ४ ॥

तस्मात्तपस्विनो यै च ये च यज्ञपरायणाः ॥

तथान्ये निरता धर्मे निहन्तव्या निशागमे ॥ ५ ॥

एवं ते निश्चयं कृत्वा निष्क्रम्य वरुणालयात् ॥

रात्रौ सदैव निघ्नंति जनान्धर्मपरायणान् ॥ ६ ॥

यत्र यत्र भवेद्यज्ञः सत्रं ऽप्युत्सवोऽथवा ॥

तत्र गत्वा निशायोगे प्रकुर्वंति जनक्षयम् ॥ ७ ॥

तैः प्रसूता मखा ध्वस्ता दीक्षिता विनिपातिताः ॥

ऋत्विजश्च तथान्येऽपि सामान्या द्विजसत्तमाः ॥ ८- ॥

आश्रमे मुनिमुख्यस्य शांडिल्यस्य महात्मनः ॥

सहस्रं ब्राह्मणेंद्राणां भक्षितं तैर्दुरात्मभिः. ॥ ९ ॥

शतानि च सहस्राणि निहतानि द्विजन्मनाम् ॥

विश्वामित्रस्य पञ्चैव सप्तात्रेश्चैव धीमतः ॥ ६.३५.१० ॥

एतस्मिन्नेव काले तु समस्तं धरणीतलम् ॥

नष्टयज्ञोत्सवं जातं कालेयभयपीडितम् ॥ ११ ॥

न कश्चिच्छ्रयनं रात्रौ प्रकरोति मही तले ॥

धृतायुधा जनाः सर्वे तिष्ठंति सह तापसैः ॥ १२ ॥

रात्रौ स्वपंति ये केचिद्विश्वस्ता धर्मभाजनाः ॥

तेषामस्थीनि दृश्यंते प्रातरेव हि केवलम् ॥ १३ ॥

अथ देवगणाः सर्वे यज्ञभागविनाकृताः ॥

प्रजग्मुः परमामार्ति ब्रह्मविष्णुपुरस्सराः ॥ १४ ॥

ततो गत्वा समुद्रांतं वधाय सुरविद्विषाम् ॥

न शेकुर्विषमस्थांस्तान्मनसापि प्रधर्षितुम् ॥ १५ ॥

ततः समुद्रनाशाय मंत्रं चक्रुः सुदुःखिताः ॥

तस्मिन्नष्टे भवन्त्येव वध्या दानवसत्तमाः ॥१६॥

अगस्त्येन विना नैष शोषं यास्यति सागरः ॥

तस्मात्संप्रार्थयामोत्र कृत्ये गत्वा मुनीश्वरम् ॥१७॥

चमत्कारपुरे क्षेत्रे स तिष्ठति च सन्मुनिः ॥

तस्मात्तत्रैव गच्छामो येन गच्छति सत्वरम् ॥१८॥

एवं निश्चित्य ते सर्वे त्रिदशास्तस्य चाश्रमम् ॥

संप्राप्ता मुनिमुख्यस्य मित्रावरुण जन्मनः ॥ १९ ॥

सोऽपि सर्वान्समालोक्य संप्राप्तान्सुरसत्तमान् ॥

प्रहृष्टः सम्मुखस्तूर्णं जगामातीव सन्मुनिः ॥ ६.३५.२० ॥

प्रोवाच प्रांजलिर्वाक्यं हर्ष गद्गदया गिरा ॥

ब्रह्मादींस्तान्सुरान्दृष्ट्वा विस्मयोत्फुल्ललोचनः ॥ २१ ॥

चमत्कारपुरं क्षेत्रमेतन्मेध्यमपि स्थितम् ॥

भूयो मेध्यतरं जातं युष्माकं हि समाश्रयात्॥ २२ ॥

तस्माद्वदत यत्कृत्यं मया संसिद्ध्यतेऽधुना ॥

तत्सर्वं प्रकरिष्यामि यद्यपि स्यात्सुदुष्करम्॥ २३ ॥

॥ देवा ऊचुः ॥ ॥

कालेया इति दैत्या ये हतशेषाः सुरैः कृताः ॥

ते समुद्रं समाश्रित्य निघ्नंति शुभकारिणः ॥ २४ ॥

शुभे नाशमनुप्राप्ते ध्रुवं नाशो दिवौकसाम् ॥

तस्मात्तेषां वधार्थाय त्वं शोषय महार्णवम् ॥ २५ ॥

येन ते गोचरं प्राप्ता दृष्टैर्दानवसत्तमाः ॥
बध्यंते विबुधैः सर्वे जायंते च मखा इह ॥ २६ ॥ ॥
॥ अगस्त्य उवाच ॥ ॥
अहं संवत्सरस्यांते शोषयिष्यामि सागरम् ॥
विद्याबलं समाश्रित्य योगिनीनां सुरोत्तमाः ॥ २७ ॥
तस्माद्व्रजत हर्म्याणि यूयं याति हि वत्सरम् ॥
यावद्भूयोऽपि वर्षांते कार्यमागमनं ध्रुवम् ॥ २८ ॥
ततो मया समं गत्वा शोषिते वरुणालये ॥
हंतव्या दानवा दुष्टा हन्त यैः पीड्यते जगत् ॥ २९ ॥
ततो देवगणाः सर्वे गताः स्वेस्वे निकेतने ॥
अगस्त्योऽपि समुद्योगं चक्रे विद्यासमुद्भवम् ॥ ६.३५.३० ॥
ततः सर्वाणि पीठानि यानि संति धरातले ॥
तानि तत्रानयामास मंत्रशक्त्या महामुनिः ॥ ३१ ॥
अष्टम्यां च चतुर्दश्यां तेषु संपूज्य भक्तितः ॥
योगिनीनां च वृन्दानि कन्यकानां विशेषतः ॥ ३२ ॥
विद्यां विशोषिणीनाम समाराधयत द्विजः ॥
पूजयित्वा दिशां पालान्क्षेत्रपालानपि द्विजः ॥
आकाशचारिणीं चैव देवतां श्रद्धया द्विजः ॥ ३३ ॥
ततः संवत्सरस्यांते प्रसन्ना तस्य देवता ॥
प्रोवाच वद यत्कृत्यं सिद्धाहं तव सन्मुने ॥ ॥ ३४ ॥
॥ अगस्त्य उवाच ॥ ॥
यदि देवि प्रसन्ना मे तदास्यं विश सत्वरम् ॥
येन संशोषयाम्याशु समुद्रं देवि वाग्यतः ॥ ३५ ॥
सा तथेति प्रतिज्ञाय प्रविष्टा सत्वरं मुखे ॥
संशोषणी महाविद्या तस्यर्षेर्भावितात्मनः ॥ ३६ ॥
एतस्मिन्नंतरे प्राप्ताः सर्वे देवाः सवासवाः ॥
धृतायुधकरा हृष्टाः संनद्धा युद्धहेतवे ॥ ३७ ॥
ततः संप्रस्थितो विप्रो देवैः सर्वैः समाहितः ॥

वारिराशिं समुद्दिश्य संशुष्कवदनस्तदा ॥ ३८ ॥

अथ गत्वा समुद्रांतं स्तूयमानो दिवालयैः ॥

पिपासाकुलितोऽतीव सर्वान्देवानुवाच ह ॥ ३९ ॥

एषोऽहं सागरं सद्यः शोषयिष्यामि सांप्रतम् ॥

यूयं भवत सोद्योगा वधाय सुरविद्विषाम् ॥ ६.३५.४० ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा मुनिः सोऽथ मत्स्यकच्छपसंकुलम्॥

हेलया प्रपपौ कृत्स्नं ग्राहैः कीर्णं महार्णवम् ॥ ४१ ॥

ततः स्थलोपमे जाते ते दैत्याः सुरसत्तमैः ॥

वध्यन्ते निशितैर्बाणैः समन्ताद्विजिगीषुभिः ॥ ४२ ॥

अथ कृत्वा महद्युद्धं यथा शक्त्यातिदारुणम् ॥

हतभूयिष्ठशेषा ये भित्त्वा भूमिं गता अधः॥४३॥

ततः प्रोचुः सुराः सर्वे स्तुत्वा तं मुनिसत्तमम् ॥

परित्यज जलं भूयः पूरणार्थं महोदधेः ॥ ४४ ॥

नैषा वसुमती विप्र समुद्रेण विनाकृता ॥

राजते वस्तुसंत्यक्ता यथा नारी विभूषिता ॥ ४५ ॥

॥ अगस्त्य उवाच ॥ ॥।

या मयाऽऽराधिता विद्या वर्षंयावत्प्रशोषणी ॥

तया पीतमिदं तोयं परिणामगतं तथा ॥ ४६ ॥

एष यास्यति वै पूर्तिं भूयोऽपि वरुणालयः ॥

खातश्चागाधतां प्राप्तो गंगातोयैः सुनिर्मलैः ॥ ४७ ॥

सगरोनाम भूपालो भविष्यति महीतले ॥

तत्पुत्राः षष्टिसाहस्राः खनिष्यंति न संशयः ॥ ४८ ॥

तस्यैवान्वयवान्राजा भविष्यति भगीरथः ॥

स ज्ञातिकारणाद्गंगां ब्रह्मांडादानयिष्यति ॥ ४९ ॥

प्रवाहेण ततस्तस्याः समंतादंभसांनिधिः ॥

भविष्यति सुसंपूर्णः सत्यमेतन्मयोदितम् ॥ ६.३५.५० ॥

॥ देवा ऊचुः ॥ ॥

देवकृत्यं मुनिश्रेष्ठ भवता ह्युपपादितम् ॥

तस्मात्प्रार्थय चित्तस्थं वरं सर्वं मुनीश्वर ॥ ५१ ॥

॥ अगस्त्य उवाच ॥ ॥

चमत्कारपुरे क्षेत्रे मया पीठान्यशेषतः ॥

आनीतानि प्रभावेन मंत्राणां सुरसत्तमाः ॥ ५२ ॥

तस्मात्तेषां सदा वासस्तत्रैवास्तु प्रभावतः ॥

सर्वासां योगिनीनां च मातृणां च विशेषतः ॥ ५३ ॥

अष्टम्यां च चतुर्दश्यां तानि यः श्रद्धयाऽन्वितः ॥

पूजयिष्यति तस्य स्यात्समस्तं मनसेप्सितम् ॥ ५४ ॥

॥ देवा ऊचुः ॥ ॥

यस्माच्चित्राणि पीठानि त्वयानीतानि तत्र हि ॥

तस्माच्चित्रेश्वरं नाम पीठमेकं भविष्यति ॥ ५५ ॥

यो यं काममभिध्याय तत्र पूजां करिष्यति ॥

योगिनीनां च विद्यानां मातृणां च विशेषतः ॥ ५६ ॥

तंतं कामं नरः शीघ्रं संप्राप्स्यति महामुने ॥

अस्माकं वरदानेन यद्यपि स्यात्सुपापकृत्॥ ५७ ॥

एवमुक्त्वा सुराः सर्वे तमामन्त्र्य मुनीश्वरम् ॥

गतास्त्रिविष्टपं हृष्टाः सोऽप्यगस्त्यः स्वमाश्रमम् ॥ ५८ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं यथा स पयसांनिधिः ॥

अगस्त्येन पुरा पीतो देवकार्यप्रसिद्धये ॥ ५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽगस्त्यकृतसमुद्र प्राशनवृत्तांतेऽगस्त्याहूतपीठसमूहस्य देवैश्चित्रेश्वरपीठनामपूर्वकवरप्रदानवर्णनंनाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ ॥९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३६

https://sa.wikisource.org/s/fhr
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

चित्रेश्वरमिदं पीठमगस्त्यमुनिनिर्मितम् ॥

यत्प्रमाणं यत्प्रभावं तदस्माकं प्रकीर्तय ॥ १ ॥

॥ सूत उवाच ॥ ॥

तस्य पीठस्य माहात्म्यं वक्तुं नो शक्यते द्विजाः ॥

सहस्रेणापि वर्षाणां मुखानामयुतैरपि ॥ २ ॥

तत्र सिद्धिमनुप्राप्ताः शतशोऽथ सहस्रशः ॥

अनुध्यानसमायुक्ता योगिनः शंसितव्रताः ॥ ३ ॥

अन्यपीठेषु या सिद्धिर्वर्षानुष्ठानतो भवेत् ॥

दिनेनैकेन तां सिद्धिं लभंते योगिनो ध्रुवम् ॥ ४ ॥

यस्तत्राथ र्वणान्मंत्राञ्जपेच्छ्रद्धासमन्वितः ॥

तेषामर्थोद्भवं कृत्स्नं फलं प्राप्नोति स ध्रुवम् ॥ ५ ॥

पुत्रकामो नरस्तत्र पुंलिंगान्यो जपेन्नरः ॥

स लभेतेप्सितान्पुत्रान्यद्यपि स्याज्जरान्वितः ॥ ६ ॥

गर्भोपनिषदं तत्र पुत्रकामो जपेन्नरः ॥

अपि वन्ध्याप्रसंगेन स्यात्स पुत्रसमन्वितः ॥ ७ ॥

शत्रुलोकविनाशाय यो जपेच्छतरुद्रियम् ॥

तस्मिन्पीठेऽरयस्तस्य सद्यो गच्छंति संक्षयम् ०। ८ ॥

भूतप्रेतपिशाचादिरक्षार्थं तत्र मानवः ॥

यो जपेद्वामदेव्यं च स स्याद्धि निरुपद्रवः ॥ ९ ॥

कोऽदादिति नरस्तत्र कन्यार्थं यो जपेदृचम् ॥

यां कन्यां ध्यायमानस्तु स तां प्राप्नोत्यसंशयम् ॥ ६.३६.१० ॥

यो भूपालप्रसादार्थमिमं देवा निशं जपेत् ॥

निरर्गलः प्रसादः स्यात्तस्य पार्थिवसंभवः ॥ ११ ॥

स्वस्त्रीस्नेहकृतेयस्तु तं पत्नीभिरिति द्विजाः ॥।

जपेद्भार्या भवेत्साध्वी तस्य सा स्नेहवत्सला ॥ १२ ॥

यो लोकानुग्रहार्थाय जपेददितिरित्यपि ॥

तस्य लोकानुरागः स्यात्सलाभश्च विशेषतः ॥ ॥ १३ ॥

वित्तार्थी यो जपेत्तत्र श्रीसूक्तं मनुजो द्विजाः ॥

सर्वतस्तस्य वित्तानि समागच्छंत्यनेकशः ॥ १४ ।

भूमीति यो जपेत्साम भूम्यर्थं तत्र मानवः ॥
स भवेद्भूपतिर्नूनं नीचजातिरपि ध्रुवम् ॥।५॥
जपेद्रथंतरं साम यानार्थं तत्र यो नरः ॥
स प्राप्नोति हि यानानि शीघ्रगानि शुभानि च ॥ १६ ॥
गजार्थी यो जपेत्तत्र गणानां द्विजसत्तमाः ॥
स प्राप्नोति गजान्मर्त्यो मदप्लावितभूतलान् ॥ १७ ॥
न तद्रक्षेति यो मन्त्रं जपेद्र क्षाकृते नरः ॥
तस्य स्यात्सर्वतो रक्षा समेषु विषमेषु च ॥ १८ ॥
सप्तर्षय इति श्रेष्ठां यो जपेत्तु समाहितः ॥
ऋचं रोगविनाशाय स रोगैः परि मुच्यते ॥ १९ ॥
यदुभी यो जपेत्तत्र ग्रहपीडार्दितो जनः ॥
सानुकूला ग्रहास्तस्य प्रभवंति न संशयः ॥ ६.३६.२० ॥
भूतपीडार्दितो यश्च बृहत्साम जपेन्नरः ॥
पितृवज्जायते तस्य स भूतोऽप्यंतकोऽपि चेत् ॥ २१ ॥
यात्रासिद्धिकृते यश्च जपेत्सूक्तं च शाकुनम् ॥
तस्य संसिध्यते यात्रा यद्यपि स्यादकिंचनः ॥ २२ ॥
सर्पनाशाय यस्तत्र सार्पसूक्तं जपेन्नरः ॥
न तस्य मंदिरे सर्पाः प्रविशंति कथंचन ॥ २३ ॥
विषनाशाय यस्तत्र जपेच्छ्र द्धासमन्वितः ॥
उत्तिष्ठेति विषं सद्यस्तस्य नाशं प्रयास्यति ॥ २४ ॥
स्थावरजगमं वापि कृत्रिमं यदि वा विषम् ॥
तस्य नाम्ना विनिर्याति तमः सूर्योदये यथा ॥ २५ ॥
व्याघ्रसाम जपेद्यस्तु तत्र श्रद्धासमन्वितः ॥
तस्य व्याघ्रादयो व्याला जायंते सौम्यचेतसः ॥ २६ ॥
कृषिकर्मप्रसि द्ध्यर्थं यो जपेल्लांगलानि च ॥
वृष्टिहीनेऽपि लोकेऽस्मिन्कृषिस्तस्य प्रसिध्यति ॥ २७ ॥
ईतिनाशाय तत्रैव जपेद्देवव्रतं नरः ॥
ततः संकीर्त्तना देव ईतयो यांति संक्षयम् ॥ २८ ॥
अनावृष्टिहते लोके पंचेंद्रं तत्र यो जपेत् ॥
तस्य हस्तकृते होमे तन्मंत्रैः स्याज्जलागमः ॥ २९ ॥
दंष्ट्राभ्या मिति यस्तत्र नरश्चौरार्दितः पठेत् ॥
नोपद्रवो भवेत्तस्य कदाचिच्चौरसंभवः ॥ ६.३६.३० ॥
विवादार्थं जपेद्यस्तु संसृष्टमिति तत्र च ॥

विवादे विजय स्तस्य पापस्यापि प्रजायते ॥ ३१ ॥
यो रिपूच्चाटनार्थाय नरो रुद्रशिरो जपेत् ॥
तस्य ते रिपवो यांति देशं त्यक्त्वा कुबुद्धितः ॥ ३२ ॥
मोहनाय रिपूणां च यो जपेद्विष्णुसंहिताम् ॥
तस्य मोहाभिभूतास्ते जायंते रिपवो ध्रुवम् ॥ ३३ ॥
वशीकरणहेतोर्यः कूष्मांडीः प्रजपेन्नरः ॥
शत्रवोऽपि वशे तस्य किं पुनः प्रमदादयः ॥ ३४ ॥
यः स्तंभाय रिपूणां वै प्राजापत्यं च वारुणम् ॥
मंत्रं जपेद्द्विजश्रेष्ठाः सम्यक्छ्रद्धापरायणः ॥
मंत्रसंस्तंभितास्तस्य जायंते सर्वशत्रवः ॥ ३५ ॥
जपेत्काली करालीति यः शोषाय नरो द्विजाः ॥
स शोषयति तत्कृत्स्नं यच्चित्ते धारयेन्नरः ॥ ३६ ॥
एष मंत्रस्तदा जप्तो ह्यगस्त्येन महात्मना॥
यत्प्रभावान्नदीनाथस्तेन संशोषितो ध्रुवम् ॥ ३७ ॥
एतत्प्रभावं यत्पीठं मंत्राणां सिद्धिकारकम्॥
ऐहिकानां फलानां च तन्मया वः प्रकीर्तितम् ॥ ३८ ॥
यो वांछति पुनः स्वर्गं स तत्र द्विजसत्तमाः ॥
स्नानं करोतु दानं च श्राद्धं चापि विशेषतः ॥ ३९ ॥
अथ वांछति यो मोक्षं विरक्तो भवसागरात् ॥
निष्कामस्तत्र संतुष्टस्तपस्तप्येत्सुबुद्धिमान् ॥ ६.३६.४० ॥
॥ ऋषय ऊचुः ॥ ॥
मंत्रजाप्यस्य माहात्म्यं यत्त्वया नः प्रकीर्तितम्॥
तत्कथं सिद्धिमायाति मंत्रजाप्यं हि सूतज ॥ ४१ ॥
॥ सूत उवाच ॥ ॥
अत्र तत्कथयिष्यामि यन्मया पितृतः श्रुतम् ॥
वदतो ब्राह्मणेंद्रस्य पुरा दुर्वाससो मुनेः ॥ ४२ ॥
तेन पूर्वं पिताऽस्माकं पृष्टो दुर्वाससा द्विजाः ॥
मंत्रवादकृते यच्च शृणुध्वं सुसमाहिताः ॥ ४३ ॥ ॥
॥ दुर्वासा उवाच ॥ ॥
साधयिष्याम्यहं मन्त्रमभीष्टं कमपि व्रती ॥
तस्य सिद्धिकृते ब्रूहि विधानं शास्त्रसंभवम् ॥ ४४ ॥
॥ लोमहर्षण उवाच ॥ ॥
मंत्राणां साधनं कष्टं सर्वेषामपि सन्मुने ॥

प्रत्यवायसमोपेतं बहुच्छिद्रसमाकुलम्॥४५॥
तस्मान्मंत्रकृते सिद्धिं यदि त्वं वांछसि द्विज॥
चमत्कारपुरे क्षेत्रे तत्र त्वं गंतुमर्हसि ॥ ४६ ॥
तत्र चित्रेश्वरीपीठमगस्त्येन विनिर्मितम् ॥
सद्यः सिद्धिकरं प्रोक्तं मन्त्राणां हृदि वर्तिनाम् ॥४७ ॥
न तत्र जायते छिद्रं प्रत्यवायो न च द्विज ॥
नासिद्धिर्वरदानेन सर्वेषां त्रिदिवौकसाम् ॥ ४८ ॥
चातुर्युग्यं हि तत्पीठं स्थितानां सिद्धिमाह रेत् ॥
युगानुरूपतः सद्यस्ततो वक्ष्याम्यहं द्विज ॥ ४९ ॥
यो यं साधयितुं मन्त्रमिच्छति द्विजसत्तम ॥
स तस्य पूर्वमेवाथ लक्षमेकं जपेन्नरः ॥ ॥ ६.३६.५० ॥
ततो भवति संसिद्धो मंत्रार्हः स नरः शुचिः ॥
जपेद्ब्राह्मणशार्दूल ततो लक्षचतुष्टयम् ॥
दशांशेन तु होमः स्यात्सुसमिद्धे हुताशने ॥ ॥ ५१ ॥
ततस्तु जायते सिद्धिर्नूनं तन्मंत्रसंभवा ॥
तत्र सौम्येषु कृत्येषु होमः सिद्धार्थकैः सितैः ॥ ५२ ॥
जातीपुष्पैश्च विप्रेन्द्र स्मृतो ब्राह्मण भोजनैः ॥
तथा रौद्रेषु कृत्येषु रक्तपुष्पैः सगुग्गुलैः ०॥
तर्पणैः कन्यकानां च होमः स्यात्स फलप्रदः ॥ ५३ ॥
एतत्कृतयुगे प्रोक्तं मंत्रसाधनमुत्त मम् ॥
सर्वेषां साधकानां च मया प्रोक्तं द्विजोत्तम ॥ ५४ ॥
एतत्त्रेतायुगे प्रोक्तं पादोनं मन्त्रसाधनम् ॥
युग्मार्धं द्वापरे कार्यं चतुर्थांशं कलौ युगे ॥ ५५ ॥
एवं तत्र समासाद्य सिद्धिं मंत्रसमुद्भवाम् ॥
तत्र पीठे ततः कृत्यं साधयेत्स्वेच्छया नरः ॥ ५६ ॥
शापानुग्रहसामर्थ्यसंयुतस्तेज साऽन्वितः ॥
अजेयः सर्वभूतानां साधूनां संमतस्तथा ॥ ५७ ॥
॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा स मुनिस्तस्य पितुर्मम वचोऽखिलम् ॥
ततश्चित्रेश्वरं पीठं समायातोऽथ सन्मुनिः ॥ ५८ ॥
तत्र संसाधयामास सर्वान्मंत्रान्यथाक्रमम् ॥
विधिना शास्त्रदृष्टेन श्रद्धया परया युतः॥ ५९ ॥
इति संसिद्धमंत्रः स चमत्कारपुरं गतः ॥

विप्राणां प्रार्थनार्थाय भूमिखंडकृते द्विजाः ॥ ६.३६.६० ॥

इति श्रीस्कांदे महपुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये चित्रेश्वरीपीठमाहात्म्यवर्णनंनाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३७



॥ सूत उवाच ॥
अथापश्यत्स विप्राणां वृन्दं वृन्दारकोपमम्॥
संनिविष्टं धरापृष्ठे लीलाभाजि द्विजोत्तमाः॥॥।
एके वेदविदस्तत्र वेदव्याख्यानतत्पराः॥
परस्परं सुसंक्रुद्धा विवदंति जिगीषवः ॥ २ ॥
यज्ञविद्याविदोऽन्येऽपि यज्ञाख्यानपरायणाः ॥
तत्र विप्राः प्रदृश्यंते शतशो ब्रह्मवादिनः ॥ ३ ॥
अन्ये ब्राह्मणशार्दूला वेदांगेषु विचक्षणाः ॥
प्रवदंति च संदेहान्वृन्दानामग्रतः स्थिताः ॥ ४ ॥
वेदाभ्यासपराश्चान्ये तारनादेन सर्वशः ॥
नादयंतो दिशां चक्रं तत्र सम्यग्द्विजोत्तमाः ॥ ५ ॥
अन्ये कौतूहलाविष्टाः संचरान्विषमान्मिथः ॥
पप्रच्छुर्जहसुश्चान्ये ज्ञात्वा मार्गप्रवर्तिनम् ॥ ६ ॥
स्मृतिवादपराश्चान्ये तथान्ये श्रुतिपाठकाः ॥
संदेहान्स्मृतिजानन्ये पृच्छंति च परस्परम् ॥ ७ ॥
कीर्तयंति तथा चान्ये पुराणं ब्राह्मणोत्तमाः ॥
वृद्धानां पुरतस्तत्र सभामध्ये व्यवस्थिताः ॥ ८ ॥
अथ तान्स मुनिर्दृष्ट्वा ब्राह्मणान्संशितव्रतान् ॥
अभिवाद्य ततः प्राह सादरं विनयान्वितः ॥ ९ ॥
मम बुद्धिः समुत्पन्ना शम्भोरायतनं प्रति ॥
कर्तुं ब्राह्मणशार्दूलास्तस्मात्स्थानं प्रदर्श्यताम् ॥ ६.३७.१० ॥
तवाहं देवदेवस्य शम्भोः प्रासादमुत्तमम् ॥
विधायाराधयिष्यामि तमेव वृषभध्वजम् ॥ ११ ॥
स एवं जल्पमानोऽपि मुहुर्मुहुरतंद्रितः ॥
न तेषामुत्तरं लेभे शुभं वा यदि वाशुभम् ॥ १२ ॥
ततः कोपपरीतात्मा समुनिस्तान्द्विजोत्तमान् ॥
शशाप तारशब्देन यथा शृण्वंति कृत्स्नशः ॥ १३ ॥
॥ दुर्वासा उवाच ॥ ॥

विद्यामदो धनमदस्तृतीयोऽभिजनोद्भवः ॥
एते मदावलिप्तानामेत एव सतां दमाः ॥ १४ ॥
तत्र येऽपि हि युष्माकं मदा एव व्यवस्थिताः ॥
यतस्ततोऽन्वयेऽप्येवं भविष्यति मदान्विताः ॥ १५ ॥
सदा सौहृदनिर्मुक्ताः पितरोऽपि सुतैः सह ॥
भविष्यंति पुरे ह्यस्मिन्किं पुनर्बांधवादयः ॥ १६ ॥
एवमुक्त्वा स विप्रेन्द्रो निवृत्तस्तदनन्तरम् ॥
अपमानं परं प्राप्य ब्राह्मणानां द्विजोत्तमाः ॥ १७ ॥
अथ तन्मध्यगो विप्र आसीद्वृद्धतमः सुधीः ॥
सुशील इति विख्यातो वेदवेदांगपारगः ॥ १८ ॥
स दृष्ट्वा तं मुनिं क्रुद्धं गच्छंतमपमानितम् ॥
सत्वरं प्रययौ पृष्ठे तिष्ठ तिष्ठेति च ब्रुवन्॥ १९ ॥
अथासाद्य गतं दूरं प्रणिपत्य मुनिं च सः ॥
प्रोवाच क्षम्यतां विप्र विप्राणां वचनान्मम ॥ ६.३७.२० ॥
एतैः स्वाध्यायसंपन्नैर्न श्रुतं वचनं तव ॥
नोत्तरं तेन संदत्तं सत्यमेतद्ब्रवीम्यहम् ॥ २१ ॥
तस्माद्भूमिर्मया दत्ता शंभुहर्म्यकृते तव ॥
अस्मिन्स्थाने द्विजश्रेष्ठ प्रासादं कर्तुमर्हसि ॥ २२ ॥
तस्य तद्वचनं श्रुत्वा दुर्वासा हर्षसंयुतः ॥
क्षितिदानोद्भवां चक्रे स्वस्ति ब्राह्मणसत्तमाः ॥
प्रासादं निर्ममे पश्चात्तस्य वाक्ये व्यवस्थितः ॥ २३ ॥
अथ ते ब्राह्मणा ज्ञात्वा सुशीलेन वसुन्धरा ॥
देवतायतनार्थाय दत्ता तस्मै तपस्विने ॥ २४ ॥
सर्वे कोपसमायुक्ताः सुशीलं प्रति ते द्विजाः ॥ २५ ॥
ततः प्रोचुः समासाद्य येन शप्ता दुरात्मना ॥
वयं तस्मै त्वया दत्ता प्रासादार्थं वसुन्धरा ॥ २६ ॥
तस्मात्त्वमपि चास्माकं बाह्य एव भविष्यसि ॥
सुशीलोऽपि हि दुःशीलो नाम्ना संकीर्त्यसे बुधैः ॥ २७ ॥
एषोऽपि तापसो दुष्टो यः करोति शिवालयम् ॥।
नैव तस्य भवेत्सिद्धिश्चापि वर्षशतैरपि ॥ २८ ॥
तथा कीर्तिकृतां लोके कीर्तनं क्रियते नरैः ॥
ततः संपश्यतां चास्य कीर्तिर्नास्य तु दुर्मतेः ॥ ॥ २९ ॥

एष दुःशीलसंज्ञो वै तव नाम्ना भविष्यति ॥
प्रासादो नाममात्रेण न संपूर्णः कदाचन ॥ ६.३७.३० ॥
यस्मात्सौहृदनिर्मुक्ताः कृतास्तेन वयं द्विजाः ॥
मदैस्त्रिभिः समायुक्ताः सर्वान्वयसमन्विताः ॥ ३१ ॥
तस्मादेषोऽपि पापात्मा भविष्यति स कोपभाक् ॥
तप्तं तप्तं तपो येन संप्रयास्यति संक्षयम्॥ ३२ ॥
एवमुक्त्वाथ ते विप्राः कोपसंरक्तलोचनाः ॥
दुःशीलं संपरित्यज्य प्रविष्टाः स्वपुरे ततः ॥ ३३ ॥
दुःशीलोऽपि बहिश्चक्रे गृहं तस्य पुरस्य च ॥
देवशर्मा यथापूर्वं संत्यक्तः पुरवासिभिः ॥ ३४ ॥
तस्यान्वयेऽपि ये जातास्ते बाह्याः संप्रकीर्तिताः ॥
बाह्याः क्रियासु सर्वासु सर्वेषां पुरवासिनाम् ॥ ३५ ॥
॥ सूत उवाच ॥ ॥
एवं तेषु द्विजेंद्रेषु शापं दत्त्वा गतेषु च ॥
दुर्वासाः प्राह दुःशीलं कोपसंरक्तलो चनः ॥ ३६ ॥
मम सिद्धिं गता मंत्राः समर्थाः शत्रुसंक्षये ॥
आथर्वणास्तथा चान्ये वेदत्रयसमुद्भवाः ॥ ३७ ॥
तस्मादेतत्पुरं कृत्स्नं पशुपक्षि समन्वितम् ॥
नाशमद्य नयिष्यामि यथा शत्रोर्हि दुष्टकः ॥ ३८ ॥
॥ दुःशील उवाच ॥ ॥
नैतद्युक्तं नरश्रेष्ठ तव कर्तुं कथंचन ॥।
ब्राह्मणानां कृते कर्म ब्राह्मणस्य विशेषतः ॥ ३९ ॥
निघ्नंतो वा शपंतो वा वदंतो वापि निष्ठुरम् ॥
पूजनीयाः सदा विप्रा दिव्याँल्लोकानभीप्सुभिः ॥ ६.३७.४० ॥
ब्राह्मणैर्निर्जितैर्मेने य आत्मानं जयान्वितम् ॥
तामिस्रादिषु घोरेषु नरकेषु स पच्यते ॥ ४१ ॥
आत्मनश्च पराभूतिं तस्माद्विप्रात्सहेत वै ॥
य इच्छेद्वसतिं स्वर्गे शाश्वतीं द्विजसत्तम ॥ ४२ ॥
एतेषां ब्राह्मणेंद्राणां क्षेत्रे सिद्धिं समागताः ॥
मंत्रास्ते तत्कथं नाशं त्वमेतेषां करिष्यसि ॥ ४३ ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नवते तथा ॥
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ॥ ४४ ॥

तस्मात्कोपो न कर्तव्यः क्षेत्रे चात्र व्यवस्थितैः ॥
क्षमां कुरु मुनिश्रेष्ठ कृपां कृत्वा ममोपरि ॥४५ ॥
॥ सूत उवाच ॥ ॥
स तथेति प्रतिज्ञाय तत्र कृत्वावसत्तपः ॥
प्राप्तश्च परमां सिद्धिं दुर्लभां त्रिदशैरपि ॥ ४६ ॥
दुःशीलाख्यः क्षितौ सोऽपि प्रासादः ख्याति मागतः ॥
यस्य संदर्शनादेव नरः पापात्प्रमुच्यते ॥ ४७ ॥
तस्य मध्यगतं लिंगं शुक्लाष्टम्यां सदा नरः ॥
यः पश्यति क्षणं ध्यात्वा नरकं स न पश्यति ॥ ४८ ॥
इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये दुःशीलाख्यप्रासादोत्पत्ति वर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३८



॥ सूत उवाच ॥ ॥

तत्रैव स्थापितं लिंगं धुन्धुमारेण भूभुजा ॥

सर्वरत्नमयं कृत्वा प्रासादं सुमनोहरम् ॥ १ ॥

तत्र कृत्वाऽऽश्रमं श्रेष्ठं तपस्तेपे सुदारुणम् ॥

यत्प्रभावादयं देवस्तस्मिँल्लिङ्गे व्यवस्थितः ॥ २ ॥

तस्य संनिहिता वापी कृता तेन महात्मना ॥

सुनिर्मलजलापूर्णा सर्वतीर्थोपमा शुभा ॥ ३ ॥

धुन्धुमारेश्वरं पश्येत्तत्र स्नात्वा नरोत्तमः ॥

न स पश्यति दुर्गाणि नरकाणि यमालये ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

धुंधुमारो महीपालः कस्मिन्वंशे बभूव सः ॥

कस्मिन्काले तपस्तप्तं तेनात्र सुमहात्मना ॥ ५ ॥

॥ सूत उवाच ॥ ॥

सूर्यवंशसमुद्भूतो बृहदश्वसुतो बली ॥

ख्यातः कुवलयाश्वेति धंधुमारस्तथैव सः ॥ ६ ॥

तेन धुन्धुर्महादैत्यो निहतो मरुजांगले ॥

धुन्धुमारः स्मृतस्तेन विख्यातो भुवनत्रये ॥ ७ ॥

चमत्कारपुरं क्षेत्रं स गत्वा पावनं महत् ॥

तपस्तेपे वयोंऽते च ध्यायमानो महेश्वरम् ॥ ८ ॥

संस्थाप्य सुमहल्लिंगं प्रासादे रत्नमंडिते ॥

बलिपूजोपहाराद्यैः पुष्पधूपानुलेपनैः ॥ ९ ॥

ततस्तस्य महादेवः स्वयमेव महेश्वरः ॥

प्रत्यक्षोऽभूद्वृषारूढो गौर्या सह तथा गणैः ॥ ६.३८.१० ॥

उवाच वरदोऽस्मीति प्रार्थयस्व यथेप्सितम् ॥

सर्वं तेऽहं प्रदास्यामि यद्यपि स्यात्सुदुर्लभम् ॥ ११ ॥ ॥

धुन्धुमार उवाच ॥ ॥

यदि देयो वरोऽस्माकं त्वया सर्वसुरेश्वर ॥

संनिधानं प्रकर्तव्यं लिंगेऽस्मिन्वृषभध्वज ॥ १२ ॥

॥ श्रीभगवानुवाच ॥ ॥

चैत्रे शुक्लचतुर्दश्यां सांनिध्यं नृपसत्तम ॥

अहं सदा करिष्यामि गौर्या सार्धं न संशयः ॥ १३ ॥

तत्र वाप्यां नरः स्नात्वा यो मां संपूजयिष्यति ॥

लिंगेऽस्मिन्संस्थितं भूप मम लोकं स यास्यति ॥ १४ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा स भगवांस्ततश्चादर्शनं गतः ॥

सोऽपि राजा प्रहृष्टा त्मा स्थितस्तत्रैव मुक्तिभाक् ॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धुन्धुमारेश्वरमाहात्म्यवर्णनंनामाष्टात्रिंशो अध्यायः ॥ ३८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०३९

https://sa.wikisource.org/s/fhp
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तस्यैवोत्तरदिग्भागे धुन्धुमारेश्वरस्य च ॥

ययातिना नरेंद्रेण स्थापितं लिंगमुत्तमम् ॥ १ ॥

देवयान्या तथान्यच्च तथा शर्मिष्ठया द्विजाः ॥

भार्यया भूपतेस्तस्य सर्वकामफलप्रदम् ॥ २ ॥

स यदा सर्वभोगानां तृप्तिं प्राप्तो द्विजोत्तमाः ॥

तदा पुत्रस्य राज्यं स्वं वपुश्चैव न्यवेदयत् ॥३॥

जरामादाय तद्गात्राद्भार्याभ्यां सहितस्तदा ॥

पप्रच्छ विनयोपेतो मार्कंडं मुनिसत्तमम् ॥ ४ ॥

भगवन्सर्वतीर्थानां क्षेत्राणां च वदस्व मे ॥

यत्प्रधानं पवित्रं यत्तदस्माकं प्रकीर्तय ॥ ५ ॥ ॥

॥ श्रीमार्कंडेय उवाच ॥ ॥

क्षेत्राणामिह सर्वेषां तीर्थैः सर्वैरलंकृतम् ॥

चमत्कारपुरं क्षेत्रं सांप्रतं प्रतिभाति नः ॥ ६ ॥

यत्र विष्णुपदी गंगा जंतूनां पापनाशिनी ॥

स्वयं स्थिता नृपश्रेष्ठ तथा देवा हरादयः ॥ ७ ॥

तथान्यानि च तीर्थानि यानि संति धरातले ॥

तेषां यत्र च सांनिध्यं सर्वदा नृपसत्तम ॥ ८ ॥

शिला यत्र द्विपञ्चाशद्धस्तानां परिसंख्यया ॥

पितामहेन निर्मुक्ता प्रमोदाय द्विजन्मनाम् ॥ ९ ॥

यदन्यत्र शुभं कर्म वर्षेणैकेन सिध्यति ॥

तत्तत्र दिवसेनापि सिद्धिं याति क्षितीश्वर ॥ ६.३९.१० ॥

तस्मात्तत्र द्रुतं गत्वा तपः कुरु महीपते ॥

येन प्राप्स्यसि चित्तस्थाँल्लोकान्भार्यासमन्वितः ॥ ११ ॥

तस्य तद्वचनं श्रुत्वा स राजा नहुषात्मजः ॥
चमत्कारपुरे क्षेत्रे भार्याभ्यां सहितो ययौ ॥ १२ ॥
ततः संस्थाप्य तल्लिंगं देवदेवस्य शूलिनः ॥
सम्यगाराधयामास श्रद्धया परया युतः ॥ १३ ॥
ततस्तस्य प्रभावेन भार्याभ्यां सहितो नृपः ॥
विमानवरमारूढो जगाम त्रिदिवालयम् ॥ १४ ॥
किन्नरैर्गीयमानश्च स्तूयमानश्च चारणैः ॥
स्पर्द्धमानः समं देवैर्द्वादशार्कसमप्रभः ॥ १५ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ययातीश्वरमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः॥ ॥ ३९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४०



॥ ऋषय ऊचुः ॥ ॥

यदेषा भवता प्रोक्ता ब्राह्मी तत्र महाशिला ॥

मोक्षदा सर्वजंतूनां तथा पातकनाशिनी ॥ १ ॥

सा कथं स्थापिता तत्र किंप्रभावा च सूतज ॥

एतन्नो ब्रूहि निःशेषं न हि तृप्यामहे वयम् ॥ २ ॥

॥ सूत उवाच ॥ ॥

ब्रह्मलोकनिविष्टस्य ब्रह्मणोऽ व्यक्तजन्मनः ॥

पुराऽभून्महती चिन्ता तीर्थयात्रासमुद्भवा ॥ ३ ॥

सर्वेषामेव देवानां संति तीर्थानि भूतले ॥

मुक्त्वा मां तन्मया कार्यं तीर्थमेकं धरातले ॥ ४ ॥

यत्र त्रिकालमासाद्य कर्म संध्यासमुद्भवम् ॥

मर्त्यलोकं समासाद्य करोमि तदनंतरम् ॥ ५ ॥

तथान्यदपि यत्किञ्चित्कर्म धर्म्यं हितावहम् ॥

तत्करोमि यथान्येऽपि चक्रुर्देवाः शिवादयः ॥ ६ ॥

न स्वर्गेऽस्ति हि कृत्यानामधिकारोऽत्र कश्चन ॥

शुभानां कर्मणामेव केवलं भुज्यते फलम् ॥ ७ ॥

तस्माद्यत्र धरापृष्ठे शिलेयं निपतिष्यति ॥

त्रिसंध्यं तत्र गन्तव्यमनुष्ठानार्थमेव हि ॥ ८ ॥

एवमुक्त्वा सुविस्तीर्णां शिलां तामा सनोद्भवाम् ॥

प्रचिक्षेप धरापृष्ठं समुद्दिश्य पितामहः ॥ ९ ॥

अथ सा पतिता भूमौ सर्वरत्नमयी शिला ॥

चमत्कारपुरे क्षेत्रे सर्वक्षेत्रमहोदये ॥ ६.४०.१० ॥।

तत आगत्य लोकेशः स्वयमेव धरातलम् ॥

तत्क्षेत्रं वीक्षयामास व्याप्तं तीर्थैः समन्ततः ॥ ११ ॥

ततः पुण्यतमे देशे दृष्ट्वा तां समुपस्थिताम् ॥
शिलामानंदमापन्नः प्रोवाच तदनन्तरम् ॥ १२ ॥
अहो धन्यतमो मत्तो नान्योऽस्ति भुवनत्रये ॥
सर्वतीर्थमये क्षेत्रे यतो जातात्र संस्थितिः ॥।३॥
सलिलेन विना यस्मान्न क्रिया संप्रवर्तते ॥
तस्मादत्र मया कार्यः शुचितोयो महाह्रदः ॥ १४ ॥
ततः संचिंतयामास स्वसुतां च सरस्वतीम् ॥
जन संस्पर्शभीत्या च पातालतलवाहिनीम् ॥ १५ ॥
अथ भूमितलं भित्त्वा प्रादुर्भूता महानदी ॥
तां शिलाममलैस्तोयैः क्षालयन्ती समंततः ॥ १६ ॥
अथ मूर्तिमती भूत्वा प्रोवाच प्रपितामहम् ॥
किमर्थं संस्मृता देवममादेशः प्रदीयताम्॥।७॥
॥ ब्रह्मोवाच ॥ ॥
त्वयात्रैव सदा स्थेयं शिलायां मम संनिधौ ॥
संध्यात्रयेऽपि त्वत्तोयैर्येन कृत्यं करोम्यहम् ॥ १८ ॥
तथा ये मानवाः स्नानं करिष्यंति जले तव ॥
ते यास्यंति परां सिद्धिं दुर्लभां देवा मानुषैः ॥ १९ ॥
॥ सरस्वत्युवाच ॥ ॥
अहं कन्या सुरश्रेष्ठ पातालतलवाहिनी ॥
जनस्पर्शभयाद्भीता नागच्छामि महीतले ॥ ६.४०.२० ॥
तवादेशोऽन्यथा नैव मया कार्यः कथंचन ॥
एवं मत्वा सुरश्रेष्ठ यद्युक्तं तत्समाचर ॥ २१ ॥
॥ ब्रह्मोवाच ॥ ॥
तवार्थे कल्पयिष्यामि स्थानेऽत्रैव महाह्रदम् ॥
अगम्यं सर्वमर्त्यानां तत्र त्वं स्थातुमर्हसि ॥ २२ ॥
एवमुक्त्वा स देवेशश्चखान च महाह्रदम् ॥
ततः सरस्वती तत्र स्वस्थानमकरो दथ ॥ २३ ॥
ततो दृष्टिविषान्सर्पानादिदेश पितामहः ॥

युष्माभिः सर्वदा स्थेयं ह्रदेस्मिञ्छासनान्मम ॥ २४ ॥

यथा सरस्वतीं मर्त्या न स्पृशंति कथंचन ॥

भवद्भिः सर्वथा कार्यं तथा पन्नगसत्तमाः ॥ २५ ॥

॥ सूत उवाच ॥ ॥

एवं ब्रह्मा व्यवस्थाप्य तत्र क्षेत्रे सरस्वतीम् ॥

तां च चित्रशिलां मध्ये ब्रह्मलोकं जगाम ह ॥ २६ ॥

अथ मंकणकोनाम महर्षिः संशितव्रतः ॥

क्षेत्रे तत्र समायातो विषविद्याविचक्षणः ॥ २७ ॥

सक्रमाद्भ्रममाणस्तु तस्मिन्सर्पाभिरक्षिते ॥

तं मुनिं वेष्टयामासुर्बबन्धुश्चैव पाशकैः ॥ २८ ॥

सोऽपि विद्याबलात्सर्पान्निर्विषांस्तांश्चकारह ॥

तत्र स्नात्वा शुचिर्भूत्वा कृत्वा च पितृतर्पणम् ॥

निष्क्रांतः सलिलात्तस्मात्कृतकृत्यो मुदान्वितः ॥ २९ ॥

ततश्चक्रे मुनिर्यावत्सम्यक्कुशपरिग्रहम् ॥

दर्भाग्रेणास्य हस्ताग्रं पाटितं तावदेव हि ॥ ६.४०.३० ॥

अथ तस्मात्क्षताज्जातस्तस्य शाकरसो महान् ॥

तं दृष्ट्वा स विशेषेण हर्षितो विस्मयान्वितः ॥ ३१ ॥

सिद्धोऽहमिति विज्ञाय नृत्यं चक्रे ततः परम् ॥

ब्राह्मीं शिलां समारुह्य आनंदाश्रुपरिप्लुतः ॥ ३२ ॥

अथैवं नृत्यमानस्य मुनेस्तस्य महात्मनः ॥

लास्यं चक्रे ततः सर्वं जगत्स्थावरजंगमम् ॥ ३३ ॥

चमत्कारपुरं कृत्स्नं भग्नं नष्टा द्विजोत्तमाः ॥

प्रासादैर्ध्वंसितैस्तत्र हाहाकारो महानभूत् ॥३४॥

]ततो देवगणाः सर्वे तद्दृष्ट्वा तस्य चेष्टितम्॥

लास्यस्य वारणार्थाय प्रोचुर्वृषभवाहनम्॥ ३५ ॥

अनेन नृत्यमानेन जगत्स्थावरजंगमम् ॥

नृत्यं करोति देवेश तस्माद्गत्वा निवारय ॥ ३६ ॥

नान्यः शक्तः सुरश्रेष्ठ मुनिमेनं कथंचन ॥

निषेधयितुमीशान ततः कुरु जगद्धितम् ॥ ३७ ॥

अथ तेषां वचः श्रुत्वा भगवान्वृषभध्वजः ॥

कृत्वा रूपं द्विजेंद्रस्य तत्सकाशमुपाद्रवत् ॥ ३८ ॥

अब्रवीच्च मुने कस्मात्त्वयैतन्नृत्यतेऽधुना ॥

तस्मात्कार्यं वदाशु त्वं परं कौतूहलं हि नः ॥ ३९ ॥

एवमुक्तः स विप्रेंद्रः शंकरेण द्विजोत्तमाः ॥

हस्तं संदर्शयामास तस्य शाकरसान्वितम् ॥ ६.४०.४० ॥

किं नपश्यसि मे ब्रह्मन्कराच्छाकरसो महान्॥

संजातः क्षतवक्त्रेण तस्मात्सिद्धिरुपस्थिता ॥ ४१ ॥

एतस्मात्कारणाद्विप्र नृत्यमेतत्करोम्यहम्॥

आनंदं परमं प्राप्य सिद्धिजं सिद्धसत्तम ॥ ४२ ॥

एवं तु वदतस्तस्य भगवान्वृषभध्वजः ॥

अंगुष्ठं ताडयामास स्वांगुल्यग्रेण तत्क्षणात् ॥ ४३ ॥

निश्चक्राम ततो भस्म हिमस्फटिकसंनिभम्॥

क्षताग्रात्सहसा तस्य महाविस्मयकारकम्॥ ४४ ॥

ततः प्रोवाच तं विप्रं स देवो द्विजसत्तमाः ॥

यस्यांगुष्ठाग्रतो मह्यं निष्क्रांतं भस्म पांडुरम् ॥ ४५ ॥

तथाप्यहं मुनिश्रेष्ठ न नृत्यं कर्तुमुत्सहे ॥

त्वं पुनर्नृत्यसे कस्मादपि शाकरसेक्षणात्॥ ॥ ४६ ॥

विरामं कुरु तस्मात्त्वं नृत्यादस्माद्विगर्हितात् ॥

तपः क्षरति विप्रेन्द्र नृत्यगीताद्द्विजन्मनः ॥ ४७ ॥

अथासौ तत्समुद्वीक्ष्य क्षताद्भस्मविसर्जनम् ॥

नृत्यं व्रीडान्वितस्त्यक्त्वा तस्य चक्रे नमस्कृतिम् ॥ ४० ॥

अब्रवीत्त्वामहं मन्ये नान्यं देवान्महेश्वरात् ॥

तस्मात्कुरु प्रसादं मे यथा न स्यात्तपःक्षतिः ॥ ४९ ॥

॥ श्रीभगवानुवाच ॥ ॥

तपस्ते मत्प्रसादेन वृद्धिं शस्यति नित्यशः ॥

स्थानेऽत्र भवता सार्धमहं स्थास्यामि सर्वदा ॥ ६.४०.५० ॥

आनन्दितेन भवता प्रार्थितोऽहं यतो मुने ॥
आनन्देश्वरसंज्ञस्तु ख्यातिं यास्यामि भूतले ॥
एतत्पुरं च मे नाम्ना आनन्दाख्यं भविष्यति ॥ ५१ ॥
एवमुक्त्वा महादेवो गतश्चादर्शनं ततः ॥
सोऽपि मंकणकस्तत्र तपस्तेपे मुनीश्वरः ॥ ५२ ॥
अथ ते पन्नगाः प्रोचुः प्रणिपत्य मुनीश्वरम्॥
भगवन्निर्विषाः सर्वे वयं हि भवता कृताः ॥ ९३ ॥
तस्मात्कुरु प्रसादं नो यथा स्याद्दारुणं विषम् ॥
नो चेद्वयं गमिष्यामः सर्वलोक पराभवम्॥ ५४ ॥
॥ मंकणक उवाच ॥ ॥
अनृतं न मया प्रोक्तं स्वैरेणापि कदाचन ॥
तस्मादेवंविधाः सर्वे जलसर्पा भविष्यथ ॥ ५५ ॥ ॥
॥ सूत उवाच ॥ ॥
ततःप्रभृति संजाता जलसर्पा महीतले ॥
तद्वद्रूपा द्विजिह्वाश्च केवलं विषवर्जिताः ॥ ५६ ॥
अथ तस्मिन्ह्रदे मर्त्याः स्नात्वा सारस्वते शुभे ॥
स्पृष्ट्वा चित्रशिलां तां च प्रयांति परमां गतिम् ॥ ५७ ॥
अथ भीतः सहस्राक्षो गत्वा देवं पितामहम् ॥
यमेन सहितस्तूर्णं प्रोवाचेदं वचस्तदा ॥ ५८ ॥
त्वत्प्रसादात्समुद्वीक्ष्य गच्छंति मनुजा दिवम् ॥
पितामह महातीर्थं यत्त्वया विहितं क्षितौ ॥
सारस्वतं नरास्तत्र स्नात्वा यांति त्रिविष्टपम् ॥ ५९ ॥
अपि पापसमाचाराः सर्वधर्मबहिष्कृताः ॥
तत्र स्नात्वा शिलां स्पृष्ट्वा तदैवायांति सद्गतिम्॥ ६.४०.६० ॥
॥ यम उवाच ॥ ॥
अप्रमाणं विभो कर्म संप्रयातं ममोचितम् ॥
शुभाशुभपरिज्ञानं सर्वेषामेव देहिनाम् ॥ ६१ ॥
तस्मात्त्यज त्वं मां देव यद्वा तत्तीर्थमुत्तमम्॥

यत्प्रभावाज्जनैर्हीनाः संजाता नरका मम ॥ ६२ ॥

तस्य तद्वचनं श्रुत्वा यमस्य प्रपितामहः ॥

प्राह पार्श्वस्थितं शक्रं तत्तीर्थं नय संक्षयम् ॥ ६३ ॥

ततः शक्रो ह्रदं गत्वा पूरयामास पांसुभिः ॥

ह्रदं सारस्वतं तं च तां च चित्रशिलां द्विजाः ॥ ६४ ॥

अद्यापि मनुजः सम्यक्त स्मिन्स्थाने व्यवस्थितः ॥

यः करोति तपश्चर्यां स शीघं सिद्धिमाप्नुयात् ॥ ६५ ॥

सोऽपि मंकणकस्तत्र सार्द्धं देवेन शंभुना ॥

तिष्ठत्यद्यापि विप्रेंद्र पूरितं चैव पांसुभिः ॥ ६६ ॥

लिंगं मंकणकन्यस्तं तत्रास्ति सुमहोदयम् ॥

तत्स्पृष्ट्वा मानवाः पापैर्मुच्यंते द्विजसत्तमाः ॥ ६७ ॥

माघ शुक्लचतुर्दश्यां यस्तं पूजयते नरः ॥

स पापैरपि संयुक्तः शिवलोके महीयते ॥ ६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चित्रशिलामाहात्म्यवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४१

https://sa.wikisource.org/s/fhn
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तस्यैवोत्तरदिग्भागे देवस्य जलशायिनः ॥

स्थानमस्ति सुविख्यातं सर्वपातकनाशनम् ॥ १ ॥

यस्तत्पूजयते भक्त्या शयने बोधने हरेः ॥

उपवासपरो भूत्वा स गच्छेद्वैष्णवं पदम् ॥ २ ॥

अशून्यशयनानाम द्वितीया दयिता तिथिः ॥

सदैव देवदेवस्य कृष्णा सुप्तस्य या भवेत् ॥ ३ ॥

तस्यां यः पूजयेत्तत्र तं देवं जलशायिनम्॥

शास्त्रोक्तेन विधानेन स गच्छति हरेः पदम् ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

जलशायी कथं तत्र संप्राप्तः सूतनन्दन ॥

पूज्यते विधिना केन तत्सर्वं विस्तराद्वद ॥ ५ ॥

॥ सूत उवाच ॥ ॥

पुरासीद्वाष्कलिर्नाम दानवेन्द्रो महाबलः ॥

अजेयः सर्वदेवानां गन्धर्वोरगरक्षसाम् ॥ ६ ॥

अथासौ भूतलं सर्वं वशीकृत्वा महाबलः ॥

ततो दैत्यगणैः सार्द्धं जगाम त्रिदशालयम् ॥ ७ ॥

तत्राभवन्महायुद्धं देवासुरविनाशकम् ॥

देवानां दानवानां च क्रुद्धानामितरेतरम् ॥ ८ ॥

वर्षाणामयुतं तावदहन्यहनि दारुणम् ॥

तत्रासृक्कर्दमो जातः पर्वतश्चास्थि संभवः ॥ ९ ॥

ततो वर्षसहस्रांते दशमे समुपस्थिते ॥

जितस्तेन सहस्राक्षः ससैन्यः सपरिग्रहः ॥ ६.४१.१० ॥

ततः स्वर्गं परित्यज्य सर्वदेवगणैः सह ॥

जगाम शरणं विष्णोः श्वेतद्वीपं प्रतिश्रयम् ॥ ११ ॥
यत्रास्ते भगवान्विष्णुर्योगनिद्रावशंगतः ॥
शयानः शेषपर्यंके लक्ष्म्या संवाहितांघ्रियुक् ॥ १२ ॥
ततो वेदोद्भवैः सूक्तैः स्तुतिं चक्रुः समंततः ॥
तस्य देवस्य सद्भक्ताः सर्वे देवाः सवासवाः ॥ १३ ॥
अथोत्थाय जगन्नाथः प्रोवाच बलसूदनम् ॥
कच्चित्क्षेमं सहस्राक्ष सांप्रतं भुवनत्रये ॥
यत्त्वं देवगणैः सार्द्धं स्वयमेव इहागतः ॥ १४ ॥
॥ शक्र उवाच ॥ ॥
बाष्कलिर्नाम देत्येन्द्रो हरलब्धवरो बली ॥
अजेयः संगरे देवैस्तेनाहं विजितो रणे ॥ १५ ॥
संस्थितिश्च कृता स्वर्गे सांप्रतं मधु सूदन ॥
तेनैष शरणं प्राप्तो देवैः सार्द्धं सुरोत्तम ॥ १६ ॥
हिरण्याक्षभयाद्देवा हिरण्यकशिपोः पुरा ॥
त्वया त्राता वयं सर्वे तथान्येषां दुरात्मनाम् ॥।७॥
तस्मादस्मादपि त्राहि दानवाद्बलवत्तरात् ॥
बाष्कलेर्नास्ति देवेश त्वां मुक्त्वान्या परा गतिः ॥।८॥
॥ श्रीभगवानुवाच ॥ ॥
अहं तं निग्रहीष्यामि संप्राप्ते समये स्वयम्॥
तस्मात्त्वं समयंयावत्कुरु शक्र तपो महत् ॥ १९ ॥
येन ते जायते शक्तिस्तपोवीर्येण वासव ॥
वधाय तस्य दैत्यस्य बलयुक्तस्य बाष्कलेः ॥ ६.४१.२० ॥
॥ शक्र उवाच ॥ ॥
कस्मिन्क्षेत्रे जगन्नाथ करोमि सुमहत्तपः ॥
तस्य दैत्यस्य नाशार्थं तद स्माकं प्रकीर्तय ॥ २१ ॥
॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा भगवान्विष्णुः प्रोवाचाथ पुरंदरम् ॥
चिरं मनसि निश्चित्य क्षेत्राण्यायतनानि च ॥ २२ ॥

चमत्कारपुरं क्षेत्रं शक्र सिद्धिप्रदायकम् ॥
तस्मात्तत्र द्रुतं गत्वा तद्वधार्थं तपः कुरु ॥ २३ ॥
॥ शक्र उवाच ॥ ॥
न वयं भवता हीना यास्यामोऽन्यत्र केशव ॥
बाष्कलेर्दानवेन्द्रस्य भयाद्भीताः कथंचन ॥ २४ ॥
तस्मादागच्छ तत्र त्वं स्वयमेव सुरेश्वर ॥
त्वया संरक्षितो येन करोमि सुमहत्तपः ॥ २६ ॥
॥ सूत उवाच ॥ ॥
ततः स भगवान्विष्णुस्तथेत्युक्त्वा सुरैः सह ॥
चमत्कारपुरं क्षेत्रमाजगाम सह श्रिया ॥ ॥ २६ ॥
अथ देवगणाः सर्वे तत्र गत्वा तदाऽऽश्रमान् ॥
चक्रुः पृथक्पृथग्घृष्टास्तपोऽर्थं कृतनिश्चयाः ॥ २७ ॥
वासुदेवोऽपि संस्मृत्य क्षीरोदं तत्र सागरम् ॥
आनिनायाशु विस्तीर्णं ह्रदे तस्मिन्पुरातने ॥ २८ ॥
चकार शयनं तत्र श्वेतद्वीपे यथा पुरा ॥
स्तूयमानः सुरैः सर्वैः समंताद्विनयान्वितैः ॥ २९ ॥
अथाषाढस्य संप्राप्ते द्वितीयादिवसे शुभे ॥
कृष्णपक्षे सहस्राक्षं स्वयमेव बृहस्पतिः ॥
प्रोवाच वचनं श्लक्ष्णं बाष्पव्याकुल लोचनम् ॥ ६.४१.३० ॥
॥ बृहस्पतिरुवाच ॥ ॥
अशून्यशयनानाम द्वितीयाद्य पुरंदर ॥
अतीव दयिता विष्णोः प्रसुप्तस्य जलाशये ॥ ३१ ॥
अस्यां संपूजितो विष्णुर्यावन्मासचतुष्टयम् ॥
ददाति सकलान्कामान्ध्यातश्चेतसि सर्वदा ॥
शास्त्रोक्तविधिना सम्यग्व्रतस्थो जलशायिनम् ॥ ३२ ॥
एवं स चतुरो मासान्द्वितीयादिवसे हरिम् ॥
पूजयित्वा सहस्राक्षस्तेजसा सहितोऽभवत् ॥ ३३ ॥
तं दृष्ट्वा तेजसा युक्तं परितुष्टो जनार्दनः ॥

प्रोवाच शक्र गच्छाद्य वधार्थं तस्य बाष्कलेः ॥

सर्वैर्देवगणैः सार्धं विजयस्ते भविष्यति ॥ ३४ ॥

॥ शक्र उवाच ॥ ॥

बिभेमि तस्य देवाहं दानवेन्द्रस्य दुर्मतेः ॥

त्वया विना न गच्छामि सार्धं सर्वैः सुरैरपि ॥ ३५ ॥

॥ श्रीभगवानुवाच ॥ ॥

त्वया सह सहस्राक्ष चक्रमेतत्सुदर्शनम् ॥

गमिष्यति वधार्थाय मदीयं सुरविद्विषाम् ॥ ३६ ॥

एवमुक्त्वा हरिश्चक्रं प्रमुमोच सुदर्शनम् ॥

वधार्थं दानवेन्द्राणां शक्रेण सहितं तदा ॥ ३७ ॥

शक्रोऽपि सहितस्तेन गत्वा चक्रेण कृत्स्नशः ॥

सर्वानुत्सादयामास दानवान्रणमूर्धनि ॥ ३८ ॥

स चापि बाष्कलिस्तेन च्छिन्नश्चक्रेण कृत्स्नशः ॥

पपात धरणीपृष्ठे वज्राहत इवाचलः ॥ ३९ ॥

तथान्ये बहवः शूरा दानवा बलदर्पिताः ॥

हत्वा सुदर्शनं चक्रं भूयः प्राप्तं हरेः करम्॥ ६.४१.४० ॥

तेऽपि शक्रादयो देवाः प्रहृष्टा गतसंशयाः ॥

भूयो विष्णुं समेत्याथ प्रोचुर्नत्वा ततः परम् ॥ ४१

प्रभावात्तव देवेश हताः सर्वेऽमरारयः ॥

प्राप्तं त्रैलोक्यराज्यं च भूयो निहतकंटकम् ॥ ४२ ॥

तस्मात्कीर्तय यत्कृत्यं तच्च श्रेयस्करं मम ॥

सदा स्यात्पुंडरीकाक्ष तथा शत्रुभयावहम् ॥ ४३ ॥

॥ श्रीभगवानुवाच ॥ ॥

मयात्रैव सदा स्थेयं रूपेणानेन वासव ॥

सर्वलोकहितार्थाय ह्रदे पुण्य जलाश्रये ॥ ४४॥

त्वया तस्मात्समागम्य चातुर्मास्यं शचीपते ॥

प्रयत्नेन प्रकर्तव्यमशून्यशयनं व्रतम् ॥ ४५ ॥

न भवंति सहस्राक्ष येन ते परि पंथिनः ॥

तथाभीष्टफलावाप्तिर्मत्प्रसादादसंशयम् ॥ ४६ ॥

अन्योऽपि यो नरो भक्त्या पूजयिष्यति मामिह ॥

संप्राप्स्यति स ताँल्लोकान्दुर्लभांस्त्रि दशैरपि ॥ ४७ ॥

तस्माद्गच्छ सहस्राक्ष कुरु राज्यं त्रिविष्टपे ॥

भूयोऽप्यत्रैव देवेश द्रष्टव्योऽस्मि न संशयः ॥

कार्यकाले समायाते श्वेतद्वीपे यथा तथा ॥ ४८ ॥

॥ सूत उवाच ॥ ॥

ततः प्रणम्य तं दृष्ट्वा प्रजगाम शतक्रतुः ॥

वासुदेवोऽपि तत्रैव स्थितो लोकहिताय च ॥ ४९ ॥

एवं तत्र द्विजश्रेष्ठा जलशायी जनार्दनः ॥

सर्वलोकहितार्थाय संस्थितः परमेश्वरः ॥ ६.४१.५० ॥

यस्तं पूजयते भक्त्या श्रद्धया परया युतः ॥

चातुर्मास्ये विशेषेण स याति परमां गतिम् ॥ ५१ ॥

तथा देवगणैः सर्वैर्द्वारका तत्र सा कृता ॥

संपूज्य तु नरा यांति चातुर्मास्ये त्रिविष्टपम् ॥ ५२ ॥

शेषकालेऽपि चित्तस्थान्कामान्मर्त्यः समाप्नुयात् ॥

तस्मात्सर्वप्रयत्नेन पूज्या सा द्वारका नरैः ॥

सर्वेष्वपि हि कालेषु चातुमास्ये विशेषतः ॥ ५३ ॥

एतद्वः सर्वमाख्यातं सर्वपातकनाशनम् ॥

आख्यानं देवदेवस्य सुपुण्यं जलशायिनः ॥ ५४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युत्पत्तिवर्णनंनामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४२



॥ सूत उवाच ॥ ॥

विश्वामित्रसमुद्भूतं कुण्डं तत्रापरं शुभम् ॥

संतिष्ठते द्विजश्रेष्ठाः सर्वकामप्रदायकम् ॥ १ ॥

तत्र चैत्रतृतीयायां कृते स्नाने भवेन्नरः ॥

दिव्यरूपधरः साक्षात्कामोऽन्यो द्विजसत्तमाः ॥ २ ॥

नारी वा श्रद्धयोपेता तत्र स्नात्वा प्रजावती ॥

भवेत्सौभाग्यसंयुक्ता स्पृहणीयतमा क्षितौ ॥ ३ ॥ ॥

॥ ऋषय ऊचुः ॥ ॥

तीर्थं तस्य मुनेस्तत्र कस्मिन्काले व्यवस्थितम् ॥

निर्मलं केन निःशेषं वद त्वं सूतनंदन ॥ ४ ॥

॥ सूत उवाच ॥ ॥

तत्रास्ति निर्झरः पूर्वं सामान्यो द्विजसत्तमाः ॥

अवधूतो धरापृष्ठे माहात्म्येन व्यवस्थितः ॥ ५ ॥

यत्र देवनदी गंगा स्वयमेव व्यवस्थिता ॥

यस्यां स्नातः पुमान्सद्यः सर्वपापैः प्रमुच्यते ॥ ६ ॥

यस्तत्र कुरुते श्राद्धं पितॄनुद्दिश्य भावितः ॥

तदक्षयं भवेच्छ्राद्धं पितॄणां तृप्तिकारकम् ॥ ७ ॥

यत्किंचिद्दीयत दानं तस्मिंस्तीर्थवरे द्विजाः ॥

हुतजप्यादिकं चैव तदनंतफलं भवेत् ॥ ८ ॥

कस्यचित्त्वथ कालस्य मृगी व्याधशराहता ॥

प्रविष्टा सलिले तस्मिंस्तत्र पञ्चत्वमागता ॥ ९ ॥

चैत्रशुक्लतृतीयायां मध्याह्ने द्विजसत्तमाः ॥

नक्षत्रे यमदैवत्ये मार्तंडस्य च वासरे ॥ ६.४२.१० ॥

अथ तत्तोयमाहात्म्यान्मेनकानाम साऽभवत् ॥

अप्सरास्त्रिदशेंद्रस्य समंताच्चारुहासिनी ॥ ११ ॥

स्मरमाणाऽथ सा तस्य प्रभावं वरवर्णिनी ॥

तीर्थमागत्य सद्भक्त्या स्नानं तत्र समाचरत् ॥

चैत्रशुक्लतृतीयायां यामर्क्षे सूर्यवासरे ॥ १२ ॥

एकदा दिवसे तस्मिन्भ्रममाणो मुनीश्वरः ॥

विश्वामित्र इति ख्यातस्तत्रायातस्तपोऽन्वितः ॥ १३ ॥

साऽपि स्वर्गात्समायाता देवतादर्शनार्थतः ॥

पूजयित्वाथ तं देवं प्रस्थिता त्रिदिवं प्रति ॥ १४ ॥

सा दृष्ट्वा तं मुनिं तत्र भ्रममाणमितस्ततः ॥

यौवनस्थं सुरूपाढ्यं पंचबाणमिवापरम्॥ १५ ॥

व्रतप्रभावजैर्व्याप्तं तेजोभिर्भास्करं यथा ॥

बाल्यात्प्रभृति चीर्णेन तपसा दग्धकिल्बिषम्॥ १६ ॥

सा तस्य दर्शनादेव कामबाणप्रपीडिता ॥

सानंदाः सुरतार्थाय समीपं समुपाद्रवत् ॥ १७ ॥

स दृष्ट्वाऽदृष्टपूर्वां तां मार्गपृच्छाकृते ततः ॥

सम्मुखः प्रययौ तूर्णं प्रहृष्टेनांतरात्मना ॥ १८ ॥

उवाच देशं तां पृच्छन्स्त्रीधर्मांश्च विशेषतः ॥

शुभलाभोऽस्तु ते भद्रे मनसा कर्मणा गिरा ॥ १९ ॥

सदैव वासुदेवस्य भक्तिश्चाव्यभिचारिणी॥

कच्चित्त्वं वर्तसे पुत्रि पतिपादपरायणा ॥

चारित्रविनयोपेता सर्वदा प्रियवादिनी ॥ ६.४२.२० ॥

कच्चित्त्वं सर्वदाभीष्टा पत्युर्दानैस्तथार्च्चनैः ॥

बंधून्स्वमित्रवर्गं च तत्पुरः पृष्ठतोपि वा ॥ २१ ॥

कच्चिद्भर्तरि संसुप्ते त्वं निशवशमेष्यसि॥

उत्थानमप्रबुद्धे च करोषि वरवर्णिनि ॥ २२ ॥

कच्चित्प्रातः समुत्थाय करोषि गृहमार्जनम् ॥

स्वयमेव वरारोहे मण्डनं चोपमण्डनम्॥ २३ ॥

कच्चिदेवान्नमस्कृत्य गुरुं च तदनंतरम् ॥

करोषि त्वं प्राणयात्रां दत्वान्नं शक्तितो जलम् ॥ २४ ॥
कच्चिदस्तंगते सूर्ये नान्नमश्नासि भाभिनि ॥
अदत्वा वा स्वभृत्येभ्यः साधुभ्यश्च विशेषतः ॥ २५ ॥
कच्चित्पिबसि पानीयं सप्तवारविशोधितम् [।
निबिडेन स्ववस्त्रेण पालयंती जलोद्भवान्॥ २६.॥
कच्चिद्दयासमोपेता गात्रक्लेशकरानपि ॥
यूकामत्कुणदंशादीन्पुत्रवत्परिरक्षसि॥ २७ ॥
कच्चित्साधुमुखान्नित्यं शिवधर्मं सुभक्तितः ॥
शृणोषि भक्तितो भद्रे प्रकरोषि च सादरम् ॥ २८ ॥
क्वचिच्छ्रुत्वाऽऽगमं पुण्यं प्रकरोषि च पूजनम्॥
शास्त्रस्य वाचकस्यापि व्याख्यातुश्च विशेषतः ॥ २९ ॥
कच्चित्पुराणशास्त्राणि प्रणीतानि जनेश्वरैः ॥
संलेख्याक्षररम्याणि साधुभ्यः संप्रयच्छसि ॥ ६.४२.३० ॥
यः श्रुत्वा सर्व शास्त्राणि निष्क्रयं न प्रयच्छति ॥
शास्त्रचौरः स विज्ञेयो न चैवाप्नोति तत्फलम् ॥ ३१ ॥
कच्चिच्छिवालये नृत्यगीतवाद्यादिकाः क्रियाः ॥
बलिपूजोपहारांश्च त्वं करोषि च शक्तितः ॥ ३२ ॥
कच्चित्प्रावरणं वस्त्रं सुभगे सर्वमेव च ॥
संप्रयच्छसि साधुभ्यः प्रणिपातपुरःसरम् ॥ ३३ ॥
वृथा पर्यटनं नित्यं कच्चिन्न परमंदिरे ॥
त्वं करोषि विशालाक्षि विशेषेण निशागमे ॥ ३४ ॥
कच्चिन्नाश्नासि भद्रे त्वं स्वभर्तरि बुभुक्षिते ॥
आज्ञाभंगं प्रयत्नेन कच्चित्तत्र प्ररक्षसि ॥ ३५ ॥
कच्चित्प्रकुपिते कांते नोत्तराणि प्रयच्छसि ॥
तस्यकोपप्रणाशार्थं प्रियं कच्चिच्च जल्पसि ॥ ३६ ॥
कच्चित्त्वं प्रोषिते कांते मलिनांबरधारिणी ॥
जायसे च तथा दीना विवर्णवदना कृशा ॥ ३७ ॥
कच्चिन्मंदिरपृष्ठे त्वं न धत्से भिन्नभाजनम् ॥

उच्छिष्टं वा जनैस्त्यक्तमपि कार्योपकारकम् ॥ ३९ ॥

कच्चिदव्रजसि नो रात्रौ जागरेषु कथासु च ॥

निर्झरेषु विविक्तेषु पुलिनेषु वनेषु च ॥ ३९ ॥

कच्चिन्न कुरुषे मैत्रीं बंधकीभिः समं शुभे ॥

धात्रीभिर्मालिकस्त्रीभी रजकीभिश्च भामिनि ॥ ६.४२.४० ॥

कञ्चिद्दधासि नित्यं त्वं मुखं कुंकुमरंजितम् ॥

शिरः पुष्पसमाकीर्णं नेत्रे कज्जलरंजिते ॥ ४१ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विश्वामित्रकुण्डोत्पत्तिवृत्तान्ते विश्वामित्रमेनकासमागमवर्णनंनाम द्विचत्वारिंशो ध्यायः ॥ ४२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४३



॥ मेनकोवाच ॥ ॥

अन्यास्ता नायिका विप्र यासां धर्मस्त्वयोदितः ॥

स्वेच्छाचारविहारिण्यो वयं वेश्या दिवौकसाम् ॥ १ ॥

स त्वं वद महाभाग कस्माद्देशात्समागतः ॥

मम चित्तहरो वापि तीर्थे धर्मिष्ठसंश्रये ॥ २ ॥

त्वां दृष्ट्वाहं महाभाग कामदेव समाकृतिम् ॥

पुलकांचितसर्वांगी कामबाणप्रपीडिता ॥ ३ ॥

तस्माद्भजस्व मां रक्तां नो चेद्यास्यामि संक्षयम् ॥

कामबाणप्रदग्धा वै पुरोऽपि तव तापस ॥

ततः स्त्रीवधपापेन लिप्यसे त्वं न संशयः ॥ ४ ॥

॥ तापस उवाच ॥ ॥

वयं व्रतधराः सुभ्रु ब्रह्मचर्यपरायणाः ॥

मूर्खाः कामविधौ भद्रे निरताः शिवशासने ॥ ५ ॥

सर्वेषां व्रतिनां मूलं ब्रह्मचर्यमुदाहृतम् ॥

विशेषाच्छिवभक्तानामेवं भूयो विधास्यसि ॥ ६ ॥

अपि वर्षशतं साग्रं यत्तपः कुरुते व्रती ॥

सकृत्स्त्रीसंगमान्नाशं याति पाशुपतस्य च ॥ ७ ॥

मां च पाशुपतं लुब्धा कस्मात्त्वं भीरु भाषसे ॥

ईदृक्पापतमं कर्म गर्हितं शिवशासने ॥ ८ ॥

यः स्त्रीं भजति पापात्मा वृथा पाशुपतव्रती ॥

सोऽतीतान्दश चाधाय पुरुषान्नरके पचेत् ॥ ९ ॥

आस्तां तावत्समा संगं संस्पर्शं च वरानने ॥

संभाषमपि पापाय स्त्रीभिः पाशुपतस्य च ॥ ६.४३.१० ॥

तस्माद् द्रुततरं गच्छ स्थानादस्माद्वरांगने ॥

यत्रावाप्स्यसि चाभीष्टं तत्र त्वं गन्तुमर्हसि ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विश्वामित्रकुण्डोत्पत्तिवृत्तान्ते विश्वामित्रमेनकासंवादवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४४



॥ मेनकोवाच ॥ ॥

नूनं हि कामधर्मे त्वं न प्रवीणो महाद्युते ॥

तेन मामीदृशैर्वाक्यैर्निवारयसि रागिणीम् ॥ १ ॥

॥ सूत उवाच ॥ ॥

एवमुक्तस्ततो भूयो विश्वामित्रोऽब्रवीदिदम् ॥

कोपेन महता युक्तो निःस्पृहस्तत्परिग्रहे ॥ २ ॥

॥ विश्वामित्र उवाच ॥ ॥

त्वं जीव गच्छ वा मृत्युं नाहं कर्तास्मि ते वचः ॥

व्रतनाशात्तु यत्पापमधिकं स्त्रीवधाद्भवेत् ॥ ३ ॥

प्रायश्चित्तं बुधैरुक्तं व्रतिनां स्त्रीवधे कृते ॥

न संगात्तु पुनस्तासां तस्मात्त्वं गन्तुमर्हसि ॥ ४ ॥

न केवलं व्रतोपेताः स्त्रीसंगात्पापमाप्नुयुः ॥

व्रतबाह्या अपि नराः सक्ताः स्त्रीषु पतंत्यधः ॥ ५ ॥

संसारभ्रमणं नारी प्रथमेपि समागमे ॥

वह्निप्रदक्षिणा व्याजन्यायेनैव प्रदर्शयेत् ॥ ६ ॥

तस्मात्स्त्रीभिः समं प्राज्ञः संभाषामपि वर्जयेत् ॥

आस्तां तावत्समासंगं य इच्छेच्छ्रेय आत्मनः ॥७ ॥

अंगार सदृशा नारी घृतकुंभसमः पुमान् ॥

अस्पर्शाद्दृढतामेति तत्संपर्काद्विलीयते ॥ ८ ॥

स्त्रियो मूलमनर्थानां सर्वेषां प्राणिनां भुवि ॥

तस्मात्त्याज्या सुदूरेण ताः स्वर्गस्य निरोधकाः ॥ ९ ॥

कुलीना वित्तवत्यश्च नाथवत्योऽपि योषितः ॥

एकस्मिन्नंतरे रागं कुर्वंत्येताः सुचञ्चलाः ॥६.४४.१०॥

न स्त्रीभ्यः किंचिदन्यद्धि पापाय विद्यते भुवि ॥

यासां संगसमासाद्य संसारे भ्रमते जनः ॥॥॥
नीचोऽपि कुरुते सेवां यस्तासां विजनेष्वथ ॥
विरूपं वापि नीचं वा तं सेवन्ते हि ताः स्त्रियः ॥ १२ ॥
अनर्थत्वान्मनुष्याणां भयात्परिजनस्य च ॥
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥ १३ ॥
॥सूत उवाच ॥ ॥
एवं संभर्त्सिता तेन मेनका कोपसंयुता ॥
शशाप तं मुनिश्रेष्ठं स्फुरमाणोष्ठसंपुटा ॥ १४ ॥
यस्मात्त्वया परित्यक्ता सकामाहं सुदुर्मते॥
त्यजता कामजं धर्मं तस्माच्छापं गृहाण मे ॥ १५ ॥
अद्यैव भव दुर्बुद्धे वलीपलितसंयुतः ॥
जराजर्ज्जरितांगश्च तुच्छदृष्टिर्विरंगितः ॥ १६ ॥
॥ सूत उवाच ॥ ॥
उक्तमात्रे तु वचने तत्क्षणान्मुनिसत्तमः ॥
बभूव तादृशः सद्यस्तया यादृक्प्रकीर्तितः ॥ १७ ॥
ततः कोपपरीतात्मा सोऽपि तां शप्तुमुद्यतः ॥
कमण्डलोर्जलं गृह्य संतापाद्रक्तलोचनः ॥ १८ ॥
निर्दोषोऽपि त्वया यस्माच्छप्तोऽहं गणिकाधमे ॥
तस्माद्भव त्वमप्याशु जराजर्जरितांगिका ॥ १९ ॥
सापि तद्वचनात्सद्यस्तादृग्रूपा व्यजायत ॥
यादृशोऽसौ मुनिश्रेष्ठो वलीपलितगात्रभृत् ॥ ६.४४.२० ॥
अथ तादृक्स्वरूपेण स्नाता तत्र जला शये ॥
भूयोऽपि तादृशी जाता यादृशी संस्थिता पुरा ॥ २१ ॥
तद्दृष्ट्वा परमाश्चर्यमतीव त्वरयान्वितः॥
सोऽपि तत्राकरोत्स्नानं संजातश्च यथा पुरा ॥ २२ ॥
ततस्तौ तीर्थमाहात्म्याद्रूपौदार्यगुणान्वितौ ॥
मिथ आमंत्र्य संहृष्टौ गतौ देशं यथेप्सितम् ॥ २३ ॥
एवं तीर्थस्य माहात्म्यं विज्ञाय भगवानृषिः ॥

लिंगं संस्थापयामास देवदेवस्य शूलिनः ॥ २४ ॥

तपश्चकार सुमहत्तस्मिंस्तीर्थवरे तदा ॥

कुशस्तम्बेन कृतवांस्तत्सरो विपुलं विभुः ॥ ॥ २५ ॥

तत्र स्नात्वा नरो यस्तु पूजयेल्लिंगमुत्तमम् ॥

विश्वामित्रेश्वरं ख्यातं स गच्छेच्छिवमंदिरम् ॥ २६ ॥

अद्यापि दृश्यते तत्र गंगोदकसमं जलम् ॥

सर्वपापहरं पुण्यं सर्वकामप्रदायकम् ॥ २७ ॥

यस्तत्र कुरुते स्नानं श्रद्धापूतेन चेतसा ॥

स देवलोकमासाद्य पितृभिः सह मोदते ॥२८॥

ततःप्रभृति तत्तीर्थं ख्यातिं प्राप्तं महीतले ॥

पाताले स्वर्गलोके च रूपौदार्यप्रदं नृणाम् ॥ २९ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥

विश्वामित्रेश माहात्म्यं सर्वपातकनाशनम् ॥ ६.४४.३० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे श्रीहाटकेवरक्षेत्रमाहात्म्ये विश्वामित्रकुण्डोत्पत्ति विश्वामित्रेश्वरमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४५



॥ सूत उवाच ॥ ॥

तत्रैवास्ति द्विजश्रेष्ठाः सुपुण्यं पुष्करत्रयम्॥

यत्र पूर्वं तपस्तप्तमानर्ताधिपभूभुजा ॥ १ ॥

यस्तत्र कार्तिके मासि कृत्तिकास्थे निशाकरे ॥

मध्याह्ने कुरुते स्नानं स गच्छति परां गतिम् ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं तत्र समायातं सुपुण्यं पुष्करत्रयम् ॥

कस्मिन्स्थाने च विज्ञेयं कैश्चिह्नैर्वद सूतज ॥ ॥ ३ ॥

॥ सूत उवाच ॥ ॥

अहं वः कीर्तयिष्यामि यैश्चिह्नैः पुष्करत्रयम् ॥

प्राग्दृष्टं मुनिना तत्र विश्वामित्रेण धीमता ॥ ४ ॥

पुरा निवसतस्तस्य विश्वामित्रस्य सन्मुनेः ॥

संप्राप्ता कार्तिकी पुण्या कृत्तिकायोगसंयुता ॥ ५ ॥

सर्वतीर्थमयं क्षेत्रं तद्विज्ञाय तपोनिधिः ॥

ततश्च चिन्तयामास स्वचित्ते गाधिनन्दनः ॥ ६ ॥

अद्येयं कार्तिकी पुण्या कृत्तिकायोगसंयुता ॥

यस्यां स्नाने नरैः श्रेयः प्राप्यते पुष्करोदके ॥

आद्यं तु पुष्करं दूरे न गन्तुं शक्यतेऽधुना ॥ ७ ॥

तस्मादत्र स्थितं यच्च तस्मिन्स्नानं करोम्यहम् ॥

स एवं निश्चयं कृत्वा श्रद्धापूतेन चेतसा ॥ ८ ॥

ततश्चान्वेषयामास पुष्कराणि समंततः ॥

बहुत्वात्तत्र तीर्थानां निश्चयं नान्वपद्यत ॥९॥

दृष्ट्वादृष्ट्वा जलस्थानं स्नानं चक्रे ततः परम्॥

स तदा श्रममापन्नो भ्रममाण इतस्ततः॥६.४५.१०॥

वृक्षमूलं समाश्रित्य निविष्टश्च क्षितौ ततः॥

तुष्टावाथ शुचिर्भूत्वा श्रद्धया च त्रिपुष्करम् ॥॥॥

मध्यमाद्योजनं स्वर्गः कनिष्ठादर्ध योजनम् ॥

ज्येष्ठकुण्डात्पुनः ख्यातो हस्तप्रायः शुभात्मभिः ॥ १२ ॥

पावयंति हि तीर्थानि स्नानदानादसंशयम् ॥

पुष्करालोकनादेव नरः पापात्प्रमु च्यते ॥ १३ ॥

पुष्करारण्यमाश्रित्य शाकमूलफलैरपि ॥

एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ १४ ॥

पुष्करे दुष्करं स्नानं पुष्करे दुष्करं तपः ॥

पुष्करे दुष्करो वासः सर्वं पुष्करदुष्करम् ॥ १५ ॥

कार्तिक्यां कृत्तिकायोगे पुष्करे स्नाति यो नरः ॥

स क्षणान्मुच्यते पापादाजन्ममरणोद्भवात् ॥ १६ ॥

ज्येष्ठे प्रातश्च मध्याह्ने मध्यमे स्नाति यो नरः ॥

कनिष्ठेऽस्तमिते भानौ सकृत्स्वर्गमवाप्नुयात् ॥ १७ ॥

तावत्तिष्ठति देहेषु पातकं सर्वदेहिनाम् ॥

यावन्न पौष्करैस्तोयैः स्नानं वै कुर्वते नराः ॥ १८ ॥

दिवाकरकरैः स्पृष्टं तमो यद्वत्प्रणश्यति ॥

पुष्करोदकसंस्पर्शाच्छीघ्रं गच्छति पातकम् ॥ १९ ॥

ब्रह्महत्यादिकं पापं कृत्वापि पुरुषो भुवि ॥

कार्तिक्यां पुष्करे स्नात्वा निर्दोषत्वं प्रपद्यते ॥ ६.४५.२० ॥

किं दानैः किं व्रतैर्होमैः किं यज्ञैर्वहुविस्तरैः ॥

कार्तिक्यां पुष्करे स्नानैः सर्वेषां लभ्यते फलम् ॥ २१ ॥

यद्येषा भारती सत्या मया सम्यमुदीरिता ॥

तन्मे स्याद्दर्शनं शीघ्रं सद्यः पुष्करसंभवम् ॥ २२ ॥

एवं तस्य ब्रुवाणस्य विश्वामित्रस्य धीमतः ॥

अशरीराऽभवद्वाणी गगनाद्द्विजसत्तमाः ॥ २३ ॥

विश्वामित्र मुनिश्रेष्ठ सदा मे गगने स्थितिः ॥

मुक्त्वैकां कार्तिकीं चैव कृत्तिकायोगसंयुताम् ॥ २४ ॥

तदत्र दिवसे वासो मम भूमितले ध्रुवम् ॥
अस्मिन्नेव वने पुण्ये तत्त्वं स्नानं समाचर ॥ २५ ॥
॥ विश्वामित्र उवाच ॥ ॥
सर्वेषामेव तीर्थानां श्रूयते च समाश्रयः ॥
तत्कथं वेद्मि तीर्थेश त्वामत्रैव व्यवस्थितम् ॥ २६ ॥
तदोत्थिता पुनर्वाणी तारा गगनगोचरा ॥
विश्वामित्रं मुनिश्रेष्ठं हर्षयंती द्विजोत्तमाः ॥ २७ ॥
नातिदूरे वनादस्मादत्र संति जलाशयाः ॥
तेषामेकतमे पद्मं विद्यतेऽधोमुखं स्थितम् ॥ २८ ॥
ऊर्ध्ववक्त्रं द्वितीये च तिर्यग्वक्त्रं तृतीयके ॥
तत्रोर्ध्वास्यैः सरोजैश्च विज्ञेयं ज्येष्ठपुष्करम् ॥ २९ ॥
पार्श्ववक्त्रैर्द्विजश्रेष्ठ मध्यमं परिकीर्तितम् ॥
अधोवक्त्रैस्तथा ज्ञेयं कनिष्ठं पुष्करं क्षितौ ॥ ६.४५.३० ॥
एतैश्चिह्नैर्मुनिश्रेष्ठ ज्ञात्वा स्नानं समाचर ॥
तच्छ्रुत्वा स मुनिस्तूर्णं समुत्थाय ययौ ततः ॥ ३१ ॥
तादृशैः कमलैस्तत्र संस्थितास्ते जलाशयाः ॥
तान्दृष्ट्वा श्रद्धयोपेतः कृत्वा स्नानं यथाक्रमम् ॥ ३२ ॥
ततश्च विधिना सम्यक्चकारपितृतर्पणम् ॥ ३३ ॥
ततः शाकैश्च मूलैश्च नीवारैः फलसंयुतैः ॥
चकार विधिना श्राद्धं तत्रैव द्विजसत्तमाः ॥ ३४ ॥
तत्र तस्यैव तीरस्थो वीक्षांचक्रे समाहितः ॥
कार्तिक्यां कृत्तिकायोगे चिह्नदर्शनलालसः ॥ ३५॥
॥ ब्राह्मणा ऊचुः ॥ ॥
कीदृशं जायते चिह्नं कार्तिक्यां ज्येष्ठपुष्करे ॥
संप्राप्ते कृत्तिकायोगे सर्वं तत्र वदाशु नः ॥ ३६ ॥
॥ सूत उवाच ॥ ॥
कार्तिक्यां कृत्तिकायोगे यदा गच्छति चंद्रमाः ॥
तदा निष्क्रामति श्रेष्ठं कमलं जलमध्यतः ॥ ३७ ॥

तन्मध्येऽगुष्ठमात्रस्तु पुरुषो दृश्यते जनैः ॥
सुस्नातैः श्रद्धयोपेतैस्ततस्तीर्थफलं लभेत् ॥ ३८ ॥
एतस्मात्कारणात्स्नात्वा विश्वामित्रो महामुनिः ॥
तच्चिह्नं वीक्षयामास महद्यत्नं समाश्रितः ॥ ॥ ३९ ॥
तस्यैवं वीक्षमाणस्य विश्वामित्रस्य धीमतः ॥
आनर्ताधिपतिस्तत्र प्राप्तो राजा बृहद्बलः ॥ ६.४५.४० ॥
अत्यंतं मृगयाश्रांतो हत्वा मृगगणान्बहून् ॥
ऋक्षांश्चैव वराहांश्च सारंगानथ संबरान् ॥ ४१ ॥
सिंहान्व्याघ्रान्वृकांश्चैव हिंसानारण्यचारिणः ॥
तथान्यानपि मध्याह्ने तेन मार्गेण संगतः ॥ ४२ ॥
अथापश्यदद्रुमोपांते विश्वामित्रं मुनीश्वरम् ॥
उपविष्टं कृतस्नानं वीक्षमाणं जलाशयम् ॥ ४३ ॥
ततस्तं प्रणिपत्योच्चैरवतीर्य तुरंगमात् ॥
श्रमार्तः सलिले तस्मिन्प्रविवेश नृपोत्तमः ॥ ४४ ॥
एतस्मिन्नंतरे तोयात्कमलं तद्विनिर्गतम् ॥
सहस्रपत्रसंजुष्टं द्वादशार्कसमप्रभम् ॥ ॥ ४५ ॥
तद्दृष्ट्वा स महीपालः पद्ममत्यद्भुतं महत् ॥
जग्राह कौतुकाविष्टः स्वयं सव्येन पाणिना ॥ ४६ ॥
स्पृष्टमात्रे ततस्तस्मिन्कमले द्विजसत्तमाः ॥
उत्थितः सुमहाञ्छब्दो विश्वं येन प्रपूरितम् ॥ ४७ ॥
तं शब्दं स महीपालः श्रुत्वा मूर्छामुपाविशत् ॥
पतितश्च जले तस्मिन्पद्मं चादर्शनं गतम् ॥ ४८ ॥
ततः कृच्छ्रेण महता कर्षितः सलिलाद्बहिः ॥
सेवकैर्दुःखशोकार्तैर्हाहेति प्रतिजल्पकैः ॥ ४९ ॥
ततस्तीरं समासाद्य कृच्छ्रात्प्राप्याथ चेतनाम् ॥
यावद्वीक्षयति स्वांगं तावत्कुष्ठं समागतम् ॥ ६.४५.५० ॥
ततो विषादमापन्नो दृष्ट्वा तादृङ्निजं वपुः ॥
शीर्णघ्राणांघ्रिहस्तं च घर्घरस्वरसंयुतम् ॥ ५१ ॥

अथ गत्वा मुनेः पार्श्वे विश्वामित्रस्य भूमिपः ॥
उवाच वचनं दीनं बाष्पगद्गदया गिरा ॥ ॥ ५२ ॥
भगवन्पश्य मे जातं यादृशं वपुरेव हि ॥
अकस्मादेव मग्नस्य सलिलेऽत्र विगर्हितम् ॥ ५३ ॥
तत्किं पानीयदोषो वा किं वा भूमेर्मुनी श्वर ॥
येनेदृक्सहसा यातं विकृतिं मे शरीरकम् ॥ ५४ ॥
॥ विश्वामित्र उवाच ॥ ॥
सावित्रं पद्ममेवैतद्यत्स्पृष्टं भूपते त्वया ॥
उच्छिष्टेन रविर्मध्ये स्वयं यस्य व्यवस्थितः ॥ ५५ ॥
यदा स्यात्कृत्तिकायोगः कार्तिके मासि पार्थिव ॥
शशांकस्य तदा चैतज्जायते पौष्करे जले ॥ ५६ ॥
तदिदं पुष्करं ज्येष्ठं भवान्यत्र श्रमातुरः ॥
प्रविष्टः कार्तिकी चाद्य कृत्तिकायोगसंयुता ॥ ५७ ॥
एतद्वीक्ष्य नरो ह्यत्र स्नानं कुर्याज्जलाशये ॥
श्रद्धया परया युक्तः स गच्छति परां गतिम् ॥५८॥
उच्छिष्टेन त्वया राजन्हरणाय हि केवलम् ॥
एतत्सरोरुहं स्पृष्टं तेनेदृक्संस्थितं फलम् ॥५९॥ ॥
॥ बृहद्बल उवाच ॥ ॥
कथं मे स्यान्मुनिश्रेष्ठ कुष्ठव्याधिपरिक्षयः ॥
तपसा नियमेनापि व्रतेनापि कृतेन वै ॥ ६.४५.६० ॥
॥ विश्वामित्र उवाच ॥ ॥
आराधय सहस्रांशुमस्मिन्क्षेत्रे महीपते ॥
ततः प्राप्स्यसि संसिद्धिं कुष्ठनाशसमुद्भवाम् ॥ ६१ ॥
तच्छ्रुत्वा स मुनेर्वाक्यं भूमिपालो बृहद्बलः ॥
तत्क्षणात्स्थापयामास सूर्यस्य प्रतिमां तदा ॥ ६२ ॥
अर्चयामास विधिवत्पुष्पधूपानुलेपनैः ॥
श्रद्धया परया युक्तो रविवारे विशेषतः॥ ॥ ६३ ॥
उपवासपरो भूत्वा रक्तचन्दनसंयुतैः ॥

पूजयन्रक्तपुष्पैश्च श्रद्धया परया युतः ॥ ६४ ॥

ततः संवत्सरस्यांते स बभूव महीपतिः ॥

कुष्ठ व्याधि विनिर्मुक्तो द्वादशार्कसमप्रभः ॥ ६५ ॥

ततः स्वं राज्यमासाद्य भुक्त्वा भोगाननेकशः ॥

देहांते दिननाथस्य संप्राप्तो मंदिरं तथा ॥ ६६ ॥

॥ ॥ सूत उवाच ॥ ॥

एवं तत्र द्विजश्रेष्ठा विश्वामित्रेण धीमता ॥

प्रकटं सर्वलोकस्य विहितं पुष्करत्रयम् ॥ ६७ ॥

यस्तत्र कार्तिके मासे कार्त्तिक्यां कृत्तिकासु च ॥

प्रकरोति नरः स्नानं ब्रह्मलोकं स गच्छति ॥ ६८ ॥

तथा यो भास्करं पश्येद्वृहद्वलप्रतिष्ठितम् ॥

वत्सरं रविवारेण यावत्कृत्वा क्षणं नरः ॥

स मुच्यते नरो रोगैर्यदि स्याद्रोगसंयुतः ॥ ६९ ॥

नीरोगो वा नरः सद्यो लभते मनसेप्सितम् ॥

निष्कामो मोक्षमाप्नोति प्रसादात्तीक्ष्णदीधितेः ॥ ६.४५.७० ॥

कार्त्तिक्यां कृत्तिकायोगे वृषोत्सर्गं करोति यः ॥

पुष्करेषु सुपुण्येषु सोऽश्वमेधफलं लभेत् ॥ ७१ ॥

एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥

यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ७२ ॥

एकतः सर्वतीर्थानि सर्वदानानि चैकतः ॥

एकतस्तु वृषोत्सर्गः कार्तिक्यां पुष्करेषु च ॥ ७३ ॥

यश्चैतच्छृणुयान्नित्यं पठेद्वा श्रद्धयान्वितः ॥

संप्राप्य सर्वकामान्वै ब्रह्मलोके महीयते ॥ ७४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये त्रिपुष्करमाहात्म्यवर्णनंनाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४६



॥ ऋषय ऊचुः ॥ ॥

अन्यानि तत्र तीर्थानि यानि संति महामते ॥

तानि कीर्तय सर्वाणि परं कौतूहलं हि नः ॥ १ ॥

॥ सूत उवाच ॥ ॥

तत्र सारस्वतं तीर्थमन्यदस्ति सुशोभनम् ॥

यत्र स्नातोऽतिमूकोऽपि भवेद्वाक्यविचक्षणः ॥ २ ॥

लभते चेप्सितान्कामान्मानुषान्दैविकानपि ॥

ब्रह्मलोकादिपर्यतांस्तथालोकान्द्विजोत्तमाः ॥ ३ ॥

पुरासीत्पार्थिवो ना्ना विख्यातो बलवर्धनः ॥

समुद्रवलयामुर्वी बुभुजे यो भुजार्जिताम्॥ ४ ॥

तस्य पुत्रः समुत्पन्नः सर्वलक्षणसंयुतः ॥

तस्य नाम पिता चक्रे संप्राप्ते द्वादशेऽहनि ॥

अम्बुवीचिरिति स्पष्टं समाहूय द्विजोत्तमान् ॥ ५ ॥

ततः स ववृधे बालो लालितस्तेन भूभुजा ॥

मूकभावं समापन्नो न शक्नोति प्रजल्पितुम् ॥ ६ ॥

ततोऽस्य सप्तमे वर्षे संप्राप्ते बलवर्धनः ॥

पंचत्वं समनुप्राप्तः संग्रामे शत्रुभिर्हतः ॥ ७ ॥

ततो मूकोऽपि बालोपि मंत्रिभिस्तस्य भूपतेः ॥

स सुतः स्थापितो राज्ये अभावेऽन्यसुतस्य च ॥ ८ ॥

एवं तस्य महीपस्य राज्यस्थस्य जडात्मनः ॥

बालत्वे वर्तमानस्य राज्यं विप्लवमध्यगात् ॥ ९ ॥

ततो जलचरन्यायः संप्रवृत्तो महीतले ॥

पीड्यंते सर्वलोकास्तु दुर्बला बलवत्तरैः ॥ ६.४६.१० ॥

ततस्ते मंत्रिणः प्रोचुर्वसिष्ठं स्वपुरोहितम् ॥

वचोऽर्थं नृपतेरस्य कुरूपायं महामुने ॥ ११ ॥

पश्य कृत्स्नं धरापृष्ठे शून्यतां समुपस्थितम् ॥

जडत्वान्नृपतेरस्य तस्मात्कुरु यथोचितम् ॥ ॥ १२ ॥

ततस्तु सुचिरं ध्यात्वा दीनान्प्रोवाच मंत्रिणः ॥

सर्वानार्तिसमोपेताञ्छृण्वतस्तस्य भूपतेः ॥ १३ ॥

अस्ति सारस्वतं तीर्थं सर्वकामप्रदं नृणाम् ॥

हाटकेश्वरजे क्षेत्रे तत्रायं स्नातु भूपतिः ॥ १४ ॥

अथ तद्वचनात्सद्यः स गत्वा तत्र सत्वरम् ॥

स्नानात्तीर्थेऽथ संजातस्तत्क्षणात्स कल स्वनः ॥ १५ ॥

तत्प्रभावं सरस्वत्याः स विज्ञाय महीपतिः ॥

श्रद्धया परया युक्तो ध्यायमानः सरस्वतीम् ॥ १६ ॥

ततस्तूर्णं समादाय मृत्तिकां स नदीतटात् ॥

चकार भारतीं देवीं स्वयमेव चतुर्भुजाम् ॥ १७ ॥

दधतीं दक्षिणे हस्ते कमलं सुमनोहरम् ॥

अक्षमालां तथान्यस्मिञ्जिततारक वर्चसम् ॥ १८ ॥

कमण्डलुं तथान्यस्मिन्दिव्यवारिप्रपूरितम् ॥

पुस्तकं च तथा वामे सर्वविद्यासमुद्भवम् ॥ १९ ॥

ततो मेध्ये शिलापृष्ठे तां निवेश्य प्रयत्नतः ॥

पूजयामास सद्भक्त्या धूपमाल्पानुलेपनैः ॥ ६.४६.२० ॥

चकार च स्तुतिं पश्चाच्छ्रद्धापूतेन चेतसा ॥

तदग्रे प्रयतो भूत्वा स्वरेण महता नृपः ॥ २१ ॥

सदसद्देवि यत्किञ्चिद्बन्धमोक्षात्मकं पदम् ॥

तत्सर्वं गुप्तया व्याप्तं त्वया काष्ठं यथाग्निना ॥ २२ ॥

सर्वस्य सिद्धिरूपेण त्वं जनस्य हृदि स्थिता ॥

वाचारूपेण जिह्वायां ज्योतीरूपेण चक्षुषि ॥ २३ ॥

भक्तिग्राह्यासि देवेशि त्वमेका भुवनत्रये ॥

शरणागतदीनार्तपरित्राणपरायणे ॥२४॥

त्वं कीर्तिस्त्वं धृतिर्मेधा त्वं भक्तिस्त्वं प्रभा स्मृता ॥

त्वं निद्रा त्वं क्षुधा कीर्तिः सर्वभूतनिवासिनी ॥ २५ ॥

तुष्टिः पुष्टिर्वपुः प्रीतिः स्वधा स्वाहा विभावरी ॥

रतिः प्रीतिः क्षितिर्गंगा सत्यं धर्मो मनस्विनी ॥ २६ ॥

लज्जा शांतिः स्मृतिर्दक्षा क्षमा गौरी च रोहिणी ॥

सिनीवाली कुहू राका देवमाता दितिस्तथा ॥ २७ ॥

ब्रह्माणी विनता लक्ष्मीः कद्रूर्दाक्षायणी शिवा ॥

गायत्री चाथ सावित्री कृषिर्वृष्टिः श्रुतिः कला ॥ २८ ॥

बलानाडी तुष्टिकाष्ठा रसना च सरस्वती ॥

यत्किञ्चित्त्रिषु लोकेषु बहुत्वाद्यन्न कीर्तितम् ॥ २९ ॥

इंगितं नैंगितं तच्च तद्रूपं ते सुरेश्वरि॥

गन्धर्वाः किन्नरा देवाः सिद्धविद्याधरोरगाः ॥ ६.४६.३० ॥

यक्षगुह्यकभूताश्च दैत्या ये च विनायकाः ॥

त्वत्प्रसादेन ते सर्वे संसिद्धिं परमां गताः ॥ ३१ ॥

तथान्येऽपि बहुत्वाद्ये न मया परिकीर्तिताः ॥

आराधितास्तु कृच्छ्रेण पूजिताश्च सुविस्तरैः ॥

हरंतु देवताः पापमन्ये त्वं कीर्तिताऽपि च ॥ ३२ ॥

एवं स्तुता सा देवेशी भूभुजा तेन भारती ॥

ययौ प्रत्यक्षतां तूर्णं प्राह चेदं सुहर्षिता ॥ ३३ ॥

॥ सरस्वत्युवाच ॥ ॥

स्तोत्रेणानेन भूपाल भक्त्या सुस्थिरया सदा ॥

परितुष्टास्मि तेनाशु वरं वृणु यथेप्सितम्॥ ३४ ॥

॥ राजोवाच ॥ ॥

अद्यप्रभृति मद्वाक्यात्त्वया स्थेयमसंशयम् ॥

अत्रार्चायां त्रिलोकेस्मि न्यावत्कीर्तिर्मम स्थिरा ॥ ३५ ॥

यस्त्वामाराधयेत्सम्यगत्रस्थां मन्निमित्ततः ॥

भक्त्यानुरूपमेवाशु तस्मै देयं त्वया हि तत् ॥ ३६ ॥

॥ सरस्वत्युवाच॥

यो मामत्र स्थितां नित्यं स्नात्वाऽत्र सलिले शुभे॥

अष्टम्यां च चतुर्दश्यां पूजयिष्यति मानवः ॥ ३७ ॥

तस्याहं वांछितान्कामान्संप्रदास्यामि पार्थिव ॥

॥ सूत उवाच ॥ ॥

एवं तत्र स्थिता देवी स्वयमेव सरस्वती ॥ ३८॥

ततःप्रभृति लोकानां हिताय परमेश्वरी ॥

अष्टम्यां च चतुर्दश्यामुपवासपरायणः ॥ ३९ ॥

यस्तां पूजयते मर्त्यः श्वेतपुष्पानुलेपनैः ॥

स स्याद्वाग्ग्मी सुमेधावी सदा जन्मनिजन्मनि ॥६.४६.४०॥

सरस्वत्याः प्रसादेन जायमानः पुनःपुनः ॥

अन्वयेऽपि न तस्यैव कश्चिन्मूर्खः प्रजायते ॥ ४१ ॥

यो धर्मश्रवणं तस्याः पुरतः कुरुते नरः॥

स नूनं वसति स्वर्गे तत्प्रभावाद्युगत्रयम्॥४२॥

विद्यादानं नरो यश्च तस्या ह्यायतने सदा ॥

करोति श्रद्धया युक्तः सोऽश्वमेधफलं लभेत् ॥४३॥

यो यच्छति द्विजेन्द्राय धर्मशास्त्रसमुद्भवम्॥

पुस्तकं वाजिमेधस्य स समग्रं फलं लभेत् ॥ ४४ ॥

यो वेदाध्ययनं तस्याः करोति पुरतः स्थितः ॥

सोऽग्निष्टोमस्य यज्ञस्य कृत्स्नं फलमवाप्नुयात् ॥ ४५८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सरस्वती तीर्थमाहात्म्यवर्णनंनाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४७



॥ ऋषय ऊचुः ॥ ॥

महाकालस्य माहात्म्यं विस्तरेण महामते ॥

अस्माकं सूतज ब्रूहि सर्वं वेत्ति यतो भवान् ॥ १ ॥

॥सूत उवाच ॥ ॥

आसीत्पूर्वं महीपाल इक्ष्वाकुकुलनन्दनः ॥

रुद्रसेन इति ख्यातः सर्वशत्रुनिषूदनः ॥ २ ॥

समुद्र इव गांभीर्ये सौम्यत्वे शशिसंनिभः ॥

वीर्ये यथा सहस्राक्षो रूपे कन्दर्पसन्निभः ॥ ३ ॥

तस्य कांतीति विख्याता पुरी सर्वगुणान्विता ॥

राजधान्यभवच्छ्रेष्ठा प्रोच्चप्राकारतोरणा ॥ ४ ॥

तथैवासीत्प्रिया तस्य भार्या परमसंमता ॥

ख्याता पद्मवतीनाम रूपौदार्य गुणान्विता ॥ ५ ॥

स तया सहितो राजा वैशाख्या दिवसे सदा ॥

समभ्येति निजस्थानात्सैन्येनाल्पेन संवृतः ॥ ६ ॥

चमत्कारपुरे क्षेत्रे पीठे तत्र द्विजोत्तमाः ॥

महाकालस्य देवस्य पुरतो रात्रिजागरम् ॥

करोति श्रद्धया युक्तः सभार्यः स महीपतिः ॥ ७ ॥

उपवासपरो भूत्वा ध्यायमानो महेश्वरम् ॥

गीतवाद्येन हृद्येन नृत्येन द्विजसत्तमाः ॥

धर्माख्यानेन विप्राणां वेदाध्ययनविस्तरैः ॥ ८ ॥

ततः प्रातः समुत्थाय स्नात्वा धौतांबरः शुचिः ॥

ददौ दानानि विप्रेभ्यस्तपस्विभ्यो विशेषतः ॥ ९ ॥

दीनांधकृपणेभ्यश्च तथान्येभ्यः सहस्रशः ॥

वर्षेवर्षे सदैवं स समभ्येत्य महीपतिः ॥

वैशाख्यां जागरं तस्य देवस्य पुरतोऽकरोत् ॥ ६.४७.१० ॥

यथायथा स भूपालः कुरुते रात्रिजागरम् ॥

महाकालाग्रतस्तस्य तथा वृद्धिः प्रजायते ॥ ११ ॥

शत्रवो विलयं यांति लक्ष्मीर्वृद्धिं प्रगच्छति ॥

एकदा स समायातस्तत्र यावन्महीपतिः ॥ १२ ॥

तत्रैव दिवसे तावन्महाकालस्य चाग्रतः ॥

अपश्यद्ब्राह्मणश्रेष्ठान्नानादिग्भ्यः समागतान् ॥ १३ ॥

वेदाध्ययनसंपन्नान्व्रतनिष्ठापरायणान् ॥

एके तत्र कथाश्चक्रुः सुपुण्या ब्राह्मणोत्तमाः ॥ १४ ॥

राजर्षीणां पुराणानां देवर्षीणां तथा परे ॥

तीर्थानां च तथा चान्ये ब्रह्मर्षीणां तथा परे ॥

यज्ञानां सागराणां च द्वीपानां च मनोहराः ॥ १५ ॥

अथ तान्पृथिवीपालः स प्रणम्य यथाक्रमम् ॥

उपविष्टः सभामध्ये तैः सर्वैश्चाभिनंदितः ॥ १६ ॥

कस्मिंश्चिदथ संप्राप्ते कथांते ते मुनीश्वराः ॥

पप्रच्छुर्भूमिपालं तु कौतूहलसमन्विताः ॥ १७ ॥

वैशाखीदिवसे राजंस्त्वं सदाभ्येत्य दूरतः ॥

वर्षेवर्षेऽस्य देवस्य पुरतो रात्रिजागरम् ॥ १८ ॥

प्रकरोषि प्रयत्नेन त्यक्त्वान्याः सकलाः क्रियाः ॥

स्नानदानादिका याश्च निर्दिष्टाः शास्त्रचिंतकैः ॥ १९ ॥

न ते यदि रहस्यं स्यात्तदाऽशेषं प्रकीर्तय ॥

नूनं त्वं वेत्सि तत्सर्वं यत्फलं रात्रिजागरे ॥ ६.४७.२० ॥

॥ राजोवाच ॥ ॥

रहस्यं परमं चैव यत्पृष्टोऽहं द्विजोत्तमाः ॥

युष्माभिः कीर्तयिष्यामि तथाप्यखिलमेव हि ॥ २१०

अहमासं वणिग्जात्या पुरा वै वैदिशे पुरे ॥

निर्धनो बंधुभिर्मुक्तः परिभूतः पदेपदे ॥ २२ ॥

कस्यचित्त्वथ कालस्य भगवान्पाकशासनः ॥

वैदिशे नाकरोद्वृष्टिं सप्त वर्षाणि पंच च ॥ २३ ॥

ततो वृष्टिनिरोधेन सर्वे लोकाः क्षुधार्दिताः ॥

अन्नाभावान्मृताः केचित्केचिद्देशांतरे गताः ॥ २४ ॥

ततोऽहं स्वां समादाय पत्नीं क्षुत्क्षामगात्रिकाम् ॥

अश्रुपूर्णमुखीं दीनां प्रस्खलन्तीं पदेपदे ॥२५॥

सौराष्ट्रं मनसि ध्यात्वा प्रस्थितस्तदनन्तरम् ॥

सुभिक्षं लोकतः श्रुत्वा जीवनाय द्विजोत्तमाः ॥२६॥

क्रमेण गच्छमानोऽथ भिक्षान्नकृतभोजनः ॥

आनर्तविषयं प्राप्तश्चमत्कारपुरांतिके ॥ २७ ॥

तत्र रम्यं मया दृष्टं पद्मिनीखण्डमंडितम् ॥

सरः स्वच्छोदकापूर्णं जलपक्षिभिरावृतम् ॥ २८ ॥

ततोऽहं तत्समासाद्य स्नातः शीतेन वारिणा ॥

क्षुधार्तश्च तृषार्तश्च श्रमार्तश्च विशेषतः ॥ २९ ॥

अथाहं भार्यया प्रोक्तो गृहाणेश जलाशयात् ॥

जलजानि क्रयार्थाय येन स्यादद्य भोजनम् ॥ ६.४७.३० ॥

एतत्संदृश्यते दूरात्पुरंदरपुरोपमम् ॥

पुरश्रेष्ठं समासाद्य विक्रयं कर्तुमर्हसि ॥ ॥३॥।

ततो मया गृहीतानि पद्मानि द्विजसत्तमाः ॥

विक्रयार्थं प्रभूतानि वाच्छमानेन भोजनम् ॥३२॥

चमत्कारपुरं प्राप्य ततोऽहं द्विजसत्तमाः ॥

भ्रांतस्त्रिकेषु सर्वेषु चत्वरेषु गृहेषु च ॥ ३३ ॥

न कश्चित्प्रतिगृह्णाति तानि पद्मानि मानवः ॥

मम भाग्यवशाल्लोको जातः क्रयपराङ्मुखः ॥३४॥

अथ क्षुत्क्षामकण्ठस्य श्रांतस्य मम भास्करः ॥

अस्ताचलमनुप्राप्तः संध्याकालस्ततोऽभवत् ॥ ३५ ॥

ततो वैराग्यमापन्नः सुप्तोऽहं भग्नमंदिरे ॥

तानि पद्मानि भूपृष्ठे निधाय सह भार्यया। ३६ ॥

अथार्धरात्रे संप्राप्ते श्रुतो गीतध्वनिर्मया ॥

ततश्च चिंतितं चित्ते जागरोऽयमसंशयम् ॥३७॥

तस्माद्गच्छामि चेत्कश्चित्पद्मान्येतानि मे नरः ॥

मूल्येन प्रतिगृह्णाति भोजनं जायते ततः ॥ ३८ ॥

एवं विनिश्चयं कृत्वा पद्मान्यादाय सत्वरम्॥

सभार्यः प्रस्थितस्तत्र यत्र गीतस्य निःस्वनः ॥ ३९ ॥

ततश्चायतने तस्मिन्प्राप्तोऽहं मुनिपुंगवाः ॥

अपश्यं देवदेवेशं महाकालं प्रपूजितम् ॥

अग्रस्थितैर्द्विजश्रेष्ठैर्जपगीतपरायणैः ॥ ६.४७.४० ॥

एके नृत्यं प्रकुर्वंति गीतमन्ये जपं परे ॥

अन्ये होमं द्विजश्रेष्ठा धर्माख्यानमथापरे ॥ ४१ ॥

ततः कश्चिन्मया पृष्टः क्रियते जागरोऽत्र किम् ॥

क एते जागरासक्ता लोकाः कीर्तय मे द्रुतम् ॥ ४२ ॥

तेनोक्तमेष देवस्य महाकालस्य जागरः ॥

क्रियते ब्राह्मणैर्भक्त्या उपवासपरायणैः ॥ ४३ ॥

अद्य पुण्यतिथिर्नाम वैशाखी पुण्यदा परा ॥

यस्यामस्य पुरो भक्त्या नरः कुर्यात्प्रजागरम् ॥

महाकालस्य देवस्य सौख्यं प्राप्नोत्यसंशयम् ॥ ४४ ॥

संति पद्मानि मे यच्छ मूल्यमादाय भद्रक ॥

भोजनार्थमहं दद्मि कलधौतपलत्रयम् ॥ ४५ ॥

ततोऽवधारितं चित्ते मया ब्राह्मणसत्तमाः ॥

पूजयामि महाकालं पद्मैरेतैः सुरेश्वरम् ॥ ४६ ॥

न मया सुकृतं किंचिदन्यदेहांतरे कृतम् ॥

नियतं तेन संभूत इत्थंभूतोऽस्मि दुर्गतः ॥ ४७ ॥

परं क्षुत्क्षामकंठेयं भार्या मे प्रियवादिनी ॥

अन्नाभावान्न संदेहः प्रातर्यास्यति संक्षयम् ॥ ४८ ॥

एवं चिंतयमानस्य मम सा दयिता ततः ॥

प्रोवाच मधुरं वाक्यं विनयावनता स्थिता ॥४९॥

मा नाथ कुरु पद्मानां विक्रयं धनलोभतः ॥

कुरुष्व च हितं वाक्यं यत्ते वक्ष्यामि सांप्रतम् ॥ ६.४७.५० ॥

उपवासो बलाज्जातः सस्याभावादसंशयम् ॥

अस्माकं जागरं चापि भविष्यति बुभुक्षया ॥ ५१ ॥

तत्रोभाभ्यां कृतं स्नानं दिवा सरसि शोभने ॥

घर्मार्त्ताभ्यां श्रमार्त्ताभ्यां कृतदेवार्चनं तथा ॥५२॥

तस्माद्देवं महाकालं पूजयामोऽधुना वयम् ॥

पद्मैरेतैः परं श्रेय आवयोर्येन जायते ॥ ५३ ॥

॥ राजोवाच ॥ ॥

उभाभ्यामथ हृष्टाभ्यां पूजितोऽयं महेश्वरः ॥

तैः पद्मैः सत्त्वमास्थाय कृत्वा पूजां द्विजोत्तमाः ॥ ५४ ॥

क्षुत्पीडया समायाता नैव निद्रा कथंचन ॥

स्वल्पापि मंदिरे चात्र स्थितयोर्हरसन्निधौ ॥५५॥

ततः प्रभातसमये प्रोद्गते रविमंडले ॥

मृतोऽहं क्षुधयाविष्टः स्थानेऽत्रैव द्विजोत्तमाः ॥ ५६ ॥

अथ सा दयिता मह्यं तदादाय कलेवरम्॥

हर्षेण महताविष्टा प्रविष्टा हव्यवाहनम् ॥ ५७ ॥

तत्प्रभावादहं जातः कांतीनाथो महीपतिः ॥

दशार्णाधिपतेः कन्या सापि जातिस्मरा सती ॥ ५८ ॥

ततः स्वयंवरं प्राप्ता मां विज्ञाय निजं पतिम् ॥

मयापि सैव विज्ञाय पूर्वपत्नी समाहृता ॥ ५९ ॥

एतस्मात्कारणादस्य महाकालस्य जागरम् ॥

वर्षेवर्षे च वैशाख्यां करोमि द्विजसत्तमाः ॥ ६.४७.६० ॥

अनया प्रियया सार्धं पुष्पधूपानुलेपनैः ॥

पूजयित्वा महाकालं सत्यमेतन्मयोदितम् ॥ ६१ ॥

कृतो विप्रा मया त्वेष स तदा रात्रिजागरः ॥

यथाप्येतत्फलं जातं देवस्यास्य प्रभावतः ॥ ६२ ॥

अधुना श्रद्धया युक्तो यथोक्तविधिना ततः ॥

यत्करोमि न जानामि किं मे संयच्छते फलम् ॥ ६३ ॥

एतद्वः सर्वमाख्यातं मया सत्यं द्विजोत्तमाः ॥

येन सत्येन तेनैष महाकालः प्रसीदतु ॥ ६४ ॥

॥ सूत उवाच ॥ ॥

एतच्छ्रुत्वा द्विजश्रेष्ठा विस्मयोत्फुल्ललोचनाः ॥

प्रचक्रुर्जपतेस्तस्य साधुवादाननेकशः ॥ ६५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

सत्यमुक्तं महीपाल त्वयैतदखिलं वचः ॥

महाकालप्रसादेन न किंचिद्दुर्लभं भुवि ॥ ६६ ॥

तस्माद्विशेषतः सर्वे वर्षेवर्षे वयं नृप ॥

करिष्यामोऽस्य देवस्य श्रद्धया रात्रिजागरम् ॥ ६७ ॥

ततः स पार्थिवस्ते च सर्व एव द्विजातयः ॥

प्रचक्रुर्जागरं तस्य महाकालस्य संनिधौ ॥६८॥

विशेषाद्धर्षसंयुक्ता विविधैर्गीतवादनैः ॥

धर्माख्यानैश्च नृत्यैश्च वेदोच्चारैः पृथग्विधैः ॥

तदारभ्य नृपाः सर्वे प्रचक्रुर्विस्मयान्विताः ॥ ६९ ॥

ततः प्रभाते विमले समुत्थाय स भूपतिः ॥

पूजयित्वा महाकालं तांश्च सर्वान्द्विजोत्तमान् ॥

अनुज्ञाप्य ययौ हृष्टः ससैन्यः स्वपुरं प्रति ॥ ६.४७.७० ॥

ततः कालेन संप्राप्य देहान्तं स महीपतिः ॥

संप्राप्तः परमं स्थानं जरामरणवर्जितम् ॥ ७१ ॥

एतद्वः सर्वमाख्यातं महाकालसमुद्भवम् ॥

माहात्म्यं ब्राह्मण श्रेष्ठाः सर्वपातकनाशनम् ॥ ७२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये महाकालेश्वरमाहात्म्यवर्णनंनाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०४८

https://sa.wikisource.org/s/fif
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्रैवास्य समुद्देशे हरिश्चंद्रस्य भूपतेः ॥

आश्रमो ऽस्ति सुविख्यातो नानाद्रुमसमावृतः ॥ १ ॥

यत्र तेन तपस्तप्तं संस्थाप्योमामहेश्वरौ ॥

यच्छता विविधं दानं ब्राह्मणेभ्योऽभिवांछितम् ॥ २ ॥

आसीद्राजा हरिश्चंद्रस्त्रिशंकुतनयः पुरा ॥

अयोध्याधिपतिः श्रीमान्सूर्यवंशसमुद्भवः ॥ ३ ॥

न दुर्भिक्षं न च व्याधिर्नाकालमरणं ध्रुवम् ॥

तस्मिञ्छासति धर्मेण न च चौरकृतं भयम् ॥ ४ ॥

कालवर्षी सदा मेघः सस्यानि प्रचुराणि च ॥

रसवंति च तोयानि सर्वर्तुफलिता द्रुमाः ॥ ५ ॥२

दंडस्तत्राभवद्वास्तौ गृहरोधोऽक्षदेवने ॥

एको दोषाकरश्चंद्रः प्रियदोषाश्च कौशिकाः ॥ ६ ॥

स्नेहक्षयश्च दीपेषु विवाहे च करग्रहः ॥

वृत्तभंगस्तथा गद्ये दानोत्थितिर्गजानने ॥ ७ ॥

तस्यैवं गुणयुक्तस्य सार्वभौमस्य भूपतेः ॥

एक एव महानासीद्दोषः पुत्रविवर्जितः ॥ ८ ॥

ततः पुत्रकृते गत्वा चकार सुमहत्तपः ॥

चमत्कारपुरे क्षेत्रे लिंगं संस्थाप्य भक्तितः ॥९॥

पंचाग्निसाधको ग्रीष्मे वर्षास्वाकाशसंस्थितः ॥

जलाश्रयश्च हेमंते स ध्यायति महेश्वरम् ॥ ६.४८.१० ॥

ततो वर्षसहस्रांते तस्य तुष्टो महेश्वरः ॥

प्रत्यक्षोऽभूत्समं गौर्या गणसंघैः समावृतः ॥ ११ ॥

उवाच वरदोऽस्मीति प्रार्थयस्व यथेप्सितम् ॥

अहं ते संप्रदास्यामि यद्यपि स्यात्सुदुर्लभम्॥।२॥

ततस्तं प्रणिपत्योच्चैः स्तुत्वा सूक्तैः श्रुतैरपि ॥

प्रोवाच विनयोपेतः कृतांजलिपुटः स्थितः ॥ १३ ॥

त्वत्प्रसादात्सुरश्रेष्ठ यत्किंचिद्धरणीतले ॥

तदस्ति मे गृहे सर्वं वांछितं स्वेन चेतसा ॥ १४ ॥

सुरूपाणि कलत्राणि राज्यं निहतकंटकम् ॥

शरीरं रोगनिर्मुक्तं संख्याहीनं तथा धनम्॥।५॥

एकं मे सुमहद्दुःखं यदपत्यं न विद्यते ॥

तस्माद्देहि सुतं देव प्रसन्नो यदि शंकर ॥।६॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

अचिरेण नृपश्रेष्ठ पुत्रस्तव भविष्यति ॥

मत्प्रसादान्न संदेहस्तस्माद्गच्छ द्रुतं गृहम्॥।७॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे गौरी कोपसंरक्तलोचना ॥

भर्त्सयित्वा महादेवं ततः प्रोवाच तं नृपम् ॥।८॥

यस्मात्त्वया महामूर्ख न प्रणामः कृतो मम ॥

हरादनंतरं तस्माच्छापं दास्याम्यहं तव ॥ १९ ॥

तव संलप्स्यते पुत्रो यथोक्तः शूलपाणिना ॥

परं तन्मृत्युजं दुःखं त्वं शिशुत्वेपि लप्स्यसे ॥ ६.४८.२० ॥

एवमुक्त्वा भगवती सार्धं देवेन शंभुना ॥

अदर्शनं ययौ पश्चात्तथान्यैरपि पार्श्वगैः॥ २१ ॥

सोऽपि राजा वरं लब्ध्वा शापं च तदनंतरम् ॥

न जगाम गृहं भूयश्चकार सुमहत्तपः ॥ २२ ॥

एकासनं समारूढौ कृत्वा गौरी महेश्वरौ ॥

ततश्चाराधयामास समं पुष्पानुलेपनैः ॥ २३ ॥

विशेषेण ददौ दानं ब्राह्मणेभ्यो महीपतिः ॥

भूमिशायी प्रशांतात्मा षष्ठकालकृताशनः ॥ २४ ॥

ततः संवत्सरस्यांते भगवान्वृषभध्वजः ॥

पार्वत्या सहितो भूयस्तस्य संदर्शनं गतः ॥ २५ ॥

ततः स नृपतिस्ताभ्यां युगपद्विधिपूर्वकम्॥

कृत्वा नतिं ततो वाक्यं विनयादिदमब्रवीत् ॥ २६ ॥

पुरा देवि मयानंदपूरे व्याकुल चेतसा ॥

न नता त्वं न मे कोपं तस्मात्त्वं कर्तुमर्हसि ॥ २७ ॥

देहार्धधारिणी देवि सदा त्वं शूलधारिणः ॥

तदैकस्मिन्नते कस्मान्न नता त्वं वदस्व मे ॥ २८ ॥

यस्तं नमति देवेशं तेन त्वं सर्वदा नता ॥

नतायां त्वयि देवेशो नतः स्यादिति मे मतिः ५२९ ॥

तथापि च पृथक्त्वेन मया त्वं तु नता सह ॥

एकासनं समारूढा तत्समं देवि पूजिता ॥ ६.४८.३० ॥

तस्मात्कुरु प्रसादं मे यः पुरोक्तः पुरारिणा ॥

सोस्तु वै सफलः सद्यो वरः पुत्रकृते मम ॥ ३१ ॥

यया वंशधरः पुत्रो दीर्घायुर्दृढविक्रमः ॥

त्वत्प्रसादाद्भवेद्देवि तथा त्वं कर्तुमर्हसि ॥ ३२ ॥

॥ श्रीदेव्युवाच ॥ ॥

नान्यथा मे वचो राजञ्जायतेऽत्र कथंचन ॥

तस्माद्बालोऽपि ते पुत्रः पंचत्वं समुपैष्यति ॥ ३३ ॥

दर्शयित्वा तु ते दुःखमल्पमृत्युसमुद्भवम् ॥

भूयः संप्राप्स्यति प्राणानचिरान्मे प्रसादतः ॥ ३४ ॥

भविष्यति च दीर्घायुस्ततो वंशधरो जयी ॥

सार्वभौमप्रधानश्च दानी यज्वा च धर्मवित् ॥ ॥ ३५ ॥

तस्माद्राजन्गृहं गत्वा कुरु राज्यमभीप्सितम् ॥

संप्राप्स्यसि सुतं श्रेष्ठं यादृशं कीर्तितं मया ॥ ३६॥

अन्योऽपि मानवो यो मां रूपेणा नेनसंस्थिताम् ॥

पूजयिष्यति चात्रैव समं देवेन शंभुना ॥ ३७ ॥

तस्याहं संप्रदास्यामि पुत्रान्हृदयवांछितान् ॥

तथान्यदपि यत्किंचिदचिरान्नात्र संशयः ॥ ३८ ॥

श्रीमहादेव उवाच ॥ ॥

भूय एव नृपश्रेष्ठ मत्तः प्रार्थय वांछितम् ॥

न वृथा दर्शनं मे स्यात्सत्यमेतद्ब्रवीमि ते ॥ ३९ ॥

॥ हरिश्चंद्र उवाच ॥ ॥

कृतकृत्योस्मि देवेश सर्वमस्ति गृहे मम ॥

पुत्रं त्यक्त्वा त्वया सोऽपि दत्तो वंशधरो जयी ॥ ६.४८.४० ॥

तथापि न तवादेशो व्यर्थः कार्यः कथंचन ॥

एतस्मात्कारणाद्देव याचयिष्यामि वांछितम् ॥ ४१ ॥

राजसूयकृतेऽस्माकं सदा बुद्धिः प्रवर्तते ॥

निषेधयंति मां सर्वे मन्त्रिणः सुहृदस्तदा ॥ ४२ ॥

सर्वैस्तैर्जायते यज्ञः पार्थिवैः करदीकृतैः ॥

युद्धं विना करं तेऽपि न यच्छन्ति यतो विभो ॥ ४३ ॥

ततो युद्धार्थिनं मां ते वारयंति हितैषिणः ॥

कृतोत्साहं मखप्राप्तौ नीतिमार्गसमाश्रिताः ॥ ४४ ॥

तस्मात्तव प्रसादेन राजसूयो भवेन्मखः ॥

अविघ्नः सिद्धिमायातु मम नान्यद्वृणोम्यहम् ॥४५॥

॥ सूत उवाच ॥ ॥

स तथेति प्रतिज्ञाय जगामादर्शन हरः ॥

सोऽपि लब्धवरो भूपः स्वमेव भवनं गतः ॥ ४६ ॥

एवं तेन नरेन्द्रेण पूर्वं तत्र विनिर्मितौ ॥

उमामहेश्वरौ पश्चान्निर्मिताववितरैरपि ॥ ४७ ॥

यस्ताभ्यां कुरुते पूजां संप्राप्ते पंचमी दिने ॥

फलैः सर्वेषु गात्रेषु यावत्संवत्सरं द्विजाः ॥

सुतं प्राप्नोति सोऽभीष्टं स्ववंशोद्धरणक्षमम् ॥ ४८ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्य उमामहेश्वरोत्पत्तिमाहात्म्यवर्णनंनामाष्टाचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५०



एवं तस्य नरेन्द्रस्य व्याघ्ररूपस्य कानने ॥

जगाम सुमहान्कालो निघ्नतो विविधान्द्विज ॥ १ ॥

कस्यचित्त्वथ कालस्य तस्मिन्देशे द्विजोत्तमाः ॥

आ यातं गोकुलं रम्यं गोपगोपीसमाकुलम् ॥ २ ॥

तत्रास्ति नन्दिनीनाम धेनुः पीनपयोधरा ॥

विस्तीर्णजघनाभोगा हंसवर्णा घटस्रवा ॥ ३ ॥

अथ सा निजयूथस्य सदाग्रे तृणवांछया ॥

भ्रममाणा निकुञ्जांते लिंगं देवस्य शूलिनः ॥ ४ ॥

अपश्यत्तेजसा युक्तं स्वयमेव व्यवस्थितम् ॥

द्वादशार्कप्रतीकाशं चित्ताह्लादकरं परम् ॥ ५ ॥

ततस्तस्योपरि स्थित्वा सुस्राव सुमहत्पयः ॥

श्रद्धया परया युक्ता तस्य स्नानकृते द्विजाः ॥ ६ ॥

एवं तां स्नपनं तस्य सदा लिंगस्य कुर्वतीम् ॥

न जानाति जनः कश्चिद्वने वृक्षसमाकुले ॥ ७ ॥

अन्यस्मिन्दिवसे तत्र स्थाने व्याघ्रः समागतः ॥

तीक्ष्णदंष्ट्रो महाकायः सर्वजन्तुभयावहः ॥ ८ ॥

अथ सा तत्र आयाता पतिता दृष्टिगोचरे ॥

नन्दिनी द्वीपिनस्तस्य दैवयोगाद्द्विजोत्तमाः ॥ ९ ॥

ततः सा गोकुले बद्धं स्मृत्वा स्वं लघुवत्सकम् ॥

अतृणादं पयोवृत्तिं करुणं पर्यदेवयत् ॥ ६.५०.१० ॥

अद्यैकाहं च संप्राप्ता कानने जनवर्जिते ॥

पुत्रं बालं परित्यज्य गोपैर्गोष्ठे नियंत्रितम् ॥ ११ ॥

येन सत्येन भक्त्याद्य स्नपनायाहमागता ॥

शिवस्य तेन सत्येन भूयान्मे सुतसंगमः ॥ १२ ॥

एवं सा करुणं यावन्नन्दिनी विलपत्यलम्॥
तावद्व्याघ्रः स्मितं कृत्वा प्रोवाच परुषाक्षरम् ॥ १३ ॥
॥ व्याघ्र उवाच ॥ ॥
प्रलापान्किं मुधा धेनो करोषि वशगा मम ॥
तस्मादिष्टतमं देवं स्मर स्वर्गकृते शुभे ॥ १४ ॥
॥ धेनुरुवाच ॥ ॥
नाहमात्मकृते व्याघ्र विलपामि सुदुः खिता ॥
शिवार्चनकृते मृत्युर्मम जातः शुभावहः ॥ १५ ॥
वत्सो मे गोकुले बद्धः स्मरमाणो ममागमम् ॥
सन्तिष्ठते पयोवृत्तिः कथं स्यात्स मया विना ॥ १६ ॥
एतस्मात्कारणाद्व्याघ्र विलपामि सुदुःखिता ॥
न चात्मजीवनार्थाय सत्येनात्मानमालभे ॥ १७ ॥
तस्मान्मुंच महाव्याघ्र मां सद्यः सुतवत्सलाम् ॥
सखीजनस्य तं दत्त्वा समागच्छामि तेंतिकम् ॥ १८ ॥
॥ व्याघ्र उवाच ॥ ॥
कथं मृत्युमुखं प्राप्य निष्क्रम्य च कथञ्चन ॥
भूयस्तत्रैव निर्यासि तस्मात्त्वां भक्षयाम्यहम् ॥ १९ ॥
॥ नन्दिन्युवाच ॥ ॥
शपथैरागमिष्यामि यैः पुनर्व्याघ्र तेंऽतिकम् ॥
तानाकर्णय मे वक्त्रात्ततो युक्तं समाचर ॥ ६.७०.२० ॥
यत्पापं ब्रह्महत्यायां मातापित्रोश्च वंचने ॥
तेन पापेन लिप्येहं नागच्छामि पुनर्यदि ॥ २१ ॥
विवस्त्रं स्नानसक्तानां दिवामैथुनगामिनाम् ॥
यत्पापं तेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ २२ ॥
रजस्वलानुसक्तानां यत्पापं नग्नशायिनाम् ॥
तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ २३ ॥
विश्वासघातकानां च कृतघ्नानां च यद्भवेत् ॥
तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ ॥ २४ ॥

गोकन्याब्राह्मणानां च दूषकानां च यद्भवेत् ॥

तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ २५ ॥

वृथापाकप्रकर्तृणां वृथामांसाशिनां च यत् ॥

तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ २६ ॥

व्रतभंगप्रकर्तृणामनृतौ गामिनां च यत् ॥

तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ ॥ २७ ॥

पैशुन्यसूचकानां च यत्पापं शस्त्रकर्मणाम्॥

तेन पापेन लिप्येऽहं नागच्छामि पुनर्यदि ॥ २८ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहरस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये कलशेश्वरमाहात्म्ये गोव्याघ्रसंवादवर्णनंनाम पञ्चाशत्तमोऽध्यायः॥ ५० ॥छ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५१

https://sa.wikisource.org/s/fk1
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

अथ ताच्छपथाञ्छ्रुत्वा स व्याघ्रो विस्मयान्वितः ॥

सत्यं मत्वा पुनः प्राह नन्दिनीं पुत्रवत्सलाम् ॥ १ ॥

यद्येवं तद्गृहं गच्छ वीक्षयस्व निजात्मजम्॥

सखीनामर्पयित्वाथ भूय आगमनं कुरु ॥ २ ॥

॥ सूत उवाच ॥ ॥

इति व्याघ्रवचः श्रुत्वा सुशीला नन्दिनी तदा ॥

गतालयं समुद्दिश्य यत्र बालः सुतः स्थितः॥ ३ ॥

अथाकालागतां दृष्ट्वा मातरं त्रस्तचेतसम्॥

रंभमाणां समालोक्य वत्सः प्रोवाच विस्मयात् ॥४॥

कस्मात् प्राप्तास्यकाले तु कस्मादुद्भ्रांतमानसा ॥

वाष्पक्लिन्नमुखी कस्माद्वद मातर्द्रुतंमम ॥ ५ ॥

॥ नंदिन्युवाच ॥ ॥

यदि पृच्छसि मां पुत्र स्तनपानं समाचर ॥

येन तृप्तस्य ते सर्वं वृत्तांतं तद्वदाम्यहम् ॥ ६ ॥

॥ सूत उवाच ॥ ॥

सोऽपि तद्वचनं श्रुत्वा पीत्वा क्षीरं यथोचितम् ॥

आघ्रातश्च तया मूर्ध्नि ततः प्रोवाच सत्वरम् ॥ ७ ॥

सर्वं कीर्तय वृत्तांतमद्यारण्यसमुद्भवम् ॥

येन मे जायते स्वास्थ्यं श्रुत्वा मातस्तवास्यतः ॥ ८ ॥

॥ नंदिन्युवाच ॥ ॥

अहं गता महारण्ये ह्यद्य पुत्र यथेच्छया ॥

व्याघ्रेणासादिता तत्र भ्रममाणा इतस्ततः ॥ ९ ॥

स मया प्रार्थितः पुत्र भक्षमाणो नखायुधः ॥

शपथैरागमिष्यामि गोकुले वीक्ष्य चात्मजम्॥६.५१.१०॥

साहं तेन विनिर्मुक्ता शपथैर्बहुभिः कृतैः ॥

भूयस्तत्रैव यास्यामि दृष्टः संभाषितो भवान् ॥ ११ ॥

॥ वत्स उवाच ॥ ॥

अहं तत्रैव यास्यामि यत्र त्वं हि प्रगच्छसि ॥

श्लाघ्यं हि मरणं सम्यङ्मातुरग्रे ममाधुना ॥ १२ ॥

एकाकिनापि मर्तव्यं त्वया हीनेन वै मया ॥

विनापि क्षीरपानेन स्वल्पेन समयेन तु ॥ १३ ॥

यदि मातस्त्वया सार्धं व्याघ्रो मां सूदयिष्यति ॥

या गतिर्मातृभक्तानां सा मे नूनं भविष्यति ॥ १४ ॥

अथवा ये त्वया तस्य विहिताः शपथाः शुभे ॥

ते संतु मम तिष्ठ त्वं तस्मादत्रैव गोकुले ॥ ॥ १५ १।

नास्ति मातृसमो बन्धुर्बालानां क्षीरजीविनाम् ॥

नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः ॥ १६ ॥

नास्ति मातृसमः पूज्यो नास्ति मातृसमः सखा ॥

नास्ति मातृसमो देव इह लोके परत्र च ॥ १७ ॥

एवं मत्वा सदा मातुः कर्तव्या भक्तिरुत्तमैः ॥

तमेनं परमं धर्मं प्रजापतिविनिर्मितम् ॥

अनुतिष्ठंति ये पुत्रास्ते यांति परमां गतिम् ॥ १८ ॥

तस्मादहं गमिष्यामि त्वं च तिष्ठात्र गोकुले ॥

आत्मप्राणैस्तव प्राणान्रक्षयिष्याम्यसंशयम् ॥ १९ ॥

॥ नंदिन्युवाच ॥ ॥

ममैव विहितो मृत्युर्न ते पुत्राद्य वासरे ॥

तत्कथं मम जीवं त्वं रक्षस्यसुभिरात्मनः ॥ ॥ ६.५१.२० ॥

अपश्चिममिदं पुत्र मातृसंदिष्टमुत्तमम् ॥

त्वया कार्यं प्रयत्नेन मद्वाक्यमनुतिष्ठता ॥ २१ ॥

भ्रममाणो वने पुत्र मा प्रमादं करिष्यसि ॥

लोभात्संजायते नाश इहलोके परत्र च ॥ २२ ॥

समुद्रमटवीं युद्धं विशंते लोभमोहिताः ॥
इह तन्नास्ति लोभेन यत्र कुर्वंति मानवाः ॥ २३ ॥
लोभात्प्रमादाद्विश्रंभात्पुरुषो वध्यते त्रिभिः ॥
तस्माल्लोभो न कर्तव्यो न प्रमादो न विश्वसेत् ॥ २४ ॥
आत्मा पुत्र त्वया रक्ष्यः सर्वदैव प्रय त्नतः ॥
सर्वेभ्यः श्वापदेभ्यश्च भ्रमता गहने वने ॥ २५ ॥
विषमस्थं तृणान्नाद्यं कथंचित्पुत्रक त्वया ॥
नैकाकिना प्रगंतव्यं यूथं त्यक्त्वा निजं क्वचित् ॥ २६ ॥
एवं संभाष्य तं वत्समवलिह्य मुहुर्मुहुः ॥
शोकेन महताविष्टा बाष्पव्याकुललोचना ॥ २७ ॥
ततः सखीजनं सर्वं गता द्रष्टुं द्विजोत्तमाः ॥
नन्दिनीं पुत्रशोकेन पीडितांगी सुविह्वला ॥ २८ ॥
ततः प्रोवाच ताः सर्वा गत्वाऽरण्यं द्विजोत्तमाः ॥
चरंतीः स्वेच्छया हृष्टा वांछितानि तृणानि ताः ॥२९ ॥
बहुले चंपके दामे वसुधारे घटस्रवे ॥
हंसनादि प्रियानंदे शुभक्षीरे महोदये ॥ ६.५१.३० ॥
तथान्या धेनवो याश्च संस्थिता गोकुलांतिके ॥
शृण्वंतु वचनं मह्यं कुर्वंतु च ततः परम् ॥
अद्याहं निजयूथस्य भ्रमंती नातिदूरतः ॥ ३१ ॥
ततश्च गहनं प्राप्ता वनं मानुषवर्जितम् ॥
व्याघ्रेणासादिता तत्र भ्रमंती तृणवांछया ॥ ३२ ॥
युष्माकं दर्शनार्थाय सुतसंभाषणाय च ॥
संप्राप्ता शपथैः कृच्छ्रात्तं विश्वास्य नखायुधम् ॥ ३३ ॥
दृष्टः संभाषितः पुत्रः शासितश्च मया हि सः ॥
अधुना भवतीनां च प्रदत्तः पुत्रको यथा ॥ ३४ ॥
अज्ञानाज्ज्ञानतो वापि भवतीनां मया कृतम् ॥
यत्किंचिद्दुष्कृतं भद्रास्तत्क्षंतव्यं प्रसादतः ॥३५॥
अनाथो ह्यबलो दीनः क्षीरपो मम बालकः ॥

मातृशोकाभिसंतप्तः पाल्यः सर्वाभिरेव सः ॥ ३६ ॥

भ्रममाणोऽसमे स्थाने व्रजमानोऽन्यगोकुले ॥

अकार्येषु च संसक्तो निवार्यः सर्वदाऽऽदरात् ॥ ३७ ॥

अहं तत्र गमिष्यामि स व्याघ्रो यत्र संस्थितः ॥

अपश्चिमप्रणामोऽयं सर्वासां विहितो मया ॥ ३८ ॥

॥ धेनव ऊचुः ॥ ॥

न गंतव्यं त्वया तत्र कथंचिदपि नंदिनि ॥

आपद्धर्मं न वेत्सि त्वं नूनं येन प्रगच्छसि ॥ ३९ ॥

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु जातिर्न विवाहकाले ॥

प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि ॥ ६.७१.४० ॥

तस्मात्तत्र न गंतव्यं दोषो नास्त्यत्र ते शुभे ॥

पालयस्व निजं पुत्रं व्रजास्माभिर्निजं गृहम् ॥ ॥ ४१ ॥

॥ नंदिन्युवाच ॥ ॥

परेषां प्राणयात्रार्थं तत्कर्तुं युज्यते शुभाः ॥

आत्मप्राणहितार्थाय न साधूनां प्रशस्यते ॥ ४२ ॥

सत्ये प्रतिष्ठितो लोको धर्मः सत्ये प्रतिष्ठितः ॥

उदधिः सत्यवाक्येन मर्यादां न विलंघयेत् ॥ ४३ ॥

विष्णवे पृथिवीं दत्त्वा बलिः पातालमाश्रितः ॥

सत्यवाक्यं समाश्रित्य न निष्क्रामति दैत्यपः ॥ ४४ ॥

यः स्वं वाक्यं प्रतिज्ञाय न करोति यथोदितम् ॥

किं तेन न कृतं पापं चौरेणाकृत बुद्धिना ॥ ४५ ॥

॥ सख्य ऊचुः ॥ ॥

त्वं नंदिनि नमस्कार्या सर्वैरपि सुरासुरैः ॥

या त्वं सत्यप्रतिष्ठार्थं प्राणांस्त्यजसि दुस्त्यजान् ॥ ४६ ॥

किं त्वां कल्याणि वक्ष्यामः स्वयं धर्मार्थवादिनीम् ॥

सवरेंपि गुणैर्युक्ता नित्यं सत्ये प्रतिष्ठिताम् ॥ ४७ ॥

तस्माद्गच्छ महाभागे न शोच्यः पुत्रकस्तव ॥

भवत्या यद्वयं प्रोक्तास्तत्करिष्याम एव हि ॥ ४८ ॥

एतत्पुनर्वयं विद्मः सदा सत्यवतां नृणाम् ॥

न निष्फलः क्रियारंभः कथंचिदपि जायते ॥ ४९ ॥

॥ सूत उवाच ॥ ॥

एवं संभाष्य तं सर्वं नंदिनी स्वसखीजनम् ॥

प्रस्थिता व्याघ्रमुद्दिश्य पुत्रशोकेन पीडिता ॥ ६.५१.५० ॥

शोकाग्निनापि संतप्ता निराशा पुत्रदर्शने ॥

वियुक्ता चक्रवाकीव लतेव पतिता तरोः ॥ ५१ ॥

अंधेव दृष्टिनिर्मुक्ता प्रस्खलंती पदेपदे ॥

वनाधिदेवताः सर्वाः प्राऽर्थयच्च सुतार्थतः ॥ ५२ ॥

प्रसुप्तं भ्रममाणं वा मम पुत्रं सुबालकम् ॥

वनाधिदेवताः सर्वा रक्षंतु वचनान्मम ॥ ५३ ॥

एवं प्रलप्य मनसा संप्राप्ता तत्र यत्र सः ॥

आस्ते विस्फूर्जितास्यश्च तीक्ष्णदंष्ट्रो भयावहः ॥ ५४ ॥

व्याघ्रः क्षुत्क्षामकण्ठश्च तस्या मार्गावलोककः ॥

संरंभाटोपसंयुक्तः सृक्किणी परिलेहयन् ॥ ५५ ॥

॥ नंदिन्युवाच ॥ ॥

आगताहं महाव्याघ्र सत्ये च शपथे स्थिता ॥

कुरु तृप्तिं यथाकामं मम मांसेन सांप्रतम् ॥ ५६ ॥

तां दृष्ट्वा सोऽपि दुष्टात्मा वैराग्यं परमं गतः ॥

सत्याशया पुनः प्राप्ता संत्यज्य प्राणजं भयम् ॥ ५७ ॥

॥ व्याघ्र उवाच ॥ ॥

स्वागतं तव कल्याणि सुधेनो सत्यवादिनि ॥

न हि सत्यवतां किंचिदशुभं विद्यते क्वचित् ॥ ५८ ॥

त्वयोक्तं शपथैर्भद्रे आगमिष्याम्यहं पुनः ॥

तेन मे कौतुकं जातं किमेषा प्रकरिष्यति ॥ ५९ ॥

सोऽहं भद्रे दुराचारो नृशंसो जीवघातकः ॥

यास्यामि नरकं घोरं कर्मणानेन सर्वदा ॥ ६.५१.६० ॥

तस्मात्त्वं मे महाभागे पापास्यातिदुरात्मनः ॥

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ ६१ ॥

येन मे स्यात्परं श्रेय इह लोके परत्र च ॥

न तेऽस्त्यविदितं किंचित्सत्याचारान्मतिर्मम ॥ ६२ ॥

तस्मात्त्वं धर्मसर्वस्वं संक्षेपान्मम कीर्तय ॥

सत्संगमफलं येन मम संजायतेऽखिलम्॥ ६३ ॥

॥ नंदिन्युवाच ॥ ॥

तपः कृते प्रशंसंति त्रेतायां ध्यानमेव च ॥

द्वापरे यज्ञयोगं च दानमेकं कलौ युगे ॥

सर्वेषामेव दानानां नास्ति दानमतः परम् ॥ ६४ ॥

चराचराणां भूतानामभयं यः प्रयच्छति ॥

स सर्वभयनिर्मुक्तः परं ब्रह्मा धिगच्छति ॥ ६५ ॥

॥ व्याघ्र उवाच ॥ ॥

अन्येषां चैव भूतानां तद्दानं युज्यते शुभे ॥

अहिंसया भवेद्येषां प्राणयात्रान्नपूर्वकम् ॥ ६६ ॥

न हिंसया विनाऽस्माकं यतः स्यात्प्राणधारणम् ॥

तस्माद्ब्रूहि महाभागे किञ्चिन्मम सुखावहम् ॥

उपदेशं सुधर्माय हिंसकस्यापि देहिनाम् ॥ ॥ ६७ ॥

॥ नन्दिन्युवाच ॥ ॥

अत्रास्ति सुमहल्लिंगं पुरा बाणप्रतिष्ठितम् ॥

गहने यत्प्रभावेन त्वया मुक्तास्म्यहं ध्रुवम् ॥ ६८ ॥

तस्य त्वं प्रातरुत्थाय कुरु नित्यं प्रदक्षिणाम् ॥

प्रणामं च ततः सिद्धिं वांछितां समवाप्स्यसि ॥ ६९ ॥

नान्यस्य कर्मणः शक्तिर्विद्यते ते नखायुध ॥

पूजादिकस्य हीनत्वाद्धस्ताभ्यामिति मे मतिः ॥ ६.५१.७० ॥

एवमुक्त्वाथ सा धेनुर्व्याघ्रस्याथ वनांतिके ॥

तल्लिंगं दर्शयामास पुरः स्थित्वा द्विजोत्तमाः ॥ ७१ ॥

सोऽपि संदर्शनात्तस्य तत्क्षणान्मुक्तिमाप्तवान् ॥

व्याघ्रत्वात्पार्थिवो भूयः स बभूव यथा पुरा ॥ ७२ ॥

शापं दुर्वाससा दत्तं राज्यं स्वं सहितैः सुतैः ॥
सस्मार स नृपश्रेष्ठस्ततः प्रोवाच नंदिनीम् ॥ ७३ ॥
नृपः कलशनामाहं हैहयान्वयसंभवः ॥
शप्तो दुर्वाससा पूर्वं कस्मिंश्चित्कारणांतरे ॥ ७४ ॥
ततः प्रसादितेनोक्तस्तेनाहं नंदिनी यदा ॥
दर्शयिष्यति तल्लिंगं तदा मुक्तिर्भविष्यति ॥ ७५ ॥
सा नूनं नन्दिनी त्वं हि ज्ञाता शापान्ततो मया ॥
तत्त्वं ब्रूहि प्रदेशोऽयं कतमो वरधेनुके ॥ ७६ ॥
येन गच्छाम्यहं भूयः स्वगृहं प्रति सत्वरम् ॥
मार्गं दृष्ट्वा महाभागे मानुषं प्राप्य कञ्चन ॥७७ ॥ ॥
॥ नंदिन्युवाच ॥ ॥
चमत्कारपुरक्षेत्रमेतत्पातकनाशनम् ॥
सर्वतीर्थमयं राजन्सर्वकामप्रदायकम् ॥ ७८ ॥
यदन्यत्र भवेच्छ्रेयो वत्सरेण तपस्विनाम् ॥
दिनेनैवात्र तत्सम्यग्जायते नात्र संशयः ॥ ७९ ॥
एवं मत्वा मया लिंगं स्नापितं पयसा सदा ॥
एतद्यूथं परित्यज्य भक्त्या पूतेन चेतसा ॥ ६.५१.८० ॥
॥ राजोवाच ॥ ॥
गच्छ नन्दिनि भद्रं ते निजं प्राप्नुहि बालकम् ॥
गोकुलं च सखीः स्वाश्च तथान्यं च सुहृज्जनम् ॥ ८१ ॥
एतत्क्षेत्रं मया पूर्वं ब्राह्मणानां मुखाच्छ्रुतम् ॥
वांछितं च सदा प्रष्टुं न च द्रष्टुं प्रपारितम् ॥ ८२ ॥
राज्यकर्मप्रसक्तेन भोगासक्तेन नंदिनि ॥
स्वयमेवाधुना लब्धं नाहं सन्त्यक्तुमुत्सहे ॥ ८३ ॥
दिष्ट्या मे मुनिना तेन दत्तः शापो महात्मना ॥
कथं स्यादन्यथा प्राप्तिः क्षेत्रस्यास्य सुशोभने ॥ ॥ ८४ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वा महीपालो नन्दिनीं तां विसृज्य च ॥

स्थितस्तत्रैव तल्लिंगं ध्यायमानो दिवानिशम् ॥ ८५ ॥

प्रासादं तत्कृते मुख्यं विधायाद्भुतदर्शनम् ॥

कैलासशिखराकारं तपस्तेपे तदग्रतः ॥ ८६ ॥

ततस्तस्य प्रभावेन स्वल्पैरेव दिनैर्द्विजाः ॥

संप्राप्तः परमां सिद्धिं दुर्लभां याज्ञिकैरपि ॥ ८७ ॥

तत्र यः कार्तिके मासि दीपकं संप्रयच्छति ॥

सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ८८

मार्गशीर्षे च सम्प्राप्ते गीतनृत्यादिकं नरः ॥

तदग्रे कुरुते भक्त्या स गच्छति परां गतिम् ॥ ८९ ॥

एतद्वः सर्वमाख्यातं सर्वपातकनाशनम् ॥

कलशेश्वरमाहात्म्यं विस्तरेण द्विजोत्तमाः ॥ ६.५१.९० ॥

भक्त्या पठति यश्चैतच्छ्रद्धया परया युतः ॥

सोऽपि पापविनिर्मुक्तः शिवलोके महीयते ॥ ९१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कलशेश्वरमाहात्म्यवर्णनंनामैकोनपंचाशत्तमोऽ ध्यायः ॥ ५१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५२



॥ सूत उवाच ॥ ॥

उमामहेश्वरौ तत्र स्थापितौ तेन भूभुजा ॥

प्रासादं परमं कृत्वा साधुदृष्टिसुखप्रदम् ॥ १ ॥

तस्याग्रतः शुभं कुंडं तत्र चैव विनिर्मितम् ॥

स्वच्छोदकेन सम्पूर्णं पद्मिनीखंडमंडितम् ॥ २ ॥

स्नात्वा तत्र नरो भक्त्या तौ पश्येद्यः समाहितः ॥

माघशुक्लचतुर्दश्यां न स भूयोऽत्र जायते ॥ ३ ॥

तस्यैव पूर्वदिग्भागेऽगस्त्यकुण्डसमीपतः ॥

अस्ति वापी महापुण्या सर्वपातकनाशिनी ॥ ४ ॥

तस्यां यः कुरुते स्नानं मासि वै फाल्गुने नरः ॥

सोपवासः सिताष्टम्यां वांछितं लभते च सः ॥ ५ ॥

तस्या दक्षिणदिग्भागे तत्रास्ति कपिला नदी ॥

कपिलो यत्र संप्राप्तः सिद्धिं सांख्यसमुद्भवाम् ॥ ६ ॥

कपिलायाश्च पूर्वेण सिद्धक्षेत्रं प्रकीर्तितम् ॥

यत्र सिद्धिं गताः सिद्धाः पुरा शत सहस्रशः ॥ ७ ॥

यो यं काममभिध्याय तपस्तत्र समाचरेत् ॥

षण्मासाभ्यंतरे नूनं स तमाप्नोति मानवः ॥ ८ ॥

तस्याधस्ताच्छिला विप्रा विद्यते वैष्णवी शुभा ॥

भ्रमन्ती चतुरस्रा च सर्वपातकनाशिनी ॥ ९ ॥

सदा महानदीतोयक्षालिता मुक्तिदा नृणाम् ॥

गंगायमुनयोर्मध्ये संनिविष्टा सरस्वती ॥ ६.५२.१० ॥

त्रिवेणी वहते तस्याः पुरतो भुक्तिमुक्तिदा ॥

तस्यामुपरि दग्धानां ब्राह्मणानां विशेषतः ॥ ११ ॥

नूनं मुक्तिर्भवेत्तेषां चिता भस्मनि गोष्पदम् ॥

दृश्यते तत्र तज्ज्ञात्वा संस्कार्या ब्राह्मणा मृताः ॥ १२ ॥
तस्यैवोत्तरदिग्भागे रुद्रकोटिर्द्विजोत्तमाः ॥
अस्ति संपूजिता विप्रै र्दाक्षिणात्यैर्महात्मभिः ॥ १३ ॥
महायोगिस्वरूपेण दाक्षिणात्या द्विजोत्तमाः ॥
चमत्कारपुरे क्षेत्रे श्रुत्वा स्वयमुमापतिम् ॥ १४ ॥
ततः कौतूहलाविष्टाः श्रद्धया परया युताः ॥
कोटिसंख्या द्रुतं जग्मुस्तस्य दर्शनवांछया ॥ १५ ॥
अहंपूर्वमहंपूर्वं वीक्षयिष्यामि तं हरम् ॥
इति श्रद्धासमो पेताश्चक्रुस्ते शपथं गताः ॥ १६ ॥
एतेषां मध्यतो यस्तं महायोगिनमीश्वरम् ॥
चरमं देवमीक्षेत भविष्यति स पापकृत् ॥ १७ ॥
ततस्तेषामभिप्रायं ज्ञात्वा देवो महेश्वरः ॥
भक्तिप्रीतो हितार्थाय कोटिरूपैर्व्यवस्थितः ॥ १८ ॥
हेलया दर्शनं प्राप्तः सर्वेषां द्विजसत्तमाः ॥
ततः प्रभृति तत्स्थानं रुद्रकोटीतिविश्रुतम् ॥ १९ ॥
तदर्थं पठितः श्लोको नारदेन पुरा द्विजाः ॥
रुद्रावर्तं समालोक्य प्रहृष्टेन द्विजोत्तमाः ॥ ६.७२.२० ॥
आषाढीं कार्तिकीं माघीं तथा चैत्रसमुद्भवाम् ॥
धन्याः पृथिव्यां लप्स्यंते रुद्रावर्ते चतुर्दशीम् ॥ २१ ॥
आजन्मशतसाहस्रं कृत्वा पापं नरः क्षितौ ॥
रुद्रावर्तं समालोक्य विपाप्मत्वं प्रपद्यते ॥ २२ ॥
रुद्रावर्त्ते नरो गत्वा दृष्ट्वा योगेश्वरं हरम् ॥
शुक्लपक्षे चतुर्दश्यां विपाप्मा जायते ध्रुवम् ॥ २३ ॥
यस्तत्र कुरुते श्राद्धं महायोगिपुरे द्विजाः ॥
रुद्रावर्ते स चाप्नोति फलं शतमखोद्भवम् ॥ २४ ॥
उपवासपरो भूत्वा यः कुर्याद्रात्रिजागरम् ॥
कामगेन विमानेन स स्वर्गे याति मानवः ॥ २५ ॥
तत्र यः कपिलां दद्याद्ब्राह्मणायाहिताग्नये ॥

स गणः स्यान्न संदेहो हरस्य दयितस्तथा ॥ २६ ॥

षडक्षरं जपेद्यस्तु महायोगिपुरः स्थितः ॥

मंत्रं तस्य भवेच्छ्रेयः षड्गुणं राजसूयतः ॥ २७ ॥

यस्तस्य पुरतो भक्त्या जपेद्वा शतरुद्रियम् ॥

चतुर्णामपि वेदानां सोऽधीतानां भजेत्फलम् ॥ २८ ॥

गीतं वा यदि वा नृत्यं तत्पुरः कुरुते नरः ॥

स सर्वेषां भजेच्छ्रेयो मखानां नात्र संशयः ॥२९॥

एवमुक्त्वा द्विजश्रेष्ठाः स मुनिर्ब्रह्मसंभवः ॥

विरराम ततो हृष्टस्तीर्थयात्रां गतो द्रुतम् ॥ ६.५२.३० ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये रुद्रकोटिमाहात्म्यवर्णनंनाम द्विपञ्चाशत्तमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५३

https://sa.wikisource.org/s/fjs
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्रैवोज्जयनीपीठमस्ति कामप्रदं नृणाम् ॥

प्रभूताश्चर्यसंयुक्तं बहुसिद्धनिषेवितम् ॥ १ ॥

यस्य मध्यगतो नित्यं स्वयमेव महेश्वरः ॥

महाकालस्वरूपेण स तिष्ठति द्विजोत्तमाः ॥ २ ॥

वैशाख्यां यो नरस्तत्र कृत्वा श्राद्धं समाहितः ॥

ततः पश्यति देवेशं महाकाल इति स्मृतम्॥

पूजयेद्दक्षिणां मूर्तिं समाश्रित्य द्विजोत्तमाः ॥ ३ ॥

दश पूर्वान्दशातीतानात्मानं च द्विजोत्तमाः ॥

पुरुषान्स समुद्धृत्य शिवलोके महीयते ॥ ४ ॥

यो यं काममभिध्याय तत्र पीठं प्रपूजयेत् ॥

संपूज्य योगिनीवृंदं कन्यकावृन्दमेव च ॥ ५ ॥

स तत्कृत्स्नमवाप्नोति यदपि स्यात्सुदुर्लभम् ॥

तत्र वैशाखमासस्य पौर्णमास्यां समाहितः ॥ ६ ॥

श्रद्धायुक्तो नरो यो वा उपवासपरः शुचिः ॥

करोति जागरं तस्य पुरतः श्रद्धयान्वितः ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ ७ ॥

किं व्रतैः किं वृथा दानैः किं जपैर्नियमेन वा ॥

महाकालस्य ते सर्वे कलां नार्हंति षोडशीम् ॥ ८ ॥

॥ सूत उवाच ॥ ॥

तत्रैवास्ति महाभागा भ्रूणगर्तेति विश्रुता ॥

गर्ता सुविपुलाकारा सर्वपातकनाशिनी ॥ ९ ॥

ब्रह्महत्याविनिर्मुक्तः सौदासो यत्र पार्थिवः ॥

स्त्रीहत्यया विनिर्मुक्तः सुषेणो वसुधाधिपः ॥ ६.५३.१० ॥

॥ ऋषय ऊचुः ॥ ॥

ब्रह्महत्या कथं तस्य सौदासस्य महीपतेः ॥

ब्रह्मण्यस्यापि संजाता तदस्माकं प्रकीर्तय ॥ ११ ॥

श्रूयते स महीपालो ब्राह्मणानां हिते रतः ॥

कर्मणा मनसा वाचा ब्रह्मघ्नः सोऽभवत्कथम् ॥ १२ ॥

विमुक्तश्च कथं भूयो भ्रूणगर्तामुपाश्रितः ॥

सापि गर्ता कथं जाता सर्वं नो वद विस्तरात् ॥ १३ ॥

॥ सूत उवाच ॥ ॥

यदा लिंगस्य पातोऽभूद्देवदेवस्य शूलिनः ॥

तदा स लज्जयाविष्टो लिंगाभावाद्द्विजोत्तमाः ॥ १४ ॥

कृत्वाऽतिविपुलां गर्तां प्रविवेश ततः परम् ॥

न कस्यचित्तदात्मानं दर्शयामास शूलधृक् ॥ १५ ॥

एवं सा तत्र संजाता गर्ता ब्राह्मणसत्तमाः ॥

यथा तस्यां विपाप्माभूत्सौ दासस्तद्वदाम्यहम् ॥ १६ ॥

आसीन्मित्रसहोनाम राजा परमधार्मिकः ॥

सौदासस्तत्सुतः साक्षात्सूर्यवंशसमुद्भवः ॥ १७ ॥

तेनेष्टं विपुलैर्यज्ञैः सुवर्णवरदक्षिणैः ॥

असंख्यातानि दानानि प्रदत्तानि महात्मना ॥ १८ ॥

कस्यचित्त्वथ कालस्य सत्रे द्वादशवार्षिके ॥

वर्तमाने यथान्यायं विधिदृष्टेन कर्मणा ॥ १९ ॥

क्रूराक्षः क्रूरबुद्धिश्च राक्षसौ बलवत्तरौ ॥

यज्ञविघ्नाय संप्राप्तौ संप्राप्ते रजनीमुखे ॥ ६.५३.२० ॥

राक्षसैर्बहुभिः सार्धं तथान्यैर्भूतसंज्ञितैः ॥

पिशाचैश्च दुराधर्षैर्यज्ञविध्वंसतत्परैः ॥ २१ ॥

अथ ते राक्षसाः सर्वे किंचिच्छिद्रमवेक्ष्य च ॥

विविशुर्यज्ञवाटं तं प्रसर्पन्तः समंततः ॥ २२ ॥

निघ्नन्तो ब्राह्मणश्रेष्ठान्भक्षयन्तो हवींषि च ॥

तथा यानि विचित्राणि यज्ञार्थे कल्पितानि च ॥ २३ ॥

एतस्मिन्नंतरे तत्र हाहाकारो महानभूत् ॥
भक्ष्यमाणेषु विप्रेषु राक्षसैर्बलवत्तरैः ॥ २४ ॥
ततो मैत्रसहिः क्रुद्धस्त्यक्त्वा दीक्षाव्रतं नृपः ॥
आदाय सशरं चापं ध्वंसयामास वीक्ष्य तान् ॥ २५ ॥
कृतरक्षो वसिष्ठेन स्वयमेव पुरोधसा ॥
क्रूराक्षं सूदयामास राक्षसैर्बहुभिः सह ॥ २६ ॥
क्रूरबुद्धिरथो वीक्ष्य हतं श्रेष्ठं सहोदरम् ॥
तं च पार्थिवशार्दूलमगम्यं ब्रह्मतेजसा ॥ २७ ॥
हतशेषान्समादाय राक्षसान्बलसंयुतः ॥
पलायनं भयाच्चक्रे क्षतांगस्तस्य सायकैः ॥ २८ ॥
ततस्तद्वैरमाश्रित्य भ्रातुर्ज्येष्ठस्य राक्षसः ॥
छिद्रमन्वेषयामास तद्वधाय दिवानिशम् ॥ २९ ॥
एवं सवीक्षमाणस्य तस्य च्छिद्रं महात्मनः ॥
समाप्तिमगमद्विप्राः सत्रं तद्द्वादशाब्दिकम् ॥ ६.५३.३० ॥
न सूक्ष्ममपि संप्राप्तं छिद्रं तेन दुरात्मना ॥
वसिष्ठविहिता रक्षा सत्रे तस्य महीपतेः ॥ ३१ ॥
अथासौ ब्राह्मणान्सर्वान्विसृज्याहितदक्षिणान्॥
कृतांजलिपुटो भूत्वा वसिष्ठमिदमब्रवीत् ॥ ३२ ॥
स्वहस्तेन गुरोद्याहं त्वां भोजयितुमुत्सहे ॥
क्रियतां तत्प्रसादो मे भुक्त्वाद्य मम मन्दिरे ॥ ३३ ॥
॥ सूत उवाच ॥ ॥
स तथेति प्रतिज्ञाय वसिष्ठो मुनिसत्तमः ॥
क्षालितांघ्रिः स्वयं तेन निविष्टो भोजनाय वै ॥ ३४ ॥
कूरबुद्धिरथो वीक्ष्य तदर्थं चामिषं शुभम् ॥
सुसंस्कृतं विधानेन सूपकारैर्द्विजोत्तमाः ॥३५॥
उखां कृत्वा ततस्तादृक्तत्प्रमाणामतर्किताम्॥
महामांसाभृतां कृत्वा तां जहारामिषान्विताम् ॥३६॥
अथासौ मुनिशार्दूलो भुंजानो बुबुधे हि तत् ॥

महामांसमिति क्रुद्धस्तत्र प्रोवाच मन्युमान्॥ ३७ ॥

महामांसाशनं यस्मात्कारितोऽहं त्वयाधम ॥

रक्षोवद्राक्षसस्तस्मात्त्वमद्यैव भविष्यसि ॥३८ ॥

ततः संशोधयामास तस्य मांसस्य चागमम् ॥

निपुणं सूपकारांस्तान्दृष्ट्वा राजा पृथक्पृथक् ॥ ३९ ॥

तेऽब्रुवन्नैतदस्माभिः श्रपितं मांसमीदृशम् ॥

श्रद्धीयतां महीपाल नान्येन मनुजेन वा ॥ ६.५३.४० ॥

राक्षसं वा पिशाचं वा दानवं वा विना विभो ॥

एतज्ज्ञात्वा ततो नाथ यद्युक्तं तत्समाचर ॥ ४१ ॥

एतस्मिन्नंतरे तस्य नारदो मुनिसत्तमः॥

समागत्याब्रवीत्सर्वं तद्राक्षसविचेष्टितम्॥ ४२ ॥.

तच्छ्रुत्वा कोपमापन्नः स राजा शप्तुमुद्यतः ॥

वसिष्ठं स्वकरे कृत्वा जलं सौदासभूपतिः ॥

शापोद्यतं च तं दृष्ट्वा नारदो वाक्यमब्रवीत् ॥ ४३ ॥

निघ्नन्तो वा शपन्तो वा द्विषन्तो वा द्विजातयः॥

नमस्कार्या महीपाल तथापि स्वहितेच्छुना॥

गुरुरेष पुनर्मान्यस्तव पार्थिवसत्तम॥४४॥

तस्मान्नार्हसि शप्तुं त्वं प्रतिशापेन सन्मुनिम् ॥

निषिद्धः स तथा भूपस्ततस्तत्सलिलं करात् ॥

पादयोः कृत्स्नमुपरि प्रमुमोच ततः परम् ॥ ४५ ॥

अथ तौ चरणौ तस्य तप्त शापोदकप्लुतौ ॥

दग्धौ कृष्णत्वमापन्नौ तत्क्षणाद्द्विजसत्तमाः ॥ ४६ ॥

कल्माषपाद इत्युक्तस्ततःप्रभृति स क्षितौ ॥

भूपालो द्विजशार्दूला नाम्ना तेन विशेषतः ॥ ४७ ॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे विप्रो वसिष्ठो लज्जयान्वितः ॥

ज्ञात्वा दत्तं वृथा शापं तस्य भूमिपतेस्तदा ॥ ४८॥

उवाच व्यर्थः शापोऽयं तव दत्तो मया नृप ॥

न च मे जायते वाक्यमसत्यं हि कथंचन ॥ ४९ ॥

तस्मात्त्वं राक्षसो भूत्वा कञ्चित्कालं नृपो त्तम ॥

स्वरूपं लप्स्यसे भूयो यस्मिन्काले शृणुष्व तम् ॥ ६.५३.५० ॥

यदा त्वं क्रूरबुद्धिं तं राक्षसं निहनिष्यसि ॥

तदा त्वं लप्स्यसे मोक्षं राक्षसत्वात्सुदारुणात् ॥ ५१ ॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नन्तरे राजा यातुधानो बभूव सः ॥

ऊर्ध्वकेशो महाकायः कृष्णदन्तो भया नकः ॥ ५२ ॥

ततो जघान विप्रेन्द्रान्राक्षसं भावमाश्रितः ॥

यज्ञान्विध्वंसयामास मुनीनामाश्रमानपि ॥ ५३ ॥

कस्यचित्त्वथ कालस्य क्रूर बुद्धिः स राक्षसः ॥

ज्ञात्वा तं राक्षसीभूतमेकदाऽऽयुधवर्जितम् ॥ ५४ ॥

भ्रातुर्वधकृतं वैरं स्मरमाणस्ततः परम् ॥

तद्वधार्थं समायातो राक्षसैर्बहुभिर्वृतः ॥ ५५ ॥

ततस्तं वेष्टयित्वापि समंताद्राक्षसो नृपम् ॥

प्रोवाच वचनं क्रुद्धो नादेनापूरयन्दिशः ॥ ५६ ॥

त्वया यो निहतोऽस्माकं ज्येष्ठो भ्राता सुदुर्मते ॥

वसिष्ठस्य बलाद्यज्ञे तस्याद्य फलमाप्नुहि ॥ ५७ ॥

॥ राजोवाच ॥ ॥

यद्ब्रवीषि दुराचार कर्मणा तत्समाचर ॥

शारदस्येव मेघस्य गर्जितं तव निष्फलम् ॥ ५८ ॥

एवमुक्त्वा समादाय ततो वृक्षं स पार्थिवः ॥

प्राद्रवत्संमुखं तस्य गर्जमानो यथा घनः ॥५९॥

सोऽपि वृक्षं समुत्पाट्य क्रोधसंरक्तलोचनः ॥

त्रिशंखां भृकुटीं कृत्वा तस्याप्यभिमुखं ययौ ॥ ६.५३.६० ॥

एवं द्वावपि तौ शूरौ वृक्षयुद्धं महाबलौ ०।

कृतवन्तौ वने तत्र बहुवृक्षक्षयावहम् ॥ ६१ ॥

अथ तं श्रांतमालोक्य कूरबुद्धिं महीपतिः ॥

प्रगृह्य पादयोर्वेगाद्भ्रामयामास पुष्करे ॥ ६२ ॥

ततश्चास्फोटयामास भूमौ कोपसमन्वितः ॥

चक्रे चामिषखण्डं स पिष्ट्वापिष्ट्वा मुहुर्मुहुः ॥ ६३ ॥

तस्मिंस्तु निहते शूरे राक्षसे स महीपतिः ॥

राक्षसत्वाद्विनिर्मुक्तो लेभे कायं नृपोद्भवम् ॥ ६४ ॥

ततस्ते राक्षसाः शेषाः समंतात्तं महीपतिम्॥

परिवार्य महावृक्षैर्जघ्नुः पाषाणवृष्टिभिः॥ ६५ ॥

ततस्तानपि भूपालो जघान प्रहसन्निव ॥

वृक्षहस्तस्तु विश्रब्धो लीलया द्विजसत्तमाः ॥ ६६ ॥

ततश्च स्वपुरं प्राप्तः संप्रहृष्टतनूरुहः ॥

राक्षसानां वधं कृत्वा लब्ध्वा देहं पुरातनम् ॥ ६७ ॥

ततस्तं तेजसा हीनं दुर्गंधेन समावृतम् ॥

ब्रह्महत्योद्भवैश्चिह्नैरन्यैरपि पृथग्विधैः ॥ ६८ ॥

दृष्ट्वा ते मंत्रिणस्तस्य पुत्र पौत्रास्तथा परे ॥

नोपसर्पंति भूपालं पापस्पर्शभयान्विताः ॥ ६९ ॥

ऊचुश्च पार्थिवश्रेष्ठ न त्वमर्हसि संगमम् ॥

कर्तुं सार्धमिहास्माभिर्ब्रह्महत्या न्वितो यतः ॥ ६.५३.७० ॥

तस्माद्वसिष्ठमाहूय प्रायश्चित्तं समाचर ॥

अशुद्धं शुद्धिमायाति येन गात्रमिदं तव ॥ ७१ ॥

ततः स पार्थिवस्तूर्णं वसिष्ठं मुनिपुंगवम् ॥

समाहूयाब्रवीद्वाक्यं दूरस्थो विनयान्वितः ॥ ७२ ॥

तव प्रसादतो विप्र स हतो राक्षसो मया॥

मुक्तशापोऽस्मि संजातः परं शृणु वचो मुने ॥ ७३ ॥

मम गात्रात्सुदुर्गंधः समुद्गच्छति सर्वतः ॥

भाराक्रांतानि गात्राणि सर्वाण्येवाचलानि च ॥ ७४ ॥

तत्किमेतद्द्विजश्रेष्ठ तेजो हानिरतीव मे ॥

मंत्रिणोऽपि तथा पुत्रा न स्पृशंति यतोऽद्य माम् ॥ ७५ ॥

॥ वसिष्ठ उवाच ॥ ॥

राक्षसत्वं प्रपन्नेन त्वया पार्थिवसत्तम ॥
ब्राह्मणा बहवो ध्वस्तास्तथा विध्वंसिता मखाः ॥
तेषां त्वं पार्थिवश्रेष्ठ संस्पृष्टो ब्रह्महत्यया ॥ ७६ ॥
॥ राजोवाच ॥ ॥
तदर्थं देहि मे विप्र प्रायश्चित्तं विशुद्धये ॥
येन निर्मुक्तपापोऽहं राज्यं प्राप्नोमि चात्मनः ॥ ७७ ॥
॥ वसिष्ठ उवाच ॥ ॥
अत्रार्थे तीर्थयात्रां त्वं कुरु पार्थिव सत्तम ॥
निर्ममो निरहंकारस्ततः सिद्धिमवाप्स्यसि ॥ ७८ ॥
ततः स पार्थिवश्रेष्ठः संयतात्मा जितेंद्रियः ॥
प्रयागादिषु तीर्थेषु स्नानं चक्रे समा हितः ॥ ७९ ॥
न नश्यति स दुर्गंधो न च तेजः प्रवर्धते ॥
न कायो लघुतां याति नालस्येन विमुच्यते ॥ ६.५३.८० ॥
ततः संभ्रममाणश्च कदाचि द्द्विजसत्तमाः ॥
चमत्कारपुरे क्षेत्रे स्नानार्थं समुपागतः ॥ ८१ ॥
सुश्रांतः क्षुत्पिपासार्तो निशीथे तमसावृते ॥
गर्तायां पतितोऽकस्मात्पूर्णायां पयसा नृपः ॥ ८२ ॥
कृच्छ्रात्ततो विनिष्क्रांतस्तीर्थात्तस्मान्महीपतिः ॥
यावत्पश्यति चात्मानं द्वादशार्कसमप्रभम् ॥ ८३ ॥
दुर्गंधेन परित्यक्तं सोद्यमं लघुतां गतम् ॥
दृष्ट्वा च चिंतयामास नूनं मुक्तोऽस्मि पातकात् ॥ ८४ ॥
एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥
हर्षयन्ती महीपालं विमुक्तं ब्रह्महत्यया ॥८५॥
विमुक्तोऽसि महाराज सांप्रतं पूर्वपातकैः ॥
तीर्थस्यास्य प्रभावेन तस्माद्गच्छ निजं गृहम्॥ ८६ ॥
अत्र संनिहितो नित्यं भ्रूणरूपेण शंकरः ॥
कृष्णपक्षे विशेषेण चतुर्दश्यां महीपते ॥ ८७ ॥
यदा प्रपतितं लिंगं देवदेवस्य शूलिनः ॥

द्विजशापेन गर्तैषा तदानेन विनिर्मिता ॥ ८८ ॥

लज्जितेन स्ववासार्थं महद्दुःखयुतेन च ॥

सतीवियोगयुक्तेन भ्रूणत्वं प्रगतेन च ॥ ८९ ॥

सर्वपापहरा तेन गर्तेयं पृथि वीपते ॥

भ्रूणगर्तेति विख्याता तस्य नामा जगत्त्रये ॥ ६.७३.९० ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वाथ सा वाणी विररामांऽतरिक्षगा ॥

सोऽपि पार्थिवशार्दूलः प्रहृष्टः स्वपुरं ययौ ॥ ९१ ॥

ततस्तं पापनिर्मुक्तं तेजसा भास्करोपमम् ॥

दृष्ट्वा पुत्रास्तथा मर्त्याः प्रणेमुस्तुष्टिसंयुताः ॥ ९२ ॥

सोऽपि ब्राह्मणशार्दूलो वसिष्ठस्तं महीपतिम्॥

समभ्येत्य ततः प्राह हर्षगद्गदया गिरा ॥ ९३ ॥

दिष्ट्या मुक्तोसि राजेंद्र पापाद्ब्रह्मवधोद्भवात् ॥

दिष्ट्या त्वं तेजसा युक्तः पुनः प्राप्तो निजं पुरम् ॥ ९४ ॥

तस्मात्कीर्तय भूपाल कस्मिंस्तीर्थे समागतः ॥

त्वं मुक्तः पातकाद्घोराद्ब्रह्महत्यासमुद्भवात् ॥ ९५ ॥

ततः स कथयामास भ्रूणगर्तासमुद्भवम् ॥

वृत्तांतं तस्य विप्रर्षेरनुभूतं यथा तथा ॥ ९६ ॥

ततस्ते मंत्रिणो वृद्धाः स च राजा मुनीश्वरः ॥

पुत्रं प्रतर्दनंनाम राज्ये संस्थाप्य तत्क्षणात् ॥ ९७ ॥

भ्रूणगर्तां समासाद्य तामेव द्विजसत्तमाः ॥

तपश्चेरुर्महादेवं ध्यायमाना दिवा निशम् ॥ ९८॥

गताश्च परमां सिद्धिं कालेनाल्पेन दुर्लभाम् ॥

भ्रूणरूपधरं देवं पूजयित्वा महेश्वरम् ॥ ९९ ॥

ततःप्रभृति सा गर्ता प्रख्याता धरणीतले ॥

भ्रूणगर्तेति विप्रेंद्राः सर्वपातकनाशिनी ॥ ६.७३.१०० ॥

तत्र कृष्णचतुर्दश्यां यः श्राद्धं कुरुते नरः ॥

स पितृंस्तारयेन्नूनं दश पूर्वान्दशा परान्॥ १०१ ॥

तस्मात्सर्वप्रयत्नेन तत्र श्राद्धं समाचरेत् ॥

स्नानं च ब्राह्मणश्रेष्ठा दानं वापि स्वशक्तितः ॥ १०२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये भ्रूणगर्तामाहात्म्यवर्णनंनाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५४



॥ सूत उवाच ॥ ॥

चर्ममुंडा तथा देवी तस्मिन्स्थाने व्यवस्थिता ॥

नलेन स्थापिता पूर्वं स्वयमेव महात्मना ॥ १ ॥

अभ्यर्चयति तां भक्त्या यो महानवमी दिने ॥

स कामान्वांछिताँल्लब्ध्वा पदं प्राप्नोति शाश्वतम् ॥ २ ॥

वीरसेनसुतः पूर्वं नलोनाम महीपतिः ॥

आसीत्सर्वगुणोपेतः सर्व शत्रुक्षयावहः ॥ ३ ॥

भार्या तस्याभवत्साध्वी प्राणेभ्योपि गरीयसी ॥

दमयंतीति विख्याता विदर्भाधिपतेः सुता ॥ ४ ॥

अथासौ कलिनाविष्टो द्यूतं चक्रे महीपतिः ॥

पुष्करेण समं विप्रा दायादेन दिवानिशम् ॥ ५ ॥

ततः स व्यसनासक्तो वार्यमाणोऽपि सज्जनैः ॥

हारयामास सप्तांगं राज्यं मुक्त्वा च तां प्रियाम् ॥ ६ ॥

अथ तां स समादाय प्रविष्टो गहनं वनम् ॥

निर्जलं लज्जयाविष्टो दुःखव्याकुलितेंद्रियः ॥ ७ ॥

ततः स चिंतयामास यद्येषा भीममंदिरे ॥

याति तन्मुच्यते कष्टाद्वनवाससमुद्भवात् ॥ ८ ॥

न मया तत्र गंतव्यं कथंचिदपि मानिना ॥

तस्मादेनां परित्यज्य रात्रौ गच्छामि दूरतः ॥ ९ ॥

येन त्यक्ता मया साध्वी कुण्डिनं याति तत्पुरम् ॥

स एवं निश्चयं कृत्वा सुखसुप्तां विहाय ताम् ॥

प्रजगाम वनं घोरं वन्यश्वापदसंकुलम्॥ ६.५४.१० ॥

प्रत्यूषे चापि सोत्थाय यावत्पश्यति भाभिनी ॥

तावत्पश्यतिशून्यं स्वं पार्श्वं यत्र नलः स्थितः ॥ ११ ॥

ततो विलप्य दुःखार्ता करुणं तत्र कानने ॥

जगाम मार्गमाश्रित्थ पितुर्हर्म्यं शनैःशनैः ॥ १२ ॥

नलोऽपि च वने तस्मिन्भ्रममाणो महीपतिः ॥

एकाकी वृक्षकुंजानि सेवयामास सर्वदा ॥ १३ ॥

ततस्तद्वनमुत्सृज्य जगामान्यन्महावनम् ॥

नानावृक्षगणैर्युक्तं बहुश्वापदसंकुलम् ॥ १४ ॥

एवं स पृथिवीपालो भ्रममाणोवनाद्वनम् ॥

हाटकेश्वरजं क्षेत्रमाससाद ततः परम् ॥ १५ ॥

एतस्मिन्नंतरे प्राप्तं तन्महानवमीदिनम् ॥

विशेषाद्यत्र भूपालाः पूजयन्ति सुरेश्वरीम् ॥ १६ ॥

ततः स मृन्मयीं कृत्वा चर्ममुण्डधरां नृपः ॥

विभवाभावतः पश्चात्फलमूलैरतर्पयत् ॥ १७ ॥

ततस्तस्याः स्तुतिं कृत्वा पुरः स्थित्वा कृतांजलिः ॥

श्रद्धया परया युक्तो निषधाधिपतिः स्वयम् ॥ १८ ॥

जय सर्वगते देवि चर्ममुण्डधरे वरे ॥

जय दैत्यकुलोच्छेददक्षे दक्षात्मजे शुभे ॥ १९ ॥

कालरात्रि जयाचिन्त्ये नवम्यष्टमिवल्लभे ॥

त्रिनेत्रे त्र्यंबकाभीष्टे जय देवि सुरार्चिते॥ ॥ ६.७४.२० ॥

भीमरूपे सुरूपे च महाविद्ये महाबले ॥

महोदये महाकाये जयदेवि महाव्रते ॥ २१ ॥

नित्यरूपे जगद्धात्रि सुरामांसवसाप्रिये ॥

विकरालि महाकालि जय प्रेतजनानुगे ॥ २२ ॥

शवयानरते रम्ये भुजंगाभरणान्विते ॥

पाशहस्ते महाहस्ते रुधिरौघकृतास्पदे ॥ २३ ॥

फेत्कारा रवशोभिष्टे गीतवाद्यविराजिते ॥

जयानाद्ये जय ध्येये भर्गदेहार्धसंश्रये ॥ २४ ॥

त्वं रतिस्त्वं धृतिस्तुष्टिस्त्वं गौरी त्वं सुरेश्वरी ॥

त्वं लक्ष्मीस्त्वं च सावित्री गायत्री त्वमसंशयम् ॥ २५ ॥

यत्किंचित्त्रिषु लोकेषु स्त्रीरूपं देवि दृश्यते ॥

तत्सर्वं त्वन्मयं नात्र विकल्पोऽस्ति मम क्वचित् ॥ २६ ॥

येन सत्येन तेन त्वमत्रावासं द्रुतं कुरु ॥

सान्निध्यं भक्तितस्तुष्टा सुरासुरनमस्कृते ॥ २७ ॥

॥ सूत उवाच ॥ ॥

एवं स्तुता च सा देवी नलेन पृथिवीभुजा ॥

प्रोवाच दर्शनं गत्वा तं नृपं भक्तवत्सला ॥ २८ ॥

॥ श्रीदेव्युवाच ॥ ॥

परितुष्टाऽस्मि ते वत्स स्तोत्रेणानेन सांप्रतम् ॥

तस्माद्गृहाण मत्तस्त्वं वरं मनसि संस्थितम् ॥ २९ ॥

॥ नल उवाच ॥ ॥

दमयन्तीति मे भार्या प्राणेभ्योऽपि गरीयसी ॥

सा मया निर्जने मुक्ता

वने व्यालगणान्विते ॥ ६.७४.३० ॥

अखण्डशीलां निर्दोषां यथाहं त्वत्प्रसादतः ॥

लभे भूयोऽपि तां देवि तथात्र कुरु सत्वरम् ॥ ३१ ॥

स्तोत्रेणानेन यो देवि स्तुतिं कुर्यात्पुरस्तव ॥

तत्रैव दिवसे तस्मै त्वया देयं मनोगतम् ॥ ३२ ॥

॥ सूत उवाच ॥ ॥

सा तथेति प्रतिज्ञाय जगामादर्शनं ततः ॥

सोऽपि पार्थिवशार्दूलो लेभे सर्वं तयोदितम् ॥ ३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नलनिर्मितचर्ममुण्डामाहात्म्यवर्णनंनाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ७४ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५५




॥ सूत उवाच ॥ ॥

तस्या एव समीपस्थं देवदेवं नलेश्वरम् ।।

दृष्ट्वा विमुच्युते पापात्स्थापितं नलभूभुजा ॥ १ ॥

यस्तं पश्येन्नरो भक्त्या माघे षष्ठ्यां सिते द्विजाः ॥

सर्व रोगविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ २ ॥

कण्डूः पामाथ दद्रूणि मंडलानि विचर्चिका ॥

दर्शनात्तस्य नश्यन्ति जन्तूनां भावितात्मनाम् ॥ ३॥

अस्ति तस्याग्रतः कुण्डं स्वच्छोदकसुपूरितम्॥

मत्स्यकूर्मसमाकीर्णं पद्मिनीखंडमंडितम् ॥ ४ ॥

यस्तत्र कुरुते स्नानं प्रत्यूषे सोमवासरे ॥

अपि कुष्ठामयमस्तः स भूयः स्यात्पुनर्नवः ॥ ५ ॥

यदा संस्थापितः शंभुर्नलेन पृथिवीभुजा ॥

तदा तुष्टेन स प्रोक्तो ब्रूहि किं ते करोम्यहम् ॥ ६ ॥ ॥

॥ नल उवाच ॥ ॥

अत्र स्थेयं त्वया देव सदा सन्निहितेन च ॥

सर्वलोकहितार्थाय रोगनाशाय शंकर ॥ ७ ॥

॥ शंकर उवाच ॥ ॥

अहं त्वद्वचनाद्राजन्संप्राप्ते सोमवासरे ॥

प्रत्यूषे च निवत्स्यामि प्रासादे नात्र संशयः ॥ ८ ॥

माघाष्टम्यामहोरात्रं सकलं च महीपते ०।

प्राणिनां रोगनाशाय शुक्लपक्षे विशेषतः ॥ ९ ॥

यो मामत्र स्थितं तत्र दिवसे वीक्षयिष्यति ॥

स्नात्वा सुविमले कुंडे सम्यक्छ्रद्धासमन्वितः ॥

तस्य नाशं प्रयास्यंति व्याधयो गात्रसंभवाः ॥ ६.५५.१० ॥

योऽस्य कुंडस्य संभूतां मृत्तिकामपि मानवः ॥

संधास्यति निजे देहे सोमवारे निशाक्षये ॥
सोऽपि रोगैर्विनिर्मुक्तः संभविष्यति पुष्टिमान् ॥ ११ ॥
निष्कामस्तु पुनर्यो मां तस्मिन्काले नृपोत्तम ॥
पूजयिष्यति सद्भक्त्या पुष्पधूपानुलेपनैः ॥
सर्वपापविनिर्मुक्तो मम लोकं स यास्यति ॥ १२ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वा स भगवांस्त्रैलोक्यदीपको हरः ॥
अन्तर्धानं गतो विप्रा यथा दीपोऽत्र तत्क्षणात् ॥ १३ ॥
नलोऽपि तुष्टिमापन्नस्तमाराध्य चिरं नृपः ॥
तदाहूयाखिलान्विप्रांश्चमत्कारपुरोद्भवान् ॥।४॥
एष संस्थापितः शंभुर्मया युष्मत्पुरोंतिके ॥
येन दृष्टेन रोगाणां सर्वेषां जायते क्षयः ॥ १५ ॥
अधुनाहं गमिष्यामि स्वराज्याय कृते द्विजाः ॥
निषधां च पुरीमेष सर्वैः पूज्यः समाहितैः ॥ १६ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
एवं पार्थिवशार्दूल करिष्यामः समाहिताः ॥
तव देवकृते यत्नं यात्राद्यासु क्रियासु च ॥ १७ ॥
तथा पूजां करिष्यामः श्रद्धया परया युताः ॥
अस्माकं पुत्रपौत्रा ये भविष्यंति तथा परे ॥
वंशजास्ते करिष्यंति पूजामस्य सुभक्तितः ॥ १८ ॥
॥ सूत उवाच ॥ ॥
एवमुक्तः स भूपालस्तैर्विप्रैस्तुष्टिसंयुतः ॥
प्रतस्थे तान्प्रणम्योच्चैः सर्वैस्तैश्चाभिनंदितः ॥ ॥ १९ ॥
एवं स भगवाञ्छंभुस्तस्मिन्स्थाने व्यवस्थितः ॥
हिताय सर्वलोकानां सर्वरोगक्षयावहः ॥ ६.७५.२० ॥
तस्मात्सर्वप्रयत्नेन वीक्षणीयः सदा हि सः ॥

विशेषात्सोमवारेण शाश्वतं श्रेय इच्छता ॥ २१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये नलेश्वरमाहात्म्यवर्णनंनाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५६



॥ सूत उवाच ॥ ॥

तस्यापि नातिदूरस्थं सांबादित्यं सुरेश्वरम् ॥

दृष्ट्वा कामानवाप्नोति सर्वान्मर्त्यो हृदि स्थितान्॥ १ ॥

यस्तु माघस्य शुक्लायां सप्तम्यां रविवासरे ॥

भक्त्या संपश्यते मर्त्यो नरकान्न स पश्यति ॥ २ ॥

आसीत्पूर्वं द्विजो नाम गालवः स महामुनिः ॥

स्वाध्यायनिरतो नित्यं वेदवेदांगपारगः ॥ ३ ॥

शुचिव्रतपरः शांतो देवद्विजपरायणः ॥

कृतज्ञश्च सुशीलश्च यज्ञकर्मविचक्षणः ॥ ४ ॥

तस्यैवं वर्तमानस्य संप्राप्तं पश्चिमं वयः ॥

अपुत्रस्य द्विजश्रेष्ठास्ततो दुःखं व्यजायत ॥ ५ ॥

ततः सर्वं परित्यज्य गृहकृत्यं स भक्तिमान् ॥

सूर्यमाराधयामास क्षेत्रेऽत्रैव समाहितः ॥ ६ ॥

वटवृक्षं समाश्रित्य श्रद्धया परया युतः ॥

स्थापयित्वा रवेरर्चां यथोक्तां पंचरात्रिके ॥ ७ ॥

वर्षास्वाकाशशायी च हेमंते जलसंश्रयः ॥

पंचाग्निसाधको ग्रीष्मे निराहारो जितेन्द्रियः ॥ ८ ॥

ततः पंचदशे वर्षे संप्राप्ते भगवान्रविः ॥

वटवृक्षं समाश्रित्य समीपस्थमुवाच तम् ॥ ९ ॥

॥ श्रीसूर्य उवाच ॥ ॥

वरदोस्म्यद्य भद्रं ते वरं प्रार्थय गालव ॥

अतिदुर्लभमप्याशु तव दास्याम्यसंशयम् ॥६.५६.१०॥

॥ गालव उवाच ॥ ॥

अपुत्रोऽहं सुरश्रेष्ठ पश्चिमे वयसि स्थितः ॥

तस्माद्देहि सुतं मह्यं वंशवृद्धिकरं परम् ॥ ११ ॥

॥ श्रीसूर्य उवाच ॥ ॥

वंशवृद्धिकरो विप्र पुत्रस्तव भविष्यति ॥

तेजस्वी च यशस्वी च शास्त्रज्ञो वेद पारगः॥।२॥

येयं त्वया कृता मेऽर्चा सांबसूर्यस्य संनिधौ ॥

सांबसूर्याभिधानोऽयं भविष्यति धरातले॥।३॥

अन्योऽपि श्रद्धयोपेतो य एनं पूजयिष्यति ॥

सप्तम्यां सूर्यवारेण यावद्द्वादश भास्कराः ॥।४॥

सप्तम्यश्च द्विजश्रेष्ठ निराहारस्तु भक्तितः या ॥

स प्राप्स्यति न संदेहः पुत्रं वंशविवर्धनम् ॥ १५ ॥

एवमुक्त्वा च सप्ताश्वो विरराम दिवाकरः ॥

गालवोऽपि प्रहृष्टात्मा जगाम निजमंदिरम् ॥ १६ ॥

नातिदीर्घेण कालेन ततस्तस्याभव तत्सुतः॥

यथोक्तस्तेन देवेन सर्वलक्षणलक्षितः ॥ १७ ॥

ततश्चक्रे पिता नाम वटेश्वर इति स्वयम् ॥

वटस्थेन यतो दत्तः संतुष्टेनांशुमालिना ॥ १८ ॥

वटेश्वरसुतान्दृष्ट्वा पौत्रांश्च द्विजसत्तमाः ॥

गालवः सूर्यमापन्नः कृत्वा सुविपुलं तपः ॥ १९ ॥

वटेश्वरोऽपि संज्ञाय पित्रा संस्थापितं रविम् ॥

तदर्थं कारयामास प्रासादं सुमनोहरम् ॥ ६.७६.२० ॥

ततःप्रभृति लोके च स वटादित्यसंज्ञितः ॥

पुत्रप्रदो ह्यपुत्राणां विख्यातो भुवनत्रये ॥ २१ ॥

सप्तम्यां सूर्यवारेण उपवासपरायणः ॥

यस्तं पूजयते भक्त्या सप्तर्मार्द्वादश क्रमात् ॥

स प्राप्नोति सुतं श्रेष्ठं स्ववंशस्य विवर्धनम् ॥ २२ ॥

निष्कामो वा नरो यस्तु तं पूजयति मानवः ॥

स मोक्षमाप्नुयान्नूनं दुर्लभं त्रिदशैरपि ॥ २३ ॥

अथ गाथा पुरा गीता नारदेन सुरर्षिणा ॥

दृष्ट्वा पुत्रप्रदं देवं वटादित्यं सुरेश्वरम् ॥ २४ ॥

अपि वर्षशता नारी वंध्या वा दुर्भगापि वा ॥

सांबसूर्यप्रसादेन सद्यो गर्भवती भवेत् ॥ २५ ॥

किं दानैः किं व्रतैर्ध्यानैः किं जपैः सोपवासकैः ॥

पुत्रार्थं विद्यमानेऽथ सांबसूर्ये सुरेश्वरे ॥ २६ ॥

वर्षमेकं नरो भक्त्या यः पश्येत्सूर्यवासरे ॥

कृतक्षणोऽत्र पुत्रं स लभते चोत्तमं सुखम्॥ २७ ॥

तस्मात्सर्वप्रयत्नेन तं देवं यत्नतो द्विजाः ॥

पश्येदात्महितार्थाय स्ववंशपरिवृद्धये ॥ २८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सांबादित्यमाहात्म्यवर्णनंनाम षट्पञ्चाशत्तमोऽध्यायः ॥ ॥ ५६॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५७

https://sa.wikisource.org/s/fkj
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तस्मिन्क्षेत्रे तथादित्यः स्थापितो द्विजसत्तमाः ॥

भीष्मेण ब्राह्मणेंद्राणां संमतेन तथात्मना ॥ १ ॥

शंतनोर्दयितः पुत्रो गांगेय इति विश्रुतः ॥

आसीत्पुरा वरो नृणामूर्ध्वरेताः सुविश्रुतः ॥ २ ॥

तस्यासीत्तुमुलं युद्धं भार्गवेण समं महत् ॥

त्रयोविंशद्दिनान्येव देवासुररणोपमम्॥

अंबाकृते शितैः शस्त्रैरस्त्रैश्च तदनंतरम्॥ ३ ॥

ततो ब्रह्मादयो देवाः स्वयमेव व्यवस्थिताः ॥

ताभ्यां निवारणार्थाय शांत्यर्थं सर्वदेहिनान् ॥

गताश्च ते समुत्थाप्य पुनरेव त्रिविष्टपम् ॥ ४ ॥

अंबापि प्राप्य परमं गांगेयोत्थं पराभवम् ॥

प्रविष्टा कोपरक्ताक्षी सुसमिद्धे हुताशने॥५॥

भर्त्सयित्वा नदीपुत्रं बाष्पव्याकुललोचना॥

ततःप्रोवाच मध्यस्था वह्नेः कुरुपितामहम्॥६॥

यस्माद्भीष्म त्वया त्यक्ता कामार्ताहं सुदुर्मते॥

तस्मात्तव वधायाशु भविष्यामि पुनः क्षितौ॥७॥

स्त्रीहत्यया समायुक्तस्त्वं च नूनं भविष्यसि॥

प्रमाणं यदि धर्मोऽत्र स्मृतिशास्त्रसमुद्भवः ॥ ८ ॥

ततः स घृणयाऽऽविष्टो भीष्मः कुरुपितामहः ॥

मार्कंडेयं मुनिश्रेष्ठं पप्रच्छ विनयान्वितः॥९॥

भगवन्काशिराजस्य सुतया मे प्रजल्पितम् ॥

मम मृत्युकरं पापं सकलं ते भविष्यति ॥ ६.५७.१० ॥

तत्किं स्याद्वाक्यमात्रेण नो वा ब्राह्मणसत्तम ॥

अत्र मे संशयस्तत्त्वं यथावद्वक्तुमर्हसि॥ ११ ॥

॥ श्रीमार्कंडेय उवाच ॥ ॥

आक्षिप्तस्ताडितो वापि यमुद्दिश्य त्यजेदसून् ॥

स्त्रीजनो वा द्विजो वापि तस्य पापं तु तद्भवेत् ॥ १२ ॥

स्त्रियं वा ब्राह्मणं वापि तस्मान्नैव प्रकोपयेत् ॥

निघ्नंतं वा शपंतं वा यदीच्छेच्छुभमात्मनः ॥ १३ ॥

त्वया पुनर्वराकी सा कामार्ता समुपेक्षिता ॥

जित्वा स्वयंवरे पूर्वं तत्कथं स्यान्न पापभाक् ॥।४॥

॥ भीष्म उवाच ॥ ॥

तदर्थं वद मे ब्रह्मन्प्रायश्चित्तं विशुद्धये ॥

तपो वा यदि वा दानं व्रतं नियममेव वा ॥ १५ ॥

॥ मार्कंडेय उवाच ॥ ॥

दशानां ब्राह्मणेंद्राणां यद्वधे पातकं स्मृतम् ॥

तत्पापं स्त्रीवधे कृत्स्नं जायते भरतर्षभ ॥ १६ ॥

तदत्र विषये दानं न तपो न व्रतादिकम् ॥

तीर्थसेवां परित्यज्य तस्मात्त्वं तां समाचर ॥ १७ ॥

॥ ॥ सूत उवाच ॥ ॥

स तस्य वचनं श्रुत्वा भीष्मः कुरुपितामहः ॥

तीर्थयात्रापरो भूत्वा बभ्राम क्षितिमंडले॥।८॥

ततः क्रमात्समायातो भ्रममाणो महीतले ॥

चमत्कारपुरे क्षेत्रे नानातीर्थसमाकुले ॥ १९ ॥

अथापश्यन्महात्मा स सुपुण्यं तद्गयाशिरः ॥

स्नात्वा श्राद्धं च विधिवद्यावच्छ्रद्धासम न्वितः ॥ ६.५७.२० ॥

चक्रे तावन्नभोवाणी वाक्यमेतदुवाच ह ॥

भीष्मभीष्म महाबाहो नार्हस्त्वं श्राद्धजं विधिम् ॥ २१ ॥

कर्तुं स्त्रीहत्यययायुक्तस्तस्माच्छृणु वचो मम ॥

शर्मिष्ठातीर्थमित्येव ख्यातं पातकनाशनम् ॥ २२ ॥

अस्मात्स्थानात्समीपस्थं वारुण्यां दिशि पुण्यकृत् ॥

कृष्णांगारकषष्ठ्यां यो नरः स्नानं समाचरेत् ॥ २३ ॥

स स्त्रीहत्याकृतात्पापान्मुच्यते नात्र संशयः ॥

तस्मादद्य दिने पुत्र भौमवारसमन्विता ॥ २४ ॥

सैव षष्ठी तिथिः पुण्या तस्मात्तत्र द्रुतं व्रज ॥

अहं तव पिता पुत्र शंतनुः पृथिवीपतिः ॥ २५ ॥

स्त्रीहत्ययान्वितं ज्ञात्वा ततस्तूर्णमिहागतः ॥

ततो भीष्मो द्रुतं गत्वा तत्र स्थाने समाहितः ॥ २६ ॥

स्नानं कृत्वा ततः श्राद्धं चक्रे श्रद्धासमन्वितः ॥

ततो भूयः समागत्य स तं प्रोवाच शतनुः ॥ २७ ॥

विपाप्मा त्वं कुरुश्रेष्ठ संजातोऽसि न संशयः ॥

तस्मान्निजं गृहं गच्छ राज्यचिंतां समाचर ॥ २८ ॥

ततः स विस्मयाविष्टो ज्ञात्वा तीर्थमनुत्तमम् ॥

वासुदेवात्मिकामर्चां तथान्यां कुरुसत्तमः ॥ २९ ॥

पारिजातमयीं मूर्तिं रवेर्लक्षणलक्षिताम् ॥

सुप्रमाणां सुरूपां च श्रद्धापूतेन चेतसा ॥ ६.७७.३० ॥

तथान्यत्स्थापयामास लिंगं देवस्य शूलिनः ॥

दुर्गां च भक्तिसंयुक्तो विधिदृष्टेन कर्मणा ॥ ३१ ॥

ततः सर्वान्समाहूय स विप्रान्पुरसंभवान् ॥

प्रोवाच कौरवो भीष्मो विनयावनतः स्थितः ॥ ३२ ॥

मया विनिर्मितं विप्रा देवागारचतुष्टयम् ॥

एतत्क्षेत्रे च युष्माकं दयां कृत्वा ममोपरि ॥ ३३ ॥

पालयध्वं प्रयास्यामि स्वगृहं प्रति सत्वरम्॥

प्रेरितः पितृभिर्दिव्यैः स्वर्गमार्गसमाश्रितैः ॥ ३४ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

गच्छगच्छ कुरुश्रेष्ठ सुविश्रब्धः स्वमायया ॥

वयं सर्वे करिष्यामो युष्मच्छ्रेयोऽभिवर्धनम् ॥ ३५ ॥

देवश्रेणिरियं राजन्या त्वयात्र विनिर्मिता ॥

अस्याः पूजादिकं सर्वं करिष्यामः सदा वयम्॥ ३६ ॥

तवापि विनयं दृष्ट्वा परितुष्टा वयं नृप ॥
सर्वान्प्रार्थय तस्मात्त्वं वरं स्वं मनसि स्थितम् ॥३७ ॥
॥ भीष्म उवाच ॥ ॥
एष एव वरोऽस्माकं यत्संतुष्टा द्विजोत्तमाः ॥
तथाप्याशु वचः कार्यं युष्मदीयं मयाधुना ॥ ३८ ।१
एतानि देवसद्मानि मदीयानि नरो भुवि ॥
यो यं काममभिध्याय पूजयेच्छ्रद्धयाऽन्वितः ॥
प्रसादादेव युष्माकं तस्य तत्स्यादसंशयम् ॥ ३९ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
आदित्यस्य करिष्यामो यात्रां भाद्रपदे वयम् ॥
सप्तम्यां सूर्यवारेण सर्वदैव समाहिताः ॥ ६.५७.४० ॥
तथा शिवस्य चाष्टम्यां चैत्रशुक्ले विशेषतः ॥
चतुर्दश्यां महाभाग तव स्नेहान्न संशयः ॥ ४१ ॥
शयने बोधने विष्णोः संप्राप्ते द्वादशीदिने ॥
विष्णोरपि च दुर्गायाः संप्राप्ते नवमीदिने ॥४२॥
आश्विने शुक्लपक्षे च गीतवादित्रनिस्वनैः॥
महोत्सवं तथा चित्रैर्हास्यलास्यैः पृथग्विधैः ॥ ४३.॥
यस्तत्र मानवो नित्यं श्रद्धया परया युतः ॥
करिष्यति च गीतादि स यास्यति परां गतिम् ॥ ४४ ॥
वयं तस्य भविष्यामः सदैव प्रीतमानसाः ॥
प्रदास्यामस्तथा कामान्मनसा वांछितान्नृप ॥ ॥ ४५ ॥
एवमुक्त्वाथ ते विप्राः स्वानि स्थानानि भेजिरे ॥
भीष्मोऽपि हर्षसंयुक्तः स्वगृहं प्रस्थितस्ततः ॥ ४६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये गांगेययात्राख्यानंनाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५८


< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं संस्थाप्य गांगेयः पुण्यं देवचतुष्टयम् ॥

ततः संस्थापयामास गंगां त्रिपथगामिनीम् ॥ १ ॥

कूपिकायां महाभाग शिवलिंगस्य पूर्वतः ॥

ततः प्रोवाच तान्हृष्टः संपूज्य द्विजसत्तमान् ॥ २ ॥

अस्यां यः पुरुषः स्नानं कृत्वा मां वीक्षयिष्यति ॥

सर्वपापविनिर्मुक्तः शिवलोकं प्रयास्यति ॥ ३ ॥

करिष्यति तथा यस्तु शपथं चात्र मानवः ॥

असत्यं यास्यति क्षिप्रं स यमस्य गृहं प्रति ॥ ४ ॥

एवमुक्त्वा महाभागो भीष्मः कुरुपितामहः ॥

जगाम स्वपुरं तस्माद्धर्षेण महता वृतः ॥ ५ ॥

॥ सूत उवाच ॥

तत्रासीच्छूद्रसंभूतः पौंड्रकोनाम नामतः ॥

बालभावे समं मित्रैः स क्रीडति दिवानिशम् ॥ ६ ॥

हास्यभावाच्च मित्रस्य पुस्तकं तेन चोरितम् ॥

मित्रैः पृष्टः पौण्ड्रकः स प्राह नैव मया हृतम् ॥ ७ ॥

पुस्तकं चैव युष्माकं चिन्तनीयं सदैव तत् ॥

भवद्भिर्यत्नमास्थाय दृश्यतां क्वापि पुस्तकम् ॥ ८ ॥

कृताश्च शपथास्तत्र स्नात्वा भागीरथीजले ॥

अदुष्टचेतसा तेन दत्तं तत्पुस्तकं हृतम् ॥ ९ ॥

पुनश्च रुचिरं हास्यं कृत्वा तेन समं बहु ॥

अथासावभवत्कुष्ठी तत्क्षणादेव गर्हितः ॥ ६.५८.१० ॥

स त्यक्तो बांधवैः सर्वैः कलत्रैरपि वल्लभैः ॥

ततो वैराग्यमापन्नो भृगुपातं पपात सः ॥ ११ ॥

जातश्च तत्प्रभावेन कुष्ठेन परिवर्जितः ॥

शास्त्रचौर्यकृताद्दोषान्मूकरूपः स हास्यकृत् ॥ १२ ॥

न कार्यः शपथस्तस्मात्तस्याग्रेऽपि लघुर्द्विजाः ॥

अपि हास्योपचारेण आत्मनः सुखमिच्छता ॥ १३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शिवगंगामाहात्म्यवर्णनंनाम अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०५९



॥ सूत उवाच ॥ ॥

तस्मिन्क्षेत्रे रविः पूर्वं विदुरेण प्रतिष्ठितम् ॥

शिवश्च परया भक्त्या तथा विष्णुर्द्विजोत्तमाः ॥ १ ॥

यस्तान्पूजयते भक्त्या मानुषो भक्तितस्ततः ॥

स यास्यति परं स्थानं यज्ञैरपि सुदुर्लभम् ॥२ ॥

हस्तिनापुरसंस्थेन विदुरेण पुरा द्विजाः ॥

गालवो मुनिशार्दूलः पृष्टः स्वगृहमागतः ॥ ३ ॥

अपुत्रस्य गतिर्लोके कीदृक्संजायते परे ॥

एतन्मे पृच्छतो ब्रूहि कृत्वा सद्भावमुत्तमम् ॥ ४ ॥

॥ गालव उवाच ॥ ॥

अपुत्रस्य गतिर्नास्ति मृतः स्वर्गं न गच्छति ॥

द्वादशानामपि तथा यद्येकोऽपि न विद्यते ॥ ५ ॥

औरसः क्षेत्रजश्चैव क्रयक्रीतश्च पालितः ॥

पौनर्भवः पुनर्दत्तः कुंडो गोलस्तथा परः ॥

कानीनश्च सहोढश्च अश्वत्थो ब्रह्मवृक्षकः ॥ ६ ॥

एतेषामपि यद्येकः पुरुषाणां न जायते ॥

तन्नूनं नरके वासः पुंसंज्ञे वै प्रजायते ॥ ७ ॥ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा वचनं तस्य गालवस्य महात्मनः ॥

अपुत्रत्वात्परं दुःखं जगाम विदुरस्तदा ॥ ८ ॥

ततस्तं गालवः प्राह मा त्वं दुःखपदं व्रज ॥

मद्वाक्यात्पुत्रकं वृक्षं विष्णुसंज्ञं द्रुतं कुरु ॥९॥

तस्मात्प्राप्स्यसि निःशेषं फलं पुत्रसमुद्भवम् ॥

गत्वा पुण्यतमे देशे रक्तशृंगस्य मूर्धनि ॥६.५९.१०॥

हाटकेश्वरजे क्षेत्रे सर्ववृद्धिशुभोदये ॥
तस्य तद्वचनं श्रुत्वा विदुरस्तत्क्षणाद्ययौ ॥ ११ ॥
तत्स्थानं गालवोद्दिष्टं हर्षेण महतान्वितः ॥
तत्राश्वत्थतरुं स्थाप्य पुत्रत्वे चाभिषेच्य च ॥ १२ ॥
वैवाहिकेन विधिना कृतकृत्यो बभूव ह ॥
ततो बभ्राम तत्क्षेत्रं तीर्थयात्रापरायणः॥ १३ ॥
कीर्तितानि विचित्राणि राजर्षीणां महात्मनाम् ॥
श्रुत्वा स्थानानि गत्वा च ददर्श स्थानदेवताः॥।४ ॥
स दृष्ट्वा कुरुवृद्धस्य कीर्तनानि महात्मनः ॥
ततश्चक्रे मतिं तत्र दिव्यप्रासादकर्मणि ॥ १५ ॥
ततो माहेश्वरं लिंगं वटाधस्ताद्विधाय सः ॥
विष्णुं च स्थापयामास अश्वत्थस्य तरोरधः ॥ १६ ॥
निवेश्य च तथा दिव्यं ब्राह्मणेभ्यो न्यवेदयत् ॥
एतद्देवत्रयं क्षेत्रे युष्माकं हि मया कृतम् ॥
भवद्भिः सकला चास्य चिन्ताकार्या सदैव हि ॥ १७ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
वयमस्य करिष्यामो यात्राद्याः सकलाः क्रियाः ॥ १८ ॥
तथा वंशोद्भवा ये च पुत्राः पौत्रास्तथापरे ॥
करिष्यंति क्रियाः सर्वास्त्वं गच्छ स्वगृहं प्रति ॥ १९ ॥
ततो जगाम विदुरः स्वपुरं प्रति हर्षितः ॥
कृतकृत्यो द्विजास्ते च चक्रुर्वाक्यं तदुद्भवम्॥ ६.५९.२० ॥
माघमासस्य सप्तम्यां सूर्यवारेण यो नरः ॥
पूजयेद्भास्करं तत्र स याति परमां गतिम् ॥ २१ ॥
शिवं वा सोमवारेण शुक्लाष्टम्यां विशेषतः ॥
शयने बोधने विष्णुं सम्यक्छ्रद्धासमन्वितः ॥ २२ ॥
तस्मात्सर्वप्रयत्नेन देवानां तत्त्रयं शुभम् ॥
पूजनीयं विशेषेण नरैः स्वर्गतिमीप्सुभिः ॥ २३ ॥
तत्र सिद्धिं गताः पूर्वं मुनयः संशितव्रताः ॥

विदुरेश्वरमाराध्य शतशोऽथ सहस्रशः ॥ २४ ॥

ततस्तत्सिद्धिदं ज्ञात्वा लिंगं वै पाकशासनः ॥

पांसुभिः पूरयामास यथा कश्चिन्न बुध्यते ॥ २५ ॥

कस्यचित्त्वथ कालस्य विदुरस्तत्र चागतः ॥

दृष्ट्वा लोपगतं लिंगं दुःखेन महतान्वितः ॥ २६ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

मा त्वं कुरु विषादं हि लिंगार्थे विदुराधुना ॥२७॥।

योऽयं स दृश्यते वालो वटस्तस्य तले स्थिता ॥

देवद्रोणिः सुरेशेन पांसुभिः परिपूरिता ॥ २८ ॥

ततो गजाह्वयात्तूर्णं समानीय धनं बहु ॥

शोधयामास तत्स्थानं दिवारात्रमतन्द्रितः ॥ २९ ॥

ततो विलोक्य तान्देवान्हर्षेण महतान्वितः ॥

प्रासादं निर्ममे तेषां योग्यं साध्वभिसंस्थितम् ॥ ॥ ६.५९.३० ॥

कैलासशिखराकारं भास्करार्थे महामुनिः ॥

जटामध्यगतं दृष्ट्वा वटस्य च महेश्वरम् ॥ ३१ ॥

प्रासादं नाकरोत्तत्र लिंगं यावन्न चालयेत् ॥

वासुदेवस्य योग्यां च कृत्वा शालां बृहत्तराम् ॥ ३२ ॥

दत्त्वा वृत्तिं च संहृष्टो ब्राह्मणेभ्यो निवेद्य च ॥

जगाम स्वाश्रमं भूयो विप्रानामंत्र्य तांस्ततः ॥ ३३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विदुरकृतदेवप्रासादवृत्तान्त वर्णनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६०



॥ ऋषय ऊचुः ॥ ॥

माहित्थेयं त्वयाख्याता या पुरा सूतनन्दन ॥

केन संस्थापिता तत्र वद सर्वमशेषतः ॥ १ ॥

॥ सूत उवाच ॥ ॥

शोषणीनाम या विद्या पुरागस्त्येन साधिता ॥

आथर्वणेन मन्त्रेण स्वयं च परमेश्वरी ॥ ॥ २ ॥

ततः संशोषितस्तेन स समुद्रो महात्मना ॥

मित्रावरुणपुत्रेण सा प्रोक्ता पुरतः स्थिता ॥ ३ ॥

माहित्थं साधितं यस्मात्त्वया मे सकलं शुभम् ॥

माहित्थानाम तस्मात्त्वं देवता संभविष्यसि ॥ ४ ॥

चमत्कारपुरक्षेत्रे पूजां प्राप्स्यस्यनुत्तमाम् ॥

यस्त्वामाथर्वणैर्मन्त्रैस्तत्रस्थां भक्तिसंयुतः ॥ ५ ॥

पूजयिष्यति वृद्धिं च सर्वकालमवाप्स्यति ॥

तस्मात्तत्र द्रुतं गच्छ मया सार्द्धं पुरोत्तमे ॥ ६ ॥

द्विजानां रक्षणार्थाय नित्यं संनिहिता भव ॥

एवं सा तत्र संभूता माहित्था वरदेवता ॥ ७ ॥

ययाऽयं चलितः शैलः स्वशक्त्या निश्चलीकृतः ॥

स्कन्देनेह द्विजश्रेष्ठाः शक्त्या विद्धस्तदग्रतः ॥ ॥

नरादित्यस्ततश्चान्यो यो नरेण प्रतिष्ठितः ॥

षष्ठ्यां तं सूर्यवारेण दृष्ट्वा पापात्प्रमुच्यते ॥ ९ ॥

न शत्रूणां पराभूतिं प्रयास्यति यथार्जुनः ॥

रोगी विमुच्यते रोगाद्दरिद्रो धनमाप्नुयात् ॥ ६.६०.१० ॥

तथा गोवर्धनधरं तत्र देवं जनार्दनम् ॥

यः पश्येत्कार्तिके शुक्ले संप्राप्ते प्रथमे दिने॥

तस्य गावः प्रभूताः स्युर्नीरोगा द्विसत्तमाः ॥ ११ ॥

नरसिंहवपुः साक्षात्तथा देवो हरिः स्वयम् ॥

तथा विनायकस्तत्र सर्वकामप्रदायकः ॥

सर्वविघ्नहरश्चैव स्थापितश्चार्जुनेन हि ॥ १२ ॥

यस्तं पूजयते भक्त्या चतुर्थ्यां मोदकाशनैः ॥

स सर्वविघ्ननिर्मुक्तो लभते वांछितं फलम् ॥

तत्र स्थितो द्विजेंद्राणां हिताय द्विजसत्तमाः ॥१३ ॥

यस्तमाथर्वणैर्मंत्रैः पूजयेद्द्वादशीदिने ॥

कार्तिकस्य सिते पक्षे स याति परमां गतिम् ॥ १४ ॥

तथा तत्र द्विजश्रेष्ठा नरनारायणावुभौ ॥

देवौ परमतेजस्वी यस्तौ पश्यति भक्तितः ॥ १५ ॥

पूजयेच्च द्विजश्रेष्ठा द्वादश्या दिवसे स्वयम् ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ १६ ॥

तीर्थयात्राकृतारंभः कुन्तीपुत्रो धनंजयः ॥

हाटकेश्वरजे क्षेत्रे समायातो द्विजोत्तमाः ॥ १७ ॥

दृष्ट्वा तत्पावनं क्षेत्रं तीर्थपूगप्रपूरितम्॥

आदित्यं स्थापयामास प्रासादे सुमनोहरे ॥ १८ ॥

नरनारायणौ देवौ तस्याग्रे स्थापितौ ततः ॥

तथा गोवर्धनधरस्तत्र देवः प्रतिष्ठितः ॥ १९ ॥

नरसिंहं तथैवान्यं श्रद्धया परया युतः ॥

एवं संस्थाप्य कौंतेयो देवगृहसुपंचकम् ॥ ६.६०.२० ॥

ततो विप्रान्समाहूय सर्वांस्तान्पुरसंभवान् ॥

प्रोवाच प्रणतो भक्त्या धनं दत्त्वा सुपुष्कलम् ॥ २१ ॥

मया संस्थापितः सूर्यः सर्वरोगक्षयावहः ॥

तथार्पितश्च युष्माकं चिंतनीयं सदैव तु ॥ २२ ॥

॥ विप्रा ऊचुः ॥ ॥

गच्छ त्वं पांडवश्रेष्ठ सुविश्रब्धः स्वमालयम् ॥

वयं सर्वे करिष्यामस्तवश्रेयोऽभिवर्धनम् ॥ २३ ॥

ततोऽर्जुनः प्रहृष्टात्मा तेभ्यो दत्त्वा धनं बहु॥

तानामंत्र्य नमस्कृत्य जगाम स्वपुरं प्रति ॥ २४ ॥

।। सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं नरादित्यस्य संभवम् ॥

माहात्म्यं ब्राह्मणश्रेष्ठाः शृण्वतां पापनाशनम् ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नरादित्यमाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६१



॥ ऋषय ऊचुः ॥ ॥

शर्मिष्ठातीर्थमित्युक्तं त्वया यच्च महामते ॥

कथं जातं महाभाग किंप्रभावं तु तद्वद ॥ १ ॥

॥ सूत उवाच॥ ॥

आसीद्राजा वृकोनाम सोमवंश समुद्भवः ॥

ब्रह्मण्यश्च शरण्यश्च सर्वलोकहिते रतः ॥ २ ॥

तस्य भार्याऽभवत्साध्वी प्राणेभ्योऽपि गरीयसी ॥

सर्वलक्षणसंपन्ना पतिव्रतपरायणा ॥ ॥ ३ ॥

अथ तस्यां समुत्पन्ना प्राप्ते वयसि पश्चिमे ॥

कन्यका दिवसे प्राप्ते सर्वशास्त्रविगर्हिते ॥ ४ ॥

तत आनीय विप्रान्स ज्योतिर्ज्ञानविचक्षणान् ॥

पप्रच्छ कीदृशी कन्या ममेयं संभविष्यति ॥ ५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

या कन्या प्राप्नुयाज्जन्म चित्रासंस्थे दिवाकरे ॥

चंद्रे वापि चतुर्दश्यां सा भवेद्विषकन्यका ॥ ६ ॥

यस्तस्याः प्रतिगृह्णाति पाणिं पार्थिवसत्तम ॥

षण्मासाभ्यंतरे मृत्युं स प्राप्नोति नरो ध्रुवम् ॥ ७ ॥

यस्मिन्सा जायते हर्म्ये षण्मासाभ्यंतरे च तत् ॥

करोति विभवैर्हीनं धनदस्याप्यसंशयम् ॥ ८ ॥

सेयं तव सुता राजन्यथोक्ता विष कन्यका ॥

पैतृकं श्वाशुरीयं च हनिष्यति गृहद्वयम् ॥ ९ ॥

तस्मादिमां परित्यज्य सुखी भव नराधिप ॥

श्रद्दधासि वचोऽस्माकं हित मुक्तं यदि प्रभो ॥ ६.६१.१० ॥

॥ राजोवाच ॥ ॥

त्यक्ष्यामि यदि नामैतां धारयिष्यामि वा गृहे ॥
अन्यदेहोद्भवं कर्म फलिष्यति तथापि मे ॥ ११ ॥
शुभं वा यदि वा पापं न तु शक्यं प्रक्षितुम् ॥
तस्मात्कर्म पुरस्कृत्य नैव त्यक्ष्यामि कन्यकाम् ॥ १२ ॥
येनयेन शरीरेण यद्यत्कर्म करोति यः ॥
तेनतेनैव भूयः स प्राप्नोति सकलं फलम् ॥ १३ ॥
यस्यां यस्यामवस्थायां क्रियतेऽत्र शुभाशुभम् ॥
तस्यां तस्यां ध्रुवं तस्य फलं तद्भुज्यते नरैः ॥ १४ ॥
न नश्यति पुराकर्म कृतं सर्वेंद्रियैरिह ॥
अकृतं जायते नैव तस्मान्नास्ति भयं मम ॥ १५ ॥
आयुः कर्म च वित्तं च विद्या निधनमेव च ॥
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ १६ ॥
यथा वृक्षेषु वल्लीषु कुसुमानि फलानि च ॥
स्वकालं नातिवर्तंते तद्वत्कर्म पुराकृतम् ॥ १७ ॥
येनैव यद्यथा पूर्वं कृतं कर्म शुभाशुभम् ॥
स एव तत्तथा भुंक्ते नित्यं विहितमात्मनः ॥ १८ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥
तथैवं कोटिमध्यस्थं कर्तारं कर्म विन्दति ॥ १९ ॥
अन्यदेहकृतं कर्म न कश्चित्पुरुषो भुवि ॥
बलेन प्रज्ञया वापि समर्थः कर्तुमन्यथा ॥ ६.६१.२० ॥
अन्यथा शास्त्रगर्भिण्या धिया धीरो महीयते ॥
स्वामिवत्प्राक्कृतं कर्म विदधाति तदन्यथा ॥ २१ ॥
स्वकृतान्युपतिष्ठंति सुखदुःखानि देहिनाम् ॥
हेतुभूतो हि यस्तेषां सोऽहंकारेण बध्यते ॥ २२ ॥
सुशीघ्रमभिधावन्तं निजं कर्मानुधावति ॥
शेते सह शयानेन तिष्ठन्तमनुतिष्ठति ॥ २३ ॥
यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् ॥
तथा कर्म च कर्ता च नात्र कार्या विचारणा ॥ २९ ॥

येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव वा ॥

नरः स बद्धो रज्ज्वेव बलात्तत्रैव नीयते ॥ २५ ॥

प्रमाणं कर्मभूतानां सुखदुःखोपपादने ॥

सावधानतया यच्च जाग्रतां स्वपतामपि ॥ २६ ॥

तैलक्षये यथा दीपो निर्वाणमधिगच्छति ॥

कर्मक्षये तथा जंतुर्निर्वाणमधिगच्छति ॥ २७ ॥

न मन्त्रा न तपो दानं न तीर्थं न च संयमः ॥

समर्था रक्षितुं जंतुं पीडितं पूर्वकर्मभिः ॥ २८ ॥

संगत्या जठरे न्यस्तो रेतोबिन्दुरचेतनः ॥

ऋतुकाले मनुष्येण वृद्धिं गच्छति कर्मतः ॥ २९ ॥

अन्नपानानि जीर्यंति यत्र भक्ष्यं च भक्षितम् ॥

तस्मिन्नेवोदरे गर्भः कथं नाम न जीर्यति ॥ ६.६१.३० ॥

तस्मात्कर्मकृतं सर्वं देहिनामत्र जायते ॥

शुभं वा यदि वा पापमिति मे निश्चयः सदा ॥ ३१ ॥

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ॥

जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ ३२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये विषकन्यकोत्पत्तिवर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६२

https://sa.wikisource.org/s/fjp


॥ सूत उवाच ॥ ॥

एवं स निश्चयं कृत्वा पार्थिवो द्विजसत्तमाः ॥

नात्यजत्तां तथोक्तोऽपि दैवज्ञैर्विषकन्यकाम् ॥

दीयमानामपि प्रीत्या न च गृह्णाति भूभुजा ॥ १ ॥

शर्मणष्ठीवनं यस्मात्तया स्वपितुराहितम् ॥

शर्मिष्ठेति सुविख्याता ततः सा ह्यभवद्भुवि ॥ २ ॥

एतस्मिन्नंतरे तस्य शत्रवः पृथिवीपतेः ॥

सर्वतः पीडयामास राष्ट्रं क्रोधसमन्विताः। ॥३॥

अथा सौ पार्थिवः क्रुद्धः स्वसैन्यपरिवारितः ॥

युद्धाय निर्ययौ स्थानान्मृत्युं कृत्वा निवर्तने ॥४॥

ततः संप्राप्य ताञ्छत्रूंश्चकार स महाहवम् ॥

चतुरंगेन सैन्येन यमराष्ट्रविवर्धनम् ॥ ५॥

ततश्च दशमे प्राप्ते शत्रुभिः स महीपतिः ॥

निहतो दिवसे सर्वैर्वेष्टयित्वा समन्ततः ॥ ६ ॥

ततस्तस्य नरेन्द्रस्य हतशेषाश्च ये नराः ॥

भयार्तास्ते द्रुतं जग्मुः स्वपुरं प्रति दुःखिताः ॥ ७ ॥

तेपि शत्रुगणाः सर्वे संप्रहृष्टा जिगीषवः ॥

तत्पुरं वेष्टयामासुस्तत्पुत्रोच्छेदनाय वै ॥ ८ ॥

एतस्मिन्नंतरे पौराः सर्वे शोकपरायणाः ॥

जगर्हुः परुषैर्वाक्यैर्दुष्टां तां विषकन्यकाम् ॥९॥

अस्या दोषेण पापाया मृतश्च स महीपतिः॥

तथा राष्ट्रस्य विध्वंसे भविष्यति पुरः क्षयः ॥ ६.६२.१० ॥

उक्तः स नृपतिः पूर्वं ब्राह्मणैर्ज्ञानिभिस्तदा ॥

त्यजैनां बहुदोषाढ्यां निन्दितां विषकन्यकाम् ॥॥॥

न तेन तत्कृतं वाक्यमपि तेषां हितैषिणाम् ॥

स्नेहपाशनिबद्धेन दयाढ्येन महात्मना॥।२॥

तस्मादद्यापि पापैषा वध्यतामाशु कन्यका ॥

निर्यास्यतां पुरादस्माद्यावन्न स्यात्पुरक्षयः ॥ १३ ॥

॥ सूत उवाच ॥ ॥

सापि श्रुत्वा जनोक्तांस्तानपवादान्पृथग्विधान् ॥

वैराग्यं परमं गत्वा निंदां चक्रे तथात्मनः ॥ १४ ॥

ततो रात्रौ विनिष्क्रम्य भयशोकसमन्विता ॥

प्रतस्थेऽरण्यमासाद्य मरणे कृतनिश्चया ॥।५॥

अथ दृष्टं तया क्षेत्रं हाटकेश्वरजं महत् ॥

तपस्विभिः समाकीर्णं चित्ताह्लादकरं परम् ॥ १६ ॥

अथ तस्याः स्मृतिर्जाता पूर्वजन्मसमुद्भवा ॥

चंडालत्वे मया पूर्वं गौरेका वितृषीकृता ॥ १७ ॥

तत्प्रभावादहं जाता सुपुण्ये नृपमंदिरे ॥

क्षेत्रस्यास्य प्रभावेन तस्मादत्रैव मे स्थितिः ॥ १८ ॥

सूत उवाच ॥ ॥

अन्यदेहांतरे ह्यासीच्चंडाली सा विगर्हिता ॥

बहुप्रसूतिसंयुक्ता दरिद्रेण कदर्थिता ॥ १९ ॥

अथ सा भ्रममाणाऽत्र क्षेत्रे प्राप्ता तृषार्दिता ॥

मध्यंदिनगतेसूर्ये ज्येष्ठमासे सुदारुणे ॥ ६.६२.२० ॥

अथापश्यत्स्तोकजलां सा तत्र लघुकूपिकाम् ॥

तृषार्तां कपिलां गां वर्तमानां तदां तिके ॥ २१ ॥

ततो दयां समाश्रित्य त्यक्त्वा स्नेहं सुतोद्भवम् ॥

आत्मनश्च तथा प्राणान्गां वितृष्णामथाकरोत् ॥ २२ ॥

जलाभावे तथा सा च समस्तैर्बालकैः सह ॥

वैवस्वतगृहं प्राप्ता गोभक्तिधृतमानसा ॥ २३ ॥

ततो नृपगृहे जाता तत्प्रभावाद्द्विजोत्तमाः ॥

पूर्वकर्मविपाकेन संजाता विष कन्यका ॥ २४ ॥

॥ ऋषय ऊचुः ॥ ॥

केन कर्मविपाकेन संजाता विषकन्यका ॥

स्वकुलोच्छेदनकरी सर्वं सूत ब्रवीहि नः ॥ २५ ॥

॥ सूत उवाच ॥ ॥

चंडालत्वे तया विप्रा वर्तंत्या भ्रममाणया ॥

देवतायतने दृष्टा गौरी हेममयी शुभा ॥ २६ ॥

ततस्तां विजने प्राप्य गत्वा देशांतरं मुदा॥

यावत्करोति खंडानि विक्रयार्थं सुनिंदिता ॥

तावदन्वेषमाणास्तां संप्राप्ता नृपसेवकाः ॥२७॥

अथ ते तां समालोक्य भर्त्सयित्वा मुहुर्मुहुः॥

संताड्य लकुटाघातैर्लोष्टघातैश्च मुष्टिभिः ॥ २८ ॥

ततः सुवर्णमादाय त्यक्त्वा तां रुधिरप्लुताम् ॥

अवध्यैषेति संचिंत्य स्वपुरं प्रति ते गताः ॥२९॥

यत्तया पार्वती स्पृष्टा ततो वै खण्डशः कृता ॥

तेन कर्मविपाकेन संजाता विषकन्यका ॥ ६.६२.३० ॥

ततः संस्मृतिमासाद्य पूर्वजन्मसमुद्भवाम् ॥

माहात्म्यं जलदानस्य गोपीतस्य विचार्य च ॥

चकार कूपिकास्थाने तडागं विमलोदकम् ॥३॥।

समुद्रप्रतिमं चारु पद्मिनीखंडमंडितम् ॥

मत्स्यकच्छपसंकीर्णं शिशुमारविराजितम् ॥ ३२ ॥

सेवितं बहुभिर्हंसैर्बकैश्चक्रैः समंततः ॥

अगाधसलिलं पुण्यं सेवितं जलजंतुभिः ॥ ३३ ॥

प्रासादं तत्समीपस्थं साधु दृष्टिमनोहरम् ॥

कारयित्वातिसंभक्त्या कैलासशिखरोपमम् ॥ ३४ ॥

ततस्तत्र तपस्तेपे गौरीं संस्थाप्य भक्तितः॥

तदग्रे व्रतमास्थाय यथोक्तं शास्त्र संभवम्॥ ३५ ॥

प्रातः स्नात्वा तु हेमंते गौरीं संपूज्य भक्तितः॥

बलिपूजोपहारैश्च विप्रदानादिभिस्तथा ॥ ३६ ॥

ततश्च शिशिरे प्राप्ते सायं प्रातः समाहिता ॥
एकांतरोपवासैः सा स्नानं चक्रे नृपात्मजा ॥ ३७ ॥
वसंते नृत्यगीतैश्च तोषयामास पार्वतीम् ॥
षष्ठकालाशना साध्वी सस्यदानपरा यणा ॥ ३८ ॥
पञ्चाग्निसाधका ग्रीष्मे फलाहारं तपस्विनी ॥
चकार श्रद्धयोपेता वृकभूमिपतेः सुता ॥ ३९ ॥
वर्षासु च जलाहारा भूत्वा सा विष कन्यका ॥
आकाशे शयनं चक्रे परित्यक्तकुटीरका ॥ ६.६२.४० ॥
वायुभक्षा सती चाऽथ साऽनयच्छरदं ततः ॥
कृतजप्यपरा नित्यं पार्वतीगतमानसा ॥४॥।
एवमाराधयंत्याश्च तस्या देवीं गिरेः सुताम् ॥
जगाम सुमहान्कालो न लेभे फलमीहितम् ॥४२॥
मुखं वलिभिराक्रान्तं पलितैरंकितं शिरः॥
कन्याभावेपि वर्तंत्या न च तुष्टा हरप्रिया ॥ ४३ ॥
कस्यचित्त्वथ कालस्य तत्परीक्षार्थमेव सा ॥
शक्राणीरूपमास्थाय ततः सन्दर्शनं गता ॥४४॥
सुधावदातं सूर्याभं कैलासशिखरोपमम् ॥
सुप्रलंबकरं मत्तं चतुर्दंतं महागजम् ॥ ४५ ॥
समास्थाय वृता स्त्रीभिर्देवानां सर्वतो दिशम् ॥
दधती मुकुटं मूर्ध्नि हारकेयूरभूषिता ॥ ४६ ॥
पांडुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥
सेव्यमानाऽप्सरोभिश्च स्तूयमाना च किन्नरैः ॥ ४७ ॥
गन्धर्वैर्गीयमानासीत्ततः प्रोवाच सादरम् ॥
वरं यच्छामि ते पुत्रि प्रार्थयस्व यथेप्सितम् ॥ ४८ ॥
अनेन तपसा तुष्टा पुष्कलेन तवाधुना ॥
अहं भार्या सुरेन्द्रस्य शचीति परिकीर्तिता ॥
त्रैलोक्येऽपि स्वयं प्राप्ता दयां कृत्वा तवोपरि ॥ ४९ ॥
त्वया महत्तपस्तप्तं ध्यायंत्या हरवल्लभाम् ॥

तपसा तुष्टिमायाता भवानी न सुनिष्ठुरा ॥ ६.६२.५० ॥

॥ सूत उवाच ॥ ॥

सा तस्या वचनं श्रुत्वा शक्राण्या विषकन्यका ॥

नमस्कृत्वाऽथ तामूचे कृतांजलिपुटा स्थिता ॥ ५१ ॥

॥ विषकन्योवाच ॥ ॥

नाहं त्वत्तो वरं देवि प्रार्थयामि कथञ्चन ॥

तथान्यासामपींद्राणि देवतानामसंशयम्॥ ५२ ॥

अप्यहं नरकं रौद्रं प्रगच्छामींद्रवल्लभे ॥

हरकांता समादेशान्न स्वर्गेऽपि तवाज्ञया ॥ ५३ ॥

अनादिमध्यपर्य्यन्ता ज्ञानैश्वर्यसम न्विता ॥

या देवी पूज्यते देवैर्वरं तस्या वृणोम्यहम्॥ ५४ ॥

यामाराधयते विष्णुर्ब्रह्मा रुद्रश्च वासवः ॥

वांछितार्थं सदा देवीं वरं तस्या वृणो म्यहम् ॥ ५५ ॥

यया व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥

स्त्रीरूपैर्विविधैर्देव्या वरं तस्या वृणोम्यहम् ॥ ५६ ॥

॥ श्रीदेव्युवाच ॥ ॥

अहं भार्या सुरेन्द्रस्य प्राणेभ्योऽपि गरीयसी ॥

ममाज्ञां पालयन्ति स्म देवदानवपन्नगाः ॥ ५७ ॥

किंनरा गुहका यक्षाः किं पुनर्मर्त्यधर्मिणः ॥

तस्मात्त्वं किं न गृह्णासि वरं मत्तः कुतापसि ॥ ५८ ॥

तन्नूनं वज्रघातेन चूर्णयिष्यामि ते शिरः ॥

तस्यास्तद्वचनं श्रुत्वा तापस्यथ ततो द्विजाः ॥ ५९ ॥

धैर्यमालंब्य तां प्राह भूय एव सुरेश्वरीम् ॥

स्वामिनी त्वं हि देवानां सत्यमेतदसंशयम् ॥ ६.६२.६० ॥

यस्याः प्राप्तं त्वयैश्वर्यं परा तां तोषयाम्यहम् ॥

स्वल्पमप्यपराधं ते न करोमि सुरेश्वरि ॥ ६१ ॥

तथापि वधयोग्यां मां मन्यसे विक्षिपायुधम् ॥

अन्यच्चापि वचो मह्यं शक्राणि शृणु सादरम् ॥ ॥ ६२ ॥

तच्छुत्वा कुरु यच्छ्रेयो विचिन्त्य मनसा ततः ॥

न त्वं न ते पतिः शक्रो न चान्येपि सुरासुराः ॥

मां निषूदयितुं शक्ताः पार्वत्यां शरणं गताम् ॥ ६३ ॥

तस्माद्द्रुतं दिवं गच्छ मा त्वं कोपं वृथा कुरु ॥

सन्मार्गे वर्तमानायां मम सर्वसुरेश्वरि ॥ ६४ ॥

॥ सूत उवाच ॥ ॥

एवं सा तां शचीमुक्त्वा दुःखिता विषकन्यका ॥

चिन्तयामास तदिदं मरणे कृतनिश्चया ॥ ६५ ॥

न प्रसीदति मे देवी यस्मात्पर्वतनंदिनी ॥

तस्मान्मां यदि शक्राणी नैषा व्यापादयिष्यति ॥ ६६ ॥

तन्नूनं ज्वलनं दीप्तं सेवयिष्यामि सत्वरम् ॥

अथापश्यत्क्षणेनैव तं चैरावणवारणम् ॥ ६७ ॥

दुग्धकुंदेन्दुसंकाशं संजातं सहसा वृषम् ॥

तस्योपरि स्थितां देवीं शंभुना सह पार्वतीम् ॥ ६८ ॥

चतुर्भुजां प्रसन्नास्यां दिव्यरूपसमन्विताम् ॥

शुक्लमाल्यांबरधरां चन्द्रार्धकृतमस्तकाम् ॥ ६९ ॥

ततः सम्यक्समालोक्य ज्ञात्वा तां पर्वतात्मजाम् ॥

विषकन्या स्तुतिं चक्रे प्रणिपत्य मुहुर्मुहुः ॥ ६.६२.७० ॥

नमस्ते देवदेवेशि नमस्ते सर्ववासिनि ॥

सर्वकामप्रदे सत्ये जरामरणवर्जिते ॥ ७१ ॥

शक्रादयोऽपि देवास्ते परमार्थेन नो विदुः ॥

स्वरूपवर्णनं कर्तुं किं पुनर्देवि मानुषी ॥ ७२ ॥

यस्याः सर्वं महीव्योमजलाग्निपवनात्मकम् ॥

ब्रह्मांडमंगसंभूतं सदेवासुरमानुषम् ॥ ७३ ॥

न तस्या जन्मनि ब्रह्मा न नाशाय महेश्वरः ॥

पालनाय न गोविंदस्तां त्वां स्तोष्याम्यहं कथम्॥७४॥

तथाष्टगुणमैश्वर्यं यस्याः स्वाभाविकं परम् ॥

निरस्तातिशयं लोके स्पृहणीयतमं सदा ॥ ७५ ॥

यस्या रूपाण्यनेकानि सम्यग्ध्यानपरायणाः ॥

ध्यायंति मुनयो भक्त्या प्राप्नुवंति च वांछितम् ॥ ७६ ॥

हृदि संकल्प्य यद्रूपं ध्यानेनार्चंति योगिनः ॥

सम्यग्भावात्मकैः पुष्पैर्मोक्षाय कृत निश्चयाः ॥ ७७ ॥

तां देवीं मानुषी भूत्वा कथं स्तौमि महेश्वरीम् ॥ ७८ ॥

॥ देव्युवाच ॥ ॥

परितुष्टास्मि ते पुत्रि वरं प्रार्थय सुव्रते ॥

असंदिग्धं प्रदास्यामि यत्ते हृदि सदा स्थितम् ॥ ७९ ॥

॥ विषकन्योवाच ॥ ॥

भर्तुरर्थे मया देवि कृतोऽयं तपउद्यमः ॥

तत्किं तेन करिष्यामि सांप्रतं जरयावृता ॥ ६.६२.८० ॥

तस्मादत्राऽऽश्रमे साकं त्वया स्थेयं सदैव तु ॥

हिताय सर्वनारीणां वचनान्मम पार्वति ॥ ८१ ॥ ॥

॥ श्रीदेव्युवाच ॥ ॥

अद्यप्रभृत्यहं भद्रे श्रेष्ठेऽस्मिन्नाश्रमे शुभे ॥

स्वमाश्रमं करिष्यामि यत्ते हृदि समाश्रितम् ॥ ८२ ॥

माघशुक्लतृतीयायां या ऽत्र स्नानं करिष्यति ॥

नारी सा मत्प्रसादेन लप्स्यते वांछितं फलम् ॥ ८३ ॥

अपि कृत्वा महापापं नारी वा पुरुषोऽथवा ॥

यत्र स्नात्वा प्रसादान्मे विपाप्मा संभविष्यति ॥ ८४ ॥

अत्र ये फलदानं च प्रकरिष्यंति मानवाः ॥

सफलाः सकलास्तेषामाशाः स्युर्नात्र संशयः ॥ ८५ ॥

अपि हत्वा स्त्रियं मर्त्यो योऽत्र स्नानं करिष्यति॥

माघशुक्लतृतीयायां विपाप्मा स भविष्यति ॥ ८६ ॥

या तत्र कन्यका भद्रे स्नानं भक्त्या करि ष्यति ॥

तस्मिन्दिने पतिश्रेष्ठं लप्स्यते नात्र संशयः ॥ ८७ ॥

॥सूत उवाच ॥ ॥

एवमुक्त्वा ततो गौरी तां च पस्पर्श पाणिना ॥

ततश्च तत्क्षणाज्जाता दिव्यरूपवपुर्द्धरा ॥ ८८ ॥

वृद्धत्वेन परित्यक्ता दिव्यमाल्यानुलेपना ॥

पीनोन्नतकुचाभोगा प्रमत्तगजगामिनी ॥ ८९ ॥

ततस्तां सा समादाय विधाय निजकिंकरीम् ॥

कैलासं पर्वतश्रेष्ठं जगाम हरसंयुता ॥ ६.६२.९० ॥

ततःप्रभृति तत्तीर्थं शर्मिष्ठातीर्थमुच्यते ॥

प्रख्यातं त्रिषु लोकेषु सर्वपातकनाशनम् ॥ ९१ ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥

माघशुक्लतृतीयायां यथावद्द्विजसत्तमाः ॥ ९२ ॥

एतत्पवित्रमायुष्यं सर्व पातकनाशनम् ॥

स्त्रीतीर्थसंभवं नृणां माहात्म्यं यन्मयोदितम् ॥ ९३ ॥

यश्चैतत्प्रातरुत्थाय सदा पठति मानवः ॥

स सर्वाँल्लभते कामान्मनसा वांछितान्सदा ॥९४॥

तथा पर्वणि संप्राप्ते यश्चैतत्पठते नरः ॥

शृणोति चाशु भक्त्या यः स याति शिवमंदिरम्॥९५॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये शर्मिष्ठातीर्थमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६३



॥ सूत उवाच ॥ ॥

अथ सोमेश्वराख्यं च तत्र लिंगं सुशोभनम् ॥

अस्ति ख्यातं त्रिलोकेऽत्र स्वयं सोमेन निर्मितम् ॥ १ ॥

सोमवारेण यस्तत्र वत्सरं यावदर्चयेत् ॥

क्षणं कृत्वा स रोगेण दारुणेनापि मुच्यते ॥२॥

यक्ष्मणापि न संदेहः किं पुनः कुष्ठपूर्वकैः ॥

तस्मात्सर्वप्रयत्नेन रोगार्त्तस्तं प्रपूजयेत् ॥३॥

तदाराध्य पुरा सोमः क्षयव्याधिसमन्वितः ॥

बभूव नीरुग्देहोऽसौ यथा पांड्यो नराधिपः ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

ओषधीनामधीशस्य कथं सोमस्य सूतज ॥

क्षयव्याधिः पुरा जाता उपशांतिं कथं गतः ॥५॥

एतन्नः सर्वमाचक्ष्व विस्तरेण महामते॥

तथा तस्य महीपस्य पांड्यस्यापि कथां शुभाम् ॥ ६ ॥

॥ सूत उवाच ॥ ॥

दक्षस्य कन्यकाः पूर्वं सप्तविंशतिसंख्यया ॥

उपयेमे निशानाथो देवाग्निगुरुसंनिधौ ॥ ७ ॥

नक्षत्रसंज्ञिता लोके कीर्त्यंते या द्विजोत्तमैः ॥

दैवज्ञैरश्विनीपूर्वा रूपौदार्यगुणान्विताः ॥८॥

अथ तासां समस्तानां मध्ये तस्य निशापतेः ॥

रोहिणी वल्लभा जज्ञे प्राणेभ्योऽपि गरीयसी ॥ ९ ॥

ततः समं परित्यज्य सर्वास्ता दक्षकन्यकाः ॥

रोहिण्या सह संयुक्तः संबभूव दिवानिशम् ॥ ६.६३.१० ॥

ततस्ताः काम संतप्ता दौर्भाग्येन समन्विताः ॥

प्रोचुर्दुःखान्विता दक्षं गत्वा बाष्पप्लुताननाः ॥ ११ ॥

वयं यस्मै त्वया दत्ताः पत्न्यर्थं तात पापिने॥
ऋतुमात्रमपि प्रीत्या सोऽस्माकं न प्रयच्छति ॥ १२ ॥
तस्मात्प्राणान्विहास्यामः संप्रविश्य हुताशनम् ॥
अविलंबान्महाभाग सत्यं ब्रूमस्तवाग्रतः ॥३ ॥ १३ ॥
॥ सूत उवाच ॥ ॥
तासां तद्वचनं श्रुत्वा दक्षो दुःखसमन्वितः ॥
सर्वास्ताः स्वयमादाय जगाम शशिसंनिधौ ॥ १४ ॥
ततः प्रोवाच सोऽन्वक्षं तासां दक्षः प्रजापतिः ॥
भर्त्सयन्परुषैर्वाक्यैर्निशानाथं मुहुर्मुहुः ॥ १५ ॥
किमिदं युज्यते कर्तुं त्वया रात्रिपतेऽधम ॥
कर्म मूढ सतां बाह्य धर्मशास्त्रविगर्हितम्॥ १६ ॥
ऋतुकालेऽपि संप्राप्ते सुता मम समुद्भवाः ॥
यन्न संभाषसि प्रीत्या धर्मशास्त्रं न वेत्सि किम् ॥ १७ ॥
ऋतु स्नातां तु यो भार्यां संनिधौ नोपगच्छति ॥
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ १८ ॥
तस्य तद्वचनं श्रुत्वा सलज्जो रात्रिनायकः ॥॥
प्रोवाचाधोमुखो दक्षं प्रकरिष्ये वचस्तव ॥ १९ ॥
ततो हृष्टमना दक्षः सुताः सर्वा हिमद्युते ॥
निवेद्यामंत्र्य तं पश्चाज्जगाम निजमंदिरम् ॥ ६.६३.२० ॥३
चन्द्रोऽपि पूर्ववत्सर्वास्ताः परित्यज्य दक्षजाः ॥
रोहिण्या सह संसर्गं प्रचकारानुरागतः ॥ २१ ॥
अथ ता दुःखिता भूयो जग्मुर्यत्र पिता स्थितः ॥
प्रोचुश्च बाष्पपूर्णाक्षास्तत्कालसदृशं वचः ॥ २२ ॥
एतत्तात महद्दुःखमस्माकं वर्तते हृदि ॥
यद्दौर्भाग्यं प्रसंजातं सर्वस्त्रीजनगर्हितम् ॥ ॥ २३ ॥
यत्पुनस्त्वं कृतस्तेन कामुकेन दुरात्मना ॥
व्यर्थश्रमोऽप्रमाणीव कृतेऽस्माकं गतः स्वयम् ॥ २४ ॥
तद्दुःखं न वयं शक्ता हृदि धर्तुं कथंचन ॥

रमते स हि रोहिण्या चंद्रमाः सहितोऽनिशम् ॥ २५ ॥

विशेषात्तव वाक्येन निषिद्धो रात्रिनायकः ॥

अनुज्ञां देहि तस्मात्त्वमस्माकं तत्र सांप्रतम् ॥

दौर्भाग्यदुःखसंतप्तास्त्यजामो येन जीवितम् ॥ २६ ॥

॥ सूत उवाच ॥ ॥

तासां तद्वचनं श्रुत्वा दक्षः कोपसमन्वितः ॥

शशाप शर्वरीनाथं गत्वा तत्संनिधौ ततः ॥ २७ ॥

यस्मात्पाप न मे वाक्यं त्वया धर्मसमन्वितम् ॥

कृतं तस्मात्क्षयव्याधिस्त्वां ग्रसिष्यति दारुणः ॥ २८ ॥

एवमुक्त्वा ययौ दक्षश्चन्द्रोऽपि द्विजसत्तमाः ॥

तत्क्षणाद्यक्ष्मणाश्लिष्टः क्षयं याति दिने दिने ॥ २९ ॥

ततोऽसौ कृशतां प्राप्तः संपरित्यज्य रोहिणीम् ॥

अशक्तः सेवितुं कामं वभ्राम जगतीतले ॥ ६.६३.३० ॥

क्षयव्याधिप्रणाशाय पृच्छ मानश्चिकित्सकान्॥

औषधानि विचित्राणि प्रकुर्वाणो जितेन्द्रियः ॥ ३१ ॥

तथापि मुच्यते नैव यक्ष्मणा स निशापतिः ॥

दक्षशापेन रौद्रेण क्षयं याति दिनेदिने ॥ ३२ ॥

ततो वैराग्यमापन्नस्तीर्थयात्रापरायणः ॥

बभूव श्रद्धयायुक्तस्त्यक्त्वा भेषजमुत्तमम् ॥ ३३ ॥

अथासौ भ्रममाणस्तु तीर्थान्यायतनानि च ॥

संप्राप्तो ब्राह्मणश्रेष्ठाः प्रभासं क्षेत्रमुत्तमम्॥ ३४ ॥

तत्र स्नात्वा शुचिर्भूत्वा प्रभासं वीक्ष्य रात्रिपः ॥

यावत्संप्रस्थितोन्यत्र तावदग्रे व्यवस्थितम् ॥ ३५ ॥

अपश्यद्रोमकंनाम स मुनि संशितव्रतम् ॥

तपोवीर्यसमोपेतं सर्वसत्त्वानुकम्पकम् ॥ ३६ ॥

तं दृष्ट्वा स प्रणम्योच्चै स्ततः प्रोवाच सादरम् ॥

क्षयव्याधियुतश्चन्द्रो निर्वेदाद्द्विजसत्तमाः ॥ ३७ ॥

परिक्षीणोऽस्मि विप्रेंद्र क्षयव्याधिप्रभावतः ॥

तस्मात्कुरु प्रतीकार महं त्वां शरणं गतः ॥ ३८ ॥

मया चिकित्सकाः पृष्टास्तैरुक्तं भेषजं कृतम् ॥

अनेकधा महाभाग परिक्षीणो दिनेदिने ॥ ३९ ॥

यदि नैवोपदेशं मे कञ्चित्त्वं संप्रदास्यसि ॥

व्याधिनाशाय तत्तेन त्यक्ष्याम्यद्य कलेवरम् ॥ ६.६३.४० ॥

॥ रोमक उवाच ॥ ॥

अन्यस्यापि निशानाथ न शापः कर्तुमन्यथा ॥

शक्यते किं पुनस्तस्य दक्षस्यामिततेजसः ॥ ४१ ॥

तस्मादत्रोपदेशं ते प्रयच्छामि सुसंमतम् ॥

येन ते स्यादसंदिग्धं क्षयव्याधि परिक्षयः ॥ ४२ ॥

नादेयं किंचिदस्तीह देवदेवस्य शूलिनः ॥

संप्रहृष्टस्य तद्वाक्यात्तस्मादाराधयस्व तम् ॥ ४३ ॥

अष्टषष्टिषु तीर्थेषु सत्यं वासः सदा क्षितौ ॥

तेषु संस्थाप्य तल्लिंगं तस्य नाशाय रात्रिप ॥ ४४ ॥

आराधय ततो नित्यं श्रद्धापूतेन चेतसा ॥

संप्राप्स्यसि न संदेहः क्षयव्याधि परिक्षयम् ॥ ४५ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा संप्रहृष्टो निशापतिः ॥

तस्मिन्प्रभासके क्षेत्रे दिव्यलिंगानि शूलिनः ॥

संस्थाप्य पूजयामास स्वनामांकानि भक्तितः ॥ ४६ ॥

ततस्तुष्टो महादेवस्तस्य संदर्शनं गतः ॥

प्रोवाच वरदोऽस्मीति प्रार्थयस्व यथेप्सितम् ॥ ४७ ॥ ॥

॥ चन्द्र उवाच ॥ ॥

परं क्षीणोऽस्मि देवेश यक्ष्मणाहं पदांतिकम् ॥

प्राप्तस्तस्मात्परित्राहि नान्यत्संप्रार्थयाम्यहम् ॥ ४८ ॥

तस्य तद्वचनं श्रुत्वा भगवान्वृषभध्वजः ॥

दक्षमाहूय तत्रैव ततः प्रोवाच सादरम् ॥ ४९ ॥

एष चंद्रस्त्वया शप्तो जामाता न कृतं शुभम् ॥

तस्मादनुग्रहं चास्य मम वाक्यात्समाचर ॥ ६.६३.५० ॥

॥ दक्ष उवाच ॥ ॥

मया धर्म्यमपि प्रोक्तो वाक्यमेष कुबुद्धिमान् ॥

नाकरोन्मे पुरः प्रोच्य करिष्यामीत्य सत्यवाक् ॥ ५१ ॥

तेन शप्तस्तु कोपेन सुतार्थे वृषभध्वज ॥

हास्येनापि मया प्रोक्तं नान्यथा संप्रजायते ॥ ५२ ॥

॥ देवदेव उवाच ॥ ॥

अद्यप्रभृति सर्वास्ताः सुता एष निशाकरः ॥

समाः संवीक्षते नित्यं मम वाक्यादसंशयम् ॥ ५३ ॥

तस्मात्पक्षं क्षयं यातु पक्षं वृद्धिं प्रगच्छतु ॥

येन ते स्याद्वचः सत्यं मत्प्रसादसमन्वितम् ॥ ५४ ॥

ततो दक्षस्तथेत्युक्त्वा जगाम निजमन्दिरम् ॥

देवोऽपि शंकरो भूयः प्रोवाच शशलांछनम् ॥ ५५ ॥

भूयोऽपि प्रार्थयाभीष्टं मत्तस्त्वं शशलांछन ॥

येन सर्वं प्रयच्छामि यद्यपि स्यात्सुदुर्लभम् ॥ ५६ ॥ ॥

॥ चन्द्र उवाच ॥ ॥

यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥

तत्स्थापितेषु लिंगेषु मया सर्वेषु सर्वदा॥

संनिधानं त्वया कार्यं लोकानां हित काम्यया ॥ ५७ ॥

॥ देव उवाच ॥ ॥

अष्टषष्टिषु लिंगेषु स्थापितेषु त्वया विभो ॥

सोमवारेण सांनिध्यं करिष्ये वचनात्तव ॥ ५८ ॥

एवमुक्त्वा स देवेशस्ततश्चादर्शनं गतः ॥

चन्द्रोऽपि हर्षसंयुक्तः समं पश्यति तास्ततः ॥ ५९ ॥

सुता दक्षस्य विप्रेंद्रा शंकरस्य वचः स्मरन्॥

ततो हर्ष समायुक्ता वभूवुस्तदनंतरम् ॥ ६.६३.६० ॥

एवं सोमेश्वरास्तत्र बभूवुर्द्विजसत्तमाः ॥

अष्टषष्टिषु तीर्थेषु तथान्येषु ततः परम् ॥ ६१ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सोमनाथोत्पत्तिमाहात्म्यवर्णनंनाम त्रिषष्टितमोऽध्यायः ॥ ॥ ६३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६४



॥ सूत उवाच ॥ ॥

चमत्कारी पुरा देवी तत्रैवास्ति द्विजोत्तमाः ॥

चमत्कारनरेंद्रेण स्थापिता श्रद्धया पुरा ॥ १ ॥

यया स महिषः पूर्वं निहतो दानवो रणे ॥

कौमारव्रतधारिण्या मायाशतसहस्रधृक् ॥ २ ॥

यदा तन्निर्मितं तत्र पुरं तेन महात्मना ॥

तस्य संरक्षणार्थाय तदा सा स्थापिता द्विजाः ॥ ३ ॥

पुरस्य तस्य रक्षार्थं तथा तत्पुरवासिनाम् ॥

सर्वेषां ब्राह्मणेंद्राणां भक्त्या भावितचेतसाम् ॥ ४ ॥

यस्तामभ्यर्चयेत्सम्यङ्महानवमिवासरे ॥

कृत्स्नं संवत्सरं तस्य न भयं जायते क्वचित् ॥ ५ ॥

भूतप्रेतपिशाचेभ्यः शत्रुतश्च विशेषतः ॥

रोगेभ्यस्तस्करेभ्यश्च दुष्टेभ्योऽन्येभ्य एव च ॥ ६ ॥

यंयं काममभिध्यायञ्छुक्लाष्टम्यां नरः शुचिः ॥

तां पूजयति सद्भक्त्या स तमाप्नोत्यसंशयम् ॥ ७ ॥

निष्कामः सुखमाप्नोति मोक्षं नास्त्यत्र संशयः ॥

तस्या देव्याः प्रसादेन सत्यमेतन्मयोदितम् ॥ ८ ॥

तामाराध्य गताः पूर्वं सिद्धिं भूरिर्महीभुजः ॥

ब्राह्मणाश्च तथान्येऽपि योगिनः परमेश्वरीम् ॥ ९ ॥

यस्तस्याः श्रद्धयोपेतः प्रकरोति प्रदक्षिणाम् ॥

नित्यं संवत्सरं यावत्तिर्यग्योनौ न स व्रजेत्॥६.६४,१०॥

तस्या आयतने पूर्वमाश्चर्यमभवन्महत् ॥

यत्तद्वः कीर्तयिष्यामि शृणुध्वं सुसमाहिताः ॥ ११ ॥

आसीच्चित्ररथोनाम पूर्वं पार्थिवसत्तमः ॥

दशार्णाधिपतिः ख्यातः सर्वशत्रुनिबर्हणः ॥ १२ ॥

शुक्लाष्टम्यां सदा भक्त्या स तस्याः श्रद्धयान्वितः ॥

अष्टोत्तरशतं यावत्प्रचकार प्रदक्षिणाम् ॥ १३ ॥

ततः प्रणम्य तां देवीं संप्रयाति पुनर्गृहम् ॥

सैन्येन चतुरंगेण समंतात्परिवारितः ॥ १४ ॥

एवं तस्य नरेंद्रस्य प्रदक्षिणरतस्य च ॥

जगाम सुमहान्कालो देव्या भक्तिरतस्य च ॥ १५ ॥

कस्यचित्त्वथ कालस्य स राजा तत्र संगतः ॥

अपश्यद्ब्राह्मणश्रेष्ठान्देवीगृहसमाश्रितान् ॥ १६ ॥

ततः प्रदक्षिणां कृत्वा तां देवीं स महीपतिः ॥ १६ ॥

अग्रस्थांस्तान्द्विजान्सर्वान्नमश्चक्रे समाहितः ॥ १७ ॥

ततस्तैः सहितैस्तत्र सहासीनः कथाः शुभाः ॥

राजर्षीणां पुराणानां विप्रर्षीणां चकार ह ॥ १८ ॥

ततः कस्मिन्कथांते स पृष्टस्तैर्द्विजसत्तमैः ॥

कौतूहलसमोपेतैर्विनयावनतः स्थितः ॥ ॥ १९ ॥

राजन्पृच्छामहे सर्वे त्वां वयं कौतुकान्विताः ॥

तस्मात्कीर्तय चेद्गुह्यं न तत्तव व्यवस्थितम् ॥ ६.६४.२० ॥

मासिमासि सदाष्टम्यां त्वं शुक्लायां सुदूरतः ॥

आगत्य देवतायाश्च प्रकरोषि प्रदक्षिणाम् ॥ २१ ॥

यत्नेनान्याः परित्यज्य सर्वाः पूजादिकाः क्रियाः ॥

नूनं वेत्सि फलं कृत्स्नं यत्प्रदक्षिणसंभवम्॥ २२ ॥

॥ राजोवाच ॥ ॥ सत्यमेतद्द्विजश्रेष्ठा यद्भवद्भिरुदाहृतम् ॥

रहस्यमपि वक्तव्यं युष्माकं सांप्रतं मया ॥ २३ ॥

अहमास शुकः पूर्वमस्मिन्नायतने शुभे ॥

देव्याः पश्चिमदिग्भागे कुलायकृतसंश्रयः ॥ २४ ॥

तत्र निर्गच्छतो नित्यं कुर्वतश्चप्रवेशनम् ॥

प्रदक्षिणाभवद्देव्या नित्यमेव द्विजोत्तमाः ॥ २५ ॥

ततः कालेन मे मृत्युः संजातोऽत्रैव मंदिरे ॥

तत्प्रभावेण संजातो राजा जातिस्मरोऽत्र हि ॥ ॥ २६ ॥

एतस्मात्कारणाद्दूरात्समभ्येत्य प्रदक्षिणाम् ॥

करोम्यस्या द्विजश्रेष्ठा देवतायाः समाहितः ॥ २७ ॥

पुरा भक्तिविहीनेन कुलाये वसता मया ॥

कृता प्रदक्षिणा देव्यास्तेन जातोऽस्मि भूपतिः ॥ २८ ॥

अधुना श्रद्धया युक्तो यत्करोमि प्रदक्षिणाम् ॥

किं मे भविष्यति श्रेयस्तन्न वेद्मि द्विजोत्तमाः ॥ २९ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा तस्य ते विप्रा विस्मयोत्फुल्ललोचनाः ॥

साधुवादं तथा चक्रुस्तस्य भूपस्य हर्षिताः ॥ ॥ ६.६४.३० ॥

ततः स पार्थिवः सर्वान्प्रणम्य द्विजसत्तमान् ॥

अनुज्ञाप्य ययौ तूर्णं स्वगृहाय ससैनिकः ॥ ३१ ॥

अधुना श्रद्धया युक्तो यः करोति प्रदक्षिणाम् ॥

सर्वपापविनिर्मुक्तो लभते वांछितं फलम् ॥ ३२ ॥

ततः प्रभृति ते विप्राः सर्वे भक्तिपुरःसराः ॥

तस्याः प्रदक्षिणां चक्रुस्तथान्ये मुक्तिहेतवे ॥ ३३ ॥

प्राप्ताश्च परमां सिद्धिं वांछितां तत्प्रभावतः ॥

इह लोके परे चैव दुर्लभां त्रिदशैरपि ॥ ३४ ॥

तस्मात्सर्वप्रयत्नेन तां देवीमिह संश्रयेत् ॥

सर्वकामप्रदां नृणां तस्मिन्क्षेत्रे व्यवस्थिताम् ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये चमत्कारीदुर्गामाहात्म्यवर्णनंनाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६५



॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति तडागं देवनिर्मितम् ॥

यत्रानर्तो नृपः सिद्धः सुहयो नाम नामतः ॥ १ ॥

तेनैव भूभुजा तत्र लिंगं संस्थापितं शुभम् ॥

आनर्तेश्वरसंज्ञं च सर्व सिद्धिप्रदं नृणाम् ॥ २ ॥

तत्रांगारकषष्ठ्यां यस्तडागे स्नानमाचरेत् ॥

स प्राप्नोति नरः सिद्धिं यथाऽऽनर्ताधिपेन च ॥ ३ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं सिद्धिस्तु संप्राप्ता आनर्तेन महात्मना ॥

सर्वं कथय तत्सूत सर्वं वेत्सि न संशयः ॥ ४ ॥

॥ सूत उवाच ॥ ॥

आनर्तः सुहयो नाम पुरासीत्पृथिवीपतिः ॥

सर्वारिभिर्हतो युद्धे पलायनपरायणः ॥

उच्छिष्टो म्लेच्छसंस्पृष्ट एकाकी बहुभिर्वृतः ॥ ५ ॥

अथ तस्य कपालं च कापालिक व्रतान्वितः ॥

जगृहे निजकर्मार्थं ज्ञात्वा तं वीरसंभवम् ॥ ६ ॥

आनर्तेश्वरसांनिध्ये वसमानो वने स्थितः ॥

स रात्रौ तेन तोयेन सर्वदेवमयेन च ॥ ॥ ७ ॥

तडागोत्थेन संपूर्णं रात्रौ कृत्वा प्रमुंचति ॥

आसीत्पूर्वं वणिङ्नाम्ना सिद्धसेन इति स्मृतः ॥

धनी भृत्यसमोपेतः सदा पुण्यपरायणः ॥ ८ ॥

कस्यचित्त्वथ कालस्य पण्यबुद्ध्या द्विजोत्तमाः ॥

प्रस्थितश्चोत्तरां काष्ठां स सार्थेन समन्वितः ॥ ९ ॥

अथ प्राप्तः क्रमात्सर्वैः स गच्छन्मरुमंडल म् ॥

वृक्षोदकपरित्यक्तं सर्वसत्त्वविवर्जितम्॥ ६.६५.१० ॥

तत्र रात्रिं समासाद्य श्रांताः पांथाः समन्ततः॥

सुप्ताः स्थानानि संसृत्य गता निद्रावशं तथा ॥ ११ ॥

ततः प्रत्यूषमासाद्य समुत्थाय च सत्वरम् ॥

प्रस्थिता उत्तरां काष्ठां मुक्त्वैकं शूद्रसेवकम् ॥ १२ ॥

स वै मार्गपरिश्रांतो गत्वा निद्रावशं भृशम् ॥

न जजागार जातेऽपि प्रयाणे बहुशब्दिते ॥ १३ ॥

न च तैः स स्मृतः सार्थैर्यैः समं प्रस्थितो गृहात् ॥

न च केनापि संदृष्टः स तु रोधसि संस्थितः ॥ १४ ॥

एवं गते ततः सार्थे प्रोद्गते सूर्यमंडले ॥

तीव्रतापपरिस्पृष्टो जजागार ततः परम् ॥१५॥

यावत्पश्यति नो किञ्चित्तस्मिन्स्थाने स सार्थकम्॥

न च तेषां मरौ तस्मिँल्लक्ष्यते पदपद्धतिः॥।६॥

ततो दुःखपरीतात्मा धावमान इतस्ततः॥

पतितो मेदिनीपृष्ठे मध्याह्ने क्षुत्तृषार्दितः ॥।७॥

एवं तस्य तृषार्तस्य पतितस्य धरातले ॥

धृतप्राणस्य कृच्छ्रेण संयातोऽस्ताचलं रविः ॥ १८ ॥

ततः किंचित्ससंज्ञोऽभून्मंदीभूते दिवाकरे ॥

चिन्तयामास चित्तेन क्वाहं गच्छामि सांप्रतम् ॥ १९ ॥

न लक्ष्यते क्वचिन्मार्गो दृश्यते न च मानुषम् ॥

नात्र तोयं न च च्छाया नूनं मे मृत्यु रागतः ॥ ६.६५.२० ॥

एवं चिन्ताप्रपन्नस्य तस्य शूद्रस्य निर्जने ॥

मरौ तस्मिन्समायाता शर्वरी तदनन्तरम् ॥ २१ ॥

अथ क्षणेन शुश्राव स गीतं मधुरध्वनि ॥

पठतां नन्दिवृद्धानां तथा शब्दं मनोहरम् ॥ २२ ॥

अथापश्यत्क्षणेनैव प्रेतसंघैः सभावृतम् ॥

प्रेतमेकं च सर्वेषामाधिपत्ये व्यव स्थितम् ॥ २३ ॥

ततस्ते पार्श्वगाः प्रेता एके नृत्यं प्रचक्रिरे ॥

तत्पुरो गीतमन्ये तु स्तुतिं चैव तथा परे ॥ २४ ॥

अथासौ प्राह तं शूद्रमतिथे कुरु भोजनम् ॥

स्वेच्छया पिब तोयं च श्रेयो येन भवेन्मम ॥ २५ ॥

ततः स भोजनं चक्रे क्षुधार्तश्च पपौ जलम् ॥

भयं त्यक्त्वा सुविश्रब्धः प्रेतराजस्य शासनात् ॥ २६ ॥

ततः प्रेताश्च ते सर्वे प्रेतत्वेन समन्विताः ॥

यथाज्येष्ठं यथान्यायं प्रचक्रुर्भोजनक्रियाम्॥२७॥

एवं तेषां समस्तानां विलासैः पार्थिवोचितैः ॥

अतिक्रान्ता निशा सर्वा क्रीडतां द्विजसत्तमाः ॥ २८ ॥

ततः प्रभाते विमले प्रोद्गते रविमंडले ॥

यावत्पश्यति शूद्रः स तावत्तत्र न किञ्चन ॥ २९ ॥

ततश्च चिन्तयामास किमेतत्स्वप्नदर्शनम् ॥

चित्तभ्रमोऽथवाऽस्माकमिन्द्रजालमथापि वा ॥ ६.६५.३० ॥

अथवा सत्यमेतद्धि यतो मे तृप्तिरुत्तमा ॥

संजातेयं क्षुधार्तस्य पिपासाकुलितस्य च ॥३॥।

एवं चिन्तयमानस्य भास्करो गगनांगणम् ॥

समारुरोह तापेन तापयन्धरणीतलम् ॥ ३२ ॥

ततः कंचित्समाश्रित्य स्वल्पच्छायं महीरुहम् ॥

प्राप्तवान्दिवसस्यांतं क्षुत्पिपासाप्रपीडितः ॥ ३३ ॥

ततो निशामुखे प्राप्ते भूयोऽपि प्रेतराजकम् ॥

प्रेतैस्तैश्चसमोपेतं तथारूपं व्यलोकयत् ॥ ३४ ॥

तथैव भोजनं चक्रे तस्यातिथ्यसमुद्भवम् ॥

भयेन रहितः शूद्रो हर्षेण महतान्वितः ॥ ३५ ॥

एवं तस्य निशावक्त्रे नित्यमेव स भूपतिः ॥

आतिथ्यं प्रकरोत्येव समागत्य तथैव च ॥ ३६ ॥

ततोऽन्यदिवसे प्राप्ते तेन शूद्रेण भूपतिः ॥

पृष्टः किमेतदाश्चर्यं दृश्यते रजनीमुखे ॥ ३७ ॥

विभवस्ते महाभाग प्रणश्यति निशाक्षये ॥

एतत्कीर्तय मे गुह्यं न चेत्प्रेतप संस्थितम् ॥

अत्र कौतूहलं जातं दृष्ट्वेदं सुविचेष्टितम् ॥ ३८ ॥

॥ प्रेत उवाच ॥ ॥

अस्ति पुण्यं महाक्षेत्रं हाटकेश्वरसंज्ञितम् ॥

गंगा च यमुना चैव स्थिते तत्र च संगमे ॥ ३९ ॥

ताभ्यामतिसमीपस्थं शिवस्यायतनं शुभम् ॥

महाव्रतधरस्तत्र तपस्यति सुनैष्ठिकः ॥ ६.६५.४० ॥

स सदा रात्रिशौचार्थं कपालं जलपूरितम् ॥

मदीयं शयने चक्रे तत्र कृत्वा निजां क्रियाम् ॥ ४१ ॥

तत्प्रभावान्ममेयं हि विभूतिर्जायते निशि ॥

दिवा रिक्ते कृते याति भूय एव महामते॥४२॥

तस्मात्कुरु प्रसादं मे तत्र गत्वा कपालकम् ॥

चूर्णं कृत्वा मदीयं तत्तस्मिंस्तोये विनिक्षिप ॥४३॥

येन मे जायते मोक्षः प्रेतभावात्सुदारुणात् ॥ ४४ ॥

तथा तत्रास्ति पूर्वस्यां दिशि तत्तीर्थमुत्तमम् ॥

गयाशिर इति ख्यातं प्रेतत्वान्मुक्तिदा यकम् ॥ ४५ ॥

तत्र गत्वा कुरु श्राद्धं सर्वेषां त्वं महामते ॥

दृश्यते तव पार्श्वस्था भद्र संपुटिका शुभाम् ॥ ४६ ॥

अस्यां नामानि सर्वेषां यथाज्येष्ठं समालिख ॥

ततः श्राद्धं कुरुष्वाशु दयां कृत्वा गरीयसीम् ॥ ४७ ॥

वयं त्वां तत्र नेष्यामः सुखोपायेन भद्रक॥

निधिं च दर्शयिष्यामः श्राद्धार्थं सुमहत्तरम् ॥ ४८ ॥

तथेति समनुज्ञाते तेन शूद्रेण सत्वरम् ॥

निन्युस्तं स्कन्धमारोप्य शूद्रं क्षेत्रे यथोदितम् ॥ ४९ ॥

दर्शयामासुरेवास्य निधानं भूरिवित्तजम् ॥

तदादाय गतस्तत्र यत्रासौ नैष्ठिकः स्थितः ॥ ६.६५.५० ॥

ततः प्रणम्य तं भक्त्या कथ यामास विस्तरात् ॥

तस्य भूतपतेः सर्वं वृत्तांतं विनयान्वितः ॥ ५१ ॥

ततो लब्ध्वा कपालं तच्चूर्णयित्वा समाहितः ॥
गंगायमुनयोर्मध्ये प्रचिक्षेप मुदान्वितः ॥ ५२ ॥
एतस्मिन्नंतरे प्रेतो दिव्यरूपवपुर्धरः ॥
विमानस्थोऽब्रवीद्वाक्यं शूद्रं तं हर्षसंयुतः ॥ ५३ ॥
प्रसादात्तव मुक्तोऽहं प्रेतत्वाद्दारुणादितः ॥
स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदिवालयम् ॥ ५४ ॥
एतेषामेव सर्वेषामिदानीं श्राद्धमाचर ॥
गत्वा गयाशिरः पुण्यं येन मुक्तिः प्रजायते ॥ ५५ ॥
ततः स विस्मयाविष्टस्तेषामेव पृथक्पृथक् ॥
श्राद्धं चक्रे च भूतानां नित्यमेव समाहितः ॥ ५६ ॥
तेऽपि सर्वे गताः स्वर्गं प्रेतास्तस्य प्रभावतः ॥
ददृश्च दर्शनं तस्य स्वप्ने हर्षसमन्विताः ॥ ५७ ॥
ततः शूद्रः स विज्ञाय तत्क्षेत्रं पुण्यवर्ध नम् ॥
न जगाम गृहं भूयस्तत्रैव तपसि स्थितः ॥ ५८ ॥
गंगायमुनयोः पार्श्वे शूद्रकेश्वरसंज्ञितम् ॥
लिगं संस्थापितं तेन सर्वपातकनाशनम् ॥ ५९ ॥
यस्तयोर्विधिवत्स्नानं कृत्वा पूजयते नरः ॥
शूद्रकेश्वरसंज्ञं च लिंगं श्रद्धासमन्वितः ॥ ६.६५.६० ॥
स सर्वैः पातकैर्मुक्तः प्रयाति शिव मंदिरम्॥
स्तूयमानश्च गंधर्वैर्विमानवरमाश्रितः ॥ ६१ ॥
यस्तत्र त्यजति प्राणान्कृत्वा प्रायोपवेशनम् ॥
न च भूयोऽत्र संसारे स जन्माप्नोति । मानवः ॥ ६२ ॥
गंडूषमपि तोयस्य यस्तस्य निवसन्पिबेत् ॥
सोऽपि संमुच्यते पापादाजन्ममरणांतिकात्॥६३॥
यस्तत्र ब्राह्मणेंद्राणां संप्रयच्छति भोजनम् ॥
पितरस्तस्य तृप्यंति यावत्कल्पशतत्रयम् ॥ ६४ ॥
त्रुटिमात्रं च यो दद्यात्तत्र स्वर्णं समाहितः ॥
स प्राप्नोति फलं कृत्स्नं राजसूयाश्वमेधयोः ॥ ६५ ॥

तस्मात्सर्वप्रयत्नेन तत्तीर्थवरमाश्रयेत् ॥

य इच्छेच्छाश्वतं स्वर्गं सदैव मनुजो द्विजाः ॥ ६६ ॥

अत्र गाथा पुरा गीता गौतमेन महर्षिणा॥

गंगायमुनयोस्तं च प्रभावं वीक्ष्य विस्मयात् ॥ ६७ ॥

गंगायमुनयोः संगे नरः स्नात्वा समाहितः ॥

शूद्रेश्वरं समालोक्य सद्यः स्वर्गमवाप्नुयात् ॥ ६८ ॥

एतद्वः सर्वमाख्यातं गंगायमुनयोर्मया ॥

माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ ६९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्य आनर्तकेश्वरशूद्रकेश्वरमाहात्म्यवर्णनंनाम पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६६



॥ सूत उवाच ॥ ॥

तथा तत्रास्ति विख्यातं रामह्रद इति स्मृतम् ॥

यत्र ते पितरस्तेन रुधिरेण प्रतर्पिताः ॥ १ ॥

तत्र भाद्रपदे मासि योऽमावास्यामवाप्य च ॥

पितॄन्संतर्पयेद्भक्त्या सोऽश्वमेधफलं लभेत् ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

अत्याश्चर्यमिदं सूत यद्ब्रवीषि महामते ॥

यत्तेन पितरस्तत्र रुधिरेण प्रतर्पिताः ॥ ३ ॥

पितॄणां तर्पणार्थाय मेध्याः संकीर्तिता बुधैः ॥

पदार्था रुधिरं प्रोक्तं राक्षसानां प्रतर्पणे ॥ ४ ॥

श्रुतिस्मृतिविरुद्धं च कर्म सद्भिर्विगर्हितम् ॥

जामदग्न्येन तच्चीर्णं कस्मात्सूत वदस्व नः ॥ ५ ॥

॥ सूत उवाच॥ ॥

तेन कोपवशात्कर्म प्रतिज्ञां परिरक्षता ॥

तत्कृतं तर्पिता येन पितरो रुधिरेण ते ॥ ६ ॥

पिता तस्य पुरा विप्रा जमदग्निर्निपातितः ॥

क्षत्रियेण स्वधर्मस्थो विना दोषं द्विजोत्तमाः ॥ ७ ॥

ततः कोपपरीतेन तेन प्रोक्तं महात्मना ॥

रक्तेन क्षत्रियोत्थेन संतर्प्याः पितरो मया ॥ ८ ॥

एतस्मात्कारणात्तेन रुधिरेण महात्मना ॥

पितरस्तर्पिता सम्यक्तिलमिश्रेण भक्तितः ॥ ९ ॥

॥ ऋषय ऊचुः ॥ ॥

जमदग्निर्हतः कस्मात्क्षत्रियेण महामुनिः ॥

किंनामा स च भूपालो विस्तराद्वद सूत तत् ॥ ६.६६.१० ॥

॥ सूत उवाच ॥ ॥

ऋचीकतनयः पूर्वं जमदग्निरिति स्मृतः ॥

हाटकेश्वरजे क्षेत्रे तत्रासीद्दग्धकल्मषः ॥ ११ ॥

चत्वारस्तस्य पुत्राश्च बभूवुर्गुणसंयुताः ॥

जघन्योऽपि गुणज्येष्ठस्तेषां रामो बभूव ह ॥ १२ ॥

कदाचिद्वसतस्तस्य जमदग्नेर्महावने ॥

पुत्रेषु कन्दमूलार्थं निर्गतेषु वनाद्बहिः ॥ १३ ॥

एतस्मिन्नंतरे प्राप्तो हैहयाधिपतिर्बली ॥

सहस्रार्जुन इत्येव विख्यातो यो महीतले ॥ १४ ॥

मृगलिप्सुर्वने तस्मिन्भ्रममाण इतस्ततः ॥

श्रमार्तो वृषराशिस्थे भास्करे दिनमध्यगे ॥ १५ ॥

ततस्तमाश्रमं दृष्ट्वा नानाद्रुम समाकुलम् ॥

चतुरंगेन सैन्येन सहितः प्रविवेश ह ॥।६॥

अथापश्यत्स तत्रस्थं जमदग्निं महामुनिम् ॥

उपविष्टं कृतस्नानं देवार्चनपरायणम्॥।७॥

अथ तं पार्थिवं दृष्ट्वा स मुनिस्तुष्टिसंयुतः ॥

अर्घं दत्त्वा यथान्यायं स्वागतेनाभिनंद्य च ॥ १८ ॥

सोऽपि तं प्रणिपत्योच्चैर्विनयेन समन्वितः ॥

प्रतिसंभाषयामास कुशलं पर्यपृच्छत ॥ १९ ॥

॥ राजोवाच ॥ ॥

कच्चित्ते कुशलं विप्र पुत्रशिष्यान्वितस्य च ॥

साग्निहोत्र कलत्रस्य परिवारयुतस्य च ॥ ६.६६.२० ॥

अद्य मे सफलं जन्म जीवितं सफलं च मे ॥

यत्त्वं तपोनिधिर्दृष्टः सर्वलोकनमस्कृतः ॥ २१ ॥

एवमुक्त्वा स राजर्षिर्विश्रम्य सुचिरं ततः ॥

पीत्वापस्तमुवाचेदं प्रणिपत्य महामुनिम्॥ २२ ॥

अनुज्ञां देहि मे ब्रह्मन्प्रयास्यामि निजं गृहम्॥

मम कृत्यं समादेश्यं येन ते स्यात्प्रयोजनम् ॥ २३ ॥
॥ जमदग्निरुवाच ॥ ॥
देवतार्चनवेलायां त्वं मे गृहमुपागतः ॥
मनोरथ इव ध्यातः सर्वदेवमयोऽतिथिः ॥ २४ ॥
तस्मान्मेऽस्ति परा प्रीतिर्भक्तिश्च नृपसत्तम ॥
तत्कुरुष्व मया दत्तं स्वहस्तेनैव भोजनम् ॥ २५ ॥
राजा वा ब्राह्मणो वाथ शूद्रो वाप्यंत्यजोऽपि वा ॥
वैश्वदेवान्तसंप्राप्तः सोऽतिथिः स्वर्गसंक्रमः ॥ २६ ॥
॥ राजोवाच ॥ ॥
ममैते सैनिका ब्रह्मञ्छतशोऽथ सहस्रशः ॥
तैरभुक्तैः कथं भोक्तुं युज्यते मम कीर्तय ॥ २७ ॥
॥ जमदग्निरुवाच ॥ ॥
सर्वेषां सैनिकानां ते संप्रदास्यामि भोजनम् ॥
नात्र चिंता त्वया कार्या मुनिर्निष्किंचनो ह्यहम् ॥ २८ ॥
यैषा पश्यति राजेंद्र धेनुर्बद्धा ममांतिके ॥
एषा सूते मनोभीष्टं प्रार्थिता सर्वदैव हि ॥ २९ । ॥
॥ सूत उवाच ॥ ॥
ततश्च कौतुकाविष्टः स नृपो द्विजसत्तमाः ॥
बाढमित्येव संप्रोच्य तस्मिन्नेवाश्रमे स्थितः ॥ ६.६६.३० ॥
ततः संतर्प्य देवांश्च पितॄंश्च तदनंतरम् ॥
पूजयित्वा हविर्वाहं ब्राह्मणांश्च ततः परम् ॥ ३१ ॥
उपविष्टस्ततः सार्धं सर्वैर्भृत्यैर्बुभुक्षितैः ॥
श्रमार्तैर्विस्मयाविष्टैः कृते तस्य द्विजोत्तमाः ॥ ३२ ॥
ततः स प्रार्थयामास तां धेनुं मुनिसत्तमः ॥
यो यत्प्रार्थयते देहि भोज्यार्थं तस्य तच्छुभे ॥ ३३ ॥
ततः सा सुषुवे धेनुरन्नमुच्चावचं शुभम् ॥
पक्वान्नं च विशेषेण चित्ताह्लादकरं परम् ॥ ३४ ॥
ततः खाद्यं च चव्यं च लेह्यं चोष्यं तथैव च ॥

व्यंजनानि विचित्राणि कषायकटुकानि च ॥

अम्लानि मधुराण्येव तिक्तानि गुणवंति च ॥ ३५ ॥

एवं प्राप्य परां तृप्तिं तया धेन्वा स भूपतिः ॥

सेवकैः सबलैः सार्धं मन्त्रैरमृतसंभवैः ॥ ३६ ॥

ततो भुक्त्यवसाने तु प्रार्थयामास भूपतिः ॥

तां धेनुं विस्मयाविष्टो जमदग्निं महामुनिम् ॥ ३७ ॥

कामधेनुरियं ब्रह्मन्नार्हारण्यनिवासिनाम् ॥

मुनीनां शान्तचित्तानां तस्माद्यच्छ मम स्वयम् ॥ ३८ ॥

येनाऽकरान्करोम्यद्य लोकांस्तस्याः प्रभावतः ॥

साधयामि च दुर्गस्थाञ्छत्रून्भूरिबलान्वितान् ॥ ३९ ॥

एवं कृते तव श्रेयो भविष्यति च सद्यशः ॥

इह लोके परे चैव तस्मात्कुरु मयोदितम् ॥ ६.६६.४० ॥ ॥

॥ जमदग्निरुवाच ॥ ॥

होमधेनुरियं राजन्ममैका प्राणसंमता ॥

अदेया सर्वदा पूज्या तस्मान्नार्हसि याचितुम् ॥ ४१ ॥

॥ राजोवाच ।१ ॥

अहं शतसहस्रं ते यच्छाम्यस्याः कृते द्विज ॥

धेनूनामपरं वित्तं यावन्मात्रं प्रवांछसि ॥ ४२ ॥

॥ जमदग्निरुवाच ॥ ॥

अविक्रेया महाराज सामान्यापि हि गौः स्मृता ॥

किं पुनर्होमधेनुर्या प्रभावैरीदृशैर्युता ॥ ४३ ॥

विमोहाद्ब्राह्मणो यो गां विक्रीणाति धनेच्छया ॥

विक्रीणाति न सन्देहः स निजां जननीमिह ॥ ४४ ॥

सुरां पीत्वा द्विजं हत्वा द्विजानां निष्कृतिः स्मृता ॥

धेनुविक्रयकर्तॄणां प्रायश्चित्तं न विद्यते ॥ ४५ ॥

॥ राजोवाच ॥ ॥

यदि यच्छसि नो विप्र साम्ना धेनुमिमां मम ॥

बलादपि हरिष्यामि तस्मात्साम्ना प्रदीयताम् ॥ ४६ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा कोपसंयुक्तो जमदग्निर्द्विजोत्तमाः ॥

अस्त्रमस्त्रमिति प्रोच्य समुत्तस्थौ सभातलात् ॥ ४७ ॥

ततस्ते सेवकास्तस्य नृपतेश्चित्तवेदिनः ॥

अप्राप्तशस्त्रं तं विप्रं निजघ्नुर्निशितायुधैः ॥ ४८ ॥

तस्यैवं वध्यमानस्य जमदग्नेर्महात्मनः ॥

रेणुकाख्या प्रिया भार्या पपातोपरि दुःखिता ॥ ॥ ४९ ॥

साऽपि नानाविधैस्तीक्ष्णैः खण्डिता वरवर्णिनी ॥

आयुःशेषतया प्राणैर्न कथंचिद्वियोजिता ॥ ६.६६.५० ॥

एवं हत्वा स विप्रेन्द्रं जमदग्निं महीपतिः ॥

तां धेनुं कालयामास यत्र माहिष्मती पुरी ॥ ५१ ॥

अथ सा काल्यमाना च धेनुः कोपसमन्विता ॥

जमदग्निं हतं दृष्ट्वा ररम्भ करुणं मुहुः ॥ ५२ ॥

तस्याः संरम्भमाणाया वक्त्रमार्गेण निर्गताः ॥

पुलिन्दा दारुणा मेदाः शतशोऽथ सहस्रशः ॥ ५३ ॥

नानाशस्त्रधराः सर्वे यमदूता इवापराः ॥

प्रोचुस्तां सादरं धेनुमाज्ञां देहि द्रुतं हि नः ॥ ५४ ॥

साऽब्रवीद्धन्यतामेतद्धैहयाधिपतेर्बलम् ॥

अथ तैः कोपसंयुक्तैर्दारुणैर्म्लेच्छजातिभिः ॥

विनाशयितुमारब्धं शितैः शस्त्रैर्निरर्गलम् ॥ ५५ ।१

न कश्चित्पुरुषस्तेषां सम्मुखोऽप्यभवद्रणे ॥

किं पुनः सहसा योद्धुं भयेन महतान्वितः ॥ ५६ ॥

अथ भग्नं बलं दृष्ट्वा वध्यमानं समंततः ॥

पुलिन्दैर्दारुणाकारैः प्रोचुस्तं मन्त्रिणो नृपम् ॥ ५७ ॥

तेजोहानिः परा तेऽद्य जाता ब्रह्मवधाद्विभो ॥

तस्माद्धेनुं परित्यज्य गम्यतां निजमंदिरम् ॥ ५८ ॥

यावन्नागच्छते तस्य रामोनाम सुतो बली ॥

नो चेत्तेन हतोऽत्रैव सबलो वधमेष्यसि ॥ ५९ ॥

नैषा शक्या बलान्नेतुं कामधेनुर्महोदया ॥

शक्तिरूपा करोत्येवं या सृष्टिं स्वयमेव हि ॥ ६.६६.६० ॥

ततः स पार्थिवो भीतस्तेषां वाक्याद्विशेषतः ॥

जगाम हित्वा तां धेनुं स्वस्थानं हतसेवकः ॥ ६१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जमदग्निवधवर्णनंनाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६७



॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे प्राप्तो रामो भ्रातृभिरन्वितः ॥

फलानि कन्दमूलानि गृहीत्वाऽऽश्रमसम्मुखः ॥ १ ॥

स दृष्ट्वा स्वाश्रमं ध्वस्तं पुलिन्दैर्बहुशो वृतम् ॥

लकुटाश्मप्रहारैस्तु तां धेनुं जर्जरीकृताम् ॥ २ ॥

पप्रच्छ किमिदं सर्वं व्याकुलत्वमुपागतम् ॥

आश्रमास्पदमाभीरैः पुलिन्दैश्च समावृतम् ॥ ३ ॥

केनैषा मामिका धेनुः प्रहारैर्जर्जरीकृता ॥

तापस्यस्तापसाः सर्वे कस्मादेते रुदन्ति च ॥ ४ ॥

क्व स मेऽद्य पिता वृद्धो माता च सुतवत्सला ॥

न मामद्य यथापूर्वं स्नेहाच्चायाति सम्मुखी ॥ ५ ॥

अथ तस्य समाचख्युर्वृत्तांतं सर्वतापसाः ॥

यथादृष्टं सुदुःखार्ता सहस्रार्जुनचेष्टितम् ॥ ६ ॥

ततस्ते भ्रातरः सर्वे वज्रपातोपमं वचः ॥

श्रुत्वा दृष्ट्वा च तं शस्त्रैः खंडितं जनकं निजम् ॥ ७ ॥

मातरं क्षतसर्वाङ्गीं प्राणशेषां व्यथान्विताम्॥

रुरुदुः शोकसन्तप्ता मुक्त्वा रामं महाबलम्॥ ८ ॥

रुदित्वाथ चिरं कालं विप्रलप्य मुहुर्मुहुः ॥

अन्त्येष्टिं चक्रिरे तस्य वेदोक्तविधिना ततः ॥ ९ ॥

अथ दाहावसाने ते कृत्वा गर्तां यथोचिताम्॥

मुक्त्वा रामं ददुस्तोयं पितुः पुत्रास्तिलान्वितम् ॥ ६.६७.१० ॥

अथान्यैस्तापसैः प्रोक्तो रामः शस्त्रभृतां वरः ॥

न प्रयच्छसि कस्मात्त्वं प्रेतपित्रे जलांजलिम्॥ ११ ॥

अथासौ बहुधा प्रो क्तस्तापसैर्जमदग्निजः ॥

प्रहारान्गणयन्मातुः शितशस्त्रविनिर्मितान्॥ १२ ॥

ततस्तानब्रवीद्रामो विनिःश्वस्य मुनीश्वरान् ॥

निषेधस्तोयदानस्य श्रूयतां यन्मया कृतः ॥ १३ ॥

अपराधं विना तातः क्षत्रियेण हतोमम ॥

एकविंशतिः प्रहाराणां मातुरंगे स्थिता मम ॥ १४ ॥

तस्मान्निःक्षत्रियामुर्वीं यद्यहं न करोमि वै ॥

प्रहारसंख्यया विप्रास्तन्मे स्यात्सर्वपातकम् ॥ १५ ॥

पितृमातृवधाज्जातं यत्कृतं तेन पाप्मना ॥

क्षत्रियापसदेनात्र तथान्यदपि कुत्सितम् ॥ १६ ॥

ततस्तस्यैव चान्येषां क्षत्रियाणां दुरात्मनाम् ॥

रुधिरैः पूरयित्वेमां गर्तां पितृजलोचिताम् ॥

तर्पयिष्यामि रक्तेन पितरं नाहमंभसा ॥ १७ ॥

॥ सूत उवाच ॥ ॥

श्रुत्वा ते दारुणां तस्य प्रतिज्ञां तापसोत्तमाः ॥

परं विस्मयमापन्ना नोचुः किंचित्ततः परम् ॥ १९ ॥

अथाशौचांतमासाद्य रामः क्रोधसमन्वितः ॥

तीक्ष्णं परशुमादाय माहिष्मत्युन्मुखं ययौ ॥ १९ ॥

सर्वैस्तैः शबरैः सार्धं पुलिन्दैर्मेदकैस्तथा ॥

बद्धगोधांगुलित्राणैर्वरबाणधनुर्धरैः ॥ ६.६७.२० ॥

तथाऽर्जुनोऽपि तं श्रुत्वा समायातं भृगूत्तमम् ॥

सैन्येन महता युक्तं प्रतिज्ञाधारिणं तथा ॥ २१ ॥

ततस्तु सम्मुखो दृष्टो युद्धार्थं स विनिर्ययौ ॥

सार्धं नानाविधैर्योधैः सर्वैर्देवासुरोपमैः ॥ २२ ॥

अथाभवन्महायुद्धं पुलिन्दानां द्विजोत्तमाः ॥

हैहयाधिपतेर्योधैः सार्धं देवासुरोपमैः ॥ २३ ॥

ततस्ते हैहयाः सर्वे शरैराशीविषोपमैः ॥

वध्यन्ते शबरैः संख्ये गर्जमानैर्मुहुर्मुहुः ॥ २४ ॥

ब्रह्महत्यासमुत्थेन पातकेन ततश्च ते ॥

जाता निस्तेजसः सर्वे प्रपतंति धरातले ॥ २५ ॥

न कश्चित्पौरुषं तत्र संप्रदर्शयितुं क्षमः ॥

पलायनपरा सर्वे वध्यन्ते निशितैः शरैः ॥ २६ ॥

अथ भग्नं बलं दृष्ट्वा हैहयाधिपतिः क्रुधा ॥

स्वचापं वाञ्छयामास सज्यं कर्तुं त्वरान्वितः ॥

शक्नोति नारोपयितुं सुयत्नमपि चाश्रितः ॥ २७ ॥

ततश्चाकर्षयामास खड्गं कोशात्सुनिर्मलम् ॥

आक्रष्टुं न च शक्नोति वैलक्ष्यं परमं गतः ॥ २८ ॥

गदया निर्जितो रौद्रो रावणो लोकरावणः ॥

यया साप्यपतद्धस्तात्तत्क्षणात्पृथिवीतले ॥ २९ ॥

नर्मदायाः प्रवाहो यैः सहस्राख्यैः करैः शुभैः ॥

विधृतस्तेन ते सर्वे बभूवुः कम्पविह्वलाः ॥ ६.६७.३० ॥

न शस्त्रं शेकुरुद्धर्तुं दैवयोगात्कथंचन ॥

दिव्यास्त्राणां तथा सर्वे मन्त्रा विस्मृतिमागताः ॥ ३१ ॥

एतस्मिन्नंतरे रामः संप्राप्तः क्रोधमूर्छितः ॥

तीक्ष्णं परशुमुद्यम्य ततस्तं प्राह निष्ठुरम् ॥ ३२ ॥

हैहयाधिपते पाप यैः करैर्जनको मम ॥

त्वया विनिहतस्तान्मे शीघ्रं दर्शय सांप्रतम् ॥ ३३ ॥

ब्रह्मतेजोहतः सोऽपि प्रोक्तस्तेन सुनिष्ठुरम् ॥

नोवाच चोत्तरं किंचिदालेख्ये लिखितो यथा ॥३४॥

ततो भुजवनं तस्य रामः शस्त्रभृतां वरः ॥

मुहुर्मुहुर्विनिर्भर्त्स्य प्रचकर्त शनैःशनैः ॥ ३५ ॥

ततश्छित्त्वा शिरस्तस्य कुठारेण भृगूद्वहः ॥

जग्राह रुधिरं यत्नात्प्रहारेभ्यः स्वयं द्विजाः ॥ ३६ ॥

पूरयित्वा महाकुम्भाञ्छबरेभ्यो ददौ ततः ॥

म्लेच्छेभ्यो लुब्धकेभ्यश्च ततः प्रोवाच सादरम् ॥३७॥

हाटकेश्वरजे क्षेत्रे गर्ता मे भ्रातृभिः कृता ॥

पितृसंतर्पणार्थाय सलिलेन परिप्लुता ॥ ३८ ॥

प्रक्षिपध्वं द्रुतं गत्वा तस्यां रक्तमिदं महत् ॥

पापस्यास्य सपत्नस्य ममादेशादसंशयम् ॥ ३९ ॥

येन तातं निजं भक्त्या तर्पयित्वा विधानतः ॥

ऋणस्य मुक्तिर्भवति येन मे पैतृकस्यच ॥ ६.६७.४० ॥

इति श्रीस्कांदे महापुराण एकाशातिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सहस्रार्जुनवधवर्णनंनाम सप्तषष्टितमोऽ ध्यायः ॥ ६७ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६८




॥ सूत उवाच ॥ ॥

अथ ते शबरा यत्नाद्रक्तं तद्धैहयोद्भवम् ॥

तत्र निन्युः स्थिता यत्र गर्ता सा पितृसंभवा ॥ १ ॥

भार्गवोऽपि च तं हत्वा रक्तमादाय कृत्स्नशः ॥

ततः संप्रेषयामास यत्र गर्ताऽथ पैतृकी ॥ २ ॥

न स बालं न वृद्धं च परित्यजति भार्गवः ॥

यौवनस्थं विशेषेण गर्भस्थं वाथ क्षत्रियम् ॥ ३ ॥

स्वयं जघान भूपान्स तेषां पार्श्वे तथा परान् ॥

विध्वंसाययति क्रुद्धः सैनिकैश्च समन्ततः ॥ ४ ॥

तथैवासृक्प्रगृह्णाति गृह्णापयति चादरात् ॥

तेषां पार्श्वैस्ततस्तूर्णं प्रेषयामास तत्र च ॥ ५ ॥

एवं निःक्षत्रियां कृत्वा कृत्स्नां पृथ्वीं भृगद्वहः ॥

हाटकेश्वरजे क्षेत्रे जगाम तदनन्तरम् ॥ ६ ॥

ततस्तै रुधिरैः स्नात्वा समादाय तिलान्बहून् ॥

अपसव्यं समाधाय प्रचक्रे पितृतर्पणम् ॥ ७ ॥

प्रत्यक्षं सर्वविप्राणां तथान्येषां तपस्विनाम् ॥

प्रतिज्ञां पूरयित्वाऽथ विशोकः स बभूव ह ॥ ८ ॥

ततो निःक्षत्रिये लोके कृत्वा हयमखं च सः ॥

प्रायच्छत्सकलामुर्वीं ब्राह्मणेभ्यश्च दक्षिणाम् ॥ ९ ॥

अथ लब्धवरा विप्रास्तमूचुर्भृगुसत्तमम् ॥

नास्मद्भूमौ त्वया स्थेयमेको राजा यतः स्मृतः ॥ ६.६८.१० ॥

सोऽपि बाढमिति प्रोच्य हर्षेण महतान्वितः ॥

महीपर्यंतमासाद्य प्रोवाचाथ नदीपतिम् ॥॥॥

आरोप्य सुमहच्चापमाग्नेयास्त्रं प्रयुज्य च ॥

त्रिशिखां भ्रुकुटीं कृत्वा कोपेन महतान्वितः ॥।२॥

॥ राम उवाच ॥ ॥

मया निःक्षत्रिया भूमिः कृता शैलवनान्विता ॥

ब्राह्मणेभ्यस्ततो दत्ता वाजिमेधे महामखे ॥।३॥

तस्मात्त्वं देहि मे स्थानं कृत्वाऽपसरणं स्वयम्॥

न हि दत्त्वा ग्रही ष्यामि विप्रेभ्यो मेदिनीं पुनः ॥ १४ ॥

न करोष्यथवा वाक्यं ममाद्य त्वं नदीपते ॥

स्थलरूपं करिष्यामि वह्न्यस्त्रपरिशोषितम् ॥ १५ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा समुद्रो भयसंकुलः ॥

अपसारं ततश्चक्रे यावत्तस्याभिवांछितम् ॥ १६ ॥

ततश्चकार तत्रैव वसतिं स भृगूद्वहः ॥

तपश्चर्यासमायुक्तः पितुर्वधमनुस्मरन्॥।७॥

ततः सर्वान्पुलिन्दांश्च शवरान्मेदसंयुतान् ॥

भूम्यन्ते धारयामास पर्वतेषु स भार्गवः ॥।८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये परशुरामकृतमहीदानपूर्वकसमुद्रापसारणवृत्तान्तवर्णनंनामा ष्टाषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०६९



॥ सूत उवाच ॥ ॥

ततो निःक्षत्रिये लोके क्षत्त्रिण्यो वंशकारणात् ॥

क्षेत्रजान्ब्राह्मणेभ्यश्च सुषुवुस्तनया न्वरान्॥॥।

ते वृद्धिं च समासाद्य क्षेत्रजाः क्षत्रियोपमाः ॥

जगृहुर्मेदिनीं वीर्यात्संनिरस्य द्विजोत्तमान्॥२॥

ततस्ते ब्राह्मणाः सर्वे परिभूतिपदं गताः॥

प्रोचुर्भार्गवमभ्येत्य दुःखेन महतान्विताः॥ ३ ॥

रामराम महाबाहो या त्वया वसुधा च नः ॥

वाजिमेधे मखे दत्ता क्षत्रियैः सा हता बलात्॥

तस्मान्नो देहि तां भूयो हत्वा तान्क्षत्रियाधमान् ॥

कुरु श्रेयोऽभिवृद्धिं तां यद्यस्ति तव पौरुषम् ॥ ५ ॥

ततो रामः क्रुधाविष्टो भूयस्तैः शवरैः सह ॥

पुलिन्दैर्मेदकैश्चैव क्षत्रियांताय निर्ययौ ॥ ६ ॥

तत्रैव क्षत्रियान्हत्वा रक्तमादाय तद्बहु ॥

तां गर्तां पूरयामास चकार पितृतर्पणम् ॥ ७ ॥

प्रददौ ब्राह्मणेभ्यश्च वाजिमेधे धरां पुनः ॥

तैश्च निर्वासितस्तत्र जगामोदधिसंनिधौ ॥ ८ ॥

एवं तेन कृता पृथ्वी सर्वक्षत्त्रविवर्जिता ॥

त्रिःसप्तवारं विप्रेंद्रा द्विजेभ्यश्च निवेदिता ॥ ९ ॥

तर्पिताः पितरश्चैव रुधिरेण महात्मना ॥

प्रतिज्ञा पालिता तस्माद्विकोपश्च बभूव सः ॥ ६.६९.१० ॥

एकविंशतिमे प्राप्ते ततश्च पितृतर्पणे ॥

अशरीराऽभवद्वाणी खस्था पितृसमुद्भवा ॥ ११ ॥

रामराम महाभाग त्यजैतत्कर्म गर्हितम् ॥

वयं ते तुष्टिमापन्नाः स्ववाक्यपरिपाल नात् ॥ १२ ॥

यत्त्वया विहितं कर्म नैतदन्यः करिष्यति ॥

न कृतं केनचित्पूर्वं पितृवैरसमुद्भवम् ॥ १३ ॥

तस्मात्तुष्टा वयं वत्स दास्यामश्चित्त वांछितम्।

प्रार्थयस्व द्रुतं तस्माद्दुर्लभं त्रिदशैरपि॥१४॥

राम उवाच।

पितरो यदि तुष्टा मे यच्छंति यदि वांछितम्।

तस्मात्तीर्थमिदं पुण्यं मन्नाम्ना लोकविश्रुतम्।

रक्तदोषविनिर्मुक्तं सेवितं वरतापसैः॥१५॥

पितर ऊचुः।

पितृतर्पणजा गर्ता त्वया येयं विनिर्मिता।

रामह्रद इति ख्यातिं प्रयास्यति जगत्त्रये ॥ १६ ॥

यत्र भक्तियुता लोकास्तर्पयिष्यंति वै पितॄन् ॥

तेऽश्वमेधफलं प्राप्य प्रयास्यंति परां गतिम्॥।१७॥

कृष्णपक्षे चतुर्दश्यां मासि भाद्रपदे नरः॥

करिष्यति च यः श्राद्धं भक्त्या शस्त्रहतस्य च॥।१८॥

अपि प्रेतत्वमापन्नं नरके वा समाश्रितम्॥

उद्धरिष्यति स प्रेतमपि पापसमन्वितम्॥।१९॥

सूत उवाच॥

एवमुक्त्वा तु रामं ते विरेमुस्तदनंतरम्॥

रामोऽपि च तपस्तेपे तत्रैव क्रोधवर्जितः॥६.६९.२०॥

तस्मात्सर्वप्रयत्नेन तत्र शस्त्रहतस्य च॥

तस्मिन्दिने प्रकर्तव्यं श्राद्धं श्रद्धासमन्वितैः॥२१॥।

उपसर्ग मृतानां च सर्पाग्निविषबन्धनैः॥

तत्र मुक्तिप्रदं श्राद्धं दिने तस्मिन्नुदाहृतम्॥२२॥

यः पितृंस्तर्पयेत्तत्र प्रेतपक्षे जलैरपि॥

स तेषामनृणो भूत्वा पितृलोके महीयते॥२३॥

एतद्वः सर्वमाख्यातं रामह्रदसमुद्भवम्॥

माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम्॥२४॥

श्राद्धकाले नरो भक्त्या यश्चैतत्पठति स्वयम्॥

स गयाश्राद्धजं कृत्स्नं फलमाप्नोत्यसंशयम्॥२५॥

पर्वकाले ऽथवा प्राप्ते पठेद्ब्राह्मणसंनिधौ॥

पितृमेधस्य यज्ञस्य स फलं लभते ऽखिलम्॥२६॥

शृणुयाद्वापि यो भक्त्या कीर्त्यमानमिदं नरः॥

सौत्रामणौ कृते कृत्स्नं फलमाप्नोत्यसंशयम्॥२७॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्या संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये रामह्रदोत्पत्तिवृत्तान्तवर्णनंनामैकोनसप्ततितमोऽ ध्यायः ॥ ६९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७०

https://sa.wikisource.org/s/flk
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्यापि च तत्रास्ति शक्तिः पापप्रणाशिनी ॥

कार्तिकेयेन निर्मुक्ता हत्वा वै तारकं रणे ॥ १ ॥

तथास्ति सुमहत्कुण्डं स्वच्छोदकसमावृतम् ॥

तेनैव निर्मितं तत्र यः स्नात्वा तां प्रपूजयेत् ॥

स पापान्मुच्यते सद्य आजन्ममरणांति कात् ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मिन्काले विनिर्मुक्ता सा शक्तिस्तेन नो वद ॥

किमर्थं स्वामिना तत्र किंप्रभावा वद स्वयम् ॥ ॥ ३ ॥

॥ सूत उवाच ॥ ॥

पुरासीत्तारकोनाम दानवोऽतिबलान्वितः ॥

हिरण्याक्षस्य दायादस्त्रैलोक्यस्य भयावहः ॥ ४ ॥

स ज्ञात्वा जनकं ध्वस्तं विष्णुना प्रभविष्णुना ॥

तपस्तेपे ततस्तीव्रं गोकर्णं प्राप्य पर्वतम् ॥ ५ ॥

यावद्वर्षसहस्रांतं शीर्णपर्णा शनः स्थितः॥

ध्यायमानो महादेवं कायेन मनसा गिरा॥६॥

वरुपूजोपहारैश्च नैवेद्यैर्विविधैस्ततः॥

ततो वर्षसहस्रांते स दैत्यो दुःखसंयुतः ॥ ७ ॥

ज्ञात्वा रुद्रमसंतुष्टं ततो रौद्रं तपोऽकरोत् ॥

विनिष्कृत्त्यात्ममांसानि जुहोतिस्म हुताशने ॥ ८ ॥

ततस्तुष्टो महादेवो वृषारूढ उमापतिः ॥

सर्वैरेव गणैः सार्धं तस्य संदर्शनं ययौ ॥ ९ ॥

तत्र प्रोवाच संहृष्टस्तारनादेन नादयन् ॥

दिशः सर्वा महादेवो हर्ष गद्गदया गिरा ॥ ६.७०.१० ॥

भोभोस्तारक तुष्टोऽस्मि साहसं मेदृशं कुरु ॥

प्रार्थयस्व मनोऽभीष्टं येन ते प्रददाम्यहम् ॥ ११ ॥

॥ तारक उवाच ॥

अजेयः सर्वदेवानां त्वत्प्रसादादहं विभो ॥

यथा भवामि संग्रामे त्वां विहाय तथा कुरु ॥ १२ ॥

॥ भगवानुवाच ॥ ॥

मत्प्रसादादसंदिग्धं सर्वमेतद्भविष्यति ॥

त्वया यत्प्रार्थितं दैत्य त्वमेको बलवानिह ॥ १३ ॥

एवमुक्त्वा महादेवः स्वमेव भवनं गतः ॥

तारकश्चापि संहृष्टस्तथैवनिज मन्दिरम् ॥ १४ ॥

ततो दानवसैन्येन महता परिवारितः ॥

गतः शक्रपुरीं योद्धुं विख्याताममरावतीम् ॥ १५ ॥

अथाभवन्महायुद्धं देवानां दानवैः सह ॥

यावद्वर्षसहस्रांते मृत्युं कृत्वा निवर्तनम् ॥ १६ ॥

तत्राभवत्क्षयो नित्यं देवानां रणमूर्धनि ॥

विजयो दानवानां च प्रसादाच्छूलपा णिनः ॥ १७ ॥

ततश्चक्रुरुपायांस्ते विजयाय दिवौकसः ॥

वर्माणि सुविचित्राणि यन्त्राणि परिखास्तथा ॥ १८ ॥

अन्यान्यपि शरीरस्य रक्षणार्थं प्रयत्नतः ॥

तथैव योधमुख्यानां विशेषाद्द्विजसत्तमाः ॥ १९ ॥

ससृजुस्ते सुराधीशा दानवेभ्यो दिवानिशम् ॥ ६.७०.२० ॥

मुद्गरा भिंडिपालाश्च शतघ्न्योऽथ वरेषवः ॥

प्रासाः कुन्ताश्च भल्लाश्च तस्मिन्काले विनिर्मिताः ॥

विशेषाहवसंबन्धव्यूहानां प्रक्रियाश्च याः ॥ २१ ॥

तथान्यानि विचित्राणि कूटयुद्धान्यनेकशः ॥

भीषिकाः कुहकाश्चैव शक्रजालानि कृत्स्नशः ॥ २२ ॥

न च ते विजयं प्रापुस्तथापि द्विजसत्तमाः ॥

दानवेभ्यो महायुद्धे प्रहारैर्जर्जरीकृताः॥२३॥

अथ प्राह सहस्राक्षो भयत्रस्तो बृहस्पतिम् ॥

दिनेदिने वयं दैत्यैर्विजयामो द्विजोत्तम ॥ २४ ॥

यथायथा रणार्थाय सदुपायान्करोम्यहम् ॥

तथातथा पराभूतिर्जायते मे महाहवे ॥ २५ ॥

तदुपायं सुराचार्य स्वबुद्ध्या त्वं प्रचिन्तय ॥

येन मे स्याज्जयो युद्धे तव कीर्तिरनिन्दिता ०। २६ ॥

॥ सूत उवाच ॥ ॥

ततो बृहस्पतिः प्राह चिरं ध्यात्वा शचीपतिम् ॥

प्रहृष्टवदनो ज्ञात्वा जयोपायं महाहवे ॥ ॥ २७ ॥

मया शक्र परिज्ञातः स उपायो महाहवे ॥

जीयन्ते शत्रवो येन लीलयैवापि भूरिशः ॥ २८ ॥

यदाभीष्टं वरं तेन प्रार्थितस्त्रिपुरांतकः ॥

तदैवं वचनं प्राह प्रणिपत्य मुहुर्मुहुः ॥ २९ ॥

अजेयः सर्वदेवानां त्वत्प्रसादादहं विभो ॥

यथा भवामि संग्रामे त्वां विहाय तथा कुरु ।। ६.७०.३०

न तं स्वयं महादेवः स्वशिष्यं सूदयिष्यति ॥

विषवृक्षमपि स्थाप्य कश्छिनत्ति पुनः स्वयम् ॥ ३१ ॥

यो वै पिता स पुत्रः स्याच्छ्रुतिवाक्यमिदं स्मृतम् ॥

तस्माज्जनयतु क्षिप्रं हरस्तन्नाशकृत्सुतम् ॥ ३२ ॥

येन सेनाधिपत्ये तं विनियोज्य महाहवम् ॥

कुर्मो दैत्यैः समं शस्त्रैः प्राप्नुयाम ततो जयम् ॥३३॥

एष एव उपायोऽत्र मया ते परिकीर्तितः ॥

विजयाय सहस्राक्ष नान्योऽस्ति भुवनत्रये ॥ ३४ ॥

ततो देवगणैः सर्वैः समेतः पाकशासनः ॥।

तमर्थं प्रोक्तवाञ्छंभुं विनयावनतः स्थितः ॥ ३५ ॥

सुतस्य जननार्थाय कुरु यत्नं वृषध्वज॥

येन सेनाधिपत्ये तं योजयामि दिवौकसाम् ॥३६॥

प्राप्नोम्यहं च संग्रामे विजयं त्वत्प्रसादतः ॥

निहत्य दानवान्सर्वांस्तारकेण समन्वितान् ॥ ३७ ॥

नान्यथा विजयो मे स्यात्संग्रामे दानवैः सह॥।

इति मां प्राह देवेज्यो ज्ञात्वा सम्यङ्महामतिः ॥ ३८ ॥

अथोवाच विहस्योच्चैः शंकरस्त्रिदशेश्वरम् ॥

करिष्यामि वचः क्षिप्रं तव शक्र न संशयः॥ । ॥ ३९ ॥

पुत्रमुत्पादयिष्यामि सर्वदैत्यविनाशकम् ॥

यं त्वं सेनापतिं कृत्वा जयं प्राप्स्यसि सर्वदा ॥ ६.७०.४० ॥

एवमुक्त्वा महादेवो गत्वा कैलास पर्वतम् ॥

गौर्या समं ततश्चक्रे कामधर्मं यथोचितम् ॥ ४१ ॥

हावैर्भावैः समोपेतं हास्यैरन्यैस्तदात्मिकैः ॥

यावद्वर्षसहस्रांतं दिव्यं चैव निमेषवत् ॥ ॥ ४२ ॥

अथ देवगणाः सर्वे भयसंत्रस्तमानसाः ॥

चक्रुर्मंत्रं तदर्थं हि तारकेण प्रपीडिताः ॥ ४३ ॥

सहस्रं वत्सराणां तु रतासक्तस्य शूलिनः ॥

अतिक्रांतं न देवानां तेन कृत्यं विनिर्मितम् ॥ ४४ ॥

तस्माद्गच्छामहे तत्र यत्र देवो महेश्वरः ॥

संतिष्ठते समं गौर्या कैलासे विजने स्थितः ॥४५॥।

ततस्तत्रैव संजग्मुः सर्वे देवाः सवासवाः ॥

उद्वहन्तः परामार्तिं तारकारिसमुद्भवाम् ॥ ४६ ॥

अथ कैलासमासाद्य यावद्यांति भवांतिकम्॥

निषिद्धा नंदिना तावन्न गंतव्यमतः परम् ॥ ४७ ॥

रहस्ये भगवान्सार्धं पार्वत्या समवस्थितः ॥

अस्माकमपि नो गम्यं तस्मात्तावन्न गम्यताम् ॥ ४८ ॥

ततस्तैर्विबुधैः सर्वैः प्रेषितस्तत्र चानिलः॥

किं करोति महादेवः शीघ्रं विज्ञायतामिति ॥ ४९ ॥

अथ वायुर्गतस्तत्र यत्रास्ते भगवाञ्छिवः ॥

गौर्या सह रतासक्त आनन्दं परमं गतः ॥ ६.७०.५० ॥

अथ प्रचलिते शुक्रे स्थानादप्राप्तयोनिके ॥

देवेन वीक्षितो वायुर्नातिदूरे व्यवस्थितः ॥ ५१ ॥

ततो व्रीडा समोपेतस्तत्क्षणादेव चोत्थितः ॥

भावासक्तां प्रियां त्यक्त्वा मा मोत्तिष्ठेतिवादिनीम् ॥ ५२ ॥

अब्रवीदथ तं वायुं विनयावनतं स्थितम् ॥

किमर्थं त्वमिहायातः कच्चित्क्षेमं दिवौकसाम् ॥ ५३ ॥

॥ वायुरुवाच ॥ ॥

एते शक्रादयो देवा नंदिना विनिवारिताः ॥

तारकेण हतोत्साहास्तिष्ठंति गिरिरोधसि ॥ ५४ ॥

तस्मादेतान्समाभाष्य समाश्वास्य च सादरम् ॥

प्रेषयस्व द्रुतं तत्र यत्र ते दानवाः स्थिताः ॥ ५५ ॥

अथ तानाह्वयामाम तत्क्षणात्त्रिपुरांतकः ॥

संप्राह चविषण्णास्यः कृतांजलिपुटान्स्थितान् ॥ ५६ ॥

॥ श्रीभगवानुवाच ॥ ॥

युष्मत्कृते समारंभः पुत्रार्थं यो मया कृतः ॥

स्वस्थानाच्चलिते शुक्रे कृतो मोघोद्य वायुना ॥ ५७ ॥

एतद्वीर्यं मया धैर्यात्स्तंभितं लिंगमध्यगम् ॥

अमोघं तिष्ठते सर्वं क्व दधामि निवेद्यताम्॥ ५८ ॥

येन संजायते पुत्रो दानवांतकरः परः ॥

सेनानाथश्च युष्माकं दुर्द्धरः समरे परैः ॥ ५९ ॥

एतत्कल्पाग्निसंकाशं धर्तुं शक्नोति नापरः ॥

विना वैश्वानरं तस्माद्दधात्वेष सनातनम्॥ ६.७०.६० ॥

येन तत्र प्रमुञ्चामि सुताय विजयाय च ॥

एतद्वीर्यं महातीव्रं द्वादशार्कसमप्रभम् ॥ ॥ ६१ ॥

अथ प्राहुः सुराः सर्वे वह्निं संश्लाघ्य सादराः ॥

त्वं धारयाग्ने वक्त्रांते वीर्यमेतद्भवोद्भवम् ॥ ६२ ॥

ततः प्रसारयामास स्ववक्त्रं पावको द्रुतम्॥

कुर्वञ्छक्रसमादेशमविकल्पेन चेतसा ॥६३॥

शंकरोऽप्यक्षिपत्तत्र कामबाणप्रपीडितः ॥

गौरीं भगवतीं ध्यायन्नानन्दं परमं गतः॥६४॥

पावकोऽपि भृशं तेन कल्पाग्निसदृशेन च ॥

दह्यमानोऽक्षिपद्भूमौ शरस्तंबे सुविस्तरे॥६५॥

एतस्मिन्नंतरे प्राप्ता भ्रममाणा इतस्ततः॥

भार्यास्तत्र मुनीनां ताः षण्णां षट्कृत्तिकाः शुभाः॥६६॥

तासां निदेशयामास स्वयमेव शतक्रतुः ॥

एतद्बीजं त्रिनेत्रस्य परिपाल्यं प्रयत्नतः ॥ ६७ ॥

अत्र संपत्स्यते पुत्रो द्वादशार्कसमप्रभः ॥

भवतीनामपि प्रायः पुत्रत्वं संप्रयास्यति ॥ ६८ ॥

इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खंडे हाटकेश्वरक्षेत्रमाहात्म्ये कार्तिकेयोत्पत्तिवृत्तांतवर्णनंनाम सप्ततितमोऽध्यायः ॥ ६.७०.७० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७१

https://sa.wikisource.org/s/flj
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तास्तथेति प्रतिज्ञाय चक्रुस्तच्छक्रशासनम् ॥

सूतिकागृहधर्मे यत्तच्चक्रुस्तस्य सर्वशः ॥ १ ॥

अथान्यदिवसे बालो द्वादशार्कसमद्युतिः ॥

संजज्ञे तेन वीर्येण द्विभुजैक मुखः शुभः ॥ २ ॥

यथासौ जातमात्रस्तु प्ररुरोद सुदुःखितः ॥

तच्छ्रुत्वा रुदितं सर्वाः कृत्तिकास्तमुपागताः ॥ ३ ॥

महासेनोऽपि संवीक्ष्य मातृस्ताः समुपागताः॥

सोत्कण्ठः षण्मुखो जातो द्वादशाक्षभुजस्तथा ॥ ४ ॥

एकैकस्याः पृथक्तेन प्रपपौ प्रयतः स्तनम् ॥

द्वाभ्यामालिंगयामास भुजाभ्यां स्नेहपूर्वकम्॥ ५ ॥

एतस्मिन्नंतरे प्राप्ता ब्रह्मविष्णुशिवादयः ॥

सर्वे देवाः सहेन्द्रेण गन्धर्वाप्सरसस्तथा ॥ ६ ॥

महोत्सवोऽथ संजज्ञे तस्मिन्स्थाने निरर्गलः ॥

गीतवाद्यप्रणादेन येनविश्वं प्रपूरितम् ॥ ७ ॥

रंभाद्या ननृतुस्तस्य विलासिन्यो दिवौकसाम् ॥

जगुश्च मुख्यगन्धर्वा श्चित्रांगदमुखाश्च ये ॥ ८ ॥

ततस्तु देवताः सर्वास्तस्य नाम प्रचक्रिरे ॥

स्कन्दनाद्रेतसो भूमौ स्कन्द इत्येव सादरम् ॥ ९ ॥

अथ तस्य कुमा रस्य तदा तत्राभिषेचनम् ॥

सेनापत्यं कृतं साक्षाद्देवानां शंभुना स्वयम् ॥ ६.७१.१० ॥

तस्य शक्तिः स्वयं दत्ता विधिनाऽद्भुतदर्शना ॥

अमोघा विजयार्थाय दैत्यपक्षक्षयाय च ॥ ११ ॥

मयूरो वाहनार्थाय त्र्यंबकेण सुशीघ्रतः ॥

दिव्यास्त्राणि महेन्द्रेण विष्णुनाथ महात्मना ॥ १२ ॥

ततोऽभीष्टानि शस्त्राणि देवैः सर्वैः पृथक्पृथक् ॥

तस्य दत्तानि संतुष्टैस्तथा मातृगणैरपि ॥ १३ ॥

ततस्तमग्रतः कृत्वा सेनानाथं सुरेश्वराः ॥

जग्मुः ससैनिकास्तत्र तारको यत्र संस्थितः ॥ १४ ॥

तारकोऽपि समालोक्य देवान्स्वयमुपागतान् ॥

युद्धार्थं हर्षसंयुक्तः सम्मुखः सत्वरं ययौ ॥ १५ ॥

ततोऽभूत्सुमहद्युद्धं देवानां दानवैः सह ॥

कोपसंरक्तनेत्राणां मृत्युं कृत्वा निवर्तनम् ॥ १६ ॥

अथ स्कन्देन संवीक्ष्य दूरस्थं तारकं रणे ॥

समाहूय ततो मुक्ता सा शक्तिस्तस्य मृत्यवे ॥ १७ ॥

अथासौ हृदयं भित्त्वा तस्य दैत्यस्य दारुणा ॥

चमत्कारपुरोपांते पतिता रुधिरोक्षिता ॥ १८ ॥

तारकस्तु गतो नाशं मुक्तः प्राणैश्च तत्क्षणात् ॥

ततो देवगणाः सर्वे संहृष्टास्तं महाबलम् ॥ १९ ॥

स्तोत्रैर्बहुविधैः स्तुत्वा प्रोचुस्तस्मिन्हते सति ॥

गताश्च त्रिदिवं तूर्णं सह शक्रेण निर्भयाः ।१ ६.७१.२० ॥

स्कन्दोऽपि तां समादाय शक्तिं तत्र पुरोत्तमे ॥

स्थापयामास येनैव रक्तशृंगोऽभवद्दृढः ॥ ॥ २१ ॥

ऋषय ऊचुः ॥ ॥

रक्तशृंगः कथं तेन निश्चलोऽपि दृढीकृतः ॥

कस्य वाक्येन नो ब्रूहि विस्तरेण महामते ॥ २२ ॥

॥ सूत उवाच ॥ ॥

यदा वै भूमिकम्पस्तु संप्रजातः सुदारुणः ॥

रक्तशृङ्गः प्रचलितः स्वस्थानादतिवेगतः ॥ २३ ॥

तस्य दैत्यस्य पातेन यथान्ये पर्व तोत्तमाः ॥

अथ हर्म्याणि सर्वाणि चमत्कारपुरे तदा ॥ २४ ॥

शीर्णानि चलिते तस्मिन्पर्वते व्यथिता द्विजाः ॥

प्रायशो निधनं प्राप्तास्तथाऽन्ये मूर्छयार्दिताः ॥ २५ ॥

हतशेषास्ततो विप्रा गत्वा स्कन्दं क्रुधान्विताः ॥

प्रोचुश्च किमिदं पाप त्वया कृतमबुद्धिना ॥ २६ ॥

नाशं नीता वयं सर्वे सपुत्रपशुबाधवाः ॥

तस्माच्छापं प्रदास्यामो वयं दुःखेन दुःखिताः ॥ २७ ॥

॥ स्कन्द उवाच ॥ ॥

हिताय सर्वलोकानां मयैतत्समनुष्ठितम् ॥

यद्धतो दानवो रौद्रो नान्यथा द्विजसत्तमाः ॥ २८ ॥

प्रसादः क्रियतां तस्मान्मान्या मे ब्राह्मणाः सदा ॥

मृतानपि द्विजान्सर्वानहं तानमृताश्रयात्॥ २९ ॥

पुनर्जीवितसंयुक्तान्करिष्यामि न संशयः ॥

तथा सुनिश्चलं शैलं करिष्यामि स्वशक्तितः ॥ ६.७१.३० ॥

एवमुक्त्वा समादाय तां शक्तिं रुधिरोक्षिताम् ॥

चक्रे स्थापनमस्यास्तु रक्तशृङ्गस्य मूर्धनि ॥ ३१ ॥

ततः प्रोवाच संहृष्टो देवतानां चतुष्टयम् ॥

आंबवृद्धां तथैवाम्रां माहित्थां च चमत्करीम् ॥ ३२ ॥

युष्माभिर्निश्चलः कार्यो भूयोऽयं नगसत्तमः ।।

प्रलयेऽपि यथा स्थानाद्रक्तशृङ्गश्चलेन्नहि ॥ ३३ ॥

सदैव ख्यातिमायातु मन्नाम्ना पुरमुत्तमम्॥३२॥

युष्माकं ब्राह्मणाः सर्वे पूजां दास्यंति सर्वदा॥३४॥

बाढमित्येव ताः प्रोच्य चतुर्दिक्षु ततश्च तम्॥

शूलाग्रैः सुदृढं चक्रुः स्कन्दवाक्येन हर्षिताः॥

ततश्चामृतमादाय मृतानपि द्विजोत्तमान्॥

स्कन्दो जीवापयामास द्विजभक्तिपरायणः॥३६॥

ततस्ते ब्राह्मणास्तत्र संहृष्टा वरमुत्तमम् ॥

ददुस्तस्य स च प्राह मन्नामैतत्पुरोत्तमम् ॥

सदैव ख्यातिमायातु एतन्मे हृदि वांछितम् ॥ ३७ ॥

॥ ऋषय ऊचुः ॥ ॥

एतत्स्कन्दपुरंनाम तव नाम्ना भविष्यति ॥

चमत्कारपुरं तद्वत्सांप्रतं सुरसत्तम ॥ ३८ ॥

पूजां तव करिष्यामः कृत्वा प्रासादमुत्त मम् ॥

तथैव देवताः सर्वाश्चतस्रोऽपि त्वया धृताः ॥ ३९ ॥

सर्वाः संपूजयिष्यामः सर्वकृत्येषु सादरम्॥

एतां चं तावकीं शक्तिं सदा सुरवरोत्तम ॥

विशेषात्पूजयिष्यामः षष्ठ्यां श्रद्धासमन्विताः ॥ ६.७१.४० ॥

॥ सूत उवाच ॥ ॥

एवं स ब्राह्मणैः प्रोक्तो महासेनो महाबलः ॥

स्थितस्तत्रैव तद्वा क्याज्ज्ञात्वा तत्क्षेत्रमुत्तमम् ॥ ४१ ॥

यस्तं पूजयते भक्त्या चैत्रषष्ठ्यां सुभावतः ॥

शुक्लायां तस्य संतुष्टिं कुरुते बर्हिवाहनः ॥ ४२ ॥

तस्यां शक्तौ नरो यश्च कुर्यात्पृष्ठिनिघर्षणम्॥

पूजयित्वा तु पुष्पाद्यैः सम्यक्छ्रद्धासमन्वितः ॥

स न स्याद्रोगसंयुक्तो यावत्संवत्सरं द्विजाः ॥ ४३ ॥

एवं तत्र धृता शक्तिस्तेन स्कन्देन धीमता ॥

रक्तशृंगस्य रक्षार्थं तत्पुरस्य विशेषतः ॥ ४४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये स्कन्दस्थापितशक्तिमाहात्म्यवर्णनंनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७२

https://sa.wikisource.org/s/flh
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तत्रैव स्थापितं लिंगं धृतराष्ट्रेण भूभुजा ॥

दुर्योधनेन चालोक्य सर्वपापैः प्रमुच्यते ॥ १ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मिन्काले नरेन्द्रेण धृतराष्ट्रेण भूभुजा ॥

तत्र संस्थापितं लिगं वद त्वं रौमहर्षणे ॥ २ ॥

॥ सूत उवाच ॥ ॥

आसीद्भानुमतीनाम बलभद्रसुता पुरा ॥

सर्वलक्षणसंपन्ना रूपौ दार्यगुणान्विता ॥ ३ ॥

तां ददावथ पत्न्यर्थे धार्तराष्ट्राय धीमते ॥

दुर्योधनाय संमन्त्र्य विष्णुना सह यादवः ॥ ४ ॥

अथ नागपुरात्सर्वे भीष्म द्रोणादयश्च ये ॥

कौरवाः प्रस्थितास्तूर्णं पुरीं द्वारवतीं प्रति ॥५॥

तथा पांडुसुताः पंच परिवारसमन्विताः॥

सौभ्रात्रं मन्यमानास्ते दुर्योधनसमन्वि ताः ॥

जग्मुर्द्वारवतीं हृष्टाः सैन्येन महतान्विताः ॥६॥

अथ क्रमेण गच्छंतस्ते सर्वे कुरुपाण्डवाः ॥

आनर्तविषयं प्राप्ता धनधान्यसमाकुलम् ॥७॥

सर्वपापहरं पुण्यं यत्र तत्क्षेत्रमुत्तमम्॥

हाटकेश्वरदेवस्य विख्यातं भुवनत्रये ॥ ८ ॥

अथ प्राह विशुद्धात्मा वृद्धः कुरुपितामहः ॥

धृतराष्ट्रं महीपालं सपुत्रं प्रहसन्निव ॥ ९ ॥

॥ भीष्म उवाच ॥ ॥

एतद्वत्स पुरा दृष्टं मया क्षेत्रमनुत्तमम्॥

हाटकेश्वरदेवस्य सर्वपातकनाशनम् ॥ ६.७२.१० ॥

अत्राहं चैव नि र्मुक्तः स्त्रीहत्योद्भवपातकात् ॥

तस्मादत्रैव राजेंद्र तिष्ठामः पंचवासरान् ॥११॥

येन सर्वाणि पश्यामस्तीर्थान्यायतनानि च॥

यान्यत्र संति पुण्यानि मुनीनां भावितात्मनाम् ॥१२॥

अथ तद्वचनाद्राजा धृतराष्ट्रोंऽबिकासुतः ॥

शतसंख्यैः सुतैः सार्धं कौतूहलसमन्वितः ॥१३॥

जगाम सत्वरं तत्र यत्र तत्क्षेत्रमुत्तमम् ॥

तपस्विगणसंकीर्णं युक्तं चैवाश्रमैः शुभैः ॥ १४ ॥

ब्रह्मघोषेण महता नादितं सर्वतोदिशम् ॥

वह्निपूजोत्थधूम्रेण कलुषीकृतपाद पम् ॥

क्रीडामृगैश्च संकीर्णं धावद्भिर्बहुभिस्तथा ॥ १५ ॥

ततो निवार्य सैन्यं स्वमुपद्रवभयान्नृपः ॥

पञ्चभिः पांडवैः सार्धं शतसंख्यैस्तथा सुतैः ॥ ॥ १६ ॥

भीष्मेण सोमदत्तेन बाह्लीकेन समन्वितः॥

द्रोणाचार्येण वीरेण तत्पुत्रेण कृपेण च ॥१७॥

सौबलेन च कर्णेन तथान्यैरपि पार्थिवैः॥

परिवारपरित्यक्तैस्तस्मिन्क्षेत्रे चचार सः ॥ १८ ॥

तेऽपि सर्वे महात्मानः क्षत्रियास्तत्र संस्थिताः ॥

चक्रुर्धर्मक्रियाः सर्वाः श्रद्धापूतेन चेतसा ॥ १९ ॥

स्नानं चक्रुर्विधानेन तीर्थेषु द्विजसत्तमाः ॥

भ्रांत्वाभ्रांत्वा सुपुण्येषु श्रुत्वाश्रुत्वा द्विजन्मनाम् ॥ ६.७२.२० ॥

दानानि च विशिष्टानि ददुरिष्टानि चापरे ॥

दीनेभ्यः कृपणेभ्यश्च तपस्विभ्यो विशेषतः ॥ २१ ॥

चक्रुः श्राद्धक्रियाश्चान्ये पितॄनुद्दिश्य भक्तितः ॥

पितॄणां तर्पणं चान्ये तिलमिश्र जलेन च ॥ २२ ॥

अन्ये होमक्रिया भूपा जपमन्ये निरर्गलम् ॥

स्वाध्यायमपरे शान्ताः सम्यक्छ्रद्धासमन्विताः ॥ २३ ॥

देवतायतनान्यन्ये माहात्म्यसहितानि च ॥

श्रुत्वा पूर्वनृपाणां च पूजयंति विशेषतः ॥ २४ ॥

बलिदानैः सुवस्त्रैश्च गन्धपुष्पोपलेपनैः ॥

मार्जनैर्ध्वजदानैश्च तथा प्रेक्षणकैः शुभैः ॥ २५ ॥

मंडनैः पुष्पमालाभिः समंताद्द्विजसत्तमाः ॥

हस्त्यश्वरथदानैश्च गोभिर्वस्त्रैश्च कांचनैः ॥

कृतार्था ब्राह्मणाः सर्वे कृतास्तै स्तत्र भक्तितः ॥ २६ ॥

एवं स्नात्वा तथाऽभ्यर्च्य देवान्विप्रान्नृपोत्तमाः ॥

धृतराष्ट्रसमायुक्ता जग्मुः स्वशिबिरं ततः ॥ २७ ॥

शंसन्तो विस्मया विष्टास्तीर्थान्यायतनानि च ॥

तस्मिन्क्षेत्रे द्विजांश्चैव तापसान्संशितव्रतान् ॥ २८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये धृतराष्ट्रादिकृतहाटकेश्वरक्षेत्रदर्शनवर्णनंनाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७३



॥ सूत उवाच ॥ ॥

एवं ते कौरवाः सर्वे पांडोः पुत्राश्च शालिनः ॥

तस्मात्स्थानात्ततो जग्मुर्यत्र द्वारवती पुरी ॥ १ ॥

तत्र गत्वा विवाहं तु चक्रुः संहृष्टमानसाः ॥

दुर्योधनस्य भूपस्य भानुमत्या समं तदा ॥ २ ॥

नानावादित्रघोषेण वेदध्वनियुतेन च ॥

गीतैर्मनोहरैः पाठैर्बन्दिनां च सहस्रशः ॥ ३ ॥

एवं महोत्सवो जज्ञे तत्र यावद्दिनाष्टकम् ॥

यादवानां कुरूणां च मिलितानां परस्परम् ॥ ४ ॥

कृतार्थास्तत्र संजाताः सूतमागध बन्दिनः ॥

चारणा ब्राह्मणेंद्राश्च तथान्येऽपि च तार्किकाः ॥ ५ ॥

ततस्तु नवमे प्राप्ते दिवसे कुरुपांडवाः ॥

भीष्माद्याः पुंडरीकाक्षमिदमूचुः ससौहृ दम् ॥ ६ ॥

न वयं पुंडरीकाक्ष तव रामस्य चाश्रयम् ॥

कथंचित्त्यक्तुमिच्छामः स्नेहपाशनियंत्रिताः ॥ ७ ॥

तथापि च प्रगन्तव्यं स्वपुरं प्रति माध व ॥

बलभद्रसमायुक्तस्तस्मान्नः कुरु मोक्षणम् ॥ ८ ॥

॥ विष्णुरुवाच ॥ ॥

न तावद्वत्सरो जातो न मासः पक्ष एव च ॥

स्थितानामत्र युष्माकं तत्किमौत्सुक्यमागतम् ॥ ९ ॥

तस्मादत्रैव तिष्ठामः सहिताः कुरुपांडवाः ॥

यूयं वयं विनोदेन मृगयाक्षोद्भवेन च ॥ ६.७३.१० ॥

शस्त्रशिक्षाक्रियाभिश्च दमनेन च दन्तिनाम् ॥

तथाभिवांछितैरन्यैः स्नेहोऽस्ति यदि वो मयि ॥ ११ ॥

॥ भीष्म उवाच ॥ ॥

उपपन्नमिदं विष्णो यत्त्वया व्याहृतं वचः ॥

परं शृणुष्व मे वाक्यं यदर्थं ह्युत्सुका वयम् ॥ १२ ॥

आनर्तविषयेऽस्माभिरागच्छद्भिस्तवांतिकम् ॥

दृष्टमत्यद्भुतं क्षेत्रं हाटकेश्वरजं महत् ॥

तत्र लिंगानि दृष्टानि भूपतीनां महात्मनाम् ॥ १३ ॥

सूर्यचन्द्रान्वयोत्थानामन्येषां च महात्मनाम् ॥ १४ ॥

देवानां दानवानां च मुनीनां च विशेषतः ॥

साकाराणि सुतेजांसि नानाप्रासादभोजि च ॥ १५ ॥

ततश्च कुरुमुख्यानां पांडवानां च माधव ॥

लिंगसंस्थापनार्थाय तत्र जाता मतिर्दृढा ॥ १६ ॥

ते वयं तत्र गत्वाशु यथाशक्त्या यथेच्छया ॥

लिंगानि स्थापयिष्यामः स्वानिस्वानि पृथक्पृथक् ॥ १७ ॥

एतस्मात्कारणात्तूर्णं चलिता वयमच्युत ॥

न वयं तव संगस्य तृप्यामोऽब्दशतैरपि ॥ १८ ॥

तस्मादाज्ञापयस्वाद्य कृत्वा चित्तं दृढं विभो ॥

भूयोऽप्यत्रागमिष्यामस्तव दर्शनलालसाः ॥ १९ ॥

॥ श्रीभगवानुवाच ॥ ॥

अहं जानामि तत्क्षेत्रं सुपुण्यं पापनाशनम् ॥

तापसैः कीर्तितं नित्यं ममान्यैस्तीर्थयात्रिकैः ॥ ६.७३.२० ॥

तस्मात्तत्र समेष्यामो युष्माभिः सहिता वयम् ॥

लिंग संस्थापनार्थाय क्षेत्रदर्शनवांछया ॥ २१ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा कौरवाः सर्वे परं हर्षमुपागताः ॥

तथा पांडुसुताश्चैव ये चान्ये तत्र पार्थिवाः ॥ २२ ।

ते तु संप्रस्थिताः सर्वे मिलिताः कुरुपांडवाः ॥

गजवाजिविमर्देन कम्पयन्तो वसुन्धराम् ॥ २३ ॥

अथ तत्क्षेत्रमासाद्य दूरे कृत्वा निवेशनम् ॥

कौरवा यादवा मुख्याश्चमत्कारपुरं गताः ॥ २४ ॥

तत्र सर्वान्समाहूय ब्राह्मणान्विनयान्विताः ॥

प्रोचुर्दत्त्वा विचित्राणि भूषणाच्छादनानि च ॥ २५ ॥

वयं सर्वेऽत्र वांछामो लिगसंस्थापनक्रियाम् ॥

कर्तुं प्रासादमुख्यानां पृथक्त्वेन स्वशक्तितः ॥ २६ ॥

तस्मात्कृत्वा प्रसादं नो दयां च द्विजसत्तमाः ॥

आज्ञापयत शीघ्रं हि येन कर्म प्रवर्तते ॥ २७ ॥

भविष्यथ तथा यूयं होतारः सर्वकर्मसु ॥

न चान्यो ब्राह्मणो बाह्यो यद्यपि स्याद्बृहस्पतिः ॥ २८ ॥

यतोऽस्माभिः श्रुता वार्ता कीर्त्यमाना पुरातनी ॥

विष्णुना तस्य राजर्षेः प्रेतश्राद्धसमुद्भवा ॥ २९ ॥

यथा तेन कृतं श्राद्धं पितुः प्रेतस्य यत्नतः ॥

ब्राह्मणानां पुरोऽन्येषां यथोक्तानामपि द्विजाः ॥ ६.७३.३० ॥

यथोक्तविधिना तीर्थे नागानां पंचमीदिने ॥।

श्रावणे मासि नो मुक्तः पिता तस्य तथापि सः ॥ ३१ ॥

प्रेतत्वात्सर्पदोषेण संजाता द्विजसत्तमाः ॥

देवशर्मपुरो यावत्तत्कृतं श्राद्धमादरात् ॥

तावत्पिता विनिर्मुक्तः प्रेतत्वाद्दारुणाद्द्विजाः ॥ ३२ ॥

यदत्र क्रियते किंचित्कर्म धर्म्यं द्विजोत्तमाः ॥

तद्बाह्यं च भवेद्व्यर्थमेतद्विद्मः स्फुटं वयम् ॥ ॥ ३३ ॥

प्रार्थयामो विशेषेण तेन दैन्यं समागताः ॥

प्रसादः क्रियतां तस्मादाज्ञां यच्छत मा चिरम् ॥ ३४ ॥

॥ सूत उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा ब्राह्मणास्ते परस्परम् ॥

मन्त्रं चक्रुस्तदर्थं हि किं कृतं सुकृतं भवेत् ॥ ३५ ॥

एके प्रोचुर्न दास्यामः प्रासादार्थं वसुन्धराम् ॥

एतेषामपि चैकस्य तस्माद्गच्छंतु सत्वरम् ॥ ३६ ॥

पंचक्रोशप्रमाणेन क्षेत्रमेतद्व्यवस्थितम् ॥

पूर्वेषामपि देवानां प्रासादैस्तत्समावृतम् ॥ ३७ ॥

अन्ये प्रोचुर्धनोमत्ता यूयं च सुखमाश्रिताः ॥

दारिद्यार्तिं न जानीथ ब्रूथ तेन भृशं वचः ॥ ३८ ॥

तस्माद्वयं प्रदास्याम एतेषां हि वसु न्धराम् ॥

अर्थसिद्धिर्भवेद्येन भूषा स्थानस्य जायते ॥ ३९ ॥

तथान्ये मध्यमाः प्रोचुर्यत्र साक्षाज्जनार्दनः ॥

स्वयं प्रार्थयते भूमिं तत्कस्मान्न प्रदीयते ॥ ६.७३.४० ॥

तस्माद्यत्र समायाताः कुरुपांडवयादवाः ॥

प्राधान्येन प्रकुर्वंतु प्रासादांस्तेन चापरे ॥ ४१ ॥

याचते यत्र गांगेयः स्वयमेव तथा परः ॥

धृतराष्ट्रः सपुत्रश्च पांडवाश्च महाबलाः ॥

लिंगसंस्थापनार्थाय निषेधस्तत्र नार्हति ॥ ४२ ॥

तेषां तद्वचनं श्रुत्वा प्रतिपन्नं द्विजोत्तमैः ॥

निर्धनैः सधनैश्चापि सस्पृहैर्निःस्पृहैरपि ॥ ४३ ॥

ततः समेत्य ते सर्वे ब्राह्मणाः कुरुसत्तमान् ॥

यादवान्पांडवान्प्रोचुः कृत्वा वै मन्त्रनिश्चयम् ॥ ४४ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

एतत्स्वल्पतरं क्षेत्रं सर्वेषामपि भूभुजाम् ॥

प्रासादैः सर्वतो व्याप्तं तत्किं ब्रूमोऽधुना वयम् ॥ ४५ ॥

तद्भवंतः प्रकुर्वंतु प्राधान्येन यदृच्छया ॥

क्षेत्रेऽत्रैवाभिमुख्येन प्रासादान्सुमनोहरान् ॥

यथाज्येष्ठं यथाश्रेष्ठं पृथक्त्वेन व्यवस्थिताः ॥ ४६ ॥

अथ हर्षसमायुक्ता धृतराष्ट्रमुखाः क्रमात् ॥

प्राधान्येन यथाश्रेष्ठं चक्रुः प्रासादपद्धतिम् ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धृतराष्ट्रादिकृतप्रासादस्थापनोद्यमवर्णनंनाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७४



॥ सूत उवाच ॥ ॥

धृतराष्ट्रेण भूपेन शतपुत्रान्वितेन च ॥

लिंगानां स्थापितं तत्र शतमेकोत्तरं द्विजाः ॥ १ ॥

तथा च पांडवैः सर्वैः स्थापितं लिंगपंचकम् ॥

द्रौपद्या चाऽथ कुन्त्याऽथ गांधार्याऽथ यदृच्छया ॥ २ ॥

भानुमत्या च गौरीणां स्थापितं च चतुष्टयम् ॥

विदुरेणाथ शल्येन कलिं गेन युयुत्सुना ॥ ३ ॥

बाह्लीकेन सपुत्रेण कर्णेनाथ ससूनुना ॥

तथा शकुनिना तत्र द्रोणेन च कृपेण च ॥ ४ ॥

अश्वत्थाम्ना पृथक्त्वेन लिङ्गमेकैकमुत्तमम् ॥

स्थापितं परया भक्त्या वरप्रासादमाश्रितम् ॥ ५ ॥

तथा संस्थापितं तत्र विष्णुना प्रभविष्णुना ॥

लिंगं प्रासादमाधाय प्रोत्तुंगशिखरान्वितम् ॥ ६ ॥

सात्वतेनापि सांबेन बलभद्रेण धीमता ॥

प्रद्युम्नेनानिरुद्धेन तथान्यैर्मुख्ययादवैः ॥ ७ ॥

चारुदेष्णादिभिः पुत्रै रुक्मिण्या दशभिः सुतैः ॥

लिंगानां दशकं मुख्यं स्थापितं श्रद्धयान्वितैः ॥ ८ ॥

एवं संस्थाप्य लिङ्गानि ते सर्वे कुरुपांडवाः ॥

यादवाश्च सुसंहृष्टा कृतकृत्यास्तदा। ऽभवन् ॥ ९ ॥

तत्र स्थित्वा चिरं कालं दत्त्वा दानान्यनेकशः ॥

धनाढ्यान्ब्राह्मणान्कृत्वा चमत्कारपुरोद्भवान् ॥ ६.७४.१० ॥

दत्त्वा तेभ्यो वरान्नागान्ह याञ्जात्याननेकशः॥

सद्ग्रामाणि विचित्राणि क्षेत्राणि च सुधेनवः ॥ ११ ॥

महोक्षांश्च सुवस्त्राणि भूस्थानान्याश्रयांस्तथा ॥

दासीदासांस्तथा भृत्यान्दानानि विविधानि च ॥ १२ ॥

तत आमन्त्र्य तान्सर्वान्प्रणिपत्य मुहुर्मुहुः ॥

स्वस्थानं प्रति संहृष्टाः प्रजग्मुः सर्व एव ते ॥ १३ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं स्थापितं तेन भूभुजा ॥

तथा तद्धृतराष्ट्रेण लिंगं पातकनाशनम् ॥ १४ ॥

तथान्यैरपि भूपालैः प्राधान्येन व्यवस्थितैः ॥

पाण्डवैर्यादवैश्चैव पृथक्त्वेन व्यवस्थितैः ॥।५॥

यस्तानि पुरुषः सम्यक्पूजयेद्भक्तिभावितः ॥

स लभेच्चाखिलान्कामान्वांछितान्स्वेन चेतसा ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठेनागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कौरवपाण्डवयादवकृतलिंग प्रतिष्ठावृत्तांतवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७५



॥ सूत उवाच ॥ ॥

पुरा कल्पे भगवता एतत्क्षेत्रमनुत्तमम् ॥

रुद्रेण ब्रह्मणे दत्तं तुष्टेन द्विजसत्तमाः ॥ १ ॥

यदा तु स्थापितं लिंगं हाटकेश्वरसंज्ञितम् ॥

देवैः प्रीतेन रुद्रेण प्रदत्तं ब्रह्मणे पुनः ॥ २ ॥

एतत्क्षेत्रं तदा दत्तं शंभुना षण्मुखस्य ह ॥

रक्षणार्थं हि विप्राणां कलिकालादिदोषतः ॥३॥

ब्रह्मणा प्रार्थितेनेदं स्वयमादिममुत्तमम् ॥

पित्रादिष्टस्तु गांगेयस्तत्र वासमथाकरोत् ॥ ४ ॥

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ॥

सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥५॥

महासेनस्य देवस्य प्रासादं सुमनोहरम्॥

उच्चैः स्थितं सर्वलोके पातुकाममिवांबरम् ॥ ६ ॥

तच्छ्रुत्वा विबुधाः सर्वे कौतुकादेत्य सत्वरम् ॥

वीक्षांचक्रुस्ततो गत्वा दृष्ट्वा मेध्यतमं पुरम् ॥ ७ ॥

प्रासादस्योत्तरे देशे प्राच्ये देशे तथा द्विजाः ॥

यज्ञक्रियासमारंभांश्चकुर्विप्रैर्यथोदितान् ॥८॥

इष्ट्वा च विबुधाः सर्वे दत्त्वा तेभ्यश्च दक्षिणाम् ॥

जग्मुस्त्रिविष्टपं हृष्टा लब्ध्वा तत्स्थानजं फलम् ॥ ९ ॥

ततस्तु देवयजनंनाम तस्य बभूव ह ॥

यदन्यत्र शतं कृत्वा क्रतूनां फलमाप्नुयात् ॥

तदत्रैकेन लभते क्रतुना दक्षिणावता ॥ ६.७५.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये यज्ञ भूमिमाहात्म्यवर्णनंनाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ अ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७६



॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति भास्करत्रितयं शुभम् ॥

यैस्तुष्टैस्त्रिषु लोकेषु मानवो मुक्तिमाप्नुयात् ॥ १ ॥

मुण्डीरं प्रथमं तत्र कालप्रियं तथापरम् ॥

मूलस्थानं तृतीयं च सर्वव्याधिविनाशनम् ॥ २ ॥

तत्र संक्रमते सूर्यो मुंडीरे रजनीक्षये ॥

कालप्रिये च मध्याह्ने मूलस्थाने क्षपागमे ॥ ३ ॥

तस्मिन्काले नरो भक्त्या पश्येदप्येकमेवच ॥

कृतक्षणो नरो मोक्षं सत्यं याति न संशयः ॥ ४ ॥

॥ ऋषय ऊचुः ॥ ॥

मुंडीरः पूर्वदिग्भागे धरित्र्याः श्रूयते किल ॥

मध्ये कालप्रियो देवो मूलस्थानं तदन्तरे ॥ ५ ॥

तत्कथं ते त्रयस्तत्र संजाताः सूत भास्कराः ॥

हाटकेश्वरजे क्षेत्रे सर्वं नो ब्रूहि विस्तरात् ॥ ६ ॥

॥ सूत उवाच ॥ ॥

अस्ति सागरपर्यंते विटंकपुरमुत्तमम् ॥

समुद्रवीचिसंसक्तप्रोच्चप्राकारमण्डनम् ॥ ७ ॥

तत्राभूद्ब्राह्मणः कश्चित्कुष्ठव्याधिसमन्वितः ॥

पूर्वकर्मविपाकेन यौवनेसमुपस्थिते ॥ ८ ॥

तस्य भार्याऽभवत्साध्वी कुलीना शीलमंडना ॥

तथाभूतमपि प्रायः सा पश्यति यथा स्मरम् ॥ ९ ॥

औषधानि विचित्राणि महार्घ्याण्यपि चाददे ॥

तदर्थमुपलेपांश्च पथ्यानि विविधानि च ॥ ६.७६.१० ॥

तथा भिषग्वरान्नित्यमानिनाय च सादरम् ॥

तदर्थे न गुणस्तस्य तथापि स्याच्छरीरजः ॥ ११ ॥

यथायथा स गृह्णाति भेषजानि द्विजोत्तमाः ॥

कुष्ठेन सर्वगात्रेषु व्याप्यते च तथातथा ॥ १२ ॥

अथैवं वर्तमानस्य तस्य विप्रवरस्य च ॥

गृहेऽतिथिः समायातः कश्चित्पांथः श्रमान्वितः ॥ १३ ॥

अथ विप्रं गृहं प्राप्तं दृष्ट्वा तस्य सती प्रिया ॥

अज्ञातमपिसद्भक्त्या सूपचारैरतोषयत् ॥ १४ ॥

अथ तं स्नातमाचांतं कृताहारं द्विजोत्तमम् ॥

विश्रान्तं शयने विप्रः प्रोवाच स गृहाधिपः ॥ १५ ॥

तेजोऽन्वितं यथा भानुं रूपौदार्यगुणान्वितम् ॥

यौवने वर्तमानं च मूर्तं काममिवापरम् ॥ १६ ॥

॥ कुष्ठ्युवाच ॥ ॥

कुत आगम्यते विप्र क्व यास्यसि वदाऽधुना ॥

एवं लावण्ययुक्तोऽपि किमेकाकी यथार्तिभाक् ॥ १७ ॥

॥ पथिक उवाच ॥ ॥

अस्ति कान्तीपुरीनाम पुरंदरपुरी यथा ॥

सुस्थितैः सेविता नित्यं जनैर्धर्मव्रतान्वितैः ॥ १८ ॥

तस्यामहं कृतावासो गृहस्थाश्रममावहन् ॥

ग्रस्तः कुष्ठेन रौद्रेण यथा त्वं द्विजसत्तम ॥ १९ ॥

ततः श्रुतं मया तावत्पुराणे स्कान्दसंज्ञिते ॥

भास्करत्रितयं भूमौ सर्वव्याधिविनाशनम् ॥ ६.७६.२० ॥

ततो निर्वेदमापन्नो भेषजैः क्लेशितश्चिरम् ॥

क्षारैश्चाम्लैः कषायैश्च कटुकैरथ तिक्तकैः ॥ २१ ॥

ततो विनिश्चयं चित्ते कृत्वा गृह्य धनं महत् ॥

मुण्डीरस्वामिनं गत्वा स्थितस्तस्यैव सन्निधौ ॥ २२ ॥

ततः प्रातः समुत्थाय नित्यं पश्यामि तं विभुम् ॥

पूजयामि स्वशक्त्या च प्रणमामि ततः परम्॥ २३ ॥

सूर्यवारे विशेषेण निराहारो यतेन्द्रियः ॥

करोमि जागरं रात्रौ गीतवादित्रनिःस्वनैः ॥ २४ ॥

ततः संवत्सरस्यांते तं प्रणम्य दिनाधिपम् ॥

कालप्रियं ततः पश्चाच्छ्रद्धया परया युतः ॥ २५ ॥

तेनैव विधिना विप्र तस्यापि दिवसेशितुः ॥

पूजां करोमि मध्याह्ने श्रद्धा पूतेन चेतसा ॥ २६ ॥

ततोऽपि वत्सरस्यांते तं प्रणम्याथ शक्तितः ॥

मूलस्थानं गतो देवमपरस्यां दिशि स्थितम् ॥ २७ ॥

तेनैव विधिना पूजा तस्यापि विहिता मया ॥

संध्याकाले द्विजश्रेष्ठ यावत्संवत्सरं स्थितः ॥ २८ ॥

ततः संवत्सरस्यांते स्वप्ने मां भास्करोऽब्रवीत् ॥

समेत्य प्रहसन्विप्रः संप्रहृष्टेन चेतसा ॥ २९ ॥

परितुष्टोऽस्मि ते विप्र कर्मणाऽनेन भक्तितः ॥

ममाराधनजेनैव तस्मात्कुष्ठं प्रयातु ते ॥ ६.७६.३० ॥

गच्छ शीघ्रं द्विजश्रेष्ठ श्रांतोऽसि निजमंदिरम् ॥

पश्य बंधुजनं सर्वं सोत्कण्ठं तत्कृते स्थितम् ॥ ३१ ॥

त्वया हृतं पुरा रुक्मं ब्राह्मणस्य महात्मनः ॥

तेन कर्मविपाकेन कुष्ठव्याधिरुपस्थितः ॥ ३२॥

स मया नाशितस्तुभ्यं प्रहृष्टेनाधुना द्विज ॥

एतज्ज्ञात्वा न कर्तव्यं सुवर्णहरणं पुनः ॥ ३३ ॥

दृश्यन्ते ये नरा लोके कुष्ठव्याधिसमाकुलाः ॥

सुवर्णहरणं सर्वैस्तैः कृतं पापकर्मभिः ॥ ३४ ॥

तस्माद्देयं यथाशक्त्या न स्तेयं कनकं बुधैः ॥

इच्छद्भिः परमं सौख्यं स्वशरीरस्य शाश्वतम् ॥ ३५ ॥

एवमुक्त्वा सहस्रांशुस्ततश्चादर्शनं गतः ॥

अहं च विस्मयाविष्टः प्रोत्थितः शयनादद्रुतम् ॥ ॥ ३६ ॥

यावत्पश्यामि देहं स्वं कुष्ठव्याधिपरिच्युतम् ॥

द्वादशार्कप्रभं दिव्यं यथा त्वं पश्यसे द्विज ॥ ३७ ॥

तस्मात्त्वमपि विप्रेंद्र भक्त्या तद्भास्करत्रयम् ॥

अनेन विधिना पश्य येन कुष्ठं प्रशाम्यति ॥३८॥
किमौषधैः किमाहारैः कटुकैरपि योजितैः ॥
सर्वव्याधिप्रणाशेशे स्थितेऽस्मिन्भास्करत्रये ॥ ३९ ॥
स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं तां पुरीं प्रति ॥
गृहेऽद्य तव विश्रांतो यथा विप्र निजे गृहे ॥ ६.७६.४० ॥
एवमुक्तः स पांथेन तेन विप्रः स कुष्ठभाक् ॥
वीक्षांचक्रे ततो वक्त्रं स्वपत्न्या दुःखसंयुतः ॥ ४१ ॥
साऽब्रवीद्युक्तमुक्तं ते पांथेनानेन वल्लभ ॥
तस्मात्तत्र द्रुतं गच्छ यत्र तद्भास्करत्रयम् ॥ ४२ ॥
अहं त्वया समं तत्र शुश्रूषानिरता सती ॥
गमिष्यामि न संदेहस्तस्माद्गच्छ द्रुतं विभो ॥ ४३ ॥
एवमुक्तस्तया सोऽथ वित्तमादाय भूरिशः ॥
प्रस्थितः कांतया सार्धं मुण्डीरस्वामिनं प्रति ॥ ४४ ॥
प्रतिज्ञया गमिष्यामि द्रष्टुं तद्देवतात्रयम्॥
मुंडीरं कालनाथं च मूल स्थानं च भास्करम् ॥ ४५ ॥
ततः कृच्छ्रेण महता कुष्ठव्याधिसमाकुलः ॥
हाटकेश्वरजे क्षेत्रे संप्राप्तः स द्विजोत्तमाः ॥ ४६ ॥
तद्दृष्ट्वा सुमहत्क्षेत्रं तापसौघनिषेवितम् ॥
निर्विण्णः कुष्ठरोगेण पथि श्रांतोऽब्रवीत्प्रियाम् ॥ ४७ ॥
अहं निर्वेदमापन्नो रोगेणाथ बुभुक्षया ॥
मुण्डीरस्वामिनं यावन्न शक्रोमि प्रसर्पितुम् ॥४८॥
तस्मादत्रैव देहं स्वं विहास्यामि न संशयः ॥
त्वं गच्छ स्वगृहं कांते सार्थमासाद्य शोभनम् ॥४९॥
॥ पत्न्युवाच ॥ ॥
अभुक्ते त्वयि नो भुक्तं कदाचित्कांत वै मया ॥
एकांतेऽपि महाभाग न सुप्तं जाग्रति त्वयि ॥ ६.७६.५० ॥
तस्मादेतन्महाक्षेत्रं संप्राप्य त्वां व्यवस्थितम्॥
परलोकाय संत्यज्य कथं गच्छाम्यहं गृहम् ॥ ५१ ॥

दर्शयिष्ये मुखं तेषां त्वया हीना अहं कथम् ॥
बांधवानां गुरूणां च अन्येषां सुहृदा मपि ॥५२॥
तस्मात्त्वया समं नाथ प्रवेक्ष्यामि हुताशनम् ॥
स्नेहपाशविनिर्बद्धा सत्येनात्मानमालभे॥५३॥
यावतस्तव संजाता उपवासा महामते॥
तावंतश्च तथास्माकं कथं गच्छामि तद्गृहम्॥५४॥
एवं तस्या विदित्वा स निश्चयं ब्राह्मणस्तदा ॥
चितिं कृत्वा तु दाहार्थं तया सार्धं ततोऽविशत् ॥ ॥५५॥
भास्करं मनसि ध्यात्वा यावदग्निं समाददे ॥
तावत्पश्यति चाग्रस्थं सुदीप्तं पुरुषत्रयम्॥५६॥
तद्दृष्ट्वा विस्मयाविष्टः क एते पुरुषास्त्रयः॥
न कदाचिन्मया दृष्टा ईदृक्तेजःसमन्विताः ॥ ५७ ॥
॥ पुरुषा ऊचुः ॥ ॥
मा त्वं मृत्युपथं गच्छ कृत्वा वैराग्यमाकुलः ॥
व्यावृत्य स्वगृहं गच्छ स्व भार्यासहितो द्विज ॥ ५८ ॥
॥ ब्राह्मण उवाच ॥ ॥
प्रतिज्ञाय मया पूर्वं गृहं मुक्तं निजं यतः ॥
मुण्डीरस्वामिनं दृष्ट्वा तथाऽन्यं कालवल्लभम् ॥ ॥ ५९ ॥
मूलस्थानं च कर्तव्यं ततः सस्यप्रभक्षणम् ॥
सोऽहं तानविलोक्याथ कथं गच्छामि मन्दिरम् ॥
भक्षयामि तथा सस्यं तेन त्यक्ष्यामि जीवितम्॥ ६.७६.६० ॥
॥ पुरुषा ऊचुः ॥ ॥
वयं ते भास्करा ब्रह्मंस्त्रयोऽत्रैव समागताः ॥
त्वद्भक्त्याकृष्टमनसो ब्रूहि किं करवामहे ॥ ६१ ॥ ॥
॥ ब्राह्मण उवाच ॥ ॥
यदि यूयं समायाताः स्वयमेव ममांतिकम् ॥
त्रयोऽपि भास्करा नाशमेष कुष्ठः प्रगच्छतु ॥ ६२ ॥
तथाऽत्रैव सदा स्थेयं क्षेत्रे युष्माभिरेव हि ॥

सांनिध्यं त्रिषु लोकेषु गन्तव्यं च यथा पुरा ॥ ६३ ॥

॥ भास्करा ऊचुः ॥ ॥

एवं विप्र करिष्यामः स्थास्यामो ऽत्र सदा वयम् ॥

त्वं चापि रोगनिर्मुक्तः सुखं प्राप्स्यस्यनुत्तमम् ॥ ६४ ॥

प्रासादत्रितयं तस्मादस्मदर्थं निरूपय ॥

येन त्रिकालमासाद्य गच्छामः संनिधिं द्विज ॥ ६५ ॥

एवमुक्त्वा तु ते सर्वे गताश्चाद्दर्शनं ततः ॥

सोऽपि पश्यति कायं स्वं यावद्रोगविवर्जितम् ॥ ६६ ॥

द्वादशार्क प्रतीकाशं सर्वलक्षणलक्षितम् ॥

ततः प्रोवाच तां भार्यां विनयावनतां स्थिताम् ॥ ६७ ॥

पश्य त्वं सुभ्रूर्मे गात्रं यादृग्रूपं पुनः स्थितम् ॥

प्रसादाद्देवदेवस्य भास्करस्यांशुमालिनः ॥ ६८ ॥

सोऽहमत्र स्थितो नित्यं पूजयिष्यामि भास्करम् ॥

न यास्यामि पुनः सद्म सत्यमेतन्मयोदितम्॥६९॥

एवमुक्त्वा स विप्रेन्द्रस्तस्मिन्क्षेत्रे सुशोभने॥

प्रासादत्रितयं रम्यं निर्ममे भक्तिसंयुतः॥६.७६.७॥।

मुण्डीरस्वामिनश्चैकमन्यत्कालप्रियस्य च॥

मूलस्थानस्य चान्यत्तु सत्पताकाविभूषितम्॥७॥।

त्रयाणामपि तेषां तु साध्वर्चाः शास्त्रसूचिताः॥

स्थापयामास सूर्याणां हस्तार्के सूर्यवासरे ॥। ७२ ॥

ततस्ताः पुष्पधूपाद्यैः समभ्यर्च्य चिरं द्विजः ॥

त्रिसंध्यं क्रमशः प्राप्तो देहांते भास्करालयम् ॥ ७३ ॥

॥ सूत उवाच ॥ ॥

एवं ते तत्र संजातास्त्रयोऽपि द्विजसत्तमाः ॥

भास्करा भक्तलोकस्य सर्वव्याधिविनाशकाः ॥ ७४ ॥

यस्तान्पश्यति काले स्वे यथोक्ते सूर्र्यवासरे ॥

स वांछिताँल्लभेत्कामान्दुर्लभानपि मानवैः ॥७५॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मुंडीरकालप्रियमूलस्थानप्रतिष्ठावर्णनंनाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७७



॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तत्र तौ परमेश्वरौ ॥

उमामहेश्वरौ सूत हरिश्चन्द्रेण भूभुजा ॥ १ ॥

कृतौ कथयसीत्येवं वेदिमध्यं समाश्रितौ ॥

उतान्यौ स्थापितौ तत्र चमत्कारपुरांतिकम् ॥ २ ॥

वेदिमध्यगतौ नित्यं पार्वतीपरमेश्वरौ ॥

एतत्संश्रूयते सूत विवाहः प्रागभूत्तयोः ॥

ओषधिप्रस्थमासाद्य पुरं हिम वतः प्रियम् ॥ ३ ॥

अत्र नः संशयो जातः श्रद्धेयमपि ते वचः॥

श्रुत्वा किं वा भ्रमस्तेऽयं किं वाऽस्माकं प्रकीर्तय ॥ ४ ॥

॥ सूत उवाच ॥ ॥

नास्माकं विभ्रमो जातो युष्माकं तु द्विजोत्तमाः ॥

परं यत्कारणं कृत्स्नं तद्ब्रवीमि निबोध्यताम् ॥ ५ ॥

य एष ओषधिप्रस्थे विवाहः प्रागभू त्तयोः ॥

उमात्रिनेत्रयो रम्यः सर्वदेवप्रमोदकृत् ॥ ६ ॥

वैवस्वतेऽन्तरे पूर्वं संजातो द्विजसत्तमाः ॥

सप्तमस्य तु विख्यातो युष्माकं विदितोऽत्र यः ॥ ७ ॥

हाटकेश्वरजे क्षेत्रे यश्चोद्वाहस्तयोरभूत् ॥

स्वायंभुवमनोराद्ये स संजातः सुविस्तरः ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

विवाह ओषधिप्रस्थे यः पुरा समभूत्तयोः ॥

पार्वतीहरयोः सूत सोऽस्माभिर्विस्तराच्छ्रुतः ॥ ९ ॥

हाटकेश्वरजे क्षेत्रे दक्षयज्ञे मनोहरे ॥

विवाहो वृषयानस्य मनौ स्वायंभुवे पुरा ॥ ६.७७.१० ॥

सोऽस्माकं कीर्तनीयश्च त्वया सूतकुलोद्वह ॥
विस्तरेण यथा वृत्तः एतन्न कौतुकं परम् ॥ ११ ॥
॥ सूत उवाच ॥ ॥
अत्र वः कीर्तयिष्यामि सर्वपातकनाशनम् ॥
विवाहसमयं सम्यग्देवदेवस्य शूलिनः ॥ १२ ॥
ब्रह्मणो दक्षिणांगुष्ठाद्दक्षः प्राचेतसोऽभवत् ॥
शतानि पञ्च कन्यानां तस्य जातानि च द्विजाः ॥ १३ ॥
तासां ज्येष्ठतमा साध्वी सतीनाम शुचिस्मिता ॥
बभूव कन्यका सर्वैर्गुणैर्युक्ताऽऽयतेक्षणा । ॥ १४ ॥
न देवी न च गंधर्वी नासुरी न च नागजा ॥
तादृग्रूपाऽभवच्चान्या यादृशी सा सुमध्यमा ॥ १५ ॥
अथ तां प्रददौ दक्षः पत्न्यर्थं शूल पाणये ॥
प्रार्थितां बहुशो यत्नात्सस्पृहाय स्पृहान्विताम् ॥।६॥
ततः पुण्यतमं क्षेत्रं कन्यादानस्य स क्षमम् ॥
संध्याय ससुतामात्यः सभृत्यः समुपस्थितः ॥ १७ ॥
ततश्चोद्वाहयोग्यानि वसुनि विविधान्यपि ॥
आनयामास भूरीणि मांगल्यानि विशेषतः ॥ १८ ॥
अथ चैत्रस्य शुक्लस्य नक्षत्रे भगदैवते ॥
त्रयोदश्यां दिने भानोः समायातो महेश्वरः ॥ १९ ॥
सर्वैः सुरगणैः सार्धं देवविष्णुपुरःसरैः॥
आदित्यैर्वसुभी रुद्रैरश्विभ्यां च तथाऽपरैः ॥ ६.७७.२० ॥
सिद्धैः साध्यगणैर्भूतैः प्रेतैर्वैनायकैस्तथा ॥
गन्धर्वैश्चारणौघैश्च गुह्यकैर्यक्षराक्षसैः ॥ २१ ॥
एतस्मिन्नंतरे दक्षः संप्रहृष्टतनूरुहः ॥
प्रययौ संमुखस्तस्य युक्तः सर्वैः सुहृद्गणैः ॥ २२ ॥
वाद्यमानैर्महावाद्यैः सूतमागधबन्दिभिः ॥
पठद्भिः सर्वतोऽनेकैर्गायद्भिर्गायनैस्तथा ॥ २३ ॥
ततः सर्वे सुरास्तत्र स्वयं दक्षेण पूजिताः ॥

यथाश्रेष्ठं यथाज्येष्ठमुपविष्टा यथाक्रमम् ॥
परिवार्याखिलां वेदिं मंडपांतरवर्तिनीम् ॥ २४ ॥
ततः पितामहं प्राह दक्षः प्रीतिपुरःसरम् ॥
प्रणिपत्य त्वया कर्म कार्यं वैवाहिकं विभोः ॥ २५ ॥
स्वयमेव सुताऽस्माकं येन स्यात्सुभगा सती ॥
पुत्र पौत्रवती नित्यं सुशीला पतिवल्लभा ॥ २६ ॥
बाढमित्येव सोऽप्युक्त्वा प्रहृष्टेनांतरात्मना ॥
समुत्थाय ततश्चक्रे कृत्यमर्हणपूर्वकम् ॥ २७ ॥
संप्रदानक्रियां कृत्वा तत्रैव विधिपूर्वकम् ॥
ततो हस्तग्रहं ताभ्यां मिथश्चक्रे यथाक्रमम् ॥
मातृणां पुरतो वेधाः सतीशाभ्यां यथोचितम् ॥ २८ ॥
अथ वेदिं समासाद्य गृह्योक्तविधिनाऽखिलम् ॥
अग्निकार्यं यथोद्दिष्टं चकाराथ सुविस्तरम् ॥ २९ ॥
यथायथा स रम्याणि वीक्षतेंऽगानि कौतुकात् ॥
सत्याः पितामहो हृष्टः कामार्तोऽभूत्तथातथा ॥ ६.७७.३० ॥
तेनैकं वदनं मुक्त्वा तस्या वस्त्रावगुंठितम् ॥
वीक्षिताऽतिस्मरार्तेन यथा कश्चिन्न बुद्ध्यते ॥ ३१ ॥
न शंभोर्लज्जया वक्त्रं प्रत्यक्षं स व्यलोकयत् ॥
न च सा लज्जयाविष्टा करोति प्रकटं मुखम् ॥ ३२॥
ततस्तद्दर्शनार्थाय स उपायं व्यलो कयत् ॥
धूमद्वारेण कामार्तश्चकार च ततः परम् ॥ ३३ ॥
आर्द्रेंधनानि भूरीणि क्षिस्वाक्षित्वा विभावसौ ॥
स्वल्पाज्याहुतिविन्यासादार्द्रद्रव्योद्भव स्तथा ॥ ३४ ॥
एतस्मिन्नंतरे धूमः प्रादुर्भूतः समंततः ॥
तादृग्येन तमोभूतं वेदिमूलं विनिर्मितम् ॥ ३५ ॥
ततो धूमाकुलेनेत्रे भगवांस्त्रिपु रान्तकः ॥
हस्ताभ्यां छादयामास येऽन्ये तत्र व्यवस्थिताः ॥ ३६ ॥
ततो वस्त्रं समुत्क्षिप्य सतीवक्त्रं पितामहः ॥

वीक्षयामास कामार्तः प्रहृष्टेनांतरात्मना ॥ ३७ ॥

तस्य रेतः प्रचस्कन्द ततस्तद्वीक्षणादद्रुतम् ॥

पतितं च धरापृष्ठे तुषारचयसंनिभम् ॥ ३८

ततश्च सिकतौघेना तत्क्षणात्पद्मसंभवः ॥

छादयामास तद्रेतो यथा कश्चिन्न बुद्ध्यते ॥ ३९ ॥

अथ तद्भगवाञ्च्छंभुर्ज्ञात्वा दिव्येन चक्षुषा ॥

रेतोऽवस्कन्दनात्तस्य कोपादेतदुवाच ह ॥ ६.७७.४० ॥

किमेतद्विहितं पाप त्वया कर्म विगर्हितम् ॥

नैवार्हा मम कान्ताया वक्त्रवीक्षाऽनुरागतः ॥ ४१ ॥

त्वं वेत्सि शंकरेणैतत्कर्मजालं न विंदितम्॥

त्रैलोक्येऽपि मयाऽप्यस्ति गूढं तत्स्यात्कथं विधे॥

यत्किञ्चित्त्रिषु लोकेषु जंगमं स्थावरं तथा ॥

तस्याहं मध्यगो मूढ तैलं यद्वत्तिलांतगम्॥ ४३ ॥

तस्मात्स्पृश निजं शीर्षं ब्रह्मन्नेतदसंशयम्॥

यावदेवं गते ब्रह्मा शिरः स्पृशति पाणिना ॥

तावत्तत्र स्थितः साक्षात्तद्रूपो वृषवाहनः ॥ ४४ ॥

ततो लज्जापरीतांगः स्थितश्चाधोमुखो द्विजाः ॥

इन्द्राद्यैरमरैः सर्वैः सहितः सर्वतः स्थितैः ॥ ४५ ॥

अथाऽसौ लज्जयाविष्टः प्रणिपत्य महेश्वरम् ॥

प्रोवाच च स्तुतिं कृत्वा क्षम्यतां क्षम्यतामिति ॥ ४६ ॥

अस्य पापस्य शुद्ध्यर्थं प्राय श्चित्तं वद प्रभो ॥

निग्रहं च यथान्यायं येन पापं प्रयाति मे ॥ ४७ ॥

॥ श्रीभगवानुवाच॥ ॥

अनेनैव तु रूपेण मस्तकस्थेन वै ततः ॥

तपः कुरु समाधिस्थो ममाराधनतत्परः ॥ ४८ ॥

ख्यातिं यास्यति सर्वत्र नाम्ना रुद्रशिरः क्षितौ ॥

साधकः सर्वकृत्यानां तेजोभाजां द्विजन्म नाम् ॥ ४९ ॥

मानुषाणामिदं कृत्यं यस्माच्चीर्णं त्वयाऽऽधुना ॥

तस्मात्त्वं मानुषो भूत्वा विचरिष्यसि भूतले । ६.७७.५० ॥

यस्त्वां चानेन रूपेण दृष्ट्वा पृच्छां करिष्यति ॥

किमेतद्ब्रह्मणो मूर्ध्नि भगवांस्त्रिपुरांतकः ॥ ५१ ॥

ततस्ते चेष्टितं सर्वं कौतुकाच्च शृणोति यः ॥

परदारकृतात्पापात्ततो मुक्तिं प्रयास्यति ॥ ५२ ॥

यथायथा जनस्त्वेतत्कृत्यं ते कीर्तयिष्यति ॥

तथातथा विशुद्धिस्ते पापस्यास्य भविष्यति ॥ ५३ ॥

एतदेव हि ते ब्रह्मन्प्रायश्चित्तं प्रकीर्तितम्॥

जनहास्यकरं लोके तव गर्हाकरं परम् ॥ ५४ ॥

एतच्च तव वीर्यं तु पतितं वेदिमध्यगम् ॥

कामार्तस्य मया दृष्टं नैतद्व्यर्थं भविष्यति ॥ ५५ ॥

यावन्मात्रैः परिस्पृष्टमेतत्सैकतरेणुभिः ॥

तावन्मात्रा भविष्यंति मुनयः संशितव्रताः ॥ ५६ ॥

वालखिल्या इति ख्याताः सर्वेऽगुष्ठप्रमाणकाः ॥

तपोवीर्यसमोपेताः शापानुग्रहकारकाः ॥ ५७ ॥

एतस्मिन्नंतरे तस्माद्वेदिमध्याच्च तत्क्षणात् ॥

अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ॥

अंगुष्ठकप्रमाणानि निष्क्रान्तानि द्विजोत्तमाः ॥ ५८ ॥

ततस्ते प्रणिपत्योच्चैः प्रोचुर्देवं पितामहम् ॥

स्थानं दर्शय नस्तात तपोऽर्थं कलिवर्जितम् ॥ ५९ ॥

॥ पितामह उवाच ॥ ॥

अस्मिन्क्षेत्रे मया सार्धं कुरुध्वं पुत्रकास्तपः ॥

गमिष्यथ परां सिद्धिं येन लोके सुदुर्लभाम् ॥ ६.७७.६० ॥

ते तथेति प्रतिज्ञाय कृत्वा तत्राश्रमं शुभम् ॥

वालखिल्यास्तपश्चक्रुः संसिद्धिं च परां गताः ॥ ६१ ॥

अथ ब्रह्मापि तत्कर्म सर्वं वैवाहिकं क्रमात् ॥

समाप्तिमनयत्प्रोक्तं यच्छ्रुतौ तेन च स्वयम् ॥ ६२ ॥

पतत्सु पुष्पवर्षेषु समन्ताद्गगनांगणात् ॥

वाद्यमानेषु वाद्येषु गीय मानैश्चगीतकैः ॥ ६३ ॥

पठत्सु विप्रमुख्येषु नृत्यमानासु रागतः ॥

रंभादिषु पुरन्ध्रीषु देवानां दृङ्मनोहरम्॥ ६४ ॥

एवं महोत्सवो जज्ञे तत स्तुंबुरुपूर्वकैः ॥

गीयमानेषु गीतेषु यथापूर्वं त्रिविष्टपे ॥ ६५ ॥

अथ कर्मावसाने स भगवांस्त्रिपुरांतकः ॥

प्रोवाच पद्मजं भक्त्या दक्षिणां ते ददामि किम् ॥ ६६ ॥

वैवाहिकी सुरश्रेष्ठ यद्यपि स्यात्सुदुर्लभा ॥

ब्रूहि शीघ्रं महाभाग नादेयं विद्यते मम ॥ ६७ ॥

॥ पितामह उवाच ॥ ॥

अनेनैव तु रूपेण वेद्यामस्यां सुरेश्वर ॥

त्वया स्थेयं सदैवात्र नृणां पापविशुद्धये ॥ ६८ ॥

येन ते सन्निधौ कृत्वा स्वाश्रमं शशिशेखर ॥

तपः करोमि नाशाय पापस्यास्य महत्तमम् ॥ ६९ ॥

चैत्रशुक्लत्रयोदश्यां नक्षत्रे भगदैवते ॥

सूर्यवारेण यो भक्त्या वीक्षयिष्यति मानवः ॥

तदैव तस्य पापानि प्रयास्यन्ति च संक्षयम् ॥ ६.७७.७० ॥

या नारी दुर्भगा वन्ध्या काणा रूपविवर्जिता ॥

साऽपि त्वद्दर्शनादेव भविष्यति सुरूपधृक् ॥

प्रजावती सुभोगाढ्या सुभगा नात्र संशयः ॥ ७१ ॥

॥ महेश्वर उवाच ॥ ॥

हिताय सर्वलोकानां वेद्यामस्यां व्यवस्थितः ॥

स्थास्यामि सहितः पत्न्या सत्यात्व द्वचनाद्विधे ॥ ७२ ॥

॥ सूत उवाच ॥ ॥

एवं स भगवांस्तत्र सभार्यो वृषभध्वजः ॥

विद्यते वेदिमध्यस्थो लोकानां पापनाशनः ०॥ ७३ ॥

एतद्वः सर्वमाख्यातं यथा तस्य पुराऽभवत् ॥

विवाहो वृषनाथस्य मनौ स्वायंभुवे द्विजाः ॥ ७४ ॥

विवाहसमये प्राप्ते प्रारम्भे वा शृणोति यः ॥
एतदाख्यानमव्यग्रं संपूज्य वृषभध्वजम् ॥
तस्याऽविघ्नं भवेत्सर्वं कर्म वैवाहिकं च यत् ॥ ७९ ॥
कन्या च सुखसौभाग्य शीलाचारगुणान्विता ॥
तथा स्यात्पुत्रिणी साध्वी पतिव्रतपरायणा ॥ ७६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखंडे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये हराश्रयवेदिकामाहात्म्यवर्णनंनाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७८



॥ ऋषय ऊचुः ॥ ॥

ब्रह्मणा कतमे स्थाने तत्र सूत कृतं तपः ॥

वालखिल्यैश्च तैः सर्वैर्मुनिभिः शंसितव्रतैः ॥ १ ॥

॥ सूत उवाच ॥ ॥

तस्या वायव्यदिग्भागे हरवेद्या द्विजोत्तमाः ॥

सम्यक्छ्रद्धाप्रयत्नेन ब्रह्मणा विहितं तपः ॥ २ ॥

पश्चिमे वालखिल्यैश्च जपस्नानपरायणैः ॥

तत्राश्चर्यमभूद्यद्वै पूर्वं ब्राह्मण सत्तमाः ॥

आश्रमे चतुरास्यस्य तद्वो वक्ष्यामि सांप्रतम् ॥ ३ ॥

तत्र दुश्चारिणी काचिद्रात्रौ ब्राह्मणवंशजा ॥

देवदत्तं समासाद्य वल्लभं रमते सदा ॥ ॥ ४ ॥

अज्ञाता पतिना मात्रा तथान्यैरपि बांधवैः ॥

कृष्णपक्षं समासाद्य विजने हृष्टमानसा ॥ ५ ॥

कस्यचित्त्वथ कालस्य दृष्टा सा केनचि द्द्विजाः ॥

तत्रस्था जारसंयुक्ता स्वभर्तुश्च निवेदिता ॥ ६ ॥

अथासौ कोपसंयुक्तस्तस्या भर्ता सुनिष्ठुरैः ॥

वाक्यैस्तां गर्हयामास प्रहारैश्चाप्य ताडयत् ॥ ७ ॥

अथ सा धार्ष्ट्यमासाद्य स्त्रीस्वभावं समाश्रिता ॥

प्रोवाच बाष्पपूर्णाक्षी दीनांजलिपुटा स्थिता ॥ ८ ॥

किं मां दुर्जनवाक्येन त्वं ताडयसि निष्ठुरैः ॥

प्रहारैर्दोषनिर्मुक्तां त्वत्पादप्रणतां विभो ॥ ९ ॥

अहं त्वां शपथं कृत्वा भक्षयित्वाऽथ वा विषम् ॥

प्रविश्य हव्यवाहं वा करिष्ये प्रत्ययान्वितम्॥ ६.७८.१० ॥

अथ तां ब्राह्मणः प्राह यदि त्वं पापवर्जिता ॥

पुरतो देवविप्राणां कुरु दिव्यग्रहं स्वयम्॥ ११ ॥

सा तथेति प्रतिज्ञाय साहसेन समन्विता ॥

दिव्यग्रहं ततश्चक्रे यथोक्तविधिना सती ॥ १२ ॥

शुद्धिं च प्राप्ता सर्वेषां बन्धूनां च द्विजन्मनाम् ॥

पुरतश्च गुरूणां च देवानामपि पापकृत् ॥ १३ ॥

एतस्मिन्नन्तरे तस्याः साधुवादो महानभूत् ॥

धिक्छब्दश्च तथा पत्युः सर्वैर्दत्तः सुगर्हितः ॥ १४ ॥

अहो पापसमाचारो दुष्टोऽयं ब्राह्मणाधमः ॥

अपापां धर्मपत्नीं यो मिथ्यादोषेणयोजयेत् ॥ १५ ॥

एवं स निन्द्यमानस्तु सर्वलोकैर्द्विजोत्तमाः ॥

कोपं चक्रे ततो वह्निं समुद्दिश्य सदुःखितः ॥ १६ ॥

शापं दातुं मतिं चक्रे ततो वह्नेः सुदुःखितः ॥

अब्रवीत्परुषं वाक्यं निन्दमानः पुनःपुनः ॥ ॥ १७ ॥

मया स्वयं प्रदृष्टेयं जारेण सह संगता ॥

त्वया वह्ने सुपापेयं न कस्माद्भस्मसात्कृता ॥ १८ ॥

तस्मात्त्वां पापकर्माणमसत्यपक्षपातिनम् ॥

असंदिग्धं शपिष्यामि रौद्रशापेन सांप्रतम् ॥ १९ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा संक्रुद्धस्य द्विजन्मनः ॥

सप्तार्चिर्भयसंत्रस्तः कृतांजलिरुवाच तम् ॥ ६.७८.२० ॥

॥ अग्निरुवाच ॥ ॥

नैष दोषो मम ब्रह्मन्यन्न दग्धा तव प्रिया ॥

कृतागसाऽपि मे वाक्यं शृणुष्वात्र स्फुटेरितम् ॥ २१ ॥

अनया परकांतेन कृतः सह समागमः ॥

चिरं कालं द्विज श्रेष्ठ त्वया ज्ञाताद्य वासरे ॥ २२ ॥

परं यस्माद्विशुद्धैषा मया दग्धा न सा द्विज ॥

कारणं तच्च ते वच्मि शृणुष्वैकमनाः स्थितः ॥ २३ ॥

यत्रानया कृतः संगः परकांतेन वै द्विज ॥

तस्मिन्नायतने ब्रह्मा रुद्रशीर्षो व्यवस्थितः ॥ २४ ॥

तत्र कृत्वा रतं चित्रं परकांतसमं तदा ॥

पश्यति स्म ततो रुद्रं ब्रह्ममस्तकसंस्थितम् ॥ २५ ॥

ततः प्रक्षालयत्यंगं कुण्डे तत्राग्रतः स्थिते ॥

कृतपापापि तेनैषा शुद्धिं याति शुचिस्मिता ॥ ॥ २६ ॥

अत्र पूर्वं विपाप्माऽभूद्ब्रह्मा लोकपितामहः ॥

सतीवक्त्रं समालोक्य कामार्तोऽपि स पापकृत् ॥ २७ ॥

तस्मान्नास्त्यत्र मे दोषः स्वल्पोऽपि द्विजसत्तम॥

रुद्रशीर्षप्रभावोऽयं तस्य कुण्डोदकस्य च ॥ २८ ॥

तस्मादेनां समादाय संशुद्धां पापवर्जिताम् ॥

गृहं गच्छ द्विजश्रेष्ठ सत्यमेतन्मयो दितम्॥ २९ ॥

॥ ब्राह्मण उवाच ॥ ॥

या मया सहसा दृष्टा स्वयमेव हुताशन ॥

परकांतेन तां नाद्य शुद्धामपि गृहं नये ॥ ६.७८.३० ॥

इत्युक्त्वा च द्विजश्रेष्ठस्तां त्यक्त्वापि शुचिव्रतः ॥

जगाम स्वगृहं पश्चात्तथा जग्मुर्जना गृहान् ॥ ३१ ॥

सापि तेन परित्यक्ता पतिना हृष्टमानसा ॥

ज्ञात्वा तत्तीर्थमाहात्म्यं वैश्वानरमुखेरितम् ॥ ३२ ॥

तेनैव परकांतेन विशेषेण रतिक्रियाम् ॥

तस्मिन्नायतने चक्रे कुण्डे तोयावगाहनम् ॥ ३३ ॥

अथान्ये परलोकस्य भीत्याऽतीव व्यवस्थिताः ॥

विमुखाः परदारेषु नार्यश्चापि पतिव्रताः ॥ ३४ ॥

दूरतोऽपि समभ्येत्य ते सर्वे तत्र मंदिरे ॥

रुद्रशीर्षाभिधानं च प्रचक्रुः सुरतोत्सवम् ॥ ३५ ॥

निमज्जंति ततः कुण्डे तस्मिन्पातकनाशने ॥

भवंति पापनिर्मुक्ता रुद्रशीर्षावलोकनात् ॥ ३६ ॥

एतस्मिन्नंतरे नष्टो धर्मः पत्नीसमुद्भवः ॥

पुरुषाणां ततः स्त्रीणां निजकांतासमुद्भवः ॥ ३७ ॥

यो यां पश्यति रूपाढ्यां नारीमपि कुलोद्भवाम् ॥
स तत्रानीय संहृष्टो भजते द्विजसत्तमाः ॥ ३८ ॥
तथा नारी सुरूपाढ्यं यं पश्यति नरं क्वचित् ॥
सापि तत्र समानीय कुरुते सुरतोत्सवम् ॥ ३९ ॥
लिप्यते न च पापेन कथंचित्तकृतेन च ॥
नरो वा यदि वा नारी तत्तीर्थस्य प्रभावतः ॥ ६.७८.४० ॥
कस्यचित्त्वथ कालस्य तत्र राजा विदूरथः ॥
आनर्तविषये जज्ञे वार्धक्यं च क्रमाद्ययौ ॥ ४१ ॥
तस्य भार्याऽभवत्तन्वी तरुणी वररूपधृक् ॥
पश्चिमे वयसि प्राप्ते प्राणेभ्योऽपि गरीयसी ॥ ॥ ४२ ॥
न तस्याः स जराग्रस्तश्चित्ते वसति पार्थिवः ॥
तस्मिंस्तीर्थे समागत्य वांछितं रमते नरः ॥ ४३ ॥
पार्थिवोऽपि परिज्ञाय तस्यास्तच्च विचेष्टितम् ॥
कोपाविष्टस्ततो गत्वा तस्मिन्क्षेत्रे सुशोभने ॥ ४४ ॥
तत्कुण्डं पूरयामास ततः पांशूत्करैर्द्रुतम् ॥
बभंज तं च प्रासादं ततः प्रोवाच दारुणम् ॥ ४५ ॥
यश्चैतत्पूरितं कुण्डं पांशुना निखनिष्यति ॥
प्रासादं च पुनश्चैनं करिष्यति पुनर्नवम् ॥ ४६ ॥
परदारकृतं पापं तस्य संपत्स्यतेऽखिलम् ॥
यदत्र प्रकरिष्यंति मानवाः काममोहिताः ॥४७॥
॥ सूत उवाच ॥ ॥
एवं स पार्थिवः प्रोच्य तामादाय ततः प्रियाम् ॥
जगाम स्वगृहं पश्चात्प्रहृष्टेनांतरात्मना ॥४८॥
अथ तां विरतां ज्ञात्वा सोऽन्यचित्तां प्रियां नृपः ॥
यत्नेन रक्षयामास विश्वासं नैव गच्छति ॥ ४९ ॥
अन्यस्मिन्दिवसे शस्त्रं सूक्ष्मं वेण्यां निधाय सा॥
जगाम शयनं तस्य वधार्थं वरवर्णिनी॥६.७८.५०॥।
ततस्तेन समं हास्यं कृत्वा क्षत्रियभावजम्॥

सुरतं रुचिरैर्भावैर्हावैर्भूरिभिरेव च ॥५१॥।

ततो निद्रावशं प्राप्तं तं नृपं सा नृपप्रिया ॥

स्ववेण्याः शस्त्रमादाय निजघान सुनिर्दया॥५२॥

एवं तस्य फलं जातं सद्यस्तीर्थस्य भंगजम् ॥

आनर्ताधिपते रौद्रं सर्वलोकविगर्हितम् ॥ ५३ ॥

अद्यापि तत्र देवेशो रुद्रशीर्षः स तिष्ठति ॥

लिंगभेदभयात्तेन न स भग्नो द्विजोत्तमाः ॥५४॥

यस्तस्य पुरतः स्थित्वा जपेद्रुद्रशिरः शुचिः ॥

माघशुक्लचतुर्दश्यां पूजयित्वा स्रगादिभिः ॥५५॥

वांछितं लभते चाशु तस्येशस्य प्रभावतः॥

अष्टोत्तरशतं यावद्यो जपेत्पुरतः स्थितः ॥ ५६ ॥

रुद्रशीर्षं न संदेहः स याति परमां गतिम् ॥

एकवारं नरो यो वा तत्पुरः पठति द्विजः ॥ ५७ ॥

नित्यं दिनकृतात्पापान्मुच्यते द्विजसत्तमाः ॥

एतद्वः सर्वमाख्यातं रुद्रशीर्षसमुद्भवम् ॥ ५८ ॥

माहात्म्यं सर्वपापानां सद्यो नाशनकारकम्॥

मंगलं परमं ह्येतदायुष्यं कीर्तिवर्धनम्॥

रुद्रशीर्षस्य माहात्म्यं तस्माच्छ्रोतव्यमादरात् ॥ ५९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये रुद्रशीर्ष (जागेश्वर )माहात्म्यवर्णनंनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०७९



॥ सूत उवाच ॥ ॥

तस्यैव दक्षिणे भागे वालखिल्यैः प्रतिष्ठितम् ॥

लिंगमस्ति सुविख्यातं सर्वपातकनाशनम् ॥ १ ॥

यमाराध्य च तैः पूर्वं शक्रामर्षसमन्वितैः ॥

गरुडो जनितः पक्षी ख्यातो विष्णुरथोऽत्र यः ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं तेषां समुत्पन्नः शक्रस्योपरि सूतज ॥

प्रकोपो वालखिल्यानां संजज्ञे गरुडः कथम् ॥ ३ ॥

॥ सूत उवाच ॥ ॥

पुरा प्रजापतिर्दक्षस्तस्मिन्क्षेत्रे सुशोभने ॥

चकार विधिवद्यज्ञं संपूर्णवरदक्षिणम् ॥ ४ ॥

ततः शक्रादयो देवाः सहायार्थं निमंत्रिताः ॥

दक्षेण मुनयश्चैव तथा राजर्षयोऽमलाः ॥ ५ ॥

तथा वेदविदो विप्रा यज्ञकर्मविचक्षणाः ॥

गृहस्थाश्रमिणो ये च ये चारण्यनिवासिनः॥ ६ ॥

अथ ते वालखिल्याख्या मुनयः संशितव्रताः॥

एकां समिधमादाय साहाय्यार्थं प्रजापतेः ॥

प्रस्थिता यज्ञवाटं तं भारार्ताः क्लेशसंयुताः ॥ ७ ॥

अथ तेषां समस्तानां मार्गे गोष्पदमागतम् ॥

जलपूर्णं समायातमकालजलदागमे ॥ ८ ॥

ततस्तरीतु कामास्ते क्लिश्यमाना इतस्ततः ॥

समिद्भारश्रमोपेता देवराजेन वीक्षिताः ॥ ९ ॥

गच्छता तेन मार्गेण मखे दक्षप्रजापतेः ॥

ततश्चिरं समालोक्य स्मितं कृत्वा स कौतुकात् ॥

जगामाथ समुल्लंघ्य ऐश्वर्यमदगर्वितः॥६.७९.१०॥॥

ततस्ते कोपसंयुक्ताः शक्राद्दृष्ट्वा पराभवम् ॥

निवृत्य स्वाश्रमं गत्वा चक्रुर्मंत्रं सनिश्चयम् ॥ ११॥।

शाक्रं पदं समासाद्य यस्मादेतेन पाप्मना ॥

अतिक्रांता वयं सर्वे तस्मात्पात्यः स सत्पदात् ॥ १२ ॥

अन्यः शक्रः प्रकर्तव्यो मंत्रवीर्यसमुद्भवः ॥

आथर्वणैर्महासूक्तैराभिचारिकसंभवैः ॥ १३ ॥

येन व्यापाद्यते तेन शक्रोऽयं मदगर्वितः ॥

मखमाहात्म्यसंपन्नः स्वल्पबुद्धिपरा क्रमः ॥ १४ ॥

ततस्ते शुचयो भूत्वा स्कंदसूक्तेन पावकम् ॥

जुहुवुश्च दिवारात्रौ क्षुरिकोक्तेन सोद्यमाः ॥ १५८ ॥

गर्भोपनिषदेनैव नीलरुद्रैर्द्विजोत्तमाः ॥

रुद्रशीर्षेण काम्येन विष्णुसूक्तयुतेन चं ॥ १६ ॥

निधाय कलशं मध्ये मंडलस्योदकावृतम् ॥

होमांते तत्र संस्पर्शं चक्रुस्तस्य जलैः शुभैः ॥ १७ ॥

एतस्मिन्नंतरे शक्रः प्रपश्यति सुदारुणान् ॥

उत्पातानात्मनाशाय जायमानान्समंततः ॥ १८ ॥

वामो बाहुश्च नेत्रं च मुहुः स्फुरति चास्य वै ॥

न च पश्यति नासाग्रं जिह्वाग्रं च तथा हनुम् ॥ १९ ॥

शिरोहीनां तथा छायां गगने भास्करद्वयम् ॥

अरुंधतीं ध्रुवं चैव न च विष्णुपदानि सः ॥ ६.७९.२० ॥

न च मंदं न चाकाशे संस्थितां स्वर्धुनीं हरिः ॥

स्वपन्पश्यति कृष्णांगीं नित्यं नारीं धृतायुधाम् ॥ २१ ॥

मुक्तकेशीं विवस्त्रां च कृष्णदंतां भयानकाम् ॥

तान्दृष्ट्वा स महोत्पातान्देवराजो बृहस्पतिम् ॥ २२ ॥

पप्रच्छ भयसंत्रस्तः किमेतदिति मे गुरो ॥

जायंते सुमहोत्पाता दुर्निमित्तानि वै पृथक् ॥ २३ ॥

किं मे भविष्यति प्राज्ञ विनाशः सांप्रतं वद ॥

किं वा त्रैलोक्य राज्यस्य किं वा वित्तादिकस्य च ॥ २४ ॥

॥ बृहस्पतिरुवाच ॥ ॥

ये त्वया मदमत्तेन वालखिल्या महर्षयः ॥

उल्लंघिताः स्थिता मार्गे गोष्पदं तर्तुमिच्छवः ॥ २५ ॥

तैरेवाथर्वणैर्मंत्रैस्त्वकृतेऽस्ति शचीपते ॥

कृतो होमः सुसंपूर्णः कलशश्चाभिमंत्रितः ॥ २६ ॥

युष्माकं सुविनाशाय सर्वदेवाधिनायकः ॥

भविष्यति न संदेहो मंत्रैराथर्वणैर्हरिः ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा सहस्राक्षो भयान्वितः ॥

दक्षं गत्वा च दीनास्यः प्रोवाच तदनंतरम् ॥ २८ ॥

अस्मन्नाशाय मुनिभिर्वालखिल्यैः प्रजापते ॥

प्रोद्यमो विहितः सम्यक्छक्रस्यान्यस्य वै कृते ॥ २९ ॥

तान्वारय स्वयं गत्वा यावन्नो जायते परः ॥

शक्रोऽस्मद्ध्वंसनार्थाय नास्ति तेषामसाध्यता ॥ ६.७९.३० ॥

अथ दक्षो द्रुतं गत्वा शक्राद्यैरमरैर्वृतः ॥

प्रहसंस्तानुवाचेदं विनयेन समन्वितः ॥ ३१ ॥

किमेतत्क्रियते विप्राः कर्म रौद्रतमं महत् ॥

त्रैलोक्यं व्याकुलं येन सर्वमेतद्व्यवस्थितम् ॥ ३२ ॥

अथ ते दक्षमालोक्य समायातं स्वमाश्रयम् ॥

संमुखाश्चाभ्ययुस्तूर्णं प्रगृहीतार्घ्यपाणयः ॥ ३३ ॥

अर्घ्यं दत्त्वा यथान्यायं पूजां कृत्वाथ भक्तितः ॥

प्रोचुश्च प्रणता भूत्वा स्वागतं ते प्रजापते ॥ ३४ ॥

आदेशो दीयतां शीघ्रं यदर्थमिह चागतः ॥

अपि प्राणप्रदानेन करिष्यामः प्रियं तव ॥ ३५ ॥ ॥

॥ दक्ष उवाच ॥ ॥

एतद्रौद्रतमं कर्म सर्वदेवभयावहम् ॥

त्याज्यं युष्माभिरव्यग्रैरेतदर्थमिहागतः ॥ ३६ ॥

॥ मुनय ऊचुः ॥ ॥

वयं शक्रेण ते यज्ञे समायाताः सुभक्तितः ॥

उल्लंघिता मदोद्रेकात्कृत्वा हास्यं मुहुर्मुहुः ॥ ३७ ॥

शक्रोच्छेदाय चास्माभिः शक्रोऽन्यो वीर्यमंत्रतः ॥

प्रारब्धः कर्तुमत्युग्रैर्होमांतश्च व्यवस्थितः ॥ ३८ ॥

तत्कथं मंत्रवीर्यं तत्क्रियते मोघमित्यहो ॥

वेदोक्तं च विशेषेण तस्मादत्र वद प्रभो ॥ ३९ ॥

त्वमेव यदि शक्तः स्यादन्यथा कर्तुमेव हि ॥

कुरुष्व वा स्वयं नाथ नास्माकं शक्तिरीदृशी ॥ ६.७९.४० ॥

॥ दक्ष उवाच ॥ ॥

सत्यमेतन्महाभागा यद्युष्माभिः प्रकीर्तितम् ॥

नान्यथा शक्यते कर्तुं वेदमन्त्रोद्भवं बलम् ॥ ४१ ॥

तद्य एष कृतो होमो युष्माभिर्वेदमंत्रतः ॥

देवराजार्थमव्यग्रैः कलशश्चाभिमंत्रितः ॥ ४२ ॥

सोऽयं मद्वचनाद्राजा भविष्यति पतत्रिणाम् ॥

तेजोवीर्यसमोपेतः शक्रादपि सुवीर्यवान् ॥ ४३ ॥

एतस्य देवराजस्य क्षंतव्यं मम वाक्यतः ॥

तत्कृतं मूढभावेन यदनेन विचेष्टितम् ॥ ४४ ॥

एवमुक्त्वाथ तेषां तं सहस्राक्षं भयातुरम् ॥

दर्शयामास दक्षस्तु विनयावनतं स्थितम् ॥ ४५ ॥

तेऽपि दृष्ट्वा सहस्राक्षं वेपमानं कृतांजलिम् ॥

प्रोचुर्माऽतिक्रमं शक्र ब्राह्मणानां करिष्यसि ॥ ४६ ॥

भूयो यदि दिवेशानामाधिपत्यं प्रवांछसि ॥

अपि मन्दोऽपि मूर्खोऽपि क्रियाहीनोऽपि वा द्विजः ॥

नावज्ञेयो बुधैः क्वापि लोकद्वय मभीप्सुभिः ॥ ४७ ॥

॥ इन्द्र उवाच ॥ ॥

अज्ञानाद्यदि वा ज्ञानाद्यन्मया कुकृतं कृतम् ॥

तत्क्षंतव्यं द्विजैः सर्वैर्विशेषाद्दक्ष वाक्यतः ॥ ४८ ॥

प्रगृह्यतां वरोऽस्माकं यः सदा वर्तते हृदि ॥

प्रदास्यामि न संदेहो नादेयं विद्यते मम ॥ ४९ ॥

॥ मुनय ऊचुः ॥ ॥

अस्मिन्कुण्डे नरो होमं यः कुर्याच्छ्रद्धयाऽन्वितः ॥

एतल्लिंगं समभ्यर्च्य तस्याऽस्तु हृदि वांछितम् ॥ ६.७९.५० ॥

॥ इन्द्र उवाच ॥ ॥

एतल्लिंगं समभ्यर्च्य योऽत्र होमं करिष्यति ॥

कुंडेऽत्र वांछितं सद्यः सफलं स हि लप्स्यते ॥ ५१ ॥

निष्कामो वाऽथ संपूज्य लिंगमेतच्छुभावहम् ॥

प्रयास्यति परां सिद्धिं त्रिदशैरपि दुर्लभाम् ॥ ५२ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा सहस्राक्षो वालखिल्यान्मुनीश्वरान् ॥

ऐरावतं समारुह्य दक्षयज्ञे ततो गतः ॥ ५३ ॥

दक्षोऽपि विधिवद्यज्ञं चकार द्विजसत्तमाः ॥

संहृष्टैर्वालखिल्यैस्तैरुपविष्टैः समीपतः ॥ ५४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वालखिल्याश्रममाहात्म्यकथनंनामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ ध ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८०



अथ सुपर्णाख्यमाहात्म्यं भविष्यंति ॥

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तेजोवीर्यसमन्वितः ॥

गरुडस्तेन संजज्ञे मुनीनां होमकर्मणा ॥ १ ॥

स कथं तत्र संभूत एतन्नो विस्तराद्वद ॥

विनतायाः समुद्भूत इत्येषा श्रूयते श्रुतिः ॥ २ ॥

॥ सूत उवाच ॥ ॥

योऽसावाथर्वणैर्मंत्रैः कलशश्चाभिमन्त्रितः ॥

तैर्मंत्रैर्वालखिल्यैश्च महाऽमर्षसमन्वितैः ॥ ३ ॥

निवारितैश्च दक्षेण सूचिते विहगाधिपे ॥

कश्यपस्तं समादाय कलशं प्रययौ गृहम् ॥ ४ ॥

ततः प्रोवाच संहृष्टो विनतां दयितां निजाम् ॥

एतत्पिब जलं भद्रे मन्त्रपूतं महत्तरम् ॥ ५ ॥

येन ते जायते पुत्रः सहस्राक्षाधिको बली ॥

तेजस्वी च यशस्वी च अजेयः सर्व दानवैः ॥ ६ ॥

तस्य तद्वचनं श्रुत्वा तत्क्षणादेव संपपौ ॥

तत्तोयं सा वरारोहा सद्यो गर्भं ततो दधे ॥ ७ ॥

एवं तज्जलपानेन तेजोवीर्यसम न्वितः ॥

कश्यपाद्गरुडो जज्ञे सर्वसर्पभयावहः ॥ ८ ॥

येनामृतं हृतं वीर्यात्परिभूय पुरंदरम् ॥

मातृभक्तिपरीतेन सर्पाणां संनिवेदितम् ॥ ९ ॥

यो जज्ञे दयितो विष्णोर्वाहनत्वमुपागतः ॥

ध्वजाग्रे तु रथस्यापि यः सदैव व्यवस्थितः ॥ ६.८०.१० ॥

येन पूर्वं तपस्तप्त्वा क्षेत्रेऽत्रैव महात्मना ॥

त्रिनेत्रस्तुष्टिमानीतो गतपक्षेण धीमता ॥ ११ ॥
पक्षाप्तिर्येन संजाता यस्य भूयोऽपि तादृशी ॥
देवदेवप्रसादेन विशिष्टा चाऽथ निर्मिता ॥ १२ ॥ ॥
॥ मुनय ऊचुः ॥ ॥
कथं तस्य गतौ पक्षौ गरुडस्य महात्मनः ॥
पुनर्लब्धौ कथं तेन कथं तुष्टो महेश्वरः ॥
एतन्नो विस्तराद्ब्रूहि सूतपुत्र यथातथम् ॥ १३ ॥
॥ सूत उवाच ॥ ॥
पुरासीद्ब्राह्मणो मित्रं भृगुवंशकुलोद्वहः ॥
गरुडस्य द्विजश्रेष्ठा बालभावादपि प्रभो ॥ १४ ॥
तस्य कन्या पुरा जाता माधवी नाम संमता ॥
रूपौदार्यसमोपेता सर्वलक्षणलक्षिता ॥ १५ ॥
न देवी न च गन्धर्वी नासुरी न च पन्नगी ॥
तादृग्रूपा महाभागा यादृशी सा सुमध्यमा ॥ १६ ॥
अथ तस्या वरार्थाय गरुडं विहगाधिपम् ॥
स प्रोवाच परं मित्रं विनयावनतः स्थितः ॥ ॥ १७ ॥
एतस्या मम कन्याया वरं त्वं विहगाधिप ॥
सदृशं वीक्षयस्वाद्य येन तस्मै ददाम्यहम् ॥ १८ ॥
॥ गरुड उवाच ॥ ॥
मम पृष्ठं समारुह्य समस्तं क्षितिमंडलम् ॥
त्वं भ्रमस्व द्विजश्रेष्ठ गृहीत्वेमां च कन्यकाम् ॥ १९ ॥
ततस्तस्याः कुमार्या वै अनुरूपं गुणान्वितम् ॥
स्वयं चाहर भर्तारमेषा मैत्री ममोद्भवा ॥ ६.८०.२० ॥
॥ सूत उवाच ॥
एवमुक्तोऽथ विप्रः स तत्क्षणात्कन्यया सह ॥
आरूढो गारुडं पृष्ठं वरार्थाय द्विजोत्तमाः ॥ २१ ॥
यंयं पश्यति विप्रः स कुमारं तरुणाकृतिम् ॥
स स नो तस्य चित्तांते वर्ततेस्म कथंचन ॥ २२ ॥

कस्यचिद्रूपमत्युग्रं न कुलं च सुनिर्मलम् ॥

कुलं रूपं च यस्य स्यात्तस्य नो गुणसंचयः ॥ २३ ॥

यस्य वा गुणसन्दोहस्तस्य नो रूपमुत्तमम् ॥

पक्षपातं च वित्तं च तथान्यद्वरलक्षणम् ॥ २४ ॥

एवं वर्षसहस्रांते भ्रमतस्तस्यभूतलम् ॥

विप्रस्य पक्षिनाथस्य वरार्थाय द्विजोत्तमाः ॥ २५ ॥

कदाचिदथ तौ श्रान्तौ भ्रममाणावितस्ततः ॥

क्षेत्रेऽत्रैव समायातौ वासुदेवदिदृक्षया ॥ २६ ॥

श्वेतद्वीपं समालोक्य तथान्यां बदरीं शुभाम् ॥

क्षीरोदं च सवैकुण्ठं तथान्यं तस्य संश्रयम् ॥ २७ ॥

अथ ताभ्यां मुनिर्दृष्टो नारदो ब्रह्मसंभवः ॥

सांत्वपूर्वं तदा पृष्टो विष्णुं ब्रह्म सनातनम् ॥ ॥ २८ ॥

क्व देवः पुंडरीकाक्षः सांप्रतं वर्तते मुने ॥

विष्णुस्थानानि सर्वाणि वीक्षितानि समंततः ॥

आवाभ्यां संप्रहृष्टाभ्यां न संदृष्टः स केशवः ॥ २९ ॥

॥ नारद उवाच ॥ ॥

जलशायिस्वरूपेण यावन्मासचतुष्टयम् ॥

हाटकेश्वरजे क्षेत्रे स संतिष्ठति सर्वदा ॥ ६.८०.३० ॥

तस्मात्तद्दर्शनार्थाय गम्यतां तत्र मा चिरम् ॥

येन सन्दर्शनं याति द्वाभ्यामपि स चक्रधृक् ॥ ३१ ॥

अहमप्येव तत्रैव प्रस्थितस्तस्य दर्शनात् ॥

प्रस्थितश्च त्वया युक्तो देवकार्येण केनचित् ॥ ३२ ॥

अथ तौ पक्षिविप्रेन्द्रौ स च ब्रह्मसुतो मुनिः ॥

प्राप्ताः सर्वे स्थितो यत्र जलशायी जनार्दनः ॥ ३३ ॥

अथ दृष्ट्वा महत्तेजो वैष्णवं दूरतोऽपि तम् ॥

ब्राह्मणं गरुडः प्राह नारदश्च मुनीश्वरः ॥ ३४ ॥

अत्रैव त्वं द्विजश्रेष्ठ तिष्ठ दूरेऽपि तेजसः ॥

वैष्णवस्य सुतायुक्तः कल्पांताग्निसमम् व (?)॥ ३५ ॥

नो चेत्संपत्स्यसे भस्म पतंग इव पावकम् ॥
समासाद्य निशायोगे मूढं भावं समाश्रितः ॥ ३६ ॥
आवाभ्यां तत्प्रसादेन सोढमेतत्सुदुःसहम् ॥
न करोति शरीरार्तिं तथान्यदपि कुत्सितम् ॥ ३७ ॥
एवं तं ब्राह्मणं तत्र मुक्त्वा दूरे सुतान्वितम् ॥
गतौ तौ तत्र संसुप्तस्तोये यत्र जनार्दनः ॥ ३८ ॥
दिव्यस्तुतिपरौ मूर्ध्नि धृतहस्तांजलीपुटौ ॥
पुलकांकितसर्वांगावानन्दाश्रुप्लुताननौ ॥ ३९ ॥
त्रिःपरिक्रम्य तं देवमष्टांगं प्रणतौ हरिम्॥
दृष्टवन्तौ च पादांते संनिविष्टां समुद्रजाम् ॥ ६.८०.४० ॥
पादसंवाहनासक्तां विष्णु वक्त्राहितेक्षणाम्॥
अथापरां वयोवृद्धां श्वेतवस्त्रावगुंठिताम् ॥ ४१ ॥
सन्निविष्टां तदभ्याशे सम्यग्ध्यानपरायणाम् ॥
द्वादशार्कप्रभायुक्तां कृशांगीं पुलकान्विताम्॥ ४२ ॥
अथ तौ विष्णुना हर्षादुभावपि प्रहर्षितौ ॥
संभाषितौ च संपृष्टौ यदर्थं च समागतौ ॥ ४३ ॥
॥ श्रीनारद उवाच ॥ ॥
अहं हि सुरकार्येण संप्राप्योऽत्र तवांतिकम् ॥
गरुडो वै ब्राह्मणाय यन्मां पृच्छसि केशव ॥ ४४ ॥
॥ श्रीभगवानुवाच ॥ ॥
कच्चित्क्षेमं मुनिश्रेष्ठ सर्वेषां त्रिदिवौकसाम् ॥
कच्चिन्नेंद्रस्य संजातं भयं दानवसंभवम् ॥ ४५ ॥
यज्ञभागं लभंते स्म कच्चिद्देवाः सवासवाः ॥
कच्चिन्न दानवः कश्चिदुत्कटोऽभूद्धरातले ॥ ४६ ॥
॥ श्रीनारद उवाच ॥ ॥
सांप्रतं धरणी प्राप्ता चतुर्वक्त्रस्य संनिधौ ॥
रोरूयमाणा भारार्ता दानवैः पीडिता भृशम् ॥
प्रोवाच पद्मजं तत्र दुःखेन महताऽन्विता ॥ ४७ ॥

॥ धरण्युवाच ॥ ॥

कालनेमिर्हतो योऽसौ विष्णुनाप्रभविष्णुना ॥

उग्रसेनसुतः कंसः संभूतः स महासुरः ॥ ४८ ॥

अरिष्टो धेनुकः केशी प्रलम्बोनाम चापरः ॥

तथान्या तु महारौद्रा पूतना नाम राक्षसी ॥ ४९ ॥

इतश्चेतश्च धावद्भिर्दानवैरेभिरेव च॥

वृथा मे जायते पीडा तथान्यैरपि दारुणैः ॥ ६.८०.५० ॥

ऊर्ध्वबाहुस्तथा जातो मर्त्यलोके जनोऽधुना ॥

बहुत्वान्न प्रमाति स्म कथंचिद्धि ममोपरि ॥ ५१ ॥

भारावतरणं देव न करिष्यसि चाशु चेत् ॥

रसातलं प्रयास्यामि तदाऽहं नात्र संशयः ॥ ५२ ॥

तस्यास्तद्वचनं श्रुत्वा ब्रह्मणा लोककर्तृणा ॥

संमंत्र्य विबुधैः सार्धं प्रेषितोऽहं तवांतिकम् ॥ ५३ ॥

प्रोक्तव्यो भगवान्वाक्यं त्वया देवो जनार्दनः ॥

यथाऽवतीर्य भूपृष्ठे भारमस्याः प्रणाशयेत् ॥ ५४ ॥

तस्माद्भूभितले देव कृत्वा जन्म स्वयं विभो ॥

भारं नाशय मेदिन्या एतदर्थ मिहागतः ॥ ५५ ॥

॥ श्रीभगवानुवाच ॥ ॥

एवं मुने करिष्यामि संमंत्र्य ब्रह्मणा सह ॥

भारावतरणं भूमेः साकं देवैः सवासवैः ॥ ५६ ॥

एवमुक्त्वाऽथ तं विष्णुर्नारदं मुनिपुंगवम् ॥

ततश्च गरुडं प्राह त्वं किमर्थमिहागतः ॥ ५७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सुपर्णाख्यमाहात्म्ये विष्णुदर्शनमाहात्म्यवर्णनंनामाशीतितमोऽध्यायः ॥ ८० ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८१



॥ ॥ श्रीगरुड उवाच ॥ ॥

ममास्ति दयितं मित्रं ब्राह्मणो भृगुवंशजः ॥

तस्यास्ति माधवीनाम कन्या कमललोचना ॥ १ ॥

न तस्याः सदृशः कांतः प्राप्तस्तेन महात्मना ॥

यतस्ततोऽहमादिष्टः कांतमस्यास्त्वमानय ॥

अनुरूपं द्विजश्रेष्ठ यद्यहं संमतस्तव ॥ २ ॥

ततो मयाऽखिला भूमिस्तद्वरार्थं विलोकिता ॥

न तदर्थं वरो लब्धः सर्वैः समुचितो गुणैः ॥ ३ ॥

ततस्त्वं पुण्डरीकाक्ष मम चित्ते व्यवस्थितः ॥

अनुरूपः पतिस्तस्याः सर्वैरेव गुणैर्युतः ॥ ४ ॥

तस्मात्पाणिग्रहं तस्याः स्वीकुरुष्व सुरेश्वर ॥

अत्यन्तरूपयुक्ताया मम वाक्यप्रणोदितः ॥ ५ ॥

॥ भगवानुवाच ॥ ॥

अत्रानय द्विजश्रेष्ठ तां कन्यां कमलेक्षणाम्॥

येन दृष्ट्वा स्वयं पश्चात्प्रकरोमि यथोदितम् ॥ ६ ॥

॥ गरुड उवाच ॥ ॥

तव तेजोभयादेव सा कन्या जनकान्विता ॥

मया दूरे विनिर्मुक्ता तत्कथं तामिहानये ॥ ७ ॥

॥ श्रीभगवानुवाच ॥ ॥

अत्र तां मम तत्तेजो जनकेन समन्विताम्॥

न हि धक्ष्यति तस्मात्त्वं शीघ्रं द्विजवराऽऽनय ॥ ८ ॥

एवमुक्तस्ततस्तेन विष्णुना प्रभविष्णुना ॥

तां कन्या मानयामास तं च विप्रभृगूद्वहम्॥ ९ ॥

अथासौ प्रणिपत्योच्चैर्ब्राह्मणो मधुसूदनम् ॥

लक्ष्मीवन्न्यविशत्पार्श्वे गरुडस्य समीपतः ॥ ६.८१.१० ॥
सापि कन्या वरारोहा बाल्यभावादनिन्दिता ॥
शय्यैकांते समाविष्टा दक्षिणे मुरविद्विषः ॥ ११ ॥
अथ कोपपरीतांगी महिष्याधर्ममाश्रिता ॥
लक्ष्मीः शशाप तां कन्यां सपत्नीति विचिन्त्य च ॥ १२ ॥
यस्मान्मे पुरतः पापे कांतस्य मम हर्षिता॥
शय्यायां त्वं समाविष्टा लज्जां त्यक्त्वा सुदूरतः ॥
तस्मादश्वमुखी नूनं विकृता त्वं भविष्यसि ॥ १३ ॥
एवं शापे श्रिया दत्ते हाहाकारो महानभूत् ॥
सर्वेषां तत्र संस्थानां कोपश्चापि द्विजन्मनः ॥ ॥ १४॥
॥ ब्राह्मण उवाच ॥ ॥
सहस्रं याच्यते कन्या करोत्येकः करग्रहम् ॥
वाङ्मात्रेण न तस्याः स्यात्पत्नीभावः कथंचन ॥ १९ ॥
यावन्नाग्निद्विजातीनां प्रत्यक्षं गुरुसंनिधौ ॥
ससंकल्पं स्वयं दत्ता गृह्योक्तविधिना जनैः ॥ १६ ॥
तस्मात्तद्दोषनिर्मुक्ता सपत्न्येषा समा त्वया ॥
कृता वाजिमुखी पापे त्वं गजास्या भविष्यसि ॥।७॥
एवमुक्त्वा स विप्रेंद्रस्ततः प्रोवाच केशवम्॥
आतिथ्यं विहितं ह्येतत्तव पत्न्या यथोचितम् ॥
तस्मात्तत्र प्रयास्यामि यत्र स्यात्तादृशी सुता ॥ १८ ॥
॥ श्रीभगवानुवाच ॥ ॥
न सन्तापस्त्वया कार्यः कृत्येस्मिन्द्विजसत्तम ॥
ममांतिके प्रयातानां नाशुभं जायते क्वचित् ॥ १९ ॥
तस्मान्नाश्वमुखी ह्येषा जन्मन्यस्मिन्भविष्यति ॥
गृहीत्वेमां गृहं गच्छ प्रयच्छ स्वेप्सिताय च ॥ ६.८१.२० ॥
शयने वामदिग्भागः कलत्राणामुदाहृतः ॥
दक्षिणे बन्धुलोकानां तत्कालोचितशायिनाम्॥२॥।
सेयं तव सुता विप्र बंधुस्थानं समाश्रिता ॥

भविष्यति ततो जामिः कनिष्ठा मेऽन्यजन्मनि ॥ २२ ॥

अवतीर्णस्य भूपृष्ठे देवकार्येण केनचित् ॥

वाजिवक्त्रधरा प्रोक्ता यद्येषा मम कांतया ॥२३॥

ततोऽहं सुमहत्कृत्वा तपश्चैवानया सह ॥

करिष्यामि शुभास्यां च तथा लक्ष्मीमपि द्विज ॥ २४ ॥

एवं स भगवान्विप्रं तं सन्तोष्य तदा गिरा ॥

गरुडेन समं चक्रे कथाश्चित्रा मनोरमाः ॥ २५ ॥

अथ तस्मिन्कथांते स गरुडः पुरुषोत्तमम् ॥

प्रोवाच तां स्त्रियं दृष्ट्वा वृद्धां तेजःसमन्विताम् ॥ ॥ २६ ॥

अपूर्वेयं सुरश्रेष्ठ स्त्री वृद्धा तव पार्श्वगा ॥

किमर्थं केयमाख्याहि कुतः प्राप्ता जनार्दन ॥ २७ ॥

॥ श्रीभगवानुवाच ॥ ॥

एषा ख्याता खगश्रेष्ठ लोकेऽस्मिन्वृद्धकन्यका ॥

शांडिलीनाम सर्वज्ञा ब्रह्मचर्यपरायणा ॥ २८ ॥

तपोवीर्यसमोपेता सर्वदेवाभिवंदिता ॥

नास्ति वै चेदृशी नारी खगेन्द्रात्र जगत्त्रये ॥ २९ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा विहस्य विहगाधिपः ॥

प्रोवाच वासुदेवं च तां विलोक्य चिरं द्विजाः ॥ ६.८१.३० ॥

॥ गरुड उवाच ॥ ॥

नैतच्चित्रं तपो यच्च क्रियते सुमहत्तरम् ॥

यथा च दीयते दानं यच्च तत्रास्ति चाद्भुतम्॥

तथा च क्रियते युद्धं संग्रामे युद्धशालिभिः ॥ ३१ ॥

नाश्चर्यं चित्रमेतच्च ब्रह्मचर्यं तदद्भुतम् ॥

विशेषाद्यौवनावस्थां संप्राप्य पुरुषोत्तम ॥ ३२ ॥

विशेषेण च नारीभिरत्र न श्रद्दधाम्यहम् ॥

अवश्यं यौवनस्थेन तिर्यग्योनिगतेन च ॥ ३३ ॥

विकारः खलु कर्तव्यो नाधि काराय यौवनम् ॥

यदि न प्राप्नुवंत्येताः पुरुषं योषितः क्वचित् ॥ ३४ ॥

अन्योन्यं मैथुनं चक्रुः कामबाणप्रपीडिताः ॥

कुष्ठिनं व्याधितं वापि स्थविरं व्यंगमेव च ॥

अप्येताः पुरुषाभावे मन्यंते पंचसायकम् ॥ ३५ ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ॥

नांतकः सर्वभूतानां न पुंसां वामलोचना ॥ ३६ ॥

न परत्र भयादेता मर्यादां विदधुः स्त्रियः ॥

मुक्त्वा भूपभयं चैकमथवा गुरुजं भयम् ॥ ३७ ॥

॥ सूत उवाच ॥ ॥

एवं तस्य वचः श्रुत्वा शांडिली ब्रह्मचारिणी ॥

मौनव्रतधराऽप्येवं हृदि कोपं दधार सा ॥ ३८ ॥

एतस्मिन्नंतरे तस्य पक्षिनाथस्य तत्क्षणात् ॥

उभौ पक्षौ गतौ नाशं रुण्डाकारोऽत्र सोऽभवत् ॥ ३९ ॥

मांसपिंडमयो रौद्रः सर्वरोगविवर्जितः ॥

अशक्तश्च तथा गन्तुं पदमात्रमपि क्वचित् ॥ ॥ ६.८१.४० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सुपर्णपक्षपातवर्णनंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८२

https://sa.wikisource.org/s/fl7
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तद्दृष्ट्वा पुंडरीकाक्षो गरुडस्य विचेष्टितम् ॥

विस्मितश्चिंतयामास किमिदं सांप्रतं स्थितम् ॥ १ ॥

अपि वज्रप्रहारेण यस्य रोमापि न च्युतम् ॥

तौ पक्षौ सहसा चास्य कथं निपतितौ भुवि ॥ २ ॥

नूनमेतेन या स्त्रीणां कृता निंदा महात्मना॥

दूषितं ब्रह्मचर्यं यच्छांडिलीं समवेक्ष्य च॥३॥

अनया पातितौ पक्षौ तपःशक्तिप्रभावतः॥

नान्यस्य विद्यते शक्तिरीदृशी भुवनत्रये ॥ ४ ॥

ततः प्रसादयामास शांडिलीं गरुडध्वजः ॥

तदर्थं विनयोपेतः स्मितं कृत्वा द्विजोत्तमाः ॥ ५ ॥

॥ श्रीभगवानुवाच ॥ ॥

सामान्यवचनं प्रोक्तं सर्वस्त्रीणामनेन हि ॥

तत्किमर्थं महाभागे त्वया चैवेदृशः कृतः ॥ ६ ॥

॥ शांडिल्युवाच ॥ ॥

मम वक्त्रं समालोक्य स्मितं चक्रे जनार्दन ॥

स्त्रीनिंदा विहितानेन स्वमत्यापि जगद्गुरो ॥ ७ ॥

एतस्मात्कारणादस्य निग्रहोऽयं मया कृतः ॥

मनसा न च वाक्येन न च केशव कर्मणा ॥ ८ ॥

॥ श्रीभगवानुवाच ॥ ॥

तथापि कुरु चास्य त्वं प्रसादं गतकल्मषे॥

मम वाक्यानुरोधेन यदिमां मन्यसे शुभे ॥ ९ ॥

॥ शांडिल्युवाच ॥ ॥

मनसापि मया ध्यातं शुभं वा यदिवाऽशुभम् ॥

नान्यथा जायते देव विशेषात्कोपयुक्तया ॥ ६.८२.१० ॥

तस्मादेष ममादेशादाराध यतु शंकरम् ॥
पक्षलाभाय नान्यस्य शक्तिर्दातुं व्यवस्थिता ॥ ११ ॥
अथवा पुंडरीकाक्ष रूपमीदृग्व्यवस्थितः ॥
एष संस्थास्यते लोके सत्यमेतद्ब्रवीम्यहम् ॥ १२ ॥
॥ सूत उवाच ॥ ॥
तस्यास्तद्वचनं श्रुत्वा तं प्रोवाच जनार्दनः ॥
गरुडं दैन्यसंयुक्तं भासपिंडोपमं स्थितम् ॥ १३ ॥
एष एव वरश्चास्या द्विपदेश्या द्विजोत्तम ॥
पक्षलाभाय यत्प्रोक्तं तव शंभुप्रसादनम् ॥ १४ ॥
तस्मादाराधय क्षिप्रं त्वं देवं शशिशेखरम् ॥
अव्यग्रं चित्तमास्थाय दिवारात्रमतंद्रितः ॥ १५ ॥
येन ते तत्प्रभावेन भूयः स्यात्तादृशं वपुः ॥
तस्य देवस्य माहात्म्यादचिरादपि काश्यप ॥ १६ ॥
तच्छ्रुत्वा गरुडस्तूर्णं धृतपाशुपतव्रतः ॥
संस्थाप्य देवमीशानं ततस्तं तोषमानयत् ॥ १७ ॥
चांद्रायणानि कृच्छ्राणि तथा सांतपनानि च ॥
प्राजापत्यानि चक्रेऽथ पाराकाणि तदग्रतः ॥ १८ ॥
स्नात्वा त्रिषवणं पश्चाद्भस्मस्नान परायणः ॥
जपन्रुद्रशिरो रुद्रान्नीलरुद्रांस्तथापरान् ॥ १९ ॥
चक्रे पूजां स्वयं तस्य स्नापयित्वा यथाविधि ॥
बलिपूजोपहारांश्च विधानेन प्रयच्छति ॥ ६.८२.२० ॥
एवं तस्य व्रतस्थस्य जपपूजापरस्य च ॥
ततो वर्षसहस्रांते गतस्तुष्टिं महेश्वरः ॥
अब्रवीद्वरदोऽस्मीति वृणुष्वेष्टं द्विजोत्तम ॥ ॥ २१ ॥
॥ गरुड उवाच ॥ ॥
पश्यावस्थां ममेशान शांडिल्या या विनिर्मिता ॥
पक्षपातः कृतोऽस्माकं तमहं प्रार्थयामि वै ॥ २२ ॥
त्वयात्रैव सदा लिंगे स्थेयं हर ममाधुना ॥

मम वाक्यादसंदिग्धं यदि चेष्टं प्रयच्छसि ॥ २३ ॥

॥ भगवानुवाच ॥ ॥

अद्यप्रभृति मे चात्र लिंगे वासो भविष्यति ॥

त्वं च तद्रूपसंपन्नो विशेषाद्बलवेगभाक् ॥ २४ ॥

भविष्यसि न संदेहो मत्प्रसादाद्विहंगम ॥

एवमुक्त्वाथ तं देवः स्वयं पस्पर्श पाणिना ॥ २५ ॥

ततोऽस्य पक्षौ संजातौ तत्क्षणादेव सुन्दरौ ॥

तथा रोमाणि दिव्यानि जातरूपोपमानि च ॥ २६ ॥

ततः प्रणम्य तं देवं प्रहृष्टः स विहंगमः ॥

गतः स्वभवनं पश्चादनुज्ञाप्य महेश्वरम् ॥ २७ ॥

देवोपि वचनात्तस्य तस्मिँल्लिंगे सदा हरः ॥

निवासमकरोत्सम्यक्प्राप्ते संध्यात्रये सदा ॥२ ॥

तस्य चायतने पुण्ये योगात्प्राणान्परित्यजेत् ॥

प्रायोपवेशनं कृत्वा न स भूयोऽपि जायते २९ ॥

अपि पाप समाचारः कौलो वा निर्घृणोऽपि वा ॥

ब्रह्मघ्नो वा सुरापो वा चौरो वा भ्रूणहाऽपि वा ॥ ६.८२.३० ॥

त्रिकालं पूजयन्यस्तु श्रद्धापूतेन चेतसा ॥।

संवत्सरं वसेत्सोऽपि शिवलोके महीयते ॥ ३१ ॥

अथवा सोमवारेण यस्तं पश्यति मानवः ॥

कृत्वा क्षणं सुभक्त्या यो यावत्संवत्सरं द्विजाः ॥। ॥ ३२ ॥

सोऽपि याति न संदेहः पुरुषः शिवमन्दिरे ॥

विमानवरमारूढः सेव्यमानोऽप्सरोगणैः॥३३॥

तस्मात्सर्वप्रयत्नेन कलिकाले विशेषतः॥

द्रष्टव्यो वै सुपर्णाख्यो देवः श्रद्धासमन्वितैः ॥३४॥

संत्याज्याश्च तथा प्राणास्तदग्रेप्रायसंश्रितैः ॥

वांछद्भिः शिवसांनिध्यं सत्यमेतन्मयोदितम् ॥। ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सुपर्णेश्वराख्यमाहात्म्यवर्णनंनाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८३



॥ सूत उवाच ॥ ॥

तत्राश्चर्यमभूत्पूर्वं यत्तद्ब्राह्मणसत्तमाः ॥

अहं वः कीर्तयिष्यामि पुराणे यदुदाहृतम् ॥ १ ॥

वेणुर्नाम महीपालः पुरासीत्सूर्यवंशजः ॥

सदैव पापसंयुक्तो दुर्मेधाः कामपीडितः ॥ २ ॥

शासनानि प्रदत्तानि ब्राह्मणानां महात्मनाम् ॥

अन्यैः पार्थिवशार्दूलैस्तेन तानि हृतान्यलम् ॥ ३ ॥

विध्वंसिताः स्त्रियो नैका विधवाश्च विशेषतः ४

कुमार्यो रूपवत्यश्च तथा निज कुलोद्भवाः ॥ ४ ॥

देवताराधनं पूजां कर्तुं नैव ददाति सः ॥

न च यज्ञं न होमं च स्वाध्यायं न च पापकृत् ॥ ५ ॥

प्रोवाचाथ जनान्सर्वान्मां पूजयत सर्वदा ॥

न मामभ्यधिकोऽन्योऽस्ति देवो वा ब्राह्मणोऽपि वा ॥ ६ ॥

मया तुष्टेन सर्वेषां संपत्स्यति हृदि स्थितम् ॥

इह लोकेष्वसंदिग्धं शुभं वा यदि वाऽशुभम् ॥ ७ ॥

तेन शस्त्रविहीनानां विश्वस्तानां वधः कृतः ॥

संत्यक्ताः शरणं प्राप्ताः पुरुषा भयविह्वलाः ॥ ९ ॥

नष्टो महाहवं दृष्ट्वा शत्रुसंघानुपस्थितान् ॥

क्षात्रं धर्मं परित्यज्य प्राणरक्षार्थमेव हि ॥ ९ ॥

अचौराः प्रगृहीताश्च चौराः संरक्षिताः सदा ॥

साधवः क्लेशिता नित्यं तेषां संहरता धनम् ॥ ६.८३.१० ॥

न कृतं च व्रतं तेन श्रद्धापूतेन चेतसा ॥

न दत्तं ब्राह्मणेभ्यश्च न च यष्टं कदाचन ॥। ॥ ११ ॥

एवं तस्य नरेन्द्रस्य पापासक्तस्य नित्यशः ॥

कुष्ठव्याधिरभूदुग्रो वंशोच्छेदश्च सद्द्विजाः ॥ १२ ॥

ततस्तं व्याधिना ग्रस्तं पुत्रपौत्रविवर्जितम् ॥

दायादाः सहसोपेता राज्यं जह्रुस्ततः परम् ॥ १३ ॥

तं च निर्वासयामासुस्तस्माद्देशात्पदातिकम् ॥

एकाकिनं परित्यक्तं सर्वैरपि सुहृद्गणैः ॥ १४ ॥

सोऽपि सर्वैः परित्यक्तस्तेन पापेन कर्मणा ॥

कलत्रैरपि चात्मीयैः स्मृत्वा पूर्वविचेष्टितम् ॥ १५ ॥

एकाकी भ्रममाणोऽथ सोऽपि कष्टवशं गतः ॥

क्षुत्तृष्णासुपरिश्रांतः क्षेत्रेऽत्रैव समागतः ॥ १६ ॥

ततः प्रासादमासाद्य सुपर्णाख्यसमुद्भवम् ॥

यावत्प्राप्तः परित्यक्तस्ताव त्प्राणैरुपोषितः ॥ १७ ॥

ततो दिव्यवपुर्भूत्वाविमानवरमाश्रितः ॥

जगामशिवलोकं स दुर्लभं धार्मिकैरपि ॥ १८ ॥

सेव्यमानोप्सरोभिश्च स्तूयमानश्च किन्नरैः ॥

गीयमानश्च गन्धर्वैः शिवपार्श्वे व्यवस्थितः ॥ १९ ॥

अथ तं संनिधौ दृष्ट्वा गौरी पप्रच्छ सादरम्॥

कोऽयं देव समायातः सुकृती तव मन्दिरे ॥

अनेन किं कृतं कर्म यत्प्राप्तोऽत्र विभूतिधृक् ॥ ६.८३.२० ॥

॥ श्रीभगवानुवाच ॥ ॥

एष पापसमाचारः सदाऽऽसीत्पृथिवीपतिः ॥

वेणुसंज्ञो धरापृष्ठे कुष्ठव्याधिसमाकुलः ॥ २१ ॥

स संत्यक्तो निजैर्दारैः शत्रुवर्गेण धर्षितः ॥

भ्रममाणः समायातः सुपर्णाख्यस्य मन्दिरे ॥ २२ ॥

उपवासपरिश्रांतः सांनिध्यं मम यत्र च ॥

सर्वप्राणैः परित्यक्तस्तस्मिन्नायतने शुभे ॥ २३ ॥

तत्प्रभावादिह प्राप्तः सत्यमेतन्म योदितम् ॥

अन्योऽप्यनशनं कृत्वा प्राणान्यस्तत्र संत्यजेत् ॥ २४ ॥

स सर्वाभ्यधिकां भूतिं प्राप्नुयाद्वरवर्णिनि ॥

यानेतान्वीक्षसे देवि गणान्मे पार्श्वसंस्थितान् ॥ २५ ॥

एतैस्तत्र कृतं सर्वैर्देवि प्रायोपवेशनम् ॥

अपि कीटपतंगा ये पशवः पक्षिणो मृगाः ॥

प्रासादे तत्र निर्मुक्ताः प्राणैर्यांति ममांतिकम् ॥ २६ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा पार्वती वाक्यं प्रोक्तं देवेन शम्भुना ॥

विस्मयाविष्टहृदया साधु साध्विति साऽब्रवीत् ॥ २७ ॥

ततःप्रभृति लोकेऽत्र पुरुषा मुक्तिमिच्छवः ॥

दूरतोऽपि समभ्येत्य स्वान्प्राणांस्तत्र तत्यजुः ॥ २८ ॥

प्रायोपवेशनं कृत्वा श्रद्धया परया युताः ॥

गच्छन्ति च परां सिद्धिमपि पापपरायणाः ॥ २९ ॥

एतद्वः सर्वमाख्यातं सर्वपातकनाशनम् ॥

सुपर्णाख्यस्य माहात्म्यं यन्मया स्वपितुः श्रुतम् ॥ ६.८३.३० ॥

इति श्रीस्कन्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सुपर्णाख्यमाहात्म्यवर्णनंनाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८४



॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं देवदेवेन विष्णुना ॥

माधवीं भगिनीं प्राप्य जन्मांतरमुपस्थिताम् ॥ १ ॥

अश्ववक्त्रां करिष्यामि तपसा सुशुभाननाम् ॥

सा कथं विहिता तेन तपस्तप्तं तथा कथम् ॥

सर्वं विस्तरतो ब्रूहि परं कौतूहलं हि नः ॥ २ ॥

॥ सूत उवाच ॥ ॥

नारदस्य समाकर्ण्य तं सन्देशं सुरोद्भवम् ॥

गत्वा विष्णुः सुरैः सार्द्धं प्रचक्रे मंत्रनिश्चयम् ॥ ३ ॥

भारावतरणार्थाय दानवानां वधाय च ॥

वसुदेवगृहे श्रीमान्द्वापरांते ततो हरिः ॥ ४ ॥

देवक्या जठरे देवः संजातो दैत्यदर्पहा ॥

तथान्या रोहिणीनाम भार्या तस्य च याऽभवत् ॥ ५ ॥

तस्यां जज्ञे हलीनाम बलभद्रः प्रतापवान् ॥

तृतीया सुप्रभानाम वसुदेवप्रिया च या ॥ ६ ॥

तस्यां सा माधवी जज्ञे अश्ववक्त्रस्वरूपधृक् ॥

तां दृष्ट्वा विकृताकारां सुतां जातां च सुप्रभा ॥

वासुदेवसमायुक्ता विषादं परमं गता ॥ ७ ॥

अथ ते यादवाः सर्वे कृतशान्तिकपौष्टिकाः ॥

स्वस्तिस्वस्तीति संत्रस्ताः प्रोचुर्भूयात्कुलेऽत्र नः ॥८॥

एवं सा यौवनोपेता तथा दुःखसमन्विता ॥

न कश्चिद्वरयामास वाजिवक्त्रां विलोक्य ताम् ॥ ९ ॥

ततश्च भगवान्विष्णुर्ज्ञात्वा तां भगिनीं तथा ॥

मातरं पितरं चैव तथा दुःखसमन्वितौ ॥ ६.८४.१० ॥

तामादाय गतस्तूर्णं बलदेवसमन्वितः ॥

हाटकेश्वरजे क्षेत्रे तपस्तप्तुं ततः परम् ॥ ११ ॥

ब्रह्माणं तोषयामास सम्यग्यज्ञपरायणः ॥

व्रतैश्च विविधैर्दानैर्ब्राह्मणानां च तर्पणैः ॥ १२ ॥

ततस्तुष्टिं गतो ब्रह्मा वर्षांते तस्य शार्ङ्गिणः ॥

उवाच वरदोऽस्मीति प्रार्थयस्वाभिवांछितम् ॥ १३ ॥

॥ विष्णुरुवाच ॥ ॥

एषा मे भगिनी देव जाताऽश्ववदना किल ॥

तव प्रसादात्सद्वक्त्रा भूयादेतन्ममेप्सितम् ॥ १४ ॥

॥ श्रीब्रह्मोवाच ॥ ॥

एषा शुभानना साध्वी मत्प्रसादाद्भविष्यति ॥

सुभद्रा नाम विख्याता वीरसूः पतिवल्लभा ॥ १५ ॥

एतद्रूपां पुमान्योऽत्र पूजयिष्यति भक्तितः ॥

एतां विष्णो त्वया सार्धं तथानेन च सीरिणा ॥ १६ ॥

द्वादश्यां माघमासस्य गंधपुष्पानुलेपनैः ॥

सोऽप्यवाप्स्यति यच्चित्ते वर्तते नात्र संशयः ॥ १७ ॥

या नारी पतिना त्यक्ता वंध्या वा भक्तिसंयुता ॥

तृतीयादिवसे चैतां पूजयिष्यति केशव ॥ १८ ॥

भविष्यति सुपुत्राढ्या सुभगा सा सुखान्विता ॥

ऐश्वर्यसहिता नित्यं सर्वैः समुदिता गुणैः ॥ १९ ॥

एवमुक्त्वा चतुर्वक्त्रो विरराम ततः परम् ॥

वासुदेवोऽपि हृष्टात्मा ययौ द्वारवतीं पुरीम् ॥ ६.८४.२० ॥

तामादाय विशालाक्षीं चंद्रबिंबसमाननाम् ॥

बलदेवसमायुक्तो ह्यनुज्ञाप्य पिताम हम्॥ २१ ॥

॥ सूत उवाच ॥ ॥

एवं सा माधवी विप्राः सुभगारूपमास्थिता ॥

अवतीर्णा धरापृष्ठे लक्ष्मीशापप्रपीडिता ॥ २२ ॥

उपयेमे सुतः पांडोर्यां पार्थश्चारुहासिनीम् ॥

जज्ञे तस्याः सुतो वीरोऽभिमन्युरिति विश्रुतः ॥ २३ ॥

एतद्वः सर्वमाख्यातं माधबीजन्मसम्भवम् ॥

सुपर्णाख्यस्य देवस्य कथासंगाद्द्विजोत्तमाः ॥ २४ ॥

यश्चैतत्पठते मर्त्यो भक्त्या युक्तः शृणोति वा ॥

मुच्यते स नरः पापात्तद्दिनैकसमुद्भवात् ॥ २५।।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सुपर्णाख्यतीर्थमाहात्म्ये माधव्या अश्वमुख्याः श्रीकृष्णतपश्चर्यया पद्मादत्तशापविमुक्तिपूर्वक सुभद्रात्वप्राप्तिवर्णनंनाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८५



< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

माधव्याः पद्मया दत्तो यः शापस्तस्य यत्फलम् ॥

परिणामोद्भवं सर्वं श्रुतमस्माभिरद्य तत् ॥ १ ॥

तेन यत्कमला शप्ता ब्राह्मणेन महात्मना ॥

सा कथं गज वक्त्राऽथ पुनर्जाता शुभानना ॥ २ ॥

॥ सूत उवाच ॥ ॥

शापेन तस्य विप्रस्य तत्क्षणादेव सा द्विजाः ॥

गजवक्त्रा समुत्पन्ना महाविस्मयकारिणी ॥ ३ ॥

सा प्रोक्ता हरिणा तिष्ठ किञ्चित्कालांतरे शुभे ॥

अनेनैव तु रूपेण यावत्स्याद्द्वापरक्षयः ॥ ४ ॥

ततोऽहं मेदिनीपृष्ठे ह्यवतीर्य समुद्रजे ॥

तपः शक्त्या करिष्यामि भूयस्त्वां तु शुभाननाम् ॥ ५ ॥

अवज्ञायाथ सा तस्य तद्वाक्यं शार्ङ्गधन्विनः ॥

शुभास्यत्वकृते तेपे तपस्तीव्रं सुहर्षिता॥ ॥ ६॥

एतत्क्षेत्रं समासाद्य त्रिकालं स्नानमाचरत्॥

ब्रह्माणं तोषयामास दिवारात्रिमतंद्रिता॥ ७॥

तामुवाच ततो ब्रह्मा वर्षांते तुष्टिमागतः ॥

वरं प्रार्थय तुष्टोऽहं तव केशववल्लभे ॥ ८ ॥

॥ लक्ष्मीरुवाच ॥ ॥

गजास्याहं कृता देव शापं दत्त्वा सुदारुणम् ॥

ब्राह्मणेन सुक्रुद्धेन कस्मिंश्चित्कारणांतरे ॥९॥

तस्मात्तद्रूपिणीं भूयो मां कुरुष्व पितामह ॥

यदि मे तुष्टिमापन्नो नान्यत्किंचिद्वृणोम्यहम् ॥ ६.८५.१० ॥

॥ ब्रह्मोवाच ॥ ॥

भविष्यति शुभं वक्त्रं मत्प्रसादादसंशयम् ॥

तव भद्रे विशेषेण तस्मात्वं स्वगृहं व्रज ॥ ११ ॥

महत्त्वं ते मया दत्तमद्यप्रभृति शोभने ॥

महालक्ष्मीति ते नाम तस्मादत्र भविष्यति ॥ १२ ॥

गजवक्त्रां नरो यस्त्वां पूजयिष्यति भक्तितः ॥

स गजाधिपतिर्भूपो भविष्यति च भूतले ॥ १३ ॥

द्वितीयादिवसे यस्त्वां महालक्ष्मीरिति ब्रुवन् ॥

श्रीसूक्तेन सुभक्त्याऽथ देवि संपूजयिष्यति ॥ १४ ॥

सप्तजन्मांतराण्येव न भविष्यति सोऽधनः॥

एवमुक्त्वा चतुर्वक्त्रो विरराम ततः परम्॥ १५ ॥

साऽपि हृष्टा गता देवी यत्र तिष्ठति केशवः ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये महालक्ष्मीमाहात्म्यवर्णनंनाम पञ्चाशीतितमोऽध्यायः॥ ८५ ॥छ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८६



॥ सूत उवाच ॥ ॥

अथान्यापि च तत्रास्ति सप्तविंशतिका तथा ॥

नक्षत्रैः स्थापिता देवी वांछितस्य प्रदायिनी ॥ १ ॥

दक्षस्य तनया पूर्वं सप्तविंशतिसंख्यया ॥

उद्वाहिता हि सोमेन पूर्वं ब्राह्मणसत्तमाः ॥ २ ॥

तासां मध्ये ऽभवच्चैका रोहिणी तस्य वल्लभा ॥

प्राणेभ्योऽपि सदासक्तस्तया सार्धं स तिष्ठति ॥ ३ ॥

ततो दौर्भाग्यसंतप्ताः सर्वा स्ता दक्षकन्यकाः ॥

वैराग्यं परमं गत्वा क्षेत्रेऽस्मिंस्तपसि स्थिताः ॥ ४ ॥

संस्थाप्य देवतां दुर्गां श्रद्धया परया युताः ॥

बलिपूजोपहारैस्तां पूजयंत्यः सुरेश्वरीम् ॥ ५ ॥

ततः कालेन महता तासां सा तुष्टिमभ्यगात् ॥

अब्रवीच्च प्रतुष्टोऽहं वरं दास्यामि पुत्रिकाः ॥ ६ ॥

तस्मात्तत्प्रार्थ्यतां चित्ते यद्युष्माकं व्यवस्थितम् ॥

सर्वं दास्याम्यसंदिग्धं यद्युष्माकं हृदि स्थितम् ॥ ७ ॥

ततः प्रोचुश्च ताः सर्वाः प्रसादात्तव वांछितम् ॥

अस्माकं विद्यते देवि यावत्त्रैलोक्यसंस्थितम् ॥ ८ ॥

एकं पत्युः सुखं मुक्त्वा यत्सौभाग्यसमुद्भवम् ॥

तस्मात्तद्देहि चास्माकं यदि तुष्टासि चंडिके ॥ ९ ॥

वयं दौर्भाग्यदोषेण सर्वाः क्लेशं परं गताः ॥

न शक्नुमः प्रियान्प्राणान्देहे धर्तुं कथंचन ॥ ६.८६.१० ॥

॥ श्रीदेव्युवाच ॥ ॥

अद्यप्रभृति युष्माकं सौभाग्यं पतिसंभवम्॥

मत्प्रसादादसंदिग्धं भविष्यति सुखोदयम्॥ ११ ॥

अन्यापि या पतित्यक्ता स्त्री मामत्र स्थितां सदा ॥

पूजयिष्यति सद्भक्त्या चतुर्दश्यामुपोषिता ॥ १२ ॥

सा भविष्यति सौभाग्ययुक्ता पुत्रवती सती ॥

यावत्संवत्सरं तावदेकभक्तपरायणा ॥ १३ ॥

अक्षारलवणाशा या नारी मां पूजयिष्यति ॥

न तस्याः पतिजं दुःखं दौर्भाग्यं वा भविष्यति ॥ १४ ॥

आश्विनस्य सिते पक्षे संप्राप्ते नवमीदिने ॥

उपवासपरा या मां निशीथे पूजयिष्यति ॥

तस्याः सौभाग्यमत्युग्रं सर्वदा वै भविष्यति ॥ १५ ॥

एवमुक्त्वा तु सा देवी विरराम द्विजोत्तमाः ॥

ताश्च सर्वाः सुसंहृष्टा जग्मुर्दक्षस्य मंदिरम्॥ १६ ॥

एतस्मिन्नंतरे दक्ष आहूतः शूलपाणिना ॥

प्रोक्तः कस्मात्त्वया चन्द्रो यक्ष्मणा संनियोजितः ॥

तदयुक्तं कृतं दक्ष जामाताऽयं यतस्तव ॥ १७ ॥

॥ दक्ष उवाच ॥ ॥

अनेन तनया मह्यमष्टाविंशतिसंख्यया ॥

ऊढा अखण्डचारित्रास्तास्त्यक्ता दोषवर्जिताः ॥

मुक्त्वैकां रोहिणीं देव निषिद्धेन मयाऽसकृत् ॥ १८ ॥

ततो मयाऽतिकोपेन नियुक्तो राजयक्ष्मणा ॥

असत्यजल्पको मन्दः कामदेववशं गतः ॥ १९ ॥

॥ श्रीभगवानुवाच ॥ ॥

अद्यप्रभृति सर्वासां समं स प्रचरिष्यति ॥

मद्वाक्यान्नात्र संदेहः सत्यमेतन्मयोदितम्॥ ६.८६.२० ॥

त्वयापि यद्वचः प्रोक्तमसत्यं स्यान्न तत्क्वचित् ॥

तस्मादेष क्षयं पक्षं वृद्धिं पक्षं प्रयास्यति ॥ २१ ॥

दक्षोऽपि बाढमित्येव तत्प्रोक्त्वा च ययौ गृहम् ॥

चंद्रस्तु दक्षकन्यास्ताः समं पश्यति सर्वदा ॥ २२ ॥

गच्छमानः क्षयं पक्षं वृद्धिं पक्षं च सद्द्विजाः ॥

सापि देवी ततः प्रोक्ता सप्तविंशतिका क्षितौ ॥

सर्वसौभाग्यदा स्त्रीणां तस्मिन्क्षेत्रे व्यवस्थिता ॥ २३ ॥

यश्चैतत्पुरतस्तस्याः संप्राप्ते चाष्टमीदिने ॥

शुचिर्भूत्वा पठेद्भक्त्या स सौभाग्यमवाप्नुयात् ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सप्तविंशतिकामाहात्म्यवर्णनंनाम षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८७

https://sa.wikisource.org/s/fkw
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथा तत्रास्ति विप्रेन्द्राः सोमस्यायतनं शुभम्॥

यस्यापि दर्शनादेव मुच्यते पातकैर्नरः ॥ १ ॥

सोमवारे तु संप्राप्ते सोमस्य ग्रहणे नरः ॥

यस्तं पश्यति पापोऽपि नरकं न स पश्यति ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

सर्वेषामेव देवानां दृश्यंतेऽत्र समाश्रयाः ॥

अत्र चंद्रस्य चैवैकः कथं जातः समाश्रयः ॥ ३ ॥

एतन्नः सूतपुत्रातिचित्रं मनसि वर्तते ॥

तस्माद्वद महाभाग सर्वं त्वं वेत्स्यशेषतः ॥ ४ ॥

॥ सूत उवाच ॥ ॥

एनज्जगद्द्विजश्रेष्ठाः सर्वं सोममयं स्मृतम् ॥

तस्मात्प्रतिष्ठिते तस्मिंस्त्रैलोक्यं स्यात्प्रतिष्ठितम् ॥ ५ ॥

एताश्चौषधयः सर्वाः सस्याद्याश्चेह भूतले ॥

सर्वाः सोममयास्ताश्च याभिर्जीवंति जंतवः ॥ ६ ॥

तस्माद्ब्रह्मादयो देवाः सोमं प्राप्य क्रमाद्द्विजाः ॥

तृप्तिं यांति परां हृष्टा यतस्तस्माद्वरोऽत्र सः ॥ ७ ।

अग्निष्टोमादयो यज्ञास्तथा सोमे प्रतिष्ठिताः ॥

तस्य पानाद्यतस्तृप्तिं तत्र यांति द्विजोत्तमाः ॥ ८ ॥

एतस्मात्कारणात्सोमः सर्वेषामधिकः स्मृतः ॥

देवानां दानवानां च स हि पूज्यतमः स्मृतः ॥ ९ ॥

यथान्येषां सुरेन्द्राणां हर्म्याणि धरणीतले ॥

क्रियन्ते रात्रिनाथस्य तद्वत्कुर्वंति मानवाः ॥ ६.८७.१० ॥

यैर्यैर्नरैर्निशेशस्य प्रासादो विहितः क्षितौ ॥

तेते मुक्तिपदं प्राप्ताः कृत्वाऽथ शुभसंचयम् ॥ ११ ॥

यन्महेश्वरहर्म्याणां सहस्रेण भवेच्छुभम् ॥

तदेके नैव चंद्रस्य प्राप्नुवंति शुभं नराः ॥ १२ ॥

अथ चन्द्रोत्थहर्म्यस्य माहात्म्यं तद्द्विजोत्तमाः ॥

ज्ञात्वा ब्रह्मादयो देवा भयसंत्रस्तमानसाः ॥

तद्विघ्नार्थमिदं प्रोचुर्मेरुमूर्धानमाश्रिताः ॥ १३ ॥

सौम्यर्क्षे सोमवारेण सौम्ये मासि च संस्थिते ॥

तिथौ च सोमदेवत्ये प्राप्ते सोमग्रहे तथा ॥

सकारैः पंचभिर्युक्ते काले सोमस्य मंदिरम् ॥ १४ ॥

य एकाहेन संपाद्य प्रासादं स्थापयिष्यति ॥

चंद्रं स सर्वदेवोत्थहर्म्यस्याप्नोति सत्फलम् ॥ १५ ॥

सहस्रगुणितं सम्यक्छ्रद्धापूतेन चेतसा ॥

अन्यथा यस्तु चंद्रस्य प्रासादं प्रकरिष्यति ॥ १६ ॥

वंशोच्छेदं समासाद्य नरकं स प्रयास्यति ॥

एतस्मात्कारणाद्भीता न कुर्वंति नरा भुवि ॥ १७ ॥

प्रासादं रात्रिनाथस्य सुपुण्यमपि सद्द्विजाः ॥

य एष रात्रिनाथस्य क्षेत्रेऽत्रैव व्यवस्थितः ॥ १८ ॥

प्रासादस्त्वंबरीषेण भूभुजा स विनिर्मितः ॥

कथंचित्समयं प्राप्य यथोक्तं शास्त्रचिंतकैः ॥ १९ ॥

तस्यैवोत्तरदिग्भागे द्वितीयोऽन्यः प्रतिष्ठितः ॥

चन्द्रमा धंधुमारेण तद्वत्सोऽपि प्रतिष्ठितः ॥ ६.८७.२० ॥

ततश्च तौ महीपालौ तत्प्रभावादुभौ द्विजाः ॥

गतौ च परमां सिद्धिं जन्ममृत्युविवर्जिताम् ॥ ॥ २१ ॥

प्रासादोऽन्यस्तृतीयस्तु क्षेत्रे प्राभासिके तथा ॥

इक्ष्वाकुणा नरेंद्रेण श्रद्धायुक्तेन निर्मितः ॥ २२ ॥

प्रासादत्रयमेतद्धि मुक्त्वात्र धरणीतले ॥

अपरो नास्ति चन्द्रस्य सत्यमेतन्मयोदितम् ॥

एकोऽस्ति नर्मदातीरे पुण्ये रेवोरिसंगमे ॥ २३ ॥

एतद्वः सर्वमाख्यातं चन्द्रमाहात्म्यमुत्तमम् ॥

पठतां शृण्वतां चापि सर्वपातकनाशनम् ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठेनागरखण्डे हाटकेश्वरक्षेत्रमाहत्म्ये सोमप्रासादमाहात्म्यवर्णनंनाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८८

https://sa.wikisource.org/s/fl3
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

यास्त्वया देवताः प्रोक्ताश्चतस्रः सूतनंदन ॥

चमत्कारी महित्था च महालक्ष्मीस्तथाऽपरा ॥ १ ॥

अंबावृद्धा चतुर्थी च तासां तिस्रः प्रकीर्तिताः॥

विस्तरेण चतुर्थी च अंबावृद्धा न कीर्तिता ॥ २ ॥

एतस्याः सर्वमाचक्ष्व प्रभावं सूतसंभव ॥

केनैषा निर्मिता यात्रा सर्वं विस्तरतो वद ॥ ३ ॥

॥ सूत उवाच ॥ ॥

एषा तपोमयी शक्तिरम्बावृद्धा सुरेश्वरी ॥

यथात्र संस्थिता पूर्वं तत्सर्वं श्रूयतां मम ॥ ४ ॥

चमत्कारमहीपेन पुरमेतद्यदा कृतम्॥

तदा तद्रक्षणार्थाय निर्मिता भावितात्मना ॥

चतस्रो देवता ह्येताः संमतेन द्विजन्मनाम् ॥ ५ ॥

अथ तस्य महीपस्य अंबानामाभवत्सुता ॥

तथान्या वृद्धसंज्ञा च रूपौदार्यगुणान्विते ॥ ६ ॥

उभे ते काशिराजेन परिणीते द्विजोत्तमाः ॥

गृह्योक्तेन विधानेन देवविप्राग्निसंनिधौ ॥ ७ ॥

कस्यचित्त्वथ कालस्य काशिराजस्य भूपतेः ॥

तैः कालयवनैः सार्धमभवत्संगरो महान् ॥ ८ ॥

अथ तैर्निहतः संख्ये सभृत्यबलवाहनः ॥

हरलब्धवरै रौद्रैः काशिराजः प्रतापवान् ॥ ९ ॥

अथांबा चैव वृद्धा च वैधव्यं प्राप्य दुःखदम् ॥

हाटकेश्वरजं क्षेत्रं गत्वा ते वांछितप्रदम् ॥ ६.८८.१० ॥

देव्या आराधने यत्नं कृतवत्यौ ततः परम् ॥

नाशार्थं पतिशत्रूणां धृतवत्यौ शुभव्रतम् ॥ ११ ॥

यावद्वर्षशतं साग्रं न च तुष्टा सुरेश्वरी ॥
ततो वैराग्यमासाद्य वांछंत्यौ स्वतनुक्षयम् ॥ १२ ॥
मंत्रैराथर्वणैर्विप्राः क्षुरिकासूक्तसंभवैः ॥
छित्वाच्छित्त्वा स्वमांसानि मंत्रपूतानि भक्तितः ॥ १३ ॥
कृतवत्यौ ततो होमं सुसमिद्धे हुताशने ॥
अग्निकुण्डात्ततस्तस्माश्चतुर्हस्ता शुभानना ॥ १४ ॥
श्वेतवस्त्रा विनिष्क्रांता नारी बालार्कसन्निभा ॥
तथान्या च सुनेत्रास्या तप्तहाटकसन्निभा । १५ ॥
तस्मात्कुण्डाद्विनिष्क्रांता धृतखड्गा भयावहा ॥
साऽपरापि तथारूपा शक्तिः परमदारुणा ॥ १६ ॥
प्रोचतुस्ते वरं हृत्स्थं प्रार्थ्यतामिति दुर्लभम् ॥ ॥ १७ ॥
॥ ते ऊचतुः ॥ ॥
अस्माकं दयितो भर्त्ता काशिराजः प्रतापवान् ॥
निहतः संगरे क्रुद्धैर्यवनैः कालपूर्वकैः ॥ १८ ॥
युष्मदीय प्रसादेन यथा तेषां परिक्षयः ॥
सञ्जायते महादेव्यौ तथा कार्यमसंशयम् ॥ १९ ॥
स्थातव्यं च तथात्रैव उभाभ्यामपि सादरम् ॥
स्वपुरस्य प्ररक्षार्थमेतत्कृत्यं मतं हि नौ ॥ ६.८८.२० ॥
तयोस्तद्वचनं श्रुत्वा उभे ते देवते ततः॥
संप्रोच्य बाढमित्येवं तस्मिन्कुण्डे व्यवस्थिते ॥ २१ ॥
एतस्मिन्नंतरे तस्मात्कुण्डाच्छतसहस्रशः ॥
निष्क्रांताः संख्यया हीना मातरो नैकरूपिकाः ॥ २२ ॥
एका गजमुखी तत्र तथान्या तुरगानना ॥
सारमेय मुखाश्चान्याः पक्षिच्छागमुखाः पराः ॥ २३ ॥
तिर्यञ्च वपुषश्चान्या वक्त्रैर्मानुषसंभवैः ॥
त्रिशीर्षाः पञ्चशीर्षाश्च दशशीर्षास्तथा पराः ॥ २४ ॥
गुह्य स्थानस्थितैर्वक्त्रैरेकाश्चान्या हृदिस्थितैः ॥
पार्श्वसंस्थैः स्थिताश्चान्या अन्याः पृष्ठिगतैर्मुखैः ॥ २५ ॥

एकहस्ता द्विहस्ताश्च पञ्चहस्तास्तथापराः ॥

अन्या विंशतिहस्ताश्च विहस्ताश्च तथापराः ॥ २६ ॥

बहुपादा विपादाश्च एकपादास्तथापराः ॥

तथान्याश्चार्धपादाश्च अधोवक्त्रा विभीषणाः ॥ ॥ २७ ॥

एकनेत्रा द्विनेत्राश्च त्रिनेत्राश्च तथापराः ॥

काश्चिद्गजसमारूढा हयारूढास्तथापराः ॥ २८ ॥

वृषवानरसिंहाजव्याघ्रसर्पास्थिताः पराः ॥

गोधाश्वरासभारूढास्तथा च विहगाश्रिताः ॥ २९ ॥

कूर्मकुक्कुटसर्पादिसमारूढाः सहस्रशः ॥

प्रकुर्वत्यो रुदन्त्यश्च गायन्त्यश्च तथा पराः ॥

नृत्यंत्यश्च हसंत्यश्च क्रीडासक्ताः परस्परम् ॥ ६.८८.३० ॥

ऊर्ध्वकेशा विकेशाश्च गात्रकेशाश्च भूरिशः ॥

लंबकेशा विकेशाश्च वाजिकेशास्तथैव च ॥३॥।

ह्रस्वदन्त्यो विदंत्यश्च दीर्घदन्त्यो विभीषणाः ॥

गजदंत्यस्तथैवान्या लोहदंत्योभयावहाः ॥ ३२ ॥

लंबकर्ण्यो विकर्ण्यश्च शूर्पकर्ण्यस्तथा पराः ॥

शंकुकर्ण्यः कुकर्ण्यश्च बहुकर्ण्यः सुकर्णिकाः ॥ ३३ ॥

एकवस्त्रा विवस्त्राश्च बहुवस्त्रास्तथा पराः ॥

चर्मप्रावरणाश्चैव कथाप्रावरणान्विताः ॥ ३४ ॥

खड्गहस्ताः शराहस्ताः कुंतहस्ताश्च भीषणाः ॥

पाशहस्तास्तथैवान्याः प्रासचापकराः पराः ॥

शूलमुद्गरहस्ताश्च भुशुंडिकरभूषिताः ॥ ३५ ॥

अथ ताभ्यां तथाऽऽकर्ण्य ताः सर्वा हर्षसंयुताः ॥

प्रस्थितास्तत्र ता यत्र ते कालयवनाः स्थिताः ॥३६॥

ततस्ते तत्समालोक्य बलं देवीसमुद्रवम् ॥

रौद्र रूपधरं तीव्रं विकृतं विकृतैर्मुखैः ॥३७॥

विषण्णवदनाः सर्वे भयभीता समंततः ॥

धावतो भक्षितास्ताभिर्देवताभिः सुनिर्दयम् ॥ ३८ ॥

बालवृद्धसमोपेतं तेषां राष्ट्रं दुरात्मनाम् ॥
स्त्रीभिश्च सहितं ताभिर्देवताभिः प्रभक्षितम् ॥३९॥
एवं निर्वास्य तद्राष्ट्रं सर्वास्ता हर्षसंयुताः ॥
भूय एव निजं स्थानं संप्राप्ता द्विजसत्तमाः ॥ ६.८८.४० ॥
ततः प्रोचुः प्रणम्योच्चैस्ताभ्यां विनयपूर्वकम् ॥
हतास्ते यवनाः कृष्णाः सपुत्रपशुबांधवाः ॥४॥।
उद्वासितस्तथा सर्वो देशस्तेषां स वै महान् ॥
सांप्रतं दीयतां कश्चिदाहारस्तृप्तिहेतवे ॥
निवासाय ततः स्थानं किंचिच्चावेद्यतां हि नः ॥ ४२ ॥
॥ देव्यावूचतुः॥ ॥
मर्त्यलोकेऽत्र या नार्यो गर्भवत्यः स्वपंति च ॥
संध्याकालप्रकाशे च तासां गर्भोऽस्तु वो द्रुतम् ॥ ४३ ॥
रुदंत्यो या विनिर्यांति चत्वरेषु त्रिकेषु च ॥
तासां गर्भस्तु युष्माकं संप्रदत्तः प्रभुज्यताम् ॥ ४४ ॥
उच्छिष्टा याः प्रसर्पंति रमन्ते च स्वपंति च ॥
तासां गर्भः समस्तानां युष्माकं भोज नाय वै ॥ ४५ ॥
सूतिकाभवने यस्मिन्नुच्छिष्टं चोपजायते ॥
स बालकस्तु युष्माकं भोजनाय प्रकल्पितः ॥ ४६ ॥
न षष्ठीजागरो यस्य बालकस्य भविष्यति ॥
स भविष्यति भोज्याय युष्माकं नात्र संशयः ॥ ४७ ॥
नाशं यास्यति वा यत्र पावकः सूतिकागृहे ॥
स भविष्यति भोज्याय युष्माकं बालरूपधृक् ॥ ४८ ॥
मांगल्यैः संपरित्यक्तं यद्भवेत्सूतिकागृहम् ॥
तस्मिन्यस्तिष्ठते बालः स युष्माकं प्रकल्पितः ॥४९॥
संध्यायां बालका ये वा स्वपंत्याकाशदेशगाः॥
ते सर्वे भोजनार्थाय युष्माकं संनिवेदिताः ॥ ६.८८.५० ॥
यस्य जन्मदिने प्राप्ते वर्षांते क्रियते न च ॥
मांगल्यं तस्य यद्गात्रं तद्युष्माकं प्रकल्पितम् ॥ ५१ ॥

तैलाभ्यंगं नरः कृत्वा यश्च स्नानं करोति न ॥
स दत्तो भोजनार्थाय युष्माकं नात्र संशयः ॥ ५२ ॥
उच्छिष्टो यः पुमांस्तिष्ठेद्यो वा चत्वरमध्यगः॥
भक्षणीयः स सर्वाभिर्निर्विकल्पेन चेतसा ॥५३ ॥
रजस्वलां व्रजेद्यो वा पुरुषः काममोहितः॥
नग्नः शेते तथा स्नाति भक्षणीयः स सत्वरम् ॥ ५४ ॥
दक्षिणाभिमुखो रात्रौ यश्च स्नाति विमूढधीः ॥
शेते च शयने सोऽपि भक्षणीयश्च सत्वरम् ॥५५॥
उदङ्मुखश्च यो रात्रौ दिवा वा दक्षिणामुखः ॥
मूत्रोत्सर्गं पुरीष वा प्रकुर्याद्भक्ष्य एव सः ॥ ५६ ॥
यः कुर्याद्रजनीवक्त्रे दधिसक्तुप्रभक्षणम् ॥
अंत्यजाभिगमं चाथ भक्षणीयो द्रुतं हि सः ॥ ५७ ॥
॥ सूत उवाच ॥ ॥
एवं ताभ्यां तदा प्रोक्ता देवतास्ताः समंततः ॥
परिवार्य तदा तस्थुः संप्रहृष्टेन चेतसा ॥ ५८ ॥
एतस्मिन्नंतरे राजा चमत्कारः प्रतापवान् ॥
प्रासादं निर्ममे ताभ्यां कैलासशिखरोपमम् ॥ ५९ ॥
ततः प्रभृति ते ख्याते क्षेत्रे तत्र महोदये ॥
अंबावृद्धाभिधाने च पुररक्षापरे सदा ॥ ६.८८.६० ॥
यः पुमान्प्रातरुत्थाय ताभ्यां पश्यति चाननम् ॥
तस्य संवत्सरंयावन्न च च्छिद्रं प्रजायते ॥ ६१ ॥
वृद्ध्यादौ वाथ चांते वा ताभ्यां पूजां करोति यः ॥
न तस्य जायते च्छिद्रं कथंचिदपि भूतले ॥ ६२ ॥
यात्राकाले पुमान्यश्च ताभ्यां पूजां समाचरेत् ॥
स वांछितफलं प्राप्य शीघ्रं स्वगृहमाप्नुयात् ॥ ६३ ॥
सदाष्टम्यां चतुर्दश्यां यस्ताभ्यां बलिमाहरेत् ॥
स कामानाप्नुयादिष्टानिह प्रेत्य च सद्गतिम् ॥ ६४ ॥
यो महानवमीसंज्ञे दिवसे श्रद्धयान्वितः ॥

ताभ्यां समाचरेत्पूजां स सदा स्यादकण्टकी ॥ ॥ ६५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येंऽबावृद्धामाहात्म्यवर्णनंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०८९



॥ सूत उवाच ॥ ॥

एवं तत्र स्थिते नित्यं तस्मिन्मातृगणे द्विजाः ॥

बालकानां क्षयो जज्ञे ब्राह्मणानां गृहेगृहे ॥ १ ॥

तरुणानां विशेषेण चमत्कारपुरोत्तरे ॥

छिद्रमन्वेषमाणास्ता भ्रमंत्यखिलदेवताः ॥ २ ॥

ततस्ते ब्राह्मणाः सर्वे ज्ञात्वा छिद्रसमुद्भवम् ॥

विघातं बालकानां च देवताभिर्विनिर्मितम् ॥ ३ ॥

अम्बावृद्धे समासाद्य पूजयित्वा प्रयत्नतः ॥

प्रोचुश्च दुःखसन्तप्ता विनयावनताः स्थिताः ॥ ४ ॥

रक्षार्थं सर्वविप्राणां चमत्कारेण भूभुजा ॥

भवद्भ्यां निर्मितः श्रेष्ठः प्रासादोऽयं मनोहरः ॥ ५ ॥

ह्रियंते बालका रात्रौ छिद्रं प्राप्य सहस्रशः ॥

युष्मदीयाभिरेताभिर्देवताभिः समन्ततः ॥ ६ ॥

प्रसादः क्रियतां तस्माद्ब्राह्मणानां महात्मनाम् ॥

नो चेत्पुरं परित्यज्य यास्यामोऽन्यत्र भूतले ॥ ७ ॥

तेषां तद्वचनं श्रुत्वा ततोंऽबा कृपयान्विता ॥

हत्वा पादप्रहारेण भूमिं चक्रे गुहां ततः ॥ ८ ॥

तस्यां स्वे पादुके न्यस्य ततः प्रोवाच देवताः ॥

सर्वास्ता नतसर्वांगीर्विनयेन समन्विताः ॥ ९ ॥

इमे मत्पादुके दिव्ये गुहामध्यगते सदा ॥

सर्वाभिः सेवनीये च न गन्तव्यं बहिः क्वचित् ॥ ६.८९.१० ॥

या काचिल्लौल्यमास्थाय निष्क्रमिष्यति मोहतः ॥

सा दिव्यभावनिर्मुक्ता शृगाली संभविष्यति ॥ ११ ॥

॥ देवता ऊचुः ॥ ॥

अत्र स्थाने महादेवि कोऽस्माकं प्रकरिष्यति ॥

पूजां को वात्र चाहारस्तस्माद्ब्रूहि सुरेश्वरि ॥ १२ ॥

॥ अम्बोवाच ॥ ॥

अत्रागत्य विनिर्मुक्ता योगिनो ध्यानचिन्तकाः ॥

पूजां सम्यक्करिष्यंति सर्वासां भक्तिसंयुताः ॥ १३ ॥

पादुके मे प्रपूज्यादौ मांस मद्यादिभिः क्रमात् ॥

अवाप्स्यंति च संसिद्धिं दुर्लभाममरैरपि ॥ १४ ॥

ततस्तथेति ताः प्रोच्य गुहामध्ये व्यवस्थिताः ॥

परिवार्य शुभे तस्याः पादुके मोक्षदायिके ॥ १५ ॥

ततस्तत्र समागत्य पुरुषा अपि दूरतः ॥

प्रपूज्य पादुके सम्यङ्मातॄस्ताश्च ततः परम्॥

प्रयांति च परां सिद्धिं जन्म मृत्युविवर्जिताम् ॥ १६ ॥

एतस्मिन्नंतरे नष्टा अग्निष्टोमादिकाः क्रियाः ॥

तीर्थयात्राव्रतान्येव संयमा नियमाश्च ये १७ ॥

ये चापि ब्राह्मणाः शांताः सदा मद्यस्य दूषणम् ॥

प्रकुर्वंति स्वहस्तेन तेऽपि मद्यैः पृथग्विधैः ॥ १८ ॥

तर्पयंति तथा मांसैस्त्यक्ताशेषमखक्रियाः ॥

पादुके मातृभिर्जुष्टे तथा धूपानुलेपनैः ॥ १९ ॥

एतस्मिन्नंतरे भीताः सर्वे देवाः सवासवाः ॥

दृष्ट्वा यज्ञक्रियोच्छेदं क्षुत्पिपासा समाकुलाः॥६.८९.२०॥।

प्रोचुर्महेश्वरं गत्वा विनयावनताः स्थिताः ॥

स्तुत्वा पृथग्विधैः सूक्तैर्वेदोक्तैः शतरुद्रियैः ॥ २१ ॥

देवा ऊचुः ॥ ॥

हाटकेश्वरजे क्षेत्रे पादुके तत्र संस्थिते ॥

अंबाया मातृभिः सार्धं गुहामध्ये सुगुप्तके ॥ २२ ॥

ब्राह्मणा अपिदेवेश मद्यमांसेन भक्तितः ॥

ताभ्यां पूजां प्रकुर्वंति प्रयांति परमां गतिम् ॥ २३ ॥

नष्टा धर्मक्रिया सर्वा मर्त्यलोकेत्र सांप्रतम् ॥

अस्माकं संक्षयो जातो यज्ञभागं विना प्रभो॥२४॥

तस्मात्त्वं कुरु देवेश यथा स्यात्पादुकाक्षयः॥

प्रभवंति मखा भूमावस्माकं स्युः परा मुदः ॥२५॥

॥ श्रीभगवानुवाच ॥ ॥

या सा अंबेति विख्याता शक्तिः सा परमेश्वरी॥

जगन्माताऽक्षया साक्षान्ममा पि जननी च सा ॥ २६ ॥

तत्कथं संक्षयस्तस्याः कर्तुं केनापि शक्यते ॥

मनसापि महाभागाः पादुकानां विशेषतः ॥ २७ ॥

परं तत्र करिष्यामि सुखोपायं सुरेश्वराः ॥

युष्मभ्यं पादुकायां च महत्त्वं येन जायते ॥ २८ ॥

एवमुक्त्वा ततो ध्यानं चक्रे देवो महेश्वरः ॥

व्यावृत्यकमलं हृत्स्थमष्टपत्रं सकर्णिकम् ॥ २९ ॥

तस्यांतर्गतमासीनमंगुष्ठाग्रमितं शुभम् ॥

द्वादशार्कप्रभं सूक्ष्मं स्वमात्मानं व्यलोकयत् ॥ ६.८९.३० ॥

तस्यैवं ध्यायमानस्य तृतीयनयनात्ततः ॥

श्वेतांबरधरा शुभ्रा निर्गता कन्यका शुभा ॥ ३१ ॥

अथ सा प्राह तं देवं प्रणिपत्य महेश्वरम् ॥

किमर्थं देव सृष्टास्मि ममादेशः प्रदीयताम् ॥ ३२ ॥

॥ श्रीभगवानुवाच ॥ ॥

हाटकेश्वरजे क्षेत्रे पादुके संस्थिते शुभे ॥

श्रीमातुर्जगतां मुख्ये ताभ्यां पूजां त्वमाचर ॥ ३३ ॥

कन्यकां संपरित्यज्य तवान्वयविवर्द्धिताम्॥

यः करिष्यति तत्पूजामाहारः स्यात्स मातृषु ॥ ३४ ॥

कौमारब्रह्मचर्य्येण त्वयापि च सुभक्तितः ॥

ताभ्यां पूजा प्रकर्तव्या नो चेन्नाशमवाप्स्यसि ॥ ३५ ॥

तव पूजा करिष्यन्ति ये नरा भक्तितत्पराः ॥

मातृणां संमतास्ते स्युः सर्वदैव सुखान्विताः ॥ ३६ ॥

एवमुक्त्वा ततस्तस्या मंत्रमार्गं यथोचितम् ॥

पूजामार्गं विशेषेण कथयामास विस्तरात् ॥ ३७।

ततो विसर्जयामास दत्त्वा छत्रादिभूषणम् ॥
प्रतिपत्तिं महादेवस्तांश्च सर्वान्सुरेश्वरान् ॥ ३८ ॥
॥ कुमार्युवाच ॥ ॥
त्वयेतत्कथितं देव त्वदन्वयसमुद्भवाः ॥
कन्यकाः पूजयिष्यंति पादुके ते सुशोभने ॥ ३९ ॥
कौमारब्रह्मचर्य्येण भविष्यत्यन्वयः कथम् ॥
एतन्मे विस्तरात्सर्वं यथावद्वक्तुमर्हसि ।। ६.८९.४० ॥ ॥
॥ श्रीभगवानुवाच ॥ ॥
यस्यायस्याः प्रसन्ना त्वं कन्यकाया वदिष्यसि ॥
मंत्रग्राममिमं सम्यक्त्वद्भावा सा भविष्यति ॥ ४१ ॥
एवं चान्या महाभागे पारंपर्येण कन्यकाः ॥
तव वंशोद्भवाः सर्वाः प्रभविष्यंति मंत्रतः ॥ ४२
ततः सा तां समासाद्य पादुकासंभवां गुहाम् ॥
पूजां चक्रे यथान्यायं यथोक्तं त्रिपुरारिणा ॥ ४३ ॥
॥ सूत उवाच ॥ ॥
तदन्वयसमुत्थायाः कन्यकायाः करेण यः ॥
पादुकाभ्यां नरः पूजां प्रकरोति समाहितः ॥
इह लोके सुखं प्राप्य स स्यात्प्रेत्य सुखान्वितः ॥ ४४ ॥
तस्मात्सर्वप्रयत्नेन कन्याहस्तेन पादुके ॥
पूजनीये विशेषेण पूज्या सा चापि कन्यका ॥ ४५ ॥
वांछद्भिः शाश्वतं सौख्यमिह लोके परत्र च ॥
मानवैर्भक्तिसंयुक्तैरित्युवाच महेश्वरः ॥ ४६ ॥
एतद्वः सर्वमाख्यातं माहात्म्यं पादुकोद्भवम् ॥
श्रीमातुरनुषंगेण अंबादेव्या द्विजोत्तमाः ॥ ४७ ॥
यश्चैतच्छृणुयाद्भक्त्या चतुर्दश्यां समाहितः ॥
तथाष्टम्यां विशेषेण स प्राप्नोति परं पदम् ॥ ४८ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्रीमातुः पादुकामाहात्मवर्णनंनामैकोननवतितमोऽध्यायः ॥ ८९ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९०



॥ ऋषय ऊचुः ॥ ॥

अग्नितीर्थं त्वया प्रोक्तं ब्रह्मतीर्थं च यत्पुरा ॥

न तयोः कथितोत्पत्तिर्माहात्म्यं च महामते ॥ १ ॥

तस्माद्विस्तरतो ब्रूहि एकैकस्य पृथक्पृथक् ॥

न वयं तृप्तिमापन्नाः शृण्वतस्ते वचोऽमृतम् ॥ २ ॥

॥ सूत उवाच ॥ ॥

अत्र वः कीर्तयिष्यामि कथां पातकनाशिनीम् ॥

अग्नितीर्थसमुद्भूतां सर्वसौख्यावहां शुभाम्॥ ३ ॥

सोमवंशसमुद्भूतः प्रतीपो नाम भूपतिः ॥

पुरासीच्छौर्यसंपन्नो ब्रह्मज्ञानविचक्षणः॥ ४ ॥

तस्य पुत्रद्वयं जज्ञे सर्वलक्षणलक्षितम् ॥

देवापिः प्रथमस्तत्र द्वितीयः शंतनुर्द्विजाः ॥ ५ ॥

अथो शिवपदं प्राप्ते प्रतीपे नृपसत्तमे ॥

तपोऽर्थं राज्यमुत्सृज्य देवापिर्नियर्यौ वनम् ॥ ६ ॥

ततश्च मंत्रिभिः सर्वैः शंतनुस्तस्य चानुजः ॥

पितृपैतामहे राज्ये सत्वरं सन्नियोजितः ॥ ७ ॥

एतस्मिन्नंतरे शक्रो न ववर्ष क्रुद्धाऽन्वितः ॥

यावद्द्वादशवर्षाणि तस्मि न्राज्यं प्रशासति ॥ ८ ॥

अतः कृच्छ्रं गतः सर्वो लोकः क्षुत्परिपीडितः ॥

चामुंडासदृशो जातो यो न मृत्युवशंगतः ॥ ९ ॥

संत्यक्ताः पतिभिर्नार्यः पुत्राश्च पितृभिर्निजैः ॥

मातरश्च तथा पुत्रैर्लोकेष्वन्येषु का कथा ॥ ६.९०.१० ॥

दैवयोगात्क्वचित्किंचित्कस्यचिद्यदि दृश्यते ॥

सस्यं सिद्धमसिद्धं वा ह्रियते वीर्यतः परैः ॥ ११ ॥

शुष्का महीरुहाः सर्वे तथा ये च जलाशयाः॥

नद्यश्च स्वल्पतोयाश्च गंगाद्या अपि संस्थिताः ॥ १२ ॥

एवं वृष्टेः क्षये जाते नष्टे धर्मपथे तथा ॥

लोकेऽस्मिन्ननस्थिसंघातैः पूरिते भस्मना वृते ॥ १३ ॥

न कश्चिद्यजनं चक्रे न स्वाध्यायं न च व्रतम् ॥

एवमालोक्यते व्योम वृष्ट्यर्थं क्षुत्समाकुलैः ॥ १४ ॥

एतस्मिन्नेव काले तु विश्वामित्रो महामुनिः ॥

चर्मास्थिशेषसर्वांगो बुभुक्षार्त इतस्ततः ॥ १५ ॥

परिभ्रमंस्ततः प्राप्य कंचिद्ग्रामं निरुद्वसम् ॥

मृतमर्त्योद्भवैर्व्याप्तमस्थिसंघैः समंततः ॥ १६ ॥

अथ तत्र भ्रमन्प्राप्तश्चंडालस्य निवेशनम्॥

शून्ये गोऽस्थिसमाकीर्णे दुर्गंधेन समावृते ॥ १७ ॥

अथापश्यन्मृतं तत्र सारमेयं चिरोषितम् ॥

संशुष्कं गन्धनिर्मुक्तं गृहप्रांते व्यवस्थितम् ॥ १९ ॥

समादाय ततस्तं च आपद्धर्मपरायणः ॥

प्रक्षाल्य सलिले पश्चात्प्रचकर्त तदा मुनिः ॥ १९ ॥

ततश्च श्रपयामास सुसमिद्धे हुताशने ॥

क्षुत्क्षामो भोजनार्थाय ततः पाकाग्रमेव च ॥ ६.९०.२० ॥

समादाय पितॄंस्तर्प्य यावदग्नौ जुहोति सः ॥

तावद्वह्निः परित्यज्य समस्तमपि भूतलम् ॥ २१ ॥

गतश्चादर्शनं सद्यः सर्वेषां क्षितिवासिनाम् ॥

चित्ते कोपं समाधाय शक्रस्योपरि भूरिशः ॥ २२ ॥

एतस्मिन्नंतरे वह्नौ मर्त्यलोकाद्विनिर्गते ॥

विशेषात्पीडिता लोका येऽवशिष्टा धरातले ॥ २३ ॥

एतस्मिन्नंतरे देवा ब्रह्मविष्णुपुरः सराः ॥

वह्नेरन्वेषणार्थाय वभ्रमुर्धरणीतले ॥ २४ ॥

अथ तैर्भ्रममाणैश्च प्रदृष्टोऽभूद्गजो महान् ॥

निश्वसन्पतितो भूमौ वह्नितापप्रपीडितः ॥ २५ ॥

अथ देवा गजं दृष्ट्वा पप्रच्छुस्त्वरयाऽन्विताः ॥

कच्चित्त्वया स दृष्टोऽत्र कानने पावको गज ॥ २६ ॥

॥ गज उवाच ॥ ॥

वंशस्तंबेऽत्र संकीर्णे संप्रविष्टो हुताशनः ॥

सांप्रतं तेन निर्दग्धः कृच्छ्रादत्राहमागतः ॥ २७ ॥

अथ तैर्वेष्टितस्तस्मिन्वंशस्तंबे हुताशनः ॥

देवैर्दत्त्वा गजेंद्रस्य शापं पश्चाद्विनिर्गतः ॥ ॥ २८ ॥

यस्मात्त्वयाहमादिष्टो देवानां वारणाधम ॥

तस्मात्तव मुखे जिह्वा विपरीता भविष्यति ॥ २९ ॥

एवं शप्त्वा गजं शीघ्रं नष्टो वैश्वानरः पुनः ॥

देवाश्चापि तथा पृष्ठे संलग्नास्तद्दिदृक्षया ॥ ६.९०.३० ॥

अथ दृष्टः शुकस्तैश्च भ्रममाणैर्महावने ॥

भोभोः शुक त्वया वह्निर्यदि दृष्टो निवेद्यताम् ॥ ३१ ॥

शुक उवाच ॥ ॥

योऽयं संदृश्यते दूराच्छमीगर्भे च पिप्पलः ॥

एतस्मिंस्तिष्ठते वह्निरश्वत्थे सुरसत्तमाः ॥ ३२ ॥

अत्रस्थो यः कुलायो म आसीच्छिशुसमन्वितः ॥

संदग्धस्तत्प्रतापेन अहंकृच्छ्राद्विनिर्गतः ॥३३॥

तच्छ्रुत्वा तैः सुरैः सर्वैः शमीगर्भः स तत्क्षणात् ॥

वेष्टितः पावकोऽप्याशु शुकं शप्त्वा विनिर्गतः ॥ ३४ ॥

अहं यस्मात्त्वया पाप देवानां संनिवेदितः ॥

तस्माच्छुक न ते वाणी विस्पष्टा संभविष्यति ॥ ३५ ॥

एवमुक्त्वा जातवेदा देवादर्शनवांछया ॥

हाटकेश्वरजे क्षेत्रे देवस्य परमेष्ठिनः ॥ ३६ ॥

जलाशयं सुगम्भीरं पूर्वोत्तरदिक्संस्थितम् ॥

दृष्ट्वा तत्र प्रविष्टस्तु निभृतं च समाश्रितः ॥ ३७ ॥

एतस्मिन्नंतरे तत्र मत्स्यकच्छपदर्दुराः ॥

वह्निप्रतापनिर्दग्धा दृश्यंते शतशो मृताः ॥ ३८ ॥

अथ चैकोऽर्धनिर्दग्ध आयुःशेषेण दर्दुरः ॥

तस्माज्जलाद्विनिष्क्रांतो दृष्टो देवैश्च दूरतः ॥ ३९ ॥

पृष्टश्च ब्रूहि चेद्भेक त्वया दृष्टो हुताशनः ॥

तदर्थमिह संप्राप्ताः सर्वे देवाः सवासवाः ॥ ६.९०.४० ॥

॥ भेक उवाच ॥ ॥

अस्मिञ्जलाशये वह्निः सांप्रतं पर्यवस्थितः ॥

तस्यैते जलमध्यस्था मृता भूरिजलोद्भवाः ॥ ४१ ॥

अस्माकं निधनं प्राप्तं कुटुम्बं सुरसत्तमाः ॥

अहं कृच्छ्रेण निष्क्रांत एतस्माज्जलसंश्रयात् ॥ ४२ ॥

तच्छ्रुत्वा ते सुराः सर्वे सर्वतस्तं जलाशयम् ॥

वेष्टयित्वा स्थितास्तत्र वह्निर्भेकं शशाप ह ॥ ४३ ॥

यस्माद्भेक त्वया मूढ देवेभ्योऽहं निवेदितः ॥

तस्मात्त्वं भविता नूनं विजिह्वोऽत्र धरातले ॥ ४४ ॥

एवमुक्त्वा ततः स्थानात्ततो वह्निर्विनिर्गतः ॥

तावत्स ब्रह्मणा प्रोक्तः स्वयमेव महात्मना ॥ ४५ ॥

भोभो वह्ने किमर्थं त्वं देवान्दृष्ट्वा प्रगच्छसि ॥

त्वमाद्यश्चैव सर्वेषामेतेषां संस्थितो मुखम् ॥ ४६ ॥

त्वय्याहुतिर्हुता सम्यगादित्यमुपतिष्ठते ॥

आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ४७ ॥

तस्माद्धाता विधाता च त्वमेव जगतः स्थितः ॥

संतुष्टे धार्यते विश्वं त्वयि रुष्टे विनंक्ष्यति ॥ ४८ ॥

अग्निष्टोमादिका यज्ञास्त्वयि सर्वे प्रतिष्ठिताः ॥

अथ सर्वाणि भूतानि जीवंति तव संश्रयात् ॥ ४९ ॥

त्वमग्ने सर्वभूतानामन्तश्चरसि सर्वदा ॥

तेनैवान्नं च पानं च जठरस्थं पचत्यलम ॥ ६.९०.५० ॥

तस्मात्कुरु प्रसादं त्वं सर्वेषां च दिवौकसाम् ॥

कोपस्य कारणं ब्रूहि यतस्त्यक्त्वा प्रगच्छसि ॥ ५१ ॥ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा देवस्य परमेष्ठिनः ॥

प्रोवाच प्रणयात्कोपं कृत्वा नत्वा च पद्मजम् ॥ ५२ ॥

॥ अग्निरुवाच ॥ ॥

अहं कोपं समाधाय शक्रस्योपरि पद्मज ॥

प्रणष्टो जगदुत्सृज्य यस्मात्तत्कारणं शृणु ॥ ५३ ॥

अनावृष्ट्या महेन्द्रस्य संजातश्चौषधीक्षयः ॥

ततोऽस्म्यहं श्वमांसेन विश्वामित्रेण योजितः ॥ ५४ ॥

एतस्मात्कारणान्नष्टो न कामान्न च संभ्रमात् ॥

अभक्ष्यभक्षणाद्भीतः सत्यमेतन्मयोदितम् ॥५५॥

तच्छ्रुत्वा स चतुर्वक्त्रः शक्रमाह ततः परम् ॥

युक्तमेव शिखी प्राह किमर्थं न च वर्षसि ॥ ५६ ॥

॥ शक्र उवाच ॥ ॥

ज्येष्ठं भ्रातरमुल्लंघ्य शंतनुः पृथिवीपतिः ॥

पितृपैतामहे राज्ये स निविष्टः पितामह ॥ ५७ ॥

एतस्मात्कारणाद्वृष्टिः संनिरुद्धा मया प्रभो ॥

तद्ब्रूहि किं करोम्यद्य त्वं प्रमाणं पितामह ॥ ५८ ॥

॥ पितामह उवाच ॥ ॥

तस्याक्रमस्य संप्राप्तं पापं तेन महीभुजा ॥

उपभुक्तमवृष्ट्याद्य तस्माद्वृष्टिं कुरु द्रुतम् ॥ ५९ ॥

मद्वाक्याद्याति नो नाशं यावदेतज्जगत्त्रयम् ॥

अकालेनापि देवेन्द्र सस्याभावाद्बुभुक्षया ॥ ६.९०.६० ॥

एतस्मिन्नंतरे शक्र आदिदेश त्वरान्वितः ॥

पुष्करावर्तकान्मेघान्वृष्ट्यर्थं धरणीतले ॥ ६१ ॥

तेऽपि शक्रसमादेशात्समस्तधरणीतलम् ॥

तत्क्षणात्पूरयामासुर्गर्जन्तो विद्युदन्विताः ॥ ६२ ॥

अथाब्रवीत्पुनर्ब्रह्मा देवैः सार्धं हुताशनम् ॥

अग्निहोत्रेषु विप्राणां प्रत्यक्षो भव पावक ॥

सांप्रतं त्वं वरं मत्तः प्रार्थयस्वाभिवांछितम् ॥ ६३ ॥

॥ अग्निरुवाच ॥ ॥

अयं जलाशयः पुण्यो मन्नाम्ना पृथिवीतले ॥
ख्यातिं यातु चतुर्वक्त्र वह्नितीर्थमिति स्मृतम् ॥६४॥
अत्र यः प्रातरुत्थाय स्नात्वा श्रद्धा समन्वितः ॥
अग्निसूक्तं जपित्वा च त्वां प्रपश्यति सादरम् ॥
तस्य तुष्टिस्त्वया कार्या द्रुतं मद्वाक्यतः प्रभो ॥ ६५ ॥
॥ श्रीब्रह्मोवाच ॥ ॥
अत्र यः प्रातरुत्थाय स्नात्वा वै वेदविद्द्विजः ॥
अग्निसूक्तं जपित्वा च वीक्षयिष्यति मां ततः ॥ ६६ ॥
अग्निष्टोमस्य यज्ञस्य सकलं लप्स्यते फलम् ॥
अनेकजन्मजं पापं नाशमेष्यति पावक ॥ ६७ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वा स भगवान्विरराम पितामहः ॥
पावकोऽपि च विप्राणामग्निहोत्रेषु संस्थितः ॥ ६८ ॥
एवं तत्र समुद्भूतं वह्नितीर्थं महाद्भुतम् ॥
तत्र स्नातो नरः प्रातः सर्वपापैः प्रमुच्यते ॥ ६९ ॥
॥ अग्निरुवाच ॥ ॥ ममातृप्तस्य लोकेश तावद्द्वादशवत्सरान् ॥
क्षुत्पीडासंवृते मर्त्ये न प्राप्तं कुत्रचिद्धविः ॥ ६.९०.७० ॥
भविष्यंति तथा यज्ञा कालेन महता विभो ॥
संजातैः पशुभिर्भूयः सस्यादैरपरैर्भुवि ॥ ७१ ॥
॥ श्रीब्रह्मोवाच ॥ ॥
अत्र ये ब्राह्मणाः केचिन्निवसंति हुताशन ॥
वसोर्द्धाराप्रदानेन ते त्वां नक्तंदिनं सदा ॥ ७२ ॥
तर्पयिष्यंति सद्भक्त्या ततः पुष्टिमवाप्स्यसि ॥
तेऽपि काम्यैर्मनोऽभीष्टैर्भविष्यंति समन्विताः ॥ ७३ ॥
संक्रांति समये येषां वसोर्धाराप्रदायिनाम् ॥
भविष्यति क्षुतं वह्ने हूयमाने तवानल ॥ ७४ ॥
तेषां पापं च यत्किंचिज्ज्ञानतोऽज्ञानतः कृतम् ॥
तद्यास्यति क्षयं सर्वमाजन्ममरणांतिकम्॥ ७५ ॥

त्वयि तुष्टिं गते पश्चाद्भविष्यति महीपतिः ॥
शिबिर्नाम सुविख्यात उशीनरसमुद्रवः ॥ ७६ ॥
स कृत्वा श्रद्धया युक्तः सत्रं द्वादशवार्षिकम्॥
वसोर्द्धाराप्रदानेन वर्षं त्वां तर्पयिष्यति ॥
कलशस्य च वक्त्रेणाविच्छिन्नेन दिवानिशम् ॥ ७७ ॥
ततस्तुष्टिं परां प्राप्य परां पुष्टिमवाप्स्यसि ॥
पूज्यमानो धरापृष्ठे सर्वैर्वेदविदां वरैः ॥ ७८ ॥
अद्यप्रभृति यत्किंचित्कर्म चात्र भविष्यति ॥
शांतिकं पौष्टिकं वापि वसोर्द्धारासमन्वितम् ॥
संभविष्यति तत्सर्वं तव तृप्तिकरं परम्॥ ७९ ॥
अपि यद्वैश्वदेवीयं कर्म किंचिद्द्विजन्मनाम् ॥
वसोर्द्धाराविहीनं च निष्फलं संभविष्यति ॥ ६.९०.८० ॥
यस्माद्भवति संपूर्णं कर्म यज्ञादिकं हि तत् ॥
शांतिकं वैश्वदेवं च पूर्णाहुतिरिहोच्यते ॥ ८१ ॥
यः सम्यक्छ्रद्धया युक्तो वसोर्द्धारां प्रदास्यति ॥
स कामं मनसा ध्यातं समवाप्स्यति कृत्स्नशः ॥ ८२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वसोर्द्धारामाहात्म्यवर्णनंनाम नवतितमोऽध्यायः ॥ ९० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९१



॥ सूत उवाच ॥ ॥

एवमुक्त्वा स भगवान्विरराम पितामहः ॥

संतोष्य पावकं क्रुद्धं स्वयमेव द्विजोत्तमाः ॥ १ ॥

ततः सर्वैः सुरैः सार्धं शक्रविष्णुशिवादिभिः ॥

जगाम ब्रह्मलोकं च देवास्ते च निजं पदम् ॥ २ ॥

पावकोऽपि द्विजेंद्राणामग्निहोत्रेषु संस्थितः ॥

हविर्जग्राह विधिवद्वसोर्द्धारोद्भवं तथा ॥ ३ ॥

एवं तत्र समुद्भूतमग्नितीर्थमनुत्तमम् ॥

यत्र स्नातो नरः प्रातर्मुच्यते दिनजादघात् ॥ ४ ॥

अथ संप्रस्थितान्दृष्ट्वा तान्देवान्स्वाश्रमं प्रति ॥

गजेंद्रशुकमण्डूकास्ते प्रोचुर्दुःखसंयुताः ॥५॥

युष्मत्कृते वयं शप्ताः पावकेन सुरेश्वराः ॥

तस्माज्जिह्वाकृतेऽस्माकमुपायश्चिंत्यतामपि ॥६॥

॥ देवा ऊचुः ॥ ॥

विपरीतापि ते जिह्वा यथान्येषां गजोत्तम ॥

कार्यक्षमा न संदेहो भविष्यति विशेषतः ॥ ७ ॥

तथा यूयं नरेन्द्राणां मंदिरेषु व्यवस्थिताः ॥

बहु मानसमायुक्ता मृष्टान्नं भक्षयिष्यथ ॥ ८ ॥

यथा च शुक ते जिह्वा कृता मंदा हविर्भुजा ॥

तथापि भूमिपालानां शंसनीया भविष्यति ॥ ९ ॥

श्रीमतां च तथान्येषामस्मदीयप्रसादतः ॥

त्वं च मंडूक यत्तेन विजिह्वो वह्निना कृतः ॥

तद्भविष्यति ते शब्दो विजिह्वस्यापि दीर्घगः ॥ ६.९१.१० ॥

एवमुक्त्वाऽथ ते देवाः स्वस्थानं प्रस्थितास्ततः ॥

तेषामनुग्रहं कृत्वा कृपया परया युता ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागररखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽग्नितीर्थोत्पत्तिवर्णनंनामैकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९२



॥ सूत उवाच ॥ ॥

अग्नितीर्थस्य माहात्म्यमेतद्वः परिकीर्तितम् ॥

ब्रह्मकुंडसमुत्पत्तिरधुना श्रूयतां द्विजाः ॥ १ ॥

यदा संस्थापितो ब्रह्मा मार्कंडेन महात्मना ॥

तदा विनिर्मितं तत्र कुण्डं शुचिजलान्वितम् ॥ २ ॥

प्रोक्तं च कार्तिके मासि कृत्तिकास्थे निशाकरे ॥

सम्यग्भीष्मव्रतं कृत्वा स्नात्वात्र सलिले शुभे ॥ ३ ॥

पूजयिष्यति यो देवं पद्मयोनिं ततः परम् ॥

स शूद्रोऽपि तनुं त्यक्त्वा ब्रह्मयोनौ प्रयास्यति ॥ ४ ॥

ब्राह्मणोऽपि यदि स्नानं तत्र कुण्डे करिष्यति ॥

कृत्वा भीष्मव्रतं सम्यग्ब्रह्मलोकं प्रयास्यति ॥ ५ ॥

एवं प्रवदतस्तस्य मार्कंडेयस्य सन्मुनेः ॥

श्रुतं तत्सकलं वाक्यं पशुपालेन केनचित् ॥ ६ ॥

ततः श्रद्धाप्रयुक्तेन तेन तद्भीष्मपंचकम् ॥

यथावद्विहितं सम्यक्कार्तिके मासि संस्थिते ॥ ७ ॥

ततश्च कृत्तिकायोगे पूर्णिमायां यथाविधि ॥

संपूज्य पद्मजं पश्चात्पूजितः पुरुषोत्तमः ॥ ८ ॥

ततः कालविपाकेन स पंचत्वमुपागतः ॥

ब्राह्मणस्य गृहे जातः पुरेऽत्रैव द्विजोत्तमाः ॥

जातिस्मरः प्रभायुक्तः पितृमातृप्रतुष्टिदः ॥ ९ ॥

एवं प्रगच्छतस्तस्य वृद्धिं तत्र पुरोत्तमे ॥

पितृमातृसमुद्भूतो यादृक्स्नेहो व्यवस्थितः ॥ ६.९२.१० ॥

अन्यदेहोद्भवे वापि तस्य शूद्रेपरिस्थितः ॥

स तस्य धनसंपन्नः सदैव कुरुते द्विजः ॥ ११ ॥

उपकारप्रदानं च यत्किंचित्तस्य संमतम् ॥

अन्यस्मिन्दिवसे शूद्रः स पिता पूर्वजन्मनः ॥
तस्य पञ्चत्वमापन्नः संप्राप्ते चायुषः क्षये ॥ १२ ॥
अथ तस्य महाशोकं स कृत्वा तदनंतरम् ॥
चकार प्रेतकार्याणि निःशेषाणि प्रभक्तितः ॥ १३ ॥
अथ तस्य समालोक्य तादृशं तद्विचेष्टितम् ॥
पृष्टः स कौतुकाविष्टैः पितृमातृसुतादिभिः ॥ १४ ॥
कस्मात्त्वमस्य नीचस्य पशुपालस्य सर्वदा ॥
अतिस्नेहसमायुक्तो निःस्पृहस्यापि शंस नः ॥ १५ ॥
तस्यापि प्रेतकार्याणि मृतस्यापि करोषि किम् ॥
एतन्नः सर्वमाचक्ष्व न चेद्गुह्यं व्यवस्थितम् ॥ १६ ॥
तेषां तद्वचनं श्रुत्वा किंचिल्लज्जासमन्वितः ॥
तानब्रवीच्छृणुध्वं च कथयिष्याम्यसंशयम् ॥ १७ ॥
अहमस्यान्यदेहत्वे पुत्र आसं सुसंमतः ॥
पशुपालनकर्मज्ञः प्राणेभ्यो वल्लभः सदा ॥ १८ ॥
कस्यचित्त्वथ कालस्य मार्कंडस्य महामुनेः ॥
श्रुतं प्रवदतो वाक्यं ब्रह्मकुण्डसमुद्भवम् ॥ १९ ॥
कार्तिक्यां कृत्तिकायोगे भीष्मपञ्चककृन्नरः ॥
सम्यक्छ्रद्धासमुत्पन्नो योऽत्र स्नानं करिष्यति ॥ ६.९२.२० ॥
दृष्ट्वा पितामहं देवं पूजयित्वा जनार्दनम् ॥
स भविष्यति शूद्रोऽपि ब्राह्मणश्चान्यजन्मनि ॥ २१ ॥
तन्मया विहितं सम्यक्स्नात्वा तत्र शुभावहे ॥
सुकुण्डे कार्तिके मासि तेन जातोऽस्मि सद्द्विजः ॥ २२ ॥
चन्द्रोदयस्य विप्रर्षेरन्वये भुवि विश्रुते ॥॥
संस्मरन्पूर्विकां जाति तेन स्नेहो मम स्थितः ॥
तस्योपरि महान्नित्यं शूद्रस्यापि निरर्गलः ॥ २३ ॥
अतोऽहं कृत्तिकायोगे कार्तिक्यां भक्तिसंयुतः ॥
ज्ञात्वा करोमि भीष्मस्य पंचकं व्रतमुत्तमम् ॥ २४ ॥
॥ सूत उवाच ॥ ॥

एवं तस्य वचः श्रुत्वा ते चान्ये च द्विजोत्तमाः ॥।

भीष्मस्य पञ्चकं चक्रुः सम्यक्छ्रद्धासमन्विताः। २५ ॥

ततःप्रभृति तत्कुण्डं विख्यातं धरणीतले ॥

स्थितमुत्तरदिग्भागे ब्रह्मकुण्डमिति स्मृतम् ॥ २६ ॥

यः स्नानं सर्वदा तत्र ब्राह्मणः प्रकरोति वै ॥

स संभवति विप्रेंद्रो जायमानः पुनः पुनः ॥ २७ ॥

इतिश्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्रह्मकुण्डमाहात्म्यवर्णनंनाम द्विनवतितमोध्यायः ॥९२॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९३

https://sa.wikisource.org/s/fld
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

सूत उवाच ॥ ॥

अथान्यदपि तत्रास्ति गोमुखाख्यं सुशोभनम्॥

यद्गोवक्त्रात्पुरा लब्धं सर्वपातकनाशनम् ॥ १ ॥

पुरासीदत्र गोपालः कश्चित्कुष्ठसमावृतः ॥

चमत्कारपुरं विप्र अतीव क्षामतां गतः ॥ २ ॥

कस्यचित्त्वथ कालस्य तेन मार्गेण गोकुलम् ॥

मध्याह्नसमये प्राप्तं चंद्रे चित्रासमन्वितः ॥ ३ ॥

एकादश्यां तृषार्त्तं च भास्करे वृषसंस्थिते ॥

एकयापि ततो धेन्वा तृणस्तम्बमतीव हि ॥

नीलमालोकितं तत्र दूरादेत्य प्रहर्षिता ॥ ४ ॥

दन्तैर्द्रुतं समुत्पाट्य यावदाकर्षति द्विजाः ॥

तावत्तज्जडमार्गेण तोयधारा विनिर्गता ॥ ५ ॥

अथास्वाद्य तृणं तस्मात्तृषार्ता च शनैःशनैः ॥

पपौ तोयं सुविश्रब्धा सुस्वादु क्षीरसंनिभम् ॥ ६ ॥

तस्या वेगेन तत्तोयं पिबन्त्यास्तत्रभूतले ॥

गर्ता जाता सुविस्तीर्णा सलिलेन समावृता ॥ ७ ॥

ततोऽन्याः शतशो गावः पपुस्तोयं मुनिर्मलम् ॥

तृषार्त्तास्तद्द्विजश्रेष्ठाः पीयूषरससंनिभम् ॥ ८ ॥

यथायथा गता गावस्तत्र तोयं पिबंति ताः ॥

सा गर्ता वक्त्रसंस्पर्शाद्वृद्धिं याति तथा तथा ॥ ९ ॥

ततश्च गोकुले कृत्स्ने जाते तृष्णाविवर्जिते ॥

गोपालोऽपि तृषार्तस्तु तस्मिंस्तोये विवेश च ॥ ६.९३.१० ॥

अंगं प्रक्षाल्य पीत्वापो यावन्निष्क्रामति द्रुतम् ॥

तावत्पश्यति गात्रं स्वं द्वादशार्कसमप्रभम् ॥ ११ ॥

ततो विस्मयमापन्नो गत्वा स्वीयं निकेतनम् ॥

वृतांतं कथयामास लोकानां पुरतोऽखिलम् ॥ १२ ॥

तृणस्तम्बं यथा धेन्वा तत्रोत्पाट्य प्रशक्तितः ॥

यथा विनिर्गतं तोयं यथा तेनावगाहितम् ॥ १३ ॥

तद्दृष्ट्वा मानवाः सर्वे गत्वा दिव्यं जलं च तत् ॥

व्याधिग्रस्ता विशेषेण स्नानं चक्रुः समाहिताः ॥।४॥

भवंति च विनिर्मुक्ता रोगैः पापैश्च तत्क्षणात्॥

अपापाश्च पुनर्यांति तत्क्षणात्त्रिदिवालयम् ॥ १५ ॥

ततःप्रभृति तत्ख्यातं तीर्थं गोमुखसंज्ञितम् ॥

गोमुखाद्भूतले जातं यतश्चैवं द्विजोत्तमाः ॥ १६ ॥

अथ भीतः सहस्राक्षस्तद्दृष्ट्वा स्वर्गदायकम् ॥

अक्लेशेन मनुष्याणां पूरयामास पांसुभिः ॥ १७ ॥

॥ ऋषय ऊचुः ॥ ॥

किं तत्कारणमादिष्टं येन तत्तादृशं जलम् ॥

तस्मात्स्थानाद्विनिष्क्रांतं सूतपुत्र वदस्व नः ॥ १८ ॥

॥ सूत उवाच ॥ ॥

अत्र पूर्वं तपस्तप्तमम्बरीषेण भूभुजा ॥

पुत्र शोकाभिभूतेन तोषितो गरुडध्वजः ॥ १९ ॥

तस्य पुत्रः सुविख्यातः सुवर्चा इति विश्रुतः ॥

एको बभूव वृद्धत्वे कथंचिद्द्विजसत्तमाः ॥ ६.९३.२० ॥

पूर्वकर्मविपाकेन स बालोऽपि च तत्सुतः ॥

कुष्ठव्याधिसमाक्रांतः पितृमातृसुदुःखदः ॥ २१ ॥

अथ तत्कामिकं क्षेत्रं स गत्वा पृथिवीपतिः ॥

चकार रोगनाशाय स्वपुत्रार्थं महत्तपः ॥ २२ ॥

ततस्तुष्टिं गतस्तस्य स्वयमेव जनार्दनः ॥

प्रदाय दर्शनं वाक्यं ततः प्रोवाच सादरम् ॥ २३ ॥

परितुष्टोऽस्मि ते वत्स तस्माच्चित्तेऽभिवांछितम् ॥

प्रार्थयस्व प्रयच्छामि वरं पुत्र न संशयः ॥ २४ ॥

॥ राजोवाच ॥ ॥

ममायं संमतः पुत्रो ग्रस्तः कुष्ठेन केशव ॥
बालोऽपि तत्कुरुष्वास्य कुष्ठव्याधिपरिक्षयम् ॥ २५ ॥
॥ श्रीभगवानुवाच ॥ ॥
एष आसीत्पुरा राजा मेघवाहनसंज्ञितः ॥
ब्रह्मण्यश्च कृतज्ञश्च सर्वशास्त्रार्थपारगः ॥ २६ ॥
कस्यचित्त्वथ कालस्य ब्राह्मणोऽनेन घातितः ॥
अंतःपुरे निशाकाले प्रविष्टो जारकर्मकृत ॥ २७ ॥
अथ पश्यति यावत्स प्रभातेऽभ्युदिते रवौ ॥
यज्ञोपवीतसंयुक्तस्तावत्स द्विजरूपधृक् ॥ २८ ॥
अथ तं ब्राह्मणं मत्वा घृणाविष्टः सुदुःखितः ॥
गत्वा काशीपुरीं पश्चात्तपश्चक्रे समाहितः ॥ २९ ॥
राज्ये पुत्रं समाधाय वैराग्यं परमं गतः ॥
नियतो नियताहारो भिक्षान्नकृतभोजनः ॥ ६.९३.३० ॥
ततः कालेन संप्राप्तो यमस्य सदनं प्रति ॥
विपाप्मापि च चिह्नेन युक्तोऽयं पृथिवीपतिः ॥ ३१ ॥
ब्रह्मघातोद्भवेनैव बालभावेऽपि संस्थिते ॥
येऽत्र कुष्ठसमायुक्ता दृश्यंते मानवा भुवि ॥
तैर्नूनं ब्राह्मणाघातो विहितश्चान्यजन्मनि ॥ ३२ ॥
हाटकेश्वरजे क्षेत्रे यो गत्वा श्राद्धमाचरेत् ॥
पितॄणां चैव सर्वेषामनृणः स प्रजायते ॥ ३३ ।
न ब्राह्मणवधाद्बाह्यं कुष्ठव्याधिः प्रजायते ॥
एतत्सत्यं विजानीहि वदतो मम भूपते ॥ ३४ ॥
॥ अंबरीष उवाच ॥ ॥
एतदर्थं सुराधीश मया त्वं पूजितः प्रभो ॥
प्रसन्ने त्वयि देवेश नासाध्यं विद्यते भुवि ॥ ३५ ॥
एवमुक्तस्ततस्तेन भगवान्मधुसूदनः ॥
पातालजाह्नवीतोयं स सस्मार समाधिना ॥३६॥
सा ध्याता सहसा तेन विष्णुना प्रभविष्णुना ॥

कृत्वा तु विवरं सूक्ष्मं विनिष्क्रांताऽथ तत्क्षणात् ॥ ३७ ॥

ततः प्रोवाच वचनमंबरीषं चतुर्भुजः ॥

निमज्जतु सुतस्तेऽत्र सुपुण्ये जाह्नवीजले ॥ ३८ ॥

येन कुष्ठविनिर्मुक्तस्तत्क्षणादेव जायते ॥

तथा ब्रह्मवधोद्भूतैः पातकैरुपपातकैः ॥ ३९ ॥

एतस्मिन्नेव काले तु समानीय सुतं नृपः ॥

स्नापयामास तत्तोयैः प्रत्यक्षं शार्ङ्गधन्वनः ॥ ६.९३.४० ॥

ततः स बालकः सद्यः स्नातमात्रो द्विजोत्तमाः ॥

कुष्ठव्याधिविनिर्मुक्तो जातो बालार्कसंनिभः ॥ ४१ ॥

ततः प्रणम्य तं देवं हर्षेण महताऽन्वितः ॥

पित्रा समं जगामाथ स्वकीयं भवनं द्विजाः ॥ ४२ ॥

तस्मिन्गते महीपाले सपुत्रे तत्क्षणाद्धरिः ॥

तद्रंध्रं पूरयामास यथा नो वेत्ति कश्चन ॥ ४३ ॥

एतस्मात्कारणात्पूर्वं तत्तोयं सर्वपापहृत् ॥

यद्गोमुखेन भूयोऽपि भूतले प्रकटीकृतम् ॥ ४४ ॥

अद्यापि तज्जलस्पर्शात्सुपवित्रो धरातले ॥

यः स्नानं सूर्यवारेण कुरुतेऽर्कोदयं प्रति ॥

तस्य नाशं द्रुतं यांति गलगंडादिका इह ॥ ४९ ॥

व्याधयोपि महारौद्रा दद्रुपामा समुद्भवाः ॥

उपसर्गोद्भवाश्चैव विस्फोटकविचर्चिका ॥ ४६ ॥

निष्कामस्तु पुनर्मर्त्यो यः स्नानं तत्र भक्तितः ॥

कुरुते याति लोकं स देवदेवस्य चक्रिणः ॥ ४७ ॥

यस्मिन्दिने समानीता सा गंगा तत्र विष्णुना ॥

तस्मिन्दिने वृषे सूर्यः स्थितश्चित्रासु चंद्रमाः ॥ ४८ ॥

तिथिश्चैकादशी चैव देवदेवस्य शार्ङ्गिणः ॥

गोवक्त्रेण तृणस्तंबं यस्मिंश्चैव तु वासरे ॥

समाकृष्टं च तत्रैव योग एवं व्यवस्थितः ॥ ४९ ॥

तथान्येऽपि दिने तस्मिन्यदि तोयमवाप्य च ॥

स्नानं करोति सद्भक्त्या तत्फलं सोऽपि चाप्नुयात् ॥ ६.९३.५० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गोमुखतीर्थमाहात्म्यवर्णनंनाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ।

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९४



॥ सूत उवाच ॥ ॥। ।

तथान्या लोहयष्टिस्तु तस्मिन्क्षेत्रेऽतिशोभना ॥

मुक्ता परशुरामेण भंक्त्वा निजकुठारकम् ॥ १ ॥

तां दृष्ट्वा मानवः सम्यगुपवासपरायणः ॥

मुच्यते हि स्वकात्पापात्तत्क्षणाद्विजसत्तमाः ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कुतः परशुरामेण भंक्त्वा निजकुठारकम् ॥

निर्मिता लोहयष्टिः सा तत्रोत्सृष्टा च सा कुतः ॥३ ॥

॥ सूत उवाच ॥ ॥

यदा रामो ह्रदं कृत्वा तर्पयित्वा निजान्पितॄन् ॥

गतामर्षो द्विजेन्द्राणां दत्त्वा यज्ञे वसुन्धराम् ॥४॥

ततः संप्रस्थितो हृष्टो धृत्वा मनसि सागरम् ॥

स्नानार्थं तं समादाय कुठारं भास्करप्रभम् ॥५॥

तदा स मुनिभिः प्रोक्तः सर्वैस्तत्क्षेत्रवासिभिः ॥

वांछद्भिस्तु हितं तस्य सदा शमपरायणैः ॥ ६ ॥

रामराम महाभाग यद्धारयसि पाणिना॥

शस्त्रं पूर्णे प्रतिज्ञोऽपि तन्न युक्तं भवेत्तव ॥ ७ ॥

अनेन करसंस्थेन तव कोपः कथंचन ॥

न यास्यति शरीरस्थस्तस्मादेनं परित्यज ॥ ९ ॥

तेषां तद्वचनं श्रुत्वा ततो रामः कृतांजलिः ॥

प्रोवाच विनयोपेतः प्रहसंस्तान्द्विजोत्तमान् ॥ ९ ॥

कुठारश्चैव विप्रेंद्रा रुद्रतेजोद्भवेन च ॥

लोहेन निर्मितः पूर्वमक्षयो विश्वकर्मणा ॥६.९४.॥॥

तदहं संपरित्यज्य कथमेनं द्विजोत्तमाः ॥९ ।

क्षत्त्रधर्मपरोऽप्येवं प्रगच्छामि दिगंतरम् ॥ १॥।

यदि चैनं मया मुक्तं कुठारं च द्विजोत्तमाः ॥

ग्रहीष्यति परः कश्चिन्मम वध्यो भविष्यति॥१२॥

नापराधमिमं शक्तः सोढुं चाहं कथंचन ॥

अपि ब्राह्मणमुख्यस्य जनस्यान्यस्य का कथा ॥ १३ ॥

तथापि नास्ति ते शांतिर्मुक्तेऽप्यस्मिन्द्विजोत्तमाः ॥

गृहीतेऽपि च युष्माभिस्तस्माद्रक्ष्यः प्रयत्नतः ॥ १४ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यद्येवं त्वं महाभाग रक्षार्थं संप्रयच्छसि ॥

अस्माकं तत्र भंक्त्वाशु पिंडं कृत्वा समर्पय ॥ १५ ॥

येन रक्षामहे सर्वे परमं यवमाश्रिताः ॥

न च गृह्णाति वा कश्चिद्गते कालांतरेऽपि च ॥ १६ ॥

तेषां तद्वचनं श्रुत्वा रामः शस्त्रभृतां वरः ॥

चक्रे लोहमयीं यष्टिं तं भंक्त्वा स कुठारकम् ॥ १७ ॥

ततः स ब्राह्मणेंद्राणामर्पयामास सादरम् ॥

रक्षार्थं भार्गवश्रेष्ठो विनयावनतः स्थितः ॥ १८ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

लोहयष्टिमिमां राम त्वत्कुठारसमुद्भवाम् ॥

वयं संरक्षयिष्यामः पूजयिष्याम एव हि ॥ १९ ॥

यथा शक्तिमयी कीर्तिः स्कन्दस्यात्र प्रतिष्ठिता ॥

लोहयष्टिमयी तद्वत्तव राम भविष्यति ॥ ६.९४.२० ॥

भ्रष्टराज्यस्तु यो राजा एनामाराधयिष्यति ॥

स्वं राज्यमचिरात्प्राप्य स प्रतापी भविष्यति ॥ २१ ॥

विद्याकृते द्विजो वा यः सदैनां पूजयिष्यति ॥

स विद्यां परमां प्राप्य सर्वज्ञत्वं प्रपत्स्यते ॥ २२ ॥

अपुत्रो वा नरो योऽथ नारी वा पूजयिष्यति ॥

एतां यष्टिं त्वदीयां च पुत्रवान्स भविष्यति ॥ २३ ॥

उपवासपरो भूत्वा यश्चैनां पूजयिष्यति ॥

आश्विनस्यासिते पक्षे चतुर्दश्यां विशेषतः ॥ २४ ॥

स प्राप्स्यति सदा कामानभीष्टान्मनसि स्थितान्॥ ॥ २४ ॥

एवं श्रुत्वा ततो रामस्तेषामेव द्विजन्मनाम् ॥

प्रणम्य प्रययौ तूर्णं समुद्रसदनं प्रति ॥ २५ ॥

तेऽपि विप्रास्ततस्तस्याश्चक्रुः प्रासादमुत्तमम् ॥

तत्र संस्थाय तां चक्रुस्ततः पूजासमाहिताः ॥ २६ ॥

प्राप्नुवंति च तत्पार्श्वात्कामानेव हृदि स्थितान् ॥

सुस्तोकेनाऽपि कालेन दुर्लभास्त्रिदशैरपि ॥ ६.९४.२७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये लोहयष्टिमाहात्म्यवर्णनं नाम चतुर्णवतितमोऽध्यायः ॥ ९४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९५

https://sa.wikisource.org/s/fku
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

अथान्यापि च तत्रास्ति देशकामप्रदा नृणाम् ॥

अजापालेन भूपेन स्थापिता पापनाशनी ॥ १ ॥

तां च शुक्लचतुर्दश्यामजापालेश्वरीं नरः ॥

यो वै पूजयते भक्त्या धूपपुष्पानुलेपनैः ॥

स प्राप्नोतीप्सितान्कामान्दुर्लभा सर्वमानवैः ॥ २ ॥

तस्या देव्याः प्रसादेन सत्यमेतन्मयोदितम् ॥

अजापालो महीपालः पुराऽऽसीत्संमतः सताम् ॥ ३ ॥

हितकृत्सर्वलोकस्य यथा माता यथा पिता ॥

तेन राज्यं समासाद्य पितृपैतामहं शुभम् ॥ ४ ॥

चिंतितं मनसा पश्चात्स्वयमेव महात्मना ॥

मया तत्कर्म कर्तव्यं यदन्यैरिह भूमिपैः ॥

न कृतं न करिष्यंति ये भविष्यन्त्यतः परम् ॥ ५ ॥

एष एव परो धर्मो भूपतीनामुदाहृतः ॥

यत्प्रजापालनं शश्वत्तासां च सुखसंस्थितिः ॥ ६ ॥

यथायथा करं भूपास्ता मां गृह्णंति लोलुपाः ॥

तथातथा मनःक्षोभो हृदये संप्रजायते ॥ ७ ॥

न करेण विना भूपा हस्त्यश्वादिबलं च यत् ॥

शक्नुवंति परित्रातुं पादातं च विशेषतः ॥ ८ ॥

विना तेन स गम्यः स्यान्नीचानामपि सत्वरम् ॥

एतस्मात्कारणाद्भूपाः करं गृह्णंति लोकतः ॥ ९ ॥

तस्मान्मया विनाप्याशु नागैश्चैव नरैस्तथा ॥

तपः शक्त्या प्रकर्तव्यं राज्यं निहतकण्टकम् ॥ ६.९५.१० ॥

करानगृह्णता तेन लोकान्रंजयता सदा ॥

अन्येषां भूमिपालानां विशेषेण महात्मनाम् ॥ ११ ॥

एवं चित्ते समाधाय वसिष्ठं मुनिपुंगवम् ॥
पुरोधसं समाहूय ततः प्रोवाच सादरम् ॥ १२ ॥
अत्र भूमितले विप्र सर्वेषां तीर्थमुत्तमम् ॥
अल्पकालेन सन्तुष्टिं यत्र याति महेश्वरः ॥
वासुदेवोऽथवा ब्रह्मा ह्येतच्छीघ्रं वदस्व मे ॥ १३ ॥
येनाहं सर्वलोकस्य हितार्थं तप आददे ॥
न स्वार्थं ब्राह्मणश्रेष्ठ सत्येनात्मानमालभे ॥ १४ ॥
॥ वसिष्ठ उवाच ॥
तिस्रः कोट्योर्धकोटी च तीर्थानामिह भूतले ॥
संति पार्थिवशार्दूल प्रभावसहितानि च ॥ १५ ॥
अष्टषष्टिस्तथा राजन्क्षेत्राणामस्ति भूतले ॥
येषां सांनिध्यमभ्येति सर्वदैव महेश्वरः ॥ १६ ॥
तथा सर्वे सुरास्तुष्टा ब्रह्मविष्णु शिवादयः ॥
परं सिद्धिप्रदं शीघ्रं मानुषाणां महीपते ॥ १७ ॥
हाटकेश्वरदेवस्य क्षेत्रं पातकनाशनम् ॥
देवानामपि सर्वेषां तुष्टिं गच्छति चंडिका ॥ १८ ॥
शीघ्रमाराधिता सम्यक्छ्रद्धायुक्तैर्नरैर्भुवि ॥
तस्मात्तत्क्षेत्रमासाद्य तां देवीं श्रद्धयान्वितः ॥
आराधय महाभाग द्रुतं सिद्धिमवाप्स्यसि ॥। ॥ १९ ॥
एवमुक्तः स तेनाथ गत्वा तत्क्षेत्रमुत्तमम् ॥
प्रतिष्ठाप्य च देवीं तां पूजयामास भक्तितः ॥ ६.९५.२० ॥
ब्रह्मचर्यपरो भूत्वा शुचिर्व्रतपरायणः ॥
नियतो नियताहारस्त्रिकालं स्नानमाचरन् ॥ २१ ॥
एवमाराध्यतस्तत्र गन्धपुष्पानुलेपनैः ॥
पूजापरस्य सा देवी तस्य तुष्टिं ततो गता ॥ २२ ॥ ॥
॥देव्युवाच ॥ ॥
परितुष्टास्मि ते वत्स व्रतेनानेन नित्यथः ॥
बलिपूजाविधानेन विहितेनामुना स्वयम् ॥ २३ ॥

तद्ब्रूहि येन ते सर्वं प्रकरोमि हृदि स्थितम् ॥

सद्य एव महीपाल त्रिदशैरपि दुर्लभम् ॥ २४ ॥

॥राजोवाच ॥ ॥

लोकानां हितकामेन मयैतद्व्रतमाहृतम् ॥

येन तेषां भवेत्सौख्यं मत्प्रसादादनुत्तमम् ॥२५॥

तस्माद्देहि महाभागे ज्ञानयुक्तानि भूरिशः ॥

ममास्त्राणि विचित्राणि स्वैरगाणि समन्ततः ॥२६॥

यानि जानंति भूपृष्ठे मम पार्श्वे स्थितान्यपि ॥

अपराधं सदा लोके परदारादि यत्कृतम् २७ ॥

अनुरूपं ततस्तस्य पातकस्य विनिग्रहम् ॥

प्रकुर्वंति मिथो येन न तेषां संकरो भवेत् ॥२८॥

मंत्रग्रामं तथा देवि मम देहि पृथग्विधम् ॥

निग्रहं व्याधिसत्त्वानां येन शीघ्रं करोम्यहम् ॥२९॥

येन स्युर्मनुजाः सर्वे मम राज्ये सुखान्विताः॥

नीरोगाः पुष्टिसंपन्ना भयशोकविवर्जिताः ॥ ६.९५.३० ॥

नाहं देवि करिष्यामि हस्त्यश्वरथसंग्रहम्॥

यतस्तेषां भवेत्पुष्टिर्वित्तैर्वित्तं करैर्भवेत् ॥

गृहीतैः सर्वलोकानां तस्मात्तन्न ममेप्सितम् ॥ ३१ ॥

॥ श्रीदेव्युवाच ॥ ॥

अत्यद्भुततरं कर्म त्वयैतत्पृथिवीपते ॥

प्रारब्धं यन्न केनापि कृतं न च करिष्यति ॥ ३२ ॥

तथाप्येवं करिष्यामि तव दास्यामि कृत्स्नशः ॥

ज्ञानयुक्तानि शस्त्राणि मंत्रग्रामं च तादृशम् ॥ ३३ ॥

गृह्यन्ते येन ते सर्वे व्याधयोऽपि सुदारुणाः ॥

परं सदैव ते रक्ष्या मन्मन्त्रैरपि संयुताः ॥ ३४ ॥

यदि दृष्टिपथात्तुभ्यं क्वचिद्यास्यंति दूरतः ॥

मानवान्पीडयिष्यंति चिरात्प्राप्याधिकं ततः ॥ ३५ ॥

यदा त्वं पृथिवीपाल स्वर्गं यास्यसि भूतलात् ॥

तदात्र सलिले स्थाप्या मदग्रे(*) यद्व्यवस्थितम् ॥ ३६ ॥

सर्वे मंत्रास्तथाऽस्त्राणि ममवाक्यादसंशयम् ॥

येन स्यात्पूर्ववत्सर्वो व्यवहारो नृपोद्भवः ॥ ३७ ॥

॥सूत उवाच ॥ ॥।

बाढमित्येव तेनोक्ते तत्क्षणाद्द्विजसत्तमाः ॥

प्रादुर्भूतानि दिव्यानि तस्यास्त्राणि बहूनि च ॥ ३८ ॥

ज्ञानसंपत्प्रयुक्तानि यादृशानि महात्मना ॥

तेन संयाचितान्येव व्याधिमंत्रास्तथैव च ॥ ३९ ॥

व्याधयो यैश्च गृह्यंते मुच्यंते स्वेच्छया सदा ॥

सुखेन परिपाल्यंते दृष्टिगोचरसंस्थिताः ॥ ६.९५.४० ॥

ततस्तं सकलं प्राप्य प्रसादं चंडिकोद्भवम् ॥

तच्च हस्त्यादिकं सर्वं ब्राह्मणेभ्यो ददौ नृप ॥ ४१ ॥

एकां मुक्त्वा निजां भार्यामेकं दशरथं सुतम् ॥

तांश्चापि सकलान्व्याधीन्मंत्रैः संयम्य यत्नतः ॥ ४२ ॥

अजारूपान्स्वयं पश्चाद्यष्टिमादाय रक्षति ॥

एवं तस्य नरेन्द्रस्य वर्तमानस्य भूतले ॥ ४३ ॥

गुप्तोऽपि नापराधः स्यात्कस्यचित्प्रकटः कुतः ॥

प्रमादाद्यदि भूलोके कश्चित्पापं समाचरेत् ॥ ४४ ॥

तद्रूपो निग्रहस्तस्य तत्क्षणादेव जायते ॥

वधं वा यदि वा बंधं क्लेशं चाऽरातिसंभवम् ॥ ४५ ॥

अदृष्टान्यपि शस्त्राणि तानि कुर्वंति तत्क्षणात् ॥

अन्येषां च महीपानां राज्ये गुप्तान्यनेकशः ॥

कुर्वन्ति मनुजास्तेषां चक्रे वैवस्वतो ग्रहम् ॥ ४६ ॥

न तत्र भयसंत्रस्तस्ततः पापसमाचरेत् ॥

प्रत्यक्षं वा विशेषेण ज्ञात्वा शस्त्रभयं च तत् ॥ ४७ ॥

ततस्ते पापनिर्मुक्ता लोकाः संशुद्धगात्रकाः ॥

रोगेषु निगृहीतेषु प्राप्ताः सुखमनुत्तमम् ॥ ४८ ॥

एवं स्थितेषु लोकेषु गतपापामयेषु च ॥

प्रयाताः शून्यतां सर्वे नरका ये यमालये ॥ ४९ ॥

न कश्चिन्नरकं याति न च मृत्युपथं नरः ॥

यथा कृतयुगं तादृक्त्रेतायामपि संस्थितम्॥ ६.९५.५० ॥

व्यवहारे ततो नष्टे यमलोकसमुद्भवे ॥

स्वर्गेण तुल्यतां प्राप्ते प्राणिभिर्मृत्युवर्जितैः ॥ ५१ ॥

ततो वैवस्वतो गत्वा ब्रह्मणः सदनं प्रति ॥

प्रोवाच दुःखसंपन्नः प्रणिपत्य पितामहम् ॥ ५२ ॥

अहं पुरा त्वया देव धर्माधर्मदिदृक्षया ॥

मानुषाणां समादिष्टो निग्रहानुग्रहं प्रति ॥ ०३३ ॥

अजापालेन भूपेन तत्सर्वं विफलीकृतम् ॥

तपःशक्त्या सुरश्रेष्ठ देवीमाराध्य चंडिकाम् ॥ ५४ ॥

नाधयो व्याधयस्तत्र न पापानि महीतले ॥

कस्यचिद्देव जायंते यथा कृतयुगे तथा ॥ ५५ ॥

तस्मात्कुरु सुरश्रेष्ठ पुनरेव यथा पुरा ॥

मदीयभवने कृत्स्नो व्यवहारः प्रजायते ॥ ५६ ॥

तस्य तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ॥

समीप उपविष्टस्य शिवस्याऽऽस्यं व्यलोकयत् ॥ ९७ ॥

अथाब्रवीत्प्रहस्योच्चैस्त्रिनेत्रश्चतुराननम् ॥

अत्यद्भुततमां श्रुत्वा तां वार्तां यमसंभवाम् ॥ ५८ ॥

॥ महेश्वर उवाच ॥ ॥

धर्ममार्गप्रवृत्तस्य सदाचारस्य भूपतेः ॥

कथं निवारणं तत्र क्रियते कश्च निग्रहः ॥ ५९ ॥

तस्मात्तेन महीपेन यस्मान्मार्गः प्रदर्शितः ॥

अपूर्वो धर्मसंभूतः कृतः सम्यङ्महात्मना ॥ ६.९५.६० ॥

तन्मयापि यथा चास्य प्रसादः सुरसत्तम ॥

अपूर्वः करणीयश्च यथा धर्मो न दुष्यति ॥ ६१ ॥

एवमुक्त्वा चतुर्वक्त्रं यमं प्राह ततः शिवः ॥

वदायुषोऽस्य यच्छेषमजापालस्य भूपतेः ॥

येन तत्समये प्राप्ते तं नयामि निजालयम् ॥ ६२ ॥ ॥

॥ यम उवाच ॥ ॥

पञ्चवर्षसहस्राणि तस्यातीतानि चायुषः ॥

तिष्ठंति पञ्चपञ्चाशत्प्रतीक्ष्येऽहं ततः कथम् ॥ ६३ ॥

यावत्कालं सुरश्रेष्ठ शून्ये जाते स्व आश्रये ॥

तस्मात्कुरु द्रुतं कंचिदुपायं तद्विनाशने ॥ ६४ ॥

एवमुक्ते यमेनाथ तं विसृज्य गृहं प्रति ॥

व्याघ्ररूपं समास्थाय स्वयं तत्संनिधौ ययौ ॥ ६५ ॥

यत्र संस्थो महीपः स प्रजापालनतत्परः ॥

मेघगम्भीरनिर्घोषं गर्जमानो मुहुर्मुहुः ॥ ६६ ॥

अजास्तास्तं च संवीक्ष्य व्याघ्रं रौद्रवपुर्द्धरम् ॥

अजापालं समुद्दिश्य संत्रस्ताः शरणं गताः ॥ ६७ ॥

तस्य यत्नपरस्यापि रक्षमाणस्य भूपतेः॥

अजास्ता व्याघ्ररूपेण शंकरेण प्रभक्षिताः ॥ ६८ ॥

अजानां कदनं दृष्ट्वा ततः स पृथिवीपतिः ॥

स्वहस्ताद्यष्टिमुत्सृज्य जग्राह निशितायुधम् ॥ ॥ ६९ ॥

यत्तस्य तुष्टया दत्तं चंडं चंडार्चिषा समम् ॥

तच्छस्त्रं च तथान्यानि देवीदत्तानि शंकरः ॥

शनैःशनैः प्रजग्राह स्ववक्त्रेण महेश्वरः ॥ ॥ ६.९५.७० ॥

अस्त्राभावात्ततस्तूर्णं ध्रियमाणेऽपि कांतया ॥

द्वंद्वयुद्धेन तं व्याघ्रं योधयामास भूपतिः ॥ ७१ ॥

ततस्तस्यांगसंस्पर्शान्मुक्त्वा व्याघ्रतनुं च ताम् ॥

दधार भस्मसंदिग्धां तनुं चन्द्रविभूषिताम् ॥ ७२ ॥

रुंडमालावरां दिव्यां सखट्वांगां सपन्नगाम् ॥

तां दृष्ट्वा स महीपालः सभार्यः प्रणतस्ततः ॥ ७३ ॥

प्रोवाचाथ स्तुतिं कृत्वा विनयावनतः स्थितः ॥

आनंदाश्रुपरिक्लिन्नो हर्षगद्गदया गिरा ॥ ७४ ॥

॥ राजोवाच ॥ ॥

अज्ञानाद्यन्मया देव प्रहारास्तव निर्मिताः ॥
तिरस्कारस्तथा दत्तस्तत्सर्वं क्षम्यतां विभो ॥ ७५ ॥
॥ श्रीभगवानुवाच ॥ ॥
क्षांत एष मया पुत्र तव सर्वः पराभवः ॥
परितुष्टेन ते कर्म दृष्ट्वा चैवातिमानुषम् ॥ ७६ ॥
यथा कृतं त्वया राज्यं प्रजाः संरक्षिता नृप ॥
तथान्यो भूपतिः कश्चिन्न कर्ता न करिष्यति ॥ ७७ ॥
तस्माद्गच्छ मया सार्धं पाताले पार्थिवोत्तम ॥
अनेनैव शरीरेण धर्मपत्न्यानया सह ॥ ७८ ॥।
नातः परं त्वया स्थेयं मर्त्यलोके कथंचन ॥
विरुद्धं सर्वदेवानां यतः कर्म त्वदुद्भवम् ॥ ७९ ॥
॥ राजोवाच ॥ ॥
एवं देव करिष्यामि गत्वाऽयोध्यां महापुरीम् ॥
पुत्रं राज्ये प्रतिष्ठाप्य मंत्रिणां संनिवेद्य च ॥ ६.९५.८० ॥
तथाहं देव देव्या च प्रोक्तः संतुष्टया पुरा ॥
मन्त्रग्रामो यया दत्तः शस्त्राणि विविधानि च ॥ ८१ ॥
यदा त्वं त्यजसि प्राज्ञ मर्त्यलोकं सुदुस्त्यजम् ॥
तदात्र मामके कुण्डे प्रक्षेप्तव्यानि कृत्स्नशः ॥ ८२ ॥
तानि चार्पय मे भूयो येनानृण्यं व्रजाम्यहम् ॥
तस्या देव्याः सुराधीश त्वत्प्रसादेन सांप्रतम् ॥ ८३ ॥
एवमुक्तस्ततस्तेन भगवांस्त्रिपुरांतकः ॥
आज्ञाप्य तानि सर्वाणि ददौ तत्र द्रुतं गतः ॥ ८४ ॥
अब्रवीच्च सुतस्तत्र स्वयं राजा भविष्यति ॥
वीर्यौदार्यसमोपेतो वंशस्योद्धरणक्षमः ॥ ८५ ॥
त्वं चागच्छ मया सार्धमद्यैव मम मंदिरे ॥
प्रविश्यात्र जले पुण्ये देवीकुण्डसमुद्भवे ॥ ८६ ॥
अद्य माघचतुर्दश्यां शुक्लायामपरोऽपि यः ॥
देवीमिमां च संपूज्य जलेऽस्मिन्भक्तिसंयुतः ॥ ८७ ॥

करिष्यति प्रवेशेन प्राणत्यागं नृपोत्तम ॥

स च यास्यति यत्रास्ते पाताले हाटकेश्वरः ॥ ८८ ॥

स्नानं वा पार्थिवश्रेष्ठ यः करिष्यति मानवः ॥

अष्टोत्तरशतं तस्य व्याधीनां न भविष्यति ॥ ॥ ८९ ॥

एवमुक्त्वा तमादाय नृपं भार्यासमन्वितम् ॥

अजाभिस्ताभिरस्त्रैश्च तैश्चापि परमेश्वरः ॥

प्रविवेश जले तस्मिन्देवीकुण्डसमुद्भवे ॥ ६.९५.९० ॥

ततश्च मंदिरं नीतः स्वकीयं द्विजसत्तमाः ॥

तेनैव नरदेहेन स कलत्रसमन्वितः ॥ ९१

अद्यापि तिष्ठते तत्र जरामरणवर्जितः ॥

पूजयानश्च तं देवं पाताले हाटकेश्वरम् ॥ ९२ ॥

एवं तत्र समुद्भूता सा देवी परमेश्वरी ॥

स्थापिता तेन भूपेन श्रद्धापूतेन चेतसा ॥ ९३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्येऽजापालेश्वरीमाहात्म्यवर्णनंनाम पञ्चनवतितमोऽध्यायः ॥ ॥ ९५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९६



॥ सूत उवाच ॥ ॥
एवं तस्मिन्गते भूपे ह्यजापाले रसातलम् ॥
तत्पुत्रश्चाभवद्राजा मंत्रिभिस्तु पुरस्कृतः ॥ १ ॥
यो नित्यमगमत्स्वर्गे वासवं रमते सदा ॥
शनैश्चरो जितो येन रोहिणीं परिभेदयन् ॥ २ ॥
गृहे यस्य स्वयं विष्णुर्भूत्वा चैव चतुर्विधः ॥
रावणस्य विनाशार्थं जन्म चक्रे प्रहर्षितः ॥ ३ ॥
तेनागत्यात्र सत्क्षेत्रे तोषितो मधुसूदनः ॥
प्रासादं शोभनं कृत्वा ततश्चैव प्रतिष्ठितः ॥ ४ ॥
तस्यापि विश्रुता वापी स्वयं तेन विनिर्मिता ॥
राजवापीति लोकेऽस्मिन्विख्यातिं परमां गता ॥ ५ ॥
तस्यां यः कुरुते श्राद्धं संप्राप्ते पञ्चमीदिने ॥
प्रेतपक्षे विशेषेण स नरः स्यात्सतां प्रियः ॥ ६ ॥
॥ ऋषय ऊचुः ॥ ॥
कथं तेन जितः सौरी रोहिणीशकटं च यत् ॥
भिंदानस्तोषितस्तेन कथं नारायणो वद ॥ ७ ॥
॥ । सूत उवाच ॥ ॥
तस्मिञ्छासति धर्मज्ञे स्वधर्मेण वसुन्धराम्॥
अतिसौख्यान्वितो लोकः सर्वदैव व्यजायत ॥ ८ ॥
बहुक्षीरप्रदा गावः सस्यानि गुणवंति च ॥
कामवर्षी च पर्जन्यो यथर्तुफलिता द्रुमाः ॥ ९ ॥
कस्यचित्त्वथ कालस्य दैवज्ञैस्तस्य भूपतेः ॥
कथितं रोहिणीभेदं रविपुत्रः करिष्यति ॥ ६.९६.१० ॥
तस्यानंतरमेवाशु दुर्भिक्षं संभविष्यति ॥
अनावृष्टिश्च भविता रौद्रा द्वादश वार्षिकी ॥
यया संपत्स्यते सर्वं भूतलं गतमानवम् ॥ ११ ॥
तेषां तद्वचनं श्रुत्वा स राजा कुपितोऽभ्यगात् ॥
शनैश्चरं समुद्दिश्य विमानमधिरुह्य च ॥ १२ ॥
तस्य तुष्टेन संदत्तं विमानं कामगं पुरा ॥

शक्रेण तत्र संतिष्ठञ्छनैश्चरमुपाद्रवत् ॥ १३ ॥
ततः सूर्यपथं मुक्त्वा ततश्चंद्रस्य पार्थिवः ॥
नक्षत्रसरणिं प्राप्य सज्यं कृत्वा महद्धनुः ॥ १४
तत्र बाणं समारोप्य शनैश्चरमुपाद्रवत् ॥
प्रोवाच पुरतः स्थित्वा सूर्यपुत्रमधोमुखम् ॥ १५ ॥
त्यजैनं रोहिणीमार्गं सांप्रतं त्वं शनैश्चर ॥
मद्वाक्यादन्यथाऽहं त्वां नयिष्यामि यमक्षयम् ॥ १६ ॥
एतेन निशिताग्रेग शरेणा नतपर्वणा ॥
दिव्यास्त्रमंत्रयुक्तेन सत्यमेतद्ब्रवीम्यहम् ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा तादृग्रौद्रतमं महत् ॥
मन्दो विस्मयमापन्नस्ततश्चेदमभाषत ॥ ॥ १८ ॥
कस्त्वं ब्रूहि महाभाग मम मार्गं रुणत्सि यः ॥
अगम्यं केनचिल्लोके सर्वैरपि सुरासुरैः ॥ १९ ॥
राजोवाच ॥ ॥
अहं दशरथो नाम सूर्यवंशोद्भवो नृपः ॥
अजस्य तनयः प्राप्तः कामं वारयितुं क्रुधा ॥ ६.९६.२० ॥
॥ मंद उवाच ॥ ॥
न त्वया सह संबंधः कश्चिदस्ति महीपते ॥
मम यत्त्वं प्रकोपाढ्यो मन्मार्गं हंतुमिच्छसि ॥ २१ ॥
॥ राजोवाच ॥ ॥
रोहिणीसंभवं त्वं हि शकटं भेदयिष्यसि ॥
सांप्रतं मम दैवज्ञैर्वाक्यमेतदुदाहृतम् ॥ २२ ॥
तस्मिन्मन्द त्वया भिन्ने न वर्षति शतक्रतुः ॥
एतद्वदति दैवज्ञा ज्योतिःशास्त्रविचक्षणाः ॥ २३ ॥
जाते वृष्टिनिरोधेऽथ जायंतेऽन्नानि न क्षितौ ॥
अन्नाभावात्क्षयं यांति ततो भूभितले जनाः ॥ २४ ॥
जनोच्छेदे ततो जाते अग्निष्टोमादिकाः क्रियाः ॥
न भवंति धरा पृष्ठे ततः स्यादेव संक्षयः॥ २५ ॥
एतस्मात्कारणाद्रुद्धो मार्गस्ते सूर्यसंभव ॥
रोहिणीं गंतुकामस्य सत्यमेतन्मयोदितम् ॥२६॥
॥ शनिरुवाच ॥ ॥
गच्छ पुत्र निजं गेहं ममापि त्वं च रोचसे ॥

तुष्टोऽहं तव वीर्येण न त्वन्येन महीपते॥२७॥
न केनचित्कृतं कर्म यदेतद्भवता कृतम् ॥
न करिष्यति चैवान्यो देवो वा मानवोऽथ वा ॥ २८ ॥
नाहं पश्यामि भूपाल कथंचिदपि तूर्ध्वतः॥
यतो दृष्टिविनिर्दग्धं भस्मसाज्जायतेऽखिलम् ॥ २९ ॥
जातमात्रेण बालेन मया पादौ निरीक्षितौ ॥
तातस्य सहसा दग्धौ ततोऽहं वारितोंऽबया ॥ ६.९६.३० ॥
न त्वया पुत्र द्रष्टव्यं किंचिदेव कथंचन ॥
प्रमाणं यदि ते धर्मो मातृवाक्यसमुद्भवः ॥ ३१ ॥
तस्मात्त्वया महत्कर्म कृतमीदृक्सुदुष्करम् ॥
प्रजानां पार्थिवश्रेष्ठ त्यक्त्वा दूराद्भयं मम ॥ ३२ ॥
तस्मा त्तव कृते नाहं भेदयिष्यामि रोहिणीम् ॥
कथंचिदपि भूपाल युगांतरशतेष्वपि ॥ ३३ ॥
वरं वरय चास्माकं तस्मादद्य भविष्यति ॥
हृतत्स्थितं दुर्लभं भूप सर्वेषामिह देहिनाम् ॥ ३४ ॥
॥ राजोवाच ॥ ॥
तव यो वासरे प्राप्ते तैलाभ्यंगं करोति वै ॥
तस्याऽन्यदिवसं यावत्पीडा कार्या न च त्वया ॥ ३५ ॥
तिलदानं करोत्येवं लोहदानं च यस्तव ॥
करोति दिवसे शक्त्या यावद्वर्षं त्वया हि सः ॥ ३६ ॥
रक्षणीयः सुकृच्छ्रेषु संकटेषु सदैव हि ॥
त्वयि गोचरपीडायां संस्थिते चार्कसंभव ॥ ३७ ॥
यः कुर्याच्छांतिकं सम्यक्तिलहोमं च भक्तितः ॥
वासरे तव संप्राप्ते समिद्भिश्च तथाऽक्षतैः ॥ ३८ ॥
तस्य सार्धानि वर्षाणि सप्त कार्या प्रयत्नतः ॥
त्वया रक्षा महाभाग वरं चेन्मम यच्छसि ॥ ३९ ॥
॥ सूत उवाच ॥ ॥
एवमित्येव संप्रोच्य विरराम ततः परम् ॥
शनैश्चरो महीपालवचनाद्द्विजसत्तमाः ॥ ६.९६.४० ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽहं सुविस्तरात् ॥
भवद्भिः सूर्यपुत्रस्य राज्ञा दशरथेन हि ॥
संवादं रोहिणीभेदे सञ्जातं समुपस्थिते ॥ ४१ ॥

यश्चैतत्पठते नित्यं शृणुयाद्यो विशेषतः ॥
शनैश्चरकृता पीडा तस्य नाशं प्रगच्छति ॥ ४२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये दशरथशनैश्चरसंवादवर्णनंनाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९७



॥ सूत उवाच ॥ ॥

ततः प्रभृति नो मन्दो रोहिणीशकटं द्विजाः ॥

भिनत्ति वचनात्तस्य राज्ञो दशरथस्य च ॥ १ ॥

तद्वृत्तांतं समाकर्ण्य तस्य शक्रः प्रहर्षितः ॥

भूपालं तं समभ्येत्य ततश्चोवाच सादरम् ॥ २ ॥

अत्यद्भुततरं कर्म त्वयैतत्पृथिवीपते ॥

संसाधितं यदन्येन मनसापि न चिन्त्यते ॥ ३ ॥

अत एव हि संतुष्टिः सञ्जाताद्य तवोपरि ॥

वरं मत्तो गृहाणाद्य तदभीष्टं हृदि स्थितम् ॥ ४ ॥

॥ राजोवाच ॥ ॥

त्वया सह सुरश्रेष्ठ मैत्री संप्रार्थयाम्यहम् ॥

शाश्वती सर्वकृत्येषु परमां लोकसंस्थिताम् ॥५॥

॥ इन्द्र उवाच ॥

एवं भवतु राजेंद्र त्वया सह सदा मम ॥

संपत्स्यते सदा मैत्री वसोरिव च शाश्वती ॥ ६ ॥

त्वया सदैव मे पार्श्वे सभायां देवसंनिधौ ॥

आगन्तव्यं विशेषेण येन मैत्री प्रवर्धते॥७॥

एवमुक्त्वा सहस्राक्षो जगाम त्रिदिवालयम् ॥

राजापि चागतो हर्म्ये स्वकीये हर्षसंयुतः ॥८॥

रक्षयित्वा जगत्सर्वं शनैश्चर कृताद्भयात् ॥

अप्राप्यां प्राप्य संकीर्तिं स्तूयमानस्तु बन्दिभिः ॥ ९ ॥

ततः प्रभृति नित्यं स सन्ध्याकाल उपस्थिते ॥

सायाह्नं संविधायाथ याति शक्रस्य मंदिरे ॥६.९७.१०॥ ॥

तत्र स्थित्वा चिरं श्रुत्वा गंधर्वाणां मनोहरम् ॥

गीतं दृष्ट्वा च नृत्यं च तानादिविहितं शुभम् ॥११॥॥
विचित्रार्थाः कथाः श्रुत्वा देवर्षीणां मुखाच्च्युताः ॥
स्वयं च कीर्तयित्वाथ प्रयाति निजमंदिरम्॥१२॥
विमानवरमारुह्य हंसबर्हिणनादितम्॥
मनोहरपताकाभिः समंताच्च विभूषितम्॥१३॥
यदायदा स निर्याति शक्रस्थानान्निजालयम्॥
तदातदाऽऽसने तस्य क्रियतेऽभ्युक्षणं सदा॥१४॥
शक्रादेशात्तदा वेत्ति न स भूपः कथंचन ॥
अन्यस्मिन्दिवसे तस्य नारदो मुनिसत्तमः ॥
कथयामास तत्सर्वमभ्युक्षणसमुद्भवम् ॥ १५ ॥
वृत्तांतं तस्य राजर्षेस्तस्यैव गृहमागतः ॥
तीर्थयात्रा प्रसंगेन विद्वेषपरिवृद्धये ॥ १६ ॥
तच्छ्रुत्वा नारदेनोक्तं श्रद्धेयमपि भूपतिः ॥
न चक्रे हृदयेऽधर्ममात्मानं परिचिंतयन् ॥ १७ ॥
तथापि कौतुकाविष्टो गत्वा शक्रनिवेशनम् ॥
अन्यस्मिन्दिवसे स्थित्वा चिरं तत्र समुत्थितः ॥ १८ ॥
अलक्ष्यं वीक्षयामास स्वासनं दूरमास्थितः ॥
किंचित्सद्मांतरं प्राप्य कौतूहलसमन्वितः ॥ १९ ॥
ततः शक्रसमादेशादुत्थाय सुरकिंकरः ॥
प्रोक्षयामास तोयेन पार्थिवस्य तदासनम् ॥ ६.९७.२० ॥
तद्दृष्ट्वा कोपसंपन्नः स राजाऽभ्येत्य वासवम् ॥
प्रोवाच किमिदं शक्र प्रोक्ष्यते यन्ममासनम् ॥ २१ ॥
किं मया निहता विप्राः किं वा विप्रसमुद्भवम् ॥
शासनं लोपितं किंचित्किं वा विप्रा विनिंदिताः ॥ २२ ॥
किं वा नष्टोऽस्मि संग्रामे दृष्ट्वा शत्रून्समागतान् ॥
दैन्यं वा जल्पितं तेषां भयत्रस्तेन चेतसा ॥ २३ ॥
मम राज्येऽथवा शक्र दुर्बलो बलवत्तरैः ॥
पीड्यते वाथ चौराद्यैर्मुष्यते वंचकैस्तथा ॥ २४ ॥

किं वा राज्ये मदीये च जायते योनिविप्लवः ॥
संकरो वाथ वर्णानां परित्यक्तविधिक्रमः ॥ २५ ॥
किं वा दुर्जनवाक्येन दूषितो दोषवर्जितः ॥
दंड्यते मम राज्ये च केनचित्त्रिदशेश्वर ॥ २६ ॥
किं वा चौरोऽथ पापो वा गृहीतो दोषवान्स्वयम् ॥
मुच्यते द्रव्यलोभेन तथान्यो वा जुगुप्सितः ॥ २७ ॥
किंस्विन्मया परित्यक्तः कोऽप्यत्र शरणागतः ॥
भयत्रस्तः सुभीतेन प्राणानां त्रिदशाधिप ॥ २८ ॥
कस्य वा पृष्ठमांसानि भक्षितानि मया क्वचित् ॥
कच्चिच्च त्रिदशाधीष ब्राह्मणस्य विशेषतः ॥ २९ ॥
किं वा दानं मया दत्त्वा ब्राह्मणाय महात्मने ॥ पश्चात्तापः
कृतः पश्चाद्दत्तं चोपेक्षितं च वा ॥ ६.९७.३० ॥
किं वा राज्ये मदीये च दीनानां प्रपतंति च ॥
अश्रुपाता दिवारात्रं दुःखितानां समंततः ॥ ३१ ॥
दैवं वा पैतृकं वापि किं वा कर्म गृहे मम ॥
लोपं गच्छति देवेन्द्र क्रियते वा विधिच्युतम् ॥ ३२ ॥
यत्त्वया क्रियते नित्यं तोयैरभ्युक्षणं मम ॥
आसनस्य द्रुतं ब्रूया यत्पापं विहितं मया ॥ ॥ ३३ ॥
॥ इन्द्र उवाच ॥ ॥
न विद्यते महाराज शरीरे तव पातकम् ॥
न राष्ट्रे च कुले गेहे भृत्यवर्गे विशेषतः ॥ ३४ ॥
परं शृणु प्रवक्ष्यामि यत्ते पापं भविष्यति ॥
तेन संप्रोक्ष्यते चैव आसनं सर्वदैव तु ॥ ३५ ॥
अपुत्रस्य गतिर्नास्ति न च स्वर्गं प्रपद्यते ॥
पैतृकेण नरो ग्रस्तो य ॠणेन सदा नृप ॥ ३६ ॥
द्वेष्यतां याति देवानां पितॄणां च विशेषतः ॥
यदा पश्यति पुत्रस्य वदनं पुरुषो नृप ॥ ३७ ॥
आनृण्यं समवाप्नोति पितॄणां स तदा ध्रुवम् ॥

स त्वं नैव गतो राजन्नानृण्यं यन्मयोदितम् ॥ ३८ ॥

पितॄणां तेन ते नित्यमासनेऽभ्युक्षणं कृतम् ॥

तस्माद्यतस्व पुत्रार्थं यदीच्छसि परां गतिम् ॥ ३९ ॥

आत्मानं नरकात्त्रातुं पुंसंज्ञाच्च तथा नृप ॥

एवमुक्तः स शक्रेण राजा दशरथस्तदा ॥ ६.९७.४० ॥

दुःखेन महता युक्तो लज्जयाऽधोमुखः स्थितः ॥

आमंत्र्याथ सहस्राक्षं गत्वाऽयोध्यां निजां पुरीम् ॥

अमात्यानां निजं राज्यमर्पयामास सत्वरः ॥ ४१ ॥

ततः प्रोवाच तान्सर्वांस्तपः कार्यं मयाऽधुना ॥

यावत्पुत्रस्य संप्राप्तिस्तावदेव न संशयः ॥४२॥

एतद्राज्यं प्रयत्नेन रक्षणीयं यथाविधि ॥

युष्माभिर्मम वाक्येन यावदागमनं मम ॥४३॥

॥ मंत्रिण ऊचुः ॥ ॥

युक्तमेतन्महाराज पुत्रार्थं यत्समुद्यमः ॥

क्रियते पुत्रहीनस्य किं राज्येन धनेन वा ॥ ॥ ४४ ॥

वयं रक्षां करिष्यामस्तव राज्ये समंततः ॥

निर्वृतिं त्वं समास्थाय कुरु पुत्रकृते तपः ॥ ४५ ॥

कार्तिकेयपुरं गत्वा यत्र पित्रा पुरा तव ॥

तपस्तप्तं यथा लब्धा सिद्धिश्च मनसेप्सिता ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्र माहात्म्ये दशरथकृततपःसमुद्योगवर्णनंनाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९८



॥ सूत उवाच ॥ ॥

ततो दशरथो राजा मंत्रिभिस्तैर्विसर्जितः ॥

हाटकेश्वरजं क्षेत्रं संप्राप्तो हर्षसंयुतः ॥ १ ॥

तत्रागत्य ततो देवीं पित्रा संस्थापिता पुरा ॥

पूजयित्वाऽथ सद्भक्त्या स्नात्वा कुण्डे शुभोदके ॥ २ ॥

ततोऽन्यानि च मुख्यानि दृष्ट्वा चायतनानि सः ॥

स्नात्वा तीर्थेष्वनेकेषु दत्त्वा दानान्यनेकशः ॥ ३ ॥

प्रासादं कारयामास देवदेवस्य चक्रिणः ॥

तत्र संस्थापयामास प्रतिमां वैष्णवीं शुभाम् ॥ ४ ॥

तस्याग्रे कारयामास वापीं स्वच्छोदकान्विताम् ॥

सोपानपंक्तिभिर्युक्तां साधुभिः संप्रशंसिताम्॥ ५ ॥

उदकेन ततस्तस्या देवाराधनतत्परः ॥

प्रकारैर्बहुभिस्तीव्रं चकार सुमहत्तपः ॥ ६ ॥

ततो वर्षशतेऽतीते तस्य तुष्टो जनार्दनः ॥

विलोक्य च तपस्तीव्रं विहितं तेन भूभुजा ॥ ७ ॥

प्रोवाच दर्शनं गत्वा पक्षिराजं समाश्रितः ॥

मेघगम्भीरयावाचा बहुदेवगणैर्वृतः ॥ ८ ॥

॥ श्रीविष्णुरुवाच ॥ ॥

परितुष्टोऽस्मि ते वत्स वरं वरय सुव्रत ॥

अपि ते दुर्लभं काममहं दास्यामि कृत्स्नशः ॥ ९ ॥

॥ राजोवाच ॥ ॥

पुत्रार्थोऽयं समारंभो मया देव कृतोऽखिलः ॥

तपसो देहि मे पुत्रांस्तस्माद्वंशविवृद्धिदान् ॥ ६.९८.१० ॥

अन्यत्सर्वं सुराधीश ध्रुवमस्ति गृहे स्थितम् ॥

प्रसादात्तव यत्किंचिद्वैभवं विद्यते मम ॥ ११ ॥

॥ विष्णुरुवाच ॥ ॥

अहं तव गृहे राजन्स्वयमेव न संशयः ॥

अवतारं करिष्यामि कृत्वा रूपचतुष्टयम्॥ १२ ॥

देवकार्याय तस्मात्त्वं गृहं गत्वा महीपते ॥

कुरु राज्यं यथान्यायं पितृपैतामहं महत् ॥ १३ ॥

तथेयं या त्वया वापी निर्मिता विमलोदका ॥

राजवापीति विख्याता लोके सेयं भविष्यति ॥ १४ ॥

अस्यां स्नात्वा नरो भक्त्या य एनां पूजयिष्यति ॥

श्रद्धया परया युक्तः संप्राप्ते पंचमीदिने ॥ १५ ॥

ततः करिष्यति श्राद्धं यावत्संवत्सरं नृप ॥

अपुत्रः प्राप्स्यते पुत्रान्वंशवृद्धिकरान्स हि ॥ १६ ॥

एवमुक्त्वा स भगवांस्ततश्चादर्शनं गतः ॥

प्रहृष्टवदनो भूत्वा सोऽपि राजा ययौ गृहम् ॥ १७ ॥

ततः स्तोकेन कालेन तस्य पुत्रचतुष्टयम् ॥

संजातं लोके विख्यातं कलत्रत्रितयस्य च ॥ १८ ॥

कौशल्यानाम विख्याता तस्य भार्या सुशोभना ॥

ज्येष्ठा तस्यां सुतो जज्ञे रामाख्यः प्रथमः सुतः ॥ १९ ॥

तथान्या कैकयी नाम तस्य भार्या कनिष्ठिका ॥

भरतो नाम विख्यातस्तस्याः पुत्रोऽभवत्त्वसौ ॥ ६.९८.२० ॥

सुमित्राख्या तथा चान्या पत्नी या मध्यमा स्थिता ॥

शत्रुघ्नलक्ष्मणौ पुत्रौ तस्यां जातौ महाबलौ ॥ २१ ॥

तथान्या कन्यका चैका बभूव वरवर्णिनी ॥

ददौ यां पुत्रहीनस्य लोमपादस्य भूपतेः ॥२२॥

आनृण्यं भूपतिः प्राप्य एवं दशरथस्तदा॥

पितृणां प्रययौ स्वर्गं कृतकृत्यस्तथा द्विजाः ॥ २३ ॥

अथ राजाऽभवद्रामः सार्वभौमस्ततः परम्॥

रावणो येन दुर्धर्षो निहतो देवकंटकः ॥ २४ ॥

येन रामेश्वरश्चात्र निर्मितो लक्ष्मणेश्वरः ॥

सीतादेवी तथा मूर्ता येन चात्र प्रतिष्ठिता ॥२५॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये राजस्वामिराजवापीमाहात्म्यवर्णनंनामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ०९९

https://sa.wikisource.org/s/fks



॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तत्र रामेण निर्मितः ॥

रामेश्वरस्तथा सीता तेन तत्र विनिर्मिता ॥ १ ॥

तथा च लक्ष्मणार्थाय निर्मितस्तेन संश्रयः ॥

एतन्महद्विरुद्धं ते प्रतिभाति वचोऽखिलम् ॥ २ ॥

त्वया सूत पुरा प्रोक्तं रामो लक्ष्मणसंयुतः ॥

सीतया सहितः प्राप्तः क्षेत्रेऽत्र प्रस्थितो वने ॥ ३ ॥

श्राद्धं कृत्वा गयाशीर्षे लक्ष्मणेन विरुद्ध्य च ॥

पुनः संप्रस्थितोऽरण्यं क्रोधाविष्टश्च तं प्रति । ४ ॥

यत्त्वयोक्तं तदा तेन निर्मितोऽत्र महेश्वरः ॥

एतच्च सर्वमाचक्ष्व संदेहं सूतनन्दन ॥ ५ ॥

॥ सूत उवाच ॥ ॥

अत्र मे नास्ति संदेहो युष्माकं च पुनः स्थितः ॥

ततो वक्ष्याम्यशेषेण श्रूयतां द्विजसत्तमाः ॥

एतत्क्षेत्रं पुनश्चाद्यं न क्षयं याति कुत्रचित् ॥ ६ ॥

अन्यस्मिन्दिवसे प्राप्ते स तदा रघुनंदनः ॥

यदा विरोधमापन्नः सार्धं सौमित्रिणा सह ॥ ७ ॥

एतत्पुनर्दिनं चान्यद्यत्र तेन प्रतिष्ठितः ॥

रामेश्वरः स्वयं भक्त्या दुःखितेन महात्मना ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

अन्यस्मिन्दिवसे तत्र कस्मिन्काले रघूत्तमः ॥

संप्राप्तस्तस्य किं दुःखं संजातं तत्प्रकीर्तय ॥ ९ ॥ ।

॥ सूत उवाच ॥ ॥

कृत्वा सीतापरित्यागं रामो राजीवलोचनः ॥

लोकापवादसंत्रस्तस्ततो राज्यं चकार सः ॥ ६.९९.१० ॥

कृत्वा स्वर्णमयीं सीतां पत्नीं यज्ञप्रसिद्धये ॥

न स चक्रे महाभागो भार्यामन्यां कथंचन ॥ १॥।

दशवर्षसहस्राणि दशवर्षशतानि च ॥

ब्रह्मचर्येण चक्रे स राज्यं निहतकंटकम् ॥ १२ ॥

ततो वर्षसहस्रांते प्राप्ते चैकादशे द्विजाः ॥

देवदूतः समायातो रामस्य सदनं प्रति ॥।३॥

तेनोक्तं देवराजेन प्रेषितोऽहं तवांतिकम् ॥

तस्मात्कुरु समालोकं विजने त्वं मया सह ॥ १४ ॥

एवमुक्तस्तदा तेन दूतेन रघुनंदनः ॥

परं रहः समासाद्य मन्त्रं चक्रे ततः परम् ॥ १-५ ॥

तस्यैवमुपविष्टस्य मंत्रस्थाने महात्मनः ॥

बहुत्वादिष्टलोकस्य न रहस्यं प्रजायते ॥ १६ ॥

ततः कोपपरीतात्मा दूतः प्रोवाच सादरम् ॥

विहस्य जनसंसर्गं दृष्ट्वैकांतेऽपि संस्थिते ॥ १७ ॥

यथा दंष्ट्राच्युतः सर्पो नागो वा मदवर्जितः ॥

आज्ञाहीनस्तथा राजा मानवैः परिभूयते ॥ १८ ॥

सेयं तव रघुश्रेष्ठ नाज्ञास्ति प्रतिवेद्म्यहम् ॥

शक्रालापमपि त्वं च नैकांते श्रोतुमर्हसि ॥ १९ ॥

तस्य तद्वचनं श्रुत्वा कोपसंरक्तलोचनः ॥

त्रिशाखां भृकुटीं कृत्वा ततः स प्राह लक्ष्मणम्॥ ६.९९.२० ॥

ममात्र संनिविष्टस्य सहानेन प्रजल्पतः ॥

यदि कश्चिन्नरो मोहादागमिष्यति लक्ष्मण ॥

स्वहस्तेन न संदेहः सूदयिष्यामि तं द्रुतम् ॥ २१ ॥

न हन्मि यदि तं प्राप्तमत्र मे दृष्टिगोचरम्॥

तन्मा भून्मे गतिः श्रेष्ठा धर्मिणां या प्रपद्यते ॥ ॥ २२ ॥

एवं ज्ञात्वा प्रयत्नेन त्वया भाव्यमसंशयम् ॥

राजद्वारि यथा कश्चिन्न मया वध्यतेऽधुना ॥ २३ ॥

तमोमित्येव संप्रोच्य लक्ष्मणः शुभलक्षणः ॥

राजद्वारं समासाद्य चकार विजनं ततः॥ २४ ॥

देवदूतोऽपि रामेण समं चक्रे ततः परम्॥

मंत्रं शक्रसमादिष्टं तथान्यैः स्वर्गवासिभिः ॥ २५ ॥

॥ देवदूत उवाच ॥ ॥

त्वं रावणविनाशार्थमवतीर्णो धरातले ॥

स च व्यापादितो दुष्टः पापस्त्रैलोक्यकंटकः ॥ २६ ॥

कृतं सर्वं महाभाग देव कृत्यं त्वयाऽधुना ॥

तस्मात्संतु सनाथास्ते देवाः शक्रपुरोगमाः॥२७॥

यदि ते रोचते चित्ते नोपरोधेन सांप्रतम् ॥

प्रसादं कुरु देवानां तस्मादागच्छ सत्वरम् ॥

स्वर्गलोकं परित्यज्य मर्त्यलोकं सुनिंदितम् ॥२८॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे प्राप्तो दुर्वासा मुनिसत्तमः ॥

प्रोवाचाथ क्षुधाविष्टः क्वासौ क्वासौ रघूत्तमः ॥ २९ ॥

॥ लक्ष्मण उवाच ॥ ॥

व्यग्रः स पार्थिवश्रेष्ठो देवकार्येण केनचित् ॥

तस्मादत्रैव विप्रेंद्र मुहूर्तं परिपालय ॥६.९९.३०॥।

यावत्सांत्वयते रामो दूतं शक्रसमुद्भवम् ॥

ममोपरि दयां कृत्वा विनयावनतस्य हि ॥ ३१ ॥

॥ दुर्वासा उवाच ॥ ॥

यदि यास्यति नो दृष्टिं मम द्राक्स रघूत्तमः ॥

शापं दत्त्वा कुलं सर्वं तद्धक्ष्यामि न संशयः ॥ ३२ ॥

ममापि दर्शनादन्यन्न किंचिद्विद्यते गुरु ॥

कृत्यं लक्ष्मण यावत्त्वमन्यन्मूढ प्रकत्थसे ॥ ३३ ॥

तच्छ्रुत्वा लक्ष्मणश्चित्ते चिंतयामास दुःखितः ॥

वरं मे मृत्युरेकस्य मा भूयात्कुलसंक्षयः ॥ ३४ ॥

एवं स निश्चयं कृत्वा ततो राममुपाद्रवत् ॥

उवाच दंडवद्भूमौ प्रणिपत्य कृतांजलिः ॥ ३५ ॥

दुर्वासा मुनिशार्दूलो देव ते द्वारि तिष्ठति ॥

दर्शनार्थी क्षुधाविष्टः किं करोमि प्रशाधि माम् ॥ ३६ ॥

तस्य तद्वचनं श्रुत्वा ततो दूतमुवाच तम् ॥

गत्वेमं ब्रूहि देवेशं मम वाक्यादसंशयम् ॥

अहं संवत्सरस्यांत आगमिष्यामि तेंऽतिके ॥ ३७ ॥

एवमुक्त्वा विसृज्याथ तं दूतं प्राह लक्ष्मणम् ॥

प्रवेशय द्रुतं वत्स तं त्वं दुर्वाससं मुनिम् ॥ ३८ ॥

ततश्चार्घ्यं च पाद्यं च गृहीत्वा सम्मुखो ययौ ॥

रामदेवः प्रहृष्टात्मा सचिवैः परिवारितः ॥ ३९ ॥

दत्त्वार्घ्यं विधिवत्तस्य प्रणिपत्य मुहुर्मुहुः ॥

प्रोवाच रामदेवोऽथ हर्षगद्गदया गिरा ॥ ६.९९.४० ॥

स्वागतं ते मुनिश्रेष्ठ भूयः सुस्वागतं च ते ॥

एतद्राज्यममी पुत्रा विभवश्च तव प्रभो ॥ ४१ ॥

कृत्वा मम प्रसादं च गृहाण मुनिसत्तम ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वं मे गृहमागतः ॥

पूज्यो लोकत्रयस्यापि निःशेषतपसांनिधिः ॥ ४२ ॥

॥ मुनिरुवाच ॥ ॥

चातुर्मास्यव्रतं कृत्वा निराहारो रघूत्तम ॥

अद्य ते भवनं प्राप्य आहारार्थं बुभुक्षितः ॥ ४३ ॥

तस्मात्त्वं यच्छ मे शीघ्रं भोजनं रघुनंदन ॥

नान्येन कारणं किंचित्संन्यस्तस्य धनादिना ॥ ४४ ॥

ततस्तं भोजयामास श्रद्धापूतेन चेतसा ॥

स्वयमेवाग्रतः स्थित्वा मृष्टान्नैर्विविधैः शुभैः ॥ ४५ ॥

लेह्यैश्चोष्यैस्तथा चर्व्यैः खाद्यैरेव पृथग्विधैः ॥

यावदिच्छा मुनेस्तस्य तथान्नैर्विविधैरपि ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये रामेश्वरस्थापनप्रस्तावे श्रीरामंप्रति दुर्वासः समागमनवृत्तांतवर्णनंनामैकोनशततमोऽ ध्यायः ॥ ९९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १००

https://sa.wikisource.org/s/fgy
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं भुक्त्वा स विप्रर्षिर्वांछया राममंदिरे ॥

दत्ताशीर्निर्गतः पश्चादामंत्र्य रघुनंदनम् ॥ १ ॥

अथ याते मुनौ तस्मिन्दुर्वाससि तदंतिकात् ॥

लक्ष्मणः खड्गमादाय रामदेवमुवाच ह ॥ २ ॥

एतत्खड्गं गृहीत्वाशु मां प्रभो विनिपातय ॥

येन ते स्यादृतं वाक्यं प्रतिज्ञातं च यत्पुरा ॥ ३ ॥

ततो रामश्चिरात्स्मृत्वा तां प्रतिज्ञां स्वयं कृताम् ॥

वधार्थं संप्रविष्टस्य समीपे पुरुषस्य च ॥ ४ ॥

ततोऽतिचिंतयामास व्याकुलेनांतरात्मना ॥

बाष्पव्याकुलनेत्रश्च निःष्वसन्पन्नगो यथा ॥ ५ ॥

तं दीनवदनं दृष्ट्वा निःष्वसंतं मुहुर्मुहुः ॥

भूयः प्रोवाच सौमित्रिर्विनयावनतः स्थितः ॥ ६ ॥

एष एव परो धर्मो भूपतीनां विशेषतः ॥

यथात्मीयं वचस्तथ्यं क्रियते निर्विकल्पितम् ॥ ७ ॥

तस्मात्त्वया प्रभो प्रोक्तं स्वयमेव ममाग्रतः ॥

तस्यैव देवदूतस्य तारनादेन कोपतः ॥ ९ ॥

योऽत्रागच्छति सौमित्रे मम दूतस्य संनिधौ ॥

तं चेद्धन्मि स्वहस्तेन नाहं तस्मात्सुपापकृत् ॥ ९ ॥

तदहं चागतस्तात भयाद्दुर्वाससो मुनेः ॥

निषिद्धोऽपि त्वयातीव तस्माच्छीघ्रं तु घातय ॥ ६.१००.१० ॥

ततः संमंत्र्य सुचिरं मंत्रिभिः सहितो नृपः ॥

ब्राह्मणैर्धर्मशास्त्रज्ञैस्तथान्यैर्वेदपारगैः ॥ ११ ॥

प्रोवाच लक्ष्मणं पश्चाद्विनयावनतं स्थितम् ॥

वाष्पक्लिन्नमुखो रामो गद्गदं निःश्वसन्मुहुः ॥ १२ ॥

व्रज लक्ष्मण मुक्तस्त्वं मया देशातरं द्रुतम् ॥
त्यागो वाथ वधो वाथ साधूनामुभयं समम् ॥ १३ ॥
न मया दर्शनं भूयस्तव कार्यं कथंचन ॥
न स्थातव्यं च देशेऽपि यदि मे वांछसि प्रियम् ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा प्रणिपत्य ततः परम् ॥
निर्ययौ नगरात्तस्मात्तत्क्षणादेव लक्ष्मणः ॥ १५ ॥
अकृत्वापि समालापं केनचिन्निजमंदिरे ॥
मात्रा वा भार्यया वाथ सुतेन सुहृदाथवा ॥ १६ ॥
ततोऽसौ सरयूं गत्वाऽवगाह्याथ च तज्जलम् ॥
शुचिर्भूत्वा निविष्टोथ तत्तीरे विजने शुभे ॥ १७ ॥
पद्मासनं विधायाथ न्यस्यात्मानं तथात्मनि ॥
ब्रह्मद्वारेण तं पश्चात्तेजोरूपं व्यसर्जयत् ॥ १८ ॥
अथ तद्राघवो दृष्ट्वा महत्तेजो वियद्गतम् ॥
विस्मयेन समायुक्तोऽचिन्तयत्किमिदं ततः ॥ १९ ॥
अथ मर्त्ये परित्यक्ते तेजसा तेन तत्क्षणात् ॥
वैष्णवेन तुरीयेण भागेन द्विजसत्तमाः ॥ ६.१००.२० ॥
पपात भूतले कायं काष्ठलोष्टोपमं द्रुतम्॥
लक्ष्मणस्य गतश्रीकं सरय्वाः पुलिने शुभे ॥ २१ ॥
ततस्तु राघवः श्रुत्वा लक्ष्मणं गतजीवितम् ॥
पतितं सरितस्तीरे विललाप सुदुःखितः ॥ २२ ॥
स्वयं गत्वा तमुद्देशं सामात्यः ससुहृज्जनः ॥
लक्ष्मणं पतितं दृष्ट्वा करुणं पर्यदेवयत् ॥ २३ ॥
हा वत्स मां परित्यज्य किं त्वं संप्रस्थितो दिवम् ॥
प्राणेष्टं भ्रातरं श्रेष्ठं सदा तव मते स्थितम् ॥ २४ ॥
तस्मिन्नपि महारण्ये गच्छमानः पुरादहम् ॥।?
अपि संधार्यमाणेन अनुयातस्त्वया तदा ॥ २५ ॥
संप्राप्तेऽपि कबंधाख्ये राक्षसे बलवत्तरे ॥
त्वया रात्रिमुखे घोरे सभार्योऽहं प्ररक्षितः ॥ २६ ॥

येनेन्द्रजिद्धतो युद्धे तादृग्रूपो निशाचरः ॥
स एष पतितः शेते गतासुर्धरणीतले ॥ ९७ ॥
येन शूर्पणखा ध्वस्ता राक्षसी सा च दारुणा ॥
लीलयापि ममादेशात्सोयमेवंविधः स्थितः ॥ २८ ॥
यद्बाहुबलमाश्रित्य मया ध्वस्ता निशाचराः ॥
सोऽयं निपतितः शेते मम भ्राता ह्यनाथवत् ॥।? ॥ २९ ॥
हा वत्स क्व गतो मां त्वं विमुच्य भ्रातरं निजम् ॥
ज्येष्ठं प्राणसमं किं ते स्नेहोऽद्य विगतः क्वचित् ॥ ६.१००.३० ॥
॥ सूत उवाच ॥ ॥
एवं बहुविधान्कृत्वा प्रलापान्रघुनन्दनः ॥
मातृभिः सहितो दीनः शोकेन महतान्वितः ॥ ३१ ॥
ततस्ते मंत्रिणस्तस्य प्रोचुस्तं वीक्ष्य दुःखितम् ॥।
विलपंतं रघुश्रेष्ठं स्त्रीजनेन समन्वितम् ॥ ३२ ॥
॥ मंत्रिण ऊचुः ॥ ॥
मा शोकं कुरु राजेन्द्र यथान्यः प्राकृतः स्थितः ॥
कुरुष्व च यथेदं स्यात्सांप्रतं चौर्ध्वदैहिकम्॥ ३३ ॥
नष्टं मृतमतीतं च ये शोचन्ति कुबुद्धयः ॥
धीराणां तु पुरा राजन्नष्टं नष्टं मृतं मृतम् ॥ ३४ ॥
एवं ते मन्त्रिणः प्रोच्य ततस्तस्य कलेवरम् ॥
लक्ष्मणस्य विलप्यौच्चैश्चन्दनोशीरकुंकुमैः ॥ ३५ ॥
कर्पूरागुरुमिश्रैश्च तथान्यैः सुसुगन्धिभिः ॥
परिवेष्ट्य शुभैर्वस्त्रैः पुष्पैः संभूष्य शोभनैः ॥ ३६ ॥
चन्दनागुरुकाष्ठैश्च चितिं कृत्वा सुविस्तराम् ॥
न्यदधुस्तस्य तद्गात्रं तत्र दक्षिणदिङ्मुखम् ॥ ३७ ॥
एतस्मिन्नंतरे जातं तत्राश्चर्यं द्विजोत्तमाः ॥
तन्मे निगदतः सर्वं शृण्वंतु सकलं द्विजाः ॥ ३८ ॥
यावत्तेंऽतः समारोप्य चितां तस्य कलेवरम् ॥
प्रयच्छंति हविर्वाहं तावन्नष्टं कलेवरम् ॥ ३९ ॥

एतस्मिन्नंतरे वाणी निर्गता गगनांगणात् ॥
नादयंती दिशः सर्वाः पुष्पवर्षादनंतरम् ॥ ६.१००.४० ॥
रामराम महाबाहो मा त्वं शोकपरो भव ॥
न चास्य युज्यते वह्निर्दातुं चैव कथंचन ॥ ४१ ॥
ब्रह्मज्ञानप्रयुक्तस्य संन्यस्तस्य विशेषतः ॥
अग्निदानं न युक्तं स्यात्सर्वेषामपि योगिनाम् ॥ ४२ ॥
तवायं बांधवो राम ब्रह्मणः सदनं गतः।
ब्रह्मद्वारेण चात्मानं निष्क्रम्य सुमहायशाः ॥ ४३ ॥
अथ ते मंत्रिणः प्रोचुस्तच्छ्रुत्वाऽऽकाशगं वचः ॥
अशोच्यो यं महाराज संसिद्धिं परमां गतः ॥
लक्ष्मणो गम्यतां शीघ्रं तस्मात्स्वभवने विभो ॥ ४४ ॥
चिन्त्यन्तां राजकार्याणि तथा यच्चौर्ध्वदैहिकम् ॥
कुरु स्नेहोचितं तस्य पृष्ट्वा ब्राह्मणसत्तमान् ॥ ४५ ॥
॥ राम उवाच ॥
नाहं गृहं गमिष्यामि लक्ष्मणेन विनाऽधुना ॥
प्राणानत्र विहास्यामि यथा तेन महात्मना ॥ ४६ ॥
एष पुत्रो मया दत्तः कुशाख्यो मम संमतः ॥
युष्मभ्यं क्रियतां राज्ये मदीये यदि रोचते ॥ ४७ ॥
एवमुक्त्वा ततो रामो गन्तुकामो दिवालयम् ॥
चिन्तयामास भूयोऽपि स्मृत्वा मित्रं विभीषणम् ॥ ४८ ॥
मया तस्य तदा दत्तं लंकायां राज्यमक्षयम् ॥
बहुभक्तिप्रतुष्टेन यावच्चन्द्रार्कतारकाः ॥ ४९ ॥
अतिक्रूरतरा जाती राक्षसानां यतः स्मृता ॥
विशेषाद्वरपुष्टानां जायतेऽत्र धरातले ॥ ६.१००.५० ॥
तच्चेद्राक्षसभावेन स महात्मा विभीषणः ॥
करिष्यति सुरैः सार्धं विरोधं रावणो यथा ॥ ५१ ॥
तं देवाः सूदयिष्यंति उपायैः सामपूर्वकैः ॥
त्रैलोक्यकण्टको यद्वत्तस्य भ्राता दशाननः ॥ ५२ ॥

ततो मे स्यान्मृषा वाणी तस्माद्गत्वा तदंतिकम् ॥
शिक्षां ददामि तस्याहं यथा देवान्न दूषयेत् ॥ ५३ ॥
तथा मे परमं मित्रं द्वितीयं वानरः स्थितः ॥
सुग्रीवाख्यो महाभागो जांबवांश्च तथाऽपरः ॥ ५४ ॥
सभृत्यो वायुपुत्रश्च वालिपुत्रसमन्वितः ॥
कुमुदाख्यश्च तारश्च तथान्येऽपि च वानराः ॥५५॥
तस्मात्तानपि संभाष्य सर्वान्संमंत्र्य सादरम् ॥
ततो गच्छामि देवानां कृतकृत्यो गृहं प्रति ॥ ५६ ॥
एवं संचिन्त्य सुचिरं समाहूय च पुष्पकम् ॥
तत्रारुह्य ययौ तूर्णं किष्किन्धाख्यां पुरीं प्रति ॥५७॥
अथ ते वानरा दृष्ट्वा प्रोद्द्योतं पुष्पकोद्भवम् ॥
विज्ञाय राघवं प्राप्तं सत्वरं सम्मुखा ययुः ॥ ५८ ॥
ततः प्रणम्य ते दूराज्जानुभ्यामवनिं गताः ॥
जयेति शब्दमादाय मुहुर्मुहुरितस्ततः ॥५९॥
ततस्तेनैव संयुक्ताः किष्किन्धां तां महापुरीम् ॥
विविशुः सत्पताकाभिः समंतात्समलंकृताम् ॥ ६.१००.६०
अथोत्तीर्य विमानाग्र्यात्सुग्रीवभवने शुभे ॥
प्रविवेश द्रुतं रामः सर्वतः सुविभूषिते ॥ ६१ ॥
तत्र रामं निविष्टं ते विश्रांतं वीक्ष्य वानराः॥
अर्घ्यादिभिश्च संपूज्य पप्रच्छुस्तदनन्तरम् ॥६२॥
॥ वानरा ऊचुः ॥ ॥
तेजसा त्वं विनिर्मुक्तो दृश्यसे रघुनन्दन॥
कृशोऽस्यतीव चोद्विग्नः कच्चित्क्षेमं गृहे तव ॥६३॥
काये वाऽनुगतो नित्यं तथा ते लक्ष्मणोऽनुजः॥
न दृश्यते समीपस्थः किमद्य तव राघव ॥६४॥
तथा प्राणसमाऽभीष्टा सीता तव प्रभो ॥
दृश्यते किं न पार्श्वस्था एतन्नः कौतुकं परम् ॥६५॥
॥ सूत उवाच॥ ॥

तेषां तद्वचनं श्रुत्वा चिरं निःश्वस्य राघवः ॥

वाष्पपूर्णेक्षणो भूत्वा सर्वं तेषां न्यवेदयत् ॥६६॥

अथ सीता परित्यक्ता तथा भ्राता स लक्ष्मणः॥

यदर्थं तत्र संप्राप्तः स्वयमेव द्विजोत्तमाः ॥६७॥

तच्छ्रुत्वा वानराः सर्वे सुग्रीवप्रमुखास्ततः ॥

रुरुदुस्ते सुदुःखार्ताः समालिंग्य ततः परम्॥६८॥

एवं चिरं प्रलप्योच्चैस्ततः प्रोचू रघूत्तमम्॥

आदेशो दीयतां राजन्योऽस्माभिरिह सिध्यति ॥६९॥

धन्या वयं धरापृष्ठे येषां त्वं रघुसत्तम ॥

ईदृक्स्नेहसमायुक्तः समागच्छसि मंदिरे ॥ ६.१००.७० ॥

॥ राम उवाच ॥ ॥

उषित्वा रजनीमेकां सुग्रीव तव मंदिरे ॥

प्रातर्लंकां गमिष्यामि यत्रास्ते स विभीषणः ७१ ॥

प्रधानामात्ययुक्तेन त्वयापि कपिसत्तम ॥

आगंतव्यं मया सार्धं विभीषणगृहं प्रति ॥ ७२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्रीरामेश्वरस्थापन प्रस्तावे लक्ष्मणनिर्वाणोत्तरं श्रीरामस्य सुग्रीवनगरींप्रति गमनवर्णनंनाम शततमोऽध्यायः

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०१



॥ सूत उवाच ॥ ॥

एवं तां रजनीं तत्र स उषित्वा रघूत्तमः ॥

उपास्यमानः सर्वैस्तैः सद्भक्त्या वानरोत्तमैः ॥ १ ॥

ततः प्रभाते विमले प्रोद्गते रविमण्डले ॥

कृत्वा प्राभातिकं कर्म समाहूयाथ पुष्पकम् ॥ २ ॥

सुग्रीवेण सुषेणेन तारेण कुमुदेन च ॥

अंगदेनाथ कुण्डेन वायुपुत्रेण धीमता ॥ ३ ॥

गवाक्षेण नलेनेव तथा जांबवतापि च ॥

दशभिर्वानरैः सार्धं समारूढः स पुष्पके ॥ ४ ॥

ततः संप्रस्थितः काले लंकामुद्दिश्य राघवः ॥

मनोजवेन तेनैव विमानेन सुवर्चसा ॥ ५ ॥

संप्राप्तस्तत्क्षणादेव लंकाख्यां च महापुरीम् ॥

वीक्षयंस्तान्प्रदेशांश्च यत्र युद्धं पुराऽभवत् ॥ ६ ॥

ततो विभीषणो दृष्ट्वा प्रोद्द्योतं पुष्पकोद्भवम् ॥

रामं विज्ञाय संप्राप्तं प्रहृष्टः सम्मुखो ययौ ॥

मंत्रिभिः सकलैः सार्धं तथा भृत्यैः सुतैरपि ॥ ७ ॥

अथ दृष्ट्वा सुदूरात्तं रामदेवं विभीषणः ॥

पपात दण्डवद्भूमौ जयशब्दमुदीरयन् ॥ ८ ॥

तथागतं परिष्वज्य सादरं स विभीषणम् ॥

तेनैव सहितः पश्चाल्लंकां तां प्रविवेश ह ॥ ९ ॥

विभीषणगृहं प्राप्य तत्र सिंहासने शुभे ॥

निविष्टो वानरैस्तैश्च समन्तात्परिवारितः ॥ ६.१०१.१० ॥

ततो निवेदयामास तस्मै सर्वं विभीषणः ॥

राज्यं पुत्रकलत्रादि यच्चान्यदपि किंचन ॥ ११ ॥

ततः प्रोवाच विनयात्कृतांजलिपुटः स्थितः ॥

आदेशो दीयतां देव ब्रूहि कृत्यं करोमि किम् ॥ १२ ॥

अकस्मादेव संप्राप्तः किमर्थं वद मे प्रभो ॥

किं नायातः स सौमित्रिस्त्वया सार्धं च जानकी ॥।३॥

॥ सूत उवाच ॥ ॥

निवेद्य राघवस्तस्मै सर्वं गद्गदया गिरा ॥

वाष्पपूरप्रतिच्छन्नवक्त्रो भूयो विनिःश्वसन् ॥ १४ ॥

ततः प्रोवाच सत्यार्थं विभीषणकृते हितम् ॥

तं चापि शोकसंतप्तं संबोध्य रघुनंदनः ॥ १५ ॥

अहं राज्यं परित्यज्य सांप्रतं राक्षसोत्तम ॥

यास्यामि त्रिदिवं तूर्णं लक्ष्मणो यत्र संस्थितः ॥ ॥ १६ ॥

न तेन रहितो मर्त्ये मुहूर्तमपि चोत्सहे ॥

स्थातुं राक्षसशार्दूल बांधवेन महात्मना ॥ १७ ॥

अहं शिक्षापणार्थाय तव प्राप्तो विभीषण ॥

तस्मादव्यग्रचित्तेन संशृणुष्व कुरुष्व च ॥ १८ ॥

एषा राज्योद्भवा लक्ष्मीर्मदं संजनयेन्नृणाम् ॥

मद्यवत्स्वल्पबुद्धीनां तस्मात्कार्यो न स त्वया ॥ १९ ॥

शक्राद्या अमराः सर्वे त्वया पूज्याः सदैव हि ॥

मान्याश्च येन ते राज्यं जायते शाश्वतं सदा । ६.१०१.२० ॥

मम सत्यं भवेद्वाक्य मेतस्मादहमागतः ॥

प्राप्तराज्यप्रतिष्ठोऽपि तव भ्राता महाबलः ॥ २१ ॥

विनाशं सहसा प्राप्तस्तस्मान्मान्याः सुराः सदा ॥

यदि कश्चित्समायाति मानुषोऽत्र कथंचन ॥

मत्काय एव द्रष्टव्यः सर्वैरेव निशाचरैः ॥ २२ ॥

तथा निशाचराः सर्वे त्वया वार्या विभीषण ॥

मम सेतुं समुल्लंघ्य न गंतव्यं धरातले ॥ २३ ॥

॥ विभीषण उवाच ॥ ॥

एवं विभो करिष्यामि तवादेशमसंशयम् ॥

परं त्वया परित्यक्ते मर्त्ये मे जीवितं व्रजेत् ॥ २४ ॥

तस्मान्मामपि तत्रैव त्वं विभो नेतुमर्हसि ॥

आत्मना सह यत्रास्ते प्राग्गतो लक्ष्मणस्तव ॥ २५ ॥

॥ श्रीराम उवाच ॥ ॥

मया तेऽक्षयमादिष्टं राज्यं राक्षससत्तम ॥

तस्मान्नार्हसि मां कर्तुं मिथ्याचारं कथंचन ॥ २६ ॥

अहमस्मिन्स्वके सेतौ शंकरत्रितयं शुभम् ॥

स्थापयिष्यामि कीर्त्यर्थं तत्पूज्यं भवता सदा ॥

भक्तिमान्प्रतिसंधाय यावच्चंद्रार्कतारकम् ॥ २७ ॥

एवमुक्त्वा रघुश्रेष्ठो राक्षसेन्द्रं विभीषणम् ॥

दशरात्रं तत्र तस्थौ लंकायां वानरैः सह ॥ २८ ॥

कुर्वन्युद्धकथाश्चित्रा याः कृताः पूर्वमेव हि ॥

पश्यन्युद्धस्य सर्वाणि स्थानानि विविधानि च ॥ २९ ॥

शंसमानः प्रवीरांस्तान्राक्षसान्बलवत्तरान् ॥

कुम्भकर्णेन्द्रजित्पूर्वान्संख्ये चाभिमुखागतान् ॥ ६.१०१.३० ॥

ततश्चैकादशे प्राप्ते दिवसे रघुनंदनः ॥

पुष्पकं तत्समारुह्य प्रस्थितः स्वपुरीं प्रति ॥ ३१ ॥

वानरैस्तैः समोपेतो विभीषणपुरःसरः ॥

ततः संस्थापयामास सेतुप्रांते महेश्वरम् ॥ ३२

मध्ये चैव तथादौ च श्रद्धापूतेन चेतसा ॥

रामेश्वरत्रयं राम एवं तत्र विधाय सः ॥ ३३ ॥

सेतुबंधं तथासाद्य प्रस्थितः स्वगृहं प्रति ॥

तावद्विभीषणेनोक्तः प्रणिपत्य मुहुर्मुहुः ॥ ३४ ॥

॥ विभीषण उवाच ॥ ॥

अनेन सेतुमार्गेण रामेश्वरदिदृक्षया ॥

मानवा आगमिष्यंति कौतुकाच्छ्रद्धयाविताः ॥ ३५ ॥

राक्षसानां महाराज जातिः क्रूरतमा मता ॥

दृष्ट्वा मानुषमायांतं मांसस्येच्छा प्रजायते ॥ ३६ ॥

यदा कश्चिज्जनं कश्चिद्राक्षसो भक्षयिष्यति ।

आज्ञाभंगो ध्रुवं भावी मम भक्तिरतस्य च ॥ ३७ ॥

भविष्यंति कलौ काले दरिद्रा नृपमानवाः ॥

तेऽत्र स्वर्णस्य लोभेन देवतादर्शनाय च ॥ ३८ ॥

नित्यं चैवागमिष्यन्ति त्यक्त्वा रक्षःकृतं भयम् ।

तेषां यदि वधं कश्चिद्राक्षसात्प्रापयिष्यति ॥ ३९ ॥

भविष्यति च मे दोषः प्रभुद्रोहोद्भवः प्रभो ॥

तस्मात्कंचिदुपायं त्वं चिन्तयस्व यथा मम ।

आज्ञाभंगकृतं पापं जायते न गुरो क्वचित् ॥ ६.१०१.४० ॥

तस्य तद्वचनं श्रुत्वा ततः स रघुसत्तमः ॥

बाढमित्येव चोक्त्वाथ चापं सज्जीचकार सः ॥। ॥ ४१ ॥

ततस्तं कीर्तिरूपं च मध्यदेशे रघूत्तमः॥

अच्छिनन्निशितैर्बाणैर्दशयोजनविस्तृतम्॥ ४२ ॥

तेन संस्थापितो यत्र शिखरे शंकरः स्वयम्॥।

शिखरं तत्सलिंगं च पतितं वारिधेर्जले ॥ ४३ ॥

एवं मार्गमगम्यं तं कृत्वा सेतुसमुद्भवम् ॥

वानरै राक्षसैः सार्धं ततः संप्रस्थितो गृहम् ॥ ४४ ॥।

इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सेतुमध्ये श्रीरामकृतरामेश्वरप्रतिष्ठावर्णनंनामैको त्तरशततमोऽध्यायः ॥ १०१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०२

https://sa.wikisource.org/s/fzs



॥ सूत उवाच ॥ ॥

संप्रस्थितस्य रामस्य स्वकीयं सदनं प्रति ॥

यदाश्चर्यमभून्मार्गे श्रूयतां द्विजसत्तमाः ॥ १ ॥

नभोमार्गेण गच्छत्तद्विमानं पुष्पकं द्विजाः ॥

अकस्मादेव सञ्जातं निश्चलं चित्रकृन्नृणाम् ॥ २ ॥

अथ तन्निश्चलं दृष्ट्वा पुष्पकं गगनांगणे ॥

रामो वायुसुतस्येदं वचनं प्राह विस्मयात् ॥ ३

त्वं गत्वा मारुते शीघ्रं भूमिं जानीहि कारणम् ॥

किमेतत्पुष्पकं व्योम्नि निश्चलत्वमुपागतम् ॥ ४ ॥

कदाचिद्धार्यते नास्य गतिः कुत्रापि केनचित् ॥

ब्रह्मदृष्टिप्रसूतस्य पुष्पकस्य महात्मनः ॥ ५ ॥

बाढमित्येव स प्रोच्य हनूमान्धरणीतलम् ॥

गत्वा शीघ्रं पुनः प्राह प्रणिपत्य रघूत्तमम् ॥ ६ ॥

अत्रास्याधः शुभं क्षेत्रं हाटकेश्वर संज्ञितम् ॥

यत्र साक्षाज्जगत्कर्ता स्वयं ब्रह्मा व्यवस्थितः ॥ ७ ॥

आदित्या वसवो रुद्रा देववैद्यौ तथाश्विनौ ॥

तत्र तिष्ठन्ति ते सर्वे तथान्ये सिद्धकिन्नराः ॥ ८ ॥

एतस्मात्कारणान्नैतदतिक्रामति पुष्पकम् ॥

तत्क्षेत्रं निश्चलीभूतं सत्यमेतन्मयोदितम् ॥ ९ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा कौतूहलसमवितः ॥

पुष्पकं प्रेरयामास तत्क्षेत्रं प्रति राघवः ॥६.१०२.॥॥

सर्वैस्तैर्वानरैः सार्धं राक्षसैश्च पृथग्विधैः ॥

अवतीर्य ततो हृष्टस्तस्मिन्क्षेत्रे समन्ततः ॥ ११ ॥

तीर्थमालोकयामास पुण्यान्यायतनानि च ॥

ततो विलोकयामास पितामहविनिर्मिताम् ॥
चामुण्डां तत्र च स्नात्वा कुण्डे कामप्रदायिनि ॥ १२ ॥
ततो विलोकयामास पित्रा तस्य विनिर्मितम्॥
रामः स्वमिव देवेशं दृष्ट्वा देवं चतुर्भुजम्॥ ॥ १३ ॥
राजवाप्यां शुचिर्भूत्वा स्नात्वा तर्प्य निजान्पितॄन् ॥
ततश्च चिन्तयामास क्षेत्रे त्र बहुपुण्यदे ॥ १४ ॥
लिंगं संस्थापयाम्येव यद्वत्तातेन केशवः ॥
तथा मे दयितो भ्राता लक्ष्मणो दिवमाश्रितः ॥ १५ ॥
यस्तस्य नामनिर्दिष्टं लिंगं संस्थापयाम्यहम् ॥
तं चापि मूर्तिमंतं च सीतया सहितं शुभम् ॥
क्षेत्रे मेध्यतमे चात्र तथात्मानं दृषन्मयम् ॥ १६ ॥
एवं स निश्चयं कृत्वा प्रासादानां च पंचकम् ॥
स्थापयामास सद्भक्त्या रामः शस्त्रभृतां वरः ॥ १७ ॥
ततस्ते वानराः सर्वे राक्षसाश्च विशेषतः ॥
लिंगानि स्थापयामासुः स्वानिस्वानि पृथक्पृथक् ॥ १८ ॥
तत्रैव सुचिरं कालं स्थितास्ते श्रद्धयाऽन्विताः ॥
ततो जग्मुरयोध्यायां विमानवरमाश्रिताः ॥ १९ ॥
एतद्वः सर्वमाख्यातं यथा रामेश्वरो महान् ॥
लक्ष्मणेश्वरसंयुक्तस्तस्मिंस्तीर्थे सुशोभने ॥ ६.१०२.२० ॥
यस्तौ प्रातः समुत्थाय सदा पश्यति मानवः ॥
स कृत्स्नं फलमाप्नोति श्रुते रामायणेऽत्र यत् ॥ २१ ॥
अथाष्टम्यां चतुर्दश्यां यो रामचरितं पठेत् ॥
तदग्रे वाजिमेधस्य स कृत्स्नं लभते फलम् ॥ २२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्रीरामचन्द्रेण हाटकेश्वरक्षेत्रे लक्ष्मणादिप्रासादपञ्चकनिर्माणप्रतिष्ठापनवर्णनंनाम द्व्युत्तरशततमोऽध्यायः ॥ १०२ ॥

# स्कन्दपुराणम्/खण्डः ६(नागरखण्डः)/अध्यायः १०३

https://sa.wikisource.org/s/g22

< स्कन्दपुराणम्

॥ ॥ ऋषय ऊचुः ॥
आश्चर्यं सूतपुत्रैतद्यत्त्वया परिकीर्तितम् ॥
यत्स्थापितानि लिंगानि राक्षसैरपि वानरैः ॥ १ ॥
तस्माद्विस्तरतो ब्रूहि यत्रयत्र यथायथा ॥
तैः स्थापितानि लिंगानि येषु स्थानेषु सूतज ॥ २ ॥
॥ सूत उवाच ॥ ॥'
सुग्रीवः संभ्रमित्वाथ क्षेत्रं सर्वमशेषतः ॥
बालमंडनकं प्राप्य तत्र स्नात्वा समाहितः ॥ ३ ।
मुखलिंगं ततस्तत्र स्थापयामास शूलिनः ॥।
तथान्यैर्वानरैः सर्वैर्मुखलिंगानि शूलिनः ॥
स्वसंज्ञार्थं द्विजश्रेष्ठाः स्थापितानि यथेच्छया ॥ ४ ॥
यस्तेषां मुखलिंगानां करोति घृतकंबलम्॥।
मकरस्थेन सूर्येण शिवलोकं स गच्छति ॥ ५ ॥
ततः पश्चिमदिग्भागे तस्य क्षेत्रस्य राक्षसैः ॥
संस्थापितानि लिङ्गानि चतुर्वक्त्राणि च द्विजाः ॥_ ॥ ६ ॥
रामेण पूर्वदिग्भागे प्रासादानां च पंचकम् ॥
स्थापितं भक्तियुक्तेन सर्वपातकनाशनम् ॥ ७ ॥
तथादक्षिणदिग्भागे कूपिका तेन निर्मिता॥।
आनर्त्तीयतडागस्य समीपे पापनाशनी ॥ ८ ॥
यस्तस्यां कुरुते श्राद्धं संप्राप्ते दक्षिणायने ॥
सोऽश्वमेधफलं प्राप्य पितृलोके महीयते ॥ ९ ॥।
यस्तत्र दीपकं दद्यात्कार्तिके मासि च द्विजाः ॥
न स पश्यति रौद्रांस्तान्नरकानेकविंशतिम् ॥
न चांधो जायते क्वापि यत्रयत्र प्रजायते ॥ 6.103.१० ॥॥ ॥
॥ ऋषय ऊचुः ॥ ॥
आनर्त्तीयतडागं तत्केन तत्र विनिर्मितम् ॥
किंप्रभावं च कात्स्न्र्येन सूतपुत्र प्रकीर्तय ॥ ११ ॥
॥ सूत उवाच ॥ ॥।
आनर्त्तीयतडागस्य महिमा द्विजसत्तमाः ॥
एकवक्त्रेण नो शक्यो वक्तुं वर्षशतैरपि ॥ १२ ॥
आश्विनस्य सिते पक्षे चतुर्दश्यां समाहितः ॥
स्नात्वा देवान्पितॄंश्चैव तर्पयेद्विधिपूर्वकम् ॥ १३ ॥
ततो दीपोत्सवदिने श्राद्धं कृत्वा समाहितः ॥
दामोदरं यमं पूज्य दीपं दद्यात्स्वभक्तितः ॥ ॥ १४ ॥
संपूज्यो धर्मराजस्तु गन्धपुष्पानुलेपनैः ॥
माषास्तिलाश्च दातव्या गोविंदः प्रीयतामिति ॥ १५ ॥
तिलमाषप्रदानेन द्विजानां तर्पणेन च ॥
यमेन सहितो देवः प्रीयते पुरुषोत्तमः ॥ १६ ॥
य एवं कुरुते विप्रास्तीर्थ आनर्त संज्ञिते ॥
सोऽश्वमेधफलं प्राप्यब्रह्मलोके महीयते ॥ १७ ॥।
यस्मिन्दिने समायातो रामस्तत्र प्रहर्षितः ॥
तस्मिन्द्विजोत्तमैः सर्वैः प्रोक्तः सोऽभ्येत्य सादरम् ॥ १८ ॥
अत्रागस्त्यो मुनिश्रेष्ठस्तिष्ठते रघुनंदन ॥
तं गत्वा पश्य विप्रेन्द्र मित्रावरुणसंभवम् ॥ १९ ॥
अथ तेषां वचः श्रुत्वा रामो राजीवलोचनः ॥
वानरै राक्षसैः सार्धं प्रहृष्टः सत्वरं ययौ ॥ 6.103.२०
अष्टांगप्रणिपातेन तं प्रणम्य रघूत्तमः ॥

परिष्यक्तो दृढं तेन सानन्देन महात्मना ॥ २१ ॥
नातिदूरे ततस्तस्य विनयेन समन्वितः ॥
उपविष्टो धरापृष्ठे कृतांजलिपुटः स्थितः ॥ २२ ॥
ततः पृष्टस्तु मुनिना कथयामास विस्तरात् ॥
वृत्तांतं सर्वमात्मीयं स्वर्गस्य गमनं प्रति ॥ २३ ॥
यथा सीता परित्यक्ता यथा सौमित्रिणा कृतः ॥
परित्यागः स्वकीयस्य संत्यक्तेन महात्मना ॥ ॥ २४ ॥
तथा सुग्रीवमासाद्य तथैव च विभीषणम् ॥
संभाष्य चागमस्त्वत्र ततः पुष्पकसंस्थितिः ॥२५ ॥
ततोऽगस्त्यः कथाश्चित्राश्चक्रे तस्य पुरस्तदा ॥
राजर्षीणां पुराणानां दृष्टांतैर्बहुभिर्मुनिः ॥ २६ ॥
ततः कथावसाने च चलचित्तं रघूत्तमम् ॥
विलोक्य प्रददौ तस्मै रत्नाभरणमुत्तमम् ॥ २७ ॥
यन्न देवेषु यक्षेषु सिद्धविद्याधरेषु च ॥
नागेषु राक्षसेन्द्रेषु मानुषेषु च का कथा ॥ २८ ॥
यस्येन्द्रायुधसंघाश्च निष्क्रामंति सहस्रशः ॥
रात्रौ तमिस्रपक्षेऽपि लक्ष्यतेऽर्कोपमत्विषः ॥ २९ ॥
तद्रामस्तु गृहीत्वाऽथ विस्मयोत्फुल्ललोचनः ॥
पप्रच्छ कौतुकाविष्टः कुतस्त्वेतन्मुने तव ॥ ॥ 6.103.३० ॥
अत्यद्भुतकरं रत्नैर्निर्मितं तिमिरापहम् ॥
कण्ठाभरणमाख्याहि नेदमस्ति जगत्त्रये ॥ ३१ ॥
॥ अगस्तिरुवाच ॥ ॥
यत्पश्यसि रघुश्रेष्ठ तडागमिदमुत्तमम् ॥
ममाश्रमसमीपस्थं तद्देवदेवनिर्मितम् ॥ ३२ ॥
तस्य तीरे मया दृष्टं यदाश्चर्यमनुत्तमम् ॥
तत्तेऽहं संप्रवक्ष्यामि शृणुष्व रघु नन्दन ॥ ३३ ॥
कदाचिद्राघवश्रेष्ठ निशीथेऽहं समुत्थितः ॥
पश्यामि व्योममार्गेण प्रद्योतं भास्करोपमम् ॥ ३४ ॥
यावत्तावद्विमानं तदप्सरोगणराजितम् ॥
तस्य मध्यगतश्चैकः पुरुषस्तरुणस्तथा ॥
अन्धस्तत्र समारूढः स्तूयते किन्नरैर्नृपः ॥ ३५ ॥
रत्नाभरणमेतच्च बिभ्रत्कण्ठे सुनिर्मलम् ॥
द्वादशार्कप्रतीकाशं कामदेव इवापरः ॥ ३६ ॥
अथोत्तीर्य विमानाग्र्यात्स्कंधलग्नो रघूद्वह ॥
एकस्य देवदूतस्य सलिलांतमुपागतः ॥ ३७ ॥
ततश्च सलिलात्तस्मादाकृष्य च कलेवरम् ॥
मृतकस्य ततो दंतैर्भक्षयामास सत्वरम् ॥ ३८ ॥
यथायथा महामांसं स भक्षयति राघव ॥
तथातथा पुनः कायं तद्रूपं तत्प्रजायते ॥ ३९ ॥
ततस्तृप्तिं चिरात्प्राप्य शुचिर्भूत्वा प्रहर्षितः ॥
निष्क्रम्य सलिलाद्यावद्विमानमधिरोहति ॥ 6.103.४० ॥
तावन्मया द्रुतं गत्वा स पृष्टः कौतुकान्नृपः ॥
सेव्यमानोऽपि गन्धर्वैः समंताद्बद्धितत्परैः ॥ ४१ ॥
भोभो वैमानिकश्रेष्ठ मुहूर्तं प्रतिपालय ॥
अगस्तिर्नाम विप्रोऽहं मित्रावरुणसंभवः ॥ ४२ ।
तच्छ्रुत्वा सम्मुखो भूत्वा प्रणाममकरोत्ततः ॥
तैश्च वैमानिकैः सार्धं सर्वैस्तैः किन्नरादिभिः ॥ ४३ ॥
सोऽयं राजा मया पृष्टः कृताननतिः पुरः स्थितः ॥
कस्त्वमीदृग्वपुः श्रीमान्विमानवरमाश्रितः ॥
सेव्यमानोऽप्सरोभिश्च गन्धर्वैः किन्नरैस्तथा ॥ ॥ ४४ ॥
अत्राऽऽगत्य तडागांते महामांसप्रभक्षणम् ॥
कृतवानसि वैकल्यं कस्माते दृष्टिसंभवम् ॥ ४५ ॥
॥ वैमानिक उवाच ॥ ॥
साधु साधु मुनिश्रेष्ठ यत्त्वं प्राप्तो ममान्तिकम् ॥
अवश्यं सानुकूलो मे विधिर्यत्त्वं समागतः ॥ ४६ ॥

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ॥
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ४७ ॥
तस्मात्सर्वं तवाख्यानं कथयामि महामुने ।
येन मे गर्हितं भोज्यं विभवश्च तथेदृशः ॥ ४८ ॥
अहमासं पुरा राजा श्वेतोनाम महामुने ॥
आनर्ताधिपतिः पापः सर्वलोकनिपीडकः ॥ ४९ ॥
न किंचित्प्राज्ञया दत्तं न हुतं जातवेदसि ॥
न च रक्षा कृता लोके न त्राताः शरणागताः ॥ 6.103.५० ॥
दृष्ट्वादृष्ट्वा मया रत्नं यत्किंचिद्धरणीतले ॥ ।
तद्वै बलाद्धृतं सर्वं सर्वेषामिह देहिनाम् ॥ ५१ ॥
ततः कालेन दीर्घेण जराग्रस्तस्य मे बलात् ॥
हृतं राज्यं स्वपुत्रेण मां निर्वास्य विगर्हितम् ॥ ॥ ५२ ॥
ततोऽहं जरया ग्रस्तो वैराग्यं परमं गतः॥
समायातोऽत्र विप्रेंद्र भ्रममाण इतस्ततः ॥ ५३ ॥
ततः क्षुत्क्षामकण्ठोऽहं स्नात्वाऽत्र सलिले शुभे॥
मृतश्च संनिविष्टोहं क्षुधया परिपीडितः॥ ५४॥
प्राविश्याऽत्र जले पुण्ये पंचत्वं समुपागतः ॥
ततश्च तत्क्षणादेव विमानं समुपस्थितम् ॥ । ॥ ५५ ॥
मामन्येन शरीरेण समादाय च किंकराः ॥
तत्रारोप्य ततः प्राप्ता ब्रह्मणः सदनं प्रति ॥ ५६ ॥
दिव्यमाल्यावरधरंदिव्यगन्धानुलेपनम् ॥
दिव्याभरणसंजुष्टं स्तूयमानं च किन्नरैः ॥ ५७ ॥
ततो ब्रह्मसभामध्ये ह्यहं तैर्देवकिंकरैः ॥
तादृग्रूपो विचक्षुश्च धारितो ब्रह्मणः पुरः ॥ ५८ ॥
सर्वैः सभागतैर्दृष्टा विस्मितास्यैः परस्परम् ॥
अन्यैश्च निन्दमानैश्च धिक्छब्दस्य प्रजल्पकैः ॥ ५९ ॥
॥ किंकरा ऊचुः ॥ ॥
एष देवश्चतुर्वक्त्रः सभेयं तस्य सम्भवा ॥
सर्वैर्देवगणैर्जुष्टा प्रणामः क्रियतामिति ॥ 6.103.६० ॥
ततोऽहं प्रणिपत्योच्चैस्तं देवं देवसंयुतम् ॥
उपविष्टः सभामध्ये व्रीडयाऽवनतः स्थितः ॥ ६१ ॥
यथायथा कथास्तत्र प्रजायन्ते सभातले ॥
देवद्विजनरेन्द्राणां धर्माख्यानानि कुंभज ॥ ६२ ॥
तथातथा ममातीव क्षुद्वृद्धिं संप्रगच्छति ॥
जाने किं भक्षयाम्याशु दृषदः काष्ठमेव वा ॥ ६३ ॥
ततो मया प्रणम्योच्चैर्विज्ञप्तः प्रपितामहः ॥
प्राणिपत्य मुनिश्रेष्ठ लज्जां त्यक्त्वा सुदूरतः ॥६४॥
क्षुधा मां बाधते अतीव सांप्रतं प्रपितामह ॥
तथा पश्यामि नो किंचित्तादृग्भोज्यं प्रयच्छ मे ॥६५॥
क्षुत्पिपासादयो दोषा न विद्यंतेऽत्र ते किल ॥
स्वर्गे स्थितस्य यच्चैतत्तत्किमेवंविधं मम॥६६॥
॥ पितामह उवाच ॥ ॥
त्वया नान्नं क्वचिद्दत्तं कस्यचित्पृथिवीतले ।
तेनात्रापि बुभुक्षा ते वृद्धिं गच्छति दुर्मते ॥ ६७ ॥
तथा हृतानि रत्नानि यानि दृष्टिगतानि ते ॥
चक्षुर्हीनस्ततो जातो मम लोके गतोऽपि च ॥ ६८ ॥
यस्त्वं पातकयुक्तोऽपि संप्राप्तो मम मंदिरम्॥
तद्वक्ष्याम्यखिलं तेऽहं शृणुष्वैकमनाः स्थितः॥ ६९ ॥
यस्मिञ्जले त्वया मुक्ताः प्राणाः पापा त्मनापिच ॥
श्वेतद्वीपपतिस्तत्र कलिकालभयातुरः ॥ 6.103.७० ॥
ततोऽस्य स्पर्शनात्सद्यो विमुक्तः सर्वपातकैः ॥
अन्नादानात्परा पीडा जायते क्षुत्समु द्भवा ॥७१॥
तथा रत्नापहारेण सञ्जाता चांधता तव ॥
नैवान्यत्कारणं किंचित्सत्यमेतन्मयोदितम् ॥७२ ॥
ततो मया विधिः प्रोक्तः पुनरेव द्विजोत्तम ॥

एषोऽपि ब्रह्मलोकस्ते नरकादतिरिच्यते ॥
तस्मात्तत्रैव मां देव प्रेषयस्व किमत्र वै ॥ ७३ ॥
॥ ब्रह्मोवाच ॥ ॥
तस्मात्तत्रैव गच्छ त्वं प्रेषि तोऽसि किमत्र वै ॥
नरके तव वासो न श्वेतद्वीपसमुद्भवम् ॥७४॥
माहात्म्यं नाशमायाति शास्त्रं स्यात्सत्यवर्जितम् ॥
तस्मात्त्वं नित्यमारूढो विमा ने त्रैवसुन्दरे ॥ ७५ ॥
गत्वा जलाशये तस्मिन्यत्र प्राणाः समुज्झिताः ॥
तमेव निजदेहं च भक्षयस्व यथेच्छया ॥ ७६ ॥
तद्भविष्यति मद्वाक्या दक्षयं जलमध्यगम्॥
तावत्कालं च दृष्टिस्ते भोज्यकाले भविष्यति ॥ ७७ ॥
ततोऽहं तस्य वाक्येन दीपोत्सवदिने सदा ॥
निशीथेऽत्र समा गत्य भक्षयामि निजां तनुम् ॥ ७८ ॥
ततस्तृप्तिं प्रगच्छामि यावद्दैवं दिनं स्थितम् ॥
मानुषं च तथा वर्षमीदृग्रूपो व्यवस्थितः ॥ ७९ ॥
नास्त्यसाध्यं मुनिश्रेष्ठ तव किंचिज्जगत्त्रये ॥
येनैकं चुलुकं कृत्वा निपीतः पयसांनिधिः ॥ 6.103.८० ॥
तस्मान्मुने दयां कृत्वा ममोपरि महत्तराम् ॥
अकृत्या द्रक्ष मामस्मात्सर्वलोकविगर्हितात् ॥ ८१ ॥
तथा दृष्टिप्रदानं मे कुरुष्व मुनिसत्तम ॥
निर्विण्णोऽस्म्यंधभावेन नान्या त्वत्तोऽस्ति मे गतिः ॥ ॥ ८२ ॥
तस्य तद्वचनं श्रुत्वा कृपया मम मानसम्॥
द्रवीभूतं तदा वाक्यमवोचं तं रघूत्तम ॥ ८३ ॥
त्वमन्ननिष्क्रयं देहि कण्ठस्थमिह भूषणम् ॥
येन नाशं प्रयात्येषा बुभुक्षा जठरोद्भवा ॥ ८४ ॥
तथाऽद्यप्रभृति प्राज्ञ रत्नदीपान्सुनिर्मलान् ॥
अत्रैव सरसस्तीरे देहि दामोदराय च ॥ ८५ ॥
द्ध?स येन संजायते दृष्टिः शाश्वती तव निर्मला ॥
मम वाक्यादसंदिग्धं सत्येनात्मानमालभे ॥ ८६ ॥
॥ राजोवाच ॥ ॥
ममोपरि दयां कृत्वा त्वमेव मुनिसत्तम ॥
गृहाण रत्नसंभूतं कण्ठाभरणमुत्तमम् ॥ ८७ ॥
ततो दयाभिभूतेन मया तस्य प्रतिग्रहः ॥
निःस्पृहेणापि संचीर्णो मुनिना रण्यवासिना।
ततः प्रक्षाल्य मे पादौ यावत्तेनान्ननिष्क्रये।
विभूषणमिदं दत्तं सद्भक्त्या भावितात्मने॥
ततस्तस्य प्रणष्टा सा बुभुक्षा तत्क्षणान्नृप ॥
संजाता परमा तृप्तिर्देवपीयूषसंभवा ॥ 6.103.९० ॥
तस्य नष्टं मृतं कायं तच्च जीर्णं पुरोद्भवम् ॥
यदासीदक्षयं नित्यं तस्मिंस्तोये व्यवस्थितम् ॥ ९१ ॥
ततः संस्थापितस्तेन तस्मिन्स्थाने सुभक्तितः ॥
दामोदरो रघुश्रेष्ठ कृत्वा प्रासादमुत्तमम् ९२ ॥
तस्याग्रे श्रद्धया युक्तो दीपं दयाद्यथायथा ॥
तथातथा भवेद्दृष्टिस्तस्य नित्यं सुनिर्मलाम् ॥ ९३ ॥
ततो मासात्समासाद्य दिव्यचक्षुर्महीपतिः ॥
स बभूव नृपश्रेष्ठः स्पृहणीयतमः सताम्॥ ९४ ॥
ततः प्रोवाच मां हृष्टः प्रणिपत्य कृतांजलिः ॥
हर्षगद्गदया वाचा प्रस्थितस्त्रिदिवं प्रति ॥ ९५ ॥
त्वत्प्रसादात्प्रणष्टा मे बुभुक्षाऽतिसुदारुणा ॥
तथा दृष्टिश्च संजाता दिव्या ब्राह्मणसत्तम ॥ ९६ ॥
अनुज्ञां देहि मे तस्माद्येन गच्छामि सांप्रतम् ॥
ब्रह्मलोकं मुनिश्रेष्ठ तीर्थस्यास्य प्रभावतः ॥ ९७ ॥
ततो मया विनिर्मुक्तः प्रणिपत्य मुहुर्मुहुः ॥
स जगाम प्रहृष्टात्मा ब्रह्मलोकं सनातनम् ॥ ९८ ॥
एवं मे भूषणमिदं जातं हस्तगतं पुरा ॥

तव योग्यमिदं ज्ञात्वा तुभ्यं तेन निवेदितम् ॥ ९९ ॥
ततः प्रभृति राजेंद्र समागत्यात्र मानवाः ॥
रत्नदीपान्प्रदायोच्चैः स्नात्वाऽत्र सलिले शुभे ॥
कार्तिके मासि निर्याति देहांते त्रिदिवालयम् ॥ 6.103.१०० ॥
ये पुनः प्राणसंत्यागं प्रकुर्वंति समाहिताः ॥
पापात्मानोऽपि ते यांति ब्रह्मलोकं रघूत्तम ॥ १०१ ॥
ततो दृष्ट्वा सहस्राक्षः प्रभावं तज्जलोद्भवम् ॥
पांसुभिः पूरयामास समंताद्भयसंकुलम् ॥ १०२ ॥
तदद्य दिवसः प्राप्तो दीपोत्सवसमुद्भवः ॥
सुपुण्योऽत्र ममादेशात्त्वं कुरुष्व सुकूपिकाम् ॥ १०३ ॥
तस्यां स्नानं विधायाथ पितॄंस्तर्पय राघव ॥
देवस्यास्य पुरो देहि रत्नदीपमनुत्तमम् ॥॥४॥
येन संजायते सिद्धिर्ब्रह्मलोकसमुद्भवा ॥
अनेनैव शरीरेण सत्यमेतन्मयोदितम् ॥॥५॥
ततस्ते राघवादेशा त्सर्वे राक्षसवानराः ॥
तस्मिन्देशे विनिदधुः कूपिकां विमलोदकाम् ॥॥६॥
तत्र स्नात्वा पितॄंस्तर्प्य रत्नदीपं प्रदाय च ॥
समस्तं कार्तिकं यावदयोध्यां प्रस्थितास्ततः । १०७ ॥
ततो विभीषणं मुक्त्वा हनूमंतं च वानरम् ॥
ब्रह्मलोकं गताः सर्वे तत्तीर्थस्य प्रभावतः ॥ १०८ ॥
॥ सूत उवाच ॥ ॥
अद्यापि दीपदानं यः कुरुते तत्र सादरम् ॥
संप्राप्ते कार्तिके मासि स्नात्वा तत्र जले शुभे ॥
स सर्वपातकैर्मुक्तो ब्रह्मलोके महीयते ॥ १०९ ॥
एवं तत्र समुत्पन्नं तत्तडागं शुभावहम् ॥
आनर्त्तीयं तथा विष्णुकूपिका सा च शोभना ॥ 6.103.११० ॥
इति श्रीस्कांदे महापुराण एकाशीति साहरुयां संहि तायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये आनर्तकतीर्थकूपिकामाहात्म्यवर्णनंनाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ छ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०४



॥ ऋषय ऊचुः ॥ ॥

राक्षसैस्तत्र लिंगानि यानि भक्त्या समन्वितैः ॥

स्थापितानि च माहात्म्यं तेषां सूत प्रकीर्तय ॥ १ ॥

॥ सूत उवाच ॥ ॥

तेषां पूजाकृते रौद्रा राक्षसा बलवत्तराः ॥

लंकापुर्याः समायांति सदैव शतशः पुरा ॥ २ ॥

आगच्छन्तो व्रजन्तस्ते मार्गे क्षेत्रे च तत्र च ॥

भक्षयन्ति जनौघांश्च बालवृद्धाञ्जनानपि ॥ ३ ॥

ततस्ते मानवाः सर्वे प्रद्रवंतः समंततः ॥

इतश्चेतश्च धावन्ति प्राणरक्षणतत्पराः ॥ ४ ॥

तथान्ये बहवो गत्वा ह्ययोध्याख्यां महापुरीम् ॥

रामपुत्रं नृपश्रेष्ठं कुशं प्रोचुः सुदुःखिताः ॥ ५ ॥

तव पित्रा समं प्राप्ताः पूर्वं ये राक्षसा नृप ॥

हाटकेश्वरजे क्षेत्रे विभीषणपुरःसराः ॥ ६ ॥

संस्थापितानि लिंगानि चतुर्वक्त्राणि तत्र वै ॥

राक्षसेंद्रैः स्वमन्त्रैस्तैस्तस्य क्षेत्रस्य पश्चिमे ॥ ७ ॥

तेनैव चानुषंगेण समागच्छंति नित्यशः ॥

तस्मिन्क्षेत्रे प्रकुर्वंति तथा लोकस्य भक्षणम् ॥ ८ ॥

यदि वा तानि लिंगानि कश्चित्संपूजयेन्नरः ॥

सद्यो विनाशमायाति सोऽप्यनर्थो महानभूत् ॥ ९ ॥

तस्माद्यदि न रक्षा नः करिष्यसि महीपते ॥

तच्छनैर्यास्यते लोकः सर्वोऽयं संक्षयं ध्रुवम् ॥ ६.१०४.१० ॥

तच्च क्षेत्रं विशेषेण यत्रागच्छंति ते सदा ॥

राक्षसाः क्रूरकर्माणो महामांसस्य लोलुपाः ॥ ११ ॥

तच्छ्रुत्वा स नृपस्तूर्णं स्वामात्यानां न्यवेदयत् ॥

राज्यभारं ततस्तत्र बलेन सहितो ययौ ॥ १२ ॥

अथ प्राप्तं कुशं दृष्ट्वा हतशेषा द्विजोत्तमाः ॥

प्रोचुस्तं भर्त्सयित्वा तु वचनैः परुषाक्षरैः ॥ १३ ॥

किमेवं क्रियते राज्यं यथा त्वं क्षत्रियाधमः ॥

करोषि यत्र विध्वंसं राक्षसै र्नीयते जनः । १४ ॥

नूनं जातो न रामेण भवान्रावणसंभवः ॥

येनोपेक्षसि सर्वान्नो राक्षसैः परिपीडितान् ॥ १५ ॥

सत्यमेतत्पुरा प्रोक्तं नीतिशास्त्रविचक्षणैः ॥

यस्य वर्णस्य यो राजा स वर्णः सुखमेधते ॥ १६ ॥

तस्मात्त्वं राक्षसोद्भूतो राक्षसैर्द्विजसत्तमान् ॥

उपेक्षसे ततः सर्वान्भक्ष्यमाणांस्तथापरान् ॥ १७ ॥

आर्तानां यत्र लोकानां दोषैः पार्थिवसंभवैः ॥

पतंत्यश्रूणि भूपृष्ठे तत्र राजा स दोषभाक् ॥ १८ ॥

॥ कुश उवाच ॥ ॥

प्रसादः क्रियतां विप्रा न मया ज्ञातमीदृशम् ॥

राक्षसेभ्यः समुत्पन्नो ब्राह्मणानां पराभवः ॥ १९ ॥

अद्यप्रभृति यः कश्चिद्विनाशं नीयते क्वचित् ॥

ब्राह्मणो वाऽथवाऽन्योऽपि तद्भवेन्मम पातकम् ॥ ६.१०४.२० ॥

एवमुक्त्वा ततस्तूर्णं प्रेषयामास राघवः ॥

विभीषणाय संक्रुद्धो दूतं भयविवर्जितम् ॥ २१ ॥

गच्छ दूत द्रुतं गत्वा त्वया वाच्यो विभीषणः ॥

रामोचितस्त्वया स्नेहो मया सह कृतो महान् ॥ २२ ॥

यद्राक्षसगणैः सार्धं मम भूमिं समंततः ॥

त्वं क्लेशयसि दुर्बुद्धे मां विश्वास्य सुभाषितैः ॥ २३ ॥

मम पित्रा कृतेयं ते प्रतिष्ठा राक्षसाधम ॥

तेन नो हन्मि ते भ्राता यथा तातेन शातितः ॥ २४ ॥

विषवृक्षोऽपि यो वृद्धिं स्वयमेव प्रणीयते ॥

कथं संछिद्यते सोऽत्र स्वयमेव मनीषिभिः ॥ २५ ॥

तस्मादद्य दिनादूर्ध्वं यदि कश्चिन्निशाचरः ॥

समुद्रस्योत्तरं पारं कथंचिदागमिष्यति ॥ २६ ॥

तदहं सत्वरं प्राप्य लंकां तव पुरीमिमाम् ॥

ससैन्यो ध्वंसयिष्यामि तथा सर्वान्निशाचरान् ॥ २७ ॥

त्वां च बद्ध्वा दृढैः पाशैर्निगडैश्च सुसंयतम् ॥

कारासंस्थं करिष्यामि सद्य एव न संशयः ॥ २८ ॥

एवमुक्तस्ततो दूतो गत्वा सेतुं द्रुतं ततः ॥

दृष्ट्वा रामेश्वरं देवं यावदग्रे व्यव स्थितः ॥ २९ ॥

तावत्पृष्टो जनैः कैश्चित्कस्त्वं वत्स इहागतः ॥

केन कार्येण नो ब्रूहि नात्र गच्छंति मानवाः ॥ ६.१०४.३० ॥

॥ दूत उवाच ॥ ॥

अहं कुशेन भूपेन विभीषणगृहं प्रति ॥

प्रेषितः कार्यमुद्दिश्य तत्र यास्याम्यहं कथम् ॥ ३१ ॥

॥ जना ऊचुः ॥ ॥

नातः परं नरः कश्चिद्गन्तुं शक्तः कथंचन ॥

भग्नः सेतुर्यतो मध्ये रामेणाक्लिष्टकर्मणा ॥ ३२ ॥

तस्मादत्रैव ते कार्यं सिद्धिं दूत प्रयास्यति ॥

विभीषणकृतं सर्वं दर्शनात्तस्य रक्षसः ॥ ३३ ॥

सर्वदा राक्षसेन्द्रोऽसौ शुभं रामेश्वरत्रयम् ॥

त्रिकालं पूजयत्येव नियमं समुपाश्रितः ॥ ३४ ॥

लंकाद्वारे स्थितो यो वै सेतुखण्डे महेश्वरः ॥

प्रभाते कुरुते तस्य स्वयं पूजां विभीषणः ॥ ३५ ॥

जलमध्यगतं यच्च सेतुखंडं द्वितीयकम् ॥

तत्र रामेश्वरो यश्च मध्याह्ने तं प्रपूजयेत् ॥ ३६ ॥

एनं देव निशीथे च सर्वदागत्य भक्तितः ॥

संपूजयेन्न सन्देहः सत्यमेतत्प्रकीर्तितम् ॥ ३७ ॥

तस्मात्तिष्ठ त्वमव्यग्रः स्थानेऽत्रैव समाहितः ॥

यावदागमनं तस्य राक्षसस्य महात्मनः ॥ ३८ ॥

तेनैव सहितः पश्चात्स्वेच्छया तस्य मन्दिरम् ॥
प्रयास्यसि गृहं वापि स्वकीयं तद्विसर्जितः ॥ ३९ ॥
अथ तेषां तदाकर्ण्य स दूतो हर्षसंयुतः ॥
बाढमित्येव चोक्त्वाथ तत्र चैव व्यवस्थितः ॥ ६.१०४.४० ॥
अथ प्राप्ते निशार्धे स राक्षसैः परिवारितः ॥
विभीषणः समायातस्तस्मिन्नायतने शुभे ॥ ४१ ॥
विमानवरमारूढः स्तूयमानः समन्ततः ॥
राक्षसैर्बंदिरूपैस्तैर्गीयमानस्तथा परैः ॥४२॥
उत्तीर्य च विमानाग्र्यात्कृत्वाऽथ त्रिः प्रदक्षिणाम् ॥
रामेश्वरं प्रणम्योच्चैः स्तोत्रमेतच्चकार सः ॥४३॥
नमस्ते देवदेवेश भक्तानामभयप्रद ॥
सर्वतः पाणिपादं ते सर्वतोक्षिशिरोमुखम् ॥ ४४॥
त्वं यज्ञस्त्वं वषट्कारस्त्वं चंद्रस्त्वं प्रभाकरः ॥
त्वं विष्णुस्त्वं चतुर्वक्त्रः शक्रस्त्वं परमेश्वरः ॥४५॥
यथा तिलगतं तैलं गूढं तिष्ठति सर्वदा॥
तथा त्वं सर्व लोकेषु गूढस्तिष्ठसि शंकर ॥ ४९५ ॥
यथा काष्ठगतो वह्निः संस्थितोऽपि न लक्ष्यते॥
मूढैः सर्वत्रसंस्थोपि तथा त्वं नैव लक्ष्यसे॥४७॥
यथा दधिगतं सर्पिर्निगूढत्वेन संस्थितम्॥
चराचरेषु भूतेषु तथा त्वं देव संस्थितः ॥४८॥
यथा जलं धरापृष्ठात्खनन्नाप्नोति मानवः ॥
तथा त्वां पूजयन्नित्यं मोक्षमाप्नोत्यसंशयम् ॥ ४९ ॥
तावच्च दुर्लभः स्वर्गस्तावच्छूराश्च शत्रवः ॥
यावदेव न सन्तोषं त्वं करोषि शरीरिणाम् ॥ ६.१०४.५० ॥
तावल्लक्ष्मीश्चला नृणां तावद्रोगाः पृथग्विधाः ॥
न यावद्देवदेव त्वं सन्तोषं संप्रयास्यसि ॥ ५१ ॥
तावत्पुत्रोद्भवं दुःखं तथा प्रियसमु द्भवम्॥
यावत्त्वं देव नायासि सन्तोषं देहिनामिह । ५२ ॥

एवं स्तुत्वा ततो लिंगं स्नापयित्वा यथाविधि ॥

गन्धानुलेपनैदिव्यैर्मर्दयामास वै ततः ॥ ५३ ॥

पारिजातकपुष्पैश्च तथा सन्तानसम्भवैः ॥

कल्पपादपसंभूतैस्तथा मन्दारजैरपि ॥५४॥

पूजां चक्रे सुविस्तीर्णा श्रद्धया परया युतः ॥

दिव्यैराभरणैर्भूष्य दिव्यवस्त्रैस्ततः परम् ॥ ५५ ॥

स च गीतं स्वयं चक्रे तालमादाय पाणिना ॥

मूर्छातालकृतं रम्यं सप्तस्वरविराजितम् ॥ ५६ ॥

तानयुक्त्या समोपेतं ग्रामै रागैः स्वलंकृतम् ॥

एवं कृत्वा स शुश्रूषा तस्य देवस्य भक्तितः ॥ ५७ ॥

यावत्संप्रस्थितो भूयो लंकां प्रति विभीषणः ॥

तावद्दूतोऽग्रतः स्थित्वा कुशवाक्यमुवाच ह ॥ ५८ ॥

विशेषतस्तु तेनोक्तं यत्तस्य पुरतः पुरा ॥

अतिकोपाभिभूतेन प्ररक्तनयनेन च ॥ ५९ ॥

तच्छ्रुत्वाथ प्रणम्योच्चैर्दूतं प्राह विभीषणः ॥

कृतांजलिपुटो भूत्वा विनयावनतः स्थितः ॥६.१०४. ६० ॥

यद्येवं विहितं राज्ये रामपुत्रस्य राक्षसैः ॥

तन्नूनं तन्मया सर्वं विहितं दूतसत्तम ॥ ६१ ॥

तस्मान्महाप्रसादो मे कृतस्तेन महात्मना ॥

कुशेन प्रेषितो यस्त्वं मम मूर्खस्य संनिधौ ॥ ६२ ॥

एवमुक्त्वा स तान्सर्वाञ्छोधयामास राक्षसान् ॥

ये गत्वा भूतले मर्त्यान्ध्वंसयंति सदैव हि ॥ ६३ ॥

ततस्तत्रैव चानीय तस्य दूतस्य संनिधौ ॥

प्रत्येकं तानुवाचेदं कोपादश्रूणि चोत्सृजन्॥ ६४ ॥

यैः कृतो जनविध्वंसो राक्षसैः सुदुरात्मभिः ।।

राज्ये कुशस्य संप्राप्तैः प्रभोर्मम महात्मनः ॥ ॥ ६५ ॥

ते सर्वे व्यंतरा रौद्राः प्रभवंतु सुदुःखिताः ॥

लंकाद्वारगता नित्यं क्षुत्पिपासानिपीडिताः ॥ ६६ ॥

सर्वभोगपरित्यक्ताः शीतातपसहि ष्णवः ॥
श्लेष्ममूत्रकृताहारा निन्द्याः सर्वजनस्य च ॥ ६७ ॥
एवं दत्त्वाथ तेषां स शापं राक्षससत्तमः ॥
ततः प्राह च तं दूतं पुनरेव कृतां जलिः ॥ ६८ ॥
अद्यप्रभृति नो कश्चिद्राक्षसः संप्रयास्यति ॥
तस्माद्वाच्यो रघुश्रेष्ठो मद्वाक्यात्स कुशस्त्वया ॥
क्षम्यतामपराधो मे यदज्ञाना दयंकृतः ॥ ६९ ॥
राक्षसैर्दुष्टजातीयैर्महामांसस्यलोलुपैः ॥
कृतश्च निग्रहस्तेषां प्रत्यक्षं तव दूत यः ॥ ६.१०४.७० ॥
यदन्यदपि कृत्यं स्याद्दैवं वा मानुषं च वा ॥
मम भृत्यस्य तत्सर्वं कथनीयमशंकितम् ॥ ७१ ॥
॥ दूत उवाच ॥ ॥
यानि तत्र च लिंगानि राक्षसैर्निर्मितानि च ॥
तानि गत्वा स्वयं शीघ्रं त्वमुत्पाटय राक्षस ॥ ७२ ॥
एतदेव परं कृत्यं सर्वलोकसुखावहम् ॥
स्थापितानि च यान्येव मंत्रै राक्षससंभवैः ॥ ७३ ॥
संपूजितानि रक्षोभिश्चतुर्वक्त्राणि राक्षस॥
अजानन्मानवः कश्चिद्यदि पूजां समाचरेत् ॥७४॥
तत्क्षणान्नाशमायाति एतद्दृष्टं मया स्वयम्॥
एतस्मात्कारणाद्वच्मि त्वामहं राक्षसाधिप ॥
तैः स्थितैर्भूतले लिंगैः स्थिताः सर्वे निशाचराः ॥७५॥
॥ विभीषण उवाच ॥ ॥
मया पूर्वं प्रतिज्ञातं रामस्य पुरतः किल ॥
रामेश्वरमतिक्रम्य न गतव्यं धरातले ॥ ७६ ॥
अन्यच्च कारणं दूत प्रोक्तमत्र मनीषिभिः ॥
दुःस्थितं सुस्थितं वापि शिवलिंगं न चालयेत् ॥ ७७ ॥
तत्कथं तत्र गत्वाऽथ लिंगभेदं करोम्यहम् ॥
स्वयं माहेश्वरो भूत्वा प्रतिज्ञाय च वै स्वयम् ॥ ७८ ॥

तस्मात्प्रसादनीयस्ते मद्वाक्यात्स नराधिपः ॥
यद्युक्तं मया प्रोक्तं तत्त्वं कुरु विनिग्रहम्॥ ७९ ॥
एवमुक्त्वाथ तं दूतं रत्नैः सागरसंभवैः ॥
प्रभूतैर्भूषयित्वाऽथ विससर्ज नृपं प्रति ॥ ६.१०४.८० ॥
अथ ते राक्षसास्तेन शप्ताः प्रोचुः सुदुःखिताः ॥
कुरु शापस्य मोक्षं नः सर्वेषां राक्षसेश्वर ॥ ८१ ॥
॥ विभीषण उवाच ॥ ॥
नाहं करोमि भूयोऽपि युष्माकं राक्षसाधमाः। ॥
अनुग्रहं प्रशप्तानां वंचकानां विशेषतः ॥ ८२ ॥
तस्मात्सोऽपि रघुश्रेष्ठः प्रसादं वः करिष्यति ॥
मम वाक्याद संदिग्धं कालः कश्चित्प्रतीक्ष्यताम् ॥ ८३ ॥
एवमुक्त्वाऽथ रक्षेन्द्रः प्रेषयामास सत्वरम् ॥
दूतं कुशमहीपस्य मानुषं देवपूजकम् ॥ ८४ ॥
गत्वा ब्रूहि कुशं भूपं सत्वरं वचनान्मम ॥
एतेषां मत्प्रशप्तानां राक्षसानां दुरात्मनाम् ॥
अनुग्रहं कुरु विभो दीनानां भोजनाय वै ॥ ८५ ॥
एवमुक्तस्ततस्तेन इतो दूतेन संयुतः ॥
कुशस्तेन विनिर्यातः सत्वरं द्विजसत्तमाः ॥ ८६ ॥
ततो गत्वा द्रुतं दूतः कुशं प्रोवाच सादरम् ॥
प्रणिपत्य यथा न्यायं विनयावनतः स्थितः ॥ ८७ ॥
विभीषणो मया दृष्टो देवे रामेश्वरे विभो ॥
पूजार्थं तत्र चायातो राक्षसैर्बहुभिर्वृतः ॥ ८८ ॥
प्रोक्तो मया भवद्वाक्यमशेषं रघुनन्दन ॥
श्रुतं तेनापि तत्सर्वं विनयावनतेन च ॥ ८९ ॥
अजानतः प्रभो तस्य राक्षसैः सुदुरात्मभिः ॥
प्रजैवं पीडिता भूमौ महामांसस्य लोलुपैः ॥ ६.१०४.९० ॥
तच्छ्रुत्वा मन्मुखात्तेन सर्वेषां निग्रहः कृतः ॥
यैः कृतं कदनं भूमौ तव पार्थिव सत्तम ॥

कृतास्ते व्यन्तरा सर्वे पापाहारविहारिणः ॥ ९१ ॥

भविष्यथ तथा यूयं क्षुत्पिपासानिपीडिताः ॥

तैः सर्वैः प्रार्थितः सोऽपि भूयोभूयः प्रणम्य तम् ॥ ९२ ॥

शप्ताः सर्वे वयं तावत्प्रसादं कुरु तद्विभो ॥

ते तेनाथ ततः प्रोक्ता नाहं वो राक्षसाधमाः ॥ ९३ ॥

अनुग्रहं करिष्यामि न दास्यामि च भोजनम् ॥

कुशादेशान्मया सर्वे यूयं पापसमन्विताः ॥ ९४ ॥

निगृहीताः स युष्माकं प्रसादं प्रकरिष्यति ॥

तदर्थं प्रेषितो दूतस्त्वत्सकाशं महीपते ॥ ९५ ॥

रक्षसा तेन यद्युक्तमखिलं तत्त्वमाचर ॥

किं वा ते बहुनोक्तेन नास्ति भक्तस्तथा विधः ॥

भक्तिशक्तिसमोपेतो यथा ते स विभीषणः ॥ ९६ ॥

अद्यप्रभृति नो भूमौ विचरिष्यंति राक्षसाः ॥

तस्य वाक्यादसंदेहं त्वं राजन्सुख भाग्भव ॥ ९७ ॥

लिंगानां च कृते राजन्विज्ञप्तं तेन रक्षसा ॥

न मया चात्र राजेंद्र आगन्तव्यं कथंचन ॥

रामदेवस्य वाक्येन जंबुद्वीपे न मे गतिः ॥ ९८ ॥

अत्र स्थितस्य यत्कृत्यं दैवं वा मानुषं च वा ।

तवादेशं करिष्यामि यद्यपि स्यात्सुदुष्करम् । ९९ ॥

तस्मात्तेन महाराज रामेश्वरप्रपूजकः ॥

मनुष्यः प्रेषितो दूतो यस्तं पश्य महीपते ॥ ६.१०४.१०० ॥

अथ तस्य समादेशाड्ढौकनीयैः पृथग्विधैः ॥

सहितः स समायातो दूतो रक्षेंद्रनोदितः ॥ १०१ ॥

धात्रीफलप्रमाणानां तेन प्रस्थास्त्रयोदश ॥

मौक्तिकानां समानीताः कृते तस्य महीपतेः ॥ १०२ ॥

वैडूर्याणां मरकतानां मणीनां च द्विजोत्तमाः ॥

जात्यानां षोडश द्रोणाः समानीताः सुनिर्मलाः ॥ १०३ ॥

अग्निशौचानि वस्त्राणि तथा देवमयानि च ॥

असंख्यातानि वै हेम जात्यं संख्याविवर्जितम् ॥ १०४ ॥

तत्सर्वं दर्शयित्वाथ कुशाय सुमहात्मने ॥

कृत्वा प्रदक्षिणं पश्चात्प्रणाममकरोद्द्विजाः । ॥ १०५ ॥

एष पार्थिवशार्दूल राक्षसेन्द्रो विभीषणः ॥

प्रणामं कुरुते भक्त्या मन्मुखेनेदमब्रवीत् ॥ १०६ ॥

प्रसादाते पितुः क्षेमं मम राज्ये मही पते ॥

एष तिष्ठाम्यहं नित्यं पूजयंस्ते पितुर्हरम् ॥ ॥ १०७ ॥

मम राजन्नविज्ञातैर्यदि तैः सुदुरात्मभिः ॥

महीतले कृतं किंचिद्विरुद्धं क्षम्यतां मम ॥ १०८ ॥

एते ये राक्षसाः शप्तास्तवार्थाय मया प्रभो ॥

एतेषां प्रेतरूपाणां त्वमाहारं प्रकीर्तय ॥ १०९ ॥

॥ कुश उवाच ॥ ॥

ममादेशात्समागत्य तेऽत्र लिंगानि कृत्स्नशः ॥

पूरयंतु प्रयत्नेन पांसुभिः सर्वतोदिशम् ॥ ६.१०४.११० ॥

ततस्तु भोजनं तेषां यद्भविष्यति भूतले ॥

तद्वक्ष्यामि स्थिरो भूत्वा शृणु देवप्रपूजक ॥ १११ ॥

तुलागते सदादित्ये तैरागत्य धरातले ॥

विहर्तव्यं प्रयत्नेन यावद्वृश्चिकदर्शनम् ॥ ११२ ॥

तत्र यैर्न कृतं श्राद्धं प्रेतपक्षे नराधमैः ॥

कन्यास्थे वा रवौ यावन्न तुलांतगतिर्भवेत् ॥ ११३ ॥

ज्वररूपैस्तदंगस्थैर्भक्ष्यमन्नं पृथग्विधम् ॥

ममादेशादसंदिग्धं मासमेकं निशाचरैः ॥ ११४ ॥

विधिहीनं च यैर्दत्तं भुक्तं च विधिवर्जितम् ॥

श्राद्धं वा मानुषैः सेव्या ज्वररूपैश्च ते सदा ॥ ११५ ॥

एवं वाच्यास्त्वया सर्वे प्रेतास्ते मद्वचोऽखिलम् ॥

तस्मादागत्य कुर्वंतु कार्तिके मासि मद्वचः ॥ ११६ ॥

तथा दूत त्वया वाच्यो मम वाक्याद्विभीषणः ॥

प्रमादाद्यन्मया प्रोक्तं परुषं वचनं तव ॥ ११७ ॥

जानाम्यहं महाभाग न तेऽस्ति विकृतिः क्वचित् ॥
परिक्लिष्टं जनं दृष्ट्वा मयैतद्व्याहृतं वचः ॥ ११८ ॥
राक्षसेन्द्रे स्थिते भूमौ त्वयि जानाम्यहं सदा ॥
तिष्ठते जनको मह्यं रामः शस्त्रभृतां वरः ॥ ११९ ॥
एवमुक्त्वा ततो दूतं पूजया मास राघवः ॥
वस्त्रैर्बहुविधै रत्नैर्नग्युत्थैश्च पृथग्विधैः ॥ ६.१०४.१२० ॥
विभीषणकृते पश्चात्प्रेषयामास राघवः ॥
ढौकनीयान्यनेकानि यानि संति च तत्र वै ॥ १२१ ॥
॥ सूत उवाच ॥ ॥
एवं स सुखसंयुक्तान्कृत्वा सर्वान्द्विजोत्तमान् ।
एतत्सर्वं ददौ पश्चात्तेभ्यो मुक्तादिकं नृपः ॥ १२२ ॥
ढौकनीयं तथाऽऽयातं तल्लंकायाः पृथग्विधम् ॥
शासनानि तथान्यानि गजाश्वसहितानि च ॥ १२३ ॥
पत्तनानि विचित्राणि ग्रामाणि नगराणि च ॥
यच्चान्यद्वांछितं येन तद्दत्तं तेन तस्य वै ॥ १२४ ॥
ततः कुशेश्वरं देवं विधाय च लवेश्वरम् ॥
स्वां तनुं च महाभागौ भ्रातरौ तौ रघूत्तमौ ॥ १२५ ॥
निवेद्य ब्राह्मणेन्द्राणां कृत्वा वृत्तिं यथोचिताम् ॥
अयोध्यां नगरीं तूर्णं कृतकृत्यौ विनिर्गतौ ॥ १२६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कुशेश्वरलवेश्वरप्रतिष्ठावर्णनंनाम चतुरुत्तरशततमोऽध्यायः ॥ ॥ १०४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०५



॥ सूत उवाच ॥ ॥

अथ प्राप्ते दिनाधीशे तुलायां द्विजसत्तमाः ॥

प्रेता लिंगोद्भवां भूमिं पूरयामासुरेव हि ॥ १ ॥

यत्किंचित्तत्र संस्थं तु आद्यतीर्थं सुरालयम् ॥

तत्सर्वं व्यन्तरैस्तैश्च पांसुभिः परिपूरितम् ॥ २ ॥

ततः क्षेमं समुत्पन्नं क्षेत्रे तत्र द्विजोत्तमाः ॥

अन्येषामपि लोकानां लिंगैस्तैर्लुप्तिमागतैः ॥ ३ ॥

कस्यचित्त्वथ कालस्य बृहदश्वो महीपतिः ॥

शाल्वदेशात्समायातः कस्मिंश्चिद्युगपर्यये ॥ ४ ॥

स दृष्ट्वा विपुलां भूमिं प्रासादैः परिवर्जिताम् ॥

प्रासादार्थं मतिं चक्रे तत्र क्षेत्रे द्विजोत्तमाः ॥ ५ ॥

शिल्पिनश्च समाहूयानेकांस्तत्र सहस्रशः ॥

शोधयामास तां भूमिमधस्ताद्बहुविस्तृताम् ॥ ६ ॥

भूमौ निखन्यमानायां ततो लिंगानि भूरिशः ॥

चतुर्वक्त्राणि तान्येव यांति दृष्टेश्च गोचरम् ॥ ७ ॥

ततः स पार्थिवस्तैश्च लिंगैर्दृष्ट्वा वृतां भुवम् ॥

तत्क्षणान्मृत्युमापन्नः शिल्पिभिश्च समन्वितः ॥ ८ ॥

ततःप्रभृति नो तत्र कश्चिन्मर्त्यो महीतले ॥

प्रासादं कुरुते भीत्या तडागं कूपमेव च ॥ ९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये राक्षसलिंगच्छेदनंनाम पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०६



॥ ऋषय ऊचुः ॥ ॥

भूपृष्ठे पांसुभिस्तस्मिन्प्रेतैस्तैः परिपूरिते ॥

यानि तीर्थानि लुप्तानि लिङ्गानि च वदस्व नः ॥ १ ॥

॥ सूत उवाच ॥ ॥

असंख्यातानि तीर्थानि तथा लिंगानि च द्विजाः ॥

लोपं गतानि वक्ष्यामि प्राधान्येन प्रबोधत ॥ २ ॥

तत्र लोपं गतं तीर्थं चक्रतीर्थमिति स्मृतम् ॥

यत्र चक्रं पुरा न्यस्तं विष्णुना प्रभविष्णुना ॥ ॥ ३ ॥

मातृतीर्थं तथैवान्यत्सर्वकामप्रदं नृणाम् ॥

यत्र ता मातरो दिव्याः कार्तिकेयप्रतिष्ठिताः ॥ ४ ॥

मुचुकुन्दस्य राजर्षेस्तथान्यल्लिंग मुत्तमम् ॥

तत्र लोपं गतं विप्राः सगरस्य तु भूपतेः ॥ ५ ॥

इक्ष्वाकोर्वसुषेणस्य ककुत्स्थस्य महात्मनः ॥

ऐलस्य चन्द्रदेवस्य काशिराजस्य सन्मतेः ॥ ६ ॥

अग्निवेशस्य रैभ्यस्य च्यवनस्य भृगोस्तथा ॥

आश्रमो याज्ञवल्क्यस्य तत्र लोपं समाययौ ॥ ७ ॥

हारीतस्य महर्षेश्च हर्यश्वस्य महात्मनः ॥

कुत्सस्य च वसिष्ठस्य नारदस्य त्रितस्य च ॥ ८ ॥

तथैव ऋषिपत्नीनां तत्र लिंगानि भूरिशः॥

कात्यायन्याश्च शांडिल्या मैत्रेय्याश्च तथा पुरा ॥ ९ ॥

अन्यासां मुनिपत्नीनां यासां संख्या न विद्यते ॥

तत्राश्चर्यमभूदन्यत्पूर्यमाणे महीतले ॥ ६.१०६.१० ॥

पांसुभी राक्षसैर्यैस्तैः प्रेतैर्ब्राह्मणसत्तमाः ॥

तद्वोऽहं संप्रवक्ष्यामि श्रोतव्यं सुसमाहितैः ॥ १० ॥

दृष्ट्वा पांसुमयीं वृष्टिं मुक्तां प्रेतैः समंततः ॥

मातृवर्गेण तेनाथ प्रमुक्तः प्रचुरोऽनिलः ॥ ११ ॥

तेन पांसुकृता वृष्टिः समंतान्मथिता बहिः ।

तस्या भूमेः पतत्येव न किंचित्तत्र पूर्यते ॥ १३ ॥

ततस्ते व्यंतराः खिन्ना निराशास्तस्य पूरणे ॥

भूतास्तस्य पुरो गत्वा चुक्रुशुः कुशभूपतेः ॥ १४ ॥

अस्माभिर्विहिता तत्र पांसुवृष्टिर्महीपते ॥

नीयते शतधाऽन्यत्र मातृमुक्तेन वायुना ॥ १९ ॥

स त्वं तासां विघातार्थमुपायं भूप चिंतय ॥

येन तां पांसुभिर्भूमिं पूरयामः समंततः ॥ १६ ॥

तेषां तद्वचनं श्रुत्वा ततः कुशमहीपतिः ॥

रुद्रमाराधयामास तत्क्षेत्रं प्राप्य सद्द्विजाः ॥ १७ ॥

ततस्तस्य गतस्तुष्टिं वर्षांते भगवान्हरः ॥

प्रोवाच प्रार्थयाभीष्टं यत्ते मनसि वांछितम् ॥ १९८ ॥

॥ कुश उवाच ॥ ॥

यथा संपूर्यते चाशु पांसुभिर्भूमिमंडलम्॥

एतत्प्रेतप्रमुक्तैश्च प्रसादात्ते तथा कुरु ॥ १९ ॥

मया प्रेतगणादेव निर्दिष्टास्तस्य पूरणे ॥

मातृसंरक्ष्यमाणं तच्छक्यं चैतन्न पूरितुम् ॥ ६.१०६.२० ॥

तत्र राक्षसजैर्मंत्रैः संति लिंगानि च प्रभो ॥

प्रतिष्ठितानि तत्स्पर्शाद्दर्शनात्स्याज्जनक्षयः ॥ २१ ॥

अचलत्वात्तथा देव लिंगानां शास्त्रसद्भयात् ॥

अन्यदुत्पाटनायं च नैव कुर्मः कथंचन ॥ २२ ॥

तस्माल्लिंगकृतो नाशो ब्राह्मणानां तपस्विनाम् ॥

यथा न स्यात्सुरश्रेष्ठ तथा नीतिर्विधीयताम् ॥ २३ ॥

ततश्च भगवान्रुद्रस्ताः समाहूय मातरः ॥

प्रोवाच त्यज्यतां स्थानं भवत्यो यत्र संस्थिताः ॥ २४ ॥

तत्र पांसुभिरव्यग्राः करिष्यंति दिवानिशम् ॥

प्रेताः कुशसमादेशाद्वृष्टिं लोकहिताय च ॥ २५ ॥

॥ मातर ऊचुः ॥ ॥

त्यक्ष्यामश्च तवादेशात्तत्स्थानं वृषभध्वज ॥

परं दर्शय चास्माकं किंचिदन्यत्तथाविधम् ॥ २६ ॥

क्षेत्रेऽत्रैव निवत्स्यामो येन स्कन्दकृते वयम् ॥

तेन संस्थापिताश्चात्र प्रोक्ताः स्थेयं सदा ततः ॥ २७ ॥

ततः प्रोवाच भगवांस्तस्मात्स्थानान्महत्तरम् ॥

स्थानं दास्यामि सर्वासां पृथक्त्वेन शुभावहम् ॥ २८ ॥

अष्टषष्टिस्तु क्षेत्राणां मदीयानां समंततः ॥

संस्थितास्ति महाभागा येषु मत्संस्थितिः सदा ॥ २९ ॥

अष्टषष्टिविभागेन भूत्वा सर्वाः पृथक्पृथक् ॥

तेषु तिष्ठथ मद्वाक्यात्पूजामग्र्यामवाप्स्यथ ॥ ६.१०६.३० ॥

तस्य देवस्य तच्छ्रुत्वा वाक्यं ता मातरस्तदा ॥

प्रहृष्टास्तत्परित्यज्य स्थानं स्कन्दविनिर्मितम् ॥ ३१ ॥

अष्टषष्टिविभागेन भूत्वा रूपैः पृथग्विधैः ॥

अष्टषष्टिषु क्षेत्रेषु तस्य ताः संस्थिताः सदा ॥ ३२ ॥

ततस्ताभिर्विनिर्मुक्तं तत्सर्वं भूमिमण्डलम् ॥

पांसुभिः पूरितं प्रेतैर्दिवारात्रमतंद्रितैः ॥ ३३ ।।

एवं तस्य वरं दत्त्वा भगवान्वृषवाहनः ॥

जगामादर्शनं पश्चात्सार्धं सवर्गैणैर्द्विजाः ॥३४॥

कुतोऽपि ब्राह्मणैः सर्वैस्तापसैश्च प्रशंसितः ॥

लब्धाशी प्रययौ तस्मादयोध्यानगरीं प्रति ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये लुप्ततीर्थमाहात्म्यकथनंनाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०७

https://sa.wikisource.org/s/fzn



ऋषय ऊचुः ॥ ॥

अष्टषष्टिरियं प्रोक्ता या त्वया सूतनन्दन ॥

क्षेत्राणां देवदेवस्य कथं सा तत्र संस्थिता ॥

एतत्सर्वं समाचक्ष्व परं कौतूहलं हि नः ॥ १ ॥

॥ सूत उवाच॥ ॥

प्रश्नभारो महानेष यो भवद्भिः प्रकीर्तितः ॥

तथापि कीर्तयिष्यामि नमस्कृत्वा पिनाकिनम् ॥ २ ॥

चमत्कारपुरेऽवासीत्पूर्वं ब्राह्मणसत्तमः ॥

वत्सस्यान्वयसंभूतश्चित्रशर्मा महायशाः ॥ ३ ॥

तस्य बुद्धिरियं जाता पाताले हाटकेश्वरम् ॥

अत्रानीय ततो भक्त्या पूजयामि दिवानिशम् ॥ ४ ॥

एवं स निश्चयं कृत्वा तपश्चके ततः परम् ॥

नियतो नियताहारः परां निष्ठां समाश्रितः ॥ ५ ॥

तस्यापि भगवाञ्छंभुः कालेन महता ततः ॥

संतुष्टो ब्राह्मण श्रेष्ठास्ततः प्रोवाच सादरम् ॥ ६ ॥

वरं प्रार्थय विप्रेन्द्र यत्ते मनसि वर्तते ॥

अपि त्रैलोक्यराज्यं ते तुष्टो दास्याम्यसंशयम् ॥ ७ ॥

तस्मात्प्रार्थय ते नित्यं यत्र चित्ते व्यवस्थितम् ॥

दुर्लभं सर्वदेवानां मनुष्याणां विशेषतः ॥ ८ ॥

॥ चित्रशर्मोवाच ॥ ॥

यदि तुष्टोसि मे देव वरं चेन्मे प्रयच्छसि ॥

तदत्रागच्छ पातालाल्लिंगरूपी सुरेश्वर ॥ ९ ॥

यत्पाताले स्थितं लिंगं ब्रह्मणा संप्रतिष्ठितम् ॥

हाटकेश्वरसंज्ञं तु तदिहायातु सत्व रम् ॥ ६.१०७.१० ॥

॥ श्रीभगवानुवाच ॥ ॥

अचलं सर्वलिंगं स्यात्सर्वत्रापि द्विजोत्तम ॥

कि पुनः प्रथमं यच्च ब्रह्मणा निर्मितं स्वयम् ॥ ११ ॥

तस्मात्थापय लिंगं तद्धाटकेन द्विजोत्तम ॥

हाटकेश्वरसंज्ञं तु लोके ख्यातं भविष्यति ॥ १२ ॥

सोमवारे चतुदश्यां शुक्लायां श्रद्धयान्वितः ॥

यस्तद्भक्तिसमायुक्तः पूजयिष्यति मानवः ॥।३॥

आद्यलिंगोद्भवं श्रेयः पूजया लप्स्यते द्विज ॥

एवमुक्त्वाऽथ भगवांस्ततश्चादर्शनं गतः ॥।४॥

चित्रशर्माऽपि कृत्वाथ प्रासादं सुमनोहरम् ॥

तत्र हेममयं लिंगं स्थापयामास भक्तितः ॥ १५॥

शास्त्रोक्तेन विधानेन पूजां चक्रे च नित्यशः ॥

ततस्त्रैलोक्य विख्यातं तल्लिंगं तत्र वै द्विजाः ॥ १६ ॥

दूरादभ्येत्य लोकाश्च पूजयंति ततः परम् ॥

अथ तत्र द्विजा येऽन्ये संस्थिता गुणवत्तराः ॥ १७ ॥

तेषां स्पर्धा ततो जाता दृष्ट्वा तस्य विचेष्टितम् ॥

एकस्थानप्रसूतानां सर्वेषां गुणशालिनाम् ॥ १८ ॥

अयं गुणविहीनोऽपि प्रख्यातो भुवनत्रये ॥

हराराधनमासाद्य यस्मात्तस्माद्वयं हरम् ॥

तदर्थे तोषयिष्यामः साम्यं येन प्रजायते ॥ १९ ॥

अष्टषष्टिः स्मृता लोके क्षेत्राणां शूलपाणिनः ॥

यत्र सान्निध्यमभ्येति त्रिकालं परमेश्वरः ॥ ६.१०७.२० ॥

अष्टषष्टिश्च गोत्राणामस्माकं चात्र संस्थिता ॥

एतेन मूढमनसा सार्धं सामान्यलक्षणा ॥ २२ ॥

तस्मादनेन चाराध्य भगवन्तं त्रिलोचनम् ॥

तच्च लिंगं समानीतमत्र पातालसंस्थितम् ॥ २२ ॥

तथा सर्वैश्च सर्वाणि क्षेत्रलिंगानि कृत्स्नशः ॥

आनेतव्यानि चाराध्य तपःशक्त्या महेश्वरम् ॥ २३ ॥

एतेषां सर्वगोत्राणामानेष्यति च शंकरः ॥

यद्गोत्रं क्षेत्रसंयुक्तं यच्चान्यद्वा भविष्यति ॥ २४ ॥
ततस्ते शर्मसंयुक्ताः सर्व एव द्विजोत्तमाः ॥
चक्रुस्तपःक्रियां सर्वे दुष्करां सर्वजन्तुभिः ॥ ॥ २५ ॥
जपैर्होमोपवासैश्च नियमैश्च पृथग्विधैः ॥
बलिपूजोपहारैश्च स्नानदानादिभिस्तथा ॥ २६ ॥
लिंगं संस्थाप्य देवस्य नाम्ना ख्यातं द्विजेश्वरम् ॥
मनोहरतरे प्रोच्चे प्रासादे पर्वतोपमे ॥ २७ ॥
त्यक्त्वा गृहक्रियाः सर्वास्तथा यज्ञसमुद्भवाः ॥
अन्याश्च लोकयात्रोत्थास्तोषयंति महेश्वरम् ॥ ॥ २८ ॥
एवमाराध्यमानोऽपि सन्तोषं परमेश्वरः ॥
नाभ्यगच्छत्परां तुष्टिं कथंचिदपि स द्विजाः ॥ २९ ॥
ततो वर्षसहस्रांते समाराध्य महेश्वरम् ॥
न च किञ्चित्फलं प्राप्ता यावत्क्रुद्धास्ततोऽखिलाः ॥६.१०७.३०॥।
अस्य मूर्खतमस्याऽपि त्वं शूलिंश्चित्रशर्मणः ॥
सुस्तोकेनाऽपि कालेन सन्तोषं परमं गतः ॥३१॥।
वयं वार्धक्यमापन्ना बाल्यात्प्रभृति शंकरम् ॥
पूजयन्तोऽपि नो दृष्टस्तथाऽपि परमेश्वर॥ ३२ ॥
तस्मात्सर्वे प्रकर्तव्यं हव्यवाहप्रवेशनम् ॥
अस्माभिर्निश्चयो ह्येष तवाग्रे सांप्रतं कृतः॥ ३३ ॥
ततश्चाहृत्य काष्ठानि सर्वे ते द्विजसत्तमाः ॥
ईश्वरं मनसि ध्यात्वा चिताश्चक्रुः पृथग्विधाः ॥३४॥
तथा सर्वं क्रियाकल्पं स्नानदानादिकं च यत् ॥
कृत्वा ते ब्राह्मणाः सर्वे सुसमिद्धहुताशनम् ॥३५॥
यावत्कृत्वा सुतैः सार्धं प्रविशंति समाहिताः ॥
तावत्स भगवांस्तुष्टस्तेषां संदर्शनं ययौ ॥ ३६ ॥
अब्रवीच्च विहस्योच्चैर्मेघगम्भीरया गिरा ॥
सर्वांस्तान्ब्राह्मणश्रेष्ठान्मृतान्संजीवयन्निव ॥ ३७ ॥
भो भो ब्राह्मणशार्दूला मा मैवं साहसं महत् ॥

यूयं कुरुत मद्वाक्यात्संतुष्टस्य विशेषतः ॥ ३८ ॥

तस्माद्वदत यच्चित्ते युष्माकं चैव संस्थितम् ॥

येन दत्त्वा प्रगच्छामि स्वमेव भुवनं पुनः ॥ ३९ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

अस्मिन्क्षेत्रे सुरश्रेष्ठ पुरस्यास्य च संनिधौ ॥

क्षेत्राणामष्टषष्टिर्या धन्या संकीर्त्यते जनैः ॥ ६.१०७.४० ॥

सदाभ्यैतु समं लिंगैस्तैराद्यैः सुरसत्तम ॥

येनामर्षप्रशांतिर्नः सर्वेषामिह जायते ॥ ४१ ॥

एष संस्पर्धतेऽस्माभिः सर्वैर्गुणविवर्जितः॥

त्वल्लिंगस्य प्रभावेन तस्मादेतत्समाचर ॥४२॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे विप्रो ज्ञात्वा तं वरदं हरम् ॥

उवाच स्पर्धया युक्तश्चित्रशर्मा महेश्वरम्॥४३॥

॥ चित्रशर्मोवाच ॥ ॥

एतैः प्राणपरित्यागमारभ्य तदनतरम् ॥

तुष्टिं नीतोऽसि देवश कृत्वा च सुमहत्तपः॥४४॥

मया स्पर्द्धमानैश्च केवलं गुणगर्वितैः ॥

तस्मादेषो न दातव्यत्वं त्वया किंचित्सुरेश्वर॥४६॥

यदि त्वं मामतिक्रम्य संप्रदास्यसि वांछितम् ॥

एतैः पुत्रकलत्रैश्च सार्धं प्रत्यक्षतस्तव ॥

पावकं साधयिष्यामि तस्माद्युक्तं समाचर ॥४६॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा भगवाञ्छशिशेखरः ॥

चिन्तयामास चित्तेन किमत्र सुकृतं भवेत् ॥ ४७ ॥

एते ब्राह्मणशार्दूला विनाशं यांति मत्कृते ॥

एषोऽपि सर्वसंसिद्धो गणतुल्यो द्विजोत्तमः ॥४८॥

तस्माद्द्वाभ्यां मया कार्यं क्षेत्रे सौख्यं यथा भवेत् ॥

ब्राह्मणानां विशेषेण तथा चात्र निवासिनाम् ॥४९॥

ममापि सर्वदा चित्ते कृत्यमेतद्धि वर्तते ॥
एक स्थाने करोम्येव सर्वक्षेत्राणि यानि मे ॥ ६.१०७.५० ॥
भविष्यति तथा कालो रौद्रः कलिसमुद्भवः ॥
तत्र क्षेत्राणि तीर्थानि नाशं यास्यंति भूतले ॥ ५१ ॥
सतीर्थैस्तद्भयात्सर्वैः क्षेत्रमेतत्समाश्रितम् ॥
आनयिष्याम्यहमपि स्वानि क्षेत्राणि कृत्स्नशः ॥५२॥
ततस्तं चित्रशर्माणं प्राह चेदं महेश्वरः ॥
शृणु मद्वचनं कृत्स्नं कुरुष्व तदनंतरम् ॥ ५३ ॥
अत्र क्षेत्राणि सर्वाणि मदीयानि द्विजोत्तम ॥
समागच्छंतु विप्राश्च प्रभवंतु प्रहर्षिताः ॥ ५४ ॥
तवापि योग्यतां श्रेष्ठां करिष्यामि महामते ॥
यदि मे वर्तसे वाक्ये मुक्त्वा स्पर्द्धां द्विजोद्भवाम् ॥ ५५ ॥
तुरीयमपि ते गोत्रं वेदोक्तेन क्रमेण च ॥
आद्यतां चापि ते सर्वे कीर्तयिष्यंति ते द्विजाः ॥ ५६ ॥
तथान्यदपि सन्मानं तव यच्छामि च द्विज ॥
आचन्द्रार्कमसंदिग्धं पुत्रपौत्रादिकं च यत् ॥ ५७ ॥
त्वदन्वये भविष्यंति पुत्रपौत्रास्तथा परे ॥
कृत्ये श्राद्धे तर्पणे वा क्रियमाणे विधानतः ॥ ५८ ॥
आद्यस्य वत्ससंज्ञस्य नाम उच्चार्य गोत्रजम् ॥
ततो नामानि चाप्येवं कीर्तयिष्यंति भक्तितः ॥ ५९ ॥
ततः संतर्पयिष्यंति पितॄनथ पितामहान् ॥
तथान्यानपि बंधूंश्च सुहृत्संबंधिबांधवान् ॥ ॥ ६.१०७.६० ॥
त्वदन्वये विना नाम्ना त्वदीयेन विमोहिताः ॥
ये पितॄंस्तर्पयिष्यंति तेषां व्यर्थं भविष्यति ॥ ६१ ॥
श्राद्धं वा यदि वा दानं तर्पणं वा त्वदुद्भवम् ॥
तस्मादहंकृतिं मुक्त्वा मामाराधय केवलम् ॥६२॥
येन सिद्धोऽपि संसिद्धिं परामाप्नोषि शाश्वतीम् ॥
एवं संबोध्य तं विप्रं कृत्वाद्यमपि पश्चिमम्॥६३॥

ततस्तान्ब्राह्मणानाह प्रासादः क्रियतामिति ॥
गोत्रंगोत्रं पुरस्कृत्य स्थाप्यं लिंगमनुत्तमम् ॥
येन संक्रमणं तेषु मम संजायतेद्विजाः ॥ ६४ ॥
अथ ते ब्राह्मणास्तत्र भूमिभागान्मनोहरान् ॥
दृष्ट्वादृष्ट्वा प्रचक्रुश्च प्रासादान्हर्षसंयुताः ॥ ६५ ॥
अष्टषष्टिमितान्दिव्यान्कैलासशिखरोपमान् ॥
तेषु संस्थापयामासु लिङ्गानि विविधानि च ॥
क्षेत्रेक्षत्रे च यन्नाम तत्तत्संज्ञां प्रचक्रिरे ॥ ६६ ॥
अथ तेषां पुनर्दृष्टिं गत्वा देवस्त्रिलोचनः ॥
प्रोवाच मधुरं वाक्यं कस्मिंश्चित्कालपर्यये ॥
आराधितस्तपःशक्त्या लिंगसंस्थापनादनु ॥ ६७ ॥
॥ श्रीभगवानुवाच ॥ ॥
परितुष्टोऽस्मि विप्रेंद्रा युष्माकमहमद्य वै ॥
एतन्मम कृतं कृत्यं भवद्भिरखिलं ततः ॥ ६८ ॥
अस्मदीयानि लिंगानि क्षेत्राणि च कलेर्भयात् ॥
ततो मान्याश्च मे यूयं नान्यैरेतद्भविष्यति ॥ ६९ ॥
तस्माच्चित्तस्थितं शीघ्रं प्रार्थयंतु द्विजोत्तमाः ॥
संप्रयच्छामि येनाशु यद्यपि स्यात्सुदुर्लभम् ॥ ६.१०७.७० ॥ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
यदि देव प्रसन्नस्त्वमस्माकं च सुरेश्वर ॥
पश्चिमश्चित्रशर्मा च यथाद्यो भवता कृतः ॥ ७१ ॥
अस्मदीयं सदा नाम कीर्तनीयमसंशयम् ॥
श्राद्धकृत्येषु सर्वेषु यथा तेन समा वयम् ॥
भवामस्त्वत्प्रसादेन सांप्रतं चित्रशर्मणा ॥ ७२ ॥
॥श्रीभगवानुवाच ॥ ॥
युष्माकमपि ये केचिद्वशं यास्यंति मानवाः ॥
युवानः शास्त्रसंयुक्ता वेदविद्याविशारदाः ॥७३॥
आनयिष्यथ तान्यूयमामुष्यायणसंज्ञितान् ॥

नित्यं स्थिताश्च ते क्षेत्रे श्राद्धस्याक्षय्यकारकाः ॥ ७४ ॥

एवमुक्त्वाथ देवेशस्ततश्चादर्शनं गतः ॥

तेऽपि विप्राः सुसंतुष्टास्तत्र स्थाने व्यवस्थिताः ॥ ७५ ॥

एवं तत्र समस्तानि क्षेत्राण्यायतनानि च ॥

कलिभीतानि विप्रेंद्रा निवसंति सदैव हि ॥ ७६ ॥

एवं ते ब्राह्मणाः प्राप्य सिद्धिं चेश्वरपूजनात् ॥

ख्याताः सर्वत्र भुवने श्राद्धस्याक्षय्यकारकाः ॥ ७७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये ब्राह्मणचित्रशर्मलिंगस्थापनवृत्तांतवर्णनंनाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०८



॥ ऋषय ऊचुः ॥ ॥

अष्टषष्टिप्रमाणानि यानि क्षेत्राणि सूतज ॥

त्वयोक्तानि च तान्येव नामतो नः प्रकीर्तय ॥ १ ॥

तथान्यानि च तीर्थानि यानि संति धरातले ॥

तानि कीर्तय कात्स्न्र्येन परं कौतूहलं हि नः ॥ २ ॥

॥ सूत उवाच ॥ ॥

यानि प्रोक्तानि तीर्थानि भवद्भिर्द्विजसत्तमाः ॥

अष्टषष्टिप्रमाणानि तथा क्षेत्राणि भूतले ॥३॥

तानि सर्वाणि भीतानि प्रविष्टानि रसातलम् ॥

तीर्थानि मुनिशार्दूलाः पापे ह्यत्र कलौ युगे ॥४॥

एतदेव पुरा पृष्टः पार्वत्या परमेश्वरः ॥

यद्भवद्भिरहं पृष्टस्तीर्थयात्राकृते द्विजाः ॥ ५ ॥

कैलासशिखरासीनः पुरा देवो महेश्वरः ॥

सर्वैर्गणगणैः सार्धमुपविष्टो वरासने ॥ ६ ॥

प्रणाम करणार्थाय ह्यागतेष्वमरेषु च ॥

गतेषु तेषु विप्रेंद्रा सर्वेषु त्रिदिवालयम् ॥

अर्धासनगता देवी वाक्यमेतदुवाच ह ॥ ७ ॥

॥ देव्युवाच ॥ ॥

देवदेव महादेव गंगाक्षालितशेखर ॥

वद मे तीर्थमाहात्म्यं यद्यहं वल्लभा तव । ८ ॥

तिस्रः कोट्योऽर्धकोटी च तीर्थानामिह भूतले ॥

संख्यया नामतो देव मह्यं कीर्तय सांप्रतम् । ९ ॥

यानि तीर्थान्यनेकानि क्षेत्राणि चैव मे प्रभो ॥

तानि कीर्तय देवेश सुगम्यं चैव देहिनाम् ॥

कीर्तनाच्च समग्राणां तीर्थानां लभ्यते फलम् ॥ ६.१०८.१० ॥

॥ ईश्वर उवाच ॥ ॥

तीर्थशब्दो वरारोहे धर्मकृत्येषु वर्तते ॥

धर्मस्थानेषु सर्वेषु तत्त्वं शृणु समाहिता ॥ ११ ॥

माता तीर्थं पिता तीर्थं तीर्थ साधुसमागमः ॥

धर्मानुचिंतनं चैव तथैव नियमो यमः ॥ १२ ॥

पुण्याः कथा वरारोहे देवर्षीणां कृतास्तथा ॥

आश्रयाः सन्मुनींद्राणां देवानां च तथा प्रिये ॥ १३ ॥

भूमिभागाः पवित्राः स्युः कीर्त्यते तीर्थमित्युत ॥

तेषां संदर्शनादेव स्मरणाच्चावगाहनात् ॥

मुच्यंते जन्तवः पापैरपि जन्मशतोद्भवैः ॥ १४ ॥

तथा पातकिनो ये च ये च विश्वासघातकाः ॥

तेऽपि सर्वे तथा मुक्तास्तेषां चैवावगाहनात्॥ १५ ॥

एवं पापानि संयांति नाशं सर्वांगसुन्दरि ॥

अपि ब्रह्मवधात्पापं यद्भवेदिह देहिनाम् ॥

तच्चापि तीर्थसंसर्गात्प्रलयं यात्यसंशयम् ॥ १६ ॥

ममापि करसंलग्नं कपालं ब्रह्मणः पुरा ॥

पतितं तीर्थसंसर्गात्तेषां चैवावगाहनात् ॥ १७ ॥

एवं सर्वेषु तीर्थेषु तथा ह्यायतनेषु च ॥

स्नातव्यं भक्तियुक्तेन चेतसा नान्यगामिना ॥ १८ ॥

यत्र स्नातैर्नरैः सम्यक्सर्वेषां लभ्यते फलम् ॥

ममाश्रयं विशालाक्षि सर्वपातकनाशनम्॥

कामदं च तथा नृणां नारीणां च विशेषतः ॥ १९ ॥

एतद्गुह्यतमं देवि मम नित्यव्यवस्थितम् ॥

न कस्याऽपि मयाख्यातं देवेंद्रस्यापि पृच्छतः ॥ ६.१०८.२० ॥

वाल्लभ्यात्तव मे भद्रे कथितं वै वरानने ॥

अष्टषष्टिः प्रगम्यानि भक्त्या तीर्थानि मानवैः ॥ २१ ॥

ममाश्रयाणि तान्येव सर्वपापहराणि च ॥

कामदानि वरारोहे मत्प्रभावादसंशयम् ॥ २२ ॥

यं यं कामं समाधाय तत्र तीर्थे पुमान्यदि ॥
कृत्वा स्नानं ततो देवमर्चयेच्च महेश्वरम् ॥ २३ ॥
सुकृतं मनसि ध्यात्वा यैर्नरैः पूजितो हरिः ॥
आस्तां तेषां वरारोहे दर्शनं स्पर्शनं तथा ॥
स्मरणादपि मुच्यंते नराः पापैः पुराकृतैः ॥ २४ ॥
एते शक्रादयो देवास्तेषु तीर्थेषु सुन्दरि ॥
मां पूज्य त्रिदिवं प्राप्तास्तथान्ये नारदादयः ॥ २५ ॥
तान्यहं ते प्रवक्ष्यामि विस्तरेण पृथक्पृथक् ॥
नामतः शृणु देवेशि समाहितमनाः स्थिता ॥ २६ ॥
वाराणसी प्रयागं च नैमिषं चापरं तथा ॥
गयाशिरः सुपुण्यं च पवित्रं कुरुजांगलम् ॥ २७ ॥
प्रभासं पुष्करं चैव विश्वेश्वरमथापरम ॥
अट्टहासं महेन्द्रं च तथैवोज्जयनी च या ॥ २८ ॥
मरुकोटिः शंकुकर्णं गोकर्णं क्षेत्रमुत्तमम् ॥
रुद्रकोटिः स्थलेशं च हर्षितं वृषभध्वजम् ॥ २९ ॥
केदारं च तथा क्षेत्रं क्षेत्रं मध्यमकेश्वरम् ॥
सहस्राक्षं तथा क्षेत्रं तथान्यत्कार्तिकेश्वरम् ॥ ६.१०८.३० ॥
तथैव वस्त्रमार्गं च तथा कनखलं स्मृतम् ॥
भद्रकर्णं च विख्यातं दण्डकाख्यं तथैव च ॥ ३१ ॥
त्रिदण्डाख्यं तथा क्षेत्रं तथैव कृमिजांगलम् ॥
एकाम्रं च तथा क्षेत्रं क्षेत्रं छागलकं तथा ॥ ३२ ॥
कालिंजरं च देवेशि तथान्यन्मण्डलेश्वरम् ॥
काश्मीरं मरुकेशं च हरिश्चंद्रं सुशोभनम्॥ ३३ ॥
पुरश्चंद्रं च वामेशं कुकुटेश्वरमेव च ॥
भस्मगात्रमथोकारं त्रिसंध्या विरजा तथा ॥ ३४ ॥।
अर्केश्वरं च नेपालं दुष्कर्णं करवीरकम् ॥
जागेश्वरं तथा देवि श्रीशैलं पर्वतोत्तमम् ॥ ३५ ॥
अयोध्या चैव पातालं तथा कारोहणं महत् ॥

देविका च नदी पुण्या भैरवं पूर्वसागरः ॥ ३६ ॥

सप्तगोदावरीतीर्थं तथैव समुदाहृतम् ॥

निर्मलेशं तथान्यच्च कर्णिकारं सुशोभनम् ॥ ३७ ॥

कैलासं जाह्नवीतीरं जललिंगं च वाडवम्॥

बदरीतीर्थवर्यं च कोटितीर्थं तथैव च ॥ ३८ ॥

विंध्याचलो हेमकूटं गन्धमादनमेव च ॥

लिंगेश्वरं तथा क्षेत्रं लंकाद्वारं तथैव च ॥ ३९ ॥

नलेश्वरं तु मध्येशं केदारं रुद्रजालकम् ॥

सुवर्णाख्यं च वामोरु तथान्यत्षष्टिकापथम् ॥ ६.१०८.४० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेशवरक्षेत्रमाहात्म्ये ऽष्टषष्टितीर्थवर्णनंनामाष्टोत्तरशततमोऽध्यायः ॥ ॥ १०८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १०९



॥ ईश्वर उवाच ॥ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि वरानने ॥
सर्वेषामेव तीर्थानां सारं तीर्थसमुच्चयम् ॥ १ ॥
एतेष्वहं वरारोहे सर्वेष्वेव व्यवस्थितः ॥
नाम्ना चान्येषु तीर्थेषु त्रिदशानां हितार्थतः ॥ २ ॥
यो मामेतेषु तीर्थेषु स्नात्वा पश्यति मानवः ॥
कीर्तयेत्कीर्तनान्नाम्ना स नूनं मोक्षमाप्नुयात् ॥ ३ ॥
॥ श्रीदेव्युवाच ॥ ॥
येषु तीर्थेषु यन्नाम कीर्तनीयं तव प्रभो ॥
तत्कात्स्र्येन मम ब्रूहि यच्चहं तव वल्लभा ॥ ४ ॥
॥ ईश्वर उवाच ॥ ॥
वाराणस्यां महादेवं प्रयागे च महेश्वरम् ॥
नैमिषे देवदेवं च गयायां प्रपितामहम् ॥ ५ ॥
कुरुक्षेत्रे विदुः स्थाणुं प्रभासे शशिशेखरम् ॥
पुष्करे तु ह्यजागन्धिं विश्वं विश्वेश्वरे तथा ॥ ६ ॥
अट्टहासे महानादं महेन्द्रे च महाव्रतम् ( १०) ॥
उज्जयिन्यां महाकालं मरुकोटे महोत्कटम् ॥७॥
शंकुकर्णे महातेजं गोकर्णे च महाबलम् ॥
रुद्रकोट्यां महायोगं महालिंगं स्थलेश्वरे ॥८॥
हर्षिते च तथा हर्षं वृषभं वृषभध्वजे ॥
केदारे चैव ईशानं शर्वं मध्यमकेश्वरे ( २० )।ं।९ ॥
सुपर्णाक्षं सहस्राक्षे सुसूक्ष्मं कार्तिकेश्वरे ॥
भवं वस्त्रापथे देवि ह्युग्रं कनखले तथा ॥ ६.१०९.१० ॥
भद्रकर्णे शिवं चैव दण्डके दण्डिनं तथा ॥
ऊर्ध्वरेतं त्रिदण्डायां चण्डीशं कृमिजांगले ॥ ११ ॥
कृत्तिवासं तथैकाम्रे छागलेये कपर्दिनम् ०३०) ॥
कालिञ्जरे नीलकण्ठं श्रीकण्ठं मण्डलेश्वरे ॥ १२ ॥
विजयं चैव काश्मीरे जयन्तं मरुकेश्वरे ॥
हरिश्चन्द्रे हरं चैव पुरश्चन्द्रे च शंकरम्॥ १३ ॥

जटिं वामेश्वरे विन्द्यात्सौम्यं वै कुक्कुटेश्वरे ॥
भूतेश्वरं भस्मगात्रे ओंकारेऽमरकण्टकम् ( ४०) ॥ १४ ॥
त्र्यंबकं च त्रिसंध्यायां विरजायां त्रिलोचनम् ॥
दीप्तमर्केश्वरे ज्ञेयं नेपाले पशुपालकम् ॥ १५ ॥
यमलिंगं च दुष्कर्णे कपाली करवीरके ॥
जागेश्वरे त्रिशूली च श्रीशैले त्रिपुरांतकम् ॥ १६ ॥
रोहणं तु अयोध्यायां पाताले हाटकेश्वरम् ( ५०) ॥
कारोहणे नकुलीशं देविकायामुमापतिम्॥ १७ ॥
भैरवे भैरवाकारममरं पूर्वसागरे ॥
सप्तगोदावरे भीमं स्वयंभूर्निर्मलेश्वरे ॥ १८ ॥
कर्णिकारे गणाध्यक्षं कैलासे तु गणाधिपम् ॥
गंगाद्वारे हिमस्थानं जल लिंगे जलप्रियम्( ६०) ॥ १९ ॥
अनलं वाडवेऽग्नौ च भीमं बदरिकाश्रमे ॥
श्रेष्ठे कोटीश्वरं चैव वाराहं विन्ध्यपर्वते ॥ ६.१०९.२० ॥
हेमकूटे विरूपाक्षं भूर्भुवं गन्धमादने ॥
लिंगेश्वरे च वरदं लंकायां च नरांतकम् (६८) ॥ २१ ॥
अष्टषष्टिरियं देवि तवाख्याता विशेषतः ॥
पठतां शृण्वतां वापि सर्वपातकनाशिनी ॥ २२ ॥
तस्मात्सर्वप्रयत्नेन कीर्तनीया विचक्षणैः ॥
कालत्रयेऽपि शुचिभिर्विशेषाच्छिवदीक्षितैः ॥ २३ ॥
लिखितापि वरारोहे यस्यैषा तिष्ठते गृहे ॥
न तत्र जायते दोषो भूतप्रेतसमुद्भवः ॥ २४ ॥
न व्याधेर्न च सर्पाणां न चौराणां वरानने ॥
नान्येषां भूभुजादीनां कदाचिदपि कुत्रचित् ॥ २५ ॥
इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्येऽष्टषष्टितीर्थमाहात्म्य कथनंनाम नवोत्तरशततमोध्यायः ॥ १०९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११०

https://sa.wikisource.org/s/fzm
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ श्रीदेव्युवाच ॥ ॥

नैतेष्वपि सुरश्रेष्ठ सर्वेषु भुवि मानवाः ॥

अपि दीर्घायुषो भूत्वा स्नातुं शक्ताः कथंचन ॥ १ ॥

एतेषामपि साराणि मम तीर्थानि कीर्तय ॥

येषु स्नातो नरः सम्यक्सर्वेषां लभते फलम् ॥ २ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

एतेषां मध्यतो देवि तीर्थाष्टकमनुत्तमम् ॥

अस्ति स्नातैर्नरैस्तत्र सर्वेषां लभ्यते फलम् ॥ ३ ॥

नैमिषं चैव केदारं पुष्करं कृमिजांगलम् ॥

वाराणसी कुरुक्षेत्रं प्रभासं हाटकेश्वरम् ॥ ४ ॥

अष्टास्वेतेषु यः स्नातः सम्यक्छ्रद्धासमन्वितः ॥

स स्नातः सर्वतीर्थेषु सत्यमेतन्मयोदितम् ॥ ५ ॥

॥ श्रीदेव्युवाच ॥ ॥

कलिकाले महादेव भविष्यति कथंचन ॥

स्नानं तस्मान्मम ब्रूहि यत्सारं तीर्थमेव हि ॥ ६ ॥

अष्टानामपि चैतेषां देवदेव त्रिलोचन ॥

यद्यहं वल्लभा भक्ता तथा चित्तानुवर्तिनी ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

अष्टानामपि देवेशि क्षेत्राणामस्ति चोत्तमम् ॥

एतेषामपि तत्क्षेत्रं हाटकेश्वरसंज्ञितम् ॥ ८ ॥

यत्र सर्वाणि क्षेत्राणि संस्थितानि ममाज्ञया ॥

तथान्यानि च तीर्थानि कलिकालेऽपि संस्थिते ॥ ९ ॥

तस्मात्सर्वप्रयत्नेन तत्क्षेत्रं सेव्यमेव हि ॥

मानुषैर्मोक्षमिच्छद्भिः सत्यमेतन्म योदितम् ॥ ६.११०.१० ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातमष्टषष्टिसमुद्भवम् ॥
समुच्चयं द्विजश्रेष्ठा नामदेवसमन्वितम् ॥ ११ ॥
यथा देवेन चाख्यातं पार्वत्या गुह्यमुत्तमम् ॥
प्रसन्नेन मया कृत्स्नं युष्माकं समुदाहृतम् ॥।२॥
यश्चैतत्पठते भक्त्या ह्यष्टषष्टिसमुद्भवम् ॥
स्नानजं लभते पुण्यं शृण्वानः श्रद्धयान्वितः ॥ १३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्यऽष्टषष्टितीर्थमाहात्म्यवर्णनंनाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १११



॥ ऋषय ऊचुः ॥ ॥
शिवक्षेत्राणि यैर्विप्रैः समानीतानि तत्र च ॥
तेषां सर्वाणि गोत्राणि वद सूतज विस्तरात् ॥ १ ॥
कस्य गोत्रोद्भवैर्विप्रैः किं क्षेत्रं समुपार्जितम् ॥
शंकरस्य प्रसादेन तस्मिन्काल उपस्थिते ॥२॥
कियत्यपि च गोत्राणि चमत्कारपुरोत्तमे ॥
स्थापितानि सुभक्तेन तेनानर्तेन सूतज ॥ ३॥
त्वया प्रोक्तं पुरा दत्तं पुरं कृत्वा द्विजन्मनाम् ॥
न च तेषां कृता संख्या तस्मात्तां परिकीर्तय ॥ ४ ॥
॥ सूत उवाच ॥ ॥
उपदेशः पुरा दत्तो द्विसप्ततिमुनीश्वरैः ॥
आनर्ताधिपतिः पूर्वं कुष्ठरोग प्रपीडितः ॥
शंखतीर्थं समागत्य स्नानं चक्रे त्वरान्वितः ॥ ५ ॥
तेन नाशं गतः कुष्ठो भूपतेस्तस्य तत्क्षणात् ॥
तस्य तीर्थस्य माहात्म्यान्निर्वि ण्णस्य तनुं प्रति ॥ ६ ॥
ततः स नीरुजो भूत्वा तोषेण महतान्वितः ॥
तानुवाच मुनिश्रेष्ठान् प्रणिपत्य मुहुर्मुहुः ॥ ७ ॥
सुवर्णं वा गजाश्वं वा राज्यं सकलमेव वा ॥
भवद्भ्यः संप्रदास्यामि तस्मादब्रूत द्विजोत्तमाः ॥ ८ ॥
यद्यस्य रोचते यावन्मात्रमन्यदपि द्विजाः ॥
प्रसादः क्रियतां मह्यं दीनस्य प्रणतस्य च ॥ ९ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
निष्परिग्रहधर्माणो वानप्रस्था वयं द्विजाः ॥
सद्यःप्रक्षालकाः किं नो राज्येन विभवेन च ॥ 6.111.१० ॥ ॥
॥ राजोवाच । ॥
उपकारं समासाद्य यः करोति न पापकृत् ॥
उपकारं पुनस्तस्य स कृतघ्न उदाहृतः ॥ ११ ॥
ब्रह्मघ्नं च सुरापे च चौरे भग्नव ते शठे ॥
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२ ॥
तस्मात्कृत्वा प्रसादं मे किंचिदब्रूत् द्विजोत्तमाः॥
येनानृण्यं प्रगच्छामि यद्यपि स्यात्सुजीवितम् ॥।३॥
॥ मुनय ऊचुः ॥ ॥
सत्यमेतन्महाभाग कृतघ्ने नास्ति निष्कृतिः॥
परं तत्र भवेद्दोषो यत्र दाता तु सस्पृहः॥।४॥
निःस्पृहो यत्र राजेन्द्र ह्युपकारपरो भवेत्॥
न तत्र जायते दोषः स्वल्पोऽपि च कथंचन ॥।५॥
तस्मात्त्वं गच्छ राज्यं स्वं स्वधर्मेण प्रपालय ॥
इह लोके परे चैव येन सौख्यं प्रजायते ॥ १६ ॥
एवं स भूमिपो विप्रैर्निषिद्धः स सहस्रधा ॥

कृच्छ्रेण तान्प्रणम्योच्चैर्जगाम स्वगृहं ततः ॥।७॥
तत्र गत्वा प्रहृष्टा त्माकृत्वा रम्यं महेश्वरम् ॥
गीतनृत्यसवाद्यैश्च रात्रिजागरणादिभिः ॥
चकार पूर्ववद्राज्यं समंताद्धतकंटकम् ॥ १८ ॥
चिंतयानो दिवानक्तं ब्राह्मणान्प्रति तत्सदा ॥
कथं तेषां द्विजेंद्राणामुपकारो भविष्यति ॥
मदीयो मम यैर्दत्तं गात्रमेतत्पुनर्नवम् ॥ १९ ॥
तेऽपि सर्वे मुनिश्रेष्ठाः खेचरत्व समन्विताः ॥
तपःशक्त्या यांति नानातीर्थेषु भक्तितः ॥ 6.111.२० ॥
तेषु स्नानं जपं कृत्वा तथैव पितृतर्पणम् ॥
प्राणयात्रां पुनश्चक्रुस्तत्रागत्य स्व आश्रमे ॥ २१ ॥
अन्ये तत्रैव कुर्वंति नित्यकृत्यानि ये द्विजाः ॥
तथान्ये दूरमासाद्य तीर्थं दृष्ट्वा मनोहरम् ॥ २२ ॥
उषित्वा रजनीं तत्र द्विरात्रं वा पुनर्गृहम्॥
समागच्छंति चान्ये तु त्रिरात्रेण समाययुः ॥ २३ ॥
वाराणस्यां प्रयागे वा पुष्करे वाथ नैमिषे ॥
प्रभासे वाऽथ केदारे ह्यन्यस्मिन्नहि वांछ्यते ॥ २४ ॥
कदाचिदथ ते सर्वे कार्तिक्यां पुष्करत्रये ॥
गता विनिश्चयं कृत्वा स्नानार्थं द्विजसत्तमाः ॥ २५ ॥
पंचरात्रं वसिष्यामो वयं तत्र समाहिताः ॥
तस्माद्वह्निषु दारेषु रक्षा कार्या स्वशक्तितः ॥ २६ ॥
एवं ते समयं कृत्वा गता यावद्द्विजोत्तमाः॥
तावद्ध पतिना ज्ञाता न कश्चित्तत्र तिष्ठति । २७ ॥
तेषां मध्ये मुनींद्राणां सुतीर्थाश्रमवासिनाम् ॥
दमयंतीति विख्याता चंद्रबिंबसमानना ॥ २८ ॥।
तामुवाच रहस्येवं व्रज त्वं चारुहासिनि।
हाटकेश्वरजे क्षेत्रे ममादेशोऽधुना ध्रुवम् ॥ २९ ॥
तत्र तिष्ठंति याः पत्न्यो मुनीनां भावितात्मनाम् ॥।
भूषणानि विचित्राणि तासां यच्छ यथेच्छया ॥ 6.111.३० ॥
न तासां पतयोऽस्माकं प्रकुर्वंति प्रतिग्रहम् ॥
कथंचिदपि सुश्रोणि लोभ्यमानापि भूरिशः ॥ ३१ ॥
स्त्रीणां भूषणजा चिन्ता सदा चैवाधिका भवेत् ॥
लौल्यं च कौतुकं चैव सदा भूषणजं भवेत् ॥ ३२ ॥
अपि मृन्मयकं किंचित्काष्ठसूत्रमयं च वा ॥
जतुकाचमयं वापि नारी धत्ते विभूषणम् ॥ ३३ ॥
एष एव भवेत्तेषामुपकारस्यसंभवः ॥
उपायः पद्मपत्राक्षि न चान्योऽस्ति कथंचन ॥ ३४ ॥
सा तथेति प्रतिज्ञाय विचित्राभरणानि च ॥
गृहीत्वा हर्षसंयुक्ता ततस्तत्क्षेत्रमाययौ ॥३५॥
मणिमुक्तामयान्येव कुण्डलानि शुभानि च ॥
तथा चन्द्रोज्ज्वलाहारान्नूपुराणि बृहंति च ॥ ३६ ॥
इन्द्रनीलमहानीलवैडूर्यखचितानि च ।
पद्मरागैस्तथा वज्रैर्माणिक्यैश्च मनोरमैः॥३७॥
केशैः कंकणैर्दिव्यैः शक्रचापनिभैः शुभैः ॥
हेमसूत्रैश्च जात्यैश्च मेखलाभिस्तथैव च ॥ ३८ ॥

अथ सा बोधने विष्णोः संप्राप्ते दिवसे शुभे ।
उपवासपरा स्नाता एकस्मिन्सलिलाशये ॥ ३९ ॥
तीरदेशे निवेश्यैव महाभूषणपर्वतम् ॥
यस्य प्रभाभिरुग्राभिर्व्याप्तं गगनमंडलम् ॥ 6.111.४० ॥
एतस्मिन्नंतरे प्राप्तास्तापस्यः कौतुकान्विताः ॥
कीदृशा राजपत्नी सा किंरूपा किंविभूषणा ॥ ४१ ॥
अथ तास्तां समालोक्य दिव्यभूषणभूषिताम्॥
सुरूपांगीं समाधिस्थां चित्ते चिन्तां प्रचक्रिरे ॥ ४२ ॥
धन्येयं भूपतेर्भार्या यैवं भूषणभूषिता ॥
दमयंती सुरूपाढ्या सर्वलक्षणलक्षिता ॥ ४३ ॥
समाध्यंतं समासाद्य तापसीर्वीक्ष्य साऽपि च ॥
दमयंती नमश्चक्रे ताः सर्वा विधिपूर्वकम् ॥ ४४ ॥
ताः कृतांजलिना प्राह वल्गुवाक्यं मनोहरम् ॥
मयायं भूषणस्तोम उद्दिश्य गरुडध्वजम्॥
कल्पितोऽद्य दिने स्नात्वा समुपोष्य दिने हरेः ॥ ४५ ॥
तस्माद्गृह्णंतु तापस्यो मया दत्तानि वांछया ॥।
भूषणानि विचित्राणि प्रसादः क्रियतां मम ॥ ४६ ॥
ततश्चैकाऽब्रवीत्तासामेषा मुक्तावली मम ॥
इमां देहि न मे वांछा विद्यतेऽन्या नृपप्रिये॥४७॥
ततस्तया विहस्योच्चैः प्रक्षाल्य चरणौ स्वयम्॥
दत्ता मुक्तावली तस्या वस्त्रैर्दिव्यैः समन्विता ॥
यस्याः षण्माषतुल्यानि मौक्तिकान्यमलानि च ॥ ४८ ॥
शरत्काले यथा व्योम्नि नक्षत्राणि द्विजोत्तमाः॥
तथान्या स्पर्द्धया युक्ता ययाचेऽमलवर्चसम्॥
हारं निर्मूल्यतायुक्तं चित्ताह्लादकरं परम् ॥ ॥ ४९ ॥
अथ सा तं करे कृत्वा तस्या हारं प्रयच्छति ॥
तावदन्या प्रजग्राह हारं शृंगारलालसा ॥ 6.111.५० ॥
ततः शेषाश्च तापस्यो भूषणार्थं समुत्सुकाः ॥
सस्पर्द्धा जगृहुस्तानि भूषणानि स्वयं द्विजाः ॥ ५१ ॥
अन्याश्चान्याकरे कृत्वा भूषणं सुमनोहरम् ॥
बलादाकृष्य जग्राह धर्षयित्वा ततः परम्॥ ५२ ॥
यथायथा प्रगृह्णंति तापस्यो भूषणार्चिताः ॥
तथातथास्याः संजज्ञे दमयंत्या मुदा हृदि ॥ ५३ ॥
अन्यानि च प्रचिक्षेप शतशोऽथ सहस्रशः ॥
न तृप्तिर्जायते तासां तथापि द्विजसत्तमाः ॥५४॥
भूषणाभावमासाद्य ततः सा पार्थिवप्रिया ॥
हृष्टा प्रोवाच ताः सर्वाः संतोषः क्रियतामिति॥५५॥
पुनश्चैवानयिष्यामि प्रभाते नात्र संशयः॥
अन्यानि च विचित्राणि यस्या रोचंति यानि च॥५६॥
ततस्ताः सकलाः प्रोचुर्गच्छ त्वं पार्थिवप्रिये॥
आगंतव्यं च भूयोऽपि प्रगृह्याभरणानि च ॥ ५७ ॥
एवमुक्ता ततस्ताभिः प्रणिपत्य नृपप्रिया ॥
प्रहृष्टा प्रययौ तूर्णं स्वपुरं प्रति सद्द्विजाः ॥ ५८ ॥
तापस्योपि गृहं गत्वा वस्त्राणि विविधानि च ॥
भूषणानि च गात्रेषु सस्पर्द्धा निदधुस्तदा ॥ ५९ ॥

तापसीनां चतुष्कं च परित्यज्य यतव्रतम् ॥
शेषाभिः प्रगृहीतानि मण्डनानि यथेच्छया ॥ 6.111.६० ॥
ततः प्रभाते विमले प्रोद्गते रविमण्डले ॥
भूयोपि राजपत्नी सा भूषणान्यंबराणि च ॥ ॥ ६१ ॥
तथैव प्रददौ तासां जगृहुश्च तथैव ताः ॥
एवं तस्याः प्रयच्छंत्या अहन्यहनि भक्तितः ॥ ६२ ॥
पंचरात्रमतिक्रांतं तृप्तास्तास्तापसप्रियाः ॥
न राज्ञी तृप्तिमायाति प्रयच्छंती प्रभक्तितः ॥ ६३ ॥
ततः शुश्राव तापस्यश्चतस्रोऽत्र सुनिःस्पृहाः ॥
वल्कलाजिनधारिण्यो न तस्याः पार्श्वमागताः ॥
न चान्या भूषिता दृष्ट्वा चक्रुरीर्ष्यां कथंचन ॥ ६४ ॥
अथ सा त्वरितं गत्वा तासां पार्श्वमनिंदिता ॥
भूषणानि महार्हाणि गृहीत्वा पंचमीदिने ॥ ६५ ॥
ततः प्रोवाच ताः सर्वाः प्रसादः क्रियतामिति ॥
इमानि भूषणार्थाय भूषणानि प्रगृह्यताम् ॥ ६६ ॥
॥ तापस्य ऊचुः ॥(। २॥
नास्माकं भूषणैः कार्यं भूषिता वल्कलैर्वयम् ॥
तस्माद्गच्छ निजं हर्म्यमर्थिभ्यः संप्रदीयताम् ॥ ६७ ॥
वदन्तीनां तया सार्धमेवं तासां द्विजोत्तमाः।
चत्वारः पतयः प्राप्ता एकैकस्याः पृथक्पृथक् ॥६८॥
शुनःशेपोऽथ शाक्रेयो बौद्धो दान्तश्चतुर्थकः।
वियन्मार्गं हि चत्वारः स्वाश्रममाययुः ॥ ६९ ॥
शेषाः सर्वे गतिभ्रंशं प्राप्य भूमार्गमाश्रिताः ॥
अथ ते स्वाश्रमं दृष्ट्वा विकृताकारभूषणम् ॥
किमिदंकिमिदं प्रोचुर्यत्तापस्यो विडंबिताः ॥ 6.111.७० ॥
केनैवं पाप्मनाऽस्माकमाश्रमोऽयं विडंबितः ॥
प्रदत्त्वा तापसीनां च भूषणान्यंबराणि च ॥ ७१ ॥ ॥
॥ तत्पत्न्य ऊचुः ॥ ॥
चमत्कारस्य भूपस्य यैषा भार्या व्यवस्थिता ०९।
अनया संप्रदत्तानि सर्वासां भूषणानि वै ॥ ७२ ॥
अस्माकमपि संप्राप्ता गृहे वै नृपवल्लभा ॥
दातुं विभूषणान्येव निषिद्धाऽस्माभिरद्य सा ॥ ७३ ॥
॥ सूत उवाच ॥ ॥
तासां तद्वचनं श्रुत्वा ततस्ते कोप मूर्च्छिताः ।
ऊचुस्तां नृपतेर्भार्यां शापं दातुं मुहुर्मुहुः ॥ ७४ ॥
द्विसप्ततिर्वयं पापे स्नानार्थं पुष्करं गताः ॥
कार्तिक्यां व्योममार्गेण मनोमारुतरंहसा ॥ ७५ ॥
चत्वारस्त इमे प्राप्ता येषां दारैः प्रतिग्रहः ॥
न कृतस्तस्य भूपस्य कुभार्यायाः कथंचन ॥ ७६ ॥
तस्माद्विडंबितो यस्मादाश्रमोऽयं तपस्विनाम् ॥
शिलारूपा च भवती तस्माद्भवतु कुत्सिता ॥ ७०७ ॥
अथ सा तत्क्षणादेव शिलारूपा बभूव ह ॥
निश्चेष्टा तत्क्षणादेव मुनिवाक्यादनंतरम् ॥ ७८ ॥
ततः स परिवारोऽस्यास्तद्दुःखेन समाकुलः ॥
वाष्पपूर्णेक्षणो दीनः प्रस्थितः स्वपुरं प्रति ॥ ७९ ॥

कथयामास तत्सर्वं दमयंत्याः समुद्भवम् ॥
वृत्तांतं ब्राह्मणश्रेष्ठास्तस्याः शापसमुद्भवम् ॥ 6.111.८० ॥
श्रुत्वा स पार्थिवस्तूर्णं वृत्तांतं शापजं तदा ॥
प्रसादनाय विप्राणां दुःखितः स वनं ययौ ॥ ८१ ॥
ततस्ते मुनयस्तूर्णं चत्वारोऽपि महीपतिम् ॥
ज्ञात्वा प्रसादनार्थाय भार्यार्थं समुपस्थितम् ॥ ८२ ॥
अग्निहोत्राणि दारांश्च समादाय ततः परम् ॥
कुरुक्षेत्रं समाजग्मुः खमार्गेण द्रुतं तदा ॥ ८३ ॥
पार्थिवोऽपि समन्वेष्य यत्नात्तान्सर्वतो मुनीन्।
निर्विण्णः श्रमार्तश्च भार्याव्यसनदुःखितः ॥९४॥
ततो जगाम तं देशं यत्र भार्या शिलामयी ॥
सा स्थिता तापसीवृन्दैः सर्वतोऽपि समन्विता ॥८५॥
अथ तां तादृशीं दृष्ट्वा सेवकैः सकलैर्वृतः ॥
हाहेति स मुहुः प्रोच्य मूर्च्छितः प्रापतत्क्षितौ ॥९६॥
ततः कृच्छ्रात्समासाद्य संज्ञां तोयसमुक्षितः॥
प्रलापमकरोत्पश्चात्स्मृत्वास्मृत्वा प्रियान्गुणान् ॥८७॥
हा प्रिये मृगशावाक्षि मम प्राणविनाशिनि ॥
मां मुक्त्वाऽद्य प्रियं कांतं क्व गतासि शुभानने ॥८८॥
नाभुक्ते मयि भुक्तासि निद्रां नाऽनिद्रिते गता ॥
न सौभाग्यस्य गर्वेण ममाज्ञा लंघिता क्वचित्॥ ८९ ॥
न स्मरामि त्वया प्रोक्तं कदाचिद्वि कृतं वचः ॥
रहस्यपि विशालाक्षि किमु भोजनसंसदि ॥ 6.111.९० ॥
॥ सूत उवाच ॥ ॥
एवं प्रलपतस्तस्य भूपतेः करुणं बहु ॥
आयाता मंत्रिणस्तस्य श्रुत्वा भूपं तथाविधम् ॥ ९१ ॥
ततः संबोध्य तं कृच्छाद्दृष्टान्तैर्बहुविस्तरैः ॥
राजर्षीणां पुराणानां महद्व्यसनसंभवैः ॥ ९२ ॥
निन्युस्तं भूपतिं दीनं वाष्पव्याकुललोचनम् ॥
निश्वसंतं यथानागं तेजसा परिवर्जितम् ॥ ९३ ॥
सोऽपि कृत्वाऽऽलयं तस्याः समंतात्सुमनोहरम्॥
कर्पूरागरुधूपाद्यैर्वस्त्रकुंकुमचन्दनैः ॥
योजयामास तां भार्यां शिलारूपामपि स्थिताम् ॥ ९४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये दमयन्त्युपाख्याने दमयन्त्या विप्रशापेन शिलात्वप्राप्तावानर्ताधिपतिकृतशोककथनंनामैकादशोत्तर शततमोऽध्यायः ॥ १११ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११२

https://sa.wikisource.org/s/fgr
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

सूत उवाच ॥ ॥

ततः कतिपयाहस्य गते तस्मिन्महीपतौ ॥

स्वगृहं प्रति दुःखार्ते परिवारसमन्विते ॥ १ ॥

पद्भ्यामेव समायाता ह्यष्टषष्टिर्द्विजोत्तमाः ॥

परिश्रांताः कृशांगाश्च धूलिधूसरिताननाः ॥ २ ॥

यावत्पश्यति दाराः स्वा दिव्याभरण भूषिताः ॥

दिव्यवस्त्रैः सुसंवीता राजपत्न्य इवापराः ॥ ३ ॥

ततश्च विस्मयाविष्टाः पप्रच्छुस्ते क्षुधान्विताः ॥

किमिदं किमिदं पापा विरुद्धं विहितं वपुः ॥ ४ ॥

कथं प्राप्तानि वस्त्राणि भूषणानि वराणि च ॥

नूनमस्मद्गतेर्भ्रंशः खे जातो नाऽन्यथा भवेत् ॥ ५ ॥

विकारमेनं संत्यक्त्वा युष्मदीयं सुगर्हिताः॥

अथ ताः सर्ववृत्तांतमूचुस्तापसयोषितः॥६॥

यथा राज्ञी समायाता दमयन्ती नृपप्रिया॥

भूषणानि च दत्तानि तया चैव यथा द्विजाः ॥ ७॥

यथा शापश्च सञ्जातो ब्राह्मणानां महात्मनाम्॥

अथ ते मुनयः क्रुद्धास्तच्छ्रुत्वा गर्हितं वचः ॥

राजप्रतिग्रहो निंद्यस्तापसानां विशेषतः॥८॥

ततो भूपस्य राष्ट्रस्य नाशार्थं जगृहुर्जलम्॥

क्रोधेन महताविष्टा वेपमाना निरर्गलम्॥९॥

अनेन पाप्मनाऽस्माकं कुभूपेन प्रणाशिता॥

खे गतिर्लोभयित्वा तु पत्न्योऽस्माकमकृत्रिमाः ॥

सरलास्तद्गणाः सर्वे येनेदृग्व्यसनं स्थितम् ॥॥6.112.१०॥

॥ सूत उवाच ॥ ॥

एवं ते मुनयो यावच्छापं तस्य महीपतेः॥

प्रयच्छंति च तास्तावदूचुर्भार्या रुषान्विताः ॥ ११ ॥

न देयो भूपतेस्तस्य शापो ब्राह्मणसत्तमाः ॥

अस्मदीयं वचस्तावच्छ्रोतव्यमविशंकितैः ॥।१२॥

वयं सर्वा नरेन्द्रस्य भार्यया समलंकृताः ॥

सुवस्त्रैर्भूषणैर्दिव्यैः श्रद्धापूतेन चेतसा ॥ १३ ॥

वयं दरिद्रदोषेण सदा युष्मद्गृहे स्थिताः ॥

कर्शिता न च संप्राप्तं सुखं मर्त्यसमु द्भवम् ॥१४॥

एतेषां परलोकोऽत्र विद्यते ये तपोरताः ॥

न च मर्त्यफलं किंचिदपि स्वल्पतरं भवेत् ॥१५॥

अन्येषां विषयस्थानामिह लोकः प्रकीर्तितः ॥

भोगप्रसक्तचित्तानां नीचानां सुदुरात्मनाम् ॥ १६ ॥

गृहस्थाश्रमिणां चैव स्वधर्मरतचेतसाम् ॥

इह लोकः परश्चैव जायते नाऽत्र संशयः ॥१७॥

ता वयं नात्र सन्देहो गृहस्थाश्रममुत्तमम् ॥

संसेव्य साधयिष्यामो लोकद्वयमनुत्तमम् ॥१८॥

तस्माद्गृहाणि रम्याणि प्रवदंति समाहिताः ॥

भूपालाद्भूमिमादाय वृत्तिं चैवाभिवांछिताम् ॥ १९ ॥

ततश्चैवाथ वीक्षध्वं पुत्रपौत्रसमुद्भवम् ॥

सौख्यं चापि कुमारीणां बांधवानां विशेषतः ॥ 6.112.२० ॥

न करिष्यथ चेद्वाक्यमेतदस्मदुदीरितम् ॥

सर्वाः प्राणपरित्यागं करिष्यामो न संशयः ॥ २१ ॥

यूयं स्त्रीवधपापेन युक्ताः सन्तस्ततः परम् ।

नरकं रौरवं दुर्गं गमिष्यथ सुनिश्चितम् ॥२२॥

एवं ते मुनयः श्रुत्वा तासां वाक्यानि तानि वै ॥

भूपृष्ठे तत्यजुस्तोयं शापार्थं यत्करैर्धृतम् ॥२३॥

ततस्तत्तोयनिर्दग्धं तद्विभागं क्षितेस्तदा ॥

ऊषरत्वमनुप्राप्तमद्यापि द्विजसत्तमाः ॥ २४ ॥

आस्तामन्नादिकं तत्र यदुप्तं न प्ररोहति ॥

न जन्म चाप्नुयाद्भूयः पक्षी वा कीट एव वा ॥ २५ ॥

तृणं वाथ मृगस्तत्र किं पुनर्भक्तिमान्नरः ॥

यस्तत्र कुरुते श्राद्धं श्रद्धया फाल्गुने नरः ॥ २६ ॥

पौर्णमास्यां रवैर्वारे स पितॄनुद्धरेन्निजान् ॥

अपि स्वकर्मणा प्राप्तान्नरके दारुणाकृतौ ॥ २७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये दमयन्त्युपाख्यान ऊषरोत्पत्तिमाहात्म्यकथनंनाम द्वादशोत्तरशततमोऽध्यायः ॥ ११२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११३



॥ सूत उवाच ॥ ॥

ततस्ते ब्राह्मणाः सर्वे गतकोपा दधुर्मतिम् ॥

यज्ञकर्मसु गार्हस्थ्ये पुत्रपौत्रसमुद्भवे ॥ १ ॥

एतस्मिन्नंतरे राजा स तान्प्राप्तान्द्विजोत्तमान्॥

श्रुत्वा भक्ति समायुक्तः प्रणामार्थमुपागतः ॥ २ ॥

श्रुत्वा कोपगतां वार्तामुपशामकृतां तथा ॥

गार्हस्थ्याप्रतिपन्नानां वाक्यैर्भार्यासमुद्भवैः ॥ ३ ॥

ततः प्रणम्य तान्सर्वान्साष्टांगं स महीपतिः ॥

ततः कृतांजलिपुटः प्रोवाच विनतः स्थितः ॥ ४ ॥

युष्मदीयप्रसादेन संप्राप्तं जन्मनः फलम् ॥

मया रोगविनाशेन तस्माद्ब्रूत करोमि किम् ॥ ५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

भार्यया तव राजेंद्र वयं सर्वत्र वासिनः ॥

नीताः कृतार्थतां दत्त्वा रत्नानि विविधानि च॥ ६ ॥

तस्मात्पुरवरं कृत्वा क्षेत्रेऽत्रैव सुशोभने ॥

अस्माकं देहि गार्हस्थ्यं येन सम्यक्प्रजायते ॥ ७ ॥

यजामो विविधैर्यज्ञैः सदा संपूर्णदक्षिणैः ।

इमं लोकं परं चैव साधयामः सदास्थिताः ॥ ८ ॥

तच्छ्रुत्वा पार्थिवो हृष्टस्तथेत्युक्त्वा ततः परम् ॥

अनुकूलदिने प्राप्ते शिल्पानाहूय भूरिशः ॥ ९ ॥

पुरं प्रकल्पयामास बहुप्राकारसंकुलम्॥

प्राकारपरिखायुक्तं गोपुरैः समलंकृतम् ॥ 6.113.१० ॥

अथाष्टषष्टिविप्राणां तत्र मध्ये नृपोत्तमः ॥

अष्टषष्टिगृहाण्येव चकार सुबृंहंति च ॥ ११ ॥

मत्तवारणजुष्टानि दीर्घिकासहितानि च ॥

गृहोद्यानैः समेतानि यथा राजगृहाणि च ॥ १२ ॥
तथा कृत्वाऽथ रत्नौघैः पूरयित्वा तथा परैः।
ददौ तेभ्यो अष्टषष्टिं च ग्रामाणां तदनंतरम्॥१३॥
ततः सर्वान्समाहूय पुत्रपौत्रांस्तदग्रतः॥
प्रोवाच तारनादेन श्रूयतां जल्पतो मम ॥ १४ ॥
एतत्पुरं मया दत्तमेभिर्ग्रामैः समन्वितम् ॥
एतेभ्यो ब्राह्मणेंद्रेभ्यः श्रद्धापूतेन चेतसा ॥ १५ ॥
तस्माद्रक्षा प्रकर्तव्या यथा न स्यात्क्षतिः क्वचित् ॥
कष्टं वा ब्राह्मणेंद्राणां तथा चैव पराभवम्॥ १६ ॥
अस्मद्वंशसमुद्भूतो यस्त्वेतांस्तोषयिष्यति ॥
अन्यो वा भूपतिर्वृद्धिमग्र्यां नूनं स यास्यति ॥ १७ ॥
यश्चापराधसंयुक्तानेतान्खेदं नयिष्यति ॥
योजयिष्यति वा क्लेशैर्विविधैर्वा पराभवैः ॥
स शत्रुभिः पराभूतो वेष्टितो विविधैर्गदैः ॥ १८ ॥
इह लोके वियोगादीन्प्राप्य क्लेशान्सुदारुणान्॥
रौरवादिषु रौद्रेषु नरकेषु प्रयास्यति। १९ ॥
एवमुक्त्वा ततः सर्वं तेषां कृत्यं महीपतिः ॥
स्वयमेवाकरोन्नित्यं दिवारात्रमतंद्रितः ॥ 6.113.२० ॥
अथ ता ब्राह्मणेंद्राणां भार्याः सर्वाः द्विजोत्तमाः ॥
दमयंत्याः समासाद्य प्रासादं स्नेहवत्सलाः ॥ २१ ॥
कुंकुमागरुकर्पूरैः पुष्पैर्गंधैः पृथग्विधैः ॥
तदर्च्चां पूजयामासुः स च राजा दिनेदिने ॥ २२॥
अथ ताः प्रोचुरन्योन्यं तापस्यस्तत्पुरः स्थिताः ॥
तस्यभूपस्य संतोषं जनयंत्यो द्विजोत्तमाः ॥ २३ ॥
यदास्माकं गृहे वृद्धिः कदाचित्संभविष्यति ॥
तदग्रतश्च पश्चाच्च दमयंत्याः प्रपूजनम्॥
करिष्यामो न संदेहः सर्वकृत्येषु सर्वदा ॥ २४ ॥
एनां दृष्ट्वा कुमारी या वेदिमध्यं गमिष्यति॥

सा भविष्यत्यसंदेहः पत्युः प्राणसमा सदा ॥ २५ ॥

तस्मात्सर्वप्रयत्नेन कन्यायज्ञ उपस्थिते ॥

दमयंती प्रद्रष्टव्या पूजनीया प्रयत्नतः ॥२६॥

॥ सूत उवाच ॥

एवं तत्र पुरे तेन भूभुजा सुमहात्मना ।

अष्टषष्टिं च संस्थाप्य गोत्राणां निर्वृतिः कृता ॥ २७ ॥

तेषामपि च चत्वारि गोत्राण्युर गजाद्भयात्॥

गतानि तत्र यत्र स्युस्तानि पूर्वोद्भवानि च ।

चतुःषष्टिः स्थिता तत्र पुरे शेषा द्विजन्मनाम् ॥ २८ ॥

॥ ऋषय ऊचुः ॥ ॥

कीदृङ्नागभयं तेषां येन ते विगता विभो ।

परित्यज्य निजं स्थानमेतन्नो विस्तराद्वद ॥ २९ ॥

॥ सूत उवाच ॥ ॥

आनर्त्ताधिपतिः पूर्वमासीन्नाम्ना प्रभंजनः ॥

धर्मज्ञः सुप्रतापी च परपक्षक्षयावहः ॥ 6.113.३० ॥

ततस्तस्य सुतो जज्ञे प्राप्ते वयसि पश्चिमे ॥

अनिष्टस्थानसंस्थेषु ग्रहेषु द्विज सत्तमाः॥३॥।

ततस्तेन समाहूय दैवज्ञाञ्छास्त्रपंडितान्।

तेषां निवेदितं सर्वं कालं तस्य समुद्भवम्॥३२ ॥

दैवज्ञा ऊचुः॥

एष ते पृथिवीपाल जातः पुत्रः सुगर्हित।

काले ऽनिष्टप्रदे रौद्रे गंडांत त्रितयोद्भवे.३३॥

कथंचिदपि यद्येष जीवयिष्यति पार्थिव।

पितृमातृपुरार्थे च देशानुत्सादयिष्यति ॥ ३४ ॥

॥ राजोवाच ॥ ॥

अस्ति कश्चिदुपायोऽत्र दैवो वा मानुषोऽपि वा ॥

येन संजायते क्षेमं पुत्रस्य विषयस्य च ॥ ३५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यथा समुत्थितं यंत्रं यंत्रेण प्रतिहन्यते॥

यथा बाणप्रहाराणां कवचं वारणं भवेत ॥

तथा ग्रहविकाराणां शांतिर्भवति वारणम्॥ ३६॥

तस्मान्नित्यमनुद्विग्नः शांतिकं कुरु भूपते ॥

येन सर्वे ग्रहाः सौम्या जायंते च शुभावहाः ॥ ३७ ॥

अनिष्टस्थानसंस्थेषु ग्रहेषु विषमेषु च॥

ततः स सत्वं गत्वा चमत्कारपुरं नृपः॥३८॥

तत्र विप्रान्समावेश्य सर्वान्प्रोवाच सादरम्।

वयं युष्मत्प्रसादेन राज्यं कुर्मः सदैव हि॥३९॥

ये ऽतीता ये भविष्यंति वंशे ऽस्माकं नृपोत्तमाः॥

भवंतो ऽत्र गतिस्तेषां सस्यानां नीरदो यथा॥6.113.४०॥

यदत्र मत्सुतो जातो दुष्टस्थानस्थितैर्ग्रहैः ॥

दैवज्ञैः शांतिकं प्रोक्तं तस्यानिष्टस्य शांतिदम् ॥ ४१ ॥

तस्मात्कुरुत विप्रेंद्रा यथोक्तं शांतिकं मम ॥

न पुत्रश्च राष्ट्रं च विभवश्च विवर्धते ॥ ४२ ॥

ततस्ते ब्राह्मणाः प्रोचुः संमंत्र्याऽथ परस्परम् ॥

क्षेमाय तव भूनाथ करिष्यामोऽत्र शांतिकम् ॥' ॥ ४३ ॥

सदेव नियताः संतः शांताः षोडश ते द्विजाः ॥

उपहाराः सदा प्रेष्यास्त्वया भक्त्या महीपते ॥

मासांते चाभिषेकश्च ग्राह्यो रुद्रघटोद्भवः ॥ ४४ ॥

एवं प्रकुर्वतस्तुभ्यं पुत्रो वृद्धिं प्रयास्यति ।

तथा राष्ट्रं च कोशश्च यच्चान्यदपि किंचन॥४५॥

ततः प्रणम्य तान्हृष्टो गत्वा निजनिवेशनम्॥

उत्सवं पुत्रजन्मोत्थं चक्रे तैः प्रेरितः सदा ॥ ४६ ॥

संभारान्प्रेषयामास चमत्कारपुरे ततः ॥

मासांते चाभिषेकश्च ग्राह्यो वै विधिपूर्वकम् ॥ ४७ ॥

तेऽपि ब्राह्मणशार्दूलाश्चातुश्चरणसंभवाः ॥

क्रमेण शांतिकं चक्रुर्ब्रह्मचर्यपरायणाः॥४८॥

मासं मासं प्रति सदा शांता दांता जितेंद्रियाः ॥

ततो मासा वसानेऽन्ये चक्रुस्तच्छांतिकं द्विजाः॥ ४९ ॥

सोऽपि राजाऽथ मासांते समागत्य सुभक्तितः ॥

अभिषेकं समादाय पूजयित्वा द्विजोत्तमान् ॥ 6.113.५० ॥

वासोभिर्मुकुटैश्चैव गोभूदानेन केवलम् ॥

संतर्प्यान्यांस्तथा विप्रान्स्वस्थानं याति भूमिपः ॥ ५१ ॥

एवं प्रवर्तमाने च शांतिके तत्र भूपतेः ॥

जगाम सुमहान्कालः क्षेमारोग्यधनागमैः ॥ ५२ ॥

कस्यचित्त्वथ कालस्य मासादावपि भूपतेः ॥

प्रारब्धे शांतिके तस्मिन्महाव्याधिरजायत ॥ ॥ ५३ ॥

तत्पुत्रस्य विशेषेण तथैवांतःपुरस्य च ॥

राष्ट्रस्य च समग्रस्य वाहनानां तथा क्षयः ॥ ५४ ॥

स ततः प्रेषयामास शांत्यर्थं तत्र सत्पुरे ॥

सुसंभारान्विशेषेण दक्षिणाश्च विशेषतः ॥ ५५ ॥

यथायथा द्विजास्तत्र होमं कुर्वंति पावके ॥

तथा सर्वे विशेषेण रोगा वर्धंति सर्वशः ॥ ५६ ॥

म्रियन्ते वाजिनस्तस्य बृहन्तो वारणास्तथा ॥

शत्रवः सर्वकाष्ठासु विग्रहार्थमुपस्थिताः ॥ ५७ ॥

ततः स व्याकुलीभूतो रोगग्रस्तो महीपतिः ॥

चमत्कारपुरं प्राप्य सर्वान्विप्रानुवाच ह ॥ ५८ ॥

युष्माभिः स्वामिभिः संस्थैरापदोऽभिभवंति माम्॥

तत्किमेतन्महाभागाः क्षीयन्ते मम संपदः ॥

रोगाश्चैव विवर्धंते शत्रुसंघैः समन्विताः ॥ ५९ ॥

तस्माद्विशेषतो होमः कार्यो रोगप्रशांतये ॥.

दानानि च विशिष्टानि प्रदास्यामि द्विजन्मनाम् ॥ ॥ 6.113.६० ॥

ततस्ते ब्राह्मणाः सर्वे प्रत्यक्षं तस्य भूपतेः ॥

चक्रुः समाहिता भूत्वा शांतिकं तद्धिताय च ॥ ६१ ॥

यथायथा प्रयुञ्जीरन्होमांते सुसमा हिताः ॥

तथातथास्य भूपस्य वृद्धिं रोगः प्रगच्छति ॥ ६२ ॥

एतस्मिन्नंतरे क्रुद्धास्ते सर्वे द्विजसत्तमाः ॥

ग्रहानुद्दिश्य सूर्यादीञ्छापाय कृतनिश्चयाः ॥ ६३ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

पूजिता अपि सद्भक्त्या विधानेन तथा ग्रहाः ॥

पीडयंति पुरं राज्ञः सपुत्रपशुबांधवम् ॥ ६९ ॥

एवं ते निश्चयं कृत्वा शुचीभूय समाहिताः ॥

यावद्यच्छंति तच्छापं ग्रहेभ्यः क्रोधमूर्छिताः ॥ ६५ ॥

तावद्वह्निरुवाचेदं मूर्तो भूत्वा द्विजोत्तमान् ॥

मा प्रयच्छत विप्रेंद्राः शापं कोपात्कथंचन ॥ ६६ ॥

ग्रहेभ्यो दोषमुक्तेभ्यः श्रूयतां वचनं मम ॥

मासिमासि प्रकुर्वंति होमं ते षोडश द्विजाः ॥ ॥ ६७ ॥

तेषां मध्यस्थितश्चैकस्त्रिजातो ब्राह्मणाधमः ॥

तेन तद्दूषितं द्रव्यं समग्रं होमसंभवम् ॥ ६८-॥

मया दत्तं न गृह्णंति ते ग्रहा भास्करादयः ॥

तेन कुर्वंति भूपस्य पीडामप्यधिकामिमाम् ॥ ६९ ॥

तस्मादेनं परित्यज्य होमं कुरुत मा चिरम् ॥

येन प्रीतिं परां यांति ग्रहाः सर्वेऽर्कपूर्वकाः ॥ ॥ 6.113.७० ॥

आरोग्यश्च भवेद्राजा गतशत्रुः सुतान्वितः ॥

सततं सुखमभ्येति मच्छांतिकप्रभावतः ॥ ७१ ॥

एवमुक्त्वा स भगवान्वह्निश्चादर्शनं गतः ॥

तेऽपि विप्रा विषण्णास्या लज्जया परया वृताः ॥ ७२ ॥

ततस्तं पावकं भूयः स्तुवंतस्तत्र च स्थिताः ॥

प्रोचुर्वैश्वानरं ब्रूहि त्रिजातो योऽत्र च द्विजः ॥ ७३ ॥

येन तं संपरित्यज्य कुर्मः कर्म प्रशांतये ॥

निःशेषमेव दोषाणां भूपस्यास्य महात्मनः ॥ ७४ ॥

॥ वह्निरुवाच ॥ ॥

नाहं दोषं द्विजेद्राणां जानन्नपि कथंचन ॥

ब्रवीमि ब्राह्मणा वन्द्या मम सर्वे धरातले ॥ ७५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यदि तं ब्राह्मणं वह्ने नास्माकं कीर्तयिष्यसि ॥

तत्ते शापं प्रदास्यामस्तस्माच्छीघ्रं वदस्व नः ॥ ७६ ॥

॥ सूत उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा वह्निर्भयसमन्वितः ॥

चिरं विचिंतयामास कुर्वेऽतः किं शुभावहम् ॥ ७७ ॥

ब्राह्मणं दूषयिष्यामि यदि तावच्च पातकम् ॥

भविष्यति न संदेहः शापश्चापि तदुद्भवः ॥ ॥ ७८ ॥

कीर्तयिष्यामि वा नैव विद्यमानं द्विजोत्तमम् ॥

शपिष्यति न संदेहः क्रुद्धा आशीविषोपमाः ॥ ७९ ॥

एवं चिंतयतस्तस्य गात्रे स्वेदोऽभवन्महान्॥

येन तत्पूरितं कुण्डं होमार्थं यत्प्रकल्पितम् ॥6.113.८०॥।

ततः प्रोवाच तान्विप्रान्कृतांजलिपुटः स्थितः।

वेपमानो भयत्रस्तःकुण्डान्निष्क्रम्य पावकः ॥ ८१ ॥

नाहं स्वजिह्वया दोषं ब्राह्मणस्य समुद्भवम् ॥

कथञ्चित्कीर्तयिष्यामि तस्माच्छृण्वन्तु भो द्विजाः ॥ ९२ ॥

अत्र स्वेद जले विप्रा ये स्थिताः षोडश द्विजाः ॥

ते स्नानमद्य कुर्वंतु प्रविशुद्ध्यर्थमात्मनः ॥ ८३ ॥

एतेषां मध्यगो यश्च त्रिजातः स भविष्यति ॥

तस्य विस्फोटकैर्युक्तं स्नातस्यांगं भविष्यति ॥ ८४ ॥

ततस्ते ब्राह्मणाः सर्वे क्रमात्तत्र निमज्जनम् ॥

चक्रुः शुद्धिं गताश्चापि मुक्त्वैकं ब्राह्मणं तदा ॥ ॥ ८५॥

हाहाकारस्ततो जज्ञे महांस्तत्र जनोद्भवः ॥

दृष्ट्वा विस्फोटकैर्युक्तमकस्मात्तं द्विजोत्तमम् ॥ ८६ ॥

सोऽपि लज्जान्वितो विप्रः कृत्वाऽधो वदनं ततः ॥

निष्क्रांतोऽथ सभामध्यात्स्थानाद्विप्रसमुद्भवात् ॥ ८७ ॥

॥ वह्निरुवाच ॥ ॥

एतद्वः साधितं कृत्यं मया पूर्वं द्विजोत्तमाः।

तस्माद्यास्ये निजं स्थानं भवद्भिः पारमापितः ॥ ८८ ॥

न वृथा दर्शनं मे स्यादपि स्वप्ने द्विजोत्तमाः ॥

तस्मात्सम्प्रार्थ्यतां किंचिदभीष्टं हृदि संस्थितम् ॥ ८९ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

एतत्तव जलं वह्ने स्वेदजं सर्वदैव तु ॥

स्थिरं भवतु चात्रैव विशुद्ध्यर्थं द्विजन्मनाम् ॥ 6.113.९०।।

अन्यजातो नरो योऽत्र प्रकरोति निमज्जनम् ॥

तस्य चिह्नं त्वया कार्यं विस्फोटकसमुद्भवम् ॥ ९१ ॥

बाढमित्येव स प्रोच्या गतोंऽतर्धानमेव हि॥ ॥

पावकस्ते द्विजाः सर्वे मंत्रं चक्रुः परस्परम् ॥९२॥

अद्यप्रभृति सर्वेषां ब्राह्मणानां समुद्भवम् ॥

शुद्धिरत्र प्रकर्तव्या पितृमातृसमुद्द्भवा ॥९३॥'

चमत्कारपुरोत्थो यः कश्चिद्विप्रः प्रकीर्तितः ॥

सोऽत्र स्नातो विशुद्धश्च विज्ञेयः कुलपुत्रकः ॥ ९४ ॥

तस्मै कन्या प्रदातव्या स श्राद्धार्हो भविष्यति। ॥

धर्मकृत्येषु सर्वेषु योजनीयः स एव हि ॥ ९५ ॥

अष्टषष्टिषु गोत्रेषु मिलितेषु यथाक्रमम् ॥

तत्प्रत्यक्षं विशुद्धो यः स शुद्धः पंक्तिपावनः ॥ ९६ ॥

अपवादाश्च ये केचिद्ब्रह्महत्यादिकाः स्थिताः ॥

अन्येऽपि दुर्जनैः प्रोक्ता धर्मसन्देहकारकाः ॥ ९७ ॥

ते सर्वेऽत्र विशुद्धाः स्युर्विज्ञेयाः कुलपुत्रकाः ॥

अपवादास्तथा चान्ये नाशं यास्यंति चाखिलाः ॥ ९८ ॥

यावन्नात्र कृतं स्नानं प्रत्यक्षं च द्विजन्मनाम्॥

सर्वेषां तावदेवाऽत्र न स विप्रो भवेत्स्फुटम् ॥ ९९ ॥

॥ सूत उवाच ॥ ॥

एवं ते समयं कृत्वा चमत्कारपुरोद्भवाः ॥

ब्राह्मणाः शांतिकं चक्रुर्हितार्थं तस्य भूपतेः ॥॥6.113.१००॥।

तस्मिन्कुण्डे ततः स्नानं कृतं सर्वैर्महात्मभिः ॥

भयत्रस्तैर्विशुद्ध्यर्थं शेषैरपि महात्मभिः ॥ १०१ ॥

ततो नीरोगतां प्राप्तः स भूपस्तत्क्षणाद्विजाः ॥

यस्तत्र कुरुते स्नानमद्यापि द्विजसत्तमाः ॥ १०२ ॥

कार्तिक्यां परदारोत्थैः स विमुच्येत पातकैः ॥

एषां युगत्रये शुद्धिरासीत्तत्र द्विजन्मनाम् ॥ ॥ १०३ ॥

कुलशीलविहीनानामन्येषामपि पाप्मनाम् ॥

मत्वा कलियुगं घोरं परदारसुरंजितम् ॥

तत्र शुद्धिस्ततः सर्वैः कृता विप्रैश्च वाचिका ॥ ॥ १०४॥

पुरतो देवदेवस्य ब्रह्मणो द्विजसत्तमाः ॥

पितृमातृजवंशस्य विशुद्ध्यर्थमतंद्रितैः ॥॥५॥

अद्यापि कुरुते तत्र यः स्नानं द्विजसत्तमाः ॥

त्रिजातो दह्यते तत्र वह्निना स न संशयः ॥ १०६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेवरक्षेत्रमाहात्म्ये दमयन्त्युपाख्याने त्रिजातकविशुद्धयेऽग्निकुंडमाहात्म्यवर्णनंनाम त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११४

https://sa.wikisource.org/s/fgq
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

सोऽपि विप्रो द्विजश्रेष्ठा विस्फोटकपरिप्लुतः ॥

लज्जया परया युक्तो गत्वा किंचिद्वनांतरम् ॥ १ ॥

ततो वैराग्यमापन्नो रौद्रे तपसि संस्थितः ॥

त्यक्त्वा गृहादिकं सर्वं स्नेहं दारसुतोद्भवम्॥ २ ॥

नियमैः संयमैश्चैव शोषयन्नात्मनस्तनुम् ॥

किंचिज्जलाश्रयं गत्वा स्थापयित्वा महेश्वरम् ॥ ३ ॥

ततः कालेन महता तुष्टस्तस्य महेश्वरः ॥

प्रोवाच दर्शनं गत्वा प्रार्थयस्व यथेप्सितम् ॥ ४ ॥

॥ त्रिजात उवाच ॥ ॥

मातृदोषादहं देव वैलक्ष्यं परमं गतः ॥

मध्ये ब्राह्मणमुख्यानामानर्ताधिपतेस्तथा ॥ ५ ॥

अहं शक्नोमि नो वक्तुं कस्यचिद्दर्शितुं विभो ॥

त्रिजातोऽस्मीति विज्ञाय भूरिविद्यान्वितोऽपि च ॥ ६ ॥

तस्मात्सर्वोत्तमस्तेषामहं चैव द्विजन्मनाम् ॥

यथा भवामि देवेश तथा नीतिर्विधीयताम् ॥७॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

चमत्कारपुरे विप्रा ये वसंति द्विजोत्तम ॥

तेषां सर्वोत्तमो नूनं मत्प्रसादाद्भविष्यसि ॥ ८ ॥

तस्मात्कालं प्रतीक्षस्व कञ्चित्त्वं ब्राह्मणोत्तम ॥

समये समनुप्राप्ते त्वां च नेष्यामि तत्र वै ॥ ९ ॥

एवमुक्त्वा स देवेशस्ततश्चादर्शनं गतः ॥

ब्राह्मणोऽपि तपस्तेपे तथा संपूजयन्हरम् ॥ 6.114.१० ॥

कस्यचित्त्वथ कालस्य मत्कारपुरे द्विजाः ॥

मौद्गल्यान्वयसंभूतो देवरातोऽभवद्द्विजः ॥ ११ ॥.

तस्य पुत्रः क्रथोनाम यौवनोद्धतविग्रहः ॥

सदा गर्वसमायुक्तः पौरुषे च व्यवस्थितः॥१२॥

स कदाचिद्ययौ विप्रो नागतीर्थं प्रति द्विजाः ॥

श्रावणस्यासिते पक्षे पंचम्यां पर्यटन्वने ॥१३॥

अथापश्यत्स नागेन्द्रतनयं भूरिवर्च्चसम् ॥

रुद्रमालमिति ख्यातं जनन्या सह संगतम् ॥१४॥

अथाऽसौ तं समालोक्य सुलघुं सर्प पुत्रकम् ॥

जलसर्पमिति ज्ञात्वा लगुडेन व्यपोथयत् ॥१५॥

हन्यमानेन तेनाथ प्रमुक्तः सुमहान्स्वनः ॥

हा मातस्तात तातेति विपन्नोऽस्मि निरागसः॥१६॥

सोऽपि श्रुत्वाऽथ तं शब्दं ब्राह्मणो मानुषोद्भवम् ॥

सर्पस्य भयसंत्रस्तः सत्वरं स्वगृहं ययौ ॥१७॥

अथ सा जननी तस्य निष्क्रांता सलिलाश्रयात्॥

यावत्पश्यति तीरस्थं तावत्पुत्रं निपातितम्॥१८॥

ततो मूर्च्छामनुप्राप्ता दृष्ट्वा पुत्रं तथाविधम्॥

यष्टिप्रहारनिर्भिन्नं सर्वांगरुधिरोक्षितम्॥१९॥

अथ लब्ध्वा पुनः संज्ञां प्रलापानकरोद्बहून्॥

करुणं शोकसंतप्ता वाष्पपर्याकुलेक्षणा ॥6.114.२०॥।

हाहा पुत्र परित्यक्त्वा मां च क्वासि विनिर्गतः ॥

अनावृत्तिकरं स्थानं किं स्नेहो नास्ति ते मयि॥२१॥।

केन त्वं निहतः पुत्र पापेन च दुरात्मना ॥

निष्पापोऽपि च पुत्र त्वं कस्य क्रुद्धोऽद्यवै यमः॥२२॥

सपुरस्य सराष्ट्रस्य सकुटुंबस्य दुर्मतेः ॥

येन त्वं निहतोऽद्यापि पंचम्यां पूजितो न च ॥२३॥

रजसा क्रीडयित्वाऽद्य समागत्य चिरादथ॥

कामेनोत्संगमागत्य ग्लानिं नैष्यति चांबरम् ॥२४॥

गद्गदानि मनोज्ञानि जनहास्यकराणि च ॥

त्वया विनाऽद्य वाक्यानि को वदिष्यति मे पुरः ॥२५॥

पितुरुत्संगमाश्रित्य कूर्चाकर्षणपूर्वकम् ॥

कः करिष्यति पुत्राऽद्य सतोषं भवता विना ॥ २६ ॥

निषिद्धोऽसि मया वत्स त्वमायातोऽनुपृष्ठतः ॥

मर्त्यलोकमिमं तात बहुदोषसमाकुलम् ॥ २७ ॥

एवं विलप्य नागी सा संक्रुद्धा शोककर्षिता ॥

तं मृतं सुतमादाय जगामानंतसंनिधौ ॥ २८ ॥

ततस्तदग्रतः क्षिप्त्वा तं मृतं निजबालकम् ॥

प्रलापानकरोद्दीना वियुक्ता कुररी यथा ॥ २९ ॥

नागराजोऽपि तं दृष्ट्वा स्वपुत्रं विनिपातितम् ॥

जगाम सोऽपि मूर्च्छां च पुत्रशोकेन पीडितः ॥ 6.114.३० ॥

ततः सिक्तो जलैः शीतैः संज्ञां लब्ध्वा स कृच्छ्रतः ॥

प्रलापान्कृपणांश्चक्रे प्राकृतः पुरुषो यथा ॥३१॥।

एतस्मिन्नंतरे नागाः सर्वे तत्र समागताः॥

रुरुदुर्दुःखिताः संतो बाष्पपर्याकुलेक्षणाः॥३२॥

वासुकिः पद्मजः शंखस्तक्षकश्च महाविषः॥

शंखचूडः सचूडश्च पुंडरीकश्च दारुणः ॥ ३३ ॥

अञ्जनो वामनश्चैव कुमुदश्च तथा परः ॥

कम्बलाश्वतरौ नागौ नागः कर्कोटकस्तथा ॥ ३४ ॥

पुष्पदंतः सुदंतश्च मूषको मूषकादनः ॥

एलापत्रः सुपत्रश्च दीर्घास्यः पुष्पवाहनः ॥ ३५ ॥

एते चान्ये तथा नागास्तत्राऽऽयाताः सहस्रशः ॥

पुत्रशोकाभिसतप्तं ज्ञात्वा तं पन्नगाधिपम्॥ ३६ ॥

ततः संबोध्य ते सर्वे तमीशं पवनाशनम्॥

पूर्ववृत्तैः कथोद्भेदैर्दृष्टांतैर्विविधैरपि ॥ ३७ ॥

एवं संबोधितस्तैस्तु चिरात्पन्नगसत्तमः ॥

अग्निदाह्यं ततश्चक्रे तस्य पुत्रस्य दुःखितः ॥ ३८ ॥

जलदानस्य काले च सर्पान्सर्वानुवाच सः ॥

सर्वान्नागान्प्रदानार्थं तोयस्य समुपस्थितान्॥ ३९ ॥

नाहं तोयं प्रदास्यामि स्वपुत्रस्य कथंचन ॥

भवद्भिः प्रेरितोऽप्येवं तथान्यैरपि बांधवैः ॥ 6.114.४० ॥

यावत्तस्य न दुष्टस्य मम पुत्रांतकारिणः ॥

सदारपुत्रभृत्यस्य विहितो न परिक्षयः ॥ ४१ ॥

एवमुक्त्वा ततः शेषः शोधयामास तं द्विजम् ॥

येन संसूदितः पुत्रो दंडकाष्ठेन पाप्मना ॥ ४२ ॥

ततः प्रोवाच तान्नागान्पार्श्वस्थान्पन्नगाधिपः ॥

हाटकेश्वरजे क्षेत्रे यांतु मे सुहृदुत्तमाः ॥ ४३ ॥

पुत्रघ्नं तं निहत्याऽऽशु सकुटुम्बपरिग्रहम्॥

चमत्कारपुरं सर्वं भक्षणीयं ततः परम् ॥ ४४ ॥

तत्रैव वसतिः कार्या समस्तैः पन्नगोत्तमैः ॥

यथा भूयो वसेन्नैव तथा कार्यं च तत्पुरम् ॥ ४५ ॥

एवमुक्तास्ततस्तेन नागाः प्राधान्यतः श्रुताः ॥

गत्वाथ सत्वरं तत्र प्रथमं तं द्विजोत्तमम् ॥ ४६ ॥

देवरातसुतं सुप्तं भक्षयित्वा ततः परम् ॥

तत्कुटुंबं समग्रं च क्रोधेन महतान्विताः ॥ ४७ ॥

ततोऽन्यानपि संक्रुद्धा बालान्वृद्धान्कुमारकान् ॥

भक्षयामासुः सर्वे ते तिर्यग्योनिगता अपि ॥ ४८ ॥

एतस्मिन्नंतरे जातः पुरे तत्र सुदारुणः ॥

आक्रंदो ब्राह्मणेंद्राणां सर्पभक्षणसंभवः ॥ ४९ ॥

तत्र भूमौ तथाऽन्यच्च यत्किंचिदपि दृश्यते ॥

तत्सर्वं पन्नगैर्व्याप्तं रौद्रैः कृष्णवपुर्धरैः ॥ 6.114.५० ॥

एतस्मिन्नंतरे प्राप्ताः केचिन्मृत्युवशं गताः ॥

विषसं घूर्णिताः केचित्पतिता धरणीतले ॥ ५१ ॥

अन्ये गृहादिकं सर्वं परित्यज्य सुतादि च ॥

वित्रस्ताः परिधावंति वनमुद्दिश्य दूरतः ॥ ५२ ॥

अन्ये मंत्रविदो विप्राः प्रयतंते समंततः ॥

मंदं धावंति संत्रस्ता गृहीत्वौषधयः परे ॥ ५३ ॥

एवं तत्पुरमुद्दिश्य सर्वे ते पन्नगोत्तमाः ॥

प्रचरंति यथा कश्चिन्न तत्र ब्राह्मणो वसेत् ॥ ५४ ॥

अथ शून्यं पुरं कृत्वा सर्वे ते पन्नगोत्तमाः ॥

व्यचरन्स्वेच्छया तत्र तीर्थेष्वायतनेषु च ॥ ५५ ॥

न कश्चित्पन्नगः क्षेत्रात्त्यक्त्वा निर्याति बाह्यतः ॥

प्रविशेन्न परः कश्चित्तत्र क्षेत्रे च मानवः ॥ ५६ ॥

व्यवस्थैवं समुद्भूता सर्पाणां मानुषैः सह ।

वधभक्षणजा न्योन्यं बाह्याभ्यंतरसंभवा ॥ ५७ ॥

एतस्मिन्नंतरे शेषो मुक्त्वा दुःखं सुतोद्भवम् ॥

प्रहृष्टः प्रददौ तोयं तस्य जातिभिरन्वितः ॥ ५८ ॥

अथ ते ब्राह्मणाः केचित्सर्पेभ्यो भयविह्वलाः ॥

सशोका दिङ्मुखान्याशु ते सर्वे संगता मिथः ॥५९॥

ततो वनं समाजग्मुस्त्रिजातो यत्र संस्थितः ॥

हरलब्धवरो हृष्टः सुमहत्तपसि स्थितः ॥ 6.114.६० ॥

स दृष्ट्वा ताञ्जनान्सर्वांस्तथा दुःखपरिप्लुतान् ॥

पुत्रदारादिकं स्मृत्वा रुदतः करुणं बहु ॥ ६१ ॥

सोऽपि दुःखसमायुक्तो दृष्ट्वा तान्स्वपुरोद्भवान् ॥

ब्राह्मणेंद्रांस्ततः प्राह बाष्पव्याकुललोचनः ॥ ६२ ॥

शृण्वंतु ब्राह्मणाः सर्वे वचनं मम सांप्रतम् ॥

मया विनिर्गतेनैव तत्पुरात्तोषितो हरः ॥ ६३ ॥

तेन मह्यं वरो दत्तो वांछितो द्विजसत्तमाः ॥

गृहीतो न मयाद्यापि प्रार्थयिष्यामि सांप्रतम् ॥६४॥

यथा स्यात्संक्षयस्तेषां नागानां सुदुरात्मनाम् ॥

यैः कृतं नः पुरं कृत्स्नमुद्वसं पापकर्मभिः ॥ ६५ ॥

एवमुक्त्वाऽथ विप्रः स त्रिजातः परमेश्वरम् ॥

प्रार्थयामास मे देव तं वरं यच्छ सांप्रतम् ॥६६॥

ततः प्रोवाच देवेशः प्रार्थयस्व द्रुतं द्विज॥

येनाभीष्टं प्रयच्छामि यद्यपि स्यात्सुदुर्लभम् ॥ ६७ ॥ ॥

॥ त्रिजात उवाच ॥ ॥

नागैरस्मत्पुरं कृत्स्नं कृतं जनविवर्जितम् ॥

तत्तस्मात्ते क्षयं यांतु सर्वे वृषभवाहन ॥ ६८ ॥

येन तत्पूर्यते विप्रैर्भूयोऽपि सुरसत्तम ॥

ममापि जायते कीर्तिः स्वस्थानोद्धरणोद्भवा ॥ ६९ ॥

॥ श्रीभगवानुवाच ॥ ॥

नायुक्तं विहितं विप्र पन्नगैस्तैर्महात्मभिः ॥

निर्दोषश्चापि पुत्रोऽत्र येषां विप्रेण सूदितः ॥ 6.114.७० ॥

विशेषेण द्विजश्रेष्ठ संप्राप्ते पंचमीदिने ॥

तत्राऽपि श्रावणे मासि पूज्यंते यत्र पन्नगाः ॥ ७१ ॥

तस्मात्तेऽहं प्रवक्ष्यामि सिद्धमंत्रमनुत्तमम् ॥

यस्योच्चारणमात्रेण सर्प्पाणां नश्यते विषम् ॥ ७२ ॥

तं मंत्रं तत्र गत्वा त्वं तद्विप्रैरखिलैर्वृतः ॥

श्रावयस्व महाभाग तारशब्देन सर्वशः ॥७३॥

तं श्रुत्वा ये न यास्यंति पातालं पन्नगाधमाः ॥

युष्मद्वाक्याद्भविष्यंति निर्विषास्ते न संशयः ॥ ७४ ॥ ॥

॥ त्रिजात उवाच ॥ ॥

ब्रूहि तं मे महामंत्रं सर्वतीक्ष्णविनाशनम् ॥

येन गत्वा निजं स्थानं सर्पानुत्सादयाम्यहम् ॥७५॥

॥ श्रीभगवानुवाच ॥ ॥

गरं विषमिति प्रोक्तं न तत्रास्ति च सांप्रतम् ॥

मत्प्रसादात्त्वया ह्येतदुच्चार्यं ब्राह्मणोत्तम ॥ ७६

न गरं न गरं चैतच्छ्रुत्वा ये पन्नगाधमाः॥

तत्र स्थास्यंति ते वध्या भविष्यंति यथासुखम् ॥ ७७ ॥

अद्यप्रभृति तत्स्थानं नगराख्यं धरातले ॥

भविष्यति सुविख्यातं तव कीर्तिविवर्धनम् ॥ ७८ ॥

तथान्योपि च यो विप्रो नागरः शुद्धवंशजः ॥

नगराख्येन मंत्रेण अभिमंत्र्य त्रिधा जलम् ॥ ७९ ॥

प्राणिनं काल संदष्टमपि मृत्युवशंगतम् ॥

प्रकरिष्यति जीवाढ्यं प्रक्षिप्य वदने स्वयम् ॥6.114.८०॥।

अन्यत्रापि स्थितो मर्त्यो मंत्रमेतं त्रिरक्षरम् ॥

यः स्मरिष्यति संसुप्तो न हिंस्यः स्यादहेर्हि सः ॥८१॥।

स्थावरं जंगमं वापि कृत्रिमं वा गरं हि तत् ॥

तदनेन च मंत्रेण संस्पृष्टं त्वमृतायितम् ॥८२॥

अजीर्णप्रभवा रोगा ये चान्ये जठरोद्भवाः॥

मंत्रस्यास्य प्रभावेन सर्वे यांति द्रुतं क्षयम् ॥८३॥

एवमुक्त्वाऽथ तं विप्रं भगवान्वृषभध्वजः ॥

जगामादर्शनं पश्चाद्यथा दीपो वितैलकः ॥८४॥

त्रिजातोऽपि समं विप्रैर्हतशेषैस्तु तैर्द्रुतम् ॥

जगाम संप्रहृष्टात्मा चमत्कारपुरं प्रति ॥ ८५ ॥

एवं ते ब्राह्मणाः सर्वे त्रिजातेन समन्विताः ॥

न गरं न गरं प्रोच्चैरुच्चरंतः समाययुः ॥ ८६ ॥

हाटकेश्वरजं क्षेत्रं यत्तद्व्याप्तं समंततः ॥

रौद्रैराशीविषैः क्रूरैः शेषस्यादेशमाश्रितेः ॥८७॥

अथ ते पन्नगाः श्रुत्वा सिद्धमंत्र शिवोद्भवम् ॥

निर्विषास्तेजसा हीनाः समन्तात्ते प्रदुद्रवुः ॥८८॥

वल्मीकान्केचिदासाद्य चित्ररंध्रांतरोद्भवान् ॥

अन्ये चापि प्रजग्मुश्च पातालं दंदशूककाः ॥ ८९ ॥

ये केचिद्भयसंत्रस्ता वार्द्धक्येन निपीडिताः ॥

वालत्वेन तथा चान्ये शक्नुवंति न सर्पितुम् ॥ 6.114.९० ॥

ते सर्वे ब्राह्मणेन्द्रैस्तैः कृतस्य प्रतिकारकैः ॥

निहताः पन्नगास्तत्र दंडकाष्ठैः सहस्रशः ॥ ९१ ॥

एवमुत्साद्य तान्सर्वान्ब्राह्मणास्ते गतव्यथाः ।

तं त्रिजातं पुरस्कृत्य स्थानकृत्यानि चक्रिरे ॥ ९२ ॥

एवं तन्नगरं जातमस्मात्कालादनंतरम् ॥

देवदेवस्य भर्गस्य प्रसादेन द्विजोत्तमाः ॥ ९३ ॥

एतद्यः पठते नित्यमाख्यानं नगरोद्भवम् ॥

न तस्य सर्पजं क्वापि कथंचिज्जायते भयम् । ९४ ॥

इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नगरसंज्ञोत्पत्तिवर्णनंनाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११५



त्रिजातो ब्राह्मणस्तत्र किन्नामा कस्य सम्भवः ॥

किंगोत्रश्चैव किंसंज्ञः कीर्तयस्व महामते ॥ १ ॥

किं कुलीनैर्गुणाढ्यैर्वा तेजोविद्याविचक्षणैः ॥

त्रिजातोऽपि वरं सोऽपि स्वं स्थानं येन चोद्धृतम् ॥ २ ॥

सूत उवाच ॥ ॥ सांकृत्यस्य मुनेर्वंशे स संभूतो द्विजोत्तमः ॥

प्रभाव इति विख्यातो दत्तसंज्ञो निमेः सुतः ॥ ३ ॥

स एवं स्थानमुद्धृत्य चकारायतनं शुभम् ॥

त्रिजातेश्वरनाम्ना च देवदेवस्य शूलिनः ॥ ४ ॥

तमाराध्य दिवा नक्तं सम्यक्छ्रद्धासमन्वितः॥

सशरीरो गतः स्वर्गं ततः कालेन केनचित् ॥ ५ ॥

यस्तं पश्यति सद्भक्त्या स्नापयेद्विषुवे सदा ॥

न त्रिजातः कुले तस्य कथञ्चिदपि जायते ॥ ६ ॥

॥ ऋषय ऊचुः ॥ ॥

यानि गोत्राणि नष्टानि यानि संस्थापितानि च॥

नामतस्तानि नो ब्रूहि तत्पुरं सूत नन्दन ॥ ७ ।।

॥ सूत उवाच ॥ ॥

तत्रोपमन्युगोत्रा ये क्रौंचगोत्रसमुद्भवाः ॥

कैशोर्यं गोत्रसंभूतास्त्रैवणेया द्विजोत्तमः ८ ॥

ते भूयोऽपि न संप्राप्ता यथा गोत्रचतुष्टयम् ॥

तत्पूर्वकं शुकादीनां यन्नष्टं नागजाद्भयात् ॥ ९ ॥

शेषान्वः संप्रवक्ष्यामि ब्राह्मणान्गोत्रसंभवान् ॥

कौशिकान्वयसं भूताः षड्विंशतिश्च ते स्मृताः ॥ १० ॥

कश्यपान्वयसंभूताः सप्ताशीतिर्द्विजोत्तमाः ॥

लक्ष्मणान्वयसंभूता एकविंशतिरागताः ॥ ११ ॥

तत्र नष्टाः पुनः प्राप्तास्तस्मिन्स्थाने सुदुःखिताः ॥

भारद्वाजास्त्रयः प्राप्ताः कौंडनीयाश्चतुर्दश ॥ १२ ॥

रैतिकानां तथा विंशत्पाराशर्याष्टकं तथा ॥

गर्गाणां च द्विविंशं च हारीतानां विविंशतिः ॥ १३ ॥

और्वभार्गवगोत्राणां पञ्चविंशदुदाहृताः ॥

गौतमानां च षड्विंशमालूभायनविंशतिः ॥ १४ ॥

मांडव्यानां त्रिविंशच्च बह्वृचानां त्रिविंशतिः ॥

सांकृत्यानां विशिष्टानां पृथक्त्वेन दशैव तु ॥ १५ ॥

तथैवांगिरसानां च पंच चैव प्रकीर्तिताः ॥

आत्रेया दश संख्याताः शुक्लात्रेयास्तथैव च ॥ १६ ॥

वात्स्याः पञ्च समाख्याताः कौत्साश्च नव सप्त वै ॥

शांडिल्या भार्गवाः पञ्च मौद्गल्या विंशतिः स्मृताः ॥।७॥

बौधायनाः कौशलाश्च त्रिंशन्मात्राः प्रकीर्तिताः ॥

अथर्वाः पंचपंचाशन्मौनसाः सप्तसप्ततिः ॥।८॥

याजुषास्त्रिंशतिः ख्याताश्च्यावनाः सप्त विंशतिः ॥

आगस्त्याश्च त्रयस्त्रिंशज्जैमिनेया दशैव तु ॥ १९॥

नैवृताः पंचपंचाशत्पाठीनाः सप्ततिर्द्विजाः ॥

गोभिलाश्चापि काक्वाश्च पंचपंच द्विजाः स्मृताः ॥२॥।

औशनसाश्च दाशार्हास्त्रयस्त्रय उदाहृताः ॥

लोकाख्यानां तथा षष्टिरैणिशानां द्विसप्ततिः ॥२१॥।

कापिष्ठलाः शार्कराख्या दत्ताख्याः सप्तसप्ततिः ॥

शार्कवानां शतं प्रोक्तं दाज्र्यानां सप्तसप्ततिः॥२२॥

कात्यायन्यास्त्रयोऽधिष्ठा वैदिशाश्च त्रयः स्मृताः ॥

कृष्णात्रेयास्तथा पंच दत्तात्रेया स्तथैव च ॥२३॥

नारायणाः शौनकेया जाबालाः शतसंख्यया ॥

गोपाला जामदन्याश्च शालिहोत्राश्च कर्णिकाः ॥२४॥

भागुरायणकाश्चैव मातृकास्त्रैणवास्तथा॥

सर्वे ते ब्राह्मणश्रेष्ठाः क्रमेण द्विजसत्तमाः ॥२५॥

एतेषामेव सर्वेषां सत्काराय द्विजोतमाः ॥

चत्वारिंशत्तथाष्टौ च पुरा प्रोक्ताः स्वयंभुवा ॥२६॥

ते सर्वे च पृथक्त्वेन निर्दिष्टाः पद्मयोनिना ॥

संध्यातर्पणकृत्यानि वैश्वदेवोद्भवानि च ॥

श्राद्धानि पक्षकृत्यानि पितृपिंडांस्तथैव च ॥२७॥

यज्ञोपवीतसंयुक्ताः प्रवराश्चैव कृत्स्नशः ॥

तथा मौंजीविशेषाश्च शिखाभेदाः प्रकीर्तिताः ॥ २८ ॥

त्रिजातेन समाराध्य देवदेवं पितामहम् ॥

तेषां कृत्वा द्विजेद्राणामात्मकीर्तिकृते तदा ॥ २९ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं सन्तोषितो ब्रह्मा त्रिजातेन महात्मना ॥

कर्मकांडं कथं भिन्नं कृतं तेन महात्मना ॥

सर्वं विस्तरतो ब्रूहि परं कौतूहलं हि नः ॥ ३० ॥

॥ सूत उवाच ॥ ॥

तस्यार्थे ब्राह्मणैः सर्वैस्तोषितः प्रपितामहः ॥

अनेनैवोद्धृतं स्थानमस्माकं सकलं विभो ॥ ३१ ॥

तस्मादस्य विभो यच्छ वेदज्ञानमनुतमम् ॥

येन कर्मविशेषाश्च जायतेऽत्र पुरोत्तमे ॥ ३२ ॥

एतस्य च गुरुत्वं च प्रसादात्तव पद्मज ॥

यथा भवति देवेश तया नीतिर्विधीयताम् ॥ ३३ ॥

ब्रह्मा ददौ ततस्तस्य मंत्रग्राममनुत्तमम् ॥

येन विज्ञायते सर्वं वेदार्थो यज्ञकर्म च ॥ ३४ ॥

ततः प्रोवाच तान्सर्वान्प्रहृष्टेनातरात्मना ॥

एष वेदार्थसंपन्नो भविष्यति महायशाः ॥ ३५ ॥

भर्तृयज्ञ इति ख्यातो यज्ञकर्मविचक्षणः ॥

यदेव वक्ति युष्माकं क्रियाकांडमशंकितैः ॥ ३ ॥

तत्कार्यं स्वर्गमोक्षाय मम वाक्यात्प्रबोधितैः ॥

वेदार्थानेष सर्वेषां युष्माकं योजयिष्यति ॥ ३७ ॥

ये चान्येषु च देशेषु स्थानेषु च गताः क्वचित् ॥

एतत्स्थानं परित्यज्य सत्यमेतद्द्विजोत्तमाः ॥ ३८ ॥

वेदस्थाने च बुद्ध्यैष यत्कर्म प्रचरिष्यति ॥

नानृते वाथ पापे च वाणी चास्य चरिष्यति ॥ ३९ ॥

एवमुक्त्वा स देवेशो विरराम पितामहः ॥

भर्तृयज्ञोऽपि ताः सर्वाश्चक्रे यज्ञक्रियाः शुभाः ॥ ६.११५.४० ॥

ब्राह्मणानां हितार्थाय श्रुत्यर्थं तस्य केवलम् ॥

दशप्रमाणाः संप्रोक्ताः सर्वे ते ब्राह्मणोत्तमाः ॥ ४१ ॥

चतुःषष्टिषु गोत्रेषु ह्येवं ते ब्राह्मणोत्तमाः ॥

तेन तत्र समानीतास्त्रिजातेन महात्मना ॥ ४२ ॥

तेषामेकत्र जातानि दशपंचशतानि च ॥

सामान्य भोगमोक्षाणि तानि तेन कृतानि च ॥ ४३ ॥

अष्टषष्टिविभागेन पूर्वमायुव्ययोद्भवम् ॥

तत्रासीदथ गोत्रे च पुरुषाणां प्रसंख्यया ॥ ४४ ॥

ततः प्रभृति सर्वेषां सामान्येन व्यवस्थितम् ॥

त्रिजातस्य च वाक्येन येन दूरादपि द्रुतम् ॥ ४५ ॥

समागच्छंति विप्रेन्द्राः पुरवृद्धिः प्रजायते ॥

न कश्चिद्याति संत्यक्त्वा दौस्थ्यादन्यत्र च द्विजाः ॥ ४६ ॥

ततस्तेषां सुतैः पौत्रैर्नसृभिश्च सहस्रशः ॥

दौहित्रैर्भागिनेयैश्च भूयो भूरि प्रपूरितम् ॥ ॥ ४७ ॥

तत्पुरं वृद्धिमायाति दूर्वांकुरैरिव द्विजाः ॥

कांडात्कांडात्प्ररोहद्भिः संख्याहीनैरनेकधा ॥ ४८ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं गोत्रसंख्यानकं शुभम् ॥

ऋषीणां कीर्तनं चापि सर्वपातकनाशनम् ॥ ४९ ॥

यश्चैतत्पठते नित्यं शृणुयाद्वा प्रभक्तितः ॥

न स्यात्तस्य कुलच्छेदः कदाचिदपि भूतले ॥ ६.११५.५० ॥

तथा विमुच्यते पापैराजन्ममरणोद्भवैः ॥

न पश्यति वियोगं च कदाचित्प्रियसंभवम् ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽष्टषष्टितीर्थोपाख्याने भर्तृयज्ञकृतयज्ञविधानमुनिगोत्रवर्णनंनाम पंचदशोत्तरशततमोऽध्यायः ॥ ११५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११६


॥ ॥ सूतउवाच ॥ ॥
तथान्यापिचतत्रास्ति सुविख्याताम्बरेवती ॥
देवी कामप्रदा पुंसां वालकानां सुखप्रदा ॥ १ ॥
यां दृष्ट्वा पूजयित्वाऽथ चैत्राष्टम्यां विशेषतः ॥
शुक्लायां नाप्नुयान्मर्त्यः कुटुम्बव्यसनं क्वचित् ॥ २ ॥
॥ ॥ ऋषय ऊचुः ॥ ॥
केन वा स्थापिता तत्र सा देवी चाम्बरेवती ॥
किंप्रभावा किंस्वरूपा सूतपुत्र वदस्व नः ॥ ३ ॥
॥ सूत उवाच ॥ ॥
यदा शेषेण संदिष्टा नानानागा विषोल्बणाः ॥
पुरस्यास्य विनाशाय क्रोधसंरक्तलोचनाः ॥
तदा तस्य प्रिया सा च पुत्रशोकेनपीडिता ॥ ४ ॥
स्वयमेवाग्रतो गत्वा भक्षयामास तं द्विजम् ॥
कुटुम्बेन समायुक्तं येन पुत्रो निपातितः ॥ ५ ॥
अथ तस्य द्विजेन्द्रस्य बालवैधव्यसंयुता ॥
अनुजाऽऽसीत्तपोयुक्ता ब्रह्मचर्यकृतक्षणा ॥ ६ ॥
सा दृष्ट्वा भक्षितं सर्वं भट्टिकाख्या कुटुम्बकम् ॥
नाग पत्न्या ततः प्राह जलमादाय पाणिना ॥ ७ ॥
यस्मात्त्वया कुटुम्बं मे नाशं नीतं द्विजिह्वके ॥
दर्शितं च महद्दुःखं मम बन्धुजनोद्भवम् ॥ ८ ॥
तथा त्वमपि संप्राप्य मानुषत्वं सुगर्हितम् ॥
मानुषं पतिमासाद्य पुत्रपौत्रानवाप्य च ॥ ९ ॥
तेषां विनाशजं दुःखं मा नुषे त्वमवाप्स्यसि ॥
नागत्वे वर्तमानायाः शापं तेऽमुं ददाम्यहम् ॥ ६.११६.१० ॥
साऽपि श्रुत्वाऽथ तं शापं रेवती भट्टिकोद्भवम् ॥
क्रोधेन महताविष्टा ह्यदशत्तां द्रुतं ततः ॥ ११ ॥
अथ तस्यास्तनुं प्राप्य नागीदंष्ट्रा विषोल्बणा ॥
जगाम शतधा नाशं बिभिदे न त्वचं क्वचित् ॥ १२ ॥
ततः सा लज्जयाविष्टा स्वरक्तप्लावितानना ॥
विषण्णा निषसादाथ संनिविष्टा धरातले ॥ १३ ॥
एतस्मिन्नंतरे नागास्तथान्ये ये समागताः ॥
रेवतीं ते समालोक्य तथारूपां भयान्विताम् ॥
प्रोचुश्च किमिदं देवि तव वक्त्रे रुजास्पदम् ॥ १४ ॥
अथवा किं प्रभावोऽयं कस्यचिद्रक्तसंपदः ॥ १५ ॥
॥ ॥ रेवत्युवाच ॥ ॥
येयं दुष्टतमा काचिद्दृश्यते दुष्टतापसी ॥
अस्या जातो विकारोऽयं ममास्ये नागसत्तमाः ॥ १६ ॥
तस्मादेनां महा दुष्टां भगिनीं तस्य दुर्मतेः ॥
येन मे निहतः पुत्रो द्विजपुत्रेण सांप्रतम् ॥ १७ ॥
भक्ष्यतां भक्ष्यतां शीघ्रं मम नाशाय संस्थिताम् ॥
सांप्रतं मन्मुखे तेनं रुधिरं पन्नगोत्तमाः ॥ १८ ॥
अथ ते पन्नगाः क्रुद्धा ददंशुस्तां तपस्विनीम् ॥
समं सर्वेषु गात्रेषु यथान्या प्राकृता स्त्रियम् ॥ १९ ॥
ततस्तेषामपि तथा मुखाद्दंष्ट्रा विनिर्गताः ॥
रुधिरं च ततो जज्ञे शेषपत्न्या यथा तथा ॥ ६.११६.२० ॥
अथ तस्याः प्रभावं तं दृष्ट्वा ते नागसत्तमाः ॥
शेषा भय परित्रस्ताः प्रजग्मुश्च दिशो दश ॥ २१ ॥
भट्टिकापि जगामाशु स्वाश्रमं प्रति दुःखिता ॥
भयत्रस्तैः समंताच्च वीक्ष्यमाणा महोरगैः ॥ २२ ॥

ततः सर्वं समालोक्य ताप्यमानं महोरगैः॥
तत्स्थानं स्वजनैर्मुक्तं दुःखेन महतान्वितैः ॥ २३ ।
जगामान्यत्र सा साध्वी सम्यग्व्रतपरायणा ॥
तीर्थ यात्रां प्रकुर्वाणा परिबभ्राम मेदिनीम् ॥ २४ ॥
एवमुद्वासिते स्थाने तस्मिन्सा रेवती तदा ॥
स्मृत्वा तं भद्विकाशापं दुःखेन महताऽन्विता ॥ २५ ॥
कथं मे मानुषीगर्भे शापाद्वासो भविष्यति ॥
मानुष्येण च कांतेन प्रभविष्यति संगमः ॥ २६ ॥
नैतत्पुत्रोद्भवं दुःखं तथा मां बाधते हृदि ॥
यथेदं मानुषे गर्भे संवासो मानुषं प्रति ॥ २७ ॥
तथा दशनसंत्यक्ता कथं भर्तुः स्वमाननम् ॥
दर्शयिष्यामि भूयोऽपि क्षते क्षारोऽत्र मे स्थितः ॥ २८ ॥
तस्मात्परिचरिष्यामि क्षेत्रेऽत्रैव व्यवस्थिता ।
किं करिष्यामि संप्राप्य गृहं पुत्रं विनाकृता ॥ २९ ॥
ततश्चाराधयामास सम्यक्छ्रद्धासमन्विता ॥
अंबिकां सा तदा देवीं स्थापयित्वा सुरेश्वरीम् ॥ ६.११६.३० ॥
गन्धपुष्पोपहारेण नैवेद्यैर्विविधैरपि ॥
गीतनृत्यैस्तथा वाद्यैर्मनोहारिभिरेव च ॥ ३१ ॥
ततः कतिपयाहस्य तस्तास्तुष्टा सुरेश्वरी ॥
प्रोवाच वरदाऽस्मीति प्रार्थयस्व हृदि स्थितम् ॥ ३२ ॥
॥ रेवत्युवाच ॥ ॥
अहं शप्ता पुरा देवि ब्राह्मण्या कारणांतरे ॥
यत्त्वं मानुषमासाद्य स्वयं भूत्वा च मानुषी ॥ ३३ ॥
ततः संप्राप्स्यसि फलं तेषां नाशसमुद्भवम् ॥
महद्दुःखं स्वपुत्रोत्थं मम शापेन पीडिता ॥ ३४ ॥
तथा मम मुखाद्दंष्ट्रा संनीताश्च सुरेश्वरि ॥
तेषां च संभवस्तावत्कथं स्यात्त्वत्प्रभावतः ॥ ३५ ॥
भवंतु तनया नश्च तथा वंशविवर्धनाः ॥
एतन्मे वांछितं देवि नान्यत्संप्रार्थयाम्यहम् ॥ ३६ ॥
॥ देव्युवाच॥ ।
नात्र वासस्त्वया कार्यः कथंचिदपि शोभने ॥
मनुष्यगर्भसंवासो भर्त्ता च भविता नरः । ३७ ।
तस्माच्छृणुष्व मे वाक्यं यत्त्वां वक्ष्यामि सांप्रतम् ॥
दुःखनाशकरं तुभ्यं सत्यं च वरवर्णिनि ॥ ॥ ३८ ॥
उत्पत्स्यति न संदेहो देवकार्यप्रसिद्धये ॥
तव भर्त्ता त्रिलोकेऽस्मिन्कृत्वा मानुषविग्रहम् ॥ ३९ ॥
तक्षकाख्यस्तथा नागो द्विजशाप वशाच्छुभे ॥
सौराष्ट्रविषये राजा रैवताख्यो भविष्यति ॥६.११६.४॥।
तस्य क्षेमकरी भार्या नामवंशसमुद्भवा ॥
भविष्यति न संदेहो विशिष्टा विप्रशापतः ॥ ॥४॥।
तस्या गर्भं समासाद्य त्वं जन्म समवाप्स्यसि ॥
रामरूपस्य शेषस्य पुनर्भार्या भविष्यसि ॥४२॥
तस्मात्त्वं देवि मा शोकं कार्येऽस्मिन्कुरु शोभने ॥
तेन मानुषजे गर्भे संभूतिः संभविष्यति ॥ ४३ ॥
तत्र पश्यसि यन्नाशं स्वकुटुम्बसमुद्भवम् ॥
हिताय तदवस्थायास्तद्भविष्यत्यसंशयम् ॥ ४४ ॥
ततः परं युगं पापं यतो भीरु भविष्यति ॥
तदूर्ध्वं मर्त्यधर्माणो म्लेच्छाः स्थास्यंति सर्वतः ॥ ४५ ॥
ततः स्वर्गनिवासार्थं भगवान्देवकीसुतः ॥
संहर्ता स्वकुलं सर्वं स्वयमेव न संशयः ॥ ४६ ॥
भविष्यंति पुनर्दंष्ट्रास्तव वक्त्रे मनोरमाः ॥
तस्मात्त्वं गच्छ पातालं स्वभर्त्ता यत्र तिष्ठति ॥ ४७ ॥
अन्यच्चापि यदिष्टं ते किंचिच्चित्ते व्यवस्थितम् ॥
तत्कीर्तयस्व कल्याणि महांस्तोषो मम स्थितः ॥ ४८ ।
॥ रेवत्यु वाच ॥ ॥

स्थाने स्॑थेयं सदाऽत्रैव मम नाम्ना सुरेश्वरि ॥
येन मे जायते कीर्तिस्त्रैलोक्ये सचराचरे ॥४९॥
तथाऽहं नागलोकाच्च चतुर्दश्यष्टमीषु च ॥
सदा त्वां पूजयिष्यामि विशेषान्नवमीदिने ॥६.११६.५०॥।
आश्विनस्य सिते पक्षे सर्वैर्नागैः समन्विता ॥
प्रपूजां ते विधास्यामि श्रद्धया परया युता ॥५१॥
तस्मिन्नहनि येऽन्येऽपि पूजां दास्यंति ते नराः ॥
मा पश्यंतु प्रसादात्ते नरास्ते वल्लभक्षयम् । ५२ ।
॥ देव्युवाच ॥ ॥
एवं भद्रे करिष्यामि वासो मेऽत्र भविष्यति॥
त्वन्नाम्ना पूजकानां च श्रेयो दास्यामि ते सदा ॥
महानवमिजे चाह्नि विशेषेण शुचिस्मिते ॥ ५३ ॥
॥ सूत उवाच ॥ ॥
एवमुक्ता तया साऽथ रेवती शेषवल्लभा ॥
जगाम स्वगृहं पश्चाद्धर्षेण महतान्विता ५४ ॥
ततःप्रभृति सा देवी तस्मिन्क्षेत्रे व्यवस्थिता ॥
तन्नाम्ना कामदा नृणां सर्वव्यसननाशिनी ॥ ५५ ॥
अंबा सा कीर्त्यते दुर्गा रेवती सोरगप्रिया ॥
ततः संकीर्त्यते लोके भूतले चांबरेवती ॥ ५६ ॥
यस्तां श्रद्धासमोपेतः शुचिर्भूत्वा प्रपूजयेत् ॥
नवम्यामाश्विने मासि शुक्लपक्षे समाहितः ॥
न स संवत्सरं यावद्व्यसनं स्वकुलो द्भवम्॥ ५७॥
दृष्ट्वाग्रे छिद्रकं व्यालयुक्तं दोषैर्विमुच्यते ॥
ग्रहभूतपिशाचोत्थैस्तथान्यैरपि चापदैः ॥ ५८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येंऽबारेवतीतीर्थमाहात्म्यवर्णनंनाम षोडशोत्तरशततमोऽध्यायः ॥ ॥ ११६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११७

https://sa.wikisource.org/s/fgp
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥
भट्टिकाख्या पुरा प्रोक्ता या त्वया सूतनन्दन ॥
कस्मात्तस्याः शरीरान्ताद्दंष्ट्रा नागसमुद्भवाः ॥ १ ॥
विशीर्णाः किं प्रभावश्च तपसः सूतनन्दन ॥
किं वा मंत्रप्रभावश्च एतन्नः कौतुकं परम् ॥ २ ॥
यन्मानुषशरीरेऽपि विशीर्णास्ता विषोल्बणाः ॥
नागानां तु विशेषेण तस्मात्सर्वं प्रकीर्तय ॥ ३ ॥
। सूत उवाच ॥ ॥
सा पुरा ब्राह्मणी बाल्ये वर्तमाना पितुर्गृहे ॥
वैधव्येन समायुक्ता जाता कर्मविपाकतः ॥ ४ ॥
ततो बाल्येऽपि शुश्राव शास्त्राणि विविधानि च ॥
देवयात्रां प्रचक्रेऽथ तीर्थे स्नाति समाहिता ॥ ५ ॥
तत्र केदारदेवं च गत्वा नित्यं समाहिता ॥
प्रातरुत्थाय गीतं च भक्त्या चक्रे तदग्रतः ॥ ६ ॥
ततस्तद्गीतलौल्येन पातालात्समुपेत्य च ॥
तक्षको वासुकिश्चैव द्विज रूपधरावुभौ ॥ ७ ॥
साऽपि तत्र महद्गीतं तानैः सर्वैरलंकृतम्॥
मूर्च्छनाभिः समोपेतं सप्तस्वरविराजितम् ॥ ८ ॥
यतिभिश्च तथा ग्रामैर्वर्णग्रामैः पृथ ग्विधैः॥
ततं च विततं चैव घनं सुषिरमेव च ॥ ९ ॥
तालकालक्रियामानवर्धमानादिकं च यत् ॥
अविदग्धापि सा तेषां गीतांगानां द्विजांगना ॥
केवलं कंठसंशुद्ध्या ताभ्यां तोषं समादधे ॥६.११७.१०॥॥
ततस्तद्गीतलोभेन सर्वे तत्पुरवासिनः ॥
प्रातरुत्थाय केदारं समागच्छंति कौतुकात् ॥॥॥
कस्य चित्त्वथ कालस्य नागौ तौ स्वपुरं प्रति ॥
निन्युर्बलात्समुद्यम्य सर्वलोकस्य पश्यतः॥ १२ ॥
नागरूपं समाधाय रौद्रं जनविभीषणम् ॥
भोगाग्र्येण च संवेष्ट्य पातालतलमभ्ययुः ॥ १३ ॥
अथ तां स्वगृहं नीत्वा प्रोचतुः कामपीडितौ ॥
भवावाभ्यां विशालाक्षि भार्यो धर्मपरायणा ॥
एतदर्थं समानीता त्वं पाताले महीतलात् ॥ १४ ॥
॥ भट्टिकोवाच ॥ ॥
यत्त्वं तक्षक मां शांतामनपेक्षां रतोत्सवे ॥
आनैषीरपहृत्याशु ब्राह्मणान्वय संभवाम् ॥ १५ ॥
मानुषं रूपमास्थाय पुरा मां त्वं समाश्रितः ॥
कामोपहृतचित्तात्मा तस्मान्मर्त्यो भविष्यसि ॥ १६ ॥
यदि मां त्वं दुराचार धर्षयिष्यसि वीर्यतः ॥
शतधा तव मूर्धाऽयं सद्य एव भविष्यति ॥ १७ ॥
तं श्रुत्वा सुमहाशापं तस्याः स भयविह्वलः ॥
ततः प्रसादयामास कृतांजलिपुटः स्थितः ॥ १८ ॥
मया त्वं कामसक्तेन समानीता सुमोहतः ॥
तस्मात्कुरु प्रसादं मे शापस्यांतो यथा भवेत् ॥ १९ ॥
॥ सूत उवाच ॥ ॥
एवं प्रसादिता तेन तक्षकेण द्विजात्मजा ॥
ततः प्रोवाच तं नागं बाष्पव्याकुललोचना ॥ ६.११७.२० ॥
यदि मां मर्त्यलोके त्वं भूयो न यसि तक्षक ॥
तत्र शापस्य पर्यंतं करिष्यामि न संशयः ॥ २१ ॥
एतस्मिन्नंतरे ज्ञात्वा मानुषीं स्वगृहागताम् ॥

तक्षकेण समानीतां कामोपॅहतचे तॅसा ॥ २२ ॥
ततस्तस्य कलत्राणि महेर्ष्यासंश्रितानि च ॥
तस्या नाशार्थमाजग्मुः कोपरक्तेक्षणानि च ॥ २३
अथ तासां परिज्ञाय तक्षकः स विचेष्टितम् ॥
वाञ्छञ्छापस्य पर्यंतं तत्पार्श्वाद्भयसंयुतः ॥२४॥
वज्रां नामास्मरद्विद्यां तस्या गात्रं ततस्तया ॥
योजयामास रक्षार्थं प्राप्ता चाथ भुजंगमी ॥ २५ ॥
अदशत्तां ततः क्रुद्धा ब्राह्मणस्य सुतां सतीम्॥
सपत्नीं मन्यमानोच्चैः शीर्णदंष्ट्रा व्यजायत ॥ २६ ॥
अथ तामपि सा क्रुद्धा शशाप द्विजसंभवा ॥
दृष्ट्वा सापत्न्यजैर्भावैर्वर्तमानां सहेर्ष्यया ॥ २७ ॥
यस्मात्त्वं दोषहीनां मां सदोषामिव मन्यसे ॥
तस्माद्भव द्रुतं पापे मानुषी दुःखभागिनी ॥ २८ ॥
अथ तां संगृहीत्वा स तक्षको नागसत्तमः ॥
केदारायतने तस्मिन्नर्धरात्रे मुमोच ह ॥ २९ ॥
ततः प्रोवाच तां देवीं कृतां जलिपुटः स्थितः ॥
शापांतं कुरु मे साध्वि स्वगृहं येन याम्यहम् ॥ ६.११७.३० ॥
॥ भट्टिकोवाच ॥ ॥
सौराष्ट्रविषये राजा त्वं भविष्यसि पन्नग ॥
भूमौ रैवतको नाम भोगानां भाजनं सदा ॥ ३१ ॥
ततश्चैव तनुं त्यक्त्वा क्षेत्रेष्वाश्रममध्यतः ॥
संप्राप्स्यसि निजं स्थानं तत्क्षेत्रस्य प्रभावतः ॥ ॥ ३२ ॥
॥ तक्षक उवाच ॥ ॥
एषा मम प्रिया कांता त्वया शापेन योजिता ॥
या सा भवतु मे भार्या मानुषत्वेऽपि वर्तिते ॥ ३३ ॥
एत त्कुरु प्रसादं मे दीनस्य परियाचतः ॥
माऽस्या भवतु चान्येन पुरुषेण समागमः ॥ ३४ ॥
॥ भट्टिकोवाच ॥ ॥
आनर्ताधिपतेरेषा भवित्री दुहिता शुभा॥
ततः पाणिग्रहं प्राप्य भार्या तव भविष्यति॥३५॥
क्षेमंकरीति विख्याता रूपयौवनशालिनी ॥
त्वया सार्धं बहून्भोगान्भुक्त्वाऽथ पृथिवीतले॥
परलोके पुनस्त्वां वै चानुयास्यति शोभना ॥ ३६॥
॥ सूत उवाच ॥ ॥
एवं च स तया प्रोक्तः क्षम्यतामिति सादरम् ॥
प्रणिपत्य जगामाऽथ निजं स्थानं प्रहर्षितः ॥३७॥
साऽपि प्राप्ते निशाशेषे केदारस्य पुरः स्थिता ॥
पुनश्चक्रे च तद्गीतं श्रुतिसौख्यकरं परम्॥३८॥
अथ तस्य समायाताः केदारस्य दिदृक्षवः॥
पुनः केदारभक्त्याढ्या ब्राह्मणाः शतशः परम् ॥३९॥
ते तां दृष्ट्वा समायातां भट्टिकां तां द्विजोद्भवाम् ॥
विस्मयेन समायुक्ताः पप्रच्छुस्तदनंत रम्॥६.११७.४०॥।
कोऽसौ ब्राह्मणरूपेण नागः प्राप्तः सुशोभने ॥
तेन त्वं कुत्र नीतासि किमर्थं च वदस्व नः॥४॥।
कस्मात्पुनः प्रमुक्ताऽसि सर्वं वद यथातथम्॥
अत्र नः कौतुकं जातं सुमहत्तव कारणात्॥४२॥
॥ सूत उवाच ॥ ॥
ततः सा कथयामास सर्वं तक्षकसंभवम् ॥
वृत्तांतं नागसंभूतं शापानुग्रहजं तथा ॥ ४३ ॥
एतस्मिन्नंतरे प्राप्तं सर्वं तस्याः कुटुम्बकम् ॥
रोरूयमाणं दुःखार्तं श्रुत्वा तां तत्र चागताम् ॥ ४४ ॥
अथ सा जननी तस्या वाष्प पर्याकुलेक्षणा ॥
सस्वजे तां तथा चान्याः सख्यः स्निग्धेन चेतसा ॥ ४५ ॥
ततो निन्युर्गृहं स्वं च शृण्वंतश्च मुहुर्मुहुः ॥
नागलोकोद्भवां वार्तां विस्य याविष्टचेतसः ॥ ४६ ॥

अथ तत्र पुरे पौराः सर्वे प्रोचुः परस्परम् ॥
अयुक्तं कृतमेतेन ब्राह्मणेन दुरात्मना ॥ ४७ ॥
यदानीता सुतरुणी परहर्म्यौषिता तया? ॥
अन्येषामपि विप्राणां संति नार्यो ह्यनेकशः ॥ ४८ ॥
तरुण्यो रूपवत्यश्च वैधव्येन समन्विताः ॥
तासामपि च सर्वासामेष न्यायो भविष्यति ॥
योनिसंकरजो नूनं तस्मान्निर्वास्यतामिति ॥ ४९ ॥
एकीभूय ततः सर्वे ब्राह्मणं तं द्विजोत्तमाः ॥
सामपूर्वमिदं वाक्यं प्रोचुः शास्त्र समुद्भवम् ॥ ६.११७.५० ॥
एषा तव सुता विप्र तरुणी रूपसंयुता ॥
सानुरागेण नागेण पाताले च समाहृता ॥ ५१ ॥
तद्वक्ष्यति प्रमुक्ताहं निर्दोषा तेन रागिणा ॥
न श्रद्धां याति लोकोऽयं शुद्धैषा समुदाहृता ५२ ॥
तस्माच्छुद्धिं द्विजेद्राणां प्रयच्छतु द्विजोत्तम ॥
येनान्येषामपि प्राज्ञ विनश्यंति न योषितः ॥ ५३ ॥
बाढमित्येव स प्रोक्त्वा ततस्तां विजने सुताम् ॥
पप्रच्छ यदि ते दोषः कश्चिदस्ति प्रकीर्तय॥ ५४ ॥
नो चेत्प्रयच्छ संशुद्धिं ब्राह्मणानां प्रतुष्टये ॥ ५५ ॥
॥ भट्टिकोवाच ॥ ॥
युक्तमुक्तं त्वया तात तथान्यैरपि च द्विजैः ॥
युक्ता स्याद्योषितः शुद्धिर्द्वारातिक्रमणादपि॥ ॥ ॥ ५६ ॥
किं पुनः परदेशं च गताया रागिणा सह ॥
तस्मादहं न संदेहः प्रातः स्नाता हुताशनम् ॥ ५७ ॥
प्रविश्य सर्वविप्राणां शुद्धिं दास्याम्य्य संशयम् ॥
अहमत्र च पानं च यच्चान्यदपि किंचन ॥
प्राशयिष्यामि संप्राप्य शुद्धिं चैव हुताशनात् ॥ ५८ ॥
एवमुक्तस्तया सोऽथ हर्षेण महतान्वितः ॥
प्रातरुत्थाय दारूणि पुरबाह्ये न्ययोजयत् ॥ ५९ ॥
भट्टिकाऽपि ततः स्नात्वा शुक्लांबरधरा शुचिः ॥
सर्वैः परिजनैः सार्धं तथा निज कुटुंबकैः ॥ ६.११७.६० ॥
प्रसन्नवदना हृष्टा विष्णुध्यानपरायणा ॥
जगाम तत्र यत्रास्ते सुमहान्दारुपर्वतः ॥ ६१ ॥
ततो वह्निं समाधाय स्वयं तत्र द्विजोत्तमाः॥
प्रदक्षिणात्रयं कृत्वा प्राह चैव कृतांजलिः ॥ ६२ ।
यदि मेऽस्ति क्वचिद्दोषः कामजोऽल्पोऽपि गात्रके ॥
कृतो वाऽपि बलात्तेन तक्षकेण दुरात्मना ॥ ६३ ॥
अन्येनापि च केनापि भविष्यत्यथवा परः ॥
तस्मात्प्रदहतु क्षिप्रं समिद्धोऽयं हुताशनः ॥ ६४
एवमुक्त्वाऽथ सा साध्वी प्रविष्टा निजहर्म्यवत् ॥
सुसमिद्धो हुतो वह्निर्जातो जलमयः क्षणात् ॥ ६५ ॥
सा च पश्यति चात्मानं जलमध्यगतां शुभा ।८०
पपाताऽथ महावृष्टिः कुसुमानां नभस्तलात् ॥ ६६ ॥
देवदूतो विमानस्थ इदं वाक्यमुवाच ह ॥
शुद्धासि त्वं महाभागे चारित्रै निजगात्रजैः ॥ ६७ ॥
न त्वया सदृशी चान्या काचिन्नारी भविष्यति ॥
तिस्रः कोट्योर्धकोटी च यानि लोमानि मानुषे ॥
प्रभवंति महाभागे सर्वगात्रेषु सर्वदा ॥ ६८ ।
तेषां मध्ये न ते साध्वि पापमेकमपि क्वचित् ।
तस्माच्छीघ्रं ग्रहं गच्छ निजं बांधवसंयुता ॥ ६९ ॥
कुरु कृत्यानि पुण्यानि समाराधय केशवम् ॥
एतच्चैव चितेः स्थानं त्वदीयं जलपूरितम् ॥ ६.११७.७० ॥
तव नाम्ना सुविख्यातं तीर्थं लोके भविष्यति ॥
येऽत्र स्नानं करिष्यंति शयने बोधने हरेः ॥ ७१ ॥
ते यास्यंति परां सिद्धिं दुष्प्राप्या याऽमरैरपि ॥
उक्त्वैवं विरता वाणी देवदूतसमुद्भवा ॥ ७२ ॥

भट्टिका तु ततो हृष्टा प्रणम्य जनकं निजम् ॥
नाहं गृहं गमिष्यामि किं करिष्याम्यहं गृहे ॥ ७३ ॥
अत्रैवाराधयिष्यामि निजतीर्थे सदाऽच्युतम् ॥
तथा तपः करिष्यामि भिक्षान्नकृतभोजना ॥ ७४ ॥
तस्मात्तात गृहं गच्छ स्थिताऽहं चाग्र संश्रये ॥ ७५ ॥
ततः स जनकस्तस्यास्ते वाऽपि पुरवासिनः ॥
संप्रहृष्टा गृहं जग्मुः शंसतस्तां पृथक्पृथक् ॥ ७६ ॥
तया त्रैविक्रमी तत्र प्रतिमा प्राग्विनिर्मिता ॥
पश्चान्माहेश्वरं लिंगं कृत्वा प्रासादमुत्तमम् ॥ ७७ ॥
ततः परं तपश्चक्रे भिक्षान्नकृतभोजना ॥
शस्यमाना जनैः सर्वैश्चमत्कारपुरोद्भवैः ॥ ७८ ॥
॥ सूत उवाच ॥ ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥
यथा तस्या दृढं कायमभेद्यं संस्थितं सदा ॥ ७९ ॥
सर्पाणां च तथाऽन्येषां शस्त्रादीनामपि द्विजाः ॥
यश्चैतत्पठते नित्यं भट्टिकाख्यानमुत्तमम् ॥
नापवादो भवेत्तस्य कुकृतो द्विजसत्तमाः ॥ ६.११७.८० ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये भट्टिकातीर्थोत्पत्तिमाहात्म्यकथनंनाम सप्तदशोत्तरशततमोऽध्यायः ॥ ॥ ११७ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११८



॥ ऋषय ऊचुः ॥ ॥
यत्त्वया सूतज प्रोक्तं तक्षकः संभविष्यति ॥
सौराष्ट्रविषये राजा रैवताख्यो महाबलः ॥ १ ॥
तथा तस्य प्रिया भार्यो नाम्ना क्षेमंकरीति या ॥
आनर्ताधिपतेर्हर्म्ये संभविष्यति भामिनी ॥ २ ॥
ताभ्यां सर्वं समाचक्ष्व वृत्तांतं सूतनंदन ॥
अत्र नः कौतुकं जातं विचित्रं जल्पतस्तव ॥ ३ ॥
केदारश्च श्रुतोऽस्माभिः सूतपुत्र हिमाचले ॥
स कथं तत्र संजातः सर्वं विस्तरतो वद ॥ ४॥ ॥
॥ सूत उवाच ॥ ॥
अत्र वः कीर्तयिष्यामि सर्वं ब्राह्मणसत्तमाः ॥
यथा मया श्रुतं पूर्वं निजतातमुखाद्द्विजाः ॥ ६ ॥
पूर्वं तच्छापदोषेण तक्षको धरणीतले ॥
सौराष्ट्राधिपतेर्हर्म्ये रैवताख्यो बभूव ह ॥ ६ ॥
आनर्त्ताधिपतेश्चापि संजाता तनया गृहे ॥
तस्याश्चापि सुविख्यातं नाम जातं धरातले ॥ ७ ॥
क्षेमंकरीति विप्रेन्द्राः कर्मणा प्रकटीकृतम् ॥
आनर्ताधिपतिः पूर्वमासीद्राजा प्रभंजनः ॥ ८ ॥
तस्य वैरं समुत्पन्नं बहुभिः सह भूमिपैः ॥
ततो निर्वास्यते देशो नीयते पशवो बलात् ॥
शत्रुभिर्जायते युद्धं दिवा नक्तं द्विजोत्तमाः॥९॥
ततः कतिपयाहस्य तस्य भार्या प्रियंवदा ॥
ऋतुस्नाता दधाराथ गर्भं पुण्यं निजोदरे॥६.११८.१०॥॥
यतः प्रभृति तस्याः स गर्भोऽभूदुदराश्रयः॥
ततः प्रभृति राष्ट्रस्य क्षेमं जातं तथा पुरे॥॥॥
एके संख्ये जिता स्तेन शत्रवोऽपि सुदुर्जयाः ॥
निहताश्च तथैवान्ये मित्रभावं समाश्रिताः ॥ १२॥
ततो जज्ञे शुभा कन्या तस्याः पद्मायतेक्षणा॥
अंधकारेऽपि यद्रात्र्यां द्योतितं सूतिकागृहम्॥।३॥
अथाऽसौ पार्थिवश्चक्रे सुतवत्सुमहोत्सवम्॥
तस्यास्तोषसमायुक्तो गीतवाद्यादिनिस्वनैः ॥।४॥
दिने त्रयोदशे प्राप्ते नाम तस्या यथोचितम्॥
विहितं भूभुजा तेन विप्राणां पुरतो द्विजाः ॥।५॥
यस्मात्क्षेमं समुत्पन्नं गर्भवासेऽपि संस्थया ॥
अनया क्षेमंकरीनाम तस्मादेषाभवे द्द्विजाः ॥।६॥
एवं सुविहिता ख्याता वृद्धिं याति दिनेदिने ॥
शुक्लपक्षे कला चेन्दोर्यथैव गगनांगणे॥।७॥
ततस्तां यौवनोपेतां रैवताय महीपतिः ॥
ददौ सौराष्ट्रनाथाय काले वैवाहिके शुभे ॥ १८ ॥
अथ ताभ्यां सुता जाता रेवतीनाम विश्रुता ॥
भट्टिकाशापदोषेण शेषपत्नी यशस्विनी ॥।९॥
या तूढा रामरूपेण नागराजेन धीमता ॥
पुत्रपौत्रवती जाता सौभाग्यमदगर्विता ॥ ६.११८.२० ॥
न च ताभ्यां सुतो जातः कथंचिदपि वंशजः ॥
वयसोंऽतेऽपि विप्रेंद्रास्ततो दुःखं व्यजायत ॥ २१ ॥
अथ तौ मंत्रिवर्गस्य राज्यं सर्वमशेषतः ॥
अर्पयित्वा तु पुत्रार्थं तपोऽर्थमिह चागतौ ॥ ॥ २२ ॥
ततः स्वमाश्रमं गत्वा स्थितौ तत्र समाहितौ ॥
देवीं कात्यायनीं स्थाप्य तदाराधनतत्परौ ॥ २३ ॥

यया विनिहतो रौद्रो महिषाख्यो महासुरः ॥
कौमारव्रतधारिण्या तस्मिन्विन्ध्ये महाचले ॥ २४ ॥
ततस्ताभ्यां ददौ तुष्टा सा पुत्रं वंशवर्धनम् ॥
नाम्ना क्षेमजितं ख्यातं परपक्षक्षया वहम् ॥ २५ ॥
ततः स्वं राज्यमासाद्य भूयोऽपि स महीपतिः ॥.
स्वपुत्रं वर्धयामास हर्षेण महतान्वितः ॥ २६ ॥
यदा स यौवनोपेतः सञ्जातः क्षेमजित्सुतः ॥
तं च राज्ये नियोज्याऽथ स्वस्थानं स पुनर्ययौ ॥ २७ ॥
हाटकेश्वरजं क्षेत्रं तदेतद्द्विजसत्तमाः ॥
भार्यया सहितस्त्यक्त्वा शेषमन्यं परिच्छदम् ॥ २८ ॥
तत्र संस्थापयामास लिंगं देवस्य शूलिनः ॥
प्रासादं च मनोहारि ततश्चक्रे समाहितः॥ २९
रैवतेश्वरमित्युक्तं सर्वपातक नाशनम् ॥
दर्शनादेव सर्वेषां देहिनां द्विजसत्तमाः ॥ ६.११८.३० ॥
या पूर्वं स्थापिता दुर्गा तस्मिन्क्षेत्रे महीभुजा ॥
तस्याः क्षेमंकरी चक्रे प्रासादं श्रद्ध यान्विता ॥ ३१ ॥
सापि क्षेमंकरीनाम ततः प्रभृति कीर्त्यते ॥
कात्यायन्यपि या प्रोक्ता महिषासुरमर्दिनी ॥ ३२ ॥
यस्तां चैत्रसिते पक्षे संप श्येदष्टमीदिने ॥
तस्याभीष्टा भवेत्सिद्धिः सर्वदैव द्विजोत्तमाः ॥ ३३ ॥
एतद्वः सर्वमाख्यातं रैवतेश्वरवर्णनम् ॥
क्षेमंकर्याः प्रभावं च सर्वपातकनाशनम् ॥ ३४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिताया षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये क्षेमंकरीरैवतेश्वरोत्पत्तितीर्थ माहात्म्यवर्णननामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः ११९

https://sa.wikisource.org/s/fgt
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ॥ऋषय ऊचुः ॥ ॥

यत्वया सूतज प्रोक्तं देवी कात्यायनी च सा ॥

महिषांतकरी जाता कथं सा मे प्रकीर्तय॥॥।

कीदृग्दानववर्यः स माहिषं रूपमाश्रितः ॥

कस्मात्स सूदितो देव्या तन्मे विस्तरतो वद ॥२॥

॥ सूत उवाच ॥ ॥

अत्र वः कीर्तयिष्यामि देव्या माहात्म्यमुत्तमम् ॥

श्रुतमात्रेऽपि मर्त्यानां येन शत्रुक्षयो भवेत् ॥ ३ ॥

हिरण्याक्षसुतः पूर्वं महिषोनाम दानवः ॥

आसीन्महिषरूपेण येन भुक्तं जगत्त्रयम्॥४॥

॥ ऋषय ऊचुः ॥ ॥

माहिषेण स्वरूपेण किंजातः सूतनंदन ॥

अथवा शापदोषेण सञ्जातः केनचिद्वद ॥५॥

॥ सूत उवाच ॥ ॥

संजातो हि सुरूपाढ्यः शतपत्रनिभाननः ॥

दीर्घबाहुः पृथुग्रीवः सर्वलक्षणलक्षितः ॥

नाम्ना चित्रसमः प्रोक्तस्तेजोवीर्यसमन्वितः । ६ ॥

सबाल्यात्प्रभृति प्रायो महिषाणां प्रबोधनम् ॥

करोति संपरित्यज्य सर्वमश्वादिवाहनम्॥ ७ ॥

कदाचिन्महिषारूढः स प्रतस्थे दनोः सुतः ॥

जाह्नवीतीरमासाद्य विनिघ्नञ्जलपक्षिणः ॥ ९ ॥

अथासीत्सुसमाधिस्थो दुर्वासा मुनिसत्तमः ॥

गंगातीरे विधायोच्चैः पद्मा सनमनुत्तमम् ॥ ९ ॥

विहंगासक्तचित्तेन शून्येन स मुनीश्वरः ॥

दृष्टो न महिषक्षुण्णः खुरैर्वेगवशाद्द्विजः ॥ ६.११९.१० ॥

ततः क्षतजदिग्धांगः स दृष्ट्वा दानवं पुरः ॥

अथ दृष्ट्वा प्रणामेन रहितं कोपमाविशत्॥॥॥

ततः प्रोवाच तं क्रुद्धस्तोयमादाय पाणिना ॥

यस्मात्पाप मम क्षुण्णं गात्रं महिषजैः खुरैः ॥ १२ ॥

समाधेश्च कृतो भंगस्तस्मात्त्वं महिषो भव ॥

यावज्जीवसि दुर्बुद्धे सम्यग्ज्ञानसमन्वितः ॥ १३ ॥

अथाऽसौ महिषो जातः कृष्णगात्रधरो महान् ॥

अतिदीर्घविषाणश्च अंजनाद्रिरिवापरः ॥ १४ ॥

ततः प्रसादयामास तं मुनिं विनयान्वितः ॥

शापातं कुरु मे विप्र बाल्यभावादजानतः ॥ १५ ॥

अथ तं स मुनिः प्राह न मे स्याद्वचनं वृथा ॥

तस्माद्यावत्स्थिताः प्राणास्तावदित्थं भविष्यति ॥ १६ ॥

महिषस्य स्वरूपेण निन्दितस्य सुदुर्मते ॥

एवं स तं परित्यज्य गंगातीरं मुनीश्वरः ॥

जगामाऽन्यत्र सोऽप्याशु गत्वा शुक्रमुवाच ह ॥ १७ ॥

अहं दुर्वाससा शप्तः कस्मिंश्चित्कारणांतरे ॥

महिषत्वं समानीतस्तस्मात्त्वं मे गतिर्भव ॥ १८ ॥

यथा स्यात्पूर्वजं देहं तिर्यक्त्वं नश्यते यथा ॥

प्रसादात्तव विप्रेंद्र तथा नीतिर्विधीयताम् ॥ १९ ॥

॥ शुक्र उवाच ॥ ॥

तस्य शापोऽन्यथा कर्तुं नैव शक्यः कथंचन ॥

केनापि संपरित्यज्य देवमेकं महेश्वरम् ॥ ६.११९.२० ॥

तस्मादाराधयाऽऽशु त्वं गत्वा लिंगमनुत्तमम् ॥

हाटकेश्वरजे क्षेत्रे सर्वसिद्धिप्रदायके ॥ २१ ॥

तत्र सञ्जायते सिद्धिः शीघ्रं दानवसत्तम ॥

अपि पापयुगे प्राप्ते किं पुनः प्रथमे युगे। २२ ॥

एवमुक्तः स शुक्रेण दानवः सत्वरं ययौ ॥

हाटकेश्वरजं क्षेत्रं तपस्तेपे ततः परम् ॥ २३ ॥

स्थापयित्वा महल्लिगं भक्त्या देवस्य शूलिनः ॥

प्रासादं च ततश्चक्रे कैलासशिखरोपमम् ॥ ०९४ ॥

तस्यैवं वर्तमानस्य तपःस्थस्य महात्मनः ॥

जगाम सुमहान्कालः कृच्छ्रे तपसि वर्ततः ॥ २५ ॥

ततस्तुष्टो महादेवो गत्वा तद्दृष्टिगोचरम् ॥

प्रोवाच परितुष्टोऽस्मि वरं वरय दानव ॥ २६ ॥

॥ महिष उवाच ॥ ॥

अहं दुर्वाससा शप्तो महिषत्वे नियोजितः ॥

तिर्यक्त्वं नाशमायातु तस्मान्मे त्वत्प्रसादतः ॥ २७ ॥

॥ श्रीभगवानुवाच ॥ ॥

नान्यथा शक्यते कर्तुं तस्य वाक्यं कथंचन ॥

तस्मात्तव करिष्यामि सुखोपायं शृणुष्व तम् ॥ २८ ॥

ये केचिन्मानवा भोगा दैविका ये तथाऽऽसुराः ॥

ते सर्वे तव गात्रेऽत्र सम्प्रयास्यंति संश्रयम् ॥ २९ ॥

भोगार्थमिष्यते कायं यतो मर्त्यं सुरासुरैः ॥

समवाप्स्यसि तान्सर्वांस्तस्मात्तव कलेवरम् ॥ ६.११९.३७ ॥

॥ महिष उवाच ॥ ॥

यद्येवं देवदेवेश भोगप्राप्तिर्भवेन्मम ॥

तस्मादवध्यमेवास्तु गात्रमेतन्मम प्रभो ॥ ३१ ॥

दशानां देवयोनीनां मनुष्याणां विशेषतः ॥

तिर्यञ्चानां च नागानां पक्षिणां सुरसत्तम ॥ ३२ ॥

॥ श्रीभगवानुवाच ॥ ॥

नावध्योऽस्ति धरापृष्ठे कश्चिद्देही च दानव ॥

तस्मादेकं परित्यक्त्वा शेषान्प्रार्थय दैत्यप ॥ ३३ ॥

ततः स सुचिरं ध्यात्वा प्रोवाच वृषभध्वजम् ॥

स्त्रियमेकां परित्यक्त्वा नान्येभ्यस्तु वधो मम ॥ ३४ ॥

तथात्र मामके तीर्थे यः कश्चिच्छ्रद्धया नरः ॥

करोति स्नानमव्यग्रस्त्वां पश्यति ततः परम् ॥ ३५ ॥

तस्य स्यात्त्वत्प्रसादेन संसिद्धिः सार्वकामिकी ॥
सर्वोपद्रवनाशश्च तेजोवृद्धिश्च शंकर ॥ ३६ ॥
॥ श्रीभगवानुवाच ॥ ॥
मार्गशुक्लचतुर्दश्यां तीर्थे स्नात्वाऽत्र तावके ॥
विलोकयिष्यति प्रीत्या मम लिंगं ततः परम् ॥ ३७ ॥
भूतप्रेतपिशाचादि संभवास्तस्य तत्क्षणात् ।
दोषा नाशं प्रयास्यंति तथा रोगा ज्वरादयः ॥ ३८ ॥
एवमुक्त्वाऽथ देवेशस्ततश्चादर्शनं गतः ॥
महिषोऽपि निजं स्थानं प्रजगाम ततः परम् ॥ ३९ ॥
स गत्वा दानवान्सर्वान्समाहूय ततः परम् ॥
प्रोवाचामर्षसंयुक्तः सभामध्ये व्यवस्थितः ॥ ६.११९.४० ॥
पिता मम पितृव्यश्च ये चान्ये मम पूर्वजाः ॥
दानवा निहता देवैर्वासुदेवपुरोगमैः ॥ ४१ ॥
तस्मात्तान्नाशयिष्यामि देवानपि महाहवे ॥
अहं त्रैलोक्यराज्यं हि ग्रहीष्यामि ततः परम् ॥ ४२ ॥
अथ ते दानवाः प्रोचुर्युक्तमेतदनुत्तमम् ॥
अस्मदीयमिदं राज्यं यच्छक्रः कुरुते दिवि ॥ ४३ ॥
तस्मादद्यैव गत्वाऽऽशु हत्वेन्द्रं रणमूर्धनि ॥
दिव्यान्भोगान्प्रभुञ्जानाः स्थास्यामः सुखिनो दिवि ॥ ४४ ॥
एवं ते दानवाः सर्वे कृत्वा मंत्रविनिश्चयम् ॥
मेरुशृंगं ततो जग्मुः सभृत्यबलवाहनः॥४५॥
अथ शक्रादयो देवा दृष्ट्वा तद्दानवोद्भवम्॥
अकस्मादेव संप्राप्तं बलं शस्त्रास्त्रसंयुतम्॥
युद्धार्थं स्वपुरद्वारि निर्ययुस्तदनंतरम्॥४६॥
आदित्या वसवो रुद्रा नासत्यौ च भिषग्वरौ।
विश्वेदेवास्तथा साध्याः सिद्धा विद्याधराश्च ये॥४७॥
ततः समभवद्युद्धं देवानां सह दानवैः।
मिथः प्रभर्त्स्यमानानां मृत्युं कृत्वा निवर्तनम्॥४८॥

एवं समभवद्युद्धं यावद्वर्षत्रयं दिवि।

रक्तनद्योतिविपुलास्तत्रातीव प्रसुस्रुवुः।४९॥

अन्यस्मिन्दिवसे शक्रं दृष्टैवारावणसंस्थितम्।

तं शुक्लेनातपत्रेण ध्रियमाणेन मूर्धनि।

देवैः परिवृतं दिव्यशस्त्रपाणिभिरेव च॥६.११९.५०॥

ततः कोपपरीतात्मा महिषो दानवाधिपः।

महावेगं समासाद्य तस्यैवाभिमुखो ययौ॥५१॥

शृंगाभ्यां च सुतीक्ष्णाभ्यां ततश्चैरावणं गजम्।

विव्याध हृदये सोऽथ चक्रे रावं सुदारुणम्॥५२॥

ततः पराङ्मुखो भूत्वा पलायनपरायणः।

अभिदुद्राव वेगेन पुरी यत्रामरावती॥५३॥

अंकुशोत्थप्रहारैश्च क्षतकुंभोऽपि भूरिशः।

महामात्रनिरुद्धोऽपि न स तस्थौ कथंचन॥५४॥

अथाब्रवीत्सहस्राक्षो महिषं वीक्ष्य गर्वितम्।

गर्जमानांस्तथा दैत्यान्क्ष्वेडनास्फोटनादिभिः॥५५॥

मा दैत्य प्रविजानीहि यन्नष्टस्त्रिदशाधिपः।

एष नागो रणं हित्वा विवशो याति मे बलात्॥५६॥

तस्मात्तिष्ठ मुहूर्तं त्वं यावदास्थाय सद्रथम्।

नाशयामि च ते दर्पं निहत्य निशितैः शरैः॥५७॥

एतस्मिन्नंतरे प्राप्तो मातलिः शक्रसारथिः।

सहस्रैदर्शभिर्युक्तं वाजिनां वातरंहसाम्॥५८॥

ते ऽथ मातलिना अश्वाः प्रतोदेन समाहताः।

उत्पतंत इवाकाशे सत्वं संप्रदुद्रुवुः॥५९॥

अथ चापं समारोप्य सत्वरं पाकशासनः।

शरैराशीविषाकारैश्छादयामास दानवम्॥६.११९.६०॥

ततः स वेगमास्थाय भूयोऽपि क्रोधमूर्छितः।

अभिदुद्राव वेगेन स यत्र त्रिदशाधिपः॥६१॥

ततस्तान्सुहयांस्तस्य शृंगाभ्यां वेगमाश्रितः।

दारयामास संक्रुद्ध आविध्याविध्य चासकृत्॥६२॥

ततस्ते वाजिनस्त्रस्ताः संजग्मुः क्षतवक्षसः।

रक्तप्लावितसर्वांगा मार्गमैरावणस्य च॥६३॥

ततः शक्ररथं दृष्ट्वा विमुखं सुरसत्तमाः।

सर्वे प्रदुद्रुवुर्भीतास्तस्य मार्गमुपाश्रिताः॥६४॥

ततस्तु दानवाः सर्वे भग्नान्दृष्ट्वा रणे सुरान्।

शस्त्रवृष्टिं प्रमुंचंतो गर्जमाना यथा घनाः॥६५॥

एतस्मिन्नंतरे प्राप्ता रजनी तमसावृता।

न किंचित्तत्र संयाति कस्यचिद्दृष्टिगोचरे॥६६॥

ततस्तु दानवाः सर्वे युद्धान्निर्वृत्य सर्वतः।

मेरुशृंगं समाश्रित्य रम्यं वासं प्रचक्रमुः॥६७॥

विजयेन समायुक्तास्तुष्टिं च परमां गताः।

कथाश्चक्रुश्च युद्धोत्था युद्धं तस्य यथा भवत्॥६८॥

देवाश्चापि हतोत्साहाः प्रहारैः क्षतविक्षताः।

मंत्रं चक्रुर्मिथो भूत्वा बृहस्पतिपुरःसराः॥६९॥

सांप्रतं दानवैः सैन्यमस्माकं विमुखं कृतम् ॥

विध्वस्तं सुनिरुत्साहमक्षमं युद्धकर्मणि ॥ ६.११९.७० ॥

तस्मात्त्यक्त्वा प्रवेक्ष्यामः पुरीं चैवामरावतीम् ॥

ब्रह्मणः सदनं यत्र न स्याद्दानवजं भयम्॥७॥।

एवं ते निश्चयं कृत्वा ब्रह्मलोकं ततो गताः ॥

शून्यां शक्रपुरीं कृत्वा सर्वे देवाः सवासवाः॥७२॥

ततः प्रातः समुत्थाय दानवास्ते प्रहर्षिताः ॥

शून्यां शक्रपुरीं दृष्ट्वा विविशुस्तदनंतरम् ॥ ७३ ॥

अथ शाक्रे पदे दैत्यं महिषं संनिधाय च ॥

प्रणेमुस्तुष्टिसंयुक्ताश्चक्रुश्चैव महोत्सवम् ॥ ७४ ॥

जगृहुर्यज्ञभागांश्च सर्वेषां त्रिदिवौकसाम् ॥

देवस्थानेषु सर्वेषु देवताऽभिमताश्च ये ॥ ७६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये देवसेनापराजयवर्णनंनामैकोनविंशत्युत्तरशततमोऽध्यायः ॥ ११९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२०



॥ सूत उवाच ॥ ॥

एवं शक्रादयो देवा जितास्ते तु रणाजिरे ॥

महिषेण ततो राज्यं त्रैलोक्येऽपि चकार सः ॥ १ ॥

यत्किञ्चित्त्रिषु लोकेषु सारभूतं प्रपश्यति ॥

गजवाजिरथाश्वादि सर्वं गृह्णाति सोऽसुरः ॥ २ ॥

एवं प्रवर्तमानस्य तस्य देवाः सवासवाः ॥

वधार्थं मिलिताश्चक्रुः कथा दुःखसम न्विताः ॥ ३ ॥

एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तमः ॥

दृष्ट्वा तं माहिषं सर्वं व्यवहारं महोत्कटम् ॥ ४ ॥

ततश्च कथयामास सर्वं तेषां सविस्त रम् ॥

तस्य संचेष्टितं भूरि लोकत्रयप्रपीडनम् ॥ ५ ॥

अथ तेषां महाकोपो भूय एवाभ्यवर्धत ॥

नारदस्य वचः श्रुत्वा तादृग्लोककथोद्भवम् ॥ ॥ ६ ॥

तेषां कोपोद्भवो घर्मो वक्त्रद्वारेण निर्ययौ ॥

येन दिङ्मंडलं सर्वं तत्क्षणात्कलुषीकृतम् ॥ ७ ॥

एतस्मिन्नंतरे तत्र कार्तिकेयः समभ्ययात् ॥

पप्रच्छ च किमेतद्धि देवानां कोपकारणम् ॥

येन कालुष्यतां प्राप्तं दिक्चक्रं सकलं मुने ॥ च ॥

॥ नारद उवाच ॥ ॥

एतेषां सांप्रतं स्कन्द मया वार्ता निवेदिता ॥

त्रैलोक्यं दानवैः सर्वैर्यथा नीतं मदोत्कटैः ॥ ९ ॥

स्त्रीरत्नमश्वरत्नं वा न किंचित्कस्यचिद्गृहे ॥

ते दृष्ट्वा मोक्षयंति स्म दुर्निवार्या मदोत्कटाः ॥ ६.१२०.१० ॥

तच्छ्रुत्वा कार्तिकेयस्य विशेषात्संप्रजायत ॥

वक्त्रद्वारेण देवानां यथा कोपः समागतः ॥ ११ ॥

एतस्मिन्नंतरे जाता तत्कोपांते कुमारिका ॥
सर्वलक्षणसंपन्ना दिव्यतेजोऽन्विता शुभा ॥ १२ ॥
कार्तिकेयस्य कोपेन कोपे मिश्रे दिवौकसाम् ॥
यस्माज्जातात्र सा कन्या तस्मात्कात्यायनी स्मृता ॥ १३ ॥
ततस्तस्या ददौ वज्रमायुधं त्रिदशाधिपः ॥
शक्तिं स्कन्दः सुतीक्ष्णाग्रां चापं देवो जनार्दनः ॥ १४ ॥
त्रिशूलं च महादेवः पाशं च वरुणः स्वयम् ॥
आदित्यश्च सितान्बाणांश्चंद्रमाश्चर्म चोत्तमम् ॥ १५ ॥
निस्त्रिंशं निर्ऋतिस्तुष्ट उल्मुकं च हुताशनः ॥
वायुश्च च्छुरिकां तीक्ष्णां धनदः परिघं तथा ॥ १६ ॥
दण्डं प्रेताधिपो रौद्रं वधाय सुरविद्विषाम् ॥
द्वादशैवं समालोक्य साऽऽयुधानि द्विजोत्तमाः ॥ १७ ॥
कात्यायनी ततश्चक्रे भुजद्वादशकं तदा ॥
जग्राह च द्रुतं तानि सुरास्त्राणि दिवौकसाम् ॥ १८ ॥
ततः प्रोवाच तान्सर्वान्संप्रहृष्टतनूरुहा ॥
यदर्थं विबुधश्रेष्ठाः सृष्टा तद्ब्रूत मा चिरम्॥ १९ ॥
सर्वं कार्यं करिष्यामि युष्माकं नात्र संशयः ॥
॥ देवा ऊचुः ॥ ॥
महिषो दानवो रौद्रः समुत्पन्नोऽत्र सांप्रतम् ॥ ६.१२०.२० ॥
अवध्यः सर्वभूतानां मानुषाणां विशेषतः ॥
मुक्त्वैकां योषितं तेन त्वमस्माभिर्विनिर्मिता ॥ २१ ॥
तस्मात्त्वं सांप्रतं गच्छ विंध्याख्यं पर्वतोत्तमम् ॥
तपस्तत्र कुरुष्वोग्र तेजो येनाभिवर्धते ॥ २२ ॥
ततस्तु तेजःसंयुक्तां त्वां ज्ञात्वा वयमेव हि ॥
अग्रे धृत्वा करिष्यामो युद्धं तेन दुरात्मना ॥ २३ ॥
ततस्त्वच्छस्त्रनिर्दग्धः पंचत्वं स प्रयास्यति ॥

वयं च त्रिदशैश्वर्यं लभिष्यामो हतद्विषः ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कात्यायन्युत्पत्तिवर्णनंनाम विंशत्युत्तरशततमोऽध्यायः॥ ॥१२०॥। ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२१

https://sa.wikisource.org/s/fh5

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

देवानां तद्वचः श्रुत्वा ततः सा परमेश्वरी ॥

प्रोवाच वाहनं किंचिद्देवा यच्छतु मे द्रुतम् ॥॥।

ततः सिंहं ददौ गौरी यानार्थं विकृताननम् ॥

तमारुह्य प्रतस्थे सा ततो विंध्यं नगं प्रति ॥ २ ॥

तस्यैकं शृंगमास्थाय रम्यं श्रेष्ठद्रुमान्वितम् ॥

फलपुष्पसमाकीर्णं लतामंडपमंडितम् ॥ ३ ॥

ततस्तपोऽकरोत्साध्वी तीव्रव्रतपरायणा ॥

संयम्येन्द्रियवर्गं स्वं ध्यायमाना महेश्वरम् ॥ ४ ॥

यथायथा तपोवृद्धिस्तस्याः सञ्जायते द्विजाः ॥

तथा रूपं च कांतिश्च शरीरे प्रतिवर्धते॥ ५ ॥

एतस्मिन्नंतरे प्राप्तास्तत्र दैत्येशकिंकराः ॥

ते तां दृष्ट्वा व्रतोपेतामत्यद्भुतवपुर्ध राम् ॥

गत्वा प्रोचुः स्वनाथस्य महिषस्य दुरात्मनः ॥ ६ ॥

॥ चारा ऊचुः ॥ ॥

भ्रममाणैर्धरापृष्ठे दृष्टाऽपूर्वा कुमारिका ॥

विन्ध्याचलेऽद्य चास्माभिर्भुजैर्द्वादशभिर्युता ॥

नानाशस्त्रधरैर्दीप्तैश्चर्मच्छादितगात्रका ॥७॥

न देवी न च गन्धर्वी नासुरी नागकन्यका ॥

तादृग्रूपा पुराऽस्माभिः काचिद्दृष्टा नितम्बिनी। ॥ ८ ॥

न विद्मो यन्निमित्तं सा तपश्चक्रे यशस्विनी ॥

स्वर्गकामाऽर्थकामा वा पतिकामाथ वा विभो॥ ९ ॥

॥ सूत उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा महिषो दानवाधिपः ॥

कामदेव वशं प्राप्तः श्रवणादपि तत्क्षणात् ॥ ६.१२१.१० ॥

ततस्तानग्रतः कृत्वा सैन्येन महता न्वितः ॥

जगाम कौतुकाविष्टो यत्रास्ते सा तु कन्यका ॥ ११ ॥

यथा मृत्युकृते मन्दः शृगालः सिंहवल्लभाम् ॥

वने सुप्तां सुविश्वस्तां सर्वथाप्य कुतोभयाम्॥१२॥

तस्याः संदर्शनादेव ततः कामशरैर्हतः॥

स दानवप्रधानश्च तत्क्षणादेव सद्द्विजाः॥१३॥

अथ प्राह प्रियं वाक्यमेकाकी तत्पुरःस्थितः॥

धृत्वा दूरतरेसैन्यं तस्या रूपेण मोहितः॥१४॥

विरुद्धं यौवनस्यैतद्व्रतं ते चारुहासिनि।

तस्मादेतत्परित्यक्त्वा त्रैलोक्यस्वामिनी भव ॥ १५ ॥

अहं हि महिषो नाम दानवेन्द्रो यदि श्रुतः ॥

मया येन सहस्राक्षो द्वन्द्वयुद्धे विनिर्जितः ॥ १६ ॥

त्रैलोक्यं सकलं मह्यं सांप्रतं च वशे स्थितम् ॥

तस्मात्त्वं भव सुश्रोणि भार्या मम सुवल्लभा ॥।७॥

सहस्रं मम भार्याणामन्यदस्ति सुशोभनम्॥

तत्सर्वं तेऽद्य भृत्यत्वं सांप्रतं प्रक रिष्यति॥।८॥

अहं चापि तवात्यंतं दासभावं समाश्रितः॥

वर्तयिष्यामि सुश्रोणि प्रदत्त्वाऽशेषसंपदः॥।९॥

॥सूत उवाच ॥॥

तस्य तद्वचनं श्रुत्वा ततः सा परमेश्वरी ॥

प्रोवाच भर्त्समाना तं कोपसंरक्तलोचना॥६.१२१.२॥।

धिग्धिक्पापसमाचार कुमारव्रतधारिणीम् ॥

कामोपहतचित्तात्मा किं मामित्थं प्रभा षसे ॥२॥।

अहं तव वधार्थाय निर्मिता विबुधोत्तमैः ॥

तस्मात्त्वां नाशयिष्यामि स्मरेष्टं यद्धृदि स्थितम्॥२२॥

॥ महिष उवाच ॥ ॥

यद्येवं तद्वरारोहे युक्ता स्याच्च कुमारिका ॥

प्रार्थनीया भवेदत्र सर्वेषां प्राणिनां यतः ॥२३॥

स्वर्गार्थं क्रियते धर्मस्तपश्च वरवर्णिनि ॥

येन भोगाः प्रभुञ्जंति ये दिव्या ये च मानुषाः ॥ २४ ॥

तस्माद्देहि ममात्मानं गांधर्वेण सुशोभने ॥

विवाहेन यतोऽन्येषां स प्रधानः प्रकीर्तितः ॥२५॥

एवं प्रवदतस्तस्य सा देवी क्रोधमूर्छिता ॥

तद्वक्त्रांतं समुद्दिश्य शरं चिक्षेप स क्षणात् ॥२६॥

विवेश वदनं तस्य वल्मीकं पन्नगो यथा ॥

अथ तैर्मार्गगणैर्विद्धः स वक्त्रांतान्नदंस्ततः ॥२७॥

सुस्राव रुधिरं भूरि गैरिकं पर्वतो यथा ॥

ततः कोपपरीतात्मा निवृत्याथ शनैः शनैः ॥२८॥

स्वसैन्यं त्वरितो भेजे कामेन च वशी कृतः॥

प्रोवाच सैनिकान्सर्वान्दुष्टा स्त्रीयं प्रगृह्यताम् ॥

यथा न त्यजति प्राणान्प्रहारैर्जर्जरीकृता॥२९॥

एषा मम न सन्देहः प्रिया भार्या भविष्यति॥

यदि नो शस्त्रपातेन पंचत्वमुपयास्यति ॥ ६.१२१.३० ॥

एवमुक्तास्तदा तेन दानवा युद्धदुर्मदाः ॥

दुद्रुवुः सम्मुखास्तस्या मुञ्चन्तो निशिताञ्छरान्।३॥।

एतस्मिन्नंतरे देवी सा दृष्ट्वा तानुपस्थितान् ॥

युद्धाय कृतसंकल्पांस्तर्जतश्च मुहुर्मुहुः। ३२ ॥

ततस्तु लीलया देवी मुक्ता तीक्ष्णान्महाशरान् ॥

तान्सर्वांस्ताडयामास सर्वमर्मसु तत्क्षणात् ॥ ३३ ॥

अथ तीक्ष्णैः शरैर्दैत्या निहता दानवास्तथा ॥

एके पंचत्वमापन्ना गताश्चान्य इतस्ततः॥३४॥

ततः सैन्यं समालोक्य तद्भग्नं च तया रणे ॥

कोपाविष्टस्ततो दैत्यः स्वयं तां समुपाद्रवत् ॥ ३५ ॥

यच्छञ्छृंगप्रहारांश्च तस्याः शतसहस्रशः ॥

गर्जितं विदधच्चोग्रं शारदाभ्रसमं मुहुः ॥ ३६ ॥

एतस्मिन्नंतरे देवी साट्टहासकृतस्वना ॥

त्रैलोक्यविवरं सर्वं यच्छब्देन प्रपूरितम् । ३७ ॥

एवं तस्या हसंत्याश्च वक्त्रान्तादथ निर्ययुः॥

पुलिंदाः शबरा म्लेछास्तथान्येऽरण्यवासिनः॥३८॥

शकाश्च यवनाश्चैव शतशश्तु वपुर्धरा?॥

वर्म स्थगितगात्राश्च यमदूता इवापरे॥३९॥

ते प्रोचुर्देवि नो ब्रूहि येन सृष्टा वयं क्षितौ॥

कार्येण क्रियते कृत्स्नं येन शीघ्रं वरानने॥६.१२१.४॥।

॥ देव्युवाच ॥ ॥

एतानस्य सुदुष्टस्य सैनिकान्बलगर्वितान् ॥

सूदयध्वं द्रुतं वाक्यादस्मदीयाद्यथेच्छया ॥ ४१ ॥

अथ ते तद्वचः श्रुत्वा वल्गंतोऽसिधनुर्द्धराः ॥

दैतेयबलमुद्दिश्य दुद्रुवुर्वेगमाश्रिताः ॥ ४२ ॥

ततस्तेषां महद्युद्धं मिथो जज्ञे सुदारुणम् ।

नात्मीयं न परं तत्र केनचिज्ज्ञा यते क्वचित् ॥ ४३ ॥

अथ ते दानवाः सर्वे योधैर्देवीसमुद्भवैः ॥

भग्ना व्यापादिताश्चान्ये प्रहारैर्जर्जरीकृताः ॥ ४४ ॥

ततो भग्नं बलं दृष्ट्वा महिषः क्रोधमूर्छितः ॥

तामुवाच क्रुधा देवीं वचनैः परुषाक्षरैः ॥ ४५ ॥

आः पापे स्त्रीति मत्वाद्य न हतासि मया युधि ॥

तस्मात्पश्य प्रहारं मे तत्त्वं बुध्यसि नान्यथा ॥ ४६ ॥

एवमुक्त्वा विशेषेण प्रहारान्स विचिक्षिपे ॥

विषाणाभ्यां महावेगो भर्त्सयानो मुहुर्मुहुः ॥ ४७ ॥

ततोऽभ्याशगतं दृष्ट्वा सा देवी दानवं च तम् ॥

आरुरोहाथ वेगेन पृष्ठिदेशेन कोपतः ॥ ४८ ॥

ततश्चुक्रोश दैत्योऽसौ व्योममार्गं समाश्रितः ॥

पृष्ठ्यास्तलेन निर्भिन्नो रुधिरौघपरिप्लुतः ॥ ४९ ॥

एतस्मिन्नंतरे सिंहः स तस्या ज्योतिसंभवः ॥

जग्राह पश्चिमे भागे दंष्ट्राग्रैर्निशितैः क्रुधा ॥ ६.१२१.५० ॥

ततो निश्चलतां प्राप्तः पादाक्रांतश्च दानवः॥

अकरोद्भैरवान्नादान्न शक्तश्चलितुं पदम् ॥ ५१ ॥

एतस्मिन्नंतरे प्राप्ताः सर्वे देवाः सवासवाः ॥

व्योमस्थास्तां तदा प्रोचुर्देवीं हर्षसमन्विताः ॥ ५२ ॥

एतस्य शिरसश्छेदं शीघ्रं कुरु सुरेश्वरि ॥

खड्गेनानेन तीक्ष्णेन यावन्नो याति चान्यतः ॥ ५३ ॥

सा श्रुत्वा वचनं तेषां देवी कोपसमन्विता ॥

खड्गं व्यापारयामास कंठे तस्यातिपीवरे ॥ ५४ ॥

स तेन खड्गघातेन कंठः पीनोऽपि निष्ठुरः॥

द्विधा जज्ञेऽथ दैत्यस्य दधत्तुष्टिं दिवौकसाम् ॥ ५५ ॥

द्वादशार्कप्रतीकाशो वक्त्रांतश्चर्मखड्गधृक् ॥

भर्त्सयंस्तां महादेवीं खड्गोद्यतकरां तदा ॥

खड्गं व्यापारयन्गात्रे तस्या बालार्कसन्निभम् ॥ ५६ ॥

ततः केशेषु चाधाय यावत्तस्यापि चिक्षिपे ।

प्रहारं गात्रनाशाय तावदूचे स दानवः ॥ ५७ ॥

॥ दानव उवाच ॥ ॥

जय देवि जयाचिंत्ये जय सर्वसुरेश्वरि ॥

जय सर्वगते देवि जय सर्वजनप्रिये ॥ ५८ ॥

जय कामप्रदे नित्यं जय त्रैलोक्यसुन्दरि ॥

जय त्रैलोक्य रक्षार्थमुद्यते ह्यकुतोभये ॥ ५९ ॥

जय देवि कृतानंदे जय दैत्यविनाशिनि ॥

जय क्लेशच्छिदे कांते जयाभक्तविमोहदे ॥ ६.१२१.६० ॥

त्वं सृष्टिस्त्वं वरा देवी त्वं लक्ष्मीस्त्वं सरस्वती ।

त्वं स्वाहा त्वं स्वधा तुष्टिः पुष्टिर्मेधा धृतिः क्षमा ॥६॥।

तस्मात्कुरु प्रसादं मे प्राणान्रक्ष दयां कुरु॥

प्रणतस्य सुदीनस्य हीनस्य च विशेषतः॥६२॥

अहं दुर्वाससा शप्तो हिरण्याक्षसुतो बली॥

महिषत्वं समानीतस्त्वया देवी विमोक्षितः॥६३॥

तस्माद्दर्पः प्रमुक्तोऽद्य मया दानवसंभवः॥

किंकरत्वं प्रयास्यामि सांप्रतं ते सुरेश्वरि॥६४॥

जय सर्वगते देवि सर्वदुष्टविनाशिनि॥६५॥

इति तस्य वचः श्रुत्वा कृपणं सा सुरेश्वरी ॥

कृपाविष्टाऽब्रवीद्वाक्यं ततो व्योमस्थितान्सुरान्॥६६॥

किं करोमि दया जाता ममैनं प्रति हे सुराः ॥

तस्मान्नाहं हनिष्यामि दानवं दीनजल्पकम् ॥ ६७ ॥

विमुखं खड्गशस्त्रं च तवास्मीति प्रवादिनम् ॥

अपि मे पितृहंतारं न हन्यां रिपुमाहवे ॥ ६८ ॥

॥ देवा ऊचुः ॥ ।

न चेदसि च देवेशि त्वमेनं दानवाधमम् ॥

नाशयिष्यति तत्कृत्स्नं त्रैलोक्यं सचराचरम् ॥ ६९ ॥

एष व्यर्थःश्रमः सर्वस्तथास्माकं भविष्यति ॥

तव संभूतिसंभूतस्तव क्लेशस्तथाऽखिलः ॥ ६.१२१.७० ॥

॥ देव्युवाच ॥ ॥

नाहमेनं हनिष्यामि त्यजिष्यामि तथाऽमराः ॥

एनं कचग्रहं कृत्वा धारयिष्यामि सर्वदा ॥ ७१ ॥

॥ देवा ऊचुः ॥ ॥

साधुसाधु महाभागे युक्तमुक्तं त्वया वचः ॥

एतद्धि युज्यते कर्तुं कालेऽस्मिंस्त्रिदशेश्वरि ॥ ७२ ॥

सांप्रतं मर्त्यलोके त्वं रूपमेतत्समाश्रिता ॥

शस्त्रोद्यतकरा रौद्रा महिषोपरि संस्थिता ॥ ७३ ॥

अवाप्स्यसि परां पूजां दुर्लभा ममरैरपि ॥

यस्त्वामेतेन रूपेण संस्थितां पूजयिष्यति ॥ ७४ ॥

त्वमस्य संगतो भावि विख्याता विंध्यवासिनी ॥

किं ते वा बहुनोक्तेन शृणु संक्षेपतो वचः ॥ ७५ ॥

अस्मदीयं परं तथ्यं सर्वलोकहितावहम् ॥

पार्थिवानां त्वदायत्तं बलं देवि भविष्यति ॥ ७६ ॥

युद्धकाले समुत्पन्ने भक्तानां नात्र संशयः ॥
प्रस्थानं वा प्रवेशं च यः करिष्यति मानवः ॥ ७७ ॥
त्वां स्मृत्वा प्रणिपत्याथ पूजयित्वा विशेषतः ॥
तस्य संपत्स्यते सिद्धिः सर्वकृत्येषु सर्वदा ॥
इह कापुरुषस्यापि किं पुनः सुभटस्य च ॥ ७८ ॥
आश्विनस्य सिते पक्षे नवम्यां चाष्टमीदिने ॥
पूजयिष्यति यो मर्त्यस्त्वां सद्भक्तिसमन्वितः ॥ ७९ ॥
तस्य संवत्सरं यावत्समग्रं सुरसुन्दरि ॥
न भविष्यति वै रोगो न भयं न पराभवः ॥
नापमृत्युर्न चौरादि समुद्भूत उपद्रवः ॥ ६.१२१.८० ॥
। सूत उवाच ॥ ॥
एवमुक्त्वाथ ते देवास्तां देवीं हर्षसंयुताः ॥
अनुज्ञातास्तया जग्मुः स्वां पुरीममरावतीम् ॥ ॥ ९१ ॥
तत्र गत्वा चिरात्प्राप्य स्वं राज्यं पाकशासनः ॥
पालयामास संहृष्टस्त्रैलोक्यं हतकटकम् ॥ ८२ ॥
लोकाश्च सुखसंपन्नाः सर्वे जाता स्ततः परम्॥
यज्ञभागभुजो देवा भूयो जाता जगत्त्रये ॥ ८३ ॥
ततः परं च सा देवी त्रैलोक्ये ख्यातिमागता ॥
सर्वक्षेत्रेषु तीर्थेषु स्थानेषु च विशेषतः ॥ ८४ ॥
एतस्मिन्नंतरे जातः सुरथोनाम भूपतिः ॥
आनर्तस्तेन सद्भक्त्या क्षेत्रेऽत्रैव विनिर्मिता ॥ ८५ ॥
यस्तां पश्यति सद्भक्त्या चैत्राष्टम्यां सितेऽहनि ॥
स पुमान्वत्सरं यावत्कृतार्थः स्यान्न संशयः ॥ ८६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये महिषासुरपराजय कात्यायनीमाहात्म्यवर्णनंनाम एकविंशत्युत्तरशततमोऽध्यायः ॥ १२१ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२२

https://sa.wikisource.org/s/fgn
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोस्मि द्विजोत्तमाः ॥

यथा स निहतो देव्या महिषाख्यो दनूत्तमः ॥ १ ॥

सांप्रतं कीर्तयिष्यामि कथां पातकनाशिनीम् ॥

केदारसंभवां पुण्यां तां शृणुध्वं समाहिताः ॥ २ ॥

॥ ऋषय ऊचुः ॥ ।

केदारः श्रूयते सूत गंगाद्वारे हिमाचले ॥

स कथं चेह संप्राप्तः सर्वं विस्तरतो वद ॥ ३ ॥

॥ सूत उवाच ॥ ॥

एतत्सत्यं गिरौ तस्मिन्स्वयंभूः संस्थितः प्रभुः ॥

परं तत्र वसेद्देवो यावन्मासाष्टकं द्विजाः ॥ ४ ।

यावद्धर्मश्च वर्षा च तावत्तत्र वसेत्प्रभुः ॥

शीतकाले पुनश्चात्र क्षेत्रे संतिष्ठते सदा ॥ ॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

किं तत्कार्यं वसेद्येन क्षेत्रे मासचतुष्टयम् ॥

हिमाचले यथैवाष्टौ सूतपुत्र वदस्व नः ॥ ६ ॥

॥ सूत उवाच ॥ ॥

पूर्वं स्वायंभुवस्यादौ मनोर्दैत्यो महाबलः ॥

हिरण्याक्षो महातेजास्तपोवीर्यसमन्वितः ॥ ७ ॥

तैर्व्याप्तं जगदेतद्धि निरस्य त्रिदशाधिपम् ॥

यज्ञ भागाश्चदेवानां हृता वीर्यप्रभावतः ॥ ८ ॥

अथ शक्रः सुरैः सार्धं गंगाद्वारं समाश्रितः ॥

तपस्तेपे सुदुःखार्तो राज्यश्रीपरिवर्जितः ॥ ९ ॥

तस्यैवं तप्यमानस्य तपस्तीव्रं महात्मनः ॥

माहिषं रूपमास्थाय निश्चक्राम धरातलात् ॥ ६.१२२.१० ॥

स्वयमेव महादेवस्ततः शक्रमुवाच ह ॥

केदारयामि मे शीघ्रं ब्रूहि सर्वं सुरोत्तम ॥

दैत्यानामथ सर्वेषां रूपेणानेन वासव ॥ ११ ॥

॥ इन्द्र उवाच ॥ ॥

हिरण्याक्षो महादैत्यः सुबाहुर्वक्र कन्धरः ॥

त्रिशृंगो लोहिताक्षश्च पंचैतान्दारय प्रभो ॥

हतैरेतैर्हतं सर्वं दानवानामसंशयम् ॥ १२ ॥

किमन्यैः कृपणैर्ध्वस्तैर्यैः किंचिन्नात्र सिध्यति ॥

तस्य तद्वचनश्रुत्वा भगवांस्तूर्णमभ्यगात् ॥

यत्र दानवमुख्योऽसौ हिरण्याक्षो महाबलः ॥ १३ ॥

अथ तं दूरतो दृष्ट्वा महिषं पर्वतोपमम् ॥

आयातं रौद्ररूपेण दानवाः सर्वतश्च ते ॥ १४ ॥

ततो जघ्नुश्च पाषाणैर्लगुडैश्च तथापरे ॥

क्ष्वेडितास्फोटितांश्चक्रुस्तथान्ये बलगर्विताः ॥ ॥ १५ ॥

अथवमन्य तान्देवः प्रहारं लीलया ददौ ॥

यत्रास्ते दानवेन्द्रोऽसौ चतुर्भिः सचिवैः सह ॥ १६ ॥।

ततः शस्त्रं समुद्यम्य यावद्धावति सम्मुखः ॥

तावच्छृंगप्रहारेण सोनयद्यमसादनम् ॥ १७ ॥

हत्वा तं सचिवान्पश्चात्सुबाहुप्रमुखांश्च तान् ॥

जघान हन्यमानोऽपि समन्ताद्दानवैः परैः ॥ १८ ॥

न तस्य लगते क्वापि शस्त्रं गात्रे कथंचन ॥

यत्नतोऽपि विसृष्टं च लब्धलक्षैः प्रहारिभिः ॥ १९ ॥

एवं पंच प्रधानास्तान्हत्वा दैत्यान्महेश्वरः ॥

भूयो जगाम तं देशं यत्र शक्रो व्यवस्थितः ॥

अब्रवीच्च प्रहष्टात्मा ततः शक्रं तपोन्वितम् ॥ ६.१२२.२० ॥

मया ते निहताः पंच दानवा ये त्वयेरिताः ॥

तस्मात्त्रैलोक्यराज्यं स्वं भूय एव समाचर ॥२॥।

मत्तोऽन्यदपि देवेश वरं प्रार्थय वांछितम् ॥

कैलासशिखरं येन गच्छामि त्वरयाऽन्वितः ॥ २२ ॥

॥ इन्द्र उवाच ॥ ॥

अनेनैव हि रूपेण तिष्ठ त्वं चात्र शंकर ॥

त्रैलोक्यरक्षणार्थाय धर्माय च शिवाय च ॥ २३ ॥

॥ श्रीभगवानुवाच ॥ ॥

एतद्रूपं मया शक्र कृतं तस्य वधाय वै ॥

अवध्यः सर्वभूतानां यतोन्येषां मया हतः ॥ २४ ॥

तस्मादत्रैव ते वाक्यात्स्थास्यामि सुर सत्तम ॥

अनेनैव तु रूपेण मोक्षदः सर्वदेहिनाम् ॥ २५ ॥

एवमुक्त्वा विरूपाक्षश्चक्रे कुंडं ततः परम् ॥

शुद्धस्फटिकसंकाशं सुस्वादुक्षीरवत्प्रियम् ॥ ॥ २६ ॥

ततः प्रोवाच देवेन्द्रं मेघगंभीरया गिरा ॥

शृण्वतां सर्वदेवानां भगवांस्त्रिपुरातकः ॥ २७ ॥

यो मां दृष्ट्वा शुचिर्भूत्वा कुंडमेतत्प्रपश्यति ॥

त्रिः पीत्वा वामसव्येन द्वाभ्यां चैव ततो जलम् ॥ २८ ॥

कराभ्यां स पुमान्नूनं तारयेच्च कुलत्रयम् ॥

अपि पापसमाचारं नरकेऽपि व्यव स्थितम् ॥ २९४

वामेन मातृकं पक्षं दक्षिणेनाथ पैतृकम् ॥

उभाभ्यामथ चात्मानं कराभ्यां मद्वचो यथा ॥ ६.१२२.३० ॥

॥ इन्द्र उवाच ॥ ॥

अहमागत्य नित्यं त्वां स्वर्गाद्वृषभवाहन ॥

अत्रस्थं पूजयिष्यामि पास्यामि च तथोदकम् ॥ ३१ ॥

के दारयामि यत्प्रोक्तं त्वया महिषरूपिणा ॥

केदार इति नाम्ना त्वं ततः ख्यातो भविष्यसि ॥ ३२ ॥

॥ श्रीभगवानुवाच ॥ ॥

यद्येवं कुरुषे शक्र ततो दैत्यभयं न ते ॥

भविष्यति परं तेजो गात्रे संपत्स्यतेऽखिलम् ॥ ३३ ॥

एवमुक्तः सहस्राक्षस्ततः प्रासादमुत्तमम् ॥

तदर्थं निर्मयामास साध्वालोकं मनोहरम् ॥ ३४ ॥ (साध्वालोकं- दर्शनीयतमम्)

ततः प्रणम्य तं देवमनुमन्त्र्य ततः परम् ॥

जगाम निजमावासं मेरुशृंगाग्रसंस्थितम् ॥ ३५ ॥

ततश्चागत्य नित्यं स स्वर्गाद्देवस्य शूलिनः ॥

केदारस्य सुभक्त्याढ्यां पूजां चक्रे समाहितः ॥ ३६ ॥

मन्त्रोदकं च त्रिः पीत्वा ययौ ब्राह्मणसत्तमाः ॥

कस्यचित्त्वथ कालस्य यावत्तत्र समाययौ ॥ ३७ ॥

तावद्धिमेन तत्सर्वं गिरेः शृंगं प्रपूरितम् ॥

तच्च कुण्डं स देवश्च प्रासादेन समन्वितः ॥ ३८ ॥

ततो दुःखपरीतात्मा भक्त्या परमया युतः ॥

तां दिशं प्रणिपत्योच्चैर्जगाम निजमंदिरम् ॥ ३९ ॥

एवमागच्छतस्तस्य गतं मासचतुष्टयम् ॥

अपश्यतो महादेवं दिदृक्षागतचेतसः ॥ ६.१२२.४० ॥

ततः प्राप्ते पुनर्विप्रा घर्मकाले हिमालये ॥

संयातो दृक्पथं देवः स तथारूपसंस्थितः ॥ ४१ ॥

ततः पूजां विधायोच्चैश्चातुर्मास्यसमुद्भवाम् ॥

गीतवाद्यादिकं चक्रे तत्पुरः श्रद्धयान्वितः ॥ ४२ ॥

अथ देवः समालोक्य तां श्रद्धां तस्य गोपतेः ॥

प्रोवाच दर्शनं गत्वा भगवांस्त्रिपुरांतकः ॥ ४३ ॥

परितुष्टोऽस्मि देवेश भक्त्या चानन्ययाऽनया ॥

तस्मात्प्रार्थय दास्यामि यं कामं हृदिसंस्थितम् ॥४४॥

॥ शक्र उवाच ॥ ॥

तव प्रसादात्संजातं ममैश्वर्यमनुत्तमम्॥

यत्किंचित्त्रिषु लोकेषु तत्सर्वं गृहसंस्थितम्॥४५॥

तस्माद्यदि प्रसादं मे करोषि वृषभध्वज ॥

वरं वा यच्छसि प्रीतस्तत्कुरुष्व वचो मम ॥ ४६ ॥

पर्वतोऽयं भवेद्रम्यो मासानष्टौ सुरेश्वर॥

यावन्मीनस्थितो भानुः प्रगच्छति श्रुतं मया ॥ ४७ ॥

ततः परमगम्यश्च हिमपूरेण संवृतः ॥
यदा स्याच्चतुरो मासान्यावत्कुम्भगतो रविः ॥ ४८ ॥
संजायतेऽप्यगम्यश्च ममापि त्रिपुरांतक ॥
किं पुनः स्वल्पसत्त्वानां नरादीनां सुरेश्वर ॥ ४९ ॥
तस्मात्स्वर्गेऽथ पाताले मर्त्ये वा त्रिदशेश्वर ॥
कुरुष्वानेनरूपेण स्थितिं मासचतुष्टयम् ॥
येन न स्यात्प्रतिज्ञाया हानिर्मम सुरेश्वर ॥ ६.१२२.५० ॥
॥ सूत उवाच ॥ ॥
ततो देवश्चिरं ध्यात्वा प्रोवाच बलसूदनम् ॥
परं संतोषमापन्नो मेघनिर्घोषनिःस्वनम् ॥ ॥ ५१ ॥
आनर्तविषये क्षेत्रं हाटकेश्वरसंज्ञितम्॥
अस्मदीयं सहस्राक्ष विद्यते धरणीतले ॥ ५२ ॥
तत्राहं वृश्चिकस्थेऽर्के सदा स्थास्यामि वासव॥
यावत्कुम्भस्य पर्यंतं तव वाक्यादसंशयम्॥ ५३ ॥
तस्मात्तत्र द्रुतं गत्वा कृत्वा प्रासादमुत्तमम् ॥
मम रूपं प्रतिष्ठाप्य कुरुपूजा यथोचिताम् ॥
येन तत्र निजं तेजो धारयामि तवार्थतः ॥ ५४ ॥
॥ सूत उवाच ॥ ॥
एतच्छ्रुत्वा सहस्राक्षो देवदेवस्य शूलिनः ॥
गत्वा तत्र ततश्चक्रे यद्देवेनेरितं वचः ॥ ५५ ॥
प्रासादं निर्मयित्वाथ रूपं संस्थाप्य शूलिनः ॥
कुण्डं चक्रे च तद्रूपं स्वच्छोदकसमावृतम्॥५६॥
ततश्चाराधयामास पुष्पधूपानुलेपनैः ॥
स्नात्वा कुण्डेऽपिबत्तोयं त्रिःकृत्वा च यथापुरा ॥ ५७ ॥
एवं स भगवांस्तत्र शक्रेणाराधितः पुरा ॥
समायातोऽत्र विप्रेंद्राः सुरम्यात्तु हिमाचलात् ॥ ५८ ॥
यस्तमाराधयेत्सम्यक्सदा मासचतुष्टयम् ॥
हिमपातोद्भवे मर्त्यः स शिवाय प्रपद्यते ॥ ५९ ॥

शेषकालेऽपि यः पूजां करोत्येव सुभक्तितः ॥

स पापं क्षालयेत्प्राज्ञ आजन्ममरणांतिकम् ॥ ६.१२२.६० ॥

तत्र गीतं प्रशंसंति नृत्यं चैव पृथग्विधम् ॥

देवस्य पुरतः प्राज्ञाः सर्वशास्त्रविशारदाः ॥ ६१ ॥

अत्र श्लोकः पुरा गीतो नारदेन सुरर्षिणा ॥

तद्वोऽहं कीर्तयिष्यामि श्रूयतां ब्राह्मणोत्तमाः ॥ ६२ ॥

केदारे सलिलं पीत्वा गयापिंडं प्रदाय च ॥

ब्रह्मज्ञानमथासाद्य पुनर्जन्म न विद्यते ॥ ६३ ॥

एतद्वः सर्वमाख्यातं केदारस्य च संभवम् ॥

आख्यानं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ ६४ ॥

यश्चैतच्छृणुयात्सम्यक्पठेद्वा तस्य चाग्रतः ॥

श्रावयेद्वापि वा विप्राः सर्वपातकनानम् ॥

केदारस्य स पापौघैर्मुच्यते तत्क्षणान्नरः ॥ ६५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये केदारोत्पत्तिमाहात्म्यवर्णनंनामद्वाविंशत्युत्तरशततमोऽध्यायः ॥ १२२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२३

https://sa.wikisource.org/s/fh2



॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति शुक्लतीर्थमनुत्तमम्॥

दर्भैः संसूचितं श्वेतैर्यदद्यापि द्विजोत्तमाः ॥ १ ॥

चमत्कारपुरे पूर्वमासीत्कश्चित्सुशल्यवित् ॥

रजकः शुद्धकोनाम पुत्रपौत्रसमन्वितः ॥ ॥ २॥

स सर्वरजकानां च प्राधान्येन व्यवस्थितः ॥

प्रधानब्राह्मणानां च करोत्यंबरशोधनम् ॥ ३ ॥

कस्यचित्त्वथ कालस्य नीलीकुण्ड्यां समाहितः ॥

प्राक्षिपद्ब्राह्मणेंद्राणां वासो विज्ञातवांश्चिरात् ॥ ४ ॥

अथासौ मन्दचित्तश्च स्वामाहूयकुटुम्बिनीम् ॥

पुत्रांश्च वचनं प्राह रहस्ये भयविह्वलः ॥ ५ ॥

निर्मूल्यानि सुवस्त्राणि ब्राह्मणानां महात्मनाम् ॥

नीलीमध्ये विमोहेन प्रक्षिप्तानि बहूनि च ॥ ६ ॥

वधबन्धादिकं कर्म ते करिष्यंत्यसंशयम् ॥

तस्मादन्यत्र गच्छामो गृहीत्वा रजनीमिमाम् ॥ ७ ॥

एवं स निश्चयं कृत्वा सारमादाय मंदिरात् ॥

प्रस्थितो भार्यया सार्द्धं कांदिशीको द्विजोत्तमाः ॥ ८ ॥

तावत्तस्य सुता गत्वा स्वां सखीं दाशसंभवाम् ॥

उवाच क्षम्यतां भद्रे यन्मया कुकृतं कृतम्॥ ९ ॥

अज्ञानाज्ज्ञानतो वापि प्रक्रीडंत्या त्वया सह ॥

प्रणयाद्बाल्यभावाच्च क्रोधाद्वाथ महेर्ष्यया ॥ ६.१२३.१० ॥

अथ सा सहसा श्रुत्वा बाष्पपर्याकुलेक्षणा ॥

उवाच किमिदं भद्रे यन्मामित्थं प्रभाषसे ॥ ११ ॥

॥ सख्युवाच ॥ ॥

मम तातेन नीलायां प्रक्षिप्तान्यंबराणि च ॥

ब्राह्मणानां महार्हाणि विभ्रमेण सुलोचने ॥ १२ ॥

तत्प्रभाते परिज्ञाय दंडं धास्यंति दारुणम् ॥

एवं चित्ते समास्थाय तातः संप्रस्थितोऽधुना ॥ १३ ॥

अहं तवातिकं प्राप्ता दर्शनार्थमनिन्दिते ॥

अनुज्ञाता प्रयास्यामि त्वया तस्मात्प्रमुच्यताम् ॥ १४ ॥

अथ सा तद्वचः श्रुत्वा प्रसन्नवदनाऽब्रवीत् ॥

यद्येवं मा सरोजाक्षि कुत्रचित्संप्रयास्यसि ॥ १५ ॥

निवारय द्रुतं गत्वा तातं नो गम्यतामिति ॥

अस्ति पूर्वोत्तरे भागे स्थानादस्माज्जलाशयः ॥ १६ ॥

तत्रैकदा विनिक्षिप्तं मम तातेन जालकम् ॥

अतीवकृष्णकेशोत्थं तावच्छुक्लत्वमागतम्॥।७॥

ततः स विस्मयाविष्टः स्वयं सस्नौ कुतूहलात् ।

यावच्छुक्लत्वमापन्नस्तादृक्कृष्णवपुर्धरः ॥ १९ ॥

सुश्वेतमूर्धजः सद्यः स्त्रीणां वैराग्यकारकः ॥

ततःप्रभृति नो ज्ञात्वा कश्चित्तत्र प्रगच्छति ॥ १९ ॥

तस्मात्तत्रैव वस्त्राणि प्रक्षालयतु सत्वरम् ॥

तातः स तव यास्यंति विशुद्धिं परमां शुभे ॥ ६.१२३.२० ॥

अथ सा सत्वरं गत्वा निजतातस्य तद्वचः ॥

सत्वरं कथयामास प्रहृष्टवदना सती ॥ २१

मम सख्या समादिष्टं नातिदूरे जलाशयः ॥

तत्र श्वेतत्वमायाति सर्वं क्षिप्तं सितेतरम् ॥२२॥

तस्मात्प्रक्षालय प्रातस्तत्र गत्वा जलाशये ॥

वस्त्राण्यमूनि शुक्लत्वं संप्रयास्यंत्यसंशयम्॥ २३॥

॥ रजक उवाच ॥

नैतत्संपत्स्यते पुत्रि यन्नीलस्य परिक्षयः ॥

वस्त्रलग्नस्य जायेत यतः प्रोक्तं पुरातनैः ॥२४॥

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ॥

एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥२५॥

॥ कन्योवाच ॥ ॥

तत्र ह्यागम्यतां तावद्वस्त्रणयादाय यत्नतः ॥

तोयाच्छुद्धिं प्रयास्यंति तदाऽऽगंतव्यमेव हि ॥ ॥२६॥

भूयोऽपि मंदिरे वाऽथ तस्मात्स्थानाद्दिगंतरम् ॥

गंतव्यं सकलैरेव ममैतद्धृदि संस्थितम्॥२७॥

तस्यास्तद्वचनं श्रुत्वा साधुसाध्विति तेऽसकृत् ॥

प्रोच्य बांधवभृत्याश्च रात्रावेव प्रजग्मिरे ॥२८॥

दाशकन्यां पुरः कृत्वा संशयं परमं गताः ॥

विभवेन समायुक्ता निजेन द्विजसत्तमाः ॥२९॥

ततः सा दर्शयामास दाशकन्या जलाशयम् ॥

बहुवीरुधसंछन्नं दुष्प्रवेशं च देहिनाम् ॥ ६.१२३.३० ॥

ततः स रजकस्तत्र वस्त्राण्यादाय सर्वशः ॥

प्रविष्टः सलिले तस्मिन्क्षालयामास वै द्विजाः ॥ ३१ ॥

अथ तानि सुवस्त्राणि मेचकाभानि तत्क्षणात् ॥

जातानि स्फटिकाभानि तत्क्षणादेव कृत्स्नशः ॥ ॥ ३२ ॥

ततस्तुष्टिसमायुक्तः साधुसाध्विति चाऽब्रवीत् ॥

समालिंग्य सुतां प्राह दाशकन्यां च सादरम् ॥ ३३ ॥

सुवस्त्राणि द्विजेंद्राणामर्पयामो यथाक्रमम् ॥ ३४ ॥

ततः स स्वगृहं गत्वा तानि वस्त्राणि कृत्स्नशः ॥

यथाक्रमेण संहृष्टः प्रददौ द्विजसत्तमाः ॥ ३५ ॥

अथ ते ब्राह्मणा दृष्ट्वा तां शुद्धिं वस्त्रसंभवाम् ॥

तं च श्वेतीकृतं चेदृग्रजकं विस्मयान्विताः ॥ ३६ ॥

पप्रच्छुः किमिदं चित्रं वस्त्रमूर्धजसंभवम् ॥

अनौपम्यं च संजातं वदस्व यदि मन्यसे ॥ ३७ ॥

॥ रजक उवाच ॥ ॥

एतानि विप्रा वस्त्राणि मया क्षिप्तानि मोहतः ॥

नीलीमध्ये सुवस्त्राणि विनष्टानि च कृत्स्नशः ॥ ॥ ३८ ॥

ततो भयं महद्भूतं कुटुम्बेन समन्वितः ॥

चलितो रजनीवक्त्रे दिगंते ब्राह्मणोत्तमाः ॥ ३९ ॥
अथैषा तनयाऽस्माकं गता निजसखीं प्रति ॥
दाशात्मजां सुदुःखार्ता पुनर्दर्शनलालसा ॥ ६.१२३.४० ॥
तया सर्वमभिप्रायं ज्ञात्वा मे दुःखहेतुकम् ॥
ततः संदर्शयामास स्थिताग्रे स्वजलाशयम् ॥ ४१ ॥
तस्मिन्प्रक्षिप्तमात्राणि वस्त्राणीमानि तत्क्षणात् ॥
ईदृग्वर्णानि जातानि विस्मयस्य हि कारणम् ॥ ४२ ॥
तथा मे मूर्धजाः कृष्णास्तत्र स्नातस्य तत्क्षणात् ॥
परं शुक्लत्वमापन्ना एतत्प्रोक्तं मया स्फुटम् ॥ ४३ ॥
एवं ते ब्राह्मणाः श्रुत्वा कौतूहलसमन्विताः ॥
तत्र जग्मुः परीक्षार्थं विक्षिप्य तदनंतरम् ॥ ४४ ॥
कृष्णद्रव्याणि भूरीणि केशादीनि सहस्रशः ॥
सर्वं तच्छुक्लतां याति त्यक्त्वा वर्णं मलीमसम् ॥ ४५ ॥
ततो वृद्धतया ये च विशेषाच्छ्वेतमूर्धजाः ॥
ते सस्नुः श्रद्धया युक्तास्तरुणाश्चापि धर्मिणः ॥ ४६ ॥
ततः शुक्लत्वमापन्नास्तेजोवीर्यसमन्विताः ॥
भवंति तत्प्रभावेन प्रयांति च परां गतिम् । ४७ ॥
अथ तद्वासवो दृष्ट्वा शुक्लतीर्थं प्रमुक्तिदम् ॥
पूरयामास रजसा मानुषोत्थभयेन च ॥ ४८ ॥
अद्यापि तत्र यत्किंचिज्जायतेऽथ तृणादिकम् ॥
तत्सर्वं शुक्लतामेति तत्तोयस्य प्रभावतः ॥ ४९ ॥
तत्रोत्थैर्यः कुशैः श्राद्धं कुरुते श्रद्धयान्वितः ।३
श्वैतैस्तैस्तारयेत्सर्वान्पितॄन्नरकगानपि । ६.१२३.५० ॥
तत्तीर्थोत्थां मृदं गात्रे योजयित्वा नरोत्तमः ॥
स्नानं करोति तीर्थानां सर्वेषां लभते फलम् ॥ ५१ ॥
यस्तैर्दर्भैर्नरो भक्त्या तिलैश्चारण्यसंभवैः ॥
करोति तर्पणं विप्राः स प्रीणाति पितामहान् ॥ ५२ ॥
अथाश्वमेधात्संप्राप्यं गयाश्राद्धेन यत्फलम् ॥

नीलसंज्ञगवोत्सर्गे तथात्रापि द्विजोत्तमाः ॥ ५३ ॥

॥ ऋषय ऊचुः ॥ ।

शुक्लतीर्थं कथं जातं तत्र त्वं सूतनंदन ॥

विस्तरेण समाचक्ष्व परं कौतूहलं हि नः ॥ ५४ ॥

॥ सूत उवाच ॥ ॥

श्वेतद्वीपः समानीतो विष्णुना प्रभविष्णुना ॥

तत्क्षेत्रे कलिभीतेन यथा शौक्ल्यं न संत्यजेत् ॥ ५५ ॥

कलिकालेन संस्पृष्टः श्वेतद्वीपोऽपि श्यामताम् ॥

न प्रयाति द्विजश्रेष्ठास्ततस्तत्र निवेशितः ॥ ५६ ॥

इतिश्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये शुक्लतीर्थमाहात्म्यवर्णनंनाम त्रयोविंशत्युत्तर शततमोध्यायः ॥ १२३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२४

https://sa.wikisource.org/s/fh3
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

अथान्यदपि तत्रास्ति मुखारं तीर्थमुत्तमम् ॥

यत्र ते मुनयः श्रेष्ठा विप्राश्चौरेण संगताः॥॥।

यत्र सिद्धिं समापन्नः स चौरस्तत्प्रभावतः।

वाल्मीकिरिति विख्यातो रामायणनिबंधकृत्॥२॥

चमत्कारपुरे पूर्वं मांडव्यान्वय संभवः ॥

लोहजंघो द्विजो ह्यासीत्पितृमातृपरायणः ॥३॥

तस्यैका चाभवत्पत्नी प्राणेभ्योऽपि गरीयसी॥

पतिव्रता पतिप्राणा पतिप्रियहिते रता ॥४॥

अथ तस्य स्थितस्यात्र ब्रह्मवृत्त्याभिवर्ततः ॥

जगाम सुमहान्कालः पितृमातृरतस्य च ॥५॥

एकदा भगवाञ्छक्रो न ववर्ष धरातले ॥

आनर्तविषये कृत्स्ने यावद्द्वादशवत्सराः ॥ ६ ॥

ततः स कष्टमापन्नो लोहजंघो द्विजोत्तमाः ॥

न प्राप्नोति क्वचिद्भिक्षां न च किंचित्प्रतिग्रहम् ॥ ७ ॥

ततस्तौ पितरौ द्वौ तु दृष्ट्वा क्षुत्परिपीडितौ ॥

भार्यां च चिंतयामास दुःखेन महतान्वितः ॥ ८ ॥

किं करोमि क्व गच्छामि कथं स्याद्दर्शनं मम ॥

एताभ्यामपि वृद्धाभ्यां पत्न्याश्चैव विशेषतः ॥ ९ ॥

ततः स दुःखसंयुक्तः फलार्थं प्रययौ वने ॥

न च किंचिदवाप्नोति सर्वे शुष्का महीरुहाः ॥ ६.१२४.१० ॥

अथापश्यत्स वृद्धां स्त्रीं स्तोकसस्यसमन्विताम् ॥

गच्छमानां तथा तेन श्रमेण महतान्विताम् ॥॥॥

ततस्तत्सस्यमादाय वस्त्राणि च स निर्दयः॥

जगाम स्वगृहं हृष्टः पितृभ्यां च न्यवेदयत्॥१२॥

स एवं लब्धलक्षोऽपि दस्युकर्मणि नित्यशः।
कृत्वा चौर्यं पुपोषाथ निजमेव कुटुम्बकम्॥१३।
सुभिक्षे चापि संप्राप्ते नान्यत्कर्म करोति सः।
ब्राह्मीं वृत्तिं परित्यक्त्वा चौर्यकर्म समाचरत्॥१४॥
कस्यचित्त्वथ कालस्य तीर्थयात्राप्रसंगतः।
तत्र सप्तर्षयः प्राप्ता मरीचिप्रमुखा द्विजाः॥१५॥
ततस्तान्विजने दृष्ट्वा द्रोहकोपसमन्वितः।
यष्टिमुद्यम्य वेगेन तिष्ठध्वमिति चाब्रवीत्॥१६॥
त्रिशिखां भृकुटीं कृत्वा सत्वरं समुपाद्रवत्।
भर्त्सयमानः स परुषैर्वाक्यैस्तांस्ताडयन्निव॥१७॥
ततस्ते मुनयो दृष्ट्वा यमदूतोपमं च तम्।
यज्ञोपवीतसंयुक्तं प्रोचुस्ते कृपयान्विताः॥१८॥
ऋषय ऊचुः॥
अहो त्वं ब्राह्मणोऽसीति तत्कस्मादतिगर्हितम्।
करोषि कर्म चैतद्धि म्लेच्छकृत्यं तु बालिश॥१९॥
वयं च मुनयः शांतास्त्यक्ताऽशेषपरिग्रहाः।
नास्माकमपि पार्श्वस्थं किंचिद्गृह्णाति यद्भवनान्।६.१२४.२०॥
लोहजंघ उवाच।
एतानि शुभ्रचीराणि वल्कलान्यजिनानि च।
उपानहसमेतानि शीघ्रं यच्छंतु मे द्विजाः॥२१॥।
नो चेद्धत्वाप्रहारेण यष्ट्या वज्रोपमेन च ॥
प्रापयिष्यस्यसंदिग्धं धर्मराजनिवेशनम् ॥ २२ ॥
॥ ऋषय ऊचुः ॥
सर्वं दास्यामहे तुभ्यं वयं तावन्मलिम्लुच ॥
किंवदन्तीं वदास्माकं यां पृच्छामः कुतूहलात् ॥ २३ ॥
किमर्थं कुरुषे चौर्यं त्वं विप्रोऽसि सुनिर्घृणः ॥
किं जितो व्यसनै रौद्रैः किं वा व्याधद्विजो भवान् ॥२४॥
॥ लोहजंघ उवाच ॥ ॥

व्यसनार्थं न मे कृत्यमेतच्चौर्यसमुद्भवम् ॥
कुटुम्बार्थं विजानीथ धर्ममेतन्न संशयः ॥ २५ ॥
पितरौ मम वार्द्धक्ये वर्तमानौ व्यवस्थितौ ॥
तथा पतिव्रता पत्नी गृहधर्मविचक्षणा ॥ २६ ॥
उपार्ज्जयामि यत्किञ्चिदहमेतेन कर्मणा ॥
तत्सर्वं तत्कृते नूनं सत्येनात्मानमालभे ॥२७॥
तस्मान्मुंचथ प्राक्सर्वं विभवं किं वृथोक्तिभिः ॥
कृताभिः स्फुरते हस्तो ममायं हन्तुमेव हि ॥२८॥ ॥
ऋषय ऊचुः ॥ ॥
यद्येवं चौर तद्गत्वा त्वं पृच्छस्व कुटुम्बकम् ॥
ममपापांशभागी त्वं किं भविष्यसि किं न वा॥२९॥
यदि ते संविभागेन पापस्यांशोऽपि गच्छति ॥
तत्कुरुष्वाथवा पाप दुर्वहं ते भविष्यति ॥ ६.१२४.३० ॥
सकलं रौरवे रौद्रे पतितस्य सुदुर्मते ॥
वयं त्वा ब्राह्मणं मत्वा ब्रूम एतदसंशयम् ॥३१॥।
कृपाविष्टाः सहास्माभिः सञ्जातेऽपि सुदर्शने ॥
मुनीनां यतचित्तानां दर्शनाद्धि शुभं भवेत् ॥३२॥
एकः पापानि कुरुते फलं भुंक्ते महाजनः ॥
भोक्तारो विप्रमुच्यंते कर्ता दोषेण लिप्यते ॥ ३३ ॥
॥ सूत उवाच ॥ ॥
स तेषां तद्वचः श्रुत्वा चौरः किंचिद्भयान्वितः ॥
सत्यमेतन्न संदेहो यदेतैर्व्याहृतं वचः ॥ ३४ ॥
तस्मात्पृच्छामि तद्गत्वा निजमेव कुटुम्बकम् ॥
यदि स्यात्संविभागो मे पापांशस्य करोमि वै ॥ ३९ ॥
एतत्कर्म न गृह्णंति यदि वा संत्यजाम्यहम् ॥
महद्भयं समुत्पन्नं मम चेतसि सांप्रतम् ॥३६॥
यदि यूयं न चान्यत्र प्रयास्यथ मुनीश्वराः ॥
पलायनपरा भूत्वा तद्गत्वा निजमंदिरम् ॥३७॥

पृच्छामि पोष्यवर्गं च युष्मद्वाक्यं विशेषतः ॥

यदि तत्पातकांशं मे ग्रहीष्यति कुटुम्बकम् ॥

तद्युष्माकं ग्रहीष्यामि यत्किंचित्पार्श्वसंस्थितम् ॥ ३८ ॥

अथवा प्रतिषेधं मे पापस्यास्य करिष्यति ॥

तत्त्यजिष्याम्यसंदिग्धं सर्वान्वः सपरिच्छदान् ॥ ३९ ॥

ततस्ते शपथान्कृत्वा तस्य प्रत्ययकारणात् ॥

तस्योपरि दयां कृत्वा मुमुचुस्तं गृहं प्रति ॥ ६.१२४.४० ॥

सोऽपि गत्वाऽथ पप्रच्छ प्रगत्वा पितरं निजम् ॥

शृणु तात वचोऽस्माकं ततः प्रत्युत्तरं कुरु ॥ ४१ ॥

यत्कृत्वाहमकृत्यानि चौर्यादीनि सहस्रशः ॥

पुष्टिं करोमि ते नित्यस् तद्भागस्तेऽस्ति वा न वा ॥ ४२ ॥

पापस्य मम प्रब्रूहि पृच्छतोऽत्र यथातथम् ॥

अत्र मे संशयो जातस्तस्माच्छीघ्रं प्रकीर्तय ॥ ४३ ॥

॥ पितोवाच ॥

बाल्ये पुत्र मया नीतस्त्वं पुष्टिं व्याकुलात्मना ॥

शुभाऽशुभानि कृत्यानि कृत्वा स्निग्धेन चेतसा ॥ ४४ ॥

एतदर्थं पुनर्येन वार्धक्ये समुपस्थिते ।।।

गां पालयसि भूयोऽपि कृत्वा कर्म शुभाऽशुभम् ॥ ४५ ॥

न तस्य विद्यते भागस्तव स्वल्पोऽपि पुत्रक ॥

शुभस्य वाऽथ पापस्य सांप्रतं च तथा मम ॥ ४६ ॥

आत्मनैव कृतं कर्म स्वयमेवोपभुज्यते ॥

शुभं वा यदि वा पापं भोक्तारोन्यजनाः स्मृताः ॥ ४७ ॥

साधुत्वेनाथ चौर्येण कृष्या वा वाणिजेन वा ॥

त्वमुपानयसे भोज्यं न मे चिन्ता प्रजायते ॥ ४८ ॥

तस्मान्नैतद्धृदि स्थाप्यं कर्मनिंद्यं करिष्यसि ॥

यत्तस्यांशं प्रभोक्ता त्वं वयं सर्वे प्रभुंजकाः॥ ४९ ॥

॥ सूत उवाच ॥ ॥

स एतद्वचनं श्रुत्वा व्याकुलेनान्तरात्मना ॥

पप्रच्छ मातरं गत्वा तमेवार्थं प्रयत्नतः ॥६.१२४.५०॥।

ततस्तयापि तच्चोक्तं यत्पित्रा तस्य जल्पितम् ॥

असामान्यं शुभे पापे कृत्ये तस्य द्विजोत्तमाः ॥५१॥।

ततः पप्रच्छ तां भार्यां गत्वा दुःखसमन्वितः ॥

साऽप्युवाच ततस्तादृक्पापं गुरुजनोद्भवम् ॥ ५२ ॥

ततः स शोकसंतप्तः पश्चात्तापेन संयुतः ॥

गर्हयन्नेव चात्मानं ययौ ते यत्र तापसाः ॥५३॥

ततः प्रणम्य तान्सर्वान्कृतांजलिपुटः स्थितः।

गम्यतां गम्यतां विप्राः क्षम्यतां क्षम्यतां मम ॥ ५४ ॥

यन्मया मौर्ख्यमास्थाय युष्मन्निर्भर्त्सना कृता ॥

सुपाप्मना विमूढेन तस्मात्कार्या क्षमाद्य मे ॥ ५५ ॥

युष्मदीयं वचः कृत्स्नं मद्गुरुभ्यां प्रजल्पितम् ॥

भार्यया च द्विजश्रेष्ठास्तेन मे दुःखमागतम्॥५६॥

तस्मात्कुर्वंतु मे सर्वे प्रसादं मुनिसत्तमाः ॥

उपदेशप्रदानेन येन पापं क्षपाम्यहम् ॥५७॥

मया कर्म कृतं निंद्यं सदैव द्विजसत्तमाः॥

स्त्रियोऽपि च द्विजेंद्राश्च तापसाश्च विशेषतः ॥५८॥

ये ये दीनतरा लोका न समर्थाः प्रयोधितुम् ॥

ते मया मुषिताः सर्वे न समर्थाः कदाचन ॥५९॥

कुटुम्बार्थं विमूढेन साधुसंगविवर्जिना ॥

यथैव पठता शास्त्रं तन्मेऽद्य पतितं हृदि ॥६.१२४.६०॥।

यदि न स्याद्भवद्भिर्मे दर्शनं चाद्य सत्तमाः ॥

तदन्यान्यपि पापानि कर्ताहं स्यां न संशयः ॥ ६१ ॥

तेषां मध्यगतश्चासीत्पुलहो नाम सन्मुनिः ॥

हास्यशीलः स तं प्राह विप्लवार्थं द्विजोत्तमम् ॥ ॥ ६२ ॥

अहं ते कीर्तयिष्यामि मन्त्रमेकं सुशोभनम् ॥

यं ध्यायञ्जप्यमानस्त्वं सिद्धिं यास्यसि शाश्वतीम् ॥ ६३ ॥

जाटघोटेतिमन्त्रोऽयं सर्वसिद्धिप्रदायकः ॥ (टि. जाटघोटा = जातिगोत्र?)

तमेनं जप विप्र त्वं दिवारात्रमतंद्रितः ॥ ६४ ॥

ततो यास्यसि संसिद्धिं दुर्लभां त्रिदशैरपि ॥ ६५ ॥

एवमुक्त्वाथ ते विप्रास्तीर्थयात्रां ततो ययुः ॥

सोऽपि तत्रैव चौरस्तु स्थितो जपपरायणः ॥ ६६ ॥

अनन्यमनसा तेन प्रारब्धः स तदा जपः ॥

यथाऽभवत्समाधिस्थो येनावस्थां परां गतः ॥ ६७ ॥

तस्यैवं स्मरमाणस्य तं मन्त्रं ब्राह्मणस्य च ॥

निश्चलत्वं गतः कायः कार्ये च निश्चलः स्थितः ॥ ६८ ॥

ततः कालेन महता वल्मीकेन समावृतः ॥

समंताद्ब्राह्मणश्रेष्ठा ध्यानस्थस्य महात्मनः ॥ ६९ ॥

तौ मातापितरौ तस्य सा च भार्या मनस्विनी ॥

याता मृत्युवशं सर्वे तमन्वेष्य प्रयत्नतः ॥ ६.१२४.७० ॥

न विज्ञातश्च तत्रस्थः संन्यस्तः स महाव्रतः ॥

संसारभावनिर्मुक्तस्तस्मान्मुनिसमागमात् । ७१ ॥

कस्यचित्त्वथ कालस्य तेन मार्गेण ते पुनः ॥

तीर्थयात्राप्रसंगेन मुनयः समुपस्थिताः ॥ ७२ ॥

प्रोचुश्चैतद्द्विजाः स्थानं यत्र चौरेण संगमः ॥

आसीद्वस्तेन रौद्रेण ब्राह्मणच्छद्मधारिणा ॥ ७३ ॥

ततो वल्मीकमध्यस्थं शुश्रुवुर्निस्वनं च ते ॥

जाटघोटेतिमंत्रस्य तस्यैव च महात्मनः ॥ ७४ ॥

अथ भूम्यां प्रहारास्ते सस्वनुः सर्वतोदिशम् ॥

ते वल्मीकं ततो दृष्ट्वा तं चौरं तस्य मध्यगम् ॥ ७५ ॥

जपमानं तु तं मन्त्रं पुलहेन निवेदितः ॥

हास्यरूपेण यस्तस्य सिद्धिं च द्विजसत्तमाः ॥ ७६ ॥

यद्वा सत्यमिदं प्रोक्तमाचार्यैः शास्त्रदृष्टिभिः ॥

स्तोकं सिद्धिकृते तस्य यस्मात्सिद्धिरुपस्थिता ॥ ७७ ॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ॥

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ॥ ७८ ॥

अथ तं वीक्ष्य संसिद्धं कुमन्त्रेणापि तस्करम् ॥

ते विप्रा विस्मयाविष्टाः कृपाविष्टा विशेषतः ॥ ७९ ॥

समाध्यर्हैस्ततो द्रव्यैस्तैलैस्तद्वेषजैरपि ॥ ६.१२४.८० ॥

ममर्दुस्तस्य तद्गात्रं समाधिस्थं चिरं द्विजाः ॥

ततः स चेतनां लब्धा आलोक्य च मुहुर्मुहुः ॥

प्रोवाच विस्मयाविष्टस्तान्मुनीन्प्रकृतानिति ॥ ८१ ॥

॥ लोहजंघ उवाच ॥ ॥

किमर्थं न गता यूयं मया मुक्ता द्विजोत्तमाः ॥

नाहं किंचिद्ग्रहीष्यामि युष्मदीयं कथंचन ॥

कुटुंबार्थं यतस्तस्माद्व्रजध्वं स्वेच्छयाऽधुना ॥ ८२ ॥

॥ मुनय ऊचुः॥ ॥

चिरकालाद्वयं प्राप्ताः पुनर्भ्रांत्वाऽत्र कानने ॥

समाधिस्थेन न ज्ञातः कालोऽतीतस्त्वया बहु ॥ ८३ ॥

तौ मातापितरौ वृद्धौ त्वया मुक्तौ क्षयं गतौ ।

त्वं च संसिद्धिमापन्नः परामस्मत्प्रसादतः ॥ ॥८४॥

वल्मीकांतः स्थितो यस्मात्संसिद्धिं परमां गतः ॥

वल्मीकिर्नाम विख्यातस्तस्माल्लोके भविष्यसि॥ ८५ ॥

अत्रस्थेन यतो मुष्टास्त्वया लोकाः पुरा द्विज ॥

मुखाराख्यं ततस्तीर्थमेतत्ख्यातिं गमिष्यति॥८६॥

येऽत्र स्नानं करिष्यंति श्रावण्यां श्रद्धया द्विजाः॥

क्षालयिष्यंति ते पापं चौर्य कर्मसमुद्भवम् ॥८७॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वाथ ते विप्रास्तमामंत्र्य मुनिं ततः ॥

प्रणतास्तेन संजग्मुर्वांछिताशां ततः परम् ॥ ८८ ॥

तपःस्थः सोऽपि तत्रैव वाल्मीकिरिति यः स्मृतः । ८९ ॥

मुनीनां प्रवरः श्रेष्ठः संजातश्च ततः परम् ॥

अद्यापि तिष्ठते मूर्तः स तत्रस्थो मुनीश्वरः ॥ ६.१२४.९० ॥

यस्तं प्रपूजयेद्भक्त्या स कविर्जायते भुवम्॥

अष्टम्यां च विशेषेण सम्यक्छ्रद्धासमन्वितः ॥ ९१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मुखारतीर्थोत्पत्तिवर्णनंनाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥ १२४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२५

https://sa.wikisource.org/s/fgm
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

। सूत उवाच ॥ ॥

ततः कर्णोत्पलातीर्थं विख्यातं चास्ति शोभनम् ॥

यत्र स्नातो नरः सम्यङ्न वियोगमवाप्नुयात् ॥ १ ॥

कथंचिदपि चेष्टेन धनेनालिजनेन च ॥

पराक्रमेण धर्मेण कलत्रेण विशेषतः ॥ २ ॥

सत्यसंध इति ख्यातः पुरासीत्पृथिवीपतिः ॥

इक्ष्वाकुकुलसंभूतः सर्वरूपगुणैर्युतः ॥ ३ ॥

तस्य कर्णोत्पलानाम जाता कन्या सुशोभना ॥

बहुपुत्रस्य चैका सा सर्वलक्षणलक्षिता ॥ ४ ॥

अथ तस्याः पिता नाम चक्रे द्वादशमे दिने ॥

संमंत्र्य ब्राह्मणैः सार्धं भृत्यामात्यैर्मुहुर्मुहुः ॥ ५ ॥

यस्मात्कर्णोत्पला चेयं जाता मम कुमारिका ॥

तस्मात्कर्णोत्पलानाम जाता कन्या सुशोभना ॥ ६ ॥

बहु पुत्रस्य चैका सा सर्वलक्षणलक्षिता ॥

तस्मात्कर्णोत्पलानाम जायतां द्विजसत्तमाः ॥ ७ ॥

कृतनामाऽथ सा बाला वृद्धिं याति दिनेदिने ॥

आह्लादकारिणी नित्यं कला चांद्रमसी यथा ॥ ८ ॥

अथ सा क्रमशः प्राप्ता यौवनं बंधुलालिता ॥

हस्ताद्धस्तं प्रगच्छंती सर्वेषां द्विजसत्तमाः॥ ॥ ९ ॥

अथ तां यौवनोपेतां दृष्ट्वा स पृथिवीपतिः ।

चिंतयामास चित्तेन कस्येमां प्रददाम्यहम् ॥ ६.१२५.१० ॥

न तस्याः सदृशः कश्चिद्वरोऽत्र धरणीतले ॥

न स्वर्गे न च पाताले किं कृत्यं मेऽधुना भवेत् । ११ ॥

स एवं बहुधा ध्यात्वा तदर्थं पृथिवीपतिः ॥

निश्चयं प्राकरोच्चित्ते प्रष्टव्योऽत्र पितामहः ॥ १२

मयाद्य विषये चास्मिन्स देवः प्रेरयिष्यति ॥
तस्मै पुत्रीं प्रदास्यामि नान्यस्मै वै कथंचन ॥ १३ ॥
स एवं निश्चयं कृत्वा तामादाय ततः परम् ॥
ब्रह्मलोकं जगामाथ प्रष्टुं तस्याः कृते वरम् ॥ १४ ॥
अथ यावत्स संप्राप्तो ब्रह्मलोकं नरेश्वरः ॥
तावत्संध्या समुत्पन्ना ब्राह्मी ब्राह्मणसत्तमाः ॥ १५ ॥
एतस्मिन्नंतरे ब्रह्मा सायंतनक्रियोत्सुकः ॥
उपविष्टः समाधिस्थस्तत्कालं समपद्यत ॥ १६ ॥
सत्यसंधोऽपि तं दृष्ट्वा समाधिस्थं पितामहम् ॥
समाध्यंतं प्रतीक्षन्स उपविष्टः समीपतः ॥ १७ ॥
ततो विलोक्य चात्मानमात्मनि प्रपितामहः ॥
पद्मे प्रवर्तिते सम्यगष्टपत्रे हृदि स्थिते ॥ १८ ॥
कर्णिकामध्यगं दीप्तं बहुवर्णमतिस्थिरम् ॥
आनंदाश्रुपरिक्लिन्नवदनः पुलकांकितः ॥ १९ ॥
तत आचम्य प्रक्षाल्य चरणौ सर्वतोदिशम् ॥
अपश्यत्प्रणतः सर्वैर्ब्रह्मलोकनिवासिभिः ॥६.१२५.२० ॥
एतस्मिन्नंतरे राजा तामादाय शुभाननाम् ॥
नमस्कृत्य तया सार्धं ततः प्रोवाच सादरम् ॥ २१ ॥
अहं देव समायातो मर्त्यलोकात्तवांतिकम् ॥
सत्यसंधो महीपाल आनर्त भुवि विश्रुतः ॥ २२ ॥
इयं कर्णोत्पलानाम मम कन्या सुशोभना ॥
अस्या भुवि मया लब्धो न समोऽत्र पतिः क्वचित् ॥ २३ ॥
सदृशस्तेन चायातस्तव पार्श्वे सुरोत्तम ॥
तस्मान्मे ब्रूहि भर्त्तारमस्या येन ददाम्यहम् ॥ २४ ॥
॥ सूत उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा ततः प्रोवाच पद्मजः ॥
विहस्य सर्वदेवानां समाजे द्विजसत्तमाः । २५ ॥
यदि पृच्छसि मे भूप कन्याधर्मपतिं प्रति ॥

तन्नैषा कस्यचिद्देया सांप्रतं शृणु कारणम् ॥ २६ ॥
आत्मश्रेणिप्रसूताय वयोज्येष्ठाय भूपते ॥
कन्या देया च धर्माय यशसे कुलवृद्धये ॥ २७ ॥
सेयं तव सुता मर्त्ये ज्येष्ठभावं समाश्रिता ॥
सर्वेषां भूमिपालानां यत्तत्त्वं कारणं शृणु ॥ २८ ॥
ममांतिकं प्रपन्नस्य तव जातं युगत्रयम्॥
अतीता भूतले मर्त्या ये दृष्टाः प्राक्त्वया नृप ॥ २९ ॥
अन्या सृष्टिः समुत्पन्ना सांप्रतं धरणीतले ॥
न त्वं जानासि माहात्म्यान्मम लोकसमुद्भवात्॥ ६.१२५.३० ॥
न देवा मानुषीं भार्यां कुर्वन्ति च कथंचन ॥
श्लेष्ममूत्रपुरीषाणां संस्थानं या विगर्हिता ॥ ३१ ॥
तस्मादत्रैव तिष्ठ त्वं सुतया सहितो नृप ॥
हस्त्यश्वादि च यत्किंचित्तत्सर्वं ते क्षयं गतम् ॥ ३२ ॥
पुत्राः पौत्रास्तथा भृत्या ये चान्ये बांधवास्तव ॥
ते सर्वे निधनं प्राप्ता ये चान्ये भवतेक्षिताः ॥ ३३ ॥
स तथेति प्रतिज्ञाय स्थितः पार्थिवसत्तमः ॥
यावत्तावत्सुदुःखार्ता रुदतीसाऽब्रवीत्सुता ॥ ३४ ॥
नाहं तात वसिष्यामि स्थानेस्मिन्ब्रह्मसंभवे ॥
सखीजनपरित्यक्ता बंधुवर्गविनाकृता ॥ ३५ ॥
तस्माद्यास्यामि तत्रैव यत्र सा जननी मम ॥
ताश्च सख्यः कृतानंदा याभिः संक्रीडितं मया ॥ ३६ ॥
भर्त्रा विनाकृता नाहं नयिष्ये कालसंस्थितिम् ॥
तस्मात्तत्र द्रुतं गच्छ यत्र मे जननी स्थिता ॥ ३७ ॥
तस्यास्तद्वचनं श्रुत्वा स्नेहार्द्रेण स चेतसा ॥
तामादाय ततः प्राप्तः स्वं देशं पार्थिवोत्तमः ॥ ३८ ॥
यावत्पश्यति तावत्स स्थलस्थाने जलाशयान् ॥
जलस्थानेषु संजाताः स्थलसंघाः सुदुर्गमाः ॥ ३९ ॥
अन्ये लोकास्तथा धर्मास्तेषां मध्ये व्यवस्थिताः ॥

पृच्छन्नपि न जानाति संबंधं केनचित्सह ॥ ६.१२५.४० ॥

तथा मर्त्यानिलस्पृष्टन्ध्यतत्क्षणात्स महीपतिः ॥

सा च कन्या जराग्रस्ता संजाता श्वेतमूर्द्धजा ॥ ४१ ॥

वलिभिः पूर्णितांगी च शीर्णदंता कुचच्युता ॥

अमनोज्ञा विरूपांगी चिपिटाक्षी द्विजोत्तमाः ॥ ४२ ॥

सोपि राजा तथाभूतो वेपमानः पदेपदे ॥

पप्रच्छ भूपतिः कोत्र देशः कोयं पुरं च किम् ॥ ४३ ॥

अथ प्रोचुर्जनास्तस्य देश आनर्त इत्ययम् ॥

अयं भूपोत्र विख्यातः सुधर्मज्ञो बृहद्बलः ॥ ४४ ॥

एतत्प्राप्तिपुरंनाम एषा साभ्रमती नदी ॥

गर्तातीर्थमिदं पुण्यमेतस्याः परिकीर्तितम् ॥ ४९ ॥

यत्रैते मुनयः शांता दांताश्चाष्टगुणे रताः ॥

तपरता महाभागाः स्नानजप्ययपरायणाः ॥ ॥ ४६ ॥

ततः स तु समाकर्ण्य रुरोद कृतनिःस्वनः ॥

स्वसुतां तां समालिंग्य दुःखशोकसमन्वितः ॥ ४७ ॥

तौ च वृद्धतमौ दृष्ट्वा रुदतौ कृपयान्विताः ॥

सर्वे लोकाः समाजग्मुः पप्रच्छुश्च सुदुःखिताः ॥ ४८ ॥

किं त्वं वृद्ध सुदुःखार्तः प्ररोदिषि निरर्गलम् ॥

अनया वृद्धया सार्धं तस्मान्नः कारणं वद ॥ ४९ ॥

किं ते नष्टः प्रियः कश्चित्किं वा जातो धनक्षयः ॥

पराभूतोसि वा किं त्वं केनापि वद मा चिरम् ॥ ६.१२५.५० ॥

धर्मज्ञो दुष्टहंता च साधूनां पालने रतः ॥

राजा बृहद्बलोस्माकं येन ते कुरुते सुखम् ॥ ५१ ॥ ॥

सत्यसंध उवाच ॥ ॥

आनर्त्ताधिपतिश्चाहं सत्यसंध इति स्मृतः ॥

मम कर्णोत्पलानाम सुतेयं दयिता सदा ॥

सोहमस्याः प्रदानार्थं ब्रह्मलोकमितो गतः ॥

प्रष्टुं पितामहं देवं स्थितस्तत्र मुहूर्तवत् ॥ ९३ ॥

ततो भूयः समायातो यावत्पश्यामि भूतलम् ॥
तावद्विलोमतां प्राप्तं सर्वं नो वेद्मि किञ्चन ॥ ५४ ॥
तच्छ्रुत्वा ते जना गत्वा विस्मयोत्फुल्ललोचनाः ॥
बृहद्बलाय तत्सर्वमाचख्युस्तुष्टिसंयुताः ॥ ५५ ॥
सोऽपि तत्सर्वमाकर्ण्य ततः शीघ्रतरं गतः ॥
पद्भ्यामेव स्थितो यत्र सत्यसन्धो महीपतिः ॥ ५६ ॥
ततस्तं प्रणिपत्योच्चैः कृतांजलिपुटः स्थितः ॥
स्वागतं ते महीपाल भूयः सुस्वागतं च ते ॥ ५७ ॥
इदं राज्यं निजं भूयो मया भृत्येन सादरम् ॥
कुरुष्व स्वेच्छया देहि दानानि विविधानि च ॥ ५८ ॥
ततस्तं च समालिंग्य शिरस्याधाय चासकृत् ॥
उवाचाश्रुपरिक्लिन्नवदनो गद्गदाक्षरम् ॥ ५९ ॥
वत्स चीर्णं मया राज्यं दानं दत्तं पृथग्विधम् ॥
वाजिमेधमुखैर्यज्ञैरिष्टं संपूर्णदक्षिणैः ॥६.१२५.६॥।
तस्मात्तपश्चरिष्यामि सुतया चानया सह ॥
यथैषा लभते भूयस्तारुण्यं प्राक्तनं शुभम् ॥६॥।
॥ बृहद्बल उवाच ॥ ॥
पारंपर्येण राजेंद्र मयैतत्सकलं श्रुतम् ॥
सत्यसंधो महीपालः कन्यामादाय निर्गतः ॥ ६२ ॥
कुत्रचिन्न समायातः स भूयोऽपि पुरोत्तमे ॥
ततस्तत्सचिवै राज्यं प्रतिपाल्य चिरं नृप ॥
अभिषिक्तस्ततः पुत्रः सुहयोनाम विश्रुतः ॥ ६३ ॥
तस्याहं क्रमशो जातः सप्तसप्ततिमो विभो॥
पुरुषस्तव वंशस्य समुद्भूतो महापतिः ॥ ६४ ॥
तस्मादत्रैव कल्याणे स्थानेऽस्मिन्मेध्यतां गते ॥
गर्तातीर्थे कुरु विभो तपस्त्वमनया सह ॥ ६५ ॥
येन ते चरणौ नित्यं प्रणिपत्य त्रिसंधिजम्॥
श्रेयः प्राप्नोम्यसंदिग्धं प्रसादः क्रियतामिति ॥ ६६ ॥

॥ सत्यसंध उवाच ॥ ॥

हाटकेश्वरजे क्षेत्रे मयासीत्स्थापितं पुरा ॥

लिंगं वृषभनाथस्य तावदस्ति सुपुत्रक ॥ ६७ ॥

तत्तस्याराधनं नित्यं करिष्यामि दिवानिशम् ॥

तस्मात्प्रापय मां तत्र अनया सुतया सह ॥ ६८ ॥

एवं तयोः प्रवदतोरन्योन्यं भूमिपालयोः ॥

गर्त्तातीर्थात्समायाता ब्राह्मणाः कौतुकान्विताः ॥

श्रुत्वा भूमिपतिं प्राप्तं चिरंतनगुरुं शुभम्॥ ६९ ॥

ततः स पार्थिवस्तेषां दत्त्वार्घं प्रांजलिः स्थितः ॥

प्रोवाच स्वर्गवृत्तांतमास्यतामिति सादरम् ॥ ६.१२५.७० ॥

अथ ते ब्राह्मणाः सर्वे यथाज्येष्ठं यथासुखम्॥

उपविष्टा नरेंद्रस्य चतुर्दिक्षु सुविस्मिताः ॥

पप्रच्छुस्तं च भूपालं वार्तां ब्रह्मगृहोद्भवाम् ॥ ७१ ॥

यथा स तत्र निर्यात आगतश्च यथा पुरा ॥

आलापाः पद्मयोनेश्च यथा जातास्त्वनेकशः ॥ ७२ ॥

ततः कथांतमासाद्य सत्यसंधो महीपतिः ॥

किंचिदासाद्य तं प्राह समीपस्थं बृहद्बलम् ॥ ७३ ॥

मया इष्टं मखैश्चित्रैरनेकैर्भूरिदक्षिणैः ॥

दानानि च विचित्राणि येषां संख्या न विद्यते ॥ ७४ ॥

एकदाहं गतः पुत्र चमत्कारपुरोत्तमे ॥

दृष्टं मया पुरं तच्च समंताद्ब्राह्मणैर्वृतम् ॥ ७५॥

जपस्वाध्यायसंपन्नैरग्निहोत्रपरायणैः ॥

गृहस्थधर्मसंपन्नैर्लोकद्वयफलान्वितैः ॥ ७६ ॥

ततश्च चिंतितं चित्ते स वन्यो मम पूर्वजः ॥

येनैषोपार्जिता कीर्तिः शाश्वती क्षयवर्जिता ॥ ७७ ॥

तस्मादहमपि स्थाप्य पुरमीदृक्समुच्छ्रितम् ॥

ब्राह्मणेभ्यः प्रदास्यामि तत्कीर्तिपरिवृद्धये ॥ ७८ ॥

एवं चितयमानस्य मम नित्यं महीपते ॥

अवांतरेण संजातं ब्रह्मलोकप्रयाणकम् ॥ ७९ ॥

एतदेकं हि मे चित्ते पश्चात्तापकरं स्थितम्॥

नान्यत्किंचिन्महीपाल कृतकृत्यस्य सर्वतः ॥ ६.१२५.८० ॥

तस्मात्प्रार्थय विप्रेंद्रान्कांश्चिदेषां महात्मनाम् ॥

येन यच्छामि सुस्थानं कृत्वा तेभ्यस्तवाज्ञया ॥ ८१ ॥

ततः स प्रार्थयामास तदर्थं ब्राह्मणोत्तमान् ॥

ममोपरि दयां कृत्वा क्रियतां भोः परिग्रहः ॥ ८२ ॥

अस्य भूपस्य सद्भक्त्या यच्छतः पुरमुत्तमम् ॥

अहं वः पालयिष्यामि सर्वे मद्वंशजाश्च ते ॥ ॥ ८३ ॥

ततः कांश्चित्सुकृच्छ्रेण समानीय बृहद्बलः ॥

राज्ञे निवेदयामास एतेभ्यो दीयतामिति ॥ ८४ ॥

ततः प्रक्षाल्य सर्वेषां पादान्स पृथिवीपतिः ॥

सत्यसंधो ददौ तेभ्यः पुरार्थं भूमिमुत्तमाम् ॥ ८५ ॥

बृहद्बलस्य चादेशं ददौ संप्रस्थितः स्वयम् ॥

त्वयैतद्योग्यतां नेयं पुरं परपुरंजय ॥ ८६ ॥

गत्वा च स तया सार्धं तत्क्षेत्रं हाटकेश्वरम् ॥

तल्लिंगं प्राप्य संहृष्टश्चिरं तेपे तपस्ततः ॥ ८७ ॥

सापि कर्णोत्पला प्राप्य किंचित्पुण्यं जलाशयम् ॥

तपस्तेपे प्रतिष्ठाप्य गौरीं श्रद्धासमन्विता ॥ ८८ ॥

एतस्मिन्नंतरे राजा कालधर्ममुपागतः ॥

आनर्ताधिपतिर्युद्धे हतः पुत्रैः समन्वितः ॥ ८९ ॥

ततस्ते ब्राह्मणाः सर्वे गर्तातीर्थसमुद्भवाः ॥

सत्यसंधं समभ्येत्य प्रोचुर्दुःखसमन्विताः ॥ ६.१२५.९० ॥

परिग्रहः कृतोऽस्माभिः केवलं पृथिवीपते ॥

न च किंचित्फलं जातं वृत्तिजं नः पुरोद्भवम् ॥ ९१ ॥

तस्मात्कुरु स्थितिं त्वं च स्वधर्मपरिवृद्धये ॥?।

येन तद्वर्तनोपायो ह्यस्माकं नृपसत्तम ॥ ९२ ॥

राजा बृहद्बलो युद्धे कालधर्ममुपागतः ॥

यस्त्वया दर्शितोऽस्माकं वृत्यर्थं नृपसत्तम ॥ ९३ ॥

॥ सत्यसन्ध उवाच ॥ ॥

संन्यस्तोऽहं द्विजश्रेष्ठा वृत्तिं कर्तुं न च क्षमः ॥

यदि मे स्यात्पुमान्कश्चिदन्वयेऽपि न संशयः ॥ ९४ ॥

तस्माद्व्रजथ हर्म्यं स्वं प्रसादः क्रियतां मम ॥

अभाग्यैर्भवदीयैश्च हतो राजा बृहद्बलः ॥ ९५ ॥

एवमुक्ताश्च ते विप्रा मत्वा तथ्यं च तद्वचः ॥

स्वस्थानं त्वरिता जग्मुः सोऽपि चक्रे तपश्चिरम् ॥ ९६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सत्यसन्धनृपतिवृत्तान्तवर्णनंनाम पंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२६

https://sa.wikisource.org/s/fh1
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं तस्य तपस्थस्य पुत्र्या सह द्विजोत्तमाः ॥

आजग्मुर्ब्राह्मणाः सर्वे चमत्कारपुरोद्भवाः ॥ १ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

सन्देहेषु च सर्वेषु विवादेषु विशेषतः ॥

अभावात्पार्थिवेन्द्रस्य संजातश्च पराभवः ॥ २ ॥

ततश्च द्विजवर्यैः स संन्यस्तः पृथिवीपतिः ॥

पृष्टश्च प्रार्थितश्चैव निजराज्यस्य रक्षणे ॥

अन्यस्मिन्दिवसे प्राह कृतांजलिपुटः स्थितः ॥ ३ ॥

॥ राजोवाच ॥ ।

अनर्होऽहं द्विजश्रेष्ठाः संदेहं हर्तुमेव वः ॥

रक्षां कर्तुं विशेषेण त्यक्तशस्त्रोऽस्मि चाधुना ॥ ४ ॥.

॥ ब्राह्मणा ऊचुः ॥ ॥

सर्वे वयं महाराज भूपस्याप्यधिका यतः ॥

अहंकारेण दर्पेण निजं स्थानं समाश्रिताः ॥ ५ ॥

न कस्यचिन्महाराज कदापि च कथंचन ॥

वर्तनायाश्च सन्देहः स्थानकृत्येऽपि संस्थितः ॥ ६ ॥

असंख्याता कृता वृत्तिः पुराऽस्माकं महात्मना ॥

ततः सा वृद्धिमानीता तत्परैः पार्थिवोत्तमैः ॥ ७ ॥

त्वया चैव विशेषेण यावद्राजा बृहद्बलः ॥

आनर्तविषये राजा यो यः स्यात्स प्रयच्छति ॥ ८ ॥

सर्वां वृत्तिं गृहस्थानां यथायोग्यं प्रयत्नतः ॥

तवाग्रे किं वयं ब्रूमस्त्वं वेत्सि सकलं यतः ॥ ९ ॥

यथा वृत्तिः पुरा दत्ता यथा संरक्षिता त्वया ॥

तस्माच्चिन्तय राजेन्द्र स्थानं वर्तनसंभवम् ॥

उपायं येन मर्यादा वृत्तिस्तस्मात्सुखेन तु ॥ ६.१२६.१० ॥
ततः स सुचिरं ध्यात्वा गर्तातीर्थसमुद्भवान् ॥
आकार्योपमन्युवंशस्य संभवान्वेदपारगान् ॥ ११ ॥
प्रणिपातं प्रकृत्वाथ ततः प्रोवाच सादरम् ॥
मदीयस्थान संस्थानां ब्राह्मणानां विशेषतः ॥ १२ ॥
सर्वकृत्यानि कार्याणि भृत्यवद्विनयान्वितैः ॥
नित्यं रक्षा विधातव्या युष्मदीयं वचोखिलम् ॥ १३ ॥
एते संपालयिष्यन्ति मर्यादाकारमुत्तमम् ॥
सन्देहेषु च सर्वेषु विवादेषु विशेषतः ॥ १४ ॥
राजकार्येषु चान्येषु एते दास्यन्ति निर्णयम् ॥
युष्मदीयं वचः श्रुत्वा शुभं वा यदि वाऽशुभम् ॥ १५ ॥
एते पाल्याः प्रसादेन पुष्टिं नेयाश्च शक्तितः॥
ईर्ष्यां सर्वां परित्यज्य मदीयस्थानवृद्धये ॥ १६ ॥
बाढमित्येव तैः प्रोक्तः स राजा ब्राह्मणोत्तमान् ॥
चमत्कापुरोद्भूतान्भूयः प्रोवाच सादरम् ॥ १७ ॥
युष्माकं वर्तनार्थाय सर्वकृत्येषु सर्वदा ॥
एते विप्रा मया दत्ता गर्तातीर्थसमुद्भवाः ॥ १८ ॥
एतेषां वचनात्सर्वं युष्मदीयं प्रजायताम् ॥
प्रतिष्ठा जायते नूनं चातुश्चरणसूचिता ॥ १९ ॥
नान्यथा ब्राह्मणश्रेष्ठाः स्वल्पं वा यदि वा बहु ॥
प्रोक्तं लक्षमितैरन्यैर्युष्मदीयपुरोद्भवैः ॥ ६.१२६.२० ॥
॥ सूत उवाच ॥
ततस्ते ब्राह्मणा हृष्टास्तानादाय द्विजोत्तमान् ॥
तेषां मतेन चक्रुश्च सर्वकृत्यानि सर्वदा ॥ २१ ॥
ततस्तत्र पुरे जाता मर्यादा धर्मवर्द्धिनी ॥
सर्वकृत्येषु सर्वेषां तथा वृद्धिः पुरस्य च ॥ २२ ॥
तेऽपि तेषां प्रसादेन गर्त्तातीर्थभवा द्विजाः ॥
परां विभूतिमास्थाय मोदन्ते सुखसंयुताः ॥ २३ ॥

कस्यचित्त्वथ कालस्य स राजा तत्पुरोत्तमम् ॥
समभ्येत्य द्विजान्सर्वांस्ततः प्रोवाच सादरम् ॥२४॥
युष्मदीयप्रसादेन क्षेत्रेऽत्र सुमहत्तपः ॥
कृतं स्वर्गं प्रयास्यामि सांप्रतं तु द्विजोत्तमाः ॥ २५ ॥
नास्माकमन्वये कश्चित्सांप्रतं वर्तते नृपः ॥
तस्याहं लिंगमेतद्वै दर्शयामि द्विजोत्तमाः ॥२६॥
पूजार्थं चापि वृत्त्यर्थं भोगार्थं च विशेषतः ॥
तस्माद्युष्माभिरेवास्य पूजा कार्या प्रयत्नतः ॥
रथयात्रा विशेषेण दयां कृत्वा ममोपरि ॥ २७ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
सप्त विंशतिलिंगानि यथेष्टानि महीतले ॥
चमत्कारसुतानां च पूज्यंते सर्वदैव तु ॥ २८ ॥
अष्टाविंशतिमं तद्वदेतल्लिंगं तवोद्भवम् ॥
सर्वदा पूजयिष्यामो निश्चिन्तो भव पार्थिव ॥ २९ ॥
अस्य यात्रां करिष्यामः कार्तिके मासि सर्वदा ॥
बलिपूजोपहारांश्च गीतवाद्यानि शक्तितः ॥ ६.१२६.३० ॥
एवमुक्तः स तैर्हृष्टो गत्वात्मीयं तदाश्रमम् ॥
स्नापयित्वाथ तल्लिंगं पूजां चक्रे प्रभक्तितः ॥ ३१ ॥
॥ सूत उवाच ॥ ॥
एवं समर्पितं लिंगं तेन तद्धरसंभवम् ॥
सर्वेषां ब्राह्मणेंद्राणां वंशोच्छेदे स्थिते द्विजाः ॥ ३२ ॥
सकलं कार्तिकं मर्त्यो यस्तच्छ्रद्धासमन्वितः ॥
स्नापयेत्पूजयेच्चापि स नूनं मुक्तिमाप्नुयात् ॥ ३३ ॥
सोमस्य दिवसे प्राप्ते वर्षं यावत्कृतक्षणः ॥
तस्य पूजां करोत्येवं स्नापयित्वा विधानतः ॥
सोऽपि मुक्तिं व्रजेन्मर्त्य एतत्तातान्मया श्रुतम् ॥ ३४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सत्यसंधेश्वरमाहात्म्यवर्णनंनाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२७

https://sa.wikisource.org/s/fh4

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

या सा कर्णोत्पलानाम त्वयास्माकं प्रकीर्तिता ॥

किञ्चिज्जलाश्रयं प्राप्य तपस्तपति संस्थिता ॥

तस्याः सर्वं समाचक्ष्व यथा तपसि सा स्थिता ॥ १ ॥

॥ सूत उवाच ॥ ॥

गौरीपादकृतस्थाना श्रद्धया परया युता ॥

तावत्तुष्टिं गता देवी गिरिजा शंकरप्रिया ॥ २ ॥

ततः प्रोवाच ते पुत्रि तुष्टाहं वांछितं वद ॥

येन यच्छाम्यसंदिग्धं यद्यपि स्यात्सुदुर्लभम् ॥ ३ ॥

॥ कर्णोत्पलोवाच ॥ ॥

मम पत्युः कृते देवि मम तातः सुदुःखितः ॥

राज्याद्भ्रष्टः सुखाच्चापि कुटुंबेन विवर्जितः ॥ ४ ।

ततश्चैव तपस्तेपे वैराग्यं परमं गतः ॥

अहं वार्द्धक्यमापन्ना कौमार्येऽपि च संस्थिता ॥ ५ ॥

तस्माद्भवतु मे भर्त्ता कश्चिद्रूपोत्कटः स्मृतः ॥

सर्वेषां देवमर्त्यानां त्वत्प्रसादात्सुरेश्वरि ॥६॥

तथा स्यात्परमं रूपं तारुण्यं त्वत्प्रसादतः ॥

यथास्य जायते सौख्यं तापसस्यापि मे पितुः ॥ ७ ॥

॥ देव्युवाच ॥ ॥

माघमासतृतीयायां शनैश्चरदिने शुभे ॥

नक्षत्रे वसुदैवत्ये रूपं ध्यात्वाथ यौवनम् ॥ ८ ॥

त्वया स्नानं प्रकर्तव्यं सुपुण्येऽत्र जलाशये ॥

ततो दिव्य वपुर्भूत्वा यौवनेन समन्विता।

भविष्यसि न संदेहः सत्यमेतन्मयोदितम् ॥ ९ ॥

अन्यापि या महाभागे नारी स्नानं करिष्यति॥

तस्मिन्नहनि साप्येवं रूपयुक्ता भविष्यति ॥ ६.१२७.१०. ॥

॥सूत उवाच॥ ॥

एवमुक्त्वाथ सा देवी गता चादर्शनं ततः ॥

सापि चान्वेषयामास तृतीयां शनिना सह ॥ ११ ॥

वसुदेवात्मकेनैव नक्षत्रेण प्रयत्नतः ॥

ध्यायमाना च तां देवीं सर्वकामप्रदायिनीम् ॥ १२ ॥

ततः कतिपयाहस्य जाता सा योगसंयुता ॥

तृतीया या यथोक्ता च तया देव्या पुरा द्विजाः ॥ १३ ॥

ततः सा रूपसौभाग्यं यौवनं वांछितं पतिम् ॥

ध्यायमाना जले तस्मिन्नर्द्धरात्रे विवेश च ॥ १४ ॥

ततो दिव्यवपुर्भूत्वा यौवनेन समन्विता ॥

निष्क्रांता सलिलात्तस्माज्जनविस्मयकारिणी ॥ १५ ॥

एतस्मिन्नंतरे प्राप्तो गौरीवाक्यप्रबोधितः ॥

तदर्थं भगवान्कामः पत्न्यर्थं प्रीतिसंयुतः ॥

अब्रवीच्च महाभागे कामोहं स्वयमागतः ॥ १६ ॥

पार्वत्यादेशिता भार्या तस्मान्मे भव मा चिरम् ॥ ॥ १७ ॥

यस्मात्प्रीत्या समायातस्तवांतिकमहं शुभे ॥

तस्मात्प्रीतिरिति ख्याता मम भार्या भविष्यसि ॥ १८ ॥

॥ कर्णोत्पलोवाच ॥ ॥

यद्येवं स्मर मत्तातं तं गत्वा प्रार्थय स्वयम् ॥

स्वच्छंदा स्याद्यतः कन्या न कथंचित्प्रवर्तिता ॥ १९ ॥

य एष दृश्यते रम्यः प्रासादो नाति दूरतः ॥

अस्यांते तिष्ठतेऽस्माकं तातस्तपसि संस्थितः ॥ ६.१२७.२० ॥

अत्राहं पूर्वतो गत्वा तस्य तिष्ठामि चांतिके ॥

भवानागत्य पश्चाच्च प्रार्थयिष्यति मां ततः ॥ २१ ॥

बाढमित्येव कामोक्ते गता सा तत्समीपतः ॥

प्रणिपत्य ततः प्राह दिष्ट्या तात मया पुनः ॥ २२ ॥

संप्राप्तं यौवनं कांतं समाराध्य हरप्रियाम् ॥

तस्मात्कुरु विवाहं मे हृत्स्थं सुखमवाप्नुहि ॥ २३ ॥

मदर्थे प्रेषितो भर्त्ता तया देव्याऽतिसुन्दरः ॥

पुष्प चापः स्वयं प्राप्तः सोऽपि तात तवांतिकम् ॥ २४ ॥

अथ तां स समालोक्य स्वां सुतां यौवनान्विताम् ॥

हर्षेण महता युक्तां कांतयुक्तां विशेषतः ॥

अब्रवीदद्य मे पुत्रि संजातं तपसः फलम् ॥ २५ ॥

जीवितस्य च कल्याणि यत्वं प्राप्ता नवं वयः ॥

भर्तारं च तथाभीष्टं देव्या दत्तं मनोभवम् ॥ २६ ॥

एतस्मिन्नंतरे कामस्तस्यांतिकमुपाद्रवत् ॥

अब्रवीद्देहि मे भूप स्वां कन्यां चारुहासिनीम् ॥ २७ ॥

अस्या अर्थेऽहमादिष्टः स्वयं गौर्या नृपोत्तम ॥

कामदेव इति ख्यातस्त्रैलोक्यं येन मोहितम् ॥ २८ ॥

ततस्तामर्पयामास तां कन्यां स महीपतिः ॥

कृत्वाग्निं साक्षिणं वाक्याद्ब्राह्मणानां द्विजोत्तमाः ॥ २९ ॥

सा चास्य चाभवत्प्रीतिस्थानं यस्मात्सुलोचना ॥

रतेरनंतरा तस्मात्प्रीतिनामाऽभवच्छुभा ॥ ६.१२७.३० ॥

एवं तया तपस्तप्तं तस्मात्तत्र जलाशये ॥

तन्नाम्ना ख्यातिमायातं समस्तेऽत्र महीतले ॥ ३१ ॥

सकलं माघमासं च या स्त्री स्नानं समाचरेत् ॥

पुमान्वा प्रातरुत्थाय स प्रयागफलं लभेत् ॥ ३२ ॥

रूपवाञ्जायते दक्षः सदा जन्मनि जन्मनि ॥

न वियोगमवाप्नोति कदात्रिद्बांधवैः सह ॥ ३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कर्णोत्पलातीर्थमाहात्म्यवर्णनं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२८



॥ सूत उवाच ॥ ॥

सत्यसन्धोपि हृष्टात्मा सतां दृष्ट्वा सुखान्विताम्॥

अभीष्टपतिना युक्तां कृतकृत्यो बभूव ह ॥ १ ॥

ततस्तस्यैव लिंगस्य दक्षिणां मूर्तिमाश्रितः ॥

दृढं पद्मासनं कृत्वा सम्यग्ध्यानपरायणः ॥ २ ॥

आत्मानमात्मनैवाथ ब्रह्मद्वारेण संस्थितः ॥

ततो निःसारयामास पुलकेन समन्वितः ॥ ३ ॥

अथ ते ब्राह्मणास्तस्य चमत्कारपुरोद्भवाः ॥

देवता दर्शनार्थाय प्राप्ता दृष्ट्वा कलेवरम् ॥ ४ ॥

अप्रियं तेजसा हीनं मृतमस्पृश्यतां गतम् ॥

लिंगस्य नातिदूरस्थं दाह्यार्थं यत्नमास्थिताः ॥ ५ ॥

यावद्गुर्वीं चितां कृत्वा तमन्वेष्टुं समुद्यताः ॥

तावन्नष्टं शवं तच्च ज्ञायते नैव कुत्रचित् ॥ ६ ॥

ततश्च विस्मयाविष्टास्तं प्रशंसासमन्वितैः ॥

वचनैर्बहुशो भूयो विकथ्य च मुहुर्मुहुः ॥ ७ ॥

ततस्तस्योत्थलिंगस्य सर्वं पूजादिकं च यत् ॥

सर्वे निरूपयामासुः सप्तविंशतिमध्यतः ॥ ८ ॥

लिंगानां तद्भवेन्नित्यं सत्यसंधस्य भूपतेः ॥

कामदं भक्तजंतूनां सर्वपातकनाशनम् ॥ ९ ॥

॥ ऋषय ऊचुः ॥ ॥

चमत्कारनरेंद्रस्य वंशे क्षीणे महामते ॥

आनर्त्ताधिपतिः कोऽन्यस्तत्र राजा बभूव ह ॥ ६.१२८.१० ॥

सूत उवाच ॥ ॥

बृहद्बले हते भूपे संग्रामे द्विजसत्तमाः ।

पुत्रबंधुसमायुक्ताः सर्व लोकाः समाययुः ॥ ११ ॥

यत्रस्थः स महीपालः सत्यसंधस्तपोन्वितः ॥
शोकोद्विग्नास्ततः प्राहुस्तं भूपं रहसि स्थितम् ॥ १२ ॥
क्षीणोऽयं तावको वंशो न कश्चिद्विद्यते यतः ॥
दायादोऽपि कथं पृथ्वी संप्रतीयं भविष्यति ॥ १३ ॥
अराजके नृपश्रेष्ठ मात्स्यो न्यायः प्रवर्तते ॥
राष्ट्रे चैव पुरे चैव ग्रामे चैव विशेषतः ॥ १४ ॥
परदाररता ये च ये च तस्करवृत्तयः ।
सर्वे राजभयाद्राजन्मर्यादां पालयंति वै ॥ १५ ॥
तस्मात्त्वं तप उत्सृज्य राज्यं पूर्वक्रमागतम् ॥
कुरु राज्यं तथा दारान्पुत्रार्थं प्राप्य मा चिरम् ॥ १६ ॥
॥ राजोवाच ॥ ॥
संन्यस्तोऽहं द्विजश्रेष्ठा न राज्यं कर्तुमुत्सहे ॥
न सुतानां न दाराणां संग्रहं च कथंचन ॥ १७ ॥
तत्पुत्रार्थं प्रवक्ष्यामि युष्माकं स्वामिनः कृते ॥
उपायं येन राजा स्यादानर्त्तो लोकपालकः ॥ १८ ।
जामदग्न्येन रामेण यदा क्षत्रं निपातितम् ॥
गर्भस्थमपि कात्स्न्र्येन कोपोपहतचेतसा ॥ १९ ॥
ततः क्षत्रियभार्याः प्रागृतुस्नानात्समाययुः ॥
ब्राह्मणान्पुत्रजन्मार्थं न कामार्थं कथंचन ॥ ६.१२८.२० ॥
ततः पुत्राः समुत्पन्नास्तेजोवीर्यसमन्विताः ॥
क्षेत्रजा भूमिपालानां संजाताश्च महीक्षितः ॥२१॥
तस्माद्बृहद्बलस्यैता भार्यास्तिष्ठंति या जनाः ॥
ब्राह्मणांस्ता उपागम्य ऋतुस्नाता यथोचितान् ॥ २२ ॥
लभिष्यंति च पुत्रांस्तास्तेभ्यः क्षत्रियपुंगवान् ॥
ये भूमिं पालयिष्यंति पालयिष्यंति च प्रजाः ॥ २३ ॥
तथाऽत्रास्ति शुभं कुण्डं वासिष्ठं पुत्रजन्मदम् ॥
यत्र स्नाता ऋतौ नारी सद्यो गर्भवती भवेत् ॥
अमोघरेताः कांता च स्नानादत्र प्रजायते ॥ २४ ॥

ये पूर्वं क्षत्रिया जाता ब्राह्मणैः क्षत्रिणीषु च ॥
ते सर्वे तत्प्रभावेन संजाता नात्र संशयः ॥ २५ ॥
ययायया द्विजो यश्च क्षत्रिण्याऽभूद्वृतः पुरा ॥
तया सह समागत्य स्नातं मन्त्रपुरस्कृतम् ॥ २६ ॥
सकृन्मैधुनसंसर्गात्ततस्तीर्थप्रभावतः ॥
सर्वासां यत्सुता जाता दुहिता न कथंचन ॥ २७ ॥
ये केचित्पुत्रदा मंत्राश्चातुश्चरणासंभवाः ।
ते सर्वेऽत्र वसिष्ठेन प्रयुक्ताः क्षत्त्रमिच्छता ॥ २८ ।
दंपत्योः स्नानमात्रेण जातेऽत्र स्यात्सुपुत्रकः॥
तस्मात्सुपुत्रदंनाम कुण्डमेतन्निगद्यते ॥ २९ ॥
तस्माद्भार्याः समस्तास्ता बृहद्बलसमुद्भवाः ॥
अत्र स्नानं प्रकुर्वंतु यथोक्तविधिना जनाः ॥ ६.१२८.३० ॥
नैव किंचिदसत्यं स्यान्न च निंदाकरं तथा ॥
श्रूयते च यतः श्लोकः पूर्वाचार्यैरुदाहृतः ॥ ३१ ॥
अद्भ्योऽग्निर्ब्रह्मतः क्षत्त्रमश्मनो लोहमुच्छ्रितम्॥
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२ ॥
तच्छ्रुत्वा जनाः सर्वे सचिवानां वचोखिलम् ॥
तदाचख्युर्द्रुतं गत्वा सत्यसंधस्य भूपतेः ॥ ३३ ॥
ततस्ताः सर्वशो दारा ब्राह्मणानतिसुन्दरान् ॥
ऋतुस्नाताः समाजग्मुर्नृपपत्न्यः सुहर्षिताः ॥ ३४ ॥
यत्र तत्पुत्रदं तीर्थं वसिष्ठेन विनिर्मितम् ॥
तत्र स्नात्वा सकृत्संगं समासाद्य द्विजोद्भवम् ॥ ३५ ॥
सर्वास्ताः पुत्रवत्यश्च संजाता द्विजसत्तमाः ॥
आसीत्तस्य नरेंद्रस्य शतं पंचभिरन्वितम् ॥ ३६ ॥
तासां समभवद्विप्राः शतं पंचाधिकं तथा ॥ ३७ ॥
प्रत्येकं वरपुत्राणां वंशवृद्धिकरं परम् ॥
आनंदजननं सम्यक्सर्वेषां राष्ट्रवासिनाम् ॥ ३८ ॥
तत्र श्रेष्ठोऽभवत्पुत्रो य आनर्तपतिर्भुवि ॥

अटोनाम सुविख्यातः सर्वशत्रुनिबर्हणः ॥ ३९ ॥
अटेश्वरइति ख्यातो येन देवोऽत्र निर्मितः ॥
सुभक्त्या येन दृष्टेन वंशोच्छित्तिर्न जायते ॥ ६.१२८.४० ॥
॥ ऋषय ऊचुः ॥ ॥
कस्मात्तस्य कृतं नाम एतच्चाऽट इति स्मृतम् ॥
अन्वयेन परित्यक्तं तस्मात्कीर्तय सूतज ॥४१॥
सचिवैर्ब्राह्मणैर्वापि तस्यैतन्नाम निर्मितम् ॥
मात्रा वा तत्समाचक्ष्व परं कौतूहलं हि नः ॥ ४२ ॥
॥ सूत उवाच ॥ ॥
न मात्रा तत्कृतं नाम न विप्रैः सचिवैर्नृप ॥
तत्कृतं देवदूतेन व्योमस्थेन द्विजोत्तमाः ॥ ४३ ॥
यथा तथा प्रवक्ष्यामि श्रोतव्यं सुसमाहितैः ॥
यया स भूपतिर्जातो दशार्णाधिपतेः सुता ॥ ४९ ॥
सा रूपयौवनोपेता रूपाढ्यं प्राप्य सद्द्विजम् ॥
प्रस्थिता स्नातुकामाथ पुत्रतीर्थे मृगेक्षणा ॥ ४५ ॥
सहिता तेन विप्रेण कंदर्पप्रतिमेन च ॥
अथ ताभ्यां महान्रामो मिथः संदर्शनात्स्थितः ॥ ४६ ॥
तादृङ्मात्रं सुकृच्छ्रेण प्राप्तं तीर्थं सुतप्रदम् ॥
ततः स्नात्वा जले तस्मिन्निष्क्रांतौ तौ सुकामुकौ ॥४७॥
व्रजमानौ च मार्गेऽपि कामधर्ममुपागतौ ॥
अत्यौत्सुक्यात्सुसंहृष्टौ लज्जां त्यक्त्वा सुदूरतः ॥ ४८ ॥
निंदमानस्य लोकस्य विच्छेदवचनैस्तदा ॥
वीर्योत्सर्गेऽथ संजाते यावदुत्तिष्ठते द्विजः ॥ ४९ ॥
तावदाकाशगा वाणी सहसा देवनिर्मिता ॥
अटताराजमार्गेण विप्रेणानेन वै यतः ॥ ६.१२८.५० ॥
उत्पादितस्तु पुत्रोऽयमौत्सुक्याद्ब्राह्मणेन तु ॥
अटाख्यो भूपतिस्तस्माल्लोके ख्यातो भविष्यति ॥ ५१ ॥
दीर्घायुर्बहुपुत्रश्च शत्रुंपक्षक्षयावहः ॥

एतस्मात्कारणाद्विप्रा अटाख्यः स बभूव ह ॥ ५२ ॥

स्ववंशोद्धरचंद्रोऽत्र वांछितार्थप्रदोऽर्थिनाम् ॥

तेनैतत्क्षेत्रमासाद्य स्थापितं लिंगमुत्तमम् ॥

स्वनाम्ना ब्राह्मणश्रेष्ठाः सर्वदेष्टप्रदं नृणाम् ॥ ५३ ॥

यस्तन्माघचतुर्दश्यां पूजयेच्छ्रद्धयान्वितः ॥

न तस्य जायते किंचिद्दुःखं संतानसंभवम् ॥ ५४ ॥

अपि वर्षशतानारी स्नात्वा कुण्डे सुतप्रदे ॥

अटेश्वरं ततः पश्येच्छिवभक्तिपरायणा ॥ ५५ ॥

सद्यः पुत्रमवाप्नोति वंशवृद्धिकरं परम् ॥ तत्प्रसादान्न संदेहः कार्तिकेय वचो यथा ॥ ५६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽटेश्वरोत्पत्तिमाहात्म्यवर्णनंनामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १२९



॥ सूत उवाच ॥

तथान्योऽपि च तत्रास्ति याज्ञवल्क्यसमुद्भवः ॥

आश्रमो लोक विख्यातो मूर्खाणामपि सिद्धिदः ॥ १ ॥

यत्र तप्त्वा तपस्तीव्रं याज्ञवल्क्येन धीमता ॥

संप्राप्ता निखिला वेदा गुरुणाऽपहृताश्च ये ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कोऽसौ गुरुरभूत्तस्य याज्ञवल्क्यस्य धीमतः ॥

पाठयित्वा पुनर्येन हृता वेदा महात्मना ॥ ३ ॥

किमर्थं च समाचक्ष्व सूतपुत्रात्र विस्तरात्॥

कौतुकं परमं जातं सर्वेषां नो द्विजन्मनाम् ॥ ४ ॥

॥ सूत उवाच ॥ ॥

आसीद्ब्राह्मणशार्दूलः शाकल्य इति विश्रुतः॥

भार्गवान्वयसंभूतो वेद वेदांगपारगः ॥ ५ ॥

बृहत्कल्पे पुरा विप्रा वर्धमाने पुरोत्तमे ॥

बहुशिष्यसमायुक्तो वेदाध्ययनतत्परः ॥ ६ ॥

स सदा प्रातरुत्थाय विद्यादानं प्रयच्छति ।

शिष्येभ्यश्चानुरूपेभ्यः प्रसादाद्द्विजसत्तमाः ॥ ७ ॥

चकार स तदा विप्राः पौरोहित्यं महीपतेः ॥

सूर्यवंशप्रसूतस्य सुप्रियस्य महात्मनः ॥ ॥ ८ ॥

स तस्य धर्मकृत्यानि सर्वाण्येव दिनेदिने ॥

कृत्वा स्वगृहमभ्येति पूजितस्तेन भूभुजा ॥ ९ ॥

एकं शिष्यं समारोप्य शांत्यर्थं तस्य भूपतेः ॥

कथयित्वा प्रमाणं च विधानं होमसंभवम् ॥ ६.१२९.१० ॥

शिष्योऽपि सकलं कृत्वा तत्कर्म सुसमाहितः ॥

आशीर्वादं प्रदत्त्वा च भूपतेर्गृहमेति च ॥ ११ ॥

एवं प्रकुर्वतस्तस्य शाकल्यस्य महात्मनः ॥

पौरोहित्यं गतः कालः कियन्मात्रो द्विजोत्तमाः ॥ १२ ।

तदा वैवाहिके काले शप्तो यः शंभुना स्वयम् ॥

सुनिंद्यां विकृतिं दृष्ट्वा तस्य वेद्यां गतस्य च ॥ १३ ॥

अथ तं योजयामास शांत्यर्थं नृपमंदिरे ॥

याज्ञवल्क्यं स शाकल्यः प्रतिपद्यागतं तदा ॥ १४ ॥

सोऽपि तारुण्यगर्वेण वेश्याकरजविक्षतः ॥

सर्वांगेषु सुनिर्लज्जः प्रकटांगो जगाम वै ॥ १५ ॥

ततश्च शांतिकं कृत्वा जपांते भूपतिं च तम् ॥

शांतोदकप्रदानाय हस्यमानो जनैर्ययौ ॥ १६ ॥

पार्थिवोऽपि च तं दृष्ट्वा तादृग्रूपं विटं द्विजम् ॥

नाशीर्जग्राह तेनोक्तां वाक्यमेतदुवाच ह ॥ १७ ।

उच्छिष्टोऽहं द्विजश्रेष्ठ शय्यारूढो व्यवस्थितः ।

अत्र शालोद्भवे स्तंभे तस्मादेतज्जलं क्षिप ॥ १८ ॥

सोऽपि सावज्ञमाज्ञाय तं भूपं कुपिताननः ॥

तं च स्तंभं समुद्दिश्य ध्यात्वा तद्ब्रह्म शाश्वतम् ॥ १९ ॥

द्यां त्वमालिख्य इत्येव प्रोक्त्वा मंत्रं च याजुषम्॥ (यां त्वमालिख्य- पाठभेदः)

प्राक्षिपच्छांतिकं तोयं तस्य मूर्धनि सत्वरम्॥ ६.१२९.२० ॥

ततः स पतिते तोये स्तंभः पल्लवशोभितः ॥

तत्क्षणादेव संजज्ञे फल पुष्पैर्विराजितः ॥ २१ ॥

तं दृष्ट्वा पार्थिवः सोऽथ विस्मयोत्फुल्ललोचनः ॥

पश्चात्तापं विधायाथ वाक्यमेतदुवाच ह ॥ २२ ॥

अभिषेकं द्विजश्रेष्ठ ममापि त्वं प्रयच्छ भोः ॥

अनेनैव तु मन्त्रेण शुचित्वं मे व्यवस्थितम् ॥ २३ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

ममाभिषेकदानस्य त्वमनर्होऽसि पार्थिव ॥

तस्माद्यास्याम्यहं सद्यो यत्रस्थः स गुरुर्मम ॥ २४ ॥

॥ राजोवाच ॥ ॥

तव दास्यामि वस्त्राणि वाहनानि वसूनि च ॥
तस्माद्यच्छाभिषेकं मे मन्त्रेणाऽनेन सांप्रतम् ॥ २५ ॥
॥ याज्ञवल्क्य उवाच ॥ ॥
न होमांतं विना मन्त्रः स्फुरते पार्थिवोत्तम ॥
अभिषेकविधौ प्रोक्तो यः पूर्वं पद्मयोनिना ॥
तस्मान्नाहं करिष्यामि तव यद्वै हृदि स्थितम्॥ २६ ॥
इत्युक्त्वा वचनं भूपं याज्ञवल्क्यः स वै द्विजः ॥
जगाम स्वगृहं तूर्णं निस्पृहत्वं समाश्रितः ॥ २७
अपरेऽह्नि समायातं शाकल्यमथ भूपतिः ॥
प्रोवाच प्रांजलिर्भूत्वा विनयावनतः स्थितः ॥ २८ ॥
यस्त्वया प्रेषितः कल्य शिष्यो ब्राह्मणसत्तमः ॥
शांत्यर्थं प्रेषणीयश्च भूयोऽप्येवं गृहे मम ॥ २९ ॥
बाढमित्येव स प्रोक्त्वा ततो गत्वा निजालयम् ॥
याज्ञवल्क्यं समाहूय ततः प्रोवाच सादरम् ॥ ६.१२९.३० ॥
अद्यापि त्वं नरेंद्रस्य शांत्यर्थं भवने व्रज ॥
विशेषात्पार्थिवेंद्रेण समाहूतोऽसि पुत्रक ॥ ३१ ॥ ॥
॥ याज्ञवल्क्य उवाच ॥ ॥
नाहं तात गमिष्यामि शांत्यर्थं तस्य मंदिरे ॥
अवलेपेन युक्तस्य शुद्ध्या विरहितस्य च ॥ ३२ ॥
मया तस्याभिषेकार्थं सलिलं चोद्यतं च यत् ॥
सलिलं तेन तत्काष्ठे समादिष्टं कुबुद्धिना ॥ ३३ ॥
ततो मयापि तत्रैव तत्क्षणात्सलिलं च यत् ॥
तस्मिन्काष्ठे परिक्षिप्तं नीतं वृद्धिं च तत्क्षणात् ॥ ३४ ॥
॥ शाकल्य उवाच ॥ ॥
अत एव विशेषेण समाहूतोऽसि पुत्रक ॥
तस्मात्तत्र द्रुतं गच्छ नावज्ञेया महीभुजः ॥ ३५ ॥
अपमानाद्भवेन्मानं पार्थिवानामसंशयम् ॥
यः करोति पुनस्तत्र मानं न स भवेत्प्रियः ॥ ३६ ॥

कोपप्रसाद वस्तूनि विचिन्वंतीह ये सदा ॥

आरोहंति शनैर्भृत्या धुन्वंतमपि पार्थिवम् ॥ ३७ ॥

समौ मानापमानौ च चित्तज्ञः कालवित्तथा ॥

सर्वंसहः क्षमी विज्ञः स भवेद्राजवल्लभः ॥ ३८ ॥

अपमानमनादृत्य तस्माद्गच्छ नृपालयम् ॥

ममाज्ञापि न लंघ्या त एष धर्मः सनातनः ॥ ३९ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

आज्ञाभंगो ध्रुवं भावी परिपाटीव्यतिक्रमात् ॥

करोषि यदि शिष्याणां ये त्वया तत्र योजिताः ॥ ६.१२९.४० ॥

तस्माद्यदि बलान्मां त्वं योजयिष्यसि तं प्रति ॥

त्वां त्यक्त्वाऽन्यत्र यास्यामि यतः प्रोक्तं महर्षिभिः ॥ ४१ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥

उत्पथे वर्तमानस्य परित्यागो विधीयते ॥ ४२ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा शाकल्यः क्रोधमूर्छितः ॥

ततः प्रोवाच तं भूयो भर्त्समानो मुहुर्मुहुः ॥ ४३ ॥

एकमप्यक्षरं यत्र गुरुः शिष्ये निवेदयेत् ॥

पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥ ४४ ॥

तस्माद्गच्छ द्रुतं दत्त्वा मदध्ययनमालयम् ॥

त्यक्त्वा विद्यां मया दत्तां नो चेच्छप्स्याम्यहं तव ॥ ४५ ॥

एवमुक्त्वाभिमंत्र्याथ नादबिंदुसमुद्भवैः ॥

मंत्रैराथर्वणैस्तोयं पानार्थं चार्पयत्ततः ॥ ४६ ॥

सोऽपिबत्तत्क्षणात्तोयं तत्पीत्वा व्याकुलेंद्रियः ॥

उद्गिरद्वांतिधर्मेण तत्त्वविद्याविमिश्रितम् ॥ ४७ ॥

ततः प्रोवाच तं भूयः शाकल्यं कुपिताननः ॥

एकमप्यक्षरं नास्ति तावकीयं ममोदरे ॥ ४८ ॥

तस्माच्छिष्योऽस्मि ते नाहं न च मे त्वं गुरुः स्थितः ॥

सांप्रतं स्वेच्छयाऽन्यत्र प्रयास्यामि करोषि किम् ॥ ४९ ॥

एवमुक्त्वाऽथ निर्गत्य तस्मात्स्थानाच्चिरंतनात् ॥

पप्रच्छ मानवान्भूयः सिद्धिक्षेत्राणि चासकृत् ॥ ६.१२९.५० ॥

ततस्तस्य समादिष्टं क्षेत्रमेतन्मनीषिभिः ॥

सिद्धिदं सर्वजंतूनां न वृथा स्यात्कथंचन ॥ ५१ ॥

आस्तां तावत्तपस्तप्त्वा व्रतं नियममेव वा ॥

हाटकेश्वरजे क्षेत्रे सिद्धिः संवसतोऽपि च ॥ ५२ ॥

येनयेन च भावेन तत्र क्षेत्रे वसेज्जनः ॥

तस्यानुरूपिणी सिद्धिः शुभा स्याद्यदि वाऽशुभा ॥ ५३ ॥

तच्छ्रुत्वा च द्रुतं प्राप्य क्षेत्रमेतद्द्विजोत्तमाः ॥

भानुमाराधयामास स्थापयित्वा ततः परम् ॥ ५४ ॥

नियतो नियताहारो ब्रह्मचर्यपरायणः ॥

गायत्रं न्यासमासाद्य निर्विकल्पेन चेतसा ॥ ५५ ॥

ततश्च भगवांस्तुष्टो वर्षांते तमुवाच सः ॥

दर्शने तस्य संस्थित्वा तेजः संयम्य दारुणम् ॥ ५६ ॥

याज्ञवल्क्य वरं ब्रूहि यत्ते मनसि रोचते ॥

सर्वमेव प्रदास्यामि नादेयं विद्यते त्वयि ॥ ५७ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

यदि तुष्टः सुरश्रेष्ठ वेदाध्ययनसंभवे ॥

गुरुर्भव ममाद्यैव ममैतद्वांछितं हृदि । ५८ ॥

॥ भास्कर उवाच ॥ ॥

अहं तव कृपाविष्टस्तेजः संहृत्य तत्परम् ॥

ततश्चात्र समायातस्तेन नो दह्यसे द्विज ॥ ५९ ॥

तस्मादत्रैव कुंडे च मंत्रान्सारस्वताञ्छुभान् ॥

वेदोक्तान्क्षेपयिष्यामि स्वयमेव द्विजोत्तम ॥ ॥ ६.१२९.६० ॥

तत्र स्नात्वा शुचिर्भूत्वा यत्किंचिद्वेदसंभवम् ॥

पठिष्यसि सकृत्तत्ते कंठस्थं संभविष्यति ॥ ६१ ॥

तत्त्वार्थं प्रकटं कृत्स्नं विदितं ते भविष्यति ॥

मत्प्रसादान्न संदेहः सत्यमेतन्मयोदितम् ॥ ६२ ॥

अद्यादि मानवः प्रातः स्नात्वा त्वत्र ह्रदे च यः ॥
सावित्रेण च सूक्तेन मां दृष्ट्वा प्रपठिष्यति ॥
तस्मै तत्स्यादसंदिग्धं यत्तवोक्तं मया द्विज ॥ ६३ ॥
॥ याज्ञवल्क्य उवाच ॥ ॥
एवं भवतु देवेश यत्त्वयोक्तं वचोऽखिलम् ॥
परं मम वचोऽन्यच्च तच्छृणुष्व ब्रवीमि ते ॥ ६४ ॥
नाहं मनुष्यधर्माणमुपाध्यायं कथंचन ॥
करिष्यामि जगन्नाथ कृपां कुरु ममोपरि ॥ ६५ ॥
ततस्तस्या ददौ सूर्यो लघिमा नाम शोभनाम्॥
विद्यां हि तत्प्रभावाय सुतुष्टेनांतरात्मना ॥ ६६ ॥
ततस्तं प्राह कर्णांते ममाश्वानां प्रविश्य वै ॥
अभ्यासं कुरु विद्यानां वेदाध्ययनमाचर ॥ ६७ ॥
मन्मुखाद्ब्राह्मणश्रेष्ठ यद्येतत्तव वांछितम् ॥
न ते स्याद्येन दोषोऽयं मम रश्मिसमुद्भवः ॥ ६८ ॥
एवमुक्तः स तेनाथ वाजिकर्णं समाश्रितः ॥
लघुर्भूत्वाऽपठद्वेदान्भास्करस्य मुखात्ततः ॥ ६९ ॥
एवं सिद्धिं समापन्नो याज्ञवल्क्यो द्विजोत्तमाः ॥
कृत्वोपनिषदं चारु वेदार्थैः सकलैर्युतम् ॥ ६.१२९.७० ॥
जनकाय नरेंद्राय व्याख्याय च ततः परम् ॥
कात्यायनं सुतं प्राप्य वेदसूत्रस्य कारकम् ॥ ७१ ॥
त्यक्त्वा कलेवरं तत्र ब्रह्मद्वारि विनिर्मिते ॥
तत्तेजो ब्रह्मणो गात्रे योजयामास शक्तितः ॥ ७२ ॥
तस्य तीर्थे नरः स्नात्वा दृष्ट्वा तं च दिवाकरम् ॥
नादबिंदुं पठित्वा च तदग्रे मुक्तिमाप्नुयात् ॥ ७३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये याज्ञवल्क्याश्रममाहात्म्यवर्णनंनामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३०



॥ऋषय ऊचुः ॥ ॥

याज्ञवल्क्यसुतः सूत यस्त्वया परिकीर्तितः ॥

कतमा तस्य माताभूत्सर्वं नो ब्रूहि विस्तरात् ॥ १ ॥

॥ सूत उवाच ॥ ॥

तस्य भार्याद्वयं श्रेष्ठमासीत्सर्वगुणान्वितम्॥

एका गुणवती तस्य मैत्रेयीति प्रकीर्तिता ॥ २ ॥

ज्येष्ठा चान्याथ कल्याणी ख्याता कात्यायनीति च ॥

यस्याः कात्यायनः पुत्रो वेदार्थानां प्रजल्पकः ॥ ३ ॥

ताभ्यां कुण्डद्वयं तत्र संतिष्ठति सुशोभनम् ॥

यत्र स्नाता नरा यांति लोकांस्तांश्च महोदयान् ॥४ ॥

कात्यायन्याश्च तीर्थस्य शांडिल्यास्तीर्थमुत्तमम्॥

पतिव्रतात्वयुक्तायास्तथान्यत्तत्र संस्थितम् ॥ ५ ॥

यत्र कात्यायनी प्राप्ता शांडिल्या प्रतिबोधिता ॥

वैराग्यं परमं प्राप्ता सपत्नीदुःखदुःखिता ॥ ६ ॥

तत्र या कुरुते स्नानं तृतीयायां समाहिता ॥

नारी मार्गसिते पक्षे सा सौभाग्यवती भवेत् ॥

अथ दौर्भाग्यसंपन्ना काणा वृद्धाऽथ वामना ॥

अभीष्टा जायते सा च तत्प्रभावाद्द्विजोत्तमाः ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

कीदृक्सपत्निजं दुःखं कात्यायन्या उपस्थितम् ॥

उपदेशः कथं लब्धः शांडिल्याः सूत कीदृशः ॥ ९ ॥

कात्यायन्या समाचक्ष्व कौतुकं नो व्यवस्थितम् ॥

सामान्यो भविता नैष उपदेशस्तयेरितः ॥ ६.१३०.१० ॥

॥ सूत उवाच ॥ ॥

मैत्रेय्या सह संसक्तं याज्ञवल्क्यं विलोक्य सा ॥

कात्यायनी सुदुःखार्ता संजाता चेर्ष्यया ततः ॥ ११ ॥
सा न स्नाति न भुंक्ते च न हास्यं कुरुते क्वचित् ॥
केवलं बाष्पपूर्णाक्षी निःश्वासाढ्या बभूव ह ॥ १२ ॥
ततः कदाचिदेवाथ फलार्थं निर्गता बहिः ॥
अपश्यच्छांडिलीनाम पतिपार्श्वे व्यवस्थिताम्॥ १३ ॥
कृतांजलिपुटां साध्वी विनयावनता स्थिताम् ॥
सोऽपि तस्या मुखासक्तः सानुरागः प्रसन्नदृक् ॥ १४ ॥
गुणदोषोद्भवां वार्तामापृच्छयाकथयत्तथा ॥
सा च तौ दंपती दृष्ट्वा संहृष्टावितरेतरम् ॥ १५ ॥
चित्ते स्वे चिंतयामास सुधन्येयं तपस्विनी ॥
यस्याः पतिर्मुखासक्तो गुणदोषप्रजल्पकः ॥
सानुरागश्च सुस्निग्धो नान्यां नारीं बिभर्त्ति च ॥ १६ ॥
एवं संचित्य सा साध्वी भूयोभूयो द्विजोत्तमाः ॥
जगाम स्वाश्रमं पश्चान्निंद्यमाना स्वकं वपुः ॥ १७ ॥
ततः कदाचिदेकांते स्थितां तां शांडिलीं द्विजाः ॥
बहिर्गते भर्तरि च तस्याः कार्येण केनचित् ॥ १८ ॥
कात्यायनी समागम्य ततः पप्रच्छ सादरम् ॥
वद कल्याणि मे कंचिदुपदेशं महोदयम् ॥ १९ ॥
मुखप्रेक्षः सदा भर्त्ता येन स्त्रीणां प्रजायते ॥
नापमानं करोत्येव दुरुक्तवचनैः क्वचित् ॥ ॥ ६.१३०.२० ॥
नान्यां संगच्छते नारीं चित्तेनापि कथंचन ॥
अहं भर्तुः कृतैर्दुःखैरतीव परिपीडिता ॥
सपत्नीजैर्विशेषेण तस्मान्मे त्वं प्रकीर्तय ॥ ॥ २१ ॥
यथा ते वशगो भर्त्ता संजातः कामदः सदा ॥
मनसापि न संदध्यान्नारीमेष कथंचन ॥ २२ ॥
॥ शांडिल्युवाच ॥ ॥
शृणु साध्वि प्रवक्ष्यामि तवाहं गुह्यमुत्तमम् ॥
यथा ममाभवद्वश्यो मुखप्रेक्षस्तथा पतिः ॥ २३ ॥

मम तातः कुरुक्षेत्रे शांडिल्यो मुनिसत्तमः ॥
वानप्रस्थाश्रमेऽतिष्ठत्पूर्वे वयसि संस्थितः ॥ २४ ॥
तत्रैकाहं समुत्पन्ना कन्या तस्य महात्मनः ॥
वृद्धिं गता क्रमेणाथ तस्मिन्नेव तपोवने ॥ २५ ॥
करोमि तत्र शुश्रूषां होमकाले यथोचिताम् ॥
नीवारादीनि धान्यानि नित्यं चैवानयाम्यहम् ॥ २६ ॥
कस्यचित्त्वथ कालस्य नारदो मुनिसत्तमः ॥
आश्रमे मम तातस्य सुश्रांतः समुपागतः ॥ २७ ॥
तातादेशात्ततस्तत्र मया स विश्रमः कृतः ॥
पादशौचादिभिः कृत्यैः स्नानाद्यैश्च तथापरैः ॥ २८ ॥
ततो भुक्तावसानेऽथ निविष्टः मुखसंस्थित॥
मम मात्रा परिपृष्टो विनयाद्वरवर्णिनि ॥ २९ ॥
एकेयं कन्यकास्माकं जाते वयसि संस्थिते ॥
संजाता मुनिशार्दूल प्राणेभ्योऽपि गरीयसी ॥ ६.१३०.३० ॥
तदस्याः कीर्तय क्षिप्रं सुखोपायं सुखोदयम् ॥
व्रतं वा नियमं वा त्वं होमं वा मन्त्रमेव वा ॥ ३१ ॥
येन चीर्णेन भर्त्ता स्यात्सुसौम्यः सद्गुणान्वितः ॥
प्रियंवदो मुखप्रेक्षः परनारीपराङ्मुखः ॥ ३२ ॥
तस्यास्तद्वचनं श्रुत्वा स मुनिस्तदनंतरम् ॥
चिरं ध्यात्वा वचः प्राह प्रसन्नवदनस्ततः ॥ ३३ ॥
हाटकेश्वरजे क्षेत्रे पञ्चपिंडा व्यवस्थिता ॥
गौरी गौर्या स्वयं तत्र स्थापिता परमेश्वरी ॥ ३४ ॥
तामेषा वत्सरं यावच्छ्रद्धया परया युता ॥
सदा पूजयतु प्रीत्या तृतीयायां विशेषतः ॥ ३५ ॥
ततो वर्षांतमासाद्य संप्राप्स्यति यथोचितम् ॥
भर्त्तारं नात्र संदेहो यादृग्रूपं यथोचितम् ॥ ३६
तत्र पूर्वं गता गौरी परित्यज्य महेश्वरम् ॥
गंगेर्ष्यया महाभागे ज्ञात्वा क्षेत्रं सुसिद्धिदम् ॥ ३७ ॥

ततः सा चिंतयामास कां देवीं पूजयाम्यहम् ॥
सौभाग्यार्थं यतोऽन्या मां पूजयंति सुरस्त्रियः ॥ ३८ ॥
तस्मादहं प्रभक्त्याढ्या स्वयमात्मानमेव च ॥
आत्मनैव कृतोत्साहा पूजयिष्यामि सिद्धये ॥ ॥ ३९ ॥
ततः प्राणाग्निहोत्रोत्थैर्मंत्रैराथर्वणैः शुभैः ॥
मृत्पिंडान्पंच संयोज्य ह्येकस्थाने समाहिता ॥ ६.१३०.४० ॥
पृथ्वीमपश्च तेजश्च वायुमाकाशमेव च ।
तेषु संयोजयामास मृत्पिंडेषु निधाय सा ॥ ४१ ॥
महद्भूतानि चैतानि पञ्च देवी यतव्रता ॥
ततः संपूजयामास पुष्पधूपानुलेपनैः ॥ ४२ ॥
अथ तां तत्र विज्ञाय तपःस्थां गिरजां भवः ॥
तन्मंत्राकृष्टचित्तश्च सत्वरं समुपागतः ॥ ४३ ॥
प्रोवाच च प्रहृष्टात्मा कस्मात्त्वमिह चागता ॥
मां मुक्त्वा दोषनिर्मुक्तं मुखप्रेक्षं सदा रतम् ॥ ४४ ॥
तस्मादागच्छ कैलासं वृषारूढा मया सह ॥
अथवा कारणं ब्रूहि यदि दोषोऽस्ति मे क्वचित् ॥ ॥ ४५ ॥
॥ देव्युवाच ॥ ॥
त्वं मूर्ध्ना जाह्नवीं धत्से मूर्तां पदजलात्मिकाम् ॥
तस्मान्नाहं गमिष्यामि मंदिरं ते कथंचन ॥ ४६ ॥
यावन्न त्यजसि व्यक्तं मम सापत्न्यतां गताम् ॥
तथा नित्यं प्रणामं त्वं करोषि वृषभध्वज ॥ ४७ ॥
प्रत्यक्षमपि मे नित्यं संध्यायाश्च न लज्जसे ॥
तस्मादेतत्परित्यज्य कर्म लज्जाकरं परम् ॥ ४८ ॥
आकारयसि मां देव तत्स्याद्यदि मतं मम ॥
अन्यथाहं न यास्यामि तव हर्म्ये कथंचन ॥
एतच्छ्रुत्वा यदिष्टं ते कुरुष्व वृषभध्वज ॥ ४९ ॥
॥ देव उवाच । ॥
नाहं सौख्येन तां गंगां धारयामि सुरेश्वरि ॥ ६.१३०.५० ॥

भगीरथेन भूपेन प्रार्थितो ज्ञाति कारणात् ॥

दिव्यं वर्षसहस्रं तु तपस्तप्त्वा सुदारुणम् ॥ ५१ ॥

येन नो याति पातालं गंगा स्वर्गपरिच्युता ॥

तस्मात्त्वं देव मद्वाक्यात्स्वमूर्ध्ना वह जाह्नवीम् ॥५२॥

मया तस्य प्रतिज्ञातं धारयिष्याम्यसंशयम् ॥

आकाशाज्जाह्नवीवेगं पतंतं धरणीतले ॥ ५३ ॥

नो चेद्व्रजेत पातालं यदत्र विषयेस्थि?म्॥

ततोऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु ॥५४॥

एषा गंगा वरारोहे मम मूर्ध्नो विनिर्गता ॥

हिमवंतं नगं भित्त्वा द्विधा जाता ततः परम्॥५५॥

ततः सिंध्वभिधाना सा पश्चिमं सागरं गता॥

शतानि नव संगृह्य नदीनां परमेश्वरि ॥५६॥

तथा गंगाभिधाना च सैव प्राक्सागरं गता ॥

तावतीश्च समादाय नदीः पर्वतनन्दिनि ॥५७॥

एवमष्टादशैतानि नदीनां पर्वतात्मजे ॥

शतानि सागरे यांति तेन नित्यं स तिष्ठति ॥५८॥

सततं शोष्यमाणोऽपि वाडवेन दिवानिशम् ॥

समुद्रसलिलं मेघाः समादाय ततः परम् ॥५९॥

मर्त्यलोके प्रवर्षंति ततः सस्यं प्रजायते॥

सस्येन जीवते लोकः प्रभवन्ति मखास्तथा ॥

मखांशेन सुराः सर्वे तृप्तिं यांति ततः परम्॥ ६.१३०.६० ॥

एतस्मात्कारणान्मूर्ध्नि देवि गंगां दधाम्यहम् ॥

न स्नेहात्कामतो नैव जगद्येन प्रवर्तते ॥ ६१ ॥

अथवा सन्त्यजाम्येनां यदि मूर्ध्नः कथंचन ॥

तद्दूरं वेगतो भित्त्वा पृथ्वीं याति रसातलम् ॥ ६२ ॥

ततः शोषं व्रजेदाशु समुद्रः सरितां पतिः ॥

और्वेण पीयमानोऽत्र ततो वृष्टिर्न जायते ॥

वृष्ट्यभावाज्जगन्नाशः सत्यमेतन्मयोदितम् ॥ ६३ ॥

एवं गंगाकृते प्रोक्तं मया तव सुरेश्वरि ॥

शृणु सन्ध्याकृतेऽन्यच्च येन तां प्रणमाम्यहम्॥ ६४ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्व रक्षेत्रमाहात्म्ये पंचपिण्डागौर्युत्पत्तिवर्णनंनाम त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३१

https://sa.wikisource.org/s/gy1
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ देव उवाच ॥ ॥

एषा रात्रिः समादिष्टा दानवानां सुरेश्वरि ॥

पिशाचानां च भूतानां राक्षसानां विशेषतः ॥ १ ॥

यत्किंचित्क्रियते कर्म तत्र स्नानादिकं शुभम्॥

तत्सर्वं जायते तेषां पुरा दत्तं स्वयंभुवा ॥ २ ॥

मर्यादा तैः समं येन देवानां च यदा कृता ॥

अर्हाणां यज्ञभागस्य काश्यपानामथाग्रजाम्॥ ३ ॥

तदर्थं दशसाहस्रा दानवा युद्ध दुर्मदाः ॥

कुंतप्रासकरा भानुं रुंधन्त्युद्गतकार्मुकाः ॥४॥

तमुद्दिश्य सहस्रांशुं यज्जलं परिक्षिप्यते।

सावित्रेण च मन्त्रेण तेषां तज्जायते फलम् ॥५॥

ते हतास्तेन तोयेन वज्रतुल्येन तत्क्षणात् ॥

प्रमुंचंति सहस्रांशुं नित्यमेव सुरेश्वरि ॥ ६ ॥

एतस्मात्कारणात्तोयमस्त्ररूपं क्षिपाम्यहम् ॥

संध्या कालं समुद्दिश्य भानुं संध्यां न पार्वति ॥ ७ ॥

यद्यदाचरति श्रेष्ठस्तत्तदुत्तरतः स्थितः ॥

उदयार्थं रविं यान्तं निरुन्धन्ति च दारुणाः ॥ ८ ॥

तेऽपि संध्याजलैर्देवि निहता ब्राह्मणोत्तमैः ॥

मया च तं विमुञ्चंति मूर्च्छिता निपतन्ति च ॥ ९ ॥

एतस्मात्कारणाद्देवि सन्ध्ययोरुभयोरपि ॥

अहं चान्ये च विप्रा ये ते नमंति दिवाकरम्॥ ६.१३१.१० ॥

तस्मात्त्वं गृहमागच्छ त्यक्त्वेर्ष्यां पर्वतात्मजे ॥

प्रशस्यां त्वां परित्यक्त्वा नान्यास्ति हृदये मम ॥ ११ ॥

॥ देव्युवाच ॥ ॥

निष्कामो वा सकामो वा संध्यां स्त्रीसंज्ञितामिमाम् ॥

यत्त्वं नमसि देवेश तन्मे दुःखं प्रजायते ॥ १२ ॥

तस्माद्गङ्गापरित्यागं सन्ध्यायाश्च विशेषतः ॥

यावन्न कुरुषे देव तावत्तुष्टिर्न मे भवेत् ॥ १३ ॥

एवमुक्त्वाऽथ सा देवी विशेषव्रतमास्थिता॥

अवमन्य महादेवं प्रार्थयानमपि स्वयम्॥ १४ ॥

ततः स चिन्तयामास किमेतत्कारणं स्थितम्॥

विरक्ताऽपि ममोत्कण्ठां येनैषा प्रकरोति न ॥ १९ ॥

न च साम्ना व्रजेत्तुष्टिं कथंचिदपि पार्वती ॥

मृषेर्ष्याधारिणी देवी नैतत्स्वल्पं हि कारणम् ॥ १६ ॥

ततो मन्त्रप्रभावं तं विज्ञाय परमेश्वरः ॥

ध्यानं धृत्वा सुसूक्ष्मेण ज्ञानेनाथ स्वयं ततः ॥ १७ ॥

तमेव मन्त्रं मन्त्रेण न्यासेन च विशेषतः ॥

सम्यगाराधयामास संपूज्यात्मानमात्मना ॥ १८ ॥

यथा देव्यात्मभूतानि पृथक्कृत्वा च पंच च ॥

पूजितानि तथा देवः सर्वेषामंतरे गतः ॥ १९ ॥

तान्येव पूजयामास पृथक्कृत्वा समाधितः ॥

नियोज्य च पुनर्बाह्ये ततः पूजां समाचरत् ॥६.१३१.२॥।

तस्मान्नास्ति परः कश्चित्पूज्यपूज्यः स एव च ॥

ऐश्वर्यात्सर्वदेवानामीशानस्तेन निर्मितः ॥ २१ ॥

एवं यावत्स ईशानः समाराधयति प्रभुः ॥

तावद्देवी समायाता मन्त्राकृष्टा च यत्र सः ॥ २२ ॥

ततः प्रोवाच तं देवं प्रणिपत्यकृतांजलिः ॥

ज्ञातं मया विभो सर्वं न मां त्यज तव प्रियाम् ॥ २३ ॥

तस्मादागच्छ गच्छावो यत्र त्वं वाञ्छसि प्रभो ॥

क्षम्यतां देव मे सर्वं न कृतं यद्वचस्तव ॥ २४ ॥

ततस्तुष्टो महादेवस्तामालिङ्ग्य शुचिस्मिताम् ॥

इदमूचे विहस्योच्चैर्मेघगम्भीरया गिरा ॥ २५ ॥

यैषा त्वयाऽऽत्मभूतोत्था निर्मिता परमा तनुः ॥

एतां या कामिनी काचित्पूजयिष्यति भक्तितः ॥

अनेनैव विधानेन तस्या भर्ता भविष्यति ॥ २६ ॥

तृतीयायां विशेषेण यावत्संवत्सरं शुभे ॥

सा लभिष्यति सत्कान्तं पुत्रदं सर्वकामदम् ॥ २७ ॥

तथैतां मामकीं मूर्तिमीशानाख्यां च ये नराः ॥

तेषां दुष्टापि या कान्ता सौम्या चैव भविष्यति ॥ २८ ॥

ये पुनः कन्यकाहेतोः पूजयिष्यंति भक्तितः ॥

यां कन्यां मनसि स्थाप्य तां लभिष्यन्त्यसंशयम् ॥२९॥

निष्कामाश्चापि ये मर्त्या पूजयिष्यंति सर्वदा ॥

ते यास्यंति परां सिद्धिं जरामरणवर्जिताम् ॥ ६.१३१.३० ॥

एवमुक्त्वा महादेवो वृषमारोप्य तां प्रियाम् ॥

स्वयमारुह्य पश्चाच्च कैलासं पर्वतं गतः ॥ ३१ ॥

॥ नारद उवाच । ॥

तस्मात्तव सुतेयं या तामाराधयतु द्रुतम् ॥

पञ्चपिण्डमया गौरीं यावत्संवत्सरं शुभाम् ॥ ३२ ॥

तृतीयायां विशेषेण ततः प्राप्स्यति सत्पतिम् ॥

मुखप्रेक्षमतिप्रीतं रूपादिभिर्गुणैर्युतम् ॥ ३३ ॥

॥ शांडिल्युवाच ॥ ॥

एवमुक्त्वा मुनिश्रेष्ठो नारदः प्रययौ ततः ॥

तीर्थयात्रां प्रति प्रीत्या मम मात्रा विसर्जितः ॥ ३४ ॥

मयापि च तदादेशात्कौमार्येपि च संस्थया ॥

पूजया वत्सरं यावत्पूजिता पतिकाम्यया ॥ ३५ ॥

तृतीयायां विशेषेण मार्गमासादितः शुभे ॥

नैवेद्यैर्विविधैर्दानैर्गंधमाल्यानुलेपनैः ॥ ३६ ॥

तत्प्रभावादयं प्राप्तो जैमिनिर्नाम सद्द्विजः ॥

कात्यायनि यथा दृष्टस्त्वया किं कीर्तितैः परैः ॥ ३७

तस्मात्त्वमपि कल्याणि पूजयैनां समाहिता ॥

संप्राप्स्यसि सुसौभाग्यं मैत्रेय्या सदृशं शुभे ॥ ३८ ॥

त्वया न पूजिता चेयं कौमार्ये वर्तमानया ॥
यावत्संवत्सरं गौरी तृतीयायां न चाधिकम् ॥ ३९ ॥
सापत्न्यं तेन संजातं सौभाग्येपि निरर्गले ॥
यथोक्तविधिना देवी सत्यमेतन्मयोदितम् ॥ ६.१३१.४० ॥
॥ सूत उवाच ॥ ॥
श्रुत्वा कात्यायनी सर्वं शांडिल्या यत्प्रकीर्तितम् ॥
ततः प्रणम्य तां पृष्ट्वा स्वमेव भवनं ययौ ॥ ४१ ॥
मार्गशीर्षेऽथ संप्राप्ते तृतीयादिवसे सिते ॥
तां देवीं पूजयामास वर्षं यावकृतक्षणा ॥ ४२ ॥
गौरिणीर्भोजयामास मृष्टान्नैर्भोजनै रसैः ॥
तैलक्षारपरित्यक्तैर्गन्धैः कुंकुमपूर्वकैः ॥ ४३ ॥
ततस्तु वत्सरे पूर्णे याज्ञवल्क्यस्तदन्तिकम् ॥
गत्वा प्रोवाच किं कष्टं त्वं करोषि शुचिस्मिते ॥ ४४ ॥
मया कांतेन रक्तेन कामदेन सदैव तु ॥
तस्मादागच्छ गच्छाव स्वमेव भवनं शुभे ॥ ४५ ॥
एवमुक्त्वा तु तां हृष्टां गृहीत्वा दक्षिणे करे ॥
जगाम भवनं पश्चात्पुलकांकितगात्रजाम् ॥ ४६॥
ततः परं तया सार्धं वर्तते हर्षिताननः ॥
मैत्रेय्या सहितो यद्वदविशेषेण सर्वदा ॥ ४७ ॥
ततः संजनयामास तस्यां पुत्रं गुणान्वितम् ॥
कात्यायनाभिधानं च यज्ञ विद्याविचक्षणम्॥ ४८ ॥
पुत्रो वररुचिर्यस्य बभूव गुणसागरः॥
सर्वज्ञः सर्वकृत्येषु वेदवेदांगपारगः ॥४९॥
स्थापितोऽत्र शुभे क्षेत्रे येन विद्यार्थिनां कृते ॥
समाराध्य विशेषेण चतुर्थ्यां शुक्लवासरे ॥ ६.१३१.५० ॥
महागणपतिर्भक्त्या सर्वविद्याप्रदायकः ॥
यस्तस्य पुरतो विप्राः शांतिपाठविधानतः ॥ ॥ ५१ ॥
गृह्णाति पुष्पमालां यः पठेच्छक्त्या द्विजोत्तमाः ॥

वेदांतकृत्स विप्रः स्यात्सदा जन्मनिजन्मनि ॥ ५२ ॥

अशक्त्या चाथ पाठस्य यो गृह्णाति धनेन च ॥

स विशेषाद्ब्रवेद्विप्रो वेदवेदांगपारगः ॥ ५३॥

विदुषां स गृहे जन्म याज्ञिकानां सदा लभेत्॥

न कदाचित्तु मूर्खाणां निन्दितानां कथञ्चन ॥ ५४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्य ईशानोत्पत्तिपंचपिंडिकागौरीमाहात्म्य वररुचिस्थापितगणपतिमाहात्म्यवर्णनं नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३२



॥ ऋषय ऊचुः । ॥

त्वया सूतज तत्रस्थं याज्ञवल्क्यस्य कीर्तितम् ॥

तीर्थं वररुचेश्चैव वैनायक्यं प्रविद्यते ॥ १ ॥

कात्यायनस्य न प्रोक्तं किञ्चित्तत्र महामते ॥

किं वा तेन कृतं नैव किं वा ते विस्मृतिं गतम् ॥ २ ॥

तस्मादाचक्ष्व नः शीघ्रं यदि किंचिन्महात्मना ॥

क्षेत्रेत्र निर्मितं तीर्थं सर्वसिद्धिप्रदायकम् । ३ ॥

॥ सूत उवाच ॥ ॥

तेन वास्तुपदंनाम तत्र तीर्थविनिर्मितम् ॥

कात्यायनेन विप्रेण सर्वकामप्रदं नृणाम् ॥ ४ ॥

चत्वारिंशत्त्रिभिर्युक्ता देवता यत्र पंच च ॥

पूज्यंते पूजिताश्चापि सिद्धिं यच्छंति तत्क्षणात् ॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मात्ता देवताः सूत पूज्यंते तत्र संस्थिताः ॥

नामतश्च विभागेन कीर्तयस्व पृथक्पृथक् ॥ ६ ॥

॥ सूत उवाच ॥ ॥

पूर्वं किंचिन्महद्भूतं निर्गतं धरणीतलात् ॥

अपूर्वं रौद्रमत्युग्रं कृष्ण दंतं भयानकम् ॥ ७ ॥

शंकुकर्णं कृशास्यं च ऊर्ध्वकेशं भयानकम् ॥

देवानां नाशनार्थाय मानुषाणां विशेषतः ॥ ॥

आकृष्टं दानवेंद्रेण मंत्रैः शुक्रप्रदर्शितैः ॥

अवध्यं सर्वशस्त्राणामस्त्राणां च विशेषतः ॥ ९ ॥

अथ देवाः समालोक्य तत्तादृक्सुभयावहम् ॥

जघ्नुः शस्त्रैः शितैश्चित्रैः कोपेन महतान्विताः ॥ ६.१३२.१० ॥

नैव शेकुस्तदंगेषु प्रहर्तुं यत्नमास्थिताः ॥

भक्ष्यंते केवलं तेन शतशोऽथ सहस्रशः ॥ ११ ॥
अथ ते यत्नमास्थाय सर्वे देवाः सवासवाः ॥
ब्रह्माणमग्रतः कृत्वा तद्भूतमभिदुद्रुवुः ॥ १२ ॥
ततः संगृह्य यत्नेन सर्वगात्रेषु सर्वतः ॥
तच्च पंचगुणैर्देवैः पातितं धरणीतले॥ ॥ १३ ॥
उपविष्टास्ततस्तस्य सर्वे भूत्वा समंततः ॥
प्रहारान्संप्रयच्छंति न लगंति च तस्य ते ॥ १४ ॥
आथर्वणेन सूक्तेन जातं चामृतबिंदुना ॥
तद्भूतं प्रेषितं दैत्यैर्मुंडेन च तदंतिकम्॥ १५ ॥
एवं वर्षसहस्रांतं तत्तथैव व्यवस्थितम् ।
न मुंचंति भयात्ते तु न हंतुं शक्नुवंति च ॥ १६ ॥
तस्योदरे स्थितो ब्रह्मा शक्राद्या अमराश्च ये ॥
चतुर्दिक्षु स्थिताः क्रुद्धा महद्यत्नेन संस्थिताः ॥
ततस्ते दानवाः सर्वे मंत्रं चक्रुः परस्परम् ॥ १७ ॥
अस्य भूतस्य रौद्रस्य शुक्रसृष्टस्य तत्क्षणात् ॥
एक एवात्र निर्दिष्ट उपायो देवसंक्षयः । १८ ॥
ततः शस्त्राणि तीक्ष्णानि दानवास्ते महाबलाः ॥
मुंचंतो विविधान्नादान्समाजग्मुः सहस्रशः ॥ १९ ॥
एतस्मिन्नंतरे विष्णुरागतस्तत्र तत्क्षणात् ॥
आह भूतं तदा विष्णुर्वचसा ह्लादयन्निव ॥ ६.१३२.२० ॥
यो यस्मिन्संस्थितो गात्रे देवस्तव समुद्भवे ॥
तत्र पूजां समादाय तस्मात्त्वां तर्पयिष्यति ॥२१॥
नैवंविधा तु लोकेऽस्मिन्पूजा देवस्य संस्थिता ॥
कस्यचिद्यादृशी तेऽद्य मया संप्रतिपादिता ॥ २२ ॥
ततस्तेन प्रतिज्ञातमविकल्पेन? चेतसा॥
एवं तेऽहं करिष्यामि परं मे वचनं शृणु ॥ २३ ॥
यदि कश्चिन्न मे पूजां करिष्यति कदाचन ॥
कथंचिन्मानवः कश्चित्स मे भक्ष्यो भविष्यति ॥ २४ ॥

॥ सूत उवाच ॥ ॥

बाढमित्येव च प्रोक्ते ततो देवेन चक्रिणा ॥

तद्भूतं निश्चलं जातं हर्षेण महतान्वितम् ॥ २५ ॥

ततो देवाः समुत्थाय तत्त्यक्त्वा शस्त्रपाणयः ॥

जघ्नुश्च निशितैः शस्त्रैः पलायनसमुत्सुकान् ॥

लज्जाहीनान्गतामर्षान्दीनवाक्यप्रजल्पकान् ॥ २६ ॥

ततः स्वस्थः स भूत्वा तु हरिर्दैत्यैर्निपातितैः ॥

प्रोवाच पद्मजं नाम भूतस्यास्य कुरुष्व भोः ॥ २७ ॥

॥ ब्रह्मोवाच ॥. ॥

अनेन तव वाक्यस्य प्रोक्तं वाक्यं हरे यतः ॥

वास्त्वेतदिति यस्माच्च तस्माद्वास्तु भविष्यति ॥ २८ ॥

एवमुक्त्वा हृषीकेश आहूय विश्वकर्मणे ॥

विधानं कथयामास पूजार्थं विस्तरान्वितम् ॥ २९ ॥

एतस्मिन्नंतरे प्राह याज्ञवल्क्यसुतः सुधीः ॥

विश्वकर्माणमाहूय प्रथमं द्विजसत्तमाः ॥ ६.१३२.३० ॥

हाटकेश्वरजे क्षेत्रे ममाश्रमपदं कुरु ॥

अनेनैव विधानेन प्रोक्तेन तु महामते ॥ ३१ ॥

ततोहं सकलं बुद्ध्वा वृद्धिं नेष्यामि भूतले ॥

बालावबोधनार्थाय तस्मादागच्छ सत्वरम् ॥ ३२ ॥

ततः संप्रेषयामास तं ब्रह्मापि तदंतिकम् ॥

विश्वकर्माणमाहूय स्वसुतस्य हिते स्थितः ॥ ३३ ॥

विश्वकर्मापि तत्रैत्य वास्तुपूजां यथोदिताम् ॥

चकार ब्रह्मणा प्रोक्तां यादृशीं सकलां ततः ॥ ३४॥

कात्यायनोऽपि तां सर्वां दृष्ट्वा चक्रे सहस्रशः ॥

तदा विश्वहितार्थाय शालाकर्मादि पूर्विकाम् ॥ । ३५ ॥

एवं वास्तुपदं जातं तस्मिन्क्षेत्रे द्विजोत्तमाः ॥

अस्मिन्क्षेत्रे नरः पापात्स्पृष्टो मुच्येत कर्मणा ॥ ३६ ॥

तथा न प्राप्नुयाद्दोषं गृहजातं कथंचन ॥

शिल्पोत्थं कुपदोत्थं च कुवास्तुजमथापि च ॥ ३७ ॥

वैशाखस्य तृतीयायां शुक्लायां रोहिणीषु च ॥

तत्पदं निहितं तत्र वास्तोस्तेन महात्मना ॥ ३८ ॥

तस्मिन्नपि च यः पूजां तेनैव विधिना नरः ॥

तस्य यः कुरुते सम्यक्स भूपत्वमवाप्नुयात् ॥ ३९ ॥

गृहं दोषान्वितं प्राप्य शिल्पादिभिरुपद्रुतम् ॥

तस्योपसंगमं प्राप्य समृद्धिं याति तद्दिने ॥ ६.१३२.४० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वास्तुपदोत्पत्तिमाहात्म्यवर्णनंनाम द्वात्रिंशदुत्तरशततमोऽध्यायः ।। १३२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३३

https://sa.wikisource.org/s/g24
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथाऽन्यापि च तत्रास्ति देवता द्विजसत्तमाः ॥

अजागृहेति विख्याता सर्वरोगक्षयावहा ॥ १ ॥

अजापालो यदा राजा सर्वलोकहिते रतः ॥

अजारूपाः प्रयांति स्म व्याधयः सकला द्विजाः ॥

तदा रात्रौ समानीय तस्मिन्स्थाने दधाति सः ॥ २ ॥

ततस्तदाश्रयात्स्थानमजागृहमिति स्मृतम् ॥

सर्वैर्जनैर्धरा पृष्ठेदर्शनाद्व्याधिनाशनम् ॥ ३ ॥

तत्रैश्वर्यमभूत्पूर्वं यत्तद्ब्राह्मणसत्तमाः ॥

अहं वः कीर्तयिष्यामि श्रोतव्यं सुसमाहितैः ॥ ४ ॥

तत्रागतो द्विजः कश्चित्क्षेत्रे तापसरूपधृक् ॥

तीर्थयात्राप्रसंगेन रात्रौ प्राप्तः श्रमान्वितः ॥ ५ ॥

अजावृंदमथालोक्य निविष्टं सुसुखान्वितम् ॥

रोमंथ कर्मसंयुक्तं विश्वस्तमकुतोभयम्॥ ६ ॥

स ज्ञात्वा मानुषेणात्र भवितव्यमसंशयम् ॥

न शून्याः पशवो रात्रौ स्थास्यंति विजने वने ॥ ७ ॥

ततः फूत्कृत्य फूकृत्य दिवं यावन्न संदधे ॥

कश्चिद्वाचं प्रसुप्तश्च तावत्तत्रैव चिंतयन् ॥ ८ ॥

अवश्यं मानुषेणात्र पशूनां रक्षणाय च ॥

आगंतव्यं कुतोऽप्याशु तस्मात्तिष्ठामि निर्भयः ॥ ९ ॥

एवं तस्य प्रसुप्तस्य गता सा रजनी ततः ॥

ततस्त्वरितवत्तस्य सुश्रांतस्य द्विजोत्तमाः ॥ ६.१३३.१० ॥

अथ यावत्प्रभाते स प्रपश्यति निजां तनुम् ॥

तावत्कुष्ठादिभी रोगैः समंतात्परिवारिताम् ॥ ११ ॥

अशक्तश्चलितुं स्थानादपि चैकं पदं क्वचित् ॥

तेजो हीनोऽपि रौद्रेण चिन्तयामास वै ततः ॥ १२ ॥

किमिदं कारणं येन ममैषा संस्थिता तनुः ॥

अकस्मादेव रोगोऽयं चलितुं नैव च क्षमः ॥१३॥

एवं चिन्तयमानस्य तस्य विप्रस्य तत्क्षणात्॥

द्वादशार्कप्रतीकाशः पुरुषः समुपागतः ॥ १४ ॥

तं यूथं कालयामास ततः संज्ञाभिराह्वयन् ॥

पृथक्त्वेन समादाय यष्टिं सव्येन पाणिना ॥ १५ ॥

अथापश्यत्स तं विप्रं व्याधिभिः सर्वतो वृतम्॥

अशक्तं चलितुं क्वापि ततः प्रोवाच सादरम्॥१६॥

कस्त्वमेवंविधः प्राप्तः स्थाने चात्र द्विजोत्तम ॥

नास्ति राज्ये मम व्याधिः कस्यचित्कुत्रचित्स्फुटम् ॥ १७॥

अजोनाम नरेन्द्रोऽहं यदि ते श्रोत्रमागतः॥

व्याधींश्च च्छागरूपेण रक्षामि जनकारणात् ॥१८॥

तस्माद्ब्रूहि शरीरस्थो यस्ते व्याधिर्व्यवस्थितः ॥

येनाऽहं निग्रहं तस्य करोमि द्विजसत्तम ।१९॥

॥ ब्राह्मण उवाच ॥ ॥

तीर्थयात्रापरोऽहं च भ्रमामि क्षितिमंडले॥

क्रमेणाऽत्र समायातः क्षेत्रेऽस्मिन्हाटकेश्वरे ॥ ६.१३३.२० ॥

निशावक्त्रे नृपश्रेष्ठ वासः संचिंतितो मया ॥

दृष्ट्वाऽमूंश्च पशून्भूप मानुषं भाव्यमेव हि ॥ २१ ॥

ततश्चात्र प्रसुप्तोऽहं पशूनामंतिके नृप ॥२२॥

अथ यावत्प्रभातेऽहं प्रपश्यामि निजां तनुम्॥

तावत्कुष्ठादिरोगैश्च समंतात्परिवारिताम् ॥ २३ ॥

नान्यत्किंचिन्नृपश्रेष्ठ कारणं वेद्मि तत्त्वतः ॥

किमेतेन नृपश्रेष्ठ भूयोभूयः प्रजल्पता ॥

बहुत्वात्कुरु तस्मान्मे यथा स्यान्नीरुजा तनुः॥ २४ ॥

ततस्ते व्याधयः प्रोक्ता अजापालेन भूभुजा ॥

केनाज्ञा खंडिता मेऽद्य को वध्यः सांप्रतं मम ॥ २५ ॥

॥ व्याधय ऊचुः ॥ ॥

मा कोपं कुरु भूपाल कृत्येऽस्मिंस्त्वं कथंचन ॥

यस्मादेष द्विजो विष्टः सांप्रतं व्याधिभिस्त्रिभिः ॥२६॥।

राजयक्ष्मा च कुष्ठं च पामा च द्विजसत्तम ॥

एते संसर्गजा दोषास्त्रयोऽद्यापि प्रकीर्तिताः ॥ २७ ॥

एतेषां प्रथमौ यौ द्वौ निवृत्तिरहितौ स्मृतौ ॥

औषधैश्चैव मंत्रैश्च शेषा नाशं व्रजंति च ॥२८॥

आभ्यां च ब्रह्मशापोस्ति येन नास्ति निवर्तनम् ॥

तस्मादत्र नृपश्रेष्ठ कुरु यत्ते क्षमं भवेत् ॥२९॥।

एतेन ब्राह्मणेनैते स्पृष्टा राजंस्त्रयोपि च॥

तस्मात्तावत्तनुं चास्याविशतां तावसंशयम्॥६.१३३.३०॥

अपरं शृणु भूपाल वचनं नो मुखाच्च्युतम्॥

हिताय सर्वजंतूनां तव श्रेयोविवृद्धये॥३॥।

यत्र स्थानं चिरं तत्र मेदिन्यां विहितं नृप।

पुरीषं च समाविद्धा तेनैषा मेदिनी द्रुतम्॥३२॥

कालांतरेपि ये मर्त्या भूम्यामस्यां समागताः।

भूमेः स्पर्शं करिष्यंति ते भविष्यंति चेदृशाः॥३३॥

वयं शेषा महाराज व्याधयो ये व्यवस्थिताः।

त्वया मुक्त्वा भविष्यामो मन्त्रौषधवशानुगाः ॥३४॥

नैतौ पुनस्तु दुर्ग्राह्यौ ब्रह्मशाप समुद्भवौ ॥३५॥

तच्छ्रुत्वा पार्थिवः सोऽपि तस्मिन्स्थाने व्यवस्थितः ॥

तं ब्राह्मणं पुनः प्राह न भेतव्यं त्वया द्विज ॥ ३६ ॥

अहं त्वां रक्षयिष्यामि व्याधेरस्मात्सुदारुणात् ॥

अत्र तस्मात्प्रतीक्षस्व कञ्चित्कालं ममाज्ञया ॥ ३७ ॥।

एवमुक्त्वा ततश्चक्रे तदर्थं सुमहत्तपः ॥

आराधयन्प्रभक्त्या च सम्यक्तां क्षेत्रदेवताम् ॥३८॥

मुंडेनाथर्वशीर्षेण दिवारात्रमतंद्रितः॥

क्षेत्रपालोत्थसूक्तेन वास्तुसूक्तेन च द्विजाः॥३९॥

सिद्धार्थैं रक्तपुष्पैश्च गुग्गुलेन सुधूपितैः॥

होमं कुर्वन्नृपः पश्चान्नीलरुद्रान्विशेषतः॥६.१३३.४॥।

अथ नक्तावसानेन तस्य होमस्य चोत्थिता॥

भित्त्वा धरातलं देवी मन्त्राकृष्टा विनिर्गता॥४१॥

देवता तस्य क्षेत्रस्य ततः प्रोवाच तं नृपम्॥४२॥

एकाहं तव भूपाल होमस्यास्य प्रभावतः ॥

विनिर्गता धरापृष्ठात्क्षेत्रस्यास्याधिपा स्मृता ॥ ४३ ॥

तस्माद्वद महाभाग यत्ते कृत्यं करोम्यहम् ॥

परां तुष्टिमनुप्राप्ता तस्माद्ब्रूहि यदीप्सितम् ॥ ४४ ॥

॥ राजोवाच ॥ ॥

अत्र स्थाने सदा स्थेयं त्वया देवि विशेषतः ॥

व्याधिसंसर्गजो दोषो भूमेरस्या यथा व्रजेत् ॥ ॥ ४५ ॥

अद्यप्रभृति देवेशि तथा नीतिर्विधीयताम् ॥

नो चेदस्याः प्रसंगेन प्रभविष्यंति मानवाः ॥ ४६ ॥

व्याधिग्रस्ता यथा विप्रो योऽयं संदृश्यते पुरः ॥

मयात्र व्याधयः कालं चिरं संस्थापिता यतः ॥

भविष्यति च मे दोषो नो चेद्देवि न संशयः ॥ ४७ ॥

तथायं ब्राह्मणो रोगात्त्वत्प्रसादात्सुरेश्वरि ॥

मुक्तो भवतु मेदिन्यामत्र स्थेयं सदा त्वया ॥४८॥

॥ क्षेत्रदेवतोवाच ॥ ॥

एतत्स्थानं मया सर्वं व्याधिदोषविवर्जितम् ॥

विहितं सर्वदैवात्र स्थास्येऽहमिह सर्वदा ॥४९॥

सांप्रतं योऽत्र मे स्थाने व्याधिग्रस्तः समेष्यति ॥

पूजयिष्यति मां भक्त्या नीरोगः स भविष्यति ॥ ६.१३३.५० ॥

तस्मादद्य द्विजेंद्रोऽयं मां पूजयतु सादरम् ॥

भक्त्या परमया युक्तः शुचिर्भूत्वा समाहितः॥ ५१ ॥

अत्र क्षेत्रे पराऽन्यास्ति विख्याता चंद्रकूपिका। ॥

तस्यां स्नातु यथान्यायं नित्यमेव महीपते ॥ ५२ ॥

दक्षशापप्रशस्तेन या चंद्रेण पुरा कृता ॥

स्वस्नानार्थं क्षयव्याधिप्रग्रस्तेन महात्मना । ५३ ॥

तथा खण्डशिलानाम देवता चात्र तिष्ठति ॥

सौभाग्यकूपिकास्नानं कृत्वा तां च प्रपश्यतु ॥५४॥

या कृता कामदेवेन कुष्ठग्रस्तेन वै पुरा ।

स्नपनार्थं च कुष्ठस्य विनाशाय च सादरम् ॥ ५५॥

तथा चाप्सरसां कुण्डमत्रास्ति नृपसत्तम ॥

तत्र स्नात्वा रवेरह्नि ततः पामा प्रशाम्यति ॥ ९६ ॥

॥ सूत उवाच ॥

ततः स ब्राह्मणः प्राप्य सुपुण्यां चन्द्रकूपिकाम् ॥

स्नानं कृत्वा च तां देवीं पूजयामास भक्तितः ॥

यावन्मासं ततो मुक्तः सत्वरं राजयक्ष्मणा ॥ ५७

ततः सौभाग्यकूपीं तां दृष्ट्वा कामविनिर्मिताम् ॥

तथा स्नानं विधायाथ पश्यन्खंडशिलां च ताम् ॥ ५८ ॥

तद्वन्मासेन निर्मुक्तः कुष्ठेन द्विजसत्तमाः ॥

तस्या देव्याः प्रभावेन कूपिकायां विशेषतः । ५९ ॥

ततश्चाप्सरसां कुंडे स्नात्वैकं रविवासरम् ॥

पामया संपरित्यक्तो बुद्ध्येव विषयात्मकः ॥ ६.१३३.६० ॥

ततः स ब्राह्मणो जातो द्वादशार्कसमप्रभः ॥

तोषेण महता युक्तो दत्ताशीस्तस्य भूपतेः ॥ ६१ ॥

प्रययौ वांछितं देशमनुज्ञातश्च भूभुजा ॥

देवतायां प्रणामं च ताभ्यां कृत्वा पुनःपुनः ॥ ६२ ॥

सोपि राजा सदोषांस्तानजारूपान्विलोक्य च ॥

स्वस्यैव ब्राह्मणं दृष्ट्वा तं तथा संप्रहर्षितः ॥ ६३ ॥

स्वयं च प्रययौ तत्र यत्रस्थो हाटकेश्वरः ॥

तेनैव च शरीरेण निजकांतासमन्वितः ॥६४ ॥

अजागृहे स्थिता यस्मात्सा देवी क्षेत्रदेवता ॥

अजागृहा ततः ख्याता सर्वत्रैव द्विजोत्तमाः ॥ ६५ ॥

अद्यापि यक्ष्मणा ग्रस्तो यस्तां पूजयते नरः ॥

तैनैव विधिना सम्यक्स नीरोगो द्रुतं भवेत्॥ ६६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽजागृहोत्पत्तिमाहात्म्यवर्णनंनाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३४

https://sa.wikisource.org/s/g31



॥ ऋषय ऊचुः ॥ ॥

यदा दक्षेण क्रुद्धेन पुरा शप्तो हिमद्युतिः ॥

तत्सर्वं भवता प्रोक्तं सोमनाथकथानकम्॥ १ ॥

सांप्रतं वद कामस्य यथा कुष्ठोऽभवत्पुरा ॥

येन दोषेण शापश्च केन तस्य नियोजितः ॥ २ ।

शिलाखंडा च या देवी तथा सौभाग्यकूपिका ॥

यथा तत्र समुत्पन्ना तथाऽस्माकं प्रकीर्तय ॥ ३ ॥

॥ सूत उवाच ॥ ॥

पुरासीद्ब्राह्मणो नाम हारीत इति विश्रुतः ॥

स तपस्तत्र संतेपे वानप्रस्थाश्रमे वसन् ॥ ४ ॥

तस्य भार्याऽभवत्साध्वी रूपौदार्यसमन्विता ॥

त्रैलोक्यसुन्दरी साक्षाल्लक्ष्मीरिव मधुद्विषः ॥ ५ ॥

ख्याता पूणकलानाम सर्वैः समुदितागुणैः ॥

तां दृष्ट्वा पद्मजोऽप्याशु कामस्य वशगोऽभवत् ॥ ६ ॥

कदाचिदपि स प्राप्तस्तस्मिन्क्षेत्रे मनोभवः ॥

सह रत्या तथा प्रीत्या कामेश्वरदिदृक्षया ॥ ७ ॥

एतस्मिन्नंतरे सापि स्नानार्थं तत्र चागता ॥

कृत्वा वस्त्रपरित्यागं विवेश जलाशयम् ॥ ८ ॥

अथ तां कामदेवोपि समालोक्य शुभाननाम्॥

आत्मीयैरपि निर्विद्धो हृदये पुष्पसायकैः ॥ ९ ॥

ततो रतिं परित्यक्त्वा प्रीतिं च शरपीडितः॥

विजनं कंचिदासाद्य प्रसुप्तः स तरोरधः ॥ ६.१३४.१० ॥

गात्रैः पुलकितैः सर्वैर्निःश्वासान्निःश्वसन्मुहुः ॥

अग्निवर्णान्सुदीर्घांश्च बाष्प पूर्णविलोचनः ॥ ११ ॥

तिष्ठन्स दर्शने तस्या एकदृष्ट्या व्यलोकयत्॥

योगीव सुसमाधिस्थो ध्यायंस्तद्ब्रह्म संस्थितम् ॥ १२ ॥

सापि कामं समालोक्य सानुरागं पुरः स्थितम् ॥

जृंभाभंगकृतास्यं च वेपमानशरीरकम् ॥ १३ ॥

सापि तद्बाणनिर्भिन्ना साभिलाषा बभूव ह ॥

कामं प्रति विशेषेण तस्य रूपेण मोहिता ॥ १४ ॥

अथ तस्माज्जलात्कृच्छ्राद्विनिष्क्रम्य शुचिस्मिता ॥

तीरोपांतं समासाद्य स्थिता तद्दृष्टिगोचरे ॥ १५ ॥

ततः कामः समुत्थाय शनैस्तदंतिकं ययौ ॥

कृतांजलिपुटो भूत्वा ततः प्रोवाच सादरम् ॥ १६ ॥

का त्वमत्र विशालाक्षि प्राप्ता स्नातुं जलाशये ॥

मम नाशाय चार्वंगि तस्माच्छृणु वचो मम ॥ १७ ॥

अहं पुष्पशरो लोके प्रसिद्धश्चारुहासिनि ॥

विडंबनां मया नीता देवा अपि निजैः शरैः ॥ १८ ॥

मद्बाणेनाहतो रुद्रः स्वशरीरे नितंबिनीम् ॥

अर्द्धेन धारयामास त्यक्त्वा लज्जां सुदूरतः ॥ १९ ॥

ब्रह्मा मच्छरनिर्भिन्नः स्वसुतां चकमे ततः ॥

जनयामास तान्विप्रान्वालखिल्यांस्तथाविधान् ॥ २० ॥

अहिल्यां चकमे शक्रो गौतमस्य प्रियां सतीम् ॥

मद्बाणैः पीडितोऽतीव स्वर्गादेत्य धरातलम् ॥ २१ ॥

एवं देवा अपि क्षुण्णा मच्छरैर्ये महत्तराः ॥

किं पुनर्मानवाः सुभ्रूः कृमिप्रायाः सुचंचलाः ॥ २२ ॥

आकीटांतं जगत्सर्वमाब्रह्मांतं तथैव च ॥

विडंबनां परां प्राप्तं मच्छरैश्चारुहासिनि ॥ २३ ॥

अहं पुनस्त्वया भीरु नीतोऽवस्थामिमां शुभे ॥ २४ ॥

तस्माद्देहि महाभागे ममाद्य रतदक्षिणाम् ॥

यावन्न यांति संत्यज्य मम प्राणाः कलेवरात् ॥ ॥ २५ ॥

॥ सूत उवाच ॥ ॥

सापि तद्वचनं श्रुत्वा पतिव्रतपरायणा ॥

हन्यमाना विशेषेण तद्बाणैर्हृदये भृशम् ॥ २६ ॥

अनभिज्ञा च सा साध्वी कामधर्मस्य केवलम् ॥

तापसैः सह संवृद्धा नान्यं जानाति किंचन ॥ २७ ॥

वक्तुं तद्विषये यच्च प्रोच्यते कामपीडितैः ॥

अधोमुखाऽलिखद्भूमिमंगुष्ठेन स्थिता चिरम् ॥ २८ ॥

एतस्मिन्नन्तरे भानुः प्राप्तश्चास्तं गिरिं प्रति ॥

विहारसमये प्राप्त आहिताग्निर्निवेशने ॥ २९ ॥

हारीतोऽपि चिरं वीक्ष्य तन्मार्गं चाकृताशनः ॥

ततः स चिंतयामास कस्मात्सा चात्र नागता ॥ ३० ॥

स्नात्वा तीर्थवरे तस्मिन्दृष्ट्वा तां चन्द्रकूपिकाम्॥

कामेश्वरं च देवेशं कामदं सुखदं नृणाम् ॥ ३१ ॥

ततः शिष्यसमायुक्तो वीक्षमाण इतस्ततः ॥

तं देशं समनुप्राप्तो यत्र तौ द्वावपि स्थितौ ॥ ३२ ॥

आलपन्बहुधा कामो हन्यमानो निजैः शरैः ॥

सापि चैव विशेषेण व्रीडयाऽधोमुखी स्थिता ॥ ३३ ॥

स गुल्मांतरितः सर्वं तच्छ्रुत्वा कामजल्पितम् ॥

तस्याश्च तद्गतं भावं ततः कोपादुवाच सः ॥ ३४ ॥

यस्मात्पाप त्वया पत्नी ममैवं शरपीडिता ॥

अनभिज्ञा तथा साध्वी पतिधर्मपरायणा ॥

कुष्ठव्याधिसमायुक्तस्तस्माद्विप्रियदर्शनः ॥ ३५ ॥

त्वं भविष्यसि पापात्मन्मुक्तो दारैः स्वकैरपि ॥

साऽपि चैव विशेषेण व्रीडयाऽधोमुखी स्थिता ॥ ३६ ॥

एषापि च शिलाप्राया भविष्यति विचेतना ॥

त्वां दृष्ट्वा या सरागाऽभून्निजधर्मबहिष्कृता ॥ ३७ ॥

ततः प्रसादयामास तं कामः प्रणिपत्य च ॥

न ज्ञातेयं मया विप्र तव भार्येति सुन्दरी ॥ ३८ ॥

तेन प्रोक्ता विरुद्धानि वाक्यानि विविधानि च ॥

एतस्या नास्ति दोषोऽत्र मद्बाणैः पीडिता भृशम् ॥ ३९

सानुरागा परं जाता नोक्तं किंचिद्वचो मुने ॥

तस्मान्नार्हसि शापं त्वं दातुमस्याः कथंचन ॥ ४० ॥

ममास्त्येषो ऽपराधोऽत्र तस्मान्मे निग्रहं कुरु ॥

भूयोऽपि ब्राह्मणश्रेष्ठ अस्याः शापसमुद्भवम् ॥ ४१ ॥

अपि रुद्रादयो देवा मद्बाणेभ्यो द्विजोत्तम ॥

सोढुं शक्ता न ते यस्मात्तत्कथं स्यादियं शिला ॥ ४२ ॥

तथात्र त्रिविधं पापं प्रवदंति मनीषिणः ॥

मानसं वाचिकं चैव कर्मजं च तृतीयकम्॥

तदस्माकं द्विधा जातमेकं चास्या मुनीश्वर । ४३ ॥

भार्यायास्ते सुरूपायास्तस्मात्संपूर्णनिग्रहम् ॥

करिष्यसि न ते भीतिः काचिदस्ति परत्रजा ॥ ॥ ४४ ॥

मनस्तापाद्व्रजेत्पापं मानसं वाचिकं च यत् ॥

तस्य प्रसादनेनैव यस्योपरि विजल्पितम् ॥ ४५ ॥

प्रायश्चित्तैर्यथोक्तैश्च कर्मजं पातकं व्रजेत् ।

धर्मशास्त्रैः परिप्रोक्तं यतः सर्वैर्महामुने ॥ ४६ ॥

॥ हारीत उवाच ॥ ॥

अन्यत्र विषये तस्याः पातकं कामदेवते ॥

एतस्य तव धर्मस्य प्राधान्यं मनसः स्मृतम् ॥ ४७ ॥

तस्मादेवंविधा चेयं सदा स्थास्यति चाधम ॥

किं पुनः कुरु यत्कृत्यं नाहं वक्ष्यामि किंचन ॥ ४८ ॥

प्रथमं मनसा सर्वं चिंत्यते तदनंतरम् ॥

ततः प्रजल्पते वाचा क्रियते कर्मणा ततः ॥ ४९ ॥

प्रमाणं हि मनस्तस्मात्सर्वकृत्येषु सर्वदा ॥

एतस्मात्कारणात्पूर्णो मयाऽस्या निग्रहः कृतः ॥ ५० ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा मुनिश्रेष्ठो हारीतः स्वाश्रमं ययौ ॥

सापि पूर्णकला जाता शिलारूपा च तत्क्षणात् ॥ ५१ ॥

कामदेवोऽपि कुष्ठेन ग्रस्तो रौद्रेण च द्विजाः ॥

शीर्णनासांघ्रिपाणिश्च नेत्राणामप्रियोऽभवत्॥ ५२ ॥
अथ कामे निरुत्साहे संजाते द्विजसत्तमाः ॥
व्याधिग्रस्ते जगत्यस्मिन्सृष्टिरोधो व्यजायत ॥५३॥
केवलं क्षीयते लोको नैव वृद्धिं प्रगच्छति ॥
स्वेदजा येऽपि जीवाः स्युस्तेपि याताः परिक्षयम् ॥ ५४ ॥
एतस्मिन्नंतरे देवाः सर्वे चिंतासमाकुलाः ॥
किमिदं क्षीयते लोको जलस्थैः स्थलजैः सह ॥५५॥
न दृश्यते क्वचिद्बालः कोऽपि कश्चित्कथंचन ॥
न च गर्भवती नारी कच्चित्क्षेमं स्मरस्य च ॥ ॥५६॥
ततस्तं व्याधिना ग्रस्तं ज्ञात्वात्र क्षेत्रसंश्रयम् ॥
आजग्मुस्त्वरिताः सर्वे व्याकुलेनांतरात्मना॥५७॥
कामेश्वरपुरस्थं च तं दृष्ट्वा कुसुमायुधम्॥
अत्यंतविकृताकारं चिंतयानं महेश्वरम् ॥ ५८ ॥
ततः प्रोचुः सुदुःखार्ताः किमिदं कुसुमायुध ॥
निरुत्साहः समुत्पन्नः कुष्ठव्याधिसमाकुलः ॥५९॥
ततश्चाधोमुखो जातो लज्जया परया वृतः ॥
प्रोवाच शापजं सर्वं हारीतस्य विचेष्टितम् ॥ ६.१३४.६० ॥
ततस्ते विबुधाः प्रोचुः पातकं यद्गिरा कृतम् ॥३
तत्तस्याराधनात्सर्वं संक्षयं यात्यसंशयम् ॥ ६१ ॥
तस्मादेतां शिलारूपां त्वमाराधय चित्तज ॥
येन कुष्ठः क्षयं याति ततस्तेजोऽभिवर्धते ॥ ६२ ॥
जगति स्यान्महासृष्टिर्देवकृत्यं कृतं भवेत् ॥
न तेऽस्ति कायजं पापं यतो मुक्त्वा प्रवाचिकम् ॥ ६३ ॥
अत्र कुण्डे त्वदीयेऽन्यो यः स्नात्वा श्रद्धयान्वितः ॥
एनां पापविनिर्मुक्तां शिलां वै मानवः स्पृशेत् ॥ ६४ ॥
कुष्ठव्याधिसमोपेतः कायोत्थेनापि कर्मणा ॥
सोऽपि व्याधिविनिर्मुक्तो भविष्यति गतज्वरः ॥ ६५ ॥
एतत्सौभाग्यकूपं च लोके ख्यातं जलाशयम् ॥

भविष्यति न संदेहः सर्वरोगक्षयावहम् ॥ ६६ ॥

दद्रूणि दुर्विभूतानि तथान्याश्च विचर्चिकाः ॥

अत्र स्नातस्य यास्यंति दृष्ट्वैतां सद्य एव हि ॥ ६७ ॥

एवमुक्त्वाथ ते देवाः प्रजग्मुस्त्रिदशालयम् ॥

कामदेवोऽपि तत्रस्थस्तस्याः पूजामथ व्यधात् ॥ ६८ ॥

ततश्च समतिक्रांते मासमात्रे द्विजोत्तमाः ॥

तादृग्रूपः स संजातो यादृगासीत्पुरा स्मरः ॥ ६९ ॥

ततश्चायतनं तस्याः कृत्वा श्रद्धासमन्वितः ॥

जगाम वांछितं देशं सृष्ट्यर्थं यत्नमास्थितः ॥ ६.१३४.७० ॥

सापि नम्रमुखी तादृक्तेन शप्ता तथैव च ॥

संजाता खण्डकाकारा तेन खण्डशिला स्मृता ॥ ७१ ॥

यस्तां पूजयते भक्त्या त्रयोदश्यां तथैव च ॥

नापवादो भवेत्तस्य परदारसमुद्भवः ॥ ७२ ॥

कामिन्याश्च विशेषेण प्राहैतच्छंकरात्मजः ॥

कार्तिकेयो द्विजश्रेष्ठाः सत्यमेतन्मयोदितम् ॥ ७३ ॥

तथा कामेश्वरं देवं कामदेवप्रतिष्ठितम् ॥

त्रयोदश्यां समाराध्य सर्वान्कामानवाप्नुयात् ॥ ७४ ॥

रतिप्रीतिसमायुक्तः स्थितस्तत्र स्मरस्तथा ॥

मूर्तो ब्राह्मणशार्दूलाः श्रेष्ठं प्रासादमाश्रितः । ७५ ।

विरूपो दुर्भगो यो वा त्रयोदश्यां समाहितः ॥

यस्तं कुंकुमजैः पुष्पैः संपूजयति मानवः ॥ ७६ ॥

स सौभाग्यसमायुक्तो रूपवांश्च प्रजायते ॥

या नारी पतिना त्यक्ता सपत्नीजनसंवृता ॥ ७७ ॥

तं देवं सुकलत्राढ्यं तथैव परिपूजयेत् ॥

त्रयोदश्यां द्विजश्रेष्ठाः केसरैः कुंकुमोद्भवैः ॥ ७८ ॥

सा सौभाग्यवती विप्रा जायते च प्रजावती ॥

धनधान्यसमृद्धा च दुःखशोकविवर्जिता ॥

दोषैः सर्वैर्विनिर्मुक्ता शंसिता धरणीतले ॥ ७९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये खंडशिलासौभाग्यकूपिकोत्पत्तिमाहात्म्यवर्णनं नाम चतुस्त्रिंशदुत्तरशततमोध्यायः ॥ १३४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३५



॥ सूत उवाच ॥ ॥

तथान्यापि च तत्रास्ति दीर्घिकाख्या सुशोभना ॥

सरसी लोकविख्याता सर्वपातकनाशनी ॥ १ ॥

यस्यां स्नातो नरः सम्यग्भास्करस्योदयं प्रति ॥

ज्येष्ठशुक्लचतुर्दश्यां मुच्यते सर्वपातकैः ॥२॥

आसीत्पूर्वं द्विजो वीरशर्मनामातिविश्रुतः ॥

वेदविद्याव्रतस्नातो वर्धमाने पुरोत्तमे ॥ ३ ॥

तस्य कन्या समुत्पन्ना कदाचिल्लक्षणाच्च्युता ॥

अतिदीर्घा प्रमाणेन जनहास्यविवर्द्धिनी ॥ ४ ॥

ततः सा यौवनं प्राप्ता तद्रूपापि कुमारिका ॥

न कश्चिद्वरयामास शास्त्रवाक्यमनुस्मरन् ॥ ५ ॥

अतिसंक्षिप्तकेशा या अतिदीर्घातिवामना ॥

उद्वाहयति यः कन्यां पुरुषः काममोहितः ॥ ६ ॥

षण्मासाभ्यंतरे मृत्युं स प्राप्नोति नरो ध्रुवम् ॥

एतस्मात्कारणात्सर्वे तां त्यजंति कुमारिकाम् ॥ ७ ॥

पुरुषा अतिदीर्घत्वयुक्तां वीक्ष्य समंततः ॥

ततो वैराग्यमापन्ना तपस्तेपेऽतिदारुणम्॥ ८ ॥

चांद्रायणानि कृच्छ्राणि तया चीर्णान्यनेकशः ॥

पाराकाणि यथोक्तानि तथा सांतपनानि च ॥ ९ ॥

व्रतं यद्विद्यते किंचिन्नियमः संयमस्तथा ॥

अन्यच्चापि शुभं कृत्यं तत्सर्वं च तया कृतम् ॥ ६.१३५.१० ॥

एवं तस्या व्रतस्थाया जरा सम्यगुपस्थिता ॥

तथापि तेजसो वृद्धिर्ववृधे तपसा कृता ॥ ११ ॥

सा च नित्यं महेन्द्रस्य सभां यात्यतिकौतुकात् ॥

देवर्षीणां मतं श्रोतुं देवतानां विशेषतः ॥ १२ ॥

यदा सा स्वासनं त्यक्त्वा प्रयाति स्वगृहोन्मुखी ॥
तदैवाभ्युक्षणं चक्रुस्तत्र शक्रस्य किंकराः ॥ १३ ॥
तथान्यदिवसे दृष्टं क्रियमाणं तया हि तत् ॥
अभ्युक्षणं स्वकीये च आसने द्विजसत्तमाः ॥ ॥ १४ ॥
ततः कोपपरीतांगी दीर्घिका सा कुमारिका ॥
त्रिशाखां भृकुटीं कृत्वा ततः प्राह पुरंदरम् ॥ १५ ॥
किं दोषं वीक्ष्य मे शक्र प्रोक्षितं चासनं त्वया ॥
परद्वा रकृतं दोषं किं मयैतत्कृतं क्वचित् ॥ १६ ॥
तस्मान्मे पातकं ब्रूहि नो चेच्छापं सुदारुणम् ॥
त्वयि दास्याम्यसंदिग्धं सत्ये नात्मानमालभे ॥ १७ ॥
॥ इन्द्र उवाच ॥ ॥
न ते दीर्घेऽस्तिदोषोत्र कश्चिदेकं विना शुभे ॥
तेनाथ क्रियते चैतदासनस्याभिषेचनम् ॥ ॥ १८ ॥
त्वं कुमार्यपि संप्राप्ता ऋतुकालं विगर्हिता ॥
तेन दोषं त्वमापन्ना नान्यदस्तीह कारणम् ॥ १९ ॥
तस्मादद्यापि त्वां कश्चिदुद्वाहयति तापसः ॥
त्वं तं वरय भर्त्तारं येन गच्छसि मेध्यताम् ॥ ६.१३५.२० ॥
ततश्च लज्जया युक्ता सा तदा दीर्घकन्यका ॥
गत्वा भूमितले तूर्णं वर्धमाने पुरोत्तमे ॥ २१ ॥
ततः फूत्कर्तुमारब्धा चत्वरेषु त्रिकेषु च ॥
उच्छ्रित्य दक्षिणं पाणिं भ्रममाणा इतस्ततः ॥ २२ ॥
यदि कश्चिद्द्विजो जात्या करोति मम सांप्रतम् ॥
पाणिग्राहं तपोऽर्द्धस्य श्रेयो यच्छामि तस्य च ॥२३॥
एवं तां प्रविजल्पन्तीं श्रुत्वा लोका दिवानिशम् ॥
उन्मत्तामिति मन्वाना हास्यं चक्रुः परस्परम् ॥ २४ ॥
ततः कतिपयाहस्य प्रकुर्वंती च दीर्घिका ॥
कुष्ठव्याधिगृहीतेन ब्राह्मणेन परिश्रुता ॥ २५ ॥
ततः प्रोवाच मन्दं स समाहूय सुदुःखिताम् ॥ २६ ॥

अहं त्वामुद्वहाम्यद्य कृत्वा पाणिग्रहं तव ॥
यदि मद्वचनं सर्वं सर्वदैवानुतिष्ठसि ॥ २७ ॥ ॥
॥ कुमारिकोवाच ॥ ॥
करिष्यामि न संदेहस्तव वाक्यं द्विजाधिप ॥
कुरु पाणिग्रहं मेऽद्य विधिदृष्टेन कर्मणा ॥ २८ ॥
॥ सूत उवाच ॥ ॥
ततस्तस्याः कुमार्याः स पाणिं जग्राह दक्षिणम् ॥
गृह्योक्तेन विधानेन देवाग्निगुरुसंनिधौ ॥ २९ ॥
अथ सा प्राह भूयोऽपि विवाहकृतमंगला ॥
आदेशं देहि मे नाथ यं करोमि तवाधुना ॥ ६.१३५.३० ॥
॥ पतिरुवाच ॥ ॥
अष्टषष्टिषु तीर्थेषु स्नातुमिच्छामि सुन्दरि ॥
साहाय्येन त्वदीयेन यदि शक्नोषि तत्कुरु ॥ ३१ ॥
बाढमित्येव सा प्रोच्य ततस्तूर्णं पतिव्रता ॥
तत्प्रमाणं दृढं कृत्वा रम्यं वंशकुटीरकम् ॥ ३२ ॥
मृदु तूलसमायुक्तं ततः प्राह निजं पतिम् ॥
कृतांजलिपुटा भूत्वा प्रहृष्टेनान्तरात्मना ॥ ३३ ॥
एतत्तव कृते रम्यं कृतं वंशकुटीरकम् ॥
मम नाथारुहाशु त्वं येन कृत्वाथ मूर्धनि ॥
नयामि सर्वतीर्थेषु क्षेत्रेषु सुशुभेषु च ॥ ३४ ॥
ततः कुष्ठी प्रहृष्टात्मा शनैरुत्थाय भूतलात् ॥
तया चोद्धृतदेहः सन्सुप्तो वंशकुटीरके ॥ ३५ ॥
ततस्तं मस्तके कृत्वा सर्वतीर्थे यथासुखम् ॥
सर्वक्षेत्रेषु बभ्राम स्नापयन्ती निजं पतिम् ॥ ३६ ॥
यथा यथा स चक्रेऽथ स्नानं तीर्थेषु कुष्ठभाक् ॥
तथातथास्य गात्रेषु तेजो वृद्धिं प्रगच्छति ॥३७॥
ततः क्रमेण सा साध्वी भ्रममाणा महीतले ॥
हाटकेश्वरजे क्षेत्रे संप्राप्ता रजनी मुखे ॥ ३८ ॥

क्लान्ता वैक्लव्यमापन्ना भाराक्रान्ता पतिव्रता ॥
निद्रान्धा निश्वसन्ती च प्रस्खलन्ती पदेपदे ॥ ३९ ॥
अथ तत्र प्रदेशे तु माण्डव्यो मुनिपुंगवः ॥
शूलारोपितगात्रस्तु संतिष्ठति सुदुःखितः ॥ ६.१३५.४० ॥
अथ सा तं समासाद्य शूलं रात्रौ पतिव्रता ॥
निजगात्रेण भारार्त्ता गच्छमाना महासती ॥ ४१ ॥
तया संचालितः सोऽथ मांडव्यो मुनिपुंगवः ॥
परां पीडां समासाद्य ततः प्राह सुदुःखितः ॥४२॥
केनेदं पाप्मना शल्यं ममांतः परिचालितम् ॥
येनाहं दुःखयुक्तोऽपि भूयो दुःखास्पदीकृतः ॥ ४३ ॥
॥ दीर्घिकोवाच ॥ ॥
न मया त्वं महाभाग निद्रोपहतया दृशा ॥
दृष्टस्तेन परिस्पृष्टो ह्यस्पृश्यः पापकृत्तमः ॥ ४४ ॥
न त्वया सदृशश्चान्यः पापात्मास्ति धरातले ॥
शिरस्युद्भूतशूलोऽपि यो मृत्युं नाधिगच्छति ॥ ॥ ४५ ॥
अहं पतिव्रता मूढ वहामि शिरसा धृतम् ॥
तीर्थयात्राकृते कांतं विकलांगं सुवल्लभम् ॥ ४६ ॥
कस्मात्तस्यास्तिरस्कारं मम यच्छसि निष्ठुरम्॥
अज्ञातां मूढबुद्धिः सन्विशेषान्मानुषोद्भवाम् ॥ ४७ ॥
॥ माण्डव्य उवाच ॥ ॥
अहं यादृक्त्वया प्रोक्तस्तादृगेव न संशयः ॥
पापात्मा मूढबुद्धिश्च अस्पृश्यः सर्वदेहिनाम् ॥ ४८ ॥
यदि प्रातस्तवायं च भर्त्ता जीवति निष्ठुरे ॥
येन मे जनिता पीडा प्राणांतकरणी दृढा ॥ ४९ ॥
तस्मादेष तवाभीष्टः स्पृष्टः सूर्यस्य रश्मिभिः ॥
मया शप्तः परित्यागं जीवितस्य करिष्यति ॥ ६.१३५.५० ॥
॥ दीर्घिकोवाच ॥ ॥
यद्येवं मरणं पत्युः प्रभाते संभविष्यति ॥

मदीयस्य ततः प्रातर्नोद्गमिष्यति भास्करः ॥ ५१ ॥

एवमुक्त्वा ततः साथ निषसाद धरातले ॥

भूमौ तद्भर्तृसंयुक्तं मुक्त्वा वंशकुटीरकम् ॥ ५२ ॥

अथ तां प्राह कुष्ठी स पिपासा संप्रवर्तते ॥

तस्मात्तोयं समानेहि पानार्थमतिशीतलम् ॥ ५३ ॥

तथैव सा समाकर्ण्य भर्तुरादेशमुत्सुका ॥

इतस्ततश्च बभ्राम जलार्थं न प्रपश्यति ॥

न च निर्याति दूरं सा त्यक्त्वारण्ये तथाविधम् ॥ ५४ ॥

भर्तारं श्वापदोत्थं च भयं हृदि वितन्वती ॥

उपविश्य ततो भूमौ स्पृष्ट्वा पादौ पतेस्तदा ॥

प्रोवाच दीर्घिका वाक्यं तारवाक्येन दुःखिता ॥ ५५ ॥

पतिव्रता त्वमाचीर्णं यदि सम्यङ्मया स्फुटम् ॥

तेन सत्येन भूपृष्ठान्निर्गच्छतु जलं शुभम् ॥ ५६ ॥

एवमुक्त्वा जघानाथ पादाघातेन मेदिनीम् ॥

कान्तभक्तिं पुरस्कृत्य तस्य जीवितवांछया ॥ ५७ ॥

एतस्मिन्नन्तरे तोयं पादाघातादनन्ततरम् ॥

निष्क्रांतं निर्मलं स्वादु माण्डव्यस्य च पश्यतः ॥ ५८ ॥

ततस्तं स्नापयामास तस्मिंस्तोये श्रमातुरम् ॥

अपाययत्ततः पश्चात्स्वयं स्नात्वा पपौ जलम् ॥ ५९ ॥

एतस्मिन्नंतरे सूर्यः पतिव्रतकृताद्भयात् ॥

नाभ्युदेति समुत्पन्नस्ततः कालात्ययो महान् ॥ ६.१३५.६० ॥

अथ रात्रिं समालोक्य दीर्घां ये कामुका जनाः ॥

ते सर्वे तुष्टिमापन्नास्तथा च कुल स्त्रियः ॥ ६१ ॥

कौशिका राक्षसाश्चापि चोरा जाराश्च ये नराः ॥

ते सर्वे प्रोचुः संहृष्टाः समालिंग्य परस्परम् ॥ ६२॥

अद्यास्माकं विधिस्तुष्टो भगवान्मन्मथस्तथा ॥

येन दीर्घा कृता रात्रिर्नाशं नीतश्च भास्करः ॥ ६३ ॥

ये पुनर्ब्राह्मणाः शांता यज्ञकर्मसमुद्यताः ॥

ते सर्वे दुःखमापन्नाः सूर्योदयविनाकृताः ॥ ६४ ॥
न कश्चिद्यजनं चक्रे याजनं न च सद्द्विजः ॥
न श्राद्धं न च संकल्पं न स्वाध्यायं कथंचन ॥ ॥ ६५ ॥
न स्नानं न च दानं च लोकयात्रां विशेषतः ॥
व्यवहारं न कृत्यं च किंचिद्धर्मसमुद्भवम् ॥ ६६ ॥
एतस्मिन्नन्तरे देवाः सर्वे शक्रपुरोगमाः ।
परं दौःस्थ्यं समापन्ना यज्ञभागविवर्जिताः ॥ ६७ ॥
ततो भास्करमासाद्य ऊचुर्दुःखसमन्विताः ॥
कस्मान्नोद्गमनं देव प्रकरोषि दिवाकर ॥ ॥ ६८ ॥
एतत्त्वया विना सर्वं जगद्व्याकुलतां गतम् ॥ ६९ ॥
तस्माल्लोकहितार्थाय त्वमुद्गच्छ यथापुरा ॥
अग्निष्टोमादिका यज्ञा वर्तंते येन भूतले ॥ ६.१३५.७० ॥
॥ सूर्य उवाच । ॥
पतिव्रतासमादेशात्त्यक्तश्चाभ्युदयो मया ॥
तस्माद्गत्वा सुराः सर्वे तां वदंतु कृते मम ॥ ७१ ॥
येन तद्वाक्यमासाद्य प्रवर्त्तामि यथासुखम् ॥
अन्यथा मां शपेत्क्रुद्धा नूनं सा हि पतिव्रता ॥ ७२ ॥
एवं सा तपसा युक्ता प्रोत्कृष्टं हि सुरोत्तमाः ॥
पतिव्रतात्वमाधत्ते तथान्यदपरं महत् ॥ ७३ ॥
कस्तस्या वचनं शक्तः कर्तुमेवमतोऽन्यथा ॥
एतस्मात्कारणाद्भीतो नोद्गच्छामि कथंचन॥ ७४ ॥
न तत्क्रतुसहस्रेण यजंतः प्राप्नुयुः फलम् ॥
पतिव्रतात्वमापन्ना यत्स्त्री विंदति केवलम् ॥ ७९ ॥
ततस्ते विबुधाः सर्वे गत्वा तत्क्षेत्रमुत्तमम् ॥
प्रोचुस्तां दीर्घिकां वाक्यैर्मृदुभिः पुरतः स्थिताः ॥ ७६ ॥
त्वया पतिव्रते सूर्यो यन्निषिद्धो न तत्कृतम् ॥
शुभं यतो हताः सर्वा भूतले शोभनाः क्रियाः ॥७७॥
तस्मादुद्गच्छतु प्राज्ञे त्वद्वाक्यात्तीक्ष्णदीधितिः ॥

यज्ञक्रिया विशेषेण येन वर्तंति भूतले ॥ ७८ ॥

॥ पतिव्रतोवाच ॥

अयं च मे पतिः सद्यः प्राणेभ्योऽपि च यः प्रियः ॥

सोऽभ्येति निधनं देवाः प्रोद्गते रविमंडले ॥ ७९ ॥

शप्तश्चानेन दुष्टेन मांडव्येन सुपाप्मना ॥

कार्यं विनापि निर्दिष्टस्तद्ब्रूयां भास्करं कथम् ॥ ६.१३५.८० ॥

उदयार्थं न मे यज्ञैः कार्यं किंचिन्न चापरैः ॥

श्राद्धदानादिकैः कृत्यैः संजातैर्दयितं विना ॥ ८१ ॥

॥ सूत उवाच ॥ ॥

ततस्ते विबुधाः सर्वे समालोक्य परस्परम् ॥

चिरकालं सुदुःखार्तास्तामूचुर्विनयान्विताः ॥ ८२ ॥

उद्गच्छतु रविर्भद्रे तवायं दयितः पतिः ॥

प्रयातु निधनं सद्यो भूयादेष मुनीश्वरः ॥ ८३ ॥

पुनर्जीवापयिष्यामो वयमेनमपि द्रुतम् ॥

मृत्युमार्गमनुप्राप्तं त्वत्कृते पतिवत्सले ॥ ८४ ॥

पञ्चविंशतिवर्षीयं कामदेवमिवापरम् ॥

त्वं द्रक्ष्यसि सुदीप्तांगं सर्वलक्षणलक्षितम् ॥ ८५ ॥

भूत्वा पंचदशाब्दीया पद्मपत्रायतेक्षणा ॥

मर्त्यलोके सुखं सम्यक्त्वेच्छया साधयिष्यसि ॥ ८६ ॥

एषोऽपि मुनिशार्दूलो विपाप्मा सांप्रतं शुभे ॥

शूलवेधेन निर्मुक्तः सुखभागी भवत्क्लम॥ ॥ ८७ ॥

॥ सूत उवाच ॥ ॥

बाढमित्येव च प्रोक्ते तया स द्विजसत्तमाः ॥

उद्गतो भगवान्सूर्यस्तत्क्षणादेव वेगतः ॥ ८८ ॥

ततः सूर्यांशुसंस्पृष्टः स मृतश्च सुकुष्ठभाक् ॥

विबुधानां करैः स्पृष्टः पुनरेव समुत्थितः ॥ ८९ ॥

पंचविंशतिवर्षीयः कामदेव इवापरः ॥

संस्मरन्पूर्विकां जातिं सर्वां हर्ष समन्वितः ॥ ६.१३५.९० ॥

दीर्घिकापि परिस्पृष्टा स्वयं देवेन शंभुना ।

संजाता यौवनोपेता दिव्यलक्षणलक्षिता ॥ ९१ ॥

पद्मपत्रेक्षणा रम्या चन्द्रबिम्बसमानना ॥

मध्ये क्षामा सुगौरांगी पीनोन्नतपयोधरा ॥ ९२ ॥

ततस्तं मुनिशार्दूलं शूलाग्रादवतार्य च ॥

प्रोचुश्च विबुधश्रेष्ठाः सादरं हर्षसंयुताः ॥९३॥

एतत्सत्यं कृतं वाक्यं मुने तव यथोदितम्॥

मृतोऽपि ब्राह्मणः कुष्ठी संस्पृष्टो रविरश्मिभिः॥९४॥

पुनरुत्थापितोऽस्माभिः कृतश्च तरुणः पुनः॥

अनया भार्यया सार्धं तस्मात्त्वं स्वाश्रमं व्रज ॥९५॥

नास्माकं दर्शनं व्यर्थं कथंचिदपि जायते ॥

तस्मात्प्रार्थय यच्चित्ते तव नित्यं समाश्रितम् ॥९६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पतिव्रतावरलाभोनाम पञ्चत्रिंशदुत्तरशतत मोऽध्यायः ॥ १३५ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३६

https://sa.wikisource.org/s/g20
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

मांडव्य उवाच ॥ ॥

ग्रहीष्यामि सुरश्रेष्ठा वरं युष्मत्समुद्रवम् ॥

परं मे निर्णयं चैकं धर्मराजः प्रचक्षतु॥ । १ ॥

सर्वेषां प्राणिनां लोके कृतं कर्म शुभाशुभम् ॥

उपतिष्ठति नान्यत्र सत्यमेतत्सुरोत्तमाः ॥ २ ॥

मयाप्यत्र परे चापि किं कृतं पातकं च यत् ॥

ईदृशीं वेदनां प्राप्तो न च मृत्युं कथचन ॥ ३ ॥

॥ धर्मराज उवाच ॥ ॥

अन्यदेहे त्वया विप्र बालभावेन वर्तता ॥

शूलाग्रेण सुतीक्ष्णेन काये विद्धो बकः क्षितौ ॥ ४ ॥

नान्यत्कृतमपि स्वल्पं पातकं किंचिदेव हि ॥

एतस्मात्कारणादेषा व्यथा संसेविता द्विज ॥ ५ ॥ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा भृशं क्रोधसमन्वितः ॥

ततस्तं प्राह मांडव्यो धर्मराजं पुरः स्थितम् ॥ ६ ॥

अस्य स्वल्पापराधस्य यस्माद्भूयान्विनिग्रहः ॥

कृतस्त्वया सुदुर्बुद्धे तस्माच्छापं गृहाण मे ॥ ७ ॥

त्वं प्राप्य मानुषं देहं शूद्रयोनौ व्यवस्थितः ॥

जातिक्षयकृतं दुःखं प्रभूतं सेवयिष्यसि ॥ ८ ॥

तथा कृता मयैषाद्य व्यवस्था सर्वदेहिनाम् ॥

अष्टमाद्वत्सरादूर्ध्वं कर्मणा गर्हितेन च ॥

प्रग्रहीष्यति वै जंतुः पुरुषो योषिदेव वा ॥ ९ ॥

एवमुक्त्वा स मांडव्यो धर्मराजं ततः परम् ॥

प्रस्थितो रोषनिर्मुक्तो वांछिताशां प्रति द्विजाः ॥ 6.136.१० ॥

अथ तं प्रस्थितं दृष्ट्वा प्रोचुः सर्वे दिवौकसः ॥
धर्मराजकृते व्यग्राः श्रुत्वा शापं तथाविधम् ॥ ११ ॥
॥ देवा ऊचुः ॥ ॥
भगवन्पापसक्तस्य धर्मराजस्य केवलम्॥
न त्वमर्हसि शापेन शूद्रं कर्तुं कथंचन ॥ १२ ॥
प्रसादं कुरु तस्मात्त्वमस्य धर्मपतेर्द्विज ॥
अस्माकं वचनात्सद्यः प्रार्थयस्व तथा वरम् ॥ ॥ १३ ॥
॥ मांडव्य उवाच ॥ ॥
नान्यथा जायते वाणी या मयोक्ता सुरोत्तमाः ॥
अवश्यं धर्मराजोऽयं शूद्रयोनौ प्रयास्यति ॥ १४ ॥
परं नैवास्य संतानं तस्यां योनौ भविष्यति ॥
संप्राप्स्यति च भूयोऽपि धर्मराजत्वमुत्तमम् ॥ १५ ॥
आराधयतु चाव्यग्रः क्षेत्रेऽत्रैव त्रिलोचनम् ॥
प्रसादात्तस्य देवस्य शीघ्रं मृत्युमवाप्स्यति ॥ १६ ॥
तथा देयो वरो मह्यं भवद्भिर्यदि स्वर्गपाः ॥
तदेषा शूलिकाऽस्माकं स्पर्शाद्भूयात्सुधर्मदा ॥ ॥ १७ ॥
॥ देवा ऊचुः ॥ ॥
एनां यः प्रातरुत्थाय स्पर्शयिष्यति शूलिकाम् ॥
पातकात्स विमुक्तो वा इह लोके भविष्यति ॥ १८ ॥
एवमुक्त्वा मुनिं तं ते देवाः शक्रपुरोगमाः ॥
ततस्तां सादरं प्राहुः सह भर्त्रा पतिव्रताम् ॥ १९ ॥
त्वमपि प्रार्थयाभीष्टमस्मत्तो वरवर्णिनि ॥
यत्ते चित्ते स्थितं नित्यं नादेयं विद्यतेऽत्र नः ॥ 6.136.२० ॥
॥ पतिव्रतोवाच ॥ ॥
येयं मयाकृता गर्ता स्थानेऽत्र त्रिदशेश्वराः ॥
मन्नाम्ना ख्यातिमायातु दीर्घिकेति जगत्त्रये ॥ २१ ॥
॥ देवा ऊचुः ॥ ॥
अद्यप्रभृति लोकेऽत्र गर्त्तेयं तव शोभने ॥

दीर्घिकेति सुविख्याता भविष्यति जगत्त्रये ॥ २२ ॥

येऽस्यां स्नानं करिष्यंति प्रातरुत्थाय मानवाः ॥

सर्वपापविनिर्मुक्तास्ते भविष्यंति तत्क्षणात् ॥ २३ ॥

कन्याराशिगते सूर्ये संप्राप्ते पंचमीदिने ॥

येऽत्र स्नानं करिष्यंति श्रद्धया सहिता नराः ॥ २४ ॥

अपुत्रास्ते भविष्यंति सपुत्रा वंशवर्धनाः ॥

एवमुक्त्वाऽथ तां देवा जग्मुः स्वर्गं द्विजोत्तमाः॥ ॥ २५ ॥

पतिव्रतापि तेनैव सह कांतेन सुन्दरी ॥

सेवयामास कल्याणी स्मरसौख्यमनुत्तमम् ॥ २६ ॥

पर्वतेषु सुरम्येषु नदीनां पुलिनेषु च ॥

उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥ २७ ॥

ततो वयसि संप्राप्ते पश्चिमे कालपर्ययात् ।

तदेवात्मीयसत्तीर्थं सेवयामास सादरम् ॥ २८ ॥

ततो देहं परित्यक्त्वा स्वकांतं वीक्ष्य तं मृतम् ॥

तत्र तोये जगामाथ ब्रह्मलोकं पतिव्रता । २९ ॥

एतद्वः सर्वमाख्यातं दीर्घिकाख्यानमुत्तमम् ॥

यस्य संश्रवणादेव नरः पापात्प्रमुच्यते ॥ 6.136.३० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वर क्षेत्रमाहात्म्ये दीर्घिकोत्पत्तिमाहात्म्यवर्णनंनाम षट्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३६

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३७



॥ ऋषय ऊचुः ॥ ॥

केनासौ मुनिशार्दूलो मांडव्यः सुमहातपाः ॥

शूलायां स्थापितः केन कारणेन च नो वद ॥ १ ॥

॥ सूत उवाच ॥ ॥

स मांडव्यो मुनिः पूर्वं तीर्थयात्रां समाचरन् ॥

अस्मिन्क्षेत्रे समायातः श्रद्धया परया युतः ॥ २ ॥

विश्वामित्रीयमासाद्य सत्तीर्थं पावनं महत् ॥

पितॄणां तर्पणं चक्रे भास्करं प्रति स व्रती ॥ ३ ॥

जपन्विभ्राडिति श्रेष्ठं सूक्तं भास्करवल्लभम् ॥

एतस्मिन्नंतरे चौरो लोप्त्रमादाय कस्यचित् ॥ ४ ॥

कोपि तत्र समायातः पृष्ठे लग्नैर्जनैर्द्विजाः ॥

ततश्चौरोऽपि तं दृष्ट्वा मौनस्थं मुनिसत्तमम् ॥ ५ ॥

लोप्त्रं मुक्त्वा तदग्रेऽथ प्रविवेश गुहांतरे ॥

एतस्मिन्नंतरे प्राप्तास्ते जना लोप्त्रहेतवे ॥ ६ ॥

दृष्ट्वा लोप्त्रं तदग्रस्थं तमूचुर्मुनिपुंगवम् ॥

मार्गेणानेन चायातो लोप्त्रहस्तो मलिम्लुचः ॥

ब्रूहि शीघ्रं महाभाग केन मार्गेण निर्गतः ॥ ७ ॥

स च जानन्नपि प्राज्ञो गुहासंस्थं मलिम्लुचम् ॥

न किंचिदपि चोवाच मौनव्रत परायणः ॥ ८ ॥

असकृत्प्रोच्यमानोऽपि परचिंतासमन्वितः ॥

यदा प्रोवाच नो किंचित्स रक्षंश्चौरजीवितम् ॥ ९ ॥

ततस्तैर्मंत्रितं सर्वैरेष नूनं मलिम्लुचः ॥

संप्राप्तः पृष्ठतोऽस्माभिर्मुनिरूपो बभूव ह ॥ ६.१३७.१० ॥

अविचार्य ततः सर्वैराभीरैस्तैर्दुरात्मभिः॥

शूलीमारोपितः सद्यो नीत्वा किंचिद्वनांतरम् ॥ ११ ॥

एवं प्राप्ता तदा शूली मुनिना तेन दारुणा ॥

पूर्वकर्मविपाकेन दोषहीनेन धीमता ॥१२॥

इतिश्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मांडव्यशूलीप्राप्तिवृत्तान्तवर्णनंनाम सप्तत्रिंशदुत्तरशततमोक्ययायः ॥ १३७ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३८

https://sa.wikisource.org/s/h0m
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ॥ ऋषय ऊचुः ॥ ॥

किं कृतं धर्मराजेन तपोध्यानादिकं च यत्॥

मांडव्यशापनाशाय तदस्माकं प्रकीर्तय ॥ १ ॥

॥ सूत उवाच ॥ ॥

मांडव्य शापमासाद्य धर्मराजः सुदुःखितः ॥

तपस्तेपे द्विजश्रेष्ठास्तस्मिन्क्षेत्रे व्यवस्थितः ॥ २ ॥

प्रासादं देवदेवस्य संविधाय कपर्दिनः ॥

अव्यग्रं पूजयामास पुष्पधूपानुलेपनैः ॥ ३ ॥

ततः कालेन महता तुष्टस्तस्य महेश्वरः ॥

प्रोवाच वरदोऽस्मीति प्रार्थयस्व यदीप्सितम् ॥ ४ ॥

॥ धर्मराज उवाच ॥ ॥

अहं देव पुरा शप्तो मांडव्येन महात्मना ॥

स्वधर्मे वर्तमानोऽपि सर्वदोषविवर्जितः ॥ ५ ॥

कुपितेन च तेनोक्तं शूद्रयोनौ भविष्यसि ॥ ६ ॥

तत्रापि च महद्दुःखं ज्ञातिनाशसमुद्रवम् ॥

मच्छापजनितं सद्यो जातिजं समवाप्स्यसि ॥ ७ ॥

तस्मात्त्राहि सुरश्रेष्ठ तस्या योनेः सकाशतः ॥

कथं चैतद्विधो भूत्वा तस्यां जन्म करोम्यहम् ॥८॥

तत्रापि च महदुःखं ज्ञातिनाशसमुद्भवम् ॥

एतदर्थे सुरश्रेष्ठ मया चाराधितो भवान् ॥९॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

न तस्य सन्मुनेर्वाक्यं शक्यते कर्तुमन्यथा ॥

तस्माच्छूद्रोऽपि भूत्वा त्वं न संतानमवाप्स्यसि ॥ ६.१३८.१० ॥

ज्ञातिक्षयं प्रदृष्ट्वापि नैव दुःखमवाप्स्यसि ॥

यतो निषिध्यमानापि न करिष्यंति ते वचः ॥ ११ ॥

एतस्मात्कारणाच्चित्ते न ते दुःखं भविष्यति ॥

ज्ञातिजं धर्मराजैतत्सत्यमेव मयोदितम् ॥ १२ ॥

स्थित्वा वर्षशतं प्राज्ञ त्वं शूद्रो धर्मवत्सलः ॥

उपदेशान्बहून्दत्त्वा ज्ञातिभ्यो हितकाम्यया ॥

अपि श्रद्धा विहीनेषु पापात्मसु सदैव हि ॥ १३ ॥

ततो वर्षशते पूर्णे ब्रह्मद्वारेण केवलम् ॥

आत्मानं सम्यगुत्सृज्य मोक्षमेव प्रयास्यसि ॥ १४ ॥

एवमुक्त्वा स भगवान्गतश्चादर्शनं ततः ॥

धर्मराजोऽपि तं शापं भेजे मांडव्यसंभवम् ॥ १५ ॥

तदा विदुररूपेण ह्यवतीर्य धरातले ॥

मांडव्यस्य वचः सत्यं स चकार महामतिः ॥ १६ ॥

जातो भगवता साक्षाद्व्यासेनामिततेजसा ॥

पाराशर्येण विप्रेण दासीगर्भसमुद्भवः ॥ १७ ॥

एतद्वः सर्वमाख्यातं धर्मराजसमुद्भवम् ॥

आख्यानं यदहं पृष्टः सर्वपातकनाशनम् ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहरस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धर्मराजेश्वरोत्पत्तिवर्णनंनामाष्टात्रिंशदुत्तरशततमोअध्यायः ॥ १३८॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १३९



॥ सूत उवाच ॥ ॥

धर्मराजेश्वरोत्थं च माहात्म्यं द्विजसत्तमाः ॥

यन्मया प्रश्रुतं पुण्यं सकाशात्स्वपितुः पुरा ॥ १ ॥

तदहं कीर्तयिष्यामि शृणुध्वं सुसमाहिताः ॥

त्रैलोक्येऽपि सुविख्यातं सर्व पातकनाशनम् ॥ २ ॥

तत्र क्षेत्रे पुरा विप्रः कश्यपान्वयसंभवः ॥

उपाध्याय इति ख्यातो वेदविद्यापरायणः ॥ ३ ॥

पश्चिमे वयसि प्राप्ते तस्य पुत्रो बभूव ह ॥

स्वाध्यायनियमस्थस्य प्रभूतविभवस्य च ॥४॥

पञ्चवर्षकमात्रस्तु यदा जज्ञे च तत्सुतः ॥

तदा मृत्युवशं प्राप्तः पितृमातृसुदुःखकृत् ॥५॥

ततः स ब्राह्मणः कोपं चक्रे वैवस्वतोपरि ॥

धर्मराजगृहं प्राप्तं दृष्ट्वा निजकुमारकम् ॥ ६ ॥

आदाय सलिलं हस्ते शुचिर्भूत्वासमाहितः ॥

प्रददौ दारुणं शापं धर्मराजाय दुःखितः ॥ ७ ॥

अपुत्रोऽद्य कृतो यस्मादहं तेन दुरात्मना ॥

अतः सोऽपि च दुष्टात्मा यमोऽपुत्रो भविष्यति ॥ ८ ॥

तथास्य भूतले लोको नैव पूजां विधास्यति ॥

कीर्तयिष्यति नो नाम यथान्येषां दिवौकसाम् ॥ ९ ॥

यः कश्चित्प्रातरुत्थाय नाम चास्य ग्रही ष्यति ॥

मंगल्यकरणे चाथ विघ्नं तस्य भविष्यति ॥ 6.139.१० ॥

तं श्रुत्वा तस्य विप्रस्य यमः शापं सुदारुणम् ॥

स्वधर्मे वर्तमानस्तु ततो दुःखा न्वितोऽभवत् ॥ ११ ॥

एतस्मिन्नंतरे गत्वा ब्रह्मणः सदनं प्रति ॥

कृतांजलिपुटो भूत्वा यमः प्राह पितामहम् ॥ १२ ॥

पश्य देवेश शप्तोऽहं निर्दोषोपि द्विजन्मना ॥
स्वधर्मे वर्तमानस्तु यथान्यः प्राकृतो जनः ॥ १३ ॥
तस्मादहं त्यजिष्यामि नियोगं ते पितामह ॥
ब्रह्मशापभया द्भीतः सत्यमेतन्मयोदितम् ॥ १४ ॥
पुरा मांडव्यशापेन शूद्रयोन्यवतारितः ॥
सांप्रतं पुत्ररहितः कृतोऽपूज्यश्च सत्तम ॥ १५ ॥
॥ सूत उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा दीनं वैवस्वतस्य च ॥
तत्कालोचितमाहेदं स्वयमेव शतक्रतुः ॥ १६ ॥
युक्तमुक्तमनेनैतद्धर्मराजेन पद्मज ॥
नियोगे वर्तमानेन तावकीये सुरेश्वर ॥ १७ ॥
अवश्यमेव मर्त्ये च मनुष्याः समये स्थिताः॥
बाल्ये वा यौवने वाथ वार्धक्ये वा पितामह ॥
संहर्तव्या न संदेहो नाकाले च कथंचन ॥ १८ ॥
एतदेव कृतं नाम धर्मराजाख्यमुत्तमम् ॥
त्वया च सममित्रस्य समशत्रोर्महात्मनः ॥ १९ ॥
तस्मादद्य समालोक्य कश्चिदेव विचिंत्यताम् ॥
उपायो येन निर्दोषो नियोगं कुरुते तव ॥ 6.139.२० ॥
॥ ब्रह्मोवाच ॥ ॥
ब्रह्मशापं न शक्तोऽह मन्यथाकर्तुमेवच ॥
उपायं च करिष्यामि सांप्रतं त्रिदशाधिप ॥ २१ ॥
ततो ध्यानं प्रचक्रे स ब्रह्मा लोकपितामहः ॥
तदर्थं सर्वदेवानां पुरतः सुस माहितः ॥ २२ ॥
तस्यैवं ध्यानसक्तस्य प्रादुर्भूताः समंततः ॥
मूर्ता रोगाः सुरौद्रास्ते वातगुल्मकफात्मकाः ॥
अष्टोत्तरशतप्रायाः प्रोचुस्तं च कृतादराः ॥ २३ ॥
॥ रोगा ऊचुः ॥ ॥
किमर्थं देवदेवेश त्वया सृष्टा वयं विभो ॥

आदेशो दीयतां शीघ्रं प्रसादः क्रियतामिति ॥ २४ ॥ ॥

॥ व्रह्मोवाच ॥ ॥

व्रजध्वं भूतले शीघ्रं ममादेशादसंशयम् ॥

यमादेशान्मनुष्येषु गन्तव्यमविकल्पितम् ॥ २५ ॥

एवमुक्त्वा तु तान्रोगांस्ततः प्राह पितामहः ॥

धर्मराजं समीपस्थं भृशं दीनमधोमुखम् ॥ २६

एते ते व्याधयः सर्वे मया यम नियोजिताः ॥

साहाय्यं च करिष्यंति सर्वकृ त्येषु सर्वदा ॥२७॥

यः कश्चिदधुना मर्त्यो गतायुः संप्रपद्यते ॥

वधाय तस्य यत्नेन त्वया प्रेष्याः सदैव तु॥२८॥

एतेषां जायते तेन जननाशसमुद्भवः ॥

अपवादो धरापृष्ठे न च संजायते तव ॥२९॥

तस्माद्गत्वा निजं स्थानं स्वाधिकारपरो भव ॥

ममादेशादसंदिग्धं नैवं दोषमवाप्स्यसि॥6.139.३॥।

ततस्तान्सकलान्व्याधीन्गृहीत्वा रविनंदनः॥

यमलोकं समासाद्य ततः प्रोवाच सादरम् ॥ ३१ ॥

पृष्ट्वापृष्ट्वा च गंतव्यं चित्रगुप्तं धरातले ॥

गंतव्यं जननाशाय समये समुपस्थिते ॥ ३२ ॥

परमस्ति मया तत्र स्थापितं लिंगमुत्तमम् ।

हाटकेश्वरजेक्षेत्रे सर्वपातकनाशनम् ॥३३॥

यस्तं पश्यति सद्भक्त्या प्रातरुत्थाय मानवः ॥

स युष्माभिः सदा त्याज्यो दूरतो वचनान्मम ॥ ३४ ॥

एवमुक्त्वा स तान्व्याधींस्ततो वैवस्वतः स्वयम् ॥

तस्य विप्रस्य तं पुत्रं गृहीत्वा सत्वरं ययौ ॥

तस्यैव मंदिरे रम्ये कृत्वा रूपं द्विजन्मनः ॥ ३५ ॥

अथासौ ब्राह्मणो दृष्ट्वा स्वं पुत्रं गृहमागतम् ॥

सहितं विप्ररूपेण धर्मराजेन धीमता ॥ ३६ ॥

ततः प्रहृष्टचित्तेन सत्वरं सम्मुखो ययौ ॥

पुत्रपुत्रेति जल्पन्स निजभार्यासमन्वितः ॥ ३७ ॥

परिष्वज्य ततो भूयो वाष्पपर्याकुलेक्षणः ॥

आघ्राय च ततो मूर्ध्नि वाक्यमेतदुवाच ह ॥ ३८ ॥

॥ ब्राह्मण उवाच ॥ ॥

कथं पुत्र समायातस्त्वं तस्मा द्यममंदिरात् ॥

न कश्चित्पुनरायाति यत्र गत्वाऽपि वीर्यवान् ॥ ३९ ॥

किं वा चैतत्समुत्पन्नमिन्द्रजालं ममांतिकम् ॥

किं वा स्वप्नमिदं किं वा ममायं दृष्टिविभ्रमः ॥6.139.४॥।

कश्चायं ब्राह्मणः पार्श्वे तव संतिष्ठते सुत ॥

दिव्येन तेजसा युक्तस्तं नमाम्यहमात्मज ॥ ४१ ॥

॥ पुत्र उवाच ॥ ॥

एष ब्राह्मणरूपेण समायातो यमः स्वयम् ॥

मामादाय कृपाविष्टो ज्ञात्वा त्वां दुःखसंयुतम् ॥ ४२ ॥

तस्मात्त्वं कुरु तातास्य शापानुग्रहमद्य वै॥

गृहप्राप्तस्य सुस्नेहाद्यद्यहं तव वल्लभः ॥ ४३ ॥

ततस्तस्य प्रणामं स कृत्वा ब्राह्मणसत्तमः ॥

व्रीडयाऽधोमुखो भूत्वा ततः प्रोवाच सादरम् ॥ ४४ ॥ ॥

॥ ब्राह्मण उवाच ॥ ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥

यत्पुत्रस्य मम प्राप्तिर्गतस्य यमसादनम् । ४५ ॥

त्वं च पुत्रकृते तात सन्तोषं परमं गतः ॥

तस्मात्पुत्रेण संयुक्तो यथायं स्यात्तथा कुरु ॥ ४६ ॥

॥ ब्राह्मण उवाच ॥ ॥

न मे स्यादनृतं वाक्यं कदा चिदपि पुत्रक ॥

अपि स्वैरेण यत्प्रोक्तं किं पुनर्दुःखितेन च ॥ ४७ ॥

तस्मात्तस्य भवेत्पुत्रो दैवयोनिसमुद्भवः ॥

न कथंचिदपि प्राज्ञ मम शापवशाद्ध्रुवम्॥ ४८ ॥

भविष्यति सुतश्चान्यो मानुषीयोनिसंभवः ॥

राजसूयाश्वमेधाभ्यां यश्चैनं तारयिष्यति ॥ ४९ ॥
कोऽर्थः पुत्रेण जातेन यो न संतारणक्षमः ॥
पितृपक्षं शुभं कर्म कृत्वा सर्वोत्तमं भुवि ॥ 6.139.५० ॥
तथा पूजाकृते योऽस्य शापो दत्तश्च वै पुरा ॥
तत्रापि शृणु मे वाक्यं तस्य पुत्रक जल्पतः ॥५१॥
वेदोक्तैर्विविधैर्मन्त्रैर्या पूजा चास्य संस्थिता ॥
न भविष्यति सा लोके कथंचिदपि पुत्रक ॥ ५२ ॥
अस्य मानुषसंभूतैर्मन्त्रैः पूजा भविष्यति ॥
विशिष्टा सर्वदेवेभ्यः सत्यमेतन्मयोदितम् ॥ ५३ ॥
॥ पुत्र उवाच ॥ ॥
अहमेनं प्रतिष्ठाप्य द्विजश्रेष्ठ महीतले ॥
सम्यगाराधयिष्यामि किमन्यैर्विबुधैर्मम ॥ ५४ ॥
तस्मात्संकीर्तयिष्यामि मंत्रान्मानुषसंभवान् ॥
तथा पूजाविधानं च त्वत्प्रसादेन पूर्वज ॥ ५५ ॥
ततः सुगं नः पन्थेति तस्य मंत्रं विधाय सः ॥
समाचरत्प्रहृष्टात्मा धर्मराजस्य शृण्वतः ॥ ५६ ॥
तच्छ्रुत्वाथ यमः प्रोच्चैः सुप्रसन्नेन चेतसा ॥
तं ब्राह्मण मुवाचेदं हर्षगद्गदयागिरा ॥ ९७ ॥
॥ यम उवाच ॥ ॥
कथंचिदपि विप्रेद्र न मे स्याद्दर्शनं वृथा ॥
अन्येषामपि देवानां तस्मात्प्रार्थय वांछितम् ॥ ५८ ॥
॥ ब्राह्मण उवाच ॥ ॥
तवार्चां मम पुत्रोऽयं स्थापयिष्यति यामिह ॥
तामनेनैव मंत्रेण यः कश्चित्पूजयेद्द्विजः ॥ ५९ ॥
भवेत्संवत्सरं यावत्संप्राप्ते पंचमीदिने ॥
मा तस्य पुत्रशोको हि इह लोके कथञ्चन ॥ 6.139.६० ॥
॥ सूत उवाच ॥ ॥
स तथेति प्रतिज्ञाय संप्रहृष्टमना यमः ॥

यमलोकं जगामाथ स्वाधिकारपरोऽभवत्॥ ६१ ॥

सोऽपि ब्राह्मणदायादः कृत्वा प्रासादमुत्तमम् ॥

यममाराधयामास मध्ये संस्थाप्य भक्तितः ॥

पित्रा चोक्तेन मन्त्रेण तेनैव विधिपूर्वकम्॥ ६२ ॥

ततश्च क्रमशः प्राप्य पुत्रपौत्राननेकशः ॥

कालधर्ममनुप्राप्तश्चिरं स्थित्वा महीतले ॥ ६३ ॥

एतद्वः सर्वमाख्यातं पुराणेयत्पुरा श्रुतम्॥

यश्चैतत्कीर्तयेद्भक्त्या संप्राप्ते पंचमीदिने ॥

नापमृत्युर्भवेत्तस्य न च शोकः सुतोद्भवः ॥ ६४ ॥

इति श्रीस्कांदे महपुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धर्मराजेश्वरमाहात्म्यवर्णनंनामैकोनचत्वारिंशदुत्तर शततमोऽध्यायः ॥ १३९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४०

https://sa.wikisource.org/s/fzl
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं पुत्रो मानुषविग्रहः ॥

भविष्यति यमस्यात्र कः संभूतः स सूतज ॥ १ ॥

॥ सूत उवाच ॥ ॥

तस्य पुत्रः समुत्पन्नः पांडोः क्षेत्रे महीतले ॥

युधिष्ठिर इति ख्यातः सर्वक्षत्रियपुंगवः ॥ २ ॥

राजसूयो मखो येन इष्टः सम्पूर्णदक्षिणः ॥

सर्वान्भूमिपतीन्वीर्यात्संविधाय करप्रदान् ॥ ३ ॥

अश्वमेधाः कृताः पंच तथा सम्पूर्णदक्षिणाः ॥

भ्रामयित्वा हयं भूमौ पश्चात्प्राप स सद्गतिम् ॥ ४ ॥

एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥

यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ५ ॥

यदनेन वृतं मत्तः पुत्रित्वं सुमहात्मना ॥

हयमेधान्महायज्ञान्कर्ता स्यादस्य वै सुतः ॥ ६ ॥

मन्येत कृतकृत्यत्वं येन पुत्रेण धर्मपः ॥

अन्यैः पुत्रशतैः किं वा वंशानुद्धारकारकैः ॥ ७ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं धर्मराजसुतोद्भवम् ॥

आख्यानं ब्राह्मणश्रेष्ठा धर्मवृद्धिकरं परम् ॥ ८ ॥ ।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये धर्मराजपुत्राख्यानवर्णनंनाम चत्वारिंशदुत्तर शततमोऽध्यायः ॥ १४० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४१

https://sa.wikisource.org/s/fzz

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूतउवाच ॥ ॥

तथान्योऽपि हि तत्रास्ति देवो मिष्टान्नदायकः ॥

यस्य संदर्शनादेव मिष्टान्नं लभते नरः ॥ १ ॥

आसीत्पूर्वं नृपो नाम्ना वसुसेन इति स्मृतः ॥

आनर्त्ताधिपतिः ख्यातो बृहत्कल्पे द्विजोत्तमाः ॥ २ ॥

अत्यैश्वर्यसमायुक्तो गजवाजिरथान्वितः ॥

जितारिपक्षस्तेजस्वी दाता भोगी जितेंद्रियः ॥ ३ ॥

स संक्रांतौ व्यतीपाते ग्रहणे रवि सोमयोः ॥

पर्वकालेषु चान्येषु विविधेषु सुभक्तितः ॥ ४ ॥

प्रयच्छति द्विजातिभ्यो रत्नानि विविधानि च ॥

इंद्रनीलमहानीलविद्रुमस्फटिकादि च ॥ ५ ॥

माणिक्यमौक्तिकान्येव विद्रुमाणि विशेषतः ॥

हस्त्यश्वरथयानानि वस्त्राणि विविधानि च ॥ ६ ॥

न कस्यचित्प्रदद्यात्स सस्यं ब्राह्मणसत्तमाः ॥

अतीव सुलभं मत्वा तथा तोयं विशेषतः॥ ७ ॥

ततो राज्यं चिरं कृत्वा दृष्ट्वा पुत्रोद्भवान्सुतान् ॥

कालधर्ममनुप्राप्तः कस्मिंश्चित्कालपर्यये ॥ ८ ॥

ततश्च मंत्रिभिस्तस्य सत्यसेन इति स्मृतः ॥

अभिषिक्तः सुतो राज्ये वीर्योदार्यसमन्वितः ॥ ९ ॥

वसुसेनोऽपि संप्राप्य स्वर्गं दानप्रभावतः ॥

दिव्यांबरधरो भूत्वा दिव्यरत्नैर्विभूषितः ॥ ६.१४१.१० ॥

सेव्यमानोऽप्सरोभिश्च विमानवरमाश्रितः ॥

बभ्राम सर्वलोकेषु स्वेच्छया क्षुत्समावृतः ॥ ११ ॥

पिपासाकुलचित्तश्च मुखेन परिशुष्यता ॥

न कंचिद्ददृशे तत्र भुंजानमपरं दिवि ॥ १२ ।

न च पानसमासक्तं न सस्यं सलिलं न च ॥ १३ ॥

ततो गत्वा सहस्राक्षमुवाच द्विजसत्तमाः ॥

क्षुत्तृषावृतदेहस्तु लज्जयाऽधोमुखः स्थितः ॥ १४ ॥

नैवात्र दृश्यते कश्चित्क्षुत्तृषापरिपीडितः ॥

मां मुक्त्वा विबुधश्रेष्ठ तत्किमेतद्वदस्वमे ॥ १५ ॥

एष मे स्वर्गरूपेण नरकः समुपस्थितः ॥

किमेतैर्भूषणैर्वस्त्रैर्विमानादिभिरेव च ॥ १६ ॥

क्षुधा संपीड्यमानस्य स्वर्गमेतच्छचीपते ॥

अग्नितुल्यं समुद्दिष्टं मम चित्तेऽपि वर्तते ॥ १७ ॥

तस्मात्कुरु प्रसादं मे यथा क्षुन्न प्रबाधते ॥

नोचेत्क्षिप सुरश्रेष्ठ रौरवे नरके द्रुतम् ॥१८॥ ॥

॥ इंद्रउवाच ॥ ॥

अनर्होसि महीपाल नरकस्य त्वमेव हि ॥

त्वया दानानि दत्तानि संख्याहीनानि सर्वदा॥१९॥

परं किं तु क्वचिन्नान्नं दत्तं राजन्न चोदकम्॥

न किंचिदपि संचिंत्य यतः सुलभमेव हि ॥६.१४१.२॥।

तोयं सान्नं सदा दद्यादन्नं चैव सदक्षिणम्॥

य इच्छेच्छाश्वतीं तृप्तिमिह लोके परत्र च ॥ २१ ॥

तस्मात्त्वं हि क्षुधाविष्टः स्वर्गे चैव महीपते ॥

भूषितो भूषणैः श्रेष्ठैर्विमानवरमाश्रितः ॥ २२ ॥

॥ राजोवाच ॥ ॥

अस्ति कश्चिदुपायोऽत्र देवौ वा मानुषोऽपि वा ॥

क्षुत्पिपासेऽतितीव्रे मे विनाशं येन गच्छतः ॥२३॥

॥ इन्द्र उवाच ॥ ॥

यदि कश्चित्सुतस्तुभ्यं विप्रेभ्यः सततं जलम्॥

ददाति च सदा सस्यं तत्ते तृप्तिः प्रजायते ॥ २४ ॥

नान्यथा पार्थिवश्रेष्ठ एकस्मिन्नपि वासरे ॥

अदत्तस्य तव प्राप्तिः सत्यमेतन्मयोदितम् ॥२५॥

सोऽपि भूमिपतेः पुत्रस्तव यच्छति नोदकम्॥
न च सस्यं द्विजातिभ्यस्त्वन्मार्गमनुसंचरन्॥२६॥
एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तमः॥
ब्रह्मलोकात्स्थितौ यत्र तौ भूमिपसुरेश्वरौ ॥ २७ ॥
ततः शक्रः समुत्थाय तस्मै तुष्टिसमन्वितः ॥
अर्घं दत्त्वा विधानेन सादरं चेदमब्रवीत् ।ाr २८ ॥
कुतः प्राप्तोऽसि विप्रेंद्र प्रस्थितः क्व च सांप्रतम्॥
केन कार्येण चेद्दुह्यं न तेऽस्ति वद सांप्रतम्॥ २९ ॥
नारद उवाच ॥ ॥
ब्रह्मलोकादहं प्राप्तः प्रस्थितस्तु धरातले ॥
तीर्थयात्राकृते शक्र नान्यदस्तीह कारणम् ॥ ६.१४१.३० ॥
॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा स नृपो हृष्टस्तमुवाच मुनीश्वरम् ॥
प्रसादः क्रियतां मह्यं दीनस्य मुनिपुंगव ॥ ३१ ॥
त्वया भूमितले वाच्यो मम पुत्रो महीपतिः ॥
आनर्त्ताधिपतिः ख्यातः सत्यसेन इति प्रभो ॥ ॥ ३२ ॥
तव तातो मया दृष्टः शक्रस्य सदनं प्रति ॥
क्षुत्पिपासापरीतांगो दीनात्मा देवमध्यगः ॥ ३३ ॥
तस्मात्पुत्रोऽसि चेन्मह्यं त्वं सत्यं परिरक्षसि ॥
तन्मन्नाम्ना प्रयच्छोच्चैः सस्यानि सलिलानि च ॥ ३४ ॥
स तथेति प्रतिज्ञाय नारदो मुनिसत्तमः ॥
अनुज्ञाप्य सहस्राक्षं प्रस्थितो भूतलं प्रति ॥ ३५ ॥
ततः क्रमेण तीर्थानि भ्रममाणः स सद्द्विजः ॥
आनर्त्तविषयं प्राप्य सत्यसेनमुपाद्रवत् ॥ ३६ ॥
अथ संपूजितस्तेन सम्यग्भूपतिना मुनिः ॥
पितुः संदेशमाचख्यौ विजने तस्य सादरम् ॥ ३७ ॥
तच्छ्रुत्वा शोकसंतप्तः सत्यसेनो महीपतिः ॥
तं विसृज्य मुनिश्रेष्ठं पूजयित्वा विधानतः । ३८ ॥

ततो जनकमुद्दिश्य मिष्टान्नेन सुभक्तितः ॥
सहस्रं ब्राह्मणेंद्राणां भोजयामास नित्यशः ॥ ३९ ॥
प्रपादानं तथा चक्रे ग्रीष्मकाले विशेषतः ॥
त्यक्त्वान्याः सकला याश्च क्रिया धर्मसमुद्भवाः ॥ ६.१४१.४० ।
एवं तस्य महीपस्य वर्तमानस्य च द्विजाः ॥
अनावृष्टिरभूद्रौद्रा सर्वसस्यक्षयावहा ॥ ४१ ॥
यावद्द्वादशवर्षाणि न जलं त्रिदशाधिपः ॥
मुमोच धरणीपृष्ठे सर्वे लोकाः क्षुधार्दिताः ॥ ४२ ॥
अत्राभावात्ततो भूयो न सस्यं संप्रयच्छति ॥
ब्राह्मणेभ्यः समुद्दिश्य पितरं स्वं यथा पुरा ॥ ४३ ॥
ततः स क्षुत्परीतांगः पिता तस्य महीपतेः ॥
स्वप्ने प्रोवाच तं पुत्रमतीव मलिनांबरः ॥ ४४ ॥
त्वया पुत्रेण पुत्राहं क्षुत्पिपासासमाकुलः ॥
स्वर्गस्थोऽपि हि तिष्ठामि तस्मादन्नं प्रयच्छ वै ॥
मन्नाम्ना तोयसंयुक्तं यदि त्वं मत्समुद्भवः ॥ ४५ ॥
ततः शोकसमायुक्तः स नृपः स्वप्नदर्शनात् ॥
अन्नाभावात्समं मंत्रं मंत्रिभिः स तदाकरोत् ॥ ४६ ॥
अहमाराधयिष्यामि सस्यार्थे वृषभध्वजम् ॥
राज्ये रक्षा विधातव्या भवद्भिः सादरं सदा ॥ ४७ ॥
ततोऽत्रैव समागत्य स्थापयित्वा महेश्वरम् ॥
सम्यगाराधयामास व्रतैश्च नियमैस्तथा॥४८॥
अथ तस्य गतस्तुष्टिं वर्षांते भगवाञ्छिवः॥
अब्रवीद्वरदोऽस्मीति प्रार्थयस्व यथेप्सितम्॥४९॥
राजोवाच॥
अन्नार्थं देवदेवेश मयायं विहितो विधिः॥
तस्मात्त्वं यच्छ मे शीघ्रमसंख्यं वृषवाहन॥६.१४१.५॥।
तथा संजायता वृष्टिः समस्ते धरणीतले ॥
येन सस्यानि जायंते सलिलानि च सांप्रतम् ॥ ५१ ॥

जायतां मम तातस्य स्वर्गस्थस्य महात्मनः ॥

प्रसादात्तव संतृप्तिरक्षया सुरसत्तम ॥५२॥

॥ श्रीभगवानुवाच ॥ ॥

भविता न चिराद्वृष्टिः प्रभूता धरणीतले ॥

भविष्यंति तथान्नानि यानि कानि महीतले ॥ ५३ ॥

तस्मात्त्वं गच्छ राजेंद्र स्वगृहं प्रति सांप्रतम्॥

मम वाक्यादसंदिग्धमेतदेव भविष्यति ॥५४ ॥

तच्चैतन्मामकं लिंगं यत्त्वया स्थापितं नृप ॥

प्रातरुत्थाय यः कश्चित्सम्यक्तद्वीक्षयिष्यति ॥ ५५ ॥

मिष्टान्नममृतस्वादु स हि नूनमवाप्स्यति॥

मम वाक्यान्नृपश्रेष्ठ सदा जन्मनिजन्मनि ॥ ५६ ॥

स एवं भगवानुक्त्वा ततश्चादर्शनं गतः ॥

सोऽपि राजा निजं स्थानं हर्षेण महतान्वितः ॥

आजगाम चकाराथ राज्यं निहतकंटकम् ॥५७॥

॥ सूत उवाच ॥ ॥

अद्यापि कलिकालेऽत्र संप्राप्ते दारुणे युगे ॥

यस्तं मिष्टान्नदं पश्येत्प्रातरुत्थाय भक्तितः ॥५८॥

स मिष्टान्नमवाप्नोति यदि कामयते द्विजाः ॥

निष्कामो वा समभ्येति स्थानं देवस्य शूलिनः॥ ५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मिष्टान्नदेश्वरमाहात्म्यवर्णनंनामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥१४१॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४२

https://sa.wikisource.org/s/fzq

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति पुण्यं गणपतित्रयम् ॥

स्वर्गदं मर्त्यदं पुण्यं तथान्यन्नरकापहम्॥१॥

हंतृ वै सर्वविघ्नानां पूजितं सुरदानवैः॥

सर्वकामप्रदं चैव विद्याकीर्तिविवर्धनम् ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

त्रिविधाः पुरुषाः सूत जायंतेत्र महीतले ॥

उत्तमा मध्यमाश्चान्ये तथा चान्येऽधमाः स्थिताः ॥ ३ ॥

उत्तमाः प्रार्थयंति स्म मोक्षमेव हि केवलम् ॥

गता यत्र निवर्तंते न कथंचिद्धरातले ॥ ४ ॥

मध्यमाः स्वर्गमार्गं च दिव्यान्भोगान्मनोरमान् ॥

अप्सरोभिः समं क्रीडां यज्ञाद्यैः कर्मभिः कृताम् ॥ ॥ ५ ॥

अधमा मर्त्यलोकेत्र रमंते विषयात्मकाः ॥

विषकीटकवत्तत्र रतिं कृत्वा गरीयसीम् ॥ ६ ।

स्वर्गमोक्षौ परित्यज्य तत्कस्मान्मर्त्य इष्यते ॥

येनासौ प्रार्थ्यते मर्त्यैर्मर्त्यदो गणनायकः ॥ ७ ॥

केन संस्थापितास्ते च तस्मिन्क्षेत्रे गजाननाः ॥

कस्मिन्काले च द्रष्टव्याः सर्वं विस्तरतो वद ॥ ८ ॥

॥ सूत उवाच ॥ ॥

पूर्वं तप्त्वा तपस्तीव्रं मर्त्यलोके द्विजोत्तमाः ॥

ततो गच्छंति संहृष्टाः स्वेच्छया त्रिदिवं प्रति ॥

मोक्षमार्गं तथैवान्ये ध्यानाविष्कृतमानसाः ॥ ९ ॥

ततः स्वर्गे समाकीर्णे कदाचिन्मनुजोत्तमैः ॥

देवेषु क्षिप्यमाणेषु समंतात्तत्प्रभावतः ॥ ६.१४२.१० ॥

गत्वा स्वयं सहस्राक्षः सर्वैर्देवगणैः सह ॥

प्रोवाच शंकरं गौर्या सार्धमेकासनस्थितम् ॥ ११ ॥

॥ इन्द्र उवाच ॥ ॥

तपःप्रभावसंसिद्धैर्मानवैः परमेश्वर ॥

अस्माकं व्याप्यते सर्वं महिमानं गृहादिकम्॥ १२ ॥

तस्मात्कृत्वा प्रसादं नः कंचिच्चिंतय सांप्रतम् ॥

उपायं येन तिष्ठामः सौख्येनात्र शिवालये ॥ १३ ॥

अथ श्रुत्वा विरूपाक्षस्तेषां तद्वचनं द्विजाः ॥

पार्वत्याः पार्श्वसंस्थाया मुखचन्द्रं समैक्षयत् ॥ १४ ॥

निजगात्रं ततो देवी सुसंमर्द्य मुहुर्मुहुः ॥

मलमाहृत्य तं कृत्स्नं चक्रे नागमुखं ततः १९ ॥

चतुर्हस्तं महाकायं लंबोदरसमन्वितम् ॥

सुकौतुककरं तेषां सर्वेषां च दिवौकसाम् ॥ १६ ॥

ततः स विनयादाह देवीं शिखरवासिनीम् ॥

यदर्थमंब सृष्टोऽहं तत्कार्यं वद मा चिरम् ॥ १७ ।

त्रैलोक्ये त्वत्प्रसादेन नासाध्यं विद्यते मम ॥ ॥ १८ ॥

॥ श्रीदेव्युवाच ॥ ॥

मर्त्यलोके नरा ये च स्वर्गमोक्षपराः सदा ॥

तेषां विघ्नं त्वया कार्यं शुभकृत्येषु चैव हि ॥ १९ ॥

सरितां पतयस्त्रिंशच्छंकवः सप्तसप्ततिः ॥

महासरोजषष्टिश्च निखर्वाणां च विंशतिः ॥ ६.१४२.२० ॥

अर्बुदायुतसंयुक्ताः कोट्यो नवतिपञ्च च ॥

लक्षाश्च पंचपंचाशत्सहस्राः पंचविंशतिः॥

शतानि नवषष्टिश्च गणाश्चान्येऽत्र संस्थिताः॥२१॥

येषां नदी स्मृतः पूर्वो महाकालस्तथा परः॥

ते सर्वे वशगास्तुभ्यं प्रभवंतु गणोत्तमाः॥२२॥

आधिपत्यं मया दत्तं तव वत्स कुरुष्व तत् ॥

सर्वेषां गणवृंदानामाधिपत्ये व्यवस्थितः ॥२३॥

एवमुक्त्वाथ सा देवी समानीयौषधीभृतान् ॥

हेमकुंभान्सुतीर्थाभः परिपूर्णान्महोदयान्॥ २४ ॥

तस्याभिषेचनं चक्रे स्वयमेव सुरेश्वरी ॥

गीतवाद्यविनोदेन नृत्यमंगलजैः स्वनैः ॥ २५ ॥

त्रयस्त्रिंशत्स्मृताः कोटयो देवानां याः स्थिता दिवि ॥

ताः सर्वास्तत्र चागत्य तस्य चक्रुश्च मंगलम् ॥ २६ ॥

अथ तस्य ददौ तुष्टो भगवान्वृषभध्वजः ॥

कुठारं निशितं हस्ते सदा वै श्रेष्ठमायुधम् ॥ २७ ॥

पात्रं मोदकसंपूर्णमक्षयं चैव पार्वती ॥

भोजनार्थे महाभागा मातृस्नेहपरायणा ॥ २८ ॥

मूषकं कार्तिकेयस्तु वाहनार्थं प्रहर्षितः ॥

भ्रातरं मन्यमानस्तु बन्धुस्नेहेन संयुतः ॥ २९ ॥

ज्ञानं दिव्यं ददौ ब्रह्मा तस्मै हृष्टेन चेतसा ॥

अतीतानागतं चैव वर्तमानं च यद्भवेत्॥६.१४२.३॥।

प्रज्ञां विष्णुः सहस्राक्षः सौभाग्यं चोत्तमं महत्॥

सौभाग्यं कामदेवस्तु कुबेरो विभवादिकम्॥३१॥

प्रतापं भगवान्सूर्यः कांतिमग्र्यां निशाकरः॥३२॥

तथान्ये विबुधाः सर्वे ददुरिष्टानि भूरिशः॥

आत्मीयानि प्रतुष्ट्यर्थं देव्या देवस्य च प्रभोः॥३३॥

एवं लब्धवरः सोऽथ गणनाथो द्विजोत्तमाः ॥

देवकृत्यपरो नित्यं चक्रे विघ्नानि भूतले ॥ ३४ ॥

धर्मार्थं यतमानानां मोक्षाय सुकृताय च ॥

ततो भूमितलेऽभ्येत्य गणेशस्तत्र यः स्मृतः ॥ ३५ ॥

वैमानिकैः समभ्येत्य स्थापितस्तत्र स द्विजाः ॥

येन स्वर्गार्थिनो लोकाः पूजां तस्य प्रचक्रिरे ॥

प्रथमं सर्वकृत्येषु विघ्ननाशाय तत्पराः ॥ ३६ ॥

एतस्मिन्नेव काले च चमत्कारपुरोद्भवैः ॥

ब्राह्मणैर्ब्रह्मविज्ञानतत्परैर्मोक्षहेतुभिः ॥

ईशानः स्थापितस्तत्र मोक्षदो य उदाहृतः ॥ ३७ ॥

स्वर्गं वाञ्छद्भिरेवान्यैः स्वर्गद्वारप्रदस्तथा ॥

हेरंबः स्थापितस्तत्र सत्यनामा यथोदितः ॥ ३८ ॥

तथान्यैर्मर्त्यदो नाम गणैशस्तत्र यः स्थितः॥

येन स्वर्गाच्च्युता यांति न कदा नरकादिकम्॥

तिर्यक्त्वं वा कृमित्वं वा स्थावरत्वमथापि वा ॥ ३९ ॥

एतस्मात्कारणात्तत्र क्षेत्रे पुण्ये द्विजोत्तमाः ॥

हेरम्बो मर्त्यदो जातः स्वर्गिणां मर्त्यदः सदा ॥ ६.१४२.४० ॥

एतद्वः सर्वमाख्यातं पुण्यं हेरंबसंभवम् ॥

आख्यानं सर्वविघ्नानि यन्निहन्ति श्रुतं नृणाम् ॥ ४१ ॥

एतन्माघचतुर्थां? यः शुक्लायां पूजयेन्नरः ॥

न तस्य वत्सरं यावद्विघ्नं सञ्जायते क्वचित् ॥ ४२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गणपतित्रयमाहात्म्यवर्णनंनाम द्विचत्वारिंशदुत्तरशत तमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४३



॥ सूत उवाच ॥ ॥

तथान्योऽपि च तत्रास्ति देवश्चित्रेश्वरो द्विजाः ॥

चित्रपीठस्य मध्यस्थश्चित्रसौख्यप्रदो नृणाम् ॥ १ ॥

यं दृष्ट्वा पूजयित्वा च स्नापयित्वाथवा नरः ॥

मुच्यते परदारोत्थैः पातकैश्चोपपातकैः ॥ २ ॥

धर्षयित्वा गुरोः पत्नीं कन्यां वा निजवंशजाम् ॥

नीचां वा व्रतयुक्तां वा कामासक्तेन चेतसा ॥ ३ ॥

चैत्रशुक्लचतुर्दश्यां यस्तं पूजयते नरः ॥

स तत्पापं निहत्याशु स्वर्गलोकं ततो व्रजेत् ॥ ४ ॥

तथा चित्रांगदस्तत्र जाबालिसहितो नृपः ॥

कुमार्या सहितः सार्द्धं नग्नया तत्समुत्थया ॥

सन्तिष्ठते तदग्रे तु शप्तो जाबालिना पुरा ॥ ५ ॥

त्रयाणामपि यस्तेषां तस्मिन्नहनि निर्वपेत् ॥

स इष्टां लभते नारीं सिद्धिं च मनसि स्थिताम् ॥ ६ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्माज्जाबालिना शप्तः पूर्वं चित्रांगदो युवा ॥

सा च तत्तनया कस्मात्कुमारी वस्त्रवर्जिता ॥ ७ ॥

अद्यापि तिष्ठते तत्र विरुद्धं रूपमाश्रिता ॥

जनहास्य करं नित्यं तस्मात्सूत वदस्व नः ॥ ८ ॥

॥ सूत उवाच ॥ ॥

आसीोत्पूर्वं मुनिर्नाम्ना जाबालिरिति विश्रुतः ॥

कौमारब्रह्मचर्येण येन चीर्णं तपः सदा ॥ ९ ॥

हाटकेश्वरजं क्षेत्रं समासाद्य स सद्द्विजाः ॥

बाल्येऽपि वयसि प्राप्ते समारेभे महत्तपः ॥ ६.१४३.१० ॥

कृच्छ्रचांद्रायणादीनि पाराकाणि शनैःशनैः ॥

कुर्वता तेन ते देवाः संनीता भयगोचरम् ॥ ११ ॥

ततः शक्रादयो देवाः संत्रस्ता मेरुमूर्धनि ॥

मिलित्वा चक्रिरे मंत्रं तस्य विघ्नकृते मिथः ॥१२॥

यद्यस्य तपसो वृद्धिरेवं यास्यति नित्यशः ॥

च्यावयिष्यति तन्नूनं स्वर्गराज्याच्छतक्रतुम् ॥१३॥

तस्माद्गच्छतु रंभाख्या तत्पार्श्वे ऽप्सरसां वरा ॥

ब्रह्मचर्यविघाताय तस्यर्षेर्भावितात्मनः ॥ १४ ॥

ब्रह्मचर्यं तपोमूलं यतः संकीर्तितं द्विजैः ॥

तस्याभावात्परिक्लेशः केवलं न फलं व्रते ॥ १५ ॥

एवं ते निश्चयं कृत्वा समाहूय ततः परम् ॥

रंभामूचुर्महेंद्रेण सर्वे देवास्तदादरात् ॥ १६ ॥

गच्छ शीघ्रं महाभागे जाबालिर्यत्र तिष्ठति ॥

हाटकेश्वरजे क्षेत्रे तपोविघ्नाय तस्य वै ॥ १७ ॥

ते ते भावाः प्रयोक्तव्याः कथास्तास्ता मनोहराः ॥

वर्धयंती तथा चित्ते तस्य कामं निरर्गलम् ॥ १८ ॥ ॥

॥ रंभोवाच ॥ ॥

स मुनिर्न विजानाति कामधर्मं सुरेश्वर ॥

अरसज्ञं कथं देव करिष्यामि स्मरान्वितम्॥ १९ ॥

॥ इन्द्र उवाच ॥ ॥

एष यास्यति मद्वाक्याद्वसंतस्तस्य सन्निधौ ॥

अस्य संदर्शनादेव भविष्यति स सस्मरः ॥ ६.१४३.२० ॥

तस्माद्गच्छ द्रुतं तत्र सहानेन वरानने ॥

संसिद्धिर्जायते येन देवकृत्यं भवेद्द्रुतम् ॥ २१ ॥

अथ सा तं प्रणम्योच्चैः प्रस्थिता धरणीतलम्॥

वसंतेन समायुक्ता जाबालिर्यत्र तिष्ठति ॥ २२ ॥

अथाकस्मादशोकस्य संजातः पुष्पसंचयः ॥

तिलकस्य च चूतस्य मंजर्यः समुपस्थिताः ॥ २३ ॥

शिशिरे च सरोजानि विकासं प्रापुरेव हि ॥

ववौ च सुरभिर्वायुर्दाक्षिणात्यः सुकामदः ॥ २४ ॥

एतस्मिन्नंतरे प्राप्ता रंभा तत्र वराप्सराः ॥

सलिलाशयतीरस्थो जाबालिर्यत्र तिष्ठति ॥। ॥ २५ ॥

अक्षमालाधृतकरो जपन्मंत्रमनेकधा ॥

अभीष्टं श्रद्धया युक्तो विधाय पितृतर्पणम् ॥ २६ ॥

अथ संपश्यतस्तस्य मुक्त्वा वस्त्रपरिग्रहम् ॥१

स्नानार्थं तज्जलं साऽथ प्रविवेश वराप्सराः ॥ २७ ॥

विवस्त्रां तां समालोक्य सोऽपि यौवनशालिनीम्॥

याम्यानिलेन च स्पृष्टः कामस्य वशगो ऽभवत् ॥ २८ ॥

ततस्तस्याभवत्कंपस्तत्क्षणादेव सन्मुने ॥

अक्षमाला कराग्राच्च पपात धरणीतले ॥ २९ ॥

पुलकः सर्वगात्रेषु संजज्ञेऽतीव दारुणः ॥

अश्रुपाताः पतंति स्म कोष्णाः प्लावितभूतलाः ॥ ३० ॥

अथ तं क्षुभितं ज्ञात्वा चित्तज्ञा सा वराप्सराः ॥

निर्गत्य सलिलात्तस्माच्चक्रे वस्त्रपरिग्रहम्॥ ॥ ३१ ॥

ततस्तस्यांतिके गत्वा प्रणिपत्य कृतादरा ॥

प्रोवाच मधुरं वाक्यं वर्द्धंती तस्य तन्मतम् ॥ ३२ ॥

आश्रमे सकलं ब्रह्मन्कच्चित्ते कुशलं मुने ॥

स्वाध्याये तपसि प्राज्ञ शिष्येषु मृगपक्षिषु ॥ ३_३ ॥

॥ मुनिरुवाच॥ ॥ ९॥

कुशलं मे वरारोहे सर्वत्रैवाधुना स्थितम्॥

विशेषेणात्र संप्राप्ता सर्वलक्षणलक्षिता॥३४॥

का त्वं वद महाभागे मम मन्मथवर्धनी॥

किं देवी वासुरी वा किं पन्नगी किं तु मानुषी॥३५॥

निवेदय शरीरे मे किं न पश्यसि वेपथुम्॥

निरर्गलश्च रोमांचो बाष्पपूरश्च नेत्रजः॥३६॥

रंभोवाच॥

किं ते गात्रस्वभावोऽयम् किं वान्यो व्याधिसंभवः ॥

कच्चिदेव न ते स्वास्थ्यं प्रपश्यामि शरीरजम् ॥ ३७ ॥

॥ मुनिरुवाच ॥ ॥

न मे गात्रस्वभावो न व्याधिभिश्च सुलोचने ॥

शृणुष्व कारणं कृत्स्नं येनेदृक्संस्थितं वपुः ॥ ३८ ॥

यावती वर्तते वेला तव दर्शनसंभवा ॥

तावत्कालमिदं रूपं मम गात्रसमुद्भवम् ॥ ३०. ॥

तदहं मन्मथाविष्टो दर्शनात्तव शोभने ॥

ब्रह्मचर्यपरोपीत्थं महाव्रतधरोऽपि च ॥ ६.१४३.४० ॥

॥ रंभोवाच । ॥

यद्येवं ब्राह्मणश्रेष्ठ मां भजस्व यथासुखम् ॥

नात्र कश्चिद्भवेद्दोषः पण्यनारी यतोऽस्म्यहम् ॥ ४१ ॥

साधारणा वयं विप्र यतः सृष्टाः स्वयंभुवा ॥

सर्वेषामेव लोकानां विशेषेण द्विजन्मनाम् ॥ ४२ ॥

अहं चापि समालोक्य त्वां मुने मन्मथोपमम् ।

हता कामशरैस्तीक्ष्णैर्न च गंतुं समुत्सहे ॥ ॥ ४३ ॥

मया दृष्टाः सुराः पूर्वं यक्षा विद्याधरास्तथा ॥

सिद्धाश्च किंनरा नागा गुह्यकाः किमु मानुषाः ॥ ४४ ॥

नेदृग्रूपं वपुस्तेषामेकस्यापि विलोकितम् ॥

मध्ये ब्राह्मणशार्दूल तस्माद्भक्तां भजस्व माम् ॥ ४५ ॥

यो नारीं कामसंतप्तां स्वयं प्राप्तां परित्यजेत् ॥

स मूर्खः पच्यते घोरे नरके शाश्वतीः समाः ॥ ४६ ॥

एवमुक्त्वा तया सोऽथ परिष्वक्तो महामुनिः ॥

अनिच्छन्नपि वाक्येन हृदयेन च सस्पृहः ॥ ४७ ॥

ततो लतानि कुंजे तं समानीय मुनीश्वरम् ।

कामशास्त्रोदितैर्भावै रराम कृत्रिमैर्मुनिम् ॥ ४८ ॥

एवं तया समं तत्र स्थितो यावद्दिनक्षयम् ॥

कामधर्मसमासक्तः संत्यक्ताशेषकर्मकः ॥ ४९ ॥

ततो निष्कामतां प्राप्तो लज्जया परिवारितः ॥

विससर्ज च तां रंभां शौचं चक्रे ततः परम् ॥ ६.१४३.५० ॥

सापि तेन विनिर्मुक्ता कृतकृत्या विलासिनी ।

प्रहृष्टा प्रययौ तत्र यत्र देवाः सवासवाः ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जाबालिक्षोभणोनाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४४



॥ सूत उवाच ॥ ॥

सा गत्वा त्रिदिवं पश्चात्सहस्राक्षं सुरैर्युतम् ॥

प्रोवाच भगवन्दिष्ट्या क्षोभितोऽसौ महामुनिः ॥ १ ॥

तपस्तस्य हतं कृत्स्नं यत्कृच्छ्रेण समाचितम् ॥

तथा निस्तेजसत्वं च नीतस्त्वं सुखभाग्भव ॥ २ ॥

एवमुक्त्वाऽथ सा रंभा शंसिता निखिलैः सुरैः ॥

अमोघरेतसस्तस्य दध्रे गर्भं निजोदरे । ३ ।

जाबालिरपि कृत्वा च पश्चात्तापमनेकधा ॥

भूयस्तु तपसि स्थित्वा स्थितस्तत्रैव चाश्रमे ॥ ४ ॥

ततस्तु दशमे मासि संप्राप्ते सुषुवे शुभाम् ॥

कन्यां सरोजपत्राक्षीं दिव्यलक्षणलक्षिताम् ॥ ५ ॥

अथ तां मानुषोद्भूतां मत्वा तस्यैव चाश्रमम् ॥

गत्वा मुमोच प्रत्यक्षं तस्यर्षेश्चेदमब्रवीत् ॥ ६ ॥

तव वीर्यसमुद्भूतामेनां मज्जठरोषिताम् ॥

कन्यकां मुनिशार्दूल तस्मात्पालय सांप्रतम् ॥ ७ ॥

न स्वर्गे विद्यते वासो मानुषाणां कथंचन ॥

एतस्मात्कारणात्तुभ्यं मया ब्रह्मन्समर्पिता ॥ ८ ॥

एवमुक्त्वा ययौ रंभा सत्वरं त्रिदशालयम् ॥

जाबालिरपि तां दृष्ट्वा कन्यकां स्नेहमाविशत् ॥ ९ ॥

ततस्तां कन्यकां कृत्वा सुष्ठु गुप्ते लतागृहे ॥

रसैर्मिष्टफलोद्भूतैः पुपोष च दिवानिशम् ॥ ६.१४४.१० ॥

सापि कन्या परां वृद्धिं शनैर्याति दिनेदिने ।

शुक्लपक्षं समासाद्य यथा चन्द्रकला दिवि ॥ ११ ॥

यथायथाथ सा याति वृद्धिं कमललोचना ॥

तथातथास्य सुस्नेहो जाबालेरप्यवर्धत । १२ ।

सा शिशुत्वे मृगैः सार्द्धं पक्षिभिश्च सुशोभना ॥
क्रीडां चक्रे सुविश्रब्धैर्वर्धयंती मुनेर्मुदम् ॥ १३ ॥
ततो बाल्यं परित्यक्त्वा वल्कलावृतगात्रिका ॥
तस्यर्षेः सर्वकृत्येषु साहाय्यं प्रकरोति च ॥ १४ ॥
समित्कुशादि यत्किंचित्फलपुष्पसमन्वितम् ॥
वनात्तदानयामास तस्य प्रीतिमवर्धयत् ॥ ॥ १५ ॥
ततः कतिपयाहस्य फलार्थं सा मृगेक्षणा ॥
निदाघसमये दूरं स्वाश्रमात्प्रजगाम ह ॥ १६ ॥
एतस्मिन्नंतरे तत्र विमानवरमाश्रितः ॥
प्राप्तश्चित्रांगदोनाम गन्धर्वस्त्रिदिवौकसाम् ॥ १७ ॥
तेन सा विजने बाला पूर्णचन्द्रनिभानना ॥
दृष्टा चांद्रमसी लेखा पतितेव धरातले ॥ १८ ॥
ततः कामपरीतांगः सोवतीर्य धरातलम्॥
विमानान्मधुरैर्वाक्यैस्तामुवाच कृतांजलिः ॥ १९ ॥
का त्वं कमलगर्भाभा निर्जनेऽथ महावने ॥
भ्रमस्येकाकिनी बाले वनमध्ये सुलोचने ॥ ६.१४४.२० ॥
॥ कन्योवाच ॥ ॥
अहं फलवतीनाम जाबालेर्दुहिता मुने ॥
फलपुष्पार्थमायाता तदर्थमिह कानने ॥ २१ ॥
॥ चित्रांगद उवाच ॥ ॥
कुमारब्रह्मचारी स श्रूयते मुनिसत्तमः ॥
तत्कथं तस्य वामोरु त्वं जाता भार्यया विना ॥ २२ ॥
॥ कन्योवाच ॥ ॥
सत्यमेतन्महाभाग नास्ति दारपरिग्रहः ॥
तस्यर्षेः किं तु संजाता यथा तन्मेऽवधारय ॥ २३ ॥
रंभा नामाप्सरास्तेन पुरा दृष्टा सुरांगना ॥
ततः कामपरीतेन सेविता च यथासुखम्॥२४ ॥
ततस्तदुदराज्जाता देवलोके महत्तरे ॥

तयापि चेह तस्यर्षेर्भूय एव नियोजिता ॥ २५ ॥
एवं स मे पिता जातो जाबालिर्मुनिसत्तमः ॥
पोषिताऽहं ततस्तेन नानाफलसमुद्भवैः ॥ २६ ॥
ततः फलवती नाम कृतं तेन महात्मना ॥
ममानुरूपमेतद्धि यन्मां त्वं परिपृच्छसि ॥ २७ ॥
॥ चित्रांगद उवाच ॥ ॥
तव रूपं समालोक्य कामस्याहं वशं गतः ॥
तस्माद्भजस्व मां भीरु नो चेद्यास्यामि संक्षयम् ॥ २८ ॥
अहं चित्रांगदोनाम गन्धर्वस्त्रिदिवौकसाम् ॥
तीर्थयात्राकृते प्राप्तः क्षेत्रेऽस्मिञ्छ्रद्धयाऽन्वितः ॥ २९ ॥
॥ कन्योवाच ॥ ॥
कुमारधर्मिणी चाहमद्यापि वशगा पितुः ॥
कामधर्मं न जानामि चित्रांगद कथंचन ॥ ॥ ६.१४४.३० ॥
तस्मात्प्रार्थय मे तातं स मां तुभ्यं प्रदास्यति ॥
अनुरूपाय योग्याय तरुणाय मनस्विनीम् ॥३१ ॥
ममापि रुचितं चित्ते तव वाक्यमिदं शुभम् ॥
धन्याहं यदि ते कण्ठमालिंगामि यथेच्छया ॥ ३२ ॥
॥ चित्रांगद उवाच ॥ ॥
न शक्नोमि महाभागे तावत्कालं प्रतीक्षितुम् ॥
मां दहत्येष गात्रोत्थः सुमहान्कामपावकः ॥ ३३ ॥
तस्मात्कुरु प्रसादं मे रतिदानेन शोभने ॥
को जानाति हि तच्चित्तं कीदृग्रूपं भविष्यति ॥ ३४ ॥ ॥
॥ कन्योवाच ॥ ॥
एवं ते वर्तमानस्य मम तातः प्रकोपतः ॥
दहिष्यति न संदेहः शापं दत्त्वा सुदारुणम्॥ ३५ ॥
॥ चित्रांगद उवाच ॥ ॥
तव तातः स कालेन मां दहिष्यति मानदे ॥
कामानलः पुनः सद्य एष भस्म करिष्यति ॥३६॥

एवमुक्त्वाऽथ तां बालां वेपमानां त्रपावतीम् ॥
गृहीत्वा दक्षिणे पाणौ प्रविवेश सुरालयम् ॥ ३७ ॥
तत्र तां रमयामास तदा कामप्रपीडितः ॥
तत्कालजातरागांधां निर्लज्जत्वमुपागताम् ॥ ॥ ३८ ॥
एवं तस्याः समं तेन स्थिताया दिवसो गतः ॥
निमेषवन्मुनिश्रेष्ठास्ततश्चास्तं गतो रविः ॥ ३९ ॥
एतस्मिन्नंतरे विप्रो जाबालिर्दुःख संयुतः ॥
अनायातां सुतां ज्ञात्वा परिबभ्राम सर्वतः ॥ ६.१४४.४० ॥
अहो सा दुहिता मह्यं किमु व्यालैः प्रभक्षिता ॥
वृक्षं कंचित्समारूढा पतिता धरणी तले ॥ ४१ ॥
किं वा जलाशयं कंचित्प्राप्य गाधमजानती ॥
निमग्ना तत्र सा बाला संप्रविष्टा जलार्थिनी ॥ ४२ ॥
एवं स प्रलपन्विप्रो बभ्राम गहने वने ॥
कुशकण्टकविद्धांगः क्षुत्पिपासासमाकुलः ॥ ४३ ॥
यंयं शृणोति शब्दं स मृगपक्षिसमुद्भवम् ॥
रजन्यां तत्र निर्याति मत्वा फलवतीं च ताम् ॥ ४४ ॥
अथ क्रमात्समायातो हरहर्म्यं स सन्मुनिः ॥
यत्र चित्रांगदोपेता सा संतिष्ठति कन्यका ॥ ४५ ॥
निःशंका जल्पमाना च रागवाक्यान्यनेकशः ॥
अनर्हाणि कुमारीणां ब्रह्मजानां विशेषतः ॥ ४६ ॥
ततः स सुचिरं श्रुत्वा दूरस्थो विस्मयान्वितः ॥
कुमार्याश्चेष्टितं दृष्ट्वा कोपसंरक्तलोचनः ॥ ४७ ॥
अथ दुद्राव वेगेन गृह्य काष्ठसमुच्चयम् ॥
द्वाभ्यामेव विनाशाय भर्त्समानो मुहुर्मुहुः ॥ ४८ ॥
धिग्धिक्पापसमाचारे कौमार्यं दूषितं त्वया ॥
लांछनं च समानीतं मम लोकत्रयेऽपि च ॥ ४९ ॥
नितरां पतिमासाद्य कर्मणानेन चाधमे ॥
तस्मादनेन पापेन युक्तां त्वां नाशयाम्यहम् ॥ ६.१४४.५० ॥

एवमुक्त्वा प्रहारं स यावत्क्षिपति सन्मुनिः ॥

तावच्चित्रांगदो नष्टो व्योममार्गेण सत्वरम् ॥ ५१ ॥

विवस्त्रा सापि तत्रैव खिन्नांगी कामसेवया ॥

न शशाक क्वचिद्गंतुं समुत्थाय ततः क्षितौ ॥ ५२ ॥

ततः काष्ठप्रहारोघैर्हत्वा तां पतितां क्षितौ॥

मृतामिति परिज्ञाय स क्रोधपरिवारितः ॥ ५३ ॥

ततश्चित्रांगदस्यापि ददौ शापं सुदारुणम् ॥

स दृष्ट्वाऽऽकाशमार्गेण गच्छमानं भयातुरम् ॥ ५४ ॥

य एष कन्यकां मह्यं धर्षयित्वा समुत्पतेत् ॥

स पतत्वचिरात्पापश्छिन्नपक्ष इवांडजः ॥ ५५ ॥

कुष्ठव्याधिसमायुक्तश्चलितुं नैव च क्षमः ॥

एतस्मिन्नन्तरे भूमौ स पपात नभस्तलात् ॥ ५६ ॥

कुष्ठव्याधिसमायुक्तः स च चित्रांगदो युवा ॥

ततस्तं स मुनिः प्राह काष्ठोद्यतकरः क्रुधा ॥ ५७ ॥

कस्त्वं पापसमाचार येन मे धर्षिता बलात् ॥

कुमारी तन्नयाम्येष त्वामद्य यम शासनम् ॥ ५८ ॥

॥ चित्रांगद उवाच ॥ ॥

अहं चित्रांगदोनाम गन्धर्वस्त्रिदिवौकसाम् ॥

तीर्थयात्राप्रसंगेन क्षेत्रेऽस्मिन्समुपागतः ॥ ५९ ॥

ततस्तु कन्यकां दृष्ट्वा कामदेववशं गतः ॥ ६.१४४.६० ॥

ततः सेवितवानत्र लताहर्म्ये जनच्युते ॥

तस्मात्कुरु क्षमां मह्यं दीनस्य प्रणतस्य च ॥ ६१ ॥

यथा व्याधेर्भवेन्नाशो यथा स्याद्गगने गतिः ॥

भूयोऽपि त्वत्प्रसादेन स्वल्पः कोपो हि साधुषु ॥ ६२ ॥

॥ जाबालिरुवाच ॥ ॥

ईदृग्रूपधरस्त्वं हि मम वाक्याद्भविष्यसि ॥

एषापि मत्सुता पापा वस्त्रहीना सदेदृशी ॥ ६३ ॥

भविष्यति न संदेहो जीवयिष्यति चेत्क्वचित् ॥

यद्येषा धास्यति क्वापि वस्त्रं गात्रे निजे क्वचित् ॥ ६४ ॥

तन्नूनं च शिरोऽप्यस्याः फलिष्यति न संशयः ॥

एवमुक्त्वा विकोपश्च स जगाम निजाश्रमम् ॥ ६५ ॥

चित्रांगदोऽपि तत्रैव तया सार्धं तथा स्थितः ॥

कस्यचित्त्वथ कालस्य तत्र क्षेत्रे समाययौ ॥ ६६ ॥

चैत्रशुक्लचतुर्दश्यां भगवाञ्छशिशेखरः ॥

गन्तुं चित्रेश्वरे पीठे गणै रौद्रैः समावृतः ॥

योगिनीभिः प्रचण्डाभिः सार्धं प्राप्ते निशामुखे ॥ ६७ ॥

अथ प्राप्ते निशार्धे तु योगिन्यस्ताः सुदारुणाः ॥

महामांसं महामांसमित्यूचुर्भक्षणाय वै ॥६८॥

नृत्यमानाः पुरस्तस्य देवदेवस्य शूलिनः ॥

सस्पर्धा गणमुख्यैस्तैर्नर्तमानैः समंततः ॥६९ ॥

यस्तत्र समये तासां महामांसं प्रयच्छति ॥

मंत्रपूतं स संसिद्धिं समवाप्नोति वांछिताम् ॥ ६.१४४.७० ॥

मद्यं मांसं तथा चान्यन्नैवेद्यं वा फलादिकम् ॥

तस्य सिद्धिः समादिष्टा यथा स्वहृदये स्थिता ॥ ७१ ॥

एतस्मिन्नंतरे कन्या सा जाबालिसमुद्भवा ॥

स च चित्रांगदस्तत्र गत्वा प्रोवाच सादरम् ॥ ७२॥

अस्मदीयमिदं मांसं योगिन्यो हर्षसंयुताः ॥

भक्षयन्तु यथासौख्यं स्वयमेव प्रकल्पितम् ॥ ७३ ॥

अथ तं पुरुषं दृष्ट्वा कुष्ठव्याधिसमावृतम् ॥

विवस्त्रां कन्यकां तां च सर्वास्ता विस्मयान्विताः ॥ ७४ ॥

ते च सर्वे गणा रौद्राः स च देवस्त्रिलोचनः ॥

पप्रच्छ कौतुकाविष्टस्तत्र चित्रांगदं प्रभुः ॥ ७५ ॥

कस्त्वं धैर्यसमायुक्तो महत्सत्त्वे व्यवस्थितः ॥

यः प्रयच्छसि जीवं त्वं कीटस्यापि सुवल्लभम् ॥ ७६ ॥

केयं च वसनैर्हीना त्वया सार्धं गतव्यथा ॥

प्रयच्छति निजं देहं यद्देयं नैव कस्यचित् ॥ ७७ ॥

॥ सूत उवाच ॥ ॥

ततः स कथयामास सर्वमात्मविचेष्टितम् ॥

यथा कन्यासमं संगः कृतः शापश्च सन्मुनेः ॥ ७८ ॥

ततश्चित्रांगदं दृष्ट्वा स गन्धर्वं दिवौकसाम् ॥

तथारूपं कृपाविष्टस्ततः प्रोवाच शंकरः ॥ ७९ ॥

मम संदर्शनं प्राप्य न मृत्युर्जायते क्वचित् ॥

न वृथा दर्शनं चैतत्तस्मात्प्रार्थय सादरम् ॥ ६.१४४.८० ॥

॥ चित्रांगद उवाच ॥. ॥

व्याधिनाऽहं सुनिर्विण्णस्तेन देवात्र चागतः ॥

येन व्याधिक्षयो भावी देहनाशेन शंकर ॥ ८१ ॥

तस्मात्कुरु क्षयं व्याधेर्यदि यच्छसि मे वरम् ॥

खेचरत्वं पुनर्देहि येन स्वर्गं व्रजाम्यहम् ॥ ८२ ॥

॥ श्रीशंकर उवाच ॥ ॥

त्वं स्थापयात्र मल्लिंगं पीठे गन्धर्वसत्तम ॥

ततश्चाराधय प्रीत्या यावद्वर्षमुपस्थितम् ॥ ८३ ॥

यथायथा सुपूजां त्वं मल्लिंगस्य करिष्यसि ॥

दिनेदिने तथा व्याधेस्तव नाशो भविष्यति ॥ ८४ ॥

ततस्तु खे गतिं प्राप्य पुनः स्वर्गं प्रयास्यसि ॥

मत्प्रसादान्न सन्देहः सत्यमेतन्मयोदितम् ॥ ८५ ॥

एषापि कन्यका यस्मात्प्रविष्टा पीठमध्यतः ॥

तस्मात्फलवतीनाम योगिनी सम्भविष्यति ॥ ८६ ॥

अनेनैव तु रूपेण नग्नत्वेन व्यवस्थिता ॥

मुख्यामवाप्स्यते पूजां वांछितं च प्रदास्यति ॥

पूजकानां स्थितं चित्ते शतसंख्यगुणं तदा ॥ ८७ ॥

एतां संपूजयेन्मर्त्यः पीठमेतत्ततः परम्॥

पूजयिष्यति तस्येष्टा सिद्धिरेवं भविष्यति ॥ ८८ ॥

एवमुक्त्वा ततः साऽथ हर्षेण महताऽन्विता ॥

योगिनीवृंदमध्यस्था नृत्यं चक्रे ततः परम् ॥ ८९

एवं बभूव सा तत्र योगिनी च वरांगना ॥
तथा चक्रे परं नृत्यं यथा तुष्टो महेश्वरः ॥ ६.१४४.९० ॥
ततः प्रोवाच तां हृष्टः सर्वयोगिनिसंनिधौ ॥
अनेन तव नृत्येन गीतेन च विशेषतः ॥ ९१ ॥
परितुष्टोस्मि ते वत्से तस्माच्छृणु वचो मम ॥
निशीथेऽद्य दिने प्राप्ते यस्ते पूजां करिष्यति ॥ ९२ ॥
सुरा मांसान्नसत्कारैर्मंत्रैरागमसंभवैः ॥
स भविष्यति तत्कालं शापानुग्रहशक्तिमान् ॥ ९३ ॥
बंधनं मोहनं चापि शत्रोरुच्चाटनं तथा ॥
करिष्यति न सन्देहो वशीकरणमेव च ॥ ९४ ॥
त्रिकोणं कुण्डमास्थाय दिशां पालान्प्रपूजयेत् ।
क्षेत्रपालं च सर्वास्ता देवता गमनोद्भवाः ॥ ९५ ॥
तथा चत्वरपूजां च प्रकृत्वा विधिपूर्वकम् ॥
पश्चात्त्वां पूजयित्वा च होमं यश्च करिष्यति ॥ ९६ ॥
शत्रुवामपदोत्थेन स्पृष्टेन रजसाऽथवा ॥
गुग्गुलेन सहस्रांतं स्तंभनं च करिष्यति ॥ ९७ ॥
यश्च शत्रुं हृदि स्थाप्य शत्रूद्वर्तनसंभवम् ॥
मलं धात्रीफलैः सार्धं मोहनं स करिष्यति ॥ ९८ ॥
यः शत्रोः स्नानजं तोयं गृहीत्वा चाथ कर्दमम् ॥
शिवनिर्माल्यसंयुक्तं जुहृयिष्यति पावके ॥ ९९ ॥
तवाग्रे स नरो नूनं शत्रुमुच्चाटयिष्यति ॥
एषोपि तव संगेन तव चित्रांगदः प्रियः ॥
संप्राप्स्यति च सत्पूजामनुषंगात्त्वदुद्भवात् ॥ ६.१४४.१०० ॥
॥ फलवत्युवाच ॥ ॥
यदि देव प्रसन्नो मे तथान्यमपि सद्वरम्॥१०१॥
हृदिस्थं देहि मे सौख्यं येन संजायतेऽखिलम् ॥
पिता ममैष जाबालिर्निर्मुक्तो वसनैः सदा ॥ १०२ ॥
अहं यथा तथात्रैव संतिष्ठतु दिवानिशम् ।

येन संतापमायाति पश्यन्मम विरोधिनीम् ॥ १०३ ॥

क्रीडां ब्राह्मणवंशस्य मद्यमांससमुद्भवाम् ॥

मद्यगन्धं समाघ्राति मांसं पश्यति संस्कृतम् ॥

मां स्वच्छंदरतां नित्यं दुःखं याति दिनेदिने ॥ १०४ ॥

॥ श्रीभगवानुवाच ॥ ॥

एवं भविष्यति प्रोक्तं संजातं चाधुना शुभे ॥

अहं यास्यामि कैलासं त्वं तिष्ठात्र यथोदिता ॥ १०५ ॥

॥ सूत उवाच ॥ ॥

एवं स भगवान्प्रोक्त्वा गतश्चादर्शनं हरः ॥

योगिन्यश्चैव ताः सर्वाः स्वेस्वे स्थाने व्यवस्थिताः ॥ १०६ ॥

चित्रांगदोपि तत्रैव कृत्वा प्रासादमुत्तमम् ॥

लिंगं संस्थापयामास देवदेवस्य शूलिनः ॥ १०७ ॥

ततश्चाराधयामास दिवारात्रमतंद्रितः ॥ १०८ ॥

ततः संवत्सरस्यांते व्याधिमुक्तः सुरूपधृक् ॥

विमानवरमारूढो जगाम त्रिदशालयम् ॥

सोऽपि जाबालिनामाथ विवस्त्र समपद्यत ॥ १०९ ॥

जनहास्यकरो लोके स्थितस्तत्रैव सर्वदा ॥

पश्यमानो विकारांस्तान्दुःखितः स्वसुतोद्भवान् ॥ ६.१४४.११० ॥

ततश्च गर्हयामास स्त्रीणां जन्म महामुनिः ॥

तस्मिन्पीठे समासाद्य दुःखेन महताऽन्वितः ॥ १११ ॥

अहो पापात्मनां पुंसां संभविष्यंति योषितः ॥

यासामीदृक्समाचारो द्विजवंशोद्भवास्वपि ॥ ११२ ॥

सकृदेव मया संगः कृतो नार्या समन्वितः ॥

आजन्ममरणं यावत्पापं प्राप्तं यथेदृशम् ॥ ११३ ॥

ये पुनस्तासु संसक्ताः सदैव पुरुषाधमाः ॥

का तेषां जायते लोके गतिर्वेद्मि न चिंतयन् ॥ ११४ ॥

एवं तस्य ब्रुवाणस्य योगिन्यस्ताः क्रुधान्विताः ॥

तमूचुर्ब्राह्मणं तत्र घृणया परिवारितम्॥ ११५ ॥

॥ योगिन्य ऊचुः ॥

मा निंदां कुरु मूढात्मंस्त्वं स्त्रीणां योगमाश्रितः ॥

एतच्चराचरं विश्वं स्त्रीभिः संधार्यते यतः ॥ ११६ ॥

याभिः संजनितः शेषः कूर्मश्च तदनंतरम् ॥

याभ्यां संधार्यते पृथ्वी यस्यां विश्वं प्रतिष्ठितम् ॥ ११७ ॥

धन्येयं ते सुता मूढ या प्राप्ता योगमुत्तमम् ॥

प्राप्ता च परमं स्थानं स्तोकैरेवात्र वासरैः ॥ ११८॥।

त्वं पुनर्मूर्खतां प्राप्तश्छांदसं मार्गमास्थितः ॥

अविद्यया समायुक्तः संसारेऽत्र भ्रमिष्यसि ॥ ११९ ॥

॥ मुनिरुवाच ॥

स्त्रियो निंद्यतमाः सर्वाः सर्वावस्थासु दुःखदाः ॥

इहलोके परे चैव ताभ्यः सौख्यं न लभ्यते ॥ ६.१४४.१२० ॥

यदर्थं निहतः शुम्भो निशुम्भश्च महासुरः ॥

रावणो दण्डभूपश्च तथान्येऽपि सहस्रशः ॥ १२१ ॥

प्राप्य तादृग्द्विजं कांतं गौतमं स्त्रीस्वभावतः ॥

अहिल्या शक्रमासाद्य चकमे शीलवर्जिता ॥ १२२ ॥ ॥

॥ कन्योवाच ॥ ॥

यच्च निंदसि मूढात्मन्संति निंद्याश्च योषितः ॥

तद्वदस्व मया सार्धं येन त्वां बोधयाम्यहम् ॥ १२३ ॥

न तेऽस्ति हृदये बुद्धिर्न लज्जा न दया मुने ॥

किमंत्यजोऽपि तत्कर्म कुरुते यत्त्वया कृतम् ॥ १२४ ॥

अहं तावत्प्रहारेण त्वया व्यापादिताऽधम ॥

स्त्रीहत्योद्भवपापस्य न चिन्ता विधृता हृदि ॥ १२५ ॥

विशेषेण सुतायाश्च कोपाविष्टेन चेतसा ॥

गच्छंति पातकान्यत्र प्रायश्चित्तैः पृथग्विधैः ॥ ॥ १२६ ॥

स्त्रीवधोत्थं पुनर्याति यदि तत्त्वं प्रकीर्तय ॥

एतन्मे न च दुःखं स्याद्यद्धतास्मि द्विजाधम ॥ १२७ ॥

यच्छप्ता नग्नसद्भावं नीता तत्पातकं च ते ॥

कल्पांतेऽपि सुदुर्बुद्धे न संयास्यति कुत्रचित् ॥ १२८ ॥

तस्माद्भुंक्ष्व सुदुःखार्तः स्थितोऽत्रैव मया सह ॥

न भूयो निंदसि प्रायो न च व्यापादयिष्यसि ॥ १२९ ॥

अनिंद्या योषितः सर्वा नैता दुष्यंति कर्हिचित् ॥

मासिमासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ६.१४४.१३० ॥

॥ मुनि रुवाच ॥ ॥

स्त्रियः पापसमाचारा नैताः शुध्यंति कर्हिचित् ॥

परकांते रतिर्यासामंत्यजत्वं प्रयच्छति ॥ १३१ ॥

॥ कन्योवाच ॥ ॥

मा मैवं वद मूढात्मन्नमेध्या इति योषितः ॥

अत्र श्लोकः पुरा गीतो मनुना तं निबोध मे ॥ १३२ ॥

ब्राह्मणाः पादतो मेध्या गावो मेध्यास्तु पृष्ठतः ॥

अजाश्वा मुखतो मेध्या स्त्रियो मेध्याश्च सर्वतः ॥ १३३ ॥

॥ मुनिरुवाच ॥ ॥

ब्राह्मणाः सर्वतो मेध्या गावो मेध्याश्च सर्वतः ॥

अजाश्वा मुखतो मेध्या न मेध्याश्च स्त्रियः क्वचित् ॥ १३४ ॥

॥ कन्योवाच ॥ ॥

तस्य चिंतामणिर्हस्ते तस्य कल्पद्रुमो गृहे ॥

कुबेरः किंकरस्तस्य यस्य स्यात्कामिनी गृहे ॥ १३५ ॥

॥ मुनिरुवाच ॥ ॥

तस्यापदोऽखिला दुःखं दुःखं तस्याखिलं गृहे ॥

नरकः सर्वतस्तस्य यस्य स्यात्कामिनीगृहे ॥ १३६ ॥

॥ कन्योवाच ॥ ॥

यानि कान्यत्र सौख्यानि भोगस्थानानि यानि च ॥

धर्मार्थकामजातानि तानि स्त्रीभ्यो भवंति हि ॥ १३७ ॥

॥ मुनिरुवाच ॥ ॥

यानि कानि सुदुःखानि क्लेशानि यानि देहिनाम् ॥

यानि कष्टान्यनिष्टानि स्त्रीभ्यस्तानि भवंति च ॥ १३८ ॥

॥ कन्योवाच ॥ ॥

धर्मार्थकाममोक्षान्स्त्री चतुरोऽपि चतसृभिः ॥

वह्निप्रदक्षिणाभिस्तान्विवाहेऽपि प्रदर्शयेत् ॥ १३९ ॥

॥ मुनिरुवाच ॥ ॥

संसारभ्रमणं नारी प्रथमेऽपि समागमे ॥

वह्निप्रदक्षिणान्यायव्याजेनैव प्रदर्शयेत् ॥ ६.१४४.१४० ॥ ॥

॥ कन्योवाच ॥ ॥

के नाम न विरज्यंति ज्ञानाढ्या अपि मानवाः ॥

कर्णांतलग्ननेत्रांतां दृष्ट्वा पीन पयोधराम् ॥ १४१ ॥

॥ मुनिरुवाच ॥ ॥

के नाम न विनश्यंति मूढज्ञाना नितंबिनीम् ॥

रम्यबुद्ध्योपसर्पंति ये ज्वालाः शलभा इव ॥ १४२ ॥

॥ कन्योवाच ॥ ॥

निर्मुखौ च कठोरौ च प्रोद्धतौ च मनोरमौ ॥

स्त्रीस्तनौ सेवते धन्यो मधुमांसे विशेषतः ॥१४३॥

॥ मुनिरुवाच ॥ ॥

आभोगिनौ मंडलिनौ तत्क्षणान्मुक्तकंचुकौ॥

वरमाशीविषौ स्पृष्टौ न तु पत्न्याः पयोधरौ ॥ १४४ ॥

॥ कन्योवाच ॥ ॥

न चासां रचनामात्रं केवलं रम्यमंगिभिः ।

परिष्वंगोऽपि रामाणां सौख्याय पुलकाय च ॥ १४५ ॥

॥ मुनिरुवाच ॥ ॥

न चासां रचनामात्रं रम्यं स्यात्पापदं दृशः ॥

वपुः स्पृष्टं विनाशाय स्त्रीणां प्रेत्य नरकाय च ॥ १४६ ॥

॥ कन्योवाच ॥ ॥

को नाम न सुखी लोके को नाम सुकृती न च ॥

स्पृहणीयतमः को न स्त्रीजनो यस्य रज्यते ॥ १४७ ॥ ॥

॥ मुनिरुवाच ॥ ॥

को न मुक्तिं व्रजेत्तत्र को न शस्यतरो भवेत् ॥

को न स्यात्क्षेमसंयुक्तः स्त्रीजने यो न रज्यते ॥ १४८ ॥

॥ कन्योवाच ॥ ॥

संसारांतः प्रसुप्तस्य कीटस्यापि प्ररोचते ॥

स्त्रीशरीरं नरस्यात्र किं पुनर्न विवेकिनः ॥ १४९ ॥

॥ मुनिरुवाच ॥ ॥

अमेध्यजा तस्य यथा तथा तद्रोचनं कृमेः ॥

तथा संसारसूतस्य स्त्रीशरीरं च कामिनः ॥ ६.१४४.१५० ॥

॥ कन्योवाच ॥ ॥

सौख्यस्थानं नृणां किंचिद्वेधसा ऽन्यदपश्यता ॥

शाश्वतं चिंतयित्वाथ स्त्रीरत्नमिदमाहृतम् ॥ १५१ ॥

॥ मुनिरुवाच ॥ ॥

बंधनं जगतः किंचिद्वेधसाऽन्यदपश्यता ॥

स्त्रीरूपेण ततः कोपि पाशोऽयं स्त्रीमयः कृतः ॥ १५२ ।

॥ सूत उवाच ॥ ॥

एवं स मुनिशार्दूलस्तयातीव समागमे ॥

निरुत्तरीकृतो यावत्ततः प्राह निजां सुताम् ॥ १५३ ॥

॥ मुनिरुवाच ॥ ॥

त्वया सह न संवादो मया कार्योऽधुना क्वचित् ॥

या त्वं बालापि मामेवं निषेधयसि सर्वतः॥१५४॥

तस्माद्धन्यतरं मन्ये अहमात्मानमद्य वै ॥

यस्य मे त्वं सुता ईदृगीदृक्छास्त्रविचक्षणा ॥ १५५ ॥

तस्मान्न मे महाभागे कोपः स्वल्पोऽपि विद्यते ॥

तस्माद्यथेच्छया क्रीडां कुरु योगिनिमध्यगा ॥ १५६ ॥

ततः सा लज्जिता दृष्ट्वा पितरं स्नेहवत्सलम् ।

प्रणिपत्य पुनःप्राह योगिनीमध्यसंस्थिता ॥ १५७ ॥

अज्ञानाद्यदि वा ज्ञानात्त्वं निषिद्धो मया प्रभो ॥

क्षंतव्यं सकलं मेऽद्य वालिकाया विशेषतः ॥ १५८॥

अत्र पीठे समागत्य प्रथमं ते द्विजोत्तमाः ॥

पूजां सर्वे करिष्यंति मानवा भक्तितत्पराः ॥

पश्चाच्च सर्वपीठस्य यास्यंति च परां गतिम्॥ १५९ ॥

एवं सा तत्र संजाता जाबालिमुनिसंभवा ॥

जाबालिश्च मुनिश्रेष्ठस्तथा चित्रांगदेश्वरः ॥ ६.१४४.१६० ॥

त्रयाणामपि यस्तेषां पूजां मर्त्यः समाचरेत्॥

दिवसेदिवसे तत्र स सिद्धिं समवाप्नुयात् ॥ १६१ ॥

नासाध्यं विद्यते किंचित्तावदत्र धरातले ॥

पूज्यते भूमिपालाद्यैर्भोगान्दिव्यांस्तथा लभेत् ॥ १६२ ॥

तस्मात्सर्वप्रयत्नेन स मुनिः सा च कन्यका ॥

पूजनीया विशेषेण स देवोऽथ महेश्वरः ॥ १६३ ॥

एतद्वः सर्वमाख्यातमाख्यानं सर्वकामदम् ॥

पठतां शृण्वतां चैव इहलोके परत्र च ॥ १६४

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चित्रांगदेश्वरफलवतीजाबाल्याख्यानवर्णनंनाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४५



॥ ऋषय ऊचुः ॥ ॥

यत्त्वया कथितं सूत न मृता सा कुमारिका ॥

हता रौद्रप्रहारैश्च कौतुकं तन्महत्तरम् ॥ १ ॥

यतो भूयः प्रसंजाता योगिनी हरतुष्टिदा ॥

यत्त्वार्थं सर्वमाचक्ष्व कारणं च तदद्भुतम् ॥ २ ॥

॥ सूत उवाच ॥ ॥

सा प्रविष्टा समं तेन सुपुण्यममरेश्वरम् ॥

माघकृष्णचतुर्दश्यां न मृत्युर्यत्र विद्यते ॥ ३ ॥'

अपि चैवायुषः शेषे किमुताकालतो द्विजाः॥

तेन नो निधनं प्राप्ता हतापि सुदृढं तदा ॥ ४॥

॥ ऋषय ऊचुः ॥

अमरेश्वर इत्युक्तो यो देवो ह्यमरत्वदः ॥

केन संस्थापितो ह्यत्र किंप्रभावश्च कीर्तय ॥ ५ ॥

॥सूत उवाच ॥ ॥

अदितिश्च दितिश्चैव प्रजापतिसुते शुभे॥

कृते पुरातिरूपाढ्ये कश्यपेन महात्मना॥६॥

अदित्यां विबुधा जाता दितेश्चैव तु दैत्यपाः॥।

तेषां सापत्न्यभावेन महद्वैरमुपस्थितम्॥

अथ दैत्यैः सुरा ध्वस्ताः कृताश्चान्ये पराङ्मुखाः ॥

अन्ये तु भयसंत्रस्ता दिशो जग्मुः क्षतांगकाः ॥८॥

ततो दुःखसमायुक्ता देवमातात्र संस्थिता ॥

तपश्चक्रे दिवानक्तं शिवध्यानपरायणा ॥ ९ ॥

एवं तस्यास्तपःस्थाया गते युगचतुष्टये ॥

निर्भिद्य धरणीपृष्ठं शिवलिंगं समुत्थितम् ॥ ६.१४५.१० ॥

ततस्तस्मै कृतानन्दा स्तुत्वा स्तोत्रैः पृथग्विधैः ॥

अष्टांगप्रणिपातेन नमश्चक्रे समाहिता ॥ ११ ॥

एतस्मिन्नंतरे वाणी संजाता गगनांगणे ॥

शरीररहिता दिव्या मेघगम्भीरनिःस्वना ॥ १२ ॥

वरं प्रार्थय कल्याणि यस्ते हृदि व्यवस्थितः ॥

प्रसन्नोऽहं प्रदास्यामि तवाद्य शशिशेखरः ॥ १३ ॥

॥ अदितिरुवाच ॥ ॥

मम पुत्राः सुरश्रेष्ठ हन्यन्ते युधि दानवैः॥

तत्कुरुष्व गतायासानवध्यान्रणमूर्धनि ॥ १४ ॥

॥ श्रीभगवानुवाच ॥ ॥

एतल्लिंगं मदीयं ये स्पृष्ट्वा यास्यंति संयुगे ॥

अवध्यास्ते भविष्यन्ति यावत्संवत्सरं शुभे ॥ १५ ॥

अन्योऽपि मानवो योऽत्र चतुर्दश्यां समाहितः ॥

माघमासस्य कृष्णायां प्रकरिष्यति जागरम् ॥ ॥१६॥

सोऽपि संवत्सरं यावद्भविष्यति निरामयः ॥

अपि मृत्युदिने प्राप्ते योऽस्मिन्नायतने शुभे ॥ १७ ॥

आगमिष्यति तं मृत्युर्दूरात्परिहरिष्यति ॥

एवमुक्त्वाथ सा वाणी विरराम ततः परम् ॥ १८ ॥

अदितिश्चापि सन्तुष्टा हतशेषान्सुतांस्ततः ॥

समानीयाथ तल्लिंगं तेषामेव न्यदर्शयत् ॥

कथयामास तत्सर्वं माहात्म्यं यद्वरोदितम् ॥ १९ ॥

ततस्ते विबुधाः सर्वे तल्लिंगं प्रणिपत्य च ॥

प्रतिजग्मुस्तुष्टियुक्ताः शस्त्राण्यादाय तान्प्रति॥ ६.१४५.२० ॥

यत्र ते दानवा हृष्टाः स्थिताः शक्रपदे शुभे ॥

स्वर्गभोगसमायुक्ता नन्दनांतर्व्यवस्थिताः ॥ २१ ॥

अथ ते दानवा दृष्ट्वा संप्राप्तांस्त्रिदिवौकसः ॥

सहसा संगरार्थाय नानाशस्त्रधरान्बहून् ॥ २२ ॥

रथवर्यान्समारुह्य धृतशस्त्रास्त्रवर्मणः ॥

युद्धार्थं सम्मुखा जग्मुर्गर्जमाना घना इव ॥ २३ ॥

ततः समभवद्युद्धं देवानां दानवैः सह ॥
रोषप्रेरितचित्तानां मृत्युं कृत्वा निवर्तनम् ॥ २४ ॥
ततस्ते विबुधाः सर्वे हरलब्धवरास्तदा ॥
जघ्नुर्दैत्यानसंख्याताच्छितैः शस्त्रैरनेकधा ॥ २५ ॥
हतशेषाश्च ये तेषां ते त्यक्त्वा त्रिदशालयम् ॥
पलायनकृतोत्साहाः प्रविष्टा मकरालयम् ॥ २६ ॥
ततः शक्रः समापेदे स्वराज्यं दानवैर्हृतम् ॥
यदासीत्पूर्वकाले तत्समग्रं हतकण्टकम् ॥ २७ ॥
ततस्ते दानवाः शेषा ज्ञात्वा तल्लिंगसंभवम् ॥
माहात्म्यं वृषनाथस्य क्षेत्रस्यास्योद्भवस्य च ॥ २८ ॥
शुक्रेण कथितं सर्वं माघकृष्णे निशागमे ॥
चतुर्दश्यां शुचिर्भूत्वा यस्तल्लिंगं प्रपूजयेत् ॥
कालाघ्रातोऽपि न प्राणैः स पुमांस्त्यज्यते क्वचित् ॥२९॥
तस्माद्यूयं समासाद्य तल्लिंगं तद्दिने निशि ॥
पूजयध्वं महाभागा येन स्युर्मृत्युवर्जिताः ॥ ६.१४५.३० ॥
यावत्संवत्सरस्यातं सत्यमेतन्मयोदितम् ॥
यथा ते देवसंघाश्च तत्प्रभावादसंशयम् ॥ ३१ ॥
अथ तं दानवेन्द्राणां मंत्रं ज्ञात्वा सुरेश्वरः ॥
नारदाद्ब्राह्मणः पुत्राद्भयत्रस्तमनास्ततः ॥ ३२ ॥
मंत्रं चक्रे समं देवैस्तत्र देवस्य रक्षणे ॥
यथा स्यादुद्यमः सम्यक्तस्मिन्नहनि सर्वदा ॥ ३३ ॥
कोटयस्तु त्रयस्त्रिंशद्देवानां सायुधास्ततः ॥
रक्षार्थं तस्य लिंगस्य तस्मिन्क्षेत्रे व्यवस्थिताः ॥
माघकृष्णचतुर्दश्यां सुसंनद्धाः प्रहारिणः ॥ ३४ ॥
अथ ते दानवा दृष्ट्वा तान्देवांस्तत्र संस्थितान् ॥
भयसंत्रस्तमनसो दुद्रुवुः सर्वतो दिशम् ॥ ३५ ॥
अथ प्रभाते विमले प्रोद्गते रविमण्डले ॥
भूय एव सुराः सर्वे मंत्रं चक्रुः परस्परम् ॥ ३६ ॥

यद्येतत्क्षेत्रमुत्सृज्य गमिष्यामः सुरालयम् ॥
लिंगमेतत्समभ्येत्य पूजयिष्यंति दानवाः ॥ ३७ ॥
ततोऽवध्या भविष्यंति तेऽपि सर्वे यथा वयम् ॥
तस्मादत्रैव तिष्ठामस्त्रयस्त्रिंशत्प्रनायकाः ॥ ३८ ॥
कोटीनामेव सर्वेषां शेषा गच्छन्तु तत्र च ॥
सहस्राक्षेण संयुक्ताः स्वर्गे स्वपररक्षकाः ॥ ३९ ॥
ततोऽष्टौ वसवस्तत्र द्वादशार्कास्तथैव च ॥
एकादशापरे रुद्रा नासत्यौ द्वौ च सुन्दरौ ॥६.१४५.४॥।
एते तल्लिंगरक्षार्थं तस्मिन्क्षेत्रे व्यवस्थिताः॥
शेषाः शक्रसमायुक्ताः प्रजग्मुस्त्रिदशालयम् ॥ ४१ ॥
॥ सूत उवाच ॥ ॥
एवं प्रभावं लिंगं तु देवदेवस्य शूलिनः ॥
भवद्भिः परिपृष्टं यददित्या स्थापितं पुरा ॥ ४२ ॥
यस्मान्न विद्यते मृत्युस्तेन दृष्टेन देहिनाम् ॥
अमराख्यं ततो लिंगं विख्यातं भुवनत्रये ॥ ४३ ॥
यस्मिन्देशेऽपि सा कन्या हता तेन द्विजन्मना ॥
जाबालिना सुक्रुद्धेन तस्य देवस्य मंदिरे ॥ ॥ ४४ ॥
आसीत्तत्र दिने कृष्णा माघमास चतुर्दशी ॥
तेन नो निधनं प्राप्ता सुहताऽपि तपस्विनी ॥ ४५ ॥
एतद्वः सर्वमाख्यातं तस्य लिंगस्य सम्भवम् ॥
माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम् ॥ ४६ ॥
यश्चैतत्पठते भक्त्या तस्य लिंगस्य संनिधौ ॥
अपमृत्युभयं तस्य कथंचिन्नैव जायते ॥ ४७ ॥
तस्याग्रेऽस्ति शुभं कुण्डं पूरितं स्वच्छवारिणा ।
अदित्या निर्मितं देव्या स्नानार्थं चात्मनः कृते ॥ ४८ ॥
स्नानं कृत्वा नरस्तस्मिन्यस्तल्लिंगं प्रपश्यति ॥
करोति जागरं रात्रौ तस्मिन्नेव दिनेदिने ॥
सोऽद्यापि वत्सरं यावन्नापमृत्युमवाप्नुयात् ॥ ४९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽमरकेश्वरक्षेत्रमाहात्म्यवर्णनंनाम पंचचत्वारिंशदधिकशततमो ऽध्यायः ॥ १४५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४६

https://sa.wikisource.org/s/gx8
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

आदित्यानां च सर्वेषां वसुरुद्रादिकाश्विनाम् ॥

प्रत्येकशः समाचक्ष्व नामानि त्वं महामते ॥ १ ॥

॥ सूत उवाच ॥ ॥

वृषध्वजश्च शर्वश्च मृगव्याधस्तृतीयकः ॥

अजैकपादहिर्बुध्न्यः पिनाकी षष्ठ एव हि ॥ २ ॥

दहनश्चेश्वरश्चैव कपाली नवमस्तथा ॥

वृषाकपिस्तु दशमो रुद्रस्त्र्यंबक एव च ॥ ३ ॥

धुरो ध्रुवश्च सोमश्च मखश्चैवानिलोऽनलः ॥

प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ४ ॥

वरुणश्च तथा सूर्यो भानुः ख्यातश्च तापनः ॥

इंद्रश्चैवार्यमा चैव धाता चैव भगस्तथा ॥ ५ ॥

गभस्तिर्धर्मराजश्च स्वर्णरेता दिवाकरः ॥

मित्रश्च वासुदेवश्च द्वादशैते च भास्कराः ॥ ६ ॥

नासत्यश्चैव दस्रश्च ख्यातावेतौ तथाश्विनौ ॥

देववैद्यौ महाभागौ त्वाष्ट्रीगर्भसमुद्भवौ ॥ ७ ॥

त्रयस्त्रिंशत्समाख्याता एते ये सुरनायकाः ॥

क्षेत्रेऽत्रैवास्थिता नित्यं दानवानां वधाय च ॥८॥

यस्तान्संपूजयेद्भक्त्या पुरुषः संयतेंद्रियः॥

यथोक्तदिवसे प्राप्ते नापमृत्युः प्रजायते ॥ ९ ॥

अष्टम्यां च चतुर्दश्यां रुद्राः पूज्या विचक्षणैः ॥

तस्मिन्क्षेत्रे विशेषेण वांछद्भिः परमं पदम् ॥६.१४६.१०॥।

दशम्यां वसवः पूज्यास्तथाष्टम्यां विशेषतः ॥

स्वर्गं समीहमानैश्च विलासैर्विविधैस्तथा ॥ ११ ॥

सप्तम्यामथ षष्ठ्यां च पूजनीया दिवाकराः ॥

ये वांछन्ति नराः सत्त्वं परिपंथिविवर्जितम् ॥ १२ ॥

देववैद्यौ तथा पूज्यौ द्वादश्यां व्याधिसंक्षयम् ॥

ये वांछन्ति सदा मर्त्या नीरुजा सम्भवंति ते ॥ १३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽमरेश्वरकुण्डमाहात्म्यवर्णनं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४७

https://sa.wikisource.org/s/g23
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्योऽपि च तत्रास्ति देवः पुत्रप्रदो नृणाम् ॥

वटिकेश्वर नामा च सर्वपापहरो हरः ॥ १ ॥

यस्मिन्वटिकया पूर्वं तपस्तप्तं द्विजोत्तमाः ॥

प्राप्ता पुत्रं शुके याते वनं व्यासात्कपिंजलम् ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्यासौ वटिका तत्र कथं तप्तवती तपः ॥

कस्माद्गृहं परित्यक्त्वा शुकोऽपि वनमाश्रितः ॥ ३ ॥

कथं कपिजलं पुत्रं व्यासाल्लेभे शुचिस्मिता ॥ ४ ॥

।। सूत उवाच ॥ ॥

आसीद्व्यासस्य विप्रेंद्राः कलत्रार्थं मतिः क्वचित् ।

निष्कामस्य प्रशांतस्य सर्वज्ञस्य महात्मनः ॥ ५ ॥

ततः क्षयमनुप्राप्ते वंशे कुरुसमुद्भवे ॥

विचित्रवीर्यमासाद्य पार्थिवं द्विजसत्तमाः ॥ ६ ॥

सत्यवत्याः समादेशात्तस्य क्षेत्रे ततः परम् ॥

स पुत्राञ्जनयामास त्रीञ्छूरान्पांडुपूर्वकान् ॥ ७ ॥

वानप्रस्थव्रते तिष्ठन्सकृन्मैथुनतत्परः ॥

क्षेत्रजैस्तनयैर्वंशे कुरोस्तस्मादुपस्थिते ॥ ८ ॥

ततः स चिंतयामास भार्यामद्य करोम्यहम् ॥

गार्हस्थ्येनाथ धर्मेण साधयामि शुभां गतिम् ॥ ९ ॥

ततः स प्रार्थयामास जाबालिं तु सुतां शुभाम् ॥

वटिकाख्यां शुभां कन्यां स ददौ तस्य सत्वरम् ॥ ६.१४७.१० ॥

ततस्तया समेतः स वनवासं समाश्रितः ॥

वानप्रस्थाश्रमे तिष्ठन्कृतमैथुनतत्परः ॥ ११ ॥

ततो गर्भवती जज्ञे पिंजला तस्य पार्श्वतः ॥

ऋतौ मोहनमासाद्य व्यासात्सत्यवतीसुतात् ॥ १२ ॥

अथ याति परां वृद्धिं स गर्भस्तत्र संस्थितः ॥

उदरे व्यासभार्यायाः शुक्लपक्षे यथा शशी ॥ १३ ॥

एवं संगच्छतस्तस्य वृद्धिं गर्भस्य नित्यशः ॥

द्वादशाब्दा अतिक्रांता न जन्म समवाप्नुयात् ॥ १४ ॥

यत्किंचिच्छृणुते तत्र गर्भस्थोऽहि वचः क्वचित् ॥

तत्सर्वं हृदिसंस्थं च चक्रे प्रज्ञासमन्वितः ॥ १५ ॥

वेदाः सांगाः समाधीता गर्भवासेऽपि तेन च ॥

स्मृतयश्च पुराणानि मोक्षशास्त्राणि कृत्स्नशः ॥ १६ ॥

तत्रस्थोऽपि दिवा नक्तं स्वाध्यायं प्रकरोति सः ॥

न च जन्मोत्थजां बुद्धिं कथंचिदपि चिंतयेत् ॥ १७ ॥

सापि माता परा पीडां नित्यं याति तथाकुला ॥

यथायथा स संयाति वृद्धिं जठरमाश्रितः ॥ १८ ॥

ततश्च विस्मयाविष्टो व्यासो वचनमब्रवीत् ॥

कस्त्वं मद्गृहिणीकुक्षौ प्रविष्टो गर्भरूपधृक् ॥ १९ ॥

न निष्क्रामसि कस्मात्त्वं किमेतां सूदयिष्यसि ॥ ॥

॥ गर्भ उवाच ॥ ॥

राक्षसोऽहं पिशाचोहं देवोऽहं मानुषस्तथा ॥६.१४७.२॥।

गजोऽहं तुरगश्चापि कुक्कुटश्छाग एव च ॥

योनीनां चतुराशीतिसहस्राणि च संख्यया ॥ २१ ॥

भ्रांतोऽहं तेषु सर्वेषु तत्कोऽहं प्रब्रवीमि किम् ॥

सांप्रतं मानुषो भूत्वा जठरं समुपाश्रितः ॥ २२ ॥

मानुषं न करिष्यामि निष्कामं च कथंचन ॥

निर्विष्टो भ्रममाणोऽत्र संसारे दारुणे ततः ॥२३ ॥

अत्रस्थो भवनिर्मुक्तो योगाभ्यासरतः सदा ॥

मोक्षमार्गं प्रयास्यामि स्थानान्मोक्षमसंशयम्॥ २४ ॥

तावज्ज्ञानं च वैराग्यं पूर्वजातिस्मृतिर्यथा ॥

यावद्गर्भस्थितो जन्तुः सर्वोऽपि द्विजसत्तम ॥ २५ ॥

यदा गर्भाद्विनिष्क्रांतः स्पृश्यते विष्णुमायया ॥

तदा नाशं व्रजत्याशु सत्यमेतदसंशयम् ॥ २६ ॥

तस्मान्नाहं द्विजश्रेष्ठ निष्क्रमिष्ये कथंचन ॥

गर्भादस्मात्प्रयास्यामि स्थानान्मोक्षमसंशयम् ॥ २७ ॥

॥ व्यास उवाच ॥ ॥

न भविष्यति ते माया वैष्णवी सा कथंचन ॥

सुघोरान्नरकादस्मान्निष्क्रमस्व विगर्हितात् ॥ २८ ॥

गर्भवासात्ततो योगं समाश्रित्य शिवं व्रज ॥

तस्माद्दर्शय मे वक्त्रं स्वकीयं येन मे भवेत् ॥

आनृण्यं पितृलोकस्य तव वक्त्रस्य दर्शनात् ॥ २९ ॥

॥ गर्भ उवाच ॥ ॥

वासुदेवं प्रतिभुवं यदि मे त्वं प्रयच्छसि ॥

इदानीं यत्स्वयं तन्मे जन्म स्यान्नान्यथा द्विज ॥ ६.१४७.३० ॥

॥ सूत उवाच ॥ ॥

ततो व्यासो द्रुतं गत्वा द्वारकां प्रति दुःखितः ॥

कथयामास वृत्तांतं विस्तराच्चक्रपाणिने ॥ ३१ ॥

तेनैव सहितः पश्चात्स्वगृहं पुनरागतः ॥

व्यासः प्रतिभुवं तस्मै दातुं विष्णुं निरंजनम् ॥ ३२ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

प्रतिभूरस्मि नाशाय मायायास्तव निर्गमे ॥

मद्वाक्यान्निष्क्रमं कृत्वा गच्छ मोक्षमनुत्तमम् ॥ ३३ ॥

ततो द्रुतं विनिष्क्रांतो विष्णुवाक्येन स द्विजाः ॥

द्वादशाब्दप्रमाणस्तु यौवनस्य समीपगः ॥ ३४ ॥

ततः प्रणम्य दैत्यारिं व्यासं च जननीं तथा ॥

प्रस्थितो वनवासाय तत्क्षणाद्व्यासनंदनः ॥ ३५ ॥

अथ तं स मुनिः प्राह तिष्ठ पुत्रात्ममंदिरे ॥

संस्काराञ्जातकाद्यांश्च येन ते प्रकरोम्यहम् ॥ ३६ ॥

॥ शिशुरुवाच ॥ ॥

संस्काराः शतशो जाता मम जन्मनिजन्मनि ॥
भवार्णवे परिक्षिप्तो यैरहं बन्धनात्मकैः ॥ ३७ ॥
॥ श्रीभगवानुवाच ॥ ॥
शुकवज्जल्पते यस्मात्तवायं पुत्रको मुने ॥
तस्माच्छुकोऽयं नाम्नास्तु योगविद्याविचक्षणः ॥ ३८ ॥
नायं स्थास्यति हर्म्ये स्वे मोहमायाविवर्जितः ॥
तस्माद्गच्छतु मा स्नेहं त्वं कुरुष्वास्य संभवम् ॥ ३९ ॥
अहं गृहं प्रयास्यामि त्वं मुक्तः पैतृकादृणात्॥
दर्शनादेव पुत्रस्य सत्यमेतन्मयोदितम् ॥ ६.१४७.४० ॥
एवमुक्त्वा हृषीकेशो व्यासमामंत्र्य सत्वरम्॥
विहगाधिपमारूढः प्रययौ द्वारकां प्रति ॥ ४१ ॥
ततो गते हृषीकेशे व्यासः पुत्रमुवाच ह ॥
प्रस्थितं वनवासाय निःस्पृहं स्वगृहं प्रति ॥ ४२ ॥
॥ व्यास उवाच॥ ॥
गृहस्थधर्मरिक्तानां पितृवाक्यं प्रणश्यति ॥
पितृवाक्यं तु यो मोहान्नैव सम्यक्समाचरेत्॥
स याति नरकं तस्मान्मद्वाक्यात्पुत्र मा व्रज ॥ ४३ ॥
॥ शुक उवाच ॥ ॥
यथाद्याहं त्वया जातो मया त्वं चान्यजन्मनि ॥
संजातोऽसि मुनिश्रेष्ठ तथाहमपि ते पिता ॥ ४४ ॥
तस्माद्वाक्यं त्वया कार्यं यद्येषा धर्मसंस्थितिः ॥
नाहं निषेधनीयस्तु व्रजमानस्तपोवनम् ॥ ४५ ॥
॥ व्यास उवाच ॥ ॥
ब्राह्मणस्य गृहे जन्म पुण्यैः संप्राप्यते नृभिः ॥
संस्कारान्यत्र संप्राप्य वेदोक्तान्मुनिराप्यते ॥ ४६ ॥
॥ शुक उवाच ॥ ॥
संस्कारैराप्यते मुक्तिर्यदि कर्म शुभं विना ॥
पाखंडिनोऽपि यास्यंति तन्मुक्तिं व्रतधारिणः ॥ ४७ ॥

॥ व्यास उवाच ॥ ॥

ब्रह्मचारी भवेत्पूर्वं गृहस्थश्च ततः परम् ॥

वानप्रस्थो यतिश्चैव ततो मोक्षमवाप्नुयात् ॥ ४८ ॥

॥ शुक उवाच ॥ ॥

ब्रह्मचर्येण चेन्मोक्षस्तत्षण्ढानां सदा भवेत् ॥

गृहस्थाश्रमिणां चेत्स्यात्तत्सर्वं मुच्यते जगत् ॥ ४९ ॥

अथवा वनरक्तानां तन्मृगाणां प्रजायते ॥ ६.१४७.५० ॥

अथवा यतिधर्माणां यदि मोक्षो भवेन्नृणाम् ॥

दरिद्राणां च सर्वेषां तन्मुक्तिः प्रथमा भवेत् ॥ ५१ ॥

॥ व्यास उवाच ॥ ॥

गृहस्थधर्मरक्तानां नृणां सन्मार्गगामिनाम् ॥

इह लोकः परश्चैव मनुना संप्रकीर्तितः ॥ ५२ ॥

॥ श्रीशुक उवाच ॥ ॥

गृहगुप्तौ सुगुप्तानां बंधानां बंधुबंधनैः ॥

मोहरागसमावेशात्सन्मार्ग गमनं कुतः ॥ ५३ ॥

॥ व्यास उवाच ॥ ।

कष्टं वने निवसतोऽत्र सदा नरस्य नो केवलं निजतनुप्रभवं भवेच्च ।

दैवं च पित्र्यमखिलं न विभाति कृत्यं तस्माद्गृहे निवसतात्महितं प्रचिन्त्यम् ॥ ५४ ॥

॥ श्रीशुकदेव उवाच ॥ ॥

भावेन भावितमहातपसां मुनीनां तिष्ठन्ति तावदखिलानि तपःफलानि ॥

यत्ते निकाशशरणाः पुरुषा न जातु पश्यंत्यसज्जनमुखानि सुखं तदेव ॥ ५५ ॥

॥ व्यास उवाच ॥ ॥

गृहं परिग्रहः पुंसां गृहस्थाश्रमधर्मिणाम् ॥

इहलोके परे चैव सुखं यच्छति शाश्वतम् ॥ ५६ ॥

॥ श्रीशुक उवाच ॥ ॥

शीतं हुताशादपि दैवयोगात्सञ्जायते चन्द्रमसोऽपि तापः ॥

परिग्रहात्सौख्यसमुद्भवोऽत्र भूतोऽभवद्भावि न मर्त्यलोके ॥ ५७ ॥

॥ व्यास उवाच ॥ ॥

सुपुण्यैर्लभ्यते कृच्छ्रान्मानुष्यं भुवि दुर्लभम् ॥
तस्मिँल्लब्धे न किं लब्धं यदि स्याद्गृहधर्मवित् ॥ ५८ ॥
॥ श्रीशुकदेव उवाच ॥ ॥
यदि स्याज्ज्ञानसंयुक्तो जन्मकालेत्र मानवः ॥
निजावस्थां समालोक्य तज्ज्ञानं हि विलीयते ॥ ५९ ॥
॥ व्यास उवाच ॥ ॥
मुदितस्यापि पुत्रस्य गर्दभस्यार्भकस्य च ॥
भस्मलोलस्य लोकस्य शब्दोऽपि रटतो मुदे ॥ ६.१४७.६० ॥
॥ श्रीशुक उवाच ॥ ॥
रसता सर्पता धूलि लोके त्वशुचिना चिरम् ॥
मुनेऽत्र शिशुना लोकस्तुष्टिं याति स बालिशः ॥ ६१ ॥
॥ व्यास उवाच ॥ ॥
पुंनामास्ति महारौद्रो नरको यममन्दिरे ॥
पुत्रहीनो व्रजेत्तत्र तेन पुत्रः प्रशस्यते ॥ ६२ ॥
॥ श्रीशुक उवाच ॥ ॥
यदि स्यात्पुत्रतः स्वर्गः सर्वेषां स्यान्महामुने ॥
शूकराणां शुनां चैव शलभानां विशेषतः ॥ ॥ ६३ ॥
॥ व्यास उवाच ॥ ॥
पितॄणामनृणो मर्त्यो जायते पुत्रदर्शनात् ॥
पौत्रस्यापि च देवानां प्रपौत्रस्य दिवाश्रयः ॥ ६४ ॥ ॥
शुक उवाच ॥ ॥
चिरायुर्ज्जायते गृध्रः संततिं पश्यते निजाम् ॥
क्रमेण संततं किं न स मोक्षं प्रतिपद्यते ॥ ६५ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वा परित्यज्य पितरं स वनं गतः ॥
मातरं च सुदुःखार्तां प्रलपन्तीमनेकधा ॥ ६६ ॥
तं दृष्ट्वा दुःखितो व्यासो निराशः पुत्रदर्शने ॥

पुत्रशोकाभिसंतप्तो भार्यया सहितोऽभवत् ॥ ६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये व्यासशुकसंवादवर्णनंनाम सप्तचत्वारिंशदुत्तरशततमोध्यायः ॥ १४७ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४८

https://sa.wikisource.org/s/fzp
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥
एवं तं निःस्पृहं ज्ञात्वा गृहं प्रति निजात्मजम् ॥
पिंगला दुःखसंयुक्ता व्यासमेतदुवाच ह ॥ १ ॥
अहं तपश्चरिष्यामि पुत्रार्थं द्विजसत्तम ॥
अनुज्ञां देहि मे येन तोषयामि महेश्वरम् ॥
पुत्रो येन भवेन्मह्यं वंशवृद्धिकरः परः ॥ २ ॥
एवं सा निश्चयं कृत्वा लब्ध्वानुज्ञां मुनेस्ततः ॥
क्षेत्रमेतत्समासाद्य तपस्तेपे पतिव्रता ॥ ३ ॥
संस्थाप्य शंकरं देवं तदग्रे निर्मलोदकम् ॥
कृत्वा वापीं सुविस्तीर्णां स्नानात्पातकनाशनीम् ॥ ४ ॥
ततस्तस्या गतस्तुष्टिं भगवांस्त्रिपुरांतकः ॥
वरदोऽस्मीति तां प्राह प्रहृष्टेनांतरात्मना ॥ ५ ॥
॥ श्रीमहादेव उवाच ॥ ॥
परितुष्टोऽस्मि ते भद्रे वरं वरय सुव्रते ॥
यः स्थितो हृदये नित्यं नादेयं विद्यते मम ॥ ६ ॥
॥ वटिकोवाच ॥ ॥
सुतं देहि सुरश्रेष्ठ मम वंशविवर्धनम् ॥
चित्ताह्लादकरं नित्यं सुशीलं विनयान्वितम् ॥ ७ ॥ ॥
॥ श्रीमहादेव उवाच ॥ ॥
भविष्यति न संदेहस्तव पुत्रः सुशोभने ॥
यादृक्त्वया महाभागे प्रार्थितस्तद्विशेषतः ॥ ८ ॥
अन्यापि मानुषी याऽत्र वाप्यां स्नात्वा समाहिता ॥
पञ्चम्यां वत्सरं यावच्छुक्लपक्षे ह्युपस्थिते ॥
पूजयिष्यति मल्लिंगं यच्चाद्य स्थापितं त्वया ॥ ९ ॥
साथ लप्स्यति सत्पुत्रं दत्त्वा फलमनुत्तमम् ॥
या च दौर्भाग्यसंयुक्ता तृतीयादिवसेऽत्र वै ॥ ६.१४८.१० ॥
स्नात्वाऽत्र सलिले पश्चान्मल्लिंगं पूजयिष्यति ॥
सा सौभाग्य समोपेता वर्षांते च भविष्यति ॥ ११ ॥
यः पुनः पुरुषश्चात्र स्नात्वा मां पूजयिष्यति ॥

सकामो लप्स्यते कामान्विकामो मोक्षमेव च ॥ १२ ॥
एवमुक्त्वा महादेवस्ततश्चादर्शनं गतः ॥
साऽपि लेभे सुतं व्यासात्कपिंजलमिति श्रुतम् ॥ १३ ॥
याद्दक्तेन पुरा प्रोक्तो देवदेवेन शूलिना ॥
येनैव स्थापिता चात्र देवी केलीवरी पुरा ॥
सर्वसिद्धिप्रदा लोके तत्र याऽऽराधिता पुरा ॥ १४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वटिकेश्वरमाहात्म्यवर्णनं नामाष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १४९



॥ ऋषय ऊचुः ॥ ॥

केलीश्वरी च या देवी श्रूयते सूतनंदन ॥

माहात्म्यं वद नस्तस्या उत्पत्तिं च सुविस्तरात् ॥ १ ॥

कस्मिन्काले समुत्पन्ना किमर्थं च सुरेश्वरी ॥।

किं तस्या जायते श्रेयः पूजया नमनेन च ॥ २ ॥

त्वया कात्यायनी प्रोक्ता चामुण्डा च सुरेश्वरी ॥

श्रीमाता च समुत्पन्ना किमर्थं च सुरेश्वरी ॥ ॥ ३ ॥

श्रीमाता च तथा तारा देवी शत्रुविनाशिनी ॥

केलीश्वरी न संप्रोक्ता तस्मात्तां वद सांप्रतम् ॥ ४ ॥

कौतुकं नः समुत्पन्नमत्रार्थे सूतनंदन ॥ ५ ॥

॥ सूत उवाच ॥ ॥

आद्यैका देवता लोके बहुरूपा व्यवस्थिता ॥

देवतानां हितार्थाय दैत्यपक्षक्षयाय च ॥ ६ ॥

यदायदात्र देवानां व्यसनं जायते क्वचित् ॥

तदातदा परा शक्तिर्या सा व्याप्य व्यवस्थिता ॥ ७ ॥

सर्वमेतज्जगद्धात्री जन्म चक्रे धरातले ॥

महिषासुरनाशाय सा च कात्यायनी भुवि ॥ ८ ॥

अवतीर्णा परा मूर्तिर्गतास्मिन्भुवनत्रये ॥

यदा शुंभनिक्षंभौ च दानवौ बलदर्पितौ ॥ ९ ॥

अवतीर्णा तदा सैव चामुंडा रूपमाश्रिता ॥

प्रोद्गते कालयवने सर्वदेवभयावहे ॥ ६.१४९.१० ॥

श्रीमातारूपिणी देवी सैव जाता महीतले ॥

अंधासुरवधार्थाय शंभुनाऽऽक्रांतचेतसा ॥

सृष्टा केलीवरी देवी यया व्याप्तमिदं जगत् ॥ ११ ॥

ततस्तस्याः प्रभावेन हत्वा दैत्यानशेषतः ॥

अन्धको निहतः पश्चात्त्रैलोक्यव्यसनप्रदः ॥ ॥ १२ ॥

॥ ऋषय ऊचुः ॥ ॥

अन्धकः कस्य पुत्रोऽयं किंप्रभावः कथं हतः ॥

कस्माद्धतस्तु संग्रामे सर्वं विस्तरतो वद ॥ ॥ १३ ॥

॥ सूत उवाच ॥ ॥

दक्षस्य दुहिता नाम्ना दितिः सर्वगुणालया ॥

हिरण्यकशिपुर्नाम तस्याः पुत्रो बभूव ह ॥ १४ ॥

येन शक्रादयो देवा जिताः सर्वे रणाजिरे ॥

स्वर्गे राज्यं कृतं भूरि स्वयमेव महात्मना ॥ १५ ॥ यद्भयात्सकलैर्देवैर्नानाशस्त्राण्यनेकशः ॥

निर्मितान्यतिमुख्यानि वर्मचर्मयुतानि च ॥ १६ ॥

स्वयं विदारितो यश्च विष्णुना प्रभविष्णुना ॥

करजैर्जानुनि पृष्ठे विनिधाय प्रकोपतः ॥ १०७ ॥

तस्य पुत्रद्वयं जज्ञ वीर्यौदार्यगुणान्वितम् ॥

ज्येष्ठः प्रह्लाद इत्युक्तो द्वितीयश्चांधकस्तथा ॥ १८ ॥

हिरण्यकशिपौ प्राप्ते मृत्युलोकं सुहृद्गणैः ॥

अमात्यैश्च ततः प्रोक्तः प्रह्लादो विनयान्वितैः ॥ १९ ॥

पितृपैतामहं राज्यमेतदाचर सांप्रतम् ॥

धुरं वहस्व राज्योत्थां देवान्युद्धे निपातय ॥६.१४९.२॥।

॥ प्रह्लाद उवाच ॥ ॥

नाहं राज्यं करिष्यामि कथंचिदपि भूतले ॥

यतस्ततो निबोधध्वं वचनं मम सांप्रतम् ॥२१॥

दैत्यराज्यं न वांछंति देवाः शक्रपुरोगमाः ॥

तेषां रक्षाकरो नित्यं विष्णुः स भगवान्स्वयम् ॥२२॥

अप्यहं सन्त्यजे प्राणान्सर्वस्वं वा न संशयः ॥

हरिणा सह संग्रामं नाहं कर्तुमहो क्षमः॥ २३ ॥

यो मयाऽभ्यर्चितो नित्यं प्रणतश्च सुरेश्वरः ॥

न तेन सहितो युद्धं करिष्यामि कथञ्चन ॥ २४ ॥ ॥

॥ सूत उवाच ॥ ॥

प्रह्लादेन च संत्यक्ते राज्ये पितृसमुद्भवे ॥

अन्धकः स्थापितस्तत्र संमंत्र्य सचिवैर्मिथः ॥ २५ ॥

हिरण्यकशिपोः पुत्रो देवदानवदर्पहा ॥

सोऽपि राज्यममात्येभ्यो निधाय तदनन्तरम् ॥ २६ ॥

तपश्चक्रे चिरं कालं ध्यायमानः पितामहम् ॥

त्यक्त्वा कामं तथा क्रोधं दंभं मत्सरमेव च ॥ २७ ॥

जितेंद्रियः सुशांतात्मा समः सर्वेषु जन्तुषु ॥

वृक्षमूलाश्रयः शांतः संतुष्टेनांतरात्मना ॥ २८ ॥

यावद्वर्षसहस्रांतं फलाहारो बभूव ह ॥

शीर्णपर्णाशनाहारो यावद्वर्षसहस्रकम् ॥ २९ ॥

ध्यायमानो दिवानक्तं देवदेवं पितामहम् ॥

वायुभक्षस्ततो जज्ञे तावत्कालं द्विजोत्तमाः ॥ ६.१४९.३० ॥

ततो वर्षसहस्रांते चतुर्थे समुपस्थिते ॥

तमुवाच स्वयं ब्रह्मा स्वयमभ्येत्य हर्षितः ॥ ३१ ॥

॥ ब्रह्मोवाच ॥ ॥

परितुष्टोऽस्मि ते वत्स वरं वरय सुव्रत ॥

तुष्टोऽहं ते प्रदास्यामि यद्यपि स्यात्सुदुर्लभम् ॥

॥ अन्धक उवाच ॥ ॥

यदि यच्छसि मे ब्रह्मन्वरं मनसि वांछितम् ॥

जरामरणनाशाय दीयतां सुरसत्तम ॥ ३३ ॥

॥ श्रीब्रह्मोवाच ॥ ॥

न कश्चिच्च जराहीनो विद्यतेऽत्र धरातले ॥

मरणेन विना नैव यस्य जन्म भवेत्क्षितौ ॥ ३४ ॥

तथापि तव दास्यामि बहुधर्मरतस्य च ॥

तस्मात्कुरु महाभाग राज्यं गत्वा निजं गृहम् ॥ ३५ ॥

भवेद्बहुफलं राज्यं श्मशानं भवनं यथा ॥

बहुकण्टकसंकीर्णं क्रूरकर्मभिरावृतम् ॥ ३६ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा चतुर्वक्त्रस्ततश्चादर्शनं गतः ॥

कस्यचित्त्वथ कालस्य प्रेरितः कालधर्मणा ॥

प्रोवाच सचिवान्सोऽथ पितुर्वैरमनुस्मरन् ॥ ३७ ॥

॥ अन्धक उवाच ॥ ॥

पितास्माकं हतो देवैः पितृव्यश्च महाबलः ॥

कपटेन न शौर्येण तस्मात्तान्सूदयाम्यहम् ॥ ३८ ॥

कोऽर्थः पुत्रेण जातेन यो न कृत्यैः सुशंसितैः ॥

प्राकट्यं याति सर्वत्र वंशस्याग्रे ध्वजो यथा॥ ३९॥

॥ मंत्रिण ऊचुः ॥ ॥

युक्तमेतन्महाभाग यत्त्वया व्याहृतं वचः ॥

वध्याःस्युर्विबुधाः सर्वे येऽस्माकं परिपंथिनः ॥ ॥६.१४९.४॥।

अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥

यज्ञभागान्हरिष्यामो हत्वा शक्रमुखान्सुरान् ॥४१॥

एवं ते समयं कृत्वा सैन्येन महतान्विताः ॥

प्रजग्मुस्त्वरितास्तत्र यत्र शक्रो व्यवस्थितः ॥४२॥

शक्रोऽपि दानवानीकं दृष्ट्वा तान्सहसागतान्॥

आरुह्यैरावणं नागं युद्धार्थं निर्ययौ तदा ॥ ४३ ॥

सह देवगणैः सर्वैर्वसुरुद्रार्कपूर्वकैः ॥

एतस्मिन्नंतरे शक्रो वज्रं रौद्रतमं च यत् ॥ ४४ ॥

समुद्दिश्यांधकं तस्मै मुमोच परवीरहा॥

स हतस्तेन वज्रेण विहस्य दनुजोत्तमः ॥ ४५ ॥

शक्रं प्रोवाच संहृष्टस्तारनादेन संयुगे ॥

दृष्टं बाहुबलं शक्र तवाद्य सुचिरान्मया ॥ ४६ ॥

अधुना पश्य चास्माकं त्वमेव बलसूदन ॥ ४७ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वाथ चाविध्य गदां गुर्वीं मुमोच ह ॥

शतघंटामहारावां निर्मितां विश्वकर्मणा ॥ ॥ ४८ ॥

सर्वायसमयीं गुर्वीं यमजिह्वाभिवापराम् ॥

शतहस्तां प्रमाणेन प्राणिनां भयवर्द्धिनीम् ॥ ४९ ॥

तया विनिहतः शक्रो मूर्छाव्याकुलितेंद्रियः ॥

ध्वजयष्टिं समाश्रित्य निविष्टो गजमूर्द्धनि ॥ ६.१४९.५० ॥

अथ संमूर्छितं दृष्ट्वा शक्रं स्कन्दः प्रकोपितः ॥

मुमोचाथ निजां शक्तिममोघां वज्रसंनिभाम्॥ ५१ ॥

तामायांतीं समालोक्य दानवो निशितैः शरैः ॥

प्रतिलोमां ततश्चक्रे लीलयैव महाबलः ॥ ५२ ॥

ततः स्कन्दोऽपि संगृह्य चापं तं प्रति सायकान्॥

मुमोचाशीविषाकारांल्लँघ्वस्त्रं तस्य दर्शयन् ॥ ५३ ॥

एतस्मिन्नन्तरे देवाः सर्वे शस्त्रप्रवृष्टिभिः ॥

समंताच्छादयामासुर्दानवानामनीकिनीम्॥ ५४ ॥

ततस्तु दानवाः सर्वे देवतानामनीकिनीम्॥

प्रहारैः पीडयामासुर्दुद्रुवुस्ते दिवौकसः ॥ ५५ ॥

ततो भग्नान्सुरान्दृष्ट्वा सगणो वृषवाहनः ॥

दर्शयामास चात्मानं देवानाश्वासयन्निव ॥ ५६॥

मा भैष्ट देवताः सर्वाः पश्यध्वं मद्विचेष्टितम् ॥

इत्युक्त्वा भगवाञ्छम्भुर्मंत्रैराथर्वणैस्तदा ॥ ५७ ॥

आह्वयामास विश्वेशां परां शक्तिमनुत्तमाम्॥

आहूता परमा शक्तिर्जगाम हरसंनिधिम् ॥ ५८ ॥

दृष्ट्वा तामग्रतः प्राप्तां सर्वैर्देवैः समन्वितः ॥

अस्तावीत्प्रणतो भूत्वा स्तोत्रेणानेन भक्तितः ॥ ५९ ॥

॥ श्रीभगवानुवाच ॥ ॥

नमस्ते देवदेवेशि नमस्ते भक्तिवल्लभे ॥

सर्वगे सर्वदे देवि नमस्ते विश्वधारिणि ॥ ६.१४९.६० ॥

नमस्ते शक्तिरूपेण सृष्टिप्रलयकारिणि ॥

नमस्ते प्रभया युक्ते विद्युज्ज्वलितकुण्डले ॥ ६१ ॥

त्वं स्वाहा त्वं स्वधा देवि त्वं सृष्टिस्त्वं शुचिर्धृतिः ॥

अरुंधती तथेंद्राणी त्वं लक्ष्मीस्त्वं च पार्वती ॥ ६२ ॥

यत्किंचित्स्त्रीस्वरूपं च समस्तं भुवनत्रये॥
तत्सर्वं त्वत्स्वरूपं स्यादिति शास्त्रेषु निश्चयः ॥ ६३ ॥
॥ श्रीदेव्युवाच ॥ ॥
किमर्थं च समाहूता त्वयाहं वृषवाहन ॥
मंत्रैराथर्वणै रौद्रैस्तत्सर्वं मे प्रकीर्तय ॥ ६४ ॥
येन ते कृत्स्नशः कृत्यं प्रकरोमि यथोदितम् ॥ ६५ ॥
॥ श्रीभगवानुवाच ॥ ॥
एते शक्रादयो देवाः सर्वे स्वर्गाद्विवासिताः ॥
अंधकेन महाभागे दैत्यानामधिपेन च ॥ ६६ ॥
तस्मात्तस्य वधार्थाय गच्छमानस्य मे शृणु ॥
साहाय्यं कुरु मे चाशु सूदयामि रणाजिरे ॥ ॥ ६७ ॥
एते मातृगणाः सर्वे मया दत्तास्तवाधुना ॥
क्षुत्क्षामाः सूदयिष्यंति दानवान्ये पुरः स्थिताः ॥ ६८ ॥
यस्मात्केलीमयं रूपं विधाय त्वं सहस्रधा ॥
अनेकैर्विकृतै रूपैः समाहूताग्निमध्यतः ॥ ६९ ॥
तस्मात्केलीश्वरीनाम त्रैलोक्ये त्वं भविष्यसि ॥
अनेनैव तु रूपेण यस्त्वां भक्त्याऽर्चयिष्यति ॥ ६.१४९.७० ॥
अष्टम्यां च चतुर्दश्यां तस्याभीष्टं भविष्यति ॥
युद्धकालेऽथ संप्राप्ते स्तोत्रेणानेन ते स्तुतिम् ॥ ॥ ७१ ॥
यः करिष्यति भूपालो जयस्तस्य भविष्यति ॥
अपि स्वल्पस्वसैन्यस्य स्वल्पाश्वस्य च संगरे ॥ ७२ ॥
भविष्यति जयो नूनं त्वत्प्रसादादसंशयम् ॥
एवं सा देवदेवेन प्रोक्ता केलीश्वरी तदा ॥ ७३ ॥
प्रस्थिता पुरतस्तस्य भवसैन्यस्य हर्षिता ॥
सर्वैर्मातृगणैः सार्धं रौद्रारावैःसुभीषणैः ॥ ७४ ॥
युद्धोत्साहपरै रौद्रैर्नानाशस्त्रप्रहारिभिः॥
अथ ते दानवा दृष्ट्वा स्त्रीसैन्यं तत्समागतम् ॥७५॥
विकृतं विकृताकारं विकृताकाररावणम् ॥

शस्त्रोद्यतकरं सर्वयुद्धवांछापरायणम् ॥ ७६ ॥

जहसुः सुस्वरं केचित्केचिन्निर्भर्त्सयंति च ॥

अन्ये स्त्रीति परिज्ञाय प्रहरंति न दानवाः ॥ ७७ ॥

वध्यमानापि लज्जंतः पौरुषे स्वे व्यवस्थिताः ॥

एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तमः ॥ ७८ ॥

अन्धकाय स वृत्तांतं कथयामास कृत्स्नशः ॥

नैताः स्त्रियो दनुश्रेष्ठ युद्धार्थं समुपस्थिताः ॥ ७९ ॥

एषा कृत्या वधार्थाय तव रुद्रेण निर्मिता ॥

यैषा सिंहसमारूढा चक्रांकितकरा स्थिता ॥ ६.१४९.८० ॥

एषा केलीश्वरीनाम वह्निकुण्डाद्विनिर्गता ॥

एताभिः सह रौद्राभिः स्त्रीभिर्मंत्रबलाश्रयात् ॥ ८१ ॥

स्वरक्तेन कृते होमे देवदेवेन शम्भुना ॥

स एष भगवान्क्रुद्धः स्वयमभ्येति तेंऽतिकम् ॥ ८२ ॥

युद्धाय निजहर्म्ये तान्स्थापयित्वा सुरोत्तमान् ॥॥

प्रतिज्ञाय वधं तुभ्यं पुरतः परमेष्ठिनः ॥ ८३ ॥

एतज्ज्ञात्वा महाभाग यद्युक्तं तत्समाचर ॥ ८४ ॥

॥ अन्धक उवाच ॥ ॥

नाहं बिभेमि रुद्रस्य तथान्यस्यापि कस्यचित् ॥

न स्त्रीणां प्रहरिष्यामि पालयन्पुरुषव्रतम् ॥ ८५ ॥

॥ सूत उवाच ॥ ॥

एवं प्रवदतस्तस्य दानवस्य महात्मनः ॥

आक्रंदः सुमहाञ्जज्ञे तस्मिन्देशे समंततः ॥ ८६ ॥

भक्ष्यन्ते दानवाः केचिद्वध्यन्ते त्वथ चापरे ॥

अर्धभक्षित गात्राश्च प्रणश्यंति तथा परे ॥ ८७ ॥

युध्यमानास्तथैवान्ये शक्तिमंतोऽपि दानवाः ॥

भक्ष्यंते मातृभिस्तत्र सायुधाश्च सवाहनाः ॥ ८८ ॥

तच्छ्रुत्वा स महाक्रंदमंधकः क्रोधमूर्छितः॥

आदाय खड्गमुत्तस्थौ किमिदं किमिदं ब्रुवन् ॥ ८९ ॥

अथ पश्यति विध्वस्तान्दानवान्बलदर्पितान् ॥

भक्ष्यमाणास्तथैवान्यान्पलायनपरायणान् ॥ ६.१४९.९० ॥

अन्येषां निहतानां च रुदंत्यो निकटस्थिताः ॥

स पश्यति प्रिया भार्याः प्रलपंत्योऽतिदुःखिताः ॥९१॥।

अथ तत्कदनं दृष्ट्वा अंधकः क्रोधमूर्छितः ॥

भर्त्सयामास ताः सर्वा योगिनीः समरोद्यताः ॥ ९२ ॥

न च तास्तस्य दैत्यस्य भयं चक्रुः कथंचन ॥।

केवलं सूदयंति स्म भक्षयंति च दानवान् ॥९३॥

ततः स दानवस्तासां दृष्ट्वा तच्चेष्टितं रुषा ॥

स्वस्य गात्रस्य रक्षां स चकार भयसंकुलः ॥ ९४ ॥॥

तमोऽस्त्रं मुमुचे रौद्रं कृत्वा रावं स तत्क्षणात् ॥

एतस्मिन्नंतरे कृत्स्नं त्रैलोक्यं तमसा वृतम् ॥ ९५ ॥

न किंचिज्ज्ञायते तत्र समं विषममेव च ॥

केवलं दानवेन्द्रश्च सर्वं पश्यति नेतरः ॥ ९६ ॥

ततः स सूदयामास योगिनीस्ताः शितैः शरैः ॥

यथायथा परा नार्यस्तादृग्रूपा भवन्ति च ॥९७॥

अथ दृष्ट्वा परां वृद्धिं योगिनीनां स दानवः ॥

संहारं तस्य चास्त्रस्य चकार भयसंकुलः ॥ ९८ ॥

ततः शुक्रं समासाद्य दीनः प्राह कृतांजलिः ॥

पश्य मे भार्गवश्रेष्ठ स्त्रीभिर्यत्कदनं कृतम् ॥९९॥

अवध्याभिर्ममास्त्राणां मंत्रशक्त्या सुरद्विषः ॥

उत्पन्नाभिः प्रभूताभिर्हतं मे सर्वतो बलम्॥६.१४९.१॥॥

तस्मात्त्वमपि तां विद्यां प्रसाधय महामते ॥

यदि मे वांछसि श्रेयो नान्यथास्ति जयो रणे ॥ १०१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽन्धकासुरवधवृत्तान्ते शंकरकृतकेलीश्वरीप्रादुर्भाववर्णनंनामैकोनपंचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५०



॥ सूत उवाच ॥ ॥

शुक्रस्तस्य वचः श्रुत्वा चित्ते कृत्वा दयां ततः ॥

हाटकेश्वरजं क्षेत्रं गत्वा सिद्धिप्रदायकम् ॥ ॥ १ ॥

चकार विधिवद्धोमं स्वमांसेन हुताशने ॥

मंत्रैराथर्वणै रौद्रैः कुण्डं कृत्वा त्रिकोणकम् ॥ २ ॥

एवं संजुह्वतस्तस्य तेन वै विधिना तदा ॥

यथा रुद्रेण संतुष्टा देवी केलीश्वरी तदा ॥ ३ ॥

तं प्रोवाच समेत्याशु शुक्रं दैत्यपुरोहितम् ॥

मा त्वं भार्गवशार्दूल कुरु मांसपरिक्षयम् ॥ ४ ॥

भाविताऽहं त्रिनेत्रेण तत्किं ब्रूहि करोमि ते ॥ ५ ॥

॥ शुक्र उवाच ॥ ॥

यथा रुद्रस्य साहाय्यं त्वयात्र विहितं शुभे ॥

अंधकस्याऽपि कर्तव्यं तथैवैष वरो मम ॥ ६ ॥

ये केचिद्दानवा युद्धे भक्षिताश्च विनाशिताः ॥

अस्य सैन्यस्य ते सर्वे पुनर्जीवंतु सत्वरम् ॥ ७ ॥

॥ देव्युवाच ॥ ॥

जीवयिष्यामि तान्सर्वान्दानवान्निहतान्रणे ॥

नवसंभक्षितान्विप्र प्रविष्टान्योगिनीमुखे ॥ ८ ॥

एवमुक्त्वा ददौ तस्मै सा देवी हर्षितानना ॥

नाम्नाऽमृतवतीं विद्यां यया जीवंति ते मृताः ॥ ९ ॥

ततः शुक्रः प्रहृष्टात्मा गत्वांधकमुवाच ह ॥

सिद्धा केलीश्वरी देवी यथा शम्भोस्तथा मम ॥ ६.१५०.१० ॥

तया दत्ता शुभा विद्या मम दैत्या मृताश्च ये ॥

तान्सर्वांस्तत्प्रभावेन योजयिष्यामि जीविते ॥ ११ ॥

त्वयाऽस्याः सततं भक्तिः कार्या दानव सत्तम ॥

अष्टम्यां च विशेषेण चतुर्दश्यां च सर्वदा ॥ १२ ॥

एषा सा परमा शक्तिर्यया व्याप्तमिदं जगत्॥

केवलं भक्तिसाध्या सा न दण्डेन कथंचन ॥ १३ ॥

एवमुक्तस्तु शुक्रेण स तदा दानवाधिपः ॥

तां देवीं पूजयामास भावभक्तिसमन्वितः ॥ १४ ॥

स्तुत्वा च विविधैः स्तोत्रैस्ततः प्रोवाच सादरम् ॥

तथान्या मातरः सर्वा यथाज्येष्ठं यथाक्रमम् ॥ १५ ॥

अज्ञानाद्यन्मया देवि कृतः कोपस्तवोपरि ॥

मर्षणीयस्तथा सोऽद्य दीनस्य प्रणतस्य च ॥ १६ ॥

॥ श्रीदेव्युवाच ॥ ॥

परितुष्टाऽस्मि ते वत्स प्रभावाद्भार्गवस्य च ॥

वरं वरय तस्मात्त्वं न वृथा दर्शनं मम ॥ १७ ॥

॥ अन्धक उवाच ॥ ॥

अनेनैव तु रूपेण ये त्वां ध्यायंति देहिनः ॥

पूजयंति च सद्भक्त्या संस्थाप्य प्रतिमां तव ॥

तेषां सिद्धिः प्रदातव्या त्वया हृदयवांछिता ॥ १८ ॥

देव्युवाच ॥ ॥

यो मामनेन रूपेण स्थापयिष्यति मानवः ॥

तस्य मोक्षं प्रदास्यामि पापस्यापि न संशयः ॥ १९ ॥

योऽष्टम्यां च चतुर्दश्यां मम पूजां करिष्यति ॥

तस्मै स्वर्गं प्रदास्यामि पापस्यापि दनूत्तम ॥ ६.१५०.२० ॥

केवलं दर्शनं यश्च ध्यानं वा मे करिष्यति ॥

तस्य राज्यं प्रदास्यामि भोगान्मानुषसंभवान् । २१ ॥

एवमुक्त्वाऽथ सा देवी ततश्चादर्शनं गता ॥

तैश्च मातृगणैः सार्धं पश्यतस्तस्य तत्क्षणात् । २२ ॥

शक्रोऽपि दानवान्सर्वांस्तया संसिद्धया ततः ॥

मृतान्संजीवयामास दैतेयान्नवभक्षितान् ॥ २३ ॥

तैः समेत्य स दैत्येन्द्रः प्रहृष्टेनांतरात्मना ॥

तां पुरीं प्राप्य शक्रस्य राज्यं चक्रे दिवानिशम् ॥ २४ ॥

तां देवीं ध्यायमानस्तु पूजयानो दिवानिशम् ॥

अष्टम्यां च चतुर्दश्यां विशेषेण महाबलः ॥ २५

अथ तस्याः प्रभावं तं ज्ञात्वा व्याससमुद्भवः ॥

स्थानेऽत्र स्थापयामास संसिद्धिं प परां गतः ॥ २६ ॥

॥ सूत उवाच । ॥

एवं केलीश्वर देवी संजाता परमेश्वरी ॥

तस्मात्स्थाप्या च पूज्या च ध्येया चैव विशेषतः ॥ २७ ॥

एवं देव्या नरो यश्च पठते वा शृणोति वा ॥

वाच्यमानं स मुच्येत व्यसनेन गरीयसा ॥ २८ ॥

भ्रष्टराज्योऽथवा राजा यः शृणोत्यष्टमीदिने ॥

स राज्यं लभते भूयो निखिलं हतकंटकम् ॥ २९ ॥

युद्धकाले च संप्राप्ते यश्चैतच्छृणुयान्नरः ॥

स हत्वा शत्रुसंघातं विजयं च समाप्नुयात् ॥ ६.१५०.३० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये केलीश्वरीमाहात्म्यवर्णनंनाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५० । ॥ ।

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५१



॥ ॥ सूत उवाच ॥ ॥

अन्धकोऽपि परां विद्यां ज्ञात्वा शुक्रार्जितां तदा ॥

केलीश्वर्याः प्रसादं च भक्तिजं बलवृद्धिदम्॥ १ ॥

अवध्यतामात्मनश्च पितामहवरोद्भवम् ॥

महेश्वरं समुद्दिश्य कोपं चक्रे ततः परम् ॥ २ ॥

दूतं च प्रेषयामास कैलासं पर्वतं प्रति ॥

गच्छ दूत हरं ब्रूहि मम वाक्येन सांप्रतम् ॥ ३ ॥

शक्रमेनं परित्यज्य सुखं तिष्ठात्र पर्वते ॥

नो चेद्द्रुतं समागत्य सकैलासं सभार्यकम्॥ ४ ॥

सगणं च रणे हत्वा सुखी स्थास्यामि नंदने ॥

त्वामहं नाशयिष्यामि सत्येनात्मानमालभे ॥ ५ ॥

एवमुक्तः स दैत्येन दूतो गत्वा द्रुतं ततः ॥

प्रोवाच शंकरं वाक्यैः परुषैः स विशेषतः ॥ ६ ॥

ततः कोपपरीतात्मा भगवान्वृषभध्वजः ॥

गणान्संप्रेषयामास वधार्थं तस्य दुर्मतेः ॥ ७ ॥

वीरभद्रं महाकालं नंदिं हस्तिमुखं तथा ॥

अघोरं घोरनादं च घोरघंटं महाबलम् ॥ ८ ॥

एतेषामनुगाश्चान्ये कोटिरेका पृथक्पृथक्॥

सर्वान्संप्रेषयामास वधार्थं तस्य दुर्मतेः ॥ ९ ॥

अथ संप्रेषितास्तेन गणास्ते विकृताननाः ॥

हर्षेण महताविष्टा गर्जमाना यथा घनाः ॥ ६.१५१.१० ॥

धृतायुधा गताः सर्वे युद्धार्थं यत्र सा पुरी ॥

शक्रस्यासादिता तेन दानवेन बलीयसा ॥ ११ ॥

अथ प्राप्तान्गणान्दृष्ट्वा दानवास्ते धृतायुधाः ॥

निश्चक्रमुर्वै सहसा युद्धार्थमतिगर्विताः ॥ १२ ॥

ततः समभवद्युद्धं गणानां दानवैः सह ॥
परस्परं महारौद्रं मृत्युं कृत्वा निवर्तनम् ॥ १३ ॥
ततो हरगणाः सर्वे दानवैस्तै रणाजिरे ॥
जिता जग्मुर्दिशो भीता हरवीक्षणतत्पराः ॥ १४ ॥
हरोऽपि तान्गणान्भग्नान्दृष्ट्वा कोपाद्विनिर्ययौ ॥
हरं दृष्ट्वा ततो दैत्या दुद्रुवुस्ते दिशो दश ॥ १५ ।
अन्धकोऽपि हरं दृष्ट्वा युद्धार्थं संमुखो ययौ ।
ततो युद्धं समभवदंधकस्य हरेण तु ॥
वृत्रवासवयोः पूर्वं यथा युद्धमभून्महत् ॥ १६ ॥
चक्रनालीकनाराचैस्तोमरैः खड्गमुद्गरैः॥
एवं न शक्यते हंतुं दानवो विविधायुधैः ॥ १७ ॥
अस्त्रयुद्धं परित्यज्य बाहु युद्धमुपागतौ ॥
करं करेण संगृह्य मुष्टिप्रहरणौ तदा॥१८।
दानवेनाथ देवेशो बंधेनाक्रम्य पीडितः ।
निष्पंदभावमापन्नस्ततो मूर्च्छामुपागतः ॥१९॥
मूर्छागतं तु तज्ज्ञात्वा ह्यन्धको निर्ययौ गृहात् ॥
तावत्स्थाणुः क्षणाल्लब्ध्वा चेतनामात्तकार्मुकः ॥ ६.१५१.२० ॥
आयसीं लकुटीं गृह्य प्रभुर्भारसहस्रि काम् ॥
दानवेन्द्रं ततः प्राप्य ताडयामास मूर्धनि ॥ २१ ॥
सोऽपि खड्गेन देवेशं ताडयामास वेगतः ॥
अथ देवोऽपि सस्मार कौबेरास्त्रं महाहवे ॥ ॥ २२॥
अस्त्रेण तेन हृदये ताडयामास दानवम् ॥
ततः स ताडितस्तेन रुधिरोद्गारमुद्वमन् ॥ २३ ॥
पतितोऽधोमुखो भूत्वा ततः शूलेन भेदितः॥
शूलाग्रसंस्थितः पापश्चक्रवद्भ्रमते ततः ॥ २४ ॥
अन्धकोऽपि तदात्मानं तथावस्थमवेक्ष्य च ॥
ततो वाग्भिः सुपुष्टाभिरस्तौद्देवं महेश्वरम् ॥ २५ ॥
॥ ॥ अन्धक उवाच ॥ ॥

नमस्ते जगतां धात्रे शर्वाय त्रिगुणात्मने ॥

वृषभासनसंस्थाय शशांककृतभूषण ॥ २६ ॥

नमः खट्वांगहस्ताय नमः शूलधराय च ॥

नमो डमरुकोदण्डकपालानलधारिणे ॥ २७ ॥

स्मरदेहविनाशाय मूर्त्यष्टकमयात्मने ॥

नमः स्वरूपदेहाय ह्यरूपबहुरू पिणे ॥ २८ ॥

उत्तमांगविनाशाय विरिंचेः सृष्टिकारिणे ॥

स्मशानवासिने नित्यं नमो भैरवरूपिणे ॥ २९ ॥

सर्वगः सर्वकर्ता च त्वं हर्ता नान्य एव हि ॥

त्वं भूमिस्त्वं रजश्चैव त्वं ज्योतिस्त्वं तमस्तथा ॥ ६.१५१.३० ॥

त्वं वपुः सर्वभूतानां जीवभूतो महेश्वर ॥

अस्तौदेवं दानवेन्द्रो देवशूलाग्र संस्थितः ॥ ३१ ॥

॥ सूत उवाच ॥ ॥

एवं तस्य स्तुतिं श्रुत्वा परितुष्टो महेश्वरः ॥

ततः प्रोवाच तं हर्षाच्छूलाग्रस्थं दनूत्तमम् ॥ ३२ ॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

नेदं वीरव्रतं दैत्य यच्छत्रुकरपीडनात् ॥

प्रोच्यन्ते सामवाक्यानि विशेषाद्दैत्यजन्मना ॥ ३३ ॥

॥ अन्धक उवाच ॥ ॥

निर्विण्णोऽस्मि सुरश्रेष्ठ त्रिशूलाऽग्रं समाश्रितः ॥

तस्मात्सूदय मां येन द्रुतं स्यान्मे व्यथाक्षयः ॥ ३४ ॥

॥ श्रीभगवानुवाच ॥ ॥

न तेऽस्ति मरणं दैत्य कथंचिच्चिंतितं मया ॥

तेनेत्थं विधृतं व्योम्नि भित्त्वा शूलेन वक्षसि ॥ ३५ ॥

तस्मात्त्वं गणतां गच्छ सांप्रतं पापवर्जितः ॥

त्यक्त्वा दानवजं भावं श्रद्धया परया युतः ॥ ३६ ॥

॥ अन्धक उवाच ॥ ॥

गतो मे दानवो भावः सांप्रतं तव किंकरः ॥

भविष्यामि न सन्देहः सत्येनात्मानमालभे ॥ ३७ ॥

॥ शंकर उवाच ॥ ॥

परितुष्टोऽस्मि ते वत्स ब्रूहि यत्तेऽभिवांछितम् ॥

प्रार्थयस्व प्रयच्छामि यद्यपि स्यात्सुदुर्लभम् ॥ ३८ ॥

॥ अन्धक उवाच ॥ ॥

अनेनैव तु रूपेण शृलाग्रस्थितमत्तनुम् ॥

यो मर्त्योर्च्चां प्रकृत्वा ते स्थापयिष्यति भूतले ॥ ॥ ३९ ॥

तस्य मोक्षस्त्वया देयो मद्वाक्यात्सुरसत्तम ॥

तथेत्युक्त्वा महेशस्तं शूलाग्रात्प्रमुमोच ह ॥

अस्थिशेषं कृशांगं च चामुण्डासदृशं द्विजाः ॥ ६.१५१.४० ॥

ततः स गणतां प्राप्तो गीतं चक्रे मनोहरम् ॥

पुरतो देवदेवस्य पार्वत्याश्च विशेषतः ॥ ४१ ॥

भृंगवद्रटनं यस्मात्तस्य श्रोत्रसुखा वहम् ॥

भृंगीरिटि इति प्रोक्तस्ततः स त्रिपुरारिणा ॥ ४२ ॥

एवं स गणतां प्राप्तो देवदेवस्य शूलिनः ॥

विश्वास्यः सर्वकृत्येषु तत्परं समपद्यत ॥ ॥ ४३ ॥

ततःप्रभृति लोकेऽत्र देवदेवो महेश्वरः ॥

तादृशेनैव रूपेण स्थाप्यते भूतले जनैः ॥ ४४ ॥

प्राप्यतेऽत्र परा सिद्धिस्तत्प्रसादादलौ किकी ॥

कस्यचित्त्वथ कालस्य राज्याद्भ्रष्टो महीपतिः ॥ ४५ ॥

सुरथाख्यः प्रसिद्धोऽत्र सूर्यवंशसमुद्भवः ॥

ततो वसिष्ठमासाद्य स चात्मीयं पुरो हितम् ॥

प्रोवाच प्रणतो भूत्वा बाष्पव्याकुललोचनः ॥ ४६ ॥

त्वया नाथेन मे ब्रह्मन्संस्थितेनाऽपि शत्रुभिः ॥

बलाच्च यद्धृतं राज्यं मन्द भाग्यस्य सांप्रतम् ॥ ४७ ॥

तस्मात्कुरु प्रसादं मे येन मे राज्यसंस्थितिः ॥

भूयोऽपि त्वत्प्रसादेन नान्या मे विद्यते गतिः ॥ ४८ ॥

॥ वसिष्ठ उवाच ॥ ॥

यद्येवं ते महाराज मद्वाक्यात्सत्वरं व्रज ॥
हाटकेश्वरजं क्षेत्रं सर्वसिद्धिप्रदायकम् ॥ ४९ ॥
तत्र भैरवरूपेण स्थापयित्वा महेश्वरम् ॥
भुजोद्यतोग्रशूलाग्रविद्धान्धककलेवरम् ॥ ६.१५१.५० ॥
नारसिंहेन मंत्रेण ततः पूजय तं नृप ॥
रक्तपुष्पैस्तथा धूपै रक्तैश्चैवानुलेपनैः ॥ ५१ ॥
ततः सद्वीर्य मासाद्य तेजोवीर्यसमन्वितः ॥
हनिष्यस्यखिलाञ्छत्रूंस्तत्प्रसादादसंशयम् ॥ ५२ ॥
परं शौचसमेतेन संपूज्यो भगवांस्त्वया ॥
अन्यथा प्राप्स्यसे विघ्नान्सत्यमेतन्मयोदितम् ॥ ५३ ॥
अथ तस्य वचः श्रुत्वा स राजा सत्वरं ययौ ॥
तत्र क्षेत्रे ततो देवं स्थापयामास भैरवम् ॥ ५४ ॥
ततः संपूजयामास नारसिंहेन भक्तितः ॥
मन्त्रेण प्रयतो भूत्वा ब्रह्मचर्यपरायणः ॥५५॥
ततो दशसहस्रांते तस्य मंत्रस्य संख्यया ॥
भैरवस्तुष्टिमापन्नः प्रोवा च तदनन्तरम् ॥ ५६ ॥
॥ श्रीभैरव उवाच ॥ ॥
परितुष्टोऽस्मि ते राजन्मंत्रेणानेन पूजितः ॥
तस्मात्प्रार्थय यच्चेष्टं येन सर्वं ददाम्यहम् ॥ ५७ ॥ ॥
॥ सुरथ उवाच ॥ ॥
शत्रुभिर्मे हृतं राज्यं त्वत्प्रसादात्सुरेश्वर ॥
तन्मे भवतु भूयोऽपि शत्रुभिः परिवर्ज्जितम् ॥ ५८ ॥
अन्योऽपि यः पुमानित्थं त्वामिहागत्य पूजयेत् ॥
अनेनैव तु मंत्रेण तस्य सिद्धिस्त्वया विभो ॥५९॥
देया देव सहस्रांते यथा मम सुरेश्वर ॥
तथेति तं प्रतिज्ञाय गतश्चादर्शनं हरः ॥ ६.१५१.६० ॥

सुरथोऽपि निजं राज्यं प्राप हत्वा रणे रिपून्॥६१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटके श्वरक्षेत्रमाहात्म्ये भैरवक्षेत्रमाहात्म्यवर्णनंनामैकपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५१ ॥छ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५२



॥ ऋषय ऊचुः ॥ ॥

असंख्यातानि तीर्थानि त्वयोक्ता न्यत्र सूतज ॥

देवमानुषजातानि देवतायतनानि च ॥

तथा वानरजातानि राक्षसस्थापितानि च ॥१॥

सूतपुत्र वदास्माकं यैर्दृष्टैः स्पर्शितैरपि ॥

सर्वेषां लभ्यते पूर्णं फलं चेप्सितमत्र च ॥ २ ॥

॥ सूत उवाच ॥ ॥

सत्यमेतन्महाभागास्तत्र संख्या न विद्यते ॥

तीर्थानां चैव लिंगानामाश्र माणां तथैव च ॥ ३ ॥

तत्र यः कुरुते स्नानं शंखतीर्थे समाहितः ॥

एकादश्यां विशेषेण सर्वेषां लभते फलम् ॥ ४ ॥

यः पश्यति नरो भक्त्या तत्रैकादशरुद्रकम् ॥

सिद्धेश्वरसमं तेन दृष्टाः सर्वे महेश्वराः ॥ ५ ॥

यः पश्यति वटादित्यं षष्ठ्यां चैत्रे विशेषतः ॥

भास्कराकृत्स्नशो दृष्टास्तेन तत्रहि संस्थिताः ॥ ६ ॥

माहित्थां पश्यति तथा ये देवीं श्रद्धयाविताः ॥

तेन दुर्गाः समस्तास्ता वीक्षिता नात्र संशयः ॥ ७ ॥

यः पश्यति गणेशं च स्वर्गद्वारप्रदं नृणाम् ॥

सर्वे विनायकास्तेन दृष्टाः स्युर्नात्र संशयः ॥ ८ ॥

शर्मिष्ठास्थापितां गौरीं यो ज्येष्ठां तत्र पश्यति ॥

तेन गौर्यः समस्तास्ता वीक्षिता द्विजसत्तमाः ॥ ९ ॥

चक्रपाणिं च यः पश्येत्प्रातरुत्थाय मानवः ॥

वासुदेवा समस्ताश्च तेन तत्र निरीक्षिताः ॥ ६.१५२.१० ॥ ॥

॥ ऋषय ऊचुः ॥ ॥

त्वयासूत तथाऽस्माकं चक्रपाणिश्च यः स्थितः ॥

नाख्यातः स कथं तत्र विस्मृतः किं वदस्व नः ॥

कस्मिन्काले विशेषेण स द्रष्टव्यो मनीषिभिः ॥ ११ ॥

॥ सूत उवाच ॥ ॥

अर्जुनेनैष विप्रेन्द्राः क्षेत्रेऽत्रैव प्रतिष्ठितः ॥

शयने बोधने चैव प्रातरुत्थाय मानवः ॥ १२ ॥

स्नानं कृत्वा सुभक्त्या च यः पश्येच्चक्रपाणिनम् ॥

ब्रह्महत्यादिपापानि तस्य नश्यंति तत्क्षणात् ॥ १३ ॥

भूभारोत्तारणार्थाय धर्मसंस्थापनाय च ॥

ब्रह्मणावतारितौ विप्रा नरनारायणावुभौ ॥ १४ ॥

कृष्णार्जुनौ तदा मर्त्ये द्वापरांते द्विजोत्तमाः ॥

अवतीर्णौ धरापृष्ठे मिथः स्नेहानुगौ तदा ॥

नरनारायणावेतौ स्वयमेव व्यवस्थितौ ॥ १५ ॥

यथा रक्षोविनाशाय रामो दशरथात्मजः ॥

अवतीर्णो धरापृष्ठे तद्वत्कृष्णोऽपि चापरः ॥ १६ ॥

यदा पार्थः समायातस्तीर्थयात्रां प्रति द्विजाः ॥

युधिष्ठिरसमादेशाच्छक्रप्रस्थात्पुरोत्तमात् ॥ १७

द्रौपद्या सहितं दृष्ट्वा रहसि भ्रातरं द्विजम् ॥

प्रोवाच प्रणतो भूत्वा विनयावनतोऽर्जुनः ॥ १९ ॥

॥ अर्जुन उवाच ॥ ॥

आयुधार्थमहं प्राप्तः सांप्रतं पार्थिवोत्तम ॥

द्विजधेनुविमोक्षाय ममाज्ञां देहि पार्थिव ॥ १९ ॥

॥ युधिष्ठिर उवाच ॥ ॥

गच्छार्जुन द्रुतं तत्र नीयन्ते यत्र तस्करैः ॥

धेनवो द्विजवर्यस्य ता मोक्षय धनंजय ॥ ६.१५२.२० ॥

तीर्थयात्रां ततो गच्छ यावद्द्वादशवत्सरान् ॥

ततः पापविनिर्मुक्तः समेष्यसि ममांतिकम्॥ २१ ॥

यः सदारं नरं पश्येदेकांतस्थं तु बुद्धिमान् ॥

अपि चात्यंतपापः स्यात्किं पुनर्निजबांधवम् ॥ २२ ॥

तस्मान्न वीक्षयेत्कञ्चिदेकांतस्थं सभार्यकम् ॥

बांधवं च विशेषेण य इच्छेच्छुभमात्मनः ॥ २३ ॥

स तथेति प्रतिज्ञाय रथमारुह्य सत्वरम् ॥

धनुरादाय बाणांश्च जगाम तदनन्तरम् ॥ २४ ॥

येन मार्गेण ता गावो नीयन्ते तस्करैर्बलात् ॥

तिरस्कृत्य द्विजान्सर्वाञ्छितशस्त्रधरैर्द्विजाः ॥ २५ ॥

अथ हत्वा क्षणाच्चौरान्गाः सर्वाः स्वयमाहृताः ॥

स्वाः स्वा निवेदयामास ब्राह्मणानां महात्मनाम् ॥ २६ ॥

ततस्तीर्थान्यनेकानि स दृष्ट्वायतनानि च ॥

क्षेत्रेऽत्रैव समायातः स्नानार्थं पांडुनन्दनः ॥ २७ ॥

तेन पूर्वमपि प्रायस्तत्क्षेत्रमवलोकितम् ॥

दुर्योधनसमायुक्तो यदा तत्र समागतः ॥ २८ ॥

अथ संपूजयामास यल्लिंगं स्थापितं पुरा ॥

अर्जुनेश्वर संज्ञं तु पुष्पधूपानुलेपनैः ॥ २९ ॥

अन्येषां कौरवेन्द्राणां पांडवानां विशेषतः ॥ ६.१५२.३० ॥

अथ संचिंतयामास मनसा पांडुनंदनः ॥

अहं नरः स्वयं साक्षात्कृष्णो नारायणः स्वयम्॥ ३१ ॥

तस्मादत्र करिष्यामि चक्रपाणिं सुरेश्वरम् ॥

प्रासादो मानवश्चैव यादृङ्नास्ति धरातले ॥ ३२ ॥

कल्पांतेऽपि न नाशः स्यादस्य क्षेत्रस्य कर्हिचित् ॥

प्रासादोऽपि तथाप्येवमत्र क्षेत्रे भविष्यति ३३ ॥

एवं स निश्चयं कृत्वा स्वचित्ते पांडवानुजः ॥

प्रासादं निर्ममे पश्चाद्वैष्णवं द्विजसत्तमाः ॥ ३४ ॥

ततो विप्रान्समाहूय चमत्कारपुरोद्भवान्॥

प्रतिष्ठां कारयामास मतं तेषां समाश्रितः ॥ ३५ ॥

दत्त्वा दानान्यनेकानि शासनानि बहूनि च ॥

अन्यच्च प्रददौ पश्चात्स तेषां तुष्टिदायकम् ॥ ३६ ॥

ततः प्रोवाच तान्सर्वान्कृतांजलिपुटः स्थितः॥

नरोऽहं ब्राह्मणाज्जातः पाण्डोर्भूमिं प्रपेदिवान् ॥३७ ॥

मानुषेणैव रूपेण त्यक्त्वा तां बदरीं शुभाम् ॥

प्रसिद्ध्यर्थं मया चात्र प्रासादोऽयं विनि र्मितः ॥

मन्नाम्ना नरसंज्ञश्च श्रद्धापूतेन चेतसा ॥ ३८ ॥

तस्मादेष भवद्भिश्च चक्रपाणिरिति द्विजाः ॥

कीर्तनीयः सदा येन मम नाम प्रकाश्य ताम्॥ ३९ ॥

विष्णुलोके ध्वनिर्याति यावच्चंद्रदिवाकरौ ॥ ६.१५२.४० ॥

तथा महोत्सवः कार्यः शयने बोधने हरेः ॥

चैत्रमासे विशेषेण संप्राप्ते विष्णुवासरे ॥ ४१ ॥

एतेषु त्रिषु लोकेषु त्यक्त्वेमां बदरीमहम् ॥

पूजामस्य करिष्यामि स्वयं विष्णोर्द्विजोत्तमाः ॥४२॥

यस्तत्र दिवसे मर्त्यः पूजामस्य विधा स्यति ॥

सर्वपापविनिर्मुक्तो विष्णुलोकं स यास्यति॥४३॥

तथा ये वासुदेवस्य क्षेत्रे केचिद्व्यवस्थिताः ॥

तेषां प्रदर्शनं श्रेयो नित्यं दृष्ट्वा च लप्स्यते ॥४४॥

सूत उवाच॥

बाढमित्येव तैरुक्तो दाशार्हः पांडुनंदनः॥

तेषां तद्वारमावेश्य प्रशांतेनांतरात्मना॥

ययौ तीर्थानि चान्यानि कृतकृत्यस्ततः परम्॥४५॥

एवं तत्र स्थितो देवश्चक्रपाणिवपुर्द्धरः॥

स्वयमेव हृषीकेशो जंतूनां पापनाशनः॥४६॥

अद्याऽपि च कला विष्णोः प्राप्ते चैकादशीत्रये ॥

पूर्वोक्तेन विधानेन तस्माच्छ्रद्धासमन्वितैः ॥

सदैव पूजनीयश्च वन्दनीयो विशेषतः ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चक्रपाणिमाहात्म्यवर्णनंनाम द्विपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५३



॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति रूपतीर्थमनुत्तमम् ॥

यत्र स्नातो नरः सम्यग्विरूपो रूपवान्भवेत् ॥ १ ॥

पूर्वं भगवता तेन ब्रह्मणा लोक कर्तृणा ॥

सृष्टिं कृत्वा च विस्तीर्णां यथोक्तं च चतुर्विधाम्॥२॥

ततः स चिन्तयामास रूपसंचयसंयुताम् ।]

एकामप्सरसं दिव्यां देवमायां सृजाम्यहम् ॥ । ॥३॥

ततश्च सर्वदेवानां समादाय तिलंतिलम्॥

रूपं च निर्ममे पश्चादत्याश्चर्यमयीं च ताम् ॥४॥

यां दृष्ट्वा क्षोभमापन्नः स्वयमेव पितामहः ॥५॥

ततस्तां प्रेषयामास कैलासं प्रति पद्मजः ॥

गच्छ देवि महादेवं प्रणमस्व शुचिस्मिते ॥ ६ ॥

ततः सा सत्वरं गत्वा कैलासं पर्वतोत्तमम् ॥

अपश्यच्छंकरं तत्र निर्विष्टं पार्वतीसमम् ॥ ७ ॥

शंकरोऽपि च तां दृष्ट्वा विस्मयं परमं गतः ॥

सुदृष्टां नाकरोद्भीत्या पार्श्वस्थां वीक्ष्य पार्वतीम्॥ ॥

ततः प्रदक्षिणां चक्रे सा प्रणम्य महेश्वरम् ।

श्रद्धया परया युक्ता कृतांजलिपुटा स्थिता ॥९॥

यावद्दक्षिणपार्श्वस्था तावद्वक्त्रं स दक्षिणम्॥

प्रचकार महादेवस्तदुपाकृष्टलोचनः ॥ ६.१५३.१० ॥

पश्चिमायां यदा साऽभूत्प्रदक्षिणवशाच्छुभा ॥

पश्चिमं वदनं तेन तदर्थं च कृतं ततः ॥११॥

एवमुत्तरसंस्थायां तस्यां देवेन शंभुना ॥

उत्तरं वदनं क्लृप्तं गौरीभीतेन चेतसा ॥

न ग्रीवां चालयामास कथंचिदपि स द्विजाः ॥१२॥

एतस्मिन्नंतरे तत्र नारदो मुनिपुंगवः॥

अब्रवीत्पार्वतीं पश्चात्प्रणिपत्य महेश्वरम् ॥ १३ ॥

॥ नारद उवाच ॥ ॥

पश्य पार्वति ते पत्युश्चेष्टितं गर्हितं यथा ॥

दृष्ट्वा रूपवतीं नारीं कृतं। मुखचतुष्टयम् ॥ १४ ॥

अहमेतद्विजानामि न त्वया सदृशी क्वचित् ॥

अस्ति नारी तथाऽन्योपि विजानाति सुरेश्वरि ॥ १९ ॥

हास्यस्य पदवीमद्य त्वं गमिष्यसि पार्वति ॥

सर्वासां देवपत्नीनां ज्ञात्वान्यासक्तमीश्वरम् ॥ १६ ॥

एतद्देवि विजानासि यादृक्चित्तं शिवोद्भवम् ॥

अस्या उपरि वेश्याया निंदिताया विचक्षणैः ॥ १७ ॥

समादाय निजे हर्म्ये एतां संस्थापयिष्यति ॥

परं लज्जासमोपेतो न ब्रवीति वचः शुभे ॥ १८ । ॥

॥ सूत उवाच ॥ ॥

नारदस्य वचः श्रुत्वा दृष्ट्वा कांतं चतुर्मुखम् ॥

क्रोधेन महताविष्टा विकृतं वीक्ष्य तं हरम् ॥ १९ ॥

ततो निरोधया मास द्रुतं सा पर्वतात्मजा ॥

सर्वनेत्राणि देवस्य महिषीधर्ममाश्रिता ॥ ६.१५३.२० ॥

एतस्मिन्नंतरे शैला विशीर्यंति समंततः ॥

मर्यादां संत्यजंति स्म सर्वे च मकरालयाः ॥ २१ ॥

प्रलयस्य समुत्थानं संजातं द्विजसत्तमाः ॥

तावद्ब्रह्मदिनं प्राप्तं परमं सृष्टिलक्षणम् ॥ २२ ॥

निमेषेण पुनस्तस्य प्रलयस्य प्रजापतेः ॥

ब्रह्मणः सा निशा प्रोक्ता सर्वं तोयमयं भवेत् ॥ २३ ॥

अथ तत्र गणाः सर्वे भृगिनंदिपुरःसराः ॥

सोऽपि देवमुनिर्भीतस्तामुवाच सुरेश्वरीम् ॥ २४ ॥

मुंचमुंच सुरज्येष्ठे देवनेत्राणि संप्रति ॥

नोचेन्नाशः समस्तस्य लोकस्यास्य भविष्यति ॥ २५ ॥

एवं प्रोक्ताऽपि सा देवी यावच्च न मुमोच तम् ॥

तावद्देवेन लालाटं विसृष्टं लोचनं परम्॥ २६ ॥

कृपाविष्टेन लोकानां येन रक्षा प्रजायते ॥

न शक्तो वारितुं देवीं प्राणेभ्योऽपि गरीयसीम् ॥ २७ ॥

अंबिकां विबुधाः प्राहुस्त्र्यंबकाणि यतो द्विजाः ॥

तस्मात्संकीर्त्यते लोके त्र्यंबकश्च सुरेश्वरः ॥ २८ ॥

ततः संत्यज्य तं देवं देवी पर्वतपुत्रिका ॥

प्रोवाच कोपरक्ताक्षी पुरःस्थां तां तिलोत्तमाम् ॥ २९ ॥

यस्मान्मे दयितः पापे त्वया रूपाद्विडंबितः ॥

चतुर्वक्त्रः कृतस्तस्मात्त्वं विरूपा भव द्रुतम् ॥ ६.१५३.३० ॥

ततः सा सहसा भूत्वा तत्क्षणाद्भग्ननासिका ॥

शीर्णकेशा बृहद्दंता चिपिटाक्षी महोदरा ॥ ३१ ॥

अथ वीक्ष्य निजं देहं तथाभूतं वराप्सराः ॥

प्रोवाच वेपमाना सा कृतांजलिपुटा स्थिता ॥ ३२ ॥

अहं संप्रेषिता देवि प्रणामार्थं त्रिशूलिनः ॥

ब्रह्मणा तेन चायाता युष्माकं च विशेषतः ॥ ३३ ॥

निर्दोषाया विरागायास्तस्माद्युक्तं न ते भवेत् ॥

शापं दातुं प्रसादं मे तस्मात्त्वं कर्तुमर्हसि ॥ ३४ ॥

तस्यास्तद्वचनं श्रुत्वा दीनं सत्यं च पार्वती ॥

पश्चात्तापसमोपेता ततः प्रोवाच सुप्रियम् ॥ ३५ ॥

स्त्रीस्वभावात्समायातः कोपोऽयं त्वां प्रति द्रुतम् ॥

तस्मादागच्छ गच्छावो मया सार्धं धरातले ॥ ३६ ॥

तत्रास्ति रूपदं तीर्थं मया चोत्पादितं स्वयम् ॥

माघशुक्लतृतीयायां स्नानार्थं विमलोदकम् ॥ ३७ ॥

या नारी प्रातरुत्थाय तत्र स्नानं समाचरेत् ॥

सा स्याद्रूपवती नूनमदृष्टे रविमंडले ॥ ३८ ॥

सदा माघे तृतीयायां तत्र स्नानं करोम्यहम् ॥

अद्य सा तत्र यास्यामि स्नानाय कृतनिश्चया ॥ ३९ ॥ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा समादाय सा देवी तां तिलोत्तमाम् ॥

हाटकेश्वरजे क्षेत्रे रूपतीर्थं जगाम च ॥ ६.१५३.४० ॥

तत्र स्नानं स्वयं चक्रे विधिपूर्वं सुरेश्वरी ॥

तस्या ह्यनन्तरं सापि भक्तियुक्ता तिलोत्तमा ॥ ४१ ॥

ततः कांतिमती जाता तत्क्षणादेव भामिनी ॥

पूर्वमासीयद्थारूपा तथासाऽभूद्विशेषतः ॥ ४२ ॥

अथ तुष्टिसमायुक्ता तां प्रणम्य सुरेश्वरीम् ॥

प्रोवाच विस्मयाविष्टा हर्षगद्गदया गिरा॥ ४३ ॥

प्राप्तं रूपं महादेवि त्वत्प्रसादाच्चिरन्तनम्॥

ब्रह्मलोकं गमिष्यामि मामनुज्ञातुमर्हसि ॥ ४४ ॥

॥ गौर्युवाच ॥ ॥

वरं यच्छामि ते पुत्रि यत्किंचिद्धृदि संस्थितम्॥

तस्मात्प्रार्थय विश्रब्धा न वृथा मम दर्शनम् ॥ ४५ ॥

॥ तिलोत्तमोवाच ॥ ॥

अहमत्र करिष्यामि क्षेत्रे तीर्थं निजं शुभे ॥

त्वत्प्रसादेन तद्देवि यातु ख्यातिं धरातले ॥ ४६ ॥

त्वया तत्रापि कर्तव्यं वर्षांते स्नानमेव हि ॥

हितार्थं सर्वनारीणां रूपसौभाग्यदायकम् ॥ ४७ ॥ ॥

॥ गौर्युवाच ॥ ॥

चैत्रशुक्लतृतीयायां सदाहं त्वत्कृते शुभे ॥

स्नानं तत्र करिष्यामि मध्याह्ने समुपस्थिते ॥ ४८ ॥

हितार्थं सर्वनारीणां तव वाक्यादसंशयम् ॥

या तत्र दिवसे नारी तस्मिंस्तीर्थे करिष्यति ॥ ४९ ॥

स्नानं सा सौख्यसंयुक्ता भविष्यति सुखान्विता ॥

स्पृहणीया च नारीणां सर्वासां धरणीतले ॥ ६.१५३.५० ॥

पुरुषोऽपि सुभक्त्या यस्तत्र स्नानं करिष्यति ॥

सप्तजन्मानि रूपाढ्यः ससौभाग्यो भविष्यति ॥ ५१ ॥

सूत उवाच ॥ ॥

एवमुक्ता तदा देव्या साप्सरा द्विजसत्तमाः ॥

चक्रे कुण्डं सुविस्तीर्णं विमलोदप्रपूरितम्॥ ५२ ॥

उपकंठे ततस्तस्य स्थापयामास पार्वतीम् ॥

ततो जगाम संहृष्टा ब्रह्मलोकं तिलोत्तमा ॥ ५३ ॥

ततः प्रभृति संजातं कुण्डमप्सरसा कृतम् ॥

स्नानमात्रैर्नरैर्यत्र सौभाग्यं लभ्यते द्विजाः ॥ ५४ ॥

नारीभिश्च विशेषेण पुत्रप्राप्तिरनुत्तमा ॥

तथान्यदपि यत्किंचिद्वांछितं हृदये स्थितम् ॥ ५५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्येऽप्सरःकुण्डोत्पत्तिमाहात्म्यवर्णनंनाम त्रिपंचाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५४



॥ सूत उवाच ॥ ॥

या नारी तत्र सत्कुण्डे स्नात्वा तां पार्वतीं पुनः ॥

दृष्ट्वा स्नाति ततस्तीर्थे तस्मिन्नूपमये शुभे ॥१॥

पुनश्च पार्वतीं पश्येच्छ्रद्धया परया युता ॥

सद्यः सा मुच्यते कृत्स्नैराजन्ममरणांतिकैः ॥ २ ॥

तत्रैवास्ति जयानाम पार्वत्याः किंकरी द्विजाः ॥

तया तत्र कृतं कुण्डं गौरीकुण्डसमीपतः ॥ ३ ॥

या तत्र कुरुते स्नानं तृतीयादिवसेऽबला ॥

सुतसौभाग्यसंपन्ना सा भवेत्पतिवल्लभा ॥ ४ ॥

तथान्यदपि तत्रास्ति विजयाकुण्डमुत्तमम् ॥

तत्र स्नाताऽपि वंध्या स्त्री जायते पुत्रसंयुता ॥ ५ ॥

न च पश्यति पुत्राणां कदाचिद्व्यसनं द्विजाः ॥

न वियोगं न दुःखं च स्वप्नांते च कदाचन ॥६॥

काकवंध्याऽपि या नारी तत्र स्नानं समाचरेत्॥

सा पुत्रान्विविधाँल्लब्ध्वा स्वर्गलोके महीयते ॥७॥ ॥

॥ ऋषय ऊचुः ॥ ॥

एतेषां सूत तीर्थानां तीर्थमस्ति सुसिद्धिदम्॥

क्वचित्किंञ्चिद्भवेत्सिद्धिर्यत्र स्नानाच्छरीरजा ॥ ८॥

॥ सूत उवाच ॥ ॥

सप्तविंशतिलिंगानि यानि संति द्विजोत्तमाः ॥

तेषां मध्येऽभवत्सिद्धिरेकस्मिन्निखिला द्विजाः ॥९॥

एकस्य सत्त्वयुक्तस्य वीरव्रतयुतस्य च ॥

आश्विनस्य चतुर्दश्यां कृष्णायां द्विजसत्तमाः॥६.१५४.१०॥

अर्धरात्रे विधानेन तेषां पूजां करोति यः ॥

प्रागुक्तं जपनं भक्त्या स क्रमात्साधकोत्तमः॥११॥

अंगन्यासं विधायोच्चैः क्षुरिकासूक्तमुच्चरत् ॥
तेषामग्रे पुनः सम्यक्पूजयित्वा च शंकरम् ॥ १२ ॥
पृथगेकैकशो भक्त्या पूजयेद्दिक्पतींश्च वै ॥ १३ ॥
अथाऽऽगत्य गणेशो वै विकरालो भयानकः ॥
लंबोदरो वै नग्नश्च कृष्णदन्तसमुद्भवः ॥ १४ ॥
खड्गहस्तोऽब्रवीद्युद्धं प्रकुरुष्व मया समम् ॥
मुक्त्वैतत्कपटं भूमौ यदि वीरोऽसि सात्त्विकः ॥ १५ ॥
ततस्तत्कर्षणाच्चापि यस्तेनाशु प्रताड्यते ॥
स तेनैव शरीरेण नीयते तेन तत्पदम् ॥ १६ ॥
यत्र स्थाने जरामृत्युर्न शोकश्च कदाचन ॥
तथा चित्रेश्वरीपीठे सिद्धिरेकस्य कीर्तिता ॥ १७ ॥
माघकृष्णचतुर्दश्यां यः पीठं तत्र पूजयेत् ॥
आगमोक्तविधानेन सम्यक्छ्रद्धासमन्वितः ॥ १९ ॥
पश्चात्कपालमादाय महामांसप्रपूरितम् ॥
अहमस्य करोम्यद्य महामांसस्य विक्रयम् ॥ १९ ॥
सिद्धिमूल्ये न गृह्णातु कश्चिच्चेदस्ति सात्त्विकः ॥
ततश्च याचते यश्च प्रगृह्णाति च सद्द्विजाः ॥ ६.१५४.२० ॥
स तमादाय निर्याति यत्र देवो महेश्वरः ॥
हाटकेश्वरजं लिंगं चित्रशर्मप्रतिष्ठितम् ॥ २१ ॥
तस्य स्थानस्य मध्यस्थो यस्तं पूजयते नरः ॥
शिवरात्रौ निशीथे च पुष्पलक्षणभक्तितः ॥
सुसिद्धिमाप्नुयात्तूर्णं स शरीरेण तत्क्षणात् ॥ २२ ॥
सिद्धिस्थानानि सर्वाणि तस्मिन्क्षेत्रे स्थितानि वै॥
वीरव्रतप्रयुक्तानां मानवानां द्विजोत्तमाः ॥ २३ ॥ ॥
॥ ऋषय ऊचुः ॥ ॥
तामसो यस्त्वया प्रोक्तः सिद्धिमार्गो महामते ॥
अनर्हो ब्राह्मणेन्द्राणां श्रोत्रियाणां विशेषतः ॥ २४ ॥
शुद्धान्तः करणैः सूत भूतहिंसाविवर्जितैः ॥

यथा संप्राप्यते मोक्षो ब्राह्मणैः सुचिरादपि ॥ २५ ॥

तत्त्वं ब्रूहि महाभाग मोक्षोपायं द्विजन्मनाम् ॥ २६ ॥ ॥

॥ सूत उवाच ॥ ॥

रुद्रैर्दशभिः संयुक्तमानंदेश्वरकं तथा ॥

स्नात्वा तदग्रतः कुण्डे शास्त्रदृष्टेन कर्मणा ॥ २७ ॥

संसिद्धिमाप्नुयान्मर्त्यो दुर्लभां त्रिदशैरपि ॥

माघमासे नरः स्नात्वा विश्वामित्रह्रदे नरः ॥ २८ ॥

प्रत्यूषे तिलपात्रं च ब्राह्मणाय निवेदयेत् ॥

सर्वपापविनिर्मुक्तो ब्रह्म लोके महीयते ॥ २९ ॥

यद्यपि स्याद्दुराचारः सर्वाशी सर्वविक्रयी ॥

सुपर्णाख्यस्य देवस्य पुरतः श्रद्धयाऽन्वितः ॥ ६.१५४.३० ॥

प्रायोपवेशनं कृत्वा ह्युपवासपरो नरः ॥

यस्त्यजेन्मानवः प्राणान्न स भूयोऽभिजायते ॥ ३१ ॥

एवं सिद्धित्रयं प्रोक्तं ब्राह्मणानां हितावहम् ॥

सात्त्विकं ब्राह्मणश्रेष्ठाः शंसितं त्रिदशैरपि ॥ ३२ ॥

अन्यानि तत्र तीर्थानि देवतायतनानि च ॥

तानि स्वर्गप्रदान्याहुर्मुनयः शंसितव्रताः ॥ ३३ ॥

एतद्वः सर्वमाख्यातं क्षेत्रमाहात्म्यमुत्तमम् ॥

हाटकेश्वरदेवस्य सर्वपातकनाशनम् ॥ ३४ ॥

योऽत्र सर्वेषु तीर्थेषु स्नात्वा पश्यति भक्तितः ॥

सर्वाण्यायतनान्येव स पापोऽपि विमुच्यते ॥ ३५ ॥

एतत्खंडं पुराणस्य प्रथमं परिकीर्तितम् ॥

कार्तिकेयप्रणीतस्य सर्वपापहरं शुभम् ॥ ३६ ॥

यश्चैतत्कीर्तयेद्भक्त्या शृणुयाद्वा समाहितः ॥

इह भुक्त्वा सुविपुलान्भोगान्याति त्रिविष्टपम् ॥ ३७ ॥

सर्वतीर्थेषु यत्पुण्यं सर्वदानैश्च यत्फलम् ॥

तत्फलं समवाप्नोति शृण्वञ्छ्रद्धासमन्वितः ॥ ३८ ॥

श्रुत्वा पुराणमेतद्धि जन्मकोटिसमुद्भवात् ॥

पातकाद्विप्रमुच्येत कुलानामुद्धरेच्छतम् ॥ ३९ ॥

ततो व्यासः पूजनीयो वस्त्रदानादिभूषणैः ॥

गोभूहिरण्यनिर्वापैर्दानैश्च विविधैरपि ॥६.१५४.४०॥

तेन संपूजितो व्यासः कृष्णद्वैपायनः मनुः ॥

साक्षात्सत्यवतीपुत्रो येन व्यासः सुपूजितः॥४१॥

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्॥

पृथिव्यां नास्ति तदद्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥४२॥

एतत्पवित्रमायुष्यं धन्यं स्व स्त्ययनं महत्॥

यच्छ्रुत्वा सर्वदुःखेभ्यो मुच्यते नात्र संशयः॥४३।

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये चित्रेश्वरीपीठक्षेत्रमाहात्म्यवर्णनंनाम चतुःपंचाशदुत्तरशततमोऽध्यायः॥१५४॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५५



॥ सूत उवाच ॥ ॥

तथाऽन्ये तत्र तिष्ठंति वसवोऽष्टौ द्विजोत्तमाः॥

स्थानमेकं समाश्रित्य सर्वदैव प्रपूजिताः॥१॥

एकादश तथा रुद्रा आदित्या द्वादशैव तु ॥

देववैद्यौ तथा चान्यावश्विनौ तत्र संस्थितौ ॥२॥

देवतास्तत्र तिष्ठंति कोटिकोटिप्रनायकाः॥

एकैका ब्राह्मणश्रेष्ठाः कलिकालभयाकुलाः॥३॥

हाटकेश्वरजे क्षेत्रे यज्ञभागाप्तये सदा ॥

अष्टम्यां शुक्लपक्षे तु मधुमासे व्यवस्थिते ॥ ४ ॥

यस्तान्वसूञ्छुचिर्भूत्वा स्नात्वा धौतांबरो नरः ॥

तर्पयित्वा द्विजश्रेष्ठान्पश्चात्संपूजयेन्नरः ॥ ५ ॥

वसवस्त्वा कृण्वन्निति मन्त्रेणानेन भक्तितः ॥

नैवेद्यं च ततो दद्याद्वसवश्छंदसाविति ॥ ६ ॥

ततो धूपं सुगन्धं च यो यच्छति समाहितः ॥

वसवस्त्वां जेतु तथा मन्त्रमेतमुदीरयेत् ॥ ७ ॥

आरार्तिकं ततो भूयो यः करोति द्विजोत्तमाः ॥

वसवस्त्वां जेतु तथा श्रूयतां यत्फलं हि तत् ॥ ८ ॥

कन्याभिः कोटिभिर्यच्च पूजिताभिर्भवेत्फलम्॥

वसूनां चैव तत्सर्वमष्टभिस्तैः प्रपूजितैः ॥ ९॥

तथा ये द्वादशादित्यास्तस्मिन्क्षेत्रे व्यवस्थिताः ॥

तान्स्थाप्य पूजयित्वा च सप्तम्यामर्कवासरे ॥

सम्यक्छ्रद्धासमोपेतः पुष्पगन्धानुलेपनैः ॥ ६.१५५.१० ॥

पश्चात्तत्पुरतस्तेषां समस्तान्येकविंशतिः ॥

आदित्यव्रत संज्ञानि तस्य पुण्यफलं शृणु ॥११॥

कोटिद्वादशकं यस्तु सूर्याणां पूजयेन्नरः ॥

तत्फलं प्राप्नुयात्कृत्स्नं पूजयन्नात्र संशयः ॥ १२ ॥

तथैकादशरुद्रा ये तत्र क्षेत्रे द्विजोत्तमाः ॥

एकस्थाने स्थितास्तेषां पूजया श्रूयतां फलम् ॥ १३ ॥

यस्तान्पूजयते भक्त्या स्थापयित्वा सुरेश्वरान्॥

चैत्रशुक्लचतुर्दश्यां जपेच्च शतरुद्रियम् ॥ १४ ॥

एकादशप्रमाणेन कोटयस्तेन पूजिताः ॥

भवंति नात्र संदेहः सत्यमेतन्मयोदितम् ॥ १५ ॥

यथा तावश्विनौ तत्र देववैद्यौ व्यवस्थितौ ॥

आश्विने मासि चाश्विन्यां पूर्णिमायां तथा तिथौ ॥ १६ ॥

यस्तौ संपूजयित्वा तु ह्यश्विनीसूक्तमुच्चरेत् ।

द्विकोटि गुणितं पुण्यं सम्यक्तेन समाप्यते । १७ ।

एतद्वः सर्वमाख्यातं माहात्म्यं वसुसंभवम् ॥

आदित्यानां च रुद्राणामश्विनोर्द्विजसत्तमाः ॥ १९८ ॥ ॥

॥ सूत उवाच ॥ ॥

तथाऽन्योऽपि च तत्रास्ति याज्ञवल्क्यप्रतिष्ठितः ॥

पुष्पादित्य इति ख्यातः सर्वकामप्रदो नृणाम् ॥ १९ ॥

यो यं काममभिध्याय तं पूजयति मानवः ॥

स तं कृत्स्नमवाप्नोति यद्यपि स्यात्सुदुर्लभम्॥६.१५५.२०॥।

अपुत्रो लभते पुत्रान्धनार्थी धनमाप्नुयात् ॥

बहुवैरोऽरिनाशं च विद्यार्थी शास्त्रविद्भवेत्॥ २१ ॥

सप्तम्यामर्कवारेण यस्तं पश्यति मानवः ॥

मुच्येद्दिनोद्भवात्पापान्महतोऽपिद्विजोत्तमाः ॥ २२ ॥

पूजया हि प्रणश्येत पापं वर्षसमुद्भवम्॥

नाशं याति न संदेहस्तमः सूर्योदये यथा ॥ २३ ॥

अष्टोत्तरशतं चैव यः करोति प्रदक्षिणाम् ॥

फलहस्तः स मुच्येत ह्याजन्ममरणादघात् ॥ २४ ॥

प्रदक्षिणां प्रकुवाणो यो यं काममभीप्सति ॥

स तमाप्नोत्यसंदिग्धं निष्कामो मोक्षमाप्नुयात् ॥ २५ ॥

संक्रांतौ सूर्यवारेण यः कुर्यात्स्नापनक्रियाम्॥

अभीष्टं सिध्यते तस्य मेषे वा यदि वा तुले ॥ २६ ॥

तस्मिन्सर्वप्रयत्नेन वांछद्भिरीप्सितं फलम् ॥

स देवो वीक्षणीयश्च पूजनीयो विशेषतः ॥ २७ ॥

यद्देवैः सकलैर्दृष्टैश्चमत्कारपुरोद्भवैः ॥

फलमाप्नोति तद्दृष्टौ तेन तत्फलमाप्नुयात् ॥ २८ ॥

। ऋषय ऊचुः ॥ ॥

याज्ञवल्क्येन देवोऽसौ यदि तावत्प्रतिष्ठितः ॥

पुष्पादित्यः कथं प्रोक्त एतन्नो वक्तुमर्हसि ॥ २९ ॥

॥ सूत उवाच ॥ ॥

अत्र वः कीर्तयिष्यामि चेतिहासं पुरातनम् ॥

पुष्पादित्यो यथा जातो याज्ञवल्क्यप्रतिष्ठितः॥६.१५५.३॥।

अस्त्यत्र मेदिनीपृष्ठे सुपुरं वैदिशं महत् ॥

नानासौध समाकीर्णं वरप्राकारशोभितम्॥ ३१ ॥

उद्यानशतसंकीर्णं तडागैरुपशोभितम् ॥

तत्रासीत्पार्थिवश्रेष्ठश्चित्रवर्मेति विश्रुतः ॥ ३२ ॥

न दुर्भिक्षं न च व्याधिर्न च चौरकृतं भयम् ॥

तस्मिञ्छासति धर्मज्ञे सततं धर्मवत्सले ॥ ३३ ॥

तत्पुरे क्षत्रियो जात्या मणिभद्र इति स्मृतः ॥

स वै धनेन संयुक्तः पितृपैतामहेन च ॥ ३४ ॥

तत्पुरं सकलं चैव स राजा मंत्रिभिः सह ॥

कुसीदाहृतवित्तेन वर्तते कार्य उत्थिते ॥ ३५ ॥

स च कायेन कुब्जः स्याज्जराव्याप्तस्तथैव च ॥

वलीपलितगात्रश्च ह्यत्यंतं च विरूपधृक् ॥३६॥

तथा चैव कुकीनाशः प्रभूतेऽपि धने सति ॥

न ददाति स पापात्मा कस्यचित्किञ्चिदेव हि ॥

न भक्षयति तृष्णार्तः स्वयमेव कथंचन ॥ ३७ ॥

एवंविधोऽपि सोऽतीवविरूपोऽपि सुदुर्मतिः ॥

प्रार्थयामास वै कन्यां स्वजात्यां वीक्ष्य सुंदरीम्॥ ३८ ॥

बिंबोष्ठीं चारुदेहां च मुष्टिग्राह्यकृशोदरीम्॥

पद्मपत्रविशालाक्षीं गूढगुल्फां सुकेशिकाम् ॥ ३९ ॥

रक्तां सप्तसु गात्रेषु त्रिगंभीरां तथा पुनः ॥

सर्वलक्षणसंपूर्णां जातीयां सुमनोरमाम् ॥ ६.१५५.४० ॥

क्षत्रियाद्द्विजशार्दूला दरिद्रेण च पीडितात् ॥

तेन तत्सकलं वृत्तं भार्यायै संनिवेदितम् ॥ ४१ ॥

तच्छ्रुत्वा सा च दुःखेन मूर्च्छिता संबभूव ह ॥

संबोधिता ततस्तेन वाक्यैर्दृष्टांतसंभवैः ॥ ४२ ॥

॥ क्षत्रिय उवाच ॥ ॥

न सा विद्या न तच्छिल्पं न तत्कार्यं न सा कला ॥

अर्थार्थिभिर्न तज्ज्ञानं धनिनां यन्न दीयते ॥ ४३ ॥

इह लोके च धनिनां परोऽपि स्वजनायते ॥

स्वजनोऽपि दरिद्राणां कार्यार्थे दुर्जनायते ॥ ४४ ॥

अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ॥

प्रवर्तंते क्रियाः सर्वाः पर्वतेभ्यो यथापगाः ॥ ४५ ॥

पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ॥

वंद्यते यदवन्द्योऽपि ह्यनुबंधो धनस्य सः ॥ ४६ ॥

अशनादिंद्रिया णीव स्युः कार्याण्यखिलानिह ॥

सर्वस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ४७ ॥

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ॥

जनितारमपि त्यक्त्वा निःस्वः संयाति दूरतः ॥ ४८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुष्पादित्यमाहालये मणिभद्रवृत्तांते मणिभद्राय कन्याप्रदानार्थं क्षत्रियकृतनिजभार्यासंबोधनवर्णनंनाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः ॥१५५॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५६



॥ सूत उवाच ॥ ॥

एवं सम्बोधिता तेन सा भार्या विजने गता ॥

कन्याप्रदानस्य रुचिः संजाता तदनन्तरम् ॥ १ ॥

ततः स पादौ प्रक्षाल्य मणिभद्रस्य सत्वरम्॥

उदकं साक्षतं हस्ते कन्यादानकृते ददौ ॥ २ ॥

सोऽपि हस्तकृते तोये तं क्षत्रियमुवाच ह ॥

अद्यैव कुरु मे शीघ्रं विवाहं कन्यया सह ॥ ३ ॥

यस्मादिच्छामि संस्थातुं तेन ते गृहमागतः ॥

॥ क्षत्रिय उवाच ॥ ॥

नात्र नक्षत्रमर्हं तु न किंचिद्भगदैवतम् ॥ ॥ ४ ॥

विवाहस्य न वारस्तु प्रसुप्ते मधुसूदने ॥

अस्मिन्काले तु संप्राप्ते या कन्या परिणीयते ॥५॥

सा च संवत्सरान्मध्ये ध्रुवं वैधव्यमाप्नुयात्॥

एवं दैवज्ञमुख्यानां श्रुतं प्रवदतां मया ॥ ६ ॥

तस्माच्छुभे तु संप्राप्ते नक्षत्रे भगदैवते ॥

त्वं विवाहय मे कन्यां प्रोत्थिते मधुसूदने ॥

येन क्षेमंकरी ते स्यात्तथा पुत्रप्रपौत्रिणी ॥ ७ ॥

॥ मणिभद्र उवाच ॥ ॥

नक्षत्रं वह्निदैवत्यं प्रसुप्तो मधुसूदनः ॥ ८ ॥

सांप्रतं वत्सरांतोऽयं विवाहे विहिते सति ॥

कामाग्निरुत्थितः काये सांप्रतं मां प्रबाधते ॥ ९ ॥

तस्मात्कुरु प्रसादं मे कन्याविवहितेन तु ॥

तव वित्तं प्रदास्यामि सुखी येन भविष्यसि ॥ ६.१५६.१० ॥

॥ सूत उवाच ॥ ॥

तस्माच्च वित्तलोभेन क्षत्रियो द्विजसत्तमाः ॥

विवाहं कारयामास तत्क्षणादेव स द्विजाः ॥ ११ ॥
ददौ कन्यां सुदुःखार्तामश्रुपूर्णेक्षणां स्थिताम् ॥
सन्निधौ वह्निविप्राणां तदा तेन विवाहिता ॥ १२ ॥
नीत्वा निजगृहं पश्चात्कामधर्मे नियोजिता ॥
अनिच्छंतीमपि सतीं तामतीव निरर्गलः ॥ १३ ॥
सोऽपि निष्कामतां प्राप्य निर्भत्स्र्य च मुहुर्मुहुः ॥
भाषिकाभिरनेकाभिस्तापयित्वा च भामिनीम्॥ १४ ॥
शांतिं नीता ततस्तेन प्रत्यूषे समुपस्थिते ॥
भृत्यवर्गः समस्तोऽपि ततो निःसारितो गृहात् ॥ १५ ॥
इर्ष्याधर्मं समास्थाय परमं द्विजसत्तमाः ॥
एक एव कृतस्तेन द्वारपालो नपुंसकः ॥ १६ ॥
प्रोक्तं न च त्वया देयः प्रवेशोऽत्र गृहे मम ॥
भृत्यस्य भिक्षुकस्यैव वृद्धस्य व्रतिनस्तथा ॥१७॥
एवं कृत्वा विधानं तु ततश्चक्रे जनैः समम् ॥
व्यवहारक्रियाः सर्वा द्रव्यलक्षैः सहस्रशः॥ १८ ॥
श्वशुरस्यापि नो दत्तं किंचित्तेन दुरात्मना ॥
भार्यायाः श्वेतवस्त्राणि मुक्त्वाऽन्यन्नैव किंचन ॥ १९ ॥
यामद्वयेऽपि संप्राप्ते दिनस्य गृहमागतः ॥
मितमन्नं तत स्तस्या भोजनार्थं प्रयच्छति ॥ ६.१५६.२० ॥
यावन्मात्रं च सा भुंक्त एकविप्रान्वितः स्वयम् ॥
भुक्त्वा चैव ततो याति व्यवहारकृते बहिः ॥ २१ ॥ ८।
आगच्छति पुनर्हर्म्यं संध्याकाल उपस्थिते ॥
साऽपि तिष्ठति हर्म्यस्था पत्नी तस्य दुरात्मनः ॥ २२ ॥
वैराग्यं परमं प्राप्ता दुःखशोकसमन्विता ॥ ।
मत्सीव पतिता तोयादन्यस्मिंस्तु स्थलांतिके ॥ २३ ॥
चक्रवाकी विमुक्तेव संप्राप्ते दिवसक्षये ॥
हंसी हंसवियुक्तेव मृगीव मृगवर्जिता ॥ २४ ॥ ।
सोऽपि नित्यं ददौ भोज्यं विप्रस्यैकस्य च द्विजाः ॥

प्रोच्य तं ब्राह्मणं पूर्वं सामपूर्वमिदं वचः ॥ २५ ॥

अधोवक्त्रेण भोक्तव्यं सदा विप्र गृहे मम ॥ ।

यदि पश्यसि मे भार्यां संप्राप्स्यसि विडंबनाम् ॥२६॥

एवं विडंबितास्तेन ह्यूर्ध्ववक्त्रावलोकिनः ॥

ये चान्ये भयसंत्रस्ता न यांति च तदालयम् ॥ । ॥ २७ ॥

कस्यचित्त्वथ कालस्य पुष्पोनाम द्विजोत्तमः ॥

तीर्थयात्राप्रसंगेन संप्राप्तस्तत्पुरं प्रति ॥२८॥

पूर्वे वयसि संस्थश्च दर्शनीयतमाकृतिः ॥ ॥

क्षुत्क्षामः सुपरिश्रांतो मध्याह्ने समुपस्थिते ॥ २९ ॥

परिभ्रमति वै नृणां स गृहाणि समंततः ॥

मणिभद्रः समादिष्टस्तस्य केनापि भोज्यदः ॥६.१५६.३॥। ॥

ततस्तं प्रार्थयामास गत्वा भोज्यं च स द्विजाः ॥

तेनापि स द्विजः प्रोक्तस्तदासौ द्विजसत्तमाः ॥ ३१ ॥

अधोवक्त्रेण भोक्तव्यं त्वया वीक्ष्या न मे प्रिया ॥

नो चेद्विडंबनां विप्र संप्राप्स्यसि न संशयः ॥ ३२ ॥

एवं ज्ञात्वा महाभाग यत्क्षेमं तत्समाचर ॥ ३३ ॥

॥ पुष्प उवाच ॥ ॥

क्षुत्क्षामस्य न मे कार्यं परदारविलोकनैः ॥

वेदाध्ययनयुक्तस्य तीर्थयात्रारतस्य च ॥ ३४ ॥

॥ मणिभद्र उवाच ॥ ॥

तदागच्छ मया सार्धं सांप्रतं मम मंदिरम् ॥

विशेषात्तव दास्यामि भोजनं दक्षिणान्वितम् ॥ ३५ ॥

एवं तौ संविदं कृत्वा ययतुर्ब्राह्मणोत्तमाः ॥

हट्टमार्गे गतौ तत्र यत्र षंढो व्यव स्थितः ॥ ३६ ॥

तत्पार्श्वे ब्राह्मणं धृत्वा प्रविष्टो गृहमध्यतः ॥

भार्यया श्रपयामास धान्यं मानमितं तदा ॥ ३७ ॥

ततो देवार्चनं कृत्वा वैश्वदेवांत आगतम् ॥

पुष्पमाहूय तत्पादौ प्रक्षाल्य च निवेश्य च ॥ ३८ ॥

कृत्वार्चनविधिं तस्य दत्त्वान्नं च सुसंस्कृतम् ॥

उपविश्य ततः पश्चाद्भोजनार्थं ततो द्विजाः।

पुष्पोऽपि वीक्षते तस्याः पादौ पंकजसंनिभौ॥३९॥

यथायथा स कौतुक्याद्वीक्षते यौवनाश्रितः॥

कौतुक्यात्तेन च ततस्तस्या वक्त्रं निरीक्षितम् ॥६.१५६.४०॥

ततश्चाकारयामास मणिभद्रः प्रकोपतः॥

तं षण्ढमुक्तवाञ्जारं त्वमेनं च विडंबय॥४१॥

ततस्तेन द्विजश्रेष्ठाः स पुष्पो मूर्ध्नि ताडितः ॥ ४२ ॥

अधो निपतितं भूमौ रुधिरेण परिप्लुतम् ॥

चरणाभ्यां समाकृष्य दूतो मार्गं समाश्रितः ॥ ४३ ॥

यावच्चतुष्पथं नीतो यत्र संचरते जनः ॥

हाहाकारो महानासीत्तस्मिन्पुरवरे तदा ॥ ४४ ॥

सर्वेषामेव पौराणां तदवस्थं विलोक्य तम् ॥

ततोऽन्यैः शीततोयेन सोभिषिक्तो दयान्वितैः ॥ ४५ ॥

कृत्वा वायुप्रदानं च गमितश्चेतनां प्रति ॥

स प्राप्य चेतनां कृच्छ्रात्ततोयात्तानथाब्रवीत् ॥ ४६ ॥

न मया विहितं चौर्यं परदारा न सेविताः ॥

पश्यध्वं मणिभद्रेण यथाहं क्लेशितो जनाः ॥ ४७ ॥

तीर्थयात्रापरो विप्रो ब्रह्मचर्यपरायणः ॥

भोजनार्थं समामन्त्र्य नीतोऽवस्थामिमां ततः ॥ ४८ ॥

किं नास्ति वात्र भूपालो येनैतदसमंजसम् ॥

ब्राह्मणस्य विशेषेण निर्दोषस्य महाजनाः ॥ ४९ ॥

॥ जना ऊचुः ॥ ॥

बहवस्तेन पापेन विप्राः पूर्वं विडंबिताः ॥

राजप्रसादयुक्तेन चेर्ष्यां प्राप्य शरीरिणा ॥ ६.१५६.५० ॥

कोऽपि राजप्रसादान्न किंचिद्ब्रूतेऽस्य सम्मुखम् ॥

तस्मादुत्तिष्ठ गच्छामो दास्यामस्तेऽशनं वयम् ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुष्पादित्यमाहात्म्ये मणिभद्रकृतपुष्पब्राह्मणविडंबनवर्णनंनाम षट्पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५७

https://sa.wikisource.org/s/fls
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

एवं संबोधितस्तैस्तु लोकैः पुष्पस्तदा द्विजाः ॥

तानब्रवीत्ततः कुद्धो न करिष्यामि भोजनम् ॥ १ ॥

यावन्न चास्य पापस्य करिष्यामि प्रतिक्रियाम् ॥

तद्वदध्वं महाभागा देवो वा देवताऽथवा ॥ २ ॥

तथान्ये सिद्धमन्त्रा वा सद्यः प्रत्ययकारकाः ॥

आराधिता यथा सद्यो मानुषाणां वरप्रदाः ॥ ३ ॥

॥ जना ऊचुः ॥ ॥

एको देवः स्थितश्चात्र सद्यःप्रत्ययकारकः ॥

तथैका देवता चात्र श्रूयते जगती तले ॥ ४ ॥

॥ पुष्प उवाच ॥ ॥

कोऽसौ देवः कियद्दूरे कस्मिन्स्थाने व्यवस्थितः ॥

तथा च देवता ब्रूत दयां कृत्वा ममोपरि ॥ ५ ॥ ॥

॥ जना ऊचुः ॥ ॥

चमत्कारपुरे सूर्यो याज्ञवल्क्यप्रतिष्ठितः ॥

अस्ति विप्र श्रुतोऽस्माभिः सद्यः प्रत्ययकारकः ॥ ६ ॥

सूर्यवारेण सप्तम्यां फलहस्तः प्रदक्षिणाम् ॥

यः करोति नरस्तस्य ह्यष्टोत्तरशतं द्विज ॥ ७ ॥

तस्य सिद्धिप्रदः सम्यङ्मनसा वांछितं ददेत् ॥

तथान्या शारदा नाम देवी काश्मीरसंस्थिता ॥ ८ ॥

उपवासकृतेरेव सापि सिद्धिप्रदायिनी ॥

तच्छ्रुत्वा वचनं तेषां जनानां स द्विजोत्तमाः ॥ ९ ॥

समुद्दिश्य चमत्कारं तस्मात्स्थानात्ततः परम् ॥

चमत्कारपुरं प्राप्य सप्तम्यां सूर्यवासरे ॥ ६.१५७.१० ॥

तत्रागत्य ततः स्नात्वा शुचिर्भूत्वा समाहितः ॥

गतः संति ष्ठते यत्र याज्ञवल्क्यकृतो रविः ॥ ११ ॥

ततः प्रदक्षिणाः कृत्वा अष्टोत्तरशतं मिताः ॥

नालिकेराणि चादाय श्रद्धया परयाः युतः ॥ १२ ॥

ततः क्षुत्क्षामकंठः स परिश्रांतस्तदग्रतः ॥

उपविष्टो जपं कुर्वन्सूर्येष्टैः स्तवनैस्तदा ॥ १३ ॥

मंडलब्राह्मणाद्यैश्च तारं स्वरमुपाश्रितः ॥

सप्तयुंजर वाद्यैश्च अग्निरेवेति भक्तितः ॥ १४ ॥

आदित्यव्रतसंज्ञाद्यैः सामभिर्दृढभक्तिभाक् ॥

क्षुरिकामंत्रपूर्वैश्च तथैवाथर्वणोद्भवैः ॥ १५ ॥

यावदन्योर्कवारस्तु नैव तुष्टो दिवाकरः ॥

पौर्णमासीदिने प्राप्ते वैराग्यं परमं गतः ॥ १६ ॥

ततः पुष्पो विधायाथ स्नानं धौतांबरः शुचिः ॥

भूनाम्ना साध्य भूमिं च स्थंडिलार्थं द्विजोत्तमाः ॥ १७ ॥

स्थंडिलं हस्तमात्रं च स्थंडिले प्रत्यकल्पयत् ॥

अग्निमीळेतिमंत्रेण ततोऽग्निं स निधाय च ॥ १८ ॥

तृणैः परिस्तृणामीतिकृत्वोपस्तरणं ततः ॥

आब्रह्मन्निति मन्त्रेण दत्त्वा ब्रह्मासनं ततः ॥ १९ ॥

सुत्रामाणमिति प्रोच्य समिधःस्थापनं च यत् ॥

प्रोक्षणीपात्रमासाद्य प्रोक्षणं कृतवांस्ततः ॥ ६.१५७.२० ॥

पात्राणामथ सर्वेषां स्रुवादीनां यथाक्रमम् ॥

ततः प्रकल्पयामास हविःस्थाने निजां तनुम् ॥ ॥ २१ ॥

न्यायं तु देवतास्थाने स आचार्यविधानतः ॥

ग्रहणं प्रोक्षणं चैव सूर्याय त्वेति चोत्तरम् ॥ २२ ॥

अयं त इध्म आत्मेति जप्त्वाथ समिधं ततः ॥

अग्निसोमेति मन्त्राभ्यां हुत्वा चाज्याहुती ततः ॥ २३ ॥

कृत्वा व्याहृतिहोमं तु भूर्भुवः स्वेति भो द्विजाः ॥

ये ते शतेति मन्त्राद्यैर्हुत्वात्रैव च दारुणम् ॥ २४ ॥

आह्वयामास वह्निं च प्रत्यक्षो भव देव मे ॥

एवं मन्त्रेण कृत्वा तं संमुखं ज्वलनं ततः ॥ २५ ॥

कालीकरालिकाद्याश्च सप्तजिह्वाश्च याः स्मृताः ॥

तासामाह्वानकं कृत्वा ततो दीप्ते हविर्भुजि ॥ २६ ॥

जुहाव च स मांसानि स्वानि चोत्कृत्त्य शस्त्रतः ॥

लोमभ्यः स्वाहेति विदिशो दिग्भ्यो दत्त्वा ततः परम् ॥ २७ ॥

अग्नये स्विष्टकृतइति यावदात्मानमाक्षिपेत् ॥

तावद्धृतः स सूर्येण स्वहस्तेन समंततः ॥ २८ ॥

धृतश्च सादरं तेन मा विप्र कुरु साहसम् ॥

नेदृग्घोमः कृतः क्वापि कदाचित्केनचिद्द्विज ॥ ॥ २९ ॥

तुष्टोऽहं च महाभाग ब्रूहि किं करवाणि ते ॥

अदेयमपि दास्यामि यत्ते मनसिवर्तते ॥ ६.१५७.३० ॥

॥ पुष्प उवाच ॥ ॥

यदि तुष्टोसि देवेश यदि देयो वरो मम ॥

तद्देयं गुटिकायुग्मं यदर्थं प्रार्थयाम्यहम् ॥ ३१ ॥

वैदिशे नगरे चास्ति मणिभद्रो महाधनी ॥

कुब्जांगः क्षत्रियो देव जरावलिसमन्वितः ॥ ३२ ॥

अब्रह्मण्यो महानीचः कीनाशो जनदूषितः ॥

द्वयोरेकां यदा वक्त्रे सदा चैव करोम्यहम् ॥ ३३ ॥

तदा मे तादृशं रूपमविकल्पं भवत्विति ॥

यदा पुनर्गृहीत्वा तां द्वितीयां प्रक्षिपाम्यहम् ॥ ३४ ॥

ततश्च सहजं रूपं मम भूयात्सुरेश्वर ॥

वैदिशे नगरे चास्ति मणिभद्रः सुरेश्वर ॥ ३५ ॥

अपरं तस्य यत्किंचिद्धनधान्यादिकं गृहे ॥

तत्सर्वं विदितं मे स्यात्तथा देव प्रजायताम्॥ ३६ ॥

किं वानेन बहूक्तेन तस्य मित्राणि बांधवाः ॥

व्यवहारास्तथा सर्वे प्रकटाः स्युः सदैव हि ॥ ३७ ॥

न कश्चिज्जायते तत्र विकल्पः कस्यचित्क्वचित् ॥

मम तस्याधम स्यापि सर्वकृत्येषु सर्वदा ॥ ३८ ॥

॥ भास्कर उवाच ॥ ॥

गृहाण त्वं महाभाग गुटिकाद्वितयं शुभम् ॥

शुक्लं कृष्णं च वक्त्रस्थं विभेद जननं महत् ॥ ३९ ॥

शुक्लया तस्य रूपं च तव नूनं भविष्यति ॥

कृष्णयापि पुनः स्वं च संप्राप्स्यसि महाद्विज ॥ ६.१५७.४० ॥

॥ पुष्प उवाच ॥ ॥

अपरं वद मे देव संदेहं हृदये स्थितम् ॥

यत्त्वां पृच्छामि देवेश तव कीर्तिविवर्धनम् ॥४१॥

मया श्रुतं सुरश्रेष्ठ सप्तम्यां सूर्यवासरे ॥

यस्ते प्रदक्षिणानां च कुर्यादष्टोत्तरं शतम् ॥

तस्य त्वं तत्क्षणादेव फलहस्तस्य सिद्धिदः ॥ ४२ ॥

मूर्खस्यापि च पापस्य सर्वदोषान्वितस्य च ॥

चतुर्वेदस्य मे कस्मात्तीर्थयात्रापरस्य च ॥ ४३ ॥

सप्तरात्रे गते तुष्टो होम एवंविधे कृते ॥ ४४ ॥

॥ श्रीसूर्य उवाच॥ ॥

तामसेन तु भावेन त्ववा सर्वमिदं कृतम्॥

तेन सर्वं वृथा जातं त्वया सर्वं च यत्कृतम् ॥ ४९ ॥

यत्किंचित्क्रियते विप्र तामसं भावमाश्रितैः ॥

तत्सर्वं जायते व्यर्थं किं न वेत्ति भवा निदम् ॥ ४६ ॥

एवमुक्त्वा ततः सूर्यस्तस्य गात्राण्युपास्पृशत् ॥

खंडितानि स्वहस्तेन निर्व्रणानि कृतानि च ॥ ४७ ॥

अब्रवीच्च पुनः पुष्पं प्रसन्न वदनः स्थितः ॥

अनेनैव विधानेन यः करोति कुशंडिकाम् ॥ ४८ ॥

सोम्यभावं समाश्रित्य समिद्भिश्चार्कसंभवैः ॥

तिलाक्षतैर्विशेषेण होमं यस्तु समाचरेत् ॥ ४९ ॥

छन्दऋषिसमोपेतमेकं यावत्सहस्रकम् ॥

तस्य दास्याम्यहं हृत्स्थमधिकेभ्योऽधिकं फलम् ॥६.१५७.५॥।

एवमुक्त्वा सहस्रांशुस्तत्रैवां तरधीयत ॥

दीपवल्लक्षितो नैव केन मार्गेण निर्गतः ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सूर्यसकाशात्पुष्पब्राह्मणस्य वरलब्धिवर्णनंनाम सप्तपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५८

https://sa.wikisource.org/s/flu

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

पुष्पोऽपि गुटिके लब्ध्वा भास्कराद्वारितस्करात् ॥

चिराद्भोजनमासाद्य प्रस्थितो वैदिशं प्रति ॥ १ ॥

ततो वैदिशमासाद्य स पुष्पो हृष्टमानसः ॥

शुक्ला तां गुटिकां वक्त्रे चकारद्विजसत्तमाः ॥ २ ॥

मणिभद्रसमो जातस्तत्क्षणादेव स द्विजः ॥

हट्टमार्गं गते सोऽथ तस्मिन्गत्वाऽथ मंदिरे ॥

प्रविष्टः सहसा मध्ये प्रहृष्टेनांतरात्मना ॥ ३ ॥

ततश्चाकारयामास तं षंढं द्वारमाश्रितम् ॥

तस्य दत्त्वाथ वस्त्राणि पश्चात्षंढमुवाच सः ॥ ४ ॥

षंढकश्चित्पुमानत्र सम्यग्वेषकरो हि सः ॥

मम वेषं समाधाय भ्रमते सकले पुरे ॥ ५ ॥

सांप्रतं मद्गृहे सोऽथ लोभनायागमिष्यति ॥

स च कृत्रिम वेषेण निषेद्धव्यस्त्वया हि सः ॥

स तथेति प्रतिज्ञाय द्वारदेशं समाश्रितः ॥ ६ ॥

पुष्पोऽपि चाब्रवीद्भार्यां माहिकाख्यां ततः परम् ॥

माहिकेद्य मया दृष्टः स्वतातः स्वपुरः स्थितः ॥ ७ ॥

वीरभद्रः सुदुःखार्तो मलिनांबरसंवृतः ॥

अब्रवीच्च ततः कोपान्मामेवं परुषाक्षरम् ॥ ८ ॥

धिग्धिक्पाप त्वया कन्यातीव रूपवती सदा ॥

वंचयित्वा जनेतारमुदूढा सा सुमध्यमा ॥ ९ ॥

न दत्तं तत्पितुः किंचिन्न तस्या अथ पुत्रक ॥

विधवां यादृशीं तां च श्वेतांबरधरां सदा ॥ ६.१५८.१० ॥

संधारयसि पापात्मन्नेष्टं भोज्यं प्रयच्छसि ॥

तस्मात्तस्याः पितुर्देहि त्वं सुवर्णायुतं ध्रुवम् ॥ ११ ॥

भूषणं वांछितं तस्या यत्तद्वै रुचिपूर्वकम् ॥
येन संधारयेद्भार्या साऽऽनंदं परमं गता ॥ १२ ॥
निरानंदा यतो नारी न गर्भं धारयेत्स्फुटम् ॥
निःसंतानो यतो वंशः स्वर्गादपि क्षितिं व्रजेत् ॥ १३ ॥
स पतिष्यत्यसंदिग्धं कुलांगारेण च त्वया ॥
सा त्वमानय वस्त्राणि गृहमध्याच्छुभानि च ॥ १४ ॥
यानि दत्तानि भूपेन व्यवहारैस्तदा मम ॥
पञ्चांगश्च प्रसादो यो मया प्राप्तश्च तैः सह ॥ १५ ॥
त्वं संधारय गात्रैः स्वैः शीघ्रं रसवतीं कुरु ॥
भोजनायैव शीघ्रं तु त्वया सार्धं करोम्यहम् ॥ १६ ॥
एकस्मिन्नपि पात्रे च तदादेशादसंशयम् ॥
सापि सर्वं तथा चक्रे यदुक्तं तेन हर्षिता ॥ १७ ॥
भोजनाच्छादनं चैव निर्विकल्पेन चेतसा ॥
ततः कामातुरः पुष्पो मैथुनायोपचक्रमे ॥ १८ ॥
एतस्मिन्नंतरे प्राप्तो मणिभद्रः समुत्सुकः ॥
क्षुत्क्षामः स पिपासार्तो व्यवहारोत्थलिप्सया ॥ १९ ॥
प्रवेशं कुरुते यावद्गृहमध्ये समुत्सुकः ॥
निषिद्धस्तेन षण्ढेन भर्त्सयित्वा मुहुर्मुहुः ॥ ६.१५८.२० ॥
हठाद्यावत्प्रवेशं स चकार निजमंदिरे ॥
तावच्च दण्डकाष्ठेन मस्तके तेन ताडितः ॥ २१ ॥
अथ संपतितो भूमौ मूर्छया संपरिप्लुतः ॥
कर्तव्यं नैव जानाति तत्प्रहारप्रपीडितः ॥ २२ ॥
ततः कोलाहलो जातस्तस्य द्वारे गृहस्य च ॥
जनस्य संप्रयातस्य हाहाकारपरस्य च ॥ २३ ॥
पप्रच्छुस्तं जनाः केचि द्धिक्पाप किमिदं कृतम् ॥
वृत्तिभंगः कृतोऽनेन अथ त्वं व्यंतरार्दितः ॥ २४ ॥
इमामवस्थां यन्नीतः संप्राप्तोऽसि नृपाद्वधम् ॥ २५ ॥
॥ षंढ उवाच ॥ ॥

न वृत्तिर्गर्हिता तेन नाहं व्यंतरपीडितः ॥
मणिभद्रो न चैष स्यादेष वेषकरः पुमान् ॥ २६ ॥
माणिभद्रं वपुः कृत्वा संप्राप्तो याचितुं धनम् ॥
हठात्प्रविश्यमानस्तु स मया मूर्ध्नि ताडितः ॥ २७ ॥
मणिभद्रो गृहस्यांतर्भुक्त्वा शयनमाश्रितः ॥
संतिष्ठते न जानाति वृत्तांतमिदमा स्थितम् ॥ २८ ॥
ततः पुष्पोऽपि तच्छ्रुत्वा तं च कोलाहलं बहिः ॥
मणिभद्रस्य रूपेण द्वारदेशं समागतः ॥ २९ ॥
अब्रवीन्नित्यमभ्येति मम रूपेण चाधमः ॥
एष वेषधरः कश्चिद्याचितुं धनमेव हि ॥ ६.१५८.३० ॥
एतेनापि च षंढेन न च भद्रमनुष्ठितम् ॥
यत्कुब्जोऽयं हतो मूर्ध्नि याचितुं समु पस्थितः ॥ ३१ ॥
एतस्मिन्नन्तरे सोऽपि चेतनां प्राप्य कृत्स्नशः ॥
वीक्षते पुरतो यावत्तावदात्मसमः पुमान् ॥ ३२ ॥
सर्वतः स तमालोक्य ततो वचनमब्रवीत् ॥ ३३ ॥
क्व चोरः संप्रविष्टो मे मम रूपेण मंदिरे ॥
भेदयित्वा तु षण्डाख्यमेवं दत्त्वा च वाससी ॥ ३४ ॥
यावद्भूपगृहं गत्वा त्वां षंढेन समन्वितम् ॥
वधाय योजयाम्येव तावद्द्रुततरं व्रज ॥ ३५ ॥
॥ पुष्प उवाच ॥ ॥
मम रूपं समाधाय त्वमायातो गृहे मम ॥
शून्यं मत्वा ततो ज्ञातस्त्वयाऽहं गृहसंस्थितः ॥३६॥
ततो नृपाय दास्यामि वधार्थं च न संशयः ॥
नो चेद्गच्छ द्रुतं पाप यदि जीवितुमिच्छसि ॥३७॥ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वा ततस्तौ च बाहुयुद्धेन वै मिथः ॥
युध्यमानौ नरैरन्यैः कृच्छ्रेण तु निवारितौ ॥३८॥
ततस्ते स्वजना ये तु मणिभ द्रस्य चागताः ॥

परिजानंति नो द्वाभ्यां विशेषं माणिभद्रकम् ॥ ३९ ॥

वालिसुग्रीवयोर्युद्धं तारार्थे युध्यमानयोः ॥

एवं विवदमानौ तु क्रोधताम्रा यतेक्षणौ ॥ ६.१५८.४० ॥

राजद्वारं समासाद्य स्थितौ स्वजनसंवृतौ ॥

द्वाःस्थेन सूचितौ राज्ञे सभातलमुपस्थितौ ॥ ४१ ॥

चौरचौरेति जल्पन्तौ पर स्परवधैषिणौ ॥

भूभुजा वीक्षितौ तौ च द्विजौ तु द्विजसत्तमाः ॥४२ ॥

न विशेषोऽस्ति विश्लेषस्तयोरेकोपिकायतः ॥

ततश्च व्यवहारेषु समती तेषु वै तदा ॥ ४३ ॥

पृष्टौ गुह्येषु सर्वेषु प्रत्यक्षेषु विशेषतः॥

वदतस्तौ यथावृत्तं पृथक्पृथग्व्यवस्थितम् ॥ ४४ ॥

ततस्तु स्वजनैः सर्वैरेको नीत्व थ चान्यतः ॥

पृष्टो गोत्रान्वयं सर्वं द्वितीयस्तु ततः परम् ॥ ४५ ॥

तेषामपि तथा सर्वं यथासम्यङ्निवेदितम् ॥

अथ राजा बृहत्सेनः सर्वांस्तानि दमब्रवीत् ॥ ४६ ॥

पत्नी चानीयतां तस्य मणिभद्रस्य वै गृहात् ॥

निजकान्तस्य विज्ञाने सा प्रमाणं भविष्यति ॥ ४७ ॥

ततो गत्वा च सा प्रोक्ता पुरुषैर्नृपसंभवैः ॥

आगच्छ कांतं जानीहि त्वं प्रमाणं भविष्यसि ॥ ४८ ॥

ततः सा व्रीडया युक्ता प्रच्छादितशिरास्ततः ॥

नृपाग्रे संस्थिता प्रोचे विद्धिसम्यङ्निजं प्रियम् ॥ ४९ ॥

न वयं निश्चयं विद्मो न चैते स्वजनास्तव ॥ ६.१५८.५० ॥

ततः सा चिन्तयामास निजचित्ते वरांगना ॥

मणिभद्रेण दग्धाहमीर्ष्यावह्निगताऽनिशम् ॥ ५१ ॥

वंचयित्वा तु पितरं गृहीतास्मि ततः परम् ॥

न किंचित्पाप्मना दत्तं जल्पयित्वा धनं बहु ॥ ॥ ५२ ॥

द्वितीयेन तु मे पुंसा मर्त्यलोके सुखं कृतम् ॥

दत्त्वा वस्त्राणि चित्राणि तथैवाभरणानि च ॥ ५३ ॥

प्रदास्यति च तातस्य सुवर्णं कथितं च यत् ॥

यद्गृह्णामि स्वहस्तेन मणिभद्रं द्वितीयकम् ॥ ५४ ॥

एवं निश्चित्य मनसा दृष्ट्वा रक्तपरिप्लुतम् ॥

प्रथमं मणिभद्रं सा जगृहेऽथ द्वितीयकम्॥ ५५ ॥

अब्रवीच्च ततो वाक्यं सर्वलोकस्य शृण्वतः ॥

अहं तातेन दत्तास्य विवाहे अग्निसंनिधौ ॥५६॥

द्वितीयोऽयं दुराचारो वेषकर्ता समा गतः ॥

मां च प्रार्थयते गुप्तां नानाचारैः पृथग्विधैः ॥ ५७ ॥

ततस्तु पार्थिवः क्रुद्धस्तस्य शाखावलंबनम् ॥

आदिदेश द्विजश्रेष्ठा मणिभद्रस्य दुर्मतेः ॥ ५८ ॥

एतस्मिन्नंतरे सोऽथ वधकानां समर्पितः ॥

तं वृक्षं नीयमानस्तु श्लोकानेतांस्तदापठत् ॥ ५९ ॥

निर्दयत्वं तथा द्रोहं कुटिलत्वं विशेषतः ॥

अशौचं निर्घृणत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ ६.१५८.६० ॥

अन्तर्विषमया ह्येता बहिर्भागे मनोरमाः ॥

गुञ्जाफलसमाकारा योषितः सर्व दैवहि ॥ ६१ ॥

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ॥

मन्वादयस्तथान्येऽपि स्त्रीबुद्धेस्तत्र किंच न ॥ ६२ ॥

पीयूषमधरे वासं हृदि हालाहलं विषम् ॥

आस्वाद्यतेऽधरस्तेन हृदयं च प्रपीड्यते ॥ ६३ ॥

अलक्तको यथा रक्तो नरः कामी तथैव च ॥

हृतसारस्तथा सोऽपि पादमूले निपा त्यते ॥ ६४ ॥

संसारविषवृक्षस्य कुकर्मकुसुमस्य च ॥

नरकार्तिफलस्योक्ता मूलमेषा नितंबिनी ॥ ६५ ॥

कस्य नो जायते त्रासो दृष्ट्वा दूरा दपि स्त्रियम्॥ ६६ ॥

संसारभ्रमणं नारी प्रथमेऽपि समागमे ॥

वह्निप्रदक्षिणन्यायव्याजेनैव प्रदर्शयेत् ॥ ६७ ॥

एतास्तु निर्घृणत्वेन निर्दय त्वेन नित्यशः ॥

विशेषाज्जाड्यकृत्येन दूषयंति कुलत्रयम् ॥ ६८ ॥

कुलत्रयगृहं कीर्त्या निजया धवलीकृतम् ॥

कृष्णं करोत्यकृ त्येन नारी दीपशिखेव तु ॥ ६९ ॥

धर्मवृक्षस्य वाताली चित्तपद्मशशिप्रभा ॥

सृष्टा कामार्णवग्राही केन मोक्षदृढार्गला ॥ ६.१५८.७० ॥

कारा संतानकूटस्य संसारवनवागुरा ॥

स्वर्गमार्गमहागर्ता पुंसां स्त्री वेधसा कृता ॥ ७१ ॥

वेधसा बंधनं किंचिन्नृणामन्यदपश्यता ॥

स्त्रीरूपेण ततः कोऽपि पाशोऽयं सुदृढः कृतः ॥७२॥

इत्येवं बहुधा सोऽपि विललाप सुदुःखितः ॥

स्त्रीचिन्तां बहुधा कृत्वा आत्मानं चाप्यगर्हयत् ॥ ७३ ॥

अहो कुबुद्धिना नैव लब्धं संसारजं फलम्॥

न कदाचिन्मया दत्तं तृष्णाव्याकुलचेतसा ॥ ७४ ॥

ऐश्वर्येऽपि स्थिते भूरि न मया सुकृतं कृतम् ॥

कदाचिन्नैव जप्तं च न हुतं च हुताशने ॥ ७५ ॥

अथवा सत्यमेवोक्तं केनापि च महात्मना ॥

कृपणेन समो दाता न भूतो न भविष्यति ॥

अस्पृष्ट्वापि च वित्तं स्वं यः परेभ्यः प्रयच्छति ॥ ७६ ॥

शरणं किं प्रपन्नानां विषवन्मारयंति किम् ॥

न दीयते न भुज्यंते कृपणेन धनानि च ॥ ७७ ॥

दानं भोगो नाशस्तिस्रो गतयो भवंति वित्तस्य ॥

यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ ७८ ॥

धनिनोप्यदानविभवा गण्यंते धुरि दरिद्राणाम्॥

नहि हंति यत्पिपासामतः समुद्रोऽपि मरुरेव ॥ ७९ ॥

अत्युपयुक्ताः सद्भिर्गतागतैरहरहः सुनिर्विण्णाः ॥

कृपणजनसंनिकाशं संप्राप्यार्थाः स्वपंतीह ॥ ६.१५८.८० ॥

प्राप्तान्न लभंते ते भोगान्भोक्तुं स्वकर्मणा कृपणाः ॥

मुखपाकः किल भवति द्राक्षापाके बलिभुजानाम् ॥ ८१ ॥

दातव्यं भोक्तव्यं सति विभवे संचयो न कर्तव्यः ॥
पश्येह मधुकरीणां संचितमर्थं हरंत्यन्ये ॥ ८२ ॥
याचितं द्विजवरे न दीयते संचितं क्रतुवरे न योज्यते ॥
तत्कदर्यपरिरक्षितं धनं चौरपार्थिवगृहेषु भुज्यते ॥ ८३ ॥
त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः ॥
परस्परवियुक्तौ तु वित्त त्यागौ विडम्बनम् ॥ ८४ ॥
किं तया क्रियते लक्ष्म्या या वधूरिव केवला ॥
या न वेश्येव सामान्या पथिकैरपि भुज्यते ॥ ८५ ॥
अर्थोष्मणा भवेत्प्राणो भवेद्भक्ष्यैर्विना नृणाम् ॥
यतः संधार्यते भूमिः कृपणस्योष्मणा हि सा ॥ ८६ ॥
कृपणानां प्रसादेन शेषो धारयते महीम् ॥
यतस्ते भूगतं वित्तं कुर्वते तस्य चोष्मणा ॥ ८७ ॥
एवं बहुविधा वाचः प्रलपन्मणिभद्रकः ॥
नीत्वा तैः पार्थिवोद्दिष्टैः पुरुषैः परुषाक्षरम् ॥
बहुधा प्रलपं श्चैव कृतः शाखावलंबनः ॥ ८८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मणिभद्रोपाख्याने मणिभद्रनिधनवर्णनंनामाष्टपंचाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १५९

https://sa.wikisource.org/s/flv
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

पुष्पोऽपि तां समादाय माहिकाख्यां वरांगनाम् ॥

स तदा प्रययौ हृष्टो मणिभद्रस्य मंदिरम् ॥ १ ॥

शंखतूर्यनिनादेन सर्वैस्तैः स्वजनैर्वृतः ॥

न कस्य तत्र संभूतो विकल्पस्तत्समुद्भवः ॥ २ ॥

भास्करस्य प्रसादेन तथैवान्यस्य कर्हिचित् ॥

सोऽपि मंदिरमासाद्य यथात्मपितृसंभवम् ॥ ३ ॥

उपविश्य ततो मध्ये बन्धून्सर्वान्समाह्वयत् ॥

अद्य तावद्दिने मह्यं तुलाग्रं कमला श्रिता ॥ ४ ॥

चलितापि पुनश्चास्याः सुपत्न्या वाक्यतः स्थिता ॥

कियंतं चैव कालं मे कार्पण्यं महदास्थितम् ॥ ५ ॥

ज्ञातमद्य चला लक्ष्मीस्तेन त्यक्तं सुदूरतः ॥

तस्माद्बंधुजनैः सार्धं देवैर्विप्रैश्च कृत्स्नशः ॥

संविभक्तां करिष्यामि सत्येनात्मानमालभे ॥ ६ ॥

एवमुक्त्वा ततः सर्वान्समाहूय पृथक्पृथक् ॥

स नामभिर्ददौ वस्त्रं भूषणानि यथार्हतः ॥ ७ ॥

ततो वेदविदो विप्रान्समाहूय स नामभिः ॥

एकैकस्य ददौ वित्तं सवस्त्रं श्रद्धयान्वितः ॥ ८ ॥

ततस्तु नर्तकेभ्यश्च दीनांधेभ्यो विशेषतः ॥

ददौ भोज्यं समि ष्टान्नं सवस्त्रं च द्विजोत्तमाः ॥ ९ ॥

ततस्तु स्वयमेवान्नं बुभुजे भार्यया सह ॥

विसृज्य तान्समायातान्स्वजनान्ब्राह्मणैः सह ॥ ६.१५९.१० ॥

एवं तेन तदा प्राप्तं वित्तं च परसंभवम् ॥

बुभुजे स्वेच्छया नित्यं तदा भार्यासमन्वितः ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुष्पविभवप्राप्तिवर्णनंनामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥ १५९ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६०



॥ सूत उवाच ॥ ॥

अन्यस्मिन्नहनि प्राप्ते रहस्युक्तः स भार्यया ॥

रात्रौ प्रसुप्तः पार्श्वे च पादौ संस्पृश्य तत्क्षणात् ॥ १ ॥

त्वं तावन्मम भर्तासि यावज्जीवमसंशयम् ॥

तद्वदस्व विभोऽस्माकं त्वदर्थं स मयोज्झितः ॥ २ ॥

इन्द्रजालमिदं किं ते किं वा मंत्रप्रसाधनम् ॥

देवानां वा प्रसादोऽयं यत्वं चैतादृशः स्थितः ॥ ३ ॥

मया त्वं हि तदा ज्ञातः प्रथमेऽपि दिने स्थिते ॥

यदा संभूषिता वस्त्रैस्तथा वस्तुविभूषणैः ॥ ४ ॥

यद्यहं तव वार्तां च सर्वां कपटसंभवाम् ॥

कथयामि द्वितीयस्य तत्ते पादौ स्पृशाम्यहम् ॥ ५ ॥

॥ सूत उवाच ॥ ॥

एवमुक्तो विहस्योच्चैः स तदा ब्राह्मणोत्तमाः ॥

तामालिंग्य ततः प्राह वचनं मधुराक्षरम् ॥ ६ ॥

साधु प्रिये त्वया ज्ञातं सर्वं मम विचेष्टितम् ॥

अहं स विप्रः सुभगे मणिभद्रेण यः पुरा ॥ ७ ॥

विडंबितो मुखं पश्यंस्त्वदीयं चंद्रसन्निभम् ॥

चमत्कारपुरं गत्वा मया चाराधितो रविः ॥

तेन तुष्टेन मे दत्तं तद्रूपं ज्ञानमेव च ॥८॥ ॥

॥ माहिकोवाच ॥ ॥

त्वदीयदर्शनेनाहं कामदेववशं गता ॥ ९ ॥

तस्मादाराधयिष्यामि तं गत्वा दिननायकम् ॥

येन ते तादृशं भूयः प्रतुष्टो विदधाति सः ॥ ६.१६०.१० ॥

किं मे चैतेन रूपेण तारुण्येनापि च प्रभो ॥

यत्ते तथाविधं रूपं संभजामि दिवानिशम् ॥ ११ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा गुटिकां पुष्प समादाय मुखान्ततः ॥

दधार तादृशं रूपं यादृग्दृष्टं पुरा तया ॥ १२ ॥

ततः सा हर्षिता माही पुलकेन समन्विता ॥

तमालिंग्याभजद्गाढं वाक्यमेतदुवाच ह ॥ १३ ॥

अद्य मे सफलं जन्म यौवनं रूपमेव च ॥

यत्त्वं हृद्वांछितः कांतः प्रलब्धो मदनोपमः ॥ १४ ॥

एतावंति दिनान्येव न मया कामजं सुखम् ॥

अपि स्वल्पतरं लब्धं कथंचिद्वृद्धसेवया ॥ १५ ॥

भजस्व स्वेच्छया विप्र दासी तेऽहं व्यवस्थिता ॥ १६ ॥

॥ पुष्प उवाच ॥ ॥

प्रविशामि किमंगेषु भवन्तीं किं मिलाम्यहम् ॥

प्रिये चिरेण लब्धासि न जाने कर वाणि किम् ॥ १७ ॥

एवमुक्त्वा ततस्तौ च मैथुनाय कृतक्षणौ ॥

प्रवृत्तौ ब्राह्मणश्रेष्ठाः कामदेववशंगतौ ॥ १९८ ॥

अथ रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ॥

वक्त्रे तां गुटिकां कृत्वा स पुष्पस्तादृशोऽभवत् ॥ १९ ॥

एवं तस्य स्थितस्यात्र महान्कालो व्यजायत ॥

पुत्राः पौत्रास्तथा जाताः कन्यकाश्च तथैव च ॥ ६.१६०.२० ॥

स वृद्धत्वं यदा प्राप्तो जराविप्लवतां गतः ॥

तदा स चिन्तयामास मया पापं महत्कृतम् ॥ २१ ॥

मणिभद्रो वराकोऽसौ मिथ्याचारेण घातितः ॥

तस्य भार्या हृता चैव प्रसूतिं च नियोजिता ॥ २२ ॥

हाटकेश्वरजं क्षेत्रं तस्माद्गत्वा करोम्य हम् ॥

पुरश्चरणसंज्ञं च येन शुद्धिः प्रजायते ॥ २३ ॥

एवं स निश्चयं कृत्वा पुष्पश्चित्ते निजे तदा ॥

असंख्यं वित्तमादाय चमत्कारपुरंगतः ॥ ॥ २४ ॥

पुत्रेभ्योऽपि यथासंख्यं दत्त्वा चैव पृथक्पृथक् ॥

प्रासादं कारयामास तस्य सूर्यस्य शोभनम् ॥ २५ ॥

यस्मिन्सिद्धिं गतः सोऽत्र याज्ञवल्क्यप्रतिष्ठिते ॥

ततो मध्यममाहूय प्रणिपत्याभिवाद्य च ॥

सोऽब्रवीद्ब्राह्मणानां मे चातुश्चरणमानय ॥ २६ ॥

येनाहमग्रतो भूत्वा प्रायश्चित्तं विशुद्धये ॥

पुरश्चरणसंज्ञं तु प्रार्थयामि यथाविधि ॥ २७ ॥

इति स्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाट केश्वरक्षेत्रमाहात्म्ये पुष्पस्य पापक्षालनार्थं हाटकेश्वरक्षेत्रगमनपुरश्चरणार्थब्राह्मणामन्त्रणवर्णनंनाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६१




॥ सूत उवाच ॥ ॥

अथ तेन द्विजाः सर्वे ब्रह्मस्थाने निवेशिताः ॥

चातुश्चरणसंज्ञाश्च ततस्तस्य निवेशिताः ॥ १ ॥

सोऽपि केशान्परित्यज्य सर्वगात्रसमुद्भवान् ॥

निजपत्न्या समोपेतः प्रणम्य च द्विजोत्तमान् ॥ २ ॥

कृतांजलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥

भास्करस्यास्य विहितः प्रासादोयं मया द्विजाः ॥ ३ ॥

पुष्पादित्य इति ख्यातिं प्रयातु भुवनत्रये ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

न वयं याज्ञवल्क्यस्य कीर्तिं नेष्यामहे क्षयम् ॥ ४ ॥

प्रायश्चित्तं प्रदास्यामश्चित्तस्य हृदयंगमम् ॥

अन्ये च ब्राह्मणाः प्रोचुः केचिन्मध्यस्थवृत्तयः ॥ ५ ॥

वृत्त्यर्थमस्य देवस्य लक्षं होमेऽत्र कल्प्यताम् ॥

लक्षं तु सर्वविप्राणां प्रायश्चित्तविशुद्धये ॥ ६ ॥

॥ पुष्प उवाच ॥ ॥

तस्मात्सर्वे द्विजश्रेष्ठा मन्नाम्ना कीर्तयंत्विमम् ॥

पुष्पादित्यमिति ख्यातिं कीर्तयंतु तथानिशम् ॥ ७ ॥

अनया भार्यया मह्यं मान्या या स्थापिता पुरा ॥

दुर्गाऽस्याश्चात्र नाम्ना वै भूयात्ख्याताऽत्र सत्पुरे ॥ ८ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

दुःशीलेन पुराऽकारि प्रासादो हरसंभवः ॥

दुर्वासःस्थापितस्यापि भवद्भिस्तुष्ट मानसैः ॥ ९ ॥

तथाप्यस्य तु दीनस्य प्रासादः क्रियतां द्विजाः ॥ ६.१६१.१० ॥

नाममात्रेण देवस्य दुःशीलेन यया पुरा ॥

अनेनाराधितः पूर्वं स्वमांसैरेष भास्करः ॥ ११ ॥

तस्मान्न क्षतिरस्याथ दत्ते नाम्नि यथा पुरा ॥

नाम्ना माहिकया नाम माहीत्येव च सा भवेत् ॥१२॥

॥ सूत उवाच ॥

पुष्पेण दाने दत्तेऽथ संमतेनाग्रजन्मनाम् ॥

मध्यमेन कृतं नाम पुष्पादित्य इति श्रुतम् ॥ १३ ॥

तत्पत्न्या चापि या तत्र दुर्गा देवी द्विजोत्तमाः ॥

नाम्ना माहिकया नाम माहीत्येव च साऽभवत् ॥ १४ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोस्मि द्विजोत्तमाः ॥

पुष्पा दित्यो यथा जातो याज्ञवल्क्यप्रतिष्ठितः ॥ १५ ॥

अद्यापि कलिकाले स दृष्टो भक्त्या सुरेश्वरः ॥

नाशयेद्दिनजं पापं नराणां नात्र संशयः ॥ ॥ १६ ॥

तथा च सप्तमीयुक्ते रवेर्वारे द्विजोत्तमाः ॥

अष्टोत्तरशतंयावत्फलहस्तः करोति यः ॥

प्रदक्षिणां च सद्भक्त्या स लभेद्वांछितं फलम् ॥१७॥

माहीकामपि यो दुर्गां नित्यमेव प्रपश्यति ॥

न स पश्यति कष्टानि तस्मिन्नहनि कर्हिचित् ॥ १८ ॥

चैत्रशुक्लचतुर्दश्यां यस्तां पूजयते नरः ।

तस्य संवत्सरंयावन्नापत्संजायते क्वचित् ॥ १९. ॥

इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुष्पादित्यमाहात्म्यवर्णनंनामैकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६२



॥ सूत उवाच ॥ ॥

एवं नाम्नि कृते तस्य भास्करस्यांशुमालिनः ॥

द्विजानां पुरतः पुष्पः कथयामास चेष्टितम् ॥ १ ॥

आत्मीयं कुत्सितं तेषां मणिभद्रवधो यथा ॥

विहितो विहिता पत्नी तस्य व्याजेन कृत्स्नशः ॥ २ ॥

ततस्ते ब्राह्मणाः प्रोचुस्तच्छ्रुत्वा कोपसंयुताः ॥

सीत्कारान्प्रचुरान्कृत्वा धिक्त्वां पाप प्रगम्यताम् ॥ ३ ॥

आत्मीयं हेम चादाय न ते शुद्धिर्भविष्यति ॥ ४ ॥

ब्रह्मघ्नस्त्वं यतः प्रोक्तास्त्रयो वर्णा द्विजोत्तमाः ॥

ब्राह्मणः क्षत्रियो वैश्यः स्मृतिशास्त्रप्रपाठकैः ॥ ५ ॥ ॥

॥ सूत उवाच ॥ ॥

ततस्तु दुःखितः पुष्पो बाष्पसंपूरितेक्षणः ॥

ब्रह्मस्थानाद्विनिर्गत्य प्ररुरोद सुदुःखितः ॥ ६ ॥

रोरूयमाणमालोक्य ततस्ते नागरा द्विजाः ॥

दयां च महतीं कृत्वा ततः प्रोचुः परस्परम् ॥ ७ ॥

नानाविधानि शास्त्राणि स्मृतयश्च पृथग्विधाः ॥

पुराणानि समस्तानि वीक्षध्वं सुसमाहिताः ॥ ८ ॥

कुत्रचित्क्वचिदेवास्य कथंचिच्छुद्धिरस्ति चेत् ॥

न तच्च विद्यते शास्त्रमस्मिन्स्थाने न चास्ति यत्॥९॥ न स्मृतिर्न पुराणं च वेदांतं वा द्विजोत्तमाः ॥ न चास्ति ब्राह्मणः सोऽत्र सर्वज्ञप्रतिमो न यः ॥ ६.१६२.१० ॥ तस्माच्चिन्तयत क्षिप्रमस्य शुद्धिप्रदं हि यत् ॥

तच्च प्रमाणतां नीत्वा शुद्धिरस्य प्रदीयते ॥ ११ ॥

अथैको ब्राह्मणः प्राह चंडशर्मेति विश्रुतः ॥

मया स्कांदपुराणेऽस्मिन्पुरश्चरणसंश्रिता ॥१२॥

पठिता सप्तमी या च पुरश्चरणसंज्ञिता ॥

पुरश्चरणतः पापं विहितं तु यथा व्रजेत् ॥ १३ ॥
सम्यक्तथापि विप्रेंद्रास्ततो याति न संशयः ॥
तस्मात्करोतु तामेष पुरश्चरणसप्तमीम् ॥ १४ ॥
अपरं भूभुजादेशान्मणिभद्रो निपातितः ॥
वधकैस्तस्य तत्पापं यदि पापं प्रजायते ॥ १५ ॥
राजा भूत्वा न यः सम्यग्विचारयति वादिनम् ॥
तस्य तत्पातकं घोरं राज्ञश्चैव प्रजायते ॥ १६ ॥
तथास्य पत्न्यास्तत्पापं जानंत्या यत्तयोदितम् ॥
मत्पित्रा ब्राह्मणैर्दत्तोऽयं पुरा वह्निसंनिधौ ॥ १७ ॥
विडंबितेन चानेन कृतप्रतिकृतं कृतम् ॥
तस्मान्न चास्य दोषः स्याद्यतः प्रोक्तं मुनीश्वरैः ॥ ॥ १८ ॥
कृते प्रतिकृतं कुर्याद्धिंसने प्रतिहिंसनम् ॥
न तत्र जायते दोषो यो दुष्टे दुष्टमाचरेत्॥ १९ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
यद्येवं वद विप्रास्य पुरश्चरणसंज्ञिताम् ॥
सप्तमीमद्य विप्रेंद्र वराकस्य विशुद्धये ॥ ६.१६२.२० ॥
॥ सूत उवाच ॥ ॥
अथास्य कथयामास सप्तमीं तां द्विजोत्तमाः ॥
चंडशर्माभिधानस्तु कृत्वा तस्योपरि कृपाम् ॥ २१ ॥
तेनापि विहिता सम्यग्यथा तस्य मुखाच्छ्रुता ॥
ततः संवत्सरस्यांते विपाप्मा समपद्यत ॥ २२ ॥
॥ ॥ ऋषय ऊचुः ॥ ॥
पुरश्चरणसंज्ञां तु सप्तमीं वद सूतज ॥
विधिना केन कर्तव्या कस्मिन्काल उपस्थिते ॥ २३ ॥
॥ सूत उवाच ॥ ॥
अहं वः कीर्तयिष्यामि रोहिताश्वस्य भूपतेः ॥
मार्कंडेन पुरा प्रोक्ता पृच्छ्यमानेन भक्तितः ॥ २४ ॥
सप्तकल्पस्मरो विप्रा मार्कंडाख्यो महामुनिः ॥

रोहिताश्वेन पृष्टः स हरिश्चंद्रात्मजेन च ॥ २५ ॥

॥ रोहिताश्व उवाच ॥ ॥

अज्ञानाज्ज्ञानतो वापि यत्पापं कुरुते नरः ॥

उपायं तस्य नाशाय किंचिन्मे वद सन्मुने ॥ २६ ॥

॥ मार्कंडेय उवाच ॥ ॥

मानसं वाचिकं चैव कायिकं च तृतीयकम् ॥

त्रिविधं पातकं लोके नराणामिह जायते ॥ २७ ॥

तत्रोपाया विनाशाय तस्य संपरिकीर्तिताः ॥

तानहं ते प्रवक्ष्यामि शृणुष्व नृपसत्तम ॥ २८ ॥

मानसं चैव यत्पापं नराणामिह जायते ॥

पश्चात्तापे कृते तस्य तत्क्षणादेव नश्यति ॥ २९ ॥

वाचिकं चैव यत्पापं नाभुक्त्वा तत्प्रणश्यति ॥

पुरश्चरणबाह्यं तु सत्यमेतन्मयोदितम् ॥ ॥ ६.१६२.३० ॥

निवेद्य ब्राह्मणेंद्राणां तदुक्तं च समाचरेत् ॥

प्रायश्चित्तं यथोक्तं तु ततः शुद्धिमवाप्नुयात् ॥ ३१ ॥

अथवा पार्थिवो ज्ञात्वा कुरुते तस्य निग्र हम् ॥

तेन शुद्धिमवाप्नोति यद्यपि स्यात्स किल्विषी ॥ ३२ ॥

लज्जया ब्राह्मणेंद्राणां यो न ब्रूते कथंचन ॥

न च राजा विजानाति शरीरस्थेन यो म्रियेत् ॥

तस्य निग्रहकर्ता च स्वयं वैवस्वतो यमः ॥ ३३ ॥

तस्मात्सर्वप्रयत्नेन कृत्वा पापं विजानता ॥

प्रायश्चित्तं तु कर्तव्यं यथोक्तं ब्राह्मणो दितम् ॥ ३४ ॥

॥ रोहिताश्व उवाच ॥ ॥

सर्वेषामेव पापानां विहितानां मुनीश्वर ॥

किंचिद्व्रतं समाचक्ष्व दानं वा होममेव वा ॥

विपाप्मा जायते येन पुरश्चरणवर्जितम् ॥ ३५ ॥

नित्यं पापानि कुरुते नरः सूक्ष्माणि सर्वतः ॥

प्रायश्चित्तानि सर्वेषां कर्तुं शक्तिः कथं भवेत् ॥ ३६ ॥ ॥

॥ मार्कंडेय उवाच ॥ ॥

अस्ति राजन्व्रतं पुण्यं पुरश्चरणसंज्ञितम् ॥

पुरश्चरणसंज्ञा तु सप्तमी सूर्यवल्लभा ॥ ३७ ॥

यया संचीर्णया राज न्कायस्थो यमसंभवः ॥

विचित्रो मार्जयेत्पापं कृतं जन्मनि संचितम् ॥ ३८॥

तस्मात्कुरु महाराज तथाशु वचनं मम ॥

येन वा मुच्यते पापा त्सर्वस्मात्कायसंभवात् ॥ ३९ ॥

॥ रोहिताश्व उवाच ॥ ॥

पुरश्चरणसंज्ञा तु सप्तमी मुनिसत्तम ॥

विधिना केन कर्तव्या कस्मिन्काले वद स्व मे ॥ ६.१६२.४० ॥

॥ मार्कंडेय उवाच ॥ ॥

माघमासे सिते पक्षे मकरस्थे दिवाकरे ॥

सूर्यवारेण सप्तम्यां व्रतमेतत्समाचरेत् ॥ ४१ ॥

पाखंडैः पतितैः सार्धं तस्मिन्नहनि नालपेत् ॥

भक्षयित्वा नृपश्रेष्ठ प्रभाते दन्तधावनम् ॥

मंत्रेणानेन पश्चाच्च कर्तव्यो नियमो नृप ॥ ४२ ॥

पुरश्चरणकृत्यायां सप्तम्यां दिवसाधिप ॥

उपवासं करिष्यामि अद्य त्वं शरणं मम ॥४३॥

ततोऽपराह्नसमये स्नात्वा धौतांबरः शुचिः ॥

प्रतिमां पूजयेद्भक्त्या दिनाधिपसमुद्भवाम् ॥४४॥

रक्तैः पुष्पैर्महावीर पादाद्यं पूजयेत्ततः ॥

पतंगाय नमः पादौ मार्तंडायेति जानुनी ॥ ४५ ॥

गुह्यं दिवसनाथाय नाभिं द्वादश मूर्तये ॥

बाहू च पद्महस्ताय हृदयं तीक्ष्णदीधिते ॥ ४६ ॥

कंठं पद्मदलाभाय शिरस्तेजोमयाय च ॥

एवं संपूज्य विधिवद्धूपं कर्पूरमाददेत् ॥ ॥ ४७ ॥

गुडौदनं च नैवेद्यं रक्तवस्त्राभिवेष्टितम् ॥

रक्तसूत्रेण दीपं च तथैवारार्तिकं नृप ॥ ४८ ॥

शंखे तोयं समादाय रक्तचन्दनमिश्रितम् ॥

सफलं च ततः कृत्वा अर्घ्यं दद्यात्ततः परम् ॥ ४९ ॥

कुकृतं यत्कृतं किंचिदज्ञानाज्ज्ञानतोऽपि वा ॥

प्रायश्चित्तं कृतं देव ममार्घ्यश्च प्रगृह्यताम् ॥ ६.१६२.५० ॥

ततः संपूजयद्विप्रं गन्धपुष्पानुलेपनैः ॥

दत्त्वा तु भोजनं तस्मै दक्षिणां च स्वशक्तितः ॥

प्राशनं कायशुद्ध्यर्थं पञ्चगव्यस्य चाचरेत् । ५१ ॥

कृतांजलिपुटो भूत्वा समुद्वीक्ष्य दिवाकरम्॥

दिवाकरं गतश्चैव मन्त्रमेतं समुच्चरेत् ॥ ५२ ॥

इदं व्रतं मया देव गृहीतं पुरतस्तव ॥

अविघ्नं सिद्धिमायातु प्रसादात्तव भास्कर ॥ ५३ ॥

ततश्च फाल्गुने मासि संप्राप्ते मुनिसत्तम ॥

कुन्देन पूजयेद्देवं तेनैव विधिना ततः ॥ ५४ ॥

धूपं च गुग्गुलुं दद्यान्नैवेद्यं भक्तमेव च ॥

प्राशनं गोमयं प्रोक्तं सर्वपापविशुद्धये ॥ ५५ ॥

चैत्रे मासि तु संप्राप्ते सुरभ्या पूज्येद्धरिम् ॥

नैवेद्यं गुणिकाः प्रोक्ता धूपं सर्जरसोद्भवम् ॥ ५६ ॥

कुशोदकं च संप्राश्य कायशुद्धिमवाप्नुयात् ॥

वैशाखे किंशुकैः पूजां यथावच्च घृताशनैः ॥ ५७ ॥

नैवेद्यं च सुरामांसं धूपं च विनिवेदयेत् ॥

दधिप्राशनमेवात्र कर्तव्यं कायशुद्धये ॥ ५८ ॥

पुष्पपाटलया पूजा विधातव्या रवेर्नृप ॥

नैवेद्ये सक्तवः प्रोक्ताः प्राशनं च घृतं स्मृतम् ॥ ५९ ॥

कपिलाया महावीर सर्वपापविशुद्धये ॥

आषाढे मुनिपुष्पैश्च पूजयेद्भास्करं नृप ॥ ६.१६२.६० ॥

नैवेद्ये घारिका प्रोक्ता प्राशनं मधुसर्पिषोः ॥

धूपं चैवागरुं दद्यात्परया श्रद्धया युतः ॥ ६१ ॥

श्रावणे तु कदंबेन पूजनं तीक्ष्णदीधितेः ॥

नैवेद्ये मोदकाश्चैव तगरं धूप माददेत् ॥ ६२ ॥
गोशृंगोदकमादाय सद्यः पापात्प्रमुच्यते ॥
जात्या भाद्रपदे पूजा क्षीरनैवेद्यमाददेत् ॥ ६३ ।।
धूपं नखसमुद्भूतं प्राशनं क्षीरमेव च ॥
आश्विने कमलैः पूजा नैवेद्ये घृतपूरिका ॥ ६४ ॥
धूपं कुंकुमजं प्रोक्तं कर्पूरप्राशनं स्मृतम् ॥ ६५ ॥
तुलस्या कार्तिके पूजा भास्करस्य प्रकीर्तिता ॥
नैवेद्ये चैव खंडाख्यं धूपं कौसुंभिकं नृप ॥ ६६ ॥
प्राशनं च लवंगाख्यं सर्वपापविशोधनम् ॥
भृंगराजेन पूजा च सौम्ये मासि समाचरेत् ॥ ६७ ॥
नैवेद्ये फेणिका देया धूपं गुडसमुद्भवम् ॥
कंकोलप्राशनं चैव भास्करस्य प्रतुष्टये ॥ ६८ ॥
शतपत्रिकया पूजा पौषे मासि रवेः स्मृता ॥
सहजं धूपमादिष्टं नैवेद्ये शुष्कली तथा ॥ ६९ ॥
प्राशने पूर्वमुक्तानि सर्वाण्येव समाचरेत् ॥
समाप्तौ च ततो दद्यात्षड्भागं गृहसंभवम् ॥ ६.१६२.७० ॥
ब्राह्मणाय नृपश्रेष्ठ सर्वपापविशुद्धये ॥
इष्टभोज्यं ततः कार्यं स्वशक्त्या पार्थिवोत्तम ॥ ७१ ॥
एवं तु कुरुते योऽत्र सप्तमीं भास्करोद्भवाम् ॥
सर्वपापविनिर्मुक्तो निर्मलत्वं स गच्छति ॥ ७२ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
एवं पुरा वै कथिता रोहिताश्वाय धीमते ॥
मार्कंडेन महाभाग तस्मात्वमपि तां कुरु ॥ ७३ ॥
येन संजायते सम्यक्पुरश्चरणमेव ते ॥ ७४ ॥
॥ सूत उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा पुष्पोऽपि द्विजसत्तमाः ॥
तां चक्रे सप्तमीं हृष्टो यथा तेन निवेदिता ॥ ७५ ॥
षड्भागं प्रददौ तस्मै ब्राह्मणाय महात्मने ॥

स्ववित्तस्य गृहस्थस्य कुप्याकुप्यस्य कृत्स्नशः ॥ ७६ ॥

सोऽपि जग्राह तद्वित्तं प्रहृष्टेनांतरात्मना ॥

सुवर्णमणि रत्नानि संख्यया परिवर्जितम् ॥ ७७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुरश्चरणसप्तमीव्रतविधानवर्णनंनाम द्विषष्ट्युत्तरशततमोऽध्यायः ॥ १६२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६३



॥ सूत उवाच ॥ ॥

अथ ते नागराः सर्वे दृष्ट्वा तद्वित्तभाजनम् ॥

न केनापि ग्रहीतव्यं सर्वान्कामान्निरस्य च ॥ १ ॥

ततस्ते समयं कृत्वा समानीय च मध्यगम् ॥

तस्यास्येन ततः प्रोचुर्ब्रह्मस्थाने व्यवस्थि ताः ॥ २ ॥

अनेन लोभयुक्तेन तिरस्कृत्य द्विजोत्तमान् ॥

पुष्पवित्तमुपादाय प्रायश्चित्तं प्रकीर्तितम् ॥ ३ ॥

तथा चैव तु षड्भागो गृहीतो विभवस्य च ॥

तस्मादेष समस्तानां बाह्यभूतो भविष्यति ॥ ४ ॥

नागराणां द्विजेद्राणां यथान्यः प्राकृतस्तथा ॥ ५ ॥

अद्यप्रभृति चानेन यः संबंधं करिष्यति ॥

सोऽपि बाह्यस्तु सर्वेषां नागराणां भविष्यति ॥ ६ ॥

भोजनं वाथ पानीयं योऽस्य सद्मनि कर्हिचित् ॥

करिष्यति स चाऽप्येवं पतितः संभविष्यति ॥ ७ ॥

एवमुक्त्वा ततस्तेन दत्तं तालत्रयं द्विजाः ॥

ब्रह्मस्थाने द्विजश्रेष्ठाः कृत्वा पुष्पसमं च तम् ॥ ८ ॥

अथ ते ब्राह्मणाः सर्वे जग्मुः स्वंस्वं निवेशनम् ॥

चंडशर्मा स चोद्विग्नः पुष्पपार्श्वं तदा गतः ॥ ९ ॥

एतेषामेव सर्वेषां संमतेन मया तव ॥

प्रायश्चित्तं तदा दत्तं तथा पि पतितः कृतः ॥ ६.१६३.१० ॥

तस्मादहं पतिष्यामि सुसमिद्धे हुताशने ॥

नैव जीवितुमिच्छामि स्वजनैः परिवर्जितः॥ ११ ॥

॥ पुष्प उवाच ॥ ॥

न विषादस्त्वया कार्यः कार्येऽस्मिद्विजसत्तम ॥

वित्तार्थं दूषितस्त्वंहि यतो ब्राह्मणसत्तमैः ॥ १२ ॥

नागरांस्तोषयिष्यामि तानहं विविधैर्धनैः ॥

याचयिष्यंति यन्मात्रं तव गात्रविशुद्धये ॥ १३ ॥

तावन्मात्रं प्रदास्यामि तेभ्यो हि तव कारणात् ॥

एवमुक्त्वा समागत्य ब्रह्मस्थानं त्वरान्वितः ॥ ॥ १४ ॥

चातुश्चरणमानीय मध्यगास्येन सोऽब्रवीत् ॥

चंडशर्मा द्विजो यश्च मदर्थे पतितः कृतः ॥_ १५ ॥

युष्माभिर्वित्तलोभेन तद्वित्तं वो ददाम्यहम्॥

समस्तं मद्गृहे यच्च क्रियतां वचनं द्विजैः ॥ १६ ॥

अथ ते कुपिताः प्रोचुः सर्व एव द्विजोत्तमाः ॥

सीत्कारान्विविधान्कृत्वा क्रोध संरक्तलोचनाः ॥ १७ ॥

धिग्धिक्पापसमाचार जिह्वा ते शतधा ततः ॥

किं न याति यदेवं त्वं प्रजल्पसि विगर्हितम् ॥ १८ ॥

पतितोऽयं कृतो ऽस्माभिर्नैव वित्तस्य कारणात् ॥

प्रायश्चित्तं यतो दत्तमेकेनापि दुरात्मना ॥ १९

स्मृतयो दूषितास्तेन पुराणानि विशेषतः ॥

स्थानं चैवास्म दीयं च कर्म चैतत्प्रकुर्वता ॥ ६.१६३.२० ॥

प्रायश्चित्तं प्रदातव्यं चतुर्भिरपरैः सह ॥

संमन्त्र्य मनुना प्रोक्तमेतदेव द्विजोत्तमाः ॥ २१ ॥

त्वदीयं पातकं चास्य शरीरेऽद्य व्यवस्थितम् ॥

एकाकिना यतो दत्तं तेनायं पतितः स्थितः ॥ २२ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा द्विजाः सर्वे जग्मुः स्वंस्वं निकेतनम्॥

पुष्पोपि च समुद्विग्नो वैलक्ष्यं परमं गतः ॥ २३ ॥

जगामाथ निजावासं निःश्वसन्नुरगो यथा ॥ २४ ॥

ततः स चिन्तयामास यावन्नो साहसं कृतम् ॥

तावत्सिद्धिर्मनुष्याणां न कथंचित्प्रजायते ॥ २५ ॥

तस्मादहं करिष्यामि चण्डशर्मकृते महत् ॥

कृतघ्नता यथा न स्यात्प्रोक्तं चैव यतो बुधैः ॥ २६ ॥

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ २७ ॥
एवं निश्चित्य मनसा सूर्यवारेण सप्तमी ॥
यदाऽऽयाता द्विजश्रेष्ठास्तदा चाष्टोत्तरं शतम् ॥ २८ ॥
प्रदक्षिणाः कृतास्तेन पुष्पादित्यस्य धीमता ॥
तीक्ष्णं शस्त्रं समादाय पूर्वोक्तविधिना ततः ॥
छित्त्वाछित्त्वा निजांगानि जुहुयाज्जातवेदसि ॥ २९ ॥
ततः पूर्णाहुतिं यावत्कायशेषेण यच्छति ॥
तावत्प्रत्यक्षतां गत्वा स प्रोक्तो भास्वता स्वयम्॥ ६.१६३.३० ॥
पुष्प मा साहसं कार्षीः परितुष्टोऽस्मि तेऽनघ ॥
भूय एव महाभाग ब्रूहि किं ते ददाम्यहम् ॥ ३१ ॥
॥ पुष्प उवाच ॥ ॥
चण्डशर्मा द्विजेन्द्रोऽयं मदर्थे पतितः कृतः ॥
समस्तैर्नागरैर्देव तं तैर्नय समानताम् ॥ ३२ ॥
शास्त्रं दृष्ट्वा प्रदत्तं मे प्रायश्चित्तं महात्मना ॥
तथापि दूषितः क्षुद्रैः समस्तैरसहिष्णुभिः ॥ ३३ ॥
॥ भगवानुवाच ॥ ॥
एकस्यापि वचो नैव शक्यते कर्तुमन्यथा ॥
नागरस्य द्विजश्रेष्ठ समस्तानां च किं पुनः ॥ ३४ ॥
परमेष द्विजः पूतश्चंडशर्मा भविष्यति ॥
ब्राह्मोऽयं नागरः ख्यातः समस्ते धरणीतले ॥ ३५ ॥
एतस्य ये सुताश्चैव भविष्यंति धरातले ॥
विख्यातिं तेऽपि यास्यंति मान्याः पूज्या महीभृताम् ॥ ३६ ॥
ये चापि बांधवा श्चास्य सुहृदश्च समागमम्॥
करिष्यंति समं तेऽपि भविष्यंति सुशोभनाः ॥ ३७ ॥
त्वं चापि मत्प्रसादेन संपूर्णांगो भविष्यसि ॥ ३८ ॥
एवमुक्त्वा सहस्रांशुस्ततश्चादर्शनं गतः ॥

पुष्पोऽपि चाक्षतांगत्वं तत्क्षणात्समपद्यत ॥ ३९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागररखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्राह्मनागरोत्पत्तिवृत्तांतवर्णनंनाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६४

https://sa.wikisource.org/s/g21

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥
एतस्मिन्नंतरे पुष्पः प्रहृष्टेनान्तरात्मना ॥
चंडशर्मगृहं गत्वा दिष्ट्यादिष्ट्येति चाब्रवीत् ॥ १ ॥
विवर्णवदनं दृष्ट्वा वाष्पपूर्णेक्षणं तदा ॥
बान्धवैः सहितं सर्वैर्दारैर्भृत्यैस्तथा सुतैः ॥ २ ॥
॥ पुष्प उवाच ॥ ॥
तवार्थे च मया सूर्यः कायत्यागेन तोषितः ॥
पतितत्त्वं न ते काये तत्प्रसादाद्भविष्यति ॥ ॥ ३ ॥
तव पुत्राश्च पौत्राश्च ये भविष्यंति वंशजाः ॥
नागराणां च ते सर्वे भविष्यंति गुणाधिकाः ॥ ४ ॥
तस्मादुत्तिष्ठ गच्छामो नदीं पुण्यां सरस्वतीम् ॥
तस्यास्तटे निवासाय कृत्वा चैवाश्रमं द्विज ॥ ५ ॥
त्वया सह वसिष्यामि अहमेव न संशयः ॥
अस्ति मे विपुलं वित्तं ये चान्ये तेऽनुयायिनः ॥ ६ ॥
तान्सर्वान्पोषयिष्यामि त्यज्यतां मानसो ज्वरः ॥
तच्छ्रुत्वा चण्डशर्मा तु पुत्रैर्बंधुभिरन्वितः ॥ ७ ॥
सरस्वतीं समुद्दिश्य निष्क्रांतो नगरात्ततः ॥
स्थानं प्रदक्षिणीकृत्य नमस्कृत्य सुदुःखितः ॥ ८ ॥
बाष्पपूर्णेक्षणो दीन उत्तराभिमुखो ययौ ॥
पुष्पेण सहितश्चैव मुहुर्मुहुः प्रबोधितः ॥ ९ ॥
ततः सरस्वतीं प्राप्य पुण्यां शीतजलां नदीम् ॥
सेवितां मुनिसंघैस्तां लोलकल्लोलमालिनीम् ॥ 6.164.१० ॥
तस्या दक्षिणकूले स निवासमकरोत्तदा ॥
पुष्पस्य मतिमास्थाय बन्धुभिः सकलैर्वृतः ॥ ११ ॥
तस्यासीन्नगरस्थस्य प्रतिज्ञा चण्डशर्मणः ॥
सप्तविंशति भिर्लिंगैर्दृष्टैर्भोक्ष्याम्यहं सदा ॥ १२ ॥
तां च संस्मरतस्तस्य प्रतिज्ञां पूर्वसंचिताम् ॥
हृदयं दह्यते तस्य दिवानक्तं द्विजोत्तमाः ॥ १३ ॥
स च स्नात्वा सरस्वत्यां शुचिर्भूत्वा समाहितः ॥
षडक्षरस्य मन्त्रस्य जपं चक्रे पृथक्पृथक् ॥ १४ ॥
नाम चोच्चार्य लिंगस्य नमस्कारान्तमादधे ॥
कर्दमेन द्विजश्रेष्ठाः पंचांगुलशतेन च ॥ १५ ॥
संस्थाप्य पूजयेद्भक्त्या पुष्पधूपानुलेपनैः ॥
प्राणरुद्राञ्जपन्पश्चाच्छ्रद्धया परया युतः ॥ १६ ॥
दुःस्थितं सुस्थितं वापि शिवलिंगं न चालयेत् ॥
इति मत्वा द्विजेन्द्रोऽसौ नैव तानि विसर्जयेत् ॥ १७ ॥
उपर्युपरि तेषां च कर्दमेन द्विजोत्तमाः ॥
चक्रे लिंगानि नित्यं स सप्तविंशतिसंख्यया ॥ १९ ॥
ततः कालेन महता जातः कर्दमपर्वतः ॥ १९ ॥
अथ तुष्टो महादेवस्तस्य भक्त्यतिरेकतः ॥
निर्भिद्य धरणीपृष्ठं तस्य लिंगमदर्शयत् ॥ 6.164.२० ॥
अब्रवीत्सादरं तं च मेघगम्भीरया गिरा ॥
चण्डशर्मन्प्रतुष्टोस्मि तव भक्त्याऽनया द्विज ॥ २१ ॥

तस्माल्लिंगमिदं नित्यं पूजयस्व प्रभक्तितः ॥
सप्तविंशतिलिंगानां यतः फलमवाप्स्यसि ॥ २२ ॥
अन्योपि च नरो भक्त्या यश्चैनं पूजयिष्यति ॥
सप्तविंशतिलिंगानां सोऽपि श्रेयोऽभिलप्स्यति ॥ २३ ॥
एवमुक्त्वा स भगवांस्ततश्चादर्शनं गतः ॥
चंडशर्मापि तं हृष्टः पूजयामास तत्त्वतः ॥ २४ ॥
प्रासादं कारयामास तस्य लिंगस्य शोभनम् ॥
नाम चक्रे ततस्तस्य विचार्य च मुहुर्मुहुः ॥ २५ ॥
नगरस्थित लिंगानां यस्मात्संस्मरणात्स्थितः ॥
नागरेश्वरसंज्ञस्तु तस्मादेष भविष्यति ॥ २६ ॥
॥ सूत उवाच ॥ ॥
एवं संस्थाप्य तल्लिंगं चंडशर्मा द्विजोत्तमाः ॥
आराधयामास तदा पुष्पधूपानुलेपनैः ॥२७॥
सप्तविंशतिलिंगानां प्राप्नोति च तथा फलम् ॥
पूजितानां द्विजश्रेष्ठा नगरे यानि तानि च ॥ ॥ २८ ॥
ततः कालेन महता नागरेश्वरतुष्टितः ॥
शिवलोकं गतः साक्षाद्यानमध्ये निवेशितः ॥२९॥
पुष्पोपि स्थापयामास पुष्पादित्यमथापरम्॥
पुण्ये सरस्वतीतीरे ततः पूजापरोऽभवत् ॥ 6.164.३० ॥
तस्यापि दर्शनं गत्वा प्रीत्या वचनमब्रवीत् ॥
पुष्प तुष्टोस्मि भद्रं ते वरं प्रार्थय सुव्रत ॥ ३१ ॥
अदेयमपि दास्यामि तस्मात्प्रार्थय मा चिरम् ॥ ३२ ॥
॥ पुष्प उवाच ॥ ॥
यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥
तद्देहि याचमानस्य मम यद्धृदि संस्थितम् ॥ ३३ ॥
चमत्कारपुरे देव तव या मूर्तयः स्थिताः ॥
द्वादशैव प्रमाणेन पूज्याः सर्वदिवौकसाम् ॥ ३४ ॥
तासां पूजाफलं कृत्स्नं संप्राप्नोतु नरो भुवि ॥
यः पूजयति मूर्तिं ते यैषा संस्थापिता मया ॥ ३५ ॥
नागरादित्य इत्येषा ख्याता भवतु भूतले ॥
येयं सरस्वतीतीरे प्रासादे स्थापिता मया ॥ ३६ ॥
॥ सूत उवाच ॥ ॥
स तथेति प्रतिज्ञाय गतश्चादर्शनं रविः ॥
दीपवद्ब्राह्मणश्रेष्ठास्तदद्भुतमिवा भवत् ॥ ३७ ॥
ततः कालेन महता पुष्पोपि द्विजसत्तमाः ॥
सूर्यलोकमनुप्राप्तो विमानेन सुवर्चसा ॥ ३८ ॥
शाकम्भरीति विख्याता भार्याऽऽसीच्चंडशर्मणः ॥
तया संस्थापिता दुर्गा सरस्वत्याः शुभे तटे ॥ ३९ ॥
आराधिताऽथ सद्भक्त्या दिवानक्तं द्विजोत्तमाः ॥
ततस्तुष्टा वरं तस्याः सा ददौ द्विजसत्तमाः ॥6.164.४॥।
पुत्रि तुष्टास्मि भद्रं ते शाकंभरि प्रगृह्यताम् ॥
वरं यत्ते सदाभीष्टं मत्प्रसादादसंशयम् ॥४१॥
॥ शाकम्भर्युवाच ॥ ॥
चतुःषष्टिगणा देवि मातृणां ये व्यवस्थिताः॥
चमत्कारपुरे ख्याता हास्यात्तुष्टिं व्रजंति याः ॥ ४२ ॥
या रात्रौ बलिदानेन जाते वृद्धौ ततः परम्॥
तत्सर्वं जायतां पुण्यं यस्ते मूर्तिं प्रपूजयेत्॥ ४३ ॥
अत्रागत्य नदीतीरे यैषा संस्थापिता मया ॥ ४४ ॥
॥ श्रीदेव्युवाच ॥ ॥

आश्विनस्य सिते पक्षे महानवमिसंज्ञिते ॥
यो ममाग्रे समागत्य पूजयिष्यति भक्तितः ॥ ४५ ॥
तस्य कृत्स्नं फलं सद्यो भविष्यति न संशयः ॥
नागरस्य विशेषेण सत्यमेतन्मयोदितम् ॥ ४६ ॥
एवमुक्त्वा तु सा देवी ततश्चादर्शनं गता ॥
तस्या नाम्ना च सा देवी प्रोक्ता शाकम्भरी भुवि ॥ ४७ ॥
वृद्धेरनंतरं तस्या यः पूजां कुरुते नरः ॥
तस्य वृद्धेर्न विघ्नः स्यात्कदाचिद्द्विजसत्तमाः ॥ ४८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये नागरेश्वरनागरादित्यशाकम्भर्युत्पत्तिवर्णनंनाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६५

https://sa.wikisource.org/s/fnm
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ॥ सूत उवाच ॥ ॥

ततःप्रभृतिपुण्ये च सरस्वत्यास्तटेशुभे ॥

बाह्यानां नागराणां च स्थानं जातं महत्तरम् ॥ १ ॥

पुत्रपौत्रप्रवृद्धानां दौहित्राणां द्विजोत्तमाः ॥

चमत्कारपुरस्याग्रे यज्ज्ञातं विद्यया धनैः ॥ २ ॥

कस्यचित्त्वथ कालस्य विश्वामित्रेण धीमता ॥

शप्ता सरस्वती कोपात्कृता रुधिरवाहिनी ॥ ३ ॥

ततः संसेव्यते हृष्टै राक्षसैः सा दिवानिशम्॥

गीतनृत्यपरैश्चान्यैर्भूतैः प्रेतैः पिशाचकैः ॥ ४ ॥

ततस्ते नागरा बाह्यास्तां त्यक्त्वा दूरतः स्थिताः ॥

कांदिशीकास्ततो याता भक्ष्यमाणास्तु राक्षसैः ॥

नर्मदायास्तटे पुण्ये मार्कण्डाश्रमसंनिधौ ॥ ५ ॥ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मात्सरस्वती शप्ता विश्वामित्रेण धीमता॥

महानद्या कोऽपराधस्तया तस्य विनिर्मितः ॥ ६ ॥

॥ सूत उवाच ॥ ॥

आसीत्पुरा महद्वैरं विश्वामित्रवसिष्ठयोः ॥

ब्राह्मण्यस्य कृते विप्राः प्राणान्तकरणं महत् ॥

स सर्वैर्ब्राह्मणैः प्रोक्तो विश्वामित्रो महामुनिः ॥ ७ ॥

क्षत्रियोऽपि पुरस्कृत्य देवदेवं पितामहम् ॥

न चैकेन वसिष्ठेन तेनैतद्वैरमाहितम् ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

क्षत्रियोऽपि कथं विप्रो विश्वा मित्रो महामते ॥

वसिष्ठेन कथं नोक्तो यः प्रोक्तो ब्रह्मणा स्वयम् ॥ ९ ॥

एतन्नः सर्वमाचक्ष्व परं कौतूहलं स्थितम्॥६.१६५.१०॥।

॥ सूत उवाच ॥ ॥

आसीत्पुरा ऋचीकाख्यो भृगुपुत्रो महामुनिः ॥

व्रताध्ययनसंपन्नः सुतपस्वी महायशाः ॥ ११ ॥

तीर्थयात्राप्रसंगेन स कदाचिन्मुनीश्वरः ॥

स्थानं भोजकटं नाम प्राप्तो गाधिमहीपतेः ॥

यत्र सा कौशिकीनाम नदी त्रैलोक्यविश्रुता ॥ १२ ॥

तस्यां स्नात्वा द्विजश्रेष्ठो यावत्तिष्ठति तीरगः ॥

समाधिस्थो जपं कुर्वन्संतर्प्य पितृदेवताः ॥ १३ ॥

तावत्तत्र समायाता राजकन्या सुशोभना ॥

सर्वलक्षणसम्पूर्णा सर्वैरेव गुणैर्युता ॥ ॥ १४ ॥

स तां संवीक्षते यावत्सर्वावयवशोभनाम् ॥

तावत्कामशरैर्व्याप्तः कर्तव्यं नाभ्यविंदत ॥ १५ ॥

ततः पप्रच्छ लोकान्स लब्ध्वा कृच्छ्रेण चेतनाम् ॥

कस्येयं कन्यका साध्वी किमर्थमिह चागता ॥ १६ ॥

क्व यास्यति वरारोहा सर्वं मे कथ्यतां जनाः ॥ १७ ॥

॥ जना ऊचुः ॥ ॥

एषा गाधिसुतानाम ख्याता त्रैलोक्यसुन्दरी ॥

अन्तःपुरात्समायाता गौरीपूजनलालसा ॥ १८ ॥

वांछमाना सुभर्त्तारं सर्वैः समुदितंगुणैः ॥

प्रासादोऽयं स्थितो योऽत्र नदीतीरे बृहत्तरः॥ १९ ॥

उमा संतिष्ठते चात्र सर्वैः संपूजिता सुरैः ॥

एतां च स्नापयित्वेयं पूजयित्वा यथा क्रमम् ॥ ६.१६५.२० ॥

नैवेद्यं विविधं दत्त्वा करिष्यति ततः परम् ॥

वीणाविनोदमात्रं च श्रुतिमार्गसुखावहम् ॥ २१ ॥

ततो यास्यति हर्म्यं स्वं मन्दीभूते च भास्करे ॥

ऋचीकस्तु तदाकर्ण्य लोकानां वचनं च यत् ॥ २२ ॥

ययौ गाधिगृहं शीघ्रं कामबाणप्रपीडितः ॥

तं दृष्ट्वा सहसा प्राप्तमृचीकं भृगु सत्तमम् ॥

संमुखः प्रययौ तूर्णं गाधिः पार्थिवसत्तमः ॥ २३ ॥

गृह्योक्तेन विधानेन कृत्वा चैवार्हणं ततः ॥

कृतांजलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥ २४ ॥

निःस्पृहस्यापि ते विप्र किमागमनकारणम् ॥

तत्सर्वं मे समाचक्ष्व येन यच्छामि तेऽखिलम् ॥ २५ ॥

॥ ऋचीक उवाच ॥ ॥

तव कन्याऽस्ति विप्रेंद्र वरार्हा वरवर्णिनी ॥

ब्राह्मोक्तेन विवाहेन तां मे देहि महीपते ॥ २६ ॥

एतदर्थमहं प्राप्तो गृहे तव स्मरार्दितः ॥

सा मया वीक्षिता राजन्गौरीपूजार्थमागता ॥ २७ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा भयसंत्रस्तो गाधिः पार्थिवसत्तमः ॥

असवर्णं च तं मत्वा दरिद्रं वृद्धमेवच ॥

अदाने शापभीतस्तु ततो व्याजमुवाच सः ॥ २८ ॥

अस्माकं कन्यकादाने शुल्कमस्ति द्विजोत्तम ॥

तच्चेद्यच्छसि कन्यां तां तुभ्यं दास्याम्यसंशयम् ॥ २९ ॥

॥ ऋचीक उवाच ॥ ॥

ब्रूहि पार्थिवशार्दूल कन्याशुल्कं मम द्रुतम् ॥

येन यच्छामि ते सर्वं यद्यपि स्यात्सुदुर्लभम्॥ ॥ ६.१६५.३० ॥

॥ गाधिरुवाच ॥ ॥

एकतः श्यामकर्णानामश्वानां वातरंहसाम् ॥

शतानि सप्त विप्रेंद्र श्वेतानां चैव सर्वतः ॥ ३१ ॥

य आनीय प्रदद्यान्मे तस्मै कन्यां ददाम्यहम् ॥ ३२ ॥

॥ सूत उवाच ॥ ॥

स तथेति प्रतिज्ञाय ऋचीको मुनिसत्तमः ॥

कान्यकुब्जं समासाद्य गंगातीरे विवेश ह ॥ ॥ ३३ ॥

अश्वो वोढेति यत्सूक्तं चतुःषष्टिसमुद्भवम् ॥

छंदऋषिदेवतायुक्तं जपं चक्रे ततः परम् ॥ ३४ ॥

विनियोगं वाजिकृतं गाधिना यत्प्रकीर्तितम् ॥
ततस्ते वाजिनस्तस्मान्निष्क्रांताः सलिलाद्द्विजाः ॥ ३५ ॥
सर्वश्वेताः सुवेगाश्च श्यामैकश्रवणास्तथा ॥
शतानि सप्तसंख्यानि तावत्संख्यै र्नरैर्युताः ॥ ३६ ॥
ततः प्रभृति विख्यातमश्वतीर्थं धरातले ॥
गंगातीरे शुभे पुण्ये कान्यकुब्जसमीपगम् ॥
यस्मिन्स्नाने कृते मर्त्यो वाजिमेधफलं लभेत् ॥ ३७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्येऽश्वतीर्थोत्पत्तिवर्णनंनाम पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६६



॥ सूत उवाच ॥ ॥

ऋचीकोऽपि समादाय पुरुषैराप्तकारिभिः ॥

तानश्वान्प्रजगामाथ यत्र गाधिर्व्यवस्थितः ॥ १ ॥

तस्मै निवेदयामास कन्यार्थं तान्हयोत्तमान् ॥

गाधिस्तु तान्प्रगृह्याथ योग्यान्वाजिमखस्य च ॥ २ ॥

एकैकं परमं तेषां स जगामाथ पार्थिवः ॥

ततस्तां प्रददौ तस्मै कन्यां त्रैलोक्यसुन्दरीम् ॥ ३ ॥

विप्राग्निसाक्षिसंभूतां गृह्योक्तविधिना न्वितः ॥

ततो विवाहे निर्वृत्त ऋचीको मुनिसत्तमः ॥ ४ ॥

तस्याः संवेशने चैव निष्कामः समपद्यत ॥

अथाब्रवीन्निजां भार्यां निष्कामः संस्थितो मुनिः ॥ ५ ॥

अहं यास्यामि सुश्रोणि काननं तपसः कृते ॥

त्वं प्रार्थय वरं कंचिद्येनाभीष्टं ददामि ते ॥ ६ ॥

सा श्रुत्वा तस्य तद्वाक्यं निष्कामस्य प्रजल्पितम् ॥

वाष्पपूर्णेक्षणा दीना जगाम जननीं प्रति ॥ ७ ॥

प्रोवाच वचनं तस्य सा निष्कामपते स्तदा ॥

वरदानं तथा तेन यथोक्तं द्विजसत्तमाः ॥ ८ ॥

अथ श्रुत्वैव सा माता यथा तज्जल्पितं तया ॥

सुतया ब्राह्मणश्रेष्ठास्ततो वचनमब्रवीत् ॥ ९ ॥

यद्ययं पुत्रि ते भर्ता वरं यच्छति वांछितम् ॥

तत्प्रार्थय सुतं तस्माद्ब्राह्मण्येन समन्वितम् ॥ ६.१६६.१० ॥

मदर्थं चैकपुत्रं च निःशेषक्षात्रतेजसा ॥

संयुक्तं याचय शुभे विपुत्राऽहं यतः स्थिता ॥ ११ ॥

सा श्रुत्वा जननीवाक्यमृचीकं प्राप्य सुव्रता ॥

अब्रवीज्जननी वाक्यं सर्वं विस्तरतो द्विजाः ॥ १२ ॥

स तस्याश्च वचः श्रुत्वा चकाराथ चरुद्वयम् ॥
पुत्रेष्टिं विधिवत्कृत्वा नमस्कृत्य स्वयंभुवम् ॥ १३ ॥
एकस्मिन्योजयामास ब्राह्म्यं तेजोऽखिलं च सः ॥
क्षात्रं तेजस्तथान्यस्मिन्सकलं द्विजसत्तमाः ॥ १४ ॥
भार्यायै प्रददौ पूर्वं ब्राह्म्यं च चरुमुत्त मम्॥
अब्रवीत्प्राशयित्वैनमश्वत्थालिंगनं कुरु ॥ १५ ॥
ततः प्राप्स्यसि सत्पुत्रं ब्राह्म्यतेजःसमन्वितम् ॥
द्वितीयश्चरुको यश्च तं त्वं मात्रे निवे दय ॥ १६ ॥
अब्रवीच्च ततस्तां तु ऋचीको मुनिसत्तमः ॥
त्वमेनं चरुकं प्राश्य न्यग्रोधालिंगनं कुरु ॥ १७ ॥
ततः प्राप्स्यसि सत्पुत्रं संयुक्तं क्षात्रतेजसा ॥
निःशेषेण महाभागे न मे स्याद्वचनं वृथा ॥ १८ ॥
एवमुक्त्वा ऋचीकस्तु स विसृज्य च तेजसी ॥
सुहृष्टो ब्राह्मणश्रेष्ठः स्वयं च महितोऽभवत् ॥१९॥
ते चैव तु गृहे गत्वा प्रहृष्टेनांतरात्मना ॥
ऊचतुश्च मिथस्ते च सत्यमेतद्भविष्यति ॥ ६.१६६.२० ॥
ततो माता सुतां प्राह आत्मार्थे सकलो जनः ॥
विशेषं कुरुते कृत्ये सामान्ये च व्यवस्थिते ॥ २१ ॥
तत्तवार्थं कृतोऽनेन यश्चरुश्चारुलोचने ॥
यस्तस्मिन्विहितोऽनेन मन्त्रग्रामो भविष्यति ॥
विशेषेण महाभागे सत्यमेतन्मयोदितम् ॥ २२ ॥
तस्माच्च चरुकं मह्यं त्वं गृहाण शुचिस्मिते ॥
आत्मीयं मम यच्छस्व वृक्षाभ्यां च विपर्ययः ॥
क्रियतां च महाभागे येन मे स्यात्सुतोत्तमः ॥ २३ ॥
राज्यकर्मणि दक्षश्च शूरः परबलार्दनः ॥
त्वदीयो द्विजमात्रोऽपि तव तुष्टिं करिष्यति ॥ २४ ॥
अथ सा विजने प्रोक्ता तया मात्रा यशस्विनी ॥
अकरोद्व्यत्ययं वृक्षे चरौ च द्विजसत्तमाः ॥ २५ ॥

ततः पुंस वने स्नाते ते शुभे चारुलोचने ॥
दधाते गर्भमेवाथ भर्तुः संयोगतः क्षणात् ॥ २६ ॥
ततस्तु गर्भमासाद्य सा च त्रैलोक्यसुन्दरी ॥
क्षात्त्रेण तेजसा युक्ता तत्क्षणात्समपद्यत ॥
मनो राज्ये ततश्चक्रे हस्त्यश्वारोहणोद्भवे ॥ २७ ॥
युद्धवार्त्तास्तथा चक्रे देवासुरगणोद्भवाः ॥
शृणोति च तथा नित्यं विलासेषु मनो दधे ॥
अनुष्ठानं ततश्चक्रे मनोराज्यसमुद्भवम् ॥ २८ ॥
पितुर्गृहात्समानीय जात्यानश्वांस्तथा गजान् ॥
रक्तानि चैव वस्त्राणि काश्मीराद्यं विलेपनम् ॥ २९ ।१
तद्दृष्ट्वा चेष्टितं तस्या राज्यार्हं बहुभोगधृक् ॥
ब्राह्मणार्हैः परित्यक्तं समाचारैश्च कृत्स्नशः । ६.१६६.३० ॥
अब्रवीच्च ततः क्रुद्धो धिक्पापे किमिदं कृतम् ॥
व्यत्ययो विहितो नूनं चरुकस्य नगस्य च ॥ ३१ ॥
त्वया पापे प्रपश्यामि येनेदृक्तव चेष्टितम् ।१
क्षत्रियार्हं द्विजाचारैः सकलैः परिवर्जितम् ॥ ३२ ॥
चीरवल्कलसंत्यक्तं स्नानजाप्यविवर्जितम् ॥
संयुक्तं विविधैर्गन्धैर्मृगनाभिपुरःसरैः । ३३ ॥
तव माता शमस्था सा जपहोमपरायणा ॥
तीर्थयात्रापरा चैव वेदश्रवणलालसा ॥ ३४ ॥
तस्मात्ते क्षत्रियः पुत्रो भविष्यति न संशयः ॥ ३५ ॥
मातुश्च ब्राह्मणश्रेष्ठो ब्रह्मचर्यकथापरः ॥
भविष्यति सुतश्चिह्नैर्गर्भलक्षणसंभवैः ॥ ३६ ॥
यस्मादुदीरितः पूर्वं श्लोकोऽयं शास्त्रचिन्तकैः ॥
यादृशा दोहदाः सन्ति सगर्भाणां च योषिताम् ॥ ३७ ॥
तादृगेव स्वभावेन तासां पुत्रोऽत्र जायते ॥
सैवमुक्ता भयत्रस्ता वेपमाना कृतांजलिः ॥ ॥ ३८ ॥
बाष्पपूर्णेक्षणा दीना वाक्यमेतदुवाच ह ॥

सत्यमेतत्प्रभो वाक्यं यत्त्वया समुदाहृतम् ॥ ३९ ॥

अतीतानागतं वेत्ति विना लिंगैर्भवानिह ॥

तस्मात्कुरु प्रसादं मे यथा स्याद्ब्राह्मणः सुतः ॥

क्षत्रियस्य तु पुत्रस्य भवान्नार्हः कथंचन ॥ ६.१६६.४० ॥

॥ ऋचीक उवाच ॥ ॥

यत्किंचिद्ब्रह्मतेजः स्यात्तन्न्यस्तं ते चरौ मया ॥

क्षात्त्रं तेजश्च ते मातुर्व्यत्ययं च कथंचन ।।

करोमि वाधमो लोके शास्त्र स्य च व्यतिक्रमम् ॥ ४१ ॥

॥ पत्न्युवाच ॥ ॥

यद्येवं भृगुशार्दूल मम पौत्रोऽत्र यो भवेत् ॥

क्षात्त्रं तेजोऽखिलं तस्य गात्रे भूया त्त्वयाऽऽहृतम् ॥ ४२ ॥

पुत्रस्तु ब्राह्मणश्रेष्ठो भूयादभ्यधिकस्तव ॥ ४३ ॥

॥ ऋचीक उवाच ॥ ॥

एवं भवतु मद्वाक्यात्पुत्रस्ते ब्राह्मणः शुभे ॥

पौत्रः सुदुर्द्धरः संख्ये संयुक्तः क्षात्त्रतेजसा ॥ ४४ ॥

ततः सत्यं वरं लब्ध्वा प्रसन्नवदना सती ॥

मातुर्निवेदयामास तत्सर्वं कांत जल्पितम् ॥ ४५ ॥

ततः सा दशमे मासि संप्राप्ते गुरुदैवते ॥

नक्षत्रे जनयामास पुत्रं बालार्कसन्निभम् ॥ ४६ ॥

ब्राह्म्या लक्ष्म्या समोपेतं निधानं तपसां शुचि ॥

जमदग्निरिति ख्यातो योऽसौ त्रैलोक्यविश्रुतः ॥

तस्य पुत्रोभवत्ख्यातो रामोनाम महायशाः ॥ ४७ ॥

एकविंशतिदा येन धरा निःक्षत्रिया कृता ॥

क्षात्त्रतेजःप्रभावेन पितामहप्रसादतः ॥ ४८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्या संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये परशुरामोत्पत्तिवर्णनंनाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥ १६६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६७



॥ सूत उवाच ॥ ॥

गाधेस्तु याऽथ पत्नी च प्राशनाच्चरु कस्य वै ॥

सापि गर्भं दधे तत्र वासरे मन्त्रतः शुभा ॥ १ ॥

सा च गर्भसमोपेता यदा जाता द्विजोत्तमाः ॥

तीर्थयात्रापरा साध्वी जाता व्रतपरायणा ॥ २ ॥

वेदध्वनिर्भवेद्यत्र तत्र हर्षसमन्विता ॥

पुलकांचितसर्वांगी सा शुश्राव च सर्वदा ॥

त्यक्त्वा राज्योचितान्सर्वानलंकारान्सुखानि च ॥ ॥ ३ ॥

अथ सापि द्विजश्रेष्ठा दशमे मासि संस्थिते ॥

सुषुवे सुप्रभं पुत्रं ब्राहम्या लक्ष्म्या समावृतम् ॥ ४ ॥

विश्वामित्रस्तथा ख्यातस्त्रैलोक्ये सचरा चरे ॥

ववृधे स महाभागो नित्यमेवाधिकं नृणाम् ॥ ५ ॥

शुक्लपक्षं समासाद्य तारापतिरिवांबरे ॥

यदासौ यौवनोपेतः संजातो द्विजसत्तमाः ॥ ६ ॥

राज्यक्षमस्तदा राज्ये गाधिना स नियोजितः ॥

अनिच्छमानः स्वं राज्यं पितृपैतामहं महत् ॥ ७ ॥

वेदाध्ययनसंपन्नो नित्यं च पठते हि सः ॥

ब्राह्मणोचितमार्गेण गच्छमानो दिवानिशम् ॥ ८ ॥

संस्थाप्याथ सुतं राज्ये बभूव वनगोचरः ॥

सकलत्रो महाभागो वानप्रस्थाश्रमे रतः ॥ ९ ॥

विश्वामित्रोऽपि राज्यस्थो द्विजसंपूजने रतः ॥

द्विजैः सर्वैश्चचाराथ स्नानजाप्यपरायणः ॥ ६.१६७.१० ॥

कस्यचित्त्वथ कालस्य पापर्द्धिं समुपागतः ॥

प्रविवेश वनं रौद्रं नानामृगसमाकुलम् ॥ ११ ॥

जघान स वने तत्र वराहान्संबरान्गजान् ॥

तरक्षांश्च रुरून्खड्गानारण्यान्महिषांस्तथा ॥ १२ ॥

सिंहान्व्याघ्रान्महासर्पाञ्छरभांश्च द्विजोत्तमाः ॥

मृगयासक्तचित्तः स भ्रममाणो महावने ॥ १३ ॥

मध्याह्नसमये प्राप्ते वृषस्थे च दिवाकरे ॥

क्षुत्पिपासापरिश्रांतो विश्वामित्रो द्विजोत्तमाः ॥ १४ ॥

आससादाश्रमं पुण्यं वसिष्ठस्य महात्मनः ॥

वसिष्ठोऽपि समालोक्य विश्वामित्रं नृपो त्तमम् ॥ १५ ॥

निजाश्रमे तु संप्राप्तं सानन्दं सम्मुखो ययौ ॥

दत्त्वा तस्मै तदार्घ्यं च मधुपर्कं च भूभुजे ॥ १६ ॥

अब्रवीच्च ततो वाक्यं स्वागतं ते महीपते ॥

वद कृत्यं करोम्येव गृहायातस्य यच्च ते ॥ १७ ॥

॥ विश्वामित्र उवाच ॥ ॥

मृगयायां परिश्रांतः पिपासाव्याकुलेन्द्रियः ॥

पानार्थमिह संप्राप्त आश्रमे ते मुनीश्वर ॥ १८ ॥

तत्पीतं शीतलं तोयं वितृष्णोऽहं व्यवस्थितः ॥

अनुज्ञां देहि मे ब्रह्मन्येन गच्छामि मंदिरम् ॥ ॥ १९ ॥

॥ वसिष्ठ उवाच ॥ ॥

मध्याह्न समयो रौद्रः सूर्योऽतीव सुतापदः ॥

तत्कृत्वा भोजनं राजन्नपराह्ने व्यवस्थिते ॥

गन्तासि निजमावासं भुक्त्वान्नं मम चाश्रमे ॥ ६.१६७.२० ॥

॥ राजोवाच ॥ ॥

चतुरंगेण सैन्येन मृगयामहमागतः ॥ २१ ॥

तवाश्रमस्य द्वारस्थं मम सैन्यं व्यवस्थितम्॥

बुभुक्षितेषु भृत्येषु यः स्वामी कुरुतेऽशनम् ॥२२॥

स याति नरकं घोरं त्यज्यते च गुणैर्द्रुतम् ॥

तस्मादाज्ञापय क्षिप्रं मां मुने स्वगृहाय भोः ॥२३॥ ॥

॥ वसिष्ठ उवाच ॥ ॥

यदि ते सेवकाः संति द्वारदेशे बुभुक्षिताः ॥

सर्वानिहानय क्षिप्रं तृप्तिं नेष्याम्यहं परम् ॥ २४ ॥

अस्ति मे नन्दिनीनाम कामधेनुः सुशोभना ॥

वांछितं यच्छते सर्वं तपसा पार्थिवोत्तम ॥ २५ ॥

तृप्तिं नेष्यति ते सर्वं सैन्यं पार्थिवसत्तम ॥

तस्मादानीयतां क्षिप्रं पश्य मे धेनुजं फलम् ॥ २६ ॥

तच्छ्रुत्वा चानयामास सर्वं सैन्यं महीपतिः ॥

स्नातश्च कृतजप्यश्च सन्तर्प्य पितृदेवताः ॥२७॥

ब्राह्मणान्वाचयित्वा च सिंहासनसमाश्रितः ॥

एतस्मिन्नंतरे धेनुः समाहूता च नंदिनी ॥ २८ ॥

वसिष्ठेन समाहूता विश्वामित्रपुरःस्थिता ॥

अब्रवीच्च तता वाक्यं वसिष्ठमृषि सत्तमम् ॥ २९ ॥

आदेशो दीयतां मह्यं किं करोमि प्रशाधि माम् ॥ ६.१६७.३० ॥

॥ वसिष्ठ उवाच ॥ ॥

पादप्रक्षालनाद्यं तु कुरुष्व वचनान्मम ॥

विश्वामित्रस्य राजर्षेर्यावद्भोजनसंस्थितिम् ॥ ३१ ॥

खाद्यैः सर्वैस्तथा लेह्यैश्चोष्यैः पेयैः पृथग्विधैः ॥

कुरुष्व तृप्तिपर्यन्तं ससैन्यस्य महीपतेः ॥

अश्वानां च गजानां च घासादिभिर्यथाक्रमम् ॥ ३२ ॥

॥ सूत उवाच ॥ ॥

बाढमित्येव साप्युक्त्वा ततस्तत्ससृजे क्षणात्॥

यत्प्रोक्तं तेन मुनिना भृत्यानां चायुतं तथा ॥ ३३ ॥

ततस्ते सर्वमादाय भृत्या भोज्यं ददुस्तथा ॥

एकैकस्य पृथक्त्वेन प्रतिपत्तिपुरःसरम् ॥ ३४ ॥

एवं तया क्षणेनैव तृप्तिं नीतो महीपतिः ॥

ससैन्यः सपरीवारो गजोष्ट्राश्वैर्वृषैः सह ॥ ३५ ॥

ततस्तु कौतुकं दृष्ट्वा विश्वामित्रो महीपतिः ॥

सामात्यो विस्म याविष्टो मन्त्रयामास च द्विजाः ॥ ३६ ॥

अहो चित्रमहो चित्रं ययाऽकस्माद्वरूथिनी ॥

तृप्तिं नीतेयमस्माकं क्षुत्पिपासासमाकुला ॥ ३७ ॥

तस्मात्संनीयतामेषा स्वगृहं धेनुरुत्तमा ॥

किं करिष्यति विप्रोऽयं निर्भृत्यो वनसंस्थितः ॥३८॥

ततो वसिष्ठमाहूय वाक्यमेतदुवाच सः ॥

नंदिनी दीयतां मह्यं किं करिष्यसि चानया ॥ ३९ ॥

त्वमेको वनसंस्थस्तु निर्द्वन्द्वो निष्परिग्रहः ॥

अथवा तव दास्यामि व्ययार्थे मुनिसत्तम ॥

वरान्ग्रामांश्च हस्त्यश्वानन्यांश्चापि यथेप्सितान् ॥ ६.१६७.४० ॥

॥ वसिष्ठ उवाच ॥ ॥

होमधेनुरियं राजन्नस्माकं कामदोहिनी ॥

अदेया गौर्महाराज सामान्यापि द्विजन्मनाम्॥ ४१ ॥

किं पुनर्नंदिनी यैषा सर्वकामप्रदायिनी ॥

अपरं शृणु राजेंद्र स्मृतिवाक्यमनुत्तमम् ॥ ४२ ॥

गवां हि विक्रयार्थे च यदुक्तं मनुना स्वयम् ॥

गवां विक्रयजं वित्तं यो गृह्णाति द्विजोत्तमः ॥ ४३ ॥

अन्त्यजः स परिज्ञेयो मातृविक्रयकारकः ॥

तस्मान्नाहं प्रदास्यामि नन्दिनीं तां महीपते ॥ ४४ ॥

न साम्ना नैव भेदेन न दानेन कथंचन ॥

न दण्डेन महाराज तस्माद्गच्छ निजालयम् ॥ ४५ ॥ ॥

॥ विश्वामित्र उवाच ॥ ॥

यत्किंचिद्विद्यते रत्नं पार्थिवस्य क्षितौ द्विज ॥

तत्सर्वं राजकीयं स्यादिति वित्तविदो विदुः ॥ ४६ ॥

रत्नभूता ततो धेनुर्ममेयं नंदिनी स्थिता ॥

दण्डेनापि ग्रहीष्यामि साम्ना यच्छसि नो यदि ॥ ४७ ॥

एवमुक्त्वा वसिष्ठं स विश्वामित्रो महीपतिः ॥

आदिदेश ततो भृत्यान्नदिनीयं प्रगृह्यताम् ॥ ४८ ॥

अथ सा भृत्यवर्गेण नीयमाना च नंदिनी ॥

हन्यमाना प्रहारैश्च पाषाणैर्लकुटैरपि ॥ ४९ ॥

अश्रुपूर्णेक्षणा दीना प्रहारैर्जर्जरीकृता ॥

कृच्छ्रादुपेत्य तं प्राह वसिष्ठं मुनिसत्तमम् ॥ ६.१६७.५० ॥

किं दत्तास्मि मुनिश्रेष्ठ त्वयाहं चास्य भूपतेः ॥

येन मां कालयंत्यस्य पुरुषाः स्वामिनो यथा ॥ ५१ ॥

॥ वसिष्ठ उवाच ॥ ॥

न त्वां यच्छाम्यहं धेनो प्राणत्यागेऽपि संस्थिते ॥

तद्रक्षस्व स्वयं धेनो आत्मानं मत्प्रभावतः ॥ ५२ ॥

एवमुक्ता तदा धेनुर्वसिष्ठेन महात्मना ॥

कोपाविष्टा ततश्चक्रे हुंकारान्दारुणांस्तथा ॥ ५३ ॥

तस्या हुंकारशब्दैश्च निष्क्रांताः सायुधा नराः ॥

शबराश्च पुलिंदाश्च म्लेच्छाः संख्याविवर्जिताः ॥ ५४ ॥

तैश्च भृत्या हताः सर्वे विश्वामित्रस्यभूपतेः ॥

ततः कोपाभिभूतोऽसौ विश्वामित्रो महीपतिः॥ ५५ ॥

सज्जं कृत्वा स्वसैन्यं तु चतुरंगं प्रकोपतः॥

युद्धं चक्रे च तैः सार्धं मरणे कृतनिश्चयः ॥ ५६ ॥

अथ ते सैनिका स्तस्य ते गजास्ते च वाजिनः॥

पश्यतो निहताः सर्वे पुरुषैर्धेनुसंभवैः॥५७॥

विश्वामित्रं परित्यज्य शेषं सर्वं निपातितम् ॥

तं दृष्ट्वा वेष्टितं म्लेच्छैर्यु ध्यमानं महीपतिम् ॥ ५८ ॥

कृपां कृत्वा वसिष्ठस्तु नन्दिनीमिदमब्रवीत् ॥

रक्ष नंदिनि भूपालं म्लेच्छैरेतैः समावृतम् ॥ ५९ ॥

राजा हि यत्नतो रक्ष्यो यत्प्रसादादिदं जगत् ॥

सन्मार्गे वर्तते सर्वं न चामार्गे प्रवर्तते ॥ ६.१६७.६० ॥

ततस्तु नंदिनीं यावन्निषेधयितुमागताम् ॥

विश्वामित्रोऽसिमुद्यम्य प्रहर्तुमुपचक्रमे ॥ ६१ ॥

वसिष्ठोऽपि समालोक्य वध्यमानां च तां तदा ॥

बाहुं संस्तंभयामास खड्गं तस्य च भूपतेः ॥ ६२ ॥

अथ वैलक्ष्यमापन्नो विश्वामित्रो महीपतिः ॥

प्रोवाच व्रीडया युक्तो वसिष्ठं मुनिसत्तमम्॥ ६३ ॥

रक्ष मां त्वं मुनिश्रेष्ठ वध्यमानं सुदारुणैः ॥

म्लेच्छैः कुरुष्व मे बाहुं स्तम्भेन तु विवर्जितम् ॥ ६४ ॥

ममापराधात्संनष्टं सर्वं सैन्यमनन्तकम्॥

तस्माद्यास्याम्यहं हर्म्यं न युद्धेन प्रयोजनम् ॥ ६५ ॥

दुर्विनीतः श्रियं प्राप्य विद्यामैश्वर्यमेव च ॥

न तिष्ठति चिरं युद्धे यथाहं मदगर्वितः ॥ ६६ ॥

॥ सूत उवाच ॥ ॥

एवमुक्तो वसिष्ठस्तु विश्वामित्रेण भूभुजा ॥

चकार तं भुजं तस्य स्तंभदोषविवर्जितम् ॥ ६७ ॥

अब्रवीत्प्रहसन्वाक्यं विधाय स शुभं करम्॥

गच्छ राजन्विमुक्तोऽसि स्तंभदोषेण वै मया ॥ ६८ ॥

माकार्षीर्ब्राह्मणैः सार्धं विरोधं भूय एव हि ॥

अनुज्ञातः स तेनाथ विश्वामित्रो महीपतिः ॥ ६९ ॥

सव्रीडं प्रययौ हर्म्यं पद्भ्यामेव द्विजोत्तमाः॥

स्वपुरद्वारमासाद्य सुगुप्ते रजनीमुखे ॥६.१६७.७॥।

प्रलापमकरोत्तत्र बाष्पपर्याकुलेक्षणः ॥.

धिग्बलं क्षत्रियाणां च धिग्वीर्यं धिक्प्रजीवितम् ॥ ॥ ७१ ॥

श्लाघ्यं ब्रह्मबलं चैकं ब्राहम्यं तेजश्च केवलम् ॥७२ ॥

एतत्कर्म मया कार्यं यथा स्याद्ब्रह्मजं बलम् ॥

त्यक्त्वा चैव निजं राज्यं चरिष्यामि महत्तपः।

एवं स निश्चयं कृत्वा राज्ये संस्थाप्य वै सुतम्॥

नाम्ना विश्वसहं ख्यातं प्रजगाम तपोवनम्॥७४॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विश्वामित्रराज्यपरित्यागवर्णनं नाम सप्तषष्ट्युत्तरशततमोऽध्यायः॥१६७॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६८



॥ ॥ सूत उवाच ॥ ॥

एवं राज्यं परित्यज्य विश्वामित्रो द्विजोत्तमाः ॥

हिमवन्तं नगं प्राप्य तपश्चक्रे सुदारुणम् ॥ १ ।।

वर्षास्वाकाशशायी च हेमंते सलिलाशयः ॥

पञ्चाग्निसाधको ग्रीष्मे स्थितो वर्षशतत्रयम् ॥ २ ॥

फलमूलकृताहारस्ततो वर्षशतत्रयम् ॥

ध्यायमानः परं ब्रह्म स्थितो ब्राह्मणसत्तमाः ॥

शीर्णपर्णाशनः पश्चात्तावत्कालं व्यवस्थितः ॥ ३ ॥

ततश्चैव जलाहारस्तावन्मात्रं व्यवस्थितः ॥

कालं स वायुभक्षश्च ततश्चैवायुतं समाः॥ सूत उवाच॥

अथ दृष्ट्वा तपःशक्तिं तस्य तां त्रिदशाधिपः।

पातायष्यति मां नूनमेष स्थानान्नृपोत्तमः॥। ॥ ५ ॥

ततः प्रोवाच संगत्य साम्ना परमवल्गुना ॥

विश्वामित्रं नृपश्रेष्ठं भयेन महताऽन्वितः ॥ ६ ॥

॥ इंद्र उवाच ॥ ॥

विश्वामित्र प्रतुष्टोऽस्मि तपसानेन पार्थिव ॥

वरं वरय भद्रं ते यदभीष्टं हृदिस्थितम्॥ ७ ॥

॥ विश्वामित्र उवाच ॥ ॥

ब्राह्मण्यं देहि मे शक्र यदि तुष्टोऽसि सांप्रतम् ॥

तदर्थं तपसश्चर्यां जानीहि त्वं पुरंदर ॥९॥

॥ इंद्र उवाच ॥ ॥

अनेनैव शरीरेण क्षत्रियः स्यात्कथं द्विजः ॥

चतुर्विंशतिसंस्कारैर्द्विगुणैर्यःप्रजायते ॥

तदन्यत्प्रार्थय क्षिप्रं यत्तेऽभीष्टतरं स्थितम् ॥ ९ ॥

॥ विश्वामित्र उवाच ॥ ॥

न ब्राह्मण्यात्परं किंचित्प्रार्थयामि सुरेश्वर॥ ६.१६८.१० ॥

अपि त्रैलोक्यराज्यं ते वस्तुष्वन्येषु का कथा ॥

तस्माद्गच्छ सुरश्रेष्ठ स्वराज्यं परिपालय ॥ ११ ॥

परित्यक्ष्याम्यहं देहं यास्ये वाऽहं द्विजन्मताम् ॥

तच्छ्रुत्वा वचनं तस्य देवराजो दिवं गतः ॥ १२ ॥

तस्य तं निश्चयं ज्ञात्वा सर्वदेवसमावृतः॥

विश्वामित्रोऽपि तद्रूपं चकार दुश्चरं तपः॥ १३ ॥

अथ वर्षसहस्रे तु व्यतिक्रान्ते द्विजोत्तमाः ॥

अन्यस्मिन्वायुभक्षस्य विश्वामित्रस्य भूपतेः ॥ १४ ॥

आजगाम स्वयं ब्रह्मा पुण्यैर्देवर्षिभिः सह ॥

अब्रवीत्तं महीपालं तपसा दग्धकिल्बिषम् ॥ १५ ॥

॥ श्रीब्रह्मोवाच ॥ ॥

विश्वामित्र प्रतुष्टोऽस्मि तपसानेन सत्तम ॥

वरं वरय भद्रं ते प्रदास्याम्यपि दुर्लभम् ॥ १६ ॥

॥ विश्वामित्र उवाच ॥ ॥

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥

ब्राह्मण्यं देहि मे देव नान्यदिष्टतमं महत् ॥ १७ ॥ ॥

॥ ब्रह्मोवाच ॥ ॥

क्षत्रियेण प्रजातस्य द्विजत्वं जायते कथम् ॥

श्रुतिस्मृतिविरुद्धं हि किमेवं वदसीप्सितम् ॥ १८९ ॥

यन्न जातं धरापृष्ठे न भविष्यति कर्हिचित् ॥ १९ ॥

॥ विश्वामित्र उवाच ॥ ॥

गच्छ त्वं देवदेवेश ब्रह्मलोकमनुत्तमम्॥

अहं त्यक्ष्यामि वा प्राणान्संप्राप्स्ये वा द्विजन्मताम् ॥ ६.१६८.२० ॥

अथ देवर्षिमध्यस्थ ऋचीको वाक्यमब्रवीत् ॥

अस्य जन्मकृते देव ब्राहम्यैर्मंत्रैर्मया चरुः ॥ २१ ॥

अभितो ब्रह्मसर्वस्वं तत्र सयोजितं मया ।

तेनैव क्षत्रजन्माऽयं ब्राह्मणश्चतुरानन॥२२॥

ब्रह्मर्षिकीर्तयस्वैनं तस्मात्वं प्रपितामह॥

राज्यस्थोऽपि द्विजार्हाणि सत्कृत्यान्य करोदसौ ॥ २३ ॥

ब्राह्ममन्त्रप्रभावेन तस्माद्ब्रह्मर्षिमाह्वय ॥

येन कीर्तामहे सर्वे विश्वामित्रं द्विजोत्तमम्॥ २४ ।

अथ ब्रह्मा चिरं ध्यात्वा ब्राह्म्यै र्मंत्रैश्च तेजसा ॥

समुत्पन्नं ततः प्राह ब्राह्मणस्त्वं मया कृतः ॥ २५ ॥

त्यजेदं दुष्करं घोरं तपो मद्वचनादद्रुतम् ॥

स यदा ब्रह्मणा प्रोक्तो ब्रह्मर्षि स्त्वमसंशयम्॥ २६ ॥

ऋचीकाद्यैस्ततः सर्वैः प्रोक्तो देवर्षिभिस्तथा ॥ २७ ॥

अथ तेषां मध्यगतो वसिष्ठो मुनिसत्तमः ॥

सोऽब्रवीत्कोपसंयुक्तो नाहं वक्ष्यामि कर्हिचित्॥ २८ ॥

ब्राह्मणं क्षत्रियाज्जातं जानन्नपि पितामह ॥

ऋचीकस्य च दाक्षिण्यात्तथा त्वं वदसि प्रभो ॥ २९ ॥

प्रोच्यमानो ऽपि बहुधा वसिष्ठो मुनिसत्तमः ॥

पितामहेन मुनिभिर्नारदाद्यैरनेकधा ॥

जगामाथ परित्यज्य तान्सर्वान्द्विजसत्तमान् ॥ ६.१६८.३० ॥

स चागत्य मुनि श्रेष्ठो देशं चानर्तसंज्ञितम् ॥

हाटकेश्वरजे क्षेत्रे शंखतीर्थसमीपतः ॥ ३१ ॥

यत्र ब्रह्मशिला पुण्या श्वेतद्वीपसमन्विता ॥

सरस्वती स्थिता यत्र नदी पापहरा शुभा ॥ ३२ ॥

तत्राश्रमपदं कृत्वा चकार विपुलं तपः ॥

विश्वामित्रोऽपि सामर्षस्तद्वधार्थं समागतः ॥ ३३ ॥

तस्याश्रमस्य दूरे स याम्यां दिशि समाश्रितः ॥

कृत्वाश्रमपदं तत्र तस्य च्छिद्राणि चिन्तयन् ॥ ३४ ॥

संस्थितः सुचिरं कालं न च पश्यति किंचन ॥

अथाभिचारिकं तेन प्रारब्धं तस्य चोपरि॥३५॥

यदुक्तं सामविधिना सामवेदे वधात्मकम्॥

तस्य तैर्दारुणैर्मंत्रैर्जुह्वतो जातवेदसम्॥३६॥

निष्क्रांता दारुणा शक्तिर्मुक्तकेशी भयानका॥
वानरस्कंधमारूढा कुर्वाणा किल्किलाध्वनिम्॥३७॥
नानायुधसमोपेता यमजिह्वा यथा परा॥
साब्रवीद्वद विप्रेंद्र किं ते कृत्यं करोम्यहम्॥३८॥
त्रैलोक्यमपि कृत्स्नं च संहरामि तवाज्ञया॥३९॥
विश्वामित्र उवाच॥
मम शत्रुर्मान्यो त्र वसिष्ठः कुमुनिः स्थितः।
तं त्वं जहि द्रुतं गत्वा तदर्थं च मया कृता॥६.१६८.४०॥
एवमुक्ता तु सा तेन विश्वामित्रेण धीमता।
वसिष्ठाश्रममुद्दिश्य प्रस्थिता चोत्तरामुखी॥४१॥
एतस्मिन्नेव काले तु वसिष्ठस्याश्रमे द्विजाः।
दुर्निमित्तानि जातानि प्रभूतानि महांति च॥४२॥
पपात महती चोल्का निहत्य रविमण्डलम्॥
तथा रुधिरवृष्टिश्च अस्थिमिश्रा व्यजायत॥४३॥
दीप्तां दिशं समासाद्य रुरोद च तथा शिवा।
तां दृष्ट्वा सुमहोत्पातान्वसिष्ठो मुनिपुंगवः॥४४॥
यावदालोकते रूपं ज्वालामालासमाकुलम्॥
ततः सम्यक्परिज्ञाय सर्वं दिव्येन चक्षुषा॥४५॥
विश्वामित्रप्रयुक्तेयं शक्तिर्मम वधाय च॥
कृत्या रूपा सुमंत्रैश्च सामवेदसमुद्भवैः॥४६॥
तिष्ठतिष्ठेति तेनोक्ता ततः सा निश्चलाभवत्॥
निजमंत्रैश्च सा तेन स्तंभिताथर्वणोद्भवैः॥४७॥
ततः स्त्रीरूपमादाय प्रोवाच मुनिपुंगवम्॥
सामवेदस्तु वेदानां प्राधान्येन व्यवस्थितः॥४८।.
विधिना तेन संसृष्टा विश्वामित्रेण धीमता॥
मा कुरुत्वप्रमाणंतु प्रहारं सह मे मुने ॥
रक्षयिष्यामि ते
प्राणान्स्वल्पस्पर्शेन ते मुने ॥ ४९ ॥

॥ वसिष्ठ उवाच ॥ ॥

यद्येवं कुरु मे स्पर्शं न मर्म स्पर्शनं शुभे ॥

मया चाथर्वणा मंत्राः संहृताः कृपया तव ॥ ६.१६८.५० ॥

ततः सा दारुणा शक्तिर्विश्वामित्रप्रयोजिता ॥

तस्यांगदेशं स्पृष्ट्वाथ निपपात धरातले ॥ ५१ ॥

ततस्तुष्टो वसिष्ठस्तु तामाह मधुरं वचः ॥

अद्यप्रभृति ते पूजां करिष्यंति समाहिताः ॥

जनाः सर्वे महाभागे भक्त्या परमया युताः ॥ ५२ ॥

चैत्रमासे सिते पक्षे अष्टमीदिवसे स्थिते ॥

ये ते पूजां करिष्यंति श्रद्धया परया युताः ॥ ५३ ॥

ते सर्वे वत्सरंयावद्भवि ष्यंति निरामयाः ॥

तस्मादत्रैव स्थातव्यं सदैव मम वाक्यतः ॥ ५४ ॥

॥ सूत उवाच ॥ ॥

एवमुक्ता च सा तेन वसिष्ठेन महात्मना ॥

स्थिता तत्रैव सा देवी तस्य वाक्येन तत्क्षणात् ॥ ५५ ॥

प्राप्नोति परमां पूजां विशेषान्नागरैः कृताम् ॥

धारानामेति विख्याता भक्तलोकसुख प्रदा ॥ ५६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धारोत्पत्तिमाहात्म्यवर्णनंनामाष्ट षष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १६९



॥ ऋषय ऊचुः ॥ ॥

कस्मात्सा तुष्टिदा प्रोक्ता नागराणां विशेषतः ॥

धारानामेति विख्याता कस्मात्सा धरणीतले ॥ १ ॥

॥ सूत उवाच ॥ ॥

चमत्कारपुरे पूर्वं धारानामेति विश्रुता ॥

आसीत्तपस्विनी साध्वी नागरी ब्राह्मणोत्तमा ॥

तस्याः सख्यमरुन्धत्या आसीत्पूर्वं सुमेधया ॥ २ ॥

अरुन्धती यदा प्राप्ता चमत्कारपुरे शुभे ॥

स्नानार्थं शंखतीर्थं तु वसिष्ठेन समागता ॥ ३ ॥

तया दृष्टाथ सा तत्र अंगुष्ठाग्रेण संस्थिता ॥

वायुभक्षा निराहारा दिव्येन वपुषान्विता ॥ ४ ॥

तया पृष्टा च सा साध्वी का त्वं कस्य सुता शुभे ॥

किमर्थं तु स्थिता चोग्रे तपसि ब्रूहि मे शुभे ॥ ५ ॥

॥ धारोवाच ॥ ॥

देवशर्माख्यविप्रस्य सुताहं नागरस्य च ॥

बालत्वे वर्तमानाया वैधव्यं मे व्यवस्थितम् ॥ ६ ॥

शंखतीर्थस्य माहात्म्यं श्रुत्वा शंखेश्वरस्य च ॥

ततोऽहं संस्थिता ह्यत्र तस्यैवाराधने स्थिता ॥ ७ ॥ ॥

॥ अरुन्धत्युवाच ॥ ॥

तवोपरि महान्स्नेहो दर्शनात्ते व्यवस्थितः ॥

तस्मादागच्छ गच्छावो ममाश्रमपदं शुभम् ॥ ८ ॥

सरस्वत्या स्तटे शुभ्रे सर्वपातकनाशने ॥

शास्त्रगोष्ठीरता नित्यं तत्र तिष्ठ मया सह ॥ ९ ॥

ततः संप्रस्थिता सा तु तया सार्धं तपस्विनी ॥

अनुज्ञाता स्वपित्रा तु जनन्या बांधवैस्तथा ॥ ६.१६९.१० ॥

तस्याः सख्यं चिरं कालं तया सह बभूव ह ॥

कस्यचित्त्वथ कालस्य सा शक्तिस्तत्र चागता ॥ ॥ ११ ॥

विश्वामित्रेण संसृष्टा वसिष्ठस्य वधाय च ॥

सा स्तंभिता वसिष्ठेन कृता देवीस्वरूपिणी ॥

संपूज्या देवमर्त्यानां सर्वरक्षाप्रदा शुभा ॥ १२ ॥

ततस्तु धारया तस्याः कैलासशिखरोपमः ॥

प्रासादो निर्मितो विप्रा नानारत्नविचित्रितः ॥ १३ ॥

चकाराथ ततः स्तोत्रं तस्याः सा च तपस्विनी ॥ १४ ॥

नमस्ते परमे ब्राह्मि धारयोगे नमोनमः ॥

अर्धमात्रे परे शून्ये तस्यार्धार्धे नमोस्तु ते ॥- ॥ १५ ॥

नमस्ते जगदाधारे नमस्ते भूतधारिणि ॥

नमस्ते पद्मपत्राक्षि नमस्ते कांचनद्युते ॥ १६ ॥

नमस्ते सिंहयानाढ्ये नमस्तेऽस्तुमहाभुजे ॥

नमस्ते देवताभीष्टे नमस्ते दैत्यसूदिनि ॥ १७ ॥

नमस्ते महिषाक्रांतशरीरच्छिन्नमस्तके ॥

नमस्ते विंध्यनिरते सुरामांसबलिप्रिये ॥ १८ ॥

त्वं लक्ष्मीस्त्वं शची गौरी त्वं सिद्धिस्त्वं विभावरी ॥

त्वं स्वाहा त्वं स्वधा तुष्टिस्त्वं पुष्टिस्त्वं सुरेश्वरी ॥ १९ ॥

शक्तिरूपासि देवि त्वं सृष्टिसंहारका रिणी ॥

त्वयि दृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ६.१६९.२० ॥

यथा तिलेस्थितं तैलं दधिसंस्थं यथा घृतम् ॥

हविर्भुजश्च काष्ठस्थः सुगुप्तं लभ्यते न हि ॥ २१ ॥

तथा त्वमपि देवेशि सर्वगापि न लक्ष्यसे ॥ २२ ॥

॥ सूत उवाच ॥ ॥

एतेन स्तोत्रमुख्येन स्मृता सा परमेश्वरी ॥

बहूनि वर्ष पूगानि पूजयंत्या दिनेदिने ॥ २३ ॥

कस्यचित्त्वथ कालस्य चैत्रशुक्लाष्टमी सिता ॥

तस्मिन्नहनि देवी सा नद्यां संस्नाप्य पूजिता ॥ २४ ॥

बलि पूजां ततो दत्त्वा स्तोत्रेणानेन च स्तुता ॥

ततः प्रत्यक्षतां गत्वा तामुवाच तपस्विनीम् ॥२५॥

पुत्रि तुष्टास्मि भद्रं ते स्तोत्रेणानेन चानघे ॥

वरं वरय भद्रं ते तव दास्यामि वांछितम् ॥ २६ ॥

॥ धारोवाच ॥ ॥

यदि तुष्टासि मे देवि यदि देयो वरो मम ॥

तन्मे नाम तवाप्यस्तु प्रासादेऽत्र हि केवलम्॥ २७ ॥

अपरं नागरो योऽत्र त्वस्मिन्नहनि संस्थिते ॥

प्रदक्षिणात्रयं कृत्वा तव दत्त्वा फलत्रयम् ॥ २८ ॥

स्तोत्रेणानेन भवतीं स्तुत्वा च कुरुते नतिम्॥

तस्य संवत्सरं यावद्रोगो रक्ष्यस्त्वयाऽखिलः ॥२९।।

या च वंध्या भवेन्नारी सा भूयात्पुत्रसंयुता ॥

दुर्भगा च ससौभाग्या कुरूपा रूपसंभवा ॥

रोगिणी रोगनिर्मुक्ता सर्वसौख्यसमन्विता ॥ ६.१६९.३० ॥

॥ देव्युवाच ॥ ॥

अहं धारेति विख्याता प्रासादेऽत्र त्वया कृते॥

भविष्यामि न सन्देहस्तव कीर्तिकृते सदा ॥ ३१ ॥

अत्र यो नागरो भक्त्या समागत्य तपस्विनि ॥

प्रदक्षिणात्रयं कुर्याद्दत्त्वा मम फलत्रयम् ॥ ३२ ॥

सोऽपि संवत्सरं यावद्भविता रोगवर्जितः ॥

एवमुक्त्वा तु सा देवीततश्चादर्शनं गता ॥ ३३ ॥

धारापि संस्थिता तत्र अरुन्धत्या समन्विता ॥

अद्यापि दृश्यते व्योम्नि तस्याश्चापि समीपगा ॥ ३४ ॥

एतद्धारोद्भवं योऽत्र वृत्तांतं कीर्तयिष्यति ॥

शृणुयाद्वा द्विजश्रेष्ठा मुच्येत्पापाद्दिनोद्भवात् ॥ ३५ ॥

तस्मात्सर्वप्रयत्नेन पठनीयं विशेषतः ॥

श्रोतव्यं च प्रभक्त्येदं नागरैश्च विशेषतः ॥ ३६ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये धारानामोत्पत्तिवृत्तांत धारादेवीमाहात्म्यवर्णनं नामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥१६९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७०

https://sa.wikisource.org/s/fnr
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्यदपि संजातमाश्चर्यं यदभूद्द्विजाः ॥

विश्वामित्रेण सा शक्तिर्वसिष्ठाय विसर्जिता ॥ १ ॥

वधार्थं तस्य विप्रर्षेर्वसिष्ठेन च धीमता ॥

स्तंभिताऽथर्वणैर्मन्त्रैः प्रस्वेदः समजायत॥२॥

स्वेदात्समभवत्तोयं शीतलं तदजायत॥

पादाभ्यां निर्गतं तोयमत्र दृश्यमजायत ॥३॥

विदार्य भूमिं संजाता जलधारा सुशीतला ॥

निर्मलं पावनं स्वच्छं गंगांभ इव निःसृतम् ॥ ४ ॥ गं

गा प्रत्यक्षतां याता तीर्थैः सर्वैः समन्विता॥

पूरितं वारिणा कुण्डं निर्मलं शीतलं शिवम् ॥ ५ ॥

तस्यां या कुरुते स्नानं नारी वंध्या द्विजोत्तमाः ॥

सद्यः पुत्रवती सा स्याद्रौद्रे कलियुगे द्विजाः ॥ ६ ॥

अन्योऽपि कुरुते स्नानं सर्वतीर्थफलं लभेत् ॥७॥

स्नात्वा तत्र तु यो देवीं पश्येच्च विधिना नरः ॥

धनं धान्यं तथा पुत्रान्राज्योत्थं च सुखं लभेत् ॥ ॥८॥

या नारी दुर्भगा वन्ध्या साऽपि पुत्रवती भवेत् ॥

चैत्रे मासि सिताष्टम्यां भक्तियोगसमन्विता ॥

महानिशायां तत्रैव नैवेद्यबलिपिंडिकाम्॥९॥

प्रसन्नया कुमार्या तु स्वयं चाऽथ करोति या ॥

गृह्णाति या च वै नारी पिंडिकां बलिसंयुताम् ॥ ६.१७०.१० ॥

शतवर्षा तु या नारी पिंडिकां भक्षयेद्द्विजाः ॥

साऽपि पुत्रवती च स्याद्यदि वृद्धतमा भवेत् ॥ ११ ॥

किं पुनर्यौवनोपेता सौभाग्येन समन्विता ॥

पुत्रसौख्यवती नारी देव्या वै दर्शनेन च ॥ ॥ १२ ॥

सर्वेषां नागराणां तु भावजा देवता स्मृता ॥
सा सार्धाष्टद्विपंचाशद्गोत्राणां कुलदेवता ॥ १३ ॥
एतस्मात्कारणाद्यात्रा नागरैः सुकृता भवेत् ॥
न विना नागरैर्यात्रां तुष्टिं याति सुरेश्वरी ॥ १४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटके श्वरक्षेत्रमाहात्म्ये धारातीर्थोत्पत्तिमाहात्म्यवर्णनंनाम सप्तत्युत्तरशततमोऽध्यायः १७० ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७१



॥ सूत उवाच ॥ ॥

एतस्मिन्नेव काले तु विश्वामित्रो महामुनिः ॥

तां शक्तिं व्यर्थतां प्राप्तां ज्ञात्वा कोपसमन्वितः ॥ १ ॥

मुमोच तद्वधार्थाय ब्रह्मास्त्रं सोऽभिमंत्रितम् ॥

तस्य संहितमात्रस्य प्रस्वनः समजायत ॥ २ ॥

ततश्चोल्काः प्रभूताश्च प्रयांति च नभस्तलात् ॥

ततः कुन्ताः शक्तयश्च तोमराः परिघास्तथा ॥ ३ ॥

भिंडिपाला गदाश्चैव खड्गाश्चैव परश्वधाः ॥

बाणाः प्रासाः शतघ्न्यश्च शतशोऽथ सहस्रशः ॥४॥

वसिष्ठोऽपि परिज्ञाय प्रेषितं गाधिसूनुना ॥

ब्रह्मास्त्रं मृत्यवे तेन शुचिर्भूत्वा ततः परम् ॥ ५ ॥

इषीकां च समादाय ब्रह्मास्त्रं तत्र योजयन् ॥

अब्रवीद्गाधिपुत्राय स्वस्त्यस्तु तव पार्श्वतः ॥ ६ ॥

हन्यतामस्त्रमेतद्धिमम वाक्यादसंशयम्॥

ततस्तेन हतं तच्च ब्रह्मास्त्रं तत्समुद्भवम् ॥ ७ ॥

वज्रास्त्रं च ततो मुक्तं वज्रास्त्रेण विनाशितम् ॥

यद्यदस्त्रं क्षिपत्येष विश्वामित्रः प्रकोपितः ॥ ८ ॥

तत्तद्धंति वसिष्ठस्तु मंत्रस्य च प्रभावतः ॥

एतस्मिन्नेव काले तु क्षुभितो मकरालयः ॥ ९ ॥

शीर्यंते गिरिशृंगाणि रक्तवृष्टिः परा स्थिता ॥

प्रलयस्येव चिह्नानि संजातानि धरातले ॥

किमकाले महानेष प्रलयः संभविष्यति ॥ ६.१७१.१० ॥

ततः पितामहं जग्मुः सर्वे देवाः सवासवाः ॥

प्रोचुः प्रलयचिह्नानि यानि संति धरातले ॥ ११ ॥

ततो ब्रह्मा चिरं ध्यात्वा तानुवाच दिवौकसः ॥

विश्वामित्र वसिष्ठाभ्यां युद्धमेतद्व्यवस्थितम् ॥ १२ ॥

दिव्यास्त्रसंभवं देवास्तेनैतद्व्याकुलं जगत् ॥ १३ ॥

तस्माद्गच्छामहे तत्र यावन्नो जायते क्षयः ॥

सर्वेषामेव भूतानां दिव्यास्त्राणां प्रभावतः ॥ १४ ॥

ततोऽभिगम्य ते देशं यत्र तौ मुनिसत्तमौ ॥

विचामित्रवसिष्ठौ तौ युध्यमानौ परस्परम् ॥१५॥

ततः प्रोवाच तौ ब्रह्मा साम्ना परमवल्गुना ॥

निवर्त्यतामिदं युद्धमेतद्दिव्यास्त्रसंभवम् ॥

यावन्न प्रलयो भावि समस्ते धरणीतले ॥ १६ ॥ ॥

॥ वसिष्ठ उवाच ॥ ॥

नाहमस्त्रं प्रयुंजामि विश्वामित्रवधेच्छया ॥

आत्मरक्षाकृते देव अस्त्रमस्त्रेण शामयन् ॥ १७ ॥

अयं मम विनाशाय केवलं चास्त्रमोक्षणम्॥

कुरुते निर्दयो ब्रह्मंस्तं निवारय सांप्रतम् ॥ १८ ॥

॥ ब्रह्मोवाच ॥ ॥

विश्वामित्र मुनिश्रेष्ठ वसिष्ठं ब्राह्मणोत्तमम् ॥

त्वं रक्ष मम वाक्येन तथा सर्वमिदं जगत् ॥ १९ ॥

अस्त्रमोक्षविरामं त्वं ब्रह्मर्षे कुरु सत्वरम् ॥ ६.१७१.२० ॥

॥ विश्वामित्र उवाच ॥ ॥

न मामेष द्विजं ब्रूते कथंचित्प्रपितामह ॥

तस्मादेष प्रकोपो मे संजातोऽस्य वधोपरि ॥ २१ ॥

तस्माद्वदतु देवेश मामेष ब्राह्मणं द्रुतम् ॥

निवारयामि येनास्त्रं यदस्योपरि संधितम् ॥२२॥

॥ ब्रह्मोवाच ॥ ॥

त्वं वसिष्ठाधुना ब्रूहि विश्वामित्रं ममाज्ञया ॥

ब्राह्मणो जायते तेन तव जीवस्य रक्षणम् ॥ २३ ॥ ॥

॥ वसिष्ठ उवाच ॥ ॥

नाहं क्षत्रियसंजातं ब्राह्मणं वच्मि पद्मज ॥

न वधे मम शक्तोऽयं कथंचित्क्षत्रियोद्भवः ॥ २४ ॥

ब्राह्म्यं तेजो न क्षा त्त्रेण तेजसा संप्रणश्यति ।

एवं ज्ञात्वा चतुर्वक्त्र यद्युक्तं तत्समाचर ॥ २५ ॥

॥ ब्रह्मोवाच ॥ ॥

विश्वामित्र द्विजश्रेष्ठ त्यक्त्वा दिव्यास्त्रसंभवम् ॥

कुरु युद्धं वसिष्ठेन नो चेच्छप्स्यामहं च ते ॥ २६ ॥

॥ विश्वामित्र उवाच ॥ ॥

दिव्यास्त्राणि च संत्यज्य मया वध्यः सुदुर्मतिः ॥

किंचिच्छिद्रं समासाद्य त्वं गच्छ निजसंश्रयम् ॥ ॥ २७ ।

॥ सूत उवाच ॥ ॥

बाढमित्येवमुक्ता च ब्रह्मलोकं गतो विधिः ॥

विश्वामित्रवसिष्ठौ च सरस्वत्यास्तटे स्थितौ ॥ २८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वसिष्ठविश्वामित्र युद्धे दिव्यास्त्रनिवर्तनवर्णनंनामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७२



सूत उवाच ॥ ॥

ततःप्रभृति च्छिद्राणि विश्वामित्रो निरीक्षयन् ॥

वसिष्ठस्य वधार्थाय संस्थितो द्विजसत्तमाः ॥ १ ॥

आत्मशक्तिप्रभावेन मशकस्य यथा गजः ॥

अन्यस्मिन्नहनि प्राप्ते विश्वामित्रेण सा नदी ॥ २ ॥

समाहूता समायाता द्रुतं सा स्त्रीस्वरूपिणी ॥

अब्रवीत्प्रांजलिर्भूत्वा आदेशो दीयतां मम ॥

ब्रह्मर्षे येन कार्येण समाहूतास्मि सांप्रतम् ॥ ३ ॥

॥ विश्वामित्र उवाच ॥ ॥

यदा निमज्जनं कुर्यात्तव तोये महानदि ॥

परमं वेगमास्थाय तदाऽऽनय ममांतिकम् ॥ ४ ॥

पूर्णश्रोत्रं जले नैव व्याकुलांगं व्यवस्थितम् ॥

निहन्मि येन शीघ्रं च नान्यच्छिद्रं प्रलक्षये ॥ ५ ॥

एवमुक्ता तदा तेन विश्वामित्रेण सा नदी ॥

वित्रस्ता भयसंयुक्ता शापाद्वाक्यमुवाच सा ॥ ६ ॥

नाहं द्रोहं करिष्यामि वसिष्ठस्य महात्मनः ॥

ब्रह्मर्षे न च ते युक्तं कर्तुं वै ब्रह्मणो वधम् ॥ ७ ॥

यदि त्वं ब्रह्मणा प्रोक्तो ब्रह्मर्षिः स्वयमेव तु ॥

कामान्नायं वसिष्ठस्तु तस्मात्कोपं परित्यज ॥ ८ ॥

मनसापि वधं यस्तु ब्राह्मणस्य विचिंतयेत् ॥

तप्तकृच्छ्रेण मुच्येत मनुः स्वायंभुवोऽब्रवीत् ॥ ९ ॥

वाचया प्रवदेद्यस्तु ब्राह्मणस्य वधं नरः ॥

चांद्रायणेन शुद्धिः स्यात्तस्य देवोऽब्रवीदिदम् ॥ ६.१७२.१० ॥

तस्मान्नाहं करिष्यामि तव वाक्यं कथंचन ॥

वसिष्ठार्थं तु यत्प्रोक्तं कुरु यत्तव रोचते ॥ ११ ॥

तच्छ्रुत्वा कुपितस्तस्या विश्वामित्रो द्विजोत्तमाः ॥

शशाप तां नदीं श्रेष्ठां यत्तद्वक्ष्यामि श्रूयताम् ॥ १२ ॥

यस्मात्पापे वचो मह्यं न कृतं कुनदि त्वया ॥

तस्माद्रक्तप्रवाहस्ते जलजोऽयं भविष्यति ॥ १३ ॥

एवमुक्त्वा करात्तोयं सप्तवाराभिमंत्रितम् ॥

चिक्षेपाथ जले तस्याः क्रोधसंरक्तलोचनः ॥ १४ ॥

ततश्च तत्क्षणाज्जातं तत्तोयं रुधिरं द्विजाः ॥

सारस्वतं सुपुण्यं च यदासीच्छंखसंनिभम् ॥ १५ ॥

एतस्मिन्नंतरे प्राप्ता भूतप्रेतनिशाचराः ॥

पीत्वापीत्वा प्रनृत्यंति गायंति च हसंति च ॥ १६ ॥

ये तत्र तापसाः केचित्तटे तस्या व्यवस्थिताः ॥

ते सर्वेऽपि च तां त्यक्त्वा दूरदेशं समाश्रिताः ॥ १७ ॥

बहिर्वासाश्च ये तत्र नागराः समवस्थिताः ॥

चण्डशर्म प्रभृतयस्तेऽपि याताः सुदूरतः ॥ १८ ॥

वसिष्ठोऽपि मुनिश्रेष्ठो जगामार्बुदपर्वतम् ॥

विश्वामित्रस्तु विप्रर्षिश्चमत्कारपुरं गतः ॥ १९ ॥

हाटकेश्वरजे क्षेत्रे यत्स्थितं विप्रसंकुलम् ॥

तत्राश्रमपदं कृत्वा तपस्तेपे सुदारुणम् ॥६.१७२.२०॥।

येन सृष्टिक्षमो जातः स्पर्धते ब्रह्मणा सह ॥

एतद्वः सर्वमाख्यातं यथा सारस्वतं जलम् ॥ २१ ॥

रुधिरत्वमनुप्राप्तं विश्वामित्रस्य शापतः ॥

चंडशर्मादयो विप्रा यथा देशांतरं गताः ॥२२॥

इति श्रीस्कांदे महापुराण काशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सरस्वतीशापवृत्तांतवर्णनंनाम द्विसप्तत्युत्तरशततमोऽध्यायः ॥१७२॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७३

https://sa.wikisource.org/s/fnu

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

अहो बत महाश्चर्यं विश्वामित्रस्य सन्मुनेः ॥

मंत्रप्रभावतो येन तत्तोयं रुधिरीकृतम् ॥ १ ॥

ततःप्रभृति संप्राप्तं कथं तोयं प्रकीर्तय ॥

सरस्वत्या महाभाग सर्वं विस्तरतो वद ॥ २ ॥

॥ सूत उवाच ॥ ॥

बहुकालं प्रवाहः स सरस्वत्या द्विजोत्तमाः ॥

महान्रक्तमयो जातो भूतराक्षससेवितः ॥ ३ ॥

कस्यचित्त्वथ कालस्य वसिष्ठो मुनिसत्तमः ॥

अर्बुदस्थस्तया प्रोक्तो दीनया दुःखयुक्तया ॥ ४ ॥

तवार्थाय मुने शप्ता विश्वामित्रेण कोपतः ॥

रुधिरौघवहाजाता तपस्विजनवर्जिता ॥५॥

तस्मात्कुरु प्रसादं मे यथा स्यात्सलिलं पुनः ॥

प्रवाहे मम विप्रेन्द्र प्रयाति रुधिरं क्षयम् ॥६॥

त्रैलोक्यकरणे विप्र संक्षये वा स्थितौ हि वा ॥

नाशक्तिर्विद्यते काचित्तव सर्वमुनीश्वर ॥ ७ ॥

॥ वसिष्ठ उवाच ॥ ॥

तथा भद्रे करिष्यामि यथा स्यात्सलिलं पुनः ॥

प्रवाहे तव निर्याति सर्वं रक्तं परिक्षयम् ॥ ८ ॥

एवमुक्त्वा स विप्रर्षिरवतीर्य धरातले ॥

गतः प्लक्षतरुं यस्मा दवतीर्णा सरस्वती ॥ ९ ॥

समाधिं तत्र संधाय निविष्टो धरणीतले ॥

संभ्रमं परमं गत्वा विश्वामित्रस्य चोपरि ॥ ६.१७३.१० ॥

वारुणेन तु मन्त्रेण वीक्ष यन्वसुधातलम् ॥

ततो निर्भिद्य वसुधां भूरितोयं विनिर्गतम् ११ ॥

रन्ध्रद्वयेन विप्रेन्द्रा लोचनाभ्यां निरीक्षणात् ॥

एकस्य सलिलं क्षिप्रं यत्र जाता सरस्वती ॥ १२ ॥

प्लक्षमूले ततस्तस्य वेगेनापहृतं बलात् ॥

तद्रक्तं तेन संपूर्णं ततस्तेन महानदी ॥ १३ ॥

द्वितीयस्तु प्रवाहो यः संभ्रमा तस्य निर्गतः ॥

सा च साभ्रमती नाम नदी जाता धरातले ॥ १४ ॥

एवं प्रकृतिमापन्ना भूय एव सरस्वती ॥

यत्पृष्टोऽस्मि महाभागाः सरस्वत्याः कृते द्विजाः ॥ १५ ॥

एतत्सारस्वतं नाम व्याख्यानमतिबुद्धिदम् ॥

यः पठेच्छ्रृणुयाद्वापि मतिस्तस्य विवर्द्धते ॥

सरस्वत्याः प्रसादेन सत्यमेतन्म योदितम् ॥ १६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्या संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये सरस्वत्युपाख्याने सरस्वती शापमोचनसाभ्रमत्युत्पत्तिवृत्तान्तवर्णनंनाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७४

https://sa.wikisource.org/s/fnv



॥ सूत उवाच ॥ ॥

तथान्यदपि वो वच्मि लिंगं यत्तत्र संस्थितम् ॥

स्थापितं पिप्पलादेन कंसारेश्वरमित्यहो ॥ १ ॥

यस्मिन्दृष्टे तु लोकानां पापं याति दिनोद्भवम् ॥

नते षाण्मासिकं चैव पूजिते वर्षसंभवम्॥ ॥

॥ ऋषय ऊचुः ॥ ॥

पिप्पलादेन यल्लिंगं स्थापितं सूतनन्दन ॥

कंसारेश्वरमित्युक्तं कस्मात्तच्च ब्रवीहि नः ॥ ३ ॥

क एष पिप्पलादस्तु कस्य पुत्रो वदस्व नः ॥

किमर्थं स्थापितं लिंगं क्षेत्रे तत्र महात्मना ॥ ४ ॥

॥ सूत उवाच ॥ ॥

प्रश्नभारो महानेष भवद्भिः समुदाहृतः ॥

तथापि कथयिष्यामि नमस्कृत्वा स्वयंभुवम् ॥ ५ ॥

याज्ञवल्क्यस्यभगिनी कंसारीति च विश्रुता ॥

कुमारब्रह्मचर्येण तप स्तेपे सुदारुणम्॥ ६ ॥

याज्ञवल्क्याश्रमे पुण्ये बांधवेन समन्विता ॥

कस्यचित्त्वथ कालस्य याज्ञवल्क्यस्य भो द्विजाः ॥७॥

चस्कन्द रेतः स्वप्नांते दृष्ट्वा कांचिद्वराप्सराम्॥

तारुण्यभावसंस्थस्य तपोयुक्तस्य सद्द्विजाः ॥ ८ ॥

रेतसा तस्य महता परिधानं परिप्लुतम् ॥

तच्च तेन परित्यक्तं प्रभाते समुपस्थिते ॥ ९ ॥

कंसारिकाऽथ जग्राह स्नानार्थं वसनं च तत् ॥

अमोघरेतसा क्लिन्नमजानन्ती द्विजोत्तमाः ॥ ६.१७४.१० ॥

कुर्वन्त्या यजनं तस्या जलं वीर्यसमन्वितम् ॥

प्रविष्टं भगमध्ये तु ऋतुकाल उपस्थिते ॥ ११ ॥

ततो गर्भः समभवत्तस्यास्तूदरमध्यगः ॥
वृद्धिं चाप्यगमन्नित्यं शुक्लपक्षे यथोडुराट् ॥ १२ ॥
साऽपि तं गर्भमादाय स्वोदरस्थं तपस्विनी ॥
दुःखेन महता युक्ता लज्जयाऽथ तदाऽऽवृता ॥ १३ ॥
चिन्तयामास सुचिरं विस्मयेन समन्विता ॥
गोपायन्ती तदाऽऽत्मानं दर्शनं याति नो नृणाम् ॥ १४ ॥
व्रतचर्यामिषं कृत्वा सदा रहसि संस्थिता ॥
संप्राप्ते दशमे मासि निशीथे समुपस्थिते ॥
तस्याः कुमारको जातो वालार्कसदृशद्युतिः ॥ १५ ॥
अथ सा तं समा दाय सूक्ष्मवस्त्रेण वेष्टितम् ॥
कृत्वा जगाम चारण्यं मनुष्यपरिवर्जितम् ॥
अश्रुपूर्णेक्षणा दीना रुदन्ती गुप्तमेव च ॥ १६ ॥
ततो गत्वा च साऽश्वत्थं विजने सुमहत्तरम् ॥
तस्याधस्ताद्विमुच्याथ वाक्यमेतदुवाच ह ॥ १७ ॥
अश्वत्थ विष्णुरूपोऽसि त्वं देवेषु प्रतिष्ठितः ॥
तस्माद्रक्षस्व मे पुत्रं सर्वतस्त्वं वनस्पते ॥ १८ ॥
एष ते शरणं प्राप्तो मम पुत्रस्तु बालकः ॥
पापाया निर्दयायाश्च तस्माद्रक्षां समाचर ॥ १९ ॥
एवमुक्त्वा रुदित्वा च सुचिरं सा तपस्विनी ॥
जगाम स्वाश्रमं पश्चाद्बाष्पव्याकुललोचना ॥ ६.१७४.२० ॥
यावद्रोदिति सा माता तस्याधस्ताद्वनस्पतेः ॥
तावदाकाशजा वाणी संजाता मेघनिःस्वना ॥ २१ ॥
मा त्वं शोकं कुरुष्वास्य बालकस्य कृते शुभे ॥
एष शापादुतथ्यस्य ज्येष्ठभ्रातुर्बृहस्पतिः ॥
अवतीर्णो धरापृष्ठे योग्यतां समवाप्स्यति ॥ २२ ॥
एष चाथर्वणं वेदं शतकल्पं सुविस्तरम् ॥
शतभेदं च नवधा पंचकल्पं करिष्यति ॥ २३ ॥
पिप्पलस्य तरोरेष रसं संभक्षयिष्यति ॥

पिप्पलाद इति ख्यातस्ततो लोके भविष्यति ॥ २४ ॥

या त्वं विस्मयमापन्ना पुरुषेण विना शिशुः॥

संजातोऽयं मम प्रांशुस्ततस्तत्कारणं शृणु ॥ २५ ॥

स्नानवस्त्रं च ते भ्रातू रेतसा यत्परिप्लुतम् ॥

तत्त्वया ऋतुकाले तु परिधानं कृतं शुभे ॥ २६ ॥

स्नानकाले तु तोयानि रेतोदकमथास्पृशन् ॥

अमोघरेतसा तेन पुत्रोऽयं तव संस्थितः ॥ २७ ॥

एवं ज्ञात्वा महाभागे यद्युक्तं तत्समाचर ॥ २८ ॥ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा देवलोकस्यवज्रपातोपमं वचः ॥

हाहाकारपरा भूत्वा निपपात धरातले ॥ २९ ॥

छिन्नवृक्षलता यद्वत्पतिता सा तपस्विनी ॥ ६.१७४.३० ॥

चिरायन्त्यां तु तस्यां स याज्ञवल्क्यो महामुनिः ॥

शून्यं तमाश्रमं दृष्ट्वा पप्रच्छान्यान्मुनीश्वरान् ॥ ३१ ॥

क्व च मे भगिनी याता कंसारी सुतपस्विनी ॥

तया विनाऽद्य मे सर्वं शून्यमाश्रममंडलम् ॥ ३२ ॥

आचख्यौ तापसः कश्चिद्भगिनी ते यवीयसी ॥

निश्चेष्टा पतिता भूमावश्वत्थस्य समीपतः ॥ ३३ ॥

मया दृष्टा मुनिश्रेष्ठ तां त्वं भावय मा चिरम् ॥

अथासौ त्वरया युक्तः संभ्रांतस्तु प्रधावितः ॥ ॥ ३४ ॥

यत्र सा कथिता तेन तापसेन तपस्विनी ॥

वीक्षते यावत्तत्रस्था श्वसमाना व्यवस्थिता ॥३५॥

अथ तोयेन शीतेन सेचयित्वा मुहुर्मुहुः॥

दत्त्वा भूयोऽपि वातं च यावच्चक्रे सचेतनाम् ॥

तावत्कात्यायनी प्राप्ता मैत्रेयी च ससंभ्रमम् ॥ ३६ ॥

किमिदं किमिदं जातं ननांदर्वद मा चिरम् ॥ ३७ ॥

किं वा सर्पेण दष्टासि सन्निपातेन दूषिता ।१

किं वा भूतगृहीताऽसि माहेंद्रेण ज्वरेण वा ॥ ३८ ॥

अथ सा चेतनां लब्ध्वा याज्ञ वल्क्यं पुरः स्थितम् ॥
भार्यया सहितं दृष्ट्वा व्रीडयाऽसून्मुमोच ह ॥ ३९ ॥
अथ तां च मृतां दृष्ट्वा रुदित्वा च चिरं द्विजाः ॥
याज्ञवल्क्यः सभार्यस्तु दत्त्वा वह्निं च शोकधृक् [।
जगाम स्वाश्रमं पश्चाद्दत्त्वा च सलिलाञ्जलिम् ॥ ६.१७४.४० ॥
सोऽपि बालोऽथ ववृधे पिप्पलास्वादपुष्टिधृक् ॥
अश्वत्थस्य तले तस्य वृद्धिं याति शनैःशनैः ॥ ४१ ॥
कस्यचित्त्वथ कालस्य नारदो मुनिसत्तमः ॥
तीर्थयात्राप्रसंगेन तेन मार्गेण चागतः ॥ ४२ ॥
स दृष्ट्वा बालकं तत्र द्वादशार्कसमप्रभम् ॥
एकाकिनं वने शून्ये पिप्पलास्वादतत्परम् ॥
पप्रच्छ विस्मयाविष्ट एकाकी को भवानिह ॥ ४३ ॥
वने शून्ये महारौद्रे सिंहव्याघ्रसमाकुले ॥
क्व ते माता पिता चैव किमर्थं चेह तिष्ठसि ॥ ४४ ॥
निवससि कथं चैव सर्वं मे विस्तराद्वद ॥ ४५ ॥
॥ पिप्पलाद उवाच ॥ ॥ ॥
नाहं जानामि पितरं मातरं न च बांधवम् ॥
नापि त्वां कोऽत्र चा यातो मम पार्श्वे तु सांप्रतम् ॥ ४६ ॥
॥ सूत उवाच ॥ [।
तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा मुनीश्वरः ॥
ततस्तं प्रहसन्प्राह ज्ञात्वा दिव्येन चक्षुषा ॥ ४७ ॥
।। नारद उवाच ॥ ।।
मया ज्ञातोऽसि वत्स त्वं याज्ञवल्क्यस्य रेतसा ॥
दैवयोगात्समुत्पन्नो भगिन्या उदरे ह्यृतौ ॥ ४८ ॥
उतथ्यशापदोषेण देवाचार्यो बृहस्पतिः ॥
देवकार्यस्य सिद्ध्यर्थं तस्मात्तच्छृणु कारणम् ॥ ४९ ॥
अथर्ववेदो यश्चैष शतशाखो विनिर्मितः ॥
शत कल्पश्च गूढार्थो भूपानां कार्यसिद्धये ॥६.१७४.५॥।

नवशाखः पंचकल्पस्त्वया कार्यः सुखावहः ॥५१॥

तव मात्रा महाभाग रेतसा च परिप्लुतम् ॥

यद्वस्त्रं याज्ञवल्क्यस्य परिधानं कृतं च यत् ॥५२॥

भगिन्या सुतपस्विन्या स्नानार्थं न च काम्यया ॥

तद्रेतो जलमिश्रं तु भगमध्ये विनिर्गतम् ॥५३॥

अमोघं तेन संभूतस्त्वमत्र जगतीतले ॥

माता वै मृत्युमापन्ना ज्ञात्वैवं लज्जया तया ॥ ५४ ॥

चमत्कारपुरे तुभ्यं मातुलो जनकस्तथा ॥

संतिष्ठते महाभाग तत्पार्श्वे त्वमितो वज ॥ ५५ ॥

सांप्रतं व्रतकालस्ते वर्षं चैवाष्टमं स्थितम् ॥

तच्छ्रुत्वा वचनं तस्य लज्जयाऽधोमुखः स्थितः ॥ ५६ ॥

ततश्चिरेण दीनं स वाक्यमेतदुवाच तम् ॥

किं मया पापमाख्याहि पूर्वदेहांतरे कृतम् ॥ ५७

येनेदं गर्हितं जन्म वियोगो मातृसंभवः॥

परित्यक्ष्यामि जीवं स्वं दुःखेनानेन सन्मुने ॥५८॥

॥ नारद उवाच ॥ ॥

न त्वया दुष्कृतं किंचित्पूर्वदेहांतरे कृतम् ॥

परं येन सुसंजातं तवेदं व्यसनं शृणु ॥ ५९ ॥

जन्मस्थेन भवाञ्जातः शनिना नाऽत्र संशयः ॥

तेनावस्थामिमां प्राप्तो नान्यदस्ति हि कारणम् ॥ ६.१७४.६० ॥

तच्छ्रुत्वा वचनं तस्य कोपसंरक्तलोचनः ॥

ऊर्ध्वमालोकयामास समुद्दिश्य शनैश्चरम् ॥ ६१ ॥

तस्य दृष्टिनिपातेन न्यपतत्स तु तत्क्षणात् ॥

विमानात्स्वाद्रवेः पुत्रो ययातिरिव नाहुषः ॥६२ ।१

अधोवक्त्रो द्विजश्रेष्ठाः पितुरादेशमाश्रितः ॥

बालभावेऽपि तेनैव दग्धौ पादौ तदा रवेः ॥६३॥

अथ तं नारदः प्राह पतमानमधोमुखम् ॥

बाल्यभावादनेन त्वं पातितोऽसि शनैश्चर ॥ ६४ ॥

तस्मान्मा वीक्षयस्वैनं भविष्यति प्रकोपभाक् ॥

मा पतस्व तथा भूमौ बलान्मद्वाक्यसंभवात् ॥ ६५ ॥

स्तंभयित्वा तथाप्येवं गगनस्थं शनैश्चरम् ॥

ततः प्रोवाच तं बालं पिप्पलादं मुनीश्वरः ॥ ॥६६॥

मा कोपं कुरु बाल त्वमेष सूर्यसुतो ग्रहः।

देवानामपि पीडां च कुरुतेऽष्टमराशिगः ॥ ६७ ॥

जन्मस्थस्तु विशेषेण द्वितीयस्तु तथापरः ॥

यद्येष कुपितस्त्वां तु वीक्षयिष्यति कर्हिचित् ॥ ६८ ॥

करिष्यति न संदेहो भस्मराशिं ममाग्रतः ॥

अनेन वीक्षितौ पादौ जातमात्रेण सूर्यकौ ॥ ॥ ६९ ॥

आयातस्य तु तुष्टस्य पुत्रदर्शनवाञ्छया ॥

अन्तर्धानीकृते वस्त्रे ज्ञात्वा तं रौद्रचक्षुषम् ॥ ६.१७४.७० ॥

ततो दग्धावुभौ चापि तिष्ठतश्चर्म वेष्टितौ ॥

दृश्येतेऽद्यापि मूर्त्तौ तौ घटितायां धरातले ॥ ७१ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा वचनं तस्य नारदस्य स बालकः ॥

भयेन महता युक्तस्ततः पप्रच्छ तं मुनिम् ॥ ७२ ॥

कथं यास्यति मे तुष्टिं वदैष मम सन्मुने ॥

अज्ञानात्पातितो व्योम्नः शक्तिं चास्याविजानता ॥ ७३ ॥ ॥

॥ नारद उवाच ॥ ॥

ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः ॥

पूजिताः प्रतिपूज्यंते निर्दहंत्यपमानिताः ॥ ७४ ॥

तस्मात्कुरु स्तुतिं चास्य स्वशक्त्या भास्करेः प्रभो॥

प्रसादं गच्छते येन कोपं त्यजति पातजम् ॥ ७५ ॥

ततः कृतांजलिर्भूत्वा स्तुतिं चक्रे स बालकः ॥

भयेन महता युक्तस्ततः संपृच्छ्य तं मुनिम् ॥ ७६ ॥

पिप्पलादो द्विजश्रेष्ठाः प्रणिपत्य मुहुर्मुहुः ॥

नमस्ते क्रोधसंस्थाय पिंगलाय नमोऽस्तु ते ॥ ७७ ॥

नमस्ते वसुरूपाय कृष्णाय च नमोऽस्तु ते ॥
नमस्ते रौद्रदेहाय नमस्ते चांतकाय च ॥ ७८ ॥
नमस्ते यमसंज्ञाय नमस्ते सौरये विभो ॥
नमस्ते मन्दसंज्ञाय शनैश्चर नमोऽऽस्तु ते ॥ ७९ ॥
प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ॥६.१७४.८॥।
॥ शनैश्चर उवाच ॥ ॥
परितुष्टोऽस्मि ते वत्स स्तोत्रेणानेन सांप्रतम्॥
वरं वरय भद्रं ते येन यच्छामि सांप्रतम् ॥ ८१ ॥
पिप्पलाद उवाच ॥ ॥
अद्यप्रभृति नो पीडा बालानां सूर्यनन्दन ॥
त्वया कार्या महाभाग स्वकीया च कथंचन ॥ ८२ ॥
यावद्वर्षाष्टमं जातं मम वाक्येन सूर्यज ॥
स्तोत्रेणानेन योऽत्र त्वां स्तूयात्प्रातः समुत्थितः ॥ ॥ ८३ ॥
तस्य पीडा न कर्तव्या त्वया भास्करनन्दन ॥
तव वारे च संजाते तैलाभ्यंगं करोति यः ॥ ८४ ॥
दिनाष्टकं न कर्तव्या तस्य पीडा कथंचन ॥
यस्त्वां लोहमयं कृत्वा तैलमध्ये ह्यधोमुखम्॥ ८५ ॥
धारयेत्तेन तैलेन ततः स्नानं समाचरेत् ॥
तस्य पीडा न कर्तव्या देयो लाभो महीभुजः ॥९६ ॥
अध्यर्द्धाष्टमिकायोगे तावके संस्थिते नरः ॥
तववारे तु संप्राप्ते यस्तिलाँल्लोहसंयुतान् ॥ ९७ ॥
स्वशक्त्या राति नो तस्य पीडा कार्या त्वया विभो ॥
कृष्णां गां यस्तु विप्राय तवोद्देशेन यच्छति ॥ ८८ ॥
अध्यर्द्धाष्टमजा पीडा नाऽस्य कार्या त्वया विभो ॥
शमी समिद्भिर्यो होमं तवोद्देशेन यच्छति ॥ ९९ ॥
तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः ॥
पूजां करोति यस्तुभ्यं धूपं वै गुग्गुलं दहेत् ॥
कृष्णवस्त्रेण संवेष्ट्य त्याज्या तस्य व्यथा त्वया ॥ ६.१७४.९० ॥

॥ सूत उवाच ॥ ॥

एवमुक्तः शनिस्तेन बाढमित्येव जल्प्य च ॥

नारदं समनुज्ञाप्य जगाम निजसं श्रयम्॥ ९१ ॥

नारदोऽपि तमादाय वालकं कृपयान्वितः ॥

चमत्कारपुरं गत्वा याज्ञवल्क्याय चार्पयत् ॥ ९२ ॥

कथयामास वृत्तांतं तस्य संभूति संभवम्॥

यद्दृष्टं ज्ञानदीपेन तस्मै सर्वं न्यवेदयत्॥९३॥

एष ते वीर्यसंभूतो बालको भगिनीसुतः ॥

मयाऽश्वत्थतले लब्धः काननेऽश्वत्थसंनिधौ ॥ ९४ ॥

व्रतबंध कुरुष्वास्य सांप्रतं चाष्टवार्षिकः ॥

नात्र दोषोस्ति विप्रेंद्र न भगिन्यास्तथा तव ॥

तस्माद्गृहाण पुत्रं स्वं भागिनेयं विशेषतः ॥ ॥ ९५ ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा स देवर्षिस्ततश्चादर्शनं गतः ॥

याज्ञवल्क्योऽपि तच्छ्रुत्वा विषादं परमं गतः ॥ ९६ ॥

पापं तच्चिंतयन्नेव न शांतिमधिगच्छति ॥

आत्मानं गर्हयन्नित्यं दिवानक्तं च शोचति ॥ ९७ ॥

तं च पुत्रं परिज्ञाय तैस्तैश्चिह्नैर्निजैः स्थितैः ॥

ततस्तु पोषयित्वा तं व्रतेन समयोजयत् ॥ ९९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्या संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये पिप्पलादोत्पत्तिव र्णनंनाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥ १७४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७५



॥ सूत उवाच ॥ ॥

एवं संशोचते यावदात्मानं परिगर्हयन्॥

ततस्तु ब्रह्मणा प्रोक्तः स्वयमभ्येत्य भो द्विजाः॥१॥

त्वया शंका न कर्तव्या सुतस्यास्य कृते द्विज॥

अज्ञानादेव ते जातो दैवयोगेन बालकः॥२॥

॥याज्ञवल्क्य उवाच॥ ॥

तथापि देव मे शुद्धिर्हृदयस्य न जायते ॥

तस्माद्वद सुरश्रेष्ठ प्रायश्चित्तं विशुद्धये॥३॥

॥ ब्रह्मोवाच॥ ॥

यदि ते चित्तशुद्धिस्तु न कथंचित्प्रवर्तते॥

तत्स्थापय महाभाग लिंगं देवस्य शूलिनः ॥ ४ ॥

अज्ञानाज्ज्ञानतोवापि यत्पापं कुरुते नरः ॥

ब्रह्महत्यादिकं चापि स्त्रीवधाद्वापि यद्भवेत्॥५ ॥

पंचेष्टिकामयं वापि यः कुर्याद्धरमन्दिरम्॥

तस्य तन्नाशमायाति तमः सूर्योदये यथा ॥ ६ ॥

विशेषेण महाभाग हाटकेश्वरसंभवे ॥

क्षेत्रे तत्र सुमेध्ये तु सर्वपातकनाशने ॥ ७ ॥

कलिकाले च संप्राप्ते यत्र पापं न विद्यते ॥

अहमप्यत्र वांछामि यज्ञं कर्तुं द्विजोत्तम ॥ ८ ॥

आनयिष्यामि तत्तीर्थं पुष्करं चात्मनः प्रियम् ॥

कलिकालभयाच्चैतद्यावन्नो व्यर्थतां व्रजेत् ॥ ९ ॥

कलिकाले तु संप्राप्ते तीर्थानि सकलानि च ॥

यास्यंति व्यर्थतां विप्र मुक्त्वेदं क्षेत्रमुत्तमम् ॥ ६.१७५.१० ॥

॥ सूत उवाच ॥ ॥

एवमुक्त्वा चतुर्वक्त्रस्ततश्चादर्शनं गतः ॥

याज्ञवल्क्योऽपि तच्छ्रुत्वा पितामहवचोऽ खिलम् ॥ ११ ॥

लिंगं संस्थापयामास ज्ञात्वा क्षेत्रमनुत्तमम्॥

अब्रवीच्च ततो वाक्यं मेघगंभीरया गिरा ॥ १२ ॥

अष्टम्यां च चतुर्दश्यां यो लिंगं मामकं त्विदम् ॥

स्नापयिष्यति सद्भक्त्या तस्य पापं प्रयास्यति ॥ १३ ॥

परदारकृतं यच्च मात्रापि च समं कृतम्॥

क्षालयिष्यति तत्पापं स्नापितं पूजितं परैः ॥ १४ ॥

अस्मिन्नहनि संप्राप्ते तस्य पक्षसमुद्भवम् ॥

प्रयास्यति कृतं पापं यदज्ञानाद्विनिर्मितम् ॥ १५ ॥

ततःप्रभृति विख्यातो याज्ञव ल्क्येश्वरः शुभः ॥

तस्मिन्क्षेत्रे द्विजश्रेष्ठा हाटकेश्वरसंज्ञके ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये याज्ञवल्क्येश्वरोत्पत्तिमाहात्म्यवर्णनंनाम पंचसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७६



॥ सूत उवाच ॥ ॥

दृष्ट्वा प्रतिष्ठितं लिंगं याज्ञवल्क्येन धीमता ॥

स्वमातुः शुद्धिहेतोः स तन्नाम्ना लिंगमुत्तमम् ॥ १ ॥

स्थापयामास विप्रेंद्राः श्रद्धया परया युतः ॥

ततश्चानीय विप्रेंद्रं मध्यगं नागरोद्भवम् ॥ ॥

गर्तातीर्थसमुद्भूतमाहिताग्निं प्रयाजिनम् ॥

यथैतन्नगरस्थानं तथा त्वमपि दीक्षितः ॥ ३ ॥

अष्टषष्टिषु गोत्राणां नायकत्वे व्यवस्थितः ॥

तव वाक्येन सर्वाणि गोत्राणि द्विजसत्तम ॥ ४ ॥

वर्तयिष्यंति कृत्येषु यावच्चन्द्रार्कतारकाः ॥

गोवर्धन त्वया चिंता कार्या चास्य समुद्भवा ॥ ५ ॥

लिंगस्य पूजनार्थाय प्रेरणीयाश्च नागराः॥

पूजया तस्य लिंगस्य वृद्धिं यास्यति तेऽन्वयः ॥ ६ ॥

अपूजया विनाशं च यास्यत्यत्र न संशयः ॥

तव वंशोद्भवा ये च पूजयित्वा प्रभक्तितः ॥ ७ ॥

एतल्लिंगं करिष्यंति कृत्यानि विविधानिच ॥

तानि सिद्धिं प्रयास्यंति प्रसादादस्य दीक्षित ॥ ८ ॥

॥ गोवर्धन उवाच ॥ ॥

अहमर्चां करिष्यामि लिंगस्यास्य सदा द्विज ॥

भक्तिं च प्रकरिष्यामि हेतोरस्य हेतोरस्य कृते द्विज ॥

पूजार्थं चैव ये चान्ये मम वंशसमुद्रवाः ॥ ९ ॥

॥ पिप्पलाद उवाच ॥ ॥

गोवर्धन द्रुतं विप्रांस्तत्र चानय नागरान्॥

तेषां मतेन देवस्य नाममात्रं करोम्यहम् ॥ ६.१७६.१० ॥

ततश्चानाययामास विप्रांश्चैव विचक्षणान् ॥

श्रुताध्ययनसंपन्नान्यज्ञकर्मपरायणान् ॥ ११ ॥
तानब्रवीत्प्रणम्योच्चैः पिप्पलादो महामुनिः ॥
मम माता मृता पूर्वं कंसारीति च नामतः ॥ १२ ॥
तस्या उद्देशतो लिंगं मयैतत्संप्रतिष्ठितम् ॥
युष्मद्वाक्यात्प्रसिद्धिं च प्रयातु द्विजसत्तमाः ॥ १३ ॥
अष्टम्यां च चतुर्दश्यां यश्चैतत्स्नापयिष्यति ॥
याज्ञवल्क्येश्वरोत्थं च स वै श्रेयो ह्यवाप्स्यति ॥ १४ ॥
॥ सूत उवाच ॥ ॥
अथ तैर्ब्राह्मणैः सर्वैस्तस्य नाम प्रतिष्ठितम् ॥
कंसारीश्वर इत्येवं गौरवात्तस्य सन्मु नेः ॥ १५ ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥
कंसारीश्वरसंज्ञस्तु यथा जातस्तु पापहा ॥
स्थापितः पिप्पलादेन स्वयं चैव महात्मना ॥ १६ ॥
यश्चैतत्पुण्यमाख्यानं तस्य देवस्य संनिधौ ॥
संपठेच्छृणुयाद्वापि सम्यक्छक्तिसमन्वितः ॥ १७ ॥
मनसा चिंतितं पापं परदारकृतं च यत् ॥
तस्य तन्नाशमायाति पिप्पलाद वचो यथा ॥ १८ ॥
यस्तस्य पुरतो भक्त्या नीलरुद्रा न्सदा जपेत् ॥
प्राणरुद्रान्विशेषेण भवरुद्रसमन्वितान् ॥ १९ ॥
ब्रह्महत्योद्भवं चैव अपि तस्य प्रणश्यति ॥
परचक्रभये जाते ह्यना वृष्टिभये तथा ॥ ६.१७६.२० ॥
अथर्ववेदे साद्यंते पठिते तस्य चाग्रतः ॥
शत्रुर्विलयमभ्येति वृष्टिः सञ्जायते द्रुतम् ॥ २१ ॥
राजदौःस्थ्ये समुत्पन्ने राजा भवति धार्मिकः ॥
सर्वरोगविनिर्मुक्तः प्रजापालनतत्परः ॥ २२ ॥
उपसर्गभये जाते तस्य दोषः प्रशाम्यति ॥
शनैः शनैरसंदिग्धं पिप्पलादवचो यथा ॥ २३ ॥
किं वा ते बहुनोक्तेन यत्किंचिद्व्यसनं महत् ॥

तत्तस्य व्यसनं किंचिदथर्वणः प्रकी र्तनात् ॥ २४ ॥

अस्य देवस्य पुरतो याति नाशं च वै द्रुतम् ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कंसारेश्वरोत्पत्तिमाहात्म्यवर्णनंनाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७७



॥ सूत उवाच ॥ ॥

तथान्यापि च तत्रास्ति गौरी वै पञ्चपिंडिका ॥

लक्ष्म्या संस्थापिता चैव मानुषत्वंव्यवस्थया ॥ १ ॥

तस्या दर्शनमात्रेण नारी सौभाग्यमाप्नुयात् ॥

ज्येष्ठे मासि सिते पक्षे वृषस्थे च दिवाकरे ॥ २ ॥

तस्या उपरि नारी या जलयन्त्रं दधाति वै ॥

स्राव्यमाणं दिवानक्तं सौभाग्यं परमं लभेत् ॥ ३ ॥

यत्फलं लभते नारी समस्तैर्विहितैर्व्रतैः ॥

गौरीसमुद्भवैश्चैव दानैर्दत्तैस्तदिष्टजैः ॥

तत्फलं लभते सर्वं जलयन्त्रस्य कारणात् ॥ ४ ॥

तस्मात्सर्वप्रयत्नेन स्त्रीभिः सौभाग्यकारणात् ॥

जलयन्त्रं विधातव्यं ज्येष्ठे गौर्याः प्रयत्नतः ॥ ५ ॥

किं व्रतैर्नियमैर्वापि स्त्रीणां ब्राह्मणसत्तमाः ॥

जपैर्होमैः कृतैरन्यैर्बहुक्लेशकरैश्च तैः ॥ ६ ॥

स्त्रीणां ब्राह्मणशार्दूला जलेयन्त्रे धृते सति ॥

गौर्या उपरि सद्भक्त्या वृषस्थे तीक्ष्णदीधितौ ॥ ७ ॥

नैवं संजायते वंध्या काकवन्ध्या न जायते ॥

न दौर्भाग्यसमोपेता सप्तजन्मांतराणि सा ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

गौरी चतुर्भुजा प्रोक्ता दृश्यते परमेश्वरी ॥

पञ्चपिंडा कथं जाता ह्येतं नः संशयं वद ॥ ९ ।1

॥ सूत उवाच ॥ ॥

यदा च प्रलयो भावि तदा त्मानं करोत्यसौ ॥

पश्चपिंडीमयं विप्राः कुरुते रूपमुत्तमम् ॥ 6.177.१० ॥

एषा सा परमा शक्तिः सर्वं व्याप्य सुरेश्वरी ॥

तया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ ११ ॥
पृथिव्यापश्च तेजश्च वायुराकाशमेव च ॥
सृष्ट्यर्थं रक्षयेदेषा ततः स्यात्पंचपिंडिका ॥ १२ ॥
यदस्यां पूजितायां तु प्रत्यक्षायां प्रजायते ॥
सहस्रत्रिगुणं तच्च यत्र स्यात्पञ्चपिण्डिका ॥ १३ ॥
ज्येष्ठे मासि विशेषेण जलयंत्रार्चनेन च ॥
अत्र वः कीर्तयिष्यामि त्विति हासं पुरातनम् ॥ १४ ॥
यद्वृत्तं काशिराजस्य भार्याया द्विजसत्तमाः ॥
यच्च प्रोक्तं पुरा लक्ष्म्या विष्णवे परिपृष्टया ॥ १५ ॥
॥ लक्ष्मी रुवाच ॥ ॥
काशिराजः पुरा ह्यासीज्जयसेन इति श्रुतः ॥
तस्य भार्यासहस्रं तु ह्यासीद्रूपसमन्वितम् ॥ १६ ॥
अथ चान्या प्रिया तेन लब्धा भार्या सुशोभना ॥
मनुष्यत्वव्यवस्थाया मम चांशकला हि या ॥
सुता मद्राधिराजस्य विष्वक्सेनस्य धीमतः ॥ १७ ॥
सा गत्वा प्रातरुत्थाय शुभे गंगातटे तदा ॥
पञ्चपिंडात्मिकां गौरीं कृत्वा कर्द्दमसंभवाम् ॥ १८ ॥
ततः संपूजयामास मन्त्रैः पंचभिरेव च ॥
ततो गन्धैः परैर्माल्यैर्धूपै र्वस्त्रैः सुशोभनैः ॥ १९ ॥
नैवेद्यैः परमान्नैश्च गीतैर्नृत्यैः प्रवादितैः ॥
ततो विसृज्य तां देवीं तदुद्देशेन वै ततः ॥ 6.177.२० ॥
दत्त्वा दानानि भूरीणि गौरिणीनां द्विजन्मनाम् ॥
ततश्च गृहमभ्येति भूरिवादित्रनिःस्वनैः ॥ २१ ॥
यथायथा च तां पूजां तस्या गौर्या करोति सा ॥
तथातथा तु सौभाग्यं तस्याश्चाप्यधिकं भवेत् ॥ २२ ॥
सर्वासां च सपत्नीनां सौभाग्यं वाधिकं भवेत् ॥ २३ ॥
अथ तस्याः सपत्न्यो याः सर्वा दुःखसमन्विताः॥
दृष्ट्वा सौभाग्यवृद्धिं तां तस्या एव दिनेदिने ॥ २४ ॥

एकाः प्रोचुः कर्म चैतद्यदेषा कुरुते सदा ॥

मृन्मयांश्च समादाय पूजयेत्पंचपिंडकान् ॥ २५ ॥

अन्यास्तां मंत्रसंसिद्धां प्रवदंति महर्षयः ॥

अन्या वदन्ति पुण्यानि ह्यस्याः पूर्वकृतानि च ॥ २६ ॥

एवं तासां सुदुःखानां महान्कालो जगाम ह ॥

कस्यचित्त्वथ कालस्य सर्वाः संमंत्र्य ता मिथः ॥ २७ ॥

तस्याः संनिधिमाजग्मुस्तस्मिन्नेव जलाशये ॥

यत्र सा पूजयेद्गौरीं कृत्वा तां पञ्च पिंडिकाम् ॥ २८ ॥

ततः सर्वाः समालोक्य त्यक्त्वा गौरीप्रपूजनम् ॥

संमुखी प्रययौ तूर्णं कृतांजलिपुटा स्थिता ॥ २९ ॥

स्वागतं वो महा भागा भूयः सुस्वागतं च वः ॥

कृत्यं निवेद्यतां शीघ्रं येनाशु प्रकरोम्यहम् ॥ 6.177.३० ॥

॥ सपत्न्य ऊचुः ॥ ॥

वयं सर्वाः समायाताः कौतुके तवांतिकम् ॥

दौर्भाग्यवह्निनिर्दग्धास्तव सौभाग्यजेनच ॥ ३१ ॥

तस्माद्वद महाभागे मृन्मयां पंचपिंडिकाम् ॥

नित्यमर्चयसि त्वं किं सौभा ग्यस्य विवर्धनम् ॥ ३२ ॥

किं ते कारणमेतद्धि किं वा मन्त्रसमुद्भवः ॥

प्रभावोऽयं महाभागेगुह्यं चेन्नो वदस्व नः ॥ ३३ ॥

॥ पद्मावत्युवाच ॥ ॥ ॥

रहस्यं परमं गुह्यं यत्पृष्टास्मि शुभाननाः ॥

अवक्तव्यं वदिष्यामि भवतीनां तथापि च ॥ ३४ ॥

गौरीपूजनकाले तु यस्माच्चैव समागताः॥

सर्वा मम भगिन्यः स्थ ईर्ष्याधर्मो न मेऽस्ति च ॥ ३५ ॥

अहमासं पुरा कन्या पुरे कुसुमसंज्ञिते ॥

वीरसेनस्य शूद्रस्य वणिक्पुत्रस्य धीमतः ॥

तेन दत्ताऽस्मि धर्मेण विवाहार्थं महात्मना ॥ ३६ ॥

ततो विवाहसमये मम दत्तानि वृद्धये ॥

पंचाक्षराणि श्रेष्ठानि योषिता दीक्षया सह ॥
गौरी पूजाकृते चैव प्रोक्ता चाहं ततः परम् ॥ ३७ ॥
यावत्पुत्रि त्वमात्मानमेतैः पूजयसेऽक्षरैः ॥
जलपानं न कर्तव्यं तावच्चैव कथञ्चन ॥ ३८ ॥
येन संप्राप्स्यसेऽभीष्टं तत्प्रभावाद्यदीप्सितम् ॥
तथेति च मया प्रोक्तं तस्याश्चैव वरानने ॥ ३९ ॥
ततो विवाहे निर्वृत्ते गताऽहं पतिना सह ॥
श्वशुर स्तिष्ठते यत्र श्वश्रूश्चैव सुदारुणा ॥ 6,177.४० ॥
गौरीपूजाकृते मां च निवारयति सर्वदा ॥
ततोऽहं भयसन्त्रस्ता गौरीभक्तिपरायणा ॥
जलार्थं यत्र गच्छामि तस्मिंश्चैव जलाश्रये ॥ ४१ ॥
ततः कर्द्दममादाय मन्त्रैः पंचभिरेवच ॥
तैरेव पूजयाम्येव गौरीं भक्तिपरायणा ॥ ४२ ॥
प्रक्षिपामि तत स्तोये ततो गच्छामि मन्दिरम् ॥
कस्यचित्त्वथ कालस्य भर्ता मे प्रस्थितः शुभः ॥
देशांतरं वणिग्वृत्या सोऽपि मार्गं तमाश्रितः ॥ ४३ ॥
स गच्छन्मरुमार्गेण मां समादाय स्नेहतः ॥
संप्राप्तो निर्जलं देशं सुरौद्रं मरुमंडलम् ॥ ४४ ॥
तथा रौद्रतरे काले वृषस्थे दिवसाधिपे।
ततः सार्थः समस्तश्च विश्रांतः स्थलमध्यगः ॥ ४५ ॥
कूपमेकं समाश्रित्य गम्भीरं जलदोपमम् ॥
एतस्मिन्नेव काले तु मया दृष्टः समीपगः ॥
तोयाकारो मरु द्देशस्तश्चित्ते विचिन्तितम् ॥ ४६ ॥
यत्तच्च दृश्यते तोयं समीपस्थं तथा बहु ॥
अत्र स्नात्वा शुचिर्भूत्वा गौरीमभ्यर्च्य भक्तितः ॥
पिबामि सलिलं पश्चात्सुस्वादु सरसीभवम् ॥ ४७ ॥
ततः संप्रस्थिता यावत्प्रगच्छामि पदात्पदम् ॥
यावद्दूरतरं यामि तावत्सा मृगतृष्णिका ॥ ४८ ॥

एतस्मिन्न न्तरे प्राप्तो नभोमध्यं दिवाकरः ॥
वृषस्थो येन दह्यामि ह्युपरिष्टाच्छुभानना ॥ ४९ ॥
अधोभागे सुतप्ताभिर्वालुकाभिः समंततः ॥
तृष्णार्ताऽहं ततस्तस्मिन्मरुदेशे समाकुला ॥ 6.177.५० ॥
ततश्च पतिता भूमौ विस्फोटकसमावृता ॥
ततो मया स्मृता चित्ते कथा भारतसंभवा ॥ ५१ ॥
नृगेण तु यथा यज्ञो वालुकाभिर्विनिर्मितः ॥
कूपान्तः क्षिप्यमाणेन तृणलोष्टांबुवर्जितम् ॥ ५२ ॥
भक्तिग्राह्यास्ततो देवास्तुष्टास्तस्य महात्मनः॥
तदहं वालुकाभिश्च पूजयामि हरप्रियाम्॥ ५३ ॥
तेन तुष्टा तु सा देवी मम राज्यं प्रयच्छति ॥
अद्य देहान्तरे प्राप्ते मनोभीष्टमनंतकम् ।। ५४
ततस्तु पंचभिर्मन्त्रैस्तैरेव स्मृतिमागतैः ॥
पंचभिर्मुष्टिभिर्देवी वालुकोत्थैः प्रपूजिता ॥ ५५ ॥
ततः पञ्चत्वमापन्ना तत्कालेऽहं वरांगनाः ॥
दशार्णाधिपतेर्जाता सदने लोकविश्रुते ॥ ५६ ॥
जातिस्मरणसंयुक्ता तस्या देव्याः प्रसादतः ॥
भवतीनां कनिष्ठास्मि ज्येष्ठा सौभाग्यतः स्थिता ।।५७ ॥
एत स्मात्कारणाद्गौरीं मुक्त्वैतान्पञ्चपिण्डकान्॥
कर्द्दमेन विधायाथ पूजयामि दिनेदिने ॥ ५८ ॥
एतद्गुह्यं मया ख्यातं भवतीनामसंशयम् ॥
सत्येनानेन मे गौरी मनोभीष्टं प्रयच्छतु ॥ ५९ ॥
॥ लक्ष्मीरुवाच ॥ ॥
ततः सर्वाः सपत्न्यस्ताः कृतांजलिपुटाः स्थिताः ॥
मामूचुर्विनयाद्वाचा प्रणिपत्य मुहुर्मुहुः ॥6.177.६॥।
प्रसादं कुरु चास्माकं दीयतां मन्त्रपंचकम्॥
तदेव येन ते देवी तुष्टा सा परमेश्वरी ॥ ६१ ॥
मया प्रोक्ताश्च ता सर्वाः प्रार्थयध्वं यथेच्छया ॥

अहं सर्वं प्रदास्यामि तत्सत्यं वचनं मम ॥ ६२ ॥

ततो देव मया प्रोक्तं तासां तन्मंत्रपंचकम् ॥

शिष्यत्वं गमितानां च वाङ्मनःकायकर्मभिः ॥ ६३ ॥

॥ विष्णुरुवाच ॥ ॥

ममापि वद देवेशि कीदृक्तन्मन्त्रपञ्चकम् ॥

यत्त्वयाऽनुष्ठितं पूर्वं तया तासां निवेदि तम्॥ ६४ ॥

॥ लक्ष्मीरुवाच ॥ ॥

नमः पृथिव्यै क्षांतीशि नम आपोमये शुभे ॥

तेजस्विनि नमस्तुभ्यं नमस्ते वायुरूपिणि ॥ ६५ ॥

आकाशरूपसंपन्ने पंचरूपे नमोनमः ॥ ६६ ॥

एभिर्मन्त्रैर्मया पूर्वं पूजिता परमेश्वरी ॥

तेन राज्यं मया प्राप्तं सर्वस्त्रीणां सुदुर्लभम् ॥ ६७ ॥

ततश्च स्थापिता देवी कृत्वा रत्नमयी शुभा ॥

हाटकेश्वरजे क्षेत्रे मया तत्र सुरेश्वर ॥ ६८ ॥

तां या पूजयते नारी सद्योऽपि पतिवल्लभा ॥

जायते नात्र सन्देहः सर्वपापविवर्जिता ॥ ६९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पञ्चपिंडिकोत्पत्ति माहात्म्य वर्णनं नाम सप्तसप्तत्युत्तरशततमोऽध्यायः ॥ १७७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७८

https://sa.wikisource.org/s/fnz
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ लक्ष्मीरुवाच ॥ ॥

एवं राज्यं मया प्राप्तं गौरीपूजा कृते विभो ॥

सौभाग्यं परमं चैव दुर्लभं सर्वयोषिताम्॥ १ ॥

न चापत्यं मया लब्धं तथापि परमेश्वर ॥

तादृशेऽपि च सौभाग्ये तारुण्ये तादृशे स्थिते ॥ २ ॥

दह्यामि तेन दुःखेन दिवानक्तं सुखं न मे ॥

कस्यचित्त्वथ कालस्य दुर्वासा मुनिसत्तमः ॥ ३ ॥

आनर्ताधिपतेर्हर्म्यं संप्राप्तो गौरवाय सः॥।

चातुर्मास्यकृते चैव मृत्तिकाग्रहणाय च ॥। ४॥

ततः संपूजितो राज्ञा आनर्तेन यथाक्रमम्॥

दत्त्वार्घ्यं मधुपर्कं च ततः प्रोक्तं प्रणम्य च॥५॥

स्वागतं ते मुनिश्रेष्ठ भूयः सुस्वागतं च ते॥

नान्यो धन्यतमो लोके भूयोऽस्ति सदृशो मया॥६॥

यौ ते पादौ रजोध्वस्तौ केशैर्मे निर्मलीकृतौ॥

तद्ब्रूहि किंकरोम्यद्य गृहायातस्य ते मुने ॥ ७ ॥

अपि राज्यं प्रयच्छामि का वार्तान्येषु वस्तुषु ॥ ८ ॥

॥ दुर्वासा उवाच ॥ ॥

चातुर्मासीविधानं ते करिष्ये नृप मंदिरे ॥

मृत्तिकाग्रहणं तावच्छुश्रूषा क्रियतां मम ॥

स तथेति प्रतिज्ञाय मामूचे पार्थिवोत्तमः ॥ ९ ॥

शुश्रूषा चास्य कर्तव्या सर्व दैव वरानने ॥

चातुर्मासीव्रतं यावद्देवतार्चनपूर्वकम् ॥ 6.178.१० ॥

बाढमित्येवमुक्त्वाथ मया सर्वमनुष्ठितम् ॥

शुश्रूषार्हं च यत्कर्म दुहितेव पितुर्यथा ॥। ॥ ११ ॥

चातुर्मास्यां व्यतीतायां यदा संप्रस्थितो मुनिः ॥

तदा प्रोवाच मां तुष्टः पुत्रि किं करवाणि ते ॥ १२ ॥

ततः स भगवान्प्रोक्तः प्रणिपत्य मया मुहुः ॥

अपत्यं नास्ति मे ब्रह्मंस्तेन दह्याम्यहर्निशम् ॥ १३ ॥

ईदृशे सति राज्ञोऽपि यौवने च महत्तरे ॥

तत्त्वं वद मुनिश्रेष्ठ येन स्यान्मम संततिः ॥ १४ ॥

व्रतेन नियमेनाथ दानेन च हुतेन च ॥

ततः स सुचिरं ध्यात्वा मामुवाच स्मयन्निव ॥ १५ ॥

अन्यदेहांतरे पुत्रि त्वया गौरी प्रपूजिता ॥

तप्ताभिर्वालुकाभिः सा मृत्युकाल उपस्थिते ॥ १६ ॥

तद्भक्त्या लब्धराज्यापि दाहेन परियुज्यसे ॥

गौरी यत्तापसंयुक्ता बालुकाभिः कृता त्वया ॥ १७ ॥

न देवो विद्यते काष्ठे पाषाणे मृत्तिकासु च ॥

भावेषु विद्यते देवो मन्त्रसंयोगसंयुतः ॥ १८ ॥

भावभक्तिसमा युक्ता मंत्रसंयोजनेन च ॥

देवी मन्त्रसमायाता त्वया वालुकयाऽर्चिता ॥ १९ ॥

त्वत्काये तेन संतापः सर्वदाऽयं व्यवस्थितः॥

तस्माद्रत्नमयीं गौरीं कृत्वा त्वं पंचपिंडिकाम् ॥

हाटकेश्वरजे क्षेत्रे संस्थापय शुभानने ॥6.178.२०॥

वृषस्थे भास्करे पश्चात्तस्या उपरि स्नावि यत् ॥

जलयन्त्रं दिवारात्रं धारयस्व प्रयत्नतः ॥ २१ ॥

ततो यथायथा तस्याः शीतभावो भविष्यति ॥

तथातथा च ते दाहः शांतिं यास्यत्यहर्निशम् ॥ २२ ॥

दाहांते भविता गर्भस्ततः पुत्रमवाप्स्यसि ॥

राज्यभारक्षमं शूरं त्रिषु लोकेषु विश्रुतम् ॥ २३ ॥

अन्यापि कामिनी यात्र एवं तां पूजयिष्यति ॥

ज्येष्ठे मासे तथा सापि यथा त्वं प्रभविष्यति ॥ २४ ॥

॥ लक्ष्मीरुवाच ॥ ॥

ततो मया पुनः प्रोक्तो भगवान्स मुनीश्वरः ॥

मानुषत्वे न मे रागो विरक्तिर्महती स्थिता ॥ २५ ॥
नदीवेगोपमं दृष्ट्वा जीवितंसर्वदेहिनाम् ॥
तन्मे वद महाभाग यत्किंचिद् व्रतमुत्तमम् ॥ २६ ॥
मानुषत्वं न येन स्यात्सम्यक्चीर्णेन सद्द्विज ॥
ततः स सुचिरं ध्यात्वा मामाह परमेश्वर ॥ २७ ॥
अस्ति पुत्रि व्रतं पुण्यं गौरी तुष्टिकरं परम् ॥
येन चीर्णेन वै सम्यग्योषिद्देवत्वमाप्नुयात् ॥ २८ ॥
गोमयाख्या महादेवी कृता वै गोमयेन सा ॥
ततो गोलोकमापन्नाः सर्वास्ता वरवर्णिनि ॥ २९ ॥
तां त्वं कुरुष्व कल्याणि येन देवत्वमाप्स्यसि ॥
ततो मया पुनः प्रोक्तः स मुनिः सुरसत्तम ॥ 6.178.३० ॥
कस्मिन्काले प्रकर्तव्या विधिना केन सन्मुने ॥
सर्वं विस्तरतो ब्रूहि येन तां प्रकरोम्यहम् ॥ ३१ ॥
॥ दुर्वासा उवाच ॥ ॥
नभस्ये चासिते पक्षे तृतीयादिवसे स्थिते॥
प्रातरुत्थाय पश्चाच्च भक्षयेद्दंतधावनम्॥३२॥
ततश्च नियमं कृत्वा उपवाससमुद्भवम्॥
गौरीनामसमुच्चार्य श्रद्धापूतेन चेतसा ॥ ३३ ॥
ततो निशागमे प्राप्ते कृत्वा गौरीचतुष्टयम् ॥
मृन्मयं यादृशं चैव तदिहैकमनाः शृणु ॥ ३४ ॥
एका गौरी प्रकर्तव्या पंचपिंडा यथोदिता ॥
प्रहरेप्रहरे प्राप्ते तासु पूजां समाचरेत् ॥
यैर्मंत्रैस्तान्निबोध त्वमेकैकस्याः पृथक्पृथक् ॥ ३५ ॥
हिमाचलगृहे जाता देवि त्वं शंकरप्रिये ॥
मेनागर्भसमुद्भूता पूजां गृह्ण नमोस्तु ते ॥ ३६ ॥
धूपं दद्यात्ततश्चैव कर्पूरं श्रद्धया सह ॥
रक्तसूत्रेण दीपं च घृतेन परिकल्पयेत् ॥ ३७ ॥
जातिपुष्पैः समभ्यर्च्य नैवेद्ये मोदकान्न्यसेत् ॥

रक्तवस्त्रेण संछाद्य अर्घ्यं दत्त्वा ततः परम् ॥ ३८ ॥

यस्य वृक्षस्य पुष्पं च तस्य स्याद्दन्तधावनम् ॥

मातुलिंगेन तस्यास्तु मन्त्रेणानेन भक्तितः ॥ ३९ ॥

अर्घ्यं दद्यात्प्रयत्नेन गन्धपुष्पाक्षतान्वितम् ॥

शंकरस्य प्रिये देवि हिमाचलसुते शुभे ॥

अर्घ्यमेनं मया दत्तं प्रतिगृह्ण नमोऽस्तु ते ॥ 6.178.४० ॥

तदेव प्राशनं कुर्यात्ततः कायविशुद्धये ॥

प्रहरांते च संपूज्य अर्धनारीश्वरं ततः ॥ ४१ ॥

सुरभ्या पूजयेद्भक्त्या मन्त्रेणानेन पार्वति ॥

वाममर्धं शरीरस्य या हरस्य व्यवस्थिता ॥

सा मे पूजां प्रगृह्णातु तस्यै देव्यै नमोऽस्तु ते ॥ ४२ ॥

अगरुं च ततो भक्त्या धूपं दद्यात्तथा शुभे ॥

नैवेद्ये गुणकांश्चैव नालिकेरेण चार्धकम् ॥ ४३ ॥

मन्त्रेणानेन दातव्यं तदेव प्राशनं स्मृतम् ॥

अर्धनारीश्वरौ यौ च संस्थितौ परमेश्वरौ ॥ ४४ ॥

अर्घ्यो मे गृह्यतां देवौ स्यातं सर्वसुखप्रदौ ॥

तृतीये प्रहरे प्राप्ते शतपत्र्या प्रपूजयेत् ॥ ४५ ॥

उमामहेश्वरौ देवौ मंत्रेणानेन पूजयेत् ॥ ॥ ४६ ॥

उमामहेश्वरौ देवौ यौ तौ सृष्टिलयान्वितौ ॥

तौ गृह्णीतामिमां पूजां मया दत्तां प्रभक्तितः ॥ ४७ ॥

गुग्गुलोत्थं ततो धूपं नैवेद्यं घारिकात्मकम् ॥

जातीफलेन चार्घ्यं च तदेव प्राशनं स्मृतम् ॥ ४८ ॥

ततश्चार्घ्यः प्रदातव्यो मंत्रेणानेन भक्तितः ॥

ग्रंथिचूर्णेन धूपं च अर्घ्यं मदनजं फलम् ॥ ४९ ॥

तदेव प्राशनं कार्यं ततः कायविशुद्धये ॥ 6.178.५० ॥

उमामहेश्वरौ देवौ सर्वकामसुखप्रदौ ॥

गृह्णीतामर्घ्यमेतं मे दयां कृत्वा महत्तमाम्॥ ९१ ॥

चतुर्थे प्रहरे प्राप्ते तां गौरीं पंचपिंडिकाम् ॥

भृंगराजेन संपूज्य मंत्रेणानेन भक्तितः ॥ ५२ ॥
पृथिव्यादीनि भूतानि यानि प्रोक्तानि पंच च ॥
पंचरूपाणि देवेशि पूजां गृह्ण नमोऽस्तु ते ॥ ५३ ॥
नैवेद्ये घृतपूपांश्च दद्याद्देव्याः प्रभक्तितः ॥
ग्रंथिचूर्णेन धूपं च ह्यर्घ्यं मदनजं फलम् ॥
तदेव प्राशनं कार्यमर्घ्यमंत्रमिदं स्मृतम् ॥ ५४ ॥
पंचभूतमयी देवी पंचधा या व्यवस्थिता ॥
अर्घ्यमेनं मया दत्तं सा गृह्णातु सुरे श्वरी ॥ ५५ ॥
एवं सर्वा निशा सा च गीतवाद्यादिनिःस्वनैः॥
तासां चैवाग्रतो नेया नैव निद्रां समाचरेत् । ५६ ॥
ततः प्रभाते विमले प्रोद्गते रविमण्डले ॥
स्नात्वा संपूजयेद्विप्रं सह पत्न्या प्रभक्तितः ॥ ५७ ॥
वस्त्रैराभरणैश्चैव स्वशक्त्या नृपनंदिनि ॥
गौर्यै भक्ष्यं च दातव्यं मिष्टान्नेन शुचिस्मिते ॥ ५८ ॥
ततः करेणुमानीय वडवां वा सुमध्यमे ॥
गौरीचतुष्टयं तच्च समारोप्य तथोपरि ॥ ५९ ॥
गीतवादित्रशब्देन वेदध्वनियुतेन च ॥
नद्यां वाऽथ तडागे वा वाप्यां वाथ परिक्षिपेत् ॥ 6.178.६० ॥
मंत्रेणानेन सद्भक्त्या तवेदं वच्मि सुन्दरि ॥ ६१ ॥
आहूतासि मया देवि पूजितासि मया शुभे ॥
मम सौभाग्यदानाय यथेष्टं गम्यतामिति ॥ ६२ ॥
॥ लक्ष्मीरुवाच ॥ ॥
एवं मया कृता देव सा तृतीया यथोदिता ॥
नभस्ये मासि संप्राप्ते भक्त्या परमया विभो ॥ ६३ ॥
द्वितीये च तथा प्राप्ते तृतीये च विशेषतः ॥
यावत्पश्यामि प्रत्यूषे तावद्गौरीचतुष्टयम् ॥
जातं रत्नमयं तच्च मया यत्परिपूजितम् ॥ ६४ ॥
प्रस्थितां मां नदीतीरमुद्दिश्य च विसर्जनम् ॥

करिष्यामीति सा प्राह व्यक्तीभूता सुरेश्वरी ॥ ॥ ६५ ॥

मा पुत्रि जलमध्येऽत्र मम मूर्तिचतुष्टयम् ॥

परिभावय मद्वाक्यं श्रुत्वा चैव विधीयताम् ॥ ६६ ॥

हाटकेश्वरजे क्षेत्रे स्थापय त्वं च मा क्षिप ॥

अक्षयं जायते येन सर्वस्त्रीणां हिताय च ॥ ६७ ॥

त्वं प्रार्थय वरं सर्वं ददाम्यहमिहार्चिता ॥

अभ्यर्चिता गिरिसुता मया प्रोक्ता सुरेश्वरी ॥ ॥ ६८ ॥

यदि यच्छसि मे देवि वरं तुष्टा सुरेश्वरि ॥

तदहं मानुषे गर्भे मा भूयासं कथंचन ॥ ६९ ॥

भर्त्ता भवतु मे विष्णुः शाश्वताभीष्टदः सदा ॥

नान्यत्किंचिदभीष्टं मे राज्यं त्रिदिवशोभनम् [। 6.178.७० ॥

अन्यापि कुरुते या च व्रतमेतत्समाहिता ॥

सर्वैत्रैतैर्यथातुष्टिस्तथा देवि प्रजायते ॥७१ ॥

तथा तस्याः प्रकर्तव्यमकेनानेन पार्वति ॥

तथेति गौरी मामुक्त्वा ततश्चादर्शनं गता ॥ ७२ ॥

सा देवी च मया तत्र तच्च गौरीचतुष्टयम् ॥

हाटकेश्वरजे क्षेत्रे शुभे संस्थापितं विभो ॥ ७३ ॥

तत्प्रभावान्मया लब्धो भर्त्ता त्वं परमेश्वर ॥

शाश्वतश्चाक्षयश्चैव मुखप्रेक्षश्च सर्वदा ॥ ७४ ॥

एतत्त सर्वमाख्यातं यत्पृष्टास्मि सुरेश्वर ॥

सत्येनानेन देवेश तव पादौ स्पृशाम्यहम् ॥ ७५ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा वचनं तस्याः शंखचक्रगदाधरः ॥

विहस्याथ महालक्ष्मीं तामुवाच प्रहर्षितः ॥

मुहुर्मुहुः समालिंग्य वक्षसश्चोपरि स्थिताम् ॥ ७६ ॥

साधुमाधु महाभागे सत्यमेतत्त्वयोदितम् ॥

जानतापि मया पृष्टा भवतीं वरवर्णिनि ॥ ७७ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥

चतुर्भुजा यथा गौरी संजाता पंचपिंडिका ॥ ७८॥

यश्चैतत्पठते भक्त्या प्रातरुत्थाय मानवः ॥

न स लक्ष्म्या विमुच्येत न च दौर्भाग्यमाप्नुयात् ॥ ७९ ॥

तस्मात्सर्वप्रयत्नेन पठनीयमिदं शुभम् ॥

आख्यानं गौरिकं विप्रा यन्मया परिकीर्तितम् ॥ 6.178.८० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पंचपिंडिकागौर्युत्पत्तिमाहात्म्य वर्णनंनामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ ॥९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १७९

https://sa.wikisource.org/s/foo
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

तथान्यदपि तत्रास्ति पुष्करत्रितयं शुभम् ॥

हाटकेश्वरजे क्षेत्रे सर्वपातकनाशनम् ॥ १ ॥

यस्मिन्दृष्टेऽथवा स्पृष्टे कीर्तिते वा द्विजोत्तमाः ॥

पातकं नाशमायाति भास्करेण तमो यथा ॥ २ ।।

पुनंति सर्वतीर्थानि स्नानाद्दानादसंशयम् ॥

पुष्करालोकनादेव सर्वपापैः प्रमुच्यते ॥ ३ ॥

॥ ऋषय ऊचुः ॥ ॥

श्रूयते पुष्करंनाम तीर्थं त्रैलोक्यविश्रुतम् ॥

ब्रह्मणा निर्मितं तत्र यच्च योजनमात्रकम् ॥ ४ ॥

उत्तरे चन्द्रभागाया नद्या यावत्सरस्वती ॥

दक्षिणे करतोयायाः सीमेयं पुष्करत्रये ॥ ५ ॥

अस्माकं तु पुरा सूत त्वयोक्तं वियति स्थितम् ॥

एतन्नः कौतुकं सूत तत्कथं हाटकेश्वरे ॥

तत्र क्षेत्रे समायातं तस्मात्त्वं वक्तुमर्हसि ॥ ६ ॥

॥ सूत उवाच ॥ ॥

सत्यमेतन्महाभागा यद्भवद्भिरुदाहृतम् ॥

तस्मिन्क्षेत्रे द्विजश्रेष्ठास्तच्छृणुध्वं समाहिताः ॥ ७ ॥

सर्वतो विस्तराद्वच्मि नमस्कृत्य स्वयं भुवम् ॥ ८ ॥

ब्रह्मलोके निवसतो ब्रह्मणोऽव्यक्तजन्मनः ॥

देवर्षिर्नारदः प्राप्तो भ्रांत्वा लोकत्रयं मुनिः ॥ ९ ॥

स नत्वा शिरसा पादावुपविष्टस्त दग्रतः ॥ ६.१७९.१० ॥

॥ ब्रह्मोवाच ॥ ॥

कस्माद्वत्स चिराद्दृष्टः कुतः प्राप्तोऽधुना भवान्॥

क्व भ्रांतस्त्वं समाचक्ष्व ब्रूहि वत्सात्र कारणम् ॥ ११ ॥ ॥

॥ नारद उवाच ॥ ॥

मर्त्यलोकाद्विभो प्राप्तः सांप्रतं च त्वरान्वितः ॥

तव पादप्रपूजार्थं सत्येनात्मानमालभे ॥ १२ ॥

॥ ब्रह्मोवाच ॥ ॥

किंवदन्तीं ममाचक्ष्व मर्त्यलोकसमुद्भवाम् ॥

कीदृशाः पार्थिवास्तत्र कीदृशा द्विजसत्तमाः ॥

कीदृशा व्यवहाराश्च वर्तन्ते तत्र सांप्रतम् ॥ १३ ॥ ॥

॥ नारद उवाच ॥ ॥

मर्त्यलोके कलिर्जातः सांप्रतं सुरसत्तम ॥ १४ ॥

राजानः सत्पथं त्यक्त्वा तथा लोभपरायणाः ॥

पीडयंति च लोकांश्च अर्थहेतोः सुनिर्घृणाः ॥ १५ ॥

शौर्यभावपरित्यक्ताः परदारविमर्दकाः ॥

पूजयन्ति न ते विप्रान्न देवान्न गुरूनपि ॥ १६ ॥

वेदविक्रय कर्तारो ब्राह्मणाः शौचवर्जिताः ॥

पापप्रतिग्रहासक्ताः सन्ध्याहीनाः सुनिर्घृणाः ॥ १७ ॥

कृषिकर्मरता नित्यं वैश्यवत्पशुपालकाः ॥

वैश्याः सर्वे समुच्छेदं प्रयाता धरणीतले ॥ १८ ॥

शूद्रा नित्यं धर्मकामाः शूद्राश्चैव तपस्विनः ॥

लोकयात्राक्रियाः सर्वे प्रहसंति व्यपत्रपाः ॥ १९ ॥

यस्य चास्ति गृहे वित्तं तरुण्यश्च तथा स्त्रियः ॥

तेनतेन समं सख्यं प्रकुर्वन्ति नरा भुवि ॥ ६.१७९.२० ॥

विधवानां व्रतस्थानां सर्वेषां लिंगिनां तथा ॥

हृदि स्थितो महान्कामो व्रतचर्याबहिःस्थिताः ॥२१॥

तीर्थानि विप्लवं यांतिपापलोकश्रितानि च॥

कलेर्भीतानि सर्वाणि प्रद्रवन्ति दिशो दश ॥२२॥

अहं तत्र स्थितो यस्मात्कलिकाले पितामह ॥ २३ ॥

कलिकाले विशेषेण स्वैरिण्यो ललितस्पृहाः ॥

भर्त्रा विवदमानाश्च स्त्रियः कार्मणतत्पराः॥

वृथा व्रतानि कुर्वंति त्यक्त्वा ताः स्वपतेः कथाम् ॥ २४ ॥

कलिर्बलिष्ठः सुतरां वरदानेन ते कृतः ॥

यदा मर्त्ये भवेद्युद्धं कंडूतिर्जायते हृदि ॥ २९ ॥

स्वर्गे वा मस्तके चैव पाताले चाथ पादयोः ॥

सांप्रतं मर्त्यलोके च मया दृष्टमनेकशः ॥ २६ ॥

श्वश्रूणां च वधूनां च तथा जनकपुत्रयोः ॥

बांधवानां विशेषेण तथा च स्वामिभृत्ययोः ॥ २७ ॥

चौराणां पार्थिवानां च दम्पत्योश्च विशेषतः ॥

स्वल्पोदकास्तथा मेघाः स्वल्पसस्या च मेदिनी ॥ २८ ॥

स्वल्पक्षीरास्तथा गावः क्षीरे सर्पिर्न विद्यते ॥

एवं युद्धानि तेषां च वीक्षमाणो दिवानिशम् ॥ २९ ॥

अहं मर्त्ये परिभ्रांतश्चिरात्तेन समागतः ॥

भूयो यास्यामि तत्रैव कण्डूतिर्महतीस्थिता ॥ ६.१७९.३० ॥

तच्छ्रुत्वा वचनं तस्य नारदस्य पितामहः ॥

पुष्करस्य कृते जातश्चिन्ताव्याकु लतेंद्रियः ॥ ३१ ॥

मर्त्ये च मामकं तीर्थं पुष्करंनाम विश्रुतम् ॥

नाशं यास्यति तन्नूनं कलिकालपरिप्लुतम् ॥ ३२ ॥

तस्मादन्यत्र नेष्यामि कलिर्यत्र न विद्यते ॥

येन तत्र विमुंचामि निजं तीर्थं च पुष्करम् ॥ ३३ ॥

कलिकाले च संप्राप्ते सर्वप्राणिभयंकरे ॥

तत्र प्रयांतु तीर्थानि सर्वा ण्येव विशेषतः ॥ ३४ ॥

गते कलौ प्रयास्यंति निजस्थानमसंशयम् ॥ ३५ ॥

एवं निश्चित्य मनसा हस्तस्थं कमलं ततः ॥

प्रोवाच सादरं तच्च स्वयं ध्यात्वा पितामहः ॥ ३६ ॥

पत त्वं पद्म भूपृष्ठे कलिर्यत्र न विद्यते ॥

येनानयामि तत्रैव पुष्करं तीर्थमात्मनः ॥ ३७ ॥

ततस्तत्प्रेषितं तेन पद्मं भ्रांत्वा महीतले ॥

समस्ते पतितं क्षेत्रे हाटकेश्वरसंभवे ॥३८॥

दृष्ट्वा वेदविदो विप्रान्स्वाध्यायनिरताञ्छुचीन् ॥
तेषां यज्ञक्रियाभिश्च यज्ञोपांतैः समंततः ॥ ३९ ॥
यूपाद्यैः सर्वतो व्याप्ते सदिशे गगनांगणे ॥
ऋग्यजुःसामघोषेण तथा चाथर्वजेन च ॥ ६.१७९.४० ॥
दिग्मण्डले तथा व्याप्ते नान्यः संश्रूयते ध्वनिः ॥
तथा च तार्किकाणां च विवादेषु महत्सु च ॥ ४१ ॥
वेदांतानां समस्तानां व्याख्याने बहुधा कृते ॥
दृश्यन्ते मुनयो यत्र संस्थिता नियमेषु च ॥ ४२ ॥
एकाहारा निराहारा एकांतरकृताशनाः ॥
त्रिरात्रोपोषिताश्चान्ये कृच्छ्रचांद्रायणे रताः ॥ ४३ ॥
महापाराकिणश्चान्ये तथा मासोपवासिनः ॥
अश्मकुट्टाशिनश्चान्ये दन्तोलूखलिकास्तथा ॥ ४४ ॥
शीर्णपर्णाशिनश्चैके फलाहारा महर्षयः ॥
तद्दृष्ट्वा तादृशं क्षेत्रं संयुक्तं विविधैर्गुणैः ॥ ४५ ॥
ततस्तत्पतितं तत्र पुण्यं ज्ञात्वा महीतले ॥
यत्र स्थानेऽपतत्पूर्वं तस्मादुच्चलितं पुनः ॥ ४६ ।
अन्यस्मिंश्च ततः स्थाने द्वितीये द्विजसत्तमाः ॥
तस्मादपि तृतीये तु तृतीयं पंकजं हितम् ॥ ४७ ॥
ततो गर्तात्रयं जातं तेषु स्थानेषु च त्रिषु ॥
गर्तासु च जल जातं स्वच्छं स्फटिकसंनिभम् ॥ ४८ ॥
एतस्मिन्नंतरे प्राप्तः स्वयमेव पितामहः ॥
तत्र स्थाने द्विजश्रेष्ठा यज्ञकर्मप्रसिद्धये ॥ ॥। ४९ ॥
दृष्ट्वा समंततः क्षेत्रं हाटकेश्वरसंज्ञितम् ॥
नानाविप्रैः समाकीर्णं वेदवेदांगपारगैः ॥
तपस्विभिस्तथानेकैर्व्रतचर्यापरायणैः ॥ ६.१७९.५० ॥
अहो क्षेत्रमहो क्षेत्रं पुण्यं रम्यं द्विजप्रियम् ॥
तस्मायज्ञं करिष्यामि क्षेत्रेऽस्मिंश्च द्विजाश्रये ॥ ५१ ॥
आनयिष्यामि तच्चापि पुष्करत्रितयं शुभम् ॥

गर्तास्वेतासु पुण्यासु ज्येष्ठं मध्यं कनीयकम् ॥ ५२ ॥

कलिकाले च संप्राप्ते येन लोपं न गच्छति ॥

स्वयं निश्चित्य मनसा चोपविश्य धरातले ॥ ५३ ॥

ध्यात्वा च सुचिरं कालमानयामास तत्र च ॥

पुष्करत्रितयं श्रेष्ठं ज्येष्ठमध्यकनीयकम् ॥ ५४ ॥

ततोऽब्रवीत्स हृष्टात्मा ह्येतद्धि पुष्कर त्रयम् ॥

मया सम्यक्समानीतं कलिकालभयेन च ॥ ५५ ॥

येऽत्र स्नानं करिष्यंति श्रद्धया परया युताः ॥

ते यास्यंति परां सिद्धिमक्षयां मत्प्रसादतः ॥ ५६ ॥

ये च श्राद्धं करिष्यंति कार्तिक्यां सुसमाहिताः ॥

करिष्यंति गयाशीर्षे तेषां पुण्यं महत्तमम् ॥ ५७ ॥

तत्राद्यात्पुष्करात्पुण्यं लभिष्यंति शताधिकम् ॥

मया यज्ञः कृतस्तत्र कार्तिक्यां पूर्वपुष्करे ॥ ५८ ॥

वैशाख्यां च करिष्यामि अत्राहं च द्वितीयके ॥ ॥ ५९ ॥

एवमुक्त्वा ततो ब्रह्मा ह्यादिदेश सदागतिम् ॥

ममादेशाद्द्रुतं वायो समानय पुरंदरम् ॥ ६.१७९.६० ॥

आदित्यैर्वसुभिः सार्धं रुद्रैश्चैव मरुद्गणैः ॥

गंधर्वैर्लोकपालैश्च सिद्धैर्विद्याधरैस्तथा ॥ ६१ ॥

येन मे स्यात्सहायत्वं समस्ते यज्ञकर्मणि ॥

तच्छ्रुत्वा सकलं वायुर्गत्वा शक्रनिवेशनम् ॥

कथयामास तत्सर्वं यदुक्तं परमेष्ठिना ॥ ६२ ॥

सत्वरं प्रययौ तत्र सर्वैर्देवगणैः सह ॥

प्रणिपत्य ततस्तं स ब्रह्माणं वाक्यमब्रवीत् ॥ ६३ ॥

आदेशो दीयतां देव ह्यहमाकारितस्त्वया ॥

यदर्थं तत्करिष्यामि तस्माच्छीघ्रं निवेदय ॥ ६४ ॥

ब्रह्मोवाच ॥ ॥

मया शक्रात्र चानीतं सुपुण्यं पुष्करत्रयम् ॥

कलिकालभयाच्चैव करिष्ये तदहं स्थिरम्॥ ६५ ॥

अग्निष्टोमत्रयं कृत्वा वैशाख्यां च यथार्चितम् ॥

संभारमाहरस्वाशु तदर्थं सर्वमेव हि ॥ ६६ ॥

ब्राह्मणांश्च तदर्हांश्च वेदवेदांगपारगान् ॥

तच्छ्रुत्वा विनयाच्छक्रस्तथेत्युक्त्वा त्वरान्वितः ॥'

संभारानानयामास तदर्हांश्च द्विजोत्तमान् ॥ ६७ ॥

ततश्चकार विधिवद्यज्ञं स प्रपितामहः ॥

यथोक्तविधिना सर्वं तथा संपूर्णदक्षिणम् ॥ ६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये पुष्करत्रयोत्पत्तिपूर्वकं यज्ञसमारंभार्थमुपकरणानयनब्राह्मणामन्त्रणादिप्रकारकथनंनामैकोनाशीत्युत्तरशततमोऽध्यायः॥१७९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८०

https://sa.wikisource.org/s/fo1

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

ऋषय ऊचुः॥

अत्यद्भुतमिदं सूत यत्त्वया समुदाहृतम्॥

ब्रह्मणा यत्कृतो यज्ञस्तत्र क्षेत्रे महात्मना ॥ १ ॥

अग्निष्टोमादयो यज्ञा ये वर्तन्ते धरातले ॥

यष्टव्यस्तेषु यज्ञेषु स एव हि सुरेश्वरः ॥ २ ॥

तेनैव यजता तत्र को हीष्टः प्रब्रवीहि नः ॥

ऋत्विजः के स्थितास्तत्र यैस्तत्कर्म मखोद्भवम् ॥

तत्प्रत्यक्षे कृतं सर्वमेतन्नः कौतुकं परम् ॥ ३ ॥

का चैव दक्षिणा दत्ता तेन तेषां द्विजन्मनाम् ॥

कोऽध्वर्युर्विहितस्तत्र येन तद्यजनं कृतम् ॥४॥

को होता कश्च वाऽग्नीध्रः को ब्रह्मा तत्र संस्थितः ॥

उद्गाता कः स्थितस्तत्र ह्याचार्यो यज्ञकर्मणि ॥ ५ ॥

॥ सूत उवाच ॥ ॥

अहं वः कीर्तयिष्यामि सर्वं यज्ञस्य संभवम् ॥

वृत्तांतं यच्च तत्रस्थ माश्चर्यं द्विजपुंगवाः ॥ ६ ॥

ये सदस्याः स्थितास्तत्र ऋत्विजश्च द्विजोत्तमाः ॥

दक्षिणा याः प्रदत्ताश्च तेभ्यस्तेन महात्मना ॥ ७ ॥

यजता देवदेवेन ब्रह्मणाऽमिततेजसा ॥

यज्ञकामं चतुर्वक्त्रं ज्ञात्वा देवः शतक्रतुः ॥ ८ ॥

सर्वैः सुरगणैः सार्धं साहाय्यार्थमुपागतः ॥

तथा च भगवाञ्छंभुः सर्वदेवगणैः सह ॥ ९ ॥

तान्दृष्ट्वाऽभ्यागतान्ब्रह्मा मर्त्यधर्मसमाश्रितान् ॥

प्रोवाच विनयोपेतः कृतांजलिपुटः स्थितः ॥ ६.१८०.१० ॥

स्वागतं वः सुरश्रेष्ठाः प्रसादः क्रियतां मम ॥

निविश्यतां यथान्यायं स्थानेषु रुचिरेषु च ॥ ११ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यद्यूयं स्वयमागताः ॥

मंत्राहूता यथा कृच्छ्रात्सर्वसत्रेषु गच्छथ ॥ १२ ॥

॥ देवा ऊचुः ॥ ॥

येन यच्चात्र कर्तव्यं तच्छीघ्रं वद पद्मज ॥

यज्ञे तव महाभाग तस्य तत्त्वं समादिश ॥ ॥ १३ ॥

॥ ब्रह्मोवाच ॥ ॥

विश्वकर्मन्द्रुतं गच्छ यज्ञमण्डपसिद्धये ॥

पत्नीशालां ततश्चैव यज्ञवेदीस्तथैव च ॥ १४ ॥

कुण्डानि चैव सर्वाणि यथास्थानेषु कारय ॥

यज्ञपात्राणि सर्वाणि ग्रहाश्च चमसास्तथा ॥ १५ ॥

यूपाश्च यत्प्रमाणेन कर्तव्याः सचषालकाः ॥

पचनार्थं तथा गर्ताः कर्तव्या यत्प्रमाणतः ॥ १६ ॥

इष्टिकानां सहस्राणि दश चाष्टशतानि च ॥

कर्तव्यानि त्वया शीघ्रं चयनानीति सत्वरम् ॥ १७ ॥

तथा हिरण्मयश्चापि पुरुषः कार्य एव हि ॥

तथेत्युक्ता ततस्त्वष्टा शीघ्राच्छीघ्रतरं ययौ ॥ १८ ॥

ततस्तु पद्मजः प्राह देवाचार्यं बृह स्पतिम् ॥

बृहस्पते त्वमानीहि यज्ञार्हानृत्विजोऽखिलान् ॥ १९ ॥

यावत्षोडशसंख्याश्च नान्यस्यैतद्धि युज्यते ॥

त्वया शक्र सदा कार्या शुश्रूषा च द्विजन्मनाम् ॥ ६.१८०.२० ॥

हस्तपादावमर्द्दश्च श्रांतानां पृष्ठमर्द्दनम् ॥

धनाध्यक्ष त्वया देया दक्षिणा कालसंभवा ॥ २१ ॥

सुवस्त्राणि हिरण्यं च तथान्यद्वापि वांछितम् ॥

त्वया विष्णो सदा कार्यं कृत्याकृत्यपरीक्षणम् ॥ २२ ॥

युक्तं कृतमथो नैव सावधानेन सर्वदा ॥

लोकपालाश्च ये सर्वे रक्षंतु सकला दिशः ॥

भूतप्रेतपिशाचानां प्रवेशं राक्षसोद्भवम् ॥ २३ ॥

यो यं कामयते कामं किंचिद्वस्त्रं धनं च वा ॥

विचार्य तस्य तद्देयं सर्वयज्ञाधिपेन तु ॥ २४ ॥

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥

भवंतु परिवेष्टारो भोक्तुकामजनस्य च ॥ २५ ॥

एतस्मिन्नंतरे प्राप्तो विश्वकर्मा त्वरान्वितः ॥

अब्रवीत्पंकजभवं संसिद्धो यज्ञमण्डपः ॥ २६ ॥

सर्वमन्यत्समादिष्टं यत्त्वयोक्तं चतुर्मुख ॥ २७ ॥

ततो बृहस्पतिः प्राह समभ्येत्य पितामहम्॥

समानीता मया देव ब्राह्मणा यज्ञकर्मणि ॥ २८ ॥

विप्राः षोडशसंख्याश्च ऋत्विक्कर्मणि योजय ॥

स्वयं परीक्ष्य देवेश यज्ञकर्मप्रसिद्धये ॥ २९ ॥

ततो ब्रह्मा स्वयं दृष्ट्वा तान्परीक्ष्य प्रयत्नतः ॥

ऋत्विक्त्वे च नियोज्याथ ततश्चक्रे तदर्हणम् ॥ ६.१८०.३० ॥

॥ ऋषय ऊचुः ॥ ॥

ऋत्विजां चैव सर्वेषां सूत नामानि कीर्तय ॥

येन यो विहितस्तत्र पदार्थः सूत तं वद ॥ ३१ ॥

॥ सूत उवाच ॥ ॥

भृगुर्हौत्रे ततस्तेन वृतो ब्राह्मणसत्तमाः ॥

मैत्रावरुणसंज्ञस्तु तथैव च्यवनो मुनिः ॥ ३२ ॥

अच्छावाको मरीचिश्च ग्रावस्तुद्गालवो मुनिः ॥

पुलस्त्यश्च तथा ऽध्वर्युः प्रस्थातात्रिश्च संस्थितः ॥ ३३ ॥

तत्र रैभ्यो मुनिर्नेष्टा तत्रोन्नेता सनातनः ॥

ब्रह्मा च नारदो गर्गो ब्राह्मणाच्छंसिरेव च ॥३४॥

आग्नीध्रश्च भरद्वाजो होता पाराशरस्तथा ॥

तथैव तत्र क्षेत्रे च उद्गाता गोभिलो मुनिः ॥ ३५ ॥

तथैव कौथुमो जज्ञे प्रस्तौता यज्ञकर्मणि ॥

शांडिल्यः प्रतिहर्त्ता च सुब्रह्मण्यस्तथांगिराः ॥ ३६ ॥

तस्य यज्ञस्य सिद्ध्यर्थमित्येते षोडशर्त्विजः ॥

वस्त्राभरणशोभाढ्या विनयेन कृताश्च ते ॥३७॥

ततः कृत्वा स्वयं ब्रह्मा सर्वेषामर्हणक्रियाम् ॥

गृह्योक्तेन विधानेन ततः प्रोवाच सादरम् ॥ ३८ ॥

एषोऽह शरणं प्राप्तो युष्माकं द्विजसत्तमाः ॥

अनुगृह्णीत मां सर्वे दीक्षायै यज्ञकर्मणः ॥ ३९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे ब्रह्मयज्ञोपाख्याने यज्ञमण्डपप्राप्तब्राह्मणसत्कारपूर्वकर्त्विगादिस्थानयोजनापूर्वकाध्वरकर्मारंभोनामाशीत्युत्तरशततमोऽध्यायः ॥ १८० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८१



॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे सर्वैर्नागरैर्ब्राह्मणोत्तमैः ॥

प्रेषितो मध्यगस्तत्र गर्तातीर्थसमुद्भवः ॥ १ ॥

रेरे मध्यग गत्वा त्वं ब्रूहि तं कुपितामहम् ॥

विप्रवृत्ति प्रहंतारं नीतिमार्गविवर्जितम् ॥ २ ॥

एतत्क्षेत्रं प्रदत्तं नः पूर्वेषां च द्विजन्मनाम् ॥

महेश्वरेण तुष्टेन पूरिते सर्पजे बिले ॥ ३ ॥

तस्य दत्तस्य चाद्यैव पितामहशतं गतम् ॥

पंचोत्तरमसन्दिग्धं यावत्त्वं कुपितामह ॥ ४ ॥

न केनापि कृतोऽस्माकं तिरस्कारो यथाऽधुना ॥

त्वां मुक्त्वा पापकर्माणं न्यायमार्गविवर्जितम् ॥ ५ ॥

नागरैर्ब्राह्मणैर्बाह्यं योऽत्र यज्ञं समाचरेत् ॥

श्राद्धं वा स हि वध्यः स्यात्सर्वेषां च द्विजन्मनाम् ॥ ६ ॥

न तस्य जायते श्रेयस्तत्समुत्थं कथंचन ॥

एतत्प्रोक्तं तदा तेन यदा स्थानं ददौ हि नः ॥ ७ ॥

तस्माद्यत्कुरुषे यज्ञं ब्राह्मणैर्नागरैः कुरु ॥

नान्यथा लप्स्यसे कर्तुं जीवद्भिर्नागरैर्द्विजैः ॥ ८ ॥

एवमुक्तस्ततो गत्वा मध्यगो यत्र पद्मजः ॥

यज्ञमण्डपदूरस्थो ब्राह्मणैः परिवारितः ॥ ९ ॥

यत्प्रोक्तं नागरैः सर्वैः सविशेषं तदा हि सः ॥

तच्छ्रुत्वा पद्मजः प्राह सांत्वपूर्वमिदं वचः ॥ ६.१८१.१० ॥

मानुषं भावमापन्न ऋत्विग्भिः परिवारितः ॥

त्वया सत्यमिदं प्रोक्तं सर्वं मध्यगसत्तम ॥ ११ ॥

किं करोमि वृताः सर्वे मया ते यज्ञकर्मणि ॥

ऋत्विजोऽध्वर्यु पूर्वा ये प्रमादेन न काम्यया ॥ १२ ॥

तस्मादानय तान्सर्वानत्र स्थाने द्विजोत्तमान् ॥

अनुज्ञातस्तु तैर्येन गच्छामि मखमण्डपे ॥ १३ ॥ ॥

॥ मध्यग उवाच ॥ ॥

त्वं देवत्वं परित्यज्य मानुषं भावमाश्रितः ॥

तत्कथं ते द्विजश्रेष्ठाः समागच्छंति तेंऽतिकम् ॥ १४ ॥

श्रेष्ठा गावः पशूनां च यथा पद्मसमुद्भव ॥

विप्राणामिह सर्वेषां तथा श्रेष्ठा हि नागराः ॥ १५ ॥

तत्माच्चेद्वांछसि प्राप्तिं त्वमेतां यज्ञसंभवाम् ॥

तद्भक्त्यानागरान्सर्वान्प्रसादय पितामह ॥ १६ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा पद्मजो भीत ऋत्विग्भिः परिवारितः ॥

जगाम तत्र यत्रस्था नागराः कुपिता द्विजाः ॥१७॥

प्रणिपत्य ततः सर्वान्विनयेन समन्वितः ॥

प्रोवाच वचनं श्रुत्वा कृतांजलिपुटः स्थितः॥१८॥

जानाम्यहं द्विजश्रेष्ठाः क्षेत्रेऽस्मिन्हाट केश्वरे ॥

युष्मद्बाह्यं वृथा श्राद्धं यज्ञकर्म तथैव च ॥ १९ ॥

कलिभीत्या मयाऽऽनीतं स्थानेऽस्मिन्पुष्करं निजम् ॥

तीर्थं च युष्मदीयं च निक्षेपोऽ यंसमर्पितः ॥ ६.१८१.२० ॥

ऋत्विजोऽमी समानीता गुरुणा यज्ञसिद्धये ॥

अजानता द्विजश्रेष्ठा आधिक्यं नागरात्मकम् ॥ २१ ॥

तस्माच्च क्षम्यतां मह्यं यतश्च वरणं कृतम् ॥

एतेषामेव विप्राणामग्निष्टोमकृते मया ॥ २२ ॥

एतच्च मामकं तीर्थं युष्माकं पापनाशनम् ॥

भविष्यति न सन्देहः कलिकालेऽपि संस्थिते ॥ २३ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यदि त्वं नागरैर्बाह्यं यज्ञं चात्र करिष्यसि ॥

तदन्येऽपि सुराः सर्वे तव मार्गानुयायि नः ॥

भविष्यन्ति तथा भूपास्तत्कार्यो न मखस्त्वया ॥ २४ ॥

यद्येवमपि देवेश यज्ञकर्म करिष्यसि ॥

अवमन्य द्विजान्सर्वाक्षिप्रं गच्छास्मदंतिकात् ॥ २५ ॥

॥ ब्रह्मोवाच ॥ ॥

अद्यप्रभृति यः कश्चिद्यज्ञमत्र करिष्यति ॥

श्राद्धं वा नागरैर्बाह्यं वृथा तत्संभविष्यति ॥२६॥

नागरोऽपि च यो न्यत्र कश्चिद्यज्ञं करिष्यति ॥

एतत्क्षेत्रं परित्यज्य वृथा तत्संभविष्यति ॥ २७ ॥

मर्यादेयं कृता विप्रा नागराणां मयाऽधुना ॥

कृत्वा प्रसादमस्माकं यज्ञार्थं दातुमर्हथ ॥

अनुज्ञां विधिवद्विप्रा येन यज्ञं करोम्यहम् ॥ २८ ॥

॥ सूत उवाच ॥ ॥

ततस्तैर्ब्राह्मणैस्तुष्टैरनुज्ञातः पितामहः ॥

चकार विधिवद्यज्ञं ये वृता ब्राह्मणाश्च तैः ॥ २९ ॥

विश्वकर्मा समागत्य ततो मस्तकमण्डनम् ॥

चकार ब्राह्मणश्रेष्ठा नागराणां मते स्थितः ॥ ६.१८१.३० ॥

ब्रह्मापि परमं तोषं गत्वा नारदमब्रवीत् ॥

सावित्रीमानय क्षिप्रं येन गच्छामि मण्डपे ॥ ३१ ॥

वाद्यमानेषु वाद्येषु सिद्धकिन्नरगुह्यकैः ॥

गन्धर्वैर्गीतसंसक्तैर्वेदोच्चारपरैर्द्विजैः ॥

अरणिं समुपादाय पुलस्त्यो वाक्यमब्रवीत् ॥ ३२ ॥

पत्नी ३ पत्नीति विप्रेन्द्राः प्रोच्चैस्तत्र व्यवस्थिताः ॥ ३३ ॥

एतस्मिन्नंतरे ब्रह्मा नारदं मुनिसत्तमम्॥

संज्ञया प्रेषयामास पत्नी चानीयतामिति ॥ ३४ ॥

सोऽपि मंदं समागत्य सावित्रीं प्राह लीलया ॥

युद्धप्रियोंऽतरं वांछन्सावित्र्या सह वेधसः [। ३५ ॥

अहं संप्रेषितः पित्रा तव पार्श्वे सुरेश्वरि ॥

आगच्छ प्रस्थितः स्नातः सांप्रतं यज्ञमण्डपे ॥ ३६ ॥

परमेकाकिनी तत्र गच्छमाना सुरेश्वरि ॥

कीदृग्रूपा सदसि वै दृश्यसे त्वमनाथवत् ॥ ३७ ॥

तस्मादानीयतां सर्वा याः काश्चिद्देवयोषितः ॥

याभिः परिवृता देवि यास्यसि त्वं महामखे ॥ ३८ ॥

एवमुक्त्वा मुनिश्रेष्ठो नारदो मुनिसत्तमः ॥

अब्रवीत्पितरं गत्वा तातांबाऽऽकारिता मया ॥ ३९ ॥

परं तस्याः स्थिरो भावः किंचित्संलक्षितो मया ॥

तस्य तद्वचनं श्रुत्वा ततो मन्युसमन्वितः॥६.१८१.४॥।

पुलस्त्यं प्रेषयामास सावित्र्या सन्निधौ ततः ॥

गच्छ वत्स त्वमानीहि स्थानं सा शिथिलात्मिका ॥

सोमभारपरिश्रांतं पश्य मामूर्ध्वसंस्थितम्॥४१॥

एष कालात्ययो भावि यज्ञकर्मणि सांप्रतम्॥

यज्ञयानमुहूर्तोऽयं सावशेषो व्यवस्थितः ॥४२॥

तस्य तद्वचनं श्रुत्वा पुलस्त्यः सत्वरं ययौ ॥

सावित्री तिष्ठते यत्र गीतनृत्यसमाकुला ॥ ४३ ॥

ततः प्रोवाच किं देवि त्वं तिष्ठसि निराकुला ॥

यज्ञयानोचितः कालः सोऽयं शेषस्तु तिष्ठति ॥४४॥

तस्मादागच्छ गच्छामस्तातः कृच्छ्रेण तिष्ठति॥

सोमभारार्दितश्चोर्ध्वं सर्वैर्देवैः समावृतः ॥४५॥

॥ सावित्र्युवाच ॥ ॥

सर्वदेववृतस्तात तव तातो व्यवस्थितः ॥

एकाकिनी कथं तत्र गच्छाम्यहमनाथवत् ॥४६॥

तद्ब्रूहि पितरं गत्वा मुहूर्तं परिपाल्यताम् ॥४७॥

यावदभ्येति शक्राणी गौरी लक्ष्मीस्तथा पराः॥

देवकन्याः समाजेऽत्र ताभिरेष्याम्यहऽद्रुतम् ॥ ४८ ॥

सर्वासां प्रेषितो वायुर्निमत्रणकृते मया ॥

आगमिष्यन्ति ताः शीघ्रमेवं वाच्यः पिता त्वया ॥४९॥

॥ सूत उवाच ॥ ॥

सोऽपि गत्वा द्रुतं प्राह सोमभारार्दितं विधिम्॥

नैषाभ्येति जगन्नाथ प्रसक्ता गृहकर्मणि ॥ ६.१८१.५० ॥
सा मां प्राह च देवानां पत्नीभिः सहिता मखे ॥
अहं यास्यामि तासां च नैकाद्यापि प्रदृश्यते ॥ ५१ ॥
एवं ज्ञात्वा सुरश्रेष्ठ कुरु यत्ते सुरोचते ॥
अतिक्रामति कालोऽयं यज्ञयानसमुद्भवः ॥
तिष्ठते च गृहव्यग्रा सापि स्त्री शिथिलात्मिका ॥ ५२ ॥
तच्छ्रुत्वा वचनं तस्य पुलस्त्यस्य पितामहः ॥
समीपस्थं तदा शक्रं प्रोवाच वचनं द्विजाः ॥ ५३ ॥
॥ ब्रह्मोवाच ॥ ॥
शक्र नायाति सावित्री सापि स्त्री शिथिलात्मिका ॥
अनया भार्यया यज्ञो मया कार्योऽयमेव तु ॥ ५४ ॥
गच्छ शक्र समानीहि कन्यां कांचित्त्वरान्वितः ॥
यावन्न क्रमते कालो यज्ञयानसमुद्भवः ॥ ५५ ॥
पितामहवचः श्रुत्वा तदर्थं कन्यका द्विजाः ॥
शक्रेणासादिता शीघ्रं भ्रममाणा समीपतः ॥ ५६ ॥
अथ तक्रघटव्यग्रमस्तका तेन वीक्षिता ॥
कन्यका गोपजा तन्वी चंद्रास्या पद्मलोचना ॥ ५७ ॥
सर्वलक्षणसंपूर्णा यौवनारंभमाश्रिता ॥
सा शक्रेणाथ संपृष्टा का त्वं कमललोचने ॥ ५८ ॥
कुमारी वा सनाथा वा सुता कस्य ब्रवीहि नः ॥ ५९ ॥
॥ कन्यो वाच ॥ ॥
गोपकन्यास्मि भद्रं ते तक्रं विक्रेतुमागता ॥
यदि गृह्णासि मे मूल्यं तच्छीघ्रं देहि मा चिरम् ॥ ६.१८१.६० ॥
तच्छ्रुत्वा त्रिदिवेन्द्रोऽपि मत्वा तां गोपकन्यकाम् ॥
जगृहे त्वरया युक्तस्तक्रं चोत्सृज्य भूतले ॥ ६१ ॥
अथ तां रुदतीं शक्रः समादाय त्वरान्वितः ॥
गोवक्त्रेण प्रवेश्याथ गुह्येनाकर्षयत्ततः ॥ ६२ ॥
एवं मेध्यतमां कृत्वा संस्नाप्य सलिलैः शुभैः ॥

ज्येष्ठकुण्डस्य विप्रेन्द्राः परिधाय्य सुवाससी ॥ ६३ ॥

ततश्च हर्षसंयुक्तः प्रोवाच चतुराननम् ॥

द्रुतं गत्वा पुरो धृत्वा सर्वदेवसमागमे ॥ ६४ ॥

कन्यकेयं सुरश्रेष्ठ समानीता मयाऽधुना ॥

तवार्थाय सुरूपांगी सर्वलक्षणलक्षिता ॥ ६५ ॥

गोपकन्या विदित्वेमां गोवक्त्रेण प्रवेश्य च ॥

आकर्षिता च गुह्येन पावनार्थं चतुर्मुख ॥ ६६ ॥

॥ श्रीवासुदेव उवाच ॥ ॥

गवां च ब्राह्मणानां च कुलमेकं द्विधा कृतम् ॥

एकत्र मंत्रास्तिष्ठंति हविरन्यत्र तिष्ठति ॥ ६७ ॥

धेनूदराद्विनिष्क्रांता तज्जातेयं द्विजन्मनाम् ॥

अस्याः पाणिग्रहं देव त्वं कुरुष्व मखाप्तये ॥ ६८

यावन्न चलते कालो यज्ञयानसमुद्भवः ॥ ६९ ॥

॥ रुद्र उवाच ॥ ॥

प्रविष्टा गोमुखे यस्मादपानेन विनिर्गता ॥

गायत्रीनाम ते पत्नी तस्मादेषा भविष्यति ॥ ६.१८१.७० ॥

॥ ब्रह्मोवाच ॥ ॥

वदन्तु ब्राह्मणाः सर्वे गोपकन्याप्यसौ यदि ॥

संभूय ब्राह्मणीश्रेष्ठा यथा पत्नी भवेन्मम ॥ ७१ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

एषा स्याद्ब्राह्मणश्रेष्ठा गोपजातिविवर्जिता ॥

अस्मद्वाक्याच्चतुर्वक्त्र कुरु पाणिग्रहं द्रुतम् ॥ ७२ ॥

॥ सूत उवाच ॥ ॥

ततः पाणिग्रहं चक्रे तस्या देवः पितामहः ॥

कृत्वा सोमं ततो मूर्ध्नि गृह्योक्तविधिना द्विजाः ॥ ७३ ॥

संतिष्ठति च तत्रस्था महादेवी सुपावनी ॥

अद्यापि लोके विख्याता धनसौभाग्यदायिनी ॥ ॥ ७४ ॥

यस्तस्यां कुरुते मर्त्यः कन्यादानं समाहितः ॥

समस्तं फलमाप्नोति राजसूयाश्वमेधयोः ॥ ७९ ॥

कन्या हस्तग्रहं तत्र याऽऽप्नोति पतिना सह ॥

सा स्यात्पुत्रवती साध्वी सुखसौभाग्यसंयुता ॥ ७६ ॥

पिंडदानं नरस्तस्यां यः करोति द्विजोत्तमाः ॥

पितरस्तस्य संतुष्टास्तर्पिताः पितृतीर्थवत् ॥ ७७ ॥

इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गायत्रीविवाहे गायत्रीतीर्थमाहात्म्यवर्णनंनामैकाशीत्युत्तरशततमोअध्यायः ॥ १८१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८२

https://sa.wikisource.org/s/foe


॥ सूत उवाच ॥ ॥

एवं पत्नीं समासाद्य गायत्रीं चतुराननः ॥

संप्रहृष्टमना भूत्वा प्रस्थितो यज्ञमण्डपम् ॥ १ ॥

गायत्र्यपि समादाय मूर्ध्नि तामरणिं मुदा ॥

प्रतस्थे संपरित्यज्य गोपभावं विगर्हितम् ॥ २ ॥

वाद्यमानेषु वाद्येषु ब्रह्मघोषे दिवंगते ॥

कलं प्रगायमानेषु गन्धर्वेषु समंततः ॥ ३ ॥

सर्वदेवद्विजोपेतः संप्राप्तो यज्ञमण्डपे ॥

गायत्र्या सहितो ब्रह्मा मानुषं भावमाश्रितः ॥ ४ ॥

एतस्मिन्नंतरे चक्रे केशनिर्वपणं विधेः ॥

विश्वकर्मा नखानां च गायत्र्यास्तदनंतरम् ॥ ५ ॥

औदुम्बरं ततो दण्डं पुलस्त्योऽस्मै समाददे ॥

एणशृंगान्वितं चर्म मन्त्रवद्विजसत्तमाः ॥ ६ ॥

पत्नीशालां गृहीत्वा च गायत्रीं मौनधारिणीम् ॥

मेखलां निदधे चान्यां कट्यां मौंजीमयीं शुभाम् ॥ ७ ॥

ततश्चक्रे परं कर्म यदुक्तं यज्ञमंडपे ॥

ऋत्विग्भिः सहितो वेधा वेदवाक्यसमादृतः ॥ ८ ॥

प्रवर्ग्ये जायमाने च तत्राश्चर्यमभून्महत् ॥

जाल्मरूपधरः कश्चिद्दिग्वासा विकृताननः ॥ ९ ॥

कपालपाणिरायातो भोजनं दीयतामिति ॥

निषेध्यमानोऽपि च तैः प्रविष्टो याज्ञिकं सदः ॥

स कृत्वाऽटनमन्याय्यं तर्ज्यमानोऽपि तापसैः ॥ ६.१८२.१० ॥

॥ सदस्या ऊचुः ॥ ॥

कस्मात्पापसमेतस्त्वं प्रविष्टो यज्ञमण्डपे ॥

कपाली नग्नरूपो यो यज्ञकर्मविवर्जितः ॥ ११ ॥

तस्माद्गच्छ द्रुतं मूढ यावद्ब्रह्मा न कुप्यति ॥

तथाऽन्ये ब्राह्मणश्रेष्ठास्तथा देवाः सवासवाः ॥ १२ ॥

॥ जाल्म उवाच ॥ ॥

ब्रह्मयज्ञमिमं श्रुत्वा दूरादत्र समागतः ॥

बुभुक्षितो द्विजश्रेष्ठास्तत्किमर्थं विगर्हथ ॥ १३ ॥

दीनांधैः कृपणैः सवैर्स्तर्पितैः क्रतुरुच्यते ॥

अन्यथाऽसौ विनाशाय यदुक्तं ब्राह्मणैर्वचः ॥१४॥

अन्नहीनो दहेद्राष्टं मन्त्रहीनस्तु ऋत्विजः ॥

याज्ञिकं दक्षिणा हीनो नास्ति यज्ञसमो रिपुः ॥ १५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यदि त्वं भोक्तुकामस्तु समायातो व्रज द्रुतम् ॥

एतस्यां सत्रशालायां भुञ्जते यत्र तापसाः ॥

दीनान्धाः कृपणाश्चैव ततः क्षुत्क्षामकंठिताः ॥ १६ ॥

अथवा धनकामस्त्वं वस्त्रकामोऽथ तापस ॥

व्रज वित्तपतिर्यत्र दानशालां समाश्रितः ॥ १७ ॥

अनिंद्योऽयं महामूर्ख यज्ञः पैतामहो यतः ॥

अर्चितः सर्वतः पुण्यं तत्किं निन्दसि दुर्मते ॥ १८ ॥

॥ सूत उवाच ॥ ॥

एवमुक्तः कपालं स परिक्षिप्य धरातले ॥

जगामादर्शनं सद्यो दीपवद्द्विजसत्तमाः ॥ १९ ॥

॥ ऋत्विज ऊचुः ॥ ॥

कथं यज्ञक्रिया कार्या कपाले सदसि स्थिते ॥

परिक्षिपथ तस्मात्तु एवमूचुर्द्विजोत्तमाः ॥ ६.१८२.२० ॥

अथैको बहुधा प्रोक्तः सदस्यैश्च द्विजोत्तमैः ॥

दण्डकाष्ठं समुद्यम्य प्रचिक्षेप बहिस्तथा ॥ २१ ॥

अथान्यत्तत्र संजातं कपालं तादृशं पुनः ॥

तस्मिन्नपि तथा क्षिप्ते भूयोऽन्यत्समपद्यत ॥ २२ ॥

एवं शतसहस्राणि ह्ययुतान्यर्बुदानि च ॥

तत्र जातानि तैर्व्याप्तो यज्ञवाटः समंततः ॥ २३ ॥
हाहाकारस्ततौ जज्ञे समस्ते यज्ञमण्डपे ॥
दृष्ट्वा कपालसंघांस्तान्यज्ञ कर्मप्रदूषकान्॥ २४ ॥
अथ संचिंतयामास ध्यानं कृत्वा पितामहः ॥
हरारिष्टं समाज्ञाय तत्सर्वं हृष्टरूपधृक् ॥ २५ ॥
कृतांजलिपुटो भूत्वा ततः प्रोवाच सादरम्॥
महेश्वरं समासाद्य यज्ञवाटसमाश्रितम्॥ २६ ॥
किमिदं युज्यते देव यज्ञेऽस्मिन्कर्मणः क्षतिः ॥
तस्मात्संहर सर्वाणि कपालानि सुरेश्वर ॥ २७ ॥
यज्ञकर्मविलोपोऽयं मा भूत्त्वयि समागते ॥ २८ ॥
ततः प्रोवाच संक्रुद्धो भगवाञ्छशिशेखरः ॥
तन्ममेष्टतमं पात्रं भोजनाय सदा स्थितम्॥ २९ ॥
एते द्विजाधमाः कस्माद्विद्विषंतिपितामह ॥
तथा न मां समुद्दिश्य जुहवुर्जातवेदसि ॥ ६.१८२.३० ॥
यथान्यादेवता स्तद्वन्मन्त्रपूतं हविर्विधे ॥
तस्माद्यदि विधे कार्या समाप्तिर्यज्ञकर्मणि ॥ ३१ ॥
तत्कपालाश्रितं हव्यं कर्तव्यं सकलं त्विदम् ॥
तथा च मां समु द्दिश्य विशषाज्जातवेदसि ॥ ३२ ॥
होतव्यं हविरेवात्र समाप्तिं यास्यति क्रतुः ॥
नान्यथा सत्यमेवोक्तं तवाग्रे चतुरानन ॥ ३३ ॥
॥ पितामह उवाच ॥ ॥
रूपाणि तव देवेश पृथग्भूतान्यनेकशः ॥
संख्ययया परिहीनानि ध्येयानि सकलानि च ॥ ३४ ॥
एतन्महाव्रतं रूपमाख्यातं ते त्रिलोचन ॥
नैवं च मखकर्म स्यात्तत्रैव च न युज्यते ॥ ३५ ॥
अद्यैतत्कर्म कर्तुं च श्रुतिबाह्यं कथंचन ॥
तव वाक्यमपि त्र्यक्ष नान्यथा कर्तुमु त्सहे ॥ ३६ ॥
मृन्मयेषु कपालेषु हविः श्राप्यं सुरेश्वर ॥

अद्यप्रभृति यज्ञेषु पुरोडाशात्मिकं द्विजैः ॥

तवोद्देशेन देवेश होतव्यं शतरुद्रि यम् ॥ ३७ ॥

विशेषात्सर्वयज्ञेषु जप्यं चैव विशेषतः ॥

कपालानां तु द्वारेण त्वया रूपं निजं कृतम् ॥ ३८ ॥

प्रकटं च सुरश्रेष्ठ कपाले श्वरसंज्ञितः ॥

तस्मात्त्वं भविता रुद्र क्षेत्रेऽस्मिन्द्वादशोऽपरः ॥ ३९ ॥

अत्र यज्ञं समारभ्य यस्त्वां प्राक्पूजयिष्यति ॥

अविघ्नेन मख स्तस्य समाप्तिं प्रव्रजिष्यति ॥ ६.१८२.४० ॥

एवमुक्ते ततस्तेन कपालानि द्विजोत्तमाः ॥

तानि सर्वाणि नष्टानि संख्यया रहितानि च ॥ ४१ ॥

ततो हृष्टश्चतुर्वक्त्रः स्थापयामास तत्क्षणात् ॥

लिगं माहेश्वरं तत्र कपालेश्वरसंज्ञितम् ॥ ४२ ॥

अब्रवीच्च ततो वाक्यं यश्चैतत्पूजयिष्यति ॥

मम कुण्डत्रये स्नात्वा स यास्यति परां गतिम्॥ ४३ ॥

शुक्लपक्षे चतुर्दश्यां कार्तिके जागरं तु यः ॥

करिष्यति पुनश्चास्य लिंगस्य सुसमाहितः ॥

आजन्मप्रभवात्पापात्स विमुक्तिमवाप्स्यति ॥ ४४ ॥

एवमुक्तेऽथ विधिना प्रहृष्टस्त्रिपुरांतकः ॥

यज्ञमण्डपमासाद्य प्रस्थितो वेदिसंनिधौ ॥ ४५ ॥

ब्राह्मणैश्च ततः कर्म प्रारब्धं यज्ञसम्भवम् ॥

विस्मयोत्फुल्लनयनैर्नमस्कृत्य महेश्वरम् ॥ ४६ ॥

॥ सूत उवाच ॥ ॥

एवं च यज तस्तस्य चतुर्वक्त्रस्य तत्र च ॥

ऋषीणां कोटिरायाता दक्षिणापथवासिनाम् ॥ ४७ ॥

श्रुत्वा पैतामहं यज्ञं कौतुकेन समन्विताः ॥

कीदृशो भविता यज्ञो दीक्षितो यत्र पद्मजः ॥ ४८८ ॥

कीदृक्क्षेत्रं च तत्पुण्यं हाटकेश्वरसंज्ञितम् ॥

कीदृशास्ते च विप्रेन्द्रा ऋत्विजस्तत्र ये स्थिताः ॥ ४९ ॥

अथ ते सुपरिश्रांता मध्यंदिनगते रवौ ॥

रविवारेण संप्राप्ते नक्षत्रे चाश्विसंस्थिते ॥ ६.१८२.५० ॥

वैवस्वत्यां तिथौ चैव प्राप्ता घर्मपीडिताः ॥

कंचिज्जलाशयं प्राप्य प्रविष्टाः सलिलं शुभम् ॥ ५१ ॥

शंकुकर्णा महाकर्णा वक्रनासास्तथापरे ॥

महोदरा बृहद्दन्ता दीर्घोष्ठाः स्थूलमस्तकाः॥५२॥

चिपिटाक्षास्तथा चान्ये दीर्घग्रीवास्तथा परे॥

कृष्णांगाः स्फुटितैः पादैर्नखैर्दीर्घैः समुत्थितैः॥५३॥

ततो यावद्विनिष्क्रांताः प्रपश्यन्ति परस्परम्॥

तावद्वैरूपस्यनिर्मुक्ताः संजाताः कामसन्निभाः॥५४॥

ततो विस्मयमापन्ना मिथः प्रोचुः प्रहर्षिताः॥

रूपव्यत्ययमालोक्य ज्ञात्वा तीर्थं तदुत्तमम्॥

अत्र स्नानादिदं रूपमस्माभिः प्राप्तमुत्तमम्॥५५॥

यस्मात्तस्मादिदं तीर्थं रूपतीर्थं भविष्यति॥

त्रैलोक्ये सकले ख्यातं सर्वपातकनाशनम्॥५६॥

येऽत्र स्नानं करिष्यन्ति श्रद्धया परया युताः॥

सुरूपास्ते भविष्यंति सदा जन्मनि जन्मनि॥५७॥

पितॄंश्च तर्पयिष्यन्ति य त्र श्रद्धासमन्विताः॥

जलेनापि गयाश्राद्धात्ते लप्स्यन्ते धिकं फलम्॥५८॥

येऽत्र रत्नप्रदानं च प्रकरिष्यन्ति मानवाः॥

भविष्यंति न संदेहो राजानस्ते भवेभवे॥५९॥

स्थास्यामो वयमत्रैव सांप्रतं कृतनिश्चयाः॥

न यास्यामो वयं तीर्थं यद्यपि स्यात्सुशोभनम्॥६.१८२.६०॥

एवमुक्त्वाऽथ व्यभजंस्तत्सर्वं मुनयश्च ते॥

यज्ञोपवीतमात्राणि स्वानि तीर्थानि चक्रिरे॥६१॥

सूत उवाच॥

अद्यापि च द्विजश्रेष्ठास्तत्र तीर्थे जगद्गुरुः॥

प्रथमं स्पृशते तोयं नित्यं स्याद्दयितं शुभम्॥६२॥

निष्कामस्तु पुनर्मर्त्यो यः स्नानं तत्र श्रद्धया।.

कुरुते स परं श्रेयः प्राप्नुयात्सिद्धिलक्षणम्॥६३॥

एवं ते मुनयः सर्वे विभज्य तन्महत्सरः॥

सायंतनं च तत्रैव कृत्वा कर्म सुविस्तरम्॥६४.॥

ततो निशामुखे प्राप्ता यत्र देवः पितामहः॥

दीक्षितस्त्वथ मौनी च यज्ञमण्डपसंश्रितः॥६५॥

तं प्रणम्य ततः सर्वे गता यत्रर्त्विजः स्थिताः॥

उपविष्टाः परिश्रान्ता दिवा यज्ञियकर्मणा॥६६॥

इन्द्रादिकैः सुरैर्भक्त्या मृग्यमानाङ्घ्रयः स्थिताः॥

अभिवाद्याथ तान्सर्वानुपविष्टास्ततो ग्रतः॥६७॥

चक्रुश्चाथ कथाश्चित्रा यज्ञकर्मसमुद्भवाः॥

सोमपानस्य संबन्धो व्यत्ययं च समुद्भवम्॥६८॥

उद्गातुः प्रभवं चैव तथाध्वर्योः परस्परम्॥

प्रोचुस्ते तत्त्वमाश्रित्य तथान्ये दूषयन्ति तत्॥६९॥

अन्ये मीमांसकास्तत्र कोपसंरक्तलोचनाः।.

हन्युस्तेषां मतं वादमाश्रिता वाग्विचक्षणाः॥ ६.१८२.७०॥

परिशिष्टविदश्चान्ये मध्यस्था द्विजसत्तमाः॥

प्रोचुर्वादं परित्यज्य साभिप्रायं यथोदितम्॥७१॥

महावीरपुरोडाशचयनप्रमुखांस्तथा॥

विवादांश्चक्रिरे चान्ये स्वंस्वं पक्षं समाश्रिताः॥७२॥

एवं सा रजनी तेषामतिक्रान्ता द्विजन्मनाम्।७३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये रूपतीर्थोत्पत्तिपूर्वकप्रथमयज्ञदिवसवृत्तान्तवर्णनंनाम द्व्यशीत्युत्तरशततमोऽध्यायः॥१८२॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८३

https://sa.wikisource.org/s/fof

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

सूत उवाच॥

द्वितीये दिवसे प्राप्ते यज्ञकर्मसमुद्भवे॥

द्वादश्यामभवत्तत्र शृणुध्वं तद्द्विजोत्तमाः॥

वृत्तान्तं सर्वदेवानां महाविस्मयकारकम् ॥ १ ॥

मखकर्मणि प्रारब्ध ऋत्विग्भिर्वेदपारगैः ॥

जलसर्पं समादाय बटुः कश्चित्सुनर्मकृत् ॥ २ ॥

प्रविश्याथ सदस्तत्र तं सर्पं ब्राह्मणान्तिके ॥

चिक्षेप प्रहसंश्चैव सर्वदुःखभयंकरम् ॥ ३ ॥

ततस्तु डुण्डुभस्तूर्णं भ्रममाण इतस्ततः ॥

विप्राणां सदसिस्थानां सक्तानां यज्ञकर्मणि ॥ ४ ॥

अहो होतुः स्थिते प्रैषे दीर्घसत्रसमुद्भवे ॥

स सर्पो वेष्टयामास तस्य गात्रं समंततः ॥ ५ ॥

न चचाल निजस्थानात्प्रायश्चित्तविभीषया ॥

नोवाच वचनं सोऽत्र चयनन्यस्तलोचनः ॥ ६ ॥

हाहाकारो महाञ्जज्ञे एतस्मिन्नंतरे द्विजाः ॥

तस्मिन्सदसि विप्राणां विषा ढ्याहिप्रशंकया ॥ ७ ॥

हाहाकारो महानासीत्तं दृष्ट्वा सर्पवेष्टितम् ॥

तस्य पुत्रो विनीतात्मा मैत्रावरुणकर्मणि ॥ ९ ॥

संस्थितस्तेन संदृष्टः पिता सर्पाभिवेष्टितः ॥

ज्ञात्वा तु चेष्टितं तस्य भये सर्पसमुद्भवे ॥

शशाप क्रोधसंयुक्तस्ततस्तं स बटुं मुनिः ॥ ९ ॥

यस्मात्पाप त्वया सर्पः क्षिप्तः सदसि दुर्मते ॥

तस्माद्भव द्रुतं सर्पो मम वाक्यादसंशयम् ॥ ६.१८३.१० ॥

॥ बटुरुवाच ॥ ॥

हास्येन जलसर्पोऽयं मया मुक्तोऽत्र लीलया ॥

न ते तातं समुद्दिश्य तत्किं मां शपसि द्विज ॥ ११ ॥
एतस्मिन्नंतरे मुक्त्वा तस्य गात्रं स पन्नगः ॥
जगामान्यत्र तस्यापि सर्पत्वं समपद्यत ॥ १२ ॥
सोऽपि सर्पत्वमापन्नः सनातनसुतो बटुः ॥
दुःखशोकसमापन्नो ब्राह्मणैः परिवेष्टितः ॥ १३ ॥
अथ गत्वा भृगुं सोऽपि बाष्पव्याकुललोचनः ॥
प्रोवाच गद्गदं वाक्यं प्रणिपत्य पुरःसरः ॥ १४ ॥
सनातनसुतश्चास्मि पौत्रस्तु परमेष्ठिनः ॥
शप्तस्तव सुतेनास्मि च्यवनेन महात्मना ॥ १५ ॥
निर्दोषो ब्राह्मणश्रेष्ठ तस्माच्छापात्प्ररक्ष माम् ॥
तच्छ्रुत्वा च्यवनं प्राह कृपाविष्टो भृगुः स्वयम् ॥१६॥
अयुक्तं विहितं तात यच्छप्तोऽयं बटुस्त्वया॥
न मां धर्षयितुं शक्तो विषाढ्योऽपि भुजंगमः ॥१७॥
किं पुनर्जलसर्पोऽयं निर्विषो रज्जुसंनिभः ॥
न मामुद्दिश्य निर्मुक्तः सर्पोऽनेन द्विजन्मना ॥
शापमोक्षं कुरुष्वास्य तस्माच्छीघ्रं द्विजन्मनः ॥ १९ ॥
॥ च्यवन उवाच ॥ ॥
यदि त्यजति मर्यादामब्धिः शैत्यं व्रजेद्रविः ॥
उष्णत्वं च क्षपानाथस्तन्मे स्यादनृतं वचः ॥ १९ ॥
तच्छ्रुत्वा वचनं तस्य स्वयमेव पितामहः ॥
तत्रायातः स्थितो यत्र स पौत्रः सर्परूपधृक् ॥ ६.१८३.२० ॥
प्रोवाच न विषादस्ते पुत्र कार्यः कथंचन ॥
यत्सर्पत्वमनुप्राप्तः शृणुष्वात्र वचो मम ॥ २१ ॥
पुरा संस्रष्टुकामोऽहं नागानां नवमं कुलम् ॥
तद्भविष्यति त्वत्पार्श्वात्समर्यादं धरातले ॥ २२ ॥
मन्त्रौषधियुजां पुंसां न पीडामाचरिष्यति ॥
संप्राप्स्यति परां पूजां समस्ते जगतीतले ॥ २३ ॥
अत्राऽस्ति सुशुभं तोयं हाटकेश्वरसंज्ञिते ॥

क्षेत्रे तत्र समावासः पुत्र कार्यस्त्वया सदा ॥ २४ ॥

तत्रस्थस्य तपस्थस्य नागः कर्कोटको निजम् ॥

तव दास्यति सत्कन्यां ततः सृष्टिर्भविष्यति ॥ २५ ॥

नवमस्य कुलस्यात्र समर्यादस्य भूतले ॥

श्रावणे कृष्णपक्षे तु संप्राप्ते पंचमीदिने ॥ २६ ॥

संप्राप्स्यति परां पूजां पृथिव्यां नवमं कुलम् ॥

अद्यप्रभृति तत्तोयं नागतीर्थमिति स्मृतम् ॥२७॥

ख्यातिं यास्यति भूपृष्ठे सर्वपातकनाशनम्॥

येऽत्र स्नानं करिष्यंति संप्राप्ते पंचमीदिने ॥२८॥

न तेषां वत्सरंयावद्भविष्यत्यहिजं भयम् ॥

विषार्द्दितस्तु यो मर्त्यस्तत्र स्नानं करिष्यति ॥२९॥

तत्क्षणान्निर्विषो भूत्वा संप्राप्स्यति परं सुखम् ॥

पुत्रकामा तु या नारी पंचम्यां भास्करोदये ॥६.१८३.३॥।

करिष्यति तथा स्नानं फलहस्ता प्रभक्तितः ॥

भविष्यति च सा शीघ्रं वंध्याऽपि च सुपुत्रिणी ॥३१॥

॥ सूत उवाच ॥ ॥

एवं प्रवदतस्तस्य ब्रह्मणोऽव्यक्तजन्मनः॥

अन्ये नागाः समायातास्तत्र यज्ञे निमंत्रिताः ॥ ३२ ॥

वासुकिस्तक्षकश्चैव पुण्डरीकः कृशोदरः ॥

कम्बलाश्वतरौ नागौ शेषः कालिय एव च ॥ ३३ ॥

ते प्रणम्य वचः प्रोचुः प्रोच्चैर्देवं पितामहम् ॥

तवादेशाद्वयं प्राप्ता यज्ञेऽत्र प्रपितामह॥३४॥

साहाय्यार्थं तदादेशो दीयतां प्रपितामह॥

येन कुर्मो वयं शीघ्रं नागराज्ये ह्यधिष्ठिताः ॥३५॥

ब्रह्मोवाच ॥ साहाय्यमेतदस्माकं भवदीयं महोरगाः ॥

गत्वानेन समं शीघ्रं नागराजेन तिष्ठत॥३६॥

नागतीर्थे ततः स्थेयं सर्वैस्तत्र समास्थितैः ॥३७॥

यः कश्चिन्मम यज्ञेऽत्र दुष्टभावं समाश्रितः ॥

समागच्छति विघ्नाय रक्षणीयः स सत्वरम् ॥३८॥

राक्षसो वा पिशाचो वा भूतो वा मानुषोऽपि वा ॥

एतत्कृत्यतमं नागा मम यज्ञस्य रक्षणम् ॥ ३९ ॥

तथा यूयमपि प्राप्ते मासि भाद्रपदे तथा ॥

पंचम्यां कृष्णपक्षस्य तत्र पूजामवाप्स्यथ ॥ ६.१८३.४० ॥

॥ सूत उवाच ॥ ॥

बाढमित्येव ते प्रोच्य प्रणिपत्य पितामहम् ॥

सनातनसुतोपेता नागतीर्थं समाश्रिताः ॥ ४१

ततःप्रभृति तत्तीर्थं नागतीर्थ मिति स्मृतम् ॥

कामप्रदं च भक्तानां नराणां स्नानकारिणाम् ॥ ४२ ॥

यस्तत्र कुरुते स्नानं सकृद्भक्त्या समन्वितः ॥

नान्वयेऽपि भयं तस्य जाय ते सर्पसंभवम् ॥ ४३ ॥

तत्र यच्छति मिष्टान्नं द्विजानां सज्जनैः सह ॥

पूजयित्वा तु नागेंद्रान्सनातनपुरःसरान् ॥ ४४ ॥

सप्तजन्मांतरं यावन्न स दौःस्थ्यमवाप्नुयात् ॥

भूतप्रेतपिशाचानां शाकिनीनां विशेषतः ॥

न च्छिद्रं न च रोगाश्च नाधयो न रिपोर्भयम् ॥ ४५ ॥

यश्चैतच्छृणुयाद्भक्त्या वाच्यमानं द्विजोत्तमाः ॥

सोऽपि संवत्सरं यावत्पन्नगैर्न च पीड्यते ॥ ४६ ॥

सर्पदष्टस्य यस्यैतत्पुरतः पठ्यते भृशम् ॥

नागतीर्थस्य माहात्म्यं काल दष्टोऽपि जीवति ॥ ४७ ॥

पुस्तके लिखितं चैतन्नागतीर्थसमुद्भवम् ॥

माहात्म्यं तिष्ठते यत्र न सर्पस्तत्र तिष्ठति ॥ ४८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागतीर्थोत्पत्तिमाहात्म्यवर्णनंनाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८४



॥ ॥ सूत उवाच ॥ ॥
तृतीये च दिने प्राप्ते त्रयोदश्यां द्विजोत्तमाः ॥
प्रातःसवनमादाय ऋत्विजः सर्व एव ते ॥
स्वेस्वे कर्मणि संलग्ना यज्ञकृत्यसमुद्भवे ॥ १ ॥
ततः प्रवर्तते यज्ञस्तदा पैतामहो महान् ॥
सर्वकामसमृद्धस्तु सर्वैः समुदितो गुणैः ॥ २ ॥
दीयतां दीयतां तत्र भुज्यतां भुज्यतामिति ॥
एकः संश्रूयते शब्दो द्वितीयो द्विजसंभवः ॥ ३ ॥
नान्यस्तत्र तृतीयस्तु यज्ञे पैतामहे शुभे ॥
यो यं कामयते कामं हेमरत्नसमुद्भवम् ॥ ४ ॥
स तत्प्राप्नोत्यसंदिग्धं वांछिताच्च चतुर्गुणम् ॥
पक्वान्नस्य कृतास्तत्र दृश्यंते पर्वताः शुभाः ॥ ५ ॥
घृतक्षीर महानद्यो दानार्थं वित्तराशयः ॥
एतस्मिन्नंतरे प्राप्तः कश्चिज्ज्ञानी द्विजोत्तमाः ॥ ६ ॥
अतीतानागतान्वेत्ति वर्तमानं च यः सदा ॥
स ब्रह्माणं नमस्कृत्य निविष्टश्च तदग्रतः ॥ ७ ॥
कर्मांतरेषु विप्राणां स सर्वेषां द्विजोत्तमाः ॥
कथयामास यद्वृत्तं बाल्यात्प्रभृति कृत्स्नशः ॥ ८ ॥
ततस्त ऋत्विजः सर्वे कौतुकाविष्टचेतसः ॥
पप्रच्छुर्ज्ञानिनं तं च विस्मयोत्फुल्ललोचनाः ॥ ९ ॥
विस्मृतानि स्मरंतस्ते निजकृत्यानि वै ततः ॥
प्रोक्तानि गर्हणीयानि ह्यसंख्यातानि सर्वशः ॥ ६.१८४.१० ॥
ततस्ते पुनरेवाथ पप्रच्छुर्ज्ञानिनं च तम् ॥
लोकोत्तरमिदं ज्ञानं कथं ते संस्थितं द्विज॥ ११ ॥
को गुरुस्ते समाचक्ष्व परं कौतूहलं हि नः ॥
अहोज्ञानमहो ज्ञानं नैतद्दृष्टं श्रुतं च न ॥ १२ ॥
यादृशं ते द्विजश्रेष्ठ दृश्यते पार्थसंस्थितम् ॥
किं ब्रह्मणा स्वयं विप्र त्वमेवं प्रतिबोधितः ॥ १३ ॥
किं वा हरेण तुष्टेन किं वा देवेन चक्रिणा ॥

नान्यप्रबोधितस्यैवं ज्ञानं संजायते स्फुटम् ॥ १४ ॥ ॥
॥ अतिथिरुवाच ॥ ॥
पिंगला कुररः सर्पः सारंगश्चैव यो वने ॥
इषुकारः कुमारी च षडेते गुरवो मम ॥ १५ ॥
एतेषां चेष्टितं दृष्ट्वा ज्ञानं मे समुपस्थितम्॥ १६ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
कथयस्व महाभाग कथं ते गुरवः स्थिताः ॥
कीदृशं च त्वया दृष्टं तेषां चैव विचेष्टितम् ॥ ॥ १७ ॥
कस्मिन्देशे त्वमुत्पन्नः कस्मिन्स्थाने वदस्व नः ॥
किंनामा किं नु गोत्रश्च सर्वं विस्तरतो वद ॥ १८ ॥
॥ अतिथिरुवाच ॥ ॥
आसन्नव पुरे विप्राश्चत्वारो ये विवासिताः ॥
शुनःशेपोऽथ शाक्रेयो बौद्धो दांतश्चतुर्थकः ॥ १९ ॥
तेषां मध्ये तु यो बौद्धः शांतो दांत इति स्मृतः ॥
छन्दोगगोत्रविख्यातो वेदवेदांगपारगः ॥ ६.१८४.२० ॥
नागरेषु समुत्पन्नः पश्चिमेवयसि स्थितः ॥
तस्याहं प्रथमः पुत्रः प्राणेभ्योऽपि सुहृत्प्रियः ॥ २१ ॥
ततोऽहं यौवनं प्राप्तो यदा द्विजवरोत्तम। ॥
तदा मे दयितस्तातः पंचत्वं समुपागतः ॥ २२ ॥
एतस्मिन्नंतरे राजा ह्यानर्ताधिपतिर्द्विजाः ॥
सुतपास्तेन निर्दिष्टोऽहं तु कंचुकिकर्मणि ॥ २३ ॥
शांतं दांतं समालोक्य विश्वस्तेन महात्मना ॥
तस्य चांतःपुरे ह्यासीत्पिंगलानाम नायिका ॥ २४ ॥
दौर्भाग्येण समोपेता रूपेणापि समन्विता ॥
अथान्याः शतशस्तस्य भार्याश्चांतःपुरे स्थिताः ॥ २५ ॥
ताः सर्वा रजनीवक्त्रे व्याकुलत्वं प्रयांति च ॥
आहरंति परान्गन्धान्धूपांश्च कुसुमानि च ॥ २६ ॥
विलेपनानि मुख्यानि सुरभीणि तथा पुरः ॥ ।
पुष्पाणि च विचित्राणि ह्यन्याः सूक्ष्मांबराणि च ॥२७॥
तावद्यावत्स्थितः कालः शयनीयसमुद्भवः ॥
मन्मथोत्साहसं युक्ताः पुलकेन समन्विताः ॥२८॥
एका जानाति मां सुप्तां नूनमाकारयिष्यति ॥
अन्या जानाति मां चैव परस्परममर्षतः ॥२९॥

स्पर्धयन्ति प्रयुध्यन्ति विरूपाणि वदन्ति च ॥
तासां मध्यात्ततश्चैका प्रयाति नृपसंनिधौ ॥ ६.१८४.३० ॥
शेषा वै लक्ष्यमासाद्य निःश्वस्य प्रस्वपन्ति च ॥
दुःखार्ता न लभन्ति स्म ताश्च निद्रां पराभवात् ॥ ३१ ॥
कामेन पीडितांगाश्च बाष्पपूर्णेक्षणाः स्थिताः ॥ ३२ ॥
आशा हि परमं दुःखं निराशा परमं सुखम् ॥
आशानिराशां कृत्वा च सुखं स्वपिति पिंगला ॥ ३३ ॥।
न करोति च शृंगारं न स्पर्धां च कदाचन॥
न व्याकुलत्वमापेदे सुखं स्वपिति पिंगला॥३४॥
ततो मयापि तद्दृष्ट्वा तस्याश्चेष्टितमुत्तमम्॥
आशाः सर्वाः परित्यक्ताः स्वपिमीह ततः सुखी॥३५॥
ये स्वपंति सुखं रात्रौ तेषां कायाग्निरिध्यते।
आहारं प्रतिगृह्णाति ततः पुष्टिकरं परम्॥३६॥
तदेत्कारणं जातं मम तेजो भिवृद्धये॥
गुरुत्वे पिंगला जाता तेन सा मे द्विजोत्तमाः॥३७॥
आशापाशैः परीतांगा ये भवन्ति नरो र्दिताः॥
ते रात्रौ शेरते नैव तदप्राप्तिविचिन्तया॥३८॥
नैवाग्निर्दीप्यते तेषां जाठरश्च ततः परम्॥
आहारं वांछते नैव तन्न तेजोभिवर्धनम्॥३९॥
सर्वस्य विद्यते प्रांतो न वांछायाः कथंचन॥६.१८४.४०॥
यथायथा भवेल्लाभो वांचितस्य नृणामिह॥
हविषा कृष्णवर्त्मेव वृद्धिं याति तथातथा॥४१॥
यथा शृंगं रुरोः काये वर्धमानस्य वर्धते॥
एवं तृष्णापि यत्नेन वर्धमानेन वर्धते॥४२॥
एवं ज्ञात्वा महाभागः पुरुषेण विजानता॥
दिवा तत्कर्म कर्तव्यं येन रात्रौ सुखं स्वपेत्॥४३॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्रह्मयज्ञे तृतीयदिवसे पिंगलोपाख्यानवर्णनंनाम चतुरशीत्युत्तरशततमोऽध्यायः॥१८४॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८५



अतिथिरुवाच॥
एतद्वः सर्वमाख्यातं यथा मे पिंगला गुरुः॥
संजाता कुररो जातो यथा तत्प्रवदान्यहम्॥१॥
ममासीद्द्रविणं भूरि पितृपैतामहं महत्॥२॥
येऽथ पुत्राश्च दायादा बांधवा अपि॥
ते मां सर्वे प्रबाधन्ते द्रव्यसस्यकृते सदा॥३॥
यस्याहं न प्रयच्छामि स मां चैव प्रबाधते॥
सीदमानस्तु सुभृशं दर्शयन्प्राणसंक्षयम्॥४॥
एक साम्ना प्रयाचंते वित्तं भेदेन चापरे ॥
भयदानेन चान्येऽपि केचिद्दंडेन च द्विजाः ॥ ५ ॥
एवं नाहं क्वचित्सौख्यं तेषां पार्श्वाल्लभामि भोः ॥
चिन्तयानो दिवानक्तं क्लेशस्य परि संक्षयम् ॥
उपायं न च पश्यामि येन शांतिः प्रजायते ॥ ६ ॥
अन्यस्मिन्दिवसे दृष्टः कृतमांसपरिग्रहः ॥
कुररश्चंचुना व्योम्नि गच्छमानस्त्वरान्वितः ॥ ७ ॥
हन्यमानः समंताच्च मांसार्थे विविधैः खगैः ॥
अथ तेन परिक्षिप्तं तन्मांसं पक्षिजाद्भयात् ॥ ८ ॥
यावत्तावत्सुखी जातस्तेऽपिसर्वे समुज्झिताः ॥
मयापि क्लिश्यमानेन तद्वच्च निजबांधवैः ॥ ९ ॥
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ॥
आमिषस्य परित्यागात्कुररः सुखमेधते ॥ ६.१८५.१० ॥
एवं निश्चित्य मनसा सर्वानानीय बांधवान् ॥
पुत्रान्पौत्रांस्ततः सर्वान्पुरस्तेषां निवेदितम् ॥ ११ ॥
त्रिःसत्यं शपथं कृत्वा नान्यदस्तीति मे गृहे ॥
विभज्यार्थं यथान्यायं यूयं गृह्णीत बान्धवाः ॥ १२ ॥
ततःप्रभृति तैर्मुक्तः सुखं तिष्ठाम्यहं द्विजाः ॥
एतस्मात्कारणाज्जातो ममासौ कुररो गुरुः॥ १३ ॥
अर्थसंपद्विमोहाय विमोहो नरकाय च ॥

तस्मादर्थमनर्थं तं मोक्षार्थी दूरतस्त्यजेत् ॥ १४ ॥
यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि॥
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्॥१५॥
दोषहीनोऽपि धनवान्भूपाद्यैः परिताप्यते॥
दरिद्रः कृतदोषोऽपि सर्वत्र निरुपद्रवः॥१६॥
आलंबिताः परैर्यांति प्रस्खलंति पदेपदे ॥
गद्गदानि च जल्पंते धनिनो मद्यपा इव॥१७॥
भक्ते द्वेषो बहिः प्रीती रुचितं गुरुलघ्वपि ॥
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥१८॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ॥
नाशे दुःखं व्यये दुःखं धिगर्थो दुःखभाजनम्॥१९॥
अर्थार्थी जीव लोकोऽयं स्मशानमपि सेवते ॥
जनितारमपि त्यक्त्वा निःस्वं यांति सुता अपि ॥ ६.१८५.२० ॥
सुतस्य वल्लभस्तावत्पिता पुत्रोऽपि वै पितुः ॥
यावन्नार्थस्य संबन्धस्ताभ्यां भावी परस्परम् ॥
संबन्धे वित्तजे जाते वैरं संजायते मिथः ॥ २१ ॥
एतस्मात्कारणाद्वित्तं मया त्यक्तं तपोधनाः ॥
तेन सौख्येन तिष्ठामि कुररस्योपदेशतः ॥ २२ ॥
शृणुध्वं च महाभागा यथा मेऽहिर्गुरुः स्थितः ॥ २३ ॥
यथा मया गृहं त्यक्तं दृष्ट्वा सर्पविचेष्टितम् ॥
गृहारंभः सुदुःखाय सुखाय न कदाचन ॥ २४ ॥
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥
उषित्वा तत्र सौख्येन भूयोऽन्यत्तादृशं व्रजेत् ॥ २५ ॥
मम त्वं कुरुते नैव ममेदं गृहमित्यसौ ॥
न गृहं जायते तस्य न स्वयं हि कृतं यतः ॥ २६ ॥
यः पुनः कुरुते हर्म्यं स्वयं क्लेशैः पृथग्विधैः ॥
न तस्य याति तत्पश्चान्मृत्युकालेऽपि संस्थिते ॥ २७ ॥
गृहात्संजायते भार्या ततः पुत्रश्च कन्यका ॥
तेषामर्थे करोति स्म कृत्याकृत्यं ततः परम् ॥२८॥
कोशकारमिवात्मानं वेष्टयन्नावबुध्यते ॥१२९ ॥
पुत्रदारगृहक्षेत्रसक्ताः सीदंति जंतवः ॥
लोभपंकार्णवे मग्ना जीर्णा वनगजा इव ॥ ६.१८५.३० ॥

एकः पापानि कुरुते फलं भुंक्ते महाजनः ॥
भोक्तारो विप्रमुच्यंते कर्ता दोषेण लिप्यते ३१ ॥
एतस्मात्कारणाद्धर्म्यं मया त्यक्तं द्विजोत्तमाः।
मोक्षमार्गार्गला भूतं दृष्ट्वा सर्पविचेष्टितम् ॥ ३२ ॥
एकरात्रं वसेद्ग्रामे त्रिरात्रं पत्तने वसेत् ॥
यो याति स यतिः प्रोक्तो योऽन्यो योगविडंबकः ॥ ३३ ॥
विधूमे च प्रशांताग्नौ यस्तु माधुकरीं चरेत् ॥
गृहे च विप्रमुख्यानां यतिः स नेतरः स्मृतः ॥ ३४ ॥
दण्डी भिक्षां च वा कुर्यात्तदेव व्यसनं विना ॥
यस्तिष्ठति न वैराग्यं याति नैव यतिर्हि सः ॥ ३५ ॥
दिवा स्वप्नं वृथान्नं च स्त्रीकथाऽऽलोक्यमेव च ॥
श्वेतवस्त्रं हिरण्यं च यतीनां पतनानि षट्॥ ३६॥
समः शत्रौ च मित्रे च समलोष्टाश्मकांचनः ॥
सुहृत्पुत्र उदासीनः स यतिर्नेतरः स्मृतः ॥ ३७ ॥
समौ मानापमानौ च स्वदेशे परिकेपि वा ॥
यो न हृष्यति न द्वेष्टि स यतिर्नेतरः स्मृतः ॥ ३८ ॥
यस्मिन्गृहे विशेषेण लभेद्भिक्षा च वाशनम् ॥
तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः। ॥ ३९ ॥
एवं ज्ञात्वा मया विप्र दृष्ट्वा सर्पविचेष्टितम् ॥
सर्वसंगपरित्यागो मोक्षार्थं परिकल्पितः ॥ ६.१८५.४० ॥
एवं ममाहिः संजातो गुरुर्ब्राह्मणसत्तमाः।
तत्प्रभावान्महत्तेजः संजातं विग्रहे मम ॥ ४१ ॥
यथा मे भ्रमरो जातो गुरुस्तद्वद्वदामि च ॥
कस्मिन्वृक्षे मया दृष्टो भ्रमरः कोऽपि संगतः ॥४२॥
शाखाय तु समाश्रित्य कृतपूर्वनिबंधनम् ॥
वसंतसमये प्राप्ते पुष्पवंतश्च ये द्रुमाः ॥ ४३ ॥
सुगन्धफलपुष्पाश्च सुगन्धदलसंयुताः ॥
तेषामणुं समादाय श्रेष्ठश्रेष्ठतमं रसम् ॥ ४४ ।
नियोजयति शाखाग्रे तरोरस्य सदैव हि ॥
अनिर्विण्णतया हृष्टस्तदा सम्यङ्निरीक्षितः ॥ ४५ ॥
मधुजालं ततो जातं कालेन महता महत् ॥
येनान्ये मधुना तृप्तिं प्राप्ताः शतसहस्रशः ॥ ४६ ॥

तच्चेष्टितं मया वीक्ष्य शास्त्राण्यन्यानि भूरिशः ॥
ततस्तेषां समादाय सारभूतं पृथक्पृथक् ॥
कृतानि भूरिशास्त्राणि वेदांतानि च कृत्स्नशः ॥ ४७ ॥
उपजीवंति यान्यन्ये यथा भृङ्गास्तथा द्विजाः ॥ ४८ ॥
एवं मे मधुपो जातो गुरुत्वे च द्विजोत्तमाः ॥
तेनाहं तेजसा युक्तो नान्यदस्तीह कारणम्॥ ४९ ॥
वेदांतवादिनो येऽत्र प्रभवंति व्रतान्विताः ॥
निर्लोभा गततृष्णाश्च ते भवंति सुतेजसः ॥ ६.१८५.५० ॥
एकेनापि विहीना ये प्रभवंति कुबुद्धयः ॥
लोभमोहान्विताः पापा जायंते ते विचेतसः ॥५१॥
वेदांतानि सुभूरीणि मया दृष्ट्वा विचार्य च ॥
समरूपाः कृता ग्रन्था मर्त्यलोकहितार्थिना ॥ ५२ ॥
एवं मे गुरुतां प्राप्तो मधुपो द्विजसत्तमाः ॥
इषुकारो यथा जातस्तथा चैव ब्रवीमि वः॥५३॥
आत्मावलोकनार्थाय मया दृष्टाः सहस्रशः॥
योगिनो ज्ञानसंपन्नास्तैः प्रोक्तं च स्वशक्तितः॥५४॥
आत्मावलोकनं भावि सुशिष्याय यथा तथा॥
स समाधिजद्वारेण चतुराशीतिकेन च॥५५॥
आसनैस्तत्प्रमाणैश्च पद्मासनप्रपूर्वकैः॥
असंख्यैः कारणैश्चैव ह्यध्यात्मपठनैस्तथा॥
ततोपि लक्षितो नैव मयाऽत्मा च कथंचन॥५६॥
ततो वैराग्यमापन्नः प्रभ्रमामि धरातले॥
गुर्वर्थे न च लेभेऽहं गुरुमात्मावलोकने ॥ ५७ ॥
अन्यस्मिन्नहनि प्राप्ते राजमार्गेण गच्छता ॥
मया दृष्टो महीपालः सैन्येन महता वृतः ॥ ५८ ॥
ततोऽहं मार्गमुत्सृज्य संमुखस्य महीपतेः ॥
उटजद्वारमाश्रित्य किंचिदूर्ध्वोपि संस्थितः ॥ ५९ ॥
तत्रापि च स्थितः कश्चित्पुरुषः कांडकारकः ॥
ऋजुकर्मणि संयुक्तः शराणां नतपर्वणाम्॥ ६.१८५.६० ॥
तस्मिन्दूरगते भूपे तथान्यः सेवकोऽभ्यगात् ॥ ६१ ॥
तं पप्रच्छ त्वरायुक्तः शृण्वतोऽपि मम द्विजाः ॥
कांडकर्मणि संसक्तमृजुत्वेन स्थितं तदा ॥६२॥

कियती वर्तते वेला गतस्य पृथिवीपतेः ॥
मार्गेणानेन मे ब्रूहि येन गच्छामि पृष्ठतः॥६३॥
सोऽब्रवीत्तं तदा विप्रा अधोवक्त्रः स्थितो नरः ॥
अनेन राजमार्गेण गच्छमानो महीपतिः ॥ ६४ ॥
न मया वीक्षितः कश्चिदिदानीं राजसेवक ॥
तदन्यं पृच्छ चेत्कार्यं तवानेन ब्रवीतु सः ॥ ६५ ॥
शरकर्मणि संसक्तस्त्वहमत्र व्यवस्थितः ॥
तच्छ्रुत्वा वचनं तस्य स्वचित्ते चिन्तितं मया॥६६॥
एकचित्ततया योगो ब्रह्मज्ञानसमुद्भवः ॥
नान्यथा भविता मे स ततश्चित्तनिरोधनम् ॥
करोमि ब्रह्मसंसिद्ध्यै ततो मेऽसौ भविष्यति ॥ ६७ ॥
ततःप्रभृति चित्ते स्वे धारयामि सदैव तु ॥
विश्वरूपं तथा सूर्यं हृत्पंकजनिवासिनम् ॥ ६८ ॥
ततो दिक्षु दिगन्तेषु गगने धरणीतले ॥
तमेकं चैव पश्यामि नान्यत्किंचिद्द्विजोत्तमाः ॥ ६९ ॥
अहं च तेजसा युक्तस्तत्प्रभावेण संस्थितः ॥ ६.१८५.७० ॥
एवं मे स गुरुर्जातः शरकारो द्विजोत्तमाः ॥
शृणुध्वं कन्यका जाता गुरुत्वे मे यथा पुरा ॥ ७१ ॥
सर्वसंगपरित्यागी यदाहं निर्गतो गृहात् ॥
ममानुपृष्ठतश्चैव ततो भार्या विनिर्गता ॥ ७२ ॥
शिशुं पुत्रं समादाय कन्यामेकां च शोभनाम्॥
ततोऽहं भार्यया प्रोक्तो वानप्रस्थाश्रमे स्थितः॥७३॥
कुरु मे वचनं मुक्तिरत्रैव हि भविष्यति॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः॥
यदि स्यात्संयतात्मा स नूनं मुक्तिमवाप्नुयात्॥७४॥
अथवा मां परित्यज्य यदि यास्यसि चान्यतः॥
तदहं च मरिष्यामि सत्यमेतदसंशयम्॥७५॥
मृतायां मयि ते बालावेतावनुमरिष्यतः॥
कुमारी च कुमारश्च तस्मान्नाथ दयां कुरु॥७६॥
मा व्रजस्व परं तीर्थं परिजानन्नपि स्वयम्॥
हाटकेश्वरजं क्षेत्रमेतत्पुण्यतरं स्मृतम्॥७७॥
सर्वेषामेव तीर्थानां श्रुतमेतन्मया विभो॥

वदतां ब्राह्मणेन्द्राणां तथान्येषां तपस्विनाम्॥७८॥
श्लोकोऽयं बहुधा नाथ कीर्त्यमानो मया विभो॥
विश्वामित्रस्य वक्त्रेण सन्मुनेः सत्यवादिनः॥७९॥
पुनंति सर्वतीर्थानि स्नानदानादसंशयम्॥
हाटकेश्वरजं क्षेत्रं स्मरणादपि पावयेत्॥६.१८५.८॥।
ततः कृच्छ्रात्प्रतिज्ञातं मयाश्रमनिषेवणम्॥
वानप्रस्थोद्भवं वा स्यात्ततोऽहं तत्र संस्थितः॥८१॥
तत्रस्थस्य हि मे कन्या क्रीडते परतः स्थिता॥
वलयापूरिताभ्यां च प्रकोष्ठाभ्यां ततस्ततः ॥ ८२ ॥
यथायथा सा कुरुते कन्दमूलफलाशनम् ॥
तनुत्वं याति कायेन तथा चैव दिनेदिने ॥ ८३ ॥
ततो मे जायते दुःखं तेषां पतन संभवम् ॥
कस्यचित्त्वथ कालस्य संजातं वलयत्रयम् ॥
तस्या हस्ते ततस्ताभ्यां शब्दः संजायते मिथः ॥ ८४ ॥
ततः कालेन महता ताभ्यामेकं व्यवस्थितम् ॥
न संघर्षो न शब्दश्च तत्रस्थस्य च जायते ॥ ८५ ॥
तद्विचिन्त्य मया सोऽपि ह्याश्रमः परिवर्जितः ॥
चिन्तितं च मया चित्ते कृत्वा चैवं सुनिश्चयम् ॥ ८६ ॥
बहुभिः कलहो नित्यं द्वाभ्यां संघर्षणं तथा ॥
एकाकी विचरिष्यामि कुमारीवलयं यथा ॥ ८७ ॥
ततः सुप्तां परित्यज्य तां भार्यां शिशुसंयुताम् ॥
गतोऽहं दूरमध्वानं यत्र नो वेत्ति सा च माम् ॥ ८८ ॥
यत्राऽस्तमितशायी च यलब्धकृतभोजनः ॥
भ्रमामि मेदिनीपृष्ठे त्यक्त्वा संसारबन्धनम् ॥ ८९ ॥
ततो मे ज्ञानमापन्नमेवं विप्राः शनैःशनैः ॥
अतीतानागतं चैव वर्तमानं विशेषतः ॥ ६.१८५.९० ॥
एवं मे कन्यका जाता गुरुत्वे द्विजसत्तमाः ॥ ९१ ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि गुरोः कृते ॥
न युष्माकं पुरो मिथ्या कीर्तयामि कथंचन॥ ॥ ९२ ॥
एवं मे ज्ञानमुत्पन्नं प्रकारैः षड्भिरेव च ॥
एभिर्लोकोत्तरं ज्ञानं युष्मत्प्रत्ययकारकम् ॥ ९३ ॥
॥ सूत उवाच ॥ ॥

ततस्ते ब्राह्मणाः सर्वे पप्रच्छुस्तं द्विजोत्तमाः ॥
वानप्रस्थाश्रमं त्यक्त्वा भार्यां शिशुसमन्विताम् ॥
क्व गतस्त्वं तदाचक्ष्व कियत्कालं च संस्थितः ॥ ९४ ॥
॥ अतिथिरुवाच ॥ ॥
अहं भीतः सहस्राणि ग्रामाणां च शतानि च ॥
यत्रास्तमितशायी सन्ननेकानि द्विजोत्तमाः ॥
संख्यया रहितान्येव वर्षाणां च शतानि च ॥ ९५ ॥
दृष्टानि मुख्यतीर्थानि तथैवायतनानि च ॥
दृष्टाश्च पर्वताः श्रेष्ठा नद्यश्च विमलोदकाः ॥ ९६ ॥
स्वयमेव मया ज्ञातो वाराणस्यां स्थितेन च ॥
यज्ञः पैतामहो भावी स्थानेऽस्मिन्मामके यतः ॥९७॥
ततोऽहं सत्वरं प्राप्तः कौतुकेन द्विजोत्तमाः ॥
कीदृशः स मखो भावी यत्र यज्वा पितामहः ॥ ९८ ॥
॥ सूत उवाच ॥ ॥
एतस्मिन्नंतरे प्राप्ताः सर्वे देवाः सवासवाः ॥
वासुदेवं पुरस्कृत्य तथा चैव महेश्वरम्॥९९॥
कमान्तरं समासाद्य पुलस्त्याद्यास्तथर्त्विजः ॥
ब्रह्मापि स्वयमायातो मृगचर्मधरस्तथा॥६.१८५.१००॥
ततस्ते तुष्टिमापन्नास्तस्य ज्ञानेन तेन च ॥
प्रोचुश्च वरदास्तुभ्यं सर्व एव दिवौकसः ॥ १०१ ॥
तस्माद्वरय भद्रं ते प्रार्थयस्व यथेप्सितम् ॥
अवश्यं तव दास्यामो यद्यपि स्यात्सुदुर्लभम् ॥ १०२ ॥ ॥
॥ अतिथिरुवाच ॥ ॥
यदि तुष्टाः सुरा मह्यं प्रयच्छंति वरं मम ॥
अनेनैव शरीरेण देवत्वं प्रार्थयाम्यहम् ॥ १०३ ॥
यज्ञभागसमोपेतं तथान्येषां दिवौकसाम्॥
विशेषेण सुरश्रेष्ठाः स्थानं चोपरि संस्थितम् ॥ १०९ ॥
॥ देवा ऊचुः ॥ ॥
नूनं त्वं विबुधो भूत्वा देवलोके निवत्स्यसि ॥
अनेनेव शरीरेण यज्ञभागविवर्जितः ॥ १०५ ॥
यच्छामो यदि ते विप्र यज्ञांशं मानुषस्य भोः ॥
अप्रामाण्यं श्रुतेर्भावि तव दत्तेन तेन च ॥ १०६ ॥

॥अतिथिरुवाच ॥ ॥
देवत्वेन न मे कार्यं यज्ञांशरहितेन च ॥
तदहं साधयिष्यामि यथा मुक्तिर्भविष्यति ॥ १०७ ॥
तच्छ्रुत्वा पद्मजः प्राह सर्वान्देवान्कृतांजलिः ॥
शृण्वंतु देवताः सर्वा यद्ब्रवीमि हितं वचः ॥ १०९ ॥
ममायं ब्राह्मणो यज्ञे दूरादेव समागतः ॥
नागरस्तु विशेषेण पात्रं ज्ञानसमुद्भवम् ॥ १०९ ॥
प्रतिज्ञातस्तथा सर्वैर्वरोऽस्य विबुधैर्यतः ॥
तस्मात्प्रदीयतामस्मै यदभीष्टं सुरोत्तमाः ॥ ६.१८५.११० ॥ ॥
॥ महेश्वर उवाच ॥ ॥
यथाऽस्य जायते तृप्तिर्यज्ञभागाधिका सदा ॥
तथाहं कथयिष्यामि शृण्वंतु विबुधोत्तमाः ॥ १११ ॥
य एष क्रियते यज्ञस्तस्य नाथो हरिः स्मृतः॥
एतस्मात्कारणात्प्रोक्तः स देवो यज्ञपूरुषः ॥ ११२ ॥
अद्यप्रभृति यत्किंचिच्छ्राद्धं मर्त्ये भविष्यति ॥
दैवं वा पैतृकं वाऽपि तस्य चांते व्यवस्थितः ॥ ११३ ॥
एतस्य नाम संकीर्त्य पश्चाच्च यज्ञपूरुषम् ॥
संकीर्त्य भोजनं देयं ब्राह्मणस्य द्विजोत्तमाः ॥ ११४ ॥
तेनास्य भविता तृप्तिर्यज्ञांताऽभ्यधिका सदा ॥
अदत्त्वास्य कृतं श्राद्धं यत्किंचित्प्रभविष्यति ॥११५॥
तद्यास्यत्यखिलं व्यर्थं तथा भस्महुतं यथा ॥
वैश्वदेवांतमासाद्य यश्चैनं पूजयिष्यति ॥ ११६ ॥
विष्णुनामसमोपेतं भविष्यति तदक्षयम् ॥
दत्तं स्वल्पमपि प्रायः श्रद्धापूतेन चेतसा ॥ ११७ ॥
श्राद्धे वा वैश्वदेवे वा यश्चैनं नार्चयिष्यति ॥
संप्राप्तं व्यर्थतां तस्य तच्च सर्वं भविष्यति ॥११८॥
अस्मिंस्तुष्टिं गते सर्वे सुरा यास्यंति संमुदम् ॥
पितरश्च तमायांति विमुखे संमुखे तथा ॥ ११९ ॥
तच्छ्रुत्वा विबुधाः सर्वे महेश्वरवचस्तदा ॥
तथेति मुदिताः प्रोचुर्ब्रह्मविष्णुपुरस्सराः ॥ ६.१८५.१२० ॥
ततःप्रभृति संजाता पूजा चातिथिसंभवा ॥
तस्मात्सर्वप्रयत्नेन पूजा कार्याऽतिथेः सदा ॥

यज्ञे पूरुषयज्ञस्य न चैकस्य कथंचन ॥ १२१ ॥ ॥

॥ अतिथिरुवाच ॥ ॥

अत्रास्ति मामकं तीर्थं मया यत्र तपः कृतम् ॥

हाटकेश्वरजे क्षेत्रे पुरुकाले द्विजोत्तमाः ॥१२२॥

अंगारकेण संयुक्ता चतुर्थी स्याद्यदा तिथिः ॥

सांनिध्यं तत्र कार्यं च सर्वैर्देवैश्च तद्दिने ॥ १२३ ॥

कुर्यात्तत्रैव यः स्नानं तस्मिन्नहनि संस्थिते ॥

सर्वतीर्थफलं तस्य जायतां वः प्रसादतः ॥ १२४ ॥

तथास्त्विति ततः सर्वेऽतिथिं प्रोचुः सुरोत्तमाः ॥

एतस्मिन्नंतरे प्राह पुलस्त्यर्षिः पितामहम् ॥१२५॥ ॥

पुलस्त्य उवाच ॥ ॥

ऋत्विजः सकला देवाः संस्थिताः कौतुकान्विताः ॥

उत्तिष्ठंतु च ते शीघ्रं यज्ञकर्मप्रसिद्धये ॥ १२६ ॥

एतस्मिन्नंतरे सर्वे तस्य वाक्यप्रणोदिताः ॥

उत्थिता ऋत्विजो ये च स्वानि स्थानानि भेजिरे ॥

ततः प्रववृते यज्ञः सपुनर्द्विजसत्तमाः ॥

कुर्वता यज्ञकर्माणि होमपूर्वाणि यानि च ॥ १२७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये तीर्थोत्पत्तिमाहात्म्यवर्णनं ना
म पञ्चाशीत्युत्तरशत तमोऽध्यायः ॥ १८५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८६



ऋषय ऊचुः ॥ ॥

भूय एव महाभाग वद माहात्म्यमुत्तमम् ॥

अतिथेः कृत्यमस्माकं विस्तरेण च सूतज ॥ १ ॥

॥ सूत उवाच ॥ ॥

शृण्वन्तु मुनयः सर्वे माहात्म्यमिदमुत्तमम् ॥

येन संश्रुतमात्रेण नश्येत्पापं दिनोद्भवम् ॥ २ ॥

यन्मया च श्रुतं पूर्वं सकाशात्स्वपितुः शुभम् ॥ ३ ॥

गृहस्थानां परो धर्मो नान्योऽस्त्यतिथिपूजनात् ॥

अतिथेर्न च दोषोस्ति तस्यातिक्रमणेन च ॥ ४ ॥

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ॥

स दत्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ ५ ॥

सत्यं शौचं तपोऽधीतं दत्तमिष्टं शतं समाः ॥

तस्य सर्वमिदं नष्टमतिथिं यो न पूजयेत् ॥ ६ ॥

दूरादतिथयो यस्य गृहमायांति निर्वृताः ॥

स गृहस्थ इति प्रोक्तः शेषाश्च गृहरक्षिणः ॥ ७ ॥

न पुराकृतपुण्यानां नराणामिह भूतले ॥

त्रीनेतान्प्रतिहन्यंते श्राद्धं दानं शुभा गिरः ॥ ८ ॥

तुष्टेऽतिथौ गृहस्थस्य तुष्टाः स्युः सर्वदेवताः ॥

विमुखे विमुखाः सर्वा भवंति च न संशयः ९ ॥

तस्मात्तोषयितव्यश्च गृहस्थेन सदाऽतिथिः ॥

अप्यात्मनः प्रदानेन यदीच्छेत्पुण्यमात्मनः ॥ ॥ ६.१८६.१० ॥

त्रिविधस्त्वतिथिः प्रोक्तो गृहस्थानां द्विजोत्तमाः ॥

तस्याहं वच्मि वः कालं शृणुध्वं सुसमाहिताः ॥ ११ ॥

श्राद्धीयो वैश्वदेवीयः सूर्योढश्च तृतीयकः ॥

ये चान्ये भोजनार्थीयास्ते सामान्याः प्रकीर्तिता ॥ १२ ॥

सांकल्पे विहिते श्राद्धे पितॄणां भोजनोद्भवे ॥
समागच्छति यः काले तस्मिञ्छ्राद्धीय एव सः ॥ १३ ॥
दूराध्वानं पथि श्रांतं वैश्वदेवांत आगतम् ॥
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ १४ ॥
प्रियो वा यदि वा द्वेष्यो मूर्खः पंडित एव वा ॥
वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसंक्रमः ॥ १५ ॥
न पृच्छेद्गोत्रचरणं न स्थानं वेदमेव च ॥
दृष्ट्वा यज्ञोपवीतं च भोजयेत्तं प्रभक्तितः ॥ १६ ॥
श्राद्धे वा वैश्वदेवे वा यद्यागच्छति नातिथिः ॥
घृताहुतिं ततो दद्यात्तन्नाम्ना च हविर्भुजि ॥ १७ ॥
अशक्त्या भोज्यदानस्य देयं भक्त्या ततः परम् ॥
तस्यान्नमपि तु स्तोकं येन तुष्टिं प्रगच्छति ॥ १८ ॥
तथान्यश्च तृतीयस्तु सूर्योढोऽतिथिरुच्यते ॥
कृते तु भोजने यस्तु रात्रौ वा चाधिगच्छति॥
तस्य शक्त्या प्रदातव्यं सस्यं च गृहमेधिना॥१९॥
सूर्योढो यस्य संप्राप्तो गृहात्पूजां विना व्रजेत्॥
निराशः पातकं तस्य निजं दत्त्वा प्रयाति सः॥६.१८६.२॥।
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता॥
एतान्यपि सतां गेहे नोच्छिद्यंते कदाचन॥२१॥
स्वागतेनाग्नयस्तृप्तिं गृहस्थस्य प्रयांति च ॥
आसनेन व्रजेत्तुष्टिं स्वयंभूः प्रपितामहः ॥ २२॥
अर्घेण शंभुः पाद्येन सर्वे देवाः सवासवाः ॥
भोज्यदानेन विष्णुः स्यात्सर्वदेवमयोऽतिथिः ॥ २३ ॥
तस्मात्पूज्यः सदा विप्रा भोजनीयो विशेषतः ॥
नामाप्युच्चार्य भोज्योऽन्यो ब्राह्मणो गृहमेधिना ॥ २४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्येऽतिथिमाहात्म्यवर्णनंनाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८७



॥ सूत उवाच ॥ ॥

चतुर्थे दिवसे प्राप्ते ततो यज्ञसमुद्भवे ॥

ऋत्विग्भिर्याज्ञिकं कर्म प्रारब्धं तदनंतरम् ॥ १ ॥

सोमपानादिकं सर्वं पशोर्हिंसादिकं तथा ॥

पशोर्गुदं समादाय प्रस्थाता च व्यधारयत् ॥ २ ॥

एकांते सदसो मध्ये होमार्थं द्विजसत्तमाः ॥

तस्मिन्व्याकुलतां याते ब्राह्मणः कश्चिदागतः ॥ ३ ॥

युवा तत्र प्रविष्टस्तु मांस भक्षणलालसः ॥

ततो गुदं पशोर्दृष्ट्वा भक्षयामास चोत्सुकं ॥ ४ ॥

एतस्मिन्नंतरे प्राप्तः प्रस्थाता तस्य संनिधौ ॥

भक्षमाणं समालोक्य तं शशाप ततः परम् ॥ ५ ॥

धिग्धिक्पापसमाचार होमार्थं यद्गुदं धृतम् ॥

तत्त्वया दूषितं लौल्याद्यज्ञविघ्नकरं कृतम् ॥ ६ ॥

उच्छिष्टेन मया होमः कर्तव्यो नैव सांप्रतम् ॥

राक्षसानामिदं कर्म यत्त्वया समनुष्ठितम् ॥ ७ ॥

तस्मात्त्वं मम वाक्येन राक्षसो भव मा चिरम् ॥ ८ ॥

एतस्मिन्नेव काले तु ह्यूर्ध्वकेशोऽभवद्धि सः ॥

रक्ताक्षः शंकुकर्णश्च कृष्णदन्तोऽतिभैरवः ॥ ९ ॥

लम्बोष्ठो विकरालास्यो मांसमेदोविवर्जितः ॥

त्वगस्थिस्नायुशेषश्च। चामुण्डाकृतिरेव च ॥ ६.१८७.१० ॥

स च विश्वावसुर्नाम पुलस्त्यस्य सुतो मुनिः ॥

मंत्रपूतस्य मांसस्य भक्षणार्थं समागतः ॥ ११ ॥

वेदवेदांगतत्त्वज्ञः पौत्रस्तु परमेष्ठिनः ॥

तं दृष्ट्वा राक्षसाकारं वित्रेसुः सर्वतो द्विजाः ॥ १२ ॥

राक्षोघ्नानि च सूक्तानि जजपुश्चापरे तथा ॥

केचिच्छरणमापन्ना विष्णो रुद्रस्य चापरे ॥ १३ ॥

पितामहस्य चान्ये तु गायत्र्याः शरणं गताः ॥

रक्षरक्षेति जल्पन्तो भयसंत्रस्तमानसाः ॥ १४ ॥

सोऽपि दृष्ट्वा तदात्मानं गतं राक्षसतां द्विजाः ॥

बाष्पपूर्णेक्षणो दीनः पितामहमुपाद्रवत् ॥ १५ ॥

स प्रणम्य ततो वाक्यं कृतांजलिरुवाच तम् ॥ १६ ॥ ।

पौत्रोऽहं तव देवेश पुलस्त्यस्य सुतो द्विजः ॥

नीतो राक्षसतामद्य प्रस्थात्रा कोपतो विभो ॥ १७ ॥

जिह्वालौल्येन देवेश पशोर्गुदमजानता ॥

भक्षितं तन्मया देव होमार्थं यत्प्रकल्पितम् ॥ १८ ॥

तस्मान्मानुषताप्राप्त्यै मम देहे दयां कुरु ॥

राक्षसत्वं यथा याति तथा नीतिर्विधीयताम् ॥ १९॥ '

तच्छ्रुत्वा जल्पितं तस्य दयां कृत्वा पितामहः ॥

प्रतिप्रस्थातरं सामवाक्यमेतदुवाच ह ॥ ६.१८७.२० ॥

बालोऽयं मम पौत्रस्तु कृत्याकृत्यं न वेत्ति च ॥

तस्मात्त्वं राक्षसं भावं हरस्वास्य द्विजोत्तम ॥ २१ ॥

तच्छ्रुत्वा स मुनिः प्राह प्रायश्चित्तं मखे तव ॥

अनेन जनितं देव गुदं दूषयता विभो ॥ २२ ॥

तस्मादेष मया शप्तो यज्ञविघ्नकरो मम ॥

नाहमस्य हरिष्यामि राक्षसत्वं कथंचन ॥ २३ ॥

नर्मणापि मया प्रोक्तं कदाचिन्नानृतं वचः ॥ २४ ॥ ॥

॥ ब्रह्मोवाच ॥ ॥

प्रायश्चित्तं करिष्येऽहं यज्ञस्यास्य प्रसिद्धये ॥

दक्षिणा गौर्यथोक्ता च कृत्वा होमं विधानतः ॥

त्वमस्य राक्षसं भावं 'हरस्व मम वाक्यतः ॥ २५ ॥

सोऽब्रवीच्छीतलो वह्निर्यदि स्यादुष्णगुः शशी ॥

तन्मे स्यादन्यथा वाक्यं व्याहृतं प्रपितामह ॥ २६ ॥

तस्य तद्वचनं श्रुत्वा ज्ञात्वा चैव तु निश्चितम्॥

विश्वावसुं विधिः प्राह ततो राक्षसरूपिणम् ॥ २७ ॥

त्वं वत्सानेन रूपेण तिष्ठ तावद्वचो मम ॥

कुरुष्व ते प्रयच्छामि येन स्थानमनुत्तमम् ॥ २८ ॥

चमत्कारपुरस्यास्य पश्चिमस्थानमाश्रिताः ॥

सन्त्यन्ये राक्षसास्तत्र मर्यादायां व्यवस्थिताः ॥ २९ ॥

लंकायां राक्षसाश्चैव प्रार्थयन्तोऽत्र सद्गतिम् ॥

ते चागत्य तमुद्देशं तपः कुर्वंति सुव्रताः ॥६.१८७.३॥।

तत्र प्रभुत्वमातिष्ठ नागराणां हिते स्थितः ॥

राक्षसा बहवः संति कूष्मांडाश्च पिशाचकाः ॥ ३१ ॥

ये चान्ये राक्षसाः केचिद्दुष्टभावसमाश्रिताः ॥

तत्र गच्छंति ये सर्वे निगृह्णंति च तत्क्षणात् ॥ ३२ ॥

भूताः प्रेताः पिशाचाश्च कूष्मांडाश्च विशेषतः॥

नागरं तु पुरो दृष्ट्वा तद्भयाद्यांति दूरतः ॥ ३३ ॥

तद्गच्छ पुत्र तत्र त्वं सर्वेषामधिपो भव ॥

राक्षसानां मया दत्तं तव राज्यं च सांप्रतम् ॥ ३४ ॥

॥ राक्षस उवाच ॥ ॥

आधिपत्ये स्थितस्यैवं राक्षसानां पितामह ॥

किं मया तत्र भोक्तव्यं तेभ्यो देयं च किं वद ॥ ३५ ॥

राज्ञा चैव यतो देयं भृत्यानां भोजनं विभो ॥

तन्ममाचक्ष्व देवेश दयां कृत्वा ममोपरि ॥ ३६ ॥

न करोति च यो राजा। भृत्यवर्गस्य पोषणम्॥

रौरवं नरकं याति स एवं हि श्रुतं मया ॥ ३७ ॥

॥ ब्रह्मोवाच ॥ ॥

यच्छ्राद्धं दक्षिणाहीनं तिलैर्दर्भैर्विवर्जितम् ॥

तत्सर्वं ते मया दत्तं यद्यपि स्यात्सुतीर्थगम्॥ ३८ ॥

यच्छ्राद्धं सूकरः पश्येन्नारी वाथ रजस्वला ॥

कौलेयकोऽथ वालेयस्तत्सर्वं ते भविष्यति ॥ ३९ ॥

विधिहीनं तु यच्छ्राद्धं दर्भैर्वा मूलवर्जितैः ॥

वितस्तेरधिकैर्वापि तत्सर्वं ते भविष्यति ॥ ६.१८७.४० ॥

तिलं वा तैलपक्वं वा शूकधान्यमथापि वा ॥

न यत्र दीयते श्राद्धे तत्ते श्राद्धं भविष्यति ॥ ४१ ॥

अस्नातैर्यत्कृतं श्राद्धं यच्चाधौतांबरैः कृतम् ॥

तैलाभ्यंगयुतैश्चैव तत्ते सर्वं भविष्यति ॥ ४२ ॥

यद्वा माहिषिको भुंक्ते श्वित्री वा कुनखोऽपि वा ॥

कुष्ठी वाथ द्विजो भुंक्ते तत्ते श्राद्धं भविष्यति ॥ ४३ ॥

हीनांगो वाऽथ यद्भुंक्तेऽधिकांगो वाथ निंदितः ॥

महाव्याधिगृहीतो वा चौरो वार्द्धुषिकोऽपि वा ॥

यत्र भुंक्तेऽथवा श्राद्धे तत्ते श्राद्धं भविष्यति ॥ ४४ ॥

श्यावदन्तस्तु यद्भुंक्ते यद्भुंक्ते वृषलीपतिः ॥

विनग्नो वाथ यद्भुंक्ते तत्ते श्राद्धं भविष्यति ॥ ४५ ॥

यो यज्ञो दक्षिणाहीनो यश्चाशौचयुतैः कृतः ॥

ब्रह्मचर्यविहीनस्तु तत्फलं ते भविष्यति ॥ ४६ ॥

यस्मिन्नैवातिथिः पूज्यः श्राद्धे वा यज्ञकर्मणि ॥

संप्राप्ते वैश्वदेवांते तत्ते सर्वं भविष्यति ॥ ४७ ॥१

आवाहनात्परं यत्र मौनं न श्राद्धदश्चरेत्॥

ब्राह्मणो वाऽथ भोक्ता च तत्ते श्राद्धं भविष्यति॥४८॥

मृन्मयेषु च पात्रेषु यः श्राद्धं कुरुते नरः ॥

भिन्नपात्रेषु वा यच्च तत्ते सर्वं भविष्यति ॥ ४९ ॥

प्रत्यक्षलवणं यत्र तक्रं वा विकृतं भवेत् ॥

जातीपुष्पप्रदानं च तत्ते सर्वं भविष्यति ॥ ६.१८७.५० ॥

यजमानो द्विजो वाथ ब्रह्मचर्यविवर्जितः ॥

तच्छ्राद्धं ते मया दत्तं त्रिपात्रेण विवर्जितम् ॥ ५१ ॥

आयसेन तु पात्रेण यत्रान्नं च प्रदीयते ॥

तच्छ्राद्धं ते मया दत्तं तथान्यदपि हीयते ॥ ५२ ॥

मंत्रक्रियाभ्यां यत्किंचिद्रात्रौ दत्तं हुतं तथा ॥

सक्रांतिसोमपर्वभ्यां व्यति रिक्तं तु कुत्सितम् ॥ ५३ ॥

इत्युक्त्वा विररामाशु ब्रह्मा लोकपितामहः ॥

राक्षसः सोऽपि तत्रापि लेभे स्थानं तु राक्षसम् ॥ ५४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठ नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये राक्षसप्राप्यश्राद्धवर्णनंनाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥ ॥ १८७ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८८



॥ सूत उवाच ॥ ॥

ततस्तु पंचमे चाह्नि संजाते ते द्विजोत्तमाः ॥

श्वेतधौतांबराः सर्वे सुस्नाताः शुचयः स्थिताः ॥ ॥ १ ॥

चक्रुः सर्वाणि कर्माणि पुलस्त्येन प्रबोधिताः ॥

सदोमध्ये गताश्चैव ऋत्विग्वरणपूर्वकाः ॥ २ ॥

अध्वर्युणा समादिष्टान्प्रैषान्प्रोचुर्यथा क्रमम् ॥

होमार्थं दीप्तवह्नौ च ऋत्विग्भिः सुसमाहितैः ॥ ३ ॥

एतस्मिन्नेव काले तु ह्युद्गात्रा कर्म योजितम् ॥

शंकुभिः क्रियते यच्च साम गीतिप्रसूचितम्॥ ४ ॥

सप्तावर्तं द्विजश्रेष्ठाः सदोमध्यगतेन च ॥

यत्राऽऽगच्छंति ते सर्वे देवा यज्ञांशलालसाः ॥ ५ ॥

सोमपानकृते चैव विशेषेण मुदान्विताः ॥

प्रारब्धे सोमभक्ष्येऽथ गीते चोद्गातृनिर्मिते ॥ ६ ॥

आगता कन्यका चैका सामगीतिसमुत्सुका ॥

शंकुकर्णनजं चित्रं वांछमाना विचक्षणा ॥ ७ ॥

छन्दोगस्य सुता श्रेष्ठा देवशर्माभिधस्य च ॥

औदुम्बरीति नाम्ना सा सामश्रवणलालसा ॥ ८ ॥

उद्गातारं च सदसि वचनं व्याजहार सा ॥

यथायथा प्रवर्तंते शंकवः सामसूचिताः ॥ ९ ॥

दक्षिणाग्नौ द्रुतं गत्वा कुरु होमं यथोदितम् ॥

येन त्वं मुच्यसे पापान्न चेद्व्यर्थो भविष्यति ॥ ६.१८८.१० ॥

तस्यास्तद्वचनं श्रुत्वा साभिप्रायं द्विजोत्तमाः ॥

ततः स चिन्तयामास यावत्तद्व्याहृतं वचः ॥ ११ ॥

ततः पप्रच्छ तां कन्या मुद्गाता विस्मयान्वितः ॥

कुतस्त्वमसि चाऽऽयाता सुता कस्य वदस्व मे ॥ १२ ॥

॥ औदुम्बर्युवाच ॥ ॥

पर्वतस्य सुता चास्मि विख्याता देवशर्मणः ॥

जातिस्मरा महाभाग प्राप्ता गन्धर्वलोकतः ॥ १३ ॥

॥ उद्गातोवाच ॥ ॥

गन्धर्वस्य सुता कस्य केन शप्तासि पुत्रिके ॥

कदा ते भविता मोक्षो मानुषत्वस्य कीर्त्तय ॥ १४ ॥

॥ औदुम्बर्युवाच ॥ ॥

नारदः पर्वतश्चैव गन्धर्वौ विदितौ जनैः ॥

पर्वतस्य सुता चास्मि शप्ताहं नारदेन हि ॥ १५ ॥

विपंचीं वादयन्स्वैरं दृष्टः स मुनिसत्तमः ॥

अजानंत्या च तानानां विशेषं मूर्च्छनोद्भवम् ॥

मया स हसितोऽतीव तानभंगतया गतः ।। १६ ॥

ततः स कुपितो मह्यं ददौ शापं द्विजोत्तमः ॥

मिथ्यापहसितो यस्मादहं शापमतोऽर्हसि ॥ १७ ॥

मानुषाणामयं धर्मस्तस्मात्त्वं मानुषी भव ॥

मया प्रसादितः सोऽथ पित्रा सार्धं मुनीश्वरः ॥ १८ ॥

शापांतं कुरु मे नाथ बालिशाया विशेषतः ॥

मानुषत्वं च मे भूयात्सुस्थाने सुकुले विभो ॥ १९ ॥

सुस्थाने चांतकालश्च ब्राह्मणस्य निवेशने ॥

ततोऽहं तेन संप्रोक्ता चमत्कारपुरे शुभे । ६.१८८.२० ॥

देवशर्मा तु विप्रेंद्रः कुलीनः सर्वशास्त्रवित् ॥

तस्य तु ब्राह्मणी नाम्ना सत्यभामेति विश्रुता ॥ २१ ॥

तस्या गर्भं समासाद्य मानुषत्वं समाचर ॥

यदा पैतामहो यज्ञस्तस्मिन्क्षेत्रे भविष्यति ॥ २२ ॥

उद्गातुः समये तस्य शंकोश्चैव विपर्यये ॥

तदा तु स त्वया वाच्यो ह्यस्थाने शंकुराहितः ॥

सर्वदेवसभा मध्ये तदा मोक्षो भविष्यति ॥ २३ ॥

इमां मे दैविकीं कांतां तनुं पश्य द्विजोत्तम ॥

विमानं पश्य चायातं पित्रा संप्रेषितं मम ॥ २४ ॥ ॥

॥ उद्गातोवाच ॥ ॥

तुष्टोऽहं ते विशालाक्षि यज्ञस्याऽविघ्नकारके ॥

न वृथा दर्शनं मे स्याद्विशेषाद्देवसंभवे ॥

वरं वरय मत्तस्त्वं तस्मादौदुम्बरीप्सितम् ॥ २५ ॥

औदुम्बर्युवाच ॥ ॥

यदि मे यच्छसि वरं सन्तुष्टो ब्राह्मणोत्तम ॥

सर्वेषामेव देवानां पुरतश्च ददस्व तम् ॥ २६ ॥

अद्यप्रभृति यः कश्चिद्यज्ञं भूमौ समाचरेत् ॥

तस्मिन्सदसि मध्यस्था मूर्तिः कार्या यथा मम ॥ ॥ २७ ॥

ततो मत्पुरतश्चैव कार्यं शकुप्रचारणम् ॥

स्वर्गस्थाया भवेत्तुष्टिर्मम तेन कृतेन च ॥ २८ ॥

॥ सूत उवाच ॥ ॥

तस्यास्तद्वचनं श्रुत्वा उद्गाता तामथाब्रवीत् ॥

अद्यप्रभृति यः कश्चिद्यज्ञमत्र करिष्यति ॥ २९ ॥

सदोमध्ये तु तां स्थाप्य पूजयित्वा विलेपनैः ॥

वस्त्रैराभरणैश्चैव गन्धपुष्पानुलेपनैः ॥ ६.१८८.३० ॥

ततः शंकुप्रचारं तु करिष्यति तदग्रतः ॥

एतद्वाक्यं मया प्रोक्तं सर्वदेवसमा गमे ॥ ३१ ॥

नान्यथा भावि भद्रं ते त्वं संतोषं परं व्रज ॥

त्वया विरहितं भद्रे सदःकर्म करिष्यति ॥ ३२ ॥

वृथा भावि च तत्सर्वं यथा भस्महुतं तथा ॥

या नारी सदसो मध्ये फलैस्त्वां पूजयिष्यति ॥ ३३ ॥

फलेफले कोटिगुणं तस्याः श्रेयो भविष्यति ॥

सफलाश्च दिशः सर्वा भविष्यंति न संशयः ॥ ३४ ॥

वस्त्रमाभरणं या च पुष्पधूपादिकं तथा ॥

तुभ्यं दास्यति तत्सर्वं तस्याः कोटिगुणं फलम् ॥ ३५ ॥

परं तावत्प्रतीक्षस्व मा विमानं समारुह ॥

देवि केनापि कार्येण तव पूजां समाचरे ॥ ३६ ॥

॥ देवा ऊचुः ॥ ॥

युक्तं त्वया द्विजश्रेष्ठ वचनं समुदाहृतम् ॥

अस्माकमपि वाक्येन सत्यमेतद्भविष्यति ॥ ३७ ॥

॥ सूत उवाच ॥ ॥

उद्गात्रा सैतमुक्ता च तिष्ठतिष्ठेत्यथोदिता ॥

देवी वरविमानेन गृहीता सांऽबरे स्थिता ॥ ३८ ॥

एतस्मिन्नेव काले तु देवशर्मसुताऽभवत् ॥

देवी नगरमध्यस्थां सर्वा नार्यो द्विजोत्तमाः ॥ ३९ ॥

कुतूहलात्समायातास्तस्या दर्शनलालसाः ॥

काचित्फलानि चादाय काचिद्वस्त्राणि भक्तितः ॥

यथार्हं पूजिता ताभिः सर्वाभिश्च द्विजोत्तमाः ॥ ६.१८८.४० ॥

श्रुत्वा स्वदुहितुः सोऽपि देवशर्मा समाययौ ॥

सपत्नीकः प्रहृष्टात्मा विस्मयोत्फुल्ललोचनः ॥ ४१ ॥

सोऽपि यावत्प्रणामं च तस्याश्चक्रे द्विजो त्तमाः ॥

सपत्नीकस्तदा प्रोक्त्वा निषिद्धस्तु तथा तया ॥ ४२ ॥

ताततात नमस्कारं मा मे कुरु सहांबया ॥

प्राप्ता स्वर्गगतिर्नाम मम नाशं प्रया स्यति ॥ ४३ ॥

तिष्ठात्रैव सपत्नीको यावदद्य दिनं विभो ॥

त्वामादाय सपत्नीकं यास्यामि त्रिदिवालयम् ॥

अनेनैव शरीरेण याचयित्वा सुरो त्तमान् ॥ ४४ ॥

ततस्तौ हर्षितौ तत्र पितरौ हि व्यवस्थितौ ॥

प्रेक्षमाणौ सुतायास्तां पूजां जनविनिर्मिताम् ॥

मन्यमानौ तदात्मानमधिकं सर्व देहिनाम् ॥ ४५ ॥

तस्य ये स्वजनाः केचित्सर्वे तेऽपि द्विजोत्तमाः ॥

शंसमाना सुतां तां तु तत्समीपं व्यवस्थिताः ॥ ४६ ॥

एतस्मिन्नंतरे प्राप्तो भृगुर्यत्र पितामहः ॥

निष्क्रम्य सदसस्तस्मात्कृताञ्जलिरुवाच तम् ॥ ४७ ॥

उद्गात्रा देव चात्मीयो मार्गः श्रुतिविवर्जितः ॥
विहितः कन्यकां धृत्वा सदोमध्ये सुरेश्वर ॥ ४८ ॥
देवत्वं जल्पितं तस्या नागर्याः सुरसंनिधौ ॥
सोमपानं तथा कुर्मो वयं तत्र तया सह ॥ ४९ ॥
ततो विधिस्तमानीय पप्रच्छ द्विजसत्तमाः॥
काऽसौ कन्या किमर्थं च सदोमध्ये धृता त्वया॥६.१८८.५॥।
सोऽब्रवीच्छापभ्रष्टेयं गन्धर्वी ब्राह्मणालये ॥
अवतीर्णा विधेर्यज्ञे मुक्ति रस्याः प्रकीर्तिता ॥५१॥
नारदेन पुरा देव कोपेन च तथा मुदा ॥
तस्या देव वरो दत्तो मया तुष्टेन सांप्रतम् ॥ ५२ ॥
शंकुप्रचारं नो बाह्यं तव संपत्स्यते क्वचित् ॥
देवैः सर्वैः समानीता प्रतिष्ठां प्रपितामह ॥ ५३ ॥
एतस्मिन्नंतरे प्राप्ताः कैलासाच्च द्विजोत्तमाः ॥
श्रुत्वा चौदुंबरीजातं माहात्म्यं धरणीतले ॥ ५४ ॥
यज्ञे पैतामहे चैव हाटकेश्वरसंभवे ॥
क्षेत्रे पुण्यतमे तत्र पूजार्थं द्विजसत्तमाः ॥५५॥
हृष्टा मातृगणा ये च अष्टषष्टिप्रमाणतः ॥
पूज्यंते ये च गन्धर्वैः सिद्धैः साध्यैर्मरुद्गणैः ॥ ५६ ॥
पृथक्पृथग्विधै रूपैर्लोकविस्मयकारकैः ॥
नृत्यंत्यश्च हसंत्यश्च गायंत्यश्च तथापराः ॥ ॥ ५७ ॥
तासां कोलाहलं श्रुत्वा ब्रह्मविष्णुपुरःसराः ॥
विस्मयं परमं प्राप्ताः सर्वे देवाः सवासवाः ॥ ५८ ॥
किमेतदिति जल्पंतः प्रोत्थिता यज्ञमंडपात् ॥
एतस्मिन्नंतरे प्राप्ताः सर्वास्ता यत्र पद्मजः ॥ ५९ ॥
प्रणम्य शिरसा हृष्टास्ततः प्रोचुस्तु सादरम् ॥
वयमेवं समायाताः श्रुत्वा ते यज्ञमुत्तमम् ॥ ६.१८८.६० ॥
आमंत्रिताश्च देवेश वायुना जगदायुना ॥
यज्ञभागा न चास्माकं विद्यंते यज्ञकर्मणि ॥ ६१ ॥

एतान्येव दिनानीह नायातास्तेन पद्मज ॥
औदुंबरीं वयं श्रुत्वा ह्यपूर्वां तेन संगताः ॥ ६२ ॥
सा दृष्ट्वा पूजिताऽस्माभिः प्रणिपातपुरःसरम्॥।
पर्वतस्य सुता यस्माद्गन्धर्वस्य महात्मनः ॥ ६३ ॥
सर्वकामप्रदा स्त्रीणां सर्वदेवैः प्रतिष्ठिता ॥
स्थानं दर्शय चास्माकं त्वं देव प्रपितामह ॥ ६४ ॥
अष्टषष्टिप्रमाणश्च गणोऽस्माकं व्यवस्थितः ॥
तच्छ्रुत्वा पद्मजो ज्ञात्वा संकीर्णं यतमंडपम् ॥
व्याप्तं देवगणैः सर्वैस्त्रयस्त्रिंशत्प्रमाणकैः ॥ ६५ ॥
ततो मध्यगमाहूय स तदा नगरोद्भवम् ॥
श्रुताध्ययनसंपन्नं वृहस्पतिमिवापरम् ॥
अब्रवीच्छलक्ष्णया वाचा त्यक्ता मौनं पितामहः ॥ ६६ ॥
त्वं गत्वा मम वाक्येन विप्रान्नागरसंभवान् ॥
प्रब्रूहि गोत्रमुख्यांश्च ह्यष्टषष्टिप्रमाणतः ॥ ६७ ॥
एते मातृगणाः प्राप्ता अष्टषष्टिप्रमाणकाः ॥
एकैक गोत्रमुख्याश्च एकैकस्य प्रमाणतः ॥ ६८ ॥
स्वेस्वे भूमिविभागे च स्थानं यच्छतु सांप्रतम् ॥
एतत्साहाय्यकं कार्यं भवद्भिर्मम नागराः ॥
प्रसादं प्रचुरं कृत्वा येन तुष्टिं प्रयांति च ॥ ६९ ॥
ततः स सत्वरं गत्वा तान्समाहूय नागरान्॥
प्रोवाच विनयोपेतः प्रणिपत्य ततः परम् ॥ ६.१८८.७० ॥
तच्छ्रुत्वा नागराः सर्वे संतोषं परमं गताः॥
एकैकस्य गणस्यैव ददुः स्थानं निजं तदा॥७१॥
ततस्ताः मातरः सर्वाः प्रणिपत्य पितामहम्॥
तदनन्तरमेवाथ गायत्रीं भक्तिपूर्वकम्॥७२॥
विप्रसंसूचिते स्थाने सर्वाश्चैव व्यवस्थिताः॥
पूजितास्तर्पिताश्चैव बलिभिर्विविधैरपि॥७३॥
ततो गायन्ति ता हृष्टा नृत्यंति च हसंति च॥

तर्पिता ब्राह्मणेन्द्रैश्च प्रोचुश्च तदनन्तरम्॥७४॥
न यास्यामो परं स्थानं स्थास्यामोत्रैव सर्वदा॥
ईदृशा यत्र विप्रेन्द्राः सर्वे भक्तिसमन्विताः॥७५॥
ईदृशं च महाक्षेत्रं हाटकेश्वरसंभवम्॥
एतस्मिन्नेव काले तु सावित्री तत्र संस्थिता॥७६॥
प्रणिपत्य द्विजैः सर्वैर्गच्छमाना निवारिता॥
मा देवयजनं गच्छ सावित्रि पतिवल्लभे॥७७॥
ब्रह्मणा परिणीतास्ति गायत्रीति वरांगना॥७८॥
तच्छ्रुत्वा वचनं तेषां सावित्री भ्रांतलोचना॥
दुःखशोकसमोपेता बाष्पव्याकुललोचना॥७९॥
दृष्ट्वा ता नृत्यमानाश्च गायमानास्तथैव च॥
उत्कूर्दतीर्धरापृष्ठे संतोषं परमं गताः॥६.१८८.८०॥
शशापाथ च सावित्री बाष्पगद्गदया गिरा।
सपत्न्या मम यत्पूजां कृत्वा वै सुसमागताः॥८१॥
न प्रणामः कृतोऽस्माकं मम दुःखेन दुःखिताः ॥
तस्मान्नैवापरं स्थानं गमिष्यथ कथंचन ॥ ८२ ॥
नागराणां च नो पूजा कदाचित्प्रभविष्यति ॥
न प्रासादोऽथ युष्माकं कदाचित्संभविष्यति ॥ ८३ ॥
शीतकाले तु शीतेन ह्युष्णकाले च रश्मिभिः ॥
वर्षाकाले तु तोयेन क्लेशं यास्य थ भूरिशः ॥८४॥
एवमुक्त्वा ततो देवी सा तत्रैव व्यवस्थिता ॥
नागराणां वरस्त्रीभिः सर्वाभिः परिवारिता ॥ ८५ ॥
संबोध्यमाना सततं सुस्त्रीणां चेष्टितेन च ॥
एतस्मिन्नेव काले तु भगवांस्तीक्ष्णदीधितिः ॥ ८६ ॥
अस्तं गतो महाञ्छब्दः प्रस्थितो यज्ञमंडपे ॥
याज्ञिकानां तु विप्राणां सुमहाञ्छास्त्रसंभवः ॥ ८७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये मातृगणगमनसावित्रीदत्त मातृगणशापवर्णनंनामाष्टाशीत्युत्तरशततमोऽध्यायः ॥१८८॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १८९



॥ सूत उवाच ॥ ॥

अथ यावच्च ताः शप्ता मातरो द्विजसत्तमाः ॥

सावित्र्या तास्तु गंधर्व्यः प्राप्ताः सा यत्र तिष्ठति ॥ १ ॥

ततः प्रणम्य ता ऊचुः सर्वा दीनतरं वचः ॥

वयं समागता देवि सर्वास्तव मखे यतः॥ २ ॥

यज्ञभागं लभिष्याम औदुंबर्याः प्रसादतः ॥

न चास्माभिः परिज्ञाता सावित्री चात्र तिष्ठति ॥ ३ ॥

दौर्भाग्यदोषसंपन्ना नागरीभिः समावृता ॥

अस्माकं सुखमार्गोऽयं नृत्यगीतसमुद्भवः ॥ ४ ॥

तत्कुर्वाणास्ततो रात्रौ शप्ता गांधर्वसत्तमे ॥

स्त्रीणां दुःखेन दुःखार्ता जायंते सर्वयोषितः ॥५॥

यूयमानंदिताः सर्वाः सपत्न्या मम चोत्सवे ॥

तां प्रणम्य प्रपूज्याद्य नाहं संभाषितापि च ॥ ६ ॥

विशेषान्नृत्यगीतं च प्रारब्धं मम चाग्रतः॥

तस्माद्व्योमगति नैव भवतीनां भविष्यति ॥ ७ ॥

अस्मिन्स्थाने सदा दीनास्तथाऽऽश्रयविवर्जिताः ॥

संतिष्ठध्वं न वः पूजां करिष्यंति च मानवाः ॥ ८ ॥

दीनानामसमर्थानां यात्राकृत्येषु सर्वदा ॥

तस्यास्तद्वचनं देवि नान्यथा संभविष्यति ॥ ९ ॥

औदुम्बर्याः पूजनाय गत्वा तस्यै निवेद्यताम् ॥

सा हि व्यपनयेद्दुःखं ध्रुवं सा हि प्रकामदा ॥ ६.१८९.१० ॥

तेनाऽत्र सहसा प्राप्ता यावन्नष्टमनोरथाः ॥ ११ ॥

तस्मात्कुरुष्व कल्याणि यथास्माकं गतिर्भवेत् ॥

माहात्म्यं तव वर्द्धेत त्रैलोक्येऽपि चराचरे ॥ १२ ॥

॥ औदुम्बर्युवाच ॥ ॥

का शक्तिर्विद्यतेऽस्माकं कृतं सावित्रिसंभवम् ॥
अन्यथा कर्तुमेवाद्य सर्वैरपि सुरासुरैः ॥ १३ ॥
तथापि शक्तितो देव्यो यतिष्यामि हिताय वः ॥
अष्टषष्टिषु गोत्रेषु भवत्यः संनियोजिताः ॥ १४ ॥
पितामहेन तुष्टेन तत्र पूजामवाप्स्यथ ॥
यूयं रात्रौ च संज्ञाभिर्हास्यपूर्वाभिरेव च ॥१५॥
अद्यप्रभृति यस्यात्र नागरस्य तु मंदिरे ॥
वृद्धिः संपत्स्यते काचिद्वि शेषान्मंडपोद्भवा ॥ १६ ॥
तथा या योषितः काश्चित्पुरद्वारं समेत्य च ॥
अदृष्टहास्यमाध्याय क्षपिष्यंति बलिं ततः ॥ १७ ॥
तेन वो भविता तृप्तिर्देवानां च यथा मखैः ॥
याः पुनर्न करिष्यंति पूजामेतां मयोदिताम् ॥ १८ ॥
युष्माकं नगरे तासां सुपुत्रो नाशमाप्स्यति ॥
युष्माकमपमाने न सदा रोगी भविष्यति ॥ १९ ॥
तस्मात्तिष्ठध्वमत्रैव रक्षार्थं नगरस्य च ॥
शापव्याजेन युष्माकं वरोऽयं समुपस्थितः ॥ ६.१८९.२० ॥
एतस्मिन्नंतरे प्राप्तो देवशर्मा द्विजोत्तमाः ॥
गंधर्वः पर्वतो जातः स्वपत्न्या सहितस्तदा ॥ २१ ॥
यदा चौदुम्बरी शप्ता नारदेन सुरर्षिणा ॥
मानुषी भव क्रुद्धेन तदा संप्रार्थितस्तया॥२२॥
मदर्थं मानुषो भूत्वा तता त्वं चानया सह॥
सृज मां मानुषीं चेव येन गच्छामि नो भुवि॥२३॥
विण्मूत्रसंयुते गर्भे सर्वदोषसमन्विते॥
ततः सा कृपया तस्याः सत्पत्न्या देवशर्मणः॥२४॥
अवतीर्णा धरापृष्ठे वानप्रस्थाश्रमे ततः॥
एवं सा पञ्चमी रात्रिस्तस्य यज्ञस्य सत्तमाः॥२५॥
उत्सवेन मनोज्ञेन चौदुम्बर्या व्यतिक्रमात्॥
प्रत्यूषे च ततो जाते यदा तेन विसर्जिता॥२६॥

औदुम्बरी तदा प्राह पर्वतं जनकं निजम्॥

कल्येऽत्रावभृथो भावी विधियज्ञसमुद्भवः॥२७॥

सर्वतीर्थमयस्तस्मिन्स्नानं न स्यात्ततः परम्॥

यास्यामः स्वगृहान्भूयः सर्वैर्देवैः समन्विताः॥२८॥

अनेनैव विमानेन त्रयो वापि यथासुखम्॥

ममापि च वरो जातो यः शापान्नारदोद्भवात्॥

यज्ञभागो मया प्राप्तो देवानामपि दुर्लभः॥

पौर्णमासीदिने प्राप्ते विशेषात्स्त्रीजनैः कृतः॥६.१८९.३०॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्य औदुंबर्युत्पत्तिपूर्वकतत्प्राग्जन्मवृत्तांतवर्णनंनामैकोननवत्युत्तरशततमोऽध्यायः॥१८९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९०



सूत उवाच॥

एवं क्रतुः स संजातः पञ्चरात्रं द्विजोत्तमाः॥

हाटकेश्वरजे क्षेत्रे सर्वकाम समृद्धिमान्॥१॥

विप्रांश्च भिक्षुकांश्चैव दीनांधांश्च विशेषतः॥

समाप्तौ तस्य यज्ञस्य संतर्प्य सकलांस्ततः॥

ऋत्विजो दक्षिणाभिस्तान्यथोक्तान्द्विजसत्तमान्॥२॥

ततः स चानयामास नागरान्ब्राह्मणोत्तमान्॥

चातुश्चरणसंपन्नाञ्छ्रुतिस्मृति समन्वितान्॥३॥

कृतांजलिपुटो भूत्वा ततस्तान्प्राह सादरम्॥

यद्भूमौ तु मया तीर्थं पुष्करं संनिवेशितम्॥४॥

कलिकालस्य भीतेन द्वितीयं ब्राह्मणोत्तमाः॥

येन नो नाशमभ्येति म्लेच्छैरपि समाश्रितम्॥५॥

हाटकेश्वरदेवस्य प्रभावेन महात्मनः॥

कलिकाले च सम्प्राप्ते तीर्थान्यायतनानि च॥६॥

म्लेच्छैः स्पृष्टान्यसंदिग्धं प्रयागादीनि कृत्स्नशः॥

यज्ञस्तु विहितस्तेन भयायं तत्कृतेन च॥७॥

तस्माद्वदथ किं दानं युष्मद्भूमेश्च निष्क्रये॥।

प्रयच्छामि च यज्ञस्य येन मे स्यात्फलं द्विजाः॥८॥

ब्राह्मणा ऊचुः॥

यदि यच्छसि चास्माकं दक्षिणां यज्ञसंभवाम्॥

तदस्माकं स्ववासेन स्थानं नय पवित्रताम्॥९॥

यदेतद्भवता चात्र पुष्करं तीर्थमुत्तमम्॥

स्थापितं तस्य नो ब्रूहि माहात्म्यं सुरसत्तम॥

येन स्नानादिकाः सर्वाः क्रियाः कुर्मः पितामह॥६.१९०.१०॥

ब्रह्मोवाच॥

एतत्तीर्थं मया सृष्टमंतरिक्षस्थितं सदा॥

किं न श्रुतं पुराणेषु भवद्भिर्द्विजसत्तमाः॥११॥

पृथिव्यां नैमिषं तीर्थमन्तरिक्षे च पुष्करम्॥

त्रैलोक्ये तु कुरुक्षेत्रं विशेषेण व्यवस्थितम्॥१२॥

तद्युष्माकं हितार्थाय पंचरात्रं धरातले॥

आगमिष्यत्यसंदिग्धं मम वाक्यप्रणोदितम्॥१३॥

कार्तिक्यां शुक्लपक्षे तु ह्येकादश्यां दिने स्थिते॥

यावत्पंचदशी तावत्तिथिः पापप्रणाशिनी॥१४॥

पंचरात्रस्य मध्ये तु यः स्नानं च करिष्यति ॥

श्राद्धं वा श्रद्धया युक्तस्तस्य स्यादक्षयं हि तत् ॥ १५ ॥

अह तु पंचरात्रं तद्ब्रह्मलोकादुपेत्य च ॥

संश्रयं तु करिष्यामि तीर्थेऽत्रैव द्विजोत्तमाः ॥ १६ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

तव मूर्तिं करिष्यामः स्थानेऽत्र प्रपितामह ॥

तस्यां संक्रमणं नित्यं तस्मात्कार्यं त्वयाविभो ॥ १७ ॥

तीर्थं चैव सदाप्यऽत्र समागच्छतु चांबरात् ॥

लोकानां पापनाशाय तथा त्वं कर्तुमर्हसि ॥ १८ ॥

एषा नो दक्षिणा देव यज्ञस्यैव समुद्भवा॥ १९ ॥

एवं कृते सुरश्रेष्ठ सफलः स्यात्क्रतुस्तव ॥

प्रतिज्ञा च तथा सत्या तस्माद्दानाय निर्मिता ॥ ६.१९०.२० ॥ ॥

॥ श्रीब्रह्मोवाच ॥ ॥

मन्त्राहूतं ततः श्रेष्ठं नभोमार्गाद्द्विजोत्तमाः ॥

हाटकेश्वरजे क्षेत्रे पुष्करं चागमिष्यति ॥ २१ ॥

अघमर्षं जपंश्चैव यः करिष्यति तोयगः॥

मम मूर्तेः पुरः स्थित्वा पैलमन्त्रपुरःसरम् ॥२२॥

जपिष्यति द्विजश्रेष्ठाः सवनानां चतुष्टयम् ॥

ब्रह्मलोकात्समागत्य प्रश्रोष्या मि च तद्द्विजाः ॥ २३ ॥

॥ सूत उवाच ॥ ॥

अथ ते नागराः सर्वे पुष्पदानप्रपूर्वकम्॥

अनुज्ञां प्रददुस्तुष्टा यज्ञफलसमाप्तये ॥ २४ ॥

एतस्मिन्नंतरे प्राप्तः पुलस्त्योऽध्वर्युसत्तमः ॥

यत्र स्थाने स्थितो ब्रह्मा नागरैः परिवारितः ॥ २५ ॥

अब्रवीच्च समाप्तस्ते यतः संपूर्णदक्षिणः ॥

प्रायश्चित्तैर्विरहितो यथा नान्यस्य कस्यचित् ॥ २६ ॥

अतः परं कर्मशेषं किंचिदस्ति पितामह ॥

वारुणेष्टिर्जपश्चैव तत्करिष्यामि सांप्रतम्॥ २७ ॥

तथा चाऽवभृथस्नानं प्रकर्तव्यं त्वया सह ॥

तस्मादुत्तिष्ठ गच्छामो यत्र तोयव्यवस्थितम् ॥ २८ ॥

येनेष्टिवारुणीं तत्र कुर्मो विप्रैर्यथोचितैः ॥

चतुर्भिर्ब्रह्मपूर्वैश्च मयाचाग्नीभहोतृभिः ॥ २९ ॥

यथावह्नौ तथा तोये मन्त्रवत्तद्धवंशुभम् ॥

हूयते संविधानेनयज्ञपात्रैः सम न्वितम्॥ ६.१९०.३० ॥

वरुणस्य प्रतुष्ट्यर्थं स्नानं कार्यं त्वयैव च ॥

ऋत्विग्भिः सहितेनैव सर्वारिष्टप्रशांतये ॥ ३१ ॥

यस्तत्र समये स्नानं करिष्यति त्वया सह ॥

अन्योऽपि मानवः कश्चिद्विपाप्मा स भविष्यति ॥ ३२ ॥

यानीह संति तीर्थानि त्रैलोक्ये सचराचरे ॥

वारुणीमिष्टिमासाद्य तानि यांति च संनिधौ ॥ ३३ ॥

तस्मात्सर्वप्रयत्नेन दीक्षितेन समन्वितम् ॥

तत्र स्नानं प्रकर्तव्यं जलमध्ये तु सार्थिभिः ॥

ब्राह्मणैः क्षत्रियैर्वैश्यैः सर्वैरव भृथोत्सवे ॥ ३४ ॥

तस्मारद्विसर्जयाद्यैतान्ब्राह्मणांस्तावदेव च ॥

एतेऽपि च करिष्यंति स्नानं तत्र त्वया सह ॥ ३५ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा प्रस्थितो ब्रह्मा ज्येष्ठकुण्डतटं शुभम् ॥

गायत्र्या सहितो हृष्टः कृतकृत्यत्वमागतः ॥ ३६ ॥

अथ तद्वचनं श्रुत्वा सुराः सर्वे तथा द्विजाः ॥

पुलस्त्यश्च शुभार्थाय स्नानार्थं प्रस्थितास्तदा॥

ब्रह्मणा सहिता हृष्टाः पुत्रदारसमन्विताः ॥ ३७ ॥

अथ संकीर्णता जाता समंताज्ज्येष्ठपुष्करे ॥

स्नानार्थमागतैर्लोकैरूर्ध्वबाहुभिरेव च ॥ ३८ ॥

न तत्र लक्ष्यते ब्रह्मा न तत्कर्म च वारुणम् ॥

क्रियमाणैर्द्विजैस्तत्र व्याप्ते भूमि तलेऽखिले ॥ ३९ ॥

अथांते कर्मणस्तस्य ब्रह्मा प्राह शतक्रतुम् ॥

हितार्थं सर्वलोकस्य विनयावनतं स्थितम् ॥ ६.१९०.४० ॥

न मां ज्ञास्यति दूरस्था जनाः स्नानार्थमागताः ॥

मज्जमानं जले पुण्ये सम्मर्देऽस्मिन्जलोद्भवे ॥ ४१ ॥

तस्मान्नागं समारुह्य निजं वृत्रनिषूदन ॥

एणस्य कृष्णसारस्य वंशांते चर्म न्यस्य च ॥ ४२ ॥

ततस्तत्स्नानवेलायां क्षेप्तव्यं सलिले त्वया ॥

येन लोकः समस्तोऽयं वेत्ति कालं तु स्नानजम् ॥ ४३ ॥

स्नानं च कुरुते श्रेयः संप्राप्नोति यथोदितम् ॥

दूरस्थोऽपि सुवृद्धोऽपि बालोऽपि च समागतः ॥

स्नानजं लभते श्रेयः संदृष्टेऽपि यथोदितम् ॥ ४४ ॥ ॥

॥ सूत उवाच ॥ ॥

बाढमित्येव संप्रोच्य सत्वरं प्रययौ हरिः ॥ ४५ ॥

ततो नागं समारुह्य धृत्वा वंशं करे निजे ॥

मृगचर्माग्रसंयुक्तं तोयमध्ये व्यवस्थितः ॥ ४६ ॥

एतत्कर्मावसाने स स्नातुकामे पितामहे ॥

तच्चर्म प्राक्षिपत्तोये स्वयमेव शतक्रतुः ॥ ४७ ॥

एतस्मिन्नन्तरे देवाः सर्वे गन्धर्वगुह्यकाः ॥

मानुषाश्च विशेषेण स्नातास्तत्र समाहिताः ॥ ४८ ॥

एतस्मिन्नन्तरे ब्रह्मा शक्रं प्रोवाच सादरम् ॥

कृतस्नानं सुरैः सार्धं विनयावनतं स्थितम् ॥ ४९ ॥

सहस्राक्षं त्वया कष्टं मन्मखे विपुलं कृतम् ॥
आनीता च तथा पत्नी गायत्री च सुमध्यमा ॥ ६.१९०.५० ॥
तस्माद्वरय भद्रं ते यं वरं मनसि स्थितम् ॥
सर्वं तेऽहं प्रदास्यामि यद्यपि स्यात्सुदुर्लभम् ॥ ५१ ॥
॥ इन्द्र उवाच ॥ ॥
यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥
यदि त्वां प्रार्थयाम्यद्य भूयात्तु तादृशं विभो ॥ ५२ ॥
वर्षेवर्षे तु यः कुर्यात्संप्राप्तेऽस्मिन्दिने शुभे ॥
मृगचर्म समादाय वंशाग्रे यो महीपतिः ॥ ५३ ॥
नागप्रवरमारुह्य स्वयमेव पितामह ॥
यथाऽहं प्रक्षिपेत्तोये स स्यात्पापविवर्जितः ॥ ५४ ॥
अजेयः सर्वशत्रूणां सर्वव्यसनवर्जितः ॥
ये करिष्यंति च स्नानमनेन मृगचर्मणा ॥ ५५ ॥
सार्धमन्येऽपि ये लोका अपि पापसमन्विताः ॥
तेषां वर्षकृतं पापं त्वत्प्रसादात्प्रणश्यतु ॥ ५६ ॥
॥ ब्रह्मोवाच ॥ ॥
एतत्सर्वं सहस्राक्ष तव वाक्यमसंशयम् ॥
भविष्यति न संदेहः सर्वमेतन्मयोदितम् ॥ ५७ ॥
यो राजा श्रद्धया युक्तो देशस्यास्य समुद्भवः ॥
आनर्तस्य गजारूढो मृगचर्म क्षिपिष्यति ॥ ५८ ॥
अत्र कुण्डे मदीये तु मां संपूज्य तटस्थितम् ॥।
सर्वलोकहितार्थाय संप्राप्ते प्रतिपद्दिने ॥ ५९ ॥
समाप्ते कुतपे काले विजयी स भविष्यति ॥
कार्तिक्यां च व्यतीतायां द्वितीयेऽह्नि व्यवस्थिते ॥ ॥ ६.१९०.६० ॥
तथा तत्कालमासाद्य ये करिष्यंति मानवाः ॥
स्नानं तच्च दिनेऽत्रैव वर्षपापविवर्जिताः ॥
आधिव्याधिविमुक्ताश्च ते भविष्यंत्यसंशयम् ॥ ६१ ॥
॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे प्राप्तो यक्ष्माख्यो दारुणो गदः ॥
अचिकित्स्योऽपि देवानां तथा धन्वंतरेरपि ॥ ६२ ॥
नीलांबरधरः क्षामो दीनो दण्डसमाश्रितः ॥
क्षुत्कुर्वञ्छलेष्मणा तावत्कृच्छ्रात्संधारयन्पदम् ॥ ६३ ॥
ततश्च प्रणतो भूत्वा वाक्यमेतदुवाच सः ॥ ६४ ॥ ॥
॥ यक्ष्मोवाच ॥ ॥
तव यज्ञमहं श्रुत्वा दूरादेव पितामह ॥
क्षुत्क्षामकंठश्चायातः समाप्तावद्य कृच्छ्रतः ॥ ६५ ॥
दक्षेणाहं पुरा सृष्टश्चंद्रार्थं कुपितेन च ॥
रोहिणीं सेवमानस्य संत्यक्तान्यासुतस्य च ॥६६॥
ततो माहेश्वरादेशात्तेन तुष्टेन तस्य च ॥
पक्षमेकं कृतं मह्यं तस्यास्वादनकर्मणि ॥ ६७ ॥
अन्यपक्षे न किंचिच्च येन तृप्तिः प्रजायते ॥
यज्ञस्यैव तु सर्वस्य तर्पयित्वा द्विजोत्तमम् ॥ ६८ ॥
ततस्तद्वचनं ग्राह्यं तर्पितोऽहमसंशयम् ॥
पौर्णमास्यां ततो देव यस्य यज्ञस्य कृत्स्नशः ॥ ६९ ॥
यस्य नो ब्राह्मणो ब्रूते यज्ञस्यांते प्रतर्पितः ॥
तर्पितोऽस्मीति तत्तस्य वृथा स्याद्यज्ञजं फलम् ॥
यदि कोटिगुणं दत्तमपि श्रद्धासमन्वितम् ॥ ६.१९०.७० ॥
एतच्छ्रुत्वा त्वया देव पठ्यमानं श्रुताविह ॥
तस्मात्सम्यक्स्थिते यज्ञे ब्राह्मणं तर्पयेत वै ॥ ७१ ॥
प्रत्यक्षं मे यथा तृप्तिरन्नेनैव प्रजायते ॥
त्वत्प्रसादात्सुरश्रेष्ठ तथा नीतिर्विधीयताम् ॥ ७२ ॥
॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा पद्मजस्तस्य पथ्यंपथ्यं वचोऽखिलम् ॥
श्रुतिं प्रमाणतां नीत्वा ततो वचनमब्रवीत् ॥ ७३ ॥
अद्यप्रभृति वै विप्राः साग्नयः स्युर्धरातले ॥
तैः सर्वैर्वैश्वदेवांते बलिर्देयस्तथाखिलः ॥ ७४ ॥

दत्वाऽन्येभ्योथ देवेभ्यस्तव तृप्तिर्भविष्यति ॥

तव पक्षे द्वितीये तु सत्यमेतन्मयोदितम् ॥ ७५ ॥

ये विप्रास्तु बलिं दद्युर्वैश्वदेवांत आगते ॥

न तेषामन्वये चापि त्वया सेव्योऽत्र कश्चन ॥ ७६ ॥

॥ यक्ष्मोवाच ॥ ॥

तीर्थेऽस्मिंस्तावके देव सदाहं तपसि स्थितः ॥

तिष्ठामि यदि वादेशस्तावको जायते मम ॥ ७७ ॥

॥ ब्रह्मोवाच ॥ ॥

यद्येवं कुरु चान्यत्र त्वमाश्रमपदं निजम् ॥

संप्राप्य भूमिदेशे च कञ्चिद्यदभिरोचते ॥

अर्थयित्वा द्विजानेतान्यथा यज्ञकृते मया ॥ ७८ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा प्रार्थयामास चमत्कारपुरोद्भवान् ॥

तेभ्यः प्राप्य ततो भूमिं चकाराथाश्रमं निजम् ॥ ७९ ॥

तत्र यः कुरुते स्नानं प्रतिपद्दिवसे स्थिते ॥

सूर्यवारेण मुच्येत यक्ष्मणा सेवितोऽपि वा ॥ ६.१९०.८० ॥

अद्यापि दृश्यते चात्र प्रत्ययस्तस्य संभवे ॥

सर्वेषामाहिताग्नीनां नागराणां विशेषतः ॥

कलि कालेऽपि संप्राप्ते न यक्ष्मा संप्रजायते ॥ ८१ ॥

तथा चतुष्पदानां च तेषां गृहनिवासिनाम् ॥

न तस्य भेषजानि स्युर्न मंत्रा न चिकित्सकाः ॥ ८२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्रह्मयज्ञावभृथयक्ष्म तीर्थोत्पत्तिमाहात्म्यवर्णनंनाम नवत्युत्तरशततमोऽध्यायः ॥ १९० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९१



॥ ऋषय ऊचुः ॥ ॥

सूतपुत्र त्वया प्रोक्तं सावित्री नागता च यत् ॥

कौटिल्येन समायुक्तैराहूता वचनैस्तथा ॥

पुलस्त्येन पुनश्चैव प्रसक्ता गृहकर्मणि ॥ १ ॥

ततस्तु ब्रह्मणा कोपाद्गायत्री च समाहृता ॥

देवैर्विप्रैश्चे साऽतीव शंसिता भार्यतां गता ॥ २ ॥

सावित्री च कथं जाता तां ज्ञात्वा यज्ञमण्डपे ॥

पत्नीशालां प्रविष्टां च सर्वं नो विस्तराद्वद ॥ ३ ॥

॥ सूत उवाच ॥ ॥

सावित्री वशगं कांतं ज्ञात्वा विश्वासमागता ॥

स्थिरा भूत्वा तदा सर्वा देवपत्नीः समानयत् ॥ ४ ॥

गौरी लक्ष्मीः शची मेधा तथा चैवाप्यरुन्धती ॥

स्वधा स्वाहा तथा कीतिर्बुद्धिः पुष्टिः क्षमा धृतिः ॥

तथा चान्याश्च बहवो ह्यप्सरोभिः समन्विताः ॥ ५ ॥

घृताची मेनका रंभा उर्वशी च तिलोत्तमा ॥

अप्सराणां गणाः सर्वे समाजग्मुर्द्विजोत्तमाः ॥ ६ ॥

सा ताभिः सहिता देवीपूर्णहस्ताभिरेव च ॥

संप्रहृष्टमनोभिश्च प्रस्थिता मण्डपं प्रति ॥ ७ ॥

वाद्यमानेषु वाद्येषु गीतध्वनियुतेषु च ॥

गन्धर्वाणां प्रमुख्यानां किन्नराणां विशेषतः ॥ ८ ॥

प्रस्थिता सा महाभागा यावत्तद्यज्ञमण्डपम् ॥

तावत्तस्यास्तदा चक्षुः प्रास्फुरद्दक्षिणं मुहुः ॥ ९ ॥

अपसव्यं मृगाश्चक्रुस्तथान्येऽपि खगादयः ॥

विपर्यस्तेन संयाति शब्दान्कुर्वंति चासकृत् ॥ ६.१९१.१० ॥

दक्षिणानि तथाऽङ्गानि स्फुरमाणानि वै मुहुः॥

तस्या मनसि संक्षोभं जनयति निरर्गलम् ॥ ११ ॥

ताश्च देवस्त्रियः सर्वा नृत्यंति च हसंति च ॥

गायंति च यथोत्साहं तस्याः पार्श्वे व्यवस्थिताः ॥ १२ ॥

न जानंति च संक्षोभं तथा शकुनजं हृदि ॥

अन्योन्यस्पर्द्धया सर्वा गीतनृत्यपरायणाः ॥ १३ ॥

अहंपूर्वमहंपूर्वं प्रविशामि महामखे ॥

इत्यौत्सुक्यसमोपेतास्ता गच्छंति तदा पथि ॥ १४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सावित्र्या यज्ञागमनकालिकोत्पाताद्यपशकुनोद्भववर्णनंनामैकनवत्युत्तरशततमोऽध्यायः ॥१९१॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९२



॥ सूत उवाच ॥ ॥

अथ श्रुत्वा महानादं वाद्यानां समुपस्थितम् ॥

नारदः सम्मुखः प्रायाज्ज्ञात्वा च जननीं निजाम् ॥ १ ॥

प्रणिपत्य स दीनात्मा भूत्वा चाश्रुपरिप्लुतः ॥

प्राह गद्गदया वाचा कण्ठे बाष्पसमावृतः ॥ २ ॥

आत्मनः शापरक्षार्थं तस्याः कोपविवृद्धये ॥

कलिप्रियस्तदा विप्रो देवस्त्रीणां पुरः स्थितः ॥ ३ ॥

मेघगम्भीरया वाचा प्रस्खलंत्या पदेपदे ॥

मया त्वं देवि चाहूता पुलस्त्येन ततः परम् ॥ ४ ॥

स्त्रीस्वभावं समाश्रित्य दीक्षाकालेऽपि नागता ॥ ५ ॥

ततो विधेः समादेशाच्छक्रेणान्या समाहृता ॥

काचिद्गोपसमुद्भूता कुमारी देव रूपिणी ॥ ६ ॥

गोवक्त्रेण प्रवेश्याथ गुह्यमार्गेण तत्क्षणात् ॥

आकर्षिता महाभागे समानीताथ तत्क्षणात् ॥ ७ ॥

सा विष्णुना विवाहार्थं ततश्चैवानुमोदिता ॥

ईश्वरेण कृतं नाम गायत्री च तवानुगम् ॥ ८ ॥

ब्राह्मणैः सकलैः प्रोक्तं ब्राह्मणीति भवत्वियम् ॥

अस्माकं वचनाद्ब्रह्मन्कुरु हस्तग्रहं विभो ॥ ९ ॥

देवैः सर्वैः स सम्प्रोक्तस्ततस्तां च वराननाम् ॥

ततः पत्न्युत्थधर्मेण योजयामास सत्वरम् ॥६.१९२. १० ॥

किं वा ते बहुनोक्तेन पत्नीशालां समागता ॥

रशना योजिता तस्या गोप्याः कट्यां सुरेश्वरि ॥ ११ ॥

तद्दृष्ट्वा गर्हितं कर्म निष्क्रांतो यज्ञमण्डपात् ॥

अमर्ष वशमापन्नो न शक्तो वीक्षितुं च ताम् ॥ १२ ॥

एतज्ज्ञात्वा महाभागे यत्क्षमं तत्समाचर ॥

गच्छ वा तिष्ठ वा तत्र मण्डपे धर्मवर्जिते ॥ १३ ॥
तच्छ्रुत्वा सा तदा देवी सावित्री द्विजसत्तमाः ॥
प्रम्लानवदना जाता पद्मिनीव हिमागमे ॥ १४ ॥
लतेव च्छिन्नमूला सा चक्रीव प्रियविच्युता ॥
शुचिशुक्लागमे काले सरसीव गतोदका ॥ १५ ॥
प्रक्षीणचन्द्रलेखेव मृगीव मृगवर्जिता ॥
सेनेव हतभूपाला सतीव गतभर्तृका ॥ १६ ॥
संशुष्का पुष्पमालेव मृतवत्सैव सौरभी ॥
वैमनस्यं परं गत्वा निश्चलत्वमुपस्थिताम् ॥
तां दृष्ट्वा देवपत्न्यस्ता जगदुर्नारदं तदा ॥ १७ ॥
धिग्धिक्कलिप्रिय त्वां च रागे वैराग्यकारकम् ॥
त्वया कृतं सर्वमेतद्विधेस्तस्य तथान्तरम् ॥ १८ ॥
॥ गौर्युवाच ॥ ॥
अयं कलिप्रियो देवि ब्रूते सत्यानृतं वचः ॥
अनेन कर्मणा प्राणान्बिभर्त्येष सदा मुनिः ॥ १९ ॥
अहं त्र्यक्षेण सावित्रि पुरा प्रोक्ता मुहुर्मुहुः ॥
नारदस्य मुनेर्वाक्यं न श्रद्धेयं त्वया प्रिये ॥
यदि वांछसि सौख्यानि मम जातानि पार्वति ॥ ६.१९२.२० ॥
ततःप्रभृति नैवाहं श्रद्दधेऽस्य वचः क्वचित् ॥
तस्माद्गच्छामहे तत्र यत्र तिष्ठति ते पतिः ॥ २१ ॥
स्वयं दृष्ट्वैव वृत्तांतं कर्तव्यं यत्क्षमं ततः ॥
नात्रास्य वचनादद्य स्थातव्यं तत्र गम्यताम् ॥ २२ ॥
॥ सूत उवाच ॥ ॥
गौर्या स्तद्वचनं श्रुत्वा सावित्री हर्षवर्जिता ॥
मखमण्डपमुद्दिश्य प्रस्खलन्ती पदेपदे ॥ २३ ॥
प्रजगाम द्विजश्रेष्ठाः शून्येन मनसा तदा ॥
प्रतिभाति तदा गीतं तस्या मधुरमप्यहो ॥ २४ ॥
कर्णशूलं यथाऽऽयातमसकृद्द्विजसत्तमाः ॥

वन्ध्यवाद्यं यथा वाद्यं मृदंगानकपूर्वकम् ॥ २५ ॥

प्रेतसंदर्शनं यद्वन्मर्त्यं तत्सा महासती ॥

वीक्षितुं न च शक्नोति गच्छमाना तदा मखे ॥ २६ ॥

शृंगारं च तथांगारं मन्यते सा तनुस्थितम् ॥

वाष्पपूर्णेक्षणा दीना प्रजगाम महासती ॥ २७ ॥

ततः कृच्छ्रात्समासाद्य सैवं तं यज्ञमंडपम् ॥

कृच्छ्रात्कारागृहं तद्वद्दुष्प्रेक्ष्यं दृक्पथं गतम् ॥ २८ ॥

अथ दृष्ट्वा तु संप्राप्तां सावित्रीं यज्ञमण्डपम् ॥

तत्क्षणाच्च चतुर्वक्त्रः संस्थितोऽधोमुखो ह्रिया। ॥ २९ ॥

तथा शम्भुश्च शक्रश्च वासुदेवस्तथैव च ॥

ये चान्ये विबुधास्तत्र संस्थिता यज्ञमंडपे ॥ ६.१९२.३० ॥

ते च ब्राह्मणशार्दूलास्त्यक्त्वा वेदध्वनिं ततः ॥

मूकीभावं गताः सर्वे भयसंत्रस्तमानसाः ॥३१॥

अथ संवीक्ष्य सावित्री सपत्न्या सहितं पतिम् ॥

कोपसंरक्तनयना परुषं वाक्यमब्रवीत् ॥ ३२ ॥

॥ सावित्र्युवाच ॥ ॥

किमेतद्युज्यते कर्तुं तव वृद्ध तमाकृते ॥

ऊढवानसि यत्पत्नीमेतां गोपसमुद्भवाम् ॥ ३३ ॥

उभयोः पक्षयोर्यस्याः स्त्रीणां कांता यथेप्सिताः ॥

शौचाचारपरित्यक्ता धर्मकृत्यपराङ्मुखाः ॥ ३४ ॥

यदन्वये जनाः सर्वे पशुधर्मरतोत्सवाः ॥

सोदर्यां भगिनीं त्यक्त्वा जननीं च तथा पराम् ॥ ३५ ॥।

तस्याः कुले प्रसेवंते सर्वां नारीं जनाः पराम् ॥

यथा हि पशवोऽश्नंति तृणानि जलपानगाः ॥ ३६ ॥

विण्मूत्रं केवलं चक्रुर्भारोद्वहनमेव च ॥९

तद्वदस्याः कुलं सर्वं तक्रमश्नाति केवलम् ॥ ३७ ॥

कृत्वा मूत्रपुरीषं च जन्मभोगविवर्जितम् ॥

नान्यज्जानाति कर्तव्यं धर्मं स्वोदरसं श्रयात् ॥ ३८ ॥

अन्त्यजा अपि नो कर्म यत्कुर्वन्ति विगर्हितम् ॥
आभीरास्तच्च कुर्वंति तत्किमेतत्त्वया कृतम् ॥ ३९ ॥
अवश्यं यदि ते कार्यं भार्यया परया मखे ॥
त्वया वा ब्राह्मणी कापि प्रख्याता भुवनत्रये ॥ ६.१९२.४० ॥
नोढा विधे वृथा मुण्ड नूनं धूर्तोऽसि मे मतः ॥
यत्त्वया शौचसंत्यक्ता कन्याभावप्रदूषिता॥४१॥
प्रभुक्ता बहुभिः पूर्वं तथा गोपकुमारिका॥
एषा प्राप्ता सुपापाढ्या वेश्याजनशताधिका॥४२॥
अन्त्यजाता तथा कन्या क्षतयोनिः प्रजायते॥
तथा गोपकुमारी च काचित्ताद्दृक्प्रजायते॥४३॥
मातृकं पैतृकं वंशं श्वाशुरं च प्रपातयेत्।
तस्मादेतेन कृत्येन गर्हितेन धरातले॥४४॥
न त्वं प्राप्स्यसि तां पूजां तथा न्ये विबुधोत्तमाः॥
अनेन कर्मणा चैव यदि मे स्ति ऋतं क्वचित्॥४४॥
पूजां ये च करिष्यंति भविष्यंति च निर्धनाः॥
कथं न लज्जितोसि त्वमेतत्कुर्वन्विगर्हितम्॥४६॥
पुत्राणामथ पौत्राणामन्येषां च दिवौकसाम्॥
अयोग्यं चैव विप्राणां यदेतत्कृतवानसि॥४७॥
अथ वा नैष दोषस्ते न कामवशगा नराः॥
लज्जंति च विजानंति कृत्याकृत्यं शुभाशुभम्॥४८॥
अकृत्यं मन्यते कृत्यं मित्रं शत्रुं च मन्यते॥
शत्रुं च मन्यते मित्रं जनः कामवशं गतः॥४९॥
द्यूतकारे यथा सत्यं यथा चौरं च सौहृदम्॥
यथा नृपस्य नो मित्रं तथा लज्जा न कामिनाम्॥६.१९२.५०॥
अपि स्याच्छीतलो वह्निश्चंद्रमा दहनात्मकः।
क्षाराब्दिरपि मिष्टः स्यान्न कामी लज्जते ध्रुवम्॥५१॥
न मे स्याद्दुखमेतद्धि यत्सापत्न्यमुपस्थितम्॥
सहस्रमपि नारीणां पुरुषाणां यथा भवेत्॥ ५२॥

कुलीनानां च शुद्धानां स्वजात्यानां विशेषतः॥
त्वं कुरुष्व पराणां च यदि कामवशं गतः॥५३॥
एतत्पुनर्महद्दुःखं यदाभीरी विगर्हिता॥
वेश्येव नष्टचारित्रा त्वयोढा बहुभर्तृका ॥ ५४ ॥
तस्मादहं प्रयास्यामि यत्र नाम न ते विधे ॥
श्रूयते कामलुब्धस्य ह्रिया परिहृतस्य च ॥ ५५ ॥
अहं विडंबिता यस्मादत्रानीय त्वया विधे ॥
पुरतो देवपत्नीनां देवानां च द्विजन्मनाम् ॥
तस्मात्पूजां न ते कश्चित्सांप्रतं प्रकरिष्यति ॥ ५६ ॥
अद्य प्रभृति यः पूजां मंत्रपूजां करिष्यति ॥
तव मर्त्यो धरापृष्ठे यथान्येषां दिवौकसाम् ॥ ५७ ॥
भविष्यति च तद्वंशो दरिद्रो दुःखसंयुतः ॥
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोपि चालये ॥ ५८ ॥
एषाऽभीरसुता यस्मान्मम स्थाने विगर्हिता ॥
भविष्यति न संतानस्तस्माद्वाक्यान्ममैव हि ॥ ५९ ॥
न पूजां लप्स्यते लोके यथान्या देवयोषितः ॥ ६.१९२.६० ॥
करिष्यति च या नारी पूजा यस्या अपि क्वचित् ॥
सा भविष्यति दुःखाढ्या वंध्या दौर्भाग्यसंयुता ॥ ६१ ॥
पापिष्ठा नष्टचारित्रा यथैषा पंचभर्तृका ॥
विख्यातिं यास्यते लोके यथा चासौ तथैव सा ॥ ६२ ॥
एतस्या अन्वयः पापो भविष्यति निशाचर ॥
सत्यशौचपरित्यक्ताः शिष्टसंगविवर्जिताः ॥ ६३ ॥
अनिकेता भविष्यंति वंशेऽस्या गोप्रजीविनः ॥
एवं शस्वा विधिं साध्वी गायत्रीं च ततः परम् ॥ ६४ ॥
ततो देवगणान्सर्वाञ्छशाप च तदा सती ॥
भोभोः शक्र त्वयानीता यदेषा पंचभर्तृका ॥ ६५ ॥
तदाप्नुहि फलं सम्यक्छुभं कृत्वा गुरोरिदम् ॥
त्वं शत्रुभिर्जितो युद्धे बंधनं समवाप्स्यसि ॥ ६६ ॥

कारागारे चिरं कालं संगमिष्यत्यसंशयम् ॥

वासुदेव त्वया यस्मादेषा वै पंचभर्तृका ॥ ६७ ॥

अनुमोदिता विधेः पूर्वं तस्माच्छप्स्याम्यसंशयम् ॥

त्वं चापि परभृत्यत्वं संप्राप्स्यसि सुदुर्मते ॥ ६८ ॥

समीपस्थोऽपि रुद्र त्वं कर्मैतद्यदुपेक्षसे ॥

निषेधयसि नो मूढ तस्माच्शृणु वचो मम ॥ ६९ ॥

जीवमानस्य कांतस्य मया तद्विरहोद्भवम् ॥

संसेवितं मृतायां ते दयितायां भविष्यति ॥ ६.१९२.७० ॥

यत्र यज्ञे प्रविष्टेयं गर्हिता पंचभर्तृका ॥

भवानपि हविर्वह्ने यत्त्वं गृह्णासि लौल्यतः ॥ ७१ ॥

तथान्येषु च यज्ञेषु सम्यक्छंकाविवर्जितः ॥

तस्माद्दुष्टसमाचार सर्वभक्षो भविष्यसि ॥ ७२ ॥

स्वधया स्वाहया सार्धं सदा दुःखसमन्वितः ॥

नैवाप्स्यसि परं सौख्यं सर्वकालं यथा पुरा ॥ ७३ ॥

एते च ब्राह्मणाः सर्वे लोभोपहतचेतसः ॥

होमं प्रकुर्वते ये च मखे चापि विगर्हिते। ७४ ॥

वित्तलोभेन यत्रैषा निविष्टा पञ्चभर्तृका ॥

तथा च वचनं प्रोक्तं ब्राह्मणीयं भविष्यति ॥ ७५ ॥

दरिद्रोपहतास्तस्माद्वृषलीपतयस्तथा ॥

वेदविक्रयकर्तारो भविष्यथ न संशयः ॥ ७६ ॥

भोभो वित्तपते वित्तं ददासि मखविप्लवे ॥

तस्माद्यत्तेऽखिलं वित्तमभोग्यं संभविष्यति ॥ ७७ ॥

तथा देवगणाः सर्वे साहाय्यं ये समाश्रिताः ॥

अत्र कुर्वंति दोषाढ्ये यज्ञे वै पांचभर्तृके ॥ ७८ ॥

संतानेन परित्यक्तास्ते भविष्यंति सांप्रतम्॥

दानवैश्च पराभूता दुःखं प्राप्स्यति केवलम् ॥ ७९ ॥

एतस्याः पार्श्वतश्चान्याश्चतस्रो या व्यवस्थिताः ॥

आभीरीति सप त्नीति प्रोक्ता ध्यानप्रहर्षिताः ॥ ६.१९२.८० ॥

मम द्वेषपरा नित्यं शिवदूतीपुरस्सराः ॥
तासां परस्परं संगः कदाचिच्च भविष्यति ॥ ८१ ॥
नान्येनात्र नरेणापि दृष्टिमात्रमपि क्षितौ ॥
पर्वताग्रेषु दुर्गेषु चागम्येषु च देहिनाम् ॥
वासः संपत्स्यते नित्यं सर्वभोगविवर्जितः ॥ ८२ ॥
॥ सूत उवाच ॥ ॥
एवमुक्त्वाऽथ सावित्रीकोपोपहतचेतसा ॥
विसृज्य देवपत्नीस्ताः सर्वा याः पार्श्वतः स्थिताः ॥ ८३ ॥
उदङ्मुखी प्रतस्थे च वार्यमाणापि सर्वतः ॥
सर्वाभिर्देवपत्नीभिर्लक्ष्मीपूर्वाभिरेवच ॥८४॥
तत्र यास्यामि नो यत्र नामापि किल वै यतः ॥
श्रूयते कामुकस्यास्य तत्र यास्याम्यहं द्रुतम् ॥८५॥
एकश्चरणयोर्न्यस्तो वामः पर्वतरोधसि ॥
द्वितीयेन समारूढा तस्यागस्य तथोपरि ॥८६॥
अद्यापि तत्पदं वामं तस्यास्तत्र प्रदृश्यते ॥
सर्वपापहरं पुण्यं स्थितं पर्वतरोधसि ॥ ८७ ॥
अपि पापसमाचारो यस्तं पूजयते नरः ॥
सर्वपातकनिर्मुक्तः स याति परमं पदम् ॥ ८८ ॥
यो यं काममभि ध्याय तमर्चयति मानवः ॥
अवश्यं समवाप्नोति यद्यपि स्यात्सुदुर्लभम्॥ ८९ ॥
॥ सूत उवाच ॥ ॥
एवं तत्र स्थिता देवी सावित्री पर्वता श्रया ॥
अपमानं महत्प्राप्य सकाशात्स्वपतेस्तदा ॥ ६.१९२.९० ॥
यस्तामर्चयते सम्यक्पौर्णमास्यां विशेषतः ॥
सर्वान्कामानवाप्नोति स मनोवांछितां स्तदा ॥ ९१ ॥
या नारी कुरुते भक्त्या दीपदानं तदग्रतः ॥
रक्ततंतुभिराज्येन श्रूयतां तस्य यत्फलम् ॥ ९२ ॥
यावन्तस्तंतवस्तस्य दह्यंते दीप संभवाः ॥

मुहूर्तानि च यावंति घृतदीपश्च तिष्ठति ॥
तावज्जन्मसहस्राणि सा स्यात्सौभाग्यभांगिनी ॥ ९३ ॥
पुत्रपौत्रसमोपेता धनिनी शील मंडना। ॥
न दुर्भगा न वन्ध्या च न च काणा विरूपिका ॥ ९४ ॥
या नृत्यं कुरुते नारी विधवापि तदग्रतः ॥
गीतं वा कुरुते तत्र तस्याः शृणुत यत्फलम् ॥ ९५ ॥
यथायथा नृत्यमाना स्वगात्रं विधुनोति च ॥
तथातथा धुनोत्येव यत्पापं प्रकृतं पुरा ॥ ९६ ॥
यावन्तो जन्तवो गीतं तस्याः शृण्वंति तत्र च ॥
तावंति दिवि वर्षाणि सहस्राणि वसेच्च सा ॥ ९७ ॥
सावित्रीं या समुद्दिश्य फलदानं करोति सा ॥
फलसंख्याप्रमाणानि युगानि दिवि मोदते ॥ ९८ ॥
मिष्टान्नं यच्छते यश्च नारीणां च विशेषतः ॥
तस्या दक्षिणमूर्तौ च भर्त्राढ्यानां द्विजोत्तमाः ॥
स च सिक्थप्रमाणानि युगा नि दिवि मोदते ॥९९॥
यः श्राद्धं कुरुते तत्र सम्यक्छ्रद्धासमन्वितः ॥
रसेनैकेन सस्येन तथैकेन द्विजोत्तमाः ॥
तस्यापि जायते पुण्यं गयाश्राद्धेन यद्भवेत् ॥ ६.१९२.१०० ॥
यः करोति द्विजस्तस्या दक्षिणां दिशमाश्रितः ॥
सन्ध्योपासनमेकं तु स्वपत्न्या क्षिपितैर्जलैः ॥ १०१ ॥
सायंतने च संप्राप्ते काले ब्राह्मणसत्तमाः॥
तेन स्याद्वंदिता संध्या सम्यग्द्वादशवार्षिकी ॥ १०२ ॥
यो जपेद्ब्राह्मणस्तस्याः सावित्रीं पुरतः स्थितः ॥
तस्य यत्स्यात्फलं विप्राः श्रूयतां तद्वदामि वः ॥ १०३ ॥
दशभिर्ज्जन्मजनितं शतेन च पुरा कृतम् ॥
त्रियुगे तु सहस्रेण तस्य नश्यति पातकम् ॥ १०४ ॥
तस्मात्सर्वप्रयत्नेन चमत्कारपुरं प्रति ॥
गत्वा तां पूजयेद्देवीं स्तोतव्या च विशेषतः ॥ १०५ ॥

सावित्र्या इदमाख्यानं यः पठेच्छृणुयाच्च वा ॥

सर्वपापविनिर्मुक्तः सुखभागत्र जायते ॥ १०६ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽहं द्विजोत्तमाः ॥

सावित्र्याः कृत्स्नं माहात्म्यं किं भूयः प्रवदाम्यहम् ॥ १०७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सावित्रीमाहात्म्यवर्णनंनाम द्विनवत्युत्तरशततमोऽध्यायः ॥ १९२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९३



॥ ऋषय ऊचुः ॥ ॥

एवं गतायां सावित्र्यां सकोपायां च सूतज ॥

किं कृतं तत्र गायत्र्या ब्रह्माद्यैश्चापि किं सुरैः ॥ १ ॥

एतत्सर्वं समाचक्ष्व परं कौतूहलं हि नः ॥

कथं शापान्विता देवाः संस्थितास्तत्र मण्डपे ॥ २ ॥

॥ सूत उवाच ॥ ॥

गतायामथ सावित्र्यां शापं दत्त्वा द्विजोत्तमाः ॥

गायत्री सहसोत्थाय वाक्यमेतदुदैरयत् ॥ ३ ॥

सावित्र्या यद्वचः प्रोक्तं तन्न शक्यं कथंचन ॥

अन्यथा कर्तुमेवाथ सर्वैरपि सुरासुरैः ॥ ४ ॥

महासती महाभागा सावित्री सा पतिव्रता ॥

पूज्या च सर्वदेवानां ज्येष्ठा श्रेष्ठा च सद्गुणैः ॥ ५ ॥

परं स्त्रीणां स्वभावोऽयं सर्वासां सुरसत्तमाः॥

अपि सह्यो वज्रपातः सपत्न्या न पुनः कथा ॥६॥

मत्कृते येऽत्र शपिता सावित्र्या ब्राह्मणाः सुराः ॥

तेषामहं करिष्यामि शक्त्या साधारणां स्वयम् ॥ ७ ॥

अपूज्योऽयं विधिः प्रोक्तस्तया मंत्रपुरःसरः ॥

सर्वेषामेव वर्णानां विप्रादीनां सुरो त्तमाः ॥ ८ ॥

ब्रह्मस्थानेषु सर्वेषु समये धरणीतले ॥

न ब्रह्मणा विना किंचित्कृत्यं सिद्धिमुपैष्यति ॥ ९ ॥

कृष्णार्चने च यत्पुण्यं यत्पुण्यं लिंग पूजने ॥

तत्फलं कोटिगुणितं सदा वै ब्रह्मदर्शनात् ॥

भविष्यति न सन्देहो विशेषात्सर्वपर्वसु ॥ ६.१९३.१० ॥

त्वं च विष्णो तया प्रोक्तो मर्त्यजन्म यदाऽप्स्यसि ॥

तत्रापि परभृत्यत्वं परेषां ते भविष्यति ॥११॥

तत्कृत्वा रूपद्वितयं तत्र जन्म त्वमाप्स्यसि ॥

यत्तया कथितो वंशो ममायं गोपसंज्ञितः ॥

तत्र त्वं पावनार्थाय चिरं वृद्धिमवाप्स्यसि ॥ १२ ॥

एकः कृष्णाभिधानस्तु द्वितीयोऽर्जुनसंज्ञितः ॥

तस्यात्मनोऽर्जुनाख्यस्य सारथ्यं त्वं करिष्यसि ॥ १३ ॥

तेनाकृत्येऽपि रक्तास्ते गोपा यास्यंति श्लाघ्यताम् ॥

सर्वेषामेव लोकानां देवानां च विशेषतः ॥ १४ ॥

यत्रयत्र च वत्स्यंति मद्वं शप्रभवानराः ॥

तत्रतत्र श्रियो वासो वनेऽपि प्रभविष्यति ॥ १५ ॥

भोभोः शक्र भवानुक्तो यत्तया कोपयुक्तया ॥

पराजयं रिपोः प्राप्य कारा गारे पतिष्यति ॥ १६ ॥

तन्मुक्तिं ते स्वयं ब्रह्मा मद्वाक्येन करिष्यति ॥ १७ ॥

ततः प्रविष्टः संग्रामे न पराजयमाप्स्यसि ॥

त्वं वह्ने सर्वभक्षश्च यत्प्रोक्तो रुष्टया तया ॥ १८ ॥

तदमेध्यमपि प्रायः स्पृष्टं तेऽर्चिर्भिरग्रतः ॥

मेध्यतां यास्यति क्षिप्रं ततः पूजामवास्यसि ॥ १९ ॥

स्वाहा नाम च भार्या या देवान्सन्तर्पयिष्यति ॥

स्वधा चाऽपि पितॄन्सर्वान्मम वाक्यादसंशयम् ॥६.१९३.२॥।

यद्रुद्र प्रियया सार्धं वियोगः कथितस्तया ॥

तस्याः श्रेष्ठ तरा चान्या तव भार्या भविष्यति ॥

गौरीनामेति विख्याता हिमाचलसुता शुभा ॥ २१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठेनागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गायत्रीवरप्रदानोनाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९४



॥ सूत उवाच ॥ ॥

एवं सा तान्वरान्दत्त्वा सर्वेषां शापभागिनाम् ॥

मौनव्रतपरा भूत्वा निविष्टाऽथ धरातले ॥ १ ॥

ततो देवगणाः सर्वे तापसाश्च महर्षयः ॥

साधुसाध्विति तां प्रोच्य ततः प्रोचुरिदं वचः ॥ २ ॥

एतां देवीप्रसादेन ब्राह्मणानां विशेषतः ॥

पूजयिष्यंति मर्त्येऽत्र सर्वे लोकाः समाहिताः ॥ ३ ॥

ब्रह्माणं पूजयित्वा तु पश्चादेनां सुरेश्वरीम् ॥

पूजयिष्यंति ये मर्त्यास्ते तु यांति परां गतिम् ॥ ४ ॥

या कन्या पतिसंयोगं संप्राप्यात्र समाहिता ॥

ततः पादप्रणामं च गायत्र्याश्च करिष्यति ॥

पतिं प्रजापतिं प्राप्य सा भविष्यत्यसंशयम् ॥ ५ ॥

सर्वकामसुखोपेता धनधान्यसमन्विता ॥

या नारी दुर्भगा वंध्या भविष्यति च शोभना ॥ ६ ॥

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं गते पंचोत्तरे शते ॥

पद्मजानां हरः प्रादादेतत्कथमनुत्त मम् ॥ ७ ॥

ब्राह्मणेभ्यः स संतुष्टः किंवाऽन्योऽस्ति महेश्वरः ॥

एतं नः संशयं भूयो यथावद्वक्तुमर्हसि ॥ ८ ॥

आयुष्यं शंकरस्यापि यत्प्रमाणं तथा हरेः ॥

ब्रह्मणोऽपि समाचक्ष्व परं कौतूहलं हि नः ॥ ९ ॥

॥ सूत उवाच ॥ ॥

अहं वः कीर्तयिष्यामि विस्तरेण द्विजोत्तमाः ॥

त्रयाणामपि चायुष्यं यत्प्रमाणं व्यवस्थितम् ॥ ६.१९४.१० ॥

निमेषस्य चतुर्भागस्त्रुटिः स्यात्तद्द्वयं लवः ॥

लवद्वयं कला प्रोक्ता काष्ठा तु दशपंचभिः ॥ ११ ॥

त्रिंशत्काष्ठां कलामाहुः क्षणस्त्रिंशत्कलो मतः ॥

मुहूर्तमानं मौहूर्ता वदंति द्वादशक्षणम् ॥ १२ ॥

त्रिंशन्मुहूर्तमुद्दिष्टमहोरात्रं मनीषिभिः ॥

मासस्त्रिंशदहोरात्रैर्द्वौ मासावृतुसंज्ञितः ॥ १३ ॥

ऋतुत्रयं चायनं च अयने द्वे तु वत्सरम् ॥

दैविकं च भवेत्तच्च ह्यहोरात्रं द्विजोत्तमाः ॥ १४ ॥

उत्तरं चायनं तत्र दिनं रात्रिस्तथाऽपरम्॥

लक्षैः सप्तदशाख्यैस्तु मनुष्याणां च वत्सरैः ॥ १५ ॥

अष्टाविंशतिभिश्चैव सहस्रैस्तु तथा परैः ॥

आद्यं कृतयुगं चैव तद्भ विष्यति सद्द्विजाः ॥ १६ ॥

ततो द्वादशभिर्लक्षैः षोडशानां सहस्रकैः ॥

त्रेतायुगं समादिष्टं द्वितीयं द्विजसत्तमाः ॥ १७ ॥

द्वापरं चाष्टभिर्लक्षैस्तृ तीयं परिकीर्तितम् ॥

चतुःषष्टिसहस्रैस्तु यथावत्परिसंख्यया ॥ १८ ॥

चतुर्लक्षं समादिष्टं युगं कलिसमुद्भवम् ॥

द्वात्रिंशता सहस्रैस्तु चतुर्थं तद्विदुर्बुधाः ॥ १९॥

चतुर्युगसहस्रेण दिनं पैतामहं भवेत् ॥

तेषां त्रिंशद्दिनैर्मासो मासैर्द्वादशभिर्वत्सरो भवेत् ॥६.१९४.२॥।

ब्रह्मा तेषां शतं यावत्स जीवति पितामहः ॥

सांप्रतं चाष्टवर्षीयः षण्मासश्चैव संस्थितः ॥२१॥

प्रतिपद्दिवसस्यास्य प्रथमस्य तथा गतम् ॥

यामद्वयं शुक्रवारे वर्तमाने महात्मनः ॥ ॥२२॥

ब्रह्मणो वर्षमात्रेण दिनं वैष्णवमुच्यते ॥२३॥

सोपि वर्षशतंयावदात्ममानेन जीवति ॥

पंचपचाशदादिष्टास्तस्य जातस्य वत्सराः ॥ २४ ॥

तिथयः पंच यामार्द्धं सोमवारेण संगतम् ॥

वैष्णवेन तु वर्षेण दिनं माहेश्वरं भवेत् ॥ २५ ॥

शिवो वर्षशतं यावत्तेन रूपेण च स्थितः ॥
यावदुच्छ्वसितं वक्त्रं सदाशिवसमुद्भवम् ॥ २६ ॥
पश्चाच्छक्तिं समभ्येति यावन्निश्वसितं भवेत् ॥
निश्वासोच्छ्वसितानां च सर्वेषामेव देहिनाम् ॥ २७ ॥
ब्रह्मविष्णुशिवानां च गन्धर्वोरगरक्षसाम् ॥
एकविंशत्सहस्राणि शतैः षड्भिः शतानि च ॥ २८ ॥
अहोरात्रेण चोक्तानि प्रमाणे द्विज सत्तमाः ॥
षड्भिरुच्छ्वासनिश्वासैः पलमेकं प्रवर्तते ॥ २९ ॥
नाडी षष्टिपला प्रोक्ता तासां षष्ट्या दिनं निशा ॥
निश्वासोच्छ्वसितानां च परिसंख्या न विद्यते ॥
सदाशिवसमुत्थानामेतस्मात्सोऽक्षयः स्मृतः ॥ ६.१९४.३० ॥
अन्येऽपि ये प्रगच्छंति ब्रह्मज्ञानसमन्विताः ॥
अक्षयास्तेऽपि जायंते सत्यमेतन्मयोदितम् ॥ ३१ ॥
॥ ऋषय ऊचुः ॥ ॥
यद्येवं सूतपुत्रात्र ब्रह्मविष्णुमहेश्वराः ॥
आत्मवर्षशते पूर्णे यांति नाशमसंशयम् ॥ ॥ ३२ ॥
तत्कथं मानुषाणां च मर्त्यलोकेल्पजीविनाम् ॥
कथयंति च ये मुक्तिं विद्वांसश्चैव सूतज ॥ ३३ ॥
नूनं तेषां मृषा वादो मोक्षमार्गसमु द्भवः ॥ ३४ ॥
॥ सूत उवाच ॥ ॥
अनादिनिधनः कालः संख्यया परिवर्जितः ॥
असंख्याता गता मोक्षं ब्रह्मविष्णुमहेश्वराः ॥ ३५ ॥
निजे वर्षशते पूर्णे वालुकारेणवो यथा ॥
निजमानेन या श्रद्धा ब्रह्मज्ञानसमुद्भवा ॥
तेषां चेन्मानुषाणां च तन्मुक्तिः स्यादसंशयम् ॥ ३६॥
यथैते दंशमशका मानुषाणां च कीटकाः ॥
जायंते च म्रियंते च गण्यंते नैव कुत्रचित् ॥
इन्द्रादीनां तथा मर्त्याः संभाव्या जगतीतले ॥ ३७ ॥

देवानां च यथा मर्त्याः कीटस्थाने च संस्थिताः ॥

तथा देवा अपि ज्ञेया ब्रह्मणोऽव्यक्तजन्मनः ॥ ३८ ॥

ब्रह्मणस्तु यथा देवाः कीटस्थाने व्यवस्थिताः ॥

तथा ब्रह्मापि विष्णोश्च कीटस्थाने व्यवस्थितः ॥ ३९ ॥

पितामहो यथा विष्णोः कीटस्थाने व्यवस्थितः ॥

तथा स शिवशक्तिभ्यां पीरज्ञेयो द्विजो त्तमाः ॥ ६.१९४.४० ॥

यथा विष्णुः कृमिर्ज्ञेयस्ताभ्यामेव द्विजोत्तमाः ॥

सदाशिवस्य विज्ञेयौ तथा तौ कृमिरूपकौ ॥ ४१ ॥

एवं च विविधैर्यज्ञैः श्रद्धा पूतेन चेतसा ॥

ब्रह्मज्ञानात्परं यांति सदाशिवसमुद्भवम् ॥ ४२ ॥

अग्निष्टोमादिभिर्यज्ञैः कृतैः संपूर्णदक्षिणैः ।।

तदर्थं ते दिवं यांति भुक्त्वा भोगान्पृथग्विधान् ॥ ४३ ॥

क्षये च पुनरायांति सुकृतस्य महीतले ॥

ब्रह्मज्ञानात्परं प्राप्य पुनर्जन्म न विद्यते ॥ ४४ ॥

तस्मात्सर्वप्रयत्नेन तत्राभ्यासं समा चरेत् ॥

जन्मभिर्बहुभिः पश्चाच्छनैर्मुक्तिमवाप्नुयात् ॥ ४५ ॥

एकजन्मनि संप्राप्तो लेशो ज्ञानस्य तस्य च ॥

द्वितीये द्विगुणस्तस्य तृतीये त्रिगु णो भवेत् ॥ ४६ ॥

एकोत्तरो भवेदेवं सदा जन्मनिजन्मनि ॥ ४७ ॥

॥ ऋषय ऊचुः ॥ ॥

ब्रह्मज्ञानस्य संप्राप्तिर्मर्त्यानां जायते कथम् ॥

एतन्नः सर्वमाचक्ष्व यदि त्वं वेत्सि सूतज ॥ ४८ ॥

।। सूत उवाच ॥ ॥

का शक्तिर्मम वक्तव्ये ज्ञाने मर्त्यसमुद्भवे ॥

स्वयमेव न यो वेत्ति स परस्य वदेत्कथम् ॥ ४९ ॥

उपदेशः परं यो मे पित्रा दत्तो द्विजोत्तमाः ॥

तमहं वः प्रवक्ष्यामि ब्रह्मज्ञानसमुद्भवम् ॥ ६.१९४.५० ॥

हाटकेश्वरजे क्षेत्रे ह्यस्ति तीर्थद्वयं शुभम् ॥

कुमारिकाभ्यां विहितं ब्रह्मज्ञानप्रदं नृणाम् ॥ ५१ ॥

ब्राह्मण्या चैव शूद्र्या च कुमारीभ्यां विनिर्मितम् ॥

अष्टम्यां च चतुर्दश्यां यस्ताभ्यां स्नानमाचरेत् ॥ ५२ ॥

पश्चात्पूजयते भक्त्या प्रसिद्धे सिद्धिपादुके ॥

सुगुप्ते गर्तमध्यस्थे कुमार्या परिपूजिते ॥ ५३ ॥

तस्य संवत्सरस्यान्ते ब्रह्मज्ञानं प्रजायते ॥

शक्त्या विनिहिते ते च स्वदर्शनविवृद्धये ॥ ५४ ॥

लोकानां मुक्तिकामानां ब्रह्मज्ञानसुखावहे ॥

मम तातो गतस्तत्र ततश्च ज्ञानवान्स्थितः ॥ ५५ ॥

तस्यादेशादहं तत्र गतः संवत्सरं स्थितः ॥

पादुके पूजयामास ततो ज्ञानं च संस्थितम् ॥ ५६ ॥

यत्किञ्चिद्वा श्रुतं लोके पुराणाग्र्यं व्यवस्थितम् ॥

वर्तमानं भविष्यच्च तदहं वेद्मि भो द्विजाः ॥ ५७ ॥

तत्प्रसादादसंदिग्धं प्रमाणं चात्र संस्थितम् ॥

मुक्त्वैकं वेदपठनं सूतत्वं च यतो मयि ॥ ५८ ॥

तस्यापि वेद्मि सर्वार्थं भर्तृयज्ञो यथा मुनिः ॥

अस्मादत्रैव गच्छध्वं यदि मुक्तेः प्रयोजनम् ॥ ॥ ५९ ॥

किमेतैः स्वर्गदैः सत्रैः पुनरावृत्तिकारकैः ॥

आराधयध्वं ते गत्वा पादुके सिद्धिदे नृणाम् ॥

येन संवत्सरस्यान्ते ब्रह्मज्ञानं प्रजायते ॥ ॥ ६.१९४.६० ॥

॥ ऋषय ऊचुः ॥ ॥

साधुसाधु महाभाग ह्युपदेशः कृतो महान् ॥

तेन संतारिताः सर्वे वयं संसारसागरात् ॥ ६१ ॥

यास्यामोऽपि वयं तत्र सत्रे द्वादशवार्षिके ॥

समाप्तेऽस्मिन्न संदेहः सर्वे च कृतनिश्चयाः ॥ ६२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्रह्मज्ञानप्राप्त्यर्थं कुमारिकातीर्थद्वयगर्तक्षेत्रस्थपादुकामाहात्म्यवर्णनंनाम चतुर्णवत्युत्तरशततमोऽध्यायः ॥ ॥ १९४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९५

https://sa.wikisource.org/s/fp2



॥ ऋषय ऊचुः ॥ ॥

शूद्री च ब्राह्मणी चापि ये त्वया परिकीर्तिते ॥

हाटकेश्वरजे क्षेत्रे तीर्थद्वयमनुत्तमम् ॥ १ ॥

तत्कथं तत्र संजातं केन वा तद्विनिर्मितम् ॥

एतच्च सर्वमाचक्ष्व विस्तरेण महामते ॥ २ ॥

पादुकाभ्यां समुत्पत्तिः श्रुताऽस्माभिः पुरा तव ॥

वद तच्चापि माहात्म्यं ताभ्यां चैव समुद्भवम् ॥ ३ ॥

॥ सूत उवाच ॥ ॥

पुरासीन्नागरो विप्रश्छांदोग्य इति विश्रुतः ॥

यस्याऽन्वयेऽपि विप्रेन्द्राश्छान्दोग्या इति विश्रुताः ॥ ४ ॥

सामवेदविदस्तस्य गृहस्थाश्रमधर्मिणः ॥

पश्चिमे वयसि प्राप्ते कन्या जाता सुशोभना ॥ ५ ॥

सर्वैरपि गुणैर्युक्ता सर्वलक्षण लक्षिता ॥

सप्तरक्ता त्रिगंभीरा पञ्चसूक्ष्माऽबृहत्कटिः ॥ ६ ॥

पद्मपत्रविशालाक्षी लंबकेशी सुशोभना ॥

बिंबोष्ठी ह्रस्वलोमा च पूर्णचन्द्रसमप्रभा ॥ ॥ ७ ॥

तस्या नाम पिता चक्रे ब्राह्मणीति द्विजोत्तमाः ॥

यस्मात्सा ब्राह्मणैर्दत्ता मण्डपान्ते सुपूजितैः ॥ ८ ॥

पश्चिमे वयसि प्राप्ते अपत्यरहितस्य च ॥

ववृधे सा च तन्वङ्गी चन्द्रलेखा यथा तथा ॥ ९ ॥

शुक्लपक्षे तु संप्राप्ते जनलोचनतुष्टिदा ॥

यस्मिन्नहनि संजाता छान्दोग्यस्य महात्मनः ॥

आनर्ताधिपतेस्तस्मिंस्तादृग्रूपा सुताऽभवत् ॥ ६.१९५.१० ॥

यस्याः कायप्रभौघेण सर्वं तत्सूतिकागृहम् ॥

निशागमेऽपि संजातं रत्नौघैरिव सुप्रभम् ॥

ततस्तस्याः पिता नाम चक्रे रत्नवतीति च ॥ ११ ॥
अथ सख्यं समापन्ना ब्राह्मण्या सह सा शुभा ॥
नैरन्तर्येण ताभ्यां च वियोगो नैव जायते ॥ ॥ १२ ॥
एकाशनं तथा शय्या एकान्नेन च भोजनम् ॥
अष्टमेऽब्दे च संजाते पिता तस्या द्विजोत्तमाः ॥ १३ ॥
विवाहं चिन्तयामास प्रदानाय वरे तथा ॥
सा ज्ञात्वा चेष्टितं तस्य पितुर्दुःखसमन्विता ॥ १४ ॥
सख्या वियोगभीता च प्रोचे रत्नवती तदा ॥
अश्रुपूर्णेक्षणा दीना बाष्पगद्गदया गिरा ॥ १५ ॥
सखि तातो विवाहं मे प्रकरिष्यति सांप्रतम् ॥
विवाहितायाश्च सख्यं न भविष्यति कर्हिचित् ॥ १६ ॥
वज्रपातोपमं वाक्यं तस्याः श्रुत्वा सखी च सा ॥
रुरोद कण्ठमाश्लिष्य स्नेहव्याकुलितेन्द्रिया ॥ १७ ॥
अथ तद्रुदितं श्रुत्वा माता तस्या मृगावती ॥
ससंभ्रमा समागत्य वाक्यमेतदुवाच ह ॥ १८ ॥
किमर्थं रुद्यते पुत्रि केन ते विप्रियं कृतम् ॥
करोमि निग्रहं येन तस्याद्यैव दुरात्मनः ॥ १९ ॥
॥ रत्नवत्युवाच ॥ ॥
शृणु मे सुप्रियातीव ब्राह्मणी प्राणसंमता ॥
विवाहं प्राप्य कल्याणी प्रयास्यति पतेर्गृहम् ॥६.१९५.२॥।
अनया रहिताहं च न जीवामि कथंचन ॥
एतस्मात्कारणाद्देवि प्ररोदिमि सुदुःखिता ॥ २१ ॥
॥ मृगावत्युवाच ॥ ॥
यद्येवं पुत्रि यत्र त्वं प्रयास्यसि पतेर्गृहे ॥
तस्य राज्ञस्तु यो विप्रः पौरोहित्ये व्यवस्थितः ॥ २२ ॥
तस्य पुत्राय दास्यामि सखीमेनां तव प्रियाम् ॥
तत्रापि येन ते संगो भविष्यत्यनया सह ॥ २३ ॥
एवमुक्त्वा ततो राज्ञी छादोग्यं द्विजसत्तमम् ॥

समानीयाब्रवीदेनं विनयावनता स्थिता ॥२४॥

इयं तव सुता ब्रह्मन्सुताया मम सुप्रिया ॥

न वियोगं सहत्यस्या मुहूर्तमपि भामिनी ॥ २५८ ॥

तथा तव सुतायाश्च सुतेयं मम सुप्रिया ॥

तस्मात्कुरु वचो मह्यं यच्च वक्ष्यामि सुव्रत ॥२६॥

यस्य मे दीयते कन्या कदाचिन्नृपतेरियम् ॥

पुरोधास्तस्य यो विप्रस्तस्मै देया निजा सुता ॥२७॥

येन न स्यान्मिथो भेदस्ताभ्यां द्विजवरोत्तम ॥

एकस्थाने स्थिताभ्यां च प्रसा दात्तव सत्तम ॥ २८ ॥

॥ छांदोग्य उवाच ॥ ॥

नागरो नागरं मुक्त्वा योऽन्यस्मै संप्रयच्छति ॥

कन्यकां यः प्रगृह्णाति विवाहार्थं कथंचन ॥। ॥२९॥

स पंक्तिदूषकः पापान्नागरो न भवेदिह ॥

तस्मान्नाहं प्रदास्यामि कथंचिन्निजकन्यकाम् ॥

अन्यस्मै नागरं मुक्त्वा निश्चयोऽयं मया कृतः ॥ ॥ ६.१९५.३० ॥

॥ ब्राह्मण्युवाच ॥ ॥

नाहं पतिं प्रयास्यामि कुमारी ब्रह्मचारिणी ॥

देया प्रिया सखी यत्र तावद्यास्यामि तत्र च ॥ ३१ ॥

यदि तात बलान्मह्यं विवाहं त्वं करिष्यसि ॥

विषं वा भक्षयिष्यामि साधयिष्यामि पावकम् ॥ ३२ ॥

शस्त्रेण वा हनिष्यामि स्वदेहं तात निश्चयम् ॥।

एवं ज्ञात्वा तु तात त्वं यत्क्षमं तत्समाचर ॥ ३३ ॥

॥ सूत उवाच ॥ ॥

तस्यास्तं निश्चयं ज्ञात्वा स विप्रो दुःखसंयुतः ॥

स्त्रीहत्यापाप भीतस्तु तां त्यक्त्वा स्वगृहं ययौ ॥ ३४ ॥

सापि रेमे तया सार्धं रत्नवत्या द्विजोत्तमाः ॥

संहृष्टहृदया नित्यं संत्यक्तपितृसौहृदा ॥ ३५ ॥

यौवनं सा तु संप्राप्ता रूपेणाप्रतिमा भुवि ॥ ३६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये छान्दोग्यब्राह्मणकन्यावृत्तान्तवर्णनंनाम पञ्चनवत्युत्तरशततमोऽध्यायः ॥ १९५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९६



॥ सूत उवाच ॥ ॥

अथ तां यौवनोपेतां स्वसुतां प्रेक्ष्य पार्थिवः ॥

अनौपम्येन रूपेण संयुक्तां वरवर्णिनीम् ॥

आनर्तश्चिन्तयामास कन्यकां प्रददाम्यहम् ॥ १ ॥

अनर्हाय च यो दद्या द्वराय निजकन्यकाम् ॥

कार्यकारणलोभेन नरकं स प्रगच्छति ॥ २ ॥

एवं चिंतयतस्तस्य महान्कालो व्यवस्थितः ॥

न पश्यति च तद्योग्यं कंचिद्वरमनुत्तमम् ॥ ३ ॥

अथ संप्रेषयामास सर्वभूताश्रयेषु ये ॥

चित्रकर्मणि विख्यातान्नरांश्चित्रकरांस्तदा ॥ ४ ॥

गच्छध्वं मम वाक्येन सर्वा न्भूमितले नृपान् ॥

लिखित्वा पट्टमध्ये तु दर्शयध्वं ततः परम् ॥ ५ ॥

सुताया मम येनाऽसौ दृष्ट्वाऽभीष्टं नराधिपम् ॥

पत्यर्थं वरयेत्साध्वी मम दोषो भवेन्न हि ॥ ६ ॥

तस्य तद्वचनं श्रुत्वा सर्वे चित्रकरास्तदा ॥

प्रस्थिता धरणीपृष्ठे पार्थिवानां गृहेषु च ॥ ७ ॥

ते लिखित्वा महीपाला न्यौवनस्थान्वयोऽन्वितान् ॥

रूपौदार्यगुणोपेतान्दर्शयामासुरग्रतः ॥

रत्नवत्याः क्रमेणैव तस्य भूपस्य शासनात् ॥ ८ ॥

अथ तेषां तु सर्वेषां मध्ये राजा वृहद्बलः ॥

दशार्णाधिपतिर्भव्यः पत्यर्थं च वृतस्तया ॥ ९ ॥

तदाऽऽनर्ताधिपो हृष्टः प्रेषयामास तं प्रति ॥

विवाहार्थं सुविज्ञाय वाक्य मेतदुवाच ह ॥ ६.१९६.१० ॥

गच्छध्वं मम वाक्येन दशार्णाधिपतिं प्रति ॥

वाच्यः स विनयाद्गत्वा विवाहार्थं ममांतिकम् ॥ ११ ॥

समागच्छ निजां कन्यां येन यच्छाम्यहं तव ॥

नाम्ना रत्नवतीं ख्यातां त्रैलोक्यस्यापि सुन्दरीम् ॥ १२ ॥

गत्वा स सत्वरं तत्र यत्र राजा बृहद्बलः ॥

प्रोवाच सकलं वाक्यमानर्ताधिपतेः स्फुटम् ॥ १३ ॥

सोऽपि तत्सहसा श्रुत्वा तेषां वाक्यमनुत्तमम् ॥

परमां तुष्टिमासाद्य प्रस्थितस्तत्पुरं प्रति ॥

सैन्येन महता युक्तश्चतुरंगेण पार्थिवः ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये दशार्णाधिपतेर्बृहद्बलस्यानर्तेशपुरं प्रत्यागमनवर्णनंनाम षण्णवत्युत्तरशततमोऽध्यायः ॥ १९६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९७

https://sa.wikisource.org/s/fp4



॥ सूत उवाच ॥ ॥

एतस्मिन्नेव काले तु नागरो द्विजसत्तमाः ॥

विश्वावसुरिति ख्यातो वेदवेदांगपारगः ॥ १ ॥

पश्चिमे वयसि प्राप्ते तस्य पुत्रो बभूव ह ॥

परावसुरिति ख्यातस्तस्य प्राणसमः सदा ॥ २ ॥

स वेदाध्ययनं चक्रे यौवने समुपस्थिते ॥

वयस्यैः संमतैः सार्धं सदा हास्य परायणैः ॥ ३ ॥

कस्यचित्त्वथ कालस्य माघमास उपस्थिते ॥

रात्रौ सोऽध्ययनं चक्र उपाध्यायगृहं गतः ॥ ४ ॥

निशीथे स समुत्थाय सर्वैर्मि त्रैश्च रक्षितः ॥

वेश्यागृहं समासाद्य प्रसुप्तो वेश्यया सह ॥ ५ ॥

जलपूर्णं समाधाय जलपात्रं समीपगम् ॥

निजाचमनयोग्यं च जलपानार्थमेव च ॥ ६ ॥

निशाशेषे तु संप्राप्ते स पिपासासमाकुलः ॥

निद्रालस्यसमोपेतः शय्यां त्यक्त्वा समुत्थितः ॥ ७ ॥

वेश्याया मद्यपात्रं तु ह्यधस्तात्सं व्यवस्थितम् ॥

तदादाय पपौ मद्यं जलभ्रांत्या यदैव सः ॥ ८ ॥

तदा मद्यं परिज्ञाय पात्रं त्यक्त्वा सुदुःखितः ॥

वैराग्यं परमं गत्वा प्रलापानकरो द्वहून् ॥ ९ ॥

अहो निद्रान्वितेनाद्य किं मया विकृतं कृतम् ॥

यदद्य मद्यमापीतं जलभ्रांत्या विगर्हितम्॥ ६.१९७.१० ॥

किं करोमि क्व गच्छामि कथं शुद्धिर्भवेन्मम ॥

प्रायश्चित्तं करिष्यामि यद्यपि स्यात्सुदुष्करम् ॥ ११ ॥

एवं निश्चित्य मनसा प्रभाते समुपस्थिते ॥

शंखतीर्थं समासाद्य कृत्वा स्नानं तथा परम् ॥ १२ ॥

सशिखं वपनं पश्चात्कारयित्वा त्वरावितः ॥
गतश्च तिष्ठते यत्र ब्रह्मघोषपरायणः ॥ १३ ॥
उपाध्यायः सशिष्यश्च ब्रह्मस्थानं समाश्रितः ॥
स गत्वा दूरतः स्थित्वा संनिविष्टो यथान्त्यजः ॥१४॥
श्मश्रुमूर्धजहीनस्तु यदा मित्रैर्विलोकितः ॥
तदा हास्याद्धतो मूर्ध्नि हस्ताग्रैश्च मुहुर्मुहुः ॥ १५ ॥
उपाध्यायस्तु तं दृष्ट्वा दीनं बाष्पपरिप्लुतम् ॥
श्मश्रुमूर्धजसंत्यक्तं ततः प्रोवाच सादरम् ॥१६॥
किमद्य वत्स दूरे त्वमुपविष्टस्तु दैन्यधृक् ॥
एहि मे संनिधौ ब्रूहि पराभूतोऽसि केन वा ॥ १७ ॥
॥ परावसुरुवाच ॥ ॥
अयोग्योऽहं गुरो जातः सेवायास्तव सांप्रतम् ॥
वेश्याया मंदिरस्थेन ज्ञात्वा निजकमंडलुम् ॥ १८ ॥
वेश्याया मद्यपात्रं तु मद्यपूर्णं प्रगृह्य च ॥
तस्माद्देहि विभो मह्यं प्रायश्चित्तं विशुद्धये ॥ १९ ॥
धर्मद्रोणेषु यत्प्रोक्तं तत्करिष्याम्यसंशयम् ॥ ६.१९७.२० ॥
अथ तं बटवः प्रोचुर्वयस्यास्तस्य ये स्थिताः ॥
हास्यं कृत्वा प्रकामाश्च वेश्या या गुरुसंनिधौ ॥२१ ॥
या एषा नृपतेः कन्या ख्याता रत्नावती जने ॥
अस्याः स्तनौ गृहीत्वा त्वमधरं पिबसि द्रुतम् ॥
ततस्ते स्याद्विशुद्धिश्च नान्यथा प्रभविष्यति ॥ २२ ॥
॥ परावसुरुवाच ॥ ॥
न वयस्या नर्मकालो विषमे मम संस्थिते ॥
ममोपरि यदि स्नेहो वालमित्रत्वसंभवः ॥
तदानीय द्विजानन्यान्वदध्वं निष्कृतिं मम ॥ २३ ॥
अथ ते नर्ममुत्सृज्य तद्दुःखेन च दुःखिताः ॥
विश्वावसुं समासाद्य तद्वृत्तांतमथाब्रुवन् ॥२४॥
सोऽपि तेषां समाकर्ण्य तत्कर्णकटुकं वचः ॥

सभार्यः प्रययौ तत्र यत्र पुत्रो व्यवस्थितः ॥ २५ ॥

दुःखेन महता युक्तः स्खलमानः पदेपदे ॥

वृद्धभावात्तथा शोकात्पुत्राकृत्यसमुद्भवात् ॥ २६ ॥

ततस्तौ प्रोचतुः पुत्रं बाष्पगद्गदया गिरा ॥

दंपती बहुशोकार्तौ हा पुत्र किमिदं कृतम् ॥

सोऽपि सर्वं समाचख्यौ ताभ्यां वृतांतमात्मनः ॥ २७ ॥

प्रायश्चित्तं करिष्यामि तस्मादात्मविशुद्धये ॥

ततो विश्वावसुर्विप्रान्स्मार्ताञ्छ्रुतिसमन्वितान् ॥

तदर्थमानयामास वेदविद्याविचक्षणान् ॥ २८ ॥

ततः परावसुस्तेषां पुरः स्थित्वा कृतांजलिः ॥

प्रोवाच स्वादितं मद्यं मया रात्रावजानता ॥

वेश्या भांडं समादाय ज्ञात्वा निजकमंडलुम् ॥ २९ ॥

एवं ज्ञात्वा यदर्हं च प्रायश्चित्तं प्रदीयताम् ॥

येन मे जायते शुद्धिः प्रसादाद्वो द्विजोत्तमाः ॥६.१९७.३॥।

एवमुक्तास्ततस्तेन विप्रास्ते स्मृतिवादिनः ॥

धर्मशास्त्रं समालोक्य ततः प्रोचुश्च तं द्विजाः ॥ ३१ ॥

अतिमानादतिक्रोधात्स्नेहाद्वा यदि वा भयात् ॥

प्रायश्चित्तमनर्हं तु ददत्तत्पापमश्नुते ॥ ३२ ॥

प्रायश्चित्तं प्रदास्यामस्तस्माद्युक्तं वयं तव ॥

यदि शक्नोषि तत्कर्तुं तत्कुरुष्व समाहितः ॥ ३३ ॥ ॥

॥ परावसुरुवाच ॥ ॥

करोमि वो न चेद्वाक्यं तत्पृच्छामि कुतो द्विजाः ॥

नाहं केनापि संदृष्टो मद्यपानं समाचरन् ॥ ३४ ॥

तस्माद्ब्रूत यथार्हं मे प्रायश्चित्तं विशुद्धये ॥

अपि प्राणहरं रौद्रं नो चेत्पापमवाप्स्यथ ॥ ३५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

बुध्यमानो द्विजो यस्तु मद्यपानं समाचरेत् ॥

तावन्मात्रं हिरण्यं च तप्तं पीत्वा विशुध्यति ॥ ३६ ॥

अज्ञानतो यदा पीतं मद्यं विप्रेण कर्हिचित् ॥
अग्नितुल्यं घृतं पीत्वा तावन्मात्रं विशुध्यति ॥ ॥ ३७ ॥
एवं ते सर्वमाख्यातं प्रायश्चित्तं विशुद्धये ॥
यदि शक्तोषि चेत्कर्तुं कुरुष्व त्वं द्विजोत्तम ॥ ३८ ॥
॥ परावसुरुवाच ॥ ॥
गंडूषमेकं मद्यस्य मया पीतं द्विजोत्तमाः ॥
तावन्मात्रं पिबाम्येव घृतं वह्निसमं कृतम् ॥ ३९ ॥
युष्मदादेशतोऽद्यैव स्वशरीरविशुद्धये ॥
विश्वावसुश्च तच्छ्रुत्वा वज्रपातोपमं वचः ॥ ६.१९७.४० ॥
विप्राणां चाथ पुत्रस्य तदोवाच सुदुःखितः ॥
कृत्वाश्रुमोक्षणं भूरि बाष्पगद्गदया गिरा ॥ ४१ ॥
सर्वस्वमपि दास्यामि पुत्रस्यास्य विशुद्धये ॥
प्रायश्चित्तं समाचर्तुं न दास्यामि कथंचन ॥ ४२ ॥
अश्राद्धेयो विपांक्तेयः सपुत्रो वा भवाम्यहम्॥
स्थानं वा संत्यजाम्येतत्पुत्र मैवं समाचर ॥ ४३ ॥
तच्छ्रुत्वा वचनं तस्य पितुर्विघ्नकरं परम् ॥
प्रायश्चित्तस्य सस्नेहं पुत्रो वचनमब्रवीत् ॥ ४४ ॥
त्यज तात मम स्नेहं मा विघ्नं मे समाचर ॥
प्रायश्चित्तं करिष्यामि निश्चयोऽयं मया कृतः ॥ ४५ ॥
॥मातोवाच ॥ ॥
यदि पुत्र त्वया कार्यं प्रायश्चित्तं विशुद्धये ॥
तदहं पतिना सार्धं प्रवेक्ष्यामि पुरोऽनलम् ॥ ४६ ॥
त्वां द्रष्टुं नैव शक्रोमि पिबंतमग्निवद्धृतम् ॥
पश्चात्प्राणपरित्यक्तं सत्येना त्मानमालभे ॥ ४७ ॥
॥ पितोवाच ॥ ॥
युक्तं पुत्रानया प्रोक्तं मात्रा तव हितं तथा ॥
ममापि संमतं ह्येतत्करिष्यामि न संशयः ॥ ४८ ॥ ॥
॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे सर्वे सुहृदस्तस्य ये स्थिताः ।।
तच्छ्रुत्वा तं समायाता वृत्तांतं दुःखसंयुताः ॥ ४९ ॥
प्रोचुश्च विविधैर्वाक्यैः सपत्नीकं विभावसुम् ॥
पुत्रशोकेन संतप्तं मरणे कृतनिश्चयम् ॥६.१९७.५॥।
पुत्रं प्रबोधयामासुः प्रायश्चित्तनिवृत्तये ॥
तदा न शक्नुवंति स्म निवर्तयितुमंजसा ॥ ५१ ॥
तावुभौ च पितापुत्रौ प्राणत्यागकृतादरौ ॥ ५२ ॥
ततो वास्तुपदं जग्मुः सर्वज्ञो यत्र तिष्ठति ॥
भर्तृयज्ञो महाभागः सर्वसंदेह वारकः ॥ ५३ ॥
तस्य सर्वं समाचख्युः परावसुसमुद्भवम् ॥
वृत्तांतं मद्यपानोत्थं यन्मित्रैस्तस्य कीर्तितम् ॥ ५४ ॥
प्रायश्चित्तं तु हास्येन यच्च स्मार्तैः प्रकीर्तितम् ॥
विश्वावसोश्च संकल्पं वह्निसाधनसंभवम् ॥ ५५ ॥
सपत्नीकस्य मित्राणां यच्च दुःखमुपस्थितम् ॥
निवेद्य तत्तथा प्रोचुर्भू योऽपिविनयान्वितम् ॥ ५६ ॥
अतीतं वर्तमानं च भविष्यद्वापि यद्भवेत् ॥
न तेऽस्त्यविदितं किंचित्सर्वं जानीमहे वयम् ॥ ५७ ॥
एतच्च नगरं सर्वं विश्वावसुकृतेऽधुना ॥
संशयं परमं प्राप्तं तेन प्राप्तास्तवांतिकम् ॥ ५८ ॥
तस्माद्ब्रूहि महाभाग यद्यस्त्यपरमेव हि ॥
प्रायश्चित्तं द्विजस्यास्य मद्यपानविशुद्धये ॥ ५९ ॥
न ते ह्यविदितं किंचित्तव वेदसमुद्भवम् ॥
भर्तृयज्ञो विहस्योच्चैस्ततो वचनमब्रवीत् ॥ ६.१९७.६० ॥
ब्राह्मणस्यास्य शुद्ध्यर्थमप्ययुपायः सुखावहः ॥
विद्यमानोऽपि नास्त्येव मतिरेषा स्थिता मम ॥ ६१ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥ पूर्वापरविरोधे नवाक्यमेतन्महामते ॥
कथमस्ति कथं नास्ति तस्मात्त्वं वक्तुमर्हसि ॥
विस्मयोऽयं महाञ्जातः सर्वेषां च द्विजन्मनाम् ॥ ६२ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥

सर्वं भवति निश्छिद्रं यस्य चेच्छंति ब्राह्मणाः ॥ ६३ ॥

अच्छिद्रमिति यद्वाक्यं वदंति क्षितिदेवताः ॥

विशेषान्नागरोद्भूतास्तत्तथैव न चान्यथा ॥६४॥

तथा च ब्रह्मशालायां संस्थितैर्यदुदाहृतम् ॥

नान्यथा तत्परिज्ञेयं हास्येनापि स्मृतिं विना ॥ ६५ ।।

स एष हास्यभावेन प्रोक्तो मित्रैः परावसुः ॥ ६६ ॥

रत्नवत्याः स्तनौ गृह्य यद्यास्वादयतेऽधरम्॥

तद्भविष्यति मे शुद्धिर्मद्यपान समुद्भवा ॥ ६७ ॥

तदुपायो मया प्रोक्तो विप्रस्यास्य सुखावहः ॥

पराशरमतेनैव करोति यदि शुध्यति ॥ ६८ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

यद्येतच्छृणुते राजा वाक्यमीर्ष्यापरायणः ॥

तत्सर्वेषां वधं कुर्याद्विप्राणामन्यथा भवेत् ॥ ६९ ॥

तस्मात्करोतु चाभीष्टमेष विप्रः परावसुः ॥

मातापितृसमोपेतो वयं यास्यामहे गृहम् ॥ ६.१९७.७० ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

स राजा नीतिमान्विज्ञः सर्वधर्मपरायणः ॥

भक्तो देवद्विजानां च सर्वशास्त्र विचक्षणः ॥ ७१ ॥

तस्मान्मया समं सर्वे नागरायांतु तद्ग्रहे ॥ ७२ ॥

मध्यगं पुरतः कृत्वा तद्वक्त्रेण च तत्पुरः ॥

कथयंतु च वृत्तांतं मद्यपान समुद्भवम्॥ ७३ ॥

परावसोश्च यत्प्रोक्तं वयस्यैर्हास्यमाश्रितैः ॥

पराशरसमुत्थं च यद्वाक्यं तत्स्मृतेः परम् ॥ ७४ ॥

तच्छ्रुत्वा यदि भूपाल ईर्ष्या लोभसमन्वितः ॥

भविष्यति ततोऽहं तं धारयिष्यामि सत्पथे ॥ ७५ ॥

॥ सूतउवाच ॥ ॥

ततस्ते नागराः सर्वे सन्तोषं परमं गताः ॥

साधुवादैः समभ्यर्च्य भर्तृयज्ञं पृथग्विधैः ॥ ७६ ॥

तेनैव सहितं तूर्णं मध्ये कृत्वा च मध्यगम् ॥

गर्त्तातीर्थसमुद्भूतं वेदवेदांगपारगम् ॥ ७७ ॥

स्मृतिज्ञं लक्षणज्ञं तमाहिताग्निं यशस्विनम् ॥

यष्टारं बहुयज्ञानां भर्तृयज्ञमते स्थितम् ॥ ७८ ॥

आनर्तेनापि भूपेन स्वर्गभ्रष्टेन वै पुरा ॥

कर्णोत्पलाजनित्रेण यश्च पूर्वं चिरन्तनः ॥ ७९ ॥

चमत्कारपुरे न्यस्तः स्थानेऽस्मिन्विप्रगौरवात् ॥

येन सिध्यंति कार्याणि सर्वेषां च द्विजन्मनाम् ॥ ६.१९७.८० ॥

तथा चैव तु चान्यानि चमत्कारपुरस्य च ॥

हरिभद्राभिधानं तं भर्तृयज्ञसमन्वितम् ॥ ८१ ॥

कृत्वा ते नागराः सर्वे राजद्वारमुपागताः ॥

परावसुं समादाय मातापितृसमन्वितम् ॥ ८२ ॥

अथ द्वाःस्थो द्रुतं गत्वा भूपतेस्तान्न्यवेदयत् ॥

ब्राह्मणान्भर्तृयज्ञेन हरिभद्रेण संयुतान् ॥ ८३ ॥

आनर्तोऽपि च ताञ्छ्रुत्वा राजद्वारसमागतान् ॥

पुरोधसा समायुक्तः संमुखं प्रययौ तदा ॥ ८४ ॥

दत्त्वार्घं मधुपर्कं च विष्टरं गां तथा नृपः ॥

प्रथमं भर्तृयज्ञाय हरिभद्राय वै ततः ॥ ८५ ॥

चतुर्णां मुद्गहस्तानां तथान्येषां द्विजन्मनाम् ॥

आद्यऋग्यजुःसाम्नां च प्रगृह्याशीर्वचः परम् ॥ ८६ ॥

सभामंडपमासाद्य सर्वान्समुपवेशयत् ॥

वरासनेषु हैमेषु यथावदनुपूर्वशः ॥ ९७ ॥

तथा तेषूपविष्टेषु सर्वेषु पृथिवीपतिः ॥

उपविश्य धरापृष्ठे कृतांजलिर भाषत ॥ ८८ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे गृहमुपागतः ॥

सर्वोऽयं नागरो लोको भर्तृयज्ञसमन्वितः ॥ ८९ ॥

तदादिशतु मां लोको यत्कृत्यं प्रकरोमि वः॥

अदेयमपि यच्छामि गृहायातस्य सांप्रतम् ॥ ६.१९७.९० ॥

अगम्यमपि यास्यामि करिष्येऽकृत्यमेव च ॥

तच्छ्रुत्वा हरिभद्रः स समुत्थाय त्वरान्वितः ॥ ९१ ॥

पप्रच्छाद्यांस्तदर्थं च बह्वृचांस्तदनंतरम् ॥

अध्वर्यूंश्चैव छांदोग्याननुज्ञातश्च तैस्तदा ॥ ९२ ॥

प्राणरुद्रान्वदंत्वाद्या जीवसूक्तं च बह्वृचाः ॥

एषां चैव पृथिव्यादिसवनं यत्पुरा कृतम् ॥ ९३ ॥

पठन्त्वध्वर्यवः सर्वे छांदोग्याश्च पृथक्पृथक् ॥

मधुच्युतेन संयुक्तं प्रपठन्तु च सिद्धये ॥ ९४ ॥

भर्तृयज्ञमतेनैवं तेन प्रोक्ता द्विजोत्तमाः ॥

पप्रच्छुश्चैव तत्सर्वं यत्प्रोक्तं तेन धीमता ॥ ॥ ९५ ॥

ततः पाठावसाने तु मध्यगः प्राह सादरम् ॥

परावसुसमुद्भूतं वृत्तांतं तस्य भूपतेः ॥ ९६ ॥

यथा तेनाऽऽसवः पीतो यथा मित्रैः प्रजल्पितम् ॥

प्रायश्चित्तं समादिष्टं यथा स्मार्तैर्घृतोद्भवम् ॥ ९७ ॥

भर्तृयज्ञेन चानीता यथा सर्वे द्विजातयः ॥

तच्छ्रुत्वा पार्थिवो हृष्टः कृतांजलिपुटोऽब्रवीत् ॥ ९८ ॥

धन्योहं कृतपुण्योऽस्मि यस्य मे नागरैर्द्विजैः ॥

विप्रत्रयप्ररक्षार्थं प्रसादोऽयं महान्कृतः ॥ ९९ ॥

धन्या मे कन्यका चेयं रक्षयिष्यति च स्वयम् ॥

ब्राह्मणत्रितयं ह्येतन्मरणे कृतनिश्चयम् ॥ ६.१९७.१०० ॥

अथाऽसावानयामास तां कन्यां तत्क्षणाद्द्विजाः ॥

उपविष्टं सभामध्ये ब्राह्मणेभ्यो न्यवेदयत् ॥ १०१ ॥

एषा कन्या मयानीता युष्मद्वाक्याद्द्विजोत्तमाः ॥

भर्तृयज्ञेन यत्प्रोक्तं तत्करोतु च स द्विजः ॥ १०२ ॥

ततस्तत्र समानीय ब्राह्मण तं परावसुम् ॥

भर्तृयज्ञ इदं वाक्यं कन्यायाः पुरतोऽब्रवीत् ॥ १०३ ॥

इमां त्वं कन्यकां चित्ते जननीं यदि मन्यसे ॥
अधरास्वादनं कुर्वंस्ततः सिद्धिमवाप्स्यसि ॥ १०४ ॥
अनुरागपरो भूत्वा यद्यास्वादनतत्परः ॥
भविष्यति ततो रक्तं तव वक्त्रे परावसो ॥ १०५ ॥
शुद्धस्य त्वथ दुग्धं च भविष्यति न संशयः ॥ १०६ ॥
स्तनाभ्यां तव हस्ताभ्यां स्पर्शात्क्षीरं भवेद्यदि ॥
तत्ते शुद्धिः परिज्ञेया रक्तं वा न भविष्यति ॥ १०७ ॥
एवमुक्त्वाथ तं कन्यां ततः प्रोवाच स द्विजः ॥
एनं त्वं पुत्रवत्पश्य पुत्रि ब्राह्मणसत्तमम् ॥ १०८ ॥
येन शुद्धिमवाप्नोति त्वदोष्ठास्वादने कृते ॥
स्पर्शिताभ्यां स्तनाभ्यां च प्रायश्चित्तं यतः स्मृतम् ॥ १०९ ॥
एतदस्य द्विजेंद्रस्य वयस्यैर्हास्यसंयुतैः ॥
येन शुद्धिमवाप्नोति नो चेन्मृत्युमवाप्स्यति ॥ ६.१९७.११० ॥
॥ सूत उवाच ॥ ॥
सा तथेति प्रतिज्ञाय सव्रीडं तमुवाच ह ॥
एहि वत्स कुरुष्व त्वं प्रायश्चित्तं विशुद्धये ॥ १११ ॥
मातृभावं समाधाय मया त्वं कल्पितः सुतः ॥
सोऽपि तां मातृवन्मत्वा तस्याः सांनिध्यमागतः ॥ ११२ ॥
स्पृष्टवांश्च स्तनौ तस्याः सर्वलोकस्य पश्यतः ॥
स्पृष्टाभ्यां च स्तनाभ्यां च तत्क्षणाद्द्विजसत्तमाः ॥ ११३ ॥
क्षीरधारे विनिष्क्रांते कुन्देंदुहिमसंनिभे ॥ [। ११४ ॥
अथौष्ठास्वादनं यावत्तस्याः स कुरुते द्विजः ।।
तावत्क्षीरं विनिष्क्रांतं तादृग्रूपं तदाननात् ॥ ११५ ॥
एतस्मिन्नंतरे सर्वैस्ताला दत्ता द्विजातिभिः ॥
राज्ञाऽयं ब्राह्मणः शुद्धो वदमानैर्मुहुर्मुहुः ॥ ११६ ॥
सोऽपि प्रदक्षिणीकृत्य तां च कन्यां मुहुर्मुहुः [।
नमस्कृत्य क्षमस्वेति त्वं मातः पुत्रवत्सले ॥ ११७ ॥
तद्दृष्ट्वा महदाश्चर्यमानर्तो विस्मयान्वितः ॥

शशंस भतृयज्ञं तं प्रायश्चित्तप्रदायकम् ॥ ११८ ॥

अहोऽतीव सुभा ग्योऽहं यस्य मे गृहमागताः ॥

ईदृशा ब्राह्मणाः सर्वे चमत्कारपुरोद्भवाः ॥ ११९ ॥

तथा चैतादृशी कन्या ह्यसामान्यप्रवर्तिनी ॥

रत्नावती महाभागा सत्यशौचसमन्विता ॥ ६.१९७.१२० ॥

तथाऽयं नैव सामान्यो ब्राह्मणश्च परावसुः ॥

यश्चेदृशीं समासाद्य कन्यां नो विकृतः स्थितः ॥ ॥ १२१ ॥

एवमुक्त्वा विसृज्याथ तान्विप्रान्पार्थिवोत्तमाः ॥

तां च कन्यां समादाय ततश्चांतःपुरं ययौ ॥ १२२ ॥

अथ ते नागराः सर्वे मर्यादां चक्रिरे ततः ॥

अद्यप्रभृति या वेश्या स्थानेऽस्मिन्वासमेष्यति ॥ १२३ ॥

तया नैव गृहे धार्यं सुरामांसं कथंचन ॥

दूषयंति सदा दुष्टा नागराणां सुतानिह ॥ १२४ ॥

अथ व्यवस्थामुत्क्रम्य या हि तद्धारयिष्यति ॥

सा दण्ड्यास्माच्च निर्वास्या प्रेत्य स्यात्पापभागिनी ॥ १२५ ॥

औदुम्बर्या मध्यगेन दत्तं तालत्रयं तदा ॥ १२६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये परावसुप्रायश्चित्तविधानवृत्तांतवर्णनंनाम सप्तनवत्युत्तरशततमोऽध्यायः ॥ १९७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९८



॥ सूत उवाच ॥ ॥

एतस्मिन्नेव काले तु दशार्णाधिपतिस्तदा ॥

रत्नवत्या विवाहार्थं तत्र स्थाने समागतः ॥ १ ॥

स श्रुत्वा तत्र वृत्तांतं रत्नवत्याः समुद्भवम् ॥

विरक्तिं परमां कृत्वा प्रस्थितः स्वपुरं प्रति ॥ २ ॥

तं श्रुत्वा प्रस्थितं भूपमानर्तः स्वपुरं प्रति ॥

पृष्ठतोऽनुययौ तस्य व्याघो टनकृते तदा ॥४ ३ ॥

अथाब्रवीच्च तं प्राप्य कस्मात्त्वं प्रस्थितो नृप ॥

पाणिग्रहमकृत्वा तु मम कन्यासमुद्भवम् ॥ ४ ॥

॥ दशार्ण उवाच ॥ ॥

दूषितेयं तव सुता कन्यकात्वविवर्जिता ॥

यस्याः पीतोऽधरोऽन्येन मर्दितौ च तथा स्तनौ ॥ ५ ॥

पुनर्भूरिति संज्ञा सा सञ्जाता दुहिता तव ॥

पुनर्भूर्जनयेत्पुत्रं यं कदाचित्कथंचन ॥ ६ ॥

स पातयत्यसंदिग्धं दश पूर्वान्दशापरान् ॥

एकविंशतिमं चैव तथैवात्मानमेव च ॥ ७ ॥

न वरिष्याम्यहं तेन सुतां तेऽहं नरसिप ॥

निर्दाक्षिण्यमिति प्रोच्य दशार्णाधिपतिस्तदा ॥ ८ ॥

छंद्यमानोऽपि विविधैर्हस्त्यश्वरथपूर्वकैः ॥

अवज्ञाय महीपालं प्रस्थितः स्वपुरं प्रति ॥ ९ ॥

अथानर्त्तो गृहं प्राप्य मृगावत्याः समाकुलः ॥

तद्वृत्तं कथयामास यदुक्तं तेन भूभुजा ॥

स्वभार्यायाः सुतायाश्च मन्त्रिणां दुःखसंयुतः ॥ ६.१९८.१० ॥

ते प्रोचुः संति भूपालाः संख्याहीना महीतले ॥

रूपाढ्या यौवनोपेता हस्त्यश्वरथसंयुताः ॥ ११ ॥

तेषामेकतमस्य त्वं देहि कन्यां निजां विभो ॥
मा विषादे मनः कृत्वा दुःखस्य वशगो भव ॥ १२ ॥
आनर्तोऽपि च तच्छ्रुत्वा तेषां वाक्यं सुदुःखितम् ॥
ततः प्राह प्रहृष्टात्मा तान्सर्वान्मन्त्रिपूर्वकान्॥ १३ ॥
तां च कन्यां स्थितां तत्र साम्ना परमवल्गुना ॥
पुत्रि दृष्टा महीपालाः सर्वे चित्रगतास्त्वया ॥ ॥ १४ ॥
तेषां मध्यान्नृपं चान्यं कञ्चिद्वरय शोभने ॥
यस्ते चित्तस्य सन्तोषं कुरुते दृक्पथं गतः ॥ १५ ॥
॥ रत्नावत्युवाच ॥ ॥
न चाहं वरयिष्यामि पतिमन्यं कथंचन ॥
दशार्णाधिपतिं मुक्त्वा श्रूयतामत्र कारणम् ॥ १६ ॥
सकृज्जल्पंति राजानः सकृज्जल्पंति च द्विजाः ॥
सकृत्कन्याः प्रदीयंते त्रीण्येतानि सकृत्सकृत् ॥ १७ ॥
एवं ज्ञात्वा न मां तात त्वमन्यस्मिन्महीपतौ ॥
दातुमर्हसि धर्मोऽयं न भवेच्छाश्वतो यतः ॥१८॥ ॥
॥ आनर्त उवाच ॥ ॥
वाङ्मात्रेण प्रदत्ता त्वं दशार्णाधिपतेर्मया ॥
न ते हस्तग्रहं प्राप्तो विप्राग्निगुरुसन्निधौ ॥ १९ ॥
तत्कथं स पतिर्जातस्तवः पुत्रि वदस्व मे ॥ ६.१९८.२० ॥
॥ रत्नावत्युवाच ॥ ॥
मनसा चिंत्यते कार्यं सकृत्तातपुरा यतः ॥
वाचया प्रोच्यते पश्चात् कर्मणा क्रियते ततः ॥ २१ ॥
तन्मया मनसा दत्तस्तस्यात्माऽयं पुरा किल ॥
त्वया च वाचया चास्मै प्रदत्तास्मि तथा विभो ॥
तत्कथं न पतिर्मे स्याद्ब्रूहि वा यदि मन्यसे॥२२॥
साहं तपश्चरिष्यामि कौमारव्रतधारिणी ॥
नान्यं पतिं करिष्यामि निश्चयोऽयं मया कृतः ॥ २३ ॥
तच्छ्रुत्वा वचनं रौद्रं माता तस्या मृगावती ॥

अश्रुपूर्णेक्षणा दीना वाक्यमेतदुवाच ह ॥ २४ ॥

मा पुत्रि साहसं कार्षीस्तपोऽर्थं त्वं कथञ्चन ॥

बाला त्वं सुकुमारांगी सदैव सुखभागिनी ॥२५॥

कथं तपः समर्थासि विधातुं त्वमनिंदिते ॥

कन्दमूलफलाहारा चीरवल्कलधारिणी ॥२६ ॥

तस्मान्मुख्यस्य भूपस्य कस्यचित्वां ददाम्यहम्॥ ॥ २७ ॥

एषा ते ब्राह्मणीनाम सखी परमसंमता ॥

प्रतीक्षते विवाहं ते कौमारं भावमाश्रिता ॥ २८ ॥

यस्य भूपस्य त्वं हर्म्ये प्रयास्यसि विवाहि ता ॥

पुरोधास्तस्य यो राज्ञो भार्येयं तस्य भाविनी ॥ २९ ॥

॥ रत्नावत्युवाच ॥ ॥

न च भूयस्त्वया वाच्यं वाक्यमेवंविधं क्वचित् ॥

मदर्थे यदि मे प्राणास्त्वं वांछसि सुतैषिणी ॥ ६.१९८.३० ॥

अथवा त्वं हठार्थं च तपोविघ्नं करिष्यसि ॥ ३१ ॥

ततस्त्यक्ष्याम्यहं देहं भक्षयित्वा महद्विषम्॥

खंडयिष्याम्यहं जिह्वां प्रवेक्ष्यामि च वा जलम्॥३२॥

एवं सा निश्चयं कृत्वा प्रोच्य तां जननीं तदा॥३३॥

ततः प्रोवाच तां कन्यां ब्राह्मणीं संमतां सखीम्॥

कृतांजलिपुटा भूत्वा समालिंग्य च सादरम्॥३४॥

गच्छ त्वं स्वपितुर्हर्म्यं प्रेषितासि मया शुभे॥

येन ते यच्छति पिता नागराय महात्मने ॥ ३५ ॥

क्षमस्व यन्मया प्रोक्ता कदाचित्परुषं वचः ॥

त्वयापि यन्मम प्रोक्तं क्षांतं चैतन्मया ध्रुवम् ॥ ३६ ॥ ॥

॥ ब्राह्मण्युवाच ॥ ॥

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ॥

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ ३७ ॥

कौमार्यं च प्रणष्टं मे त्वत्संपर्काद्वरानने ॥

जातं षोडशकं वर्षं स्त्रीधर्मेण समन्वितम् ॥ ३८ ॥

न मे पाणिग्रहं कश्चिन्नागरोऽत्र करिष्यति ॥
बुध्यमानस्तु स्मृत्यर्थं वक्ष्य माणं वरानने ॥ ३९ ॥
रजस्वलां च यः कन्यामुद्वाहयति निर्घृणः ॥
तस्याः सन्तानमासाद्य पातयेत्पुरुषान्दश ॥ ६.१९८.४० ॥
रजस्वला तु यः कन्यां पिता यच्छति निर्घृणः ॥
स पातयेदसंदिग्धं दश पूर्वान्दशापरान् ॥ ४१ ॥
तस्मादहं करिष्यामि त्वया सार्धं तपः शुभे ॥
पित्रा नैव हि मे कार्यं न च मात्रा कथंचन ॥ ४२ ॥
॥ सूत उवाच ॥ ॥
एवं ते निश्चयं कृत्वा कन्यके द्वे द्विजोतमाः ॥
गते यत्र स्थितः साक्षाद्भर्तृयज्ञो महामुनिः ॥ ४३ ॥
स्थितो वास्तुपदे रम्ये सर्वतीर्थमये शुभे ॥
तस्य तपःप्रभावेन जातु कोपो न दृश्यते ॥ ४४ ॥
कस्यचित्क्वापि मर्त्यस्य तिर्यग्योनिग तस्य च ॥
क्रीडंति नकुलाः सर्पैर्मार्जाराः सह मूषकैः ॥ ४६ ॥
सारंगा द्वीपिभिः सार्धं काकाश्च सह कौशिकैः ॥
भर्तृयज्ञं सुखासीनं तत्र गत्वा तु ते शुभे ॥
प्रोचतुर्विनयोपेते कृतांजलिपुटे स्थिते ॥ ४६ ॥
॥ ब्राह्मण्युवाच ॥ ॥
अहं सख्या समं याता ह्यनया राजकन्यया ॥
तपोऽर्थे तव पादांते तद्ब्रूहि तपसो विधिम् ॥ ४७ ॥
वदस्व येन तत्कृत्स्नं प्रकरोमि महामते ॥ ४८ ॥
॥ भर्तृयज्ञ उवाच ॥ ॥
अहं ते कथयिष्यामि तपश्चर्याविधिं पृथक् ॥
येन संप्राप्यते मोक्षः कि पुनस्त्रिदशालयः ॥ ४९ ॥
चांद्रायणानि कृच्छ्राणि तथा सांतपनानि च ॥
षष्ठे काले तथा भोज्यं दिनांतरितमेव च ॥ ६.१९८.५० ॥
ब्रह्मकूर्चं त्रिरात्रं च एकभक्तमयाचितम् ॥

तपोद्वाराणि सर्वाणि कृतान्येतानि वेधसा ॥ ५१ ॥

स्वशक्त्या चैव कार्याणि रागद्वेषविवर्जितैः ॥

वांछितव्यं फलं चैव सर्वेषामेव पुत्रिके ॥

ततः सिद्धिमवाप्नोति या सदा मनसि स्थिता ॥ ५२ ॥

समत्वं शत्रुमित्राभ्यां तथा पा षाणरत्नयोः ॥

यदा संजायते चित्ते तदा मोक्षमवाप्नुयात् ॥ ५३ ॥

यो लिंगग्रहणं कृत्वा ततः कोपपरो भवेत् ॥

तस्य वृथा हि तत्सर्वं यथा भस्महुतं तथा ॥ ५४ ॥

॥ सूत उवाच ॥ ॥

सा तथेतिप्रतिज्ञाय ब्राह्मणी सहिता तया ॥

रत्नावत्या जगामाथ किंचिच्चैव जलाशयम् ॥ ५५ ॥

स्वच्छोदकेन संपूर्णं पद्मिनीषंडमंडितम् ॥

ततश्चांद्रायणं चक्रे तपसः प्रथमं व्रतम् ॥ ५६ ॥

ततः कृच्छ्रव्रतं चक्रे ततः सांतपनं च सा ॥

षष्ठान्नकालभोज्या च सा चाभूद्वत्सरत्रयम् ॥ ५७ ॥

त्रिरात्रोपोषणं पश्चाद्यावद्वर्षत्रयं तथा ॥

एकान्तरोपवासैश्च साऽनयद्वत्सरत्रयम् ॥ ५८ ॥

हेमंते जलमध्यस्था सा बभूव तपस्विनी ॥

पंचाग्निसाधका ग्रीष्मे सा बभूव यशस्विनी ॥ ५९ ॥

निराश्रयाऽभवत्साध्वी वर्षाकाल उपस्थिते ॥

ध्यायमाना दिवानक्तं देवदेवं जनार्दनम्॥६.१९८.६०॥।

यद्यद्व्रतं पुरा चक्रे ब्राह्मणी सा च सुव्रता ॥

अन्यं जलाशयं प्राप्य सा तच्चक्रे नृपात्मजा ॥

प्रीत्या परमया युक्ता तदा सा द्विजस त्तमाः ॥ ६१ ॥

ततो वर्षशतं सार्धं फलाहारा बभूव सा ॥

शीर्णपर्णाशना पश्चात्तावन्मात्रं व्यवस्थिता ॥ ६२ ॥

ततश्चैव जलाहारा यावद्वर्षशतानि षट् ॥

वायुभक्षा बभूवाथ सहस्रं परिवत्सरान् ॥ ६३ ॥

यथायथा तपश्चक्रे सा कुमारी द्विजोत्तमाः ॥
तथातथाऽभवत्तस्यास्तेजोवृद्धिरनुत्तमा॥६४॥
एतस्मिन्नेव काले तु भगवाञ्छशिशेखरः ॥ ६५ ॥
गौर्या सह प्रसन्नात्मा तस्या गोचरमागतः ॥
मेघगंभीरया वाचा ततोवचनमब्रवीत् ॥ ६६ ॥
वत्से तपोनिवृत्तिं त्वं कुरुष्व वचनान्मम ॥
प्रार्थयस्व मनोऽभीष्टं येन सर्वं ददामि ते ॥ ६७ ॥
॥ ब्राह्मण्युवाच ॥ ॥
अभीष्टमेतदेवं मे यत्त्वं दृष्टोऽसि शंकर ॥
स्वप्नेऽपि दर्शनं देव दुर्लभं ते नृणां यतः ॥ ६८ ॥
॥ भगवानुवाच ॥ ॥
न मे स्याद्दर्शनं व्यर्थं कथंचित्सुतपस्विनि ॥
तस्माद्वरय भद्रं ते वरं येन ददाम्यहम् ॥ ६९ ॥
॥ ब्राह्मण्युवाच ॥ ॥
एषा मे सुसखी साध्वी राजपुत्री यशस्विनी ॥
ख्याता रत्नावतीनाम प्राणेभ्योऽपिगरीयसी ॥ ६.१९८.७० ॥
मम तुल्यं तपश्चक्रे शूद्रयोनावपि स्थिता ॥
निवर्तते तु यद्येषा तपसस्तु निवर्तनम् ॥
करोम्यद्य जगन्नाथ तदहं संशयं विना ॥ ७१ ॥
अस्याः स्नेहेन संत्यक्तो मया भर्ता सुरेश्वर ॥
तस्माद्देव वरं देहि त्वमस्या मनसि स्थितम् ॥ ७२ ॥
॥ सूत उवाच ॥ ॥
तस्यास्तद्वचनं श्रुत्वा भगवाञ्छशिशेखरः ॥
अब्रवीद्राजपुत्रीं तां मेघगंभीरया गिरा ॥
वत्से मद्वचनादद्य तपस्त्वं त्यक्तुमर्हसि ॥ ७३ ॥
वरं वरय कल्याणि नित्यं मनसि संस्थितम् ॥
अदेयमपि दास्यामि सांप्रतं तव भामिनि ॥ ७४ ॥
॥ रत्नावत्युवाच ॥ ॥

एतज्जलाशयं पुण्यं पद्मिनीषण्ड मण्डितम् ॥ ७५ ॥

यत्रैषा ब्राह्मणी साध्वी नित्यं च तपसि स्थिता ॥

अस्या नाम्ना च विख्यातिं तीर्थमेतत्प्रपद्यताम् ॥ ७६ ॥

अत्र यः कुरुते स्नानं श्रद्धया परया युतः ॥

तस्य भूयात्सदा वासो देवदेव त्रिविष्टपे औ। ७७ ॥

मदीयं मम नाम्ना तु शूद्रासंज्ञं तु जायताम् ॥

तस्य तुल्यप्रभावं तु तीर्थस्य प्रतिपद्यताम् ॥ ७८ ॥

आवाभ्यां नित्यशः कार्यं कुमारत्वे महत्तपः ॥

आराध्यस्त्वं सुरश्रेष्ठो वाङ्मनःकर्मभिस्तथा ॥ ७९ ॥

एतस्मिन्नेव काले तु निर्भिद्य धरणीतलम् ॥

लिंगं माहेश्वरं विप्रा निष्क्रांतं सूर्यसंनिभम् ॥ ६.१९८.८० ॥

ततः प्रोवाच ते देवः स्वयमेव महेश्वरः ॥

ताभ्यां सुतपसा तुष्टः सादरं भक्तवत्सलः ॥ ८१ ॥

एतत्तीर्थद्वयं ख्यातं त्रैलोक्येपि भविष्यति ॥

शूद्रीनाम त्वदीयं तु ब्राह्मणी च सखी तव ॥ ८२ ॥

तीर्थद्वयेऽपि यः स्नात्वा एतस्मिञ्छ्रद्धयाऽन्वितः ॥

त्वत्तः पद्मानि संगृह्य अस्यास्तोयं च निर्मलम् ॥

एतच्च मामकं लिंगं स्नापयित्वाऽर्चयिष्यति ॥ ८३ ॥

पश्चात्पद्मैश्चतुर्दश्यां शुक्लायां सोमवासरे ॥

चैत्रे मासि च संप्राप्ते चिरायुः स भविष्यति ॥ ८४ ॥

सर्वपापविनिर्मुक्तो यद्यपि स्यात्सुपापकृत् ॥ ८५ ॥

एवमुक्त्वा स भगवांस्ततश्चादर्शनं गतः ॥

तत्र नित्यं च तपसि स्थिते सख्यावुभावपि ॥ ८६ ॥

यावत्कल्पशतं तावज्जरामरणवर्जि ते ॥

अद्यापि गगने ते च दृश्येते तारकात्मके ॥ ८७ ॥

ततःप्रभृति तत्ख्यातं तीर्थयुग्मं धरातले ॥

आगत्याथ नरो दूरात्ताभ्यां कृत्वा निमज्जनम् ॥ ८८ ॥

पूजयित्वा तु तल्लिंगं ततो याति दिवालयम् ॥

महापातकयुक्तोऽपि तत्प्रभावादसंशयम् ॥ ८९ ॥

एतस्मिन्नंतरे मर्त्ये नष्टा धर्मस्य च क्रिया ॥

यज्ञदानकृता या च देवार्चनसमुद्भवा ॥ ६.१९८.९० ॥

व्याप्तस्तथाखिलः स्वर्गो मानवैः स्पर्धयान्वितैः ॥

सार्धं देवैर्विमानस्थैरप्सरोगणसेवितैः ॥ ९१ ॥

एतस्मिन्नेव काले तु धर्मराजः समाययौ ॥

यत्र वेदध्वनिर्ब्रह्मा ब्रह्मलोकं समाश्रितः ॥ ॥ ९२ ॥

अब्रवीद्दुःखितो दीनः क्षिप्त्वाग्रे पत्रकद्वयम् ॥

एकं पापसमुद्भूतमन्यद्धर्मसमुद्भवम् ॥ ९३ ॥

चित्रेण लिखितं यच्च विचित्रेण तथा परम् ॥

हाटकेश्वरजे क्षेत्रे देवतीर्थयुगं स्थितम् ॥ ९४ ॥

शूद्राख्यं ब्राह्मणीनाम तथान्यत्पद्ममंडितम् ॥

तथा तत्रास्ति लिंगं च पुण्यं माहेश्वरं महत् ॥ ९५ ॥

त्रयाणामथ तेषां च प्रभावात्सर्वमानवाः ॥

अपि पापसमायुक्ताः प्रयांति त्रिदशालयम् ॥ ९६ ॥

शून्या मे नरका जाताः सर्वे ते रौरवादयः ॥ ९७ ॥

न कश्चिद्यजनं चक्रे न दानं न च तर्पणम् ॥

देवतानां पितॄणां च मनुष्याणां विशेषतः ॥ ९८ ॥

तस्मान्मुक्तो मया सर्वो योऽधिकारस्तवोद्भवः ॥

नियोजयस्व तत्रान्यं कञ्चिच्छक्ततमं ततः ॥ ९९ ॥

अप्रमाणं स्थितं सर्वमेतत्पत्रद्वयं मम ॥

तच्छ्रुत्वा पद्मजः प्राह समानीय शतक्रतुम् ॥ ६.१९८.१०० ॥

गत्वा शीघ्रतमं मर्त्ये त्वं शक्र वचनान्मम ॥

हाटकेश्वरजे क्षेत्रे तीर्थद्वयमनुत्तमम् ॥ १०१ ॥

शूद्र्याख्यं ब्राह्मणीत्येव यच्च लिंगमनुत्तमम् ॥

तत्रस्थं नाशय क्षिप्रं कृत्वा पांसुप्रवर्षणम् ॥ १०२ ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा सत्वरं शक्रो गत्वा भूमितलं ततः ॥

पांसुभिः पूरयामास ते तीर्थे लिंगमेव च ॥ १०३ ॥

अद्यापि कलिकालेऽस्मिन्द्वाभ्यां गृह्य सुमृत्तिकाम् ॥

स्नात्वा च तिलकं कार्यं सर्वपापविशुद्धये ॥ १०४ ॥

चतुर्दशीदिने प्राप्ते सोमवारे च संस्थिते ॥

द्वाभ्यां यः कुरुते श्राद्धं श्रद्धया परया युतः ॥

गयाश्राद्धेन किं तस्य मनुः स्वायंभुवोऽब्रवीत् ॥ १०५ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥

यथा सा ब्राह्मणी जाता शूद्री चापि तथापरा॥१ ०६॥

यश्चैतच्छृणुयाद्भक्त्या पठेद्वा द्विजसत्तमाः ॥

सोऽपि तद्दिनजात्पापान्मुच्यते नात्र संशयः ॥ १०७ ॥

एवं नरो न कः सिद्धस्तस्य लिंगस्य पूजनात्।।

चिरायुश्च तथा जातो यथान्यो नात्र विद्यते।।१०८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शूद्रीब्राह्मणीतीर्थद्वयमाहात्म्यवर्णनं नामाष्टनवत्युत्तरशततममोऽध्यायः॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः १९९



ऋषय ऊचुः॥
तिस्रःकोट्योर्धकोटी च तीर्थानामिह भूतले॥
श्रूयते सूत कात्स्न्र्येन कीर्त्यमाना मुनीश्वरैः॥१॥

कथं लभ्येत सर्वेषां तीर्थानां स्नानजं फलम्।।
अल्पायुर्भिर्महाभाग कलिकाल उपस्थिते।।२।।

।।सूत उवाच।।
क्षेत्रत्रयमिहाख्यातं तथारण्यत्रयं महत्।।
पुरीत्रयं वनान्येव त्रीणि ग्रामास्तथात्रयः ॥ ३ ॥

तथा तीर्थत्रयं चान्यत्पर्वतत्रितयान्वितम् ॥
महानदीत्रयं चैव सर्वपातकनाशनम् ॥ ४ ॥

मर्त्यलोकेस्थितं विप्राः सर्वतीर्थफलप्रदम् ॥
सर्वेष्वेतेषु यः स्नाति स सर्वेषां फलं लभेत् ॥ ५ ॥

चतुर्विंशतिसंख्यानामिदमाह प्रजापतिः ॥
य एकस्मिंस्त्रिके स्नाति सर्व त्रिकफलं लभेत् ॥ ६ ॥

॥ ऋषय ऊचुः ॥ ॥

त्रीणि क्षेत्राणि कानीह तथारण्यानि कानि च ॥
पुर्यस्तिस्रो महाभाग काःख्याताश्च वनानि च ॥ ७ ॥

के ग्रामाः कानि तीर्थानि के नगाः सरितश्च काः ॥
नामभिर्वद नः सूत सर्वाण्येतानि विस्तरात् ॥ ८ ॥

॥ सूत उवाच ॥ ॥

कुरुक्षेत्रमिति ख्यातं प्रथमं क्षेत्रमुत्तमम् ॥
हाटकेश्वरजं क्षेत्रं द्वितीयं परिकीर्तितम् ॥ ९ ॥

प्राभासिकं तृतीयं तु क्षेत्रं हि द्विजसत्तमाः ॥
एतत्क्षेत्रत्रयं पुण्यं सर्वपातकनाशनम् ॥ ६.१९९.१० ॥

यथोक्तविधिना दृष्ट्वा नरः पापात्प्रमुच्यते ॥
यो यं काममभिध्यायन्क्षेत्रेष्वेतेषु भक्तितः ॥ ११ ॥

स्नानं करोति तस्येष्टं मनसो जायते फलम् ॥
चतुर्विंशतिमानेषु स्नातो भवति स द्विजाः॥१२॥

एकं तु पुष्करारण्यं नैमिषारण्यमेव च ॥
धर्मारण्यं तृतीयं तु तेषां संकीर्त्यते द्विजाः ॥ १३ ॥

त्रिष्वेतेषु च यः स्नाति चतुर्विंशतिभाग्भवेत् ॥ १४ ॥

वाराणसी पुरीत्येका द्वितीया द्वारकापुरी ॥
अवन्त्याख्या तृतीया च विश्रुता भुवनत्रये ॥ १५ ॥

एतासु यो नरः स्नाति चतुर्विंशतिभाग्भवेत् ॥ १६ ॥

वृन्दावनं वनं चैकं द्वितीयं खांडवं वनम् ॥
ख्यातं द्वैतवनं चान्यत्तृतीयं धरणीतले ॥ १७ ॥

त्रिष्वेतेषु च यः स्नाति चतुर्विंशतिभाग्भवेत् ॥१८॥

कल्पग्रामः स्मृतश्चैकः शालिग्रामो द्वितीयकः ॥
नंदिग्रामस्तृतीयस्तु विश्रुतो द्विजसत्तमाः ॥१९॥

त्रिष्वेतेषु च यः स्नाति चतुर्विंशतिभाग्भवेत् ॥ ६.१९९.२० ॥

अग्नितीर्थं स्मृतं चैकं शुक्लतीर्थमथापरम्॥

तृतीयं पितृतीर्थं तु पितॄणामतिवल्लभम् ॥ २१ ॥

त्रिष्वेतेषु च यः स्नाति चतुर्विंशतिभाग्भवेत् ॥ २२ ॥

श्रीपर्वतः स्मृतश्चैको द्वितीयश्चार्बुदस्तथा ॥
तृतीयो रैवताख्योऽत्र विख्यातः पर्वतोत्तमाः ॥ २३ ॥

त्रिष्वेतेषु च यः स्नाति चतुर्विंशतिभाग्भवेत् ॥ २४ ॥

गंगा नदी स्मृता पूर्वा नर्मदाख्या तथा परा ॥
सरस्वती तृतीया तु नदी प्लक्षसमुद्भवा ॥ २५ ॥

आसु सर्वासु यः स्नाति चतुर्विंशतिभाग्भवेत् ॥ २६ ॥

एतेष्वेव हि सर्वेषु यः स्नानं कुरुते नरः ॥
सार्धकोटित्रयस्यात्र स कृत्स्नं फलमाप्नुयात् ॥ २७ ॥

यश्चैकस्मिन्नरः स्नाति स त्रिकस्य फलं लभेत् ॥ २८ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥
संक्षेपात्तीर्थजं पुण्यं लभ्यते यन्नरैर्भुवि ॥ २९ ॥

सांप्रतं किं नु वो वच्मि यत्तद्वदत मा चिरम् ॥ ६.१९९.३० ॥

॥ ऋषय ऊचुः ॥ ॥

हाटकेश्वरजे क्षेत्रे यानि तीर्थानि सूतज ॥
तानि प्रोक्तानि सर्वाणि त्वयाऽस्माकं सुविस्तरात् ॥ ३१ ॥

तथा चायतनान्येव संख्यया रहितानि च ॥
अपि वर्षशतेनात्र स्नानं कर्तुं न शक्यते ॥ ३२ ॥

तेषु सर्वेषु मर्त्येन यथोक्तविधिना स्फुटम् ॥

देवतायतनान्येव तथा द्रष्टुं महा मते ॥ ३३ ॥

यस्मिन्स्नातो दिने चैव तस्य व्युष्टिः प्रकीर्तिता ॥
अल्पायुषस्तदा मर्त्याः कृतेऽपि परिकीर्तिताः ॥ ३४ ॥

त्रेतायां द्वापरे चापि किमु प्राप्ते कलौ युगे ॥
एवमल्पायुषो ज्ञात्वा मानवान्सूतनंदन ॥ ३५ ॥

लभेरंश्च कथं सर्वतीर्थानां स्नानजं फलम् ॥
देवदर्शनजं वापि विशेषान्निर्धनाश्च ये ॥ ३६ ॥

अस्ति कश्चिदुपायोऽत्र दैवो वा मानुषोऽपि वा ॥
येन तेषां भवेत्पुण्यं सर्वेषामेव हेलया ॥ ३७ ॥

॥ सूत उवाच ॥ ॥
अस्मिन्नर्थे पुरा पृष्टो विश्वामित्रो महामुनिः ॥
समुपेत्याश्रमं तस्य आनर्तेन महीभुजा ॥ ३८ ॥

॥ राजोवाच ॥ ॥
भगवन्नत्र तीर्थानि संख्यया रहितानि च ॥
तेषु स्नानविधिः प्रोक्तः सर्वेष्वेव पृथक्पृथक् ॥ ३९ ॥

मासे वारे दिने चैव कुत्रचिन्मुनिसत्तमैः ॥
दानानि च तथोक्तानि यथा स्नान विधिस्तथा ॥ ६.१९९.४० ॥

देवानां दर्शनं चापि पृथक्तेन प्रकीर्तितम् ॥
न शक्यते फलं प्राप्तुं सर्वेषां केनचिन्मुने ॥ ४१ ॥

अपि वर्षशतेनापि किं पुनः स्तोकवासरैः॥
तस्माद्वद महाभाग सुखोपायं च देहिनाम् ॥४२॥

एकस्मिन्नपि च स्नातस्तीर्थे प्राप्नोति मानवः॥
सर्वेषामेव तीर्थानां स्नानजं सकलं फलम् ॥ ४३ ॥

तथैकस्मिन्सुरे दृष्टे सर्वदेवसमुद्भवम् ॥
फलं दर्शनजं भावि नराणां द्विजसत्तम ॥ ४९ ॥

॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा सुचिरं ध्यात्वा विश्वामित्रो महामुनिः ॥
अब्रवीच्छृणु राजेंद्र सरहस्यं वदामि ते ॥ ४५ ॥

चत्वार्यत्र प्रकृष्टानि मुख्यतीर्थानि पार्थिव ॥
येषु स्नाने कृते राजञ्छ्राद्धे च तदनंतरम् ॥
सर्वेषामेव तीर्थानां स्नानजं लभ्यते फलम् ॥ ४६ ॥

सप्तविंशतिलिंगानि तथात्रैव स्थितानि च ॥
सिद्धेश्वरप्रपूर्वाणि सर्वपापहराणि च ॥ ४७ ॥

तेषु सर्वेषु दृष्टेषु भक्त्या पूतेन चेतसा ॥
सर्वेषामेव देवानां भवेद्दर्शनजं फलम् ॥ ४८ ॥

एकस्मिन्नपि संदृष्टे पूजिते वा सुरोत्तमे ॥
सप्तविंशतिलिंगानां पूजा तेन कृता भवेत् ॥ ४९ ॥

॥ राजोवाच ॥ ॥
कानि चत्वारि तीर्थानि तत्र मुख्यानि सन्मुने ॥
येषु स्नातो नरः सम्यक्सर्वेषां लभते फलम् ॥ ६.१९९.५० ॥

॥ विश्वामित्र उवाच ॥ ॥
अत्रास्ति कूपिका पुण्या यस्यां संश्रयते गया ॥
कृष्णपक्षे चतुर्दश्याममावास्यादिने तथा ॥ ५१ ॥

विशेषेण महाभाग कन्यासंस्थे दिवाकरे ॥
निर्विण्णा भूमिलोकानां कृतैः श्राद्धैरनेकधा ॥ ५२ ॥

यस्तस्यां कुरुते श्राद्धं सम्यक्छ्रद्धासमन्वितः ॥ ५३ ॥

तस्मिन्नहनि राजेंद्र स संतारयते पितॄन् ॥
तथा तीर्थं द्वितीयं तु शंखतीर्थमिति स्मृतम्॥ ॥ ५४ ॥

तत्र स्नात्वा नरो यस्तु पश्येच्छंखेश्वरं ततः ॥
सर्वेषां फलमाप्नोति माघस्य प्रथमेऽहनि ॥ ५५ ॥

तथा मन्नामकं तीर्थे तृतीयं मुख्यतां गतम् ॥
अत्र स्नात्वा तु यः पश्येन्मया संस्थापितं हरम् ॥ ५६ ॥

विश्वामित्रेश्वरं नाम सर्वेषां स फलं लभेत् ॥
नभस्यस्य सिताष्टम्यां सर्वेषां लभते फलम् ॥ ५७ ॥

शक्रतीर्थमिति ख्यातं चतुर्थं बालमण्डनम् ॥
तत्र स्नात्वा च पंचाहं शक्रेश्वरमवेक्ष्य च ॥
आश्विनस्य सितेऽष्टम्यां सर्वेषां लभते फलम् ॥ ५८ ॥

॥ राजोवाच ॥ ॥
विधानं वद मे विप्र गयाकूप्याः समुद्भवम् ॥
विस्तरेण महाभाग श्रद्धा मे महती स्थिता ॥ ५९ ॥ ॥

॥ विश्वामित्र उवाच ॥ ॥
अमावास्यादिने प्राप्ते तत्र कन्यागते रवौ ॥
यः श्राद्धं कुरुते भक्त्या स पितृंस्तारयेन्निजान् ॥ ६.१९९.६० ॥

भर्तृयज्ञविधानेन शुद्धैः स्थानोद्भवैर्द्विजैः ॥
भर्तृयज्ञविधिं त्यक्त्वा योऽन्येन विधिना नरः ॥ ६१ ॥

श्राद्धं करोति मूढात्मा विहीनं स्थानजैर्द्विजैः ॥
स्थानजैरपि वाऽशुद्धैस्तस्य तद्व्यर्थतां व्रजेत् ६२ ॥

वृष्टिः स्यादूषरे यद्वत्सत्यमेतन्मयोदितम् ॥
अंधस्याग्रे यथा नृत्यं प्रगीतं बधिरस्य च ॥

तथा च व्यर्थतां याति अन्यस्थानोद्भवैर्द्विजैः ॥ ६३ ॥

ब्राह्मणैः कारयेच्छ्राद्धं मूर्खैरपि द्विजोत्तमाः ॥
चतुर्वेदा अपि त्याज्या अन्यस्थानसमुद्भवाः ॥६४॥

दवे कर्मणि पित्र्ये वा सोमपाने विशेषतः॥
देशांतरगतो यस्तु श्राद्धं च कुरुते नरः ॥
वैश्वानरपुरस्तेन कार्यं नान्यद्विजस्य च ॥ ६५॥

संनिवेश्य दर्भबटूञ्छ्राद्धं कुर्याद्द्विजोत्तमाः ॥
दक्षिणा भोजनं देयं स्थानिकानां चिरादपि ॥ ६६ ॥

पंचगव्यस्य संपूर्णो यथा कुम्भः प्रदुष्यति ॥
बिंदुनैकेन मद्यस्य पतितेन नृपोत्तम ॥ ६७ ॥

एकेनापि च बाह्येन बहूनामपि भूपते ॥
मध्ये समुपविष्टेन तच्छ्राद्धं दोषमाप्नुयात् ॥ ६८ ॥

स्थानजोऽपि चतुर्वेदो यद्यपि स्यान्न शुद्धिभाक् ॥
बहूनामपि शुद्धानां मध्ये श्राद्धं विनाशयेत् ॥ ६९ ॥

तस्मात्सर्वप्रयत्नेन शुद्धं ब्राह्मणमानयेत् ॥ ६.१९९.७० ॥

स्थानिकं मूर्खमप्येवमलाभे गुणिनामपि ॥
हीनांगमधिकांगं वा दूषितं नो तथा परम् ॥ ७१ ॥

कन्यादाने तथा श्राद्धे कुलीनो ब्राह्मणः सदा ॥
आहर्तव्यः प्रयत्नेन य इच्छेच्छुभमात्मनः ॥
सोऽपि शुद्धिसमायुक्तो यदि स्यान्नृपसत्तम ॥ ७२ ॥

वृक्षाणां च यथाऽश्वत्थो देवतानां यथा हरिः॥
श्रेष्ठस्थानजविप्राणां तथा चाष्टकुलोद्भवः ॥ ७३ ॥

आयुधानां यथा वज्रं सरसां सागरो यथा ॥
श्रेष्ठस्थानजविप्राणां तथाष्टकुलसंभवः ॥ ७४ ॥

उच्चैःश्रवा यथाऽश्वानां गजानां शक्रवाहनः ॥
श्रेष्ठस्थानजविप्राणां तथाष्टकुलसंभवः ॥ ७५ ॥

नदीनां च यथा गंगा सतीनां चाप्यरुंधती ॥
तद्वत्स्थानजविप्राणां श्रेष्ठोऽष्टकुलिकः स्मृतः ॥ ७६ ॥

ग्रहाणां भास्करो यद्वन्नक्षत्राणां निशाकरः ॥
तद्वत्स्थानजविप्राणां श्रेष्ठोऽष्टकुलिकः स्मृतः ॥ ७७ ॥

पर्वतानां यथा मेरुर्द्विपदानां द्विजोत्तमः ॥
स्थानजानां तु विप्राणां श्रेष्ठोऽष्टकुलिकस्तथा ॥ ७८ ॥

पक्षिणां गरुडो यद्वत्सिंहोऽरण्यनिवासिनाम् ॥
स्थानजानां तु विप्राणां श्रेष्ठोऽष्टकुलिकस्तथा ॥ ७९ ॥

एवं ज्ञात्वा प्रयत्नेन श्राद्धे यज्ञे च पार्थिव ।
कन्यादाने विशेषेण योज्यश्चाष्टकुलोद्भवः ॥ ६.१९९.८० ॥

नृत्यंति पितरस्तस्य गर्जंति च पितामहाः ॥
वेदिमूले समालोक्य प्राप्तमष्टकुलं नृप ॥ ८१ ॥

पुनर्वदंति संहृष्टाः किमस्माकं प्रदास्यति ॥
दौहित्रश्चापसव्येन जलं दर्भतिलान्वितम् ॥ ८२ ॥

॥ राजोवाच ॥ ॥
यदेतद्भवता प्रोक्तं श्रैष्ठ्यमष्टकुलोद्भवम् ॥
सर्वेषां नागराणां च तत्किं वद महामते ॥८३॥

न ह्यत्र कारणं स्वल्पं भविष्यति द्विजोत्तम ॥ ८४ ॥

॥ विश्वामित्र उवाच ॥ ॥
सत्यमेतन्महाराज यत्त्वया व्याहृतं वचः ॥
अन्येऽपि नागराः संति वेदवेदांगपारगाः॥८५॥

श्राद्धार्हा यज्ञयोग्याश्च कन्यायोग्या विशेषतः॥
परं ते स्थापिता राजन्स्वयमिंद्रेण तत्र च ॥ ८६ ॥

प्रधानत्वेन सर्वेषां नागरैश्चापि कृत्स्नशः ॥
तेन ते गौरवं प्राप्ताः स्थानेत्रैव विशेषतः ॥ ८७ ॥

तस्माच्छ्राद्धं प्रकर्तव्यं विप्रै श्चाष्टकुलोद्भवैः ॥
अप्राप्तौ चैव तेषां तु कार्यं नागरसंभवैः ॥ ८८ ॥

नान्यस्थानसमुद्भूतैश्चतुर्वेदैरपि द्विजैः ॥
भर्तृयज्ञेन मर्यादा कृता ह्येषा महा त्मना ॥ ८९ ॥

मुक्त्वा तु नागरं विप्रं योऽन्येनात्र करिष्यति ॥
श्राद्धं वा यदि वा यज्ञं व्यर्थं तस्य भविष्यति ॥६.१९९.९० ॥

॥ राजोवाच ॥ ॥
संत्यन्ये विविधा विप्रा वेदवेदांगपारगाः ॥
मध्यदेशोद्भवाः शान्तास्तथान्ये तीर्थसंभवाः ॥ ९१ ॥

भर्तृयज्ञेन ये त्यक्ताः श्राद्धे यज्ञे विशेषतः ॥
हीनांगाश्चाधिकांगाश्च द्विर्नग्नाः श्यावदंतकाः ॥ ९२ ॥

कुनखाः कुष्ठसंयुक्ता मूर्खा अपि विगर्हिताः ॥
श्राद्धार्हाः सूचितास्तेन एतं मे संशयं वद ॥ ९३ ॥

॥ विश्वामित्र उवाच ॥ ॥
कीर्तयिष्ये नरव्याघ्र कारणानि बहूनि च ॥
चमत्कारस्य पत्न्याश्च दानेन पतिता यतः॥ ९४ ॥

स्त्रीणां प्रतिग्रहेणैव विप्रेषु प्रोषितेषु च ॥
पृथक्त्वं च ततो जातं बाह्याभ्यन्तरसंज्ञकम् ॥ ९५ ॥

दुर्वाससा ततः शप्ता रुष्टेनेवाहिना यथा ॥
विद्याधनाभिमानेन शापेन पतिताः सदा ॥ ९६ ॥

कुशे राज्यगते राजन्राक्षसानां महाभयम् ॥
प्रजयाऽऽवेदितं सर्वं तस्य राज्ञो महात्मनः ॥ ९७ ॥

विभीषणस्य लंकायां दूतश्च प्रेषितस्तदा ॥
सर्वं निवेदयामास प्रजानां भयसंभवम् ॥ ९८ ॥

अभिवन्द्य कुशादेशं रामस्य चरितं स्मरन् ॥
पुर्यां विलोकयामास लङ्कायां रामशासनात् ॥ ९९ ॥

उपप्लवस्य कर्तारो नष्टाः सर्वे दिशो दश ॥
गन्धर्वाणां च लोकं हि भयेन महता गताः ॥ ६.१९९.१०० ॥

स्थातुं तत्र न शक्तास्ते विभीषणभयेन च ॥
पृथिव्यां समनुप्राप्ताः स्थानान्यपि बहूनि च ॥ १०१ ॥

भयेन महता तत्र कुशस्यैव तु शासने ॥
ब्राह्मणानां च रूपाणि कृत्वा तत्र समागताः ॥ १०२ ॥

वाडवानां महिम्ना च मध्ये स्थातुं न तेऽशकन् ॥
पतितानां च संस्थानं चमत्कारपुरं गताः ॥ १०३ ॥

मायाविशारदैस्तैश्च धनेन विद्यया ततः ॥
अध जग्धं ततस्तैस्तु तेषां मध्ये स्थितं च तैः ॥ १०४ ॥

ततःप्रभृति ते सर्वे राक्षसत्वं प्रपेदिरे ॥
क्रूराण्यपि च कर्माणि कुर्वंति च पदेपदे ॥ १०५ ॥

ततस्ते सर्वथा राजन्वर्जनीयाः प्रयत्नतः ॥
श्राद्धे यज्ञे नरव्याघ्र नरके पातयंति च ॥ ॥ १०६ ॥

अन्यच्च दूषणं तेषां कीर्तयिष्ये तवाऽनघ ॥
त्रिजाताः स्थापिता राजन्सर्पाणां गरनाशनात् ॥ १०७ ॥

नगरत्वं ततो जातं चमत्कार पुरस्य तु ॥
त्रिजातत्वं तु सर्वेषां जातं तत्र विशेषतः ॥ १०८ ॥

एतेभ्यः कारणेभ्यश्च भर्तृयज्ञेन वर्जिताः ॥
पुनश्च कारणं तेषां स्पर्शादपि न शुद्धिभाक् ॥ १०९ ॥

कुम्भकोत्थं च संप्राप्तं महच्चण्डालसंभवम् ॥ ६.१९९.११० ॥

॥ राजोवाच ॥ ॥
एतच्च कारणं विप्र कथयस्व प्रसादतः ॥
स्थावरस्य चरस्यैव जगतो ज्ञानमस्ति ते ॥ १११ ॥

॥ विश्वामित्र उवाच ॥ ॥
अत्र ते कीर्तयिष्यामि पूर्ववृत्तकथांतरम् ॥
भर्तृयजेन ये त्यक्ताः सर्वेन्ये ब्राह्मणोत्तमाः ॥ ११२ ॥

वर्धमाने पुरे पूर्वमासीदंत्यजजातिजः ॥
चण्डालः कुंभकोनाम निर्दयः पापकर्मकृत् ॥ ११३ ॥

कस्यचित्त्वथ कालस्य तस्य पुत्रो बभूव ह ॥
विरूपस्यापि रूपाढ्यः पूर्वकर्मप्रभावतः ॥ ११४ ॥

पिंगाक्षस्य सुकृष्णस्य वयोमध्यस्य पार्थिव ॥
दक्षः सर्वेषु कृत्येषु सर्वलक्षणलक्षितः ॥ ११५ ॥

स वृद्धिं द्रुतमभ्येति शुक्लपक्षे यथोडुराट् ॥
तथाऽसौ शंस्यमानस्तु सर्वलोकैः सुरूपभाक् ॥

दृष्ट्वा कुटुंबकं नित्यं वैराग्यं परमं गतः ॥११६॥

ततो देशांतरं दुःखाद्भ्रममाण इतस्ततः ॥
चमत्कारपुरं प्राप्तो द्विजरूपं समाश्रितः ॥
स स्नाति सर्वकृत्येषु भिक्षान्नकृतभोजनः ॥ ११७ ॥

एतस्मिन्नेव काले तु ब्राह्मणः शंसितव्रतः ॥
छांदोग्यगोत्रविख्यातः सुभद्रोनाम पार्थिवः ॥ ११८ ॥

नागरो वर्षयाजी च वेदवेदांगपारगः ॥
तत्रासीत्तस्य सञ्जाता कन्यका द्विगुणै रदैः ॥ ११९ ॥

तथा त्रिभिःस्तनै रौद्रा पृष्ठ्यावर्तकसंयुता ॥
दरिद्रोऽपि सुदुःस्थोऽपि कुलहीनोपि पार्थिव॥६.११९.१२०॥।

दीयमानामपि न तां प्रतिगृह्णाति कश्चन ॥
यद्भक्षयति भर्तारं षण्मासाभ्यंतरे हि सा ॥१२१॥

यस्याः स्युर्द्विगुणा दंता एवं सामुद्रिका जगुः ॥
त्रिस्तनी कन्यका या तु श्वशुरस्य कुलक्षयम् ॥
संधत्ते नात्र सन्देहस्तस्मात्तां दूरतस्त्यजेत् ॥१२२॥

पृष्ठ्यावर्तो भवेद्यस्या असती सा भवेद्ध्रुतम् ॥
बहुपापसमाचारा तस्मात्तां परिवर्जयेत् ॥ १२३ ॥

अथ तां वृद्धिमापन्नां दृष्ट्वा विप्रः सुभद्रकः ॥
चिन्ताचक्रं समारूढो न शांतिमधिगच्छति ॥ १२४ ॥

किं करोमि क्व गच्छामि कथमस्याः पतिर्भवेत् ॥
न कश्चित्प्रतिगृह्णाति प्रार्थितोऽपि मुहुर्मुहुः ॥ १२५ ॥

दरिद्रो व्याधितो वाऽपि वृद्धोऽपि ब्राह्मणो हि सः ॥
स्मृतौ यस्मादिदं प्रोक्तं कन्यार्थे प्राङ्महर्षिभिः ॥ १२६ ॥

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ॥
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ १२७ ॥

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ॥
त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलाम् ॥ १२८ ॥

एवं चिन्तयतस्तस्य सोंऽत्यजो द्विजरूपधृक् ॥
भिक्षार्थं तद्गृहं प्राप्तो दृष्टस्तेन महात्मना ॥ १२९ ॥

पृष्टश्च विस्मयात्तेन दृष्ट्वा रूपं तथाविधम् ॥
कुतस्त्वमिह सम्प्राप्तः क्व यास्यसि च भिक्षुक ॥ ६.१९९.१३० ॥

ईदृग्भव्यतरो भूत्वा कस्मान्माधुकरीं गतः ॥
किं गोत्रं तव मे ब्रूहि कतमः प्रवरश्च ते ॥ १३१ ॥

सोऽब्रवीद्गौडदेशीयं स्थानं मे सुमहत्तरम् ॥
नाम्ना भोजकटं ख्यातं नानाद्विजसमाश्रितम् ॥ १३२ ॥

तत्रासीन्माधवोनाम ब्राह्मणो वेदपारगः ॥
वसिष्ठगोत्रविख्यात एकप्रवरसूचितः ॥ ॥ १३३ ॥

तस्याहं तनयो नाम्ना चंद्रप्रभ इति स्मृतः ॥ १३४ ॥

ततोऽहमष्टमे वर्षे यदा व्रतधरः स्थितः ॥
तदा पंचत्वमापन्नः पिता मे वेदपारगः ॥ १३५ ॥

माता मे सह तेनैव प्रविष्टा हव्यवाहनम् ॥
ततो वैराग्यमापन्नो निष्क्रांतोऽहं निजालयात् ॥ १३६ ॥

तीर्थानि भ्रममाणोऽत्र संप्राप्तस्तु पुरं तव ॥
अधुना संप्रयास्यामि प्रभासं क्षेत्रमुत्तमम् ॥ १३७ ॥

यत्र सोमेश्वरो देवस्त्यक्त्वा कैलासमागतः ॥
न मया पठिता वेदा न च शास्त्रं नृपोत्तम॥
तीर्थयात्राप्रसंगेन तेन भिक्षां चराम्यहम् ॥ १३८ ॥

॥ विश्वामित्र उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा चिन्तयामास चेतसि ॥
ब्राह्मणोऽयं सुदेशीयस्तथा भव्यतमाकृतिः ॥
यदि गृह्णाति मे कन्यां तदस्मै प्रददाम्यहम् ॥ १३९ ॥

यावद्रजस्वला नैव जायते सा निरूपिता ॥
कृत्स्नं दूषयति क्षिप्रं नैव वंशं ममाधमा ॥ ६.१९९.१४० ॥

ततः प्रोवाच तं म्लेच्छं संमंत्र्य सह भार्यया ॥
यदि गृह्णासि मे कन्यां तव यच्छाम्यहं द्विज ॥ १४१ ॥

भरणं पोषणं द्वाभ्यां करिष्यामि सदैव हि ॥१४२॥

तच्छ्रुत्वा हर्षितः प्राह सोंऽत्यजो नृपसत्तमम् ॥
तवादेशं करिष्यामि यच्छ मे कन्यकां नृप ॥ १४३ ॥

तथेत्युक्त्वा गतस्तेन तस्मै दत्ता निजा सुता ॥
गृह्योक्तेन विधानेन विवाहो विहितस्ततः ॥ १४४ ॥

ततो ददौ धनं धान्यं गृहं क्षेत्रं च गोधनम् ॥
तस्मै तुष्टिसमायुक्तो मन्यमानः कृतार्थताम् ॥ १४५ ॥

अथ सोऽपि च तां प्राप्य विलासानकरोद्बहून् ॥
खाद्यैः पानैः सुवस्त्रैश्च गन्धमाल्यैर्विभूषणैः ॥ १४६ ॥

परं स व्रजति प्रायो येन मार्गेण केनचित् ॥
सारमेयाः सशब्दाश्च पृष्ठतोऽनुव्रजंति वै ॥ १४७ ॥

अन्येषामंत्यजात्यानां यद्वत्तस्य विशेषतः ॥

वेदाभ्यासपरश्चैव यदि संजायते क्वचित् ॥
रक्तं पतति वक्त्रेण तत्क्षणात्तस्य दुर्मतेः ॥ १४८ ॥

एतस्मिन्नंतरे लोकः सर्व एव प्रशंकितः ॥
अब्रवीच्च मिथोऽभ्येत्य चंडालोऽयमसंशयम् ॥ १४९ ॥

यदेते पृष्ठतो यांति भषमाणाः शुनीसुताः ॥
सुभद्रोऽपि च तत्तेषां श्रुत्वा चिन्तापरोऽभवत् ॥ ६.१९९.१५० ॥

मन्यमानश्च तत्सत्यं दुःखेन महतान्वितः ॥
नूनमंत्यजजातीयो भविष्यति सुतापतिः ॥ १५१ ॥

ज्ञायते चेष्टितैः सर्वैर्यथाऽयं जल्पते जनः ॥ १५२ ॥

एवं रात्रिंदिवं तस्य चिन्तयानस्य भूपतेः ॥
लोकापवादयुक्तस्य कियान्कालोऽभ्यवर्तत ॥ १५३ ॥

अन्यस्मिन्नहनि प्राप्ते आद्याद्या द्विजसत्तमाः ॥
मध्यगेन समायुक्ता ब्रह्मस्थानं समागताः ॥
तस्य शुद्धिकृते प्रोचुर्येन शंका प्रणश्यति ॥ १५४ ॥

अथोचुस्तं द्विजश्रेष्ठा ब्रह्मस्थानस्य मध्यगम् ॥
मध्यगस्य तु वक्त्रेण विवर्णवदनं स्थितम् ॥ १५५ ॥

कुलं गोत्रं निजं ब्रूहि प्रवरांश्च विशेषतः ॥
स्थानं देशं च विप्राणां येन शुद्धिः प्रदीयते ॥ १५६ ॥

अथासौ वेपमानस्तु प्रस्विन्नवदनस्तथा ॥
अधोदृष्टिरुवाचेदं गद्गदं विहिताञ्जलिः ॥ १५७ ॥

गर्भाष्टमे पिता मह्यं वर्षे मृत्युं गतस्ततः ॥
ततः सा तं समादाय जननी मे पतिव्रता ॥
मां त्यक्त्वा दुःखितं दीनं प्रविष्टा हव्यवाहनम् ॥ १५८ ॥

अहं वैराग्यमापन्नस्तीर्थयात्रां समाश्रितः ॥
बालभावे पितुर्दुःखात्तापसैरपरैः सह ॥ १५९ ॥

न मया पठितो वेदो न च शास्त्रं निरूपितम्॥
तीर्थयात्रापरोऽहं च समायातो भवत्पुरम् ॥ ६.१९९.१६०

अभद्रेण सुभद्रेण श्वशुरेण दुरात्मना ॥
एतज्जानाम्यहं विप्रा गोत्रं वासिष्ठमेव वा ॥ १६१ ॥

अथैकप्रवरो देशो गौडो मधुपुरं पुरम् ॥
ततस्ते ब्राह्मणाः प्रोचुर्यस्य नो ज्ञायते कुलम् ॥
तस्य शुद्धिः प्रदातव्या धटद्वारेण केवला ॥१६२॥

स त्वं धटं समारुह्य ब्राह्मण्यार्थं च केवलम् ॥
शुद्धिं प्राप्य ततो भोगान्भुंक्ष्वात्रस्थोऽपि केवलम् ॥ १६३ ॥

सोऽब्रवीत्साहसं कृत्वा सर्वानेव द्द्विजोत्तमान् ॥
प्रतिगृह्णाम्यहं कामं तप्तमाषकमेव च॥१६४॥
प्रविशामि हुताशं वा भक्षयिष्याम्यहं विषम्॥१६५॥

किं पुनर्धटदिव्यं च क्रियमाणे सुखावहम् ॥
ब्राह्मणस्य कृते विप्राश्चित्ते नो मामके घृणा ॥ १६६ ॥

अथ ते ब्राह्मणास्तस्य धटारोहणसंभवम् ॥
शुद्धिं निर्दिश्य वारं च सूर्यस्य च ततः परम् ॥
जग्मुः स्वंस्वं गृहं सर्वे सोऽपि विप्रोंऽत्यजो द्विजाः ॥ १६७ ॥

ततः प्राह निजां भार्यां रहस्ये नृपसत्तम॥
ज्ञातोऽहं ब्राह्मणैः सर्वैरंत्यजातिसमुद्भवः ॥
देशातरं गमिष्यामि त्वमागच्छ मया सह ॥ १६८ ॥

॥ भार्योवाच ॥ ॥

अहमग्निं प्रवेक्ष्यामि न यास्यामि त्वया सह ॥
पापबुद्धे पतिष्यामि न चाहं नरकाग्निषु ॥ १६९ ॥

बुध्यमाना न सेविष्ये त्वामंत्यजसमुद्भवम् ॥
पाप संदूषितं सर्वं त्वयैतत्स्थानमुत्तमम् ॥ ६.१९९.१७० ॥

तथा मम पितुर्हर्म्यं संवत्सरप्रयाजिनः ॥
तस्माद्द्रुततरं गच्छ यावन्नो वेत्ति कश्चन ॥ १७१ ॥

नो चेत्पापसमाचार संप्राप्स्यसि महाऽऽपदम् ॥ १७२ ॥

ततो निशामुखे प्राप्ते कौपीनावरणान्वितः ॥
नष्टोऽभीष्टां दिशं प्राप्य तदा जीवितजाद्भयात् ॥ १७३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागराष्टकुलश्रैष्ठ्यवर्णनंनामैकोनद्विशततमोऽध्यायः ॥ १९९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २००



॥ विश्वामित्र उवाच ॥ ॥

ततः प्रभाते संजाते प्रोद्गते रविमण्डले ॥

सा चापि दुहिता तस्य दीक्षितस्य महात्मनः ॥ १ ॥

रोरूयमाणाऽभ्यगमत्पितरं मातरं प्रति ॥

प्रोवाच गद्गदं वाक्यं बाष्पव्याकुललोचना ॥ २ ॥

ताताम्ब किमिदं पापं युवाभ्यां समनुष्ठितम् ॥

अन्त्यजस्य प्रदत्ताऽहं यत्पापस्य दुरात्मनः ॥ ३ ॥

स नष्टो रजनीवक्त्रे ममावेद्य निजं कुलम्॥

तस्मादहं प्रवेक्ष्यामि प्रदीप्ते हव्यवाहने ॥ ४ ॥

तस्यास्तद्वचनं श्रुत्वा दीक्षितः स सुभद्रकः ॥

निश्चेष्टः पतितो भूमौ वातभग्न इव द्रुमः ॥ ५ ॥

ततः स शीततोयेन संसिक्तश्च पुनःपुनः ॥

लब्ध्वाशु चेतनां कृच्छ्रात्स्वजनैः परिवारितः ॥

प्रलापान्विविधांश्चक्रे ताडयन्स्वशिरो मुहुः ॥ ६ ॥

अथ ते ब्राह्मणाः सर्वे तस्य संपर्कदूषिताः ॥

भर्तृयज्ञं समासाद्य तेनैव सहितास्ततः ॥ ७ ॥

प्रोचुर्विनयसंयुक्ताः प्रोच्चैस्तत्सुतया सह ॥

सुभद्रेण निजे हर्म्ये सुतां दत्त्वा निवेशितः ॥ ८ ॥

चण्डालो द्विजरूपोत्र चंद्रप्रभ इति स्मृतः ॥ ९ ॥

यावत्संवत्सरं सार्धं दैवे पित्र्ये च योजितः ॥
पापकर्मा न विज्ञातः सोऽधुना प्रकटोऽभवत् ॥ ६.२००.१० ॥

सुभद्रस्यानुषंगेण स्थानं सर्वं प्रदूषितम् ॥
अन्त्यजेन महाभाग तत्कुरुष्व विनिग्रहम्॥ ११ ॥

कैश्चित्तस्य गृहे भुक्तं जलं पीतं तथा परैः ॥
अन्यैश्च गृहमानीय प्रदत्तं भोजनं तथा ॥ १२ ॥

किं वा ते बहुनोक्तेन न स कोऽस्ति द्विजोत्तम ॥
संकरो यस्य नो जातस्तस्य पापस्य संभवः ॥ १३ ॥

त्वया स्थानमिदं पुण्यं कृतं पूर्वं महामते ॥
सर्वेषां च गुरुस्त्वं हि तस्माच्छुद्धिं वदस्व नः ॥ १४ ॥

ततः संचिन्त्य सुचिरं स्मृतिशास्त्राण्यनेकशः ॥
प्रायश्चित्तं ददौ तेषां सर्वेषां स द्विजन्मनाम् ॥ १५ ॥

चांद्रायणशतं प्रादात्सुभद्रायाहिताग्नये ॥
सर्वभंडपरित्यागं पुनराधानमेव च ॥ १६ ॥

लक्षहोमविधानं च गृहमध्यविशुद्धये ॥
वह्निप्रवेशनं तस्यास्तत्सुतायाः प्रकीर्तितम् ॥ १७ ॥

येन यावंति भोज्यानि तस्य भुक्तानि मंदिरे ॥

तस्य तावंति कृच्छ्राणि तेनोक्तानि महात्मना ॥ १८ ॥

यैर्जलानि प्रपीतानि यावन्मात्राणि तद्गृहे ॥
प्राजापत्यानि दत्तानि तेभ्यस्तावंति पार्थिव ॥ १९ ॥

ब्राह्मणानां तथान्येषां तत्र स्थाने निवासिनाम् ॥
तत्स्पर्शदूषितानां च प्राजापत्यं पृथक्पृथक् ॥ ६.२००.२० ॥

स्त्रीशूद्राणां तदर्धं च तदर्ध बालवृद्धयोः ॥
मृन्मयानां च भांडानां परित्यागो निवेदितः ॥ २१ ॥

सर्वेषामेव लोकानां रसत्यागस्तथैव च ॥
कोटिहोमस्तु निर्दिष्टो ब्रह्मस्थाने यथोदितः ॥
सर्वस्थानविशुद्ध्यर्थं स्थानवित्तेन केवलम् ॥ ॥ २२ ॥

अथोवाच पुनर्विप्रान्स कृत्वा चोच्छ्रितं भुजम ॥
तारनादेन महता सर्वांस्तान्नागरोद्भवान् ॥ २३ ॥

सुभद्रेण च सर्वस्वं देयं विप्रेभ्य एव च ॥
चतुर्थांशश्च यैर्भुक्तं तद्गृहे स्वधनस्य च ॥ २४ ॥

अष्टांशं यैर्जलं पीतं गोदानं स्पर्शसंभवम् ॥
शेषाणामपि लोकानां यथाशक्त्या तु दक्षिणा ॥ २५ ॥

दीक्षितेन जपः कार्यो लक्षगायत्रिसंभवः ॥
शेषैर्विप्रैर्यथा वित्तं तथा कार्यो जपोऽखिलः ॥ २६ ॥

अहं चैव करिष्यामि प्राणायामशतत्रयम् ॥

नित्यमेव द्विजश्रेष्ठाः षष्ठकालकृताशनः ॥ २७ ॥

यावत्संवत्सरस्यांतं ततः शुद्धिर्भविष्यति ॥
जन संपर्कसंजाता सैवं तस्य दुरात्मनः ॥ २८ ॥

एवमुक्त्वा ततो भूयः स प्रोवाच द्विजोत्तमान् ॥
अथाऽऽद्यान्मध्यगास्येन ब्रह्मस्थानसमाश्रयान् ॥ ॥ २९ ॥

अद्यप्रभृति यः कन्यामविदित्वा तु नागरम् ॥
नागरो दास्यति क्वापि पतितः स भविष्यति ॥६.२००. ३० ॥

अश्राद्धेयो ह्यपांक्तेयो नागराणां विशेषतः ॥ ३१ ॥

यः श्राद्धं नागरं मुक्त्वा ह्यन्यस्मै संप्रदास्यति ॥
विमुखास्तस्य यास्यंति पितरो विबुधैः सह ॥ ३२ ॥

नागरेण विना यस्तु सोमपानं करिष्यति ॥
स करिष्यत्यसंदिग्धं मद्यपानं तु नागरः ॥
तन्मतेन विना यस्तु श्राद्धकर्म करिष्यति ३३ ॥

ततः सर्वं वृथा तस्य भविष्यति न संशयः ॥
विशुद्धिरहितं यस्तु नागरं भोजयिष्यति ॥ ३४ ॥

श्राद्धे तस्यापि तत्सर्वं व्यर्थतां संप्रयास्यति ॥
सर्वेषां नागराणां च मर्यादेयं कृता मया ॥ ३५ ॥

तस्मात्सर्वप्रयत्नेन शुद्धिः कार्या द्विजोत्तमैः ॥
वर्षेवर्षे तु संप्राप्ते स्वस्थानस्य विशुद्धये ॥ ३६ ॥

॥ विश्वामित्र उवाच ॥ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नृपोत्तम ॥

श्राद्धार्हा नागरा येन नागराणां व्यवस्थिताः ॥

भर्तृयज्ञेन मर्यादा कृता तेषां यथा पुरा ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये भर्तृयज्ञकृतनागरज्ञातिमर्यादावर्णनं नाम द्विशततमोऽध्यायः ॥ २०० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०१



॥ विश्वामित्र उवाच ॥ ॥

अथ ते ब्राह्मणाः सर्वे भर्तृयज्ञं महामतिम् ॥

कृतांजलिपुटा भूत्वा स्तुतिं कृत्वा वचोऽब्रुवन् ॥ १ ॥

यदेतद्भवता प्रोक्तं शोधितो यो भवेद्द्विजः ॥

श्राद्धस्य कन्यकायाश्च सोमपानस्य सोऽर्हति ॥ २ ॥

कथं शुद्धिः प्रकर्तव्या तस्य सर्वं ब्रवीहि नः ॥

नागरस्य समस्तस्य देशांतरगतस्य च ॥३॥

देशांतरप्रजातस्य तत्र जातस्य वा पुनः ॥

अज्ञातपितृवर्गस्य सामा न्यं पदमिच्छतः ॥ ४ ॥

एतन्नः सर्वमाचक्ष्व विस्तरेण महामते ॥ ५ ॥

॥ विश्वामित्र उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा ब्राह्मणानां नृपोत्तम ॥

अब्रवीद्भर्तृयज्ञस्तु स्वाभिप्रायं सुसंमतम् ॥ ६ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

प्रश्नभारो महानेष भवद्भिः समुदाहृतः ॥

तथापि कथयिष्यामि नमस्कृत्य स्वयंभुवम्॥ ७॥

अज्ञातपितृवंशो यो दूरादपि समागतः ॥

सामान्यं वांछते पद्यं नागरोऽस्मीति कीर्तयन् ॥ ८ ॥

तस्य शुद्धिः प्रदा तव्या मुख्यैः शांतैः शुभैर्द्विजैः ॥

गर्तातीर्थोद्भवं विप्रं कृत्वा चैव पुरःसरम् ॥९ ॥

विशुद्धिं याचमानस्य यदि यच्छंति नो द्विजाः ॥

कामाद्वा यदि वा क्रोधात्प्रद्वेषाद्वा च्युतेर्भयात् ॥ ६.२०१.१० ॥

ब्रह्महत्योद्भवं पापं सर्वेषां तत्र जायते ॥

तस्मादभ्यागतो यस्तु दूरादपि विशेषतः ॥ ११ ॥

तस्य शुद्धिः प्रदातव्या प्रयत्नेन द्विजोत्तमैः ॥

शुद्धिं तु त्रिविधां प्राप्तो मम वाक्यसमुद्भवाम् ॥ १२ ॥

स शुद्धो नागरो ज्ञेयो जातो देशांतरेष्वपि ॥

पूर्वं विशोधयेद्वंशं ततो मातृकुलं स्मृतम् ॥ १३ ॥

ततः शीलं त्रिभिः शुद्धः सामान्यं पदमर्हति ॥ १४ ॥

सर्वेषामपि विप्राणां वर्षांते समुपस्थिते ॥

शुद्धिः कार्या प्रयत्नेन स्वस्थानस्य विशुद्धये ॥ १५ ॥

तदर्थं शरदश्चांते शुभर्त्तौ ब्राह्मणोत्तमाः ॥

चातुश्चरणसंपन्नाः संस्थाप्याः षोडशैव तु ॥ १६ ॥

ब्राह्मणाः पुरतः सर्वे शांता दांता जितेंद्रियाः ॥

गर्त्तातीर्थोद्भवं विप्रं तेषां मध्ये निवेशयेत् ॥ १७ ॥

तदग्रे पीठिका देयाश्चतस्रो लक्षणान्विताः ॥

यावत्कार्त्तिकपर्यंतं चातुश्चरणकल्पिताः ॥ १८ ॥

प्रथमा बह्वृचस्यार्थे याजुषस्य तथाऽपरा ॥

सामगस्य तथैवान्या तथाऽऽद्यस्य चतुर्थिका ।। ॥ १९ ॥

मुद्रिकार्थं तथैवान्या पंचमी परिकीर्तिता ॥

श्रीसूक्तं पावमानं च शाकुनं विष्णुदैवतम्॥ ६.२०१.२० ॥

पारावतं तथा सूक्तं जीवसूक्तेन संयुतम्॥

बह्वृचः कीर्तयेत्तत्र शांतिकं च तथापरम् ॥ २१ ॥

शांतिकं शिवसंकल्पमृषिकल्पं चतुर्विधम् ॥

मंडलंब्राह्मणं चैव गायत्रीब्राह्मणं तथा ॥ २२ ।।

तथा पुरुषसूक्तं च मधुब्राह्मणमेव च ॥

अध्वर्युः कीर्तयेत्तत्र रुद्रान्पंचांगसंयुतान् ॥ २३ ॥

देवव्रतं च गायत्रं सोमसूर्यव्रते तथा ॥

एकविंशतिपर्यंतं तथान्यच्च रथंतरम् ॥ २४ ॥

सौव्रतं संहिता विष्णोर्ज्येष्ठसाम तथैव च ॥

सामवेदोक्तरुद्रांश्च भारुंडैः सामभिर्युतान् ॥ २५ ॥

छंदोगः कीर्तयेत्तत्र यच्चान्यच्छांतिकं भवेत् ॥

गर्भोपनिषदं चैव स्कंदसूक्तं तथापरम् ॥ २६ ॥

नीलरुद्रैः समोपेतान्प्राणरुद्रांस्तथापरान् ॥
नवरुद्रांश्च क्षुरिकानाद्यस्तत्र प्रकीर्तयेत् ॥ २७ ॥
ततः पुण्याहघोषेण गीतवादित्रनिस्वनैः ॥
शुक्लमाल्यांबरधरः शुक्लचंदनचर्चितः २८ ॥
शुद्धिकामो व्रजेत्तत्र यत्र ते ब्राह्मणाः स्थिताः ॥
प्रणम्य शिरसा तेषां ततोवाच्यस्तु मध्यगः ॥ २९ ॥
मदर्थं प्रार्थय त्वं हि सर्वानेतान्द्विजोत्तमान् ॥
यतः शुद्धिं प्रयच्छंति प्रसादं कर्तुमर्हसि ॥ ६.२०१.३० ॥
ततस्तु प्रार्थयेद्विप्रांस्तदर्थं च विशुद्धये ॥
गर्तातीर्थोद्भवो विप्रो विनयावनतः स्थितः ॥ ३१ ॥
गोचर्मणि समालग्नः शुद्धिकामस्य तस्य च ॥
प्रष्टव्यास्तु ततस्तेन सर्व एव द्विजोत्तमाः ॥ ३२ ॥
एष शुद्धिकृते प्राप्तः सुदूरान्नागरो द्विजः ॥
अस्य शुद्धिः प्रदातव्या युष्माकं रोचते यदि ॥ ३३ ॥
अथ तैर्वेदसूक्तेन निषेधो वा प्रवर्तनम् ॥
वक्तव्यं वचसा नैव मम वाक्यमिदं स्थितम्॥ ३४ ॥
ततश्च बहुलान्दृष्ट्वा ऋगध्वर्यूंस्ततः परम् ॥
छादोग्यांश्च तथाद्यांश्च क्रमेण तु द्विजोत्तमाः ॥ ३५ ॥
यदि तेषां मनस्तुष्टिर्जायते द्विजसत्तमाः ॥
ततः सूक्तानि वाक्यानि सौम्यानि सुशुभानि च ॥
वारुणानि तथैंद्राणि मांगल्यप्रभवाणि च ॥ ३६ ॥
श्रेष्ठानि मंत्रलिंगानि वृद्धितुष्टिकराणि च ॥
यदि नो मानसी तुष्टि स्तेषां चैव प्रजायते ॥ ३७ ॥
तदा रौद्राणि याम्यानि नैर्ऋत्यानि विशेषतः ॥
आग्नेयानि त्वनिष्टानि तथा नाशकराणि च ॥ ३८ ॥
अथ ये तत्र मूर्खाः स्युर्न वेदपठने रताः ॥
पुष्पदानं तु वक्तव्यं तैः संतुष्टैर्द्विजोत्तमैः ॥ ३९ ॥
सीत्कारः कुपितैः कार्यः संतोषेण विवर्जितैः ॥

एवं सर्वेषु कृत्येषु न च कार्यो विनिर्णयः ॥ ६.२०१.४० ॥

प्राकृतैर्वचनैश्चैव यथा कुर्वंति मानवाः ॥

तथैव निर्णयस्यांते मध्यगेन विपश्चिता ॥ ४१ ॥

देयं तालत्रयं सम्यक्सर्वेषां निर्णयोद्भवे ॥ ४२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागर प्रश्ननिर्णयवर्णनंनामैकोत्तरद्विशततमोऽध्यायः ॥ २०१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०२



॥ विश्वामित्र उवाच ॥ ॥

तच्छ्रुत्वा ब्राह्मणाः सर्वे विनयावनताः स्थिताः ॥

तं पप्रच्छुर्नरश्रेष्ठ कौतुकाविष्टचेतसः ॥ १ ॥

कस्यचिन्निर्णयो देयो मध्यस्थस्य द्विजोत्तमैः ।।

वेदवाक्येन संत्यज्य वाक्यं मनुजसंभवम् ओ। २ ।।

कस्मात्तालत्रयं देयं मध्यगेन महात्मना ॥

एतन्नः सर्वमाचक्ष्व परं कौतूहलं हि नः ॥ ३ ॥

तच्छ्रुत्वा भर्तृयज्ञस्तु तानुवाच द्विजोत्तमान् ॥

श्रूयतामभिधास्यामि यदेतत्कारणं स्थितम् ॥ ४ ॥

नासत्यं जायते वाक्यं नागराणां कथंचन ॥

ब्रह्मशालास्थितानां च शुभं वा यदि वाऽशुभम् ॥ ५ ॥

वेदोक्तैः सवनैस्तस्माद्दर्शयंति द्विजोत्तमाः ॥

इष्टं वा यदि वानिष्टं पृच्छमानस्य चा र्थिनः ॥ ६ ॥

भूयोभूयस्ततः कुर्यान्मध्यस्थः स द्विजन्मनाम् ॥

प्रश्नं तस्य निमित्तं च यावत्तस्य विनिर्णयः ॥ ७ ॥

ब्रह्मशालोपविष्टानां यदि वाक्यं वृथा भवेत् ॥

माहात्म्यं नश्यते तेषां ततः क्रोधः प्रजायते ॥ ८ ॥

क्रोधात्सञ्जायते द्रोहो द्रोहात्पापस्य संगमः ॥

एतस्मात्कारणाद्विप्रा मध्यस्थः पृच्छ्यते मुहुः ॥ ९ ॥

समुदायः समस्तानां यथा चैव प्रजायते ॥

तदा तालत्रयं यच्च मध्यस्थः संप्रयच्छति ॥ ६.२०२.१० ॥

तासां तु पूर्वया कामं हंति पृच्छाप्रदायिनाम् ॥

द्वितीयया तथा क्रोधं हंति लोभं तृतीयया ॥ ११ ॥

एतस्मात्कारणाद्देयं तेन तालत्रयं द्विजाः ॥ १२ ॥ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

आथर्वणश्चतुर्थस्तु ब्राह्मणः परिकीर्तितः ॥

स कस्मात्प्रथमः प्रश्नो नागराणां प्रकीर्तितः ॥ १३ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

आथर्वः प्रथमः प्रश्नो यस्मात्प्रोक्तो मया द्विजाः ॥

तदहं संप्रवक्ष्यामि शृणुध्वं सुसमाहिताः ॥ १४ ॥

नेर्ष्या चैवात्र कर्तव्या स्वस्थानस्य विनाशनी ॥

निरूपितं मया सम्यक्स्थानस्थस्य विशुद्धये ॥ १५ ॥

ऋग्यजुःसामसंज्ञाख्या अग्निष्टोमादिका मखाः ॥

पारत्रिकाः प्रवर्तंते नैहिकाश्चाभिचारिकाः ॥ १६ ॥

अथर्ववेदे तच्चोक्तं सर्वं चैवाभिचारिकम् ॥

हिताय सर्वलोकानां ब्रह्मणा लोककारिणा ॥ १७ ॥

अथर्ववेदः प्रथमं द्रष्टव्यः कार्यसिद्धये ॥

एतस्मात्कारणादाद्यः स चतुर्थोऽपि संस्थितः ॥ १८ ॥

एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥

पृच्छा संबंधजं सर्वमेकं कार्यं सदैव हि ॥ १९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये भर्तृयज्ञवाक्यनिर्णयवर्णनंनाम द्व्युत्तरद्विशततमोऽध्यायः ॥ २०२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०३



॥ आनर्त उवाच ॥ ॥

एवं शुद्ध्यर्थमायातो नागराणां पुरः स्थितः ॥

नागरः शुद्धिमाप्नोति यथा तन्मे वद द्विजः ॥ १ ॥

॥ विश्वामित्र उवाच ।१ ॥

एवं मध्यस्थवचनात्समुदाये स्थिरे सति ॥

स प्रष्टव्यः पितुर्माता कतमा ते वदस्व नः ॥ २ ॥

किं गोत्रः कतमस्तस्याः पिता किंप्रवरः स्मृतः ॥

एवं तस्यान्वयं ज्ञात्वा गोत्रप्रवरसंयुतम् ॥ ३॥

प्रष्टव्या च ततो माता तस्याश्चापि च या भवेत् ॥

जननी चापि प्रष्टव्या तस्याश्चापि च या भवेत् ॥ ४ ॥

ज्ञातव्या सापि यत्नेन ब्राह्मणैः शुद्धि कर्मणि॥५॥

पिता पितामहश्चैव तथैव प्रपितामहः॥

शोधनीयाः प्रयत्नेन त्रयश्चैतेऽपि तस्य च॥६॥

तथा पितामहीपक्षे त्रय एते द्विजोत्तमाः॥

मातामहस्ततस्तस्य पिता तस्यापि यः पिता॥७॥

माता मातामही चैव तथैवान्या प्रपूर्विका॥

पितामह्याश्च या माता सापि शोध्या सभर्तृका ॥ ८ ॥

एवं शाखाऽगमं ज्ञात्वा तस्य सर्वं यथाक्रमम् ॥

मूलवंशादधिष्ठानं न्यग्रोधस्येव सर्वतः ॥ ९ ॥

ततः शुद्धिः प्रदातव्या सिन्दूरति लकेन तु ॥

चातुश्चरणमंत्रैश्च दत्त्वाशीर्वचनं क्रमात् ॥ ६.२०३.१० ॥

ततो वाच्यं नृपश्रेष्ठ मध्यस्थेन तदग्रतः ॥

दत्त्वा तालत्रयं राजञ्छुद्धोऽयं नागरो द्विजः ॥

सामान्यपदयोग्यश्च संजातः सांप्रतं द्विजः ॥ ११ ॥

ततोऽग्निशरणं गत्वा संतर्प्य च हुताशनम् ॥

पञ्चवक्त्रेण मंत्रेण दत्त्वा पूर्णाहुतिं ततः॥

विप्रेभ्यो दक्षिणां दद्यात्स्वशक्त्या भोजनान्विताम् ॥ १२ ॥

सिन्दूरतिलके जाते ब्रह्माग्रे द्विजवाक्यतः ॥

पितॄणां जायते तुष्टिर्वंशो नोऽद्य प्रतिष्ठि तः ॥ १३ ॥

यस्य नो जायते शुद्धिः शाखाभिर्मूलवंशगा ॥

निग्रहस्तस्य कर्तव्यो द्विजार्हो द्विजसत्तमैः ॥ १४ ॥

यथा नान्यो हि जायेत शुद्धि स्तस्य प्रकल्पिता॥

एवं संशोधितो विप्रः श्राद्धार्हो जायते ततः॥१५॥

अपि चाष्टकुलोत्पन्नः सामान्यः किं पुनर्हि यः॥

अशुद्धेन तु विप्रेण यः श्राद्धा द्यं करोति हि ॥

तस्य भस्महुतं यद्वत्सर्वं तज्जायते वृथा ॥१६॥

तस्मात्सर्वप्रयत्नेन शोध्योऽयं नागरो द्विजः ॥

स्वस्थानस्य विशुद्ध्यर्थं तथैव स्वकु लस्य च ॥ १७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये नागरविशुद्धिप्रकारवर्णनंनाम त्र्युत्तरद्विशततमोऽध्यायः ॥ २०३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०४

https://sa.wikisource.org/s/fpb

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ आनर्त उवाच ॥ ॥

प्रोक्ताऽस्माकं त्वया विप्र शुद्धिर्नागरसंभवा ॥

वंशजा विस्तरेणैव यथा पृष्टोऽसि सुव्रत ॥ १ ॥

सांप्रतं शीलजां ब्रूहि नष्टवंशश्च यो भवेत् ॥

पितामहं न जानाति न च मातामहीं निजाम् ॥

तस्य शुद्धिः कथं कार्या नागरोऽस्मीति यो वदेत् ॥ २ ॥

॥ विश्वामित्र उवाच ॥ ॥

एतदर्थं पुरा पृष्टो भर्तृयज्ञश्च नागरैः ॥

नष्टवंशकृते राजन्यथा पृष्टोऽस्मि वै त्व या ॥ ३ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

नष्टवंशस्तु यो ब्रूयान्नागरोऽस्मीति संसदि ॥

तस्य शीलं प्रविज्ञेयं ततः शुद्धिं समादिशेत् ॥ ४ ॥

नागराणां तु ये धर्मा व्यवहाराश्च केवलाः ॥

तेषु चेद्वर्तते नित्यं संभाव्यो नागरो हि सः ॥ ५ ॥

तस्य शुद्धिकृते देयं धटं ब्राह्मणसत्तमाः ॥

धटे तु शुद्धिमापन्ने ततोऽसौ शुद्धतां व्रजेत् ॥ ६ ॥

श्राद्धार्हः कन्यकार्हश्च सोमार्हश्च विशेषतः ॥

सामान्यपदयोग्यश्च समस्ते स्थानकर्मणि ॥ ७ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नरोत्तम ॥

द्वितीया जायते शुद्धिर्यथा नष्टान्वये द्विजे ॥

तस्माद्वद महाराज यद्भूयः श्रोतुमर्हसि ॥ ८ ॥

॥ आनर्त उवाच ॥ ॥

तस्मात्ते नागरा भूत्वा विप्राश्चाष्टकुलोद्भवाः ॥

सर्वेषामुत्तमा जाताः प्राधान्येन व्यवस्थिताः ॥ ९ ॥

तपसः किं प्रभावः स तेषां वा यजनोद्भवः ॥

विद्योद्भवोऽथवा विप्र किं वा दानसमुद्भवः ॥ ६.२०४.१० ॥

॥ विश्वामित्र उवाच ॥ ॥

ते सर्वे गुणसंपन्ना यथान्ये नागरास्तथा ॥

विशेषश्चापरस्तेषां ते शक्रेण प्रतिष्ठिताः ॥ ११ ।।

तेन ते गौरवं प्राप्ताः सर्वेषां तु द्विजन्मनाम् ॥ १२ ॥

॥ आनर्त उवाच ॥ ॥

कस्मिन्काले तु ते विप्राः शक्रे णात्र प्रतिष्ठिताः ॥

किमर्थं च वदास्माकं विस्तरेण महामते ॥ १३ ॥

।। विश्वामित्र उवाच ॥ ॥

हिरण्याक्ष इति ख्यातः पुराऽऽसीद्दानवो त्तमः ॥

अभवत्तस्य संग्रामः शक्रेण सह दारुणः ॥ १४ ॥

तत्र देवासुरे युद्धे मृता भूरिदिवौकसः ॥

दानवाश्च महाराज परस्परजिगीषवः ॥ १५ ॥

अथ ते दानवाः संख्ये शक्रेण विनिपातिताः ॥

विद्याबलेन तान्छुक्रः सजीवान्कुरुते पुनः ॥ १६ ॥

देवाश्च निधनं प्राप्ता न जीवंति कथंचन ॥

कस्यचित्त्वथ कालस्य विष्णुं प्रोवाच वृत्रहा ॥ १७ ॥

धारातीर्थमृतानां च प्रहारैः सन्मुखैः प्रभो ॥

या गतिश्च समादिष्टा तां मे वद जनार्दन ॥ ॥ १८ ॥

पराङ्मुखा मृता ये च पलायनपरायणाः ॥

तेषामपि गतिं ब्रूहि यादृग्जायेतवाच्युत ॥ १९ ॥

॥ विष्णुरुवाच ॥ ॥

धारातीर्थमृतानां च सन्मुखानां महाहवे ॥

यथा चोच्छिन्नबीजानां पुनर्जन्म न विद्यते ॥ ६.२०४.२० ॥

ये पुनः पृष्ठदेशे तु हन्यते भयविक्लवाः ॥

भुज्यमानाः परैस्ते च प्रेताः स्युस्त्रिदशाधिप ॥ २१ ॥

॥ इन्द्र उवाच ॥ ॥

केचिद्देवा मृता युद्धे युध्यमानाश्च सन्मुखाः ॥

तथैवान्ये मया दृष्टा हन्यमानाः पराङ्मुखाः ॥

प्रेतत्वं दानवानां च सर्वेषां स्यान्न वा प्रभो ॥ २२ ॥

॥ विष्णुरुवाच ॥ ॥

असंशयं सहस्राक्ष हता युद्धे पराङ्मुखाः ॥

प्रेतत्वे यांति ते सर्वे देवा वा मानुषा यदि ॥ २३ ॥

विषादग्नेः कुलघ्नानां तया चैवात्मघातिनाम् ॥

दंष्ट्रिभिर्हतदेहानां शृंगिभिश्च सुरेश्वर ॥

प्रेतत्वं जायते नूनं सत्यमेतदसंशयम् ॥२४॥

॥ इन्द्र उवाच ॥ ॥

कथं तेषां भवेन्मुक्तिः प्रेतत्वाद्दारुणाद्विभो ॥

एतन्मे सर्वमाचक्ष्व येन यत्नं करोम्यहम् ॥२५॥

॥ श्रीभगवानुवाच ॥ ॥

तेषां संयुज्यते श्राद्धं कन्यासंस्थे दिवाकरे ॥

कृष्णपक्षे चतुर्दश्यां नभस्यस्य सुरेश्वर ॥ २६ ॥

गयायां भक्तिपूर्वं तु पितामहवचो यथा ॥

ततः प्रयांति ते मोक्षं सत्यमेतदसंशयम् ॥ २७ ॥

॥ इन्द्र उवाच ॥ ॥

कस्मात्तत्र दिने श्राद्धं क्रियते मधुसूदन ॥

शस्त्रैर्विनिहतानां च सर्वं मे विस्तराद्वद ।। २८ ॥

॥ श्रीभगवानुवाच ॥ ॥

भूतप्रेतपिशाचैश्च कूष्मांडै राक्षसैरपि ॥

पुरा संप्रार्थितः शंभुर्दिने तत्र समागते ॥

अद्यैकं दिवसं देव कन्यासंस्थे दिवाकरे ॥ २९ ॥

अस्माकं देहि येन स्यात्तृप्तिर्वर्षसमुद्भवा ॥

प्रदत्ते वंशजैः श्राद्धे दीनानां त्वं दयां कुरु ॥ ६.२०४.३० ॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

यः करिष्यति वै श्राद्धमस्मिन्नहनि संस्थिते ॥

कृष्णपक्षे चतुर्दश्यां नभस्यस्य च वंशजः ॥

भविष्यति परा प्रीतिर्यावत्संवत्सरः स्थितः ॥ ३१ ॥

यः पुनस्तु गयां गत्वा युष्मद्वंशसमुद्भवः ॥

करिष्यति तथा श्राद्धं तेन मुक्तिमवाप्स्यथ ॥ ३२ ॥

शस्त्रेण निहतानां च स्वर्गस्थानामपि ध्रुवम् ॥

न करिष्यति यः श्राद्धं तस्मिन्नहनि संस्थिते ॥ ३३ ॥

क्षुत्पिपासार्तदेहाश्च पितरस्तस्य दुःखिताः ॥

स्थास्यंति वत्सरं यावदेतदाह पितामहः ॥ ३४ ॥

तस्मात्सर्वप्रयत्नेन तस्मिन्नहनि कारयेत् ॥

अन्यमुद्दिश्य तत्सर्वं प्रेतानामिह जायते ॥ ३५ ॥

ततो भगवता दत्ता तेषां चैव तु सा तिथिः ॥ श्रा

द्धकर्मणि संजाते विना शस्त्रहतं जनम् ॥ ३६ ॥

संमुखस्यापि संग्रामे युध्यमानस्य देहिनः ॥

कदाचिच्चलते चित्तं तीक्ष्णशस्त्रहतस्य च ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्र माहात्म्ये शक्रविष्णुसंवादे प्रेतश्राद्धकथनंनाम चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०५



॥ विष्णुरुवाच ॥ ॥

एवं ज्ञात्वा सहस्राक्ष मम वाक्यं समाचर ॥

यदि ते वल्लभास्ते च ये हता रणमूर्धनि ॥ १ ॥

युध्यमानास्तवाग्रे च गयाश्राद्धेन तर्पय ॥

तान्सर्वान्प्रेतभावाच्च येन मुक्तिं भजंति ते ॥ २ ॥

पलायनपरा ये च पृष्ठदेशे हता मृताः ॥ ३ ॥

॥ इन्द्र उवाच ॥ ॥

वर्षेवर्षे तदा श्राद्धं प्रकरोति पितामहः ॥

गयां गत्वा दिने तस्मिन्पितॄणां दिव्यरूपिणाम् ॥ ४ ॥

तत्कथं देव गच्छामि तत्राहं श्राद्धसिद्धये ॥

तस्मात्कथय मे तेषां किंचिच्छ्राद्धाय भूतले ॥

मुक्तिदं येन गच्छामि तव वाक्याज्जनार्दन ॥ ५ ॥

॥ विश्वामित्र उवाच ॥ ॥

ततः स सुचिरं ध्यात्वा तमुवाच जनार्दनः ॥

अस्ति तीर्थं महत्पुण्यं तस्मादप्यधिकं च यत् ॥ ६ ॥

हाटकेश्वरजे क्षेत्रे कूपिकामध्यसंस्थितम् ॥

अमावास्यादिने तत्र चतुर्दश्याश्च देवप ॥

गया संक्रमते सम्यक्सर्वतीर्थसमन्विता ॥ ७ ॥

कन्यासंस्थे रवौ तत्र यः श्राद्धं कुरुते नरः ॥

अष्टवंशोद्भवैर्विप्रैः स पितॄंस्तारयेन्निजान् ॥ ८ ॥

अपि प्रेतत्वमापन्नान्किं पुनः स्वर्गसंस्थितान् ॥

तत्क्षेत्रप्रभवा विप्रा अष्टवंशसमुद्भवाः ॥ ९ ॥

तप उग्रं समास्थाय वर्तंते हिमपर्वते ॥

आनर्ताधिपतेर्दानाद्भीतास्तत्र समागताः ॥ ६.२०५.१० ॥

तान्गृहीत्वा द्रुतं गच्छ तत्र संबोध्य गौरवात् ॥

सामपूर्वैरुपायैस्तैस्तेषामग्रे समाचर ॥ ११ ॥

श्राद्धं चैव यथान्यायं ततः प्राप्स्यसि वांछितम् ॥

ते चाऽपि सुखिनः सर्वे भविष्यंति समागताः ॥ १२ ॥

त्वया सह प्रपूज्याश्च ह्यस्माभिः श्राद्धकारणात् ॥

तच्छ्रुत्वा सहसा शक्रः सन्तोषं परमं गतः ॥ १३ ॥

हिमवंतं समुद्दिश्य प्रस्थितस्त्वरयाऽन्वितः ॥

वासुदेवोऽपि राजेंद्र क्षीराब्धिमगमत्तदा ॥ १४ ॥

हिमवन्तं समाश्रित्य शक्रोऽपि ददृशे द्विजान् ॥

अष्टवंशसमुद्भूतान्विष्णुना समुदाहृतान् ॥ १५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शक्रविष्णुसंवादे गयाश्राद्धफलमाहात्म्य वर्णनंनाम पञ्चोत्तरशततमोऽध्यायः ॥२०५॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०६



॥ विश्वामित्र उवाच ॥ ॥

इंद्रोऽपि विष्णुवाक्येन हिमवंतं समागतः ॥

ऐरावतं समारुह्य नागेद्रं पर्वतोपमम् ॥१॥

तत्रापश्यदृषींस्तान्स चमत्कार समुद्भवान् ॥

नियमैः संयमैर्युक्तान्सदाचारपरायणान् ॥

वानप्रस्थाश्रमोपेतान्कामक्रोधविवर्जितान् ॥ २ ॥

एके विप्राः स्थितास्तेषामेकांतरितभोजनाः ॥

षष्ठकालाशिनश्चान्ये चांद्रायणपरायणाः ॥ ३ ॥

अश्मकुट्टाः स्थिताः केचिद्दंतोलूखलिनः परे ॥

शीर्णपर्णाशनाः केचिज्जलाहारास्तथा परे ॥

वायुभक्षास्तथैवान्ये तपस्तेपुः सुदारुणम् ॥४॥

अथ शक्रं समालोक्य तत्राऽऽयांतं द्विजोत्तमाः ॥

पूजितं चारणैः सिद्धैस्तैरदृष्टं कदाचन ॥५॥

ते सर्वे ब्राह्मणाः प्रोक्तास्तदाश्रमसमीपगैः ॥ ६ ॥

अयं शक्रः समायातो भवतामाश्रमे द्विजाः ॥

क्रियतामर्हणं चास्मै यच्चोक्तं शास्त्रचिंतकैः ॥ ७ ॥

ततस्ते ब्राह्मणाः सर्वे विस्मयोत्फुल्ललोचनाः॥

संमुखाः प्रययुस्तूर्णं कृतांजलिपुटाः स्थिताः ॥ ८ ॥

गृह्योक्तविधिना तस्मै संप्रहृष्टतनूरुहा. ॥

प्रोचुश्च विनयात्सर्वे किमागमनकारणम् ॥ ९ ॥

निरीहस्यापि देवेंद्र कौतुकं नो व्यवस्थितम् ॥ ६.२०६.१० ॥

॥ इन्द्र उवाच ॥ ॥

कुशलं वो द्विजश्रेष्ठा अनिहोत्रेषु कृत्स्नशः ॥

तपश्चर्यासु सर्वासु वेदाभ्यासे तथा श्रुते ॥ ११ ॥

हाटकेश्वरजं क्षेत्रं त्यक्त्वा तीर्थमयं शुभम् ॥

कस्मादत्र समायाता हिमार्तिजनके गिरौ ॥ १२ ॥

तस्मात्सर्वे मया सार्धं समागच्छंतु सद्द्विजाः ॥

चमत्कारपुरे पुण्ये बहुविप्रसमाकुले ॥ १३ ॥

वासुदेवसमादेशात्तत्र गत्वाथ सांप्रतम् ॥

गयाकूपे करिष्यामि श्राद्धं भक्त्या द्विजोत्तमाः ॥ १४ ॥

युष्मदग्रे चतुर्दश्यां प्रेतपक्ष उपस्थिते ॥

खेचरत्वं समायातं सर्वेषां भवतां स्फुटम् ॥ १५ ॥

सबालवृद्धपत्नीकाः साग्निहोत्रा मया सह ॥

तस्माद्गच्छत भद्रं वस्तत्र स्थानं भविष्यति ॥ १६ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

न वयं तत्र यास्यामश्चमत्कारपुरं पुनः॥

अन्येऽपि ब्राह्मणास्तत्र वेदवेदांगपारगाः ॥ १७ ॥

नागरा याज्ञिकाः संति स्मार्ताः श्रुतिपरायणाः ॥

तेषामग्रे कुरु श्राद्धं श्रद्धा चेच्छ्राद्धजा तव ॥ १८ ॥

॥ इन्द्र उवाच ॥ ॥

तत्र ये ब्राह्मणाः केचिद्भवद्भिः संप्रकीर्तिताः ॥

तथाविधाश्च ते सर्वे वेदवेदांगपारगाः ॥ १९ ॥

श्रुताध्ययनसंपन्ना याज्ञिकाश्च विशेषतः ॥

परं द्वेषपराः सर्वे तथा परुषवादिनः ॥ ६.२०६.२० ॥

अहंकारेण संयुक्ताः परस्परजिगीषवः॥

तपसा विप्रयुक्ताश्च भोगसक्ता दिवानिशम् ॥ २१ ॥

यूयं सर्वगुणोपेता विष्णुना मे प्रकीर्तिताः ॥

तस्मादागमनं कार्यं मया सार्धं समस्तकैः ॥ २२ ।।

॥ ब्राह्मणा ऊचुः ॥ ॥

अस्माभिस्तेन दोषेण त्यक्तं स्थानं निजं हि तत् ॥

बहुतीर्थसमोपेतं स्वर्गमार्गप्रदर्शकम् ॥ २३ ॥

यदि यास्यामहे तत्र त्वया सार्धं पुरंदर ॥

अस्माकं स्वजनाः सर्वे रागद्वेषपरायणाः ॥ २४ ॥

अपराधान्करिष्यंति नित्यमेव पदेपदे ॥
ईर्ष्याधर्मसमोपेताः परुषाक्षरजल्पकाः ॥ २५ ॥
ततः संपत्स्यते क्रोधः क्रोधाच्च तपसः क्षयः ॥
ततो न प्राप्यते मुक्तिस्तद्गच्छामः कथं विभो ॥ २६ ॥
अपरं तत्र भूपोऽस्ति देशे दानपरः सदा ॥
आनर्ताधिपतिः ख्यातः सर्वभूमौ सदैव सः ॥ २७ ॥
ददाति विविधं दानं हस्त्यश्वकनकादिकम् ॥
यदि तत्र न गृह्णीमस्तदा कोपं स गच्छति ॥ २८ ॥
भूपाले कोपमापन्ने स्वजनेषु विरोधिषु ॥
सिद्धिर्नो तपसोऽस्माकं तेन त्यक्तं निजं पुरम् ॥ २९ ॥
यदि गृह्णीमहे दानं तस्य भूपस्य देवप ॥
तपसः संप्रणाशः स्याद्यद्धि प्रोक्तं स्वयंभुवा ॥ ६.२०६.३० ॥
दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ॥
दशध्वजि समा वेश्या दशवेश्यासमो नृपः ॥ ३१ ॥
तत्कथं तस्य गृह्णीमो दानं पापरतस्य च ॥
यथाऽन्ये नागराः सर्वे लोभेन महतान्विताः ॥ ३२ ॥
॥ इन्द्र उवाच ॥ ॥
प्रभावोऽयं द्विजश्रेष्ठास्तस्य क्षेत्रस्य संस्थितः ॥
हाटकेश्वरसंज्ञस्य सर्वदैव व्यवस्थितः ॥ ३३ ॥
पितॄणां च सुतानां च बंधूनां च विशेषतः ॥
श्वश्रूणां च स्नुषाणां च भगिनीभ्रातृभार्ययोः ॥ ३४ ॥
तस्याधस्तात्स्वयं देवो हाटकेश्वरसंज्ञितः ॥
पुरस्य विद्यते तस्य प्रतापेनाखिला जनाः ॥ ३५ ॥
सन्तप्यंते ततो द्वेषं प्रकुर्वंति परस्परम् ॥
किं न श्रुतं भवद्भिस्तु यथा रामः सलक्ष्मणः ॥
सीतया सह संप्राप्तो विरोधं परमं गतः ॥ ३६ ॥
सीतया लक्ष्मणेनैव सार्धं कोपेन संयुतः ॥
अवाच्यं प्रोक्तवान्विप्रास्तौ च तेन समं तदा ॥ ३७ ॥

अपि मासं वसेत्तत्र यदि कोपविवर्जितः ॥
तदा मुक्तिमवाप्नोति स्वर्गभाक्पञ्चरात्रतः ॥ ३८ ॥
तस्मात्तत्र प्रगंतव्यं युष्माभिस्तु मया सह ॥
ईर्ष्याधर्मं न युष्माभिस्ते करिष्यंति नागराः ॥ ३९ ॥
न चैव भवतां कोपस्तत्रस्थानां भविष्यति ॥
प्रसादान्मम विप्रेंद्राः सत्यमेतन्मयोदितम् ॥ ६.२०६.४० ॥
आनर्तः पार्थिवो दाने योजयिष्यति न क्वचित् ॥
युष्माकं पुत्रपौत्रेभ्यो ये दास्यंति च कन्यकाः ॥ ४१ ॥
सहस्रगुणितं तेषां तत्फलं संभविष्यति ॥
अमावास्यादिने श्राद्धं कन्यासंस्थे दिवाकरे ॥ ४२ ॥
युष्मदग्रे द्विजश्रेष्ठा गया कूप्यां करिष्यति ॥
यस्तस्य तत्फलं भावि सहस्रशतसंमितम् ॥ ४३ ॥
गयाश्राद्धान्न सन्देहः सत्यमेतन्मयोदितम् ॥
यदि श्राद्धकृते तत्र नायास्यथ द्विजोत्तमाः ॥ ४४ ॥
ततः शापं प्रदास्यामि तपोविघ्नकरं हि वः ॥
एवं ज्ञात्वा मया सार्धं तत्राऽऽगच्छत सत्वरम् ॥ ४५ ॥
इत्युक्तास्तेन ते सर्वे शक्रेण सह तत्क्षणात् ॥
कश्यपश्चैव कौंडिन्य उक्ष्णाशः शार्कवो द्विषः ॥ ४६ ॥
बैजवापश्चैव षष्ठः कापिष्ठलो द्विकस्तथा ॥
एतत्कुलाष्टकं प्राप्तमिंद्रेण सह पार्थिव ॥ ४७ ॥
अग्निष्वात्तादिकान्सर्वान्पितॄनाहूय कृत्स्नशः ॥
विश्वेदेवांस्तथा चैव प्रस्थितः पाकशासनः ॥ ४८ ॥
सम्यक्छ्रद्धासमाविष्टश्चमत्कारपुरं प्रति ॥
एतस्मिन्नेव काले तु ब्रह्मा लोकपितामहः ॥ ४९ ॥
गयायां प्रस्थितः सोऽपि श्राद्धार्थं तत्र वासरे ॥
विश्वेदेवाः प्रतिज्ञाय गयायां प्रस्थिता विधिम् ॥ ६.२०६.५० ॥
शक्र श्राद्धं परित्यज्य गता यत्र पितामहः ॥
शक्रोऽपि तत्पुरं प्राप्य गयाकूप्यामुपागतः ॥ ५१ ॥

ततः स्नात्वाह्वयामास श्राद्धार्थं श्रद्धयान्वितः ॥

विश्वेदेवान्पितॄंश्चैव काले कुतपसंज्ञिते ॥५२॥

एतस्मिन्नंतरे प्राप्ताः समाहूताश्च तेन ये ॥

पितरो देवरूपा ये प्रेतरूपास्तथैव च॥५३॥

प्रत्यक्षरूपिणः सर्वे द्विजोपांते समाश्रिताः॥

विश्वेदेवा न संप्राप्ता ये गयायां गतास्तदा॥५४॥

ततो विलंबमकरोत्तदर्थं पाक शासनः ॥

विश्वेदेवा यतः श्राद्धे पूज्याः प्रथममेव च ॥ ५५ ॥

एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तमः ॥

शक्रं प्राह समागत्य विश्वेदेवाऽभिकांक्षिणम्॥ ५६ [।

॥ नारद उवाच ॥ ॥

विश्वेदेवा गताः शक्र श्राद्धे पैतामहेऽधुना ॥

गयायां ते मया दृष्टा गच्छमानाः प्रहर्षिताः ॥५७ ॥

तच्छ्रुत्वा तत्र कुपितस्तेषामुपरि तत्क्षणात् ॥

अब्रवीत्परुषं वाक्यं विप्राणां पुरतः स्थितः ॥ ५८ ॥

विश्वेदेवान्विना श्राद्धं करिष्याम्यहमद्य भोः ॥

तथान्ये मानवाः सर्वे करिष्यंति धरातले ॥५९॥

विश्वेदेवान्पुरः स्थाप्य योऽत्र श्राद्धं करिष्यति ॥

व्यर्थतां यास्यते तस्य ऊषरे वर्षितं यथा ॥६.२०६.६॥।

एवमुक्त्वा सहस्राक्ष एकोद्दिष्टानि कृत्स्नशः ॥

चकार सर्वदेवानां ये हता रणमूर्धनि ॥ ६१ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

येषामुद्दिश्य तच्छ्राद्धं कृतं तेषां नृपोत्तम ॥ ६२ ॥

शक्रशक्र महाबाहो येषां श्राद्धं कृतं त्वया ॥

प्रेतत्वे संस्थितानां च प्रेतत्वेन विवर्जिताः ॥ ६३ ॥

गताः स्वर्गप्रसादात्ते दिव्यरूपवपुर्धराः ॥

ये पुनः स्वर्गताः पूर्वं युध्यमाना महाहवे ॥ ६४ ॥

ते च मोक्षं गताः सर्वे प्रसादात्तव वासव ॥

तच्छ्रुत्वा वासवो वाक्यं तोषेण महतान्वितः ॥ ६५ ॥

अहो तीर्थमहो तीर्थं शंसमानः पुनःपुनः ॥

एतस्मिन्नन्तरे प्राप्ता विश्वे देवाः समुत्सुकाः ॥ ६६ ॥

निर्वृत्य ब्रह्मणः श्राद्धं गयायां तत्र पार्थिव ॥

प्रोचुश्च वृत्रहंतारं कुरु श्राद्धं शतक्रतो ॥ ६७॥

भूयोऽपि न विनाऽस्माभिर्लभ्यते श्राद्धजं फलम् ॥

वयं दूरात्समायातास्तव श्राद्धस्य कारणात् ॥

निर्वर्त्य ब्रह्मणः श्राद्धं येन पूर्वं निमंत्रिताः ॥ ६८ ॥

तच्छ्रुत्वा वचनं तेषां कुपितः पाकशासनः ॥

अब्रवीत्परुषं वाक्यं मेघगम्भीरया गिरा ॥ ६९ ॥

अद्यप्रभृति यः श्राद्धं मर्त्यलोके करिष्यति ॥

अन्योऽपि यो भवत्पूर्वं वृथा तस्य भविष्यति ॥ ६.२०६.७० ॥

एकोद्दिष्टानि श्राद्धानि करिष्यंत्यखिला जनाः ॥

सांप्रतं मर्त्यलोकेऽत्र मर्यादेयं कृता मया ॥ ७१ ॥

भूताः प्रेताः पिशाचाश्च ये चान्ये श्राद्धहारकाः ॥

विश्वेदेवैः प्ररक्ष्यंते रक्षयिष्यामि तानहम् ॥ ७२ ॥

यजमानस्य काये च श्राद्धं संयोज्य यत्नतः ॥

मया हताः प्रयास्यंति सर्वे ते दूरतो द्रुतम् ॥ ७३ ॥

एवमुक्त्वा सहस्राक्षो विश्वेदेवांस्ततः परम् ॥

प्रोवाच ब्राह्मणान्सर्वान्विश्वेदेवैर्विना कृतम् ॥

श्राद्धकर्म भवद्भिस्तु कार्यमन्यैश्च मानवैः ॥ ७४ ॥

तथेत्युक्ते द्विजेंद्रैश्च विश्वेदेवाः सुदुःखिताः ॥

रुरुदुर्बाष्पपूरेण प्लावयन्तो वसुन्धराम्॥ ७९ ॥

तेषामुष्णाश्रुणा तेन यत्पृथ्वी प्लाविता नृप ॥

भूतान्यंडान्यनेकानि संख्यया रहितानि च ॥७६॥

ततोंऽडेभ्यो विनिष्क्रांताः प्राणिनो रौद्ररूपिणः ॥

कृष्णदंताः शंकुकर्णा ऊर्ध्वकेशा भयावहाः ॥

रक्ताक्षाश्च ततः प्रोचुर्विश्वेदेवांश्च ते नृप ॥ ७७ ॥

वयं बुभुक्षिताः सर्वे भोजनं दीयतां ध्रुवम् ॥

भवद्भिर्विहिता यस्माद्याचयामो न चापरम् ॥ ७८ ॥

॥ विश्वेदेवा ऊचुः ॥ ॥

अस्माभी रहितं श्राद्धं किञ्चित्संजायते क्षितौ॥

श्रद्धया परया यच्च युष्माकं भावि भोजनम् ।। ७९ ॥

एवमुक्त्वा तु ते श्राद्धं विश्वेदेवा नृपोत्तम ॥

ब्रह्मलोकं गताः सर्वे दुःखेन महताऽन्विताः ॥

प्रोचुश्च दीनया वाचा प्रणिपत्य पितामहम् ॥ ६.२०६.८० ॥

वयं बाह्याः कृता देव श्राद्धानां बलविद्विषा ॥

तव श्राद्धे गता यस्माद्गयायां प्राङ्निमंत्रिताः ॥ ॥ ८१ ॥

तेन रुष्टः सहस्राक्षस्तव चांते समागताः ॥

तस्मात्कुरु प्रसादं नः श्राद्धार्हाः स्याम वै यथा ॥ ८२ ॥

तच्छ्रुत्वा सत्वरं ब्रह्मा कृपया परयान्वितः ॥

विश्वेदेवान्समादाय कूष्माण्डैस्तैः समन्वितान् ॥ ८३ ॥

शक्रोऽपि श्राद्धकर्माणि कृत्वा तेषां दिवौकसाम् ॥

तीर्थयात्रापरो भूत्वा तथैव च व्यवस्थितः ॥ ९८४ ॥

एतस्मिन्नेव काले तु ब्रह्मा तत्र समागतः ॥

विश्वेदेवसमायुक्तो हंसयानसमाश्रितः ॥ ८५ ॥

शक्रोऽपि सहसा दृष्ट्वा संप्राप्तं कमलासनम् ॥

अर्घ्यमादाय पाद्यं च सत्वरं सम्मुखो ययौ ॥ ८६ ॥

ततः प्रणम्य शिरसा साष्टांगं विनयान्वितः ॥

प्रोवाच प्रांजलिर्भूत्वा स्वागतं ते पितामह ॥ ८७ ।।

तव संदर्शनादेव ज्ञातं जन्मत्रयं मया ॥

द्रुतं पूर्वं शुभं कर्म करोमि च यथाऽधुना ॥ ८८ ॥

करिष्यामि परे लोके व्यक्तमेतदसंशयम् ॥ ८९ ॥

निःस्पृहस्यापि ते देव यदागमनकारणम् ॥

तन्मे द्रुततरं ब्रूहि येन सर्वं करोम्यहम् ॥ ६.२०६.९० ॥

॥ ब्रह्मोवाच ॥ ॥

यैर्विना न भवेच्छ्राद्धं ममापि सुरसत्तम ॥
विश्वेदेवास्त्वया तेऽद्य श्राद्धबाह्या विनिर्मिताः ॥ ९१ ॥
तत्त्वया न कृतं भद्रं तेन कर्म वितन्वता ॥
अप्रमाणं कृता वेदा यतश्च स्मृतयस्तथा ॥ ९२ ॥
एते पूर्वं मया शक्र श्राद्धार्थं विनिमंत्रिताः ॥
पश्चात्त्वया न दोषोऽस्ति तस्माच्चैषां महात्मनाम् ॥ ९३ ॥
तस्माच्छापप्रमोक्षार्थं त्वं यतस्व सुरेश्वर ॥
येन स्युः श्राद्धयोग्याश्च सर्वेऽमी दुःखिता भृशम् ॥ ९४ ॥
पुरा ह्येतन्मया प्रोक्तं सर्वेषां च द्विजन्मनाम् ॥
एतत्पूर्वं च यच्छ्राद्धं सफलं तद्भविष्यति ॥९५॥
तत्कथं मम वाक्यं त्वमसत्यं प्रकरोषि च ॥९६॥॥
इंद्र उवाच ॥
मयाऽपि कोपयुक्तेन शप्ता एते पितामह ॥
तद्यथा सत्यवाक्योऽहं प्रभवामि तथा कुरु ॥ ९७ ॥
॥ ब्रह्मोवाच ॥ ॥
तव वाक्यं यथा सत्यं प्रभविष्यति वासव ॥
तथाऽहं संविधास्यामि विश्वेदेवार्थमेव ह ॥९८॥
विश्वेदेवैर्विना श्राद्धं यत्त्वया समुदाहृतम् ॥
एकोद्दिष्टं नराः सर्वे करिष्यंति धरातले ॥ ॥ ९९ ॥
तस्मिन्नहनि देवेंद्र त्वया यत्र विनिर्मितम् ॥
प्रेतपक्षे चतुर्दश्यां शस्त्रेण निहतस्य च ॥ ६.२०६.१०० ॥
क्षयाहे चाऽपि संजाते विश्वेदेवैर्विना कृतम् ॥
नागरस्य शुभं श्राद्धं वचनान्मे भविष्यति ॥ १०१ ॥
शेषकाले तु यः श्राद्धं प्रकरिष्यति तैर्विना ॥
व्यर्थं संपत्स्यते तस्य मम वाक्यादसंशयम् ॥ १०२ ॥
मुक्त्वा शस्त्रहतं चैकं तस्मिन्नहनि यो नरः ॥
करिष्यति तथा श्राद्धं भूतभोज्यं भविष्यति ॥
॥ विश्वामित्र उवाच ॥ ॥

तथेत्युक्ते तु शक्रेण ब्रह्मा लोकपितामहः ॥

विश्वेदेवैस्ततः प्रोक्तो विनयावनतैः स्थितैः ॥ १०४ ॥

एते पुत्राः समुत्पन्ना अस्मदश्रुभ्य एव च ॥

तेषां तु भोजनं दत्तं क्षुधार्तानां मया विभो ॥ १०५ ॥

अस्मद्विवर्जितं श्राद्धं कुपितैर्वासवोपरि ॥

तद्यथा जायते सत्यं वाक्यमस्मदुदीरितम् ॥ १०६ ॥

अस्माकं वासवस्यापि तथा कुरु पितामह ॥

निरूपय शुभाहारं येन स्यात्तृप्तिरुत्तमा ॥ १०७ ॥

एतेषामेव सर्वेषां प्रसादात्तव पद्मज ॥ १०८ ॥ ॥

॥पद्मज उवाच॥ ॥

श्राद्धकाले तु विप्राणां भोज्यपात्रेषु कृत्स्नशः॥

भस्मरेखां प्रदास्यंति ह्येतैस्तत्त्याज्यमेव हि॥१०९॥

भस्मरक्षां विना यत्र किंचिच्छ्राद्धं भविप्यति ॥

एकोद्दिष्टं पार्वणं च वृद्धिश्राद्धमथापि वा ॥६.२०६.११॥।

एतेभ्यश्चैव तद्दत्तं मया तुष्टेन सांप्रतम् ॥

एवमुक्त्वा ततो नाम तेषां चक्रे पितामहः ॥ १११ ॥

कुशब्देन स्मृता भूमिः संसिक्ता चाश्रुणा यतः ॥

ततोऽडानि च जातानि तेभ्यो जाता अमी घनाः ॥

कूष्मांडा इति विख्याता भविष्यंति जगत्त्रये ॥ ११२ ॥

ततस्तांश्च त्रिधा कृत्वा क्रमेणैवार्पयत्तदा ॥

अग्नेर्वायोस्तथार्कस्य वाक्यमेतदुवाच ह ॥ ११३ ॥

यजुर्वेदे प्रविख्यातं यद्देवति ऋचां त्रयम् ॥

तेन भागः प्रदातव्य एतेषां भक्तिहोमतः ॥ ११४ ॥

कोटिहोमोद्भवे चैव निजभागस्य मध्यतः ॥

तेन तृप्तिं प्रयास्यंति मम वाक्यादसंशयम् ॥ ११५ ॥

एवमुक्त्वा चतुर्वक्त्रस्ततश्चादर्शनं गतः ॥

विश्वेदेवास्तथा हृष्टाः कूष्माण्डाश्च विशेषतः ॥ ११६ ॥

एतस्मात्कारणाद्रक्षा क्रियते भस्मसम्भवा ॥

विप्राणां भोज्यपात्रेषु श्राद्धे कूष्मांडजाद्भयात् ॥
नागराणां न वांछंति श्राद्धे छिद्रं यतः शृणु ॥ ११७ ॥
तेषां स्थाने यतो जाता दाक्षिण्येन समन्विताः ॥
निषिद्धा भस्मजा रक्षा भर्तृयज्ञेन तेजसा ॥ ११८ ॥
तदर्थं नागराः सर्वे न कुर्वन्ति हि कर्हिचित् ॥
इन्द्रोऽपि च गते तस्मिंश्चतुर्वक्त्रे निजालयम् ॥ ११९ ॥
अब्रवीद्ब्राह्मणान्सर्वांश्चमत्कारपुरोद्भवान् ॥
कृतांजलिपुटो भूत्वा विनयावनतः स्थितः ॥ ६.२०६.१२० ॥
श्रूयतां मद्वचो विप्राः करिष्यथ ततः परम् ॥
स्थापयिष्याम्यहं लिंगं देवदेवस्य शूलिनः ॥ १२१ ॥
ततस्तैर्ब्राह्मणैस्तस्य दर्शितं स्थानमुत्तमम् ॥
सोऽपि लिंगं च संस्थाप्य प्रहृष्टस्त्रिदिवं ययौ ॥ १२२ ॥
॥ विश्वामित्र उवाच ॥ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नराधिप ॥
गयाकूप्याश्च माहात्म्यं सर्वकामप्रदायकम् ॥ १२३ ॥
॥ आनर्त उवाच ॥ ॥
गयाकूप्याश्च माहात्म्यं भवता मे प्रकीर्तितम् ॥
बालमंडनजं वापि सांप्रतं वक्तुमर्हसि ॥ १२४ ॥
कस्मिन्स्थाने च शक्रेण तच्च लिंगं प्रतिष्ठितम ॥
वदास्माकं महाभाग तस्मिन्दृष्टे तु किं फलम् ॥२१५॥
॥ विश्वामित्र उवाच ॥ ॥
सहस्राक्षेण ते विप्रा लिंगार्थं याचिता यदा ॥
स्थानं शुभं पवित्रं च सर्वक्षेत्रस्य मध्यगम् ॥ ॥ १२६ ॥
ततस्तैर्दर्शितं लिंगं सुपुण्यं बालमंडनम्॥
यत्र बालाः पुरा जाता मरुदाख्या दितेः सुताः ॥१२७॥
तेनैव च पुरा ध्वस्ता न च मृत्युमुपागताः ॥
तच्च मेध्यतमं ज्ञात्वा स्थानं दृष्टं पुरा च यत् ॥१२८॥
यत्र दित्या तपस्तप्तं सुसुतं कांक्षमाणया ॥

तद्दृष्ट्वा परमं स्थानं जीवं प्रोवाच देवपः॥ ॥ १२९ ॥

गुरो ब्रूहि ममाशु त्वं सुमुहूर्तं च सांप्रतम् ॥

दिवसं यत्र सल्लिंगं स्थापयामि हरोद्भवम् ॥

प्रलयेऽपि समुत्पन्ने न नाशो यत्र जायते ॥ ॥ ६.२०६.१३० ॥

ततः सोऽपि चिरं ध्यात्वा तं प्रोवाच शचीपतिम् ॥

माघमासे सिते पक्षे पुष्यर्क्षे रविवासरे ॥ १३१ ॥

त्रयोदश्यामभीष्टे तु संजातेऽ भ्युदये शुभे ॥

संस्थापय विभो लिंगं मम वाक्येन सांप्रतम् ॥ १३२ ॥

आकल्पांतसमं दिव्यं स्थिरं ते तद्भविष्यति ॥

तच्छ्रुत्वा देवराजस्तु हर्षेण महताऽन्वितः ॥ १३३ ॥

बालमंडनसांनिध्ये स्थापयामास तत्तदा ॥

विप्रपुण्याहघोषेण गीतवादित्रनिस्वनैः ॥' १३४ ॥

ततो होमावसाने तु तर्पयित्वा द्विजोत्तमान् ॥

दक्षिणायां ददौ तेषामाघाटं स्थानमुत्तमम् ॥ १३५ ॥

मांकूले संस्थितं यच्च दिव्यप्राकारभूषितम् ॥

सर्वेषामेव विप्राणां सामान्येन नृपोत्तम ॥ १३६ ॥

ततोऽष्टकुलिकान्विप्रान्समाहूयाब्रवीदिदम् ॥

युष्माभिस्तु सदा कार्या चिंता लिंगसमुद्भवा ॥ १३७ ॥

अस्य यस्मान्मया दत्ता वृत्तिश्चन्द्रार्ककालिका ॥

सा च ग्राह्या तदर्थे च द्वादशग्रामसंभवा ॥ १३८ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

न वयं विबुधश्रेष्ठ करिष्यामो वचस्तव ॥

लिंगचिंतासमुद्भूतं श्रूयतामत्र कारणम् ॥ १३९ ॥

ब्रह्मस्वं विबुधस्वं च तडागोत्थं विशेषतः ॥

भक्षितं स्वल्पमप्यत्र नाश येत्सर्वपूर्वजान् ॥ ६.२०६.१४० ॥

यदि कश्चित्कुलेऽस्माकं जातस्तद्भक्षयिष्यति ॥

पातयिष्यति नः सर्वांस्तदस्माकं महद्भयम् ॥ १४१ ॥

अथ तं मध्यगः प्राह कृतांजलिर्द्विजोत्तमः ॥

दृष्ट्वाऽन्यमनसं शक्रं कृतपूर्वोपकारिणम् ॥ १४२ ॥

देवशर्माभिधानस्तु विख्यातः प्रवरैस्त्रिभिः ॥

अहं चिंतां करिष्यामि तव लिंगसमुद्भवाम् ॥ १४३ ॥

अपुत्रस्य तु मे पुत्रं यदि यच्छसि वासव ॥

यस्मात्संजायते वंशो यावदाभूतसंप्लवम् ॥ १४४ ॥

धर्मज्ञस्तु कृतज्ञस्तु देवस्वपरिवर्जकः ॥

तच्छ्रुत्वा वासवो हृष्टस्तमुवाच द्विजोत्तमम् ॥१४५॥

॥ इन्द्र उवाच ॥ ॥

भविष्यति शुभस्तुभ्यं पुत्रो वंशधरः परः ॥

धर्मात्मा सत्यवादी च देवस्वपरिवर्जकः ॥१४६॥

तस्यान्वये तु ये पुत्रा भविष्यंति महात्मनः ॥

ते सर्वेऽत्र भविष्यंति तद्रूपा वेदपारगाः ॥ १४७ ॥

अपरं शृणु मे वाक्यं यत्ते वक्ष्यामि सद्द्विज ॥

तथा शृण्वंतु विप्रेंद्राः सर्वे येऽत्र समागताः ॥१४८॥

बालमण्डनके तीर्थे मयैतल्लिंगमुत्तमम् ॥

चतुर्वक्त्र समादेशाच्चतुर्वक्त्रं प्रतिष्ठितम् ॥ १४९ ॥

योऽत्र स्नानविधिं कृत्वा तीर्थेऽत्र पितृतर्पणम् ॥

आजन्म पितरस्तेन प्रभविष्यंति तर्पिताः ॥ ६.२०६.१५०

ग्रामा द्वादश ये दत्ता मया देवस्य चास्य भोः ॥

वसिष्यंति च ये विप्रा वृद्धिश्राद्ध उपस्थिते ॥

ते श्राद्धं प्रथमं चास्य कृत्वा श्राद्धं ततः परम् ॥ ॥ १५१ ॥

तत्कृत्यानि करिष्यन्ति ते विघ्नेन विवर्जिताः ॥

वृद्धिः संपत्स्यते तेषां नो चेद्विघ्नं भविष्यति ॥ १५२ ॥

माघमासे सिते पक्षे त्रयो दश्यां दिने स्थिते ॥

तद्ग्रामसंस्थिता लोका येऽत्रागत्य समाहिताः ॥ १५३ ॥

बालमण्डनके स्नात्वा लिंगमेतत्समाहिताः ॥

पूजयिष्यंति सद्भक्त्या ते यास्यंति परां गतिम् ॥ १५४ ॥

ग्रामाणां मम लिंगस्य ये करिष्यंति पीडनम् ॥

कालांतरेऽपि संप्राप्तास्ते यास्यंति च संक्षयम् ॥ ॥ १५५ ॥

पृथिव्यां यानि तीर्थानि ह्यासमुद्रसरांसि च ॥

बालमण्डनके तीर्थ आगमिष्यंति तद्दिने ॥ १५६ ॥

॥ विश्वामित्र उवाच ॥ ॥

एतदुक्त्वा सहस्राक्षस्ततश्चाष्टकुलान्द्विजान् ॥

अग्रतः कोपसंयुक्तस्ततोवचनमब्रवीत् ॥ १५७ ॥

एतैः सप्तकुलैर्विप्रैर्यत्कृतं वचनं न मे ॥

कृतघ्नैस्ता ञ्छपिष्यामि कृतघ्नत्वान्न संशयः ॥ १५८ ॥

यस्मादिदंपुरा प्रोक्तं मनुना सत्यवादिना ॥

स्वायंभुवेन प्रोद्दिश्य कृतघ्नं सकलं जनम् ॥ १५९ ॥

ब्रह्मघ्ने च सुरापे च चौरे भग्नवते शठे ॥

निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ६.२०६.१६० ॥

अवध्या ब्राह्मणा गावः स्त्रियो बालास्तपस्विनः ॥

तेनाऽहं न वधाम्येताञ्छिद्रेऽपि महति स्थिते ॥ १६१ ॥

ततस्तोयं समादाय सदर्भं निजपाणिना ॥

शशाप तान्द्विजश्रेष्ठान्कृतघ्नान्पाकशासनः ॥ १६२ ॥

मम वाक्यादपि प्राप्य एते लक्ष्मीं द्विजोत्तमाः ॥

निर्धनाः संभविष्यंति नीत्वा यद्द्वारतो ऽखिलम् ॥ १६३ ॥

भक्तानां च पीरत्यागमेतेषां वंशजा द्विजाः ॥

करिष्यंति न सन्देहो यथा मम सुनिष्ठुराः ॥

दाक्षिण्यरहिताः सर्वे तथा बह्वाशिनः सदा ॥ १६४ ॥

एवमुक्त्वाऽथ तान्विप्रान्सप्तवंशसमुद्भवान् ॥

पुनः प्रोवाच तान्विप्राञ्छेषान्नगरसंभवान् ॥ १६५ ॥

ममात्र दीयतां स्थानं स्थानेऽत्रैव द्विजोत्तमाः ॥

येन संवत्सरस्यांते पंचरात्रं वसाम्यहम् ॥ १६६ ॥

देवस्यास्य प्रपूजार्थं मर्त्यलोकसु खाय च ॥

ब्राह्मणानां प्रपूजार्थं सर्वेषां भवतामिह ॥ १६७ ॥

॥ विश्वामित्र उवाच ॥ ॥

ततस्ते ब्राह्मणाः सर्वे तदर्थं स्थानमुत्तमम् ॥
दर्शयामासुः संहृष्टाः प्रोचुश्च तदनंतरम् ॥ १६८ ॥
ब्रह्मस्थाने त्वया शक्र पंचरात्रमुपेत्य च ॥
स्थातव्यं मर्त्यलोकस्य सुखमासेव्यतां प्रभो ॥ ॥ १६९ ॥
अत्र स्थाने तवाऽग्रे तु करिष्यामो महोत्सवम् ॥
गीतवादित्रनिर्घोषैर्गंधमाल्यानुलेपनैः ॥
द्विजानां तर्पणैश्चैव सर्वकामसमृद्धिदम् ॥ ॥ ६.२०६.१७० ॥
॥ विश्वामित्र उवाच ॥ ॥
तच्छ्रुत्वा वचनं तेषां प्रहृष्टः पाकशासनः ॥
पूजयित्वा द्विजान्सर्वान्गतोऽथ त्रिदिवालयम् ॥ १७१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्ड हाटकेश्वरक्षेत्रमाहात्म्ये बालमण्डनतीर्थमाहात्म्यवर्णनंनाम षडुत्तर द्विशततमोऽध्यायः ॥ २०६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०७

https://sa.wikisource.org/s/fpe
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ विश्वामित्र उवाच ॥ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नराधिप ॥

बालमंडनमाहात्म्यं सर्वपातकनाशनम् ॥ १ ॥

यत्रैकस्मिन्नपि स्नाने कृते पार्थिवसत्तम ॥

सर्वेषां लभ्यते पुण्यं तीर्थानां स्नानसंभवम् ॥

माघमासे त्रयोदश्यां शुक्लपक्ष उपस्थिते ॥ २ ॥

॥ आनर्त उवाच ॥ ॥

कस्माच्छक्रस्य संस्थानं पंचरात्रं धरातले ॥

नाधिकं जायते तेषां यथान्येषां दिवौकसाम् ॥ ३ ॥

वर्षांते कानि चाहानि येषु शक्रो धरातले ॥

समागच्छति को मास एतत्सर्वं ब्रवीहि मे ॥ ४ ॥

॥ विश्वामित्र उवाच ॥ ॥

श्रूयतामभिधास्यामि कथा मेनां धराधिप ॥

पंचरात्रात्परं शक्रो यथा न स्याद्धरातले ॥ ५ ॥

आसीत्पूर्वं बृहत्कल्पे जयत्सेनः सुरेश्वरः ॥

त्रैलोक्यस्य समस्तस्य स्वामी दानवदर्पहा ॥ ६ ॥

त्रैलोक्ये सकले पूजां भजमानः सदैव हि ॥

कस्यचित्त्वथ कालस्य गौतमस्य मुनेः प्रिया ॥ ७ ॥

अहिल्यानाम भार्याऽभूद्रूपे णाप्रतिमा भुवि ॥

तां दृष्ट्वा चकमे शक्रः कामदेववशं गतः ॥८॥

नित्यमेव समागत्य स्वर्गलोकात्स कामभाक् ॥

गौतमे निर्गते राजन्समिदिध्मार्थमेव हि ॥

दर्भार्थं फलमूलार्थं स्वयमेव महात्मभिः ॥ ९ ॥

अथ तस्य समाचख्यौ नारदो मुनिसत्तमः ॥

शक्रस्य चेष्टितं सर्वं तथाहिल्यासमुद्भवम् ॥ ॥६.२०७.१॥।

तच्छ्रुत्वा सहसा तूर्णं गौतमो गृहमभ्यगात् ॥

यावत्पश्यति देवेशं सह पत्न्या समागतम् ॥११॥

शक्रोऽपि गौतमं दृष्ट्वा पलायनपरायणः ॥

निर्जगामाश्रमात्तस्माद्विवस्त्रोऽपि भयाकुलः ॥१२॥

अहिल्यापि भयत्रस्ता दृष्ट्वा भर्तारमागतम्॥

अधोमुखी स्थिता राजंस्तदा व्याकुलितेंद्रिया॥१३॥

गौतमोऽपि च तद्दृष्ट्वा सम्यग्भार्याविचेष्टितम् ॥

ददौ शापं महाराज कोपसंरक्तलोचनः ॥ १४ ॥

यस्माच्छक्र पापकर्म कृतमीदृग्विगर्हितम् ॥

भार्या मे दूषिता साध्वी तस्मादवृषणो भव ॥१५॥

सहस्रं च भगानां ते वक्त्रे भवतु मा चिरम् ॥

येन त्वं विप्लवं यासि त्रैलोक्ये सचराचरे ॥१६॥

अपरं मर्त्यलोकेऽत्र यद्यागच्छसि वासव ॥

पूजाकृते ततो मूर्धा शतधा ते भविष्यति ॥ १७ ॥

एवं शप्त्वा च तं शक्रं ततोऽहिल्यामुवाच सः ॥

कोपसंरक्तनेत्रस्तु भर्त्सयित्वा मुहुर्मुहुः ॥ १८ ॥

यस्मात्पापे त्वया कर्म कृतमेतद्विगर्हितम्॥

तस्माच्छिलामयी भूत्वा त्वं तिष्ठ वसुधातले ॥ १९ ॥

ततः सा तत्क्षणाज्जाता तस्य भार्या शिलात्मिका ॥

इन्द्रोऽपि च परित्यक्तो वृषणाभ्यां तथाऽभवत् ॥ ६.२०७.२० ॥

सहस्रभगचिह्नस्तु वक्त्रदेशे बभूव ह ॥ २१ ॥

अथ मेरोः समासाद्य कंदरं विजनं हरिः ॥

सव्रीडः सेवते नित्यं न जगाम निजां पुरीम् ॥ २२ ॥

ततो देवगणाः सर्वे सोद्वेगास्तेन वर्जिताः ॥

नो जानंति च तत्रस्थं कन्दरान्वेषणे रताः ओ। २३ ॥

पीड्यंते दानवै रौद्रैः स्वर्गे जाते विराजके ॥ २४ ॥

एतस्मिन्नन्तरे जीवः शक्राण्या भयभीतया ॥

सोद्वेगया परिपृष्टः क्व गतोऽथ पुरंदरः ॥ २५ ॥

अथ जीवश्चिरं ध्यात्वा दृष्ट्वा तं ज्ञानचक्षुषा ॥

जगाम सहितो देवैः प्रोवाचाथ सुनिष्ठुरम् ॥ २६ ॥

किमित्थं राज्यभोगांस्त्वं त्यक्त्वा विजनमाश्रितः ॥

किं त्वया विहितं ध्यानं किं रौद्रं संश्रितं तपः ॥ २७ ॥

बृहस्पतेर्वचः श्रुत्वा भगवक्त्रः पुरंदरः ॥

प्रोवाच लज्जया युक्तो दीनो बाष्पपरिप्लुतः ॥ २८ ॥

नाहं राज्यं करिष्यामि त्रैलोक्येऽपि कथंचन ॥

पश्य मे यादृशी जाता ह्यवस्था गौतमान्मुनेः ॥ २९ ॥

सहस्रभगचिह्नेन कथं वक्त्रेण तानहम् ॥

देवान्संभावयिष्यामि पौलोमीं च तथा शिवम्॥६.२०७.३॥।

मर्त्यलोकोद्भवा पूजा नष्टा मम बृहस्पते ॥

गौतमस्य मुनेः शापात्कस्मिंश्चित्कारणांतरे ॥ ३१ ॥

तच्छ्रुत्वा देवराजस्य बृहस्पतिरुवाचह ॥

दुःखेन महता युक्तः सर्वैर्देवैः समावृतः ॥

गौतमस्य समीपे च गत्वा प्रोवाच तं स्वयम् ॥ ३२ ॥

एतच्छक्रपरित्यक्तं त्रैलोक्यमपि चाखिलम् ॥

पीड्यते दानवैर्विप्र नष्टयज्ञोत्सवक्रियम् ॥ ३३ ॥

नैष वांछति राज्यं स्वं लज्जया परया युतः ॥

तस्मादस्य प्रसादं त्वं यथावत्कर्तुमर्हसि ॥

अनुग्रहेण शापस्य मम वाक्याद्द्विजोत्तम ॥ ३४ ॥

तच्छ्रुत्वा गौतमः प्राह न मे वाक्यं भवेन्मृषा ॥

न वाक्यं लोपयिष्यामि यदुक्तं स्वयमेव हि ॥ ॥ ३५ ॥

ततः प्रोवाच ते विष्णुः स्वयं चापि महेश्वरः ॥

तथा देवगणाः सर्वे विनयावनता स्थिताः ॥ ३६ ॥

अन्यथा ब्रह्मणो वाक्यं न ते कर्तुं प्रयुज्यते ॥

तस्मात्कुरुष्व विप्रेन्द्र शापस्यानुग्रहं हरेः ॥ ३७ ॥

दृष्ट्वा तन्मनसो दार्ढ्यं सुरा विष्णुपुरोगमाः ॥

ब्रह्मणोंऽतिकमभ्येत्य तस्मै सर्वं न्यवेदयन् ॥ ३८ ॥

शापं शक्रस्य संजातं तथा तस्मान्महामुनेः ॥ ३९ ॥

यथा विडंबना जाता देवराजस्य गर्हिता ॥

तथा च दानवैः सर्वं त्रैलोक्यं व्याकुलीकृतम् ॥ ६.२०७.४० ॥

यथा न कुरुते राज्यं व्रीडितः स शचीपतिः ॥

तच्छ्रुत्वा पद्मजस्तूर्णं हरिशंभुसमन्वितः ॥ ४१ ॥

जगाम तत्र यत्रास्ते दुःखितः पाकशासनः ॥

गौतमं च समानीय तत्रैव च पितामहः ॥ ४२ ॥

ततः प्रोवाच प्रत्यक्षं देवानां वासवस्य च ॥

अयुक्तं देवराजेन विहितं मुनिसत्तम ॥४३॥

यत्ते प्रदूषिता भार्या कामोपहतचेतसा ॥

न ते दोषोऽस्ति यच्छक्रश्छिद्रे चास्मिन्पुरंदरः ॥

परं प्रशस्यते नित्यं मुनीनां परमा क्षमा ॥ ४४ ॥

यथा त्रैलोक्यराज्यं स्वं प्रकरोति शतक्रतुः ॥

त्वया स्वयं प्रसादेन तथा नीतिर्विधीयताम् ॥४५॥

दत्त्वाऽस्य वृषणौ भूयो नाश यित्वा भगानिमान्॥

मर्त्यलोके गतिश्चास्य यथा स्यात्तत्समाचर॥४६॥

तच्छ्रुत्वा वचनं तेषां स मुनिर्देवगौरवात् ॥

वृषणौ मेषसंभूतौ योजयामास तौ तदा ॥४७॥

तान्भगान्पाणिना स्पृष्ट्वा चक्रे नेत्राणि सन्मुनिः॥

ततः प्रोवाच तान्देवान्गौतमश्च महातपाः॥४८॥

सहस्राक्षो मया शक्रो निर्मितोयं सुरोत्तमाः ॥

स मेषवृषणश्चापि स्वं च राज्यं करिष्यति ॥

शोभाऽस्य नेत्रजा वक्त्रे सुरम्या संभविष्यति ॥४९॥

पुंस्त्वं च मेषजोत्थाभ्यां वृषणाभ्यां भविष्यति ॥

न च मर्त्ये गतिश्चास्य पूजार्थं संभविष्यति ॥ ६.२०७.५० ॥

एतस्मिन्नन्तरे जातः सहस्राक्षः पुरंदरः॥

शोभया परया युक्तो मुनेस्तस्य प्रभाव तः ॥५१॥

ततः संगृह्य पादौ च गौतमस्य महात्मनः॥

प्रोवाच वचनं शक्रः सर्वदेवसमागमे ॥ ५२ ॥

दुर्लभा मर्त्यलोकोत्था पूजा ब्राह्मणसत्तम ॥

सा मे तव प्रसादेन यथा स्यात्तत्समाचर ॥ ५३ ॥

त्रैलोक्यपतिजा संज्ञा मा नाशं यातु मे द्विज ॥

प्रसादात्तव सा नित्यं यथा स्यात्तद्विधीयताम् ॥ ५४ ॥

तच्छ्रुत्वा लज्जयाविष्टः कृपया चाथ सन्मुनिः॥

तमूचे सर्वदेवानां प्रत्यक्षं पाकशासनम् ॥ ५५ ॥

पंचरात्रं च ते पूजा मर्त्यलोके भविष्य ति ॥

अनन्यां तृप्तिमभ्येषि यथा चैव तु वत्सरम् ॥ ५६ ॥

यत्र देशे पुरे ग्रामे पंचरात्रं महोत्सवः ॥

तत्र संवत्सरं यावन्नीरोगो भविता जनः ॥५७॥

आधयो व्याधयो नैव न दुर्भिक्षं कथंचन ॥

न च राज्ञो विनाशः स्यान्नैव लोकेऽसुखं क्वचित् ॥ ५८ ॥

यत्र स्थाने महो भावी तावकश्च पुरंदर ॥

प्रभूतपयसो गावः प्रभविष्यंति तत्र च ॥

सुभिक्षं सुखिनो लोकाः सर्वोपद्रववर्जिताः ॥ ५९ ॥

॥ इन्द्र उवाच ॥ ॥

यद्येवं शरदि प्राप्ते सर्व सत्त्वमनोहरे ॥

सप्तच्छदसमाकीर्णे बन्धूकसुविराजिते ॥ ६.२०७.६० ॥

मालतीगन्धसंकीर्णे नवसस्यसमाकुले ॥

चंद्रज्योत्स्नाकृतोद्द्योते षट्पदाराव संकुले ॥ ६१ ॥

कुमुदोत्पलसंयुक्ते तत्र स्यात्सुमहोत्सवः ॥

येन बालोऽपि वृद्धोऽपि संहृष्टस्तत्समाचर ॥ ६२ ॥

॥ गौतम उवाच ॥ ॥

अद्य श्रवणनक्षत्रे तव दत्तो महोत्सवः ॥

वैष्णवे पुण्यनक्षत्रे सर्वपापविवर्जिते ॥ ६३ ॥

त्वया मे धर्षिता भार्या पौष्णे नक्षत्रसंज्ञिते ॥

तस्मिन्भविष्यति व्यक्तं तव पातः पुरंदर ॥ ६४ ॥

येनैषा मामकी कीर्तिस्तावकं वक्तु कर्म तत् ॥
विख्यातिं यातु लोकेऽत्र न कश्चित्पापमाचरेत् ॥ ६५ ॥
श्रवणादीनि पंचैव नक्षत्राणि पृथक्पृथक् ॥
तव पूजाकृते पंच क्रतुतुल्यानि तानि च ॥
भविष्यंति न संदेहः सर्वतीर्थमयानि च ॥ ६६ ॥
यो यं काममभिध्याय पूजां तव करिष्यति ॥
विशेषात्फलपुष्पैश्च स तं कृत्स्नमवाप्नुयात् ॥ ६७ ॥
परं मूर्तिर्न ते पूज्या कुत्रापि च भविष्यति ॥
त्वया मे दूषिता भार्या ब्राह्मणी प्राणसंमता ॥ ६८ ॥
तस्माद्वृक्षोद्भवां यष्टिं ब्राह्मणा वेदपारगाः ॥
तावकैः सकलैर्मंत्रैः स्थापयिष्यंति शक्तितः ॥ ६९ ॥
पंचरात्रविधानेन यथान्येषां दिवौकसाम् ॥
ततः संक्रमणं कृत्वा पूजा मर्त्यसमुद्भवा ॥
त्वया ग्राह्या सहस्राक्ष तृप्तिश्चैव भविष्यति ॥ ६.२०७.७० ॥
यो यथा चैव ते यष्टिं सुप्तामुत्थापयिष्यति ॥
तस्य तस्याधिका सिद्धिः संभविष्यंति वासव ॥ ७१ ॥
पंचरात्रव्रतरतो यो ब्रह्मचर्यपरायणः ॥
प्रकरिष्यति ते पूजां फलपुष्पैर्यथोदितैः ॥ ७२ ॥
परदारकृतात्पापात्स सर्वान्मुक्तिमेष्यति ॥ ७३ ॥
नमः शक्राय देवाय शुनासीराय ते नमः ॥
नमस्ते वज्रहस्ताय नमस्ते वज्रपाणये ॥ ७४ ॥
मन्त्रेणानेन यश्चार्घ्यं तव शक्र प्रदास्यति ॥
परदारकृतं पापं तस्य सर्वं प्रयास्यति ॥ ॥ ७८५ ॥
यश्चेदं तव संवादं मया सार्धं पुरंदर ॥
कीर्तयिष्यति सद्भक्त्या तथैवाकर्णयिष्यति ॥ ७६ ॥
तस्य संवत्सरं यावन्नैव रोगो भविष्यति ॥
तच्छ्रुत्वा विबुधाः सर्वे तथेत्युक्त्वा प्रहर्षिताः ॥ ७७ ॥
जग्मुः शक्रं समादाय पुनरेवामरावतीम् ॥

गौतमोऽपि निजा वासं गतः कोपसमाश्रितः ॥ ७८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्य इन्द्रमहोत्सववर्णनंनाम सप्तोत्तरद्विशततमोऽध्यायः ॥ २०७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०८



॥ विश्वामित्र उवाच ॥ ॥

एवं शक्रे दिवं प्राप्ते देवेषु सकलेषु च ॥

गौतमः स्वाश्रमं प्रापत्कोपेन महता ज्वलन् ॥ १ ॥

ततः स कथयामास सर्वं देवविचेष्टितम् ॥

वरदानं च शक्राय शता नन्दस्य चाग्रतः ॥ २ ॥

तच्छ्रुत्वा पितरं प्राह विनयावनतः स्थितः ॥

तातांबाया न कस्मात्त्वं प्रसादं प्रकरोषि मे ॥ ३ ॥

उत्थापने न ते किञ्चिदसाध्यं विद्यते विभो ॥

तस्मात्कुरु प्रसादं मे यथा स्यान्मम चांबया ॥ ४ ॥

समागमो मुनिश्रेष्ठ दीनस्योत्कण्ठितस्य च ॥

तस्मादुत्थाप्य तां तूर्णं प्रायश्चित्तविधिं ततः ॥

तस्मादादिश मे क्षिप्रं येन शुद्धिः प्रजायते ॥ ५ ॥

॥ गौतम उवाच ॥ ॥

मद्यावलिप्तभांडस्य यदि शुद्धिः प्रजायते ॥

तत्स्त्रीणां जायतेशुद्धिर्योनौ शुक्राभिषेचनात् ॥ ६ ॥

ब्राह्मणस्तु सुरां पीत्वा मौंजीहोमेन शुध्यति ॥

तिंगिनीं साधयित्वा च न तु नारी विधर्मिता ॥ ७ ॥

मद्यभांडमपि प्रायो यथावद्वह्निशोधितम्॥

विशुध्यति तथा नारी वह्निदग्धा विशुध्यति ॥

यस्या रेतोऽथ संक्रांत मुदरांतेऽन्यसंभवम्॥ ८ ॥

एतस्मात्कारणान्माता मया ते पुत्र सा शिला ॥

विहिता न हि तस्याश्च विशुद्धिस्तु कथञ्चन ॥ ९ ॥

॥ शतानन्द उवाच ॥ ॥

यद्येवं साधयिष्यामि तत्कृतेऽहं हुताशनम्॥

विषं वा भक्षयिष्यामि पतिष्यामि जलाशये ॥ ६.२०८.१० ॥

मातुर्वियोगतस्तात सत्यमेतन्मयोदितम् ॥
धर्मद्रोणाः स्थिताश्चान्ये मन्वाद्या मुनयस्तथा ॥ ११ ॥
इतिहासपुराणानि वेदांतानि बहूनि च ॥
संचिंत्य तात सर्वाणि देहि शुद्धिं ममापि ताम्॥
मम मातुः करिष्यामि नो चेत्प्राणपरिक्षयम् ॥ १२ ॥
॥ विश्वामित्र उवाच ॥
तच्छ्रुत्वा सुचिरं ध्यात्वा गौतमः प्राह तं सुतम्॥
परिष्वज्य स्वबाहुभ्यां मूर्ध्न्याघ्राय ततः परम् ॥१३॥
यद्येवं वत्स मा कार्षीः साहसं पापसंभवम्॥
आत्मदेहविघातेन श्रूयतां वचनं मम ॥ ॥ १४ ॥
मेध्यत्वे तव मातुश्च शुद्धिर्ज्ञाता मया पुरा ॥
यया सा मम हर्म्यार्हा भविष्यति न संशयः ॥ १५ ॥
उत्पत्स्यते रवेर्वंशे रामरूपी जना र्दनः॥
रावणस्य वधार्थाय मानुषं रूपमास्थितः॥
तस्य पादस्य संस्पर्शाद्भूयः शुद्धा भविष्यति।
तस्मात्प्रतीक्ष्य तावत्त्वमौत्सुक्यं व्रज पुत्रक॥
एतत्सम्यङ्मया ज्ञातं वत्स दिव्येन चक्षुषा॥१८॥
एतच्छ्रुत्वा तथेत्युक्त्वा शतानन्दः प्रहर्षितः॥
स्थितः प्रतीक्षमाणस्तु तं कालं मातृवत्सलः ॥ १९ ॥
ततः कालेन महता रामरूपी जनार्दनः ॥
रावणस्य वधार्थाय जातो दशरथालये ॥ ६.२०८.२० ॥
स मया भगवा विष्णुर्बालभावेन संस्थितः ॥
निजयज्ञस्यरक्षार्थं समानीतः स्वमाश्रमम् ॥
राक्षसानां विनाशाय यज्ञकर्मविनाशिनाम् ॥ २१ ॥
हतैस्तै राक्षसै रौद्रैर्मम पूर्णोऽभवन्मखः ॥
अयोध्यायाः समानीतः स मया रघुनंदनः ॥ २२ ॥
सीतायाश्च विवाहार्थं लक्ष्मणेन समन्वितः ॥
श्रुत्वा स्वयंवरं तस्याः पार्थिवानां समागमम् ॥ २३ ॥

ततो मार्गे मया दृष्टा गौतमस्याश्रमे शुभे ॥
अहिल्या सा शिला रूपा प्रमाणेन महत्तमा ॥ २४ ॥
ततः प्रोक्तो मया रामः स्पृशेमां वत्स पाणिना ॥
मानुषत्वं लभेद्येन गौतमस्य प्रिया मुनेः ॥
शापदोषेण संजाता शिलेयं तस्य सन्मुनेः ॥ २५ ॥
अविकल्पं ततो रामो मम वाक्येन तां शिलाम् ॥
पस्पर्श पार्थिवश्रेष्ठ कौतू हलसमन्वितः ॥ २६ ॥
अथ रामेण संस्पृष्टा सहसैवांगना मुनेः ॥
शुशुभे मानुषी जाता दिव्यरूपवपुर्धरा ॥ २७ ॥
ततः सा लज्जयाऽऽविष्टा प्रणिपत्य च गौतमम् ॥
स्मरमाणाऽऽत्मनः कृत्यं यच्छक्रेण समन्वितम् ॥ २८ ॥
प्रायश्चित्तं मम स्वामिन्देहि सर्वमशेषतः ॥
यन्नरस्य समायोगे परस्याह प्रजापतिः ॥ २९ ॥
अहं दुष्करमप्येतत्करिष्यामि न संशयः ॥
येन शुद्धिर्भवेन्मह्यं पुरश्चरणसेवनात् ॥ ६.२०८.३० ॥
ततः संचिंत्य सुचिरं प्रोवाच गौतमस्तदा ॥
कुरु चान्द्रायणशतं कृच्छ्राणां च सहस्रकम् ॥ ३१ ॥
प्राजापत्यायुतं चापि तीर्थयात्रापरायणा ॥
अष्टषष्टिषु तीर्थेषु यानि तीर्थानि भूतले ॥
तेषां संदर्शनात्सम्यक्ततः शुद्धिमवाप्स्यसि ॥ ३२ ॥
सा तथैति प्रतिज्ञाय नित्यं व्रतपरायणा ॥
अष्टषष्टिसु तीर्थेषु वाराणस्यादिषु क्रमात्॥ ३३ ॥
बभ्राम तानि लिंगानि पूजयन्ती प्रभक्तितः ॥
क्रमेणैव तु संप्राप्ता हाटकेश्वरसंभवम् ॥ ३४ ॥
यावत्पश्यति सा साध्वी तावन्नागबिलो महान् ॥
पूरितो नागरेणैव मार्गः पातालसंभवः ॥ ३५ ॥
गच्छंति येन पूर्वं तु तीर्थयात्रापरायणाः ॥
हाटकेश्वरदेवस्य दर्शनार्थं मुनीश्वराः ॥ ३६ ॥

अथ सा चिन्तयामास न दृष्टे तु सुरेश्वरे ॥

हाटकेश्वरदेवे च न हि यात्राफलं लभेत् ॥ ३७ ॥

तस्मात्तपः करि ष्यामि स्थित्वा चैव सुदुष्करम् ॥

येनाहं तत्प्रभावेन तं पश्यामि सुरेश्वरम् ॥ ३८ ॥

एवं सा निश्चयं कृत्वा तपस्तेपे सुदुष्करम् ॥

दर्शनार्थं हि देवस्य पातालनिलयस्य च ॥ ३९ ॥

पंचाग्निसाधका ग्रीष्मे हेमन्ते सलिलाश्रया ॥

वर्षास्वाकाशशयना सा बभूव तपस्विनी ॥ ६.२०८.४० ।।

हरलिंगं प्रतिष्ठाप्य स्वनाम्ना चांतिके तदा ॥

त्रिकालं पूजयामास गन्धपुष्पानुलेपनैः ॥ ४१ ॥

एवं तपसि संस्थायास्तस्याः कालो महान्गतः ॥

न च संदर्शनं जातं हाटकेश्वरसंभवम्॥ ४२ ॥

कस्यचित्त्वथ कालस्य शतानन्दश्च तत्सुतः ॥

स तामन्वेषमाणस्तु तस्मिन्क्षेत्रे समागतः ॥

मातृस्नेह परीतात्मा तीर्थान्वेषणतत्परः ॥ ४३ ॥

अथ तां तत्र संवीक्ष्य दारुणे तपसि स्थिताम् ॥

प्रणिपत्य स्थितो दीनः सदुःखो वाक्यमब्रवीत् ॥ ४४ ॥

किमत्र क्लिश्यते कायस्तपः कृत्वा सुदारुणम्॥

सप्तषष्टिषु तीर्थेषु यानि लिंगानि तेषु च ॥ ४५ ॥

माहेश्वराणि लिंगानि तानि दृष्टानि च त्वया ॥

एतत्पातालसंस्थं च हाटकेश्वरसंज्ञितम्॥ ४६ ॥

न पश्यति नरः कश्चिद्दृष्टं क्षेत्रे न केनचित् ॥

तेन शुद्धिश्च संजाता स्वभर्त्रा विहिता तु या ॥४७ ॥

तस्मादागच्छ गच्छामस्ताताश्रामपदे शुभे ॥

त्वन्मार्गं वीक्षते तातः कर्षुको वर्षणं यथा ॥ ४८ ।

॥ आहिल्योवाच ॥ ॥

यावत्पश्यामि नो देवं हाटकेश्वरसंज्ञितम् ॥

तावद्गच्छामि नो गेहं यदा पश्यामि तं हरम् ॥ ४९ ॥

तदा यास्ये गृहं पुत्र निश्चयोऽयं मया कृतः ॥ ६.२०८.५० ॥

तच्छ्रुत्वा सोऽपि तां प्राह ह्येष चेन्निश्चयस्तव ॥

मयाऽपि तातपार्श्वे तु प्रगंतव्यं त्वया -प ॥ ५१ ॥

एवमुक्त्वा ततः सोपि स्थापयामास शांभ वम् ॥

लिंगं च पूजयामास त्रिकालं तपसि स्थितः ॥ ५२ ॥

शतानन्दस्तु राजर्षिः गन्धपुष्पानुलेपनैः ॥

नैवेद्यैर्विविधैः सूक्तैर्वेदोक्तैः पर्यतोषयत् ॥ ५३ ॥

षष्ठान्नकालभोज्यस्य व्रतचर्यारतस्य च ॥

एवं तस्याऽपि संस्थस्य गतः कालो महान्मुने ॥

न च तुष्यति देवेश स्ताभ्यां द्वाभ्यां कथञ्चन ॥ ५४ ॥

ततः कालेन महता गौतमोऽपि महामुनिः ॥

आजगाम स्वयं तत्र पुत्रदर्शनलालसः ॥ ५५ ॥

स दृष्ट्वा भार्यया सार्धं पुत्रं तपसि संस्थितम् ॥

तुतोष प्रथमं तावत्पश्चादुःखसमन्वितः ॥ ५६ ॥

अहो बत महत्कष्टं पुत्रो मे कृशतां गतः ॥

तपसः संप्रभावेन नयामि स्वगृहं कथम् ॥

भार्येयं च तथा मह्यं विवर्णा तु कृशा स्थिता ॥ ५७ ॥

एवं संचिंत्य मनसा तावुभौ प्रत्यभाषत ॥

गम्यतां स्वगृहं कृत्वा तपसः संनिवर्तनम् ॥ ५८ ॥

॥ शतानन्द उवाच ॥ ॥

तातांबा बहुधा प्रोक्ता तपसः संनिवर्तने ॥

नो गच्छति तथा हर्म्यमदृष्टे हाटकेश्वरे ॥ ५९ ॥

अहं तया विहीनस्तु नैव यास्यामि निश्चितम् ॥

एवं ज्ञात्वा महाभाग यद्युक्तं तत्समाचर ॥ ६.२०८.६० ॥

॥ गौतम उवाच ॥ ॥

यद्येवं निश्चयो वत्स तव मातुश्च संस्थितः ॥

अहं ते दर्शयिष्यामि तपसा हाटकेश्वरम् ॥ ६१ ॥

एवमुक्त्वा ततः सोऽपि तपश्चक्रे महामुनिः ॥

एकांतरोपवासस्तु स्थितो वर्षशतं मुनिः॥

षष्ठान्नकालभोजी च तावत्काले ततोऽभवत्॥६२॥

त्रिरात्रभोजी पश्चाच्च स बभूव मुनीश्वरः।

तावत्कालं फलैर्निन्ये तावत्कालं जलाशनः॥

वायुभक्षस्ततो भूयस्तावत्कालमभून्मुनिः॥६३॥

ततो वर्षसहस्रांते परमे संव्यवस्थिते॥

प्रभिद्य मेदिनीपृष्ठं निष्क्रांतं लिंगमुत्तमम् ॥ ६४

द्वादशार्कप्रतीकाशं सर्वलक्षणलक्षितम ॥

एतस्मिन्नंतरे देवः शंभुः प्रत्यक्षतां गतः ॥ ६५ ॥

एतस्मिन्नेव काले तु भगवाञ्छशिशेखरः ॥

तस्य दृष्टिपथं गत्वा वाक्यमेतदुवाच ह ॥ ६६ ॥

गौतमाऽहं प्रतुष्टस्ते तपसाऽनेन सुव्रत ॥ ६७ ॥

एतच्च मामकं लिंगं हाटकेश्वरसंज्ञितम् ॥

पातालाच्च विनिष्क्रांतं तव भक्त्या महामुने ॥६८॥

एतदर्थं तपस्तप्तं सभार्येण त्वया हि तत् ॥

सपुत्रेणाखिलं जातं फलं तस्य यथेप्सितम् ॥ ६९ ॥

एतत्पश्यतु ते भार्या अहिल्या दिव्यरूपिणी ॥

अष्टषष्ट्युद्भवं येन यात्राफलमवाप्नुयात् ॥ ६.२०८.७० ॥

त्वं चापि प्रार्थय वरं येन सर्वं ददामि ते ॥ ७१ ॥

॥ गौतम उवाच ॥

हाटकेश्वरसंज्ञे तु सकृद्दृष्टे च यत्फलम् ॥

पातालस्थे च यत्पुण्यं नराणां जायते फलम् ॥

दृष्टेनानेन तत्पुण्यं पूजितेन विशेषतः ॥ ७२ ॥

अन्येऽपि ये जनास्तच्च पूजयंति प्रभक्तितः ॥

चैत्रशुक्लचतुर्दश्यां ते प्रयांतु त्रिविष्टपम् ॥ ७३ ॥

एतल्लिंगं न जानंति नराः सिद्ध्यभिकांक्षिणः ॥

विशंति विवरं तेन हाटकेश्वरकांक्षया ॥ ७४ ॥

अपि पापसमोपेता लिंगस्यास्य प्रभावतः ॥

परदारोद्भवा त्पापादहिल्येश्वरदर्शनात् ।। ७९ ॥

मुच्यंते मानवास्तद्वच्छतानंदेश्वरादपि ॥

तस्मिन्दिने विहितया ताभ्यां चैव प्रपूजया ॥ ७६ ॥

॥ विश्वामित्र उवाच ॥ ॥

एतस्मिन्नेव काले तु व्याप्तः स्वर्गोऽखिलो नृप ॥

मानुषैरपि पापाढ्यैः सर्वधर्मविवर्जितैः ॥ ७७ ॥

न कश्चित्कुरुते यज्ञं तीर्थ यात्रामथापरम् ॥

न व्रतं नियमं चैव दानस्यापि कथामपि ॥ ७८ ॥

तच्च लिंगत्रयं दृष्ट्वा स्पृष्ट्वा संपूज्य भक्तितः ॥ ७९ ॥

ततो भीताः सुराः सर्वे सस्पर्धैर्मानुषैर्वृताः ॥

प्रोचुः पुरंदरं गत्वा व्यथया प्रया युताः ॥ ६.२०८.८० ॥

मर्त्यलोके सहस्राक्ष सर्वे धर्माः क्षयं गताः ॥

अपि पापसमाचारा अभ्येत्य पुरुषा इह ॥ ८१ ॥

अस्माभिः सह गर्वाढ्याः स्पर्धां कुर्वंति सर्वदा ॥

हाटकेश्वरजे क्षेत्रे लिंगत्रयमनुत्तमम् ॥ ८२ ॥

यत्स्थितं स्थापितं तत्र गौतमेन महात्मना ॥

सपुत्रेण सदारेण तस्य पूजाप्रभावतः ॥ ८३ ॥

अपि पापसमाचारा इहागच्छंति तेऽखिलाः ॥

यमस्य नरकाः सर्वे सांप्रतं शून्यतां गताः ॥ ८४ ॥

गौतमेन समानीतः पातालाद्धाटकेश्वरः ॥

तपसा तोषयित्वा तु तत्र स्थाने सुरेश्वरः ॥ ८५ ॥

तत्प्रभावादयं जातो व्यवहारो धरातले ॥ ८६ ॥

एवं ज्ञात्वा प्रवर्तंते यथा यज्ञास्तथा कुरु ॥

तैर्विना नैव तृप्तिः स्यादस्माकं च कथंचन ॥ ८७ ॥

तच्छ्रुत्वा वासवस्तत्र समाहूय च मन्मथम् ॥

क्रोधं लोभं तथा दंभं मत्सरं द्वेषसंयुतम् ॥ ९८ ॥

गत्वा धरातलं सर्वे ममादेशाद्द्रुतं ततः ॥

स्वशक्त्या वारयध्वं भो गौतमेश्वरपूजकान् ॥ ८९ ॥

अहिल्येश्वरदेवस्य शतानंदेश्वरस्य च ॥

शक्रादेशं तु संप्राप्य ते गता धरणीतले ॥ ६.२०८.९० ॥

कामादिका नरान्भेजुर्गौतमेश्वरपूजकान् ॥

तथाऽहिल्येश्वरस्यापि शतानंदेश्वरस्य च ॥ ९१ ॥

ततो भूयो मखा जाताः समग्रे धरणीतले ॥

संपूर्णदक्षिणाः सर्वे वतानि नियमास्तथा ॥ ९२ ॥

तीर्थयात्रा जपो होमो याश्चान्याः सुकृतक्रियाः ॥

एतत्सर्वं मया ख्यातं यत्पृष्टोऽस्मि धराधिप ॥ ९३ ॥

गयाकूप्यनुषंगेण शक्रगौतमचेष्टितम् ॥

बालमण्डनमाहात्म्यं शक्रेश्वरसमन्वितम् ॥ ९४ ॥

इन्द्रस्य स्थापनं मर्त्ये अहिल्याख्यानमेव च ॥

गौतमेश्वरमाहात्म्यं तथाहिल्येश्वरस्य च ॥ ९५ ॥

यश्चैतच्छृणुयान्नित्यं श्रद्धया परया युतः ॥

स मुच्येत्पातकात्सद्यः परदारसमुद्भवात् ॥ ९६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गौतमेश्वराहिल्येश्वर शतानन्देश्वरमाहात्म्यवर्णनंनामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २०९

https://sa.wikisource.org/s/fpg

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ आनर्त उवाच ॥ ॥

सांप्रतं मुनिशार्दूल शंखतीर्थ समुद्भवम्॥

माहात्म्यं वद मे कृत्स्नं श्रद्धा मे महती स्थिता ॥ १ ॥

अहो तीर्थमहो तीर्थं हाटकेश्वरसंज्ञितम् [।

क्षेत्रं यच्च धरापृष्ठे सर्वाश्चर्यमयं शुभम् ॥ २ ॥

नाहं तृप्तिं द्विजश्रेष्ठ प्रगच्छामि कथंचन ॥

शृण्वानस्तु सुमाहात्म्यं क्षेत्रस्यास्य समुद्भवम् ॥ ३ ॥

॥ विश्वामित्र उवाच ॥ ॥

अत्र ते कीर्तयिष्यामि पूर्ववृत्तं कथांतरम् ॥

शंखतीर्थस्य माहात्म्यं यथाजातं धरातले ॥ ४ ॥

आनर्ताधिपतिः पूर्वमासीदन्यो महीपतिः ॥

यथा त्वं सांप्रतं भूमौ सर्वलोकप्रपालकः ॥ ५ ॥

सोऽकस्मात्कुष्ठभाग्जातो विकलांगो बभूव ह ॥

अपुत्रः शत्रुभिर्व्याप्तस्त्रस्तश्च नृपसत्तमः ॥ ६ ॥

स सर्वैर्भूमिपालैश्च सर्वतः परिपीडितः ॥

राज्यभ्रंशसमोपेतः प्राप्तो रैवतकं गिरिम् ॥ ७ ॥

तत्रापि पीड्यते नित्यं सर्वतस्तु मलिम्लुचैः ॥ ८ ॥

हस्त्यश्वरथहीनस्तु कोशहीनो यदाऽभवत् ॥

स तदा चिंतयामास किं करोमि च सांप्रतम् ॥ ९ ॥

कलत्राण्यपि सर्वाणि ह्रियंते तस्करैर्बलात् ॥ ॥ 6.209.१० ॥

स एवं चिंतयानस्तु गतो वै नारदं विभुम् ॥

द्रष्टुं पार्थिवशार्दूल वैष्णवे दिवसे स्थिते ॥ ११ ॥

तत्रापश्यत्स संप्राप्तं नारदं मुनिसत्तमम् ॥

तीर्थयात्राप्रसंगेन दामोदरदिदृक्षया ॥ १२ ॥

तं प्रणम्याथ शिरसा कृतांजलिपुटः स्थितः ॥

प्रोवाच वचनं दीन उपविश्य तदग्रतः ॥ १३ ॥ ॥

॥ राजोवाच ॥ ॥

शत्रुभिः परिभूतोऽहं समतान्मुनिसत्तम ॥

ततो राज्यपरिभ्रंशात्संप्राप्तोऽत्र महागिरौ ॥ १४ ॥

विपिने तस्करैः पापैः प्रपीड्येऽहं समंततः ॥

यत्किंचिदश्वनागाद्यं मया सह समागतम् ॥ १५ ॥

तत्सर्वं तस्करैर्नीतं कोशा दारास्तथा वसु ॥

तस्माद्वद मुनिश्रेष्ठ वैराग्यं मे महत्स्थितम् ॥ १६ ॥

अन्यजन्मोद्भवं किंचिन्मम पापं सुदारुणम् ॥

येनेमां च दशां प्राप्तः सहसा मुनिसत्तम ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा मुनीश्वरः ॥

प्रोवाचाऽथ नृपं दीनं ज्ञात्वा दिव्येन चक्षुषा ॥ १८ ॥

॥ नारद उवाच ॥ ॥

न त्वया कुत्सितं किंचित्पूर्व देहांतरे कृतम् ॥

मया ज्ञातं महाराज सर्वं दिव्येन चक्षुषा ॥ १९ ॥

त्वमासीः पार्थिवः पूर्वं सिद्धपन्नगसंज्ञिते ॥

पत्तने सोमवंशीयः सर्व शत्रुनिबर्हणः ॥ 6.209.२० ॥

त्वया चेष्टं महायज्ञैः सदा संपूर्णदक्षिणैः ॥

महादानानि दत्तानि पूजिता ब्राह्मणोत्तमाः ॥ २१ ।।

तेन कर्म विपाकेन भूयः पार्थिवतां गतः ॥ २२ ॥

॥ आनर्त उवाच ॥ ॥

इह जन्मनि नो कृत्यं संस्मरामि विभो कृतम् ॥

तत्किं राज्यपरि भ्रंशः सहसा मे समुत्थितः ॥ २३ ॥

लक्ष्म्या हीनस्य लोकस्य लोकेऽस्मिन्व्यर्थतां व्रजेत् ॥

जीवितं मुनिशार्दूल विज्ञातं हि मयाऽधुना ॥ २४ ॥

मृतो नरो गतश्रीको मृतं राष्ट्रमराजकम् ॥

मृतमश्रोत्रिये दानं मृतो यज्ञस्त्वदक्षिणः ॥ २५ ॥

लक्ष्म्या हीनस्य मर्त्यस्य बांधवोऽपि विजायते।।

प्रार्थयिष्यति मां नूनं दृष्ट्वा तं चान्यतो व्रजेत् ॥ २६ ॥

यथा मां सांप्रतं दृष्ट्वा ये मयाऽपि प्रतर्पिताः ॥

तेऽपि दूरतरं यांति एष मां प्रार्थयि ष्यति ॥ २७ ॥

धनहीनं नरं त्यक्त्वा कुलीनमपि चोत्तमम् ॥

गच्छति स्वजनोऽन्यत्र शुष्कं वृक्षमिवांडजाः ॥ २८ ॥

तत्कार्यकारणार्थाय दरिद्रोऽ भ्येति चेद्गृहम् ॥

धनिनो भर्त्सयंत्येनं समागच्छंति नांतिकम् ॥ २९ ॥

कृपणोऽपि धनाढ्यश्चेदागच्छति हि याचितुम् ॥

एष दास्यति मे किंचि दिति चित्ते नृणां भवेत् ॥ 6.209.३० ॥

मम त्वं पूर्ववंशीयः पिता ते च पितुर्मम ॥

सदा स्नेहपरश्चासीत्त्वं च स्नेहविवर्जितः ॥ ३१ ॥

एवं ब्रुवंति लोकेऽत्र धनिनां पुरतः स्थिताः ॥

कुलीना अपि पापानां दृश्यंते धनलिप्सया ॥

दरिद्रस्य मनुष्यस्य क्षितौ राज्यं प्रकुर्वतः ॥ ३२ ॥

प्रशोषः केवलं भावी हृदयस्य महामुने ॥

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ॥

यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ३३ ॥

श्मशानमपि सेवंते धनलुब्धा निशागमे ॥

जनेतारमपि त्यक्त्वा नित्यं यांति सुदूरतः ॥ ३४ ॥

सुमूर्खोपि भवेद्विद्वानकुलीनोऽपि सत्कुलः ॥

यस्य वित्तं भवे द्धर्म्ये विपरीतमतोऽन्यथा ॥ ३५ ॥

निर्विण्णोऽहं मुनिश्रेष्ठ जीवितस्य च सांप्रतम् ॥

तस्माद्ब्रूहि किमर्थं मे दारिद्र्यं समुपस्थितम् ॥ ३६ ॥

कुष्ठश्चापि ममोपेतः शत्रुभिश्च पराभवम् ॥

अन्यजन्मांतरं दृष्टं त्वया दिव्येन चक्षुषा ॥ ३७ ॥

कुकर्मणा न संस्पृष्टं स्वल्पेनापि ब्रवीषि माम् ॥

एतज्जन्मातरं दृष्टं स्मरामि मुनिसत्तम ॥ ३८ ॥

न मया कुकृतं किंचित्कदाचित्समनुष्ठितम् ॥

तत्किं राज्यपरिभ्रंशो जातोऽयं मम सन्मुने ॥ ३९ ॥

अत्र मे कौतुकं जातं तस्माद्देहि विनिर्णयम् ॥

भवेन्न वा भवेत्कर्म कृतं यच्च शुभाशुभम् ॥ 6.209.४० ॥

॥ विश्वामित्र उवाच ।। ॥

तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा तु नारदः ॥

कृपया परयाविष्टस्ततः प्रोवाच सादरम् ॥ ४१ ॥

शृणु राजन्प्रवक्ष्यामि यथा शुद्धिः प्रजायते ॥

तव राज्यस्य संप्राप्तिर्यथा भूयोऽपि जायते ॥ ४२ ॥

तव भूमौ महापुण्यमस्ति क्षेत्रं जगत्त्रये ॥

हाटकेश्वरसंज्ञं तु तीर्थं तत्रास्ति शोभनम् ॥

शंखतीर्थमिति ख्यातं सर्वपातकनाशनम्॥ ४३॥

यस्तत्र कुरुते स्नानं श्रद्धया परया युतः ॥

अष्टम्यां शुक्लपक्षस्य संप्राप्ते मासि माधवे ॥ ४४ ॥

सूर्यवारे तु सम्प्राप्ते भास्करस्योदयं प्रति ॥

सर्वकुष्ठविनिर्मुक्तो जायते सूर्यसंनिभः ॥ ४५ ॥

यंयं काममभिध्यायेत्तंतं सर्वेषु दुर्लभम् ॥

स तदाऽऽप्नोत्यसंदिग्धं दृष्ट्वा शंखेश्वरं शुभम्॥ ४६ ॥

किं त्वया न श्रुतं तत्र स्वदेशे वसता नृप ॥

तस्य तीर्थस्य माहात्म्यं यत्त्वमत्र समागतः ॥४७॥

॥ सिद्धसेन उवाच ॥ ॥

कथं शंखेश्वरो देवः संजातो वद सन्मुने ॥ ४८ ॥

॥ नारद उवाच ॥ ॥

अहं ते कथयिष्यामि कथामेतां पुरातनीम् ॥

यथा शंखेश्वरो जातः शंखतीर्थं तु पार्थिव॥ ४९ ॥

आसतुर्ब्राह्मणौ पूर्वं लिखितः शंख एव च ॥

भ्रातरौ वेदविदुषौ तपस्युग्रे व्यवस्थितौ ॥ 6.209.५० ॥

कस्यचित्त्वथ कालस्य लिखितस्याश्रमं प्रति ॥

भ्रातुर्ज्येष्ठस्य संप्राप्तो नमस्कारकृते नृप ॥५१॥

सोऽपश्यदाश्रमं शून्यं लिखितेन विवर्जितम् ॥५२॥

अथापश्यद्वने तस्मि न्परिपक्वफलानि सः ॥

प्रणयात्प्रतिजग्राह मत्वा भ्रातुर्नृपाऽऽश्रमम् ॥५३॥

एतस्मिन्नन्तरे प्राप्तो लिखितस्तत्र चाश्रमे॥

यावत्पश्यति शंखं स प्रगृही तबृहत्फलम्॥५४॥

किमिदं विहितं पाप पापं साधुविगर्हितम् ॥

चौर्यकर्म त्वया निंद्यं यद्धृतानि फलानि च ॥५५॥

अनेन कर्मणा तुभ्यं तपो यास्य ति संक्षयम्॥

चौर्यकर्मप्रवृत्तस्य ब्राह्मणैर्गर्हितस्य च ॥५६॥

॥ शंख उवाच ॥ ॥

एकोदरसमुत्पन्नो ज्येष्ठभ्राता यथा पिता ॥

भूयादिति श्रुतिर्लोके प्रसिद्धा सर्वतः स्थिता ॥ ५७ ॥

तत्किं पुत्रस्य विप्रेन्द्र नाधिकारः पितुर्धने ॥

यथैवं निष्ठुरैर्वाक्यैर्निर्भर्त्सयसि मां विभो ॥ ५८ ॥ ॥

॥ लिखित उवाच ॥ ॥

न दोषो जायते हर्तुः पुत्रस्यात्र कथंचन ॥

एकत्र संस्थितस्यात्र पितुर्वित्तमसंशयम् ॥ ५९ ॥

विभक्तस्तु यदा पुत्रो भ्राता वाऽपहरेद्धनम्॥

तदा दोषमवाप्नोति चौर्योत्थं मतमेव मे ॥ 6.209.६० ॥

पुत्रस्य तु पुनर्वित्तं पिता हरति सर्वदा ॥

न तस्य विद्यते दोषो विभक्त स्यापि कर्हिचित्॥ ६१ ॥

अत्र श्लोकः पुरा गीतो मनुना स्मृतिकारिणा ॥

तं तेऽहं संप्रवक्ष्यामि धर्मशास्त्रोद्भवं वचः ॥ ६२ ॥

त्रय एवाधप्रोक्ता भार्या दासस्तथा सुतः ॥

यत्ते समधिगच्छंति यस्य ते तस्य तद्धनम् ॥ ६३ ॥

॥ शंख उवाच ॥ ॥

यद्येवं चौर्यदोषोऽस्ति मम तात महत्तरः॥

निग्रहं कुरु मे शीघ्रं येन न स्यात्तपःक्षयः॥६४॥

विश्वामित्र उवाच॥

तस्य तं निश्चयं ज्ञात्वा शस्त्रमादाय निर्मलम्॥

चकर्ताथ भुजौ तस्य भ्राता भ्रातुश्च निर्घृणः॥

सोपि च्छिन्नकरो विप्रो व्यथयापि समन्वितः॥६५॥

मन्यमानः प्रसादं तं भ्रातुर्ज्येष्ठस्य पार्थिव ॥ ६६ ॥

ततस्तु कामदं क्षेत्रं हाटकेश्वरसंज्ञितम् ॥

मत्वा प्राप्य तपस्तेपे कंचित्प्राप्य जलाशयम् ॥ ६७ ॥

वर्षास्वाकाशशायी च हेमन्ते सलिलाश्रयः ॥

पञ्चाग्निसाधको ग्रीष्मे षष्ठकालकृताशनः ॥ ६८ ॥

संस्नाप्य भास्करं स्थाणुं तत्पुरः शतरुद्रियम् ॥

जपन्सामोक्तरुद्रांश्च भव रुद्रांस्तथा जपन् ॥

प्राणरुद्रांस्तथा नीलान्स्कन्दसूक्तसमन्वितान् ॥ ६९ ॥

ततो वर्षसहस्रांते तुष्टस्तस्य महेश्वरः ॥

प्रोवाच दर्शनं गत्वा सह सूर्य वृषेश्वरैः ॥ 6.209.७० ॥

॥ महेश्वर उवाच ॥ ॥

शंख तुष्टोऽस्मि ते वत्स तपसानेन सुव्रत ॥

तस्मात्कथय मे क्षिप्रं यद्ददामि तवाऽधुना ॥ ७१ ॥

॥ ।। शंख उवाच ॥ ॥

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥

जायेतां तादृशौ हस्तौ यादृशो मे पुरा स्थितौ ॥ ७२ ॥

त्वयाऽत्रैव सदा वासः कार्यः सुरवरेश्वर ॥

लिंगे कृत्वा दयां देव ममोपरि महत्तराम् ॥ ७३ ॥

एतज्जलाशयं नाथ मम नाम्ना धरातले ॥

प्रसिद्धिं यातु लोकस्य यावच्चन्द्रार्कतारकाः ॥ ७४ ॥

अत्र यः कुरुते स्नानं धृत्वा मनसि दुर्लभम् ॥

किंचिद्वस्तु समग्रं तु तस्य संपत्स्यते विभो ॥ ७५ ॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

अद्याहं दर्शनं प्राप्तस्तव चैवाष्टमीदिने ॥

माधवस्य सिते पक्षे यस्माद्ब्राह्मणसत्तम ॥ ७६ ॥

तस्मात्संक्रमणं लिंगे तावकेऽस्मिन्द्विजोत्तम ॥

करिष्यामि न सन्देहो दिनमेकमसंशयम् ॥ ७७ ॥

यश्चात्र दिवसे प्राप्ते तीर्थेऽत्रैव भवोद्भवे ॥

स्नानं कृत्वा रवेर्वार उदयं समुपस्थिते ॥ ७८ ॥

पूजयिष्यति मे मूर्तिं त्वया संस्थापितां द्विज ॥

कुष्ठव्याधिविनिर्मुक्तो मम लोकं स यास्यति ॥ ७९ ॥

शेषकालेऽपि विप्रेन्द्र अज्ञानविहितादघात् ॥

मुक्तिं प्राप्स्यत्यसंदिग्धं मम वाक्याद्द्विजोत्तम ॥ 6.209.८० ॥

तथा तवापि यौ हस्तौ छिन्नावेतावुभावपि ॥

तस्मिन्योगेऽभिषेकात्तौः स्यातां भूयोऽपि तादृशौ ॥ ८१ ॥

एष मे प्रत्ययो विप्र भविष्यति तवाऽधुना ॥

भूयः स्नानं विधाय त्वं ततो मूर्तिं ममार्चय ॥ ८२ ॥

अन्येऽपि व्यंगतां प्राप्ताः संयोगेऽत्र तव स्थिते ॥

स्नात्वा मां पूजयिष्यंति मुक्तिं यास्यंति ते द्विज ॥ ॥ ८३ ॥

एवमुक्त्वा सहस्रांशुस्ततश्चादर्शनं गतः ॥

शंखोऽपि तत्क्षणात्स्नात्वा पूजयित्वा दिवाकरम् ॥ ८४ ॥

यावत्पश्यति चात्मानं तावद्धस्तसमन्वितम् ॥

आत्मानं पश्यमानस्तु विस्मयं परमं गतः ॥ ८५ ॥

ततःप्रभृति तत्रैव कृत्वाऽऽश्रमपदं नृप ॥

तपस्तेपे द्विज श्रेष्ठो गतश्च परमां गतिम् ॥ ८६ ॥

तस्मात्त्वमपि राजेंद्र संयोगं प्राप्य तत्त्वतः ॥

तेनैव विधिना स्नात्वा त्वं पूजय दिवाकरम् ॥ ८७ ॥

यश्चैतच्छृणुयान्नित्यं पठेद्वा पुरतो रवेः ॥

तस्यान्वयेऽपि नो कुष्ठी कदाचित्सम्प्रजायते ॥ ८८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिताया षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शंखादित्यशंखतीर्थोत्पत्तिवृत्तांतवर्णनंनाम नवोत्तरद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१०



॥ ॥ विश्वामित्र उवाच ॥ ॥

तच्छ्रुत्वा वचनं तस्य देवर्षेर्नारदस्य च ॥

सिद्धसेनो महीपालः प्राप्य तं योगमुत्तमम् ॥ १ ॥

माधवे मासि संप्राप्ते अष्टम्यां सूर्यवासरे ॥

सूर्योदये तु संप्राप्ते यावत्स्नात्वाऽर्चयेद्रविम् ॥२॥

तावत्कुष्ठविनिर्मुक्तः सहसा समपद्यत ॥

ततो दिव्यवपुर्भूत्वा सन्तोषं परमं गतः ॥ ३ ॥

प्रायश्चित्तं ततश्चक्रे तांबूलस्य च भक्षणम् ॥

अज्ञानेन कृतं यच्च चूर्णपत्रसमन्वितम् ॥ ४ ॥

ततश्च परमां लक्ष्मीं संप्राप्तः स महीपतिः ॥

पितृपैतामहं राज्यं स प्रचक्रे यथा पुरा ॥ ५ ॥

एतत्ते सर्वमाख्यातं शंखतीर्थसमुद्भवम् ॥

माहात्म्यं पार्थिवश्रेष्ठ किं भूयः श्रोतुमि च्छसि ॥ ६ ॥

॥ आनर्त उवाच ॥ ॥

अत्याश्चर्यमिदं ब्रह्मन्यत्त्वया परिकीर्तितम् ॥

यल्लक्ष्मीस्तस्य सन्नष्टा चूर्णपत्रस्य भक्षणात् ॥ ७ ॥

कीदृक्तेन कृतं तस्य प्रायश्चित्तं विशुद्धये ॥

कीदृक्तेन कृतं तच्च निजराज्यं यथा पुरा॥ ८ ॥

॥ विश्वामित्र उवाच ॥ ॥

एषा पुण्यतमा मेध्या नागवल्ली नराधिप ॥

अयथावत्कृता वक्त्रे बहून्दोषान्प्रयच्छति ॥

तस्माद्यत्नेन संभक्ष्या दत्त्वा चैव स्वशक्तितः ॥ ९ ॥

॥ आनर्त उवाच ॥ ॥

नागवल्ली कथं जाता कस्माद्दोषो महान्स्मृतः ॥

अयथावद्भक्षणाच्च तन्मे वक्तुमिहार्हसि ॥ ६.२१०.१० ॥

॥ विश्वामित्र उवाच ॥ ॥

प्रश्नभारो महानेष त्वया मे परिकीर्तितः ॥

तथापि च वदिष्यामि यदि ते कौतुकं नृप ॥

यस्मात्सञ्जायते दोषश्चूर्णपत्रस्य भक्षणात्॥ ११ ॥

अमृतार्थं पुरा देवैर्मथितः कलशोदधिः ॥

मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ १२ ॥

मुखदेशे बलिर्लग्नः पुच्छदेशेऽखिलाः सुराः ॥

वासुदेवमतेनैव सन्दधाराथ कच्छपः ॥ १३ ॥

मन्दरे भ्रममाणे तु प्रागेव नृपसत्तम ॥

आनर्त सहसा जातं रत्नत्रितयमेव च ॥ १४ ॥

नीलांबरधरः कृष्णः पुरुषो वक्रनासिकः ॥

कृष्णदन्तः स्थूलशिरा दीर्घग्रीवो महोदरः ॥

शूर्पाकारांघ्रिरेवाऽसौ चिपिटाक्षो भयावहः ॥ १५ ॥

तथा तद्रूपिणी तस्य कुभार्या राक्षसी यथा ॥

शिशुनांगुलिलग्नेन गर्भश्रमपरायणा ॥ १६ ॥

ततो देवगणाः सर्वे दानवाश्च विशेषतः ॥

मन्थानं तत्परित्यज्य तान्ग्रहीतुं प्रधाविताः ।। १७ ॥

अथ तान्विकृतान्दृष्ट्वा सर्वे शंकासमन्विताः ॥

जगृहुर्नैव राजेंद्र जहसुश्च परस्परम् ॥ १८ ॥

अथोवाच बलिर्दैत्यः कृतांजलिपुटः स्थितः ॥

ब्रह्माऽऽदि यल्लभेत्सर्वं यत्पुरस्तात्प्रजायते ॥ १९ ॥

रत्नत्रितयमेतद्धि तस्माद्गृह्णातु पद्मजः ॥

येन सिद्धिर्भवेदस्मिन्मन्थने कस्य चाऽर्पणात् ॥ ६.२१०.२० ॥

तद्वाक्यं विष्णुना तस्य शंसितं शंकरेण तु ॥

इंद्राद्यैश्च सुरैः सर्वैर्दानवैश्च विशेषतः २१॥

एतस्मिन्नंतरे ब्रह्मा जग्राह त्रितयं च तत्॥

दाक्षिण्यात्सर्वदेवानामनिच्छन्नपि पार्थिव ॥

ममन्थुः सागरं राजन्पुनस्ते यत्नमाश्रिताः ॥ २२ ॥

ततश्च वारुणी जाता दिव्यगन्धसमन्विता ॥
बलिना संगृहीता सा प्रत्यक्षं बलविद्विषः ॥ २३ ॥
आवर्ते चापरे जाते निष्क्रांतः कौस्तुभो मणिः ॥
स गृहीतो महाराज विष्णुना प्रभविष्णुना ॥ २४ ॥
अथापरे स्थिते तत्र महावर्ते निशापतिः ॥
सञ्जातः स वृषांकेन संगृहीतश्च तत्क्षणात् ॥ २५ ॥
पारिजातस्ततो जातो दिव्यगन्धसमन्वितः ॥
स गृहीत्वा सुरैः सर्वैः स्थापितो नंदने वने ॥ २६ ॥
तस्यानंतरमेवाथ सुरभी वत्ससंयुता ॥
निष्क्रांता व्योममार्गेण गोलोकं समवस्थिता ॥ २७ ॥
ततो धन्वंतरिर्जातो बिभ्रद्धस्ते कमंडलुम् ॥
संपूर्णममृतेनैव स देवैर्दानवैर्नृप ॥ २८ ॥
गृहीतो युगपत्क्रुद्धैः परस्परजिगीषया ॥
देवानां हस्तगो वैद्यो दैत्यानां च कमण्डलुः॥ २९ ॥
ततस्तं लोभसंयुक्ता ममंथुः सागरं नृप ॥
पद्महस्तात्र संजाता ततो लक्ष्मीः सितांबरा ॥ ६.२१०.३० ॥
स्वयमेव वृतो विष्णुस्तया पार्थिवसत्तम ॥
मथ्यमाने ततोतीव समुद्रे देवदानवैः ॥ ३१ ॥
कालकूटं समुत्पन्नं येन सर्वे सुरासुराः ॥
संप्राप्ताः परमं कष्टं प्रभग्नाश्च दिशो दश ॥ ३२ ॥
तं दृष्ट्वा भगवाञ्छंभुस्तीव्रं तीवपराक्रमः ॥
भक्षयामास राजेंद्र नीलकण्ठस्ततोऽभवत् ॥ ३३ ॥
अथ संत्यज्य मंथानं मंदरं वासुकिं तथा ॥
अमृतार्थेऽभवद्युद्धं दैत्यानां विबुधैः सह ॥ ३४ ॥
अथ स्त्रीरूपमाधाय विष्णुर्दैत्यानुवाच तान् ॥
ततो हृष्टो बलिस्तस्यै दत्त्वा पीयूषमेव तत् ॥ ३५ ॥
विश्वासं परमं गत्वा युद्धं चक्रे सुरैः सह ॥
ततो विष्णुः परित्यज्य स्त्रीरूपं पुरुषाकृतिः ॥ ३६ ॥

तदेवामृतमादाय ययौ यत्र दिवौकसः ॥

अब्रवीत्तान्सुहृष्टात्मा पिवध्वममृतं सुराः ॥ ३७ ॥

येनामरत्वमासाद्य व्यापादयत दानवान् ॥

ते तथेति प्रतिज्ञाय पपुः पीयूषमुत्तमम् ॥ ३८ ॥

अमराश्च ततो जाता जघ्नुः संख्ये महासुरान् ॥ ३९ ॥

तेषां पानविधौ तत्र वर्तमाने महीपते ॥

राहुर्विबुधरूपेण पपौ पीयूषमुत्सुकः ॥ ६.२१०.४० ॥

स लक्षितो महादैत्यश्चंद्रार्काभ्यां च तत्क्षणात् ॥

निवेदितो हरे राजन्नायं देवो महासुरः ॥ ॥ ४१ ॥

तच्छ्रुत्वा वासुदेवेन तस्य चक्रं सुदर्शनम्॥

वधाय पार्थिवश्रेष्ठ मुक्तं वज्रसमप्रभम् ॥ ४२ ॥

यावन्मात्रं शरीरं तत्तस्य व्याप्तं महीपते ॥

अमृतेन ततः कृत्तममोघेनापि तच्छिरः ॥ ४३ ।।

ततोऽमरत्वमापन्नः स यावत्सिंहिकासुतः ॥

तावत्प्रोक्तोऽच्युतेनाथ साम्ना परमवल्गुना ॥ ४४ ।।

त्यज दैत्यान्महाभाग देवानां संमतो भव ॥

संप्राप्स्यसि परां पूजां सदा त्वं ग्रहमंडले ॥ ४५ ॥

स तथेति प्रतिज्ञाय त्यक्त्वा तान्दैत्यसत्तमान् ॥

पूजां प्राप्नोति मर्त्यानां संस्थितो ग्रहमण्डले ॥ ४६ ॥

एतस्मिन्नंतरे दैत्या निर्जिताः सुरसत्तमैः ॥

दिशो जग्मुः परित्रस्ताः केचिन्मृत्युमुपागताः ॥ ४७ ॥

पीतशेषं च पीयूषं स्थापितं नन्दने वने ॥

नागराजस्य यत्रैव स्थितमालानमेव च ॥ ४८ ॥

अहर्निशं मदस्रावी करींद्रः सोऽपि संस्थितः ॥

तत्प्रभावैः प्रभिन्नः स पीयूषस्य कमंडलुः ॥४९॥

ततो वल्ली समुत्पन्ना तस्माच्चैव कमण्डलोः ॥

तत्रालानसमारूढा वृद्धिं च परमां गता ॥ ६.२१०.५० ॥

तदुद्भवानि पत्राणि गृहीत्वा सुरसत्तमाः ॥

अपूर्वाणि सुगंधीनि मत्वा ते भक्षयंति च ॥ ५१ ॥
वक्त्रशुद्धिकृते राजन्विशेषेण प्रहर्षिताः ॥ ५२ ॥
अथ धन्वतरिर्वैद्यः स्वबुद्ध्या पृथिवीपते ॥
नागालाने यतो जाता नागवल्ली भविष्यति ॥ ५३ ॥
सदा स्मरस्य संस्थानं मम वाक्याद्भविष्यति ॥
नागवल्लीति वै नाम तस्याश्चक्रे ततः परम् ॥ ५४ ॥
संयोगं च चकाराथ तांबूलं जायते यथा ॥
पूगीफलेन चूर्णेन खदिरेणापि पार्थिव ॥ ५५ ॥
कस्यचित्त्वथ कालस्य वाणीवत्सरको नृपः ॥
प्रतोषं नीतवाञ्छक्रं तपसा निर्मलेन च ॥ ५६ ॥
ततस्तत्तपसा तुष्ट इन्द्रो वचनमब्रवीत् ॥ ५७ ॥
॥ इन्द्र उवाच ॥ ॥
भोभोः पार्थिव तुष्टोऽस्मि तपसाऽनेन सांप्रतम् ॥
ब्रूहि यत्ते वरं दद्मि मनसा वांछितं सदा ॥ ५८ ॥
सोऽब्रवीद्यदि मे तुष्टो यदि देयो वरो मम ॥
विमानं खेचरं देहि येनागच्छामि ते गृहे ॥
नित्यमेव धरापृष्ठाद्वंदनार्थं तव प्रभो ॥५९॥
स तथेति प्रतिज्ञाय हंसबर्हिणनादितम् ॥
विमानं प्रददौ तस्मै मनोमारुतवेगधृक् ॥ ६.२१०.६० ॥
स तत्र नित्यमारुह्य प्रयाति त्रिदशालयम् ॥
भक्त्या परमया युक्तः सहस्राक्षं प्रवंदितुम् ॥ ६१ ॥
तस्य शक्रः स्वहस्तेन तांबूलं च प्रयच्छति ॥
स च तद्भक्षयामास प्रहृष्टेनांतरात्मना ॥ ६२ ॥
वृद्धभावेऽपि संप्राप्ते तस्य कामोऽत्यवर्द्धत ॥
तांबूलस्य प्रभावेन सुमहान्पृथिवीपते ॥ ६३ ॥
अथ शक्रमुवाचेदं स राजा विनयान्वितः ॥
नागवल्लीप्रदानेन प्रसादो मे विधीयताम् ॥ ६४ ॥
मर्त्यलोके समानेतुं प्रचारं येन गच्छति ॥

स तथेति प्रतिज्ञाय तस्मै तां प्रददौ तदा ॥ ६५ ॥

गत्वा निजपुरं सोपि स्वोद्यानेऽस्थापयत्तदा ॥

ततः कालेन महता प्रचारं सा गता क्षितौ ॥ ६६ ॥

यस्याः स्वादनतो लोकः कामात्मा समपद्यत ॥

न कश्चिद्यजनं चक्रे याजनं च विशेषतः ॥

अन्या धर्मक्रियाः सर्वाः प्रणष्टा धर्मसंभवाः ॥ ६७ ॥

ततो देवगणाः सर्वे यज्ञभागविवर्जिताः ॥

पीड्यमानाः क्रुधा विष्टा गत्वा प्रोचुः पितामहम् ॥ ६८ ॥

मर्त्यलोके सुरश्रेष्ठ नष्टा धर्मक्रिया भृशम् ॥

कामासक्तो यतो लोकस्तांबूलस्य च भक्षणात् ॥

तस्मात्कुरु प्रसादं नो येनास्माकं क्रिया भवेत् ॥ ६९ ॥

एतस्मिन्नेव काले तु पुष्करस्थं पितामहम् ॥

यजनार्थे समायातं दरिद्रो वीक्ष्य पार्थिव ॥ ६.२१०.७० ॥

प्रणिपत्य ततः प्राह विनयावनतः स्थितः ॥

निर्विण्णोऽहं सुरश्रेष्ठ ब्राह्मणानां गृहे स्थितः ॥ ७१ ॥

तस्मात्कीर्तय मे स्थानं श्रेष्ठं वित्तवतां हि यत् ॥

तत्र सञ्जायते तृप्तिः शाश्वती प्रचुरा प्रभो ॥ ७२ ॥

तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा पितामहः ॥

अब्रवीच्च दरिद्रं तं छिद्रार्थं धनिना मिह ॥ ७३ ॥

चूर्णपत्रे त्वया वासः सदा कार्यो दरिद्र भोः ॥

तांबूलस्य तु पर्णाग्रे भार्यया मम वाक्यतः ॥ ७४ ॥

पर्णानां चैव वृंतेषु सर्वेषु त्वत्सुतेन च ॥

रात्रौ खदिरसारे च त्वं ताभ्यां सर्वदा वस ॥ ७५ ॥

धनिनां छिद्रकृत्प्रोक्तमेतत्स्थानचतुष्टयम् ॥

पार्थिवानां विशेषेण मम वाक्या द्व्रज द्रुतम् ॥ ७६ ॥

॥ नारद उवाच ॥ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नराधिप ॥ ७७ ॥

तांबूलोत्थानि छिद्राणि यथा स्युर्धनिनामिह ॥

तानि सर्वाणि चीर्णानि त्वया राजन्नजानता ॥

तेन वै विभवोच्छित्तिः संजाता सहसा नृप ॥ ७८ ॥

॥ राजोवाच ॥ ॥

तदर्थमपि मे ब्रूहि प्रायश्चित्तं मुनीश्वर ॥

कदाचिद्भक्षणं मे स्यात्तांबूलस्य तथाविधम् ॥ ७९ ॥

येन सञ्जायते शुद्धिः कुतांबूलसमुद्भवा ॥ ६.२१०.८० ॥

॥ विश्वा मित्र उवाच ॥ ॥

शृणु राजन्प्रवक्ष्यामि प्रायश्चित्तं तु यच्चरेत् ॥

आश्वासनेन शुद्ध्यर्थं कुतांबूलस्य भक्षणात् ॥ ८१ ॥

पर्वकालं समुद्दिश्य सम्यक्छ्रद्धासमन्वितः ॥

आनयेद्ब्राह्मणं राजन्वेदवेदांगपारगम् ॥ ८२ ॥

प्रक्षाल्य चरणौ तस्य वाससी परिधापयेत् ॥

संपूज्य गंधपुष्पाद्यैस्ततः पत्रं हिरण्मयम् ॥

स्वशक्त्या कारयित्वाऽथ चूर्णं मुक्ताफलं न्यसेत् ॥ ८३ ॥

पूगीफलं च वैडूर्यं खदिरं रूप्यमेव च ॥

मन्त्रेणानेन विप्राय तथैव च समर्पयेत् ॥ ८४ ॥

यन्मया भक्षितं पूर्वं वृन्तं पत्रसमुद्भवम्॥

चूर्णपत्रं तथैवान्यद्रात्रौ खदिरमेव च ॥ ८५ ॥

तस्य पापस्य शुद्ध्यर्थं तांबूलं प्रतिगृह्यताम् ॥

ततस्तु ब्राह्मणो मंत्रमेवं राजन्नुदाहरेत् ॥ ८६ ॥

यजमानहितार्थाय सर्वपापविशुद्धये ॥

अज्ञानाज्ज्ञानतो वापि कुतांबूलं प्रभक्षितम् ॥ ८७ ॥

भक्षयिष्यसि यच्चान्यत्कदाचिन्मे प्रसादनात् ॥

तस्य दोषो न ते भावी मम वाक्यादसंशयम् ॥ ८८ ॥

अनेन विधिना दत्त्वा तांबूलं शुद्धिमाप्नुयात् ॥

कुतांबूलस्य दोषेण गृह्यते न नरो नृप ॥ ८९ ॥

तस्मात्त्वं हि महाराज व्रतमेतत्समाचर ॥

बहु पुण्यतमं ह्येतन्महाभोगविवर्द्धनम् ॥ ६.२१०.९० ॥

यः प्रयच्छति राजेन्द्र विधिनानेन भक्तितः ॥

जन्मजन्मान्तरे वापि न तांबूलेन मुच्यते ॥ ९१ ॥

तांबूलं भक्षयित्वा यो नैतद्दानं प्रयच्छति ॥

तांबूलवर्जितः सोऽत्र भवेज्जन्मनिजन्मनि ॥ ९२ ॥

तांबूलवर्जितं यस्य मुखं स्यात्पृथिवीपते ॥

कृपणस्य दरिद्रस्य तद्बिलं न हि तन्मुखम् ॥ ९३ ॥

तांबूलं ब्राह्मणेन्द्राय यो दत्त्वा प्राक्प्रभक्षयेत् ॥

सुरूपो भाग्यवान्दक्षो भवेज्जन्मनिजन्मनि ॥ ९४ ॥

एतत्ते सर्वमाख्यातं कुतांबूलस्य भक्षणात् ॥

यत्फलं जायते पुंसां यद्दानेन महीपते ॥ ९५ ॥

शंखादित्यानुषंगेण तांबूलस्य च भक्षणे ॥

ये दोषा ये गुणा राजन्दानं चैव प्रभक्षणे ॥ ९६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये तांबूलोत्पत्ति तांबूलमाहात्म्यवर्णनंनाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २११



॥ विश्वामित्र उवाच ॥ ॥

राज्ञो दारिद्र्यदोषस्य कुष्ठव्याधेश्च कारणम् ॥

कथयित्वा पुनः प्राह नारदो मुनिसत्तमः ॥ १ ॥

॥ नारद उवाच ॥ ॥

एतत्ते सर्वमाख्यातं राजन्कुष्ठस्य कारणम् ॥

दारिद्र्यस्य च यत्सम्यग्ज्ञात्वा दिव्येन चक्षुषा ॥ २ ॥

अधुना संप्रवक्ष्यामि यथा तव पराभवः ॥

शत्रुभ्यः संप्रजातोऽत्र द्विजानामपमानतः ॥ ३ ॥

आनर्ताधिपतिर्योऽत्र कश्चिद्राज्येऽभिषिच्यते ॥

स पूर्वं गच्छति ग्रामं नागराणां प्रभक्तितः ॥ ४ ॥

त्वया तत्कल्पितं राजन्नैव दत्तं प्रमादतः ॥

पराभूता द्विजास्ते च याचमाना मुहुर्मुहुः ॥ ५ ॥

तथा कोपवशाद्यानि शासनानि द्विजन्मनाम् ॥

लोपितानि त्वयान्यानि पितृपैतामहानि च ॥ ६ ॥

तेन तेऽत्र पराभूतिः संजाता शत्रुसंभवा ॥

एवं ज्ञात्वा द्विजेद्राणां शास नानि प्रयच्छ भोः ॥ ७ ॥

गृहीतानि च यान्येव तेषां मोक्षं समाचर ॥

तच्छ्रुत्वा पार्थिवः सोऽथ शंखतीर्थे प्रभक्तितः ॥ ८ ॥

स्नात्वा विप्रान्समा हूय मध्यगेन समन्वितान् ॥

शंखादित्यस्य पुरतः प्रक्षाल्य चरणौ नृप ॥ ९ ॥

ददौ च शासनशतं प्रक्षाल्य चरणांस्ततः ॥

षड्विंशत्यधिकं राजा नागराणां महात्मनाम् ॥ ६.२११.१० ॥

एतस्मिन्नंतरे तत्र शत्रवो ये च संस्थिताः ॥

सर्वे मृत्युं समापन्ना ब्राह्मणानां प्रसादतः ॥ ११ ॥

विश्वामित्र उवाच ॥ ॥

एतत्ते सर्वमाख्यातं शंखतीर्थसमुद्भवम् ॥

प्रभावं पार्थिवश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥ १२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शंखतीर्थमाहात्म्यवर्णनंनामैकादशोत्तरद्विशततमोऽध्यायः ॥२११॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१२

https://sa.wikisource.org/s/fpw
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

श्रुतं तीर्थत्रयं पुण्यं हाटकेश्वरसंज्ञिते ॥

क्षेत्रेऽत्र यत्त्वया प्रोक्तमस्माकं सूतनंदन ॥ १ ॥

विश्वामित्रीयमाहात्म्यं श्रोतुमिच्छामहे वयम्॥

सांप्रतं तत्समाचक्ष्व परं कौतूहलं हि नः ॥ २ ॥

॥ सूत उवाच ॥ ॥

समुद्रस्यापि पारोऽत्र लक्ष्यते च क्षितेरपि ॥

तारकाणां मुनेस्तस्य न गुणानां द्विजोत्तमाः ॥ ३ ॥

लक्ष्यते केनचित्पारो गाधेः पुत्रस्य धीमतः ॥

क्षत्रियोऽपि द्विजत्वं यः संप्राप्तो द्विजसत्तमाः॥ ॥ ४

अंत्यजत्वं गतस्यापि त्रिशंकोः पृथिवीपतेः ॥

यज्ञभागभुजो देवाः प्रत्यक्षेण विनिर्मिताः ॥ ५ ॥

ब्रह्मणः स्पर्धया येन पुरा सृष्टिर्द्विजोत्तमाः ॥

प्रारब्धा च ततो देवैः प्रणिपत्य निवारितः ॥ ६ ॥

तस्य तीर्थस्य माहात्म्यं साप्रतं वदतो मम ॥

श्रूयतां ब्राह्मणश्रेष्ठाः सर्वपातकनाश नम् ॥ ७ ॥

तेन तत्र कृतं कुण्डं स्वहस्तेन महात्मना ॥

शस्त्रं विनापि भूपृष्ठं प्रविदार्य समंततः ॥ ८ ॥

तत्र ध्यात्वा समानीता पातालाज्जाह्नवी नदी ॥

मर्त्यलोके समायातं यस्यास्तोयं सुनिर्मलम् ॥ ९ ॥

सुस्वादु च तथा स्नानात्सर्वपातकनाशनम् ॥

तेनापि स्थापितस्तत्र भास्करो वारितस्करः ॥ ६.२१२.१० ॥

यः सप्तम्यां सूर्यवारे स्नात्वा तस्य ह्रदे शुभे ॥

माघमासे सिते पक्षे नमस्यति दिवाकरम् ॥

स कुष्ठैर्मुच्यते सर्वैस्तथा पापैर्द्विजो त्तमाः ॥ ११ ॥

पश्चिमोत्तरदिग्भागे तस्यास्ति जलसंभवा ॥
धन्वंतरिकृता वापी सर्वरोगविनाशिनी ॥ १२ ॥
तत्र पूर्वं तपस्तेपे धन्वं तरिरुदारधीः ॥
ववन्दे तपसा युक्तो ध्यायमानः समाहितः ॥ १३ ॥
ततः कालेन महता संतुष्टस्तस्य भास्करः ॥
उवाच वरदोऽस्मीति प्रार्थयस्व महामते ॥ १४ ॥
॥ धन्वंतरिरुवाच ॥ ॥
अत्र कुण्डे नरो भक्त्या यः स्नानं कुरुते विभो ॥
तस्य स्यात्सर्वरोगाणां संक्षयः सुरसत्तम ॥ १५ ॥
॥ श्रीभगवानुवाच ॥ ॥
अद्य शस्ते दिने योऽत्र सप्तम्यां रविवासरे ॥
सूर्योदये नरः स्नानं करिष्यति समाहितः ॥
व्याधिग्रस्तः स नीरोगस्तत्क्षणात्संभविष्यति ॥ १६ ॥
नीरोगश्चेप्सितान्कामान्निष्कामो मोक्षमेष्यति ।१ १७ ॥
एवमुक्त्वा सुरश्रे ष्ठोंऽतर्धानं स गतो रविः ॥
धन्वन्तरिः प्रहृष्टात्मा स्वस्थानं च गतस्ततः ॥ १८ ॥
कस्यचित्त्वथ कालस्य रत्नाक्षोऽथ महीपतिः ॥
अयोध्याधि पतिः ख्यातः सूर्यवंशसमुद्भवः ॥ १९ ॥
कृतज्ञश्च वदान्यश्च स्वदारनिरतः सदा ॥
शूरः परमतेजस्वी सर्वशत्रुनिषूदनः ॥ ६.२१२.२० ॥
पूर्वकर्मविपाकेन तस्य भूमिपतेर्द्विजाः ॥
कुष्ठव्याधिरभूद्रौद्रो दुश्चिकित्स्यो जगत्त्रये ॥२१॥
तदस्ति नौषधं लोके यत्तेन न कृतं द्विजाः ॥
कुष्ठग्रस्तेन वा दानं यत्र दत्तं महात्मना ॥ २२ ॥
यथायथौषधान्येव स करोति ददाति च ॥
तथातथा तस्य कायो व्याधिना क्षामितो भृशम् ॥ २३ ॥
ततो वैराग्यमापन्नः स नृपो द्विजसत्तमाः ॥
पुत्रं राज्येऽथ संस्थाप्य वांछयामास पावकम् ॥

निषिद्धोऽपि हि तैः सर्वैः कलत्रैराप्तसेवकैः ॥ २४ ॥

दत्त्वा दानानि विप्रेभ्यः पूजयित्वा सुरोत्तमान् ॥

संभाष्य च सुहृद्वर्गं शासयित्वा निजं सुतम् ॥ २५ ॥

एतस्मिन्नेव काले तु भ्रममाणे यदृच्छया ॥

कश्चित्कार्पटिकः प्राप्तो दिव्यरूपवपुर्धरः ॥ २६ ॥

अथासौ व्याकुलं दृष्ट्वा तत्सर्वं नृपतेः पुरम् ॥

अपृच्छद्विस्मयाविष्टो दृष्ट्वा कञ्चिन्नरं द्विजाः ॥ २७ ॥ ॥

॥ कार्पटिक उवाच ॥ ॥

किमेषा व्याकुला भद्रे सर्वा जाता महापुरी ॥

निरानन्दाऽश्रुपूर्णाक्षैर्बालवृद्धैर्निषेविता ॥ २८ ॥

सोऽब्रवीन्नृपतिश्चायं कुष्ठव्याधिसमन्वितः ॥

साधयिष्यति सन्दीप्तं सुनिर्विण्णो हुताशनम् ॥ २९ ॥

तेनेयं नगरी कृत्स्ना परं दुःखमुपागता ॥

गुणैरस्य समाविष्टा नूनं मृत्युं प्रयास्यति ॥ ६.२१२.३० ॥

तच्छ्रुत्वा सत्वरं गत्वा नृपं कार्पटिकोऽब्रवीत् ॥ ३१ ॥

सर्वं जनं नरेन्द्रस्य मृतं जीवापयन्निव ॥

मा नृपानेन दुःखेन व्याधिजेन हुताशनम् ॥

प्रविश त्वं स्थिते तीर्थे सर्वव्याधिक्षयावहे ॥ ३२ ॥

मदीयो भूपते देह ईदृगासीद्यथा तव ॥

तत्र स्नातस्य सद्योऽथ जात ईदृक्पुनः प्रभो ॥ ३३ ॥

सप्तम्यां सूर्यवारेण भास्करस्योदयं प्रति ॥

यस्तत्र कुरुते स्नानं व्याधिग्रस्तो नरो भुवि ॥३४॥

स व्याधिना विनि र्मुक्तस्तत्क्षणात्कल्पतां व्रजेत्॥

तथा पापविनिर्मुक्तो यथाहं नृपसत्तम ॥३५॥

॥ राजोवाच ॥ ॥

कस्मिन्देशे महातीर्थं तादृशं वद मे द्रुतम् ॥ ॥ ३६ ॥

॥ कार्पटिकउवाच ॥ ॥

अस्ति भूमितले ख्यातं नागरं क्षेत्रमुत्तमम् ॥

कुष्ठव्याधिसमाक्रांतो गतोऽहं तत्र भूपते ॥ ३७ ॥

तस्य सन्दर्शनार्थाय तीर्थयात्रापरायणः ॥

तत्र मां दीनमालोक्य व्याधिग्रस्तं सुदुःखितम्॥

कश्चित्तत्राश्रयः प्राह तपस्वी कृपयान्वितः ॥ ३८ ॥

पश्चिमोत्तरदिग्भागे देवस्य जलशायिनः ॥

तीर्थमस्ति महापुण्यं विश्वामित्रजलावहम्॥३९॥

तत्र गत्वा कुरु स्नानं सप्तम्यां रविवासरे ॥

माघमासे तु संप्राप्ते शुक्लपक्षे विशेषतः ॥ ६.२१२.४० ॥

येन निर्याति ते कुष्ठो भास्करस्योदयं प्रति ॥

तच्छ्रुत्वाऽहं च तत्प्राप्तः सप्तम्यां सूर्यसंयुजि ॥

ततश्च कृतवान्स्नानं निर्झरे तत्र शांभवे ॥४१॥

ततस्तस्माद्विनिष्क्रांतो यावत्पश्याम्यहं तनुम्॥

तावन्नृपेदृशी जाता सत्यमेतत्तवोदितम् ॥४२॥

तस्मात्त्वमपि राजेंद्र तत्र स्नानं समाचर ॥

सप्तम्यां सूर्यवारेण भास्करस्योदयं प्रति ॥४३॥

येन ते नश्यति व्याधिर्विशेषमपि पातकम् ॥

तच्छ्रुत्वा स नृपस्तूर्णं तेनैव सहितो ययौ ॥ ४४ ॥

चकार स तथा स्नानं सप्तम्यां सूर्यवासरे ॥

माघमासे तु संप्राप्ते विश्वामित्रजले शुभे ॥ ४५ ॥

ततः कुष्ठविनिर्मुक्तस्तत्क्षणात्समपद्यत ॥

दिव्यरूपवपुर्द्धारी कामदेव इवापरः ॥ ४६ ॥

अथ तुष्टो नरेंद्रस्तु तस्मै कार्पटिकाय च ॥

ददौ कोटित्रयं हेम्नः प्रोवाच स ततो वचः ॥ ४७॥

त्वत्प्रसादाद्विमुक्तोऽस्मि रोगादस्मात्सुदारुणात् ॥

तस्मात्त्वं गच्छ गेहं स्वं स्थास्येऽहं चात्र निर्भरम् ॥ ४८ ॥

करिष्यामि तपो नित्यं स्वकलत्रसम न्वितः ॥

राज्ये संस्थापितः पुत्रः समर्थो राज्यकर्मणि ॥ ४९ ॥

इत्युक्त्वा प्रेरयामास तं तथान्यान्समागतान् ॥

सेवकास्वगृहायैव स्वयं तत्रैव संस्थितः ॥ ६.२१२.५० ॥

कृत्वाऽऽश्रमपदं रम्यं स्वकलत्रसमन्वितः ॥

संप्राप्तश्च परां सिद्धिं कालेन द्विजसत्तमाः ॥ ५१ ॥

तस्य नाम्ना ततः ख्यातं तीर्थ मेतत्त्रिविष्टपे ॥

सर्वव्याधिहरं रम्यं सर्वपातकनाशनम् ॥५२॥

तेन संस्थापितस्तत्र देवदेवो दिवाकरः ॥

रत्नादित्य इति ख्यातो निजनाम्ना महा त्मना ॥ ५३ ॥

सप्तम्यां सूर्यवारेण तत्र स्नात्वा प्रपश्यति ॥

यस्तु पापविनिर्मुक्तः सूर्यलोकं स गच्छति ॥ ५४ ॥

यदन्यत्तत्र संवृत्तं क्षेत्रजातं द्विजो त्तमाः ॥

तदहं कीर्तयिष्यामि शृणुध्वं सुसमाहिताः ॥ ५५ ॥

आसीत्तत्र पुमान्कश्चिद्देशे ग्राम्यो जरात्मकः ॥

कुष्ठी तथापि नित्यं स करोति पशु रक्षणम् ॥५६॥

एकदा रक्षतस्तस्य पशूंस्तत्र गिरेरधः ॥

एकः पशुर्विनिष्क्रांतः सत्पथात्तृणलोभतः ॥५७॥

सप्तम्यां रविवारेण पतितस्तस्य निर्झरे ॥

न च संलक्षितस्तेन गच्छमानः कथंचन ॥ ५८ ॥

अथ यावद्गृहे सोऽथ भोजनार्थं समुद्यतः ॥

तावत्तस्य पशोः स्वामी भर्त्सयन्समुपागतः ॥५९॥

नायातः स पशुः कस्मान्मदीयो मामके गृहे ॥

तस्मादानय तं शीघ्रं नो चेत्प्राणान्हरामि ते ॥ ६.२१२.६० ॥

॥ सूत उवाच ॥ ॥

तच्छ्रुत्वा भय संत्रस्तः स कुष्ठी सत्वरं ययौ ॥

तेन मार्गेण येनैव दिवा भ्रांतो महीतले ॥ ६१ ॥

अथ दूरात्स शुश्राव तस्य रावं पशोस्तदा ॥

पतितस्य महागर्ते निशांते तमसि स्थिते ॥६२॥

ततो गत्वाऽथ तं गर्तं प्रविश्य जलमध्यतः ॥

चकर्ष तं पशुं कृच्छ्रात्पंकमध्यात्सुदारुणात् ॥

समादायाथ तं हर्म्यं प्रजगाम शनैःशनैः ॥ ६३ ॥

अर्पयित्वाथ तं तस्य स्वकीयं त्वाश्रमं गतः ॥ ६४ ॥

ततः सुप्तो महाभागाः स प्रबुद्धः पुनर्यदा ॥

प्रभाते वीक्षते गात्रं यावत्कुष्ठविवर्जितम् ॥ ६५ ॥

शोभया परया युक्तं विस्मयोत्फुल्ललोचनः ॥

चिंतयामास किं ह्येतदकस्माद्रोगसंक्षयः ॥ ६६ ॥

नूनं तस्य प्रभावोऽयं तीर्थस्याद्य निशागमे ॥

मयावगाहितं यच्च पशोरर्थं सुकर्द्दमम् ॥ ६७ ॥

ततश्च वीक्षयामास तेन गत्वा सुकौतुकात् ॥

यावत्कंडूविनिर्मुक्तस्तेजसा परिवारितः ॥ ६८ ॥

तत्र स्थाने स्वयं गत्वा ज्ञात्वा च तीर्थमुत्तमम् ॥

तपस्तेपे स तत्रैव ध्यायमानो दिवाकरम् ॥६९॥

अरण्यवासिनं सम्यग्दिवारात्रमतंद्रितः ॥

गतश्च परमां सिद्धिं दुर्लभां त्रिदशैरपि ॥ ६.२१२.७० ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥ ७१ ॥

पूजयेच्चापि तं देवं भास्करं वारितस्करम् ॥

अद्यापि कलिकालेऽपि तत्र स्नातो नरः शुचिः ॥ ७२ ॥

तत्र पुण्यजले कुण्डे सप्तम्यां सूर्यवासरे ॥

यस्तं पूजयते भक्त्या सोऽपि पापैः प्रमुच्यते ॥७३॥

गायत्र्यष्टसहस्रं यो जपेत्तत्पुरतः स्थितः ॥

सोऽपि रोगविनिर्मुक्तो मुच्यते सर्वपातकैः ॥ ७४ ॥

तस्योद्देशेन यो दद्याद्धेनुं श्रद्धासमन्वितः ॥

न तस्यान्वयजातोऽपि व्याधिना परिगृह्यते ॥ ७८५ ॥

एतद्वः सर्वमाख्यातं मयादित्यस्य संभवम् ॥

माहात्म्यं श्रवणाद्यस्य नरः पापाद्विमुच्यते ॥ ७६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये रत्नादित्यमाहात्म्यवर्णनंनाम द्वादशोत्तरद्विशततमोऽध्यायः ॥ २१२ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१३

https://sa.wikisource.org/s/fpx
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

रत्नादित्यस्य माहात्म्यमेतद्वः परिकीर्तितम् ॥

सर्वकुष्ठहरं यच्च सर्वपातकनाशनम् ॥

भूयस्तथैव माहात्म्यं महद्वै श्रूयतां रवेः ॥ १ ॥

पुरासीद्ब्राह्मणः कश्चित्कुष्ठव्याधिसमाकुलः ।१

तेन चाराधितः सूर्यस्तत्रस्थेन द्विजोत्तमाः ॥ २ ॥

पूर्वदक्षिणदिग्भागे समासाद्य ततः परम् ॥

रक्त चन्दनजां कृत्वा प्रतिमां भावितात्मना ॥ ३ ॥

ततो वर्षसहस्रांते तुष्टस्तस्य दिवाकरः ॥

वरदोऽस्मीति तं प्राह दृष्टिगोचरमागतः ॥ ४ ॥ ॥

॥ ब्राह्मण उवाच ॥ ॥

यदि तुष्टोऽसि मे देव कुष्ठव्याधिं हर प्रभो ॥

नान्येन कारणं मेऽस्ति राज्येनापि त्रिविष्टपे ॥ ५ ॥

॥ श्रीभगवानुवाच ॥ ॥

सप्तम्यां सूर्यवारेण कुरु विप्र प्रदक्षिणाम् ॥

शतमष्टोत्तरं यावत्स्नात्वा पुण्यह्रदे शुभे ॥

फलहस्तः पृथक्त्वेन ततः कुष्ठेन मुच्यसे ॥६॥

अन्योऽत्र गां गतो योऽपि व्रतमेतत्करिष्यति ॥

सर्वरोगविनिर्मुक्तो मम लोकं स गच्छति ॥ ७ ॥

॥ श्रीसूर्य उवाच ॥ ॥

तच्छ्रुत्वा स तथा चक्रे ब्राह्मणः श्रद्धयाऽन्वितः ॥

विमुक्तश्च तदा कुष्ठाद्दिव्यदेहमवाप्तवान् ॥ ८ ॥

अथ भूयोऽपि तं प्राह नीरोगं भगवान्रविः ॥

किं ते प्रियं करोम्यन्यद्वद ब्राह्मणसत्तम ॥ ९ ॥

सोऽब्रवीत्सर्वदैवात्र स्थातव्यं भगवन्विभो ॥ ६.२१३.१० ॥

॥ श्रीभगवानुवाच ॥ ॥

अतः परं ममावासः स्थानेऽत्र च भविष्यति ॥

नाम्ना कुहरवासाख्या संज्ञा मम भविष्यति ॥ ११ ॥

कस्यचित्त्वथ कालस्य विष्णुपुत्रो बभूव ह ॥

सांबोनाम सुरूपाढ्यो जांबवत्यां द्विजोत्तमाः ॥ १२ ॥

क्षोभसंजननः स्त्रीणां मातॄणामपि स द्विजाः ।१

अथ तं राजमार्गेण गच्छंतं यदुसत्तमम् ॥ १३ ॥

पुरनार्योऽपि संतुष्टा वीक्षांचक्रुः सुकौतुकात् ॥

गृहकार्याणि संत्यज्य समारूढा गवाक्षकान् ॥ १४ ॥

तस्य कामात्मदेहस्य दर्शनार्थं समुत्सुकाः ॥

काश्चिदर्धानुलिप्तांग्यः काश्चिदेकांजितेक्षणाः ॥ १५

अर्धसंयमितैः केशैस्तथान्यास्त्यक्तबालकाः॥

एकस्मिंश्चरणे काश्चिन्नियोज्योपानहं द्रुताः । १६ ॥

पादुकां च द्वितीये तु पर्यधावन्नितंबिनीः ॥

व्रजंतीषु तथान्यासु वनितासु गवाक्षकान् ॥ १७ ॥

व्याक्रोशंति क्रुधाविष्टाः शिशवो गुरवस्तथा ॥

नीवीबन्धनविश्लेषसमाकुलितचेतसः ॥ १८ ॥

ययुरेवापराः स्वेषु गवाक्षेषु वरांगनाः ॥

स चकर्ष तदा तासां पतितैर्नेत्ररश्मिभिः ॥ १९ ॥

हृदयानि धरापृष्ठे कामदेवसमो युवा ॥

काचिद्दृष्ट्वैव तद्रूपं तस्य सांबस्य कामिनी ॥ ६.२१३.२० ॥

निश्चला कामतप्तांगी लिखितेव विभाव्यते ॥

काचिदग्निसमान्मुक्त्वा निश्वासान्कामपीडिता ॥ २१ ।।

एकास्तं च समालोक्य रूपयौवनसंयुतम् ॥

गवाक्षात्प्रपतंति स्म निश्चेष्टा धरणीतले ॥ २२ ॥

अन्याः परस्परालाप प्रकुर्वंति वरस्त्रियः ॥

एका सा कामिनी धन्या यास्य चक्रेवगूहनम् ॥ २३

निःशेषां रजनीं प्राप्य माघमाससमुद्भवाम् ॥

आस्तां तावत्स्त्रियो याश्च नरा अपि निरर्गलम् ॥ २४ ॥

जल्पंति चेदृशं सर्वं तस्य रूपेण विस्मिताः ॥

अत्रये वदन्ति सेवाम एनमर्थेन वर्जिताः ॥ २५ ॥

वीक्ष्यामो वदनं येन नित्यमेवेंदुसंनिभम् ॥

कर्णाभ्यां वारिता वृद्धिर्नेत्रयोरप्यसंशयम् ॥

नो चेज्जानीमहे नैव कियती सं भविष्यति ॥ २६ ॥

एवं संवीक्ष्यमाणस्तु कामिनीभिर्नरैस्तथा ॥

निर्ययौ राजमार्गेण पितृदर्शनलालसः ॥ २७ ॥

भगिन्यो मातरो याश्च भ्रातृपत्न्यश्च याः स्थिताः ॥

अवस्थामीदृशीं प्राप्ता ब्राह्मणानामपि स्त्रियः ॥

मातरोऽपि च यास्तस्य भगिन्यश्च विशेषतः ॥ ॥ २८ ॥

अन्यस्मिन्नहनि प्राप्ते प्रावृट्काले निशागमे ॥

कृष्णपक्षे तमोभूते अलक्ष्येऽपि गते पुरः ॥ २९ ॥

तन्माता नन्दिनीनाम कामदेवशरार्दिता ॥

तत्पत्न्या वेषमाधाय तच्छय्यायामुपस्थिता ॥ ६.२१३.३० ॥

सोऽपि तां दयितां ज्ञात्वा सेवयामास कामिनीम् ॥

रतोपचारैर्विविधैरश्रद्धेयविनिर्मितैः ॥ ३१ ॥

तया तत्र यदुश्रेष्ठो विकल्पमकरोत्तदा ॥

अंगराजसुता या मे प्राणेभ्योऽपि गरीयसी ॥ ॥ ३२ ॥

नैवंविधं रतं वेद अनया यद्विनिर्मितम् ॥

वेश्या अपि न जानंति रतमीदृक्कथञ्चन ॥ ३३ ॥

ततो गाढं करे धृत्वा दीपमानीय तत्क्षणात् ॥

यावत्पश्यति सा माता नन्दिनीति च या स्मृता ॥ ३४ ॥

ततश्च गर्हयामास रपे किमिदं कृतम् ॥

गर्हितं सर्वलोकानां नर कार्तिप्रदं तथा ॥ ३५ ॥

सापि लज्जासमोपेता महाभयसमाकुला ॥

प्रणष्टा तत्क्षणादेव भयेन महताऽन्विना ॥ ३६ ॥

सांबोऽपि प्रलपन्नार्तो निद्रां लेभे न वै द्विजाः ॥

रात्रिशेषमभूत्तस्य तदा वर्षशतोपमम् ॥ ३७ ॥

अथ रात्र्यां व्यतीतायां प्रोद्गते रविमण्डले ॥

दुःखेन महता युक्तः प्रोत्थितः स हरेः सुतः ॥ ३८ ॥

आवश्यकमपि त्यक्त्वा कंचिद्ब्राह्मणसत्तमम् ॥

धर्मशास्त्रविधानज्ञं समानीयाथ चाब्रवीत् ॥ ३९ ॥

रहस्ये विनयोपेतः कृतांजलिपुटः स्थितः ॥

॥ सांब उवाच ॥ ॥

मात्रा स्वस्रा दुहित्रा वा स्वयं स्याद्यदि मोहनम् ॥ ६.२१३.४० ॥

कथं शुद्धिर्भवेत्तस्य परमार्थेन मे वद ॥

धर्मशास्त्राणि संवीक्ष्य सर्वाणि च यथाक्रमम् ॥ ४१ ॥

॥ ब्राह्मण उवाच ॥ ॥

परनार्याः कृते वत्स प्रायश्चित्तं विनिर्मितम् ॥

धर्म द्रोणेषु सर्वेषु वर्णानां च पृथग्विधम् ॥ ४२ ॥

आसां च तिसृणां चैव त्रयाणां परिकीर्तितम् ॥

एवमेवं विनिर्दिष्टं प्रायश्चित्तं विशुदये ॥ ४३ ॥

मात्रा मोहनमासाद्य भगिन्या वाथ यादव ॥

दुहित्रा वा प्रमादाच्च कार्यं संशोधनं बुधैः ॥

शुद्ध्यर्थं तिंगिनीमेकां नान्यज्जानाम्यहं यतः ॥ ४४ ॥

धर्मद्रोणेषु सर्वेषु निर्णयोऽयमुदाहृतः ॥

यो मया तव संदिष्टो नान्योस्ति यदुपुंगव ॥ ४५ ॥

अन्यथा यो वदेत्पृष्टः प्रायाश्चित्तं स्वच्छन्द तः ॥

तस्य पापस्य भागी स्याद्यथा कर्ता तथैव सः ॥ ४६ ॥

॥ सांब उवाच ॥ ॥

तिंगिन्याः किं स्वरूपं च किं प्रमाणं द्विजोत्तम ॥

सर्वं विस्तरतो ब्रूहि ममास्त्यत्र प्रयोजनम् ॥ ४७ ॥

॥ ब्राह्मण उवाच ॥ ॥

गोवाटचूर्णमादाय गर्तां भृत्वा स्वमानजाम् ॥

शयनं तत्र कर्तव्यं यावद्वक्त्रेण यादव ॥ ४८ ॥

उपरिष्टात्तच्च चूर्णं धार्यं गोवाटसंभवम् ॥
यावद्वक्त्रप्रमाणं च वर्जयित्वा स्वमाननम् ॥ ४९ ॥
ततः पादप्रदेशे तु ज्वालयेद्धव्यवाहनम् ॥
यथा शनैः शनैर्दाहः शरीरस्य प्रजायते ॥ ६.२१३.५० ॥
न चैव चालयेदंगं कथंचित्तत्र संस्थितः ॥
नैवाक्रंदं तथा कुर्याद्ध्यायेदेकं जनार्दनम् ॥ ५१ ॥
ततो जीवितनाशेन गात्रशुद्धिः प्रजायते ॥ ५२ ॥
तिंगिन्या यत्स्वरूपं च तन्मया परिकीर्तितम् ॥
प्रायश्चित्तमिदं सम्यङ्महापातकनाशनम् ॥ ५३ ॥
तच्छ्रुत्वा वचनं तस्य सांबो जांबवतीसुतः ॥
हृदये निश्चयं कृत्वा तिंगिनीसाधकोद्भवम् ॥ ५४ ॥
ततः प्रोवाच विजने वासुदेवं घृणान्वितः ॥
ताताहं विप्रलब्धस्तु नंदिन्या तव भार्यया ॥ ५५ ॥
भार्याया रूपमाधाय पापया तमसि स्थिते ॥
सा मया निजभार्येयमिति मत्वा निषेविता ॥ ५६ ॥
ततस्तु चेष्टितैर्ज्ञात्वा गर्हयित्वा विसर्जिता ॥
ततःप्रभृति गात्रे मे कुष्ठव्याधिरयं स्थितः ॥ ॥ ५७ ॥
मयाथ धर्मशास्त्रज्ञः कश्चित्पृष्टो द्विजोत्तमः ॥
प्रायश्चित्तं यथोक्तं मे वद मातृनिषेवणात् ॥ ५८ ॥
तेनोक्तं साधनं सम्यक्तिंगिन्या मम शुद्धये ॥
सोऽहं तां साधयिष्यामि तस्य पापस्य शुद्धये ॥ ५९ ॥
अनुज्ञां देहि मे शीघ्रं कार्यं येन करोम्यहम् ॥
क्षंतव्यं च मया बाल्ये यत्किंचित्कुकृतं कृतम्॥ ६.२१३.६० ॥
मम माता यथा दुःखं न कुर्यात्त्वं तथा कुरु ॥ ६१ ॥
तच्छ्रुत्वा वचनं तस्य वज्रपातोपमं हरिः ॥
बाष्पपूर्णेक्षणो दीनस्ततः प्रोवाच गद्गदम् ॥ ६२ ॥
न त्वया कामतः पुत्र कृत्यमेतदनुष्ठितम् ॥
न ज्ञानेन कृतं यस्मात्तस्मात्स्वल्पं हि पातकम् ॥ ६३ ॥

जानता यत्कृतं पापं तच्चैवाक्षयतां व्रजेत् ॥
न करोति महीपालो यदि तस्य विनिग्रहम् ॥ ६४ ॥
तस्मात्ते कीर्तयिष्यामि प्रायश्चित्तं विशुद्धये ॥
दानं चैव महाभाग येन कुष्ठं प्रणश्यति ॥ ६५ ॥
उक्तानि प्रतिषिद्धानि पुनः संभावितानि च ॥
सापेक्षनिरपेक्षाणि मुनिवाक्यान्यशेषतः ॥ ६६ ॥
तदत्र विषये पुत्र मम वाक्यं समाचर ॥
भविष्यति महच्छ्रेय इह लोके परत्र च ॥ ६७ ॥
हाटकेश्वरजे क्षेत्रे विश्वामित्रप्रतिष्ठितः ॥
मार्तण्डोऽस्ति सुविख्यातः सर्वकुष्ठविनाशकः ॥ ६८ ॥
सूर्यवारेण सप्तम्यां संप्राप्ते मासि माधवे ॥
नक्षत्रे पितृदैवत्ये शुक्लपक्षे समागते ॥ ६९ ॥
भास्करस्योदये प्राप्ते श्रद्धापूतेन चेतसा ॥
शतमष्टोत्तरं यावत्कुरुते च प्रदक्षिणाम् ॥ ६.२१३.७० ॥
फलैः श्रेष्ठतमैश्चैव तत्प्रमाणैः पृथक्पृथक् ॥
तस्य कुष्ठं विनिर्याति सद्य एव न संशयः ॥ ७१ ॥
नीरोगः कुरुते यस्तु रवेस्तस्य प्रदक्षिणाः ॥
तावद्युगं पुमानेष सूर्यलोके महीयते ॥ ७२ ॥
सूर्यवारेण यो मर्त्यस्तस्य कृत्वा ण्दक्षिणाम् ॥
नमस्करोति सद्भक्त्या सोऽपि रोगैः प्रमुच्यते ॥ ७३ ॥
तस्मात्त्वं हि महाराज तमाराधय भास्करम् ॥
देवं वै विधिनानेन यो मयोक्तोऽखिलस्तव ॥ ७४ ॥
अविकल्पेन मनसा समाराधय सत्वरम् ॥
मुक्तरोगे विपाप्माथ दिब्यदेहमवाप्स्यसि ॥ ७५॥
मा कुरुष्व विषादं त्वं कुष्ठव्याधिसमुद्रवम् ॥
तस्मिन्क्षेत्रे स्थिते देवे कुहराश्रयसंज्ञिते ॥ ७६ ॥
अथ तद्वचनं श्रुत्वा प्रस्थितो विष्णुनन्दनः ॥ ७७ ॥
॥ सूत उवाच ॥ ॥

एतच्छ्रुत्वा वचस्तस्य देवदेवस्य चक्रिणः ॥

चकार गमने बुद्धियोगं सांबोऽर्बुदं प्रति ॥ ७८ ॥

ततः शुभेऽहनि प्राप्ते हस्त्यश्वरथसंयुतः ॥

प्रतस्थे स सुतो विष्णोः सेनया परिवारितः ॥ ७९ ॥

अनुयातः सुदूरं च कृष्णेनाक्लिष्टकर्मणा ॥

बाष्पपूर्णे क्षणेनैव सर्वमातृजनेन च ॥ ६.२१३.८० ॥

बलभद्रेण वीरेण चारुदेष्णेन धीमता ॥

युयुधानानिरुद्धाभ्यां प्रद्युम्नेन च धीमता ॥ ८१ ॥

ततो जांबवती पुत्रं दृष्ट्वा तीर्थोन्मुखं तदा ॥

गच्छमानं प्रचक्रेऽथ प्रलापान्कुररी यथा ॥ ८२ ॥

हा हतास्मि विनष्टास्मि मंदभाग्या ह्यभागिनी ॥

एकोपि तनयो यस्या ममाप्येनां दशां गतः ॥ ८३ ॥

अथ तां रुदतीं दृष्ट्वा प्रोवाच मधुसूदनः ॥

किममंगलमेतस्य प्रस्थितस्य करिष्यसि ॥८४॥

बाष्पपूर्णेक्षणा दीना मुक्तकेशी विशेषतः ॥

एष व्याधिविनिर्मुक्तस्तीर्थयात्राफलान्वितः ॥

कुष्ठव्याधिपरित्यक्तः पुनरेष्यति तेंऽतिकम् ॥ ८५ ॥

एतस्मिन्नंतरे यानादवतीर्य त्वरान्वितः ॥

सांबोऽसौ प्रस्थितस्तत्र यत्र जांबवती स्थिता ॥ ८६ ॥

स तां प्रणम्य हृष्टात्मा कृतांजलिपुटः स्थितः ॥

प्रणिपत्य विहस्यो च्चैर्वाक्यमेतदुवाच ह ॥८७॥

मा त्वं मातर्वृथा दुःखमस्मदर्थे करिष्यसि ॥

आगमिष्याम्यहं शीघ्रं तीर्थयात्रां विधाय वै ॥८८॥

॥ जांबवत्युवाच ॥ ॥

रक्षतु त्वां वने वत्स सर्वास्ता वनदेवताः ॥

श्वापदेभ्यः पिशाचेभ्यो दुष्टेभ्यः पुत्र सर्वतः ॥८९॥

शिरस्ते पातु गोविंदः कण्ठं च मधुसूदनः ॥

बाहुदेशं हृषीकेशो हृदयं दैत्यनाशनः ॥६.२१३.९॥।

जठरं पुंडरीकाक्षः कटिं पातु गदाधरः ॥

जानुनोर्युगलं कृष्णः पादौ च धरणीधरः ॥ ९१ ॥

एवं संस्पृश्य हस्तेन निजेनांगानि तस्य सा॥

समालिंग्य समाघ्राय मूर्धदेशे मुहुर्मुहुः ॥ ९२ ॥

प्रेषयामास तं पुत्रं कृतरक्षं यशस्विनी ॥

सा सर्वांतःपुरीयुक्ता निवृता तदनन्तरम् ॥ ९३ ॥

अश्रुपूर्णेक्षणा दीना निःश्वसन्ती यथोरगी ॥

तथा च भगवान्विष्णुर्यादवैः सकलैः सह ॥ ९४ ॥

प्रविष्टो द्वारकापुर्या सांबं प्रोष्य ततः परम्॥

अश्रुपूर्णेक्षणो दीनो बलभद्रपुरःसरः ॥ ९५ ॥

पुत्रैः पौत्रैस्तथा मित्रैर्बांधवैरपरैरपि ॥

द्वारकाया विनिष्क्रम्य सांबोऽपि द्विजसत्तमाः ॥ ९६ ॥

संप्राप्तश्च क्रमेणाथ सिंधुसागरसंगमे ॥

यत्र योगीश्वरः साक्षादंबरीषप्रतिष्ठितः ॥ ९७ ॥

अद्यापि तिष्ठते विष्णुर्जंतूनां पापनाशनः ॥

तत्र स्नात्वा समभ्यर्च्य देवं योगीश्वरं ततः ॥ ९८ ॥

ददौ दानानि विप्रेभ्यो नानारूपाणि शक्तितः ॥

दीनांधकृपणेभ्यश्च तथैवान्येभ्य एव च ॥ ९९ ॥

यानानि वस्त्ररत्नानि यद्यच्च येन वांछितम् ॥

स त्रिरात्रं हरेः पुत्रः स्थित्वा तत्र समाहितः ॥ ६.२१३.१०० ॥

च्यवनस्याश्रमं पुण्यं जगामाथ ततः परम् ॥

यत्र संतिष्ठते विष्णुश्च्यवनेन प्रतिष्ठितः ॥ १ ॥

सिंधोस्तटे च पुण्ये च सर्वपातकनाशनः ॥

तत्रापि विप्रमुख्येभ्यो ददौ दानानि यादवः ॥ २

वांछितानि यथोक्तानि शास्त्रदृष्टेन कर्मणा ॥

तत्रापि संयतः सांब स स्थित्वा श्रद्धयान्वितः ॥ ३ ॥

त्रिरात्रं प्रजगामाथ स्नात्वा सिंधूदके शुभे ॥

ततस्तु पुष्करादीनि समुद्दिश्य शनैः शनैः ॥ ४ ॥

पुष्करावासिनं देवं ध्यायमानो ह्यहर्निशम् ॥

तस्तु पुष्करं प्राप्य क्रमेण यदुसत्तमः ॥५॥

पुण्ये कुण्डजले स्नातः संतर्प्य पितृदेवताः॥

सप्तम्यां सूर्यवारेण गृहीत्वाथ फलानि च ॥

गतः संतिष्ठते यत्र देवो वै विष्णु सूचितः ॥ ६॥

पूजयित्वा ततो भक्त्या देवं कुहरवासिनम् ॥

वस्त्रानुलेपनैर्धूपैर्नैवेद्यैस्तु पृथग्विधैः ॥७॥

ततः प्रदक्षिणाश्चक्रे फलहस्तः शनैःशनैः ॥

प्रपठन्सूर्यगायत्रीं श्रद्धया परया युतः ॥ ८ ॥

यथायथा करोत्येष रवेस्तस्य प्रदक्षिणाम् ॥

तथातथा च संयाति तस्य कुष्ठं द्विजोत्तमाः ॥ ९ ॥

तत्र क्षणेऽभवत्तस्य चित्ते सांबस्य धीमतः ॥

मुक्तोऽहं कुष्ठरोगेण निर्विकल्पं द्विजोत्तमाः ॥ ६.२१३.११० ॥

ततश्च सहितं तेन यत्किंचित्तत्र चागतम् ॥

हस्त्यश्वरथरत्नाढ्यं तत्सर्वं भक्तिपूर्वकम् ॥ ११ ॥

नागराणां ददौ सर्वं तथान्यद्ग्रामपंचकम् ॥

सांबाऽऽदित्यं प्रतिष्ठाप्य ततः संप्रस्थितो गृहम् ॥ १२ ॥

किंचिदुर्वरितं यच्च तत्सर्वं भक्तिसंयुतम् ॥

प्रददौ सूर्यविप्रेभ्यः पूजयित्वा दिवाकरम् ॥ १३ ॥

अष्टौ वाजिसहस्राणि नागानां च शतत्रयम् ॥

रथानां षट्शतान्येव अश्वैर्युक्तानि वाजिभिः ॥

अनंतानि च रत्नानि दत्त्वा सांबो गृहं गतः ॥ १४

य एतत्पठते भक्त्या सांबाख्यानमनुत्तमम् ॥

शृणोति वाऽन्वये तस्य न कुष्ठं संप्रजायते ॥ १५ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं विश्वामित्रीयमुत्तमम् ॥

चतुर्थं च पुण्यतीर्थं स्त्रीणां चैव शुभावहम् ॥ ११६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विश्वामित्रीयमाहात्म्ये कुहरवासिसांबादित्यप्रभाववर्णनंनाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥ २१३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१४



॥ सूत उवाच ॥ ॥

तथान्योपि च तत्रास्ति विश्वामित्रप्रतिष्ठितः ॥

गणनाथो द्विजश्रेष्ठाः सर्वसिद्धिप्रदो नृणाम् ॥ १ ॥

माघमासे चतुर्थ्यां च शुक्लायां पूजयेत्तु यः ॥

स च संवत्सरं यावत्सर्वै विघ्नैर्विमुच्यते ओ। २ ॥

॥ ऋषय ऊचुः ॥ ॥

गणनाथस्य चोत्पत्तिं सांप्रतं सूत नो वद ॥

कथमेष समुत्पन्नः किं माहात्म्यः प्रकीर्तितः ॥ ३ ॥ ॥

॥सूत उवाच ॥ ॥

एष चोत्पादितो गौर्या निजांगमलतः स्वयम् ॥

क्रीडार्थं मानुषैरंगैर्मातंगाननशोभितः ॥४॥

चतुर्हस्तसमोपेत आखुवाहनगस्तथा ॥

कुठारहस्तश्च तथा मोदकाशनतोषकृत् ॥ ५ ॥

सर्वसिद्धिप्रदो लोके भक्तानां च विशेषतः ॥

एष पूर्वं प्रभोः कार्ये संग्रामे तारकामये ॥६॥।

संग्राममकरोद्रौद्रं न कृतं यच्च केनचित् ॥

निहता दानवाः सर्वे संख्यया परिवर्जिताः ॥ ७ ॥

ततः शक्रेण तुष्टेन प्रोक्तः संग्रामभूमिपः ॥

क्षत विक्षतसर्वांगो रुधिरेण परिप्लुतः ॥ ८ ॥

अस्मदर्थे त्वया युद्धं यत्कृतं सुगजानन ॥

निहता दानवाः सर्वे संख्यया परिवर्जिताः ॥९॥

तस्मात्त्वं सर्वदेवानामपि पूज्यो भविष्यसि ॥

किंपुनर्मानुषाणां च ये नित्यं विघ्नसंप्लुताः ॥ ६.२१४.१० ॥

ये त्वां संपूजयिष्यंति कार्यारंभेषु सर्वतः ॥

कार्यसिद्धिर्न संदेहस्तेषां भूयाद्गिरा मम ॥ ११ ॥

एवमुक्त्वा सहस्राक्षो विससर्जाथ तं तदा ॥

संमान्य बहुमानेन गौरीशंकरपार्श्वतः ॥ १२ ॥

अयमर्थः पुरा पृष्टो रोहिताश्वेन धीमता ॥

सर्वविघ्नविनाशार्थं मार्कंडेयं महामुनिम् ॥ १३ ॥

तमेवार्थं महाभागाः कथयिष्ये यथार्थतः ॥

तच्छृणुध्वं पुरावृत्तं सर्वं सर्वे समाहिताः ॥ १४ ॥

॥ रोहिताश्व उवाच ॥ ॥

भगवन्नत्र ये मर्त्याः सर्वे विघ्नसमन्विताः ॥

शुभकृत्येषु सर्वेषु जायंते शुचयोऽपि च ॥ ॥ १५ ॥

प्रारब्धेषु च कार्येषु धर्मजेषु विशेषतः ॥

तानि विघ्नानि जायन्ते यैस्तत्कार्यं न सिध्यति ॥ १६ ॥

तस्माद्विघ्नविनाशाय किंचिन्मे व्रतमा दिश ॥

व्रतं वा नियमो वाऽथ तपो वा दानमेव च ॥ १७ ॥

सकृच्चीर्णेन येनात्र यावज्जीवति मानवः ॥

तावन्न जायते विघ्नमाजन्ममरणांतिकम् ॥ ॥ १८ ॥

॥ मार्कण्डेय उवाच ॥ ॥

अत्र ते कीर्तयिष्यामि सर्वविघ्नविनाशनम् ॥

व्रतं सर्वगुणोपेतं सर्वपापप्रणाशनम् ॥

विश्वामित्रेण सञ्चीर्णं यत्पुरा भावितात्मना ॥ १९ ॥

विश्वामित्र इति ख्यातो गाधिपुत्रः प्रतापवान् ॥

वसिष्ठेन समं तस्य वैरमासीन्महात्मनः ॥ ६.२१४.२० ॥

ब्राह्मण्यार्थे न सम्प्रोक्तः कथंचित्स महातपाः ॥

ब्राह्मणस्त्वं वसिष्ठेन ततो वैरमजायत ॥ २१ ॥

॥ रोहिताश्व उवाच ॥ ॥

कस्मान्न प्रोक्तवान्विप्रो वसिष्ठस्तु कथंचन ॥

ब्राह्मणः स परं प्रोक्तोब्रह्मादिभिरपि स्वयम्॥ २२ ॥

॥ मार्कण्डेय उवाच ॥ ॥

क्षत्रियश्च स्थितः पूर्वं विश्वामित्रो महीपतिः ॥

मृगयासु परिभ्रांतो वसिष्ठस्य तदाऽऽश्रमम्॥
प्रविष्टः क्षुत्पिपासार्त्तः स तेनाथ प्रपूजितः ॥ २३ ॥
तस्यासीन्नन्दिनीनाम धेनुः कामदुघा सदा ॥
सा सूते वाञ्छितं सद्यो यद्वसिष्ठोऽभिवाञ्छति ॥ २४ ॥
तत्प्रभावात्स भूपालः सभृत्यबलवाहनः ॥
तेन तृप्तिपरा नीतो मिष्टान्नैर्विविधैस्ततः ॥ ॥ २५ ॥
पार्थिवोऽयमिति ज्ञात्वा ह्यर्घ्याद्यैर्भोजनैः स च ॥
सोऽपि दृष्ट्वा प्रभावं तं सर्वं धेनोश्च संभवम् ॥
प्रार्थयामास तां मूल्यैर्गजवाजिसमु द्भवैः ॥ २६ ॥
न ददौ स तदा विप्रः साम्ना दानेन वा पुनः ॥
भेदेन च ततो दण्डं योजयामास वै नृपः ॥ २७ ॥
कालयामास तां धेनुं ततः कोपात्स पार्थिवः ॥ २८ ॥
साऽब्रवीन्नीयमानाऽथ वसिष्ठं किं त्वया विभो ॥
दत्ताहमस्य नृपतेर्यन्मां नयति यत्नतः ॥ २९ ॥
॥ वसिष्ठ उवाच ॥ ॥
न मया त्वं महाभागे दत्ता चास्य महीपतेः ॥
बलान्नयति यद्येष तस्माद्युक्तं समाचर ॥ ६.२१४.३० ॥
तच्छ्रुत्वा कोपसंयुक्ता नन्दिनी धेनुरुत्तमा ॥
जंभां चकार तत्सैन्यं समुद्दिश्य नृपोद्भवम् ॥ ३१ ॥
धूमावर्तिस्ततो जाता तस्या वक्त्रात्ततः परम् ॥
ततो ज्वाला महारौद्रास्ततो योधाः सहस्रशः ॥ ३२ ॥
नानाशस्त्रधरा रौद्रा यमदूता यथा च ते ॥
पुलिन्दा बर्बराभीराः किराता यवनाः शकाः ॥ ॥ ३३ ॥
ते प्रोचुस्तां वदास्माकं कस्मात्सृष्टा वयं शुभे ॥ ३४ ॥
॥ नन्दिन्युवाच ॥ ॥
एते मां ये बलात्पापा नयंति नृपसेवकाः ॥
तान्निघ्नन्तु समादेशान्नान्यद्वांछामि किंचन ॥ ३५ ॥
ततस्तैस्तस्य तत्सैन्यं विश्वामित्रस्य सूदितम् ॥

युध्यमानं महाराज दशरात्रेण संयुगे ॥ ३६ ॥

विश्वामित्रोऽपि तद्दृष्ट्वा ब्राह्म्यं बलमनुत्तमम् ॥

प्रतिज्ञामकरोत्तत्र तारेण सुस्वरेण च ॥ ३७ ॥

अथाहं संभविष्यामि ब्राह्मणो नात्र संशयः ॥

ममापि जायते येन प्रभावश्चेदृशोऽद्भुतः ॥ ३८ ॥

तस्मात्तपः करिष्यामि यदसाध्यं सुरैरपि ॥

स्वपुत्रं स्वे पदे धृत्वा ततश्चक्रे तपो महत् ॥ ३९ ॥

ब्राह्मण्यार्थं महारौद्रं सुमहद्दुष्करं तपः ॥

ब्राह्मण्यं तेन नैवाप्तं वैलक्ष्यं परमं गतः ॥ ६.२१४.४० ॥

ततः कैलासमासाद्य देवदेवं महेश्वरम् ॥

सम्यगाराधयामास गौरीयुक्तं महेश्वरम् ॥ ४१ ॥

अहं तपः करिष्यामि ब्राह्मण्यस्य कृते प्रभो ॥

त्वदीये पर्वतश्रेष्ठे कैलासे शरणं गतः ॥ ४२ ॥

तस्माद्विघ्नस्य मे रक्षां देवदेवः प्रयच्छतु ॥

यथा नो नाशमायाति तपः सर्वं कृतं महत् ॥ ४३ ॥

॥ श्रीभगवानुवाच ॥ ॥

शुद्ध्यर्थं चैव यत्कार्यं कार्येस्मिन्नृपसत्तम ॥

विनायकसमुद्भूतां तत्त्वं पूजां समाचर ॥ ४४ ॥

येन ते जायते सिद्धिः सम्यग्ब्राह्मण्यसंभवा॥ ४५ ॥ ॥

॥ विश्वामित्र उवाच ॥ ॥

तद्वदस्व सुरश्रेष्ठ तथा तस्य करोम्यहम् ॥

पूर्वं पूजां गणेशस्य सर्वविघ्नप्रशान्तये ॥ ४६ ॥

॥ श्रीभगवानुवाच ॥ ॥

एष गौर्या पुरा कृत्वा निजांगोद्वर्तनं कृतः ॥

निर्मलेन कृतः पश्चान्नराकारश्चतुर्भुजः ॥ ४७ ॥

क्रीडार्थं मम पुत्रोऽयं बालभावः प्रकल्पितः ॥

गजवक्त्रो महाकायो लंबोदरलघूरुकः ॥ ४- ॥

ततोऽहमनया प्रोक्तः सजीवः क्रियतामयम् ॥

पुत्रको मे यथा भावी लोके पूज्य तमो विभो ॥ ४९ ॥

ततो मयापि संस्पृष्टः सृष्टिसूक्तेन पार्थिव ॥

जीवसूक्तेन सम्यक्स प्राणवान्समजायत ॥ ६.२१४.५० ॥

ततो मया प्रहृष्टेन प्रोक्ता देवी हिमाद्रिजा ॥

चतुर्थीदिवसे प्राप्ते मयाऽद्यायं विनिर्मितः ॥ ५१ ॥

पुत्रस्तव महाभागे जीवसूक्तप्रभावतः ॥

एष सर्वागणानां च मदीयानां सुरेश्वरि ॥

भविष्यति सदाऽध्यक्ष स्तस्माच्च गणनायकः ॥ ५२ ॥

पठ्यमानेन यश्चैनं जीवसूक्तेन सुन्दरि ॥

पूजयिष्यति सद्भक्त्या चतुर्थीदिवसे शुभे ॥ ५३ ॥

तस्य सर्वेषु कृत्येषु सर्वविघ्नानि कृत्स्नशः ॥

प्रयास्यंति क्षयं देवि तमः सूर्योदये यथा ॥ ५४ ॥

नमो लंबोदरायेति नमो गणविभो तथा ॥

कुठारधारिणे नित्यं तथा वाक्संगताय च ॥ ५५ ॥

नमो मोदकभक्षाय नमो दन्तैकधारिणे ॥ ५६ ॥

एभिर्मन्त्रैः समभ्यर्च्य पश्चान्मोद कजंशुभम् ॥

नैवेद्यं च प्रदातव्यं ततश्चार्घ्यं निवेदयेत् ॥ ५७ [।

अहं कर्म करिष्यामि यत्किंचिच्छंभुसंभवम् ॥

अविघ्नं तत्र कर्तव्यं सर्वदैव त्वया विभो ॥ ५८ ॥

ततस्तु ब्राह्मणानां च भोजनं मोदकोद्भवम् ॥

यथाशक्त्या प्रदातव्यं वित्तशाठ्यं विवर्जयेत् ॥ ५९ ॥

एवमुक्तं मया पूर्वं स्वयमेव नृपोत्तम ॥

गणनाथं समुद्दिश्य गौर्याः पुरत एव च ॥ ६.२१४.६० ॥

ततः प्रहृष्टा सा देवी वाक्यमेतदुवाच ह ॥

अद्यप्रभृति यः पुत्रं मदीयं गणनाय कम् ॥ ६१ ॥

अनेन विधिना सम्यक्चतुर्थ्यां पूजयिष्यति ॥

तस्य विघ्नानि सर्वाणि नाशं यास्यंत्यसंशयम् ॥ ६२ ॥

स्मृत्वा वा पूजयित्वा वा यः कार्याणि करिष्यति ॥

भविष्यंति न संदेहस्ततोस्याविचलानि च ॥ ६३ ॥

न सन्देहस्ततोऽस्य श्रीरचलैव भविष्यति ॥ ६४ ॥

॥ श्रीभगवानुवाच ॥ ॥

तस्मात्त्वं हि महाभाग चतुर्थ्यां सम्यगाचर ॥

विनायकोद्भवां पूजां येनाभीष्टेन युज्यसे ॥ ६५ ॥

॥ मार्कण्डेय उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महीपतिः ॥

गणनाथसमुद्भूतां पूजां कृत्वा यथोचिताम् ॥ ६६ ॥

तपश्चचार विपुलं सर्वविघ्नविवर्जितम् ॥

ब्राह्मण्यं च ततः प्राप्तं सर्वेषामपि दुर्लभम् ओ। ६७ ॥

तस्मात्त्वं हि महाभाग विनायकसमुद्भवाम् ॥

पूजां कुरु चतुर्थ्यां च संप्राप्तायां विशेषतः ॥

संप्राप्नोषि महाभोगान्हृदिस्थान्नात्र संशयः ॥ ६८ ॥

यो यं काममभिध्याय गणनाथं प्रपूजयेत् ॥

स तं सर्वमवाप्नोति महेश्वरवचो यथा ॥ ६९ ॥

अपुत्रो लभते पुत्रं धनहीनो महद्धनम् ॥

शत्रूञ्जयति संग्रामे स्मृत्वा तं गणनायकम् ॥ ६.२१४.७० ॥

या नारी पतिना त्यक्ता दुर्भगा च विरूपिता ॥

सा सौभाग्यमवाप्नोति गणनाथस्य पूजया ॥ ७१ ॥

य इदं पठते नित्यं शृणुयाद्वा समाहितः ॥

न विघ्नं जायते तस्य सर्वकृत्येषु सर्वदा ॥ ७२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये विश्वामित्रोपाख्यानप्रसंगेन गणपतिपूजाविधिमाहात्म्यवर्णनंनाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥ २१४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१५

https://sa.wikisource.org/s/fpz
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

सांप्रतं वद नः सूत श्राद्धकल्पस्य यो विधिः ॥

विस्तरेण महाभाग यथा तच्चाक्षयं भवेत् ॥ १ ॥

कस्मिन्काले प्रकर्तव्यं श्राद्धं पितृपरायणैः ॥

कीदृशैर्ब्राह्मणैस्तच्च तथा द्रव्यैर्महामते ॥ २ ॥

॥ सूत उवाच ॥ ॥

एतदर्थं पुरा पृष्टो मार्कंडेयो महामुनिः ॥

रोहिताश्वेन विप्रेंद्रा हरिश्चन्द्र सुतेन सः॥३ ॥

हरिश्चन्द्रे गते स्वर्गं रोहिताश्वे नृपे स्थिते ॥

तीर्थयात्राप्रसंगेन मार्कण्डो मुनिसत्तमः ॥ ४ ॥

सरय्वाः संगमे पुण्ये स्नानार्थं समुपस्थितः ॥

तत्र स्नात्वा पितॄन्देवान्संतर्प्य विधिपूर्वकम्॥ ५ ॥

प्रविष्टस्तां पुरीं रम्यामयोध्यां सत्यनामिकाम् ॥

रोहिताश्वोऽपि तं श्रुत्वा समायातं मुनीश्वरम्॥

पदातिः प्रययौ तूर्णं दूरदेशं तु सम्मुखम्॥ ६ ॥

ततः प्रणम्य तं मूर्ध्ना कृतांजलिपुटः स्थितः ॥

प्रोवाच मधुरं वाक्यं विनयेन समन्वि तः ॥ ७ ॥

स्वागतं ते मुनिश्रेष्ठ भूयः सुस्वागतं मुने ॥

धन्योऽहं कृतपुण्योऽहं संप्राप्तः परमां गतिम् ॥

यत्ते पादरजोभिर्मे मूर्द्धजा विमलीकृताः ॥ ॥ ८॥

एवमुक्त्वा गृहीत्वा तं स्वहस्तालंबनं तदा ॥

ययौ तत्र सभास्थानं बृहत्सिंहासनाश्रयम् ॥ ९ ॥

सिंहासने निवेश्याथ तं मुनिं पार्थिवोत्तमः ॥

उपविष्टो धरापृष्ठे कृतांजलिपुटः स्थितः ॥ ६.२१५.१० ॥

ततः प्रोवाच मधुरं विनयावनतः स्थितः ॥

निःस्पृहस्यापि विप्रेंद्र किं वाऽऽगमनकारणम् ॥ ॥ ११ ॥

तद्ब्रवीहि यथातथ्यं करोमि तव सांप्रतम् ॥

अदेयमपि दास्यामि गृहायातस्य ते विभो ॥ १२ ॥

मार्कंडेय उवाच ॥ ॥

तीर्थयात्राप्रसंगेन वयमत्र समागताः ॥

सरय्वाः संगमे पुण्ये कल्ये यास्याम्यहे पुनः ॥ १३ ॥

निःस्पृहैरपि द्रष्टव्या धर्मवन्तो द्विजोत्तमाः ॥

ततः प्रोक्तं पुराण ज्ञैर्ब्राह्मणैः शास्त्रदृष्टिभिः ॥ १४ ॥

धर्मवन्तं नृपं दृष्ट्वा लिंगं स्वायंभुवं तथा ॥

नदीं सागरगां चैव मुच्येत्पापाद्दिनोद्भवात् ॥ १५

एवमुक्त्वा ततश्चक्रे पृच्छां स मुनिसत्तमः ॥

तं दृष्ट्वा नृपशार्दूलं पुरःस्थं विनयान्वितम् ॥ १६ ॥

कच्चित्ते सफला वेदाः कच्चित्ते सफलं श्रुतम् ॥

कच्चित्ते सफला दाराः कच्चित्ते सफलं धनम्॥ १७ ॥

॥ रोहिताश्व उवाच ॥ ॥

कथं स्युः सफला वेदाः कथं स्यात्सफलं श्रुतम् ॥

कथं स्युः सफला दाराः कथं स्यात्सफलं धनम् ॥ १८ ॥

॥ मार्कंडेय उवाच ॥ ॥

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ॥

रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १९ ॥

एवं ज्ञात्वा महाराज नान्यथा कर्तुमर्हसि ॥ ६.२१५.२० ॥

चत्वार्येतानि कृत्यानि मयोक्तानि च तानि ते ॥

यथा तानि प्रकृत्यानि लोकद्वयमभीप्सता ॥ २१ ॥

एवमुक्त्वा ततश्चक्रे कथाश्चित्राश्च तत्पुरः ॥

राजर्षीणां पुराणानां देवर्षीणां विशेषतः ॥ २२ ॥

ततः कथावसाने च कस्मिंश्चिद्द्विजसत्तमाः ॥

पप्रच्छ तं मुनिश्रेष्ठं रोहिताश्वो महीपतिः ॥ २३ ॥

भगवञ्छ्रोतुमिच्छामि श्राद्धकल्पमहं यतः ॥

दृश्यंते बहवो भेदा द्विजानां श्राद्धकर्मणि ॥ २४ ॥ ॥

॥ मार्कंडेय उवाच ॥ ॥

सत्यमेतन्महाभाग यत्पृष्टोऽस्मि नृपोत्तम ॥

श्राद्धस्य बहवो भेदाः शाखाभेदैर्व्यवस्थिताः॥ २५ ॥

तस्मात्ते निर्णयं वच्मि भर्तृयज्ञेन यत्पुरा ॥

आनर्ताधिपतेः प्रोक्तं सम्यक्छ्राद्धस्य लक्षणम् ॥ २६ ॥

भर्तृयज्ञं सुखासीनं निजाश्रमपदे नृपः ॥

आनर्ताधिपतिर्गत्वा प्रणिपत्य ततोऽब्रवीत् ॥ २७ ॥

॥ आनर्त उवाच ॥ ॥

सांप्रतं वद मे ब्रह्मञ्छ्राद्धकल्पं पित्रीप्सितम् ॥

येन मे तुष्टिमायांति पितरः श्राद्धतर्पिताः ॥ २८ ॥

कः कालो विहितः श्राद्धे कानि द्रव्याणि मे वद ॥

श्राद्धार्हाणि तथान्यानि मेध्यानि द्वि जसत्तम ॥

यानि योज्यानि वांछद्भिः पितृणां तृप्तिमुत्तमाम् ॥ २९ ॥

कीदृशा ब्राह्मणा ब्रह्मञ्छ्राद्धार्हाः परिकीर्तिताः ॥

कीदृशा वर्जनीयाश्च सर्वं मे विस्तराद्वद ॥ ६.२१५.३० ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

अहं ते कीर्तयिष्यामि श्राद्धकल्पमनुत्तमम् ॥

यं श्रुत्वाऽपि महाराज लभेच्छ्राद्धफलं नरः ॥ ॥ ३१ ॥

श्राद्धमिदुक्षयेऽवश्यं सदा कार्यं विपश्चिता ॥

यदि ज्येष्ठतमः सर्गः सन्तानं च तथा नृप ॥ ३२ ॥

शीतार्ता यद्वदिच्छंति वह्निं प्रावरणानि च ॥

पितरस्तद्वदिच्छंति क्षुत्सामाश्चन्द्रसंक्षयम् ॥ ३३ ॥

दरिद्रोपहता यद्वद्धनं वांछंति मानवाः ॥

पितरस्तद्वदिच्छंति क्षुत्क्षामाश्चन्द्रसं क्षयम् ॥ ३४ ॥

यथा वृष्टिं प्रवांछन्ति कर्षुकाः सस्यवृद्धये ॥

तथात्मप्रीतये तेऽपि प्रवांछन्तींदुसंक्षयम् ॥ ३५ ॥

यथोषश्चक्रवाक्यश्च वांछन्ति रवि दर्शनम् ॥

पितरस्तद्वदिच्छंति श्राद्धं दर्शसमुद्भवम् ॥ ३६ ॥

जलेनापि च यः श्राद्धं शाकेनापि करोति वाः ॥

दर्शस्य पितरस्तृप्तिं यांति पापं प्रण श्यति । ३७ ॥

अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिता॥

वायुभूताः प्रवांछन्ति श्राद्धं पितृगणा नृणाम् ॥

यावदस्तमयं भानोः क्षुत्पिपासास माकुलाः ॥ ३८ ॥

ततश्चास्तं गते भानौ निराशा दुःखसंयुताः ॥

निःश्वस्य सुचिरं यांति गर्हयंति स्ववंशजम् ॥ ३९ ॥

॥ आनर्त उवाच ॥ ॥

किमर्थं क्रियते श्राद्धममावास्यादिने द्विज ॥

विशेषेण ममाचक्ष्य विस्तरेण यथातथम् ॥ ६.२१५.४० ॥

मृताश्च पुरुषा विप्र स्वकर्मजनितां गतिम् ॥

गच्छन्ति ते कथं तस्य सुतस्याश्रयमाययुः ॥ ४१ ॥

एष नः संशयो विप्र सुमहान्हृदि संस्थितः ॥ ४२ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

सत्यमेतन्महाभाग यत्त्वया व्याहृतं वचः ॥

स्वकर्मार्हां गतिं यांति मृताः सर्वत्र मानवाः ॥ ४३ ॥

परं यथा समायांति वंशजस्याश्रयं प्रति ॥

तथा तेऽहं प्रव क्ष्यामि न तथा संशयो भवेत् ॥ ४४ ॥

मृता यांति तथा राजन्येऽत्र केचिन्महीतले ॥

ते जायंते न मर्त्येऽत्र यावद्वंशस्य संस्थितिः ॥ ४५ ॥

परं शुभात्मका ये च ते तिष्ठंति सुरालये ॥

पापात्मानो नरा ये च वैवस्वतनिवासिनः ॥ ४६ ॥

अन्यदेहं समाश्रित्य भुंजानाः कर्मणः फलम् ॥

शुभं वा यदि वा पापं स्वयं विहितमात्मनः ॥ ४७ ॥

यमलोके स्थितानां हि स्वर्गस्थानामपि क्षुधा ॥

पिपासा च तथा राजंस्तेषां संजायतेऽधिका ॥ ४८ ॥

यावन्नरत्रयं राजन्मातृतः पितृतस्तथा ॥

तेषां च परतो ये च ते स्वकर्म शुभाशुभम् ॥

भुंजते क्षुत्पिपासा च न तेषां जायते क्व् चित् ॥ ४९ ॥

तत्रापि पतनं तस्मात्स्थानाद्भवति भूमिप ॥

वंशोच्छेदान्पुनः सर्वे निपतंति महीतले ॥

त्रुटद्रज्जुनिबद्धं हि भांडं यद्वन्निराश्रयम् ॥ ॥ ६.२१५.५० ॥

एतस्मात्कारणाद्यत्नः सन्तानाय विचक्षणैः ॥

प्रकर्तव्यो मनुष्येंद्र वंशस्य स्थितये सदा ॥ ५१ ॥

अपि द्वादशधा राजन्नौरसादिसमु द्भवाः ॥

तेषामेकतमोऽप्यत्र न दैवाज्जायते सुतः ॥ ५२ ।।

पितॄणां गुप्तये तेन स्थाप्योऽश्वत्थः समाधिना ॥

पुत्रवत्परिपाल्यश्च निर्विशेषं नराधिप॥ ॥ ५३ ॥

यावत्संधारयेद्भूमिस्तमश्वत्थं नराधिप ॥

कृतोद्वाहं समं शम्या तावद्वंशोऽपि तिष्ठति ॥ ५४ ॥

अश्वत्थजनका मर्त्या निपत्य जगती तले ॥

पापामुक्ताः समायांति योनिं श्रेष्ठां शुभान्विताः ॥ ५५ ॥

एतस्मात्कारणादन्नं नित्यं देयं तथोदकम् ॥

समुद्दिश्य पितॄन्राजन्यतस्ते तन्मयाः स्मृताः ॥ ५६ ॥

अदत्त्वा सलिलं सस्यं पितॄणां यो नराधिप ॥

स्वयमश्नाति वा तोयं पिवेत्स स्यात्पितृद्रुहः ॥

स्वर्गेऽपि च न ते तोयं लभंते नान्नमेव च ॥ ५७ ॥

न दत्तं वंशजैर्मर्त्यैश्चेद्व्यथां यांति दारुणाम् ॥

क्षुत्पिपासासमुद्भूतां तस्मात्संतर्पयेत्पितॄन् ॥ ॥ ५८ ॥

नित्यं शक्त्या नरो राजन्पयोऽन्नैश्च पृथग्विधैः ॥

तथान्यैर्वस्त्रनैवेद्यैः पुष्पगन्धानुलेपनैः ॥ ५९ ॥

पितृमेधादिभिः पुण्यैः श्राद्धैरुच्चावचैरपि ॥

तर्पितास्ते प्रयच्छंति कामानिष्टान्हृदि स्थितान् ॥

त्रिवर्गं च महाराज पितरः श्राद्धतर्पिताः ॥ ॥ ६.२१५.६० ॥

तर्पयंति न ये पापाः स्वपितॄन्नित्यशो नृप ॥

पशवस्ते सदा ज्ञेया द्विपदाः शृंगवर्जिताः ॥ ६१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धावश्यकताकारणवर्णनंनाम पञ्चदशोत्तरद्विशततमो ऽध्यायः ॥ २१५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१६

https://sa.wikisource.org/s/fq0
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ आनर्त उवाच ॥ ॥

अन्येऽपि विविधाः कालाः सन्ति पुण्यतमा द्विज ॥

कस्माच्चेंदुक्षये श्राद्धं विशेषा त्समुदाहृतम्॥ १ ॥

एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ २ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

सत्यमेतन्महाराज श्राद्धार्हाः संति भूरिशः ॥

कालाः पितृगणानां च तृप्तिदास्तुष्टिदाश्च ये ॥ ३ ॥

मन्वाद्या वा युगाद्याश्च तेषां संक्रांतयोऽपराः ॥

व्यतीपातो गजच्छाया ग्रहणं सोम सूर्ययोः ॥ ४ ॥

एतेषु युज्यते श्राद्धं प्रकर्तुं पितृतृप्तये ॥

तथा तीर्थे विशेषेण पुण्य आयतने शुभे ॥ ५ ॥

श्राद्धार्हैर्ब्राह्मणैः प्राप्तैर्द्रव्यैर्वा पितृवल्लभैः ॥

अपर्वण्यपि कर्तव्यं सदा श्राद्धं विचक्षणैः ॥ ६ ॥

सोमक्षये विशेषेण शृणुष्वैकमना नृप ॥

अमा नाम रवे रश्मिसहस्रप्रमुखः स्थितः ॥ ७ ॥

यस्य स्वतेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः ॥

तस्मिन्वसति येनेन्दुरमावस्या ततः स्मृता ॥ ८ ॥

अक्षया धर्मकृत्ये सा पितृकृत्ये विशेषतः ॥

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ॥ ९ ॥

रश्मिपा उपहूताश्च तथैवायंतुनाः परे ॥

तथा श्राद्धभुजश्चान्ये स्मृता नान्दीमुखा नृप ॥ ६.२१६.१० ॥

एते पितृगणाः ख्याता नव देवसमुद्भवाः ॥

आदित्या वसवो रुद्रा नासत्यावश्विनावपि ॥ ११ ॥

सन्तर्पयन्ति ते चैतान्मुक्त्वा नान्दीमुखान्पितॄन् ॥

ब्रह्मणा ते समादिष्टाः पितरो नृपसत्तम ॥ १२ ॥

तान्संतर्प्य ततः सृष्टिं कुरुते पद्मसंभवः ॥ ॥ १३ ॥

पितरो अन्येऽपि मर्त्या निवसन्ति त्रिविष्टपे ॥

द्विविधास्ते प्रदृश्यंते सुखिनोऽसुखिनः परे ॥ १४ ॥

येभ्यः श्राद्धानि यच्छंति मर्त्य लोके स्ववंशजाः ॥

ते सर्वे तत्र संहृष्टा देववन्मुदिताः स्थिताः ॥ १५ ॥

येषां यच्छन्ति ते नैव किंचित्किञ्चित्स्ववंशजाः ॥

क्षुत्पिपासाकुला स्ते च दृश्यन्ते बहुदुःखिताः ॥ १६ ॥

कस्यचित्त्वथ कालस्य पितरः सुरपूजिताः ॥

अग्निष्वात्तादयः सर्वे त्रिदशेन्द्रमुपस्थिताः ॥ १७ ॥

भक्त्या दृष्टा महाराज सहस्राक्षेण पूजिताः ॥

तथान्यैर्विबुधैः सर्वैः प्रस्थिताः स्वे निकेतने ॥ १८ ॥

पितृलोकं महाराज दुर्लभं त्रिदशैरपि ॥

तान्दृष्ट्वा प्रस्थितान्राजन्पितरो मर्त्यसंभवाः ॥ १९ ॥

क्षुत्पिपासार्दिता ये च त ऊचुर्दैन्यमाश्रिताः ॥

स्तुत्वाऽथ सुस्तवैर्दिव्यैः पितृसूक्तैश्च पार्थिव ॥ ॥ ६.२१६.२० ॥

वेदोक्तैरपरैश्चैव पितृतुष्टिकरैः परैः ॥

ततः प्रोचुश्च संहृष्टाः पितरस्तान्सुरोद्भवाः ॥ २१ ॥

प्रसन्नाः स्मो वयं सर्वे युष्माकं शंसितव्रताः ॥

तस्माद्ब्रूत वयं येन यच्छामो वो हृदि स्थितम् ॥ २२ ॥

॥ पितर ऊचुः ॥ ॥

वयं हि पितरः ख्याता मनुष्याणामिहागताः ॥

स्वर्गे स्वकर्मणा नित्यं निवसाम सुरैः सह ॥ २३ ॥

विमानेषु विचित्रेषु संस्थिताः सर्वतोदिशम् ॥

वांछितेषु च लोकेषु यामो ध्वजपताकिषु ॥ २४ ॥

हंसबर्हिण जुष्टेषु संसेव्येष्वप्सरोगणैः ॥

गन्धर्वैर्गीयमानाश्च स्तूयमानाश्च गुह्यकैः ॥ २५ ॥

परं सन्तिष्ठमानानामस्माकं त्रिदशैः सह ॥

अत्यर्थं जायते तीव्रा क्षुत्पिपासा सुदारुणा ॥ २६ ॥

यस्या मन्यामहे चित्ते वह्निमध्यगता वयम् ॥
भक्षयामः किमेतान्हि पक्षिणो विविधानपि ॥
हंसादीन्मधुरालापान्किं वा चाप्सरसां गणान् ॥ २७ ॥
यदि कश्चित्क्षुधाविष्टः कञ्चिदादाय पक्षिणम् ॥
गुप्तो गृह्णाति भक्षार्थं हन्तुं शक्तोऽपि सोऽपि न ॥ २८ ॥
अजराश्चामराश्चैव स्वर्गे ये स्वर्गगाः खगाः ॥
तथा मनोरमा वृक्षा नन्दनादि वनेषु च ॥ २९ ॥
फलिता ये प्रदृश्यंते प्राप्यांश्चापि मनोरमाः ॥
तत्फलानि वयं सर्वे गृह्णीमः पितरो यदि ॥ ६.२१६.३० ॥
न त्रुटंत्यपि यत्नेन समाकृष्टानि तान्यपि ॥
एतल्लेखापगातोयं तृषार्त्ता यदि यत्नतः ॥
प्रपिबामो न हस्तेषु तच्च तोयं पुनः स्पृशेत् ॥ ३१ ॥
भुंजानश्च न कोऽप्यत्र दृश्यतेऽत्र पिबन्नपि ॥
तस्मात्त्रिविष्टपावासो ह्यस्माकं घोरदारुणः ॥ ३२ ॥
एते सुरगणाः सर्वे ये चान्ये गुह्यकादयः ॥
दृश्यंतेऽत्र विमानस्था सर्वे संहृष्टमानसाः ॥ ३३ ॥
क्षुत्पिपासापरित्यक्ता नानाभोगसमाश्रयाः ॥
कदाचिच्च वयं सर्वे भवामस्तादृशा इव ॥ ३४ ॥
क्षुत्पिपासापरित्यक्ताः सतोषं परमं गताः ॥
तत्किं कारणमेतद्यत्क्षुत्पि पासा प्रजायते ॥ ३५ ॥
आकस्मिकी च बाधा नः कदाचिन्न प्रणश्यति ॥
तथा कुरुत भद्रं वो यथा तुष्टिः प्रजायते ॥ ३६ ॥
शाश्वती नो यथाऽन्येषां देवानां स्वर्गवासिनाम् ॥
यूयं हि पितरो यस्माद्देवानां भावितात्मनाम् ॥ ३७ ॥
वयं चैव मनुष्याणां तेन वः शरणं गताः ।। ॥
॥ पितर ऊचुः ॥ ॥
अस्माकमपि चैवैषा कष्टावस्था प्रजायते ॥ ३८ ॥
शक्राद्या विबुधा व्यग्राः श्राद्धं यच्छंति नो यदा ॥

ततश्चागत्य तान्सर्वे देवान्संप्रार्थयामहे ॥ ३९ ॥

ततस्तृप्तिं प्रगच्छामस्तैर्देवैस्तर्पिता वयम् ॥

युष्माकं वंशजा ये च प्रयच्छंति समाहिताः ॥ ६.२१६.४० ॥

कथं न तृप्तिमायातास्ते सर्वे तैः प्रतर्पिताः ॥

यत्र प्रमादिभिर्वंश्यैर्न तर्प्यंते कथंचन ॥ ४१ ॥

क्षुत्पिपासाकुलाः सर्वे ते तदा स्युर्न संशयः ॥

किं पुनर्नरकस्था ये धर्मराजनिवेशने ॥ ४२ ॥

एतद्धि कारणं प्रोक्तं युष्माकं च कथंचन ॥

क्षुत्पिपासोद्भवं रौद्रं युष्माभिर्यदुदीरितम् ॥ ४३ ॥

तदस्माकं विभागं चेद्यूयं यच्छत सत्तमाः ॥

सर्वे कव्यस्य दत्तस्य तत्कुर्मो वै हितं शुभम् ॥ ४४ ॥

ब्रह्माणं प्रार्थयित्वा च स्वयं गत्वा तदंतिकम्॥

बाढमित्येव तैरुक्ते तत आदाय तानपि ॥ ४५ ॥

दिव्याः पितृगणाः प्राप्ता विधेः सदनमुत्तमम् ॥

नांदीमुखान्पुरस्कृत्य पितॄन्यांस्तर्पयेद्विधिः ॥ ४६ ॥

सृष्टिकाले तु संप्राप्ते वृद्धिकामः सुरेश्वरः ॥

अथ तैः सह ते सर्वे स्तुत्वा तं कमलासनम् ॥

प्रणिपत्य स्थिताः सर्वे पितरो विनयान्विताः ॥ ४७ ॥

पितॄंस्तान्विनयोपेतान्प्रणिपातपुरःसरान् ॥

विधिः प्रोवाच राजेंद्र सांत्वयञ्श्लक्ष्णया गिरा ॥ ४८ ॥

॥ ब्रह्मोवाच ॥ ॥

किमर्थं पितरः सर्वे समायाता ममांतिकम् ॥

देवतानां मया सार्धं संपूज्याः सर्वदा स्थिताः ॥ ४९ ॥

तथान्येऽपि च दृश्यंते युष्माभिः सह संगताः ॥

य एते मानवा काराः स्वल्पतेजोन्विताः स्थिताः ॥ ६.२१६.५० ॥

॥ पितर ऊचुः ॥ ॥

पितरो मानवा ह्येते स्वर्गं प्राप्ताः स्वकर्मभिः ॥

देवानां मध्यसंस्थाश्च पीड्यंते क्षुत्पिपासया ॥ ५१ ॥

यदा यच्छंति नो वंश्याः कव्यं चैव प्रमादतः ॥

तदा गच्छंति नो तृप्तिं यानैर्यांति यथा सुराः ॥ ५२ ॥

तदैतैः प्रार्थनाऽस्माकं कृता शाश्वततृप्तये ॥

न च शक्ता वयं दातुं तेन त्वां समुपस्थिताः ॥ ५३ ॥

यथा स्युर्देवता व्यग्रास्तदाऽस्माकमपि प्रभो। ॥

कव्यं विना भवेदेषा दशा कष्टा सुरेश्वर ॥ ५४ ॥

तस्मात्कुरु प्रसादं नः समेमेतैः सुरेश्वर ॥

यथा स्याच्छाश्वती तृप्तिः स्वस्थानस्थायिनामपि॥ ॥ ५५ ॥

एतेऽस्माकं प्रदास्यंति कव्यं यन्निजवंशजैः ॥

प्रदत्तं तेन संप्राप्ता वयं देव त्वदन्तिकम् ॥ ५६ ॥

देवानां चैव यत्कव्यं तन्नास्माकं प्रतृ प्तये ॥

यतः क्रियाविहीनं तन्न तेषां विद्यते क्रिया ॥ ५७ ॥

पितॄनुद्दिश्य यत्कव्यं ब्राह्मणेभ्यः प्रदीयते ॥

स्नातैर्धौतांबरैर्मर्त्यैस्तद्भवेत्तृप्तिदं महत् ॥ ॥ ५८ ॥

पितृणां सर्वदेवेश इत्येषा वैदिकी श्रुतिः ॥

न स्नातस्याधिकारोऽस्ति देवानां च द्विजातिवत् ॥ ५९ ॥

पीयूषमपि तैर्दत्तं तेन नः स्यान्न तृप्तये ॥ ६.२१६.६० ॥

तस्मान्मानुषदत्तैर्नो यथा कव्ये प्रजायते ॥

स्वर्गस्थानां परा तृप्तिः सममेतैस्तथा कुरु ॥ ६१ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

तच्छ्रुत्वा सुचिरं ध्यात्वा ब्रह्मा लोकपितामहः ॥

तानुवाच ततः सर्वान्पितॄन्पार्थिवसत्तम ॥६२॥

॥ ब्रह्मोवाच ॥ ॥

अस्मिंस्त्रेतायुगे संज्ञा हव्यकव्यसमुद्भवा॥

संप्रयाता युगे युग्मे कलौ न प्रभविष्यति ॥ ६३ ॥

यथायथा युगानां च ह्रास एष भविष्यति ॥

तथातथा जना दुष्टा भविष्यंत्यन्यभक्तिकाः ॥ ॥ ६४ ॥

न दास्यंति यथोक्तानि ते कव्यानि कथंचन ॥

ततः कष्टतराऽवस्था पितॄणां संभविष्यति ॥ ६५ ॥

तस्मादहं करिष्यामि सुखोपायं शरीरिणाम् ॥

येन सन्तर्पिता यूयं परां तृप्तिमवाप्स्यथ ॥ ६६ ॥

पितुः पितामहस्यैव तत्पितुश्च ततः परम्॥

समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः ॥ ६७ ॥

सर्वेषां स्यात्परा तृप्तिर्यावन्मां पितरोऽधुना ॥

तथा मातामहानां च पक्षे नास्त्यत्र संशयः ॥ ६८ ॥

त्रिभिः सन्तर्पितास्तेऽपि तर्पिताः स्युर्ममावधि ॥

युष्माकं तृप्तये यश्च सुखोपायो भविष्यति ॥ ६९ ॥

तं शृणुध्वं महाभागा गदतो मम सांप्रतम् ॥

पितॄनन्नेन येनैव समुद्दिश्य द्विजोत्तमान्॥ ६.२१६.७० ॥

तर्पयिष्यंति तेनैव पिण्डान्दास्यंति भक्तितः ॥

तन्नाम्ना तेन वस्तृप्तिः शाश्वती संभविष्यति ॥ ७१ ॥

तस्माद्गच्छत सन्तुष्टाः स्वानि स्थानानि पूर्वजाः ॥ ७२ ॥

ततस्ते सहितास्तैस्तु स्वानि स्थानानि भेजिरे ॥

विमानैः सूर्यसंकाशैर्गत्वा पार्थिवसत्तम ॥ ७३ ॥

अथ संगच्छता राजन्कालेन महता ततः ॥

तच्चापि न ददुः श्राद्धं मर्त्यास्त्रिपुरुषं च यत् ॥ ७४ ॥

नित्यं पितॄन्समुद्दिश्य बहवोऽत्र नराधिप ॥

कव्यभागान्पुनस्तेषां तथा पूर्वं यथा नृप ॥ ७५ ॥

क्षुत्पिपासोद्भवापीडा महती समजायत ॥

तेषां च दैविकानां च पितॄणां नृपसत्तम ॥ ७६ ॥

समेत्याथ पुनः सर्वे ब्रह्माणं शरणं गताः ॥

प्रोचुश्च प्रणिपत्योच्चैः सुदीनाः प्रपितामहम्॥ ७७ ॥

भगवन्न प्रयच्छंति नित्यं नो वंशसंभवाः ॥

श्राद्धानि दौःस्थ्यमापन्नास्तेन सीदामहे विभो ॥ ७८ ॥

यथा पूर्वं तथा देव तदुपायं प्रचिन्तय ॥

कंचिद्येन दरिद्रा वै प्रीणयंति च ते पितॄन् ॥७९॥

भर्तृयज्ञ उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा तानाह प्रपितामहः ॥

कृपाविष्टो महाराज सर्वान्पितृगणांस्तथा ॥ ६.२१६.८० ॥

सत्यमेतन्महाभागा दौःस्थ्यं यांति दिनेदिने ॥

जना यथायथा याति युगं श्रेष्ठं च पृष्ठतः ॥ ८१ ॥

तथापि च करिष्यामि युष्मदर्थमसंशयम् ॥

उपायं लघु सन्तृप्तिर्येन वोऽत्र भवि ष्यति ॥ ८२ ॥

अमानाम रवे रश्मिसहस्रप्रमुखः स्थितः ॥

तस्मिन्वसति येनेन्दुरमावास्या ततः स्मृता ॥ ८३ ॥

तस्मिन्नहनि ये श्राद्धं पितृनुद्दिश्य चात्मनः ॥

करिष्यंति नरा भक्त्या ते भविष्यंति सुस्थिताः ।। ८४ ॥

धनधान्यसमोपेता सर्वशत्रुविवर्जिताः ॥

अपमृत्युपरित्यक्ता मम वाक्याद संशयम्॥ ८५ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा बभूवुर्हृष्टमानसाः ॥

पितरः कव्यमासाद्य प्रहृष्टेनांतरात्मना ॥ ८६ ॥

ययुः स्वानि निकेतानि प्रेषिताः पद्मयोनिना ॥

अमावास्यादिनं प्राप्य श्राद्धं दत्तं स्ववंशजैः ॥ ८७ ॥

संतृप्ता मासमात्रं च तस्थुः संतुष्टमानसाः ॥

गच्छता त्वथकालेन दौःस्थ्यं प्राप्य नरा भुवि ॥

दर्शेऽस्मिन्नपि नो श्राद्धं प्रायः कुर्वंति केचन ।।८८॥

ततः पितृगणाः सर्वें ये दिव्या ये च मानुषाः॥

क्षुत्पिपासाकुला भूयो ब्रह्माणं शरणं गताः॥८९॥

प्रोचुश्च प्रणिपत्योच्चैस्ते समेताःपितामहम्॥

परमं दैन्यमास्थाय बाष्पगद्गदया गिरा ॥६.२१६.९॥।

भगवन्निंदुक्षये श्राद्धं प्रोक्तं मासं त्वया विभो॥

अस्माकं प्रीणनार्थाय यत्करिष्यंति मानवाः ॥९१॥

दौःस्थात्तदपि नो कुर्युः प्रायशस्तु पितामह ॥

तेनास्माकं परा पीडा क्षुत्पिपासासमुद्भवा॥९२॥

तस्मात्कुरु प्रसादं नो यथा पूर्वं सुरेश्वर॥

तथापि दुःस्थताभाजस्तर्पयिष्यंति नोऽधुना॥९३॥

॥भर्तृयज्ञ उवाच॥ ॥

अथ ब्रह्मापि संचिन्त्य तानुवाच कृपान्वितः ॥

युष्मदर्थं मयोपायश्चिंतितः पितरो लघुः ॥ ९४ ॥

येन तृप्तिं परां यूयं गमिष्यथ पित्रीश्वराः ॥

अमावास्योद्भवं श्राद्धमलब्ध्वापि च वत्सरम्॥ ९५ ॥

यथा मम प्रसादेन तच्छृणुध्वं समाहिताः ॥

आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे ॥ ९६ ॥

मृताहनि पुनर्यो वै श्राद्धं दास्यति मानवः ॥

तस्य संवत्सरंयावत्तृप्ताः स्युः पितरो ध्रुवम् ॥ ९७ ॥

एवं ज्ञात्वा करिष्यंति प्रेतपक्षे नरा भुवि ॥

श्राद्धं यूयं न संदेहो भविष्यथ सुतर्पिताः ॥ ९८ ॥

यावत्संवत्सरं तेन एकेनापि तु सत्तमाः ॥

तस्मिन्नपि च यः श्राद्धं युष्माकं न प्रदास्यति॥ ९९ ।।

शाकेनाऽपि दरिद्रोऽसावंत्यजत्वमुपेष्यति ॥

आसनं शयनं भोज्यं स्पर्शं संभाषणं तथा ॥ ६.२१६.१०० ॥

ये करिष्यंति तैः सार्धं तेऽपि पापतमा नराः ॥

न तेषां संततिर्वृद्धिं संप्रयास्यति कर्हिचित् ॥११॥

न सुखं धनधान्यं च तेषां भावि कथंचन ॥

तस्माद्गच्छत चाव्यग्राः स्वस्थानं पितरो द्रुतम् ॥१०२॥

कलिकालेऽपि संप्राप्ते दारुणे निर्धने जने ॥

वर्षांते श्राद्धमेकं हि प्रकरिष्यंति मानवाः ॥१०३॥

येनाखिलं भवेद्वर्षं युष्माकं प्रीतिरुत्तमा ॥१०४॥

॥ ॥ भर्तृयज्ञ उवाच ॥ ॥

तच्छ्रुत्वा पितरो हृष्टा जग्मुः स्वंस्वं निकेतनम् ॥

वर्षांतेऽपि समासाद्य श्राद्धं न स्युर्बुभुक्षिताः ॥ १०५ ॥

अथ येऽत्र दुरात्मानो निःशंकाः कृपणात्मकाः ॥

कलिना मोहिताः श्राद्धं वत्सरांतेऽपि नो ददुः ॥१०६॥

तेषां तु पितरो भूयो दिव्यैःपितृभिरन्विताः ॥

ब्रह्माणं शरणं जग्मुः प्रोचुस्ते दीनमानसाः ॥ १०७ ॥

भगवन्वत्सरांतेऽपि कन्यासंस्थे दिवाकरे ॥

नास्माकं वंशजाः श्राद्धं प्रयच्छंति दुरात्मकाः॥१०८॥

तेन संपीडिता देव क्षुत्पिपासा समाकुलाः ॥

वयं शरणमापन्नास्तत्प्रतीकारमाचर ॥ १०९ ॥

यथा पूर्वं महाभाग वदोपायं लघूत्तमम्॥

एकाहिकेन श्राद्धेन येनास्माकं हि शाश्वती ॥

प्रीतिः संजायते देव त्वत्प्रसादात्सुरेश्वर ॥ ६.२१६.११० ॥

वंशक्षयेऽपि संजाते ह्यस्माकं पतनं भवेत् ॥ १११ ॥ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा चिरं ध्यात्वा पितामहः ॥

कृपया परयाविष्टस्ततः प्रोवाच सादरम् ॥ ११२

॥ ब्रह्मोवाच ॥

अन्यो युष्मत्प्रतुष्ट्यर्थमुपायश्चिंतितो मया ॥

स लघुर्येन वोऽत्यंतं तृप्तिर्भवति शाश्वती ॥११३॥

गयाशिरः समासाद्य श्राद्धं दास्यंति येऽत्र वः ॥

अप्येकं तत्प्रभावेन दिव्यां गतिमवाप्स्यथ ॥ ११४ ॥

अपि पापात्मनः पुंसो ब्रह्मघ्नस्यापि देहिनः ॥

अपि रौरवसंस्थस्य कुम्भीपाकगतस्य च ॥११५॥

प्रेतभावगतस्यापि यस्य श्राद्धं प्रदास्यति ॥

गयाशिरसि वंशस्थस्तस्य मुक्तिर्भविष्यति ॥ ११६ ॥

एतन्मम वचः श्रुत्वा सांप्रतं भुवि मानवाः ॥

निःस्वा अपि करिष्यंति श्रादमेकं हि तत्र च ॥

गयाशिरसि सुव्यक्तं युष्माकं मुक्तिदायकम् ॥ ११७ ॥

भर्तृयज्ञ उवाच ॥ ॥

तच्छ्रुत्वा पितरस्तस्य वचनं परमेष्ठिनः ॥
अनुज्ञातास्ततस्तेन स्वानि स्थानानि भेजिरे ॥ ११८ ॥
ततःप्रभृति श्राद्धानि प्रवृत्तानि धरातले ॥
पिंडदानसमे तानि यावदापुरुषत्रयम्॥ ११९ ॥
पूर्वं ब्रह्मादितः कृत्वा ये केचित्पुरुषा गताः ॥
परलोकं समुद्दिश्य तान्नराञ्छक्तितो नृप ॥ ६.२१६.१२० ॥
तत्संख्यानां द्विजेंद्राणां दत्तवंतोऽपि वांछितम् ॥
अदैवत्यमिदं श्राद्धं दरिद्राणां सुखावहम् ॥ १२१ ॥
पितॄणां देवतानां च मनुष्याणां सुतृप्ति दम् ॥
तस्माच्छ्राद्धं प्रकर्तव्यं पुरुषेण विजानता ॥ १२२ ॥
पितॄणां वांछता तृप्तिं कालेष्वेतेषु यत्नतः॥
गयायां च विशेषेण लोकद्वयमभीप्सता ॥ १२३ ॥
न ददाति नरः श्राद्धं पितॄणां चन्द्रसंक्षये ॥
क्षुत्पिपासापरीतांगाः पितरस्तस्य दुःखिताः ॥ ॥ १२४ ॥
प्रेतपक्षं प्रतीक्षंते गुरुवांछासमन्विताः ॥
कर्षुका जलदं यद्वद्दिवानक्तमतंद्रिताः ॥ १२५ ॥
प्रेतपक्षे व्यतिक्रांते यावत्कन्यां गतो रविः ॥
तावच्छ्राद्धं च वांछंति दत्तं स्वैः पितरः सुतैः ॥ १२६ ॥
ततस्तुलागतेप्प्येके सूर्ये वांछंति पार्थिव ॥
श्राद्धं स्ववंशजै र्दत्तं क्षुत्पिपासासमाकुलाः ॥ १२७ ॥
तस्मिन्नपि व्यतिक्रांते काले चांलिं गते रवौ ॥
निराशाः पितरो दीनास्ततो यांति निजालयम् ॥ १२८ ॥
मासद्वयं प्रतीक्षंते गृहद्वारं समाश्रिताः ॥
वायुभूताः पिपासार्ताः क्षुत्क्षामाः पितरो नृणाम् ॥ १२९ ॥
यावत्कन्यागतः सूर्यस्तुलास्थश्च महीपते॥
तथा दर्शदिने तद्वद्ब्रह्मणो वचनान्नृप ॥ ६.२१६.१३० ॥
तस्माच्छ्राद्धं सदा कार्यं पितॄणां तृप्तिमिच्छता ॥
तिलोदकं विशेषेण यथा ब्रह्मवचो नृप ॥१३१॥

वित्ताभावेऽपि दर्शायां श्राद्धं देयं विपश्चिता ॥

तदभावे च कन्यायां संस्थिते दिवसाधिपे ॥ १३२ ॥

तदभावे गयायां च सकृच्छ्राद्धं हि निर्वपेत् ॥

येन नित्यं प्रदत्तस्य श्राद्धस्य फलमश्नुते ॥ १३३ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नराधिप ॥

येनैतत्क्रियते श्राद्धं जनैः पितृ परायणैः ॥ १३४ ॥

अमावास्यां विशेषेण प्रेतपक्षे च पार्थिव ॥ १३५ ॥

यश्चैतां शृणुयात्पुण्यां श्राद्धोत्पत्तिं पठेच्च वा ॥

स सर्वदोषनिर्मुक्तः श्राद्धदानफलं लभेत् ॥ १३६ ॥

श्राद्धकाले पठेद्यस्तु श्राद्धोत्पत्तिमिमां नरः ॥

अक्षयं तद्भवेच्छ्राद्धं सर्वच्छिद्रविवर्जितम्॥ ॥ १३७ ॥

असदद्रव्येण वा चीर्णमनर्हैर्ब्राह्मणैरपि ॥

अभुक्तं कामहीनं वा मन्त्रहीनमथापि वा ॥ १३८ ॥

सर्वं संपूर्णतां याति कीर्तनात्पार्थिवोत्तम।

अस्याः श्राद्धसमुत्पत्तेः कीर्तनाच्छ्रवणादपि ॥ १३९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धोत्पत्तिवर्णनंनाम षोडशोत्तरद्विशततमोऽध्यायः ॥ २१६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१७

https://sa.wikisource.org/s/fq1
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ आनर्त उवाच ॥ ॥

विधिना येन कर्तव्यं श्राद्धं सर्वं मुनीश्वर॥

तमाचक्ष्वाऽद्य कात्स्न्र्येन श्रद्धा मे महती स्थिता॥ १ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

शृणु राजन्प्रवक्ष्यामि श्राद्धस्य विधिमुत्तमम् ॥

पितॄणां तुष्टिदं नित्यं सर्वकामप्रदं नृणाम् ॥ २ ॥

स्वकर्मोपार्जितैर्वित्तैः श्राद्धकार्याणि चाहरेत् ॥

मायादिभिर्न चौर्येण न च्छलाप्तैर्न वंचनैः॥

स्ववृत्त्योपार्जितैर्वित्तैः श्राद्धद्रव्यं समाहरेत्॥

सुप्रतिग्रहजैर्द्रव्यैर्ब्राह्मणानां विशिष्यते॥४॥

रक्षणाप्तैर्नरेन्द्रस्य वैश्यस्य क्षेत्र संभवैः॥

शूद्रस्य पण्यलब्धैश्च श्राद्धं कर्तुं प्रयुज्यते॥५॥

एवं शुद्धिसमोपेते द्रव्ये प्राप्ते गृहांतिकम्॥

पूर्वेद्युः सायमासाद्य श्राद्धार्हाणां द्विजन्मनाम्॥ ६ ॥

गृहं गत्वा शुचिर्भूत्वा कामक्रोधविवर्जितः॥

आमंत्रयेद्यतीन्पश्चात्स्नातकान्ब्रह्मकर्मिणः॥७॥

तदभावे गृहस्थांश्च

ब्रह्मज्ञानपरायणान्॥ अग्निहोत्रपरान्विप्रान्वेदविद्याविचक्षणान्॥८॥

श्रोत्रियांश्च तथा वृद्धान्षट्कर्मनिरतान्सदा॥

बहुभृत्यकुटुम्बांश्च दरिद्रान्संयुतान्गुणैः॥९॥

अव्यंगान्रोगनिर्मुक्ताञ्जिताहारांस्तथा शुचीन् ॥

एते स्युर्ब्राह्मणा राजञ्छ्राद्धार्हाः परिकीर्तिताः ॥ ६.२१७.१० ॥

अनर्हा ये च निर्दिष्टाः शृणु तानपि वच्मि ते ॥

हीनांगानधिकांगांश्च सर्वभाक्षन्निराकृतीन् ॥ ११ ॥

श्यावदन्तान्वृथादन्तान्वेदविक्रयकारकान् ॥

वेदविप्लवकान्वापि वेदशास्त्रविवर्जितान् ॥ ॥ १२ ॥

कुनखान्रोगसंयुक्तान्द्विर्नग्नान्परहिंसकान्॥

जनापवादसंयुक्तान्नास्तिकानृतकानपि ॥ १३ ॥

वार्धुषिकान्विकर्मस्थाञ्छौचाचारविवर्जि तान्॥

अतिदीर्घान्कृशान्वापि स्थूलानपि च लोमशान् ॥ १४ ॥

निर्लोमान्वर्जयेच्छ्राद्धे य इच्छेत्पितृगौरवम्॥

परदाररता ये च तथा यो वृषली पतिः ॥ १५ ॥

वंध्या वै वृषली प्रोक्ता वृषली च मृतप्रजा ॥

अपरा वृषली प्रोक्ता कुमारी या रजस्वला ॥ १६ ॥

षण्ढो मलिम्लुचो दम्भी राजपै शुन्यवृत्तयः ॥

सगोत्रायाश्च संभूतस्तथैकप्रवरासुतः ॥ १७ ॥

कनिष्ठः प्राक्कृताधानः कृतोद्वाहश्च प्राक्तु यः ॥

तथा प्राग्दीक्षितो यश्च स त्याज्यो गृहसंयुतः ॥ १८ ॥

पितृमातृपरित्यागी तथाच गुरुतल्पगः ॥

निर्द्दोषां यस्त्यजेत्पत्नीं कृतघ्नो यश्च कर्षुकः ॥ १९ ॥

शिल्पजीवी प्रमादी च पण्य जीवी कृतायुधः ॥

एतान्विवर्जयेच्छ्राद्धे येषां नो ज्ञायते कुलम् ॥ ६.२१७.२० ॥

अत ऊर्ध्वं प्रवक्ष्यामि ये शस्ताः श्राद्धकर्मणि ॥

ये ब्राह्मणाः पुरा ख्याताः पापानां पंक्तिपावनाः ॥ २१ ॥

त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडंगवित् ॥

यश्च विद्याव्रतस्नातो धर्मद्रोणस्य पाठकः॥ २२ ॥

पुराणज्ञस्तथा ज्ञानी विज्ञेयो ज्येष्ठसामवित् ॥

अथर्वशिरसो वेत्ता क्रतुगामी सुकर्मकृत् ॥ २३ ॥

सद्यःप्रक्षालको यश्च शुक्लो दौहित्र एव च ॥

जामाता भागिनेयश्च परोपकरणे रतः ॥ २२ ॥

मृष्टान्नादो मृष्टवाक्यः सदा जपपरायणः ॥

एते ? ब्राह्मणा ज्ञेया निःशेषाः पंक्तिपावनाः ॥ २५ ॥

एतैर्विमिश्रिताः सर्वे गर्हिता अपि ये द्विजाः ॥

पितॄणां तेऽपि कुर्वंति तृप्तिं भुक्त्वा कुलोद्भवाः ॥ २६॥
तस्मात्सर्वप्रयत्नेन कुलं ज्ञेयं द्विजन्मनाम् ॥
शीलं पश्चाद्वयो नाम कन्यादानं ततः परम् ॥ २७ ॥
श्रुतशीलविहीनाय धर्मज्ञायापि मानवः ॥
श्राद्धं ददाति कन्यां च यस्तेनाग्निं विना हुतम् ॥ २८ ॥
ऊषरे वापि तं सस्यं तुषाणां कण्डनं कृतम्॥
कुलाचारसमोपेतांस्तस्माच्छ्राद्धे नियोजयेत् ॥ २९ ॥
ब्राह्मणान्नृपशार्दूल मन्दविद्याधरानपि ॥
एवं विज्ञाय तान्विप्रान्गृहीत्वा चरणौ ततः ॥ ६.२१७.३० ॥
प्रयत्नेन तु सव्येन पाणिना दक्षिणेन तु ॥
युग्मानथ यथाशक्त्या नमस्कृत्य पुनःपुनः ॥ ३१ ॥
दक्षिणं जान्वथालभ्य मन्त्रमेनमुदीरयेत् ॥
आगच्छंतु महाभागा विश्वेदेवा महाबलाः ॥ ३२ ॥
भक्त्याहूता मया चैव त्वं चापि व्रतभाग्भव ॥
एवं युग्मा न्समामंत्र्य विश्वेदेवकृते द्विजान् ॥ ३३ ॥
अपसव्यं ततः कृत्वा पित्रर्थं चाभिमंत्रयेत् ॥
ब्राह्मणांस्त्रीन्यथाशक्त्या एकैकस्य पृथक्पृथक् ॥ ३४ ॥
एकैकं वा त्रयाणां वा एकमेवं निमंत्रयेत् ॥
ब्राह्मणान्मातृपक्षे च एष एव विधिः स्मृतः ॥ ३५ ॥
ततः पादौ परिस्पृष्ट्वा द्विजस्येदमुदीरयेत् ॥
श्रद्धा पूतेन मनसा पितृभक्तिपरायणः ॥ ३६ ॥
पिता मे तव कायेस्मिंस्तथा चैव पितामहः ॥
स्वपित्रा सहितो ह्येतु त्वं च व्रतपरो भव ॥ ३७ ॥
एवं पितॄन्समाहूय तथा मातामहानथ ॥
संमंत्रिताश्च ते विप्राः संयमात्मान एव ते ॥ ३८ ॥
यजमानः शांतमना ब्रह्मचर्यसमन्वितः ॥
तां रात्रिं समतिक्रम्य प्रातरुत्थाय मानवः ॥ ३९ ॥
तदह्नि वर्जयेत्कोपं स्वाध्यायं कर्म कुत्सितम् ॥

तैलाभ्यंगं श्रमं यानं वाहनं चाथ दूरतः ॥ ६.२१७.४० ॥

ततो मध्यं गते सूर्ये काले कुतपसंज्ञिते ॥

स्नातः शुक्लांबरधरः सन्तर्प्य पितृदेवताः ॥

सन्तुष्टांश्च समाहूतांस्तान्विप्राञ्छ्राद्धमाचरेत् ॥ ४१ ॥

विविक्ते गृहमध्यस्थे मनोज्ञे दक्षिणाप्लवे ॥

न यत्र जायते दृष्टिः पापानां क्रूरकर्मिणाम् ॥ ४२ ॥

यच्छ्राद्धं वीक्षते श्वा वा नारी वाऽथ रजस्वला ॥

पतितो वा वराहो वा तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ ४३ ॥

अन्नं पर्युषितं यच्च तैलाक्तं वा प्रदीयते ॥

सकेशं वा सनिंद्यं च तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ ४४ ॥

विभक्तिरहितं श्राद्धं तथा मौनविवर्जितम्॥

दक्षिणारहितं यच्च तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ ४५ ॥

घरट्टोलूखलोत्थौ च यत्र शब्दौ व्यवस्थितौ ॥

शूर्पस्य वा विशेषेण तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ ४६ ॥

यत्र संस्क्रियमाणे च कलहः संप्रजायते ॥

पंक्तिभेदो विशेषेण तच्छ्राद्धं व्यर्थतां व्रजेत् ॥४७॥

पूर्वाह्ले क्रियते यच्च रात्रौ वा संध्ययोरपि ॥

पर्याकाशे तथा देशे तच्छ्राद्धं व्यर्थतां व्रजेत ॥ ४८ ॥

ब्राह्मणो यजमानो वा ब्रह्मचर्यं विना यदि ॥

भुंक्ते दद्याच्च यच्छ्राद्धं तद्राजन्व्यर्थतां व्रजेत् ॥४९॥

तुषधान्यं सनिष्पावं यच्चोच्छिष्टं च दीयते ॥

अर्धभुक्तं घृतं क्षीरं तच्छ्राद्धं व्यर्थतां व्रजेत् ॥६.२१७.५०॥

येषु कालेषु यद्दत्तं श्राद्धमक्षयतां व्रजेत् ॥

तानहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ५१ ॥

मन्वादीरपि ते वच्मि ताः शृणुष्व नराधिप ॥

पितॄणां वल्लभा नित्यं सर्वपापक्षयावहाः ॥ ५२ ॥

यासु तोयमपि क्ष्मायां प्रदत्तं तिलमिश्रितम् ॥

पितृभ्योऽक्षयतां याति श्रद्धापूतेन चेतसा ॥ ५३ ॥

अश्वयुक्छुक्लनवमी द्वादशी कार्तिकस्य च ॥
तृतीयापि च माघस्य तथा भाद्रपदस्य च ॥ ५४ ॥
अमावास्या तपस्यस्य पौषस्यैकादशी तथा ॥
तथाऽऽषाढस्य दशमी माघमासस्य सप्तमी ॥ ५५ ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी व पूर्णिमा ॥
तथा कार्तिकमासस्य या चान्या फाल्गुनस्य च ॥ ५६ ॥
चैत्रस्य ज्येष्ठमासस्य पंचैताः पूर्णिमा नृप ॥
मनूनामादयः प्रोक्तास्तिथयस्ते मया नृप ॥ ५७ ॥
आसु तोयमपि स्नात्वा तिल दर्भविमिश्रितम् ॥
पितॄनुद्दिश्य यो दद्यात्स याति परमां गतिम् ॥ ५८ ॥
इह लोके परे चैव पितॄणां च प्रसादतः ॥
किं पुनर्विविधैरन्नै रसैर्वस्त्रैः सदक्षिणैः ॥ ५९ ॥
अधुना शृणु राजेन्द्र युगाद्याः पितृवल्लभाः ॥
यासां संकीर्तनेनापि क्षीयते पापसंचयः ॥ ६.२१७.६० ॥
नवमी कार्तिके शुक्ला तृतीया माधवे सिता ॥
अमावास्या च तपसो नभस्यस्य त्रयोदशी ॥ ६१ ॥
त्रेताकृतकलीनां तु द्वापरस्यादयः क्रमात् ॥
स्नाने दाने जपे होमे विशेषात्पितृतर्पणे ॥ ६२ ॥
कृतस्याक्षयकारिण्यः सुकृतस्य महाफलाः ॥
यदा स्यान्मेषगो भानुस्तुलां वाथ यदा व्रजेत् ॥ ६३ ॥
तदा स्याद्विषुवाख्यस्तु कालश्चाक्षयकारकः ॥
मकरे कर्कटे चैव यदा भानुर्व्रजेन्नृप ॥ ६४ ॥
तदायनाभिधानस्तु विषुवोऽथ विशिष्यते ॥
रवेः संक्रमणं राशौ संक्रांतिरिति कथ्यते ॥ ६५ ॥
स्नानदानजपश्राद्धहोमादिषु महाफलाः ॥
त्रेताद्याः क्रमशः प्रोक्ताः कालाः संक्रांतिपूर्वकाः ॥
नैतेषु विद्यते विघ्नं दत्तस्याक्षयसंज्ञिताः ॥ ६६ ॥
अश्रद्धयाऽपि यद्दत्तं कुपात्रेभ्योऽपि मानवैः ॥

अकालेऽपि हि तत्सर्वं सद्यो ह्यक्षयतां व्रजेत् ॥ ६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धार्हपदार्थब्राह्मणकालनिर्णय वर्णनंनाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥ २१७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१८



॥ भर्तृयज्ञ उवाच ॥ ॥

एतत्सामान्यतः प्रोक्तं मया श्राद्धं यथा नरैः ॥

कर्त्तव्यं विप्रपूर्वैर्यद्वर्णैः पार्थिवसत्तम ॥ १ ॥

अतः परं प्रवक्ष्यामि स्वशाखायाः स्मृतं नृप ॥

स्वदेशवर्णजातीयं यथा स्यादत्र निर्वृतिः ॥ २ ॥

श्राद्धे श्रद्धा यतो मूलं तेन श्राद्धं प्रकीर्तितम् ॥

तत्तस्मिन्क्रियमाणे तु न किंचिद्व्यर्थतां व्रजेत् ॥ ३ ॥

अनिष्टमपि राजेन्द्र तस्माच्छ्राद्धं समा चरेत् ॥

विप्रपादोदकं यत्तु भूमौ पतति पार्थिव ॥ ४ ॥

जाता ये गोत्रजाः केचिदपुत्रा मरणं गताः ॥

ते यांति परमां तृप्तिममृतेन यथा सुराः ॥ ॥

विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी॥

तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम्॥६॥

श्राद्धेऽथ क्रियमाणे तु यत्किंचित्पतति क्षितौ॥

पुष्पगन्धोदकं चान्नमपि तोयं नरेश्वर॥७॥

तेन तृप्तिं परां यांति ये कृमित्वमुपागताः॥

कीटत्वं वापि तिर्यक्त्वं व्यालत्वं च नराधिप॥८॥

यदुच्छिष्टं क्षितौ याति पात्रप्रक्षालनोद्भवम्॥

तेन तृप्तिं परां यांति ये प्रेतत्वमुपागताः ॥ ९ ॥

ये चापमृत्युना केचिन्मृत्युं प्राप्ताः स्ववंशजाः ॥

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ॥ ६.२१८.१० ॥

उच्छिष्टभागधेयं स्याद्दर्भेषु विकिरश्च यः ॥

विकिरेण प्रदत्तेन ते तृप्तिं यांति चाखिलाः ॥ ॥ ११ ॥

यत्किंचिन्मंत्रहीनं वा कालहीनमथापि वा ॥

विधिहीनं च संपूर्णं दक्षिणायां तु तद्भवेत् ॥ १२ ॥

तस्मान्न दक्षिणाहीनं श्राद्धं कार्यं विपश्चिता ॥
य इच्छेच्छाश्वतीं तृप्तिं पितृणामात्मनश्च यः ॥ १३ ॥
दक्षिणारहितं श्राद्धं यथैवोषरवर्षितम् ॥
यथा तमसि नृत्यं च गीतं वा बधिरस्य च ॥ १४ ॥
श्राद्धं दत्त्वा च युक्त्वा च श्राद्धे निष्कामतां व्रजेत् ॥
न स्वाध्यायः प्रकर्तव्यो न ग्रामांतरकं व्रजेत् ॥ १५ ॥
श्राद्धभुग्रमणीतल्पं तदहर्योऽधिगच्छति ॥
तं मासं पितरस्तस्य जायंते वीर्यभोजिनः ॥ १६ ॥
श्राद्धभुक्छ्राद्धदाता च यः सेवयति मैथुनम् ॥
तस्य संवत्सरं यावत्पितरः शुक्रभोजिनः ॥
प्रभवंति न संदेह इत्येषा वैदिकी श्रुतिः ॥ १७ ॥
श्राद्धे भुक्त्वाथ दत्त्वा वा यः श्राद्धं कुरुतेल्पधीः ॥
स्वाध्यायं पितरस्तस्य यावत्संवत्सरं नृप ॥
व्यर्थश्राद्धफलाः संतः पीड्यंते क्षुत्पिपासया ॥ १८ ॥
श्राद्धे भुक्त्वाऽथ दत्त्वा वा यः श्राद्धं मानवाधमः ॥
ग्रामातरं प्रयात्यत्र तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ १९ ॥
ब्राह्मणेन न भोक्तव्यं समायाते निमंत्रणे ॥
अथ भुंक्ते च यो मोहात्स प्रयाति ह्यधोगतिम् ॥ ६.२१८.२० ॥
यजमानेन च तथा न कार्यं भोजनं परम्॥
कुर्वंति ये नराः सर्वे ते यांति नरकं ध्रुवम् ॥ २१ ॥
श्राद्धे भुक्त्वाऽथ दत्त्वा वा श्राद्धं यो युद्धमाचरेत्॥
असंदिग्धं हि तच्छ्राद्धं स मन्दो व्यर्थतं नयेत् ॥ २२ ॥
तस्मात्सर्वप्रयत्नेन दोषानेतान्परित्यजेत् ॥
श्राद्धभुग्यजमानश्च विशेषेण महीपते ॥ २३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धनियमवर्णनंनामाष्टादशोत्तरद्विशततमोऽध्यायः ॥ २१८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २१९

https://sa.wikisource.org/s/fq3

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ भर्तृयज्ञ उवाच ॥ ॥

काम्यानि तेऽधुना वच्मि श्राद्धानि पृथिवीपते ॥

यैः कृतैः समवाप्नोति मर्त्यो हृदयसंस्थितम् ॥१॥

यो नारीं वांछते क्ष्माप रूपाढ्यां शीलमण्डनाम् ॥

इह लोके परे चैव तस्यार्हं प्रथमं दिनम् ॥ २॥

श्राद्धीयप्रेतपक्षस्य मुख्यभूतं च यन्नृप ॥

य इच्छेत्कन्यकां श्रेष्ठां सुशीलां रूपसंयु ताम् ॥

द्वितीयादिवसे तेन श्राद्धं कार्यं महीपते ॥ ३ ॥

यो वांछति नरोऽश्वांश्च वायुवेगसमाञ्जवे ॥

तृतीयादिवसे श्राद्धं तेन कार्यं विपश्चिता ॥ ४ ॥

यो वांछति पशून्मुख्यान्कुप्याकुप्यधनानि च ॥

चतुर्थ्यां तेन कर्तव्यं श्राद्धं पितृप्रतुष्टये ॥ ५ ॥

पुत्रान्वांछति योऽभीष्टान्सुशीलान्वंशमंडनान् ॥

पञ्चम्यां तेन कर्तव्यं सदा श्राद्धं नराधिप ॥ ६ ॥

यः श्राद्धं वंशजैर्दत्तं परलोकगतो नृप ॥

वांछते तेन कर्तव्यं षष्ठ्यां श्राद्धं विपश्चिता ॥ ७ ॥

कृषिसिद्धिं य इच्छेत ग्रैष्मिकीं शारदीमपि ॥

सप्तम्यां युज्यते तस्य श्राद्धं कर्तुं न संशयः ॥ ८ ॥

य इच्छेत्पण्यसंसिद्धिं व्यवहारसमुद्भवाम् ॥

अष्टम्यां युज्यते श्राद्धं तस्य कर्तुं नराधिप ॥ ९ ॥

नवम्यां श्राद्धकृन्नाना चतुष्पदगणाल्लँभेत् ॥

सौभाग्यं रोगनाशं च तथा वल्लभसंगमम् ॥ ६.२१९.१० ॥

दशमीदिवसे श्राद्धं यः करोति समाहितः ॥

तस्य स्याद्वांछिता सिद्धिः सर्वकृत्येषु सर्वदा ॥ ११ ॥

एकादश्यां धनं धान्यं श्राद्धकर्ता लभेन्नरः ॥

तथा भूपप्रसादं च यच्चान्यन्मनसि स्थितम् ॥ १२ ॥

यः करोति च द्वादश्यां श्राद्धं श्रद्धासमन्वितः ॥

पुत्रांस्तु प्रवरांश्चैव स पशून्वांछिताल्लँभेत् ॥ ॥ १३ ॥

यो वांछति नरो मुक्तिं पितृभिः सह चात्मनः ॥

असंतानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ॥ १४ ॥

संतानकामो यः कुर्यात्तस्य वंशक्षयो भवेत् ॥

न संतानविवृद्धयै च तस्य प्रोक्ता त्रयोदशी ॥ १५ ॥

श्राद्धकर्मणि राजेंद्र श्रुतिरेषा पुरातनी ॥

अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ॥ १६ ॥

पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥

मघात्रयोदशीयोगे पायसेन यजेत्पितॄन् ॥ १७ ॥

पितरस्तस्य नेच्छंति तद्वर्षं श्राद्धसत्क्रियाम् ॥

पुण्यातिशयभीतेन पिंडदानं निराकृतम् ॥ १८ ॥

शक्रेण तद्दिने पुत्रमरणं दर्शितं भयम् ॥

येषां च शस्त्रमृत्युः स्यादपमृत्युरथापि वा ॥ १९ ॥

उपसर्गमृतानां च विषमृत्युमुपेयुषाम् ॥

वह्निना तु प्रदग्धानां जलमृत्यु मुपेयुषाम् ॥ ६.२१९.२० ॥

सर्पव्यालहतानां च शृंगैरुद्बन्धनैरपि ॥

एकोद्दिष्टं प्रकर्तव्यं चतुर्दश्यां नराधिप ॥ २१ ॥

तेषां तस्मिन्कृते तृप्तिस्ततस्तत्पक्षजा भवेत् ॥ २२ ॥

सर्वे कामाः पुरः प्रोक्ता युष्माकं ये मया नृप ॥

अमावास्यादिने श्राद्धात्तानाप्नोति न संश यः ॥ २३ ॥

एतत्ते सर्वमाख्यातं काम्यश्राद्धफलं नृप ॥

यच्छ्रुत्वा वांछितान्कामान्सर्वानाप्नोति मानवः ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे काम्यश्राद्धवर्णननामैकोनविंशोत्तरद्विशततमोऽ ध्यायः ॥ २१९ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२०



॥ आनर्त उवाच ॥ ॥

त्रयोदश्यां कृते श्राद्धे कस्माद्वंशक्षयो भवेत् ॥

एतन्मे सर्वमाचक्ष्व विस्तरात्त्वं महा मुने॥

भर्तृयज्ञ उवाच॥

एषा मेध्यतमा राजन्युगादिः कलिसंभवा॥

स्नाने दाने जपे होमे श्राद्धे ज्ञेया तथाऽक्षया ॥ २ ॥

अस्यां चेत्तु गजच्छाया तिथौ राजन्प्रजायते ॥

तदाऽक्षयं मघायोगे श्राद्धं संजायते ध्रुवम्॥३॥

यः क्षीरं मधुना युक्तं तस्मिन्नहनि यच्छति ॥

पितॄनुद्दिश्य यो मांसं दद्याद्वाध्रीणसं च यः ॥ ४ ॥

वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥

त्रिःपिबंत्विंद्रियक्षीणं श्वेतं वृद्धमजापतिम् ॥ ५ ॥

तं तु वाध्रीणसं विद्यात्सर्वयूथाधिपं तथा ॥

खड्गमांसं च वा दद्यात्तृप्तिर्द्वादशवार्षिकी ॥

संजायते न संदेहस्तेषां वाक्यं न मे मृषा ॥ ६ ॥

आसीद्रथंतरे कल्पे पूर्वं पार्थिवसत्तमः॥

सिताश्वो नाम पांचालदेशीयःपितृभक्तिमान्॥७॥

मधुना कालशाकेन खड्गमांसेन केवलम् ॥

स हि श्राद्धं त्रयोदश्यां कुरु ते पायसेन च ॥ ८ ॥

सोमवंशं समुद्दिश्य श्राद्धं यच्छति भक्तितः ॥९॥

अथ तैर्ब्राह्मणैः सर्वैः स भूयः कौतुकान्वितैः ॥

कस्यचित्त्वथ कालस्य पृष्टो भुक्त्वा यथेच्छया ॥ ६.२२०.१० ॥

श्राद्धादनंतरं राजन्दृष्ट्वा तं श्रद्धयाऽन्वितम् ॥

पादावमर्द्दनपरं प्रणिपातपुरः सरम् ॥११॥

॥ ब्राह्मणा ऊचुः ॥ ॥

कृत्वा श्राद्धं महाराज प्रदातव्याऽथ दक्षिणा ॥
ब्राह्मणेभ्यस्ततः श्राद्धं पितॄणां चोपतिष्ठति ॥ १२ ।।
सा त्वया कल्पिताऽस्माकं वितीर्णाद्यापि नो नृप।
कुप्याकुप्यं परित्यज्य तां देहि नृप मा चिरम् ॥ १३ ॥
॥ भर्तृयज्ञ उवाच ॥ ॥
तच्छ्रुत्वा च नृपः प्राह संप्रहृष्टेन चेतसा ॥
धन्योऽस्म्यनुगृहीतोऽस्मि विप्रैरद्य न संशयः ॥ १४ ॥
ये वांछंति ममाभीष्टं श्राद्धे भुक्त्वाऽथ पैतृके १।
तस्माद्ब्रूत महाभागा युष्मभ्यं किं ददाम्यहम् ॥ १५ ॥
वर न्नागान्मदोन्मत्तान्भद्रजातिसमुद्भवान् ॥
किं वा सप्तिप्रधानांश्च मनोमारुतरंहसः ॥ १६ ॥
किं वा स्थानानि चित्राणि ग्रामाणि नगराणि च ॥
पितॄनुद्दिश्य यत्किंचिन्नादेयं विद्यते यतः ॥ १७ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
नास्माकं वाजिभिः कार्यं न रत्नैर्न च हस्तिभिः ॥
न देशैर्ग्राममुख्यैर्वा नान्येनापि च केनचित् ॥ १८ ॥
यदर्थेन महाराज पृष्टोस्माभिर्यतो भवान् ॥
तस्मान्नो दक्षिणां देहि संदेहघ्नां तपोत्तम ॥ १९ ॥
यां पृच्छामो वयं सर्वे कौतूहलसमाहिताः ॥ ६.२२०.२० ॥
॥ राजोवाच ॥ ॥
उपदेशाधिकारोऽस्ति ब्राह्मणानां महात्मनाम् ॥
दातुं नैव ग्रहीतुं च नी चजात्यस्य वैदिकाः ॥ २१ ॥
सोऽहं राजा न सर्वज्ञो यो यच्छामि द्विजोत्तमाः ॥
उपदेशं हि युष्मभ्यं सर्वज्ञेभ्यो विचक्षणाः ॥ २२ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
गुरुशिष्यसमुत्थोऽयमुपदेशो महीपते ॥
प्रार्थयामो वयं किंचिन्मा भयं त्वं समाविश ॥ २३ ॥
वयं च प्रश्नमेकं हि पृच्छामो यदि भूपते ॥

ब्रूषे कौतुकयुक्तानां सर्वेषां च द्विजन्मनाम् ॥ २४ ॥

तस्माद्वद महाभाग यदि जानासि तत्त्वतः ॥

न चेद्गुह्यतमं किंचित्पृच्छामस्त्वां कुतूहलात् ॥ २५ ॥

॥ राजोवाच ॥ ॥

यदि वः संशयो विप्रा युष्मत्प्रश्नमसंशयम् ॥

कथयिष्याभि चेद्गुह्यं तद्वद्ध्वं गप्ल? ज्वराः ॥ २६ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

अन्नेषु च विचित्रेषु लेह्येषु विविधेषु च ॥

अमृतेष्वेषु सर्वेषु तथा पेयेषु पार्थिव ॥ ॥ २७ ॥

तस्मादद्य दिने ब्रूहि मधु यच्छसि गर्हितम् ॥

वर्तते च यथाऽभक्ष्यं ब्राह्मणानां विशेषतः ॥ २८ ॥

तथा विचित्र मासेषु संस्थितेषु नराधिप ॥

खड्गमांसं निरास्वादं कस्माद्यच्छसि केवलम् ॥ २९ ॥

संति शाकानि राजेन्द्र पावनीयानि सर्वशः ॥

सुष्ठु स्वादु कराण्यत्र व्यञ्जनार्थं महीपते ॥ ६.२२०.३० ॥

कालशाकं सकटुकं मुखाऽऽधिजनकं महत् ॥

कस्माद्यच्छसि चास्माकं भक्त्या परमया युतः ॥

न श्राद्धे प्रतिषेधश्च प्रकर्तव्यः कथंचन ॥ ३१ ॥

न च त्याज्यं समुच्छिष्टं तेन भुंजामहे ततः ॥

तदत्र कारणेनैव गुरुणा भाव्यमेव हि ॥

येन त्वं यच्छसि प्राय एतत्सिद्धिर्भवेत्स्थिता ॥ ३२ ॥

तस्मात्कथय नः सर्वं परं कौतूहलं हि नः ॥

निःस्वादितं यथा दद्यादीदृक्छ्राद्धे विगर्हितम् ॥ ३३ ॥

यथा त्वं नृपशार्दूल श्रद्धया संप्रयच्छसि ॥ ३४ ॥

तच्छ्रुत्वा वचनं तेषां ब्राह्मणानां महात्मनाम् ॥

स वैलक्ष्यस्मितं प्राह सलज्जं पृथिवीपतिः ॥ ३५ ॥

गुह्यमेतन्महाभागा अस्माकं यदि संस्थितम् ॥

अवाच्यमपि वक्ष्यामि शृणुध्वं सुसमाहिताः ॥ ३६ ॥

अहमासं पुरा पापो लुब्धकश्चान्य जन्मनि ॥
निहंता सर्वजंतूनां तथा भक्षयिता पुनः ॥ ३७ ॥
पर्यटामि तदारण्ये धनुषा मृगयारतः ॥
सिंहो व्याघ्रो गजेन्द्रो वा शरभो वा द्विजो त्तमाः ॥ ३८ ॥
मद्बाणगोचरं प्राप्तो न जीवत्यपि कर्हिचित् ॥
कस्यचित्त्वथ कालस्य भ्रममाणो महीतले ॥ ३९ ॥
संप्राप्तोऽहं महाभागा अग्नि वेशस्य सन्मुनेः ॥
आश्रमे समनुप्राप्तो निशीथे क्षुत्पिपासितः ॥ ६.२२०.४० ॥
तावत्तत्र सशिष्याणां श्राद्धकर्मविधिं वदन्॥
संस्थितो वेष्टितः शिष्यैः समन्ताद्द्विजसत्तमाः ॥ ४१ ॥
॥ अग्निवेश उवाच ॥ ॥
ऋक्षे पित्र्ये यदा चन्द्रो हंसश्चापि करे व्रजेत् ॥
त्रयोदशी तु सा च्छाया विज्ञेया कुञ्जरोद्भवा ॥ ४२ ॥
पित्र्ये यदास्थितश्चेन्दुर्हंसश्चापि करे स्थितः ॥
तिथिर्वैश्रवणी या च सा च्छाया कुञ्जरस्य च ॥ ४३ ॥
सैंहिकेयो यदा चंद्रं ग्रसते पर्वसंधिषु ॥
हस्तिच्छाया तु सा ज्ञेया तस्यां श्राद्धं समाचरेत् ॥ ४४ ॥
तस्यां यः कुरुते श्राद्धं जलैरपि प्रभक्तितः ॥
यावद्द्वादश वर्षाणि पितरस्तस्य तर्पिताः ॥ ४५ ॥
वनस्पतिगते सोमे या च्छाया पूर्वतोमुखी ॥
गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम् ॥ ४६ ॥
सा भवेच्च न सन्देहः पुण्यदा पैतृकी तिथिः ॥
तस्यां श्राद्धं प्रकर्तव्यं संभाराः संभृताश्च ये ॥ ४७ ॥
प्रभाते तु न सन्देहः पितॄणां परितृप्तये ॥
शाकैस्तथैंगुदैर्बिल्वैर्बदरैश्चिर्भटैरपि ॥ ४८। ॥
यदन्नं पुरुषोऽश्नाति तदन्नास्तस्य देवताः ॥
बाढमित्येव ते प्रोच्य गताः स्वंस्वं निकेतनम् ॥ ४९ ॥
सर्वे शिष्या महाभागाः नारायणपुरोगमाः ॥

अग्निवेश्योऽपि सुष्वाप समामन्त्र्य द्विजोत्तमान्॥ ६.२२०.५० ॥

तेन संकथ्यमानं च रात्रौ तच्च श्रुतं मया ॥

अहं चापि करिष्यामि प्रातः श्राद्धमसंशयम् ॥ ५१ ॥

निहत्य खड्गमादाय तस्य मांसं सुपुष्कलम् ॥

तथा मधु समादाय कालशाकं विशेषतः ॥ ॥ ५२ ॥

स्वजातीयेभ्य आदाय तर्पयिष्यामि तान्पितॄन् ॥ ५३ ॥

एवं निश्चित्य मनसा प्रसुप्तोऽहं द्विजोत्तमाः ॥

ततः प्रभाते विमले प्रोद्गते रविमण्डले ॥५४॥

मधुजालानि भूरीणि गृहीतानि मया ततः ॥

कालशाकं तथा लब्धं स्वेच्छया द्विजसत्तमाः ॥५५॥

ततः सर्वं समादाय श्रपितं तत्क्षणान्मया ॥

स्नात्वा च निजवर्गाणां पितॄनुद्दिश्य चात्मनः ॥

प्रदत्तं लुब्धकानां च भक्तिपूर्वं द्विजोत्तमाः ॥ ५६ ॥

एवं मया पुरा दत्तं पितॄ नुद्दिश्य तान्निजान् ॥

नान्यत्किंचिन्मया दत्तं कदाचित्कस्यचिद्द्विजाः ॥ ५७ ॥

ततः कालेन महता मृत्युं प्राप्तोऽस्म्यहं द्विजाः ॥

तद्दानस्य प्रभावेन पार्थिवीं योनिमाश्रितः ॥ ५८ ॥

एवं जातिस्मरत्वं च सञ्जातं मे द्विजोत्तमाः ॥

ते च मे तर्पितास्तेन खड्गमांसेन माक्षिकैः ॥५९ ॥

संप्राप्ताः परमां प्रीतिं ततो द्वाशवार्षिकीम् ॥

एतस्मात्कारणाच्छ्राद्धं प्रकरोमि द्विजोत्तमाः ॥ ६.२२०.६० ॥

खड्गमांसेन मधुना कालशाकेन भूरिशः ॥

विधिहीनं द्विजैर्हीनं तिलदर्भैर्विवर्जितम् ॥ ६१ ॥

मया तद्विहितं श्राद्धं तस्यैतत्फलमागतम् ॥

सांप्रतं विधिना सम्यग्ब्राह्मणैर्वेदपारगैः ॥ ६२ ॥

उपविष्टैः करोम्येव यच्छ्राद्धं श्रद्धयान्वितः ॥

दर्भैस्तिलैः समोपेतं मन्त्रवच्च द्विजोत्तमाः ॥ ६३ ॥

नो जानामि फलं किं वा सांप्रतं च भविष्यति ॥

तस्मादेवं परिज्ञाय यूयं चैव द्विजोत्तमाः ॥ ६४ ॥

संतर्पयध्वं च पितॄन्निजान्गजदिने स्थिते ॥

छायायां चैव जातायां कुञ्जरस्य द्विजोत्तमाः ॥६५॥

येन संजायते तृप्तिः पितॄणां द्वादशाब्दिकी ॥

युष्माकं च गतिः श्रेष्ठा यथा जाता ममाधुना ॥ ६६ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा सर्वे ते ब्राह्मणोत्तमाः ॥

संतुष्टाः साधुवादांश्च ददुस्तस्य महीपतेः ॥ ६७ ॥

ततःप्रभृति चक्रुस्ते श्राद्धानि द्विजसत्तमाः ॥

त्रयोदश्यां नभस्यस्य कृष्णायां भक्तितत्पराः ॥ ६८ ॥

मधुना कालशाकेन खड्गमांसेन तर्पिताः ॥

प्राप्नुवंति परां सिद्धिं विमानवरमास्थिताः ॥ ६९ ॥

स्पर्धंते सहिता दैवैः पितरश्च विशेषतः ॥

वंशजेन प्रदत्तस्य प्रभावात्सुरसत्तमाः ॥ ६.२२०.७० ॥

श्राद्धार्थं संपरिज्ञाय मन्त्रं चक्रुः परस्परम् ॥

आदित्या वसवो रुद्रा नासत्यावपि पार्थिव ॥ ७१ ॥

यथा न भवति श्राद्धं तस्मिन्नहनि भूतले ॥

यत्प्रभावाद्वयं सर्वे मानुषैः श्राद्धमाश्रितैः ॥

न यामोऽभिभवस्थानं तस्माच्छप्स्यामहे च तान् ॥ ७२ ।१

अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति ॥

कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसंक्षयः ॥७३॥

इति शापेन देवानां निर्दग्धेयं महातिथिः ॥ ७४ ॥

ततःप्रभृति नैतस्या क्रियते श्राद्धमुत्तमम् ॥

यः प्रमादेन कुरुते तस्य स्याद्वंश संक्षयः ॥ ७६ ॥

येन भीता न कुर्वंति च्छायायां कुञ्जरस्य च ॥

विशेषेण गजच्छाये तत्र पिण्डोऽयमाहृतः ॥ ७३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे गजच्छायामाहात्म्यवर्णनंनाम विंशत्युत्तरद्विशत तमोऽध्यायः ॥ २२० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२१

https://sa.wikisource.org/s/fq6



॥ भर्तृयज्ञ उवाच ॥ ॥

एतस्मात्कारणात्कश्चित्तस्मिन्नहनि पार्थिव ॥

ददाति नैव च श्राद्धं पितॄनुद्दिश्य कर्हिचित् ॥

वंशच्छेदभयाद्राजन्सत्यमेतन्मयोदितम् ॥ १ ॥

श्राद्धं विनापि दातव्यं तद्दिने मधुना सह ॥

पायसं ब्राह्मणाग्र्येभ्यः सघृतं तृप्तिकारणात् ॥ २ ॥

खड्गमांसं कालशाकं मांसं वाध्रीणसोद्भवम् ॥

प्रदेयं ब्राह्मणेभ्यश्च तत्समंतादुदाहृतम् ॥ ३ ॥

त्रिःपिबश्चेंद्रियक्षीणः सर्वयूथानुगस्तथा ॥

एष वाध्रीणसः प्रोक्तः पितॄणां तृप्तिदः सदा ॥ ४ ॥

तस्याभावेऽपि दातव्यं क्षीरौदनमनुत्तमम् ॥

तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप ॥ ५ ॥

तस्याभावेऽपि दातव्यं जलं तिलविमिश्रितम्॥

सदर्भं सहिरण्यं च हिरण्यशकलान्वितम् ॥ ६ ॥

यच्छ्रेयो जायते पुंसः पक्षश्राद्धेन पार्थिव ॥

कृतेन तत्फलं कृत्स्नं तस्मिन्नहनि पार्थिव ॥ ७ ॥

पितॄनुद्दिश्य चाऽऽज्येन मधुना पायसेन च ॥

कालशाकेन मधुना खड्गमांसेन वा नृप ॥ ८ ॥

श्राद्धं विनापि दत्तेन श्रुतिरेषा पुरातनी ॥

तस्मात्सर्वप्रयत्नेन पित्र्यक्ष्यें समुपस्थिते ॥

त्रयोदश्यां नभस्यस्य हस्तगे दिननायके ॥ ९ ॥

दरिद्रेणापि दातव्यं हिरण्यशकलान्वितम् ॥

तोयं तिलैर्युतं राजन्पितॄणां तुष्टिमिच्छता ॥ ६.२२१.१० ॥ ॥

॥ आनर्त उवाच ॥ ॥

मांसं विगर्हितं विप्र यतः शास्त्रे निगद्यते ॥

तस्मात्तत्क्रियते केन श्राद्धं कीर्तय मेऽखिलम् ॥ ११ ॥

स्वमांसं परमांसेन यो वर्धयति निर्दयः ॥

स नूनं नरकं याति प्रोक्तमेतन्महर्षिभिः ॥ १२ ॥

त्वं च तस्य प्रभावं मे प्रजल्पसि द्विजो त्तम ॥

विशेषाच्छ्राद्धकृत्ये च तदेवं मम संशयः ॥ १३ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

सत्यमेतन्महाभाग मांसं सद्भिर्विगर्हितम् ॥

श्राद्धे प्रयुज्यते यस्मात्तत्तेऽहं वच्मि कारणम् ॥ १४ ॥

यदा चारंभिता सृष्टिर्ब्रह्मणा लोककारिणा ॥

संपूज्य च पितॄन्देवान्नांदीमुखपुरःसरान्॥

तदा खड्गः समुत्पन्नः पूर्वं वाध्रीणसश्च यः ॥ १५ ॥

ततो ये पितरो दिव्या ये च मानुषसम्भवाः ॥

जगृहुस्ते ततः सर्वे बलिभूतमिवात्मनः ॥ १६ ॥

तानुवाच ततो ब्रह्मा एतौ तु पितरो मया ॥

युष्मभ्यं कल्पितौ सम्यग्बलिभूतौ प्रगृह्यताम् ॥ १७ ॥

एताभ्यां परमा प्रीतिर्युष्मभ्यं संभविष्यति ॥

मम वाक्यादसंदिग्धं परमेतौ नरो भुवि ॥ १८ ॥

नैव संप्राप्स्यते पापं युष्मदर्थंहनन्नपि ॥

तस्मात्सर्वप्रयत्नेन दातव्यं भूतिमिच्छता ॥ १९ ॥

खड्गवाध्रीणसोद्भूतं मांसं श्राद्धे सुतृप्तिदम् ॥

तौ चापि परमौ दिव्यौ स्वर्गं लोकं गमिष्यतः ॥ ६.२२१.२० ॥

श्राद्धदस्य परं श्रेयो भविष्यति सुदुर्लभम् ॥

पितॄणां चाक्षया तृप्तिर्भवेद्द्वादशवार्षिकी ॥ २१ ॥

एतस्मात्कारणाच्छस्तं मांसमाभ्यां नराधिप ॥

तस्मिन्नहनि नान्यत्र विनियोगोऽस्य कीर्तितः ॥ २२ ॥

॥ रोहिताश्व उवाच ॥ ॥

अप्राप्तखड्गमांसस्य तथा वाध्रीणसस्य च ॥

कथं श्राद्धं भवेद्विप्र पितॄणां तृप्तिका रकम् ॥ २३ ॥

॥ मार्कण्डेय उवाच ॥ ॥

मधुना सह दातव्यं पायसं पितृतुष्टये ॥

तेन वै वार्षिकी तृप्तिः पितृणां चोपजायते ॥ २४ ॥

आजं च पिशितं राजञ्छिशुमारसमुद्भवम्॥

मांसं प्रतुष्टये प्रोक्तं वत्सरं मासवर्जितम् ॥ २५ ॥

तदभावे वराहस्य दशमासप्रतुष्टिदम् ॥

मांसं प्रोक्तं महाराज पितृणां नात्र संशयः ॥ २६ ॥

आरण्यमहिषोत्थेन तृप्तिः स्यान्नवमासिकी ॥

रुरोश्चैवाष्टमासोत्था एणस्य सप्तमासिका ॥ २७ ॥

शम्बरोर्मासषट्कं च शशकस्य तु पञ्चकम् ॥

चत्वारः शल्लकस्योक्तास्त्रयो वा तैत्तिरस्य च ॥ २८ ॥

मासद्वयं च मत्स्यस्य मासमेकं कपिञ्जले ॥

नान्येषां योजयेन्मांसं पितृकार्ये कथंचन ॥ २९ ॥

एतेषामेव मांसानि पावनानि नृपोत्तम ॥ ६.२२१.३० ॥

॥ आनर्त उवाच ॥ ॥

कस्मादेते पवित्राः स्युर्येषां मांसं प्रचोदितम् ॥

श्राद्धे च तन्ममाचक्ष्व यथावद्द्विजसत्तम ॥ ३१ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

सृष्टिं प्रकुर्वता तेन पशवो लोककारिणा ॥

खड्गवाध्रीणसादीनां पश्चात्सृष्टाः स्वयंभुवा ॥ ३२ ॥

एकादशप्रमाणेन ततश्चान्ये नृपोत्तम ॥

अजश्च प्रथमं सृष्टः स तथा मेध्यतां गतः ॥ ३३ ॥

तथैते प्रथमं सृष्टाः पशवोऽत्र नराधिप ॥

सस्यानि सृजता तेन तिलाः पूर्वं च निर्मिताः ॥ ३४ ॥

श्राद्धार्थं व्रीहयः सृष्टा वन्येषु च प्रियंगवः॥

गोधूमाश्च यवाश्चैव माषा मुद्गाश्च वै नृप [। ३५ ॥

नीवाराश्चापि श्यामाकाः प्रवक्ष्यामि यथाक्रमम् ॥

तृप्तिं मांसेन वाञ्छंति मांसं मांसेन वर्जितम् ॥ ३६ ॥

पुष्पजात्यो यदा सृष्टास्तदा प्राक्छतपत्रिका ॥

सृष्टा तेन च मुख्या सा श्राद्धकर्मणि सर्वदा ॥ ३७ ॥

धातूनि सृजता तेन रूप्यं सृष्टं स्वयंभुवा ॥

तेन तद्विहितं श्राद्धे दक्षिणायां प्रतृप्तये॥३८॥

राजतेषु च पात्रेषु यद्द्विजेभ्यः प्रदीयते॥

पितृभ्यस्तस्य नैवाऽन्तो युगान्तेऽपि प्रजायते ॥ ३९ ॥

अभावे रूप्यपात्राणां नामापि परिकीर्तयेत् ॥

तुष्यंति पितरो राजन्कीर्तनादपि वै यतः ॥ ६.२२१.४० ॥

रसांश्च सृजता तेन मधु सृष्टं स्वयंभुवा ॥

तेन तच्छस्यते श्राद्धे पितृणां तुष्टिदायकम् ॥ ४१ ॥

यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि ॥

मिष्टान्नैरपि संयुक्तं तत्पितॄणां न तृप्तये ॥ ४२ ॥

अणुमात्रमपि श्राद्धे यदि न स्याद्धि माक्षिकम् ॥

नामापि कीर्तयेत्तस्य पितृणां तुष्टये यतः ॥ ४३ ॥

शाकानि सृजता तेन ब्रह्मणा परमेष्ठिनौ ॥

कालशाकं पुरः सृष्टं तेन तत्तृप्तिदायकम् ॥ ४४ ॥

कालं हि सृजता तेन कुतपः प्राग्विनिर्मितः ॥

तस्मात्कुतप काले च श्राद्धं कार्यं विजानता ॥

य इच्छेच्छाश्वतीं तृप्तिं पितृणामात्मनः सुखम् ॥ ४५ ॥

वीरुधः सृजता तेन विधिना नृपसत्तम ॥

दर्भास्तु प्रथमं सृष्टाः श्राद्धार्हास्तेन ते स्मृताः ॥ ४६ ॥

श्राद्धार्हान्ब्राह्मणांस्तेन सृजता पद्मयोनिना ॥

दौहित्राः प्रथमं सृष्टाः श्राद्धार्हास्तेन ते स्मृताः ॥ ॥४७ ॥

अपि शौचपरित्यक्तं हीनांगाधिकमेव वा ॥

दौहित्रं योजयेच्छ्राद्धे पितृणां परितुष्टये ॥ ४८ ॥

पशून्विसृजता तेन पूर्वं गावो विनिर्मिताः॥

तेन तासां पयः शस्तं श्राद्धे सर्पिर्विशेषतः ॥ ४९ ॥

तस्माच्छ्राद्धे घृतं शस्तं प्रदत्तं पितृतुष्टये ॥ ६.२२१.५० ॥

प्रजाश्च सृजता तेन पूर्वं दृष्टा द्विजोत्तमाः ॥

तस्मात्प्रशस्तास्ते श्राद्धे पितृतृप्तिकराः सदा ॥ ५१ ॥

देवांश्च सृजता तेन विश्वेदेवाः कृताः पुरः ॥

तेन ते प्रथमं पूज्याः प्रवृत्ते श्राद्धकर्मणि ॥ ५२ ॥

ते रक्षंति ततः श्राद्धं यथावत्परितर्पिताः ॥

छिद्राणि नाशयंति स्म श्राद्धे पूर्वं प्रपूजिताः ॥ ५३ ॥

एतैर्मुख्यतमैः सृष्टैः पूरा श्राद्धं विनिर्मितम् ॥

स्वयं पितामहेनैव ततो देवा विनिर्मिताः ॥ ५४ ॥

तेन ते सर्वलोकेषु गताः ख्यातिं पुरा नृप ॥ ५५ ॥

एतच्छ्राद्स्य सत्रत्वं मया ते परिकीर्तितम् ॥

पितॄणां परमं गुह्यं दत्तस्याक्षयकारकम् ॥ ५६ ॥

यश्चैतत्कीर्तयेच्छ्राद्धे क्रियमाणे नृपोत्तम ॥

विप्राणां भोक्तुकामानां तच्छ्राद्धं त्वक्षयं भवेत् ॥५७॥

यश्चैतच्कृणुयाद्राजन्सम्यक्छ्रद्धासमन्वितः ॥

विहितस्य भवेत्पुण्यं यच्छ्राद्धस्य तदाप्नुयात् ॥५८॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेरक्षेत्रमाहात्म्ये श्राद्धकल्पे सृष्ट्युत्पत्तिकालिकब्रह्मोत्सृष्टश्राद्धार्हवस्तुपरिगणनवर्णनं नामैकविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२२

https://sa.wikisource.org/s/fq7
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ भर्तृयज्ञ उवाच ॥ ॥

येषां च शस्त्रमृत्युः स्यादपमृत्युरथापि वा ॥

उपसर्गान्मृतानां च विषमृत्युमुपेयुषाम् ॥ १ ॥

वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम् ॥

सर्पव्याघ्रहतानां च शृंगैरुद्बन्धनैरपि ॥ २ ॥

श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप ॥

तेषां तस्मिन्कृते तृप्तिस्ततस्तत्पक्षजा भवेत् ॥ ३ ॥

॥ आनर्त उवाच ॥ ॥

कस्माच्छस्त्रहतानां च प्रोक्ता श्राद्धे चतुर्दशी ॥

नान्येषां दिवसे तत्र संशयोऽयं वदस्व मे ॥ ४ ॥

एकोद्दिष्टं न शंसंति सपिण्डीकरणं परम् ॥

कस्मात्तत्र प्रकर्तव्यं वदैतन्मम विस्त रात् ॥ ५॥

कस्मान्न पार्वणं तत्र क्रियते दिवसे स्थिते ॥

प्रेतपक्षे विशेषेण कृते श्राद्धेऽखिलेऽपि च ॥ ६ ॥

॥ भर्तृयज्ञउवाच॥ ॥

बृहत्कल्पे पुरा राजन्हिरण्याक्षो महासुरः ॥

बभूव बलवाञ्छूरः सर्वदेवभयंकरः ॥ ७ ॥

ब्रह्मा प्रतोषितस्तेन विधाय विविधं तपः ॥

कृष्णपक्षे विशेषेण नभस्ये मासि संस्थिते ॥ ८ ॥

॥ ब्रह्मोवाच ॥ ॥

परितुष्टोस्मि ते वत्स प्रार्थयस्व यथेप्सितम् ॥

अदेयमपि दास्यामि तस्मात्प्रार्थय मा चिरम् ॥९ ॥ ।।

॥ हिरण्याक्ष उवाच ॥ ॥

भूताः प्रेताः पिशाचाश्च राक्षसा दैत्यदानवाः ॥

बुभुक्षिताः प्रयाचंते मां नित्यं पद्मसंभव ॥ ६.२२२.१० ॥

प्रेतपक्षे कृते श्राद्धे कन्यासंस्थे दिवाकरे ॥

एकस्मिन्नहनि प्रायस्तृप्तिः स्याद्वर्षसंभवा ॥ ११ ॥

तत्त्वमद्य दिनं देहि तेभ्यः कमलसम्भव ॥

तेन तृप्तिं गताः सर्वे स्थास्यंत्यब्दं पितामह ॥ १२ ॥

॥ श्रीब्रह्मोवाच ॥ ॥

यः कश्चिन्मानवः श्राद्धं स्वपितृभ्यः प्रदास्यति ॥

प्रेतपक्षे चतुर्दश्यां नभस्ये मा सि संस्थिते॥१३॥

प्रेतानां राक्षसानां च भूतादीनां भविष्यति॥

मम वाक्यादसंदिग्धं ये चान्ये कीर्तितास्त्वया॥१४॥

दुर्मृत्युना मृता ये च संग्रामेषु हताश्च ये ॥

एकोद्दिष्टे सुतैर्दत्ते तेषां तृप्तिर्भविष्यति ॥ १५ ॥

एवमुक्त्वा ततो ब्रह्मा ततश्चादर्शनं गतः ॥

हिरण्याक्षोऽपि संहृष्टः स्वमेव भवनं ययौ ॥ १६ ॥

यच्च शस्त्रहतानां च तस्मिन्नहनि दीयते ॥

एकोद्दिष्टं नरैः श्राद्धं तत्ते वक्ष्यामि कारणम्॥ १७ ॥

संख्ये शस्त्रहता ये च निर्विकल्पेन चेतसा ॥

युध्यमाना न ते मर्त्ये जायते मनुजाः पुनः ॥ १८ ॥

पराङ्मुखाश्च हन्यंते पलायनपरायणाः ॥

ते भवंति नराः प्रेता एतदाह पितामहः ॥१९॥

सम्मुखा अपि ये दैन्यं हन्यमाना वदंति च ॥

पश्चात्तापं च वा कुर्युः प्रहारैर्जर्जरीकृताः॥६.२२२.२०॥

तेऽपि प्रेता भवन्तीह मनुः स्वायंभुवोऽब्रवीत्॥

कदाचिच्चित्तचलनं शूराणामपि जायते ॥ २१ ॥

तेषां भ्रांत्या दिने तत्र श्राद्धं देयं निजैः सुतैः ॥

अपमृत्युमृतानां च सर्वेषामपि देहिनाम् ॥ २२ ॥

प्रेतत्वं जायते यस्मात्तस्माच्छ्राद्धस्य तद्दिनम् ॥

श्राद्धार्हं पार्थिवश्रेष्ठ विशेषेण प्रकीर्तितम् ॥ २३ ॥

एकोद्दिष्टं प्रकर्तव्यं यस्मात्तत्र दिने नरैः ॥

सपिंडीकरणादूर्ध्वं तत्ते वक्ष्याभि कारणम् ॥ २४ ॥

यदि प्रेतत्वमापन्नः कदाचित्स्वपिता भवेत् ।

तृप्त्यर्थं तस्य कर्तव्यं श्राद्धं तत्र दिने नृप ॥२५॥

पितामहाद्यास्तत्राह्नि श्राद्धं नार्हति कुत्रचित् ॥

अथ चेद्भ्रांतितो दद्याद्धियते(?) राक्षसैस्तु तत् ॥ २६ ॥

ब्रह्मणो वचनाद्राजन्भूतप्रेतैश्च दानवैः ॥

तेनैकोद्दिष्टमेवात्र कर्तव्यं न तु पार्वणम् ॥ २७ ॥

पितृपक्षे चतुर्दश्यां कन्यासंस्थे दिवाकरे ॥

पितामहो न गृह्णाति पित्रा तेन समं तदा ॥ २८ ॥

न च तस्य पिता राजंस्तथैव प्रपितामहः ॥ २९ ॥

एतस्मात्कारणाद्राजन्पार्वणं न विधीयते ॥

तस्मिन्नहनि संप्राप्ते व्यर्थं श्राद्धं भवेद्यतः ॥ ६.२२२.३० ॥

नान्यस्थानोद्भवैर्विप्रैः श्राद्धकर्मव्रतानि च ॥

नागरो नागरैः कुर्यादन्यथा तद्वृथा भवेत् ॥ ३१ ॥

अन्यस्थानोद्भवैर्विप्रैर्यच्छ्राद्धं क्रियते ध्रुवम् ॥

संपूर्णं व्यर्थतां याति नागराणां क्रियापरैः ॥ ३२ ॥

अथाचारपरिभ्रष्टाः श्राद्धार्हा एव नागराः ॥

वलीवर्दसमानोऽपि ज्ञातीयो यदि लभ्यते ॥

किमन्यैर्बहुभिर्विप्रैर्वेदवेदांगपारगैः ॥ ३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे चतुर्दशीशस्त्रहतश्राद्धनिर्णयवर्णनंनाम द्वाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२३



॥ भर्तृयज्ञ उवाच ॥ ॥

श्राद्धार्हैर्ब्राह्मणैः कार्यं श्राद्धं दर्शे तु पार्वणम्॥

विपरीतं न कर्तव्यं श्राद्धमेकं कथंचन ॥ १ ॥

जारजातापविद्धाद्यैर्यो नरः श्राद्धमाचरेत् ॥

ब्राह्मणैस्तु न संदेहस्तच्छ्राद्धं व्यर्थतां व्रजेत् ॥ २ ॥

॥ आनर्त उवाच ॥ ॥

भयं मे सुमहज्जातमत्र यत्परिकीर्तितम् ॥

जारजातापविद्धैस्तु यच्छ्राद्धं व्यर्थतां व्रजेत् ॥ ३ ॥

मनुना द्वादश प्रोक्ताः किल पुत्रा महामते ॥

अपुत्राणां च पुत्रत्वं ये कुर्वंति सदैव हि ॥ ४ ॥

औरसः क्षेत्रजश्चैव क्रयक्रीतश्च पालितः ॥

प्रतिपन्नः सहोढश्च कानीनश्चापि सत्तम॥५॥

तथान्यौ कुण्डगोलौ च पुत्रावपि प्रकीर्तितौ ॥६॥

शिष्यश्च रक्षितो मृत्योस्तथाश्वत्थो वनांतिगः ॥

किमेते नैव कथिता यत्त्वमेवं प्रजल्पसि ॥ ७ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

सत्यमेतन्महाभाग सर्वे ते धर्मतः सुताः ॥

परं युगत्रये प्रोक्ता न कलौ कलुषापहाः ॥ ॥ ८ ॥

तदर्थं तेषु सन्तानं तावन्मात्रं युगेयुगे ॥

सत्त्वाढ्यानां च लोकानां न कलौ चाल्पमेधसाम् ॥ ९ ॥

कलावेव समाख्यातो व्यवहारः प्रपा तदः ॥

अल्पसत्त्वा यतो लोकास्तेन चैष विधिः स्मृतः ॥ ६.२२३.१० ॥

अत्र यः संकरं कुर्याद्योनेस्तस्य फलं शृणु ॥

ब्राह्मण्यां ब्राह्मणात्पुत्रो ब्रह्मघ्नः संप्रजायते ॥ ११ ॥

सर्वाधमानामधमो यो वारड इति स्मृतः ॥ १२ ॥

क्षत्रियाच्च तथा सूतो वैश्यान्मागध एव च ॥

शूद्रात्तथांत्यजः प्रोक्तस्तेनैते वर्जिताः सुताः ॥ १३ ॥

एतेषामपि निर्दिष्टाः सप्त राजन्सुपुत्रकाः ॥

पंच वंशविनाशाय पूर्वेषां पातनाय च ॥ १४ ॥

औरसः प्रतिपन्नश्च क्रीतः पालित एव च ॥

शिष्यश्च दत्तजीवश्च तथाश्वत्थश्च सप्तमः ॥ १५ ॥

पुंनाम्नो नरकाद्घोराद्रक्षंति च सदा हि ते ॥

पतन्तं पुरुषं तत्र तेन ते शोभनाः स्मृताः ॥ १६ ॥

क्षेत्रजश्च सहोढश्च कानीनः कुण्डगोलकौ ॥

पंचैते पातयंतिस्म पितॄन्स्वर्गगतानपि ॥ १७ ॥

एतस्मात्कारणाच्छ्राद्धं जारजातस्य तद्वृथा ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धार्हानर्हब्राह्मणादिवर्णनंनाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ २२३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२४



॥ आनर्तउवाच ॥ ॥

श्रुता मया महाभाग श्राद्धार्हा ब्राह्मणाश्च ये ॥

ये च त्याज्यास्तथा पुत्रा बहवश्चैव सुव्रत ॥ १ ॥

सांप्रतं कथयाऽस्माकं मन्त्रपूर्वश्च यो विधिः ॥

गृहस्थेन सदा कार्यः पितॄणां परितुष्टये ॥ २ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

प्रणम्यामंत्रिता ये च श्राद्धार्थं ब्राह्मणोत्तमाः ॥

आनीय कुतपे काले तान्सर्वान्प्रार्थयेदि दम् ॥ ३ ॥

आगच्छंतु महाभागा विश्वेदेवा महाबलाः ॥

ये यत्र विहिताः श्राद्धे सावधाना भवंतु ते ॥ ४ ॥

एवमभ्यर्च्य तान्सर्वांस्ततः कृत्वा प्रदक्षिणाम्॥

जानुनी भूतले न्यस्य ततश्चार्घं प्रदापयेत् ॥ ५ ॥

मंत्रेणानेन राजेंद्र सपुष्पाक्षतचंदनैः ॥

अर्घमेनं प्रगृह्णंतु मया दत्तं द्विजोत्तमाः ॥

पादप्रक्षालनार्थाय प्रकुर्वंतु मम प्रियम्॥ ६ ॥

एवमुक्त्वा महीपृष्ठे अनुलिप्ते ततः परम् ॥

साक्षतान्प्रक्षिपेद्दर्भान्विश्वेदेवान्प्रकीर्तयन् ॥ ७ ॥

अपसव्यं ततः कृत्वा दर्भांस्तिलसमन्वितान् ॥

द्विगुणान्प्रक्षिपेद्भूमौ पितॄनुद्दिश्य चात्मनः ॥ ८ ॥

एवं सर्वाः क्रियाः कार्या दैविका सव्यपूर्विकाः ॥

पैतृकाश्चापसव्येन मुक्त्वा नांदीमुखान्पितॄन् ॥ ९ ॥

सर्वे पूर्वामुखाः स्थाप्या युग्माश्च शक्तितो नृप ॥

पितरो मातृपक्षीयाः स्थाप्याश्चोदङ्मुखास्तथा ॥ ६.२२४.१० ॥

एकैकं वा त्रयो वाऽपि स्युरेकैकं वा पृथक्पृथक ॥

पैतृकान्स्थाप्प चक्रेण पितॄणां परितुष्टये ॥ ११ ॥

षष्ठ्या विभक्त्या तु तेषामासनं च प्रदापयेत् ॥

ऋजुभिः साक्षतैर्दर्भैः सोदकैर्दक्षिणांगतः ॥ १२ ॥

विषमौ द्विगुणैर्दर्भैः सतिलैर्वामपार्श्वतः ॥

पाणौ तोयं परिक्षिप्य न दर्भास्तु कथं चन ॥ १३ ॥

यो हस्ते चासनं दद्याच्चेद्दार्भं बुद्धिवर्जितः ॥

पितरो नासने तत्र प्रकुर्वंति निवेशनम् ॥ १४ ॥

आवाहनं प्रकर्तव्यं विभक्त्या च द्वितीयया ॥

येनागच्छंति ते सर्वे समाहूताः पृथक्पृथक् ॥ १५ ॥

अन्यया च विभक्त्या चेत्पितॄनावाहयेत्क्वचित् ॥

नागच्छंति महाभागा यद्यपि स्युर्बुभुक्षिताः ॥ १६ ॥

विश्वेदेवास आगत मंत्रेणानेन पार्थिव ॥

तेषामावाहनं कार्यमक्षतैश्च शिरोंऽतिकात् ॥ १७ ॥

उशंतस्त्वेति च तिलैः पितॄनावाहयेत्ततः ॥

आयंतु न इति जपेत्ततः पार्थिवसत्तम ॥ १८ ॥

शन्नो देवीति मंत्रेण स्वाहाकारसमन्वितम् ॥

पितॄणामर्घपात्रेषु तथैव च जलं क्षिपेत् ॥ १९ ॥

यवोऽसि यवयास्मद्द्वेत्यक्षतांस्तत्र निक्षिपेत् ॥

चंदनं गंधपुष्पाणि धूपं दद्याद्यथाक्रमम् ॥

सपवित्रेषु हस्तेषु दद्यादर्घ्यं समाहितः ॥ ६.२२४.२० ॥

या दिव्या इति मन्त्रेण स्वाहाकारसमन्वितम् ॥

पितॄणामर्घपात्रेषु तथैव च जलं क्षिपेत् ॥ २१ ॥

तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः ॥

प्रत्नवद्भिः पृक्तः स्वधया पितॄनिमाँल्लोकान्प्रीणाहि नः स्वधेति प्रक्षिपेत्तिलान् ॥ २२ ॥

यादिव्येति च मन्त्रेण ततो ह्यर्घ्यं प्रदापयेत् ॥

पितृपात्रे समादाय अर्घ्यपात्राणि कृत्स्नशः ॥ २३ ॥

अधोमुखं च तत्पात्रं मन्त्रवत्स्थापयेत्ततः ॥

आयुष्कामस्तु तत्तोयं लोचनाभ्यां न वीक्षयेत् ॥ २४ ॥

ततस्तु चन्दनादीनि दीपांतानि समाददेत् ॥

ततः पाकं समादाय पृच्छेद्विप्रान्द्विजो त्तमान् ॥ २५ ॥
अहमग्नौ करिष्यामि होमं पितृसमुद्भवम् ॥
अनुज्ञा दीयतां मह्यमपसव्याश्रितस्य भोः ॥ २६ ॥
कुरुष्वेति च तैः प्रोक्ते गत्वाग्नि शरणं ततः ॥
अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ॥ २७ ॥
सोमाय पितृमते स्वधेति च ततः परम् ॥
हुतमन्नं च शेषं च श्राद्धार्हेभ्यः प्रदीयते ॥ २८ ॥
इष्टमन्नं ततो दत्त्वा पात्रमालभ्य संजपेत् ॥
विप्रांगुष्ठं समादाय पाकमध्ये निधाय च ॥ २९ ॥
पृथिवी ते पात्रमादाय वैष्ण व्या च ऋचा तथा ॥
स्वहस्तेन न वै दद्यात्प्रत्यक्षं लवणं तथा ॥ ६.२२४.३० ॥
स्वहस्तेन च यद्दत्तं प्रत्यक्षलवणं नृप ॥
तच्छ्राद्धं व्यर्थतां याति धृते दत्तेर्द्धभुक्तके ॥
तृप्ताञ्ज्ञात्वा ततो विप्रानग्रे त्वन्नं परिक्षिपेत् ॥ ३१ ॥
अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम ॥
भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिम् ॥ ३२ ॥
सकृत्सकृज्जलं दत्त्वा गायत्रीत्रितयं जपेत् ॥
मधुवातेति संकीर्त्य ततः पृच्छेद्द्विजोत्तमान् ॥ ३३ ॥
तृप्ताः स्थ इति राजेन्द्र अनुज्ञां प्रार्थयेत्ततः ॥
बन्धूनां भोजनार्थाय शेषस्यान्नस्य भक्तिमान् ॥ ३४ ॥
उच्छिष्टसन्निधौ पश्चात्पितृवेदिं समाचरेत् ॥
पितृविप्रासनस्थानां नोच्छिष्टं द्विजसन्निधौ ॥३५ ॥
ततो वेदिं समाधाय पैतृकीं दक्षिणाप्लवाम् ॥
तस्यां दर्भान्समाधाय कुर्याच्चैवावनेजनम् ॥ ३६ ॥
विभक्त्या पूर्वया पश्चात्पिंडान्दद्याद्यथाक्रमम् ॥
भूयोऽप्यत्र जलं दद्यात्पितृतीर्थेन पार्थिव ॥
सूत्रं च प्रतिपिण्डे वै दयात्तेषु पृथक्पृथक् ॥ ३७ ॥
यः सूत्रं पूर्वपिण्डेषु सततं विनियोजयेत् ॥

स विरोधं चरेत्तेषां त्रोटनाच्च परस्परम् ॥ ३८ ॥

ततः संपूजयेत्सर्वान्पिंडान्यद्वद्द्विजोत्तमान् ॥

आचम्य प्रक्षाल्य तथा हस्तौ पादौ च पार्थिव ॥ ३९ ॥

नमस्कृत्य पितॄन्पश्चात्सुप्रोक्षितं ततः परम् ॥

कृत्वा सव्येन राजेन्द्र याचयित्वा वराशिषः ॥ ६.२२४.४० ॥

अक्षय्यसलिलं देयं षष्ठ्या चैव ततः परम् ॥

पवित्राणि समादाय ऊर्ध्वं स्वधेति कीर्तयेत्॥

अस्तु स्वधेति तैरुक्ते पिंडोपरि परिक्षिपेत् ॥ ४१ ॥

ततो मधु समादाय पायसं च तिलोदकम् ॥

ऊर्जस्वेति च मन्त्रेण पितॄणामुपरिक्षिपेत् ओ। ४२ ॥

उत्तानमर्घपात्रं तु कृत्वा दद्याच्च दक्षिणाम् ॥

हिरण्यं देवतानां च पितॄणां रजतं तथा ॥ ४३ ॥

ततः स्वस्त्युदकं दद्यात्पितृपूर्वं च सव्यतः ॥

न स्त्रीभिर्न च बालेन नान्ये नैव च केनचित् ॥ ४४ ॥

श्राद्धीयविप्रपात्रं च स्वयमेव प्रचालयेत् ॥ ४५ ॥

ततः कृतांजलिर्भूत्वा प्रार्थयेत्पार्थिवोत्तम ॥

अघोराः पितरः सन्तु अस्मद्गोत्रं विवर्द्धताम् ॥ ४६ ॥

दातारो नोऽभिवर्धंतां वेदाः सन्ततिरेव नः ॥

श्रद्धा च नो मा व्यगमद्बहुधेयं च नोऽस्त्विति ॥ ४७ ॥

अन्नं च नो बहु भवेदतिथींश्च लभेमद्दि ॥

याचितारश्च नः सन्तु मा च याचिष्म कश्चन ॥ ४८ ॥

एता एवाशिषः सन्तु विश्वेदेवाः प्रीयंतां ततः ॥

स्वस्त्यर्थमुदकं दद्यात्पितृपूर्वं च सव्यतः ॥ ४९ ॥

वाजेवाजेति च ऋचा विसृजेच्च ततः परम् ॥

आमा वाजस्येति प्रदक्षिणीकृत्योपवेशयेत् ॥६.२२४.५॥।

पादावमर्दनं कृत्वा आसीमांतमनुव्रजेत् ॥

बलिं च निक्षिपेत्तस्माद्भोजनं च समाचरेत् ॥ ५१ ॥

मौनेन दृश्यते सूर्यो यावत्तावन्नराधिप ॥ ५२ ॥

यश्चैवास्तमिते सूर्ये भुंक्ते च श्राद्धकृन्नरः ॥

व्यर्थतां याति तच्छ्राद्धं तस्माद्भुंजीत नो निशि ॥ ५३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धविधिवर्णनंनाम चतुर्विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२५



॥ आनर्त उवाच ॥ ॥

एकोद्दिष्टविधिं ब्रूहि मम त्वं वदतां वर ॥

पार्वणं तु यथा प्रोक्तं विस्तरेण महामते ॥ १ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

त्रीणि संचयनादर्वाक्तानि त्वं शृणु सांप्रतम् ॥

यस्मिन्स्थाने भवेन्मृत्युस्तत्र श्राद्धं तु कारयेत् ॥२॥

एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ॥

ततः संचयनस्थाने तृतीयं श्राद्धमिष्यते ॥ ३ ॥

प्रथमेऽह्नि द्वितीयेह्नि पञ्चमे सप्तमे तथा ॥

नवमे दशमे चैव नव श्राद्धानि तानि च ॥ ४ ॥

वैतरिण्याश्च संप्राप्तौ प्रेतस्तृप्तिमवाप्नुयात् ॥

एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् ॥ ५ ॥

आवाहनपरित्यक्तं कार्यं पार्थिवसत्तम ॥

तृप्तिप्रश्नस्तथा कार्यः स्वदितं च सकृत्ततः ॥ ६ ॥

अभिरम्यतामिति मन्त्रेण ब्राह्मणस्य विसर्जनम् ॥

अच्छिन्नाग्रमभिन्नाग्रं कुर्याद्दर्भतृणद्वयम् ॥

पवित्रं तद्विजानीयादेकोद्दिष्टे विधीयते ॥ ७ ॥

सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्मणि ॥

पित्र्ये संकल्पकाले च पितुरक्षय्यदापने ॥ ८ ॥

गोत्रं स्वरांतं सर्वत्र गोत्रे तर्पणकर्मणि ॥

गोत्राय कल्पनविधौ गोत्रस्याक्षय्यदापने ॥ ९ ॥

शर्मन्नर्घ्यादिकर्तव्ये शर्मा तर्पणकर्मणि ॥

शर्मणे सस्यदाने च शर्मणोऽक्षय्यके विधौ ॥ ६.२२५.१० ॥

मातर्मात्रे तथा मातुरासने कल्पनेऽक्षये ॥

गोत्रे गोत्रायै गोत्रायाः प्रथमाद्या विभक्तयः ॥ ११ ॥

देवि देव्यै तथा देव्या एवं मातुश्च कीर्तयेत् ॥
प्रथमा च चतुर्थी च षष्ठी स्याच्छ्राद्धसिद्धये ॥ १२ ॥
विभक्तिरहितं श्राद्धं क्रियते वा विपर्ययात् ॥
अकृतं तद्विजानीयात्पितृणां नोपतिष्ठति ॥ ॥ १३ ॥
तस्मात्सर्वप्रयत्नेन ब्राह्मणेन विजानता ॥
विभक्तिभिर्यथोक्ताभिः श्राद्धे कार्यो विधिः सदा ॥ १४ ॥
ततः सपिंडीकरणं वत्सरा दूर्ध्वतः स्थितम् ॥
वृद्धिर्वाऽऽगामिनी चेत्स्यात्तदार्वागपि कारयेत् ॥ १५ ॥
पार्वणोक्तविधानेन त्रिदैवत्यमदैविकम् ॥
प्रेतमुद्दिश्य कर्तव्यमेको द्दिष्टं च पार्थिव ॥ १६ ॥
एकेनैव तु पाकेन मम चैतन्मतं स्मृतम् ॥
अर्घपात्रं समादाय यत्प्रेतार्थं प्रकल्पितम् ॥ १७ ॥
पितृपात्रेषु त्रिष्वेव त्रिधा तच्च परिक्षिपेत् ॥
एवं पिंडं त्रिधा कृत्वा पितृपिंडेषु च त्रिषु ॥ १८ ॥
ये समानेति मन्त्राभ्यां न स्यात्प्रेतस्ततः परम् ॥
अवनेजनं ततः कृत्वा पितृपूर्वं यथाक्रमम् ॥ १९ ॥
गन्धधूपादिकं सर्वं पुनरेव प्रदापयेत् ॥
पितृपूर्वं समुच्चार्य वर्जयेच्च चतुर्थकम् ॥ ६.२२५.२० ॥
केचिच्चतुर्थं कुर्वंति प्रेतं च स्वपितुस्ततः ॥
पितुः पूर्वं भवेच्छ्राद्धं परं नैतन्मतं मम ॥ २१ ॥
सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं न कारयेत् ॥
क्षयाहं च परित्यज्य शस्त्राहत चतुर्दशीम् ॥ २२ ॥
यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ॥
अकृतं तद्विजानीयात्पितृहा चोपजायते ॥।२३ ॥
पिता यस्य तु निर्वृत्तो जीवते च पितामहः ॥
पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥ २४ ॥
पितामहस्तु प्रत्यक्षं भुक्त्वा गृह्णाति पिण्डकम् ॥
पितामहक्षयाहे च पार्वणं श्राद्धमिष्यते ॥ २५ ॥

जनकं स्वं परित्यज्य कथंचिन्नास्य दीयते ॥

तस्याकृतेन श्राद्धेन न स्वल्पं पितृतो भयम् ॥ २६ ॥

अमावास्यासु सर्वासु मृते पितरि पार्वणम् ॥

नभस्यापरपक्षस्य मध्ये चैतदुदाहृतम्॥ २७ ॥

यावत्सपिंडता नैव न तावच्छ्राद्धमाचरेत् ॥ २८ ॥

जनके मृत्युमापन्ने श्राद्धपक्षे समागते ॥

पितामहादेः कर्तव्यं श्राद्धं यन्नैकपिंडता ॥२९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सपिंडीकरणविधिवर्णनंनाम पञ्चविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२६

https://sa.wikisource.org/s/fqb
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ भर्तृयज्ञ उवाच ॥ ॥

यतः सपिंडता प्रोक्ता पितृपिण्डैः समंततः ॥

यावत्सपिण्डता नैव तावत्प्रेतः स तिष्ठति ॥ १ ॥

अपि धर्मसमोपेतस्तपसाऽपि समन्वितः ॥

एतस्मात्कारणात्प्रोक्ता मुनिभिस्तु सपिंडता ॥ २ ॥

यस्ययस्य च योऽन्यत्र योनिं प्राप्नोति मानवः ॥

तत्रस्थस्तृप्तिमाप्नोति यद्दत्तं तस्य वंशजैः ॥ ३ ॥

॥ आनर्त उवाच ॥ ॥

ये दृश्यंते निजाः स्वप्ने चिरात्पितृपितामहाः ॥

प्रार्थयंति निजान्कामांस्ततः किं स्यान्महामुने ॥ ४ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

येषां गतिर्न संजाता प्रेतत्वे च व्यवस्थिताः ॥

दर्शयंति च ते सर्वे स्वयमात्मानमेव हि ॥ ५ ॥

स्ववंश्यानां न चान्ये तु सत्यमेतन्मयोदितम् ॥

यथा लोकेऽत्र संजाता ये च कृत्यैः शुभाशुभैः ॥ ६ ॥

॥ आनर्त उवाच ॥ ॥

यस्य नो विद्यते पुत्रः सपिण्डीकरणं कथम् ॥

तस्य कार्यं भवेदत्र तन्मे त्वं वक्तुमर्हसि ॥ ॥ ७ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

यस्य नो विद्यते पुत्र औरसश्च महीपते ॥

चतुर्णां स्वपितृणां तु कथं स स्याच्चतुर्थकः ॥ ८ ॥

प्रकर्षेण व्रजेद्यस्मात्तस्मात्प्रेतः प्रकीर्तितः ॥

पुत्रेण भ्रात्रा पत्न्या वा तस्य कार्या सपिंडता ॥ ९ ॥

चतुर्थो यदि राजेंद्र जायते न कथंचन ॥

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ॥ ६.२२६.१० ॥

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
काले यदि न राजेंद्र जायतेऽस्योत्तरक्रिया ॥ ११ ॥
नारायणबलिः कार्यः प्रेतत्वस्य विनाशकः ॥
यथान्येषां मनुष्याणामपमृत्युमुपेयुषाम् ॥
कार्यश्चैवात्महंतॄणां ब्राह्मणान्मृत्युमीयुषाम् ॥ १२ ॥
॥ आनर्त उवाच ॥ ॥
कथं मृत्युमवाप्नोति पुरुषोऽत्र महामते ॥ १३ ॥
स्वर्गं वा नरकं वापि कर्मणा केन गच्छति ॥
मोक्षं वाऽथ महाभाग सर्वं मे विस्त राद्वद ॥ १४ ॥
॥ भर्तृयज्ञ उवाच ॥ ॥
धर्मी पापी तथा ज्ञानी तिस्रोऽत्र गतयः स्मृताः ॥
धर्मात्संप्राप्यते स्वर्गः पापान्नरक एव च ॥ १५ ॥
ज्ञानात्संप्राप्यते मोक्षः सत्यमेतन्मयोदितम् ॥
एनमर्थं भविष्यं तु भीष्मं शांतनवं नृप ॥ १६ ॥
युधिष्ठिरो महाराज धर्मपुत्रो नृपोत्तमः ॥
कृष्णेन सह राजेंद्र पितामहमपृच्छत ॥ १७ ॥
॥ युधिष्ठिर उवाच ॥ ॥
कियंतो नरकाः ख्याता यमलोके पितामह ॥
केन पापेन गच्छंति तेषु सर्वेषु जंतवः ॥ १८ ॥
॥ श्रीभीष्म उवाच ॥ ॥
एकविंशत्प्रमाणाः स्युर्नरका यममंदिरे ॥
प्राणिनस्तेषु गच्छंति निजकर्मानुसारतः ॥ १९ ॥
ख्यातौ चित्रविचित्रौ च कायस्थौ यममंदिरे ॥ ६.२२६.२० ॥
चित्रोऽथ लिखते धर्मं सर्वं प्राणिसमुद्भवम् ॥
विचित्रः पातकं सर्वं परमं यत्नमास्थितः ॥ २१ ॥
यमदूताः सदैवाष्टौ धर्मराजसमुद्भवाः ॥
ये नयंति नरान्मृत्युलोकात्स्ववशगान्सदा॥ २२ ॥
करालो विकरालश्च वक्रनासो महोदरः ॥

सौम्यः शांतस्तथा नंदः सुवाक्यश्चाष्टमः स्मृतः ॥ २३ ॥

एतेषां ये पुरा प्रोक्ताश्चत्वारो रौद्ररूपिणः ॥

पापं जनं च ते सर्वे नयन्ति यमसादनम् ॥ २४ ॥

चत्वारो ये परे प्रोक्ताः सौम्यरूपवपुर्द्धराः ॥

धर्मिणं ते जनं सर्वं नयंति यमसादनम् ॥ २५ ॥

विमानेन समारूढमप्सरोगणसेवितम् ॥ २६ ॥

लिखितस्यानुरूपेण पापधर्मोद्भवस्य च ॥

एतेषां किंकरा ये च तेषां संख्या न जायते ॥ २७ ॥

अष्टोत्तरशतं तेषां व्याधीनां परिकल्पितम् ॥

सहायार्थं यमेनात्र ज्वरयक्ष्मांतरस्थितम् ॥ २८ ॥

ते गत्वा व्याधयः पूर्वं वशे कुर्वंति मानवम् ॥ २९ ॥

यमदूतास्ततो गत्वा नाभिमूलव्यवस्थितम्॥

वायुरूपं समादाय जनैः सर्वैरलक्षिताः ॥ ६.२२६.३० ॥

गच्छंति यममार्गेण देहं संस्थाप्य भूतले ॥

षडशीतिसहस्राणि यममार्गः प्रकीर्तितः ॥ ॥ ३१ ॥

तत्र वैतरणीनाम नदी पूर्वं परिश्रुता ॥

स्रोतोभ्यां सा महाभाग तत्र संस्था सदैव हि ॥ ३२ ॥

तत्र शोणितमेकस्मिन्स्रोतस्यस्या वह त्यलम्॥

शस्त्राणि च सुतीक्ष्णानि तन्मध्ये भरतर्षभ ॥ ३३ ॥

मृत्युकाले प्रयच्छंति ये धेनुं ब्राह्मणाय वै ॥

तस्याः पुच्छं समाश्रित्य ते तरंति च तां नृप॥३४॥

स्वबाहुभिस्तथैवान्ये शतयोजनविस्तृतम्॥

द्वितीयं चैव तत्स्रोतो वैतरण्या व्यवस्थितम्॥

तस्यास्तत्सलिलस्राविं गम्यं धर्मवतां सदा॥३५॥

ये नरा गोप्रदातारो मृत्युकाले व्यवस्थिते॥

ते गोपुच्छं समाश्रित्य तां तरंति पृथूदकाम्॥

अन्ये स्वबाहुभिः कृत्वा गोप्रदानविवर्जिताः॥३६॥

गोप्रदानं प्रकर्तव्यं तस्माच्चैव विशेषतः।.

मृत्युकालेऽत्र संप्राप्ते य इच्छेद्गतिमात्मनः॥३७॥

तस्या अनन्तरं यांति पापमार्गेण पापिनः॥

धर्मिष्ठा धर्ममार्गेण विमानवरमाश्रिताः॥३८॥

वैतरण्याः परं पारे पंचयोजनमायतम्॥

असिपत्रवनंनाम पापलोकस्य दुःखदम्॥३९॥

तत्र लोहमयान्येवासिपत्राणां शतानि च॥

यानि कृन्तंति मर्त्यानां शरीराणि समंततः॥६.२२६.४०॥

यैर्हृतं परवित्तं च कलत्रं च दुरात्मभिः॥

नव श्राद्धानि तेषां चेत्तस्मान्मुक्तिः प्रजायते॥४१॥

तस्मात्परतरो ज्ञेयो विख्यातः कूटशाल्मलिः॥

अधोमुखाः प्रलंबंते तस्मिन्कंटकसंकुले॥४२॥

अधस्ताद्वह्निना चैव दह्यमाना दिवानिशम्॥

विश्वासघातका ये च सर्वदैव सुनिर्दयाः॥

तस्मान्मुक्तिं प्रयांति स्म श्राद्धे ह्येकादशे कृते॥४३॥

यंत्रात्मकस्ततः प्रोक्तो नरको दारुणाकृतिः॥

ब्रह्मघ्नास्तत्र पीड्यंते ये चाऽन्ये पापकर्मिणः॥४४॥

श्राद्धेन द्वादशोत्थेन तेभ्यो दत्तेन पार्थिव॥

तस्मान्मुक्तिं प्रगच्छन्ति यन्त्राख्यनरकात्स्फुटम् ॥ ४५ ॥

ततो लोहसमाः स्तंभा ज्वलमाना व्यवस्थिताः ॥

आलिंगंति च तान्सर्वान्परदाररताश्च ये ॥ ॥ ४६ ॥

मासिकोत्थे कृते श्राद्धे तेभ्यो मुक्तिमवाप्नुयुः ४७ ॥

लोहदंष्ट्रास्ततो रौद्राः सारमेया व्यवस्थिताः ॥

भक्षयंति च ते पापान्पृष्ठमांसा शिनो नरान् ॥

त्रैपक्षिके कृते श्राद्धे तेभ्यो मुक्तिमवाप्नुयुः ॥ ४८ ॥

लोहचंचुमयाः काकाः संस्थितास्तदनंतरम् ॥

सरागैर्लोचनैर्यैश्च ईक्षिताः पर योषितः ॥ ४९ ॥

तेषां नेत्राणि ते घ्नंति भूयो जातानि भूरिशः ।

द्विमासिकं च यच्छ्राद्धं तेन मुक्तिः प्रजायते । ६.२२६.५० ॥

ततः शाल्मलिकूटस्तु तथान्ये लोहकण्टकाः ॥

तेषां मध्येन नीयंते पैशुन्यनिरता नराः ॥

त्रिमासिकं तु यच्छ्राद्धं तेन मुक्तिः प्रजायते ॥ ५१ ॥

रौरवोऽथ सुविख्यातो दारुणो नरको महान् ॥

ब्रह्मघ्नानां समादिष्टः स महाक्लेशकारकः ॥ ५२ ॥

छिद्यंते विविधैः शस्त्रैस्तत्रस्था ये मुहुर्मुहुः ॥

चतुर्मासिकश्राद्धेन मुक्तिस्तेषां प्रजायते ॥ ५३ ॥

अपरस्तु समाख्यातः क्षारोदस्तु सुदारुणः ॥

कृतघ्नानां समादिष्टः सदैव बहुवेदनः ॥ ५४ ॥

अधोमुखा ऊर्ध्व पादाः पीड्यंते यत्र लंबिताः ॥

पञ्चमासिकदानेन मुक्तिस्तेषां प्रजायते ॥ ५५ ॥

कुम्भीपाकस्ततो ज्ञेयो नरको दारुणाकृतिः ॥

तैलेन क्षिप्यमाणास्तु यत्र दण्डाभिसंधिताः ॥

दृश्यंते जनहंतारो बालहंतार एव च ॥ ५६ ॥

पतंति नरके रौद्रे नरा विश्वासघातकाः॥

षण्मासिकप्रदानेन मुच्यंते तत्र संकटात् ॥ ५७ ॥

सर्पवृश्चिकसंयुक्तस्तथाऽन्यो नरकः श्रुतः ॥

तत्र ये दांभिका लोके ते गच्छन्ति नराधमाः ॥

सप्तमासिकदानेन तेषां मुक्तिः प्रजायते ॥ ५८ ॥

तथा संवर्तकोनाम नरकोऽन्यः प्रकीर्तितः ॥

वेदविप्लावकाः साधुनिंदकाश्च दुरात्मकाः ॥ ५९ ॥

उत्पाट्यते ततो जिह्वा सन्दंशैर्व ह्रिसम्भवैः ॥

स्वकार्ये येऽनृतं ब्रूयुस्तद्गात्रं खाद्यते श्वभिः ॥ ६.२२६.६० ॥

परार्थेऽपि च ये ब्रूयुस्तेषां गात्राणि कृत्स्नशः ॥

अष्टमासिकदानेन तेषां मुक्तिः प्रजायते ॥ ६१ ॥

अग्निकूटो महाप्लावो दारुणो नरको महान् ॥

तत्र ते यांति वै मूढाः कूटसाक्ष्यिप्रदा नराः ॥ ६२ ॥

तत्रस्था यातनां रौद्रां सहं तेऽतीव दुःखिताः ॥

नवमासिकदानं च तेषामाह्लादनं परम् ॥ ६३ ॥

ततो लोहमयैः कीलैः संचितोऽन्यः समंततः ॥

तत्र चाग्निप्रदातारः स्त्रीणां हन्तार एव च ॥ ६४ ॥

तत्र धावंति दुःखार्तास्ताड्यमानाश्च किंकरैः ॥

दशमासिकजं दानं तत्र तेषां प्रमुक्तये ॥६८५॥

ततोऽगारमयैः पुंजैरावृताभूः समंततः ॥

स्वामिद्रोहरतास्तत्र भ्राम्यंते सर्वतो दिशः ॥ ६६ ॥

एकादशोद्भवं दानं तत्र मुक्त्यै प्रजायते ॥

संतप्तसिकतापूर्णो नरको दारुणाकृतिः ॥ ॥६७॥

स्वामिनं चागतं दृष्ट्वा पलायनपरायणाः ॥

ये भवन्ति नरास्तत्र पच्यंते तेऽपि दुःखिताः ॥

तेषां द्वादशमासीयं श्राद्धं चैवोपतिष्ठति ॥६८॥

यत्किंचिद्दीयते तोयमन्नं वा वत्सरांतरे ॥

प्रभुंजते च तन्मार्गे प्रदत्तं निजबान्धवैः ॥ ६९ ॥

ततः संवत्सरादूर्ध्वं निजकर्मसमुद्भवम् ॥

शुभाशुभं प्रपद्यंते धर्मराजसमीपगाः ॥ ६.२२६.७० ॥

एवं पंचदशैतानि संसेव्य नरकाणि ते ॥

प्राप्नुवंति ततो जन्म मर्त्यलोके पुनर्नराः ॥ ७१ ॥

प्राप्नुवंति विदेशे च जन्म ये हेतुवादकाः ॥

नित्यं तर्पणदानेन तेषां तृप्तिः प्रजायते ॥ ७२ ॥

स्वामिद्रोहरता ये च कुराज्ये जन्म चाप्नुयुः ॥

हंतकारप्रदानेन तेषां तृप्तिः प्रजायते ॥ ७३ ॥

अदत्त्वा ये नरोऽश्नंति पितृदेवद्विजातिषु ।।

दुर्भिक्षे जन्म तेषां तु तेन पापेन जायते ॥ ७४ ॥

क्षयाहे श्राद्धसंप्राप्तौ तत स्तृप्तिः प्रजायते ॥ ७५८ ॥

ये प्रकुर्वंति दम्पत्योर्भेदं वै सानुरागयोः ॥

परस्परमसत्यानि तेषां भार्याऽसती भवेत् ॥ ७६ ॥

एकस्मिन्वचने प्रोक्ते दश ब्रूते क्रुधान्विता ॥

विरूपा भ्रममाणा च सर्वलोकविगर्हिता ॥

कन्यादानफलैस्तेषां तत्रासां च सुखं भवेत् ॥ ७७ ॥

कन्यकादानविघ्नं हि विक्रयं वा करोति यः ॥

स कन्याः केवलाः सूते न पुत्रं केवलं क्वचित् ॥ ७८ ॥

जायंते ताश्च बंधक्यो विधवा दुर्भगास्तथा ॥

कन्यादानफल प्राप्त्या तासां सौख्यं प्रजायते ॥ ७९ ॥

यैर्हृतानि च रत्नानि तथा शास्त्रांतराणि च ॥

ते दरिद्राः प्रजायंते मूकाः खंजा विचक्षुषः॥

तेषां शास्त्र प्रदानेन इह सौख्यं प्रजायते ॥ ६.२२६.८० ॥

एते तु नरकाः प्रोक्ता मर्त्यलोकसमुद्भवाः ॥

एतैर्विज्ञायते सर्वं कृतं कर्म शुभाशुभम् ॥ ८१ ॥

तीर्थयात्राफलैस्तस्य ततः शुद्धिः प्रजायते ॥ ८२ ॥

॥ भीष्म उवाच ॥ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोस्मि नराधिप ॥

एकविंशत्प्रमाणं च नरकाणां यथा स्थितम् ॥ ८३ ॥

भूयश्च पृच्छ राजेंद्र संदेहो यो हृदि स्थितः ॥ ८४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे भीष्मयुधिष्ठिरसंवादे तत्तद्दुरितप्राप्यैकविंशतिनरकयातनातन्निवारणोपायवर्णनंनाम षड्विंशत्युत्तरद्विशत तमोऽध्यायः ॥२२६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२७

https://sa.wikisource.org/s/fqc


॥ युधिष्ठिर उवाच ॥ ॥

नरकाणां स्वरूपं च श्रुत्वा मे भयमागतम् ॥

कथं मुक्तिर्भवेत्तेषां पापानामपि पार्थिव ॥

व्रतैर्वा नियमैर्वापि होमैर्वा तीर्थसंश्रयैः ॥ १ ॥

॥ भीष्म उवाच ॥ ॥

गंगायामस्थिपातोऽत्र येषां संजायते नृणाम् ॥

न तेषां नारको वह्निः प्रभवेन्मध्यवर्तिनाम् ॥ २ ॥

गंगायां क्रियते श्राद्धं येषां नाम्ना स्वकैः सुतैः ॥

ते विमानं समाश्रित्य प्रयांति नरकोपरि ॥ ॥ ३ ॥

पापं कृत्वा प्रकुर्वंति प्रायश्चित्तं यथोदितम् ॥

हेम यच्छंति वा भूप न तेषां नरको भवेत् ॥ ४ ॥

शेषाः स्वकर्मणः प्राप्त्या सेवंते च यथोचितम् ॥

स्वर्गं वा नरकं वापि सेवन्ते ते नराधिप ॥ ५ ॥

धारातीर्थे म्रियंते ये स्वामिनः पुरतः स्थिताः ॥

ते गच्छंति परं स्थानं नरकाणां सुदूरतः ॥ ६ ॥

वाराणस्यां कुरुक्षेत्रे नैमिषे नागरे पुरे ॥

प्रयागे वा प्रभासे वा यस्त्यजेत्तनुमा त्मनः ॥

महापातकयुक्तोऽपि नरकं न स पश्यति ॥ ७ ॥

नीलो वा वृषभो यस्य विवाहे संनियुज्यते ॥

स्वपुत्रेण न संपश्येन्नरकं ब्रह्महाऽपि सः ॥ ८ ॥

प्रायोपवेशनं कृत्वा हृदयस्थे जनार्दने ॥

यस्त्यजेत्पुरुषः प्राणान्नरकं न स पश्यति ॥ ९ ॥

प्रायोपवेशनं यो च चित्रेश्वरनिवेशने ॥

कुर्वन्ति नरकं नैव ते गच्छंति कदाचन ॥ ६.२२७.१० ॥

दीनांधकृपणानां च पथिश्रममुपेयुषाम् ॥

तीर्थयात्रापराणां च यो यच्छति सदाऽशनम् ॥
काले वा यदि वाऽकाले नरकं न स पश्यति ॥ ११ ॥
जलधेनुं च यो दद्याद्वृषसंस्थे दिवाकरे ॥
तिलधेनुं मृगस्थे च नरकं न स पश्यति ॥ १२ ॥
सोमे सोमग्रहे चैव सोमनाथस्य दर्शनात् ॥
समुद्रे च सरस्वत्यां स्नात्वा न नरकं व्रजेत् ॥ १३ ॥
सन्निहित्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ॥
सूर्यवारेण यः याति नरकं न स पश्यति ॥ १४ ॥
कार्तिक्यां कृत्तिकायोगे यः करोति प्रदक्षिणाम् ॥
त्रिपुष्करस्य मौनेन नरकं न स पश्यति ॥ १५ ॥
मृगसंक्रमणे ये तु सूर्यवारेण संस्थिते ॥
चण्डीशं वीक्षयंति स्म न ते नरकगामिनः ॥ १६ ॥
गां पंकाद्ब्राह्मणीं दास्यात्साधून्स्तेनाद्द्विजं वधात् ॥
मोचयन्ति च ये राजन्न ते नरकगामिनः ॥ १७ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽस्मि नराधिप ॥
यथा न नरकं याति पुरुषस्तु स्वकर्मणा ॥
यथा च नरकं याति स्वल्पपापोऽपि मानवः ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागर खण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्राद्धकल्पे भीष्मयुधिष्ठिरसंवादे नरकयातनानिरसनोपायवर्णनंनाम सप्तविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२८



सूत उवाच ॥ ॥

तथान्यच्च बिलद्वारि शयनार्थे व्यवस्थितम् ॥

दृष्ट्वा प्रमुच्यते पापी देवं च जलशायिनम् ॥ १ ॥

स्नात्वा तस्मिन्बिलद्वारे पवित्रे लोकसंश्रये ॥

यस्तं पूजयते भक्त्या शेषपर्यंकशायिनम् ॥

आजन्ममरणात्पापात्स च मुक्तिमवाप्नुयात् ॥ २ ॥

चतुरो वार्षिकान्मासान्सुप्रसुप्तं सुरेश्वरम्॥

संपूजयति यो भक्त्या न स भूयोऽत्र जायते ॥ ३ ॥

तत्र पूर्वं महाभागा मुनयः सेव्य तं प्रभुम् ॥

मृत्तिकाग्रहणं कृत्वा तस्य चायतने शुभे ॥ ४ ॥

संप्राप्ताः परमं स्थानं तद्विष्णोः परमं पदम् ॥

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ॥

तत्फलं तस्य पूजायां चातुर्मास्यां प्रजायते ॥ ५ ॥

यत्फलं गोग्रहे मृत्युं संप्राप्ता यांति मानवाः ॥

तत्फलं चतुरो मासान्पूजया जलशायिनः ॥ ६ ॥

अपि पापसमाचारः परदाररतोऽपिच ॥

ब्रह्मघ्नोऽपि सुरापोऽपि स्त्रीहन्ताऽपि विगर्हितः ॥

पूजया चतुरो मासांस्तस्य देवस्य मुच्यते ॥ ७ ॥

॥ ऋषय ऊचुः ॥ ॥

यदेतद्भवता प्रोक्तं तत्रस्थं जलशायिनम् ॥

बिलद्वारे कथं सूत तत्र नः संशयो महान् ॥ ८ ॥

स किल श्रूयते देवः क्षीराब्धौ मधुसूदनः ॥

सदैव भगवाञ्छेते योगनिद्रां समाश्रितः । ९ ॥.

कथं स भगवाञ्छेते बिलद्वारे व्यवस्थितः ॥

एतत्कीर्तय कात्स्न्र्येन परं कौतूहलं हि नः ॥ ६.२२८.१० ॥

॥ सूत उवाच ॥ ॥

सत्यमेतन्महाभागाः क्षीराब्धौ मधुसूदनः ॥

योगनिद्रां गतः शेते शेषपर्यंकशा यकः ॥ ११ ॥

स यथा तत्र क्षेत्रे तु संश्रितो भगवान्स्वयम् ॥

जलशायिस्वरूपेण तच्छृशुध्वं समाहिताः १२ ॥

यथा च चतुरो मासान्पूजितस्तत्र संस्थितः ॥

मुक्तिं ददाति पुंसां स तथा संकीर्तयाम्यहम् ॥ १३ ॥

चत्वारोऽपि यथा मासा गर्हणीया धरातले ॥

सर्वकर्मसु मुख्येषु यज्ञोद्वा हादिषु द्विजाः ॥ १४ ॥

तद्वोऽहं कीर्तयिष्यामि नमस्कृत्य द्विजोतमाः ॥

तस्मै देवाधिदेवाय निर्गुणाय गुणात्मने ॥ १५ ॥

अव्यक्तायाऽप्रमेयाय सर्वदेवमयाय च ॥

सर्वज्ञाय कवीशाय सर्वभूतात्मने तथा ॥ १६ ॥

पुरासीद्दानवो रौद्रो हिरण्यकशिपुर्महान् ॥

नारसिंहं वपुः कृत्वा विष्णुना यो निपातितः ॥ १७ ॥

तस्य पुत्रद्वयं जज्ञे सर्वलक्षणलक्षितम् ॥

प्रह्लादश्चांधकश्चैव वीर्येणाप्रतिमौ युधि ॥ १९ ॥

हिरण्यकशिपौ प्राप्ते परं लोकं महासुरे ॥

अमात्यैरभिषेकाय प्रह्लादः स नियोजितः ॥ १९ ॥

स नैच्छत तदा राज्यं पितृपैतामहं महत्॥

समागतमपि प्राज्ञो यस्मात्तद्वो वदाम्यहम् ॥ ६.२२८.२० ॥

दानवानां सदा द्वेषो देवेन सह चक्रिणा ॥

न करोति पुनर्द्वेषं तं समुद्दिश्य सर्वदा ॥ ॥ २१ ॥

एतस्मात्कारणात्सर्वे तेन त्यक्ता दितेः सुताः ॥

स्वराज्यमपि संत्यज्य विष्णुस्तेन समाश्रितः ॥ २२ ॥

ततस्तैर्दानवैः क्षुद्रैर्विष्णुद्वेषपरायणैः ॥

अन्धकः स्थापितो राज्ये पितृपैतामहे तदा ॥ २३ ॥

अन्धकोऽपि समाराध्य देववदेवं चतुर्मुखम्॥

अमरत्वं ततो लेभे यावच्चन्द्रार्कतारकम् ॥ २४ ॥

वरपुष्टस्ततः सोऽपि चक्रे शक्रेण विग्रहम् ॥ २५ ॥

जित्वा शक्रं महासंख्ये यज्ञांशाञ्जगृहे स्वयम् ॥

गत्वाऽमरावतीं दैत्यो निःसार्य च शतक्रतुम् ॥

स्ववर्गेण समोपेतः स्वर्गं समहरत्तदा ॥ २६ ॥

शक्रोऽपि च समाराध्य शंकरं लोकशंकरम् ॥

सर्वदेवसमोपेतो भृत्यवत्परिवर्तते ॥२७॥

ततः कालेन महता तस्य तुष्टः पिनाकधृक् ॥

तं प्राह वरदोऽस्मीति वद शक्र करोमि किम् ॥ २८ ॥

॥ इन्द्र उवाच ॥ ॥

अंधकेन हृतं राज्यं मम वीर्यात्सुरेश्वर ॥

यज्ञभागैः समोपेतं हत्वाऽऽशु तत्प्रयच्छ मे ॥२९॥

तच्छ्रुत्वा तस्य दीनस्य भगवाञ्छशिशेखरः ॥

प्रोवाच तव दास्यामि राज्यं त्रैलोक्यसंभवम् ॥ ६.२२८.३० ॥

ततः संप्रेषयामास दूतं तस्य विचक्षणम् ॥

गणेशं वीरभद्राख्यं गत्वा तं ब्रूहि चांधकम् ॥ ३१ ॥

ममादेशात्परित्यज्य स्वर्गं गच्छ धरातलम् ॥

पितृपैतामहं स्थानं राज्यं तत्र समाचर ॥ ३२ ॥

परित्यजस्व यज्ञांशान्नो चेद्धंतास्मि सत्वरम् ॥

स गत्वा चांधकं प्राह यथोक्तं शंभुना स्फुटम् ॥ ३३ ॥

सविशेषमहाबुद्धिः स्वामिकार्यप्रसिद्धये ॥

अथ तं चाधकः प्राह प्रविहस्य महाबलः ॥ ॥ ३४ ॥

अवध्यो हि यथा दूतस्तेन त्वां न निहन्म्यहम् ॥

क स्याद्वै शंकरोनाम यो मामेवं प्रभाषते ॥ ३५ ॥

न मां वेत्ति स किं मूढः किं वा मृत्यु मभीप्सते । ३६ ॥

अथवा सत्यमेवैतान्निर्विण्णो जीविताच्च सः॥

दरिद्रोपहतो नित्यं सर्वभोगविवर्जितः ॥ ३७ ॥

स्मशाने क्रीडनं यस्य भस्म गात्रविलेपनम् ॥

भूषणं चाहयो वस्त्रं दिशो यस्य जटालका ॥ ३८ ॥

कस्तस्य जीवितेनार्थस्तेनेदं मां ब्रवीति सः॥

तस्माद्गत्वा द्रुतं ब्रूहि मद्वाक्यं दूत सस्फुटम्॥ ३९ ॥

त्यक्त्वा कैलासमेनं त्वं वाराणस्यां तपः कुरु ॥

मया स्थानमिदं दत्तं कैलासं स्वसुतस्य च ॥ ६.२२८.४० ॥

वृकस्यापि न सन्देहो विभवेन समन्वितम् ॥

नो चेत्प्राणान्हरिष्यामि सेंद्रस्य तव शंकर ॥ ४१ ॥

तच्छ्रुत्वा वीरभद्रस्तु निर्भर्त्स्यं च मुहुर्मुहुः ॥

क्रोधेन महताविष्टः कैलासं समुपाविशत्॥ ४२ ॥

ततः स कथयामास तद्वाक्यं च पिनाकिनः ॥

अतिक्रूरं विशेषेण तत क्रुद्धः पिनाकधृक् ॥ ४३ ॥

इति श्रीस्कान्दे महा पुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युपाख्याने ब्रह्मदत्तवरप्रदानोद्धतान्धकासुरकृतशंकराज्ञाव मानवर्णनंनामाष्टाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २२९



॥ सूत उवाच ॥ ॥

एतस्मिन्नंतरे शम्भुर्गणैः सर्वैः समावृतः ॥

इन्द्राद्यैश्च सुरैः सर्वेः क्रोधसंरक्तलोचनः ॥

जगाम वृषमारुह्य पुरीं चैवामरावतीम् ॥ १ ॥

अंधकोऽपि समालोक्य संप्राप्तां देववाहिनीम् ॥

सगणां च महादेवं परितोषं परं गतः ॥ २ ॥

निश्चक्रामाथ युद्धाय बलेन चतुरंगिणा ॥

वरं स्यंदनमारुह्य सुश्वेताश्ववहं शुभम् ॥ ३ ॥

ततः समभवद्युद्धं देवानां दानवैः सह ॥

गणैश्च विकृताकारैर्मृत्युं कृत्वा निवर्तनम् ॥ ४ ॥

एकवर्षसहस्रांतं यावद्युद्धमवर्तत ॥

दिनेदिने क्षयं यांति तत्र देवा न दानवाः ॥

ततो वर्षसहस्रांते संक्रुद्धः शशिशेखरः॥

त्रिशूलेन समुद्यम्य स्वहस्तेन व्यभेदयत् ॥ ६ ॥

स विद्धोऽपि स्वयं तेन त्रिशूलेन महासुरः॥

ब्रह्मणो वरमाहात्म्यान्नैव प्राणैर्वियुज्यते ॥ ७ ॥

ततो भूयोऽपि चोत्थाय चक्रे युद्धं महात्मना ॥

जघान च स संक्रुद्धो विशेषेण बहून्गणान् ॥ ८ ॥

शंकरं ताडयामास गदाघातैर्मुहुर्मुहुः ॥ ९ ॥

एवं वर्षसहस्रांतमभूत्सार्द्धं पिनाकिना ॥

रौद्रं युद्धमन्धकस्य सर्वलोकभयावहम् ॥ ६.२२९.१० ॥

त्रिशूलभिन्नो दैत्यः स यदा मृत्युं न गच्छति ॥

उत्थायोत्थाय कुरुते प्रहारान्गदया बली ॥ ११ ॥

तथा तं शंकरो ज्ञात्वा मृत्युना परिवर्जितम्॥

ब्रह्मणो वरदानेन सर्वेषां च दिवौकसाम्॥ १२ ॥

ततो निर्भिद्य शूलाग्रैः प्रोत्क्षिप्य गगनांगणे ॥

छत्रवद्धारयामास लंबमानमधोमुखम् ॥

अक्षरद्रुधिरं भूमौ गात्रेभ्यो वर्ष्मसंभवम् ॥ १३ ॥

यावद्वर्षसहस्रांते चर्मास्थि स्नायुरेव च ॥

धातुत्रयं स्थितं तस्य नष्टमन्यच्चतुष्टयम् ॥ १४ ॥

स ज्ञात्वा बल संहीनमात्मानं धातुसंक्षयात् ॥

सामोपायं ततश्चके स्तुत्वा सार्धं पिनाकिना ॥ १५ ॥

॥ अन्धक उवाच ॥ ॥

न त्वं देवो मया ज्ञातो वाग्दुष्टेन दुरात्मना ॥

ईदृग्वीर्यसमोपेतस्तद्युक्तं भवता कृतम् ॥ १६ ॥

अनुरूपं मदांधस्याविवेकस्य सुरोत्तम ॥

स्ववीर्यमदयुक्तस्य विवेक रहितस्य च ॥ १७ ॥

दुर्विनीतः श्रियं प्राप्य विद्यामैश्वर्यमेवच ॥

न तिष्ठति चिरं कालं यथाऽहं मदगर्वितः ॥ १८ ॥

पापोऽहं पापकर्माऽहं पापात्मा पापसंभवः ॥

त्राहि मां देव ईशान सर्वपापहरो भव ॥ १९ ॥

दुःखितोऽहं वराकोऽहं दीनोऽहं शक्तिवर्जितः ॥

त्रातुमर्हसि मां देव प्रपन्नं शरणं विभो ॥ ६.२२९.२० ॥

दुष्टोऽहं पापयुक्तोऽहं सांप्रतं परमेश्वर ॥

तेन बुद्धिरियं जाता तवोपरि ममानघ ॥ २१ ॥

सर्वपापक्षये जाते शिवे भवति भावना ॥ २२ ॥

नाममात्रमपि त्र्यक्ष यस्ते कीर्तयति प्रभो ॥

सोऽपि मुक्तिमवाप्नोति किं पुनः पूजने रतः ॥ २३ ॥

तव पूजा विहीनानां दिनान्यायांति यांति च ॥

यानि देव मृतानां च तानि यांति न जीवताम् ॥ २४ ॥

कुष्ठी वा रोगयुक्तो वा पंगुर्वा बधिरोऽपि वा ॥

मा भूत्तस्य कुले जन्म शंभुर्यत्र न देवता ॥ २५ ॥

तस्मान्मोचय मां देव स्वागतं कुरु सांप्रतम् ॥

गतो मे दानवो भावस्त्यक्तं राज्यं तथा विभो ॥ । २६ ॥

त्यक्ताः पुत्राश्च पौत्राश्च पत्न्यश्च विभवैः सह ॥

त्रिः सत्येन सुरश्रेष्ठ तव पादौ स्पृशाम्यहम् ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा ज्ञात्वा तं गतकल्मषम्॥

उत्तार्य शनकैः शूलाद्विनयावनतं स्थितम्॥२८॥

ततो नाम स्वयं चक्रे भृंगिरीटिरिति प्रभुः॥

अब्रवीच्च सदा मे त्वं वल्लभः संभविष्यसि॥२९॥

नन्दिनोऽपि गजास्यस्य महाकालस्य पुत्रक॥

तिष्ठ सौम्य मया सौख्यं न स्मरिष्यसि बांधवान्॥६.२२९.३०॥।

स तथेति प्रतिज्ञाय प्रणम्य शशिशेखरम् ॥

तस्थौ सर्वगणैर्युक्तः प्रभुसंश्रयसंयुतः ॥ ३१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये भृंगीरिट्युत्पत्तिवर्णनंनामैकोनत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २२९ ॥

॥ सूत उवाच ॥ ॥
एवं गणत्वमापन्ने ह्यन्धके दानवोत्तमे ॥
तस्य पुत्रो वृकोनाम निरुत्साहो द्विषज्जये ॥ १ ॥
भयेन महता युक्तो हतशेषैश्च दानवैः ॥
प्रविवेश समुद्रांतं सुदुर्गं ब्राह्मणोत्तमाः ॥ २ ॥
ततः शक्रः प्रहृष्टात्मा प्रणम्य वृषभध्वजम् ॥
तस्यादेशं समासाद्य प्रविवेशामरावतीम् ॥ ३ ॥
चकार च सुखी राज्यं त्रैलोक्येऽपि द्विजोत्तमाः॥
यज्ञभागान्पुनर्लेभे यथार्थं च धरातले ॥ ४ ॥
एतस्मिन्नेव काले तु ह्यंधकस्य सुतो वृकः ॥
निष्क्रम्य सागरात्तूर्णं जंबुद्वीपं समागतः ॥५॥
हाटकेश्वरजं क्षेत्रं मत्वा पुण्यं सुसिद्धिदम् ॥
पित्रा यत्र तपस्तप्तमंधकेन दुरात्मना ॥ ६ ॥
सगुप्तस्तु तपस्तेपेऽयथा वेत्ति न कश्चन ॥
ध्यायमानः सुरश्रेष्ठं भक्त्या कमलसंभवम् ॥७॥
यावद्वर्षसहस्रांतं जलाहारो द्वितीयकम् ॥
तपस्तेपे स दैत्येन्द्रो ध्यायमानः पितामहम् ॥ ८ ॥
वायुभक्षस्ततो जातस्तावत्कालं द्विजोत्तमाः ॥
अंगुष्ठाग्रेण भूपृष्ठं स्पर्शमानो जितेन्द्रियः ॥ ९ ॥
एवं च पञ्चमे प्राप्ते सहस्रे द्विजसत्तमाः ॥
ब्रह्मा तस्य गतस्तुष्टिं दृष्ट्वा तस्य तपो महत् ॥ ६.२३०.१० ॥
ततोऽब्रवीत्तमागत्य तां गर्तां ब्राह्मणोत्तमाः ॥
भोभो वृक निवर्तस्व तपसोऽस्मात्सुदारुणात् ॥ ११ ॥
वरं वरय भद्रं ते यो नित्यं मन सि स्थितः ॥ १२ ॥
॥ वृक उवाच ॥ ॥
यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥
जरामरणहीनं मां तत्कुरुष्व पितामह ॥ १३ ॥
॥ श्रीब्रह्मोवाच ॥ ॥
मम प्रसादतो वत्स जरामरणवर्जितः ॥
भविष्यसि न सन्देहः सत्यमेतन्मयोदितम् ॥ १४ ॥
एवमुक्त्वा ततो ब्रह्मा तत्रैवांतरधी यत ॥
वृकोऽपि कृतकृत्यस्त्वागतश्च स्वगृहं पितुः ॥ १५ ॥
गिरिं रैवतकं नाम सर्वर्तुकुसुमोज्ज्वलम् ॥

तत्र गत्वा निजामात्यैः समं मन्त्र्य च सत्व रम् ॥
इन्द्रोपरि ततश्चक्रे यानं युद्धपरीप्सया ॥ १६ ॥
इंद्रोऽपि च परिज्ञाय दानवं तं महाबलम् ॥
जरामृत्युपरित्यक्तं प्रभावात्परमेष्ठिनः ॥ १७ ॥
परित्यज्य भयाच्चैव पुरीं चैवामरावतीम् ॥
ब्रह्मलोकं गतस्तूर्णं देवैः सर्वैः समन्वितः ॥ १८ ॥
एतस्मिन्नंतरे प्राप्तो वृकश्च त्रिदशालये ॥
ससैन्यपरिवारेण प्रहृष्टेन समन्वितः ॥ १९ ॥
ततश्चैंद्रपदे तस्मिन्स्वयमेव व्यवस्थितः ॥
शुक्रात्प्राप्याभिषेकं च पुष्पस्नानसमुद्भवम् ॥ ६.२३०.२० ॥
सोऽभिषिक्तस्तु शुक्रेण देवराज्यपदे वृकः॥
स्थापयामास दैतेयान्देवतानां पदेषु च॥ २१॥
आदित्यानां वसूनां च रुद्राणां मरुतामपि॥
यज्ञभागकृते विप्राः शुक्रशासनमाश्रिताः॥२२॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युपाख्याने वृकेन्द्रराज्यलंभनवर्णनंनाम त्रिंशदुत्तरद्विशततमोऽध्यायः॥२३०॥

॥सूत उवाच॥
वृकोऽपि तत्समासाद्य राज्यं त्रैलोक्यसंभवम्॥
यदृच्छया जगत्सर्वं समाज्ञापयत्तदा॥१॥
सोंऽधकस्य बले वीर्ये धैर्ये कोपे च दानवः॥
सहस्रगुणितश्चासीद्रौद्रः परमदारुणः॥२॥
एतस्मिन्नंतरे कश्चिन्न मर्त्यो यजति क्षितौ॥
न होमं नैव जाप्यं च दैत्याञ्ज्ञात्वा सुरास्पदे॥३॥
अथ यः कुरुते धर्मं होमं वा जपमेव वा।
सुगुप्तस्थानमासाद्य करोत्यमरतुष्टये॥४॥
अथ स्वर्गस्थिता दैत्या यज्ञभागविवर्जिताः॥
तथा मर्त्योद्भवैर्भागैः संदेहं परमं गताः॥५॥
ततः कोपपरीतात्मा प्रेषयामास दानवः॥
मर्त्यलोके चरान्गुप्तान्निपुणांश्चाब्रवीत्ततः॥६॥
यः कश्चिद्देवतानां च प्रगृह्णाति करोति च॥
तदर्थं यजनं होमं दानं वा पृथिवीतले॥
स च वध्यश्च युष्माभिर्मम वाक्यादसंशयम्॥७॥
अथ ते तद्वचः श्रुत्वा दानवा बलवत्तराः॥
गत्वा च मेदिनीपृष्ठं गुप्ताः सर्पंति सर्वतः॥८॥
यं कञ्चिद्वीक्षयंतिस्म जपहोमपरायणम॥
स्वाध्यायं वा प्रकुर्वाणं तं निघ्नंति शितासिभिः॥ ९॥
एतस्मिन्नेव काले तु सांकृतिर्मुनिसत्तमः॥
गुप्तश्चक्रे ततस्तस्यां गर्तायां छन्नवर्ष्मकः॥
यत्र पूर्वं तपस्तप्तं वृकेण च द्विजाः पुरा॥६.२३१.१०॥
अथ ते तं तदा दृष्ट्वा तद्गुहायां व्यवस्थितम्॥
भर्त्समानास्तपस्तच्च प्रोचुश्च परुषाक्षरैः॥११॥
दृष्ट्वा तस्याग्रतः संस्थां गन्धपुष्पैश्च पूजिताम्॥
वासुदेवात्मिकां मूर्तिं चतुर्हस्तां द्विजोत्तमाः॥१२॥
ततस्ते शस्त्रमुद्यम्य निर्जघ्नुस्तं क्रुधान्विताः॥
न शेकुस्ते यदा हंतुं संवृतं विष्णुतेजसा॥
कुण्ठतां सर्वशस्त्राणि गतानि विमलान्यपि॥१३॥
अथ वैलक्ष्यमापन्ना निर्विण्णाः सर्व एव ते॥
तां वार्तां दानवेन्द्राय वृकायोचुश्च ते तदा॥१४॥
कश्चिद्विप्रः समाधाय वैष्णवीं प्रतिमां पुरः॥

तपस्तेपे महाभाग क्षेत्रे वै हाटकेश्वरे॥१५॥
यत्र त्वया तपस्तप्तं भीत्या सर्वदिवौकसाम्॥
अपि चौर्येण चास्माकं तपस्तपति तादृशम्॥ १६॥
येन सर्वाणि शस्त्राणि कुण्ठतां प्रगतानि च॥
तस्य गात्रे प्रहारैश्च तस्मात्कुरु यथोचितम्॥ १७॥
तेषां तद्वचनं श्रुत्वा वृकः कोपसमन्वितः॥
जगाम सत्वं तत्र यत्रासौ सांकृतिः स्थितः॥१८॥
स गत्वा वैष्णवीं मूर्तिं तामुत्क्षिप्य सुदूरतः॥
श्वभ्राद्बहिः प्रचिक्षेप भर्त्समानः पुनः पुनः॥१९॥
जघान पादघातेन दक्षिणेनेतरेण तम्॥
अब्रवीन्मम वध्यस्त्वं यन्मच्छत्रुं जनार्दनम्॥६.२३१.२०॥
संपूजयसि चौर्येण तेन प्राणान्हराम्यहम्॥
एवमुक्त्वाथ खड्गेन तं जघान स दैत्यपः॥२१॥
ततस्तस्य स खड्गस्तु तीक्ष्णोऽपि द्विजसत्तमाः॥
तस्य काये प्रहीणस्तु शतधा समपद्यत॥२२॥
ततः कोपपरीतात्मा तं शशाप स सांकृतिः॥२३॥
यस्मात्पाप त्वयाहं च पादघातैः प्रताडितः ॥
तस्मात्ते पततां पादौ सद्य एव धरातले ॥ २४ ॥
॥ सूत उवाच ॥ ॥
उक्तमात्रे ततस्तेन पादौ तस्य द्विजोत्तमाः ॥
पतितौ मेदिनीपृष्ठे पंचशीर्षाविवोरगौ ॥ २५ ॥
एतस्मिन्नेव काले तु आक्रन्दः सुमहानभूत् ॥
वृकस्य सैनिकानां च नारीणां च विशेषतः ॥ ॥ २६ ॥
अथ देवाः परिज्ञाय तं तदा पंगुतां गतम् ।
आगत्य मेरुपृष्ठं च निजघ्नुस्तत्परिग्रहम् ॥ २७ ॥
हतशेषाश्च दैत्यास्ते पातालांतःसमा गताः ॥
वृकोऽपि पंगुतां प्राप्तस्तस्थौ तपसि सुस्थिरम् ॥ २८ ॥
सर्वैरंतःपुरैः सार्धं दुःखशोकसमन्वितः ॥
इन्द्रोऽपि प्राप्तवान्राज्यं तदा निहत कंटकम् ॥ २९ ॥
धर्मक्रियाः प्रवृत्ताश्च ततो भूयो रसातले ॥ ६.२३१.३० ॥
अथ दीर्घेण कालेन तस्य तुष्टः पितामहः ॥
उवाच तत्र चागत्य गर्तामध्ये द्विजोत्तमाः ॥ ३१ ॥
वृक तुष्टोऽस्मि ते वत्स वरं वरय सुव्रत ॥

अहं दास्यामि ते नूनं यद्यपि स्यात्सुदुर्लभम् ॥ ३२ ॥
॥ वृक उवाच ॥ ॥
यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥
पाददानं तदा देव मम ब्रह्मन्समाचर ॥
पंगुता याति शीघ्रं मे येनेयं ते प्रसादतः ॥ ३३ ॥
तच्छ्रुत्वा तं समानीय सांकृतिं तत्र पद्मजः ॥
प्रोवाच सांत्वपूर्वं च वृकस्यास्य द्विजोत्तम ॥ ३४ ॥
मद्वाक्यात्पंगुता याति येनास्य त्वं तथा कुरु ॥ ३५ ॥ ॥
॥ सांकृतिरुवाच ॥ ॥
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि पितामह ॥
ज्ञायते देवदेवेश तत्कथं तत्करोम्यहम् ॥ ३६ ॥
॥ ब्रह्मोवाच ॥ ॥
मम भक्तिपरो नित्यं वृकोऽयं दैत्यसत्तमः ॥
पौत्रस्त्वं दयितो नित्यं तेन त्वां प्रार्थयाम्यहम् ॥ ३७ ॥
तव वाक्यं च नो मिथ्या कर्तुं शक्नोमि सन्मुने ॥ ३८ ॥
॥ सांकृतिरुवाच ॥ ॥
एष दैत्यः सुदुष्टात्मा देवानामहिते स्थितः ॥
विशेषाद्वासुदेवस्य पुरोर्मम महात्मनः ॥ ३९ ॥
पंगुतामर्हति प्रायः पापात्मा द्विजदूषकः ॥
बलेन महता युक्तो जरामरणवर्जितः ॥ ६.२३१.४० ॥
पुरा कृतस्त्वया देव स चेत्पादाववाप्स्यति ॥
हनिष्यति जगत्सर्वं सदेवासुरमानुषम् ॥ ४१ ॥
तस्मात्तिष्ठतु तद्रूपो न कल्पं कर्तुमर्हसि ॥
त्वयापि चिन्ता कर्तव्या त्रैलोक्यस्य यतः प्रभो ॥ ॥ ४२ ॥
॥ ब्रह्मोवाच ॥ ॥
प्रावृट्काले तु सञ्जाते यानं कर्तुं न युज्यते ॥
विजिगीषोर्विशेषेण मुक्त्वा शीतातपागमम् ॥ ४३ ॥
तस्माच्च चतुरो मासान्वार्षिकान्पादसंयुतः ॥
अगम्यः सर्वलोकानां कुर्यात्कर्माणि धैर्यतः ॥ ४४ ॥
तद्ब्रूयात्पादसंयुक्तः स वृको दान वोत्तमः ॥
येन क्षेमं च देवानां द्विजानां जायते द्विज ॥ ४५ ॥
एवं कृते न मिथ्या ते वाक्यं विप्र भविष्यति ॥
फलं च तपसस्तस्य न वृथा संभविष्यति ॥ ४६ ॥

॥ सूत उवाच ॥ ॥
बाढमित्येव तेनोक्ते सांकृतेन महात्मना ॥
उत्थितौ सहसा पादौ तस्य गात्रात्पुनर्नवौ॥ ४७ ॥
पुनश्च दानवो रौद्रः पशुत्वं समपद्यत॥
तस्यामेव तु गर्तायां संतिष्ठति द्विजोत्तमाः॥४८॥
मासानष्टौ स दुःखेन सकलत्रः सबांधवः ॥
स्मरमाणो महद्वैरं दैवैः सार्धं दिवानिशम्॥४९॥
अन्यांश्च चतुरो मासान्निष्क्रम्य स रुषान्वितः॥
सदा पीडयते देवान्सहेंद्रान्मानुषानपि ॥६.२३१.५॥।
विध्वंसयति सर्वाणि धर्मस्थानानि यानि च ॥५१॥
विध्वंसयति देवानां स्त्रियो मासचतुष्टयम् ॥
उद्यानानि च सर्वाणि सपुराणि गृहाणि च ॥५२॥
ततो देवाः समभ्येत्य देवदेवं जनार्दनम् ॥
क्षीराब्धौ संस्थितं नित्यं शेषपर्यंकशायिनम्॥५३॥
चतुरो वार्षिकान्मासांस्तत्र स्थित्वा तदंतिके ॥
मासानष्टौ पुनर्जग्मुस्त्रिदिवं प्रति निर्भयाः ॥ ५४ ॥
तस्मिन्पंगुत्वमापन्ने दैत्ये परमदारुणे ॥
कस्यचित्त्वथ कालस्य देवराजो बृहस्पतिम् ॥
प्रोवाच दुःखसंतप्त आषाढांते सुरो त्तमः ॥ ५५ ॥
गुरो स मासः संप्राप्तः प्रावृट्कालो भयावहः ॥
आगमिष्यति यत्रासौ लब्धपादो वृकासुरः ॥५६॥
गन्तव्यं च ततोऽस्माभिः क्षीरोदे केशवालये ॥
मैवं दीनैस्तथा भाव्यं पराश्रयनिवासिभिः ॥ ५७ ॥
स्वगृहाणि परित्यज्य शयनान्यासनानि च ॥
वाहनानि विचित्राणि यच्चान्य द्दयितं गृहे ॥ ५८ ॥
तस्मात्कथय चास्माकमुपायं कञ्चिदेव हि ॥
व्रतं वा नियमं वाथ होमं वा मुनिसत्तम ॥ ५९ ॥
अशून्यं शयनं येन स्वकलत्रेण जायते ॥
तथा न गृहसंत्यागः स्वकीयस्य प्रजायते ॥ ६.२३१.६० ॥
निर्विण्णोऽहं निजस्थानभ्रंशाद्द्विजवरोत्तम ॥
वर्षेवर्षे च सम्प्राप्ते स्थानकस्य च्युतिर्भवेत् ॥ ६१ ॥
पुनर्भूमौ शयिष्यामि यावन्मासचतुष्टयम् ॥
निष्कलत्रो भयोद्विग्नो ब्रह्मचर्यपरायणः ॥ ६२ ॥

तस्य तद्वचनं श्रुत्वा भयार्तस्य बृहस्पतिः ॥
प्रोवाच सुचिरं ध्यात्वा ततो देवं शतक्रतुम् ॥ ६३ ॥
अशून्यशयनंनाम व्रतमस्ति महत्तपः ॥
विष्णोराराधनार्थाय तत्कुरुष्व समा हितः ॥ ६४ ॥
देवो यत्रास्ति विष्णुः स क्षीराब्धौ मधुसूदनः ॥
जलशायी जगद्योनिः स दास्यति हितं च ते ॥ ६५ ॥
यथा न शून्यं शयनं गृह भंगः प्रजायते ॥
सर्वशत्रुविनाशश्च तत्प्रसादेन वासव ॥ ६६ ॥
॥ सूत उवाच ॥ ॥
तस्मिन्व्रते ततश्चीर्णे ह्यशून्यशयनात्मके ॥
तुतोष भगवान्विष्णुस्ततः प्रोवाच देवपम् ॥ ६७ ॥
शक्र तुष्टोऽस्मि भद्रं ते वरं वरय सुव्रत ॥
व्रतेनानेन चीर्णेन चातुर्मास्योद्भवेन च ॥
तस्मात्प्रार्थय देवेन्द्र नित्यं यन्मनसि स्थितम् ॥ ६८ ॥
॥ इन्द्र उवाच ॥ ॥
कृष्ण जानासि त्वं चापि यश्च मेऽत्र पराभवः ॥
क्रियते दानवेन्द्रेण वृकेण सुदुरात्मना ॥ ६९ ॥
ममाष्टमासिकं राज्यं त्रैलोक्येऽपि व्यवस्थितम् ॥
शेषांश्च चतुरो मासान्वर्षेवर्षे समेति सः ॥ ६.२३१.७० ॥
एवं ज्ञात्वा सुरश्रेष्ठ दयां कृत्वा ममोपरि ॥
तथा कुरु यथा राज्यं मम स्यात्सार्वकालिकम् ॥ ७१ ॥
॥ विष्णुरुवाच ॥ ॥
अजरश्चामरश्चापि स कृतः पद्मयोनिना ॥
तत्कथं जीवमानेन तेन राज्यं भवेत्तव ॥ ७२ ॥
परं तथापि देवेन्द्र करिष्यामि हितं तव ॥ ७३ ॥
क्षीरार्णवं परित्यज्य हाटकेश्वरसंज्ञिते ॥
क्षेत्रे गत्वा समं लक्ष्म्या तस्योपरि ततः परम् ॥ ७४ ॥
करिष्यामि त्वहं शक्र शयनं यत्नमास्थितः ॥
यावच्च चतुरो मासान्यथा स न चलिष्यति ॥ ७८५ ॥
तस्मात्स्थानात्सहस्राक्ष मद्द्वारेण प्रपीडितः ॥
वर्षेवर्षे सदा कार्यं मया तत्सुहितं तव ॥ ७६ ॥
तस्माद्गच्छाधुना स्वर्गे कुरु राज्यमकंटकम् ॥
प्रावृट् काले तु संप्राप्ते न भीः कार्या तदुद्भवा ॥ ७७ ॥

यो मां तत्र शयानं तु व्रतेनानेन देवप॥
पूजयिष्यति सद्भक्त्या तस्य दास्यामि वांछितम् ॥ ७८ ॥।
॥ सूत उवाच ॥
एवमुक्त्वा हृषीकेशो विससर्ज शतक्रतुम् ॥
निःशेषभयनिर्मुक्तं स्वराज्यपरिवृद्धये ७९॥
आषाढस्य सिते पक्ष एकादश्या दिने सदा॥
हाटकेश्वरजे क्षेत्रे तत्रागत्य स्वयं विभुः ॥ ६.२३१.८० ॥
वृकोपरि ततश्चक्रे शयनं यत्नमास्थितः ॥
तेनाक्रांतस्ततः सोऽपि शक्नोति चलितुं न हि ॥ ८१ ॥।
मृतप्रायस्ततो नित्यं तद्भारेण प्रपीडितः ॥
कार्तिकस्य सिते पक्ष एकादश्या दिने स्थिते ॥ ८२ ॥
उत्थानं कुरुते विष्णुः क्षीरोदं प्रति गच्छति ॥ा।
सोऽपि सांकृतिशापेन वृकः पंगुत्वमाप्नुयात् ॥ ८३ ॥
एवं च चतुरो मासान्न त्यजेच्छयनं हरिः ।।
भयात्तस्यासुरेंद्रस्य दानवस्य दुरात्मनः ॥ ॥ ८४ ॥
तत्र मर्त्यैः क्रिया सर्वाः क्रियते न मखोद्भवाः ॥
यस्मात्स यज्ञपुरुषो न सुप्तो भागमश्नुते ॥ ८५ ॥
तथा यज्ञाश्च ये सर्वे क्त्वयादानादि काः शुभाः ॥
ते सर्वे न क्रियंते च चूडाकरणपूर्वकाः ॥ ८६ ॥
मुक्त्वान्नप्राशनंनाम सीमंतोन्नयनं तथा ॥
तस्मात्सुप्ते जगन्नाथे ताः सर्वाः स्युर्वृथा द्विजाः ॥ ८७ ॥
व्रतं वा नियमं वाथ तस्मिन्यः कुरुते नरः ॥
प्रसुप्ते देवदेवेशे तत्सर्वं निष्फलं भवेत् ॥८८॥
तस्मात्सर्वप्रयत्नेन संप्रसुप्ते जनार्दने ॥
व्रतस्थैर्मानवैर्भाव्यं तस्य देवस्य तुष्टये ॥ ८९ ॥
एकादश्यां दिने प्राप्ते शयने बोधने हरेः ॥
यत्किंचित्क्रियते कर्म श्रेष्ठं तच्चाक्षयं भवेत् ॥ ६.२३१.९० ॥
किंवात्र बहुनोक्तेन क्रियते यद्व्रतं नरैः ॥
तेन तुष्टिं परां याति दैत्योपरि स्थितो हरिः ॥९१॥
एवं स भगवान्प्राह सुप्तस्तत्र जनार्दनः ॥
किं वा तस्य ज्वरो जातो महती वेदनापि च ॥ ९२ ॥
तस्मिन्नहनि पापात्मा योन्नमश्नाति मानवः ॥
तस्मात्सर्वप्रयत्नेन संप्राप्ते हरिवासरे ॥ ९३ ॥

अन्यस्मिन्नपि भोक्तव्यं न नरेण विजानता ॥
किं पुनः शयनं यत्र कुरुते यत्र बोधनम् ॥ ९४ ॥
॥ सूत उवाच ॥ ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजो त्तमाः ॥
हाटकेश्वरजे क्षेत्रे यस्माच्छेते जनार्दनः ॥ ९५ ॥
क्षीराब्धिं संपरित्यज्य सदा मासचतुष्टयम् ॥
श्रूयतां च फलं यत्स्यात्तस्मिन्नाराधिते विभो ॥ ९६ ॥
चतुरो वार्षिकान्मासान्यस्तं पूजयते विभुम् ॥
व्रतस्थः स नरो याति यत्र देवः स संस्थितः ॥ ९७ ॥
किं दानैर्बहुभिर्दत्तैः किं व्रतैः किमुपोषितैः ॥
तत्र यः पुंडरीकाक्षं सुप्तं पूजयति ध्रुवम् ॥ ९८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युपाख्यान एकादशीव्रतमाहात्म्यवर्णनंनामैकत्रिंशदुत्तरद्विशततमोऽध्यायः । २३१ ॥

॥ ऋषय ऊचुः ॥ ॥
प्रसुप्ते देवदेवेशे शंखचक्रगदाधरे ॥
यच्चान्यदपि कर्तव्यं नियमो व्रतमेव वा ॥ १ ॥
होमो वाथ जपो वाथ दानं वा तद्वदस्व नः ॥
॥ सूत उवाच ॥
यः कश्चिन्नियमो विप्राः प्रसुप्ते गरुडध्वजे ॥ २ ॥
अनंतफलदः स स्यादित्युवाच पितामहः ॥
तस्मात्सर्वप्रयत्नेन कश्चिद्बाह्यो विजानता ॥ ३ ॥
नियमो वा जपो होमः स्वाध्यायो व्रतमेव वा ॥
कर्तव्यं ब्राह्मणश्रेष्ठास्तुष्ट्यर्थं चक्रपाणिनः ॥ ४ ॥
चतुरो वार्षिकान्मासानेकभक्तेन यो नयेत् ॥
वासुदेवं समुद्दिश्य स धनी जायते नरः ॥ ५ ॥
नक्षत्रैर्भोजनं कुर्याद्यः प्रसुप्ते जनार्दने ॥
स धनी रूपसंपन्नः सुमतिश्च प्रजायते ॥ ६ ॥
एकांतरोपवासैश्च यो नयेद्द्विजसत्तमाः ॥
चतुरो वार्षिकान्मासान्वैकुंठे स सदा वसेत् ॥ ७ ॥
षष्ठान्नकालभोजी स्याद्यः प्रसुप्ते जनार्दने ॥
राजसूयाश्वमेधाभ्यां स कृत्स्नं फलमाप्नुयात्॥ ८ ॥
त्रिरात्रोपोषितो यस्तु चतुर्मासान्सदा नयेत् ॥
न स भूयोऽपि जायेत संसारेऽत्र कथंचन ॥ ९ ॥
सायंप्रातः परो भूत्वा चतुर्मासान्सदा नयेत्॥
अग्निष्टोमस्य यज्ञस्य स फलं लभते नरः ॥ ६.२३२.१० ॥
अयाचितं चरेद्यस्तु प्रसुप्ते मधुसूदने ॥
न विच्छेदो भवेत्तस्य कदाचित्सह बंधुभिः ॥ ११ ॥
तैलाभ्यंगं च यो जह्याद्घृताभ्यंगं विशेषतः ॥
चतुरो वार्षिकान्मासान्स स्वर्गे भोगभाग्भवेत् ॥ १२ ॥
ब्रह्मचर्येण यो मासांश्चतुरोऽपि नयेन्नरः ॥
विमानवरमारूढः स स्वर्गे स्वेच्छया वसेत् ॥ १३ ॥
यः स्नानं चतुरो मासान्कुरुते तैलवर्जितम् ॥
मधुमांसपरित्यागी स भवेन्मुक्तिभाक्सदा ॥ १४ ॥
वर्जयेच्छ्रावणे शाकं दधि भाद्रपदे च यः ॥
क्षीरमाश्वयुजे मासि कार्तिके च सदामिषम्॥ १८ ॥
न स पापेन लिप्येत संवत्सरकृते पुनः ॥

एतत्प्राह द्विजश्रेष्ठा मनुः स्वायंभुवो वचः ॥ १६ ॥
शाके संक्रमते ब्रह्मा श्रावणे मासि संस्थिते ॥
दध्नि भाद्रपदे विष्णुः क्षीरे चाश्वयुजे हरः ॥ १७ ॥
त्रयोऽपि कार्तिके मासि संक्रमंति तथाऽऽमिषे ॥
तस्मादेतान्स देवेषु सर्वथा परिवर्जयेत् ॥ १८ ॥
यः कांस्यं वर्जयेन्मर्त्यः प्रसुप्ते गरुडध्वजे ॥
स फलं प्राप्नुयात्कृत्स्नं वाजपेयातिरात्रयोः ॥ १९ ॥
अक्षारलवणाशी च यो भवेद्ब्राह्मणोत्तमः ॥
तस्यापि सकलाः पूर्ताः प्रभवंति सदा ततः ॥ ६.२३२.२० ॥
यो होमं चतुरो मासान्प्रकरोति तिलाक्षतैः ॥
स्वाहांतैर्वैष्णवैर्मंत्रैर्न स रोगेण युज्यते ॥ २१ ॥
यो जपेत्पौरुषं सूक्तं स्नात्वा विष्णोः स्थितोऽग्रतः ॥
मतिस्तस्य विवर्धेत शुक्लपक्षे यथोडुराट् ॥ २२ ॥
शतमष्टोत्तरं यावत्फलहस्तः प्रदक्षिणाम् ॥
करोति विष्णोर्मौनेन न स पापेन लिप्यते ॥ २३ ॥
मिष्टान्नं ब्राह्मणेंद्राणां यो ददाति स्वशक्तितः ॥
विशेषात्कार्तिके मासि सोऽग्निष्टोमफलं लभेत्॥ २४ ॥
यः स्वाध्यायं चतुर्वेदैर्विष्णोरायतने चरेत् ॥
चतुरो वार्षिकान्मासान्स विद्वान्सर्वदा भवेत् ॥ २५ ॥
नृत्यगीतादिकं यश्च कुर्याद्विष्णोः सदा गृहे ॥
अप्सरसोऽस्य कुर्वंति पुरतः स्वर्गतस्य च ॥ २६ ॥
यस्तु रात्रिदिनं विप्रो नृत्यगीतादिकं ददेत् ॥
चतुरो वार्षिकान्मासान्स गन्धर्वत्वमाप्नुयात् ॥ २७ ॥
एते च नियमाः सर्वे शक्यंते यदि भो द्विजाः ॥
कर्तुं च चतुरो मासानेकस्मिन्वाऽपि कार्त्तिके ॥ २८ ॥
तथापि चैव कर्तव्यं लोकद्वयमभीप्सता ॥
कार्तिक्यां ब्राह्मणश्रेष्ठा वैष्णवैः पुरुषैरिह ॥ २९ ॥
कांस्यं मांसं क्षुरं क्षौद्रं पुनर्भोजनमैथुने ॥
कार्तिके वर्जयेद्यस्तु य एतान्ब्राह्मणः सदा ॥ ६.२३२.३० ॥
पूर्वोक्तानां तु सर्वेषां नियमानां फलं लभेत् ॥ ३१ ॥
अथ यः कार्तिके मासि प्रासादस्योपरि द्विजाः ॥
जलशाय्याख्यदेवस्य कलशे दीपकं ददेत्॥
पूर्वोक्तनियमानां च स षण्णां फलभाग्भवेत् ॥ ३२ ॥

यद्यदिष्टतमं किंचि त्सुप्राप्यं चैव यद्भवेत् ॥
नियमस्तस्य कर्तव्यश्चातुर्मास्ये शुभार्थिभिः ॥ ३३ ॥
नियमे च कृते दद्याद्ब्राह्मणाय तदेव हि ॥
नियमस्तु कृतो यस्य स्वशक्त्या स्यात्फलं ततः ॥ ३४ ॥
यो विना नियमं मर्त्यो व्रतं वा जाप्यमेव वा ॥
चतुर्मासान्नयेन्मूर्खो जीवन्नपि मृतो हि सः ॥३५॥
यथा काक यवाः प्रोक्ता यथारण्यास्तिलोद्भवाः ॥
नाममात्रप्रसिद्धाश्च तथा ते मानवा भुवि ॥ ३६ ॥
तस्मात्सर्वप्रयत्नेन कार्यो यत्नेन कार्तिके ॥
एकोऽपि नियमः कश्चित्सुसूक्ष्मोऽपि द्विजोत्तमाः ॥ ३७ ॥
एतद्वः सर्वमाख्यातं चातुर्मासीसमुद्भवम्॥
व्रतानां नियमानां च माहात्म्यं विस्तराद्द्विजाः ॥३८॥
यश्चैतच्छृणुयान्नित्यं पठेद्वापि समाहितः ॥
चातुर्मासी कृतात्पापात्सोऽपि मुक्तिमवाप्नुयात् ॥ ३९ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युपाख्याने चातुर्मास्यव्रतनियमवर्णनंनाम द्वात्रिंशदुत्तरद्विशतमोऽध्यायः ॥२३२ ॥। ॥

॥ ऋषय ऊचुः ॥ ॥
सूत सूत महाभाग श्रोतुमिच्छामहे वयम् ॥
चातुर्मास्यव्रतानां हि त्वत्तो माहात्म्यविस्तरम् ॥१॥
तदस्माकं महाभाग कृपां कृत्वाऽधुना वद ॥
त्वद्वचोऽमृतपानेन भूयः श्रद्धाभिवर्धते ॥२॥
॥ सूत उवाच ॥ ॥
शृणुध्वं मुनयः सर्वे चातुर्मास्यव्रतोद्भवम् ॥
माहात्म्यं विस्तरेणैव कथयिष्यामि वोऽग्रतः ॥३॥
पुरा ब्रह्ममुखाच्छ्रुत्वा नानाव्रतविधानकम्॥
नारदः परिपप्रच्छ भूयो ब्रह्माणमादरात् ॥४॥
॥नारद उवाच ॥ ॥
देवदेव महाभाग व्रतानि सुबहून्यपि ॥
श्रुतानि त्वन्मुखाद्ब्रह्मन्न तृप्तिमधिगच्छति ॥ ५ ॥
अधुना श्रोतुमिच्छामि चातुर्मास्यव्रतं शुभम्॥ ६ । ॥
॥ ब्रह्मोवाच ॥ ॥
शृणु देवमुने मत्तश्चातुर्मास्यव्रतं शुभम् ॥
यच्छ्रुत्वा भारते खंडे नृणां मुक्तिर्न दुर्लभा ॥ ७ ॥
मुक्तिप्रदोऽयं भगवान्संसारोत्तारकारणम् ॥
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ ८ ॥
मानुष्ये दुर्लभं लोके तत्राऽपि च कुलीनता ॥
तत्रापि सदयत्वं च तत्र सत्संगमः शुभः ॥ ९ ॥
सत्संगमो न यत्रास्ति विष्णुभक्तिर्व्रतानि च ॥
चातुर्मास्ये विशेषेण विष्णुव्रतकरः शुभः ॥ ६.२३३.१० ॥
चातुर्मास्येऽव्रती यस्तु तस्य पुण्यं निरर्थकम् ॥
सर्वतीर्थानि दानानि पुण्यान्यायतनानि च ॥ ११ ॥
विष्णुमाश्रित्य तिष्ठंति चातुर्मास्ये समागते ॥
सुपुष्टेनापि देहेन जीवितं तस्य शोभनम् ॥ १२ ॥
चातुर्मास्ये समायाते हरिं यः प्रणमेद्बुधः ॥
कृतार्थास्तस्य विबुधा यावज्जीवं वरप्रदाः ॥ १३ ॥
संप्राप्य मानुषं जन्म चातुर्मास्यपराङ्मुखः ॥
तस्य पापशतान्याहुर्देहस्थानि न संशयः ॥ १४ ॥
मानुष्यं दुर्लभं लोके हरिभक्तिश्च दुर्लभा ॥
चातुर्मास्ये विशेषेण सुप्ते देवे जनार्दने ॥ १५ ॥

चातुर्मास्ये नरः स्नानं प्रातरेव समाचरेत् ॥
सर्वक्रतुफलं प्राप्य देववद्दिवि मोदते ॥ १६ ॥
चातुर्मास्ये तु यः स्नानं कुर्यात्सिद्धिमवाप्नुयात् ॥
तथा निर्झरणे स्नाति तडागे कूपिकासु च ॥ १७ ॥
तस्य पापसहस्राणि विलयं यांति तत्क्षणात् ॥
पुष्करे च प्रयागे वा यत्र क्वापि महाजले ॥
चातुर्मास्येषु यः स्नाति पुण्यसंख्या न विद्यते ॥ १८ ॥
रेवायां भास्करक्षेत्रे प्राच्यां सागरसंगमे ॥
एकाहमपि यः स्नातश्चातुर्मास्ये न दोषभाक् ॥ १९ ॥
दिनत्रयं च यः स्नाति नर्मदायां समाहितः ॥
सुप्ते देवे जगन्नाथे पापं याति सहस्रधा ॥ ६.२३३.२० ॥
पक्षमेकं तु यः स्नाति गोदावर्यां दिनोदये ॥
स भित्त्वा कर्मजं देहं याति विष्णोः सलोकताम् ॥ २१ ॥
तिलोदकेन यः स्नाति तथा चैवामलोदकैः ॥
बिल्वपत्रोदकैश्चैव चातुर्मास्ये न दोषभाक् ॥ २२ ॥
गंगां स्मरति यो नित्यमुदपात्रसमीपतः ॥
तद्गांगेयं जलं जातं तेन स्नानं समाचरेत् ॥ २३ ॥
गंगाऽपि देवदेवस्य चरणांगुष्ठवाहिनी ॥
पापघ्नी सा सदा प्रोक्ता चातुर्मास्ये विशेषतः ॥ २४ ॥
यतः पापसहस्राणि विष्णुर्दहति संस्मृतः ॥
तस्मात्पादोदकं शीर्षे चातुर्मास्ये धृतं शिवम् ॥२५॥
चातुर्मास्ये जलगतो देवो नारायणो भवेत् ॥
सर्वतीर्थाधिकं स्नानं विष्णुतेजोंशसंगतम्॥२६॥
स्नानं दशविधं कार्यं विष्णुनाम महाफलम् ॥
सुप्ते देवे विशेषेण नरो देवत्वमाप्नुयात् ॥२७॥
विना स्नानं तु यत्कर्म पुण्यकार्यमयं शुभम् ॥
क्रियते निष्फलं ब्रह्मंस्तत्प्रगृह्णंति राक्षसाः ॥२८॥
स्नानेन सत्यमाप्नोति स्नानं धर्मः सनातनः ॥
धर्मान्मोक्षफलं प्राप्य पुनर्नैवावसीदति॥२९॥
ये चाध्यात्मविदः पुण्या ये च वेदांगपारगाः ॥
सर्वदानप्रदा ये च तेषां स्नानेन शुद्धता ॥६.२३३.३॥।
कृतस्नानस्य च हरिर्देहमाश्रित्य तिष्ठति ॥
सर्वक्रियाकलापेषु संपूर्ण फलदो भवेत् ॥ ३१ ॥

सर्वपापविनाशाय देवता तोषणाय च ॥
चातुर्मास्ये जलस्नानं सर्वपापक्षयावहम् ॥ ३२ ॥
निशायां चैव न स्नायात्संध्यायां ग्रहणं विना ॥
उष्णोदकेन न स्नानं रात्रौ शुद्धिर्न जायते ॥ ३३ ॥
भानुसंदर्शनाच्छुद्धिर्विहिता सर्वकर्मसु ॥
चातुर्मास्ये विशेषेण जलशुद्धिस्तु भाविनी ॥ ३४ ॥
अशक्त्या तु शरीरस्य भस्मस्नानेन शुध्यति ॥
मंत्रस्नानेन विप्रेंद्र विष्णुपादोदकेन वा ॥ ३५८ ॥
नारायणाग्रतः स्नानं क्षेत्र तीर्थनदीषु च ॥
यः करोति विशुद्धात्मा चातुर्मास्ये विशेषतः ॥ ३६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने चातुर्मास्यमाहात्म्ये ब्रह्मनारदसंवादे गंगोदकस्नानफलमाहात्म्यवर्णनंनाम त्रयस्त्रिंशदुत्तरद्विशततमोऽध्यायः॥२३३॥॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३४



ब्रह्मोवाच ॥ ॥

पितॄणां तर्पणं कुर्याच्छ्रद्धायुक्तेन चेतसा ॥

स्नानावसाने नित्यं च गुप्ते देवे महाफलम् ॥१॥

संगमे सरितोस्तत्र पितॄन्संतर्प्य देवताः ॥

जपहोमादिकर्माणि कृत्वा फलमनंतकम् ॥२॥

गोविंदस्मरणं कृत्वा पश्चात्कार्याः शुभाः क्रियाः ॥

एष एव पितृदेवमनुष्यादिषु तृप्तिदः ॥ ३ ॥

श्रद्धां धर्मयुतां नाम स्मृतिपूतानि कारयेत् ॥

कर्माणि सकलानीह चातुर्मास्ये गुणोत्तरे ॥ ४ ॥

सत्संगो द्विजभक्तिश्च गुरुदेवाग्नि तर्पणम् ॥

गोप्रदानं वेदपाठः सत्क्रियासत्यभाषणम् ॥ ५ ॥

गोभक्तिर्दानभक्तिश्च सदा धर्मस्य साधनम् ॥

कृष्णे सुप्ते विशेषेण नियमोऽपि महा फलः ॥ ६ ॥

॥ नारद उवाच ॥ ॥

नियमः कीदृशो ब्रह्मन्फलं च नियमेन किम् ॥

नियमेन हरिस्तुष्टो यथा भवति तद्वद ॥७ ॥

॥ ब्रह्मोवाच ॥ ॥

नियमश्चक्षुरादीनां क्रियासु विविधासु च ॥

कार्यो विद्यावता पुंसा तत्प्रयोगान्महासुखम् ॥ ८ ॥

एतत्षड्वर्गहरणं रिपुनिग्रहणं परम् ॥

अध्यात्ममूलमेतद्धि परमं सौख्यकारणम् ॥ ९ ॥

तत्र तिष्ठंति नियतं क्षमासत्यादयो गुणाः ॥

विवेकरूपिणः सर्वे तद्विष्णोः परमं पदम् ॥ ६.२३४.१० ॥

कृत्वा भवति यज्ज्ञान्यत्कृतकृत्यत्वमत्र तत् ॥

स्यात्तस्य तत्पूर्वजानां येन ज्ञातमिदं पदम् ॥ ११ ॥

तन्मुहूर्त्तमपि ध्यात्वा पापं जन्मशतोद्भवम्॥
भस्म साद्याति विहितं निरंजननिषेवणात् ॥ १२ ॥
प्रत्यहं संकुचत्यस्य क्षुत्पिपासादिकः श्रमः ॥
स योगी नियमी नित्यं हरौ सुप्ते विशिष्यते ॥ १३ ॥
चातुर्मास्ये नरो भक्त्या योगाभ्यासरतो न चेत् ॥
तस्य हस्तात्परिभ्रष्टममृतं नात्र संशयः ॥ १४ ॥
मनो नियमितं येन सर्वेच्छासु सदागतम्॥
तस्य ज्ञाने च मोक्षे च कारणं मन एव हि ॥ १५ ॥
मनोनियमने यत्नः कार्यः प्रज्ञावता सदा ॥
मनसा सुगृहीतेन ज्ञानाप्तिरखिला ध्रुवम् ॥ १६ ॥
तन्मनः क्षमया ग्राह्यं यथा वह्निश्च वारिणा ॥
एकया क्षमया सर्वो नियमः कथितो बुधैः ॥ १७ ॥
सत्यमेकं परो धर्मः सत्यमेकं परं तपः ॥
सत्यमेकं परं ज्ञानं सत्ये धर्मः प्रतिष्ठितः ॥ १८ ॥
धर्ममूलमहिंसा च मनसा तां च चितयन् ॥
कर्मणा च तथा वाचा तत एतां समाचरेत् ॥ १९ ॥
परस्वहरणं चौर्यं सर्वदा सर्वमानुषैः ॥
चातुर्मास्ये विशेषेण ब्रह्मदेवस्ववर्जनम् ॥ ६.२३४.२० ॥
अकृत्यकरणं चैव वर्जनीयं सदा बुधैः ॥
अहीनः सर्वकार्येषु यः सदा विप्र वर्तते ॥ २१ ॥
स च योगी महाप्राज्ञः प्रज्ञाचक्षुरहं नधीः ॥ ?
अहंकारो विषमिदं शरीरे वर्त्तते नृणाम् ॥ २२ ॥
तस्मात्स सर्वदा त्याज्यः सुप्ते देवे विशेषतः ॥
अनीहया जितक्रोधो जितलोभो भवेन्नरः ॥ २३ ॥
तस्य पापसहस्राणि देहाद्यांति सहस्रधा ॥
मोहं मानं पराजित्य शमरूपेण शत्रुणा ॥ २४ ॥
विचारेण शमो ग्राह्यः सन्तोषेण तथा हि सः ॥
मात्सर्यमृजुभावेन नियच्छेत्स मुनीश्वरः ॥ २५ ॥

चातुर्मास्ये दयाधर्मो न धर्मो भूतविद्रुहाम् ॥
सर्वदा सर्व दानेषु भूतद्रोहं विवर्जयेत् ॥ २६ ॥
एतत्पापसहस्राणां मूलं प्राहुर्मनीषिणः ॥
तस्मात्सर्वप्रयत्नेन कार्या भूतदया नृभिः ॥ २७ ॥
सर्वेषामेव भूतानां हरिर्नित्यं हृदि स्थितः ॥
स एव हि पराभूतो यो भूतद्रोहकारकः ॥ २८ ॥
यस्मिन्धर्मे दया नैव स धर्मो दूषितो मतः ॥
दयां विना न विज्ञानं न धर्मो ज्ञानमेव च ॥ २९ ॥
तस्मात्सर्वात्मभावेन दयाधर्मः मनातनः ॥
सेव्यः स पुरुषैर्नित्यं चातुर्मास्ये विशेषतः ॥ ६.२३४.३० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये चातुर्मास्यमाहात्म्ये शेपशाय्युपाख्याने ब्रह्म नारदसंवादे चातुर्मास्यनियमविधिमाहात्म्यवर्णनंनाम चतुस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३५



॥ ब्रह्मोवाच ॥ ॥

दानधर्मं प्रशंसंति सर्वधर्मेषु सर्वदा ॥

हरौ सुप्ते विशेषेण दानं ब्रह्मत्वकारणम् ॥ १ ॥

अन्नं ब्रह्म इति प्रोक्तमन्ने प्राणाः प्रतिष्ठिताः ॥

तस्मादन्नप्रदो नित्यं वारिदश्च भवेन्नरः ॥ २ ॥

वारिदस्तृप्तिमायाति सुखमक्षय्यमन्नदः ॥

वार्यन्नयोः समं दानं न भूतं न भविष्यति ॥ ३ ॥

मणिरत्नप्रवालानां रूप्यं हाटकवाससाम्॥

अन्येषामपि दानानामन्नदानं विशिष्यते ॥ ४ ॥

अन्नोदकप्रदानं च गोप्रदानं च नित्यदा ॥

वेदपाठो वह्निहोमश्चातुर्मास्ये महाफलम् ॥ ९ ॥

वैकुण्ठपदवाञ्छा चेद्विष्णुना सह संगमे ॥

सर्वपापक्षयार्थाय चातुर्मास्येऽन्नदो भवेत् ॥ ६ ॥

सत्यंसत्यं हि देवर्षे मयोक्तं तव नारद ॥

जन्मांतरसहस्रेषु नादत्तमुपतिष्ठते ॥ ७ ॥

तस्मादन्नप्रदानेन सर्वे हृष्यंति जन्तवः ॥

देवाश्च स्पृहयंत्येनमन्नदानप्रदायिनम् ॥ ८ ॥

आज्यं देयं च पात्रेषु श्रद्धया वज्रमिश्रितम् ॥

वज्रदानकरो मर्त्यश्चातुर्मास्ये न मानवः ॥ ९ ॥

भोजनं गुरुविप्राणां घृतदानं च सत्क्रिया ॥

एतानि यस्य तिष्ठन्ति चातुर्मास्ये न मानवः ॥ ६.२३५.१० ॥

सद्धर्मः सत्कथा चैव सत्सेवा दर्शनं सताम् ॥

विष्णुपूजा रतिर्दाने चातुर्मास्येषु दुर्लभाः ॥ ११ ॥

पितॄनुद्दिश्य यो मर्त्यश्चातुर्मास्येऽन्नदो भवेत् ॥

सर्वपापविशुद्धात्मा पितृलोकमवाप्नुयात् ॥ १२ ॥

देवाः सर्वेऽन्नदानेन तृप्ता यच्छन्ति वांछितम् ॥
पिपीलिकाऽपि यद्गेहाद्भक्ष्यमादाय गच्छति ॥ १३ ॥
रात्रौ दिवाऽनिषिद्धान्नो ह्यन्नदानमनुत्तमम् ॥
हरौ सुप्ते हि पापघ्नं वार्य मपि शत्रुषु ॥ १४ ॥
चातुर्मास्ये दुग्धदानं दधि तक्रं महाफलम् ॥
जन्मकाले येन बद्धः पिंडस्तद्दानमुत्तमम् ॥ १५ ॥
शाकप्रदाता नरकं यमलोकं न पश्यति ॥
वस्त्रदः सोमलोकं च वसेदाभूतसंप्लवम् ॥ १६ ॥
सुप्ते देवे यथाशक्ति ह्यन्यासु प्रतिमासु च ॥
पुष्पवस्त्रप्रदानेन सन्तानं नैव हीयते ॥ १७ ॥
चन्दनागुरुधूपं च चातुर्मास्ये प्रयच्छति ॥
पुत्रपौत्रसमायुक्तो विष्णुरूपी भवेन्नरः ॥१८ ॥
सुप्ते देवे जगन्नाथे फलदानं प्रय च्छति ॥
विप्राय वेदविदुषे यमलोकं न पश्यति ॥ १९ ॥
विद्यादानं च गोदानं भूमिदानं प्रयच्छति ॥
विष्णुप्रीत्यर्थमेवेह स तारयति पूर्वजान् ॥ ६.२३५.२० ॥
गुडसैंधवतैलादिमधुतिक्ततिलान्नदः ॥
देवतायास्समुद्दिश्य तासां लोकं प्रयाति हि ॥ २१ ॥
चातुर्मास्ये तिलान्दत्त्वा न भूयः स्तनपो भवेत् ॥
यवप्रदाता वसते वासवं लोकमक्षयम् ॥ २२ ॥
हूयेत हव्यं वह्नौ च दानं दद्याद्द्विजातये ॥
गावः सुपूजिताः कार्याश्चातुर्मास्ये विशेषतः ॥ २३ ॥
यत्किंचित्सुकृतं कर्म जन्मावधि सुसंचितम् ॥
चातुर्मास्ये गते पात्रे विमुखे यन्न दीयते ॥ २४ ॥
प्रणश्यति क्षणादेव वचना द्यस्तु प्रच्युतः ॥
दिवसेदिवसे तस्य वर्द्धते च प्रतिश्रुतम् ॥ २५ ॥
तस्मान्नैव प्रतिश्राव्यं स्वल्पमप्याशु दीयते ॥
तावद्द्विवर्द्धते दानं यावत्तन्न प्रयच्छति ॥ २६ ॥

यो मोहान्मनुजो लोके यावत्कोटिगुणं भवेत् ॥
ततो दशगुणा वृद्धिश्चातुर्मास्ये प्रदातरि ॥ २७ ॥
नरके पतनं तस्य याव दिंद्राश्चतुर्दश ॥
अतस्तु सर्वदा देयं नरैर्यत्तु प्रतिश्रुतम् ॥ २८ ॥
अन्यस्मै न प्रदातव्यं प्रदत्तं नैव हारयेत् ।
चातुर्मास्येषु यः शय्यां द्विजाग्र्याय प्रयच्छति ॥ २९ ॥
वेदोक्तेन विधानेन न स याति यमालयम् ॥
आसनं वारिपात्रं च भाजनं ताम्रभाजनम् ॥ ६.२३५.३० ॥
चातुर्मास्ये प्रयत्नेन देयं वित्तानुसारतः ॥
सर्वदानानि विप्रेभ्यो ददत्सुप्ते जगद्गुरौ ॥ ३१ ॥
आत्मानं पूर्वजैः सार्द्धं स मोचयति पातकात् ॥
गौर्भूश्च तिलपात्रं च दीपदानमनुत्तमम् ॥ ३२ ॥
ददद्विजातये मुक्तो जायते स ऋणत्रयात् ॥ ३३ ॥
स विश्वकर्ता भुवनेषु गोप्ता स यज्ञभुक्सर्वफलप्रदश्च ॥
दानानि वस्तुष्वधिदैवतं च यस्मिन्समुद्दिश्य ददाति मुक्तः ॥ ३४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये शेषशाय्युपाख्याने चातुर्मास्यमाहात्म्ये ब्रह्मनारदसंवादे चातुर्मास्यदानमहिमवर्णनंनाम पञ्चत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ ॥ २३५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३६



॥ ब्रह्मोवाच ॥ ॥

इष्टवस्तुप्रदो विष्णुर्लोकश्चेष्टरुचिः सदा ॥

तस्मात्सर्वप्रयत्नेन चातुमास्ये त्यजेच्च तत् ॥ १ ॥

नारायणस्य प्रीत्यर्थं तदेवाक्षय्यमाप्यते ॥

मर्त्यस्त्यजति श्रद्धावान्सोऽनंतफलभाग्भवेत् ॥ २ ॥

कांस्यभाजनसंत्यागाज्जायते भूपतिर्भुवि ॥

पालाशपत्रे भुञ्जानो ब्रह्मभूयस्त्वमश्नुते ॥ ३ ॥

ताम्रपात्रे न भुञ्जीत कदाचिद्वा गृही नरः ॥

चातुर्मास्ये विशेषेण ताम्रपात्रं विवर्जयेत् ॥ ४ ॥

अर्कपत्रेषु भुञ्जानोऽनुपमं लभते फलम् ॥

वटपत्रेषु भोक्तव्यं चातुर्मास्ये विशेषतः ॥ ५ ॥

अश्वत्थपत्रसंभोगः कार्यो बुधजनैः सदा ॥

एकान्नभोजी राजा स्यात्सकलं भूमिमण्डले ॥ ६ ॥

तथा च लवणत्यागात्सुभगो जायते नरः ॥

गोधूमान्नपरित्यागाज्जायते जनवलभः ॥ ७ ॥

अशाकभोजी दीर्घायुश्चातुर्मास्येऽभिजायते ॥

रसत्यागान्महाप्राणी मधुत्यागात्सुलोचनः ॥ ८ ॥

मुद्गत्यागाद्रिपुमृती राजमाषाद्धनाढ्यता ॥

अश्वाप्तिस्तंडुलत्यागाच्चातुर्मास्येऽभिजायते ॥ ९ ॥

फलत्यागाद्बहुसुतस्तैलत्यागात्सुरूपिता ॥

ज्ञानी तुवरिसंत्यागाद्बलं वीर्यं सदैव हि ॥ ६.२३६.१० ॥

मार्गमांसपरित्यागान्नरकं न च पश्यति ॥

शौकरस्य पीरत्यागाद्ब्रह्मवासमवाप्नुयात् ॥ ११ ॥

ज्ञानं लावकसन्त्यागादाज्यत्यागे महत्सुखम् ॥

आसवं सम्परित्यज्य मुक्तिस्तस्य न दुर्लभा ॥ १२ ॥

सबलः कनकत्यागाद्रूप्यत्यागेन मानुषः ॥ ६९॥

दधिदुग्धपरित्यागी गोलोके सुख भाग्भवेत् ॥ १३

ब्रह्मा पायससंत्यागात्क्षिप्रात्यागान्महेश्वरः ॥

कन्दर्पोऽपूपसंत्यागान्मोदकत्याजकः सुखी ॥ १४ ॥

गृहाश्रमपरित्यागी बाह्या श्रमनिषेवकः ॥

चातुर्मास्यं हरिप्रीत्यै न मातुर्जठरे शिशुः ॥ १५ ॥

नृपो मरीचसंत्यागाच्छुण्ठीत्यागेन सत्कविः ॥

शर्करायाः परित्यागाज्जायते राजपूजितः ॥ १६ ॥

गुडत्यागान्महाभूतिस्तथा दाडिमवर्जनात् ॥

रक्तवस्त्रपरित्यागाज्जायते जनवल्लभः ॥ १७ ॥

पट्टकूलपरित्यागादक्षय्यं स्वर्ग माप्नुयात् ॥

माषान्नचणकान्नस्य त्यागान्नैव पुनर्भवः ॥ १८ ॥

कृष्णवस्त्रं सदा त्याज्यं चातुर्मास्ये विशेषतः ॥

सूर्यसंदर्शनाच्छुद्धिर्नीलवस्त्रस्य दर्शनात् ॥ १९ ॥

चंदनस्य पीरत्यागाद्गांधर्वं लोकमश्नुते ॥

कर्पूरस्य परित्यागाद्यावज्जीवं महाधनी ॥ ६.२३६.२० ॥

कुसुम्भस्य परित्यागान्नैव पश्येद्यमाल यम् ॥

केशरस्य परित्यागान्मनुष्यो राजवल्लभः ॥ २१ ॥

यक्षकर्दमसंत्यागाद्ब्रह्मलोके महीयते ॥

ज्ञानी पुष्पपरित्यागाच्छय्यात्यागे महत्सु खम्॥ २२ ॥

भार्यावियोगं नाप्नोति चातुर्मास्ये न संशयः ॥

अलीकवादसंत्यागान्मोक्षद्वारमपावृतम् ॥ २३ ॥

परमर्मप्रकाशश्च सद्यःपापसमा गमः ॥

चातुर्मास्ये हरौ सुप्ते परनिन्दां विवर्जयेत् ॥ २४ ॥

परनिन्दा महापापं परनिन्दा महाभयम् ॥

परनिन्दा महद्दुःखं न तस्यां पातकं परम् ॥ २५ ॥

केवलं निन्दने चैव तत्पापं लभते गुरु ॥

यथा शृण्वान एव स्यात्पातकी न ततः परः ॥ २६ ॥

केशसंस्कारसंत्यागात्तापत्रयविवर्जितः ॥

नखरोमधरो यस्तु हरौ सुप्ते विशेषतः ॥ २७ ॥

दिवसेदिवसे तस्य गंगास्नानफलं भवेत् ॥ २५ ॥

सर्वोपायैर्विष्णुरेव प्रसाद्यो योगिध्येयः प्रवरैः सर्ववर्णैः ॥

विष्णोर्नाम्ना मुच्यते घोरबन्धाच्चातुर्मास्ये स्मर्यतेऽसौ विशेषात् ॥ २९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिता यां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने चातुर्मास्यमाहात्म्ये ब्रह्मनारदसंवाद इष्टवस्तुपरित्यागमहिमवर्णनंनाम षट्त्रिंशदुत्तरद्वि शततमोऽध्यायः ॥ २३६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३७

https://sa.wikisource.org/s/fqo
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ नारद उवाच ॥ ॥

कदा विधिनिषेधौ च कर्तव्यौ विष्णुसन्निधौ ॥

युष्मद्वाक्यामृतं पीत्वा तृप्तिर्मम न विद्यते ॥ १ ॥

॥ ब्रह्मोवाच ॥ ॥

कर्कसंक्रांतिदिवसे विष्णुं संपूज्य भक्तितः ॥

फलैरर्घ्यः प्रदातव्यः शस्तजंबूफलैः शुभैः ॥ २ ॥

जंबूद्वीपस्य संज्ञेयं फलेन च विजायते ॥

मन्त्रेणानेन विप्रेंद्र श्रद्धाधर्मसुसंयतैः ॥ ३ ॥

षण्मासाभ्यंतरे मृत्युर्यत्र क्वापि भवेन्मम ॥

तन्मया वासुदेवाय स्वयमात्मा निवेदितः ॥ ४ ॥

॥ इति मंत्रेणार्घ्यम् ॥ ॥

ततो विधिनिषेधौ च ग्राह्यौ भक्त्या हरेः पुरः ॥

चातुर्मास्ये समायाते सर्वलोकमहासुखे ॥ ५ ॥

विधिर्वेदविधिः कार्यो निषेधो नियमो मतः ॥

विधिश्चैव निषेधश्च द्वावेतौ विष्णुरेव हि ॥ ६ ॥

तस्मात्सर्वप्रयत्नेन सेव्य एव जनार्दनः ॥

विष्णोः कथा विष्णुपूजा ध्यानं विष्णोर्नतिस्तथा । ७ ॥

सर्वमेव हरिप्रीत्या यः करोति स मुक्तिभाक् ॥

वर्णाश्रमविधेर्मूर्तिः सत्यो विष्णुः सनातनः ॥ ८ ॥

चातुर्मास्ये विशेषेण जन्मकष्टादिनाशनम् ॥

हरिरेव व्रताद्ग्राह्यो व्रतं देहेन कारयेत् ॥

देहोऽयं तपसा शोध्यः सुप्ते देवे तपोनिधौ ॥ २९ ॥

॥ नारद उवाच ॥ ॥

किं व्रतं किं तपः प्रोक्तं ब्रह्मन्ब्रूहि सविस्तरम् ॥

सुप्ते देवे मया कार्यं कृतं यच्च महाफलम् ॥ ६.२३७.१० ॥

॥ ब्रह्मोवाच ॥ ॥

व्रतं विष्णुव्रतं विद्धि विष्णुभक्तिसमन्वितम् ॥

तपश्च धर्मवर्तित्वं कृच्छ्रादिकमथापि वा ॥ ११ ॥

शृणु व्रतस्य माहात्म्यं वक्ष्यामि प्रथमं तव ॥

ब्रह्मचर्यव्रतं सारं व्रतानामुत्तमं व्रतम् ॥ १२ ॥

ब्रह्मचर्यं तपः सारं ब्रह्मचर्यं महत्फलम् ॥

क्रियासु सकलास्वेव ब्रह्मचर्यं विवर्द्धयेत् ॥ १३ ॥

ब्रह्मचर्यप्रभावेण तप उग्रं प्रवर्त्तते ॥

ब्रह्मचर्यात्परं नास्ति धर्मसाधन मुत्तमम्॥ १४ ॥

चातुर्मास्ये विशेषेण सुप्ते देवे गुणोत्तरम् ॥

महाव्रतमिदं लोके तन्निबोध सदा द्विज ॥ १५ ॥

नारायणमिदं कर्म यः करोति न लिप्यते ॥

शतत्रयं षष्टियुतं दिनमाहुश्च वत्सरे ॥ १६ ॥

तत्र नारायणो देवः पूज्यते व्रतकारिभिः ॥

सत्क्रियाममुकीं देव कारयिष्यामि निश्चयः ॥ १७ ॥

कुरुते तद्व्रतं प्राहुः सुप्ते देवे गुणोत्तरम् ॥

वह्निहोमो विप्रभक्तिः श्रद्धा धर्मे मतिः शुभा ॥ १८ ॥

सत्संगो विष्णुपूजा च सत्यवादो दया हृदि॥

आर्जवं मधुरा वाणी सच्चरित्रे सदा रतिः ॥ १९ ॥

वेदपाठस्तथाऽस्तेयमहिंसा ह्रीः क्षमा दमः ॥

निर्लोभताऽक्रोधता च निर्मोहोऽममताऽर तिः ॥ २० ॥

श्रुतिक्रियापरं ज्ञानं कृष्णार्पितमनोगतिः ॥

एतानि यस्य तिष्ठंति व्रतानि ब्रह्मवित्तम ॥ २१ ॥

जीवन्मुक्तो नरः प्रोक्तो नैव लिप्य ति पातकैः ॥

व्रतं कृतं सकृदपि सदैव हि महाफलम् ॥ २२ ॥

चातुर्मास्ये विशेषेण ब्रह्मचर्यादिसेवनम् ॥

अव्रतेन गतं येषां चातुर्मास्यं सदा नृणाम् ॥ २३ ॥

धर्मस्तेषां वृथा सद्भिस्तत्त्वज्ञैः परिकीर्तितः ॥

सर्वेषामेव वर्णानां व्रतचर्या महाफलम् ॥ २४ ॥

स्वल्पापि विहिता वत्स चातुर्मा स्ये सुखप्रदा ॥

सर्वत्र दृश्यते विष्णुर्व्रतसेवापरैर्नृभिः ॥ २५ ॥

चातुर्मास्ये समायाते पालयेत्तत्प्रयत्नतः ॥ २६ ॥

भजस्व विष्णुं द्विजवह्नितीर्थवेदप्रभेदमयमूर्तिमजं विराजम् ॥

यत्प्रसादाद्भवति मोक्षमहातरुस्थस्तापं न यास्यति भवार्कसमुद्भवं तम् ॥ २७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये व्रतमहिमवर्णनंनाम सप्तत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३८



॥ ब्रह्मोवाच ॥ ॥

तपः शृणुष्व विप्रेंद्र विस्तरेण महामते ॥

यस्य श्रवणमात्रेण चातुर्मास्येऽ, घनाशनम् ॥ १ ॥

षोडशैरुपचारैश्च विष्णोः पूजा सदा तपः ॥

ततः सुप्ते जगन्नाथे महत्तप उदाहृतम् ॥ २ ॥

करणं पंचयज्ञानां सततं तप एव हि ॥

तन्निवेद्य हरौ चैव चातुर्मास्ये महत्तपः ॥ ३ ॥

ऋतुयानं गृहस्थस्य तप एव सदैव हि ॥

चातुर्मास्ये हरिप्रीत्यै तन्निषेव्यं महत्तपः ॥ ४ ॥

सत्यवादस्तपो नित्यं प्राणिनां भुवि दुर्लभम् ॥

सुप्ते देवपतौ कुर्वन्ननंतफलभाग्भवेत् ॥ ५ ॥

अहिंसादिगुणानां च पालनं सततं तपः ॥

चातुर्मास्ये त्यक्तवैरं महत्तप उदारधीः ॥ ६ ॥

तप एव महन्मर्त्यः पंचायतनपूजनम् ॥

चातुर्मास्ये विशेषेण हरिप्रीत्या समाचरेत् ॥ ७ ॥ ॥

॥ नारद उवाच ॥ ॥

पंचायतनसंज्ञेयं कस्योक्ता सा कथं भवेत् ॥

कथं पूजा च कर्तव्या विस्तरेणाशु तद्वद ॥ ८ ॥

॥ ब्रह्मोवाच ॥ ॥

प्रातर्मध्याह्नपूजायां मध्ये पूज्यो रविः सदा ॥

रात्रौ मध्ये भवेच्चंद्रस्तद्वर्णकुसुमैः शुभैः ॥ ९ ॥

वह्निकोणे तु हेरंबं सर्वविघ्नोपशांतये ॥

रक्तचंदन पुष्पैश्च चातुर्मास्ये विशेषतः ॥ ६.२३८.१० ॥

नैर्ऋतं दलमास्थाय भगवान्दुष्टदर्पहा ॥

गृहस्थस्य सदा शत्रुविनाशं विदधाति सः ॥ ११ ॥

नैर्ऋत्यकोणगं विष्णुं पूजयेत्सर्वदा बुधः ॥

सुगन्धचंदनैः पुष्पैर्नैवेद्यैश्चातिशोभनैः ॥ १२ ॥

गोत्रजा वायुकोणे तु पूजनीया सदा बुधैः ॥

पुत्रपौत्रप्रवृद्ध्यर्थं सुमनोभिर्मनोहरैः ॥ १३ ॥

ऐशाने भगवान्रुद्रः श्वेतपुष्पैः सदाऽर्चितः ॥

अपमृत्युविनाशाय सर्वदोषापनुत्तये ॥ १४ ॥

जागर्ति महिमा यस्य ब्रह्माद्यैर्नैव लिख्यते ॥

पंचायतनमेतद्धि पूज्यते गृहमेधिभिः ॥ १५ ॥

तप एतत्सदा कार्यं चातुर्मास्ये महाफलम् ॥

पर्वकालेषु सर्वेषु दानं देयं तपः सदा ॥

चातुर्मास्ये विशेषेण तदनंतं प्रजायते ॥ १६ ॥

शौचं तु द्विविधं ग्राह्यं बाह्यमाभ्यंतरं सदा ॥

जलशौचं तथा बाह्यं श्रद्धया चांतरं भवेत् ॥ ॥ १७ ॥

इद्रियाणां ग्रहः कार्यस्तपसो लक्षणं परम् ॥

निवृत्त्यैंद्रियलौल्यं च चातुर्मास्ये महत्तपः ॥ १८ ॥

इन्द्रियाश्वान्सन्नियम्य सततं सुखमेधते ॥

नरके पात्यते प्राणैस्तैरेवोत्पथगामिभिः ॥ १९ ॥

ममतारूपिणीं ग्राहीं दुष्टां निर्भर्त्स्य निग्रहेत् ॥

तप एव सदा पुंसां चातुर्मास्येऽधिगौरवम् ॥ ६.२३८.२० ॥

काम एष महाशत्रुस्तमेकं निर्जयेद्दृढम् ॥

जितकामा महात्मानस्तैर्जितं निखिलं जगत् ॥ २१ ॥

एतच्च तपसो मूलं तपसो मूलमेव तत् ॥

सर्वदा कामविजयः संकल्पविजयस्तथा ॥ २२ ॥

तदेव हि परं ज्ञानं कामो येन प्रजायते ॥

महत्तपस्तदेवाहुश्चातुमास्ये फलोत्तमम् ॥२३॥

लोभः सदा परित्याज्यः पापं लोभे समास्थितम् ॥

तपस्तस्यैव विजयश्चातुर्मास्ये विशेषतः ॥ २४ ॥

मोहः सदाऽविवेकश्च वर्जनीयः प्रयत्नतः ॥

तेन त्यक्तो नरो ज्ञानी न ज्ञानी मोहसंश्रयात ॥२५॥
मद एव मनुष्याणां शरीरस्थो महारिपुः ॥
सदा स एव निग्राह्यः सुप्ते देवे विशेषतः ॥२६॥
मानः सर्वेषु भूतेषु वसत्येव भयावहः ॥
क्षमया तं विनिर्जित्य चातुर्मास्ये गुणाधिकः॥२७॥
मात्सर्यं निर्जयेत्प्राज्ञो महापातककारणम् ॥
चातुर्मास्ये जितं तेन त्रैलोक्यममरैः सह ॥२८॥
अहंकारसमाक्रांता मुनयो विजितेंद्रियाः ॥
धर्ममार्गं परित्यज्य कुर्वत्युन्मार्गजां क्रियाम् ॥२९॥
अहंकारं परित्यज्य सततं सुखमाप्नुयात् ॥
चातुर्मास्ये विशेषेण तस्य त्यागे महाफलम् ॥६.२३८.३॥।
एतद्धि तपसो मूलं यदेतन्मनसस्त्यजेत् ॥
त्यक्तेष्वेतेषु सर्वेषु पर ब्रह्ममयो भवेत् ॥ ३१ ॥
प्रथमं कायशुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥
शयने देवदेवस्य विशेषेण महत्तपः ॥ ३२ ॥
हरेस्तु शयने नित्यमेकांतरमु पोषणम् ॥
यः करोति नरो भक्त्या न स गच्छेद्यमालयम् ॥ ३३ ॥
हरिस्वापे नरो नित्यमेकभक्तं समाचरेत् ॥
दिवसेदिवसे तस्य द्वादशाहफलं लभेत् ॥ ३४ ॥
चातुर्मास्ये नरो यस्तु शाकाहारपरो यदि ॥
पुण्यं क्रतुसहस्राणां जायते नात्र संशयः ॥ ३५ ॥
चातुर्मास्ये नरो नित्यं चांद्राय णव्रतं चरेत् ॥
एकैकमासे तत्पुण्यं वर्णितुं नैव शक्यते ॥ ३६ ॥
सुप्ते देवे च पाराकं यः करोति विशुद्धधीः ॥
नारी वा श्रद्धया युक्ता शतजन्माघ नाशनम् ॥ ३७ ॥
कृच्छ्रसेवी भवेद्यस्तु सुप्ते देवे जनार्दने ॥
पापराशिं विनिर्धूय वैकुण्ठे गणतां व्रजेत् ॥ ३८ ॥
तप्तकृच्छ्रपरो यस्तु सुप्ते देवे जनार्दने ॥

कीर्तिं संप्राप्य वा पुत्रं विष्णुसायुज्यतां व्रजेत् ॥ ३९ ॥

दुग्धाहारपरो यस्तु चातुर्मास्येऽभिजायते ॥

तस्य पापसहस्राणि विलयं यांति देहिनः ॥ ६.२३८.४० ॥

मितान्नाशनकृद्धीरश्चातुर्मास्ये नरो यदि ॥

निर्धूय सकलं पापं वैकुण्ठपदमाप्नुयात् ॥ ४१ ॥

एकान्नाशनकृन्मर्त्यो न रोगैरभि भूयते ॥

अक्षारलवणाशी च चातुर्मास्ये न पापभाक् ॥ ४२ ॥

कृताहारो महापापैर्निर्मुक्तो जायते ध्रुवम् ॥

हरिमुद्दिश्य मासेषु चतुर्षु च न संशयः ॥ ४३ ॥

कन्दमूलाशनकरः पूर्वजान्सह चात्मना ॥

उद्धृत्य नरकाद्धोराद्याति विष्णुसलोकताम् ॥ ४४ ॥

नित्यांबुप्राशनकरश्चातुर्मास्ये यदा भवेत् ॥

दिनेदिनेऽश्वमेधस्य फलमाप्नोत्यसंशयम् ॥ ४५ ॥

शीतवृष्टिसहो यस्तु चातुर्मास्ये नरो भवेत् ॥

हरिप्रीत्यै जगन्नाथस्तस्यात्मानं प्रयच्छति ॥ ४६ ॥

महापाराकसंज्ञं तु महत्तप उदाहृतम् ॥

मासैकमुपवासेन सर्वं पूर्णं प्रजायते ॥ ४७ ॥

देवस्वापदिनादौ तु यावत्पवित्रद्वादशी ॥

पवित्रद्वादशीपूर्वं यावच्छ्रवणद्वादशी ॥ ४८ ॥

महापाराकमेतद्धि द्वितीयं परिकीर्तितम् ॥

श्रवणद्वादशीपूर्वं प्राप्ता चाश्विनद्वादशी ॥४९॥

महापाराक तृतीयं प्राज्ञैश्च समुदाहृतम् ॥

आश्विनद्वादशी चादौ प्राप्ता देवसुबोधिनी ॥ ६.२३८.५० ॥

महापाराकमेतद्धि चतुर्थं परिकथ्यते ॥

एतेषामेकमपि च नारी वा पुरुषोऽपि वा ॥ ५१ ॥

यः करोति नरो भक्त्या स च विष्णुः सनातनः ॥

इदं च सर्वतपसां महत्तप उदाहृतम् ॥ ५२ ॥

दुष्करं दुर्लभं लोके चातुर्मास्ये मखाधिकम् ॥

दिवसेदिवसे तस्य यज्ञायुतफलं स्मृतम् ॥ ५३ ॥

महत्तप इदं येन कृतं जगति दुर्लभम् ॥

इदमेव महापुण्यमिदमेव महत्सुखम् ॥

इदमेव परं श्रेयो महापाराकसेवनम् ॥ ५४ ॥

नारायणो वसेद्देहे ज्ञानं तस्य प्रजायते ॥

जीवन्मुक्तः स भवति महापातककारकः ॥ ५५ ॥

तावद्गर्जंति पापानि नरकास्तावदेव हि ॥

तावन्मायासहस्राणि यावन्मासो पवासकः ॥ ५६ ॥

चातुर्मास्युपवासी यो यस्य प्रांगणिको भवेत् ॥

सोऽपि हत्यासहस्राणि त्यक्त्वा निष्कल्मषो भवेत् ॥ ५७ ॥

य इदं श्रावयेन्मर्त्यो यः पठेत्सततं स्वयम् ॥ ५८ ॥

सोऽपि वाचस्पतिसमः फलं प्राप्नोत्यसंशयम् ॥ ५९ ॥

इदं पुराणं परमं पवित्रं शृण्वन्गृणन्पापविशुद्धिहेतु ॥

नारायणं तं मनसा विचिन्त्य मृतोऽभिगच्छत्यमृतं सुराधिकम् ॥ ६.२३८.६० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये तपोमहिमावर्णनं नामाष्टत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २३९



॥ नारद उवाच ॥ [।

उपचारैः षोडशभिः पूजनं क्रियते कथम् ॥

ते के षोडश भावाः स्युर्नित्यं ये शयने हरेः ॥ १ ॥

एतद्विस्तरतो ब्रूहि पृच्छतो मे प्रजापते ॥

तव प्रसादमासाद्य जगत्पूज्यो भवाम्यहम् ॥ २ ॥

॥ ब्रह्मोवाच ॥ ॥

विष्णुभक्तिर्दृढा कार्या वेदशास्त्रविधानतः ॥

वेदमूलमिदं सर्वं वेदो विष्णुः सनातनः ॥ ३ ॥

ते वेदा ब्राह्मणाधारा ब्राह्मणाश्चाग्निदैवताः ॥

अग्नौ प्रास्ताहुतिर्विप्रो यज्ञे देवं यजन्सदा ॥ ४ ॥

जगत्संधारयेत्सर्वं विष्णुपूजारतः सदा ॥

नारायणः स्मृतो ध्यातः क्लेशदुःखादिनाशनः ॥ ५ ॥

चातुर्मास्ये विशेषेण जलरूपगतो हरिः ॥

जलादन्नानि जायंते जगतां तृप्तिहेतवे ॥ ६ ॥

विष्णुदेहांशसंभूतं तदन्नं ब्रह्म इष्यते ॥

तदन्नं विष्णवे दत्त्वा ह्यावाहनपुरःसरम् ॥ ७ ॥

पुनर्जन्मजराक्लेशसंस्कारैर्नाभिभूयते ॥

आकाशसंभवो वेद एक एव पुराऽभवत् ॥ ८ ॥

ततो यजुःसामसंज्ञामृग्वेदः प्राप भूतये ॥

ऋग्वेदोऽभिहितः पूर्वं यजुःसहस्रशीर्षेति च ॥ ९ ॥

षोडशर्चं महासूक्तं नारायणमयं परम् ॥

तस्यापि पाठमात्रेण ब्रह्महत्या निव र्तते॥6.239.१०॥।

विप्रः पूर्वं न्यसेद्देहे स्मृत्युक्तेन निजे बुधः॥

ततस्तु प्रतिमायां च शालग्रामे विशेषतः॥११॥

क्रमेण च ततः कुर्यात्पश्चादावाहनादिकम्॥

आवाह्य सकलं रूपं वैकुण्ठस्थानसंस्थितम्॥१२॥

कौस्तुभेन विराजंतं सूर्यकोटिसमप्रभम्।.

दंडहस्तं शिखासूत्रसहितं पीतवाससम् ॥१३॥

महासंन्यासिनं ध्यायेच्चातुर्मास्ये विशेषतः ॥

एवं रूपमयं विष्णुं सर्वपापौघहारिणम् ॥१४॥

आवाहयेच्च पुरतो ध्यानसंस्थं द्विजोत्तम॥

ऋचा प्रथमया चास्यौंकारादिसमुदीर्णया ॥१५॥

द्वितीयया चासनं च पार्षदैश्च समन्वितम्॥

सौवर्णान्यासनान्येषां मनसा परिचिन्तयेत् ॥१६॥

चिन्तनैर्भक्तियोगेन परिपूर्णं च तद्भवेत् ॥

पाद्यं तृतीयया कार्यं गंगां तत्र स्मरेद्बुधः ॥ १७ ॥

अर्घ्यः कार्यस्ततो विष्णोः सरिद्भिः सप्तसागरैः ॥

पुनराचमनं कार्यममृतेन जगत्पतेः ॥१८॥

त्रिभिराचमनैः शुद्धिर्ब्राह्मणस्य निगद्यते ॥

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥१९॥

हृत्कण्ठ तालुगाभिश्च यथावर्णं द्विजातयः ॥

शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरंततः ॥6.239.२०॥।

पञ्चम्याऽऽचमनं कार्यं भक्तियुक्तेन चेतसा ॥

भक्तिग्राह्यो हृषीकेशो भक्त्याऽऽत्मानं प्रयच्छति ॥ २१ ॥

ततः सुवासितैस्तोयैः सर्वौषधिसमन्वितैः ॥

शेषोदकैः स्वर्णघटैः स्नानं देवस्य कारयेत् ॥ २२ ॥

तीर्थोदकैः श्रद्धया च मनसा समुपाहृतैः ॥

अश्रद्धया रत्नराशिः प्रदत्तो निष्फलो भवेत् ॥ २३ ॥

वार्यपि श्रद्धया दत्तमनंतत्वाय कल्पते ॥

चातुर्मास्ये विशेषेण श्रद्धया पूयते नरः ॥ २४ ॥

षष्ठ्या स्नानं ततः कार्यं पुनराचमनं भवेत् ॥

दद्याच्च वाससी स्वर्णसहिते भक्तिशक्तितः ॥ २५ ॥

आच्छादितं जगत्सर्वं वस्त्रेणाच्छादितो हरिः ॥

चातुर्मास्ये विशेषेण वस्त्रदानं महाफलम् ॥ २६ ॥

पुनराचमनं देयं यतये विष्णुरूपिणे ॥

वस्त्रदानं च सप्तम्या कार्यं विष्णोर्मुनीश्वर ॥ २७ ॥

यज्ञोपवीतमष्टम्या तच्चाध्यात्मतया शृणु ॥

सूर्यकोटिसमस्पर्शं तेजसा भास्वरं तथा ॥ २८ ॥

क्रोधाभिभूते विप्रे तु तडित्कोटिसभप्रभम्॥

सूर्येन्दुवह्निसंयोगाद्गुणत्रयसमन्वितम् ।। २९ ॥

त्रयीमयं ब्रह्मविष्णुरुद्ररूपं त्रिविष्टपम् ॥

यस्य प्रभावाद्विप्रेंद्र मानवो द्विज उच्यते ॥ 6.239.३० ॥

जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते ॥

शापानुग्रहसामर्थ्यं तथा क्रोधः प्रसन्नता ॥ ३१ ॥

त्रैलोक्यप्रवरत्वं च ब्राह्मणादेव जायते ॥

न ब्राह्मणसमो बन्धुर्न ब्राह्मणसमा गतिः ॥ ३२ ॥

न ब्राह्मणसमः कश्चित्त्रैलोक्ये सचराचरे ॥

दत्तोपवीते ब्रह्मण्ये सुप्ते देवे जनार्दने ॥ ॥ ३३ ॥

सर्वजगद्ब्रह्ममयं संजातं नात्र संशयः ॥

नवम्या च सुलेपश्च कर्तव्यो यज्ञमूर्तये ॥ ३४ ॥

सुयक्षकर्दमैर्लिप्तो विष्णुर्येन जगद्गुरुः ॥

तेना प्यायितमेतद्धि वासितं यशसा जगत् ॥ ३५ ॥

तेजसा भास्करो लोके देवत्वं प्राप्य मानवः ॥

ब्रह्मलोकादिके लोके मोदते चंदनप्रदः ॥ ३६ ॥

चंदनालेपसुभगं विष्णुं पश्यंति मानवाः ॥

न ते यमपुरं यांति चातुर्मास्ये विशेषतः ॥ ३७ ॥

दशम्या पुष्पपूजा च भक्तिपूजा तथैव च ॥

पुष्पे चैव सदा लक्ष्मीर्वसत्येव निरंतरम् ॥ ३८ ॥

लक्ष्म्याः सर्वत्र गामिन्या दोषो नैव प्रजायते ॥

यथा सर्वमयो विष्णुर्न दोषैरनुभूयते ॥ ३९ ॥

तथा सर्वमयी लक्ष्मीः सतीत्वान्नैव हीयते ॥

प्रतिमासु च सर्वासु सर्वभूतेषु नित्यदा ॥ 6.239.४० ॥

मनुष्यदेवपितृषु पुष्पपूजा विधीयते ॥

पुष्पैः संपूजितो येन हरिरेकः श्रिया सह ॥ ४१ ॥

आब्रह्मस्तंबपर्यंतं पूजितं तेन वै जगत् ॥

अतः सुश्वेतकुसुमैर्विष्णुं संपूजयेत्सदा ॥४२ ॥

चातुर्मास्ये विशेषेण भक्तियुक्तः सदा शुचिः ॥

भक्त्या सुविहिता ब्रह्मन्पुष्पपूजा नरैर्यदि ॥ ४३ ॥

यंयं काममभिध्यायेत्तस्य सिद्धिर्निरंतरा ॥

पुष्पैरुपचितं विष्णुं यद्यन्ये प्रणमंति च ॥ ४४ ॥

तेषामप्यक्षया लोकाश्चातुर्मास्येऽधिकं फलम् ॥

एकादश्या धूपदानं कर्तव्यं यतये हरौ ॥ ४५ ॥

वनस्पति रसो दिव्यो गंधाढ्यो गन्ध उत्तमः॥

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ४६ ॥

इमं मंत्रं समुच्चार्य धूपमागुरुजं शुभम् ॥

दद्याद्भगवते नित्यं चातुर्मास्ये महाफलम् ॥ ४७ ॥

कर्पूरचन्दनदलैः सितामधुसमन्वितम् ॥

मांसीजटाभिः सहितं सुप्ते देवेऽथ सत्तम ॥ ४८ ॥

देवा घ्राणेन तुष्यंति धूपं घ्राणहरं शुभम्॥

द्वादश्या दीपदानं तु कर्तव्यं मुक्तिमिच्छुभिः ॥ ४९ ॥

दीपः सर्वेषु कार्येषु प्रथमस्तेजसां पतिः ॥

दीपस्तमौघनाशाय दीपः कांतिं प्रयच्छति ॥ 6.239.५० ॥

तस्माद्दीपप्रदानेन प्रीयतां मे जनार्दनः ॥

अयं पौराणजो मंत्रो वेदर्चेन समन्वितः ॥

दीपप्रदाने सकलः प्रयुक्तो नाशयेदघम् ॥ ५१ ॥

चातुर्मास्ये दीपदानं कुरुते यो हरेः पुरः ॥

तस्य पापमयो राशिर्निमेषादपि दह्यते ॥ ५२ ॥

तावत्पापानि गर्जंति तावद्बिभेति पातकी ॥

यावन्न विहितो भास्वान्दीपो नारायणालये ॥ ५३ ॥

दर्शनादपि दीपस्य सर्वसिद्धिर्नृणां भवेत् ॥ ५४ ॥
कामनां यां समुद्दिश्य दीपं कारयते हरौ ॥
सासा सिद्ध्यति निर्विघ्ना सुप्तेऽनंते गुणोत्तरम् ॥ ५५ ॥
पंचायतनसंस्थेषु तथा देवेषु पंचसु ॥
विहितं दीपदानं च चातुर्मास्ये महाफलम् ॥ ५६ ॥
एको विष्णुस्तुष्यते मुक्तिदाता नित्यं ध्यातः पूजितः संस्तुतश्च ॥
यच्चाभीष्टं यच्च गेहे शुभं वा तत्तद्देयं मुक्तिहेतोर्नृवर्यैः ॥ ५७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये तपोऽधिकारषोडशोपचारदीपमहिमवर्णनंनामैकोनचत्वारिंशदुत्तर द्विशततमोऽध्यायः ॥ २३९ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४०



॥ ब्रह्मोवाच ॥ ॥

हरेर्दीपस्तु मद्दीपादधिकोऽयं प्रकुर्वतः ॥

वैकुण्ठवास एव स्यान्ममैश्वर्यमवांछितम् ॥ १ ॥

॥ नारद उवाच ॥ ॥

दीपोऽयं विष्णुभवने मन्त्रवद्विहितो नरैः ॥

सदा विशेषफलदश्चातुर्मास्येऽधिकः कथम् ॥ २ ॥ ॥

॥ ब्रह्मोवाच ॥ ॥

विष्णुर्नित्याधिदैवं मे विष्णुः पूज्यः सदा मम ॥

विष्णुमेनं सदा ध्याये विष्णुर्मत्तः परो हि सः ॥ ३ ॥

स विष्णु वल्लभो दीपः सर्वदा पापहारकः ॥

चातुर्मास्ये विशेषेण कामनासिद्धिकारकः ॥ ४ ॥

विष्णुर्दीपेन संतुष्टो यथा भवति पुत्रक ॥

तथा यज्ञसहस्रैश्च वरं नैव प्रयच्छति ॥ ५ ॥

स्वल्प व्ययेन दीपस्य फलमानंतकं नृणाम् ॥

अनंतशयने प्राप्ते पुण्यसंख्या न विद्यते ॥ ६ ॥

तस्मात्सर्वात्मभावेन श्रद्धया संयुतेन च ॥

दीपप्रदानं कुरुते हरेः पापैर्न लिप्यते ॥ ७ ॥

उपचारैः षोडशकैर्यतिरूपे हरौ पुनः ॥

दीपप्रदाने विहिते सर्वमुद्द्योतितं जगत् ॥ ८ ॥

दीपादनंतरं ब्रह्मन्नन्नस्य च निवेदनम् ॥

त्रयोदश्या भक्तियुक्तैः कार्यं मोक्षपदस्थितैः ॥ ९ ॥

अमृतं संपरित्यज्य यदन्नं देवता अपि ॥

स्पृहयंति गृहस्थस्य गृहद्वारगताः सदा ॥ 6.240.१० ॥

हरौ सुप्ते विशेषेण प्रदेयः प्रत्यहं नरैः ॥

फलैरर्घ्यो विष्णुतुष्ट्यै तत्कालसमुदा हृतैः ॥ ११ ॥

तांबूलवल्लीपत्रैश्च तथा पूगफलैः शुभैः ॥

द्राक्षाजंब्वाम्रजफलैरक्रोडैर्दाडिमैरपि ॥ १२ ॥

बीजपूरफलैश्चैव दद्यादर्घ्यं सुभक्तितः ॥

शंखतोयं समादाय तस्योपरि फलं शुभम्॥ १३ ॥

मंत्रेणानेन विप्रेन्द्र केशवाय निवेदयेत् ॥

पुनराचमनं देयमन्नदानादनंतरम् ॥ १४ ॥

आर्तिक्यं च ततः कुर्यात्सर्वपापविनाशनम् ॥

चतुर्दश्या नमस्कुर्याद्विष्णवे यतिरूपिणे ॥ १५ ॥

पंचदश्या भ्रमः कार्यः सर्वदिक्षु द्विजैः सह ॥

सप्तसागरजै स्तोयैर्दत्तैर्यत्फलमाप्यते ॥ १६ ॥

तत्तोयदानाच्च हरेः प्राप्यते विष्णुवल्लभैः ॥

चतुर्वारभ्रमीभिश्च जगत्सर्वं चराचरम् ॥ १७ ॥

क्रांतं भवति विप्राग्र्य तत्तीर्थगमनादिकम् ॥

षोडश्या देवसायुज्यं चिन्तयेद्योगवित्तमः ॥ १८ ॥

आत्मनश्च हरेर्नित्यं न मूर्तिं भावयेत्तदा ॥

मूर्तामूर्तस्वरूप त्वाद्दृश्यो भवति योगवित् ॥ १९ ॥

तस्मिन्दृष्टे निवर्तेत सदसद्रूपजा क्रिया ॥

आत्मानं तेजसां मध्ये चिन्तयेत्सूर्यवर्चसम् ॥ 6.240.२० ॥

अहमेव सदा विष्णुरित्यात्मनि विचारयन् ॥

लभते वैष्णवं देहं जीवन्मुक्तो द्विजो भवेत् ॥ २१ ॥

चातुर्मास्ये विशेषेण योगयुक्तो द्विजो भवेत् ॥

इयं भक्तिः समादिष्टा मोक्षमार्गप्रदे हरौ ॥ २२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये दीपदानादिसायुज्यचिन्तनान्तभक्तिनिरूपणं नाम चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥२४०॥। ॥छ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४१



॥ ईश्वर उवाच ॥ ॥

एतत्ते पूजनं विष्णोः षोडशोपायसंभवम् ॥

कथितं यद्द्विजः कृत्वा प्राप्नोति परमं पदम् ॥ १ ॥

तथा च क्षत्रियविशां करणान्मुक्तिरुत्तमा ॥

शूद्राणां नाधिकारोऽस्मिन्स्त्रीणां नैव कदाचन ॥ २ ॥

॥ कार्तिकेय उवाच ॥ ॥

शूद्राणां च तथा स्त्रीणां धर्मं विस्तरतो वद ॥

केन मुक्तिर्भवेत्तेषां कृष्णस्याराधनं विना ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

सच्छूद्रैरपि नो कार्या वेदाक्षरविचारणा ॥

न श्रोतव्या न पठ्या च पठन्नरकभाग्भवेत् ॥ ४ ॥

पुराणानां नैव पाठः श्रवणं कारयेत्सदा ॥

स्मृत्युक्तं सुगुरोर्ग्राह्यं न पाठः श्रवणादिकम् ॥ ५ ॥

॥ स्कंद उवाच ॥ ॥

सच्छूद्राः के समाख्यातास्तांश्च विस्तरतो वद ॥

के संतः के च शूद्राश्च सच्छूद्रा नामतश्च के ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

धर्मोढा यस्य पत्नी स्यात्स सच्छूद्र उदाहृतः ॥

समानकुलरूपा च दशदोषविवर्जिता ॥ ७ ॥

उद्वोढा वेदविधिना स सच्छूद्रः प्रकीर्तितः ॥

अक्लीवाऽव्यंगिनी शस्ता महारोगाद्यदूषिता ॥ ८ ॥

अनिंदिता शुभकला चक्षुरोगविवर्जिता ॥

बाधिर्यहीना चपला कन्या मधुरभाषिणी ॥ ९ ॥

दूषणैर्दशभिर्हीना वेदोक्तविधिना नरैः ॥

विवाहिता च सा पत्नी गृहिणी यस्य सर्वदा ॥ 6.241.१० ॥

सच्छूद्रः स तु विज्ञेयो देवादीनां विभागकृत् ॥
पुण्यकार्येषु सर्वेषु प्रथमं सा प्रकीर्तिता ॥ ११ ॥
तया सुविहितो धर्मः संपूर्णफलदायकः ॥
चातुर्मास्ये विशेषेण तया सह गुणाधिकः ॥ १२ ॥
भार्यारतिः शुचिर्भृत्यादीनां पोषणतत्परः ॥
श्राद्धादिकारको नित्यमिष्टापूर्तप्रसाधकः ॥ १३ ॥
नमस्कारान्तमन्त्रेण नामसंकीर्तनेन च ॥
देवा स्तस्य च तुष्यन्ति पंचयज्ञादिकैः शुभैः ॥ १४ ॥
स्नानं च तर्पणं चैव वह्निहोमोऽप्यमंत्रकः ॥
ब्रह्मयज्ञोऽतिथेः पूजा पंचयज्ञान्न संत्यजेत् ॥ १५ ॥
कार्यं स्त्रीभिश्च शूद्रैश्च ह्यमंत्रं पंचयज्ञकम् ॥
पंचयज्ञैश्च संतुष्टा यथैषां पितृदेवताः ॥ १६ ॥
तथा पतिव्रतायाश्च पतिशुश्रूषया सदा ॥
पतिव्रताया देहे तु सर्वे देवा वसंति हि ॥ १७ ॥
अतस्ताभ्यां समेताभ्यां धर्मादीनां समागमः ॥
यदोभयोर्मते पृष्टे संतुष्टाः पितृदेवताः ॥ १८ ॥
कार्यादीनां च सर्वेषां संगमस्तत्र नित्यदा ॥
चातुर्मास्ये समायाते विष्णुभक्त्या तयोः शिवम् ॥ १९ ॥
समानजातिसंभूता पत्नी यस्य धृता भवेत् ॥
पूर्वो भर्त्ताऽर्द्धभागी स्याद्द्वितीयस्य न किंचन ॥ 6.241.२० ॥
अर्थकार्याधिकारोऽस्यास्तेन धर्मार्धधारिणी ॥
स्वंस्वं कृतं सदैव स्यात्तयोः कर्म शुभाशुभम् ॥ ॥ २१ ॥
याऽनुगच्छति भर्तारं मृतं सुतपसा द्विज ॥
साध्वी सा हि परिज्ञेया तया चोद्ध्रियते कुलम् ॥ २२ ॥
अन्यजातेर्मृतस्याथ धृता वापि विवाहिता ॥
वैश्वानरस्य मार्गेण सा तमुद्धरते पतिम् ॥ २३ ॥
यथा जलाच्च जंबालः कृष्यते धार्मिकैर्नृभिः ॥
एवमुद्धरते साध्वी भर्त्तारं याऽनुग च्छति ॥ २४ ॥

अन्यजातिसमुद्भूता अन्येन विधृता यदि ॥
तावुभौ धर्मकार्येषु संत्याज्यौ नित्यदा मतौ ॥ २५ ॥
स्वंस्वं कर्म प्रकुरुतः सत्कर्म जं स्वकं फलम् ॥
तस्माद्वरिष्ठा हीना वा सत्कुल्या शूद्रसंभवैः ॥ २६ ॥
धृता न कार्या सा पत्नी यत्करोति न वर्द्धते ॥
तया सह कृतं पुण्यं वर्द्धते दशधोत्तरम् ॥ २७ ॥
अनन्ततृप्तिदं नैव तत्सुतैरपि वा तथा ॥
क्रयक्रीता च या कन्या दासी सा परिकीर्तिता ॥ २८ ॥
सच्छूद्रस्याधिकारे सा कदाचिन्नैव जायते ॥
या कन्या स्वयमुद्यम्य पित्रा दत्ता वराय च ॥ २९ ॥
विवाहविधिनोदूढा पितृदेवार्थसाधिनी ॥
सुलक्षणा विनीता सा विवेकादिगुणा शुभा ॥ 6.241.३० ॥
सच्चरित्रा पतिपरा सा तेभ्यो दातुमर्हति ॥
विशुद्धकुलजा कन्या धर्मोढा धर्मचारिणी ॥ ३१ ॥
सा पुनाति कुलं सर्वं मातृतः पितृतस्तथा ॥
एष एव मया प्रोक्तः सच्छूद्राणां परो विधिः ॥ ३२ ॥
अधोजातिसमुद्भूता सच्छूद्रात्क्रमहीनजा ॥
विवाहो दशधा तेषां दशधा पुत्रता भवेत् ॥ ३३ ॥
चत्वार उत्तमाः प्रोक्ता विवाहा मुनिसत्तम ॥
शेषाः सर्वप्रकृतिषु कथिताश्च पुराविदैः । ३४ ॥
प्राजापत्यस्तथा ब्राह्मो दैवार्षो चातिशोभना ॥
गांधर्वश्चासुरश्चैव राक्षसश्च पिशाचकः ॥३५॥
प्रातिभो घातनश्चेति विवाहाः कथिता दश ॥
एते हि हीनजातीनां विवाहाः परिकीर्तिताः ॥३६॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ॥
गूढोत्पन्नोऽपविद्धश्च कानीनश्च सहोढजः ॥३७॥
क्रीतः पौनर्भवश्चापि पुत्रा दशविधाः स्मृताः ॥
औरसादपि हीनाश्च तेऽपि तेषां शुभावहाः ॥ ३८ ॥

अष्टादशमिता नीचाः प्रकृतानां यथातथा ॥

विधिनैव क्रिया नैव स्मृति मार्गोऽपि नैव च ॥३९॥

तासां ब्राह्मणशुश्रूषा विष्णुध्यानं शिवार्चनम् ॥

अमन्त्रात्पुण्यकरणं दानं देयं च वै सदा ॥6.241.४॥।

न दानस्य क्षयो लोके श्रद्धया यत्प्रदीयते ॥

अश्रद्धयाऽशुचितया दानं वैरस्यकारणम् ॥ ४१ ॥

अहिंसादि समादिष्टो धर्मस्तासां महाफलः ॥

चातुर्मास्ये विशेषेण त्रिदिवेशादिसेवया ॥४२॥

सुदर्शनैस्तथा धर्मः सेव्यते ह्यविरोधिभिः [।

सच्छूद्रैर्दानपुण्यैश्च द्विजशुश्रूषणादिभिः॥४३॥

वृत्तिश्च सत्यानृतजा वाणिज्यव्यव हारजा ॥

अशीतिभागमारद्याद्व्याजाद्वार्धुषिकः शते ॥४४॥

सपादभागवृद्धिस्तु क्षत्त्रियादिषु गृह्यते ॥

एवं न बन्धो भवति पातकस्य कदाचन॥४५॥

प्रातःकर्म सुरेशानां मध्याह्ने द्विजसेवनम् ॥

अपराह्णेऽथ कार्याणि कुर्वन्मर्त्यः सुखी भवेत् ॥ ४६ ॥

गृहस्थैश्च सदा भाव्यं यावज्जीवं क्रियापरैः ॥

पंचयज्ञरतैश्चैवातिथिद्विजसुपूजकैः ॥ ४७ ॥

विष्णुभक्तिरतैश्चैव वेदमन्त्रविपाठकैः ॥

सततं दानशीलैश्च दीनार्तजनवत्सलैः ॥ ४८ ॥

क्षमादिगुणसंयुक्तैर्द्वादशाक्षरपूजकैः ॥

षडक्षरमहोद्गारपरमानन्दपूरितैः ॥ ४९ ॥

सदपत्यैः सदाचारैः सतां शुश्रूषणैरपि ॥

विमत्सरैः सदा स्थेयं तापक्लेशविवर्जितैः ॥ 6.241.५० ॥

प्रव्रज्यावर्जनैरेवं सच्छूद्रैर्धर्मतत्परैः ॥

तोषणं सर्वभूतानां कार्यं वित्तानुसारतः ॥ ५१ ॥

सदा विष्णुशिवादीनां ये भक्तास्ते नराः सदा ॥

देववद्दिवि दीव्यंति चातुर्मास्ये विशेषतः ॥ ५२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वर क्षेत्रमाहात्म्ये शेषशाय्युपाख्यान ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये तपोऽधिकारे सच्छूद्रकथनंनामैकचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ ॥ २४१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४२



॥ ऋषय ऊचुः ॥ ॥

नारद उवाच ॥ ॥

अष्टादश प्रकृतयः का वदस्व पितामह ॥

वृत्तिस्तासां च को धर्मः सर्वं विस्तरतो मम ॥ १ ॥ ॥

॥ ब्रह्मोवाच ॥ ॥

मज्जन्माभूद्भगवतो नाभिपंकजकोशतः ॥

स्वकालपरिमाणेन प्रबुद्धस्य जगत्पतेः ॥ २ ॥

ततो बहुतिथे काले केशवेन पुरा स्मृतः ॥

स्रष्टुकामेन विविधाः प्रजा मनसि राजसीः ॥ ३ ॥

अहं कमलजस्तत्र जातः पुत्रश्चतुर्मुखः ॥

उदरं नाभिनालेन प्रविश्याथ व्यलोकयम् ॥ ४ ॥

तत्र ब्रह्मांडकोटीनां दर्शनं मेऽभवत्पुनः ॥

विस्मयाच्चिंतयानस्य सृष्ट्यर्थमभिधावता ॥ ५ ॥

निर्गम्य पुनरेवाहं पद्मनालेन यावता ॥

बहिरागां विस्मृतं तत्सर्वं सृष्ट्यर्थकारणम् ॥ ६ ॥

पुनरेव ततो गत्वा प्रजाः सृष्ट्वा चतुर्विधाः ॥

नाभिनालेन निर्गत्य विस्मृतेनांतरात्मना ॥ ७ ॥

तदाहं जडवज्जातो वागुवाचाशरीरिणी ॥

तपस्तप महाबुद्धे जडत्वं नोचितं तव ॥ ८ ॥

दशवर्षसहस्राणि ततोऽहं तप आस्थितः॥

पुनराकाशजा वाणी मामुवाचाविनश्वरा ॥ ९ ॥

वेदरूपाश्रिता पूर्वमाविर्भूता तपोबलात् ॥

ततो भगवताऽऽदिष्टः सृज त्वं बहुधा प्रजाः ॥ ६.२४२.१० ॥

राजसं गुणमाश्रित्य भूतसर्गमकल्मषम् ॥

मनसा मानसी सृष्टिः प्रथमं चिंतिता मया ॥ ११ ॥

ततो वै ब्राह्मणा जाता मरीच्यादिमुनीश्वराः ॥
तेषां कनीयांस्त्वं जातो ज्ञानवेदांतपारगः ॥ १२ ॥
कर्मनिष्ठाश्च ते नित्यं सृष्ट्यर्थं सततोद्यताः ॥
निर्व्यापारो विष्णुभक्त एकांतब्रह्मसेवकः ॥ १३ ॥
निर्ममो निरहंकारो मम त्वं मानसः सुतः ॥
क्रमान्मया तु तेषां वै वेदरक्षार्थमेव च ॥ १४ ॥
प्रथमा मानसी सृष्टिर्द्विजात्यादिर्विनिर्मिता ॥
ततोहमांगिकीं सृष्टिं सृष्टवांस्तत्र नारद ॥ १५ ॥
मुखाच्च ब्राह्मणा जाता बाहुभ्यः क्षत्रिया मम ॥
वैश्या ऊरुसमुद्भूताः पश्चां शूद्रा बभूविरे ॥ १६ ॥
अनुलोमविलोमाभ्यांक्रमाच्चक्रमयोगतः ॥
सूदादधोऽधो जाताश्च सर्वे पादतलोद्भवाः ॥ १७ ॥
ताः सवास्तुप्रकृतयो मम देहांशसंभवाः ॥
नारद त्वं विजानीहि तासां नामानि वच्मि ते ॥ १९ ॥
ब्राह्मणः क्षत्रियोवैश्यस्त्रय एव द्विजातयः ॥
वेदास्तपोऽध्ययनं च यजनं दानमेव च ॥ १९ ॥
वृत्तिरध्यापनाच्चैव तथास्वल्पप्रतिमहात् ॥
विप्रः समर्थस्तपसा यद्यपि स्यात्प्रतिग्रहे ॥ ६.२४२.२० ॥
तथापि नैव गृह्णीयात्तपोरता यतः सदा ॥
वेदपाठो विष्णुपूजा ब्रह्मध्यानमलोभता ॥ २१ ॥
अक्रोधता निर्मलत्वं क्षमासारत्वमार्यता ॥
क्रियातत्परता दानक्रिया सत्यादिभिर्गुणैः ॥ २२ ॥
भूषितो यो भवेन्नित्यं स विप्रइति कथ्यते ॥
क्षत्रियेण तपः कार्यं यजनं दानमेव च ॥ २३ ॥
वेदपाठो विप्रभक्तिरेषां शस्त्रेण जीवनम्॥
स्त्रीबालगोब्राह्मणार्थे भूम्यर्थे स्वामिसंकटे ॥ २४ ॥
संप्रतिशरणं चैव पीडितानां च शदिते ॥
आर्तत्राणपराये च क्षत्रिया ब्रह्मणा कृताः ॥ २५ ॥

धनवृद्धिकरो वैश्यः पशुपालः कृषीवलः ॥
रसादीनां च विक्रेता देवब्राह्मणपूजकः ॥ २६ ॥
अर्थवृद्धिकरो व्याजा यज्ञकर्मादिकारकः ॥
दानमध्ययनंचेति वैश्यवृत्तिरुदाहृता ॥ २७ ॥
एतान्येव ह्यमंत्राणि शूद्रः कारयते सदा ॥
नित्यंपद्दैवतं श्राद्धं हन्तकारोऽग्नि तर्पणम्॥ २८ ॥
देवद्विजातिभक्तिश्चनमस्कारेणसिद्यति ॥
शूद्रोऽपि प्रातरुत्थाय कृत्वा पादाभिवंदनम् ॥ २९ ॥
विष्णुभक्तिमयाञ्श्लोकान्पठन्विष्णुत्वमाप्नुयात्॥
वार्षिकव्रतकृन्नित्यं तिथिवाराधिदैवतः ॥ ६.२४२.३० ॥
अन्नदः सर्वजीवानां गृहस्थः शूद्र ईरितः ॥
अमंत्राण्यपि कर्माणि कुर्वन्नेव हि मुच्यते ॥ ३१ ॥
चातुर्मास्यव्रतकरः शूद्रोऽपि हरितां व्रजेत् ॥
शिल्पी च नर्तकश्चैव काष्ठकारः प्रजापतिः ॥ ३२ ॥
वर्धकिश्चित्रकश्चैव सूत्रको रजकस्तथा ॥
गच्छकस्तन्तुकारश्च चक्रिकश्चर्मकारकः ॥ ३३ ॥
सूनिको ध्वनिकश्चैव कौल्हिको मत्स्यघातकः ॥
औनामिकस्तु चंडालः प्रकृत्याष्टादशैव ते ॥ ३४ ॥
शिल्पिकः स्वर्णकारकश्च दारुकः कांस्यकारकः ॥
काडुकः कुम्भकारश्च प्रकृत्या उत्तमाश्च षट् ॥ ३५ ॥
खरवाह्युष्ट्रवाही हयवाही तथैव च ॥
गोपाल इष्टिकाकारो अधमाधमपञ्चकम् ॥ ३६ ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ॥
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥३७॥
यो यस्य हीनो वर्णेन स चाष्टादशमो नरः ॥
सर्वासां प्रकृतीनां च उत्तमा मध्यमाः समाः ॥३८॥
भेदास्त्रयः समाख्याता विज्ञेयाः स्मृतिनिर्णयात् ॥
शिल्पिनः सप्त विज्ञेया उत्तमाः समुदाहृताः ॥ ३९ ॥

स्वर्णकृत्कंबुकश्चैव तन्दुलीपुष्पलावकः ॥

तांबूली नापितश्चैव मणिकारश्च सप्तधा ॥ ६.२४२.४० ॥

न स्नानं देवताहोमस्तपोनियम एव च ॥

न स्वाध्यायवषट्कारौ न च शुद्धिर्विवाहिता ॥ ४१ ॥

एतासां प्रकृतीनां च गुरुपूजा सदोदिता ॥

विप्राणां प्राकृतो नित्यं दानमेव परो विधिः ॥ ४२ ॥

सर्वेषामेव वर्णानामाश्रमाणां महामुने ॥

सर्वासां प्रकृतीनां च विष्णुभक्तिः सदा शुभा ॥ ४३ ॥

इति ते कथितं सर्वं यथाप्रकृतिसंभवम् ॥

कथां शृणु महापुण्यां शूद्रः शुद्धिमगाद्यथा ॥ ४४ ॥

इदं पुराणं परमं पवित्रं विशुद्धधी र्यस्तु शृणोति वा पठेत् ॥

विधूय पापानि पुरार्जितानि स याति विष्णोर्भवनं क्रियापरः ॥ ४५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्येऽष्टादशप्रकृतिकथनंनाम द्विचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४३



॥ ब्रह्मोवाच ॥ ॥
शूद्रः पैजवनोनाम गार्हस्थ्याच्छुद्धिमाप्तवान् ॥
धर्ममार्गाविरोधेन तन्निबोध महामते ॥ १ ॥
आसीत्पैजवनः शूद्रः पुरा त्रेतायुगे किल ॥
स्वधर्मनिरतः ख्यातो विष्णुब्राह्मणपूजकः ॥ २ ॥
न्यायागतधनो नित्यं शांतः सर्वजनप्रियः ॥
सत्यवादी विवेकज्ञस्तस्य भार्या च सुन्दरी ॥ ३ ॥
धर्मोढा वेदविधिना समानकुलजा शुभा ॥
पतिव्रता महाभागा देवद्विजहिते रता ॥ ॥ ४ ॥
काश्यां संबंधिता बाला वैजयंत्यां विवाहिता ॥
सा धर्माचरणे दक्षा वैष्णवव्रतचारिणी ॥ ५ ॥
भर्त्रा सह तथा सम्यक्चिक्रीडे सुविनीतवत् ॥
सोऽपि रेमे तया काले हस्तिन्येव महागजः ॥६॥
अर्थाप्तिः पूर्वपुण्येन जाता तस्य महात्मनः ॥
वाणिज्यं स्वजनैर्नित्यं स्वदेशपरदेशजम् ॥ ॥७॥
कारयत्यर्थजातैश्च परकीयस्वकीयजैः ॥
एवमर्थश्च बहुधा संजातो धर्मदर्शिनः ॥ ८ ॥
पुत्रत्रयं च संजातं पितुः शुश्रूषणे रतम् ॥
तस्य पुत्राः पितुर्भक्ता द्रव्यादिमदवर्जिताः ॥ ९ ॥
पितृवाक्यरताः श्रेष्ठाः स्वधर्माचारशोभनाः ॥
पित्रोः शुश्रूषणादन्यन्नाभिनंदंति किंचन ॥6.243.१०॥
ते सम्बन्धैः सुसंबद्धाः पित्रा धर्मार्थदर्शिना ॥
तत्पत्न्यो मातृपित्रर्चां कारयंत्यनिवारितम् ॥ ११ ॥
ऋद्धिमद्भवनं तस्य धनधान्यसमन्वितम् ॥
सोऽपि धर्मरतो नित्यं देवतातिथिपूजकः ॥ १२ ॥
गृहागतो न विमुखो यस्य जातु कदाचन ॥
शीतकाले धनं प्रादादुष्णकाले जलान्नदः ॥ १३ ॥
वर्षा काले वस्त्रदश्च बभूवान्नप्रदः सदा ॥
वापीकूपतडागादिप्रपादेवगृहाणि च ॥ १४ ॥

कारयत्युचिते काले शिवविष्णुव्रतस्थितः ॥
इष्टधर्मस्तु वर्णानां समाचीर्णो महाफलः ॥ १५ ॥
अन्येषां पूर्तधर्माणां तेषां पूर्तकरः सदा ॥
स बभूव धनाढ्योपि व्यसनैर्न समाश्रितः ॥ १६ ॥
विष्णुभक्तिरतो नित्यं चातुर्मास्ये विशेषतः ॥१८॥
एकदा गालवमुनिः शिष्यैर्बहुभिरावृतः ॥ १७ ॥
ब्रह्मज्ञानरतः शांतस्तपोनिष्ठो महावशी ॥
अभ्याजगाम शूद्रस्य गेहे पैजवनस्य सः ॥ १८ ॥
स वाग्भिर्मधुभिस्तस्य अभ्युत्थानासनादिभिः ॥
उपचारैः पुनर्युक्तः कृतार्थ इव मानयन् ॥ १९ ॥
अद्य मे सफलं जन्म जातं जीवितमुत्तमम् ॥
अद्य मे सफलो धर्मः कुशलश्चोद्धृतस्त्वया ॥ 6.243.२० ॥
मम पापसहस्राणि दृष्ट्या दग्धानि ते मुने ॥
गृहं मम गृहस्थस्य सकलं पावितं त्वया ॥ २१ ॥
तस्य भक्त्या प्रसन्नोऽभूद्गतमार्गपरिश्रमः ॥
उवाच मुनिशार्दूलः सच्छूद्रं तं कृतांजलिम् ॥ २२ ॥
कच्चित्ते कुशलं सौम्य मनो धर्मे प्रवर्तते ॥
अर्थानुबंधाः सततं बन्धुदारसुतादयः ।1 २३ ॥
गोविन्दे सततं भक्तिस्तथा दाने प्रवर्तते ॥
धर्मार्थकाम कार्येषु सप्रभावं मनस्तव ॥ २४ ॥
विष्णुपादोदकं नित्यं शिरसा धार्यते न वा ॥
पादोद्भवं च गंगोदं द्वादशाब्दफलप्रदम् ॥ २५ ॥
चातुर्मास्ये विशेषेण तत्फलं द्विगुणं भवेत् ॥
हरिभक्तिर्हरिकथा हरिस्तोत्रं हरेर्नतिः ॥ २६ ॥
हरिध्यानं हरेः पूजा सुप्ते देवे च मोक्षकृत् ॥
एवं ब्रुवाणं स मुनिं पुनराह नतिं गतः ॥ २७ ॥
भवद्दृष्ट्याश्रमफलमेतज्जातं न संशयः ॥
तथापि श्रोतुमिच्छामि तव वाणीमनामयीम् ॥ २८ ॥
भवादृशानां गमनं सर्वार्थेषु प्रकल्पते ॥
ततस्तौ सुमुदा युक्तौ संजातौ हृष्टचेतसौ ॥ २९ ॥
मुनिं पैजवनोनाम सच्छूद्रः प्राह संमतः ॥
किमागमनकृत्यं ते कथयस्व प्रसादतः ॥ 6.243.३० ॥
को वा तीर्थप्रसंगश्च चातुर्मास्ये समीपगे ॥

गालवः प्राह सच्छूद्रं धार्मिकं सत्यवादिनम् ॥ ३१ ॥
मम तीर्थावसिक्तस्य मासा बहुतरा गताः ॥
इदानीमाश्रमं यास्ये चातुर्मास्ये समागते ॥ ३२ ॥
आषाढशुक्लैकादश्यां करिष्ये नियमं गृहे ॥
नारायणस्य प्रीत्यर्थं श्रेयोऽर्थं चात्मनस्तथा ॥
प्रत्युवाच मुनिर्धर्मान्विनयानतकन्धरम् ॥ ३३ ॥
॥ पैजवन उवाच ॥ ॥
मामनुग्रहजां बुद्धिं ब्रूहि त्वं द्विजपुंगव ॥
वेदेऽधिकारो नैवास्ति वेदसारजपस्य वा ॥ ३४ ॥
पुराणस्मृतिपाठस्य तस्मात्किंचिद्वदस्व मे ॥
तत्त्वात्मसदृशं किंचिद्भाति रूपं महाफलम् ॥ ३५ ॥
चातुर्मास्ये विशेषेण मुक्तिसंसाधकं वद ॥ ३६ ॥
॥ गालव उवाच ॥ ॥
शालिग्रामगतं विष्णुं चक्रांकित पुटं सदा ॥
येऽर्चयन्ति नरा नित्यं तेषां भुक्तिस्त्वदूरतः ॥ ३७ ॥
शालिग्रामे मनो यस्य यत्किंचित्क्रियते शुभम् ॥
अक्षय्यं तद्भवेन्नित्यं चातुर्मास्ये विशेषतः ॥ ३८
शालिग्रामशिला यत्र यत्र द्वारावती शिला ॥
उभयोः संगमः प्राप्तो मुक्तिस्तस्य न दुर्लभा ॥ ३९ ॥
शालिग्रामशिला यस्यां भूमौ संपूज्यते नृभिः ॥
पञ्चक्रोशं पुनात्येषा अपि पापशतान्वितैः ॥ 6.243.४० ॥
तैजसं पिंडमेतद्धि ब्रह्मरूपमिदं शुभम् ॥
यस्याः संदर्शनादेव सद्यः कल्मषनाशनम् ॥ ४१ ॥
सर्वतीर्थानि पुण्यानि देवतायतनानि च ॥
नद्यः सर्वा महाशूद्र तीर्थत्वं प्राप्नुवंति हि ॥४२॥
सन्निधानेन वै तस्याः क्रिया सर्वत्रशोभनाः ॥
व्रजंति हि क्रियात्वं च चातुर्मास्ये विशेषतः ॥ ४३ ॥
पूज्यते भवने यस्य शालिग्राम शिला शुभा ॥
कोमलैस्तुलसीपत्रैर्विमुखस्तत्र वै यमः ॥ ४४ ॥
ब्राह्मणक्षत्रियविशां सच्छूद्राणामथापि वा ॥
शालिग्रामाधिकारोऽस्ति न चान्येषां कदाचन ॥ ४५ ॥
॥ सच्छूद्र उवाच ॥ ॥
ब्रह्मन्वेदविदां श्रेष्ठ सर्वशास्त्रविशारद ॥

स्त्रीशूद्रादिनिषेधोऽयं शालिग्रामे हि श्रूयते ॥ ४६ ॥
मादृशस्त्वं कथं शालिग्रामपूजाविधिं वद ॥ ४७ ॥
॥ गालव उवाच ॥ ॥
असच्छूद्रगतं दास निषेधं विद्धि मानद ।।
स्त्रीणामपि च साध्वीनां नैवाभावः प्रकीर्तितः ॥ ४८ ॥
मा भूत्संशयस्तेनात्र नाऽऽप्नुषे संशयात्फलम् ॥
शालिग्रामार्चनपराः शुद्धदेहा विवेकिनः ॥ ४९ ॥
न ते यमपुरं यांति चातुर्मास्ये च पूजकाः ॥
शालिग्रामार्पितं माल्यं शिरसा धारयंति ये ॥ 6.243.५० ॥
तेषां पापसहस्राणि विलयं यांति तत्क्षणात्॥
शालिग्राम शिलाग्रे तु ये प्रयच्छंति दीपकम् ॥ ५१ ॥
तेषां सौरपुरे वासः कदाचिन्नैव हीयते ॥
शालिग्रामगतं विष्णुं सुमनोभिर्मनोहरैः॥
येऽर्चयंति महाशूद्र सुप्ते देवे हरौ तथा ॥ ५२ ॥
पंचामृतेन स्नपनं ये कुर्वंति सदा नराः ॥
शालिग्रामशिलायां च न ते संसारिणो नराः॥ ५३ ॥
मुक्तेर्निदानममलं शालिग्रामगतं हरिम् ॥
हृदि न्यस्य सदा भक्त्या यो ध्यायति स मुक्तिभाक् ॥ ५४ ॥
तुलसीदलजां मालां शालिग्रामोपरि न्यसेत् ॥
चातुर्मास्ये विशेषेण सर्वकामानवाप्नुयात् ॥ ५५ ॥
न तावत्पुष्पजा माला शालिग्रामस्य वल्लभा ॥
सर्वदा तुलसी देवी विष्णोर्नित्यं शुभा प्रिया ॥ ॥ ५६ ॥
तुलसी वल्लभा नित्यं चातुर्मास्ये विशेषतः ॥
शालिग्रामो महाविष्णुस्तुलसी श्रीर्न संशयः ॥ ५७ ॥
अतो वासितपानीयैः स्नाप्यं चंदनचर्चितैः ॥
मंजरीभिर्युतं देवं शालग्रामशिलाहरिम् ॥ ५८ ॥
तुलसीसंभवाभिश्च कृत्वा कामानवाप्नुयात् ॥
पत्रे तु प्रथमे ब्रह्मा द्वितीये भगवाञ्छिवः ॥ ५९ ॥
मंजर्यां भगवान्विष्णुस्तदेकस्थत्रया सदा ॥
मंजरी दलसंयुक्ता ग्राह्या बुधजनैः शुभा ॥ 6.243.६० ॥
तां निवेद्य गुरौ भक्त्या जन्मादिक्षयकारणम् ॥
शालिग्रामे धूपराशिं निवेद्य हरितत्परः ॥ ६१ ॥
चातुर्मास्ये विशेषेण मनुष्यो नैव नारकी॥

शालिग्रामं नरो दृष्ट्वा पूजितं कुसुमैः शुभैः ॥ ६२ ॥
सर्वपापविशुद्धात्मा याति तन्मयतां हरौ ॥
य स्तौत्यश्मगतं विष्णुं गंडकीजलसंभवम् ॥ ६३ ॥
श्रुतिस्मृतिपुराणैश्च सोऽपि विष्णुपदं व्रजेत् ॥
शालिग्रामशिलायाश्च चतुर्विंशतिसंख्यकाः ॥
भेदाः संति महाशूद्र ताञ्छृणुष्व महामते ॥ ६४ ॥
इमाः पूज्याश्च लोकेऽत्र चतुर्विंशतिसंख्यकाः ॥
तासां च दैवतं विष्णुं नामानि च वदाम्यहम् ॥ ६५ ॥
स एव मूर्तश्चतुरुत्तरासिर्विंशद्भिरेको भगवान्यथाऽऽद्यः ॥
स एव संवत्सरनामसंज्ञः स एव ग्रावागत आदिदेवः ॥ ६६ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्याने शालिग्रामपूजनमाहात्म्यवर्णनंनाम त्रिचत्वारिंशत्युत्तरद्विशततमोऽध्यायः ॥ २४३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४४



॥ पैजवन उवाच ॥ ॥

एतान्भेदान्मम ब्रूहि विस्तरेण तपोधन ॥

त्वद्वाक्यामृतपानेन तृषा नैव प्रशाम्यति ॥ १ ॥

॥ गालव उवाच ॥ ॥

शृणु विस्तरतो भेदान्पुराणोक्तान्वदामि ते ॥

याञ्छ्रुत्वा मुच्यतेऽवश्यं मनुजः सर्वकिल्बिषात् ॥ २ ॥

पूर्वं तु केशवः पूज्यो द्वितीयो मधुसूदनः ॥

संकर्षणस्तृतीयस्तु ततो दामोदरः स्मृतः ॥ ३ ॥

पंचमो वासुदेवाख्यः षष्ठः प्रद्युम्नसंज्ञकः ॥

सप्तमो विष्णुरुक्तश्चाष्टमो माधव एव च ॥ ४ ॥

नवमोऽनंतमूर्तिश्च दशमः पुरुषोत्तमः ॥

अधोक्षजस्ततः पश्चाद्द्वादशस्तु जनार्दनः ॥ ५ ॥

त्रयोदशस्तु गोविंदश्चतुर्दशस्त्रिविक्रमः ॥

श्रीधरश्च पंचदशो हृषीकेशस्तु षोडशः ॥ ६ ॥

नृसिंहस्तु सप्तदशो विश्वयोनिस्ततः परम्॥

वामनश्च ततः प्रोक्त स्ततो नारायणः स्मृतः ॥ ७ ॥

पुंडरीकाक्ष उक्तस्तु ह्युपेंद्रश्च ततः परम् ॥

हरिस्त्रयोविंशतिमः कृष्णश्चांत्य उदाहृतः ॥ ९ ॥

शालिग्रामस्य भेदांश्च मयोक्तास्तव शूद्रज ॥

मूर्तिभेदास्तथा प्रोक्ता एत एव महाधन ॥ ९ ॥

मूर्तयस्तिथिनान्म्यः स्युरेकादश्यः सदैव हि ॥

संवत्सरेण पूज्यंते चतुर्विंश तिमूर्तयः ॥ ६.२४४.१० ॥

देवावताराश्च तथा चतुर्विंशतिसंख्यकाः ॥

मासा मार्गशिराद्याश्च मासार्द्धाः पक्षसंज्ञकाः ॥ ११ ॥

अधीशसहितान्नित्यं पूजयन्भक्तिमान्भवेत् ॥

चतुर्विंशतिसंज्ञं च चतुष्टयमुदाहृतम् ॥ १२ ॥

एतच्चतुष्टयं नृणां धर्मकामार्थमोक्षदम् ॥

यः शृणोति नरो भक्तया पठेद्वापि समाहितः ॥ १३ ॥

भूतसर्गस्य गोप्ताऽसौ हरिस्तस्य प्रसीदति ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्य शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये शालिग्रामशिलासुमूर्त्युत्पत्तिवर्णनंनाम चतुश्चत्वारिंशदुत्तरद्वि शततमोध्यायः ॥ २४४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४५



॥ पैजवन उवाच ॥ ॥

शालिग्रामशिलायां च जगदादिः सनातनः ॥

कथं पाषाणतां प्राप्तो गण्डक्यां तच्च मे वद ॥

त्वत्प्रसादेन विप्रर्षे हरौ भक्तिर्दृढा भवेत् ॥

भवंतस्तीर्थरूपा हि दर्शनात्पापहारिणः ॥ २ ॥

तीर्थामृतावगाहेन यथा पवित्रता नृणाम् ॥

भवद्वाक्यामृताज्जाता तथा मम न संशयः ॥ ३ ॥

॥ गालव उवाच ॥ ॥

इतिहासस्त्वयं पुण्यः पुराणेषु च पठ्यते ॥

यथा स एव भगवाञ्छालिग्रामत्वमागतः ॥ ४ ॥

महेश्वरश्च लिंगत्वं कथयेऽहं तवाऽनघ ॥

पूर्वं प्रजापतिर्दक्षो ब्रह्मणोंऽगुष्ठ संभवः ॥ ५ ॥'

तस्यासीद्दुहिता साध्वी सतीनाम्नी सुलक्षणा ॥

हरेणोढा विधिज्ञेन वेदोक्तविधिना ततः ॥ ६ ॥

स चकार महायज्ञे हरद्वेषं विमूढधीः ॥

तेन द्वेषेण महता सती प्रकुपिता भृशम् ॥ ७ ॥

यज्ञवेद्यां समागम्य वह्निधारणया तदा ॥

प्राणायामपरा भूत्वा देहोत्सर्गं चकार सा ॥ ८ ॥

पितृभागं परित्यज्य स्वभागेन युता सती ॥

मनसा ध्यानमगमच्छीतलं च हिमालयम् ॥ ९ ॥

यत्रयत्र मनो याति स्वकर्मवशगं मृतौ ॥

अवतारस्तत्रतत्र जायते नात्र संशयः ॥ ६.२४५.१० ॥

दह्यमाना हि सा देवी हिमालयसुताऽभवत् ॥

तत्र सा पार्वती भूत्वा तप उग्रं समाश्रिता ॥ ११ ॥

शिवभक्तिरता नित्यं हरव्रतपरायणा ॥

शृंगे हिमवतः पुत्री मनो न्यस्य महेश्वरे ॥ ॥ १२ ॥

ततो वर्षसहस्रांते भगवान्भूतभावनः ॥

अथाजगाम तं देशं विप्ररूपो महेश्वरः ॥ १३ ॥

तां ज्ञात्वा तपसा शुद्धां कर्मभावैः परीक्षितैः ॥

ततो दिव्यवपुर्भूत्वा करे जग्राह पार्वतीम् ॥ १४ ॥

तपसा निर्जितश्चास्मि करवाणि च किं प्रियम् ॥

ततः प्राह महेशानं प्रमाणं मे पिता गुरुः । ॥ १५ ॥

सप्तर्षीन्स तथोक्तस्तु प्रेषयामास शंकरः ॥

ते तत्र गत्वा समयं वक्तुं हिमवता सह ॥ १६ ॥

निवेद्य च महेशानं प्रेषिता मुनयो ययुः ।

ततो लग्नदिने देवा महेन्द्रादय ईश्वरम् ॥ १७ ॥

ब्रह्मविष्णुपुरोगाश्च पुरोधायाग्निमाययुः ॥

योगसिद्धा समायांतं वरवेषं वृषध्वजम् । १८ ।

हिमवान्पूजयामास मधुपर्कादिकैः शुभैः ॥

उपचारैर्मुदा युक्तो मानयन्कृतकृत्यताम् ॥ १९ ॥

वेदोक्तेन विधानेन तां कन्यां समयोजयत् ॥

पाणिग्रहेण विधिना द्विजातिगणसंवृतः ॥ ६.२४५.२० ॥

वह्निं प्रदक्षिणीकृत्य गिरीशस्तदनन्तरम् ॥

दानकाले च गोत्रादि पृष्टो लज्जापरो हर ॥२१॥

ब्रह्मणो वचनात्तेन विधिशेषोऽवशेषितः॥

चरुप्राशनकाले तु पंचवक्त्रप्रकाशकृत्॥२२॥

सहितः सकलैर्देवैः कुतूहलपरायणः॥

गिरिजार्थं समायुक्तो वरः सोऽपि महेश्वरः॥२३॥

नवकोटिमुखां दृष्ट्वा साट्टहासो जनोऽभवत्॥

वैदिकी श्रुतिरित्युक्ता शिव त्वं स्थिरतां व्रज॥२४॥

लज्जिता सा परित्यागं नाकरोत्पंचजन्मसु ॥

भर्त्तारमसितापांगी हरमेवाभ्यगच्छत ॥ २५ ॥

देवानां पर्वतानां च प्रहृष्टं सकलं कुलम् ॥

ततो विवाहे संपूर्णे हरोऽगात्कौतुकौकसि ॥ २६ ॥

गणानां चापि सान्निध्ये सा नामर्षयदंबिका ॥

पारिबर्हं ततो दत्त्वा शैलेन स विसर्जितः ॥ २७ ॥

मानितः सत्कृतश्चापि मन्दराचलमभ्यगात्॥

विश्वकर्मा ततस्तस्य क्षणेन मणिमद्गृहम् ॥ २८ ॥

निर्ममे देवदेवस्य स्वेच्छावर्द्धिष्णुमंदिरम् ॥

सर्वर्द्धिमत्प्रशस्ताभं मणिविद्रुमभूषितम् ॥ २९ ॥

स्थूणासहस्रसंयुक्तं मणिवेदिमनोहरम् ॥

गणा नंदिप्रभृतयो यस्य द्वारि समाश्रिताः ॥ ६.२४५.३० ॥

त्रिनेत्राः शूलहस्ताश्च बभुः शंकररूपिणः ॥

वाटिका अस्य परितः पारिजाताः सहस्रशः ॥ ३१ ॥

कामधेनुर्मणिर्दिव्यो यस्य द्वारि समाश्रितौ ॥

तस्मिन्मनोहरतरे कामवृद्धिकरे गृहे ॥ ३२ ॥

पार्वत्या वसतः सार्द्धं कामो दृष्टिपथं ययौ ॥

वायुरूपः शिवं दृष्ट्वा कामः प्रोवाच शंकरम् ॥ ३३ ॥

नमस्ते सर्वरूपाय नमस्ते वृषभध्वज ॥

नमस्ते गणनाथाय पाहि नाथ नमोऽस्तु ते ॥३४॥

त्वया विरहितं लोकं शववत्स्पृशते मही ॥

न त्वया रहितं किञ्चि द्दृश्यते सचराचरे ॥ ३५ ॥

त्वं गोप्ता त्वं विधाता च लोकसंहारकारकः ॥

कृपां कुरु महादेव देहदानं प्रयच्छ मे ॥ ३६ ॥

॥ ईश्वर उवाच ॥ ॥ ॥

यन्मया त्वं पुरा दग्धः पर्वते पुरतोऽनघ ॥

तस्या एव समीपे त्वं पुनर्भव स्वदेहवान् ॥ ३७ ॥

एवमुक्तस्ततः कामः स्वशरीरमुपागतः ॥

ववंदे चरणौ शूद्र विनयावनतोऽभवत् ॥ ३८ ॥

ततो ननाम चरणौ पार्वत्याः संप्रहृष्टवान् ॥

लब्धप्रसादस्तु तयोः समीपाद्भुवनत्रये ॥ ३९ ॥

चचार सुमहातेजा महामोहबलान्वितः ॥

पुष्पधन्वा पुष्पबाणस्त्वाकुञ्चितशिरोरुहः ॥ ६.२४५.४० ॥

सदा घूर्णितनेत्रश्च तयोर्देहमुपाविशत् ॥

दिव्यासवैर्दिव्यगंधैर्वस्त्रमाल्यादिभिस्तथा ॥ ४१ ॥

सख्यः संभोगसमये परिचक्रुः समंततः ॥

एवं प्रक्रीडतस्तस्य वत्सराणां शतं ययौ ॥ ४२ ॥

साग्रमेका निशा यद्वन्मैथुने सक्तचेतसः ॥

एतस्मिन्नंतरे देवास्तारकप्रद्रुता भयात् ॥

ब्रह्माणं शरणं जग्मुः स्तुत्वा तं शरणं गताः ॥ ४३ ॥

॥ देवा उचुः ॥ ॥

तारकोऽसौ महारौद्रस्त्वया दत्तवरः पुरा ॥ ४४ ॥

विजित्य तरसा शक्रं भुंक्ते त्रैलोक्यपूजितः ॥

वधोपायो यथा तस्य जायते त्वं कुरु स्वयम् ॥ ॥ ४५ ॥

॥ ब्रह्मोवाच ॥ ॥

मया दत्तवरश्चासौ मयैवोच्छिद्यते नहि ॥

स्वयं संवर्ध्य कटुकं छेत्तुं कोऽपि न चार्हति ॥ ४६ ॥

तस्मात्तस्य वधोपायं कथयामि महात्मनः ॥

पार्वत्यां यो महेशानात्सूनुरुत्पत्स्यते हि सः ॥ ४७ ॥

दिनसप्तकवान्भूत्वा तारकं स हनिष्यति ॥

इति वाक्यं तु ते श्रुत्वा मंदरं लोकसुंदरम्॥ ४८ ॥

ब्रह्मलोकात्समाजग्मुः पीडिता दैत्यदानवैः ॥ ४९ ॥

तत्र नंदिप्रभृतयो गणाः शूलभृतः पुरः ॥

गृहद्वारे ह्युपा वृत्य तस्थुः संयतचेतसः ॥ ६.२४५.५० ॥

॥ देवा ऊचुः ॥ ॥

देवाश्च दुःखातुरचेतसो भृशं हतप्रभास्त्यक्तगृहाश्रयाखिलाः ॥

संप्राप्य मासांश्चतुरः स्तपः स्थिता देवे प्रसुप्ते हरतोषणं परम् ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्याने तारकोपद्रुतानां देवानां शिवदर्शनार्थं मंदराचलंप्रतिगमनवर्णनंनाम पञ्चचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४६

https://sa.wikisource.org/s/fhc

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ गालव उवाच ॥ ॥

शक्रादयस्तु देवेशा दुःखसंतप्तमानसाः ॥ ॥

ईश्वरादर्शनभ्रांतमनः कर्मेंद्रिया रतिम् ॥ १ ॥

न प्रापुर्लोकनाथं ते कृत्वा यः प्रतिमाकृतिम् ॥

तपसाराधयामासुः सर्वभूतहृदिस्थितम् ॥ २ ॥

कपर्दशिरसं देवं शूलहस्तं पिनाकिनम् ॥

कपालखट्वांगधरं दशहस्तं किरीटिनम्॥ ३ ॥

उमासहितमीशानं पंचवक्त्रं महाभुजम्॥

कर्पूरगौरदेहाभं सितभूतिविभूषितम्॥ ॥ ४ ॥

नागयज्ञोपवीतेन गजचर्मसमन्वितम् ॥

कृष्णसारत्वचा चापि कृतप्रावरणं विभुम् ॥ ५ ॥

कृतध्यानाः सुरास्तत्र वृक्षाधारे समाश्रिताः ॥

व्रतचर्यां समाश्रित्य प्रचक्रुस्तप उत्तमम् ॥ ६ ॥

षडक्षरेण मंत्रेण शैवेन विहिताः सुराः ॥

॥ शूद्र उवाच ॥ ॥

व्रतचर्या त्वया या सा प्रोक्ता संजा यते कथम् ॥ ७ ॥

ब्रह्मन्विस्तरतो ब्रूहि न तृप्येते वचोऽमृतैः ॥ ८ ॥

॥ गालव उवाच ॥ ॥

जपन्भस्म च खट्वांगं कपालं स्फाटिकं तथा ॥

रुंडमालां पंचवक्त्रमर्द्धचंद्रं च मूर्द्धनि ॥ ९ ॥

चित्रकृत्तिपरीधानं कौपीनकुण्डलद्वयम् ॥

घंटायुग्मं त्रिशूलं च सूत्रं चर्यास्वरूपकम् ॥ ६.२४६.१० ॥

अमीभिर्लक्षणैर्लक्ष्यं मयोक्तं तव शूद्रज ॥

अनेन विधिना सर्वे देवा वह्निपुरोगमाः ॥ ११ ॥

सर्व आराधयामासुः सर्वोपायैर्वरप्रदम् ॥

चातुर्मास्ये च संपूर्णे सपूर्णे कार्तिकेऽमले ॥ १२ ॥

चीर्णव्रतान्सुरान्दृष्ट्वा विशुद्धांश्च महेश्वरः ॥

मतिं तेषां ददौ तुष्टो जीवात्मा सर्वभूतदृक् ॥ १३ ॥

शतरुद्रीयजाप्येन विधानसहितेन च ॥

ध्यानेन दीपदानेन चातुर्मास्ये तुतोष सः ॥ १४ ॥

पूजनैः षोडशविधैर्यथा विष्णोस्तथा हरे ॥
कुर्वाणान्भक्तिभावेन ज्ञात्वा देवान्समागतान् ॥ १५ ॥
प्रहृष्टो भगवान्रुद्रो ददौ तेषां शुभा मतिम् ॥
ततः संमंत्र्य ते देवा वह्निं स्तुत्वा यथार्थतः ॥ १६ ॥
प्रसन्नवदनं चक्रुः कार्यसाधनतत्परम् ॥
कर्मसाक्षी महातेजाः कृत्वा पारावतं वपु ॥ १७ ॥
प्रविवेश ततो मध्ये द्रष्टुं देवं महेश्वरम् ॥
चकार गतिविक्षेपं गुंठनैरवगुंठनैः ॥१८॥
लुंठनैः सर्पणैश्चैव चारुरूपोऽद्भुतां गतिम् ॥
तं दृष्ट्वा भगवांस्तत्र कारणं समबुद्ध्यत ॥१९॥
ऊर्ध्वरेतास्ततस्तस्मिन्ससर्जादौ दधार तत् ॥
वीर्यं वह्निमुखे चैव सोत्पपात गृहाद्बहिः ॥ ६.२४६.२० ॥
गते तस्मिन्पतंगेऽथ पार्वती विफलश्रमा ॥
संक्रुद्धा सर्वदेवानां सा शशाप महेश्वरी ॥ २१ ॥
यस्मान्ममेच्छा विहता भवद्भिर्दुष्टबुद्धिभिः ॥
तस्मात्पाषाणतामाशु व्रजंतु त्रिदिवौकसः ॥ २२ ॥
निरपत्या निर्दयाश्च सर्वे देवा भविष्यथ ॥
ततः प्रसादयामासुः प्रणताः शापयंत्रिताः ॥ २३ ॥
महद्दुःखं संप्रविष्टाः पुनः पुनरथाब्रुवन् ॥ २४ ॥
॥ देवा ऊचुः ॥ ॥
त्वं माता सर्वदेवानां सर्वसाक्षी सनातनी ॥
उत्पत्तिस्थितिसंहारकारणं जगतां सदा ॥ २५ ॥
भूतप्रकृतिरूपा त्वं महाभूतसमाश्रिता ॥
अपर्णा तपसां धात्री भूतधात्री वसुन्धरा ॥ २६ ॥
मंत्राराध्या मन्त्रबीजं विश्वबीजलयस्थितिः ॥
यज्ञादिफलदात्री च स्वाहारूपेण सर्वदा ॥ २७ ॥
मन्त्रयन्त्रसमोपेता ब्रह्मविष्णुशिवादिषु ॥
नित्यरूपा महारूपा सर्वरूपा निरञ्जना ॥ २९८ ॥
दोषत्रयसमाक्रान्त जननैः श्रेयसप्रदा ॥
महालक्ष्मीर्महाकालीमहादेवी महेश्वरी ॥ २९ ॥
विश्वेश्वरी महामाया मायाबीजवरप्रदा ॥
वररूपा वरेण्या त्वं वरदात्री वरासुता ॥ ६.२४६.३० ॥
बिल्वपत्रैः शुभैर्ये त्वां पूजयन्ति नराः सदा ॥

तेषां राज्यप्रदात्री च कामदा सिद्धिदा सदा ॥ ३१ ॥
चातुर्मास्येऽर्चिता यैस्त्वं बिल्वपत्रैर्विशेषतः ॥
तेषां वांछितसिद्ध्यर्थं जाता कामदुघा स्वयम् ॥ ३२ ॥
येऽर्चयंति सदा लोके महेश्वरसमन्विताम् ॥
बिल्वपत्रैर्महाभक्त्या न तेषां दुःखदुष्कृती ॥ ३३ ॥
चातुर्मास्ये विशेषेण तव पूजा महाफला ॥
अद्यप्रभृति यैर्लोकैर्बिल्वपत्रैस्तु पूजिता ॥ ३४ ॥
विधास्यसि महेशानि तेषां ज्ञानमनुत्तमम्॥
चातुर्मास्येऽधिकफलं बिल्वपत्रं वरानने ॥ ३५ ॥
उमामहेश्वरप्रीत्यै दत्तं विधिवदक्षयम् ॥
यथा श्रीस्तुलसीवृक्षे तथा बिल्वे च पार्वती ॥ ३६ ॥
त्वं मूर्त्या दृश्यसे विश्वं सकलाभीष्टदायिनी ॥
चातुर्मास्ये विशेषेण सेवितौ द्वौ महाफलौ ॥ ३७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्य माहात्म्ये पैजवनोपाख्याने पार्वत्येन्द्रादीनां शापप्रदानवृत्तान्तवर्णनंनाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ २४६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४७



॥ पैजवन उवाच ॥ ॥

श्रीः कथं तुलसीरूपा बिल्ववृक्षे च पार्वती ॥

एतच्च विस्तरेण त्वं मुने तत्त्वं वद प्रभो ॥ १ ॥ ॥

॥ गालव उवाच ।1 ॥

पुरा दैवासुरे युद्धे दानवा बलदर्पिताः ॥

देवान्निजघ्नुः संग्रामे घोररूपाः सुदारुणाः ॥ २ ॥

देवाश्च भय संविग्ना ब्रह्माणं शरणं ययुः ॥

ते स्तुत्वा पितरं नत्वा वृहस्पतिपुरःसराः ॥ ३ ॥

तस्थुः प्रांजलयः सर्वे तानुवाच पितामहः ॥

किमर्थं म्लानवदना अस्मद्गेहमुपागताः ॥ ४ ॥

कारणं कथ्यतामाशु वह्नीन्द्रवसुभिर्युताः॥

॥ देवा ऊचुः ॥

दैत्यैः पराजितास्तात संगरेऽद्भुतकारिभिः ॥ ९ ॥

वयं सर्वे पराक्रांता अतस्त्वां शरणं गताः ॥

त्राह्यस्मान्देवदेवेश शरणं समुपागतान् ॥ ६ ॥

तच्छ्रुत्वा भगवान्प्राह ब्रह्मा लोकपितामहः ॥

मया न शक्यते कर्तुं पक्षः कस्य जनस्य च ॥ ७ ॥

वक्ष्याम्युपायं सद्धर्माश्रितानां भवतां पुरः ॥

एकदा शिवभक्तानां विवादः सुमहानभूत्॥

समं केशवभक्तैश्च परस्परजिगीषया ॥

ततस्तु भगवान्रुद्रः स्वभक्तानां च पश्यताम् ॥ ९ ॥

ऐक्यं विष्णुगणैः कुर्वन्दध्रे रूपं महाद्भुतम् ॥

तदा हरिहराख्यं च देहार्द्धाभ्यां दधार सः॥6.247.१०।।

हरश्चैवार्द्धदेहेन विष्णुरर्द्धेन चाभवत् ॥

एकतो विष्णुचिह्नानि हरचिह्नानि चैकतः॥११॥

एकतो वैनतेयश्च वृषभश्चान्यतोऽभवत् ॥
वामतो मेघवर्णाभो देहोऽश्मनिचयोपमः ॥ १२ ॥
कर्पूरगौरः सव्ये तु समजायत वै तदा ॥
द्वयोरैक्यसमं विश्वं विश्वमैक्यमवर्त्तत १३॥
विभेदमतयो नष्टाः श्रुतिस्मृत्यर्थबाधकाः ॥
पाखंडिनो हैतुकाश्च सर्वे विस्मयमागमन् ॥ १४ ॥
स्वंस्वं मार्गं परित्यज्य ययुर्निर्वाणपद्धतिम् ॥
मंदरे पवतश्रेष्ठे सा मूर्तिर्नित्यसंस्तुता ।। १५ ॥
प्रमथाद्यैर्गणैश्चैव वर्त्ततेऽद्यापि निश्चला ॥
सृष्टिस्थित्यंतकर्त्री सा विश्वबीजमनंतका ॥ १६ ॥
महेशविष्णसंयुक्ता सा स्मृता पापनाशिनी ॥
योगिध्येया सदापूज्य सत्त्वाधारगुणातिगा ॥ १७ ॥
मुमुक्षवोऽपि तां ध्यात्वा प्रयांति परमं पदम् ॥
चातुर्मास्ये विशेषेण ध्यात्वा मर्त्यो ह्यमानुषः ॥ १८ ॥
तत्र गच्छंति ये तेषां स देवः संविधास्यति ॥
इत्युक्त्वा भगवांस्तेषां तत्रैवांतरधीयत ॥ १९ ॥
तेऽपि वह्निमुखा देवाः प्रजग्मुर्मंदराचलम् ॥
बभ्रमुस्तत्र तत्रैव विचिन्वाना महेश्वरम् ॥ 6.247.२० ॥
पार्वतीं बिल्ववृक्षस्थां लक्ष्मीं च तुलसीगताम् ॥
आदौ सर्वं वृक्षमयं पूर्वं विश्वमजायत ॥ २१ ॥
एते वृक्षा महाश्रेष्ठाः सर्वे देवांशसंभवाः ॥
एतेषां स्पर्शनादेव सर्वपापैः प्रमुच्यते [। २२ ॥
चातुर्मास्ये विशेषेण महापापौघहारिणः ॥
यदा तेनैव ददृशुर्देवास्त्रिभुवनेश्वरम् ॥ २३ ॥
तदाकाशभवा वाणीं प्राह देवान्यथार्थतः ॥
ईश्वरः सर्वभूतानां कृपया वृक्षमाश्रितः ॥ २४ ॥
चातुर्मास्येऽथ संप्राप्ते सर्वभूतदयाकरः ॥
अश्वत्थोऽतः सदा सेव्यो मंदवारे विशेषतः ।। २५ ।

नित्यमश्वत्थसंस्पर्शात्पापं याति सहस्रधा ॥
दुग्धेन तर्पणं ये वै तिलमिश्रेण भक्तितः ॥ २६ ॥
सेचनं वा करिष्यंति तृप्तिस्तत्पूर्वजेषु च ॥
दर्शनादेव वृक्षस्य पातकं तु विनश्यति ॥ २७ ॥
पिप्पलः पूजितो ध्यातो दृष्टः सेवित एव वा ॥
पापरोगविनाशाय चातुर्मास्ये विशेषतः ॥
अश्वत्थं पूजितं सिक्तं सर्वभूतसुखावहम् ॥ २८ ॥
सर्वामयहरं चैव सर्वपापौघहारिणम् ॥
ये नराः कीर्तयिष्यंति नामाप्यश्वत्थवृक्षजम् ॥ २९ ॥
न तेषां यमलोकस्य भयं मार्गे प्रजायते ॥
कुंकुमैश्चंदनैश्चैव सुलिप्तं यश्च कारयेत ॥ 6.247.३० ॥
तस्य तापत्रयाभावो वैकुंठे गणता भवेत् ॥
दुःस्वप्नं दुष्टचिंताञ्च दुष्टज्वरपराभवान् ॥ ३१ ॥
विलयं नय पापानि पिप्पल त्वं हरिप्रिय ॥
मंत्रेणानेन ये देवाः पूजयिष्यंति पिप्पलम् ॥ ३२ ॥
ततस्तेषां धर्मराजो जायते वाक्यकारकः ॥
अश्वत्थो वचनेनापि प्रोक्तो ज्ञानप्रदो नृणाम् ।१ ३३ ॥
श्रुतो हरति पापं च जन्मादि मरणावधि ॥
अश्वत्थसेवनं पुण्यं चातुर्मास्ये विशेषतः ॥ ३४ ।।
सुप्ते देवे वृक्षमध्यमास्थाय भगवान्प्रभुः ॥
जलं पृथ्वीगतं सर्वं प्रपिबन्निव सेवते ॥ ३५ ॥
जलं विष्णुर्जलत्वेन विष्णुरेव रसो महान् ॥
तस्माद्वृक्षगतो विष्णुश्चातुर्मास्येऽघनाशनः ॥ ३६ ॥
सर्वभूतगतो विष्णुराप्याययति वै जगत् ॥
तथाश्वत्थगतं विष्णुं यो नमस्येन्न नारकी ॥ ३७ ॥
अश्वत्थं रोपयेद्यस्तु पृथिव्यां प्रयतो नरः ॥
तस्य पापसहस्राणि विलयं यांति तत्क्षणात् ॥ ३८ ॥
अश्वत्थः सर्ववृक्षाणां पवित्रो मंगलान्वितः ॥

मुक्तिदो रोपितो ध्यातश्चातुर्मास्येऽघनाशनः ॥ ३९ ॥

अश्वत्थे चरणं दत्त्वा ब्रह्महत्या प्रजायते ॥

निष्कारणं संकुथित्वा नरके पच्यते ध्रुवम् ॥ 6.247.४० ॥

मूले विष्णुः स्थितो नित्यं स्कंधे केशव एव च ॥

नारायणस्तु शाखासु पत्रेषु भगवान्हरिः ॥ ४१ ॥

फलेऽच्युतो न संदेहः सर्वदेवैः समन्वितः ॥

चातुर्मास्ये विशेषेण द्रुमपूजी स मुक्तिभाक् ॥ ४२ ॥

तस्मात्सर्वप्रयत्नेन सदैवाश्वत्थसेवनम् ॥

यः करोति नरो भक्त्या पापं याति दिनोद्भवम् ॥ ४३ ॥

स एव विष्णुर्द्रुम एव मूर्तो महात्मभिः सेवितपुण्यमूलः ॥

यस्याश्रयः पापसहस्रहंता भवेन्नृणां कामदुघो गुणाढ्यः ॥ ४४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्यान अश्वत्थमहिमवर्णनंनाम सप्तचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४८



॥ वाण्युवाच ॥ ॥

पलाशो हरिरूपेण सेव्यते हि पुराविदैः ॥

बहुभिर्ह्युपचारैस्तु ब्रह्मवृक्षस्य सेवनम् ॥ १ ॥

सर्वकामप्रदं प्रोक्तं महापातकनाशनम् ॥

त्रीणि पत्राणि पालाशे मध्यमं विष्णुशापितम् ॥ २ ॥

वामे ब्रह्मा दक्षिणे च हर एकः प्रकीर्तितः ॥

पलाशपात्रे यो भुंक्ते नित्यमेव नरोत्तमः ॥ ३ ॥

अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयम् ॥

चातुर्मास्ये विशेषेण भोक्तुर्मोक्षप्रदं भवेत् ॥ ४ ॥

पयसा वाथ दुग्धेन रविवारेऽनिशं यदि ॥

चातुर्मास्येऽर्चितो यैस्तु ते यांति परमंपदम् ॥५॥

दृश्यते यदि पालाशः प्रातरुत्थाय मानवैः ॥

नरकानाशु निर्धूय गम्यते परमं पदम् ॥ ६ ॥

पालाशः सर्वदेवानामाधारो धर्मसाधनम् ॥

यत्र लोभस्तु तस्य स्यात्तत्र पूज्यो महातरुः ॥७॥

यथा सर्वेषु वर्णेषु विप्रो मुख्यतमो भवेत् ॥

मध्ये सर्वतरूणां च ब्रह्मवृक्षो महोत्तमः ॥८॥

यस्य मूले हरो नित्यं स्कंधे शूलधरःस्वयम् ॥

शाखासु भगवान्रुद्रः पुष्पेषु त्रिपुरांतकः ॥ ९ ॥

शिवः पत्रेषु वसति फले गणपतिस्तथा ॥

गंगापतिस्त्वचायां तु मज्जायां भगवा न्भवः ॥ ६.२४८.१० ॥

ईश्वरस्तु प्रशाखासु सर्वोऽयं हरवल्लभः ॥

हरः कर्पूरधवलो यथावद्वर्णितः सदा ॥ ११ ॥

तथा ह्ययं ब्रह्मरूपः सितवर्णो महाभगः॥

चिंतितो रिपुनाशाय पापसंशोषणाय च ॥ १२ ॥

मनोरथप्रदानाय जायते नात्र संशयः ॥

गुरुवारे समायाते चातुर्मास्ये तथैव च ॥ १३ ॥

पूजितश्च स्तुतो ध्यातः सर्वदुःखविनाशकः ॥ १४ ॥

देवस्तुत्यो देवबीजं परं यन्मूर्तं ब्रह्म ब्रह्मवृक्षत्वमाप्तम् ॥

नित्यं सेव्यः श्रद्धया स्थाणुरूपश्चातुर्मास्ये सेवितः पापहा स्यात्॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्याने पालाशमहिमवर्णनंनामाष्टचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २४९



वाण्युवाच ॥ ॥

तुलसी रोपिता येन गृहस्थेन महाफला ॥

गृहे तस्य न दारिद्र्यं जायते नात्र संशयः ॥ १ ॥

तुलस्या दर्शनादेव पापराशिर्निवर्तते ॥

श्रियेऽमृतकणोत्पन्ना तुलसी हरिवल्लभा ॥ २ ॥

पिबन्त्या रुचिरं पानं प्राणिनां पापहारिणी ॥

यस्या रूपे वसेल्लक्ष्मीः स्कन्धे सागरसंभवा ॥ ३ ॥

पत्रेषु सततं श्रीश्च शाखासु कमला स्वयम् ॥

इन्दिरा पुष्पगा नित्यं फले क्षीराब्धिसंभवा ॥ ४ ॥

तुलसी शुष्ककाष्ठेषु या रूपा विश्वव्यापिनी ॥

मज्जायां पद्मवासा च त्वचासु च हरिप्रिया ॥ ५ ॥

सर्वरूपा च सर्वेशा परमानन्ददायिनी ॥

तुलसी प्राशको मर्त्यो यमलोकं न गच्छति । ६ ।

शिरस्था तुलसी यस्य न याम्यैरनुभूयते ॥

मुखस्था तुलसी यस्य निर्वाणपददायिनी ॥ ७ ॥

हस्तस्थातुलसीयस्य स तापत्रयवर्जितः ॥

तुलसी हृदयस्था च प्राणिनां सर्वकामदा ॥ ८ ॥

स्कन्धस्था तुलसी यस्य स पापैर्न च लिप्यते ॥

कण्ठगा तुलसी यस्य जीवन्मुक्तः सदा हि सः ॥ ९ ॥

तुलसीसंभवं पत्रं सदा वहति यो नरः ॥

मनसा चिन्तितां सिद्धिं संप्राप्नोति न संशयः ॥ ॥ 6.249.१० ॥

तुलसींसर्वकायार्थसाधिनीं दुष्टवारिणीम् ॥

यो नरः प्रत्यहं सिञ्चेन्न स याति यमालयम् ॥ ११ ॥

चातुर्मास्ये विशेषेण वन्दितापि विमुक्तिदा ॥

नारायणं जलगतं ज्ञात्वा वृक्षगतं तथा ॥ १२ ॥

प्राणिनां कृपया लक्ष्मीस्तुलसीवृक्षमाश्रिता ॥

चातुर्मास्ये समायाते तुलसी सेविता यदि ॥ १३ ॥

तेषां पापसहस्राणि यांति नित्यं सहस्रधा ॥

गोविन्दस्मरणं नित्यं तुलसीवनसेवनम् ॥ १४ ॥

तुलसीसेचनं दुग्धै श्चातुर्मास्येऽतिदुर्लभम् ॥

तुलसीं वर्द्धयेद्यस्तु मानवो यदि श्रद्धया ॥ १५ ॥

आलवालांबुदानैश्च पावितं सकलं कुलम् ॥

यथा श्रीस्तुलसीसंस्था नित्यमेव हि वर्द्धते ॥ १६ ॥

तथातथा गृहस्थस्य कामवृद्धिः प्रजायते ॥

ब्रह्मचारीगृहस्थश्च वानप्रस्थो यतिस्तथा ॥ १७ ॥

तथा प्रकृतयः सर्वास्तुलसीसेवने रताः ॥

श्रद्धया यदि जायन्ते न तासां दुःखदो हरिः ॥ १८ ॥

एको हरिः सकलवृक्षगतो विभाति नानारसैस्तु परिभावितमूर्तिरेव ॥

वृक्षाधिवासमगमत्कमला च देवी दुःखादिनाशनकरी सततं स्मृताऽपि ॥ १९ ॥

इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां षष्ठ नाग रखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्याने तुलसीमाहात्म्यवर्णनंनामैकोनपञ्चाशदुत्तर द्विशततमोऽध्यायः ॥२४९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५०

https://sa.wikisource.org/s/fqv

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ वाण्युवाच ॥ ॥

बिल्वपत्रस्य माहात्म्यं कथितुं नैव शक्यते॥

तवोद्देशेन वक्ष्यामि महेन्द्र शृणु तत्त्वतः ॥१॥

विहारश्रममापन्ना देवी गिरिसुता शुभा ॥

ललाटफलके तस्याः स्वेदबिन्दुरजायत ॥२॥

स भवान्या विनिक्षिप्तो भूतले निपपात च ॥

महातरुरयं जातो मन्दरे पर्वतोत्तमे ॥ ३ ॥

ततः शैलसुता तत्र रममाणा ययौ पुनः ॥

दृष्ट्वा वनगतं वृक्षं विस्मयोत्फुल्ललोचना ॥ ४ ॥

जयां च विजयां चैव पप्रच्छ च सखीद्वयम् ॥

कोऽयं महातरुर्दिव्यो विभाति वनमध्यगः ॥

दृश्यते रुचिराकारो महाहर्षकरो ह्ययम् ॥ ५ ॥

॥ जयोवाच ॥ ॥

देवि त्वद्देहसंभूतो वृक्षोऽयं स्वेदबिन्दुजः ॥

नामाऽस्य कुरु वै क्षिप्रं पूजितः पापनाशनः ॥ ६ ॥

॥ पार्वत्युवाच ॥ ॥

यस्मात्क्षोणीतलं भित्त्वा विशिष्टोऽयं महातरुः ॥ ७ ॥

उदतिष्ठत्समीपे मे तस्माद्बिल्वो भवत्वयम् ॥

इमं वृक्षं समासाद्य भक्तितः पत्रसंचयम् ॥ ८ ॥

आहरिष्यत्यसौ राजा भविष्यत्येव भूतले ॥

यः करिष्यति मे पूजां पत्रैः श्रद्धासमन्वितः ॥ ९ ॥

यंयं काममभिध्यायेत्तस्य सिद्धिः प्रजायते ॥

यो दृष्ट्वा बिल्वपत्राणि श्रद्धामपि करिष्यति ॥ ६.२५०.१० ॥

पूजनार्थाय विधये धनदाऽहं न संशयः ॥

पत्राग्रप्राशने यस्तु करिष्यति मनो यदि ॥

तस्य पापसहस्राणि यास्यंति विलयं स्वयम ॥ ११ ॥

शिरः पत्राग्रसंयुक्तं करोति यदि मानवः ॥

न याम्या यातना ह्यस्य दुःखदात्री भविष्यति ॥ १२ ॥

इत्युक्त्वा पार्वती हृष्टा जगाम भवनं स्वकम् ॥

सखीभिः सहिता देवी गणैरपि समन्विता ॥ १३ ॥

॥ वाण्युवाच ॥ ॥

अयं बिल्वतरुः श्रेष्ठः पवित्रः पापनाशनः ॥

तस्य मूले स्थिता देवी गिरिजा नात्र संशयः ॥ १४ ॥

स्कन्धे दाक्षायणी देवी शाखासु च महेश्वरी ॥

पत्रेषु पार्वती देवी फले कात्या यनी स्मृता ॥ १५ ॥

त्वचि गौरी समाख्याता अपर्णा मध्यवल्कले ॥

पुष्पे दुर्गा समाख्याता उमा शाखांगकेषु च ॥ १६ ॥

कण्टकेषु च सर्वेषु कोटयो नवसंख्यया ।

शक्तयः प्राणिरक्षार्थं संस्थिता गिरिजाऽऽज्ञया ॥१७ ॥

तां भजंति सुपत्रैश्च पूजयंति सनातनीम् ॥

यंयं कामयते कामं तस्य सिद्धिर्भवेद्ध्रुवम्॥ १८ ॥

महेश्वरी सा गिरिजा महेश्वरी विशुद्धरूपा जनमोक्षदात्री॥

हरं च दृष्ट्वाथ पलाशमाश्रितं स्वलीलया बिल्ववपुश्चकार सा ॥ १९ ॥

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां सहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातु र्मास्यमाहात्म्ये पैजवनोपाख्याने बिल्वोत्पत्तिवर्णनंनाम पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥२५०॥।

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५१

https://sa.wikisource.org/s/fqw


॥ गालव उवाच ॥ ॥

इत्युक्त्वाऽऽकाशजावाणी विरराम शुभप्रदा ॥

तेऽपि देवास्तदाश्चर्यं महद्दृष्ट्वा महाव्रताः ॥ १ ॥

चतुष्टयं च वृक्षाणां चातुर्मास्ये समागते ॥

अपूजयंश्च विधिवदैक्यभावेन शूद्रज ॥ २ ॥

चातुर्मास्येऽथ संपूर्णे देवो हरिहरात्मकः ॥

प्रसन्नस्तानुवाचाथ भक्त्या प्रत्यक्षरूपधृक् ॥ ३ ॥

यूयं गच्छत देवेश महा व्रतपरायणाः ॥

भुंक्त स्वान्स्वांश्चाधिकारान्मया ते दानवा हताः ॥ ४ ॥

इत्युक्त्वा देवदेवेशावैक्यरूपधरौ यदा ॥

गणानां देवतानां च बुद्धिं निर्भेदतां तदा ॥ ५ ॥

नयन्तौ तौ तदा चेशा बभूवतुररिन्दमौ॥

तेऽपि देवा निराबाधा हृष्टचित्ता ह्यभेदतः ॥ ६ ॥

प्रययुः स्वांश्चाधिकारान्विमानगण कोटिभिः ॥

॥ गालव उवाच ॥ ॥

तथा तत्रापि ते देवाः पार्वत्याः शापमोहिताः ॥ ७ ॥

स्तुत्वा तां बिल्वपत्रैश्च पूजयित्वा महेश्वरीम् ॥

प्रसन्नवदनां स्तुत्वा प्रणिपत्य पुनःपुनः ॥ ८ ॥

सा प्रोवाच ततो देवान्विश्वमाता तु संस्तुता ॥

मम शापो वृथा नैव भविष्यति सुरोत्तमाः ॥ ९ ॥

तथापि कृतपापानां करवाणि कृपां च वः ॥

स्वर्गे दृषन्मया नैव भविष्यथ सुरोत्तमाः ॥ ६.२५१.१० ॥

मर्त्यलोकं च संप्राप्य प्रतिमासु च सर्वशः ॥

सर्वे देवाश्च वरदा लोकानां प्रभविष्यथ ॥ ११ ॥

पाणिग्रहेण विहिता ये कुमाराः कुमारिकाः ॥

तेषांतेषां प्रजाश्चैव भविष्यथ न संशयः ॥ १२ ॥

इत्युक्त्वा सा भगवती देवतानां वरप्रदा ॥

विष्णुं महेश्वरं चैव प्रोवाच कुपिता भृशम् ॥ १३ ॥

देवास्तस्या भयान्नष्टा मर्त्येषु प्रतिमां गताः ॥

भक्तानां मानसं भावं पूरयन्तः सुसंस्थिताः ।। १४ ॥

यस्माद्विष्णो महेशानस्त्वयाऽपि न निषेधितः ॥

तस्मात्त्वमपि पाषाणो भविष्यसि न संशयः ॥ १५ ॥

हरोऽप्यश्ममयं रूपं प्राप्य लोकविगर्हितम् ॥

लिंगाकारं विप्रशापान्महद्दुःखमवाप्स्यति ॥ १६ ॥

तच्छ्रुत्वा भगवान्विष्णुः पार्वतीमनुकूलयन् ॥

उवाच प्रणतो भूत्वा हरभार्यां महेश्वरीम् ॥ १७ ॥

॥ श्रीविष्णुरुवाच ॥ ॥

महाव्रते महादेवि महादेवप्रिया सदा ॥

त्वं हि सत्त्वरजःस्था च तामसी शक्तिरुत्तमा ॥ १८ ॥

मात्रात्रयसमोपेता गुणत्रयविभाविनी ॥

मायादीनां जनित्री त्वं विश्वव्यापकरूपिणी ॥ १९ ॥

वेदत्रयस्तुता त्वं च साध्यारूपेण रागिणी ॥

अरूपा सर्वरूपा त्वं जनसन्तानदायिनी ॥ ६.२५१.२० ॥

फलवेला महाकाली महालक्ष्मीः सरस्वती ॥

ओंकारश्च वषट्कारस्त्वमेव हि सुरेश्वरि ॥ २१ ॥

भूतधात्रि नमस्तेऽस्तु शिवायै च नमोऽस्तु ते ॥

रागिण्यै च विरागिण्यै विकराले नमः शुभे ॥ २२ ॥

एवं स्तुता प्रसन्नाक्षी प्रसन्नेनांतरात्मना ॥

उवाच परमोदारं मिथ्यारोषयुतं वचः ॥ २३ ॥

मच्छापो नाऽन्यथा भावी जनार्दन तवाप्ययम् ॥

तत्राऽपि संस्थितस्त्वं हि योगीश्वरविमुक्तिदः ॥ २४ ॥

कामप्रदश्च भक्तानां चातुर्मास्ये विशेषतः ॥

निम्नगा गंडकीनाम ब्रह्मणो दयिता सुता ॥ २५ ॥

पाषाणसारसंभूता पुण्यदात्री महाजला ॥
तस्याः सुविमले नीरे तव वासो भविष्यति ॥ २६ ॥
चतुर्विंशतिभेदेन पुराणज्ञैर्निरीक्षितः ।
मुखे जांबूनदं चैव शालग्रामः प्रकीर्तितः ॥ २७ ॥
वर्त्तुलस्तेजसः पिंडः श्रिया युक्तो भविष्यसि ॥
सर्वसामर्थ्यसंयुक्तो योगिनामपि मोक्षदः ॥ २८ ॥
ये त्वां शिलागतं विष्णुं पूजयिष्यंति मानवाः ॥
तेषां सुचिन्तितां सिद्धिं भक्तानां संप्रयच्छसि ॥ २९ ॥
शिलागतं च देवेशं तुलस्या भक्ति तत्पराः ॥
पूजयिष्यंति मनुजास्तेषां मुक्तिर्न दूरतः ॥ ६.२५१.३० ॥
शिलास्थितं च यः पश्येत्वां विष्णुं प्रतिमागतम् ॥
सुचक्रांकितसर्वांगं न स गच्छेद्यमालयम् ॥ ३१ ॥
॥ गालव उवाच ॥ ॥
इति ते कथितं सर्वं शालग्रामस्य कारणम् ॥
यथा स भगवान्विष्णुः पाषाणत्वमुपा गतः ॥ ३२ ॥
गोविन्दोऽपि महाशापं लब्ध्वा स्वभवनं गतः ॥
पार्वती च महेशानं कुपिता प्रणमय्य च ॥ ३३ ।
एवं स एव भगवान्भवभूत भव्यभूतादिकृत्सकलसंस्थितिनाशनांकः ॥
सोऽपि श्रिया सह भवोऽपि गिरीशपुत्र्या सार्द्धं चतुर्षु च द्रुमेषु निवासमाप ॥ ३४ ॥
इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैज वनोपाख्याने विष्णुशापोनामैकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५२

https://sa.wikisource.org/s/fi1
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ शूद्र उवाच ॥ ॥

महदाश्चर्यमेतद्धि यत्सुरा वृक्षरूपिणः ॥

चातुर्मास्ये समायाते सर्ववृक्षनिवासिनः ॥ १ ॥

भगवन्के सुरास्ते तु केषुकेषु निवासिनः ॥

एतद्विस्तरतो ब्रूहि ममानुग्रहकाम्यया ॥ २ ॥

॥ गालव उवाच ॥ ॥

अमृतं जलमित्याहुश्चातुर्मास्ये तदिच्छया ॥

लीलया विधृतं देवैः पिबंति द्रुमदेवताः ॥ ३ ॥

तस्य पानान्महातृप्तिर्जायते नाऽत्र संशयः ॥

बलं तेजश्च कांतिश्च सौष्ठवं लघुविक्रमः ॥ ४ ॥

गुणा एते प्रजायन्ते पानात्कृष्णांशसंभवात् ॥

नित्यामृतस्यपानेन बलं स्वल्पं प्रजायते ॥ ५ ॥

भोजनं तत्प्रशंसंति नित्यमेतन्न संशयः ॥

तस्माच्चतुर्षु मासेषु पिबन्ति जलमेव हि ॥ ६॥

वृक्षस्थाः पितरो देवाः प्राणिनां हित काम्यया ॥

वृक्षाणां सेवनं श्रेष्ठं सर्वमासेषु सर्वदा ॥ ७ ॥

चातुर्मास्ये विशेषेण सेविताः सौख्यकारकाः ॥

तिलोदकेन वृक्षाणां सेचनं सर्वकाम दम् ॥ ८ ॥

क्षीरवृक्षाः क्षीरयुक्तैस्तोयैः सिक्ताः शुभप्रदाः ॥

चतुष्टयं च वृक्षाणां यच्चोक्तं पूर्वतो मया ॥ ९ ॥

चातुर्मास्ये विशेषेण सर्वकाम फलप्रदम् ॥

ब्रह्मा तु वटमाश्रित्य प्राणिनां स वरप्रदः ॥ 6.252.१० ॥

सावित्रीं तिलमास्थाय पवित्रं श्वेतभूषणम् ॥

सुप्ते देवे विशेषेण तिलसेवा महाफला ॥ ११ ॥

तिलाः पवित्रमतुलं तिला धर्मार्थसाधकाः ॥

तिला मोक्षप्रदाश्चैव तिलाः पापापहारिणः ॥ १२ ॥
तिला विशेषफलदास्तिलाः शत्रुविनाशनाः ।
तिलाः सर्वेषु पुण्येषु प्रथमं समुदाहृताः ॥ १३ ॥
न तिला धान्यमित्याहुर्देवधान्यमिति स्मृतम् ॥
तस्मात्सर्वेषु दानेषु तिल दानं महोत्तमम् ॥ १४ ॥
कनकेन युता येन तिलादत्तास्तु शूद्रज ॥
ब्रह्महत्यादिपापानां विनाशस्तेन वै कृतः ॥ १५ ॥
सावित्री च तिलाः प्रोक्ता सर्वकार्यार्थसाधकाः ॥
तिलैस्तु तर्पणं कुर्याच्चातुर्मास्ये विशेषतः ॥ १६ ॥
तिलानां दर्शनं पुण्यं स्पर्शनं सेवनं तथा ॥
हवनं भक्षणं चैव शरीरोद्वर्त्तनं तथा ॥ १७ ॥
सर्वथा तिलवृक्षोऽयं दर्शनादेव पापहा ॥
चातुर्मास्ये विशेषेण सेवितः सर्वसौख्यदः ॥ १८ ॥
महेन्द्रो यवमा स्थाय स्थितो भूतहिते रतः ॥
यवस्य सेवनं पुण्यं दर्शनं स्पर्शनं तथा ॥ १९ ॥
यवैस्तु तर्पणं कुर्याद्देवानां दत्तमक्षयम् ॥
प्रजानां पतयः सर्वे चूतवृक्षमुपाश्रिताः ॥ 6.252.२० ॥
गन्धर्वा मलयं वृक्षमगुरुं गणनायकः ॥
समुद्रा वेतसं वृक्षं यक्षा पुन्नागमेव च ॥ २१ ॥
नागवृक्षं तथा नागाः सिद्धाः कंकोलकं द्रुमम् ॥
गुह्यकाः पनसं चैव किन्नरा मरिचं श्रिताः ॥ २२ ॥
यष्टीमधु समाश्रित्य कन्दर्पोऽभूद्व्यवस्थितः ॥
रक्तांजनं महावृक्षं वह्निराश्रित्य तिष्ठति ॥ २३ ॥
यमो विभीतकं चैव बकुलं नैर्ऋताधिपः ॥
वरुणः खर्जुरीवृक्षं पूगवृक्षं च मारुतः ॥ २४ ॥
धनदोऽक्षोटकं वृक्षं रुद्राश्च बदरीद्रुमम्॥
सप्तर्षीणां महाताला बहुलश्चामरैर्वृतः ॥ २५ ॥
जंबूर्मेघैः परिवृतः कृष्णवर्णोऽघनाशनः ॥

कृष्णस्य सदृशो वर्णस्तेन जंबू नगोत्तमः ॥ २६ ॥

तत्फलैर्वासुदेवस्तु प्रीतो भवति दानतः ॥

जंबूवृक्षं समाश्रित्य कुर्वंति द्विजभोजनम् ॥ २७ ॥

तेषां प्रीतो हरिर्दद्यात्पु रुषार्थचतुष्टयम्॥

चातुर्मास्ये समायाते सुप्ते देवे जनार्दने ॥ २८ ॥

ब्राह्मणान्भोजयेद्यस्तु सपत्नीकाञ्छुचिः स्थितः ॥

तेन नारायणस्तुष्टो भवे ल्लक्ष्मीसहायवान् ॥ २९ ॥

लक्ष्मीनारायणप्रीत्यै वस्त्रालंकरणैः शुभैः॥

परिधाय सपत्नीकः कृतकृत्यो भवेन्नरः ॥ 6.252.३० ॥

यद्रात्रित्रितयेनैव वटा शोकभवेन च ॥

फलं संजायते तच्च जंबुना द्विजभोजनात् ॥ ३१ ॥

तस्मिन्दिने एकभुक्तं कारयेत्कृत्यकृत्तदा ॥

बहुना च किमुक्तेन जंबूवृक्ष प्रपूजनात् ॥ ३२ ॥

पुत्रपौत्रधनैर्युक्तो जायते नात्र संशयः ॥

जंबूर्मेघैः परिवृता विद्युताऽशोक एव च ॥ ३३ ॥

वसुभिः स्वीकृतो नित्यं प्रिया लश्च महानगः ॥

आदित्यैस्तु जपावृक्षो ह्यश्विभ्यां मदनस्तथा ॥ ३४ ॥

विश्वेभिश्च मधूकश्च गुग्गुलः पिशिताशनैः ॥

सूर्येणार्कः पवित्रेण सोमे नाथ त्रिपत्रकः ॥ ३५ ॥

खदिरो भूमिपुत्रेण अपामार्गो बुधेन च ॥

अश्वत्थो गुरुणा चैव शुक्रेणोदुम्बरस्तथा ॥ ३६ ॥

शमी शनैश्चरेणाथ स्वीकृता शूद्रजातिभिः॥

राहुणा स्वीकृता दूर्वा पितॄणां तर्पणोचिता॥३७॥

विष्णोश्च दयिता नित्यं चातुर्मास्ये विशेषतः॥

केतुना स्वीकृतो दर्भो याज्ञिकेयो महाफलः॥३८॥

विना येन शुभं कर्म संपूर्णं नैव जायते॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्॥३९॥

मुमूर्षूणां मोक्षरूपो धरासंस्थो महाद्रुमः ॥

अस्मिन्वसंति सततं ब्रह्मविष्णुशिवाः सदा ॥ 6.252.४० ॥

मूले मध्ये तथाऽग्रे च यस्य नामापि तृप्ति दम् ॥

अन्येऽपि देवा वृक्षांस्तानधिश्रित्य महाद्रुमाः ॥ ४१ ॥

प्रवर्त्तंते हि मासेषु चतुर्षु च न संशयः ॥

चातुर्मास्ये देवपत्न्यः सर्वा वल्लीसमाश्रि ताः ॥ ४२ ॥

प्रयच्छंति नृणां कामान्वांछितान्सेविता अपि ॥

तस्मात्सर्वात्मभावेन पिप्पलो येन सेवितः ॥ ४३ ॥

सेविताः सकला वृक्षा श्चातुर्मास्ये विशेषतः ॥

तुलसी सेविता येन सर्ववल्यश्च सेविताः ॥ ४४ ॥

आप्यायितं जगत्सर्वमाब्रह्मस्तंबसेवितम् ॥

चातुर्मास्ये गृह स्थेन वानप्रस्थेन वा पुनः ॥ ४५॥

ब्रह्मचारियतिभ्यां च सेविता मोक्षदायिनी ॥

एतेषां सर्ववृक्षाणां छेदनं नैव कारयेत् ॥ ४६ ॥

चातुर्मास्ये विशेषेण विना यज्ञादिकारणम्॥

एतदुक्तमशेषेण यत्पृष्टोऽहमिह त्वया ॥ ४७ ॥

यथा वृक्षत्वमापन्ना देवाः सर्वेऽपि शूद्रज ॥ ४८ ॥

अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दश तित्तिडीश्च ॥

कपित्थबिल्वामलकीत्रयं च एतांश्च दृष्ट्वा नरकं न पश्येत् ॥ ४९ ॥

सर्वे देवा विश्ववृक्षेशयाश्च कृष्णा धारा कृष्णमध्याग्रकाश्च ॥

यस्मिन्देवे सेविते विश्वपूज्ये सर्वं तृप्तं जायते विश्वमेतत् ॥6.252.५० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठेनागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये वृक्षमाहात्म्यकथनं नाम द्विपञ्चाशदुत्तरद्विशततमो ऽध्यायः ॥ २५२ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५३



॥ शूद्र उवाच ॥ ॥

पार्वतीकुपिता देवी कथं देवेन शूलिना ॥

प्रसादं च गता शस्वा यत्कोपात्क्षुभ्यते जगत् ॥ १ ॥

कथं स भगवान्रुद्रो भार्याशापमवाप ह ॥

वैकृतं रूपमासाद्य पुनर्दिव्यं वपुः श्रितः ॥ २ ॥

॥ गालव उवाच ॥ ॥

देवा रूपाण्यदृश्यानि कृत्वा देव्या महाभयात्॥

मनुष्यलोके सकले प्रतिमासु च संस्थिताः ॥ ३ ॥

तेषामपि प्रसन्ना साऽनुग्रहं समुपाकरोत् ॥

विष्णुस्तुता महाभागा विश्वमाताऽघनाशिनी ॥ ४ [।

तेषां बलाच्च पार्वत्याः शापभारेण यन्त्रितः ॥

तां नित्यमेवानुनयन्नृचे सोवाच शंकरम् ॥ ५ ॥

एते देवा विश्व पूज्या विश्वस्य च वरप्रदाः ॥

मत्प्रसादाद्भविष्यंति भक्तितस्तोषिता नरैः ॥ ६ ॥

त्वामृते मम कर्मेदं कृतं साधुविनिन्दितम् ॥

वेद्यां विवाह काले च प्रत्यक्षं सर्वसाक्षिकम् ॥ ७ ॥

यत्सप्तमंडलानां च गमनं च करार्पणम् ॥

वह्निश्च वरुणः कृष्णो देवताश्च सवल्लभाः ॥ ८ ॥

चतुर्दिक्ष्वंग संयुक्ता देवब्राह्मणसंयुताः ॥

एतेषामग्रतो दिब्यं कृत्वा त्वं जनसंसदि ॥ ९ ॥

प्रमादात्सत्त्वमापन्नो व्यभिचारं कथं कृथाः ॥

गुरुवोऽपि न सन्मार्गे प्रवर्त्तते जनौघवत् ॥ ६.२५३.१० ॥

निग्राह्याः सर्वलोकेषु प्रबुद्धैः श्रूयते श्रुतौ ॥

पुत्रेणापि पिता शास्यः शिष्येणापि गुरुः स्वयम् ॥ ११ ॥

क्षत्रियैर्ब्राह्मणः शास्यो भार्यया च पतिस्तथा ॥

उन्मार्गगामिनं श्रेष्ठमपि वेदान्तपारगम् ॥ १२ ॥

नीचैरपि प्रशास्येत श्रुतिराह सनातनी ॥

सन्मार्ग एव सर्वत्र पूज्यते नापथः क्वचित् ॥ १३ ॥

येन स्वकुलजो धर्मस्त्यक्तः स पतितो भवेत् ॥

मृतश्च नरकं प्राप्य दुःखभारेण युज्यते ॥ ॥ १४ ॥

धर्मं त्यजति नास्तिक्याज्ज्ञातिभेदमुपागतः ॥

स निग्राह्यः सर्वलोकैर्मनुधर्मपरायणैः ॥ १५ ॥

कुलधर्माञ्ज्ञातिधर्मान्देशधर्मान्महेश्वर ॥

ये त्यजंति च तेऽवश्यं कुलाच्च पतिता जनाः ॥ १६ ॥

अग्नित्यागो व्रतत्यागो वचनत्याग एव च ॥

धर्मत्यागो नैव कार्यः कुर्वन्पतित एव हि ॥ ॥ १७ ॥

न पिता न च ते माता न भ्राता स्वजनोऽपि च ॥

पश्यते तव वार्तां च अस्पृश्यस्त्वमदन्विषम् ॥ १८ ॥

अस्थिमालाचिताभस्म जटाधारी कुचैलवान् ॥

चपलो मुक्तमर्यादस्तस्थुं नार्हसि मेऽग्रतः ॥ १९ ॥

अब्रह्मण्योऽव्रती भिक्षुर्दुष्टात्मा कपटी सदा ॥

नार्हसि त्वं मम पुरः संभाषयितुमीश्वर ॥ ६.२५३.२० ॥

एवं सा रुदती देवी बाष्पव्याकुललोचना ॥

महादुःखयुतैवासीद्देवेशेऽनुनयत्यपि ॥ २१ ॥

पुनरेव प्रकुपिता हरं प्रोवाच भामिनी ॥

तवार्जवं न हृदये काठिन्यं वेद्मि नित्यदा ॥ २२ ॥

ब्राह्मणैस्त्वासुरैरुक्तं तन्मृषा प्रतिभाति मे ॥

यस्मान्मयि महादुष्टभाव एव कृतस्त्वया ॥ २३ ॥

ब्राह्मणा वंचिता यस्माद्ब्राह्मणैस्त्वं हनिष्यसे ॥

एवमुक्त्वा भगवती पुनराह न किञ्चन ॥ २४ ॥

ईशः प्रसन्नवदनामुपचारैरथाकरोत् ॥

शनैर्नीतिमयैर्वाक्यैर्हेतुमद्भिर्महेश्वरः ॥ २५ ॥

प्रसन्नलोचनां ज्ञात्वा किंचित्प्राह हरस्ततः ॥

कोपेन कलुषं वक्त्रं पूर्णचन्द्र समप्रभम् ॥ २६ ॥

कस्मात्त्वं कुरुषे भद्रे युक्तमेव वचो न ते ॥

सर्वभूतदया कार्या प्राणिनां हि हितेच्छया ॥ २७ ॥

यद्यपीष्टो हि यस्यार्थो न कार्यं परपीडनम् ॥

जगत्सर्वं सुतप्रायं तवास्ति वरवर्णिनि ॥ २८ ॥

जगत्पूज्या त्वमेवैका सर्वरूपधरानघे ॥

मया यदि कृतं कर्मावद्यं देव हिताय वै ॥ २९ ॥

तथाप्येवं तव सुतो भविष्यति न संशयः ॥

अथवा मम सर्वेभ्यः प्राणेभ्योऽपि गरीयसी ॥ ६.२५३.३० ॥

यदिच्छसि तथा कुर्यां तथा तव मनोरथान्॥

प्रसन्नवदना भूत्वा कथयस्व वरानने ॥ ३१ ॥

इत्युक्ता सा भगवती पुनराह महेश्वरम् ॥

चातुर्मास्ये च संप्राप्ते महाव्रत धरो यदि ॥ ३२ ॥

देवतानां च प्रत्यक्षं तांडवं नर्तसे यदि ॥

पारयित्वा व्रतं सम्यग्ब्रह्मचर्यं महेश्वर ॥ ३३ [।

मत्प्रीत्यै यदि देहार्धं वैष्णवं च प्रयच्छसि ॥

शापस्यानुग्रहं कुर्यां प्रसववदना सती ॥ ३४ ॥

नान्यथा मम चित्तं त्वां विश्वासमनुगच्छति ॥

तच्छ्रुत्वा भगवांस्तुष्टस्तथेति प्रत्युवाच ताम् ॥ ३५ ॥

सापि हृष्टा भगवती शापस्यानुग्रहे वृता ॥ ३६ ॥

इदं पुराणं मनुजः शृणोति श्रद्धायुक्तो भेदबुद्ध्या दृढत्वम् ॥

तस्या वश्यं जीवितं सर्वसिद्धं मर्त्याः सत्यात्तच्छ्रयत्वं प्रयांति ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये शंकरकृतपार्वत्यनुनयो नाम त्रिपंचाशदुत्तरद्विशततमोऽध्यायः ॥ ॥ २५३ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५४



शूद्र उवाच ॥ ॥

इदमाश्चर्यरूपं मे प्रतिभाति वचस्तव ॥

यद्यपि स्यान्महाक्लेशो वदतस्तव सुव्रत ॥ १ ॥

तथापि मम भाग्येन मत्पुण्यैर्मद्गृहं गतः ॥

न तृप्ये त्वन्मुखांभोजाच्च्युतं वाक्यामृतं पुनः ॥ २ ॥

पिबन्गौरीकथाख्यानं विशेषगुणपूरितम् ॥

कथं महेश्वरो नृत्यं चकार सुरसंवृतः ॥ ३ ॥

चातुर्मास्ये कथं जातं कि ग्राह्यं व्रतमुच्यते ॥

अनुग्रहं कृतवती सा कथं को ह्यनुग्रहः ॥ ४ ॥

एतद्विस्तरतो ब्रूहि पृच्छतो मे द्विजोत्तम ॥

भगवान्पूज्यते लोके ममानुग्रहकारकः ॥ ५ ॥

प्रसन्नवदनो भूत्वा स्वस्थः कथय सुव्रत ॥

गालवश्चापि तच्छ्रुत्वा पुनराह प्रहृष्टवान् ॥ ६ ॥

॥ गालव उवाच ॥ ॥

इतिहासमिमं पुण्यं कथयामि तवानघ ॥

शृणुष्वावहितो भूत्वा यज्ञायुतफलप्रदम्॥ ७ ॥

चातुर्मास्येऽथ संप्राप्ते हरो भक्तिसमन्वितः ॥

ब्रह्मचर्यव्रतपरः प्रहृष्टवदनोऽभवत् ॥ ८ ॥

देवतानां च संकल्पं महर्षीणां चकार ह ॥

समागत्य ततो देवा मन्दराचलमास्थिताः ॥ ९ ॥

प्रणम्य ते महेशानं तस्थुः प्रांजलयोऽग्रतः ॥

तानुवाच सुरान्सर्वान्हरो दृष्ट्वा समागतान्॥६.२५४.१० ॥

पार्वत्याभिहितं प्राह कस्मिन्कार्यांतरे सति ॥

मया नियुक्तेऽभिनये यत्र साहाय्यकारिणः ॥ ११ ॥

भवंत्विंद्रपुरोगाश्च चातुर्मास्ये समागते ॥

ते तथोचुश्च संहृष्टा नमस्कृत्य च शूलिनम् ॥ १२ ॥

स्वंस्वं भवनमाजग्मुर्विमानैः सूर्यसन्निभैः ॥

तथाऽऽषाढे शुक्लपक्षे चतुर्दश्यां महेश्वरः ॥ १३ ॥

प्रनर्त्तयितुमारेभे भवानीतोषणाय च ॥

मंदरे पर्वतश्रेष्ठे तत्र जग्मुर्महर्षयः ॥ १४ ॥

नारदो देवलो व्यासः शुकद्वैपायनादयः ॥

अंगिराश्च मरीचिश्च कर्दमश्च प्रजापतिः ॥ १५ ॥

कश्यपो गौतमश्चात्रिर्वसिष्ठो भृगुरेव च ॥

जमदग्निस्तथोत्तंको रामो भार्गव एव च ॥ १६ ॥

अगस्त्यश्च पुलोमा च पुलस्त्यः पुलहस्तथा ॥

प्रचेताश्च क्रतुश्चैव तथैवान्ये महर्षयः ॥ १७ ॥

सिद्धा यक्षाः पिशाचाश्च चारणाश्चारणैः सह ॥

आदित्या गुह्यकाश्चैव सा ध्याश्च वसवोऽश्विनौ ॥ १८ ॥

एते सर्वे तथेन्द्राद्या ब्रह्मविष्णुपुरोगमाः ॥

समाजग्मुर्महेशस्य नृत्यदर्शनलालसाः ॥ १९ ॥

ततो गणा नंदिमुखा रत्नानि प्रददुस्तथा ॥

भूषणानि च वासांसि मुन्यादिभ्यो यथाक्रमम् ॥ ६.२५४.२० ॥

ततो वाद्यसहस्रेषु वादित्रेषु समंततः ॥

सर्वैर्जयेति चैवोक्ता भगवा न्व्रतमादिशत्॥ २१ ॥

भवानी हृष्टहृदया महादेवं व्यलोकयत् ॥

जया च विजया चैव जयन्ती मंगलारुणा ॥ २२ ॥

चतुष्टयसखीमध्ये विर राज शुभानना ॥

तस्याः सान्निध्ययोगेन जगद्भाति गुणोत्तरम् ॥ २३ ॥

यस्याः शरीरजा शोभा वर्णितुं नैव शक्यते ॥

ईशोऽपि गणकोटीभिर्ना नावक्त्राभिरीक्षितः ॥ २४ ॥

पिशाचभूतसंघैश्च वृतः परमशोभनः ॥

स्वर्णवेत्रधरो नन्दी बभौ कपिमुखोऽग्रतः ॥ २५ ॥

विद्याधराश्च गंधर्वाश्चि त्रसेनादयस्तथा ॥

चित्रन्यस्ता इव बभुस्तत्र नागा मुनीश्वराः ॥ २६ ॥

श्रीरागप्रमुखा रागास्तस्य पुत्रा महौजसः ॥

अमूर्ताश्चैव ते पुत्रा हरदेव समुद्भवाः ॥ २७ ॥

एकैकस्य च षड्भार्याः सर्वासां च पितामहः ॥

ताभिः सहैव ते रागा लीलावपुर्धरास्तथा ॥ २८ ॥

प्रादुर्बभूवुः सहसा चिंतितास्तेन शंभुना ॥

तेषां नामानि ते वच्मि शृणुष्व त्वं महाधन ॥ २९ ॥

श्रीरागः प्रथमः पुत्र ईश्वरस्य विमोहनः ॥

आसां चक्रे भ्रुवोर्मध्ये परब्रह्म प्रदायकः ॥ ६.२५४.३० ॥

तन्मध्यश्चैव माहेशात्समुद्भूतो गणोत्तमः ॥

द्वितीयोऽथ वसन्तोऽभूत्कटिदेशान्महायशाः ॥ ३१ ॥

महदंकश्च भूतानां चक्राच्चैव विशुद्धितः ॥

पंचमस्तु तृतीयोऽभूत्सुतो विश्वविभूषणः ॥ ३२ ॥

महेश्वरहृदो जातं चक्रं चैवमनाहतम् ॥

नासादेशात्समुद्भूतो भैरवो भैरवः स्वयम्॥ ॥ ३३ ॥

मणिपूरकनामेदं चक्रं तद्धि विमुक्तिदम् ॥

पंचाशच्च तथा वर्णा अंका नाम महेश्वरात् ॥ ३४ ॥

राशयो द्वादश तथा नक्षत्राणि तथैव च ॥

स्वाधिष्ठानसमुद्भूता जगद्बीजसमन्विताः ॥ ३५ ॥

क्षणेन वृद्धिमायांति ततो रेतः प्रवर्तते ॥

रेतसस्तु जगत्सृष्टं तदीशजननेंद्रियम् ॥ ३६ ॥

आधाराच्च महान्षष्ठो नटो नारायणोऽभवत् ॥

महेशवल्लभः पुत्रो नीलो विष्णुपराक्रमः ॥ ३७ ॥

एते मूर्तिधरा रागा जाता भार्यासहायिनः ॥

भार्यास्तेषां समुद्भूताः शिरोभागात्पिनाकिनः ॥ ३८ ॥

षट्त्रिंशत्परिमाणेन ततस्तास्त्वं निशामय ॥

गौरी कोलाहली धीरा द्राविडी माल कौशिकी ॥ ३९ ॥

षष्ठी स्याद्देवगांधारी श्रीरागत्य प्रिया इमाः ॥

आन्दोला कौशिकी चैव तथा चरममंजरी ॥ ६.२५४.४० ॥

गंडगिरी देवशाखा राम गिरी वसन्तगा ॥

त्रिगुणा स्तम्भतीर्था च अहिरी कुंकुमा तथा ॥ ४१ ॥

वैराटी सामवेरी च षड्भार्याः पंचमे मताः॥

भैरवी गुर्जरी चैव भाषा वेलागुली तथा ॥ ४२ ॥

कर्णाटकी रक्तहंसा षड्भार्या भैरवानुगाः ॥

बंगाली मधुरा चैव कामोदा चाक्षिनारिका ॥ ४३ ॥

देवगिरी च देवाली मेघ रागानुगा इमा ॥

त्रोटकी मीडकी चैव नरादुम्बी तथैव च ॥ ४४ ॥

मल्हारी सिन्धुमल्हारी नटनारायणानुगाः ॥

एता हि गिरिशं नत्वा महेशं च महेश्वरीम् ॥ ४५ ॥

स्वमूर्त्तिवाहनोपेताः स्वभर्तृसहिताः स्थिताः ॥

ब्रह्मा मृदंगवाद्येन तोषयामास शंकरम् ॥ ४६ ॥

चतुरक्षरवाद्येन सुवाद्यं चाकरोत्पुनः ॥

तालक्रियां महेशाय दर्शयामास केशवः ॥ ४७ ॥

वायवस्तत्र वाद्यं च चक्रुः सुस्वरमोजसा ॥

महेन्द्रो वंशवाद्यं च सुगिरं सुस्वरं बहुः ॥ ४८ ॥

वह्निः शूर्परवं चक्रे पणवं च तथाश्विनौ ॥

उपांगवादनं चक्रे सोमः सूर्यः समंततः ॥ ४९ ॥

घंटानां वादनं चक्रुर्गणाः शतसहस्रशः ॥

मुनीश्वरास्तथा देव्यः पार्वतीसहितास्तथा ॥ ६.२५४.५० ॥

स्वर्णभद्रासनेष्वेते ह्युपविष्टा व्यलोकयन् ॥

शृंगाणां वादनं चक्रुर्वसवः समहोरगाः ॥ ॥ ५१ ॥

भेरीध्वनिं तथा साध्या वाद्यान्यन्ये सुरोत्तमाः ॥

झर्झरीगोमुखादीनि साध्याश्चक्रुर्महोत्सवे ॥ ५२ ॥

तन्त्रीलयसमायुक्ता गंधर्वा मधुर स्वराः ॥

सुवर्णशृंगनादं च चक्रुः सिद्धाः समंततः ॥ ५३ ॥

ततस्तु भगवानासीन्महानटवपुर्धरः ॥

मुकुटाः पंचशीर्षे तु पन्नगैरुपशोभिताः ॥ ॥ ५४ ॥

जटा विमुच्य सकला भस्मोद्धूलितविग्रहः ॥

बाहुभिर्दशभिर्युक्तो हारकेयूरसंयुतः ॥ ५५ ॥

त्रैलोक्यव्यापकं रूपं सूर्यकोटिसमप्रभम् ॥

कृत्वा ननर्त्त भगवान्भासुरं स महानगे ॥ ५६ ॥

ततं वीणादिकं वाद्यं कांस्यतालादिकं घनम् ॥

वंशादिकं तु वादित्रं तोमरादिकनामकम् ॥ ५७॥

चतुर्विधं ततो वाद्यं तुमुलं समजायत ॥

तालानां पटहादीनां हस्तकानां तथैव च ॥ ५८ ॥

मानानां चैव तानानां प्रत्यक्षं रूपमाबभौ ॥

सुकंठं सुस्वरं मुक्तं सुगम्भीरं महास्वनम्॥ ५९ ॥

विश्वावसुर्नारदश्च तुंबुरुश्चैव गायकाः ॥

जगुर्गंधर्वपतयोऽप्सरसो मधुरस्वराः ॥ ६.२५४.६० ॥

ग्रामत्रयसमोपेतं स्वरसप्तकसंयुतम् ॥

दिव्यं शुद्धं च सांकल्पं तत्र गेयमवर्त्तत ॥ ६१ ॥

पर्वतोऽपि महानादं हरपादतलाहतः ॥

भ्रमिभिर्भ्रमयंस्तत्र महीं सपुरकाननाम्॥ ६२ ॥

हस्तकांश्चतुराशीतिं स ससर्ज सदाशिवः ॥

ललाटफलकस्वेदात्सूतमागधबंदिनः ॥६३॥

महेशहृदयाज्जाता गंधर्वा विश्वगायकाः ॥

ते मूर्त्ता देवदेवस्य सुरंगालयसंयुताः ॥ ६४ ॥

प्रेक्षकाणामृषीणां च चक्रुराश्चर्यमोजसा ॥

किन्नराः पुष्पवर्षाणि ससृजुः स्वैर्गुणैरिह ॥ ६५ ॥

एवं चतुर्षुमासेषु यदा नृत्यमजायत ॥

अतिक्रांता शरज्जाता निर्मलाकाशशोभिता ॥ ६६ ॥ पद्मखंडसमाच्छन्नसरोवरमुखांबुजा ॥

फलवृक्षौषधीभिश्च किंचित्पांडुमुखच्छविः ॥ ६७ ॥

ऊर्जशुक्लचतुर्दश्यां प्रसन्ना गिरिजा तदा ॥

समाप्तव्रतचर्यः स ईश्वरोऽपि तदा बभौ ॥ ६८ ॥

सा चोवाच तदा शंभुं विकचस्वरलोचना ॥
विप्रशापपातितं च यदा लिंगं भविष्यति ॥ ६९ ॥
नर्मदाजलसंभूतं विश्वपूज्यं भविष्यति ॥
एवमुक्त्वा ततस्तुष्टा हरस्तोत्रं चकार ह ॥ ६.२५४.७० ॥
नमस्ते देवदेवाय महादेवाय मौलिने ॥
जगद्धात्रे सवित्रे च शंकराय शिवाय च ॥ ॥ ७१ ॥
कपर्दिनेऽजयादाय ब्रह्मगर्भाय ते नमः ॥
हिरण्यरेतसे तुभ्यं नीलग्रीवाय ते नमः ॥ ७१ ॥
नमो ब्रह्मण्य देवाय सितभूतिधराय च ॥
पंचवक्त्राय रूपाय नीरूपाय नमोनमः ॥ ७३ ॥
सहस्राक्षाय शुभ्राय नमस्ते कृत्तिवाससे ॥
अन्धकासुरमोक्षाय पशूनां पतये नमः ॥ ७४ ॥
विप्रवह्निमुखाग्राय हराय च भवाय च ॥
शंकराय महेशाय ईश्वराय नमो नमः ॥ ७६ ॥
अमूर्तब्रह्मरूपाय मूर्तानां भावनाय च ॥
नमः शिवाय चोग्राय हराय च भवाय च ॥ ७६ ॥
नमः कृष्णाय शर्वाय त्रिपुरांतक हारिणे ॥
अघोराय नमस्तेऽस्तु नमस्ते पुरुषाय ते ॥ ७७ ॥
सद्योजाताय तुभ्यं भो वामदेवाय ते नमः ॥
ईशानाय नमस्तुभ्यं पंचास्याय कपालिने ॥ ७८ ॥
विरूपाक्षाय भावाय भगनेत्रनिपातिने ॥
पूषदंतनिपाताय महायज्ञनिपातिने ॥ ७९ ॥
मृगव्याधाय धर्माय कालचक्राय चक्रिणे ॥
महापुरुषपूज्याय गणानां पतये नमः ॥ ६.२५४.८० ॥
गंगाधराय मृडिने भवानीप्रियकारिणे ॥
जगदानंददात्रे च ब्रह्मरूपाय ते नमः ॥९१॥
गुणातीताय गुणिने सूक्ष्माय गुरवेऽपि च ॥
नमो महास्वरूपाय भस्मनो जन्मकारिणे ॥ ८२ ॥

वैराग्यरूपिणे नित्यं योगाचार्याय वै नमः ॥
मयोक्तमप्रियं देव स्मरसंहारकारक ॥ ८३ ॥
क्षंतुमर्हसि विश्वेश शिरसा त्वां प्रसादये ॥
शापानुग्रह एवैष कृतस्ते वै न संशयः ॥ ८४ ॥
ममापराधजो मन्युर्न कार्यो भवताऽनघ ॥
एवं प्रसादितः शंभुर्हृष्टात्मा त्रिदशैः सह ॥ ८५ ॥
तीर्णव्रतपरानंदनिर्भरः प्राह तामुमाम् ॥
य इमां मत्स्तुतिं भक्त्या पठिष्यति तवोद्गताम् ॥
तस्य चेष्टवियोगश्च न भविष्यति पार्वति ॥ ८६ ॥
जन्मत्रयधनैर्युक्तः सर्वव्याधिविवर्जितः ॥
भुक्त्वेह विविधान्भोगानंते यास्यति मत्पुरम् ॥ ८७ ॥
इत्युक्त्वा तां महेशोऽपि स्वमंगं प्रददौ ततः ॥
वैष्णवं वामभागं सा प्रतिजग्राह पार्वती ॥ ८८ ॥
शर्वं कपालहस्तं च ग्रीवार्द्धे गरलान्वितम् ॥
रुण्डमालार्द्धहारं च सितगौरं समंततः ॥ ८९ ॥
ब्रह्मांडकोटिजनकं जटाभिर्भूषितं शिरः ॥
सित द्युतिकलाखंडरत्नभासावभासितम् ॥ ६.२५४.९० ॥
स्वर्णाभरणसंयुक्तमेकतो भुजगांगदम् ॥
एकतः कृत्तिवसनमन्यतः पट्टकूलवत् ९१ ॥
मत्स्य वाहनसंयुक्तमन्यतो वृषभांकितम् ॥
एकतः पार्षदैः सेव्यमन्यतः सखिसेवितम् ॥ ९२ ॥
रूपमेवंविधं दृष्ट्वा ब्रह्माद्या देवतागणाः ॥
तुष्टुवुः परया भक्त्या तेजोभूषितलोचनम् ॥ ९३ ॥
त्वमेको भगवान्सर्वव्यापकः सर्वदेहिनाम् ॥
पितृवद्रक्षकोऽसि त्वं माता त्वं जीवसंज्ञकः ॥ ९४ ॥
साक्षी विश्वस्य बीजं त्वं ब्रह्मांडवशकारकः ॥
उत्पद्यंते विलीयंते त्वयि ब्रह्मांडकोटयः ॥ ९५ ॥
ऊर्मयः सागरे नित्यं सलिले बुद्बुदा यथा ॥

अहं कदा चित्ते नेत्रात्कदाचित्तव भालतः ॥ ९६ ॥

क्वचित्संगे शिवादेव्या प्राहुर्भूत्वा सृजे जगत् ॥

तवाज्ञाकरिणः सर्वे वयं ब्रह्मादयः सुराः ॥ ९७ ॥

अनंतवैभवोऽनंतोऽनंतधामाऽस्यनंतकः ॥

अनंतः सर्वभंगाय कुरुषे रूपमद्भुतम् ॥ ९८ ॥

भवानि त्वं भयं नित्यमशिवानां पवित्रकृत् ॥

शिवा नामपि दात्री त्वं तपसामपि त्वं फलम् ९९ ॥

यः शिवः स स्वयं विष्णुर्यो विष्णुः स सदाशिवः ॥

इत्यभेदमतिर्जाता स्वल्पा नस्त्वत्प्रसादतः॥ ॥ ६.२५४.१०० ॥

यत्किंचिच्च जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ॥

मध्ये बहिश्च तत्सर्वं त्रयं व्याप्य स्थिता यदा ॥ १ ॥

जगत्पूज्ये सुरेशानि जगद्वंद्ये तथांबिके ॥

प्रसादं कुरु देवेशि देवेश प्रणता वयम् ॥ २ ॥

इत्युक्त्वा त्रिदशाः सर्वे हृष्टा जग्मुर्यथागतम् ॥ ३ ॥

॥ गालव उवाच ॥ ॥

तद्दिव्यरूपमतुलं भुवि ये मनुष्याः संसारसागरसमुत्तरणैकपोतम् ॥

संचिन्तयंति मनसा हृतकिल्बिषास्ते ब्रह्मस्वरूपमनुयांति विमुक्तसंगाः ॥ ॥१०४॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्य माहात्म्ये हरतांडवनर्त्तनवर्णनंनाम चतुःपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५४ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५५



गालव उवाच ॥ ॥

एवं ते लब्धशापाश्च पार्वतीशाप पीडिताः ॥

अनपत्या बभूवुश्च तथा च प्रतिमानवाः ॥ १ ॥

शालग्रामस्तु गंडक्यां नर्मदायां महेश्वरः ॥

उत्पद्यते स्वयंभूश्च तावेतौ नैव कृत्रिमौ ॥ २ ॥

चतुर्विंशतिभेदेन शालग्रामगतो हरिः ॥

परीक्ष्यः पुरुषैर्नित्यमेकरूपः सदाशिवः ॥ ३ ॥

शालग्रामशिला यत्र गंडकीविमले जले ॥

तत्र स्नात्वा च पीत्वा च ब्रह्मणः पदमाप्नुयात् ॥ ४ ॥

तां पूजयित्वा विधिवद्गंडकीसंभवां शिलाम् ॥

योगीश्वरो विशुद्धात्मा जायते नात्र संशयः ॥ ५ ॥

एतत्ते कथितं सर्वं यत्पृष्टोऽहमिह त्वया ॥

यथा हरो विप्रशापं प्राप्तवांस्तन्निशामय ॥ ६ ॥

यः शृणोति नरो भक्त्या वाच्यमानामिमां कथाम् ॥

गिरीशनृत्यसंबन्धामुमादेहार्द्धवर्णिताम् ॥ ७ ॥

ब्रह्मणः स्तुतिसंयुक्तां स गच्छेत्परमां गतिम् ॥

श्लोकार्द्धं श्लोकपादं वा समस्तं श्लोकमेव वा ॥ ८ ॥

यः पठेदविरोधेन मायामानविवर्जितः ॥

स याति परमं स्थानं यत्र गत्वा न शोचति ॥ ९ ॥

चातुर्मास्ये विशेषेण पठञ्छृण्वन्नरोत्तमः ॥

लभते चिंतितां सिद्धिं धनपुत्रादिसंवृतः॥६.२५५.१॥।

यथा ब्रह्मादयो देवा गीतवाद्याभियोगतः ॥

परां सिद्धि मवापुस्ते दुर्गाशिवसमीपतः ॥ ११ ॥

वर्षाकाले च संप्राप्ते भक्तियोगे जनार्दने ॥

महेश्वरेऽथ दुर्गायां न भूयः स्तनपो भवेत् ॥ १२ ॥

गणेशस्य सदा कुर्याच्चातुर्मास्ये विशेषतः ॥

पूजां मनुष्यो लाभार्थं यत्नो लाभप्रदो हि सः ॥१३॥

सूर्यो नीरोगतां दद्याद्भक्त्या यैः पूज्यते हि सः॥

चातुर्मास्ये समायाते विशेषफलदो नृणाम् ॥ १४ ॥

इदं हि पंचायतनं सेव्यते गृहमेधिभिः ॥

चातुर्मास्ये विशेषेण सेवितं चिंतितप्रदम् ॥ १५ ॥

शालग्रामगतं विष्णुं यः पूजयति नित्यदा ॥

द्वारवतीचक्रशिलासहितं मोक्षदायकम् ॥ १६ ॥

चातुर्मास्ये विशेषेण दर्शनादपि मुक्तिदम् ॥

यस्मिन्स्तुते स्तुतं सर्वं पूजिते पूजितं जगत् ॥ १७ ॥

पूजितः पठितो ध्यातः स्मृतो वै कलुषापहः ॥

शालग्रामे किं पुनर्यच्छालग्रामगतो हरिः ॥ १८ ॥

पुनर्हि हरिनैवेद्यं फलं चापि धृतं जलम् ॥

चातुर्मास्ये विशेषेण शालग्रामगतं शुभम् ॥ १९ ॥

तिलाः पुनंत्यर्पिताश्च शालग्रामस्य शूद्रज ॥

चातुमास्ये विशेषेण नरं भक्त्या समन्वितम् ॥ ६.२५५.२० ॥

स लक्ष्मीसहितो नित्यं धनधान्यसमन्वितः ॥

महाभाग्यवतां गेहे जायते नात्र संशयः ॥२१॥

स लक्ष्मीसहितो विष्णुर्विज्ञेयो नात्र संशयः ॥

तं पूजयेन्महाभक्त्या स्थिरा लक्ष्मीर्गृहे भवेत् ॥ २२ ॥

तावद्दरिद्रता लोके तावद्गर्जति पातकम् ॥

तावत्क्लेशाः शरीरेऽस्मिन्न यावत्पूजयेद्धरिम् ॥ २३ ॥

स एव पूज्यते यत्र पंचक्रोशं पवित्रकम् ॥

करोति सकलं क्षेत्रं न तवाऽशुभसंभवः ॥ २४ ॥

एतदेव महाभाग्यमेतदेवमहातपः ॥

एष एव परो मोक्षो यत्र लक्ष्मीशपूजनम् ॥ २५ ॥

शंखश्च दक्षिणावर्त्तो लक्ष्मीनारायणात्मकः ॥

तुलसी कृष्णसारोऽत्र यत्र द्वारवती शिला ॥

तत्र श्रीर्विजयो विष्णुर्मुक्तिरेवं चतुष्टयम्॥ २६ ॥

लक्ष्मीनारायणे पूजां विधातुर्मनुजस्य तु ॥

ददाति पुण्यमतुलं मुक्तो भवति तत्क्षणात् ॥ २७ ॥

चातुर्मास्ये विशेषेण पूज्यो लक्ष्मीयुतो हरिः ॥ २८ ॥

कुर्वतस्तस्य देवस्य ध्यानं कल्मषनाशनम् ॥

तुलसीमञ्जरीभिश्च पूजितो जन्मनाशनः ॥ २९ ॥

पूजितो बिल्वपत्रेण चातुर्मास्येऽघहृत्तमः ॥ ६.२५५.३० ॥

सर्वप्रयत्नेन स एव सेव्यो यो व्याप्य विश्वं जगतामधीशः ॥

काले सृजत्यत्ति च हेलया वा तं प्राप्य भक्तो न हि सीदतीति ॥ ३१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये लक्ष्मीनारायणमहिमवर्णनंनाम पञ्चपञ्चाशदुत्तरद्विशततमोअध्यायः ॥ २५५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५६

https://sa.wikisource.org/s/fro
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ गालव उवाच ॥ ॥

एकदा भगवान्रुद्रः कैलासशिखरे स्थितः ॥

दधार परमां लक्ष्मीमुमया सहितः किल ॥ १ ॥

गणानां कोटयस्तिस्रस्तं यदा पर्यवारयन् ॥

वीरबाहुर्वीरभद्रो वीरसेनश्च भृङ्गिराट् ॥ २ ॥

रुचिस्तुटिस्तथा नन्दी पुष्पदन्तस्तथोत्कटः ॥

विकटः कण्टकश्चैव हरः केशो विघंटकः ॥ ३ ॥

मालाधरः पाशधरः शृङ्गी च नरनस्तथा ॥

पुण्योत्कटः शालिभद्रो महाभद्रो विभद्रकः ॥ ४ ॥

कणपः कालपः कालो धनपो रक्तलोचनः ॥

विकटास्यो भद्रकश्च दीर्घजिह्वो विरोचनः ॥ ५ ॥

पारदो घनदो ध्वांक्षी हंसक्री नरकस्तथा ॥

पंचशीर्षस्त्रिशीर्षश्च क्रोडदंष्ट्रो महाद्भुत ॥ ६ ॥

सिंहवक्त्रो वृषहनुः प्रचण्डस्तुंडिरेव च ॥

एते चान्ये च बहवस्तदा भवसमीपगाः ॥ ७ ॥

महादेव जयेत्युच्चैर्भद्रकालीसमन्विताः ॥

भूतप्रेतपिशाचानां समूहा यस्य वल्लभाः ॥८॥

अस्तुवंस्तं समीपस्था वसन्ते समुपागते ॥

वनराजिर्विभाति स्म नवकोरकशोभिता ॥ ९ ॥

दक्षिणानिलसंस्पर्शः कवीनां सुखकृद्बभौ ॥

वियोगिहृदयाकर्षी किंशुकः पुष्पशोभितः ॥ ॥ ६.२५६.१० ॥

द्वन्द्वादिविक्रियाभावं चिक्रीडुश्च समंततः ॥

तस्मिन्विगाढे समये मनस्युन्मादके तथा ॥ ११ ॥

नंदी दंडधरः संज्ञां दृष्ट्वा चक्रे हरो परः॥

अलं चापलदोषेण तपः कुर्वंतु भो गणाः ॥ १२ ॥

तदा सर्वे वनमपि भूकांडजमभूत्पुनः ॥
गणास्ते तप आतस्थुर्दृष्ट्वा कान्तिंवसन्तजाम् ॥ १३ ॥
ततः सा विश्वजननी पार्वती प्राह शंकरम् ॥
इयं ते करगा नित्यमक्षमाला महेश्वर ॥ १४ ॥
त्वया किं जप्यते देव संदेहयति मे मनः ॥
त्वमेकः सर्व भूतानामादिकृत्सकलेश्वरः ॥ १५ ॥
न माता न पिता बंधुस्तव जातिर्न कश्चन ॥
अहं तव परं किंचिद्वेद्मि नास्तीति किंचन ॥ १६ ॥
श्रमेण त्वं समायुक्तो श्वासोच्छवासपरायणः॥
जपन्नपि महाभक्त्या दृश्यसे त्वं मया सदा ॥१७॥
त्वत्तःपरतरं किचिद्यत्त्वं ध्यायसि चेतसा ॥
तन्मे कथय देवेश यद्यहं दयिता तव॥ १८ ॥
इति स्पृष्टस्तदा शंभुरुवाच हरिसेवकः ॥
हरेर्नामसहस्राणां सारं ध्यायामि नित्यशः ॥ १९ ॥
जपामि रामनामांकमवातरं(?) ससप्तमम्॥
चतुर्विंशतिसंख्याकान्प्रादुर्भावान्हरेर्गुणान् ॥ ६.२५६.२० ॥
एतेषामपि यत्सारं प्रणवाख्यं महत्फलम् ॥
द्वादशाक्षरसंयुक्तं ब्रह्मरूपं सना तनम्॥ २१ ॥
अक्षरत्रयसंबद्धं ग्रामत्रयसमन्वितम् ॥
सबिंदुं प्रणवं शश्वज्जपामि जपमालया ॥ २२ ॥
वेदसारमिदं नित्यं द्व्यक्षरं सततोद्यतम् ॥
निर्मलं ह्यमृतं शांतं सदूपममृतोपमम् ॥ २३ ॥
कलातीतं निर्वशगं निर्व्यापारं महत्परम् ॥
विश्वाधारं जगन्मध्यं कोटिब्रह्मांडबीजकम्॥ २४ ॥
जडं शुद्धक्रियं वापि निरंजनं नियामकम् ॥
यज्ज्ञात्वा मुच्यते क्षिप्रं घोरसंसारबंधनात् ॥ २५ ॥
ओंकारसहितं यच्च द्वादशाक्षरबीजकम् ॥
जपतः पापकोटीनां दावाग्नित्वं प्रजायते ॥ २६ ॥

एतदेव परं गुह्यमेतदेव परं महः ॥
एतद्धि दुर्लभं लोके लोकत्रयविभूषणम्॥ २७ ॥
प्राप्यते जन्मकोटीभिः शुभाशुभविनाशकम् ॥
एतदेव परं ज्ञानं द्वादशाक्षरचिन्तनम् ॥ २८ ॥
चातुर्मास्ये विशेषेण ब्रह्मदं चिंतितप्रदम् ॥
एतदक्षरजं स्तोत्रं यः समाश्रयते सदा ॥ २९ ॥
मनसा कर्मणा वाचा तस्य नास्ति पुनर्भवः ॥
द्वादशाक्षरसंयुक्तं चक्रद्वादशभूषितम् ॥ ६.२५६.३० ॥
मासद्वादशनामानि विष्णोर्यो भक्तितत्परः ॥
शालग्रामेषु तान्युक्त्वा न्यसेदघहराणि च ॥ ३१ ॥
दिवसेदिवसे तस्य द्वादशाहफलं लभेत् ॥
द्वादशाक्षर माहात्म्यं वर्णितुं नैव शक्यते ॥ ३२ ॥
जिह्वासहस्रैरपि च ब्रह्मणापि न वार्यते ॥
महामन्त्रो ह्ययं लोके जप्यो ध्यातः स्तुतस्तथा ॥ ३३ ॥
पापहा सर्वमासेषु चातुर्मास्ये विशेषतः ॥
इदं रहस्यं वेदानां पुराणानामनेकशः ॥ ३४ ॥
स्मृतीनामपि सर्वासां द्वादशाक्षरचिन्तनम्॥
चिंतनादेव मर्त्यानां सिद्धिर्भवति हीप्सिता ॥ ३५ ॥
पुण्यदानेन याम्येन मुक्तिर्भवति शाश्वती ॥
वर्णैस्तथाश्रमैरेव प्रणवेन समन्वितैः ॥ ३६ ॥
जपैर्ध्यानैः शमपरैर्मोक्षं यास्येत निश्चितम ॥
शूद्राणां चापि नारीणां प्रणवेन विवर्जितः ॥ ३७ ॥
प्रकृतीनां च सर्वासां न मन्त्रो द्वादशाक्षरः ॥
न जपो न तपः कार्यं कायक्लेशाद्विशुद्धिता ॥ ३८ ॥
विप्रभक्त्या च दानेन विष्णुध्यानेन सिद्ध्यति ॥
तासां मन्त्रो रामनाम ध्येयः कोट्यधिको भवेत् ॥ ३९ ॥
रामेति द्व्यक्षरजपः सर्वपापापनोदकः ॥
गच्छंस्तिष्ठञ्छयानो वा मनुजो रामकीर्तनात् ॥ ६.२५६.४० ॥

इह निर्वर्ततो याति प्रान्ते हरिगणो भवेत् ॥

रामेति द्व्यक्षरो मन्त्रो मंत्रकोटिशताधिकः ॥ ४१ ॥

सर्वासां प्रकृतीनां च कथितः पापनाशकः ॥

चातुर्मास्येऽथ संप्राप्ते सोऽप्यनंतफलप्रदः ॥ ४२ ॥

चातुर्मास्ये महापुण्ये लभ्यते भक्तितत्परैः ॥

देववन्निष्फलं तेषां यमलोकस्यसेवनम् ॥ ४३ ॥

न रामादधिकं किंचित्पठनं जगतीतले ॥

रामनामाश्रया ये वै न तेषां यमयातना ॥ ४४ ॥

ये च दोषा विघ्नकरा मृतका विग्रहाश्च ये ॥

राम नामैव विलयं यांति नात्र विचारणा ॥ ४५ ॥

रमते सर्वभूतेषु स्थावरेषु चरेषु च ॥

अन्तरात्मस्वरूपेण यच्च रामेति कथ्यते ॥ ४६ ।

रामेति मत्रराजोऽयं भयव्याधिनिषूदकः ॥

रणे विजयदश्चापि सर्वकार्यार्थसाधकः ॥ ४७ ॥

सर्वतीर्थफलः प्रोक्तो विप्राणामपि कामदः ॥

रामचन्द्रेति रामेति रामेति समुदाहृतः ॥ ४८ ॥

द्व्यक्षरो मन्त्रराजोऽयं सर्वकार्यकरो भुवि ॥

देवा अपि प्रगायंति रामनामगुणाकरम् ॥ ४९ ॥

तस्मात्त्वमपि देवेशि रामनाम सदा वद ॥

रामनाम जपेद्यो वै मुच्यते सर्वकिल्बिषैः ॥ ६.२५६.५० ॥

सहस्रनामजं पुण्यं रामनाम्नैव जायते ॥

चातुर्मास्ये विशेषेण तत्पुण्यं दशधोत्तरम् ॥ ५१ ॥

हीनजातिप्रजातानां महदह्यति पातकम् ॥ ५२ ॥

रामो ह्ययं विश्वमिदं समग्रं स्वतेजसा व्याप्य जनांतरात्मना ॥

पुनाति जन्मांतरपातकानि स्थूलानि सूक्ष्माणि क्षणाच्च दग्ध्वा ॥ ५३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये रामनाममहिमवर्णनं नाम षट्पंचाशदुत्तरद्विशततमोऽध्यायः ॥ २५६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५७



॥ पार्वत्युवाच ॥ ॥

द्वादशाक्षरमाहात्म्यं मम विस्तरतो वद ॥

यथावर्णं यत्फलं च यथा च क्रियते मया ॥ १ ॥

॥ श्रीमहादेव उवाच ॥ ॥

द्विजातीनां सहोंकारसहितो द्वादशाक्षरः ॥

स्त्रीशूद्राणां नमस्कारपूर्वकः समुदाहृतः ॥ २ ॥

प्रकृतीनां रामनाम संमतो वा षडक्षरः ॥

सोऽपि प्रणवहीनः स्यात्पुराणस्मृतिनिर्णयः ॥ ३ ॥

क्रमोऽयं सर्ववर्णानां प्रकृतीनां सदैव हि ॥

क्रमेण रहितो यस्तु करोति मनुजो जपम् ॥

तस्य प्रकुप्यति विभुर्नरकादिप्रदायकः ॥ ४ ॥

॥ पार्वत्युवाच ॥ ॥

मया त्रिमात्रया स्वामिन्सेव्यते जगदीश्वरः ॥

रूपमस्य कथं जाने वचसामप्यगोचरम् ॥ ५ ॥

॥ ईश्वर उवाच । ॥

प्रणवस्याधिकारो न तवास्ति वरवर्णिनि ॥

नमो भगवते वासुदेवायेति जपः सदा ॥ ६ ॥

॥ पार्वत्युवाच ॥ ॥

यदि सप्रणवं दद्याद्द्वादशाक्षरचिंतनम ॥

प्रणवे नाधिकारो मे कथं भवति धूर्जटे । ७ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

प्रणवः सर्वदेवानामादिरेष प्रकीर्तितः ॥

ब्रह्मा विष्णुः शिवश्चैव वसंति दयितायुताः ॥ ८ ॥

तत्र सर्वाणि भूतानि सर्व तीर्थानि भागशः ॥

तिष्ठंति सर्वतीर्थानि कैवल्यं ब्रह्म एव यः ॥९॥

तस्य योग्या तदा देवि भविष्यसि यदा तपः ॥

चातुर्मास्ये हरिप्रीत्यै करिष्यसि शुभानने ॥ ६.२५७.१० ॥

तपसा प्राप्यते कामस्तपसा च महत्फलम् ॥

तपसा जायते सर्वं तत्तपः सुलभं नरैः ॥ ११ ॥

यशः सौभाग्यमतुलं क्षमासत्यादयो गुणाः ॥

सुलभं तपसा नित्यं तपश्चर्तुं न शक्यते ॥ १२ ॥

यदा हि तपसो वृद्धिस्तदा भक्तिर्हरौ भवेत् ॥

तदा हि तपसो हानिर्यदा भक्तिं विना कृतम् ॥ १३ ॥

तावत्तपांसि गर्जंति देहेऽस्मिन्सततं नृणाम् ॥

यदा विष्णुं स्मरेन्नित्यं जिह्वाग्रं पावनं भवेत् ॥ १४ ॥

यथा प्रदीपे ज्वलिते प्रणश्यति महत्तमः ॥

तथा हरेः कथायां च याति पापमनेकधा ॥ १५।।

तस्मात्पार्वति यत्नेन हरौ सुप्ते तपः कुरु ॥

चातुर्मास्येऽथ संप्राप्ते प्रणवेन समन्वितम् ॥ १६ ॥

विशुद्धहृदया भूत्वा मन्त्रराजमिमं जप। ॥

स एव भगवांस्तुष्टो द्वादशाक्षरसंयुतम् ॥ १७ ॥

प्रदास्यति परं ज्ञानं ब्रह्मरूपमखण्डितम् ।

ब्रह्मकल्पांतकोटीषु जप त्वं द्वादशाक्षरम् ॥ १८ ॥

मन्त्रराजं सप्रणवं ध्यायेत्सोऽपि न पश्यति ॥

इत्युक्ता सा तपोनिष्ठा तपश्चरितुमागता ॥ १९ ॥

हिमाचलस्य शिखरे चातुर्मास्ये समागते ॥

ब्रह्मचर्यव्रतपरा वसनत्रयसंयुता ॥ ६.२५७.२० ॥

प्रातर्मध्येऽपराह्ने च ध्यायन्ती हरिशंकरम् ॥

वपुर्यथा पुरा कृष्टं पूजने शंकरस्य च ॥ २१ ॥

सखीजन समायुक्ता पितुः शृंगे मनोहरे ॥

अतपत्सा विशालाक्षी क्षमादिगुणसंयुता ॥ २२ ॥

॥ गालव उवाच ॥ ॥

या हि योगीश्वरध्येया या वन्द्या विश्ववन्दिता ॥

जननी या च विश्वस्य साऽपि कामात्तपोगता ॥ २३ ॥

या हि प्रकृतिसद्रूपा तडित्कोटिसमप्रभा ॥

विरजा या स्वयं वन्द्या गुणातीताचरत्तपः ॥ २४ ॥

पृथ्व्यंबु तेजो वायुश्च गगनं यन्मयं विदुः ॥

मूलप्रकृतिरूपा या सा चकारोत्तम तपः ॥ २५ ॥

या स्थावरं जंगममाशु विश्वं व्याप्य स्थिता या प्रकृतेः पुरापि ॥

स्पृहादिरूपेण च तृप्तिदात्री देवे प्रसुप्ते तपसाऽऽप शुद्धिम् ॥ २६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये द्वादशाक्षरनाममहिमपूर्वकपार्वतीतपोवर्णनं नाम सप्तपंचाशदुत्तरशततमोऽध्यायः ।। २५७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५८




॥ गालव उवाच ॥ ॥

प्रवृत्तायां शैलपुत्र्यां महत्तपसि दारुणे ॥

कन्दर्पेण पराभूतो विचचार महीं हरः ॥ १ ॥

वृक्षच्छायासु तीर्थेषु नदीषु च नदेषु च ॥

जलेन सिंचत्स्ववपुः सर्वत्रापि महेश्वरः ॥ २ ॥

तथापि कामाकुलितो न लेभे शर्म कर्हिचित् ॥

एकदा यमुनां दृष्ट्वा जलकल्लोलमालिनीम् ॥ ॥ ३ ॥

विगाहितुं मनश्चक्रे तापार्तिं शमयन्निव ॥

कृष्णं बभूव तन्नीरं हरकायाग्निवह्निना ॥ ४ ॥

दग्धं विगाहनेनाशु मषीप्रायं तदा बभौ १।

साऽपि दिव्यवपुः पूर्वं श्यामा भूत्वा हराग्रतः ॥ ५ ॥

स्तुत्वा नत्वा महेशानमुवाच पुनरेव सा ॥

प्रसादं कुरु देवेश वशगास्मि सदा तव ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

अस्मिंस्तीर्थवरेपुण्ये यः स्नास्यति नरो भुवि ॥

तस्य पापसहस्राणि यास्यंति विलयं ध्रुवम् १। ७ ॥

हरतीर्थमिति ख्यातं पुण्यं लोके भविष्यति ॥

इत्युक्त्वा तां प्रणम्याथ तत्रैवांतरधीयत ॥ ८ ॥

तस्यास्तीरे महेशोऽपि कृत्वा रूपं मनोहरम् ॥

कामालयं वाद्यहस्तं कृतपुंड्रं जटाधरम् ॥ ९ ॥

स्वेच्छया मुनिगेहेषु दर्शयत्यंगचापलम् ॥

क्वचिद्गायति गीतानि क्वचिन्नृत्यति छन्दतः ॥ 6.258.१० ॥

स च क्रुद्ध्यति हसति स्त्रीणां मध्यगतः क्वचित् ॥

एवं विचरतस्तस्य ऋषिपत्न्यः समंततः ॥ ११ ॥

पत्युः शुश्रूषणं गेहे त्यक्त्वा कार्याण्यपि क्षणात् ॥

तमेव मनसा चक्रुः पतिरूपेण मोहिताः ॥ १२ ॥

भ्रमंत्यश्चैव हास्यानि चक्रुस्ता अपि योषितः ॥

ततस्तु मुनयो दृष्ट्वा तासां दुःशीलभावनाम् ॥ १३ ॥

चुक्रुधुर्मुनयः सर्वे रूपं तस्य मनोहरम् ॥

गृह्यतां हन्यतामेष कोऽयं दुष्ट उपागतः ॥ १४ ॥

इति ते गृह्य काष्ठानि यदोपस्थे ययुस्तदा ॥

पलायितः स बहुधा भयात्तेषां महात्मनाम् ॥ १५ ॥

यो जीवकलया विश्वं व्याप्य तिष्ठति देहिनाम् ॥

न ज्ञायते न च ग्राह्यो न भेद्यश्चापि जायते ॥ १६ ॥

न शेकुस्ते यदा सर्वे ग्रहीतुं तं महेश्वरम् ॥

तदा शिवं प्रकुपिता शेपुरित्थं द्विजातयः ॥ १७ ॥

यस्माल्लिंगार्थमागत्य ह्याश्रमांश्चोरवत्कृतम् ॥

परदारापहरणं तल्लिङ्गं पततां भुवि ॥ १८ ॥

सद्य एव हि शापं त्वं दुष्टं प्राप्नुहि तापस ॥

एवमुक्ते स शापाग्निर्वज्ररूपधरो महान् ॥ १९ ॥

तल्लिगं धूर्जटेश्छित्त्वा पातयामास भूतले ॥

रुधिरौघपरिव्याप्तो मुमोह भगवान्विभुः ॥ 6.258.२० ॥

वेदनार्तोज्ज्वलवपुर्महाशापाभिभूतधीः ॥

तं तथा पतितं दृष्ट्वा त आजग्मुर्महर्षयः ॥ २१ ॥

आकाशे सर्वभूतानि त्रेसुर्विश्वं चचाल ह ॥

देवाश्च व्याकुला जाता महाभयमुपागताः ॥ २२ ॥

ज्ञात्वा विप्रा महेशानं पीडिता हृदयेऽभवन् ॥

शुशुचुर्भृशदुःखार्ता दैवं हि बलवत्तरम् ॥ २३ ॥

किं कृतं भगवानेष देवैरपि स सेव्यते ॥

साक्षी सर्वस्य जगतोऽस्माभिर्नैवोपलक्षितः ॥ २४ ॥

वयं मूढधियः पापाः परमज्ञानदुर्बलाः॥

कथमस्माभिर्यस्यात्मा श्रुतश्च न निवेदितः ॥ २५ ॥

मयेदृशो गृहस्थाय ह्यात्माऽयं न निवेदितः ॥

निर्विकारो निर्विषयो निरीहो निरुपद्रवः ॥ २६ ॥

निर्ममो निरहंकारो यः शंभुर्नोपलक्षितः ॥

यस्य लोका इमे सर्वे देहे तिष्ठंति मध्यगाः ॥ २७ ॥

स एष जगतां स्वामी हरोऽस्माभिर्न वीक्षितः ॥

इत्युक्त्वा ते ह्युपविष्टा यावत्तत्र समागताः ॥ २८ ॥

तान्दृष्ट्वा सहसा त्रस्तः पुनरेव महेश्वरः ॥

विप्रशापभयान्नष्टस्त्रिपुरारिर्दिवं ययौ ॥ २९ ॥

सुरभिं गां च गोलोके तां तुष्टाव सुसंयतः १।

सृष्टिस्थिति विनाशानां कर्त्र्यै मात्रे नमोनमः ॥ 6.258.३० ॥

या त्वं रसमयैर्भावैराप्यायसि भूतलम् ॥

देवानां च तथासंघान्पितॄणामपि वै गणान् ॥ ३१ १।

सर्वै र्ज्ञाता रसाभिज्ञैर्मधुरास्वाददायिनी ॥

त्वया विश्वमिदं सर्वं बलस्नेहसमन्वितम् ॥ ३२ ॥

त्वं माता सर्वरुद्राणां वसूनां दुहिता तथा ॥

आदित्यानां स्वसा चैव तुष्टा वांच्छितसिद्धिदा ॥ ३३ ॥

त्वं धृतिस्त्वं तथा पुष्टिस्त्वं स्वाहा त्वं स्वधा तथा ॥

ऋद्धिः सिद्धिस्तथा लक्ष्मीर्धृतिः कीर्ति स्तथा मतिः ॥ ३४ ॥

कांतिर्लज्जा महामाया श्रद्धा सर्वार्थसाधिनी ॥

त्वया विरहितं किंचिन्नास्ति त्रिभुवनेष्वपि ॥ ३५ ॥

वह्नेस्तृप्तिप्रदात्री च देवादीनाम् च तृप्तिदा ॥

त्वया सर्वमिदं व्याप्तं जगत्स्थावरजंगमम् ॥ ३६ ॥

पादास्ते वेदाश्चत्वारः समुद्राः स्तनतां ययुः ॥

चंद्रार्कौ लोचने यस्या रोमाग्रेषु च देवताः ॥ ३७ ॥

शृङ्गयोः पर्वताः सर्वे कर्णयोर्वायवस्तथा ॥

नाभौ चैवामृतं देवि पातालानि खुरास्तथा ॥३८॥

स्कन्धे च भगवान्ब्रह्मा मस्तकस्थः सदाशिवः ॥

हृद्देशे च स्थितो विष्णुः पुच्छाग्रे पन्नगास्तथा ॥ ३९ ।।

शकृत्स्था वसवः सर्वे साध्या मूत्रस्थितास्तव ॥

सर्वे यज्ञा ह्यस्थिदेशे किन्नरा गुह्यसंस्थिताः ॥ 6.258.४० ॥

पितॄणां च गणाः सर्वे पुरःस्था भांति सर्वदा ॥

सर्वे यक्षा भालदेशे किन्नराश्च कपोलयोः ॥ ४१ ॥

सर्वदेवमयी त्वं हि सर्वभूतविवृद्धिदा ॥

सर्वलोकहिता नित्यं मम देहहिता भव ॥ ४२ ॥

प्रणतस्तव देवेशि पूजये त्वां सदाऽनघे ॥

स्तौमि विश्वार्तिहन्त्रीं त्वां प्रसन्ना वरदा भव ॥ ४३ ॥

विप्रशापाग्निना दग्धं शरीरं मम शोभने ॥

स्वतेजसा पुनः कर्तुमर्हस्यमृतसंभवे ॥ ४४ ॥

इत्युक्त्वा ता परिक्रम्य तस्या देहे लयं गतः ॥

साऽपि गर्भे दधाराथ सुरभिस्तदनन्तरम् ॥ ४५ ॥

कालातिक्रमयोगेन सर्वव्याकुलतां ययौ ॥

यस्मिन्प्रनष्टे देवेशे विप्रशापभयावृते ॥ ४६ ॥

देवा महार्तिं प्रययुश्चचाल पृथिवी तथा ॥

चंद्रार्कौ निष्प्रभौ चैव वायुरुच्चण्ड एव च ॥ ४७ ॥

समुद्राः क्षोभमग मंस्तस्मिन्काले द्विजोत्तम ॥ ४८ ॥

यस्मिञ्जगत्स्थावरजंगमादिकं काले लयं प्राप्य पुनः प्ररोहति ॥

तस्मिन्प्रनष्टे द्विजशापपीडिते जयद्धतप्राय मवर्तत क्षणात् ॥ ४९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये हरशापो नामाष्टपंचाशदुत्तरद्विशततमोऽध्यायः ॥ २५८ ॥ ॥ ।

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २५९



॥ गालव उवाच ॥ ॥

तस्मिंस्तु पतिते लिंगे योजनायामविस्तृते॥

विषादार्त्ता ऋषिगणास्तत्राजग्मुः सहस्रशः ॥ १ ॥

व्यलोकयन्त सर्वत्र दृष्ट्वा तत्र महेश्वरम्॥

नासौ दृष्टिपथे तेषां बभूव भयविह्वलः ॥ २ ।१

वीर्यं वर्षसहस्राणि बहून्यपि सुसंचितम् ॥

पृथिवीं सकलां व्याप्य स्थितं ददृशिरे द्विजाः ॥३॥

तद्दृष्ट्वा सुमहल्लिंगं रुधिराक्तं जलैः प्लुतम् ॥

ब्राह्मणाः संशयगता दह्यमाना वसुन्धरा ॥ ४ ॥

तल्लिंगं तत्र संस्थाप्य चक्रुस्तां नर्मदां नदीम् ॥

तज्जलं नर्मदारूपं ल्लिंगं चामरकण्टकम्॥५..

नरकं वारयत्येतत्सेवितं नरकापहम्॥

भूतग्रहाश्च सर्वेऽपि यास्यंति विलयं ध्रुवम्॥६॥

तत्र स्नात्वा जलं पीत्वा संतर्प्य च पितॄंस्तथा।.

सर्वान्कामानवाप्नोति मनुष्यो भुवि दुर्लभान्॥७॥

लिंगानि नार्मदेयानि पूजयिष्यंति ये नराः॥

तेषां रुद्रमयो देहो भविष्यति न संशयः॥

चातुर्मास्ये विशेषेण लिंगपूजा महाफला॥

चातुर्मास्ये रुद्रजपं हरपूजा शिवे रतिः॥ ९॥

पंचामृतेन स्नपनं न तेषांगर्भवेदना ॥

ये करिष्यंति मधुना सेचनं लिंगमस्तके ॥ ६.२५९.१० ॥

तेषां दुःखसहस्राणि यास्यंति विलयं ध्रुवम् ॥

दीपदानं कृतं येन चातु र्मास्ये शिवाग्रतः ॥ ११ ॥

कुलकोटिं समुद्धृत्य स्वेच्छया शिवलोकभाक् ॥

चन्दनागुरुधूपैश्च सुश्वेतकुसुमैरपि ॥ १२ ॥

नर्मदाजललिंगं ये ह्यर्च यिष्यंति ते शिवाः ॥

शिला हरत्वमापन्नाः प्राणिनामपि का कथा ॥ १३ ॥

तत्संभूतं महालिंगं जलधारणसंयुतम् ॥

पूजयित्वा विधानेन चातुर्मास्ये शिवो भवेत् ॥ १४ ॥

चातुर्मास्ये ये मनुजा नर्मदाऽमरकण्टके ॥

तीर्थे स्नास्यंति नियतास्तेषां वासस्त्रिविष्टपे ॥ १५ ॥ ॥

॥ ब्रह्मोवाच ॥ ॥

इत्युक्त्वा ते द्विजास्तत्र स्थाप्य लिंगं यथाविधि ॥

अमरकण्टकतीर्थे नर्मदां च महानदीम् ॥ १६ ॥

पुनश्चिन्तापरा जाता विश्वस्य क्षोभकारणे ॥

पद्मासनगता भूत्वा प्राणायामपरायणाः ॥ १७ ॥

चिन्तयामासुरव्यग्रं हृदयस्थं महे श्वरम् ॥

ततो देवा महेंद्राद्याः संप्राप्यामरकण्टकम् ॥ १८ ॥

ब्राह्मणानां स्तुतिं चक्रुर्विनयानतकन्धराः ॥

नमोऽस्तु वो द्विजातिभ्यो ब्रह्मविद्भ्यो महेश्वराः ॥ १९ ॥

भूसुरेभ्यो गुरुभ्यश्च विमुक्तेभ्यश्च वंधनात् ॥

यूयं गुणत्रयातीता गुणरूपा गुणाकराः ॥ ६.२५९.२० ॥

गुणत्रयमयैर्भावैः सततं प्राणबुद्बुदाः ॥

येषां वाक्यजलेनैव पापिष्ठा अपि शुद्धताम् ॥

प्रयांति पापपुंजाश्च भस्मसाद्यांति पापिनाम् ॥ २१ ॥

शस्त्रं लोहमयं येषां वागेव तत्समन्विताः ॥

पापैः पराभिभूतानां तेषां लोकोत्तरं बलम् ॥ २२ ॥

क्षमया पृथिवीतुल्याः कोपे वैश्वानरप्रभाः ॥

पातनेऽनेकशक्तीनां समर्था यूयमेव हि ॥ २३ ॥

स्वर्गादीनां तथा याने भवन्तो गतयो ध्रुवम् ॥ २४ ॥

सत्कर्मकारकाश्चैव सत्कर्मनिरताः सदा ॥

सत्कर्मफलदातारः सत्कर्मभ्यो मुमुक्षवः ॥ २५ ॥

सावित्रीमंत्रनिरता ये भवंतोऽघनाशनाः ॥

आत्मानं यजमानं च तारयंति न संशयः ॥ २६ ॥

वह्नयश्च तथा विप्रास्तर्पिताः कार्यसाधकाः ॥

चातुर्मास्ये विशेषेण तेषां पूजा महाफला ॥ २७ ॥

कोपिताः सर्वदेहस्य नाशनाय भवंति हि १।

तावन्न वज्रमिंद्रस्य शूलं नैव पिनाकिनः ॥ २८ ॥

दण्डो यमस्य तावन्नो यावच्छापो द्विजोद्भवः ॥

अग्निना ज्वाल्यते दृश्यं शापोद्दिष्टानपि स्वयम् ॥ २९ ॥

हंति जातानजातांश्च तस्माद्विप्रं न कोपयेत्॥

विप्रकोपाग्निना दग्धो नरकान्नैव मुच्यते ॥ ६.२५९.३० ॥

शस्त्रक्षतोऽपि नरकान्मुच्यते नात्र संशयः ॥

देवानां मधुधान्यानां सामर्थ्यं भेदनेन हि ॥ ३१ ॥

वाङ्मात्रेण हि विप्रस्य भिद्यते सकलं जगत् ॥

ते यूयं गुरवोऽस्माकं विश्वकारणकारकाः ॥

प्रसादपरमा नित्यं भवंतु भुवनेश्वराः ॥ ३२ ॥

ईश्वरेण विना सर्वे वयं लोकाश्च दुःखिताः ॥

तत्कथ्यतां स भगवान्कुत्रास्ते परमेश्वरः ॥ ३३ ॥ ॥

गालव उवाच ॥ ॥

ज्ञात्वा मुनिभयत्रस्तं देवेशं शूलपाणिनम् ॥ ३४ ॥

सुरभीगर्भसंभूतं देवानूचुर्महर्षयः ॥ स्वा

गतं देवदेवेभ्यो ज्ञातो वै स महेश्वरः ॥ ३५ ॥

तत्र गच्छंतु देवेशा यत्र देवः सनातनः ॥

इत्युक्त्वा ते महात्मानः सह देवैर्ययुस्तदा ॥ ३६ ॥

गोलोकं देवमार्गेण यत्र पायसकर्दमाः ॥

घृतनद्योमधु ह्रदा नदीनां यत्र संघशः ॥ ३७ ॥

पूर्वजानां गणाः सर्वे दधिपीयूषपाणयः ॥

मरीचिपाः सोमपाश्च सिद्धसंघास्तथा परे ॥ ३८ ॥

घृतपाश्चैव साध्याश्च यत्र देवाः सनातनाः ॥

ते तत्र गत्वा मुनयो ददृशुः सुरभीसुतम् ॥ ३९ ॥

तेजसा भास्करं चैव नीलनामेति विश्रुतम् ॥
इतस्ततोऽभिधावंतं गवां संघातमध्यगम् ॥ ६.२५९.४० ॥
नंदा सुमनसा चैव सुरूपा च सुशीलका ॥
कामिनी नंदिनी चैव मेध्या चैव हिरण्यदा ॥ ४१ ॥
धनदा धर्मदा चैव नर्मदा सकलप्रिया ॥
वामनालंबिका कृष्णा दीर्घशृंगा सुपिच्छिका ॥ ४२ ॥
तारा तरेयिका शांता दुर्विषह्या मनोरमा ॥
सुनासा दीर्घनासा च गौरा गौरमुखीह या ॥ ४३ ॥
हरिद्रवर्णा नीला च शंखिनी पंचवर्णका ॥
विनताभिनताचैव भिन्नवर्णा सुपत्रिका ॥ ४४ ॥
जयाऽरुणा च कुण्डोध्नी सुदती चारुचंपका ॥
एतासां मध्यगं नीलं दृष्ट्वा ता मुनिदेवताः ॥४५॥
विचरंति सुरूपं तं संजातविस्मयोन्मुखाः ॥
मुनीश्वराः कृपाविष्टा इन्द्राद्या हृष्टमानसाः ॥
स्तुतिमारेभिरे कर्तुं तेजसा तस्य तोषिताः ॥ ४६ ॥ ॥
॥ शूद्र उवाच ॥ ॥
कथं नीलेति नामासौ जातोयमद्भुताकृतिः ॥
किमस्तुवन्प्रसन्नास्ते ब्राह्मणा विश्वकारणम् ॥ ४७ ॥
॥ गालव उवाच ॥ ॥
लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥ ४८ ॥
श्वेतः खुरविषाणेषु स नीलो वृषभः स्मृतः ॥
चतुष्पादो धर्मरूपो नील लोहितचिह्नकः ॥ ४९ ॥
कपिलः खुरचिह्नेषु स नीलो वृषभः स्मृतः ॥
योऽसौ महेश्वरो देवो वृषश्चापि स एव हि ॥ ६.२५९.५० ॥
चतुष्पादो धर्मरूपो नीलः पंचमुखो हरः ॥
यस्य संदर्शनादेव वाजपेयफलं लभेत् ॥ ५१ ॥
नीले च पूजिते यस्मिन्पूजितं सकलं जगत् ॥
स्निग्धग्रासप्रदानेन जगदाप्यायितं भवेत् ॥ ५२ ॥

यस्य देहे सदा श्रीमान्विश्वव्यापी जनार्दनः ॥

नित्यमर्चयते योऽसौ वेदमन्त्रैः सनातनैः ॥ ५३ ॥

॥ ऋषय ऊचुः ॥ ॥

त्वं देवः सर्वगोप्तॄणां विश्वगोप्ता सनातनः ॥

विघ्नहर्ता ज्ञानदश्च धर्मरूपश्च मोक्षदः ॥५४॥

त्वमेव धनदः श्रीदः सर्वव्याधिनिषूदनः ॥

जगतां शर्मकरणे प्रवृत्तः कनकप्रदः ॥ ५५ ॥

तेजसां धाम सर्वेषां सौरभेय महाबल ॥

शृंगाग्रे धृतकैलासः पार्वतीसहितस्त्वया ॥ ५६ ॥

३३ स्तुत्यो वेदमयो वेदात्मा वेदवित्तमः ॥

वेदवेद्यो वेदयानो वेदरूपो गुणाकरः ॥ ५७ ॥

गुणत्रयेभ्योऽपि परो याथात्म्यं वेद कस्तव ॥

वृषस्त्वं भगवान्देव यस्तुभ्यं कुरुते त्वघम् ॥ ५८ ॥

वृषलः स तु विज्ञेयो रौरवादिषु पच्यते ॥

यदा स्पृष्टः स तु नरो नरकादिषु यातनाः ॥ ५९ ॥

सेवते पापनिचयैर्निगाढप्रायबन्धनैः ॥

क्षुत्क्षामं च तृषाक्रांतं महाभारसमन्वितम् ॥ ६.२५९.६० ॥

निर्दया ये प्रशोष्यंति मतिस्तेषां न शाश्वती ॥

चतुर्भिः सहितं मर्त्या विवाहविधिना तु ये ॥ ६१ ॥

विवाहं नीलरूपस्य ये करिष्यंति मानवाः ॥

पितॄनुद्दिश्य तेषां वै कुले नैवास्ति नारकी ॥ ॥ ६२ ॥

त्वं गतिः सर्वलोकानां त्वपिता परमेश्वरः ॥

त्वया विना जगत्सर्वं तत्क्षणादेव नश्यति ॥ ६३ ॥

परा चैव तु पश्यंती मध्यमा वैखरी तथा ॥

चतुर्विधानां वचसामीश्वरं त्वां विदुर्बुधाः ॥ ६४ ॥

चतुःशृंगं चतुष्पादं द्विशीर्षसप्तहस्तकम् ॥

त्रिधा बद्धं धर्ममयं त्वामेव वृषभं विदुः ॥ ६५ ॥

तृप्तिदं सर्वभूतानां विश्वव्यापकमोजसा ॥

ब्रह्म धर्ममयं नित्यं त्वामात्मानं विदुर्जनाः ॥ ६६ ॥

अच्छेद्यस्त्वमभेद्यस्त्वमप्रमेयोमहा यशाः ॥

अशोच्यस्त्वमदाह्योऽसि विदुः पौराणिका जनाः ॥ ६७ ॥

त्वदाधारमिदं सर्वं त्वदाधारमिदं जगत् ॥

त्वदाधाराश्च देवाश्च त्वदाधारं तथा मृतम् ॥ ६८ ॥

जीवरूपेण लोकांस्त्रीन्व्याप्य तिष्ठसि नित्यदा ॥

एवं स संस्तुतो नीलो विप्रैस्तैः सोमपायिभिः ॥ ६९ ॥

प्रसन्नवदनो भूत्वा विप्रा न्प्रणतितत्परः ॥

पुनरेव वचः प्रोचुर्विप्राः कृतशिवागसः ॥ ६.२५९.७० ॥

वरं ददुर्महेशस्य नीलरूपस्य धर्मतः ॥

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ॥ ७१ ॥

प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

पुनरेव सुसर्पंतं दृष्ट्वा नीलं महावृषम् ॥ ७२ ॥

स्वल्पक्रोधसमाविष्टं द्विजाश्चक्रुस्तमं कितम् ॥

चक्रं च वामभागेषु शूलं पार्श्वे च दक्षिणे ॥ ७३ ॥

उत्ससृजुर्गवां मध्ये तं देवैर्गोपितं तदा ॥

ततो देवगणाः सर्वे महर्षीणां गणाः पुनः ॥

स्वानि स्थानानि ते जग्मुर्मुनयो वीतमत्सराः ॥ ७४ ॥

एवमृषीणां दयितासु सक्तः कामार्त्तचित्तो मुनिपुंगवानाम् ॥

शापं समासाद्य शिवोऽपि भक्त्या रेवाजलेऽगात्सुशिलामयत्वम् ॥ ७९ ॥

इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये पैजवनोपाख्याने वृषस्तुतिर्नामैकोनषष्ट्युत्तरद्विशततमोअध्यायः ॥ २५९ ॥ [। छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६०



॥ गालव उवाच ॥ ॥

इति ते कथितं सर्वं शालग्रामकथानकम् ॥

महेश्वरस्य चोत्पत्तिर्यथा लिंगत्वमाप सः ॥ १ ॥

तस्माद्वरं लिंगरूपं शालग्रामगतं हरिम् ॥

येऽर्चयंति नरा भक्त्या न तेषां दुःखयातनाः ॥ २ ॥

चातुर्मास्ये समायाते विशेषात्पूजयेच्च तौ ॥

अर्चितौ यावभेदेन स्वर्गमोक्षप्रदायकौ ॥ ३ ॥

देवौ हरिहरौ भक्त्या विप्रवह्निगवां गतौ ॥

येऽर्चयंति महाशूद्र तेषां मोक्षप्रदोहरिः ॥ ॥ ४ ॥

वेदोक्तं कारयेत्कर्म पूर्तेष्टं वेदतत्परः ॥

पंचायतनपूजा च सत्यवादो ह्यलोलता ॥ ५ ॥

विवेकादिगुणैर्युक्तः स शूद्रो याति सद्गतिम्॥

ब्रह्मचर्यं तपो नान्यद्द्वादशाक्षरचिंतनात् ।। ६ ॥

मन्त्रैर्विना षोडश सोपचारैः कार्या सुपूजा नरकादिहंतुः ॥

यथा तथा वै गिरिजापतेश्च कार्या महा शूद्र महाघहंत्री ॥ ७ ॥

॥ ब्रह्मोवाच ।। ॥

एवं कथयतोरेषा रजनी क्षयमाययौ ॥

सच्छूद्रो गालवश्चैव शिष्यैश्च परिवारितः ॥ ८ ॥

स तेन पूजितो विप्रो ययौ शीघ्रं निजाश्रमम् ॥ ९ ॥

य इमं श्रुणुयान्मर्त्यो वाचयेत्पाठयेच्च वा ॥

श्लोकं वा सर्वमपि च तस्य पुण्यक्षयो न हि ॥ ६.२६०.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्य माहात्म्ये पैजवनोपाख्याने षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६० ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६१



॥ नारद उवाच ॥ ॥

कथं नित्या भगवती हरपत्नी यशस्विनी ॥

योगसिद्धिं सुमहतीं प्राप मासचतुष्टये ॥ १ ॥

मन्त्रराजमिमं जप्त्वा द्वादशाक्षरसंभवम् ॥

एतन्मे विस्तरेण त्वं कथयस्व यथातथम्॥२॥ ॥

।। ब्रह्मोवाच ॥ ॥

चातुर्मास्ये हरौ सुप्ते पार्वती नियतव्रता ॥

मनसा कर्मणा वाचा हरिभक्तिपरायणा ॥ ३ ॥

चारुशृंगे पितुर्नित्यं तिष्ठंती तपसि स्थिता ॥

देवद्विजाग्निगोऽश्वत्थातिथिपूजापरायणा ॥ ४ ॥

चातुर्मास्येऽथ संप्राप्ते विमले हरिवासरे ॥

जजाप परमं मंत्रं यथादिष्टं पिनाकिना ॥ ५ ॥

शंखचक्रधरो विष्णुश्चतुर्हस्तः किरीटधृक् ॥

मेघश्यामोंऽबुजाक्षश्च सूर्यकोटिसमप्रभः ॥ ६ ।।

गरुडाधिष्ठितो हृष्टो वसन्व्याप्य जगत्त्रयम् ॥

श्रीवत्सकौस्तुभयुतः पीतकौशेयवस्त्रकः ॥७॥

सर्वाभरणशोभाभिरभिदीप्तमहावपुः ॥

बभाषे पार्वतीं विष्णुः प्रसन्नवदनः शुभाम्॥

देवि तुष्टो ऽस्मि भद्रं ते कथयस्व तवेप्सितम् ॥ ८ ॥

॥ पार्वत्युवाच ॥ ॥

तज्ज्ञानममलं देहि येन नावर्त्तनं भवेत् ॥

इत्युक्तः स महाविष्णुः प्रत्युवाच हरप्रियाम् ॥९॥

स एव देवदेवेशस्तव वक्ष्यत्यसंशयम् ॥

स एव भगवान्साक्षी देहांतरबहिःस्थितः ॥६.२६१.१०॥।

विश्वस्रष्टा च गोप्ता च पवित्राणां च पावनः ॥

अनादिनिधनो धर्मो धर्मादीनां प्रभुर्हि सः ॥ ११ ॥

अक्षरत्रयसेव्यं यत्सकलं ब्रह्म एव सः ॥

मूर्त्तामूर्तस्वरूपेण योऽजो जन्मधरो हि सः ॥ १२ ॥

ममाधिकारो नैवास्ति वक्तुं तव न संशयः ॥

इत्युक्त्वा भगवानीशो विरराम प्रहृष्टवान् ॥१३॥

एतस्मिन्नंतरे शंभुर्गिरिजाश्रममभ्यगात् ॥

सर्वभूत गणैर्युक्तो विमाने सार्वकामिके ॥ १४ ॥

तया वै भगवान्देवः पूजितः परमेश्वरः ॥

सखीनामपि प्रत्यक्षमाश्चर्यं समजायत ॥ १५ ॥

स्तुत्वाऽथ तं महादेवं विष्णुर्देहे लयं ययौ ॥

अथोवाच महेशानः पार्वतीं परमेश्वरः ॥ १६ ॥

विमानवरमारुह्य तुष्टोऽहं तव सुव्रते ॥

गत्वैकांतप्रदेशं ते कथये परमं महः ॥ १७ ॥

एवमुक्त्वा भगवतीं करे गृह्य मुदान्वितः ॥

विमानवरमारोप्य लीलया प्रययौ तदा ॥ १९ ॥

नानाधातुमयानद्रीन्नानारत्नविचित्रितान् ॥

नदीनिर्झरकुंजांश्च नदान्कोकिलकूजितान् ॥१९॥

अखातान्देवखातांश्च गंगाद्याः सरितस्तथा ॥

सौगंधिकांश्च कल्हारान्सहस्रदलपिंजरान् ॥६.२६१.२॥।

दर्शन्यकर्णिकारांश्च कोविदारान्महाद्रुमान् ॥

तालांस्तमालान्हिंतालान्प्रियंगून्पनसानपि ॥ २१ ॥

तिलकान्बकुलांश्चैव बहूनपि च पुष्पितान् ॥

क्षेत्राणि कलनाभानि पिञ्जराणि विदर्शयन् ॥ २२ ॥

ययौ देवनदीतीरे गतं शरवणं महत् ॥

फुल्लकाशं स्वर्णमयं शरस्तंबगणान्वितम् ॥ २३ ॥

हेम भूमिविभागस्थं वह्निकांतिमृगद्विजम् ॥

तत्र तीरगतानां च मुनीनामूर्ध्वरेतसाम् ॥ २४ ॥

आश्रमान्स विमानाग्रे तिष्ठन्पत्न्यै प्रदर्शयत् ॥

षट्कृत्तिकाश्च ददृशे पार्वती वनसन्निधौ ॥ २५ ॥

स्नाताः स्वलंकृताश्चन्द्रपत्न्यस्ता विरजांबराः ॥

ऊचुस्ता योजितकरा केऽयं पुत्राय गम्यते ॥ २६ ॥

तत्कथ्यतां महाभागे स च ते दर्शनं गतः ॥ २७ ॥

॥ पार्वत्युवाच ॥ ॥

मम भाग्यवशात्पुत्रः कथमुत्संगमाहरेत् ॥

न ह्यभाग्यवशात्पुंसां क्वापि सौख्यं निरन्तरम्॥२८॥

सुतनाम्नाप्यहं दृष्ट्वा भवतीनां च दर्शनात्॥

किमर्थमिह संप्राप्ताः कथ्यतामविलंबितम्॥२९॥

कृत्तिका ऊचुः॥

वयं तव सुतं न्यस्तं प्रदातुमिह सुन्दरि॥

चातुर्मास्ये रवौ स्नातुमागता देवनिम्नगाम्॥६.२६१.३०॥।

पार्वत्युवाच॥

न हास्यावसरः सख्यः सत्यमेव हि कथ्यताम्॥

एकांतावसरे हास्यं जायते चेतरेतरम्॥३१॥

कृत्तिका ऊचुः॥

सत्यं वदामहे देवि तव त्रैलोक्यशोभिते॥

अस्य स्तंबसमूहस्य मध्यस्थं बालकं वृणु॥३२॥

कृत्तिकानां वचः श्रुत्वा शंकिता पार्वती तदा॥

ददर्श बालं दीप्ताभं षण्मुखं दीप्तवर्चसम्॥३३॥

तडित्कोटिप्रतीकाशं रूपदिव्यश्रिया युतम्॥

वह्निपुत्रं च गांगेयं कार्तिकेयं महाबलम्॥ ३४॥

सा वत्सेति गृहीत्वा तं कुमारं पाणिना मुदा॥

विमानमध्यमादाय कृत्वोत्संगे ह्युवाच ह॥ ३५॥

चिरंजीव चिरं नन्द चिरं नंदय बाधवान्॥

इत्युक्त्वा गाढमालिंग्य मूर्ध्नि चाघ्राय तं सुतम्॥३६॥

संहृष्टा परमोदारं भास्वरं हृष्टमानसम्॥

कार्तिकेयो महाप्रेम्णा प्रणिपत्य महेश्वरम्॥३७॥

ततः प्रांजलिरव्यग्रः प्रहृष्टेनांतरात्मना॥

तद्विमानं ययौ शीघ्रं तीर्त्वा नदनदीपतीन्॥३८॥

जंबुद्वीपमतिक्रम्य लक्षयोजनमायतम्॥

ततः समुद्रं द्विगुणं लवणोदं तथैव च॥३९॥

उत्तरांश्च कुरून्नीत्वा विमानेनार्कतेजसा॥

समुद्रद्विगुणं द्वीपं कुशनाभेति कीर्तितम्॥६.२६१.४॥।

दिव्यलोकसमाक्रांतं दिव्यपर्वतसंकुलम्॥

इक्षूदाद्विगुणं द्वीपं तद्द्वीपाद्द्विगुणः पुनः॥४१॥

तमतिक्रम्य तत्सिन्धोर्दविगुणं क्रौंचसंज्ञितम्॥

ततोऽपि द्विगुणः सिन्धुः सुरोदो यक्षसेवितः॥४२॥

ततोऽपि द्विगुणं द्वीपं शाकद्वीपेतिसंज्ञितम्॥

अर्णवद्विगुणं तस्मादाज्यरूपं सुनिर्मितं॥४३॥

परमस्वादसंपूर्णं यत्र सिद्धाः समंततः॥

तस्माच्च द्विगुणं द्वीपं शाल्मलीवृक्षसंज्ञितम्॥४४॥

समुद्रो द्विगुणस्तत्र दधिमंडोदसंभवः॥

साध्या वसंति नियतं महत्तपसि संस्थिताः॥ ४५॥

ततोऽपि द्विगुणं द्वीपं प्लक्षनामेति विश्रुतम्॥

क्षीरोदो द्विगुणस्तत्र यत्रयत्रमहर्षयः॥

षडिमानि सुदिव्यानि भौमः स्वर्ग उदाहृतः॥

तत्र स्वर्णमयी भूमिस्तथा रजतसंयुता॥४७॥

दृष्टवा मधूपलस्वादैः सर्वकामप्रदायका॥

यत्र स्त्रीपुरुषाणां च कल्पवृक्षा गृहे स्थिताः॥४८॥

वासांसि भूषणानां च समूहान्हर्षयंति च॥

एतानि दक्षचिह्नानि द्वीपानि मुनिसत्तम॥४९॥

महेश्वरो विमानेन व्यतिक्रामद्विहायसा॥

प्लक्षद्वीपस्य च प्रांते द्विगुणः क्षीरसागरः॥६.२६१.५॥।

तन्मध्ये सुमहद्वीपं श्वेतं नाम सुनिश्चितम्॥

रम्यकः पर्वतस्तत्र शतशृंगोमितद्रुमः॥५१॥

तस्य शृंगे महद्दिव्ये विमानं स्थापितं तदा॥

तदाऽमृतफलैर्वृक्षैः सेविते हेमवालुके॥५२॥

क्षीरच्छेदेन विहृते शिलातलसुसंवृते॥

विविक्ते सर्वसुभगे मणिरत्नसमन्विते॥५३॥

उमायै कथयामास देवदेवः पिनाकधृक् ॥

कार्तिकेयोऽपि शुश्राव गुह्याद्गुह्यतरं महत् ॥५४ ।

ध्यानयोगं मंत्ररूपं द्वादशाक्षरसंज्ञितम् ।१

प्रणवेन युतं साग्रं सरहस्यं श्रुतेः परम् ॥ ॥ ५५ ॥

॥ ईश्वर उवाच ॥ ॥

अक्षरत्रयसंयुक्तो मन्त्रोऽयं सकृदक्षरः ॥

माघमासहितश्चायममाक्षोहेनश्चायममायो विश्वपावनः ॥

विष्णुगम्यो विष्णु मध्यो मन्त्रत्रयसमन्वितः ॥

तुरीयकलयाऽशेषब्रह्मांडगणसेवितः ५७ ॥

निष्कामैर्मुनिभिः सेव्यो महाविद्यादिसेवितः ॥

नाभितः शिरसि व्याप्त अखण्डसुखदायकः। ९८८ ॥

ओंकारेति प्रियोक्तिस्ते महादुःखविनाशनः ॥

तं पूर्वं प्रणवं ध्यात्वा ज्ञानरूपं सुखाश्रयम् ॥ ५९ ॥

ज्ञात्वा सर्वगतं ब्रह्म देहशोधनतत्परः १।

पद्मासनपरो भूत्वा संपूज्य ज्ञानलोचनः ॥ ६.२६१.६० ॥

नेत्रे मुकुलिते कृत्वा शुरो करौ कृत्वा तु संहतौ ॥

चेतसि ध्यानरूपेण चिंतयेच्छिवमंगलम् ॥ ६१ ॥

तडित्कोटिप्रतीकाशं सूर्यकोटिसमच्छविम् ॥

चन्द्रलक्षसमच्छन्नं पुरुषं द्योतिताखिलम् १। ६२॥

मूर्त्तामूर्त्तवैराजं तं सदसद्रूप मव्यम् ॥

चिंतयित्वा विराड्रूपं न भूयःस्तनपो भवेत् ॥

चातुर्मास्ये सकृदपि ध्यानात्कल्मषसंक्षयः॥ ६३ ।१

एवं च मद्रूपमिदं मुरारेरमोघवीर्यं गुण तोप्यपारम् १।

विलोकयेद्योऽघविनाशनाय क्षणं प्रभुर्जन्मशतोद्भवाय ।। ६४ ।।

इति श्रीस्कांदे महापुराण एकाशीसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये ध्यानयोगोनामैकषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६२



॥ पार्वत्युवाच ॥ ॥

ध्यानयोगमहं प्राप्य ज्ञानयोगमवाप्नुयाम् ॥

तथा कुरुष्व देवेश यथाहममरी भव ।। १ ॥

॥ ईश्वर उवाच ॥ ।१

प्रत्युक्तोऽयं मंत्रराजो द्वादशाक्षरसंज्ञितः ॥

जप्तव्यः सुकुमारांगि वेदसारः सनातनः ॥ २ ॥

प्रणवः सर्ववेदाद्यः सर्वब्रह्मांडयाजकः ।।

प्रथमः सर्वकार्येषु सर्वसिद्धिप्रदायकः ॥ ३ ॥

सितवर्णो मधुच्छंदा ऋषिर्ब्रह्मा तु देवता ।।

परमात्मा तु गायत्री नियोगः सर्वकर्मसु ।। ४ ॥

एतद्ब्रह्ममयं बीजं विश्वमत्र समन्वितम् १।

वेदवेदांग तत्त्वाख्यं सदसद्रूपमव्ययम् ॥ ५ ॥

नकारः पीतवर्णस्तु जलबीजः सनातनः ॥

बीजं पृथ्वी मनश्छन्दो विषहा विनियोगतः ॥ ६ ॥

मोकारः पृथिवी बीजो विश्वामित्रसमन्वितः ॥

रक्तवर्णो महातेजा धनदो विनियोजितः । ७ ॥

भकारः पंचवर्णस्तु जलबीजः सनातनः ॥

मरीचिना समायुक्तः पूजितः सर्वभोगदः ॥ ८ ॥

गकारो हेमरक्ताभो भरद्वाजसमन्वितः ॥

वायुबीजो विनिर्योगं कुर्वतामादिभोगदः ॥। ९ ॥

वकारः कुन्दधवलो व्योमबीजो महाबलः ॥

ऋषिमंत्रिपुरस्कृत्य योजितो मोक्षदायकः ॥ ६.२६२.१० ।१

तकारो विद्युद्विकारः सोमबीजं महत्स्मृतम् ॥

अंगिरावर्द्धमूलं च वर्जितं कर्मका मिकम् १। ११ ॥

वाकारो धूम्रवर्णश्च सूर्यबीजं मनोजवम् ॥

पुलस्त्यर्षिसमायुक्तं नियुक्तं सर्वसौख्यदम् ।१ १२ ॥

सुकारश्चाक्षरो नित्यं जपाकुसुम भास्वरः ॥

मनो बीजं दुर्विषह्यं पुलहाश्रितमर्थिदम् ॥ १३ ॥

देकाराक्षरकं बीजं हंसरूपं च कर्बुरम् ।१ ।

सिद्धिबीजं महासत्त्वं क्रतौ क्रतुनियोजितम् ॥ १४ ॥

वाकारो निर्मलो नित्यं यजमानस्तु बीजभृत् ॥

प्रचेताश्रियमाश्रेयं मोक्षे मोक्षप्रदायकम् ॥ १५ ॥

यकारस्य महाबीजं पिंगवर्णश्च खेचरी ॥

भूचरी च महासिद्धिः सर्वदा भूविचिन्तनम् ॥ १६ ॥

भृगुयन्त्रे समाश्रांतिनियोगे सर्वकर्मकृत् ॥

गायत्रीछंद एतेषां देहन्यासक्रमो भवेत् ॥ १७ ॥

ओंकारं सर्वदा न्यस्यन्नकारं पादयोर्द्वयोः ॥

मोकारं गुह्यदेशे तु भकारं नाभिपंकजे ॥ १८ ॥

गकारं हृदये न्यस्य वकारः कण्ठ मध्यगः ॥

तेकारं दक्षिणे हस्ते वाकारो वामहस्तगः ॥ १९ ॥

सुकारं मुखजिह्वायां देकारः कर्णयोर्द्वयोः ॥

वाकारश्चक्षुषोर्द्वन्द्वे यकारं मस्तके न्यसेत् ॥ ६.२६२.२० ॥

लिंगमुद्रा योनिमुद्रा धेनुमुद्रा तथा त्रयम् ॥

सकलं कृतमेतद्धि मंत्ररूपे बिजाक्षरम् ॥ २१ ॥

योजयेत्प्रत्यहं देवि न स पापैः प्रलिप्यते ॥

एतद्द्वादशलिंगारं कूर्मस्थं द्वादशाक्षरम् ॥ २२ ॥

शालग्रामशिलाश्चैव द्वादशैव हि पूजिताः ॥

ताभिः सहाकरैरेभिः प्रत्यक्षैः सह संसदि ॥ २३ ॥

यथावर्णमनुध्यानैर्मुनिबीजसमन्वितैः ॥

विनियोगेन सहितैश्छन्दोभिः समलंकृतैः ॥ २४ ॥

ध्यानैजपैः पूजितैश्च भक्तानां मुनिसत्तम ॥

मोक्षो भवति बन्धेभ्यः कर्मजेभ्यो न संशयः ॥ २५८ ॥

अयं हि ध्यानकर्माख्यो योगो दुष्प्राप्य एव हि ॥

ध्यानयोगं पुनर्वच्मि शृणुष्वैकाग्रमानसा ॥ २६ ॥

ध्यानयोगेन पापानां क्षयो भवति नान्यथा ॥

जपध्यानमयो योगः कर्मयोगो न संशयः ॥ २७ ॥

शब्दब्रह्मसमुद्भूतो वेदेन द्वादशाक्षरः ॥

ध्यानेन सर्वमाप्नोति ध्यानेनाप्नोति शुद्धताम् ॥ २८ ॥

ध्यानेन परमं ब्रह्म मूर्त्तौ योगस्तु ध्यानजः ॥

सावलम्बो ध्यानयोगो यन्नारायणदर्शनम् ॥ २९॥

द्वितीयो निखिलालम्बो ज्ञानयोगेन कीर्तितः ॥

अरूपमप्रमेयं यत्सर्वकायं महः सदा ॥ ६.२६२.३० ॥

तडित्कोटिसमप्रख्यं सदोदितमखंडितम् ॥

निष्कलं सकलं वापि निरंजनमयं वियत् ॥ ३१ ॥

तत्स्वरूपं भोगरूपं तुर्यातीतमनोपमम् ॥

विभ्रांतकरणं मूर्तं प्रकृतिस्थं च शाश्वतम्॥ ३२ ॥

दृश्यादृश्यमजं चैव वैराजं सततोज्ज्वलम् ॥

बहुलं सर्वजं धर्म्यं निर्विकल्पमनीश्वरम् ॥ ३३ ॥

अगोत्रं वरणं वापि ब्रह्मांडशतकारणम् ॥

निरीहं निर्ममं बुद्धिशून्यरूपं च निर्मलम् ॥ ३४ ॥

तदीशरूपं निर्देहं निर्द्वंद्वं साक्षिमात्रकम् ॥

शुद्धस्फटिकसंकाशं ध्यातृध्येयविवर्जितम् ॥

नोपमेयमगाधं त्वं स्वीकुरुष्व स्वतेजसा ॥ ३५ ॥

॥ पार्वत्युवाच ॥ ॥

तत्कथं प्राप्यते सम्यग्ज्ञानं योगिस्वरूपिणम्॥

नारायणममूर्तं च स्थानं तस्य वद प्रभो ॥ ३६ ॥

॥ ईश्वर उवाच ॥ ॥

शिरः प्रधानं गात्रेषु शिरसा धार्यते महान्॥ ॥ ३७।।

शिरसा पूजितो देवः पूजितं सकलं जगत् ॥

शिरसा धार्यते योगः शिरसा ध्रियते बलम् ॥ ३८ ॥

शिरसा ध्रियते तेजो जीवितं शिरसि स्थितम् ॥

सूर्यः शिरो ह्यमूर्तस्य मूर्तस्यापि तथैव च ॥ ३९ ॥

उरस्तु पृथिवीलोकः पादश्चैव रसातलम् ॥

अयं ब्रह्मांडरूपे च मूर्तामूर्तस्वरूपतः ॥ ६.२६२.४० ॥

विष्णुरेव ब्रह्मरूपो ज्ञानयोगाश्रयः स्वयम् ॥

सृजते सर्वभूतानि पालयत्यपि सर्वशः ॥ ४१ ॥

विनाशयति सर्वं हि सर्वदेवमयो ह्ययम् ॥

सर्वमासेष्वाधिपत्यं यस्य विष्णोः सनातनम् ॥ ४२ ॥

तस्मात्सर्वेषु मासेषु सर्वेषु दिवसेष्वपि ॥

सर्वेषु यामकालेषु संस्मरन्मुच्यते हरिम् ॥ ४३ ॥

चातुर्मास्ये विशेषेण ध्यानमात्रात्प्रमुच्यते ॥

अमूर्तसेवनं गंगातीर्थध्यानाद्वरं परम् ॥ ४४ ॥

सर्वदानोत्तरं चैव चातुर्मास्ये न संशयः ॥

सर्वमासकृतं पापं चातुर्मास्ये शुभाशुभम् ॥ ४५ ॥

अक्षय्यं तद्भवेद्देवि नात्र कार्या विचारणा ॥

तस्मात्सर्वप्रयत्नेन ज्ञानयोगो बहूत्तमः ॥ ॥ ४६ ॥

सेवितो विष्णुरूपेण ब्रह्ममोक्षप्रदायकः ॥

शृणुष्वावहिता भूत्वा मूर्तामूर्ते स्थितिं शुभे ॥ ४०७ ॥

न कथ्येयं यस्य कस्य सुतस्याप्य परस्य च ॥

अदांतायाथ दुष्टाय चलचित्ताय दांभिके ॥ ४८ ॥

स्ववाक्च्युताय निंद्याय न वाच्या योगजा कथा ॥

नित्यभक्ताय दांताय शमादि गुणिने तथा ॥ ४९ ॥ ।

विष्णुभक्ताय दातव्या शूद्रायापि द्विजन्मने ॥

अभक्तायाप्यशुचये ब्रह्मस्थानं न कथ्यते ॥ ६.२६२.५० ॥

मद्भक्त्या योगसिद्धिं त्वं गृहाणाशु तपोधने ॥

अभूतं ज्ञानगम्यं तं विद्धि नारायणं परम् ॥ ५१ ॥

नादरूपेण शिरसि तिष्ठंतं सर्वदेहिनाम् ॥

स एव जीवशिरसि वर्त्तते सूर्यबिंबवत् ॥ ५२ ॥

सदोदितः सूक्ष्मरूपो मूर्तो मूर्त्या प्रणीयते ॥

अभ्यासेन सदा देवि प्राप्यते परमात्मकः ॥ ५३ ॥

शरीरे सकला देवा योगिनो निवसंति हि ॥

कर्णे तु दक्षिणे नद्यो निवसंति तथाऽपराः ॥ ५४ ॥

हृदये चेश्वरः शंभुर्नाभौ ब्रह्मा सनातनः ॥

पृथ्वी पादतलाग्रे जलं सर्वगतं तथा ॥ ५५ ॥

तेजो वायुस्तथाऽऽकाशं विद्यते भालमध्यतः॥

हस्ते च पंच तीर्थानि दक्षिणे नात्र संशयः ॥ ५६ ॥

सूर्यो यद्दक्षिणं नेत्रं चन्द्रो वाममुदाहृतम् ॥

भौमश्चैव बुधश्चैव नासिके द्वे उदाहृते ॥ ५७ ॥

गुरुश्च दक्षिणे कर्णे वामकर्णे तथा भृगुः ॥

मुखे शनैश्चरः प्रोक्तो गुदे राहुः प्रकीर्तितः ॥ ५८ ॥

केतुरिंद्रियगः प्रोक्तो ग्रहाः सर्वे शरीरगाः ॥

योगिनो देहमासाद्य भुवनानि चतुर्दश ॥ ५९ ॥

प्रवर्त्तंते सदा देवि तस्माद्योगं सदाभ्यसेत् ॥

चातुर्मास्ये विशेषेण योगी पापं निकृन्तति ॥ ६.२६२.६० ॥

मुहूर्त्तमपि यो योगी मस्तके धारयेन्मनः ॥

कर्णौ पिधाय पापेभ्यो मुच्यतेऽसौ न संशयः ॥ ६१ ॥

अंतरं नैव पश्यामि विष्णोर्योगपरस्य वा ॥

एकोऽपि योगी यद्गेहे ग्रासमात्रं भुनक्ति च ॥ ६२ ॥

कुलानि त्रीणि सोऽवश्यं तारयेदात्मना सह ॥

यदि विप्रो भवेद्योगी सोऽवश्यं दर्शनादपि ॥ ६३ ॥

सर्वेषां प्राणिनां देवि पापराशि निषूदकः ॥

सक्रियो ब्रह्मनिरतः सच्छूद्रो योगभाग्यदि ॥ ६४ ॥

भवेत्सद्गुरुभक्तो वा सोऽप्यमूर्तफलं लभेत् ॥

यो योगी नियताहारः परब्रह्म समाधिमान् ॥ ६५ ॥

चातुर्मास्ये विशेषेण हरौ स लयभाग्भवेत् ॥

यथा सिद्धकरस्पर्शाल्लोहं भवति कांचनम् ॥ ६६ ॥

तथा मूर्त्तं हरिप्रीत्या मनुष्यो लयमाव्रजेत् ॥

यथा मार्गजलं गंगापतितं त्रिदशैरपि ॥ ६७ ॥

सेवितं सर्वफलदं तथा योगी विमुक्तिदः ॥

यथा गोमयमात्रेण वह्निर्दीप्यति सर्वदा ॥ ६८ ॥

देवतानां मुखं तद्धि कीर्त्यते याज्ञिकैः सदा ॥

एवं योगी सदाऽभ्यासाज्जायते मोक्षभाजनम् ॥ ६९ ॥

योगोऽयं सेव्यते देवि ज्ञानासिद्धिप्रदः सदा ॥

सनकादिभिराचार्यैर्मुमुक्षुभिरधीश्वरैः ॥ ६.२६२.७० ॥

प्रथमं ज्ञानसंपत्तिर्जायते योगिनां सदा ॥

तेषां गृहीतमात्रस्तु योगी भवति पार्वति ॥ ७१ ॥

ततस्तु सिद्धयस्तस्य त्वणिमाद्याः पुरोगताः ॥

भवन्ति तत्रापि मनो न दद्याद्योगिनां वरः ॥ ७२ ॥

सर्वदानक्रतुभवं पुण्यं भवति योगतः ॥

योगात्सकलकामाप्तिर्न योगाद्भुवि प्राप्यते ॥ ७३ ॥

योगान्न हृदयग्रंथिर्न योगान्ममता रिपुः ॥

न योगसिद्धस्य मनो हर्तुं केनापि शक्यते ॥ ७४ ॥

स एव विमलो योगी यच्चित्तं शिरसि स्थितम् ॥

स्थिरीभूतव्यथं नित्यं दशमद्वारसंपुटे ॥ ७५ ॥

कर्णौ पिधाय मर्त्यस्य नादरूपं विचिन्वतः ॥

तदेव प्रणवस्याग्रं तदेव ब्रह्म शाश्वतम् ॥ ७६ ॥

तदेवानंतरूपाख्यं तदेवामृतमुत्तमम् ॥

घ्राणवायौ प्रघोषोऽयं जठराग्नेर्महत्पदम् ॥ ७७ ॥

पंचभूतं निवासं यज्ज्ञानरूपमिदं पदम् ॥

पदं प्राप्य विमुक्तिः स्याज्जन्मसंसारबंधनात् ॥ ७८ ॥

यदाप्तिर्दुलभा लोके योगसिद्धिप्रदायिका ॥ ७९ ॥

एवं ब्रह्ममयं विभाति सकलं विश्वं चरं स्थावरं विज्ञानाख्यमिदं पदं स भगवान्विष्णुः स्वयं व्यापकः ॥

ज्ञात्वा तं शिरसि स्थितं बहुवरं योगेश्वराणां परं प्राणी मुंचति सर्पवज्जगतिजां निर्मोकमायाकृतिम् ॥ ६.२६२.८० ॥

इति श्रीस्कांदे महापुराण एकाशीति साहरस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये ज्ञानयोगकथनं नाम द्विषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६३



॥ ईश्वर उवाच ॥ ॥

यदि चेत्तामसं कर्म त्यक्त्वा कर्मसु जायते ॥

तदा ज्ञानमयो योगी जीवतां मोक्षदायकः ॥ १ ॥

यदा निर्ममता देहे यदा चित्तं सुनिर्मलम् ॥

यदा हरौ भक्तियोगस्तदा बन्धो न कर्मणा ॥ २ ॥

कुर्वन्नेव हि कर्माणि मनः शांतं नृणां यदा ॥

तदा योगमयी सिद्धिर्जायते नात्र संशयः ॥ ३ ॥

गुरुत्वं स्थानमसकृदनुभूय महामतिः ॥

जीवन्विष्णुत्वमासाद्य कर्म संगात्प्रमुच्यते ॥ ४ ॥

कर्माणि नित्यजातानि नित्यनैमित्तिकानि च ॥

इच्छया नैव सेव्यानि दुःखतापविवृद्धये ॥ ५ ॥

कर्मणामीशितारं च विष्णुं विद्धि महेश्वरि ॥

तस्मिन्संत्यज्य सर्वाणि संसारान्मुच्यतेऽखिलात् ॥ ६ ॥

एतदेव परं ज्ञानमेतदेव परं तपः ॥

एतदेव परं श्रेयो यत्कृष्णे कर्मणोऽर्पणम् ॥ ७ ॥

अयं हि निर्मलो योगो निर्गुणः स उदाहृतः ॥

तद्विष्णोः कर्म जनितं शुभत्व प्रतिपादनम् ॥ ८ ॥

तावद्भ्रमंति संसारे पितरः पिंडतत्पराः ॥

यावत्कुले भक्तियुतः स्तो नैव प्रजायते ९ ॥

तावद्द्विजानि गर्जंति तावद्गर्जति पातकम् ॥

तावत्तीर्थान्यनेकानि यावद्भक्तिं न विंदति ॥ ६.२६३.१० ॥

स एव ज्ञानवाँल्लोके योगिनां प्रथमो हि सः ॥

महाक्रतूनामाहर्ता हरिभक्तियुतो हि सः ॥ ११ ॥

निमिषं निर्नयन्मेषं योगः समभिजायते ॥

वाणीजये योगिनस्तु गोमेधश्च प्रकीर्तितः ॥ ॥ १२ ॥

मनसो विजये नित्यमश्वमेधफलं लभेत् ॥
कल्पनाविजयान्नित्यं यज्ञं सौत्रामणिं लभेत् ॥ १३ ॥
देहस्योत्सर्जनान्नित्यं नरयज्ञः प्रकीर्तितः ॥
पंचेंद्रियपशून्हत्वाऽनग्नौ शीर्षे च कुण्डले ॥ १४ ॥
गुरूपदेशविधिना ब्रह्मभूतत्वमश्नुते ॥
स योगी नियताहारोदण्डत्रितयधारकः ॥ १५ ॥
त्रिदंडी स तु विज्ञेयो ज्ञाते देवे निरंजने ॥
मनोदण्डः कर्मदण्डो वाग्दंडो यस्य योगिनः ॥ १६ ॥
स योगी ब्रह्मरूपेण जीवन्नेव समाप्यते ॥
अज्ञानी बाध्यते नित्यं कर्मभिर्बंधनात्मकैः ॥१७ ॥
कुर्वन्नेव हि कर्माणि ज्ञानी मुक्तिं प्रयाति हि ॥
यदा हि गुरुभिः स्थानं ब्रह्मणः प्रतिपाद्यते ॥ १८ ॥
तदैष मुक्तिमाप्नोति देहस्तिष्ठति केवलम् ॥
यावद्ब्रह्मफलावाप्त्यै प्रयाति पुरुषोत्तमः ॥ १९ ॥
तावत्कर्ममयी वृत्तिर्ब्रह्म वृक्षांतराभवेत् ॥
अवांतराणि पर्वाणि ज्ञेयानि मुनिभिः सदा ॥ ६.२६३.२० ॥
मोक्षमार्गो द्विजैश्चैव श्रुतिस्मृतिसमुच्चयात् ॥
मोक्षोऽयं नगराकारश्चतुर्द्वार समाकुलः ॥ २१ ॥
द्वारपालास्तत्र नित्यं चत्वारस्तु शमादयः ॥
त एव प्रथमं सेव्या मनुजैर्मोक्षदायकाः ॥ २२ ॥
शमश्च सद्विचारश्च संतोषः साधुसंगमः ॥
एते वै हस्तगा यस्य तस्य सिद्धिर्न दूरतः ॥ २३ ॥
योगसिद्धिर्विष्णुभक्त्या सद्धर्माचरणेन च ॥
प्राप्यते मनुजैर्देवि ह्येतज्ज्ञानमलं विदुः ॥ २४ ॥
ज्ञानार्थं च भ्रमन्मर्त्यो विद्यास्थानेषु सर्वशः ॥
सद्यो ज्ञानं सद्गुरुतो दीपार्चिरिव निर्मला ॥ २५ ॥
मुहूर्तमात्रमपि यो लयं चिंत यति ध्रुवम् ॥
तस्य पापसहस्राणि विलयं यांति तत्क्षणात् ॥ २६ ॥

रागद्वेषौ परित्यज्य क्रोधलोभविवर्जितः ॥
सर्वत्र समदर्शी च विष्णुभक्तस्य दर्शनम् ॥ २७ ॥
सर्वेषामपि जीवानां दया यस्य हृदि स्थिरा ॥
शौचाचारसमायुक्तो योगी दुःखं न विंदति ॥ २८ १।
मायाधिपटलैर्हीनो मिथ्या वस्तुविरागवान् ॥
कुसंसर्गविहीनश्च योगसिद्धेश्च लक्षणम् ॥ २९ ॥
ममतावह्निसंयोगो नराणां तापदायकः ॥
उत्पन्नः शमनं तस्य योगिनां शांतिचारणम् ॥ ६.२६३.३० ॥
इन्द्रियाणामथोद्धृत्य मनसैव निषेधयेत् ॥
यथा लोहेन लोहं च घर्षितं तीक्ष्णतां व्रजेत् ॥ ३१ ॥
बुद्धिर्हि द्विविधा देहे देया ग्राह्या विशुद्धिदा ॥
संसारविषया त्याज्या परब्रह्मणि सा शुभा ॥ ३२ ॥
अहंकारो यथा देवि पापपुण्यप्रदायकः ॥
ज्ञाते तत्त्वे शुभफले कृतः संधाय नान्यथा ॥ ३३ ॥
श्यामलं च उपस्थं च रूपातीतान्नराः शिवम् ॥
हृदिस्थं सिरशिस्थं च द्वयं बद्धविमुक्तये ॥ ॥ ३४ ॥
एतदक्षरमव्यक्तममृतं सकलं तव ॥
रूपरूपविष्णुरूपरूपमूर्तिनिवेदितम् ॥ ३६ ॥
एवं ज्ञात्वा विमुच्येत योगी संसारबन्धनात् ॥
गुरूपदेशाद्गृहस्थो लभते नान्यथा क्वचित् ॥३६॥
यदा गुरुः प्रसन्नात्मा तस्य विश्वं प्रसीदति ॥
गुरुश्च तोषितो येन संतुष्टाः पितृदेवताः ॥ ३७ ॥
गुरूपदेशः प्रतिमा सद्विचारः समे मनः ॥
क्रिया च ज्ञानसहिता मोक्षसिद्धेर्हि लक्षणम् [। ३८ ॥
क्रियापतिर्विष्णुरेव स्वयमेव हि निष्क्रि यः ॥
स च प्राणविरूपाय द्वादशाक्षरवीजकः ॥३९॥
द्वादशाक्षरकं चक्रं सर्वपापनिबर्हणम् ॥
दुष्टानां दमनं चैव परब्रह्मप्रदायकम् ॥ ६.२६३.४० ॥

एतदेव परं ब्रह्म द्वादशाक्षररूपधृक् ॥

मया प्रकाशितं देवि स्कन्दे हि विमलं तव ॥४१॥

एतत्सारं योगिनां ध्यानरूपं भक्तिग्राह्यं श्रद्धया चिन्तयेच्च ॥

चातुर्मास्ये जन्मकोट्यां च जातं पापं दग्ध्वा मुक्तिदः कैटभारिः ॥ ४२ ॥

॥ब्रह्मोवाच ॥ ॥

एतस्मिन्नगरे तत्र क्षीरसागरमध्यतः ॥

उज्जहार विमानाग्रे तेजोभाराभिपीडितः ॥ ४३ ॥

उरो बाहुकृतिं कुर्वन्सान्निध्यं समुपागतः ॥

महामत्स्योऽज्ञातपूर्वः सन्निधानेऽनहंकृतिः ॥ ४४ ॥

हुंकारगर्भे मत्स्यं च दृष्ट्वा तं स महेश्वरः ॥

तेजसा स्तंभयामास वाक्यमेतदुवाच ह ॥ ४५ ॥

कस्त्वं मत्स्योदरस्थश्च देवो यक्षोऽथ मानुषः ॥

कथं जीवसि देहांतर्गतो मम वद प्रभो ॥ ४६ ॥

॥ मत्स्य उवाच ॥ ॥

अहं मत्स्योदरे क्षिप्तः समुद्रे क्षीरसंभवे ॥

मात्रा तु पितृवाक्येन नायं मम कुलान्वितः ॥४७॥

कुलक्षयभयात्तेन जातं स्वकुलनाशनम् ॥

गंडांतयोगजनितो बालो न गृहकर्मकृत् ॥ ४८ ॥

इति मात्रा दुःखितया निरस्तः शृणु वंशजः ॥

झषेणापि गृहीतोऽस्मि कालो मेऽत्र महानभूत् ॥ ४९ ॥

तव वाक्यामृतैरेभिर्ज्ञानयोगो महानभूत् ॥

तेन त्वं सकलो ज्ञातो मया मूर्तोऽथ मूर्तगः। ॥६.२६३.५०॥।

अनुज्ञां मम देवेश देहि निष्क्रमणाय च ॥

यथाऽहं पितृपो ब्रह्मन्भवान्याश्चापि लक्ष्यते ॥ ५१ ॥

॥ हर उवाच ॥ ॥ विप्रोऽसि सुतरूपोऽसि पूज्योस्यासि बभाषतः ॥

बहिर्निष्क्रम वेगेन स्तंभितोऽसि महाझषः ॥ ५२ ॥

ततोऽसौ शिरसा जात उत्क्लेशान्मत्स्ययोजितः ॥

ततो हि विकृतं वक्त्रं क्षणाद्बहिरुपागतः ॥ ५३ ॥

रूपवान्प्रतिमायुक्तो मत्स्यगंधेन संयुतः ॥

सोमकांतिसमस्तत्र ह्यभवद्दिव्यगंधभाक् ॥ ८५४ ॥

उमापि प्रणतं चामुं सुतं स्वोत्संगभाजनम् ॥

चकार तस्य नामापि हरः परमहर्षितः ॥ ८९५ ॥

यस्मान्मत्स्योदराज्जातो योगिनां प्रवरो ह्ययम् ॥

तस्मात्तु मत्स्य नाथेति लोके ख्यातो भविष्यति ॥ ५६ ॥

अच्छेद्यः स्यान्नरतनुर्ज्ञानयोगस्य पारगः ॥

निर्मत्सरोऽपि निर्द्वंद्वो निराशो ब्रह्मसेवकः ॥ ५७ ॥

जीवन्मुक्तश्च भविता भुवनानि चतुर्दश ॥

इत्युक्तश्च महेशानं प्रणमंश्च पुनःपुनः ॥

महेश्वरेण सहितो मंदराचलमाययौ ॥ ५८ ॥

॥ ब्रह्मोवाच ॥ ॥

कृत्वा प्रदक्षिणं देवीं स्कन्दमालिंग्य सोऽगमत् ॥ ५९ ॥

ततः सा पार्वती हृष्टा प्राप्य ज्ञानमनुत्तमम् ॥

एवं सा परमां सिद्धिं प्रणवस्यप्रभा जनम् ॥ ६.२६३.६० ॥

सा प्राप्य जगतां माता द्वादशाक्षरजांबुना ॥

इमां मत्स्येन्द्रनाथस्य चोत्पत्तिं यः शृणोति च ॥ ६१ ॥

चातुर्मास्ये विशेषेण सोऽश्वमेधफलं लभेत्॥६२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये मत्स्येन्द्रनाथोत्पत्तिकथनं नाम त्रिषष्ट्युत्तरद्विशततमोऽध्यायः॥२६३॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६४



ब्रह्मोवाच॥

कार्तिकेयश्च पार्वत्याः प्राणेभ्यश्चातिवल्लभः॥

संक्रीडति समीपस्थो नानाचेष्टाभिरुद्यतः॥१॥

रक्तकांतिर्महातेजाः षण्मुखोऽद्भुत विक्रमः॥

क्वचिद्गायति चात्यर्थं क्वचिन्नृत्यति स्वेच्छया॥२॥

मातरं पितरं दृष्ट्वा विनयावनतः क्वचित्॥

क्वचिच्च गंगापुलिने सिकतालेपनाकृतिः॥३॥

गणैः सह विचिन्वानो विविधान्वनभूरुहान्॥

एवं प्रक्रीडितस्तस्य दिवसाः पंच जज्ञिरे॥४॥

ततो देवा महेन्द्राद्यास्तारकत्रासविद्रुताः॥

स्तुवन्तः शंकरं सर्वे तारकस्य जिघृक्षया॥५॥

चक्रुः कुमारं सेनान्यं जाह्नव्यां स्वगणैः सुराः॥

सस्वनुर्देववाद्यानि पुष्पवर्षं पपात ह॥६॥

वह्निस्तु स्वां ददौ शक्तिं हिमवान्वाहनं ददौ॥

सर्वदेवसमुद्भूतगणकोटिसमावृतः॥७॥

प्रणम्य मुनिसंघेभ्यः प्रययौ रिपुविग्रहे॥

ताम्रवत्यां नगर्यां च शंखं दध्मौ प्रतापवान्॥८॥

ततस्तारकसैन्यस्य दैत्यदानवकोटयः॥

समाजग्मुस्तस्य पुराच्छंखनादभयातुराः॥९॥

स्ववाहनसमारूढाः संयता बलदर्पिताः॥

देवाः सर्वेऽपि युयुधुः स्कन्दतेजोपबृंहिताः॥६.२६४.१०॥

तदा दानवसैन्यानि निजघान च सर्वशः॥

विष्णुचक्रेण ते छिन्नाः पेतुरुर्व्यां सहस्रशः॥११॥

ततो भग्नाश्च शतशो दानवा निहतास्तदा॥

नद्यः शोणितसंभूता जाता बहुविधामुने॥१२॥

तद्भग्नं दानवबलं दृष्ट्वा स युयुधे रणे॥

बभंज सद्यो देवेशो बाणजालैरनेकधा॥१३॥

शक्तिनायुध्य गंगिन्याश्चिक्षेप कृष्णप्रेरिताः॥

सरथं च सयंतारं चक्रे तं भस्मसात्क्षणात्॥१४॥

शेषाः पातालमगमन्हतं दृष्ट्वाऽथ तारकम्॥

ततो देवगणाः सर्वे शसंसुस्तस्य विक्रमम्॥ १५॥

देवदुन्दुभयो नेदुः पुष्पवृष्टिस्तथाऽभवत्॥

ते लब्धविजयाः सर्वे महेश्वरपुरोगमाः॥ १६॥

सिषिचुः सर्वदेवानां सेनापत्ये षडाननम्॥

ततः स्कंदं समालिंग्य पार्वती हर्षगद्गदा॥१७॥

मांगल्यानि तदा चक्रे स्वसखीभिः समावृता॥

एवं च तारकं हत्वा सप्तमेऽहनि बालकः॥१८॥

मंदराचलमासाद्य पितरौ संप्रहर्षयन्॥

उवाच सकलं स्कन्दः परमानंदनिर्भरः॥१९॥

काले दारक्रियां तस्य चिन्तयामास शंकरः॥

स उवाच प्रसन्नात्मा गांगेयममितद्युतिम्॥६.२६४.२०॥

प्राप्तः कालस्तव विभो पाणिग्रहणसंमतः॥

कुरु दारान्समासाद्य धर्मस्ते पुंससंमतः॥२१।

क्रीडस्व विविधैर्भोगैर्विमानैः सह कामिकैः॥

तच्छ्रुत्वा भगवान्स्कन्दः पितरं वाक्यमब्रवीत्॥

अहमेव हि सर्वत्र दृश्यः सर्वगणेषु च॥

दृश्यादृश्यपदार्थेषु किं गृह्णामि त्यजामि किम्॥२३॥

याः स्त्रियः सकला विश्वे पार्वत्या ताः समा हि मे॥

नराः सर्वेऽपि देवेश भवद्वत्तान्विलोकये॥२४॥

त्वं गुरुर्मां च रक्षस्व पुनर्नरकमज्जनात्॥

येन ज्ञातमिदं ज्ञानं त्वत्प्रसादादखंडितम्॥२५॥

पुनरेव महाघोरसंसाराब्धौ निमज्जये॥

दीपहस्तो यथा वस्तु दृष्ट्वा तत्करणं त्यजेत्॥२६॥

तथा ज्ञानमधिप्राप्य योगी त्यजति संसृतिम्॥

ज्ञात्वा सर्वगतं ब्रह्म सर्वज्ञ परमेश्वर॥२७॥

निवर्त्तंते क्रियाः सर्वा यस्य तं योगिनं विदुः॥

विषये लुब्धचित्तानां वनेऽपि जायते रतिः॥२८॥

सर्वत्र समदृष्टीनां गेहे मुक्तिर्हि शाश्वती॥

ज्ञानमेव महेशान मनुष्याणां सुदुर्लभम्॥२९॥

लब्धं ज्ञानं कथमपि पंडितो नैव पातयेत्॥

नाहमस्मि न माता मे न पिता न च बांधवः॥६.२६४.३०॥

ज्ञानं प्राप्य पृथक्भावमापन्नो भुवनेष्वहम्॥

प्राप्यं भागमिदं दैवात्प्रभावात्तव नार्हसि॥३१॥

वक्तुमेवंविधं वाक्यं मुमुक्षोर्मे न संशयः॥

यदाग्रहपरा देवी पुनःपुनरभाषत॥३२॥

तदा तौ पितरौ नत्वा गतोऽसौ क्रौञ्चपर्वतम्॥

तत्राश्रमे महापुण्ये चचार परमं तपः॥३३॥

जजाप परमं ब्रह्म द्वादशाक्षरबीजकम्॥

पूर्वं ध्यानेन सर्वाणि वशीकृत्येन्द्रियाणि च॥३४॥

ममतां संवियुज्याथ ज्ञानयोगमवाप्तवान्॥

सिद्धयस्तस्य निर्विघ्ना अणिमाद्या यदाऽऽगताः॥३५॥

तदा तासां गणा क्रुद्धो वाक्यमेतदुवाच ह॥

ममापि दुष्टभावेन यदि यूयमुपागताः॥३६॥

तदास्मत्समशांतानां नाभिभूतिं करिष्यथ॥

एवं ज्ञात्वा महेशोऽपि यतो ज्ञानमहोदयम्॥३७॥

मत्तोऽपि ज्ञानयोगेनस्कन्दोऽप्यधिकभावभृत्॥

विस्मयाविष्टहृदयः पार्वतीमनुशिष्टवान्॥३८॥

पुत्रशोकपरां चोमां शुभैर्वाक्यामृतैर्हरः॥

चातुर्मासस्य माहात्म्यं सर्वपापप्रणाशनम्॥३९॥

महेश्वरो वा मधुकैटभारिर्हृद्याश्रितो ध्यानमयोऽद्वितीयः॥

अभेदबुद्ध्या परमार्तिहंता रिपुः स एवातिप्रियो भवेत्ततः॥६.२६४.४०॥

सूत उवाच॥

एतद्वः कथितं विप्राश्चातुर्मास्यसमुद्भवम्॥

माहात्म्यं विस्तरेणैव किमन्यच्छ्रोतुमिच्छथ॥४१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शेषशाय्युपाख्याने ब्रह्मनारदसंवादे चातुर्मास्यमाहात्म्ये तारकासुरवधो नाम चतुःषष्ट्युत्तरद्विशततमोऽध्यायः॥२६४॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६५



ऋषय ऊचुः॥

प्रभूतानि त्वयोक्तानि व्रतानि नियमास्तथा॥

प्रसुप्ते पुंडरीकाक्षे येषां संख्या न विद्यते॥१॥

अशक्त्या हि शरीरस्य नियमानां कथं चरेत्॥

व्रतं हि सुकुमारांगो दानैर्वापि वदस्व नः॥२॥

सूत उवाच॥

अशक्तो नियमं कर्तुं सुकुमारो भवेत्तु यः॥

तेन तत्र प्रकर्तव्यं विख्यातं भीष्मपंचकम्॥३॥

कार्त्तिकस्य सिते पक्ष एकादश्यां समाहितः॥

प्रातरुत्थाय विप्रेंद्र कर्तव्यं दंतधावनम्॥४॥

ततस्तु नियमं कुर्याद्वासुदेवपरायणः॥

पूर्वोक्तानां च सर्वेषां नियमानां द्विजोत्तमाः॥५॥

उपवासः प्रकर्तव्यस्तस्मिन्नहनि भक्तितः॥

अशक्त्या वा शरीरस्य हेमं दद्यात्स्वशक्तितः॥६॥

ब्राह्मणाय हविष्यान्नं दातव्यं वैष्णवैर्नरैः।

एवं पञ्चदिनं यावत्कर्तव्यं व्रतमुत्तमम्॥७॥

पूजनीयो हृषीकेशो जलशायिस्वरूपधृक्॥

गंधैर्धूपैश्च नैवेद्यै रात्रिजागरणैरपि॥८॥

षष्ठेऽहनि ततो जाते पूजयेद्ब्राह्मणोत्तमान्॥

तांश्च वस्त्रैर्हिरण्येन मिष्टान्नेन प्रभक्तितः॥९॥

ततः कृतांजलिर्भूत्वा याचयेद्ब्राह्मणोत्तमान्॥

सर्वे मे नियमाः प्राप्ता युष्माकं च प्रसादतः॥६.२६५.१०॥

ततस्तैरपि वक्तव्यं चतुर्मासीसमुद्भवम्॥

व्रतानां नियमानां च व्रतं भूयात्तवाखिलम्॥११॥

ततो विसर्ज्य तान्विप्रान्भोजनं स्वयमाचरेत्॥

सर्वाहारेण राजेंद्र पंचगव्यप्रपूर्वकम्॥१२॥

यः करोति व्रतं तस्य फलं स्याद्बहुपुण्यदम्॥

यः पुनर्व्रतमेतद्धि कुरुते दिनपंचकम्॥

उपवासपरस्तस्य फलं शतगुणं भवेत्॥१३॥

एकादश्यां हरेः पूजां जातिपुष्पैः समाचरेत्॥

द्वादश्यां बिल्वपत्रेण शतपत्र्या ततः परम्॥

त्रयोदश्यां चतुर्दश्यां सुरभ्या भक्तिपूर्वकम्॥१४॥

भृंगराजेन पुण्येन पौर्णमास्यां प्रपूजयेत्॥

प्रतिपद्दिवसे सर्वैः पूजनीयो जनार्दनः॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥१५॥

प्रतिपद्दिवसे सर्वान्प्राशयेत्कायशुद्धये॥

अगरं गुग्गुलं चैव कर्पूरं तगरं त्वचा॥१६॥

एकैकं निर्वपेद्धूपं प्रतिपद्दिवसेऽखिलम्॥

जलशायी जगद्योनिः शेषपर्यंकमाश्रितः॥१७॥

अर्घं गृह्णातु मे देवो भीष्मपंचकसिद्धये॥

मंत्रेणानेन दातव्यो ह्यर्घो देवस्य भक्तितः॥१८॥

शंखतोयं समादाय सपुष्पफलचंदनैः॥

नैवेद्यं परमान्नं च स्वशक्त्या निर्वपेद्द्विजाः॥१९॥

एतद्वः सर्वमाख्यातं व्रतं वै भीष्मपंचकम्॥

संप्राप्यते फलं चैव व्रतानां नियमैः सह॥६.२६५.२०॥

ऋषय ऊचुः॥ यदेतद्भवता प्रोक्तमशून्यशायिनीव्रतम्॥

इन्द्रेण यत्कृतं पूर्वं तुष्ट्यर्थं चक्रपाणिनः॥

प्रसुप्तस्य महाभाग फलं चैव प्रकीर्तितम्॥२१॥

कस्मिन्काले प्रकर्तव्यं केनैव विधिना तथा॥

तस्मात्सूत महाभाग विधानं विस्तराद्वद॥२२॥

सूत उवाच॥

श्रावण्यां समतीतायां द्वितीयादिवसे स्थिते॥

प्रातरुत्थाय विप्रेन्द्रा नक्षत्रे विष्णुदैवते॥

पापिष्ठैः पतितैर्म्लेच्छैः संभाषं नैव कारयेत्॥२३॥

ततो मध्याह्नसमये स्नात्वा धौतांबरः शुचिः॥

जलशायिनमासाद्य मंत्रेणानेन पूजयेत्॥२४॥

श्रीवत्सधारिञ्छ्रीकांत श्रीधामञ्छ्रीपतेऽव्यय॥

गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम्॥२५॥

पितरो मा प्रणश्यंतु मा प्रणश्यंतु चाग्नयः॥

देवता मा प्रणश्यंतु मत्तो दांपत्यभेदतः॥२६॥

लक्ष्म्या वियुज्यसे कृष्ण न कदाचिद्यथा भवान्॥

तथा कलत्रसम्बन्धो देव मा मे प्रणश्यतु॥२७॥

लक्ष्म्या ह्यशून्यं शयनं यथा ते देव सर्वदा॥

शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि॥ २८॥

एवमर्थं निवेद्याथ ततो विप्रं प्रपूजयेत्॥

यथाशक्त्या द्विजश्रेष्ठा वित्तशाठ्यं विवर्जयेत्॥२९॥

एवं भाद्रपदे मासि आश्विने कार्तिके तथा॥

पूजयेच्च जगन्नाथं जलशायिनमच्युतम्॥६.२६५.३०॥

अक्षारभोजनं कार्यं विशेषात्तैलवर्जितम्॥

समाप्तौ च ततो दद्याद्ब्राह्मणेंद्राय भक्तितः॥३१॥

फलव्रीहिसमोपेतां शय्यां वस्त्रसमन्विताम्॥

सुवर्णं दक्षिणायां च तथैव च फलं लभेत्॥३२॥

एवं यः कुरुते सम्यग्व्रतमेतत्समाहितः॥

तस्य तुष्टिपथं याति जलशायी जगद्गुरुः॥३३॥

यथा शक्रस्य संतुष्टः पूर्वमेव द्विजोत्तमाः॥

अशून्यं शयनं तस्य भवेज्जन्मनि जन्मनि॥३४॥

अष्टमासकृतं पापमज्ञानाज्ज्ञानतोऽपि वा॥

अशून्यशयनात्सर्वं व्रतान्नाशं नयेत्पुमान्॥३५॥

पुत्रहीना च या नारी काकवन्ध्या च या भवेत्॥

विधवा या करोत्येतद्व्रतमेवं समाहिता॥

तस्यास्तुष्टो जगन्नाथः कायशुद्धिं प्रयच्छति॥३६॥

न तस्या जायते बुद्धिः कदाचित्पापसंभवा॥

न कामोपहता बुद्धिः कथंचिदपि जायते॥३७॥

कुमारिकापि या सम्यग्व्रतमेतत्समाचरेत्॥

सा पतिं लभते विप्राः कुलीनं रूपसंयुतम्॥३८॥

निष्कामः कुरुते यस्तु व्रतमेतत्समाहितः॥

चातुर्मास्युद्भवानां च नियमानां फलं लभेत्॥३९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये जलशाय्युपाख्याने अशून्यशयनव्रतमाहात्म्यवर्णनं नाम पञ्चषष्ट्युत्तरद्विशततमोऽध्यायः॥२६५॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६६

https://sa.wikisource.org/s/fr8



ऋषय ऊचुः॥

श्रुतानि मुख्यतीर्थानि तत्क्षेत्रप्रोद्भवानि च॥

येषु स्नातो नरः स्म्यक्सर्व तीर्थफलं लभेत्॥१॥

लिंगानि च महाभाग तत्र मुख्यानि यानि च॥

यैर्दृष्टैर्लभ्यते श्रेयः सर्वेषां तानि नो वद॥२॥

सूत उवाच॥

तत्र च मंकणाख्यं तु लिंगमस्ति सुशोभनम्॥

तथा सिद्धेश्वरं नाम गौतमेश्वरसंयुतम्॥३॥

कपालेश्वमन्यच्च चतुर्थं परिकीर्तितम्॥

एकैकं सर्वलिंगानां फलं यच्छत्यसंशयम्॥

यथोक्तविधिना सम्यग्यथोक्तं द्विजसत्तमाः॥४॥

तत्र तावत्प्रवक्ष्यामि मंकणेश्वरजं फलम्॥

मकाराक्षरयुक्तस्य लिंगस्यात्र द्विजोत्तमाः॥५॥

शिवरात्रिं समासाद्य यस्तस्य पुरुषो द्विजाः॥

कुर्याज्जागरणं रात्रौ निराहारः स्थितः शुचिः॥६॥

सर्वलिंगोद्भवं चैव फलं दर्शनसंभवम्॥

जायते नात्र संदेह इत्युवाच हरः स्वयम्॥७॥

ऋषय ऊचुः॥

शिवरात्रिर्महाभाग कस्मिन्काले तु सा भवेत्॥

विध्यानं चैव माहात्म्यं सर्वं नो विस्तराद्वद॥८॥

सूत उवाच॥ माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी॥

तस्या रात्रिः समाख्याता शिवरात्रिसमुद्भवा॥९॥

तस्यां सर्वेषु लिंगेषु सदा संक्रमते हरः॥

विशेषात्सर्वपुण्येषु ख्यातेयं मंकणेश्वरे॥६.२६६.१०॥

ऋषय ऊचुः॥

शिवरात्रिः कथं जाता केनैषा च विनिर्मिता॥
कस्माद्बहुफला जाता सर्वं नो विस्तराद्वद॥११॥
सूत उवाच॥
अत्र वः कीर्तयिष्यामि पूर्ववृत्तं कथानकम्॥
भर्तृयज्ञस्य संवादमश्वसेनस्य भूपतेः॥१२॥
आनर्ताधिपतिः पूर्वमश्वसेन इति स्मृतः॥
आसीद्धर्मपरो नित्यं वेदवेदागंपारगः॥१३॥
भर्तृयज्ञः पुरा तेन इदं पृष्टः कुतूहलात्॥
कलिकालं समुद्वीक्ष्य वर्धमानं दिनेदिने॥१४॥
अश्वसेन उवाच॥
कलिकालकृते किंचिद्व्रतं मे वद सन्मुने॥
स्वल्पायासं महत्पुण्यं सर्वपापप्रणाशनम्॥१५॥
स्वल्पायुषः सदा मर्त्या ब्रह्मन्कृतयुगे पुरा॥
त्रेतायां द्वापरे चैव किमु प्राप्ते कलौ युगे॥१६।
तस्माद्वर्षव्रतं त्यक्त्वा किंचिदेकाह्निकं वद॥१७॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्॥
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम्॥१८।
तस्य तद्वचं श्रुत्वा भर्तृयज्ञ उदारधीः॥
अब्रवीत्सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा॥ १९॥
अस्ति राजन्व्रतं पुण्यं शिवरात्रीतिसंज्ञितम्॥
एकाह्निकं महाराज सर्वपातकनाशनम्॥६.२६६.२०॥
तत्र यद्दीयते दानं हुतं जप्तं तथैव च॥
सर्वमक्षयतां याति रात्रि जागरणे कृते॥२१॥
अपुत्रो लभते पुत्रानधनो धनमाप्नुयात्॥
स्वल्पायुर्दीर्घमायुष्यं शत्रूणां चैव संक्षयम्॥२२॥
यंयं काममभिध्यायन्व्रतमेतत्समाचरेत्॥
तंतं समाप्नुयान्मर्त्यो निष्कामो मोक्षमाप्नुयात्॥२३॥
कार्पण्येनाथ वित्तेन यदि कुर्यात्प्रजागरम्॥

तथा वर्षकृतात्पापान्मुच्यते नात्र संशयः॥२४॥

यानि कान्यत्र लिंगानि स्थावराणि चराणि च॥

तेषु संक्रमते देवस्तस्यां रात्रौ यतो हरः॥२५॥

शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभा॥

प्रार्थितः स सुरैः सर्वैर्लोकानुग्रहकाम्यया॥२६॥

भगवन्कलिकालेऽस्मिन्सर्वपापसमन्विते॥

वर्षपापविशुद्ध्यर्थं दिनमेकं क्षितौ व्रज॥

येन त्वत्पूजया पूता मर्त्याः शुद्धिमवाप्नुयुः॥२७॥

ततो दत्तं हुतं तेषामस्माकमुपतिष्ठति॥

यदुच्छिष्टं नरैर्दत्तं तद्वृथा जायतेऽखिलम्॥२८॥

कलिकाले न चास्माकं किंचिदेवोपतिष्ठति॥

अशुद्धैर्मानवैर्दत्तं प्रभूतमपि शंकर॥२९॥

श्रीभगवानुवाच॥

माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर॥

अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ॥६.२६६.३०॥

लिंगेषु च समस्तेषु चलेषु स्थावरेषु च॥

संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये॥३१॥

तस्यां रात्रौ हि मे पूजां यः करिष्यति मानवः॥

मंत्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति॥३२॥

ॐ सद्योजाताय नमः॥

ॐ वामदेवाय नमः॥

ॐ घोराय नमः॥

ॐ तत्पुरुषाय नमः॥

ॐ ईशानाय नमः॥

एवं वक्त्राणि संपूज्य गन्धपुष्पानुलेपनैः॥

वस्त्रैर्दीपैश्च नैवेद्यैस्ततोऽर्घं संप्रदापयेत्॥

मंत्रेणानेन संपूज्य मां ध्यात्वा मनसि स्थितम्॥३३।

गौरीवल्लभ देवेश सर्वाद्य शशिशेखर॥

वर्षपापविशुद्ध्यर्थमर्घो मे प्रतिगृह्यताम्॥३४।
ततः संपूजयेद्विप्रं भोजनाच्छादनादिभिः॥
दत्त्वाथ दक्षिणां तस्मै वित्तशाठ्यं विवर्जयेत्॥३५॥
धर्माख्यानकथाभिश्च सलास्यैस्तांडवैस्तथा॥३६॥
एवं करिष्यते योऽत्र व्रतमेतत्सुरेश्वर॥
वर्षपापविशुद्ध्यर्थं प्रायश्चित्तं भविष्यति॥३७॥
तच्छ्रुत्वा त्रिदशाः सर्वे प्रणम्य शशिशेखरम्॥
संप्रहृष्टा नरश्रेष्ठ स्वानि स्थानानि भेजिरे॥३८॥
प्रेषयामासुरुर्व्यां च नारदं मुनिसत्तमम्॥
प्रबोधनाय लोकानां शिवरात्रिकृते सदा॥३९॥
सोऽपि गत्वा धरापृष्ठं श्रावयामास सर्वतः॥
शिवरात्रेस्तु माहात्म्यं यदुक्तं शूलपाणिना॥ ६.२६६.४०॥
ततः प्रभृति संजाता शिवरात्रिर्धरातले॥
सर्वकामप्रदा पुण्या सर्वपातकनाशिनी॥४१॥
अत्र वः कीर्तयिष्यामि पुरावृत्तं कथानकम्॥
यद्वृत्तं नैमिषारण्ये लुब्धकस्यात्र कस्यचित्॥४२॥
तत्रासील्लुब्धकः कश्चिज्जातिमात्रान्न कर्मतः॥
व्यसेनानाभिभूतात्मा परवित्तापहारकः॥४३।
न कदाचिद्व्रतं तेन न दत्तं न जपः कृतः॥
केवलं च हृतं वित्तं लोकानां छलसंश्रयात्॥४४॥
कस्यचित्त्वथ कालस्य शिवरात्रिः समागता॥
माघमासेऽसितेपक्षे सर्वपातकनाशिनी॥४५॥
तत्रास्त्यायतनं पुण्यं देवदेवस्य शूलिनः॥
तत्र जागरणं रात्रौ प्रारब्धं बहुभिर्ज्जनैः॥४६॥
नारीभिर्नरशार्दूल भूषिताभिः सुभूषणैः॥
अथासौ चिंतयामास चोरो दृष्ट्वाथ जागरम्॥४७॥
गच्छामि यदि कांचित्स्त्रीं भूषणैः परिभूषिताम्॥
निष्क्रांतां बाह्यतश्चास्य प्रासादस्याप्नुयामहम्॥४८॥

ततो हत्वा समादाय भूषणानि व्रजाम्यहम्॥४९।
एवं निश्चित्य मनसा गतस्तस्य समीपतः।
कर्णिकारं समारुह्य स्थितो गुप्तस्ततो हि सः॥६.२६६.५०॥
वीक्षमाणो दिशः सर्वा नारीनिष्क्रामणोद्भवाः॥
चौरकर्मप्रवृत्तस्य शीतार्तस्य विशेषतः॥५१॥
अल्पापि निद्रा नायाता न च नारी विनिर्गता॥
तस्याधस्तात्ततो लिंगमभवत्तु धरोद्भवम्॥
गत्वा च पत्राण्यादाय प्रचिक्षेपास्य चोपरि॥५२॥
एतस्मिन्नेव काले तु प्रोद्गतस्तीक्ष्णदीधितिः॥
असतीनां च चौराणां कामिनामसुखावहः॥ ५३॥
ततो नराश्च नार्यश्च जग्मुः स्वंस्वं निकेतनम्॥
उपचारपराः शांताः प्रणिपत्य महेश्वरम्॥५४॥
सोऽपि चौरो निराशश्च क्षुत्क्षामः शीतविह्वलः॥
अवतीर्य द्रुमात्तस्मादुपायं कंचिदाश्रितः॥५५॥
ततः कालेन महता पंचत्वं समपद्यत॥
जातो जातिस्मरः सोऽथ दशार्णाधिपतेर्गृहे॥५६॥
उपवासप्रभावेन बलादपि प्रजागरात्॥
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया॥५७॥
ततो राज्यं समासाद्य पितृपैतामहं महत्॥
कारयामास लिंगस्य प्रासादं तस्य शोभनम्॥५८॥
वर्षेवर्षे समाश्रित्य शिवरात्रौ प्रजागरात्॥
उपवासपरोभूत्वा गीतवादित्रनिःस्वनैः॥५९॥
धर्माख्यानकथाभिश्च गीतध्वनिभिरेव च॥
पूर्वोक्तमंत्रैः संपूज्य अर्घं दत्त्वा विधानतः॥
संतर्प्य ब्राह्मणान्कामैर्जगाम निलयं निजम्॥६.२६६.६०॥
कस्यचित्त्वथ कालस्य शिवरात्रौ समागताः॥
प्रासादे तत्र मुनयः प्राप्ता शाण्डिल्यपूर्वकाः॥६१॥
शांडिल्योऽथ भरद्वाजो यवक्रीतोऽथ गालवः॥

पुलस्त्यः पुलहो गार्ग्यस्तथान्ये बहवो नृप॥६२॥
सोऽपि राजा बृहत्सेनो दशार्णाधिपतेः सुतः॥
संप्राप्तो जागरं कर्तुं तस्य लिंगस्य चाग्रतः॥६३॥
पूजयित्वा ततो देवं प्रणिपत्य मुनीश्वरान्॥
उपविष्टस्तस्य चाग्रे ह्यनुज्ञातो द्विजोत्तमैः॥६४॥
ततस्तस्याग्रतश्चक्रुः कथास्ते बहुधा नृप॥
राजर्षीणामतीतानां ब्रह्मर्षीणां विशेषतः॥६५॥
अथ कस्मिन्कथांते स तैः पृष्टो ब्रह्मवादिभिः॥
कौतुकाविष्टचित्तैश्च विस्मयोत्फुल्ललोचनैः॥६६॥
राजन्पृच्छामहे सर्वे वयं कौतूहलान्विताः॥
यदि ब्रवीषि नः सत्यं देवतायतने स्थितः॥६७॥
राजोवाच॥
यदि ज्ञास्यामि विप्रेंद्राः कथयिष्याम्यसंशयम्॥
देवस्याग्रे च संपृष्टः सत्येनात्मानमालभे॥६८॥
ऋषय ऊचुः॥
पुष्कलानि परित्यज्य कस्माद्दानान्यनेकशः॥
जागरं कर्तुकामोऽत्र स्वदेशादुपतिष्ठसि॥६९॥
वर्षेवर्षे सदा प्राप्ते नूनं त्वं वेत्सि कारणम्॥
रहस्यं यदि ते न स्यात्तद्ब्रवीहि नराधिप॥६.२६६.७०॥
सूत उवाच॥
सवैलक्ष्यं स्मितं कृत्वा ततः प्राह स दुर्मनाः॥
रहस्यं परमं ह्येतदवाच्यं हि द्विजोत्तमाः॥७१॥
तथापि च वदिष्यामि पृष्टो देवाग्रतो यतः॥७२॥
ततः स कथयामास पूर्वदेहसमुद्भवम्॥
मलिम्लुचस्ततो नूनं शिवरात्रिसमुद्भवम्॥७३॥
चौर्यभावेन देवस्य पूजनं जागरस्तथा॥
उपवासं विना तेन शिवरात्रौ पुरा कृतम्॥७४॥
जातिस्मरणसंयुक्तं जन्मजातं यथातथम्॥

ततस्ते मुनयः सर्वे साधुवादान्पृथग्विधान्॥७५॥

नृपोत्तमस्य राजर्षेर्दत्त्वाशीर्भिः समन्वितान्॥

रात्रौ जागरणं कृत्वा प्रजग्मुस्ते निजाश्रमान्॥७६॥

सोऽपि राजासमभ्यर्च्य तं देवं तान्द्विजोत्तमान्॥

जगाम स्वपुरं पश्चात्कृत्वा रात्रौ प्रजागरम्॥७७॥

भर्तृयज्ञ उवाच॥

शिवरात्रिः समुत्पन्ना एवं भूमितले नृप॥

एवंविधं च माहात्म्यं तस्यास्ते परिकीर्तितम्॥७८॥

तस्मात्सर्वप्रयत्नेन कार्या स नृपसत्तम॥

कलिकाले विशेषेण य इच्छेद्भूतिमात्मनः॥७९॥

एषा कृता दिलीपेन नलेन नहुषेण च॥

मान्धात्रा धुंधुमारेण सगरेण युयुत्सुना॥६.२६६.८०॥

तथान्यैश्च विशेषेण सम्यक्छ्रद्धासमन्वितैः॥

प्राप्ताश्च हृद्गताः कामा ये दिव्या ये च मानुषाः॥८१॥

तथा चैव तु सावित्र्या श्रिया देव्या तु सीतया॥

अरुंधत्या सरस्वत्या मेनया रंभया तथा॥८२॥

इंद्राण्याथ दृषद्वत्या स्वधया स्वाहया तथा॥

रत्या प्रीत्या प्रभावत्या गायत्र्या च नृपोत्तम॥

सर्वाः प्राप्ताः प्रियान्कामानतिसौभाग्यसंयुतान्॥८३॥

यश्चैतां पठते व्युष्टिं भावेन शिवसंनिधौ।

दिनजात्पातकात्सोऽपि मुच्यते नात्र संशयः॥८४॥

नास्ति गंगासमं तीर्थं नास्ति देवो हरोपमः॥

शिवरात्रेः परं नास्ति तपः सत्यं मयोदितम्॥८५॥

सर्वरत्नमयो मेरुः सर्वाश्चर्यमयं तपः॥

सर्वधर्ममयी राजञ्छिवरात्रिः प्रकीर्तिताः॥८६॥

गरुडः पक्षिणां यद्वन्नदीनां सागरो यथा।

प्रधानः सर्वधर्माणां शिवरात्रिस्तथोत्तमा॥८७॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये शिवारात्रिमाहात्म्यवर्णनं नाम षट्षष्ट्युत्तरद्विशततमोऽध्यायः॥२६६॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६७

https://sa.wikisource.org/s/fhz



सूत उवाच॥

तस्मादेषा महाराज शिवरात्रिर्विपश्चिता॥।

कर्तव्या पुरुषेणात्र लोकद्वयमभीप्सुना॥१॥

आनर्त उवाच॥

मंकणेश्वरमाहात्म्यं मया विस्तरतः श्रुतम्॥

शिवरात्रिसमोपेतं यत्त्वया परिकीर्तितम्॥ २॥

सांप्रतं वद मे कृत्स्नं सिद्धेश्वरसमुद्भवम्॥

विस्तरेण महाभाग परं कौतूहलं हि मे॥३॥

भर्तृयज्ञ उवाच॥

सिद्धेश्वर इति ख्यातो महादेवो महीपते॥

तस्योत्पत्तिस्त्वया पूर्वं श्रुतात्र वदतो मम॥४॥

सांप्रतं तत्फलं वच्मि तस्मिन्दृष्टे तु दानजम्॥

यत्फलं जायते नृणां चक्रवर्तित्व संभवम्॥५॥

तुलापुरुषदानं च तत्र राजन्प्रशश्यते॥

य इच्छेच्चक्रवर्तित्वं समस्ते धरणीतले॥६॥

आनर्त उवाच॥

तुलापुरुषदानस्य यो विधिः परिकीर्तितः॥

तं मे सर्वं समाचक्ष्व विस्तरेण महामुने॥७॥

भर्तृयज्ञ उवाच॥

चंद्रसूर्योपरागे वा अयने विषुवे तथा॥

तीर्थे वा पुरुषश्रेष्ठ तुलापुरुषसंभवम्॥८॥

प्रशंसंति विधिं सम्यक्प्राप्ते वा चेंदुसंक्षये॥

ब्राह्मणानां सुदांतानामनुष्ठानवतां सताम्॥९॥

वेदाध्ययनयुक्तानां निर्दोषाणां च पार्थिव॥

विभज्य स भवेद्देयो नैकस्य च कथंचन॥६.२६७.१०॥

शुचौ देशे समे पुण्ये पूर्वोत्तरप्लवे शुभे॥

मंडपं कारयेद्विद्वान्रम्यं षोशहस्तकम्॥

तन्मध्ये कारयेद्वेदिं चतुर्हस्त प्रमाणतः।

यजमानस्य हस्तेन हस्तैकेन समुच्छ्रिताम्॥१२॥

चतुर्हस्तानि कुण्डानि चतुर्दिक्षु प्रकल्पयेत ॥

एकहस्तप्रमाणानि आयामव्यासविस्तरात्॥

ऐशान्यामपरां वेदिं हस्तमात्रां न्यसेच्छुभाम्॥

रत्निमात्रोत्थितां चैव ग्रहांस्तत्र प्रकल्पयेत्॥ १४॥

युग्मांश्च ऋत्विजः कार्याश्चतुर्दिक्षु यथाक्रमम्॥

बह्वृचोऽध्वर्यश्चैव च्छंदोगाथर्वणावपि॥ १५॥

तूष्णीं तु देवताहोमस्तैः कार्यः सुसमाहितैः॥

तल्लिंगैर्नृपतेमंत्रैः स्वशक्त्या जप एव च॥१६॥

एकहस्तप्रविष्टं तु चतुर्हस्तोच्छ्रितं तथा॥

स्तंभद्वयं तु कर्तव्यं वेदियाम्योत्तरे स्थितम्॥१७॥

तन्मध्ये सुशुभं काष्ठं स्तंभजात्यं दृढं न्यसेत्॥

चन्दनः खदिरो वाथ बिल्वोवाऽश्वत्थ एव वा॥ १८॥

तिंदुको देवदारुर्वा श्रीपर्णी वा वटोऽथवा॥

अष्टौ वृक्षाः शुभाः शस्ताः स्तंभार्थं नृपसत्तम्॥१९॥

शिक्यद्वय समोपेतां तन्मध्ये विन्यसेत्तुलाम्॥

स्नातः शुक्लांबरधरः शुक्लमाल्यानुलेपनः॥६.२६७.२०।

पूरयित्वा समंताच्च लोकपालान्यथाक्रमम्॥

स्तंभान्संपूजयत्पश्चाद्गन्धमाल्यानुलेपनैः॥२१॥

तुलां च पार्थिवश्रेष्ठ पुण्याहं च प्रकीर्तयेत्॥

यजमानो निजैः सर्वैरायुधैः कायसंस्थितैः॥२२॥

पश्चिमां दिशमास्थाय प्राङ्मुखः श्रद्धयाऽन्वितः॥

कृतांजलिपुटो भूत्वा इमं मंत्रमुदीरयेत्॥२३॥

ब्रह्मणो दुहिता नित्यं सत्यं परममाश्रिता॥

काश्यपी गोत्रतश्चैव नामतो विश्रुता तुला॥२४॥

त्वं तुले सत्यनामासि स्वभीष्टं चात्मनः शुभम्॥
करिष्यामि प्रसादं मे सांनिध्यं कुरु सांप्रतम्॥२५॥
ततस्तस्यां समारुह्य स्वशक्त्या यत्समाहृतम्॥
दानार्थं पूर्वमायोज्यं शिक्येन्यस्मिन्नरोत्तम॥२६॥
सुवर्णं रजतं वाऽथ वस्त्रं चान्यदभीप्सितम्॥
यावत्साम्यं भवेद्राजन्नात्मनोऽभ्यधिकं च वा॥२७॥
ततोऽभीष्टां समासाद्य देवतां शिक्यमाश्रितः॥
उदकं जलमध्ये च तदर्थं प्रक्षिपेद्द्रुतम्॥२८॥
सतिलं सहिरण्यं च साक्षतं विधिपूर्वकम्॥
अवतीर्य ततः सर्वं ब्राह्मणेभ्यो निवेदयेत्॥२९॥
यत्फलं प्राप्यते पश्चात्तदिहैकमनाः शृणु॥६.२६७.३०॥
अजानता जानता वा यत्पापं तु भवेत्कृतम्॥
तत्सर्वं नाशयेन्मर्त्यो दानस्यास्य प्रभावतः॥३१॥
यावन्मात्रं कृतं पापमतीतं नृपसत्तम॥
तावन्मात्रं क्षयं याति तुलापुरुषदानतः॥३२॥
ईश्वराणां समादिष्टं कायक्लेशभयात्मनाम्॥
पुरश्चरणमेतद्धि दानं तौल्यसमुद्भवम्॥३३॥
एतद्दत्तं दिलीपेन कार्तवीर्येण भूपते॥
पृथुना पुरुकुत्सेन तथान्यैरपि पार्थिवैः॥३४॥
एतत्पुण्यं प्रशस्यं च सर्वकामप्रदं नृणाम्।
तुलापुरुषदानं च सर्वोपद्रवनाशनम्॥३५॥
आधयो व्याधयो न स्युर्न वैधव्यं गदोद्भवम्॥
संजायते नृपश्रेष्ठ न वियोगः स्वबन्धुभिः॥
तुलापुरुषदानस्य फलमेतदुदाहृतम्॥३६॥
तुलापुरुषदानस्य प्रदत्तस्य नृपोत्तम॥
न शक्यते कथयितुं फलं यत्स्यात्कलौ युगे॥३७॥
दक्षिणामूर्तिमासाद्य सिद्धेश्वरविभोः पुरः॥
यः प्रयच्छति भूपाल सहस्रगुणितं फलम्॥३८॥

तस्मात्सर्वप्रयत्नेन प्राप्य सिद्धेश्वरं विभुम्॥

तुलापुरुषदानं च कर्तव्यं सुविवेकिना।३९॥

एकत्र सर्वतीर्थानि सर्वाण्यायतनानि च॥

हाटकेश्वरजे क्षेत्रे कथितानि स्वयंभुवा॥६.२६७.४०॥

सिद्धेश्वरः सुरश्रेष्ठ एकत्र समुदाहृतः॥

तस्मिन्दृष्टे तथा स्पृष्टे पूजिते नृपसत्तम॥

सर्वेषां लभते मर्त्यः फलं यत्परिकीर्तितम्॥४१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये श्रीसिद्धेश्वरमाहात्म्ये तुलापुरुषदानमाहात्म्यवर्णनं नाम सप्तषष्ट्युत्तरद्विशततमोऽध्यायः॥२६७॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६८



आनर्त उवाच॥

कर्मणा केन मर्त्ये च नराणां जायते वद॥

चक्रवर्तित्वमखिलं सर्वशत्रुविमर्दनम्॥१॥

भर्तृयज्ञ उवाच॥

दुर्लभं भूमिपालत्वं सर्वपापैर्नराधिप॥

तपोभिर्नियमैर्दानैस्तथान्यैश्च शुभैर्व्रतैः॥ २॥

यः पुनर्भूपतिर्भूत्वा पृथ्वीं दद्याद्धिरण्मयीम्॥

गौतमेश्वरदेवस्य पुरतः श्रद्धयान्वितः॥

चक्रवर्ती भवेन्नूनमेवमाह पितामहः॥ ३॥

मांधाता धुन्धुमारश्च हरिश्चंद्रः पुरूरवाः।

भरतः कार्तवीर्यश्च षडेते चक्रवर्तिनः॥४।

पृथ्वीदानं पुरा कृत्वा गौतमेश्वरसंनिधौ।

दत्त्वा हिरण्मयीं पृथ्वीं सार्वभौमास्ततः स्थिताः॥५॥

आनर्त उवाच॥

भगवन्केन विधिना दातव्या सा वसुन्धरा॥

अहं दास्यामि तां नूनं श्रद्धा मे महती स्थिता॥६॥

भर्तृयज्ञ उवाच॥

कार्या पलशतेनोर्वी वृत्ताकारा नृपोत्तम॥

तदर्धेनाथवा शक्त्या पंचविंशत्पलात्मिका॥७॥

धरादाने महाराज वित्तशाठ्यं विवर्जयेत्॥

नैव पंचपलादर्वाक्प्रदातव्या कथञ्चन॥

लवणेक्षुसुरासर्पिर्दधिदुग्धजलोद्भवाः॥

समुद्राः सप्त चैतांस्तु कक्षायां तत्र दर्शयेत्॥९॥

जंबूप्लक्षकुशक्रौंचशाकशाल्मलिपुष्कराः।

समुद्रान्सरितः सप्त द्वैगुण्येन प्रकल्पयेत्॥६.२६८.१०॥

महेन्द्रो मलयः सह्यो हिमवान्गंधमादनः॥
विंध्यः शृंगी च सप्तैव कल्पयेत्कुलपर्वतान्॥११।.
मध्ये प्रकल्पयेन्मेरुं दिक्षु विष्कम्भपर्वतान्॥
जंबून्यग्रोधनीपांश्च प्लक्षश्चैव तथा द्रुमान्॥१२॥
गंगाद्याः सरितस्तत्र प्राधान्येन प्रकल्पयेत्॥
एवं निर्माप्य वसुधां सर्वां हेममयीं नृप॥१३।.
मंडपं कारयेत्पश्चाद्यथापूर्वं प्रकल्पितम्॥१४॥
कुण्डानि तोरणान्येव ब्राह्मणग्रहपूजने॥
पूर्ववत्सकलं कृत्वा मध्ये वेदिं प्रकल्पयेत्॥१५॥
तत्र संस्थापयेत्पृथ्वीं पंचगव्येन पार्थिव॥
यथोक्तमंत्रैस्तल्लिंगैस्ततः शुद्धोदकेन तु॥१६॥
इमं मे गंगे यमुने पंचनद्यस्त्रिपुष्करम्॥
श्रीसूक्तं पावमानं च हैमीं च तदनंतरम्॥१७॥
स्नानकर्मणि योग्यांश स्वादिष्ठायनमुत्तमम्॥१८॥
एवं संस्नाप्य विधिवद्वासांसि परिधापयेत्॥
युवा सुवासा मंत्रेण सूक्ष्माणि विविधानि च॥१९॥
ये भूतानामधीत्येवं ततः प्रोच्य प्रपूजयेत्॥
धूरसीति च मंत्रेण धूपं दद्यात्समाहितः॥६.२६८.२०॥
अग्निर्ज्योतीति मंत्रेण कुर्यादारार्तिकं ततः॥
अहमस्मीति मंत्रेण सप्तधान्यं प्रकल्पयेत्॥२१॥
एवं कृत्वाऽखिलं तस्या यजमानः सितांबरः॥
पुरः स्थितोंजलिं बद्ध्वा मंत्रानेतानुदाहरेत्॥२२॥
त्वया संधार्यते विश्वं जगदेतच्चराचरम्॥
तव दानं करिष्यामि सांनिध्यं कुरु मेदिनि॥२३॥
शरीरेष्वपि भूतानां त्वं देवि प्रथमं स्थिता॥
ततश्चान्यानि भूतानि जलादीनि वसुन्धरे॥२४॥
ये त्वां यच्छंति ते भूयस्त्वां लभंते न संशयः॥
इह लोके परे चैव पार्थिवं रूपमाश्रिता॥२५॥

एवं स्तुत्वा समादाय तोयं हेमाकृतिं नृप॥

वासुदेवं हृदि स्थाप्य मंत्रेणानेन कल्पयेत्॥२६॥

पातालादुद्धृता येन पृथ्वी सा लोककारिणा॥

अस्या दानेन च सदा प्रीयतां मे जनार्दनः॥२७॥

एवमुच्चार्य तत्तोयं तोयमध्ये परिक्षिपेत्॥

न भूमौ नैव हस्ते च ब्राह्मणस्य नृपोत्तम॥२८॥

ततो विसर्जयेद्देवीं मन्त्रेणानेन भागशः॥

आगता च यथान्यायं पूजिता च यथाविधि॥२९॥

अस्माकं त्वं हितार्थाय यत्रेष्टं तत्र गम्यताम्॥

उस्रा वेदेति मंत्रेण समुच्चार्य ततः परम्॥

ब्राह्मणेभ्यः प्रदातव्या संविभज्य नराधिप॥६.२६८.३०॥

एवं ते सर्वमाख्यातं पृथिवीदानमुत्तमम्।

शृणुयात्पार्थिवो भावी दाता जन्मनिजन्मनि॥३१॥

यो राजा पृथिवीं दद्याद्विधिनानेन पार्थिव॥

राज्यभ्रंशो न वंशेऽपि तस्य संजायते क्वचित्॥३२॥

राज्यभ्रंशसमोपेता ये दृश्यंते महीभुजः॥

न तैर्वसुन्धरा दत्ता ब्राह्मणानां धृतात्मनाम्॥३३॥

तस्मात्सर्वप्रयत्नेन पृथ्वीदानं समाचरेत्॥

न हरेत्परदत्तां च कथंचिदपि मेदिनीम्॥३४॥

एतत्पुण्यं प्रशस्यं च पृथिवीदानमुत्तमम्॥

शृण्वतामपि राजेंद्र तद्देहाद्यघनाशनम्॥३५॥

आस्तां तावत्प्रदानं च पृथिव्याः पृथिवीपतेः॥

दातुः संप्रेरणं यस्या अज्ञानौघविनाशनम्॥३६॥

रूपवान्सुभगश्चैव तथा च प्रियदर्शनः॥

आधिव्याधिविनिर्मुक्तः पुत्रपौत्रसमन्वितः॥३७॥

मेधावी जायते मर्त्यो दानस्यास्य प्रभावतः॥

इत्थंभूता महाराज कृत्वा राज्यमकण्टकम्॥३८॥

प्रीता विष्णोः पदं यांति शाश्वतं यन्निरामयम्॥

अन्यत्रापि धरादानात्प्रकुर्याच्चक्रवर्तिताम्॥३९॥

एकजन्मांतरं यावत्सम्यग्दत्तं नृपोत्तमः॥

गौतमेश्वरदेवस्य यत्पुरा पुरतः कृतम्॥६.२६८.४०॥

सप्तजन्मांतरं यावत्प्रकरोति न संशयः॥

तस्मात्सर्वप्रयत्नेन तत्र देया मही नृप॥४१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये गौतमेश्वरमाहात्म्ये पृथ्वीदानमाहात्म्यवर्णनंनामाष्टषष्ट्युत्तरद्विशततमोऽध्यायः॥२६८॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २६९



सूत उवाच॥

कपालेशस्य माहात्म्यं श्रूयतामधुना द्विजाः॥

चतुर्थस्य महाभागास्तत्र क्षेत्रे स्थितस्य च॥१।.

श्रुतमात्रेण येनात्र नरः पापात्प्रमुच्यते॥२॥

ऋषय ऊचुः॥

त्रयाणां चैव लिंगानां पूर्वोक्तानां महामते॥

श्रुतास्माभिः समुत्पत्तिःकपालेश्वरवर्जिता॥

केनायं स्थापितो देवः कपालेश्वरसंज्ञितः॥ ३॥

तस्मिन्दृष्टे फलं किं स्यात्पूजिते च वदस्व नः॥४॥

सूत उवाच॥

इंद्रेण स्थापितः पूर्वमेष देवो द्विजोत्तमाः॥

कपालेश्वसंज्ञस्तु ब्रह्महत्या विमुक्तये॥५॥

तत्प्रभावत्सुरश्रेष्ठ स्तया मुक्ते द्विजोत्तमाः॥

पापं पूरुषदानेन इत्येषा वैदिकी श्रुतिः॥॥

अन्योऽपि यो नरस्तं च पूजयित्वा प्रभक्तितः॥

प्रयच्छेद्ब्राह्मणेन्द्राय शुद्धये पापपूरुषम्॥

स मुच्येत्पातकाद्घोराद्ब्रह्महत्यासमुद्भवात्॥७॥

दक्षिणामूर्तिमासाद्य प्रोवाचेदं बृहस्पतिः॥

हाटकेश्वरजे क्षेत्रे गत्वा तं वीक्ष्य शंकरम्॥८॥

यो ददाति शरीरं च कृत्वा हेममयं ततः॥

मुच्यते नात्र संदेहः पातकैः पूर्वसंयुतैः॥९॥

ऋषय ऊचुः॥

ब्रह्महत्या कथं जाता सुरेन्द्रस्य हि सूतज॥

एतन्नः सर्वमाचक्ष्व परं कौतूहलं हि नः॥६.२६९.१०॥

कपालेश्वरसंज्ञस्तु कथं देवोऽत्र संस्थितः॥

ब्रह्महत्या कथं नष्टा तत्प्रभावाद्दिवस्पतेः॥११॥

स पापपूरुषो देयो विधिना केन सूतज॥

कैर्मंत्रैः स हि देयः कैश्चैव ह्युपस्करैः॥१२॥

दर्शनात्पूजनाच्चापि किं फलं जायते नृणाम्॥

अदत्त्वा स्वशरीरं वा पूजया केवलं वद॥१३॥

सूत उवाच॥

अहं वः कीर्तयिष्यामि कथामेतां पुरातनीम्॥

यां श्रुत्वापि महाभागा नरः पापात्प्रमुच्यते॥१४॥

अज्ञानाज्ज्ञानतो वापि विहितैरन्यजन्मजैः॥

दृष्टमात्रेण येनात्र पातकात्तद्दिनोद्भवात्॥

मुच्यते नात्र संदेहः सत्यमेतन्मयोदितम्॥१५॥

पुरा त्वष्टुः सुतो जज्ञे वृत्रो हि द्विजसत्तमाः॥

पुलोमदुहितुः पार्श्वाद्विभावर्याः सुवीर्यवान्॥१६॥

स बाल एव धर्मात्मा आसीत्सर्वजनप्रियः॥

दानवं भावमुत्सृज्य द्विजभक्तिपरायणः॥१७॥

स गत्वा पुष्करारण्यं परमेण समाधिना॥

तोषयामास देवेशं पद्मजं तपसि स्थितः॥१८॥

तस्य तुष्टः स्वयं ब्रह्मा दृष्टिगोचरमागतः॥

प्रोवाच वरदोऽस्मीति किं ते कृत्यं करोम्यहम्॥१९॥

वृत्र उवाच॥

यदि तुष्टोसि मे देव ब्राह्मणत्वं प्रयच्छ मे।

ब्राह्मणत्वं समासाद्य साधयामि परं पदम्॥६.२६९.२०॥

तेन किंचिदसाध्यं न ब्राह्मण्येन भवेन्मम॥

ब्राह्मणेन समं चान्यन्न किंचित्प्रतिभाति मे॥२१॥

परमं दैवतं किंचिन्न विप्राद्विद्यते परम्॥

तस्मान्मे हृत्स्थितं नान्यदपि राज्यं त्रिविष्टपे॥२२॥

सूत उवाच॥

तस्य तद्वचनं श्रुत्वा तुष्टस्तस्य पितामहः॥

ब्राह्मणत्वं स्वयं दत्त्वा ततः प्रोवाच सादरम्॥२३॥

मया त्वं विहितो विप्र पुत्र प्रकुरु वांछितम्॥

प्रसादयस्व सततं ब्राह्मणान्ब्रह्मवित्तमान्॥२४॥

ब्राह्मणैः सुप्रसन्नैश्च प्रीयंते सर्वदेवताः॥

तस्मात्सर्वप्रयत्नेन पूजनीया द्विजोत्तमाः॥२५॥

सूत उवाच॥

एवमुक्तस्तदा तेन वृत्रोऽभूद्ब्राह्मणस्ततः॥

ब्राहम्या लक्ष्म्या समोपेतो ब्रह्मचर्यपरायणः॥२६॥

तस्मिंस्तपसि संस्थे तु हता इंद्रेण दानवाः॥

वंशोच्छेदे समापन्ने दानवानां महात्मनाम्॥२७॥

ततस्ते दानवाः सर्वे पराभूताः सुरैस्ततः॥

स्वं स्थानं संपरित्यज्य दुःखशोकसमन्विताः॥२८॥

तन्मातरं पुरस्कृत्वा तत्सकाशमुपागताः॥

स च तां मातरं दृष्ट्वा वृतां तैश्च समन्वितः॥२९॥

दानवैश्च पराभूतैस्तथाभूतां च मातरम्॥

किमागमनकृत्यं च दुःखितानां ममांतिके॥६.२६९.३०॥

दानवा ऊचुः॥

वयं देवैः पराभूता भवंतं शरणागताः॥

क्व यामोऽन्यत्र चाऽस्माकं त्वां विना नास्ति संश्रयः॥३१॥

तेषां तद्वचनं श्रुत्वा वृत्रः प्रोवाच सादरम्॥

देवानहं हनिष्यामि गम्यतां तत्र मा चिरम्॥३२॥

तवागमनकृत्यं च मातः कथय सांप्रतम्॥३३॥

मातोवाच॥

तथा कुरु महाभाग शीघ्रं दारपरिग्रहम्॥

वंशवृद्धौ प्रमाणं चेद्वाक्यं तव ममोद्भवम्॥३४॥

एष एव परो धर्म एष एव परो नयः॥

पुत्रस्य जननीवाक्यं यत्करोति समाहितः॥ ३५॥

तथा स्त्रीणां पतिं मुक्त्वा नान्यास्ति भुवि देवता॥

जनन्यां जीवमानायां तथैव च सुतस्य च॥३६॥
अतिक्रम्य च या नारी पतिं धर्मपरा भवेत्॥
तत्सर्वं विफलं तस्या जायते नात्र संशयः॥३७॥
पुत्रः स्वजननीवाक्यं योऽतिक्रम्य यथारुचि॥
करोति धर्मकृत्यानि तानि सर्वाणि तस्य च॥३८॥
भवंति च तथा नूनं वृथा भस्महुतं यथा॥
अरण्ये रुदितानीव ऊषरे वापितानि च॥३९॥
यथैव बधिरस्याग्रे गीतं नृत्यमचक्षुषः॥
तद्वन्मातृमतादन्यकृतं पुत्रस्य धर्मजम्॥६.२६९.४०॥
सर्वं कर्म न संदेहस्तेनाहं त्वामुपागता॥
बंधूनां वचनात्पुत्र दुःखार्ता च विशेषतः॥४१॥
किं वा ते बहुनोक्तेन भूयो भूयश्च पुत्रक॥
आनृण्यं जायते यद्वत्पितृणां तत्तथा शृणु॥४२॥
तव वत्स प्रमाणं चेत्कुरुष्व च वचो मम॥
तस्यास्तद्वचनं श्रुत्वा वृत्रः संचिंत्य चेतसि॥४३॥
श्रुतिस्मृत्युक्तमार्गेण न मातुर्विद्यते परम्॥
स तथेति प्रतिज्ञाय आनिनाय परिग्रहम्॥४४॥
त्वष्टा तस्मै ददौ प्रीतस्ततो रत्नान्यनेकशः॥
संख्याहीनानि तस्यैव कुप्याकुप्यमनंतकम्॥४५॥
हस्त्यश्वयानकोशाढ्यं सोऽभिषिक्तः पदे निजे॥
दानवानां महावीर्यो ब्राह्मण्येन समन्वितः॥४६॥
अभिषिक्तं तदा वृत्रं स्वराज्ये तेऽसुरादयः॥
श्रुत्वाभिषेकं संहृष्टास्तस्य वृत्रस्य बांधवाः॥४७॥
दानवाश्च समाजग्मुर्ये तत्रासन्पुरोगताः॥
पातालाद्गिरिदुर्गाच्च स्थलदुर्गेभ्य एव च॥
कृतवैराः समं देवैः कोपेन महता वृताः॥ ४८॥
ततः प्रोत्साहितः सर्वैर्दानवैः स महाबलः॥
प्रस्थितः शत्रुनाशाय महेन्द्रभवनं प्रति॥४९॥

शक्रोऽपि वृत्रमाकर्ण्य समायांतं युयुत्सया॥
सन्मुखः प्रययौ हृष्टः सर्वदेवसमन्वितः॥६.२६९.५०॥
ततः समभवद्युद्धं देवानां दानवैः सह॥
मेरुपृष्ठे सुविस्तीर्णे नित्यमेव दिवानिशम्॥५१॥
नित्यं पराजयो जज्ञे देवानां दानवैः सह॥
तत्रोवाच गुरुः शक्र मा युद्धं कुरु देवप॥५२॥
वृत्रोऽयं दारुणो युद्धे बलद्वयसमन्वितः॥
चत्वारश्चाग्रतो वेदाः पृष्ठतः सशरं धनुः॥५३॥
तेन जेयतमो दैत्यस्तवैव च महाहवे॥
तस्मात्संधानमेतेन त्वं कुरुष्व शचीपते॥५४॥
ततो विश्वासमाया तं जहि वज्रेण दानवम्॥
षडुपायै रिपुर्वध्य इति शास्त्रनिदर्शनम्॥५५॥
भुंजानश्च शयानश्च दत्वा कन्यामपि स्वकाम्॥
विप्रदानेन संयोज्य कृत्वापि शपथं गुरुम्॥
मायाप्रपंचमासाद्य तस्मादेवं समाचर॥५६॥
इन्द्र उवाच॥
यद्येवं च स्वयं गत्वा त्वं विश्वासे नियोजय॥
तव वाक्येन विश्वासं नूनं यास्यति दानवः॥५७॥
सूत उवाच॥
शक्रस्य मतमाज्ञाय प्रतस्थे च बृहस्पतिः॥
यत्र वृत्रः स्थितो दैत्यो युद्धार्थं कृतनिश्चयः॥५८॥
वृत्रोऽपि तं समालोक्य स्वयं प्राप्तं बृहस्पतिम्॥
सदैव द्विजभक्तः स हृष्टात्मा समपद्यत॥
विशेषात्प्रणिपत्योच्चैर्वाक्यमेतदभाषत॥५९॥
वृत्र उवाच॥
स्वागतं ते द्विजश्रेष्ठ किं करोमि प्रशाधि माम्॥
प्रिया मे ब्राह्मणा यस्मात्तस्मात्कीर्तय सांप्रतम्॥६.२६९.६०॥
बृहस्पतिरुवाच॥ संदिग्धो विजयो युद्धे यस्माद्दैवेन सत्तम॥

तस्मात्कुरु महेंद्रेण व्यवस्थां वचनान्मम॥६१॥

त्वं भुंक्ष्व भूतलं कृत्स्नं शक्रश्चापि त्रिविष्टपम्॥

व्यवस्थयाऽनया नित्यं वर्तितव्यं परस्परम्॥६२॥

वृत्र उवाच॥

अहं तव वचो ब्रह्मन्करिष्यामि सदैव हि।

संगमं कुरु शक्रेण सांप्रतं मम सद्द्विज॥६३॥

सूत उवाच॥

अथ शक्रं समानीय बृहस्पतिरुदारधीः॥

वृत्रेण सह संधानं चक्रे चैव परस्परम्॥६४॥

एकारिमित्रतां गत्वा तावुभौ दैत्यदेवपौ॥

प्रहृष्टौ गतवन्तौ तौ ततश्चैव निजं गृहम्॥६५॥

अथ शक्रच्छलान्वेषी सदा वृत्रस्य वर्तते॥

न च्छिद्रं लभते क्वापि वीक्षमाणोपि यत्नतः॥६६॥

कथंचिदपि सोऽभ्येति तत्सकाशं पुरंदरः॥

किंचिच्छिद्रं समासाद्य तत्प्रतापेन दह्यते॥६७॥

इंद्र उवाच॥

न शक्नोमि च तं दैत्यं वीक्षितुं च कथंचन॥

तेजसा सर्वतो व्याप्तं तत्कथं सूदयाम्यहम्॥६८॥

तस्मात्कंचिदुपायं मे तद्वधार्थं प्रकीर्तय॥

यथा शक्नोमि तत्सोढुं तेजस्तस्य दुरात्मनः॥६९॥

सूत उवाच॥

तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा बृहस्पतिः॥

ततः प्रोवाच तं शक्रं विनयावनतं स्थितम्॥६.२६९.७०॥

बृहस्पतिरुवाच॥

तस्य ब्राह्म्यं स्थितं तेजः सम्यग्गात्रे पुरंदर॥

वीक्षितुं नैव शक्नोषि तेन त्वं त्रिदशाधिप॥७१॥

तथा ते कीर्तयिष्यामि तस्योपायं वधोद्भवम्॥

वधयिष्यसि येनात्र तं त्वं दानवसत्तमम्॥७२॥

प्राचीसरस्वतीतीरे पुष्करारण्यमाश्रितः॥
दधीचिर्नाम विप्रर्षिः शतयोजनमुच्छ्रितः॥७३।.
तत्र नित्यं तपः कुर्वन्स्तौति नित्यं पितामहम्।
स निर्विण्णो मुनिश्रेष्ठः प्राणानां धारणे हरे॥७४॥
चिरंतनो मुनिः स स्याज्जरयातिसमावृतः॥
तं प्रार्थय द्रुतं गत्वा तस्यास्थीनि गुरूणि च॥७५॥
स ते दास्यस्त्यसंदिग्धं त्यक्त्वा प्राणानतिप्रियान्॥
तस्यास्थिभिः प्रहरणं वज्राख्यं ते भविष्यति॥७६॥
अमोघं ते ततो नूनं त्वं वृत्रं सूदयिष्यसि॥
तस्य वज्रस्य तत्तेजो ब्रह्मतेजोऽभिबृंहितम्॥
तेन वृत्रोद्भवं तेजः प्रशमं संप्रयास्यति॥७७॥
सूत उवाच॥
तच्छ्रुत्वा सत्वरं शक्रः सर्वैर्देवगणैः सह॥
जगाम पुष्करारण्ये यत्र प्राची सरस्वती॥७८॥
त्रयस्त्रिंशत्समोपेता तीर्थानां कोटिभिर्युता॥
दधीचेराश्रमं तत्र सोऽविशच्चित्रसंयुतम्॥७९॥
क्रीडंते नकुलैः सर्पा यत्र तुष्टिं गता मिथः॥
मृगाः पंचाननैः सार्धं वृषदंशास्तथाऽऽखुभिः॥६.२६९.८०॥
उलूक सहिताः काका मिथो द्वेषविवर्जिताः॥
प्रभावात्तस्य तपसो दधीचेः सुमहात्मनः॥८१॥
दधीचिरपि चालोक्य देवाञ्छक्रपुरोगमान्॥
समायातान्प्रहृष्टात्मा सत्वरं संमुखोभ्यगात्॥८२॥
ततश्चार्घ्यं समादाय प्रणिपत्य मुहुर्मुहुः॥
शक्रमभ्यागतं प्राह किं ते कृत्यं करोम्यहम्॥८३॥
गृहायातस्य देवेश तच्छीघ्रं मे निवेदय॥८४।.
इंद्र उवाच॥
आतिथ्यं कुरु विप्रेंद्र गृहायातस्य सन्मुने॥
त्वदस्थीनि निजान्याशु मम देह्यविकल्पितम्॥८५॥

अतदर्थमहं प्राप्तस्त्वत्सकाशं मुनीश्वर॥

अस्थिभिस्ते परं कार्यं देवानां सिद्धिमेष्यति॥८६॥

सूत उवाच॥

इंद्रस्य तद्वचः श्रुत्वा दधीचिस्तोषसंयुतः॥

ततः प्राह सहस्राक्षं सर्वैर्देवैः समन्वितम्॥८७॥

अहो नास्ति मया तुल्यः सांप्रतं भुवि कश्चन॥

पुण्यवान्यस्य देवेशः स्वयमर्थी गृहागतः।८८॥

धन्यानि च ममास्थीनि यानि देवेश ते हितम्॥

करिष्यंति सदा कार्यं रक्षार्थं त्रिदिवौकसाम्॥८९॥

एषोऽहं संप्रदास्यामि प्रियान्प्राणान्कृते तव॥

गृहाण स्वेच्छयाऽस्थीनि स्वकार्यार्थं पुरंदर॥६.२६९.९०॥

एवमुक्त्वा महर्षिः स ध्यानमाश्रित्य सत्वरम्॥

ब्रह्मरंध्रेण निःसार्य प्राणमात्मानमत्यजत्॥९१॥

तदात्मना परित्यक्तं तस्य गात्रं च तत्क्षणात्॥

पतितं मेदनीपृष्ठे व्यसु तद्द्विजसत्तमाः॥ ९१॥

तस्मिन्नेव काले तु तस्यास्थीनि शतक्रतुः॥

प्रगृह्य विश्वकर्माणं ततः प्रोवाच सादरम्॥९३॥

एतैरस्थिभिः शीघ्रं मे कुरु त्वं वज्रमायुधम्॥

येन व्यापादयाम्याशु वृत्रं दानवसत्तमम्॥९४॥

तस्य तद्वचनं श्रुत्वा विश्वकर्मा त्वरान्वितः॥

यथायुधं तथा चक्रे वज्राख्यं दारुणाकृति॥९५॥

षडस्रि शतपर्वाख्यं मध्ये क्षामं विभीषणम्॥

प्रददौ च ततस्तस्मै सहस्राक्षाय धीमते॥९६॥

अथ तं स समादाय द्वादशार्कसमप्रभम्॥

समाधिस्थं चरैर्ज्ञात्वा वृत्रं संध्यार्चने रतम्॥९७॥

ततश्च पृष्ठभागं स समाश्रित्य त्रिलोकराट्॥

चिक्षेप वज्रमुद्दिश्य तद्वधार्थं समुत्सुकः॥९८॥

स हतस्तेन वज्रेण दानवो भस्मसाद्गतः॥

शक्रोपि हतमज्ञात्वा भयात्तस्याथ दुद्रुवे॥९९॥

मनुष्यरहिते देशे विषमे गुल्मसंवृते॥

लिल्ये शक्रस्तदा सर्वं मेने वृत्रमयं जगत्॥६.२६९.१००॥

एतस्मिन्नंतरे देवाः पश्यंतः सर्वतो दिशम्॥

सिद्धचारणगन्धर्वा आजग्मुश्च शतक्रतुम्॥१०१॥

ततः कृच्छ्राच्च तैर्दृष्टः शक्रोऽसौ गहने वने।

निलीनो भयसंत्रस्तो गुल्ममध्ये व्यवस्थितः॥१०२॥

देवा ऊचुः॥

किं त्वं भीतः सहस्राक्ष वृत्रोऽयं घातितस्त्वया॥

परिवारेण सर्वेण वीक्षितोऽस्माभिरेव च॥१०३॥

अस्मादागच्छ गच्छामो गृहं प्रति पुरंदर॥

कुरु त्रैलोक्यराज्यं त्वं सांप्रतं हतकण्टकम्॥१०४॥

तच्छ्रुत्वाऽथ विनिष्क्रांतो गुल्ममध्याच्छतक्रतुः॥

हृष्टरोमा हतं श्रुत्वा वृत्रं दानवसत्तमम्॥ १०५॥

अथ पश्यंति यावत्तं देवाः सर्वे शतक्रतुम्॥

तावत्तेजोविहीनं तद्गात्रं दुर्गंधितायुतम्॥१०६॥

दृष्ट्वा लोकगुरुर्ब्रह्मा देवान्सर्वानुवाच ह॥

शक्रोऽयं सांप्रतं व्याप्तः पापया ब्रह्महत्यया॥१०७॥

यदनेन हतो वृत्रो ब्रह्मभूतश्छलेन सः॥

तस्मात्त्याज्यः सुदूरेण नो चेत्पापमवाप्स्यथ॥१०८॥

ब्रह्मघ्नेन समं स्पर्शः संभाषोऽथ विनिर्मितः॥

पापाय जायते पुंसां तस्मात्तं दूरतस्त्यजेत्॥१०९॥

आस्तां संस्पर्शनं तस्य संभाषो वा विशेषतः॥

दर्शनं वापि तस्याहुः सर्वपापप्रदं नृणाम्॥६.२६९.११०॥

सूत उवाच।.

तच्छ्रुत्वा ब्रह्मणो वाक्यं शक्रो दृष्ट्वाऽऽत्मनस्तनुम्॥

तेजसा संपरित्यक्तां दुर्गन्धेन समावृताम्॥१११॥

ततः प्रोवाच लोकेशं दीनः प्रणतकन्धरः॥

तवाहं किंकरो देव त्वयेंद्रत्वे नियोजितः॥११२॥

तस्मात्कुरु प्रसादं मे ब्रह्महत्याविनाशनम्॥

प्रायश्चित्तं विभो ब्रूहि येन शुद्धिः प्रजायते॥११३।

ब्रह्मोवाच॥

अष्टषष्टिषु तीर्थेषु त्वं स्नात्वा बलसूदन॥

आत्मानं हेमजं देहि पापपूरुषसंज्ञितम्॥११४॥

मंत्रवत्तं यथोक्तं च ब्राह्मणाय महात्मने॥

स्नात्वा पुण्यजले तीर्थे ब्रह्मघ्नोऽहमिति ब्रुवन्॥११५॥

स्नातमात्रस्य ते हस्ताद्यत्र तत्पतति क्षितौ॥

तेजः संजायतेगात्रे दुर्गंधश्च प्रणश्यति॥११६॥

तस्मिंस्तीर्थे त्वया तच्च स्थाप्यं शक्र कपालकम्॥

महेश्वरस्य नाम्ना च पूजनीयं ततः परम्॥११७॥

पंचभिर्वक्त्रमंत्रैश्च ततो देयाऽऽत्मतस्तनूः॥

हेमोद्भवा द्विजेन्द्राय ततः शुद्धिमवाप्स्यसि॥११८॥

शक्रस्तु तद्वचः श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः॥

कपालं वृत्रजं गृह्य तीर्थयात्रां ततो गतः॥११९॥

अष्टषष्टिषु तीर्थेषु गच्छन्स च सुरेश्वरः॥

हाटकेश्वरजे क्षेत्रे समायातः क्रमेण च॥६.२६९.१२०॥

विश्वामित्रह्रदे स्नात्वा यावत्तस्माद्विनिर्गतः॥

कपालं पतितं तस्मात्स्वयमेव हतात्मनः॥१२१॥

ततस्तं पूजयामास मन्त्रैर्वक्त्रसमुद्भवैः॥

सर्वपापहरैः पुण्यैर्यथोक्तैर्ब्रह्मणा पुरा॥१२२॥

एतस्मिन्नेव काले तु दुर्गन्धो नाशमासवान्॥

तच्छरीराद्द्विजश्रेष्ठा महत्तेजो व्यजायत॥१२३॥

एतस्मिन्नन्तरे ब्रह्मा सह देवैः समागतः॥

ब्रह्महत्याविमुक्तं तं ज्ञात्वा सर्वसुराधिपम्॥१२४॥

श्रीब्रह्मोवाच॥

ब्रह्महत्याकृतो दोषो गतस्ते सुरसत्तम॥

शेषपापविशुद्ध्यर्थं स्वर्णदानं प्रयच्छ भोः॥ १२५॥

कपालमेतद्देशेऽत्र यत्त्वया परिपूजितम्॥

वृत्रस्य पंचभिर्मंत्रैर्हरवक्त्रसमुद्भवैः॥ १२६॥

प्रदास्यसि ततो भक्त्या हेमजामात्मनस्तनुम्॥

विधिना मंत्रयुक्तेन तव पापं प्रयास्यति॥

यद्यत्पूर्वकृतं कृत्स्नं प्रदाय ब्राह्मणाय भोः॥१२७॥

एवमुक्तस्ततः शक्रो ब्रह्मणा सुरसंनिधौ॥

तथेत्युक्त्वा तु तत्कालं पापपिंडं निजं ददौ॥१२८॥

कृत्वा हेममयं विप्रा ब्राह्मणाय महात्मने॥

गर्तातीर्थसमुत्थाय वाताख्यायाहिताग्नये॥१२९॥

एतस्मिन्नंतरे विप्रो गर्हितः सोऽथ नागरैः।.

धिग्धिक्पाप वृथा वेदा ये त्वया पारिताः पुरा॥६.२६९.१३०॥

नास्माभिः सह संपर्कं कदाचित्त्वं करिष्यसि॥

गृहीतं यत्त्वया दानं पापपिंडसमुद्भवम्॥१३१॥

ततः प्रोवाच विप्रः स उपमन्युकुलोद्भवः॥

विवर्णवदनो भूत्वा नाम्ना ख्यातः स वातकः॥ १३२॥

त्वया शक्र प्रदत्तो मे पापपिंडः स्वको यतः॥

मया प्रतिग्रहस्तेन दाक्षिण्येन कृतस्तव॥१३३॥

न लोभेन सुरश्रेष्ठ पश्यतस्ते विगर्हितः॥

अहं च ब्राह्मणैः सर्वैरेतैर्नगरवासिभिः॥ १३४॥

तस्मान्नाहं ग्रहीष्यामि एतं तव प्रतिग्रहम्॥१३५॥

भूयोऽपि तव दास्यामि न त्वं गृह्णासि चेत्पुनः॥ ब्र

ह्मशापं प्रदास्यामि दारुणं च क्षयात्मकम्॥१३६॥

इंद्र उवाच॥

वेदागंपारगो विप्रो यदि कुर्यात्प्रतिग्रहम्॥

न स पापेन लिप्येत पद्मपत्रमिवांभसा॥१३७॥

तस्मात्ते पातकं नास्ति शृणुष्वात्र वचो मम॥

एतैस्त्वं गर्हिते यस्माद्ब्राह्मणैर्नगरोद्भवैः॥१३८॥

एतेषां सर्वकृत्येषु प्रधानस्त्वं भविष्यसि॥

एतेषां पुत्रपौत्रा ये भविष्यंति तथा तव॥१३९॥

ते सर्वे चाज्ञया तेषां वर्तयिष्यंत्यसंशयम्॥

युष्मद्वाक्यविहीनं यत्कृत्यं स्वल्पमपि द्विज॥६.२६९.१४०॥

तेषां संपत्स्यते वन्ध्यं यथा भस्महुतं तथा॥

कपालमोचनं नाम ख्यातमेतद्भविष्यति॥१४१॥

ये तु संस्मृत्य मनुजाः कपालं मम सद्द्विज॥

तत्र श्राद्धं करिष्यंति ते नरा मुक्तिसंयुताः॥

श्राद्धपक्षे विशेषेण प्रयास्यंति परांगतिम्॥१४२॥

स्थानबाह्यद्विजातीनां कुले दारपरिग्रहम्॥

कृत्वा त्वद्गोत्रसंभूता ब्राह्मणा मत्प्रसादतः॥१४३॥

व्यवहार्या भविष्यंति नगरे सर्वकर्मसु॥

एवमुक्त्वा सहस्राक्षस्ततश्चादर्शनं गतः॥१४४॥

वातोपि तेन वित्तेन प्रतिग्रहकृतेन च॥

चकार तत्र प्रासादं देवदेवस्य शूलिनः॥१४५॥

ततः प्रोवाच शक्रस्तान्ब्राह्मणान्नगरोद्भवान्॥

कपालमोचने स्नात्वा यो देवं ह्यर्चयिष्यति॥१४६॥

ब्रह्महत्योद्भवं पापं तस्य नश्यत्यसंशयम्॥

महापातकयुक्तो वा विपाप्मा संभविष्यति॥१४७॥

स तथेति प्रतिज्ञाय ब्राह्मणान्नगरोद्भवान्॥

तत्रैव स्वाश्रमं कृत्वा पूजयामास शंकरम्॥१४८॥

ततःप्रभृति यत्किंचित्तेषां कृत्यं प्रजायते॥

तद्वाक्येन प्रकुर्वंति तत्र ये नागरः स्थिताः॥१४९॥

एतस्मात्कारणाज्जातो मध्यगो द्वितीयस्त्विह॥६.२६९.१५०॥

एतद्वः सर्वमाख्यातमाख्यानं पापनाशनम्॥

कपालेश्वरदेवस्य शृण्वतां पठतां नृणाम्॥१५१॥

यथा देवेश्वरस्यात्र पापं नष्टं महात्मनः॥

ब्रह्महत्या यथा नष्टा तस्मिंस्तीर्थे द्विजोत्तमाः॥१५२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वातकेश्वरक्षेत्रकपालमोचनेश्वरोत्पत्तिमाहात्म्यवर्णनं नामैकोनसप्तत्युत्तरद्विशततमोऽध्यायः॥२६९॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७०

https://sa.wikisource.org/s/fra



आनर्त उवाच॥

मूर्खत्वाद्वा प्रमादाद्वा कामाद्वालस्यतोऽपि वा॥

यो नरः कुरुते पापं प्रायश्चित्तं करोति न ॥१॥

तस्य पापक्षयकरं पुण्यं ब्रूहि द्विजोत्तम॥

येन मुक्तिर्भवेत्सद्यो यदि तुष्टोऽसि मे प्रभो॥२॥

लोभमोहपरो योऽसौ पापपिंडं महामुने॥

प्रददाति विधिं ब्रूहि येन यच्छाम्यहं द्रुतम्॥३॥

भर्तृयज्ञ उवाच॥

दद्यात्स्वपिंडं सौवर्णं पंचविंशत्पलात्मकम्॥४॥

विधायापरपक्षे तु स्नापयित्वा विधानतः॥

मंडपाद्यं च प्राक्कृत्वा स्नात्वा धौतांबरः शुचिः॥५॥

तदा स्वरूपं पृथ्व्यादि पूजयेत्पापकृन्नरः॥

तथा स मुच्यते पापात्तत्कृताद्धि न संशयः॥६॥

चतुर्विंशतितत्त्वानि पृथिव्यादीनि यानि च॥

तेषां नामभिस्तत्पिंडं पूजयेतन्नराधिपः॥७॥

ॐ पृथिव्यै नमः॥

ॐ अद्भ्यो नमः॥

ॐ तेजसे नमः॥

ॐ वायवे नमः॥

ॐ आकाशाय नमः॥

ॐ घ्राणाय नमः॥

ॐ जिह्वायै नमः॥

ॐ चक्षुषे नमः॥

ॐ त्वचे नमः॥

ॐ श्रोत्राय नमः॥

ॐ गन्धाय नमः॥

ॐ रसाय नमः॥

ॐ रूपाय नमः॥

ॐ स्पर्शाय नमः॥

ॐ शब्दाय नमः॥

ॐ वाचे नमः॥

ॐ पाणिभ्यां नमः॥

ॐ पादाभ्यां नमः॥

ॐ पायवे नमः॥

ॐ उपस्थाय नमः॥

ॐ मनसे नमः॥

ॐ बुद्ध्यै नमः॥

ॐ चित्ताय नमः॥

ॐ अहंकाराय नमः।

ॐ क्षेत्रात्मने नमः॥

ॐ परमात्मने नमः॥

धूपं धूरसि मंत्रेण अग्निर्ज्योतीति दीपकम्॥

युवा सुवासेति च ततो वासांसि परिधापयेत्॥८॥

ततो ब्राह्मणमानीय वेदवेदांगपारगम्॥

प्रक्षाल्य चरणौ तस्य वासांसि परिधापयेत्॥९॥

केयूरैः कंकणैश्चैव अंगुलीयकभूषणैः॥ ६.२७०.१०॥

भूषयित्वा तनुं तस्य ततो मूर्तिं समानयेत्॥

मंत्रेणानेन राजेंद्र ब्राह्मणाय निवेदयेत्॥११॥

एष आत्मा मया दत्तस्तव हेममयो द्विज॥

यत्किंचिद्विहितं पापं पूर्वं भूयात्तवाखिलम्॥१२॥

इति दानमंत्रः॥

ततस्तु ब्राह्मणो राजन्मंत्रमेतं समुच्चरेत्॥१३॥

यत्किंचिद्विहितं पापं त्वया पूर्वंमया हि तत्॥

गृहीतं मूर्तिरूपं तत्ततस्त्वं पापवर्जितः॥

इति प्रतिग्रहमंत्रः॥ १४॥

एवं दत्त्वा विधानेन ततो विप्रं विसर्जयेत्॥

एवं कृते ततो राजंस्तस्मै दत्त्वाथ दक्षिणाम्॥१५॥

यथा तुष्टिं समभ्येति ततः पापं नयत्यसौ॥

तस्मिन्कृते महाराज प्रत्ययस्तत्क्षणाद्भवेत्॥ १६॥

शरीरं लघुतामेति तेजोवृद्धिश्च जायते॥

स्वप्ने च वीक्षते रात्रौ संतुष्टमनसः स्थितान्॥१७॥

नरान्स्त्रियः सितैर्वस्त्रैः श्वेतमाल्यानुलेपनैः॥

श्वेतान्गोवृषभानश्वांस्तीर्थानि विविधानि च॥१८॥

एतत्ते सर्वमाख्यातं पापपिंडस्य दापनम्॥

श्रवणादपि राजेंद्र यस्य पापैः प्रमुच्यते॥१९॥

अन्यत्रापि महादानं पापपिण्डो हरेन्नृप॥६.२७०.२०।

एकजन्मकृतं पापं निजकायेन निर्मितम्॥

कपालेश्वरदेवस्य सहस्रगुणितं हरेत्॥२१॥

पूर्ववच्चैव कर्तव्यो वेदिमंडपयोर्विधिः॥

परं होमः प्रकर्तव्यो गायत्र्या केवलं नृप॥२२।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये कपालेश्वरक्षेत्रमाहात्म्यप्रसंगेन पापपिंडप्रदानविधानवर्णनंनाम सप्तत्युत्तरद्विशततमोऽध्यायः॥२७०॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७१



सूत उवाच॥

अथान्यदपि तत्रास्ति सुपुण्यं लिंगसप्तकम्॥

येनार्चितेन दृष्टेन पूजितेन विशेषतः॥१॥

दीर्घायुर्जायते मर्त्यः सर्वरोगविवर्जितः॥

मार्कण्डेश्वर इत्युक्तस्तत्र देवो महेश्वरः॥२॥

इन्द्रद्युम्नेश्वरोऽन्यस्तु सर्वपापहरो हरः॥

पालेश्वरस्तथा चैव सर्वव्याधिविनाशनः॥३॥

ततो घंटशिवः ख्यातो यो घंटेन प्रतिष्ठितः॥

कलशेश्वरसंज्ञस्तु वानरेश्वरसंयुतः॥४॥

ईशान शिव इत्युक्तस्तत्र क्षेत्रेश्वरेश्वरः॥

पूजितो मानवैर्भक्त्या कामान्यच्छत्यमानुषान्॥५॥

वांछितान्मनसा सर्वान्कलिकालेऽपि संस्थिते॥६॥

ऋषय ऊचुः॥

कोऽयं मार्कंडसंज्ञस्तु येन लिंगं प्रतिष्ठितम्॥

इन्द्रद्युम्नो महीपालः कतमो वद सूतज॥७॥

तथा पालकनामा च येनायं स्थापितो हरः॥

तथा यो घण्टसंज्ञस्तु कस्मिञ्जातः स चान्वये॥८॥

कलशाख्यस्तु यः ख्यातो वानरेण समन्वितः॥

ईशानोप्यखिलं ब्रूहि परं नःकौतुकं स्थितम्॥ ९।

यतोऽत्र जायते श्रेयः पुनः पुंसां प्रकीर्तय॥

यैरेतैः स्थापिता देवाः क्षेत्रेऽस्मिन्मानवोत्तमैः॥६.२७१.१०॥

तथा तेषां समाचारं प्रभावं चैव सूतज॥

दानं वापि यथाकालं मंत्रांश्च विस्तराद्वद॥११॥

सूत उवाच॥

अहं वः कीर्तयिष्यामि कथामेतां पुरातनीम्॥

कथितां भर्तृयज्ञेन आनर्ताधिपतेः स्वयम्॥१२॥

श्रुतयापि यया मर्त्यो दीर्घायुर्जायतेनरः॥

नापमृत्युमवाप्नोति कथंचित्तत्प्रभावतः॥१३॥

यो मार्कंड इति ख्यातः प्रथमं परिकीर्तितः।

संभूतिस्तस्य संप्रोक्ता युष्माकं पापनाशिनी॥१४॥

इंद्रद्युम्नं प्रवक्ष्यामि सांप्रतं मुनिसत्तमाः॥

यद्वंशो यत्प्रभावश्च सर्वभूपालमानितः॥१५।.

इंद्रद्युम्नो महीपाल आसीत्पूर्वं द्विजोत्तमाः॥

ब्राह्मण्यश्च शरण्यश्च साधुलोकप्रपालकः॥

यज्वा दानपतिर्दक्षः सर्वभूतहिते रतः॥१६।

न दुर्भिक्षं न च व्याधिर्न च चौरकृतं भयम्॥

तस्मिञ्छासति धर्मज्ञे आसील्लोकस्य कस्यचित्॥१७॥

यथैव वर्षतो धारा यथा वा दिवि तारकाः॥

गंगायां सिकता यद्वत्संख्यया परिवर्जिताः॥१८॥

तद्वत्तेन कृता यज्ञाः सर्वे संपूर्णदक्षिणाः॥

अग्निष्टोमोऽतिरात्रश्च उक्थः षोडशिकास्तथा॥१९॥

सौत्रामण्याऽथ पशवश्चातुर्मास्या द्विजोत्तमाः॥

वाजपेयाश्वमेधाश्च राजसूया विशेषतः॥६.२७१.२०॥

पौण्डरीकास्तथैवान्ये श्रद्धापूतेन चेतसा॥२१।

तेन दानानि दत्तानि तीर्थेषु च विशेषतः॥

मिष्टान्नानि द्विजेंद्राणां दक्षिणासहितानि च॥२२॥

न तदस्ति धरापृष्ठे नगरं पत्तनं तथा॥

तीर्थं वा यत्र नो तस्य विद्यते त्रिदशालयः॥२३॥

तेन कन्यासहस्राणि अच्युतान्यर्बुदानि च॥

ब्राहमणेभ्यः प्रदत्तानि ब्राह्मणानां धनार्थिनाम्॥२४॥

दशमीदिवसे तस्य रात्रौ च गजपृष्ठिगः॥

दुन्दुभिस्ताड्यमानस्तु बभ्राम सकलं पुरम्॥ २५॥

प्रत्यूषे वैष्णवं भावि पापहारि च वासरम्॥

उपवासः प्रकर्तव्यो मुक्त्वा वृद्धं च बालकम्॥

अन्यथा निग्रहिष्यामि भोजनं यः करिष्यति॥२६॥

इंद्रद्युम्नः स राजर्षिस्तदा विष्णोः प्रसादतः॥

तेनैव स्वशरीरेण ब्रह्मलोकं तदा गतः॥२७॥

तत्र कल्पसहस्रांते स प्रोक्तो ब्रह्मणा स्वयम्॥

इंद्रद्युम्न धरां गच्छ न स्थातव्यं त्वयाऽधुना॥२८॥

इंद्रद्युम्न उवाच।

कस्माच्च्यावयसे ब्रह्मन्निजलोकादद्रुतं हि माम्॥

अपापमपि देवेश तथा मे वद कारणम्॥२९॥

श्रीब्रह्मोवाच॥

तव कीर्तिसमुच्छेदः संजातोऽद्य धरातले॥

यावत्कीर्तिर्धरापृष्ठे तावत्स्वर्गे वसेन्नरः॥६.२७१.३०॥

एतस्मात्कारणाल्लोकाः स्वनामांकानि चक्रिरे॥

वापीकूपतडागानि देवतायतनानि च॥३१॥

तस्माद्गच्छ धरापृष्ठं स्वां कीर्तिं नूतनां कुरु॥

यदि वांछसि लोकेऽस्मिन्मामके वसतिं चिरम्॥ ३२॥

अथात्मानं स राजेंद्रो यावत्पश्यति तत्क्षणात्॥

तावत्प्राप्तं धरापृष्ठे कांपिल्य नगरं प्रति॥३३॥

अथ पप्रच्छ लोकान्स किमेतन्नगरं स्मृतम्॥

कोऽयं देशः कोऽत्र राजा किं पुरं नगरं च किम्॥३४॥

ते तमूचुः परं चैतत्कांपिल्यमिति विश्रुतम्॥

आनर्तनामा देशोऽयं राजात्र पृथिवीजयः॥३५॥

को भवान्किमिहायातः किंचित्कार्यं वदस्व नः॥३६॥

इंद्रद्युम्न उवाच॥ इंद्रद्युम्नो महीपालः पुरासीद्रोचके पुरे॥

देशे वैजरुके पूर्वं स देशः क्व च तत्पुरम्॥ ३७॥

जना ऊचुः॥

न वयं तत्पुरं विद्मो न देशं न च भूपतिम्॥

इन्द्रद्युम्नाभिधानं च यं त्वं पृच्छसि भद्रक॥३८॥

इंद्रद्युम्न उवाच॥

चिरायुरस्ति कोऽप्यत्र यस्तं वेत्ति महीपतिम्॥

देशं वा तत्पुरं वापि तन्मे वदथ मा चिरम्॥३९॥

जना ऊचुः॥

सप्तकल्पस्मरो नाम मार्कंडेयो महामुनिः॥

श्रूयते नैमिषारण्ये तं गत्वा पृच्छ वेत्स्यसि॥६.२७१.४०॥

अथासौ सत्वरं गत्वा व्योममार्गेण तं मुनिम्॥

पप्रच्छ प्रणिपत्योच्चैर्नैमिषारण्यमाश्रितम्॥४१॥

इंद्रद्युम्नेति वै भूपस्त्वया दृष्टः श्रुतोऽथ वा॥

चिरायुस्त्वं श्रुतोऽस्माभिः पृच्छामस्तेन सन्मुने॥४२॥

श्रीमार्कंडेय उवाच॥ सप्तकल्पांतरे भूपो न दृष्टो न मया श्रुतः॥

इंद्रद्युम्नाभिधानोऽत्र तत्र किं नु वदामि ते॥४३॥

तस्य तद्वचनं श्रुत्वा निराशः स महीपतिः॥

वैराग्यं परमं गत्वा मरणे कृतनिश्चयः॥४४॥

तेन चानीय दारूणि प्रज्वाल्य च हुताशनम्॥

प्रवेष्टुकामः स प्रोक्त इन्द्रद्युम्नो महीपतिः॥४५॥

त्वया चात्र न कर्तव्यमहं ते मित्रतां गतः॥

नाशयिष्यामि ते मृत्युं यद्यपि स्यान्महत्तरम्॥४६॥

नीरोगोऽसि सुभव्योऽसि कस्मान्मृत्युं प्रवांछसि॥

वद मे कारणं मृत्योः प्रतीकारं करोमि ते॥४७॥

इंद्रद्युम्न उवाच॥

चिरायुर्मे भवान्प्रोक्तः कांपिल्यपुरवासिभिः ॥

तेनाहं तव पार्श्वेऽत्र समायातो महामुने॥४८॥

इंद्रद्युम्नोद्भवां वार्तां त्वं वदिष्यसि सन्मुने॥

मत्कीर्तिर्न परिज्ञाता ततो मृत्युं व्रजाम्यहम्॥४९॥

सूत उवाच॥

तस्य तं निश्चयं ज्ञात्वा दयावान्स मुनीश्वरः॥

वृथाश्रमं च तं ज्ञात्वा दाक्षिण्यादिदमब्रवीत्॥६.२७१.५०॥

यद्येवं मा विशाग्निं त्वमहं ज्ञास्यामि तं नृपम्॥
नाडीजंघो बको नाम ममास्ति परमः सुहृत्॥५१॥
चिरंतनश्च सोऽस्माकं नूनं ज्ञास्यति तं नृपम्॥
तस्मादागच्छ गच्छावस्तस्य पार्श्वे हिमाचले॥५२॥
साधूनां दर्शनं जातु न वृथा जायते क्वचित्॥५३॥
एवमुक्त्वा ततस्तौ तु प्रस्थितौ मुनिपार्थिवौ॥
व्योममार्गेण संतुष्टौ बकं प्रति हिमाचले॥५४॥
बकोऽपि तं समालोक्य मार्कण्डेयं समागतम्॥
संमुखः प्रययौ तुष्टः स्वागतेनाभ्यपूजयत्॥५५॥
धन्योऽहं कृतपुण्योऽहं यस्य मे त्वत्समागमः॥
भो भो ब्रह्मविदां श्रेष्ठ आतिथ्यं ते करोमि किम्॥५६॥
श्रीमार्कंडेय उवाच॥
मत्तोपि त्वं चिरायुश्च यतो मित्रं व्यवस्थितः॥
इन्द्रद्युम्नो महीपालस्त्वया दृष्टः श्रुतोऽथवा॥५७॥
एतस्य मम मित्रस्य तेन दृष्टेन कारणम्॥
अन्यथा जायते मृत्युस्ततोऽहं त्वां समागतः॥५८॥
बक उवाच॥ सप्तद्विगुणितान्कल्पान्स्मराम्यहमसंशयम्॥
न स्मरामि कथामेव इंद्रद्युम्नसमुद्भवाम्॥५९॥
आस्तां हि दर्शनं तावत्सत्यमेतन्मयोदिम्॥६.२७१.६०॥
इंद्रद्युम्न उवाच॥
तपसः किं प्रभावोऽयं दानस्य नियमस्य च॥
यदायुरीदृशं जातं बकत्वेऽपि वदस्व नः॥६१॥
बक उवाच॥ घृतकंबलमाहात्म्याद्देवदेवस्य शूलिनः॥
ममायुरीदृशं जातं बकत्वं मुनिशापतः॥६२॥
अहमासं पुरा बालो ब्राह्मणस्य निवेशने॥
चमत्कारपुरे रम्ये पाराशर्यस्य धीमतः॥६४॥
नाम्ना च विश्वरूपाख्यो नाम्ना ऽन्येन बक स्मृतः॥
अतीव चपलत्वेन संयुक्तः पितृवल्लभः॥६४॥

कस्यचित्त्वथ कालस्य संक्रांतौ मकरस्य भोः॥
संप्राप्यातीव चापल्याल्लिंगं जागेश्वरं मया॥
घृतकुम्भे परिक्षिप्तं पूजितं जनकेन यत्॥६५॥
अथ रात्र्यां व्यतीतायां पृष्टोऽहं जनकेन च॥
त्वया पुत्र परिक्षिप्तं नूनं जागेश्वरं क्वचित्॥
तस्माद्वद प्रयच्छामि तेन ते भक्ष्यमुत्तमम्॥६६॥
ततो मयाज्यकुम्भाच्च तस्मादादाय सत्वरम्॥
भक्ष्यलौल्यात्पितुर्हस्ते विन्यस्तं घृतसंप्लुतम्॥६७॥
कस्यचित्त्वथ कालस्य पंचत्वं च समागतः॥
जातिस्मरस्ततो जातस्तत्प्रभावान्नृपालये॥६८॥
आनर्ताधिपतेर्हर्म्ये नाम्ना ख्यातस्त्वहं बकः॥
चमत्कारपुरे देवो हरः संस्थापितो मया॥६९॥
तत्प्रभावेण विप्रेंद्र प्राप्तः पैतामहं पदम्॥६.२७१.७०॥
ततो यानि धरापृष्ठे सुलिंगानि स्थितानि च॥
घृतेनच्छादयाम्येव मकरस्थे दिवाकरे॥
मया यत्स्थापितं लिंगं चमत्कारपुरे शुभम्॥७१॥
आराधितं दिवा नक्तं राज्ये संस्थाप्य पुत्रकम्॥
नियोज्य सर्वतो भृत्यान्धनवस्त्रसमन्वितान्॥७२॥
ततःकालेन महता तुष्टो मे भगवाञ्छिवः॥
मत्समीपं समासाद्य वाक्यमेतदुवाच सः॥७३॥
परितुष्टोऽस्मि भद्रं ते तव पार्थिवसत्तम॥
घृतकंबलदानेन संख्यया रहितेन च॥ ७४॥
तस्माद्वरय भद्रं ते वरं यन्मनसि स्थितम्॥
अदेयमपि दास्यामि यद्यपि स्यात्सुदुर्लभम्॥७५॥
ततो मया हरः प्रोक्तो यदि तुष्टोऽसि मे प्रभो।.
कुरुष्व मां गणं देव नान्यत्किंचिद्वृणोम्यहम्॥७६॥
श्रीभगवानुवाच॥
बकैहि त्वं महाभाग कैलासं पर्वतोत्तमम्॥

मया सार्धमनेनैव शरीरेण गणो भव॥७७॥

अन्योऽपि मर्त्यलोकेत्र यः करिष्यति मानवः॥

मकरस्थे रवौ मह्यं संक्रांतौ रजनीमुखे।

स नूनं मद्गणो भावी सकृत्कृत्वाऽथ कंबलम्॥७८॥

त्वं पुनर्मामकं लिंगं समं कुर्वन्भविष्यसि॥

धर्मसेनेति विख्यातो विकृत्या परिवर्जितः॥७९॥

एवमुक्त्वा स भगवान्मामादाय ततः परम्॥

कैलासं पर्वतं गत्वा गणकोटीशतामदात्॥६.२७१.८०॥

कस्यचित्त्वथ कालस्य भ्रममाणो यदृच्छया॥

गतोऽहं पर्वतश्रेष्ठं हिमवंतं महागिरिम्॥८१।.

यत्रास्ते गालवो नाम सदैव तपसि स्थितः॥

तस्य भार्या विशालाक्षी सर्वलक्षणलक्षिता॥ ८२॥

सप्तरक्ता त्रिगंभीरा गूढगुल्फा कृशोदरी॥

तां दृष्ट्वा मन्मथाविष्टः संजातोऽहं मुनीश्वर॥८३॥

चिंतितं च मया चित्ते कथमेतां हराम्यहम्॥

तस्माच्छिष्यत्वमासाद्य भक्तिमस्य करोम्यहम्॥८४॥

शुश्रूषानिरतो भूत्वा येन प्राप्नोमि भामिनीम्॥८५॥

ततो बटुकरूपेण संप्राप्तो गालवो मया॥

संसारस्य विरक्तोऽहं करिष्यामि महत्तपः॥८६॥

दीक्षां यच्छ विभो मह्यं येन शिष्यो भवामि ते॥८७॥

आहरिष्याम्यहं दर्भांस्तथा सुमनसः सदा॥

समिधश्च सदैवाहं फलानि जलमेव च॥८८॥

स मां विनयसंपन्नं ज्ञात्वा ब्राह्मणरूपिणम्॥

ददौ दीक्षां ततो मह्यं शास्त्रदृष्टेन कर्मणा॥८९॥

अथ दीक्षां समासाद्य तोषयामि दिनेदिने ॥

तं चैव तस्य पत्नीं तां यथोक्तपरिचर्यया॥

अशुद्धेनापि चित्तेन छिद्रान्वेषणतत्परः॥६.२७१.९०॥

अन्यस्मिन्दिवसे प्राप्ते सा स्त्रीधर्मसमन्विता॥

उटजं दूरतस्त्यक्त्वा रात्रौ सुप्ता मनस्विनी॥९१।.

सोऽहं रूपं महत्कृत्वा तामादाय तपस्विनीम्॥

सुखसुप्तां सुविश्रब्धां प्रस्थितो दक्षिणामुखः॥९२॥

अथासौ संपरित्यक्ता संस्पर्शान्मम निद्रया॥

चौररूपं परिज्ञाय मां शिष्यं प्ररुरोद ह॥९३॥

साब्रवीच्च स्वभर्तारं गालवं मुनिसत्तमम्॥

एष शिष्यो दुराचारो हरते मामितः प्रभो॥९४॥

तस्माद्रक्ष महाभाग यावद्दूरं न गच्छति॥९५॥

तच्छ्रुत्वा गालवः प्राह तिष्ठतिष्ठेति चासकृत्॥

पापाचार सुदुष्टात्मन्गतिस्ते स्तंभिता मया॥९६॥

तस्य वाक्याततो मह्यं गतिस्तंभो व्यजायत॥

यद्वल्लिखित एवाहं प्रतिष्ठामि सुनिश्चलः॥९७॥

ततस्तेन च शप्तोऽहं गालवेन महात्मना॥

वंचितोऽहं त्वया यस्माद्बको भव सुदुर्मते॥९८॥

ततः पश्यामि चात्मानं सहसा बकरूपिणम्॥

बकत्वेऽपि न मे नष्टा या स्मृतिः पूर्वसंभवा॥९९।

ततः साऽपि च तत्पत्नी सचैलं स्नानमाश्रिता॥

मत्स्पर्शाद्दुःखितांगी च शापाय समुपस्थिता॥६.२७१.१००॥

यस्मात्पाप त्वया स्पृष्टा प्रसुप्ताहं रजस्वला॥

बकधर्मं समाश्रित्य भर्त्ता मे वंचितस्त्वया॥

अन्यरूपं समास्थाय तस्मात्सत्यं बको भव॥१०१॥

एवं शप्तस्ततो द्वाभ्यां ताभ्यां वै दुःखसंयुतः॥

चरणाभ्यां प्रलग्नस्तु गालवस्य महात्मनः॥१०२॥

गणोऽहं देवदेवस्य त्रिनेत्रस्य महात्मनः॥

पालकेति च विख्यातो गणकोटिप्रभुः स्थितः॥१०३॥

सोऽहमत्र समायातः प्रभोः कार्येण केनचित्॥

तव भार्यां समालोक्य कामदेववशं गतः॥१०४॥

क्षमापराधं त्वं मह्यमेवं ज्ञात्वा मुनीश्वर॥

दुर्विनीतः श्रियं प्राप्य विद्यामैश्वर्यमेव च॥१०५॥

न तिष्ठति चिरं स्थाने यथाहं मदगर्वितः॥

शिष्यरूपं समास्थाय ततः प्राप्तस्तवांतिकम्॥१०६॥

अस्या हरणहेतोश्च महासत्या मुनीश्वर॥

तस्मात्कुरु प्रसादं मे दीनस्य प्रणतस्य च॥१०७॥

अनुग्रहप्रदानेन क्षमा यस्मात्तपस्विनाम्॥

कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता॥

विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम्॥१०८॥

सूत उवाच॥

तस्य तत्कृपणं श्रुत्वा सोपि माहेश्वरो मुनिः॥

ज्ञात्वा तं बांधवस्थाने दयां कृत्वाऽब्रवीद्वचः॥१०९॥

सत्यवाक्तिष्ठते विप्रश्चमत्कारपुरे शुभे॥६.२७१.११०॥

भर्तृयज्ञ इति ख्यातस्तदा तस्योपदेशतः॥

बकत्वं यास्यते नूनं मम वाक्यादसंशयम्॥१११॥

ततः पश्यामि चात्मानं बकत्वेन समाश्रितम्॥११२॥

एवं मे दीर्घमायुष्यं संजातं शिवभक्तितः॥

घृतकम्बलमाहात्म्याद्बकत्वं मुनिशापतः॥ ११३॥

इंद्रद्युम्न उवाच॥ एतदर्थं समानीतस्त्वत्सकाशं विहंगम॥

इंद्रद्युम्नस्य वार्तार्थं मरणे कृतनिश्चयः॥११४॥

सा त्वया नैव विज्ञाता ममाभाग्यैर्विहंगम॥

सेवयिष्याम्यहं तस्मात्प्रदीप्तं हव्यवाहनम्॥११५॥

प्रतिज्ञातं मया पूर्वमेतन्निश्चित्य चेतसि॥

इंद्रद्युम्ने ह्यविज्ञाते संसेव्यः पावको मया॥११६॥

तस्माद्देहि ममादेशं मार्कंडेयसमन्वितः॥

प्रविशामि यथा वह्निं भ्रष्टकीर्तिरहं बक॥११७॥

मार्कंडेय उवाच॥

वेत्सि चान्यं नरं कञ्चिद्वयसा चात्मनोऽधिकम्॥

पृच्छामि येन तं गत्वा कृते ह्यस्य महात्मनः॥ ११८॥

श्रद्धया परया युक्तः संप्राप्तोऽयं मया सह॥

तत्कथं त्यजति प्राणान्सहाये मयि संस्थिते॥११९॥

अपरं च क्षमं वाक्यं यत्त्वां वच्मि विहंगम॥

अयं दुःखेन संयुक्तः साधयिष्यति पावकम्॥

अहमेनमनुद्धृत्य कस्माद्गच्छामि चाश्रमम्॥६.२७१.१२०॥

सूत उवाच॥

तयोस्तं निश्चयं ज्ञात्वा बकः परमदुर्मना॥

सुचिरं चिंतयामास कथं स्यादेतयोः सुखम्॥१२१॥

ततो राजा मुनिश्चैव दारूण्याहृत्य पावकम्॥

प्रवेष्टुकामौ तौ दृष्ट्वा बको वचनमब्रवीत्॥१२२॥

मम वाक्यं कुरु प्राज्ञ यदि जीवितुमिच्छसि॥

ज्ञातः सोऽद्य मया व्यक्तमिन्द्रद्युम्नं नराधिपम्॥१२३॥

यो ज्ञास्यति मम ज्येष्ठः सर्वशास्त्रविचक्षणः॥

तत्त्वमेनं समादाय मरणे कृतनिश्चयम्॥ १२४॥

निश्वसन्तं यथा नागं बाष्पव्याकुललोचनम्॥

समागच्छ मया सार्धं कैलासं पर्वतं प्रति॥१२५॥

यत्रास्ति दयितो मह्यमुलूकश्चिरजीवभाक्॥

स नूनं ज्ञास्यते तं हि मा वृथा मरणं कृथाः॥ १२६॥

ततोऽसौ तेन संयुक्तो बकेन सुमहात्मना॥

मार्कंडेयेन संप्राप्तः कैलासं पर्वतोत्तमम्॥१२७॥

सोऽपि दृष्ट्वा बकं प्राप्तं मित्रं परमसंमतम्॥

समागच्छदसौ हृष्टः स्वागतेनाभ्यनन्दयत्॥१२८॥

अथ तं चैव विश्रान्तं समालिङ्ग्य मुहुर्मुहुः॥

प्राकारवर्णनामासौ वाक्यमेतदुवाच ह॥१२९॥

स्वागतं ते द्विजश्रेष्ठ भूप सुस्वागतं च ते॥

सख्येऽद्य यच्च ते कार्यं वदागमनकारणम्॥६.२७१.१३०॥

कावेतौ पुरुषौ प्राप्तौ त्वया सार्धं ममांतिकम्॥

दिव्यरूपौ महाभागौ तेजसा परिवारितौ॥१३१॥

बक उवाच॥

एष मार्कंडसंज्ञोऽत्र प्रसिद्धो भुवनत्रये॥

महेश्वरप्रसादेन संसिद्धिं परमां गतः॥

द्वितीयोऽसौ सुहृच्चास्य कश्चिन्नो वेद्मि तत्त्वतः॥

मार्कंडेन समायातः सुहृदा व ममांतिकम्॥१३२॥

यदि जानासि तं भूपमिन्द्रद्युम्नं महामते॥

तत्त्वं कीर्तय येनासौ मरणाद्विनिवर्तते॥१३५॥

चिरायुस्त्वं मया ज्ञातो ह्यतः प्राप्तोऽस्मि तेंऽतिकम्॥१३६॥

उलूक उवाच॥

अष्टाविंशत्प्रमाणेन कल्पा जातस्य मे स्थिताः॥

न दृष्टो न श्रुतः कश्चिदिंद्रद्युम्नो महीपतिः॥१३७॥

इंद्रद्युम्न उवाच॥

तव कस्मादुलूकत्वं शीघ्रं तन्मे प्रकीर्तय॥

एतन्मे कौतुकं भावि यत्ते ह्यायुरनन्तकम्॥

उलूकत्वं च संजातं रौद्रं लोकविगर्हितम्॥१३८॥

उलूक उवाच॥

शृणु तेऽहं प्रवक्ष्यामि दीर्घायुर्मे यथा स्थितम्॥

महेश्वरप्रसादेन बिल्वपत्रार्चनान्मया॥

उलूकत्वं मया प्राप्तं भृगोः शापान्महात्मनः॥१३९॥

अहमासं पुरा विप्रः सर्वविद्यासु पारगः॥

चमत्कारपुरे श्रेष्ठे नाम्ना ख्यातस्तु घंटकः॥

ब्रह्मचारी दमोपेतो हरपूजार्चने रतः॥६.२७१.१४०॥

अखंडितैर्बिल्वपत्रैरग्रजातैस्त्रिपत्रकैः॥

त्रिकालं पूजितः शंभुर्लक्षमात्रैः सदा मया॥१४१॥

ततो वर्षसहस्रांते तुष्टो मे भगवान्हरः॥

प्रोवाच दर्शनं गत्वा मेघगंभीरया गिरा॥१४२॥

अहं तुष्टोऽस्मि ते वत्स वरं वरय सुव्रत॥

अखंडितैर्बिल्वपत्रैस्त्रिकाले यत्त्वयार्चितः॥१४३॥

बिल्वस्य प्रसवाग्रेण त्रिपत्रेण प्रजायते॥

एकेनापि यथातुष्टिस्तथान्येषां न कोटिभिः॥१४४॥

पुष्पाणामपि भद्रं ते सुगंधानामपि ध्रुवम्॥

सखे मया प्रणम्योच्चैः स प्रोक्तः शशिशेखरः॥१४५॥

यदि तुष्टोसि मे देव यदि देयो वरो मम॥

तन्मां कुरु जगन्नाथ जरामरणवर्जितम्॥१४६॥

स तथेति प्रतिज्ञाय महादेवो महेश्वरः॥

कैलासं प्रति देवेशः क्षणाच्चादर्शनं गतः॥१४७॥

ततोहं परितुष्टोथ वरं प्राप्य महेश्वरात्॥

कृतकृत्यमिवात्मानं चिंतयामि प्रहर्षितः॥१४८॥

एतस्मिन्नेव काले तु भार्गवो मुनिसत्तमः॥

कुशलः सर्वशास्त्रेषु वेदवेदांग पारगः॥१४९॥

तस्य भार्याऽभवत्साध्वी नाम्ना ख्याता सुदर्शना॥

प्राणेभ्योऽपि प्रिया तस्य गालवस्य मुनेः सुता॥६.२७१.१५०॥

तस्य कन्या समभवद्रूपेणाप्रतिमा भुवि॥

सा मया सहसा दृष्टा क्रीडमाना यथेच्छया॥१५१॥

मध्यक्षामा सुकेशी च बिंबोष्ठी दीर्घलोचना॥

तामहं वीक्षयित्वा तु कामदेववशं गतः॥१५२॥

ततः पृष्टा मया कस्य कन्येयं चारुलोचना॥

विभक्तसर्वावयवा देवकन्येव राजते॥१५३॥

सखीभिः कीर्तिता मह्यं भार्गवस्य मुनेः सुता॥

एषा चाद्यापि कन्यात्वे वर्तते चारुहासिनी॥१५४॥

ततोऽहं भार्गवं गत्वा विनयेन समन्वितः॥

ययाचे कन्यकां ता च कृतांजलिपुटः स्थितः॥ १५५।

सवर्णं मां परिज्ञाय सोऽपि भार्गवनंदनः॥

दत्तवांस्तां महाभाग विरूपस्यापि कन्यकाम्॥१५६॥

अथ सा कन्यका ज्ञात्वा पित्रा दत्तास्मि धर्मतः॥

विरूपाय ततो गत्वा मातरं वाक्यमब्रवीत्॥५७॥

सुलज्जा साऽतिदुःखार्ता पश्यांब जनकेन च ॥
विरूपाय प्रदत्तास्मि नाहं जीवितुमुत्सहे॥१५८॥
विषं वा भक्षयिष्यामि प्रवेक्ष्यामि हुताशनम्॥
तस्यास्तद्वचनं श्रुत्वा निषिद्धः स द्विजस्तया॥१५९॥
कस्मान्नाथ प्रदत्तासौ विरूपाय त्वया विभो॥
कन्यकेयं सुरूपाढ्या सर्वलक्षणसंयुता॥६.२७१.१६०॥
एतच्छ्रुत्वा तु वचनं भार्गवो मुनिसत्तमः॥
ततस्तां गर्हयित्वासौ धिङ्नारी पुरुषायते॥१६१॥
अनेन प्रार्थिता कन्या मया चास्मै प्रदीयते॥
तत्किं निषेधयसि मां दीयमानां सुतामिमाम्॥१६२॥
इत्युक्त्वा स प्रसुष्वाप पत्न्याथ कन्यया समम्॥१६३॥
ततोऽर्द्धरात्रे चागत्य मया सुप्ता च भार्गवी॥
हृत्वा स्वभवने नीता निशि सुप्ते जने तदा॥१६४॥
नियुक्ता कामधर्मेण ह्यनिच्छंती बलान्मया॥
विप्रः प्रातर्जजागार पिता तस्यास्ततः परम्॥१६५॥
क्वासौ सा दुहिता केन हृता नष्टा मदीयिका॥
अथासौ वीक्षितुं बाह्ये बभ्राम स्ववनांतिकम्॥१६६॥
पदसंहतिमार्गेण मुनिभिर्बहुभिर्वृतः॥
तेन दृष्टाऽथ सा कन्या कृतकौतुकमंगला॥१६७॥
रुदंती सस्वनं तत्र लज्जमाना ह्यधोमुखी॥
ततः कोपपरीतात्मा मां प्रोवाच स भार्गवः॥ १६८॥
निशाचरस्य धर्मेण यस्मादूढा सुता मम॥
निशाचरो भवानस्तु कर्मणानेन सांप्रतम्।१६९॥
घंटक उवाच॥
निर्दोषं मां द्विजश्रेष्ठ कस्मात्त्वं शपसि द्रुतम्॥
त्वयैषा मे स्वयं दत्ता तेन रात्रौ हृता मया॥६.२७१.१७०॥
यो दत्वा कन्यकां पूर्वं पश्चाद्यच्छेन्न दुर्मतिः।
स याति नरकं घोरं यावदाभूतसंप्लवम्॥१७१॥

अथासौ चिंतयामास सत्यमेतेन जल्पितम्॥
पश्चात्तापसमोपेतो वाक्यमेतदुवाच ह॥१७२॥
सत्यमेतत्त्वया प्रोक्तं न मे वचनमन्यथा॥
उलूकरूपसंयुक्तो भविष्यसि न संशयः॥१७३॥
उत्पत्स्यते यदा चात्र भर्तृयज्ञो महामुनिः॥
तस्योपदेशमासाद्य भूयः प्राप्स्यसि स्वां तनुम्॥१७४॥
ततः कौशिकरूपं तु पश्याम्यात्मानमेव च॥
तथापि न स्मृतिर्नष्टा मम या पूर्वसंभवा॥१७५॥
अथ या तत्सुता चोढा मया तस्मिन्गिरौ तदा॥
सापि मां संनिरीक्ष्याथ तद्रूपं दुःखसंयुता॥
प्रविष्टा हव्यवाहं सा विधवात्वमनिच्छती॥१७६॥
एवं मे कौशिकत्वं हि संजातं तु महाद्युते॥
भार्गवस्य तु शापेन कन्यार्थे यत्तवोदितम्॥१७७॥
अखंडबिल्वपत्रेण पूजितो यन्महेश्वरः॥
चिरायुस्तेनसंजातं सत्यमेतन्मयोदितम्॥१७८॥
सत्यं कथय यत्कृत्यं गृहायातस्य किं तव॥
प्रकरोमि महाभाग यद्यपि स्यात्सुदुर्लभम्॥१७९॥
इन्द्रद्युम्न उवाच ॥
इन्द्रद्युम्नस्य ज्ञानाय प्राप्तोऽहं यत्तवांतिकम्॥
नाडीजंघेन चानीतो मरणे कृतनिश्चयः॥६.२७१.१८०॥
यदि नो ज्ञास्यति भवांस्तं कीर्त्या च कुलेन च॥
प्रविशामि ततो नूनं प्रदीप्तं हव्यवाहनम्॥१८१॥
नो चेत्कीर्तय मे कञ्चिदन्यं तु चिरजीविनम्॥
पृच्छामि तेन तं गत्वा येन वेत्ति न वा च सः॥१८२॥
बक उवाच॥
युक्तमुक्तमनेनाद्य तत्कुरुष्व वदास्य भोः॥
यदि जानासि कंचित्वमात्मनश्चिरजीविनम्॥१८३॥
नो चेदहमपि क्षिप्रं प्रविशामि हुताशनम्॥

मार्कंडेनापि सहितः सांप्रतं तव पश्यतः॥१८४॥

एवम् ज्ञात्वा महाभाग चिन्तयस्व चिरंतनम्॥

कंचिद्भूमितलेऽन्यत्र यतस्त्वं चिरजीवधृक्॥१८५॥

आशया परया प्राप्तस्तवाहं किल मंदिरे॥

पुमानेष विशेषेण मार्कंडेयः प्रियो मम ॥१८६॥

संत्यत्र पर्वतश्रेष्ठाः शतशोऽथ सहस्रशः॥

येषु सन्ति महाभागास्तापसाश्चिरजीविनः॥

नान्यथा जीवितं चास्य कथंचित्संभविष्यति॥१८७॥

इंद्रद्युम्नस्य राजर्षेर्हितं परमकं भवेत्॥

तथावयोर्द्वयोश्चापि तस्माच्चिंतय सत्वरम्॥१८८॥

तस्य तं निश्चयं ज्ञात्वा मरणार्थं महीपतेः॥

स उलूकः कृपां गत्वा ततो वचनमब्रवीत्॥१८९॥

यद्येवं तु महाभाग मर्तुकामोऽसि सांप्रतम्॥

तदागच्छ मया सार्धं गन्धमादनपर्वतम्॥६.२७१.१९०॥

तत्र संतिष्ठते गृध्रः स च मे परमः सुहृत्॥

चिरंतनस्तथा सम्यक्स ते ज्ञास्यति तं नृपम्॥

कथयिष्यत्यसंदिग्धं मम वाक्यादसंशयम्॥१९१॥

तस्य तद्वचनं श्रुत्वा मार्कंडेयादिभिस्त्रिभिः॥

प्रोक्तः सर्वैर्महाभाग मा त्वं प्रविश पावकम्॥१९२॥

वयं यास्यामहे सर्वे त्वया सार्धं च तत्र हि॥

कदाचित्सोऽपि जानाति इंद्रद्युम्नं महीपतिम्॥१९३॥

तेषां तद्वचनं श्रुत्वा आशया परया युतः॥

स राजा सह तैः सर्वैः प्रययौ गंधमादनम्॥१९४॥

गृध्रराजोऽपि तान्दृष्ट्वा सर्वानेव कृतांजलिः॥

उलूकं पुरतो दृष्ट्वा प्रहृष्टः सन्मुखो ययौ॥१९५॥

ततोऽब्रवीत्प्रहृष्टात्मा स्वागतं ते द्विजोत्तम॥

चिरकालात्प्रदृष्टोऽसि क एतेऽन्येऽत्र ये स्थिताः॥१९६॥

उलूक उवाच॥

एष मे परमं मित्रं नाडीजंघो बकः स्मृतः॥

एतस्यापि तु मार्कण्डः संस्थितः परमः सुहृत्॥१९७॥

असौ त्रैलोक्यविख्यातः सप्तकल्पस्मरो भुवि॥

एतस्यापि सुहृत्कश्चिन्नैनं जानामि सत्वरम्॥१९८॥

म्रियमाणो मया ह्येष समानीतस्तवांतिकम्॥

अयं जीवति विज्ञात इंद्रद्युम्ने नरेश्वरे॥

नो चेत्प्रविशति क्षिप्रं प्रदीप्तं हव्यवाहनम्॥१९९॥

स त्वं जानासि चेद्ब्रूहि इन्द्रद्युम्नं महीपतिम्॥

चिरंतनो मयापि त्वं तेन प्रष्टुं समागतः॥६.२७१.२००॥

गृध्र उवाच॥

इन्द्रद्युम्नेति विख्यातं राजानं न स्मराम्यहम्॥

न दृष्टो न श्रुतश्चापि इन्द्रद्युम्नो महीपतिः॥२०१॥

तस्य तद्वचनं श्रुत्वा सोऽपि राजा सुदुर्मनाः॥

मनसा चिन्तयामास मरणे कृतनिश्चयः॥२०२॥

ततस्तु कौतुकाविष्टस्तं पप्रच्छ द्विजोत्तमम्॥

कर्मणा केन संप्राप्तमायुष्यं चेदृशं वद॥२०३॥

ततः संभावयिष्यामि श्रुत्वा तेऽहं विभावसुम्॥२०४॥

गृध्र उवाच॥ अहमासं चमत्कारपुरे मर्कटकः किल॥

उपत्यकायां तत्रैव रक्तशृंगस्य भूभृतः॥२०५॥

तत्रैवास्ति महच्छंभोर्मंदिरं मंदरोपमम्।

चित्रेश्वराभिधानं च सर्वपातकनाशनम्॥२०६॥

वसंते तत्र संप्राप्ते पौरजानपदैस्तथा॥

आगत्य चैव सुमहानुत्सवो विहितोऽभवत्॥२०७॥

लिंगस्य सविधै रम्ये सर्वर्तुफलितद्रुमे॥

कानने कामिनीलोककांते जनमनोहरे॥

लिंगमारोपितं चारु तरोरांदोलके मुदा॥ २०८॥

कृत्वा दमनकेनार्चां स्थाप्यांदोले सुयंत्रिते॥

ययुस्ते स्वगृहं पश्चादर्चयित्वा त्रिलोचनम्॥२०९॥

ततोऽहं रजनीवक्त्रे तां दोलां सुमनोहराम्॥
कौतुकाविष्टहृदयो दोलयामि मुहुर्मुहुः॥६.२७१.२१०॥
एवं संदोलयानस्य मम प्राप्ता नरास्तदा॥
कैश्चित्तैस्त्रासितो हत्वा लगुडैः सर्वतोदिशम्॥२११॥
ततः पंचत्वमापन्नस्तत्रैवायतने द्रुतम्॥
ततो जातिस्मरो भूत्वा संजातो नृपमंदिरे॥२१२॥
कोटीश्वरस्यविख्यातो नाम्ना चैव कुशध्वजः॥
पितृपैतामहं राज्यं मया प्राप्तं ततः क्रमात्।२१३॥
कोटीशे समनुप्राप्ते परलोकं स्वकर्मणा ॥
जागेश्वरं महाभागं दोलयामि यथेच्छया॥२१४॥
शिवसिद्धांतजैर्मंत्रैर्गुरुणा संनिवेदितैः॥
ततः कालेन महता तुष्टो देवो हरो मम॥
भवतो वरदश्चास्मि वाक्यमेतदुवाच ह॥२१५॥
कुशध्वज प्रतुष्टोऽस्मि श्रद्धया परया तव॥
वरं वृणीष्व भद्रं ते यः सदा मनसि स्थितः॥२१६॥
ततो मया प्रणम्योच्चैः स प्रोक्तो भगवान्हरः॥२१७॥
यदि तुष्टोसि मे देव तन्मां कुरु निजं गणम्॥
त्रैलोक्यराज्यमपि मे नान्यत्संप्रति रोचते॥२१८॥
एवमुक्तो मया देवो विमाने मां निधाय सः॥
शिवलोकं महापुण्यं सहसा मां समानयत्॥२१९॥
ततः प्रसादतश्चाहं भवान्याश्च हरस्य च॥
क्रीडामि स्वेच्छया तत्र गणमध्ये व्यवस्थितः॥६.२७१.२२०॥
कस्यचित्त्वथ कालस्य विमानवरमाश्रितः ॥
स्वेच्छयाभ्रममाणस्तु प्राप्तोऽत्रैव महागिरौ ॥ २२१ ॥
वसंतसमये प्राप्ते प्रवृत्ते दक्षिणानिले ॥
अग्निवेश्यसुता दृष्टा विवस्त्रा जलम ध्यगा ॥ २२२ ॥
आलिभिर्बहुभिर्युक्ता क्रीडमाना यथेच्छया ॥
मुष्टिग्राह्या तु मध्ये सा बिंबोष्ठी वारिजेक्षणा ॥ २२३ ॥

बिल्वस्तनी शशांकास्या सर्वलक्षणलक्षिता ॥
ततोऽहं मन्मथाविष्टः समभूवं हि तत्क्षणात् ॥ २२४ ॥
अवतीर्य विमानाग्र्याद्गृहीताथ करे मया ॥
प्रकुर्वाणाथ करुणं पक्षिणीकुररी यथा ॥ २२५ ॥
ततः कन्या मुनींद्राणां याः स्थितास्तत्र वारिणि ॥
रुदंत्यः संप्रयातास्ता अग्निवेश्यस्य संनिधौ ॥ २२६ ॥
नीयते त्वत्सुता ब्रह्मन्विमानवरमाश्रिता ॥
वैमानिकेन केनापि क्रन्दमाना निरर्गलम् ॥२२७ ॥
तच्छ्रुत्वा कुपितः सोऽथ व्योममार्गावलोकनः ॥
स्वाश्रमात्संप्रयातः स भर्त्समानो मुहुर्मुहुः॥२२९॥
तिष्ठतिष्ठेति च प्रोच्य स्तंभयामास सर्वतः ॥
तपसोग्रेण विप्रस्य विमानं मम संस्थितम् ॥२२९॥
अब्रवीच्च ततो मां स कोपेन महताऽन्वितः ॥
यस्मात्पाप त्वया कन्या क्रीडती विहृताधुना ॥ ६.२७१.२३० ॥
अकामा मांसपेशीव यथा गृध्रेण दुर्मते ॥
तस्माद्गृध्रो भवत्वाशु मम वाक्यादसंशयम् ॥२३१॥
एवमुक्तस्ततस्तेन लज्जयाऽहं परिप्लुतः ॥
निवेद्य कन्यकां तस्मै प्रणिपत्य मुहुर्मुहुः ॥ २३२ ॥
ततः प्रोक्तो मया विप्रस्त्वग्निवेश्यो महातपाः ॥
न मया ते सुता ज्ञाता न कोपयितुमर्हसि॥२३३॥
गृध्रत्वं मे यथा न स्यात्तथाकुरु मुनीश्वर ॥२३४॥
ततोऽहं तेन च प्रोक्तो न मिथ्यावचनं मम ॥
कथंचिज्जायते तस्माद्गृध्रत्वं प्रभविष्यति ॥ २३५ ॥
आनर्तस्योपदेशेन यदा यास्यसि भोऽधम ॥
भर्तृयज्ञं महाभागमुपदेशकृते तदा ॥ २३६ ॥
तस्माच्च निष्कृतिं प्राप्य गृध्रत्वं ते प्रयास्यति ॥
स मयाऽन्वेषमाणेन न दृष्टो नैव च श्रुतः ।
निर्विण्णो गृध्रभावेन शापांतो न च मेऽभवत् ॥ २३७ ॥

गृध्र उवाच ॥ ॥

एतत्ते सर्वमाख्यातं गृधत्वस्य च कारणम् ॥

आयुष्यं च यथा जातं मम संख्याविवर्जितम् ॥ २३८ ॥

इन्द्रद्युम्न उवाच ॥ ॥

अनुज्ञां देहि मे शीघ्रं प्रविशामि हुताशनम् ॥

येन वैराग्यमापन्नो न हि जीवितुमुत्सहे ॥ ॥ २३९ ॥

एवमुक्तः स तेनाथ चिंतयामास चेतसि ॥

ममांतिकं समायात एवं मित्रसमन्वितः ॥

तत्करोमि यथाशक्त्या स्वोपकारं सुदुर्लभम् ॥ ॥६.२७१.२४॥।

ततः प्रोवाच तं प्रीत्या दाक्षिण्यं परमं गतः ॥

मा साधय चाग्निं भोः शृणु तावद्वचो मम ॥२४१॥

अहं ते कीर्तयिष्यामि मत्तो योऽपि चिरंतनः ॥२४२॥

यो ज्ञास्यति न संदेह इंद्रद्युम्नं महीपतिम् ॥२४२॥

तदागच्छ मया सार्धं तत्समीपं महात्मनः ॥

सहायैः सहितः सर्वैर्मया सार्धं तथैव च ॥२४३॥

॥ इंद्रद्युम्न उवाच ॥ ॥

कस्तवाप्यधिकोऽप्यस्ति जीवितव्येन सद्द्विज ॥

एतन्मे कौतुकं भूरि तस्माद्वद महामते ॥ २४४ ॥

गृध्र उवाच ॥

अस्ति मंथरकोनाम कमठश्चिरजीवितः ॥

मानसे सरसि ख्यात इन्द्रद्युम्नं स वेत्स्यति ॥ २४५ ॥

तस्य तद्वचनं श्रुत्वा मार्कंडाद्याश्च ते त्रयः ॥

तमूचुः पार्थिवश्रेष्ठं मरणे कृतनिश्चयम् ॥ २४६ ॥

युक्तमुक्तं महाभाग गृधराजेन धीमता ॥

तत्र यास्यामहे सर्वे यत्रासौ कमठः स्थितः ॥ २४७ ॥

अनिर्वेदः श्रियो मूलं यतः शंसंति पंडिताः॥

नीतिशास्त्रविदः सर्वे तस्मादागच्छ गम्यताम् ॥ २४८ ॥

॥ सूत उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वाकृच्छ्रान्निर्वर्त्य पार्थिवः ॥

मरणाद्ब्राह्मणश्रेष्ठा वैराग्यं परमं गतः ॥ २४९ ॥

अथ ते प्रस्थिताः सर्वे गंधमादनपर्वतात् ॥

पंचापि च समादिश्य मानसं सर उत्तमम् ॥

अथ प्राप्ताः क्रमेणैव गच्छमाना विहायसा ॥ ६.२७१.२५० ॥

मानसं तत्सरो रम्यं कूर्मस्तोयाद्विनिर्गतः ॥

निदाघे सेवमानस्तु संतिष्ठति यदृच्छया ॥ २५१ ॥

स च तांश्चतुरो दृष्ट्वा सुचिरं च निरीक्ष्य तान् ॥

परिज्ञाय ततः सर्वान्प्रनष्टः सलिलं प्रति ॥ २५२ ॥

अथ तं कौशिकः प्राह गच्छमानं पराङ्मुखम् ॥

भोभो मित्राय मां दृष्ट्वा संजातोऽसि पराङ्मुखः ॥ २५३ ॥

सुनीचोऽपि गृहं प्राप्तो भवेत्पूज्य तमः सताम् ॥ २५४ ॥

अथासौ तोयमध्यस्थः शिरोमात्रं बहिर्गतः ॥

प्रत्युवाचाथ तं गृध्रं विनयाद्द्विजसत्तमाः ॥ २५५ ॥

नाहं पराङ्मुखो जात स्त्वां दृष्ट्वाऽनंतरावुभौ॥

पंचमोऽयं समभ्येति यो युष्माकं महापुमान् ॥ २५६ ॥

भयात्तस्य प्रणष्टोऽहमिंद्रद्युम्नस्य भूपतेः ॥

अनेन तु प्रदग्धा मे पुरा पृष्ठिर्मखाग्निना ॥

सततं यजमानेन रोचके सत्पुरोत्तमे ॥ २५७ ॥

एतदीयं पुनः स्मृत्वा भयं मे सुमहत्स्थितम् ॥

इंद्रद्युम्नस्य राजर्षेः कीर्तिं संश्रयणं महत् ॥ २५८ ॥

इत्येवमुक्ते वचने कमठेन तदा दिवः ॥

देवदूतः समागच्छच्छासनात्परमेष्ठिनः ॥ २५९ ॥

॥ देवदूत उवाच ॥

आगच्छागच्छ राजर्षे सांप्रतं ब्रह्मणोऽतिकम् ॥

उक्तोऽहं ब्रह्मणा राजन्कीर्तिश्चास्य पृथग्विधा ॥ ६.२७१.२६० ॥

यदा प्रकाशतां याति स्वल्पापि जगती तले ॥

तदाऽऽनेयो द्रुतं राजा मम लोके सुदुर्लभे [। २६१ ॥

तस्मादागच्छ गच्छामो विमानारोहणं कुरु ॥
नयामि येन तत्पार्श्वं ब्रह्मणोऽव्यक्तजन्मनः ॥ २६२ ॥
॥इंद्रद्युम्न उवाच ॥ ॥
यद्येते सुहृदो मह्यं बककौशिककच्छपाः ॥
मार्कंडेयेन सहिता आगच्छंति मया सह ॥ २६३ ॥
आगच्छामि त्वया सार्धं तदहं ब्रह्मणोंऽतिकम् ॥
अन्यथा नागमिष्यामि सत्यमेतन्मयोदितम् ॥ २६४ ॥ ॥
॥ देवदूत उवाच ॥ ॥
एते हरगणाः सर्वे शापभ्रष्टा क्षितिं गताः ॥
शापांते हरपार्श्वे तु यो यास्यंत्यसंशयम् ॥२६५॥
तस्मादागच्छ गच्छामो मुक्त्वात्रैतान्द्रुतं नृप ॥
न चैषां रोचते स्वर्गो मुक्त्वा देवं महेश्वरम् ॥ २६६ ॥
॥ इंद्रद्युम्न उवाच ॥ ॥
यद्येवं गच्छ ते भद्रं नाहं गंता त्रिविष्टपम् ॥
तथातथा यतिष्यामि भविष्यामि यथा गणः ॥ २६७ ॥
तत्रस्थस्य ध्रुवं भावि नित्यं च पतनाद्भयम् ॥
एवमुक्तः स तेनाथ समादाय विमानकम् ॥ २६८ ॥
ब्रह्मलोकं गतो दूतो वैलक्ष्यं परमं गतः ॥
इंद्रद्युम्नोपि प्रपच्छ तं कूर्मं विनयान्वितः ॥ २६९ ॥
आख्याहि कूर्म स्वं कर्म यदीदृक्त्वं चिरंतनः ।
कर्मणा केन तत्प्राप्तं कूर्मत्वं शंस मे द्रुतम् ॥ ६.२७१.२७० ॥
॥ कूर्म उवाच ॥ ॥
अहमासं पुरा विप्रो बालभावे व्यवस्थितः॥
चमत्कारपुरे रम्ये शांडिल्यो नाम विश्रुतः ॥ २७१ ॥
बालक्रीडासु सर्वासु क्रीडमानो यदृच्छया ॥
पक्वेष्टिकमयं शंभोः क्रीडता निर्मितं गृहम् ॥
तत्र जागेश्वरं लिंगं हृत्वाऽथ विनिवेशितम् ॥ २७२ ॥
ततोऽहं भक्तिसंयुक्तः पूजयामि दिनेदिने ॥

क्रीडमानो विना मंत्रैः शिशुभिः परिवारितः ॥ २७३ ॥

कस्यचित्त्वथ कालस्य मरणे समुपस्थिते ।

जातिस्मरो ह्यहं विप्रो जातो वै वैदिशे पुरे ॥ २७४ ॥

ततो मेऽभ्यधिका जाता भक्तिर्देवं हरं प्रति ॥

कृत्वा भिक्षाटनं नित्यं याचयित्वा धनं बहु ॥ २७६ ॥

कृत्वा प्रासादमात्रं तु लिंगं संस्थापितं मया ॥

पूजयामि ततो भक्त्या देवं पशुपतिं हरम् ॥ २७६ ॥

ब्रह्मविद्यासमोपेतो भिक्षान्नकृतभोजनः ॥

ब्रह्मचर्यसमोपेतस्त्रिकालं च जपञ्छिवम् ॥ २७७॥

ततस्तेन प्रभावेन संजा तोऽहं भवांतरे ॥

सार्वभौमो महीपालो जातिस्मरणसंयुतः ॥ २७८ ॥

ततः संख्याविहीनाश्च प्रासादाः कारिता मया ॥

त्रिनेत्रस्य महाराज कैलास शिखरोपमाः ॥२७९॥

तथा निरूपिता पूजा बहुपुष्पसमुद्भवा ॥

नान्यत्किंचित्करोम्यत्र धर्म दानादिकं नृप ॥ ६.२७१.२८० ॥

ततः कालेन महता तुष्टो मे शशिशेखरः ॥

ततः प्रोवाच राजर्षे प्रहसञ्छलक्ष्णया गिरा ॥ २८१ ॥

जयदत्त प्रतुष्टोऽस्मि तव पार्थिवसत्तम ॥

भक्त्याऽनया द्रुतं ब्रूहि किं ते यच्छामि वांछितम्॥ २८२ ॥

प्रणिपत्य ततोऽष्टांगं स्तुत्वा चैव पृथिग्विधम् ॥

मया प्रोक्तो हरो राजन्कुरु मामजरामरम् ॥

स तथेति प्रतिज्ञाय गतोंऽतर्धानमेव हि ॥ २८३ ॥

अप्रमेयगतिर्देवश्चतुर्दशजगत्पतिः ॥

ततोऽहं तुष्टिसंयुक्तो जरामरणवर्जितः ॥

विचरामि महीपृष्ठे स्वेच्छया शत्रु वर्जितः ॥ २८४ ॥

ततः कालेन महता गतेन नृपसत्तम ॥

बहुकामाग्निसंतप्तः शिवभक्तिविवर्जितः ॥ २८५ ॥

यांयां पश्यामि रूपाढ्यां परनारीं मनोरमाम् ॥

तांतां निरीक्ष्य सुचिरं धर्षयामि ततः परम् ॥ २८६ ॥

धर्मराजभयत्यक्तः पार्थिवत्वं समाश्रितः ॥ २८७ ॥

एतस्मिन्नंतरे राजन्मम पापेन कर्मणा ॥

हाहाकारस्ततो जातः समग्रे धरणीतले ॥ २८८ ॥

एतस्मिन्नंतरे प्राप्तो धर्मराजः शिवांतिकम् ॥

अब्रवीत्प्रणिपत्योच्चैर्दुःखित स्तदनंतरम्॥२८९॥

त्वया देव महीपालो जयदत्तो महीतले ॥

यो निर्मितः प्रतुष्टेन जरामरणवर्जितः॥६.२७१.२९॥।

स सतीनां सतीत्वं च बलान्नाशयते कुधीः ॥

सर्वो भूपभयाल्लोकः सर्वधर्मबहिष्कृतः ॥ २९१ ॥

संजातो विबुधश्रेष्ठ न स्वभावात्कथंचन ॥

तस्यैकमपि मे नास्ति भयं सत्यं ब्रवीमि ते ॥ २९२ ॥

तस्माद्वारय तं शीघ्रं यावद्धर्मो न नश्यति ॥

मर्त्यलोकादशेषेण सतीनां धर्षणेन च ॥ २९३ ॥

एवमुक्तस्ततो देवः कोपेन महतान्वितः ॥

शशाप मां समानीय वेपमानं कृताञ्जलिम् ॥ २९४ ॥

यस्माद्दुष्टसमाचार कृतं कर्म विगर्हितम् ॥

तस्मान्मच्छाप निर्दग्धः कमठो वै भविष्यसि ॥ २९५ ॥

ततो मया सुदीनेन प्रार्थितः परमेश्वरः ॥

शापांतं मे कुरुष्वेश कुरुष्व च दयां मम ॥ २९६ ॥

ततस्तेन पुनः प्रोक्तं कल्पांते षष्टिसंज्ञिते ॥

स्वशरीरं पुनः प्राप्य मद्गणस्त्वं भविष्यसि ॥ २९७ ॥

एतस्मिन्नंतरे कूर्मः संजातोऽहं महीपते ॥

समुद्रसलिलं प्राप्य संस्थितो दुःखितोऽनिशम् ॥ २९८ ॥

कस्यचित्त्वथकालस्य राजंस्त्वं भूतले स्थितः ॥

यजनार्थं समानीतः समुद्रसलिलस्त्वया ॥२९९॥।

स्थापितो भूमिपृष्ठे तु मंत्रै संस्तंभितस्तथा ॥

ममोपरि ततो यज्ञाः कृताः शतसहस्रशः ॥ ६.२७१.३०० ॥

क्रियमाणैश्च यैर्दग्धा मम पृष्ठिः समंततः ॥।
दह्यतोऽपि महाराज तेन यज्ञाग्निना तदा ॥
प्रसादनान्महेशस्य न मे प्राणात्ययो ऽभवत्॥ ३०१ ॥
केवलं जायते दाहो यथा पापं पुरा कृतम्॥
अनुभूतं च तत्सर्वं हरकोपादसंशयम् ॥ ३०२ ॥
अथ प्राप्ते दिवं चैव त्वयि पार्थिवसत्तम ॥
एकार्णवे तु संजाते जलपूर्णे धरातले ॥
संप्राप्तः प्लवमानस्तु ततोऽहं मानसं सरः ॥ ३०३ ॥
षड्पंचाशत्प्रमाणेन कल्पा मम च संस्थिताः ॥
चतुर्भिरपरैर्मोक्षः कूर्मत्वात्संभविष्यति ॥ ३०४ ॥।
एतत्ते सर्वमाख्यातं दीर्घायुष्ट्वस्य कारणम् ॥
हरप्रसादकरणाद्बहुपुष्पार्चनाद्विभोः ॥ ३०५ ॥
कूर्मत्वं च यथा जातं कामदेवस्य कोपतः ॥
स त्वं वद महाभाग गृहायातस्य किं तव ॥
करोमि सांप्रतं कृत्यं शत्रोरपि हृदि स्थितम् ॥ ३०६ ॥
त्वया मे सुचिरं कालं दग्धा पृष्ठिर्मखाग्निना ॥
अद्यापि च प्रपश्यामि तां ज्वलंतीमिव स्थिताम् ॥ ३०७ ॥
एतस्मात्कारणान्नष्टस्त्वां दृष्ट्वाहं महीपते ॥
कस्मात्त्वं न गतः स्वर्गं विमानेऽपि समागते ॥
एतस्मात्कारणाद्धर्मं प्रकुर्वंति नराधिपाः ॥ ३०८ ॥
॥ इन्द्रद्युम्न उवाच ॥ ॥
स्वर्गस्थाने च लोकानां नित्यं च पतना द्भयम् ॥
तन्न यास्याम्यहं तत्र यतिष्यामि विमुक्तये ॥ ३०९ ॥
स त्वं करोषि चेत्कृत्यं गृहायातस्य मे मखे ॥
चिरंतनं कथय मे यद्यस्ति तव सौहृदम् ॥ ६.२७१.३१० ॥
॥ कूर्म उवाच ॥ ॥
लोमशो नाम विप्रर्षिः स मत्तोऽस्ति चिरंतनः ॥
श्रूयते स मया दृष्टो नदीतीरं समाश्रितः ॥३११॥ ॥

॥ इन्द्रद्युम्न उवाच ॥ ॥

तदागच्छत गच्छामो यतः सर्वे द्रुतं स्वयम्॥

पृच्छामो बहुकालस्य जीवितस्य च कारणम्॥३१२॥

अथ ते सहिताः पञ्च व्योममार्गेण संस्थिताः ॥

अथ ते ददृशुस्तत्र लोमशं च निराश्रयम् ॥ ३१३ ॥

स्वाध्यायनिरतं दांतं जपहोमपरायणम् ॥

सव्य हस्ते तृणौघेन छायार्थं विधृतेन च ॥ ३१४ ॥

दधतं चाक्षमालां च दक्षिणेन करेण हि ॥

ते तं दृष्ट्वा महात्मानं कृत्वा तस्य प्रदक्षिणाम् ॥

उपविष्टास्ततः सर्वे स्वागतेनाभिनन्दिताः ॥ ३१५ ॥

पृष्टास्तेन ततश्चैव के यूयं किमिहागताः ॥

विश्रब्धं कथ्यतां मह्यं येन सर्वं करोम्यहम् ॥ ॥ ३१६ ॥

॥ कूर्म उवाच ॥ ॥

मार्कंडो नाम विप्रर्षिः सप्तकल्पस्मरो ह्ययम् ॥

इन्द्रद्युम्नेन चानीतो भूभुजानेन सन्मुने ॥ ३१७ ॥

बकस्यास्य समीपे तु नाडीजंघस्य धीमतः ॥

चिरायुरिति विज्ञाय आत्मनश्चायुरुत्तमम् ॥

इन्द्रद्युम्नस्य वार्तार्थं द्विगुणायुषमात्मनः ॥ ३१८ ॥

अथ तेन न विज्ञातो यदा स पृथिवीपतिः ॥

तदा द्वावपि चायातावुलूकस्यास्य संनिधौ ॥ ३१९ ॥

द्विगुणास्तत्प्रमाणेन कल्पाश्चास्य महात्मनः ॥

वर्तंते नैव विज्ञातो नृपो ह्येतेन सद्द्विज ॥ ६.२७१.३२० ॥

ततस्त्रयोऽपि चानीता गृध्रराजस्य चान्तिकम् ॥ ३२१ ॥

षट्पञ्चाशत्प्रमाणेन कल्पाश्चास्य महात्मनः ॥

वर्तन्ते नैव विज्ञातो नृपो ह्येतेन सद्द्विज ॥ ३२२ ॥

चत्वारोऽपि समानीता एतेनैव ममान्तिकम् ॥

चिरायुषं च मां ज्ञात्वा मित्रभावेन ते द्विज ॥ ३२३ ॥

मयाप्यसौ परिज्ञातो दूरादेव समागतः ॥

इन्द्रद्युम्नो ध्रुवं ह्येष दग्धा पृष्ठिः पुरा मम ॥ ३२४ ॥

येन यज्ञाग्निना मंत्रै स्तंभयित्वा क्षितेरधः ॥

ततोऽहं तद्भयान्नष्टो गृध्राद्यैश्च निवारितः ॥ ३२५ ॥

उपालंभैस्तु बहुभिः प्रणया ज्जलमाविशत् ॥

मयोक्तोऽथ स भूयोऽपि नाहं तव पराङ्मुखः ॥ ३२६ ॥

इन्द्रद्युम्नेन मे पृष्ठिर्येन दग्धा मखाग्निना ॥

एतस्मिन्ननन्तरे स्वर्गाद्देवदूतो महामनाः ॥

विमानवरमारूढः प्राप्तश्चास्य महात्मनः ॥ ३२७ ॥

कीर्तिलोपाच्युतः स्वर्गादयमासीन्महीपतिः ॥

ततो विमानमायातमुक्तमात्रे मया दिवः ॥ ३२८ ॥

अथासौ न गतः स्वर्गं विनाऽस्माभिर्द्विजोत्तम ॥

मार्कंडेयं परित्यज्य तिर्यग्योनिगतैस्त्रिभिः ॥ ३२९ ॥

पृच्छतोऽस्य मया प्रोक्तमायुष्यं चात्मनः पुनः ॥

षण्णवतिप्रमाणेन कल्पा मे जीवतो गताः । ६.२७१.३३० ॥

पृष्टोऽहं पूर्वमेवात्र संस्थितस्तव पार्श्वतः ॥

चिरंतनतमो ब्रूहि मया त्वं तु निवेदितः ॥ ३३१ ॥

एतस्मात्कारणात्प्राप्ता वयं सर्वे तवांतिकम् ॥

तस्माद्यत्पृच्छते भूप एष त्वां तत्प्रकीर्तय ॥ ३३२ ॥

॥ भर्तृयज्ञ उवाच ॥ ॥

लोमशोऽप्यथ तं प्राह विश्रब्धं पृच्छ पार्थिव ॥

अवश्यं कथयिष्यामि यन्मां त्वं परिपृच्छसि ॥ ३३३ ॥

॥ इंद्रद्युम्न उवाच ॥ ॥

कस्मात्त्वं ग्रीष्मकालेऽपि मध्यं प्राप्ते दिवाकरे ॥

निवासार्थं गृहं रम्यं किमर्थं न करिष्यसि ॥ ३३४ ॥

॥ ॥ लोमश उवाच ॥ ॥

कस्यार्थे क्रियते गेहमनित्यं जीवितं यतः ॥

यदि स्याच्छाश्वतो देहस्तदर्थं क्रियते च तत् ॥ ३३५ ॥

॥ इन्द्रद्युम्न उवाच ॥ ॥

सर्वेषामेव लोकानां चिरायुः श्रूयते भवान् ॥
तेनाहमपि संप्राप्तो भवद्दर्शनकाम्यया ॥ ३३६ ॥
॥ लोमश उवाच ॥ ॥
कल्पे कल्पे तु संप्राप्ते रोमकं मम नश्यति ॥
अभावे सर्वरोम्णां च ततो नाशो भविष्यति ॥ ३३७ ॥
पश्य त्वं मच्छरीरेऽस्मिन्प्रकाशं रोमवर्जितम् ॥
न करोमि गृहं तेन कारणेन महामते ॥३३८॥
॥ इन्द्रद्युम्न उवाच ॥ ॥
किं त्वया विहितं कर्म येनेदृग्जीवितं स्थितम् ॥
किं दानस्यप्रभावोऽयं तपसो नियमस्य वा ॥ ३३९ ॥
॥ लोमश उवाच ॥ ॥
अहमासं पुरा शूद्रो दरिद्रेण परिप्लुतः ॥
भ्रमामि मेदिनीपृष्ठ उदरस्य कृते सदा ॥६.२७१.३४॥।
कर्मयोगेन महता संप्राप्तो हाटकेश्वरम्॥
क्षुत्क्षामस्तु पिपासार्तो यत्रैतल्लिंगमुत्तमम् ॥
अवधूतं ततो लिंगं मया दृष्ट्वा स्वयंभु तत्॥ ३४१ ॥
स्नापितं तोयमादाय शीतमेतत्सुनिर्मलम्॥
ततस्तु कमलैरेतैर्मया पूजा विनिर्मिता ॥३४२॥
अथ पूजां विनिर्वर्त्य यावन्मार्गसमाश्रितः ॥ क्षु
त्क्षामकण्ठस्य ततः प्राणा नष्टास्तदा मम ॥३४३॥
अथाहं ब्राह्मणगृहे जातो जातिस्मरस्ततः ॥
सर्वं स्मरामि भूपाल देवदेवस्यपूजनात् ॥ ३४४ ॥
ततो मूकत्वमापन्नो नैव जल्पामि किंचन ॥
ईशान इति मे नाम पिता चक्रे प्रहर्षितः ॥३४५॥
ईशानेन यतो दत्तः पूर्वमाराधितेन च ॥
वैराग्यं परमं प्राप्तो दृष्ट्वा संसारसंस्थितिम् ॥३४६॥
पिता मे बहुवात्सल्याद्भेषजानि प्रयोजयेत्॥
वाचार्थं मंत्रवादांश्च तथा चैवोपयाचितम् ॥

ब्राह्मणान्पृच्छते नित्यं दिवारात्रिमतंद्रितः ॥ ३४७ ॥

ततो मे जायते हास्यं निजचित्ते नराधिप ॥

दृष्ट्वा संसारसंसक्तिं पितुर्मातुश्च भूरिशः ॥३४८॥

ततश्च यौवनं प्राप्तः क्रमेण नृपसत्तम ॥

यदा तदा निशि त्यक्त्वा तावुभौ चात्र संगतः ॥ ३४९ ॥

ततो हृष्टमना नित्यं पूजयामि समाहितः ॥

ईशानं परया भक्त्या संस्नाप्य सलिलेन च ॥६.२७१.३५॥।

ब्राह्मणीतीर्थजातेन त्रिकालं नृपसत्तम ॥

शिलोंछवृत्तिमासाद्य प्राणयात्रां समाचरन् ॥

नीवारैर्बदरैः शाकैश्चिर्भटैः फलपत्रकैः ॥ ३५१ ॥

ततो मे भगवान्रुद्रः सर्वदेवेश्वरो हरः ॥

अब्रवीद्दर्शनं गत्वा मेघगम्भीरया गिरा ॥ ३५२ ॥

परितुष्टोऽस्मि ते वत्स वरं वरय सुवते ॥

अदेयमपि दास्यामि यद्यपि स्यात्सुदुर्लभम्॥ ३५३ ॥

ततस्तं प्रणिपत्योच्चैः स्तुत्वा वाक्यैः पृथग्विधैः ॥

मया प्रोक्तं कुरु विभो जरामरण वर्जितम्॥३५४॥

श्रीभगवानुवाच॥ अमरत्वं यतो नास्ति मर्त्यलोकेऽत्र कर्हिचित्॥

मर्यादां कुरु तस्मात्त्वं जीवितस्य स्वकस्य वै॥३५५॥

ततो मे भगवानुक्तः कल्पांते समुपस्थिते ॥

रोम्ण एकस्य मे नाशो जायतां त्रिदशेश्वर॥३५६॥

यदा च सर्वरोम्णां मे विनाशः संप्रजायते ॥

तदा मम गणत्वं च जायतां तावकं विभो ॥ ३५७ ॥

एवं भविष्यतीत्युक्तं परं लिंग सदा मम ॥

स्नाप्यं जलेन चैतेन ब्राह्मणीसंभवेन च ॥ ३९८ ॥

ब्रह्माद्यैः पूजनीय च त्रिकालं द्विजसत्तम ॥

ममकैवासरं यावत्तव चायुर्भविष्यति ॥ ३५९ ॥

अन्योऽपि यो नरो भक्त्या पूजयिष्यति मामिह ॥

स्नापयिष्यति सद्भक्त्या विपाप्मा स भविष्यति ॥ ६.२७१.३६० ॥

नापमृत्युर्भवेत्तस्य कदाचिद्द्विजसत्तम ॥

सकृत्संपूजिते ऽप्येवं ब्रह्माद्यैर्मत्कलेवरे ।। ३६१ ॥

सकृत्पिबति यस्तोयं ब्रह्मतीर्थसमुद्भवम् ॥

सर्वपापविशुद्धात्मा तत्क्षणाज्जायते हि सः ॥ ३६२ ॥

एवमुक्त्वाथ देवेशस्ततश्चादर्शनं गतः ॥ ३६३ ॥

अहं तु संस्थितश्चात्र ततः प्रभृति पार्थिव ॥

पूजयानश्च सद्भक्त्या लिंगमेतत्सदैव हि ॥ ३६४ ॥

एतस्मात्कारणाज्जातं ममायुरतिविस्तृतम् ॥

शंकरस्य प्रसादेन नान्यदस्तीह कारणम् ॥ ३६५ ॥

॥ इन्द्रद्युम्न उवाच ॥ ॥

अहमप्यर्चयिष्यामि लिंगमेत त्त्वया सह ॥

नान्यत्र वा गमिष्यामि ममैवं हृदि निश्चयः ॥ ३६६ ॥

॥ लोमश उवाच ॥ ॥

एवं कुरु महाभाग त्वमवाप्स्यसि वांछितम् ॥

हरभक्तस्य लोकस्य वांछितं नास्ति दुलर्भम् ॥ ३६७ ॥

नाडीजंघो गृहं यातु मार्कंडगृधकौशिकाः ॥

कच्छपेन समायुक्तस्त्वं हि तिष्ठ ममा श्रमे ॥ ३६८ ॥

ततः प्रोचुश्च ते सर्वे न वयं तु नरेश्वर ॥

त्वां विना संप्रयास्यामो भूय एव निजालयम् ।

लिंगमाराधयिष्यामो यदेतद्भवता र्चितम् ॥ ३६९ ॥

एवमुक्त्वा तु ते सर्वे लोमशस्य वराश्रमे ॥

तस्थुः संपूजयामासुस्त्रिकालं लिंगमेव तत् ॥ ६.२७१.३७० ॥

संस्नाप्य ब्राह्मणीतोयैः पद्मा द्यैः पूजयंति च ॥ ३७१ ॥

कस्यचित्त्वथ कालस्य नारदो मुनिसत्तमः ॥

तीर्थयात्राप्रसंगेन संप्राप्तस्तत्र यत्र ते ॥ ३७२ ॥

अथ ? नारदं दृष्ट्वा कृत्वा चैवार्हणक्रियाम् ॥

विश्रांतं च ततो ज्ञात्वा पप्रच्छुर्विनयान्विताः ॥ ३७३ ॥

शापभ्रष्टा वयं सर्वे यतः संवर्तदर्शनात् ॥

बकाद्याश्चैव चत्वारः कूर्मांताश्च महामुने ॥ ३७४ ॥

न स विज्ञायते क्वापि कस्मिन्स्थाने व्यवस्थितः ॥

किंरूपः किंप्रमाणश्च किमाचारः क्व संस्थितः ॥ ३७५ ॥

स त्वं यदि विजानासि यत्र तं संस्थितं मुनिम् ॥

तद्वदस्व महाभाग न किंचित्तेऽस्त्यगोचरम् ॥ ३७६ ॥

॥ श्रीनारद उवाच ॥ ॥

अहं जानामि तं सम्यक्संवर्तं मुनिसत्तमम् ॥

गुप्ताचारेण तिष्ठंतं नान्यो वेत्ति कथंचनम् ॥ ३७७ ॥

वाराणास्यां स्थितो नित्यं सोऽवधूतो महामुनिः ॥

विवस्त्रो मलदिग्धांगः सदारण्यं समाश्रितः ॥ ३७८ ॥

भिक्षार्थं कुतपे काले समागच्छति तां पुरीम् ॥

पाणिपात्रकृताहारो गृहैः कैश्चित्सदैव हि॥ ३७९ ॥

भूयोपि याति सायाह्ने किंचिदेव वनांतरम् ॥

तस्यां पुर्यां तथारूपाः शतशोऽथ सहस्रशः ॥ ६.२७१.३८० ॥

तिष्ठंति तापसश्रेष्ठास्तस्य वक्ष्यामि लक्षणम् ॥

भवद्भिः स यथा ज्ञेयो मम वाक्यादसंशयम् ॥ ३८१ ॥

वाराणस्याः प्रतोल्यां च स्थापनीयं सुयत्नतः ः।

कुणपं चैव गुप्तं च यथा नो वेत्ति कश्चन ॥ ३८२ ॥

यास्यंति तापसाः सर्वे तमतिक्रम्य भूरिशः ॥

संवर्तो दिव्यदृष्टिस्तु शल्यं नातिक्रमिष्यति ॥ ३८३ ॥

निवर्तनं तु यश्चक्रे भूभागात्कुणपाश्रयात् ॥

स संवर्तः परिज्ञेयः प्रष्टव्यश्च ततः परम् ॥ ३८४ ॥

यदि पृच्छति केनाहं भवतां संनिवेदितः ॥

नारदेन ततो वाच्यं स त्वां जानाति वै सदा ॥ ३८५ ॥

यदि पृच्छति भूयः स नारदः क्व स तिष्ठति ॥ ३८६ ॥

ततो वाच्यो निवेद्य त्वां प्रतिष्टो हव्यवाहनम् ॥ ॥ ३८७ ॥

तच्छ्रुत्वा नारदवचः सर्वे वै लोमशादयः ॥

वाराणसीं पुरीं प्राप्तास्तस्य दर्शनलालसाः ॥ ३८८ ॥

प्रतोल्यां कुणपं स्थाप्य गुप्तं लोकैरलक्षितम् ॥

स्वयं चैव स्थिता दूरं प्रेक्षमाणाः प्रयत्नतः ॥ ३८९ ॥

ततस्तु कुतपे काले संवर्तस्तु समागतः ॥

यादृग्रूपः पुरा प्रोक्तो नारदेन महात्मना ॥ ६.२७१.३९० ॥

स दृष्ट्वा कुणपं तत्र दिव्यदृष्ट्या महामुनिः ।।

निवृत्तः क्षुत्पिपासार्तो नैव शल्यमलंघयत् ॥ ३९१ ॥

अथ ते तं समुद्दिश्य पृष्ठतोऽनुययुस्तदा ॥

तिष्ठतिष्ठेति जल्पंतः प्रसादः क्रियतामिति । ३९२ ०॥

सोऽपि निर्भर्त्सयन्नेतान्निवर्तध्वमिति ब्रुवन् ॥

मा गच्छत मत्समीपमिति प्रोच्य पलायितम् ॥ ३९३ ॥

अथ दूरतरं गत्वा स प्रोवाच क्षुधान्वितः ॥ ३९४ ॥

केनादिष्टोऽस्मि युष्माकं स शीघ्रं मे निवेद्यताम्॥

शापाग्नौ येन तं पापं भस्मसात्प्रकरोम्यहम् ॥ ३९५ ॥

॥ त ऊचुः ॥ ॥

नारदेन समाख्यातो भवानत्र स्थितो हि नः ॥

कथयित्वा ततो वह्नौ संप्रविष्टः स तत्क्षणात् ॥ ३९६ ॥

॥ संवर्त उवाच ॥ ॥

अहं तदेव कर्ता च तस्य दुष्टस्य सांप्रतम् ॥

निर्दिष्टो येन युष्माकं गुप्ताचारं समाश्रितः ॥ ३९७ ॥

त ऊचुः. ॥ ॥

भगवन्नारदेनोक्तस्त्वमस्माकं महामुने ॥

चिरादन्वेष्यमाणानां नान्यस्त्वां वेत्ति कश्चन ॥ ३९८ ॥

तावन्निवेद्य चास्माकं प्रविष्टो हव्यवाहनम् ॥

तत्क्षणादेव विप्रेंद्र न विद्मस्तत्र कारणम् ॥ ३९९ ॥

॥ संवर्त उवाच ॥ ॥

अहमप्यतिसंक्रुद्धः शापात्कर्तुं समुद्यतः ॥६.२७१.४००॥।

एतदेवहि तस्माच्च स्वयमेव कृतं च यत् ॥०

तस्माद्वदथ मे शीघ्रं कस्माद्यूयं समागताः ॥ ४०१ ॥

चिरं स्थास्यामि नात्राहं भ्रमिष्यामि पुरीं प्रति ॥
प्राणयात्राकृते भिक्षां करिष्यामि स्वयं यतः ॥ ४०२ ॥
विशल्यः क्रियतां मार्गः कुणपं ह्रियतां च यत् ॥
नोचेच्छापं प्रदास्यामि यद्येवं न करिष्यथ ॥ ४०३ ॥
तथाहं नैव वक्तव्यः कस्यचिच्चात्र संस्थितः ।
अन्वेषयति मां नित्यं मरुत्तः पृथिवीपतिः ॥ ४०४ ॥
यज्ञार्थं नैव तं भूपं याजयिष्ये कथंचन ॥
धिषणेन परित्यक्तो गुरुणा स महीपतिः ॥ ४०५ ॥
गुरुपुत्रं च मां ज्ञात्वा ततोऽन्वेषयते हि माम् ॥ ४०६ ॥
॥ त ऊचुः ॥ ॥
शापभ्रष्टा वयं सर्वे चत्वारोऽपि बकादयः ॥
पक्षित्वं चैव संप्राप्ता ब्रह्मशापेन सन्मुने ॥ ॥ ४०७ ॥
महेश्वरगणाश्चैव वयं त्रैलोक्यवंदिताः ॥
तिर्यग्योनिं समानीता वैराग्यं परमं गताः ॥ ४०८ ॥
शापांतस्तु समादिष्टस्तैर्विप्रैः स्त्रीसमु द्भवः ।
तवोपदेशतस्तेन बकाद्याः शरणं गताः ॥ ४०९ ॥
तस्मात्त्राहि महाभाग पक्षित्वात्सांप्रतं विभो ॥ ६.२७१.४१० ॥
निर्विण्णाश्चिरकालं च पक्षित्वस्य निषेवणात् ॥
एतच्च कारणं नान्यत्तव संगसमुद्भवम् ॥ ४१३ ॥
॥ संवर्त उवाच ॥ ॥
यद्येवं गम्यतां शीघ्रं चमत्कारपुरं प्रति ॥
भर्तृ यज्ञः स्थितोऽप्यत्र सर्वसंदेहहारकः ॥ ४१२ ॥
स वै दास्यति सर्वेषामुपदेशं सुशोभनम् ॥
तेन प्राप्स्यथ संदेहं पूर्वीयं च यथास्थितम् ॥ ॥ ४१३ ॥
स पूर्वं याज्ञवल्क्योऽभूत्सर्वशास्त्रार्थपारगः ॥
ततो भवांतरेऽन्यस्मिन्कात्यायन इति स्मृतः ॥ ४१४ ॥
ततो देहांतरं प्राप्य ख्यातो वररुचिर्द्विजः ॥
ततो देहांतरेऽन्यस्मिन्वेश्यापुत्रो बभूव ह ॥ ४१५ ॥

आराधिता ब्रह्मसुता देवी वाग्रूपिणी सदा ॥

न च तुष्टा स्वयं देवी कारणं वीक्ष्य किंचन ॥ ४१६ ॥

ब्राह्मणेन प्रजातस्तु देहांतं प्राप्य किंचन ॥

तस्य वक्त्रं समापन्ना स्वयमेव सरस्वती ॥ ४१७ ॥

पूर्वमाराधिता नित्यं न सा त्यजति कर्हिचित् ॥

तस्याश्चर्यमभूच्चान्यद्यज्ञे वेश्यासुतस्य हि ॥ ४१९ ॥

ब्रह्मसूत्रं समभ्येति स्कंधे निर्याति गच्छति ॥ ४१९ ॥

पूर्वेषामेव लोकानां यज्ञकर्मसु संस्थितान् ॥

स संदेहान्हरत्येव यथा नान्योऽत्र कश्चन ॥ ६.२७१.४२० ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा प्रणिपत्य मुहुर्मुहुः ॥

गतास्ते कुणपं यत्र संवर्तेन प्रणोदिताः ॥ ४२१ ॥

तच्चाकृष्य ततः सर्वे चमत्कारपुरं गताः ॥

वास्तुस्थानपदे तीर्थे तं दृष्ट्वा तत्र संस्थितम् ॥ ४२२ ॥

प्रणिपत्य ततः प्रोचुः सर्वे विनयसंस्थिताः ॥

ब्रह्मशापेन निर्दग्धा वयं चत्वार एव हि ॥ ४२३ ॥

पक्षित्वं समनुप्राप्तास्त्रयः कूर्मत्वमन्यकः ॥

य एते च त्रयोऽस्माकं स्थिताः पार्श्वे महत्तराः ॥४२४॥

मार्कंडः कथितो ह्येष इंद्रद्युम्नस्तथा परः ॥

तृतीयो लोमशो नाम विख्यातः सुमहातपाः ॥ ४२५ ॥

जीवितव्यस्य निर्विण्णास्त्रय एव च सांप्रतम् ॥

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ ४२६ ॥ ॥

सूत उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा भर्तृयज्ञो महामुनिः ॥

अब्रवीत्सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा ॥ ४२७ ॥

यूयं सप्तैव लिंगानि स्थापयध्वं समागताः ॥

हाटकेश्वरजे क्षेत्रे. नाम्ना चैवांतिके निभोः ॥ ४२८ ॥

ततो दानानि सप्तैव तेषामग्रे प्रयच्छत ॥

कुलपर्वतसंज्ञानि सर्वपापहराणि च ॥ ४२९ ॥

ततः प्राप्स्यथ चाभीष्टं वपुर्दिव्यं मनोरमम् ॥

गणत्वं देवदेवस्य त्रिने त्रस्य महात्मनः ॥ ६.२७१.४३० ॥

॥ त ऊचुः ॥ ॥

प्रकीर्तय विभो दानं तेषां यच्छामहे यथा ॥

प्रमाणं च विधानं च विस्तरेण महामुने ॥४३१॥

॥ भर्तृयज्ञ उवाच ॥ ॥

देयो हेममयो मेरुः कैलासो रजतोद्भवः ॥

कार्प्पासेन हिमाद्रिस्तु गुडजो गंधमादनः ॥४३२॥

सुवेलस्तु तिलैर्देयो विंध्यः शर्करया तथा ॥

लवणेन तथा शृंगी यथोक्तविधिना ततः ॥ ४३३ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा संस्थाप्य विधिपूर्वकम् ॥१००

सप्तलिंगानि तैः पश्चात्प्रदत्ताः कुलपर्वताः ॥ ४३४ ॥

इंद्रद्युम्नेश्वरस्याग्रे इंद्रद्युम्नः प्रतापवान् ॥

मेरुं हेममयं कृत्वा भर्तृयज्ञमते स्थितः ॥ ४३५ ॥।

मार्कंडेश्वरदेवस्य मार्कंडेन च धीमता ॥

कैलासो राजतो दत्तो भक्तिपूर्वं द्विजोत्तमाः ॥ ४३६ ॥

कार्पासो हिमवान्दत्तः पालकेन द्विजातये ॥

गंधमादनसंज्ञस्तु प्रदत्तो गुडजः पुरः ॥ ४३७ ॥

घंटकेश्वरदेवस्य घंटकेन द्विजोत्तमाः ॥

कच्छपेन तु संदत्तः सुवेलः पर्वतोत्तमः ॥ ४३८ ॥

कच्छपेश्वरदेवस्य पुरस्तिलमयस्तथा ॥

शार्करस्तु तदा शैलः प्रदत्तो भक्तिपूर्वकम्॥ ४३९ ॥

शैल ईशानसंज्ञेन निजदेवस्य चाऽग्रतः ॥

वानरेश्वर देवस्य पुरतो द्विजसत्तमाः ॥ ६.२७१.४४० ॥

गृध्रेणाथ प्रदत्तस्तु लवणाख्यो महागिरिः॥

शृंगी नाम महाभागः श्रद्धापूतेन चेतसा ॥ ४४१ ॥

तत्राश्चर्यमभूद्विप्रा दत्तमात्रैर्नगोत्तमैः ॥

पक्षित्वं निर्गतं तेषां कूर्मत्वमितरस्य च ॥ ४४२ ॥

एतस्मिन्नेव काले तु सर्वे ते तत्प्रभावतः ॥

दिव्यमाल्यांबरधरा दिव्यगंधानुलेपनाः ॥

संजाता ब्राह्मणश्रेष्ठा ये च तत्संमुखे स्थिताः ॥ ४४३ ॥

विमानानि च सर्वेषां समायातानि तत्क्षणात् ।१

भर्तृयज्ञमनुप्राप्य प्रणिपत्य च तान्द्विजान् ॥

कैलासं पर्वतं प्राप्ता विमानवरमाश्रिताः ॥ ४४४ ॥

एतद्वः सर्वमाख्यातं यथा तल्लिंगसप्तकम् ॥

हाटकेश्वरजे क्षेत्रे संजातं पापनाशनम् ॥४४५॥

अन्योऽपि यः पुनस्तेषां लिंगानां भक्तिसंयुतः॥

कुलपर्वतदानं च कुर्यात्सोऽपि शिवं व्रजेत्॥४४८॥

तानि लिंगानि यो मर्त्यः प्रातरुत्थाय वीक्षते ॥

अज्ञानविहितात्पापात्सोऽपि मुक्तिमवाप्नुयात्॥४४७॥

यश्चैतान्पर्वतान्सप्त क्रमेणात्र प्रयच्छति॥

द्विजातिभ्यः स्वलिंगानां पुरतस्त्रिदिवं व्रजेत् ॥४४८॥

स्थित्वा कल्पांतरं तत्र संसेव्य च वराप्सराः ॥

दिव्यान्भोगांश्च संसेव्य यदा भूमौ प्रजायते॥

चक्रवर्तित्वमासाद्य सार्वभौमः प्रजायते ॥ ४४९ ॥

एकेन तु प्रदत्तेन जायते पापसंक्षयः ॥

द्वाभ्यां पुत्राश्च पौत्राश्च वांछितानि फलानि च ॥ ६.२७१.४५० ।

त्रिभिः संजायते राजा चतुर्भिर्मंडलेश्वरः ॥

भारतस्य च खण्डस्य स्वामी भवति पंचभिः ॥ ४५१ ॥

जंबुद्वीपाधिपः षड्भिश्चक्रवर्ती च सप्तभिः ॥

विधिवत्पर्वतैर्दत्तैरेत दाह पितामहः ॥४५२॥

नरः स्याद्ब्राह्मणश्रेष्ठाः सदाजन्मनिजन्मनि ॥

न दुःखितो दरिद्रो वा व्याधितो वा प्रजायते ॥ ४५३ ॥

सौभाग्यसुखसंयुक्तः सुदेहो रत्नवान्भवेत् ॥

सर्वराज्यविनिर्मुक्तः प्रतापी विजितेन्द्रियः ॥ ४५४ ॥

तस्मात्सर्वप्रयत्नेन भूमिपालैर्विशेषतः ॥

एतं च पर्वता देया उद्दिश्य निजदेवताः ॥ ४५५ ॥

इति श्रीस्कादे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये सप्तलिंगोत्पत्ति माहात्म्यवृत्तान्तवर्णननामैकसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७१ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७२



ऋषय ऊचुः ॥ ।

यदेतद्भवता प्रोक्तमीशानस्य महीपतेः॥

ईश्वरेण पुरा दत्तमायुर्यावत्स्ववासरम्॥ १ ॥

किंप्रमाणं भवेत्तस्य दिवसस्य ब्रवीहि नः ॥

॥ सूत उवाच ॥ ॥

अहं वः कीर्तयिष्यामि प्रमाणं दिवसस्य तु ॥ २ ॥

माहेश्वरस्य विप्रेन्द्राः श्रूयतां गदतः स्फुटम् ॥

निमेषस्य चतुर्भागस्त्रुटिः स्यात्तद्द्वयं लवः ॥ ३ ॥

लवद्वयं यवः प्रोक्तः काष्ठा ते दश पंच च ॥

त्रिंशत्काष्ठाः कलामाहुः क्षणस्त्रिंशत्कलो मतः ॥ ४ ॥

क्षणैः षष्ट्या पलं प्रोक्तं षष्ट्या तेषां च नाडिका ॥

नाडिकाद्वितयेनैव मुहूर्तं परिकीर्तितम् ॥ ५ ॥

त्रिंशन्मुहूर्तमुद्दिष्टमहोरात्रं मनीषिभिः ॥

मासस्त्रिंशदहोरात्रैर्द्वौ द्वौ मासावृतुं विदुः ॥ ६ ॥

ऋतुत्रयं चाप्ययनमयने द्वे तु वत्सरम् ॥

मानुषाणां हि सर्वेषां स एव परिकीर्तितः ॥ ७ ॥

स देवानामहोरात्रं पुराणज्ञाः प्रचक्षते ॥

अयनं चोत्तरं शुक्लं यद्देवानां दिनं च तत् ॥

यद्दक्षिणं तु सा रात्रिः शुभकर्मविगर्हिता ॥ ८ ॥

यथा सुप्तो न गृह्णाति किंचिद्भोगादिकं नरः ॥

तथा देवाश्च यज्ञांशान्न गृह्णन्ति कथं चन ॥ ९ ॥

अनेनैव तु मानेन मानवेन द्विजोत्तमाः ॥

लक्षैः सप्तदशाख्यैस्तु वत्सराणां प्रकीर्तितम् ॥ ६.२७२.१० ॥

अष्टाविंशत्सहस्रैस्तु वत्सराणां कृतं युगम् ॥

तस्मिञ्छ्वेतोऽभवद्विष्णुर्भगवान्यो जगद्गुरुः ॥ ११ ॥

लोकाः पापविनिर्मुक्ताः शांता दांता जितेन्द्रियाः ॥
दीर्घायुषस्तथा सर्वे सदैव तपसि स्थिताः ॥ १२ ॥
यो यथा जन्म चाप्नोति तथा स म्रियते नरः॥
न पुत्रसंभवो मृत्युर्वीक्ष्यते जनकैः क्वचित् ॥ १३ ॥
कामः क्रोधस्तथा लोभो दंभो मत्सर एव च ॥
न जायते नृणां तत्र युगे तु द्विजसत्तमाः ॥१४॥
ततस्त्रेतायुगं भावि द्वितीयं मुनिसत्तमाः ॥
पादेनैकेन पापं तु रौद्रं धर्मे तदाविशत् ॥ १५ ॥
ततो रक्तत्वमभ्येति भगवान्मधुसूदनः ॥
पापांशेऽपि च संप्राप्ते सस्पर्द्धो जायते जनः ॥ १६ ॥
 स्वर्गमार्गकृते सर्वे चक्रुर्यज्ञांस्ततः परम् ॥
अग्निष्टोमादिकांस्तत्र बहुहोमादिकांस्तथा ॥ १७ ॥
देवलोकांस्ततो यांति मूलाद्यावच्चतुर्दश ॥
ब्रह्मलोकस्य पर्यंतं स्वकीयैर्य ज्ञकर्मभिः ॥१९॥
किंचित्स्वल्पायुषस्तत्र जायन्ते स्पर्धयाऽन्विताः ॥
परं तत्रापि नो यांति मृत्युं पुत्राः कथंचन ॥ १९ ॥
जनके विद्यमाने च स्व ल्पदोषाः प्रकीर्तिताः ॥
कामक्रोधादयो ये च भवंति न भवंति च ॥ ६.२७२.२० ॥
एकया वेलया तत्र वापितं सस्यमुत्तमम् ॥
सप्तवारान्प्रगृह्णंति वैश्याः कृषिपरायणाः ॥ २१ ॥
सर्वा घटस्रवा गावो महिष्यश्च चतुर्गुणाः ॥
प्रयच्छंति तथा क्षीरमुष्ट्र्यस्तासां चतुर्गुणम् ॥ २२ ॥
अजाविकास्तथा पादं नार्यः सर्वास्तथैव च ॥
वेदाध्ययनसंपन्नाः प्रतिग्रहविवर्जिताः ॥
शापानुग्रहकृत्येषु समर्थाः संभवंति च २३ ॥
क्षत्रियाः क्षात्रधर्मेण पालयंति वसुंधराम् ॥
न तत्र दृश्यते चौरो न च जारः कथंचन ॥
स्वधर्मनिरताः सर्वे वर्णाश्चैव व्यवस्थिताः ॥ २४ ॥

तच्च द्वादशभिर्लक्षैर्वत्सराणां प्रकीर्तितम् ॥

षण्णवत्या सहस्रैस्तु द्वितीयं युगमुत्तमम् ॥२५॥

ततश्च द्वापरं भावि तृतीयं द्विजसत्तमाः ॥

द्वौ पादौ तत्र पापस्य द्वौ च धर्मस्य संस्थितौ॥

भगवान्वासुदेवश्च कपिलस्तत्र जायते ॥ २६ ॥

तच्चाष्टलक्षमानेन वत्सराणां प्रकीर्तितम् ॥

चतुःषष्टिभिरन्यैस्तु सहस्राणां द्विजोत्तमाः ॥ २७ ॥

कामः क्रोधस्तथा लोभो दंभो मत्सर एव च ॥

षडेते तत्र जायंते ईर्ष्या चैव तु सप्तमी॥२८॥

अथ संसेवितास्तैस्तु मानवाश्च परस्परम् ॥

विरुद्धांश्च प्रकुर्वंति नाप्नुवंति यथा दिवम् ॥ २९ ॥

केचित्तत्रापि जायंते शांता दांता जितेंद्रियाः ॥

न सर्वेऽपि द्विजश्रेष्ठा यतोऽर्द्धं पातकस्य तु ॥ ६.२७२.३० ॥

ततः कलियुगं प्रोक्तं चतुर्थं च सुदारुणम् ॥

एकपादो वृषो यत्र पापं पादैस्त्रिभिः स्थितम् ॥ ३१ ॥

कृष्णत्वं याति देवोऽपि तत्र चैव चतुर्भुजः ॥

एक पादोऽपि धर्मस्य यावत्तावत्प्रवर्तते ॥ ३२ ॥

पश्चान्नाशं समभ्येति यावत्तावच्छनैःशनैः ॥

प्रमाणं तस्य निर्दिष्टं लक्षाश्चत्वार एव हि ॥ ३३ ॥

द्वात्रिंशच्च सहस्राणि युगस्यैवांतिमस्य च ॥

कलिना तत्र संपृष्टा मर्त्याः सर्वे परस्परम् ॥ ३४ ॥

विबुधैस्ते प्रवर्तंते रागद्वेषपरायणाः ॥

यस्ययस्य गृहे वित्तं तथा नार्यो मनोरमाः ॥३६॥

तेनतेन समं मैत्रीं कलौ कुर्वंति मानवाः ॥

विधवानां यतीनां च सर्वेषां च तपस्विनाम्॥३६॥

लोकद्वयविनाशः स्याद्यतश्चेतो न शुध्यति ॥

प्रावृट्कालेऽपि संप्राप्ते दुर्भिक्षेण प्रपीडिताः ॥ ३७ ॥

भ्रमंति च कलौ लोका गगनासक्तदृष्टयः॥

जानाति चापि तनयः पिता चेन्निधनं व्रजेत् ॥ ३८ ।

ततोहं गृहपो भूयां बांधवो ह्यपि बांधवम् ॥

स्नुषापि वेत्ति चित्तेन यदि श्वश्रूः क्षयं व्रजेत् ॥ ३९ ॥

मम स्याद्गृह ऐश्वर्यं तत्सर्वं नान्यथा व्रजेत् ॥

काव्यैरुपहता वेदाः पुत्रा जामातृकैस्तथा ॥ ६.२७२.४० ॥

शालकैर्बांधवाश्चैव ह्यसतीभिः कुलस्त्रियः ॥

शूद्रास्तपस्विनश्चैव शूद्रा धर्मस्य सूचकाः ॥४१॥

ब्राह्मणानां ततः शूद्रा उपदेशं वदंति च ॥

अल्पोदकास्तथा मेघा अल्पसस्या च मेदिनी ॥ ४२ ॥

अल्पक्षीरास्तथा गावः क्षीरे सर्पिस्तथाऽल्पकम् ।

सर्वभक्षास्तथा विप्रा नृपा निष्करुणास्ततः ॥

कृष्या लज्जंति वैश्याश्च शूद्रा ब्राह्मणप्रेषकाः ॥ ४३ ॥

हेतुवादरता ये च भंडविद्यापराश्च ये ॥

तेते स्युर्भूमिपालस्य सदाऽभीष्टाः कलौ युगे ॥४४॥

श्वःश्वःपापीयदिवसाः पृथिवी गतयौवना ।

अतिक्रांत शुभाः कालाः पर्युपस्थितदारुणाः ॥४५॥

यथायथा युगं भावि वृद्धिं यांति स्त्रियो नराः ॥

तथातथा प्रयांति स्म लघुतां जंतुभिः सह ॥४६॥

द्वादशमे चैव कन्या स्याद्भर्तृसंयुता ॥४७॥

ततः षोडशमे वर्षे नराः पलितयौवनाः ॥

शौचाचारपरित्यक्ता निजकार्यपरास्तथा ॥ ४८ ॥

भविष्यंति युगस्यांते नराः अंगुष्ठमात्रकाः ॥

गृहं च तेऽथ कुर्वंति बिलैराखुसमुद्भवैः ॥ ४९ ॥

तथा प्रावरणं तेषां कृमिवस्त्रं भविष्यति ॥

एकवर्णा भविष्यंति वर्णाः सर्वे ततः परः ॥

म्लेछीभूता दुराचारा धर्मकृत्यविदूषकाः ॥६.२७२.५॥।

एवं जाते ततो लोके ब्राह्मणो हरिपिंगलः ॥

कल्किगोत्रसमुत्पन्नस्तान्सर्वा न्सूदयेत्ततः ॥९१॥

पश्चात्कृतयुगं भावि भूयोऽपि द्विजसत्तमाः ॥५२॥

एवं युगसहस्रेण संप्राप्तेन ततः परम् ॥

ब्रह्मणो दिवसं भावि रात्रिश्चैव ततः परम् ॥ ५३ ॥

ततश्चानेन मानेन षष्ट्या युक्तैस्त्रिभिः शतैः ॥

ब्रह्मणो वत्सरं भावि केशवस्य च तद्दिनम् ॥ ५४ ॥

आत्मीये जीविते ब्रह्म यावद्वर्षशतं स्थितः ॥

केशवोऽपि स्वमानेन वर्षाणां जीविते शतम् ॥ ५५ ॥

वर्षेण वासुदेवस्य दिनं माहेश्वरं भवेत् ॥

निजमानेन सोप्यत्र याव द्वर्षशतं स्थितः ॥ ५६ ॥

ततः शक्तिस्वरूपः स्यात्सोऽक्षयी कीर्त्यते यतः ॥

सदाशिवस्य निःश्वासः शैवं वर्षशतं भवेत् ॥

उच्छ्वासस्तु पुनस्तस्य शक्तिरूपेण संस्थितः ॥ ५७ ॥

॥ सूत उवाच ॥ ॥

एतद्वः सर्वमाख्यातं शिवशक्तिसमुद्भवम् ॥

यावदायुः प्रमाणं च मानुषाढ्यं च यद्भवेत् ॥ ॥ ५८ ॥

भवद्भिः शांकरं पृष्टो द्विजा अस्मि दिनं पुरा ॥

मया पुनस्तु सर्वेषां मर्त्यादीनां तु कीर्तितम् ॥ ५९ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये युगस्वरूपवर्णनंनाम द्विसप्तत्युत्तरद्विशततमोअध्यायः ॥ २७२ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७३



॥ सूत उवाच ॥ ॥

एतेषां तु सहस्रेण भवेद्ग्राह्यं दिनं द्विजाः ॥

चतुर्दश सहस्राक्षा जायंते तत्र वासरे ॥ १ ॥

सप्तमस्तु सहस्राक्षः सांप्रतं वर्ततेऽत्र यः ॥

एकसप्ततिसंवर्तचतुर्दशदिने विधेः ॥ २ ॥

युगानां कुरुते राज्यं मनवश्च तथा परे ॥

स्वायंभुवप्रभृतयो यथा शक्रास्तथा स्थिताः ॥ ॥ ३ ॥

जायन्तो नाम शक्रोऽयं सांप्रतं वर्तते तु यः ॥

वैवस्वतो मनुश्चैव अष्टाविंशत्प्रमाणकः ॥ ४ ॥

चतुर्युगस्य संजातो गतेस्मिञ्छेषमात्रके ॥

भविष्यति बलिः शक्रो वासुदेवप्रसादतः ॥ ५ ॥

तेन तस्य प्रतिज्ञातं राज्यं चैवाष्टमे मनौ ॥ ६ ॥

एवं सर्वे सुराश्चान्ये त्रयस्त्रिंशत्प्रमाणतः ॥।

कोटयः प्रभविष्यंति यथा चैव तथा पुरा ॥ ७ ॥

योऽयं ब्रह्मा स्थितो विप्राः सांप्रतं सृष्टिकारकः ॥

तस्यानेन प्रमाणेन जातं संवत्सराष्टकम् ॥ ॥ ८ ॥

षण्मासाश्च दिनार्धं च प्रथमं शुक्लपूर्वकम्॥

सौरसावनचंद्रार्क्षैर्मानैरेभिश्चतुर्विधैः ॥ ९ ॥

कलौ निर्याति सर्वेषां भूतानां क्षितिमण्डले ॥

पंचषष्ट्याऽधिकैश्चैव दिनानां च शतैस्त्रिभिः ॥

भवेत्संवत्सरं सौरं पञ्चोनैस्तैश्च सावनम् ॥ ६.२७३.१० ॥

चांद्र एकादशोनस्तु त्रिंशद्धीन उडूद्भवः ॥

शीतातपौ तथा वृष्टिः सौरमानेन जायते ॥ ११ ॥

वृक्षाणां फलनिष्पत्तिः सस्यानां च तथा परा ।

अग्निष्टोमादयो यज्ञा वर्तंते ये धरातले ॥ १२ ॥

उत्साहाश्च विवाहाश्च सावनेन भवंति च ॥

कुसीदाद्याश्च ये केचिद्व्यवहाराश्च वृत्तिजाः ॥ १३ ॥

अधिमासप्रयुक्तेन ते स्युश्चांद्रेण निर्मिताः ॥

नाक्षत्रेण तु मानेन सिध्यंते ग्रहचारिकाः ॥ १४ ॥

नान्यत्किंचिद्धरापृष्ठ एतन्मानचतुष्टयात् ॥

एतेन तु प्रमाणेन देवदैत्याश्च मानवाः ॥ १५ ॥

वर्त्तंते ब्राह्मणश्रेष्ठाः श्रुतिरेषा पुरातनी ॥

एतद्युगप्रमाणं तु यः पठेद्भक्तिसंयुतः ॥ १६ ॥

एतेषामेव लिंगानां सप्तानां ब्राह्मणोत्तमाः ॥

नापमृत्यु भयं तस्य कथंचित्संभविष्यति ॥ १७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये युगप्रमाणवर्णनंनाम त्रिसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७३

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७४



॥ सूत उवाच ॥ ॥
तथान्यदपि तत्रास्ति दुर्वासःस्थापितं पुरा ॥
तल्लिंगं देवदेवस्य त्रिनेत्रस्य महात्मनः ॥ १ ॥
चैत्रमासि नरो यस्तु तमाराधयते द्विजाः ॥
नृत्यगीतप्रवाद्यैश्च त्रिकालं विहितक्षणः ॥
स नूनं तत्प्रसादेन गन्धर्वाधिपतिर्भवेत् १। २ ॥
॥ ऋषय ऊचुः ॥ ॥
दुर्वासा नामकश्चायं केनायं स्थापितो हरः ॥
कस्मिन्काले महाभाग सर्वं नो विस्तराद्वद ॥ ३ ॥
॥ सूत उवाच ॥ ॥
आसीत्पुरा निंबशुचो वैदिशे च पुरोत्तमे ॥ ४ ॥
स च पूजयते लिंगं किंचिन्मठपतिः स्थितः ॥
स यत्किंचिदवाप्नोति वस्त्राद्यं च तथा परम् ॥ ५ ॥
माहेश्वरस्य लोकस्य विक्रीणीते ततस्ततः ॥
ततो गृह्णाति नित्यं स हेम मूल्येन तस्य च ॥ ६ ॥
न करोति व्ययं तस्य केवलं संचये रतः ॥
ततः कालेन महता मंजूषाऽस्य निरर्गला ॥
जाता हेममयी विप्राः कार्पण्यनिरतस्य च ॥ ७ ॥
अथ संस्थाप्य भूमध्ये मंजूषां तां प्रपूरिताम् ॥
करोति व्यवहारं स कक्षां तां नैव मुंचति ॥ ८ ॥
कदाचिद्देवपूजायां सोऽपि ब्राह्मणसत्तमाः ॥
विश्वासं नैव निर्याति कस्यचिच्च कथंचन ॥ ९ ॥
कस्यचित्त्वथ कालस्य परवित्तापहारकः ॥
अलक्षद्ब्राह्मणस्तच्च दुःशीलाख्यो व्यचिंतयत् ॥ ६.२७४.१० ॥
ततः शिष्यो भविष्यामि विश्वासार्थं दुरात्मनः ॥
सुदीनैः कृपणैर्वाक्यैश्चाटुकारैः पृथग्विधैः ॥ ११ ॥
आलस्यं च दिवानक्तं साधयिष्याम्यसंशयम् ॥
अन्यस्मिन्नहनि प्राप्ते दृष्ट्वा तं मठमध्यगम् ॥ १२ ॥

ततः समीपमगमद्दंडाकारं प्रणम्य च ॥
अब्रवीत्प्रांजलिर्भूत्वा विनयावनतः स्थितः ॥ १३ ॥
भगवंस्ते प्रभावोऽद्य तपसा वै मया श्रुतः ॥ १४ ॥
यदन्यस्तापसो नास्ति ईदृशोऽत्र धरातले ॥
तेनाहं दूरतः प्राप्तो वैराग्येण समन्वितः ॥ १५ ॥
संसारासारतां ज्ञात्वा जन्ममृत्युजरात्मिकाम्॥
अर्थात्स्वप्नप्रतीकाशं यौवनं च नृणा मिह ॥ १६ ॥
यद्वत्पर्वतसंजाता नदी च क्षणभंगुरा ॥
पुत्राः कलत्राणि च वा ये चान्ये बांधवादयः ॥ १७ ॥
ते सर्वे च परिज्ञेया यथा पाप समागमाः ॥
तत्संसारसमुद्रस्य तारणार्थं ब्रवीहि मे ॥ १८ ॥
उपायं कंचिदद्यैव उपदेशे व्यवस्थितम् ॥
तरामि येन संसारं प्रसादात्तव सुव्रत ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा रोमांचित तनूरुहः ॥
ज्ञात्वा माहेश्वरः कोऽयं चिंतावान्समुपस्थितः ॥ ६.२७४.२० ॥
यथा ब्रवीषि धन्योऽसि यस्य ते मतिरीदृशी ॥
तारुण्ये वर्तमानस्य सुकुमारस्य चैव हि ॥ २१ ।
तारुण्ये वर्तमानो यः शांतः सोऽत्र निगद्यते ॥
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ २२ ॥
यद्येवं सुविरक्तिः स्यात्संसारोपरि संस्थिता ॥
समाराधय देवेशं शंकरं शशिशेखरम् ॥ २३ ॥
नान्यथा घोरजाप्येन तीर्यते भवसागरः ॥
मया सम्यक्परिज्ञातमेतच्छास्त्रसमागमात् ॥ २४ ॥
शूद्रो वा यदि वा विप्रो म्लेछो वा पापकृन्नरः ॥
शिवदीक्षासमोपेतः पुष्पमेकं तु यो न्यसैत् [। २५ ॥
षडक्षरेण मंत्रेण लिंगस्योपरि भक्तितः ॥
स तां गतिमवाप्नोति यांयां यांतीह यज्विनः ॥ ५६ ॥
यो ददाति प्रभक्त्या च शिवदीक्षान्विताय च ॥
वस्त्रोपानहकौपीनं स यज्ञैः किं करिष्यति ॥ २७ ॥
तच्छ्रुत्वा चरणौ तस्य दुःशीलोऽसौ तदाऽऽददे ॥
विन्यस्य स्वशिर स्ताभ्यां ततोवाक्यमुवाच ह ॥ २८ ॥
शिवदीक्षाप्रमाणेन प्रसादं कुरु मे प्रभो ॥

शुश्रूषां येन ते नित्यं प्रकरोमि समाहितः ॥ २९ ॥
ततोऽसौ तापसो विप्रश्चिंतयामास चेतसि ॥
दक्षोऽयं दृश्यते कोऽपि पुमांश्चैव समागतः ॥ ६.२७४.३० ॥
ममास्ति नापरः शिष्यस्तस्मादेनं करोम्यहम् ॥
ततोऽब्रवीत्करे गृह्य यद्येवं वत्स मे समम् ॥
समयं कुरु येन त्वां दीक्षयाम्यद्य चैव हि ॥ ३१ ॥
त्वया कुटीरकं कार्यं मठस्यास्य विदूरतः ॥
प्रवेशो नैव कार्यस्तु ममात्रास्तं गते रवौ ॥ ३२ ॥
॥ दुःशील उवाच ॥ ॥
तवादेशः प्रमाणं मे केवलं तापसोत्तम ॥
किं मठेन करिष्यामि विशेषाद्रा त्रिसंगमे ॥ ३३ ॥
यः शिष्यो गुरुवाक्यं तु न करोति यथोदितम् ॥
तस्य व्रतं च तद्व्यर्थं नरकं च ततः परम् ॥ ३४ ॥
तच्छ्रुत्वा तुष्टिमापन्नः शिवदीक्षां ततो ददौ ॥
तस्मै विनययुक्ताय तदा निंबशुचो मुनिः ॥ ३५ ॥
ततःप्रभृति सोऽतीव तस्य शुश्रूषणे रतः॥।
रंजयामास तच्चित्तं परिचर्यापरायणः ॥ ३६ ॥
मनसा चिन्तयानस्तु तन्मात्रार्थं दिनेदिने ॥
न च्छिद्रं वीक्षते किंचिद्वीक्षमाणोऽपि यत्नतः ॥ ३७ ॥
शैवोऽपि च स कक्ष्यां तां तां मात्रां हेमसंभवाम् ॥
कथंचिन्मोक्षते भूमौ भोज्ये देवार्चनेऽपि न॥३८ ॥
ततोऽसौ चिन्तयामास दुःशीलो निजचेतसि ॥
मठे तावत्प्रवेशोऽस्ति नैव रात्रौ कथंचन ॥ ३९ ॥
सूर्यास्तमानवेलायां यत्प्रयच्छति तत्क्षणात् ॥
परिघं सुदृढं पापस्तत्करोमि च किं पुनः ॥ ६.२७४.४० ॥
मठोऽयं सुशिलाबद्धो नैव खातं प्रजायते ॥
तुंगत्वान्न प्रवेशः स्यादुपायैर्विविधैः परैः ॥ ४१ ॥
तत्किं विषं प्रयच्छामि शस्त्रैर्व्यापादयामि किम् ॥
दिवापि पशुमारेण पंचत्वं वा नयामि किम् ॥ ४२ ॥
एवं चिन्तयतस्तस्य प्रावृट्काल उपस्थितः ॥
श्रावणस्यासिते पक्षे कर्कटस्थे दिवाकरे ॥ ४३ ॥
प्राप्तो महेश्वरस्तस्य कोऽपि तत्र धनी द्रुतम् ॥

तेनोक्तं प्रणिपत्योच्चैः करिष्यामि पवित्रकम् ॥ ४४ ॥
चतुर्द्दश्यामहं स्वामिन्यद्यादेशो भवेत्तव ॥
यद्यागच्छसि मे ग्रामं प्रसादेन सम न्वितः ॥ ४५ ॥
॥ सूत उवाच ॥ ॥
तच्छ्रुत्वा तुष्टिमापन्नस्ततो निंबशुचो मुनिः ॥
तथेति चैवमुक्त्वा तं प्रेषयामास तत्क्षणात् ॥ ४६ ॥
आगमिष्याम्यहं काले स्वशिष्येण समन्वितः ॥
करिष्यामि परं श्रेयस्तव वत्स न संशयः ॥ ४७ ॥
अथ काले तु संप्राप्ते चिन्तयित्वा प्रभातिकम् ॥
प्रभातसमये प्राप्ते स शैवः प्रस्थितस्तदा ॥
दुःशीलेन समायुक्तः संप्रहृष्टतनूरुहः ॥ ४८ ॥
ततो वै गच्छमानस्य तस्य मार्गे व्यवस्थिता ॥
पुण्या नदी सुविख्याता मुरला सागरंगमा ॥ ४९ ॥
स तां दृष्ट्वाऽब्रवीद्वाक्यं वत्स शिष्य करोम्यहम् ॥
भवता सह देवार्चां मुरलायां स्थिरो भव ॥ ६.२७४.५० ॥
बाढमित्येव स प्रोक्त्वा संस्थितोऽस्यास्तटे शुभे ॥
सोऽपि निंबशुचस्तस्य रंजितः सर्वदा गुणैः ॥ ५१ ॥
सुशिष्यं तं परिज्ञाय विश्वासं परमं गतः॥
स्थगितां तां समादाय हेममात्रासमुद्भवाम् ॥ ५२ ॥
जागेश्वरसमोपेतां स कन्थां व्याक्षिपत्क्षितौ ॥
पुरीषोत्सर्गकार्येण ततस्तोकांतरं गतः ॥ ५३ ॥
यावच्चादर्शनं प्राप्तो वेतसैः परिवारितः ॥
तावन्मात्रां समादाय दुःशीलः प्रस्थितो द्रुतम् ॥
उत्तरां दिशमाश्रित्य प्रहृष्टेनांतरात्मना ॥ ५४ ॥ ।
अथासौ चागतो यावद्दुःशीलं नैव पश्यति ॥
केवलं दृश्यते कन्था जागेश्वरसमन्विता ॥ ५५ ॥
ततः शीघ्रतरं शौचं किञ्चित्कृत्वा सुदुर्मनाः ॥
विनैवाचमनं प्राप्तः सा कन्था यत्र तिष्ठति ॥५६ ॥
यावन्मात्राविहीनां च ततो ज्ञात्वा च तां हृताम् ॥
तेन शिष्येण मूर्च्छाढ्यो निपपात महीतले ॥ ५७ ॥
ततश्च चेतनां प्राप्य कृच्छ्राच्चोत्थाय तत्क्षणात् ॥
शिलायां ताडयामास निजांगानि शिरस्तथा ॥ ५८ ॥

हा हतोऽस्मि विनष्टोऽस्मि मुष्टस्तेन दुरात्मना ॥
किं करोमि क्व गच्छामि कथं तं वीक्षयाम्यहम्॥ ५९ ॥
ततस्तु पदवीं वीक्ष्य तस्य तां चलितो ध्रुवम् ॥
वृद्ध भावात्परिश्रांतो वावृत्य स मठं गतः ॥ ६.२७४.६० ॥
दुःशीलोऽपि समादाय मात्रां स्थानांतरं गतः ॥
ततस्तेन सुवर्णेन व्यवहारान्करोति सः ॥ ६१ ॥
ततो गृहस्थतां प्राप्तः कृतदारपरिग्रहः ॥
वृद्धभावं समापन्नः संतानेन विवर्जितः ॥ ६२ ॥
कस्यचित्त्वथ कालस्य तीर्थयात्रापरायणः ॥
भार्यया सहितो विप्रश्चमत्कारपुरं गतः ॥ ६३ ॥
स्नात्वा तीर्थेषु सर्वेषु देवतायतनेषु च ॥
भ्रममाणेन संदृष्टो दुर्वासा नाम सन्मुनिः ॥ ६४ ॥
निजदेवस्य सद्भक्त्या नृत्यगीतपरायणः ॥
तं च दृष्ट्वा नमस्कृत्य वाक्यमेतदुवाच सः ॥ ६५ ॥
केनैतत्स्थापितं लिंगं निर्मलं शंकरोद्भवम् ॥
किं त्वं नृत्यसि गीतं च पुरोऽस्य प्रकरोषि च ॥
मुनीनां युज्यते नैव यदेतत्तव चेष्टितम्॥६६॥
॥ दुर्वासा उवाच ॥ ॥
मयैतत्स्थापितं लिंगं देवदेवस्य शूलिनः॥
नृत्यगीतप्रियो यस्माद्देवदेवो महेश्वरः ॥ ६७ ॥
न मेऽस्ति विभवः कश्चिद्येन भोगं करोम्यहम्॥६८॥
एतस्मिन्नंतरे प्राप्तश्चिर्भटिर्नाम योगवित् ॥
तेन पृष्टः स दुर्वासा वेदांतिकमिदं वचः ॥६९॥ चिर्भटि
असूर्या नाम ते लोका अंधेन तमसा वृताः ॥
तांस्ते प्रेत्याऽभिगच्छंति ये केचात्महनो जनाः ॥ ॥ ६.२७४.७० ॥
उपविश्य ततस्तेन तस्य दत्तस्तु निर्णयः ॥
दुःशीलेनापि तत्सर्व विज्ञातं तस्य संस्तुतम् ॥ ७१ ॥
ततो विशेषतो जाता भक्तिस्तस्य हरं प्रति ॥
तं प्रणम्य ततश्चोच्चैर्वाक्यमेतदुवाच ह ॥ ७२ ॥
भगवन् ब्राह्मणोऽस्मीति जात्या चैव न कर्मणा ॥
न कस्यचिन्मया दत्तं कदाचिन्नैव भोजनम् ॥
केवलं देवविप्राणां वंचयित्वा धनं हृतम् ॥

व्यसनेनाभिभूतेन द्यूतवेश्योद्भवेन च ॥ ७४ ॥
तथा च ब्राह्मणेनापि मया शैवो गुरुः कृतः ॥
वंचितश्च तथानेकैश्चाटुभिर्विहृतं धनम् ॥ ७५ ॥
तस्य सक्तं धनं भूयः साधुमार्गेण चाहृतम् ॥
स चापि च गुरुर्मह्यं परलोकमिहागतः ॥ ॥ ७६ ॥
पश्चात्तापेन तेनैव प्रदह्यामि दिवानिशम् ॥
पुरश्चरणदानेन तत्प्रसादं कुरुष्व मे ॥ ७७ ॥
अस्ति मे विपुलं वित्तं न संतानं मुनीश्वर ॥
तन्मे वद मुने श्रेयस्तद्वित्तस्य यथा भवेत् ॥
इह लोके परे चैव येन सर्वं करोम्यहम् ॥ ७८ ॥
॥ दुर्वासा उवाच ॥ ॥
कृत्वा पापसहस्राणि पश्चाद्धर्मपरो भवेत् ॥
यः पुमान्सोऽतिकृच्छ्रेण तरेत्संसारसागरम् ॥ ७९ ॥
दिनेनापि गुरुर्योऽसौ त्वया शैवो विनिर्मितः ।
अधर्मेणापि संजातः स गुरुस्तेन संशयः ॥ ६.२७४.८० ॥
ब्राह्मणो ब्रह्मचारी स्याद्ग्रहस्थस्तदनंतरम् ॥
वानप्रस्थो यतिश्चैव तत श्चैव कुटीचरः ॥ ८१ ॥
बहूदकस्ततो हंसः परमश्च ततो भवेत् ॥
ततश्च मुक्तिमायाति मार्गमेनं समाश्रितः ॥ ८२ ॥
त्वया पुनः कुमार्गेण यद्व्रतं ब्राह्मणेन च [।
शैवमार्गं समास्थाय तन्महापातकं कृतम् ॥ ८३ ॥
॥ दुःशील उवाच ॥ ॥
सर्वेष्वेव हि वेदेषु रुद्रः संकीर्त्यते प्रभुः ॥
तत्किं दोषस्त्वया प्रोक्तस्तस्य दीक्षासमुद्भवः ॥ ८४ ॥
॥ दुर्वासा उवाच ॥ ॥
सत्यमेतत्त्वया ख्यातं वेदे रुद्रः प्रकीर्तितः ॥
बहुधा वासुदेवोऽपि ब्रह्मा चैव विशेषतः ॥ ८५ ॥
परं विप्रस्य या दीक्षा व्रतवंधसमुद्भवा ॥
गायत्री परमा जाप्ये गुरुर्व्रतपरो हि सः ॥
वैष्णवीं चाथ शैवीं च योऽन्यां दीक्षां समाचरेत् ॥ ८६ ॥
ब्राह्मणो न भवेत्सोऽत्र यद्यपि स्यात्षडंगवित् ॥
अपरं लिंगभेदस्ते संजातः कपटादिषु ॥ ८७ ॥

व्रतत्यागान्न संदेहस्तत्र ते नास्ति किंचन ॥
प्रायश्चित्तं मया सम्यक्स्मृतिमार्गेण चिंतितम्॥ ८८ ॥
॥ दुःशील उवाच ॥ ॥
सतां सप्तपदीं मैत्रीं प्रवदंति मनीषिणः ॥
मित्रतां तु पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ ८९ ॥
अस्ति मे विपुलं वित्तं यदि तेन प्रसिद्ध्यति ॥
तद्वदस्व महाभाग येन सर्वं करोम्यहम् ॥ ॥ ६.२७४.९० ॥
॥ दुर्वासा उवाच ॥ ॥
एक एव ह्युपायोऽस्ति तव पातकनाशने ॥
तं चेत्करोषि मे वाक्याद्विशुद्धः संभविष्यसि ॥ ९१ ॥
तपः कृते प्रशंसंति त्रेतायां ज्ञानमेव च ॥
द्वापरे तीर्थयात्रां च दानमेव कलौ युगे ॥ ९२ ॥
सांप्रतं कलिकालोऽयं वर्तते दारुणाकृतिः ॥
तस्मात्कृष्णाजिनं देहि सर्वपापविशुद्धये ॥ ९३ ॥
तथा च ते घृणाऽप्यस्ति गुरुवित्तसमुद्भवा ॥
तदर्थं कुरु तन्नाम्ना शंकरस्य निवेशनम्॥ ९४ ॥
येन तस्मादपि त्वं हि आनृण्यं यासि तत्क्षणात् ॥
अन्यत्रापि च तद्वित्तं यत्किंचिच्च प्रपद्यते ॥ ९५ ॥
ब्राह्मणेभ्यो विशिष्टेभ्यो नित्यं देहि समाहितः ॥
तिलपात्रं सदा देहि सहिरण्यं विशेषतः ॥ ९६ ॥
येन ते सकलं पापं देहान्नाशं प्रगच्छति ॥
अपरं चैत्रमासेऽहं सदाऽऽगच्छामि भक्तितः ॥ ९७ ॥
कल्पग्रामात्सुदूराच्च प्रासादेऽत्र स्वयं कृते ॥
पुनर्यामि च तत्रैव व्रतमेतद्धि मे स्थितम् ॥ ९८ ॥
तस्माच्चिंत्यस्त्वयाह्येष प्रासादो यो मया कृतः ॥
चिंतनीयं सदैवेह स्नानादिभिरनेकशः ॥ ९९ ॥
॥ दुःशील उवाच ॥ ॥
करिष्यामि वचस्तेऽहं यथा वदसि सन्मुने ॥ ६.२७४.१०० ॥ ॥ ॥
॥ दुर्वासा उवाच ॥ ॥
सर्वपापविशुद्ध्यर्थं दत्ते कृष्णाजिने द्विजः ॥
प्रयच्छ तिलपात्राणि गुप्तपापस्य शुद्धये ॥ १०१ ॥
॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा दत्तं तेन महात्मना ॥
ततः कृष्णाजिनं भक्त्या ब्राह्मणायाहिताग्नये ॥ १०२ ॥
दुर्वाससः समा देशाद्यथोक्तविधिना द्विजाः ।
यच्छतस्तिलपात्राणि तस्य नित्यं प्रभक्तितः ॥ १०३ ॥
गतपापस्य दीक्षां च ददौ निर्वाणसंभवाम् ॥
तथासौ गतपापस्य दीक्षां दत्त्वा यथाविधि ॥ १०४ ॥
ततः प्रोवाच मधुरं देहि मे गुरुदक्षिणाम् ॥ १०५ ॥
॥ दुःशील उवाच ॥ ॥
याचस्व त्वं प्रभो शीघ्रं यां ते यच्छामि दक्षिणाम् ॥
तां प्रदास्यामि चेच्छक्तिर्वित्तशाठ्यविवर्जिताम्॥ १०६ ॥
॥ दुर्वासा उवाच ॥ ॥
कल्पग्रामं गमिष्यामि सांप्रतं वर्तते कलिः ॥
नाहमत्रागमिष्यामि यावन्नैव कृतं भवेत् ॥ १०७ ॥
अर्धनिष्पादितो ह्येष प्रासादो यो मया कृतः ॥
परिपूर्तिं त्वया नेय एषा मे गुरुदक्षिणा ॥ १०८ ॥
नृत्यगीतादिकं यच्च तथा कार्यं स्वशक्तितः ॥
पुरतोऽस्य बलिर्देयस्तथान्यत्कुसुमादिकम् ॥ १०९ ॥
एवमुक्त्वा गतः सोऽथ कल्पग्रामं मुनीश्वरः ॥
दुःशीलोऽपि तथा चक्रे यत्तेन समुदाहृतम् ॥ ६.२७४.११० ॥
॥ सूत उवाच ॥ ॥
एवं तस्य प्रभक्तस्य तत्कार्याणि प्रकुर्वतः ॥
तन्नाम्ना कीर्त्यते सोऽथ दुःशील इति संज्ञितः ॥ १११ ॥
चैत्रमासे च यो नित्यं तं च देवं प्रपश्यति ॥
क्षणं कृत्वा स पापेन वार्षिकेण प्रमुच्यते ॥ ११२ ॥
यः पुनः स्नपनं तस्य सर्वं चैव करोति च ॥
त्रिंशद्वर्षोद्भवं पापं तस्य गात्रात्प्रणश्यति ॥ ११३ ॥
यः पुनर्नृत्यगीताद्यं कुरुते च तदग्रतः ॥
आजन्ममरणात्पापात्सोऽपि मुक्तिमवाप्नुयात् ॥११४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये दुर्वासःस्थापित
शिवलिंगस्य दुःशीलेश्वरसंज्ञाप्राप्तिकारणवृत्तान्तवर्णनं नाम चतुःसप्तत्युत्तर द्विशततमोऽध्यायः ॥ २७४ ॥
॥ छ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७५

https://sa.wikisource.org/s/fi7



॥ सूत उवाच ॥ ॥

दुःशीलोऽपि च तत्कृत्वा गुरोर्नाम्ना शिवालयम् ॥

निम्बेश्वर इति ख्यातं दक्षिणां दिशमाश्रितम् ॥ १ ॥

चकार परया भक्त्या तत्पादाब्जमनुस्मरन् ॥

तथा तस्य तु भार्या या नाम्ना शाकंभरी स्मृता ॥ २ ॥

स्वनामांका तत्र दुर्गा तथा संस्थापिता तया ॥

ततस्तु तद्धनं ताभ्यां किचिच्छेषं व्यवस्थितम् ॥ ३ ॥

पूजार्थं देवताभ्यां च ब्राह्मणेभ्यः समर्पितम् ॥

भिक्षाभुजौ ततो जातौ दम्पती तौ ततः परम् ॥ ४ ॥

कस्यचित्त्वथ कालस्य दुःशीलो निधनं गतः ॥ ५ ॥

शाकंभर्यपि तत्कायं गृहीत्वा हव्यवाहनम् ॥

प्रविष्टा नृपशार्दूल निर्विकल्पेन चेतसा ॥ ६ ॥

ततो विमानमारुह्य वराप्सरःसुसेवितम् ॥

गतौ तौ द्वावपि स्वर्गं संप्रहृष्टतनूरुहौ ॥ ७ ॥

एतं दुःशीलजं यस्तु पठेदाख्यानमुत्तमम् ॥

स सर्वैर्मुच्यते पापैरज्ञानविहितैर्नृप ॥ ८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये निम्बेश्वरशाकंभर्युत्पत्तिमाहात्म्यवर्णनं नाम पञ्चसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७५ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७६



॥ सूत उवाच ॥ ॥

तथान्येऽपि वसन्तीह रुद्रा एकादशैव तु ॥

सञ्जाता ब्राह्मणश्रेष्ठा मुनीनां हितकाम्यया ॥ १ ॥

यैर्दृष्टैः पूजितै र्वापि स्तुतैर्वाथ नमस्कृतैः ॥

विपाप्मा जायते मर्त्यः सर्वदोषविवर्जितः ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

एक एव श्रुतो रुद्रो न द्वितीयः कथंचन ॥

गौरी भार्याप्रिया यस्य स्कन्दः पुत्रः प्रकीर्तितः ॥ ३ ॥

तेनैकं विद्महे रुद्रं नान्यमीशं कथंचन ॥

तस्माद्ब्रूहि महाभाग सर्वानेता न्सुविस्तरात् ॥ ४ ॥

॥ सूत उवाच ॥ ॥

सत्यमेतन्महाभागा यद्भवद्भिरुदाहृतम् ॥

एक एव स्थितो रुद्रो न द्वितीयः कथंचन ॥ ५ ॥

परं यथा च सञ्जाता रुद्रा एकादशात्र भोः ॥

तथाहं कीर्तयिष्यामि शृणुध्वं सुसमाहिताः ॥ ६ ॥

वाराणस्यां पुरा संस्था मुनयः शंसितव्रताः ॥

हाटकेश्वरदेवस्य दर्शनार्थं समुत्सुकाः ॥ ७ ॥

प्रस्थिताः समयं कृत्वा स्पर्धमानाः परस्परम् ॥

अहंपूर्वमहं पूर्वं वीक्षयिष्यामि तं विभुम् ॥ ८ ॥

सर्वेषामग्रतो भूत्वा पाताले हाटकेश्वरम् ॥

यश्चादौ तत्र गत्वा च नेक्षयिष्यति तं हरम् ॥

सर्वेषां श्रमजं पापं तस्यैकस्य भविष्यति ॥ ९ ॥

एवमुक्त्वा ततः सर्वे वाराणस्यां ततः परम् ॥

प्रस्थिता धावमानाश्च वेगेन महता ततः ॥ ६.२७६.१० ॥

एतस्मिन्नन्तरे देवो हाटकेश्वरसंज्ञितः ॥

ज्ञात्वा तेषामभिप्रायं मिथः स्पर्द्धासमुद्भवम् ॥

आत्मनो दर्शनार्थाय बहुभक्तिपुरस्कृतम् ॥ ११ ॥

लघुना रक्ष्यमाणेन सर्वेषां च महात्मनाम् ॥

नागरंध्रेण निष्क्रम्य पातालाच्चैव तत्क्षणात् ॥ १२ ॥

एकादशप्रकारं स कृत्वा रूपं मनोहरम् ॥

त्रिशूलभृत्त्रिनेत्रं च कपर्देन विभूषितम् ॥ १३ ॥

शशिखंडधरं चैव रुण्डमालाप्रधारकम् ॥

समं चैव स्थितस्तेषां दर्शने शंकरः प्रभुः ॥ १८३ ॥

ततस्ते वै समालोक्य पुरस्थं वृषभध्वजम् ॥

जानुभ्यां धरणीं गत्वा स्तुतिं चक्रुस्ततस्ततः ॥ १५ ॥

एको जानाति देवोऽयं मम संदर्शनं गतः ॥

देवदेवो महादेवः प्रथमं भक्तवत्सलः ॥ १६ ॥

अन्यो जानाति मे पूर्वं जातस्ते तापसोत्तमः ॥

स्तुतिं चक्रुश्च विप्रेंद्रा जानुभ्यामवनिं गताः ॥१७॥ ॥

॥ तापसा ऊचुः ॥ ॥

नमो देवाधिदेवाय सर्वदेवमयाय च ॥

नमः शांताय सूक्ष्माय नमश्चांधकभेदिने ॥ १८ ॥

नमोऽस्तु सर्वरुद्रेभ्यो ये दिवं संश्रिताः सदा ॥

जीवापयंति जगतीं वायुभिश्च पृथग्विधैः ॥ १९ ॥

नमोऽस्तु सर्वरुद्रेभ्यो ये स्थिता वारुणीं दिशम् ॥

रक्षंति सर्वलोकांश्च पिशाचानां दुरात्मनाम् ॥ ६.२७६.२० ॥

नमोऽस्तु सर्वरुद्रेभ्यो दिशमूर्ध्वं समाश्रिताः ॥

रक्षंति सकलांल्लोकान्भूतानां जंभकाद्भयात् ॥ २१ ॥

नमोऽस्तु सर्वरुद्रेभ्यो येऽध ऊर्ध्वं समाश्रिताः ॥

रक्षंति सकलांल्लोकान्कूष्मांडानां भयात्सदा ॥ २२ ॥

असंख्याताः सहस्राणि ये रुद्रा भूमिमाश्रिताः ॥

नमस्तेभ्योऽपि सर्वेभ्यस्तेषां रक्षंति ये रुजः ॥ २३ ॥

एवं स्तुतास्तु ते रुद्रा एकादशतपस्विभिः ॥

एकादशापि तान्प्रोचुर्भक्तिनम्रांस्तुताप सान् ॥ २४ ॥

॥ रुद्रा ऊचुः ॥ ॥

एकादशप्रकारोऽहं तुष्टो वस्तापसोत्तमाः ॥

बहुभक्त्यतिरेकेण व्रियतां च यथेप्सितम् ॥२५॥

॥ तापसा ऊचुः ॥ ॥

यदि तुष्टोसि नो देव यदि यच्छसि वांछितम् ॥

एकादशप्रकारैस्तु सदा स्थेयमिहैव तु ॥ २६ ॥

हाटकेश्वरजे क्षेत्रे सर्वतीर्थमये शुभे ॥

आराधनं प्रकुर्वाणा वसामो येन वै वयम् ॥ २७ ॥

॥ श्रीभगवानुवाच ॥ ॥

एकादशप्रकारा या मूर्तयो निर्मिता मया ॥

एताभिरेव सर्वाभिः स्थास्याम्यत्र सदैव हि ॥ २८ ॥

आद्या तु मम या मूर्तिः सा कैलासं समाश्रिता ॥

संतिष्ठति सदैवात्र कैलासे पर्वतोत्तमे ॥ २९ ॥

एतास्तु मूर्तयोऽस्माकं स्थास्यंत्यत्रैव सर्वदा ॥

सर्वेषामेव लोकानां हिताय द्विजसत्तमाः ॥ ६.२७६.३० ॥

नामभिश्च क्रमेणैव युष्मदीयैः स्वयं द्विजाः ॥

विश्वामित्रह्रदे स्नात्वा एता मूर्तीर्ममात्र वै ॥

पूजयिष्यंति ये मर्त्यास्ते यास्यंति परां गतिम् ॥ ३१ ॥

किं वाचा बहुनोक्तेन भूयोभूयो द्विजोत्तमाः ॥

या तासां क्रियते पूजा एकादशगुणा भवेत् ॥ ३२ ॥

एवमुक्त्वा त्रिनेत्रस्तु तत्रैवादर्शनं गतः ॥

तेऽपि तत्राश्रमं कृत्वा श्रद्धया परया युताः ॥

मूर्तीश्च ताः समाराध्य संप्राप्ताः परमं पदम् ॥ ३३ ॥

अन्योऽपि यः पुमांस्ताश्च आराधयति श्रद्धया ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ ३४ ॥

ततः प्रभृति ते जाता रुद्रा एकादशैव तु ॥

संख्यया देवदेवस्य महेश्वरवपुर्धराः ॥ ३५ ॥

तेजोत्तमास्ते संयुक्ता स्त्रिनेत्राः शूलपाणयः ॥
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि द्विजोत्तमाः ॥ ३६ ॥
एकादशप्रकारस्तु यथा जातो महेश्वरः ॥
चैत्रे मासि सिते पक्षे चतुर्दश्यां दिने स्थिते ॥ ३७ ॥
यस्तान्पूजयते भक्त्या स याति परमां गतिम् ॥
अधनो धनमाप्नोति ह्यपुत्रः पुत्रवान्भ वेत् ॥ ३८ ॥
सरोगो रोगमुक्तस्तु पराभूतो रिपुक्षयम् ॥
तत्समाराधनादेव कामानंत्यमवाप्नुयात् ॥ ३९ ॥
यः पुनः शिवदी क्षाढ्यो भस्मस्नानपरायणः ॥
तत्समाराधनं कुर्याच्छृणु तस्यापि यत्फलम् ॥ ६.२७६.४० ॥
यदन्यः प्राप्नुयान्मर्त्यस्तत्पूजासंभवं फलम् ॥
षडक्षरेण मंत्रेण पुष्पेणैकेन तत्फलम् ॥ ४१ ॥
शिवदीक्षाधरो यस्तु शतघ्नं लभते फलम् ॥
तस्माच्छतघ्नमाप्नोति शैवात्पाशुपतश्च यः ॥
तस्मात्कालमुखो यश्च महाव्रतधरश्च यः ॥ ४२ ॥
मूर्तीर्यास्ताश्च ये भक्त्या विनताः पूजयंति च ॥
सर्वेषामेव तेषां तु फलं शतगुणं भवेत् ॥ ४३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्य एकादशरुद्रोत्पत्ति वर्णनं नाम षट्सप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७६ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७७

https://sa.wikisource.org/s/frg
< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ ऋषय ऊचुः ॥ ॥

कि नामानो द्विजास्ते च वाराणस्याः समागताः॥

एकादशप्रकारोऽसौ येषां रुद्रः प्रभक्तितः ॥

तत्संज्ञाश्च समाचक्ष्व विस्तरेण महामुने ॥ १ ॥

॥ सूत उवाच ॥ ॥

एकस्तेषां मृगव्याधो विख्यातो भुवनत्रये ॥

द्वितीयः सर्वसंज्ञश्च निंदितश्च तृतीयकः॥ २ ॥

महायशाश्चतुर्थस्तु कथ्यते मुनिसत्तमाः ॥

अजैकपाद इत्युक्तः पंचमो मुनि सत्तमाः ॥ ३ ॥

अहिर्बुध्न्यस्तथा षष्ठः पिनाकी सप्तमस्तथा ॥

परं तपस्तथान्यस्तु दहनो नवमस्तथा ॥ ४ ॥

ईश्वरो दशमः प्रोक्तः कपाली चांति मस्तथा ॥

तेषामेतानि नामानि स्थितान्येव हि यानि च ॥

रुद्राणामपि तान्येव विहितानि हरेण तु ॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

कानि दानानि शस्यानि तदर्थं वद नो द्रुतम् ॥

जपश्चैव पुरा प्रोक्तस्त्वया कार्यो यथैव च ॥ ६ ॥

॥ सूत उवाच ॥ ॥

तदुद्दिश्य प्रदातव्यमेकैकस्य पृथक्पृथक् ॥

प्रत्यक्षाश्च महाभाग दातव्या धेनवः क्रमात् ॥ ७ ॥

मृगव्याधाय प्रत्यक्षा गौर्देया च गुडोद्भवा ॥

कपालिने प्रदातव्या नवनीतसमुद्भवा ॥ ८ ॥

अजपादाय चाज्योत्था अहिर्बुध्न्याय हेमजा ॥

पिनाकिने प्रदातव्या धेनुर्लवणसम्भवा ॥ ९ ॥

परंतपाय विप्रेन्द्रास्तथैव रसस म्भवा ॥

अन्नजा दहनायोक्ता ईश्वराय जलोद्भवा ॥ ६.२७७.१० ॥

एता ददाति यो विप्रा एतेषां च महात्मनाम् ॥

चक्रवर्ती भवेन्नूनमेतदाह पितामहः ॥॥ ॥ ११ ॥

अन्यत्रापि प्रदत्ताश्च किं पुनर्भवसंनिधौ ॥

तस्मात्सर्वप्रयत्नेन एता देयाः प्रयत्नतः ॥ १२ ॥

धेनवो यो न शक्तः स्यादेका देया प्रयत्नतः ॥

सर्वेषामेव रुद्राणां भर्तृयज्ञवचो यथा ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये एकादशरुद्रसमीपे दानमाहात्म्यवर्णनं नाम सप्तसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७७ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७८

https://sa.wikisource.org/s/frh

< स्कन्दपुराणम् | खण्डः ६ (नागरखण्डः)

॥ सूत उवाच ॥ ॥

ये चान्ये भास्करा स्तत्र संति ब्राह्मणसत्तमाः ॥

हाटकेश्वरजे क्षेत्रे याज्ञवल्क्यप्रतिष्ठिताः ॥ १ ॥

यस्तान्पूजयते भक्त्या हृदि कृत्वाऽभिवांछितान् ॥

सप्तम्यां चैव सप्तम्यां लभते नात्र संशयः ॥ २ ॥

॥ ऋषय उचुः ॥ ॥

एक एव स्थितः सूर्यो दृश्यते च नभस्तले ॥

तत्कथं द्वादशैते च तत्र क्षेत्रे प्रतिष्ठिताः ॥

कस्मिन्काले तथा कृत्ये किमर्थं सूतनन्दन ॥ ३ ॥

॥ सूत उवाच ॥ ॥

आसीत्पूर्वं कृतिर्नाम शुनःशेपसमुद्भवः ॥ ॥ ४ ॥

तस्य पुत्रः शुनः पुत्रो बभूव मुनिसत्तमः ॥

चारायणः सुतस्तस्य वभूव मुनिसत्तमः ॥ ५ ॥

कस्यचित्त्वथ कालस्य ब्रह्मा लोक पितामहः ॥

सावित्रीशापनिर्दग्धो ह्यवतीर्णो धरातले ॥ ६ ॥

गायत्री च यदा विप्रास्तेनोढा यज्ञकर्मणि ॥

प्राक्स्थितां च परित्यज्य सर्वदेवसमागमे ॥

कालात्ययो भवेन्नैव सावित्र्यागमने स्थिरे ॥ ७ ॥

ततस्तस्य समादेशाद्गायत्री गोपकन्यका ॥

शक्रेण च समानीता दिव्यलक्षणलक्षिता ॥ ८ ॥

गोपकन्यां च तां ज्ञात्वा गोश्च वक्त्रेण पद्मजः ॥

प्रवेश्याकर्षयामास गुह्येन च ततः परम् ॥ ९ ॥

ब्राह्मणानां गवां चैव कुलमेकं द्विधा स्थितम् ॥

एकत्र मन्त्रास्तिष्ठंति हविरेकत्र संस्थितम् ॥ ६.२७८.१० ॥

तेन तां ब्राह्मणीं कृत्वा पश्चात्तस्याः परिग्रहम् ॥

गृह्योक्तविधिना चक्रे पुरःस्थोऽपि पितामहः ॥११॥

पत्नीशालोपविष्टायां ततस्तस्यां द्विजोत्तमाः ॥

सावित्री समनुप्राप्ता देवपत्नीभिरावृता ॥ १२ ॥

ततस्तां सा समालोक्य रशनासमलंकृताम् ॥

दौर्भाग्यदुःखमापन्ना शशाप च विधिं ततः ॥ १३ ॥

॥ सावित्र्युवाच ॥ ॥

यस्मात्त्वया परित्यक्ता निर्दोषाहं पितामह ॥

पितामहोऽसि मे नूनमद्यप्रभृति संगमे ॥ १४ ॥

मनुष्याणां भवेत्कृत्यमन्यनारीपरिग्रहः ॥

एतत्त्वया कृतं यस्मान्मा नुषस्त्वं भविष्यसि ॥ १५ ॥

कामार्तश्च विशेषेण मम वाक्यादसंशयम्॥ १६ ॥

एवमुक्त्वा तु सावित्री त्यक्त्वा तं यज्ञमंडपम् ॥

गिरेः शिखरमारूढा तपश्चक्रे महत्ततः ॥ १७ ॥

पितामहोऽपि तच्छापाच्चारायणनिवेशने ।

अवतीर्णो धरापृष्ठे कालेन महता ततः ॥ १८ ॥

स यदा यौवनं भेजे मानुषं च पुरा स्थितः ।।

तथातथा च तापेन कामोत्थेन प्रपीड्यते ॥ १९ ।

ततोऽसौ वीक्षते नारीं कन्यां वाथ तपस्विनीम् ॥

अविकल्पमना भेजे रूपसौभाग्यगर्वितः ॥ ६.२७८.२० ॥

ततस्तं ब्यसनार्तं च दृष्ट्वा चारायणो मुनिः ॥

स्वयं निःसारयामास प्रकोपेन निजाश्रमात् ॥ २१ ॥

स च पित्रा परित्यक्तो भ्रममाणस्ततस्ततः ॥

चमत्कारपुरं प्राप्तः शाकल्यो यत्र तिष्ठति ॥ २२ ॥

नाम्ना ब्राह्मणशार्दूलो नागरो वेदपारगः ॥

वृतः शिष्य सहस्रेण वेदविद्यां प्रचारयन्॥ २३ ॥

अथ तं स प्रणम्योच्चैः शिष्यत्वं समुपागतः ॥

वेदाध्ययनसंपन्नो बभूवाथ चिरादपि ॥ २४ ॥

एतस्मिन्नेव काले नु आनर्ताधिपतिः स्वयम् ॥

आगतस्तिष्ठते यत्र जलशायी हरिः स्वयम् ॥ २५ ॥
चातुर्मास्यव्रतं तेन गृहीतं तत्पुरस्तदा ॥
प्रार्थितस्तु ततो विप्राः शाकल्यस्तैन भूभुजा ॥ २६ ॥
शांतिकं पौष्टिकं नित्यं त्वया कार्यं ममालये ॥
यावत्तिष्ठाम्यहं चात्र प्रसादः क्रियतामिति ॥ २७ ॥
बाढमित्येव स प्रोक्त्वा दाक्षिण्येन द्विजोत्तमाः ॥
एकैकं प्रेषयामास स्वशिष्यं तस्य मंदिरे ॥ २८ ॥
स शांतिकं विधायाथ दत्त्वाशीः पार्थिवस्य च ॥
संप्राप्य दक्षिणां तस्मात्पुनरेति च तं द्विजम् ॥ २९॥
शाकल्याय च तां दत्त्वा दक्षिणां निजमंदिरे ॥
जगाम नित्यमेवं हि व्यवहारो व्यवस्थितः ॥ ६.२७८.३० ॥
अन्यस्मिन्नहनि प्राप्ते शाकल्येन विसर्जितः ॥
शांत्यर्थं याज्ञवल्क्यस्तु पार्थिवस्यनिवेशनम् ॥ ३१ ॥
तस्य भूपस्य रूपाढया मंथरास्ति विलासिनी ॥
रात्रौ च कामिता तेन कामाढयेन सुकामिनी ॥ ३२ ॥
भावैर्वात्स्यायनप्रोक्तैः समालिंगनपूर्वकैः ॥
स तया विविधैः कृत्तो मयूरपदकादिभिः ॥
शरीरे चाधरे चैव तथा मणिप्रवालकैः ॥ ३३ ॥
संप्राप्तोऽध्ययनार्थाय यावच्छाकल्यसन्निधौ ॥
तावत्संप्रेषितस्तेन शांत्यर्थं भूपमंदिरे ॥ ३४ ॥
सोऽपि संप्रेषितस्तेन गत्वा तं पार्थिवालयम् ॥
शांतिकं च ततश्चक्रे यथोक्तविधिना द्विजाः ॥ ३५ ॥
शांतिकस्यावसाने तु प्रगृह्य कलशोदकम् ॥
पंचांगैः कल्पितं रुद्रैः स्वयमेवाभिमंत्रितैः ॥ ३६ ॥
साक्षतं सुमनोयुक्तं समादाय गतस्ततः ॥
संतिष्ठते नृपो यत्र आनर्तो व्रतसंयुतः ॥ ३७ ॥
द्यामालेखीति मंत्रं स प्रोच्चार्य विधिपूर्वकम् ॥
छंदर्षिसहितं चैव यावत्क्षिपति मस्तके ॥

तावन्निरीक्षितस्तेन नखलेखाविकर्तितः ॥ ३८ ॥

खंडितेनाधरेणैव ततोऽभूद्दुर्मना नृपः ॥ ३९ ॥

विटप्रायं तु तं दृष्ट्वा मलिनांबरधारिणम्॥

तं प्रोवाच विहस्योच्चै देहि विप्राऽक्षताञ्जलम् ॥ ६.२७८.४० ॥

मंदुरायां स्थितं यच्च काष्ठमेतत्प्रदृश्यते ॥

याज्ञवल्क्यस्ततो दृष्ट्वा सकोपस्तमुपाद्रवत् ॥ ४१ ॥

क्षिप्त्वा तत्र जलं विप्राः साक्षतं गृहमागमत् ॥

अगृह्य दक्षिणां तस्य पार्थिवस्य यथास्थिताम् ॥ ४२ ॥

एतस्मिन्नंतरे तस्य धवकाष्ठस्य सर्वतः ॥

निष्क्रांता विविधाः शाखाः पल्लवैः समलंकृताः ॥ ४३ ॥

तद्दृष्ट्वा विस्मितः सोऽथ आनर्ताधिपतिर्नृपः ॥

पश्चात्तापं परं चक्रे धिङ्मयैवमनुष्ठितम् ॥ ४४ ॥

स नूनं विबुधः कोऽपि विप्ररूपेण संगतः ॥

येनेदृशः प्रभावोऽयं तस्य मंत्रस्य संस्थितः ॥ ४५ ॥

यद्यहं प्रतिगृह्णामि तस्य मन्त्रोदितं जलम् ॥

जरामरणहीनस्तु तद्भवाभि न संशयः ॥ ४६ ॥

एवं चिंतयतस्तस्य तद्दिनं विस्मितस्य च ॥

पार्थिवस्य द्विजश्रेष्ठा जातं वर्षशतोपमम् ॥ ४७ ॥

दिवसे तु समाक्रांते कथंचित्तस्य भूपतेः [।

विभावरी क्षयं याति कथंचिन्नैव शारदी ॥ ४८ ॥

ततः प्रभातसमये समुत्थाय महीपतिः ॥

आह्वयामास शाकल्यं पुरुषैराप्तकारिभिः ॥४९॥

ततः प्रोवाच विनयात्सादरं प्रांजलिः स्थितः ॥

कल्ये शिष्यः समायातो यस्त्वदीयो ममांतिकम् ॥ ६.२७८.५० ॥

शांत्यर्थं प्रेषणीयस्तु सोऽद्यापि च द्विजोत्तम ॥

तस्योपरि परा भक्तिर्मम जाताऽद्य केवलम् ॥ ५१ ॥

स तथेति प्रतिज्ञाय गत्वाऽथ निजमन्दिरम् ॥

प्रोवाच याज्ञवल्क्यं च शांत्यर्थं श्लक्ष्णया गिरा ॥ ५८२ ॥

गच्छ वत्स त्वमद्यैव पार्थिवस्य निवेशनम् ॥
शांत्यर्थं तेन भूयोऽपि त्वमेवाशुनिमंत्रितः ॥ ५३ ॥
॥ याज्ञवल्क्य उवाच ॥ ॥
नाहं यास्यामि तद्धर्म्ये शांत्यर्थं द्विजपुंगव ॥
अनादरेण दृष्टोऽहं नाशीर्मे च समाहृता ॥ ५४ ॥
काष्ठोपरि मया दत्ता तस्य वाक्यादसंशयम् ॥
तस्मात्प्रेषय चान्यं त्वं गुरो शिष्यं विचक्षणम् ॥
आनर्तं रंजयेद्यस्तु विवेकेन समन्वितम् ॥ ५५ ॥
॥ शाकल्य उवाच ॥ ॥
राजाऽऽदेशः सदा कार्यः पुरुषैर्देशवासिभिः ॥
योगक्षेमविधानाय तथा लाभाय केवलम् ॥५६ ॥
प्रतिकूलो भवेद्यस्तु पाथिवानां स मन्दधीः ॥
न तस्य जायते सौख्यं कथंचिद्द्विजसत्तम ॥ ५७ ॥
ये जात्यादि महोत्सेकान्न नरेंद्रानुपासते ॥
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ ५८ ॥
एवं तयोर्विवदतोस्तदा वै गुरुशिष्ययोः ॥
भूयोऽपि तत्र संप्राप्ताः पुरुषाः पार्थिवेरिताः ॥ ५९ ॥
प्रोचुश्च त्वरया युक्ताः शाकल्यं प्रांजलिस्थिताः ॥
शिष्यं तं प्रेषय क्षिप्रं राजा मार्गं प्रतीक्षते ॥ ६.२७८.६० ॥
असकृत्प्रोच्यमानोऽपि यदा गच्छति नैव सः ॥
तदा संप्रेषयामास उद्दालकमथारुणिम् ॥ ६१ ॥
शिष्यं विनयसंपन्नं कृतांजलिपुटं स्थितम् ॥
गच्छ वत्स समादेशात्सांप्रतं नृपमंदिरम् ॥ ६२ ॥
शांतिकर्म विधायाथ स्वाध्यायं च ततः कुरु ॥ ६३ ॥
स तथेति प्रतिज्ञाय गत्वा तं पार्थिवालयम् ॥
चकार शांतिकं कर्म विधिदृष्टेन कर्मणा ॥ ६४ ॥
ततः कलशतोयं स साक्षतं सुमनोन्वितम् ॥
गृहीत्वोपाद्रवत्तत्र यत्र राजा व्यवस्थितः ॥ ॥ ६५ ॥

॥ राजोवाच ॥ ॥

स्वकीयमन्त्रलिंगेन अभिषेकं तु यच्छ भोः ॥

काष्ठस्यास्य यदग्रे ते प्रोत्थितं तिष्ठते द्विज ॥ ६६ ॥

ततस्तेन शुभं मंत्रं प्रोच्याभीष्टं जलं स्वयम् ॥

अभिषिच्य च तत्काष्ठं ततश्च स्वगृहं ययौ ॥ ६७ ॥

तावद्रूपं च तत्काष्ठं दृष्ट्वाऽऽनर्तो महीपतिः ॥

विषादसहितश्चैव पश्चात्तापसमन्वितः ॥ ६८ ॥

भूयस्तु प्रेषयामास याज्ञवल्क्यकृते तदा ॥

अन्यं दूतं विदग्धं च शाकल्यस्य द्विजाश्रयम्॥ ६९ ॥

वेदना कायसंस्था मे वर्तते द्विजसत्तम ॥

शांत्यर्थं प्रेषया क्षिप्रं तं शिष्यं पूर्वसंचितम् ॥ ६.२७८.७० ॥

अपमानं कृतं तस्य मया कल्ये द्विजोत्तम ॥

तेन मे सहसा व्याधिराशीर्वादमनिच्छतः ॥ ७१ ॥

तस्मात्प्रेषय मे शीघ्रं येन मे स्वस्थता भवेम् ॥

असकृत्प्रोच्यमानोऽपि यदा नैव स गच्छति ॥ ७२ ॥

याज्ञवल्क्यस्ततः शिष्यमन्यं प्रोवाच सादरम् ॥

ततस्तं मधुकं पैग्यं प्रेषयामास तद्गृहे ॥ ॥। ७३ ॥

तेनापि विहितं तच्च यथोद्दालकनिर्मितम् ॥

आशीर्वादो नृपोद्देशाद्दत्तः काष्ठस्य तस्य च ॥ ७४ ॥

तद्रूपमपि तत्काष्ठं दृष्ट्वा भूयोऽपि पार्थिवः ॥

अन्यं संप्रेषयामास याज्ञवल्क्यकृते नरम् ॥ ७९ ॥

असकृत्प्रोच्यमानोऽपि याज्ञवल्क्यो व्रजेन्न हि ॥

यदा तदा बहुगुणमन्यं शिष्यं प्रदिष्टवान्॥ ७६ ॥

प्रचूडं भागवित्तिं च सोऽपि गत्वा यथा पुरा ॥

चकार शांतिकं कर्म यथा ताभ्यां पुरा कृतम्॥ ७७ ॥

ततः शांत्युदकं तस्मिन्प्राक्षिपच्चैव दारुणि ॥

मंत्रवच्च तथाप्येव तद्रूपं च व्यवस्थितम् ॥ ७८ ॥

ततः स्वयं ययौ राजा शाकल्यस्य निवेशनम् ॥

याज्ञवल्क्यस्य मन्त्रार्थं पश्चात्तापसमन्वितः ॥ ७९ ॥

प्रणम्य स द्विजश्रेष्ठः शाकल्यं च द्विजोत्तमम्॥

शांत्यर्थं मम हर्म्ये त्वं कल्ये शिष्यं समादिश ॥

येन मे जायते शांतिः शरीरस्य द्विजोत्तम ॥ ६.२७८.८० ॥

ततः प्रोवाच शाकल्यो याज्ञवल्क्यं द्विजोत्तमाः ॥

भूयोऽपि शृण्वतस्तस्य आनर्तस्य महीपतेः ॥ ८१ ॥

याज्ञवल्क्य द्रुतं गच्छ ममादेशान्नृपालयम् ॥

राज्ञोस्य रोगनाशाय शांतिकं कुरु पुत्रक ॥ ॥ ८२ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

नाहं तत्र गमिष्यामि गुरो मैवं ब्रवीहि माम् ॥

अपमानः कृतोऽनेन गुरो मम महीभुजा ॥ ८३ ॥

तस्य तद्वचनं श्रुत्वा स कोपं परमं गतः ॥

अब्रवीद्भर्त्सयमानस्तु याज्ञवल्क्यं ततः परम् ॥ ८४ ॥

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥

पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी भवेत् ॥ ८५ ॥

यस्मात्त्वं शिष्यतां गत्वा मम वाक्यं करोषि न ॥

तस्मात्त्वां योजयिष्यामि ब्रह्म शापेन सांप्रतम् ॥ ८६ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

अन्यायेन हि चेच्छापं गुरो मम प्रदास्यसि ॥

अहमप्येव दास्यामि प्रतिशापं तवाधुना ॥ ८७ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥

उत्पथे वर्तमानस्य परित्यागो विधीयते ॥ ८८ ॥

तस्मात्त्वं हि मया त्यक्तः सांप्रतं हि न मे गुरुः ॥

अविशषेण शिष्यार्थं यदादेशं प्रयच्छसि ॥ ८९ ॥

यावंतस्ते स्थिताः शिष्यास्तावद्भिर्दिवसैरहम् ॥

तवादेशं करिष्यामि नोचेद्यास्यामि दूरतः ॥ ६.२७८.९० ॥

॥ शाकल्य उवाच ॥ ॥

यदि गच्छसि चान्यत्र तत्त्वं विद्यां परित्यज ॥

यां मया पाठितः पाप व्रज पश्चात्कुशिष्य भोः ॥ ९१ ॥

मयाभिमंत्रितं तोयं क्षुरिकामुण्डसंभवम् ॥

पिब तस्याः प्रभावेण शीघ्रमेव त्यजिष्यसि ॥

जठरान्मामकीं विद्यां त्वयाधीता पुरा तु या ॥९२ ॥

एवमुक्त्वा स चामंत्र्य मंत्रैराथर्वणैर्जलम् ॥

पानाय प्रददौ तस्मै वांत्यर्थं सद्विजोत्तमः ॥ ९३ ॥

याज्ञवल्क्योऽपि तत्पीत्वा जलं तेनाभिमंत्रितम् ॥

वांतिं कृत्वा सहान्नेन तद्विद्यां तां परित्यजत् ॥ ९४ ॥

ततो मूढत्वमापन्नो विश्वामित्रह्रदं शुभम् ॥

गत्वा स्नातो विधानेन शुचि र्भूत्वा समाहितः ॥ ९५ ॥

चकार मूर्तीस्ता भक्त्या रवेर्द्वादशसंख्यया ॥

प्रतिष्ठाप्य ततः सर्वाः पूजयामास भक्तितः ॥ ९६ ॥

धाता मित्रोऽर्यमा शक्रो वरुणः सांब एव च ॥

भगो विवस्वान्पूषा च सविता दशमस्तथा ॥

एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥ ९७ ॥

एवं द्वादशधा सूर्यः स्थापितोऽत्र विपश्चिता ॥

आराधितस्ततो नित्यं गन्धपुष्पानुलेपनैः ॥ ९८ ॥

ततः कालेन महता गत्वा प्रत्यक्षतां रविः ॥

प्रोवाच सुन्दरं प्रीत्या वाक्यमेतन्मुनिं प्रति ॥ ९९ ॥

याज्ञवल्क्य प्रतुष्टोऽहं तव ब्राह्मणसत्तम ॥

इष्टं ददामि ते ब्रूहि यद्यत्संप्रति वांछितम् ॥ ६.२७८.१०० ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

वरं ददासि चेन्मह्यं वेदपाठे नियोजय ॥

मां विभो येन शिष्यत्वं तव गच्छामि सांप्रतम् ॥ १०१ [।

॥ आदित्य उवाच ॥ ॥

मया पर्यटनं कार्यं सदैव द्विजसत्तम ॥

मेरोः प्रदक्षिणार्थाय लोकालोककृते द्विज ॥ १०२ ॥

तत्कथं योजयामि त्वां वेदपाठेन स द्विज ॥ १०३ ॥

तस्मात्त्वं लघुतां गत्वा मम मुख्यहयस्य च ॥
श्रवणे तिष्ठ मद्वाक्यात्तेजसा चैव येन मे ॥ १०४ ॥
न दह्यसि महाभाग तत्र स्थोऽध्ययनं कुरु ॥
स तथेति प्रतिज्ञाय प्रविश्यादित्यवाजिनः ॥ १०५ ॥
कर्णेऽपठत्ततो वेदांश्चतुरोऽपि च तन्मुखात् ॥
अंगोपांगसमोपेतान्परिशिष्टसमन्वितान् ॥ १०६ ॥
ततः समाप्ते स प्राह प्रार्थयस्व विभो हि माम् ॥
प्रदास्यामि न सन्देहस्तवाद्य गुरुदक्षिणाम् ॥ १०७ ॥
॥ आदित्य उवाच ॥ ॥
यानि सूक्तानि ऋग्वेदे मदीयानि द्विजोत्तम ॥
सावनानि यजुर्वेदे सामानि च तृतीयके ॥ १०८ ॥
कल्पोक्तानि चतुर्थे च तानि सर्वाणि भूतले ॥
त्वया प्रचारणीयानि कृत्वा व्याख्यानमुत्तमम् ॥ १.९ ॥
ये द्विजास्तानि सर्वाणि कीर्तयिष्यंति मे पुरः ॥
ते सर्वे पाप निर्मुक्ताः प्रयास्यंति दिवालयम् ॥ ६.२७८.११० ॥
व्याख्यास्यंति पुनर्ये च मम भक्तिपरायणाः ॥
ते यास्यंति द्विजा मुक्तिं सत्यमेतन्मयोदितम् ॥ ॥ १११ ॥
॥ सूत उवाच ॥ ॥
एवं वेदान्पठित्वा स प्रदत्त्वा गुरुदक्षिणाम् ॥
सूर्यायाभ्यागतो भूयश्चमत्कारपुरं प्रति ॥ ११२ ॥
ततः शाकल्यमभ्येत्य गुरुस्त्वं प्राङ् मम स्थितः ॥
प्रार्थयस्व महाभाग दास्यामि गुरुदक्षिणाम् ॥ ११३ ॥
ज्येष्ठो भ्राता पिता चैव माता चैव गुरुस्तथा ॥
वैरुद्ध्येनापि वर्तंते यद्येते द्विजसतम ॥
तथापि पूजनीयाश्च पुरुषेण न संशयः ॥ ११४ ॥
सांगोपांगा मयाधीता वेदाश्चत्वार एव च ॥
अधीताश्चैव सर्वेषां तेषामर्थोऽवधारितः ॥ ११५ ॥
तत्त्वं वद महाभाग कां ते यच्छामि दक्षिणाम् ॥ ११६ ॥

॥ शाकल्य उवाच ॥ ॥

यानि वेदरहस्यानि सूर्येण कथितानि ते ॥ ११७ ॥

यैः स्यात्पापप्रणाशश्च व्याख्यातैः पठितैस्तथा ॥

तानि मे कीर्तय क्षिप्रमेषा मे गुरुदक्षिणा ११८ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

तदागच्छ मया सार्धं यत्र सूर्याः प्रतिष्ठिताः ॥

मया द्वादश तेषां च कीर्तयिष्यामि चात्रतः ॥११९॥

तच्छ्रुत्वा शिष्यसंयुक्तः शाकल्यस्तैश्च सद्द्विजैः ॥

शिष्यैस्तिष्ठन्ति ये तत्र स्थापितास्तेन भास्कराः ॥ ६.२७८.१२० ॥

ततस्तु कीर्तयामास व्याख्यानं तत्पुरः स्थितः ॥

वेदान्तानां च सर्वेषां यथोक्तं रविणा पुरा ॥ १२१ ॥

अवसाने च तेषां तु चतुश्चरणसंभवैः ॥

ब्राह्मणैर्याज्ञवल्क्यस्तु वेदान्तज्ञैः प्रतोषितः ॥ १२२ ॥

प्रोक्तस्तव प्रसादेन वेदांतज्ञा वयं स्थिताः ॥

श्रुताध्ययनसंपन्ना याचस्व गुरुदक्षिणाम् ॥ १२३ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

एतेषां भास्कराणां च मदीयानां पुरो द्विजाः ॥

कीर्तयिष्यंति ये विप्रास्तेषां युष्मत्प्रसादतः ॥

भूया स्वर्गगतिर्विप्रा एषा मे गुरु दक्षिणा ॥ १२४ ॥

ये पुनर्भक्तिसंयुक्ताः करिष्यंति विचारणम् ॥

तेषां तुर्यपदं यच्च जरामरणवर्जितम् ॥ १२५ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

भविष्यति कलौ विप्रा दौस्थ्यभावसमन्विताः ॥

पठने नैव शक्ताश्च व्याख्यानस्य च का कथा ॥ १२६ ॥

तस्मात्सारस्वतं ब्रूहि वेदानां द्विजसत्तम ॥

अपि दौस्थ्यसमायुक्ता येन ते कीर्तयंति च ॥ १२७ ॥

॥ याज्ञवल्क्य उवाच ॥ ॥

रथं युञ्जंति सूक्तं यत्प्रथमं वित्तलक्षणम् ॥

त्रिष्टुभेति च यत्सूक्तं तथाद्यं ब्राह्मणोत्तमाः ॥ १२९३ ॥

चित्रं देवानामिति च तथान्यत्तस्य वल्लभम् ॥

हंसः शुचिषदित्युक्तं ततश्चापि प्रहर्षदम् ॥ १२९ ॥

पावमानं तथा सूक्तं ये पठिष्यंति बह्वृचः ॥

इत्येषामाद्यमेवं तु ते यास्यंति परां गतिम्॥ ६.२७८.१३० ॥

एकविंशतिसामानि आदित्येष्टानि यानि च ॥

सामगाः कीर्तयिष्यंति येऽत्रस्थाः शुचयः स्थिताः ॥ १३१ ॥

निश्चयं तु परं धृत्वा येऽपि स्तोष्यंति भास्करम् ॥

ततस्तेऽपि प्रयास्यंति निर्भिद्य रविमंडलम् ॥ १३२ ॥

क्षुरिकासंपुटं चैव सूर्यकल्पं तथैव च ॥

शांतिकल्पसमायुक्तं कीर्तयिष्यंति ये द्विजाः ॥ १३३ ॥

अथर्वपाठकास्तेऽपि प्रयास्यंति परां गतिम् ॥

मूर्खा अपि समागत्य संप्राप्ते सूर्यवासरे ॥ १३४ ॥

प्रणामं ये करिष्यंति श्रद्धया परया युताः ॥

सप्तरात्रकृतात्पापान्मुक्तिं प्राप्संति ते द्विजाः ॥ १३५ ॥

॥ सूत उवाच ॥ ॥

तथेति तैः प्रतिज्ञाते चतुश्चरणसंभवैः ॥

ब्राह्मणैर्याज्ञवल्क्यस्तु विज्ञातो येन केन तु ॥ ॥ १३६ ॥

विदेहेन ततः प्राप्तः श्रवणार्थं नराधिपः ॥

वेदांतानां च सर्वेषां रत्नाख्येन महीभुजा ॥ १३७ ॥

तेनापि च परिज्ञाय माहात्म्यं सूर्यसं भवम् ॥

ततः संस्थापितः सूर्यस्तस्मिन्स्थाने द्विजोत्तमाः ॥ १३८ ॥

तं चापि सूर्यवारेण यः प्रपश्यति मानवः ॥

सप्तरात्रकृतात्पापान्मुच्यते नात्र संशयः ॥ १३९ ॥

एतद्वः कथितं सर्वं माहात्म्यं सूर्यसंभवम् ॥

यः शृणोति नरो भक्त्या अश्वमेधफलं लभेत् ॥ ६.२७८.१४० ॥

संक्रांतौ यत्प्रदानेन सूर्ये वा श्रवणेन तु ॥

तत्फलं समवाप्नोति श्रुत्वा माहात्म्यमुतमम् ॥ १९१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये द्वादशार्कोत्पत्तिरत्नादित्योत्पत्तिमाहात्म्ये याज्ञवल्क्यवृत्तांतवर्णनं नामाष्टसप्तत्युत्तरद्विशततमोऽध्यायः ।। २७८ ॥

# स्कन्दपुराणम्/खण्डः ६ (नागरखण्डः)/अध्यायः २७९




सूत उवाच ॥ ॥

एतत्पुराणमखिलं पुरा स्कन्देनभाषितम् ॥

भृगवे ब्रह्मपुत्राय तस्माल्लेभे तथांगिराः ॥१॥

ततश्च च्यवनः प्राप स ऋचीकस्ततो मुनिः ॥

एवं परंपराप्राप्तं सर्वेषु भुवनेष्वपि ॥२॥

स्कांदं पुराणमेतच्च कुमारेण पुरोद्धृतम् ॥

यः शृणोति सतां मध्ये नरः पापात्प्रमुच्यते ॥ ३ ॥

इदं पुराणमायुष्यं वर्णानां च सुखावहम् ॥

निर्मितं षण्मुखेनेह नियतं सुमहात्मना ॥ ४ ॥

एवमेतत्पुरा ख्यातमाख्यानं भद्रमस्तु वः ॥ ५ ॥

हाटकेश्वरक्षेत्रस्य माहात्म्यं शृणुते नरः ॥

न तस्य पुण्यसंख्यानं कर्तुं शक्येत केनचित् ॥ ६ ॥

य इदं धर्ममाहात्म्यं ब्राह्मणाय प्रयच्छति ॥

स्वर्गलोके वसेत्तावद्यावदक्षरसंख्यया ॥७॥

यथा हि वर्षतो धारा यथा वा दिवि तारकाः ॥

गंगायां सिकता यद्वत्तद्वत्संख्या न विद्यते ॥ ८ ॥

यो नरः शृणुयाद्भक्त्या दिनानि च कियंति वै ॥

सर्वार्थसिद्धो भवति य इमां पठते कथाम् । ९ ॥

पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥

लभते पतिकामा या पतिं कन्या मनोरमम् ॥ ६.२७९.१० ॥

समागमं लभंते च वांधवाश्च प्रवासिभिः ॥

स्कांदं पुराणं श्रुत्वा तु पुमाना प्नोति वांछितम् ॥ ११ ॥

शृण्वतः पठतश्चैव सर्वकामप्रदं नृणाम् ॥

महीं विजयते राजा शत्रूंश्चाप्यधितिष्ठति ॥ १२ ॥

पुण्यं श्रुत्वा पुराणं वै दीर्घमा युश्च विंदति ॥

वेदविच्च भवेद्विप्रः क्षत्रियो राज्यमाप्नुयात् ॥ १३ ॥

धनं धान्यं तथा वैश्यः शूद्रः सुखमवाप्नुयात् ॥

यः श्लोकपादं शृणुयाद्विष्णुलोकं स गच्छति ॥ १४ ॥

श्रुत्वा पुराणमेतद्धि वाचकं यस्तु पूजयेत् ॥

तेन ब्रह्मा च विष्णुश्च रुद्रश्चैव प्रपूजितः ॥ १५ ॥

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्॥

पृथिव्या नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥१६॥

अतः संपूजनीयस्तु व्यासः शास्त्रोपदेशकः ॥

गोभूहिरण्यवस्त्राद्यैर्भोजनैः सार्व कामिकैः ॥१७॥

य एवं भक्तियुक्तस्तु श्रुत्वा शास्त्रमनुतमम् ॥

पूजयेदुपदेष्टारं स शैवं पदमाप्नुयात् ।। १८ ॥

पुराणश्रवणादेव अनेकभवसंचितम् ॥

पापं प्रशममायाति सर्वतीर्थफलं लभेत् ॥१९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे श्रीहाटकेश्वरक्षेत्रमाहात्म्ये पुराणश्रवणमाहात्म्यवर्णनंनामैकोनाशीत्युत्तरद्विशततमोऽध्यायः ॥२७९॥ ॥

इति श्रीस्कांदे महापुराणे षष्ठं नागरखण्डं समाप्तम् ॥ ६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००१



॥ अथश्रीस्कान्दे महापुराणे सप्तमं प्रभासखण्डम् ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥

॥ अथ प्रभासखण्डं प्रारभ्यते ॥

॥ तत्रेदं प्रथमं प्रभासक्षेत्रमाहात्म्यम् ॥ ५ ॥

ॐनमः श्रीपरमात्मने परमपुरुषोत्तमाय ॥

ॐ नमो हरिहरहिरण्यगर्भेभ्यो नमो व्यासवाल्मीकिशुकपराशरेभ्यः ॥

॥ व्यास उवाच ॥ ॥

यश्चाद्यः पुरुषः पुराण इति यः संस्तूयते सर्वतः सोमेशः सुरसंयुतः क्षितितले यैर्वीक्षितो हीक्षणैः॥

ते तीर्त्वा विततांतरं भवभयं भूत्याऽभिसंभूषिताः स्वर्गं यानवरैःप्रयान्ति सुकृतैर्यज्ञै यथा यज्विनः ॥ १ ॥

प्रसरद्विन्दुनादाय शुद्धामृतमयात्मने ॥

षड्त्रिंशत्तत्वदेहाय नमश्चिन्मात्रमूर्तये ॥ २ ॥

अमृतेनोदरस्थेन म्रियन्ते सर्वदेवताः ॥

कंठस्थित विषेणापि यो जीवति स पातुः वः ॥ ३ ॥

सत्रान्ते सूतमनघं नैमिषेया महर्षयः॥

पुराणसंहितां पुण्यां पप्रच्छू रोमहर्षणम्॥ ४ ॥

त्वया सूत महा बुद्धे भगवान्ब्रह्मवित्तमः ॥

इतिहासपुराणार्थे व्यासः सम्यगुपासितः ॥ ५ ॥

तस्य ते सर्वरोमाणि वचसा हर्षितानि यत् ॥

द्वैपायनस्यानुभावात्ततोऽभू रोमहर्षणः ॥ ६ ॥

भवन्तमेव प्रथमं व्याजहार स्वयं प्रभुः ॥

मुनीनां संहितां वक्तुं व्यासः पौराणिकीं कथाम् ॥ ७ ॥

त्वं हि स्वायंभुवे यज्ञे सुत्याहे वितते हरिः ॥

संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥ ८ ॥

तस्माद्भवन्तं पृच्छामः पुराणे स्कन्दकीर्तिते ॥

प्रभासक्षेत्रमाहात्म्ये ब्राह्मी यात्रा श्रुता पुरा ॥ ९ ॥

अधुना वैष्णवीं रौद्रीं यात्रां सर्वार्थसंयुताम् ॥

वक्तुमर्हसि चास्माकं पुराणार्थविशारद ॥ 7.1.1.१० ॥

मुनीना वचनं श्रुत्वा सूतः पौराणिकोत्तमः ॥

प्रणम्य शिरसा प्राह व्यासं सत्यवतीसुतम् ॥ ११ ॥

॥ रोमहर्षण उवाच ॥ ॥

श्रीवत्सांकं जगद्योनिं हरिमोंकाररूपिणम् ॥

अप्रमेयं गुरुं देवं निर्मलं निर्मलाश्रयम् ॥ १२ ॥

हंसं शुचिषदं व्योम व्यापकं सर्वदं शिवम् ॥

उदासीनं निरायासं निष्प्रपञ्चं निरञ्जनम् ॥ १३ ॥

शून्यं बिंदुस्वरूपं तु ध्येयं ध्यानविवर्जितम् ॥

अस्ति नास्तीति यं प्राहुः सुदूरे चान्तिके च यत् ॥ १४ ॥

मनोग्राह्यं परं धाम पुरुषाख्यं जगन्मयम् ॥

हृत्पंकजसमासीनं तेजोरूपं निरिन्द्रियम् ॥ १५ ॥

एवंविधं नमस्कृत्य परमात्मानमीश्वरम् ॥

कथां वदिष्ये द्विविधां द्विशरीरां तथैव तु ॥ १६ ॥

दिव्यभाषासमोपेतां वेदाधिष्ठानसंयुताम् ॥

पञ्चसंधिसमायुक्तां षडलंकारभूषिताम् ॥ १७ ॥

सप्तसाधनसंयुक्तां रसाष्टगुणरंजिताम् ॥

गुणैर्नवभिराकीर्णां दशदोषविवर्जिताम् ॥ १८ ॥

विभाषाभूषितां तद्वदेकायत्तां मनोहराम् ॥

पञ्चकारणसंयुक्तां चतुष्करणसम्मताम् ॥१९ ॥

Comments on Prabhaasa

पुनश्च द्विविधां तद्वज्ज्ञानसंदोहदायिनीम् ॥

व्यासेन कथितां पुण्यां शृणुध्वं पापनाशिनीम् ॥ 7.1.1.२० ॥

यां श्रुत्वा पापकर्मापि गच्छेद्धि परमां गतिम् ॥

दुःखत्रयविनिर्मुक्तः सर्वातङ्कविवर्जितः ॥ २१ ॥

न नास्तिके कथां पुण्यामिमां ब्रूयात्कदाचन ॥

श्रद्दधानाय शान्ताय कीर्तनीया द्विजातये ॥२२ ॥

निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ॥

तस्य शास्त्रेऽधिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित्॥ २३ ॥

चतुःपक्षावदातस्य विशुद्धिर्ब्राह्मणस्य च ॥

सद्वृत्तस्याधिकारोऽस्ति शास्त्रेऽस्मिन्वेदसम्मते ॥ २४ ॥

यथा सुराणां प्रवरो देवदेवो महेश्वरः ॥

नदीनां च यथा गंगा वर्णानां ब्राह्मणो यथा ॥ २५ ॥

अक्षराणां तु सर्वेषामोंकारः प्रथमो यथा ॥

पूज्यानां तु यथा माता गुरूणां च यथा पिता ॥

तथैव सर्वशास्त्राणां प्रधानं स्कन्दकीर्तितम् ॥ २६ ॥

पुरा कैलासशिखरे ब्रह्मादीनां च सन्निधौ ॥

स्कान्दं पुराणं कथितं पार्वत्यग्रे पिनाकिना ॥ ॥ २७ ॥

पार्वत्या षण्मुखस्याग्रे तेन नन्दिगणाय वै ॥

नन्दिना तु कुमाराय तेन व्यासाय धीमते ॥ २८ ॥

व्यासेन मे समाख्यातं भवद्भ्योऽहं प्रकीर्तये ॥ २९ ॥

यूयं सद्भावसंयुक्ता यतः सर्वे महर्षयः ॥

तेन मे भाषितुं श्रद्धा भवतां स्कन्दसंहिताम् ॥ 7.1.1.३० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रश्नाध्यायवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००२

https://sa.wikisource.org/s/g42
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ऋषय ऊचुः ॥ ॥

कथाया लक्षणं ब्रूहि गुणदोषान्सविस्तरान् ॥

आर्षेयपौरुषेयाणां काव्यचिह्नपरीक्षणम् ॥

कथं ज्ञेयं महाबुद्धे श्रोतुमिच्छामहे वयम् ॥ १ ॥

॥ सूत उवाच ॥ ॥

अथ संक्षेपतो वक्ष्ये पुराणानामनुक्रमम् ॥

लक्षणं चैव संख्यां च उक्तभेदांस्तथैव च ॥ २ ॥

पुरा तपश्चचारोग्रममराणां पितामहः ॥

आविर्भूतास्ततो वेदाः सषडंगपदक्रमाः ॥ ३ ॥

ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ॥

नित्यशब्दमयं पुण्यं शत कोटिप्रविस्तरम् ॥ ४ ॥

निर्गतं ब्रह्मणो वक्त्राद्ब्राह्मं वैष्णवमेव च ॥

शैवं भागवतं चैव भविष्यं नारदीयकम् ॥ ५ ॥

मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्तमेव च ॥

लैङ्गं तथा च वाराहं स्कांदं वामनमेव च ॥ ६ ॥

कौर्म्यं मात्स्यं गारुडं च वायवीयमनन्तरम् ॥

अष्टादशं समुद्दिष्टं सर्वपातकनाशनम् ॥ ॥ ७ ॥

एकमेव पुरा ह्यासीद्ब्रह्माण्डं शतकोटिधा ॥ ८ ॥

ततोऽष्टादशधा कृत्वा वेदव्यासो युगेयुगे ॥

प्रख्यापयति लोकेऽस्मिन्साक्षान्नारायणांशजः ॥ ९ ॥

अन्यान्युपपुराणानि मुनिना कथितानि तु ॥

तानि वः कथयिष्यामि संक्षेपादवधार्यताम् ॥ 7.1.2.१० ॥

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥

तृतीयं स्कान्दमुद्दिष्टं कुमारेणानुभाषितम् ॥ ११॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्॥

दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ॥१२॥

कापिलं मानवं चैव तथैवोशनसेरितम्॥

ब्रह्माण्डं वारुणं चान्यत्कालिकाह्वयमेव च॥ १३॥

माहेश्वरं तथा सांबं सौरं सर्वार्थसंचयम्॥।

पराशरोक्तं परमं मारीचं भार्गवाह्वयम् ॥१४॥

एतान्युपपुराणानि कथितानि द्विजोत्तमाः॥१५॥

॥ ऋषय ऊचुः ॥ ॥

पुराणसंख्यामाचक्ष्व सूत विस्तरशः क्रमात्॥

दानधर्ममशेषज्ञ यथावदनुपूर्वशः ॥ १६॥

॥ सूत उवाच ॥ ॥

इदमेव पुराणेऽस्मिन्पुराणपुरुषस्तदा ॥

यदुक्तवान्स विश्वात्मा मनवे तन्निबोधत ॥१७॥

पुराणं सर्वशास्त्राणां ब्रह्माण्डं प्रथमं स्मृतम् ॥

अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥१८॥

पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेतथा॥

त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ १९॥

विनिर्दग्धेषु लोकेषु कृष्णेनानन्तरूपिणा ॥

साङ्गांश्च चतुरो वेदान्पुराणन्यायविस्तरम् ॥7.1.2.२०॥।

मीमांसां धर्मशास्त्रं च परिगृह्यात्मसात्कृतम् ॥

मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे॥२१॥

अशेषमेव कथितं ब्रह्मणे दिव्यचक्षुषे ॥

ब्रह्मा जगाद च मुनींस्त्रिकालज्ञानदर्शनः ॥ २२ ॥

प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥ २३ ॥

ततः कालक्रमेणासौ व्यासरूपधरो हरिः ॥

अष्टादशपुराणानि संक्षेप्स्यति युगेयुगे ॥ २४ ॥

चतुर्लक्षप्रमाणानि द्वापरेद्वापरे सदा ॥

तदाष्टादशधा कृष्णा भूर्लोकेऽस्मिन्प्रभाषते ॥ २५ ॥

अद्याऽपि देवलोके तु शतकोटिप्रविस्तरम् ॥

तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशितः ॥ २६ ॥

पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते॥

नामतस्तानि वक्ष्यामि संख्यां च मुनिसत्तमाः ॥ २७ ॥

ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ॥

ब्राह्मं तद्दशसाहस्रं पुराणं तदिहोच्यते ॥ २८ ॥

लिखित्वा तच्च यो दद्याज्जलधेनुसमन्वितम् ॥

वैशाख्यां पौर्णमास्यां च ब्रह्मलोके महीयते ॥ २९ ॥

एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ॥

तद्वृत्तांताश्रयांतं तत्पाद्ममित्युच्यते बुधैः ॥ 7.1.2.३० ॥

पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह पठ्यते ॥

तत्पुराणं च यो दद्यात्सुवर्णकमलान्वितम् ॥

ज्येष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ॥ ३१ ॥

वाराहकल्पवृत्तान्तमधिकृत्य परात्परः ॥

यत्राह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः ॥३२॥

चरितैरञ्चितं विष्णोस्तल्लोके वैष्णवं विदुः ॥

त्रयोविंशतिसाहस्रं पुराणं तत्प्रकीर्तितम् ॥ ३३ ॥

तदाषाढे च यो दद्याद्घृतधेनुसमन्वितम् ॥

पौर्णमास्यां विशुद्धायां सं पदं याति वैष्णवम् ॥ ३४ ॥

श्रुतकल्पप्रसङ्गेन धर्मान्वायुरथाब्रवीत् ॥

यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ॥ ३५ ॥

चतुर्विंशतिसाहस्रं नाना वृत्तान्तसंयुतम् ॥

धर्मार्थकाममोक्षैश्च साधुवृत्तसमन्वितम्॥ ३६ ॥

श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम् ॥

यो दद्याद्दधिसंयुक्तं ब्राह्मणाय कुटुम्बिने ॥

शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः ॥ ३७ ॥

पुनः संजायते मर्त्यो ब्राह्मणो वेदवित्तमः ॥

वेदविद्यार्थतत्त्वज्ञो व्याख्यातत्त्वार्थवित्तमः ॥ ३८ ॥

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ॥

वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥ ३९ ॥

सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः॥

तद्वृत्तान्तोद्भवं पुण्यं पुण्योद्वाहसमन्वितम् ॥ 7.1.2.४० ॥

लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ॥

पौर्णमास्यां प्रौष्ठपद्यां स याति परमां गतिम् ॥ ॥४१॥

अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्॥४२॥

यत्राह नारदो धर्मान्बृहत्कल्पाश्रयांस्त्विह ॥

पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥४३॥

तदिषे पञ्चदश्यां तु यो दद्याद्धेनुसंयुतम्॥

उत्तमां सिद्धिमाप्नोति इह लोके परत्र च॥

सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥४४॥

यत्राधिकृत्य शकुनीन्धर्माधर्मविचारणम् ॥

पुराणं नवसाहस्रं मार्कण्डेयं तदुच्यते ॥ ४५॥

परिलिख्य च यो दद्यात्सौवर्णकरिसंयुतम् ॥

कार्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् ॥ ४६ ॥

यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ॥

वशिष्ठायाऽग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते ॥ ४७ ॥

लिखित्वा तच्च यो दद्याद्धेमपद्मसमन्वितम् ॥

मार्गशीर्षे विधानेन तिलधेनुयुतं तथा ॥

तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम् ॥ ४८ ॥

यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ॥

अघोरकल्पवृत्तान्तप्रसंगेन जगत्पतिः ॥

मनवे कथयामास भूतग्रामस्य लक्षणम् ॥ ४९ ॥

चतुर्दशसहस्राणि तथा पञ्चशतानि च ॥

भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥ 7.1.2.५० ॥

तत्पौषमासि यो दद्यात्पौर्णमास्यां विमत्सरः ॥

गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् ॥ ॥ ५१ ॥

रथंतरस्य कल्पस्य वृत्तान्तमधिकृत्य च ॥
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥
प्रोक्तं ब्रह्मवराहस्य चरितं वर्ण्यतेऽत्र च ॥५२॥
तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते ॥
पुराणं ब्रह्मवैवर्तं यो दद्याद्ब्राह्मणोत्तमे ॥
माघमासे पौर्णमास्यां ब्रह्मलोके महीयते ॥ ५३ ॥
यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ॥
धर्मार्थकाममोक्षार्थानाग्नेयमधिकृत्य च ॥ ५४ ॥
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥ ५५ ॥
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ॥
तिलधेनुसमायुक्तं स याति शिवसात्म्यताम् ॥५६॥
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ॥
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥५७॥
मानवस्य प्रसंगेन धन्यस्य मुनिसत्तमाः ॥
चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥ ५८ ॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम्॥
पौर्णमास्यामथो दद्याद्ब्राह्मणाय कुटुम्बिने॥
वाराहस्यप्रसादेन पदमाप्नोति वैष्णवम्॥५९॥
यत्र माहेश्वरान्धर्मानधिकृत्य च षण्मुखम् ॥
कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ॥7.1.2.६॥।
स्कांदं नाम पुराणं तदेकाशीति निगद्यते॥
सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते॥६१॥
परिलेख्य च यो दद्याद्धेमशूलसमन्वितम् ॥
शैवं स पदमाप्नोति मकरोपगमे रवेः ॥ ६२ ॥
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥
त्रिवर्गमभ्यधात्तत्तु वामनं परिकीर्तितम् ॥ ६३॥
पुराणं दशसाहस्रं कौर्मकल्पानुगं शिवम्॥ ६४ ॥
यः शरद्विषुवे दद्याद्धेमवस्त्रसमन्वितम्॥

क्षौमावृतं युतं धेन्वा स पदं याति वैष्णवम् ॥६५॥

यच्च धर्मार्थकामानां मोक्षस्य च रसातले ॥

माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥६६॥

इन्द्रद्युम्नप्रसंगेन ऋषीणां शक्रसन्निधौ ॥

सप्तदशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥६७॥

यो दद्यादयने कौर्मं हेमकूर्मसमन्वितम्॥

गोसहस्रप्रदानस्य स फलं प्राप्नुयान्नरः॥६८॥

श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः॥

मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ॥६९॥

अधिकृत्याब्रवीत्सप्तकल्पवृत्तं मुनिव्रताः॥।

तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥ 7.1.2.७० ॥

विषुवे हैममत्स्येन धेन्वा क्षौमयुगान्वितम् ॥

यो दद्यात्पृथिवी तेन दत्ता भवति चाखिला ॥॥ ॥७१॥

यदा वा गरुडे कल्पे विश्वाण्डाद्गरुडोऽभवत् ॥

अधिकृत्याब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥७२॥

तदष्टादश चैकं च सहस्राणीह पठ्यते ॥।

स्वर्णहंससमायुक्तं यो दद्यादयने परे ॥

स सिद्धिं लभते मुख्यां शिवलोके च संस्थितिम् ॥ ७३ ॥

ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ॥

तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥७४॥

भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ॥

तद्ब्रह्माण्डं पुराणं तु ब्रह्मणा समुदाहृतम् ॥ ७९ ॥

यो दद्यात्तु व्यतीपात ऊर्णायुगसमन्वितम् ॥

राजसूयसहस्रस्य फलमाप्नोति मानवः ॥ ७६ ॥

हेमधेन्वायुतं तच्च ब्रह्मलोकफलप्रदम्॥

चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा ॥ ७७ ॥

इदं लोकहितार्थाय संक्षिप्तं द्वापरे द्विजाः ॥ ७८ ॥

इदमद्यापि देवेषु शतकोटिप्रविस्तरम् ॥

उपभेदान्प्रवक्ष्यामि लोके ये संप्रतिष्ठिताः ॥ ७९ ॥

पाद्मे पुराणे यत्प्रोक्तं नारसिंहोपवर्णनम् ॥

तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ॥ 7.1.2.८० ॥

नन्दिने यत्र माहात्म्यं कार्तिकेयेन वर्णितम् ॥

लोके नन्दिपुराणं वै ख्यातमेतद्द्विजोत्तमाः ॥ ८१ ॥

यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् ॥

प्रोच्यते तत्पुनर्लोके सांबमेव मुनिव्रताः ॥ ८२ ॥

एवमादित्यसंज्ञं तु तत्रैव परिपठ्यते ॥

अष्टादशभ्यस्तु पृथक्पुराणं यच्च दृश्यते ॥

विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ ८३ ॥

पञ्चाङ्गानि पुराणस्य चाख्यानमितरत्स्मृतम् ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥

वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ॥ ८४ ॥

ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ॥

संहारश्च प्रदृश्येत पुराणं पञ्चलक्षणम् ॥ ८५ ॥

धर्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्यते ॥

सर्वेष्वपि पुराणेषु तद्विरूढे च यत्फलम् ॥ ८६ ॥

सात्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ॥

राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ ८७ ॥

तद्वदग्रे च माहात्म्यं तामसेषु शिवस्य हि ॥

संकीर्णे च सरस्वत्याः पितॄणां च निगद्यते ॥ ८८ ॥

चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः ॥

अष्टादशपुराणेषु शेषेषु भगवाञ्छिवः ॥ ८९ ॥

वेदवन्निश्चलं मन्ये पुराणं वै द्विजोत्तमाः ॥

वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥ 7.1.2.९० ॥

बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति ॥

इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥ ९१ ॥

यन्न दृष्टं हि वेदेषु न दृष्टं स्मृतिषु द्विजाः ॥

उभयोर्यत्र दृष्टं च तत्पुराणेषु गीयते ॥ ९२ ॥

यो वेद चतुरो वेदान्सांगोपनिषदो द्विजः ॥

पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥ ९३ ॥

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ॥

भारताख्यानमकरोद्वेदार्थैरुपबृंहितम् ॥ ९४ ॥

लक्षेणैकेन तत्प्रोक्तं द्वापरान्ते महात्मना ॥

वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् ॥ ९५ ॥

ब्रह्मणा विहितं यच्च शतकोटिप्रविस्तरम्॥

आह तन्नारदायैव तेन वाल्मीकये पुनः ॥ ९६ ॥

वाल्मीकिना च लोके तु धर्मकामार्थसाधकम् ॥ ॥ ९७ ॥

एवं सपादाः पञ्चैते लक्षाः पुण्याः प्रकीर्तिताः ॥

पुरातनस्य कल्पस्य पुराणे तु विदुर्बुधाः ॥ ९८ ॥

इतिहासपुराणानि भिद्यन्ते काल गौरवात् ॥

स्कान्दं तथा च ब्रह्माण्डं पुराणं लैङ्गमेव च ॥ ९९ ॥

वाराहकल्पे विप्रेन्द्रास्तेषां भेदः प्रवर्तते ॥

अष्टादशप्रकारेण ब्रह्माण्डं भिन्नमेव हि ॥ 7.1.2.१०० ॥

अष्टादशपुराणानि तेन जातानि भूतले ॥

लैङ्गमेकादशविधं प्रभिन्नं द्वापरे शुभम् ॥ १०१ ॥

स्कान्दं तु सप्तधा भिन्नं वेद व्यासेनधीमता ॥

एकाशीतिसहस्राणि शतं चैकं तु संख्यया ॥ १०२ ॥

तस्याऽऽद्यो यो विभागस्तु स्कन्दमाहात्म्यसंयुतः ॥

माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः ॥ १०३ ॥

तृतीयो ब्रह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः ॥

काशीमाहात्म्यसंयुक्तश्चतुर्थः परिपठ्यते ॥ १०४ ॥

रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्तितः ॥

षष्ठः कल्पो नागरश्च तीर्थमाहात्म्यसूचकः ॥ १०५ ॥

सप्तमो यो विभागोऽयं स्मृतः प्राभासिको द्विजाः॥

सर्वे द्वादशसाहस्रा विभागाः संप्रकीर्तिताः ॥ १०६ ॥

अस्मिन्प्राभासिकः सर्वो वर्ण्यते क्षेत्रविस्तरः ॥

तीर्थानां चैव माहात्म्यं माहात्म्यं शंकरस्य च ॥ १०७ ॥

अन्येषां चैव देवानां माहात्म्यं च प्रकीर्त्यते ॥

इति भेदः पुराणानां संक्षेपात्कथितो द्विजाः ॥ १०८ ॥

इममष्टादशानां तु पुराणानामनुक्रमम्॥

यः पठेद्धव्यकव्येषु स याति भवनं हरेः॥१०९॥

इदं पवित्रं हि यशोनिधानमिदं पितृणामपि वल्लभं च॥

इदं च देवेष्वमृताय नित्यमिदं महापातकहृच्च पुंसाम्॥7.1.2.११॥।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ससंख्याकाष्टादशमहापुराणोपपुराणवर्णनपूर्वक पुराणपुस्तकदानफलवर्णनं नाम द्वितीयोऽध्यायः॥२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००३

https://sa.wikisource.org/s/g44



ऋषय ऊचुः॥

कथितो भवता सर्गः प्रतिसर्गस्तथैव च॥

वंशानुवंशचरितं पुराणानामनुक्रमः॥१॥

मन्वन्तरप्रमाणं च ब्रह्मांडस्य च विस्तरः॥

ज्योतिश्चक्रस्वरूपं च यथावदनुवर्णितम्॥

श्रोतुमिच्छामहे त्वत्तः सांप्रतं तीर्थविस्तरम्॥२॥

पृथिव्यां यानि तीर्थानि पापघ्नानि शुभानि च॥

तानि सूतज कात्स्न्र्येन यथावद्वक्तुमर्हसि॥३॥

सूत उवाच॥

इदं पृष्टं पुरा देव्या कैलासशिखरोत्तमे॥

नानाधातुविचित्रांगे नानारत्नसमन्विते॥४॥

नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते॥

यक्षविद्याधराकीर्णे ह्यप्सरोगणसेविते॥५।

तत्र ब्रहमा च विष्णुश्च स्कन्दनन्दिगणेश्वराः॥

चंद्रादित्यौ ग्रहैः सार्धं नक्षत्रध्रुवमण्डलम्॥६॥

वायुश्च वरुणश्चैव कुबेरो धनदस्तथा॥

ईशानश्चाग्निरिंद्रश्च यमो निर्ऋतिरेव च॥७॥

सरितः सागराः सर्वे पर्वता उरगास्तथा॥

ब्राह्म्याद्या मातरश्चैव ऋषयश्च तपोधनाः॥८॥

मूर्तिमंति च तीर्थानि क्षेत्राण्यायतनानि च॥

दानवासुरदैत्याश्च पिशाचा भूतराक्षसाः॥7.1.3.१०

तत्र सिंहासनं दिव्यं शतयोजनविस्तृतम्॥११।

लक्षायुतसहस्रैश्च रुद्रकोटिभिरावृतम्॥

तन्मध्ये सर्वतोभद्रं सिंहद्वारैः सुतोरणैः॥१२॥

स्वच्छमौक्तिकसंकाशं प्राकारशिखरावृतम्॥

नन्दीश्वरमहाकालद्वारपालगणैर्वृतम्॥१३॥

किंकिणीजालमुखरैः सत्यताकैरलंकृतम्॥

वितानच्छत्रखंडैश्च मुक्तादामप्रलंबितैः॥१४॥

घंटाचामरशोभाढयैर्दर्पणैश्चोपशोभितम्॥

कलशैर्द्वारविन्यस्तरत्नपल्लवसंयुतैः॥१५॥

चित्रितं चित्रशास्त्रज्ञै रत्नचूर्णैः समुज्वलैः॥

स्वस्तिकैः पत्रवल्याद्यैर्लिंगोद्भवलतादिभिः॥१६॥

शतसिंहासनाकीर्णं वेदिकाभिश्च शोभितम्॥

आसीनै रुद्रवृन्दैश्च रुद्रकन्याकदम्बकैः॥१७॥

लक्षपत्रदलाढ्यैश्च श्वेतपद्मैश्च भूषितम्॥

अप्सरोभिः समाकीर्णं पुष्पप्रकरविस्तृतम्॥१८॥

धूपितं धूपवर्त्तीभिः कुंकुमोदकसेचितम्॥

वंशवीणामृदंगैश्च गोमुखैर्मुखवादनैः॥१९॥

शंखभेरीनिनादेन दुन्दुभिध्वनितेन च॥

गर्जद्भिर्गणवृन्दैश्च मेघस्वनितनिस्वनैः॥7.1.3.२० ॥

गणानां स्तोत्रशब्देन सामवेदरवेण च॥

प्रेक्षणीयैर्महानादैर्गेयहुङ्कारशोभितम्॥२१॥

वृषनर्दितशब्देन गजवाजिरवेण च॥

कांचीनूपुरशब्देन समाकीर्णदिगंतरम्॥२२॥

सर्वसंपत्करं श्रीमच्छंकरस्यैव मंदिरम्॥

वंश वीणामृदंगैश्च नादितं तत्र तत्र ह ॥

ऋग्वेदो मूर्तिमांश्चैव शक्रनीलसमद्युतिः ॥ २३ ॥

दिव्यगन्धानुलिप्तांगो दिव्याभरणभूषितः ॥

संस्थितः पूर्वतस्तस्य दीप्यमानः स्वतेजसा ॥ २४ ॥

उत्तरेण यजुर्वेदः शुद्धस्फटिकसन्निभः ॥

दिव्यकुण्डलधारी च महाकायो महाभुजः ॥ २५ ॥

स्थितः पश्चिम दिग्भागे सामवेदः सनातनः ॥

रक्तांबरधरः श्रीमान्पप्रागसमप्रभः ॥२६॥

स्रग्दामधारी चित्रश्च गीतभूषणभूषितः ॥

अथवांऽजनवच्छयामः स्थितो दक्षिणतस्तथा ॥ २७ ॥

पिंगाक्षो लोहितग्रीवो हरिकेशो महातनुः ॥

इतिहासषडंगानि पुराणान्यखिलानि च ॥ २८ ॥

वेदोपनिषदश्छन्दो मीमांसारण्यकं तथा ॥

स्वाहाकारवषट्कारौ रहस्यानि तथैव च ॥२९॥

एतैः समन्वितैश्चैव तत्र ब्रह्मा स्वयं स्थितः ॥

शक्तिरूपधरैर्मन्त्रैर्योगैश्वर्यसमन्वितैः॥ ॥ 7.1.3.३० ॥

सहस्रपत्रकमलैरंकितैः सुरपूजितैः ॥

पूजितैर्गणरुद्रैश्च ब्रह्मविष्विंद्रवंदितैः ॥३१॥

चामराक्षेपव्यजनैर्वीजितैश्च समन्ततः ॥

शोभितश्च सदा श्रीमांश्चंद्रकोटिसमप्रभः ॥ ३२ ॥

ज्ञानामृतसुतृप्तात्मा योगैश्वर्यप्रसादकः ॥

योगींद्रमानसांभोज राजहंसो द्विजोत्तमः ॥ ३३ ॥

अज्ञानतिमिरध्वंसी षट्त्रिंशत्तत्त्वभूषणः ॥

सर्वसौख्यप्रदाता च तत्रास्ते चंद्रशेखरः ॥३४॥

तस्योत्संगगता देवी तप्तकांचनसप्रभा ॥

पूजितो योगिनीवृन्दैः साधकैः सुरकिन्नरैः ॥ ३५ ॥

सर्वलक्षणसंपूर्णा सर्वाभरणभूषिता ॥

योगसिद्धिप्रदा नित्यं मोक्षाभ्युदयदायिनीम् ॥ ३६ ॥

सौभाग्यकदलीकन्दमूलबीजं च पार्वती ॥

देवस्य मुखमालोक्य विस्मिता चारुलोचना ॥ ३७ ॥

आनंदभावं संज्ञाय आनन्दास्राविलेक्षणम् ॥

उवाच देवी मधुरं कृतांजलिपुटा सती ॥ ३८ ॥ ॥

देव्युवाच ॥ ॥

जन्मकोटिसहस्राणि जन्मकोटिशतानि च ॥

शोधितस्त्वं जगन्नाथ मया प्राणनचिंतया ॥ ३९ ॥

अर्द्धांग संस्थया वापि त्वद्वक्त्रध्यानकाम्यया ॥
तथापि ते जगन्नाथ नांतो लब्ध्वो महेश्वर ॥ 7.1.3.४० ॥
अनन्तरूपिणे तुभ्यं देवदेव नमोऽस्तु ते ॥
नमो वेदरहस्याय नमो वेदैः स्तुताय च ॥ ४१ ॥
श्मशानरतिनित्याय नमो गगनचारिणे ॥
ज्येष्ठसामरहस्याय शतरुद्रप्रियाय च ॥ ४२ ॥
नमो वृषकृतांकाय यजुर्वेदधराय च ॥
ब्रह्मांडकोटिसंलग्नमालिने गगनात्मने ॥ ४३ ॥
मणिचित्रितकन्दाय नमः सर्वार्थसिद्धये ॥
नमो वेदस्वरूपाय द्विज सिद्धिप्रियाय च ॥ ४४ ॥
पुंस्त्रीविकाररूपाय नमश्चंद्रार्द्धधारिणे ॥
नमोग्नये सहोमाय आदित्यवरुणाय च ॥ ४५ ॥
पृथिव्यै चांतरिक्षाय वायवे दीक्षिताय च ॥
संयोगाय वियोगाय धात्रे कर्त्रेऽपहारिणे ॥ ४६ ॥
प्रदीप्तशूलहस्ताय ब्रह्मदण्डधराय च ॥
नमः पतीनां पतये महतां पतये नमः ॥।. ॥ ४७ ॥
नमः कालाग्निरुद्राय सप्तलोकनिवासिने ॥
त्वं गतिः सर्वभूतानां भूतानां पतये नमः ॥ ४८ ॥
नमस्ते भगवन्रुद्र नमस्ते भगवञ्छिव ॥
नमस्ते परतः श्रेष्ठ नमस्ते परतः पर ॥ ४९ ॥
जिह्वाचापल्यभावेन खेदितोऽसि मया प्रभो ॥
तत्क्षन्तव्यं महेशान ज्ञानदिव्य नमोऽस्तु ते ॥7.1.3.५० ॥
॥ ईश्वर उवाच ॥ ॥
ममोत्संगस्थिता देवि किं त्वं सास्राविलेक्षणा ॥
अद्यापि किमपूर्णं ते तत्सर्वं करवाण्यहम् ॥ ५१ ॥
वरं ब्रवीहि भद्रं ते स्तवेनानेन सुव्रते ॥
ददामि ते न संदेहः शोकं त्यज महेश्वरि ॥ ५२ ॥
निष्कले सकले देवि स्थूले सूक्ष्मे चराचरे ॥

न तत्पश्यामि देवेशि यत्त्वया रहितं भवेत् ॥ ५३ ॥

अहं ते हृदये गौरि त्वं च मे हृदि संस्थिता ॥

अहं भ्राता च पुत्रश्च बंधुर्भर्ता तथैव च ॥ ५४ ॥

त्वं तु मे भगिनी भार्या दुहिता बांधवी स्नुषा ॥

अहं यज्ञपतिर्यज्वा त्वं च श्रद्धा सदक्षिणा ॥ ५५ ॥

ओंकारोऽहं वषट्कारः सामाहमृग्यजुस्तथा ॥

अहमग्निश्च होता च यजमानस्तथैव च ॥ ५६ ॥

अध्वर्युरहमुद्गाता ब्रह्माहं ब्रह्मवित्तथा ॥

त्वं तु देव्यरणी चैव पत्नी तु परिकीर्त्यसे ॥ ५७ ॥

स्वाहा स्वधा च सुश्रोणि त्वयि सर्वं प्रतिष्ठितम् ॥

अहमिष्टो महायज्ञः पूर्वो यज्ञस्त्वमुच्यसे ॥ ५८ ॥

पुरुषोऽहं वरारोहे प्रकृतिस्त्वं निगद्यसे ॥

अहं विष्णुर्महावीर्यस्त्वं लक्ष्मीर्लोकभाविनी ॥ ५९ ॥

अहमिन्द्रो महातेजाः प्राची त्वं परमेश्वरी ॥

प्रजापतीनां रूपेण सर्वमाहं व्यवस्थितः ॥ 7.1.3.६० ॥

तेषां या नायिकास्तास्त्वं रूपैस्तैस्तैरवस्थिता ॥

दिवसोऽहं महादेवि रजनी त्वं निगद्यसे ॥ ६१ ॥

निमेषोऽहं मुहूर्तश्च त्वं कला सिद्धिरेव च ॥

अहं तेजोऽधिकः सूर्यस्त्वं तु संध्या प्रकीर्त्त्यसे ॥ ६२ ॥

अहं बीजधरः श्रेष्ठस्त्वं तु क्षेत्रं वरानने।

अहं वनस्पतिः प्लक्षस्त्वं वनस्पतिरुच्यसे ॥ ॥ ६३ ॥

शेषरूपधरो नित्ये फणामणिविभूषितः ॥

रेवती त्वं विशालाक्षि मदविभ्रमलोचना ॥ ६४ ॥

मोक्षोऽहं सर्वदुःखानां त्वं तु देवि परा गतिः ॥

अपां पतिरहं भद्रे त्वं तु देवि सरिद्वरा ॥ ६५ ॥

वडवाग्निरहं भद्रे त्वं तु दीप्तिः प्रकीर्तिता ॥

प्रजापतिरहं कर्त्ता त्वं प्रजा प्रकृतिस्तथा ॥ ॥ ६६ ॥

नागानामधिपश्चाहं पातालतलवासिनाम् ॥

त्वं नागी नागराजोऽहं सहस्रफणभूषितः ॥ ६७ ॥

निशाकरवरश्चाहं श्रेष्ठा त्वं रजनीकरी ॥

कामोऽहं कामदो देवि त्वं रतिः स्मृतिरेव च ॥ ६८ ॥

दुर्वासाश्चाप्यहं भद्रे त्वं क्षमा समचारिणी ॥

लोभमोहतपश्चाहं त्वं तृष्णा तामसी स्मृता ॥ ६९ ॥

ककुद्मान्वृषभश्चाहं योगमाता तपस्विनी ॥

वायुरप्यहमव्यक्तस्त्वं गतिर्मनसूदनी ॥ 7.1.3.७० ॥

अहं मोचयिता लोभे निर्ममा त्वं यशस्विनि ॥

नयोऽहं सर्वकार्येषु नीतिस्त्वं कमलेक्षणा ॥ ७१ ॥

अहमन्नं च भोक्ता च ओषधी त्वं निगद्यसे ॥

अहमग्निश्च धूमश्च त्वमूष्मा ज्वालमेव च ॥ ७२ ॥

अहं संवर्त्तको मेघस्त्वं च धारा ह्यनेकशः ॥

अहं मुनीनां रूपेण त्वं तत्पत्नी प्रकीर्तिता ॥ ७३ ॥

अहं संसारकर्त्ता वै त्वं तु सृष्टिर्वरानने ॥

अहं शुक्रास्थिरोमाणि त्वं मज्जा बलमेव च ॥ ७४ ॥

पर्जन्योऽहं महाभागे त्वं वृष्टिः परमेश्वरि ॥

अहं संवत्सरो देवि त्वमृतुः परिकीर्त्तिता ॥ ७५ ॥

अहं कृतयुगो देवि त्वं तु त्रेता निगद्यसे ॥

युगोऽहं द्वापरः श्रीमांस्त्वं कलिः परमेश्वरि ॥ ७६ ॥

आकाशश्चाप्यहं भद्रे पृथिवी त्वमिहोच्यसे ॥

अहमदृश्यमूर्तिश्च दृश्यमूर्तिस्त्वमुच्यसे ॥ ७७ ॥

वरदोऽहं वरारोहे मंत्रस्त्वमिति चोच्यसे ॥

अहं द्रष्टा च श्रोता च त्वं दृश्या श्रुतिरेव च ॥७८॥

अहं वक्ता रमयिता त्वं वाच्या परमेश्वरि ॥

अहं श्रोता च गाता च त्वं गीतिर्गेयमेव च॥७९॥

अहं त्राता च गन्धश्च त्वं तु निघ्राणमेव च ॥

अहं स्पर्शयिता कर्ता स्पर्श्यस्त्वं सृष्टमेव च ॥ 7.1.3.८० ॥

अहं सर्वमिदं भूतं त्वं तु देवि न संशयः ॥

स्रष्टाऽहं तव देवेशि त्वं सृजस्यखिलं जगत् ॥ ८१ ॥

त्वया मया च देवेशि ओतप्रोतमिदं जगत् ॥

एकधा दशधा चैव तथा शतसहस्रधा ॥ ८२ ॥

ऐश्वर्येण तु संयुक्तौ सर्वप्राणि व्यवस्थितौ ॥

अहं त्वं च विशालाक्षि सततं संप्रतिष्ठितौ ॥ ८३ ॥

क्रीडामि क्रीडया देवि त्वया सार्द्धं वरानने ॥

त्वं धृतिर्धारिणी लक्ष्मीः कांता मत्प्रकृतिर्ध्रुवम् ॥ ८४ ॥

रतिः स्मृतिः कामचारी मम चांगनिवासिनी ॥

देवि किं बहुनोक्तेन प्राणेभ्योऽपि गरीयसी ॥ ८५ ॥

वरं वरय देवशि यत्किंचिन्मनसि स्थितम्॥

तत्ते ददामि तुष्टोऽहं यद्यपि स्यात्सुदुर्ल्लभम् ॥ ८६ ॥

॥ देव्युवाच ॥ ॥

धन्याहं कृतपुण्याहं तपः सुचरितं मया ॥

यत्त्वयाऽहं जगन्नाथ हर्षदृष्ट्याऽवलोकिता ॥ ८७ ॥

यदि तुष्टोऽसि मे देव वरं दातुं ममेच्छसि ॥

तन्मे कथय देवेश सांप्रतं तीर्थविस्तरम् ॥ ॥ ८८ ॥

पृथिव्यां यानि तीर्थानि पापघ्नानि शिवानि च ॥

तानि देवेश कात्स्न्र्येन यथावद्वक्तुमर्हसि ॥ ८९ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि तीर्थमाहात्म्यमुत्तमम् ॥

सर्वपापहरं नृणां पुण्यं देवर्षिसत्कृतम् ॥ 7.1.3.९० ॥

तीर्थानां दर्शनं श्रेष्ठं स्नानं चैव सुरेश्वरि ॥

श्रवणं च प्रशंसंति सदैव ऋषिसत्तमाः ॥ ९१ ॥

पृथिव्यां नैमिषं तीर्थमंतरिक्षे च पुष्करम् ॥

केदारं च प्रयागं च विपाशा चोर्मिला तथा ॥ ९२ ॥

कर्णवेणा महादेवी चंद्रभागा सरस्वती ॥

गंगासागरसंभेदस्तथा वाराणसी शुभा ॥ ९३ ॥

अर्घतीर्थं समाख्यातं गंगाद्वारं तथैव च ॥

हिमस्थानं महातीर्थं तथा मायापुरी शुभा ॥ ९४ ॥

शतभद्रा महाभागा सिन्धुश्चैव महा नदी ॥

ऐरावती च कपिला शोणश्चैव महानदः ॥ ९५ ॥

पयोधिः कौशिकी तद्वत्तथा गोदावरी शुभा ॥

देवखातं गया चैव तथा द्वारावती शुभा ॥ ९६ ॥

प्रभासं च महातीर्थं सर्वपातकनाशनम् ॥ ९७ ॥

एवमादीनि तीर्थानि यानि संति महीतले ॥

तानि दृष्ट्वा तु देवेशि पुनर्जन्म न विन्दते ॥९८॥

तिस्रः कोट्योऽर्धकोटी च तीर्थानामिह भूतले ॥

संजातानि पवित्राणि सर्वपापहराणि च ॥९९॥

गंतव्यानि महादेवि स्वधर्मस्य विवृद्धये ॥

अशक्यानि शिवान्येवं गंतुं चैव सुरेश्वरि ॥

मनसा तानि सर्वाणि गंतव्यानि समाहितैः ॥ 7.1.3.१०० ॥

। देव्युवाच॥

भगवन्प्राणिनः सर्वे सर्वोपद्रवसंकुलाः॥

अल्पायुषः सदा बद्धा व्यामोहैर्मदिरोद्भवैः॥१०१॥

त्रेतायां द्वापरे चैव किं नु वै दारुणे कलौ ॥

तस्मात्तेषां हितार्थाय तत्तीर्थं त्वं प्रकीर्तय ॥

येन दृष्टेन सर्वेषां तीर्थानां लभ्यते फलम् ॥१०२॥

एवमुक्तस्तु पार्वत्या प्रहस्य परमेश्वरः ॥

उवाच परया प्रीत्या वाचा मधुरया प्रभुः ॥१०३॥ ॥

ईश्वर उवाच ॥ ॥

त्वमेव हि चराः प्राणाः सर्वस्य जगतोरणिः ॥

त्वया विरहितो देवि मुहूर्तमपि नोत्सहे ॥१०४॥

शिवस्य च तथा शक्तेरंतरं नास्ति पार्वति ॥

न तदस्ति महादेवि यन्न जानासि शोभने ॥ १०५ ॥

त्वया विनाऽहं न क्वास्मि न त्वं देवि मया विना ॥

चंद्रचंद्रिकयोर्यद्वदग्नेरुष्णत्वमेव हि ॥ १०६ ॥

तव देवि ममापीह नास्ति चैवांतरं प्रिये ॥

सर्वं चैव सुरेशानि यथावत्कथयाम्यहम् ॥ १०७ ॥

रहस्यानां रहस्यं तु गोपनीयं प्रयत्नतः ॥

नास्तिकाय न दातव्यं न च पापरताय च ॥ १०८ ॥

दातव्यं भक्ति युक्ताय स्वशिष्याय सुताय वा ॥

पूर्वमेव मया ख्यातं सारात्सारतरं प्रिये ॥१०९॥

तीर्थोपनिषदः ख्याता लिंगोपनिषदस्तथा ॥

योगोपनिषदो देवि पूर्वं वै कथितास्तव ॥ 7.1.3.११० ॥

॥ पार्वत्युवाच ॥ ॥

लेशेनापि न सिद्ध्यंति कांक्षमाणाः परं पदम् ॥

योनीर्भ्रमंतो दृश्यंते नरा नास्तिकवृत्तयः॥ ॥ १११ ॥

तीर्थव्रतानि सेवन्ते प्रत्ययो नैव जायते ॥

मोहितं तु जगत्पूर्वं मिथ्याज्ञानेन शंकर ॥ ११२ ॥

किं ते फलं सुरश्रेष्ठ जगद्व्यामोहने कृते ॥ ११३ ॥

सारात्सारतरं नाथ तव प्राणप्रियं हि यत् ॥

तन्मे कथय देवेश प्रियाहं यदि ते प्रभो ॥ ११४ ॥

इत्युक्तः स तया देव्या श्रीकंठः सुरनायकः ॥

प्रहस्योवाच भगवान्गंभीरार्थमिदं वचः ॥ ११५ ॥

॥ईश्वर उवाच ॥ ॥

शृणुष्वावहिता भूत्वा पृष्टोऽहं यस्त्वयाऽधुना ॥

निष्फलं तत्प्रवक्ष्यामि वस्तुतत्त्वं यथास्थितम् ॥ ११६ ॥

पूर्वमुक्तानि तीर्थानि यानि ते सुरसुंदरि ॥

तिस्रः कोट्योऽर्द्धकोटी च ब्रह्मांडे सचराचरे ॥११७॥

तेषां च गोपितं तीर्थं प्रभासं चैव सुव्रते ॥११८॥

एवमुक्तं महादेवि प्रभासं क्षेत्रमुत्तमम् ॥

दृष्ट्वा संस्काररहिताः कलौ पापेन मोहिताः ॥ ११९ ॥

राजसास्तामसाश्चैव पापोपहतचेतसः ॥

परदारपरद्रव्यपरहिंसारता नराः ॥ 7.1.3.१२० ॥

उद्वेगं च परं यांति प्रतप्यंति यतस्ततः ॥

आत्मसंभाविता मूढा मिथ्याज्ञानेन मोहिताः॥

वर्णाश्रमविरुद्धं तु तीर्थे कुर्वन्ति येऽधमाः॥१२१॥

तीर्थयात्रां प्रकुर्वंति दंभेन कपटेन च॥

तीर्थे मृता न सिध्यंति ते नरा वरवर्णिनि ॥ १२२ ॥

एतदर्थं मया देवि तीर्थानि विविधानि च ॥

लिंगानि चैव सुश्रोणि गोपितानि प्रयत्नतः ॥

न सिद्धिदानि देवेशि कलौ कल्मषकारिणाम् ॥ १२३ ॥

ये नरास्तु जितक्रोधा जितलोभा जितेंद्रियाः ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चादम्भमत्सराः ॥ १२४ ॥

मद्भावभाविता देवि तीर्थं सेवंति सुव्रताः ॥

तेषां चैव हितार्थाय कथयामि यशश्विनि ॥ १२५ ॥

प्रभासमिति विख्यातं क्षेत्रं त्रैलोक्यवंदितम् ॥

तत्क्षेत्रं नैव जानंति मम मायाविमोहिताः ॥ १२६ ॥

परोहं त्वेकचित्तैश्च बहुजन्मभिरर्चितः ॥

ते विदंति परं क्षेत्रं प्रभासं पापनाशनम् ॥ १२७ ॥

मद्भावभाविता देवि मम व्रतनिषेविणः ॥

तेषां प्रभासिकं क्षेत्रं विदितं नात्र संशयः ॥ १२८ ॥

यमैश्च नियमैर्युक्ता अहंकारविवर्ज्जिताः ॥

तेषामर्थे वदिष्यामि तव प्रश्नं सुदुर्ल्लभम् ॥

ब्रह्मविष्ण्विन्द्रदेवानां पुराणं कथितं मया ॥ १२९ ॥

सोऽहं देवि वदिष्यामि कर्णं देहि वरानने ॥

पृथिव्यामपि सर्वेषां तीर्थानां सुरसुंदरि ॥ 7.1.3.१३० ॥

एकं मे वल्लभं तत्र प्रभासं क्षेत्रमुत्तमम् ॥

तस्मिंश्चैव महाक्षेत्रे तीर्थैः सोमेन पूजितः ॥

वरांस्तस्मै प्रदायाथ सदैकांते स्थितो ह्यहम् ॥१३१॥

तेन गुह्यं कृतं स्थानं तव देवि प्रकाशितम्॥

तत्र मे योगयुक्तस्य दिव्यं लिंगं बभूव ह ॥ १३२ ॥

दिव्यतेजस्समा युक्तं वह्निमेखलमंडितम् ॥
लक्षमात्रस्थितं शांतं दुर्निरीक्ष्यं तु मानवैः ॥ १३३ ॥
इच्छाज्ञानक्रियाख्याश्च तिस्रो वै शक्तयश्च याः ॥
तस्माल्लिंगात्समुत्पन्ना जगत्कर्तृत्वहेतवे ॥ १३४ ॥
तस्मिँल्लिंगे लयं याति जगदेतच्चराचरम् ॥
पुनस्तेनैव संभूतं दृश्यते सचराचरम् ॥ १३५ ॥
गुह्यं चैव तु संभूतं न कश्चिद्वेद तत्परम् ॥
जन्माभ्यासेन तल्लिंगं ज्ञायते भुवि मानवैः ॥ १३६ ॥
क्षेत्रं प्रभासिकं प्रोक्तं क्षेत्रज्ञोऽहं न संशयः ॥
तत्र सोमेशनामाहमस्मिन्क्षेत्रं वरानने ॥ १३७ ॥
ममांशसंभवा ये च अस्मिन्क्षेत्रे समुद्भवाः ॥
तेषां तु विदितं लिंगं पूर्वकल्पे तु भैरवम् ॥ १३८ ॥
अन्यैरपि युगैर्देवि इदं लिंगं सुदुर्लभम् ॥
घोरे कलियुगे पापे विशेषेण च दुर्लभम् ॥ १३९ ॥
अन्यन्निदर्शनं तत्र तत्प्रवक्ष्यामि पार्वति ॥ 7.1.3.१४० ॥
कलौ युगे महाघोरे हेतुवादरता नराः ॥
वदिष्यंति महापापाः सर्वे पाखण्डसंस्थिताः ॥ १४१ ॥
मिथ्या चैतत्कृतं सर्वं मूर्खैश्चापि प्रकीर्तितम् ॥
क्व क्षेत्रं क्व प्रभावश्च कुत्र वै सन्ति देवताः ॥ १४२ ॥
सर्वं चापि तथालीकं मूढैश्चापि प्रकीर्तितम् ॥ १४३ ॥
एवं मूर्खा वदिष्यंति प्रहसिष्यन्ति चापरे ॥
नारका नास्तिका लोकाः पापोपहतचेतसः ॥
सिद्धिं नैव प्रयास्यंति संप्राप्ते तु कलौ युगे॥१४४॥
तीर्थे चैव मृता ये तु शिवनिन्दापरायणाः॥
तिर्यग्योनिप्रसूताश्च दृश्यन्ते सर्वयोनिषु॥१४५॥
एतस्मात्कारणाद्देवि तीर्थे चैव सुदुःखिताः ॥
दृश्यन्ते युगमाहात्म्यात्सत्यशौचविवर्जिताः ॥ १४६ ॥
इदं हि कारणं प्रोक्तं क्षेत्राणां चैव गोपने ॥

एतत्ते कथितं सर्वं सिद्धिर्येन सुदुर्ल्लभा ॥ १४७ ॥

युगेयुगे तु तीर्थानि कीर्तितानि सुरेश्वरि ॥

तेषां मे वल्लभं देवि प्रभासं क्षेत्रमेव च ॥ १४८ ॥

इत्येतत्कथितं देवि रहस्यं पापनाशनम् ॥

क्षेत्रबीजं महादेवि किमन्यत्परिपृच्छसि ॥ १४९ ॥

इदं महापातकनाशनं ये श्रोष्यंति वै क्षेत्रमहाप्रभावम् ॥

ते चापि यास्यन्ति मम प्रभावात्त्रिविष्टपं पुण्यजनाधिवासम् ॥ 7.1.3.१५० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रभासक्षेत्रमाहात्म्ये देवीप्रश्नवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००४



॥ सूत उवाच ॥ ॥

एवं मुनीन्द्राः कथिते प्रभावे शंकरेण तु ॥

पुनः पप्रच्छ सा देवी कृतांजलिपुटा सती ॥ १ ॥

॥ देव्युवाच ॥ ॥

देवदेव जगन्नाथ क्षेत्रतीर्थमय प्रभो ॥

प्रभासक्षेत्रमाहात्म्यं विस्तरात्कथयस्व मे ॥ २ ॥

कथं तुष्यसि मर्त्यानां क्षेत्रे तत्र विचेतसाम् ॥

जप्तं दत्तं हुतं यष्टं तपस्तप्तं कृतं च यत् ॥

प्रभासे तु महाक्षेत्रे कस्मात्तत्राक्षयं भवेत् ॥ ३ ॥

जात्यंतरसहस्रेषु यत्पापं पूर्वसंचितम् ॥

तत्कथं क्षयमाप्नोति तन्ममाचक्ष्व शंकर ॥ ४ ॥

यदि प्रभासं सर्वेषां तीर्थानां प्रवरं मतम्॥

किमन्यैर्बहुभिस्तत्र कर्त्तव्यं तीर्थविस्तरैः ॥ ५ ॥

एकं यदि भवेत्तीर्थं मनो निःसंशयं भवेत् ॥

बहुत्वे सति तीर्थानां मनो विचलते नृणाम् ॥ ६ ॥

तस्मात्सर्वं परित्यज्य तीर्थजालं सविस्तरम् ॥

प्रभासस्यैव माहात्म्यं कथयस्व सुरेश्वर ॥ ७ ॥

क्षेत्रप्रमाणं सीमां च क्षेत्रसारं हि यत्प्रभो ॥

वक्तुमर्हसि तत्सर्वं परं कौतूहलं हि मे ॥ ८ ॥ ॥

ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि क्षेत्राणां क्षेत्रमुत्तमम् ॥

सर्वक्षेत्रेषु यत्क्षेत्रं प्रभासं तु प्रियं मम ॥ ९ ॥

प्रभासे तु परा सिद्धिः प्रभासे तु परा गतिः ॥

यत्र संनिहितो नित्यमहं भद्रे निरन्तरम् ॥ 7.1.4.१० ॥

तस्य प्रमाणं वक्ष्यामि सर्वसीमासमन्वितम्॥

क्षेत्रं तु त्रिविध प्रोक्तं तत्ते वक्ष्याम्यनुक्रमात् ॥ ११ ॥

क्षेत्रं पीठं गर्भगृहं प्रभासस्य प्रकीर्त्यते ॥

यथाक्रमं फलं तस्य कोटिकोटिगुणं स्मृतम् ॥ १२ ॥

क्षेत्रं तु प्रथमं प्रोक्तं तच्च द्वादशयोजनम् ॥

पञ्चयोजनमानेन क्षेत्रपीठं प्रकीर्तितम् ॥ १३ ॥

गर्भगृहं च गव्यूतिः कर्णिका सा मम प्रिया ॥

क्षेत्रसीमा प्रवक्ष्यामि शृणु देवि यथाक्रमम् ॥ १४ ॥

आयामव्यासतश्चैव आदिमध्यान्तसंस्थितम् ॥

पूर्वे तप्तोदक स्वामी पश्चिमे माधवः स्मृतः ॥ १५ ॥

दक्षिणे सागरस्तद्वद्भद्रा नद्युत्तरे मता ॥

एवं सीमासमायुक्तं क्षेत्रं द्वादशयोजनम् ॥ १६ ॥

एतत्प्राभासिकं क्षेत्रं सर्वपातकनाशनम्॥

तन्मध्ये पीठिका प्रोक्ता पञ्चयोजनविस्तृता ॥ १७ ॥

न्यंकुमन्यपरेणैव वज्रिण्याः पूर्वतस्तथा ॥

माहेश्वर्या दक्षिणतः समुद्रोत्तरतस्तथा ॥ १८ ॥

आयामव्यासतश्चैव पञ्चयोजनविस्तरम् ॥

पीठमेतत्समाख्यातमथो गर्भगृहं शृणु ॥ १९ ॥

दक्षिणोत्तरतो यावत्समुद्रा त्कौरवेश्वरी ॥

पूर्वपश्चिमतो यावद्गोमुखाच्चाश्वमेधिकम् ॥

एतद्गर्भगृहं प्रोक्तं कैलासान्मम वल्लभम् ॥ 7.1.4.२० ॥

अत्रान्तरे तु देवेशि यानि तीर्थानि भूतले ॥

वापीकूपतडागानि देवतायतनानि च ॥२१॥

सरांसि सरितश्चैव पल्वलानि ह्रदास्तथा ॥

तानि मेध्यानि सर्वाणि सर्वपापहराणि च॥२२॥

यत्र तत्र नरः स्नात्वा स्वर्गलोके महीयते ॥

क्षेत्रस्य प्रथमो भागो मेध्यो माहेश्वरः स्मृतः ॥ २३ ॥

द्वितीयो वैष्णवो भागो ब्रह्मभागस्तृतीयकः ॥

तीर्थानां कोटिरेका तु ब्राह्मे भागे व्यवस्थिता ॥ २४ ॥
वैष्णवे कोटिरेका तु तीर्थानां वरवर्णिनि ॥
सार्द्धकोटिस्तु संप्रोक्ता रुद्रभागे च मध्यतः ॥ ॥२५॥
एवं देवि समाख्यातं तत्क्षेत्रं हि त्रिदैवतम् ॥
गुह्याद्गुह्यतरं क्षेत्रं मम प्रियतरं शुभे ॥२६॥
तिस्रः कोट्योऽर्द्धकोटिश्च क्षेत्रे प्रोक्ता विभागतः ॥
यात्रा तु त्रिविधा ज्ञेया तां शृणुष्व वरानने ॥ २७ ॥
रौद्री तु प्रथमा यात्रा वैष्णवी च द्वितीयिका॥
ब्राह्मी तृतीया संख्याता सर्वपातकनाशिनी ॥ ॥ २८ ॥
ब्राह्मे विभागे संप्रोक्ता इच्छाशक्तिर्वरानने ॥
क्रिया च वैष्णवे भागे द्वितीये तु प्रकीर्तिता ॥२९॥
रौद्रे भागे तृतीये तु ज्ञानशक्तिर्वरानने ॥
यदि पापो यदि शठो यदि नैष्कृतिको नरः ॥ 7.1.4.३० ॥
निर्मुक्तः सर्वपापेभ्यो मध्यभागे वसेत्तु यः ॥
हिमवंतं परित्यज्य पर्वतं गंधमादनम् ॥ ३१ ॥
कैलासं निषधं चैव मेरुपृष्ठं महाद्युतिम् ॥
रम्यं त्रिशिखरं चैव मानसं च महागिरिम् ॥३२॥
देवोद्यानानि रम्याणि नंदनं वनमेव च ॥
स्वर्गस्थानानि रम्याणि तीर्थान्यायतनानि च ॥
तानि सर्वाणि संत्यज्य प्रभासे तु रतिर्मम ॥ ३३ ॥
यस्तत्र वसते देवि संयतात्मा समाहितः ॥
त्रिकालमपि भुंजानो वायुभक्षसमो भवेत् ॥ ३४ ॥
विघ्नैरालोड्यमानोऽपि यः प्रभासं न मुंचति ॥
स मुंचति जरां मृत्युं जन्मचक्रमशाश्वतम् ॥ ३५ ॥
जन्मांतरशतैर्देवि योगो वा यदि लभ्यते ॥
मोक्षस्य च सहस्रेण जन्मनां लभ्यते न च ॥ ३६ ॥
प्रभासे तु महादेवि ये स्थिता कृतनिश्चयाः ॥
एकेन जन्मना तेषां मोक्षो नैवात्र संशयः ॥ ३७ ॥

प्रभासे तु स्थिता ये वै ब्राह्मणाः संशितव्रताः ॥

मृत्युंजयेन संयुक्तं जपंति शतरुद्रियम् ॥ ३८ ॥

कालाग्निरुद्रसांनिध्ये दक्षिणां दिशमाश्रिताः ॥

ज्ञानं चोत्पद्यते तत्र षण्मासाभ्यंतरेण तु ॥ ३९ ॥

शिवस्तु प्रोच्यते वेदो नामपर्यायवाचकैः ॥

तस्य चात्मस्वरूपं तु शतरुद्रं प्रकीर्तितम् ॥ 7.1.4.४० ॥

कल्पेषु वेदाश्च पुनःपुनरावर्तकाः स्मृताः ॥

मंत्राश्चैव तथा देवि मुक्त्वा तु शतरुद्रियम् ॥ ४१ ॥

ईड्यं चैव तु मंत्रेण मामेव हि यजंति ये ॥

प्रभासक्षेत्रमासाद्य ते मुक्ता नात्र संशयः ॥ ४२ ॥

समंत्रोऽमंत्रको वापि यस्तत्र वसते नरः ॥

सोऽपि यां गतिमाप्नोति यज्ञैर्दानैर्न साध्यते ॥ ४३ ॥

अस्मिक्षेत्रे स्वयंभूश्च स्थितः साक्षान्महेश्वरः ॥

रुद्राणां कोटयश्चैव प्रभासे संव्यवस्थिताः ॥ ४४ ॥

ध्यायमानास्तथोंकारं स्थिताः सोमेशदक्षिणे ॥४५ ॥

ब्रह्मांडोदरमध्ये तु यानि तीर्थानि सुव्रते ॥

सोमेश्वरं गमिष्यंति वैशाखस्य चतुर्दशी ॥४६॥

मनोबुद्धिरहंकारः कामक्रोधौ तथाऽपरे ॥

एते रक्षंति सततं सोमेशं पापनाशनम् ॥ ४७ ॥

न सा गतिः कुरुक्षेत्रे गंगाद्वारे त्रिपुष्करे ॥

या गतिर्विहिता पुंसां प्रभासक्षेत्रवासिनाम् ॥ ४८ ॥

तिर्यग्योनिगताः सत्त्वा ये प्रभासे कृतालयाः ॥

कालेन निधनं प्राप्तास्तेपि यांति परां गतिम् ॥ ४९ ॥

तद्गुह्यं देवदेवस्य तत्तीर्थं तत्तपोवनम् ॥

तत्र ब्रह्मादयो देवा नारायणपुरोगमाः ॥ 7.1.4.५० ॥

योगिनश्च तथा सांख्या भगवंतं सनातनम् ॥

उपासते प्रभासं तु मद्भक्ता मत्परायणाः ॥ ५१ ॥

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ॥

एके च चतुरो मासानष्टौ वा नियतं वसेत् ॥ ५२ ॥

प्रभासे तु प्रविष्टानां विहारस्तु न विद्यते ॥

अत्र योगश्च मोक्षश्च प्राप्यते दुर्लभो नरैः ॥ ५३ ॥

तस्मात्प्रभासं संत्यज्य नान्यद्गच्छेत्तपोवनम् ॥

प्रभासं ये न सेवंते मूढास्ते तमसा वृताः ॥ ५४ ॥

विण्मूत्ररेतसां मध्ये संभवंति पुनःपुनः ॥

कामः क्रोधस्तथा लोभो दंभः स्तंभोऽथ मत्सरः ॥ ॥ ५५ ॥

निद्रा तंद्रा तथाऽऽलस्यं पैशुन्यमिति ते दश ॥

एते रक्षंति सततं सोमेशं तीर्थनायकम् ॥ ५६ ॥

न प्रभासे मृतः कश्चिन्नरकं याति किल्बिषी ॥

यावज्जीवं नरो यस्तु वसते कृतनिश्चयः ॥५७॥

अग्निहोत्रैश्च संन्यासैराश्रमैश्च सुपालितैः ॥

त्रिदंडैरेकदंडैश्च शैवैः पाशुपतैरपि ॥५८॥

एतैरन्यैश्च यतिभिः प्राप्यते यत्फलं शुभम् ॥

तत्सर्वं लभ्यते देवि श्रीसोमेश्वरयात्रया ॥ ५९ ॥

एको ह्यर्चयते लिंगं तपस्यति तथापरः ॥

तयोर्मध्ये तु श्रेष्ठो यः सोमेशं च प्रपूजयेत् ॥7.1.4.६॥।

यत्तद्योगे च सांख्ये च सिद्धांते पंचरात्रिके ॥

अन्यैश्च शास्त्रैर्विज्ञेयं प्रभासे संव्यवस्थितम् ॥६१॥

लिंगे चैव स्थितं सर्वं जगदेतच्चराचरम्॥

तस्माल्लिंगे सदा देवः पूजनीयः प्रयत्नतः ॥ ६२ ॥

ममैव सा परा मूर्तिः श्रीसोमेशाख्यया स्थिता ॥

तेन चैषा त्मनात्मानमाराधनपरो ह्यहम् ॥ ६३ ॥

अनेकजन्मसाहस्रैर्भ्रममाणस्तु जन्मभिः ॥

कस्तां प्राप्नोति वै मुक्तिं विना सोमेशपूजनात् ॥६४॥

यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ॥

तत्सर्वं विलयं याति श्रीसोमेश्वरपूजनात् ॥६५॥

अनेकजन्मकोटीभिर्जंतुभिर्यत्कृतं ह्यघम् ॥

तत्सर्वं नाशमायाति श्रीसोमेश्वरपूजनात् ॥ ६६ ॥
तीर्थानि यानि लोकेऽस्मिन्सेव्यंते पापमोक्षिभिः ॥
तानि सर्वाणि शुद्ध्यर्थं प्रभासे संविशंति हि ॥६७॥
योऽसौ कालाग्निरुद्रस्तु प्रोच्यते वेदवादिभिः ॥
सोऽयं भैरवनाम्ना तु प्रभासे संव्यवस्थितः ॥ ६८ ॥
जनानां दुष्कृतं सर्वं क्षेत्रमध्ये व्यवस्थितः ॥
भैरवं रूपमास्थाय नाशयामि सुरेश्वरि ॥ ६९ ॥
जगत्सर्वं चरित्वा तु स्थितोऽहं सचराचरम् ॥
तेन भैरवनामाहं प्रभासे संव्यवस्थितः ॥ 7.1.4.७० ॥
अग्निना यत्र तप्तं तु दिव्याब्दानां चतुर्युगम् ॥
मेघवाहनकल्पे तु तत्र लिंगं बभूव ह ॥७१॥
अग्निमीडेति वेदोक्तप्रभावः सुरसुंदरि ॥
कालाग्निरुद्रनामा च देवैः सर्वैरुदाहृतम् ॥ ७२ ॥
अग्नीशानेति देवेशि नामत्रितयमुच्यते ॥
कल्पेकल्पे तु नामानि कथितुं नैव शक्यते ॥
असंख्यत्वाच्च कल्पानां ब्रह्मणा च वरानने ॥ ७३ ॥
एवं चैव रहस्यं च महागोप्यं वरानने ॥
स्नेहान्महत्या भक्त्या च मया ते परिकीर्तितम् ॥७४॥
एकतस्तु जगत्सर्वं कर्म कांडे प्रतिष्ठितम् ॥
यज्ञदानतपोहोमैः स्वाध्यायैः पितृतर्पणैः ॥७५॥
उपवासैर्व्रतैः कृत्स्नैश्चांद्रायणशतैस्तथा ॥
षड्रात्रैश्च त्रिरात्रैश्च तीर्थादिगमनैः परैः ॥७६॥
आश्रमैर्विविधाकारैर्यतिभिर्ब्रह्मचारिभिः ॥
वानप्रस्थैर्गृहस्थैश्च वेदकर्मपरायणैः ॥७७॥
अन्यैश्च विविधाकारैर्लोकमार्गस्थितैः शुभैः ॥
न तत्पदं परं देवि शक्यं वीक्षयितुं क्वचित् ॥ ७८ ॥
यावन्न चार्चयेद्देवि सोमेशं लिंगनायकम् ॥
लीलया वापि तैर्द्रष्टुं तत्पदं दुर्लभं परम् ॥ ७९ ॥

पूजितो यैर्जगन्नाथः सोमेशः किल भैरवः ॥
तिर्यग्योनिगता ये तु पशुपक्षिपिपीलिकाः ॥ 7.1.4.८० ॥
अन्तर्ज्जलगता ये तु कृमिकीटपतंगकाः ॥
स्थावरा जंगमाश्चान्ये मनुष्याः पशवः स्त्रियः ॥ ८! ॥
बाला वृद्धास्तथा षण्ढाः श्वानगर्द्दभवायसाः ॥
चंडालाः पुष्कसाः शूद्रा म्लेच्छा येऽन्ये वियोनिजाः ॥ ८२ ॥
मूर्खास्तु पण्डिताश्चापि ये चान्ये कुत्सिता भुवि ॥
ते सर्वे मुक्तिमायांति प्रभासे ये मृताः शुभे ॥ ८३ ॥
कालानलस्य रुद्रस्य कालराजेन चाग्निना ॥
दग्धास्ते जन्तवः सर्वे प्रभासे ये मृताः शुभे ॥ ८४ ॥
दुर्ल्लभं तु मम क्षेत्रं प्रभासं देवि पापिनाम् ॥
न तत्र लभते मृत्युं पापात्मा लोकवंदिते ॥ ८५ ॥
मया दक्षिणभागे च विघ्नेशः संप्रतिष्ठितः ॥
उत्तरे दण्डपाणिस्तु क्षेत्रमेतच्च रक्षति ॥ ८६ ॥
तथान्ये गणपाः सर्वे मदाज्ञावशवर्तिनः ॥
क्षेत्रं रक्षंति देवेशि तेषां नामानि मे शृणु ॥ ८७ ॥
महाबलस्तु चण्डीशो घंटाकर्णस्तु गोमुखः ॥
विनायको महानादः काकवक्त्रः शुभेक्षणः ॥
एकाक्षो दुन्दुभिश्चंडस्तालजंघस्तथैव च ॥ ८८ ॥
भूमिदंडश्च चंडश्च शंकुकर्णश्च वैधृतिः ॥
तालचण्डो महातेजा विकटास्यो हयाननः ॥ ९८९ ॥
हस्तिवक्त्रः श्वानवक्त्रो बिडालवदनस्तथा ॥
सिंहव्याघ्रमुखाश्चान्ये वीरभद्रादयस्तथा ॥ 7.1.4.९० ॥
विनायकं पुरस्कृत्य देव देवं कपर्द्दिनम् ॥
एकादश तथा कोट्यो नियुतानि त्रयोदश ॥ ९१ ॥
अर्बुदं च गणानां च प्रभासं क्षेत्रमाश्रिताः ॥
द्वारिद्वारि प्रचंडास्ते शूलमुद्गरपाणयः ॥ ९२ ॥
प्रभासक्षेत्रं रक्षंति देवदेवस्य वै गृहम् ॥

न कश्चिद्दुष्टबुद्ध्या तु प्रविशेदिति संस्थितिः ॥ ९३ ॥

शतकोटिगणैश्चापि पूर्वद्वारि तु संवृतः ॥

अट्टहासो गणो नाम प्रभासं तत्र रक्षति ॥ ९४ ॥

कालाक्षो भीषणश्चंडो वृतोऽष्टादशकोटिभिः ॥

घंटाकर्णगणो नाम दक्षिणं द्वारमाश्रितः ॥९५॥

पश्चिमद्वारमाश्रित्य स्थितवान्विष्टरो गणः ॥

दण्डपाणिः स्थितस्तत्र देवदेवस्य चोत्तरे ॥९६॥

योगक्षेमं वहन्नित्यं प्रभासे भावितात्मनाम्॥

भीषणाक्षस्तथैशान्यामाग्नेय्यां छागवक्त्रकः ॥ ९७ ॥

नैर्ऋत्यां चंडनादस्तु वायव्यां भैरवाननः ॥

नन्दी चैव महाकालो दण्डपाणिर्विनायकः ॥ ॥ ९८ ॥

एतेङ्गरक्षका मध्ये शतकोटिगणैर्वृताः ॥

एवं रक्षंति बहवो ह्यसंख्येया गणेश्वराः ॥ ९९ ॥

कलिकल्मषसंभूत्या येषां चोपहता मतिः ॥

न तेषां तद्भवेद्रम्यं स्थानमर्धेन्दुमौलिनः ॥ 7.1.4.१०० ॥

गंधर्वैः किन्नरैर्यक्षैरप्सरोभिस्तथोरगैः ॥

सिद्धैः संपूज्य देवेशं सोमेशं पापनाशनम् ॥ १०१ ॥

अन्तर्धानं गतैर्नित्यं प्रभासं तु निषेव्यते ॥

सप्तलोकेषु ये सन्ति सिद्धाः पातालवासिनः ॥

प्रदक्षिणं ते कुर्वंति सोमेशं कालभैरवम् ॥ १०२ ॥।

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ॥

लाकुलिं भारभूतिं च आषाढिं दण्डमेव च ॥ १०३ ॥

पुष्करं नैमिषं चैव अमरेशं तथापरम् ॥।

भैरवं मध्यमं कालं केदारं कणवीरकम् ॥ १०४ ॥

हरिचंद्रस्तु शैलेशस्तथा वस्त्रांतिकेश्वरः ॥

अट्टहासं महेन्द्रं च श्रीशैलं च गया तथा ॥ १०५ ॥

एतानि सर्वतीर्थानि देवं सोमेश्वरं प्रभुम् ॥

प्रदक्षिणं प्रकुर्वंति तत्र लिंगं स्तुवंति च ॥ १०६ ॥

ब्रह्मा जनार्दनश्चान्ये ये देवा जगति स्थिताः ॥

अग्निलिंगसमीपस्थाः संध्याकाले स्तुवंति च ॥ १०७ ॥

षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥

सर्वे सोमेश्वरं यांति माघकृष्णचतुर्द्दशीम् ॥। ॥ १०८ ॥

तस्मिन्काले च यो दद्यात्सोमेशे घृतकम्बलम् ॥ १०९ ॥

घृतं रसं तिलान्दुग्धं जलं चंद्राधिवासितम् ॥

एकत्र कृत्वा काश्मीरमित्येतद्घृतकंबलम् ॥7.1.4.११०॥।

शिवरात्र्यां तु कर्त्तव्यमेतद्गोप्यं मम प्रियम् ॥

एवं कृते च यत्पुण्यं गदितुं तन्न शक्यते ॥ १११ ॥

तत्र दक्षिणभागे तु स्वयं भूतविनायकम् ॥

प्रथमं पूजयेद्देवि यदीच्छेत्सिद्धिमात्मनः ॥११२॥

ऊषराणां च सर्वेषां प्रभासक्षेत्रमूषरम् ॥

पीठानां चैव पीठं च क्षेत्राणां क्षेत्रमुत्तमम् ॥

सन्देहानां च सर्वेषामयं संदेह उत्तमः ॥ ११३ ॥

ये केचिद्योगिनः संति शतकोटिप्रविस्तराः ॥

तेषां क्षेत्रे प्रभासे तु रतिर्न्नान्यत्र कुत्रचित् ॥। ॥ ११४ ॥

लिंगादीशानभागे तु संस्थिता सुरसुन्दरि ॥ ११५ ॥

मया या कथिता तुभ्यमुमा नाम कला शुभा ॥

सा सती प्रोच्यते देवि दक्षस्य दुहिता पुरा ॥ ११६ ॥

दक्षकोपाच्छरीरं तु संत्यज्य परमा कला ॥

हिमवंतगृहे जाता उमानाम्ना च विश्रुता ॥ ११७ ॥

तेन देवि त्वया सार्द्धं तत्रस्था वरदाः स्मृताः ॥

नवकोट्यस्तु चामुंडास्तस्मिन्क्षेत्रे स्थिताः स्वयम् ॥ ११८ ॥

चैत्रे मासि सिताष्टम्यां तत्र त्वां यदि पूजयेत् ॥

एक विंशतिजन्मानि दारिद्र्यं तस्य नो भवेत् ॥ ११९ ॥

अमा सोमेन संयुक्ता कदाचिद्यदि लभ्यते ॥

तस्यां सोमेश्वरं दृष्ट्वा कोटियज्ञफलं लभेत् ॥ ॥ 7.1.4.१२० ॥

एतत्क्षेत्रं महागुह्यं सर्वपातकनाशनम्॥

रुद्राणां कोटयो यत्र एकादश समासते ॥१२१॥

द्वादशात्र दिनेशानां वसवोऽष्टौ समागताः ॥

गन्धर्वयक्षरक्षांसि असंख्याता गणेश्वराः ॥१२२॥

उमापि तत्र पार्श्वस्था सर्वदेवैस्तु संस्तुता ॥

नन्दी च गणनाथो यो देवदेवस्य शूलिनः॥१२३॥

महाकालस्य ये चान्ये गणपाः संति पार्श्वगाः ॥

गंगा च यमुना चैव तथा देवी सरस्वती ॥१२४॥

अन्याश्च सरितः पुण्या नदाश्चैव ह्रदास्तथा ॥

समुद्राः पर्वताः कूपा वनस्पतय एव च ॥ १२५ ॥

स्थावरं जंगमं चैव प्रभासे तु समागतम् ॥

अन्ये चैव गणास्तत्र प्रभासे संव्यवस्थिताः ॥ ॥१२६॥

न मया कथिताः सर्व उद्देशेन क्वचित्क्वचित् ॥

भक्त्या परमया युक्तो देवदेवि विनायकम् ॥

तृतीयं पूजयेत्तत्र वांछेत्क्षेत्रफलं यदि॥१२७॥

द्वादशैवं तथा चाष्टौ चत्वारिंशच्च कोटयः ॥

नदीनामग्नितीर्थस्य द्वारे तिष्ठंति भामिनि ॥ १२८ ॥

निर्माल्यलंघनं किंचिदज्ञाताद्यदि वै कृतम् ॥

तत्सर्वं विलयं याति अग्नितीर्थस्य दर्शनात् ॥१२९॥

देवि किं बहुनोक्तेन क्षेत्रमेतन्महाप्रभम् ॥

न ते वर्णयितुं शक्यं कल्पकोटिशतैरपि॥7.1.4.१३॥।

ये चांतरिक्षे भुवि ये च देवास्तीर्थानि वै यानि दिगंतरेषु ॥

क्षेत्रं प्रभासं प्रवरं हि तेषां सोमेश्वरं देवि तथा वरिष्ठम् ॥१३१॥

ये चांडजाश्चोद्भिजाश्चैव जीवाः सस्वेदजाश्चैव जरायुजाश्च ॥

देवि प्रभासे तु गतासवोऽथ मुक्तिं परं यांति न संशयोऽत्र ॥ १३२ ॥

इति निगदितमेतद्देवदेवस्य चित्रं चरितमिदमचिंत्यं देवि ते शंकरस्य ॥

कलिकलुषविदारं सर्वलोकोऽपि यायाद्यदि पठति शृणोति स्तौति नित्यं य इत्थम् ॥ १३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये क्षेत्रप्रमाणवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००५



॥ सूत उवाच ॥ ॥

इत्येवमुक्ते विप्रेंद्रा शंकरेण महात्मना ॥

पुनः पप्रच्छ सा देवी हर्षसंपूर्णमानसा ॥ १ ॥

॥ देव्युवाच ॥ ॥

देवदेव जगन्नाथ सर्वप्राणहिताय वै ॥

प्रभासक्षेत्रमाहात्म्यं विस्तराद्वद मे प्रभो ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

अन्यद्दृष्टांतरूपं ते कथयामि यशस्विनि ॥

येन सृष्टं महादेवि क्षेत्रमेतन्मम प्रियम् ॥ ३ ॥

या गतिर्ध्यायतां नित्यं निःसंगानां च योगिनाम् ॥

सैवं संत्यजतां प्राणान्प्रभासे तु परा गतिः ॥ ४ ॥

अनेककल्पस्थायी च मार्कंडेयो महातपाः ॥

सोऽपि देवं विरूपाक्षं प्रभासे तु सदाऽर्चति ॥५॥

अटित्वा सर्वतीर्थानि प्रभासं नैव मुंचति ॥

दुर्वासाश्च महातेजा लिंगस्याराधनोद्यतः ॥

न मुंचति क्षणं देवि तत्क्षेत्रं शशिमौलिनः ॥ ६ ॥

भरद्वाजो मरीचिश्च मुनिश्चोद्दालकस्तथा ॥

क्रतुश्चैव वसिष्ठश्च कश्यपो भृगुरेव च ॥। ७ ॥॥

दक्षश्चैव तु सावर्णिर्यमश्चांगिरसस्तथा॥ ॥

शुको विभांडकश्चैव ऋष्यशृंगोऽथ गोभिलः ॥८॥

गौतमश्च ऋचीकश्च अगस्त्यः शौनको महान्॥

नारदो जमदग्निश्च विश्वामित्रोऽथ लोमशः ॥ ९ ॥

अन्ये च ऋषयश्चैव दिव्या देवर्षयस्तथा ॥

न मुंचंति महाक्षेत्रं लिंगस्याराधनोद्यताः ॥ 7.1.5.१० ॥

अहं तत्रैव तिष्ठामि लिंगाराधनतत्परः ॥

न मुंचामि महाक्षेत्रं सत्यंसत्यं वरानने ॥ ११ ॥

सर्वतीर्थानि देवेशि मया दृष्टानि भूतले ॥

प्रभासेन समं क्षेत्रं नैव दृष्टं कदाचन ॥ १२ ॥

देवि षष्टिसहस्राणि याज्ञवल्क्यपुरस्कृताः ॥

जपं कुर्वंति रुद्राणां चन्द्रभागां व्यवस्थिताः ॥ १३ ॥

चत्वारिंशत्सहस्राणि ऋषीणामूर्द्ध्वरेतसाम् ॥

देविकातटमाश्रित्य जपंति शतरुद्रियम् ॥ १४ ॥

कोटयश्चैव पंचाशन्मुनीनामूर्द्ध्वरेतसाम् ॥

उमापतिं समासाद्य लिंगं तत्रैव संस्थितम् ॥ १५ ॥

रुद्राणां कोटि जाप्यं तु कृतं तत्रैव तैः पुरा ॥

कोटिस्तत्रैव संसिद्धास्तस्मिंल्लिंगे न संशयः ॥१६॥

शतं चैव सहस्राणां देवेशं शशिभूषणम् ॥

पूजयंति महासिद्धा मम क्षेत्रनिषेविणः ॥१७॥

वेदांतेषु च यत्प्रोक्तं फलं चैव महर्षिभिः ॥

तत्फलं सकलं तत्र चंद्रभूषणदर्शनात् ॥ १८ ॥

अग्नितीर्थे ऋषीणां तु कोटिः साग्रा स्थिता शुभे ॥

रुद्रेश्वरे स्मृतं लक्षं कंपर्द्दीशे तथैव च ॥ १९ ॥

रत्नेश्वरे सहस्रं तु ऋषीणामूर्द्ध्वरेतसाम् ॥

अर्कस्थले महापुण्ये कोटिः साग्रा स्थिता शुभे ॥ 7.1.5.२० ॥

षष्टिश्चैव सहस्राणि तत्र सिद्धेश्वरे स्थिताः ॥

सप्त चैव सहस्राणि मार्कंडेये तु संस्थिताः ॥ २१ ॥

सरस्वत्यां ब्रह्मकुण्डेऽसंख्याता मुनयः स्मृताः ॥

दशार्बुदसहस्राणि कोटित्रितयमेव च ॥ २२ ॥

ऋषयस्तत्र तिष्ठंति यत्र प्राची सरस्वती ॥

ब्रह्महत्या गता यत्र शंकरस्य च तत्क्षणात् ॥ २३ ॥

कायः सुवर्णतां प्राप कपालं पतितं करात् ॥

ज्ञात्वैवं शंकिना पूर्वं कृतं तत्र महातपः ॥ २४ ॥

तुष्टः श्रीशंकरो देवो लिंग वासवरेण तु ॥

कोटियज्ञफलं स्नाने प्राच्यां लिंगस्य पूजने ॥ २५ ॥

पिंडे गयाशतगुणममासोमयुते दिने ॥

भूतायां पिंडदस्तत्र कुलकोटिं समुद्धरेत् ॥ २६ ॥

ये चात्र मलनाशाय निमङ्क्ष्यंति च मानवाः ॥

दशगोदानजं पुण्यं तेषामपि भविष्यति ॥२७॥

पादेन वा क्रीडमाना जलं लिप्संति ये नरा ॥

तेषामपि श्राद्धफलं विधिवत्संभविष्यति ॥

तत्र लिंगानि पूज्यानि शूलभेदादिकानि तु ॥ २८ ॥

एवं विकल्प्य लिंगानि अश्वमेध फलानि तु ॥

दर्शनेनापि सर्वेषां स्पर्शाद्धि द्विगुणं फलम् ॥२९॥

एवं तुष्टो जगन्नाथः स्थितः प्राचीवने ध्रुवम् ॥

मनोऽपि ये करिष्यंति स्नानदानेषु का कथा ॥7.1.5.३॥।

तेषां तुष्टो जगन्नाथः शंकरो नीललोहितः ॥

त्रिंशत्कोटिगणस्तत्र प्राचीं रक्षंति सर्वतः ॥३१॥

महापापसमाचारः पापिष्ठो वाऽति किल्बिषी ॥

घुणाक्षरमिव प्राणान्प्राच्यां मुक्त्वा शिवं व्रजेत् ॥ ३२ ॥

दधिकंबलदानं तु तत्र देयं द्विजोत्तमे ॥

कथितं पापशमनं सारात्सारतरं ध्रुवम् ॥ ३३ ॥

अधुना संप्रवक्ष्यामि हिरण्याश्व महोदयम् ॥

दुर्वाससा तपस्तप्तं तत्र सूर्यः प्रतिष्ठितः ॥ ३४ ॥

कोटिरेका तु तत्रैव ऋषीणामूर्द्ध्वरेतसाम् ॥

चतुर्विंशतितत्त्वानामधिको बलरूपधृक् ॥ ३५ ॥

यत्र तिष्ठति देवेशि भृगुकोटिसमन्वितः ॥

अन्यत्र ब्राह्मणानां तु कोट्या यच्च फलं लभेत् ॥ ३६ ॥

ब्रह्मस्थाने तथैकेन भोजितेन तु तत्फलम् ॥

एवं ज्ञात्वा महादेवि तत्र तिष्ठामि निर्वृतः।।

कोटिभिर्देवऋषिभिर्देवैः सह समावृतः ॥

तीर्थानि तत्र तिष्ठंति अंतर्भूतानि वै कलौ ॥ ३८ ॥

तत्र क्षेत्रे महारम्ये यत्र सोमेश्वरः स्थितः॥

मम देवि गणौ द्वौ तु विभ्रमः संभ्रमः परः ॥ ३९ ॥

तौ चात्र क्षेत्रसंस्थानां लोकानां भ्रमविभ्रमैः ॥

योजयंति सदा चित्तं विकल्पानैक्यसंकुलम् ॥ 7.1.5.४० ॥

विनायकोपसर्गाश्च दश दोषास्तथा परे ॥

एवं क्षेत्रं तु रक्षंति पापिनां दुष्टचेतसाम् ॥ ४१ ॥

दंडपाणिं तु ये भक्त्या पश्यंतीह नरोत्तमाः ॥

न तेषां जायते विघ्नं तत्र क्षेत्रनिवासिनाम् ॥ ४२ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसंकराः ॥

अकामा वा सकामा वा प्रभासे ये मृताः शुभे ॥ ४३ ॥

चंद्रार्द्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः ॥

शिवे मम पुरे दिव्ये जायंते तत्र मानवाः ॥ ४४ ॥

यस्तत्र वसते विप्रः संयतात्मा समाहितः ॥

त्रिकालमपि भुंजानो वायुभक्षसमो भवेत् ॥ ४५ ॥

मेरोः शक्या गुणा वक्तुं द्वीपानां च गुणास्तथा ॥

समुद्राणां च सर्वेषां शक्या वक्तुं गुणाः प्रिये ॥ ४६ ॥

आदिदेवस्य देवेशि महेशस्य महाप्रभोः ॥

शक्या नैव गुणा वक्तुं वर्षाकोटिशतैरपि ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये क्षेत्रस्थर्षिदेवगणवर्णनं नाम पंचमोऽध्यायः ॥ ५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००६



॥ देव्युवाच ॥ ॥

अत्यद्भुतं महादेव माहात्म्यं कथितं मम ॥

अपूर्वं देवदेवेश कदाचिन्न श्रुतं मया ॥ १ ॥

ब्रह्मांडे यानि लिंगानि कीर्तितानि त्वया मम ॥

तेषां प्रभावेनाधिक्यं सोमेशे तत्कथं वद ॥ २ ॥

किं प्रभावो महादेव क्षेत्रस्य च सुरेश्वर ॥

तन्मे ब्रूहि सुरेशान याथातथ्यं ममाग्रतः ॥३॥

॥ ईश्वर उवाच ॥ ॥

अतः परं प्रवक्ष्यामि रहस्यं परमं तव ॥

प्रभासक्षेत्रमाहात्म्यं सोमेशस्य वरानने ॥४॥

तीर्थानां परमं तीर्थं व्रतानां परमं व्रतम् ॥

जाप्यानां परमं जाप्यं ध्यानानां ध्यानमुत्तमम्॥५॥

योगानां परमो योगो रहस्यं परमं महत् ॥

तत्तेहं संप्रवक्ष्यामि शृणु ह्येकमना प्रिये॥६॥

सोमेशं परमं स्थानं पंचवक्त्रसमन्वितम् ॥

एतल्लिंगं न मुंचामि सत्यंसत्यं मयोदितम् ॥७॥

यच्च तत्परमं देवि ध्रुवमक्षयमव्ययम् ॥

सोमेशं तद्विजानीहि मा विकल्पमना भव॥८॥

निर्भयं निर्मलं नित्यं निरपेक्षं निराश्रयम् ॥

निरंजनं निष्प्रपंचं निःसंगं निरुपद्रवम्। ॥ ९ ॥

तल्लिंगमिति जानीहि प्रभासे संव्यवस्थितम् ॥

अपवर्गमविज्ञेयं मनोरम्यमनामयम् ॥ 7.1.6.१० ॥

नित्यं च कारणं देवं मखघ्नं सर्वतोमुखम् ॥

शिवं सर्वात्मकं सूक्ष्ममनाद्यं यच्च दैवतम् ॥ ११ ॥

आत्मोपलब्धिविज्ञेयं चित्तचिंताविवर्जितम् ॥
गमागमविनिर्मुक्तं बहिरंतश्च केवलम् ॥ १२ ॥
आत्मोपलब्धिविषयं स्तुतिगोचरवर्जितम् ॥
निष्कलं विमलात्मानं प्रकटं ज्ञानदीपकम् ॥१३॥
तल्लिंगमिति जानीहि प्रभासे सुरसुंदरि ॥
निरावकाशरहितं शब्दं शब्दांतगोचरम् ॥ १४ ॥
निष्कलं विमलं देवं देवदेवं सुरात्मकम् ॥
हेतुप्रमाणरहितं कल्पनाभाववर्जितम् ॥१५॥
चित्तावलोकविषयं बहिरंतरसंस्थितम् ॥
प्रभासे तं विजानीहि प्रणवं लिंगरूपिणम् ॥ १६ ॥
अनिष्पंदं महात्मानं निरानंदावलोकनम् ॥
लोकावलोकमार्गस्थं विशुद्धज्ञानकेवलम्॥१७॥
विद्याविशेषमार्गस्थमनेकाकारसंज्ञितम् ॥
स्वभावभावनाग्राह्यं भावातीतमलक्षणम् ॥१८॥
वाक्प्रपंचादिरहितं निष्प्रपञ्चात्मकं शिवम्॥
ज्ञानज्ञेयावलोकस्थं हेत्वाभासविवर्जितम्॥१९॥
अनाहतं शब्दगतं शब्दादिगणसंभवम् ॥
एवं सोमेश्वरं विद्धि प्रभासे लिंगरूपिणम् ॥ 7.1.6.२० ॥
शब्दब्रह्मगतं शान्तं स शब्दांतगमास्पदम् ॥
सर्वातिरिक्त विषयं सर्वध्यानपदे स्थितम् ॥ २१ ॥
अनादिमच्युतं दिव्यं प्रमाणातीत गोचरम् ॥
अधश्चोर्ध्वं गतं नित्यं जीवाख्यं देहसंस्थितम् ॥ २२ ॥
हृदादिद्वादशांतस्थं प्राणापानोदयास्तगम् ॥
अग्राह्यमिन्द्रियात्मानं निष्कलंकात्मकं विभुम् ॥२३॥
स्वरादिव्यंजनातीतं वर्णादिपरिवर्जितम् ॥
वाचामवाच्यविषयमहंकारार्द्धरूपिणम् ॥२४॥
अप्रतर्क्यमनुच्चार्यं कलनाकालवर्जितम् ॥
निःशब्दं निश्चलं सौम्यं देहातीतं परात्परम् ॥२५॥

भूतावग्रहरहितं भावाभावविवर्जितम् ॥

अविज्ञेयं परं सूक्ष्मं पञ्चपञ्चादिसंभवम् ॥ २६ ॥

अप्रमेयमनंताख्यमक्षयं कामरूपिणम् ॥

प्रभवं सर्वभूतानां बीजांकुरसमुद्भवम् ॥ २७ ॥

व्यापकं सर्वकामाख्यमक्षरं परमं महत् ॥

स्थूलसूक्ष्मविभागस्थं व्यक्ताव्यक्तं सनातनम् ॥ २८ ॥

कल्पकल्पान्तररहितमनादिनिधनं महत् ॥

महाभूतं महाकायं शिवं निर्वाणभैरवम् ॥ २९ ॥

एवं सदाशिवं विद्धि प्रभासे लिंगरूपिणम् ॥

योगक्रिया विनिर्मुक्तं मृत्युंजयमनादिमत् ॥ 7.1.6.३० ॥

सर्वोपसर्गरहितं सर्वतोव्यापकं शिवम् ॥

अव्यक्तं परतो नित्यं केवलं द्वैतवर्जितम् ॥ ३१ ॥

अनन्यतेजसाक्रांतं प्रभासक्षेत्रवासिनम्॥

भूरिस्वयंप्रभप्रख्यं सर्वतेजोऽधिकं हरम्॥३२॥

शरण्यंदेवमीशानमोंकारं शिवरूपिणम्॥

देवदेवं महादेवं पंचवक्त्रं वृषध्वजम्॥३३॥

निर्मलं मानसातीतं भावग्राह्यमनूपमम्॥

सदा शांतं विरूपाक्षं शूलहस्तं जटाधरम्॥३४॥

हृत्पद्मकोशमध्यस्थं शून्यरूपं निरञ्जनम् ॥

एवं सदाशिवं विद्धि प्रभासे लिङ्गरूपिणम् ॥ ३५ ॥

योऽसौ परात्परो देवो हंसाख्यः परिकीर्तितः ॥

नादाख्यः सुव्रते देवि सोऽस्मिन्स्थाने स्थितः स्वयम् ॥ ३६ ॥

एतदादिस्वरूपं च मया योगबलेन तु ॥

विज्ञातं देवि गदितं दिव्यमात्मानमात्मना ॥ ३७ ॥

ऋग्वेदस्थस्तु पूर्वाह्णे मध्याह्ने यजुषि स्थितः ॥

अपराह्णे तु सामस्थो ह्यथर्वस्थो निशागमे ॥ ३८ ॥

वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात् ॥

तमेव विदित्वा न भवेत्तु मृत्युर्नान्यः पंथा विद्यते वै जनानाम् ॥ ३९ ॥

इतीरितस्ते तु महाप्रभावः सोमेशलिंगस्य कृतैकदेशः ॥

वृतं न चाब्दैर्बहुभिः सहस्रैर्वक्तुं च केनापि मुखैर्न शक्यम् ॥7.1.6.४०॥।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रोऽपीदं पठेद्यदि ॥

निर्मुक्तः सर्वपापेभ्यः सर्वान्कामानवाप्नुयात् ॥४१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्रीसोमेश्वरमहिमवर्णनं नाम षष्ठोऽध्यायः॥६॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००७

https://sa.wikisource.org/s/g5b



॥ सूत उवाच ॥ ॥

एवं तत्र तदा देवी श्रुत्वा माहात्म्यमुत्तमम् ॥

हर्षोत्कंठितया वाचा पुनः पप्रच्छ शंकरम् ॥ १ ॥

॥ देव्युवाच ॥ ॥

देवदेव जगन्नाथ भक्तानुग्रहकारक ॥

समस्तज्ञानसंपन्न नमस्तेऽस्तु महेश्वर ॥ २ ॥

नमोऽस्तु वै त्रिपुरप्रहर्त्रे महात्मने तारकमर्दनाय ॥

नमोऽस्तु ते क्षीरसमुद्र दायिने शिशोर्मुनीन्द्रस्य समाहितस्य ॥३॥

नमोऽस्तु ते सर्वजगद्विधात्रे सर्वत्र सर्वात्मक सर्वकर्त्रे ॥

नमो भवायास्तु नमोऽभवाय नमोऽस्तु ते सर्वगताय नित्यम् ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

किं देवि पृच्छसेऽद्यापि सर्वं ते कथितं मया ॥

संदिग्धमस्ति किंचिच्चेत्पुनः पृच्छस्व भामिनि ॥ ५ ॥

॥ देव्युवाच ॥ ॥

सोमेश्वरेति यन्नाम कस्मिन्काले बभूव तत् ॥

किं नामाग्रेऽभवल्लिंगं नाम किं भविताऽधुना ॥ ६ ॥

एवं यस्य प्रभावो वै नोक्तः पूर्वं त्वया विभो ॥

अन्येषां तीर्थदेवानां माहात्म्यं वर्णितं त्वया ॥

न त्वीदृशं तु कथितं श्रीसोमेशस्य यादृशम् ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

पूर्वमेवाहमेवासं स्पर्शलिंगस्वरूपवान् ॥

न च मां तत्त्वतो वेद जनः कश्चिदिहेश्वरि ॥ ८ ॥

महाकल्पे तु सञ्जाते ब्रह्मणः प्रति संचरे ॥

नामभावं भवेदन्यद्देवि लिंगे पुनःपुनः ॥ ९ ॥

अतीतं ब्रह्मणां षट्कं सप्तमोऽयं प्रजापतिः ॥
वर्त्तते योऽधुना देवि शतानन्द इति श्रुतः ॥ ॥ 7.1.7.१॥।
अस्मिन्ब्रह्मणि देवेशि संजाते ह्यष्टवार्षिके ॥
तदा कालात्समारभ्य सोमेश इति विश्रुतः ॥ ११ ॥
अतीतेषु च देवेशि ब्रह्मसुप्तलयादनु ॥
बभूवुर्यानि नामानि तानि त्वं शृणु पार्वति ॥ १२ ॥
आद्यो विरंचिनामासीद्यदा ब्रह्मा पितामहः ॥
मृत्युञ्जयस्तदा नाम सोमनाथस्य कीर्तितम् ॥ ॥ १३ ॥
द्वितीयोऽभूद्यदा ब्रह्मा पद्मभूरिति विश्रुतः ॥
तदा कालाग्निरुद्रेति नाम प्रोक्तं शुभेंऽबिके ॥ १४ ॥
तृतीयोऽभूद्यदा ब्रह्मा स्वयंभूरिति विश्रुतः ॥
अमृतेशेति देवस्य तदा नाम प्रकीर्तितम् ॥ १५ ॥
चतुर्थोऽभूद्यथा ब्रह्मा परमेष्ठीति विश्रुतः ॥
अनामयेति देवस्य तदा नाम स्मृतं शुभे॥१६॥
पंचमोऽभूद्यदा ब्रह्मा सुरज्येष्ठ इति स्मृतः॥
कृत्तिवासेति देवस्य नाम प्रोक्तं तदाम्बिके॥१७॥
षष्ठश्चाभूद्यदा ब्रह्मा हेमगर्भ इति श्रुतः॥
तदा भैरवनाथेति नाम देवस्य कीर्तितम्॥१८॥
अयं यो वर्त्तते ब्रह्मा शतानंद इति स्मृतः ॥
सोमनाथेति देवस्य वर्तते नाम सांप्रतम्॥१९॥
अतः परं चतुर्वक्त्रो ब्रह्मा यो भविता यदा ॥
प्राणनाथेति देवस्य तदा नाम भविष्यति॥7.1.7.२०॥
अतीता ये विधातारो भविष्यंति च येऽधुना॥
तावत्तद्वर्त्तते नाम यावदन्योष्टवार्षिकः ॥
संध्यासंध्यांशभेदेन विष्ण्वनंतसनातनाः ॥ २१ ॥
एवं नामानि देवस्य संक्षेपात्कीर्तितानि मे ॥
विस्तरात्कथितुं नैव शक्यंते कालगौरवात् ॥ २२ ॥
॥ देव्युवाच ॥ ॥

आश्चर्यं देवदेवेश यत्त्वया कथितं प्रभो ॥
पूर्वोक्तानि च नामानि न स्मरंति च मे कथम् ॥२३॥
एतद्विस्तरतो ब्रूहि कारणं च जगत्पते ॥
सर्वभूतहितार्थाय ममानुग्रहकाम्यया ॥ २४ ॥
॥ ईश्वर उवाच ॥ ॥
कल्पेकल्पे महादेवि अवतारं करोषि यत् ॥
तेन ते स्मरणं नास्ति प्रभावात्प्रकृतेः प्रिये ॥ २५ ॥
तत्त्वावरणमध्ये तु तत्राद्या त्वं प्रतिष्ठिता ॥
साऽवतीर्यांडमध्ये तु मया सार्द्धं वरानने ॥ २६ ॥
अनुग्रहार्थं लोकानां प्रादुर्भूता पुनःपुनः ॥
आद्ये कल्पे जगन्माता जगद्योनिर्द्वितीयके ॥ २७ ॥
तृतीये शांभवीनाम चतुर्थे विश्वरूपिणी ॥
पञ्चमे नंदिनीनाम षष्ठे चैव गणांबिका ॥ २८ ॥
विभूतिः सप्तमे कल्पे सुभूतिश्चाष्टमे तदा ॥
आनन्दा नवमे कल्पे दशमे वामलोचना ॥ २९ ॥
एकादशे वरारोहा द्वादशे च सुमङ्गला ॥
कल्पे त्रयोदशे चैव महामाया ह्युदाहृता ॥ 7.1.7.३० ॥
ततश्चतुर्दशे कल्पेऽनन्तानाम प्रकीर्तिता ॥
भूतमाता पंचदशे षोडशे चोत्तमा स्मृता ॥ ३१ ॥
ततः सप्तदशे कल्पे पितृकल्पे तु विश्रुता ॥
दक्षस्य दुहिता जाता सतीनाम्नी महाप्रभा ॥ ३२ ॥
अपमानात्तु दक्षस्य स्वां तनूमत्यजत्पुनः ॥
उमां कलां तु चन्द्रस्य पुरापूर्य च संस्थिता ॥ ३३ ॥
ततः प्रवृत्ते वाराहे कल्पे त्वं सुरसुन्दरि ॥
पुनर्हिमवताराध्य दुहिता त्वमतः कृता ॥ ३४ ॥
ततो देव्यद्भुतं तप्त्वा तपः परमदुश्चरम् ॥
भर्त्तारं मां पुनः प्राप्य पार्वतीति निगद्यसे ॥ ३५ ॥
कैलासनिलयश्चाहं त्वया सार्द्धं वरानने ॥

क्रीडामि तव देवेशि यावत्कल्पावसानकम् ॥३६॥

इदं चतुर्गुणं प्राप्य द्वापरे विष्णुना सह ॥

महिषस्य वधार्थाय उत्पन्ना कृष्णपिंगला ॥ ३७ ॥

कात्यायनीति दुर्गेति विविधैर्नामपर्ययैः ॥

नवकोटिप्रभेदेन जातासि वसुधातले ॥ ३८ ॥

यानि ते कल्पनामानि पूर्वमुक्तानि सुन्दरि ॥

तानि त्रयोदशाकल्पादुदक्तात्कथितानि मे ॥ ३९ ॥

अतीतानि भविष्याणि वर्त्तमानानि सुन्दरि ॥

एवं ज्ञेयानि सर्वाणि ब्रह्मकल्पावधि प्रिये ॥ ॥ 7.1.7.४० ॥

॥ देव्युवाच ॥ ॥

सोमनाथेति यन्नाम त्वया पूर्वमुदाहृतम् ॥

तत्कथं निश्चलं नाम मन्यते त्रिपुरांतक ॥ ४१ ॥

असंख्यत्वाच्च चंद्राणां जन्मनामप्रभेदतः ॥

मन्वन्तरे तु संजाते युगानामेकसप्ततौ ॥ ४२ ॥

चंद्रसूर्यादयो देवाः संह्रियंते पुनःपुनः ॥

सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृपाः ॥ ४३ ॥

एककालं च सृज्यंते संह्रियंते च पूर्ववत् ॥

एतन्मे संशयं देव यथावद्वक्तुमर्हसि ॥४४॥

॥ ईश्वर उवाच ॥ ॥

साधु पृष्टं त्वया देवि रहस्यं पापनाशनम् ॥

यन्न कस्यचिदाख्यातं तत्ते वक्ष्याम्यशेषतः ॥४५॥

अयं यो वर्त्तते ब्रह्मा शतानन्द इति श्रुतः॥

तस्य चैवाष्टमे वर्षे मनुर्यः प्रथमो भवेत् ॥ ४६ ॥

तस्मिन्मन्वन्तरे देवि यश्चादौ रोहिणीपतिः ॥

समुद्रगर्भात्संजातः सलक्ष्मीकौस्तुभादिभिः ॥ ४७ ॥

तेन चाराधितं लिंगं कालभैरवनामतः ॥

महता तपसा पूर्वं युगानि च चतुर्द्दशे ॥ ४८ ॥

तस्याद्भुतं तपो दृष्ट्वा तुष्टोऽहं तस्य सुन्दरि ॥

वरं वृणीष्वेति मया स च प्रोक्तो निशाकरः ॥ ४९ ॥

सहोवाच तदा देवि भक्त्या संस्तुत्य मां शुभे ॥ 7.1.7.५० ॥

॥ चंद्र उवाच ॥ ॥

यदि प्रसन्नो देवेश वरार्हो यदि वाऽप्यहम् ॥

सोमनाथेति तं नाम भूयाद्ब्रह्मावधि प्रभो ॥ ५१ ॥

ये केचिद्भवितारोऽन्ये मन्वन्ते शीतरश्मयः ॥

तेषां भवतु देवेश देवोऽयं कुलदेवता ॥ ॥ ५२ ॥

आराधयंतु ते सर्वे क्षेत्रेऽस्मिन्संस्थिता विभो ॥

स्वकीयायुःप्रमाणेन ब्रह्मणः प्रलयादनु ॥ ५३ ॥

सोमनाथेति ते नाम ब्रह्मांडे सचराचरे ॥

ख्यातिं प्रयातु देवेश तेजोलिंग नमोऽस्तु ते ॥ ५४ ॥

॥ ईश्वर उवाच ॥ ॥

एवमस्त्वित्यहं प्रोच्य पुनर्लिंगे लयं गतः ॥

एतत्ते कारणं देवि प्रोक्तं सर्वमशेषतः ॥ ५५ ॥

निःसन्दिग्धं तु संक्षेपात्पुरा पृष्टं यतस्त्वया ॥

उद्देशमात्रं कथितं श्रीसोमेशगुणान्प्रति ॥

समुद्रस्येव रत्नानामचिन्त्यस्तस्य विस्तरः ॥ ५६ ॥

मोहनं तदभक्तानां भक्तानां बुद्धिवर्द्धनम् ॥

मूढास्ते नैव पश्यंति स्वरूपं मम मोहिताः ॥ ५७ ॥

॥ देव्युवाच ॥ ॥

ईदृशं यस्य माहात्म्यं तेजोलिंगस्य शंकर ॥

कुत्र तिष्ठति तल्लिंगं क्षेत्रे तस्मिन्सुरेश्वर ॥ ५८ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रयत्नेन श्रुत्वा चैवावधारय ॥

प्रभासं परमं देवि क्षेत्रमेतन्मम प्रियम् ॥ ५९ ॥

देवानामपि संस्थानं तच्च द्वादशयोजनम् ॥

पंचयोजनमानेन पीठं तत्र प्रकीर्त्तितम् ॥ 7.1.7.६० ॥

तन्मध्ये मद्गृहं देवि तच्च गव्यूतिमात्रकम् ॥

समुद्रस्योत्तरे देवि देविकामुखसंज्ञितम् ॥ ६१ ॥

वज्रिण्याः पूर्वतश्चैव यावन्न्यंकुमती नदी ॥

चतुष्टयं च विस्तारादायामात्पंचयोजनम् ॥ ६२ ॥

क्षेत्रपीठमिति प्रोक्तमतो गर्भगृहं शृणु ॥

समुद्रात्कौरवी यावद्दक्षिणोत्तरमानतः ॥

पूर्वपश्चिमतो ज्ञेयं गोमुखादाऽऽश्वमेधकम् ॥ ६३ ॥

एतन्मम गृहं देवि न त्यजामि कदाचन ॥

तस्य मध्ये स्थितं लिंगं यत्र तत्ते प्रकीर्तितम् ॥ ६४ ॥

वारुणीं दिशमाश्रित्य सागरस्य च सन्निधौ ॥

कृतस्मरस्यापरतो धन्वन्तरशतत्रये ॥ ६५ ॥

लिंगं महाप्रभावं तु स्वयंभूतं व्यवस्थितम् ॥

तत्र संनिहितो देवः शंकरः परमेश्वरः॥ ६६ ॥

एतस्मिन्नन्तरे देवि सोमेशस्य समीपतः ॥

चतुर्द्दशे विभागे तु धनुषां च शतद्वयम् ॥ ॥ ६७ ॥

समंतान्मंडलाकारा कर्णिका सा मम प्रिया ॥

तस्यां ये प्राणिनः सर्वे मृताः कालेन पार्वति ॥ ६८ ॥

कृमिकीटपतंगाद्या जीवा उत्तम मध्यमाः ॥

निर्द्धूतकल्मषाः सर्वे यांति लोकं ममापि ते ॥६९॥

उत्तरं दक्षिणं चापि अयनं न विचारयेत् ॥

सर्वस्तेषां शुभः कालो ये मृताः क्षेत्रमध्यतः ॥ 7.1.7.७० ॥

आदिनाथेन शर्वेण सर्वप्राणिहिताय वै ॥

आद्यतत्त्वान्यथानीय क्षेत्रमेतन्महाप्रभम् ॥

प्रभासितं महादेवि यत्र सिद्ध्यंति मानवाः ॥७१॥

हन्यमानोऽपि यो विद्वान्वसेद्विघ्नशतैरपि ॥

कृतप्रतिज्ञो देवेशि यावज्जीवं सुरेश्वरि ॥ ७२ ॥

स गच्छेत्परमं स्थानं यत्र गत्वा न शोचति॥

तस्य क्षेत्रस्य माहात्म्यात्स्थाणोश्चाद्भुतकर्मणः ॥ ७३ ॥

कृत्वा पापसहस्राणि पश्चात्सन्तापमेति वै ॥

प्रभासे तु वियुज्येत न सोंऽतकपुरीं व्रजेत् ॥ ॥ ७४ ॥

ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ॥

नियुक्तस्तत्र देवेशि रक्षार्थं विघ्ननायकः ॥ ७५ ॥

ये तु ब्राह्मणविद्विष्टाः शिवभक्तिवितंडकाः ॥

ब्रह्मघ्नाश्च कृतघ्नाश्च तथा नैष्कृतिकाश्च ये ॥ ७६ ॥

लोकद्विष्टा गुरुद्विष्टास्तीर्थायतनकण्टकाः ॥

सर्वपापरताश्चैव ये चान्ये तु विकुत्सिताः ॥ ७७ ॥

रक्षणार्थं ह वै तेषां नियुक्तो विघ्ननायकः ॥

कालाग्निरुद्रपार्श्वे तु रुद्रतुल्यपराक्रमः ॥ ७८ ॥

क्षेत्रं रक्षति देवेशि पापिष्ठानां नियामकः ॥

म्रियंते यदि ब्रह्मघ्नास्तथा पातकिनो नराः ॥ ७९ ॥

क्षेत्रे चास्मिन्वरारोहे तेषां देवि गतिं शृणु ॥

दशवर्षसहस्राणि दिव्यानि कमलेक्षणे ॥ 7.1.7.८० ॥

दासी पुत्राश्च जायन्ते तदंते ब्रह्मराक्षसाः ॥

ततः पापक्षये देवि पुनर्याति वियोनिताम् ॥५१॥

तस्मात्सर्वप्रयत्नेन पापं तत्र न कारयेत् ॥

अन्यत्राऽऽवर्तितं पापं क्षेत्रे चास्मिन्विनश्यति ॥ ८२ ॥

अस्मिन्पुनः कृतं पापं पैशाचनरकावहम् ॥

भक्तानुकंपी भगवांस्तिर्यग्योनिगतेष्वपि ॥ ८३ ॥

ददाति परमं स्थानं न तु ब्रह्मद्विषां प्रिये॥

ये च ध्यानं समासाद्य युक्तात्मानः समाहिताः ॥ ८४ ॥

संनियम्येन्द्रियग्रामं जपंति शतरुद्रियम्॥

प्रभासे तु स्थिता देवि ते कृतार्था न संशयः ॥ ८५ ॥

यदि गच्छेन्नरः कश्चित्प्रभासं क्षेत्रमुत्तमम् ॥

तमुपायं प्रकुर्वीत निर्गच्छेन्न पुनर्यथा ॥ ८६ ॥

एतद्गोप्यं वरारोहे न देयं यस्य कस्यचित्॥

गोपनीयमिदं शास्त्रं यथा प्राणाः स्वकाः प्रिये॥ ८७॥

येनेदं विहितं शास्त्रं प्रभासक्षेत्रदीपकम्॥

स शिवश्चैव विज्ञेयो मानुषीं प्रकृतिं स्थितः॥८८॥

तस्यविग्रहसंस्थोऽहं सदा तिष्ठामि पार्वति॥

वंदितः पूजितो ध्यातो यथाहं नात्र संशयः ॥ ८९ ॥

कलौ च दुर्ल्लभं देवि प्रभासक्षेत्रमुत्तमम् ॥

इदानीं तव स्नेहेन विशेषं कथयामि वै ॥

सत्यंसत्यं पुनः सत्यं त्रिःसत्यं सुरसुन्दरि ॥ ॥ 7.1.7.९० ॥

यानि लिंगानि भूर्लोके सोमेशस्तेषु मे प्रियः ॥

अस्मिँल्लिंगे गुणा ये तु ते देवि विदिता मम ॥ ९१ ॥

अहमेव विजानामि नान्यो वेद कथंचन ॥

अन्येषु चैव लिंगेषु अहं पूज्यः सुरासुरैः ॥ ९२ ॥

लिंगं चेमं पुनर्देवि पूजयामो वयं स्वयम् ॥ ९३ ॥

यस्मिन्काले न वै ब्रह्मा न भूमिर्न दिवाकरः ॥

सर्वं चैव जगन्नाथ तस्मिन्काले यशस्विनि ॥ ९४ ॥

इमं लिंगं परं चैव ब्रह्मणः प्रलये तदा ॥

भाविनीं वृत्तिमास्थाय इदं स्थानं तु रक्षति ॥ ९५ ॥

दशकोट्यस्तु लिंगानां गंगाद्वाराद्वरानने ॥

आगत्य तानि मध्याह्ने लिंगेऽस्मिन्यांति संलयम् ॥ ९६ ॥

पृथिव्यां यानि तीर्थानि गगनस्थानि यानि तु ॥

स्नानार्थमस्य लिंगस्य समागच्छंति सर्वदा ॥ ९७ ॥

धन्यास्तु खलु ते मर्त्याः प्रभासे संव्यवस्थिताः ॥

सोमेश्वरं ये द्रक्ष्यंति संसारभयमोचनम् ॥ ९८ ॥

देवि सोमेश्वरं लिंगं ये स्मरिष्यंति भाविताः ॥

सर्वपापक्षयस्तेषां भविष्यति न संशयः ॥ ९९ ॥

एतत्स्मृतं प्रियतमं मम देवि नित्यं क्षेत्रं पवित्रमृषिसिद्धगणाभिरम्यम् ॥

अस्मिन्मृताः सकलजीवमृतोऽपि देवि स्वर्गात्परं समुपयांति न संशयोऽत्र ॥ 7.1.7.१०० ॥

यं देवा न विजानंति ब्रह्मविष्णुपुरोगमाः ॥

न सांख्येन न योगेन नैव पाशुपतेन च ॥ १०१ ॥

कैवल्यं निष्कलं यत्त- दस्मिँल्लिंगे तु लभ्यते ॥

तावद्भ्रमंति संसारे देवाद्यास्तु यशस्विनि ॥ १०२ ॥

यावत्सोमेश्वरं देवं न विंदंति त्रिलोचनम् ॥

क्षेत्रं प्रभासमित्युक्तं क्षेत्रज्ञोऽहं न संशयः ॥ १०३ ॥

एतं तवोक्तं ननु बोधनाय सोमेश्वरस्यैव महाप्रभावम् ॥

ये वै पठिष्यंति नरा नितांतं यास्यंति ते तत्पदमिंदुमौलेः ॥ ॥ १०४ ॥

सोमेश्वरं देववरं मनुष्या ये भक्तिमंतः शरणं प्रपन्नाः ॥

ते घोररूपे च भयावहे च संसारचक्रे न पुनर्भ्रमंति ॥ १०५ ॥

ये दक्षिणा मूर्त्तिमुपाश्रिताः स्युर्जपंति नित्यं शतरुद्रियं द्विजाः ॥

तेऽस्मिन्भवे नैव पुनर्भवंति संसारपारं परमं गता वै ॥ १०६ ॥

उद्देशमात्रं कथितो मया ते श्रीसोमनाथस्य कृतैकदेशः ॥

अब्दैरनेकैर्बहुभिर्युगैर्वा न शक्यमेकेन मुखेन वक्तुम् ॥ १०७ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्रीसोमनाथप्रादुर्भाववर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००८

https://sa.wikisource.org/s/g5c
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

पुनः कथय देवेश माहात्म्यं लोकशंकर ॥

श्रीसोमेश्वरदेवस्य सर्वपातकनाशनम्॥

ब्रह्मविष्णवीशदैवत्यं तथात्र त्रितयं वद ॥ ॥। १ ॥

॥ ईश्वर उवाच ॥ ॥

शृणुष्वैकमना भूत्वा मम गोप्यं पुरातनम् ॥

तस्मिँल्लिंगे च यद्वृत्तमाश्चर्यं परमं महत् ॥ २ ॥

षष्टिकोटि सहस्राणि ऋषीणामूर्द्ध्वरेतसाम् ॥

तस्मिँल्लिंगे प्रविष्टानि ते घृताहुतिरिवानले ॥ ३ ॥

सिद्धिर्वृद्धिस्तथा तुष्टिर्ऋद्धिः पुष्टिस्तु पंचमी ॥

कीर्तिः शांतिस्तथा लक्ष्मीस्तस्मिंल्लिंगे समुत्थिता ॥ ४ ॥

सप्तकोट्यस्तु मंत्राणां सिद्धीनां चैव संभवः ॥

दिव्ययोगरसाश्चान्ये दिव्यौषधिरसायनाः ॥ ५ ॥

गारुडं भूततंत्रं च खेचर्यो व्यंतरीस्तथा ॥

ते सर्वे सह योगेन तस्माल्लिंगात्समुत्थिताः ॥ ६ ॥

अन्याश्चैव तु याः काश्चित्सिद्धयोऽष्टौ प्रकीर्तिताः ॥

ताः सर्वाः सह लिंगेन तस्मात्स्थानात्समुत्थिताः ॥ ७ ॥

अन्यद्देवि प्रवक्ष्यामि अत्र सिद्धिं गतास्तु ये ॥

ममांशसंभवाः प्राप्ता अस्मिँल्लिंगे लयं गताः ॥ ९ ॥

तेषां च विक्रमान्सर्वान्प्रवक्ष्याम्यनुपूर्वशः ॥

पुराक्रमा ग्रहा मुण्डा गुडकाश्च सहेतुकाः ॥ ९ ॥

विमला दंडिकाश्चैव सप्तैते कुत्सिकाः स्मृताः ॥

अस्मिंल्लिंगे पुरा सिद्धा योगात्पाशुपतान्मम ॥ 7.1.8.१० ॥

रुद्रो विप्रस्तथा दानश्चंद्रो मन्थोऽवलोककः ॥

सूर्यावलोकश्चेति गार्गेयाः सप्त कीर्त्तिताः ॥ ११ ॥

सोमेश्वरे च ते सिद्धाः प्रभासे वरवर्णिनि ॥

मूकमन्यः शिवश्चैव प्रकाशः कपिलस्तथा ॥ १२ ॥

सत्कुलः कर्णिकारश्च पौरुषेयाः प्रकीर्त्तिताः ॥

सोमेश्वरे पुरा सिद्धाः प्रभासे पापनाशने ॥ १३ ॥

युगेयुगे पुरा सिद्धास्तस्मिँल्लिंगे प्रिये मम ॥

एते चान्ये च ये विप्रा भविष्यंति कलौ युगे ॥ १४ ॥

तत्र सिद्धिं गमिष्यंति दुर्ल्लभां त्रिदशैरपि ॥

एतत्ते सर्वमाख्यातं तल्लिंगं सिद्धिदं परम् ॥ १९ ॥

दुर्ल्लभं सर्वमर्त्यानां प्रभासे तु व्यवस्थितम् ॥

न च कश्चिद्विजानाति अशुभैः कर्मभिर्वृतः ॥ १६ ॥

ग्रहदोषास्तु ये केचिद्भूतदोषास्तथा परे ॥

डाकिनीप्रेतवेताला राक्षसा ग्रहपूतनाः ॥ १७ ॥

पिशाचा यातुधानाश्च मातरो जातहारिकाः ॥

बालग्रहास्तथा चान्ये बुद्धाश्चैव तु ये ग्रहाः ॥ १८ ॥

ज्वरभूत ग्रहाश्चान्ये ह्यतिसारभगंदराः ॥

अश्मरी मूत्रकृच्छ्रं च रोगाश्चान्ये सहस्रशः ॥ १९ ॥

दुर्नामकास्तथा चान्ये कुष्ठरोगास्तथा परे ॥

क्षयरोगास्तथा चान्ये वातगुल्मास्तथैव च ॥

अन्ये चैव तु ये केचिद्व्याधयस्तु प्रकीर्त्तिताः ॥ 7.1.8.२० ॥

सोमेश्वरं समासाद्य तस्य लिंगस्य दर्शनात् ॥

सर्व एव विनश्यंति वह्नौ क्षिप्तमिवेन्धनम् ॥ २१ ॥

उपसर्गाश्च () चान्ये सर्पघोणपवृश्चिकाः ॥

सर्वे तत्र विनश्यंति श्रीसोमेश्वरदर्शनात् ॥ २२ ॥

योऽसौ सोमेश्वरो नाम्ना पश्चिमो भैरवः स्मृतः ॥

कालाग्निरुद्रनाथेति पर्यायैर्नामभिः श्रुतः ॥ २३ ॥

तस्मिंस्तिष्ठामि देवेशि भक्तानुग्रहकारकः ॥

सर्वं च दुष्कृतं नृणां भक्षयामि न संशयः ॥ २४ ॥

योऽसौ प्राणः शरीरस्थो देहिनां देहसंचरः ॥
ब्रह्मांडमेतद्यस्यांतरेको यश्चाप्यनेकधा ॥ २५ ॥
वेदाः सर्वेऽपि यं देवं प्रशंसंति महर्षयः ॥
परस्य ब्रह्मणो रूपं यस्य द्वारेण लभ्यते ॥ २६ ॥
सोऽयं देवि महादेवः प्रभासे संव्यवस्थितः ॥
यथा गुप्तं गृहे रत्नं न कश्चिद्विंदते नरः ॥ २७ ॥
प्रभासे तु स्थितं तद्वद्रत्नभूतं गृहे मम ॥
तच्च लिंगं पुरा कल्पे सप्तपातालभेदकम् ॥ २८ ॥
कथितं कोटि सूर्यस्य प्रलयानलसंनिभम् ॥
तेनकालाग्निरुद्रेति प्रोक्तं सोमेश्वरः पुरा ॥ २९ ॥
इति देवि समासेन कथितं तव पार्वति ॥
सोमेश्वरस्य माहात्म्यं सर्वपातकनाशनम् ॥ 7.1.8.३० ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासमाहात्म्ये श्रीसोमेश्वरैश्वर्यवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ००९

https://sa.wikisource.org/s/g5l
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

दिव्यं तेजो नमस्यामि यन्मे दृष्टं पुरातने ॥

कालाग्निरुद्रमध्यस्थं प्रभासे शंकरोद्भवम् ॥ १ ॥

यो वेदसंघैर्ऋषिभिः पुराणैर्वेदोक्तयोगैरपि इज्यमानः ॥

तं देवदेवं शरणं व्रजामि सोमेश्वरं पापविनाशहेतुम् ॥ २ ॥

देवदेव जगन्नाथ भक्तानुग्रहकारक ॥

संशयो हृदि मे कश्चित्तं भवाञ्छेत्तुमर्हति ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

कः संशयः समुत्पन्नस्तव देवि यशस्विनि ॥

तन्मे कथय कल्याणि तत्सर्वं कथयाम्यहम् ॥ ४ ॥

॥ देव्युवाच ॥ ॥

यदि त्वं च महादेवो मुण्डमाला कथं कृता ॥

अनादि निधनो धाता सृष्टिसंहारकारकः ॥ ५ ॥

ततो विहस्य देवेशः शंकरो वाक्यमब्रवीत् ॥

अनेकमुण्डकोटीभिर्या मे माला विराजते ॥ ६ ॥

नारायण सहस्राणां ब्रह्मणामयुतस्य च ॥ कृता शिरःकरोटीभिरनादिनिधना ततः ॥ ७ ॥

अन्यो विष्णुश्च भवति अन्यो ब्रह्मा भवत्यपि ॥

कल्पे कल्पे मया सृष्टः कल्पे विष्णुः प्रजापतिः ॥ ८ ॥

अहमेवंविधो देवि क्षेत्रे प्राभासिके स्थितः ॥

कालाग्निलिंगमूले तु मुंडमालाविभूषितः ॥ ९ ॥

अक्षसूत्रधरः शान्त आदिमध्यांतवर्जितः ॥

पद्मासनस्थो वरदो हिमकुन्देन्दुसन्निभः ॥ 7.1.9.१० ॥

मम वामे स्थितो विष्णुर्दक्षिणे च पितामहः ॥

जठरे चतुरो वेदाः हृदये ब्रह्म शाश्वतम् ॥ ११ ॥

अग्निः सोमश्च सूर्यश्च लोचनेषु व्यवस्थिताः ॥ १२ ॥

एवंविधो महादेवि प्रभासे संव्यवस्थितः ॥

आप्यतत्त्वात्समानीते मा ते भूत्संशयः क्वचित् ॥ १३ ॥

एवमुक्ता तदा देवी हर्षगद्गदया गिरा ॥

तुष्टाव देवदेवेशं भक्त्या परमया युता ॥ १४ ॥ ॥

देव्युवाच ॥ ॥ जय देव महादेव सर्वभावन ईश्वर ॥

नमस्तेऽस्तु सुरेशाय परमेशाय वै नमः ॥१५॥

अनादिसृष्टिकर्त्रे च नमः सर्वगताय च ॥

सर्वस्थाय नमस्तुभ्यं धाम्नां धाम्ने नमोऽस्तु ते ॥ १६ ॥

षडंताय नमस्तुभ्यं द्वादशान्ताय ते नमः ॥

हंसभेद नमस्तुभ्यं नमस्तुभ्यं च मोक्षद ॥ १७ ॥

इति स्तुतस्तदा देव्या प्रचलच्चन्द्रशेखरः ॥

ततस्तुष्टस्तु भगवानिदं वचनमब्रवीत्॥ १८ ॥ ॥

ईश्वर उवाच ॥ ॥

साधुसाधु महाप्राज्ञे तुष्टोऽहं व्रियतां वरः ॥ १९ ॥

॥ देव्युवाच ॥ ॥

यदि तुष्टोऽसि देवेश वरार्हा यदि वाप्यहम्॥

प्रभास क्षेत्रमाहात्म्यं पुनर्विस्तरतो वद ॥ 7.1.9.२० ॥

भूतेश भगवान्विष्णुर्दैत्यानामन्तकाग्रणीः ॥

स कस्माद्द्वारकां हित्वा प्रभासक्षेत्रमाश्रितः ॥ २१ ॥

षष्टि तीर्थसहस्राणि षष्टिकोटिशतानि च ॥

द्वारकामध्यसंस्थानि कथं न्यक्कृतवान्हरिः ॥ २२ ॥

अमरैरावृतां पुण्यां पुण्यकृद्भिर्निषेविताम् ॥

एवं तां द्वारकां त्यक्त्वा प्रभासं कथमागतः ॥ २३ ॥

देवमानुषयोर्नेता द्योभुवोः प्रभवो हरिः ॥

किमर्थं द्वारकां त्यक्त्वा प्रभासे निधनं गतः ॥ २४ ॥

यश्चक्रं वर्त्तयत्येको मानुषाणां मनोमयम् ॥

प्रभासे स कथं कालं चक्रे चक्रभृतां वरः ॥२५॥

गोपायनं यः कुरुते जगतः सार्वलौकिकम् ॥
स कथं भगवान्विष्णुः प्रभासक्षेत्रमाश्रितः ॥ २६ ॥
यौंतकाले जलं पीत्वा कृत्वा तोयमयं वपुः ॥
लोकमेकार्णवं चक्रे दृष्ट्या दृष्टेन चात्मना ॥ २७ ॥
स कथं पञ्चतां प्राप प्रभासे पार्वतीपते ॥
यः पुराणे पुराणात्मा वाराहं वपुरास्थितः ॥ २८ ॥
उद्दधार महीं कृत्स्नां सशैलवनकाननाम्॥
स कथं त्यक्तवान्गात्रं प्रभासे पापनाशने ॥ २९ ॥
येन सिंहं वपुः कृत्वा हिरण्यकशिपुर्हतः ॥
स कथं देवदेवेशः प्रभासं क्षेत्रमाश्रितः ॥ 7.1.9.३० ॥
सहस्रचरणं देवं सहस्राक्षं महाप्रभम्॥
सहस्रशिरसं वेदा यमाहुर्वै युगेयुगे ॥ ३१ ॥
तत्याज स कथं देवः प्रभासे स्वं कलेवरम्॥
नाभ्यरण्यां समुद्भूतं यस्य पैतामहं गृहम् ॥ ३२ ॥
एकार्णवगते लोके तत्पंकजमपंकजम् ॥
येनोद्धृतं क्षणेनैव प्रभासस्थः स किं हरिः ॥ ३३ ॥
उत्तरांशे समुद्रस्य क्षीरोदस्या मृतोदधेः ॥
यः शेते शाश्वतं योगमास्थाय परवीरहा ॥
स कथं त्यक्तवान्देहं प्रभासे परमेश्वरः ॥ ३४ ॥
हव्यादान्यः सुरांश्चक्रे कव्यादांश्च पितॄ नपि ॥
स कथं देवदेवेशः प्रभासं क्षेत्रमाश्रितः ॥ ३५ ॥
युगानुरूपं यः कृत्वा रूपं लोकहिताय वै ॥
धर्ममुद्धरते देवः स कथं क्षेत्रमाश्रितः ॥३६॥
त्रयो वर्णास्त्रयो लोकास्त्रैविद्यं पाठकास्त्रयः॥
त्रैकाल्यं त्रीणि कर्माणि त्रयो देवास्त्रयो गुणाः॥
सृष्टं येन पुरा देवः स कथं क्षेत्रमाश्रितः॥ ३७ ॥
या गतिर्द्धर्मयुक्तानामगतिः पापकर्मिणाम्॥
चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥ ३८ ॥

चातुर्विद्यस्य यो वेत्ता चातुराश्रम्यसंस्थितः॥

कस्मात्स द्वारकां हित्वा प्रभासे पंचतां गतः ॥३९॥

दिगंतरं नभोभूमिरापो वायुर्विभावसुः॥

चंद्रसूर्यद्वयं ज्योतिर्युगेशः क्षणदातनुः ॥7.1.9.४०॥।

यः परं श्रूयते ज्योतिर्यः परं श्रूयते तपः॥

यः परं परतः प्रोक्तः परं यः परमात्मवान्॥४१॥

आदित्यादिश्च यो दिव्यो यश्च दैत्यांतको विभुः॥

स कथं देवकीसूनुः प्रभासे सिद्धिमीयिवान् ॥४२॥

युगांते चांतको यश्च यश्च लोकांतकांतकः ॥

सेतुर्यो लोकसत्तानां मेध्यो यो मेध्यकर्मणाम् ॥ ४३ ॥

वेत्ता यो वेदविदुषां प्रभुर्यः प्रभवात्मनाम्॥

सोमभूतस्तु भूतानामग्निभूतोऽग्निवर्त्मनाम् ॥ ४४ ॥

मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनाम् ॥

विनयो नयभूतानां तेजस्तेजस्विनामपि ॥४५॥

विग्रहो विग्रहाणां यो गतिर्गतिमतामपि ॥

स कथं द्वारकां हित्वा प्रभासक्षेत्रमाश्रितः॥४६॥

आकाशप्रभवो वायुर्वायुप्राणो हुताशनः॥

देवा हुताशनप्राणाः प्राणोऽग्नेर्मधुसूदनः ॥

सकथं पद्मजप्राणः प्रभासं क्षेत्रमाश्रितः ॥४७॥

॥ सूत उवाच ॥ ॥

इति प्रोक्तस्तदा देव्या शंकरो लोकशंकरः ॥

उवाच प्रहसन्वाक्यं पार्वतीं द्विजसत्तमाः ॥ ४८ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि प्रभासक्षेत्रविस्तरम् ॥

रहस्यं सर्वपापघ्नं देवानामपि दुर्ल्लभम् ॥ ४९ ॥

देवि क्षेत्राण्यनेकानि पृथिव्यां संति भामिनि ॥

तीर्थानि कोटिसंख्यानि प्रभावस्तेषु संख्यया ॥ 7.1.9.५० ॥

असंख्येय प्रभावं हि प्रभासं परिकीर्तितम् ॥

ब्रह्मतत्त्वं विष्णुतत्त्वं रौद्रतत्त्वं तथैव च ॥५१॥

तत्र भूयः समायोगो दुर्ल्लभोऽन्येषु पार्वति॥

प्रभासे देवदेवेशि तत्त्वानां त्रितयं स्थितम् ॥५२॥

चतुर्विंशतितत्त्वैश्च ब्रह्मा लोकपितामहः ॥

बालरूपी च नाम्नां च तत्र स्थाने स्थितः स्वयम् ॥५३॥

पंचविशतितत्त्वानाम धिपो देवताग्रणीः ॥

तस्मिन्स्थाने स्थितः साक्षाद्दैत्यानामंतकः शुभे ॥ ५४ ॥

अहं देवि त्वया सार्द्धं षट्त्रिंशत्तत्त्वसंयुतः ॥

निवसामि महाभागे प्रभासे पापनाशने ॥ ५५ ॥

एवं तत्त्वमयं क्षेत्रं सर्वतीर्थमयं शुभम् ॥

प्रभासमेव जानीहि मा कार्षीः संशयं क्वचित् ॥ ५६ ॥

अपि कीटपतंगा ये म्रियंते तत्र ये नराः ॥

तेऽपि यांति परं स्थानं नात्र कार्या विचारणा ॥ ५७ ॥

स्त्रियो म्लेच्छाश्च शूद्राश्च पशवः पक्षिणो मृगाः॥

प्रभासे तु मृता देवि शिवलोकं व्रजंति ते ॥ ५८॥

कामक्रोधेन ये बद्धा लोभेन च वशीकृताः ॥

अज्ञानतिमिराक्रांता मायातत्त्वे च संस्थिताः ॥ ५९ ॥

कालपाशेन ये बद्धास्तृष्णाजालेन मोहिताः ॥

अधर्मनिरता ये च ये च तिष्ठंति पापिनः ॥ 7.1.9.६० ॥

ब्रह्मघ्नाश्च कृतघ्नाश्च ये चान्ये गुरुतल्पगाः ॥

महापातकिनश्चापि ते यान्ति परमां गतिम् ॥ ६१ ॥

मातृहंता नरो यस्तु पितृहंता तथैव च ॥

ते सर्वे मुक्तिमायांति किं पुनः शुभकारिणः ॥ ६२ ॥

इति ज्ञात्वा महादेवि दैत्यानामंतको हरिः॥

प्रभासक्षेत्रमासाद्य त्यक्तवान्स्वं कलेवरम्॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रभासक्षेत्रे श्रीहरिस्थितिप्रश्नवर्णनं नाम नवमोऽध्यायः ॥ ९॥

॥ ईश्वर उवाच ॥ ॥

अन्यच्च कथयिष्यामि रहस्यं तव भामिनि ॥
यत्र कस्य चिदाख्यातं तत्ते वच्मि वरानने ॥ १ ॥
पृथ्वीभागे स्थितो ब्रह्मा अपां भागे जनार्द्दनः ॥
तेजोभागस्थितो रुद्रो वायुभागे तथेश्वरः ॥ २ ॥
आकाशभागसंस्थाने स्थितः साक्षात्सदाशिवः ॥ ३ ॥
यस्ययस्यैव यो भागस्तस्मिंस्तीर्थानि यानि वै ॥
तस्यतस्य न संदेहः स स एवेश्वरः स्मृतः ॥ ४ ॥
छागलंडं दुगण्डं च माकोटं मण्डलेश्वरम् ॥
कालिंजरं वनं चैव शंकुकर्णं स्थलेश्वरम् ॥ ५ ॥ महाभूतोपरि टिप्पणी
शूलेश्वरं च विख्यातं पृथ्वीतत्त्वे च संस्थितम् ॥
हरिश्चन्द्रं च श्रीशैलं जल्पेशोन्नांतिकेश्वरम्॥ ६ ॥
महाकालं मध्यमं च केदारं भैरवं तथा ॥
पवित्राष्टकमेतद्धि जलसंस्थं वरानने ॥ ७ ॥
अमरेशं प्रभासं च नैमिषं पुष्करं तथा ॥
आषाढिं चैव दण्डिं च भारभूतिं च लांगलम् ॥ ८ ॥
आदि गुह्याष्टकं ह्येतत्तेजस्तत्त्वे प्रतिष्ठितम् ॥
गया चैव कुरुक्षेत्रं तीर्थं कनखलं तथा ॥ ९ ॥
विमलं चाट्टहासं च माहेन्द्रं भीमसंज्ञकम् ॥
गुह्याद्गुह्यतरं ह्येतत्प्रोक्तं वाय्वष्टकं तव ॥ 7.1.10.१० ॥
वस्त्रापथं रुद्रकोटिर्ज्येष्ठेश्वरं महालयम् ॥
गोकर्णं रुद्रकर्णं च वर्णाख्यं स्थापसंज्ञकम् ॥ ११ ॥
पवित्राष्टकमेतद्धि आकाशस्थं वरानने ॥
एतानि तत्त्वतीर्थानि सर्वाणि कथितानि वै ॥ १२ ॥
यो यस्मिन्देवता तत्त्वे सा तन्माहात्म्यसूचिका ॥
औदकं च महातत्त्वं विष्णोश्चातिप्रियं प्रिये ॥ १३ ॥
जलशायी स्मृतस्तेन नारायण इति श्रुतिः ॥
आप्यतत्त्वं तु तीर्थानि यानि प्रोक्ता- नि ते मया ॥ १४॥
तानि प्रियाणि देवेशि ध्रुवं नारायणस्य वै ॥
औदकं चैव यत्तत्त्वं तस्मिन्प्राभासिकं स्मृतम् ॥ १५ ॥
तत्र देवो लयं याति हरिर्जन्मनिजन्मनि ॥
स वासुदेवः सूक्ष्मात्मा परात्परतरे स्थितः ॥ १६ ॥
स शिवः परमं व्योम अनादिनिधनो विभुः ॥

तस्मात्परतरं नास्ति सर्वशास्त्रागमेषु च ॥ १७ ॥
सिद्धांतागमवेदांतदर्शनेषु विशेषतः ॥
तेषु चैव न भिन्नस्तु मया सार्द्धं यशस्विनि ॥ १८ ॥
तस्मिन्स्थाने हरिः साक्षात्प्रत्यक्षेण तु संस्थितः ॥
लिंगैश्चतुर्भिः संयुक्तो ज्ञायते न च केनचित् ॥ १९ ॥
मोक्षार्थं नैष्ठिकैर्वर्णैर्व्रतैश्चैव तु यत्फलम् ॥
तत्फलं समवाप्नोति भल्लुकातीर्थदर्शनात्॥ 7.1.10.२० ॥
गोचर्ममात्रं तत्स्थानं समंतात्परिमण्डलम् ॥
न हि कश्चिद्विजानाति विना शास्त्रेण भामिनि॥ २१ ॥
विषुवं वहते तत्र नृणामद्यापि पार्वति ॥
पंचलिंगानि तत्रैव पंचवक्त्राणि कानि चित् ॥ २२ ॥
कुक्कुटांडकमानानि महास्थूलानि कानिचित्॥
सर्पेण वेष्टितान्येव चिह्नितानि त्रिशूलिभिः ॥ २३ ॥
तेषां दर्शनमात्रेण कोटिलिंगार्चनफलम् ॥
तस्मादिदं महाक्षेत्रं ब्रह्माद्यैः सेव्यते सदा ॥२४ ॥
श्रुतिमद्भिश्च विप्रेंद्रैः संसिद्धैश्च तपस्विभिः ॥
प्रतिमासं तथाष्टम्यां प्रतिमासं चतुर्दशीम् ॥ २५ ॥
शशिभानूपरागे वा कार्त्तिक्यां तु विशेषतः ॥
प्रभासस्थानि लिंगानि प्रपूज्यन्ते वरानने ॥ २६ ॥
संनिहत्यां कुरुक्षेत्रे सर्वस्तीर्थायुतैः सह ॥
पुष्करं नैमिषं चैवं प्रयागं संपृथूदकम् ॥२७॥
षष्टि तीर्थसहस्राणि षष्टिकोटिशतानि च ॥
माघ्यांमाघ्यां समेष्यंति सरस्वत्यब्धिसंगमे ॥ २८ ॥
स्मरणात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥
मृत्युकालभवाद्वापि पापं त्यक्ष्यति सुव्रते ॥ २९ ॥
आनर्त्तसारं सौम्यं च तथा भुवनभूषणम् ॥
दिव्यं पांचनदं पुण्यमादिगुह्यं महोदयम् ॥ 7.1.10.३० ॥
सिद्ध रत्नाकरं नाम समुद्रावरणं तथा॥
धर्माकारं कलाधारं शिवगर्भगृहं तथा ॥३१॥
सर्वदेवनिवेशं च सर्वपातकनाशनम्॥
अस्य क्षेत्रस्य नामानि कल्पे कल्पे पृथक्प्रिये ॥ ३२ ॥
आयामादीनि जानीहि गुह्यानि सुरसुन्दरि ॥
आद्ये कल्पे पुरा देवि प्रमोदनमिति स्मृतम् ॥ ३३ ॥

नन्दनं परितस्तस्य तस्यापि परतः शिवम् ॥
शिवात्परतरं चोग्रं भद्रिकं परतः पुनः ॥ ३४ ॥
समिंधनं परं तस्मात्कामदं च ततः परम् ॥
सिद्धिदं चापि धर्मज्ञं वैश्वरूपं च मुक्तिदम्॥ ३५ ॥
तथा श्रीपद्मनाभं तु श्रीवत्सं तु महाप्रभम्॥
तथा च पापसंहारं सर्वकामप्रदं तथा ॥ ३६ ॥
मोक्षमार्गं वरा रोहे तथा देवि सुदर्शनम् ॥
धर्मगर्भं तु धर्माणां प्रभासं पापनाशनम् ॥
अतः परं भवन्तीह उत्पलावर्त्तिकानि च ॥ ३७ ॥
क्षेत्रस्य मध्ये यद्देवि मम गर्भगृहं स्मृतम् ॥
तस्य नामानि ते देवि कथितान्यनुपूर्वशः ॥ ३८ ॥
श्रुत्वा नामान्यशेषाणि क्षेत्रमाहात्म्यमेव च ॥
तेषां तु वांछिता सिद्धि र्भविष्यति न संशयः ॥ ३९ ॥
एतत्कीर्त्तयमानस्य त्रिकालं तु महोदयम् ॥
संध्याकालांतरं पापमहोरात्रं विनश्यति ॥ 7.1.10.४० ॥
अपि वै दांभिकाश्चैव ये वसंत्यल्पबुद्धयः ॥
मूढा जीवनिका विप्रास्तेऽपि यांति मृता दिवम् ॥ ४१ ॥
अस्य क्षेत्रस्य मध्ये तु रवियोजनमध्यतः ॥
उपक्षेत्राणि देवेशि संत्यन्यानि सहस्रशः ॥ ४२ ॥
कानिचित्पद्मरूपाणि यवाकाराणि कानिचित् ॥
षट्कोणानि त्रिकोणानि दण्डाकाराणि कानिचित् ॥ ४३ ॥
चंद्रबिंबार्द्धभेदानि चतुरस्रप्रभेदतः ॥
ब्रह्मादिदैवतानीशे क्षेत्रमध्ये स्थितानि तु ॥ ४४ ॥
कानिचिद्योजनार्द्धानि तदर्धार्धानि कानिचित् ॥
निवर्त्तनप्रमाणेन दण्डमानेन कानिचित् ॥४५ ॥
गोचर्ममानमध्यानि कानिचिद्धनुषांतरम् ॥
यज्ञोपवीतमात्राणि प्रभासे संति कोटिशः ॥ ४६ ॥
अंगुल्यष्टम भागोऽपि नभोस्ति कमलेक्षणे ॥
न संति यस्मिंस्तीर्थानि दिव्यानि च नभस्तले ॥ ४७ ॥
प्रभासक्षेत्रमासाद्य तिष्ठंति प्रलयादनु ॥
केदारे चैव यल्लिंगं यच्च देवि महालये ॥ ४८ ॥
मध्यमेश्वरसंस्थं च तथा पाशुपतेश्वरम् ॥
शंकुकर्णेश्वरं चैव भद्रेश्वरमथापि च ॥ ४९ ॥

सोमे श्वरमथैकाग्रं कालेश्वरमजेश्वरम् ॥
भैरवेश्वरमीशानं तथा कायावरोहणम् ॥ 7.1.10.५० ॥
चापटेश्वरकं पुण्यं तथा बदरिकाश्रमम् ॥
रुद्रकोटिर्महाकोटि स्तथा श्रीपर्वतं शुभम् ॥५१॥
कपाली चैव देवेशः करवीरं तथा पुनः ॥
ओंकारं परमं पुण्यं वशिष्ठाश्रममेव च ॥
यत्र कोटिः स्मृता देवि रुद्राणां कामरूपिणाम् ॥ ५२ ॥
यानि चान्यानि स्थानानि पुण्यानि मम भूतले ॥
प्रयागं पुरतः कृत्वा प्रभासे निवसंति च ॥ ५३ ॥
उत्तरे रविपुत्री तु दक्षिणे सागरं स्मृतम् ॥
दक्षिणोत्तरमानोऽयं क्षेत्रस्यास्य प्रकीर्त्तितः ॥ ५४ ॥
रुक्मिण्याः पूर्वतश्चैव तप्ततोयाच्च पश्चिमे ॥
पूर्वपश्चिममानोऽयं प्रभासस्य प्रकीर्त्तितः ॥ ५५ ॥
एतदन्तरमासाद्य तीर्थानि सुरसुन्दरि ॥
पातालादिकटाहांतं तानि तत्र वसंति वै ॥ ५६ ॥
एवं ज्ञात्वा महादेवि सर्वदेवमयो हरिः ॥
प्रभासक्षेत्रमासाद्य तत्याज स्वं कलेवरम् ॥ ५७ ॥
दिव्यं ममेदं चरितं हि रौद्रं श्रोष्यंति ये पर्वसु वा सदा वा ॥
ते चापि यास्यंति मम प्रसादात्त्रिविष्टपं पुण्यजनाधिवासम् ॥ ५८ ॥
इति कथितमशेषमेव चित्रं चरितमिदं तव देवि पुण्ययुक्तम् ॥
इतरमपि तवातिवल्लभं यद्वद कथयामि महोदयं मुनीनाम् ॥ ५९ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रभास क्षेत्रस्थ तीर्थक्षेत्रमाहात्म्यद्वारा प्रभासक्षेत्रस्य सर्वक्षेत्रोत्तमत्ववर्णनंनाम दशमोऽध्यायः ॥१०॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०११



॥ सूत उवाच ॥ ॥

इति प्रोक्ता तदा देवि विस्मयोत्फुल्ललोचना ॥

रोमांचकञ्चुका सुभ्रूः पुनः पप्रच्छ भूसुराः ॥१॥

॥ देव्युवाच ॥ ॥

धन्याऽहं कृतपुण्याऽहं तपः सुचरितं मया ॥

यदेष क्षेत्र महिमा महादेवान्मया श्रुतः ॥२॥

भगवन्देवदेवेश संसारार्णवतारक ॥

पृष्टं तु यन्मया पूर्वं तत्सर्वं कथितं हर ॥ ३ ॥

पुनश्च देवदेवेश त्वद्वाक्यामृतरंजिता ॥

न तृप्तिमधिगच्छामि देवदेव महेश्वर ॥ ४ ॥

किंचित्प्रष्टुमनाश्चास्मि प्रभासक्षेत्रविस्तरम् ॥

तन्मे कथय कामेश दयां कृत्वा जगत्प्रभो ॥ ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

पृथिव्या मध्यगर्भस्थं जंबूद्वीपमिति स्मृतम् ॥

तच्च वै नवधा भिन्नं वर्षभेदेन सुन्दरि॥६॥

तस्याद्यं भारतं वर्षं तच्चापि नवधा स्मृतम् ॥

नवयोजनसाहस्रं दक्षिणोत्तरमानतः ॥ ७ ॥

अशीतिश्च सहस्राणि पूर्वपश्चायतं स्मृतम् ॥

उत्तरे हिमवानस्ति क्षीरोदो दक्षिणे स्मृतः ॥ ८ ॥

एतस्मिन्नंतरे देवि भारतं क्षेत्रमुत्तमम् ॥

कृतं त्रेता द्वापरं च तिष्यं युगचतुष्टयम् ॥ ९ ॥

अत्रैवैषा युगावस्था चतुर्वर्णश्च वै जनः ॥

चत्वारि त्रीणि च द्वे च तथैवैक शरच्छतम् ॥ 7.1.11.१० ॥

जीवन्त्यत्र नरा देवि कृतत्रेतादिषु क्रमात् ॥

यदेतत्पार्थिवं पद्मं चतुष्पत्रं मयोदितम् ॥ ११ ॥

वर्षाणि भारताद्यानि पत्राण्यस्य चतुर्द्दिशम्॥

भारतं केतुमालं च कुरु भद्राश्वमेव च॥१२॥

भारतं नाम यद्वर्षं दाक्षिणात्यं मयोदितम्॥

दक्षिणापरतो यस्य पूर्वेण च महोदधिः ॥

हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः ॥ १३॥

तदेतद्भारतं वर्षं सर्वबीजं वरानने ॥

तत्कर्मभूमिर्नान्यत्र संप्राप्तिः पुण्यपापयोः ॥ १४ ॥

देवानामपि देवेशि सदैवैष मनोरथः ॥

अपि मानुष्यमाप्स्यामो भारते प्रत्युत क्षितौ ॥ १५ ॥

भद्राश्वेऽश्वशिरा विष्णुर्भारते कूर्मसंस्थितः ॥

वराहः केतुमाले च मत्स्यरूपस्तथोत्तरे ॥ १६ ॥

तेषु नक्षत्रविन्यासाद्विषयाः समवस्थिताः ॥

चतुर्ष्वपि महादेवि विग्रहो नव पादकः ॥ १७ ॥

भारतो यो महादेवि कूर्मरूपेण संस्थितः ॥

नक्षत्रग्रहविन्यासं तस्य ते कथयाम्यहम् ॥ १८ ॥

प्राङ्मुखो भगवान्देवो कूर्मरूपी व्यवस्थितः ॥

आक्रम्य भारतं वर्षं नवभेदमिदं प्रिये ॥ १९ ॥

नवधा संस्थितस्यास्य नक्षत्राणि निबोध मे ॥

कृत्तिका रोहिणी सौम्यं तृतीयं कूर्मपृष्ठिगम् ॥ 7.1.11.२० ॥

रौद्रं पुनर्वसुः पुष्यं नक्षत्रत्रितयं मुखे ॥

आश्लेषाख्यं तथा पैत्रं फाल्गुनी प्रथमा प्रिये ॥ २१ ॥

नक्षत्रत्रितयं पादमाश्रितं पूर्वदक्षिणम् ॥

फाल्गुनी चोत्तरा हस्तं चित्रा चर्क्षत्रयं स्मृतम् ॥ २२ ॥

कूर्मस्य दक्षिणे कुक्षौ चर्क्षपादं तथाऽपरम् ॥

स्वाती विशाखा मैत्रं च नैर्ऋते त्रितयं स्मृतम् ॥ २३ ॥

ऐंद्रं मूलं तथाषाढा पृष्ठे तु त्रितयं स्मृतम् ॥

आषाढा श्रवणं चैव धनिष्ठा चात्र शब्दिता ॥ २४ ॥

नक्षत्रितयं पादे वायव्ये तु यशस्विनि ॥

वारुणं चैव नक्षत्रं तथा प्रोष्ठपदाद्वयम् ॥ २५ ॥

कूर्मस्य वामकुक्षौ तु त्रितयं संस्थितं प्रिये ॥

रेवती चाश्विदैवत्यं याम्यं चर्क्षमिति त्रयम् ॥

ईशपादे समाख्यातं शुभाशुभफलं शृणु ॥ २६ ॥

यस्यर्क्षस्य पतिर्यो वै ग्रहस्तद्वैन्यतो भयम् ॥

तद्देशस्य महादेवि तथोत्कर्षे शुभागमः ॥ २७ ॥

एष कूर्मो मयाख्यातो भारते भगवानिह ॥

नारायणो ह्यचिंत्यात्मा यत्र सर्वं प्रतिष्ठितम् ॥ २८ ॥

मेषवृषौ हृदो मध्ये मुखे च मिथुनादिकौ ॥

प्राग्दक्षिणे तथा पादे कर्कसिंहौ व्यवस्थितौ ॥ २९ ॥

सिंहकन्यातुलाश्चैव कुक्षौ राशित्रयं स्मृतम् ॥

धटोऽध वृश्चिकाश्चोभौ पादे दक्षिणपश्चिमे ॥ 7.1.11.३० ॥

पुच्छे तु वृश्चिकश्चैव सधनुश्च व्यवस्थितः ॥

वायव्ये वामपादे च धनुर्ग्राहादिकं त्रयम् ॥ ३१ ॥

कुम्भ मीनौ तथा चास्य उत्तरां कुक्षिमाश्रितौ ॥

मीनमेषौ महादेवि पादे पूर्वोत्तरे स्थितौ ॥ ३२ ॥

कूर्म्मदेशांस्तथर्क्षाणि देशेष्वेतेषु वै प्रिये ॥

राशयश्च तथर्क्षेषु ग्रहा राशिव्यवस्थिताः ॥ ३३ ॥

तस्माद्ग्रहर्क्षपीडासु देशपीडां विनिर्दिशेत् ॥

तत्र स्नानं प्रकुर्वंति दानं होमादिकं तथा ॥ ३४ ॥

स एष वैष्णवः पादो देवि मध्ये ग्रहोऽस्य यः ॥

नारायणाख्योऽचिंत्यात्मा कारणं जगतः प्रभुः ॥ ३५ ॥

भौमशुक्रबुधेंद्वर्कबुधशुक्रमहीसुताः ॥

गुरुमंदासुराचार्या मेषादीनामधीश्वराः ॥ ३६ ॥

एवंविधो महादेवि कूर्मरूपी जनार्द्दनः ॥

तस्य नैरृतपादे तु सौराष्ट्र इति विश्रुतः ॥ ३७ ॥

स चैवं नवधा भिन्नः पुरभेदेन सुंदरि ॥

तस्य यो नवमो भागः सागरस्य च सन्निधौ ॥ ३८ ॥

प्रभास इति विख्यातो मम देवि प्रियः सदा ॥

योजनानां दशद्वे च विस्तीर्णः परिमण्डलम् ॥ ३९ ॥

मध्येस्य पीठिका प्रोक्ता पंचयोजनविस्तृता ॥

तन्मध्ये मद्ग्रहं देवि तिष्ठत्युदधिसंनिधौ ॥ ॥ 7.1.11.४० ॥

तस्य मध्ये महादेवि लिंगरूपो वसाम्यहम् ॥ ४१ ॥

कृतस्मरात्पश्चिमतो धनुषां च शतत्रये ॥

वसामि तत्र देवेशि त्वया सह वरानने ॥ ४२ ॥

तन्मे स्थानं महादेवि कैलासादपि वल्लभम् ॥

गोचर्ममात्रं तत्रापि महागोप्यं वरानने ॥ ४३ ॥

अकथ्यं देवदेवेशि तव स्नेहात्प्रकाशितम् ॥

एतत्प्राभासिकं क्षेत्रं प्रभया दीपितं मम ॥ ४४ ॥

तेन प्रभासमित्युक्तमादिकल्पे वरानने ॥

द्वितीये तु प्रभा लब्धा सर्वैर्देवैः सवासवैः ॥ ४५ ॥

मम प्रभाभा देवेशि तेन प्राभासिकं स्मृतम् ॥

प्रभाववन्तो देवेशि यत्र संति महासुराः ॥ ४६ ॥

अथवा तेन लोकेषु प्रभासमिति कीर्त्यते ॥

प्रथमं भासते देवि सर्वेषां भुवि तेजसाम् ॥

तीर्थानामादितीर्थं यत्प्रभासं तेन कीर्तितम् ॥ ॥। ४७ ॥

प्रकृष्टं भानुरथवा भासितो विश्वकर्मणा ॥

यत्र साक्षात्प्रभापातो जातः प्राभासिकं ततः ॥ ४८ ॥

अथवा दक्षसंशप्तेनेन्दुना निष्प्रभेणच ॥

तत्र देवि प्रभा लब्धा तेन प्राभासिकं स्मृतम् ॥

प्रोद्दधे भारती देवी ह्यौर्वाग्निं वडवानलम् ॥ ४९ ॥

अथवा तेन देवेशि प्रभासमिति कीर्त्यते ॥

प्रकृष्टा भारती ब्राह्मी विप्रोक्ता श्रूयतेऽध्वनि ॥

सदा यत्र महादेवि प्रभासं तेन कीर्तितम् ॥ 7.1.11.५० ॥

प्रोल्लसद्वीचिभिर्भाति सर्वदा सागरः प्रिये ॥

तेन प्रभास नामेति त्रिषु लोकेषु विश्रुतम् ॥ ५१ ॥

प्रत्यक्षं भास्करो यत्र सदा तिष्ठति भामिनि ॥

तेन प्रभास नामेति प्रसिद्धिमगमत्क्षितौ ॥ ५२ ॥

प्रकृष्टं भाविनां सर्वं कामं तत्र ददाम्यहम् ॥

तेन प्रभासनामेति तीर्थं त्रैलोक्यविश्रुतम् ॥ ५३ ॥

कल्पभेदेन नामानि तथैव सुरसुन्दरि ॥

निरुक्तभेदैर्बहुधा भिद्यंते कारणैः प्रिये ॥

प्रभासमिति यन्नाम दातव्यं निश्चलं स्मृतम् ॥ ५४ ॥

अप्तत्त्वे संस्थितं देवि विष्णोराद्यकलेवरे ॥

इति ते कथितं देवि संक्षेपात्क्षेत्रकारणम् ॥ ५५ ॥

पुनस्ते कथयाम्यद्य यत्पृच्छसि वरानने ॥

तद्ब्रूहि शीघ्रं कल्याणि यत्ते मनसि वर्तते ॥ ५६ ॥

॥ देव्युवाच ॥ ॥

अस्मिन्कल्पे यथा जातं क्षेत्रं प्राभासिकं हर ॥

तन्मे विस्तरतो ब्रूहि उत्पत्तिं कारणं तथा ॥ ५७ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि यथावत्क्षेत्रकारणम् ॥

यच्छ्रुत्वा मानवो भक्त्या मुच्यते सर्वपातकैः॥ ५८ ॥

आदिक्षेत्रस्य माहात्म्यं रहस्यं पापनाशनम् ॥

कथयिष्ये वरारोहे तव स्नेहेन भामिनि ॥ ५९ ॥

अस्मिन्कल्पे तु यद्देवि आदावेव वरानने ॥

स्वायंभुवे मनौ तत्र ब्रह्मणः सृजतः पुरा ॥ 7.1.11.६० ॥

दक्षिणाल्लोचनाज्जातः पूर्वं सूर्य इति प्रिये ॥

ततः कालान्तरे तस्य भार्ये द्वे च बभूवतुः ॥ ६१ ॥

तयोस्तु राज्ञी द्यौर्ज्ञेया निक्षुभा पृथिवी स्मृता ॥

सौम्यमासस्य सप्तम्यां द्यौः सूर्येण च युज्यते ॥ ६२ ॥

माघमासे तु सप्तम्यां मह्या सह भवेद्रविः॥

भूश्चादित्यश्च भगवान्गच्छते संगमं तदा॥ ६३ ॥

ऋतुस्नाता मही तत्र गर्भं गृह्णाति भास्करात् ॥

द्यौर्जलं सूयते गर्भं वर्षास्वास्विह भूतले ॥६४॥

ततस्त्रैलोक्यवृत्त्यर्थं मही सस्यानि सूयते ॥

सस्योपयोगात्संहृष्टा जुह्वत्याहुतिभिर्द्विजाः ॥ ६५ ॥

स्वाहाकारस्वधाकारैर्यजंति पितृदेवताः ॥

निःक्षुधः कुरुते यस्माद्गर्भौषधिसुधाऽमृतैः ।1 ६६ ॥

मर्त्यान्पितॄंश्च देवांश्च तेन भूर्निक्षुभा स्मृता ॥

यथा राज्ञी च संजाता यस्य चेयं सुता मता ॥ ॥ ६७ ॥

अपत्यानि च यान्यस्यास्तानि वक्ष्याम्यशेषतः ॥

मरीचिर्ब्रह्मणः पुत्रो मारीचः कश्यपः स्मृतः ॥ ६८ ॥

तस्माद्धिरण्यकशिपुः प्रह्लादस्तस्य चात्मजः ॥

प्रह्लादस्य सुतो नाम्ना विरोचन इति स्मृतः ॥ ६९ ॥

विरोचनस्य भगिनी संज्ञा या जननी तु सा ॥

हिरण्यकशिपोः पौत्री दितेः पुत्रस्य सा स्मृता ॥ 7.1.11.७० ॥

सा विश्वकर्मणः पत्नी प्राह्लादी प्रोच्यते बुधैः ॥ ७१ ॥

अथ नाम्नातिरूपेति मरीचिदुहिता शुभा ॥

पत्नी ह्यंगिरसः सा तु जननी च बृहस्पतेः ॥ ७२ ॥

बृहस्पतेस्तु भगिनी विश्रुता ब्रह्मवादिनी ॥

प्रभासस्य तु सा पत्नी वसूनामष्टमस्य वै ॥ ७३ ॥

प्रसूता विश्वकर्माणं सर्वशिल्पवतां वरम् ॥

स चैव नाम्ना त्वष्टा तु पुनस्त्रिदशवार्द्धकिः ॥ ७४ ॥

देवाचार्यस्य तस्येयं दुहिता विश्वकर्मणः ॥

सुरेणुरिति विख्याता त्रिषु लोकेषु भामिनी ॥ ७५ ॥

प्रह्लादपुत्री या प्रोक्ता भार्या वष्टुस्तु सा स्मृता ॥

तस्यां स जनयामास पुत्रीस्ता लोकमातरः ॥ ७६ ॥

राज्ञी संज्ञा च द्यौस्त्वष्ट्री प्रभा सैव विभाव्यते ॥

तस्यास्तु वलया छाया निक्षुभा सा महीयसी ॥ ७७ ॥

सा तु भार्या भगवती मार्तंडस्य महात्मनः ॥

साध्वी पतिव्रता देवी रूपयौवनशालिनी ॥ ७८ ॥

न तु तां नररूपेण भार्यां भजति वै पुरा ॥

आदित्यस्येह तत्तत्वं महता स्वेन तेजसा ॥ ७९॥

गात्रेष्वप्रतिरूपेषु मासिकांतमिवाभवत् ॥

संज्ञा च रविणा दृष्टा निमीलयति लोचने ॥

यतस्ततः सरोषोऽर्कः संज्ञां वचनमब्रवीत् ॥ 7.1.11.८० ॥

॥ रविरुवाच ॥ ॥

मयि दृष्टे सदा यस्मात्कुरुषे नेत्रसंक्षयम् ॥

तस्माज्जनिष्यसे मूढे प्रजासंयमनं यमम् ॥ ८१ ॥

॥ ईश्वर उवाच ॥ ॥

ततः सा चपला दृष्टिं देवी चक्रे भयाकुला ॥

विलोलितदृशं दृष्ट्वा पुनराह च तां रविः ॥ ८२ ॥

॥ रविरुवाच ॥ ॥

यस्माद्विलोलिता दृष्टिर्मयि दृष्टे त्वया पुनः ॥

तस्माद्विलोलां तनयां नदीं त्वं प्रसविष्यसि ॥ ॥ ८३ ॥

॥ ईश्वर उवाच ॥ ॥

ततस्तस्यास्तु संजज्ञे भर्तृशापेन तेन वै ॥

यमश्च यमुना चेयं प्रख्याता सुमहानदी ॥

तृतीयं च सुतं जज्ञे श्राद्धदेवं मनुं शुभम् ॥ ८४ ॥

सापि संज्ञा रवेस्तेजो गोलाकारं महाप्रभम् ॥

असहन्ती च सा चित्ते चिन्तयामास वै तदा ॥ ८५ ॥

किं करोमि क्व यास्यामि क्व गतायाश्च निर्वृतिः ॥

भवेन्मम कथं भर्ता कोपमर्क्कश्च नेष्यति ॥ ८६ ॥

इति संचिन्त्य बहुधा प्रजापतिसुता तदा ॥

बहु मेने महाभागा पितृसंश्रयमेव च ॥ ८७ ॥

ततः पितृगृहं गन्तुं कृतबुद्धिर्यशस्विनी ॥

छायामयीमात्मतनुं प्रत्यंगमिव निर्मिताम् ॥ ८८ ॥

सम्मुखं प्रेक्ष्य तां देवीं स्वां छायां वाक्यमब्रवीत् ॥ ८९ ॥

॥ संज्ञोवाच ॥ ॥

अहं यास्यामि भद्रं ते स्वकं च भवनं पितुः ॥

निर्विकारं त्वया त्वत्र स्थेयं मच्छासनाच्छुभे ॥ 7.1.11.९० ॥

इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ॥

संभाव्या नैव चाख्येयमिदं भगवते त्वया ॥ ९१ ॥

पृष्टयापि न वाच्यं ते तथैतद्गमनं मम ॥

तेनास्मि नामसंज्ञेति वाच्यसे तत्प्रतिष्ठया ॥ ९२ ॥

॥ छायोवाच ॥ ॥

आ केशग्रहणाद्देवि आ शापान्नैव कर्हिचित् ॥

आख्यास्यामि मतं तुभ्यं गम्यतां यत्र वांछितम् ॥ ९३ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्ता सा तदा देवी जगाम भवनं पितुः ॥

ददर्श तत्र त्वष्टारं तपसा धूतकल्मषम् ॥ ९४ ॥

बहुमानाच्च तेनापि पूजिता विश्वकर्मणा ॥

वर्षाणां च सहस्रं तु वसमाना पितुर्गृहे ॥

तस्थौ पितृगृहे सा तु किंचित्कालमनिंदिता ॥ ९५ ॥

ततस्तां प्राह चार्वंगीं पिता नातिचिरोषिताम् ॥

स्तुत्वा तु तनयां प्रेम्णा बहुमानपुरःसरम् ॥ ९६ ॥

॥ विश्वकर्मोवाच ॥ ॥

त्वामेव पश्यतो वत्से दिनानि सुबहून्यपि ॥

मुहूर्तार्द्धसमानि स्युः किं तु धर्मो विलुप्यते ॥ ९७ ॥

बांधवेषु चिरं वासो नारीणां न यशस्करः ॥

मनोरथा बांधवानां नार्या भर्तृगृहे स्थितिः ॥ ९८ ॥

सा त्वं त्रैलोक्यनाथेन भर्त्रा सूर्येण संयुता ॥

पितुर्गृहे चिरं कालं वस्तुं नार्हसि पुत्रिके ॥ ९९ ॥

तत्त्वं भर्तृगृहं गच्छ दृष्टोऽहं पूजितासि मे ॥

पुनरागमनं कार्यं दर्शनाय शुचिस्मिते ॥ 7.1.11.१०० ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्ता सा तदा पित्रा गच्छगच्छेति सा पुनः ॥
संपूजयित्वा पितरं वडवारूपधारिणी ॥ १०१ ॥
मेरोरुत्तरतस्तत्र वर्षं यद्धनुषाकृति ॥
उत्तराः कुरवो लोके प्रख्याता ये यशस्विनि ॥ १०२ ॥
तत्र तेपे तपः साध्वी निराहाराऽश्वरूपिणी ॥
एतस्मिन्नंतरे देवि तस्याश्छाया विवस्वतः ॥ १०३ ॥
समीपस्था तदा देवी संज्ञाया वाक्यतत्परा ॥
तस्यां च भगवान्सूर्यो द्वितीयायां दिवस्पतिः ॥ १०४ ॥
संज्ञेयमिति मन्वानो रूपौदार्येण मोहितः ॥
तस्यां च जनयामास द्वौ पुत्रौ कन्यकां तथा ॥ १०५ ॥
पूर्वं यस्तु मनोस्तुल्यः सावर्णिस्तेन सोऽभवत् ॥
यः सूर्यात्प्रथमं जातः पुत्रयोः सुरसुन्दरि ॥ १०६ ॥
द्वितीयो योऽभवच्चान्यः स ग्रहोऽभूच्छनैश्चरः ॥
कन्या ऽभूत्तपती या तां वव्रे संवरणो नृपः ॥ १०७ ॥
तापीनाम नदी चेयं विंध्यमूलाद्विनिःसृता ॥
नित्यं पुण्यजला स्नाने पश्चिमोदधिगामिनी ॥१०८॥
अन्या चैव तथा भद्रा जाता पुत्री महाप्रभा ॥
संज्ञा तु पार्थिवी छाया आत्मजानां यथाकरोत् ॥ १०९ ॥
स्नेहं न पूर्वजातानां तथा कृतवती सती॥
लालनाद्युपभोगेषु विशेषमनुवासरम्॥7.1.11.११०॥
यथा स्वेष्वनुवर्तेत न तथान्येषु भामिनी ॥
मनुस्तु क्षांतवांस्तस्या भविष्यो यो हि पार्वति ॥१११॥
मेरौ तिष्ठति सोऽद्यापि तपः कुर्वन्वरानने ॥
सर्वं तत्क्षांतवान्मातुर्यमस्तस्या न चक्षमे ॥ ११२ ॥
बहुशो याचमानस्तु छायया़तीव कोपितः ॥
स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥ ११३ ॥
ताडनाय ततः कोपात्पादस्तेन समुद्यतः ॥
तथा पुनः क्षांतिमता न तु देहे निपातितः ॥ ११४ ॥

पदा संतर्जयामास छायां संज्ञासुतो यमः ॥ ११५ ॥

तं शशाप ततश्छाया क्रुद्धा सा पार्थिवी भृशम् ॥

किंचित्प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ॥ ११६ ॥

॥ छायोवाच ॥ ॥

पितुः पत्नीममर्याद यन्मां तर्जयसे पदा ॥

भुवि तस्मादयं पादस्तवाद्यैव पतिष्यति॥ ११७ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

यमस्तु तेन शापेन भृशं पीडितमानसः ॥

मनुना सह धर्मात्मा पित्रे सर्वं न्यवेदयत्॥ ११८ ॥

॥ यम उवाच ॥ ॥

तातैतन्महदाश्चर्यं न दृष्टमिह केनचित् ॥

माता वात्सल्यमुत्सृज्य शापं पुत्रे प्रयच्छति ॥११९॥

स्नेहेन तुल्यमस्मासु माताद्य नैव वर्त्तते ॥

विसृज्य ज्यायसो यस्मात्कनीयःसु बुभूषति ॥ 7.1.11.१२० ॥

तस्या मयोद्यतः पादो न तु देहे निपातितः ॥

बाल्याद्वा यदि वा मोहात्तद्भवान्क्षंतुमर्हति ॥१२१॥

शप्तोऽहं तात कोपेन तया सुत इति स्फुटम् ॥

अतो न मह्यं जननी सा भवेद्वदतां वर ॥ १२२ ॥

निगुर्णेष्वपि पुत्रेषु न माता निर्गुणा भवेत् ॥

पादस्ते पततां पुत्र कथमेतत्तयोदितम् ॥ १२३ ॥

तव प्रसादाच्चरणो न पतेद्भगवन्यथा ॥

मातृशापादयं मेऽद्य तथा चिंतय गोपते ॥ १२४ ॥

॥ रविरुवाच ॥ ॥

असंशयं महत्पुत्र भविष्यत्यत्र कारणम् ॥

येन ते ह्याविशत्क्रोधो धर्मज्ञस्य महात्मनः ॥ १२६ ॥

सर्वेषामेव शापानां प्रतिघातोऽपि विद्यते ॥

न तु मात्राभिशप्तानां क्वचिच्छापनिवर्त्तनम् ॥ १२६ ॥

न युक्तमेतन्मिथ्या तु कर्तुं मातुर्वचस्तव ॥

किंचित्ते संविधास्यामि पुत्रस्नेहादनुग्रहम् ॥ १२७ ॥

कृमयो मांसमादाय प्रयास्यंति महीतलम् ॥

कृतं तस्या वचः सत्यं त्वं च त्रातो भविष्यसि ॥ १२८ ॥

॥ ईश्वर उवाच ॥ ॥

आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै ॥

तुल्येष्वप्यधिकः स्नेह एकत्र क्रियते त्वया ॥ १२९ ॥

नूनं न चैषां जननी त्वं संज्ञा क्वापि सा गता ॥

विकलेष्वप्यपत्येषु न माता शापदा भवेत् ॥ 7.1.11.१३० ॥

अपि दोषसहस्राणि यदि पुत्रः समाचरेत् ॥

प्राणद्रोहेऽपि निरतो न माता पापमाचरेत् ॥

तस्मात्सत्यं मम ब्रूहि मा शापवशगा भव ॥ १३१ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

तं शप्तुमुद्यतं दृष्ट्वा छायासंज्ञा दिनाधिपम् ॥

भयेन कंपती देवी यथावृत्तं महासती ॥ १३२ ॥

सा चाह तनया त्वष्टुरहं संज्ञा विभावसो ॥

पत्नी तव त्वया पत्या पतियुक्ता दिवाकर ॥ १३३ ॥

इत्थं विवस्वतः सा तु बहुशः पृच्छतोऽन्यथा ॥

न वाचा भाषते क्रुद्धः शापं दातुं समुद्यतः ॥ १३४ ॥

शापोद्यतकरं दृष्ट्वा सूर्यं छाया विवस्वतः ॥

कथयामास तत्सर्वं संज्ञायाः सुविचेष्टितम् ॥ १३५ ॥

तच्छ्रुत्वा भगवान्सूर्यो जगाम त्वष्टुरालयम् ॥

ततः संपूजयामास तदा त्रैलोक्यपूजितम् ॥ १३६ ॥

निर्दग्धुकामं रोषेण सान्त्वयामास पार्वति ॥

भास्वंतं निजया दीप्त्या निजगेहमुपागतम् ॥

क्व संज्ञेति च पृच्छन्तं कथयामास विश्वकृत् ॥ १३७ ॥

॥ विश्वकर्म्मोवाच ॥ ॥

आगतैव हि मे वेश्म भवता श्रूयतां वचः ॥

विख्यातं तेजसाऽऽढ्यं त इदं रूपं सुदुःसहम् ॥ १३८ ॥

असहन्ती ततः संज्ञा वने चरति वै तपः ॥

द्रक्ष्यसे तां भवानद्य स्वभार्यां शुभचारिणीम् ॥ १३९ ॥

रूपार्थं चरतेऽरण्यं चरंती सुमहत्तपः ॥

मतं मे ब्रह्मणो वाक्याद्यदि ते देव रोचते ॥

रूपं निर्वर्त्तयाम्यद्य तव कांतं दिवस्पते ॥ 7.1.11.१४० ॥

॥ ईश्वर उवाच ॥ ॥

यतो हि भास्वतो रूपं प्रागासीत्परिमंडलम् ॥

ततस्तथेति तं प्राह त्वष्टारं भगवान्रविः ॥ १४१ ॥

विश्वकर्मात्वनुज्ञातः शाकद्वीपे विवस्वता ॥

भृ(भू?)मिमारोप्य तत्तेजः शातनायोपचक्रमे ॥१४२॥

भ्रमताऽशेषजगतामधिभूतेन भास्वता ॥

समुद्रा द्रविणोपेताश्चुक्षुभुश्च समन्ततः ॥ १४३ ॥

भ्रमता खलु देवेशि सचंद्रग्रहतारकम्॥

अधोगति महाभागे बभूवाक्षिप्तमाकुलम् ॥१४४॥

विक्षिप्तसलिलाः सर्वे बभूवुश्च तथा नदाः ॥

व्यभिद्यंत तथा शैलाः शीर्णसानुनिबंधनाः ॥ १४५ ॥

ध्रुवाधाराण्यशेषाणि धिष्ण्यानि वरवर्णिनि ॥

भ्राम्यद्रश्मिनिबद्धानि अधो जग्मुः सहस्रशः ॥ १४६ ॥

व्यशीर्यंत महामेघा घोरारावविराविणः ॥

भास्वद्भ्रमणविभ्रांतभूम्याकाशमहीतलम् ॥ १४७ ॥

जगदाकुलमत्यर्थं तदाऽऽसीद्वरवर्णिनि ॥

त्रैलोक्ये सकले देवि भ्रममाणे महर्षयः ॥

देवाश्च ब्रह्मणा सार्द्धं भास्वंतमभितुष्टुवुः॥१४८॥

॥ देवा ऊचुः॥ ॥

आदिदेवोऽसि देवानां जातमेतत्स्वयं तव ॥

सर्गस्थित्यंतकालेषु त्रिधा भेदेन तिष्ठसि ॥ १४९ ॥

स्वस्ति तेऽस्तु जगन्नाथ घर्मवर्षहिमाकर ॥

इंद्र आगम्य तं देवं लिख्यमानमथास्तवीत् ॥

जय देव जगत्स्वामिञ्जय देव जगत्पते ॥7.1.11.१५॥।

ऋषयश्च ततः सप्त वसिष्ठात्रिपुरोगमाः ॥

तुष्टुवुर्विविधैः स्तोत्रैः स्वस्ति स्वस्तीति वादिनः ॥

वेदोक्तिभिरथाग्र्याभिर्वालखिल्याश्च तुष्टुवुः ॥ १५१ ॥

॥ वालखिल्या ऊचुः ॥ ॥

नमस्त ऋक्स्वरूपाय सामरूपाय ते नमः ॥

यजुःस्वरूपरूपाय साम्नां धामग ते नमः ॥ १५२ ॥

ज्ञानैकरूपदेहाय निर्धूततमसे नमः ॥

शुद्धज्योतिःस्वरूपाय त्रिमूर्तायामलात्मने ॥ १५३ ॥

वरिष्ठाय वरेण्याय सर्वस्मै परमात्मने ॥

नमोऽखिलजगद्व्यापिरूपायानंतमूर्तये ॥ १५४ ॥

सर्वकारणभूताय निष्ठाय ज्ञान चेतसाम् ॥

नमः सूर्यस्वरूपाय प्रकाशालक्ष्यरूपिणे ॥ १५५ ॥

भास्कराय नमस्तुभ्यं तथा दिनकृते नमः ॥

सर्वस्मै हेतवे चैव संध्याज्यो त्स्नाकृते नमः ॥ १५६ ॥

त्वं सर्वमेतद्भगवञ्जगच्च भ्रमता त्वया ॥

भ्रमत्याविश्वमखिलं ब्रह्मांडं सचराचरम् ॥

त्वदंशुभिरिदं सर्वं स्पृष्टं वै जायते शुचि ॥ १५७ ॥

क्रियते त्वत्करस्पर्शैर्जलादीनां पवित्रता ॥ १५८ ॥

होमदानादिको धर्मो नोपकाराय जायते ॥

तात यावन्न संयोगि जगदेतत्त्वदंशुभिः ॥ १५९ ॥

ऋचस्ते सकला ह्येतास्तथा यानि यजूंषि च ॥

सकलानि च सामानि निपतंति त्वदंगतः ॥ 7.1.11.१६० ॥

ऋङ्मयस्त्वं जगन्नाथ त्वमेव च यजुर्मयः ॥

यतः साममयश्चैव ततो नाथ त्रयीमयः ॥ १६१ ॥

त्वमेव ब्रह्मणो रूपं परं चापरमेव च ॥

मूर्तामूर्तं तथा सूक्ष्मं स्थूलं रूपेण संस्थितः ॥ १६२ ॥

निमेषकाष्ठादिमयः कालरूपक्षणात्मकः॥

प्रसीद स्वेच्छया रूपं स्वं तेजः शमनं कुरु॥

त्वं देव जगतां हेतोर्दुःखं सहसि दुःसहम्॥ १६३॥

त्वं नाथ मोक्षिणां मोक्षो ध्येयस्त्वं ध्यायतां वरः॥

त्वं गतिः सर्वभूतानां कर्मकांडनिवर्तिनाम्॥१६४॥

शं प्रजाभ्योऽस्तु देवेश शन्नोऽस्तु जगतांपते॥१६५॥

त्वं धाता विसृजसि विश्वमेक एव त्वं पाता स्थितिकरणाय संप्रवृत्तः॥

त्वय्यंते लयमखिलं प्रयाति चैतत्त्वत्तोन्यो न हि तपनास्ति सर्वदाता ॥ १६६ ॥

त्वं ब्रह्मा हरिहरसंज्ञितस्त्वमिन्द्रो वित्तेशः पितृपितरंबुपः समीरः ॥

सोमोऽग्निर्गगनमहाधरादिरूपः किं न त्वं सकलमनोरथप्रदाता ॥ १६७ ॥

यज्ञैस्त्वामनुदिनमात्मकर्म्मसक्ताः स्तुवन्तो विविधपदैर्द्विजा यजंति ॥

ध्यायन्तः सविनयचेतसो भवन्तं योगस्थाः परमपदं प्रयांति मर्त्त्या ॥ १६८ ॥

तपसि पचसि विश्वं पासि भस्मीकरोषि प्रकटयसि मयूखैर्ह्लादयतस्यंशुगर्भैः॥

सृजसि कमलजन्मा पालयस्यच्युताख्यः क्षपयसि च युगांते रुद्ररूपस्त्वमेकः॥१६९॥

ईश्वर उवाच॥

लिखमानस्ततो भानुं विश्वकर्मा प्रजापतिः॥

उद्भूतपुलकः स्तोत्रमिदंचक्रे विवस्वतः॥7.1.11.१७॥।

विवस्वते प्रणतजनानुकम्पिने महात्मने समजवसप्तसप्तये ॥

सतेजसे कमलकुलालिबंधवे सदा तमःपटलपटावपाटिने ॥१७१॥

पावनातिशयसर्वचक्षुषे नैककामविषयप्रदायिने ॥

भासुरामलमयूखमालिने सर्वभूतहितकारिणे नमः ॥१७२॥

अजाय लोकत्रयभावनाय भूतात्मने गोपतये वृषाय ॥

नमो महाकारुणिकोत्तमाय सूर्याय वस्तुप्रभवालयाय ॥ १७३ ॥

विवस्वते ज्ञानभृतेऽन्तरात्मने जगत्प्रतिष्ठाय जगद्धितैषिणे ॥

स्वयंभुवे निर्मललोकचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ १७४॥

क्षणमुदयाचलभालिताच्चिर्चः सुरगणगीतिगरिष्ठगीतः ॥

त्वमुत मयूखसहस्रवज्जगति विकासितपद्मनाभः ॥१७५॥

तव तिमिरासवपानमदाद्भवति विलोहितविग्रहता ॥

मिहिरविभासतया सुतरां त्रिभुवनभावनमात्रपरः ॥ १७६ ॥

रथमारुह्य समावयवं रुचिरविकलितदिव्यहयम्॥
सततमरिबले भगवंश्चरसि जगद्धितबद्धरसः ॥ १७७ ॥
अमृतमयेन रसेन समं विबुधपितॄनपि तर्प्पयसे ॥
अरिगणसूदन तेन तव प्रणतिमुपेत्य लिखामि वपुः ॥ ॥ १७८ ॥
शुभसमवर्णमयं रचितं तव पदपांसुपवित्रतमम् ॥
नतजनवत्सल मां प्रणतं त्रिभुवनपावन पाहि रवे ॥ १७९ ॥
इति सकलजगत्प्रसूति भूतं त्रिभुवनभावनधामहेतुमेकम् ॥
रविमखिलजगत्प्रदीपभूतं त्रिदशवरं प्रणतोऽस्मि देवदेवम्॥ 7.1.11.१८० ॥
॥ ईश्वर उवाच ॥ ॥
हाहाहूहूश्च गन्धर्वो नारदस्तुंबरुस्तथा ॥
उपगातुं समारब्धा गांधर्वकुशला रविम्॥ १८१ ॥
षड्जमध्यमगांधारग्रामत्रयविशारदाः ॥
मूर्छ्छनाभिश्च तानैश्च सुप्रयोगैः सुखप्रदम्॥ १८२ ॥
सप्तस्वरविनिर्वृत्तं यतित्रयविभूषितम्॥
सप्तधातुसमायुक्तं षड्जाति त्रिगुणाश्रयम् ॥ १८३ ॥
चतुर्गीतसमायुक्तं चतुवर्णसमुत्थितम् ॥
चतुर्वर्णप्रतीकारं सप्तालंकारभूषितम्॥ १८४ ॥
त्रिस्थानशुद्धं त्रिलयं सम्यक्कालव्यवस्थितम्॥
चित्ते चित्ते च नृत्ये च रसेषु लयसंयुतम् ॥ १८५ ॥
चतुर्विंशद्गुणैर्युक्तं जगुर्गीतं च गायनाः ॥
विश्वाची च घृताची च उर्वश्यथ तिलोत्तमा ॥ १८६ ॥
मेनका सहजन्या च रंभा चाप्सरसां वरा ॥
चतुर्विधपदं तालं त्रिप्रकारं लयत्रयम् ॥ १८७ ॥
यतित्रयं तथाऽऽतोद्यं नाट्यं चैव चतुर्विधम् ॥
ननृतुर्जगतामीशे लिख्यमाने विभावसौ ॥ १८८ ॥
भावान्भावविशारद्यः कुर्वन्त्यो विधिवद्बहून् ॥
देवदुन्दुभयः शंखाः शतशोऽथ सहस्रशः ॥ १८९ ॥
अनाहता महादेवि नेदिरे घननिस्वनाः ॥

गायद्भिश्चैव गंधर्वैर्नृत्यद्भिश्चाप्सरोगणैः ॥ 7.1.11.१९० ॥

अवाद्यंत ततस्तत्र वेणुवीणादिझर्झराः ॥

पणवाः पुष्कराश्चैव मृदंगपटहानकाः ॥ १९१ ॥

तूर्यवादित्रघोषैश्च सर्वं कोलाहलीकृतम् ॥

ततः कृतांजलिपुटा भक्तिनम्रात्ममूर्तयः ॥ १९२ ॥

ततः कलकले तस्मिन्सर्वदेवसमागमे ॥

संवत्सरं भ्रमस्थस्य विश्वकर्मा रवेस्ततः ॥ १९३ ॥

तेजसः शातनं चक्रे स्तूयमानस्य दैवतैः ॥

देवं चक्रे समारोप्य भ्रामयामास सूत्रभृत् ॥१९४॥

मृत्पिंडवत्कुलालस्य संस्पृशन्क्षुरधारया ॥

पतंगस्य स्तवं कुर्वन्विश्वकर्मा दिवस्पतेः॥ १९५ ॥

तेजसः षोडशं भागं मण्डलस्थमधारयत् ॥

शातितं तस्य तत्तेजो यावत्पादौ वरानने ॥ १९६ ॥

यत्तस्य ऋङ्मयं तेजस्तत्प्रभासेऽपतत्प्रिये ॥

यजुर्मयेन देवेशि भाविता द्यौर्महाप्रभोः ॥ १९७ ॥

स्वर्गं साममयेनापि भूर्भुवःस्वरितिस्थितम् ॥

ततस्तैस्तेजसो भागैर्दशभिः पंचभिस्तथा॥ १९८ ॥

तेन वै निर्मितं चक्रं विष्णोः शूलं हरस्य च ॥

महाप्रभं महाकायं शिबिका धनदस्य च ॥ १९९ ॥

दण्डः प्रेतपतेः शक्तिर्देवसेनापतेस्तथा ॥

अन्येषां च सुराणां च अस्त्राण्युक्तानि यानि वै ॥ 7.1.11.२०० ॥

यक्षविद्याधराणां च तानि चक्रे स विश्वकृत् ॥

ततः षोडशमं भागं बिभर्त्ति भगवान्रविः॥ ॥

तत्तेजो रविभागश्च खस्थो विचरति प्रिये ॥ २०१ ॥

इति शातिततेजाः स श्वशुरेणातिशोभनम् ॥

वपुर्दधार मार्त्तंडः पुष्पबाणमनोरमम् ॥ २०२ ॥

ततः सुरूप धृग्भानुरुत्तरानगमत्कुरून्॥

ददृशे तत्र संज्ञां तु वडवारूपधारिणीम् ।१ २०३ ॥

अपापां सर्वभूतानां तपसा नियमेन च ॥

सा च दृष्ट्वा तमायांतं परपुंसो विशंकया ॥

जगाम संमुखं तस्य अश्वरूपधरस्य च ॥२०४॥

ततश्च नासिकायोगे तयोस्तत्र समेतयोः॥

नासत्यदस्रौ तनयावश्ववक्त्रौ विनिर्गतौ ॥२०५॥

रेतसोन्ते च रेवन्तः खड्गी छत्री तनुत्रभृत् ॥

पितुर्गृह्योत्तमं सोऽश्वं जातमात्रः पलायत ॥ २०६ ॥

स तस्मिन्सकृदारूढस्तमश्वं नैव मुंचति ॥

ततोर्केण समादिष्टौ दंडनायकपिंगलौ ॥२०७॥

अश्वं प्रत्यानयध्वं मे मा बलाच्छिद्रतोऽस्यतु ॥

पार्श्वस्थौ तिष्ठतस्तस्य अश्वच्छिद्राभिकांक्षिणौ॥२०८॥

न च च्छिद्रं लभेते तौ तस्याद्यापि महात्मनः॥

अग्रे गच्छति रेवंते पृष्ठगौ दण्डपिंगलौ ॥२०९॥

उत्तरेभ्यः कुरुभ्यस्तु निर्गतौ वेगवत्तरौ ॥

दक्षिणं भारतं प्राप्तौ यत्र क्षेत्र प्रभासिकम् ॥7.1.11.२१॥।

अत्यर्थं वेगखिन्नौ तौ स च रेवंतकोऽपि हि ॥

प्रस्विन्नगात्रः सोच्छवासो रेवंतस्तत्र संस्थितः ॥२११॥

मुहूर्तेन समाक्रान्तं लक्षयोजनमंडलम् ॥

उत्तराद्दक्षिणं देवि रेवतेन महात्मना ॥ २१२ ॥

स्विन्नगात्रस्ततो देवि प्रभासे समवस्थितः ॥

दण्डपिंगलकसंयुक्तो ह्यश्वारूढः स तिष्ठति॥२१३॥

सावित्र्या नैर्ऋते भागे नातिदूरे व्यवस्थितः॥

राज्ञीपुत्रो यतो देवि राजा भट्टारकस्ततः॥ २१४॥

लोके ख्यातिं समायाति राजभट्टारिकेति च॥

गुह्यभट्टारकत्वे च रेवंतो विनियोजितः॥ २१५॥

एवमभ्येत्याह ततो भगवाँल्लोकतापनः॥

त्वमप्यशेषलोकस्य पूज्यो वत्स भविष्यसि॥ २१६॥

अरण्ये च महादावे वैरिदस्युभयेषु च॥

त्वां स्मरिष्यंति ये मर्त्या मोक्ष्यन्ते ते महापदः॥२१७॥

क्षेममृद्धिं सुखं राज्यमारोग्यं कीर्तिमुन्नतिम्॥

नराणामतितुष्टस्त्वं पूजितः संप्रदास्यसि॥ २१८ ॥

अश्विनौ देवभिषजौ कृतौ पित्रा महात्मना॥

धर्मदृष्टिर्यमश्चासौ समो मित्रे तथाऽहिते॥ २१९॥

ततो नियोगं तं चास्य चकार तिमिरापहः॥

यमुनां च नदीं चक्रे कलिन्दान्तरवाहिनीम् ॥ 7.1.11.२२० ॥

छायासंज्ञासुतश्चापि सावर्णिस्तु महायशाः ॥

भाव्यः सोनागते काले मनुः सावर्णिकोष्टमः ॥ २२१ ॥

मेरुपृष्ठे तपो घोरमद्यापि चरति प्रभुः ॥

भ्राता शनैश्चरस्तस्य ग्रहोऽभूच्च प्रिये ध्रुवम् ॥ २२२ ॥

एवं तेभ्यो वरान्दत्त्वा रेवंतस्यापि भास्करः ॥

पुनर्नाम निरुक्तं स रेवंतस्याकरोत्प्रमुः ॥२२३॥

एवंगच्छत्यसौ यस्मात्संज्ञायाः शांतिदः सुतः ॥

अश्वानामाधिपत्ये तु भानुना च नियोजितः ॥ २२४ ॥

क्षेमेण गच्छतेऽध्वानं यस्तु पूजयते पथि ॥

सुखप्रसाद्यो मर्त्यानां सदा च वरवर्णिनि ॥ २२५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये राजभट्टारकोत्पत्तिवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०१२



॥ ईश्वर उवाच ॥ ॥

या संज्ञा सा स्मृता राज्ञी छाया या सा तु निक्षुभा ॥

राजृ दीप्तौ स्मृतो धातू राजा राजति यः सदा ॥ १ ॥

अधिकं सर्वभूतेभ्यस्तस्माद्राजा स उच्यते ॥

राजपत्नी तु सा यस्मात्तस्माद्राज्ञी प्रकीर्तिता ॥ २ ॥

क्षुभ संचलने धातुर्निश्चला तेन निक्षुभा ॥

भवंति ह्यथवा यस्मात्स्वांगीयाः क्षुद्विवर्जिताः ॥ ३ ॥

छाया तां विशते दिव्या स्मृता सा तेन निक्षुभा ॥

सांप्रतं वर्तते योऽयं मनुर्लोके महामते ॥ ४ ॥

तस्यान्ववाये जातस्तु शंखचक्रगदाधरः ॥

यमस्तु मात्रा संशप्तो हीनपादो धरातले ॥ ५ ॥

प्रभासक्षेत्रमासाद्य चचार विपुलं तपः ॥

वर्षाणामयुतं साग्रं लिंगं पूजितवान्प्रिये ॥ ६ ॥

तुष्टश्चाहं ततस्तस्य वराणां च शतं ददौ ॥

अद्यापि तत्र देवेशि यमेश्वरमिति श्रुतम् ॥

यमद्वितीयायां दृष्ट्वा यमलोकं न पश्यति ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये यमेश्वरोत्पत्तिवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥

॥ देव्युवाच ॥ ॥
यदा भ्रमिस्थः सविता तक्षितः क्षुरधारया ॥
श्वशुरेण महादेव जामाता प्रीतिपूर्वकम्॥ १ ॥
तत्तेजः शातितं भूरि प्रभासे यत्पपात वै ॥
तदभूत्किं तदा देव प्रभासात्कथयस्व मे ॥ २ ॥
॥ ईश्वर उवाच ॥ ॥
शृणु देवि प्रवक्ष्यामि सूर्यमाहात्म्यमुत्तमम् ॥
यच्छ्रुत्वा मानवो भक्त्या मुच्यते सर्वपातकैः ॥३॥
देहावतारो देवस्य प्रभासेऽर्कस्थलस्य च ॥
पुराणाख्यानमाचक्षे तव देवि यशस्विनि ॥ ४ ॥
शाकद्वीपे महादेवि भ्रमिस्थस्य तदा रवेः ॥
वर्षाणां तु शतं साग्रं तक्ष्यमाणे विभावसौ ॥ ५ ॥
यदाद्य भागजं तेजस्तत्प्रभासेऽपतत्प्रिये ॥
पतितं तत्र तत्तेजः स्थलाकारं व्यजायत ॥ ६ ॥
जांबूनदमयं देवि तत्पूर्वमभवत्क्षितौ ॥
तिष्यमाहात्म्ययोगेन शैलीभूतं च सांप्रतम् ॥ ७ ॥
तत्र चार्कमयं रूपं कृत्वा देवो दिवाकरः ॥
उत्पन्नः सर्वभूतानां हिताय धरणीतले ॥ ८ ॥
हिरण्यगर्भनामेति कृते सूर्येति कीर्तितम् ॥
त्रेतायां सवितानाम द्वापरे भास्करः स्मृतः ॥ ९ ॥
कलौ चार्कस्थलोनाम त्रिषु लोकेषु कीर्तितः ॥
अवतीर्णमिदं देवि स्वयमेव प्रतिष्ठितम्॥ 7.1.13.१० ॥
यदा स्वारोचिषो देवि द्वितीयोऽभून्मनुः पुरा ॥
तस्मिन्कालेऽवतीर्णोऽसौ देवस्तत्र दिवाकरः ॥ ११ ॥
भक्तिमुक्ति प्रदो देवि व्याधिदुःखविनाशकृत् ॥
तस्य तेजोद्भवैर्व्याप्तं रेणुभिः पञ्चयोजनम् ॥ १२ ॥
दक्षिणोत्तरतो देवि पञ्चपूर्वापरेण तु ॥
उत्तरेण समुद्रस्य यावन्माहेश्वरी नदी ॥ १३ ॥
न्यंकुमत्याश्चापरतो यावदेव कृतस्मरम् ॥
एतद्व्याप्तं महादेवि तत्तेजोरेणुभिः शुभैः ॥ १४ ॥
तस्य सूक्ष्मा प्रभा या तु आदितेजोविनिःसृता ॥
तया व्याप्तं महादेवि यावद्द्वादशयोजनम् ॥ १५ ॥
उत्तरे भास्करसुता दक्षिणे सरितां पतिः ॥

पूर्वपश्चिमतो देवि रुक्मिणीद्वितयं स्मृतम् ॥ १६ ॥
एतस्मिन्नन्तरे देवि सौरं तेजः प्रसर्प्पितम् ॥
तेन पावित्र्यमानीतं क्षेत्रं द्वादशयोजनम् ॥ १७ ॥
तस्य मध्यस्य यन्मध्यं तद्गृहं मम सुन्दरि ॥
तेजोमण्डलमध्यस्थं मम स्थानं महेश्वरि ॥ १८ ॥
चक्षुर्मंडलमध्ये तु यथा देवि कनीनिका ॥
पूर्वपश्चिमतो देवि गोमुखादाऽऽश्वमेधिकम्॥ १९ ॥
दक्षिणोत्तरतो देवि समुद्रात्कौरवेश्वरीम् ॥
एतस्मिन्नंतरे क्षेत्रे क्षेत्रज्ञोऽहं वरानने ॥ 7.1.13.२० ॥
यस्मादर्कस्य तेजोभिर्भासितं मम तद्गृहम् ॥
तस्मात्प्रभासनामेति कल्पेऽस्मिन्प्रथितं प्रिये ॥ २१ ॥
तत्र पश्यति यः सूर्यमर्क्करूपं नरोत्तमः ॥
सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥ २२ ॥
स स्नातः सर्वतीर्थेषु तेन चेष्टं महामखैः ॥
सर्वदानानि दत्तानि पूर्वजास्तेन तोषिताः ॥ २३ ॥
अर्करूपी यतः सूर्यस्तत्र जातो महीतले ॥
तस्मात्त्याज्यः सदा चार्को भोजनेऽत्र न संशयः ॥ २४ ॥
यो दृष्ट्वार्कस्थलं मर्त्यश्चार्कपत्रेषु भुंजति ॥
गोमांसभक्षणं तेन कृतं भवति भामिनि ॥ २५ ॥
भक्षितो भास्करस्तेन स कुष्ठी जायते नरः ॥
तस्मात्सर्वप्रयत्नेन चार्कपत्राणि वर्जयेत् ॥ २६ ॥
यात्रायां प्रथमं देवि दृष्टो येनार्कभास्करः ॥
तं दृष्ट्वा महिषीं दद्याद्ब्राह्मणाय विपश्चिते ॥ ॥ २७ ॥
ताम्रवर्णं रक्तवस्त्रं ततस्तुष्यति भास्करः ॥
तस्य चैव तु सांनिध्ये वह्निकोणे व्यवस्थितम् ॥ २८ ॥
नातिदूरे महाभागे सिद्धेश्वरमिति स्मृतम् ॥
सर्वसिद्धिप्रदं देवि लिंगं त्रैलोक्यपूजितम् ॥ २९ ॥
जैगीषव्येश्वरंनाम पूर्वं कृतयुगेऽभवत् ॥
कलौ सिद्धेश्वरमिति प्रसिद्धिमगमत्प्रिये ॥ 7.1.13.३० ॥
तं दृष्ट्वा मनुजो देवि सर्वसिद्धिमवाप्नुयात् ॥
तत्रैव देवदेवेशि नातिदूरे व्यवस्थितम् ॥३१॥
सूर्यदक्षिणनैर्ऋत्ये पातालविवरं प्रिये ॥
मंदेहा राक्षसा यत्र तथा शालकटंकटाः ॥ ३२ ॥

सूर्यस्य तेजसा दग्धाः पातालमगमन्पुरा ॥
कलौ तद्द्वारमेवास्ति न पाताले गतिः प्रिये ॥ ३३ ॥
योगिन्यस्तत्र रक्षंति ब्राह्म्याद्या मातरस्तथा ॥
माघेकृष्णचतुर्दश्यां रात्रौ मातृगणान्यजेत् ॥
बलिपुष्पोपहारैश्च ततः सिद्धिर्भविष्यति ॥ ३४ ॥
इति हि सकलधर्मभावहेतोर्हरकमलासनविष्णुसंस्तुतस्य॥
तनुपरिलिखनं निशम्य भानोर्व्रजति दिवाकरलोकमायुषोंऽते॥३५॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रभासपवित्रनामकरणार्कस्थलोत्पत्तिवर्णनंनाम त्रयोदशोऽध्यायः ॥ ॥ १३ ॥

॥ देव्युवाच ॥ ॥
यदेतद्भवता प्रोक्तं माहात्म्यं सूर्यदैवतम्॥
तन्मे विस्तरतो ब्रूहि देवदेव जगत्पते ॥ १ ॥
कथमर्कस्थलो भूतः प्रभासक्षेत्रभूषणः ॥
पूजनीयो महादेवः सम्यग्यात्राफलेप्सुभिः ॥ २ ॥
के मंत्राः किं विधानं तु केषु पर्वसु पूजयेत्॥
जैगीषव्येश्वरो भूत्वा ह्यभूत्सिद्धेश्वरः कथम् ॥
तन्मे कथय देवेश विस्तरात्सर्वमेव हि ॥ ३ ॥
पाताले विवरं तत्र योगिन्यस्तत्र किं पुरा ॥
तथा मातृगणश्चैव कथमेतदभूत्पुरा ॥ ४ ॥
एतत्सर्वमशेषेण दयां कृत्वा जगत्पते ॥
ममाचक्ष्व विरूपाक्ष यद्यहं ते प्रिया हर ॥ ५ ॥
॥ ईश्वर उवाच ॥ ॥
साधु पृष्टं त्वया देवि कथयामि समासतः ॥
सिद्धेश्वरो ह्यभूद्येन जैगीषव्येश्वरो हरः ॥ ६ ॥
पूजाविधानं विस्तीर्य तन्मे निगदतः शृणु ॥
आसीदस्मिन्कृते देवि सर्व ज्ञानविशारदः ॥ ७ ॥
पुत्रः शतकलाकस्य जैगीषव्य इति श्रुतः ॥
प्रभासक्षेत्रमासाद्य स चक्रे दुश्चरं तपः ॥ ८ ॥
अतिष्ठद्वायुभक्षश्च वर्षाणां शतकं किल ॥
अम्बुभक्षः सहस्रं तु शाकाहारोऽयुतं तथा ॥ ९ ॥
चांद्रायणसहस्रं च कृतं सांतपनं पुनः ॥
शोषयित्वा मिताहारो दिग्वासाः समपद्यत ॥ 7.1.14.१० ॥
पूर्वे कल्पे स्वयं भूतं महोदयमिति श्रुतम् ॥
स लिंगं देवदेवस्य प्रतिष्ठाप्यार्चयन्नपि ॥ ११ ॥
भस्मशायी भस्मदिग्धो नृत्त गीतैरतोषयत् ॥
जपेन वृषनादैश्च तपसा भावितः शुचिः ॥ १२ ॥
तमेवं तोषयाणं तु भक्त्या परमया युतम् ॥
भगवांश्च तमभ्येत्य इदं वचनमब्रवीत् ॥ १३ ॥
जैगीषव्य महाबुद्धे पश्य मां दिव्यचक्षुषा ॥
तुष्टोऽस्मि वरदश्चाहं ब्रूहि यत्ते मनोगतम् ॥ १४ ॥
स एवमुक्तो देवेन देवं दृष्ट्वा त्रिलोचनम्॥
प्रणम्य शिरसा पादाविदं वचनमब्रवीत् ॥ १५ ॥

॥ जैगीषव्य उवाच ॥ ॥

भगवन्देवदेवेश मम तुष्टो यदि प्रभो ॥

ज्ञानयोगं हि मे देहि यः संसारनिकृन्तनम्॥ १६ ॥

भगवन्नान्यदिच्छामि योगात्परतरं हितम् ॥

त्वयि भक्तिश्च नित्यं मे देव्यां स्कन्दे गणेश्वरे ॥ ॥ १७ ॥

न च व्याधिभयं भूयान्न च तेजोऽपमानता ॥

अनुत्सेकं तथा क्षांतिं दमं शममथापि च ॥ १८ ॥

एतान्वरान्महादेव त्वदिच्छामि त्रिलोचन ॥ १९ ॥

॥ ईश्वर उवाच ॥ ॥

अजरश्चामरश्चैव सर्वशोकविवर्जितः ॥

महायोगी महावीर्यो योगैश्वर्यसमन्वितः॥7.1.14.२०॥

24a

प्रभावाच्चास्य क्षेत्रस्य गुह्यस्य मम शाश्वतम् ॥

योगाष्टगुणमैश्वर्यं प्राप्स्यसे परमं महत् ॥ २१ ॥

भविष्यसि मुनिश्रेष्ठ योगाचार्यः सुविश्रुतः ॥ २२ ॥

यश्चेदं त्वत्कृतं लिगं नियमेनार्चयिष्यति ॥

सर्वपापविनिर्मुक्तो योगं दिव्यमवाप्स्यति ॥ २३ ॥

जैगीषव्यगुहां चेमां प्राप्य योगं करोति यः ॥

स सप्तरात्राद्युक्तात्मा संसारं संतरिष्यति ॥ २४ ॥

मासेन पूर्वजातिं च जन्मातीतं च वेत्स्यति ॥

एकरात्रात्तनुं शुद्धां द्वाभ्यां तारयते पितॄन्॥

त्रिरात्रेण व्यतीतेन त्वपरान्सप्त तारयेत् ॥ २५ ॥

पुनश्च तव विप्रर्षे अजेयत्वं च योगिभिः ॥

इच्छतो दर्शनं चैव भविष्यति च ते मम ॥ २६ ॥

इति देवो वरान्दत्त्वा तत्रैवांतरधीयत ॥

एतत्कृतयुगे वृत्तं तव देवि प्रभाषितम् ॥ २७ ॥

त्रेतायुगे महादेवि द्वापरेऽपि तथैव च ॥

कलियुगप्रवेशे तु वालखिल्या महर्षयः ॥ २८ ॥

अस्मिन्प्राभासिके क्षेत्रे सूर्यस्थलसमीपतः ॥

आराधयंतो देवेशं गुहामध्यनिवासिनम् ॥ २९ ॥

अष्टाशीतिसहस्राणि ऋषयश्चोर्द्धरेतसः ॥

वर्षायुतं तपस्तप्त्वा सिद्धिं जग्मुस्तदात्मिकाम्॥7.1.14.३०॥

ततः सिद्धेश्वरं लिंगं कलौ ख्यातं वरानने ॥

यदा सोमेन संयुक्ता कृष्णा शिवचतुर्दशी ॥
तदैव तस्य देवस्य दर्शनं देवि दुर्ल्लभम् ॥ ३१ ॥
ब्रह्मांडं सकलं दत्त्वा यत्पुण्यमुपजायते ॥
तत्पुण्यं लभते देवि सिद्धलिंगस्य पूजनात् ॥ ३२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सिद्धेश्वरोत्पत्तिवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

॥ ईश्वर उवाच ॥ ॥

तस्याग्नेये तु देवेशि अरुणेन प्रतिष्ठितम्॥

धनुषां च त्रये तत्र सिद्धलिंगसमीपतः ॥१॥

सूर्यसारथिना तत्र लिंगं देविप्रतिष्ठितम्॥

कलौ पापहरंनाम दर्शनात्पापनाशनम् ॥ २ ॥

चैत्रमास त्रयोदश्यां शुक्लायां वरवर्णिनि ॥

पूजयेद्विधिवद्भक्त्या पौंडरीकफलं लभेत् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये पापनाशनोत्पत्तिवर्णनंनाम पंचदशोऽध्यायः ॥ १५ ॥

॥ ईश्वर उवाच ॥ ॥

पातालविवरस्यापि माहात्म्यं शृणु सांप्रतम् ॥
पूर्वपृष्टं महादेवि ब्रह्मणा विश्वकर्मणा ॥ १ ॥
तमोभावे समुत्पन्ने जातास्तत्रैव राक्षसाः ॥
सूर्यस्य द्वेषिणः सर्वे ह्यसंख्याता महाबलाः ॥ ॥ २ ॥
ते तु दृष्ट्वा महात्मानं समुद्यंतं दिवाकरम् ॥
ते धूम्रप्रमुखाः सर्वे जहसुः सूर्यमंजसा ॥ ३ ॥
अस्माकमंतकः कोऽयं विद्यते पापकर्मकृत्॥
इत्यूचुर्विविधा वाचः सूर्यस्याग्रे स्थितास्तदा॥४॥
इति श्रुत्वा तदा देवः क्रोधस्फुरिताधरः॥
राक्षसानां वचश्चैव भक्ष्यमाणो दिवाकरः॥ ५॥
ततः क्रोधाभिभूतेन चक्षुषा चावलोकयत्॥
स क्रूररक्षःक्षयकृत्तिमिरद्विपकेसरी॥ ६॥
महांशुमान्खगः सूर्यस्तद्विनाशमचिंतयत्॥
अजानन्नंततश्छिद्रं राक्षसानां दिवस्पतिः॥ ७ ॥
स धर्मविच्युतान्दृष्ट्वा पापोपहतचेतसः॥
एवं संचिंत्य भगवान्दध्यौ ध्यानं प्रभाकरः॥८।
अजानंस्तेजसा ग्रस्तं त्रैलोक्यं रजनीचरैः ॥
ततस्ते भानुना दृष्टाः क्रोधाध्मातेन चक्षुषा ॥ ९ ॥
निपेतुरंबरभ्रष्टाः क्षीणपुण्या इव ग्रहाः ॥
राक्षसैर्वेष्टितो धूम्रो निपतञ्छुशुभेंऽबरात् ॥ 7.1.16.१० ॥
अर्द्धपक्वं यथा तालफलं कपिभिरावृतम् ॥
यदृच्छया निपेतुस्ते यंत्रमुक्ता यथोपलाः ॥ ११ ॥
ततो वायु वशाद्भ्रष्टा भित्त्वा भूमिं रसातलम्॥
जग्मुस्ते क्षेत्रमासाद्य प्रभासं वरवर्णिनि ॥ १२॥
यत्र चार्कस्थलो देवः सर्वसिद्धिप्रदायकः ॥
तत्सान्निध्यस्थितं देवि पातालविवरं महत् ॥ १३ ॥
अन्यानि कोटिशः संति तानि लुप्तानि भामिनि ॥
कृतस्मरात्समारभ्य यावदर्कस्थलो रविः ॥ १४ ॥
देवमातुर्वरं प्राप्य सिद्धयोऽष्टौ व्यवस्थिताः ॥
एतस्मिन्नंतरे देवि सूर्यक्षेत्रमुदाहृतम् ॥ १५ ॥
सूर्यस्य तेजसो देवि मध्यभागं हि तत्स्मृतम् ॥
सर्वं हेममयं देवि नापुण्यस्तत्र वीक्षते ॥ १६ ॥

विवराणां शतं चैकं स्पर्शाश्चैव तु कोटिशः ॥
तत्र संति महादेवि सिद्धेशस्तु प्ररक्षति ॥ १७ ॥
इदं क्षेत्रं महादेवि प्रियं सूर्यस्य सर्वदा ॥
सूर्यपर्वणिसंप्राप्ते कुरुक्षेत्राधिकं प्रिये ॥ १८ ॥
ब्राह्मी चैव हिरण्या च संगमश्च महोदधेः ॥
एतत्त्रिसंगमं देवि कोटितीर्थ फलप्रदम् ॥ १९ ॥
देवमाता च तत्रैव मंकीशस्तत्र तिष्ठति ॥
नागस्थानं नगस्थानं तत्रैव समुदाहृतम् ।१ 7.1.16.२० ॥
इति संक्षेपतः प्रोक्तमर्कस्थलम- होदयम् ॥
राक्षसानां च संपातादभूच्च विवरं यथा ॥ २१ ॥
अन्यानि तत्र देवेशि लुप्तानि विवराणि वै ॥
एवं तु प्रकटं तत्र दृश्यतेऽद्यापि भामिनि ॥ २२ ॥
श्रीमुखं नाम तद्द्वारं रक्ष्यते मातृभिः प्रिये ॥
वर्षमेकं चतुर्द्दश्यां नियमाद्यस्तु पूजयेत् ॥ २३ ॥
तत्र मातृगणान्देवि सुनंदाद्यान्विधानतः॥
पशुपुष्पोपहारैश्च धूपदीपैस्तथोत्तमैः ॥
विप्राणां भोजनैर्देवि तस्य सिद्धिर्भविष्यति ॥ २४ ॥
तस्मात्सर्वप्रयत्नेन तत्रार्कस्थलसंनिधौ ॥
पूजयेन्मातरः सर्वा यदीच्छेत्सिद्धिमात्मनः ॥ २५ ॥
एतास्तु मातरो देवि सुनंदागणनामतः ॥
ख्यातिं यांति प्रभासे तु क्षेत्रेस्मिन्वरवर्णिनि ॥ २६ ॥
एतत्संक्षेपतः प्रोक्तं पातालोत्तरमध्यतः ॥
तच्छ्रुत्वा मुच्यते देवि सर्वापद्भ्यो नरोत्तमः ॥ २७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये अर्कस्थलमाहात्म्ये पातालविवरसुनंदादिमातृगणोत्पत्तिवर्णनंनाम षोडशोऽध्यायः ॥ ॥१६ ॥ ॥ ॥

॥ ईश्वर उवाच ॥ ॥
अथ पूजाविधानं ते कथयामि यशस्विनि ॥
अर्कस्थलस्य देवस्य यथा पूज्यो नरोत्तमैः ॥१॥
सर्वेषामेव देवानामादिरादित्य उच्यते ॥
आदिकर्त्ता त्वसौ यस्मादादित्यस्तेन चोच्यते॥२॥
नादित्येन विना रात्रिर्न दिवा न च तर्पणम्॥
न धर्मो वै न चाधर्मो न संतिष्ठेच्चराचरम् ॥ ३ ॥
आदित्यः पालयेत्सर्वमादित्यः सृजते सदा ॥
आदित्यः संहरेत्सर्वं तस्मादेष त्रयीमयः ॥४॥
आराधनविधिं तस्य भास्करस्य महात्मनः ॥
कथयामि महादेवि वेदोक्तैर्मंत्रविस्तरैः ॥
तं शृणुष्व वरारोहे सर्वपापप्रणाशनम् ॥ ५ ॥
मूर्त्तिस्थः पूज्यते येन विधानेन महेश्वरि ॥
द्वादशात्मा यथा सूर्यस्तत्ते वक्ष्याम्यशेषतः ॥ ६ ॥
मुखशुद्धिं च कृत्वाऽऽदौ स्नानं कृत्वा विशेषतः ॥
वस्त्रशुद्धिं देह शुद्धिं कृत्वा सूर्यं स्पृशेत्ततः ॥ ७ ॥
दन्तकाष्ठविधानं तु प्रथमं कथयामि ते ॥
मधूके पुत्रलाभः स्यादर्के नेत्रसुखं प्रिये ॥ ९ ॥
वक्तृत्वं वै बदर्या च बृहत्या द्रुर्ज्जनाञ्जयेत् ॥
ऐश्वर्यं च भवेद्बिल्वे खदिरे च न संशयः ॥ ९ ॥
रोगक्षयः कदम्बे तु अर्थलाभोऽतिमुक्तके ॥
मरुतां याति सर्वत्र आटरूषकसंभवैः ॥ 7.1.17.१० ॥
जातिप्रधानतां जातावश्वत्थो यच्छते यशः ॥
श्रियं प्राप्नोति निखिलां शिरीषस्य निषेवणात् ॥ ११ ॥
प्रियंगुं सेवमानस्य सौभाग्यं परमं भवेत् ॥
अभीप्सितार्थसिद्धिः स्यान्नित्यं प्लक्षनिषेवणात् ॥१२॥
न पाटितं समश्नीयाद्दंतकाष्ठं न सव्रणम् ॥
न चोर्द्धशुष्कं वक्रं वा नैव च त्वग्विवर्ज्जितम् ॥ १३ ॥।
वितस्तिमात्रमश्नीयाद्दीर्घं ह्रस्वं च वर्जयेत् ॥
उदङ्मुखो वा प्राङ्मुखः सुखासीनोऽथ वाग्यतः ॥ ॥ १४ ॥
कामं यथेष्टं हृदये कृत्वा समभिमन्त्र्य च ॥
मंत्रेणानेन मतिमानश्नीयाद्दन्तधावनम् ॥ १५ ॥
वरं दत्त्वाऽभिजानासि कामं चैव वनस्पते ॥

सिद्धिं प्रयच्छ मे नित्यं दन्तकाष्ठ नमोऽस्तु ते ॥ १६ ॥
त्रीन्वारान्परिजप्यैवं भक्षयेद्दंतधावनम् ॥
पश्चात्प्रक्षाल्य तत्काष्ठं शुचौ देशे विनिक्षिपेत् ॥ १७ ॥
दंतकाष्ठेन देवेशि न जिह्वां परिमार्जयेत् ॥
पृथक्पृथक्तदा कार्यं यदीच्छेद्विपुलं यशः ॥ १८ ॥
अंगुल्या दंतकाष्ठं च प्रत्यक्षं लवणं च यत् ॥
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणैः ॥ १९ ॥
मुखे पर्युषिते नित्यं भवत्यप्रयतो द्विजः ॥
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दंतधावनम् ॥ 7.1.17.२० ॥
वर्जिते दिवसे चैव गडूषांश्चैव षोडश ॥
तत्तत्पद्मसुगन्धैर्वा मुखशुद्धिं च कारयेत् ॥ २१ ॥
मुखशुद्धिमकृत्वा यो भास्करं स्पृशति द्विजः ॥
त्रीणि वर्षसहस्राणि स कुष्ठी जायते नरः ॥ २२ ॥
एवं वस्त्रादि संशोध्य ततः स्नानं समाचरेत् ॥
शुचौ मनोरमे स्थाने संगृह्यास्त्रेण मृत्तिकाम्॥ २३ ॥
सानुस्वारोकारयुतो हकारः फट्समन्वितः ॥
अनेनास्त्रेण संगृह्य स्नानं तत्र समाचरेत् ॥ २४ ॥
भागत्रयं तु संशुद्धं तृणपाषाणवर्जितम् ॥
एकमस्त्रेण चालभ्य तथान्यं भास्करेण तु ॥ २५ ॥
अंगैश्चैव तृतीयं तु अभिमंत्र्य सकृत्सकृत् ॥
जप्त्वास्त्रेण क्षिपेद्दिक्षु निर्विघ्नं तु जलं भवेत् ॥ २६ ॥
सूर्यतीर्थ द्वितीयेन तृतीयेन सकृत्सकृत् ॥
गुंठयित्वा ततः स्नायाद्रवितीर्थेन मानवः ॥ २७ ॥
तूर्यशंख निनादेन ध्यात्वा देवं दिवाकरम् ॥
स्नात्वा राजोपचारेण पुनराचम्य यत्नतः ॥ २८ ॥
स्नानं कृत्वा ततो देवि मंत्रराजेन संयुतम् ॥
हरेफौ बिंदु लक्ष्मीश्च तथाऽन्यो दीर्घया सह ॥ २९ ॥
मात्रया रेफसंयुक्तो हकारो बिंदुना सह ॥
सकारः सविसर्गस्तु मंत्रराजोऽयमुच्यते ॥ 7.1.17.३० ॥
ततस्तु तर्प्पयेन्मंत्रान्सर्वांस्तांस्तु कराग्रजैः ॥
तुलनादूर्ध्वतो देवान्सव्येन च मुनींस्तथा ॥
पितॄंश्चैवापसव्येन हृद्बीजेन प्रतर्पयेत् ॥ ३१ ॥
यद्गीतं प्रवरं लोके अक्षराणां मनीषिभिः ॥

एकोनविंशं मात्राया अक्षरं तत्प्रकीर्त्तितम् ॥ ३२ ॥
एवं स्नात्वा विधानेन संध्यां वंदेद्विधानतः ॥
ततो विद्वान्क्षिपेत्पश्चाद्भास्करायोदकांजलिम् ॥ ३३ ॥
जपेच्च त्र्यक्षरं मंत्र षण्मुखं च यदृच्छया ॥
मंत्रराजेति यः पूर्वं तवाख्यातो मया प्रिये ॥ ३४ ॥
पश्चात्तीर्थेन मंत्रास्तु संहृत्य हृदये न्यसेत् ॥
मंत्रैरात्मानमेकत्र कृत्वा चार्घं प्रदापयेत् ॥ ३५ ॥
रक्तचंदनगंधैस्तु शुचिःस्नातो महीतले ॥
कृत्वा मंडलकं वृत्तमेकचित्तो व्यवस्थितः ॥ ३६ ॥
गृहीत्वा करवीराणि ताम्रे संस्थाप्य भाजने ॥
तिलतंदुलसंयुक्तं कुशगन्धोदकेन तु ॥३७॥
रक्तचंदन धूपेन युक्तम?र्घ्योपसाधितम् ॥
कृत्वा शिरसि तत्पात्रं जानुभ्यामवनिं गतः॥ ३८ ॥
मूलमंत्रेण संयुक्तमर्घ्यं दद्याच्च भानवे ॥
मुच्यते सर्वपापैस्तु यो ह्येवं विनिवेदयेत् ॥ ३९ ॥
यद्युगादिसहस्रेण व्यतीपातशतेन च ॥
अयनानां सहस्रेण यत्फलं ज्येष्ठपुष्करे ॥
तत्फलं समवाप्नोति सूर्यायार्घ्य निवेदने ॥ 7.1.17.४० ॥
दीक्षामंत्रविहीनोऽपि भक्त्या संवत्सरेण तु ॥
फलमर्घेण वै देवि लभते नात्र संशयः ॥ ४१ ॥
यः पुनर्दीक्षितो विद्वान्विधिनार्घ्यं निवेदयेत् ॥
नासौ संभवते भूमौ प्रलयं याति भास्करे ॥ ४२ ॥
इह जन्मनि सौभाग्यमायुरारोग्यसंपदम् ॥
अचिराल्लभते देवि सभार्यः सुखभाजनम् ॥ ४३ ॥
एवं स्नानविधिः प्रोक्तः सौरः संक्षेपतस्तव ॥
हिताय मानवेन्द्राणां सर्वपापप्रणाशनः ॥ ४४ ॥
अथवा वेदमार्गेण कुर्यात्स्नानं द्विजोत्तमः ॥
यद्येवं मन्त्रविस्तारे ह्यशक्तो दीक्षया विना ॥ ४५ ॥
॥ ईश्वर उवाच ॥ ॥
अथ पूजाविधानं ते कथयामि यशस्विनि ॥
वेदमार्गेण दिव्येन ब्राह्मणानां हिताय वै ॥ ४६ ॥
एवं संभृतसंभारः पुष्पादिप्रगुणीकृतः ॥
तत आवाहयेद्भानुं स्थापयेत्कर्णिकोपरि ॥ ४७ ॥

उपस्थानं तु वै कृत्वा मंत्रेणानेन सुव्रते ॥
उदुत्यं जातवेदसमिति मंत्रः संपरिकीर्तितः ॥ ४८ ॥
अग्निं दूतेति मंत्रेण अनेनावाह्य भामिनि ॥
आकृष्णेन रजसा मंत्रेणानेन वाऽर्चयेत् ॥ ४९ ॥
हंसः शुचिषदिति मंत्रेणानेन पूजयेत् ॥
अपत्येतेति मन्त्रेण सूर्यं देवि प्रपूजयेत् ॥ 7.1.17.५० ॥
अदृश्रमस्य चैतेन सूर्यं देवि समर्च्चयेत् ॥
तरणिर्विश्वदर्शेति अनेन सततं जपम् ॥ ५१ ॥
चित्रं देवानामुदेति भद्रां देवो सदार्चयेत् ॥
विभूतिमर्च्चयेन्नित्यं येना पावक चक्षसा ॥ ५२ ॥
विद्यामेपिरजस्पृथ्वित्यनेन विमलां सदा ॥
अमोघां पूजयेन्नित्यं मंत्रेणानेन सुव्रते॥ ५३ ॥
सप्त त्वा हरितोऽनेन सिद्धिदां सर्वकर्मसु ॥
विद्युतामर्चयेद्देवं सप्त त्वा हरितेन च ॥ ५४ ॥
नवमीं पूजयेद्देवीं सततं सर्वतोमुखीम् ॥
मन्त्रेणानेन वै देवि उद्वयन्तमितीह वै ॥ ५५ ॥
उद्यन्नद्य मित्रमहः प्रथममक्षरं जपेत् ॥
द्वितीयं पूजयेद्देवि शुकेषु मे हरिमेति वै ॥ ५६ ॥
उदगादयमादित्यो ह्यनेनापि तृतीयकम् ॥
तत्सवितुर्वरेण्येति चतुर्थं परिकीर्तितम् ॥ ५७ ॥
महाहिवो महायेति पञ्चमं परिकीर्तितम् ॥
हिरण्यगर्भः समवर्तत षष्ठं बीजं प्रकीर्तितम् ॥ ५८ ॥
सविता पश्चातात्सविता सप्तमं वरवर्णिनि ॥
एवं बीजानि विन्यस्य आदित्यं स्थापयेच्छुभे ॥ ५९ ॥
आदित्यं स्थापयित्वा तु पश्चादङ्गानि विन्यसेत् ॥ 7.1.17.६० ॥
आग्नेय्यां हृदयं न्यस्य ऐशान्यां तु शिरो न्यसेत् ॥
नैर्ऋत्यां तु शिखां चैव कवचं वायुगोचरे ॥ ६१ ॥
अस्त्रं दिशासु विन्यस्य स्वबीजेन तु कर्णिकाम् ॥
अमोसि प्राणितेनेति अनेन हृदयं यजेत् ॥ ६२ ॥
शिरस्तु पूजयेद्देवि आयुष्यं वर्चसेति वै ॥
गायत्र्या तु शिखां पूज्य नैर्ऋत्यां तु व्यवस्थिताम् ॥ ६३ ॥
जीमूतस्येव भवति प्रत्येकं कवचं यजेत् ॥
धन्वन्नागा धन्वनेति अनेनास्त्रं सदाऽर्चयेत् ॥ ६४ ॥

नेत्रं तु पूजयेद्देवि अश्विना तेजसेति च ॥
ह्यतः पूर्वतः सोमं दक्षिणेन बुधं तथा ॥ ६५ ॥
पश्चिमेन गुरुं न्यस्य उत्तरेण च भार्गवम् ॥
आग्नेय्यां मङ्गलं न्यस्य नैर्ऋत्यां तु शनैश्चरम् ॥ ६६ ॥
वायव्यां तु न्यसेद्राहुं केतुमीशानगोचरे ॥
आप्यायस्वेति मन्त्रेण देवि सोमं सदार्चयेत् ॥ ६७ ॥
उद्बुध्यध्वं महादेवि बुधं तत्र सदार्चयेत् ॥
बृहस्पतेति मन्त्रेण पूजयेत्सततं गुरुम् ॥ ६८ ॥
शुक्रः शुशुक्वानिति च भार्गवं देवि पूजयेत् ॥
अग्निर्मूर्द्धेति मन्त्रेण सदा मंगलमर्चयेत् ॥ ६९ ॥
शमग्निरितिमन्त्रेण पूजयेद्भास्करात्मजम् ॥
कयानश्चित्रेतिमन्त्रेण देवि राहुं सदाऽर्चयेत् ॥ 7.1.17.७० ॥
केतुं कृण्वेति केतुं वै सततं पूजयेद्बुधः ॥
बाह्यतः पूर्वतः शुक्रं दक्षिणेन यमं तथा ॥ ७१ ॥
ऐशान्यामीश्वरं विंद्यादाग्नेय्यामग्निरुच्यते ॥
नैऋतेति विरूपाक्षं पवनं वायुगोचरे ॥ ७२ ॥
तमुष्टवाम इति वै ह्यनेनेन्द्रमथार्चयेत् ॥
उदीरतामवरेति सदा वैवस्वतं यजेत् ॥ ७३ ॥
तत्त्वायामीति मन्त्रेण वरुणं देवि पूजयेत् ॥
इन्द्रासोमावत इति मन्त्रेण धनदं यजेत् ॥ ७४ ॥
पावकं पूजयेद्देवि अग्निमीळे पुरोहितम् ॥
रक्षोहणं वाजिनेति विरूपाक्षं सदार्चयेत् ॥ ७५ ॥
वायवायाहि मन्त्रेण वायुं देवि सदार्चयेत् ॥
यथाक्रममिमान्देवि सर्वान्वै पूजयेद्बुधः ॥ ७६ ॥
बाह्यतः पूर्वतो देवि इन्द्रादीनां समन्ततः ॥
रक्तवर्णं महातेजं सितपद्मोपरि स्थितम् ॥ ७७ ॥
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ॥
द्विभुजं चैकवक्त्रं च सौम्यपञ्चकधृक्करम् ॥ ७८ ॥
वर्त्तुलं तेजबिंबं तु मध्यस्थं रक्तवाससम् ॥
आदित्यस्य त्विदं रूपं सर्वलोकेषु पूजितम् ॥
ध्यात्वा संपूजयेन्नित्यं स्थंडिलं मण्डलाश्रयम् ॥ ७९ ॥
॥ देव्युवाच ॥ ॥
मण्डलस्थः सुरश्रेष्ठ विधिना येन भास्करः ॥

पूज्यते मानवैर्भक्त्या स विधिः कथितस्त्वया ॥ 7.1.17.८० ॥
पूजयेद्विधिना येन भास्करं पद्मसंभवम् ॥
मूर्त्तिस्थं सर्वगं देवं तन्मे कथय शंकर ॥ ८१ ॥ ॥
॥ ईश्वर उवाच ॥ ॥
साधुसाधु महादेवि साधु पृष्टोऽस्मि सुव्रते ॥
शृणुष्वैकमना देवि मूर्तिथं येन पूजयेत् ॥ ८२ ॥
इषेत्वेति च मन्त्रेण उत्तमांगं सदार्चयेत् ॥
अग्निमीळेति मन्त्रेण पूजयेद्दक्षिणं करम् ॥ ८३ ॥
अग्न आयाहि मन्त्रेण पादौ देवस्य पूजयेत् ॥
आजिघ्रेति च मन्त्रेण पूजयेत्पुष्पमालया ॥ ८४ ॥
योगेयोगेति मन्त्रेण मुक्तपुष्पांजलिं क्षिपेत् ॥
समुद्रागच्छ यत्प्रोक्तमनेन स्नापयेद्रविम् ॥ ८५ ॥
इमं मे गंगेति यत्प्रोक्तमनेनापि च भामिनि ॥
समुद्रज्येति मन्त्रेण क्षालयेद्विधिवद्रविम् ॥ ८६ ॥
सिनीवालीति मन्त्रेण स्नापयेच्छंखवारिणा ॥
यज्ञं यज्ञेति मन्त्रेण कषायैः परिरक्षयेत् ॥ ८७ ॥
स्नापयेत्पयसा देवि आप्यायस्वेति मंत्रतः ॥
दधिक्राव्णेति वै दध्ना स्नापयेद्विधिवद्रविम् ॥ ८८ ॥
इमं मे गंगेति यत्प्रोक्तमनेनापि च भामिनि ॥
समुद्रज्येति मंत्रेण स्नानमौषधिभिः स्मृतम् ॥ ८९ ॥
उद्वर्तयेत्ततो भानुं द्विपदाभिर्वरानने ॥
मानस्तोकेति मंत्रेण युगपत्स्नानमाचरेत् ॥ 7.1.17.९० ॥
विष्णोरराटमन्त्रेण स्नापयेद्गंधवारिणा ॥
सौवर्णेन तु मंत्रेण अर्घ्यं पाद्यं निवेदयेत् ॥ ९१ ॥
इदं विष्णुर्विचक्रमे मंत्रेणार्घ्यं प्रदापयेत् ॥
वेदोसीति च मंत्रेण उपवीतं प्रदापयेत् ॥ ९२ ॥
बृहस्पतेति मंत्रेण दद्याद्वस्त्राणि भानवे ॥
येन श्रियं प्रकुर्वाणः पुष्पमालां प्रपूजयेत् ॥ ९३ ॥
धूरसीति च मंत्रेण धूपं दद्यात्सगुग्गलम् ॥
समिद्धोंजनमंत्रेण अंजनं तु प्रदापयेत् ॥ ९४ ॥
युंजान इति मंत्रेण भानुं रोचनमालभेत् ॥
आरार्त्तिकं च वै कुर्याद्दीर्घायुत्वाय वै पुनः ॥ ९५ ॥
सहस्रशीर्षा पुरुषः सूर्यं शिरसि पूजयेत् ॥

शंभवायेति मंत्रेण रवेर्नेत्रे परामृशेत् ॥ ९६ ॥
विश्वतश्चक्षुरित्येवं भानोर्देहं समालभेत् ॥
श्रीश्च ते लक्ष्मीश्चेति सर्वांगे पूजयेद्रविम् ॥ ९७ ॥
॥ ईश्वर उवाच । ॥
अथ मेरोर्महादेवि अष्टशृंगस्य सुव्रते ॥
पूजाविधानमंत्रांस्ते कथयामि समासतः ॥९८॥
अष्टशृंगं महादेवि अनेन विधिनाऽर्चयेत् ॥
प्रथमं पूजयेन्मध्ये मंत्रेणानेन सुव्रते ॥ ९९ ॥
महाहिवोमहायेति नानापुष्पकदंबकैः ॥
त्रातारमिंद्रमंत्रेण पूर्वशृंगं सदार्चयेत् ॥ 7.1.17.१०० ॥
तमुष्टवामेति मंत्रेण पूजयेत्सुरसुन्दरि ॥
अग्निमीळे पुरोहितमाग्नेयं शृंगमर्चयेत् ॥ १०१ ॥
आग्नेय्या चैव गायत्र्या अथवानेन पूजयेत् ॥
यमाय त्वा मखाय त्वा दक्षिणं शृंगमर्च येत् ॥१०२॥
उदीरतामवरेप्यथवानेन पूजयेत् ॥
आयं गौरिति मंत्रेण नैर्ऋत्यं शृङ्गमर्चयेत्॥१०३॥
रक्षोहणं वाजिनं वा पूजयेदसुरांतिकम्॥
इंद्रासोमा च यो मंत्रो ह्यथवा तेन पूजयेत् ॥ १०४ ॥
अभि त्वा सूर नोन्विति चैशानं शृंगमर्चयेत् ॥
येनेदं भूतमिति वा अथवानेन पूजयेत् ॥ १०५ ॥
नमोस्तु सर्पेभ्य इति मेरुपीठं सदाऽर्चयेत् ॥
हिरण्यगर्भः समवर्त्ततेति पुनर्मध्ये सदार्चयेत् ॥ १०६ ॥
सविता पश्चातादिति वै पूजयेत्पुष्प मालया ॥
त्रिकालमर्चयेद्देवि प्रदद्यादर्घ्यमादरात् ॥१०७॥
माता रुद्राणां दुहिता वसूनां पूर्वाह्ने चैव पूजयेत् ॥
मध्याह्ने पूजयेद्देवि तद्विष्णोः परमं पदम् ॥ १०८ ॥
हँसः शुचिषदिति वा अपराह्णे सदार्चयेत् ॥
एवं भानुं ग्रहैः सार्द्ध पूजयेद्वरवर्णिनि ॥ १०९ ॥
॥ देव्युवाच ॥ ॥
यानि पुष्पाणि चेष्टानि सदा भास्करपूजने ॥
कानि चोक्तानि देवेश कथयस्व प्रसादतः ॥ 7.1.17.११० ॥
ईश्वर उवाच ॥ ॥
शृणु देवि प्रवक्ष्यामि पुष्पा ध्यायमनुत्तमम् ॥

येन चार्कस्थले देवि शीघ्रं तुष्यति पूजितः ॥ १११ ॥
मालतीकुसुमैः पूजा भवेत्सांनिध्यकारिका ॥
मल्लिकायाश्च कुसुमैर्भोगवाञ्जायते नरः ॥ ११२ ॥
सौभाग्यं पुंडरीकैस्तु भवत्यर्थश्च शाश्वतः ॥
कदंबपुष्पैर्देवेशि परमैश्वर्यमश्नुते ॥ ११३ ॥
भवत्यक्षयमन्नं च बकुलै रर्चने रवेः ॥
मदारपुष्पकैः पूजा सर्वकुष्ठविनाशिनी ॥ ११४ ॥
बिल्वस्य पत्रकुसुमैमहतीं श्रियमश्नुते ॥
अर्कस्रजा भवत्यर्थः सर्वकामफलप्रदः ॥ ॥ ११५ ॥
प्रदद्याद्रूपिणीं कन्यां पूजितो बकुलस्रजा ॥
किंशुकैरर्चितो देवि न पीडयति भास्करः ॥११६॥
अगस्तिकुसुमैस्तद्वदानुकूल्यं प्रयच्छ ति ॥
करवीरैस्तु देवेशि सूर्यस्यानुचरो भवेत् ॥ ११७ ॥
शतपत्रस्रजा देवि सूर्यसालोक्यतां व्रजेत् ॥
बकपुष्पैर्महादेवि दारिद्र्यं नैव जायते ॥११९॥
ॠतुकुसुमेन गन्धेन समभ्यर्च्य दिवाकरम् ॥
चतुःसमुद्रमर्यादां स भुंक्ते पृथिवीमिमाम् ॥ ११९ ॥
यः सूर्यायतनं भक्त्या गैरिकेणोपलेपयेत् ॥
प्राप्नुयान्महतीं लक्ष्मीं रोगैश्चापि प्रमुच्यते ॥ 7.1.17.१२० ॥
अष्टादशेह कुष्ठानि ये चान्ये व्याधयो नृणाम् ॥
प्रलयं यांति ते सर्वे मृदा यद्युपलेपयेत् ॥ ॥ १२१ ॥
विलेपनानां सर्वेषां कुंकुमं रक्तचंदनम् ॥
पुष्पाणां करवीराणि प्रशस्तानि वरानने ॥१२२॥
नातः परतरं किंचिद्भास्वतस्तुष्टिकारकम् ॥
यादृशं कुङ्कुमं जाती शतपत्रं तथाऽगुरुः ॥१२३॥
किं तस्य न भवेल्लोके यश्चैभिश्चार्चयेद्रविम् ॥
उपलिप्यालयं यस्तु कुर्यान्मंडलकं शुभम् ॥१२४॥
एकेनास्य भवेदर्थो द्वाभ्यामारोग्यमश्नुते ॥
त्रिभिस्तु सर्वविद्यावांश्चतुर्भिर्भोगवान्भवेत् ॥१२५॥
पंचभिर्विपुलं धान्यं षड्भिरायुर्बलं यशः॥
सप्तमण्डलतारी स्यान्मंडलाधिपतिर्नरः ॥ १२६ ॥
घृतदीपप्रदानेन चक्षुष्माञ्जायते नरः ॥
कटुतैलस्य दीपेन स्वं शत्रुं जयते नरः ॥ १२७ ॥

तैलदीपप्रदानेन सूर्यलोके महीयते ॥
मधूकतैलदीपेन सौभाग्यं परमं लभेत् ॥ १२८. ॥
पुष्पाणां प्रवरा जाती धूपानां विजयः परः ॥
गन्धानां कुंकुमं श्रेष्ठं लेपानां रक्तचंदनम् ॥ १२९ ॥
दीपदाने घृतं श्रेष्ठं नैवेद्ये मोदकः परम् ॥
एतैस्तुष्यति देवेशः सांनिध्यं चाधिगच्छति ॥ 7.1.17.१३० ॥
एवं संपूज्य विधि वत्कृत्वा पितृप्रदक्षिणाम् ॥
प्रणम्य शिरसा देवं तत्र चार्कस्थलं प्रिये॥ १३१ ॥
सुखासीनस्ततः पश्येद्रवेरभिमुखे स्थितः ॥
एकं सिद्धार्थकं कृत्वा हस्ते पानीयसंयुतम् ॥ १३२ ॥
कामं यथेष्टं हृदये कृत्वार्कस्थलसन्निधौ ॥
पिबेत्सतोयं तद्देवि ह्यस्पृष्टं दशनैः सकृत् ॥ १३३ ॥
एवं कृत्वा नरो देवि कोटियात्राफलं लभेत् ॥
ब्रह्मा विष्णुर्महादेवो ज्वलनो धनदस्तथा ॥ १३४ ॥
भानुमाश्रित्य सर्वे ते मोदन्ते दिवि सुव्रते ॥
तस्माद्भानुसमं देवं नाहं पश्यामि कञ्चन ॥ १३५ ॥
इति कृत्वा महादेवि पुनर्भानौ प्रदक्षिणम् ॥
कुर्यान्मन्त्रेण देवेशि सप्तकृत्वो वरानने ॥ १३६ ॥
तमुष्टवाम इति ऋक्प्रथमा परिकीर्तिता ॥
एतोन्विन्द्रं स्तवामेति द्वितीया परिकीर्तिता ॥ १३७ ॥
इंद्र शुद्धो न आगहि तृतीया परिकीर्तिता ॥
इन्द्रं शुद्धो हि नो रयिं चतुर्थी परिकीर्तिता ॥ १३८ ॥
अस्य वामस्येति शुभे पञ्चमी परिकीर्तिता ॥
त्रिभिष्ट्वं देव इति वै षष्ठी च परिकीर्तिता ॥ १३९ ॥
दश सामानि वै यानि प्रवराणि मनीषिभिः ॥
गीतानि सामगैर्नित्यं सप्तमीं तैस्तु कारयेत् ॥7.1.17.१४॥।
तानि ते कथयाम्यद्य दश सामानि सुन्दरि॥
हुंकारः प्रणवोद्गीथः प्रस्तावश्च चतुष्टयम् ॥ १४१ ॥
पञ्चमं प्रहरो यत्र षष्ठमारण्यकं तथा ॥
निधनं सप्तमं साम्नां सप्तसिद्धिमिति स्मृतम् ॥ १४२ ॥
पञ्चविध्यमिति प्रोक्तं ह्रींकारप्रणवेन तु ॥
अष्टमं च तथा साध्यं नवमं वामदेवकम् ॥ १४३ ॥
ज्येष्ठं तु दशमं साम वेधसे प्रियमुत्तमम् ॥

एतेषां देवि साम्नां वै जाप्यं कार्यं विधानतः ॥ १४४ ॥
ज्येष्ठसामपरं चैव द्वितीयं गदतः शृणु ॥
न च श्राव्यं द्वितीयं तु जप्तव्यं मुक्तिमिच्छता ॥१४५॥।
तज्जाप्यं परमं प्रोक्तं स्वयं देवेन भानुना ॥
जाप्यस्य विनियोगोऽस्य लक्षणं च निबोध मे ॥
स्तोभसारं श्वासलीनमोंकारादि स्मृतं बुधैः ॥१४६॥
ऊर्भानुश्च तथा धर्मं धर्मः सत्यं ह्यृत तथा ॥
धर्मं ये धर्मवद्धर्मे धर्मे वै निधनं गताः ॥ १४७ ॥
यदेभिश्च यजेच्छब्दैरुचितं सामगैर्द्विजैः ॥
जाप्यं चैतत्परं प्रोक्तं स्वयं देवेन भानुना ॥ १४८ ॥
एतद्वै जप्यमानस्तु पुनरावर्तते न तु ॥
सर्वरोगविनिर्मुक्तो मुच्यते ब्रह्महत्यया ॥ १४९ ॥
आज्यदोहाद्यदोहेति ज्येष्ठसाम्नोऽपि लक्षणम् ॥7.1.17.१५०॥
इति संपूज्य देवेशं ततः कुर्यात्परां स्तुतिम् ॥
ऋग्भिर्वै पंचभिश्चैव शृणुष्वैकमनास्तु ताः ॥१५१॥
उक्षाणं पृश्निमिति वै प्रथमा परिकीर्तिता ॥
चत्वारि वाक्परीति वै द्वितीया परिकीर्तिता ॥ १५२ ॥
इंद्रं मित्रं तृतीया तु ऋक्चैव परिकीर्तिता ॥
कृष्णं नियानं हि तथा चतुर्थी परिकीर्तिता ॥ १५३ ॥
द्वादशप्रथम इति पंचमी परिकीर्तिता ॥
यो रत्नवाहीत्यनया किरीटं योजयेद्रवेः ॥१५४॥
गतेहनामित्यनया अव्यंगं भास्करं न्यसेत् ॥
अनेन विधिना देवि पूजयेद्विधिवद्रविम् ॥ १५५ ॥
इत्येष ते मया ख्यातः प्रतिमापूजने विधिः ॥ ॥ १५६ ॥
अनेनविधिना यस्तु सततं पूजयेद्रविम् ॥
स प्राप्नोत्यधिकान्कामानिह लोके परत्र च ॥ १५७ ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥
कन्यार्थी लभते कन्यां विद्यार्थी वेदविद्भवेत् ॥ १५८ ॥
निष्कामः पूजयेद्यस्तु स मोक्षं याति वै ध्रुवम् ॥
अस्य क्षेत्रस्य माहात्म्यादर्कसूर्यप्रभावतः ॥ १५९ ॥
अन्यत्र ब्राह्मणानां च कोटिना यत्फलं लभेत्॥
अर्कस्थले तथैकेन भोजितेन तु तत्फलम् ॥ 7.1.17.१६० ॥
स्नानं दानं जपो होमः सूर्यपर्वणि यत्कृतम्॥

तत्सर्वं कोटिगुणितं सूर्यकोटिप्रभावतः ॥ १६१ ॥
माघमासे नरो यस्तु सप्तम्यां रविवासरे ॥
कृष्णपक्षे महादेवि जागरं श्रद्धयाऽऽचरेत् ॥
अर्कस्थलसमीपे तु स याति परमां गतिम् ॥ १६२ ॥
गोशतस्य प्रदत्तस्य कुरुक्षेत्रे च यत्फलम् ॥
तत्फलं समवाप्नोति तत्रार्कस्थलदर्शनात् ॥ १६३ ॥
अर्कस्थलः पूजनीयस्तत्र स्थाने निवासिभिः ॥
जपापुष्पैरर्कपुष्पै रोगिभिस्तु विशेषतः ॥ १६४ ॥
न च पत्रोर्णकुसुमैर्न चैवोन्मत्तसंभवैः ॥
न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः ॥ १६५ ॥
आम्रातकस्य कुसुमं निर्माल्यमिव दृश्यते ॥
अप्रत्यग्रं बहिर्यस्मात्तस्मात्तत्परिवर्जयेत् ॥ १६६ ॥
नाविज्ञातं प्रदातव्यं न म्लानं न च दूषितम् ॥
न च पर्य्युषितं माल्यं दातव्यं भूतिमिच्छता ॥ १६७ ॥
देवमुल्लोचयेद्यस्तु तत्क्षणात्पुष्पलोभतः ॥
पुष्पाणि च सुगन्धानि भोजकेनेतराणि च ॥ १६८ ॥
ब्रह्महत्यामवाप्नोति भोजको लोभमोहितः ॥
महारौरवमासाद्य पच्यते शाश्वतीः समाः ॥ १६९ ॥
हन्त ते कीर्त्तयिष्यामि धूपदानविधिं परम् ॥
प्रदानाद्देवदेवस्य येन धूपेन यत्फलम् ॥ 7.1.17.१७० ॥
सदार्चने च धूपेन सामीप्यं कुरुते रविः ॥
प्रदद्यात्सकलं कामं यद्यदिच्छति मानवः ॥ १७१ ॥
तथैवागुरुधूपेन निधिं दद्यादभीप्सितम् ॥
आरोग्यार्थी धनार्थी च नित्यदा गुग्गलं दहेत् ॥ १७२ ॥
पिंडातधूपदानेन सदा तुष्यति भानुमान् ॥
आरोग्यं च स्वयं दद्यात्सौख्यं च परमं भवेत्॥१७३॥
श्रीवासकस्य धूपेन वाणिज्यं सकलं लभेत्॥
रसं सर्जरसं चैव दहतोऽर्थागमो भवेत्॥१७४॥
देवदारुं च दहतो भवत्यन्नमथाक्षयम्।.
विलेपनं कुंकुमेन सर्वकामफलप्रदम्॥१७५॥
इह लोके सुखी भूत्वा अक्षयं स्वर्गमाप्नुयात्॥
चंदनस्य प्रलेपेन श्रियमायुश्च विंदति ॥ १७६ ॥
रक्तचन्दनलेपेन सर्वं दद्याद्दिवाकरः ॥

अपि रोगशतैर्ग्रस्तः क्षेममारोग्यमाप्नुयात् ॥ १७७ ॥
गतिगंधं च सौभाग्यं परमं विंदते नरः ॥
कस्तूरिकामर्दनकैरैश्वर्यमतुलं लभेत् ॥ १७८ ॥
कर्पूरसंयुतैर्गंधैः क्ष्माधिपाधिपतिर्भवेत् ॥
चतुःसमेन गंधेन सर्वा न्कामानवाप्नुयात् ॥ १७९ ॥
एतत्ते कथितं देवि सूर्यमाहात्म्यमुत्तमम् ॥
सविस्तरं मया ख्यातं किमन्यत्परिपृच्छसि ॥7.1.17.१८०॥।
॥ देव्युवाच ॥ ॥
यद्येवं भगवान्सूर्यः सर्वतेजस्विनां वरः ॥
स कथं ग्रस्यते देव सैंहिकेयेन राहुणा ॥ १८१ ॥
॥ ईश्वर उवाच ॥ ॥
शृणु दैवि प्रवक्ष्यामि सर्व पापप्रणाशनम् ॥
कारणं ग्रहणस्यापि भ्रांतेर्विच्छेदकारकम् ॥ १८२ ॥
राहुरादित्यबिंबस्याधस्तात्तिष्ठति भामिनि ॥
अमृतार्थी विमानस्थो यावत्संस्रवतेऽमृतम् ॥ १८३ ॥
बिंबेनांतरितो देवि आदित्यग्रहणं हि तत् ॥
न कश्चिद्ग्रसितुं शक्त आदित्यो दहति ध्रुवम् ॥ १८४ ॥
ब्रह्मादयस्तमर्चंति स आदिः सर्वनाकिनाम् ।१
आदित्यदेहजाः सर्वे तथान्ये देवदानवाः ॥१८५॥
आदिकर्त्ता स्वयं यस्मादादित्यस्तेन चोच्यते ॥
प्रभासे संस्थितो देवः सर्वपातकनाशनः ॥ १८६ ॥
भुक्तिमुक्तिप्रदो देवो व्याधिदुष्कृतनाशकृत् ॥
तत्र सिद्धाः पुरा देवि लोकपाला महर्षयः ॥ १८७ ॥
सिद्धा विद्या धरा यक्षा गंधर्वा मुनयस्तथा ॥
धनदोऽपि तथा भीष्मो ययातिर्गालवस्तथा ॥ १८८ ॥
सांबश्चैव तथा देवि परां सिद्धिमितो गताः ॥
इदं रहस्यं देवेशि सूर्यमाहात्म्यमुत्तमम् ॥ १८९ ॥
न देयं दुष्टबुद्धीनां पापिनां च विशेषतः ॥
न नास्तिकेऽश्रद्दधाने न क्रूरं वा कथंचन ॥ 7.1.17.१९० ॥
इमां कथामनुब्रूयात्तथा नाऽसूयके शिवे ।
इदं पुत्राय शिष्याय धर्मिणे न्यायवर्तिने ॥ १९१ ॥
कथनीयं महाब्रह्म सूर्यभक्ताय सुव्रते ॥
अर्कस्थलस्य देवस्य माहात्म्यमिदमुत्तमम् ॥ १९२ ॥

यः श्राद्धे श्रावयेद्देवि ब्राह्मणान्संशितव्रतान् ॥
तस्यानंतं भवेद्देवि यद्दानं पुरुषस्य वै ॥ १९३ ॥
यत्रेदं कीर्त्त्यते पुण्यं संपदस्तत्र वै सदा ।१
यातुधाना न हिंसंति तच्छ्राद्धं भयविह्वलाः ॥ १९४ ॥
पंक्तिपावनतां यांति येऽपि वै पंक्तिदूषकाः ॥
सुतवाञ्जन्मवांश्च स्यात्सर्वकाममनोरमः ॥१९५ ॥
प्रवासिभिर्बंधुवर्गैः संयुज्येत सदा नरः ॥
नष्टैः संयुज्यते चार्थैरपरैश्चापि चिंतितैः ॥ १९६ ॥
रक्ष्यते यागिनीभिश्च प्रियैश्च न वियुज्यते ॥
उपस्पृश्य शुचिर्भूत्वा शृणुयाद्ब्राह्मणः सदा ॥
सर्वान्कामांश्च लभते नात्र कार्या विचारणा ॥ १९७ ॥
वैश्यः समृद्धिमतुलां क्षत्रियः पृथिवीपतिः॥
वणिजश्चापि वाणिज्यमखंडं शतसंख्यया॥
लभेयुः कीर्तनादस्याः सूर्योत्पत्तेर्वरानने॥१९८॥
शूद्राश्चैवाभिलषितान्कामान्प्राप्स्यंति भामिनि॥
अपमृत्युभयं घोरं मृत्युतोऽपि महाभयम्॥१९९।
नश्यते नात्र संदेहो राजद्वारकृतं च यत्॥
सर्वकामसमृद्धात्मा सूर्यलोके महीयते ॥ 7.1.17.२०० ॥
इत्येतत्कथितं देवि माहात्म्यं सूर्यदैवतम् ॥
अर्कस्थलप्रसंगेन किमन्यच्छ्रोतुमिच्छसि॥। ॥ २०१ ॥
स्थानं शाश्वतमोजसां गतिरपां दीपो दिशामक्षयः सिद्धेर्द्वारमपावभेदि जगतां साधारणं लोचनम्॥
हैमं पुष्करमंतरिक्षसरसो दीप्तं दिवः कुण्डलं कालोन्मानविभावनाक्षतलयं बिंबं रवेः पातु वः ॥ २०२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे
प्रभासक्षेत्रमाहात्म्येऽर्क्कस्थलमाहात्म्यार्कस्थलपूजाविधानादिवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥

॥ सूत उवाच ॥ ॥
इति प्रोक्ता तदा देवी शंकरेण यशस्विनी ॥
पुनः पप्रच्छ विप्रेंद्राः क्षेत्रमाहात्म्यविस्तरम् ॥ १ ॥
॥ देव्युवाच ॥ ॥
अद्य मे सफलं जन्म सफलं च तपः प्रभो ॥
देवत्वमद्य मे जातं त्वत्प्रसादेन शंकर ॥ २ ॥
अद्याहं कृतकल्याणी ज्ञानदृष्टिः कृतात्वया ॥
अद्य मे भूषितौ कर्णौ क्षेत्र माहात्म्यभूषणौ ॥ ३ ॥
अद्य मे तेजसः पिंडो जातो ज्ञानं हृदि स्थितम् ॥
अद्य मे कुलशीलं च अद्य मे रूपलक्षणम् ॥ ४ ॥
अद्य मे भ्रांतिरुच्छिन्ना तीर्थभ्रमणसंभवा ॥
प्रभासे निश्चलं जातं मनो मे मानिनां वर ॥ ५ ॥
आराधितो मया पूर्वं तुष्टो मेऽद्य सुरेश्वरः ॥
वह्निना वेष्टिता साहमेकपादेन संस्थिता ॥ ६ ॥
तत्तपः सफलं त्वद्य जातं मे भक्तवत्सल ॥
प्रभासक्षेत्रमाहात्म्यमद्य मे प्रकटीकृतम् ॥ ७ ॥
पुनः पृच्छामि देवेश याथातथ्यं वद प्रभो ॥८॥
अद्यापि संशयो नाथ तीर्थमाहात्म्यसंभवः॥
अन्यत्कौतूहलं देव कथयस्व महेश्वर ॥ ९ ॥
अयं यो वर्त्तते देव चंद्रस्ते शिरसि स्थितः ॥
कस्यायं कथमुत्पन्नः कस्मिन्काले वद प्रभो ॥ 7.1.18.१० ॥
॥ ईश्वर उवाच ॥ ॥
अस्मिन्काले महादेवि वाराह इति विश्रुते ॥
परार्द्धे तु द्वितीयेऽस्मिन्वर्तमाने तु वेधसः ॥ ११ ॥
द्वितीयमासस्यादौ तु प्रतिपद्या प्रकीर्तिता ॥
वाराहेणोद्धृता तस्यां तथा चादौ धरा प्रिये ॥
तेन वाराहकल्पेति नाम जातं धरातले ॥ १२ ॥
तस्मिन्कल्पे महादेवि गते संध्यांशके प्रिये ॥
प्रथमस्य मनोश्चादौ देवि स्वायंभुवस्य हि ॥ १३ ॥
क्षीरोदे मथ्यमाने तु दैवतैर्दानवैरपि ॥
रत्नानि जज्ञिरे तत्र चतुर्द्दशमितानि वै ॥ १४ ॥
तेषां मध्ये महातेजाश्चंद्रमास्तत्त्वसंभव ॥
सोऽयं मया धृतो देवि अद्यापि शिरसि प्रिये ॥ १५ ॥

विषे पीते महादेवि प्रभासस्थस्य मे सदा ॥
भूषणं मुक्तये देवैर्मम चंद्रः कृतः पुरा ॥ १६ ॥
शशिनाभूषितो यस्मात्तेनाहं शशिभूषणः॥
तत्र स्थाने स्थितोऽद्यापि स्वयंभूर्लिंगमूर्त्तिमान्॥१७॥
सर्वसिद्धिप्रदाता च कल्पस्थायी सदा प्रिये ॥
इत्येतत्कथितं देवि किमन्यत्परिपृच्छसि ॥ १८ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शिवशिरोभूषण चन्द्रोत्पत्तिवृत्तान्तवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥

॥ देव्युवाच ॥ ॥
यद्येवं सकलश्चंद्रः कथं न विधृतस्त्वया ॥
अन्तभावे कलानां तत्कारणं कथय प्रभो ॥ १ ॥
॥ ईश्वर उवाच ॥ ॥
अमा षोडशभेदेन देवि प्रोक्ता महाकला ॥
संस्थिता परमा माया देहिनां देह धारिणी ॥ २ ॥
अमादिपौर्णमास्यंता या एव शशिनः कलाः ॥
तिथयस्ताः समाख्याताः षोडशैव प्रकीर्तिताः ॥ ३ ॥
अमा सूक्ष्मा परा शक्तिः सा त्वं देवि प्रकीर्तिता ॥
प्रलयोत्पत्तियोगेन स्थिताः कालक्रमोदिताः ॥४॥
षोडशैव स्वरा ये तु आद्याः सृष्टयंतकाः प्रिये ॥
कालस्यावयवास्ते च विज्ञेयाः कालवेदिभिः ॥ ५ ॥
त्रुटिर्लवो निमेषश्च कला काष्ठा मुहूर्तकम्॥
रात्र्यहःपक्षमासाश्च अयनं वत्सरं युगम् ॥ ६ ॥
मन्वतरं तथा कल्पं महाकल्पं च षोडश ॥
कला विसर्जनी या तु जीवमाश्रित्य वर्तते ॥७॥
सा सृजत्यखिलं विश्वं विषुवद्वयसंयुतम् ॥
तथा संवरणी या तु विश्वं संहरते प्रिये ॥ ॥
नेत्रपाताच्चतुर्भागस्त्रुटिकालो निगद्यते ॥
तस्माच्च द्विगुणं विद्धि निमिषं तन्महेश्वरि ॥ ९ ॥
निमिषैस्त्रिंशद्भिः काष्ठा ताभिर्विंशतिभिः कला॥
विंशतिकलो मुहूर्तः स्याद्दिनं पंचदशैस्तु तैः॥7.1.19.१०॥।
दिनमाना निशा ज्ञेया अहोरात्रं द्वयाद्भवेत् ।
तैः पंचदशभिः पक्षो द्विपक्षो मास उच्यते ॥११॥
मासैश्चैवायनं षड्भिर्वर्षं स्यादयनद्वये ॥
चत्वारिंशच्च लक्षाणि लक्षाणां त्रितयं पुनः॥१२॥
विंशतिश्च सहस्राणि ज्ञेयं सौरं चतुर्युगम्॥
चतुर्युगैकसप्तत्या मन्वंतरमुदाहृतम्॥१३॥
ऐंद्रमेतद्भवेदायुः समासांतं च कीर्तितम्॥
चतुर्दशेन्द्रैः प्रलीनैः कल्पं ब्रह्मदिनं भवेत् ॥१४॥
रात्रिश्च तावती चैव चतुर्युगसहस्रिका॥
अनेन दिनमानेन शताब्दं जीवति प्रिये ॥१५॥
ममैव निमिषार्द्धेन सहस्राणि चतुर्द्दश ॥

विनश्यंति ततो विष्णोरसंख्याताः पितामहाः ॥१६॥
एवं क्रमेण देवेशि समुत्पन्नमिदं जगत् ॥
शशिसूर्यविभागेन चित्ररूपमनंतकम् ॥१७॥
कला देवि यदाद्यंतमनादिमजमव्ययम्॥
तदान्वितः शशी तस्यामधोमुखमवस्थितः ॥ १८ ॥
एवं क्षयोदयं ज्ञेयं चंद्रार्काभ्यामवस्थितम् ॥
सृष्टिक्रमं मया प्रोक्तं संहारमधुना शृणु ॥ १९ ॥
महाकल्पं हतं कल्पैः कल्पं मन्वंतरैर्हतम् ॥
मासं पक्षाहतं कृत्वा तं चाहोरात्रिभाजितम् ॥7.1.19.२॥।
अहोरात्रं मुहूर्तेन मुहूर्तं तु कलाहतम्॥
कलां काष्ठा हतां कृत्वा काष्ठां निमिषभाजिताम् ॥ २१ ॥
निमिषं च लवैर्हत्वा लवं त्रुटिविभाजितम् ॥
तदतीतं प्रशांतं च निर्विकारमलक्षणम् ॥२२॥
तस्य चेयं परा माया कला शिरसि धारिता ॥
सा शक्तिर्देवदेवस्य विश्वाकारा परा प्रिये ॥
मोहयित्वा तु संतानं संसारयति पार्वति ॥२३॥

30a
एवमेतज्जगद्देवि उत्पत्तिस्थितिलक्षणम् ॥
यत्रैवोत्पद्यते कृत्स्नं पुनस्तत्रैव लीयते ॥ २४ ॥
सेयं मायामयी शक्तिः शुद्धाशुद्धस्वरूपिणी ॥
चंद्ररूपा स्थिता सा तु तव देवि प्रकाशयेत्॥ २५ ॥
॥ देव्युवाच ॥ ॥
पंचाग्निनोपसन्तप्ता वर्षकोटीरनेकधा ॥
तत्तपः सफलं जातं मेऽद्य देव जगत्पते ॥ २६ ॥
सृष्टियोगो मया ज्ञातः संहारश्च महेश्वर ॥
चन्द्रोत्पत्तिस्वरूपं च कलामानं तथैव च ॥ २७ ॥
अधुना मम देवेश सन्देहो हृदि संस्थितः ॥
कौतूहलं परं देव कथयस्व महेश्वर ॥ २८ ॥
अमृतादेव संभूतः सर्वाह्लादकरः शशी ॥
प्रियश्च तव देवेश वल्लभश्चंद्रमास्तथा ॥ २९ ॥
चंद्रे च चदि इत्येष ह्लादने धातुरिष्यते॥
शुक्लत्वे चापतत्त्वे च मया त्वेष विभाव्यते ॥7.1.19.३॥।
सर्वौषधीनामधिपः पितॄणां प्रीणनं परम् ॥

तदाश्रयश्च त्वद्भक्तस्त्व त्सेवातत्परः शशी ॥ ३१ ॥
तथापि सकलंकोऽयं कौतुकं कुरुते मम ॥
देवि ब्रह्मांडसंघट्टमालामंडितशेखरः ॥ ३२ ॥
शीर्षे तव निविष्टस्य कष्टं चंद्रस्य चेद्यदि ॥
तर्हि नाथ न शोच्या वै संसारे दुःखभागिनः ॥ ३३ ॥
न चास्ति त्रिषु लोकेषु न चैतत्संभविष्यति ॥
यत्र शक्तो भवत्कर्तुं दुःखस्यास्य च संक्षयम्॥ ३४ ॥
सर्वेषां वर्तते शंका यथा मम महेश्वर ॥
उत्पन्नं कारणं किंतद्येन सोमस्य लांछनम् ॥ ३५ ॥
किमेतत्कारणं देव कथयस्व महेश्वर ॥
अमृते संभवो यस्य कथं तस्यापि लांछनम्॥ ३६ ॥
प्रियश्च तव देवेश लांछनं चापि तिष्ठति ॥
कौतूहलं परं देव तत्त्वं मे वक्तुमर्हसि ॥ ३७ ॥
एवमुक्तः स पार्वत्या देवदेवो महेश्वरः ॥
उवाच परमप्रीतः प्रेम्णा शैलसुतां प्रभुः ॥ ३८ ॥
॥ ईश्वर उवाच ॥
किं ते देवि महाशंकाद्योत्पन्ना वरवर्णिनि ॥
ममोपरि न कर्त्तव्या निरुद्विग्ना भव प्रिये ॥
पितुस्तव प्रभावेन लांछनं शशिनोऽभवत् ॥ ३९ ॥
भावित्वात्कर्मणो देवि दक्षस्याज्ञाव्यतिक्रमात् ॥
समं वर्त्तस्व भार्याभिरित्युक्तः शशलांछनः ॥ 7.1.19.४० ॥
तद्वाक्यमन्यथा चक्रे ततः शप्तः शशी प्रिये॥
इदं पृष्टं तु यद्देवि त्वया लांछनकारणम् ॥ ४१ ॥
कल्पेकल्पे पृथग्भावं कारणैरस्ति भामिनि ॥
असंख्यातं च तद्वक्तुं शक्यं नैव मया प्रिये ॥ ४२ ॥
असंख्येयाश्चन्द्रमसः संभवंति पुनःपुनः ॥
विनश्यंति च देवेशि सर्वमन्वन्तरान्तरम् ॥४३ ॥
असंख्याताश्च कल्पाख्या असंख्याताः पितामहाः ॥
हरयश्चाप्यसंख्याता एक एव महेश्वरः ॥ ४४ ॥
कोटिकोट्ययुतान्यत्र ब्रह्माण्डानि मम प्रिये ॥
जलबुद्बुदवद्देवि संजातानि तु लीलया॥ ४५॥
तत्रतत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः॥
सृष्टाः प्रधानेन तदा लब्धा शंभोस्तु संनिधिः॥४६॥

लयं चैव तथान्योन्यमाद्यंतं प्रकरोति च॥
सर्गसंहारसंस्थानां कर्त्ता देवो महेश्वरः॥४७॥
सर्गे च रजसा पृक्तः सत्त्वस्थः परिपालने॥
प्रतिसर्गे तमोयुक्तः सोऽहं देवि त्रिधा स्थितः॥४८॥
तस्मान्माहेश्वरो ब्रह्मा ब्रह्मणोऽधिपतिः शिवः ॥
सदाशिवो भवेद्विष्णुर्ब्रह्मा सर्वात्मको ह्यतः ॥ ४९ ॥
स एव भगवान्रुद्रो विष्णुर्विश्व जगत्प्रभुः ॥
अस्मिन्नण्डे त्विमेलोका अन्तर्विश्वमिदंजगत् ॥ 7.1.19.५० ॥
चन्द्रसूर्यग्रहा देवि ब्रह्माण्डेऽस्मिन्मनस्विनि ॥
संख्यातुं नैव शक्यन्ते ये भविष्यंति ये गताः ॥ ५१ ॥
अस्मिन्वाराहकल्पे तु वर्तमाने मनस्विनि ॥
षडतीता महादेवि रोहिणीपतयः पुरा ॥ ५२ ॥
सप्तमोऽयं महादेवि वर्ततेऽमृतसंभवः ॥
दक्षशापेन यो देवि संक्षीणो दृश्यतेऽधुना ॥ ५३ ॥
अथ द्वितीये संप्राप्ते परार्द्धे चैव वेधसः ॥
तस्य त्रिंशत्तिमे कल्पे पितृ कल्पेति विश्रुते ॥ ५४ ॥
स्वायंभुवेंऽतरे प्राप्ते तस्यादौ त्वं सती किल ॥
तस्मिन्काले महादेवि योभूद्दक्षः पिता तव ॥ ५५ ॥
प्राणात्प्रजापतेर्जन्म तस्य दक्षस्य कीर्तितम् ॥
अस्मिन्मन्वन्तरे देवि दक्षः प्राचेतसोऽभवत् ॥ ५६ ॥
अंगुष्ठाद्दक्षिणाद्दक्षो भविष्यत्यधुना प्रिये ॥
युगेयुगे भवन्त्येते सर्वे दक्षादयो द्विजाः ॥ ५७ ॥
पुनश्चैव विनश्यन्ति विद्वांस्तत्र न मुह्यति ॥
तस्यापमानात्त्वं देवि देहं तत्यक्थ वै पुरा ॥ ५८ ॥
तावद्वियुक्तोऽहं देवि त्वया मुक्तोऽभवं पुरा ॥
यावद्वराहकल्पस्य चाक्षुषस्यान्तरं प्रिये ॥ ५९ ॥
एकविंशो मनुश्चायं कल्पे वाराहसंज्ञके ॥
कल्पेकल्पे महादेवि भवेन्नामान्तरं तव ॥ 7.1.19.६० ॥
अस्मिन्कल्पे तु वाराहे हिमवत्तपसाज्जिते ॥
संभूता पार्वती देवि चाक्षुषस्यांतरे गते ॥ ६१ ॥
ब्रह्मणो दिनमेकं तु षण्मासेन तवावधिः ॥
त्वं वियुक्ता मया सार्द्धं दक्षकोपेन भामिनि ॥ ६२ ॥
तव क्रोधेन ये शप्ता ऋषयो वै मया पुरा ॥

तेऽपि देवि त्वया सार्द्धं जाता वैवस्वतेंतरे ॥ ६३ ॥
भृगुरंगिरा मरीचिस्तु पुलस्त्यः पुलहः क्रतुः ॥
अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ॥ ६४ ॥
दक्षस्य यज्ञे ते शप्ताः पूर्वं स्वायंभुवेन्तरे ॥
जाता देवि पुनस्ते वै कल्पेस्मिंश्चाक्षुषे गते ॥ ६५ ॥
देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥
ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया ॥ ६६ ॥
ऋषयो जज्ञिरे पूर्वं सूर्यबिंबसमप्रभाः ॥
पितुस्तव समीपं ते वरणाय तव प्रिये ॥
प्रस्थापिता मया पूर्वं तत्त्वं जानासि सुव्रते ॥ ६७ ॥
अथ किं बहुनोक्तेन वच्मि ते प्रश्नमुत्तमम् ॥
द्वितीये तु परार्द्धेऽस्मिन्वर्त्तमाने च वेधसः ॥ ६८ ॥
श्वेतकल्पात्समारभ्य यावद्वाराहगोचरम् ॥
समतीताश्च ये चन्द्रास्ताञ्छृणुष्व वरानने ॥ ६९ ॥
चतुःशतानि देवेशि षड्विंशत्यधिकानि तु ॥
गतानि शीतरश्मीनां सप्तविंशोऽधुना प्रिये ॥ 7.1.19.७० ॥
वैवस्वतेंऽतरे प्राप्ते यश्चायं वर्ततेऽधुना ॥
त्रेतायुगे तु दशमे दत्तात्रेयपुरःसरः ॥ ७१ ॥
संजातो रोहिणीनाथो योऽधुना वर्त्तते प्रिये ॥
तस्योत्पत्तिप्रसंगेन विष्णोर्मानुषसंभवान् ॥ ७२ ॥
देहावतारान्वक्ष्यामि प्रारंभात्प्रथमान्प्रिये ॥
पञ्चमः पंचदश्यां स त्रेतायां तु बभूव ह ॥ ७३ ॥
मांधाता चक्रवर्त्तित्वे तस्योतथ्यपुरःसरः ॥
एकोनविंशत्रेतायां सर्वक्षत्रांतकोऽभवत् ॥ ७४ ॥
जामदग्न्यस्तथा षष्ठो विश्वामित्रपुरःसरः ॥
चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा ॥ ७५ ॥
सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः ॥
अष्टमे द्वापरे विष्णुरष्टाविंशे पराशरात् ॥ ७६ ॥
वेदव्यासस्ततो जज्ञे जातूकर्ण्यपुरःसरः ॥
तत्रैव नवमो विष्णुरदितेः कश्यपात्मजः ॥ ७७ ॥
देवक्यां वसुदेवात्तु ब्रह्मगर्गपुरःसरः ॥
एकविंशतमस्यास्य द्वापरस्यांशसंक्षये ॥
नष्टे धर्मे तदा जज्ञे विष्णुर्वृष्णिकुले स्वयम् ॥ ७८ ॥

कर्तुं धर्मव्यवस्थानमसुराणां प्रणाशनः ॥
पूर्वजन्मनि विष्णुः स प्रमतिर्नाम वीर्यवान् ॥ ७९ ॥
गोत्रेण वै चंद्रमसः संध्यामिश्रे भविष्यति ॥
कल्किर्विष्णुयशानाम पाराशर्यप्रतापवान् ॥ 7.1.19.८० ॥
दशमो भाव्यसंभूतो याज्ञवल्क्यपुरःसरः ॥
अनुकर्षश्च वै सेनां हस्त्यश्वरथसंकुलाम् ॥ ८१ ॥।
प्रगृहीतायुधैर्विप्रैर्भृशं शतसहस्रशः ॥
निःशेषाञ्छूद्रराज्ञस्तांस्तदा स तु करिष्यति ॥ ८२ ॥
पाखंडान्म्लेच्छजातींश्च दस्यूंश्चैव सहस्रशः ॥
नात्यर्थं धार्मिका ये च ब्रह्मब्रह्मद्विषः क्वचित् ॥ ८३ ॥
प्रवृत्तचक्रो बलवाञ्छूराणामंतको बली ॥
अदृश्यः सर्वभूतानां पृथिवीं विचरिष्यति ॥ ८४ ॥।
मानवस्य तु सोंऽशेन देवस्य भुवि वै प्रभुः॥
क्षपयित्वा तु तान्सर्वान्भाविनार्थेन नोदितान् ॥
गंगायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः ॥ ८५ ॥।
ततो व्यतीते कल्कौ तु सामात्ये सहसैनिके ॥
नृपेष्वपि च नष्टेषु तदात्वप्रहराः प्रजाः ॥ ८६ ॥
रक्षणे विनिवृत्ते च हत्वा चान्योन्यमाहवे ॥
परस्परहतास्ताश्च निराक्रंदाः सुदुःखिताः ॥ ८७ ॥
क्षीणे कलियुगे चास्मिन्दशवर्षसहस्रके ॥
स संध्यांशे तु निःशेषे कृतं वै प्रतिपत्स्यति ॥ ८८॥
यदा चंद्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥
एकराशौ समेष्यंति प्रपत्स्यति तदा कृतम् ॥ ८९ ॥
अभिजिन्नाम नक्षत्रं जयंतीनाम शर्वरी॥
मुहूर्तो विजयो नाम यत्र जातो जनार्द्दनः ॥ 7.1.19.९० ॥
॥ देव्युवाच ॥ ॥
नोक्तं यथावदखिलं भृगुशापविचेष्टितम्॥
पूर्वावतारान्मे ब्रूहि नोक्तपूर्वान्महेश्वर॥९१॥
ईश्वर उवाच॥
यदा तु पृथिवी व्याप्ता दानवैर्बलवत्तरैः॥
ततः प्रभृति शापेन भृगुनैमित्तिकेन ह॥ ९२॥
जज्ञे पुनःपुनर्विष्णुः कर्त्तुं धर्मव्यवस्थितिम्॥
धर्मान्नारायणः साध्यः संभूतश्चाक्षुषेंतरे॥९३॥

यज्ञं प्रवर्तयामास स च वैवस्वतेंऽतरे ॥
प्रादुर्भावे तदा तस्य ब्रह्मा चासीत्पुरोहितः॥९४॥
चतुर्थ्यां तु युगाख्यायामापन्नेषु सुरेष्विह॥
संभूतः स समुद्रात्तु हिरण्यकशिपोर्वधे॥९५॥
द्वितीयो नरसिंहोऽभूद्रुद्रस्तस्य पुरःसरः॥
लोकेषु बलिसंस्थेषु त्रेतायां सप्तमे युगे॥९६॥
दैत्यैस्त्रैलोक्य आक्रांते तृतीयो वामनोभवत्॥
संक्षिप्यात्मानमंगेषु बृहस्पतिपुरःसरः ॥ ९७ ॥
त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह ॥
नष्टे धर्मे चतुर्थांशे मार्कंडेयपुरःसरः ॥
एते दिव्यावतारा वै मानुष्ये कथिताः पुरा ॥ ९८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्रीविष्णववतारवर्णनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२०



॥ ईश्वर उवाच ॥ ॥

अथ दैत्यावताराणां क्रमो हि कथ्यते पुनः ॥

हिरण्यकशिपू राजा वर्षाणामर्बुदं बभौ ॥ १ ॥

तथा शत सहस्राणि यानि कानि द्विसप्ततिम् ॥

अशीतिं च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत्॥२॥

सौत्येऽहन्यतिरात्रस्य कश्यपस्याश्वमेधिके ॥३॥

उपक्षिप्ता सनं यत्तु होतुरर्थे हिरण्मयम् ॥

निषसाद स गर्तो(?)ऽत्र हिरण्यकशिपुस्ततः ॥ ४ ॥

शतवर्षसहस्राणां तपश्चक्रे सुदुश्चरम् ॥

दशवर्षसहस्राणि दित्या गर्भे स्थितः पुरा ॥ ५ ॥

हिणयकशिपोर्दैत्यैः श्लोको गीतः पुरातनः ॥

राजा हिरण्यकशिपुर्यां यामाशां निरीक्षते ॥ ६ ॥

तस्यां तस्यां दिशि सुरा नमश्चक्रुः सहर्षिभिः १।

पर्याये तस्य राजाभूद्बलिर्वर्षार्बुदं पुनः ॥ ७ ॥

षष्टिं चैव सहस्राणि त्रिंशच्च नियुतानि च ॥

बले राज्याधिकारस्तु याव त्कालं बभूव ह ॥ ८ ॥

प्रह्लादो निगृहीतोऽभूत्तावत्कालं तथा सुरैः १।

इंद्रादयस्ते विख्याता असुराञ्जघ्नुरोजसा ॥ ९ ॥

दैत्यसंस्थमिदं सर्वमा सीद्दशयुगं किल ॥

असपत्नं ततः सर्वमष्टादशयुगं पुनः ॥ 7.1.20.१० ॥

त्रैलोक्यमिदमव्यग्रं महेंद्रेण तु पालितम् ॥

त्रेतायुगे तु दशमे कार्त्तवीर्यो महाबलः ॥ ११ ॥

पंचाशीतिसहस्राणि वर्षाणां वै नराधिपः ॥

स सप्तरत्नवान्सम्राट् चक्रवर्ती बभूव ह ॥ १२ ॥

द्वीपेषु सप्तसु स वै खड्गी चर्मी शरासनी ॥

रथी राजा सानुचरो योगाच्चौरानपश्यत ॥ १३ ॥

प्रणष्टद्रव्यता यस्य स्मरणान्न भवेन्नृणाम् ॥

चतुर्युगे त्वतिक्रांते मनौ ह्येकादशे प्रभौ ॥ १४ ॥

अर्द्धावशिष्टे तस्मिंस्तु द्वापरे संप्रवर्तिते ॥

मानवस्य नरिष्यंतो ह्यासीत्पुत्रो मदः किल ॥। ॥ १५ ॥

नवमस्तस्य दायादस्तृणबिंदुरिति स्मृतः ॥

त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥ १६ ॥

तस्य कन्या त्विलविला रूपे णाप्रतिमाऽभवत् ॥

पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥ १७ ॥

ऋषिरैलविलो यस्यां विश्रवाः समपद्यत ॥

तस्य पत्न्यश्च तिस्रस्तु पौलस्त्यकुलमंडनाः ॥ १८ ॥

बृहस्पतेः शुभा कन्या नाम्ना वै वेदवर्णिनी ॥

पुष्पोत्कटा च वीका च उभे माल्यवतः सुते ॥ १९ ॥

केकसी मालिनः कन्या तस्यां देवि शृणु प्रजाः ॥

ज्येष्ठं वैश्रवणं तस्य सुषुवे वरवर्णिनी ॥ 7.1.20.२० ॥

अष्टदं(?) हरिच्छमश्रुं शंकुकर्णं विलोहितम् ॥

श्वपादं ह्रस्वबाहुं च पिंगलं शुचिभूषणम् ॥ २१ ॥

त्रिपादं तु महाकायं स्थूलशीर्षं महाहनुम् ॥

एवंविधं सुतं दृष्ट्वा विरूपं रूपतस्तदा ॥ २२॥

तदा दृष्ट्वाब्रवीत्तं तु कुबेरोऽयमिति स्वयम्॥

कुत्सायां क्वितिशब्दोयं शरीरं वेरमुच्यते ॥ २३ ॥

कुबेरः कुशरीरत्वान्नाम्ना तेन च सोंकितः ॥

तस्य भार्य्याऽभवद्वृद्धिः पुत्रस्तु नलकूबरः ॥ २४ ॥

कैकस्यजनयत्पुत्रं रावणं राक्षसाधिपम् ॥

शंकुकर्णं दशग्रीवं पिगलं रक्तमूर्द्धजम्॥ २५ ॥

वसुपादं विंशद्भुजं महाकायं महाबलम् ॥

कालांजननिभं चैव दंष्ट्रिणं रक्तलोचनम् ॥ २६ ॥

राक्षसेनौजसा युक्तं रूपेण च बलेन च ॥

निसर्गाद्दारुणः क्रूरो रावणाद्रावणः स्मृतः ॥२७॥

हिरण्यकशिपुस्त्वासीत्स राजा पूर्वजन्मनि ॥

चतुर्युगानि राजा तु तथा दश स राक्षसः ॥२८॥

पंच कोटीस्तु वर्षाणां संख्यताः संख्याया प्रिये ॥

नियुतान्येकषष्टिं च संख्यावद्भिरुदाहृतम् ॥ २९ ॥

षष्टिं चैव सहस्राणि वर्षाणां स हि रावणः ॥

देवतानामृषीणां च घोरं कृत्वा प्रजागरम् ॥ 7.1.20.३० ॥

त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात् ॥

रामं दाशरथिं प्राप्य सगणः क्षयमेयिवान् ॥ ३१ ॥

योऽसौ देवि दशग्रीवः संबभूवारिमर्द्दनः ॥

दमघोषस्य राजर्षेः पुत्रो विख्यातपौरुषः ॥३२॥

श्रुतश्रवायां चैद्यस्तु शिशुपालो बभूव ह ॥

रावणं कुंभकर्णं च कन्यां शूर्पणखां तथा ॥३३॥

विभीषणं चतुर्थं च कैकस्यजनयत्सुतान् ॥

मनोहरः प्रहस्तश्च महापार्श्वः खरस्तथा ॥३४॥

पुष्पोत्कटायास्ते पुत्राः कन्या कुम्भीनसी तथा ॥

त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः॥

कन्यैका श्यामिका नाम वीकायाः प्रसवः स्मृतः॥३५॥

इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा नव ॥

विभीषणो विशुद्धात्मा दशमः परिकीर्तितः ॥३६॥

पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ॥

भूताः पिशाचाः सर्पाश्च शूकरा हस्तिनस्तथा ॥ ॥३७॥

अनपत्यः क्रतुस्त्वस्मिन्स्मृतो वैवस्वतेंतरे ॥

अत्रेः पत्न्यो दशैवासन्सुन्दर्यश्च पतिव्रताः ॥३८॥

भद्राश्वस्य घृताच्यंता जज्ञिरे दश चाप्सराः ॥३९॥

भद्रा शूद्रा च मद्रा च नलदा जलदा तथा ॥

उर्णा पूर्णा च देवेशि या च गोपुच्छला स्मृता॥7.1.20.४०॥

तथा तामरसा नाम दशमी रक्तकोटिका ॥

एतासां च महादेवि ख्यातो भर्त्ता प्रभाकरः ॥ ४१ ॥

स्वर्भानुना हते सूर्ये पतितेस्मिन्दिवो महीम् ॥

तमोऽभिभूते लोकेस्मिन्प्रभा येन प्रवर्त्तिता ॥! ॥ ४२ ॥

स्वस्ति तेस्त्विति चैवोक्तः पतन्निह दिवाकरः ॥

ब्रह्मर्षेर्वचनात्तस्य न पपात यतः प्रभुः ॥ ४३ ॥

ततः प्रभाकरेत्युक्तः प्रभुरेवं महर्षिभिः ॥

भद्रायां जनयामाम् सोमं पुत्रं यशस्विनम् ॥ ४४ ॥

त्विषिमान्धर्मपुत्रस्तु सोमो देवो वरस्तु सः ॥

शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाचरः॥ ।४५॥

पिता सोमस्य वै देवि जज्ञेऽत्रिर्भगवानृषिः ॥

तत्रात्रिः सर्वलोकेशं भृत्वा स्वे नयने स्थितः ॥ ४६ ॥

कर्मणा मनसा वाचा शुभान्येव समा चरत् ॥

काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्महाद्युतिः ॥४७॥

सुदुस्तरं नाम तपस्तेन तप्तं महत्पुरा ॥

त्रीणि वर्षसहस्राणि दिव्यानि सुरसुंदरि ॥ ४८ ॥

तस्योर्द्ध्वरेतसस्तत्र स्थितस्यानिमिषस्य ह ॥

सोमत्वं वपुरापेदे महाबुद्धेस्तु वै शुभे ॥ ४९ ॥

ऊर्द्ध्वमाचक्रमे तस्य सोमसंभावितात्मनः ॥

नेत्राभ्यां सोमः सुस्राव दशधा द्योतयन्दिशः ॥ 7.1.20.५० ॥

तद्गर्भं विधिना दृष्टा दिशोदश दधुस्तदा ॥

समेत्य धारयामासुर्न च धर्तुमशक्नुवन् ॥ ॥ ५१ ॥

स ताभ्यः सहसैवेह दिग्भ्यो गर्भश्च शाश्वतः ॥ पपात भावयँल्लोकाञ्छीतांशुः सर्वभावनः ॥ ५२ ॥

यदा न धारणे शक्तास्तस्य गर्भस्य ताः स्त्रियः ॥

ततस्ताभ्यः स शीतांशुर्निपपात वसुंधराम् ॥ ५३ ॥

पतितं सोममालोक्य ब्रह्मा लोकपितामहः॥

रथमारोपयामास लोकानां हितका म्यया ॥ ५४ ॥

स तदैव मया देवि धर्मार्थं सत्यसंगरः ॥

युक्तो वाजिसहस्रेण सितेन सुरसुंदरि ॥ ५५ ॥
तस्मिन्निपतिते देवि पुत्रेत्रेः परमात्म नि ॥
तुष्टुवुर्ब्रह्मणः पुत्रा मानसाः सप्त ये श्रुताः ॥ ५६ ॥
तथैवांगिरसः सर्वे भृगोश्चैवात्मजास्तथा ॥
ऋग्भिस्तु सामभिश्चैव तथैवांगिरसैरपि ॥ ॥ ५७ ॥
तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः ॥
आप्यायमानं लोकांस्त्रीन्भासयामास सर्वशः ॥ ५८ ॥
स तेन रथमुख्येन सागरांतां वसुंधराम् ॥
त्रिःसप्तकृत्वोतियशाश्चकाराभिप्रदक्षिणम् ॥ ५९ ॥
तस्य यच्चापि तत्तेजः पृथिवीमन्वपद्यत ॥
ओषध्यस्ताः समुत्पन्नास्ते जसाऽज्वलयन्पुनः ॥ 7.1.20.६० ॥
ताभिर्धिनोत्ययं लोकं प्रजाश्चैव चतुर्विधाः ॥
ओषध्यः फलपाकांताः कणाः सप्तदश स्मृताः ॥ ६१ ॥
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥ ६२ ॥
प्रियंगुः कोविदारश्च कोरदूषाः सतीनकाः ॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥ ॥ ६३ ॥
आढक्यश्चणकाश्चैव कणाः सप्तदश स्मृताः ॥
इत्येता ओषधीनां च ग्राम्याणां जातयः स्मृताः ॥ ६४ ॥
ओषध्यो यज्ञियाश्चैव ग्राम्या रण्याश्चतुर्द्दश ॥
व्रीहयश्च यवाश्चैव गोधूमास्त्वणवस्तिलाः ॥ ६५ ॥
प्रियंगुषष्ठा इत्येते सप्तमास्तु कुलत्थकाः ॥
श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ॥ ६६ ॥
ऊरुविन्दा मर्कटकास्तथा वेणुयवाश्च ये ॥
ग्राम्यारण्यास्तथा ह्येता ओषध्यस्तु चतुर्दश ॥ ६७ ॥
तृणगुल्मलता वीरुद्वल्लीगुच्छादि कोटिशः ॥
एतेषामधिपश्चन्द्रो धारयत्यखिलं जगत् ॥ ६८ ॥
ज्योत्स्नाभिर्भगवान्सोमो जगतो हितकाम्यया ॥
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ॥ ६९ ॥

बीजौषधीनां विप्राणां मंत्राणां च वरानने ॥

सोऽभिषिक्तो महातेजा राजा राज्ये निशाकरः ॥ 7.1.20.७० ॥

त्रीँल्लोकान्भावयामास स्वभासा भास्वतां वरः॥

तं सिनी च कुहूश्चैव द्युतिःपुष्टिः प्रभा वसुः॥७१॥

कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे॥

सप्तविंशतिरिंदोस्तु दाक्षायण्यो महाव्रताः॥७२॥

ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः॥

स तत्प्राप्य महद्राज्यं सोमः सोमवतां वरः ॥ ७३ ॥

समाजह्रे राजसूयं सहस्रशतदक्षिणम् ॥

हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ॥ ७४ ॥

सदस्यस्तस्य भगवान्हरिर्नारायणः प्रभुः ॥

सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥ ७५ ॥

दक्षिणामददात्सोमस्त्रीँल्लोकांस्तु वरानने ॥

तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च वै शुभे ॥ ॥ ७६ ॥

प्राप्यावभृथमव्यग्रः सर्वदेवर्षिपूजितः ॥

अतिराजति राजेन्द्रो दशधा भावयन्दिशः ॥ ७७ ॥

तेन तत्प्राप दुष्प्राप्यमैश्वर्य्यमकृता त्मभिः ॥

स एवं वर्त्तते चन्द्रश्चात्रेय इति विश्रुतः ॥ ७८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चन्द्रोत्पत्तिवर्णनंनाम विंशोऽध्यायः ॥ २० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२१

https://sa.wikisource.org/s/g61



॥ देव्युवाच ॥ ॥

श्रुतं सर्वमशेषेण चन्द्रस्योत्पत्ति कारणम् ॥

चिह्नं यथाऽभवत्तस्य सांप्रतं तत्प्रकीर्त्तय ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

ब्रह्मणस्तु पुरा देवि दक्षो नाम सुतोऽभवत् ॥

प्रजाः सृजेति उद्दिष्टः पूर्वं दक्षः स्वयंभुवा ॥ २ ॥

षष्टिं दक्षोऽसृजत्कन्या वैरिण्यां वै प्रजापतिः ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ ३ ॥

सप्त विशतिं सोमाय चतस्रोऽरिष्टनेमिने ॥

द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते ॥ ४ ॥

द्वे चैवांगिरसे तद्वत्तासां नामानि विस्तरात् ॥

शृणु त्वं देवि मातृणां प्रजाविस्तरमादितः ॥ ५ ॥

मरुत्वती वसुर्जामी लंबा भानुररुन्धती ॥

संकल्पा च मुहूर्ता च साध्या विश्वा च भामिनि ॥ ६ ॥

धर्म पत्न्यः समाख्याता दक्षः प्राचेतसो ददौ ॥

अदितिर्दितिर्दनुस्तद्वदरिष्टा सुरसैव च ॥ ७ ॥

सुरभिर्विनता चैव नाम्ना क्रोधवशा त्विला ॥

कद्रूस्त्विषा वसुस्तद्वत्तासां पुत्रान्वदामि वै ॥ ८ ॥

विश्वेदेवास्तु विश्वायाः साध्या साध्यानजीजनत् ॥

मरुत्वत्यां मरुत्वंतो वसोस्तु वसवस्तथा ॥ ९ ॥।

भानोस्तु भानवस्तेन मुहूर्त्तायां मुहूर्त्तकाः ॥

लंबाया घोषनामानो नागवीथिस्तु जामिजा ॥ 7.1.21.१० ॥

संकल्पायास्तु संकल्पो धर्मपुत्रा दश स्मृताः ॥

आपो ध्रुवश्च सोमश्च धरश्चैवानलोऽनिलः ॥११॥

प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥

आपस्य पुत्रा वैदंड्यः श्रमः शान्तो ध्वनिस्तथा ॥। ॥ १२ ॥

ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥

सोमस्य भगवाञ्छर्वो ध्रुवश्च गृहबोधनः ॥ १३ ॥

हुतहव्यवहश्चैव धरस्य द्रविण स्मृतः ॥

मनोजवोऽनिलस्यासीदविज्ञातगतिस्तथा ॥ १४ ॥

देवलो भगवान्योगी प्रत्यूषस्याभवन्सुताः ॥

बृहस्पतेस्तु भगिनी भुवना ब्रह्मवादिनी ॥ १५ ॥

प्रभासस्य तु सा भार्या वसूनामष्टमस्य च ॥

विश्वकर्मा सुतस्तस्य शिल्पकर्त्ता प्रजापतिः ॥ १६ ॥

तुषितानां तु साध्यानां नामान्येतानि वच्मि ते ॥

मनोऽनुमन्ता प्राणश्च नरोऽपानश्च वीर्यवान् ॥ १७ ॥

भक्तिर्भयोऽनघश्चैव हंसो नारायणस्तथा ॥

विभुश्चैव प्रभुश्चैव साध्या द्वादश कीर्तिताः ॥ १८ ॥

कश्यपस्य प्रवक्ष्यामि सन्ततिं वरवर्णिनि ॥

अंशो धाता भगस्त्वष्टा मित्रोऽथ वरुणो र्यमा ॥ १९ ॥

विवस्वान्सविता पूषा ह्यंशुमान्विष्णुरेव च ॥

एते सहस्रकिरणा आदित्या द्वादश स्मृताः ॥ 7.1.21.२० ॥

अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।।

हरश्च बहुरूपश्च त्र्यंबकश्च सुरेश्वरः ॥ २१ ॥

सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥

एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ २२ ॥

दितिः पुत्रद्वयं लेभे कश्यपाद्बलगर्वितम् ॥

हिरण्यकशिपुं श्रेष्ठं हिरण्याक्षं तथानुजम् ॥ २३ ॥

हिरण्यकशिपोर्दैत्यैः श्लोकोगीतः पुरातनैः ॥२४॥

राजा हिरण्यकशिपुर्यांयामाशां निरीक्षते ॥

तस्यां तस्यां दिशि सुरा नमश्चक्रुर्महर्षिभिः ॥

हिरण्यकशिपोः पुत्राश्चत्वारः सुमहाबलाः ॥ २५ ॥

प्रह्लादः पूर्वजस्तेषामनुह्लादस्ततः परः ॥

ह्लादश्चैव ह्रदश्चैव पुत्राश्चैते प्रकीर्तिताः ॥ २६ ॥

उभौ सुन्दोपसुन्दौ तु ह्रदपुत्रौ बभूवतुः ॥

ह्लादस्य पुत्रस्त्वेकोऽभून्मूक इत्यभिविश्रुतः ॥ २७ ॥

मारीचः सुंदपुत्रस्तु ताडकायामजायत ॥

दण्डके निहतः सोऽयं राघवेण वलीयसा ॥ २८ ॥

मूको विनिहतश्चापि कैराते सब्यसाचिना ॥

संह्लादस्य तु दैत्यस्य निवातकवचाः कुले ॥ २९ ॥

तिस्रः कोट्यस्तु विख्याता निहताः सव्यसाचिना॥

गवेष्ठी कालनेमिश्च जंभो वल्कल एव च ॥ 7.1.21.३० ॥

जृंभः षष्ठोनुजस्तेषां स्मृताः प्रह्लादसूनवः ॥

शुंभश्चैव निशुंभश्च गवेष्ठिनः सुतौ स्मृतौ ॥३१॥

धनुकश्चासिलोमा च शुंभपुत्रौ प्रकीर्तितौ ॥

विरोचनस्य पुत्रस्तु बलिरेकः प्रतापवान् ॥ ३२ ॥

हिरण्याक्षसुताः पंच विक्रांताः सुमहाबलाः ॥

अन्धकः शकुनिश्चैव कालनाभस्तथैव च ॥ ३३ ॥

महानाभश्च विक्रांतो भूतसंतापनस्तथा ॥

शतं शतसहस्राणि निहतास्तारकामये ॥ ३४ ॥

इति संक्षपतः प्रोक्ता कश्यपान्वयसंततिः ॥

यया व्याप्तं जगत्सर्वं सदेवासुरमानुषम् ॥ ३५ ॥

अथ याः कन्यका दत्ताः सप्तविंशतिरिंदवे ॥

तासां मध्ये महादेवि प्रिया तस्य च रोहिणी ॥ ३६ ॥

अथ नक्षत्रनाथस्य तासां मध्येतिवल्लभा ॥

बभूव रोहिणी देवी प्राणेभ्योऽपि गरीयसी ॥ ३७ ॥

सर्वास्ताः संपरित्यज्य रोहिण्या सहितो रहः ॥

रेमे कामपरीतात्मा वनेषूपवनेषु च ॥

रमणीयेषु देशेषु कन्दरेषु गुहासु च ॥ ३८ ॥

अथ ता दुःखसंपन्नाः पत्न्यः शेषा यशस्विनि ॥

जग्मुश्च शरणं दक्षं वचनं चेदमब्रुवन् ॥ ३९ ॥
सोमः सर्वा तिक्रम्य रोहिण्या सह मोदते ॥
संवत्सरसहस्रं तु क्रीडमानो यथासुखम् ॥ 7.1.21.४० ॥
अवशिष्टास्तु षड्विंशन्मलिना विगतश्रियः ॥
पाणिग्रहणमारभ्य रोहिण्या सह चंद्रमाः ॥ ४१ ॥
संवत्सरसहस्रं तु जानात्येकां स शर्वरीम् ॥
परित्यक्ता वयं तात शशिना दोषवर्जिताः ॥ ४२ ॥
स रेमे सह रोहिण्या अस्माकमसुखप्रदः ॥
अस्माकं दुःखदग्धानां श्रेयोऽतो मरणं भवेत् ॥ ४३ ॥
तासां तद्वचनं श्रुत्वा दुःखार्तानां प्रजापतिः ॥
ब्रह्मतेजः समायुक्तः पुत्रीस्नेहेन कर्षितः ॥
जगाम यत्र ऋक्षेशो वचनं चेदमब्रवीत् ॥ ४४ ॥
समं वर्त्तस्व कन्यासु मामकासु निशाकर ॥
अन्यथा दोषभागी त्वं भविष्यसि न संशयः ॥ ४५ ॥
तस्य तद्वचनं श्रुत्वा लज्जयावनतः स्थितः ॥
बाढमित्येव ऋक्षेंद्रो दक्षस्य पुरतोऽब्रवीत् ॥ ४६ ॥
अद्यप्रभृति विप्रर्षे समं वर्त्तयितास्म्यहम्॥
पुत्रीभिस्तव सत्यं वै शपेऽहं शपथेन ते ॥ ४७ ॥
एवं प्रतिज्ञासंयुक्ते निशानाथे तदांबिके ॥
सर्वा रूपेण संयुक्तास्तस्य कन्या निवेदिताः ॥ ४८ ॥
दक्षः स्वभवनं गत्वा निर्वृतिं परमां गतः ॥
चन्द्रोऽपि पूर्ववद्देवि रोहिण्यां निरतोऽभवत् ॥ ४९ ॥
संपरित्यज्य ताः सर्वाः कामोपहतमानसः ॥
अथ भूयस्तु ताः सर्वा दक्षं वचनमब्रुवन् ॥ 7.1.21.५० ॥
मलिनास्ताः कृशांग्यश्च दीनाः सर्वा विचेतसः ॥
ततो दृष्ट्वा तथारूपं दक्षो मोहमुपागतः ॥ ५१ ॥
लब्धसंज्ञः पुनः सोऽपि क्रोधोद्भूततनूरुहः ॥
उवाच सर्वाः स्वाः पुत्रीः किमित्थं मलिनांबराः ॥

किमिदं निष्प्रभाः सर्वाः कथयध्वं ममानघाः ॥ ५२ ॥

असुरान्सानुगांश्चैव ये चान्ये सुरसत्तमाः ॥

अद्य शापहतान्पुत्र्यः करिष्यामि न संशयः ॥ ५३ ॥

एवमुक्तास्तु दक्षेण सर्वास्ताः समुदैरयन् ॥ ५४ ॥

न चास्माकं निशानाथ ऋतुमात्रमपि प्रभो ॥

प्रयच्छति पुनस्तेन युष्मत्पार्श्वं समागताः ॥ ५५ ॥

अनादृत्य तु ते वाक्यं रोहिण्यां निरतो रहः ॥

रेमे कामपरीतात्मा अस्माकं शोकवर्द्धनः ॥ ५६ ॥

तासां तद्वचनं श्रुत्वा दक्षः कोपमुपागतः ॥

गत्वा चंद्रं महादेवि शशाप प्रमुखे स्थितम्॥ ५७ ॥

अनादृत्य हि मे वाक्यं यस्मात्त्वं रोहिणीरतः ॥

संत्यज्य पुत्रीश्चास्माकं शेषा दोषेण वर्जिताः ॥

तस्माद्यक्ष्मा शरीरं ते ग्रसिष्यति न संशयः॥ ॥ ५८ ॥

एतस्मिन्नेव काले तु यक्ष्मा पर्वतपुत्रिके ॥

दक्षेण तु समादिष्टस्तस्य कायं समाविशत् ॥ ५९ ॥

यक्ष्मणा ग्रस्तकायोऽसौ क्षयं याति दिनेदिने ॥ 7.1.21.६० ॥

एवं सोमस्तु दक्षेण कृतशापो गतप्रभः ॥

पपात वसुधां देवि निश्चेष्टो रोहिणीयुतः ॥ ६१ ॥

लब्ध्वसंज्ञो मुहूर्तेन रोहिणीवाक्य मब्रवीत् ।६२।

देवि कार्यं किमधुना त्वत्पित्रा शापितो ह्यहम्॥

क्षयकुष्ठेन संयुक्तः किं करोम्यधुना प्रिये॥६३॥

एवमुक्ता रोहिणी तु बाष्पव्याकुललोचना॥

दक्षशापहतं दृष्ट्वा सोमं वचनमब्रवीत्॥६४॥

येन शापस्तु ते दत्तस्तमेव शरणं व्रज॥

स ते शापाभिभूतस्य नूनं श्रेयो विधास्यति॥ ६५॥

लप्स्यसे तत्प्रसादात्त्वं प्रभां पूर्वोचितां शुभाम्॥ ६६॥

रोहिण्या वचनं श्रुत्वा गतो दक्षसमीपतः ॥

चंद्रः प्रोवाच विनयाद्बाष्प व्याकुललोचनः ॥ ६७ ॥

कुरुष्वानुग्रहं दक्ष प्रसन्नेनांतरात्मना ॥
कोपं त्यज महर्षे त्वं ममोपरि दयां कुरु ।१ ६८ ॥
त्वया क्रोधपरीतेन कारणे वाप्यकारणे ॥
अनुकंपां च मे कृत्वा कार्यं शापस्य मोक्षणम्॥ ६९ ॥
विदितं तु महाभाग शप्तोहं येन कर्मणा ॥
कुरुष्वानुग्रहं दक्ष मम दीनस्य याचतः ॥ 7.1.21.७० ॥
एवं विलपमानस्य सोमस्य तु महात्मनः ॥
अनुग्रहे मतिं कृत्वा इदं वचनमब्रवीत् ॥७१॥
॥ दक्ष उवाच ॥ ॥
मया शापहतः सोम त्रातुं शक्यो न दैवतैः॥
यद्यद्ब्रवीम्यहं सोम तत्तथेति न संशयः ॥ ७२ ॥
आयुः कर्म च वित्तं च विद्या निधनमेव च ॥
पूर्वसृष्टानि यान्येव संभवंति हि तानि वै ॥ ७३ ॥
असुराश्च सुराश्चैव ये चान्ये यक्षराक्षसाः ॥
सर्वेपि शक्ता न त्रातुं वर्जयित्वा महेश्वरम् ॥७४॥
एषां शापो मया दत्तोऽनुग्रहीष्य ति शंकरः॥
नान्यस्त्रातुं भवेच्छक्तो विना पशुपतिं भवम् ॥
तत्त्वं शीघ्रतरं गच्छ समाराधय शंकर ॥ ७५ ॥
न शक्तोऽन्यः पुनश्चंद्रः कर्तुं त्वां निर्मलं पुनः॥
वर्जयित्वा महादेवं शितिकंठमुमापतिम् ॥७६॥
दक्षस्य च वचः श्रुत्वा कृतांजलिपुटः स्थितः॥
प्रत्युवाच तदा सोमः प्रहष्टेनांतरात्मना॥७७॥
भगवन्यदि तुष्टोसि मम भक्तस्य सुव्रत ॥
अनुग्रहे कृता बुद्धिस्तदाचक्ष्व कुतः शिवः ॥ ७८ ॥
कस्मिन्स्थाने मया दक्ष द्रष्टव्योऽसौ महेश्वरः ॥
तत्स्थानानि चरिष्यामि यानि तानि वदस्व मे ॥ ७९ ॥
॥ दक्ष उवाच ॥ ॥
शृणु सोम प्रयत्नेन श्रुत्वा चैवावधारय ॥

वारुणीं दिशमाश्रित्य सागरानूपसन्निधौ ॥ 7.1.21.८० ॥

कृतस्मरस्यापरतो धन्वंतरशतत्रये ॥

लिंगं महाप्रभावं च स्वयंभूतं व्यवस्थितम् ॥ ८१ ॥

सूर्य्यबिंबसमप्रख्यं सर्प मेखलमंडितम्॥

कुक्कुटांडकमानं तद्भूमिमध्ये व्यवस्थितम् ॥ ८२ ॥

स्पर्शलिंगं हि तद्विद्धि तद्भक्त्या ज्ञास्यते भवान् ॥

तत्र संनिहितो देवः शंकरः परमेश्वरः ॥ ८३ ॥

गच्छ त्वं तपसोग्रेण आराधय सुरेश्वरम् ॥ ९४ ॥

प्रशस्य देवदेवेशमात्मानं निर्मलं कुरु ॥

यस्याशु वरदानेन प्राप्स्यसे रूपमुत्तमम् ॥ ८५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्यासंहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सोमेश्वरोत्पत्तिप्रसंगे दक्षेण स्वशापजन्ययक्ष्मरोगार्तस्य चंद्रस्य यक्ष्मकुष्ठरोगनिवृत्तये शिवाराधनोपदेशवर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२२

https://sa.wikisource.org/s/g62



ईश्वर उवाच ॥ ॥

दक्षेणैवमनुज्ञातः शोचन्कर्म स्वकं तदा ॥

दुःखशोकपरीतात्मा प्रभासं क्षेत्रमागतः ॥ १ ॥

स गत्वा दक्षिणं तीरं सागरस्य समीपतः ॥

ददर्श पर्वतं तत्र कृतस्मरमिति श्रुतम् ॥ २ ॥

यक्षविद्याधराकीर्णं किन्नरैरुपशोभितम् ॥

चंदनागुरुकर्पूरैरशोकैस्तिलकैः शुभैः ॥ ३ ॥

कल्हारैः शतपत्रैश्च पुष्पितैः फलितैः शुभैः ॥

आम्रजम्बूकपित्थैश्च दाडिमैः पनसैस्तथा ॥४॥

निंबुजम्बीरनागैश्च कदलीखंडमंडितैः ॥

क्रमुकैर्नागवल्ल्याद्यैः शालैस्तालैस्तमालकैः ॥ ५ ॥

बीजपूरकखर्जूरैर्द्राक्षामधुरपाटलैः ॥

बिल्वचंपकतिंद्वाद्यैः कदंबककुभैस्तथा ॥ ६ ॥

धवाशोकशिरीषाद्यैर्नानावृक्षैश्च शोभितम् ॥

कामं कामफलैर्वृक्षैः पुष्पितैः फलितैः शुभैः ॥ ७ ॥

हंसकारंडवाकीर्णं चक्रवाकोपशोभितम् ॥

कोकिलाभिः शुकैश्चैव नानापक्षिनिनादि तम् ॥ ८ ॥

जातिस्मराः पक्षिणश्च व्याजह्रुर्मानुषीं गिरम् ॥

गंधर्वकिंनरयुगैः सिद्धविद्याधरोरगैः [। ९ ॥

क्रीडद्भिर्विविधैर्दिव्यैः शोभितं पर्वतोत्तमम् ॥

देवगंधर्वनृत्यैश्च वेणुवीणानिनादितम् ॥ 7.1.22.१० ॥

वेदध्वनितघोषेण यज्ञहोमाग्निहोत्रजैः ॥

समावृतं सर्वमाज्यगंधिभिरुच्छ्रितम् ॥ ११ ॥

शोभितं चर्षिभिर्दिव्यैश्चातुर्विद्यैर्द्विजोत्तमैः ॥

अत्रिश्चैव वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः ॥ १२ ॥

भृगुश्चैव मरीचिश्च भरद्वाजोऽथ कश्यपः ॥

मनुर्यमोंऽगिरा विष्णुः शातातपपराशरौ ॥ १३ ॥

आपस्तंबोऽथ संवर्तः कात्यः कात्यायनो मुनिः ॥

गौतमः शंखलिखितौ तथा वाचस्पतिर्मुनिः ॥ १४ ॥

जामदग्न्यो याज्ञवल्क्य ऋष्यशृंगो विभांडकः ॥

गार्ग्यशौनकदाल्भ्याश्च व्यास उद्दालकः शुकः ॥ १५ ॥

नारदः पर्वतश्चैव दुर्वासा उग्रतापसः ॥

शाकल्यो गालवश्चैव जाबालिर्मुद्गलस्तथा ॥ १६ ॥

विश्वामित्रः कौशिकश्च जह्नुर्विश्वावसुस्तथा ॥

धौम्यश्चैव शतानन्दो वैशंपायनजिष्णवः ॥ १७ ॥

शाकटायनवार्द्धिक्यावग्निको बादरायणः ॥

वालखिल्या महात्मानो ये च भूमण्डले स्थिताः ॥ १८ ॥

ते सर्वे तत्र तिष्ठंति पर्वते तु कृतस्मरे ॥

तेजस्विनो ब्रह्मपुत्रा ऋषयो धार्मिकाः प्रिये ॥ १९ ॥

ज्वलंतस्तपसा सर्वे निर्द्धूमा इव पावकाः ॥

मासोपवासिनः केचित्केचित्पक्षोपवासिनः ॥ 7.1.22.२० ॥

त्रैरात्रिकाः सांतपना निराहारास्तथा परे ॥

केचित्पुष्प फलाहाराः शीर्णपर्णाशिनस्तथा ॥ २१ ॥

केचिद्गोमयभक्षाश्च जलाहारास्तथा परे ॥

साग्निहोत्राः सुविद्वांसो मोक्षमार्गार्थचिन्तकाः ॥ २२ ॥

इति हासपुराणादिश्रुतिस्मृतिविशारदाः ॥

एते चान्ये च बहवो मार्कंडेयपुरोगमाः ॥ २३ ॥

प्रभासं क्षेत्रमासाद्य संस्थिता कृतपर्वते ॥

एवं कृतस्मरस्तत्र सर्वदेवनिषेवितः ॥

मन्वंतरेस्मिन्यो देवि निर्दग्धो वडवाग्निना ॥ २४ ॥

तं दृष्ट्वा पर्वतं रम्यं दृष्ट्वा चैव महोदधिम् ॥

प्रदक्षिणं ततश्चक्रे सप्तकृत्वो निशाकरः ॥

गिरेः प्रदक्षिणां कृत्वा गतो यत्र महेश्वरः ॥ २५ ॥

समीपे तु समुद्रस्य स्पर्शलिंगस्वरूपवान् ॥

प्रसादयामास विभुं प्रसन्नेनांतरात्मना ॥ २६ ॥

मरणं वेति संध्याय शरणं वा महेश्वरम् ॥

वरं शापाभिघातार्थं मृत्युं वा शंकरान्मम ॥ २७ ॥

इति सोमो मतिं कृत्वा तपसाऽऽ राधयञ्छिवम् ॥

यावद्वर्षसहस्रं तु फलमूलाशनोऽभवत् ॥ २८ ॥

पूर्णे वर्षसहस्रे तु चतुर्थे वरवर्णिनि ॥

तुतोष भगवान्रुद्रो वाक्यं चेदमुवाच ह ॥ ॥२९॥

परितुष्टोऽस्मि ते चंद्र वरं वरय सुव्रत॥

किं ते कामं करोम्यद्य ब्रूहि यत्स्यात्सुदुर्ल्लभम्॥7.1.22.३०॥।

एवं प्रत्यक्षमापन्नं दृष्ट्वा देवं वृषध्वजम्॥

प्रणम्य तं यथाभक्त्या स्तुतिं चक्रे निशाकरः ॥ ३१ ॥

॥ चंद्र उवाच ॥ ॥

ॐ नमो देवदेवाय शिवाय परमात्मने ॥

अप्रमेयस्वरूपाय ब्यक्ताव्यक्तस्वरूपिणे ॥ ३२ ॥

त्वं पतिर्योगिनामीश त्वयि सर्वं प्रतिष्ठितम् ॥

त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः प्रजापतिः ॥ ३३ ॥

चतुर्विंशत्यधिकं च भुवनानां शतद्वयम् ॥

तस्योपरि परं ज्योतिर्जागर्ति तव केवलम् ॥३४ ॥

कल्पांत आदिवाराहमुक्तब्रह्मांडसंस्थितौ ॥

आधारस्तंभभूताय तेजोलिंगाय ते नमः ॥ ३५ ॥

नमोऽनामयनाम्ने ते नमस्ते कृत्तिवाससे ॥

नमो भैरवनाथाय नमः सोमेश्वराय ते ॥ ३६ ॥

इति संज्ञाभिरेताभिः स्तुत्याभिरमृतेश्वरः ॥

भूतैर्भव्यैर्भविष्यैश्च स्तूयसे सुरसत्तमैः ॥ ३७ ॥

आद्यो विरंचिनामाभूद्ब्रह्मा लोकपितामहः ॥

मृत्युञ्जयेति ते नाम तदाऽभूत्पार्वतीपते ॥ ३८ ॥

द्वितीयोऽभूद्यदा ब्रह्मा पद्मभूरिति विश्रुतः ॥

तदा कालाग्निरुद्रेति तव नाम प्रकीर्तितम् ॥ ३९ ॥

तृतीयोऽभूद्यदा ब्रह्मा स्वयंभूरिति विश्रुतः ॥

अमृतेशेति ते नाम कीर्तितं कीर्तिवर्द्धनम् ॥7.1.22.४० ॥

चतुर्थोऽभूद्यदा ब्रह्मा परमेष्ठीति विश्रुतः ॥

अनामयेति देवेश तव नाम स्मृतं तदा ॥ ४१ ॥

पंचमोऽभूद्यदा ब्रह्मा सुरज्येष्ठ इति श्रुतः ॥

कृत्तिवासेति ते नाम बभूव त्रिपुरांतक ॥४२॥

षष्ठश्चाभूद्यदा ब्रह्मा हेमगर्भ इति स्मृतः ॥

तदा भैरवनाथेति तव नाम प्रकीर्तितम् ॥ ४३ ॥

अधुना वर्त्तते योऽसौ शतानंद इति श्रुतः ॥

आदिसोमेन यश्चासौ वामनेत्रोद्भवेन ते ॥ ४४ ॥

प्रतिष्ठार्थं तु लिंगस्य आनीतश्चाष्टवार्षिकः ॥

बालरूपी तदा तेन सोमनाथेति कीर्तितम् ॥ ४५ ॥

तदाप्रभृति सोमानां लक्षाणां द्वितयं गतम् ॥१४॥

सहस्रद्वितयं चैव शतं चैव षडुत्तरम् ॥ ४६ ॥

सप्तमोऽहं महादेव आत्रेय इति विश्रुतः ॥

प्राचेतसेन दक्षेण शप्तस्त्वां शरणं गतः ॥

रक्ष मां देवदेवेश क्षयिणं पापरोगिणम्॥ ४७ ॥

इति संस्तुवतस्तस्य चंद्रस्य करुणाकरः ॥

तुतोष भगवान्रुद्रो वाक्यं चेदमुवाच ह ॥ ४८ ॥

परितुष्टोऽस्मि ते चंद्र वरं वरय सुव्रत ॥

कि ते कामं करोम्यद्य ब्रूहि यत्स्यात्सुदुर्ल्लभम् ॥ ४९ ॥

मम नामानि गुह्यानि मम प्रियतराणि च ॥

पठिष्यंति नरा ये तु दास्ये तेषां मनोगतम् ॥ 7.1.22.५० ॥

अतीता ये चंद्रमसो भविष्यंति च येऽधुना ॥

तेषां पूज्यमिदं लिंगं यावदन्योऽष्टवार्षिकः ॥ ५१ ॥

आः परं चतुर्वक्त्रो ब्रह्मा यो भविता यदा ॥

प्राणनाथेति देवस्य तदा नाम भविष्यति ॥ ५२ ॥

प्राणास्तु वायवः प्रोक्तास्तदाराधननाम तत् ॥

प्राणनाथेति संप्रोक्तं मेऽधुना तद्भविष्यति ॥ ५३ ॥

तस्मादग्नीशनामेति कालरुद्रेत्यनंतरम् ॥

तारकेति ततो नाम भविष्यत्येव कीर्तितम् ॥ ५४ ॥

मृत्युञ्जयेति देवस्य भविता तदनंतरम् ॥

त्र्यंबकेशस्त्विवतीशेति भुवनेशेत्यनन्तरम् ॥ ५५ ॥

भूतनाथेति घोरेति ब्रह्मेशेत्यथ नामकम् ॥

भविष्यं पृथिवीशेति आदिनाथेत्यनंतरम् ॥ ५६ ॥

कल्पेश्वरेति देवस्य चंद्रनाथेत्यनन्तरम् ॥

नाम देवस्य यद्भावि सांप्रतं ते प्रकाशितम् ॥ ५७ [।

इत्येवमादि नामानि स्वसंख्यातानि षोडश ॥

गतानि संभविष्यंति कालस्यानंतभावतः ॥ ५८ ॥

एकैकं वर्तते नाम ब्रह्मणः प्रलयावधि ।।

ततोन्यज्जायते नाम यथा नामानुरूपतः ॥ ५९ ॥

अथ किं बहुनोक्तेन रहस्यं ते प्रकाशितम् ॥

वत्स यत्कारणेनेह तपस्तप्तं त्वयाऽखिलम् ॥

तन्मे निःशेषतो ब्रूहि दास्ये तुष्टोऽस्मि ते वरम् ॥ 7.1.22.६० ॥

॥ चन्द्र उवाच ॥ ॥

अहं शप्तस्तु दक्षेण कस्मिंश्चित्कारणांतरे ॥

यक्ष्मणा च क्षयं नीतस्तस्मात्त्वं त्रातुमर्हसि ॥ ६१ ॥

॥ शंभुरुवाच ॥ ॥

अधुना भोः समं पश्य सर्वास्ता दक्षकन्यकाः ॥

क्षयस्ते भविता पक्षं पक्षं वृद्धिर्भविष्यति ॥ ६२ ॥

पूर्वोचितां प्रभां सोम प्राप्स्यसे मत्प्रसादतः ॥

प्राचेतसस्य दक्षस्य तपसा हतपाप्मनः ॥ ६३ ॥

तस्यान्यथा वचः कर्तुं शक्यं नान्यैः सुरैरपि ॥

ब्राह्मणाः कुपिता हन्युर्भस्मीकुर्युः स्वतेजसा ॥ ६४ ॥

देवान्कुर्युरदेवांश्च नाशयेयुरिदं जगत् ॥
ब्राह्मणाश्चैव देवाश्च तेज एकं द्विधा कृतम् ॥ ६५ ॥
प्रत्यक्षं ब्राह्मणा देवाः परोक्षं दिवि देवताः ॥
न विना ब्राह्मणा देवैर्न देवा ब्राह्मणैर्विना ॥ ६६ ॥
एकत्र मन्त्रा स्तिष्ठन्ति तेज एकत्र तिष्ठति ॥
ब्राह्मणा देवता लोके ब्राह्मणा दिवि देवताः ॥
त्रैलोक्ये ब्राह्मणाः श्रेष्ठा ब्राह्मणा एव कारणम् ॥ ६७ ॥
पितुर्नियुक्ताः पितरो भवंति क्रियासु दैवीषु भवंति देवाः ॥
द्विजोत्तमा हस्तनिषक्ततोयास्तेनैव देहेन भवंति देवाः ॥ ६८ ॥
षट्क र्मतत्त्वाभिरतेषु नित्यं विप्रेषु वेदार्थकुतूहलेषु ॥
न तेषु भक्त्या प्रविशंति घोरं महाभयं प्रेतभवं कदाचित् ॥ ६९ ॥
यद्ब्राह्मणाः स्तुत्यतमा वदन्ति तद्देवता कर्मभिराचरंति ॥
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ 7.1.22.७० [।
यथा रुद्रा यथा देवा मरुतो वसवोऽश्विनौ ॥
ब्रह्मा च सोमसूर्यौ च तथा लोके द्विजोत्तमाः ॥ ७१ ॥
देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः ॥
ते यज्ञा ब्राह्मणाधीनास्तस्माद्देवा द्विजोत्तमाः ॥ ॥ ७२ ॥
ब्राह्मणानर्चयेन्नित्यं ब्राह्मणांस्तर्पयेत्सदा ॥
ब्राह्मणास्तारका लोके ब्राह्मणात्स्वर्गमश्नुते ॥ ७३ ॥
अभेद्यमच्छेद्यमनादिमक्षयं विधिं पुराणं परिपालयन्ति ॥
महामतिस्तानभिपूज्य वै द्विजान्भवेदजेयो दिवि देवराडिव ॥ ७९ ॥
शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ॥
अपि वज्र सहस्रेण ब्राह्मणाशीः सुदुर्भिदा ॥ ७५ ॥
हुतेन शाम्यते पापं हुतमन्नेन शाम्यति ॥
अन्नं हिरण्यदानेन हिरण्यं ब्राह्मणाशिषा ॥ ७६ ॥
य इच्छेन्नरकं गंतुं सपुत्रपशुबांधव ॥
देवेष्वधिकृतं कुर्याद्ब्राह्मणेषु च गोषु च ॥ ७७ ॥
ब्राह्मणान्द्वेष्टि यो मोहाद्देवान्गाश्च मखान्यदि ॥

नैव तस्य परो लोको नाऽयं लोको दुरात्मनः ॥ ७८ ॥

अनिन्द्या ब्राह्मणा गावः कांचनं सलिलं स्त्रियः॥

पृथिवी तु षडेतानि यो निन्दति स पातकी ॥७९॥

अग्रं धर्मस्य राजानो मूलं धर्मस्य ब्राह्मणाः ॥

तस्मान्मूलं न हिंसीत मूले ह्यग्रं प्रतिष्ठितम् ॥ 7.1.22.८० ॥

फलं धर्मस्य राजानः पुष्पं धर्मस्य ब्राह्मणाः ॥

तस्मात्पुष्पं न हिंसीत पुष्पात्संजायते फलम् ॥ ८१ ॥

राजा वृक्षो ब्राह्मणास्तस्य मूलं पौराः पर्णं मन्त्रिणस्तस्य शाखाः ॥

तस्माद्राज्ञा ब्राह्मणा रक्षणीया मूले गुप्ते नास्ति वृक्षस्य नाशः ॥ ८२ ॥

आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मणः ॥

प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति ॥ ८३ ॥

ब्राह्मणानां च शापेन सर्वभक्षो हुताशनः ॥

समुद्रश्चाप्यपेयस्तु विफलश्च पुरंदरः ॥ ८४ ॥

त्वं चन्द्र राजयक्ष्मी च पृथिव्यामूषराणि च ॥

सूर्याचन्द्रमसोः पातः पुनरुद्धरणं तयोः ॥ ८५ ॥

वनस्पतीनां निर्यासो दानवानां पराजयः ॥

नागानां च वशीकारः क्षत्रस्योत्सादनं तथा ॥

देवोत्पत्ति विपर्यासो लोकानां च विपर्ययः ॥ ८६ ॥

एवमादीनि तेजांसि ब्राह्मणानां महात्मनाम् ॥

तस्माद्विप्रेषु नृपतिः प्रणमेन्नित्यमेव च ॥ ८७ ॥

परा मप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् ॥

ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ८८ ॥

प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥

एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ॥ ८९ ॥

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ॥

हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते ॥ 7.1.22.९० ॥

एवं यद्यप्य निष्टेषु वर्त्तते सर्वकर्मसु ॥

सर्वेषां ब्राह्मणः पूज्यो दैवतं परमं महत् ॥ ९१ ॥

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणानां प्रभावतः ॥
ब्राह्मं हि परमं पूज्यं क्षत्रं हि ब्रह्मसंभवम् ॥ ९२ ॥
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ॥
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ९३ ॥
यान्समाश्रित्य तिष्ठन्ति देवलोकाश्च सर्वदा ॥
ब्रह्मैव वचनं येषां को हिंस्यात्ताञ्जिजीविषुः ॥ ९४ ॥
म्रियमाणोऽप्याददीत न राजा ब्राह्मणात्करम् ॥
न च क्षुधा ऽस्य संसीदेद्ब्राह्मणो विषये वसन् ॥ ९५ ॥
यस्य राज्ञश्च विषये ब्राह्मणः सीदति क्षुधा ॥
तस्य तच्छतधा राष्ट्रमचिरादेव सीदति ॥ ९६ ॥
यद्राजा कुरुते पापं प्रमादाद्यच्च विभ्रमात् ॥
वसन्तो ब्राह्मणा राष्ट्रे श्रोत्रियाः शमयन्ति तत् ॥ ९७ ॥
पूर्वरात्रांतरात्रेषु द्विजैर्यस्य विधीयते ॥
स राजा सह राष्ट्रेण वर्धते ब्रह्मतेजसा ॥ ९८ ॥
ब्राह्मणान्पूजयेन्नित्यं प्रातरुत्थाय भूमिपः ॥
ब्राह्मणानां प्रसादेन दीव्यन्ति दिवि देवताः ॥ ९९ ॥
अथ किं बहुनोक्तेन ब्राह्मणा मामकी तनुः ॥
ये केचित्सागरांतायां पृथिव्यां कीर्तिता द्विजाः ॥
तद्रूपं देवदेवस्य शिवस्य परमात्मनः ॥ 7.1.22.१०० ॥
एतान्द्विषंति ये मूढा ब्राह्मणान्संशितव्रतान् ॥
ते मां द्विषंति वै नूनं पूजनात्पूजयन्ति माम्॥ १०१ ॥
न प्रद्वेषस्ततः कार्यो ब्राह्मणेषु विजानता ॥
प्रद्वेषेणाशु नश्यन्ति ब्रह्मशापहता नराः ॥ १०२ ॥
इत्येवं कथितश्चन्द्र ब्राह्मणानां गुणार्णवः ॥
कुरुष्वानन्तरं कार्य्यं यद्ब्रवीम्यहमेव ते ॥ १०३ ॥
शापस्यानुग्रहो दत्तो मया तव निशाकर ॥
न चान्यथा वचः कर्तुं शक्यं तेषां द्रिजन्मनाम् ॥ १०४ ॥
शापानुग्रहदैः सर्वै देवैरपि सवासवैः ।।

तस्माच्चन्द्र त्वया शोको नैव कार्यो विजानता ॥ १०८५ ॥

क्षयस्ते भविता पक्षं पक्षं वृद्धिर्भविष्यति ॥

अथान्यद्वचनं चन्द्र शृणु कार्यं यथा त्वया ॥ १०६ ॥

इदं यत्सागरोपांते तिष्ठते लिंगमुत्तमम् ॥

धरामध्यगतं तच्च देवानां दृष्टिगोचरम् ॥ १०७ ॥

कुक्कुटांडसमप्रख्यं सर्पमेखलमंडितम् ॥

ममाद्यं परमं तेजो न चान्यो वेद कश्चन ॥ १०८ ॥

इतः सागरमध्ये तु धनुषां च शतत्रये ॥

तिष्ठते तत्र लिंगं तु सुगुप्तं लक्षणान्वितम् ॥ १०९ ॥

आदिकल्पे महर्षीणां शापेन पतितं मम ॥

लिंगं सागरमध्ये तु तत्त्वं शीघ्रं समानय ॥ 7.1.22.११० ॥

स्पर्शाख्यं यत्र मे लिंगं तत्र स्थाने निवेशय ॥

निवेश्य तु प्रयत्नेन सहितो विश्वकर्मणा ॥ १११ ॥

ततो ब्रह्माणमाहूय समेतं तु मुनीश्वरैः ॥

प्रतिष्ठां कारय विभो इष्ट्वा तत्र महामखैः ॥ ११२ ॥

एवमुक्त्वा स भगवांस्तत्रैवांतरधीयत ॥

ततः प्रभां पुनर्लेभे रात्रिनाथो वरानने ॥ ११३ ॥

ततः प्रभृति तत्क्षेत्रं प्रभासमिति विश्रुतम् ॥

निष्प्रभस्य प्रभा दत्ता प्रभासं तेन चोच्यते ॥ ११४ ॥

दक्षस्य तु वृथा शापो न कृतस्तेन लांछनम् ॥

सोमः प्रभासते लोकान्वरं प्राप्य महेश्वरात् ॥

व्यक्तीभूतः स देवेशः सोमस्यैव महात्मनः ॥ ११५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सोमवरप्रदानवर्णनंनाम द्वाविंशोऽध्यायः॥ ॥ २२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२३

https://sa.wikisource.org/s/g5a
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततः शांतमना भूत्वा चंद्रमा विस्मयान्वितः ॥

शंभुभक्त्या परीतात्मा प्रभासक्षेत्रमास्थितः ॥ १ ॥

पूर्वोक्तं यत्तु देवेन स तथा कृतवान्विभुः ॥

गत्वा सागरमध्ये तु गृहीत्वा लिंगमुत्तमम् ॥ २ ॥

विश्वकर्म्माणमाहूय सहितं परिचारकैः ॥

आदिदेश स्वयं सोमस्त्वष्टारं देवशिल्पिनम्॥ ३ ॥

॥ चंद्र उवाच ॥ ॥

विश्वकर्मन्निदं लिंगं मम दत्तं तु शंभुना ॥

गृहाण त्वं महाबाहो युक्तस्थाने निवेशय ॥ ४ ॥

रक्षस्व तावद्गन्तास्मि स्वकीयं भवनं विभो ॥

यज्ञार्थमानयिष्यामि यज्ञोपकरणानि च ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्त्वा च तदा चंद्रश्चंद्र लोकं जगाम ह॥

गत्वा तत्र महादेवि चंद्रलोकंमहाप्रभम्॥६॥

कोटियोजनविस्तीर्णं सदामृतमयं शुभम्॥

तत्राहूय महादेवि प्रतीहारं सुमेधसम् ॥ ७ ॥

मंत्रिणं हेमगर्भांगं बृहस्पतिसमं धिया ॥

यज्ञोपस्करसंभारं सर्वमादाय सत्वराः ॥ ८ ॥

प्रभासक्षेत्रं गच्छंतु ममादेशपरायणाः ॥

साग्निभिर्ब्राह्मणैः सार्द्धं गच्छंतु क्षेत्रमुत्तमम् ॥ ९ ॥

शीघ्रं संपाद्यतां सर्वं यथा यज्ञः प्रवर्तते ॥

सर्वेषामेव विप्राणां चंद्रलोकनिवासिनाम् ॥ 7.1.23.१० ॥

पृथक्पृथग्विमानं तु देयं तेषां महाधनम् ॥

गवां च दशलक्षाणां सवत्सानां पयोमुचाम् ॥ ११ ॥

हेमभारैर्भूषितानां कामधेनूपमत्विषाम्॥

अश्वानां श्यामकर्णानां सपादं लक्षमेव च ॥ १२ ॥

दंतिनामयुतं चैव घंटाभरणशोभितम् ॥

सहस्राणि च चत्वारि रथानां वातरंहसाम् ॥ १३ ॥

लक्षं तु करभाणां च मणिमाणिक्यसंयुतम् ॥

सैन्यानां कोटिरेका तु चतुरंगबलान्विता ॥ १४ ॥

अग्निशौचानि वस्त्राणि ब्राह्मणार्थं तथैव च ॥

विभूषणानि दिव्यानि ऋत्विगर्थं शुभानि च ॥ १५ ॥

नानाभक्ष्याणि भोज्यानि पानानि विविधानि च ॥

लक्षं कर्मकराणां तु दासीनां लक्षमेव च ॥ ॥ १६ ॥

दारुवंशावधि प्रोक्तं यत्किंचित्स्वं मदाज्ञया ॥

अन्यद्यद्ब्राह्मणा ब्रूयुस्तत्सर्वं तत्र नीयताम् ॥ १७ ॥

देवानां दानवानां तु यक्षगंधर्वरक्ष साम् ॥

सप्तद्वीपक्षितीशानां सप्तपातालवासिनाम् ॥ १८ ॥

नानानृपसहस्राणां घोषणा क्रियतां मुहुः ॥

सर्वेषां घोषणा कार्या प्रभासागमनं प्रति ॥ १९ ॥

इत्युक्त्वा मंत्रिणं तत्र चंद्रमास्त्वरयाऽन्वितः ॥

ब्रह्मलोकं स गतवान्यज्ञार्थं ब्रह्मणोंतिकम् ॥ 7.1.23.२० ॥

सोऽपि चंद्रमसो मंत्री हेमगर्भो महाप्रभः ॥

सोमाज्ञां शिरसा कृत्वा यज्ञसंभारसंभृतः ॥२१॥

प्रभासं क्षेत्रमागत्य यज्ञार्थं यत्नवानभूत् ॥

तथैव चाह्वयांचक्रे भूर्भुवःस्वर्निवासिनः ॥ ॥ २२ ॥

श्रुत्वा तु घोषणां सर्वे शीघ्रं तत्र समाययुः॥

रवियोजनपर्यंतं क्षेत्रमालोक्य तत्र तत् ॥२३॥

ब्राह्मणांश्च समाहूय सोमाध्यक्षं उवाच तान् ॥

यज्ञांगं सर्वमानीतं मया सोमाज्ञया द्विजाः ॥

अनंतरं तु यत्कृत्यं भवद्भिस्तद्विधीयताम् ॥ २४ ॥

इत्युक्ता ब्राह्मणाः सर्वे तपोनिर्धूतकल्मषाः ॥
तत्रैव ददृशुः सर्वे त्वष्टारं देवशिल्पिनम् ॥ २५ ॥
तं दृष्ट्वा तु द्विजाः सर्वे लिंगं दृष्ट्वा समीपतः ॥
कथमेतदिति प्रोचुर्विश्वकर्मन्ब्रवीहि नः ॥
कस्मादत्र स्थितस्त्वं वै शिल्पिकोटिसमन्वितः ॥ २६ ॥
॥ विश्वकर्म्मोवाच ॥ ॥
अहं सोमनियुक्तस्तु युक्तोऽस्मि लिंगरक्षणे ॥
तदाज्ञापालने यत्नः क्रियतेऽतो मया द्विजाः ॥ २७ ॥
॥ ईश्वर उवाच ॥ ॥
एवं श्रुत्वा यदा विप्रा ज्ञात्वा सर्वं तु कारणम् ॥
चरिता यज्ञकार्यार्थं ततश्चक्रुरुप क्रमम् ॥ २८ ॥
तत्र योजनपर्यंतं देवानां यजनं शुभम् ॥
तद्देवयजनं कृत्वा पत्नीशालां च चक्रिरे ॥ २९ ॥
हविर्द्धानं सदश्चैव उत्तरा वेदिरेव च ॥
ब्रह्मणः सदनाग्नीध्रीत्येवं स्थानानि चक्रिरे ॥ 7.1.23.३० ॥
तत्र योजनपर्यंतं यज्ञयूपांश्च मंडपान् ॥
विश्वकर्मा चकाराशु कुंडानि विविधानि च ॥ ३१ ॥
सहस्रसंख्यया तत्र कुण्डानां मंडपावधि ॥
तत्र ते ब्राह्मणाः सर्वे प्रतिष्ठायज्ञकोविदाः ॥ ३२ ॥
नानाभरणरत्नैश्च ब्राह्मणाः समलंकृताः ॥
चक्रुः सर्वे यथन्यायं शास्त्रं दृष्ट्वा पुनःपुनः ॥ ३३ ॥
वृक्षांस्तथौषधीर्दिव्या समित्पुष्पकुशादिकान् ॥
होमद्रव्यादिकं सर्व माज्यं प्राज्यं नवं पयः ॥ ३४ ॥
तथान्यदपि यत्किंचिद्यज्ञोपकरणं स्मृतम् ॥
वर्द्धनीकलशाद्यं च सर्वं हेममयं शुभम् ॥ ३५ ॥
चक्रुः सर्वं यथान्यायं प्रतिष्ठामखमादृताः ॥
तत्र विप्रगणो हृष्टो भक्ष्यभोज्यादितर्पितः ॥ ३६ ॥
वेदध्वनितनिर्घोषैर्दिवं भूमिं च संस्पृशन् ॥

सुशुभे मंडपस्तत्र पताकाभिरलंकृतः ॥ ३७ ॥

दिव्यसिंहासनोपेतो मुक्तादामपरिष्कृतः ॥

दिव्यचन्दनमालाभिः कल्पपल्लवतोरणैः ॥ ३८ ॥

दिव्यगन्ध सुगन्धाद्यैः स्वर्गस्थानमिवाभवत् ॥

चतुर्दशविधस्तत्र भूतग्रामः समागतः ॥ ३९ ॥

स्थावरः सर्पजातिश्च पक्षिजातिस्तथैव च ॥

मृगसंज्ञश्चतुर्थश्च पश्वाख्यः पञ्चमः स्मृतः ॥ 7.1.23.४० ॥

षष्ठश्च मानुषः प्रोक्तः पैशाचः सप्तमः स्मृतः ॥

अष्टमो राक्षसः प्रोक्तो नवमो यज्ञ एव च ॥ ४१ ॥

गांधर्वशाक्रसौम्याश्च प्राजापत्यस्तथैव च ॥

ब्राह्मश्चेति समाख्यातश्चतुर्दशविधो गणः ॥ ४२ ॥

विश्वेदेवास्तथा साध्या मरुतो वसवस्तथा ॥

लोकपालास्तथाष्टौ च नक्षत्राणि ग्रहैः सह ॥ ४३ ॥

ब्रह्माण्डे देवता याश्च ताः सर्वास्तत्र चागताः ॥

हृष्टाः प्रभासके क्षेत्रे प्रारब्धे यज्ञकर्म्मणि ॥ ४४ ॥

घृतक्षीरवहा नद्यो दधिपायसकर्दमाः॥

पक्वान्नानां फलानां च राशयः पर्वतोपमाः ॥ ४५ ॥

दृश्यन्ते विविधाकारास्तस्मिन्यज्ञमहोत्सवे ॥

जगु(?)स्तत्रैव गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ४६ ॥

भक्ष्यभोज्यैश्च विविधैः कामपानादिभिस्तथा ॥

तृप्ता देवाश्च मुनयो भूतग्रामाश्चतुर्दश ॥ ४७ ॥

एवं संभारसहितं यज्ञांगं सर्वमेव हि ॥

प्रगुणीकृत्य सचिवो मुक्त्वा तत्रैव रक्षकान् ॥

सोमस्याह्वाननार्थं च ब्रह्मलोकं जगाम ह ॥ ४८ ॥

॥ ईश्वर उवाच ॥ ॥

स दृष्ट्वा ब्रह्मणः पार्श्वे स्थितं सोममहाप्रभम् ॥

प्रणम्य दण्डवद्भूमौ सोमं ब्रह्माणमेव च ॥ ४९ ॥

कृतांजलिपुटो भूत्वा उवाच नतकंधरः ॥

॥ हेमगर्भ उवाच ॥ ॥

भगवन्भवदादेशाद्यज्ञांगं सर्वमेव हि ॥ 7.1.23.५० ॥

तत्र प्राभासिके क्षेत्रे मया ते प्रगुणीकृतम् ॥

तत्र ब्रह्मर्षयः सर्वे तथा राजर्षयोऽपरे ॥ ५१ ॥

त्वन्मार्गप्रेक्षकाः सर्वे सन्तिष्ठन्ते समाकुलाः ॥

अनन्तरं तु यत्कृत्यं तद्भवान्कर्तुमर्हति ॥ ५२ ॥

॥ ॥ ईश्वर उवाच ॥ ॥

इत्युक्तस्तु तदा चन्द्रः समुद्रस्य सुतेन वै ॥

प्रहस्योवाच ब्रह्माणं चन्द्रमा लोकसाक्षिणम् ॥ ५३ ॥

भगवन्सर्वदेवेश ममानुग्रहकाम्यया ॥

प्रतिष्ठायज्ञकामस्य ममातिथ्यं कुरु प्रभो ॥ ५४ ॥

अद्य मे सफलं जन्म सफलं च तपः प्रभो ॥

देवत्वमद्य मे ब्रह्मंस्त्वत्प्रसादाद्भविष्यति ॥ ५५ ॥

मया च तपसोग्रेण प्राप्तं लिंगमुमापतेः ॥

तत्प्रतिष्ठाविधिं सर्वं तद्भवान्कर्त्तुमर्हति ॥ ५६ ॥

॥ ब्रह्मोवाच ॥ ॥

अवश्यं तव कर्त्तास्मि प्रतिष्ठां शंकरात्मिकाम् ॥

त्वदाराधनलिंगे तु सोमेशेऽतिविशेषतः ॥ ५७ ॥

ये केचिद्भवितारो वा अतीता ये निशाकराः ॥

तेषां सोमान्वयानां च सर्वेषामाद्यदैवतम् ॥ ५८ ॥

योऽसौ सोमेश्वरो देव आदौ भैरवनामभृत् ॥

मन्वन्तरान्तरेऽतीते प्रतिष्ठेऽहं पुनःपुनः ॥५९॥

यदा प्राभासिकं क्षेत्रे गतोऽहं चाष्टवार्षिकः ॥

आहूतः पूर्वमिन्द्रेण भैरवस्य प्रतिष्ठिते ॥7.1.23.६०॥।

तत्प्रभृत्येव मे नाम बालरूपी निगद्यते ॥

अन्येषु सर्वतीर्थेषु वृद्धरूपी वसाम्यहम् ॥६१॥

प्रभासे तु पुनश्चंद्र बाल्याप्रभृति संवसे ॥

ब्रह्माण्डे यानि तीर्थानि ब्राह्मणास्तेषु ये स्मृताः ॥६२॥

तेषामाद्यो निशानाथ प्रभासेऽहं व्यवस्थितः ॥

कल्पेकल्पे निशानाथ मम नामांतरं भवेत्॥६३॥

स्वयंभूः प्रथमे नाम द्वितीये पद्मभूः स्मृतः॥

तृतीये विश्वकर्तेति बालरूपी तुरीयके ॥६४॥

एषामेव परीवर्तो नाम्नां भावि पुनःपुनः ॥

परार्द्धद्वयपर्यंतं प्रभासे संस्थितस्य मे ॥६५॥

आदिसोमेन तत्रैव शंभोर्नेत्रोद्भवेन वै ॥

प्रभासे तु तपस्तप्त्वा प्रत्यक्षीकृतईश्वरः ॥६६॥

ततो ददौ वरं तुष्टः पूर्वचन्द्रस्य शूलधृक् ॥

यस्मादाराधितोऽहं ते सोम भक्त्या चिरन्तनम् ॥६७॥

तस्मात्सोमेशनामैवमस्मिँल्लिंगे भविष्यति ॥

यावद्ब्रह्मा शतानन्दः प्रकृतौ न प्रलीयते ॥ ६८ ॥

ये केचिद्भवितारो वै रात्रिनाथा निशाकराः ॥

ते मदाराधनं चात्र करिष्यंति पुनःपुनः ॥६९॥

इत्युक्त्वा भगवाञ्छंभुस्तत्रैवांतरधीयत ॥

तस्मिन्काले मया सोम आद्यं लिंगं प्रतिष्ठितम् ॥7.1.23.७॥।

तदाप्रभृति सोमानां लक्षाणां द्वितयं गतम् ॥

सहस्रद्वितयं चैव शतं चैकं षड्उत्तरम्॥७१॥

सप्तमस्त्वं महावाहो वर्त्तसे सोम सांप्रतम् ॥

एतावन्त्येव लिंगानि प्रतिष्ठां प्रापितानि मे ॥ ७२ ॥

एष एवाधुना सोऽहं तदाराधनजं फलम् ॥

प्रतिष्ठातास्मि भद्रं ते सोम कृत्य ममैव तत्॥ ७३ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्त्वा भगवान्ब्रह्मा वेदविद्यासमन्वितः ॥

सर्वदेवमयो देवैः सहितस्तीर्थसंयुतः ॥ ७४ ॥

सनत्कुमारप्रमुखै र्योगीन्द्रैर्ऋषिभिः सह ॥

बृहस्पतिं समाहूय पुरस्कृत्य पुरोधसम् ॥ ७५ ॥

हंसयानं समारुह्य कोटिब्रह्मर्षिभिः सह ॥

आगतः सोमराजेन तदा ब्रह्मा जगत्पतिः ॥ ७६ ॥
प्राभासिके महातीर्थे यत्र दारुवनं स्मृतम् ॥
ऋषितोया नदी यत्र महापातकनाशिनी ॥ ७७ ॥
अस्मिंस्तीर्थे प्रभासे तु ब्रह्मभागः स उच्यते ॥
त्रिदैवतमिदं क्षेत्रं मया ते कथितं प्रिये ॥ ७८ ॥
तत्रागत्व चतुर्वक्त्रो ब्राह्मभागेऽतिनिर्मले ॥
मुनीनाकारयामास उन्नत स्थानवासिनः ॥ ७९ ॥
आयांतं वेधसं दृष्ट्वा देवर्षिगुरुसंयुतम् ॥
ते सर्वे पूजयामासुः संस्तवैर्वेदसंमितैः ॥ 7.1.23.८० ॥
अथोवाच द्विजान्सर्वान्ब्रह्मा लोकपितामहः ॥
चिरमाराध्य सोमेन सोमेशं पापनाशनम् ॥ ८१ ॥
तस्मिन्प्रसन्ने सोमेन लब्धं लिङ्गमनुत्तमम् ॥
प्रतिष्ठार्थं तु देवस्य आयाता द्विजसत्तमाः ॥ ८२ ॥
यथा मया सदा कार्या प्रतिष्ठा शंकरात्मिका ॥
भवद्भिः परिकार्या सा मम भागसमाश्रयैः ॥ ८३ ॥
यतः कोपेन भवतां लिंगं प्रपतितं भुवि ॥
प्रतिष्ठा तस्य कर्तव्या युष्माभिर्वै न संशयः ॥ ८४ ॥
॥ ईश्वर उवाच ॥ ॥
गृहीत्वाऽथ मुनीन्सर्वान्ब्रह्मा लोकपिता महः ॥
आनीतः सोमराजेन तदा ब्रह्मा जगत्पतिः ॥ ८५ ॥
प्राभासिके महातीर्थे सावित्र्या सहितः प्रभुः ॥
कारयामास कुण्डानां मण्डपानां शतंशतम् ॥ ८६ ॥
एकैके मण्डपे तत्र चक्रे सप्तदशर्त्विजः॥
गुरुणा प्रेरितो ब्रह्मा तत्र देवपुरोधसा ॥ ८७ ॥
पार्श्वे स्थितस्तदा ब्रह्मा विधानैर्वेद भाषितैः ॥
दीक्षयामास सोमं तु रोहिण्या सहितं विभुम् ॥ ८८ ॥
पत्नीं च रोहिणीं कृत्वा सर्वलक्षणसंयुताम् ॥
मृगचर्मधरां देवीं क्षौमवस्त्रावगुंठिता म् ॥८९ ॥

पत्नीशालां समानीता ऋत्विग्भिर्वेदपारगैः ॥
चंद्रमा दीक्षया युक्त ऋषिगंधर्वसंस्तुतः ॥ 7.1.23.९० ॥
औदुंबरेण दंडेन संवृतो मृगचर्मणा ॥
अतीव तेजसा युक्तः शुशुभे सदसि स्थितः ॥ ९१ ॥
ततो ब्रह्मा महादेवि सर्वलोकपितामहः ॥
ऋत्विजां वरणं चक्रे वेदोक्तविधिना तदा ॥ ९२ ॥
गुरुर्होता वृतस्तत्र वसिष्ठोऽध्वर्युरेव च ॥
तत्रोद्गाता मरीचिस्तु ब्रह्मत्वे नारदः कृतः ॥ ९३ ॥
सनत्कुमारसंयुक्ताः सदस्यास्तत्र वै कृताः ॥
वस्त्रैराभरणैर्युक्ता मुकुटैरंगुलीयकैः ॥ ९४ ॥
भूषिता भूषणौघेन तस्मिन्यज्ञे तदर्त्विजः ॥
चतुर्षु तज्ज्ञाश्चत्वार एवं ते षोडशर्त्विजः ॥ ९५ ॥
प्रस्तोता कश्यपस्तत्र प्रतिहर्ता तु गालवः ॥
सुब्रह्मण्यस्तथा गर्गः सदस्यः पुलहः कृतः ॥ ९६ ॥
होता शुक्रः समाख्यातो नेष्टा क्रथ उदाहृतः ॥
मैत्रावरुणो दुर्वासा ब्राह्मणाच्छंसी कौशिकः ॥ ९७ ॥
अच्छावाकश्च शाकल्यो ग्रावस्थः क्रतुरेव च ॥
प्रस्थाता प्रतिपूर्वो यः शालंकायन एव च ॥ ॥ ९८ ॥
अग्नीध्रश्च मनुस्तत्र उन्नेता त्वंगिराः कृतः ॥
एवमाद्यान्मण्डपेषु कृत्वा तानृत्विजः प्रभुः ॥ ९९ ॥
अन्येषु मण्डपेष्वेव प्रत्येकमृत्विजः कृताः ॥
मण्डपानां शतेष्वेव कृत्वा कुण्डान्यकल्पयत् ॥ 7.1.23.१०० ॥
एकैको मण्डपस्तत्र विंशहस्तप्रमाणतः ॥
अस्त्रेणाशोध्य भूमिं तु पंचगव्येन प्रोक्ष्य च ॥ १०१ ॥
चर्मणा चावगुंठ्यैव आलिख्यास्त्रेण पार्वति ॥
उल्लिख्य प्रोक्षणं कृत्वा खातं कृत्वा विधानतः ॥ १०२ ॥
अष्टौ कुंडानि संकल्प्य तथैकमण्डपे प्रिये ॥
लेपनं मण्डपे कृत्वा वज्राकरणमेव च ॥ १०३॥

चतुरस्रकार्मुकं च वर्तुलं कमलाकृति ॥

पूर्वां दिशं समा रभ्य कृत्वा तानि प्रयत्नतः ॥ १०४ ॥

चतुःकोणसमायुक्तं पूर्वे कुण्डं निवेश्य तु ॥

भगाकृति तथाऽऽग्नेय्यां दक्षिणे धनुराकृति ॥ ॥ १०५ ॥

नैर्ऋत्ये तु त्रिकोणं वै वर्तुलं पश्चिमेन तु ॥

षट्कोणं चैव वायव्ये पद्माकारं तथोत्तरे ॥ १०६ ॥

ऐशान्यामष्टकोणं तु मध्ये चैकं विधा नतः ॥

प्रत्येकं मण्डपं शुभ्रं स्तम्भैः षोडशभिर्युतम् ॥ १०७ ॥

ध्वजैः सतोरणैर्युक्तं चक्रे ब्रह्मा विधानतः ॥

न्यग्रोधं पूर्वतो न्यस्य दक्षे चोदुंबरं तथा ॥ १०८ ॥

अश्वत्थं पश्चिमे चैव पलाशं चोत्तरे क्रमात् ॥

बाहुदंडप्रमाणेन ध्वजांस्तत्र निवेश्य वै ॥ १०९ ॥

ऐन्द्र्यादौ पीतवर्णादि पताका परिकल्पिताः ॥

ततो ब्रह्मा ह्यग्निकुंडे चाग्निस्थापनमारभत् ॥ 7.1.23.११० ॥

स्वस्थाने ब्राह्मणांश्चैव जाप्ये चैव न्ययोजयत् ॥

श्रीसूक्तं पावमानं च सदा चैव च वाजिनम् ॥ १११ ॥

वृषाकपिं तथैन्द्रं च बह्वृचः पूर्वतोऽजपन् ॥

रुद्रान्पुरुषसूक्तं च क्रोकाध्यायं(?) च वैक्रियम् ॥११२॥

ब्राह्मणं पैत्र्यमैंद्रं च जपेरन्यजुषो यमे(?) ॥

देवव्रतं वामदेव्यं ज्येष्ठं साम रथंतरम् ॥ ११३ ॥

भेरुंडानि च सामानि च्छंदोगः पश्चिमेऽजपत् ॥

अथर्वाथर्वशिरसं स्कम्भस्तंभमथर्वणम् ॥ ११४ ॥

नीलरुद्रमथर्वाणमथर्वा चोत्तरेऽजपत् ॥

गर्भाधानादिकं सर्वं ततोऽग्नेरकरोद्विभुः ॥ ११५ ॥

पूर्णाहुतिं ततो दत्त्वा स्नानकर्म तथाऽरभत् ॥

पंचपल्लवसंयुक्तं मृत्तिकाभिः समन्वितम् ॥ ११६ ॥

कषायैः पंचगव्यैश्च पंचामृतफलैस्तथा ॥

तीर्थोदकैः समेतं तु मंत्रैः स्नानमथारभत् ॥ ११७ ॥

नेत्राण्युत्पाद्य देवस्य कृत्वा च तिलकक्रियाम् ॥

पृथिव्यां यानि तीर्थानि पाताले च विशेषतः ॥ ११८ ॥

स्वर्ग लोके च यान्येव तत्र तान्याययुस्तदा ॥

एतस्मिन्ननन्तरे ब्रह्मा देवानां पश्यतां तदा ॥ ११९ ॥

भूमिं भित्त्वा विवेशाथ तत्र लिंगमपश्यत ॥

स्पर्शाख्यं तं तु संछाद्य मधुना दर्भमूलकैः ॥ 7.1.23.१२० ॥

तत्र ब्रह्मशिलां न्यस्य तस्या ऊर्ध्वं महाप्रभम् ॥

लिंगं प्रतिष्ठयामास कृत्वा निश्चलमा त्मवान् ॥ १२१ ॥

स्थित्वा च परमे तत्त्वे मंत्रन्यासमथाकरोत् ॥

एवं लिंगं प्रतिष्ठाप्य तत्र ब्रह्मा जगद्गुरुः ॥

पूजयामास विधिना वेदोक्तैर्मंत्र विस्तरैः ॥ १२२ ॥

मन्त्रन्यासे कृते तत्र ब्रह्मणा लोककर्तृणा ॥

तत्र विप्रगणो हृष्टो जयशब्दादिमंगलैः ॥

निर्धूमश्चाभवद्वह्निः सूर्यकोटिसमप्रभः ॥ १२३ ॥

देवदुन्दुभयो नेदुः प्रसन्नाश्च दिगीश्वराः ॥

पुष्पवृष्टिः पपातोच्चैस्तस्मिन्यज्ञमहोत्सवे ॥ १२४ ॥

प्रतिष्ठाप्य ततो लिंगं श्रीसोमेशं पितामहः ॥

दापयामास विप्रेभ्यो भूरिशो यज्ञदक्षिणाम् ॥ १२५ ॥

सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥

दक्षिणामददात्सोमस्त्रीँल्लोकान्ब्रह्मणे पुरा॥१२६॥

तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यस्तथैव च ॥

ददौ हिरण्यं रत्नानि कोटिशो भूरिदक्षिणाः ॥ १२७ ॥

सोभिषिक्तो महातेजाः सर्वैर्ब्रह्मर्षिभिस्ततः ॥

त्रीँल्लोकान्भावयामास स्वभासा भासतां वरः ॥ १२८ ॥

तं सिनी च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः॥

कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ॥ १२९ ॥

प्राप्यावभृथमव्यग्रः कृत्वा माहेश्वरं मखम् ॥

कृतार्थः परिपूर्णश्च संबभूव निशापतिः ॥ 7.1.23.१३० ॥

ततस्तस्मै ददौ राज्यं प्राज्यं ब्रह्मा पितामहः ॥

बीजौषधीनां विप्राणामवन्नानां च वरानने ॥ १३१ ॥

तस्मिन्यज्ञे समाजग्मुर्ये केचित्पृथिवीश्वराः ॥

तेषां राज्यं धनं भोगान्ददौ स्वर्गं तथाऽक्षयम् ॥ १३२ ॥

ब्राह्मणान्भोजयामास स्वयमेवौषधीपतिः ॥

ददौ सर्वं तदा तेषां प्रभासक्षेत्रवासिनाम् ॥। ॥। १३३ ॥

हिरण्यादीन्यदाच्चैव महादानानि षोडश ॥

यो यदर्थयते तत्र सामान्यः प्राकृतो जनः॥

निजकर्मानुसारेण स लेभे च तदेव हि ॥१३४॥

एवं समर्थिते यज्ञे सर्वे देवाः सवासवाः ॥

स्थापयित्वा तु लिंगानि जग्मुः सर्वे यथागतम् ॥ १३६ ॥

चन्द्रमास्तु पुनर्देवि ब्रह्मणा सहितो विभुः ॥

लिंगमाराधयामास प्रभासे पापनाशने ॥ १३६ ॥

त्रिकालं पूजयामास धूपमाल्यानुलेपनैः ॥

तं प्रणम्य च देवेशि स्तौति नित्यं निशापतिः ॥ ॥ १३७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सोमेश्वरप्रतिष्ठामाहात्म्यवर्णनं

नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२४



॥ देव्युवाच ॥ ॥

कस्मिन्काले जगन्नाथ तत्र लिंगं प्रतिष्ठितम् ॥

कथमाराधनं चक्रे कृतार्थो रोहिणीपतिः ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

त्रेतायुगे च दशमे मनोर्वैवस्वतस्य हि ॥

संजातो रोहिणीनाथो युक्तो दुर्वाससा प्रिये ॥ २ ॥

तस्मिन्काले तदा तत्र गते वर्षसहस्रके ॥

ततः कृत्वा तपश्चायं प्रत्यक्षीकृतशंकरः ॥ ३ ॥

लिंगं प्रतिष्ठयामास ब्रह्मणा लोककर्तृणा ॥

पुनर्वर्षसहस्रं तु पूजयामास शंकरम्॥ ४ ॥

ततः संपूज्य विधिना निजकार्यार्थसिद्धये ॥

स्तुतिं चक्रे निशानाथः प्रत्यक्षीकृतशंकरः ॥ ५ ॥

॥ चंद्र उवाच ॥

नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः ॥

नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः ॥ ६ ॥

यं पठंति सदा सांख्याश्चितयंति च योगिनः ॥

परं प्रधानं पुरुषं तस्मै ज्ञेयात्मने नमः ॥ ७ ॥

उत्पत्तौ च विनाशे च कारणं यं विदुर्बुधाः ॥

देवासुरमनुष्याणां तस्मै ज्ञानात्मने नमः ॥ ८ ॥

यमव्ययमनाद्यंतं यं नित्यं शाश्वतं ध्रुवम् ॥

निष्कलं परमं ब्रह्म तस्मै योगात्मने नमः ॥ ९ ॥

यः पवित्रं पवित्राणामादिदेवो महेश्वरः ॥

पुनाति दर्शनादेव तस्मै तीर्थात्मने नमः ॥ 7.1.24.१० ॥

यतः प्रवर्त्तते सर्वं यस्मिन्सर्वं विलीयते ॥

पालयेद्यो जगत्सर्वं तस्मै सर्वात्मने नमः ॥ ११ ॥

अग्निष्टोमादिभिर्यज्ञैर्यं यजंति द्विजातयः ॥

संपूर्णदक्षिणैरेव तस्मै यज्ञात्मने नमः ॥ १२ ॥

॥ ईश्वर उवाच ॥ ॥

एवं स संस्तुते यावद्दिवारात्रौ निशाकरः ॥

अब्रवीद्भगवान्प्रीतः प्रहसन्निव शंकरः ॥ १३ ॥

॥ शंकर उवाच ॥ ॥

परितुष्टोऽस्मि ते वत्स स्तोत्रेणानेन शीतगो ॥

वरं वरय भद्रं ते भूयो यत्ते मनोगतम् ॥ १४ ॥

॥ चंद्र उवाच ॥ ॥

यदि देयो वरोऽस्माकं यदि तुष्टोऽसि मे प्रभो ॥

सांनिध्यं कुरु देवेश लिंगेऽस्मिन्सर्वदा विभो ॥१५॥

ये त्वां पश्यंति चात्रस्थं भक्त्या परमया युताः ॥

तेषां तु परमा सिद्धिस्त्वत्प्रसादात्सुरेश्वर ॥ ॥ १६ ॥

॥ शंभुरुवाच ॥ ॥

अग्रे तु मम सांनिध्यमस्मिँल्लिंगे महाप्रभो ॥

विशेषतोऽधुना चंद्र तव भक्त्या निरंतरम् ॥ १७ ॥

स्थातव्यमद्यप्रभृति क्षेत्रेऽस्मिन्नुमया सह ॥

यस्मात्त्वया प्रभा लब्धा क्षेत्रेऽस्मिन्मत्प्रसादतः ॥

तस्मात्प्रभासमित्येवं नामास्य प्रभविष्यति ॥ १८ ॥

यस्मात्प्रतिष्ठितं लिंगं त्वया सोम शुभं मम ॥

सोमनाथेति मे नाम तस्मात्ख्यातिं गमिष्यति ॥ १९ ॥

यन्ममाग्रेतनं नामख्यातं ब्रह्मावसानिकम्॥

सोमनाथेति च पुनस्तदेव प्रचरिष्यति॥

द्रक्ष्यंति हि नरा ये मामत्रस्थं भक्तितत्पराः ॥ 7.1.24.२० ॥

शृणु तेषां फलं वत्स भविष्यति निशाकर ॥

न तेषां जायते व्याधिर्न दारिद्र्यं न दुर्गतिः ॥

न चेष्टेन वियोगश्च मम चंद्र प्रभावतः ॥ २१ ॥

यात्रां कुर्वंति ये भक्त्या मम दर्शनकांक्षिणः ॥

पदे पदेश्वमेधस्य तेषां फलमुदाहृतम्॥ २२ ॥

किं कृतैर्बहुभिर्यज्ञैरुपवासैर्निशाकर ॥

सकृत्पश्यंति मां येऽत्र ते सर्वे लेभिरे फलम् ॥। २३ ॥

एकमासोपवासं तु कुरुते भक्तितत्परः ॥

यावद्वर्षसहस्रं तु एकः पश्यंति मामिह ॥ २४ ॥

द्वाभ्यामपि फलं तुल्यं नास्ति काचिद्विचारणा ॥ २५ ॥

एको भवेद्ब्रह्मचारी यावज्जीवं निशाकर ॥

सकृत्पश्यति मामत्र समं ताभ्यां फलं स्मृतम् ॥ २६ ॥

एको दानानि सर्वाणि प्रयच्छति द्विजातये ॥

एकः पश्यति मामत्र समं ताभ्यां फलं स्मृतम् ॥ २७ ॥

एको व्रतानि सर्वाणि कुरुते मृगलांछन ॥

अन्यः पश्यति मामत्र समं ताभ्यां फलं स्मृतम्॥ २८॥

एकस्तीर्थानि कुरुते जपजाप्यानि भूरिशः ॥

अन्यः पश्यति मामत्र फलं ताभ्यां समं स्मृतम् ॥ २९ ॥

एको ज्ञानादियोगेन मुमुक्षुर्जायते ध्रुवम्॥

अन्यः पश्यति मामत्र फलं ताभ्यां समं स्मृतम्॥7.1.24.३॥।

एकस्तु भृगुपातेन याति मृत्युं निशाकर॥

अन्यः पश्यति मामत्र समं ताभ्यां फलं स्मृतम् ॥ ३१ ॥

एकः स्नाति सदा माघं प्रयागे नरसत्तमः ॥

अन्यः पश्यति मामत्र फलं ताभ्यां समं स्मृतम् ३२ ॥

एकः पिण्डप्रदानं च पितृतीर्थे समाचरेत् ॥

अन्यः पश्यति मामत्र फलं ताभ्यां समं स्मृतम् ॥ ३३ ॥

गोसहस्रप्रदो ह्येको ब्राह्मणे वेदपारगे॥

एकः पश्यति मामत्र फलं ताभ्यां समं स्मृतम् ॥ ३४ ॥

पञ्चाग्निं साधयेदेको ग्रीष्मकाले सुदारुणे ॥

एकः पश्यति मामत्र फलं ताभ्यां समं स्मृतम् ॥ ३५ ॥

स्नातः सोमग्रहे चन्द्र सोमवारे च भक्तितः ॥

यो मां पश्यति सर्वेषामेतेषां लभते फलम् ॥ ३६ ॥

सरस्वती समुद्रश्च सोमः सोमग्रहस्तथा ॥

दर्शनं सोमनाथस्य सकाराः पञ्च दुर्ल्लभाः ॥ ३७ ॥

नैरंतर्येण षण्मासान्विधिना यः प्रपूजयेत् ॥

पुण्यं तदेव सफलं लभते विषुवार्चनात् ॥ ३८ ॥

एतदेव तु विज्ञेयं ग्रहणे चोत्तरायणे ॥

संक्रांतिदिनच्छिद्रेषु षडशीतिमुखेषु च ॥ ३९ ॥

मासैश्चतुर्भिर्यत्पुण्यं विधिनाऽऽपूज्य शंकरम् ॥

कार्त्तिक्यां स लभेत्पुण्यं चैत्र्यां तद्द्विगुणं स्मृतम् ॥

पुण्यमेतत्तु फाल्गुन्यामाषाढ्यामेवमेव तु ॥ 7.1.24.४० ॥

एको दद्याद्गवां लक्षं दोग्ध्रीणां वेदपारगे ॥

एको ममार्चयेल्लिंगं तस्य पुण्यं ततोऽधिकम् ॥ ४१ ॥

मासेमासे च योऽश्नीयाद्यावज्जीवं सुरेश्वरि ॥

यश्चार्च्चयेत्सकृल्लिंगं सममेतन्न संशयः ॥ ४२ ॥

तपःशीलगुणोपेते पात्रे वेदस्य पारगे ॥

सुवर्णकोटिं यद्दत्त्वा तत्फलं कुसुमेन तु ॥ ४३ ॥

अर्कपुष्पेऽपि चैकस्मिञ्छिवाय विनिवेदिते ॥

दश दत्त्वा सुवर्णानि यत्फलं तदवाप्नुयात् ॥ ४४ ॥

अर्कपुष्पसहस्रेभ्यः करवीरं विशिष्यते ॥

करवीर सहस्रेभ्यो द्रोणपुष्पं विशिष्यते ॥ ४५ ॥

द्रोणपुष्पसहस्रेभ्यो ह्यपामार्गं विशिष्यते ॥

अपामार्गसहस्रेभ्यः कुशपुष्पं विशिष्यते ॥

कुशपुष्प सहस्रेभ्यः शमीपुष्पं विशिष्यते ॥ ४६ ॥

शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते ॥

करवीरसमा ज्ञेया जातीविजयपाटलाः ॥ ४७ ॥

श्वेतमंदार कुसुमं सितंपद्मसमं भवेत् ॥

नागचंपकपुन्नागधत्तूरकुसुमं स्मृतम् ॥ ४८ ॥

केतकीजातिमुक्तं च कन्दयूथीमदन्तिकाः ॥

शिरीषसर्जजंबूककुसुमानि विवर्ज्जयेत् ॥ ४९ ॥

आकुलीकुसुमं पत्रं करंजेन्द्रसमुद्भवम् ॥

बिभीतकानि पुष्पाणि कुसुमानि विवर्ज्जयेत् ॥ 7.1.24.५० ॥

कनकानि कदंबानि रात्रौ देयानि शंकरे ॥

देवशेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका ॥ ५१ ॥

प्रहरं तिष्ठते मल्ली करवीरमहर्निशम् ॥

कीटकेशापविद्धानि रात्रौ पर्युषितानि च ॥ ५२ ॥

स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ॥

तुलसी शतपत्रं च गन्धारी दमनस्तथा ॥ ५३ ॥

सर्वासां पत्रजातीनां श्रेष्ठो मरुबकः स्मृतः ॥

एतैः पुष्पविशेषैस्तु पूज्यः सोमेश्वरः सदा ॥ ५४ ॥

यात्रायाः फलमाप्नोति स्वर्गलोके महीयते॥

एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ॥ ५५ ॥

चन्द्रमा यक्ष्मणा मुक्तः स्वस्थाननिरतोऽभवत् ॥

आहूय विश्वकर्माणं प्रासादं पर्यकल्पयत् ॥

शुद्धस्फटिकसंकाशं गोक्षीरधवलोज्ज्वलम् ॥ ५६ ॥

प्रासादं मेरुनामानं हेमप्राकारतोरणम् ॥

चतुर्दशान्ये परितः प्रासादाः परिकल्पिताः ॥

तेषां नामानि वक्ष्यामि प्रत्येकं तानि मे शृणु ॥ ५७ ॥

केसरी सर्वतोभद्रो नदनो नन्दिशालकः ॥

नन्दीशो मन्दरश्चैव श्रीवृक्षो ह्यमृतोद्भवः ॥ ५८ ॥

हिमवान्हेमकूटश्च कैलासः पृथिवीजयः ॥

इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ॥ ५९ ॥

वैडूर्यः पद्मरागश्च वज्रको मुकुटोज्ज्वलः ॥

ऐरावतो राजहंसो गरुडो वृषभस्तथा ॥ 7.1.24.६० ॥

मेरुः प्रासादराजा च देवानामालयो हि सः ॥

आदौ पञ्चाण्डको ज्ञेयः केसरीनामतः स्थितः ॥ ६१ ॥

चतुर्थांशा च तद्वृद्धिर्यावन्मेरुः प्रकीर्तितः ॥ ६२ ॥

एवं पृथक्कारयित्वा प्रासादांश्च चतुर्दश ॥
ब्रह्मादीनां देवतानां समीपस्थानवासिनाम् ॥ ६३ ॥
दश चान्यान्भूधरादीन्वृषभान्तान्वरानने ॥
आदौ कपर्द्दिनं कृत्वा प्रासादान्पर्यकल्पयत् ॥ ६४ ॥
मेरुः प्रासादराजो वै स तु सोमेश्वरे कृतः ॥
त्रेतायुगे तु दशमे मनोर्वैवस्वतस्य च ॥ ६५ ॥
कारयित्वा मंडपांश्च प्रतिष्ठाप्य यथाविधि ॥
नदानां तु शतं कृत्वा वापीकूप सहस्रकम् ॥ ६६ ॥
गृहाणां तु सहस्राणि दीनानाथाश्रयाणि च ॥
कारयित्वा विधानेन विप्रेभ्यः प्रददौ पृथक् ॥ ६७ ॥
निवेश्य नगरं सोमः श्रीसोमेश्वरसन्निधौ ॥
स्वकर्मणां प्रचारार्थमथाभ्यर्थयत द्विजान् ॥ ६८ ॥
सोमोऽस्मि भवतां राजा प्रसादात्परमेष्ठिनः ॥
तथापि विनयेनैव भक्त्यां विज्ञापयामि वः ॥ ६९ ॥
धनं हिरण्यरत्नादि धान्यं व्रीहियवादिकम् ॥
गोमहिष्यादिपशवो वस्त्राणि विविधानि च ॥ ॥ 7.1.24.७० ॥
कदलीनालिकेराणि तांबूलीपूगमालिनः ॥
मनोऽभिरामचरमा आरामाः परितः स्थिताः ॥ ७१ ॥
जंबूद्वीपाधिपाः सर्वे भवतामत्रवासि नाम्॥
आदेशं च करिष्यंति शिरस्याधाय शोभनम् ॥७२॥
द्वीपांतरादागतैश्च कर्पूरागुरुचंदनैः ॥
अन्यैश्च विविधैर्द्रव्यैः संपूर्णा भवतां गृहाः ॥७३॥
पण्यानां शतसंख्यानां व्यवहारनिदर्शिनः ॥
ब्रह्मोत्तराणि तन्वंति वणिजो लाभकांक्षिणः ॥ ७४ ॥
भवत्सु भृत्यभावेन वर्त्तमाना हितैषिणः ॥
ते चान्ये च तथा पौरा नावसीदंति कर्हिचित् ॥ ७५ ॥
एवं संपूर्णविभवैर्भवद्भिः श्रेयसे मम ॥
क्रतुक्रिया वितन्यंतां विधिवद्भूरिदक्षिणाः ॥ ७६ ॥

ब्रह्मादीनि च सर्वाणि प्रवर्ततामहर्निशम् ॥
दीनांधकृपणादीनां क्रियतामार्तिनाशनम् ॥ ७७ ॥
अभ्यागतानामौचित्यादातिथ्यं च विधीयताम्॥
तीर्थयात्राप्रसंगेन समेतानां महात्मनाम् ॥ ७८ ॥
ब्रह्मर्षीणामाश्रमेषु दीयतामाश्रयाः सदा ॥
मयात्र स्थापितं लिंगं सर्वकालं दृढव्रताः ॥ ७९ ॥
पवित्रैरुपचारैश्च पूजयंतु द्विजोत्तमाः ॥
अष्टौ प्रमाणपुरुषाः पौराणां कार्यदर्शिनः ॥ 7.1.24.८० ॥
व्यवहारानवेक्षध्वं स्मृत्याचारविशारदाः ॥
व्यवस्थां मत्कृतामेतां भवंतोऽत्र द्विजोत्तमाः ॥ ८१ ॥
धारयंतु महात्मानो दिग्गजा इव मेदिनीम् ॥
एवं प्रभुत्वमास्थाय स्थानेऽस्मिञ्छिवशालिनि ॥८२॥
श्रुतिस्मृतिपुराणोक्तान्धर्मानाचरत द्विजाः ॥
निशम्य सोमस्य वचो विनीतमिति ते द्विजाः ॥ ८३ ॥
उवाच कौशिकस्तेषु गोत्राणां प्रथमो द्विजः ॥
साधूपदिष्टमस्माकं द्विजराजेन सर्वथा ॥८४॥
सर्वमेतत्करिष्यामः किंतु किंचिन्निशामय ॥
नियोगतः पूजयतां शिवनिर्माल्यसेविनाम् ॥ ॥ ८५ ॥
पातित्यं जायतेऽस्माकं श्रुतिस्मृतिविगर्हितम् ॥
श्रुतिस्मृती हि रुद्रस्य यस्मादाज्ञाद्वयं महत् ॥ ८६ ॥
कस्तदुल्लंघयेन्मूढः प्राणैः कंठग तैरपि ॥ ८७ ॥
अष्टमूर्तेः पुनर्मूर्तावग्नौ देवमुखे मखान् ॥
कुर्वाणाः श्रुतिमार्गेण प्रीणयामोऽखिलं जगत् ॥ ८८ ॥
जगद्भगवतो रूपं व्यक्तमेत त्पुरद्विषः ॥
मिथो विभिन्नमित्येतदभिन्नं पुनरीश्वरात् ॥ ८९ ॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ 7.1.24.९० ॥
श्रुतिस्मृतिपुराणादिसदभ्यासप्रसंगिनाम् ॥

तत्तदर्थेषु पुण्यार्थं प्रवृत्ताखिलकर्मणाम् ॥ ९१ ॥

अस्माकमवकाशोऽपि विरलो लिंग पूजने ॥

रुद्रजाप्यैर्महायज्ञैर्यजानाश्चैवमीश्वरम् ॥ ९२ ॥

यथाक्षणं यथाकालं लिंगं वेदमुपास्महे ॥

यत्तु तेऽभिमतं सोम श्रीसोमेश्वरपूजनम् ॥

तच्च संपादयिष्यामः सविशेषं महामते ॥ ९३ ॥

येन त्वदीप्सितं सिध्येत्तमुपायं निशामय ॥

गौरीशंकरसंवादं श्रुत्वा भगवतो मुखात् ॥ ९४ ॥

नारदः प्राह नः पूर्वं कथयामस्तमेव ते ॥

ब्रह्मदेवद्विषः पूर्वं शतशो दैत्यदानवाः ॥

तपोभिरुग्रैर्विविधैः शंकरं प्रतिपेदिरे ॥ ९५ ॥

तेषामत्युग्रतपसामनन्यासक्तचेतसाम् ॥

प्रसादमीश्वरश्चक्रे कारुण्यामृतसागरः ॥ ९६ ॥

स हि त्रिभुवनस्वामी देवदेवो महेश्वरः ॥

अपेक्षते वरं दातुं भक्तिमेवानपायिनीम् ॥ ९७ ॥

ददौ स भुवनैश्वर्य्यप्रायानभिमतान्वरान् ॥

तेषां भक्त्यैव संतुष्टो देवब्रह्मद्विषामपि ॥ ९८ ॥

ब्रह्मणा विष्णुना चापि यस्यांतो नाधिगम्यते ॥

तस्यातर्क्यप्रभावस्य को नु वेदाशयं प्रभोः ॥ ९९ ॥

दुर्वृत्तेभ्योऽपि दैत्येभ्यस्तपोभिर्वरदायिनम् ॥

पप्रच्छ स्वच्छहृदया पार्वती परमेश्वरम् ॥ 7.1.24.१०० ॥

॥ पार्वत्युवाच ॥ ॥

भगवन्प्रसादं ते प्राप्य धृष्यंतो भुवनत्रयम् ॥

उपद्रवंतींद्रमुखान्देवान्संक्षोभयंति च ॥ १०१ ॥

वरं ददासि किं तेषां तादृशानां दुरात्मनाम् ॥

जगतः स्वस्तये येषां न मनागपि चेष्टितम् ॥ १०२॥

त्वया दत्तवरानेतान्दिव्यान्भोगोपभोगिनः ॥

अवधीर्य तवैश्वर्यं कथं विष्णुर्निहंति च ॥ १०३ ॥

हतानां च पुनस्तेषां का गतिः स्याद्वद प्रभो ॥ १०४ ॥

॥ ईश्वर उवाच ॥ ॥

सात्त्विका राजसाश्चैव तामसाश्चेति वै त्रिधा ॥

भवंति लोकास्तेष्वेते तमःप्राया दुरासदाः ॥ १०५ ॥

सुरैः सह स्पर्धमानास्तपोभिरपि तामसैः ॥

मां भजंते मुहुर्मोहाज्जगदुत्सादनोद्यताः ॥ १०६ ॥

वरं ददामि यत्तेषां भक्तिस्तत्र तु कारणम् ॥

अहं हि भक्त्या सुग्राह्यो नात्र कार्या विचारणा ॥ ॥१०७॥

तपोनुरूपानासाद्य वरांस्ते पापकारिणः ॥

विष्णुना यन्निहन्यते तच्च देवि निबोध मे॥१०८॥

अहं हरिश्च यद्भिन्नौ गुणभागोऽत्र कारणम् ॥

परमार्थादभिन्नौ च रहस्यं परमं ह्यदः॥१०९॥

आराध्याराधकादिश्च भेदः सामान्य एव नौ॥

तथा ह्यहमिमां गंगां विष्णोः पादाग्रनिःसृताम्॥7.1.24.११॥।

वहामि शिरसा भक्त्या त्वदीक्षाशंकितोऽपि सन् ॥

अपि विष्णुस्त्रिभुवनं परित्रातुं व्यवस्थया ॥१११॥

मामुपास्य चिरं लेभे चक्रं दुष्टनिबर्हणम्॥

त्वां च तस्य महामायामप्रमेयात्मनो हरेः ॥ ११२॥

आराधयामि तद्भक्त्या त्रिजगजन्मकारणम् ॥

शिरस्याधाय चान्यां मे शक्तिरूपां तथा हरिः ॥११३॥

अजोऽपि जन्मान्यासाद्य लोकरक्षां करोति वै ॥

हंतुं हिरण्यकशिपुं नरसिंहवपुश्च सः ॥११४॥

जगज्जिघांसुः शमितो मया शरभ रूपिणा ॥

मां च बाणपरित्राणे त्रिशूलोद्यमकारिणम् ॥ ११५ ॥

मानुष्येऽप्यवतारेऽसौ स्तंभयित्वा स लीलया ॥

प्रभावं महिमानं च वर्द्धयन्मामकं हरिः ॥

वरिवस्यति मां नित्यमंतरात्मापि मे विभुः ॥ ११६ ॥

अथाहं परमात्मानमेनमाद्यंतवर्जितम् ॥

ध्यानयोगैः समाधौ च भावयामि निरंतरम् ॥ ११७ ॥

तदेवं नावयोर्भेदो विद्यते पारमार्थिकः ॥

भेदं च तारतम्यं च मूढा एव वितन्वते ॥ ११९ ॥

वैष्णवं रूपमास्थाय दुर्वृत्तान्हन्मि तानहम् ॥

गतिं च तेषामधुना महेश्वरि निशामय ॥ ११९ ॥

मयि भक्त्यवसाने तु हरेः संदर्शनेन च ॥

क्रोधदर्पाभिभूतत्वान्न मुक्तिं प्राप्नुवंति ते ॥ 7.1.24.१२० ॥

आवयोस्तु प्रभावेन ते पुनर्द्धौतकल्मषाः ॥

ब्रह्मर्षीणां कुले जन्म संप्राप्ता मुक्तिहेतुकम् ॥ १२१ ॥

ब्रह्मचारिव्रता दूर्ध्वं योगं पाशुपतं श्रिताः ॥

प्राचीनकर्मसंस्काराते पुनर्मामुपासते ॥ १२२ ॥

भक्तियोगेन चास्थाय व्रतं पाशुपतादिकम् ॥

श्मशानवासिनो नग्ना अपरे चैकवाससः ॥ १२३ ॥

भिक्षाभुजो भूतिभृतो मल्लिंगान्यर्च्चयंति ते ॥

तथा मदेकाग्रधियो मद्ध्यानैकदृढव्रताः ॥ १२४ ॥

ये त्वामपि नमस्यंति जगतां मम चेश्वरीम्॥

देहावसानयोगेन मुक्तिं तेषां ददाम्यहम् ॥ १२५ ॥

सारूप्यसालोक्यमयीं मय्यावेशितचेतसाम् ॥

सायुज्यमुक्तये नायं योगः पाशुपतो यतः ॥

स्मृत्याचारेण मुनिभिः स सद्भिस्तेन गर्हितः ॥ १२६ ॥

॥ द्विजा ऊचुः ॥ ॥

तीर्थयात्राप्रसंगेन तानि होपगतान्द्विजान् ॥

स्वमानमुपनेष्यामो भक्त्यावर्ज्जितमानसान् ॥ १२७ ॥

शुचिभिक्षान्नकौपीनकमण्डल्वादिसत्कृताः ॥

अनन्यकार्य्याः सततमिहागत्य तपस्विनः ॥ १२८ ॥

भवत्प्रदत्तैर्विविधैरुपहारैरतंद्रिताः ॥

तत्त्वतस्तत्त्वसंख्यास्ते शिवधर्मैकतत्पराः ॥ १२९ ॥

श्रीसोमेश्वरमभ्यर्च्य तव श्रेयोऽभिवर्द्धकाः ॥

मुक्तिमंते गमिष्यंति देवस्यातिसुदुर्ल्लभाम्॥ 7.1.24.१३० ॥

ततोऽन्येऽथ ततोऽप्यन्ये ततश्चान्ये तपोधना ॥

परीक्षितास्तु तेऽस्माभिर्भवितारो निशापते ॥ १३१ ॥

॥ द्विजा ऊचुः ॥ ॥

इत्याह भगवान्देव्या पृष्टः स च त्रिलोचनः ॥

तत्रैव नारदः सर्वं संवादं शिवयेरितम्(?)॥ १३२ ॥

श्रुत्वा नः कथयामास कथां गोष्ठीषु पृच्छताम्॥

तव चास्माभिरधुना सर्वमेतदुदीरितम् ॥ १३३ ॥

एवमुक्तस्तु तैः प्रीतः सोमः स्वभवनं ययौ ॥

तदाज्ञया च तत्सर्वं यथोक्तं तेऽपि कुर्वते ॥ १३४ ॥

॥ देव्युवाच ॥ ॥

एवं प्रभावो देवेशः सोमेशः पापनाशनः ॥

केनोपायेन तुष्येत व्रतेन नियमेन वा ॥ १३५ ॥

॥ ईश्वर उवाच ॥ ॥

कथयामि स्फुटं धर्म्मं मानुषाणां हिताय वै ॥

स येन तुष्यते देवः शृणु त्वं सुरसुन्दरि ॥ १३६ ॥

नित्योपवासनक्तानि व्रतानि विविधानि च ॥

तीर्थे दानानि सर्वाणि पात्रे दत्तान्यशेषतः ॥ १३७ ॥

तपश्च तप्तं तेनैव स्नातं तेनैव पुष्करे ॥

केदारे तु जलं तेन गत्वा पीतं तु निश्चितम् ॥ १३८ ॥

तेन दृष्टं वरारोहे ज्योतिर्लिंगं महाप्रभम् ॥

सोमवारव्रतं दिव्यं येन चीर्णं तु संश्रये ॥ १३९ ॥

किमन्यैर्बहुभिर्दानैर्दत्तैः पात्रेषु सुन्दरि ॥ 7.1.24.१४० ॥

पूजितं येन भावेन सोमवारदिनाष्ट कम् ॥

तेन सर्वं कृतं देवि चीर्णं तत्र महाव्रतम् ॥ १४१ ॥

इतिहासमिमं पूर्वं कथयामि तव प्रिये ॥

यथावृत्तं महादेवि सोमवारव्रतं प्रति ॥ १४२ ॥

॥ ईश्वर उवाच ॥ ॥

कैलासस्य महेशानि उत्तरे च व्यवस्थिता॥
निषधोपरि विस्तीर्णा पुरी नाम स्वयंप्रभा ॥ ॥ १४३ ॥
नानारत्नसुशोभाढ्या नानागन्धर्वसंकुला ॥
सर्वावयवसंपूर्णा शक्रस्येवामरावती ॥ १४४ ॥
घनवाहननामा च गन्धर्वस्तत्र तिष्ठति ॥
भुंक्ते तत्र महाभोगान्देवैरपि सुदुर्लभान् ॥ १४५ ॥
नवयौवनसंयुक्ता भार्या तस्य मनोहरा ॥
प्रौढवाक्या सुशीला च पीनोन्नतपयोधरा ॥ १४६ ॥
तया सार्द्धं तु सम्भोगान्भुंक्ते गंधर्वनायकः ॥
उत्पन्ना तस्य कालेन पुत्री पुत्राष्टकोपरि ॥ १४७ ॥
सर्वावयवसंपन्ना सर्वविज्ञानवेदिनी ॥
गंधर्वसेना विख्याता नाम्ना सा परमेश्वरि ॥ १४८ ॥
कन्यानां तु सहस्रेषु प्रवरा रूपशालिनी ॥
कौतूहलेन सा पित्रा प्रोक्ता क्रीडस्व भामिनि ॥ १४९ ॥
उद्याने रमणीयेऽत्र नानाद्रुमलताकुले ॥
वृक्षैरनेकैः संकीर्णे फलपुष्पसमन्विते ॥ 7.1.24.१५० ॥
एवं सा रमते नित्यं कन्यापरिवृता सदा ॥
एवं दृष्ट्वा क्रीडमाना माता भर्तारमब्रवीत् ॥१५१ ॥
जीवितं निष्फलं स्वामिन्मम ते सह बांधवैः ॥
यस्येदृशी गृहे कन्या तिष्ठते भर्तृवर्ज्जिता ॥ १५२ ॥
इत्युक्तः स तु गंधर्वो भार्यां वचनमब्रवीत् ॥
अन्वेषयामि भर्त्तारं पुत्र्यर्थे तु मनोहरम् ॥ १५३ ॥
इत्युक्त्वाऽऽह्वाप यामास पुत्रीं तां घनवाहनः ॥
आहूता पितृमातृभ्यां त्वरिताऽऽगत्य सुन्दरि ॥ १५४ ॥
अनुक्रमेण सर्वेषां पतिता पादयोः शुभा ॥
आदेशं देहि मे तात किं नु कार्यं मयाऽऽधुना ॥ १५५ ॥
उक्तं च घनवाहेन हर्षितेन वचस्ततः ॥
हे पुत्रि तव यः कश्चिद्वरः संप्रति रोचते ॥

दिव्यं द्रक्ष्ये त्वत्सदृशं गंधर्वाणां शिरोमणिम् ॥ १५६ ॥

इत्युक्ता क्रोधताम्राक्षी पितरं वाक्यमब्रवीत् ॥

मम रूपस्य कोट्यंशे किं कोप्यस्ति जगत्त्रये ॥

तच्छ्रुत्वा चाद्भुतं वाक्यं पिता माता च मोहितौ॥ १५७ ॥

सर्वे विषादमापन्ना बांधवाश्च परे जनाः ॥

अशोभनमिदं वाक्यं कन्यया यत्प्रभाषितम् ॥

इत्युक्त्वा तु गताः सर्वे जननीजनबांधवाः ॥ १५८ ॥

सा तत्रैव महोद्याने रमते सखिसंयुता ॥

हिंडोलके समारूढा वसंते मासि भामिनि॥ ॥ १५९ ॥

तावद्दिव्यविमानस्थः शिखण्डी गणनायकः ॥

गच्छन्खे ददृशे कन्यां रूपौदार्य्यसमाकुलाम् ॥ 7.1.24.१६० ॥

गीतवाद्येन नृत्येन रमतीं दुदुभिस्वनैः ॥

स माध्याह्निकसंध्यायामवतीर्य विमानतः ॥ १६१ ॥

क्रीडमानोऽप्सरोभिस्तु तत्रोद्याने स्थितस्ततः ॥

शुश्राव वाक्यं कन्याया गंधर्वदुहितुस्तदा ॥ १६२ ॥

न कोऽपि सदृशो लोके मम रूपेण दृश्यते ॥

देवो वा दानवो वापि कोट्यंशे मम रूपतः ॥ १६३ ॥

इति वाक्यं ततः श्रुत्वा गणः क्रोधसमन्वितः ॥

शशाप तां सुचार्वंगीं साहंकारां गणेश्वरः ॥ १६४ ॥

॥ गण उवाच ॥ ॥

मां दृष्ट्वा यद्विशालाक्षि रूपसौभाग्यगर्विता ॥

समाक्षिपसि गंधर्वान्देवाद्यांश्चैव गर्विता ॥ १६५ ॥

तस्मात्ते गर्वसंयुक्ते कुष्ठमंगे भविष्यति ॥

श्रुत्वा शापं ततः कन्या भयभीता तपस्विनी ॥ १६६ ॥

साष्टांगं प्रणिपत्याथानुग्रहार्थमयाचत ॥

भगवन्मम दीनायाः शापस्यानुग्रहं प्रभो ॥

प्रयच्छ त्वं महा भाग नैवं कर्त्री पुनः क्वचित् ॥ १६७ ॥

इत्युक्तस्तव कारुण्याच्छिखण्डी गणनायकः ॥

अनुग्रहं ददौ तस्या गंधर्वदुहितुस्तदा ॥ १६८ ॥। ॥

॥ शिखण्ड्युवाच ॥ ॥

जातिरूपेण संयुक्तो विद्याहंकारसंपदा ॥

यो येन गर्वितः प्राणी स तं प्राप्य विनश्यति ॥ १६९ ॥

तस्माद्गर्वो नैव कार्यो गर्वस्यैतत्फलं स्मृतम् ॥

शृणुष्वानुग्रहं बाले श्रुत्वा चैवावधारय ॥ 7.1.24.१७०॥

हिमवद्वनमध्यस्थो गोशृंग ऋषिपुंगवः ॥

करिष्यत्युपकारं स एवमुक्त्वा गतः प्रिये ॥ १७१ ॥

तावत्संध्या समायाता तत्क्षणाद्भुवनांतरे ॥ १७२ ॥

ततो गंधर्व्वतनया भग्नोत्साहा नतानना ॥

परित्यज्य वनं रम्यमागता पितुरंतिके ॥ १७३ ॥

कथयामास तत्सर्वं कारणं कुष्ठसंभवम् ॥

तच्छ्रुत्वा शोकसंतप्तौ पितरौ विगतप्रभौ ॥ १७४ ॥

हिमवंतं गिरिं प्राप्तौ त्वरितौ सुतया सह ॥

गोशृंगस्य ऋषेस्तत्र ददृशाते तथाश्रमम् ॥ १७५ ॥

तत्र मध्यस्थितं दृष्ट्वा गोशृंगमृषिपुंगवम् ॥

प्रणम्य दण्डवद्भूमौ स्तुत्वा स्तोत्रैरनेकधा ॥ १७६ ॥

उपविष्टोग्रतस्तस्य प्रणिपत्य पुनःपुनः ॥

प्रोवाच वचनं तत्र पूर्ववृत्तं यथाऽभवत् ॥ १७७ ॥

कथिते चैव वृत्तांते पुनः पप्रच्छ कारणम्॥

पृष्टे तु कारणे तत्र गंधर्वः प्रोक्तवांस्तदा ॥ १७८ ॥

॥ गंधर्व उवाच ॥ ॥

दुहितुर्मे शरीरं तु व्याधिकुष्ठेनपीडितम् ॥

येनोपशमनं याति तत्त्वं कर्तुमिहार्हसि ॥ १७९ ॥

प्रसादं कुरु विप्रर्षे मम दीनस्य सांप्रतम् ॥

यथा कुष्ठं शमं याति मम पुत्र्यास्तु कारणम् ॥ ॥ 7.1.24.१८० ॥ ॥

गोशृंग उवाच ॥ ॥

भारते तु महातेजास्तिष्ठत्युदधिसन्निधौ ॥

देवः सोमेश्वरोनाम सर्वदेवनमस्कृतः ॥ १८१ ॥

क्षणं कृत्वा हि संपूज्य एकाहारेण मानवैः ॥

सर्वव्याधिविनाशाय सर्वकार्यार्थसिद्धये ॥ १८२ ॥

सोमवारव्रतेनेशं समाराधय शंकरम् ॥

एवं कृते व्याधिनाशस्तव पुत्र्या भविष्यति ॥ १८३ ॥

॥ ईश्वर उवाच ॥ ॥

इति तद्वचनं श्रुत्वा महर्षेर्भावितात्मनः ॥

तत्र गंतुं मनश्चक्रे सोमेशाराधनं प्रति ॥ १८४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्रीसोमेश्वर वर्णने सोमवारव्रतमाहात्म्यवर्णनंनाम चतुर्विंशोऽध्यायः ॥ २४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२५

https://sa.wikisource.org/s/g64
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

स गन्धर्वस्तदा देवि आरिराधयिषुर्भवम् ॥

सोमवारव्रतंनाम पप्रच्छ मुनिसत्तमम् ॥ १ ॥

॥ गन्धर्व उवाच ॥ ॥

कथं सोमव्रतं कार्यं विधानं तस्य कीदृशम् ॥

कस्मिन्काले च तत्कार्यं सर्वं विस्तरतो वद ॥ २ ॥

॥ गोशृंग उवाच ॥ ॥

साधुसाधु महाप्राज्ञ सर्वसत्त्वोपकारकम् ॥

यन्न कस्यचिदाख्यातं तदद्य कथयामि ते ॥ ३ ॥

सर्वरोगहरं दिव्यं सर्वसिद्धिप्रदायकम् ॥

सोमवारव्रतंनाम सर्वकामफलप्रदम् ॥ ४ ॥

सर्वकालिकमादेयं वर्णानां शुभकारकम् ॥

नारी नरैः सदा कार्यं दृष्ट्वादृष्ट्वा फलोदयम् ॥ ५ ॥

ब्रह्मविष्ण्वादिभिर्देवैः कृतमेतन्महाव्रतम् ॥

पुनस्तु सोमराजेन दक्षशापहतेन च ॥ ६ ॥

आराधितोऽनेन शंभुः शंभुध्यानपरेण तु ॥

ततस्तुष्टो महादेवः सोमराजस्य भक्तितः ॥७ ॥

तेनोक्तं यदि तुष्टोऽसि प्रतिष्ठास्थो निरंतरम् ॥ ८ ॥

यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठंति भूधराः ॥

तावन्मे स्थापितं लिंगमुमया सह तिष्ठतु ॥ ९ ॥

स्थापितं तु तदा तेन प्रार्थयित्वा महेश्वरम् ॥

आत्मनामांकितं कृत्वा ततो रोगैर्व्यमुच्यत॥ 7.1.25.१० ॥

ततः शुद्धशरीरोऽसौ गगनस्थो विराजते ॥ ११ ॥

तदाप्रभृति ये केचित्कुर्वंति भुवि मानवाः ॥

तेऽपि तत्पदमायांति विमलांगाश्च सोमवत् ॥ १२ ॥
अथ किं बहुनोक्तेन विधानं तस्य कीर्तये ॥
यस्मिन्कस्मिंश्च मासे वा शुक्ले सोमस्य वासरे ॥ ॥ १३॥
दंतकाष्ठं पुरा ब्राह्मे कृत्वा स्नानं समाचरेत् ॥
स्वधर्मविहितं कर्म कृत्वा स्थाने मनोरमे ॥ १४ ॥
सुसमे भूतले शुद्धे न्यस्य कुम्भं सुशोभितम् ॥
चूतपल्लवविन्यस्ते चंदनेन सुचित्रिते ॥ १५ ॥
श्वेतवस्त्रपरीधाने सर्वाभरणभूषिते ॥
आदौ पात्रे तु संन्यस्य आधारसहितं शिवम् ॥ ॥ १६ ॥
अष्टमूर्त्यष्टकं दिक्षु सोमनाथं सशक्तिकम् ॥
उमया सहितं तत्र श्वेतपुष्पैश्च पूजयेत् ॥ १७ ॥
विविधं भक्ष्यभोज्यं च फलं वै बीजपूर कम् ॥
अनेनैव तु मंत्रेण सर्वं तत्रैव कारयेत् ॥ १८ ॥
ओं नमः पंचवक्त्राय दशबाहुत्रिनेत्रिणे ॥
श्वेतं वृषभमारूढ श्वेताभरणभूषित ॥ १९ ॥
उमादेहार्द्धसंयुक्त नमस्ते सर्वमूर्तये ॥
अनेनैव तु मंत्रेण पूजां होमं च कारयेत् ॥ 7.1.25.२० ॥
कृत्वैवं च दिने रात्रौ पश्यंश्चैवं स्वपेन्नरः ॥
दर्भशय्या समारूढो ध्यायन्सोमेश्वरं हरम् ॥ २१ ॥
एवं कृतेऽष्टादशानां कुष्ठानां नाशनं भवेत् ॥
द्वितीये सोमवारे तु करंजं दन्तधावनम् ॥ २२ ॥
देवं संपूजयेत्सूक्ष्मं ज्येष्ठाशक्तिसमन्वितम् ॥
शतपत्रैः पूजयित्वा मधु प्राश्य यथाविधि ॥ २३ ॥
नारंगं तत्र दत्त्वा तु शेषं पूर्ववदाचरेत् ॥
एवं कृते द्वितीये तु गोलक्षफलमाप्नुयात् ॥ २४ ॥
सोमवारे तृतीये तु अपामार्गसमुद्भवम् ॥
दंतकाष्ठादिकं कृत्वा त्रिनेत्रं च प्रपूजयेत् ॥ २५ ॥
फलं च दाडिमं दद्याज्जातीपुष्पैश्च पूजयेत् ॥

रजन्यामंगुरं प्राश्य सिद्धियुक्तं तु पूजयेत् ॥ २६ ॥

चतुर्थे सोमवारे तु काष्ठमौदुम्बरं स्मृतम् ॥

पूजयेत्तत्र गौरीशं सूक्ष्मया सहितं तथा ॥ २७ ॥

नारिकेलफलं दद्याद्दमनेन प्रपूजयेत् ॥

शर्करां प्राशयेद्रात्रौ जागरं चैव कारयेत् ॥ २८ ॥

पञ्चमे सोमवारे तु पूजयेच्च गणाधिपम् ॥

विभूत्या सहितं देवं कुन्दपुष्पैः प्रपूजयेत्॥ २९ ॥

आश्वत्थं दन्तकाष्ठं च अर्घ्यं वै द्राक्षया तथा ॥

मोचं च प्राशयेद्रात्रावश्वमेधफलं लभेत् ॥ 7.1.25.३० ॥

षष्ठे सोमस्य वारे तु सुरूपं नाम पूजयेत् ॥

कर्पूरं प्राशयेत्तत्र भक्त्या परमया युतः ॥ ३१ ॥

सप्तमे सोमवारे तु दन्तकाष्ठं च मल्लिका ॥

सर्वज्ञं पूजयेत्तत्र दीप्तया सहितं तथा ॥ ३२ ॥

जम्बीरं च फलं दद्याज्जातीपुष्पैश्च पूजयेत् ॥

लवङ्गं प्राशयेत्तत्र तस्यानन्तफलं भवेत् ॥ ३३ ॥

अष्टमे सोमवारे तु अमोघायुतमीश्वरम् ॥

कदलीफलकेनार्घ्यं मरुबकेन पूजयेत् ॥

रात्रौ तु प्राशयेद्दुग्धमग्निष्टोमफलं लभेत् ॥ ३४ ॥

गंगास्नाने कृते सम्यक्कोटिधा यत्फलं स्मृतम् ॥

दशहेमसहस्राणां कुरुक्षेत्रे रवेर्ग्रहे ॥ ३५ ॥

ब्राह्मणे वेदविदुषे यद्दत्त्वा फल माप्नुयात् ॥

तत्पुण्यं कोटिगुणितमस्मिन्नाचरिते व्रते ॥ ३६ ॥

गजानां तु शते दत्ते लक्षे च रथवाजिनाम्॥

तत्फलं कोटिगुणितं सोमवारव्रते कृते ॥ ३७ ॥

गुग्गुलोर्धूपनं कृत्वा कोटिशो यत्फलं लभेत् ॥

तत्पुण्यं तु भवेत्तस्य सोमवारव्रते कृते ॥ ३८ ॥

सर्वैश्वर्यसमायुक्तः शिवतुल्यपराक्रमः ॥

रुद्रलोके वसेत्तावद्ब्रह्मणः प्रलयावधि ॥ ३९ ॥

संप्राप्ते नवमे वारे कुर्यादुद्यापनं शुभम् ॥
यथा भवति गन्धर्व तथा वक्ष्यामि तेऽधुना ॥ 7.1.25.४० ॥
मंडलं मंडपं कुण्डं पताकाध्वजशोभितम् ॥
तोरणानि च चत्वारि कुण्डं कृत्वा विधानतः ॥ ४१ ॥
मध्ये वेदिः प्रकर्त्तव्या चतुरस्रा सुशोभना ॥
निष्पाद्य मंडलं तत्र मध्ये पद्मं प्रकल्पयेत् ॥ ४२ ॥
कलशानष्टदिग्भागे सहिरण्यान्पृथक्पृथक् ॥
स्थापयित्वा तु शक्तिस्ता वामाद्याः पूर्वतः क्रमात्॥ ४३ ॥
कर्णिकायां तु पद्मस्य श्रीसोमेशं महाप्रभम्॥
प्रतिमारूपसंपन्नं हेमजं शक्तिसंयुतम् ॥ ४४ ॥
रुक्मशय्यासमारूढं मनोन्मन्या समन्वितम् ॥
हेमपात्रादिके पात्रे मधुना परिपूरिते ॥ ४५ ॥
रुक्मशय्यासमाच्छन्ने तत्रस्थं पूजयेत्क्रमात् ॥
अनंतादिशिखंड्यंतैर्नामभिः क्रमशोऽर्चयेत् ॥ ४६ ॥
गन्धस्रग्धूपदीपैश्च नैवेद्यैश्च पृथग्विधैः ॥
वस्त्रालंकारतांबूलच्छत्रचामरदर्प्पणम् ॥ ४७ ॥
दीपघंटावितानं च पर्यंकं च सतू लिकम् ॥
सोमेश्वरं समुद्दिश्य देयं पौराणिके गुरौ ॥ ४८ ॥
भूषयित्वा तथाऽऽचार्य्यं होमं तत्रैव कारयेत् ॥
बलिकर्मावसाने च रात्रौ तत्रैव जागृयात् ॥ ४९ ॥
पञ्चगव्यं ततः पीत्वा ध्यायेत्सोमेश्वरं हृदि ॥
प्रभाते तु ततः स्नात्वा ध्यायेत्तं च विधानतः ॥ 7.1.25.५० ॥
ततो भक्त्या च गंधर्व क्षीरखण्डादिनिर्म्मितम् ॥
भक्ष्यभोज्यैरनेकैश्च भोजयेद्ब्राह्मणानथ ॥ ५१ ॥
वस्त्रयुग्मं ततो दत्त्वा गां च दत्त्वा विसर्जयेत् ॥ ५२ ॥
एवं चीर्णव्रतः सम्यग्लभते पुण्यमक्षयम् ॥
धनधान्यसमृद्धात्मा पुत्रदारसमन्वितः ॥ ५३ ॥
न कुले जायते तस्य दरिद्रो दुःखितोऽपिवा ॥

अपुत्रो लभते पुत्रान्वन्ध्या पुत्रवती भवेत् ॥ ५४ ॥

काकवंध्या तु या नारी मृतवत्सा च दुर्भगा ॥

कन्याप्रसूश्च या कार्यमाभिरेतद्विशेषतः ॥ ५५ ॥

एवं कृते विधाने तु देहपाते शिवं व्रजेत् ॥

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥

भुंक्तेऽसौ विपुलान्भो गान्यावदाभूतसंप्लवम् ॥ ५६ ॥

इति ते कथितं सर्वं सोमवारव्रतं क्रमात् ॥

गच्छ शीघ्रं महाभाग यत्र सोमेश्वरः स्थितः ॥ ५७ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्तः सच गन्धर्वः पुत्र्या सह वरानने ॥

सर्वोपहारसंयुक्तः प्रभासक्षेत्रमाश्रितः ॥ ५८ ॥

तत्र सोमेश्वरं दृष्ट्वा आनन्दाश्रुपरिप्लुतः ॥

यात्राक्रमेण संपूज्य चक्रे सोमव्रतं क्रमात् ॥ ५९ ॥

पुत्र्या सह महाभागस्तस्य तुष्टो महेश्वरः॥

सर्वरोगविनाशं च सर्वकामसमृद्धिदम्॥

ददौ गन्धर्वराज्यं च भक्तिं चैवात्मनस्तथा ॥ ६९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये सोमेश्वरमाहात्म्यवर्णने गन्धर्वकन्यावृत्तान्तवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२६



॥ ईश्वर उवाच ॥ ॥

अथ लब्धवरस्तत्र कृतार्थो भक्तिसंयुतः॥

स्थापयामास लिंगं स गन्धर्वो घनवाहनः॥

सोमेशादुत्तरे भागे दंडपाणिसमीपतः॥

गन्धर्वेश्वरनामानं गान्धर्वफलदायकम्॥२॥

वरदावारुणे भागे धनुषां पञ्चके स्थितम्॥

पञ्चम्यां पूजयित्वा च न दुःखी जायते नरः॥

इति श्री स्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गन्धर्वेश्वरमाहात्म्यवर्णनंनाम षड्विंशतितमो ऽध्यायः ॥ २६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२७



॥ ईश्वर उवाच ॥ ॥

अथ तत्रैव देवेशि लिंगं गन्धर्वसेनया ॥

स्थापितं घनवाहस्य पुत्र्या गौरीसमीपतः ॥ १ ॥

धनुषां त्रितये तत्र स्थितं पूर्वविभागतः ॥

विमलेश्वरनामानं सर्वरोगविनाशनम् ॥ २ ॥

पूजयित्वा तृतीयायां दौर्भाग्यैर्मुच्यतेऽङ्गना ॥

सर्वान्कामानवाप्नोति पुत्रपौत्रप्रतिष्ठिता ॥ ३ ॥

इति व्रतं महादेवि त्रेतासंध्यांशके गते ॥

गन्धर्वस्यैवमाख्यातं श्रुतं पातकनाशनम्॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गन्धर्वसेनेश्वरमाहात्म्यवर्णनंनाम सप्तविंशोऽध्यायः ॥ ॥ २७ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२८



॥ देव्युवाच ॥ ॥

इत्याश्चर्यमिदं देव त्वत्तः सर्वं मया श्रुतम् ॥

महिमानं महेशस्य विस्तरेण समुद्भवम् ॥

सांप्रतं सोमनाथस्य यथावद्वक्तुमर्हसि ॥ १ ॥

विधिना केन दृश्योसौ यात्रा कार्या कथं नृभिः ॥

कस्मिन्काले महादेव नियमाश्चैव कीदृशाः ॥ २ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

हेमन्ते शिशिरे वापि वसन्ते वाथ भामिनि ॥

यदा च जायते चित्तं वित्तं वा पर्व वा भवेत् ॥ ३ ॥

तदैव यात्रा कर्त्तव्या भावस्तत्रैव कारणम् ॥

कृत्वा तु नियमं कंचित्स्वगृहे वरवर्णिनि ॥ ४ ॥

प्रणम्य मनसा रुद्रं कृत्वा श्राद्धं यथाविधि ॥

स्थानं प्रदक्षिणं कृत्वा वाग्यतः सुसमाहितः ॥ ५ ॥

नियतो नियताहारो गच्छेच्चैव ततः पथि ॥

कामक्रोधौ परित्यज्य लोभमोहौ तथैव च ॥ ६ ॥

ईर्ष्यामत्सरलौल्यं च यात्रा कार्या ततो नृभिः ॥

तीर्थानुगमनं पुण्यं यज्ञेभ्योऽपि विशिष्यते ॥ ७ ॥

अग्निष्टोमादियज्ञैश्च इष्ट्वा विपुलदक्षिणैः ॥

तत्तत्फलमवाप्नोति तीर्थानुगमनेन यत् ॥ ८ ॥

कलेर्युगं महाघोरं प्राप्य पापसमन्वितम् ॥

नान्येनाऽस्मिन्नुपायेन धर्म्मः स्वर्गश्च लभ्यते ॥

विना यात्रां महादेवि सोमेशस्य न संशयः ॥ ९ ॥

ये कुर्वंति नरा यात्रां शुचिश्रद्धासमन्विताः ॥

कलौ युगे कृतार्थास्ते ये त्वन्ये ते निरर्थकाः ॥ 7.1.28.१० ॥

यथामहोदधेस्तुल्यो न चान्योऽस्ति जलाशयः ॥

तथा प्राभासिकात्क्षेत्रात्समं तीर्थं न विद्यते ॥ ११ ॥

अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥

अदत्त्वा कांचनं गाश्च दरिद्रोनाम जायते ॥ १२ ॥

यन्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ॥

मनसा तानि गम्यानि सर्वतीर्थगतीप्सुना ॥ १३ ॥

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥

विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १४ ॥

नियतो नियताहारः स्नान। जाप्यपरायणः ॥

व्रतोपवासनिरतः स तीर्थफलमश्नुते ॥ १५ ॥

अक्रोधनश्च देवेशि सत्यशीलो दृढव्रतः ॥

आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ १६ ॥

कुरुक्षेत्रादितीर्थानि रथगम्यानि यानि तु ॥

तान्येव ब्राह्मणो यायादानदोषो न तेषु वै ॥ १७ ॥

ये साधवो धनोपेतास्तीर्थानां स्मरणे रताः ॥

तीर्थे दानाच्च योगाच्च तेषामभ्यधिकं फलम् ॥ १८ ॥

ये दरिद्रा धनैर्हीनास्तीर्थानुगमनेरताः॥

तेषां यज्ञफलावाप्तिर्विनापि धनसंचयैः ॥१९॥

सर्वेषामेव वर्णानां सर्वाश्रमनिवासिनाम् ॥

तीर्थं तु फलदं ज्ञेयं नात्र कार्या विचारणा ॥ 7.1.28.२० ॥

कार्यांतरेण यो गत्वा स्नानं तीर्थे समाचरेत् ॥

न च यात्राफलं तस्य स्नानमात्रं फलं भवेत् ॥ २१ ॥

तीर्थानुगमनं पद्भ्यां तपःपरमिहोच्यते ॥

तदेव कृत्वा यानेन स्नानमात्रफलं लभेत् ॥ २२ ॥

यस्यान्यः कुरुते शक्त्या तीर्थयात्रां तथेश्वरि ॥

स्वकीयद्रव्ययानाभ्यां फलं तस्य चतुर्गुणम् ॥ २३ ॥

तीर्थानुगमनं कृत्वा भिक्षाहारा जितेंद्रियाः॥

प्राप्नुवंति महादेवि तीर्थे दशगुणं फलम् ॥ २४ ॥

छत्रोपानद्विहीनस्तु भिक्षाशी विजितेंद्रियः ॥
महापातकजैर्घोरैर्विप्रः पापैः प्रमुच्यते ॥ २५ ॥
न भैक्षं परपाकं तु न च भैक्ष्यं प्रतिग्रहम् ॥
सोमपानसमं भैक्ष्यं तस्माद्भैक्षं समाचरेत् ॥ २६ ॥
लोकेऽस्मिन्द्विविधं तीर्थं स्वच्छ न्दैर्निर्म्मितं तथा ॥
स्वयंभूतं प्रभासाद्यं निर्मितं दैवतैः कृतम् ॥ २७ ॥
स्वयंभूते महातीर्थे स्वभावे च महत्तरे ॥
तस्मिंस्तीर्थे प्रतिगृह्य कृताः सर्वे प्रतिग्रहाः ॥ २८ ॥
प्रतिग्रहनिवृत्तस्य यात्रादशगुणं फलम् ॥
तेन दत्तानि दानानि यज्ञैर्देवाः सुतर्पिताः ॥ २९ ॥
येन क्षेत्रं समासाद्य निवृत्तिः परमा कृता ॥
वस्तुलौल्याद्धि यः क्षेत्रे प्रतिग्रहरुचिस्तथा ॥ 7.1.28.३० ॥
नैव तस्य परोलोको नायं लोको दुरात्मनः ॥
अथ चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्बलः ॥
दशांशमर्जिताद्दद्यादेवं तत्र न हीयते ॥ ३१ ॥
विप्रवेषं समास्थाय शूद्रो भूत्वा प्रतिग्रहम् ॥
तृणकाष्ठसमं वापि प्रतिगृह्य पतत्यधः ॥ ३२ ॥
कुम्भीपाकादिकेष्वेवं महानरककोटिषु ॥
यावदिंद्रसहस्राणि चतुर्द्दश वरानने ॥३३॥
तस्मान्नैव प्रतिग्राह्यं किमन्यैर्ब्राह्मणैरपि ॥
द्विप्रकारस्य तीर्थस्य कृतस्याप्यकृतस्य च ॥ ३४ ॥
स्वकीयभावसंयुक्तः संपूर्णं फलमश्नुते ॥
लभते षोडशांशं स यः परान्नेन गच्छति ॥ ३५ ॥
अशक्तस्य तथांधस्य पंगोर्यायावरस्य च ॥
विहितं कारणायानमच्छिद्रे ब्राह्मणे कुतः ॥ ३६ ॥
स्नानखादनपानैश्च वोढृभ्यस्तीर्थसेवकः ॥
ददत्सकलमाप्नोति फलं तीर्थसमुद्भवम् ॥ ३७ ॥
न षोडशांशं यत्नेन लब्धार्थं यदि यच्छति ॥

पंचमांशमथो वापि दद्यात्तत्र द्विजातिषु ॥ ३८ ॥

देवतानां गुरूणां च मातापित्रोश्च कामतः ॥

पुण्यदः समवाप्नोति तदेवाष्टगुणं फलम् ॥ ३९ ॥

स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥

पुण्यं देयं तु सर्वत्र नापुण्यं दीयते क्वचित् ॥ 7.1.28.४० ॥

पितरं मातरं तीर्थे भ्रातरं सुहृदं गुरुम् ॥

यमुद्दिश्य निमज्जेत द्वादशांशं लभेत सः ॥ ४१ ॥

कुशैस्तु प्रतिमां कृत्वा तीर्थवारिषु मज्जयेत् ॥

यमुद्दिश्य महादेवि अष्टभागं लभेत सः ॥ ४२ ॥

महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बलाः ॥

वृक्षास्ते द्विजरूपेण जायंते ब्रह्मराक्षसाः ॥ ४३ ॥

न वेदबलमाश्रित्य प्रतिग्रहरुचिर्भवेत् ॥

अज्ञानाद्वा प्रमादाद्वा दहते कर्म नेतरत् ॥ ४४ ॥

चितिकाष्ठं तु वै स्पृष्ट्वा यज्ञयूपं तथैव च ॥

वेदविक्रयिणं स्पृष्ट्वा स्नानमेव विधीयते ॥ ४५ ॥

आदेशं पठते यस्तु आदेशं तु ददाति यः ॥

द्वावेतौ पापकर्माणौ पातालतलवासिनौ ॥ ४६ ॥

आदेशं पठते यस्तु संजिघृक्षुः प्रतिग्रहम् ॥

तीर्थे चैव विशेषेण ब्रह्मघ्नः सैव नेतरः ॥

स्थितो वै नृपतेर्द्वारि न कुर्याद्वेदविक्रयम् ॥ ४७ ॥

हत्वा गावो वरं मांसं भक्षयीत द्विजाधमः ॥

वरं जीवन्समं मत्स्यैर्न कुर्याद्वेदविक्रयम् ॥

ब्रह्महत्यासमं पापं न भूतं न भविष्यति ॥ ४८ ॥

वरं कुर्याच्च तद्देवि न कुर्याद्वेदविकयम् ॥

तीर्थे चैव विशेषेण महाक्षेत्रे तथैव च ॥ ४९ ॥

दीयमानं तु वै दानं यस्त्यजेत्तीर्थसेवकः ॥

तीर्थं करोति तीर्थं च स पुनाति च पूर्वजान् ॥ 7.1.28.५० ॥

यदन्यत्र कृतं पापं तीर्थे तद्याति लाघवम्॥

न तीर्थकृतमन्यत्र क्वचिदेव व्यपोहति ॥ ५१ ॥

तैलपात्रमिवात्मानं यो रक्षेत्तीर्थसेवकः ॥

स तीर्थफलमस्कन्नं विप्रः प्राप्नोति संयतः ॥ ॥। ५२ ॥

यस्ययस्याति पक्वान्नमल्पं वा यदि वा बहु ॥

तीर्थगस्तस्य तस्यार्धं स्नातस्य विनियच्छति ॥ ५३ ॥

यो न क्लिष्टोपि भिक्षेत ब्राह्मण स्तीर्थसेवकः ॥

सत्यवादी समाधिस्थः स तीर्थस्योपकारकः ॥ ५४॥

कृते युगे पुष्कराणि त्रेतायां नैमिषं तथा ॥

द्वापरे तु कुरुक्षेत्रं प्राभासिकं कलौयुगे ॥ ५५ ॥

तिष्ठेद्युगसहस्रंतुपादेनैकेन यः पुमान् ॥

प्रभासयात्रामेको वा समं भवति वा न वा ॥ ५६ ॥

एतत्क्षेत्रं समागत्य मध्यभागे वरानने ॥

यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः॥५७॥

लुठित्वा लोठनीं तत्र लुठिता यत्र देवताः ॥

ततो नृत्यन्हसन्गायन्भूत्वा कार्पटिका कृतिः ॥

गच्छेत्सोमेश्वरं देवं दृष्ट्वा चादौ कपर्द्दिनम्॥ ५८ ॥

ईदृशं पुरुषं दृष्ट्वा स्थितं सोमेश्वरोन्मुखम् ॥

नित्यं तुष्यंति पितरो गर्जंति च पिता महाः ॥ ५९ ॥

अस्माकं वंशजो देवं प्रस्थितस्तारणाय नः ॥

गत्वा सोमेश्वरं देवि कुर्याद्वपनमादितः ॥ 7.1.28.६० ॥

तीर्थोपवासः कर्त्तव्यो यथावद्वै निबोध मे ॥

नास्ति गंगासमं तीर्थं नास्ति क्रतुसमा गतिः ॥६१॥

गायत्रीसदृशं जाप्यं होमो व्याहृतिभिः समः ॥

अंतर्जले तथा नास्ति पापघ्नमघमर्षणात् ॥६२॥

अहिंसासदृशं पुण्यं दानात्संचयनं परम् ॥

तपश्चानशनान्नास्ति तथा तीर्थनिषेवणात् ॥६३॥

तीर्थोपवासाद्देवेशि अधिकं नास्ति किञ्चन ॥

पापानां चोपशमनं सतामीप्सितकारकम् ॥ ६४ ॥

उपवासो विनिर्द्दिष्टो विशेषाद्देवताश्रये ॥
ब्राह्मणस्य त्वनशनं तपः परमिहोच्यते ॥ ६५ ॥
षष्ठकालाशनं शूद्रे तपः प्रोक्तं परं बुधैः ॥
वर्णसंकरजातानां दिनमेकं प्रकीर्तितम् ॥ ६६ ॥
षष्ठकालात्परं शूद्रस्तपः कुर्याद्यथा क्वचित् ॥
राष्ट्रहानिस्तदा ज्ञेया राज्ञश्चोपद्रवो महान् ॥ ६७ ॥
शूद्रस्तु षष्ठकालाशी यथाशक्त्या तपश्चरेत् ॥
न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः ॥ ६८ ॥
मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ॥
नोच्चरेत्प्रणवं मंत्रं पुरोडाशं न भक्षयेत् ॥ ६९ ॥
न शिखां नोपवीतं च नोच्च रेत्संस्कृतां गिरम् ॥
न पठेद्वेदवचनं त्रैरात्रं न हि सेवयेत् ॥ 7.1.28.७० ॥
नमस्कारेण शूद्रस्य क्रियासिद्धिर्भवेद्ध्रुवम् ॥
निषिद्धाचरणं कुर्वन्पितृभिः सह मज्जति ॥ ७१ ॥
येनैकादशसंख्यानि यंत्रितानींद्रियाणि वै ॥
स तीर्थफलमाप्नोति नरोऽन्यः क्लेशभाग्भवेत् ॥ ७२ ॥
यच्च तीर्थे पितृश्राद्धं स्नानं तत्र समाचरेत् ॥
हितकारी च भूतेभ्यः सोऽश्नीयात्तीर्थजं फलम् ॥ ७३ ॥
धर्मध्वजी सदा लुब्धः परदाररतो हि यः ॥
करोति तीर्थगमनं स नरः पातकी भवेत्॥ ७४ ॥
एवं ज्ञात्वा महादेवि यात्रां कुर्याद्यथाविधि ॥
तीर्थोपवासं कृत्वादौ श्रद्धायुक्तो दृढव्रतः ॥ ७५ ॥
भोजनं नैव कुर्वीत यदी च्छेद्धितमात्मनः ॥
परान्नं नैव भुञ्जीत तद्दिने ब्राह्मणः क्वचित् ॥७६॥
हस्त्यश्वरथयानानि भूमिगोकांचनादिकम् ॥
सर्वं तत्परिगृह्णीयाद्भोजनं न समाचरेत् ॥ ७७ ॥
आमाच्छतगुणं पुण्यं भुञ्जतो ददतोऽपि वा ॥
तीर्थोपवासं कुर्वीत तस्मात्तत्र वरानने ॥ ७८ ॥

व्रती च तीर्थयात्री च विधवा च विशेषतः ॥
परान्नभोजने देवि यस्यान्नं तस्य तत्फलम् ॥ ७९ ॥
विधवा चैव या नारी तस्या यात्राविधिं ब्रुवे ॥
कुंकुमं चन्दनं चैव तांबूलं च स्रजस्तथा ॥ 7.1.28.८० ॥
रक्तवस्त्राणि सर्वाणि शय्या प्रास्तरणानि च ॥
अशिष्टैः सह संभाषो द्विवारं भोजनं तथा ॥ ८१ ॥
पुंसां प्रदर्शनं चैव हास्यं तमसि वर्जयेत् ॥
सशब्दोपानहौ चैव नृत्यं गतिं च वर्जयेत् ॥ ८२ ॥
धारणं चैव केशानामंजनं च विलेपनम् ॥
असतीजनसंसर्गं पांडित्यं च परित्यजेत् ॥ ८३ ॥
नित्यं स्नानं च कुर्वीत श्वेतवस्त्राणि धारयेत् ॥
यतिश्च ब्रह्मचारी च विधवा च विशेषतः ॥ ८४ ॥
तांबूलं मधु मांसं च सुरापानसमं विदुः ॥
एतेषां वर्ज्जनाद्देवि सम्यग्यात्राफलं लभेत् ॥ ९५ ॥
॥ देव्युवाच ॥ ॥
तपांसि कानि कथ्यन्ते क्षेत्रे प्राभा सिके नरैः ॥
कानि दानानि दीयन्ते केषु तीर्थेषु वा कथम् ॥ ८६ ॥
॥ ईश्वर उवाच॥ ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमिष्यते ॥
द्वापरे यजनं धन्यं दानमेकं कलौ युगे ॥८७॥
तपस्तप्यन्ति मुनयः कृच्छ्रचान्द्रायणादिकम् ॥
गत्वा प्राभासिकं क्षेत्रं लोकाश्चान्ये कृते युगे ॥८८॥
कलौ दानानि दीयन्ते ब्राह्मणेभ्यो यथाविधि ॥
प्रभासं क्षेत्रमासाद्य तपसां प्राप्यते फलम् ॥ ८९ ॥
तुलापुरुषब्रह्माण्डपृथिवीकल्पपादपाः ॥
हिरण्य कामधेनुश्च गजवाजिरथास्तथा ॥ 7.1.28.९० ॥
रत्नधेनुहिरण्याश्वसप्तसागर एव च ॥
महाभूतघटो विश्वचक्रकल्पलताभिधः ॥ ९१ ॥

प्रभासे नृपतिर्दद्या न्महादानानि षोडश ॥
धान्यरत्नगुडस्वर्णतिलकार्पासशर्कराः ॥ ९२ ॥
सर्पिर्लवणरूप्याख्या दशैते पर्वताः स्मृताः ॥
गुडाज्यदधिमध्वंबुसलिल क्षीरशर्कराः ॥
रत्नाख्याश्च स्वरूपेण दशैता धेनवो मताः ॥ ९३ ॥
तेषामेकतमं दानं तीर्थेतीर्थे पृथक्पृथक् ॥
प्रदेयान्येकवारं वा सरस्वत्यब्धि संगमे ॥ ९४ ॥
सर्वस्वं चातिविदुषे गृहं वा सपरिच्छदम् ॥
बह्वल्पमपि विप्रेभ्यो दातव्यं प्रियमेलके ॥९५॥
यत्र तीर्थे लभेल्लिंगं तीर्थं च विमलोदकम्॥
तत्राग्निकार्यं कृत्वादौ विशिष्टं दानमिष्यते ॥९६॥
तर्पणं पितृदेवानां श्राद्धं दानं सदक्षिणम् ॥
तीर्थेतीर्थे च गोदानं नियतः प्रकृतो विधिः ॥ ॥ ९७ ॥
विशिष्टख्यातलिंगेषु वृषदानं विधीयते ॥
स्नानं विलेपनं पूजां देवतानां समाचरेत् ॥ ९८ ॥
जगतीं चार्चयेद्भक्त्या तथा चैवोपलेपयेत् ॥
प्रासादं धवलं सौधं कारयेज्जीर्णमुद्धरेत् ॥ ९९ ॥
पुष्पवाटीं स्नानकूपं निर्मलं कारयेद्व्रती ॥
ब्राह्मणानां भूरिदानं देवपूजाकराय च ॥ 7.1.28.१०० ॥
सर्वत्र देवयात्रायां विधिरेष प्रवर्त्तते ॥
तीर्थमभ्युद्धरेज्जीर्णं मार्जयेत्कथयेत्फलम् ॥ १०१ ॥
प्रसिद्धे च महादानं मध्यमे चैव मध्यमम् ॥
गोदानं सर्वतीर्थेषु सुवर्णमथ निष्क्रयः ॥
हिरण्यदानं सर्वेषां दानानामेव निष्कृतिः ॥ १०२ ॥
एवं कृत्वा नरो भक्त्या लभते जन्मनः फलम् ॥
तीर्थेषु दानं वक्ष्यामि येषु यद्दीयते तिथौ ॥ १०३ ॥
प्रभासे प्रतिपद्दानं दातव्यं कांचनं शुभम् ॥
द्वितीयायां तथा वस्त्रं तृतीयायां च मेदिनीम् ॥ ॥१०४ ॥

चतुर्थ्यां दापयेद्धान्यं पंचम्यां कपिलां तथा ॥

षष्ठ्यामश्वं च सप्तम्यां महिषीं तत्र दापयेत् ॥ १०५॥

अष्टम्यां वृषभं दत्त्वा नीलं लक्षणसंयुतम् ॥

नवम्यां तु गृहं दद्याच्चक्रं शंखं गदां तथा ॥ १०६ ॥

दशम्यां सर्वगंधांश्च एकादश्यां च मौक्तिकम् ॥

द्वादश्यां सुव्रतेन्नाद्यं प्रवालं विधिवत्तथा ॥ १०७ ॥

स्त्रियो देयास्त्रयोदश्यां भूतायां ज्ञानदो भवेत्॥

अमावास्यामनुप्राप्य सर्वदानानि दापयेत् ॥ १०८ ॥

एवं दानं प्रदत्त्वा तु दश कृत्वः फलं लभेत् ॥ १०९ ॥

॥ देव्युवाच ॥ ॥

भक्तिदानविहीना ये प्रभासं क्षेत्रमागताः ॥

स्नानमन्त्रविहीनाश्च वद तेषां तु किं फलम् ॥ ॥ 7.1.28.११० ॥

॥ ईश्वर उवाच ॥ ॥

सधना निर्द्धना वापि समंत्रा मंत्रवर्जिताः ॥

प्रभासे निधनं प्राप्ताः सर्वे यांति शिवालयम् ॥ १११ ॥

ये मंत्रहीनाः पुरुषा धर्महीनाश्च ये मृताः ॥

तेषामेकं विमानं तु ददामि सुमहत्प्रिये ॥ ११२ ॥

स्नानदानानुरूप्येण प्राप्नुवंति परं पदम् ॥

केचित्स्नानप्रभावेन केचिद्दानेन मानवाः ॥ ११३ ॥

केचिल्लिंगप्रणामेन केचिल्लिंगार्च्चनेन च ॥

केचिद्ध्यानप्रभावेन केचिद्योगप्रभावतः ॥ ११४ ॥

केचिन्मं त्रस्य जाप्येन केचिच्च तपसा शुभे ॥

तीर्थे संन्यसनैः केचित्केचिद्भक्त्यनुसारतः ॥११५ ॥

एते चान्ये च बहव उत्तमाधममध्यमाः ॥

सर्वे शिवपुरं यांति विमानैः सूर्यसंनिभैः ॥ ११६ ॥

त्रिशूलांकितहस्ताश्च सर्वे च वृषवाहनाः ॥

दिव्याप्सरोगणाकीर्णाः क्रीडंते मत्प्रभावतः ॥ ११७ ॥

एवं भक्त्यनुसारेण ददामि फलमव्ययम्॥

अलेपकं प्रभासं तु धर्माधर्मैर्न लिप्यते ॥ ११८ ॥

धर्मं चरंत्यधर्मं वा शिवं यांति न संशयः ॥ ११९ ॥

जन्मप्रभृति यो देवि नरो नेत्रविवर्जितः ॥

मम क्षेत्रे मृतः सोऽपि रुद्रलोके महीयते ॥ 7.1.28.१२० ॥

जन्मप्रभृति यो देवि श्रवणाभ्यां विवर्जितः ॥

प्रभासे निधनं प्राप्तः स भवेन्मत्परिग्रहः ॥ १२१ ॥

अथातः संप्रवक्ष्यामि तीर्थानां स्पर्शने विधिम् ॥

मन्त्रेण मंत्रितं तीर्थं भवेत्संनिहितं तथा ॥ ॥।१२२ ॥

प्रथमं चालभेत्तीर्थं प्रणवेन जलं शुचि ॥

अवगाह्य ततः स्नायादध्यात्ममन्त्रयोगतः ॥ १२३ ॥

ओंनमो देवदेवाय शितिकण्ठाय दंडिने ॥

रुद्राय वामहस्ताय चक्रिणे वेधसे नमः ॥ १२४ ॥

सरस्वती च सावित्री वेदमाता विभावरी ॥

संनिधानं कुरुष्वात्र तीर्थे पाप प्रणाशिनि ॥

सर्वेषामेव तीर्थानां मंत्र एष उदाहृतः ॥ १२५ ॥

इत्युच्चार्य नमस्कृत्वा स्नानं कुर्याद्यथाविधि ॥

उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रते ॥ १२६ ॥

सा तिथिर्वर्षमेकं तु उपोष्या भक्तितत्परैः ॥ १२७ ॥

॥ देव्युवाच ॥ ॥

कस्मिंस्तीर्थे नरैः पूर्वं प्रभासक्षेत्रमागतैः ॥

स्नानं कार्यं महादेवि तन्मे विस्तरतो वद ॥ १२८ ॥

॥ ईश्वर उवाच ॥ ॥

हंत ते संप्रवक्ष्यामि आद्यं तीर्थं महाप्रभम् ॥

पूर्वं यत्र नरैः स्नानं क्रियते तच्छृणुष्व मे ॥ १२९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये तीर्थयात्रा विधानवर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०२९



॥ ईश्वर उवाच ॥ ॥

अग्नितीर्थं ततो गच्छेत्सागरस्य तटे शुभे ॥

यत्राऽसौ वाडवो मुक्तः सरस्वत्या वरानने ॥ १ ॥

दक्षिणे सोमनाथस्य सर्वपापप्रणाशनम् ॥

तीर्थं त्रैलोक्यविख्यातं पद्मकं नाम नामतः ॥ २ ॥

धन्वंतरशते प्रोक्तं सोमेशाज्जलमध्यगम्॥

कुण्डं पापहरं प्रोक्तं शतहस्तप्रमाणतः ॥

तत्र स्नानं प्रकुर्वीत विगाह्य निधिमंभसाम् ॥ ३ ॥

आदौ कृत्वा तु वपनं सोमे श्वरसमीपतः ॥

शंकरं मनसा ध्यायन्केशांस्तत्र परित्यजेत् ॥

समुत्तार्य ततः केशान्भूयः स्नानं समाचरेत् ॥ ४ ॥

यत्किंचित्कुरुते पापं मनुष्यो वृत्तिकर्शितः ॥

तदेव पर्वतसुते सर्वं केशेषु तिष्ठति ॥ ५ ॥

तस्मात्सर्वप्रयत्नेन केशांस्तत्र विनिक्षिपेत् ॥

तदेव सोमनाथाग्रे कृत्वा तु द्विगुणं फलम्॥ ६ ॥

अग्नितीर्थसमीपस्थं कपर्द्दिद्वारमध्यगम् ॥

तत्रैव द्विगुणं ज्ञेयमन्यत्रैकगुणं स्मृतम् ॥ ७ ॥

क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने ॥

सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे ॥ ८ ॥

सर्वान्केशान्समुद्धृत्य च्छेदयेदंगुलद्वयम् ॥

ततो देवान्विधानेन तर्प्पयेत्पितृदेवताः॥९॥

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ 7.1.29.१० ॥

गंगायां भास्करे क्षेत्रे मातापित्रोर्गुरौ मृते ॥

आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥ ११ ॥

अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥

नासौ तत्फलमाप्नोति वपनाद्यच्च लभ्यते ॥ १२ ॥

विना मन्त्रेण यस्तत्र देवि स्नानं समाचरेत् ॥

समाप्नोति क्वचिच्छ्रेयो मुक्त्वैकं पर्ववासरम्॥ १३ ॥

विना मंत्रं विना पर्व क्षुरकर्म विना नरैः ॥

कुशाग्रेणापि देवेशि न स्प्रष्टव्यो महोदधिः ॥ ॥ १४ ॥

एवं स्नात्वा विधानेन दत्त्वाऽर्घ्यं च महोदधौ ॥

संपूज्य पुष्पगंधैश्च वस्त्रैः पुण्यानुलेपनैः ॥ १५ ॥

हिरण्मयं यथाशक्त्या निक्षिपेत्तत्र कंकणम् ॥ १६ ॥

एवं कृत्वा विधानं तु स्पर्शयेल्लवणोदधिम् ॥

मन्त्रेणानेन देवेशि ततः सांनिध्यतां व्रजेत् ॥ १७ ॥

ॐ नमो विष्णुगुप्ताय विष्णुरूपाय ते नमः ॥

सांनिध्ये भव देवेश सागरे लवणाम्भसि ॥ १८ ॥

अग्निश्च रेतो मृडया च देहो रेतोधा विष्णुरमृतस्य नाभिः ॥

एतद्ब्रुवन्पार्वति सत्यवाक्यं ततोऽवगाहेत्तु पतिं नदीनाम् ॥ १९ ॥

ॐ नमो रत्नगर्भाय मन्त्रेणानेन भामिनि ॥

कंकणं प्रक्षिपेत्तत्र ततः स्नायाद्यदृच्छया ॥7.1.29.२०॥

ततश्च तर्पयेद्देवान्मनुष्यांश्च पितामहान्॥

तिलमिश्रेण तोयेन सम्यक्छ्रद्धासमन्वितः॥२१॥

आजन्मशतसाहस्रं यत्पापं कुरुते नरः॥

सकृत्स्नात्वा व्यपोहेत सागरे लवणाम्भसि॥२२॥

वृषभस्तत्र दातव्यः प्रवृत्ते क्षुरकर्मणि॥

आत्मप्रकृतिदानं च पीतवस्त्रं तथैव च॥२३॥

अनेन विधिना तत्र सम्यक्स्नानं समाचरेत् ॥

स्पर्शयेद्वाडवं तेजश्चान्यथा दोषभाग्भवेत् ॥ २४ ॥

वरः शापश्च तस्यायं पुरा दत्तो यथा द्विजैः ॥। २५ ॥

॥ देव्युवाच ॥ ॥

कुत्र कुत्र महादेव जलस्नानाद्विशुध्यति ॥

किमर्थं सागरे दोषः प्राप्यते कौतुकं महत् ॥ २६ ॥

यत्र गंगादयः सर्वा नद्यो विश्रांतिमागताः ॥

यत्र विष्णुः स्वयं शेते यत्र लक्ष्मीः स्वयं स्थिता ॥ २७ ॥

किमर्थं वरशापं तु तस्य दत्तं द्विजैः पुरा ॥

सर्वं विस्तरतो ब्रूहि महान्मे संशयोऽत्र वै ॥ २८ ॥

॥ ईश्वर उवाच ॥ ॥

दीर्घसत्रं पुरा देवि प्रारब्धं सुरसत्तमैः ॥

प्रभासं तीर्थमासाद्य सम्यक्छ्रद्धा समन्वितैः ॥ २९ ॥

ततः सत्रावसाने तु दत्त्वा दानमनेकधा ॥

सर्वस्वं ब्राह्मणेन्द्राणां प्रभासक्षेत्रवासिनाम् ॥ 7.1.29.३० ॥

तावदन्ये द्विजास्तत्र दक्षिणार्थं समागताः ॥

देशीयास्तत्र वास्तव्याः शतशोऽथ सहस्रशः ॥ ३१ ॥

प्रार्थनाभङ्गभीताश्च ततो देवाः सवासवाः ॥

प्रणष्टास्तान्सुरान्दृष्ट्वा ब्राह्मणाश्चानुवव्रजुः ॥ ३२ ॥

खेचरत्वं पुरा देवि ह्यासीदग्रभुवां महत् ॥

तेन यांति द्रुतं सर्वे यत्र यत्र सुरालयाः ॥ ३३ ॥

एवं सर्वत्रगामित्वं तेषां वीक्ष्य दिवौकसः ॥

प्रविष्टाः सागरं भीता ऊचुर्वाक्यं च तं पुनः ॥ ३४ ॥

शरणं ते वयं प्राप्ता ब्राह्मणेभ्यो भयं गताः ॥

नास्ति वित्तं च दानार्थं तस्माद्रक्ष महोदधे ॥ ३५ ॥

एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ॥

एकतो भयभीतस्य प्राणिनः प्राणरक्षणम्॥

विशेषतश्च देवानां रक्षणं बहुपुण्यदम्॥ ३६ ॥

॥ समुद्र उवाच ॥ ॥

ब्राह्मणेभ्यो न भीः कार्या कथंचित्सुरसत्तमाः ॥

अहं वो रक्षयिष्यामि प्रविशध्वं ममोदरे ॥ ३७ ॥

ततस्ते विबुधाः सर्वे तस्य वाक्येन हर्षिताः ॥

प्रविष्टा गह्वरां कुक्षिं तस्यैव भय वर्ज्जिताः ॥ ३८ ॥

समुद्रोऽपि महत्कृत्वा निजरूपं च भूरिशः ॥
जलजाञ्जीवसंघातान्धृत्वा तीरसमीपतः ॥ ३९ ॥
ततश्चक्र उपायं स ब्राह्मणानां निपातने ॥
मत्स्यानामामिषं पक्त्वा महान्नेन च गोपितम् ॥ 7.1.29.४० ॥
अथोवाच द्विजान्सर्वान्प्रणिपत्य कृतांजलिः ॥
प्रसादः क्रियतां विप्रा मुहूर्तं मम सांप्रतम्॥ ४१ ॥
आतिथ्यग्रहणादेव दीनस्य प्रणतस्य च ॥
युष्मदर्थं मया सम्यगेतत्पाकं समावृतम् ॥
क्रियतां भोजनं भूयो गंतव्यमनु नाकिनाम् ॥ ४२ ॥
अथ ते ब्राह्मणा मत्वा समुद्रं श्रद्धयान्वितम् ॥
बाढमित्येव तं प्रोच्य बुभुजुः स्वर्णभाजने ॥ ४३ ॥
न व्यजानंत तन्मांसं गुप्तं स्वादु क्षुधार्दिताः ॥ ४४ ॥
ततस्तृप्ताश्च ते विप्रा ब्राह्मणा विगतक्षुधः ॥
आशीर्वादं ददुः सर्वे ब्राह्मणाः शंसित व्रताः ॥ ४५ ॥
भोजनांतो ब्राह्मणानां प्राणांतः क्षत्रजन्मनाम् ॥
आशीविषाणां सर्पाणां कोपो ज्ञेयो मृतावधिः ॥
प्रेरयामास देवान्वै गम्यतामित्युवाच तान् ॥४६॥
ततो देवाः सगंधर्वा गच्छंतः शीघ्रगा वियत् ॥
गच्छतस्तांस्ततो दृष्ट्वा ब्राह्मणास्तत्र वंदिता ॥ ४७ ॥
दक्षिणार्थं समुत्पेतुः सुरानुद्दिश्य पृष्ठतः ॥ ४८ ॥
ततः प्रपतिता भूमौ द्विजास्ते सहसा पुनः ॥
अभक्ष्यभक्षणात्ते वै ब्राह्मणा मांसभक्षणात्॥ ४९ ॥
निष्कृतिं तां परिज्ञाय समुद्रस्य रुषान्विताः ॥
ददुः शापं महादेवि रौद्रं रौद्रवपुर्द्धराः ॥ 7.1.29.५० ॥
यस्मादभक्ष्यं मांसं वै ब्राह्मणानां परं स्मृतम् ॥
त्वयोपहृतमस्माकं सुगुप्तं भक्ष्यसंयुतम् ॥ ५१ ॥
एकतः सर्वमांसानि मत्स्यमांसं तथैकतः ॥
एकतः सर्वपापानि परदारास्तथैकतः ॥ ५२ ॥

एवं वयं विजानन्तो यदि मांसस्य दूषणम् ॥

तथापि वंचिताः सर्वे अपरीक्षितकारिणः ॥ ५३ ॥

यस्मात्पापमते क्रूरं त्वया वै वञ्चिता वयम् ॥

मांसस्य भक्षणात्तस्मादपेयस्त्वं भविष्यसि ॥ ५४ ॥

अस्पृश्यस्त्वं द्विजेंद्राणामन्येषां च नृणां भुवि ॥

तवोदकेन ये मर्त्याः करिष्यंति कुबुद्धयः ॥ ५५ ॥

स्नानं ते नरकं घोरं प्रयास्यंति न संशयः ॥

कृतघ्नानां च ये लोका ये लोकाः पापकर्मिणाम् ॥ ५६ ॥

तांस्तवोदक संस्पर्शाल्लप्स्यंते मानवा भुवि ॥ ५७ ॥

॥ ईश्वर उवाच ॥ ॥

एवं शप्तः समुद्रस्तैर्ब्राह्मणैर्वरवर्णिनि ॥

ततो वर्षसहस्रं तु ह्यस्पृश्यः संबभूव ह ॥ ५८ ॥

ततस्त्रासाकुलो भूत्वा सर्वांस्तानिदमब्रवीत् ॥

देवकार्यमिदं विप्रा मया कृतमबुद्धिना ॥ ५९ ॥

बुभूषता परं धर्मं शरणागतसंभवम् ॥

कामात्क्रोधाद्भयाल्लोभाद्यस्त्यजेच्छरणागतम् ॥ 7.1.29.६० ॥

सत्याद्वापि स विज्ञेयो महापातककारकः ॥

युष्मद्भीत्या समायाताः स्वर्गिणः शरणं मम ॥ ६१ ॥

ते मया रक्षिताः सम्यग्यथाशक्त्या ह्युपायतः ॥

शोषयिष्येऽहमात्मानं यस्माच्छप्तः प्रकोपतः ॥ ६२ ॥

भवद्भिर्नोत्सहे स्थातुं जनस्पर्शविनाकृतः ॥

एवमुक्त्वा ततो देवि समुद्रः सरितांपतिः ॥

आत्मानं शोषयामास दुःखेन महता स्थितः ॥६३॥

ततो देवगणाः सर्वे स्थलाकारं महार्णवम् ॥

शनैःशनैः प्रपश्यंतो भयेन महताऽन्विताः ॥ ६४ ॥

ऊचुर्गत्वा तु लोकेशं देवदेवं पितामहम् ॥

अस्मत्कृते द्विजैः शप्तः सागरो ब्राह्मणोत्तमैः ॥ ६५ ॥

स शोषयति चात्मानं दुःखेन महतान्वितः ॥

समुद्राज्जलमादाय प्रवर्षंति बलाहकाः ॥ ६६ ॥

ततः संजायते सस्यं सस्याद्यज्ञा भवंति च ॥

यज्ञैः संजायते तृप्तिः सर्वेषां त्रिदिवौकसाम् ॥ ६७ ॥

एवं तस्य विनाशेन नाशोऽस्माकं भविष्यति ॥

तस्मात्त्वं रक्ष तं गत्वा यथा शोषं न गच्छति ॥ ६८ ॥

यथा तुष्यंति विप्रास्ते तथा नीतिर्विधीयताम् ॥ ६९ ॥

देवानां वचनाद्ब्रह्मा गत्वा सागरसन्निधौ ॥

समुद्रार्थे ययाचे तान्ब्राह्मणान्क्षेत्रवासिनः ॥ 7.1.29.७० ॥

॥ ब्रह्मोवाच ॥ ॥

प्रसादः क्रियतामस्य सागरस्य द्विजोत्तमाः ॥

यथा पवित्रतां याति मद्वाक्यात्क्रियतां तथा ॥ ७१ ॥

प्रदास्यति स युष्मभ्यं रत्नानि विविधानि च ॥ ७२ ॥

यूयं भविष्यथात्यंतं भूमिदेवा इति क्षितौ ॥

नाम्ना मद्वचनान्नूनं सत्यमेतन्मयोदितम् ॥ ७३ ।

॥ ब्राह्मणा ऊचुः ॥ ॥

नान्यथा कर्तुमिच्छामस्तव वाक्यं जगत्पते ॥

न च मिथ्याऽऽत्मनो वाक्यं प्रमाणं चात्र वै भवान् ॥ ७४ ॥

तन्नो वाक्यात्सुरश्रेष्ठ हितं वा यदि वाहितम् ॥

परं स्याज्जगतां श्रेयः सर्वेषां च दिवौकसाम् ॥

तथा कुरु जगन्नाथ अस्माकं हितकारणम् ॥ ७६ ॥

अथोवाच नदीनाथं ब्रह्मा लोकपितामहः॥

मा शोषय त्वमात्मानं हितं वाक्यं शृणुष्व मे ॥ ७६ ॥

नान्यथा शक्यते कर्त्तुं द्विजानां वचनं हि तत् ॥

ब्राह्मणाः कुपिता नूनं भस्मीकुर्युः स्वतेजसा ॥ ७७ ॥

देवान्कुर्युरदेवांश्च तस्मात्तान्नैव कोपयेत् ॥

यस्मादेव तव स्पर्शस्त्रिधा मेध्यो भविष्यति ॥ ७८ ॥

पर्वकाले च संप्राप्ते नदीनां च समागमे ॥

सेतुबंधे तथा सिंधौ तीर्थेष्वन्येषु संयुतः ॥ ७९ ॥

इत्येवमादिसर्वेषु मध्येऽन्यत्र न कर्मणि ॥

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ॥

तत्फलं तव तोयस्य स्पर्शादेव भविष्यति ॥7.1.29.८०॥

गयाश्राद्धे तु यत्पुण्यं गोग्रहे मरणेन च ॥

तत्फलं तव तोयस्य स्पर्शादेव भविष्यति ॥ ८१ ॥

अपेयस्त्वं तथा भावि स्वादमात्रेण केवलम् ॥

गंडूषमपि पीतं च तोयस्याशुभनाशनम् ॥ ८२ ॥

भविष्यति नृणां लोके तव सौख्यविवर्द्धनम् ॥

पितॄणां तव तोयेन यः करिष्यति तर्पणम् ॥

पूर्वोक्तेन विधानेन तस्य पुण्यफलं शृणु ॥ ९३ ॥

यावत्त्वं तिष्ठसे लोके यावच्चद्रार्कतारकाः ॥

तवोदकामृतैस्तृप्तास्तावत्स्थास्यंति पूर्वजाः ॥ ८४ ॥

माघे मासि च यः स्नायान्नैरंतर्येण भावितः ॥

पौंडरीकफलं तस्य दिवसेदिवसे भवेत् ॥ ८९ ॥

यात्रायामथवान्यत्र पर्वकाले शशिग्रहे ॥

अत्र स्नास्यति यः सम्यक्सागरे लवणांभसि ॥

अश्वमेधसहस्रस्य फलं प्राप्स्यति मानवः ॥ ८६ ॥

श्रीसोमेशसमुद्रस्य अंतरे ये मृता नराः ॥

पापिनोऽपि गमिष्यंति स्वर्गं निर्धूतकल्मषाः ॥ ८७ ॥

एवं भविष्यति सदा तव मद्वचनाद्विभो ॥

प्रयच्छस्व द्विजेंद्राणां रत्नानि विविधानि च ॥ ८८ ॥

तेन तुष्टा वरं भूयः प्रदास्यंति तवेप्सितम् ॥ ८९ ॥

॥ ईश्वर उवाच ॥ ॥

पितामहवचः श्रुत्वा बाढमित्येव सागरः ॥

ब्राह्मणेभ्यः सुरत्नानि ददौ श्रद्धा समन्वितः ॥7.1.29.९०॥

ब्राह्मणैर्ब्रह्मणो वाक्यमशेषं समनुष्ठितम् ॥

क्षुरकर्म तथा कृत्वा स्नानं सर्वेऽपि चक्रिरे ॥ ९१ ॥

एवं पवित्रतां प्राप्तस्तीर्थत्वं लव णोदधिः ॥

तस्य मध्ये महादेवि लिंगानां पंचकोटयः ॥ ९२ ॥

अस्मिन्मन्वंतरे देवि अदृश्याः सागरे कृताः ॥

अग्निकुण्डं च तत्रैव तथान्यत्पद्मकं सरः ॥९३ ॥

मध्ये तु प्रावृतं सर्वमस्मिन्मन्वंतरे प्रिये ॥

चक्रमैनाकयोर्मध्ये दिशि दक्षिणमुच्यते ॥ ९४ ॥

शातकुम्भमये कुम्भे धनुषायुतविस्तृते ॥ ॥

तत्र कुंभस्य मध्यस्थो वडवानलसंज्ञितः ॥ ९५ ॥

सूचीवक्त्रो महाकायः स जलं पिबते सदा ॥

एतदंतरमासाद्य अग्नितीर्थं प्रचक्षते ॥ ९६ ॥

तस्य मध्ये महासारं वाडवं यत्र वै मुखम् ॥

श्रीसोमेशाद्दक्षिणतो धन्वंतरशतावधि ॥

उत्तरान्मानसात्पूर्वं यावदेव कृतस्मरम् ॥ ९७ ॥

एतद्गोप्यं वरारोहे न देयं यस्य कस्यचित् ॥

ब्रह्मघ्नोपि विशुध्येत श्रुत्वैतन्नात्र संशयः ॥ ९८ ॥

एवं शापो वरो दत्तः सागरस्य यथा द्विजैः ॥

पूर्वं रुष्टैस्ततस्तुष्टैस्तत्सर्वं कथितं मया ॥९९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये समुदस्यापेयताकारण वर्णनंनामैकोनत्रिंशोऽध्यायः ॥२९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३०



॥ देव्युवाच ॥ ॥

स्नात्वा तत्राग्नितीर्थेषु कं देवं पूर्वमर्च्चयेत् ॥

निर्विघ्ना जायते येन यात्रा नृणां सुरेश्वर ॥

तन्मे यात्राविधानं तु यथावद्वक्तुमर्हसि ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

एवं स्नात्वा विधानेन दत्त्वार्घ्यं च महोदधौ ॥

संपूज्य गंधपुष्पैश्च वस्त्रैः पुष्पावलेपनैः ॥ २ ॥

हिरण्मयं यथाशक्त्या प्रक्षिपेत्तत्र कंकणम् ॥

ततः पितॄंस्तर्पयित्वा गच्छेद्देवं कपर्दिनम् ॥ ३ ॥

पुष्पैर्धूपैस्तथा गन्धैर्वस्त्रैः संपूज्य भक्तितः ॥

गणानां त्वेति मन्त्रेण अर्घ्यं चास्मै निवेदयेत् ॥ ४ ॥

शूद्राणामथ देवेशि मंत्रश्चाष्टाक्षरः स्मृतः ॥

तत्र सोमेश्वरं गच्छेद्देवं पापहरं परम् ॥ ५ ॥

स्नापयित्वा विधानेन जपेच्च शतरुद्रियम् ॥

तथा रुद्रान्सपञ्चांगास्तथान्या रुद्रसंहिताः ॥ ६ ॥

स्नापयेत्पयसा चैव दध्ना घृतयुतेन च ॥

मधुनेक्षुरसेनैव कुंकुमेन विलेपयेत् ॥ ७ ॥

कर्पूरोशीरमिश्रेण मृगनाभियुतेन च ॥

चन्दनेन सुगन्धेन पूज्यं संपूजयेत्ततः ॥ ८ ॥

धूपैर्बहुविधैर्देवं धूपयित्वा यथाविधि ॥

वस्त्रैः संवेष्टयेत्पश्चाद्दद्यान्नैवेद्यमुत्तमम् ॥ ९ ॥

आरार्तिकं ततः कृत्वा नृत्यं कुर्याद्यथेच्छया ।।

अष्टांगं प्रणिपत्यैवं गीतवाद्यादिकं ततः ॥ 7.1.30.१० ॥

धर्मश्रवणसंयुक्तं कार्यं प्रेक्षणकं विभोः ॥

ततो दद्याद्द्विजातिभ्यस्तपस्विभ्यश्च शक्तितः ॥ ११ ॥

दीनांधकृपणेभ्यश्च दानं कार्पटिकेषु च ॥

वृषभस्तत्र दातव्यः प्रवृत्ते क्रूरकर्मणि ॥

उपवासं ततः कुर्यात्तस्मिन्नहनि भामिनि ॥ १२ ॥

यस्मिन्नहनि पश्येत देवं सोमेश्वरं नरः ॥

सा तिथिर्वर्षमेकं तु उपोष्या भक्तितत्परैः ॥ १३ ॥

एवं कृत्वा नरो भक्त्या लभते जन्मनः फलम् ॥

तथा च सर्वतीर्थानां सकलं लभते फलम् ॥ ॥१४॥

उद्धरेत्पितृवर्गं च मातृवर्गं च भामिनि ॥

बाल्ये वयसि यत्पापं वार्धक्ये यौवनेऽपि वा ॥ १५ ॥

क्षालयेच्चैव तत्सर्वं दृष्ट्वा सोमेश्वरं नरः ॥

न दुःखितो न दारिद्रो दुर्भगो वा न जायते ॥ १६ ॥

सप्तजन्मान्तरेणैव दृष्टे सोमेश्वरे विभौ ॥

धनधान्यसमायुक्ते स्फीते सञ्जायते कुले ॥ १७ ॥

भक्तिर्भवति भूयोऽपि सोमनाथं प्रति प्रभुम् ॥

क्षीरेण स्नपनं पूर्वं ततो धारासमुद्भवम् ॥ १८ ॥

प्रथमे प्रथमे यामे महास्ना नमतः परम् ॥

मध्याह्ने देवदेवस्य ये प्रपश्यन्ति मानवाः ॥

संध्यामारार्तिकं भूयो न जायन्ते च मानुषाः ॥ १९ ॥

मत्वा कलियुगं रौद्रं बहुपापं वरानने ॥

नान्येन तरते दुर्गां कर्मणा दुर्गतिं नरः ॥ 7.1.30.२० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये सोमेश्वरमाहात्म्ये सोमेश्वरपूजामाहात्म्यवर्णनंनाम त्रिंशोध्यायः ॥ ३० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३१

https://sa.wikisource.org/s/g6c
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

सकारपंचकं प्रोक्तं यत्त्वया मम शंकर ॥

कथं तदत्र संवृत्तमेतन्मे संशयं महत् ॥ १ ॥

कथं वात्र समायाता कुतश्चापि सरस्वती ॥

कथं स वाडवो जातः कस्मिन्काले कथं ह्यभूत् ॥

तत्सर्वं विस्तरेणेदं यथावद्वक्तुमर्हसि ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि यथा जाता तस्मिन्क्षेत्रे सरस्वती ॥

यतश्चैव समुद्भूता सर्वपापप्रणाशिनी ॥ ३ ॥

हिरण्या वज्रिणी न्यंकुः कपिला च सरस्वती ॥ ४ ॥

ऋषिभिः पञ्चभिश्चात्र समाहूता यथा पुरा ॥

वाडवेनाग्निना युक्ता यथा जाता शृणुष्व तत् ॥ ५ ॥

पुरा देवासुरे युद्धे निवृत्ते सोमकारणात् ॥

पितामहस्य वचनात्तारां चन्द्रः समर्पयत् ॥ ६ ॥

ततो याताः सुराः स्वर्गं पश्यन्तोऽधोमुखा महीम् ॥

ददृशुस्ते ततो देवा भूम्यां स्वर्गमिवापरम् ॥ ७ ॥

आश्रमं मुनिमुख्यस्य दधीचेर्लोक विश्रुतम् ॥

सर्वर्तुकुसुमोपेतं पादपैरुपशोभितम् ॥

केतकीकुटजोद्भूत बकुलामोदमोदितम् ॥ ८ ॥

एवंविधं समासाद्य तदाश्रमपदं गुरु ॥

कौतुकाद्द्रष्टुमारब्धाः सर्वे देवा मनोरमम् ॥ ९ ॥

ते च तीर्थाश्रमे तस्मिन्यानान्युत्सृज्य संयताः ॥

प्रवृत्तास्तमृषिं द्रष्टुं प्राकृताः पुरुषा यथा ॥ 7.1.31.१० ॥

दृष्टवंतः सुराः सर्वे पितामहमिवापरम् ॥

ततस्त ऋषिणा सर्वे पाद्यार्घ्यादिभिरर्च्चिताः ॥ ११ ॥

यथोक्तमासनं भेजुः सर्वे देवाः सवासवाः ॥

तेषां मध्ये समुत्थाय शक्रः प्रोवाच तं मुनिम् ॥ १२ ॥

आयुधानि विमुच्याग्रे भवान्गृह्णात्विमानि हि ॥

तन्निशम्य वचः प्राह दधीचिः पाकशासनम् ॥ १३ ॥

मुक्तास्त्राणि ममाभ्याशे यूयं यात त्रिविष्टपम् ॥

तं शक्रः प्राह चैतानि कार्यकाले ह्युपस्थिते ॥ १४ ॥

देयानि ते पुनः शत्रूनभिजेष्यामहे रणे ॥

पुनःपुनस्ततः शक्रः संदिश्य मुनिसत्तमम् ॥ १५ ॥

अस्माकमेव देयानि न चान्यस्य त्वया मुने॥

बाढमित्युदिते शक्रमुक्तवान्मुनिसत्तमः॥१६॥

दास्यामि ते समस्तानि युद्धकाले विशेषतः॥

नास्य मिथ्या भवेद्वाक्यमिति मत्वा शचीपतिः॥

मुक्त्वास्त्राणि तदभ्याशे पुनः स्वर्गं गतस्तदा॥१७॥

अस्त्रार्पणं यः प्रयतः प्रयत्नाच्छृणोति राजा भुवि भाविताता‍त्मा ॥

सोऽभ्येति युद्धे विजयं परं हि सुतांश्च धर्मार्थयशोभिरामाः ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभा सखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वडवानलोत्पत्तिवृत्तान्ते दधीचिमहर्षये सर्वदेवकृतस्वस्वशस्त्रसमर्पणवर्णनंनामैकत्रिंशोध्यायः॥ ३१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३२

https://sa.wikisource.org/s/g4v
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततस्तेषु प्रयातेषु देवदेवेष्वसौ मुनिः ॥

शतवर्षाणि तत्रस्थस्तपसे प्रस्थितो द्विजः ॥ १ ॥

आश्रमादुत्तरात्तस्माद्दिव्यां दिशमथो त्तराम्॥

सुभद्रापि महाभागा तस्य या परिचारिका ॥ २ ॥

अस्त्रादानेऽसमर्था सा ऋषिं प्रोवाच भामिनी ॥

नाहं नेतुं समर्थास्मि शस्त्राण्यालभ्य पाणिना ॥३॥

जलेन सह तद्वीर्यं पीतवान्स ऋषिस्ततः ॥

आत्मसंस्थानि सर्वाणि दिव्यान्यस्त्राण्यसौ मुनिः ॥

कारयित्वोत्तरामाशां जगाम तपसां निधिः ॥ ४ ॥

गंगाधरं शुक्लतनुं सर्प्पैराकीर्णविग्रहम् ॥

शिववत्सुखदं पुंसामपश्यत्स हिमाचलम् ॥ ५ ॥

तथाश्रमं ददर्शोच्चैरश्वत्थैः परिपालितम् ॥

चंद्रभागोपकंठस्थं समित्पुष्पकुशान्वितम् ॥ ६ ॥

स तस्मिन्मुनिशादूलो ह्यवसन्मुनिभिः सह ॥

सुभद्रया च संयुक्तश्चंद्रश्चंद्रिकया यथा ॥ ७ ॥

एकदा वसतस्तस्य सुभद्रा परिचारिका ॥

स्नानार्थं यातुमारब्धा चतुर्थेऽह्नि रजस्वला ॥ ८ ॥

व्रजन्त्या च तया दृष्टं कौपीनाच्छादनं पुनः ॥

परि त्यक्तं विदित्वैवं दैवयोगाद्गृहाण सा ॥ ९ ॥

परिधाय पुनः सा तु कौपीनं रेतसायुतम् ॥

एकांते स्नातुमारब्धा जलाभ्याशे यथासुखम् ॥ 7.1.32.१० ॥

ततो देवी यथाकाममकस्माद्वीक्षते हि सा ॥

स्वोदरस्थं समुत्पन्नं गर्भं गुरुभरालसा ॥ ११ ॥

शोचयित्वात्मनात्मानमगर्भाहमिहागता ॥
तत्केन मन्दभागिन्या ममैवं दूषणं कृतम्॥ १२ ॥
लज्जाभिभूता सा तत्र प्रविश्याश्वत्थवाटिकाम् ॥
तत्र तं सुषुवे गर्भमविज्ञाय कुतो ह्ययम् ॥ १३ ॥
पुनरेव हि सा स्नात्वा अविज्ञायात्मदुष्कृतम्॥
शापं दातुं समारब्धा गर्भकर्त्तरि दुःसहम् ॥ १४ ॥
ज्ञानाद्वा यदि वाज्ञानाद्येनेयं दूषणा कृता ॥
सोऽद्यैव पंचतां यातु यद्यहं स्यां पतिव्रता ॥ १५ ॥
यद्यहं मनसा वापि कामये नापरं पतिम् ॥
एतेन सत्यवाक्येन यातु जारः स्वयं क्षयम् ॥ ॥ १६ ॥
एवं शस्वा तु तं देवी ह्यज्ञात्वा गर्भकारिणम् ॥
पुनर्यातुं समारब्धा तद्दधीचिनिकेतनम् ॥ १७ ॥
तत्र चार्कप्रतीकाशं गर्भमुत्सृज्य सा तदा ॥
प्राप्ता तपोवनं रम्यं यत्रासौ मुनिपुंगवः ॥ १८ ॥
अत्रांतरे सर्वदेवा लोकपाला महाबलाः ॥
अस्त्राणां कारणार्थाय मुनेराश्रममागताः ॥ ॥ १९ ॥
उवाच तं मुनिं शक्रो न्यासो यस्तव सुव्रत ॥
दत्तोऽस्माभिस्तु शस्त्राणां तानि क्षिप्रं प्रयच्छ नः ॥ 7.1.32.२० ॥
ऋषिराह पुरा यत्र स्थापि तानि ममाश्रमे ॥
तत्रैव तानि तिष्ठंति न चानीतानि वासव ॥ २१ ॥
यत्तु तेषां बलं वीर्यं संग्रामे शत्रुसूदन ॥
तन्मया पीतमखिलं सह तोयेन वासव ॥ २२॥
एवं स्थिते मयाऽस्त्राणि यदि देयानि तेऽनघ ॥
ततोस्थीनि प्रयच्छामि तदाकाराणि सुव्रत ॥ २३ ॥
एवमुक्तः सहस्राक्षस्तमाह मुनिसत्तमम् ॥
नान्येषु तद्बलं रौद्रं यत्तु तेषु व्यवस्थितम् ॥ २४ ॥
यस्मात्तेषु विनिक्षिप्य सहस्रांशं स्वतेजसाम् ॥
अस्माकं दत्तवान्रुद्रो रक्षार्थं जगतां शिवः ॥ २५ ॥

तद्वयं तानि सर्वाणि गृहीत्वा च व्यवस्थिताः ॥
लोकस्य रक्षणार्थाय संज्ञेयं तेन लोकपाः ॥ २६ ॥
अमीषामपि शस्त्राणा मुत्तमं वज्रमिष्यते ॥
तद्धारणाद्यतोऽस्माकं देवराजत्वमिष्यते ॥ २७ ॥
वज्रादप्युत्तमं चक्रं यत्तद्विष्णुपरिग्रहे ॥
दैत्यदानवसंघानां तदायत्तो जयोऽभवत् ॥ २८ ॥
तस्मात्तानि यथास्माभिः प्राप्यते मुनिसत्तम ॥
तथा कुरुष्व संचिन्त्य कार्यं कार्यविदां वर ॥ २९ ॥
एवमुक्ते मुनिः प्राह तं शक्रं पुरतः स्थितम् ॥
तत्प्राप्त्यर्थमुपायं तु कथयामि तवापरम् ॥ 7.1.32.३० ॥
यान्येतानि ममास्थीनि यूयं तैस्तानि सर्वशः ॥
निर्मापयध्वं शस्त्राणि तदाकाराणि सर्वशः ॥ ३१ ॥
एतानि तत्समुत्थानि तेषामप्यधिकं बलम् ॥
साधयिष्यति भवतां संग्रामे यन्ममेहितम् ॥ ॥ ३२ ॥
तमुवाच ततः शक्रो दधीचिं तपसोनिधिम् ॥
प्राणहारं प्रकर्तुं ते नाहं शक्तो यमिच्छसि ॥ ३३ ॥
न चामृतस्य तेऽस्थीनि ग्रहीतुं शक्तिरस्ति नः ॥
तस्मात्सर्वं समालोच्य यत्कर्तव्यं तदुच्यताम् ॥ ३४ ॥
एवमुक्तो मुनिः प्राह एतदेव कलेवरम् ॥
त्यजामि स्वयमेवाहं देव कार्यार्थसिद्धये ॥ ३५ ॥
अध्रुवं सर्वदुःखानामाश्रयं सुजुगुप्सितम् ॥
यदा ह्येतत्तदा युक्तः परित्यागोऽस्य सांप्रतम् ॥ ३६ ॥
अस्य त्यागेन मे दुःखं संसारोत्थं न जायते ॥
यस्माज्जन्मांतरे जातो मृतोपि हि भवेत्पुनः ॥ ३७ ॥
भार्या भगिनी दुहिता स्वकर्मफलयोजनात् ॥
जाता तेनैव संसारे रतिकार्ये जुगुप्सिता ॥ ३८ ॥
यस्माच्च स्वयमेवैतद्वपुस्त्यजति वै ध्रुवम् ॥
तस्मादस्य परित्यागो वरः कार्योऽचिरात्स्वयम् ॥ ३९ ॥।

एवं पुरंदरस्याग्रे संकीर्त्य स महामुनिः ॥

दधीचिः प्राणसंहारं कृतवान्सत्वरं तदा ॥ 7.1.32.४० ॥

गतासुं तं विदित्वैवं विबुधास्तत्कलेवरम्॥ मां

सशोणितनिर्मुक्तं कथं कार्यं व्यचिंतयन् ॥ ४१ ॥

ततस्तदस्थिशुद्ध्यर्थमुवाचेदं सुरेश्वरः ॥

गौरीणां कर्कशा जिह्वा ता एतदुत्खिदंत्विति ॥ ४२ ॥

ततस्तैर्विबुधैर्नंदा यदा लोकेषु संस्थिता॥

ध्याता तदोपयाता सा सखीभिः परिवारिता॥४३॥

नंदा सुभद्रा सुरभिः सुशीला सुमनास्तथा॥

इति गोमातरः पंच गोलोकाच्च समागताः॥४४॥

ऊचुस्तान्विबुधान्सर्वानस्माभिर्यत्प्रयोजनम्॥

कर्त्तव्यं तत्करिष्यामः कथ्यतां सुविचारितम्॥ ४५॥

देवा ऊचुः॥

यदेतदृषिणा त्यक्तं स्वयमेव कलेवरम्॥

एतन्मांसादिनिर्मुक्तं क्रियतामस्थिपंजरम्॥४६॥

तत्कृत्वा गर्हितं कर्म देवादेशात्सुदारुणम् ॥

पुनः पितामहं द्रष्टुं गतास्ताः सुरसत्तमाः ॥ ४७ ॥

ततस्तु दारुणं कर्म यच्च ताभिरनुष्ठितम् ॥

पितामहस्य तत्सर्वं समाचख्युर्यथातथम् ॥ ४८ ॥

तच्छ्रुत्वा विबुधान्सर्वान्समाहूय पितामहः ॥

सर्वगात्रेष्वस्पृशत सुरभीः शुद्धिकाम्यया ॥ ४९ ॥

तास्तु तैर्विबुधैः स्पृष्टाः सुपूताः समवस्थिताः ॥

मुखमेकं परं तासां न स्पृष्टमशुचि स्मृतम् ॥ 7.1.32.५० ॥

अपवित्रं भवेत्तासां मुखमेकं जुगुप्सितम् ॥

शेषं शरीरं सर्वासां विशिष्टं तु सुरैः कृतम् ॥ ५१ ॥

सरस्वत्या तु ताः प्रोक्ता भवंत्यो ब्रह्मघातिकाः ॥

अन्यथा कारणात्कस्मान्न स्पृष्टममरैर्मुखम् ॥ ५२ ॥

ततस्ताभिस्तु सा प्रोक्ता देवी तत्र सरस्वती ॥

नैतत्ते वचनं युक्तं वक्तुमेवंविधं मुखम् ॥ ५३ ॥

अस्माकमेव हृदयमनेन वचसा त्वया ॥

निर्दग्धं येन तस्मात्त्वमचिराद्दाहमाप्स्यसि ॥ ५४ ॥

शापं दत्त्वा ततस्तस्याः सरस्वत्यास्तु तास्तदा ॥

गोलोकं गतवत्यस्तु सुरभ्यः सुरपूजिताः ॥ ५५ ॥

आहूय विश्वकर्माणं तक्षाणं सुरसत्तमाः ॥

अस्माकं कुरु शस्त्राणि तमाहुर्युद्धकारणात् ॥ ५६ ॥

एतद्वचनमाकर्ण्य तानि पूतैर्नवैर्दृढैः ॥।

अस्त्राणि कारयामास दधीचेरस्थिसंचयैः ॥ ५७ ॥

प्रमाणाकारयुक्तानि देवानां तानि संयुगे ॥

अजेयानि यथा चासंस्तथा चासौ विनिर्ममे ॥। ॥ ५८ ॥

वज्रमिंद्रस्य शक्तिं च वह्नेर्दंडं यमस्य च ॥

खड्गं तु निऋतेः पाशं सम्यक्चक्रे प्रचेतसः ॥५९॥

वायोर्ध्वजं कुबेरस्य गदां गुर्वीं च निर्ममे ॥

विश्वकर्मा तथा शूलमीशानस्य च निर्ममे ॥ 7.1.32.६० ॥

गृहीत्वैतानि वै देवाः शस्त्राण्यस्त्रबलं तदा ॥

विजेतुं च ततो दैत्यान्दानवांश्च गतास्तदा ॥ ॥। ६१ ॥

अत्रांतरे सुभद्रापि दधीचेरौर्ध्वदैहिकम् ॥

कृत्वा तैर्मुनिभिः सार्धमन्वेष्टुं सा गता सुतम् ॥ ६२ ॥

अश्वत्थवाटिकायां च तमपश्य न्मनोरमम् ॥

दृष्ट्वा रोदिति जीवंतं मुक्त्वा बाष्पमथाचिरम् ॥ ६३ ॥

अंबेत्याभाष्य तेनोक्ता मा रोदीस्त्वं यशस्विनि ॥

सर्वं पुराकृतस्यैतत्फलं तव ममापि हि ॥ ६४ ॥

यद्यथा यत्र येनेह कर्म जन्मांतरार्जितम् ॥

तदवश्यं हि भोक्तव्यं त्यज शोकमतोऽखिलम् ॥ ६५ ॥

मत्परित्यागलज्जा च न ते कार्येह सुन्दरि ॥

फलं पुराकृतस्यैतद्भोक्तव्यं तन्मयापि हि ॥ ६६ ॥

मातर्ममोपरि कुरु पुत्रस्नेहं यशस्विनि ॥

बालस्य हि परित्यागा न्माता दोषेण लिप्यते ॥ ६७ ॥
बालेनाभिहिता सा तु ध्यात्वा देवं जनार्द्दनम् ॥
कृतांजलिरुवाचेदं कथ्यतां मे सुनिश्चितम् ॥ ६८ ॥
न विजानाम्यहं तथ्यं कस्यायं वीर्यसंभवः ॥
तस्मात्कथय देवेश मम ते निश्चितं वचः ॥ ६९ ॥
आहोक्ते मातरं कृष्णः सुभद्रां वै जनार्द्दनः ॥
दधीचेस्तन यश्चायं भर्तुस्ते क्षेत्रसंभवः ॥ 7.1.32.७० ॥
तस्योत्पत्तिं विदित्वैवं सुभद्रा हृष्टमानसा ॥
बालमंके समारोप्य अरोदीदार्तया गिरा ॥ ७१ ॥
आह बालक उत्पन्नः शोकस्य वद कारणम्॥
अथोक्तः स्तन्यरहितं कथं ते जीवितं धृतम् ॥ ७२ ॥
यस्माच्चतुर्विधा सृष्टिर्जीवानां ब्रह्मणा कृता ॥
जरायुजांडजोद्भिज्ज स्वेदजाश्च तथा स्मृताः ॥ ७३ ॥
नरस्त्रीनपुंसकाख्याश्च जातिभेदा जरायुजाः ॥
चतुष्पदाश्च पशवो ग्राम्याश्चारण्यजास्तथा ॥ ७४ ॥
अण्डजाः पक्षिणः सर्वे मीनाः कूर्मसरीसृपाः ॥
स्वेदजा मत्कुणा यूका दंशाश्च मशकास्तथा ॥ ७५ ॥
उद्भिज्जाः स्थावराः प्रोक्तास्तृणगुल्मलता दयः ॥
अन्येऽप्येवं यथायोगमंतर्भूताः सहस्रशः ॥ ७६ ॥
अण्डजाः पक्षपातेन जीवंति शिशवो भुवि ॥
ऊष्मणा स्वेदजाः सर्वे उद्भिज्जाः सलिलेन हि ॥ ७७ ॥
समुदायेन भूतानां पञ्चानामुद्भिजं भुवि ॥
जरायुजाश्च स्तन्येन विना जीवितुमक्षमाः ॥ ७८ ॥
विना तेन कथं पुत्र त्वया प्राणा विधारिताः ॥
तां तथा जननीं प्राह स च बाष्पाविलेक्षणाम्॥७९॥
अश्वत्थफलनिर्यासपानात्प्राणा मया धृताः ॥
गौणं तदा तया तस्य पिप्पलादेति कल्पि तम् ॥7.1.32.८०।।
नाम तेन जगत्यस्मिन्नित्यं ख्यातं महात्मनः ॥

तत्रस्थैर्मुनिभिस्तस्य कृताः सर्वैर्यथाक्रमम् ॥८१॥

संस्काराः पिप्पलादस्य वेदोक्ता वेद पारगैः॥

षडंगोपांगसंयुक्ता वेदास्तेन समुद्धृताः ॥

तदाश्रमनिवासिभ्यो मुनिभ्यश्च सुपुष्कलाः ॥८२॥

पुनस्तत्र स्थितश्चासौ दृष्ट्वा मुनिकुमारकान्॥

स्वपित्रंकगतान्प्राह जननीं तां शुचिस्मिताम् ॥८३॥

पिता मे कुत्र भद्रं ते सुभद्रे कथय स्फुटम् ॥

तदेकांतस्थितो येन बालक्रीडां करोम्यहम् ॥ ॥ ८४ ॥

एवं सा जननी तेन यदा पृष्टा तपस्विनी ॥

तदा रोदितुमारब्धा नोत्तरं किञ्चिदब्रवीत् ॥ ८५ ॥

रुदन्तीं तां समालोक्य कुद्धोऽसौ मुनिदारकः ॥

किमसौ कुत्सितः कश्चिद्येन नाख्यासि तं मम ॥ ८६ ॥

इत्युक्ते सुतमाहैवं विबुधैस्ते पिता हतः ॥

कोपं त्यजस्व भद्रं ते दधीचिः कथितो मया ॥८७॥

कोपवह्निप्रदीप्तात्मा प्राह तां जननीं पुनः ॥

किमपकृतं सुराणां मत्पित्रा कथयस्व तत् ॥८८॥

॥ सुभद्रोवाच ॥ ॥

शस्त्राणां कारणान्मूढैर्हतोऽसौ मुनिपुंगवः ॥ प्र

यच्छन्नपि चान्यानि तदाकाराणि सुव्रत ॥ ८९ ॥

श्रुत्वैतद्वचनं सोऽपि मुनिरुग्रतपास्तदा ॥

पिता मे यो हतो देवैस्तेषां कृत्यां महाबलाम् ॥ 7.1.32.९० ॥

उत्थाप्य पातयिष्यामि मूर्द्ध्नि प्राणापहारिकाम् ॥

पितामहमहं मुक्त्वा नैव हन्यो भवेद्यदि ॥ ९१ ॥

अन्यान्प्रमथयिष्यामि कृत्याशस्त्रेण संगतान् ॥

शरणं यदि यास्यंति गीर्वाणा मद्भयातुराः ॥

तथापि पातयिष्यामि तेनैव सह संगतान् ॥ ९२ ॥

मत्वैवं तमृषिं कुद्धं सर्वे ते सुरसत्तमाः ॥

ब्रह्माणं शरणं प्राप्ता भयेन महताऽर्द्दिताः ॥ ९३ ॥

तांस्तस्य शरणं प्राप्ताञ्ज्ञात्वा देवः कृपान्वितः ॥।
तत्रैव गत्वा त्वरितं प्राह देवाञ्जनार्द्दनः ॥ ९४ ॥
भवतां रक्षणोपायश्चिंतितोऽत्र मयाऽधुना ॥
तेन तां मोहयिष्यामि कृत्यां हंतुमुपस्थिताम् ॥९५॥।
अत्रांतरे पिप्पलादः पितुर्वैरमनुस्मरन् ॥
हंतुं सुरान्व्यवसितः प्रविवेश हिमाचलम् ॥ ९६ ॥
श्रुत्वा तदप्रियं वाक्यं मातुर्वक्त्राद्विनिर्गतम् ॥
पिप्पलादः पुनर्यातस्तस्मात्स्थानाद्धिमाचलम् ॥ ९७ ॥
स्वर्गसोपानवत्पुंसां स्थलीभूतमिवांबरम् ॥
शेषस्याभोगसंकाशं प्राप्तोऽसौ तुहिनाच लम् ॥ ९८ ॥
प्रतिज्ञां कुरुते यत्र स्थितः स्थाणुरिवाचलः ॥
हंतारो ये मम पितुस्तान्हनिष्यामि चारणात् ॥ ९९ ॥
कृत्याशस्त्रेण सकलानमर त्वेन गर्वितान् ॥
तस्मिन्स्थितः प्रकुपितः शिवायतनसंसदि ॥ 7.1.32.१०० ॥
अत्रस्थः साधयिष्यामि तां कृत्यां चिंतयन्हृदि ॥
कृत्यां वा साधयिष्यामि यास्ये वा यमसादनम् ॥ १०१ ॥
निर्द्वन्द्वो निर्भयो भूत्वा निराहारो ह्यहर्निशम् ॥
सव्येन पाणिना सव्यं निर्मथ्योरुमहं पुनः ॥ १०२ ॥
तस्मा दुत्पादयिष्यामि महाकृत्यामिति स्थितः ॥
संवत्सरे तस्य गते ऊरुगात्राद्विनिःसृता ॥ १०३ ॥
वडवा गुरुभारार्त्ता वाडवेनान्विता तदा ॥
ऊरो र्निर्गत्य सा तस्मात्सुषुवे सुमहाबलम् ॥१०४॥
वडवा स्वोदराद्गर्भं ज्वालामालासमाकुलम् ॥
विमुच्य तमृषेस्तस्य पुरो गर्भं समुज्जवलम् ॥१०५॥
पुनर्गता क्वापि तदा न ज्ञाता मुनिना हि सा ॥
वडवानलो नरस्तस्याः स गर्भो निःसृतस्तदा ॥१०६॥
कल्पांत इव भूतानां कालाग्निरिव वर्चसा ॥
विद्युत्पुञ्जप्रतीकाशं तं दृष्ट्वा पुरतः स्थितम् ॥ १०७ ॥

स चापि विस्मितोऽत्यंतं किमेतदिति चिंतयन् ॥
ततस्तेन पुरःस्थेन वाडवेन च वह्निना ॥ ॥ १०८ ॥
ऋषिः प्रोक्तः पिप्पलादः साधितोऽहं त्वया बलात् ॥
इदानीं ते मया कार्यं कर्त्तव्यं यत्समाहितम् ॥ १०९ ॥
करिष्यामीह तत्सर्वम साध्यमपि साध्यताम् ॥
स्वोरुं निर्मथ्य जनितो येन संवत्सरादहम् ॥
तातोरुणा विहीनोऽपि करिष्ये त्वत्समीहितम् ॥ 7.1.32.११० ॥
तच्छ्रुत्वा वचनं तस्य मुनिः कोपसमन्वितः ॥
प्रोवाच विबुधान्सर्वान्मद्दत्तान्भक्षय स्वयम् ॥ १११ ॥
पितुर्वधात्क्रोधकृतावधानं मत्वा सुरा रौद्रमतीव घोरम् ॥
समेत्य सर्वे पुरुषं पुराणं समाश्रितास्ते सहसा सभार्याः ॥ ११२ ॥
स तान्समाश्वास्य सुरान्वरिष्ठं कोपानलं तत्र ययौ प्रहृष्टः ॥
दृष्ट्वा च तं वै रविपुंजकाशमुवाच विष्णुर्वचनं वरिष्ठम् ॥ ११३ ॥
अहं सुरेशान तवैव पार्श्वं विसर्जितो जातभयैश्च देवैः ॥
मत्तः शृणु त्वं वचनं हि पथ्यं यच्चारणानां भवतोऽपि पथ्यम् ॥ ११४ ॥
ज्ञातं बलं ते विबुधैरचिंत्यं विनाशनं चात्मवतां ह्यवश्यम् ॥
एवं स्थिते कुरु वाक्यं सुराणामेकैकमद्धि प्रतिवासरं त्वम् ॥ ११५ ॥
मुख्यानां कोटयस्त्रिंशत्सुराणां बलशालिनाम् ॥
कथं तु भक्षणं तेषां युगपत्त्वं करिष्यसि ॥ ११६ ॥
तस्मादेकैकशस्तेषां कर्त्तव्यं भक्षणं त्वया ॥
नैकेन भवता शक्या विधातुं भक्षणक्रिया ॥ ११७ ॥
तथा च पांडुरोगित्वं हुतभुक्प्राप्तवान्पुरा ॥
अतिभक्षणं न युक्तं तस्मात्कुरु मतिं मम ॥ ११८ ॥
तथा च युगपत्तेषु भक्षितेषु पुनस्त्वया ॥
प्रत्यहं भक्षणोपायश्चिंतितव्यो बुभुक्षया ॥ ११९ ॥
सफलैव प्रतिज्ञा ते नानृतं मुनिभाषितम् ॥
एवं कृतेऽपि ते सर्वं भविष्यति समीहितम् ॥7.1.32.१२॥॥
तत्करिष्यायहं सर्वमाहैवं स जनार्दनः ॥

एकैकशः स विबुधान्भक्षयिष्यति वाडवः ॥ १२१ ॥

ततः सुराः सुरेशानं तं विष्णुममितौजसम् ॥

प्रणम्याहुर्यथायुक्तं शोभनं भवता कृतम् ॥ १२२ ॥

भूयोऽद्य पुनरेवास्य दोषस्योपशमक्रियाम् ॥

कर्तुं त्वमेव शक्तोऽसि नान्यस्त्राता दिवौक साम्॥ १२३ ॥

ततः पीतांबरधरः शंखचक्रगदाधरः ॥

युष्मद्भयं हरिष्यामि तत्सुरानाह माधवः ॥ १२४ ॥

श्रुत्वैतद्विबुधाः सर्वे हर्षेणोत्फुल्ल लोचनाः ॥ १२५ ॥

ततस्तान्विबुधान्दृष्ट्वा प्रोवाच स तु वाडवः ॥

किमिदानीं मया कार्यं भवतां कथ्यतां हि तत् ॥ १२६ ॥

अत्रान्तरे विश्व तनुर्महौजा विमोहयंस्तं ज्वलनं स्वबुद्ध्या ॥

प्रोवाच पूर्वं विहिता यदापस्ता भक्षयस्वेति महानुभावः ॥ १२७ ॥

एतद्व्यवसितं विष्णोर्यः शृणोति समाहितः ॥

सोऽतिचारभयान्मुक्तो ज्ञानं मुक्तिमवाप्नुयात् ॥ १२८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वडवानलवंचनवृत्तान्तवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३३



॥ देव्युवाच ॥ ॥

पितुर्वधामर्षसुजात मन्युना यद्यत्कृतं कर्म पुरा महर्षिणा ॥

दधीचिपुत्रेण सुरप्रसाधिना सर्वं श्रुतं तद्धि मया समाधिना ॥ १ ॥

पुनःपुनर्वै विबुधैः समानं यद्वृत्तमासी त्किमपि प्रधानम् ॥

कार्यं हि तत्सर्वमनुक्रमेण विज्ञातुमिच्छामि कुतूहलेन ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

उक्तो यदासौ विबुधैः समस्तैरापः पुरा त्वं भुवि भक्षयस्व ॥

यतोऽमराणां प्रथमं हि जाता आपोऽग्रजाः सर्वसुरासुरेभ्यः ॥ ३ ॥

तेनैवमुक्तस्तु महात्मना तदा प्रदर्शयध्वं मम ता यतः स्थिताः ॥

पीत्वा सुराः सर्वमहं पुरस्तात्कृत्यं करिष्ये सुरभक्षणं हि ॥ ४ ॥

तत्रापि नेतुं यदि मां समर्था यत्रासते वारिचयाः समेताः ॥

अतोऽन्यथा नाहमलीकवादी प्राणे प्रयाते मुनिवाक्यकारी ॥ ५ ॥

आहोक्ते पुंडरीकाक्ष और्वं हि वाडवं तदा ॥

त्वां प्रापयिष्ये यत्रापः केन यानेन वाडव ॥ ६ ॥

॥ वाडव उवाच ॥ ॥

नाहं हयादिभिर्यानैर्गंतुं तत्र समुत्सहे ॥

कुमारीकरसंपर्कमेकं मुक्त्वा मतं हि मे ॥ ७ ॥

॥ विष्णुरुवाच ॥ ॥

एतत्ते सुलभं यानं तां कन्यामानयाम्यहम् ॥

या त्वां नेतुं समर्था स्यादपां स्थानं सुनिश्चितम् ॥ ८ ॥

॥ ईश्वर उवाच ॥ ॥

सुरभीशापसंतप्ता प्रागुपात्तदशाफला ॥

सरस्वती यानभूता तस्य सा विष्णुना कृता ॥ ९ ॥

ततोऽब्रवीद्विभुर्गंगां पार्श्वतः समुपस्थिताम् ॥

एनं वह्निं महाभागे वेगान्नय महोदधिम्॥
नान्या शक्ता समानेतुं त्वां विना लोकपावनि ॥ 7.1.33.१० ॥
॥ गङ्गोवाच ॥ ॥
नास्ति मे भगवञ्छक्ति रौर्वं वोढुं जगत्पते॥
रौद्ररूपी महानेष दहत्येवानलो भृशम् ॥ ११ ॥
ततस्तु यमुनां प्राह सिन्धुं तस्या ह्यनन्तरम् ॥
अन्या नदीश्च विविधाः पृथक्पृथगुदारधीः ॥ १२ ॥
अशक्तास्ताः समानेतुं पृष्टाश्च सुरसत्तमैः ॥
ततः सरस्वतीं प्राह देवदेवो जनार्द्दनः ॥
त्वमेव व्रज कल्याणि प्रतीच्यां लवणोदधौ ॥ १३ ॥
एवं कृते सुराः सर्वे भविष्यन्ति भयोज्झिताः ॥
अन्यथा वाडवेनैते दह्यंते स्वेन तेजसा ॥ १४ ॥
तस्मात्त्वं रक्ष विबुधाने तस्मात्तुमुलाद्भयात् ॥
मातेव भव सुश्रोणि सुराणामभयप्रदा ॥ १५ ॥
एवमुक्ता हि सा तेन विष्णुना प्रभविष्णुना ॥
आह नाहं स्वतन्त्रास्मि पिता मे ध्रियते चिरात् ॥ १६ ॥
तस्याहं कारिणी नित्यं कुमारी च धृतव्रता ॥
कालत्रयेप्यस्वतन्त्रा श्रूयते विबुधैः सुता ॥ १७ ॥
पित्रादेशं विना नाहं पदमेकमपि क्वचित् ॥
गच्छामि तस्मात्कोऽप्यन्य उपायश्चिंत्यतां हरे ॥ १८ ॥
तत्स्वरूपं विदित्वैवं समभ्येत्य पितामहम् ॥
तमब्रवीद्वासुदेवो देवकार्यमिदं कुरु ॥ १९ ॥
नान्यथा शक्यते नेतुं वाडवोऽग्निर्महाबलः ॥
अदृष्टदोषां मुक्त्वेमां कुमारीं तनयां तव ॥ 7.1.33.२० ॥
तच्छ्रुत्वा विष्णुना प्रोक्तं कुमारीं तनयां तदा ॥
शिरस्याधाय सस्नेहमुवाच प्रपितामहः ॥ २१ ॥
याहि देवि सुरान्सर्वान्रक्ष त्वं भयमागतान् ॥
विनिक्षिप त्वं नीत्वैनं वाडवं लवणांभसि ॥

पितुर्वाक्यं हि सा श्रुत्वा प्रोवाच श्रुतिलक्षणा ॥२२॥

॥ सरस्वत्युवाच ॥ ॥

एषास्मि प्रस्थिता तात तव वाक्या दसंशयम्॥

रौद्रोऽयं वाडवो वह्निस्तनुं मे भक्षयिष्यति ॥ २३ ॥

प्राप्तं कलियुगं रौद्रं सांप्रतं पृथिवीतले ॥

लोकः पापसमाचारः स्पर्शयिष्यति मां प्रभो ॥२४॥

ततो दुःखतरं किं स्याद्यत्पापैः सह संगमः॥२५॥

॥ ब्रह्मोवाच ॥ ॥

यदि पापजनाकीर्णं न वांछसि धरातलम् ॥

पातालतलसंस्था त्वं नय वह्निं महोदधौ॥२६॥

यदातिश्रमसंयुक्ता वह्निना दह्यसे भृशम्॥

तदा विभिद्य वसुधां प्रत्यक्षा भव पुत्रिके॥२७॥

कृत्वा वक्त्रं विशालाक्षि प्राची भव सुमध्यमे॥

ततो यास्यंति तीर्थानि त्वां श्रांतां चारुहासिनीम्॥२८॥

तानि सर्वाणि चागत्य साहाय्यं ते वरानने॥

करिष्यंति त्रयस्त्रिंशत्कोट्यो वै मम शासनात्॥२९॥

गच्छ पुत्रि न संतापस्त्वया कार्यः कथंचन॥

अरिष्टं व्रज पंथानं मा सन्तु परिपंथिनः॥7.1.33.३०।

॥ ईश्वर उवाच॥

एवमुक्ता तदा तेन ब्रह्मणाथ सरस्वती॥

त्यक्त्वा भयं हृष्टमनाः प्रयातुं समुपस्थिता॥३१॥

तस्याः प्रयाणसमये शंखदुंदुभिनिःस्वनैः ॥

मंगलानां च निर्घोषैर्जगदापूरितं शुभैः ॥ ३२ ॥

सितांबरधरा देवी सितचंदनगुंठिता ॥

शारदांबुदसंकाशा तारहारविभूषिता ॥ ३३ ॥

संपूर्णचंद्रवदना पद्मपत्रायतेक्षणा ॥

कीर्तिर्यथा महेंद्रस्य पूरयन्ती दिशो दश ॥ ३४ ॥

स्वतेजसा द्योतयंती सर्वमाभासयज्जगत् ॥

अनुव्रजंती गंगा वै तयोक्ता वरवर्णिनि ॥ ३५ ॥

द्रक्ष्यामि त्वां पुनरहं कुत्र वै वसतीं सखि ॥

एवमुक्ता तया गंगा प्रोवाच स्निग्धया गिरा ॥ ३६ ॥

यदैव वीक्षसे प्राचीदिशि प्राप्स्यसि मां तदा ॥

सुरैः परिवृता सर्वैस्तत्राहं तव सुवृते ॥ ३७ ॥

दर्शनं संप्रदास्यामि त्यज शोकं शुचिस्मिते ॥

तामापृच्छय ततो गंगां पुनर्दर्शनमस्तु ते ॥ ३८ ॥

गच्छ स्वमालयं भद्रे स्मर्त्तव्याऽहं त्वयाऽनघे ॥

यमुनापि तथा चैवं गायत्री सुमनोरमा ॥ ३९ ॥

सावित्रीसहिताः सर्वाः सख्यः संप्रेषितास्तदा ॥

ततो विसृज्य तां देवी नदी भूत्वा सरस्वती ॥ 7.1.33.४० ॥

हिमवंतं गिरिं प्राप्य प्लक्षात्तत्र विनिर्गता ॥

अवतीर्णा धरापृष्ठे मत्स्यकच्छपसंकुला ॥ ४१ ॥

ग्राहडिंडिमसंपूर्णा तिमिनक्रगणैर्युता ॥

हसंती च महादेवी फेनौघैः सर्वतो दिशम्॥४२॥

पुण्यतो यवहा देवीस्तूयमाना द्विजातिभिः ॥

वाडवं वह्निमादाय हयवेगेन निःसृता ॥ ४३ ॥

भित्त्वा वेगाद्धरापृष्ठं प्रविष्टाथ महीतलम्॥

यदायदाभवच्छ्रांता दह्यते वाडवाग्निना ॥

तदातदा मर्त्यलोके याति प्रत्यक्षतां नदी ॥ ४४ ॥

ततस्तु जायते प्राची संतप्ता वाडवेन तु ॥

ततो वै यानि तीर्थानि कीर्त्तितानि पुरातनैः ॥ ४५ ॥

दिव्यांतरिक्षभौमानि सांनिध्यं यांति भामिनि ॥

ततश्चाश्वासिता तैः सा सरस्वती पुनर्नदी ॥

पातालतलमा साद्य जगाम मकरालयम् ॥ ४६ ॥

खदिरामोदमासाद्य तत्र सा वीक्ष्य सागरम् ॥

गंतुं प्रवृत्ता तं वह्निमादाय सुरसुंदरि ॥४७॥

निरूढभारमात्मानं देवादेशाद्विचिंत्य सा ॥

प्रहृष्टा सुमनास्तस्मात्प्रवृत्ता दक्षिणामुखी ॥ ४८ ॥

एतस्मिन्नेव काले तु ऋषयो वेदपारगाः ॥

चत्वारश्च महादेवि प्रभासं क्षेत्रमाश्रिताः ॥ ४९ ॥

हरिणश्चाथ वज्रश्च न्यंकुः कपिल एव च ॥

तपस्तप्यंति तत्रस्थाः स्वाध्यायासक्तमानसाः ॥ 7.1.33.५० ॥

पृथक्पृथक्समाहूताः स्नानार्थं तैः सरस्वती ॥

सागरः सम्मुखस्तस्याः सहसा सम्मुपस्थितः ॥ ५१ ॥

ततः सा चिन्तयामास कथं मे सुकृतं भवेत् ॥

शापभीता च सा साध्वी पंचस्रोतास्तदाऽभवत् ॥ ५२ ॥

एकैकं तोषयामास तमृषिं वरवर्णिनि ॥

ततोऽस्याः पंच नामानि जातानि पृथिवीतले ॥ ५३ ॥

हरिणी वज्रिणी न्यंकुः कपिला च सरस्वती ॥

पानावगाहनान्नृणां पंचस्रोताः सरस्वती ॥ ५४ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥

एषां संयोगजं चान्यन्नराणां पंचमं हि यत् ॥ ५५ ॥

एतत्पंचविधं पुंसां पंचधाऽवस्थिता सती ॥

नाशयेत्पातकं घोरं सखीभिः सहिता नदी॥५६॥

ब्रह्महत्यां महाघोरां प्रतिलोमा सरस्वती ॥

पानावगाहनान्नृणां नाशयत्यखिलं हि सा ॥ ५७ ॥

प्रमादान्मदिरापानदोषेणोपहतात्मनाम् ॥

तद्व्यपोहाय कपिला द्विजानां वहते नदी ॥ ५८ ॥

उपवासाज्जपाद्धोमात्स्नानात्पानाद्द्विजन्मनाम् ॥

सप्ताहान्नाशयेत्पापं तत्तद्भावेन चेतसा॥५९॥

स्वयं तेऽपि विशुध्यंति यथोक्तविधिकारिणः ॥

न्यंकुं नदीं समासाद्य महतः पातकात्कृतात् ॥ 7.1.33.६० ॥

स्नानोपासनपानेन वज्रिणी गुरुतल्पगम् ॥

नाशयत्यखिलं पुंसां पापं भूरिभयंकरम् ॥ ६१ ॥

संयोगजस्य पापस्य हरणाद्धरिणी स्मृता ॥

नदी पुण्यजलोपेता सप्ताहमवगाहनात् ॥ ६२ ॥

एवमेतानि पापानि सर्वाणि सुरसुंदरि ॥

नदी नाशयते तथ्यं पंचस्रोता सरस्वती ॥ ६३ ॥

ततोऽपश्यत्पुनश्चारु सा देवी पथि संस्थितम् ॥

पर्वतं सागरस्यांते रोद्धुं मार्गमिव स्थितम् ॥ ६४ ॥

ब्रह्माण्डमानदण्डोऽयं पुरतो गिरिसत्तमः ॥

व्रजन्त्याः सुरकार्येण मम विघ्नकरः स्थितः ॥ ॥ ६५ ॥

उच्चैस्तरं महाशैलमवलोक्य सरस्वती ॥

अथ वेगेन रुद्धेन गिरिणा विस्मिता सती ॥ ६६ ॥

एवं संचिन्तयेद्यावन्मनसा तन्म हाद्भुतम् ॥

तावन्मंगलशब्देन प्रतिबुद्धः कृतस्मरः ॥ ६७ ॥

गिरिशृंगद्वंद्वचरं ददर्श पुरुषं च सा ॥

तामाह देवीं स नगो मार्गो नास्तीह सुव्रते ॥ ६८ ॥

अन्यत्र क्वापि गच्छ त्वं यत्र तेऽभिमतं शुभे ॥

आहैवमुक्ते सा देवी नरं नगशिरःस्थितम् ॥ ६९ ॥

देवादेशात्समायाता न निरोध्या गिरे त्वया ॥

एवमुक्ते गिरिः प्राह तां देवीं सुमनोरमाम् ॥ 7.1.33.७० ॥

पर्वतोऽहं त्वया भद्रे किं न ज्ञातः कृतस्मरः ॥

त्वत्स्पर्शनान्न दोषोस्ति कुमारी त्वं यतोऽनघे ॥ ७१ ॥

अतस्त्वां वरये देवि भार्या मे भव सुव्रते ॥ ७२ ॥

॥ सरस्वत्युवाच ॥ ॥

पिता मे ध्रियते यस्मात्तेन नाहं स्वयंवरा ॥

तव भार्या भविष्यामि मार्गं यच्छ ममाधुना ॥ ७३ ॥

एवमुक्तो गिरिः प्राह अनिच्छंतीं महाबलात् ॥

उद्वाहयिष्ये त्वां भद्रे कस्त्राता स्ति तवाधुना ॥ ७४ ॥

सा तं मनोभवाक्रान्तं मत्वा दिव्येन चक्षुषा ॥

आह नास्ति मम त्राता त्वामेव शरणं गता ॥ ७५ ॥

त्वयोद्वाह्या यद्य वश्यमहमेवं महाबल ॥

अस्नातां नोद्वह विभो स्नानं कर्त्तुं च देहि मे ॥ ७६ ॥

तामुवाच ततः शैलः स्वसंपदभिमानवान् ॥

सौख्यदं पश्य सुभगे मयि संपूर्णवैभवम् ॥ ७७ ॥

द्वंद्वानि यत्र गायंति किंनराणां मनोरमम् ॥

श्रूयते च सुनिध्वानं तंत्रीवाद्यमथापरम् ॥ ७८ ॥

तत्र तालास्तमालाश्च पिप्पलाः पनसास्तथा ॥

सदैव फलपुष्पाश्चा दृश्यंते सुमनोरमाः ॥७९॥

कुटजैः कोविदारैश्च कदंबैः कुरबैस्तथा ॥

मत्तालिकुलघुष्टैश्च भूधरो भाति सर्वतः ॥ 7.1.33.८० ॥

हरांगरागवद्भाति क्वचित्कुटजकुड्मलैः ॥

क्वचित्तु कर्णिकारैश्च विष्णोर्वासःसमप्रभः ॥ ८१ ॥

तमालदलसंछन्नः क्वचिद्वैवस्वतद्युतिः॥

क्वचिद्धातुविलिप्तांगो गणाध्यक्षवपुर्नगः ॥ ८२ ॥

चतुर्मुख इवाभाति हरितालवपुः क्वचित् ॥

क्वचित्सप्तच्छदैर्विष्णोर्वपुषा भात्ययं गिरिः॥ ८३ ॥

क्वचित्कात्यायनीप्रख्यः प्रियंगुसुसमाकुलः ॥

क्वचित्केसरसंयुक्तैरनलाभो विभात्यसौ ॥ ८४ ॥

वृत्तैः सपुलकैः स्निग्धैः स्त्रीणामिव पयोधरैः ॥

दुष्प्राप्यैरल्पपुण्यानां क्वचिदाभाति बिल्वकैः ॥ ८५ ॥

सिंहैर्व्याघ्रैर्मृगैर्नागैर्वराहैर्वानरैस्तथा ॥

क्वचित्क्वचिदसौ भाति परस्परमनुव्रतैः ॥ ८६ ॥

शूलिकोद्भिन्नमाकाशमिव कुर्वद्भिरुच्चकैः ॥

एवमुक्ते प्रत्युवाच शारदा तं नगोत्तमम् ॥ ८७ ॥

यदि मां त्वं परिणये रुदंतीमेकिकां तथा ॥

गृहाण वाडवं हस्ते यावत्स्नानं करोम्यहम् ॥ ८८ ॥

एवमुक्ते स जग्राह त नगेद्रोऽपवर्जिम् ॥

कृतस्मरस्तत्संस्पर्शात्क्षणाद्भस्मत्वमागतः ॥ ८९ ॥

ततः प्रभृति ते तस्य पाषाणा मृदुतां गताः ॥

गृहदेवकुलार्थाय गृह्यंते शिल्पिभिः सह ॥ 7.1.33.९० ॥

दग्ध्वा कृतस्मरं देवी पुनरादाय वाडवम् ॥

समुद्रस्य समीपे सा स्थिता हृष्टतनूरुहा ॥ ९१ ॥

तत्रस्था सा महादेवी तमाह वडवानलम् ॥

पश्य वाडव गर्जन्तं सागरं पुरतः स्थितम् ॥ ९२ ॥

गर्जंतं सोऽपि तं दृष्ट्वा प्रसर्पंतं च वीचिभिः ॥

तामाह किमिदं भद्रे भीतो मे लवणोदधिः ॥ ९३ ॥

प्रहस्योवाच सा बाला को न भीतस्तवानल ॥

भक्ष्यस्ते विहितो यस्मात्तव देवैर्महाबल ॥ ९४ ॥

स तस्यास्तद्वचः श्रुत्वा संप्रहृष्टस्तु पावकः ॥

दास्यामि ते वरं भद्रे यथेष्टं प्रार्थयस्व नः ॥९५॥

तेनैवमुक्ता सा देवी वाडवेनाग्निना तदा ॥

सस्मार कारणात्मानं विष्णुं कमललोचनम् ॥ ९६ ॥

दृष्टोसावात्महृत्संस्थस्तया देवो जनार्द्दनः ॥

स्मृतमात्रः सरस्वत्या परस्त्रिभुवनेश्वरः ॥९७॥

मनोदृष्ट्या विलोक्याह सा तमंतःस्थमच्युतम् ॥

वाडवो यच्छति वरमहं तं प्रार्थयामि किम्॥९८॥

ततस्तेन हृदिस्थेन प्रोक्ता देवी सरस्वती ॥

प्रार्थनीयो वरो भद्रे सूचीवक्त्रत्वमादरात् ॥ ९९ ॥

ततस्त्वभिहितो देव्या यदि मे त्वं वरप्रदः ॥

ततः सूचीमुखो भूत्वा त्वं पिबापो महाबल ॥ 7.1.33.१०० ॥

एवमुक्तेन तत्तेन सूचीवेधसमं कृतम् ॥

घटिकापूरणं यद्वत्पपौ तद्वदनं जलम् ॥ १०१ ॥

एवं स वाडवो वह्निः सुराणां भक्षणोद्यतः ॥

वंचितो विष्णुना याति मेधामाधाय यत्नतः ॥ १०२ ॥

सर्गमेतं नरः पुण्यं वाच्यमानं शृणोति यः ॥

स विष्णु लोकमासाद्य तेनैव सह मोदते ॥१०३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सरस्वतीवृत्तांतवडवानलवचनवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३४

https://sa.wikisource.org/s/g59
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

सरस्वती वरं प्राप्य वरिष्ठं वडवानलात् ॥

पुनस्तं सागरे क्षेप्तुमुद्यता सा मनस्विनी ॥ १ ॥

देवादेशात्प्रभासस्य पुरतः संस्थिता तदा ॥

समुद्रमाहूय तदा वाडवार्पणकांक्षिणी ॥ २ ॥

त्वमादिः सर्वदेवानां त्वं प्राणः प्राणिनां सदा ॥

देवादेशाद्गृहाण त्वमागत्यार्णव वाडवम् ॥ ३ ॥

एवं संचिंतितो देव्या यदासावंभसांपतिः ॥

तथा जलात्समुत्तीर्य समायातो महाद्युतिः ॥ ४ ॥

तं दृष्ट्वा विस्मिता देवी दिव्यं विष्णुमिवापरम् ॥

श्यामं कमलपत्राक्षं सागरं सुमनोरमम् ॥ ५ ॥

विचित्रमाल्याभरणं चित्रवस्त्रानुलेपनम्॥

आपगाभिः सरूपाभिः स्त्रीरूपाभिः समावृतम् ॥ ६ ॥

एवंविधं समालोक्य सा देवी ब्रह्मणः सुता ॥

सरस्वती जलनिधिमुवाचेदं शुचिस्मिता ॥ ७ ॥

त्वमग्रजः सर्वभवोद्भवानां त्वं जीवितं जन्मवतां नराणाम् ॥

तस्मात्सुराणां कुरु कार्यमिष्टं वह्निं गृहाण त्वमिहोपनीतम् ॥ ८ ॥

अत्रांतरे सोऽपि विमृश्य सर्वं कार्यं स्वबुद्ध्या किमिहोपपन्नम् ॥

कृत्वाऽनलस्य ग्रहणं मयेदं कार्यं सुराणां विहितं भवेच्च ॥ ९ ॥

एवं चिंतयतस्तस्य ग्रहणं रुचितं ततः ॥

वाडवाग्नेः समुद्रस्य सुरपीडाकृते यदा ॥ 7.1.34.१० ॥

तदा तेन पुरःस्थेन देवी साभिहिता भृशम् ॥

वाडवं संप्रयच्छैनं सुरशत्रुं सरस्वति ॥ ११ ॥

ततस्तया प्रणम्याशु पितामहपुरःसरान् ॥

चारणांश्चारुचित्रांग्या सरस्वत्या दिवि स्थितान् ॥ १२ ॥

पुनश्च करसंस्थोऽसौ वाडवोऽभिहितस्तया ॥

त्वमपो भक्षयस्वेति सुरैरुक्त इमा इति ॥ १३ ॥

एवमुक्त्वा समुद्रस्य तदा देव्या समर्प्पितः ॥

वाडवोऽग्निः सरस्वत्या सुरादेशान्महाबलः ॥ १४ ॥

तं समर्प्य ततस्तस्मि न्नदी भूत्वा सरस्वती ॥

प्रविष्टा सागरं देवी नारदेश्वरमार्गतः ॥ १५ ॥

दैत्यसूदनसांनिध्ये दत्त्वार्घ्यं लवणांभसि ॥

अर्घ्येश्वरं प्रतिष्ठाप्य दैत्यसूदन पश्चिमे ॥ १६ ॥

ततोऽब्धिं संप्रविष्टा सा पंचस्रोता महानदी ॥

स्वरूपेणैव सा पुण्या पुनः पुण्यतमाऽभवत् ॥ १७ ॥

प्रभासक्षेत्रसंपर्कात्समुद्रस्य च संगमात् ॥

सागरोऽपि समासाद्य सरस्वत्यास्तु वाडवम् ॥

निर्धनो वै धनं प्राप्याचिन्तयत्क्व क्षिपाम्यहम् ॥ १८ ॥

स तेनैव करस्थेन दीप्य मानेन सागरः ॥

वह्निना शिखरस्थेन भाति मेरुरिवापरः ॥ १९ ॥

तं तथाविधमालोक्य तत्र ये जलचारिणः ॥

यादोगणास्ते मुमुचुर्दाहभीता महास्वनम् ॥ 7.1.34.२० ॥

तं श्रुत्वा भैरवं शब्दमायातो दैत्यसूदनः ॥

आह यादोगणान्सर्वान्मा भैष्ट सुमहाबलाः ॥ २१ ॥

यस्मादनेन प्रथमा आपो भक्ष्या न तत्रगाः ॥

प्राणिनस्तन्न भेतव्यं भवद्भिस्तु ममाज्ञया ॥ २२ ॥

एवमुक्तस्तु कृष्णेन तूष्णींभूता जलेचराः ॥ २३ ॥

तूष्णींभूतेषु सर्वेषु जलजेषु जलेश्वरम् ॥

प्राहाच्युतः प्रक्षिप त्वमपां मध्ये तु वाडवम् ॥ २४ ॥

अगाधेम्भसि तेनासौ निक्षिप्तो वाडवोऽनलः ॥

वरुणेन पिबन्नास्ते तज्जलं सुमहाबलः ॥ २५ ॥

तस्योच्छ्वासानिलोद्भूतं तत्तोयं सागराद्बहिः ॥

निर्मर्यादेव युवतिरितश्चेतश्चधावति ॥ २६ ॥

अथ काले गते देवि शुष्यत्यंबु शनैःशनैः ॥

विदित्वा क्षीयमाणास्ता अपो जलनिधिस्ततः ॥ २७ ॥

आहैवं पुंडरीकाक्षमपः कुरु त्वमक्षयाः ॥

अन्यथा सर्वनाशेन जलानां मामिहाग्रतः ॥

भक्षयिष्यत्यसौ वह्निर्वाडवो हि जनार्द्दन ॥ २८ ॥

एतच्छ्रुत्वा वचस्तस्य समुद्रस्य तु भीषणम् ॥

कृतं तदक्षयं तोयमा त्मनो भयनाशनम् ॥ २९ ॥

ज्ञात्वा सुराः सर्वमिदं विचेष्टितं कृत्यानलस्यास्य निबंधनं तथा ॥

प्रलोभनं तोयपुरःसरा द्विषः पुपूजिरे केशवमत्र चारिणम्॥ 7.1.34.३० ॥

एवं सरस्वती प्राप्ता प्रभासं क्षेत्रमुत्तमम् ॥

ब्रह्मलोकान्महादेवि सर्वपापप्रणाशिनी ॥ ३१ ॥

सोमेशाद्दक्षिणाग्नेये सागरस्य समी पतः ॥

संस्थिता तु महादेवी वडवानलधारिणी ॥ ३२ ॥

स्नात्वाऽग्नितीर्थे पूर्वं तां पूजयेद्विधिना नरः ॥

दंपत्योर्भोजनं तत्र परिधानं सकञ्चु कम् ॥ ३३ ॥

दत्त्वा ततो महादेवं पूजयेच्च कपर्द्दिनम् ॥

इति वृत्तं पुरा देवि चाक्षुषस्यांतरेऽभवत् ॥ ३४ ॥

दधीच्यन्वयजातस्य वाडवस्य महा त्मनः ॥

अस्मिन्पुनर्महादेवि प्राप्ते वैवस्वतेंऽतरे ॥

और्वस्तु भार्गवे वंशे समुत्पन्नो महाद्विजः ॥ ३५॥

संक्षिप्तोऽसौ सरस्वत्या देवमात्रा महाप्रभः॥

तावत्स्थास्यत्यपां गर्भे यावन्मन्वतरावधिः ॥ ३६ ॥

इति ते कथितं देवि सरस्वत्याः समुद्भवम् ॥

श्रुतं पापहरं नृणां कीर्त्तिदं पुण्यवर्द्धनम्॥ ३७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सरस्वत्यवतारमहिमवर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३५



॥ देव्युवाच ॥ ॥

भगवन्भार्गवे वंशे यस्त्वौर्वः कथितस्त्वया ॥

वैवस्वतेंऽतरे चास्मिंस्तस्योत्पत्तिं वद प्रभो ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

ब्राह्मणा निहता ये तु क्षत्रियैर्वित्तकारणात् ॥

क्षयं नीतास्तु ते सर्वे सपुत्राश्च सगर्भतः ॥ २ ॥

म्रियमाणेषु सर्वेषु एका स्त्री समतिष्ठत ॥

तया तु रक्षितो गर्भ ऊर्वोर्देशे निधाय च ॥ ३ ॥

अन्यासां चैव नारीणां सर्वासामपि भामिनि ॥

गर्भानि पातितास्तैस्तु द्रव्यार्थं क्षत्रियाधमैः ॥ ४ ॥

कालांतरे ततो भित्त्वा कुरुदेशं महाप्रभः ॥

निर्गतोत्तंभितशिरा ज्वलदास्योतिभीषणः ॥ ५ ॥

तद्वैरं हृदि चाधाय ददाह वसुधातलम् ॥

उत्पाद्य वह्निं तपसा रौद्रमौर्वं जलाशनम् ॥ ६ ॥

तमिन्द्रः प्लावयामास वृष्ट्यौघैर्वरवर्णिनि ॥

न शशाक यदा नेतुं तदा स यतवाक्स्थितः ॥ ७ ॥

ततो देवाः सगंधर्वा ब्रह्माणं शरणं गताः ॥

अभवन्भयसंत्रस्ताः सर्वे प्रांजलयः स्थिताः ॥ ८ ॥

॥ देवा ऊचुः ॥ ॥

भगवन्भार्गवे वंशे जातः कोऽपि महाद्युतिः ॥

अग्निरूपेण सर्वं स ददाह वसुधातलम् ॥ ॥

कृतो यत्नः पुराऽस्माभिस्तद्विनाशाय सत्तम ॥

जलेन वृद्धिमायाति ततो नो भयमागतम् ॥ 7.1.35.१० ॥

विनष्टे भूतले देव अग्निष्टोमादिकाः क्रियाः॥

उच्छिद्यते ततोऽस्माकं नाशो नूनं भविष्यति ॥ ११ ॥

तस्माद्यत्नं कुरु विभो त्रैलोक्यहितकाम्यया ॥ १२ ॥

ततो ब्रह्मा सुरैः सार्द्धं भार्गवैश्च मह र्षिभिः ॥

आगत्य चाब्रवीदौर्वं किमर्थं दहसि क्षितिम् ॥ १३ ॥

विरामः क्रियतां सद्यो ममार्थं च द्विजोत्तम॥ १४ ॥

॥ और्व उवाच ॥ ॥

एष एव निवृत्तोऽहं तव वाक्येन सत्तम ॥

एष वह्निर्मयोत्सृष्टः स विभो तव शासनात् ॥ १५ ॥

यथा गच्छेत्समुद्रांतं तथा नीतिर्विधीय ताम् ॥ १६ ॥

समाहूय ततो देवीं स्वां सुतां पद्मसंभवः ॥

उवाच पुत्रि गच्छ त्वं गृहीत्वाग्निं महोदधिम् ॥

मद्वाक्यं नान्यथा कार्यं गच्छ शीघ्रं महाप्रभे ॥ १७ ॥

॥ सरस्वत्युवाच ॥ ॥

एषास्मि प्रस्थिता देव तव वाक्यादसंशयम् ॥

इत्युक्ते साधु साध्वीति ब्रह्मणा समुदाहृता ॥ ॥ १८ ॥

ततोभिमंत्रितं वह्निं क्षिप्त्वा कुंभे हिरण्मये ॥

प्रायच्छत सरस्वत्यै स्वयं ब्रह्मा पितामहः ॥

आशिषो विविधा दत्त्वा प्रोवाचेदं पुनः पुनः ॥ १९ ॥

गच्छ पुत्रि न संतापस्त्वया कार्यः कथंचन ॥

अरिष्टं व्रज पंथानं मा संतु परिपन्थिनः ॥ 7.1.35.२० ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्ता तदा तेन ब्रह्मणा च सरस्वती ॥

हिमवंतं गिरिं प्राप्य पिप्पलादाश्रमात्तदा ॥ २१ ॥

उद्भूता सा तदा देवी अधस्ताद्वृक्षमूलतः ॥

तत्कोटर कुटीकोटिप्रविष्टानां द्विजन्मनाम् ॥ २२ ॥

श्रूयन्ते वेदनिर्घोषा सरसारक्तचेतसाम् ॥

विष्णुरास्ते तत्र देवो देवानां प्रवरो गुरुः ॥ २३ ॥

तस्मात्स्थानात्ततो देवी प्रतीच्यभिमुखं ययौ ॥

अन्तर्द्धानेन सा प्राप्ता केदारं हिममध्यगम् ॥ २४ ॥

तत्संप्लाव्य गिरेः शृंगं केदारस्य पुरः स्थिता ॥

तेनाग्निना करस्थेन दह्यमाना सरस्वती ॥ २५ ॥

भूमिं विदार्य तस्याधः प्रविष्टा गजगामिनी ॥

तदंतर्द्धानमार्गेण प्रवृत्ता पश्चिमामुखी ॥ २६ ॥

पापभूमिमतिक्रम्य भूमिं भित्त्वा विनि(?)गता ॥

तत्र कूपः समभवन्नाम्ना गन्धर्वसंज्ञितः ॥ २७ ॥

तस्मात्कूपात्पुनर्दृश्या सा बभूव महानदी ॥

मतिः स्मृतिस्तथा प्रज्ञा मेधा बुद्धिर्गिराधरा ॥ २८ ॥

उपासिकाः सरस्वत्याः षडेताः प्रस्थितास्तदा ॥

पुनः प्रवृत्ता सा तस्मादुद्भेदात्पश्चिमामुखी ॥२९॥

भूतीश्वरं समायाता सिद्धो यत्र महामुनिः ॥

भूतीश्वरे समीपस्थं तत्र प्राप्ता मनोरमम् ॥7.1.35.३०॥

तस्य दक्षिणदिक्संस्थं रुद्रकोट्युपलक्षितम् ॥

श्रीकंठ देशं विख्यातं गता सर्वौषधीयुतम् ॥ ३१ ॥

तस्मात्पुण्यतमाद्देशाच्छ्रीकण्ठात्सा मनस्विनी ॥

संप्राप्ता वह्निना सार्द्धं कुरुक्षेत्रं सरस्वती ॥ ३२ ॥

पुनस्तस्मात्कुरुक्षेत्राद्विराटनगरस्य सा ॥

समुद्भूता समीपस्था अन्तर्द्धानान्मनोरमा ॥

गोपायनो गिरिर्यत्र तत्र सा पुनरुद्गता ॥ ३३ ॥

गोपायिता केशवेन यत्र ते पाण्डुनन्दनाः ॥

कुर्वंतः स्वानि कर्माणि न कैश्चिदुपलक्षिता ॥ ३४ ॥

तत्र कुंडे स्थिता देवी महापातकनाशिनी ॥

पुन र्गोपायनाद्देवी क्षेत्रं प्राप्तातिशोभनम् ॥ ३५ ॥

खर्जुरीवनमापन्ना नन्दानाम्नीति तत्र सा ॥

सरस्वती पुनस्तस्माद्वनात्खर्जूरसंज्ञितात् ॥ ३६ ॥

मेरुपादं समासाद्य मार्कंडाश्रममागता ॥

यत्र मार्कंडकं तीर्थं मेरुपादे समाश्रितम् ॥ ३७ ॥

सरस्वती पुनस्तस्मादर्बुदारण्यमाश्रिता ॥

गता वटवनं रम्यं मार्कंडेयाश्रमाच्छुभात् ॥३८॥

तपस्तप्तं पुरा यत्र वसिष्ठेन समाश्रितात् ॥

तस्माद्वटवनात्पुण्यादुदुम्बरवनं गता ॥

मेरुपादे च तत्रैव तण्डिर्यत्रा तपत्तपः ॥ ३९ ॥

ऊदुंबरवनात्तस्मात्पुनर्देवी सरस्वती ॥

अन्तर्द्धानेन शिखरमन्यत्प्राप्ता महानदी ॥ 7.1.35.४० ॥

मेरुपादं तु सुमहत्सुरसिद्धनिषेवितम् ॥

भिन्नांजनचयाकारं गोलांगूलमिति स्मृतम् ॥ ४१ ॥

स्थानं मनोरमं तस्मादुद्गता सा सुमध्यमा ॥

वंशस्तंबात्सुविपुला प्रवृत्ता दक्षिणामुखी ॥ ४२ ॥

तत्रोद्गमवटस्तस्यास्तत्समाख्यो व्यवस्थितः ॥

ततः प्रभृति सा देवी सुप्रभं प्रकटा स्थिता ॥ ४३ ॥

अंतर्द्धानं परित्यज्य प्राणिनामनुकम्पया ॥

तस्यास्तटेषु रम्येषु संति तीर्थानि कोटिशः ॥ ४४ ॥

तेषु तीर्थेषु सर्वेषु धर्महेतुः सरस्वती ॥

रुद्रावतार मार्गेऽस्मिन्प्रवरं प्रथमं स्मृतम् ॥ ४५ ॥

तरत्तरंगनामाढ्यं काकतीर्थं महाप्रभम् ॥

तत्र तीर्थं पुनस्त्वन्यत्तीर्थं धारेश्वरं स्मृतम् ॥ ४६ ॥

धारेश्वरात्पुनश्चान्यद्गंगोद्भेदमिति स्मृतम् ॥

सारस्वतं तथा गांगं यत्रैकं संस्थितं जलम् ॥

तस्मादन्यत्परं तीर्थं पुंडरीकं ततः परम् ॥ ॥ ४७ ॥

मातृतीर्थं महापुण्यं सर्वातंकहरं परम् ॥

मातृतीर्थात्पुनस्तस्मान्नातिदूरे व्यवस्थितम् ॥ ४८ ॥

तीर्थं त्वनरकंनाम नरकार्ति भयापहम् ॥

ततस्तस्मादनरकात्तीर्थमन्यत्पुनः स्थितम् ॥ ४९ ॥

संगमेश्वरनामाढ्यं प्रसिद्धं तन्महीतले ॥

ततस्तस्मात्पुनश्चान्यत्तीर्थं कोटीश्वराह्वयम् ॥ 7.1.35.५० ॥

ततस्तस्मान्महादेवि शंभुकुण्डेश्वरं स्मृतम् ॥
तीर्थे सरस्वतीतीरे तस्मिन्सिद्धेश्वरं स्मृतम् ॥ ५१ ॥
सिद्धेश्वरात्पुनस्तस्मात्प्रवृत्ता पश्चिमामुखी ॥
पश्चिमं सागरं गंतुं सखीं स्मृत्वा रुरोद सा ॥५२॥
स्थित्वा पूर्वमुखा देवी हा गंगेति विना त्वया॥
एकाकिनी मंदभाग्या क्व गमिष्याम्यबांधवा ॥ ५३ ॥
तां विज्ञाय ततो गंगा रुदतीं शोककर्शिताम् ॥
शीघ्रं स्वर्गात्समायाता तीर्थानां कोटिभिः सह ॥ ५४ ॥
ततो दुःखं परित्यज्य तत्र प्राची सरस्वती ॥
सर्वदेवगुणैयुक्ता एवं तत्र स्थिताऽभवत् ॥ ५५ ॥
तत्र सिद्धवटंनाम तीर्थं पैतामहं स्मृतम् ॥
वटेश्वरस्य पुरतः सर्वपापक्षयंकरम् ॥ ५६ ॥
त्रिकालं यत्र रुद्रस्तु समागत्य व्यवस्थितः ॥
तन्महालयमित्युक्तं स्थानं तस्य महात्मनः ॥ ॥ ५७ ॥
पिंडतारकमित्येतत्प्राचीनं तीर्थमुत्तमम् ॥
कुम्भकुक्षिगिरिस्थं तत्पित्र्ये कर्मणि सिद्धिदम् ॥ ५८ ॥
प्राचीनेश्वरदेवस्य पुरोभूतं प्रति ष्ठितम्॥
प्राची सरस्वती यत्र तत्र किं मृग्यते परम् ॥ ५९ ॥
निवृत्ते भारते युद्धे तत्र तीर्थे किरीटिना ॥
प्रायश्चित्तं पुरा चीर्णं विष्णुना प्रेरिता त्मना ॥ 7.1.35.६० ॥
तेन तस्माद्विनिर्मुक्तः पातकात्पूर्वसंचितात् ॥
नरतीर्थं ततः ख्यातं तत्र पापभयापहम् ॥ ६१ ॥
नरतीर्थादन्यतीर्थं पुंडरीकमिति स्मृतम् ॥
अर्जुनेन सहागत्य यत्र स्नातो हरिः प्रिये ॥ ६२ ॥
प्राचीनेशात्परं तीर्थं वालखिल्येश्वरं महत् ॥
तत्र तस्मान्महातीर्थात्तीर्थमन्यन्महो दयम्॥ ६३ ॥
गंगासमागमंनाम तीर्थमन्यन्महोदयम् ॥
तत्रालोक्य पुनर्देवीं दीनास्यां दीनमानसाम् ॥ ६४ ॥

ब्रह्मासृजत्सखीं तस्याः कपिलां विपुलेक्षणाम् ॥

हरिणीं हरिरप्याशु वज्रिणीमपि देवराट् ॥

न्यंकुं विनोदनार्थं च सरस्वत्या ददौ हरः ॥ ६५ ॥

ततः प्रहृष्टा सा देवी देवादेशात्सरस्वती ॥

तस्माद्गन्तुं समारब्धा प्राचीना पापनाशिनी ॥ ६६ ॥

॥ ईश्वर उवाच ॥ ॥

दक्षिणां दिशमास्थाय पुनः पश्चान्मुखी तदा ॥

सरस्वती महादेवी वडवानलधारिणी ॥

तदुत्तरे तटे तीर्थमेकद्वारमिति स्मृतम् ॥ ६७ ॥

एकद्वारेण यत्सेना स्वर्गं प्राप्ता ततो वरात् ॥

तस्मात्तीर्थात्पुनश्चान्यत्तीर्थं यत्र गुहेश्वरः ॥ ६८ ॥

गुहेन स्थापितः पूर्वं यत्र देवो महेश्वरः ॥

गुहेश्वरान्नातिदूरे वटेश्वरमिति स्मृतम् ॥ ६९ ॥

दिव्यं सरस्वतीतीरे व्यासेनाराधितं पुरा ॥

आमर्द्दकी नदी यत्र सरस्वत्या सहैकताम् ॥ 7.1.35.७० ॥

संप्राप्ता तन्महातीर्थं फलदं सर्वदेहिनाम् ॥

आमर्दकी संगमं तं नापुण्यो वेद कश्चन ॥

संगमेश्वरनामेति तत्र लिंगं प्रतिष्ठितम् ॥ ७१ ॥

मुण्डीश्वरेति च तथा प्रसिद्धिमगमत्क्षितौ ॥

मुंडीश्वरसमीपस्थं सरस्वत्यां महोदयम् ॥ ७२ ॥

नाम्ना यत्प्राङ्मुखं तीर्थं सरस्वत्यास्तटे स्थितम् ॥

मांडव्येश्वरनाम्ना वै यत्रेशः संप्रतिष्ठितः ॥ ७३ ॥

पीलुकर्णिकसंज्ञं तु तीर्थमन्यत्पुनस्ततः ॥

सरस्वतीतीरगतमृषिणा सेवितं महत् ॥ ७४ ॥

तस्मादन्यत्सरस्वत्यां तीर्थं द्वारवती स्मृतम् ॥

तीर्थानां प्रवरं देवि यत्र संनिहितो हरिः ॥ ७५ ॥

ततस्तस्य समीपस्थं तीर्थं गोवत्ससंज्ञितम् ॥

यत्रावतीर्य गोवत्सस्वरूपेणांबिकापतिः ॥ ७६ ॥

स्वयं भूलिंगरूपेण संस्थितस्तेजसां निधिः ॥

गोवत्सान्नैर्ऋते भागे दृश्यते लोहयष्टिका ॥ ७७ ॥

स्वयंभूलिंगरूपेण रुद्रस्तत्र स्वयं स्थितः ॥

एकविंशति वारस्य भक्त्या पिंडस्य यत्फलम् ॥ ७८ ॥

गंगायां प्राप्यते पुंसां श्राद्धेनैकेन तत्र तत् ॥

ततस्तस्मान्महातीर्थाद्बालक्रीडनकी यथा ॥ ७९ ॥

सखीभिः सहिता तत्र क्रीडताऽसौ यथेच्छया ॥

आनुलोम्यविलोम्येन दक्षिणेनोत्तरेण च ॥ 7.1.35.८० ॥

रुल्लं प्राप्य पुनर्देवी समुद्भूता मनोरमा ॥

रुल्लं नाम पुरं यत्र सृष्टं देवेन शंभुना ॥ ८१ ॥

सह देवैस्तु पार्वत्या धारायंत्रप्रयोगकैः ॥

एकं वर्षसहस्रं तु शंभुना तत्र रुल्लितम् ॥ ८२ ॥

रुल्लं तत्र ह्रदं नाम सरस्वत्यां महोदयम् ॥

साक्षात्तत्र महादेव आनंदेश्वरसंज्ञितः ॥ ८३ ॥

पश्चिमेन स्थितं तत्र शम्भोरायतनस्य तु ॥

स मेरोर्दक्षिणे पादे नखस्तु परिकीर्तितः ॥ ८४ ॥

पश्यंति ये नराः सम्यक्तेऽपि पापविवर्जिताः ॥

अश्वमेधसहस्रस्य प्राप्नुवंति फलं ध्रुवम् ॥ ८५ ॥

परतस्तस्य कूष्मांडमुनेस्तत्राश्रमं महत् ॥

कूष्मांडेश्वरसंज्ञं तु तीर्थं त्रैलोक्यविश्रुतम् ॥ ८६ ॥

कोल्लादेवी स्थिता तत्र सर्वपापभयापहा ॥

अन्तर्द्धानेन तां कोल्लां संप्राप्ता सा महानदी ॥ ८७ ॥

ततोऽप्यंतर्हिता भूत्वा संप्राप्ता तु मनोरमम् ॥

सानुं मदनसंज्ञं तु क्षेत्रं सिद्धनिषेवितम् ॥ ८८ ॥

ततोऽप्यंतर्हिता भूत्वा पुनः प्राप्ता हिमाचलम् ॥

खादिरामोदनामानं सर्वर्तुकुसुमोज्ज्वलम् ॥ ८९ ॥

तत्रारुह्य विलोक्याथ ददर्श सुमनोरमम ॥

क्षारोदं पश्चिमाशास्थं घनवृंदमिवोन्नतम् ॥ 7.1.35.९० ॥

एवंविधं च तं तत्र सा विलोक्य महाप्रभा ॥

हर्षात्पंचानना भूत्वा देवकार्यार्थमुद्यता ॥ ९१ ॥

हरिणी वज्रिणी न्यंकुः कपिला च सरस्वती ॥

पंचस्रोताः स्थिता तत्र मुनिनोक्ता सरस्वती ॥ ९२ ॥

श्रमापनोदं कुर्वाणा मुनीनां यत्र संस्थिता ॥

तत्तत्पादकमित्युक्तं तीर्थं तीर्थार्थिनां नृणाम् ॥

सर्वेषां पातकानां च शोधनं तद्वरानने ॥ ९३ ॥

खादिरामोदमासाद्य तत्रस्था वीक्ष्य सागरम् ॥

गन्तुं प्रवृत्ता तं वह्निमादाय सुरसुन्दरि ॥ ९४ ॥

दग्ध्वा कृतस्मरं देवी पुनरादाय वाडवम् ॥

समुद्रस्य समीपस्था स्थिता हृष्टत नूरुहा ॥ ९५ ॥

ततः प्रविष्टा सा देवी अगाधे लवणांभसि ॥

वाडवं वह्निमादाय जलमध्ये व्यसर्जयत् ॥ ९६ ॥

ततस्तस्याः पुनः प्रीतः स्वय मेव हुताशनः ॥

तद्दृष्ट्वा दुष्करं कर्म वचनं चेदमब्रवीत् ॥ ९७ ॥

परितुष्टोऽस्मि ते भद्रे वरं वरय सुव्रते ॥

तत्ते दास्याम्यहं प्रीतो यद्यपि स्यात्सु दुर्लभम् ॥ ९८ ॥

॥ ईश्वर उवाच ॥ ॥

प्रगृह्य वलयं हस्तादिदं वचनमब्रवीत् ॥

इदं मे वलयं वह्ने वक्त्रे धार्यं सदा त्वया ॥ ९९ ॥

अनेन शक्यते यावत्तावत्तोयं समाहर ॥

न त्वया शोषणीयोऽयं समुद्रः सरितांपतिः ॥ 7.1.35.१०० ॥

बाढमित्येव चोक्त्वा स प्रविष्टो निधिमंभसाम्॥

एवमेषा महादेवि प्रभासे तु सरस्वती ॥

गृहीत्वा वाडवं प्राप्ता तुष्ट्यर्थं च मनीषिणाम्॥ १०१ ॥

सा विश्रांता कुरुक्षेत्रे भद्रावर्ते च भामिनि ॥

पुष्करे श्रीकला देवी प्रभासे च महानदी ॥ १०२ ॥

देवमातेति सा तत्र संस्थिता लवणोदधौ ॥

अस्मिन्मन्वंतरे देवि आदौ त्रेतायुगे पुरा॥१०३॥

इति वृत्तं सरस्वत्या वाडवाग्नेस्तथाभवत् ॥

मन्वन्तरे व्यतीतेऽस्मिन्भविताऽन्यस्तु वाडवः ॥ १०४ ॥

ज्वालामुखेति नाम्ना वै रुद्रक्रोधाद्भविष्यति ॥

सरस्वत्यास्तथा नाम ख्यातिं ब्राह्मीति यास्यति ॥ १०५ ॥

सरस्वतीति वै लोके वर्तते नाम सांप्रतम् ॥

अतीतं नाम यत्तस्याः कमंडलुभवेति च ॥

रत्नाकरेति सामुद्रं सत्यं नामांतरं पुरा ॥ १०६ ॥

अस्मिन्मन्वंतरे देवि सागरेति प्रकीर्तितम् ॥

क्षांरोदेति भविष्यं तु नाम देवि प्रकीर्ति तम् ॥ १०७ ॥

एवं जानाति यः कश्चित्स तीर्थफलमश्नुते ॥

स्वर्गनिःश्रेणिसंभूता प्रभासे तु सरस्वती ॥ १०८ ॥

नापुण्यवद्भिः संप्राप्तुं पुंभिः शक्या महानदी ॥

प्राची सरस्वती देवि सर्वत्र च सुदुर्लभा ॥

विशेषेण कुरुक्षेत्रे प्रभासे पुष्करे तथा ॥ १०९ ॥

एवंप्रभावा सा देवी वडवानल धारिणी॥

अग्नितीर्थसमीपस्था स्थिता देवी सरस्वती ॥ 7.1.35.११० ॥

तामादौ पूजयेद्यस्तु स तीर्थफलमश्नुते ॥

सागरं यच्च तत्तीर्थं पापघ्नं पुण्य वर्द्धनम् ॥ १११ ॥

दर्शनादेव तस्यैव महाक्रतुफलं लभेत् ॥

अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ॥ ११२ ॥

दृष्टमात्राः पुनंत्येते तस्मा त्पश्येद्धि भावितः ॥

अग्नितीर्थे नरः स्नात्वा पावके प्रक्षिपेत्ततः ॥

गुग्गुलं भारसहितं सोग्निलोके महीयते ॥ ११३ ॥

एवं संक्षेपतः प्रोक्तो ह्यग्नि तीर्थमहोदयः ॥

सरस्वत्याश्च माहात्म्यं सर्वपातकनाशनम् ॥११४॥

स्नात्वाग्नितीर्थे विधिवत्कंकणं प्रक्षिपेततः ॥

सुवर्णस्य महादेवि यथावित्तानु सारतः ॥ ११५ ॥

ततः सरस्वतीं पूज्य कपर्दिनमथार्चयेत् ॥ ११६ ॥

ततः केदारनामानं भीमेश्वरमतःपरम् ॥

भैरवेश्वरनामानं चण्डीश्वरमतः परम्॥ ११७ ॥

ततः सोमेश्वरं देवं पूजयेद्विधिवन्नरः ॥

नवग्रहेश्वरानिष्ट्वा रुद्रैकादशकं तथा ॥ ११८ ॥

ततः संपूजयेद्देवं ब्रह्माणं बालरूपिणम् ॥

एवं रौद्री समाख्याता यात्रा पातकनाशिनी॥११९॥

माहात्म्यमखिलं तस्या यो जानाति नरोत्तमः॥

निवसन्क्षेत्रमध्ये तु स तीर्थफलमश्नुते॥7.1.35.१२॥।

एवं कृत्वा ततो गच्छेन्महादेवीं सरस्वतीम्॥१२१॥

सरस्वतीवससमा कुतो गुणाः सरस्वतीवाससमा कुतो रतिः॥

सरस्वतीं प्राप्य दिवं गता नराः पुनः स्मरिष्यंति नदीं सरस्वतीम्॥ १२२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्र माहात्म्ये सरस्वत्यब्धिसमागमाग्नितीर्थमाहात्म्यवर्णनंनाम पञ्चत्रिंशोऽध्यायः॥३५॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३६



॥ देव्युवाच ॥

यदेतद्भवता प्रोक्तं प्राची सर्वत्र दुर्ल्लभा ॥

विशेषेण कुरुक्षेत्रे प्रभासे पुष्करे तथा ॥ १ ॥

कथं प्रभासमासाद्य संस्थिता पापनाशिनी ॥

माहात्म्यमखिलं तस्याः प्राच्याः पातकनाशनम् ॥

कथयस्व महेशान यद्यहं ते प्रिया विभो ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

साधु प्रोक्तं त्वया भद्रे प्राची सर्वत्र दुर्लभा ॥

कुरुक्षेत्रे पुष्करे च तस्मात्प्राभासिकेऽधिका ॥ ३ ॥

प्रभासे तु महादेवी प्राचीं पापप्रणाशिनीम् ॥

नापुण्यो वेद देवेशि कर्मनिर्मूलनक्षमाम् ॥ ४ ॥

ये पिबंति नराः पुण्यां प्राचीं देवीं सरस्वतीम् ॥

न ते मनुष्या विज्ञेयाः सत्यंसत्यं वरानने ॥ ५ ॥

धन्यास्ते मुनयस्ते च पुण्यास्ते च तपस्विनः ॥

ये च सारस्वतं तोयं पिबंत्यहरहः सदा ॥ ६ ॥

देवास्ते न मनुष्यास्ते नदीस्तिस्र पिबंति ये ॥

चंद्रभागां च गंगां च तथा देवीं सरस्वतीम् ॥ ७ ॥

भुक्त्वा वा यदि वाऽभुक्त्वा दिवा वा यदि वा निशि ॥

न कालनियमस्तत्र यत्र प्राची सरस्वती ॥ ८ ॥

प्राचीं सरस्वतीं ये तु पिबंति सततं मृगाः ॥

तेऽपि स्वर्गं गमिष्यंति यज्ञैर्द्विजवरा यथा ॥ ९ ॥

सर्वकामप्रपूर्त्यर्थं नृणां तत्क्षेत्रमुत्तमम् ॥

चिंतामणिसमा देवी यत्र प्राची सरस्वती ॥ 7.1.36.१० ॥

यथा कामदुघा गावः सर्वकामफलप्रदाः ॥

तथा स्वर्गापवर्गाभ्यां प्राची देवी सरस्वती ॥ ११ ॥

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥

यत्र स्थितानि संन्यासं तस्मात्किमधिकं स्मृतम् ॥ १२ ॥

यत्र मंकणकः सिद्धः प्राचीने नियतात्मवान् ॥

ब्रह्महत्याव्रतं चीर्णं मया यत्र वरानने ॥ १३ ॥

वृषतीर्थे महापुण्ये प्राचीकूलसमाश्रिते ॥

निवृत्ते भारते युद्धे तस्मिंस्तीर्थे किरीटिना ॥

प्रायश्चित्तं पुरा चीर्णं विष्णुना प्रेरितात्मना ॥१४॥

त्रैलोक्ये सर्वतीर्थानां तत्तीर्थं प्रवरं स्मृतम् ॥

पापघ्नं पुण्यजननं प्राणिनां पुण्यकीर्त्तिद ॥ १५ ॥

॥ सूत उवाच ॥ ॥

आहैवमुक्ते सा देवी शंकरं लोक शंकरम्॥

प्रायश्चित्तं कथं प्राप्तः पार्थः परपुरंजयः ॥

ज्ञातिक्षयोद्भवं पापं कथं नाशमगात्प्रभो ॥१६॥

एवमुक्तः पुनः प्राह विश्वेशो नीललोहितः ॥

प्रायश्चित्तस्य संप्राप्तः कारणं तद्यथा स्थितम् ॥१७॥

॥ ईश्वर उवाच ॥ ॥

शृणुष्वावहिता भद्रे कथां पातकनाशिनीम् ॥

यां श्रुत्वा मानवो भक्त्या पवित्रात्मा प्रजायते ॥१८॥

योऽसौ देवि समाख्यातः किरीटी श्वेतवाहनः॥

स जित्वा कौरवान्सर्वान्संहृत्य हयकुञ्जरान् ॥ १९ ॥

पश्चात्सुयोधनं हत्वा भीमेन प्रययौ गृहान्॥

नारायणेन सहितो नरोऽसौ प्रस्थितो रणात्॥ 7.1.36.२० ॥

द्रष्टुं धर्मसुतं दृष्टः प्रणतः प्रांजलिः स्थितः॥

स विज्ञाय तदाऽऽयान्तौ नरनारायणावुभौ ॥ २१ ॥

राजा युधिष्ठिरः प्राह द्वारस्थान्द्वारपालकान् ॥

भवद्भिरेतावायांतौ निषेध्यौ द्वारसंस्थितौ ॥ २२ ॥

नर नारायणौ क्रूरौ पापपंकानुलेपिनौ ॥

एवमेतदिति प्रोक्तौ तौ तदा द्वारमागतौ ॥ २३ ॥

भवन्तौ नेच्छति द्रष्टुं राजा दुर्नयकारिणौ ॥

तत्रस्थः पृष्टवान्भूयः प्रतीहारं नरः स्वयम् ॥ २४ ॥

आवां किं कारणं राजा नेक्षते वशवर्तिनौ ॥

प्रोवाच प्रणतो राजा ततो द्वाःस्थं पुरःस्थितम् ॥ २५ ॥

नारायणेन सहितं नरं नरकनिर्भयम् ॥

दुर्योधनेन सहिता बांधवास्ते यतो हताः ॥

पितृतुल्याश्च राजानस्तेन वै पापभाजनम् ॥ २६ ॥

एवमुक्ते तु तेनाथ मुखमालोकितं हरेः ॥

तेन प्रोक्तमिदं तथ्यं यत्ते राज्ञा प्रभाषितम् ॥ २७ ॥

एवमुक्ते नरः प्राह पुनरेव जनार्द्दनम् ॥

कथयस्व कथं पापात्कृष्ण शुद्ध्यामहे वयम् ॥ २८ ॥

तीर्थस्नानेन मे शुद्धिर्यथा स्यात्तद्वद स्फुटम् ॥

तच्च गंगादिकं कृष्ण यथाऽस्याघस्य नाशनम् ॥ २९ ॥ ॥

॥ कृष्ण उवाच ॥ ॥

मा गयां गच्छ कौंतेय मा गंगां मा च पुष्करम् ॥

तत्र गच्छ कुरुश्रेष्ठ यत्र प्राची सरस्वती ॥ 7.1.36.३० ॥

ब्रह्मघ्नाश्च सुरा पाश्च ये चान्ये पापकारिणः ॥

तत्र स्नात्वा विमुच्यंते यत्र प्राची सरस्वती ॥ ३१ ॥

नारायणेन प्रोक्तोऽसौ नरस्तद्वचनाद्द्रुतम् ॥

सहितस्तेन संप्राप्तः प्राचीनं तीर्थमुत्तमम् ॥ ३२ ॥

त्रिरात्रोपोषितः स्नातस्त्रिकालं नियतात्मवान् ॥

तेन तस्माद्विनिर्मुक्तः पातकात्पूर्वसंचितात् ॥ ३३ ॥।

विज्ञाय शुद्धमेनं तु राजा धर्मसुतो द्रुतम् ॥

भ्रातृभिः सहितः प्राप्तस्तं द्रष्टुं नरपुंगवम् ॥ ३४ ॥

ततस्तं प्रणतं दृष्ट्वा धर्मपुत्रः पुरःस्थितम् ॥

आलिलिंग प्रहृष्टात्मा पृष्टवांश्चाप्यनामयम् ॥ ३५ ॥

भीमादिभिर्भ्रातृभिश्च तदा गुरुगणैर्वृतः ॥

आलिंगितः प्रहृष्टैस्तु नरो गुणगणैर्वृतः ॥ ३६ ॥

एतद्धि तन्महातीर्थं प्राचीनेति च शब्दितम् ॥

स्नानक्रमेण मर्त्यानामन्येषामपि पावकम् ॥ ३७ ॥

त्रिरात्रोपोषितः स्नातस्तीर्थेऽस्मिन्ब्रह्महाऽपि यः ॥

विमुक्तः पातकात्तस्मान्मोदते दिवि रुद्रवत् ॥ ३८ ॥

प्राचीने देव्यहं नित्यं वसामि सहितस्त्वया ॥

प्रभासे तु महाक्षेत्रे विशेषात्तत्र भामिनि ॥ ॥ ३९ ॥

सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ॥

प्राचीने तु वरारोहे न चेहागच्छते पुनः ॥ 7.1.36.४० ॥

आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥

नियमैश्चोपवासैश्च शोषयेद्देहमात्मनः ॥ ४१ ॥

जलाहारा वायुभक्षाः पर्णाहाराश्च तापसाः ॥

यथा स्थंडिलगा नित्यं ये चान्यनियमाः पृथक् ॥ ४२ ॥

एवं मंक्याश्रमे येषां वसतां मृत्युरागतः ॥

न ते मनुष्या देवास्ते सत्यमेतद्ब्रवीमि ते ॥ ४३ ॥

अस्मिंस्तीर्थे तु यो दद्यात्त्रुटिमात्रं तु कांचनम्॥

श्रद्धया द्विजमुख्याय मेरुतुल्यं फलं लभेत् ॥ ४४ ॥

अस्मिंस्तीर्थे तु ये श्राद्धं करिष्यंति च मानवाः ॥

एकविंशत्कुलोपेताः स्वर्गं यास्यंति ते ध्रुवम् ॥ ४५ ॥

पितॄणां वल्लभे तीर्थे पिण्डेनैकेन तर्प्पिताः ॥

ब्रह्मलोकं गमिष्यंति गयाश्राद्धकृतो यथा ॥ ॥ ४६ ॥

कृष्णपक्षे चतुर्द्दश्यां स्नानं च विहितं सदा ॥

पिण्याकैंगुदकेनापि पिंडं तत्र ददाति यः ॥

पितॄणामक्षया तृप्तिः पितृलोकं स गच्छति ॥ ४७ ॥

भूयश्चान्नं प्रयच्छंति मोक्षमार्गं व्रजंति ते ॥ ४८ ॥

दधि दद्याद्योऽपि तत्र ब्राह्मणाय मनोरमम् ॥

सोऽग्निलोकं समासाद्य भुंक्ते भोगान्सुशोभनान्॥ ४९ ॥

ऊर्णां प्रावरणं योऽपि भक्त्या दद्याद्द्विजोत्तमे ॥

सोऽपि याति परां सिद्धिं मर्त्यैरन्यैः सुदुर्ल्लभाम् ॥ 7.1.36.५० ॥

ये चात्र मलनाशाय विशेयुर्मानवा जलम्॥

गोप्रदानसमं तेषां सुखेन फलमादिशेत् ॥ ५१ ॥

भावेन यो नरस्तत्र कश्चित्स्नानं समाचरेत् ॥

सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ५२ ॥

तर्पणात्पिंडदानाच्च नरकेष्वपि संस्थिताः ॥

स्वर्गं प्रयांति पितरः सुपुत्रेण हि तारिताः ॥ ५३ ॥

प्राचीं सरस्वतीं प्राप्य याति तीर्थं हिमालयम्॥

स करस्थं समुत्सृज्य कूर्परेण समालिहेत् ॥ ५४ ॥

यंयं काममभिध्याय तस्मिन्प्राणान्परित्यजेत् ॥

तंतं सकलमाप्नोति तीर्थमाहात्म्ययोगतः ॥ ५५ ॥

अन्यद्देवि पुरा गीतं गांगेयेन युधिष्ठिरे ॥

सत्यमेव हि गंगायां वयं जाता युधिष्ठिर ॥ ५६ ॥

याः काश्चित्सरितो लोके तासां पुण्या सरस्वती ॥ ९७ ॥

सरस्वती सर्वनदीषु पुण्या सरस्वती लोकसुखावहा सदा ॥

सरस्वतीं प्राप्य सुदुःखिता नराः सदा न शोचन्ति परत्र चेह च ॥५८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्राचीसरस्वतीमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३७



॥ देव्युवाच ॥ ॥

किमर्थं कंकणं देव क्षिप्यते लवणांभसि ॥

तस्या पुण्यं न पूर्वोक्तं यथावद्वक्तुमर्हसि ॥ १ ॥

के मंत्राः किं विधानं तत्कस्मिन्काले महत्फलम् ॥

किं पुराभूच्च तद्वृत्तं भगवन्कंकणाश्रितम् ॥ २ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

आसीत्पुरा महीपालो बृहद्रथ इति श्रुतः ॥

तस्य भार्याऽभवत्साध्वी नाम्ना चेंदुमती प्रिया ॥ ३ ॥

न देवी न च गन्धर्वी नासुरी न च किंनरी ॥

तादृग्रूपा महादेवि यादृशी सा सुमध्यमा ॥ ४ ॥

शीलरूपगुणोपेता नित्यं सा तु पतिवता ॥

सर्वयोषिद्गुणैर्युक्ता यथा साध्वी ह्यरुन्धती ॥ ५ ॥

प्रधान (?)हस्रस्य सौभाग्यमदगर्विता ॥

न विना स तया रेमे मुहूर्त्तमपि पार्थिवः ॥ ६ ॥

एकदा तस्यराजर्षेरर्द्धासनगता सती॥

यावत्तिष्ठति राजेंद्रमृषिस्तावदुपागतः॥

कण्वो नाम महातेजास्तपस्वी वेदपारगः॥७॥

तमागतमथो दृष्ट्वा सहसोत्थाय पार्थिवः॥

पूजां कृत्वा यथान्यायं दत्त्वा चार्घ्यमनुत्तमम्॥८॥

सुखासीनं ततो मत्वा विश्रांतं मुनिपुंगवम्॥

आपृच्छत्कुशलं राजा स सर्वं चान्वमोदयत् ॥ ९ ॥

ततो धर्मकथां चक्रे स ऋषिर्नृपसन्निधौ ॥ 7.1.37.१० ॥

ततः कथावसाने सा भार्या तस्य महीपतेः ॥

अब्रवीदमृतं वाक्यं कृतांजलिपुटा सती ॥ ११ ॥

॥ इन्दुमत्युवाच ॥ ॥

त्वं वेत्सि भगवन्सर्वमतीतानागतं विभो ॥

पृच्छे त्वां कौतुकाविष्टा तस्मात्त्वं क्षंतुमर्हसि ॥ ॥ १२ ॥

अन्यदेहोद्भवं कर्म मम सर्वं प्रकीर्त्तय ॥

ईदृशं मम सौभाग्यं पतिर्देवसुतोपमः ॥ १३ ॥

सौभाग्यं पतिदेवत्वं शीलं त्रैलोक्यविश्रुतम्॥

किं प्रभावो व्रतस्यैष उताहोपोषितस्य वा ॥ १४ ॥

दानस्य वा मुनिश्रेष्ठ यन्मे सौभाग्यमुत्तमम्॥

वशो राजा महाबाहुर्मम वाक्यानुगः सदा ॥ ॥ १५ ॥

एतन्मे सर्वमाचक्ष्व परं कौतूहलं हि मे ॥ १६ ॥

॥ सूत उवाच ॥ ॥

तस्यास्तद्वचनं श्रुत्वा ध्यात्वा च सुचिरं मुनिः ॥

अब्रवीत्प्रहसन्वाक्यं कण्वो वेदविदां वरः ॥ १७ ॥

॥ कण्व उवाच ॥ ॥

शृणु राज्ञि प्रवक्ष्यामि अन्यदेहोद्भवं तव ॥

न रोषश्च त्वया कार्यो लज्जा वापि सुमध्यमे ॥ १८ ॥

त्वमासीदन्यदेहे तु आभीरी पंचभर्तृका ॥

सौराष्ट्रविषये हीना देवं सोमेश्वरं गता ॥ १९ ॥

ततः स्नातुं प्रविष्टा च सागरे लवणांभसि ॥

हता कल्लोलमालाभिर्विह्वलत्वमुपागता ॥ 7.1.37.२० ॥

तव हस्ताच्च्युतं तत्र हैमं कंकणमेव च ॥

नष्टं समुद्रसलिले पश्चात्तापस्तु ते स्थितः ॥ २१ ॥

अथ कालेन महता पंचत्वं त्वमुपागता ॥

दशार्णाधिपतेर्गेहे ततो जातासि सुन्दरि ॥ २२ ॥

बृहद्रथेन चोढासि कंकणस्य प्रभा वतः॥

न व्रतं न तपो दानं त्वया चीर्णं पुरा शुभे ॥ २३ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥

तच्छ्रुत्वा सा विशालाक्षी त्रपयाऽधो मुखी तथा ॥

आसीत्तूष्णीं तदा देवी श्रुत्वा वाक्यं च तादृशम् ॥ २४ ॥

एवं निवेद्य स मुनी राजपत्नीं वरानने ॥

जगाम भवनं स्वं च आमंत्र्य वसुधाधिपम् ॥ २५ ॥

ज्ञात्वा फलं कंकणस्य मुनेस्तस्य प्रभावतः ॥

गत्वा सोमेश्वरं देवं स्नात्वा च लवणांभसि ॥ २६ ॥

प्राक्षिपत्कंकणं तत्र प्रतिवर्षं(?) महाप्रभे ॥

ततो देवत्वमापन्ना प्रभावात्तस्य भामिनि ॥ २७ ॥

ईश्वर उवाच ॥ ॥

एष प्रभावः सुमहान्कंकणस्य प्रकीर्तितः ॥

सर्वकामप्रदो देवि सर्वपापप्रणाशनः ॥ २८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सोमेश्वरमाहात्म्ये कंकणमाहात्म्यवर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३८



॥ देव्युवाच ॥ ॥

यदेतद्भवता प्रोक्तं पश्येत्पूर्वं कपर्द्दिनम् ॥

भगवन्संशयं ह्येनं यथावद्वक्तुमर्हसि ॥ १ ॥

स भृत्यः किल देवेश तव शम्भो महाप्रभः ॥

प्रभोरनन्तरं भृत्य एष धर्मः सनातनः ॥ २ ॥

ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि यथा पूज्यतमो हि सः ॥

कपर्द्दी सर्वदेवानामाद्यो विघ्नेश्वरः प्रभुः ॥ ३ ॥

योऽसावतींद्रियग्राह्यः प्रभासक्षेत्रसंस्थितः ॥

सोमेश्वरो महादेवि लिंगरूपी सदाशिवः ॥ ४ ॥।

तस्य वामे स्थितो विष्णुर्वराह इति यः स्मृतः ॥

तस्य दक्षिणभागे तु स्थितो ब्रह्मा प्रजापतिः ॥

कपर्द्दिरूपमास्थाय सावित्र्याः कोपकारणात् ॥ ५ ॥

कृते हेरंबनामा तु त्रेतायां विघ्नमर्द्दनः ॥

लंबोदरो द्वापरे तु कपर्द्दी तु कलौ स्मृतः ॥ ६ ॥

एवं युगेयुगे तस्य अवतारः पृथक्पृथक् ॥

यथाकार्यानुरूपेण जायते च पुनःपुनः ॥ ७ ॥

अष्टाविंशतिमे तत्र देवि प्राप्ते चतुर्युगे ॥

कारणात्मा यथोत्पन्नः कपर्द्दी तत्र मे शृणु ॥ ८ ॥

पुरा द्वापरसंधौ तु संप्राप्ते च कलौ युगे ॥

स्त्रियो म्लेच्छाश्च शूद्राश्च ये चान्ये पापकारिणः ॥

प्रयांति स्वर्गमेवाशु दृष्ट्वा सोमेश्वरं प्रभुम् ॥ ९ ॥

न यज्ञा न तपो दानं न स्वाध्पायो व्रतं न च ॥

कुर्वतोपि नरा देवि सर्वे यांति शिवालयम् ॥ 7.1.38.१० ॥

तं प्रभावं विदित्वैवं सोमेश्वरसमुद्भवम् ॥
अग्निष्टोमादिकाः सर्वाः क्रिया नष्टाः सुरेश्वरि ॥ ११ ॥
ततो बालाश्च वृद्धाश्च ऋषयो वेदपारगाः ॥
शूद्राः स्त्रियोऽपि तं दृष्ट्वा प्रयांति परमां गतिम् ॥ १२ ॥
नष्टयज्ञोत्सवे काले शून्ये च वसुधातले ॥
ऊर्द्ध्वबाहुभिराक्रांतं परिपूर्णं त्रिविष्टपम् ॥ १३ ॥
ततो देवा महेंद्राद्या दुःखेनैव समन्विताः ॥
परिभूता मनुष्यैस्ते शंकरं शरणं गताः ॥ १४ ॥
ऊचुः प्रांजलयः सर्व इन्द्राद्याः सुरसत्तमाः ॥
व्याप्तोयं मानुषैः स्वर्गः प्रसादात्तव शंकर ॥ १५ ॥
निवासाय प्रभोऽस्माकं स्थानं किंचित्समादिश ॥
अहं श्रेष्ठो ह्यहं श्रेष्ठ इत्येवं ते परस्परम्॥
जल्पंतः सर्वतो देव पर्यटंति यथेच्छया ॥ १६ ॥
धर्मराजः सुधर्मात्मा तेषां कर्म शुभाशुभम्॥
स्वयं लिखितमालोक्य तूष्णीमास्ते सुविस्मितः ॥१७॥
येषामथ कृतं सज्जं कुम्भीपाकं सुदारुणम् ॥
रौरवः शाल्मलिर्देव दृष्ट्वा तान्दिवि संस्थितान् ॥
वैलक्ष्यं परमं गत्वा व्यापारं त्यक्तवानसौ ॥ ॥ १८ ॥
॥ श्रीभगवानुवाच ॥ ॥
प्रतिज्ञातं मया सर्वं भक्त्या तुष्टेन वै सुराः ॥
सोमाय मम सांनिध्यमस्मिन्क्षेत्रे भविष्यति ॥ १९ ॥
न शक्यमन्यथाकर्तुमात्मनो यदुदीरितम्॥
एवं यास्यंति ते स्वर्गं ये मां द्रक्ष्यंति तत्र वै ॥ 7.1.38.२० ॥
भयोद्विग्नास्ततो देवाः पार्वतीं प्रेक्ष्य विश्वतः ॥
ऊचुः प्रांजलयः सर्वे त्वमस्माकं गतिर्भव ॥ २१ ॥
एवमुक्त्वाऽस्तुवन्देवाः स्तोत्रेणानेन सत्तम ॥
जानुभ्यां धरणीं गत्वा शिरस्याधाय चांजलिम् ॥ ॥ २२ ॥
॥ देवा ऊचुः ॥ ॥

नमस्ते देवदेवेशि नमस्ते विश्वधात्रिके ॥

नमस्ते पद्मपत्राक्षि नमस्ते कांचनद्युते ॥२३ ॥

नमस्ते संहर्त्रि कर्त्रि नमस्ते शंकरप्रिये ॥

कालरात्रि नमस्तुभ्यं नमस्ते गिरिपुत्रिके॥२४॥

आर्ये भद्रे विशालाक्षि नमस्ते लोकसुन्दरि॥

त्वं रतिस्त्वं धृतिस्त्वं श्रीस्त्वं स्वाहा त्वं सुधा सती ॥ २५ ॥

त्वं दुर्गा त्वं मनिर्मेधा त्वं सर्वं त्वं वसुन्धरा ॥

त्वया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ २६ ॥

नदीषु पर्वताग्रेषु सागरेषु गुहासु च ॥

अरण्येषु च चैत्येषु संग्रामेष्वाश्रमेषु च ॥ २७ ॥

त्रैलोक्ये तत्र पश्यामो यत्र त्वं देवि न स्थिता ॥

एतज्ज्ञात्वा विशालाक्षि त्राहि नो महतो भयात् ॥२८॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्ता तु सा देवी देवैरिंद्रपुरोगमैः ॥

कारुण्यान्निजदेहं त्वं तदा मर्द्दितवत्यसि ॥ २९ ॥

मर्दयंत्यास्तव तदा संजातं च महन्मलम् ॥

तत्र जज्ञे गजेंद्रास्यश्चतुर्बाहुर्मनोहरः ॥ 7.1.38.३० ॥

ततोब्रवीत्सुरान्सर्वान्भवती करुणात्मिका ॥

एष एव मया सृष्टो युष्माकं हितकाम्यया ॥ ३१ ॥

एष विघ्नानि सर्वाणि प्राणिनां संविधास्यति ॥३२ ॥

मोहेन महताऽऽविष्टाः कामोपहतबुद्धयः ॥

सोमनाथमपश्यंतो यास्यंति नरकं नराः ॥३३॥

एवं ते वचनं श्रुत्वा सर्वे ते हृष्टमानसाः ॥

स्वस्थानं भेजिरे देवास्त्यक्त्वा मानुषजं भयम् ॥३४॥

अथे भवदनः प्राह त्वां देवि विनयान्वितः ॥

किं करोमि विशालाक्षि आदेशो दीयतां मम ॥ ३५ ॥

॥ श्रीभगवत्युवाच ॥ ॥

गच्छ प्राभासिकं क्षेत्रं यत्र संनिहितो हरः ॥

तद्रक्ष मानुषाणां च यथा नायाति गोचरम् ॥३६॥

लिंगं तु देवदेवस्य स्थापितं शशिना स्वयम् ॥

भवत्याऽऽदेशितो नित्यं नृणां विघ्नं करोति यः ॥ ३७ ॥

प्रस्थितं पुरुषं दृष्ट्वा सोमनाथं प्रति प्रभुम्॥

स करोति महाविघ्नं कपर्दी लोकपूजितः ॥ ३८ ॥

पुत्रदारगृहक्षेत्र धनधान्यसमुद्भवम् ॥

जनयेत्स महामोहं ततः पश्यति नो हरम् ॥ ३९ ॥

अथवा गड्डुगंडादि व्याधिं चैव समुत्सृजेत् ॥

तैर्ग्रस्तः पुरुषो मोहान्न पश्यति ततो हरम्॥ 7.1.38.४० ॥

तस्मात्सर्वप्रयत्नेन सोमेश्वरपरीप्सया ॥

स नित्यं पूजनीयस्तु स्मर्तव्यस्तु दिवानिशम् ॥ ४१ ॥

स्तोत्रेणानेन देवेशि सर्वविघ्नांतकेन वै॥

समाराध्य गणाध्यक्षः प्रभासक्षेत्ररक्षकः ॥४२॥

तत्तेऽहं संप्रवक्ष्यामि स्तोत्रं तद्विघ्नमर्दनम्॥

कपर्दिनो महादेवि सावधानावधारय ॥ ॥४३॥

ॐ नमो विघ्नराजाय नमस्तेऽस्तु कपर्दिने॥

नमो महोग्रदंष्ट्राय प्रभासक्षेत्रवासिने॥४४॥

कपर्दिनं नमस्कृत्य यात्रानिर्विघ्नहेतवे॥

स्तोष्येऽहं विघ्नराजानं सिद्धिबुद्धिप्रियं शुभम् ॥४५॥

महागणपतिं शूरमजितं जयवर्द्धनम्॥

एकदंतं च द्विदंतं चतुर्दंतं चतुर्भुजम्॥४६॥

त्र्यक्षं च शूलहस्तं च रक्त नेत्रं वरप्रदम् ॥

अजेयं शंकुकर्णं च प्रचण्डं दंडनायकम्॥

आयस्कदंडिनं चैव हुतवक्त्रं हुतप्रियम् ॥ ४७॥

अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ॥

तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् ॥ ४८ ॥

मदवतं विरूपाक्षमिभवक्त्रसमप्रभम् ॥

ध्रुवं च निश्चलं शांतं तं नमामि विनायकम् ॥४९॥

त्वया पूर्वेण वपुषा देवानां कार्यसिद्धये ॥

गजरूपं समास्थाय त्रासिताः सर्वदानवाः ॥ 7.1.38.५० ॥

ऋषीणां देवतानां च नायकत्वं प्रकाशितम् ॥ ५१ ॥

इति स्तुतः सुरैरग्रे पूज्यसे त्वं भवात्मज ॥

त्वामाराध्य गणाध्यक्षमिभवक्त्रसमप्रभम्॥ ५२ ॥

ध्रुवं च निश्चलं शांतं परीतं वि जयश्रिया ॥

कार्यार्थं रक्तकुसुमै रक्तचंदनवारिभिः ॥ ५३ ॥

रक्तांबरधरो भूत्वा चतुर्थ्यामर्चयेत्तु यः ॥

एककालं द्विकालं वा नियतो नियताशनः ॥ ५४ ॥

राजानं राजपुत्रं वा राजमंत्रिणमेव च ॥

राज्यं वा सर्वविघ्नेशो वशीकुर्यात्सराष्ट्रकम् ॥ ५५ ॥

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम्॥

स तत्फलमवाप्नोति स्मृत्वा देवं विनायकम् ॥ ५६ ॥

विषमं न भवेत्तस्य न स गच्छेत्पराभवम् ॥

न च विघ्नं भवेत्तस्य जनो जातिस्मरो भवेत् ॥ ५७ ॥

य इदं पठति स्तोत्रं षड्भिर्मासैर्वरं लभेत् ॥

संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ५८ ॥

प्रसादाद्दर्शनं याति तस्य सोमेश्वरः प्रभुः॥

कपर्दाकारमुदरं यतोऽस्य समुदाहृतम्॥

ततोऽस्य नाम जानीहि कपर्दीति महात्मनः ॥ ५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कपर्दिविनायकमाहात्म्यवर्णनंनामाष्टात्रिंशोध्यायः ॥ ३८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०३९

https://sa.wikisource.org/s/g4u

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

अथ संपूज्य विधिना देवदेवं कपर्द्दिनम् ॥

ततो गच्छेन्महादेवि लिगं केदारसंस्थितम् ॥ १ ॥

तस्यैवाग्नेयभागस्थं भीमेश्वरसमीपगम्॥

स्वयंभूतं महादेवि कल्पलिंगं मम प्रियम् ॥ २ ॥

मया संपूजितं देवि वृद्धिलिंग महाप्रभम्॥

निराहारस्तु यस्तत्र करोत्येकं प्रजागरम् ॥ ३ ॥

चतुर्दश्यां विशेषेण तस्य लोकाः सनातनाः ॥

रुद्रेश्वरेति देवस्य त्वासीन्नाम पुरा युगे ॥ ४ ॥

तिष्येस्मिंस्तु पुनः प्राप्ते म्लेच्छस्पर्शभयातुरः ॥

अस्मिँल्लिंगे लयं यातः केदारश्चाब्धिसंनिधौ ॥ ५ ॥

तेन केदारनामेति तस्य ख्यातं धरातले ॥

माघे मासि यताहारः स्नात्वा तु लवणोदधौ ॥६॥

पद्मके तु महाकुंडे मध्येस्य लवणांभसः ॥

रुद्रेशाद्दक्षिणे भागे धनुषां दशके स्थिते ॥ ७ ॥

स्नात्वा विधानतो देवि रुद्रेशं चार्चयिष्यति ॥

सम्यक्केदारया त्रायाः फलं तस्य भविष्यति ॥ ८ ॥

ब्रह्महत्यादिपापानां पूजनान्नाशनं महत् ॥

अथ तस्यैव देवस्य इतिहासं पुरातनम् ॥ ९ ॥

सर्वकामप्रदं नृणां कथ्यते ते सुरप्रिये ॥

आसीद्राजा पुरा देवि शशबिंदुरिति श्रुतः ॥ 7.1.39.१० ॥

सार्वभौमो महीपालो विपक्षगणसूदनः ॥

कलिद्वापरयोः संधौ सभूतः पृथिवीपतिः ॥ ११ ॥

तस्य भार्याऽभवत्साध्वी प्राणेभ्योऽपि गरीयसी ॥

न देवी न च गन्धर्वी नासुरी न च पन्नगी ॥ १२ ॥

तादृग्रूपा वरारोहे यथाऽस्य शुभलोचना॥

तस्य हेममयं पद्मं शतपत्रं मनोरमम्॥१३॥

खेचरं वेगि नित्यं च तस्य राज्ञो महात्मनः॥

स तेन पर्यटँल्लोकान्सर्वान्देवि स्वकामतः॥१४॥

एकदा फाल्गुने मासि शुक्लपक्षे वरानने ॥

चतुर्द्दश्यां तु संप्राप्तः प्रभासक्षेत्रमुत्तमम्॥१५॥

अथापश्यदृषीन्सर्वाञ्छ्रीसोमेशपुरःस्थितान् ॥

रात्रौ जागरणार्थाय जपहोमपरायणान्॥ १६ ॥

स दृष्ट्वा सोमनाथं तु प्रणिपत्य विधानतः ॥

पूजयामास सर्वां स्तान्यथार्हं भक्तिसंयुतः ॥ १७ ॥

ततः केदारमासाद्य संस्नाप्य विधिवत्प्रिये ॥

पूजयित्वा विचित्राभिः पुष्पमालाभिरीश्वरम् ॥ १८ ॥

नैवेद्यैर्विविधैर्वस्त्रैर्भूषणैश्च मनोहरैः ॥

ततोऽत्र कारयामास जागरं सुसमाहितः ॥ १९ ॥

ततस्ते मुनयः सर्वे कुतूहलसमन्विताः ॥

च्यवनो याज्ञवल्क्यश्च शांडिल्यः शाकटायनः ॥ 7.1.39.२० ॥

रैभ्योऽथ जैमिनिः क्रौंचो नारदः पर्वतः शिलः ॥

मार्कंडं पुरतः कृत्वा जग्मुस्तस्य समीपतः ॥ २१ ॥

चक्रुः कथाः सुविचित्रा इतिहासानि भूरिशः ॥

कीर्तयंतः स्थितास्तत्र पप्रच्छू राजसत्तमम् ॥ २२ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मात्सोमेश्वरं देवं परित्यज्य नराधिप ॥

केदारस्य पुरोऽकार्षीर्जागरं तद्ब्रवीहि नः ॥

नूनं वेत्सि फलं चास्य लिंगस्य त्वं महोदयम् ॥ २३ ॥ ॥

॥ राजोवाच ॥ ॥

शृण्वंतु ब्राह्मणाः सर्वे अन्यदेहोद्भवं मम ॥

पुराऽहं शूद्रजातीय आसं ब्राह्मणपूजकः ॥ २४ ॥

सौराष्ट्रविषये शुभ्रे धनधान्यसमाकुले ॥
अथ कालांतरे तत्र अनावृष्टिरभूद्द्विजाः ॥ २५ ॥
ततोऽहं क्षुधयाविष्टः प्रभासं क्षेत्रमास्थितः ॥
अथापश्यं सरः शुभ्रं हरिणीमूलसंस्थितम् ॥ २६ ॥
तच्च रामसरोनाम पद्मिनीषण्डमंडितम् ॥
क्षीरोदांबुधिसंकाशं दृष्ट्वा स्नातः क्लमान्वितः ॥ २७ ॥
संतर्प्य च पितृन्देवान्पीत्वा स्वच्छमथोदकम् ॥
ततोऽहं भार्यया प्रोक्तो गृहाणेमान्सरोरुहान् ॥ २८ ॥
एतत्समीपतो रम्यं दृश्यते स्थानमुत्तमम् ॥
विक्रीणीमोऽत्र गत्वा तु येन स्याद्भोजनं विभो ॥ २९ ॥
अथावतीर्य सलिलं गृहीतानि मया द्विजाः ॥
कमलानि सुभूरीणि प्रस्थितश्च पुरं प्रति ॥ 7.1.39.३० ॥
तत्र गत्वा च रथ्यासु चत्वरेषु त्रिकेषु च ॥
प्रफुल्लकमलान्येव क्रेतुं वै मुनिसत्तमाः ॥ ३१ ॥
न कश्चित्प्रति गृह्णाति अस्तं प्राप्तो दिवाकरः ॥
प्रासादं कंचिदासाद्य सुप्तोहं सह भार्यया ॥३२॥
तत्र सुप्तस्य मे बुद्धिः श्रुत्वा गीतध्वनिं तदा ॥
समुत्पन्ना सभा र्यस्य क्षुधार्तस्य विशेषतः ॥
नूनं जागरणं ह्येतत्कस्मिंश्चिद्विबुधालये ॥ ३३ ॥
सरोरुहाणि चादाय व्रजाम्यत्र सुरालये ॥
यदि कश्चित्प्रगृह्णाति प्राणयात्रा ततो भवेत् ॥ ३४ ॥
अथोत्थाय समायातो ह्यत्राहं मुनिपुंगवाः ॥
अपश्यं लिंगमेतत्तु पूजितं कुसुमैः शुभैः ॥ ३५ ॥
रुद्रेश्वराभिधमिदं वृद्धलिंगं स्वयंभुवम् ॥
वेश्यानंगवतीनाम्नी शिवरात्रिपरायणा ॥ ३६ ॥
जागर्त्ति पुरतस्तस्य गीतनृत्योत्सवादिना ॥
ततः कश्चिन्मया दृष्टः किमेतद्रात्रिजागरम् ॥३७॥
केयं स्त्री दृश्यतेऽत्यर्थं गीतनृत्योत्सवे रता ॥

सोऽब्रवीच्छिवधर्मोक्ता शिवरात्रिः सुधर्मदा ॥३८॥

तां चानंगवतीनाम्नी वेश्येयं धर्मसंयुता ॥

जागर्त्ति परमं श्रेयः शिवरात्रिव्रतं शुभम्॥ ३९ ॥

शिवरात्रिव्रतं ह्येतद्यः सम्यक्कुरुते नरः ॥

न स दुःखमवाप्नोति न दारि द्र्यं न बंधनम्॥ 7.1.39.४० ॥

दुष्टं चारिष्टयोगं वा न रोगं न भयं क्वचित् ॥

सुखसौभाग्यसंपन्नो जायते सत्कुले नरः ॥ ४१ ॥

तेजस्वी च यशस्वी च सर्वकल्याणभाजनम् ॥

भवेदस्य प्रसादेन एवमाहुर्मनीषिणः ॥ ४२ ॥

॥ राजोवाच ॥ ॥

अथ मे बुद्धिरुत्पन्ना तद्व्रतं प्रति निश्चला ॥

चिंतितं मनसा ह्येतन्मयाब्राह्मणसत्तमाः ॥ ४३ ॥

अन्नाभावान्ममोत्पन्न उपवासो बलाद्यतः ॥

तदहं पद्मके तीर्थेस्नात्वा च लवणांभसि ॥ ४४ ॥

एतैः सरोरुहैर्देवं पूजयामि महेश्वरम्॥

ततो मया सभार्येण रुद्रेशः संप्रपूजितः ॥ ४५ ॥

पद्मैश्च भक्तियुक्तेन सभार्येण विशेषतः ॥

जाग्रत्स्थितस्तु देवाग्रे तां रात्रिं सह भार्यया ॥ ४६ ॥

ततः प्रभातसमय उदिते सूर्यमण्डले ॥

सा वेश्या मामुवाचेदं कलधौतपलत्रयम् ॥ ४७ ॥

गृहाणमूल्यं पद्मानां न गृहीतं मया हि तत् ॥

सात्त्विकं भावमास्थाय सभार्येण द्विजोत्तमाः ॥ ४८ ॥

ततो भिक्षां समाहृत्य प्राणयात्रा मया कृता ॥

कालेन महता प्राप्तः कालधर्मं मुनीश्वराः ॥ ४९ ॥

इयं मे दयिता साध्वी प्राणेभ्योऽपि गरीयसी ॥

मम देहं समादाय प्रविष्टा हव्यवाहनम्॥ ॥ 7.1.39.५० ॥

तत्प्रभावादहं जातः सर्वभौमो महीपतिः ॥

जातिस्मरः सभार्यस्तु सत्यमेतद्द्विजोत्तमाः ॥ ५१ ॥

एतस्मात्कारणादस्य भक्तिर्लिंगस्य चोपरि ॥

मम नित्यं सभार्यस्य सत्यमेतद्ब्रवीमि वः ॥ ५२ ॥

मया क्रियाविहीनेन भक्तिबाह्येन सत्तमाः ॥

व्रतमेतत्समाचीर्णं तस्येदं सुमहत्फ लम्॥ ५३ ॥

अधुना भक्तियुक्तस्य यथोपकरणान्मम ॥

भविष्ये यत्फलं किंचिन्नो वेद्मि च मुनीश्वराः ॥

येन सोमेशमुत्सृज्य अत्राहं भक्ति तत्परः ॥ ५४ ॥

॥ ईश्वर उवाच ॥ ॥

एवं श्रुत्वा तु ते विप्रा विस्मयोत्फुल्ललोचनाः ॥

साधुसाध्विति जल्पंतो राजानं संप्रशंसिरे ॥ ५५ ॥

पूजयामासुरनिशं लिंगं तत्र स्वयंभुवम् ॥

ततोऽसौ पार्थिवश्रेष्ठो लिंगस्यास्यप्रसादतः ॥

संसिद्धिं परमां प्राप्तो दुर्ल्लभां त्रिदशैरपि ॥ ५६ ॥

सा च वेश्या भगवती शिवरात्रिप्रभावतः ॥

तस्य लिंगस्य माहात्म्याद्रंभानामाप्सराऽभवत् ॥ ५७ ॥

तस्मात्सर्वप्रयत्नेन तल्लिंगं पूजयेद्बुधः ॥

धर्मकामार्थमोक्षं च यो वांछत्यखिलप्रदम् ॥ ५८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये केदारेश्वर (रुद्रेश्वर)लिङ्गमाहात्म्यवर्णनं नामैकोनचत्वारिंशोऽध्यायः॥३९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४०

https://sa.wikisource.org/s/g6g
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

ईश्वर उवाच॥

ततो गच्छेन्महादेवि श्वेतकेतुप्रतिष्ठितम्॥

लिंगं महाप्रभावं तु भीमेनाराधितं पुरा॥१॥

केदारेश्वरसांनिध्ये नातिदूरे व्यवस्थितम्॥

पूजयते तद्विधानेन क्षीरस्नानादिभिः क्रमात् ॥

यात्राफलमभिप्रेप्सुः प्रेत्य स्वर्गफलाय वै ॥ २ ॥

॥ देव्युवाच ॥ ॥

श्वेतकेतोस्तु यद्देव लिंगं प्रोक्तं त्वया मम ॥

तस्य जातं कथं देव नाम भीमेश्वरेति च ॥ ३ ॥

कथं विनिर्मितं पूर्वं तस्मिन्दृष्टे तु किं फलम् ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

आसीत्त्रेतायुगे पूर्वं राजा स्वायंभुवेंतरे ॥

श्वेतकेतुरिति ख्यातो राजर्षिः सुमहातपाः ॥ ५ ॥

स प्रभासं समागत्य प्रतिष्ठाप्य महे श्वरम् ॥

तपस्तेपे सुविपुलं सागरस्य तटे शुभे ॥ ६ ॥

पंचाग्निसाधको ग्रीष्मे वर्षास्वाकाशगस्तथा ॥

हेमंते जलमध्यस्थो नव वर्षाणि पंच च ॥ ७ ॥

ततश्चतुर्द्दशे देवि तपसा नियमेन च ॥

तुष्टेनोक्तो मया देवि वरं वरय सुव्रत ॥ ८ ॥

श्वेतकेतुरथोवाच भक्तिं देहि सुनिश्चलाम् ॥

स्थानेऽस्मिन्स्थीयतां देव यदि तुष्टोऽसि मे प्रभो ॥ ९ ॥

एवमस्त्वित्यथोक्त्वाऽहं तस्यांतर्द्धानमागतः ॥

ततः कालांतरेऽतीते श्वेतकेतुर्महाप्रभः ॥ 7.1.40.१० ॥

समाराध्य त्विदं लिंगं प्राप्तः स्थानं महोदयम् ॥

ततो जातं नाम तस्य श्वेतकेत्वीश्वरं श्रुतम् ॥ ११ ॥

अग्नितीर्थे महापुण्ये सर्वपातकनाशने ॥

ततः कलियुगे प्राप्ते भ्रातृभिश्च समन्वितः ॥ १२ ॥

तीर्थयात्राप्रसंगेन यदा प्रभासमागतः ॥

भीमसेनो महाबाहुर्वायुपुत्रो ममांशजः ॥ १३ ॥

तल्लिंगं पूजयामास कृत्वा जागेश्वरं निजम् ॥

मत्वा तीर्थं महापुण्यं सागरस्य समीपतः ॥ १४ ॥

तदा प्रभृति भीमेशं पुनर्नामाऽभवच्छुभम् ॥

दृष्टमात्रेण तेनैव सकृल्लिंगेन भामिनि ॥ १५ ॥

अन्यजन्मकृतान्येव पापानि सुबहून्यपि ॥

नाशमायांति सर्वाणि तथैवामुष्मिकाणि तु ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भीमेश्वरमाहात्म्यवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४१

https://sa.wikisource.org/s/g4c



॥ ईश्वर उवाच ॥ ॥

तस्यैव पूर्वदिग्भागे सरस्वत्या प्रतिष्ठितम् ॥

लिंगं महाप्रभावं तु सोमेशादग्निगोचरे ॥ १ ॥

भैरवेश्वररूपस्तु वाडवः कुम्भसंस्थितः ॥

यत्र देव्या समानीतः सागरस्य समीपतः ॥ २ ॥

विश्रामार्थं क्षणं मुक्त्वा देव्या लिंगं प्रतिष्ठितम् ॥

समभ्यर्च्य विधानेन गृहीत्वा वडवानलम्॥

समुद्रमध्ये चिक्षेप देवानां हितकाम्यया ॥ ३ ॥

ततो हृष्टतरा देवाः शंखदुन्दुभिनिःस्वनैः ॥

पूरयन्तोंऽबरं देवीमीडिरे पुष्पवृष्टिभिः ॥ ४ ॥

देवमातेति ते नाम कृत्वोचुस्तां तदा सुराः ॥

कृत्वा तु भैरवं कार्यमसाध्यं देवदानवैः ॥ ५ ॥

प्रतिष्ठितवती चात्र यस्माल्लिंगं महोदयम् ॥

त्वं सर्वसरितां श्रेष्ठा सर्वपातकनाशिनी ॥

तस्माद्भैरवनामेति लिंगं ख्यातिं गमिष्यति ॥ ६ ॥

इत्युक्ता तु तदा देवी भैरवेश्वरनैर्ऋते ॥

सागरस्य स्थिता रम्ये तत्र मूर्त्तिमती सती ॥ ७ ॥

पूजयेत्तां विधानेन तं तथा भैरवेश्वरम् ॥

महानवम्यां यत्नेन कृत्वा स्नानं विधानतः ॥

सरस्वतीं पूजयित्वा वाग्दोषान्मुच्यतेऽखिलात् ॥ ८ ॥

तस्या लिंगं तु संपूज्य संस्नाप्य पयसा पृथक् ॥

अघोरेणैव विधिवत्सम्यग्यात्राफलं लभेत् ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भैरवेश्वरमाहात्म्यवर्णनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४२

https://sa.wikisource.org/s/g6h
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चण्डीशं देवमुत्तमम् ॥

सोमेशादीशदिग्भागे धनुषां सप्तके स्थितम् ॥ १ ॥

दण्डपाणेस्तु भवनाद्दक्षिणे नातिदूरगम् ॥

चंड्या प्रतिष्ठितं पूर्वं चण्डेनाराधितं ततः ॥ २ ॥

गणेन मम देवेशि तत्कृत्वा दुष्करं तपः ॥

तेन चण्डेश्वरं लिंगं प्रख्यातं धरणीतले ॥ ३ ॥

स्नापयेत्पयसा पूर्वं दध्ना घृतयुतेन च ॥

मधुनेक्षुरसेनैव कुंकुमेन विलेपयेत् ॥ ४ ॥

कर्पूरोशीरमिश्रेण मृगनाभिरसेन च ॥

चन्दनेन सुगन्धेन पुष्पैः संपूजयेत्ततः ॥ ५ ॥

दग्ध्वा धूपं पुरो देवि ततो देवस्य चागुरुम् ॥

वस्त्रैः संपूजयेत्पश्चादात्मवित्तानुसारतः ॥ ६ ॥

नैवेद्यं परमान्नं च दत्त्वा दीपसम न्वितम् ॥

ततो दद्याद्द्विजातिभ्यो यथाशक्त्या तु दक्षिणाम्॥ ७ ॥

दक्षिणां दिशमास्थाय यत्किंचित्तत्र दीयते॥

चण्डीशस्य वरारोहे तत्सर्वं चाक्षयं भवेत् ॥ ८ ॥

यः श्राद्धं कुरुते तत्र चण्डीशस्य तु दक्षिणे ॥

आकल्पं तृप्तिमायांति पितरस्तस्य भामिनि ॥ ९ ॥

अयने चोत्तरे प्राप्ते यः कुर्याद्धृत कम्बलम् ॥

न स भूयोऽत्र संसारे जन्म प्राप्नोति दारुणम्॥ 7.1.42.१० ॥

एवं कृत्वा नरो भक्त्या यात्रां देवस्य शूलिनः ॥

निर्माल्यातिक्रमोद्भूतैरज्ञानाद्भक्षणोद्भवैः ॥

पापैः प्रमुच्यते जंतुस्तथाऽन्यैः कर्मसंभवैः ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेप्रभासक्षेत्रमाहात्म्ये चण्डीशमाहात्म्यवर्णनंनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे लिंगं सूर्यप्रतिष्ठितम् ॥

सोमेशात्पश्चिमे भागे धनुषां सप्तके स्थितम्॥

आदित्येश्वरनामानं सर्वपातकनाशनम् ॥ १ ॥

त्रेतायुगे महादेवि समुद्रेण महात्मना ॥

रत्नैः संपूजितं लिंगं वर्षाणामयुतं प्रिये ॥ २ ॥

तेन रत्नेश्वरंनाम सांप्रतं प्रथितं क्षितौ ॥

पंचामृतेन संस्नाप्य पंचरत्नैः प्रपूजयेत् ॥३॥

ततो राजोपचारेण पूजयेद्विधिवन्नरः ॥

एवं कृते महादेवि मेरुदानफलं लभेत् ॥४॥

सर्वेषां चैव यज्ञानां दानानां नात्र संशयः ॥५॥

तीर्थानां चापि सर्वेषां यच्चान्यत्सुकृतं भुवि ॥

उद्धरेत्पितृवर्गं च मातृवर्गं च मानवः ॥ ६ ॥

बाल्ये वयसि यत्पापं वार्द्धके यौवनेऽपि वा ॥

क्षालयेच्चैव तत्सर्वं दृष्ट्वा रत्नेश्वरं नरः ॥ ७ ॥

धेनुदानं प्रशंसंति तस्मिन्स्थाने महर्षयः ॥

धेनुदस्तारयेन्नूनं दश पूर्वान्दशापरान् ॥ ८ ॥

देवस्य दक्षिणे भागे यो जपेच्छतरुद्रियम् ॥

संपूज्य विधिवल्लिंगं न स भूयः प्रजायते ॥९॥

एवं संक्षेपतः प्रोक्तमादित्येशमहोदयम् ॥

श्रुत्वाऽवधार्य यत्नेन मुच्यते कर्मबंधनैः ॥ 7.1.43.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य आदित्येश्वरमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४४



॥ ईश्वर उवाच ॥ ॥

आदित्येशं समभ्यर्च्य पुनः सोमेश्वरं व्रजेत् ॥

तं संपूज्य विधानेन पंचांगेन विशेषतः ॥ १ ॥

दृष्ट्वा सोमेश्वरं चैव साष्टांगं प्रणिपत्य च ॥

प्रदक्षिणादिकं कुर्यात्संपश्येच्च पुनःपुनः ॥ २ ॥

सूर्याचन्द्रमसोर्लिंगं त्रिःकृत्वा प्रयतः शुचिः ॥

अग्नीषोमात्मकं कर्म तेन सर्वं कृतं भवेत् ॥ ३ ॥

उमादेवीं ततो गच्छेत्सोमेश्वरसमीपतः ॥

द्वितीयां तु ततो गच्छेद्दैत्यसूदनसन्निधौ ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रमासक्षेत्रमाहात्म्ये सोमेश्वरमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अंगारेश्वरमुत्तमम् ॥

स्थापितं भूमिपुत्रेण सोमेशादीश गोचरे ॥ १ ॥

त्रिपुरं दग्धुकामस्य पुरा मम वरानने ॥

क्रोधादश्रु विनिष्क्रांतं लोचनत्रितयेन तु ॥२॥

तच्च भूमौ निपतितं ततो भूभिसुतोऽभवत् ॥

स प्रभासं ततो गत्वा बाल्यात्प्रभृति शंकरम् ॥ ३ ॥

तपसाऽऽराधयामास बहून्वर्षगणान्प्रिये ॥

तस्य तुष्टो महादेवः सुप्रीतात्मा वरं ददौ ॥ ४ ॥

सोऽब्रवीद्यदि मे देव तुष्टोसि वृषभध्वज ॥

ग्रहत्वं देहि सर्वेश न चान्यं वरमुत्सहे ॥ ५ ॥

स तथेति प्रतिज्ञाय पुनस्तं वाक्यमब्रवीत् ॥

इहागत्य नरो यो मां पूजयिष्यति भक्तितः ॥ ६ ॥

न भविष्यति वै पीडा तावकी तस्य कुत्रचित् ॥

पुष्पाणि रक्तवर्णानि मध्वाज्याक्तानि भूरिशः ॥ ७ ॥

होमयिष्यति यो भक्त्या लक्षमेकं तदग्रतः ॥

पंचोपचारविधिना त्वां तु संपूज्य यत्नतः ॥ ८ ॥

तस्य जन्मावधिर्नैव तव पीडा भविष्यति ॥।

तथा विद्रुमदानेन लप्स्यते फलमीप्सितम् ॥ ९ ॥

एवमुक्त्वा स भगवानत्रैवांतरधीयन ॥

भौमोऽपि ग्रहमध्यस्थो विमानेन विराजते ॥7.1.45.१०॥

एवं संक्षेपतः प्रोक्तं भौममाहात्म्यमुत्तमम्॥

श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येंऽगारेश्वरमाहात्म्यवर्णनंनाम पञ्चचत्वारिंशोध्यायः ॥ ४५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्यैवोत्तरतः स्थितम् ॥

लिंगं महाप्रभावं तु बुधेश्वरमिति श्रुतम् ॥ १ ॥

धनुषां द्वितये चैव नातिदूरे व्यवस्थितम् ॥

सर्वपाप हरं लिंगं दर्शनादेव भामिनि ॥ २ ॥

बुधेन चैव देवेशि तत्र तप्तं महातपः ॥

स्थापितं विमलं लिंगं समाराध्य सदाशिवम् ॥ ३ ॥

वर्षायुतानि चत्वारि संपूज्य तु विधानतः ॥

अनन्यचेताः शांतात्मा प्रत्यक्षीकृतवान्भवम्॥ ४ ॥

ततस्तुष्टमना देवो ग्रहत्वं तस्य तद्ददौ ॥

तं संपूज्य विधानेन सोमपुत्रप्रतिष्ठितम्॥

सौम्याष्टम्यां विशेषेण राजसूयफलं लभेत् ॥ ५ ॥

न दौर्भाग्यं कुले तस्य न चैवेष्टवियोजनम् ॥

शत्रुतो न भयं तस्य भवेत्तस्यप्रसादतः ॥ ६ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं बुधदैवतम्॥

श्रुत्वाऽभिनंद्य प्रयतः प्राप्नोति परमं पदम् ॥ ७ ॥

इति श्रीस्कान्दे महापु राण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बुधेश्वरमाहात्म्यवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं गुरुनिषेवितम्॥

उमायाः पूर्वदिग्भागे सिद्धेशाग्नेयगोचरे ॥ १ ॥

संस्थितं तु महल्लिंगं देवाचार्य प्रतिष्ठितम् ॥

आराध्य परया भक्त्या लिंगं वर्षसहस्रकम् ॥ २ ॥

तोषयामास देवेशं भवं शर्वमुमापतिम् ॥

प्राप्तवानखिलान्कामानप्राप्यानकृतात्मभिः ॥ ३ ॥

देवानां चैव पूज्यत्वं प्राप्य ज्ञानमथैश्वरम्॥

ग्रहत्वं च तथा प्राप्य मोदते दिवि सांप्रतम् ॥ ४ ॥

तं दृष्ट्वा मानवो भक्त्या न दुर्गति मवाप्नुयात्॥

बृहस्पतिकृतं लिंगं ये पश्यंति नरोत्तमाः ॥ ५ ॥

बृहस्पतिकृता पीडा नैव तेषां हि जायते ॥

तत्र शुक्लचतुर्दश्यां गुरुवारे तथा प्रिये ॥ ॥ ६ ॥

संपूज्य विधिवल्लिंगं सम्यग्राजोपचारतः ॥

अथवा भक्तिभावेन प्राप्नुयात्परमं पदम् ॥ ७ ॥

स्नानं पलसहस्रेण पंचामृतरसेन यः ॥

करोति भक्त्या मर्त्यो वै मुच्यते स ऋणत्रयात् ॥८॥

मातृकात्पैतृकाद्देवि तथा गुरुसमुद्भवात् ॥

सर्वपापविशुद्धात्मा निर्द्वंद्वो मुक्तिमाप्नुयात् ॥ ९ ॥

एवं संक्षेपतः प्रोक्तं माहात्म्यं गुरुदैवतम् ॥

शृणुयाद्यस्तु भावेन तस्य प्रीतो गुरुर्भवेत् ॥ 7.1.47.१० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वृहस्पतीश्वरमाहात्म्यवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं शुक्रप्रतिष्ठितम्॥

सर्वपापहरं देवि विभूतीश्वरपश्चिमे॥१॥

नातिदूरे स्थितं तत्र स्वयं शुक्रेण निर्मितम्॥

यत्र संजीवनीं प्राप्तो विद्यां रुद्रप्रभावतः ॥२॥

संतप्य तु महाघोरं तपोवर्षसहस्रकम् ॥

संप्रसाद्य विरूपाक्षं योऽवाप ग्रहतां सुधीः ॥३॥

ग्रस्तेन शंभुना येन देवकार्यार्थसिद्धये ॥

तत्रोदरगतेनैव तपस्तप्तं सुदुष्करम्॥ ४॥

वर्षाणामयुतं साग्रं तुष्टिं नीतो महेश्वरः ॥

निष्कासितस्ततः शीघ्रं शुक्र मार्गेण शंभुना ॥५॥

ततः शुक्रेति नामाभूद्भार्गवस्य महात्मनः ॥

तदाराधयते लिंगं यः कृत्वा निश्चलं मनः ॥६॥

मृत्युंजयं जपेल्लक्षं स समीहितमाप्नुयात्॥७॥

तं दृष्ट्वा त्वथवा स्पृष्ट्वा जन्मादिमरणान्तकात्॥

मुच्यते पातकान्मृत्योः प्रसादात्तस्य भामिनि॥८॥

मृतसंजीवनार्थं यदैश्वर्यमणिमादिकम्॥

प्राप्नुयान्नात्र संदेहो यस्य भक्तिः सुनिश्चला ॥९॥

पंचामृतेन संस्नाप्य देवं शुकप्रतिष्ठितम्॥

सुगन्धपुष्पैः संपूज्य शौक्रीं पीडां स नाप्नुयात् ॥7.1.48.१०॥

इति सर्वं समासेन माहात्म्यं शुक्रदैवतम् ॥

कथितं तव सुश्रोणि श्रुतं पापभयापहम् ॥११॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शुक्रेश्वरमाहात्म्यवर्णनंनामाष्टचत्वारिंशोध्यायः ॥ ४८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०४९



॥ ईश्वर उवाच ॥ ॥

तस्माच्छुक्रेश्वराद्गच्छेद्देवि लिंगं महाप्रभम्॥

शनैश्चरैश्वरंनाम महापातकनाशनम् ॥ १ ॥

बुधेश्वरात्पश्चिमतो ह्यजादेव्यग्निगोचरे ॥

तस्या धनुः पंचकेन नातिदूरे व्यवस्थितम् ॥ २ ॥

कल्पलिंगं महादेवि पूजितं देवदानवैः ॥

छायापुत्रेण संतप्तं तपः परमदुष्करम् ॥ ३ ॥

अनादि निधनो देवो येन लिंगेऽवतारितः ॥

प्राप्तवान्यो ग्रहेशत्वं भक्त्या शंभोः प्रसादतः ॥ ४ ॥

यस्य दृष्ट्या बिभेति स्म देवासुरगणो महान् ॥

न स कोऽप्यस्ति वै प्राणी ब्रह्मांडे सचराचरे ॥ ५ ॥

देवो वा दानवो वापि सौरिणा पीडितो न यः ॥

शनिवारेण संपूज्य भक्त्या सौरीश्वरं शिवम् ॥ ॥ ६ ॥

शमीपत्रैर्महादेवि तिलमाषगुडौदनैः ॥

संतर्प्य तु विधानेन दद्यात्कृष्णं वृषं द्विजे ॥ ७ ॥

स्तुत्वा स्तोत्रैश्च विविधैः पुराणश्रुतिसंभवैः ॥

अथ वैकेन देवेशः स्तोत्रेण परितोषितः ॥ ८ ॥

राज्ञा दशरथेनैव कृतेन तु बलीयसा ॥

स्तुत्यः सौरीश्वरो देवः सर्वपीडोपशांतये॥ ९ ॥

॥ देव्यु वाच ॥ ॥

कथं दशरथो राजा चक्रे शानैश्चरीं स्तुतिम् ॥

कथं संतुष्टिमगमत्तस्य देवः शनैश्चरः ॥ 7.1.49.१० ॥

॥ ईश्वर उवाच ॥ ॥

रघुवंशेऽति विख्यातो राजा दशरथो बली ॥

चक्रवर्ती स विज्ञेयः सप्तद्वीपाधिपः पुरा ॥ ११ ॥

कृत्तिकांते शनिं कृत्वा दैवज्ञैर्ज्ञापितो हि सः ॥

रोहिणीं भेद यित्वा तु शनिर्यास्यति सांप्रतम् ॥ १२ ॥

उक्तं शकटभेदं तु सुरासुरभयंकरम् ॥

द्वादशाब्दं तु दुर्भिक्षं भविष्यति सुदारुणम् ॥ १३ ॥

एतच्छ्रुत्वा मुनेर्वाक्यं मंत्रिभिः सहितो नृपः ॥

आकुलं तु जगद्दृष्ट्वा पौरजानपदादिकम् ॥ १४ ॥

वदंति सततं लोका नियमेन समागताः ॥

देशाश्च नगर ग्रामा भयाक्रांताः समंततः ॥

मुनीन्वसिष्ठप्रमुखान्पप्रच्छ च स्वयं नृपः ॥ १५ ॥

॥ दशरथ उवाच ॥ ॥

समाधानं किमत्रास्ते ब्रूहि मे द्विज सत्तम ॥ १६ ॥

॥ वसिष्ठ उवाच ॥ ॥

प्राजापत्ये च नक्षत्रे तस्मिन्भिन्ने कुतः प्रजाः ॥

अयं योगो ह्यसाध्यस्तु ब्रह्मादींद्रादिभिः सुरैः॥ ॥ १७ ॥

तदा संचिंत्य मनसा साहसं परमं महत् ॥

समादाय धनुर्दिव्यं दिव्यैरस्त्रैः समन्वितम् ॥ १८ ॥

रथमारुह्य वेगेन गतो नक्षत्रमंडलम् ॥।

रथं तु कांचनं दिव्यं मणिरत्नविभूषितम् ॥ १९ ॥

ध्वजैश्च चामरैश्छत्रैः किंकिणैरथ शोभितम्॥

हंसवर्णहयैर्युक्तं महाकेतुसमन्वितम् ॥ 7.1.49.२० ॥

दीप्यमानो महारत्नैः किरीटमुकुटोज्ज्वलः ॥

बभ्राज स तदाकाशे द्वितीय इव भास्करः ॥ २१ ॥

आकर्णं चापमापूर्य संहारास्त्रं नियोज्य च ॥

कृत्तिकांते शनिं ज्ञात्वा प्रविश्य किल रोहिणीम् ॥ २२ ॥

दृष्ट्वा दशरथोऽस्याग्रे तस्थौ सभ्रुकुटीमुखः ॥

संहारास्त्रं शनिर्दृष्ट्वा सुरासुरविमर्द्दनम्॥ ॥ २३ ॥

हसित्वा तद्भयात्सौरिरिदं वचनमब्रवीत् ॥

पौरुषं तव राजेंद्र परं रिपुभयंकरम् ॥ २४ ॥

देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ॥

मया विलोकिताः सर्वे भयं चाशु व्रजंति ते ॥ २५ ॥

तुष्टोहं तव राजेंद्र तपसा पौरुषेण च ॥

वरं ब्रूहि प्रदास्यामि मनसा यदभीप्सितम् ॥ २६ ॥ ॥

॥ दशरथ उवाच ॥ ॥

रोहिणीं भेदयित्वा तु न गंतव्यं त्वया शने ॥

सरितः सागरा यावद्यावच्चद्रार्कमेदिनी ॥ २७ ॥

याचितं ते मया सौरे नान्य मिच्छामि ते वरम् ॥

एवमुक्तः शनिः प्रादाद्वरं तस्मै तु शाश्वतम् ॥ २८ ॥

प्राप्यैवं तु वरं राजा कृतकृत्योऽभवत्तदा ॥

पुनरेवाब्रवीत्सौरिर्वरं वरय सुव्रत ॥ २९ ॥

प्रार्थयामास हृष्टात्मा वरमेवं शनेस्तदा ॥

न भेत्तव्यं च शकटं त्वया भास्करनंदन ॥ 7.1.49.३० ॥

द्वादशाब्दं तु दुर्भिक्षं न कर्तव्यं कदाचन ॥

कीर्तिरेषा मदीया च त्रैलोक्ये विचरिष्यति ॥ ३१ ॥

॥ ईश्वर उवाच ॥ ॥

वरद्वयं ततः प्राप्य हृष्टरोमा स पार्थिवः ॥

रथोपरि धनुर्मुक्त्वा भूत्वा चैव कृतांजलिः ॥ ३२ ॥

ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम् ॥

राजा दशरथः स्तोत्रं सौरेरिदमथाकरोत् ॥ ३३ ॥ ॥

॥ राजोवाच ॥ ॥

नमो नीलमयूखाय नीलोत्पलनिभाय च ॥

नमो निर्मांसदेहाय दीर्घश्मश्रुजटाय च ॥३४॥

नमो विशालनेत्राय शुष्कोदरभयान क ॥

नमः परुषगात्राय स्थूलरोमाय वै नमः ॥ ३५ ॥

नमो नित्यं क्षुधार्त्ताय नित्यतप्ताय वै नमः ॥

नमः कालाग्निरूपाय कृतांतक नमोस्तु ते ॥ ३६ ॥

नमो दीर्घाय शुष्काय कालदृष्टे नमोऽस्तु ते ॥

नमस्ते कोटराक्षाय दुर्निरीक्ष्याय वै नमः ॥३७॥

नमो घोराय रौद्राय भीषणाय करा लिने ॥

नमस्ते सर्वभक्षाय वलीमुख नमोऽस्तु ते ॥ ३८ ॥

सूर्यपुत्र नमस्तेऽस्तु भास्करे भयदायक ॥

अधोदृष्टे नमस्तुभ्यं वपुःश्याम नमोऽस्तु ते ॥ ३९ ॥

नमो मन्दगते तुभ्यं निस्त्रिंशाय नमोनमः ॥

नमस्त उग्ररूपाय चण्डतेजाय ते नमः ॥ 7.1.49.४० ॥

तपसा दग्धदेहाय नित्यं योगरताय च ॥

नमस्ते ज्ञाननेत्राय कश्यपात्मजसूनवे ॥ ४१ ॥

तुष्टो ददासि वै राज्यं रुष्टो हरसि तत्क्षणात् ॥

देवासुरमनुष्याश्च पशुपक्षिसरीसृपाः ॥४२॥

त्वया विलोकिताः सौरे दैन्यमाशु व्रजंति च ॥

ब्रह्मा शक्रो यमश्चैव ऋषयः सप्ततारकाः ॥ ४३ ॥

राज्यभ्रष्टाश्च ते सर्वे तव दृष्ट्या विलोकिताः ॥

देशाश्च नगरग्रामा द्वीपाश्चैवाद्रयस्तथा ॥ ४४ ॥

रौद्रदृष्ट्या तु ये दृष्टाः क्षयं गच्छंति तत्क्षणात् ॥ ४५ ॥

प्रसादं कुरु मे सौरे वरार्थेऽहं तवाश्रितः

सौरे क्षमस्वापराधं सर्वभूतहिताय च ॥ ४६ ॥

॥ ईश्वर उवाच ॥ ॥

एवं स्तुतस्तदा सौरी राज्ञा दशरथेन च ॥

महराजः शनिर्वाक्यं हृष्टरो माऽब्रवीदिदम् ॥ ४७ ॥

॥ शनिरुवाच ॥ ॥

तुष्टोऽहं तव राजेन्द्र स्तवेनानेन सुव्रत ॥

वरं ब्रूहि प्रदास्यामि स्वेच्छया रघुनंदन ॥ ४८ ॥ ॥

॥ दशरथ उवाच ॥ ॥

अद्यप्रभृति पिंगाक्ष पीडा कार्या न कस्यचित् ॥

देवासुरमनुष्याणां पशुपक्षिसरीसृपाम् ॥ ४९ ॥

॥ शनिरुवाच ॥ ॥

ग्रहाणां दुर्ग्रहो ज्ञेयो ग्रहपीडां करोम्यहम् ॥

अदेयं प्रार्थितं राजन्किंचिद्युक्तं ददाम्यहम् ॥ 7.1.49.५० ॥

त्वया प्रोक्तं मम स्तोत्रं ये पठि ष्यंति मानवाः ॥

पुरुषाश्च स्त्रियो वापि मद्भयेनोपपीडिताः ॥ ५१ ॥

देवासुरमनुष्यास्तु सिद्धविद्याधरोरगाः ॥

मृत्युस्थाने स्थितो वापि जन्मप्रांतगतस्तथा ॥ ५२ ॥

एककालं द्विकालं वा तेषां श्रेयो ददाम्यहम् ॥

पूजयित्वा जपेत्स्तोत्रं भूत्वा चैव कृतांजलिः ॥ ५३ ॥

तस्य पीडां न चैवाहमिह कुर्यां कदाचन ॥

जन्मस्थाने स्थितो वापि मृत्युस्थाने स्थितोऽपि च ॥ ५४ ॥

जन्मऋक्षे च लग्ने च दशास्वंतर्दशासु च ॥

रक्षामि सततं तस्य पीडां चान्यग्रहस्य च ॥ ५५ ॥

अनेनैव प्रकारेण पीडामुक्तस्त्वसौ भवेत् ॥

एतत्प्रोक्तं मया दत्तं वरं च रघुनंदन ॥ ५६ ॥

॥ ईश्वर उवाच ॥ ॥

वरद्वयं च संप्राप्य राजा दशरथः पुरा ॥

मेने कृतार्थमात्मानं नमस्कृत्य शनैश्चरम् ॥ ५७ ॥

शनिं स्तुत्वाऽभ्यनुज्ञातो रथमारुह्य वीर्यवान् ॥

स्वस्थानं गतवान्राजा पूज्यमानो दिवौकसैः ॥ ५८ ॥

य इदं प्रातरुत्थाय सौरिवारे पठेन्नरः ॥

सर्वग्रहोद्भवा पीडा न भवेद्भुवि तस्य तु ॥ ५९ ॥

शनैश्चरं स्मरेद्देवं नित्यं भक्तिसमन्वितः ॥

पूजयित्वा पठेत्स्तोत्रं तस्य तुष्यति भास्करिः ॥ 7.1.49.६० ॥

इति ते कथितं देवि माहात्म्यं शनिदैवतम् ॥

सर्वपापोपशमनं सर्वकामफलप्रदम् ॥ ६१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमं प्रभासक्षेत्रमाहात्म्ये शनैश्चरेश्वरमाहात्म्यवर्णनंनामैकोनपञ्चाशोऽध्यायः ॥ ४९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५०

https://sa.wikisource.org/s/g60
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं राहुप्रतिष्ठितम् ॥

शनैश्चरेश्वराद्देवि वायव्ये संप्रतिष्ठितम् ॥ १ ॥

अजादेव्याश्चोत्तरतो धनुषां सप्तके स्थितम् ॥

मंगलायाः समीपस्थं नातिदूरे व्यवस्थितम् ॥ २ ॥

लिंगं महाप्रभावं तु सैंहिकेयप्रतिष्ठितम् ॥

तत्र वर्षसहस्रं तु वैप्रचित्तिस्तपोऽकरोत् ॥ ३ ॥

स्वर्भानुः स महावीर्यो वक्त्रयोधी महासुराः ॥

समाराध्य महादेवं दिव्येन तपसा प्रभुम् ॥ ४ ॥

लिंगेऽवतारयामास जगद्दीपं महेश्वरम् ॥

यश्चैनं पूजयेद्भक्त्या नरः सम्यक्च पश्यति ॥

तस्य पापं क्षयं याति अपि ब्रह्मवधोद्भवम् ॥ ५ ॥

नांधो न बधिरो मूको न रोगी न च निर्द्धनः ॥

कदाचिज्जायते मर्त्यस्तेन दृष्टेन भूतले ॥ ६ ॥

सुखसौभाग्यसंपन्नस्तदा भवति रूपवान् ॥

सर्वकामसमृद्धात्मा मोदते दिवि देववत् ॥ ७ ॥

इति ते कथितं देवि माहात्म्यं राहुदैवतम् ॥

श्रुत्वा तु मोहनिर्यातो नरो निष्कल्मषो भवेत् ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये राह्वीश्वरमाहात्म्यवर्णनंनाम पंचाशोऽध्यायः ॥ ५० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि केतुलिंगं महाप्रभम् ॥

राह्वीशानादुत्तरे च मंगलायाश्च दक्षिणे ॥ १ ॥

धनुषोंतरमानेन नातिदूरे व्यवस्थितम् ॥

लिंगं महाप्रभावं हि सर्वपातकनाशनम् ॥ २ ॥

केतुर्नाम ग्रहोत्युग्रः शिवसद्भावभावितः ॥

वर्तुलोऽतीव विस्तीर्णो लोचनाभ्यां सुभीषणः ॥ ३ ॥

पलालधूमसंकाशो ग्रहपीडापहारकः ॥

तत्राकरोत्तपश्चोग्रं दिव्याब्दानां शतं प्रिये ॥ ४ ॥

तस्य तुष्टो महादेवो ग्रह त्वं प्रददौ प्रिये ॥

एकादशशतानां च ग्रहाणामाधिपत्यताम् ॥ ५ ॥

तत्रस्थं पूजयेद्भक्त्या केतुलिंगं महाप्रभम् ॥

केतूदये महाघोरे तस्मिन्दृष्टे विशेषतः ॥ ६ ॥

ग्रहपीडासु चोग्रासु पूजयेत्तं विधानतः ॥

पुष्पैर्गंधैस्तथा धूपैर्नैवेद्यैर्विविधैः शुभैः ॥ ७ ॥

तोषयेद्विधिवद्देवं केतुं कल्मषनाशनम् ॥ ८ ॥

इति संक्षेपतः प्रोक्तं केतुलिंगं महोदयम् ॥

ग्रहपीडोपशमनं सर्वपातकनाशनम् ॥ ९ ॥

एतानि नव लिंगानि ग्रहाणां कथितानि ते ॥

यः पश्यति नरो नित्यं तस्य पीडाभयं कुतः ॥ 7.1.51.१० ॥

न दौर्भाग्यं कुले तस्य न रोगी नैव दुःखितः ॥

जायते पुत्रवद्देवि तं रक्षंति महाग्रहाः ॥ ११ ॥

इति ते कथितं सम्यक्चतुर्दशायतनं प्रिये ॥

विघ्नेश्वरं समारभ्य यावत्केतुप्रतिष्ठितम् ॥ १२ ॥

नवग्रहेश्वराणां तु माहात्म्यं पापनाशनम् ॥

तथैव पंचलिंगानां श्रुत्वा पापैः प्रमुच्यते ॥ १३ ॥

कपर्द्दिनं समारभ्य चंडनाथांतकानि च ॥

पंचैव मुद्रालिंगानि नापुण्यो वेद मानवः ॥ १४ ॥

सूर्येश्वरं समारभ्य केतुलिंगांतकानि वै ॥

नवग्रहाणां लिंगानि नान्यो जानाति कश्चन ॥ १५ ॥

चतुर्दशविधा त्वेवं प्रोक्ताऽऽयतनसंगतिः ॥

यश्चैनां वेद भावेन स क्षेत्रफलमश्नुते ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये केत्वीश्वरमाहात्म्यवर्णननामैकपंचाशोऽध्यायः ॥ ५१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५२



॥ ईश्वर उवाच ॥ ॥

पंचाथ सिद्धलिंगानि कथयामि यशस्विनि ॥

येषां दर्शनतो देवि सिद्धा यात्रा भवेन्नृणाम् ॥ १ ॥

सोमेशादीशदिग्भागे वरारोहेति या स्मृता ॥

तस्याश्च पूर्वदिग्भागे देवं सिद्धेश्वरं परम् ॥

अभिगम्य नरो भक्त्या अणिमादिकमाप्नुयात् ॥ २ ॥

सिद्धैः प्रतिष्ठितं लिंगं दृष्ट्वा भक्त्या तु मानवः ॥

मुच्यते पातकैः सर्वैः सिद्धलोकं स गच्छति ॥ ३ ॥

विघ्नानि नाशमायांति तत्र क्षेत्रनिवासिनाम् ॥

कामः क्रोधो भय लोभो रागो मत्सर एव च ॥ ४ ॥

ईर्ष्या दंभस्तथाऽऽलस्यं निद्रा मोहस्त्वहंकृतिः ॥

एतानि विघ्नरूपाणि सिद्धेर्विघ्नकराणि तु ॥ ५ ॥

तानि नाशं समायांति तत्र सिद्धे श्वरार्चनात् ॥

एवं ज्ञात्वा तु यत्नेन तत्र यात्रां समाचरेत् ॥ ६ ॥

इत्येवं कथितं देवि सिद्धेश्वरमहोदयम्॥

सर्वकामप्रदं नृणां श्रुतं पातकनाशनम् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कपिलेश्वरमुत्तमम्॥

तस्यैव पूर्वदिग्भागे नातिदूरे व्यव स्थितम् ॥ १ ॥

लिंगं महाप्रभावं तु दर्शनात्पापनाशनम् ॥

कपिलोनाम राजर्षिर्यत्र तस्वा महातपः ॥ २ ॥

संप्राप्तः परमां सिद्धिं प्रतिष्ठाप्य महेश्वरम् ॥

देवसांनिध्यमीशानं तस्मिँल्लिंगे सदा हरिः ॥ ३ ॥

शुक्लपक्षे चतुर्दश्यां सर्वलोकहितार्थतः ॥

सप्तकृत्वो महादेवं सोमेशं कपिलेश्वरम्॥

यः पश्येत्प्रयतो भूत्वा स गोदानफलं लभेत् ॥ ४ ॥

तिलधेनुं च यो दद्यात्तस्मिंस्तीर्थे समाहितः ॥

तिलसंख्यायुगान्येव स स्वर्गे वसति प्रिये ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कपिलेश्वरमाहात्म्यवर्णनं नाम त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५४

https://sa.wikisource.org/s/g6s



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गंधर्वेश्वरमुत्तमम् ॥

दण्डपाणेस्तु भवनादुत्तरे निकटे स्थितम्॥१॥

यत्र गंधर्वराजो वै घनवाहेति विश्रुतः॥

तस्य गंधर्वसेनेति ख्याता पुत्री महाप्रभा॥२॥

शिखंडिना गणेनैव सा शप्ता रूपगर्विता॥

ततो गोशृंगऋषिणा दत्तस्तस्या अनुग्रहः॥३॥

सोमवारव्रतेनैव सोमेशाराधनं प्रति॥

ततः क्षेत्रं समागत्य तपः कृत्वा सुदुश्चरम्॥४॥

लिंगं प्रतिष्ठयामास तत्र गंधर्वराट् स्वयम्॥

तथैव पुत्र्या तस्यैव तत्र लिंगं प्रतिष्ठितम्॥५॥

अथ तत्रैव देवेशि दंडपाणेः समीपतः ॥

घनवाहेश्वरं नाम यो लिंगं यत्नतोऽर्चयेत् ॥ ६ ॥

गंधर्वलोकमाप्नोति दृष्ट्वा स प्रयतः शुचिः ॥

इति ते कथितं देवि गांधर्वं लिंगमुत्तमम् ॥ ७ ॥

तृतीयं सर्वपापानां नाशनं पुण्यवर्द्धनम् ॥

अग्नितीर्थे नरः स्नात्वा पूज्य गंधर्वपूजितम् ॥ ८ ॥

अयने चोत्तरे प्राप्ते निर्वाणमधिगच्छति ॥

श्रुत्वा ऽभिनंद्य माहात्म्यं मुच्यते महतो भयात् ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये गन्धर्वेश्वरमाहात्म्यवर्णनंनाम चतुःपंचाशोऽध्यायः॥५४॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५५



ईश्वर उवाच॥

ततो गच्छेन्महादेवि तत्पूर्वे विमलेश्वरम्॥

गौर्याः पूर्वं समीपस्थं नातिदूरे व्यवस्थितम्॥१॥

गुरोर्नैर्ऋत्यदिग्भागे स्थितं पापप्रणाशनम्॥

अपि कृत्वा महापापं नारी वा पुरुषोऽपि वा ॥ २ ॥

क्षयाभिभूतदेहो वा तं समभ्यर्च्य भक्तितः ॥

सर्वदुःखान्तगो भूत्वा निर्मलं पदमाप्नुयात् ॥ ३ ॥

गंधर्वसेना यत्रैव विमलाऽभूत्क्षया न्विता ॥

विमलेश्वरनाम्ना वै तल्लिंगं प्रथितं क्षितौ ॥ ४ ॥

इति ते कथितं सर्वं विमलेश्वरसूचकम् ॥

माहात्म्यं सर्वपापघ्नं तुरीयं भवसुन्दरि ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये विमलेश्वरमाहात्म्यवर्णनंनाम पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५६



॥ ईश्वर उवाच ॥ ॥

अथ ते पंचमं वच्मि सिद्धलिगं महाप्रभम् ॥

ब्रह्मणो नैर्ऋते भागे धनुषां षोडशे स्थितम् ॥ १ ॥

राहुलिंगस्य चाभ्याशे लिंगं धनदनिर्मितम् ॥

धनदत्वं च संप्राप्तो यत्र तप्त्वा महत्तपः ॥ २ ॥

संस्थाप्य विधिवत्पूज्य लिंगं वर्षसहस्रकम् ॥

अलकाधिपतिर्जातस्तत्र शंभोः प्रसादतः ॥ ३ ॥

जातिं स्मृत्वा पूर्विकां तु ज्ञात्वा दीपदशाफलम् ॥

शिवरात्रे प्रभावं तु प्रभासं पुनरागतः ॥ ४ ॥

प्रभावातिशयं ज्ञात्वा स्थापयामास शंकरम् ॥

तत्र प्रत्यक्षतां नीतस्तपसा येन शंकरः ॥ ५ ॥

महाभक्त्या महादेवि तस्मिँल्लिंगेऽवतारितः ॥

तं दृष्ट्वा मानवो भक्त्या पूजयित्वा यथाविधि ॥ ६ ॥

पञ्चोपचारैः सद्भक्त्या गन्धधूपानुलेपनैः ॥

तस्यान्वये दरिद्रश्च कदापि न भविष्यति ॥ ७ ॥

ये चैतत्पूजयिष्यंति लिंगं भक्तियुता नराः ॥

अजेयास्ते भविष्यंति शत्रूणां दर्पनाशनाः ॥ ८ ॥

इति ते कथितं सर्वं धनदेशमहोदयम् ॥

श्रुत्वानुमोद्य यत्नेन दरिद्रो नैव जायते ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये धनदेश्वरमाहात्म्यवर्णनंनाम षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५७



॥ ईश्वर उवाच ॥ ॥

पंचैवं सिद्धलिंगानि कथितानि तव प्रिये ॥

यश्चैनं वेद संकेतं क्षेत्रवासी स उच्यते ॥ १ ॥

अथ शक्तित्रयाणां ते रौद्रीणां वच्मि विस्तरम् ॥

इच्छा क्रियाज्ञानशक्त्यस्तिस्रस्ताः परिकीर्त्तिताः ॥ २ ॥

पुनस्तासां पूजनायानुक्रमं क्रमतः शृणु ॥

चतुर्दश तथा पंच पूर्वमुक्तानि यानि तु ॥ ३ ॥॥

चत्वारि त्रीणि चैकं वा यथाशक्त्याभिपूज्य च ॥

लिंगानि तानि संपूज्य शक्तीस्तिस्रस्ततोऽर्चयेत् ॥ ४ ॥

सोमेशादीशदिग्भागे वरारोहेति या स्मृता ॥

अमा कला सा सोमस्य उमा पश्चात्प्रकीर्त्तिता ॥५॥

इच्छाशक्तिस्तु सा ज्ञेयाप्रभासक्षेत्रसंस्थिता ॥

तत्र देवि हितार्थाय सर्वेषां प्राणिनां भुवि ॥ ६ ॥

तस्या माहात्म्यमखिलं कथयामि तवाधुना ॥

पुरा सोमेन त्यक्ताभिर्भार्याभिस्तु वरानने ॥ ७ ॥

षड्विंशद्भिस्तपस्तप्तं क्षेत्रे प्राभासिके शुभे ॥

गौरी साऽऽराध्यमानाथ दिव्यवर्षगणान्बहून् ॥ ८ ॥

तासां प्रत्यक्षतां प्राप्ता पार्वती परमेश्वरी ॥

उवाच वरदा ब्रूत यद्वो मनसि संस्थितम् ॥ ९ ॥

अथ ताश्चाब्रुवन्देवि यदि तुष्टासि पार्वति ॥

सौभाग्यं देहि नो भूरि लावण्यं परमं तथा ॥ 7.1.57.१० ॥

त्यक्ताः सर्वा वयं देवि निर्दोषाः स्वामिना शुभे ॥

दौर्भाग्यदोषसंदग्धा दौर्भाग्येण तु पीडिताः ॥ ११ ॥

॥ गौर्युवाच ॥ ॥

अद्यप्रभृति सर्वा वः समं द्रक्ष्यति रात्रिपः ॥

प्रसादान्मम चार्वंग्यो नैतन्मिथ्या भविष्यति ॥ १२ ॥

वरदा चेति मन्नाम वरदानाद्भविष्यति ॥

इहागत्य तु या नारी पूजयिष्यति मां शुभाम् ॥ १३ ॥

न दौर्भाग्यं कुले तस्याः क्वचित्प्राप्स्यंति योषितः ॥

माघमासे तृतीयायामुपवासपरायणा ॥ १४ ॥

या मां द्रक्ष्यति सुश्रोणी मत्तुल्या सा भवि ष्यति ॥

दम्पती षोडशैवात्र परिधाप्य प्रयत्नतः ॥ १५ ॥

फलानि भक्ष्यभोज्यं च पक्वान्नानि च षोडश ॥

या प्रदास्यति वै नारी सा तूमैव भविष्यति ॥ १६ ॥

एतद्गौरीव्रतंनाम तृतीयायां तु कारयेत् ॥

अप्रसूता च या नारी या नारी दुर्भगा भवेत् ॥ १७ ॥

पुमानसकृदप्यैवं कृत्वा प्राप्स्यत्यभीप्सितम् ॥

एवमुक्त्वा स्थिता तत्र सा देवी चारुलोचना ॥ १८ ॥

पश्यते रात्रिनाथश्च सर्वास्ता रोहिणीं यथा ॥

अन्यापि दुःखसंदग्धा दौर्भाग्येण तु पीडिता ॥ १९ ॥

अपूजयदुमां देवीं सुभगा साऽभवत्ततः ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं शक्तिसंभवम् ॥ 7.1.57.२० ॥

सोमेश्वरे वरारोहा नामेति कथितं तव ॥

सर्वपापक्षयकरं सर्वदारिद्र्यनाशनम् ॥ २१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वरारोहामाहात्म्यवर्णनंनाम सप्तपंचाशोऽध्यायः ॥ ५७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५८



ईश्वर उवाच ॥ ॥

अथ द्वितीयां ते वच्मि शक्तिं देवि क्रियात्मिकाम् ॥

प्रभासस्थां महादेवीं देवानां प्रीतिदायिनीम् ॥ १ ॥

सोमेशाद्वायवे भागे षष्टिधन्वतरे स्थिता ॥

तत्र पीठं महादेवि योगिनीगणवन्दितम् ॥ २ ॥

तस्मिन्स्थाने स्थितं देवि पातालविवरं महत् ॥

तस्मिन्महाप्रभे स्थाने रक्षारूपेण संस्थिताम् ॥ ३ ॥

पातालनिधि निक्षेपदिव्यौषधिरसायनम् ॥

क्षेत्रमध्ये स्थितं सर्वं तदर्चनरतो लभेत् ॥ ४ ॥

भैरवीति च तद्देव्याः पूर्वं नाम प्रकीर्त्तितम् ॥

अस्मिन्पुनश्चांतरे तु अष्टाविंशे चतुर्युगे ॥

त्रेतायुगमुखे राजा अजापालो बभूव ह ॥ ५ ॥

तेन चागत्य क्षेत्रेस्मिन्पंचवर्षशतानि च ॥

भैरवी पूजिता देवी व्याधिग्रस्तेन भामिनि ॥ ६ ॥

ततः प्रोवाच तं देवी संतुष्टा राजसत्तमम् ॥

अलं क्लेशेन राजर्षे तुष्टाहं तव भक्तितः ॥ ७ ॥

इत्युक्तः स तदा राजा कृताञ्जलिपुटः सुधीः ॥

प्रणम्योवाच तां देवीमानंदास्राविलेक्षणः ॥ ८ ॥

यदि तुष्टासि मे देवि वरार्हो यदि वाप्यहम् ॥

सर्वे रोगाः शरीरान्मे नाशं यांतु बहिः कृताः ॥ ९ ॥

एवमुक्ता तु सा देवी पुनः प्रोवाच तं नृपम् ॥

सर्वमेव महाराज यथोक्तं ते भविष्यति ॥ 7.1.58.१० ॥

इत्युक्ते तु तदा देव्या तस्य राज्ञः कलेवरात् ॥

निर्गता व्याधयस्तत्र अजारूपेण वै पृथक् ॥ ११ ॥

सहस्राणां तु पञ्चैव नियतं सार्द्धमेव च ॥

इति वृत्ते महादेव्या पुनः प्रोक्तो नराधिपः ॥१२ ॥

राजन्नेतानजारूपान्व्याधीन्पालय कृत्स्नशः ॥

किंकुर्वाणा भविष्यंति तवैवादेशकारिणः ॥ १३ ॥।

अजापालेति ते नाम ख्यातं लोके भविष्यति ॥

तव नाम्ना मम नाम अजापालेश्वरीति च ॥

भविष्यति धरापृष्ठे तच्च यावच्चतुर्युगम् ॥ ॥ १४ ॥

अष्टम्यां च चतुर्द्दश्यां योऽत्र मां पूजयिष्यति ॥

तस्याष्टगुणमैश्वर्यं दास्ये तुष्टा न संशयः ॥ १५ ॥

अश्वयुक्छुक्लाष्टम्यां च त्रिः कृत्वा तु प्रदक्षिणाम् ॥

सोमेशं मध्यतः कृत्वा संस्नाप्याभ्यर्च्य मां पृथक् ॥

तस्य वर्षत्रयं राजन्न भीः शोको भविष्यति ॥ १६ ॥

या तु वंध्या भवेन्नारी रोगिणी दुर्भगा तथा ॥

तयोक्ता नवमी कार्या ममाग्रे तुष्टिवर्द्धिनी ॥ १७ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्त्वा तु तदा देवी तत्रैवांतर्हिताऽभवत् ॥

प्रभासक्षेत्रमध्यस्थः स राजातुलविक्रमः ॥ १८ ॥

पालयामास धर्मात्मा तानजान्व्याधिरूपिणः ॥

औषधीर्विविधाकारास्तेषां याः पुष्टिहेतवः ॥ १९ ॥

तत्र वर्षशतं साग्रं पुष्टिं नीता अजाः पृथक् ॥

महानिधानसंस्थानमजापालेन निर्मितम्॥ 7.1.58.२० ॥

अथ तस्याः प्रसादेन स राजा पृथुविक्रमः ॥

सप्तद्वीपाधिपो जातः सूर्यवंशविभूषणः ॥ २१ ॥

॥ देव्युवाच ॥ ॥

अत्याश्चर्यमिदं देव अजा देव्याः समुद्भवम् ॥

पुनश्च श्रोतुमिच्छामि तस्य राज्ञोद्भुतं महत् ॥ २२ ॥

कथं राजा स देवेश सप्तद्वीपां वसुन्धराम्॥

शशास एक एवासौ कथं ते व्याधयः कृताः ॥ २३ ॥

॥ ईश्वर उवाच ॥ ॥

पुरा बभूव राजर्षिर्दिलीप इति विश्रुतः ॥

दीर्घो नाम सुतस्तस्य रघुस्तस्मादजायत ॥ २४ ॥

अजःपुत्रो रघोश्चापि तस्माद्यश्चातिवीर्यवान् ॥

स भैरवीं समाराध्य कृत्वा व्याधीनजागणान् ॥२५॥

पालयामास संहृष्टो ह्यजापालस्ततोऽभवत्॥

तस्मिन्काले बभूवाथ रावणो राक्षसेश्वरः॥२६॥

लंकास्थितः सुरगणान्नियुयोज स्वकर्मसु॥

अखंडमंडलं चन्द्रमातपत्रं चकार ह॥२७॥

इन्द्रं सेनापतिं चक्रे वायुं पांसुप्रमार्जकम्॥

वरुणं दूतकर्मस्थं धनदं धनरक्षकम्॥२८॥

यमं संयमनेऽरीणां युयुजे मन्त्रणे मनुम्॥

मेघाश्छर्दंति लिंपंति द्रुमाः पुष्पाणि चिक्षिपुः॥२९॥

सप्तर्षयः शांतिपरा ब्राह्मणाः शंसिनः प्रियः॥

नागा यामककक्षायां गन्धर्वा गीततत्पराः॥7.1.58.३॥।

प्रेक्षणीयेऽप्सरोवृंदं वाद्ये विद्याधरा वृताः॥

गंगाद्याः सरितः पाने गार्हपत्ये हुताशनः॥३१॥

विश्वकर्मांगसंस्कारे तेन शिल्पी नियोजितः॥

तिष्ठंति पार्थिवाः सर्वे पुरः सेवाविधायिनः॥३२॥

दृश्यंते भास्वरै रत्नैः प्रस्खलंतो विभूषणैः॥

तान्दृष्ट्वा रावणः प्राह प्रहस्तं प्रतिहारकम्॥३३॥

सेवां कर्तुं मम स्थाने ब्रूहि केऽत्र समागताः ॥

उवाच स प्रणम्याग्रे दण्डपाणिर्निशाचरः ॥ ३४ ॥

एष काकुत्स्थो मांधाता धुन्धुमारो नलोऽर्जुनः ॥

ययातिर्नहुषो भीमो राघवोऽयं विदूरथः ॥ ३५ ॥

एते चान्ये च बहवो राजान इह चागताः ॥

सेवाकरास्तव स्थाने नाजापाल इहो गतः ॥ ३६ ॥

रावणः कुपितः प्राह शीघ्रं दूत विसर्जय ॥

इत्युक्त्वा प्रहितो दूतो धूम्राक्षो नाम राक्षसः॥ ३७ ॥
धूम्राक्ष गच्छ ब्रूहि त्वमजापालं ममा ज्ञया ॥
सेवां कर्त्तुं ममागच्छ करं वा यच्छ पार्थिव ॥ ३८ ॥
अथवा चन्द्रहासेन त्वां करिष्ये विकंधरम् ॥
रावणेनैवमुक्तस्तु धूम्राक्षो गरुडो यथा ॥ ॥ ३९ ॥
संप्राप्तस्तां पुरीं रम्यां तव राजकुलं गतः ॥
ददर्शायांतमेकं स अजापालमजावृतम् ॥ 7.1.58.४० ॥
मुक्तकेशं मुक्तकच्छं स्वर्णकंबलधारिणम् ॥
यष्टिस्कंधं रेणुवृतं व्याधिभिः परिवारितम् ॥ ४१ ॥
निघ्नंतमिव शार्दूलं सर्वोपद्रवनाशनम् ॥
मह्यामालिख्य नामानि विनिघ्नंतं द्विषां गणम्॥ ४२ ॥
स्नातं भुक्तं निजस्थाने कृतकृत्यं मनुं यथा ॥
दृष्ट्वा हृष्टमनाः प्राह धूम्राक्षो रावणोदितम् ॥ ४३ ॥
अजापालोऽपि साक्षेपं प्रत्यु क्त्वा कारणोत्तरम् ॥
प्रेषयामास धूम्राक्षं ततः कृत्यं समादधे ॥ ४४ ॥
ज्वरमाकारयित्वा तु प्रोवाचेदं महीपतिः॥
गच्छ लंकाधिपस्थानमाचर त्वं यथोदितम् ॥ ४५ ॥
नियुक्तस्त्वजपालेन ज्वरो दिवि जगाम ह ॥
गत्वा च कंपयामास रावणं राक्षसेश्वरम् ॥ ४६ ॥
रावणस्तं विदित्वा तु ज्वरं परमदारुणम् ॥
प्रोवाच तिष्ठतु नृपस्तेन मे न प्रयोजनम् ॥ ४७ ॥
ततः स विज्वरो राजा बभूव धनदानुजः ॥
एवं तस्य चरित्राणि संति चान्यानि कोटिशः ॥ ४८ ॥
अजापालस्य देवेशि सूर्यवत्त्विट्किरीटिनः ॥
तेनैषाऽऽराधिता देवी अजापालेन धीमता ॥
सर्वरोगप्रशमनी सर्वो पद्रवनाशिनी ॥ ४९ ॥
पूजयेत्तां विधानेन भोगेप्सुर्यदि मानवः ॥
गंधैर्धूपैरलंकारैर्वस्त्रैरन्यैश्च भक्तितः ॥ 7.1.58.५० ॥

इति ते कथितं सर्वमजादेव्याः समुद्भवम् ॥
सर्वदुःखोपशमनं सर्वपातकनाशनम् ॥ ५१ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहिताया सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽजापालेश्वरीमाहात्म्यवर्णनंनामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०५९



॥ ईश्वर उवाच ॥ ॥

अथ वच्मि तृतीयां ते ज्ञानशक्तिं शिवात्मिकाम् ॥

प्रभासक्षेत्रमध्यस्थां दारिद्र्यौघविनाशिनीम् ॥ १ ॥

अजेति नाम्नीं तां देवीं राह्वीशाद्दक्षिणे स्थिताम् ॥

मम वक्त्राद्विनिष्क्रांता षष्ठाद्वै विष्णुपूजितात् ॥ २ ॥

॥ देव्युवाच ॥ ॥

पंचवक्त्राणि देवेश प्रसिद्धानि तव प्रभौ ॥

षष्ठं यद्वदनं देव तस्य किं नाम संस्मृतम् ॥

समुत्पन्ना कथं तस्मादजादेवीति या श्रुता ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

साधु पृष्टं त्वया देवि यद्गोप्यं स्वसुतेष्वपि ॥

तत्तेऽहं संप्रवक्ष्यामि अप्रसिद्धागमोदितम् ॥ ४ ॥

वक्त्राणि मम देवेशि सप्तासन्पूर्वमेव हि ॥

सद्योजातादिपंचैव षष्ठं स्मृतमजेति च ॥ ५ ॥

सप्तमं पिचुनामेति सप्तैवं वदनानि मे ॥

तेभ्योऽजं ब्रह्मणे दत्तं पिचुवक्त्रं तु विष्णवे ॥ ६ ॥

तस्मादहं महादेवि पंचवक्त्रोऽधुनाऽभवम् ॥

अजस्तु ब्रह्मा सञ्जज्ञे पिचुर्विष्णुरजायत ॥ ७ ॥

अजवक्त्रान्महादेवि अजा जाता महाप्रभा ॥

अन्धासुररणे घोरे मम क्रोधेन भामिनि ॥ ८ ॥

खड्गचर्मधरादेवी सुरूपा सिंहवाहिनी ॥

मर्द्दयन्ती महादैत्यान्देवीकोटिसमन्विता ॥ ९ ॥

तस्या भयेन ये दैत्या विद्रुता दक्षिणार्णवम् ॥

पृष्ठतोऽनुययौ तान्वै सा देवी सिंहवाहिनी ॥ 7.1.59.१० ॥

इतस्ततस्ते धावन्तो मार्यमाणाश्च तद्गणैः ॥

प्रभास क्षेत्रसंप्राप्ता नश्यमाना महार्णवम् ॥ ११ ॥

केचित्तत्र हता दैत्याः केचित्पातालमाययुः ॥

निःशेषान्निहतान्दृष्ट्वा सा देवी सिंहवाहिनी ॥ १२ ॥

क्षेत्रं पवित्रमाज्ञाय तत्र स्थाने स्थिता शुभा ॥

सोमेशादीशकोणस्था सौरीशादुत्तरे स्थिता ॥ १३ ॥

यस्तां तत्र स्थितां पश्येद्योषिद्वाथ नरोऽपि वा ॥

स भूयात्सत्त्वसौभाग्यैः सप्तजन्मानि संयुतः ॥१४॥

गीतवाद्यादिकं नृत्यं यस्तत्र कुरुते नरः ॥

तस्यान्वये न दौर्भाग्यं भूयात्तस्याः प्रसादतः॥ ॥१५॥

घृतेन दीपकं तत्र या नारी संप्रयच्छति॥

रक्तवर्त्या महादेवि यावंतस्तत्र तंतवः ॥

तावज्जन्मांतराण्येव सा सौभाग्यमवाप्नुयात्॥१६॥

यश्चैतत्तु पठेन्नित्यं तृतीयायां विशेषतः ॥

शृणुयाद्वाऽपि यो भक्त्या स कामानखिलाल्लँभेत् ॥ १७ ॥

इति संक्षेपतः प्रोक्तो रुद्रशक्तित्रयक्रमः ॥ १८॥

एताः शक्तीः पूजयित्वा सोमेशं पूजयेत्ततः ॥

सम्यग्यात्राफलापेक्षी एकां वा वरदामथ ॥ १९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽजादेवीमाहात्म्यवर्णनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

इति रुद्रशक्तित्रयसंकेतः ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६०



॥ ईश्वर उवाच ॥ ॥

प्रभासक्षेत्रदूतीनां त्रितयं वरवर्णिनि ॥

अथ ते संप्रवक्ष्यामि शृणु ह्येकमनाः प्रिये ॥ १ ॥

प्रथमा मंगला देवी विशालाक्षी द्वितीयिका ॥

तथा चत्वरदेवी तु तृतीया परिकीर्तिता ॥ २ ॥

यथानुक्रमतः पूज्याः शक्तयस्ता वरानने ॥

प्रभासक्षेत्रयात्रायाः फलप्रेप्सुर्नरो यदि ॥ ३ ॥

॥ देव्युवाच ॥ ॥

कस्मिन्स्थाने स्थिता देव दूत्यस्ताः क्षेत्ररक्षिकाः ॥

कस्य ताः कथमाराध्याः कथं पूज्या जगत्पते ॥४॥ ॥

॥ ईश्वर उवाच ॥ ॥

ब्राह्मी तु मंगला प्रोक्ता विशालाक्षी तु वैष्णवी ॥

रौद्रीशक्तिः समाख्याता देवी सा चत्वरप्रिया ॥ ५ ॥

मंगला प्रथमं पूज्या अजादेव्युत्तरे स्थिता ॥

राह्वीशाद्दक्षिणेभागे नातिदूरे वरानने ॥ ६ ॥

सोमेश्वरप्रतिष्ठाप्य प्रारब्धे यज्ञकर्मणि ॥

सोमेन तत्र देवानामागता सा दिदृक्षया ॥ ७ ॥

ब्रह्मादीनां च सा यस्मान्मांगल्यं कृतवत्युमे ॥

तस्मात्सा मंगला प्रोक्ता सर्वमांगल्यदायिनी ॥ ८ ॥

तृतीयायां तु या नारी नरो वा पूजयिष्यति ॥

तस्याऽमंगल्यदुःखानि नाशं यास्यंति कृत्स्नशः ॥ ९ ॥

दम्पतीभोजनं तत्र फलदानं सकञ्चुकम् ॥

प्रशस्तं पृषदाज्यस्य प्राशनं पापनाशनम् ॥ 7.1.60.१० ॥

इति संक्षेपतः प्रोक्तं महाभाग्यं महोदयम् ॥

मंगलायाश्च माहात्म्यं सर्वपातकनाशनम् ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मङ्गलामाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ॥ ६० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवीं क्षेत्रदूतीं तु वैष्णवीम् ॥

श्रीदैत्यसूदनाद्देवि पूर्वभागे व्यवस्थिताम् ॥१॥

योगेश्वर्यास्तथैशान्यां धनुषां सप्तके स्थिताम् ॥

महादौर्भाग्यदग्धानां स्थितां भेषजरूपिणीम् ॥ २॥

चाक्षुषस्यांतरे देवि यदा दैत्या बलोत्कटाः ॥

हन्यमाना विष्णुनाऽथ दक्षिणां दिशमाविशन् ॥ ३ ॥

तत्र वर्षशतं साग्रं दैत्याश्चक्रुर्महाहवम् ॥

विष्णुना सह देवेशि दिव्यास्त्रैश्च पृथग्विधैः ॥ ४ ॥

दुःखवध्यांस्ततो ज्ञात्वा विष्णुः कमललोचनः ॥

सस्मार भैरवीं शक्तिं महामायां महाप्रभाम् ॥५॥

सा स्मृता क्षणमात्रेण विष्णुना प्रभविष्णुना॥

तत्रागता महादेवी आनंदस्फुरितेक्षणा ॥ ६ ॥

विशाले तु कृते देव्या लोचने विष्णुदर्शनात् ॥

विशालाक्षी ततो जाता तत्रस्था दैत्यनाशिनी ॥७॥

अस्मिन्कल्पेसमाख्याता ललितोमा वरानने ॥

उमाद्वयं समाख्यातं सोमेशे दैत्यसूदने ॥ ८ ॥

पूर्वं सोमेश्वरे पश्येत्पश्चाच्छ्रीदैत्यसूदने ॥

उमा द्वयं पूजयित्वा तीर्थयात्राफलं लभेत् ॥९॥

माघे मासि तृतीयायां विधिना योऽर्चयेत्तु ताम्॥

न संततिविहीनः स्यात्तस्यकोट्यन्वये नरः ॥7.1.61.१०॥

यो नित्यमीक्षते तत्र भक्त्या परमया युतः ॥

आरोग्यसुखसौभाग्यसंयुक्तोऽसौ भवेच्चिरम् ॥ ११ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं ललितोद्भवम्॥

श्रुतं यत्पापनाशाय जायते धर्मवृद्धये ॥ १२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये ललितोमाविशालाक्षी माहात्म्यवर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६२

https://sa.wikisource.org/s/g70



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तृतीयां चत्वरप्रियाम् ॥

ललितापूर्वदिग्भागे दशधन्वंतरे स्थिताम् ॥ १ ॥

क्षेत्रदूतीं महारौद्रीं रुद्रशक्तिं महाप्रभाम् ॥

क्षेत्ररक्षाविधौ तत्र मया मुक्तां तु मध्यतः ॥ २ ॥

कोटिभूतसमायुक्ता महाकाया महाप्रभा ॥

जीर्णे गृहे तथोद्याने प्रासादाट्टालके पथि ॥ ३ ॥

चत्वरेषु च सर्वेषु क्षेत्र मध्यस्थिता सती ॥

रात्रौ पर्यटते देवी भूतानां कोटिभिर्वृता ॥ ४ ॥

महानवम्यां यस्तत्र नारी वाथ नरोपि वा ॥

नानापूजोपचारैश्च पूजयेद्विधिवच्छुभाम् ॥ ५ ॥

तस्य तुष्टाऽखिलान्कामान्सादेवी संप्रदास्यति ॥

दंपत्योर्भोजनं तत्र देयं यात्राफलेप्सुभिः ॥६॥

इति संक्षेपतः प्रोक्तं माहा त्म्यं पापनाशनम् ॥

क्षेत्रदूत्यास्तृतीयायाः श्रुतमैश्वर्यकारकम् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चत्वरादेवीमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि भैरवेश्वरमुत्तमम् ॥

योगेश्वर्या दक्षिणतो नातिदूरे व्यवस्थितम् ॥ १ ॥

सर्वपापप्रशमनं दिब्यैश्वर्यप्रदायकम्॥

पुरा दैत्यविनाशार्थं यदा देवी कृतोद्यमा ॥ ॥ २ ॥

तदा भैरवमाहूय दूतत्वे नियुयोज ह ।।

शिवदूती तदा ख्याता पश्चाद्योगेश्वरीति च ॥ ३ ॥

भैरवो यत्र वै देव्या दूतत्वे विनियोजितः ॥

तेन लिंगं समाख्यातं भैरवेश्वरनामकम् ॥ ४ ॥

पूजितं देवदैत्यैश्च भैरवेण प्रतिष्ठितम् ॥

यस्तत्पूजयते भक्त्या कार्तिक्यां विधिना नरः ॥

निरंतरं वा षण्मासं सोऽभीष्टं लभते फलम् ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भैरवेश्वरमाहात्म्यवर्णनंनाम त्रिषष्टितमोऽध्याय ॥ ६३ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६४

https://sa.wikisource.org/s/g71
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्यैव पूर्वदिग्भागे धनुषां पंचके स्थितम् ॥

लक्ष्मीश्वरेति विख्यातं दारिद्र्यौघविनाशनम् ॥ १ ॥

यत्र देव्या समानीता लक्ष्मीर्दैत्यान्निहत्य च ॥

तेन लक्ष्मीश्वरं नाम स्वयं देव्या प्रतिष्ठितम् ॥ २ ॥

यस्तं पूजयते भक्त्या श्रीपंचम्यां विधानतः ॥

न विमुक्तो भवेल्लक्ष्म्या यावन्मन्वतरं प्रिये ॥३॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये लक्ष्मीश्वरमाहात्म्यवर्णनंनाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं वै वाडवेश्वरम् ॥

लक्ष्मीशादुत्तरे भागे विशालाक्ष्याश्च दक्षिणे ॥ १ ॥

स्थितं महाप्रभावं हि वाडवेन प्रतिष्ठितम्॥

कृतस्मरो यदा दग्धः पर्वतो वाडवाग्निना ॥ २ ॥

समीकृत्याखिलं स्थानं तेन लिंगं प्रतिष्ठितम् ॥

पूजयेत्तं विधानेन दश संस्नाप्य शंकरम् ॥ ३ ॥

दधि दद्याच्च वै तत्र ब्राह्मणे वेदपारगे।

सोऽग्निलोकमवाप्नोति सम्यग्यात्राफलं लभेत् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वाडवेश्वरमाहात्म्यवर्णनंनाम पञ्चषष्टितमोऽध्यायः ॥६५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६६



॥ ॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महालिंगमर्घ्येश्वरमिति श्रुतम् ॥

उत्तरे तु विशालाक्ष्या नातिदूरे व्यवस्थितम् ॥ १ ॥

लिंगं महाप्रभावं हि सुरगन्धर्वपूजितम् ॥

यदा देवी समायाता वडवानलधारिणी ॥ २ ॥

प्रभासक्षेत्रमासाद्य दृष्ट्वा तत्र महोदधिम् ॥

अर्घ्यं दत्तवती तत्र विधिना तन्महोदधेः ॥ ३ ॥

प्रतिष्ठाप्य महल्लिंगं संपूज्य विधिना ततः ॥

प्रविवेशाथ देवेशि स्नानार्थं च महोदधौ ॥ ४ ॥

यस्मादर्घ्यं पुरा दत्त्वा पश्चा दीशः प्रतिष्ठितः ॥

तेनार्घ्येशेति विख्यातं लिंगं पापप्रणाशनम् ॥ ५ ॥

पंचामृतेन संस्नाप्य विधिना यस्तमर्चयेत् ॥

सप्तजन्मानि देवेशि स विद्यामधिगच्छति ॥

सम्यक्छास्त्रप्रवक्ता च सर्वसंदेहवित्तमः ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽर्घ्येश्वरमाहात्म्यवर्णनंनाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६७



॥ ईश्वर उवाच ॥ ॥

ततो गछेन्महालिंगं कामेश्वरमिति श्रुतम् ॥

कामेनाराधितं पूर्वं दैत्यसूदनपश्चिमे ॥ १ ॥

धनुषां सप्तके तत्र स्थितं देवि महाप्रभम् ॥

निर्दग्धस्तु यदा काम स्तृतीयेनाग्निना मम ॥ २ ॥

तदा वर्षसहस्रं तु समाराध्य महेश्वरम् ॥

प्रपेदे कामनासर्गं यत्रानंगः पुरा किल ॥ ३ ॥

तेन कामेश्वरंनाम ख्यातं लिंगं धरातले ॥

सर्वपापहरं देवि सर्वकामफलप्रदम् ॥ ४ ॥

त्रयोदश्यां विधानेन शुक्लायां मासि माधवे ॥

संपूज्य तं विधानेन स स्त्रीणां कामवद्भवेत्॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्या संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कामेश्वरमाहात्म्यवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥६७॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६८



॥ ईश्वर उवाच ॥ ॥

इति प्रोक्तानि ते देवि वक्त्रलिंगानि पंच वै ॥

अथ ते संप्रवक्ष्यामि यत्र गौर्यास्तपो वनम्॥

स्थानं महाप्रभावं हि सुरसिद्धनिषेवितम्॥ १ ॥

सोमेशात्पूर्वदिग्भागे षष्टिधन्वंतरे स्थितम् ॥

यत्र देव्या तपस्तप्तं सत्या वै पूर्वजन्मनि ॥ ॥ २ ॥

कृत्वा च प्रणयात्कोपं मया सार्द्धं वरानने ॥

प्रभासक्षेत्रमासाद्य संस्थिता सा तपस्विनी ॥ ३ ॥

॥ देव्युवाच ॥ ॥

किमर्थं सा परित्यज्य सती त्वां तपसि स्थिता ॥

कस्मिन्स्थाने स्थिता देवी एतन्मे विस्तराद्वद ॥ ४ ॥

॥ ईचर.उवाच ॥ ॥

पुराऽऽसीस्त्वं महादेवि श्यामवर्णा मनस्विनी ॥

नामार्थं च मया प्रोक्ता कालीति रहसि स्थिता ॥ ५ ॥

सा श्रुत्वा विस्मयं वाक्यं भृशं रोषपरायणा ॥

अब्रवीत्परुषं वाक्यं भृकुटी कुटिलानना॥६॥

यस्मात्कालीत्यहं प्रोक्ता त्वया शंभोऽतिविप्लवात्॥

तस्माद्यास्यामि गौरीति भविष्यामि च यत्र हि॥७॥

एवमुक्त्वा महाभागा सखीगणसमावृता॥

गत्वा प्रभासक्षेत्रं सा प्रतिष्ठाप्य महेश्वरम्॥

गौरीश्वरेति विख्यातं पूजयंती विधानतः॥८॥

ततो लिंगसमीपस्था एकपादे स्थिता सती ॥

लिंगमाराधयंती सा चकार सुमहत्तपः ॥ ९ ॥

पंचाग्निसाधिका देवी ग्रीष्म जाप्यपरायणा ॥

वर्षास्वाकाशशयना हेमंते सलिलाशया ॥ 7.1.68.१० ॥

यथा यथा तपो वृद्धिं याति तस्या महाप्रभा ॥

तथातथा शरीरस्य गौरत्वं प्रतिपद्यते ॥ ११ ॥

कालेन महता गौरी सर्वांगेणाथ साऽभवत् ॥

ततो विहस्य भगवानुवाच शशिशेखरः ॥ १२ ॥

गौरीति च मुहुर्वाक्यमुत्तिष्ठ व्रज मन्दिरम् ॥

वरं वरय कल्याणि यत्ते मनसि वर्त्तते ॥ १३ ॥

गौर्युवाच ॥ ॥

यो मामत्र स्थितां पश्येन्नारी वा पुरुषोऽथ वा ॥

स भूयात्सुतसौभाग्यैः सप्तजन्मानि संयुतः ॥ ॥ १४ ॥

गीतवाद्यादिकं नृत्यं यः कुर्यात्पुरतो मम ॥

तस्यान्वये न दौर्भाग्यं भूयात्तव प्रसादतः ॥ १५ ॥

मया प्रतिष्ठितं लिंगं पूर्वमभ्यर्च्य मां ततः॥

पूजयिष्यति यो भक्त्या स यास्यति परं पदम् ॥ १६ ॥

गौरीश्वरेति विख्यातं नाम तस्य भवेत्प्रभो ॥

तथेत्यहं प्रतिज्ञाय तत्र स्थाने स्थितो ऽभवम् ॥ १७ ॥

देव्या सह महादेवि प्रहृष्टेनांतरात्मना ॥

अद्यापि अयने प्राप्ते उत्तरे दक्षिणेऽपि वा ॥ १८ ॥

गौरींस्थानं समभ्येति तत्र देव गुणैर्युतः॥

तस्मिन्नहनि यस्तत्र विशिष्टानि फलानि च ॥

संप्रयच्छति विप्रेभ्यस्तस्य पुत्रा भवंति च ॥ १९ ॥

पुत्रहीना तु या नारी नालिकेरं प्रयच्छति ॥

पुत्रं सा लभते शीघ्रं सबलं लक्षणान्वितम् ॥ 7.1.68.२० ॥

घृतेन दीपकं तत्र या नारी संप्रयच्छति ॥

रक्तवर्त्त्या महादेवि यावत्तस्यैव तंतव ॥ ॥ २१ ॥

तावज्जन्मांतराण्येव सा सौभाग्यमवाप्नुयात् ॥ २२ ॥

या नृत्यं कुरुते तत्र भक्त्या परमया युता ॥

आरोग्यसुखसौभाग्यैः संयुक्ता सा भवेच्चिरम् ॥ २३ ॥

तत्रांते सुमहत्कुडं तीर्थं स्वच्छोदपूरितम् ॥
यः स्नानमाचरेत्तत्र मुच्यते सर्वपातकैः ॥ २४ ॥
यः श्राद्धं कुरुते तत्र पितॄनुद्दिश्य भक्तितः ॥
स याति परमं स्थानं पितृभिः सह पुण्यभाक् ॥ २५ ॥
तस्मात्सर्वप्रयत्नेन श्राद्धं तत्र समाचरेत् ॥
गीतवाद्यादिभिर्नृत्यै रात्रौ कुर्वीत जागरम् ॥ २६॥
दंपत्योः परिधानं च तत्र देयं सदक्षिणम् ॥
यश्चैतत्पठते नित्यं तृतीयायां विशेषतः ॥
पार्वत्याः पुरतो देवि स सौभाग्यमवाप्नुयात् ]। २७ ॥
शृणुयाद्वाऽपि यो भक्त्या सम्यग्भक्तिपरायणः ॥
सोऽपि सौभाग्यमाप्नोति यावज्जीवं न संशयः ॥ २८ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये गौरीतपोवनमाहात्म्यवर्णनंनामाष्टषष्टितमोऽध्यायः ॥ ॥ ६८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०६९



॥ देव्युवाच ॥ ॥

गौरीश्वरेति विख्यातं यत्त्वया लिंगमुत्तमम् ॥

कुत्र तिष्ठति तल्लिंगं पूजितं यत्फलं लभेत् ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि माहात्म्यं पापनाशनम् ॥

गौरीश्वरस्य देवस्य सर्वकामप्रदस्य वै ॥ २ ॥

इदं तपोवनं देवि ख्यातं गौर्या महाप्रभम् ॥

धनुषां पचपंचाशत्समंतात्परिमंडलम् ॥३॥

तत्र मध्ये स्थिता देवी एकपादा तपोन्विता ॥

तस्या उत्तरतो देवि किंचिदीशानसंस्थितम्॥ ॥४ ॥

धनुषां चतुरंते च लिंगं पापभयापहम् ॥

यस्तत्पूजयते भक्त्या लिंगं भक्तियुतो नरः ॥

कृष्णाष्टम्यां विशेषेण स मुक्तः पातकैर्भवेत् ॥ ५ ॥

गोदानं चात्र शंसंति सुवर्णं द्विजपुंगवे ॥

अन्नदानं विशेषेण सर्वपापप्रशांतये ॥ ६ ॥

गोघ्नो वा ब्रह्महा वाऽपि तथा दुष्कृतकर्मकृत् ॥

सर्व पापैः प्रमुच्येत तस्य लिंगस्य दर्शनात् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभास क्षेत्रमाहात्म्ये गौरीश्वरमाहात्म्यवर्णनंनामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि वरुणेश्वरमुत्तमम् ॥

गौरीतपोवनाग्नेय्यां धनुषां विंशतौ स्थितम् ॥

लिंगं महाप्रभावं हि वरुणेन प्रतिष्ठितम् ॥ १ ॥

पूर्वं पीतो यदा देवि समुद्रः कुम्भजन्मना ॥

तदा कोपेन सन्तप्तो वरुणः सरितां पतिः ॥ २ ॥

कामिकं तु समाज्ञाय क्षेत्रं प्राभासिकं तदा ॥

तत्रातपद्देवि तपः स वै परमदुश्चरम् ॥ ३ ॥

प्रतिष्ठाप्य महालिंगं संपूजयति भक्तितः ॥

वर्षाणामयुतं साग्रं पूजितो वृषभध्वजः ॥ ४ ॥

ततः प्रसन्नो देवेशि निजगंगाजलेन तु ॥

पूरयामास तं रिक्तं समुद्रं यादसांपतिम् ॥ ५ ॥

छंदयामास तं लिंगं वरदानैरनेकधा ॥

तत्प्रभृत्येव ते सर्वे समुद्राः परिपूरिताः ॥ ६ ॥

वरुणेश्वरनामेति तल्लिंगं तत्प्रभृत्यभूत् ॥ ७ ॥

को ह्यर्थो बहुभिर्लिंगैर्दृष्टैर्वा सुरसुन्दरि ॥

वरुणेशेन दृष्टेन सर्वतीर्थफलं लभेत् ॥ ८ ॥

अष्टम्यां च चतुर्दश्यां तद्दध्ना स्नापयेद्यदि ॥

स ब्राह्मणश्चतुर्वेदो जायते नात्र संशयः ॥ ९ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये वरानने ॥

मूकांधबधिरा बालाः स्त्रियश्चैव नपुंसकाः ॥ 7.1.70.१० ॥

दृष्ट्वा गच्छंति ते देवि स्वर्गं धर्मपरायणाः ॥

स्नानं जाप्यं बलिं होमं पूजां स्तोत्रं च नर्तनम् ॥

तस्मिन्स्थाने तु यः कुर्यात्तत्सर्वं चाक्षयं भवेत् ॥ ११ ॥

हैमं पद्मं मौक्तिकं च दानं तत्रैव दापयेत् ॥

सम्यग्यात्राफलापेक्षी स्वर्गापेक्षी तथा नरः ॥ १२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वरुणेश्वरमाहात्म्यवर्णनंनाम सप्ततितमोऽध्यायः ॥ ॥ ७० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७१



ततो गच्छेन्महादेवि लिंगं तत्रैव संस्थितम् ॥

दक्षिणे वरुणेशस्य धनुषां त्रितये स्थितम् ॥१॥

भार्यया वरुणस्यैव उषा नाम्न्या वरानने ॥

कृत्वा तपो महाघोरं भर्तृदुःखपरीतया ॥ २ ॥

स्थापितं तु महल्लिंगं सर्वसिद्धिप्रदायकम्॥

उषेश्वरेति विख्यातं सर्वसिद्धिप्रपूजितम् ॥३॥

यस्तत्पूजयते भक्त्या लिंगं पापप्रणाशनम् ॥

महापापौघयुक्तोऽपि स गच्छेत्परमां गतिम् ॥४॥

स्त्रीणां सौभाग्यफलदं दुःखदौर्भाग्यना शनम् ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उषेश्वरमाहात्म्यवर्णनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७२



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येद्विघ्नेशं जलवाससम् ॥

सर्वविघ्नविनाशाय सर्वकार्यप्रसिद्धये ॥ १ ॥

वरुणेन महादेवि तपोनिर्विघ्नहेतवे ॥

पूजितो जलजैर्भक्त्या जलवासास्ततः स्मृतः ॥ २ ॥

चतुर्थ्यां तर्पयेद्भक्त्या गन्धैः पुष्पैः स मोदकैः ॥

यथाभक्त्यनुसारेण तस्य तुष्येद्गणाधिपः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये जलवासगणपतिमाहात्म्यवर्णनंनाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कुमारेश्वरमुत्तमम् ॥

लिंगं महाप्रभावं हि महापातकनाशनम् ॥ १ ॥

धनुषां त्रिंशता देवि वरुणान्नैॠते स्थितम् ॥

गौरीतपोवनाद्देवि दक्षिण स्थानसंस्थितम् ॥ २ ॥

षण्मुखेन महादेवि तत्र कृत्वा महत्तपः ॥

प्रतिष्ठितं महालिंगं कुमारेशस्ततोऽभवत् ॥ ३ ॥

यस्तं पूजयते भक्त्या मासमेकं निरन्तरम् ॥

षण्मासस्यार्चनेनैव यत्पुण्यमुपजायते ॥ ४ ॥

तत्पुण्यं सकलं तस्य कुमारेशार्चनात्सकृत् ॥

लभते दिवसैकेन विधिना यदि पूजयेत् ॥ ५ ॥

कामं क्रोधं तथा लोभं रागं त्यक्त्वा तु मत्सरम् ॥

ब्रह्मचारी यतिर्भूत्वा सकृदप्येनमर्चयेत् ॥ ६ ॥

एवं संपूजिते देवि सम्यग्यात्रा फलं लभेत् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुमारेश्वरमाहात्म्यवर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शाकल्येश्वरमुत्तमम् ॥

दैत्यसूदनवायव्ये धनुषां त्रिंशता स्थितम् ॥ १ ॥

शाकल्येन महादेवि पूजितं सर्वकामदम्॥

शाकल्योनाम राजर्षिर्यत्र तप्त्वा महत्तपः ॥२॥

समाराध्य महादेवं प्रत्यक्षीकृतवान्भवम् ॥

लिंगेऽवतारयामास प्रसन्नं तं महेश्वरम् ॥ ३ ॥

तस्मिन्दृष्टे वरारोहे सप्तजन्मकृतं नृणाम् ॥

पापं प्रणश्यते शीघ्रं तमः सूर्योदये यथा ॥ ४ ॥

तत्राष्टम्यां चतुर्द्दश्यां स्नापयेत्पयसा शिवम् ॥

पूजयेच्च विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ५ ॥

हिरण्यं तत्र दातव्यं सम्यग्यात्राफलेप्सुभिः ॥

चत्वारि तस्य नामानि कथ्यमानानि मे शृणु ॥ ६ ॥

आदौ कृतयुगे देवि कीर्तितो भैरवेश्वरः ॥

ततः सावर्णिमनुना सम्यगाराधितः प्रिये ॥ ७ ॥

सावर्णिकेश्वरं नाम त्रेतायां तस्य संज्ञितम् ॥

ततस्तु द्वापरे देवि गालवेन महात्मना ॥

सम्यगाराधितस्तत्र लिंगरूपीवृषध्वजः ॥ ८ ॥

तृतीयं तस्य देवस्य गालवेश्वरसंज्ञितम् ॥

कलौ युगे तु संप्राप्ते शाकल्योनाम वै मुनिः ॥ ९ ॥

यत्र सिद्धिमनुप्राप्त ऐश्वर्यं चाणिमादिकम्॥

शाकल्येश्वरनामेति ततः ख्यातं तुरीयकम् ॥ 7.1.74.१० ॥

एवं चातुर्युगं नाम तस्य लिंगस्य कीर्तितम् ॥

पापघ्नं पुण्यदं नृणां कीर्त्तितं सर्वकामदम् ॥ ११ ॥

तस्यैव देवदेवस्य क्षेत्रोत्पत्तिं शृणु प्रिये ॥ १२ ॥

अष्टादशधनुर्देवि समंतात्परिमण्डलम् ॥

महापापहरं देवि तत्र क्षेत्रनिवासिनाम्॥ १३ ॥

कृमिकीटपतंगानां तिरश्चामपि मोक्षदम् ॥

यत्र कूपादितोयेषु जलं सारस्वतं स्मृतम् ॥ १४ ॥

यत्र तत्र नरः स्नात्वा स्वर्गलोके महीयते ॥

अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ १५ ॥

तत्फलं समवाप्नोति तस्य लिंगस्य दर्शनात् ॥

सोमपर्वणि संप्राप्ते यस्तत्र शुचिरात्मवान् ॥ १६ ॥

अघोरं च जपेत्सम्यगाज्यहोमसमन्वितम् ॥

तल्लिंगस्य समीपस्थो यावन्मासावधिः प्रिये ॥ १७ ॥

महापातकयुक्तोऽपि युक्तो वाऽप्युपपातकैः ॥

स सर्वां लभते सिद्धिमुत्तमां वरवर्णिनि ॥ १८ ॥

कामिकं तत्स्मृतं लिंगं सर्वकामफलप्रदम् ॥

अघोर वक्त्रं देवस्य तत्रस्थं भैरवं महत्॥ १९ ॥

भैरवेश्वरनामेति पूर्वं ख्यातमभूद्भुवि ॥

अस्मिन्युगे तु संप्राप्ते शाकल्येश्वरनामकम् ॥7.1.74.२०||

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शाकल्येश्वरमाहात्म्यवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ॥ ७४ ॥ ॥ ध ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं शाकलकलेश्वरम् ॥

शाकल्येश्वरनैर्ऋत्ये धनुषां षष्टिभिः स्थितम् ॥ ॥ १ ॥

तच्चतुर्युगनामाढ्यं स्मृतं पातकनाशनम् ॥

पूर्वं कामेश्वरंनाम त्रेतायां पुलहेश्वरम् ॥ २ ॥

द्वापरे सिद्धिनाथं तु नारदेशं कलौ स्मृतम् ॥

तथा कलकलेशं च नाम तस्यैव कीर्त्तितम् ॥ ३ ॥

समुद्रे च महापुण्ये यस्मिन्काले सरस्वती ॥

आगता सा महाभागा हृष्टा तुष्टा सरिद्वरा ॥

तस्य तोयस्य शब्देन सागरस्य महात्मनः ॥ ४ ॥

ततो देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ॥

नेदुः कलकलं तत्र तुमुलं लोमहर्षणम् ॥ ॥ ५ ॥

तेन शब्देन महता मम मूर्तिः समुत्थिता ॥

कल्कलेश्वरनामेति ततो लिंगं प्रकीर्तितम् ॥ ६ ॥

इति ते पूर्ववृत्तांतं कथितं नामकार णम्॥

सांप्रतं तु यथा जातं पुनः कलकलेश्वरम्॥

ततेऽहं संप्रवक्ष्यामि शृणुष्वैकमनाः प्रिये ॥ ७ ॥

पुरा द्वापरसंधौ च प्रविष्टे तु कलौ युगे ॥

नारदस्तु समागत्य क्षेत्रं प्राभासिकं शुभम्॥

संचकार तपश्चोग्रं तत्र लिंगसमीपतः ॥ ९ ॥

ततो वर्षशते पूर्णे समाराध्य वृषध्वजम् ॥

गांधर्वं प्राप्य देवेशि भूषितं सप्तभिः स्वरैः ॥ ९ ॥

ततो हृष्टमना भूत्वा तल्लिंगस्य समीपतः ॥

स चकार महायज्ञं पौंडरीकमिति श्रुतम् ॥ 7.1.75.१० ॥

देवदेवस्य तुष्ट्यर्थं स सदा भावितात्मवान् ॥
समाहूय ऋषींस्तत्र ब्रह्मलोकात्सहस्रशः ॥ ११ ॥
ततः संभृतसंभारो यज्ञोपकरणान्वितः ॥
कृत्वा कुण्डादिकं सर्वं समारेभे ततः क्रतुम् ॥ १२ ॥
ततः संपूर्णतां प्राप्ते तस्मिन्क्रतौ वरानने ॥ १३ ॥
अथागमंस्ततो विप्रास्तत्र क्षेत्रनिवासिनः ॥
दक्षिणार्थं महदेवि शतशोऽथ सहस्रशः ॥ १४ ॥
ततः स कौतुकाविष्टस्तेषां युद्धार्थमेव हि ॥
प्राक्षिपत्तत्र रत्नानि सुवर्णं च महीतले ॥ १५ ॥
ततस्ते ब्राह्मणाः सर्वे युध्यमानाः परस्परम् ॥
कोलाहलं परं चक्रुर्बहुद्रव्यपरीप्सया ॥ १६ ॥
एके दिगंबरा देवि त्यक्तयज्ञोपवीतिनः ॥
विकचाः केऽपि दृश्यंते त्वन्ये रुधिरविप्लवाः ॥ १७ ॥
अन्ये परस्परं जघ्नुर्मुष्टिभिश्चरणैस्तथा ॥
एवं तत्र तदा क्षिप्तं यद्द्रव्यं नारदेन तु ॥ १८ ॥
अथाभावे तु वित्तस्य ये च विप्रा ह्यकिंचनाः ॥
विद्याविनयसंपन्ना ब्राह्मणैर्जर्जरीकृताः ॥१९॥
ते तमूचुर्भृशं शांताः स्मयमानं मुहुर्मुहुः ॥
कलहार्थं यतो दानं त्वया दत्तमिदं मुने ॥ ॥ 7.1.75.२० ॥
विद्यायुक्तान्परित्यज्य विधिं त्यक्त्वा तु याज्ञिकम् ॥
तस्मादस्य मुने नाम ख्यातं कलकलेश्वरम् ॥ २१ ॥
तेन नाम्ना द्विजश्रेष्ठ लिंगमेतद्भविष्यति ॥
एतस्मात्कारणाद्देवि जातं कलकलेश्वरम् ॥ २२ ॥
यस्तं स्नाप्य नरो भक्त्या कुरुते त्रिः प्रदक्षिणम् ॥
स गच्छेद्रुद्रलोकं तु त्वत्प्रसादादसंशयम् ॥ २३ ॥
यस्तं पूजयते भक्त्या गंधपुष्पानुलेपनैः ॥

हेमं दत्त्वा द्विजातिभ्यः स गच्छेत्परमं पदम् ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कलकलेश्वरमाहात्म्यवर्णनंनाम पञ्चसप्ततितमोऽध्यायः ॥ ॥ ७५ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७६

https://sa.wikisource.org/s/g7b
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्यैव देवदेवस्य समीपस्थं विराजते ॥

लिंगद्वयं महापुण्यं लकुलीशप्रतिष्ठितम् ॥ १ ॥

लकुले श्वरनामास्ति तस्य लिंगद्वयस्य वै ॥

तद्दृष्ट्वा देवदेवस्य लिंगद्वयमनुत्तमम् ॥ २ ॥

मुच्यते सकलात्पापादाजन्ममरणांतिकात् ॥

तत्र शुक्लचतुर्द्दश्यां मासि भाद्रपदे प्रिये ॥ ३ ॥

उपवासपरो भूत्वा यः करोति प्रजागरम् ॥

मूर्त्तिमंतं तु संपूज्य लकुलीशं महाप्रभम् ॥ ४ ॥

ततः संपूज्य विधिना तत्र लिंगद्वयं पृथक् ॥

सम्यक्पूजाविधानेन स्तुतिमंत्रैरनुक्रमात् ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सोमेश्वरमाहात्म्ये कलकलेश्वरसमीपवर्ति लकुलीशलिंगद्वयमाहात्म्यवर्णनंनाम षट्सप्ततितमोऽध्यायः॥७६॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७७



ईश्वर उवाच॥

ततो गच्छेन्महादेवि उत्तंकेश्वरमुत्तमम्॥

तस्यैव दक्षिणे भागे नातिदूरे व्यवस्थितम् ॥

स्थापितं च स्वयं भक्त्या उत्तंकेन महात्मना ॥ १ ॥

तद्दृष्ट्वा तु महादेवि स्पृष्ट्वा च सुसमाहितः ॥

संपूज्य विधिवद्भक्त्या मुच्यते सर्वकिल्बिषात् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उत्तंकेश्वरमाहात्म्य वर्णनंनाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं वैश्वानरेश्वरम् ॥

तस्यैवाग्नेयकोणस्थं धनुषां पंचके स्थितम् ॥ १ ॥

पापघ्नं सर्वजंतूनां दर्शनात्स्पर्शनादपि ॥

तत्र कश्चिच्छुकः पूर्वं नीडं देवि चकार ह ॥ २ ॥

प्रासादे भार्यया सार्द्धं निवस न्सुचिरं स्थितः ॥

ततस्तौ दंपती नित्यं प्रदक्षिणं प्रचक्रतुः ॥ ३ ॥

कुलायस्य वशाद्देवि न तु भक्त्या कथंचन ॥

कालेन महता तौ च पंचत्वं समुपस्थितौ ॥ ४ ॥

जातौ तेन प्रभावेन उक्तौ जातिस्मरौ भुवि ॥

लोपामुद्रागस्त्यनामप्रसिद्धिं परमां गतौ ॥ ५ ॥

अथ गाथा पुरी गीता अगस्त्येन महात्मना ॥

स्मरता पूर्वदेहं तु विस्मयेनानुभूतिजा ॥ ६ ॥

कृत्वा प्रदक्षिणं सम्यग्वह्नीशं यः प्रपश्यति ॥

नूनं प्रसिद्धिमाप्नोति इतश्चाहं यथा पुरा ॥ ७ ॥

एवं देवि तवाख्यातं माहात्म्यं वह्निदैवतम् ॥

श्रुतं पापहरं नृणां सर्वकामफलप्रदम् ॥ ८ ॥

घृतेन तं तु संस्नाप्य विधिना वै समर्चयेत् ॥

हेम दद्याच्च विप्रेंद्र सम्यक्छ्रद्धासमन्वितः ॥ ९ ॥

एवं कृत्वा विधानेन सम्यग्यात्राफलं लभेत् ॥

वह्निलोकं तु संप्राप्य मोदते कालमक्षयम् ॥ 7.1.78.१० ॥

इति श्रीस्कांदे महापुराण एकाशीति साहरुया संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वैश्वानरेश्वरमाहात्म्यवर्णनंनामाष्टसप्तति तमोऽध्यायः ॥ ७८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०७९

https://sa.wikisource.org/s/g7e
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच॥ ॥

ततो गच्छेन्महादेवि लकुलीशं महाप्रभम् ॥

तस्य पश्चिमदिग्भागे धनुषां सप्तके स्थितम् ॥ १ ॥

पापघ्नं सर्वजंतूनां शांतं मूर्तिस्थितं प्रभुम् ॥

समायातं महाक्षेत्रे तत्र कायावरोहणात् ॥ २ ॥

कृत्वा तत्र तपश्चोग्रं दीक्षयित्वात्मशिष्य कान् ॥

कुशकादींश्च चतुर उक्त्वा शास्त्राण्यनेकशः ॥ ३ ॥

न्यायवैशेषिकादीनि ततः सिद्धिं परां गतः॥

एवं ज्ञात्वा तु यः सम्यक्तं समर्चयते नरः ॥ ४ ॥

कार्त्तिक्यां तु विशेषेण अयने चोत्तरेपि वा ॥

विद्यादानं च तत्रैव दद्याद्विप्राय शालिने ॥ ५ ॥

सप्तजन्मानि विप्रस्य धनाढ्यस्य कुले शुभे ॥

जायते मतिमान्धीमाञ्छ्रीमानेवं पुनःपुनः ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये लकुलीश्वरमाहात्म्य वर्णनंनामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८०



॥ ईश्वर उवाच ॥ ॥

तस्यैव पूर्वदिग्भागे लिंगं पातकनाशनम् ॥

गौतमेश्वरनामाढ्यं दैत्यसूदनपश्चिमे ॥ १ ॥

धनुषां पंचके देवि संस्थितं सर्वकामदम् ॥

शल्येनाराधितं यद्वै मद्रराजेन भामिनि ॥ २ ॥

ततः कृतं तपश्चोग्रं समाराध्य महेश्वरम् ॥

अन्योऽप्येवं नरो यस्तु तं समाराधयिष्यति ॥ ३ ॥

स प्राप्स्यति परां सिद्धिं यथा शल्यो महामनाः ॥

चैत्र शुक्लचतुर्द्दश्यां स्नापयेत्पयसा तु यः ॥ ४ ॥

गंधोदकेन च ततः पूजयेत्कुसुमोत्तमैः ॥

तथैव विधिवद्भक्त्या सोऽश्वमेधफलं लभेत् ॥ ५ ॥

वाचा कृतं च यत्पापं मनसा कर्मणाऽथ वा ॥

तत्सर्वं नश्यते देवि तस्य लिंगस्य दर्शनात् ॥ ६ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गौतमेश्वरमाहात्म्यवर्णनंनामाशीतितमोऽध्यायः ॥ ८० ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवेशं दैत्यसूदनम् ॥

पापघ्नं सर्वजंतूनां प्रभासक्षेत्रवासिनाम् ॥ १ ॥

अनादियुगसंस्थानं सर्व कामप्रदं शुभम्॥

संसारसागरे घोरे स्थितं नौरिव तारणे ॥ २ ॥

अन्ये सर्वेऽपि नश्यंति कल्पांते ब्रह्मणो दिने ॥

एतानि मुक्त्वा देवेशि न्यग्रोधं सप्त कल्पगम ॥३॥

कल्पवृक्षं तथाऽगारं वैडूर्यं पर्वतोत्तमम्॥

श्रीदैत्यसूदनं देवं मार्कंडेयं महामुनिम्॥४॥

अक्षयाश्चाव्ययाश्चैते सप्तकल्पानि सुन्दरि ॥

देवि किं बहुनोक्तेन वर्णितेन पुनःपुनः ॥ ५ ॥

श्रीदैत्यसूदनाद्देवि नान्यास्ति भुवि देवता ॥

यवाकारं तु तस्यैव क्षेत्रपातकनाशनम्॥ ६ ॥

सेवितं चर्षिभिः सिद्धैर्यक्षविद्याधरोरगैः ॥

तस्य सीमां प्रवक्ष्यामि विष्णुक्षेत्रस्य भामिनि ॥ ७ ॥

पूर्वे यमेश्वरं यावच्छ्रीसोमेशं तु पश्चिमे ॥

उत्तरे तु विशालाक्षी दक्षिणे सरितां पतिः ॥ ८ ॥

एतत्क्षेत्रं यवाकारं वैष्णवं पापनाशनम् ॥९॥

अत्र क्षेत्रे मृता ये तु पापिनोऽपि नरा ध्रुवम् ॥

स्वर्गं गच्छंति ते सर्वे संतः सुकृतिनो यथा ॥7.1.81.१०॥

अत्र दत्तं हुतं जप्तं तपस्तप्तं कृतं हि यत् ॥

तत्सर्वं चाक्षयं प्रोक्तं सप्तकल्पावधि प्रिये ॥ ११ ॥

तत्रैकमपि यो देवि ब्राह्मणं भोजयिष्यति ॥

विधिना विष्णुमुद्दिश्य कोटिर्भवति भोजिता ॥ १२ ॥

तत्रोपवासं यः कुर्यान्नरो भक्तिसमन्वितः ॥

एकेनैवोपवासेन उपवासायुतं फलम् ॥

चक्रतीर्थे नरः स्नात्वा सोपवासो जितेंद्रियः ॥ १३ ॥

द्वादश्यां कार्त्तिके मासि दद्याद्विप्रेषु कांचनम् ॥

विष्णुं संपूज्य विधिवन्मुच्यते सर्वपातकैः ॥ १४ ॥

॥ देव्युवाच ॥ ॥

दैत्यसूदननामेति कथं तस्य प्रकीर्तितम् ॥

कस्मिन्काले तु देवेश तन्मे विस्तरतो वद ॥ १५ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि माहात्म्यं पापनाशनम् ॥

दैत्यसूदनदेवस्य पुरा वृत्तं महोदयम् ॥ १६ ॥

देवि तस्यैव नामानि कल्पेकल्पे भवंति वै॥

अनादिनिधनान्येव संभवन्ति पुनःपुनः॥१७॥

पूर्वकल्पे श्रिया वृत्तो वामनस्तु द्वितीयके॥

वज्रांगस्तु तृतीये वै तुरीये कमलाप्रियः॥१८॥

पंचमे दुःखहर्त्ता च षष्ठे तु पुरुषोत्तमः॥

श्रीदैत्यसूदनो देवः कल्पे वै सप्तमे स्मृतः॥१९॥

तस्यैव नाम चोत्पत्तिं कथयामि यथार्थतः ॥ 7.1.81.२० ॥

पुरा देवासुरे युद्धे दानवैर्देवकंटकैः ॥

निर्जिता देवताः सर्वे जग्मुस्ते शरणं हरिम् ॥

क्षीरोदवासिनं देवमस्तुवन्प्रणताः स्थिताः ॥ २१ ॥

॥ देवा ऊचुः॥ ॥

जय देव जगन्नाथ दैत्यासुरविमर्द्दन ॥

वाराहरूपमास्थाय उद्धृता वसुधा त्वया ॥ २२ ॥

उद्धृता मत्स्यरूपेण वेदा उदधिमध्यतः ॥

कूर्मरूपी तथा भूत्वा क्षीरोदार्णवमंथनम् ॥ २३ ॥

कृत्वा त्वया जगन्नाथ उद्धृता श्रीर्नमो ऽस्तु ते ॥

श्रीपतिः श्रीधरो देव आर्त्तानामर्तिनाशनः ॥ २४ ॥

बलिर्वामनरूपेण त्वया बद्धोऽसुरारिणा ॥

हिरण्याक्षो महादैत्यो हिरण्यकशिपुर्हतः ॥ २५ ॥

नारसिंहेन रूपेण अन्तरिक्षे धृतस्त्वया ॥

देवमूल महादेव उद्धृतं भुवनं त्वया ॥ २६ ॥

त्वया विना जगन्नाथ भुवनं निष्प्रभी कृतम् ॥

सूर्येणेव तु विक्रान्तं तमोभिरिव दानवैः ॥ २७ ॥

श्रुत्वा स्तोत्रमिदं देवि विष्णुः कमललोचनः ॥

उवाच देवान्ब्रह्माद्यान्क्षीरोदार्णव बोधितः ॥ २८ ॥

भयं त्यजध्वं वै देवा दानवान्प्रति सर्वथा ॥

अचिरेणैव कालेन घातयिष्यामि दानवान् ॥ २९ ॥

एवमुक्त्वाथ तैः सार्द्धमा जगाम जनार्द्दनः ॥

दानवान्घातयामास स चक्रेण पृथक्पृथक् ॥ 7.1.81.३० ॥

भयार्त्ता दानवाः सर्वे पलायनपरायणाः ॥

प्रभासं क्षेत्रमासाद्य समुद्राभिमुखा भवन्॥ ३१ ॥

नश्यमानास्ततो दृष्ट्वा दैत्यान्दैत्यविनाशनम् ॥

संजघ्ने तान्स चक्रेण निःशेषान्सर्वदानवान् ॥ ३२ ॥

हतेषु सर्वदैत्येषु देवब्राह्मणतापसैः ॥

कल्याणमभवत्तत्र जगत्स्वस्थमनाकुलम् ॥ ३३ ॥

तत्प्रभृत्येव देवस्य दैत्यसूदननाम तत् ॥

एतन्माहात्म्यमतुलं कथितं तव सुन्दरि ॥

दैत्यसूदनदेवस्य महाभाग्यं महोदयम् ॥ ३४ ॥

तं दृष्ट्वा न जडो नांधो न दरिद्रो न दुःखितः ॥

जायते सप्त जन्मानि सत्यंसत्यं वरानने ॥ ३५ ॥

श्रवणद्वादशीं पुण्यां रोहिण्यां चाष्टमीं शुभाम् ॥

शयनोत्थापनीं चैव नरः कृत्वा प्रयत्नतः ॥ ३६ ॥

एकैकेनोप वासेन उपवासायुतं फलम् ॥

लभते नात्र सन्देहो दैत्यसूदनसन्निधौ ॥ ३७ ॥

चण्डालः श्वपचो वापि तिर्यग्योनिगतोऽपि वा ॥

प्राणत्यागे कृते तस्मिन्नाच्युतं लोकमाप्नुयात् ॥ ३८ ॥

कार्तिक्यां चैव वैशाख्यां मासमेकमुपोषयेत् ॥

दैत्यसूदनमध्यस्थः सम्यक्छ्रद्धासमन्वितः ॥ ३९ ॥।

एकैकेनोपवासेन कोटिकोटि पृथक्पृथक् ॥

लभते तत्फलं सर्वं विष्णुक्षेत्रप्रभावतः ॥ 7.1.81.४० ॥

दीपं ददाति यस्तत्र मासं वा पक्षमेव वा ॥

एकैक दीपदानेन कोटिदीपफलं लभेत् ॥ ४१ ॥

पंचामृतेन संस्नाप्य देवदेवं चतुर्भुजम् ॥

एकादश्यां निराहारः पूजयित्वाऽच्युतो भवेत् ॥ ४२ ॥

चातुर्मास्यं विधानेन दैत्यसूदनसन्निधौ ॥

नियमेन क्षिपेद्यस्तु तस्य तुष्यति केशवः ॥ ४३ ॥

अन्यक्षेत्रेषु यत्कृत्वा चातुर्मास्यानि कोटिशः ॥

तत्फलं लभते सर्वं दैत्यसूदनदर्शनात् ॥ ४४ ॥

ब्रह्माण्डं सकलं दत्त्वा यत्पुण्यफलमाप्नुयात् ॥

तत्पुण्यं लभते सर्वं दैत्यसूदनदर्शनात्॥ ४५॥

एकादश्यां तु यस्तत्र कुरुते जागरं नरः ॥

गीतनृत्यैस्तथा वाद्यैः प्रेक्षणीयैस्तथाविधैः ॥

स याति वैष्णवं लोकं यं गत्वा न निवर्त्तते ॥ ४६ ॥

हत्याऽयुतानीह सुसंचितानि स्तेयानि रुक्मस्य न सन्ति संख्या ॥

निहंति केनापि पुरा कृतानि सर्वाणि भद्रा निशि जागरेण ॥ ४७॥

मार्गा न ते प्रेतपुरी न दूता वनं च तत्खेचरखड्गपत्रम् ॥

स्वप्ने न पश्यंति च ते मनुष्या येषां गता जागरणेन भद्रा ॥ ४८ ॥

कन्यासहस्रं विधिवद्ददाति रत्नैरलंकृत्य स्वधर्मबुद्ध्या ॥

गवां सहस्रं कुरुजांगले तु तेषां परं जागरणेन विष्णोः ॥ ४९ ॥

कृत्वा चैवोपवासं च योऽश्नाति द्वादशीदिने ॥

नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥ 7.1.81.५० ॥

इति ते कथितं देवि माहात्म्यं पापनाशनम् ॥

दैत्यसूदनदेवस्य किमन्यत्परिपृच्छसि ॥ ॥ ५१ ॥

पीतवस्त्राणि देवस्य गां हिरण्यं च दापयेत् ॥

स्नात्वा चक्रवरे तीर्थे मुच्यते सर्वपातकात् ॥ ५२ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेप्रभासक्षेत्रमाहात्म्ये श्रीदैत्यसूदनमाहात्म्यवर्णनंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८२

https://sa.wikisource.org/s/g7h



॥देव्युवाच ॥ ॥

चक्रतीर्थेति किं नाम त्वया प्रोक्तं वृषध्वज ॥

कुत्र तिष्ठति तत्तीर्थं किं प्रभावं वदस्व मे ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

पुरा देवासुरे युद्धे हत्वा दैत्याञ्जनार्द्दनः ॥

चक्रं प्रक्षालयामास तत्र वै रक्तरंजितम्॥ २ ॥

अष्टकोटिसुतीर्थानि तत्रानीय स्वयं हरिः ॥

तीर्थे प्रकल्पयामास शुद्धिं कृत्वा सुदर्शने ॥

तीर्थस्य चक्रे नामापि चकतीर्थमिति श्रुतम्॥ ३ ॥

अष्टायुतानि तीर्थानामष्टौ कोट्यस्तथैव च ॥

तत्र संति महादेवि चक्रतीर्थे न संशयः ॥ ४ ॥

यस्तत्र कुरुते स्नानमेकचित्तो नरोत्तमः॥

सर्वतीर्थाभिषेकस्य स प्राप्नोत्यखिलं फलम्॥५ ॥

तीर्थानामष्टकोटिस्तु निवसंति वरानने ॥

एकादश्यां विशेषेण चन्द्रसूर्यग्रहे तथा ॥ ६ ॥

तत्र स्नात्वा महादेवि यज्ञकोटिफलं लभेत् ॥

तस्यैव कल्पनामानि शृणु ते कथयाम्यहम् ॥ ७ ॥

कोटितीर्थं पूर्वकल्पे श्रीनिधानं द्वितीयके ॥

तृतीये शतधारं च चक्रतीर्थं चतुर्थके ॥ ८ ॥

एवं ते कल्पनामानि ह्यतीतान्यखिलानि वै ॥

कथितान्येवमन्यानि ज्ञेयानि विबुधैः क्रमात्॥ ९ ॥

तत्र यद्दीयते दानं तस्य संख्या न विद्यते ॥

अर्द्धक्रोशप्रमाणं हि विष्णुक्षेत्रं प्रकीर्त्तितम् ॥ 7.1.82.१० ॥

ब्रह्महत्या नोपसर्पेत्सत्यमेतन्मयोदितम् ॥

मासोपवासी तत्क्षेत्रे अग्निहोत्री यतव्रतः ॥ ११ ॥

स्वाध्यायी यज्ञयाजी च तपश्चांद्रायणा दिकम् ॥

तिलोदकं पितॄणां च श्राद्धं च विधिपूर्वकम् ॥ १२ ॥

एकरात्रं त्रिरात्रं वा कृच्छ्रं सांतपनं तथा ॥

मासोपवासं तच्चैव अन्यद्वा पुण्यकर्म तत् ॥ १३ ॥

दैत्यारिक्षेत्रमासाद्य यत्किंचित्कुरुते नरः ॥

अन्यक्षेत्रात्कोटिगुणं पुण्यं भूयान्न संशयः ॥ १४ ॥

सुदर्शने वरे तीर्थे गोदानं तत्र दापयेत् ॥

सम्यग्यात्राफलप्रेप्सुः सर्वपापविशुद्धये ॥ १५ ॥

चंडालः श्वपचो वाऽपि तिर्यग्योनिगतस्तथा ॥

तस्मिंस्तीर्थे मृतः सम्यगाच्युतं लोकमाप्नुयात् ॥ १६ ॥

इति संक्षेपतः प्रोक्तं चक्रतीर्थसमुद्भवम् ॥

माहात्म्यं सर्वपापघ्नं सर्वकामफलप्रदम् ॥ १७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये दैत्यसूदन माहात्म्यप्रसंगेन चक्रतीर्थोत्पत्तिवृत्तान्तमाहात्म्यवर्णनंनाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्य पूर्वेण संस्थिताम् ॥

योगेश्वरीं महादेवीं योगसिद्धिफलप्रदाम् ॥ १ ॥

तदुत्पत्तिं प्रवक्ष्यामि शृणु श्रद्धासमन्विता ॥

पुरा दानवशार्दूलो महिषाख्यो महाबलः ॥ २ ॥

बभूव प्रवरो देवि सर्वदेवभयंकरः ॥

कामरूपी स लोकांस्त्रीन्वशीकृत्वाऽभवत्सुखी ॥ ३ ॥

कस्मिंश्चिदथ काले तु ब्रह्मणा लोककारिणा ॥

सृष्टा मनोहरा कन्या रूपेणाप्रतिमा दिवि ॥ ४ ॥

अतपत्सा तपो घोरं कन्या रूपवती सती ॥

नारदेन ततो दृष्टा सा कदाचिद्वरानने ॥ ५ ॥

ततः स सहसा देवि विस्मयं परमं गतः ॥

अहो रूपमहो धैर्यमहो कान्तिरहो वयः ॥ ६ ॥

इत्येवं चिन्तयंस्तत्र नारीं वचनमब्रवीत् ॥

कुरुष्वात्मप्रदानं मे न मे दारपरिग्रहः ॥

तवाहं दर्शनाद्देवि कामवाणेन पीडितः ॥७॥

साऽब्रवीन्न हि मे कार्यं कामधर्मेण सत्तम॥

कौमारं व्रतमासाद्य साधयिष्ये यथेप्सितम् ]। ८ ॥

न च मन्युस्त्वया कार्यो ह्यस्मिन्नर्थे कथंचन ॥

तस्यास्तद्वचनं श्रुत्वा स मुनिर्नारदः प्रिये ॥ ॥ ९ ॥

समुद्रान्तेऽगमद्दिव्यां पुरीं महिषपालिताम् ॥

अर्चितो हि मुनिस्तेन महिषेण महात्मना ॥ 7.1.83.१० ॥

पृष्ट्वा ह्यनामयं देवि दत्त्वा चार्घ्यमनुत्तमम् ॥

सोऽब्रवीत्प्राञ्जलिर्भूत्वा किमागमनकारणम् ॥

ब्रूहि यत्ते ब्यवसितं सर्वं कर्त्तास्मि नारद॥११॥

अथोवाच मुनिस्तत्र महिषं दानवेश्वरम्॥

कन्यारत्नं समुत्पन्नं जंबूद्वीपे महासुर ॥१२ ॥

स्वर्गे मर्त्ये च पाताले न दृष्टं न च मे श्रुतम् ॥

तादृग्रूपमहं येन कामबाणवशीकृतः ॥ १३ ॥

स श्रुत्वा वचनं तस्य कामस्योत्पादनं परम्॥

जगाम यत्र सा साध्वी क्षेत्रे प्राभासिके स्थिता ॥ १४ ॥

तामेव प्रार्थयामास बलेन महता वृतः ॥

भार्या भव त्वं मे भीरु भुंक्ष्व भोगान्मनोरमान्॥

एतत्तपो महाभागे विरुद्धं यौवनस्य ते ॥ १५ ॥

तस्य तद्वचनं श्रुत्वा जहास वरवर्णिनी ॥

तस्या हसंत्या देवेशि शतशोऽथ सहस्रशः ॥ १६ ॥

निश्वासात्सहसा नार्यः शस्त्रहस्ता भयानकाः ॥

ताभिर्विध्वंसितं सैन्यं महिषस्य दुरात्मनः ॥१७॥

तस्मिन्निपात्यमाने तु सैन्ये दानवसत्तमः ॥

क्रोधं कृत्वा ततः शीघ्रं तामेवाभिमुखो ययौ ॥१८॥

विधुन्वन्स हि ते तीक्ष्णशृंगेऽभीक्ष्णं भयानके ॥।

तया सार्धं च सुमहत्कृत्वा युद्धं महासुरः ॥१९॥

शृंगाभ्यां जगृहे देवीं सा तस्योपरि संस्थिता ॥

पद्भ्यामाक्रम्य शूलेन निहतो दैत्यपुंगवः ॥7.1.83.२०॥

छिन्ने शिरसि खड्गेन तद्रूपो निःसृतः पुमान् ॥

रौद्रोऽपि स गतः स्वर्गं दैत्यो देव्यस्त्रपातितः ॥२१॥

ततो देवगणाः सर्वे महिषं वीक्ष्य निर्जितम् ॥।

महेंद्राद्याः स्तुतिं चक्रुर्देव्यास्तुष्टेन चेतसा॥२२॥

॥ देवा ऊचुः॥

नमो देवि महाभागे गम्भीरे भीमदर्शने॥

नयस्थिते सुसिद्धांते त्रिनेत्रे विश्वतोमुखि ॥ २३ ॥

विद्याविद्ये जये जाप्ये महिषासुरमर्दिनि ॥

सर्वगे सर्वविद्येशे देवि विश्वस्वरूपिणि ॥२४॥

वीतशोके ध्रुवे देवि पद्मपत्रायतेक्षणे ॥

शुद्धसत्त्वे व्रतस्थे च चण्डरूपे विभावरि ॥२५॥

ऋद्धिसिद्धिप्रदे देवि कालनृत्ये धृतिप्रिये ॥

शांकरि ब्राह्मणि ब्राह्मि सर्वदेवनमस्कृते ॥२६॥

घंटाहस्ते शूल हस्ते महामहिषमर्दिनि ॥

उग्ररूपे विरूपाक्षि महामायेऽमृते शिवे ॥ २७ ॥

सर्वगे सर्वदे देवि सर्वसत्त्वमयोद्भवे ॥

विद्यापुराणशल्यानां जननि भूतधारिणि ॥ २८ ॥

सर्वदेवरहस्यानां सर्वसत्त्ववतां शुभे ॥

त्वमेव शरणं देवि विद्याऽविद्ये श्रियेऽश्रिये ॥ २९ ॥

एवं स्तुता सुरैर्देवि प्रणम्य ऋषिभिस्तथा ॥

उवाच हसती वाक्यं वृणुध्वं वरमुत्तमम् ॥ 7.1.83.३० ॥

॥ देवा ऊचुः ॥

स्तवेनानेन ये देवि स्तुवन्त्यत्र नरोत्तमाः ॥

ते संतु कामैः संपूर्णा वरवर्षा निरंतरम् ॥ ३१ ॥

अस्मिन्क्षेत्रे त्वया वासो नित्यं कार्यः शुचिस्मिते ॥ ३२ ॥

एवमस्त्विति सा देवी देवानुक्त्वा वरानने ॥

विसृज्य ऋषिसंघांश्च तत्रैव निरताऽभवत् ॥ ३३ ॥

आश्वयुक्छुक्लपक्षस्य नवम्यां यो वरानने ॥

उपवासपरो भूत्वा तां प्रपश्यति भक्तितः ॥

तस्य पापं क्षयं याति तमः सूर्योदये यथा ॥ ३४ ॥

य एतत्पठति स्तोत्रं प्रातरुत्थाय मानवः ॥

न भीः संपद्यते तस्य यावज्जीवं नरस्य वै ॥ ३५ ॥

आश्वयुक्छुक्लपक्षे या अष्टमी मूलसंयुता ॥

सा महानामिका प्राणा येषां तस्यां गताः शुभे ॥ ३६ ॥

तेषां स्वर्गे ध्रुवं वासो वीरास्तेऽप्सरसां प्रियाः ॥ ३७ ॥

मन्वन्तरेषु सर्वेषु कल्पादिषु सुरेश्वरि ॥

एष एव क्रमः प्रोक्तो विशेषं शृणु सांप्रतम् ॥३८॥

आश्वयुक्छुक्लपक्षे या पंचमी पापनाशिनी ॥

तस्यां संपूजयेद्रात्रौ खड्गमंत्रैर्विभूषितम् ॥ ३९ ॥

मंडपं कारयेत्तत्र नवसप्तकरं तथा ॥

प्रागुदक्प्रवणे देशे पताकाभिरलंकृतम् ॥

योगेश्वर्याः संनिधाने विधिना कारयेद्द्विजः॥7.1.83.४०॥।

आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम्॥

मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया॥४१॥

शास्त्रोक्तं मन्त्रसंयुक्तं होतव्यं पायसं ततः॥

ततः खड्गं तु संस्नाप्य पंचामृतरसेन वै॥

पूजयेद्विविधैः पुष्पैर्मंत्रपूर्वं द्विजोत्तमैः॥४२॥

अभीर्विशसनं खड्गः प्राणिभूतो दुरासदः ॥

अगम्यो विजयश्चैव धर्माधारस्तथैव च ॥

इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ॥ ४३ ॥

नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥

हिरण्यं च शरीरं ते धाता देवो जनार्दनः ॥

पिता पितामहो देव स्वेन पालय सर्वदा ॥ ४४ ॥

॥ इति खड्गमन्त्रः ॥ ॥

एवं संपूज्य विधिना तं खड्गं ब्राह्मणोत्तमैः ॥

भ्रामयेन्नगरे रात्रौ नान्दीघोषपुरःसरम् ॥ ४५ ॥

सर्वसैन्येन संयुक्तस्तत्र ब्राह्मणपुंगवैः ॥

एवं कृत्वा विधानं तु पुनर्योगेश्वरीं नयेत् ॥

उच्चार्य मन्त्रमेवं वै खड्गं तस्यै समर्पयेत् ॥ ४६ ॥

अञ्जनेन समालेख्य चन्दनेन विलेपितम् ॥

बिल्वपत्रकृतां मालां तस्यै देव्यै निवेदयेत् ॥ ४७ ॥

दुर्गे दुर्गार्तिहे देवि सर्व दुर्गतिनाशिनि ॥

त्राहि मां सर्वदुर्गेषु दुर्गेऽहं शरणं गतः ॥ ४८ ॥

दत्त्वैवमर्घ्यं देवेशि तत्र खड्गं च जागृयात् ॥

नित्यं संपूज्य विधिना अष्टम्यां यावदेव हि ॥ ४९ ॥

तद्रात्रौ जागरं कृत्वा प्रभाते ह्यरुणोदये ॥

पातयेन्महिषान्मेषानग्रतो गतकंधरान् ॥ 7.1.83.५० ॥

शतमर्धशतं वापि तदर्धार्धं यथेच्छया ॥

सुरासवभृतैः कुंभैस्तर्पयेत्परमेश्वरीम् ॥ ५१ ॥

कापालिकेभ्यस्तद्देयं दासीदासजने तथा ॥

ततोऽपराह्णसमये नवम्यां स्यन्दने स्थिताम् ॥ ५२ ॥

योगेशीं भ्रामयेद्राष्ट्रे स्वयं राजा स्वसैन्यवान् ॥

नदद्भिः शंखपटहैः पठद्भिर्बटुचारणैः ॥ ५३ ॥

भूतेभ्यश्च बलिं दद्यान्मंत्रेणानेन भामिनि ॥

सरक्तं सजलं सान्नं गन्धपुष्पाक्षतैर्युतम् ॥ ५४ ॥

त्रीन्वाराँस्तु त्रिशूलेन दिग्विदिक्षु क्षिपेद्बलिम् ॥

बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा ॥ ५५ ॥

मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥

सौम्या भवंतु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ५६ ॥

य एवं कुर्वते यात्रां ब्राह्मणाः क्षेत्रवासिनः ॥

न तेषां शत्रवो नाग्निर्न चौरा न विनायकाः ॥

विघ्नं कुर्वंति देवेशि योगेश्वर्याः प्रसादतः ॥ ५७ ॥

सुखिनो भोगभोक्तारः सर्वातंकविवर्जिताः ॥

भवन्ति पुरुषा भक्ता योगेश्वर्या निरंतरम् ॥ ५८ ॥

इत्येष ते समाख्यातो योगेश्वर्या महोत्सवः ॥

पठतां शृण्वतां चैव सर्वाशुभविनाशनः ॥ ५९ ॥

शूलाग्रभिन्नमहिषासुरपृष्ठपीठामुत्खातखड्ग रुचिरांगदबाहुदंडाम् ॥

अभ्यर्च्य पंचवदनानुगतं नवम्यां दुर्गां सुदुर्गगहनानि तरंति मर्त्याः ॥ 7.1.83.६० ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये योगेश्वरीमाहात्म्यवर्णनंनाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि आदिनारायणं हरिम् ॥

तस्याश्च पूर्वदिग्भागे सर्वपातकनाशनम् ॥ १ ॥

पादुकासनसंयुक्तं सर्वदैत्यांतकारिणम् ॥

आदौ कृतयुगे देवि दैत्योऽभून्मेघवाहनः ॥ २ ॥

महाबलो महाकायो योजनायुतविस्तरः ॥

अजेयः सर्वदेवानां त्रैलोक्यक्षयकारकः ॥

ब्रह्मणा तस्य तुष्टेन वरो दत्तो वरानने ॥ ३ ॥

यदा पादुकया विष्णुस्त्वां हनिष्यति संयुगे ॥

तदैव मृत्युर्भविता नान्यथा मरणं तव ॥ ४ ॥

इति लब्धवरो दैत्यः संतापयति भूतलम् ॥

युगानां कोटिमेकां तु सदेवासुरमानुषम् ॥ ५ ॥

संतप्य बहुधा देवि दक्षिणो दधिमागतः ॥

तत्र विध्वंसयामास ऋषीणामाश्रमाणि वै ॥ ६ ॥

ततस्त ऋषयः सर्वे विध्वस्ताश्रममण्डलाः ॥

शरणं चैव संप्राप्ता देवदेवं तु केशवम् ॥

अजेयं तं तु संज्ञात्वा तुष्टुवुर्गरुडध्वजम् ॥ ७ ॥

॥ ऋषय ऊचुः ॥

नमः परमकल्याणकल्याणायात्मयोगिने ॥

जनार्द्दनाय देवाय श्रीधराय च वेधसे ॥ ८ ॥

नमः कमलकिंजल्कसुवर्णमुकुटाय च ॥

केशवायातिसूक्ष्माय बृहन्मूर्ते नमोनमः ॥ ९ ॥

महात्मने वरेण्याय नमः पंकजनाभये ॥

नमोऽस्तु मायाहरये हरये हरिवेधसे ॥ 7.1.84.१० ॥

हिरण्यगर्भगर्भाय जगतः कारणात्मने ॥

अच्युताय नमो नित्यमनन्ताय नमोनमः ॥ ११ ॥

नमो मायापटच्छन्न जगद्धात्रे महात्मने ॥

संसारसागरोत्तार ज्ञानपोतप्रदायिने ॥

अकुंठमतये धात्रे सर्गस्थित्यंत कर्मणे ॥ १२ ॥

यथा हि वासुदेवेति प्रोक्ते नश्यति पातकम् ॥

तथा विलयमभ्येतु दैत्योऽयं मेघवाहनः ॥ १३ ॥

यथा विष्णुः स्वभक्तेषु पापमाप्नोति संस्थितम्॥

तथा विनाशमायातु दैत्योऽयं पापकर्मकृत् ॥ १४ ॥

स्मृतमात्रो यथा विष्णुः सर्वं पापं व्यपोहति ॥

तथा प्रणाशमभ्येतु दैत्योऽयं मेघवाहनः ॥ १५ ॥

भवंतु भद्राणि समस्तदोषाः प्रयांतु नाशं जगतोऽखिलस्य ॥

अभेद्यभक्त्या परमेश्वरेशे स्मृते जगद्धातरि वासुदेवे ॥ १६ ॥

ये भूतले ये दिवि येऽन्तरिक्षे रसातले प्राणिगणाश्च केचित् ॥

भवन्तु ते सिद्धियुता नरोत्तमाः स्मृते जगद्धातरि वासुदेवे ॥ १७ ॥

ये प्राणिनः कुत्रचिदत्र संति ब्रह्माण्डमध्ये परतश्च केचित् ॥

तेषां तु सिद्धिः परमास्त्वनिंद्या स्तुते जगद्धातरि वासुदेवे ॥ १८ ॥

॥ ईश्वर उवाच ॥ ]।

इति स्तुतस्तदा देवि आदिनारायणो हरिः ॥

ज्ञात्वा स भावि कार्यं तत्समारुह्य च पादुकाम् ॥ १९ ॥

बभूव तेषां प्रत्यक्ष ऋषीणां पापनाशनः ॥

उवाच प्रणतान्सर्वान्किं वा कार्यं हृदि स्थितम् ॥ 7.1.84.२० ॥

कथ्यतां तत्करिष्यामि युष्मत्स्तोत्रेण तर्पितः ॥ २१ ॥

इत्युक्ता ऋषयः सर्वे कृतांजलिपुटाः स्थिताः ॥

आदिदेवं हरिं प्रोचुः सर्वे नतशिरोधराः ॥ २२ ॥

॥ ऋषय ऊचुः ॥ ॥

जानासि सर्वं त्वं देव न चास्त्यविदितं तव ॥

इमं दैत्यं महादेव संहरस्व महाबलम्॥

यथेदं सकलं विश्वं निरातंकं भवेत्प्रभो ॥ २३ ॥

इत्युक्तस्तैस्तदा विष्णुर्दैत्यमाहूय संयुगे ॥

ताडयामास तं दैत्यं हृदि पादुकया शुभे॥२४॥

स हतः पतितो दैत्यो विगतासुर्महोदधौ॥

हत्वा दैत्यवरं देवस्तत्र स्थाने स्थितोऽभवत्॥

पादुकासनसंस्थस्तु तत्राद्यापि वरानने ॥ २५ ॥

यस्तं पूजयते भक्त्या एकादश्यां नरोत्तमः ॥

सोश्ववमेधफलं प्राप्य मोदते दिवि देववत् ॥ २६ ॥

गोलक्षं ब्राह्मणे दत्त्वा यत्फलं प्राप्नुयान्नरः ॥

तदादिदेवे गोविन्दे दृष्टे भक्त्या फलं लभेत् ॥ २७ ॥

कलौ कृतयुगं तेषां क्लेशस्तेषां सुखाधिकः ॥

आदिनारायणो देवो येषां हृदयसंस्थितः ॥ २८॥

एकादश्यां रविदिने स्नात्वा संनिहिता जले ॥

आदिनारायणं पूज्य मुच्यते भवबन्धनात् ॥२९॥

इति ते कथितं देवि माहात्म्यं विष्णुदैवतम् ॥

श्रुतं पापहरं नृणां दारिद्यौघविनाशनम् ॥ 7.1.84.३० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य आदिनारायणमाहात्म्यवर्णनंनाम चतुरशीतितमोध्यायः ॥ ८४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८५

https://sa.wikisource.org/s/g7k
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

तत्र संनिहिता प्रोक्ता या त्वया वृषभध्वज ॥

कथं देव समायाता कुरुक्षेत्रान्महानदी ॥

किं प्रभावा तु सा प्रोक्ता फलं स्नानादिकेन किम् ॥ ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि यत्र संनिहिता शुभा ॥

पापघ्नी सर्वजंतूनां दर्शनात्स्पर्शनादपि ॥ २ ॥

आदिनारायणाद्देवि पश्चिमे धनुषां त्रये ॥

संस्थिता सा महादेवी सरिद्रूपा महानदी ॥ ३ ॥

कथयामि समासेन तदुत्पत्तिं शृणु प्रिये ॥

जरासंधभयाद्देवि विष्णुः परिजनैः सह ॥ ४ ॥

गृहीत्वा यादवान्सर्वान्बालवृद्धवणिग्जनान् ॥

स शून्यां मथुरां कृत्वा प्रभासं समुपागतः ॥ ५ ॥

समुद्रं प्रार्थयामास स्थानं संवासहेतवे ॥

एतस्मिन्नेव काले तु देवदेवो दिवाकरः ॥ ६ ॥

संग्रस्तो राहुणा देवि पर्वकाले ह्युपस्थिते ॥

तं दृष्ट्वा यादवाः सर्वे विषादं परमं गताः ॥ ७ ॥

अप्राप्ताः संनिहित्यायां तानुवाच जनार्द्दनः ॥

मा विषादं यदुश्रेष्ठा व्रजध्वं मयि संस्थिते ॥ ८ ॥

दृश्यतां मत्प्रभावोऽद्य धर्मा र्थमिह भूतले ॥

आनयिष्याम्यहं सम्यक्पुण्यं सांनिहितं सरः ॥ ९ ॥

एवमुक्त्वा स भगवान्समाधिस्थो बभूव ह ॥

एवं संध्यायतस्तस्य विष्णोरमिततेजसः ॥ 7.1.85.१० ॥

प्रादुर्भूता ततस्तस्य वारिधाराऽग्रतः शुभा ॥

बिभेद्य धरणीपृष्ठं स्नानार्थं चासुरद्विषः ॥ ११ ॥
तत स्ते यादवाः सर्वे रामसांबपुरोगमाः ॥
चक्रुः स्नानं महादेवि राहुग्रस्ते दिवाकरे ॥ १२ ॥
प्राप्तपुण्या बभूवुस्ते संनिहित्यासमुद्भवम् ॥
कुरुक्षेत्रस्य यात्रायाः प्राप्य सम्यक्फलं हि ते ॥ १३ ॥
एवं तत्समनुप्राप्तं पुण्यं सान्निहितं सरः ॥
तत्र स्नात्वा महादेवि राहुग्रस्ते दिवाकरे ॥
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोत्यशेषतः ॥ १४ ॥
यस्तत्र भोजयेद्विप्रं षड्रसं विधिपूर्वकम् ॥
एकेन भोजितेनैव कोटिर्भवति भोजिता ॥ १५ ॥
यस्तत्र कारयेद्धोमं संनिहित्यासमीपतः ॥
एकैकाहुतिदानेन कोटिहोमफलं लभेत् ॥ १६ ॥
मन्त्रजाप्यं तु कुरुते तत्र स्थाने स्थितो यदि ॥
एकैकमंत्रजाप्येन कोटिजाप्यफलं लभेत् ॥ १७ ॥
सुवर्णदानं दातव्यं तत्र यात्राफलेप्सुभिः ॥
स्नात्वा संपूजनीयश्च आदिदेवो जनार्द्दनः ॥ १८ ॥
इति वै कथितं सम्यक्फलं सांनिहितं तव ॥
श्रुतं पापहरं नृणां सम्यक्छ्रद्धावतां प्रिये ॥ १९ ॥।
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संनिहित्यामाहात्म्यवर्णनंनाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८६



॥ ईश्वर उवाच ॥ ॥

तस्यास्तु दक्षिणे भागे स्थितं लिंगं महाप्रभम् ॥

पांडवेश्वरनामाढ्यं पंचभिः स्थापितं क्रमात् ॥ १ ॥

गुप्तचर्यां यदा याताः पांडवा वनवासिनः ॥

तीर्थयात्राप्रसंगेन प्रभासं क्षेत्रमागताः ॥ २ ॥

तस्मिन्काले महादेवि सं प्राप्ते सोमपर्वणि ॥

स्थापयामासुस्ते सर्वे लिंगं संनिहिता तटे ॥ ३ ॥

मार्कण्डप्रमुखान्कृत्वा ऋत्विजो ब्राह्मणोत्तमान् ॥

वेदोक्तैः कारयामासुरभिषेकं वृषान्ददुः ॥ ४ ॥

ततः प्रसन्ना ऋषयो मार्कंडप्रमुखाः प्रिये ॥

प्रतिष्ठितस्य लिंगस्य पांडवैर्वरवर्णिनि ॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

ये चैतत्पूजयिष्यंति लिंगं पांडवपूजितम् ॥

ते वै पूज्या भविष्यंति देवदानवरक्षसाम् ॥ ६ ॥

अश्वमेधफलं तेषां सम्यक्छ्रद्धार्चनेन वै ॥

भविष्यति न संदेहो ह्यस्मद्वाक्यप्रभावतः ॥ ७ ॥

स्नात्वा संनिहिताकुंडे योऽर्चयेत्पांडवेश्वरम् ॥

माघे मासि समग्रे तु स साक्षात्पुरुषोत्तमः ॥ ८ ॥

दर्शनेनापि तस्यापि पापं याति सहस्रधा ॥

विष्णुरूपो हि स प्रोक्तो नात्र कार्या विचारणा ॥ ९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये संनिहित्यामाहात्म्ये पांडवेश्वरमाहात्म्यवर्णनंनाम षडशीतितमोऽध्यायः ॥ ८६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८७



॥ ईश्वर उवाच ॥ ॥

एवं कृत्वा नरो यात्रां सम्यक्छ्रद्धासमन्वितः ॥

ततो गच्छेन्महादेवि रुद्रानेकादश क्रमात् ॥ १ ॥

प्रभासक्षेत्रमध्यस्थान्महापातकनाशनान् ॥

यदेकादशधा पापमर्जितं मनुजैः पृथक् ॥ २ ॥

तदेकादशरुद्राणां पूजनात्क्षयमेष्यति ॥

संक्रांतावयने वापि चंद्रसूर्यग्रहेऽथवा ॥ ३ ॥

अन्यासु पुण्यतिथिषु सम्यग्भावेन भावितः ॥

पूजयेदानुपूर्व्येण रुद्रैकादशकं क्रमात् ॥ ४ ॥

तेषां नामानि वक्ष्यामि यान्यतीतानि मे पुरा ॥

आद्ये कृतयुगे तानि शृणु देवि यथार्थतः ॥ ५ ॥

अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ॥

हरश्च बहुरूपश्च त्र्यंबकश्च सुरेश्वरः ॥

वृषाकपिश्च शंभुश्च कपर्दी चापराजितः ॥ ६ ॥

आदौ कृतयुगे देवि त्रेतायां द्वापरेऽपि च ॥

कलौ युगे तु संप्राप्ते जातं नामांतरं पुनः ॥ ७ ॥

एकादशधा रुद्राणां तानि ते वच्मि सांप्रतम्॥

भूतेशो नीलरुद्रश्च कपाली वृषवाहनः ॥८॥

त्र्यंबको घोरनामा च महाकालोऽथ भैरवः ॥

मृत्युंजयोऽथ कामेशो योगेश इति कीर्तितः ॥

एकादशैते रुद्रास्ते कथिताः क्रमशः प्रिये ॥ ९ ]।

अनादिनिधना देवि भेदभिन्नास्तु ते पृथक् ॥

एकादशस्वरूपेण पृथङ्नामप्रभेदतः ॥ 7.1.87.१० ॥

॥ देव्युवाच ॥ ॥

भगवन्विस्तराद्ब्रूहि लिंगैकादशकक्रमम् ॥
स्थानसीमाप्रभेदेन माहात्म्योत्पत्तिकारणैः ॥११ ॥
कथं पूज्यानि तानीश के मंत्राः को विधिः स्मृतः ॥
कस्मिन्पर्वणि काले वा सर्वं विस्तरतो वद ॥ १२ ॥
॥ ईश्वर उवाच ॥ ॥
शृणु देवि प्रवक्ष्यामि रहस्यं पापनाशनम् ॥
सोमनाथादितः कृत्वा सिद्धिनाथादिकारणम्॥ १३ ॥
यच्छ्रुत्वा मुच्यते जंतुः पातकैः पूर्वसंचितैः ॥
ये चैकादश रुद्रा वै तव प्रोक्ता मया प्रिये ॥ १४ ॥
दश ते वायवः प्रोक्ता आत्मा चैकादशः स्मृतः ॥
तेषां नामानि वक्ष्यामि वायूनां शृणु मे क्रमात्॥ १५ ॥
प्राणोऽपानः समानश्च ह्युदानो व्यान एव च ॥
नागश्च कूर्मः कृकलो देवदत्तो धनंजयः॥ १६ ॥
आत्मा चेति क्रमाज्ज्ञेया रुद्राधिपतयः क्रमात् ॥
तेषां यात्रां क्रमाद्वक्ष्ये सर्वप्राणिहिताय वै ॥ १७ ॥
रुद्राणामादिदेवोऽसौ पूर्वं सोमेश्वरः प्रिये ॥
भूतेश्वरेति नाम्ना वै पूजयेत्तं विधानतः ॥ १८ ॥
राजोपचारयोगेन श्रद्धापूतेन चेतसा ॥
पंचामृतेन संस्नाप्य सद्योजातेन पूजयेत् ॥ १९ ॥
पुष्पैर्मनोहरैर्भक्त्या ध्यात्वा देवं सदाशिवम् ॥
त्रिभिः प्रदक्षिणीकृत्य साष्टांगं प्रणिपत्य च ॥ 7.1.87.२० ॥
रुद्रैकादशयात्रार्थी निर्विघ्नार्थं व्रजेत्ततः ॥
भूतेश्वरेति यन्नाम प्रोक्तं तत्ते ब्रवीम्यहम्॥ २१ ॥
महदादि विशेषांतं भूतजालं यदीरितम् ॥
पंचविंशति संख्याकं तेषामीशो यतः स्मृतः ॥ २२ ॥
तेन भूतेश्वरेत्युक्तं नाम तस्य पुरा किल ॥
पंचविंशतितत्त्वानि ज्ञात्वा मुक्तिमवाप्नुयात् ॥ २३ ॥
भूतेशरुद्रं संपूज्य गच्छेद्वै मुक्तिमव्ययाम् ॥

इति संक्षेपतः प्रोक्तमादि रुद्रस्य कीर्तनम्॥

कीर्तनीयं द्विजातीनां कीर्तितं पुण्यवर्द्धनम्॥ २४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये भूतेश्वरमाहात्म्यवर्णनंनाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि नीलरुद्रं द्वितीयकम्॥

भूतेशादुत्तरे भागे धनुषां षोडशे स्थितम् ॥ १ ॥

महालिंगं महादेवि गणगंधर्वपूजितम्॥

संस्नाप्य तं विधानेन ईशमंत्रेण पूजयेत्॥ २ ॥

कुमुदोत्पलसंभारैः सम्यक्संभावितात्मवान् ॥

कृत्वा प्रदक्षिणां तस्य नमस्कारेण पूजयेत् ॥ ३ ॥

एवं कृत्वा नरो देवि राजसूयफलं लभेत् ॥

वृषस्तत्रैव दातव्यः सम्यग्यात्राफलेप्सुभिः ॥ ४ ॥

नीलांजननिभो दैत्यो निहतश्चांतकः पुरा ॥

तस्य रोदयिता स्त्रीणां नीलरुद्रस्ततः स्मृतः॥५॥

तस्य संक्षेपतः प्रोक्तं माहात्म्यं पापनाशनम् ॥

सम्यक्छ्रद्धान्वितैः प्राप्यं श्राव्यं तद्दर्शनोत्सुकैः ॥ ६ ॥

इतिश्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये नील रुद्रमाहात्म्यवर्णनंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०८९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे कपालीश्वरमुत्तमम् ॥

रुद्रं तृतीयं पापघ्नं नीलरुद्रस्यपूर्वतः ॥ १ ॥

बुधेश्वरात्पश्चिमतो धनुषां सप्तके स्थितम् ॥

छिन्नं मया पुरा देवि ब्रह्मणः पंचमं शिरः ॥ २ ॥

तत्कपालं करे लग्नं प्रभासक्षेत्रमागतः ॥

ततो वर्षसहस्रं तु संस्थितः क्षेत्रमध्यतः ॥ ३ ॥

कपालधारी दिग्वासाः कपाली तेन च स्मृतः ॥

तन्मया पूजितं लिंगं वर्षाणामयुतं प्रिये ॥ ४ ॥

कपालिरूपमास्थाय कपालीशस्ततः स्मृतः ॥

सर्वपापहरो नृणां दर्शनात्स्पर्शनादपि ॥ ५ ॥

मया तत्र नियुक्ता वै रक्षार्थं शूलपाणयः ॥

गणाः सहस्रशो देवि पापिनां दुष्टचेतसाम् ॥ ६ ॥

तस्मात्सर्वप्रयत्नेन सम्यक्छ्रद्धासमन्वितः ॥

पूजयेत्तं महादेवं कपालिनमनामयम् ॥ ७ ॥

हिरण्यं तत्र दातव्यं ब्राह्मणे वेदपारगे ॥

पूजयित्वा विधानेन सम्यक्तत्पुरुषाणुना ॥ ८ ॥

जन्मप्रभृति यत्पापं प्राणिभिः समुपार्जितम् ॥

षडशीतिमुखे दृष्ट्वा तल्लिंगं तु व्यपोहति ॥ ९ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं पापनाशनम् ॥

कपालिरुद्रदेवस्य तृतीयस्य वरानने ॥ 7.1.89.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये कपा लीश्वरमाहात्म्यवर्णनंनामैकोननवतितमोऽध्यायः ॥ ८९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चतुर्थं रुद्रमुत्तमम् ॥

वृषभेश्वरनामानं कल्पलिंगं सुरप्रियम् ॥ १ ॥

बालरूपी महादेवि यत्र ब्रह्मा स्वयं स्थितः ॥

तस्यैव चोत्तरे भागे धनुषां त्रितये स्थितम् ॥ २ ॥

आद्यं महाप्रभावं हि नापुण्यो वेद मानवः ॥

तस्यैव कल्पनामानि सांप्रतं प्रब्रवीमि ते ॥ ३॥

पूर्वकल्पे महादेवि ब्रह्मेश्वर इति स्मृतः ॥

ब्रह्मणाराधितः पूर्वं वर्षाणामयुतं प्रिये ॥ ४ ॥

सृष्टिकामेन देवेन ततस्तुष्टो महेश्वरः ॥

चतुर्विधां भूतसृष्टिं ततश्चक्रे पितामहः ॥ ५ ॥

ब्रह्मणस्त्वीशभावेन गतस्तुष्टिं यतो हरः ॥

तेन ब्रह्मेश्वरं नाम तस्मिँल्लिंगे पुराऽभवत् ॥ ६ ॥

ततो द्वितीयकल्पे तु संप्राप्ते वरवर्णिनि ॥

रैवतेश्वरनामेति प्रख्यातं धरणीतले ॥७॥

रैवतो नाम राजाऽभूद्ब्रह्मांडे सचराचरे ॥

जगद्योनिर्जिगायेदं तल्लिंगस्य प्रभावतः ॥ ८ ॥

रैवतेश्वरनामाभूत्तेन लिंगं महाप्रभम् ॥

पुनस्तृतीयकल्पे तु संप्राप्ते वरवर्णिनि॥९ ॥

वृषभेश्वरनामाभूत्तस्य लिंगस्य भामिनि ॥

ममैव वाहनं योऽसौ धर्मोयं वृषरूपधृक् ॥ 7.1.90.१० ॥

तेन तत्पूजितं लिंगं दिव्याब्दानां सहस्रकम्॥

ततस्तुष्टेन देवेशि नीतः सायुज्यतां वृषः ॥ ११ ॥

तेन तल्लिंगमभवद्वृषभेशेति भूतले ॥

ततश्चतुर्थे संप्राप्ते वाराहेकल्प संज्ञिते ॥ १२ ॥

अष्टाविंशतिमे तत्र त्रेतायुगमुखे तदा ॥

इक्ष्वाकुर्नाम राजाऽभूत्सूर्यवंशविभूषणः ॥ १३ ॥

स लिंगं पूजयामास त्रिकालं भक्तिभावितः ॥

एकाहारो जिताहारो भूमिशायी जितेंद्रियः ॥ १४ ॥

एवं काले बहुविधे ततस्तुष्टो महेश्वरः ॥

ददौ राज्यं महोदग्रं संततिं पुत्र पौत्रिकीम्॥ १५ ॥

इक्ष्वाक्वीश्वरनामाभूत्तेनेदं लिंगमुत्तमम् ॥

यस्तं पूजयते भक्त्या देवं वृषभवाहनम् ॥ .१६ ॥

सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥

त्रिंशद्धनुष्प्रमाणेन तस्य क्षेत्रचतुर्द्दिशम्॥ १७॥

स्नानं जाप्यं बलिं होमं पूजां स्तोत्रमुदीरणम् ॥

तस्मिंस्तीर्थे तु यः कुर्यात्तत्सर्वं चाक्षयं भवेत् ॥ १८ ॥

चतुष्कोणांतरा क्षेत्रमेवं मात्राप्रमाणतः ॥

एकरात्रोषितो भूत्वा तस्य लिंगस्य सन्निधौ ॥ १९ ॥

ब्रह्मचर्येण जागर्त्ति स पापैः संप्रमुच्यते ॥

होमजाप्यसमाधिस्थो नृत्यगीतादिवादनैः ॥ 7.1.90.२० ॥

गोघ्नो वा ब्रह्महा पापी मुच्यते दुष्कृतैर्नरः ॥

यः संप्रीणयते विप्रांस्तत्र भोज्यैः पृथग्विधैः ॥ २१ ॥

एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥

भैरवं चैव केदारं पुष्करं द्रुतिजंगमम् ॥ २२ ॥

वाराणसी कुरुक्षेत्रं महा कालं च नैमिषम् ॥

एतत्तीर्थाष्टकं देवि तस्मिँल्लिंगे व्यवस्थितम् ॥ २३ ॥

माघे कृष्णचतुर्द्दश्यां तत्र यो जागृयान्निशि ॥

संपूज्य विधिना देवं स तीर्थाष्टफलं लभेत् ॥ २४ ॥

ददाति तत्र यः पिण्डं नष्टेन्दौ शिवसंनिधौ ॥

तृप्यन्ति पितरस्तस्य यावद्ब्रह्मदिनान्तकम् ॥ २५ ॥

दधिक्षीर घृतेनैव पंचगव्यकुशोदकैः ॥

कुंकुमागरुकर्पूरैस्तल्लिगं पूजयेन्निशि ॥ २६ ॥

संमंत्र्याघोरमंत्रेण ध्यात्वा देवं सदाशिवम् ॥

एवं कृत्वा महादेवि मुच्यते पंचपातकैः ॥ २७ ॥

अष्टम्यां च चतुर्द्दश्यां दध्ना संस्नापयेद्यदि ॥

स ब्राह्मणश्चतुर्वेदो जायते नात्र संशयः ॥ २८ ॥

क्षीरेण स्नापयेद्देवि यदि तं वृषभेश्वरम् ॥

सप्तधेनुसहस्राणां स फलं विंदते महत् ॥ २९ ॥

जन्मांतरेण यत्पापं सांप्रतं यत्कृतं प्रिये ॥

तत्सर्वं नाशमायाति घृतस्नानेन भामिनि ॥ 7.1.90.३० ॥

पंचगव्येन यो देवि स्नापयेद्वृषभेश्वरम् ॥

स दहेत्सर्वपापानि सर्वयज्ञफलं लभेत् ॥ ३१ ॥

तद्दृष्ट्वा ब्रह्महा गोघ्नः स्तेयी च गुरुतल्पगः ॥

शरणागतघाती च मित्रविश्रंभघातकः ॥ ३२ ॥

दुष्टपापसमाचारो मातृहा पितृहा तथा ॥

मुच्यते सर्वपापैस्तु तल्लिंगाराधनोद्यतः ॥ ३३ ॥

कार्तिकं सकलं यस्तु पूजयेद्ब्रह्मणा सह ॥

ब्रह्मेश्वरं महालिंगं स मुक्तः पातकैर्भवेत् ॥ ३४ ॥

तेन दत्तं भवेत्सर्वं गुरवस्तेन तोषिताः ॥

श्राद्धं कृतं गयातीर्थे तेन तप्तं महत्तपः ॥

येन देवाधिदेवोऽसौपूजितो वृषभेश्वरः ॥ ३५ ॥

इति ते कथितं देवि माहात्म्यं देवपूजितम् ॥

वृषभेश्वरदेवस्य कल्पलिंगस्य भामिनि ॥ ३६ ॥

यः शृणोति महादेवि माहात्म्यं दैवदेवतम् ॥

मूर्खो वा पंडितो वाऽपि स याति परमां गतिम् ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये वृषवाहनेश्वरमाहाम्यवर्णनंनाम नवतितमोऽध्यायः ॥ ९० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि त्र्यंबकेश्वरमव्ययम् ॥

तत्पंचमं समाख्यातं रुद्राणामादिदैवतम् ॥ १ ॥

शिखंडीश्वरमाख्यातं पूर्वं त्रेतायुगे प्रिये ॥

तच्चाद्याहं प्रवक्ष्यामि यथा संज्ञायते नरैः ॥२॥

अस्ति सांबपुरं देवि तत्रस्थं परमेश्वरि ॥

तस्यैवोत्तरदिग्भागे स्थानं कापालिकं स्मृतम् ॥ ३ ॥

कपालेश्वरनामा च यत्रेशो लिंगमूर्तिमान् ॥

संस्थितः पापनाशाय दर्शनात्स्पर्शनान्नृणाम् ॥ ४ ॥

तस्मादीशानदिग्भागे धनुषां षोडशांतरे ॥

त्र्यंबकेश्वरनामा च तत्र रुद्रः स्थितः स्वयम् ॥ ॥ ५ ॥

सर्वानुग्रहकर्त्ता च सर्वकामफलप्रदः ॥

पुरा यत्रातपद्देवि तपो घोरं सुदुष्करम् ॥

गुरुर्नामा ऋषिवरो देवदानवदुःसहम् ॥ ६ ॥

कोटीनां त्रितयं येन त्र्यंबको मंत्रनायकः ॥

जप्तो दिव्येन विधिना त्रिकालं पूज्य शंकरम् ॥ ७ ॥

ततः प्रसाद्य देवेशं दिव्यैश्वर्यमवाप सः ॥

चक्रे नाम स्वयं तस्य त्र्यंबकेश्वरमव्ययम् ॥ ८ ॥

जप्त्वा तु त्र्यंबकं मंत्रं यतः सिद्धिमवाप सः ॥

दिव्याष्टगुणमैश्वर्यं तेनासौ त्र्यंबकेश्वरः ॥ ९ ॥

सर्वपातक विध्वंसी दर्शनात्स्पर्शनादपि ॥

यस्त्र्यंबकं जपेद्विप्रस्त्र्यंबकेश्वरसंनिधौ ॥

स प्राप्नोति महासिद्धिं प्रत्यक्षं रुद्र एव सः ॥7.1.91.१०॥

दर्शनादपि तस्याथ पापं याति सहस्रधा ॥

यस्तं पूजयते भक्त्या विधिना भावमास्थितः ॥

वामदेवेन मंत्रेण स मुक्तः पातकैर्भवेत् ॥ ११ ॥

चैत्रशुक्लचतुर्दश्यां तत्र यो जागृयान्निशि ॥

पूजास्तुतिकथाभिश्च स प्राप्नोतीप्सितं फलम् ॥ १२ ॥

धेनुस्तत्रैव दातव्या सम्यग्यात्राफलेप्सुभिः ॥ १३॥

इति ते कथितं देवि माहात्म्यं पापनाशनम् ॥

त्र्यंबकेश्वररुद्रस्य नृणां पुण्यफलप्रदम् ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये त्र्यंबकेश्वरमाहात्म्यवर्णनंनामैकोनवतितमोऽध्यायः ॥ ९१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९२



॥ ईश्वर उवाच॥ ॥

ततो गच्छेन्महादेवि अघोरेश्वरमुत्तमम्॥

षष्ठं लिंगं समाख्यातं तद्वक्त्रं भैरवं स्मृतम्॥१॥

त्र्यंबकेश्वरवायव्ये धनुषां पंचके स्थितम्॥

सर्वकामप्रदं पुण्यं कलिकल्मषनाशनम्॥२।.

यस्तं पूजयते भक्त्या स्नानपूजादिभिः क्रमात्॥

मेरुदानस्य कृत्स्नस्य स लभेन्मनुजः फलम्॥३॥

दक्षिणामूर्तिमास्थाय यत्किंचित्तत्र दीयते॥

अघोरेश्वरदेवस्य तत्सर्वं चाक्षयं भवेत्॥४॥

यः श्राद्धं कुरुते तत्र अघोरेश्वरदक्षिणे॥

आकल्पं तृप्तिमायांति पितरस्तस्य तर्पिताः ॥ ५॥

किं श्राद्धेन गयातीर्थे वाजिमेधेन किं प्रिये ॥

तत्र श्राद्धेन तत्सर्वं फलमभ्यधिकं लभेत् ॥ ६ ॥

त्रुटिमात्र मपि स्वर्णं यात्रायां यः प्रयच्छति ॥

स सर्वं फलमाप्नोति महादानस्य भूरिशः ॥ ७ ॥

ब्रह्मकूर्चं चरेद्यस्तु सोमाष्टम्यां विधानतः ॥

अघोरेश्वरसांनिध्ये अघोरेणाभिमंत्रितम् ॥

षडब्दस्य महत्तेन प्रायश्चित्तं कृतं भवेत् ॥ ८ ॥

इति संक्षेपतः प्रोक्तमघोरेशमहोदयम् ॥

माहात्म्यं सर्वपापघ्नं श्रुतं सर्वार्थसाधकम् ॥ ९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादश रुद्रमाहात्म्येऽघोरेश्वरमाहात्म्यवर्णनंनाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे महाकालेश्वरं हरम् ॥

अघोरेशादुत्तरतः किंचिद्वायव्यसंस्थितम् ॥ १ ॥

धनुषां त्रिंशता देवि श्रुतं पातकनाशनम् ॥

पूर्वं कृतयुगे देवि स्मृतं चित्रांगदेश्वरम्॥ २ ॥

महाकालेश्वरं देवि कलौ नाम प्रकीर्तितम् ॥

कालरूपी महारुद्रस्तस्मिँल्लिंगे व्यवस्थितः ॥ ३ ॥

चराचरगुरुः साक्षाद्देवदानवदर्पहा ॥

सूर्यरूपेण यत्सर्वं ब्रह्मांडे ग्रसते प्रिये ॥ ४ ॥

स देवः संस्थितो देवि तस्मिँल्लिंगे महाप्रभः ॥

यस्तत्पूजयते भक्त्या कल्ये लिंगं मम प्रियम् ॥

षडक्षरेण मंत्रेण मृत्युं जयति तत्क्षणात् ॥ ५ ॥

कृष्णाष्टम्यां विशेषेण गुग्गुलं घृतसंयुतम् ॥

यो दहेद्विधिवत्तत्र पूजां कृत्वा निशागमे ॥ ६ ॥

अपराधसहस्रं तु क्षमते तस्य भैरवः ॥

धेनुदानं प्रशंसंति तस्मिन्स्थाने महर्षयः ॥ ७ ॥

धेनुदस्तारयेन्नूनं दश पूर्वान्दशापरान् ॥

देवस्य दक्षिणे भागे यो जपेच्छतरुद्रियम् ॥ ८ ॥

उद्धरेत्पितृवर्गं च मातृवर्गं च मानवः ॥

बाल्ये वयसि यत्पापं वार्द्धके यौवनेऽपि वा ॥

क्षालयेच्चैव तत्सर्वं दृष्ट्वा कालेश्वरं हरम् ॥ ९ ॥

अयने चोत्तरे प्राप्ते यः कुर्याद्घृतकंबलम् ॥

न स भूयोऽत्र संसारे जन्म प्राप्नोति दारुणम् ॥ 7.1.93.१० ॥

न दुःखितो दरिद्रो वा दुर्भगो वा प्रजायते ॥

सप्तजन्मान्तराण्येव महाकालेशदर्शनात् ॥ ११ ॥

धनधान्यसमायुक्ते स्फीते सञ्जायते कुले ॥

भक्तिर्भवति भूयोऽपि महाकालेश्वरार्चने ॥ १२ ॥

इति संक्षेपतः प्रोक्तं महाकालेश्वरं प्रिये ॥

चित्रांगदो गणो देवि तेन चाराधितं पुरा ॥ १३ ॥

दिव्याब्दानां सहस्रं तु महा कालेश्वरं हि तत् ॥

चित्रांगदेश्वरं नाम तेन ख्यातं धरातले ॥ १४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खंडे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये महाकालेश्वरमाहात्म्यवर्णनंनाम त्रिणवतितमोऽध्यायः ॥ ९३ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि भैरवेश्वरमुत्तमम् ॥

तस्यैव वह्निकोणस्थं धनुषांदशके स्थितम् ॥१॥

सर्वकामप्रदं देवि दारिद्र्यौघविनाशनम् ॥

पूर्वं चण्डेश्वरंनाम ख्यातं कृतयुगे प्रिये ॥ २ ॥

चण्डोनाम गणो देवि तेन चाराधितं पुरा ॥

दिव्याब्दानां सहस्रं तु तेन चण्डेश्वरं स्मृतम् ॥ ३ ॥

तं दृष्ट्वा देवदेवेशं स्पृष्ट्वा च सुसमाहितः ॥

मुच्यते सकलात्पापादाजन्ममरणांतिकात् ॥ ४ ॥

तत्र कृष्णचतुर्दश्यां मासे भाद्रपदे प्रिये ॥

उपवास परो भूत्वा यः करोति प्रजागरम् ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ ५ ॥

वाचिकं मानसं पापं कर्मणा यदुपार्जितम् ॥

तत्सर्वं नाशमायाति तस्य लिंगस्य दर्शनात् ॥ ६ ॥

तिला हिरण्यं वस्त्राणि तत्र देयं मनीषिणे ॥

सर्वकिल्विषनाशार्थं सम्यग्यात्राफलेप्सुना ॥ ७ ॥

भैरवाकारमास्थाय कल्पान्ते स हरेद्यतः ॥

विश्वं समग्रं देवेशि तेनासौ भैरवः स्मृतः ॥ ८ ॥

अस्मिन्कल्पे महादेवि प्रभासक्षेत्रमास्थितः ॥

बभूव भैरवो रुद्रः कल्पान्ते लिंगमूर्तिमान् ॥ ९ ॥

एवं संक्षेपतः प्रोक्तं माहात्म्यं भैरवेश्वरम् ॥

यच्छ्रुत्वा मुच्यते जन्तुः पातकादतिभैरवात् ॥ 7.1.94.१० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये भैरवेश्वरमाहात्म्य वर्णनंनाम चतुर्णवतितमोऽध्यायः ॥ ९४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे लिंगं मृत्युञ्जयेश्वरम् ॥

तस्यैव वह्नि कोणस्थं धनुषां दशके स्थितम् ॥ १ ॥

पश्चिमे सागरादित्यात्स्थितं धनुश्चतुष्टये ॥

पापघ्नं सर्वजन्तूनां दर्शनात्स्पर्शनादपि ॥ २ ॥

पूर्वे युगे समाख्यातं नाम नन्दीश्वरेति च ॥

यत्र तप्तं तपो घोरं नन्दिनाम्ना गणेन मे ॥ ३ ॥

प्रतिष्ठाप्य महालिंगं नित्यं पूजापरेण च ॥

तत्र जप्तो महामन्त्रो मृत्युञ्जय इति श्रुतः ॥ ४ ॥

कोटीनां नियुतं देवि ततस्तुष्टो महेश्वरः ॥

ददौ गणेशतां तस्य मुक्तिं सामीप्यगां तथा ॥ ५ ॥

मृत्युञ्जयेन मन्त्रेण तस्य तुष्टो यतो हरः ॥

तेन मृत्युञ्जयेशेति ख्यातं लिंगं धरातले ॥ ६ ॥

यस्तं पूजयते भक्त्या पश्येद्वा भावितात्मवान् ॥

नाशयेत्तस्य पापानि सप्तजन्मार्जितान्यपि ॥ ७ ॥

स्नापयेत्पयसा लिंगं दध्ना घृतयुतेन च ॥

मधुनेक्षुरसेनैव कुंकुमेन विलेपयेत् ॥ ८ ॥

कर्पूरोशीर मिश्रेण मृगनाभिरसेन च ॥

चन्दनेन सुगन्धेन पुष्पैः संपूजयेत्ततः ॥ ९ ॥

दद्याद्धूपं पुरो देवि ततो देवस्य चागुरुम् ॥

वस्त्रैः संपूज्य विविधैरात्मवित्तानुसारतः ॥ 7.1.95.१० ॥

नैवेद्यं परमान्नं च दत्त्वा दीपसमन्वितम् ॥

अष्टांगं प्रणिपातं च ततः कार्यं च भक्तितः ॥ ११ ॥

हेमदानं प्रदातव्यं ब्राह्मणे वेदपारगे ॥ १२ ॥

एवं यात्रा भवेत्तस्य शास्त्रोक्ता नात्र संशयः ॥

एवं कृत्वा नरो देवि लभते जन्मनः फलम् ॥ १३ ॥

इति संक्षेपतः प्रोक्तं मृत्युञ्जयमहोदयम् ॥

पापघ्नं सर्वजंतूनां सर्वकामफलप्रदम् ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये मृत्युञ्जयमाहात्म्यवर्णनंनाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९६



॥ ईश्वर उवाच ॥ ॥

ततोगच्छेन्महादेवि कामेश्वरमिति स्मृतम् ॥

तस्यैवोत्तरदिग्भागे धनुषां त्रितये स्थितम् ॥

रतीश्वरमिति ख्यातं त्रेतायां तत्सुरे श्वरि ॥ १ ॥

यस्मिन्दृष्टे मनुष्याणां पूजिते तु वरानने ॥

नश्येच्च सप्तजन्माघं गृहभंगश्च नो भवेत् ॥ २ ॥

॥ देव्युवाच ॥ ॥

केनायं स्थापितो देव कस्मात्प्रोक्तो रतीश्वरः ॥

दर्शनेनास्य किं श्रेयः सर्वं विस्तरतो वद ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥

रतिर्नामाभवत्साध्वी कामपत्नी यशस्विनी ॥४॥

दग्धे मनसिजे पूर्वं देवेन त्रिपुरारिणा॥

तदर्थाय तपस्तेपे तस्मिन्देशे रतिः किल ॥५॥

अंगुष्ठाग्रेण तिष्ठन्त्या यावद्युगचतुष्टयम् ॥

आराधितो महादेवः शांतेन मनसा प्रिये ॥ ६ ॥

कस्मिंश्चिदथ काले तु निर्भिद्य धरणीतलम् ॥

तदग्रतः समुत्तस्थौ लिगं माहेश्वरं प्रिये ॥ ७ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

आह्लादयंती सहसा तस्याश्चित्तं वरानने ॥ ८ ॥

यस्मान्माहेश्वरं लिंगं त्वद्भक्त्या सहसोत्थितम् ॥

पूजयेस्तन्महाभागे ततः कांतमवाप्स्यसि ॥९॥

एतच्छ्रुत्वा तु सा साध्वी देवदूतस्य भाषितम्॥

तल्लिंगं पूजयामास स भक्त्या परमया युता ॥ 7.1.96.१० ॥

ततः कामः समुत्तस्थौ सुप्तोत्थित इव प्रिये ॥

ततः प्रभृति तल्लिंगं कामेश्वरमिति श्रुतम् ॥ ११ ॥

ततः सा कामदयिता वाक्यमेतदुवाच ह ॥

प्रहृष्टा कामदेवास्या पुरतः पुष्पधन्वनः ॥ १२ ॥

पूजयिष्यंति ये चान्ये लिंगमेतत्समाहिताः ॥

एवं ते वांछितां सिद्धिं भूयो यास्यंति सद्गतिम्॥ १३ ॥

मनोऽभीष्टं तथा सर्वं यद्यपि स्यात्सदुर्ल्लभम् ॥

तत्प्राप्स्यंति न संदेहो लिंगस्यास्य प्रसादतः ॥ ॥ १४ ॥

एवमुक्त्वा गता साध्वी रतिः कामेन संयुता ॥

स्वस्थाने पूर्णकामा सा प्रहृष्टेनांतरात्मना ॥ १५ ॥

एनं चैत्रत्रयोदश्यां शुक्लायां यः समर्चति ॥

सकामवद्भवेन्नृणां श्रुतं सौभाग्यदायकम् ॥ १६ ॥

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रमाहात्म्ये कामेश्वरमाहात्म्यवर्णनंनाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि योगेश्वरमिति श्रुतम् ॥

कामेशाद्वायवे भागे धनुषां सप्तके स्थितम् ॥ १ ॥

लिंगं महाप्रभावं हि दर्शनात्पापनाशनम्॥

पूर्वे युगे तु संख्यातं गणेश्वरमिति श्रुतम्॥ २ ॥

पुरा मम गणा देवि असंख्याता महावलाः ॥

क्षेत्रं माहेश्वरं ज्ञात्वा प्रभासं समुपागमन् ॥ ३ ॥

तत्रस्थाश्च तपो घोरं तेपुस्ते योगमाश्रिताः ॥

दिव्याब्दानां सहस्रं तु ततस्तुष्टो महेश्वरः ॥ ४ ॥

सालोक्यां च ददौ मुक्तिं तेषां योगबलेन ३ ॥

यस्मा त्षडंगयोगेन तेषां तुष्टो वृषध्वजः ॥

तेन योगेश्वरं नाम लिंगं योगफलप्रदम् ॥ ५ ॥

यस्तमर्चयते भक्त्या सम्यक्पूजाविधानतः ॥

स योगसिद्धिमाप्नोति मोदते दिवि देववत् ॥ ६ ॥

यो दद्यात्कांचनं मेरुं कृत्स्नां चैव वसुन्धराम् ॥

योगेशं पूजयेद्यस्तु स तयोरधिकः स्मृतः ॥ ७ ॥

वृषभस्तत्र दातव्यः संपूर्णफलहेतवे ॥

एवमेकादश प्रोक्ता रुद्राः प्राभासमाश्रिताः ॥

नित्यं पूज्याश्च वंद्याश्च क्षेत्रस्य फलमीप्सुभिः ॥ ८ ॥

य एतां चैव शृणुयाद्रुद्रैकादशसंहिताम् ॥

तस्य क्षेत्रफलं सर्वं प्रभासांतरवासिनः ॥ ९ ॥

यश्चैतान्नैव जानाति रुद्रान्प्राभासमाश्रितान् ॥

स क्षेत्रमध्यसंस्थोऽपि नास्त्येव स पशुः स्मृतः ॥ 7.1.97.१० ॥

एतेषां चैव रुद्राणां सर्वान्वाप्येकमेव वा ॥

सोमेश्वरं पूजयित्वा जपेद्वै शतरुद्रियम् ॥
सर्वेषां लभते पुण्यं रुद्राणां नात्र संशयः ॥ ११ ॥
इदं रहस्यं संख्यातं माहात्म्यं तव भामिनि ॥
रुद्राणां पापशमनं श्रुतं पुण्यविवर्द्धनम् ॥ १२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये योगेश्वरमाहात्म्यवर्णनंनाम सप्तनवतितमोऽध्यायः ॥ ॥ ९७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चंडेश्वरमिति श्रुतम्॥

सोमेशाद्वायवे भागे धनुषां षष्टिभिः स्थितम्॥ १ ॥

दिव्यं लिंगं महादेवि सर्वपातकनाशनम् ॥

तत्पूर्वे तु युगे ख्यातं मनोः स्वायंभुवांतरे ॥ २ ॥

त्रेतायुगमुखे देवि पृथिव्या संप्रतिष्ठितम्॥

पूर्वमन्वंतरे चास्मिँल्लिङ्गं पृथ्वीश्वरं प्रिये ॥ ३ ॥

पुनश्चंद्रेण तत्प्राप्तं लिंगं चंद्रेश्वरं प्रिये ॥

ब्रह्महत्यादिपापानां नाशनं पुण्यवर्द्धनम् ॥ ४ ॥

तं दृष्ट्वा मानवो देवि सप्तजन्मसमुद्भवैः ॥

मुच्यते कल्मषैः सर्वैः कृतकृत्यस्तु जायते ॥ ५ ॥

॥ देव्युवाच ॥ ॥

कथं पृथ्वीश्वरं ख्यातं तल्लिंगं पाप नाशनम् ॥

कथं पुनः समाख्यातं चन्द्रेश्वरमिति प्रभो ॥

एतद्विस्तरतो ब्रूहि श्रोतुकामाहमादरात् ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथा पापप्रणाशिनीम् ॥

यां श्रुत्वा मुच्यते जंतुस्त्रिविधैः कर्मबन्धनैः ॥ ७ ॥

आसीत्पूर्वं महादेवि दैत्यभारार्द्दिता मही ॥ साऽधो व्रजंती सहसा गोरूपा संबभूव ह ॥ ८ ॥

इतस्ततो धावमाना न लेभे निर्वृतिं क्वचित् ॥

ततो वर्षशते पूर्णे भ्रममाणा क्वचित्क्वचित् ॥ ९ ॥

आससाद महाक्षेत्रं प्रभासमिति विश्रुतम् ॥

देवदानवगंधर्वैः सेवितं पापनाशनम्॥ 7.1.98.१० ॥

तत्र स्थित्वा महाक्षेत्रे कृत्वा मनसि निश्चयम् ॥

लिंगं प्रतिष्ठयामास भक्त्या परमया युता ॥ ११ ॥

वर्षाणां च शतं साग्रं कृते तपसि दुश्चरे ॥

तुतोष भगवान्रुद्रो धरित्रीं वाक्यमब्रवीत् ॥ १२ ॥

देवि विश्वंभरे सर्वं तपः सुचरितं त्वया ॥

मा शोकं कुरु कल्याणि भविष्यति तवेप्सितम् ॥ १३ ॥

दैत्या नाशं गमिष्यंति विष्णुना निहता भुवि ॥

भवित्री त्वं महादेवि दैत्यभारविवर्जिता ॥ १४ ॥

इदं त्वया स्थापितं यल्लिंगं परमशोभनम् ॥

धरित्रीनाम्ना विख्यातं लोके ख्यातिं गमिष्यति ॥ ॥ १५ ॥

अत्राहं संस्थितो नित्यं लिंगरूपी महाप्रभुः ॥

स्थास्यामि कल्पेकल्पे वै नृणां पापापहारकः ॥ १६ ॥

मूर्त्यष्टकसमायुक्तो लिंगे ऽस्मिन्संस्थितः सदा ॥

नृणां नाशयिता पापं पूर्वजन्मशतार्जितम् ॥ १७ ॥

भाद्रे कृष्णतृतीयायां यश्चैतं पूजयिष्यति ॥

सोऽश्वमेधसहस्रस्य फलमाप्स्यत्यसंशयम् ॥ १८ ॥

सर्वतीर्थाभिषेकस्य सर्वेषां दानकर्मणाम् ॥

भविष्यति फलं तस्य लिंगस्यैवास्य पूजनात् ॥ १९ ॥

धनुषां षोडशं यावत्समंतात्परिमंडलम् ॥

क्षेत्रमस्य समाख्यातं प्राणिनां मुक्तिदायकम् ॥ 7.1.98.२० ॥

तस्मिन्मृताः प्राणिनो ये कामतो वाप्यकामतः ॥

कृमि कीटसमा वापि ते यांति परमां गतिम् ॥ २१ ॥

यो दद्यात्काञ्चनं मेरुं कृत्स्नां वाऽपि वसुन्धराम् ॥

यः पूजयति पृथ्वीशं स तयोरधिकः स्मृतः ॥२२॥

ईश्वर उवाच ॥ ॥

इति दत्त्वा वरान्देवस्तत्रैवांतरधीयत ॥

पृथिवीश्वरनामाभूत्तत्प्रभृत्येव शंकरः ॥ २३ ॥

पुनरस्मिन्महाकल्पे वाराह इति विश्रुते ॥

कदाचिद्दक्षशापेन क्षीणश्चन्द्रो बभूव ह ॥ २४ ॥

पपात भूतले देवि यक्ष्मणा पीडितः शशी ॥

क्षेत्रं प्रभासमासाद्य तन्महोदधिसंनिधौ ॥ २५ ॥

दृष्ट्वा पृथ्वीश्वरं लिंगं सप्रभावं महाप्रभम् ॥

तत्पूजानिरतो भूत्वा वर्षाणां तु सहस्रकम् ॥ २६ ॥

अतपत्स तपो रौद्रं शीर्णपर्णांबुभक्षकः ॥

यतः समभवद्दीप्त्या सर्वाह्लादकरः शशी ॥ २७ ॥

तल्लिंगस्यैव माहात्म्यात्ततश्चंद्रेश्वरोऽभवत् ॥

तस्य लिंगस्य माहात्म्याच्चंद्रमा गतकल्मषः ॥ २८ ॥

अवाप सिद्धिमत्युग्रां स्पर्शलिंगप्रकाशिनीम् ॥

सोमनाथेति यां प्राहुः प्रसिद्धां लिंगरूपिणीम् ॥ २९ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं चन्द्रदैवतम् ॥

श्रुतं हरति पापानि तथाऽऽरोग्यं प्रयच्छति ॥ 7.1.98.३० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां पृथ्वीश्वर( चंद्रेश्वर)माहात्म्यवर्णनंनामाष्टनवतितमोध्यायः ॥ ९८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ०९९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यत्र चक्रधरः स्थितः ॥

दंडपाणिश्च देवेशि यत्रैकस्थानसंस्थितः ॥ १ ॥

चंद्रेशात्पूर्वदिग्भागे । सोमेशादुत्तरेस्थितः) ॥

धनुषां पंचसंस्थाने गंधर्वेशात्समीपतः ॥ २ ॥

उमाया नैर्ऋते भागे ब्रह्मदेवर्षिसंस्थितः ॥

तस्योत्पत्तिं प्रवक्ष्यामि सर्वपातकनाशिनीम्॥३॥

पौंड्रको वासुदेवस्तु वाराणस्यां पुराऽभवत्॥

तेन श्रुतं पुराणं तु पठ्यमानं द्विजातिभिः॥४॥

कल्पादौ द्वापरांते तु क्षत्रियाणां निवेशने ॥

अवतारं महाबाहुवासुदेवः करिष्यति ॥ ५ ॥

स तु मूढमतिर्मेने अहं विष्णुरिति प्रिये ॥

चिह्नानि धारयामास चक्रादीनि वरानने ॥ ६ ॥

स दूतं प्रेषयामास द्वारकायां महोदरम् ॥

स गत्वा प्राह विष्णुं वै चक्रादीनि परित्यज ॥ ७ ॥

इत्याह पौंड्रको राजा नचेद्वधमवा प्स्यसि ॥

ततश्च भगवान्विष्णुः प्राहास्य रुचिरं वचः ॥ ८ ॥

वाच्यः स पौंड्रको राजा त्वया हंत वचो मम ॥

गृहीतचक्र एवाहं काशीमागम्य ते पुरीम् ॥ ९ ॥

संत्यक्ष्यामि ततश्चक्रं गदां चेमामसंशयम् ॥

तद्ग्राह्यं भवता चक्रमन्यद्वा यत्तवेप्सितम् ॥ 7.1.99.१० ॥

इत्युक्तेऽथ गते दूते संस्मृत्याऽभ्या गतं हरिः ॥

गरुत्मन्तं समारुह्य त्वरितस्तत्पुरं ययौ ॥ ११ ॥

मित्रस्नेहात्ततस्तस्य काशिराजः सहानुगः ॥

सर्वसैन्यपरीवारस्ततः पौंड्रमुपाययौ ॥ १२ ॥

ततो बलेन महता काशिराजबलेन च ॥

पौंड्रको वासुदेवोऽसौ केशवाभिमुखो ययौ ॥ १३॥

तं ददर्श हरिर्दूराद्दुर्वारे स्यंदने स्थितम् ॥

चक्रहस्तं गदाशार्ङ्गसंयुतं गरुडध्वजम् ॥ १४ ॥

तं दृष्ट्वा भावगंभीरं जहास गरुडध्वजः ॥

उवाच पौंड्रकं मूढमात्मचिह्नोपलक्षितम् ॥ १५ ॥

पौंड्रकोक्तं त्वया यत्तु दूतवक्त्रेण मां प्रति ॥

समुत्सृजेति चिह्नानि तच्च सर्वं त्यजाम्यहम् ॥ १६ ॥

चक्रमेतत्समुत्सृष्टं गदेयं च विस र्जिता ॥

गरुत्मानेष ते गत्वा समारोहतु वै ध्वजम् ॥ १७ ॥

इत्युच्चार्य विमुक्तेन चक्रेणासौ निपातितः ॥

रथश्च गदया भग्नो गजाश्चा श्वाश्च चूर्णिताः ॥ १८ ॥

ततो हाहाकृते लोके काशिनाथो महाबली ॥

युयुधे वासुदेवेन मित्रदुःखेन दुःखितः ॥ १९ ॥

ततः शार्ङ्गविनिर्मुक्तैश्छित्त्वा तस्य शरैः शिरः ॥

काशीपुर्यां स चिक्षेप कुर्वँल्लोकस्य विस्मयम् ॥ 7.1.99.२० ॥

हत्वा तु पौंड्रकं शौरिः काशिराजं च सानु गम् ॥

पुनर्द्वारवतीं प्राप्तो मृगयाया गतो यथा ॥ २१ ॥

ततः काशिपतेः पुत्रः पितुर्दुःखेन दुःखितः ॥

शंकरं तोषयामास स च तस्मै वरं ददौ ॥ २२ ॥

स वव्रे भगवन्कृत्या पितुर्हंतुर्वधाय मे ॥

समुत्तिष्ठतु कृष्णस्य त्वत्प्रसादात्सुरेश्वर ॥ २३ ॥

एवं भविष्यतीत्युक्ते दक्षिणाग्नेस्तु मध्यतः ॥

महाकृत्या समुत्तस्थौ प्रस्थिता द्वारकां प्रति ॥ २४ ॥

ज्वालामालाकरालां तां यादवा भयविह्वलाः ॥

दृष्ट्वा जनार्द्दनं सर्वे शरणार्थमुपागताः ॥ २५ ॥

ततः सुदर्शनं तस्या मुमोच गरुडध्वजः ॥

वधाय सा ततो भग्ना चक्रतेजोऽभिपीडिता ॥ २६ ॥

कृत्यामनुजगामाशु विष्णोश्चक्रं सुदर्शनम् ॥

कृत्या वाराणसीं प्राप्ता तस्याश्चक्रं तु पृष्ठतः ॥ २७ ॥

ततः सा भयसंत्रस्ता शंकरं शरणं गता ॥

सोमनाथं जगन्नाथं नान्यः शक्तो हि रक्षितुम् ॥ २८ ॥

ततश्चक्रं वरैर्बाणैस्ताडयामास शंकरः ॥

तच्च द्वारवतीं प्राप्तं शिवसायकमिश्रितम् ॥ २९ ॥

तद्दृष्ट्वा शिवनामांकैस्ताडितं भगवान्हरिः ॥

चक्रं शरैस्ततः क्रुद्धो गृहीत्वा च करेण तत् ॥

जगाम तत्र यत्रास्ते सोमेशः कालभैरवः ॥ 7.1.99.३०

स गत्वा रोष ताम्राक्षश्चक्रोद्यतकरः स्थितः ॥

कृत्यां हंतुं मतिं चक्रे कालभैरवनिर्मिताम् ॥ ३१ ॥

दृष्टो देवैस्ततः सर्वैर्दंडपाणिगणेन च ॥

देवानां प्रेक्षतां तत्र दण्डपाणिर्महागणः ॥

चक्रोद्यतकरं दृष्ट्वा विष्णुं प्राहाब्जलोचनम् ॥ ३२ ॥

॥ दंडपाणिरुवाच ॥ ॥

मा क्रोधं कुरु देवेश कृत्यां प्रति जगत्प्रभो ॥ ३३ ॥

अमोघं युधि ते चक्रं कृत्या चापि च शांकरी ॥

एवं चक्र विनिर्मुक्ते भवेत्कोधो हरे यदि ॥

भविष्यति महद्दुःखं लोकानां संक्षयो हि वा ॥ ३४ ॥

न मोक्तव्यमतश्चक्र शृणु भूयो वचश्च नः ॥

अत्र स्थाने नियुक्तोऽहं शंकरेण पुरा हरे ॥ ३५॥

पापिनां रक्षणार्थं वै विघ्नार्थं दुष्टचेतसाम्॥

तस्मात्त्वं मम सांनिध्ये तिष्ठ चक्रधरो हरे ॥३६ ॥

अत्र चक्रधरं देवं पूजयिष्यंति मानवाः ॥

धूपमाल्योपहारैश्च नैवेद्यैर्विवि धैरपि ॥ ३७ ॥

॥ विष्णुरुवाच ॥ ॥

एष एव निवृत्तोहं तव वाक्यांकुशेन वै ॥

अत्र चक्रोद्यतकरः स्थास्ये तव समीपतः ॥ ३८ ॥

एवं हि स्थितोदेवस्तत्र चक्रधरः प्रिये ॥

दंडपाणिश्च भगवान्मम रूपी गणेश्वरः ॥ ३९ ॥

यस्तौ पूजयते भक्त्या दंडपाणिहरी क्रमात् ॥

स पाप कंचुकैर्मुक्तो गच्छेच्छिवपुरं नरः ॥ 7.1.99.४० ॥

माघे मासि चतुर्द्दश्यां कृष्णाष्टम्यां विशेषतः ॥

गंधधूपोपहारैर्यः पूजयेद्दण्डनायकम् ॥

तस्य क्षेत्रे निवसतो न विघ्नं जायते क्वचित् ॥ ४१ ॥

एकादश्यां जिताहारो योऽर्चयेच्चक्रपाणिनम् ॥

स मुक्तः पातकैः सर्वैर्याति विष्णोः सलोकताम् ॥ ४२ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं चक्रपाणिनः ॥

दण्डपाणिगणस्यापि श्रुतं पापौघनाशनम् ॥ ४३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां दण्डपाणिचक्रधरमाहात्म्यवर्णनंनामेकोनशततमोऽध्यायः ॥९९॥ ॥ छ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १००



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तयोरुत्तरसंस्थितम् ॥

तथा वायव्यदिग्भागे ब्रह्मणो बालरूपिणः ॥ १ ॥

सांबादित्यं सुरश्रेष्ठे यः सांबेन प्रतिष्ठितः ॥

स्थानानि त्रीणि देवस्य द्वीपेऽस्मिन्भास्करस्य तु ॥ २ ॥

पूर्वं मित्रवनं नाम तथा मुण्डीरमुच्यते ॥

प्रभासक्षेत्रमास्थाय सांबादित्यस्तृतीयकः ॥ ३ ॥

तस्मिन्क्षेत्रे महादेवि पुरं यत्सांबसंज्ञकम् ॥

द्वितीयं शाश्वतं स्थानं तत्र सूर्यस्य नित्यशः ॥ ४ ॥

प्रीत्या सांब स्य तत्रार्को जनस्यानुग्रहाय च ॥

तत्र द्वादशभागेन मित्रो मैत्रेण चक्षुषा ॥ ५ ॥

अवलोकयञ्जगत्सर्वं श्रेयोर्थं तिष्ठते सदा ॥

प्रयुक्तां विधिवत्पूजां गृह्णाति भगवान्स्वयम्॥ ६ ॥

॥ देव्युवाच ॥ ॥

कोऽयं सांबः सुतः कस्य यस्य नाम्ना रवेः पुरम् ॥

यस्य वाऽयं सहस्रांशुर्वरदः पुण्यकर्मणः ॥७॥

॥ ॥ ईश्वर उवाच ॥ ॥

य एते द्वादशादित्या विराजन्ते महाबलाः ॥

तेषां यो विष्णुसंज्ञस्तु सर्वलोकेषु विश्रुतः ॥ ८ ॥

इहासौ वासुदेवत्वमवाप भगवान्विभुः ॥ ९ ॥

तस्य सांबः सुतो जज्ञे जांबवत्यां महाबलः ॥

स तु पित्रा भृशं शप्तः कुष्ठरोगमवाप्तवान् ॥

तेन संस्थापितः सूर्यो निजनाम्ना पुरं कृतम् ॥ 7.1.100.१० ॥

॥ देव्युवाच ॥ ॥

शप्तः कस्मिन्निमित्तेऽसौ पित्रा पुत्रः स्वयं पुनः ॥
नाल्पं स्यात्कारणं देव येनासौ शप्तवान्सुतम् ॥ ११ ॥
॥ ईश्वर उवाच ॥ ॥
शृणुष्वावहिता भूत्वा तस्य यच्छापकारणम् ॥
दुर्वासानाम भगवान्ममैवांशसमुद्भवः ॥ १२ ॥
अटमानः स भगवांस्त्रींल्लोकान्प्रचचार ह ॥
अथ प्राप्तो द्वारवतीं लोकाः संजज्ञिरे पुरः ॥ १३ ॥
तमागतमृषिं दृष्ट्वा सांबो रूपेण गर्वितः ॥
पिंगाक्षं जटिलं रूक्षं विस्वरूपं कृशं तथा ॥ १४ ॥
अवमानं चकारासौ दर्शनात्स्पर्शनात्तथा ॥
दृष्ट्वा तस्य मुखं मंदो वक्त्रं चक्रे तथात्मनः ॥
चक्रे यदुकुलश्रेष्ठो गर्वितो यौवनेन तु ॥ १५ ॥
अथ क्रुद्धो महातेजा दुर्वासा ऋषिसत्तमः ॥
सांबं प्रोवाच भगवान्विधुन्वन्मुखमात्म नः ॥ १६ ॥
यस्माद्विरूपं मां दृष्ट्वा आत्मरूपेण गर्वितः ॥
गमने दर्शने मह्यमहंकारः कृतो यतः ॥
तस्मात्त्वं कुष्ठरोगेण न चिरेण ग्रसिष्यसे ॥ १७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां सांबादित्यमाहात्म्योपक्रमे सांबाय दुर्वाससा शापप्रदानवर्णनंनाम शततमोऽध्यायः ॥ १०० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०१



॥ ईश्वर उवाच ॥ ॥

एतस्मिन्नेव काले तु नारदो भगवानृषिः ॥

ब्रह्मणो मानसः पुत्रस्त्रिषु लोकेषु गर्वितः ॥ १ ॥

सर्वलोकचरः सोऽपि युवा देवनमस्कृतः ॥

तथा यदृच्छया चायमटमानः समंततः ॥ २ ॥

वासुदेवं स वै द्रष्टुं नित्यं द्वारवतीं पुरीम् ॥

आयाति ऋषिभिः सार्द्धं क्रोधेन ऋषि सत्तमः ॥ ३ ॥

अथाश्वागच्छतस्तस्य सर्वे यदुकुमारकाः ॥

ये प्रद्युम्नप्रभृतयस्ते च प्रह्वाननाः स्थिताः ॥ ४ ॥

अभावाच्चार्घ्यपाद्यानां पूजां चक्रुः समंततः ॥

सांबस्त्ववश्यभावित्वात्तस्य शापस्य कारणात् ॥ ५ ॥

अवज्ञां कुरुते नित्यं नारदस्य महात्मनः ॥

रतक्रीडा स वै नित्यं रूपयौवनगर्वितः ॥ ६ ॥

अविनीतं तु तं दृष्ट्वा चिन्तयामास नारदः ॥

अस्याहमविनीतस्य करिष्ये विनयं शुभम् ॥ ७ ॥

एवं स चिन्तयित्वातु वासुदेवमथाब्रवीत् ॥

इमाः षोडशसाहस्राः स्त्रियो या देवसत्तम ॥ ८ ॥

सर्वास्तासां सदा सांबे भावो देव समाश्रितः ॥

रूपेणाप्रतिमः सांबो लोकेऽस्मिन्सचराचरे ॥ ९ ॥

सदाऽर्हंति च तास्तस्य दर्शनं ह्यपि सत्स्त्रियः ॥

श्रुत्वैवं नारदाद्वाक्यं चिन्तयामास केशवः ॥7.1.101.१० ॥

यदेतन्नारदेनोक्तं सत्यमत्र तु किं भवेत् ॥

एवं च श्रूयते लोके चापल्यं स्त्रीषु विद्यते ॥

श्लोकाविमौ पुरा गीतौ चित्तज्ञैर्योषितां द्विजैः ॥ ११ ॥

पौंश्चल्याददतिचापल्याददज्ञानाच्च स्वभावतः ॥
रक्षिता यत्नतो ह्येता विकुर्वंति हि भर्तृषु ॥ १२ ॥
नैता रूपं परीक्षंते नाऽऽसां वयसि संश्रयः ॥
सुरूपं वा विरूपं वा पुमानित्येव भुंजते ॥ १३ ॥
॥ ईश्वर उवाच ॥ ॥
मनसा चिन्तयित्वैवं कृष्णो नारदमब्रवीत् ॥
नह्यहं श्रद्दधाम्येतद्यदेतद्भाषितं पुरा ॥ १४ ॥
ब्रुवाणमेवं देवं तु नारदः प्रत्युवाच ह ॥
तथाहं तु करिष्यामि यथा श्रद्धास्यते भवान् ॥ १५ ॥
एवमुक्त्वा ययौ भूयो नारदस्तु यथागतम् ॥
ततः कतिपयाहस्य द्वारकां पुनरभ्यगात् ॥ १६ ॥
तस्मिन्नहनि देवोऽपि सहांतःपौरकैर्जनैः ॥
अनुभूय जलक्रीडां पानमासेवते रहः ॥ १७ ॥
रम्ये रैवतकोद्याने नानाद्रुमविभूषिते ॥
सर्वर्तुकुसुमैर्नित्यं वासिते सर्वकामने ॥ १८ ॥
नानाजलजफुल्लाभिर्दीर्घिका भिरलंकृते ॥
हंससारससंघुष्टे चक्रवाकोपशोभिते ॥१९ ॥
तस्मिन्स रमते देवः स्त्रीभिः परिवृतस्तदा ॥
हारनूपुरकेयूररसनाद्यैर्विभूषणैः ॥ 7.1.101.२० ॥
भूषितानां वरस्त्रीणां सर्वांगीणां विशेषतः ॥
तत्रस्थः पिबते पानं शुभगन्धान्वितं शुभम् ॥ २१ ॥
एतस्मिन्नंतरे बुद्ध्वा मद्यमत्तास्ततः स्त्रियः ॥
उवाच नारदः सांबमस्मिंस्तिष्ठ कुमारक ॥ २२ ॥
त्वां समाह्वयते देवो न युक्तं स्थातुमत्र ते ॥
तद्वाक्यार्थमबुद्ध्वैव नारदेनाथ नोदितः ॥ २३ ॥
गत्वा तु सत्वरं सांबः प्रणाममकरोत्पितुः ॥
निर्द्दिष्टमासनं भेजे यथाभावेन विष्णुना ॥ २४ ॥
एतस्मिन्नंतरे तत्र यास्तु वै चाल्पसात्त्विकाः ॥

ता दृष्ट्वा सहसा सांबं सर्वाश्चुक्षुभिरे स्त्रियः ॥ २५ ॥

न स दृष्टः पुरा याभिरंतःपुरनिवासिभिः ॥

मद्यदोषात्ततस्तासां स्मृतिलोपात्तथा बहु ॥२६ ॥

स्वभावतोऽल्पसत्त्वानां जघनानि विसुस्रुवुः ॥

श्रूयते चाप्ययं श्लोकः पुराणप्रथितः क्षितौ ॥ २७ ॥

ब्रह्मचर्येऽपि वर्तंत्या योगिन्या वा प्रमादतः ॥

प्रकृष्टं पुरुषं दृष्ट्वा वरांगं क्लिद्यते स्त्रियाः ॥ २७ ॥

लोकेऽपि दृश्यते ह्येतन्मद्यस्याप्यथ सेवनात् ॥

लज्जां मुंचंति निःशंका ह्रीमत्यो ह्यपि च स्त्रियः ॥ २९ ॥

समांसैर्भोजनैः स्निग्धैः पानैः सीधुसुरासवैः ॥

गंधैर्मनोज्ञैर्वस्त्रैश्च कामः स्त्रीषु विजृंभति ॥ 7.1.101.३० ॥

मद्यं न देयमत्यर्थं पुरुषेण विपश्चिता ॥

मदोन्मत्ताः स्वभावेन पूर्वं संति यतः स्त्रियः ॥ ३१ ॥

नारदोऽप्यथ तं सांबं प्रेषयित्वा त्वरान्वितः ॥

आजगामाथ तत्रैव सांबस्यानुपदेन तु ॥ ३२ ॥

आयांतं ताः स्वयं दृष्ट्वा प्रियसौमनसं मुनिम्॥

सहसैवोत्थिताः सर्वा मदोन्मत्ता अपि स्त्रियः ॥ ३३ ॥

तासामथोत्थितानां तु वासुदेवस्य पश्यतः ॥

भित्त्वा वासांस्यनर्घाणि पात्रेषु पतितानि तु ॥३४॥

जघनेषु विलग्नानि तानि पेतुः पृथक्पृथक् ॥

तद्दृष्ट्वा तु हरिः क्रुद्धस्ताः शशाप ततोऽबलाः ॥ ३५ ॥

यस्माद्गतानि चेतांसि मां मुक्त्वाऽन्यत्र वः स्त्रियः ॥

तस्मात्पतिकृताँल्लोकानायुषोंऽते न यास्यथ ॥ ॥ ३६ ॥

पतिलोकात्परिभ्रष्टाः स्वर्गमार्गात्तथैव च ॥

भूत्वा ह्यशरणा भूयो दस्युहस्तं गमिष्यथ ॥ ३७ ॥

शापदोषात्ततस्तस्मात्ताः स्त्रियो गां गते हरौ ॥

हृताः पांचनदैश्चौरैरर्जुनस्य प्रपश्यतः ॥ ३८ ॥

अल्पसत्त्वाश्च याश्चासंस्ता गता दूषणं स्त्रियः ॥

रुक्मिणी सत्यभामा च तथा जांबवती प्रिये ॥ ३९ ॥

न प्राप्ता दस्युहस्तं ताः स्वेन सत्त्वेन रक्षिताः ॥

शस्त्वैवं ताः स्त्रियः कृष्णः सांबमप्यशपत्पुनः॥7.1.101.४०॥

यस्मादतीव ते कांतं दृष्ट्वा रूपमिमाः स्त्रियः ॥

क्षुब्धाः सर्वा यतस्तस्मात्कुष्ठरोगमवाप्नुहि ॥ ४१ ॥

तस्य तद्वचनं श्रुत्वा सांबो लज्जासमन्वितः॥

उवाच प्रहसन्वाक्यं स स्मरन्नृषिसत्तमम् ॥ ४२ ॥

अनिमित्तमहं तात भावदोषविवर्जितः ॥

शप्तो न मेऽत्र वै कुद्धो दुर्वासा नान्यथा वदेत् ॥ ४३ ॥

एवमुक्त्वा ततः सांबः कृष्णं कमललोचनम् ॥

ततो वैराग्यसंयुक्तश्चिन्ताशोकपरायणः ॥ ४४ ॥

प्रभासक्षेत्रमगमत्सर्वपातकनाशनम् ॥

एवं तत्क्षेत्रमासाद्य तपस्तेपे सुदारुणम् ॥ ४५ ॥

प्रतिष्ठाप्य सहस्रांशुं देवं पापनिषूदनम् ॥

ततश्चाराधयामास परं नियममाश्रितः ॥ ४६ ॥

त्रिसंध्यं पूजयामास दिव्यगंधानुलेपनैः ॥

स्तोत्रेणानेन भक्त्या वै स्तौति नित्यं दिनाधिपम् ॥ ४७ ॥

॥ सांब उवाच ॥ ॥

नमस्त्रैलोक्यदीपाय नमस्ते तिमिरापह ॥

नमः पंकजनाथाय नमः कुमुदशत्रवे ॥ ४८ ॥

नमो जगत्प्रतिष्ठाय जगद्धात्रे नमोऽस्तु ते ॥

देवदेव नमस्यामि सूर्यं त्रैलोक्यदीपकम् ॥ ४९ ॥

आदित्यवर्णो भुवनस्य गोप्ता अपूर्व एष प्रथमः सुराणाम् ॥

हिरण्यगर्भः पुरुषो महात्मा स पठ्यते वै तमसः परस्तात् ॥ 7.1.101.५० ॥

इति स्तुतस्तदा सूर्यः प्रसन्नेनांतरात्मना ॥

उवाच दर्शनं गत्वा सांबं जांबवतीसुतम् ॥ ५१ ॥

सांबसांब महावाहो शृणु गोविन्दनन्दने ॥

स्तोत्रेणानेन तुष्टोऽहं वरं ब्रूहि यदीप्सितम् ॥ ५२ ॥

॥ सांब उवाच ॥ ॥

कृष्णेनाहं सुरश्रेष्ठ शप्तः पापः सुदुर्मतिः ॥

कुष्ठांतं कुरु मे देव यदि तुष्टोऽसि मे प्रभो ॥ ५३ ॥

॥ श्रीभानुरुवाच ॥ ॥

भूय एव महाभाग नीरोगस्त्वं भविष्यसि ॥

यादृग्रूपः पुरा ह्यासीर्मम चैव प्रसादतः ॥ ५४ ॥

अद्य प्रभृति नेक्ष्यास्ता विष्णुभार्याः कथंचन ॥

न तासां दर्शने जातु स्थातव्यं यदुनन्दन ॥ ५५ ॥

तासामीर्ष्यापरीतेन विष्णुना प्रभविष्णुना ॥

कुष्ठं ते यादवश्रेष्ठ प्रदत्तं हि महात्मना ॥ ५६ ॥

यो मां स्तोत्रेण चानेन समागत्य च स्तोष्यति ॥

न तस्यान्वयसंभूतः कुष्ठी कश्चिद्भविष्यति ॥ ५७ ॥

अथादित्यस्य नामानि सम्यग्जानीहि द्वादश ॥

द्वादशैव तथान्यानि तानि वक्ष्याम्यशेषतः ॥ ५८ ॥

आदित्यः सविता सूर्यो मिहिरोऽर्कः प्रतापनः ॥

मार्तंडो भास्करो भानुश्चित्रभानुर्द्दिवाकरः ॥ ५९ ॥

रविर्द्वादशनामैवं ज्ञेयः सामान्यनामभिः ॥

विष्णुर्धाता भगः पूषा मित्रोंऽशुर्वरुणो ऽर्यमा ॥ 7.1.101.६० ॥

इन्द्रो विवस्वांस्त्वष्टा च पर्जन्यो द्वादशः स्मृतः ॥

इति ते द्वादशादित्याः पृथक्त्वेन प्रकीर्तिताः ॥ ६१ ॥

उत्तिष्ठंति सदा ह्येते मासैर्द्वादशभिः क्रमात् ॥

विष्णुस्तपति वै चैत्रे वैशाखे चार्यमा सदा ॥ ६२ ॥

विवस्वाञ्ज्येष्ठमासे तु आषाढे चांशुमांस्तथा ॥

पर्ज्जन्यः श्रावणे मासि वरुणः प्रौष्ठसंज्ञिके ॥ ६३ ॥

इन्द्रश्चाश्वयुजे मासि धाता तपति कार्तिके ॥

मार्गशीर्षे तथा मित्रः पौषे पूषा दिवाकरः ॥ ६४ ॥

माघे भगस्तु विज्ञेयस्त्वष्टा तपति फाल्गुने ॥

शतैर्द्वादशभिर्विष्णू रश्मीनां दीप्यते सदा ॥ ६५ ॥

दीप्यते गोसहस्रेण शतैश्च त्रिभिरर्यमा ॥

द्विसप्तकैर्विवस्वांस्तु अंशुमान्पञ्चकैस्त्रिभिः ॥ ६६ ॥

विवस्वानिव पर्जन्यो वरुणश्चार्यमा इव ॥

इन्द्रस्तु द्विगुणैः षड्भिर्भात्येकादशभिः शतैः ॥ ६७ ॥

मित्रवच्च भगस्त्वष्टा सहस्रेण शतेन च ॥

उत्तरोपक्रमेऽर्कस्य वर्धन्ते रश्मयः सदा ॥

दक्षिणोपक्रमे भूयो ह्रसन्ते सूर्यरश्मयः ॥ ६८ ॥

एवं द्वादश मूर्तिस्थः प्रभासक्षेत्रमध्यतः ॥

सांबादित्येति विख्यातः स्थास्ये मन्वन्तरान्तरे ॥ ६९ ॥

माघस्य शुक्लपक्षे तु पञ्चम्यां यादवोत्तम ॥

एकभक्तं सदा ख्यातं षष्ठ्यां नक्तमुदाहृतम् ॥ 7.1.101.७० ॥

सप्तम्यामुपवासं तु कृत्वा सांबार्कसंनिधौ ॥

रक्तचन्दनमिश्रैस्तु करवीरैर्महाव्रतः ॥ ७१ ॥

दत्त्वा कुन्दरकं धूपं पूजयेद्भास्करं बुधः ॥

ब्राह्मणान्दिव्यभोज्येन भोजयित्वाऽपि शक्तितः ॥ ७२ ॥

एवं यः कुरुते सम्यक्सांबादित्यस्य पूजनम् ॥।

सम्यक्छ्रद्धासमायुक्तः संप्राप्स्यत्यखिलं फलम् ॥ ७३ ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्त्वा सहस्रांशुस्तत्रैवांतरधीयत ॥

सांबोऽपि निर्जरो भूत्वा द्वारकां पुनरागमत् ॥ ७४ ॥

इत्येतत्कथितं देवि सांबादित्यमहोदयम् ॥

श्रुतं हरति पापानि तथाऽऽरोग्यं प्रयच्छति ॥ ७५ ॥

इति श्रीस्कान्दे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सांबादित्यमाहात्म्यवर्णनंनामैकोत्तरशततमोऽध्यायः॥ १०१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०२



ततो गच्छेन्महादेवि देवीं कंटकशोधिनीम् ॥

तस्यैवोत्तरदिग्भागे धनुर्द्वितयसंस्थिताम् ॥ १ ॥

महिषघ्नीं महाकायां ब्रह्मदेवर्षिपूजिताम् ॥

पुरा ये कल्मषोपेता दानवा देवकंटकाः ॥ २ ॥

युगेयुगे शोधयेत्तांस्तेन कंटकशोधिनी ॥

आश्वयुक्छुक्लपक्षे तु नवम्यां तामथार्चयेत् ॥ ३ ॥

पशुपुष्पोपहारैश्च दीपधूपैस्तथोत्तमैः ॥

तस्याऽरयो न जायंते यावद्वर्षं वरानने ॥ ४ ॥

यस्तां पश्यति सद्भक्त्या भूताया नित्यमेव वा ॥ । ॥

तं पुत्रमिव कल्याणी संरक्षति न संशयः ॥ ५ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं पापनाशनम् ॥

देवि कंटकशोधिन्याः श्रुतं रक्षाकरं परम् ॥ ६ ॥

इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सांबादित्यसमीपवर्तिकंटकशोधिनीमाहात्म्यवर्णनंनाम द्व्युत्तरशततमोध्यायः ॥ १०२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०३

https://sa.wikisource.org/s/g9l
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे कपालेश्वरमुत्तमम् ॥

तस्या उत्तरदिग्भागे सुरगंधर्वपूजितम्॥ ॥ १ ॥

पुरा यज्ञे वर्तमाने दक्षराजस्य धीमतः ॥

उपविष्टेषु विप्रेषु हूयमाने हुताशने ॥ २ ॥

जाल्मरूपधरो भूत्वा शंकरस्तत्र चागतः ॥ २७ ॥

जीर्णकंथान्वितो देवि मलवान्धूलिधूसरः ॥ ३ ॥

अथ ते ब्राह्मणाः क्रुद्धा दृष्ट्वा तं जाल्मरूपिणम् ॥

कपालधारिणं सर्वे धिक्छब्दैस्तं जगर्हिरे॥ ४ ॥

असकृत्पापपापेति गच्छगच्छ नराधम ॥

यज्ञवेदिर्न चार्हा हि मानुषास्थिधरस्य ते ॥ ५ ॥

अथ प्रहस्य भगवान्यज्ञवेद्यां सुरेश्वरि ॥

क्षिप्त्वा कपालं नष्टोऽसौ न स ज्ञातो मनीषिभिः ॥ ६ ॥

तस्मिन्नष्टे कपालं तत्क्षिप्तं मंडपबाह्यतः ॥

अथान्यत्तत्र संजातं तद्रूपं च वरानने ॥ ७ ॥

क्षिप्तंक्षिप्तं पुनस्तत्र जायते च महीतले ॥

एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ॥ ८ ॥

तत्र क्षिप्तानि जातानि ततस्ते विस्मयान्विताः ॥

अथोचुर्मुनयः सर्वे निर्विण्णाश्चास्य चेष्टितम् ॥ ९ ॥

कोऽन्यो देवान्महादेवाद्गंगाक्षालितशेखरात् ॥

समर्थ ईदृशं कर्तुमस्मिन्यज्ञे विशेषतः ॥ 7.1.103.१० ॥

ततस्ते वि विधैः स्तोत्रैः स्तुवंतो वृषभध्वजम् ॥

होमं चक्रुर्मुहुर्वह्नौ मंत्रैस्तैः शतरुद्रियैः ॥ ११ ॥

ततः प्रत्यक्षतां प्राप्तस्तेषां देवो महेश्वरः ॥

ततस्ते विविधैः स्तोत्रैस्तुष्टुवुः शूलपाणिनम्॥
वेदोक्तमंत्रैर्विविधैः पुराणोक्तैस्तथैव च ॥ १२ ॥
॥ ऋषय ऊचुः ॥ ॥
ॐ नमो मूलप्रकृतये अजिताय महात्मने ॥
अनावृताय देवाय निःस्पृहाय नमोनमः ॥ १३ ॥
नम आद्याय बीजाय आर्षेयाय प्रवर्त्तिने ॥
अनंतराय चैकाय अव्यक्ताय नमोनमः ॥ ॥। १४ ॥
नानाविचित्रभुजगांगदभूषणाय सर्वेश्वराय विरजाय नमो वराय ॥
विश्वात्मने परमकारणकारणाय फुल्लारविंदविपुलायतलोचनाय ॥ ॥ १५ ॥
अदृश्यमव्यक्तमनादिमव्ययं यदक्षरं ब्रह्म वदंति सर्वगम् ॥
निशाम्य यं मृत्युमुखात्प्रमुच्यते तमादिदेवं शरणं प्रपद्ये ॥ १६ ॥
एवं स्तुतस्तदा सर्वैर्ऋषिभिर्गतकल्मषैः ॥
ततस्तुष्टो महादेवस्तेषां प्रत्यक्षतां गतः ॥
अब्रवीत्तानृषीन्देवो वृणुध्वं वरमुत्तमम् ॥ १७ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥
यदि तुष्टोऽसि नो देव स्थानेऽस्मिन्निरतो भव ॥
असंख्यातानि यस्माच्च कपालानि सुरेश्वर ॥ १८ ॥
पुनः पुनः प्रवृत्तानि व्यपनीतान्यपि प्रभो ॥
अस्मिन्नसंशयं स्थाने कपालेश्वरनामभृत्॥ १९ ॥
स्वयं तु लिंगं देवेश तिष्ठेन्मन्वंतरांतरम् ॥
कपालेश्वरनाम्ना त्वमस्मिन्स्थाने स्थितिं कुरु॥ 7.1.103.२० ॥
येत्र त्वां पूजयिष्यंति धूपमाल्यानुलेपनैः ॥
तेषां तु परमं स्थानं यद्देवैरपि दुर्लभम् ॥ २१ ॥
बाढमित्येवमुक्त्वाऽसौ स्थित स्तत्रमहेश्वरः ॥
पुनः प्रवर्तितो यज्ञो निशानाथस्य भामिनि ॥ २२ ॥
तस्मिन्दृष्टे लभेन्मर्त्यो वाजिमेधफलं प्रिये ॥
मुच्यते पातकैः सर्वैः पूर्व जन्मार्जितैरपि ॥ २३ ॥
इदं माहात्म्यमखिलमभूत्स्वायंभुवांतरे ॥

वैवस्वते पुनश्चान्यद्दक्षयज्ञविनाशकृत् ॥ २४ ॥

कपालीति महेशानो दक्षेणोक्तः पुरा हरः ॥

तेन यज्ञस्य विध्वंसं कपाली तमथाकरोत् ॥

कपालेश्वरनामेति स्थितोस्मिन्मानवान्तरे ॥ २५ ॥

अथास्य नाम देवस्य सूर्य सावर्णिकेंऽतरे ॥

भविष्यति वरारोहे नाम तत्त्वेश्वरेति च ॥ २६ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं रुद्रदैवतम्॥

पापघ्नं सर्वजंतूनां पशुपाशविमोक्षणम् ॥ २७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां कपालेश्वरमाहात्म्यवर्णनंनाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कोटीश्वरमनुत्तमम् ॥

तस्मादुत्तरतो देवि कोटीशमिति विश्रुतम् ॥ १ ॥

पापघ्नं सर्वजंतूनां पशुपाशविमोक्षदम् ॥

पुरा पाशुपता देवि कपालेश्वरसंनिधौ ॥ २ ॥

तपः कुर्वंति विपुलं भस्मोद्धूलितविग्रहाः ॥

जटामुकुटसंयुक्ता मुंजमेखलधारिणः ॥ ३ ॥

शांताः सर्वे जितक्रोधा ब्राह्मणाः शिवयोगिनः ॥

तपः कुर्वंति तत्रस्था व्याप्य क्षेत्रं चतुर्द्दिशम् ॥ ४ ॥

कोटिसंख्या महादेवि मन्त्रजाप्यपरायणाः ॥

सम्यक्संस्थाप्य ते लिंगं कपालेशसमीपगम् ॥ ५ ॥

ततस्ते पूजयांचक्रुस्तल्लिंगं भक्तिसंयुताः ॥

ततस्तुष्टो महादेवो मुक्तिं तेषां ददौ हरः ॥ ६ ॥

ऋषयः कोटिसंख्यातास्तस्मिन्सिद्धा यतः प्रिये ॥

तेन कोटीश्वरं लिंगं नाम्ना ख्यातं धरातले ॥ ७ ॥

यस्तं पूजयते भक्त्या कोटीश्वरमनामयम् ॥

स कोटिमन्त्रजाप्यस्य फलं प्राप्स्यति मानवः ॥ ८ ॥

हिरण्यं तत्र दातव्यं ब्राह्मणे वेदपारगे ॥

कोटिहोमफलं तस्य सम्यग्यात्राफलं भवेत् ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कोटीश्वरमाहात्म्यवर्णनंनाम चतुरधिक शततमोऽध्यायः ॥ १०४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०५

https://sa.wikisource.org/s/g9n
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

अथान्यत्संप्रवक्ष्यामि रहस्यं स्थानमुत्तमम् ॥

सर्वपापहरं नृणां विस्तरात्कथ यामि ते ॥ १ ॥

प्रधानदेवमाहात्म्यं माहात्म्यं कल्पवासिनाम् ॥

सोमेशो दैत्यहंता च वालरूपी पितामहः ॥२॥

अर्कस्थलस्तथादित्यः प्रभासः शशिभूषणः ॥

एते षट्प्रवरा देवाः क्षेत्रे प्राभासिके स्थिताः ॥ ३ ॥

तेषां दर्शनमात्रेण कृतकृत्यः प्रजायते ॥

मुच्यते पातकैर्घोरैराजन्मजनितैर्ध्रु वम् ॥ ४ ॥

॥ देव्युवाच॥ ॥

पूर्वेषामुक्तदेवानां माहात्म्यं कथितं त्वया ॥

प्रभासे बालरूपीति यत्प्रोक्तं तत्कथं वचः ॥ ५ ॥

अन्येषु सर्व स्थानेषु वृद्धरूपी पितामहः ॥

कथं च समनुप्राप्तो माहात्म्यं तस्य किं स्मृतम् ॥ ६ ॥

कथं स पूज्यो देवेश यात्रा कार्या कथं नृभिः ॥

एतद्विस्तरतो ब्रूहि प्रसन्नो यदि मे प्रभो ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि माहात्म्यं ब्रह्मसम्भवम् ॥

यस्य श्रवणमात्रेण मुच्यते सर्वपातकैः ॥ ८ ॥

नास्ति ब्रह्मसमो देवो नास्ति ब्रह्मसमो गुरुः ॥

नास्ति ब्रह्मसमं ज्ञानं नास्ति ब्रह्मसमं तपः ॥ ९ ॥

तावद्भ्रमंति संसारे दुःख शोकभयप्लुताः ॥

न भवंति सुरज्येष्ठे यावद्भक्ताः पितामहे ॥ 7.1.105.१० ॥

समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ॥

यद्येवं ब्रह्मणि न्यस्तं को न मुच्येत बंधनात् ॥ ११ ॥

॥ देव्युवाच ॥ ॥

एवं माहात्म्यसंयुक्तो यदि ब्रह्मा जगद्गुरुः ॥

प्राभासिके महातीर्थे कस्मिन्स्थाने तु संस्थितः ॥ ॥ १२ ॥

किमर्थमागतस्तत्र कस्मिन्काले सुरोत्तमः ॥

कथं स पूज्यो विप्रेंद्रैस्तिथौ कस्यां क्रमाद्वद ॥ १३ ॥

॥ ईश्वर उवाच ॥ ॥

सोमनाथस्य ऐशान्यां सांबादित्याग्निगोचरे ॥

ब्रह्मणः परमं स्थानं ब्रह्मलोक इवापरः ॥ १४

तिष्ठते कल्पसंस्था वै तत्र कल्पांतवासिनः ॥

तत्र स्थाने स्थितो देवि बालरूपी पितामहः ॥ १५ ॥

जगत्प्रभुर्लोककर्ता सत्त्वमूर्तिर्महाप्रभः ॥

आगतश्चाष्टवर्षस्तु क्षेत्रे प्राभासिके शुभे ॥ १६ ॥

तत्राऽकरोत्तपो घोरं दिव्याब्दानां सहस्रकम् ॥

संस्थाप्य तु महालिंगं सिसृक्षुर्विविधाः प्रजाः ॥ १७ ॥

ततः कालांतरेतीते सोमेन प्रार्थितो विभुः ॥

क्षयरोगविमुक्तेन सम्यक्छ्रद्धान्वितेन वै ॥ १८ ॥

लिंगप्रतिष्ठाहेतोर्वै क्षेत्रे प्राभासिके शुभे ॥

कोटिब्रह्मर्षिभिः सार्द्धं सहितो विश्वकर्मणा ॥

कारयामास विधिवत्प्रतिष्ठां लिंगमुत्तमम्॥ १९ ॥

प्रतिष्ठाप्य ततो लिंगं सोमनाथं वरानने ॥

दापयामास विप्रेभ्यो भूरिशो यज्ञदक्षिणाम् ॥ 7.1.105.२० ॥

एवं प्रतिष्ठितं लिंगं ब्रह्मणा लोककर्तृणा ॥

वर्षाणि चात्र जातानि प्रभासे बालरूपिणः ॥ २१ ॥

चत्वारिंशद्द्वयं चैव क्षेत्रमध्यनिवासिनः ॥

एवं परार्द्धमगमत्प्रभासक्षेत्रवासिनः ॥ २२ ॥

॥ देव्युवाच ॥ ॥

ब्रह्मणो दिनमानं तु मासवर्षसहस्रकम् ॥

तत्सर्वं विस्तराद्ब्रूहि यथायुर्ब्रह्मणः स्मृत म् ॥ २३ ॥

॥ ईश्वर उवाच ॥ ॥

परमायुः स्मृतो ब्रह्मा परार्द्धं तस्य वै गतम्॥

प्रभासक्षेत्रसंस्थस्य द्वितीयं भवतेऽधुना ॥ २४ ॥

यदा प्राभासिके क्षेत्रे ब्रह्मा लोकपितामहः ॥

आगतश्चाष्टवर्षस्तु बालरूपी तदोच्यते ॥ २५ ॥

अन्येषु सर्वतीर्थेषु वृद्धरूपी पितामहः ॥

मुक्त्वा प्राभासिकं क्षेत्रं सदैव विबुधप्रिये ॥ २६ ॥

ब्रह्मांडे यानि तीर्थानि ब्रह्माणस्तेषु ये स्मृताः ॥

तेषामाद्यो महातेजाः प्रभासे यो व्यवस्थितः ॥ २७ ॥

कल्पेकल्पे तु नामानि शृणु त्वं तानि वै प्रिये ॥

स्वयंभूः प्रथमे कल्पे द्वितीये पद्मभूः स्थितः ॥ .२८ ॥

तृतीये विश्वकर्तेति बालरूपी चतुर्थके ॥

एतानि मुख्यनामानि कथितानि स्वयंभुवः ॥ २९ ॥

नित्यं संस्मरते यस्तु स दीर्घायुर्नरो भवेत् ॥7.1.105.३०॥

चन्द्रसूर्यग्रहाः सर्वे सदेवासुरमानुषाः ॥

त्रैलोक्यं नश्यते सर्वं ब्रह्मरात्रि समागमे॥३१॥

पुनर्दिने तु संजाते प्रबुद्धः सन्पितामहः॥

तथा सृष्टिं प्रकुरुते यथापूर्वमभूत्प्रिये॥३२॥

दिनमानं प्रवक्ष्यामि ब्रह्मणो लोककर्तृणः ॥

नेत्रभागाच्चतुर्भागस्त्रुटिः कालो निगद्यते ॥ ३३ ॥

तस्माच्च द्विगुणं ज्ञेयं निमिषांतं वरानने ॥

निमिषैः पञ्चदशभिः काष्ठा इत्युच्यते बुधैः॥

त्रिंशद्भिश्चैव काष्ठाभिः कला प्रोक्ता मनीषिभिः ॥३४॥

त्रिंशत्कलो मुहूर्तः स्याद्दिनं पंचदशैस्तु तैः॥

दिनमाना निशा ज्ञेया अहोरात्रं तयोर्भवेत् ॥३५॥

तैः पंचदशभिः पक्षः पक्षाभ्यां मास उच्यते ॥

मासैश्चैवायनं षड्भिरब्दं स्यादयनद्वयात् ॥३६॥

चत्वारिंशद्धि लक्षाणि लक्षाणां त्रितयं पुनः ॥

विंशतिश्च सहस्राणि ज्ञेयं सौरं चतुर्युगम् ॥ ३७ ॥

चतुर्युगैकसप्तत्या मन्वंतरमुदाहृतम् ॥

ऐन्द्रमेतद्भवेदायुः समासात्तव कीर्तितम् ॥ ३८ ॥

स्वायंभुवो मनुः पूर्वं मनुः स्वारोचिषस्ततः ॥

औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्ततः ॥ ३९॥

वैवस्वतोऽर्कसावर्णिर्ब्रह्मसा वर्णिरेव च ॥

धर्मसावर्णिनामा च रौच्यो भूत्यस्तथैव च ॥ 7.1.105.४० ॥

चतुर्दशैते मनवः सँख्यातास्ते यथाक्रमम् ॥

भूतान्भविष्यानिंद्रांश्च सर्वा न्वक्ष्ये तव क्रमात् ॥ ४१ ॥

विश्वभुक्च विपश्चिच्च सुकीर्तिः शिबिरेव च ॥

विभुर्मनोभुवश्चैव तथौजस्वी बलिर्बली ॥ ४२ ॥

अद्भुतश्च तथा शांती रम्यो देववरो वृषा ॥

ऋतधामा दिवःस्वामी शुचिः शक्राश्चतुर्दश ॥ ४३ ॥

एते सर्वे विनश्यंति ब्रह्मणो दिवसे प्रिये ॥

रात्रिस्तु तावती ज्ञेया कल्पमानमिदं स्मृतम् ॥ ४४ ॥

प्रथमं श्वेतकल्पस्तु द्वितीयो नीललोहितः ॥

वामदेवस्तृतीयस्तु ततो राथंतरोऽपरः ॥ ४५ ॥

रौरवः पंचमः प्रोक्तः षष्ठः प्राण इति स्मृतः ॥

सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥ ४६ ॥

सद्योऽथ नवमः प्रोक्तः ईशानो दशमः स्मृतः ॥

ध्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः ॥ ४७ ॥

त्रयोदश उदानस्तु गरुडोऽथ चतुर्दशः ॥

कौर्मः पंचदशो ज्ञेयः पौर्णमासी प्रजापतेः ॥ ४८ ॥

षोडशो नारसिंहस्तु समाधिस्तु ततः परः ॥

आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्ततोऽपरः ॥ ४९ ॥

भावनो विंशतिः प्रोक्तः सुप्तमालीति चापरः ॥

वैकुण्ठश्चार्चिषो रुद्रो लक्ष्मीकल्पस्तथापरेः ॥ 7.1.105.५० ॥

सप्तविंशोऽथ वैराजो गौरीकल्पस्तथोंऽऽधकः ॥
माहेश्वरस्तथा प्रोक्तस्त्रिपुरो यत्र घातितः ॥ ५१ ॥
पितृकल्पस्तथांते च या कुहूर्ब्रह्मणः स्मृता ॥
त्रिंशत्कल्पाः समाख्याता ब्रह्मणो मासि वै प्रिये ॥ ५२ ॥
अतीताः कथिताः सर्वे वाराहो वर्त्ततेऽधुना ॥
प्रतिपद्ब्रह्मणो यत्र वाराहेणोद्धृता मही ॥ ५३ ॥
त्रिंशत्कल्पैः स्मृतो मासो वर्षं द्वादशभिस्तु तैः ॥
अनेन वर्षमानेन तदा ब्रह्माऽष्टवार्षिकः ॥
आनीतः सोमराजेन सोमनाथः प्रतिष्ठितः ॥ ५४ ॥
एवं क्षेत्रे निवसतः प्रभासे बालरूपिणः ॥
परार्द्धमेकमगमद्द्वितीयं वर्ततेऽ धुना ॥ ५५ ॥
एवं महाप्रभावोऽसौ प्रभासक्षेत्रमध्यगः ॥
ब्रह्मा स्वयंभूर्भगवान्बालत्वात्क्षेत्रमाश्रितः ॥ ५६ ॥
स वै पूज्यो नमस्कार्यो वंदनीयो मनीषिभिः ॥
आदौ स एव पूज्यः स्यात्सम्यग्यात्राफलेप्सुभिः ॥ ५७ ॥
यस्तं पूजयते भक्त्या स मां पूजयते भुवम् ॥
यस्तं द्वेष्टि स मां द्वेष्टि योस्य पूज्यो ममैव सः ॥ ५८ ॥
ब्रह्मणा पूज्यमानेन अहं विष्णुश्च पूजितः ॥
विष्णुना पूज्यमानेन अहं ब्रह्मा च पूजितः ॥ ५९ ॥
मया पूजित मात्रेण ब्रह्मविष्णू च पूजितौ ॥
सत्त्वं ब्रह्मा रजो विष्णुस्तमोऽहं संप्रकीर्तितः ॥ 7.1.105.६० ॥
वायुर्ब्रह्माऽनलो रुद्रो विष्णुरापः प्रकीर्तितः ॥
रात्रिर्विष्णुरहो रुद्रो या संध्या स पितामहः ॥६१॥
सामवेदो ह्यहं देवि ब्रह्मा ऋग्वेद उच्यते ॥
यजुर्वेदो भवेद्विष्णुः कुलाधारो ह्यथर्वणः ॥ ६२॥
उष्णकालो ह्यहं देवि वर्षाकालः पितामहः ॥
शीतकालो भवेद्विष्णुरेवं कालत्रयं हि सः ॥ ६३ ॥
दक्षिणाग्निरहं ज्ञेयो गार्हपत्यो हरिः स्मृतः ॥

ब्रह्मा चाहवनीयस्तु एवं सर्वं त्रिदैवतम् ॥ ६४ ॥

अहं लिंगस्वरूपस्थो भगो विष्णुः प्रकीर्तितः ॥

बीजसंस्थो भवेद्ब्रह्मा विष्णुरापः प्रकीर्तितः ॥६५॥

अहमाकाशरूपस्थ एवं तत्त्वमयं प्रभुः ॥

आकाशात्स्रवते यच्च तद्बीजं ब्रह्मसंस्थितम् ॥

स्वरूपं ब्राह्ममाश्रित्य ब्रह्मा बीजप्ररोहकः॥६६॥

नाभिमध्ये स्थितो ब्रह्मा विष्णुश्च हृदयांतरे ॥

वक्त्रमध्ये अहं देवि आधारः सर्वदेहिनाम् ॥६७॥

यश्चाहं स स्वयं ब्रह्मा यो ब्रह्मा स हुताशनः ॥

या देवी स स्वयं विष्णुर्यो विष्णुः स च चन्द्रमाः ॥ ६८ ॥

यः कालः स स्वयं ब्रह्मा यो रुद्रः स च भास्करः ॥

एवं शक्तिविशेषेण परं ब्रह्म स्थितं प्रिये ॥ ६९ ॥

ॐकारस्तत्परं ब्रह्म गायत्री प्रकृतिः परा ॥

उभावेतौ नरो ज्ञात्वा न विच्यवति मुच्यते ॥7.1.105.७॥।

एवं यो वेद देवेशि अद्वैतं परमाक्षरम् ॥

स सर्वं वेद नैवान्यो भेदकर्त्ता नराधमः ॥ ७१ ॥

एकरूपं परं ब्रह्म कार्यभावात्पृथक्स्थितः ॥

यस्तं द्वेष्टि वरारोहे ब्रह्मद्वेष्टा स उच्यते ॥ ७२ ॥

दक्षिणांगे स्थितो ब्रह्मा वामांगे मम केशवः ॥

यस्तयोर्द्वेषमाधत्ते स द्वेष्टा मम भामिनि ॥ ७३ ॥

एवं ज्ञात्वा वरारोहे ह्यभिन्नेनान्तरात्मना ॥

ब्रह्माणं केशवं रुद्रमेकरूपेण पूज येत् ॥ ७४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां ब्रह्म माहात्म्यवर्णनंनाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०६



॥ देव्युवाच ॥ ॥

एवमद्वैतभावेन यद्ब्रह्म परिकीर्तितम् ॥

तस्य पूजा विधानं मे कथयस्व यथार्थतः ॥ १ ॥

क्षेत्रे प्राभासिके देव बालरूपी पितामहः ॥

स कथं पूज्यते लोकैः परब्रह्मस्वरूपवान् ॥ २ ॥

के मन्त्राः किं विधानं तद्ब्राह्मणास्तत्र कीदृशाः ॥

तत्र स्थितानां विप्राणां कथं क्षेत्रफलं भवेत् ॥ ३ ॥

कतिप्रकारास्ते विप्रास्तत्र क्षेत्रनिवासिनः ॥

किमाचारा महादेव किंशीलाः किंपरायणाः ॥ ४ ॥

एतद्विस्तरतो ब्रूहि ब्राह्मणानां महोदयम् ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

साधुसाधु महादेवि सम्यक्प्रश्नविशारदे ॥

शृणुष्वैकमना भूत्वा माहात्म्यं विप्रदैवतम् ॥ ६ ॥

यच्छ्रुत्वा मानवो देवि मुच्यते सर्वपातकैः ॥

ये केचित्सागरांतायां पृथिव्यां कीर्तिता द्विजाः ॥ ७ ॥

तद्रूपं मम देवेशि प्रत्यक्षं धरणीतले ॥ प्रत्यक्षं ब्राह्मणा देवाः परोक्षं दिवि देवताः ॥ ८ ॥

ब्राह्मणा मत्प्रिया नित्यं ब्राह्मणा मामकी तनुः ॥

यस्तानर्चयते भक्त्या स मामर्चयते सदा ॥ ९ ॥

यस्तांस्तोषयते भक्त्या स च मां परितोषयेत् ॥7.1.106.१॥।

ये ब्राह्मणाः सोऽहमसंशयं प्रिये तेष्वर्चितेष्वर्चितोऽहं भवेयम् ॥

तेष्वेव तुष्टेष्वहमेव तुष्टो वैरं च तैर्यस्य ममापि वैरम् ॥ ११ ॥

यश्चन्दनैः सागरुगन्धमाल्यै रभ्यर्चयेच्छैलमयीं ममार्चाम्॥

असौ न मामर्चयतेर्चयन्वै विप्रार्चनादर्चित एव चाहम् ॥ १२ ॥

यावंतः पृथिवीमध्ये चीर्णवेदव्रता द्विजाः ॥

अचीर्णव्रतवेदा वा तेऽपि पूज्या द्विजाः प्रिये ॥ १३ ॥

न ब्राह्मणान्परीक्षेत श्राद्धे क्षेत्रनिवासिनः ॥

सुमहान्परिवादोऽस्य ब्राह्मणानां परीक्षणे ॥ १४ ॥

काणाः खञ्जाश्च कृष्णाश्च दरिद्रा व्याधितास्तथा ॥

सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥ १५ ॥

ब्राह्मणा जातितः पूज्या वेदाभ्यासात्ततः परम् ॥

ततोर्थं हव्यकव्येषु न निन्द्या ब्राह्मणाः क्वचित् ॥ १६ ॥

काणान्कुण्टांश्च कुब्जाश्च दरिद्रान्व्याधितानपि॥

नावमन्येद्द्विजान्प्राज्ञो मम रूपं यतः स्मृतम् ॥ १७ ॥

बहवो हि न जानंति नरा ज्ञानबहिष्कृताः ॥

यथाहं द्विजरूपेण चरामि पृथिवीमिमाम् ॥ १८ ॥

मद्रूपान्घ्नन्ति ये विप्रान्विकर्म कारयंति च ॥

अप्रेषणे प्रेषयंति दासत्वं कारयन्ति च ॥ १९ ॥

मृतांस्तान्करपत्रेण यमदूता महाबलाः ॥

निकृंतंति यथा काष्ठं सूत्रमार्गेण शिल्पिनः ॥ 7.1.106.२० ॥

ये चैवाश्लक्ष्णया वाचा तर्जयन्ति नराधमाः ॥

वदंति परुषं क्रोधात्पादेन निहनंति च ॥ २१ ॥

मृतांस्तान्यमलोका हि निहत्य धरणीतले ॥

क्रूरपादेन चाक्रम्य क्रोधसंरक्तलोचनाः ॥ २२ ॥

अग्निवर्णैश्च संदंशैर्जिह्वामुद्धरते यमः ॥

ये नु विप्रान्निरीक्षन्ते पापाः पापेन चक्षुषा ॥ २२ ॥

अब्रह्मण्यास्तु ते बाह्या नित्यं ब्रह्मद्विषो नराः ॥

तेषां घोरा महाकाया वज्रतुंडा भयानकाः ॥

उद्धरंति मुहूर्तेन चक्षुः काका यमाज्ञया ॥ २४ ॥

यस्ताडयति विप्रं वै क्षते कुर्याद्धि शोणितम् ॥

अस्थिभंगं च वा कुर्यात्प्राणैर्वापि वियोजयेत् ॥२५॥

ब्रह्मघ्नः स तु विज्ञेयो न तस्मै निष्कृतिः स्मृता ॥

पञ्चाशत्कोटिसंख्येषु नरकेष्वनुपूर्वशः ॥ २६ ॥

स बहूनि सहस्राणि वर्षाणि पच्यते भृशम्॥

तस्माद्विप्रो वरारोहे नमस्कार्यो नृभिः सदा॥ २७ ॥

अन्नपानप्रदानैस्तु पूज्या हि सततं द्विजाः ॥

सर्वेषां चैव दानानां विप्राः सर्वेऽधिकारिणः ॥ २८ ॥

नान्यः समर्थो देवेशि गृह्णन्यात्यधमां गतिम् ॥

तपसा पावितो देवि ब्राह्मणो धृतकिल्विषः ॥ २९ ॥

न सीदेत्प्रतिगृह्णानः पृथिवीमनुसागराम्॥

नास्ति किंचिन्महादेवि दुष्कृतं ब्राह्मणस्य तु ॥ 7.1.106.३० ॥

यस्तु स्थितः सदाऽध्यात्मे नित्यं सद्भावभावितः ॥

ब्राह्मणो हि महद्भूतं जन्मना सह जायते ॥ ३१ ॥

लोके लोकेश्वराश्चापि सर्वे ब्राह्मणपूजकाः ॥

ततस्तान्नावमन्येत यदीच्छेज्जीवितं चिरम् ॥ ३२ ॥

ब्राह्मणाः कुपिता हन्युर्भस्मीकुर्युः स्वतेजसा ॥

लोकानन्यान्सृजेयुश्च लोकपालांस्तथाऽपरान् ॥ ३३ ॥

अपेयः सागरो यैश्च कृतः कोपान्महात्मभिः ॥

येषां कोपाग्निरद्यापि दंडके नोपशाम्यति ॥३४॥

एते स्वर्गस्य नेतारो देवदेवाः सनातनाः॥

एभिश्चापि कृतः पंथा देवयानः स उच्यते ॥ ३५ ॥

ते पूज्यास्ते नमस्कार्यास्तेषु सर्वं प्रतिष्ठितम् ॥

ते वै लोकानिमान्सर्वान्पारयंति परस्परम्॥३६॥

गूढस्वाध्यायतपसो ब्राह्मणाः शंसितव्रताः ॥

विद्यास्नाता व्रतस्नाता अनपाश्रित्य जीविनः॥३७॥

आशीविषा इव क्रुद्धा उपचर्या हि ब्राह्मणाः॥

तपसा दीप्यमानास्ते दहेयुः सागरानपि॥३८॥

ब्राह्मणेषु च तुष्टेषु तुष्यंते सर्वदेवताः॥

ते गतिः सर्वभूतानामध्यात्मगतिचिन्तकाः॥३९॥

आदिमध्यावसानानां ज्ञानानां छिन्नसंशयाः॥

परापरविशेषज्ञा नेतारः परमां गतिम् ॥

अवध्या ब्राह्मणास्तस्मात्पापेष्वपि रताः सदा ॥ 7.1.106.४० ॥

यश्च सर्वमिदं हन्याद्ब्राह्मणं चापि तत्समम् ॥

सोऽग्निः सोऽर्को महातेजा विषं भवति कोपितः ॥ ४१ ॥

भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः ॥

न स्कन्दते न व्यथते न विनश्यति कर्हिचित्॥४२॥

वरिष्ठमग्निहोत्राद्धि ब्राह्मणस्य मुखे हुतम्॥

विप्राणां वपुराश्रित्य सर्वास्तिष्ठंति देवताः॥४३॥

अतः पूज्यास्तु ते विप्रा अलाभे प्रतिमादयः ॥ ४४ ॥

अविद्यो वा सविद्यो वा ब्राह्मणो मम दैवतम् ॥

प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ४५ ॥

स्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ॥

हव्यकव्यव्यपेतोऽपि ब्राह्मणो नैव दुष्यति ॥ ४६ ॥

महापातकवर्ज्यं हि पूज्यो विप्रो वरानने ॥

सर्वथा ब्राह्मणाः पूज्याः सर्वथा दैवतं महत् ॥

तस्मात्सर्वप्रयत्नेन रक्षेदापद्गतं द्विजम् ॥ ४७ ॥

एवं विप्रा महादेवि पूज्याः सर्वत्र मानवैः ॥

किं पुनः संजितात्मानो विशेषात्क्षेत्रवासिनः ॥ ४८ ॥

अथ क्षेत्रस्थितानां च चतुराश्रमवासिनाम् ॥

विप्राणां वृत्तितो भेदं प्रवक्ष्याम्यानुपूर्व्यशः ॥ ४९ ॥

क्षेत्रस्य संन्यासविधिं ये जानंति द्विजातयः ॥

वृत्तिभेदं क्रमाच्चैव ते क्षेत्रफलभागिनः ॥ 7.1.106.५० ॥

यथा क्षेत्रे निवसता वर्तितव्यं द्विजातिना ॥

प्राजापत्यादिभेदेन तच्छृणु त्वं वरानने ॥ ५१ ॥

प्राजापत्या महीपालाः कपोता ग्रंथिकास्तथा ॥

कुटिकाश्चाथ वैतालाः पद्महंसा वरानने ॥ ५२ ॥

धृतराष्ट्रा बकाः कंका गोपालाश्चैव भामिनि ॥

त्रुटिका मठराश्चैव गुटिका दंडिकाः परे ॥ ५३ ॥

क्षेत्रस्थानामिमे भेदा वृत्तिं तेषां शृणुष्व च ॥ ५४ ॥

अहिंसा गुरुशुश्रूषा स्वाध्यायः शौचसंयमः ॥

सत्यमस्तेयमेतद्धि प्राजापत्यं व्रतं स्मृतम् ॥ ५५ ॥

क्षयपुष्ट्यर्थविद्वेषकर्मभिः शांतिकादिभिः ॥

पालयंति महीं यस्मान्महीपालास्ततः स्मृताः ॥ ५६ ॥

पतिता ये कणा भूमौ संहरंति कपोतवत् ॥

उद्धृत्याजीवनं येषां कपोतास्ते तु साधकाः ॥ ५७ ॥

गृहं कृत्वा तु सद्ग्रंथाः सहसैव त्यजंति ये ॥

कुटिका साधकास्ते वै शिवाराधनतत्पराः ॥ ५८ ॥

तीर्थासक्ताः सपत्नीका यथालब्धोपजीविनः ॥

महासाहसयुक्तास्ते वैतालाख्यास्तु साधकाः ॥ ५९ ॥

संयताः कामनासक्ता राज्यकामार्थसाधकाः ॥

पद्मास्ते साधकाः ख्याता भिक्षाचर्यारताः सदा ॥ 7.1.106.६० ॥

ज्ञानयोगसमायुक्ता द्वैताचाररताश्च ये ॥

हंसास्ते साधकाः ख्याताः स्वयमुत्पन्नसंविदः ॥ ६१ ॥

ब्रह्मचर्येण सत्त्वेन तथाऽलुब्धतयापि वा ॥

जितं जगद्धारयन्तो धृतराष्ट्रा मतास्तु ये ॥ ६२ ॥

गूढाश्चरंति ये ज्ञानं व्रतं धर्ममथापि वा ॥

स्वार्थैकागतनिष्ठास्तु बकास्ते साधका मताः॥ ॥ ६३ ॥

जलाश्रयं समाश्रित्य स्थिता उत्कृष्टसिद्धये ॥

बिसशृंगाटकाहारास्ते कंकाः साधकाः स्मृताः ॥ ६४ ॥

गोभिः सार्द्धं व्रजंत्यत्र गोष्ठे च निवसंति ये ॥

पंचगव्यरसा ये वै गोपालास्ते तु साधकाः ॥ ६५ ॥

कृच्छ्रचांद्रायणैश्चैव क्षपयंति स्वकं वपुः ॥

त्रुटिमात्राशनास्ते तु त्रुटिकाः साधका मताः ॥ ६६ ॥

कृत्वा कुशमयीं पत्नीं मठे ये गृहमेधिनः ॥

भैक्षवृत्तिरताः शुद्धा मठरास्ते तु साधकाः ॥ ६७ ॥

ग्रासमात्रसमानाभिर्गुटिकाभिरथाष्टभिः ॥

कन्दमूलफलोत्थाभिर्गुटिकास्ते द्विजातयः ॥ ६८ ॥

स्वदेहदण्डनैर्युक्ता रात्रौ वीरासने स्थिताः ॥

दंडिनस्ते समाख्याताः सर्वमेतत्तवोदितम् ॥ ६९ ॥

सामान्योऽपि विशेषश्च वृत्तिनो गृहिणोऽपि वा ॥

तेषां भेदो मया ख्याताः सम्यक्क्षेत्रनिवासिनाम् ॥ 7.1.106.७० ॥

एवमादिधर्मयुक्ताः प्रभासक्षेत्रवासिनः ॥

तैः पूज्यो भगवान्देवो बालरूपी पितामहः ॥ ७१ ॥

महापातकिनो ये तु ये तु विप्रैर्बहिष्कृताः ॥

न च ते संस्पृशेयुर्वै ब्रह्माणं बालरूपिणम् ॥। ७२ ॥

ब्रह्मचारी सदा दांतो जितक्रोधो जितेंद्रियः ॥

एवं ते ब्राह्मणाः ख्याताः क्षेत्रमध्यनिवासिनः ॥ ७३ ॥

तैः पूज्यो भगवान्देवो बालरूपी पितामहः ॥

ये वेदाध्ययने युक्तास्तैः प्रपूज्यः पितामहः ॥ ॥ ७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मध्ययात्रायां ब्राह्मणप्रशंसा वर्णनंनाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०७



॥ ईश्वर उवाच ॥ ॥

अथ पूजाविधानं ते कथयामि समासतः ॥

भक्तिभेदान्पृथक्तस्य ब्रह्मणो बालरूपिणः ॥ १ ॥

रथयात्राविधानं तु स्तोत्रमंत्रविधिक्रमम् ॥

विविधा भक्तिरुद्दिष्टा मनोवाक्कायसंभवा ॥ ॥ २ ॥

लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा ॥

ध्यानधारणया या तु वेदानां स्मरणेन च ॥

ब्रह्मप्रीतिकरी चैषा मानसी भक्तिरुच्यते ॥ ३ ॥

मंत्रवेदनमस्कारैरग्निश्राद्धविधानकैः ॥

जाप्यैश्चारण्यकैश्चैव वाचिकी भक्तिरुच्यते ॥ ४ ॥

व्रतोपवासनियमैश्चितेंद्रियनिरोधिभिः ॥

कृच्छ्र सांतपनैश्चान्यैस्तथा चांद्रायणादिभिः ॥ ५ ॥

ब्रह्मोक्तैश्चोपवासैश्च तथान्यैश्च शुभव्रतैः ॥

कायिकी भक्तिराख्याता त्रिविधा तु द्विजन्मनाम् ॥ ६ ॥

गोघृतक्षीरदधिभिर्मध्विक्षुसुकुशोदकैः ॥

गंधमाल्यैश्च विविधैर्वस्तुभिश्चोपपादिभिः ॥ ७ ॥

घृतगुग्गुलधूपैश्च कृष्णागुरुसुगंधिभिः ॥

भूषणै हैमरत्नाद्यैश्चित्राभिः स्रग्भिरेव च ॥ ८ ॥

न्यासैः परिसरैः स्तोत्रैः पताकाभिस्तथोत्सवैः ॥

नृत्यवादित्रगीतैश्च सर्ववस्तूपहारकैः ॥ ९ ॥

भक्ष्यभोज्यान्न पानैश्च या पूजा क्रियते नरैः ॥

पितामहं समुद्दिश्य सा भक्तिर्लौकिकी मता ॥ 7.1.107.१० ॥

वेदमंत्रहविर्भागैः क्रिया या वैदिकी स्मृता ॥ ११ ॥

दर्शे च पौर्णमास्यां च कर्तव्यं चाग्निहोत्रजम् ॥

प्राशनं दक्षिणादानं पुरोडाश इति क्रिया ॥ १२ ॥

इष्टिर्धृतिः सोमपानं याज्ञियं कर्म सर्वशः ॥

ऋग्यजुः सामजाप्यानि संहिताध्ययनानि च ॥

क्रियते ब्रह्माणमुद्दिश्य सा भक्तिर्वैदिकोच्यते ॥ १३ ॥

प्राणायामपरो नित्यं ध्यानवान्विजितेंद्रियः ॥

भैक्ष्यभक्षी व्रती चापि सर्वप्रत्याहृतेंद्रियः ॥ १४ ॥

धारणं हृदये कृत्वा ध्यायमानः प्रजेश्वरम् ॥

हृत्पद्मकर्णिकासीनं रक्तवर्णं सुलोचनम् ॥१५॥

पश्यन्नुद्द्योतितमुखं ब्रह्माणं सुकटीतटम्॥

रक्तवर्णं चतुर्बाहुं वरदाभयहस्तकम्॥

एवं यश्चिंतयेद्देवं ब्रह्मभक्तः स उच्यते ॥ १६ ॥

विधिं च शृणु मे देवि यः स्मृतः क्षेत्रवासिनाम् ॥ १७ ॥

निर्ममा निरहंकारा निःसंगा निष्परिग्रहाः॥

चतुर्वर्गेपि निःस्नेहाः समलोष्टाश्मकांचनाः ॥१८॥

भूतानां कर्मभिर्नित्यं त्रिविधैरभयप्रदाः ॥

प्राणायामपरा नित्यं परध्यानपरायणाः ॥ १९ ॥

जापिनः शुचयो नित्यं यतिधर्मक्रियापराः ॥

सांख्ययोगविधिज्ञा ये धर्मविच्छिन्नसंशयाः ॥ 7.1.107.२० ॥

ब्रह्मपूजारता नित्यं ते विप्राः क्षेत्रवासिनः ॥

तैर्यथा पूजनीयो वै बालरूपी पितामहः ॥ २१ ॥

तथाहं कीर्त्तयिष्यामि शृणुष्वैकमनाः प्रिये ॥

स्नात्वा तु विमले तीर्थे शुक्लांबरधरः शुचिः॥

पूजोपहारसंयुक्तस्ततो ब्रह्माणमर्चयेत् ॥ २२ ॥

पूर्वं संस्नाप्य विधिना पंचामृतरसोदकैः ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ २३ ॥

गायत्र्या गृह्य गोमूत्रं गंधद्वारेति गोमयम् ॥

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ २४ ॥

तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥

आपोहिष्ठेति मंत्रेण पंचगव्येन स्नापयेत् ॥ २५ ॥
कपिलापंचगव्येन कुशवारियुतेन च ॥
स्नापयेन्मंत्रपूतेन ब्रह्मस्नानं हि तत्स्मृतम् ॥ २६ ॥
वर्षकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ॥
सुरज्येष्ठं तु संस्नाप्य दहेत्सर्वं न संशयः ॥ २७ ॥
एवं संस्नाप्य विधिना ब्रह्माणं बालरूपिणम् ॥
कर्पूरागरुतोयेन ततः संस्नापयेद्द्विजः ॥ २८ ॥
एवं कृत्वार्च्चयेद्देवं गायत्रीन्यासयोगतः ॥
मूर्ध्नः पादतलं यावत्प्रणवं विन्यसेद्बुधः ॥ २९ ॥
तकारं विन्यसेन्मूर्ध्नि सकारं मुखमण्डले ॥
विकारं कंठदेशे तु तुकारं चांगसंधिषु ॥ 7.1.107.३० ॥
वकारं हृदि मध्ये तु रेकारं पार्श्वयोर्द्वयोः ॥
णिकारं दक्षिणे कुक्षौ यकारं वामसंज्ञिते ॥ ३१ ॥
भकारं कटिनाभिस्थं गोकारं पार्श्वयोर्द्वयोः ॥
देकारं जानुनोर्न्यस्य वकारं पादपद्मयोः ॥ ३२ ॥
स्यकारमंगुष्ठयोर्न्यस्य धीकारमुरसि न्यसेत् ॥
मकारं जानुमूले तु हि कारं गुह्यमाश्रितम् ॥ ३३ ॥
धिकारं हृदये न्यस्य योकारं चाधरोष्ठके ॥
योकारं च तथैवान्यमुत्तरोष्ठे न्यसेत्सुधीः ॥ ३४ ॥
नकारं नासिकाग्रे तु प्रकारं नेत्रमाश्रितम् ॥
चोकारं च भ्रुवोर्मध्ये दकारं प्राणमाश्रितम् ॥ ३५ ॥
यात्कारं च ललाटांते विन्यसेद्वै सुरेश्वरि ॥
न्यासं कृत्वाऽऽत्मनो देहे देवे कुर्यात्तथा प्रिये ॥ ३६ ॥
सर्वोपहारसंपन्नं कृत्वा सम्यङ्निरीक्षयेत् ॥
कुंकुमागरुकर्पूरचंदनेन विमिश्रितम् ॥ ३७ ॥
गंधतोयैरुपस्कृत्य गायत्र्या प्रणवेन च ॥
प्रोक्षयेत्सर्वद्रव्याणि पश्चादर्चनमारभेत् ॥ ३८ ॥
दिव्यै पुष्पैः सुगंधैश्च मालतीकमलादिभिः ॥

अशोकैः शतपत्रैश्च बकुलैः पूजयेत्क्रमात् ॥ ३९ ॥
कृष्णागरुसुधूपेन घृतदीपैस्तथोत्तमैः ॥
ततः प्रदापयेत्तत्र नैवेद्यं विविधं क्रमात् ॥ 7.1.107.४० ॥
खण्डलड्डुकश्रीवेष्टकांसाराशोकपल्लवैः ॥
स्वस्तिकोल्लिपिकादुग्धा तिलवेष्टकिलाटिकाम् ॥ ४१ ॥
फलानि चैव पक्वानि मूलमंत्रेण दापयेत् ॥
ऋग्वेदं च यजुर्वेदं सामवेदं च पूजयेत् ॥ ४२ ॥
ज्ञानं वैराग्यमैश्वर्यं धर्मं संपूजयेद्बुधः ॥
ईशानादिक्रमाद्देवि दिशासु विदिशासु च ॥ ४३ ॥
चतुर्द्दशविद्यास्थानानि ब्रह्मणोऽग्रे प्रपूजयेत् ॥
हृदयानि ततो न्यस्य देवस्य पुरतः क्रमात् ॥ ४४ ॥
आपोहिष्ठेति ऋगियं हृदयं परिकीर्त्तितम् ॥
ऋतं सत्यं शिखा प्रोक्ता उदुत्यं नेत्रमादिशेत् ॥ ४५ ॥
चित्रं देवानामित्येवं सर्वलोकेषु विश्रुतम् ॥
ब्रह्मंस्ते छादयामीति कवचं समुदाहृतम् ॥ ४६ ॥
भूर्भुवः स्वरितीरेश पूजनं परिकीर्तितम् ॥
गायत्र्या पूजयेद्देवमोंकारेणाभिमंत्रितम्॥ ४७॥
प्रणवेनापरान्सर्वानृग्वेदादीन्प्रपूजयेत् ॥
गायत्री परमो मंत्रो वेदमाता विभावरी ॥ ४८ ॥
गायत्र्यक्षरतत्त्वैस्तु ब्रह्माणं यस्तु पूजयेत् ॥
उपोष्य पंचदश्यां तु स याति परमं पदम् ॥ ४९ ॥
संसारसागरं घोरमुत्तितीर्षुर्द्विजो यदि ॥
प्रभासे कार्तिके मासि ब्रह्माणं पूजयेत्सदा ॥ 7.1.107.५० ॥
यस्य दर्शनमात्रेण अश्वमेध फलं लभेत् ॥
कस्तं न पूजयेद्विद्वान्प्रभासे बालरूपिणम् ॥ ५१ ॥
यस्यैकदिवसप्रांते सदेवासुरमानवाः ॥
विलयं यांति देवेशि कस्तं न प्रतिपूजयेत् ॥ ५२ ॥
पिता यः सर्वदेवानां भूतानां च पितामहः ॥

यस्मादेष स तैः पूज्यो ब्राह्मणैः क्षेत्रवासिभिः ॥ ५३ ॥

रुद्ररूपी विश्वरूपी स एव भुवनेश्वरः ॥

पौर्णमास्यामुपोषित्वा ब्रह्माणं जगतां पतिम् ॥

अर्चयेद्यो विधानेन सोऽश्वमेधफलं लभेत् ॥ ५४ ॥

कार्त्तिके मासि देवस्य रथयात्रा प्रकीर्त्तिता ॥

यां कृत्वा मानवो भक्त्या याति ब्रह्मसलोकताम् ॥ ५५ ॥

कार्त्तिके मासि देवेशि पौर्णमास्यां चतुर्मुखम् ॥

मार्गेण चर्मणा सार्द्धं सावित्र्या च परंतपः ॥ ५६ ॥

भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितम् ॥

स्थापयेद्भ्रामयित्वा तु सकलं नगरं नृपः ॥ ५७ ॥

ब्राह्मणान्भोजयित्वाग्रे शांडिलेयं प्रपूज्य च ॥

आरोपयेद्रथे देवं पुण्यवादित्रनिःस्वनैः ॥ ५८ ॥

रथाग्रे शांडिलीपुत्रं पूजयित्वा विधानतः ॥

ब्राह्मणान्वाचयित्वा च कृत्वा पुण्याहमंगलम् ॥ ५९ ॥

देवमारोपयित्वा तु रथे कुर्यात्प्रजागरम् ॥

नानाविधैः प्रेक्षणकैर्ब्रह्मशेषैश्च पुष्कलैः ॥ 7.1.107.६० ॥

नारोढव्यं रथे देवि शूद्रेण शुभमिच्छता ॥

नाधर्मेण विशेषेण मुक्त्वैकं भोजकं प्रिये ॥ ६१ ॥

ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेत्प्रिये ॥

भोजकं वामपार्श्वे तु पुरतः पंकजं न्यसेत् ॥ ६२ ॥

एवं तूर्यनिनादैश्च शंखशब्दैश्च पुष्कलैः ॥

भ्रामयित्वा रथं देवि पुरं सर्वं च दक्षिणम् ॥

स्वस्थाने स्थापयेद्भूयः कृत्वा नीराजनं बुधः ॥ ६३ ॥

य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति ॥

रथं वाऽऽकर्षयेद्यस्तु स गच्छेद्ब्रह्मणः पदम् ॥ ६४ ॥

यो दीपं धारयेत्तत्र ब्रह्मणो रथपृष्ठगः ॥

पदेपदेऽश्वमेधस्य स फलं विंदते महत् ॥ ६५ ॥

यो न कारयते राजा रथयात्रां तु ब्रह्मणः ॥

स पच्यते महादेवि रौरवे कालमक्षयम् ॥ ६६ ॥

तस्मात्सर्वप्रयत्नेन राष्ट्रस्य क्षेममिच्छता ॥

रथयात्रां विशेषेण स्वयं राजा प्रवर्त्तयेत् ॥ ६७ ॥

प्रतिपद्ब्राह्मणांश्चापि भोजयेद्वि धिवत्सुधीः ॥

वासोभिरहतैश्चापि गन्धमाल्यानुलेपनैः ॥ ६८ ॥

कार्त्तिके मास्यमावास्यां यस्तु दीपप्रदीपनम् ॥

शालायां ब्रह्मणः कुर्यात्स गच्छेत्परमं पदम् ॥ ६९ ॥

उत्सवेषु च सर्वेषु सर्वकाले विशेषतः ॥

पूजयेयुरिमं विप्रा ब्रह्माणं जगतां गुरुम् ॥ 7.1.107.७०॥

यथाकृत्यप्रयोगेण सम्यक्छ्रद्धा समन्विताः ॥

पूज्यो दिव्योपचारेण यथावित्तानुसारतः ॥ ७१ ॥

एवं ते कथितं देवि पूजामाहात्म्यमुत्तमम् ॥

प्रभासक्षेत्रमाहात्म्यं ब्रह्मणः बालरूपिणः ॥ ७२ ॥

तस्याहं कथयिष्यामि नाम्नामष्टोत्तरं शतम् ॥

प्रदत्त्वा च पठित्वा च यज्ञायुतफलं लभेत् ॥ ७३ ॥

गायत्र्या लक्षजाप्येन सम्यग्जप्तेन यत्फलम् ॥

तत्फलं समवाप्नोति स्तोत्रस्यास्य उदीरणात् ॥ ७४ ॥

इदं स्तोत्रवरं दिव्यं रहस्यं पापनाशनम् ॥

न देयं दुष्टबुद्धीनां निन्दकानां तथैव च ॥ ७५ ॥

ब्राह्मणाय प्रदातव्यं श्रोत्रियाय महात्मने ॥

विष्णुना हि पुरा पृष्टं ब्रह्मणः स्तोत्रमुत्मम् ॥ ७६ ॥

केषुकेषु च स्थानेषु देवदेव पितामह ॥

संचिन्त्यस्तन्ममाचक्ष्व त्वं हि सर्वविदुत्तम ॥ ७७ ॥

॥ ब्रह्मोवाच ॥ ॥

पुष्करेऽहं सुरश्रेष्ठो गयायां प्रपितामहः।।

कान्यकुब्जे वेदगर्भो भृगुक्षेत्रे चतुर्मुखः ॥ ७८ ॥

कौबेर्यां सृष्टिकर्ता च नन्दिपुर्यां बृहस्पतिः ॥

प्रभासे बालरूपी च वाराणस्यां सुरप्रियः ॥७९॥

द्वारावत्यां चक्रदेवो वैदिशे भुवनाधिपः ॥

पौंड्रके पुण्डरीकाक्षः पीताक्षो हस्तिनापुरे ॥ 7.1.107.८० ॥

जयंत्यां विजयश्चासौ जयन्तः पुरुषोत्तमे ॥

वाडेषु पद्महस्तोऽहं तमोलिप्ते तमोनुदः ॥ ८१ ॥

आहिच्छत्र्यां जनानंदः काञ्चीपुर्यां जनप्रियः ॥

कर्णाटस्य पुरे ब्रह्मा ऋषिकुण्डे मुनिस्तथा ॥ ८२ ॥

श्रीकण्ठे श्रीनिवासश्च कामरूपे शुभंकरः ॥

उच्छ्रियाणे देवकर्ता स्रष्टा जालंधरे तथा ॥ ८३ ॥

मल्लिकाख्ये तथा विष्णुर्महेन्द्रे भार्गवस्तथा ॥

गोनर्दः स्थविराकारे ह्युज्जयिन्यां पितामहः ॥ ८४ ॥

कौशांब्यां तु महादेवो ह्ययोध्यायां तु राघवः ॥

विरंचिश्चित्रकूटे तु वाराहो विन्ध्यपर्वते ॥ ८५ ॥

गंगाद्वारे सुरश्रेष्ठो हिमवन्ते तु शंकरः ॥

देहिकायां स्रुचाहस्तः पद्महस्तस्तथाऽर्बुदे ॥८६ ॥

वृन्दावने पद्मनेत्रः कुश हस्तश्च नैमिषे ॥

गोपक्षेत्रे च गोविन्दः सुरेन्द्रो यमुनातटे ॥ ८७ ॥

भागीरथ्यां पद्मतनुर्जनानन्दो जनस्थले ॥

कौंकणे च स मध्वक्षः काम्पिल्ये कनकप्रभः ॥ ८८ ॥

खेटके चान्नदाता च शंभुश्चैव क्रतुस्थले ॥

लंकायां चैव पौलस्त्यः काश्मीरे हंसवाहनः ॥ ८९ ॥

वसिष्ठश्चार्बुदे चैव नारदश्चोत्पलावने ॥

मेधके श्रुतिदाता च प्रयागे यजुषां पतिः ॥ 7.1.107.९० ॥

शिवलिंगे सामवेदो मर्कटे च मधुप्रियः ॥

नारायणश्च गोमन्ते विदर्भायां द्विज प्रियः ॥ ९१ ॥

अंकुलके ब्रह्मगर्भो ब्रह्मवाहे सुतप्रियः ॥

इन्द्रप्रस्थे दुराधर्षश्चंपायां सुरमर्दनः ॥ ९२ ॥

विरजायां महारूपः सुरूपो राष्ट्रवर्धने ॥

कदंबके जनाध्यक्षो देवाध्यक्षः समस्थले ॥ ९३ ॥

गंगाधरो रुद्रपीठे सुपीठे जलदः स्मृतः ॥
त्र्यंबके त्रिपुरारिश्च श्रीशैले च त्रिलोचनः ॥ ९४ ॥
महादेवः प्लक्षपुरे कपाले वेधनाशनः ॥
शृङ्गवेरपुरे शौरिर्निमिषे चक्रधारकः ॥ ९५ ॥
नन्दिपुर्यां विरूपाक्षो गौतमः प्लक्षपादपे ॥
माल्यवान्हस्तिनाथे तु द्विजेन्द्रो वाचिके तथा ॥ ९६ ॥
इन्द्रपुर्यां दिवानाथो भूतिकायां पुरंदरः ॥
हंसबाहुश्च चन्द्रायां चंपायां गरुडप्रियः ॥ ९७ ॥
महोदये महायक्षः सुयज्ञः पूतके वने ॥
सिद्धेश्वरे शुक्लवर्णो विभायां पद्मबोधकः ॥ ९८ ॥
देवदारुवने लिंगी उदकेथ उमापतिः ॥
विनायको मातृस्थाने अलकायां धनाधिपः ॥ ९९ ॥
त्रिकूटे चैव गोविंदः पाताले वासुकिस्तथा ॥
कोविदारे युगाध्यक्षः स्त्रीराज्ये च सुरप्रियः ॥ 7.1.107.१०० ॥
पूर्णगिर्यां सुभोगश्च शाल्मल्यां तक्षकस्तथा ॥
अमरे पापहा चैव अंबिकायां सुदर्शनः ॥ १०१ ॥
नरवाप्यां महावीरः कान्तारे दुर्गनाशनः ॥
पद्मवत्यां पद्मगृहो गगने मृगलाञ्छनः ॥ १०२ ॥
अष्टोत्तरं नामशतं यत्रैतत्परिपठ्यते ॥
तत्रैव मम सांनिध्यं त्रिसंध्यं मधुसूदन ॥ १०३ ॥
तेषामपि यस्त्वेकं पश्येद्वै बालरूपिणम् ॥
सर्वेषां लभते पुण्यं पूर्वोक्तानां च वेधसाम् ॥१०४॥
एतैर्यो नामभिः कृष्ण प्रभासे स्तौति मां सदा ॥
स्थानं मे विजयं लब्ध्वा मोदते शाश्वतीः समाः ॥ १०५ ॥
मानसं वाचिकं चैव कायिकं चैव दुष्कृतम् ॥
तत्सर्वं नाशमायाति मम स्तोत्राऽनु कीर्तनात् ॥ १०६ ॥
पुष्पोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः ॥
ध्यानेन च स्थिरेणाशु प्राप्यते यत्फलं नरैः ॥

तत्फलं समवाप्नोति मम स्तोत्रानु कीर्तनात् ॥ १०७ ॥

ब्रह्महत्यादिपापानि इह लोके कृतान्यपि ॥

अकामतः कामतो वा तानि नश्यंति तत्क्षणात् ॥ १०८ ॥

इदं स्तोत्रं ममाभीष्टं शृणुयाद्वा पठेच्च वा ॥

स मुक्तः पातकैः सर्वैः प्राप्नुयान्महदीप्सितम् ॥ १०९ ॥

अन्यद्रहस्यं ते वच्मि शृणु कृष्ण यथार्थतः ॥ 7.1.107.११० ॥

आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ॥

महती सा तिथिर्ज्ञेया प्रभासे मम वल्लभा ॥ १११ ॥

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां भवेद्यदि ॥

सा महाकार्तिकी पुण्या देवानामपि दुर्लभा ॥ ११२ ॥

मंदे वार्के गुरौ वाऽपि कार्तिकी कृत्तिकायुता ॥

तत्राश्वमेधिकं पुण्यं दृष्ट्वा वै बालरूपिणम् ॥ ॥ ११३ ॥

विशाखासु यदा सूर्यः कृत्तिकासु च चन्द्रमाः ॥

स योगः पद्मको नाम प्रभासे दुर्लभो हरे ॥ ११४ ॥

तस्मिन्योगे नरो दृष्ट्वा प्रभासे बालरूपिणम् ॥

पापकोटियुतो वाऽपि यमलोकं न पश्यति ॥ ११५ ॥

॥ ईश्वर उवाच ॥ ॥

इत्येवं कथितं स्तोत्रं ब्रह्मणा हरये पुनः ॥

मया तव समाख्यातं माहात्म्यं ब्रह्मदैवतम् ॥११६ ॥

सर्वपापहरं नृणां श्रुतं सर्वार्थसाधकम् ॥

भूमिदानं च दातव्यं तत्र यात्राफलेप्सुभिः ॥ ॥ ११७ ॥

कमंडलुः श्वेतवस्त्रं महादानानि षोडश ॥

तत्रैव देवि देयानि ब्रह्मणे बालरूपिणे ॥११८॥

महापर्वणि संप्राप्ते कुर्युः पारायणं द्विजाः ॥

सर्वे ते ब्राह्मणा देवि क्षेत्रमध्यनिवासिनः ॥ ११९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये बालरूपिब्रह्मणो माहात्म्यवर्णनंनाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०८

https://sa.wikisource.org/s/g9q



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि वसूनां लिंगमुत्तमम् ॥

सोमेशादीशदिग्भागे पञ्चाशद्धनुषान्तरे ॥ १ ॥

स्थितं लिंगं महादेवि चतुर्वक्त्रं सुरप्रियम् ॥

प्रत्यूषेश्वरनामानं महापातकनाशनम् ॥ ॥ २ ॥

दर्शनात्तस्य देवस्य सप्तजन्मान्तरोद्भवम्॥

पापं प्रणाशमायाति सत्यंसत्यं वरानने ॥ ३ ॥

॥ देव्युवाच ॥ ॥

कोऽसौ प्रत्यूषनामेति कथं लिंगं प्रतिष्ठितम्॥

कस्य पुत्रः स विख्यात एतन्मे वद शंकर ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

दक्षो ब्रह्मसुतो देवि प्रजापतिरिति स्मृतः ॥

तस्य कन्याः पुरा षष्टिर्ददौ धर्माय वै दश ॥ ५ ॥

तासां मध्ये महादेवि एका विश्वेति विश्रुता ॥

सा धर्माच्च महादेवि अष्टावजनयत्सुतान् ॥ ६ ॥

आपो ध्रुवश्च सोमश्च धरश्चैवाऽनलोऽनिलः ॥

प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ७ ॥

तेषां मध्ये सप्तमोऽसौ प्रत्यूष इति विश्रुतः ॥

स पुत्रकामो देवेशि प्रभासं क्षेत्रमागतः ॥ ८ ॥

स ज्ञात्वा कामिकं क्षेत्रं प्रतिष्ठाप्य महेश्वरम् ॥

तपश्चचार विपुलं दिव्यं वर्षशतं प्रिये ॥

ध्यायन्देवं महादेवं शान्तस्तद्गतमानसः ॥ ९ ॥

ततस्तुष्टो महादेवस्तस्य भक्त्या निरञ्जनः ॥

ददौ तस्य सुतं देवि देवलं योगिनां वरम् ॥ 7.1.108.१० ॥

ततः प्रभृति देवेशि तल्लिंगस्य प्रभावतः ॥

देवलो भगवान्योगी प्रत्यूषस्याऽभवत्सुतः ॥ ११ ॥

अनेन कारणेनासौ प्रत्यूषेश्वरसंज्ञितः ॥ १२ ॥

यश्चानपत्यः पुरुषस्तं समाराधयिष्यति ॥

तस्यान्ववाये देवेशि संततिर्न विनश्यति ॥ १३ ॥

यः प्रत्यूषे महादेवि प्रत्यूषेश्वरमुत्तमम् ॥

पूजयिष्यति सद्भक्त्या सततं नियतात्मवान् ॥

तस्यैष्यति क्षयं पापमपि ब्रह्मवधोद्भवम ॥ १४ ॥

वृषस्तत्रैव दातव्यः सम्यग्यात्राफलेप्सुभिः ॥ १५ ॥

माघे कृष्णचतुर्द्दश्यां जागृयात्तत्र वै निशि ॥

सर्वेषां दानयज्ञानां फलं जागरणाल्लभेत् ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभाससक्षेत्रमाहात्म्ये प्रत्यूषेश्वरमाहात्म्यवर्णनंनामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १०९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अनिलेश्वरमुत्तमम्॥

तस्योत्तरेशानदिक्स्थं धनुषां त्रितये प्रिये ॥ १ ॥

लिंगं महाप्रभावं हि दर्शनात्पापनाशनम् ॥

वसूनां पञ्चमो योऽसावनिलः परिकीर्तितः ॥ २ ॥

स चाऽऽराध्य महादेवं प्रत्यक्षीकृतवान्भवम् ॥

लिंगं प्रतिष्ठयामास सम्यक्छ्रद्धासमन्वितः ॥ ३ ॥

एवमीशप्रभावेन सुतस्तस्याऽप्यभूद्बली ॥

मनोजवेति विख्यातो ह्यविज्ञातगतिस्तथा ॥ ४ ॥

तं दृष्ट्वा व्याधिना मर्त्यो पीड्यते न कदाचन ॥

नान्धो न बधिरो मूको न रोगी न च निर्धनः ॥

कदाचिज्जायते मर्त्यस्तेन दृष्टेन भूतले ॥ ५ ॥

पुष्पमेकं तु यो दद्यात्तस्य लिंगस्य चोपरि ॥

सुखसौभाग्यसंपन्नः स सदा रूपवान्भवेत् ॥ ६ ॥

इत्येवं कथितं देवि माहात्म्यं पापनाशनम्॥

श्रुत्वाऽनुमोद्य भावेन सर्वकामैः समृद्ध्यते ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ऽनिलेश्वरमाहात्म्यवर्णनंनाम नवोत्तरशतत मोऽध्यायः ॥१०९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेद्वरारोहे प्रभासेश्वरमुत्तमम् ॥

गौरीतपोवनाद्देवि पश्चिमे समुदाहृतम् ॥१॥

धनुषां सप्तके देवि नातिदूरे व्यवस्थितम् ॥

स्थापितं तन्महालिंगं वसूनामष्टमेन हि ॥ २ ॥

प्रभास इति नाम्ना हि शिवपूजारतेन वै ॥

स पुत्रकामो देवेशि प्रभासक्षेत्रमागतः ॥३॥

प्रतिष्ठाप्य महालिङ्गं चचार विपुलं तपः ॥

आग्नेयमिति विख्यातं दिव्याब्दानां शतं प्रिये ॥ ४ ॥

ततस्तस्य महादेवि सम्यक्छ्रद्धान्वि तस्य वै ॥

तुतोष भगवान्रुद्रो ददौ यन्मनसीप्सितम् ॥५॥

बृहस्पतेस्तु भगिनी भुवना ब्रह्मवादिनी ॥

प्रभासस्य तु सा भार्या वसूनामष्टमस्य च ॥ ॥६॥

विश्वकर्मा सुतस्तस्याः सृष्टिकर्ता प्रजापतिः॥

देवानां तक्षको विद्वान्मनोर्मातामहः स्मृतः ॥७॥

तक्षकः सूर्यबिंबस्य तेजसः शातनो महान्॥

एवं तस्याऽभवत्पुत्रो वसूनामष्टमस्य वै ॥ ८ ॥

प्रभासनाम्नो देवेशि तल्लिंगाराधनोद्यतः ॥

इति ते कथितं देवि प्रभासेश्वरसूचकम् ॥ ९ ॥

माहात्म्यं सर्वपापघ्नं सर्वकामप्रदं शुभम् ॥

यस्तं पूजयते भक्त्या सम्यक्छ्रद्धासमन्वितः ॥ 7.1.110.१० ॥

भूमिशायी निराहारो जपन्वै शतरुद्रियम् ॥

माघे मासि चतुर्दश्यां स्नात्वा सागरसंगमे ॥ ११ ॥

पंचामृतेन संस्नाप्य पूजयित्वा विधानतः ॥ १२ ॥

य एवं कुरुते देवि सम्यग्यात्रामहोत्सवम् ॥
स मुक्तः पातकैः सर्वैः सर्वकामैः समृद्ध्यते ॥
वृषस्तत्रैव दातव्यः सम्यग्यात्राफलेप्सुभिः ॥ १३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रभासेश्वरमाहात्म्यवर्णनंनाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १११

https://sa.wikisource.org/s/g9t
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुष्करारण्यमुत्तमम् ॥

तस्मादीशानकोणस्थं धनुषां षष्टिभिः स्थितम् ॥ १ ॥

तत्र कुण्डं महादेवि ह्यष्टपुष्करसंज्ञितम् ॥

सर्व पापहरं देवि दुष्प्राप्यमकृतात्मभिः ॥ २ ॥

तत्र कुण्डसमीपे तु पुरा रामेशधीमता ।।

स्थापितं तन्महालिङ्गं रामेश्वर इति स्मृतम् ॥ ३ ॥

तस्य पूजनमात्रेण मुच्यते ब्रह्महत्यया ॥ ४ ॥

॥ श्रीदेव्युवाच ॥ ॥

भगवन्विस्तराद्ब्रूहि रामेश्वरसमुद्भवम् ॥

कथं तत्रागमद्रामः ससीतश्च सलक्ष्मणः ॥ ५ ॥

कथं प्रतिष्ठितं लिङ्गं पुष्करे पापतस्करे ॥

एतद्विस्तरतो ब्रूहि फलं माहात्म्यसंयुतम् ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

चतुर्विंशयुगे रामो वसिष्ठेन पुरोधसा ॥

पुरा रावणनाशार्थं जज्ञे दशरथात्मजः ॥ ७ ॥

ततः कालान्तरे देवि ऋषिशापान्महातपाः ॥

ययौ दाशरथी रामः ससीतः सहलक्ष्मणः ॥ ८ ॥

वनवासाय निष्क्रांतो दिव्यैर्ब्रह्मर्षिभिर्वृतः ॥

ततो यात्राप्रसंगेन प्रभासं क्षेत्रमागतः ॥ ९ ॥

तं देशं तु समासाद्य सुश्रांतो निषसाद ह ॥

अस्तं गते ततः सूर्ये पर्णान्यास्तीर्य भूतले ॥ 7.1.111.१० ॥

सुष्वापाथ निशाशेषे ददृशे पितरं स्वकम् ॥

स्वप्ने दशरथं देवि सौम्यरूपं महाप्रभम् ॥ ११ ॥

प्रातरुत्थाय तत्सर्वं ब्राह्मणेभ्यो न्यवेदयत् ॥

यथा दशरथः स्वप्ने दृष्टस्तेन महात्मना ॥ १२ ॥

॥ ब्राह्मणा ऊचुः ॥ ॥

वृद्धिकामाश्च पितरो वरदास्तव राघव ॥

दर्शनं हि प्रयच्छंति स्वप्नान्ते हि स्ववंशजे ॥ १३ ॥

एतत्तीर्थं महापुण्यं सुगुप्तं शार्ङ्गधन्वनः ॥

पुष्करेति समाख्यातं श्राद्धमत्र प्रदीयताम् ॥ १४ ॥

नूनं दशरथो राजा तीर्थे चास्मिन्समीहते ॥

त्वया दत्तं शुभं पिण्डं ततः स दर्शनं गतः ॥ १५ ॥

॥ ईश्वर उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा रामो राजीवलोचनः ॥

निमंत्रयामास तदा श्राद्धार्हान्ब्राह्मणाञ्छुभान् ॥ १६ ॥

अब्रवील्लक्ष्मणं पार्श्वे स्थितं विनतकंधरम् ॥

फलार्थं व्रज सौमित्रे श्राद्धार्थं त्वरयाऽन्वितः ॥ १७ ॥

स तथेति प्रतिज्ञाय जगाम रघुनंदनः ॥

आनयामास शीघ्रं स फलानि विविधानि च ॥ १८ ॥

बिल्वानि च कपित्थानि तिन्दुकानि च भूरिशः ॥

बदराणि करीराणि करमर्दानि च प्रिये ॥ १९ ॥

चिर्भटानि परूषाणि मातुलिंगानि वै तथा ॥

नालिकेराणि शुभ्राणि इंगुदीसंभवानि च ॥ 7.1.111.२० ॥

अथैतानि पपाचाशु सीता जनकनंदिनी ॥

ततस्तु कुतपे काले स्नात्वा वल्कलभृच्छुचिः ॥ २१ ॥

ब्राह्मणानानयामास श्राद्धार्हान्द्विजसत्तमान् ॥

गालवो देवलो रैभ्यो यवक्रीतोऽथ पर्वतः ॥ २२ ॥

भरद्वाजो वसिष्ठश्च जावालिर्गौतमो भृगुः ॥

एते चान्ये च बहवो ब्राह्मणा वेदपारगाः ॥ २३ ॥

श्राद्धार्थं तस्य संप्राप्ता रामस्याक्लिष्टकर्मणः ॥

एतस्मिन्नेव काले तु रामः सीतामभाषत ॥ २४ ॥

एहि वैदेहि विप्राणां देहि पादावनेजनम् ॥
एतच्छ्रुत्वाऽथ सा सीता प्रविष्टा वृक्षमध्यतः ॥ २५ ॥
गुल्मैराच्छाद्य चात्मानं रामस्यादर्शने स्थिता ॥
मुहुर्मुहुर्यदा रामः सीतासीतामभाषत ॥ २६ ॥
ज्ञात्वा तां लक्ष्मणो नष्टां कोपाविष्टं च राघवम् ॥
स्वयमेव तदा चक्रे ब्राह्मणार्ह प्रतिक्रियाम् ॥ ॥ २७ ॥
अथ भुक्तेषु विप्रेषु कृत पिंडप्रदानके ॥
आगता जानकी सीता यत्र रामो व्यवस्थितः ॥ २८ ॥
तां दृष्ट्वा परुषैर्वाक्यैर्भर्त्सयामास राघवः ॥
धिग्धिक्पापे द्विजांस्त्यक्त्वा पितृकृत्यमहोदयम् ॥
क्व गताऽसि च मां हित्वा श्राद्धकाले ह्युपस्थिते ॥ २९ ॥
॥ ईश्वर उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा भयभीता च जानकी ॥ 7.1.111.३० ॥
कृताञ्जलिपुटा भूत्वा वेपमाना ह्यभाषत ॥
मा कोपं कुरु कल्याण मा मां निर्भर्त्सय प्रभो ॥ ३१ ॥
शृणु यस्माद्विभोऽन्यत्र गता त्यक्त्वा तवान्तिकम् ॥
दृष्टस्तत्र पिता मेऽद्य तथा चैव पितामहः ॥ ३२ ॥
तस्य पूर्वतरश्चापि तथा मातामहादयः ॥
अंगेषु ब्राह्मणेन्द्राणामाक्रान्तास्ते पृथक्पृथक् ॥ ३३ ॥
ततो लज्जा समभवत्तत्र मे रघुनन्दन ॥
पित्रा तत्र महाबाहो मनोज्ञानि शुभानि च ॥ ३४ ॥
भक्ष्याणि भक्षितान्येव यानि वै गुणवन्ति च ॥
स कथं सुकषायाणि क्षाराणि कटुकानि च ॥
भक्षयिष्यति राजेन्द्र ततो मे दुःखमाविशत्॥ ३६ ॥
एतस्मात्कारणान्नष्टा लज्जयाऽहं रघूद्वह ॥
दृष्ट्वा श्वशुरवर्गं स्वं तस्मात्कोपं परित्यज ॥ ३६ ॥
तस्यास्तद्वचनं श्रुत्वा विस्मितो राघवोऽभवत् ॥
विशेषेण ददौ तस्मिञ्छ्राद्धं तीर्थे तु पुष्करे ॥ ३७ ॥

तत्र पुष्करसान्निध्ये दक्षिणे धनुषां त्रये ॥

लिंगं प्रतिष्ठयामास रामेश्वरमिति श्रुतम् ॥ ३५ ॥

यस्तं पूजयते भक्त्या गन्धपुष्पादिभिः क्रमात् ॥

स प्राप्नोति परं स्थानं यत्र देवो जनार्दनः ॥ ३९ ॥

किमत्र बहुनोक्तेन द्वादश्यां यत्प्रदापयेत् ॥

न तत्र परिसंख्यानं त्रिषु लोकेषु विद्यते ॥ 7.1.111.४० ॥

शुक्रांगारकसंयुक्ता चतुर्थी या भवेत्क्वचित् ॥

षष्ठी वात्र वरारोहे तत्र श्राद्धे महत्फलम् ॥ ४१ ॥

यावद्द्वादशवर्षाणि पितरश्च पितामहाः ॥

तर्पिता नान्यमिच्छन्ति पुष्करे स्वकुलोद्भवे ॥ ४२ ॥

तत्र यो वाजिनं दद्यात्सम्यग्भक्तिसमन्वितः ॥

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४३ ॥

इति ते कथितं सम्यङ्माहात्म्यं पापनाशनम् ॥

रामेश्वरस्य देवस्य पुष्करस्य च भामिनि ॥ ४४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुष्करमाहात्म्ये रामेश्वरक्षेत्रमाहात्म्यवर्णनंनामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लक्ष्मणेश्वरमुत्तमम् ॥

रामेशात्पूर्वदिग्भागे धनुस्त्रिंशकसंस्थितम् ॥ १ ॥

स्थापितं लक्ष्मणेनैव तत्र यात्रागतेन वै ॥

महापापहरं देवि तल्लिंगं सुरपूजितम् ॥ २ ॥

यस्तं पूजयते भक्त्या नृत्यगीतादिवादनैः ॥

होमजाप्यैः समाधिस्थः स याति परमां गतिम् ॥ ३ ॥

अन्नोदकं हिरण्यं च तत्र देयं द्विजातये ॥

संपूज्य देवदेवेशं गंधपुष्पादिभिः क्रमात् ॥ ॥ ४ ॥

माघे कृष्णचतुर्दश्यां विशेषस्तत्र पूजने ॥

स्नानं दानं जपस्तत्र भवेदक्षयकारकम् ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रामेश्वरक्षेत्रमाहात्म्ये लक्ष्मणेश्वरमाहात्म्यवर्णनंनाम द्वादशोत्तरशततमो ऽध्यायः ॥ ११२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि जानकीश्वरमुत्तमम् ॥

रामेशान्नैरृते भागे धनुस्त्रिंशकसंस्थितम् ॥ १ ॥

पापघ्नं सर्वजंतूनां जानक्याऽऽराधितं पुरा ॥

प्रतिष्ठितं विशेषेण सम्यगाराध्यशंकरम् ॥ २ ॥

पूर्वं तस्यैव लिंगस्य वसिष्ठेशेति नाम वै ॥

तत्पश्चाज्जानकीशेति त्रेतायां प्रथितं क्षितौ ॥ ३ ॥

ततः षष्टिसहस्राणि वालखिल्या महर्षयः ॥

तत्र सिद्धिमनुप्राप्तास्तेन सिद्धेश्वरेति च ॥ ॥ ४ ॥

ख्यातं कलौ महादेवि युगलिंगं महाप्रभम्॥

तद्दृष्ट्वा मुच्यते पापैर्दुःखदौर्भाग्यसंभवैः ॥ ५ ॥

यस्तं पूजयते भक्त्या नारी वा पुरुषोऽपि वा ॥

संस्नाप्य विधिवद्भक्त्या स मुक्तः पातकैर्भवेत् ॥ ६ ॥

स्नात्वा च पुष्करे तीर्थे यस्तल्लिगं प्रपूजयेत् ॥

नियतो नियताहारो मासमेकं निरन्तरम्॥ ७ ॥

दिनेदिने भवेत्तस्य वाजिमेधाधिकं फलम् ॥

माघे मासि तृतीयायां या नारी तं प्रपूजयेत् ॥

तदन्वयेऽपि दौर्भाग्यं दुःखं शोकश्च नो भवेत् ॥ ८ ॥

इति ते कथितं देवि माहात्म्यं पापनाशनम् ॥

श्रुतं हरति पापानि सौभाग्यं संप्रयच्छति ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये जानकीश्वरमाहात्म्यवर्णनंनाम त्रयोदशोत्तरशततमोऽध्यायः ॥ ॥ ११३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विष्णुं पापप्रणाशनम् ॥

वामनस्वामिनामानं सर्वपातकनाशनम् ॥ १ ॥

पुष्करान्नैर्ऋते भागे धनुर्विंशतिभिः स्मृतम् ॥

यदा बद्धो बलिर्देवि विष्णुना प्रभविष्णुना ॥ २ ॥

तदा तत्र पदं न्यस्तं दक्षिणं विश्वरूपिणा ॥

द्वितीयं मेरुशृंगे तु तृतीयं गगने प्रिये ॥ ३ ॥

यावदूर्ध्वं चोत्क्षिपति तावद्भिन्नं सुदूरतः ॥

पादाग्रेण तु ब्रह्माण्डं निष्क्रान्तं सलिलं ततः ॥ ४ ॥

ततः स्वजानुमात्रेण संप्राप्तं पृथिवीतले ॥

ततो विष्णुपदी गंगा प्रसिद्धिमगमत्क्षितौ ॥ ५ ॥

पूर्वं सा पुष्करे प्राप्ता पुष्करात्सा महानदी ॥

पुष्करं कथ्यते व्योम पुष्करं कथ्यते जलम् ॥

तेन तत्पुष्करं ख्यातं संनिधानं प्रजापतेः ॥ ६ ॥

तत्र स्नानं नरः कृत्वा यः पश्यति हरेः पदम् ॥

स याति परमं स्थानं यत्र देवो हरिः स्वयम् ॥ ७ ॥

तत्र पिंडप्रदानेन तृप्तिः स्यात्कोटिवार्षिकी ॥

पितॄणां च वरारोहे ह्येतदाह हरिः स्वयम् ॥ ८ ॥

अत्र गाथा पुरा गीता वसिष्ठेन महर्षिणा ॥

वामनस्वामिनं दृष्ट्वा तां शृणुष्व समाहिता ॥ ९ ॥

स्नात्वा तु पुष्करे तीर्थे दृष्ट्वा विष्णुपदं ततः ॥

अपि कृत्वा महत्पापं किमतः परितप्यते ॥ 7.1.114.१० ॥

यस्तत्रोपानहौ दद्याद्ब्राह्मणाय यतव्रतः ॥

स यानवरमारूढो विष्णुलोके महीयते ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्र माहात्म्ये वामनस्वामिमाहात्म्यवर्णनंनाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुष्करेश्वरमुत्तमम् ॥

तस्यैव दक्षिणे भागे जानकीश्वरमुत्तमम् ॥ १ ॥

लिंगं महाप्रभावं तु ब्रह्मपुत्रेण पूजितम् ॥

सनत्कुमारमुनिना श्रद्धया हेम पुष्करैः ॥ २ ॥

पूजितं तद्विधानेन तेन तत्पुष्करेश्वरम् ॥

ख्यातं तत्र वरारोहे सर्वपातकनाशनम् ॥ ३ ॥

यस्तं पूजयते भक्त्या गंषपुष्पादिभिः क्रमात् ॥

यात्रा कृता भवेत्तेन पौष्करी नात्र संशयः ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वामनस्वामिमाहात्म्ये पुष्करेश्वरमाहात्म्यवर्णनंनाम पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११६

https://sa.wikisource.org/s/g9y
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवीं सौभाग्यकारिणीम् ॥

कुण्डेश्वरीति विख्यातां पुष्कराद्वायुगोचरे ॥ १ ॥

धनुषां त्रिंशता देवि भूतनाथाच्च नैर्ऋते ॥

संस्थिता पापदमनी दारिद्र्यौघविनाशिनी ॥ २ ॥

तस्या नैर्ऋतदिग्भागे धनुःपञ्चदशे स्थितम् ॥

शंखोदकंनाम कुण्डं सर्वपातकनाशनम् ॥ ३ ॥

तत्र स्नात्वा तु ये मर्त्या नारी वा शुभवारिणि ॥

पूजयेत्तां महादेवि शंखावर्तेति विश्रुताम् ॥ ४ ॥

कलौ कुण्डेश्वरीनाम सर्वसौख्यप्रदायिनी ॥

शंखो नाम पुरा देवि विष्णुना निहतः प्रिये ॥ ५ ॥

तस्य देहं समादाय महान्तं शंखरूपिणम् ॥

तीर्थोदकेन संपूर्य प्रभासं क्षेत्रमागतः ॥ ६ ॥

तत्र शंखं तु प्रक्षाल्य कृतं तीर्थं महाप्रभम् ॥

तत्र पूरितवाञ्छङ्खं मेघगम्भीरनिस्वनम् ॥७ ॥

तस्य नादेन महता देवी तत्र समागता ॥

पृच्छती कारणं तत्र तत्कुण्डस्य समीपगा ॥

तेन कुण्डेश्वरी ख्याता कुण्डं शंखोदकं स्मृतम् ॥ ८ ॥

माघे मासि तृतीयायां यस्तां पूजयते नरः ॥

नारी वा भक्तिसंयुक्ता स गौरीपदमाप्नुयात् ॥ ९ ॥

दंपत्योर्भोजनं तत्र देयं यात्राफलेप्सुभिः ॥

कञ्चुकं फलदानं च गौरिणीनां च भोजनम् ॥ 7.1.116.१० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शंखोदककुण्डेश्वरीगौरीमाहात्म्यवर्णनंनाम षोडशोत्तरशततमोऽध्यायः ॥ ११६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि भूतनाथेश्वरं हरम्॥

कुण्डेश्वर्या ईशभागे धनुषां विंशकेऽन्तरे ॥ १ ॥

कल्पलिंगं महादेवि ह्यनादिनिधनं स्थितम् ॥

पूर्वं त्रेतायुगे देवि वीरभद्रेश्वरीति च ॥ २ ॥

प्रख्यातं भुवि देवेशि कलौ भूतेश्वरं स्मृतम् ॥

पुरा द्वापरसंधौ च तत्र भूतानि कोटिशः ॥३॥

संसिद्धिं परमां जग्मुस्तल्लिंगस्य प्रभावतः ॥

तेन भूतेश्वरं नाम प्रख्यातं धरणीतले॥ ॥ ४ ॥

तत्र कृष्णचतुर्दश्यां रात्रौ संपूज्य शंकरम् ॥

दक्षिणां दिशमाश्रित्य अघोरं पूजयेत्तु यः ॥ ५ ॥

दृढं जितेन्द्रियो भूत्वा निर्भयो ध्यानसंयु तः ॥

तस्यैव जायते सिद्धिर्या काचिद्भूतले स्थिता ॥ ६ ॥

तिलहेमप्रदानं च पिण्डदानं च तत्र वै ॥

पितॄनुद्दिश्य दद्याद्वै तेषां प्रेतत्वमुक्तये ॥ ॥ ७ ॥

इति निगदितमेतद्भूतनाथेश्वरस्य प्रचुरकलिमलानां नाशनं पुण्यहेतुः ॥

पठति च पुरुषो वा यः शृणोतीह भक्त्या सुरवरमहिमानं मुच्यते पातकौघैः ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुंडेश्वरी माहात्म्ये भूतनाथेश्वरमाहात्म्यवर्णनंनाम सप्तदशोत्तरशततमोऽध्यायः ॥ ११७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११८

https://sa.wikisource.org/s/ga0

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गोप्यादित्यमनुत्तमम् ॥

भूतेशाद्वायवे भागे धनुषां त्रिंशकेन्तरे ॥ १ ॥

बलातिबलदैत्यघ्न्या दक्षिणाग्नेयसंस्थितम् ॥

धनुषां दशके देवि संस्थितं पापनाशनम् ॥ २ ॥

तस्योत्पत्तिं प्रवक्ष्यामि महापापहरां शुभाम् ॥

यां श्रुत्वा मानवो भक्त्या दुःखशोकैः प्रमुच्यते ॥ ३ ॥

पुरा कृष्णो महातेजा यदा प्रभासमागतः ॥

सहितो यादवैः सर्वैः षट्पञ्चाशतिकोटिभिः ॥ ४ ॥

षोडशैव सहस्राणि गोप्यस्तत्र समागताः ॥

लक्षमेकं तथा षष्टिरेते कृष्णसुताः प्रिये ॥ ५ ॥

तत्र प्राभासिके क्षेत्रे संस्थिताः पापनाशने ॥

यादवस्थलमासाद्य यावद्रैवतको गिरि ॥ ६ ॥

तत्र द्वादशवर्षाणि संस्थितास्ते महाबलाः ॥

क्षेत्रं पवित्रमादाय शिवलिंगानि ते पृथक् ॥

स्थापयाञ्चक्रिरे सर्वे ह्यंकितानि स्वनामभिः ॥ ७ ॥

एवं समग्रं तत्क्षेत्रं यावद्द्वादशयोजनम् ॥

ध्वजलिंगांकितं चक्रुः सर्वे यादवपुंगवाः ॥ ८ ॥

हस्तहस्तान्तरे देवि प्रासादाः क्षेत्र मध्यतः ॥

सुवर्णकलशोपेताः पताकाकुलितांबराः ॥

विराजंते तु तत्रस्थाः कीर्तिस्तंभा हरेरिव ॥ ९ ॥

ततो गोप्यो महादेवि आद्या याः षोडश स्मृताः ॥

तासां नामानि ते वक्ष्ये तानि ह्येकमनाः शृणु ॥ 7.1.118.१० ॥

लंबिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया ॥

भीषणी नन्दिनीऽशोका सुपर्णा विमलाऽक्षया ॥ ११ ॥
शुभदा शोभना पुण्या हंसस्यैताः कलाः स्मृताः ॥
हंस एव मतः कृष्णः परमात्मा जनार्दनः ॥ १२ ॥
तस्यैताः शक्तयो देवि षोडशैव प्रकीर्तिताः ॥
चन्द्ररूपी ततः कृष्णः कलारूपास्तु ताः स्मृताः ॥ १३ ॥
संपूर्णमण्डला तासां मालिनी षोडशी कला ॥
प्रतिपत्तिथिमारभ्य विचरत्यासु चन्द्रमाः ॥ १४ ॥
षोडशैव कला यास्ता गोपीरूपा वरानने ॥
एकैकशस्ताः संभिन्नाः सहस्रेण पृथक्पृथक् ॥ १५ ॥
एवं ते कथितं देवि रहस्यं ज्ञानसंभवम् ॥
एवं यो वेद पुरुषः स ज्ञेयो वैष्णवो बुधैः ॥ १६ ॥
अथ ताभिः कृताञ्ज्ञात्वा प्रासादान्यादवैः पृथक् ॥
ततो गोप्योऽपि ताः सर्वाः सहस्राणि तु षोडश ॥
कृष्णमाज्ञाप्य भावेन स्थापयांचक्रिरे रविम् ॥ १७ ॥
ऋषिभिर्नारदाद्यैस्तास्तथा क्षेत्रनिवासिभिः ॥
तं प्रतिष्ठापयामासुः प्रतिष्ठाविधिना रविम् ॥ १८ ॥
प्रतिष्ठिते ततः सूर्ये ददुर्दानानि भूरिशः ॥
ततः क्षेत्रनिवासिभ्यो गोभूहेमांबराणि च ॥ १९ ॥
ततस्त ऋषयः सर्वे संतुष्टा हृष्टमानसाः ॥
चक्रुर्नाम रवेस्तत्र गोप्यादित्येति विश्रुतम्॥
सर्वपाप हरं देवं महासौभाग्यदायकम् ॥ 7.1.118.२० ॥
एवं कृते कृतार्थास्ताः संप्राप्यातिमहद्यशः ॥
जग्मुर्यथागतं सर्वा द्वारकां कृष्णसंयुताः ॥ २१ ॥
पुनः कालान्तरे देवि शापाद्दुर्वाससः प्रिये ॥
यादवस्थलतां प्राप्ताः प्रभासे पापनाशने ॥ २२ ॥
एवं ते कथितो देवि गोप्यादित्यसमुद्भवः ॥
माहात्म्यं तस्य ते वच्मि पूजावन्दनजं क्रमात् ॥ २३ ॥
अस्मिन्मित्रवने देवि यो गोपीभिः प्रतिष्ठितः ॥

तस्य दर्शनमात्रेण दुःखशोकैः प्रमुच्यते ॥ २४ ॥

सुतप्तेनेह तपसा यज्ञैर्वा बहुदक्षिणैः ॥

तां गतिं ते नरा यान्ति ये गोपीरविमाश्रिताः ॥ २५ ॥

येन सर्वात्मना भावो गोप्यादित्ये निवेशितः ॥

महेश्वरि कृतार्थत्वात्स श्लाघ्यो धन्य एव सः ॥ २६ ॥

अपि नः स कुले धन्यो जायते कुलपावनः ॥

भाग्यवान्भक्तिभावेन येन भानुरुपासितः ॥ २७ ॥

सप्तम्यां पूजयेद्यस्तु माघे मास्युषसि प्रिये ॥

सप्तावरान्सप्त पूर्वान्पितॄन्सोप्युद्धरेन्नरः ॥ २८ ॥

छिनत्ति रोगान्दुश्चेष्टान्दुर्जयाञ्जयति ह्यरीन् ॥ २९ ॥

न सप्तम्यां स्पृशेत्तैलं नीलवस्त्रं न धारयेत् ॥

न चाप्यामलकैः स्नानं न कुर्यात्कलहं क्वचित् ॥ 7.1.118.३० ॥

नीलरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः ॥

स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥

वृथा तस्य महायज्ञा नीलसूत्रस्य धारणात् ॥ ३१ ॥

नीलीरक्तं यदा वस्त्रं विप्रस्त्वंगेषु धारयेत् ॥

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ३२ ॥

रोमकूपे यदा गच्छेद्रसं नीलस्य कस्यचित् ॥

पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥ ३३ ॥

नीलमध्यं यदा गच्छेत्प्रमादाद्ब्राह्मणः क्वचित् ॥

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ३४ ॥

नीलदारु यदा भिद्येद्ब्राह्मणानां शरीरके ॥

शोणितं दृश्यते तत्र द्विजश्चान्द्रायणं चरेत् ॥ ३५ ॥

कुर्यादज्ञानतो यस्तु नीलं वै दन्तधावनम् ॥

कृत्वा कृच्छ्रद्वयं तस्य शुद्धिरुक्ता मनीषिभिः ॥ ३६ ॥

इत्येतत्कथितं देवि गोप्यादित्यमहोदय ॥

पापघ्नं सर्वजन्तूनां श्रुतं सर्वार्थसाधकम् ॥ ॥ ३७ ॥

गवां शतसहस्रैस्तु दत्तैर्यत्कुरुजांगले ॥

पुण्यं भवति देवेशि तद्गोप्यादित्यदर्शने ॥ ३८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गोप्यादित्यमाहात्म्यवर्णनंनामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ११९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि महादेवीं महाप्रभाम् ॥

बलातिबलदैत्यघ्नीं नाम्नेति प्रथितां क्षितौ ॥ १ ॥

अनादिनिधनां देवीं तत्र क्षेत्रे व्यवस्थिताम् ॥

कोटिभूतपरीवारां सर्वदैत्यनिबर्हिणीम् ॥ २ ॥

॥ देव्युवाच ॥ ॥

बलातिबलदैत्यघ्नी कथमुक्ता त्वया प्रभो ॥

बलातिबलनामानौ कथं दैत्यौ निपातितौ ॥ ३ ॥

कुत्र तिष्ठति सा देवी किंप्रभावा महेश्वर ॥

माहात्म्यमखिलं तस्याः सर्वं विस्तरतो वद ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथां पापप्रणाशनीम् ॥

यां श्रुत्वा मानवो भक्त्या मुच्यते सर्वपातकैः ॥ ५ ॥

आसीद्रक्तासुरोनाम महिषस्य सुतो बली ॥

महाकायो महाबाहुर्हिरण्याक्ष इवापरः ॥ ६ ॥

बलातिबल नामानौ तस्य पुत्रौ बभूवतुः ॥

तौ विजित्य सुरान्सर्वान्देवेन्द्राग्निपुरोगमान् ॥ ७ ॥

त्रैलोक्येऽस्मिन्निरातंकौ चक्रतू राज्यमञ्जसा ॥

तयोः सेना मुखे वीरास्त्रयस्त्रिंशत्प्रकीर्तिताः ॥ ८ ॥

रौद्रात्मानो महायोधाः सहस्राक्षौहिणीमुखाः ॥

सिंहस्कन्धा महाकाया दुरात्मानो महाबलाः ॥ ९ ॥

धूम्राक्षो भीमदंष्ट्रश्च कालवश्यो महाहनुः ॥

ब्रह्मघ्नो यज्ञकोपश्च स्त्रीघ्नः पापनिकेतनः ॥ 7.1.119.१० ॥

विद्युन्माली च बन्धूकः शंकुकर्णो विभावसुः ॥

देवांतको विकर्मा च दुर्भिक्ष क्रूर एव च ॥ ११ ॥

हयग्रीवोऽश्वकर्णश्च केतुमान्वृषभो द्विजः ॥

शरभः शलभो व्याघ्रो निकुंभो मणिको बकः ॥ १२ ॥

शूर्पको विक्षरो माली कालो दण्डककेरलः ॥

एते दैत्या महाकायास्तयोः सेनाधिकारिणः ॥ १३ ॥

एवं तैः पृथिवी व्याप्ता पञ्चाशत्कोटि विस्तरा ॥

एवं ज्ञात्वा तदा देवा भयेनोद्विग्नमानसाः ॥ १४ ॥

सर्वैर्देवर्षिभिः सार्धं जग्मुस्ते हिमवद्वनम् ॥

स्तोत्रेणानेन तां देवीं तुष्टुवुः प्रयतास्तदा ॥ १५ ॥

॥ देवा ऊचुः ॥ ॥

जयाक्षरे जयाऽनंते जयाऽव्यक्ते निरामये ॥

जय देवि महामाये जय देवर्षिवंदिते ॥ १६ ॥

जय विश्वेश्वरे गंगे जय सर्वार्थसिद्धिदे ॥

जय ब्रह्माणि कौमारि जय नारायणीश्वरि ॥ १७ ॥

जय ब्रह्माणि चामुंडे जयेन्द्राणि महेश्वरि ॥

जय मातर्महालक्ष्मि जय पार्वति सर्वगे ॥ १८ ॥

जय देवि जगत्सृष्टे जयैरावति भारति ॥

जयानंते जय जये जय देवि जलाविले ॥ १९ ॥

जयेशानि शिवे शर्वे जय नित्यं जयार्चिते ॥

मोक्षदे जय सर्वज्ञे जय धर्मार्थकामदे ॥ 7.1.119.२० ॥

जय गायत्रि कल्याणि जय सह्ये विभावरि ॥

जय दुर्गे महाकालि शिव दूति जयाऽजये ॥ २१ ॥

जय चण्डे महामुण्डे जय नन्दे शिवप्रिये ॥

जय क्षेमंकरि शिवे जय कल्याणि रेवति ॥ २२ ॥

जयोमे सिद्धिमांगल्ये हरसिद्धे नमोस्तु ते ॥

जयापर्णे जयानन्दे महिषाऽसुरघातिनि ॥ २३ ॥

जय मेधे विशालाक्षि जयानंगे सरस्वति ॥

जयाशेषगुणावासे जयावर्ते सुरान्तके ॥ २४ ॥

जय संकल्पसंसिद्धे जय त्रैलोक्यसुंदरि ॥

जय शुंभनिशुंभघ्ने जय पद्मेऽद्रिसंभवे ॥ २५ ॥

जय कौशिकि कौमारि जय वारुणि कामदे ॥

नमोनमस्ते शर्वाणि भूयोभूयो जयाम्बिके ॥ २६ ॥

त्राहि नस्त्राहि नो देवि शरण्ये शरणागतान् ॥ २७ ॥

सैवं स्तुता भगवती देवैः सर्वैर्वरानने ॥

आत्मानं दर्शयामास भाभासितदिगन्तरम् ॥ २८ ॥

नमस्कृत्य तु तामूचुः सुरास्ते भयनाशनीम् ॥

बलातिबलनामानौ हत्वा दैत्यौ महाबलौ ॥

तेषां चैव महत्सैन्यं पाह्यतो महतो भयात् ॥ २९ ॥

तेषां तद्वचनं श्रुत्वा दत्त्वा तेभ्योऽभयं ततः ॥

बभूवाद्भुतरूपा सा त्रिनेत्रा चेन्दुशेखरा ॥7.1.119.३०॥

सिंहारूढा महादेवि नानाशस्त्रास्त्रधारिणी ॥

सुवक्त्रा विंशतिभुजा स्फूर्जद्विद्युल्लतोपमा ॥३१॥

ततो ऽबिका निनादोच्चैः साट्टहासं मुहुर्मुहुः ॥ ३२ ॥

तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥

प्रकंपिताखिला चोर्वी सरिद्वारिधिमेखला ॥ ३३ ॥

शैलतुंगस्तनी रम्या प्रमदेव भयातुरा ॥

तेऽपि तत्रासुराः प्राप्ताश्चतुरंगबलान्विताः ॥ ३४ ॥

सम्यग्विदितविक्रान्ताः कालान्तकयमोपमाः ॥

रक्षो दानवदैत्याश्च पाताले येऽपि संस्थिताः ॥ ३५ ॥

ते सर्व एव दैत्येन्द्राः कोटिशः समुपागताः ॥

ततोऽभवन्महायुद्धं देव्यास्तत्रासुरैः सह ॥ ३६ ॥

बभूव सर्वब्रह्माण्डे ह्यकाण्डक्षयकारणम् ॥

अक्षौहिणीसहस्राणि त्रयस्त्रिंशत्सुरेश्वरि ॥ ३७ ॥

एकविंशत्सहस्राणि शतान्यष्टौ च सप्ततिः ॥

सानुगानां सयोधानां रथानां वातरंहसाम् ॥ ३८ ॥

हत्वा सा लीलया देवी निन्ये क्षयमनाकुला ॥ ३९ ॥

ततो देव्या हतानां च दानवानां महौजसाम् ॥
गजवाजिरथानां च शरीरैरावृता मही ॥ 7.1.119.४० ॥
कबंधनृत्यसंकुले स्रवद्वसास्थिकर्द्दमे ॥
रणाजिरे निशाचरास्ततो विचेरुरूर्जिताः ॥ ४१ ॥
शृगाल गृधवायसाः परं प्रपातमादधुः ॥
क्वचित्परे निशाचराः प्रपीतशोणितोत्कटाः ॥
प्रतर्प्य चात्मनः पितॄन्समर्चयंस्तथा ऋषीन् ॥ ४२ ॥
गजान्नरांस्तुरंगमान्बभक्षिरे सुनिर्घृणाः ॥
रथोडुपैस्तथा परे तरंति शोणितार्णवम् ॥ ४३ ॥
इति प्रगाढसंगरे सुरारिसंघसंकुले ॥
विराजतेऽम्बिका धनुः शराऽसिशूलधारिणी ॥ ४४ ॥
गजेन्द्रदर्पमर्द्दनी तुरंगयूथपोथिनी ॥
सुरारिसैन्यनाशिनी इतस्ततः प्रपश्यती ॥ ४५ ॥
सिंहाष्टकयुक्ते महा प्रेतके भूधरहंसशुभ्रोज्जलद्भास्वराभे वृषभसमाने मानिनीमथो ते दैत्येन्द्रवीराः पश्यंतः समुद्भूतरोषास्ततोऽपि जग्मुर्नदन्तो रवन्तो रवं मेघनादाः ॥ ४६ ॥
हाहाकारं विकुर्वाणा हन्यमानास्ततोऽसुराः ॥
केचित्समुद्रं विविशुरद्रीन्केचिच्च दानवाः ॥ ४७ ॥
केचिल्लुञ्चितमूर्धानो जाल्मा भूत्वा वनेऽवसन् ॥
दयाधर्मं ब्रुवाणाश्च निर्ग्रंथव्रतमास्थिताः ॥ ४८ ॥
केचित्प्राणपरा भीताः पाखण्डाश्रममास्थिताः ॥
हेतुवादपरा मूढा निःशौचा निरपेक्षकाः ॥ ४९ ॥
ते चाद्यापीह दृश्यन्ते लोके क्षपणकाः किल ॥
तथैव भिन्दकाश्चान्ये शिवशास्त्रबहिष्कृताः ॥ 7.1.119.५० ॥
केचित्कौलव्रता ह्यस्मिन्दृश्यन्ते सकलैर्जनैः॥
सुरास्त्रीमांसभूयिष्ठा विकर्मस्थाश्च लिङ्गिनः ॥ ५१ ॥
प्रायो नैष्कृतिकाः पापा जिह्वोपस्थपरायणा॥
एवं देव्या हताः सर्वे बलातिबलसंयुताः॥५२॥
प्रभासं क्षेत्रमासाद्य संस्थिता सा तदाम्बिका॥

योगिनीनां चतुःषष्ट्या संयुता पापनाशिनी॥
बलातिबलनाशीति प्रभासे प्रथिता क्षितौ॥५३॥
देव्युवाच॥
चतुःषष्टिस्त्वया प्रोक्ता योगिन्यो याः सुरेश्वर॥
तासां नामानि मे ब्रूहि सर्वपापहराणि च॥ ५४॥
॥ ॥ ईश्वर उवाच ॥ ॥
शृणु देवि प्रवक्ष्यामि योगिनीनां महोदयम् ॥
सर्वरक्षाकरं दिव्यं महाभयविनाशनम् ॥ ५५ ॥
आदौ तत्र महालक्ष्मीर्नंदा क्षेमंकरी तथा ॥
शिवदूती महाभद्रा भ्रामरी चन्द्रमण्डला ॥ ५६ ॥
रेवती हरसिद्धिश्च दुर्गा विषमलोचना ॥
सहजा कुलजा कुब्जा मायावी शांभवी क्रिया ॥ ५७ ॥
आद्या सर्वगता शुद्धा भावगम्या मनोतिगा ॥
विद्याविद्या महामाया सुषुम्ना सर्वमंगला ॥ ५८ ॥
ॐकारात्मा महादेवि वेदार्थजननी शिवा ॥
पुराणान्वीक्षिकी दीक्षा चामुण्डा शंकरप्रिया ॥ ५९ ॥
ब्राह्मी शांतिकरी गौरी ब्रह्मण्या ब्राह्मणप्रिया ॥
भद्रा भगवती कृष्णा ग्रहनक्षत्रमालिनी ॥ 7.1.119.६० ॥
त्रिपुरा त्वरिता नित्या सांख्या कुंडलिनी ध्रुवा ॥
कल्याणी शोभना निरया निष्कला परमा कला ॥ ६१ ॥
योगिनी योगसद्भावा योगगम्या गुहाशया ॥
कात्यायनी उमा शर्वा ह्यपर्णेति प्रकीर्तिता ॥ ६२ ॥
चतुःषष्टिर्महादेवि एवं ते परिकीर्तिताः ॥
स्तोत्रेणानेन दिव्येन भक्त्या यः स्तौति चंडिकाम् ॥ ६३ ॥
तं पुत्रमिव शर्वाणी सर्वापत्स्वभिरक्षति ॥
चतुर्दश्यामथाष्टम्यां नवम्यां च विशेषतः ॥ ६४ ॥
उपवासैकभक्तेन तथैवायाचितेन च ॥
गृहीतनियमा देवि ये जपंति च चंडिकाम् ॥ ६५ ॥

वर्षार्धं वर्षमेकं वा सिद्धास्ते तत्त्वचारिणः ॥

आश्वयुक्छुक्लपक्षे च मन्वादिष्वष्टकासु च ॥ ६६ ॥

कृत्वा महोत्सवं देवीं यजेच्छ्रेयोऽभिवृद्धये ॥

पादुके धारयेद्देव्या दुर्गाभक्तो हिरण्मये ॥ ६७ ॥

प्रमादविघ्नशांत्यर्थं क्षुरिकां च सदा पुमान् ॥

पशुमांसासवैश्चैवमासुरं भावमाश्रिताः ॥ ६८ ॥

ये यजन्त्यम्बिकां ते स्युर्दैत्या ऐश्वर्यभोगिनः ॥

देवत्वं सात्त्विका यांति सात्त्विकीं भक्तिमास्थिताः ॥ ६९ ॥

एतत्ते कथितं देवि माहात्म्यं पापनाशनम् ॥

बलातिबलनाशिन्या देव्या सर्वार्थसाधकम् ॥

प्रभासक्षेत्रसंस्थायाः संक्षेपात्कीर्तिवर्धनम् ॥ ७० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बलातिबलदैत्यघ्नीमाहात्म्यवर्णनंनामैकोनविंशत्युत्तरशततमोऽध्यायः ॥ ११९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गोपीश्वरमनुत्तमम् ॥

बलातिबलदैत्यघ्न्या उत्तरे धनुषां त्रये ॥ १ ॥

संस्थितं पापशमनं गोपीभिः संप्रतिष्ठितम् ॥

समाराध्य महादेवं पुत्रहेतोर्महेश्वरम् ॥

सर्वकामप्रदं नृणां पूजितं संततिप्रदम् ॥ २ ॥

चैत्रशुक्लतृतीयायां यस्तं पूजयते नरः ॥

गंध पुष्पोपहारैश्च स प्राप्नोतीप्सितं फलम् ॥ ३ ॥

एवं संक्षेपतः प्रोक्तं माहात्म्यं पापनाशनम् ॥

गोपीश्वरस्य देवस्य प्रभासक्षेत्रवासिनः ॥ ४ ॥

इति श्री स्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बलातिबलदैत्यघ्नीमाहात्म्ये गोपीश्वर माहात्म्यवर्णनंनाम विंशत्युत्तरशततमोऽध्यायः ॥ १२० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२१

https://sa.wikisource.org/s/ga3
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि रामेश्वरमनुत्तमम् ॥

जामदग्न्येन रामेण स्वयं तत्र प्रतिष्ठितम् ॥ १ ॥

गोपीश्वराच्च वायव्ये धनुषां त्रिंशकेऽन्तरे ॥

स्थितं महाप्रभावं हि लिंगं पातकनाशनम् ॥ २ ॥

यदा रामेण देवेशि जमदग्निसुतेन वै ॥

कृतो मातृवधो घोरः पितुराज्ञानुवर्तिना ॥ ३ ॥

तदा मनसि संतापं कृत्वा निर्वेदमागतः ॥

ततः प्रसन्नतां यातो जमदग्निर्महातपाः ॥ ४ ॥

ददौ वरं ततस्तुष्टो रेणुकायाश्च जीवितम् ॥

एवं यद्यपि सा तत्र जीविता वरवर्णिनी ॥ ५ ॥

तथापि सघृणो देवि जामदग्न्यो महाप्रभः ॥

प्रभासं क्षेत्रमासाद्य तपश्चक्रे ततोऽद्भुतम् ॥ ६ ॥

प्रतिष्ठाप्य महादेवं शंकरं लोकशंकरम् ॥

दिव्यं वर्षशतं साग्रं ततस्तुष्टो महेश्वरः ॥ ७ ॥

ददौ तस्येप्सितं सर्वं स्वयं तत्रैव संस्थितः ॥

ततः कृतार्थतां प्राप्तो जामदग्न्यो महाऋषिः ॥ ८ ॥

त्रिःसप्तकृत्वः पृथिवीं जित्वा हत्वा च क्षत्रियान् ॥

कृत्वा पंचनदं तत्र कुरुक्षेत्रे महामनाः ॥ ९ ॥

रक्तैः संपूर्णतां नीत्वा क्षत्रियाणां वरानने ॥

आनृण्यं समनु प्राप्तः पितॄणां यो महाबलः ॥ 7.1.121.१० ॥

एवं क्षत्त्रान्तकं कृत्वा दत्त्वा विप्रेषु मेदिनीम् ॥

कृतार्थतामनुप्राप्तस्त्रैलोक्ये ख्यातपौरुषः ॥ ११ ॥

तेन तत्स्थापितं लिंगं क्षेत्रे प्राभासिके शुभे ॥

यस्तं पूजयते भक्त्या पापयुक्तोऽपि मानवः ॥
स मुक्तः पातकैः सर्वैर्याति लोकमुमापतेः ॥ १२ ॥
ज्येष्ठकृष्णचतुर्दश्यां जागृयात्तत्र यो नरः ॥
सोऽश्वमेधफलं प्राप्य मोदते दिवि देववत् ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये जामदग्न्येश्वरमाहात्म्यवर्णनं- नामैकविंशत्युत्तरशततमोऽध्यायः ॥ १२१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं चित्रांगदेश्वरम् ॥

तस्यैव नैर्ऋते भागे धनुर्विंशतिभिः स्थितम्॥ १ ॥

चित्रांगदेन देवेशि गंधर्वपतिना प्रिये ॥

क्षेत्रं पवित्रं ज्ञात्वा वै लिंगं तत्र प्रतिष्ठितम् ॥

कृत्वा तपो महाघोरं समाराध्य महेश्वरम् ॥ २ ॥

अथ यो भावसंयुक्तस्तल्लिगं संप्रपूजयेत् ॥

गांधर्वलोकमाप्नोति गन्धर्वैः सह मोदते ॥ ३ ॥

तत्र शुक्लत्रयोदश्यां संस्नाप्य विधिना शिवम् ॥

पूजयेद्विविधैः पुष्पैर्गंधधूपैरनु क्रमात् ॥

स प्राप्नोत्यखिलं कामं मनसा यद्यदीप्सितम् ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये चित्रांगदेश्वरमाहात्म्यवर्णनंनाम द्वाविंशत्युत्तरशततमोऽध्यायः ॥ १२२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२३

https://sa.wikisource.org/s/ga5



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि रावणेश्वरमुत्तमम् ॥

तस्माद्दक्षिणनैर्ऋत्ये धनुषां षोडशे स्थितम् ॥ १ ॥

प्रतिष्ठितं दशास्येन सर्वपातकनाशनम् ॥

पौलस्त्यो रावणो देवि राक्षसस्तु सुदारुणः ॥ २ ॥

त्रैलोक्यविजयाकाङ्क्षी पुष्पकेण चचार ह ॥

कस्यचित्त्वथ कालस्य विमानं तस्य पुष्पकम्॥ ३॥।

व्रजद्वै व्योममार्गेण निश्चलं सहसाऽभवत् ॥

स्तंभितं पुष्पकं दृष्ट्वा रावणो विस्मयान्वितः ॥ ४ ॥

प्रहस्तं प्रेषयामास किमिदं व्रज मेदिनीम् ॥

अहताऽस्य गतिर्यस्मात्त्रैलोक्ये सचराचरे ॥ ५ ॥

तत्कस्मान्निश्चलं जातं विमानं पुष्पकं मम ॥

अथाऽसौ सत्वरो देवि जगाम वसुधातले ॥ ६ ॥

अपश्यद्देवदेवेशं श्रीसोमेशं महाप्रभम् ॥

स्तूयमानं सुरगणैः शतशोऽथ सहस्रशः ॥ ७ ॥

तं दृष्ट्वा राक्षसे न्द्राय तत्सर्वं विस्तरात्प्रिये ॥

प्रहस्तः कथयामास यद्दृष्टं क्षेत्रमध्यतः ॥ ८ ॥

॥ प्रहस्त उवाच ॥ ॥

राक्षसेश महाबाहो शिवक्षेत्रं निजं प्रभो ॥

प्रभासेति समाख्यातं गणगन्धर्वसेवितम् ॥ ९ ॥

तत्र सोमेश्वरो देवः स्वयं तिष्ठति शङ्करः ॥

अब्भक्षैर्वायुभक्षैश्च दंतोलूखलिभिस्तथा ॥

ऋषिभिर्वालखिल्यैश्च पूज्यमानः समंततः ॥ 7.1.123.१० ॥

प्रभावात्तस्य देवस्य नेदं गच्छति पुष्पकम् ॥

न स प्रालंघ्यते देवो ह्यलंघ्यो यः सुरासुरैः ॥ ११ ॥
॥ ईश्वर उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा विस्मयोत्फुल्ललोचनः ॥
अवतीर्य धरापृष्ठं सोमेशं समपश्यत ॥ १२ ॥
पूजयामास देवेशि भक्त्या परमया युतः ॥
रत्नैर्बहुविधैर्वस्त्रैर्गन्धपुष्पानुलेपनैः ॥ १३ ॥
अथ पौरजना दृष्ट्वा रावणं राक्षसेश्वरम् ॥
सर्वदिक्षु वरारोहे भयाद्भीताः प्रदुद्रुवुः ॥ १४ ॥
शून्यं समभवत्सर्वं तत्र देवो व्यवस्थितः ॥
एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥ १५ ॥
दशग्रीव महाबाहो अयने चोत्तरे तथा ॥
यात्राकाले तु देवस्य सर्वपापप्रणाशने ॥ १६ ॥
दूरतः समनुप्राप्ता भूरिलोका द्विजातयः ॥
राक्षसानां भयाद्भीताः प्रयांति हि दिशो दश ॥ १७ ॥
भयान्मा त्वं राक्षसेन्द्र यात्राविघ्नकरो भव ॥
बाल्ये वयसि यत्पापं वार्द्धक्ये यौवनेऽपि च ॥
तत्सर्वं क्षालयेन्मर्त्यो दृष्ट्वा सोमेश्वरं प्रभुम् ॥ १८ ॥
ततोऽसौ राक्षसेन्द्रस्तु गत्वैकान्ते सुगह्वरे ॥
लिंगं च स्थापयामास भक्त्या परमया युतः ॥ १९ ॥
ततस्तन्निरतो भूत्वा सर्वैस्तै राक्षसेश्वरः ॥
पूजयामास देवेशि उपवासपरायणः ॥ 7.1.123.२० ॥
चकार पुरतस्तस्य गीतवाद्येन जागरम् ॥
ततोऽर्धरात्रसमये वागुवाचाशरीरिणी ॥ २१ ॥
दशग्रीव महाबाहो परितुष्टोऽस्मि तेऽनघ ॥
मम प्रसादात्त्रैलोक्यं वशगं ते भविष्यति ॥
अत्र संनिहितो नित्यं स्थास्याम्यहमसंशयम् ॥ ॥ २२ ॥
ये चैतत्पूजयिष्यंति लिंगं भक्तियुता नराः ॥
अजेयास्ते भविष्यंति शत्रूणां राक्षसेश्वर ॥ २३ ॥

यास्यंति परमां सिद्धिं मत्प्रसादादसंशयम् ॥
एवमुक्त्वा वरारोहे विरराम वृषध्वजः ॥ २४ ॥
रावणोऽपि स संतुष्टो भूयोभूयो महेश्वरम् ॥
पूजयित्वा च तल्लिंगं समारुह्य च पुष्पकम् ॥
त्रैलोक्यविजयाकांक्षी इष्टं देशं जगाम ह ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रावणेश्वरमाहात्म्यवर्णनंनाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गौरीं सौभाग्यदायिनीम् ॥

पश्चिमे रावणेशस्य धनुषां पञ्चके स्थिताम् ॥ १ ॥

यत्रातप्यत्तपो घोरं स्वयं देवी ह्यरुंधती ॥

सौभाग्यं कांक्षमाणा सा गौरीपूजापरायणा ॥ २ ॥

संप्राप्ता परमां सिद्धिं तस्या देव्याः प्रभावतः ॥

तृतीयायां शुक्लपक्षे माघे मासि वरानने ॥ ३ ॥

यस्तां पूजयते भक्त्या स सौभाग्यमवाप्नुयात्॥

अन्यजन्मनि देवेशि नात्र कार्या विचारणा ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये सौभाग्येश्वरीमाहात्म्यवर्णनंनाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥१२४॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महालिंगं महादेवि सुरप्रियम् ॥

रावणेश्वरवायव्ये धनुषां त्रिंशकेऽन्तरे ॥ १ ॥

स्थितं कामप्रदं लिंगं सर्वपातकनाशनम् ॥

पौलोमीश्वरनामाढ्यं पौलोम्या संप्रतिष्ठितम् ॥ २ ॥

तारकेण यदा ध्वस्तास्त्रिदशाः संगरे स्थिताः ॥

त्रैलोक्यं विहृतं सर्वं स्वयमिन्द्रत्वमागतः ॥ ३ ॥

तदा शक्रः सुदुःखार्तो भयोद्विग्नो ननाश वै ॥

तदा तद्भार्यया देवि इन्द्राण्या शोककर्षया ॥ ४ ॥

इन्द्रस्य जयमिच्छन्त्या शंभुराराधितस्तया ॥

ततस्तुष्टो महादेवस्तामुवाच शुभेक्षणाम्॥ ५ ॥

॥ भगवानुवाच ॥ ॥

उत्पत्स्यति सुतोऽस्माकं षण्मुखस्तु महाबलः ॥

तारकं दैत्यराजानं स चैनं घातयिष्यति ॥ ६ ॥

गच्छ त्वं विज्वरा भूत्वा शृणु भूयो वचश्च मे ॥ ७ ॥

अत्र स्थितमिदं लिंगं योऽस्माकं पूजयिष्यति ॥

स नूनं मे गणो भूत्वा मत्सकाशमुपेष्यति ॥ ८ ॥

एवमुक्ता गता साध्वी देवराड्यत्र संस्थितः ॥

सर्वद्दुःखविनिर्मुक्ता सर्वदैत्यभयोज्झिता ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पौलोमोश्वरमाहात्म्यवर्णनंनाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शांडिल्येश्वरमुत्तमम् ॥

ब्रह्मणः पश्चिमे भागे धनुषां षोडशांतरे ॥ १ ॥

महाप्रभावं लिङ्गं तद्दर्शनात्पापनाशनम् ॥ २ ॥

शांडिल्योनाम ब्रह्मर्षिः सारथिर्ब्रह्मणः स्मृतः ॥

तपस्वी स महातेजा ज्ञाननिष्ठो जितेन्द्रियः ॥ ३ ॥

स प्रभासं समासाद्य तपस्तेपे सुदारुणम् ॥

प्रतिष्ठाप्य महालिंगं सोमेशादुत्तरे स्थितम् ॥ ४ ॥

स स्वयं पूजयामास दिव्याब्दानां शतं प्रिये ॥

ततोऽभिलषितं प्राप्य कृतकृत्यो बभूव ह ॥ ५ ॥

नन्दीश्वरप्रसादेन अणिमादिगुणैर्युतः ॥

तं दृष्ट्वा तु नरः सद्यो विपापः संप्रजायते ॥ ६ ॥

बाल्ये वयसि यत्पापं वार्धक्ये यौवनेऽपि वा ॥

अज्ञानाज्ज्ञानतो वाऽपि यः करोति नरः प्रिये ॥

तत्सर्वं नाशमायाति शांडिल्येश्वरदर्शनात् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये शाण्डिल्येश्वरमाहात्म्यवर्णनंनाम षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि क्षेमेश्वरमनुत्तमम् ॥

तस्मादुत्तरकोणस्थं कपालेशाग्निगोचरे ॥ १ ॥

धनुषां पंचदशके कपालेश्वरतः स्थितम् ॥

लिंगं महाप्रभावं हि सर्वपातकनाशनम् ॥ २ ॥

क्षेममूर्तिः पुरा राजा बभूव स महाबलः ॥

तेन तत्र तपस्तप्तं चिरकालं महात्मना ॥ ॥ ३ ॥

ततः संस्थापितं लिंगं भक्त्या भावितचेतसा ॥

तद्दृष्ट्वा क्षेममायाति कार्यं क्षेमेण सिद्ध्यति ॥ ४ ॥

सर्वकामसमृद्धात्मा भूया ज्जन्मनिजन्मनि ॥

एवं क्षेमेश्वरं लिंगं ख्यातं पातकनाशनम् ॥ ५ ॥

सर्वकामप्रदं नृणां श्रुतं सौभाग्यदायकम् ॥

दर्शनेनापि तस्यापि गोशतस्य फलं स्मृतम् ॥ ६ ॥

तस्मात्क्षेत्रफलाकांक्षी नित्यं तल्लिंगमाश्रयेत् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये क्षेमंकरेश्वरमाहात्म्यवर्णनंनाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२८



॥ ईश्वर उवाच ॥

ततो गच्छेन्महादेवि सागरादित्यमुत्तमम् ॥

भैरवेशात्पश्चिमतो रुद्रान्मृत्युञ्जयात्तथा ॥ १ ॥

कामेशाद्दक्षिणाग्नेये नातिदूरे व्यवस्थितम् ॥

सर्व रोगप्रशमनं दारिद्र्यौघविघातकम् ॥

प्रतिष्ठितं महादेवि सगरेण महात्मना ॥ २ ॥

षष्टिपुत्रसहस्राणि यः प्रापारातिसूदनः ॥

सूर्यं तत्र समाराध्य सगरः पृथिवीपतिः ॥ ३ ॥

य एष सागरो देवि योजनायतविस्तरः ॥

आयतोऽशीतिसाहस्रं योजनानां प्रकीर्तितः ॥ ४ ॥

अस्मिन्मन्वन्तरे क्षिप्तः सागरैश्च चतुर्दिशम् ॥

तस्येदं कीर्तितं देवि नाम सागरसंज्ञितम् ॥ ५ ॥

यस्याद्यापीह गायन्ति पुराणे प्रथितं यशः ॥

तेनायं स्थापितो देवो भास्करो वारितस्करः ॥ ६ ॥

तं दृष्ट्वा न जडो नान्धो न दरिद्रो न दुःखितः ॥

न चैवेष्टवियोगी स्यान्न रोगी नैव पापकृत् ॥ ७ ॥

माघे मासि महादेवि सिते पक्षे जितेन्द्रियः ॥

षष्ठ्यामुपोषितो भूत्वा रात्रौ तस्याग्रतः स्वपेत् ॥ ८ ॥

विबुद्धस्त्वथ सप्तम्यां भक्त्या भानुं समर्चयेत् ॥

ब्राह्मणान्भोजयेद्भक्त्या वित्तशाठ्यं विवर्जयेत् ॥ ९ ॥

सुतप्तेनेह तपसा यज्ञैर्वा बहुदक्षिणैः ॥

तां गतिं न नरा यान्ति यां गताः सूर्यमाश्रिताः ॥ 7.1.128.१० ॥

भक्त्या तु पुरुषैः पूजा कृता दूर्वांकुरैरपि ॥

भानुर्ददाति हि फलं सर्वयज्ञैः सुदुर्लभम् ॥ ११ ॥

तस्मात्सर्वप्रयत्नेन सूर्यमेवाभिपूजयेत् ॥

जनकादयो यथा सिद्धिं गता भानुं प्रपूज्य च ॥ १२ ॥

सर्वात्मा सर्वलोकेशो देवदेवः प्रजापतिः ॥

सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ॥ १३ ॥

वसन्ते कपिलः सूर्यो ग्रीष्मे काञ्चनसप्रभः ॥

श्वेतवर्णश्च वर्षासु पांडुः शरदि भास्करः ॥ १४ ॥

हेमन्ते ताम्रवर्णस्तु शिशिरे लोहितो रविः ॥

एवं वर्णविशेषेण ध्यायेत्सूर्यं यथाक्रमम् ॥ १५ ॥

पूजयित्वा विधानेन यतात्मा संयतेन्द्रियः ॥

पठेन्नामसहस्रं तु सर्वपातकनाशनम् ॥ ॥ १६ ॥

॥ देव्युवाच ॥ ॥

नाम्नां सहस्रं मे ब्रूहि प्रसादाञ्छंकर प्रभो ॥

तुल्यं नामसहस्रस्य किमप्यन्यत्प्रकीर्तय ॥ १७ ॥

॥ ॥ ईश्वर उवाच ॥ ॥

अलं नामसहस्रेण पठस्वैवं शुभं स्तवम् ॥

यानि गुह्यानि नामानि पवित्राणि शुभानि च ॥

तानि ते कीर्तयिष्यामि प्रयत्नादवधारय ॥ १८ ॥

विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ॥

लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ॥ १९ ॥

लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ॥

तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ 7.1.128.२० ॥

गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥

एकविंशतिरित्येष स्तव इष्टो महात्मनः ॥ २१ ॥

शरीरारोग्यदश्चैव धनवृद्धियशस्करः ॥

स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ ॥ २२ ॥

यश्चानेन महादेवि द्वे संध्येऽस्तमनोदये ॥

स्तौत्यर्कं प्रयतो भूत्वा सर्वपापैः प्रमुच्यते ॥

सर्वकामसमृद्धात्मा सूर्यलोकं स गच्छति ॥ २३ ॥

इत्येवं कथितं देवि माहात्म्यं सागरार्कजम् ॥

श्रुतं दुःखौघशमनं महापातकनाशनम् ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सागरादित्यमाहात्म्यवर्णनंनामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ ॥ १२८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १२९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अक्षमालेश्वरं परम् ॥

सागरार्कादीशकोणे पंचाशद्धनुषान्तरे ॥ १ ॥

संस्थितं पापशमनं युगलिंगं महाप्रभम् ॥

अक्षमालेश्वरंनाम पुरा तस्य प्रकीर्तितम् ॥

उग्रसेनेश्वरं नाम ख्यातं तस्यैव साम्प्रतम् ॥ २॥

॥ देव्युवाच ॥ ॥

अक्षमालेश्वरं नाम यत्पूर्वं समुदाहृतम् ॥

कथं तदभवद्देव कथयस्व प्रसादतः ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

आसीत्पुरा महादेवि सती चाध मयोनिजा ॥

अक्षमालेति वै नाम्ना सतीधर्मपरायणा ॥ ४ ॥

कदाचित्समनुप्राप्ते दुर्भिक्षे कालपर्ययात् ॥

ऋषयश्च महादेवि क्षुधाक्रान्ता विचेतसः ॥ ५ ॥

सर्वे चान्नं परीप्संतो गताश्चण्डालवेश्मनि ॥

ज्ञात्वान्नसंग्रहं तस्य प्रार्थयाञ्चक्रुरन्त्यजम् ॥ ६ ॥

भोभोऽन्त्यज महाबुद्धे रक्षास्मानन्नदानतः ॥

प्राणसंदेहमापन्नान्कृशांगान्क्षुत्प्रपीडितान् ॥ ७ ॥

अहो धन्योऽसि पूज्योऽसि न त्वमन्त्यज उच्यसे ॥

यदस्मिन्प्रलये याते स्थितं धान्यं गृहे तव ॥ ८ ॥

अनावृष्टिहते देशे सस्ये च प्रलयं गते ॥

एकं यो भोजयेद्विप्रं कोटिर्भवति भोजिता ॥ ९ ॥

॥ अन्त्यज उवाच ॥

अहो आश्चर्यमतुलं यदेतद्दृश्यतेऽधुना ॥

यदेतन्मद्गृहं प्राप्ता ऋषयश्चान्नकांक्षिणः ॥ 7.1.129.१० ॥

शूद्रान्नमपि नादेयं ब्राह्मणैः किमुतान्त्यजात् ॥ ११ ॥

आमं वा यदि वा पक्वं शूद्रान्नं यस्तु भक्षति ॥

स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले ॥ १२ ॥

अमृतं बाह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥

वैश्यान्नमन्नमित्याहुः शूद्रान्नं रुधिरं स्मृतम् ॥ १३ ॥

शूद्रान्नं शूद्रसंपर्कं शूद्रेण च सहासनम् ॥

शूद्रादन्नागमश्चैव ज्वलंतमपि पातयेत् ॥ १४ ॥

अग्निहोत्री तु यो विप्रः शूद्रान्नान्न निवर्तते ॥

एते तस्य प्रणश्यंति आत्मा ब्रह्म त्रयोऽग्नयः ॥ १५ ॥

शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि ॥

षण्मासाभ्यन्तरे विप्रः पिशाचः सोऽभिजायते ॥ १६ ॥

शूद्रान्नेन द्विजो यस्तु अग्निहोत्रं जुहोति च ॥

चण्डालो जायते प्रेत्य शूद्राच्चैवेह दैवतः ॥ १७ ॥

यस्तु भुञ्जति शूद्रान्नं मासमेकं निरन्तरम्॥

इह जन्मनि शूद्रत्वं मृतः शूद्रोऽभिजायते ॥ १८ ॥

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्॥

आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः ॥ १९ ॥

कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च ॥

गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥ 7.1.129.२० ॥

पूयं चिकित्सकस्यान्नं पुंश्चल्याश्चान्नमिन्द्रियम्॥

विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥ २१ ॥

सहस्रकृत्वस्त्वेतेषामन्ने यद्भक्षिते भवेत् ॥

तदेकवारं भुक्तेन कन्याविक्रयिणो भवेत् ॥ २२ ॥

सहस्रकृत्वस्तस्यैव भुक्तेऽन्ने यत्फलं भवेत् ॥

तदन्त्यजानामन्नेन सकृद्भुक्तेन वै भवेत् ॥ २३ ॥

तत्कथं मम विप्रेन्द्राश्चंडालस्याधमात्मनः ॥

धर्ममेवं विजानन्तो नूनमन्नं जिहीर्षथ ॥ २४ ॥ ॥

॥ ऋषय ऊचुः ॥ ॥

जीवितात्ययमापन्नो योऽन्नमाद्रियते ततः ॥

आकाश इव पंकेन न स पापेन लिप्यते ॥ २५ ॥

अजीगर्तः सुतं हंतुमुपसर्पन्बुभुक्षितः ॥

न चालिप्यत पापेन क्षुत्प्रतीघातमाचरन् ॥ २६ ॥

भारद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने ॥

बह्वीर्गा उपजग्राह बृहज्ज्योतिर्महामनाः ॥ २७ ॥

क्षुधार्तो गीतमभ्यागाद्विश्वामित्रः श्वजाघनीम् ॥

चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ २८ ॥

श्वमांसमिच्छन्नर्तौ तु धर्मान्न च्ययते स्म सः ॥

प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥ २९ ॥

एवं ज्ञात्वा धर्मबुद्धे सांप्रतं मा विचारय ॥

ददस्वान्नं ददस्वान्नमस्माकमिह याचताम्॥ 7.1.129.३० ॥

॥ चंडाल उवाच ॥ ॥

यद्येवं भवतां कार्यमिदमंगीकृतं धुवम्॥

तदियं मत्सुता कन्या भवद्भिः परिगृह्यताम् ॥ ३१ ॥

भवतां योग्रणीर्ज्येष्ठः स चेमामुद्वहेद्ध्रुवम् ॥

दास्ये वर्षाशनं पश्चादीप्सितं भवतां द्विजाः ॥ ३२ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्ता ऋषयो देवि लज्जयाऽऽनतकन्धराः ॥

प्रत्यालोच्य यथान्यायं वसिष्ठं समनूद्वहन्॥ ३३ ॥

वसिष्ठोऽपि समाख्याय आपद्धर्मं महामनाः ॥

कालस्यानन्तरप्रेक्षी प्रोद्ववाहाऽन्त्यजाङ्गनाम् ॥

अक्षमालेति वै नाम्नीं प्रसिद्धा भुवनत्रये ॥ ३४ ॥

यदा स्वकीयतेजोभिरर्कबिंबमरुन्धत ॥

अरुंधती तदा जाता देवदानव वंदिता ॥ ३५ ॥

यादृशेन तु भर्त्रा स्त्री संयुज्येत यथाविधि ॥

सा तादृगेव भवति समुद्रेणेव निम्नगा ॥ ३६ ॥

अक्षमाला वसिष्ठेन संयुक्ताऽधम योनिजा ॥

शार्ङ्गीव मन्दपालेन जगाम ह्यर्हणीयताम् ॥ ३७ ॥

एवं कालक्रमेणैव प्रभासं क्षेत्रमागताः ॥

सप्तर्षयो महात्मानो ह्यरुंधत्या समन्विताः ॥ ३८ ॥

तीर्थानि प्रेषयामासुः सर्वसिद्धिप्रदानि ताम् ॥ ३९ ॥

एषामन्वेषमाणानां तव देवी ह्यरुंधती॥

अपश्यल्लिंगमेकं तु वृक्षजालांतरे स्थितम् ॥ 7.1.129.४० ॥

तं दृष्ट्वा देवदेवेशमेवं जातिस्मराऽभवत् ॥

पूर्वस्मिन्जन्मनि मया रजोभावांतरस्थया ॥ ४१ ॥

अज्ञानभावाद्देवेशो नूनं चात्रार्चितः। शिवः ॥

तस्मात्कर्मफलं प्राप्तमन्त्यजत्वं द्विजन्मना ॥ ४२॥

कस्तेन सदृशो देवः शंभुना भुवनत्रये ॥

राज्यं नियमिनामेवं यो रुष्टोऽपि प्रयच्छति ॥ ४३ ॥

इति संचिंत्य मनसा तत्रैव निरताऽभवत् ॥

पूजयामास तल्लिंगं दिव्याब्दानां शतं प्रिये ॥ ४४ ॥

एवं तस्य प्रभावेन दृश्यते गगनांतरे ॥

अरुंधती सती ह्येषा दृष्टा दुष्कृतनाशिनी ॥ ४५ ॥

अक्षमालेश्वरस्त्वेवं यथावत्कथितस्तव ॥

ततस्तु द्वापरस्यान्ते कलौ संध्यांशके गते ॥ ४६ ॥।

अंधासुरसुतश्चासीदुग्रसेन इति श्रुतः ॥

स प्रभासं समासाद्य पुत्रार्थं लिंगमेयिवान् ॥ ४७ ॥

अक्षमालेश्वरं नाम ज्ञात्वा माहात्म्यमद्भुतम् ॥

समाराध्य महादेवं नव वर्षाणि पंच च ॥

संप्राप्तवांस्तदा पुत्रं कंसासुरमिति श्रुतम् ॥ ४८ ॥

तत्कालान्तरमारभ्य उग्रसेनेश्वरोऽभवत् ॥

पापघ्नं सर्वजंतूनां दर्शनात्स्पर्शनादपि ॥ ४९ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥

महान्ति पातकान्याहुर्नश्यंति तस्य दर्शनात् ॥ 7.1.129.५० ॥

तत्रैव ऋषिपञ्चम्यां प्राप्ते भाद्रपदे शुभे ॥

अक्षमालेश्वरं पूज्य मुच्यते नारकाद्भयात् ॥ ५१ ॥

गोप्रदानं प्रशंसंति तत्रान्नमुदकं तथा ॥

सर्वपापविनाशाय प्रेत्यानंतसुखाय च ॥ ५२ ॥

इति ते कथितं देवि ह्यक्षमालेश्वरोद्भवम् ॥

माहात्म्यं पापशमनं श्रुतं दुःखनिबर्हणम् ॥ ५३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उग्रसेनेश्वरमाहात्म्यवर्णनंनामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं पाशुपतेश्वरम् ॥

उग्रसेनेश्वराद्देवि पूर्वभागे व्यवस्थितम् ॥ १ ॥

गोपादित्यात्तथाग्नेय्यां ध्रुवेशाद्दक्षिणां श्रितम् ॥

सर्वपापहरं देवि पूर्वभागे व्यवस्थितम् ॥ २ ॥

गोपादित्यात्तथा लिंगं दर्शनात्सर्वकामदम् ॥

अस्मिन्युगे समाख्यातं संतोषेश्वरसंज्ञितम् ॥ ३ ॥

संतुष्टो भगवान्यस्मात्तेषां तत्र तपस्विनाम् ॥

तेन संतोषनाम्ना तु प्रख्यातं धरणीतले ॥ ४ ॥

युगलिंगं महादेवि सिद्धिस्थानं महाप्रभम् ॥

स्थानं पाशुपतानां च भेषजं पापरोगिणाम् ॥ ५ ॥

चत्वारो मुनयः सिद्धास्तस्मिँल्लिंगे यशस्विनि॥

वामदेवस्तु सावर्णिरघोरः कपिलस्तथा॥

तस्मिँल्लिंगे तु संसिद्धा अनादीशे निरंजने॥६॥

तस्य देवस्य सामीप्ये वने श्रीमुखसंज्ञितम्॥

लक्ष्मीस्थानं महादेवि सिद्धयोगैस्तु सेवितम्॥७॥

तत्र पाशुपताः श्रेष्ठा मम लिंगार्चने रताः॥

तेषां चैव निवासार्थं तद्देव्या निर्मितं वनम् ॥ ८ ॥

तस्य मध्ये तु सुश्रोणि लिंगं पूर्वमुखं स्थितम् ॥

तस्मिन्पाशुपताः सिद्धा अघोराद्या महर्षयः ॥

अनेनैव शरीरेण गतास्ते शिवमन्दिरम् ॥ ९ ॥

तत्र प्राभासिके क्षेत्रे सुरसिद्धनिषेविते ॥

रोचते मे सदा वासस्तस्मिन्नायतने शुभे ॥

सर्वेषामेव स्थानानामतिरम्यमतिप्रियम् ॥ 7.1.130.१० ॥

तत्र पाशुपता देवि मम ध्यानपरायणाः ॥
मम पुत्रास्तु ते सर्वे ब्रह्मचर्येण संयुताः ॥ ११ ॥
दान्ताः शांता जितक्रोधा ब्राह्मणास्ते तपस्विनः ॥
तल्लिंगस्य प्रभावेन सिद्धिं ते परमां गताः ॥ १२ ॥
तस्मात्तं पूजयेन्नित्यं क्षेत्रवासी द्विजोत्तमः ॥ १३ ॥
॥ देव्युवाच ॥ ॥
भगवन्देवदेवेश संसारार्णवतारक ॥
प्रभासे तु महाक्षेत्रे त्वदीयव्रतचारिणाम् ॥ १४ ॥
स्थानं तेषां महत्पुण्यं योगं पाशुपतं तथा ॥
कथयस्व प्रसादेन लिंगमाहात्म्यमुत्तमम् ॥ १५ ॥
किमादिनाम देवस्य कथं पूज्यो नरोत्तमैः ॥
कथं पाशुपतास्तत्र सदेहाः स्वर्गमागताः ॥१६॥
एतत्कथय देवेश दयां कृत्वा मम प्रभो ॥ १७ ॥
॥ ईश्वर उवाच ॥ ॥
यस्त्वया पृच्छ्यते भद्रे योगः पाशुपतो महान् ॥
तेषां चैव प्रभावो यस्तथा लिंगस्य सुव्रते ॥ १८ ॥
अनादीशस्य देवस्य आदिनाम महाप्रभे ॥
तस्मिँल्लिंगे तु ये देवि मदीयव्रतमाश्रिताः ॥ १९ ॥
चिरं नियोगं सुश्रोणि व्रतं पाशुपतं महत् ॥
धारयंति यथोक्तं तु मम विस्मयकारकम् ॥
तेषामनुग्रहार्थाय मम चित्तं प्रधावति ॥ 7.1.130.२० ॥
॥ सूत उवाच ॥ ॥
हरस्य वचनं श्रुत्वा देवी विस्मयमागता ॥
उवाच वचनं विप्राः सर्वलोकपतिं पतिम् ॥ २१ ॥। ।
ममापि कौतुकं देव किमकार्षीत्ततो भवान् ॥
तद्ब्रूहि मे महादेव यद्यहं तव वल्लभा ॥ २२ ॥
तस्यास्तद्वचनं श्रुत्वा महादेवो जगाद ताम् ॥
शृणु देवि प्रवक्ष्यामि मम भक्तविचेष्टितम् ॥ २३ ॥

दृष्ट्वा चैव तपोनिष्ठां तेषामाद्यः सुरेश्वरः ॥

उवाच वचनं देवः प्रणतान्पार्श्वतः स्थितान् ॥ २४ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

गच्छ शीघ्रं नन्दिकेश यत्र ते मम पुत्रकाः ॥

चरंति च व्रतं घोरं मदीयं चातिदुष्करम् ॥ २५ ॥

तत्क्षेत्रस्य प्रभावेन भक्त्या च मम नित्यशः ॥

तेन ते मुनयः सिद्धाः स्वशरीरेण सुव्रताः ॥ २६ ॥

तस्मान्मद्वचनान्नन्दिन्गच्छ प्राभासिकं शुभम् ॥

आमन्त्रय त्वं तान्सर्वान्कैलासं शीघ्रमानय ॥ २७ ॥

इदं पद्मं गृहाण त्वं सनालं कलिकोज्ज्वलम् ॥

लिंगस्य मूर्ध्नि दत्त्वेदं पद्मनालमिहानय ॥ २८ ॥

मुक्तस्तदा स वै नन्दी देवदेवेन शंभुना ॥

कैलासनिलयात्तस्मात्प्रभासं क्षेत्रमागतः ॥ २९ ॥

दृष्ट्वा चैव पुनर्लिङ्गं देवदेवस्य शूलिनः ॥

दृष्ट्वा तांश्चैव योगीन्द्रान्परं विस्मयमागतः ॥ 7.1.130.३० ॥

केचिद्ध्यानरतास्तत्र केचिद्योगं समाश्रिताः ॥

केचिद्व्याख्यां प्रकुर्वन्ति विचारमपि चापरे ॥३१॥

कुर्वन्त्यन्ये लिंगपूजां प्रणामं च तथाऽपरे ॥

प्रदक्षिणं प्रकुर्वन्ति साष्टांगं प्रणमन्ति च ॥ ३२ ॥

केचित्स्तुतिं प्रकुर्वन्ति भावयज्ञैस्तथा परे ॥

केचित्पूजां च कुर्वन्ति अहिंसाकुसुमैः शुभैः ॥ ३३ ॥

भस्मस्नानं प्रकुर्वंति गण्डुकैः स्नापयन्ति च ॥

एवं व्याकुलतां यातं तपस्विगणमण्डलम् ॥ ३४ ॥

तत्तादृशमथालोक्य नन्दी विस्मयमागतः ॥

चिन्तयामास मनसा सर्वं तेषां निरीक्ष्य च ॥ ३५ ॥

आगतोऽहमिमं देशं न कश्चिन्मां निरीक्षते॥

न केनचिदहं पृष्टोऽभ्यागतः कुत्र कस्य च ॥ ३६ ॥

अहंकारावृताः सर्वे न वदन्ति च मां क्वचित् ॥

एवं मनसि संधाय लिंगपार्श्वमुपागतः ॥ ॥ ३७ ॥

दत्तं लिंगस्य तत्पद्मनालं छित्त्वा तु नन्दिना ॥

अर्चयित्वा तु तन्नन्दी लिंगं पाशुपतेश्वरम् ॥

नालं गृहीत्वा यत्नेन ऋषीन्वचनमब्रवीत् ॥ ३८ ॥

॥ नन्दिकेश्वर उवाच ॥ ॥

शासनाद्देवदेवस्य भवतां पार्श्वमागतः ॥

आज्ञापयति देवेशस्तपस्विगणमण्डलम् ॥ ३९ ॥।

युष्माभिस्तत्र गन्तव्यं यत्र देवः सनातनः ॥

युष्मान्सर्वान्समादाय गमिष्यामि भवालयम् ॥ 7.1.130.४० ॥

उत्तिष्ठताशु गच्छामः कैलासं पर्वतोत्तमम् ॥

तूष्णींभूतास्ततः सर्वे प्रोचुस्ते संज्ञया द्विजाः ॥

गम्यतामग्रतो नन्दिन्पश्चादेष्यामहे वयम् ॥ ४१ ॥

एवमुक्तस्तु मुनिभिर्नन्दी शीघ्रतरं गतः ॥

कथयामास तत्सर्वं कुपितेनान्तरात्मना ॥ ४२ ॥

॥ नन्दिकेश्वर उवाच ॥ ॥

देव तत्र गतोऽहं वै यत्र ते योगिनः स्थिताः ॥

सन्तोषितो न चैवाहं केनचित्तत्र संस्थितः ॥ ४३ ॥

न मां देव निरीक्षन्ते नालपंति कथंचन ॥

पद्मं तत्र मया देव स्थापितं लिंग मूर्धनि ॥ ४४ ॥।

उक्तं देव मया तेषां योगीन्द्राणां महेश्वर ॥

आज्ञप्ता देवदेवेन इहागच्छत मा चिरम् ॥ ४५ ॥

एतच्छ्रुत्वा वचः स्वामिन्सर्वे तत्र महर्षयः ॥

आगमिष्याम इति वै पृष्ठतो गच्छ मा चिरम् ॥ ४६ ॥

इत्युक्ते तैस्तथा देव अहं शीघ्रमिहागतः ॥

शृणु चेमं गृहाण त्वं यथेष्टं कुरु मे प्रभो ॥ ४७ ॥

एकं मे संशयं देव च्छेत्तुमर्हसि सांप्रतम् ॥

मया विना महादेव आगमिष्यंति ते कथम् ॥

संशयो मे महादेव कथयस्व महेश्वर ॥ ४८ ॥। ॥

॥ ईश्वर उवाच ॥ ॥

शृणु नंदिन्यथाश्चर्यं तेषां वै भावितात्मनाम् ॥

न दृश्यन्त इमे सिद्धा मां मुक्त्वाऽन्यैः सुरैरपि ॥४९॥

मद्भावभावितास्ते वै योगं विंदंति शांकरम् ॥

पश्यैतत्कौतुकं नंदिन्दर्शयामि तवाधुना ॥ 7.1.130.५० ॥

आनीतं यत्त्वया नालं तस्मिन्नाले तु सूक्ष्मवत् ॥

प्रविश्य चागताः सर्वे योगैश्वर्यबलेन च ॥५१॥

एवमुक्तस्तदा नंदी विस्मयोत्फुल्ललोचनः ॥

अपश्यन्नालमध्यस्थान्महर्षीन्परमाणुवत्॥५२॥

यथार्करश्मिमध्यस्था दृश्यन्ते परमाणवः ॥

एवं तन्नालमध्यस्था दृश्यंत ऋषयः पृथक् ॥ ५३ ॥

एवं दृष्ट्वा तदा नंदी विस्मयोत्फुल्ललोचनः ॥

आश्चर्यं परमं गत्वा किञ्चिन्नेवाब्रवीत्पुनः ॥ ५४ ॥

एवं तत्कौतुकं दृष्ट्वा देवी वचनमब्रवीत् ॥

किं दृश्यते महादेव हृष्टः कस्मान्महेश्वर ॥५५॥

इत्युक्ते वचने देव्या प्रोवाचेदं महेश्वरः॥ ॥५६॥

॥ ईश्वर उवाच ॥ ॥

योगयुक्ता महात्मानो योगे पाशुपते स्थिताः ॥

एते मां च समाराध्य प्रभासक्षेत्रवासिनम् ॥

ईदृशीं सिद्धिमापन्नाः स्वच्छंदगतिचारिणः॥ ५७ ॥

इत्युक्तवति देवेश ऋषयस्ते महाप्रभाः ॥

पद्मनालाद्विनिःसृत्य सर्वे वै योगमायया ॥

प्रदक्षिणां प्रकुर्वंति देवं देव्या बहिष्कृतम्॥ ५८ ॥

॥ देव्युवाच ॥ ॥

किमर्थं मां न पश्यंति दुराचारा इमे द्विजाः ॥

विस्मयोऽयं महादेव कथयस्व प्रसादतः ॥ ५९ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

प्रकृतित्वान्न पश्यंति सिद्धा ह्येते महातपाः ॥

एवमुक्ता तु गिरिजा देवेदेवेन शूलिना ॥ 7.1.130.६० ॥

चुकोप तेषां सुश्रोणी शशाप क्रोधितानना ॥

स्त्रीलौल्येन दुराचारा नाशमेष्यथ गर्विणः ॥ ६१ ॥

राजप्रतिग्रहासक्ता वृत्त्या देवार्चने रताः॥

भविष्यथ कलौ प्राप्ते लिंगद्रव्योपजीविनः ॥ ६२ ॥

वेश्यासक्ताश्च संभ्रांता सर्वलोकबहिष्कृताः ॥

देवद्रव्यविनाशाय भविष्यथ कलौ युगे ॥ ६३ ॥

इति दत्ते तदा शाप ऋषीणां च महात्मनाम् ॥

गौरीं प्रसादयामासुस्ते च सर्वे सुरेश्वराः ॥ ६४ ॥

देवदेवस्य वचनात्प्रसन्ना साऽभवत्पुनः ॥

नालं देवोऽपि संगृह्य दक्षिणाशां समाक्षिपत् ॥ ६५ ॥

पतितं तच्च वै नालं प्रभासक्षेत्रमध्यतः ॥

तदेव लिंगं संजातं महानालेति विश्रुतम् ॥ ६६ ॥

कलौ युगे च संप्राप्ते तद्ध्रुवेश्वरसंज्ञितम्॥

संस्थितं चोत्तरेशाने तस्मात्पाशुपतेश्वरात् ॥६७ ॥

पुराऽनादीशनामेति पश्चात्पाशुपतेश्वरः ॥

प्रभासे तु महाक्षेत्रे स्थितः पातकनाशनः ॥६८॥

इदं स्थानं परं श्रेष्ठं मम व्रतनिषेवणम् ॥

इदं लिंगं परं ब्रह्म अनादीशेति संज्ञितम् ॥ ६९॥

अत्र सिद्धिश्च मुक्तिश्च ब्राह्मणानां न संशयः ॥

अनेनैव शरीरेण षड्भिर्मासस्तु सिद्ध्यति ॥ 7.1.130.७० ॥

संसारस्य विमोक्षार्थमिदं लिंगं तु दृश्यताम् ॥

दुर्लभं सर्वलोकानामिदं मोक्षप्रदं परम्॥

इदं पाशुपतं ज्ञानमस्मिँल्लिंगे प्रतिष्ठितम् ॥ ७१ ॥

यश्चैनं पूजयेद्भक्त्या माघे मासि निरंतरम् ॥

सर्वेषां वै क्रतूनां च दानानां लभते फलम् ॥ ७२ ॥

हिरण्यं तत्र दातव्यं सम्यग्यात्राफलेप्सुभिः ॥ ७३ ॥

इत्येतत्कथितं देवि माहात्म्यं पापनाशनम् ॥

पशुपाशविमोक्षार्थं सम्यक्पाशुपतेश्वरम् ॥ ७४ ॥

चतुर्णामपि वर्णानां पूज्यो ब्राह्मण उच्यते ॥

तस्य चैवाधिकारोऽस्ति चास्मिन्पाशुपतेश्वरे ॥ ७५ ॥

यद्देवतानां प्रथमं पवित्रं विश्वव्रतं पाशुपतं बभूव ॥

अयं पन्था नैष्ठिको वै मयोक्तो येन देवा यांति भुवनानि विश्वा ॥ ७६ ॥

सुरां पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्राह्मणं चापि हत्वा ॥

भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते पातकेभ्यः ॥ ७७ ॥

अग्निरित्यादिना भस्म गृहीत्वांगानि संस्पृशेत् ॥

गृह्णीयात्संयते चाग्नौ भस्म तद्गृहवासिनाम् ॥ ७८ ॥

अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म सर्वं ह वा इदं भस्माभवत् ॥

एतानि चक्षूंषि नादीक्षितः संस्पृशेत् ॥ ७९ ॥

ब्राह्मणैश्च समादेयं न तु शूद्रैः कदाचन ॥

नाधिकारोऽस्ति शूद्रस्य व्रते पाशुपते सदा ॥ 7.1.130.८० ॥

ब्राह्मणेष्वधिकारोऽस्ति व्रते पाशुपते शुभे ॥

ब्राह्मणीं तनुमास्थाय संभवामि युगेयुगे ॥ ८१ ॥

चण्डालवेश्मन्यथ वा स्मशाने राज्ञश्च मार्गेश्चथ वर्त्ममध्ये ॥

करीषमध्ये निःसृता नराधमाः शैवं पदं यांति न संशयोऽत्र ॥ ८२ ॥

इति श्रीस्कांदे महापुराण एकाशी तिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पाशुपतेश्वरमाहात्म्यवर्णनंनाम त्रिंशदुत्तरशततमोध्यायः ॥ १३० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३१

https://sa.wikisource.org/s/gag



॥ श्रीदेव्युवाच ॥ ॥

यदेतद्भवता प्रोक्तं नालेश्वरमिति श्रुतम् ॥

ध्रुवेश्वरेति तल्लिंगं कथं वै संबभूव ह ॥ १ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि ध्रुवेश्वरमहोदयम् ॥

यच्छ्रुत्वा मानवो देवि मुच्यते भवबंधनात् ॥ २ ॥

उत्तानपादनृपतेः पुत्रोऽभूद्ध्रुवसंज्ञितः ॥

महात्मा ज्ञानसंपन्नः सर्वज्ञः प्रियदर्शनः ॥ ३ ॥

स कदाचित्समासाद्य प्रभासं क्षेत्रमुत्तमम् ॥

तताप विपुलं देवि तपः परमदारुणम् ॥ ४ ॥

दिव्यं वर्षसहस्रं तु प्रतिष्ठाप्य महेश्वरम् ॥

संपूजयति सद्भक्त्या स्तौति स्तोत्रैः पृथग्विधैः ॥ ५ ॥

तत्स्तोत्रं ते प्रवक्ष्यामि येनाहं तुष्टिमागतः ॥ ६ ॥

॥ ध्रुव उवाच ॥ ॥

कैलासतुंगशिखरं प्रविकम्प्यमानं कैलासशृंगसदृशेन दशाननेन ॥

यः पादपद्मपरिपीडनया दधार तं शंकरं शरणदं शरणं व्रजामि ॥ ७ ॥

येनासुराश्चापि दनोश्च पुत्रा विद्याधरोरगगणैश्च वृताः समग्राः ॥

संयोजिता न तु फलं फलमूलमुक्तास्तं शंकरं शरणदं शरणं व्रजामि ॥ ८ ॥

यस्याखिलं जगदिदं वशवर्ति नित्यं योऽष्टाभिरेव तनुभिर्भुवनानि भुंक्ते ॥

यत्कारणं परमकारणकारणानां तं शंकरं शरणदं शरणं व्रजामि ॥९॥

यः सव्यपाणिकमलाग्रनखेन देवस्तत्पंचमं च सहसैव पुरातिरुष्टः ॥

ब्राह्मं शिरस्तरुणपद्मनिभं चकर्त तं शंकरं शरणदं शरणं व्रजामि ॥7.1.131.१०॥।

यस्य प्रणम्य चरणौ वरदस्य भक्त्या श्रुत्वा च वाग्भिरमलाभिरतंद्रिताभिः ॥

दीप्तस्तमांसि नुदति स्वकरैर्विवस्वांस्तं शंकरं शरणदं शरणं व्रजामि ॥ ॥ ११ ॥

यः पठेत्स्तवमिदं रुचिरार्थं मानवो ध्रुवकृतं नियतात्मा ॥

विप्रसंसदि सदा शुचिसिद्धः स प्रयाति शिवलोकमनादिम् ॥ १२ ॥

तस्यैवं स्तुवतो देवि तुष्टोऽहं भावितात्मनः ॥

पूर्णे वर्षसहस्रांते ध्रुवस्याह महात्मनः ॥ १३ ॥

पुत्र तुष्टोऽस्मि भद्रं ते जातस्त्वं निर्मलोऽधुना ॥

दिव्यं ददामि ते चक्षुः पश्य मां विगतज्वरः ॥ १४ ॥

यच्च ते मनसा किञ्चित्कांक्षितं फलमुत्तमम् ॥

तत्सर्वं ते प्रदास्यामि ब्रूहि शीघ्रं ममाग्रतः ॥ १५ ॥

ब्राह्म्यं वा वैष्णवं शाक्रं पदमन्यत्सुदुर्लभम् ॥

ददामि नात्र संदेहो भक्त्या संप्रीणितस्तव ॥ १६ ॥

॥ ध्रुव उवाच ॥ ॥

ब्राह्म्यं वैष्णवं माहेन्द्रं पदमावृत्तिलक्षणम्॥

विदितं मम तत्सर्वं मनसाऽपि न कामये॥१७॥

यदि तुष्टोऽसि मे देव भक्तिं देहि सुनिर्मलाम्॥

अस्मिँल्लिंगे सदा वासं कुरु देव वृषध्वज॥१८॥

ईश्वर उवाच॥

इति यत्प्रार्थितं सर्वं तद्दत्तं सर्वमेव हि॥

स्थानं च तस्य तद्ध्रौव्यं तद्विष्णोः परमं पदम्॥१९॥

श्रावणस्य त्वमावास्यां यस्तल्लिंगं प्रपूजयेत् ॥

आश्वयुक्पौर्णमास्यां वा सोऽश्वमेधफलं लभेत् ॥ 7.1.131.२० ॥

अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥

रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः ॥

हंसयुक्तविमानेन रुद्रलोके महीयते ॥ २१ ॥

असुरसुरगणानां पूजितस्य ध्रुवस्य कथयति कमनीयां कीर्तिमेतां शृणोति ॥

सकलसुखनिधानरुद्रलोकं सुशांतः सुरगणदनुनाथैरर्चितं यात्यनंतम् ॥ २२ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ध्रुवेश्वरमाहात्म्यवर्णनंनामैकत्रिंशदुत्तरशततमो ऽध्यायः ॥१३१॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि वैष्णवीं शक्तिमुत्तमाम् ॥

सोमेशादीशदिग्भागे नातिदूरे व्यवस्थिताम् ॥ १ ॥

सिद्धलक्ष्मीति विख्याता ह्यत्र पीठाधिदेवता ॥ २ ॥

ब्रह्माण्डे प्रथमं पीठं यत्प्रभासं व्यवस्थितम् ॥

तत्र देवि महापीठे योगिन्यो भूचराः खगाः ॥

भैरवेण समे तास्तु क्रीडन्ते स्वेच्छया प्रिये ॥ ३॥

जालंधरं महापीठं कामरूपं तथैव च ॥

श्रीमद्रुद्रनृसिंहं च चतुर्थं पीठमुत्तमम् ॥ ४ ॥

रत्नवीर्यं महापीठं काश्मीरं पीठमेव च ॥

एतानि देवि पीठानि यो वेत्ति स च मन्त्रवित् ॥ ५ ॥

सर्वेषां चैव पीठानामाधारं पीठमुत्तमम् ॥

सौराष्ट्रे तु महादेवि नाम्ना ख्यातं महोदयम् ॥

कामरूपधरं ज्ञानं यत्राद्यापि प्रवर्तते ॥ ६ ॥

तत्र पीठे स्थिता देवी महालक्ष्मीति विश्रुता ॥

सर्वपापप्रशमनी सर्वकार्यशुभप्रदा ॥ ७ ॥

श्रीपञ्चम्यां नरो यस्तु पूजयेत्तां विधानतः ॥

गन्धपुष्पादिभिर्भक्त्या तस्यालक्ष्मीभयं कुतः ॥ ८ ॥

उत्तरां दिशमास्थाय महाल क्ष्म्यास्तु सन्निधौ॥

यो जपेन्मन्त्रराज्ञीं तां सिद्धलक्ष्मीति विश्रुताम् ॥ ९ ॥

लक्षजाप्यविधानेन दीक्षास्नानादिपूर्वकम् ॥

दशांशहोमसंयुक्तं त्रिमधु- श्रीफलेसुभिः ॥ 7.1.132.१० ॥

एवं प्रत्यक्षतां याति तस्य लक्ष्मीर्न संशयः ॥

ददाति वांछितां सिद्धिमिह लोके परत्र च ॥ ११ ॥

तृतीयायामथा ष्टम्यां चतुर्दश्यां विधानतः ॥
यस्तां पूजयते भक्त्या तस्य सिद्धिः करे स्थिता ॥ १२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सिद्धलक्ष्मीमाहात्म्यवर्णनंनाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३३



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थिता देवि महाकालीति विश्रुता ॥

अधः स्थिते महापीठे पातालविवरान्विते ॥ १ ॥

सर्वदुःखप्रशमनी सर्वशत्रुक्षयंकरी ॥

पूजनीया विधानेन कृष्णाष्टम्यां महानिशि ॥

गन्धैः पुष्पैस्तथा धूपैः क्रव्यैर्बलिभिरेव च ॥ २ ॥

फलतृतीयां नारी च कुर्याद्वै तत्र भाविता ॥

वर्षमेकं सिते पक्षे देवीं पूज्य विधानतः ॥

फलानि ब्राह्मणे देयान्येव नूनं विधानतः ॥ ३ ॥

एतानि वर्जयेन्नक्ते ह्यन्नानि सुरसुन्दरि ॥

निष्पावा आढकी मुद्गा माषाश्चैव कुलित्थकाः॥४॥

मसूरा राजमाषाश्च गोधूमास्त्रिपुटास्तथा ॥

चणका वर्तला वापि मकुष्ठाश्चैवमादयः ॥ ५ ॥

न भक्ष्यास्तावत्ते देवि यावद्गौरीव्रतं चरेत् ॥

तस्याः पुण्यफलं वक्ष्ये कथ्यमानं शृणुष्व मे ॥ ६ ॥

धनं धान्यं गृहे तस्या न कदाचित्क्षयं व्रजेत् ॥

दुःखिता दुर्भगा दीना सप्त जन्मानि नो भवेत् ॥ ७ ॥

महाकालीव्रतं प्रोक्तं देव्या माहात्म्यसंयुतम् ॥

कृतं पातकनाशाय सर्वकामसमृद्धये ॥ ८ ॥

एवं देवि समाख्यातं महाकालीमहोदयम् ॥

क्षेत्रपीठं महादेवि मन्त्रसिद्धिप्रदायकम् ॥ ९ ॥

आश्वयुक्छुक्लपक्षे तु नवम्यां तत्र जागृयात् ॥

पीठे पूजाबलिं दत्त्वा मन्त्रं कामं जपन्निशि ॥

सौम्यचित्तः समाप्नोति वांछितां सिद्धिमुत्तमाम् ॥ 7.1.133.१० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये महाकालीमाहात्म्यवर्णनंनाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुष्करावर्तकां नदीम् ॥

ब्रह्मकुंडादुत्तरतो नातिदूरे व्यवस्थिताम् ॥ १ ॥

पुरा यज्ञे वर्तमाने सोमस्य तु महात्मनः ॥

ब्रह्मा सुरगणैः सार्धं प्रभासं क्षेत्रमागतः ॥२॥

सोमनाथप्रतिष्ठार्थमृक्षराजनिमंत्रितः ॥

प्रतिज्ञातं पुरा तेन ब्रह्मणा लोककारिणा ॥ ३ ॥

यावत्स्थास्याम्यहं मर्त्ये कस्मिंश्चित्कारणांतरे ॥

तावत्संध्यात्रयं वंद्यं नित्यमेव त्रिपुष्करे ॥ ४ ॥

एतस्मिन्नेव काले तु लग्नकाल उपस्थिते ॥

आदिष्टं शोभनं कालं ब्राह्मणैर्दैवचिन्तकैः ॥ ५ ॥

ततस्तं प्रस्थितं ज्ञात्वा पुष्करे तु पितामहम् ॥

संध्यार्थं रात्रिनाथो वै वाक्यमेतदुवाच ह ॥ ६ ॥।

दैवज्ञैः कलितः काल एष एव शुभोदयः ॥

यथा कालात्ययो न स्यात्तथा नीतिर्विधीयताम् ॥ ७ ॥

तं ज्ञात्वा सांप्रतं कालं ब्रह्मा लोकपितामहः ॥

मनसा चिन्तयामास पुष्कराणि समाहितः ॥ ८ ॥

तानि वै स्मृतमात्राणि ब्रह्मणा वरवर्णिनि ॥

प्रादुर्भूतानि तत्रैव नद्यास्तीरे सुशोभने ॥ ९ ॥

आवर्तास्तत्र सञ्जाता ज्येष्ठमध्यकनीयसः ॥

अथ नामाकरोत्तस्या ब्रह्मा लोकपितामहः ॥ 7.1.134.१० ॥

पुष्करावर्तका नाम्ना अद्यप्रभृति शोभना ॥

नदी प्रयास्यते लोके ख्यातिं मम प्रसादतः ॥ ११ ॥

अत्र स्नात्वा नरो भक्त्या तर्पयिष्यति यः पितॄन् ॥

त्रिपुष्करसमं पुण्यं लप्स्यते स तथेप्सितम् ॥ १२ ॥

श्रावणे शुक्लपक्षस्य तृतीयायां नरोत्तमः ॥

यः पितॄंस्तर्पयेत्तत्र तृप्तिः कल्पायुतं भवेत् ॥ १३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुष्करावर्तकानदीमाहात्म्यवर्णनंनाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३४॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३५



ईश्वर उवाच॥

तत्रैव संस्थितां पश्येद्देवीं दुःखांतकारिणीम्॥

शीतलेति पुरा ख्याता युगे द्वापरसंज्ञिते॥

कलौ पुनः समाख्यातां कलिदुःखान्तकारिणीम्॥१॥

शीतलं कुरुते देहं बालानां रोगवर्जितम्॥

पूजिता भक्तिभावेन तेन सा शीतला स्मृता॥२॥

विस्फोटानां प्रशांत्यर्थं बालानां चैव कारणात् ॥

मानेन मापितान्कृत्वा मसूरांस्तत्र कुट्टयेत् ॥ ३ ॥

शीतलापुरतो दत्त्वा बालाः सन्तु निरामयाः ॥

विस्फोटचर्चिकादीनां वातादीनां शमो भवेत् ॥ ४ ॥

श्राद्धं तत्रैव कुर्वीत ब्राह्मणांस्तत्र भोजयेत् ॥ ५ ॥

कर्पूरं कुसुमं चैव मृगनाभिं सुचन्दनम्॥

पुष्पाणि च सुगन्धानि नैवेद्यं घृतपायसम् ॥

निवेद्य देव्यै तत्सर्वं दंपत्योः परिधापयेत् ॥६॥

नवम्यां शुक्लपक्षे तु मालां विल्वमयीं शुभाम्॥

भक्त्या निवेद्य तां देव्यै सर्वसिद्धिमवाप्नुयात् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये दुःखान्तकारिणीतिलागौरीमाहात्म्यवर्णनंनाम पञ्चत्रिंदुत्तरशततमोऽध्यायः ॥१३५॥॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लोमशेश्वरमुत्तमम् ॥

दुःखान्तकारिणीपूर्वे धनुषां सप्तके स्थितम् ॥ १ ॥

स्थापितं तत्र देवेशि लोमशेन महर्षिणा ॥

गुहामध्ये महालिंगं तपः कृत्वा सुदुश्चरम् ॥ २ ॥

कोटीनां त्रितयं सार्धमिंद्राद्याः स्वर्भुजः प्रिये ॥

यदा नाशं गमिष्यंति तदा तस्य क्षयो ध्रुवम् ॥ ३ ॥

यावंति देहरोमाणि इन्द्रास्तावन्त एव च ॥

क्रमादिन्द्रे विनष्टे तु तल्लोमपतनं भवेत् ॥ ४ ॥

एवमीशप्रसादेन चिरायुर्लोमशोऽभवत् ॥

ब्रह्माणः षड्विनश्यन्ति समग्रायुषि लोमशे ॥ ५ ॥

य एवं पूजयेद्भक्त्या तल्लिंगं लोमशार्चितम् ॥

सोऽपि दीर्घायुराप्नोति निर्व्याधिर्नीरुजः सुखी ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये लोमशेश्वरमाहात्म्यवर्णनंनाम षट्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३६ ॥ ॥ ॥ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३७



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येत्क्षेत्रपालमनुत्तमम् ॥

कंकालभैरवंनाम भैरवेण नियोजितम् ॥

तस्य क्षेत्रस्य रक्षार्थं प्राणिनां दुष्टचेतसाम् ॥ १ ॥

श्रावणे शुक्लपञ्चम्यामष्टम्यामाश्विनस्य च ॥

यस्तं पूजयते भक्त्या बलिपुष्पादिभिः क्रमात् ॥ २ ॥

तस्य क्षेत्रे निवसतः पुष्करस्य महात्मनः ॥

निर्विघ्नकारी भवति तथा रक्षति पुत्रवत् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कंकालभैरवक्षेत्रपालमाहात्म्यवर्णनंनाम सप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३८



॥ ईश्वर उवाच ॥ ॥

तस्यैव पश्चिमे भागे धनुषां पञ्चके स्थितम् ॥

तृणबिन्द्वीश्वरंनाम तीव्रभक्त्या प्रतिष्ठितम् ॥ १ ॥

कृत्वा महत्तपो देवि तृणबिंदुमु नीश्वरः ॥

मासिमासि कुशाग्रेण जलबिंदुं निपीय वै ॥ २ ॥

संवत्सराण्यनेकानि एवमाराध्य चेश्वरम् ॥

संप्राप्तं परमां सिद्धिं क्षेत्रे प्राभासिके शुभे ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये तृणबिंद्वीश्वरमाहात्म्य वर्णनंनामाष्टात्रिंशदुत्तरशततमोऽध्यायः ॥ १३८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १३९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चित्रादित्यमनुत्तमम् ॥

तस्यैव दक्षिणे भागे ब्रह्मकुण्डसमीपतः ॥ १ ॥

महाप्रभावो देवेशि सर्वदारिद्र्यनाशनः ॥

मित्रो नाम पुरा देवि धर्मात्माऽभूद्धरातले ॥

कायस्थः सर्वभूतानां नित्यं भूतहिते रतः ॥ २ ॥

तस्यापत्यद्वयं जज्ञ ऋतुकालाभिगामिनः ॥

पुत्रः परमतेजस्वी चित्रोनाम वरानने ॥ ३ ॥

तथा चित्राऽभवत्कन्या रूपाढ्या शीलमंडना ॥ ४ ॥

आभ्यां तु जातमात्राभ्यां मित्रः पञ्चत्वमेयिवान् ॥

अथ तस्य वरा भार्या सह तेनाग्निमाविशत् ॥ ५ ॥

अथ तौ बालकौ दीनावृषिभिः परिपालितौ ॥

वृद्धिं गतौ महारण्ये बालावेव स्थितौ व्रते ॥ ६ ॥

प्रभासं क्षेत्रमासाद्य तपः परममास्थितौ ॥

प्रतिष्ठाप्य महा देवं भास्करं वारितस्करम् ॥ ७ ॥

पूजयामास धर्मात्मा धूपमाल्यानुलेपनैः ॥

वसिष्ठकथितैश्चैव ह्यष्टषष्टिसमन्वितैः ॥

नामभिः सूर्यदेवेशं तुष्टाव प्राञ्जलिः प्रभुम् ॥ ८ ॥

॥ चित्र उवाच ॥ ॥

प्रणम्य शिरसा देवं भास्करं गगनाधिपम् ॥

आदिदेवं जगन्नाथं पापघ्नं रोगनाशनम् ॥ ९ ॥।

सहस्राक्षं सहस्रांशुं सहस्रकिरणद्युतिम् ॥ 7.1.139.१० ॥

तमहं संस्तविष्यामि संपृक्तं गुह्यनामभिः ॥

मुंडीरस्वामिनं प्रातर्गंगासागरसंगमे ॥

कालप्रियं तु मध्याह्ने यमुनातीरमाश्रितम् ॥ ११ ॥

मूलस्थानं चास्तमने चन्द्रभागातटे स्थितम्॥

यत्र सांबः स्वयं सिद्ध उपवासपरायणः ॥१२॥

वाराणस्यां लोहिताक्षं गोभिलाक्षे बृहन्मुखम् ॥

प्रयागेषु प्रतिष्ठानं वृद्धादित्यं महाद्युतिम् ॥१३॥

कोट्यक्षे द्वादशादित्यं गंगादित्यं चतुर्घटे ॥

नैमिषे चैव गोघ्ने च भद्रं भद्रपुटे स्थितम् ॥१४॥

जयायां विजयादित्यं प्रभासे स्वर्णवेतसम् ॥

कुरुक्षेत्रे च सामंतं त्रिमंत्रं च इलावृते ॥१५॥

महेन्द्रे क्रमणादित्यमृणे सिद्धेश्वरं विदुः ॥

कौशांब्यां पद्मबोधं च ब्रह्मबाहौ दिवाकरम्॥१६॥

केदारे चण्डकांतिं च नित्ये च तिमिरापहम् ॥

गंगामार्गे शिवद्वारमादित्यं भूप्रदी पने ॥१७॥

हंसं सरस्वतीतीरे विश्वामित्रं पृथूदके ॥

उज्जयिन्यां नरद्वीपं सिद्धायाममलद्युतिम् ॥१८॥

सूर्यं कुन्तीकुमारे च पञ्चनद्यां विभावसुम् ॥।

मथुरायां विमलादित्यं संज्ञादित्यं तु संज्ञिके ॥ १९ ॥

श्रीकण्ठे चैव मार्तण्डं दशार्णे दशकं स्मृतम् ॥

गोधने गोपतिं देवं कर्णं चैव मरुस्थले ॥7.1.139.२०॥।

पुष्पं देवपुरे चैव केशवार्कं तु लोहिते ॥

वैदिशे चैव शार्दूलं शोणे वारुणवासिनम् ॥ २१ ॥

वर्धमाने च सांबाख्यं कामरूपे शुभंकरम् ॥

मिहिरं कान्यकुब्जे च मंदारं पुण्यवर्धने ॥ २२ ॥

गन्धारे क्षोभणादित्यं लंकायाममरद्युतिम् ॥

कर्णादित्यं च चंपायां प्रबोधे शुभदर्शिनम् ॥ २३ ॥

द्वारा वत्यां तु पार्वत्यं हिमवन्ते हिमापहम् ॥

महातेजं तु लौहित्ये अमलांगे च धूजटिम् ॥ २४ ॥

रोहिके तु कुमाराख्यं पद्मायां पद्मसंभवम्॥

धर्मादित्यं तु लाटायां मर्द्दके स्थविरं विदुः ॥ २५ ॥
सुखप्रदं तु कौबेर्यां कोसले गोपतिं तथा ॥
कौंकणे तु पद्मदेवं तापनं विन्ध्यपर्वते ॥ २६ ॥
त्वष्टारं चैव काश्मीरे चरित्रे रत्नसंभवम् ॥
पुष्करे हेमगर्भस्थं विद्यात्सूर्यं गभस्तिके ॥ २७ ॥
प्रकाशायां तु मुञ्झालं तीर्थग्रामे प्रभाकरम् ॥
कांपिल्ये रिल्लकादित्यं धनके धनवासिनम् ॥२८॥
अनलं नर्मदातीरे सर्वत्र गमनाधिकम्॥
अष्टषष्टिं तु देवस्य भास्करस्यामितद्युतेः ॥ २९ ॥
प्रातरुत्थाय वै नित्यं शक्तिमाञ्छुचिमान्नरः ॥
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ 7.1.139.३० ॥
राज्यार्थी लभते राज्यं धनार्थी लभते धनम् ॥
पुत्रार्थी लभते पुत्रान्सौख्यार्थी लभते सुखम् ॥ ३१ ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥
यान्यान्प्रार्थयते कामांस्तांस्तान्प्राप्नोति मानवः ॥३२॥ ॥
॥ ईश्वर उवाच ॥ ॥
एवं च स्तुवतस्तस्य चित्रस्य विमलात्मनः ॥
ततस्तुष्टः सहस्रांशुः कालेन महता विभुः ॥ ३३ ॥
अब्रवीद्वत्स भद्रं ते वरं वरय सुव्रत ॥ ३४ ॥
सोऽब्रवीद्यदि मे तुष्टो भगवंस्तीक्ष्णदीधितेः ॥
प्रौढत्वं सर्वकार्येषु नय मां ज्ञानितां तथा ॥ ३५ ॥
तत्तथेति प्रति ज्ञातं सूर्येण वरवर्णिनि ॥
ततः सर्वज्ञतां प्राप्तश्चित्रो मित्रकुलोद्भवः ॥३६॥
तं ज्ञात्वा धर्मराजस्तु बुद्ध्या परमया युतम्॥
चिंतयामास मेधावी लेख कोऽयं भवेद्यदि ॥ ३७ ॥
ततो मे सर्वसिद्धिः स्यान्निर्वृतिश्च परा भवेत् ॥
एवं चिंतयतस्तस्य धर्मराजस्य भामिनि॥३८॥
अग्नितीर्थे गते चित्रे स्ना नार्थं लवणाम्भसि ॥

स तत्र प्रविशन्नेव नीतस्तु यमकिंकरैः ॥३९॥

सशरीरो महादेवि यमादेशपरायणैः ॥

स चित्रगुप्तनामाऽभूद्विश्वचारित्रलेखकः ॥ 7.1.139.४० ॥

चित्रादित्येतिनामाऽभूत्ततो लोके वरानने ॥ ४१ ॥

सप्तम्यां नियताहारो यस्तं पूजयते नरः ॥

सप्त जन्मानि दारिद्र्यं न दुःखं तस्य जायते ॥४२॥

तत्रैव चाश्वो दातव्यः सकोषं खड्गमेव च ॥

हिरण्यं चैव विप्राय एवं यात्राफलं लभेत् ॥४३॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चित्रादित्यमाहात्म्यवर्णनंनामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः ॥१३९॥।

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४०



ततो गच्छेन्महादेवि नदीं चित्रपथां ततः ॥

ब्रह्मकुण्डसमीपस्थां चित्रादित्यस्य मध्यतः ॥ १ ॥

यदा च चित्रः संनीतो यमदूतैः सुरप्रिये ॥

सशरीरो महाप्राज्ञो यमादेशपरायणैः ॥ २ ॥

एवं ज्ञात्वा तु तत्रस्था भगिनी तस्य दुःखिता ॥

चित्रा नदी ततो भूत्वा स्वसा तस्य महात्मनः ॥ ३ ॥

प्रविष्टा सागरे देवि अन्वेषन्ती च बांधवम् ॥

ततश्चित्रपथानाम तस्याश्चक्रुर्द्विजातयः ॥ ४ ॥

एवं तत्र समुत्पन्ना सा नदी वरवर्णिनि ॥ ५ ॥

तस्यां स्नात्वा नरो यस्तु चित्रादित्यं प्रपश्यति ॥

स याति परमं स्थानं यत्र देवो दिवाकरः ॥ ६ ॥

अस्मिन्कलियुगे देवि अंतर्धानं गता नदी ॥

प्रावृट्काले च दृश्येत दुर्लभं तत्र दर्शनम् ॥ ७ ॥

स्नानं दानं विशेषेण सर्वपातकनाशनम् ॥ ८ ॥

भुक्तो वाप्यथवाऽभुक्तो रात्रौ वा यदि वा दिवा ॥

पर्वकालेऽथवाऽकाले पवित्रोऽप्यथवाऽशुचिः ॥ ९ ॥

यदैव दृश्यते तत्र नदी चित्रपथा प्रिये ॥

प्रमाणं दर्शनं तस्या न कालस्तत्र कारणम् ॥ 7.1.140.१० ॥

दृष्ट्वा नदीं महादेवि पितरः स्वर्गसंस्थिताः ॥

गायंति तत्र सामानि नृत्यन्ति च हसंति च ॥ ११ ॥

अस्माकं वंशजः कश्चिच्छ्राद्धमत्र करिष्यति ॥

यावत्कल्पं तथाऽस्माकं प्रीतिमुत्पादयिष्यति ॥ १२ ॥

एवं ज्ञात्वा नरस्तत्र स्नानं श्राद्धं च कारयेत् ॥

सर्वपापविनाशार्थं पितॄणां प्रीतये तथा ॥ ॥ १३ ॥

इत्येतत्कथितं देवि यथा चित्रपथा नदी ॥
प्रभासक्षेत्रमासाद्य संस्थिता पापनाशिनी ॥ १४ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चित्रपथानदीमाहात्म्यवर्णनंनाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥। ॥ १४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कपर्दी यत्र संस्थितः ॥

तस्यैव उत्तरे भागे नातिदूरे व्यवस्थितः ॥

चिंतितार्थप्रदो देवि चिन्तामणिरिवापरः ॥ १ ॥

चतुर्थ्यां तं तु देवेशि अंगारकदिने पुनः ॥

स्नापयित्वा तु संपूज्य नैवेद्यैर्विविधैः शुभैः ॥

सन्तर्प्य विघ्नराजेशं सर्वान्कामानवाप्नुयात् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कपर्दिचिन्तामणिमाहात्म्यवर्णनं नामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चित्रेश्वर मनुत्तमम्॥

धनुषां सप्तके तस्य स्थितमाग्नेयदक्षिणे ॥ १ ॥

लिंगं महाप्रभावं हि सर्वपातकनाशनम् ॥

तत्र चित्रेश्वरं पूज्य नरकान्न भवेद्भयम् ॥ २ ॥

पटस्थितं तस्य पापं चित्रो मार्जयति प्रिये ॥

तस्मात्सर्वप्रयत्नेन चित्रेशं पूजयेत्सदा ॥

यः स्यात्पापयुतो वापि नरकं नैव पश्यति ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चित्रेश्वर माहात्म्यवर्णनंनाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विचित्रेश्वरमुत्तमम् ॥

तस्यैव पूर्वदिग्भागे किञ्चिदाग्नेयगोचरे ॥

धनुषां दशके तत्र स्थितं पापप्रणाशनम् ॥ १ ॥

विचित्रेण महादेवि लेख केन यमस्य च ॥

स्थापितं तन्महालिंगं तपः कृत्वा सुदुश्चरम् ॥ २ ॥

तं दृष्ट्वा पूजितं चैव मुक्तः स्यात्सर्वपातकैः ॥

संपूज्य च विधानेन न दुःखी जायते नरः ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये विचित्रेश्वरमाहात्म्यवर्णनंनाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तृतीयं पुष्करं महत् ॥

तस्यैव पूर्वदिग्भागे किञ्चिदीशानगोचरे ॥

कनीयः संस्मृतं कुंडं पुष्करंनाम नामतः ॥ १ ॥

यत्र मध्याह्नसमये ब्रह्मणा समुपासिता ॥

सन्ध्या त्रैलोक्यजननी प्रतिष्ठार्थं गतेन च ॥ २ ॥

तत्र यः कुरुते स्नानं पौर्णमास्यां समाहितः ॥

सम्यक्कृतं भवेत्तेन स्नानं तत्रादिपुष्करे ॥ ३ ॥

हिरण्यं तत्र दातव्यं सर्वपापापनुत्तये ॥ ४ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं तव पौष्करम् ॥

श्रुतं पापहरं नृणां सर्वकामप्रदं तथा ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुष्करकुण्डमाहात्म्य वर्णनंनाम चतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४५





॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येद्विघ्नेशं पापनाशनम् ॥

गजकुंभोदरं नाम सर्वसिद्धिप्रदायकम् ॥ १ ॥

तत्र कुंडे नरः स्नात्वा चतुर्थ्यां प्रयतात्मवान् ॥

पूजयेद्यस्तु तं भक्त्या विघ्नेशस्तस्य तुष्यति ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गजकुंभोदरमाहात्म्यवर्णनंनाम पञ्चचत्वा रिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४६

https://sa.wikisource.org/s/g50
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

। ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि धर्मराजप्रतिष्ठितम् ॥

यमेश्वरं महादेवं तस्यै वोत्तरतः स्थितम् ॥ १ ॥

यदा शप्तो धर्मराजश्छायया वरवर्णिनि ॥

तदा तस्यापतत्पादः स च दुःखान्वितोऽभवत् ॥ २ ॥

ततः प्राभासिके क्षेत्रे तपस्तेपे महातपाः ॥

स्थापयामास लिंगं तु तत्र देवस्य शूलिनः ॥ ३ ॥

तस्य तुष्टो महादेवस्ततः प्रत्यक्षतां गतः ॥

अब्रवीद्धर्म भद्रं ते वरं वरय चेप्सितम् ॥ ४ ॥

तदाऽब्रवीद्धर्मराजः पादः प्रपतितो मम ॥

प्रसादात्तव देवेश जायतां पुनरेव हि ॥ ५ ॥

एतल्लिंगं सुरश्रेष्ठ यन्मया निर्मितं तव ॥

एतद्ये भक्तिसंयुक्ताः पश्यंति प्राणिनो भुवि ॥ ६ ॥

तेषां तव प्रसादेन भूयात्पापविमोक्षणम् ॥ ७ ॥

एवं भविष्यतीत्युक्ता ह्यन्तर्धानं गतो हरः ॥

यमोऽपि लब्धपादस्तु पुनरेव दिवं ययौ ॥ ८ ॥

तस्मिन्दृष्टे सुरश्रेष्ठ यमलोकसमुद्भवम् ॥

न भयं विद्यते नृणामपि दुष्कृतकारिणाम् ॥ ॥ ९ ॥

भ्रातृद्वितीयासंयोगे स्नात्वा पुष्करिणीजले ॥

यमेश्वरसमीपस्थो यमेशमवलोकयेत् ॥ 7.1.146.१० ॥

तिलपात्रं प्रदातव्यं दीपं गाः कांचना दिकम् ॥

यमदेवं समुद्दिश्य मुच्यते सर्वपातकैः ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये यमेश्वरमाहात्म्यवर्णनंनाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि ब्रह्मकुण्डमनुत्तमम् ॥

तस्यैव नैर्ऋते भागे ब्रह्मणा निर्मितं पुरा ॥ १ ॥

यदा तु ऋक्षराजेन सोमनाथः प्रति ष्ठितः ॥

तदा ब्रह्मादयो देवाः सर्वे तत्र समागताः ॥

प्रतिष्ठार्थं हि देवस्य शशांकेन निमन्त्रिताः ॥ २ ॥

अथाऽब्रवीन्निशानाथो ब्रह्माणं विनयान्वितः ॥ ३ ॥

कृतं भवद्भिर्जानाति स्थापनं वै यथा जनः ॥

तथा कुरु सुरश्रेष्ठ चिह्नमात्मसमुद्भवम् ॥ ४ ॥

एवं श्रुत्वा तदा ब्रह्मा ध्यानं कृत्वा तु निश्चलम् ॥

आह्वयत्सर्वतीर्थानि पुष्करादीनि सर्वशः ॥ ५ ॥

स्वर्गे वै यानि तीर्थानि तथैव च रसातले ॥

तपःसामर्थ्ययोगेन ब्रह्मणा ऽऽकर्षितानि च ॥

अतस्तस्यैव नाम्ना तु ब्रह्मकुण्डं तु गीयते ॥ ६ ॥

गणानां च सहस्रैस्तु चतुर्दशभिरीक्ष्यते ॥

अतश्चाभक्तियुक्तानां दुष्प्राप्यं तीर्थमुत्तमम् ॥ ७ ॥

अथाब्रवीत्सर्वदेवान्ब्रह्मा लोकपितामहः ॥ ८ ॥

अत्र कुण्डे नरः स्नात्वा यः पितॄंस्तर्पयिष्यति ॥

अग्निष्टोमफलं सव लप्स्यते स च मानवः ॥

तत्प्रसादात्स्वर्गलोके विमानेन चरिष्यति ॥ ९ ॥

गोदानं चाश्वदानं च तथा स्वर्णकमण्डलुम् ॥

दद्याद्विप्राय विदुषे सर्वपापापनुत्तये ॥ 7.1.147.१० ॥

पौर्णमास्यां महादेवि तथा च प्रतिपद्दिने ॥

सर्वपापविनाशार्थं तत्र स्नाति सरस्वती ॥ ११ ॥

सिद्धं रसायनं देवि तत्र वै ह्युदकं प्रिये ॥
नानावर्णसमायुक्तमुपदेशेन सिद्ध्यति ॥ १२ ॥
दारिद्र्यदुःखरुक्छोकान्मानवः सेवते कथम् ॥
ब्रह्मकुण्डमनुप्राप्य कल्पवृक्षमिवापरम् ॥ ॥ १३ ॥
॥ देव्युवाच ॥ ॥
भगवन्विस्तराद्ब्रूहि ब्रह्मकुण्डमहोदयम् ॥
सर्वप्राणिहितार्थाय विस्तराद्वद मे प्रभो ॥ १४ ॥
ब्रह्मकुंडस्य माहात्म्यं श्रोतुं मे कौतुकं महत्॥
लोकानां दुःखनाशाय दारिद्यक्षयहेतवे ॥ १५ ॥
भगवन्मानुषाः सर्वे दुःखशोकनिपीडिताः ॥
भ्रमंति सकलं जन्म रसायनविमोहिताः ॥ १६ ॥
तेषां हिताय मे ब्रूहि निर्वाणं रसमुत्तमम् ॥
आदाविह शरीरं तु अक्षय्यं तु यथा भवेत् ॥ १७ ॥
अष्टसिद्धिसमा युक्तं सर्वविद्यासमन्वितम् ॥
कामरूपं क्रियायुक्तं सर्वव्याधिविवर्जितम् ॥ १८ ॥
ततस्तु परमं देव निर्वाणं येन वै लभेत् ॥
मानवः कृतकृत्यश्च जायते च यथा प्रभो ॥ १९ ॥
तथा कथय मे देव दयां कृत्वा जगत्प्रभो ॥
निर्वाणपरमं कल्पं सर्वभ्रांतिविवर्जितम् ॥
प्रसिद्धं सुखदं दिव्यं समा चक्ष्व महेश्वर ॥ 7.1.147.२० ॥
॥ ईश्वर उवाच ॥ ॥
साधुसाधु महादेवि लोकानां हितकारिणि ॥
मर्त्यलोके महादेवि तीर्थं(?) तीर्थवरं शुभम् ॥ ॥ २१ ॥
प्रभासं परमं ख्यातं तच्च द्वादशयोजनम् ॥
तत्र सोमेश्वरो देवस्त्रिषु लोकेषु विश्रुतः ॥ २२ ॥
तस्य पूर्वे समाख्यातः श्रीकृष्णो दैत्यसूदनः ॥
चण्डिका योगिनी तत्र सखीभिः परिवारिता ॥ २३ ॥
ततः पूर्वे दिशां भागे चतुर्वक्त्रेण निर्मितम् ॥

तीर्थात्तीर्थं वरं दिव्यं सर्वाश्चर्यमयं शुभम् ॥ २४ ॥

सेवितं सर्वदेवैस्तु सिद्धैः साध्यैर्ग्रहैस्तथा ॥

अप्सरोमुनिभिर्दिव्यैर्यक्षैश्च पन्नगैः सदा ॥ २५ ॥

सिद्ध्यर्थं सर्वकामार्थं दिव्यभोगावहं शुभम् ॥

ब्रह्मकुण्डमिति ख्यातं ब्रह्मणा निर्मितं यतः ॥ २६ ॥

तस्य वायव्यकोणे तु हिर ण्येशः स्वयं स्थितः ॥

तमाराध्य महादेवं हिरण्येश्वरमुत्तमम् ॥ २७ ॥

महामन्त्रं जपेत्क्षिप्रं दशांशं होमयेत्सुधीः ॥

होमेन सिद्ध्यते मन्त्रः सत्यं सत्यं वरानने ॥ २८ ॥

तस्योत्तरे तु दिग्भागे किञ्चिदीशानमाश्रितः ॥

चतुर्वक्त्रो महादेवि क्षेत्रपो लिंगरूपधृक् ॥ २९ ॥

तत्स्थानं रक्षते देवि लिंगरूपेण शंकरः ॥

तमाराध्य प्रयत्नेन ततः कुण्डं समाश्रयेत् ॥ 7.1.147.३० ॥

सर्वैश्वर्यमयं देवि नानावर्णविचित्रितम् ॥

कुण्डस्यास्येशदिग्भागे भैरवेश्वरमुत्तमम् ॥ ३१ ॥

दुर्गन्धा भासुरा देवि वहते रसरूपिणी ॥

तस्या रसेन संयुक्तं पृथग्वर्णं हि कर्बुरम् ॥ ३२ ॥

मेघवर्णं महादिव्यं राजतं च पुनः शुभम् ॥

कपिलं दुग्धवर्णं च कर्पूराभं सुशोभनम् ॥ ३३ ॥

कदा कस्तूरिकाभासं कुंकुमच्छविकावहम् ॥

सौगन्धं चंदनोपेतं कदाचिद्रौधि रोदकम् ॥ ३४ ॥

एते रसाश्च विविधा दृश्यंते तत्र सर्वदा ॥

यस्य तुष्टो महादेवः सिद्ध्यते तस्य तत्क्षणात् ॥ ३५ ॥

रजतं क्षिप्यते तत्र सुवर्ण मिव जायते ॥

प्रत्यक्षमेव तत्रैव रसायनमनुत्तमम् ॥ ३६ ॥

पश्यंति मानवा देवि कौतुकं तत्क्षणाद्भृशम् ॥

रसं हि परमं दिव्यं तत्रस्थं च कलौ युगे ॥ ३७ ॥

सिद्धं सिद्धरसं पुंसां व्याधीनां क्षयकारकम् ॥

हेमबीजमयं दिव्यं ब्रह्मकुण्डोद्भवं महत् ॥ ३८ ॥

इदानीं ते प्रवक्ष्यामि मनुष्याणां हिताय वै ॥

दारिद्र्यं क्षयमाप्नोति तत्क्षणाच्च यशस्विनि ॥ ३९ ॥

आदावेव प्रकुर्वन्ति ताम्रकुम्भं दृढं शुभम् ॥

तीर्थोदकं क्षिपेत्तत्र पत्रैस्ताम्रस्तथा युतम् ॥ 7.1.147.४० ॥

निक्षिप्य भूमौ तत्कुम्भं ज्वालयेदनलं ततः ॥

चुल्लीरूपेण षण्मासं पाचयेत्तं शनैःशनैः ॥ ४१ ॥

पश्चादुद्धृत्य तं कुम्भं पुनरेव जलं क्षिपेत् ॥

मासमेकं पुनः कुर्यान्मासमेकं पुनर्भृशम् ॥४२॥

ततः सर्वाणि खण्डानि एकीकृत्य प्रयत्नतः ॥

पुनरेवोदकेनैव प्लाव्य चावर्तयेत्पुनः ॥ ॥४३॥

कांचनं जायते तत्र यदि तुष्टो महेश्वरः ॥४४॥

सिद्धिं शरीरजां देवि यदीच्छेन्मानवोत्तमः ॥

स स्नानमादितः कृत्वा संवत्सरत्रयं पुनः ॥ ॥ ४५ ॥

मौनेन नियमेनैव महामंत्रजपान्वितः ॥

पूजयेच्च हिरण्येशं क्षेत्रपालं प्रयत्नतः ॥४६॥

पंचोपचारसंयुक्तं ध्यानधारणसंयुतम् ॥

तीर्थोदकेन पाकं वै पेयं तद्वदुदुम्बरे ॥४७॥

एवं वर्षत्रयेणैव दिव्यदेहः प्रजायते ॥

तेजस्वी वलवान्प्राज्ञः सर्वव्याधिविवर्जितः ॥४८ ॥

जीवेद्वर्षशतान्येव त्रीणि दुःखविवर्जितः ॥

वर्षत्रयमविच्छिन्नं यस्तत्र स्नानमाचरेत् ॥४९॥

वागीश्वरीं जपेन्नित्यं पूजाहोमसमन्वितः ॥

तस्य प्रवर्तते वाणी सिद्धिः सारस्वती भवेत् ॥7.1.147.५०॥

संस्कृतं प्राकृतं चैवापभ्रंशं भूतभाषितम् ॥

गांगस्रोतःप्रवाहेण उद्गिरेद्गिरमात्मवान् ॥

अश्रान्तां च वरारोहे ह्यविच्छिन्नां च संततम् ॥५१॥

वदेद्वादिसहस्रैस्तु न श्रमस्तस्य जायते ॥

तीर्थस्यास्य प्रभावेण सर्वशास्त्रविशारदाः ॥ ५२ ॥

पंडिता गर्विताः सर्वे तर्कशास्त्रविशारदाः ॥

आगच्छन्ति समं तात विद्ययोद्धतकन्धराः ॥

न शक्नुवंति ते वक्तुं द्रष्टुं वक्त्रमपि प्रिये ॥ ५३ ॥

वादिनां च सहस्राणि भनक्त्येवं निरीक्षणात् ॥ ५४ ॥

उद्वाहयति शास्त्राणि विबुद्धार्थानि सत्वरम् ॥

विमलं पाञ्चरात्रं च वैष्णवं शैवमेव च ॥ ५५ ॥

इतिहासपुराणं च भूततंत्रं च गारुडम् ॥

भैरवं च महातंत्रं कुलमार्गं द्विधा प्रिये ॥ ५६ ॥

रथप्रवरवेगेन वाणी चास्खलिता भवेत् ॥

नश्यंति वादिनः सर्वे गरुडस्येव पन्नगाः ॥ ५७ ॥

न दारिद्र्यं न रोगश्च न दुःखं मानसं पुनः ॥

राजमान्यो महामानी भवेद्ब्रह्मप्रसादतः ॥ ५८ ॥

उत्साहबलसंयुक्तो देववज्जीवते सुधीः ॥

दाता भोक्ता च वाग्ग्मी च तीर्थस्यास्य प्रसादतः ॥ ५९ ॥

तैलाभ्यक्तस्य यत्तेजो जायते मनुजेषु च ॥

स्नातमात्रे तथा तेजस्तीर्थस्यैव प्रसादतः ॥ 7.1.147.६० ॥

यत्पापं कुरुते जंतुः पैशुन्यं च कृतघ्नताम् ॥

मित्रद्रोहे च यत्पापं यत्पापं पारदारिकम् ॥

तत्सर्वं विलयं याति कुंडस्नानरतस्य च ॥ ६१ ॥

मुशलं लङ्घयेद् यस्तु यो गास्त्यजति वै द्विजः ॥

तत्पापं क्षयमाप्नोति ब्रह्मकुण्डस्य दर्शनात् ॥ ६२ ॥

पृथिव्यां यानि तीर्थानि दैवतानि तथा पुनः ॥

पूजितानि च सर्वाणि कुण्डस्नानप्रभावतः ॥ ६३ ॥

सप्तजन्मार्जितं पापं दर्शनात्क्षयमाव्रजेत् ॥ ६४ ॥

यत्पापं गुरुगोघ्ने च परस्वहरणेषु च ॥

तत्पापं क्षयमाप्नोति ब्रह्मकुण्डनिषेवणात् ॥ ६५ ॥

प्रदक्षिणं च यः कुर्यात्स्नात्वा कुण्डस्य नामतः ॥

संख्यया पंचदश वै शृणु तस्यापि यत्फलम् ॥ ६६ ॥

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥

सप्तपातालसहिता तीर्थकोटिभिरावृता ॥ ६७ ॥

आहारमात्रं यो दद्यात्तत्र वेदविदां वरे ॥

लक्षभोज्यं कृतं तेन तीर्थस्यास्य प्रभावतः ॥ ६८ ॥

ब्रह्मेश्वरं च संपूज्य हिरण्येश्वरमुत्तमम् ॥

क्षेत्रपालं चतुर्वक्त्रं पूजयेच्चिन्तितं लभेत् ॥ ६९ ॥

एकविंशत्कुलै र्युक्तः सर्वपापविवर्जितः ॥

ब्रह्मलोकं स वै याति नात्र कार्या विचारणा ॥ 7.1.147.७० ॥

विरंचिकुण्डे स्नात्वा वा यो जपेद्वेदमातरम् ॥

लक्षजाप्यविधानेन स मुक्तः पातकैर्भवेत् ॥ ७१ ॥

स एव पुण्यकर्त्ता च स एव पुरुषोत्तमः ॥

यात्रा तत्र कृता येन ब्रह्मकुण्डे वरानने ॥ ७२ ॥

अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ॥

ब्रह्मकुण्डं समाश्रित्य ब्रह्मदेवमुपासते ॥ ७३ ॥

तावद्गर्जंति तीर्थानि त्रैलोक्ये सचराचरे ॥

यावद्ब्रह्मेश्वरं तीर्थं न पश्यन्ति नराः प्रिये ॥ ७४ ॥

ब्रह्मकुण्डे च पानीयं ये पिबन्ति नराः सकृत् ॥

न तेषां संक्रमेत्पापं वाचिकं मानसं तनौ ॥ ७५ ॥

ब्रह्मांडोत्तरमध्ये तु यानि तीर्थानि संति वै ॥

तेषां पुण्यमवाप्नोति ब्रह्मकुण्डे प्रदक्षिणात् ॥ ७६ ॥

याज्ञवल्क्यो महात्मा च परब्रह्मस्वरूपवान् ॥

सोऽपि कुंडं न मुंचेत निकुं भस्तु गणस्तथा ॥ ७७ ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं ब्रह्मकुण्डजम् ॥

तव स्नेहेन देवेशि किमन्यत्परिपृच्छसि ॥ ७८ ॥

य इदं शृणुयान्मर्त्यः सम्यक्छ्रद्धासमन्वितः ॥

स मुक्तः पातकैः सर्वैर्ब्रह्मलोकं च गच्छति ॥ ७९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मकुण्डमाहात्म्यवर्णनंनाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४७ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४८

https://sa.wikisource.org/s/g5i
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कूपं कुंडलसंभवम् ॥

तस्यैव चोत्तरे भागे ब्रह्मकुण्डसमीपतः ॥ १ ॥

यत्र सिद्धो महादेवि रूपकुंडलहारकः ॥

तत्र स्नात्वा नरो देवि मुच्येत्स्तेयकृतादघात् ॥ २ ॥

सप्त जन्मानि देवेशि न तस्यान्वयसंभवः ॥

चौरः कश्चिद्भवेत्क्रूरस्तत्र स्नानप्रभावतः ॥ ३ ॥

शिवरात्र्यां विशेषेण पिंडदानादिकां क्रियाम् ॥

कुर्याच्छस्त्रहतानां च पापिनां तत्र मुक्तये ॥ ४ ॥

॥ देव्युवाच ॥ ॥

कथं कुण्डलरूपं तु पृथिव्यां ख्यातिमागतम् ॥

एतत्कथय मे देव विस्तराद्वदतां वर ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि महापुण्यां कथां पापप्रणाशनीम् ॥

यां श्रुत्वा मुच्यते पापान्नरो जन्मशतार्जितात् ॥ ६ ॥

प्रभासक्षेत्रमाहात्म्याच्छिवरात्र्यामुपोषितः ॥

आसीत्सुदर्शनो राजा पृथिव्यामेकराट् सुधीः । ॥ ७ ॥

धन्यो हि स धनाढ्यश्च प्रजां यत्नैरपालयत् ॥

राज्यं तस्य सुसंपन्नं ब्राह्मणैरुपशोभितम् ॥

समृद्धमृद्धिसंयुक्तं विटतस्करवर्जितम् ॥ ८ ॥

तस्मिञ्जनपदे रम्ये पुरी भगवती शुभा ॥

चातुर्वर्ण्यसमायुक्ता पुरप्राकारमंडिता ॥ ९ ॥

तस्मिन्पुरवरे रम्ये राज्यं निहतकण्टकम् ॥

करोति बान्धवैः सार्द्धमृद्धियुक्तः सुदर्शनः ॥

हिरण्यदत्तस्य सुतो जातो गांधारकन्यया ॥ 7.1.148.१० ॥

तस्य भार्या प्रिया साध्वी भर्तृव्रतपरायणा ॥

सुनंदा नामविख्याता काशिराजसुता शुभा ॥ ११ ॥

तया सार्धं हि राजेन्द्रो भोगान्स बुभुजे सदा ॥

भुंजमानस्य भोगान्वै चिरकालो गतस्तदा ॥१२॥

अकरोत्स महायज्ञान्ददौ दानानि भूरिशः ॥

एवं कालो गतस्तस्य भार्यया सह सुव्रते ॥ १३ ॥

कदाचिन्माघमासे तु शिवरात्र्यां वरानने ॥

सस्मार पूर्वजातिं स भार्यामाहूय चाब्रवीत् ॥ १४ ॥

॥ सुदर्शन उवाच ॥ ॥

शिवरात्रिव्रतं देवि मया कार्यं वरानने ॥

व्रतस्यास्य प्रभावेन प्राप्तं राज्यं मया किल ॥ १५ ॥

॥राज्ञ्युवाच ॥ ॥

महान्प्रभावो राजेन्द्र एवमुक्तं त्वया मम ॥

एतन्मे कारणं ब्रूहि आश्चर्यं हृदि वर्तते ॥ १६॥ ॥

॥ राजोवाच ॥ ॥

शृणु तीर्थस्य माहात्म्यं शिवरात्रिमुपोषणात् ॥

तस्मिञ्छिवपुरे रम्ये स्वर्गद्वारे सुशोभने॥१७॥

आदितीर्थे प्रभासे तु कामिके तीर्थ उत्तमे ॥ १८॥

ऋद्धियुक्ते पुरे तस्मिन्नित्यं धर्मानुसेविते ॥

शिवरात्र्यां गतो राज्ञि तिथीनामुत्तमा तिथिः ॥ १९॥

मानवास्तत्र ये केचित्पुरराष्ट्रनि वासिनः॥

तत्रागता वरारोहे शिवरात्र्यामुपोषितुम् ॥ 7.1.148.२० ॥

धननामा वणिक्कश्चित्तत्रैव वसते सदा ॥

धनाढ्यः स तु धर्मात्मा सदा धर्मपरायणः ॥ ॥२१ ॥

स भार्यासहितस्तत्र शिवरात्रिमुपोषितः ॥

तस्य भार्याऽभवत्साध्वी रूपयौवनसंवृता ॥ २२ ॥

प्रचलन्मेखलाहारा सर्वाभरणभूषिता ॥

स तया भार्यया सार्धं कामक्रोधविवर्जितः ॥२३॥

प्रभासस्याग्रतो भूत्वा स्नातः शुक्लांबरः शुचिः ॥

यथोक्तेन विधानेन भक्त्या निद्राविवर्जितः ॥२४॥

तत्राहं चौररूपेण पापः स्तैन्यं समाश्रितः ॥

सच्छूद्राणां कुले जातो देवब्राह्मणपूजकः ॥ २५ ॥

पूर्वकर्मानुसंयोगाद्विकर्मणि रतः सदा ॥

तस्यां रात्र्यामहं तत्र जनमध्ये तु संस्थितः ॥ २६ ॥

कुण्डलीनः स्थितस्तत्र रंध्रापेक्षी वरानने ॥

वणिजस्तस्य भार्यायाश्छिद्रान्वेषणतत्परः ॥ २७ ॥

सा रात्रिर्जाग्रतस्तस्य गता मे विजने तथा ॥

गीतनृत्यादिनिर्घोषैर्वेदमंगलपाटकैः ॥ २८ ॥

तालशब्दैस्तथा बन्धैः पुस्तकानां च वाचकैः ॥

एवं रात्र्यां तु शेषायां यावत्तिष्ठति तत्र वै ॥ २९ ॥

निरोधेन समायुक्ता पीड्यमाना शुचिस्मिता ॥

धनिभार्या निरोधार्ता देवागाराद्बहिर्गता ॥ 7.1.148.३० ॥

तस्याः कर्णौ त्रोटयित्वा पुप्लुवेऽहं जले स्थितः ॥

ततः कोलाहलस्तत्र कृतस्तत्पुरवासिभिः ॥ ३१ ॥

श्रुत्वा कोलाहलं शब्दं कर्णत्रोटनजं तदा ॥

धाविता रक्षकास्तत्र राजशासनकारकाः ॥ ३२ ॥

तैरहं शस्त्रहस्तैश्च उल्काहस्तैः समंततः ॥

निरीक्षितोऽथ न प्राप्तं सुवर्णं मन्मुखे स्थितम् ॥ ॥ ३३ ॥

खड्गेन तीक्ष्णधारेण छित्वा शीर्षं तदा मम ॥

उल्काहस्ता निरीक्षन्तो नापश्यन्स्वर्णमण्वपि ॥ ३४ ॥

हित्वा मां ते गताः सर्वे गत्वा राज्ञे न्यवेदयन् ॥

न किञ्चित्तत्र संप्राप्तं हतोऽस्माभिश्च तत्क्षणात् ॥ ३५ ॥

कथयित्वा तु ते सर्वे यथादेशं गताः पुनः ॥

ततो वै बन्धुना तत्र भयभीतेन चेतसा ॥ ३६ ॥

निखातं मम तत्रैव शिरः कायेन संयुतम् ॥

खातं कृत्वा प्रिये तत्र ब्रह्मतीर्थस्य चोत्तरे ॥ ३७ ॥

पिहितोऽहं तु तत्रैव प्रभासे तीर्थ उत्तमे ॥

शिवरात्रिप्रभावेन तज्जातिस्मरतां गतः ॥ ३८ ॥

राज्यं निष्कण्टकं प्राप्तं समृद्धं वरवर्णिनि ॥

एतत्प्रभासमाहात्म्यं शिवरात्रेरुपोषणात् ॥

एतत्फलं मया लब्धं गत्वा तस्मादुपोषये ॥ ३९ ॥

॥ राज्युवाच ॥ ॥

गच्छावस्तत्र यत्रैव कपालं पतितं तव ॥

स्फोटिते च कपाले च हिरण्यं दृश्यते यदि ॥

प्रत्ययो मे भवेत्पश्चात्तव वाक्यं न संशयः ॥ 7.1.148.४० ॥

॥ राजोवाच ॥ ॥

कल्पं हि तिष्ठते चास्थि यावद्भूमिविपर्ययः ॥

उत्तिष्ठ व्रज भद्रं ते प्रभासं क्षेत्रमुत्तमम् ॥ ४१ ॥

तस्य तद्वचनं श्रुत्वा यद्राज्ञा समुदीरितम् ॥

गमनाय मतिं चक्रे शिवरात्र्या उपोषणे ॥ ४२ ॥

ततोऽश्वैर्जवनैर्युक्तं रथं हेमविभूषितम् ॥

आस्थाय सह पत्न्या च प्रभासं क्षेत्रमेयिवान् ॥ ४३ ॥

व्रतं कृत्वा प्रभासे तु यथोक्तं वरवर्णिनि ॥

ब्रह्मतीर्थे समागत्य उद्धृत्य सकलं ततः ॥४४॥

हिरण्यं दर्शयामास स्फोटयित्वा शवं स्वयम् ॥ ४५ ॥

॥ ईश्वर उवाच ॥ ॥

जातसंप्रत्यया भार्या तस्य राज्ञो बभूव ह ॥

जगाम परमं स्थानं यत्र कल्याणमुत्तमम् ॥ ४६ ॥

जनोऽपि विस्मितः सर्वो दृष्ट्वा चित्रं तदद्भुतम् ॥ ॥ ४७ ॥

नदी चित्रपथानाम तत्रोत्पन्ना वरानने ॥

चित्रादित्यस्य पूर्वेण ब्रह्मतीर्थस्य चोत्तरे ॥ ४८ ॥

तस्यां तत्तिष्ठते तत्र सर्वपापप्रणाशनम् ॥ ॥ ४९ ॥

श्रावणे मासि संप्राप्ते तस्मिन्कूपे विधानतः ॥

यः स्नानं कुरुते देवि श्राद्धं तत्र विशेषतः ॥ 7.1.148.५० ॥

चित्रादित्यं तु संपूज्य शिवलोके महीयते ॥ ५१ ॥

एतत्ते कथितं सर्वं शिवरात्र्या महत्फलम् ॥

भुक्तिमुक्तिप्रदं पुण्यं सर्वपापप्रणाशनम् ॥ ५२ ॥

य इदं पठते नित्यं शृणुयाद्वापि मानवः ॥

सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥ ५३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभास क्षेत्रमाहात्म्ये कुण्डलकूपमाहात्म्यवर्णनंनामाष्टाचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १४९

https://sa.wikisource.org/s/g4i
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि भैरवेश्वरमुत्तमम् ॥

ब्रह्मकुण्डस्य ईशाने स्थितं पापप्रणाशनम् ॥

चतुर्वक्त्रं महादेवं संस्थितं तीर्थरक्षणे ॥ १ ॥

तत्र स्नात्वा महाकुण्डे यस्तं पूजयते नरः ॥

पंचोपचारविधिना भक्तियुक्तो यतेन्द्रियः ॥ २ ॥

कुलानि यान्यतीतानि भविष्याणि च यानि वै ॥

तारयेत्स नरो देवि नात्र कार्या विचारणा ॥ ३ ॥

न चात्र संभवस्तस्य विनाशो नैव जायते ॥

विमानैश्चरते नित्यं दिवाकरसमप्रभैः ॥ ४ ॥

स्त्रीसहस्रैर्वृतो नित्यं क्रीडते देवव द्दिवि ॥ ५ ॥

एतल्लिंगं महादेवि चतुर्वक्त्रं महाप्रभम् ॥

दृष्ट्वापि तद्विमुच्येत सर्वपापैस्तु मानवः ॥६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये भैरवेश्वरमाहात्म्यवर्णनंनामैकोनपंचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५०



॥ ईश्वर उवाच ॥ ॥

ततो ब्रह्मेश्वरं गच्छेत्तस्य दक्षिणतः स्थितम् ॥

ब्रह्मणा स्थापितं पूर्वं ब्रह्मकुण्डसमीपतः ॥

त्रिषु लोकेषु विख्यातं रक्ष्यमाणं गणैर्मम ॥ १ ॥

तत्र स्नात्वा चतुर्दश्याममावास्यां विशेषतः ॥

श्राद्धं च विधिवत्कृत्वा ब्रह्मेशं पूजयेत्ततः ॥ २ ॥

विप्रेभ्यः कांचनं दद्यात्प्रीतये शंकरस्य च ॥ ३ ॥

एवं कृत्वा नरो देवि लभते जन्मनः फलम् ॥

विपुलां कीर्तिमायाति मोदते ब्रह्मणा प्रिये ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मकुंडमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनाम पंचाशदु त्तरशततमोऽध्यायः ॥ १५० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५१



॥ ईश्वर उवाच ॥ ॥

तस्यैव दक्षिणे भागे तृतीयो भैरवः स्थित ॥

ब्रह्मकुण्डसमीपे तु सावित्र्या संप्रतिष्ठितः ॥ १ ॥

आराध्य तत्र देवेशं देवानां प्रपितामहम् ॥

वायुभक्षा निराहारा तोषयामास शंकरम् ॥ २ ॥

तुष्टः प्राहेश्वरो देवि शंकरस्तां वराननाम् ॥ ३ ॥

योऽस्मिन्कुंडे नरः स्नात्वा मल्लिंगं पूजयिष्यति ॥

पौर्णमास्यां विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ४ ॥

दास्यं तस्य वरा निष्टान्मनसाऽभीसिताञ्छुभान् ॥ ५ ॥

महापातकयुक्तोऽपि मुक्तो भवति पातकैः ॥

सर्वकामसमृद्धात्मा स भूयाद्वृषभध्वजः ॥ ६ ॥

इत्येवमुक्त्वा देवेशि ततोऽन्तर्धानमागतः ॥

सावित्री ब्रह्मलोके तु गता संस्थाप्य शंकरम् ॥ ७ ॥

इति संक्षेपतः प्रोक्तं सावित्रीशमहोदयम् ॥

शृणुयाद्यस्तु मतिमान्स मुक्तः पातकैर्भवेत् ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मकुण्डमाहात्म्ये सावित्रीश्वरभैरवमाहात्म्य- वर्णनंनामैकपंचाशदुत्तरशततमोऽध्यायः ॥ १५१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५२



॥ ॥ ईश्वर उवाच ॥ ॥

तृतीयो भैरवः प्रोक्तश्चतुर्थं भैरवं शृणु ॥

ब्रह्मेशात्पश्चिमे भागे धनुषां त्रितये स्थितम् ॥ १ ॥

सर्वपापप्रशमनं सर्व कामप्रदं नृणाम् ॥

नारदेश्वरनामानं स्थापितं नारदेन वै ॥ २ ॥

ब्रह्मलोके स्थितः पूर्वं नारदो भगवानृषिः ॥

तत्र दृष्ट्वा महावीणां दिव्यां तंत्र्ययुतै र्युताम् ॥ ३ ॥

सरस्वत्या विनिर्मुक्तां ब्रह्मलोके महाप्रभाम् ॥

तेनासौ कौतुकाविष्टो वादयामास तां तदा ॥ ४ ॥

तंत्रीभ्यो वाद्यमानाभ्यो ब्राह्मणाः पतिता भुवि ॥

सप्त स्वरास्ते विख्याता मूर्च्छिताः षड्जकादयः ॥ ५ ॥

तान्दृष्ट्वा विस्मयाविष्टो मुक्त्वा वीणां प्रयत्नतः ॥

पप्रच्छ देवं ब्रह्माणं किमिदं कौतुकं विभो ॥ ६ ॥

वाद्यमानासु तन्त्रीषु पतिता ब्राह्मणा भुवि ॥

क एते ब्राह्मणा देव किं मृता इव शेरते ॥ ७ ॥

॥ ब्रह्मोवाच ॥ ॥

एते स्वरा महाभाग मूर्च्छिताः पतिता भुवि ॥

अज्ञानवादनेनैव पापं जातं तवाधुना ॥ ८ ॥

सप्तब्राह्मणविध्वंसपातकं ते समा गतम् ॥

तस्माच्छीघ्रं व्रज मुने प्रभासं क्षेत्रमुत्तमम् ॥ ९ ॥

समाराधय देवेशं सर्वपापविशुद्धये ॥

इत्युक्तो नारदस्तत्र संतप्य च मुहुर्मुहुः ॥ 7.1.152.१० ॥

कृत्वा विषादं बहुशः प्रभासं क्षेत्रमागतः ॥

तत्रैव ब्रह्मकुण्डं तु समासाद्य प्रयत्नतः ॥ ११ ॥

भैरवं पूजयामास दिव्याब्दानां शतं प्रिये ॥

ततो निष्कल्मषो भूत्वा गीतज्ञश्चाभवत्तथा ॥ १२ ॥

ततः प्रभृति तल्लिंगं नारदेश्वरभैरवम् ॥

ख्यातं लोके महादेवि सर्वपातकनाशनम् ॥ १३ ॥

अज्ञानाद्वादयेद्यस्तु वीणां चैव तथा स्वरान् ॥

स तत्पातकशुद्ध्यर्थं तत्र गच्छेन्महेश्वरि ॥ १४ ॥

माघे मासि जिताहारस्त्रिकालं योऽर्चयेत्ततः ॥

नारदेशं भैरवं स स्वर्गरामामनोहरः ॥ १५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये ब्रह्मकुण्डमाहात्म्ये नारदेश्वरभैरवमाहात्म्यवर्णनंनाम द्विपंचाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्येश्वरमुत्तमम् ॥

ब्रह्मकुण्डस्य वायव्ये धनुषां द्वितये स्थितम् ॥ १ ॥

सर्वपापप्रशमनं दारिद्र्यौघविनाशनम् ॥

कृतस्मराच्च परतो ह्यग्नितीर्थाच्च पूर्वतः ॥ २ ॥

यमेश्वराच्च नैर्ऋत्ये समुद्रस्योत्तरे तथा ॥

तस्य लिंगस्य प्राग्भागे ब्रह्मा तेपे महत्तपः ॥

आराधयामास तदा देवदेवं त्रिलोचनम् ॥ ३ ॥

ततस्तुष्टो महादेवो ब्रह्मन्ब्रूहि वरो मम ॥ ४ ॥

॥ ब्रह्मोवाच ॥ ॥

यदि तुष्टोऽसि मे देव याज यामीति मे मतिः ॥

स्थानं च यन्महापुण्यं तन्ममाख्यातुमर्हसि ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

कृतस्मराद्ब्रह्मकुंडं यमेशात्सागरावधि ॥

एतदंतरमासाद्य पापी चापि विमुच्यते ॥ ६ ॥

वहेद्विषुवती तत्र सदा पुण्यात्मनां नृणाम् ॥

यत्र तत्र कुरु विभो मनसा ते यथेप्सितम् ॥ ७ ॥

इत्युक्तः स तदा ब्रह्मा प्रारेभे यज्ञमुत्तमम् ॥ ८ ॥

ततो भागार्थिनो देवा इन्द्राद्यास्तत्र चागताः॥

ऋषयो भागकामास्तु सर्वे तत्र समागताः ॥९॥

ततो यज्ञागतेभ्यः स दक्षिणामददात्पुनः ॥

ततोऽथ दक्षिणा क्षीणा दीयमाना यशस्विनि ॥ 7.1.153.१० ॥

ततोब्रह्मा बहूद्विग्नो दध्यौ वै मनसा तदा ॥

बद्धाञ्जलिपुटो भूत्वा इदं वचनमब्रवीत् ॥ ११ ॥

भगवन्वै विरूपाक्ष क्रतुर्नैव समाप्यते ॥
दक्षिणाहै(दै?)न्यतो देव न याति परिपूर्णताम् ॥ १२ ॥
दक्षिणासहिताः सर्वे यथा यांति तथा कुरु ॥
पितामहवचः श्रुत्वा कृत्वा ध्यानं तदा मया ॥ १३ ॥
स्मृता सरस्वती देवी देवानां हितकाम्यया ॥
आगता सा महापुण्या उक्ता देवी मया तदा ॥ १४ ॥
पद्मयोनेर्धनं क्षीणं क्रतुर्वै न समाप्यते ॥
तस्मान्मम प्रसादेन भव काञ्चनवाहिनी ॥ १५ ॥
सरस्वत्यास्ततः स्रोत उत्थितं पश्चिमामुखम् ॥
काञ्चनानां तु पद्मानि उच्छ्रितानि सहस्रशः ॥ १६ ॥
काञ्चनेन प्रवाहेण तोयं सारस्वतं शुभम् ॥
दैत्यसूदनमासाद्य अग्नितीर्थावधि प्रिये ॥
पूरयामास पद्मैश्च कोटिशश्च समंततः ॥ १७ ॥
काञ्चनानि तु तान्येव दत्त्वा विप्रेषु दक्षिणाम् ॥
यज्ञं निर्वर्तयामास हृष्टो ब्रह्मा द्विजैः सह ॥ १८ ॥
शेषाणि यानि पद्मानि तानि निःक्षिप्य भूतले ॥
तदूर्ध्वं स्थापयामास लिगं तु कनके श्वरम्॥ १९ ॥
तत्र लिंगं प्रतिष्ठाप्य सर्वदेवनमस्कृतम् ॥
ऋषिभ्यो दक्षिणां प्रादादेकैकस्य यथाक्रमम् ॥
काञ्चनानां च पद्मानां प्रत्येकमयुतं ददौ ॥7.1.153.२०॥
ततः शेषाणि पद्मानि निहितानि धरातले ॥
ब्रह्मकुण्डस्य मध्ये तु नापुण्यो लभते नरः ॥२१॥
तत्कुण्डतोयमद्यापि नानावर्णं प्रदृश्यते ॥
तत्राधः पद्मसंयोगान्नीरं स्वर्णायते क्षणात् ॥ २२ ॥
हिरण्मयानि पद्मानि अधः कृत्वा प्रजापतिः ॥
लिंगमूर्ध्वं प्रतिष्ठाप्य स्वयं पूजितवांस्तदा ॥
हिरण्यकमलैर्दिव्यैर्हिरण्येशस्ततोऽभवत् ॥ २३ ॥
सर्वपापप्रशमनं तथा दारिद्र्यनाशनम् ॥

दृष्ट्वा हिरण्मयेशानं सर्वपापैः प्रमुच्यते ॥ २४ ॥

माघ मासे चतुर्दश्यां यस्तल्लिंगं प्रपूजयेत् ॥

पूजितं तेन सकलं ब्रह्माण्डं सचराचरम् ॥ २५ ॥

सर्वदानानि दत्तानि सर्वे देवाश्च तोषिताः ॥

ब्रह्माण्डं तेन दत्तं स्याद्येन तल्लिंगमर्चितम् ॥ २६ ॥

एतन्मया ते कथितं स्नेहेन वरवर्णिनि ॥

न कस्यचिन्मयाऽऽख्यातं महागोप्यं वरानने । २७ ॥

य इदं शृयुयाद्भक्त्या पठेद्वा भक्तिसंयुतः ॥

स गच्छेद्देवलोकं तु मुक्तः सर्वैस्तु पातकैः ॥ २८ ॥

इति ते चातिविख्याताः पवित्राः पञ्च भैरवाः ॥

ब्रह्मकुण्डसमीपस्थाः कथितास्तव सुन्दरि ॥ २९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मकुण्डमाहात्म्ये हिरण्येश्वरमाहात्म्यवर्णनंनाम त्रिपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं पापविमोचनम् ॥

हिरण्येश्वरवायव्ये धनुषां त्रितये स्थितम् ॥ १ ॥

पापघ्नं सर्वजंतूनां दर्शनात्स्पर्शनादपि ॥

आद्यं लिंगं महादेवि गायत्र्या संप्रतिष्ठितम् ॥ २ ॥

तल्लिंगं समनुप्राप्य गायत्रीं जपते तु यः ॥

ब्राह्मणस्तु शुचिर्भूत्वा मुच्यते दुष्प्रतिग्रहात् ॥ ३ ॥

ज्येष्ठस्य पूर्णिमायां तु दंपती यस्तु भोजयेत् ॥

परिधाप्य यथाशक्त्या दौर्भाग्यैर्मुच्यते नरः ॥ ४ ॥

गंधपुष्पोपहारैश्च पौर्णमास्यां तु योऽर्चयेत् ॥

ब्राह्मण्यं जायते तस्य सप्त जन्मानि सुंदरि ॥ ५ ॥

इत्येवं कथितं देवि माहात्म्यं पापनाशनम् ॥

ब्रह्मकुण्डप्रसादेन सारात्सारतरं प्रिये ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मकुण्डमाहात्म्ये गायत्रीश्वरमाहात्म्यवर्णनंनाम चतुःपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि रत्नेश्वरमनुत्तमम् ॥

तत्र तस्वा तपो देवि विष्णुना प्रभविष्णुना ॥

स्थापितं तत्र तल्लिंगं सर्वकामप्रदं प्रिये ॥ १ ॥

रत्नकुंडे नरः स्नात्वा यस्तं पूजयते सदा ॥

सर्वोपचारैर्भक्त्या स प्राप्नुयादीप्सितं फलम् ॥ २ ॥

अत्र कृत्वा तपो घोरं कृष्णेनामिततेजसा ॥

प्राप्तं सुदर्शनं चक्रं सर्वदैत्यान्तकारकम् ॥ ३ ॥

एतत्स्थानं महादेवि सदा प्रियतरं मम ॥

वसामि तत्र देवेशि प्रलयेऽपि न संत्यजे ॥ ४ ॥

स्मृतं तद्वैष्णवं क्षेत्रं नाम्ना देवि सुदर्शनम् ॥

धन्वंतराणि षट्त्रिंशत्समंतात्परिमण्डलम् ॥ ५ ॥

एतदन्तरमासाद्य ये केचित्प्राणिनोऽधमाः ॥

मृताः कालवशाद्देवि ते यास्यंति परं पदम् ॥ ६ ॥

कांचनं तत्र गरुडं पीतानि वसनानि च ॥

विष्णुमुद्दिश्य यो दद्यात्स तु यात्राफलं लभेत् ॥ ७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रत्नेश्वरमाहात्म्यवर्णनंनाम पंचपंचाशदु त्तरशततमोऽध्यायः ॥ १५५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि वैनतेयप्रतिष्ठितम् ॥

रत्नेश्वरादुत्तरतो धनुषां त्रितये स्थितम् ॥ १ ॥

वैनतेयश्च देवेशि ज्ञात्वा क्षेत्रं तु वैष्णवम् ॥

लिंगं प्रतिष्ठयामास सर्वपापप्रणाशनम् ॥ २ ॥

यस्तं पूजयते भक्त्या पंचम्यां तु विधानतः ॥

न विषं क्रमते तस्य सप्त जन्मानि सर्पजम् ॥ ३ ॥

पंचामृतेन संस्नाप्य पूजयित्वा विधानतः ॥

प्राप्नुयात्सकलं पुण्यं मोदते दिवि देववत् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रत्नेश्वरमाहात्म्ये गरुडेश्वरमाहात्म्यवर्णनंनाम षट्पंचाशदुत्तरशततमोऽध्यायः ॥ १५६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सत्यभामेश्वरं शुभम् ॥

रत्नेश्वराद्दक्षिणे तु धनुषांतरमास्थितम् ॥ १ ॥

सर्वपापप्रशमनं स्थापितं सत्यभामया ॥

कृष्णस्य कान्तया देवि रूपौदार्यसमेतया ॥ २ ॥

स्नात्वा तद्वैष्णवं स्थानं नृणां पातकनाशनम् ॥ ३ ॥

माघे मासि तृतीयायां नारी वा पुरुषोऽपि वा ॥

यस्तं पूजयते भक्त्या स मुक्तः पातकैर्भवेत् ॥ ४ ॥

दौर्भाग्यदुःखशोकेभ्यस्तथा विघ्नैश्च दुःखितः ॥

मुच्यते नात्र संदेहः सत्यभामान्वितो भवेत् ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सत्यभामेश्वरमाहात्म्यवर्णनंनाम सप्तपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अनंगेश्वरमुत्तमम् ॥

रत्नेश्वरादग्रतःस्थं धनुषान्तरमास्थितम् ॥ १ ॥

स्थापितं कामदेवेन तल्लिंगं विष्णुसूनुना ॥

ज्ञात्वा तद्वैष्णवं स्थानं कलौ पातकनाशनम् ॥ २ ॥

तं दृष्ट्वा पूजयित्वा तु कामदेवसमो भवेत् ॥

स्वर्गविद्याधरीणां च जायते चित्तमोहकः ॥ ३ ॥

तस्यान्वयेऽपि न भवेत्कुरूपो दुर्भगोऽपि वा ॥ ४ ॥

तत्रानंगत्रयोदश्यां व्रतेन वरवर्णिनि ॥

विशेषाराधनं तत्र जन्मसाफल्यकारणम् ॥ ५ ॥

शय्यादानं तु दातव्यं तत्र विप्राय शीलिने ॥

विशेषाद्विष्णुभक्ताय सम्यग्यात्राफलं लभेत् ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये रत्नेश्वरमाहात्म्येऽनंगेश्वरमाहात्म्यवर्णनंनामाष्टपंचाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १५९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि रत्नकुण्डमनुत्तमम् ॥

रत्नेशाद्दक्षिणे भागे धनुषां सप्तके स्थितम् ॥

महापापोपशमनं विष्णुना निर्मितं स्वयम् ॥ १ ॥

अष्टकोटीस्तु तीर्थानि भूयोऽन्तरिक्षगाणि तु ॥

समानीय तु कृष्णेन तत्र क्षिप्तानि भूरिशः ॥ २ ॥

गणानां कोटिरेका तु तत्कुण्डं रक्षति प्रिये ॥

कलौ युगे तु संप्राप्ते दुष्प्राप्यमकृतात्मभिः ॥ ३ ॥

तत्र स्नात्वा महादेवि विधिदृष्टेन कर्मणा ॥

प्राप्नुयादश्वमेधस्य फलं शतगुणोत्तरम् ॥ ४ ॥

एकादश्यां विशेषेण पिंडं तत्र प्रदापयेत् ॥

अक्षय्यां तृप्तिमायांति पितरस्तस्य भामिनि ॥ ५ ॥

कुर्याज्जागरणं तत्र एकादश्यां विधानतः ॥

वाञ्छितं लभते देवि यदि श्रद्धा दृढा भवेत् ॥ ६ ॥

देयानि पीतवस्त्राणि तथा धेनुः पयस्विनी ॥

तत्र विष्णुं समुद्दिश्य सम्यग्यात्राफलाप्तये ॥ ७ ॥

हेमकुण्डं कृते प्रोक्तं त्रेतायां रौप्यनामकम् ॥

द्वापरे चक्रकुंडं तु रत्नकुंडं कलौ स्मृतम् ॥ ८ ॥

पातालवाहिनीगंगा स्रोतांसि तत्र भूरिशः ॥

समानीतानि हरिणा तत्र तिष्ठंति भामिनि ॥ ९ ॥

तत्र स्नानेन देवेशि सर्वतीर्थाभिषेचनम् ॥ 7.1.159.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये रत्नेश्वरमाहात्म्यवर्णनं- नामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥१५९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६०



॥ ॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि राजभट्टारकं परम् ॥

रैवन्तकं सूर्यपुत्रमश्वारूढं महाबलम् ॥ १ ॥

संस्थितं क्षेत्रमध्ये तु सावित्र्या नैर्ऋते प्रिये ॥

तं दृष्ट्वा मानवो देवि सर्वापद्भ्यो विमुच्यते ॥२॥

रविवारेण सप्तम्यां यस्तं पूजयते नरः ॥

तस्याऽन्वयेऽपि नो देवि दरिद्री जायते नरः॥३॥

तस्मात्सर्वप्रयत्नेन तमेवाराधयेन्मनाक् ॥

निर्विघ्नं क्षेत्रवासार्थं राजा वाऽश्वविवृद्धये ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रैवंतकराजभट्टारकमाहात्म्यवर्णनंनाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६१

https://sa.wikisource.org/s/gb3
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्य दक्षिणतः स्थितम् ॥

ईशाने लक्ष्मणेशाच्च धनुषां षोडशे प्रिये ॥१॥

अनन्तेश्वरनामानमनन्तेन प्रतिष्ठितम् ॥

नागराजेन देवेशि ज्ञात्वा क्षेत्रं तु पावनम् ॥ २ ॥

यस्तु तं पूजयेद्देवि पंचम्यां फाल्गुने सिते ॥

पञ्चोपचारविधिना जिताहारो जितेन्द्रियः ॥ ३ ॥

न तं दशंति फणिनो दश वर्षाणि पंच च ॥

विषं न क्रमते देवि देहे त्वचरमेव वा ॥ ४ ॥

तस्मात्तं पूजयेद्यत्नात्पंचम्यां च विशेषतः ॥ ५ ॥

तत्रानंतव्रतं कार्यं मधुपायससंयुतम् ॥

पायसं मधुसंयुक्तं देयं विप्राय भोजनम् ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽनन्तेश्वरमाहात्म्यवर्णनंनामैकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६२

https://sa.wikisource.org/s/gb4
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्माद्दक्षिणतः स्थितम् ॥

लक्ष्मणेशाच्च पूर्वस्मिँल्लिंगमष्टकुलेश्वरम् ॥ १ ॥

सर्वपापप्रशमनं महाविषप्रणाशनम् ॥

पूजितं सिद्धगन्धर्वैर्वाञ्छितार्थप्रदायकम् ॥ २ ॥

यस्तं पूजयते मर्त्यः कृष्णाष्टम्यां विधानतः ॥

स मुक्तः पातकैर्घोरैर्नागलोके महीयते ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्येऽष्टकुलेश्वरमाहात्म्यवर्णनंनाम द्विषष्ट्युत्तर शततमोऽध्यायः ॥ १६२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्मात्पूर्वेण संस्थितम् ॥

नासत्येश्वरनामानं महा कल्मषनाशनम् ॥ १ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये नासत्येश्वराश्विनेश्वरमाहात्म्यवर्णनंनाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६४

https://sa.wikisource.org/s/gb6
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्मात्पूर्वेण संस्थितम् ॥

महापापौघशमनं पूजितं सर्वकामदम् ॥ १ ॥

अश्विनेश्वरनामानं धनुषां पंचके स्थितम् ॥

सर्वरोगप्रशमनं दृष्टं सर्वार्थसाधकम् ॥ २ ॥

ये केचिद्रोगिणो लोके तेषां तद्भेषजं महत् ॥

माघमासे द्वितीयायां दर्शनं तस्य दुर्लभम् ॥ ३ ॥

तस्मात्पश्येच्च तद्भक्त्या यदि श्रेयोऽभिकांक्षितम् ॥

महापापौघशमनं पूजितं सर्वकामदम् ॥ ४ ॥

इति लिङ्गद्वयं देवि सूर्यपुत्रप्रतिष्ठितम् ॥

तस्मिन्नेव दिने पश्येत्संयतात्मा नरोत्तमः ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽश्विनेश्वरमाहात्म्यवर्णनंनाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सावित्रीं लोकमातरम् ॥

महा पापप्रशमनीं सोमेशादीशदिक्स्थिताम् ॥ १ ॥

संयतात्मा नरः पश्येत्तत्र तां नियतात्मवान् ॥ २ ॥

ब्रह्मणा यष्टुकामेन सावित्री सहधर्मिणी ॥

कृता तां बलतो ज्ञात्वा गायत्रीं कोपमाविशत् ॥ ३ ॥

ततः संत्यज्य सा देवी ब्रह्माणं कमलोद्भवम् ॥

सपत्नीरोषसन्तप्ता प्रभासं क्षेत्रमाश्रिता ॥ ४ ॥

तपः करोति विपुलं देवैरपि सुदुःसहम् ॥

तत्र स्थले स्थिता देवी साऽद्यापि प्रियदर्शना ॥ ५ ॥

॥ श्रीदेव्युवाच ॥ ॥

किमर्थं सा परित्यक्ता सावित्री ब्रह्मणा पुरा ॥

गायत्री च कथं प्राप्ता केन चास्य निवेदिता ॥ ६ ॥

कीदृशीं तां च गायत्रीं लब्धवान्पद्मसंभवः ॥

यस्तां पत्नीं समुत्सृज्य तस्यामेव मनो दधौ ॥ ७ ॥

कस्य सा दुहिता देव किमर्थं च विवाहिता ॥

एतन्मे कौतुकं सर्वं यथावद्वक्तुमर्हसि ॥ ८ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि सावित्र्याश्चरितं महत् ॥

यथा सा ब्रह्मणा त्यक्ता गायत्री च विवाहिता ॥ ९ ॥

पुरा बुद्धिः समुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः ॥

इति वेदा मया प्रोक्ता यज्ञार्थं नात्र संशयः ॥ 7.1.165.१० ॥

यज्ञैः संतर्पिता देवा वृष्टिं दास्यंति भूतले ॥

ततश्चौषधयः सर्वा भविष्यंति धरातले ॥ ११ ॥

तस्मात्संजायते शुक्रं शुक्रात्सृष्टिः प्रवर्तते ॥
सृष्ट्यर्थं सर्वलोकानां ततो यज्ञं करोम्यहम् ॥ १२ ॥
दृष्ट्वा मां यज्ञ आसक्तं ये च विप्रा धरातले ॥
ते यज्ञान्प्रचरिष्यंति शतशोऽथ सहस्रशः ॥ १३ ॥
एवं स निश्चयं कृत्वा यज्ञार्थं सुरसुंदरि ॥
तीर्थं निवेशयामास पुष्करं नाम नामतः ॥ १४ ॥
यज्ञवाटो महांस्तत्र आसीत्तस्य महात्मनः ॥
तत्र देवर्षयः सर्वे देवाः सेन्द्रपुरोगमाः ॥ १५ ॥
समायाता महादेवि यज्ञे पैतामहे तदा ॥
पुण्यास्तेऽपि द्विजश्रेष्ठास्तत्रर्त्विजः प्रजज्ञिरे ॥ १६ ॥
सावित्री लोकजननी पत्नी तस्य महात्मनः ॥
गृहकार्ये समासक्ता दीक्षा कालव्यतिक्रमात् ॥
अध्वर्युणा समाहूता सावित्री वाक्यमब्रवीत् ॥ १७ ॥
॥ सावित्र्युवाच ॥ ॥
अद्यापि न कृतो वेषो न गृहे गृहमण्डनम् ॥
लक्ष्मीर्नाद्यापि संप्राप्ता न भवानी न जाह्नवी ॥ १८ ॥
न स्वाहा न स्वधा चैव तथा चैवाप्यरुंधती ॥
इन्द्राणी देवपत्न्योऽन्याः कथमेकाकिनी व्रजे ॥ १९ ॥
उक्तः पितामहो गत्वा पुलस्त्येन महात्मना ॥
सावित्री देव नायाति प्रसक्ता गृहकर्मणि ॥ 7.1.165.२० ॥
त्वत्पत्नी किमिदं कर्म फलेन संप्रवर्तते ॥
तच्छ्रुत्वा दीक्षितो वाचं शिखी मुंडी मृगाजिनी ॥ २१ ॥
पत्नीकोपेन संतप्तः प्राह देवं पुरंदरम् ॥ २२ ॥
गच्छ मद्वचनाच्छक्र पत्नीमन्यां कुतश्चन ॥
गृहीत्वा शीघ्रमागच्छ न स्यात्कालात्ययो यथा ॥ २३ ॥
जगाम बलहा तूर्णं वचनात्परमेष्ठिनः ॥
अपश्यमानः कांचित्स्त्रीं या योग्या हंसवाहने ॥ २४ ॥
अथ शापाद्विभीतेन सहस्राक्षेण धीमता ॥

दृष्टा गोपालकन्यैका रूपयौवनशालिनी ॥ २५ ॥

बिभ्रती तत्र पूर्णं सा कुम्भं कन्येत्यचोदयत् ॥

तां गृहीत्वा ततः शक्रः समायाद्यत्र दीक्षितः ॥

देवदेवश्चतुर्वक्त्रो विष्णुरुद्रसमन्वितः ॥ २६ ॥

संप्रदानं तु कृतवान्कन्याया मधुसूदनः ॥२७॥

प्रेरितः शंकरेणैव ब्रह्मा देवर्षिभिस्तथा॥

परिणीयतां ततो दीक्षां तस्याश्चक्रे यथात्मनः ॥२८ ॥

ततः प्रवर्तितो यज्ञः सर्वकामसमन्वितः ॥२९॥

अत्रिर्होतार्चिकस्तत्र पुलस्त्योऽध्वर्युरेव च॥

उद्गाताऽथो मरीचिश्च ब्रह्माहं सुरपुंगवः॥7.1.165.३०॥

सनत्कुमारप्रमुखाः सदस्यास्तस्य निर्मिताः॥

वस्त्रैराभरणैर्युक्ता मुकुटैरंगुलीयकैः ॥ ३१ ॥

भूषिता भूषणोपेता एकैकस्य पृथक्पृथक् ॥

त्रयस्त्रयः पृष्ठतोऽन्ये ते चैवं षोडशर्त्विजः ॥३२॥

प्रोक्ता भवद्भि र्यज्ञेऽस्मिन्ननुगृह्योऽस्मि सर्वदा ॥

पत्नी ममेयं गायत्री यज्ञेऽस्मिन्ननुगृह्यताम् ॥ ३३ ॥

मृदुवस्त्रधरां साक्षात्क्षौमवस्त्रावगुण्ठिताम् ॥

निष्क्रम्य पत्नीशालात ऋत्विग्भिर्वेदपारगैः ॥ ३४ ॥

औदुम्बरेण दण्डेन संवृतो मृगचर्मणा ॥

तया सार्धं प्रविष्टश्च ब्रह्मा तं यज्ञमण्डपम् ॥३५॥

॥ ईश्वर उवाच ॥ ॥

एतस्मिन्नेव काले तु संप्राप्ता देवयोषितः ॥

संप्राप्ता यत्र सावित्री यज्ञे तस्मिन्निमंत्रिताः ॥ ३६ ॥

भृगोः ख्यात्यां समुत्पन्ना विष्णुपत्नी यशस्विनी ॥

आमन्त्रिता सा लक्ष्मीश्च तत्रायाता त्वरान्विता ॥ ३७ ॥

तत्र देवी महाभागा योगनिद्रादिभूषिता ॥

देवी कांतिस्तथा श्रद्धा द्युतिस्तुष्टिस्तथैव च ॥ ३८ ॥

सती या दक्षतनया उमा या पार्वती शुभा ॥

त्रैलोक्यसुन्दरी देवी स्त्रीणां सौभाग्यदायका ॥३९॥

जया च विजया चैव गौरी चैव महाधना ॥

मनोजवा वायुपत्नी ऋद्धिश्च धनदप्रिया ॥ 7.1.165.४० ॥

देवकन्यास्तथाऽऽयाता दानव्यो दनुवंशजाः ॥

सप्तर्षीणां तथा पत्न्य ऋषीणां च तथैव च ॥ ४१ ॥

प्लवा मित्रा दुहितरो विद्याधरगणास्तथा ॥

पितरो रक्षसां कन्यास्तथाऽन्या लोकमातरः ॥ ४२ ॥

वधूभिश्चैव मुख्याभिः सावित्री गन्तुमिच्छति ॥

अदित्याद्यास्तथा देव्यो दक्षकन्याः समागताः ॥ ४३ ॥

ताभिः परिवृता सार्धं ब्रह्माणी कमलालया ॥

काश्चिन्मोदकमादाय काश्चित्पूपं वरानने ॥ ४४ ॥

फलानि तु समादाय प्रयाता ब्रह्मणोऽन्तिकम् ॥

आढकीश्चैव निष्पावान्राजमाषांस्तथाऽपराः ॥ ४५ ॥

दाडिमानि विचित्राणि मातुलिंगानि शोभने॥

करीराणि तथा चान्या गृहीत्वा करमर्दकान्॥४६॥

कौसुंभं जीरकं चैव खर्जूरं चापरास्तथा॥

उततीश्चापरा गृह्य नालिकेराणि चापराः॥४७॥

द्राक्षया पूरितं चाम्रं शृङ्गाराय यथा पुरा॥

कर्बुराणि विचित्राणि जंबूकानि शुभानि च॥४८॥

अक्षोडामलकान्गृह्य जंबीराणि तथा पराः ॥

बिल्वानि परिपक्वानि चिर्भटानि वरानने ॥ ४९ ॥

अन्नपानाधिकाराणि बहूनि विविधानि च ॥

शर्करापुत्तलीं चान्या वस्त्रे कौसुम्भके तथा ॥ 7.1.165.५० ॥

एवमादीनि चान्यानि गृह्य पूर्वे वरानने ॥

सावित्र्या सहिताः सर्वाः संप्राप्तास्तु तदा शुभाः ॥ ५१ ॥

सावित्रीमागतां दृष्ट्वा भीतस्तत्र पुरंदरः ॥

अधोमुखः स्थितो ब्रह्मा किमेषा मां वदिष्यति ॥ ५२ ॥

त्रपान्वितौ विष्णुरुद्रौ सर्वे चान्ये द्विजातयः ॥

सभासदस्तथा भीतास्तथैवान्ये दिवौकसः ॥ ५३ ॥

पुत्रपौत्रा भागिनेया मातुला भ्रातरस्तथा ॥

ऋतवो नाम ये देवा देवानामपि देवताः ॥ ५४ ॥

विलक्षास्तु तथा सर्वे सावित्री किं वदिष्यति ॥

ब्रह्मवाक्यानि वाच्यानि किं नु वै गोपकन्यया ॥ ॥ ५५ ॥

मौनीभूतास्तु शृण्वानाः सर्वेषां वदतां गिरः ॥

अध्वर्युणा समाहूता नागता वरवर्णिनी ॥ ५६ ॥

शक्रेणान्या तथाऽऽनीता दत्ता सा विष्णुना स्वयम् ॥

अनुमोदिता च रुद्रेण पित्रा दत्ता स्वयं तथा ॥ ५७ ॥

कथं सा भविता यज्ञः समाप्तिं वा कथं व्रजेत् ॥

एवं चिन्तयतां तेषां प्रविष्टा कमलालया ॥ ५८ ॥

वृतो ब्रह्मा भार्यया स ऋत्विग्भिर्वेदपारगैः ॥

हूयन्ते चाग्नयस्तत्र ब्राह्मणैर्वेदपारगैः ॥ ५९ ॥

पत्नीशाले तथा गोपी रौप्यशृंगा समेखला ॥

क्षौमवस्त्रपरीधाना ध्यायन्ती परमेश्वरम् ॥ 7.1.165.६० ॥

पतिव्रता पतिप्राणा प्राधान्येन निवेशिता ॥

कृपान्विता विशालाक्षी तेजसा भास्करोपमा ॥ ६१ ॥

द्योतयंती सदस्तत्र सूर्यस्येव यथा प्रभा ॥

ज्वलमानस्तथा वह्निर्भ्रमंते चर्त्विजस्तथा ॥ ६२ ॥

पशूनामवदानानि गृह्णंति द्विजसत्तमाः ॥

प्राप्ता भागार्थिनो देवा विलंबसमयोऽभवत् ॥ ६३ ॥

कालहीनं न कर्तव्यं कृतं न फलदं भवेत् ॥

वेदेष्वयमधीकारो दृष्टः सर्वो मनीषिभिः ॥ ६४ ॥

प्रवर्ग्ये क्रियमाणे तु ब्राह्मणैर्वेदपारगैः ॥

क्षीरद्वये हूयमाने मंत्रेणाध्वर्युणा तथा ॥ ६५ ॥

उपहूतोपहूतेन आगतेषु द्विजन्मसु ॥

क्रियमाणे तथा भक्ष्ये दृष्ट्वा देवी क्रुधान्विता ॥

उवाच देवी ब्रह्माणं सदोमध्ये तु मौनिनम् ॥ ६६ ॥

किमेवं बुध्यते देव कृतमेतद्विचेष्टितम् ॥
मां परित्यज्य यः कामात्कृतवानसि किल्बिषम् ॥ ६७ ॥
न तुल्या पादरजसा समा साऽधिशिरः कृता ॥ ६८ ॥
यद्वदंति नराः सर्वे संगताः सदसि स्थिताः ॥
आश्चर्यं च प्रभूणां तु कुरुते यं यमिच्छति ॥ ६९ ॥
भवता रूपलोभेन कृतं कर्म विगर्हितम् ॥ 7.1.165.७० ॥
न पुत्रेषु कृता लज्जा पौत्रेषु च न ते विभो ॥
कामकारकृतं मन्ये ह्येतत्कर्म विगर्हितम् ॥ ७१ ॥
पितामहोऽसि देवानामृषीणां प्रपितामहः ॥
कथं न ते त्रपा जाता आत्मनः पश्यतस्तनुम् ॥ ७२ ॥
लोकमध्ये कृतं हास्यमिह चैव विगर्हितः ॥
यद्येष ते स्थितो भावस्तिष्ठ देव नमोऽस्तु ते ॥७३॥
अहं कथं सखीनां तु दर्शयिष्यामि वै मुखम् ॥
भर्त्रा मे विहिता पत्नी कथमेतदहं वदे ॥ ७४ ॥
॥ ब्रह्मोवाच ॥ ॥
ऋत्विग्भिरहमाज्ञप्तो दीक्षा कालोऽतिवर्तते ॥
पत्नीं विना न होमोत्र शीघ्रं पत्नीमिहानय ॥ ७५ ॥
शक्रेणैषा समानीता दत्ता चैवाऽथ विष्णुना ॥
गृहीता च मया त्वं हि क्षमस्वैकं मया कृतम् ॥
न चापराध्यं भूयोऽन्यं करिष्ये तव सुव्रते ॥ ७६ ॥
॥ ईश्वर उवाच ॥ ॥
एवमुक्ता तदा क्रुद्धा ब्रह्माणं शप्तुमुद्यता॥
यदि मेऽस्ति तपस्तप्तं गुरवो यदि तोषिताः ॥ ७७ ॥
सर्वब्राह्मणशालासु स्थानेषु विविधेष्वपि ॥
न तु ते ब्राह्मणाः पूजां करिष्यंति कदाचन ॥ ॥ ७८ ॥
ऋते वै कार्तिकीमेकां पूजां सांवत्सरीं तव ॥
करिष्यंति द्विजाः सर्वे सत्येनानेन ते शपे ॥
एतद्बुद्ध्वा न कोपोस्तु हतो हन्ति न संशयः ॥ ॥ ७९ ॥

॥ सावित्र्युवाच ॥ ॥

भोभोः शक्र त्वयानीता आभीरी ब्रह्मणोऽन्तिकम् ॥

यस्मादीदृक्कृतं कर्म तस्मात्त्वं लप्स्यसे फलम् ॥7.1.165.८०॥

यदा संग्राममध्ये त्वं स्थाता शक्र भविष्यसि ॥

तदा त्वं शत्रुभिर्बद्धो नीतः परमिकां दशाम् ॥ ८१ ॥

अकिंचनो नष्टसुतः शत्रूणां नगरे स्थितः॥

पराभवं महत्प्राप्य अचिरादेव मोक्ष्यसे ॥ ८२ ॥

शक्रं शस्वा तदा देवी विष्णुं चाऽथ वचोब्रवीत् ॥ ८३ ॥

गुरुवाक्येन ते जन्म यदा मर्त्ये भवि ष्यति ॥

भार्याविरहजं दुःखं तदा त्वं तत्र भोक्ष्यसे ॥ ८४ ॥

हृतां शत्रुगणैः पत्नीं परे पारे महोदधेः ॥

न च त्वं ज्ञायसे सीतां शोकोपहचेतनः ॥ ८५ ॥

भ्रात्रा सह परां काष्ठामापदं दुःखितस्तथा ॥

पशूनां चैव संयोगश्चिरकालं भविष्यति ॥ ८६ ॥

तथाऽऽह रुद्रं कुपिता यदा दारुवने स्थितः ॥

तदा ते मुनयः क्रुद्धाः शापं दास्यंति ते हर ॥ ८७ ॥

भोभोः कापालिक क्षुद्र पत्न्योऽस्माकं जिहीर्षसि ॥

तदेतद्धूषितं लिंग भूमौ रुद्र पतिष्यति ॥ ८८ ॥

विहीनः पौरुषेण त्वं मुनिशापाच्च पीडितः ॥

गंगातीरे स्थिता पत्नी सा त्वामाश्वासयिष्यति ॥ ८९ ॥

अग्ने त्वं सर्वभक्षोऽसि पूर्वं पुत्रेण मे कृतः ॥

भ्रूणहा धर्म इत्येष कथं दग्धं दहाम्यहम् ॥ 7.1.165.९० ॥

जातवेदस रुद्रस्त्वां रेतसा प्लावयिष्यति ॥

मेध्येषु च कृतज्वाला ज्वालया त्वां ज्वलिष्यति ॥ ९१ ॥

ब्राह्मणानृत्विजः सर्वान्सावित्री ह्यशपत्तदा ॥ ९२ ॥

प्रतिग्रहाग्निहोत्राश्च वृथा दारा वृथाश्रमाः ॥

सदा क्षेत्राणि तीर्थानि लोभादेव गमिष्यथ ॥ ९३ ॥

परान्नेषु सदा तृप्ता अतृप्ताः स्वगृहेषु च ॥

अयाज्ययाजनं कृत्वा कुत्सितस्य प्रतिग्रहम् ॥ ९४ ॥

वृथा धनार्जनं कृत्वा व्यवश्चैव तथा वृथा ॥

मृतानां तेन प्रेतत्वं भविष्यति न संशयः ॥ ९५ ॥

एवं शक्रं तथा विष्णुं रुद्रं वै पावकं तथा ॥

ब्रह्माणं ब्राह्मणांश्चैव सर्वांस्तानशपत्तदा ॥ ९६ ॥

शापं दत्त्वा तथा तेषां तदा सावस्थिता स्थिरा ॥ ९७ ॥

लक्ष्मीः प्राह सखीं तां च इन्द्राणी च वरानना ॥

अन्या देव्यस्तथा प्राहुः साऽऽह स्थास्यामि नात्र वै ॥

तत्र चाहं गमिष्यामि यत्र श्रोष्ये न तु ध्वनिम् ॥ ९८ ॥

ततस्ताः प्रमदाः सर्वाः प्रयाताः स्वं निकेतनम् ॥

सावित्री कुपिता तासां पुनः शापाय चोद्यता ॥ ९९ ॥

यस्मान्मां संपरित्यज्य गतास्ता देवयोषितः ॥

तासामपि तथा शापं प्रदास्ये कुपिता भृशम् ॥ 7.1.165.१०० ॥

नैकत्र वासो लक्ष्म्यास्तु भविष्यति कदाचन ॥

रुद्रापि चंचला तावन्मूर्खेषु च वसिष्यसि ॥ १०१ ॥

म्लेच्छेषु पर्वतीयेषु कुत्सिते कुष्ठिते तथा ॥

वाचाटे चावलिप्ते च अभिशस्ते दुरात्मनि ॥

एवंविधे नरे तुभ्यं वसतिः शापकारिता ॥ १०२ ॥

शापं दत्त्वा ततस्तस्या इन्द्राणीमशपत्तदा ॥ १०३ ॥

त्वष्टुर्वाचा गृहीतेन्द्रे पत्यौ ते दुष्टकारिणि ॥

नहुषाय गते राज्ये दृष्ट्वा त्वां याचयिष्यति ॥ ॥ १०४ ॥

अहमिन्द्रः कथं चैषा नोपतिष्ठति चालसा ॥

सर्वान्देवान्हनिष्यामि लप्स्ये नाहं शचीं यदि ॥ १०५ ॥

नष्टा त्वं च तदा शस्ता वने महति दुःखिता ॥

वसिष्यसि दुराचारे शापेन मम गर्विते ॥ १०६ ॥

देवभार्यासु सर्वासु तदा शापमयच्छत ॥ १०७ ॥

न चापत्यकृता प्रीतिः सर्वास्वेव भविष्यति ॥

दह्यमाना दिवारात्रौ वंध्याशब्देन दुःखिताः ॥१०८॥

गौरीमेवं तथा शस्वा सा देवी वरवर्णिनी ॥

उच्चै रुरोद सावित्री भर्तृ यज्ञाद्बहिः स्थिता ॥ १०९ ॥

रोदमाना तु सा दृष्टा विष्णुना च प्रसादिता ॥

मा रोदीस्त्वं विशालाक्षि एह्यागच्छ सदः शुभे ॥ 7.1.165.११० ॥

प्रविष्टा च शुभे यागे मेखलां क्षौमवाससी ॥

गृहाण दीक्षां ब्रह्माणि पादौ ते प्रणमे शुभे ॥ १११ ॥

एवमुक्ताऽब्रवीदेनं नाहं कुर्यां वचस्तव ॥

तत्राहं च गमिष्यामि यत्र श्रोष्ये न च ध्वनिम् ॥ ११२ ॥

एतावदुक्त्वा व्यरमदुच्चैः स्थाने क्षितौ स्थिता ॥ ११३ ॥

विष्णुस्तदग्रतः स्थित्वा बद्ध्वा च करसंपुटम् ॥

तुष्टाव प्रणतो भूत्वा भक्त्या परमया युतः ॥ ११४ ॥

॥ विष्णुरुवाच ॥ ॥

नमोऽस्तु ते महादेवि भूर्भुवःस्वस्त्रयीमयि ॥

सावित्रि दुर्गतरिणि त्वं वाणी सप्तधा स्मृता ॥ ११५ ॥

सर्वाणि स्तुतिशास्त्राणि लक्षणानि तथैव च ॥

भविष्या सर्वशास्त्राणां त्वं तु देवि नमोऽस्तु ते ॥ ॥ ११६ ॥

श्वेता त्वं श्वेतरूपासि शशांकेन समानना ॥

शशिरश्मिप्रकाशेन हरिणोरसि राजसे ॥

दिव्यकुंडलपूर्णाभ्यां श्रवणाभ्यां विभूषिता ॥ ॥ ११७ ॥

त्वं सिद्धिस्त्वं तथा ऋद्धिः कीर्तिः श्रीः संततिर्मतिः ॥

संध्या रात्रि प्रभातस्त्वं कालरात्रिस्त्वमेव च ॥ ११८ ॥

कर्षुकाणां यथा सीता भूतानां धारिणी तथा ॥

एवं स्तुवंतं सावित्री विष्णुं प्रोवाच सुव्रता ॥ ११९ ॥

सम्यक्स्तुता त्वया पुत्र अजेयस्त्वं भविष्यसि ॥

अवतारे सदा वत्स पितृमातृसु वल्लभः ॥ 7.1.165.१२० ॥

अनेन स्तवराजेन स्तोष्यते यस्तु मां सदा ॥

सर्वदोषविनिर्मुक्तः परं स्थानं गमिष्यति ॥ १२१ ॥

गच्छ यज्ञं चिरं तस्य समाप्तिं नय पुत्रक ॥ १२२ ॥

कुरुक्षेत्रे प्रयागे च भविष्ये यज्ञकर्मणि ॥

समीपगा स्थिता भर्तुः करिष्ये तव भाषितम् ॥ १२३ ॥

एवमुक्तो गतो विष्णुर्ब्रह्मणः सद उत्तमम् ॥

सावित्री तु समायाता प्रभासे वरवर्णिनि ॥१२४॥

गतायामथ सावित्र्यां गायत्री वाक्यमब्रवीत् ॥१२५॥

शृण्वंतु मुनयो वाक्यं मदीयं भर्तृसन्निधौ ॥

यदहं वच्मि संतुष्टा वरदानाय चोद्यता ॥ १२६ ॥

ब्रह्माणं पूजयिष्यंति नरा भक्तिसमन्विताः ॥

तेषां वस्त्रं धनं धान्यं दाराः सौख्यं सुताश्च वै ॥ १२७ ॥

अविच्छिन्नं तथा सौख्यं गृहं वै पुत्रपौत्रिकम् ॥

भुक्त्वाऽसौ सुचिरं कालं ततो मोक्षं गमिष्यति ॥१२८॥

शक्राहं ते वरं वच्मि संग्रामे शत्रुभिः सह ॥

तदा ब्रह्मा मोचयिता गत्वा शत्रुनिकेतनम् ॥ १२९ ॥

सपुत्रशत्रुनाशात्त्वं लप्स्यसे च परं मुदम् ॥

अकंटकं महद्राज्यं त्रैलोक्ये ते भविष्यति ॥ 7.1.165.१३० ॥

मर्त्यलोके यदा विष्णो ह्यवतारं करिष्यसि ॥

भ्रात्रा सह परं दुःखं स्वभार्या हरणं च यत् ॥ १३१ ॥

हत्वा शत्रुं पुनर्भार्यां लप्स्यसे सुरसन्निधौ ॥

गृहीत्वा तां पुनः प्राज्यं राज्यं कृत्वा गमिष्यसि ॥ १३२ ॥

एकादश सहस्राणि कृत्वा राज्यं पुनर्दिवम्॥

ख्यातिस्ते विपुला लोके चानुरागो भविष्यति॥ १३३ ॥

गायत्री ब्राह्मणांस्तांश्च सर्वानेवाब्रवीदिदम् ॥१३४ ॥

युष्माकं प्रीणनं कृत्वाऽ तृप्तिं यास्यंति देवताः॥

भवंतो भूमिदेवा वै सर्वे पूज्या भविष्यथ ॥ १३५ ॥

युष्माकं पूजनं कृत्वा दत्त्वा दानान्यनेकशः॥

प्राणायामेन चैकेन सर्वमेतत्तरिष्यथ॥१३६॥

प्रभासे तु विशेषेण जप्त्वा मां वेदमातरम्॥

प्रतिग्रहकृतान्दोषान्न प्राप्स्यध्वं द्विजोत्तमाः॥१३७ ॥

पुष्करे चान्नदानेन प्रीताः सर्वे च देवताः ॥
एकस्मिन्भोजिते विप्रे कोटिर्भवतिभोजिता ॥ १३८ ॥
ब्रह्महत्यादिपापानि दुरितानि च यानि च ॥
तरिष्यंति नराः सर्वे दत्ते युष्मत्करे धने ॥ १३९ ॥
महीयध्वे तु जाप्येन प्राणायामैस्त्रिभिः कृतैः ॥
ब्रह्महत्यासमं पापं तत्क्षणादेव नश्यति ॥ 7.1.165.१४० ॥
दशभिर्जन्मजनितं शतेन तु पुरा कृतम् ॥
त्रियुगं तु सहस्रेण गायत्री हंति किल्बिषम् ॥ १४१ ॥
एवं ज्ञात्वा सदा पूज्या जाप्ये च मम वै कृते ॥
भविष्यध्वं न सन्देहो नात्र कार्या विचारणा ॥ १४२ ॥
ओंकारेण त्रिमात्रेण सार्धेन च विशेषतः ॥
पूज्याः सर्वे न सन्देहो जप्त्वा मां शिरसा सह ॥ १४३ ॥
अष्टाक्षरस्थिता चाहं जगद्व्याप्तं मया त्विदम् ॥
माताऽहं सर्ववेदानां वेदैः सर्वैरलङ्कता ॥ १४४॥
जत्वा मां परमां सिर्द्धि पश्यन्ति द्विजसत्तमाः ॥
प्राधान्यं मम जाप्येन सर्वेषां वो भविष्यति ॥ १४५ ॥
गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः॥
नायंत्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी॥१४६॥
यस्माद्भवतां सावित्र्या शापो दत्तो सदे त्विह॥
अत्र दत्तं हुतं चापि सर्वमक्षयकारकम्॥
दत्तो वरो मया तेन युष्माकं द्विजसत्तमाः ॥ १४७ ॥
अग्निहोत्रपरा विप्रास्त्रिकालं होमदायिनः ॥
स्वर्गं ते तु गमिष्यंति एकविंशतिभिः कुलैः ॥ १४८ ॥
एवं शक्रे च विष्णौ च रुद्रे वै पावके तथा ॥
ब्रह्मणो ब्रह्मणानां च गायत्री सा वरं ददौ ॥
तस्मिन्काले वरं दत्त्वा ब्रह्मणः पार्श्वगाऽभवत् ॥ १४९ ॥
हरिणा तु समाख्यातं लक्ष्म्याः शापस्य कारणम् ॥
युवतीनां च सर्वासां शापस्तासां पृथक्पृथक् ॥ 7.1.165.१५० ॥

लक्ष्म्यास्तदा वरं प्रादाद्गायत्री ब्रह्मणः प्रिया ॥ १५१ ॥

अकुत्सिताः सदा पुत्रि तव वासेन शोभने ॥

भविष्यति न संदेहः सर्वेभ्यः प्रीतिदायकाः ॥ १५२ ॥

ये त्वया वीक्षिताः सर्वे सर्वे वै पुण्यभाजनाः ॥

तेषां जातिः कुलं शीलं धर्मश्चैव वरानने ॥ १५३ ॥

परित्यक्तास्त्वया ये तु ते नरा दुःखभागिनः ॥

सभायां ते न शोभन्ते मन्यन्ते न च पार्थिवैः ॥ १५४ ॥

आशिषश्चैव तेषां तु कुर्वते वै द्विजोत्तमाः ॥

सौजन्यं तेषु कुर्वन्ति नप्ता भ्राता पिता गुरुः ॥ १५५ ॥

बांधवोऽसि न संदेहो न जीवेऽहं त्वया विना ॥

त्वयि दृष्टे प्रसन्ना मे दृष्टिर्भवति शोभना ॥

मनः प्रसीदतेऽत्यर्थं सत्यंसत्यं वदामि ते ॥ १५६ ॥

एवंविधानि वाक्यानि त्वया दृष्ट्या निरीक्षिते ॥

सज्जनास्ते वदिष्यन्ति जनानां प्रीतिदायकाः ॥ १५७ ॥

इन्द्राणि नहुषः प्राप्य स्वर्गं त्वां याचयिष्यति ॥

अदृष्ट्वा तु हतः पापो अगस्त्यवचनाद्द्रुतम्॥ १५८ ॥

सर्पत्वं समनुप्राप्य प्रार्थयिष्यति तं मुनिम् ॥

दर्पेणाहं विनष्टोऽस्मि शरणं मे मुने भव ॥ १५९ ॥

वाक्येन तेन तस्यासौ नृपस्य भगवानृषिः ॥

कृत्वा मनसि कारुण्यमिदं वचनमब्रवीत् ॥ 7.1.165.१६० ॥

उत्पत्स्यति कुले राजा त्वदीये कुरुनंदन ॥

सार्पं कलेवरं दृष्ट्वा प्रश्नैस्त्वामुद्धरिष्यति ॥ १६१ ॥

सोऽप्यजगरतां त्यक्त्वा पुनः स्वर्गं गमिष्यति ॥

अश्वमेधे कृते भर्त्रा सह यासि पुनर्दिवि ॥

प्राप्स्यसे वर दानेन ममानेन सुलोचने ॥ १६२ ॥

देवपत्न्यस्तदा सर्वास्तुष्टया परिभाषिताः ॥

अपत्यैरपि हीनाः स्युर्नैव दुःखं भविष्यति ॥ १६३ ॥

इति दत्त्वा वरान्देवी गायत्री लोकसंमता ॥

जगामादर्शनं देवी सर्वेषां पश्यतां तदा ॥ १६४ ॥

सावित्री तु तदा देवी प्रभासं क्षेत्रमागता ॥

कृतस्मरस्य शृङ्गे तु श्रीसोमेश्वरपूर्वतः ॥ १६५ ॥

मन्वन्तरे चाक्षुषे च द्वितीये द्वापरे शुभे ॥

तत्र यज्ञः समारब्धो ब्रह्मणा लोककारिणा ॥ १६६ ॥

यज्ञे याता महात्मानो देवाः सप्तर्षयो वराः ॥

स्वायंभुवे तु ये शस्ताः शप्तास्ते चाभवन्पुरा ॥ १६७ ॥

तस्मात्कालात्समारभ्य प्रभासं क्षेत्रमाश्रिताः ॥ १६८ ॥

सावित्री लोकजननी लोकानुग्रहकारिणी ॥

यस्तां पूजयते भक्त्या पक्षमेकं निरंतरम् ॥

ब्रह्मपूजाविधानेन तस्य पुत्रो ध्रुवो भवेत् ॥ १६९ ॥

पाण्डुकूपे नरः स्नात्वा दृष्ट्वा लिंगानि पञ्च वै ॥

पाण्डवैः स्थापितानीह दृष्ट्वा यज्ञफलं लभेत् ॥ 7.1.165.१७० ॥

ज्येष्ठस्य पूर्णिमायां तु सावित्रीस्थलसंनिधौ ॥

पठेद्यो ब्रह्मसूक्तानि मुच्यते सर्वपातकैः ॥ १७१ ॥

एतत्ते सर्वविख्यातमाख्यातं कल्मषापहम् ॥

यश्चेदं शृणुयाद्भक्त्या स गच्छेत्परमं पदम् ॥ १७२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सावित्रीमाहात्म्यवर्णनंनाम पञ्चषष्ट्युतरशततमोऽध्यायः ॥ १६५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६६

https://sa.wikisource.org/s/gb8
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

प्रभासे संस्थिता या तु सावित्री ब्रह्मणः प्रिया ॥

तस्याश्चरित्रं मे ब्रूहि देवदेव जगत्पते ॥ १ ॥

व्रतमाहात्म्यसंयुक्तमितिहाससमन्वितम् ॥

पाति व्रत्यकरं स्त्रीणां महाभाग्यं महोदयम् ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

कथयामि महादेवि सावित्र्याश्चरितं महत् ॥

प्रभासक्षेत्रसंस्थायाः स्थल स्थाने महेश्वरि ॥

यथा चीर्णं व्रतकरं सावित्र्या राजकन्यया ॥ ३ ॥

आसीन्मद्रेषु धर्मात्मा सर्वभूतहिते रतः ॥

पार्थिवोऽश्वपतिर्नाम पौरजानपद प्रियः ॥ ४ ॥

क्षमावाननपत्यश्च सत्यवादी जितेन्द्रियः ॥

प्रभासक्षेत्रयात्रायामाजगाम स भूपतिः ॥

यात्रां कुर्वन्विधानेन सावित्रीस्थलमागतः ॥ ५ ॥

स सभार्यो व्रतमिदं तत्र चक्रे नृपः स्वयम् ॥

सावित्रीति प्रसिद्धं यत्सर्वकामफलप्रदम् ॥ ६ ॥

तस्य तुष्टाऽभवद्देवि सावित्री ब्रह्मणः प्रिया ॥

भूर्भुवःस्वरितीत्येषा साक्षान्मूर्तिमती स्थिता ॥ ७ ॥

कमंडलुधरा देवी जगामादर्शनं पुनः ॥

कालेन वहुना जाता दुहिता देवरूपिणी ॥ ८ ॥

सावित्र्या प्रीतया दत्ता सावित्र्याः पूजया तथा ॥

सावित्रीत्येव नामाऽस्याश्चक्रे विप्राज्ञया नृपः॥ ९ ॥

सा विग्राहवतीव श्रीः प्रावर्धत नृपात्मजा ॥

सावित्री सुकुमारांगी यौवनस्था बभूव ह ॥ 7.1.166.१० ॥

या सुमध्या पृथुश्रोणी प्रतिमा काञ्चनी यथा ॥
प्राप्तेयं देवकन्या वा दृष्ट्वा तां मेनिरे जनाः ॥ ॥ ११ ॥
सा तु पद्मा विशालाक्षी प्रज्वलतीव तेजसा ॥
चचार सा च सावित्री व्रतं यद्भृगुणोदितम् ॥१२॥
अथोपोष्य शिरःस्नाता देवतामभिगम्य च ॥
हुत्वाग्निं विधिवद्विप्रान्वाचयेद्वरवर्णिनी ॥१३॥
तेभ्यः सुमनसः शेषां प्रतिगृह्य नृपात्मजा॥
सखीपरिवृताऽभ्येत्य देवी श्रीवत्सरूपिणी ॥१४॥
साऽभिवाद्य पितुः पादौ शेषां पूर्वं निवेद्य च ॥
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता ॥ १५ ॥
तां दृष्ट्वा यौवनप्राप्तां स्वां सुतां देवरूपिणीम् ॥
उवाच राजा संमन्त्र्य पुत्र्यर्थं सह मन्त्रिभिः ॥ १६ ॥
पुत्रि प्रदानकालस्ते न हि कश्चिद्वृणोति माम् ॥
विचारयन्न पश्यामि वरं तुल्यमिहात्मनः ॥ ॥१७॥
देवादीनां यथा वाच्यो न भवेयं तथा कुरु ॥
पठ्यमानं मया पुत्रि धर्मशास्त्रेषु च श्रुतम् ॥१८॥
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ॥
ब्रह्महत्या पितुस्तस्य सा कन्या वृषली स्मृता ॥ १९ ॥
अतोऽर्थं प्रेषयामि त्वां कुरु पुत्रि स्वयंवरम् ॥
वृद्धैरमात्यैः सहिता शीघ्रं गच्छावधारय ॥ ॥ 7.1.166.२० ॥
एवमस्त्विवति सावित्री प्रोच्य तस्माद्विनिर्ययौ ॥
तपोवनानि रम्याणि राजर्षीणां जगाम सा ॥ २१ ॥
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् ॥
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमाणि च ॥ २२ ॥
आजगाम पुनर्वेश्म सावित्री सह मंत्रिभिः ॥
तत्रापश्यत देवर्षिं नारदं पुरतः शुचिम् ॥ २३ ॥
आसीनमासने विप्रं प्रणम्य स्मितभाषिणी ॥
कथयामास तत्कार्यं येनारण्यं गता च सा ॥ २४ ॥

॥ सावित्र्युवाच ॥

आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ॥

द्युमत्सेन इति ख्यातो दैवादन्धो वभूव सः ॥ २५ ॥

आर्यस्य बालपुत्रस्य द्युमत्सेनस्य रुक्मिणा ॥

सामन्तेन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ २६ ॥

स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ॥ २७ ॥

स तस्य च वने वृद्धः पुत्रः परमधार्मिकः ॥

सत्यवागनुरूपो मे भर्तेति मनसेप्सितः ॥ २८ ॥

॥ नारद उवाच ॥ ॥

अहो बत महत्कष्टं सावित्र्या नृपते कृतम् ॥

बालस्वभावादनया गुणवान्सत्यवाग्वृतः ॥ २९ ॥

सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ॥

सत्यं वदेति मुनिभिः सत्यवान्नाम वै कृतम् ॥7.1.166.३०॥

नित्यं चाश्वाः प्रियास्तस्य करोत्यश्वाश्च मृन्मयान् ॥

चित्रेऽपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ ३१ ॥

सत्यवान्रंतिदेवस्य शिष्यो दानगुणैः समः ॥

ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ ३२ ॥

ययातिरिव चोदारः सोमवत्प्रियदर्शनः ॥

रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ ३३ ॥

एको दोषोऽस्ति नान्यश्च सोऽद्यप्रभृति सत्यवान् ॥

संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति ॥ ३४ ॥

नारदस्य वचः श्रुत्वा दुहिता प्राह पार्थिवम् ॥ ३५ ॥

॥ सावित्र्युवाच ॥ ॥

सकृज्जल्पंति राजानः सकृज्जल्पंति ब्राह्मणाः ॥

सकृत्कन्या प्रदीयेत त्रीण्येतानि सकृत्सकृत् ॥ ३६ ॥

दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा ॥

सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ ३७ ॥

मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ॥

क्रियते कर्मणा पश्चात्प्रमाणं हि मनस्ततः ॥ ३८ ॥

॥ नारद उवाच ॥ ॥

यद्येतदिष्टं भवतः शीघ्रमेव विधीयताम् ॥

अविघ्नेन तु सावित्र्याः प्रदानं दुहितुस्तव ॥ ३९ ॥

एवमुक्त्वा समुत्पत्य नारूदस्त्रिदिवं गतः ॥

राजा च दुहितुः सर्वं वैवाहिकमथाकरोत् ॥

शुभे मुहूर्ते पार्श्वस्थैर्ब्राह्मणैर्वेदपारगैः ॥ 7.1.166.४० ॥

सावित्र्यपि च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥।

मुमुदेऽतीव तन्वंगी स्वर्गं प्राप्येव पुण्यकृत् ॥ ४१ ॥

एवं तत्राश्रमे तेषां तदा निवसतां सताम् ॥

कालस्तु पश्यतां किञ्चिदतिचक्राम पार्वति ॥ ४२ ॥

सावित्र्यास्तु तदा नार्यास्तिष्ठन्त्याश्च दिवानिशम् ॥

नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ ४३ ॥

ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ॥

प्राप्तः कालोऽथ मर्तव्यो यत्र सत्यव्रतो नृपः ॥ ४४ ॥

ज्येष्ठमासे सिते पक्षे द्वादश्यां रजनीमुखे ॥

गणयंत्याश्च सावित्र्या नारदोक्तं वचो हृदि ॥ ४५ ॥

चतुर्थेऽहनि मर्तव्यमिति संचिंत्य भामिनी ॥

व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽऽश्रमे ॥ ४६ ॥

ततस्त्रिरात्रं न्यवसत्स्नात्वा संतर्प्य देवताम् ॥

श्वश्रूश्वशुरयोः पादौ ववंदे चारुहासिनी ॥ ४७ ॥

अथ प्रतस्थे परशुं गृहीत्वा सत्यवान्वनम् ॥

सावित्र्यपि च भर्तारं गच्छंतं पृष्ठतोऽन्वयात् ॥ ४८ ॥

ततो गृहीत्वा तरसा फलपुष्पसमित्कुशान् ॥

अथ शुष्काणि चादाय काष्ठभारमकल्पयत् ॥ ४९ ॥

अथ पाटयतः काष्ठं जाता शिरसि वेदना ॥

काष्ठभारं क्षणात्त्यक्त्वा वटशाखावलंबितः ॥ 7.1.166.५० ॥

सावित्रीं प्राह शिरसो वेदना मां प्रबाधते ॥

तवोत्संगे क्षणं तावत्स्वप्तुमिच्छामि सुन्दरि ॥ ५१ ॥
विश्रमस्व महाबाहो सावित्री प्राह दुःखिता ॥
पश्चादपि गमिष्यामि ह्याश्रमं श्रमनाशनम् ॥ ॥ ५२ ॥
यावदुत्संगगं कृत्वा शिरोस्य तु महीतले ॥
तावद्ददर्श सावित्री पुरुषं कृष्णपिंगलम् ॥ ५३ ॥
किरीटिनं पीतवस्त्रं साक्षात्सूर्यमिवोदितम् ॥
तमुवाचाथ सावित्री प्रणम्य मधुराक्षरम् ॥ ५४ ॥
कस्त्वं देवोऽथवा दैत्यो यो मां धर्षितुमागतः ॥
न चाहं केनचिच्छक्या स्वधर्माद्देव रोधितुम् ॥ ५५ ॥
विद्धि मां पुरुषश्रेष्ठ दीप्तामग्निशिखामिव ॥ ५६ ॥
॥ यम उवाच ॥ ॥
यमः संयमनश्चास्मि सर्वलोकभयंकरः ॥ ५७ ॥
क्षीणायुरेष ते भर्ता संनिधौ ते पतिव्रते ॥
न शक्यः किंकरैर्नेतुमतोऽहं स्वयमागतः ॥ ५८ ॥
एवमुक्त्वा सत्यव्रतशरीरात्पाशसंयुतः ॥
अंगुष्ठमात्रं पुरुषं निचकर्ष यमो बलात् ॥ ५९ ॥
अथ प्रयातुमारेभे पंथानं पितृसेवितम् ॥
सावित्र्यपि वरारोहा पृष्ठतोऽनुजगाम ह ॥ 7.1.166.६० ॥
पतिव्रतत्वाच्चाश्रांता तामुवाच यमस्तथा ॥
निवर्त गच्छ सावित्रि मुहूर्तं त्वमिहागता ॥ ६१ ॥
एष मार्गो विशालाक्षि न केनाप्यनुगम्यते ॥ ६२ ॥
॥ सावित्र्युवाच ॥ ॥
न श्रमो न च मे ग्लानिः कदाचिदपि जायते ॥
भर्तारमनुगच्छन्त्या विशिष्टस्य च संनिधौ ॥ ६३ ॥
सतां सन्तो गतिर्नान्या स्त्रीणां भर्ता सदा गतिः ॥
वेदो वर्णाश्रमाणां च शिष्याणां च गतिर्गुरुः ॥ ६४ ॥
सर्वेषामेव भूतानां स्थानमस्ति महीतले ॥
भर्त्तारमेकमुत्सृज्य स्त्रीणां नान्यः समाश्रयः ॥ ६५ ॥

एवमन्यैः सुमधुरैर्वाक्यैर्धर्मार्थसंहितैः ॥
तुतोष सूर्यतनयः सावित्रीं वाक्यमब्रवीत् ॥ ६६ ॥
॥ यम उवाच ॥ ॥
तुष्टोऽस्मि तव भद्रं ते वरं वरय भामिनि ॥
सापि वव्रे च राज्यं स्वं विनयावनतानना ॥ ६७ ॥
चक्षुःप्राप्तिं तथा राज्यं श्वशुरस्य महात्मनः ॥
पितुः पुत्रशतं चैव पुत्राणां शतमात्मनः ॥ ६८ ॥
जीवितं च तथा भर्तुर्धर्मसिद्धिं च शाश्वतीम् ॥
धर्मराजो वरं दत्त्वा प्रेषयामास तां ततः ॥ ६९ ॥
अथ भर्तारमासाद्य सावित्री हृष्टमानसा ॥
जगाम स्वाश्रमपदं सह भर्त्रा निराकुला ॥ 7.1.166.७० ॥
ज्येष्ठस्य पूर्णिमायां च तया चीर्णं व्रतं त्विदम् ॥
माहात्म्यतोऽस्य नृपतेश्चक्षुःप्राप्तिरभूत्पुरः ॥ ७१ ॥
ततः स्वदेशराज्यं च प्राप निष्कण्टकं नृपः ॥
पितास्याः पुत्रशतकं सा च लेभे सुताञ्छतम् ॥ ७२ ॥
एवं व्रतस्य माहात्म्यं कथितं सकलं मया ॥ ७३ ॥ ॥
॥ देव्युवाच ॥ ॥
कीदृशं तद्व्रतं देव सावित्र्या चरितं महत् ॥
तस्मिंस्तु ज्येष्ठमासे हि विधानं तस्य कीदृशम् ॥ ७४ ॥
का देवता व्रते तस्मिन्के मन्त्राः किं फलं विभो ॥
विस्तरेण महेश त्वं ब्रूहि धर्मं सनातनम् ॥ ७६ ॥
॥ ईश्वर उवाच ॥ ॥
श्रूयतां देवदेवेशि सावित्रीव्रतमा दरात् ॥
कथयामि यथा चीर्णं तया सत्या महेश्वरि ॥ ७६ ॥
त्रयोदश्यां तु ज्येष्ठस्य दन्तधावनपूर्वकम् ॥
त्रिरात्रं नियमं कुर्यादुपवासस्य भामिनि ॥ ७७ ॥
अशक्तस्तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रियः ॥
अयाचितं चतुर्दश्यां ह्युपवासेन पूर्णिमाम् ॥ ७८ ॥

नित्यं स्नात्वा तडागे वा महानद्यां च निर्झरे ॥
पांडुकूपे तु सुश्रोणि सर्वस्नानफलं लभेत् ॥ ७९ ॥
विशेषात्पूर्णिमायां तु स्नानं सर्षपमृज्जलैः ॥ 7.1.166.८० ॥
गृहीत्वा वालुकं पात्रे प्रस्थमात्रे यशस्विनि ॥
अथवा धान्यमादाय यवशालितिलादिकम् ॥ ८१ ॥
ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ॥
सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिताम्॥ ८२ ॥
सौवर्णीं मृन्मयीं वापि स्वशक्त्या दारुनिर्मिताम् ॥
रक्तवस्त्रद्वयं दद्यात्सावित्र्या ब्रह्मणः सितम् ॥ ८३ ॥
सावित्रीं ब्रह्मणा सार्धमेवं शक्त्या प्रपूजयेत् ॥
गन्धैः सुगन्धपुष्पैश्च धूपनैवेद्यदीपकैः ॥ ९४ ॥
पूर्णकोशातकैः पक्वैः कूष्माण्डकर्कटीफलैः ॥
नालिकेरैः सखर्जूरैः कपित्थैर्दाडिमैः शुभैः ॥ ८५ ॥
जंबूजंबीरनारिंगैरक्षोटैः पनसैस्तथा ॥
जीरकैः कटुखण्डैश्च गुडेन लवणेन च ॥ ८६ ॥
विरूढैः सप्तधान्यैश्च वंशपात्रप्रकल्पितैः ॥
रंजयेत्पट्टसूत्रैश्च शुभैः कुंकुमकेसरैः ॥ ८७ ॥
अवतारं करोत्येवं सावित्री ब्रह्मणः प्रिया ॥ ८८ ॥
तामर्च्चयीत मन्त्रेण सावित्र्या ब्रह्मणा समम्॥
इतरेषां पुराणोक्तो मंत्रोऽयं समुदाहृतः ॥ ८९ ॥
ओंकारपूर्वके देवि वीणापुस्तकधारिणि ॥
वेदांबिके नमस्तुभ्यमवैधव्यं प्रयच्छ मे ॥7.1.166.९०॥
एवं संपूज्य विधिवज्जागरं तत्र कारयेत्॥
गीतवादित्रशब्देननरनारीकदंबकम् ॥
नृत्यद्धसन्नयेद्रात्रिं नृत्यशास्त्रविशारदैः ॥ ९१ ॥
सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमान्॥
यावत्प्रभातसमयं गीतभावरसैः सह ॥ ९२ ॥
विवाहमेवं कृत्वा तु सावित्र्या ब्रह्मणा सह ॥

परिधाप्य सितैर्वस्त्रैर्दंपतीनां तु सप्तकम् ॥ ९३ ॥

गृहदानं प्रदातव्यं सर्वोपस्करसंयुतम् ॥

ब्राह्मणे वेदविदुषे सावित्रीं विनिवेदयेत् ॥ ९४ ॥

अथ सावित्रीकल्पज्ञे सावित्र्याख्यानवाचके ॥

दैवज्ञे ह्युञ्छवृत्तिस्थे दरिद्रे चाग्निहोत्रिणि ॥ ९५ ॥

एवं दत्त्वा विधानेन तस्यां रात्रौ निमन्त्रयेत् ॥

पौर्णमास्यां वटाधस्ताद्दंपतीनां चतुर्दश ॥ ९६ ॥

ततः प्रभातसमये उषःकाल उपस्थिते ॥

भक्ष्यभोज्यादिकं सर्वं सावित्रीस्थलमानयेत् ॥ ९७॥

पाकं कृत्वा तु शुचिना रक्षां कृत्वा प्रयत्नतः ॥

ब्राह्मणान्गृहिणीयुक्तांस्तत आह्वानयेत्सुधीः ॥ ९८ ॥

सावित्र्याः स्थलके तत्र कृत्वा पादाभिषेचनम् ॥

सुस्नातान्ब्राह्मणांस्तत्र सभार्यानुपवेशयेत् ॥ ९९ ॥

सावित्र्याः पुरतो देवि दंपत्योर्भोजनं ददेत् ॥

तेनाहं भोजितस्तत्र भवामीह न संशय ॥ 7.1.166.१०० ॥

द्वितीयं भोजयेद्यस्तु भोजितस्तेन केशवः ॥

लक्ष्म्याः सहायो वरदो वरांस्तस्य प्रयच्छति ॥ १०१ ॥

सावित्र्या सहितो ब्रह्मा तृतीये भोजितो भवेत् ॥

एकैकं भोजनं तत्र कोटिभोजसमं स्मृतम् ॥ १०२ ॥

अष्टादशप्रकारेण षड्रसीकृतभोजनम् ॥

देव्यास्तत्र महादेवि सावित्रीस्थलसन्निधौ ॥ १०३ ॥

विधवा न कुले तस्य न वंध्या न च दुर्भगा ॥

न कन्याजननी चापि न च स्याद्भर्तुरप्रिया ॥

अष्टौ दोषास्तु नारीणां न भवंति कदाचन ॥ १०४ ॥

तस्मात्सर्वप्रयत्नेन सावित्र्यग्रे च भोजनम् ॥

दातव्यं सर्वदा देवि कटुनीलविवर्जितम् ॥ १०५ ॥

न चाम्लं न च वै क्षारं स्त्रीणां भोज्यं कदाचन ॥

पंचप्रकारं मधुरं हृद्यं सर्वं सुसंस्कृतम् ॥ १०६ ॥

घृतपूर्णापूपकाश्च बहुक्षीरसमन्विताः ॥

पूपकास्तादृशाः कार्या द्वितीयाऽशोकवर्तिका ॥ १०७ ॥

तृतीया पूपिका कार्या खर्जुरेण समन्विताः ॥

चतुर्थश्चैव संयावो गुडाज्याभ्यां समन्वितः ॥ ॥ १०८ ॥

आह्लादकारिणी पुंसां स्त्रीणां चातीव वल्लभा ॥

धनधान्यजनोपेतं नारीनरशताकुलम् ॥

पूपकैस्तु कुलं तस्या जायते नात्र संशयः ॥ ॥ १०९ ॥

न ज्वरो न च संतापो दुःखं च न वियोगजम् ॥

अशोकवर्तिदानेन कुलानामेकविंशतिः ॥ 7.1.166.११० ॥

वधूभिश्च सुतैश्चैव दासीदासैरनन्तकैः ॥

पूरितं च कुलं तस्याः पूरिका या प्रयच्छति ॥ १११ ॥

पुत्रिण्यो वै दुहितरो वधूभिः सहिताः कुले ॥

शिखरिणीप्रदात्रीणां युवतीनां न संशयः ॥ ११२ ॥

मोदते च कुलं सर्वं सर्वसिद्धिप्रपूरितम् ॥

मोदकानां प्रदानेन एवमाह पितामहः ॥ ११३ ॥

एतच्च गौरिणीनां तु भोजनं हि विशिष्यते ॥ ११४ ॥

सुभगा पुत्रिणी साध्वी धनऋद्धिसमन्विता ॥

सहस्रभोजिनी देवि भवेज्जन्मनिजन्मनि ॥ ११५ ॥

पानानि चैव मुख्यानि हृद्यानि मधुराणि च ॥

द्राक्षापानं तु चिंचायाः पानं गुडसमन्वितम् ॥ ११६ ॥

सरसेन तु तोयेन कृतखण्डेन वै शुभम् ॥

सुवासिनीनां पेयं वै दातव्यं च द्विजन्मनाम् ॥ ११७ ॥

इतरैरितराण्येव वर्णयोग्यानि यानि च ॥

सुरभीणि च पानानि तासु योग्यानि दापयेत् ॥ ११८ ॥

प्रतिपूज्य विधानेन वस्त्रदानैः सकंचुकैः ॥

कुङ्कुमेनानुलिप्तांगाः स्रग्दामभिरलंकृताः ॥

गंधैर्धूपैश्च संपूज्य नालिकेरान्प्रदापयेत् ॥ ११९ ॥

नेत्राणां चाञ्जनं कृत्वा सिन्दूरं चैव मस्तके ॥

पूगीफलानि हृद्यानि वासितानि मृदूनि च ॥
हस्ते दत्त्वा सपात्राणि प्रणिपत्य विसर्जयेत् ॥ 7.1.166.१२० ॥
स्वयं च भोजयेत्पश्चाद्बंधुभिर्बालकैः सह ॥ १२१ ॥
अथवा नैव संपद्येत्तीर्थे चैव तु भोजनम् ॥
गृहे गत्वा प्रभोक्तव्यं तुष्टा देवी यथा भवेत् ॥ ११२ ॥
एवमेव पितॄणां च आगम्य स्वे च मन्दिरे ॥
पिण्डप्रदानपूर्वं तु श्राद्धं कृत्वा विधानतः ॥
पितरस्तस्य तुष्टा वै भवन्ति ब्रह्मणो दिनम् ॥१२३॥
तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः शुभे ॥
न च पश्यन्ति वै नीचाः श्राद्धं दत्तं द्विजातिभिः ॥ १२४ ॥
एकान्ते तु गृहे गुप्ते पितॄणां श्राद्धमिष्यते ॥
नीचं दृष्ट्वा हतं तत्तु पितॄणां नोपतिष्ठति ॥ १२५ ॥
तस्मात्सर्वप्रयत्नेन श्राद्धं गुप्तं च कारयेत् ॥
पितॄणां तृप्तिदं प्रोक्तं स्वयमेव स्वयंभुवा ॥१२६॥
गौरीभोज्यादिका या तु उत्सर्गात्क्रियते क्रिया ॥
राजसी सा समाख्याता जनानां कीर्तिदायिनी ॥ १२७ ॥
इदं दानं सदा देयमात्मनो हित मिच्छता ॥
श्राद्धे चैव विशेषेण यदीच्छेत्सात्त्विकं फलम् ॥ १२८ ॥
इदमुद्यापनं देवि सावित्र्यास्तु व्रतस्य च ॥
सर्वपातकशुद्ध्यर्थं कार्यं देवि नरैः सदा ॥
अकामतः कामतो वा पापं नश्यति तत्क्षणात् ॥ १२९ ॥
इह लोके तु सौभाग्यं धनं धान्यं वराः स्त्रियः ॥
भवंति विविधास्तेषां यैर्यात्रा तत्र वै कृता ॥ 7.1.166.१३० ॥
इदं यात्राविधानं तु भक्त्या यः कुरुते नरः ॥
शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते ॥ १३१ ॥
ज्येष्ठस्य पूर्णिमायां तु सावित्रीस्थलके शुभे ॥
प्रदक्षिणा यः कुरुते फलदानैर्यथाविधि ॥ १३२ ॥
अष्टोत्तरशतं वापि तदर्धार्धं तदर्धकम् ॥

यः करोति नरो देवि सृष्ट्वा तत्र प्रदक्षिणाम् ॥ १३३ ॥

अगम्यागमनं यैश्च कृतं ज्ञानाच्च मानवैः ॥

अन्यानि पातकान्येवं नश्यंते नात्र संशयः ॥ १३४ ॥

यैर्गत्वा स्थलके संध्या सावित्र्याः समुपासिता ॥

स्वपत्न्याश्चैव हस्तेन पांडुकूपजलेन च ॥ १३५ ॥

भृंगारकनकेनैव मृन्मयेनाथ भामिनि ॥

आनीय तु जलं पुण्यं संध्योपास्तिं करोति यः ॥

तेन द्वादशवर्षाणि भवेत्संध्या ह्युपासिता ॥ १३६ ॥

अश्वमेधफलं स्नाने दाने दशगुणं तथा ॥

उपवासे त्वनंतं च कथायाः श्रवणे तथा ॥ १३७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सावित्रीव्रतविधिपूजनप्रकारोद्यापनादिकथनंनाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥ १६६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्रस्थां भूतमातृकाम् ॥

सावित्र्या वारूणे भागे शतधन्वंतरे स्थिताम् ॥

नवकोटि गणैर्युक्तां प्रेतभूतसमाकुलाम् ॥

पूजितां सिद्धगंधर्वैर्देवादिभिरनेकशः ॥ २ ॥

॥ देव्युवाच ॥ ॥

भूतमातेति संहृष्टा ग्रामेग्रामे पुरेपुरे ॥

गायन्नृत्यन्हसँल्लोकः सर्वतः परिधावति ॥ ३ ॥

उन्मत्तवत्प्रलपते क्षितौ पतति मत्तवत् ॥

क्रुद्धवद्धावति परान्मृतवत्कृष्यते हि सः ॥ ४ ॥

सुखभंगांश्च कुरुते लोको वातगृहीतवत् ॥

भूतवद्भस्ममूत्रांबुकर्दमानवगाहते ॥ ५ ॥

किमेष शास्त्रनिर्दिष्टो मार्गः किमुत लौकिकः ॥

मुह्यते मे मनो देव तेन त्वं वक्तुमर्हसि ॥ ६ ॥

कथं सा पुरुषैः पूज्या प्रभासक्षेत्रवासिभिः ॥

कस्मात्तत्र गता देवी कस्मिन्काले समागता ॥

कस्मिन्दिने तु मासे तु तस्याः कार्यो महोत्सवः ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि यत्ते किंचिन्मनोगतम् ॥

आस्तिकाः श्रद्दधानाश्च भवन्तीति मतिर्मम ॥ ८ ॥

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वतेऽन्तरे ॥

दक्षापमानात्संजाता तदा पर्वतपुत्रिका ॥ ९ ॥

द्वापरे तु द्वितीये वै दत्ता त्वं पर्वतेन मे ॥

विवाहे चैव संजाते सर्वदेवमनोरमे ॥ 7.1.167.१० ॥

त्वया च सहितः पूर्वं मन्दरे चारुकंदरे ॥
अक्रीडं च मुदा युक्तो दिव्यक्रीडनकैः प्रिये ॥
पीनोन्नतनितंबेन भ्राजमाना कुचोन्नताम् ॥ ११ ॥
सिताब्जवदनां हृष्टां दृष्ट्वाऽहं त्वां महाप्रभाम् ॥
दग्धकामतरोः कन्दकंदलीमिव निःसृताम् ॥
महार्हशयनस्थां त्वां तदा कामितवानहम् ॥ १२ ॥
सुरते तव संजातं दिव्यं वर्षशतं यदा ॥
तदा देवि समुत्थाय निरोधान्निर्गता बहिः ॥ ॥ १३ ॥
तवोदकात्समुत्तस्थौ नार्येका गह्वरोदरा ॥
कृष्णा करालवदना पिंगाक्षी मुक्तमूर्धजा ॥ १४ ॥
कपालमालाभरणा बद्धमुण्डार्धपिंडका ॥
खट्वांगकंकालधरा रुण्डमुंडकरा शिवा ॥ १५ ॥
द्वीपिचर्माम्बरधरा रणत्किंकिणिमेखला ॥
डमड्डमरुकारा च फेत्कारपूरिताम्बरा ॥ १६ ॥
तस्याश्च पार्श्वगा अन्यास्तासां नामानि मे शृणु ॥
सख्यो ब्राह्मणराक्षस्यस्तासां चैव सुदर्शनाः ॥ १७ ॥
दशकोटिप्रभेदेन धरां व्याप्य सुसंस्थिताः ॥
मुख्यास्तत्र चतस्रो वै महाबलपराक्रमाः ॥ १८ ॥
रक्तवर्णा महाजिह्वाऽक्षया वै पापकारिणी ॥
एतासामन्वये जाताः पृथिव्यां ब्रह्मराक्षसाः ॥ १९ ॥
श्लेष्मातकतरौ ह्येते प्रायशः सुकृतालयाः ॥
उत्तालतालचपला नृत्यंति च हसंति च ॥ 7.1.167.२० ॥
विज्ञेया इह लोकेऽस्मिन्भूतानां मूलनायकाः ॥
अतिकृष्णा भवन्त्येते व्यंतरान्तरचारिणः ॥ २१ ॥
वृक्षाग्रमात्रमाकाशं ते चरंति न संशयः ॥ ॥ २२ ॥
तथैव मम वीर्यात्तु मद्रूपाभरणः पुमान् ॥
कपालखट्वांगधरो जातश्चर्मविगुण्ठितः ॥ २३ ॥
अनुगम्यमानो बहुभिर्भूतैरपि भयंकरः ॥

सिंहशार्दूलवदनैर्वदनोल्लिखितांबरैः ॥ २४ ॥

एवं देवि तदा जातः क्षुधाक्रान्तो बभाष माम् ॥

अतोऽहं क्षुधितं दृष्ट्वा वरं हीमं च दत्तवान् ॥ २५ ॥

युवयोर्हस्तसंस्पर्शान्नक्तमेवास्तु सर्वशः ॥

नक्तं चैव बलीयांसौ दिवा नातिबलावुभौ ॥

पुत्रवद्रक्षतं लोकान्धर्मश्चैवानुपाल्यताम् ॥ ॥ २६ ॥

इत्युक्तौ तौ मया तत्र भूतमातृगणौ प्रिये ॥

एकीभूतौ क्षणेनैव तौ भवानीभवोद्भवौ ॥ २७ ॥

दृष्ट्वा हृष्टमनाश्चाहमवोचं त्वां शुचिस्मिते ॥ २८ ॥

कल्याणि पश्यपश्यैतौ ममांशाच्च समुद्भवौ ॥

बीभत्साद्भुतशृंगारधारिणौ हास्यकारिणौ ॥२९॥

भ्रातृभांडा भूतमाता तथैवोदकसेविता ॥

संज्ञात्रयं स्मृतं देवि लोके विख्यातपौरुषम् ॥7.1.167.३०॥

पुनः कृतांजलिपुटौ दृष्ट्वा मामूचतुस्तदा ॥

आवयोर्भगवन्कुत्र स्थाने वासो भविष्यति ॥३१॥

इत्युक्तवन्तौ तौ तत्र वरेण च्छन्दितौ मया ॥

अस्ति सौराष्ट्रविषये भारते क्षेत्रमुत्तमम् ॥३२॥

प्रभासेति समाख्यातं तत्र क्षेमं मम प्रियम् ॥

कूर्मस्य नैर्ऋते भागे स्थितं वै दक्षिणे परे॥३३॥

स्वाती विशाखा मैत्रं च यत्र ऋक्षत्रयं स्मृतम्॥

तस्मिन्स्थाने सदा स्थेयं यावन्मन्वन्तरावधि॥३४॥

अन्यदा जीविकं वच्मि तव भूतप्रिये सदा ॥ ३५ ॥

यत्र कण्टकिनो वृक्षा यत्र निष्पाववल्लरी ॥

भार्या पुनर्भूर्वल्मीकस्तास्ते वसतयश्चिरम् ॥ ३६ ॥

यस्मिन्गृहे नराः पञ्च स्त्रीत्रयं तावतीश्च गाः ॥

अन्धकारेंधनाग्निश्च तद्गृहे वसतिस्तव ॥ ३७ ॥

भूतैः प्रेतैः पिशाचैश्च यत्स्थानं समधिष्ठितम् ॥

एकावि चाष्टबालेयं त्रिगवं पञ्चमाहिषम् ॥

षडश्वं सप्तमातंगं तद्गृहे वसतिस्तव ॥ ३८ ॥

उद्दालकान्नपिटकं तद्वत्स्थाल्यादिभाजनम् ॥

यत्र तत्रैव क्षिप्तं च तव तच्च प्रतिश्रयम् ॥ ३९ ॥

मुशलोलूखले स्त्रीणामास्या तद्वदुदुंबरे ॥

भाषणं कटुकं चैव तत्र देवि स्थितिस्तव ॥ 7.1.167.४० ॥

खाद्यन्ते यत्र धान्यानि पक्वापक्वानि वेश्मनि ॥

तद्वच्छाखाश्च तत्र त्वं भूतैः सह चरिष्यसि ॥ ४१ ॥

स्थालीपिधाने यत्राग्निं ददते विकला नराः ॥

गृहे तत्र दुरिष्टानामशेषाणां समाश्रयः ॥ ४२ ॥

मानुष्यास्थि गृहे यत्र अहोरात्रे व्यवस्थितम् ॥

तत्रायं भूतनिवहो यथेष्टं विचरिष्यति ॥ ४३ ॥

सर्वस्मादधिकं ये न प्रवदन्ति पिनाकिनम् ॥

साधारणं वदंत्येनं तत्र भूतैः समाविश ॥ ४४ ॥

कन्या च यत्र वै वल्ली रोहीनाम जटी गृहे ॥

अगस्त्य पादपो वापि बंधुजीवो गृहेषु वै ॥ ४५ ॥

करवीरो विशेषेण नंद्यावर्तस्तथैव च ॥

मल्लिका वा गृहे येषां भूतयोग्यं गृहं हि तत् ॥ ४६ ॥

तालं तमालं भल्लातं तिंतिणीखंडमेव वा ॥

बकुलं कदलीखंडं कदंबः खदिरोऽपि वा ॥४७॥

न्यग्रोधो हि गृहे येषामश्वत्थं चूत एव वा ॥

उदुंबरश्च पनसः सर्वभूत प्रियं हि तत् ॥४८॥

यत्र काकगृहं वै स्यादारामे वा गृहेऽपि वा ॥

भिक्षुबिंबं च वै यत्र गृहे दक्षिणके तथा ॥४९॥

बिंबमूर्ध्वं च यत्रस्थं तत्र भूतनिवेशनम् ॥7.1.167.५०॥

लिंगार्चनं न यत्रैव यत्र नास्ति जपादिकम् ॥

यत्र भक्तिविहीना वै भूतानां तान्गृहान्वदेत् ॥५१॥

मलिनास्यास्तु ये मर्त्या मलिनांबर धारिणः ॥

मलदंता गृहस्था ये गृहं तेषां समाविश ॥५२॥

अगम्यनिरता ये तु मैथुने व्यभिचारतः ॥

संध्यायां मैथुनं यांति गृहं तेषां समाविश ॥ ॥ ५३ ॥

बहुना किं प्रलापेन नित्यकर्मबहिष्कृताः ॥

रुद्रभक्तिविहीना ये गृहं तेषां समाविश ॥ ५४ ॥

अदत्त्वा भुंजते योऽन्नं बंधुभ्योऽन्नं तथोदकम् ॥

सपिण्डान्सोदकांश्चैव तत्कालात्तान्नरान्भज ॥ ५५ ॥

यत्र भार्या च भर्ता च परस्परविरोधिनौ ॥

सह भूतैर्गृहं तस्य विश त्वं भयवर्ज्जिता ॥ ५६ ॥

वासुदेवे रतिर्नास्ति यत्र नास्ति सदा हरिः ॥

जपहोमादिकं नास्ति भस्म नास्ति गृहे नृणाम् ॥ ५७ ॥

पर्वस्वप्यर्चनं नास्ति चतुर्दश्यां विशेषतः ॥ ५८ ॥

कृष्णाष्टम्यां च ये मर्त्याः संध्यायां भस्मवर्जिताः ॥

पंचदश्यां महादेवं न यजंति च यत्र वै ॥५९॥

पौरजानपदैर्यत्र प्राक्प्रसिद्धा महोत्सवाः ॥

क्रियते पूर्ववन्नैव तद्गृहं वसतिस्तव ॥ 7.1.167.६० ॥

वेदघोषो न यत्रास्ति गुरुपूजादिकं न च ॥

पितृकर्मविहीनं च तद्भूतस्य गृहं स्मृतम् ॥। ॥ ६१ ॥

रात्रौरात्रौ गृहे यस्मिन्कलहो जायते मिथः ॥

बालानां प्रेक्षमाणानां यत्र वृद्धश्च पूर्वतः ॥

भक्षयेत्तत्र वै हृष्टा भूतैः सह समाविश ॥६२॥

कस्मिन्मासे दिने चापि भवित्री लोकपूजिता ॥

इत्युक्तोऽहं तया देवि तामवोचं पुनः प्रिये ॥६३॥

अमा या माधवे मासि तस्मिन्या च चतुर्दशी ॥

तस्यां महोत्सवस्तत्र भविता ते चिरंतनः॥६४॥

याः स्त्रियस्तां च यक्ष्यंति तस्मिन्काले महोत्सवे॥

बलिभिः पुष्पधूपैश्च मा तासां त्वं गृहे विश॥६५॥

नारायण हृषीकेश पुण्डरीकाक्ष माधव ॥

अच्युतानंत गोविंद वासुदेव जनार्दन ॥ ६६ ॥

नृसिंह वामनाचिंत्य केशवेति च ये जनाः ॥
रुद्र रुद्रेति रुद्रेति शिवाय च नमोनमः ॥ ६७ ॥
वक्ष्यंति सततं हृष्टास्तेषां धनगृहादिषु ॥
आरामे चैव गोष्ठे च मा विशेथाः कथंचन ॥ ६८ ॥
देशाचाराञ्ज्ञा तिधर्माञ्जपं होमं च मंगलम् ॥
दैवतेज्यां विधानेन शौचं कुर्वंति ये जनाः ॥
लोकापवादभीता ये पुमांसस्तेषु मा विश ॥६९॥
॥ देव्युवाच ॥
कदा पूजा प्रकर्तव्या भूतमातुः सुखार्थिभिः ॥
पुरुषैर्देवदेवेश एतन्मे वक्तुमर्हसि ॥ 7.1.167.७० ॥
॥ ईश्वर उवाच ॥ ॥
सर्वत्रैषा भगवती बालानां हितकारिणी ॥
नामभेदैः कालभेदैः क्रियाभेदैश्च पूज्यते ॥७१॥
प्रतिपत्प्रभृति वैशाखे यावच्चतुर्दशीतिथिः ॥
तावत्पूजा प्रकर्तव्या प्रेरणीप्रेक्षणीयकैः ॥ ७२ ॥
भग्नामपि गतां चैनां जरत्तरुतले स्थिताम् ॥
सेचयिष्यंति ये भक्त्या जलसंपूर्णगंडुकैः ॥ ७३ ॥
ग्रीवासूत्रकसिन्दूरैः पुष्पैर्धूपैस्तथार्चयेत्॥
तत्र सिद्धवटः पूज्यः शाखां चास्य विनिक्षिपेत्॥ ७४ ॥
पूजितां तां नरैर्यत्नादवलोक्य शुभेप्सुभिः ॥
भोजयेत्क्षिप्रासंयावकृशरापूपपायसैः ॥७५॥
एवं विधिं यः कुरुते पुरुषो भक्तिभावतः ॥
स पुत्रपशुवृद्धिं च शरीरारोग्यमाप्नुयात् ॥७६॥
न शाकिन्यो गृहे तस्य न पिशाचा न राक्षसाः ॥
पीडां कुर्वन्ति शिशवो यान्ति वृद्धिमनामयाम् ॥ ७७ ॥
अथ देवि प्रवक्ष्यामि प्रतिपत्प्रभृति क्रमात् ॥
यथोत्सवो नरैः कार्यः प्रेरणीप्रेक्षणीयकैः ॥७८॥
विकर्मफलनिर्द्देशैः पाखंडानां विटंबनैः ॥

प्रदर्श्यते हास्यपरैर्नरैरद्भुतचेष्टितैः ॥ ७९ ॥

पञ्चम्यां तु विशेषेण रात्रौ कोलाहलः शुभे ॥

जागरं तत्र कुर्वीत देवीं पूज्य प्रयत्नतः ॥ 7.1.167.८० ॥

विश्वस्य धनलोभेन स्वाध्यायो निहतः पतिः॥

आरोप्यमाणं शूलाग्रमेनं पश्यत भो जनाः॥८१॥

दृष्टो भवद्भिर्दुष्टः स परदारावमर्शकः ॥

छित्त्वा हस्तौ च खड्गेन खरारूढस्तु गच्छति ॥ ८२ ॥

शीर्णश्चैवासिपत्रेण अस्याभरणभूषितः ॥

सुखासन समारूढः सुकृती यात्यसौ सुखम् ॥ ८३ ॥

हे जनाः किं न पश्यध्वं स्वामिद्रोहकरं परम् ॥

करपत्रैर्विदार्यंतमुच्छलच्छोणितान्तरम् ॥ ८४ ॥

चौरः किलायं संप्राप्तः सर्वोद्वेगकरः परः ॥

दंडप्रहाराभिहतो नीयते दंडपाशकैः ॥ ८५ ॥

प्रेक्षकैश्चेष्टितः शश्वदारटन्विविधैः स्वरैः ॥

संयम्य नीयते हन्तुं लज्जितोऽधोमुखो जनाः ॥ ८६ ॥

सितकेशं सितश्मश्रुं सितांबरधरध्वजम् ॥

विटंकाद्यैश्च चेटीभिर्हन्यमानं न पश्यथि ॥८७॥

गृहान्निष्क्राम्य मां रंडां गृहं नीत्वाऽकरोद्रतिम् ॥

कस्मादसौ न कुरुते मूढो भरणपोषणम् ॥ ८८ ॥

भैरवाभरणो नेता सदा घूर्णितलोचनः ॥

प्रवृत्ततंद्रवन्मूढो वध्यश्चासावितस्ततः ॥८९॥

निर्वेदकोऽस्य हृदये धनक्षेत्रादिसंभवः ॥

गृहीतं यदनेनाद्य बालेनापि महाव्रतम् ॥

रक्ताक्षं काककृष्णांगं सत्वरं किं न पश्यथि ॥ 7.1.167.९० ॥

तरुकोटरगान्बद्ध्वा अन्याञ्छृंखलया तथा ॥

शरौघैः काष्ठकैश्चैव बहुभिः शकलीकृतान् ॥ ९१ ॥

विमुक्तहक्काहुंकारा न्सुप्रहारान्निरीक्षत ॥ ९२ ॥

इमां कृष्णार्धवदनां ग्रहीष्यसि दुरात्मिकाम् ॥

विमुक्तकेशां नृत्यन्तीं पश्यध्वं योगिनीमिव ॥ ९३ ॥

गम्भीर नूपुरध्वानप्रवृद्धोद्धततांडवा ॥

उन्मत्तनेत्रचरणा यात्येषा डिम्भमण्डली ॥ ९४ ॥

कटीतटस्थपिटिकोल्लसत्कंबलधारिणी ॥

अटते नटती ह्युर्वी परितश्च गृहाद्गृहम् ॥ ९५ ॥

इत्येवमादिभिर्नित्यं प्रेरणीप्रेक्षणीयकैः ॥

प्रेरयेत्तान्महानित्थं पुत्रभ्रातृसुहृद्वृतः ॥ ९६ ॥

एकादश्यां नवम्यां वा दीपं प्रज्वाल्य कुण्डकम् ॥

मुखबिंबानि तत्रैव लेपदारुकृतानि वै ॥ ९७ ॥

विचित्राणि महार्हाणि रौद्रशान्तानि कारयेत् ॥

मातृणां चण्डिकादीनां राक्षसानां तथैव च ॥ ९८ ॥

भूतप्रेतपिशाचानां शाकिनीनां तथैव च ॥

मुखानि कारयेत्तत्र हावभावकृतानि च ॥ ९९ ॥

रक्षिभिर्बहुभिर्गुप्तं तिर्य ग्ध्वनिपुरःसरम् ॥

अमावास्यां महादेवि क्षिपेत्पूजाक्रमैर्नरः ॥ 7.1.167.१०० ॥

ततः प्रदोषसमये यत्र देवी जनैर्वृता ॥

तत्र गच्छेन्महारावैः फेत्कारा कुलकीर्तनैः ॥ १०१ ॥

वीरचर्याविधानेन नगरे भ्रामयेन्निशि ॥

वीरचर्या स कथितो दीपः सर्वार्थसाधकः ॥ १०२ ॥

नित्यं निष्क्रामयेद्दीपं याव त्पञ्चदशी तिथिः ॥

पञ्चदश्यां प्रकुर्वीत भूतमातुर्महोत्सवम् ॥

तस्य गृहेश्वरं यावद्गृहे विघ्नं न जायते ॥ १०३ ॥

अथ कालान्तरेऽतीते भूतमातुः शरीरतः ॥

जाताः प्रस्वेदबिन्दुभ्यः पिशाचाः पञ्चकोटयः ॥ १०४ ॥

सर्वे ते क्रूरवदना जिह्वाज्वालाकृशोदराः ॥

पाणिपात्राः पिशाचास्ते निसृष्टबलिभोजनाः ॥ १०५ ॥

धमनीसंतताः शुष्काः श्मश्रुलाश्चर्मवाससः ॥

उलूखलैराभरणैः शूर्पच्छत्रासनांबराः ॥ १०६ ॥

नक्तं ज्वलितकेशाढ्या अंगारानुद्गिरंति वै ॥
अंगारकाः पिशाचास्ते मातृमार्गानुसारिणः ॥ १०७ ॥
आकर्णदारितास्याश्च लंबभ्रूस्थूलनासिकाः ॥
बलाढ्यास्ते पिशाचा वै सूतिकागृहवासिनः ॥ १०८ ॥
पृष्ठतः पाणिपादाश्च पृष्ठगा वातरंहसा ॥
विषादनाः पिशाचास्ते संग्रामे पिशिताशनाः ॥ ॥ १०९ ॥
एवंविधान्पिशाचांस्तु दृष्ट्वा दीनानुकम्पया ॥
तेभ्योऽहमवदं किञ्चित्कारुण्यादल्पचेतसाम् ॥ 7.1.167.११० ॥
अन्तर्धानं प्रजादेहे कामरूपित्वमेव च ॥
उभयोः संध्ययोश्चारं स्थानान्याजीवितं तथा ॥ १११ ॥
गृहाणि यानि नग्नानि शून्यान्यायतनानि च ॥
विध्वस्तानि च यानि स्यू रचनारोषितानि च॥ ११२ ॥
राजमार्गोपरथ्याश्च चत्वराणि त्रिकाणि च ॥
द्वाराण्यट्टालकांश्चैव निर्गमान्संक्रमांस्तथा ॥ ॥ ११३ ॥
पथो नदीश्च तीर्थानि चैत्यवृक्षान्महापथान् ॥
स्थानानि तु पिशाचानां निवासायाददां प्रिये ॥ ११४ ॥
अधार्मिका जनास्तेषामा जीवो विहितः पुरा ॥
वर्णाश्रमाचारहीनाः कारुशिल्पिजनास्तथा ॥ ११५ ॥
अनुतापाश्च साधूनां चौरा विश्वासघातिनः ॥
एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः ॥ ११६ ॥
आरभ्यते क्रिया यास्तु पिशाचास्तत्र देवताः ॥
मधुमासदिने दध्ना तिलचूर्णसुरासवैः ॥ ११७ ॥
पूपैर्हारिद्रकृशरैस्तिलैरिक्षुगुडौदनैः ॥
कृष्णानि चैव वासांसि धूम्राः सुमनसस्तथा ॥ ११८ ॥
सर्वभूतपिशाचानां कृता देवी मया शुभा ॥
एवंविधा भूतमाता सर्वभूतगणैर्वृता ॥ ११९ ॥
प्रभासे संस्थिता देवी समुद्रादुत्तरेण तु ॥
य एतां वेद वै देव्या उत्पत्तिं पापनाशिनीम् ॥ 7.1.167.१२० ॥

कुत्सिता संतति स्तस्य न भवेच्च कदाचन ॥

भूतप्रेतपिशाचानां न दोषैः परिभूयते ॥ १२१ ॥

सर्वपापविनिर्मुक्तः सर्वसौभाग्यसंयुतः ॥

सर्वान्कामानवाप्नोति नारीहृदयनंदनः ॥ १२२ ॥

ये मानयंति निजहासकलैर्विलासैः संसेवया अभयदा भवभूतमाताम् ॥

ते भ्रातृभृत्यसुतबंधुजनैर्युताश्च सर्वोपसर्ग रहिताः सुखिनो भवन्ति ॥ १२३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भूत मातृकामाहात्म्यवर्णनंनाम सप्तषष्ट्युत्तरशततमोऽध्यायः ॥ १६७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवीं शालकटंकटाम् ॥

सावित्र्या दक्षिणे भागे रैवतात्पूर्वतः स्थिताम् ॥ १ ॥

महापापोपशमनीं सर्वदुःखविनाशनीम् ॥ पूजितां सर्वगन्धर्वैः स्फुरद्दंष्ट्रोग्रभीषणाम् ॥ २ ॥

महाप्रचण्डदैत्यघ्नीं पौलस्त्येन प्रतिष्ठिताम् ॥

महिषघ्नीं महाकायां क्षेत्रे प्राभासिके स्थिताम् ॥ ३ ॥

माघे मासे चतुर्दश्यां यस्ता माराधयेन्नरः ॥

स भवेत्पशुमान्धीमाँल्लक्ष्मीवान्पुत्रवान्सुधीः ॥ ४ ॥

यस्तां पशुप्रदानेन सन्तर्पयति भक्तितः ॥

बलिपूजोपहारैश्च स स्याच्छत्रु विवर्जितः ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहिताया सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शालकटंकटा माहात्म्यवर्णनंनामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १६९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं वैवस्वतेश्वरम्॥

देव्या दक्षिणदिग्भागे धनुस्त्रिंशकसंस्थितम् ॥ १ ॥

वैवस्वतेन मनुना स्थापितं सर्वकामदम्॥

तत्समीपे देवखातं तिष्ठते तु महाद्भुतम् ॥ २ ॥

स्नात्वा तत्र वरारोहे यस्तं पूजयते नरः ॥

पञ्चोपचारैर्विधिना भक्तिप्रह्वो जितेन्द्रियः ॥

जपेदघोरविधिना स्तोत्रं सिद्धिं स चाप्नुयात् ॥ ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वैवस्वतेश्वरमाहात्म्य वर्णनंनामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्र मातृगणान्सुधीः ॥

तत्रैव बलदेवीं च नातिदूरे व्यवस्थिताम् ॥ १ ॥

श्रावण्यां श्रावणे मासि यस्तां पूजयते नरः ॥

पायसैर्मधुना वापि दिव्यपुष्पोपहारकैः ॥ ॥ २ ॥

तस्य वर्षं महादेवि सुखं गच्छेत्सुपूजितम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मातृगणबलदेवीमाहात्म्यवर्णनंनाम सप्तत्युत्तरशततमोध्यायः ॥ १७० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महा देवि लिंगं तद्भरतेश्वरम् ॥

तस्मादुत्तरकोणस्थं नातिदूरं व्यवस्थितम् ॥ १ ॥

भरतोनाम राजाऽभूदाग्नीध्रः प्रथितः क्षितौ ॥

यस्येदं भारतं वर्षं नाम्ना लोकेषु गीयते ॥ २ ॥

स च चक्रे तपो घोरं क्षेत्रेऽस्मिन्पार्वति प्रिये ॥

दिव्यं वर्षसहस्रं तु प्रतिष्ठाप्य महेश्वरम् ॥ ३ ॥

पुत्रकामो नरश्रेष्ठः पूजयामास शंकरम् ॥

ततस्तुष्टः स भगवान्वरं दातुं समुत्सुकः ॥ ४ ॥

अष्टौ पुत्रान्ददौ तस्मै कन्यां चैकां यशस्विनीम् ॥

स तु प्राप्याभिलषितं कृतकृत्यो नराधिपः ॥ ५ ॥

भारतं नवधा कृत्वा पुत्रेभ्यः प्रददौ पृथक् ॥

तेषां नामांकितान्येव ततो द्वीपानि जज्ञिरे ॥ ६ ॥

इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ॥

नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ चारुणः ॥ ७ ॥

अयं तु नवमो द्वीपः कुमार्या संज्ञितः प्रिये ॥

अष्टौ द्वीपाः समुद्रेण प्लाविताश्च तथापरे ॥ ८ ॥

ग्रामादिदेशसंयुक्ताः स्थिताः सागरमध्यगाः ॥

एक एव स्थितस्तेषां कुमार्याख्यस्तु सांप्रतम् ॥ ९ ॥

बिंदुसरः प्रभृत्येव सागराद्दक्षिणोत्तरम् ॥

योजनानां सहस्रं तु एकं विस्तीर्ण एव तु ॥ 7.1.172.१० ॥

योजनानां सहस्राणि नव दैर्घ्यं प्रकीर्तितम् ॥

तस्यैतज्जृम्भितं देवि भरतस्य महात्मनः ॥ ११ ॥

षट्पञ्चाशदश्वमेधान्गंगामनु चकार यः॥

यस्त्रिंशद्यमुनाप्रान्ते भरतो लोकपूजितः ॥ १२ ॥

स चेश्वरप्रसादेन मोदते दिवि देववत् ॥ १३ ॥

यस्तत्प्रतिष्ठितं लिंगं भारतं पूजयिष्यति ॥

स सर्वयज्ञदानानां फलं प्रापयिता ध्रुवम् ॥ १४ ॥

कार्त्तिक्यां कृत्तिका योगे यस्तं पश्यति मानवः ॥

न स पश्यति स्वप्नेपि नरकं घोरदारुणम् ॥ १५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भरतेश्वरमाहात्म्यवर्णनंनाम द्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगानां च चतुष्टयम् ॥

एकस्थानस्थितानां तु सावित्र्यास्तत्र पश्चिमे ॥ १ ॥

लिंगानां द्वितयं पूर्वे पश्चिमे सम्मुखद्वयम् ॥

कुशकेश्वरनामेति लिंगं वै प्रथमं स्मृतम् ॥ २ ॥

गर्गेश्वरं द्वितीयं तु तृतीयं पुष्करेश्वरम् ॥

मैत्रेयेश्वरनामेति चतुर्थं समुदाहृतम् ॥ ३ ॥

एतानि यस्तु लिंगानि पश्येद्भक्त्या जितेन्द्रियः ॥

स मुक्तः पातकैः सर्वैर्गच्छेच्छिवपुरं महत् ॥ ॥ ४ ॥

शुक्लपक्षे चतुर्दश्यां वैशाखे तु विशेषतः ॥

स्नानं कृत्वा प्रयत्नेन ब्राह्मणांस्तत्र भोजयेत् ॥ ५ ॥

तेभ्यो दद्याद्यथाशक्त्या काञ्चनं वसनानि च ॥

एवं कृते भवेद्यात्रा परिपूर्णा सुरेश्वरि ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुशकादिलिंगचतुष्टयमाहात्म्यवर्णनंनाम त्रिसप्तत्युत्तरततमोऽध्यायः ॥ १७३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कुन्तीश्वरमनुत्तमम् ॥

सावित्र्याः पूर्वभागस्थं खातमध्ये व्यवस्थितम् ॥ १ ॥

कुन्त्या प्रतिष्ठितं देवि क्षेत्रे प्राभासिके प्रिये ॥

पाण्डवास्तु यदा पूर्वं प्रभासक्षेत्रमागताः ॥ २ ॥

तीर्थयात्राप्रसंगेन कुन्त्या चैव समन्विताः ॥

तस्मिन्काले महादेवि ज्ञात्वा क्षेत्रमनुत्तमम्॥३॥

कुन्त्या प्रतिष्ठितं लिंगं सर्वपापभयापहम्॥

कार्तिक्यां तु विशेषेण यस्तं पूजयते नरः॥

स सर्वकामतृप्तात्मा रुद्रलोके महीयते॥४॥

वाचिकं मानसं पापं कर्मणा यदुपार्जितम्॥

तत्सर्वं नश्यते देवि तस्य लिंगस्य दर्शनात्॥५॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुन्तीश्वरमाहात्म्यवर्णनंनाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥ ॥ १७४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७५

https://sa.wikisource.org/s/gbh



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुण्यमर्कस्थलं शुभम् ॥

तस्मादाग्नेयकोणस्थं सर्वपातकनाशनम् ॥ १ ॥

तं दृष्ट्वा मानुषो देवि न शोच्यः संप्रजायते ॥

सप्त जन्मानि देवेशि दारिद्र्यं नैव जायते ॥ २ ॥

कुष्ठानि नाशमायांति तं दृष्ट्वा दशधा प्रिये ॥

गोशतस्य प्रदत्तस्य कुरुक्षेत्रेषु यत्फलम् ॥ ३ ॥

तत्फलं समवाप्नोति दृष्ट्वा वार्कस्थलं रविम् ॥

स्नात्वा त्रिसंगमे तीर्थे सप्तैव रविवासरान् ॥४॥

ब्राह्मणान्भोजयित्वा तु महिषीं तत्र दापयेत् ॥

दिव्यं वर्षसहस्रं तु स्वर्गलोके महीयते ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽर्कस्थलमाहात्म्यवर्णनंनाम पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७६



॥ ईश्वर उवाच ॥ ॥ ॥

ततो गच्छेन्महादेवि सिद्धेश्वरमिति स्मृतम् ॥

अर्कस्थलात्तथाऽऽग्नेय्यां नातिदूरे व्यवस्थितम् ॥ १ ॥

अष्टादश सहस्राणि ऋषीणामूर्ध्वरेतसाम् ॥

तस्मिँल्लिंगे तु सिद्धानि सिद्धेश्वरमतः स्मृतम् ॥ २ ॥

स्नात्वाऽर्चयेन्नरो भक्त्या सोपवासो जितेन्द्रियः ॥

संपूज्य विधिवद्देवं दद्याद्विप्रेषु दक्षिणाम् ॥

सर्वकामसमृद्धस्तु स याति परमं पदम् ॥ । ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्या संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासज्ञेत्रमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७७



॥ ईश्वर उवाच ॥ ॥

तस्यैव पूर्वदिग्भागे लकुलीशस्तु मूर्तिमान् ॥

स्वयं तिष्ठति देवेशि कृत्वा घोरं तपः पुरा ॥ १ ॥

संस्थितः पापशमने तत्र स्थाने स्थलोपरि ॥

कार्तिक्यां कृत्तिकायोगे यस्तं पूजयते नरः ॥ २ ॥

स पूज्यते महादेवि सर्वैरपि सुरासुरैः ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये लकुलीशमाहात्म्यवर्णनंनाम सप्तसप्तत्युत्तरशततमो ऽध्यायः ॥ १७७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्माद्दक्षिणतः स्थितम् ॥

भार्गवेश्वरनामानं सर्वपापप्रणाशनम् ॥ १ ॥

यस्तं पूजयते देवि दिव्यपुष्पोपहारकैः ॥

स भवेत्कृतकृत्यस्तु सर्वकामैः समृद्धिमान् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भार्गवेश्वरमाहात्म्यवर्णनं- नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ ॥ १७८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १७९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं पापप्रणाशनम् ॥

सिद्धेशाद्दक्षिणे कोणे धनुषां त्रितये स्थितम् ॥

माण्डव्येश्वरनामानं महापातकनाशनम् ॥ १ ॥

माघे मासे चतुर्दश्यां पूजां जागरणं तथा ॥

कुर्याद्योऽतीन्द्रियो मर्त्यो न स मर्त्ये पुनर्व्रजेत् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासज्ञेत्रमाहात्म्ये माण्डव्येश्वरमाहात्म्यवर्णनंनामैकोना शीत्युत्तरशततमोऽध्यायः ॥ १७९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८०



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येत्पुष्पदन्तेश्वरं शुभम् ॥

पुष्पदन्तेश्वरोनाम गणेशः शंकरस्य तु ॥१॥

तेन तप्तं तपो घोरं तत्र लिंगं प्रतिष्ठितम् ॥ २ ॥

तं दृष्ट्वा मुच्यते जंतुर्जन्मसंसारबन्धनात् ॥

प्राप्नुयादीप्सितान्कामानिह लोके परत्र च ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुष्पदन्तेश्वर माहात्म्यवर्णनंनामाशीत्युत्तरशततमोऽध्यायः ॥ १८० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८१

https://sa.wikisource.org/s/gbm
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि क्षेत्रपेश्वरमुत्तमम् ॥

सिद्धेश्वर समीपस्थं पूर्वस्मिन्नातिदूरतः ॥ १ ॥

तं दृष्ट्वा शुक्लपञ्चम्यां न च नागैः स दश्यते ॥ २ ॥

पूजयेत्तं विधानेन गन्धपुष्पादिभिः क्रमात् ॥

भोजयेद्ब्राह्मणाञ्छक्त्या भक्ष्यभोज्यैरनेकशः ॥ ३ ॥

इतिश्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये क्षेत्रपालेश्वरमाहात्म्यवर्णनंनामैकाशीत्युत्तरशततमोऽध्यायः ॥ १८१ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८२



ततो मातृगणान्पश्येद्वसुनन्दादिनामतः ॥

अर्क स्थलसमीपस्थान्दक्षिणे नातिदूरतः ॥ १ ॥

आश्वयुक्छुक्लपक्षे तु नवम्यां नियतात्मवान् ॥

यस्ताः पूजयते मातॄर्विधिना भावितात्मवान् ॥ २ ॥

स समृद्धिमवाप्नोति दुरापामकृतात्मभिः ॥

तत्रैव संस्थितं पश्येच्छ्रीमुखं विवरप्रियम् ॥ ३ ॥

तस्मिन्नेव दिने पूज्यं सिद्धिकामैर्नरैः सदा ॥

एतत्पूर्वं मयाख्यातं तव विस्तरतः प्रिये ॥ ४ ॥

तस्मिन्नेव दिने पूज्यं तीर्थयात्राप्रसंगतः ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये वसुनन्दामातृगणश्रीमुखविवर माहात्म्यवर्णनंनाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ ॥ १८२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मिश्रतीर्थमनुत्तमम् ॥

त्रिसंगमेति विख्यातं सौरं तीर्थमनुत्तमम् ॥ १ ॥

सरस्वती हिरण्या च समुद्रश्चैव भामिनि ॥

त्रयाणां संगमो यत्र दुष्प्राप्यो दैवतैरपि ॥ २ ॥

सर्वेषां तत्र तीर्थानां प्रधानं तीर्थमुत्तमम् ॥

सूर्यपर्वणि संप्राप्ते कुरुक्षेत्राद्विशिष्यते ॥ ३ ॥

स्नानं दानं जपस्तत्र सर्वं कोटिगुणं भवेत् ॥ ४ ॥

मंकीश्वरान्महादेवि यावल्लिंगं कृतस्मरम् ॥

एतस्मिन्नन्तरे देवि तीर्थानां दशकोटयः ॥ ५ ॥

कृमिकीटपतंगाश्च श्वपचा वा नराधमाः ॥

सोऽपि स्वर्गमवाप्नोति किं पुनर्भावितात्मवान् ॥ ६ ॥

तत्र पीतानि वस्त्राणि काञ्चनं सुरभिस्तथा ॥

ब्राह्मणाय प्रदातव्या सम्यग्यात्राफलेप्सुभिः ॥ ७ ॥

कृष्णपक्षे चतुर्दश्यां स्नात्वा यस्तर्पयेत्पितॄन् ॥

तर्पिताः पितरस्तेन यावच्चन्द्रार्कतारकम् ॥ ८ ॥

एतत्त्रिसंगमं देवि महापातकनाशनम् ॥

दुर्लभं त्रिषु लोकेषु वैशाख्यां तु विशेषतः ॥ ९ ॥

वृषो त्सर्गो विशेषेण तत्र कार्यो नरोत्तमैः ॥

सर्वपापविनाशाय पितॄणां प्रीतये प्रिये ॥ 7.1.183.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये त्रिसंगममाहात्म्यवर्णनंनाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मंकीश्वरमनुत्तमम् ॥

त्रिसंगमसमीपस्थं सर्वपातकनाशनम्॥ १ ॥

मंकीनाम ऋषिः पूर्वमासीत्स तपतां वरः ॥

स च ज्ञात्वा महाक्षेत्रं प्रभासं शंकरप्रियम् ॥ २ ॥

अतपद्वै तपो घोरं कन्दमूलफलाशनः ॥

वर्षाणामयुतं साग्रं प्रतिष्ठाप्य महेश्वरम् ॥ ३ ॥

ततस्तुष्टो महादेवो ददौ प्रीतो वरं तदा ॥

स वव्रे यदि तुष्टोऽसि अस्मिन्स्थाने स्थितो भव ॥ ४ ॥

मन्नामांकितलिंगस्तु वस कल्पायुतायुतम् ॥

एवमस्त्वित्यथेत्युक्त्वा तत्रैवान्तरधीयत ॥ ५ ॥

तदाप्रभृति तल्लिंगं मंकीश्वरमिति श्रुतम्॥

माघे मासे त्रयोदश्यां चतुर्दश्यामथापि वा ॥ ६ ॥

पूज्याः पंचोपचारेण प्राप्नुयादीप्सितं फलम् ॥

गोदानं तत्र वै देयं सम्यग्यात्राफलेप्सुभिः ॥ ७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मंकीश्वरमाहात्म्यवर्णनंनाम चतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८५

https://sa.wikisource.org/s/g58



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवमातरमव्ययाम् ॥

मंकीशान्नैर्ऋते भागे गौरीरूपसमाश्रिताम्॥

देवमाता सरस्वत्या नाम लोकेषु गीयते ॥ १ ॥

पादुकासनसंस्था च तत्र देवी सरस्वती ॥

गौरीरूपेण सा तत्र वडवाश्रितविग्रहा ॥ २ ॥

मातृवद्रक्षिता देवा वडवानलभीतितः ॥

देवमातेति लोकेऽस्मिं स्ततः सा विबुधैः कृता ॥ ३ ॥

माघे मासे तृतीयायां यस्तामर्चयते नरः ॥

नारी वा संयता साध्वी सर्वान्कामानवाप्नुयात् ॥ ४ ॥

दंपती भोज येद्यस्तु पायसैः शर्करादिभिः ॥

गौरीसहस्रभोज्यस्य दत्तस्य फलमाप्नुयात् ॥ ५ ॥

सुवर्णपादुका देया तत्र विप्राय शीलिने ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये देवमातृगौरीमाहात्म्यवर्णनंनाम पंचा शीत्युत्तरशततमोऽध्यायः ॥ १८५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८६

https://sa.wikisource.org/s/gbq
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि नागस्थानमनुत्तमम् ॥

मंकीशात्पश्चिमे भागे संगमत्रितयं गतम् ॥ १ ॥

पापघ्नं सर्वजंतूनां पातालविवरं महत् ॥ २ ॥

बलभद्रः पुरा देवि श्रुत्वा कृष्णस्य पंचताम् ॥

भल्लतीर्थे तु भल्लेन ततः प्रभासमागतः ॥ ३ ॥

क्षेत्रं महाप्रभावं हि ज्ञात्वा सर्वार्थसिद्धिदम् ॥

यादवानां क्षयं कृत्वा ततो वैराग्यमेयिवान् ॥ ॥ ४ ॥

शेषनागेशरूपेण निष्क्रम्य च शरीरतः ॥

गच्छन्गच्छंस्तदा प्राप्य तीर्थं त्रैसंगमं परम् ॥ ५ ॥

पातालस्य तदा दृष्ट्वा द्वारं विवररूपकम् ॥

प्रविष्टोऽथ जगामाशु यत्रानंतः स्वयं स्थितः ॥ ६ ॥

यतो नागस्वरूपेण स्थानेऽस्मिंश्च समाविशत् ॥

तत्प्रभृत्येव देवेशि नागस्थानमिति श्रुतम् ॥ ७ ॥

नागरादित्यपूर्वेण यत्र कायो विसर्जितः ॥

तदद्यापि प्रसिद्धं वै शेषस्थानमिति श्रुतम् ॥ ८ ॥

अतः स्नात्वा महादेवि तत्र तीर्थे त्रिसंगमे ।

नागस्थानं समभ्यर्च्य पञ्चम्यामकृताशनः ॥९॥

श्राद्धं कृत्वा यथाशक्त्या दत्त्वा विप्राय दक्षिणाम् ॥

विमुक्तः सर्वदुःखेभ्यो रुद्रलोकं स गच्छति ॥ १० ॥

पायसं मधुसंमिश्रं भक्ष्यभोज्यैः समन्वितम् ॥

शेषनागं समुद्दिश्य विप्रं यस्तत्र भोजयेत् ॥

कोटिभोज्यं कृतं तेन जायते नात्र संशयः ॥ ११ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये नाग स्थानमाहात्म्यवर्णनंनाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सर्वकामफलप्रदम् ॥

प्रभासपंचकं पुण्यमाद्यं तत्र व्यवस्थितम् ॥ १ ॥

तस्यैव पश्चिमे भागे प्रभास इति चोच्यते ॥

वृद्धप्रभासश्च ततो दक्षिणे नातिदूरतः ॥ २ ॥

जल प्रभासश्च ततो दक्षिणेन वरानने ॥

कृतस्मरप्रभासश्च श्मशानं यत्र भैरवम् ॥ ३ ॥

एवं पंचप्रभासान्यः पश्येद्भक्तया समन्वितः ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ ४ ॥

न निवर्तति यत्प्राप्य दुष्प्राप्यं त्रिदशैरपि ॥

प्रभासं प्रथमं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ ५ ॥

देवानामपि दुष्प्राप्यं महापातकनाशनम् ॥

प्रभासे त्वेकरात्रेण अमावास्यां कृतोदकः ॥ ६ ॥

मुच्यते पातकैः सर्वैः शिवलोकं स गच्छति ॥

सप्तजन्मकृतं पापं गंगासागरसंगमे ॥ ७ ॥

जन्मनां च सहस्रेण यत्पापं कुरुते नरः ॥

स्नानादेवास्य नश्येत सागरे लवणांभसि ॥ ८ ॥

चतुर्दश्याममावास्यां पञ्चदश्यां विशेषतः ॥

अहोरात्रोषितो भूत्वा ब्राह्मणान्भोज्य शक्तितः ॥ ९ ॥

दत्त्वा गां कांचनं तेभ्यः शिवः प्रीतो भवत्विति ॥

एवं कृत्वा नरो देवि कुलानां तारयेच्छतम् ॥ 7.1.187.१० ॥

॥ देव्युवाच ॥ ॥

प्रभासपंचकं ह्येतद्यत्त्वया परिकीर्तितम् ॥

कथमत्र समुद्भूतमेतन्मे कौतुकं महत् ॥ ११ ॥

एक एव श्रुतोऽस्माभिः प्रभासस्तीर्थवासितः ॥

प्रभासाः पंच देवेश यत्त्वया परिकीर्तिताः ॥ १२ ॥

एतन्मे संशयं सर्वं यथावद्वक्तुमर्हसि ॥ ॥ १३ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथां पापप्रणाशनीम् ॥

यां श्रुत्वा मानवो भक्त्या प्राप्नोति परमां गतिम् ॥ १४ ॥

पुरा महेश्वरो देवश्चचार वसुधामिमाम् ॥

दिव्यरूपधरः कान्तो दिग्वासाः स यदृच्छया ॥ १५ ॥

एवं च रममाणस्तु ऋषीणामाश्रमं महत् ॥

जगाम कौतुकाविष्टो भिक्षार्थं दारुके वने ॥ १६ ॥

भ्रममाणस्य तस्याथ दृष्ट्वा रूपमनुत्तमम् ॥

ता नार्यः कामसंतप्ता बभूवुर्व्यथितेन्द्रियाः ॥ १७ ॥

सानुरागास्ततः सर्वा अनुगच्छंति तं सदा ॥

समालिंगंति ताः काश्चित्काश्च वीक्षंति रागतः ॥ १८ ॥

प्रार्थयंति तथा चान्याः परित्यज्य गृहान्स्वकान् ॥ १९ ॥

एवं तासां स्वरूपं ते दृष्ट्वा सर्वे महर्षयः ॥

कोपेन महता युक्ताः शेपुस्तं वृषभध्वजम् ॥ ॥ 7.1.187.२० ॥

यस्मात्त्वं नग्नतामेत्य आश्रमेऽस्मिन्ममागतः ॥

मोहयानः स्त्रियोऽस्माकं लज्जां नैवं करोषि च ॥

तस्मात्ते पतताल्लिंगं सद्य एव वृषध्वज ॥ २१ ॥

ततस्तत्पतितं लिंगं तत्क्षणाच्छंकरस्य च ॥

तस्मिन्प्रपतिते भूमौ प्राकंपत वसुंधरा ॥ २२ ॥

क्षुभिताः सागराः सर्वे मर्यादा विजहुस्तदा ॥

शीर्णानि गिरिशृंगाणि त्रस्ताः सर्वे दिवौकसः ॥ २३ ॥

ततो देवाः सगन्धर्वाः समहोरगकिन्नराः ॥

ऊचुः पितामहं गत्वा किमेतत्कारणं विभो ॥ २४ ॥

सागराः क्षुभिता येन प्लावयंति वसुंधराम् ॥

शीर्यंते गिरिशृङ्गाणि कंपते च वसुंधरा ॥ २५ ॥

चिह्नानि लोकनाशाय दृश्यन्ते दारुणानि च ॥

तेषां तद्वचन श्रुत्वा ब्रह्मलोके पितामहः ॥ २६ ॥

ध्यात्वा तु सुचिरं कालं वाक्यमेतदुवाच ह ॥

शिवलिंगं निपतितं पृथिव्यां सुरसत्तमाः ॥ २७ ॥

शापेन ऋषिमुख्यानां भार्गवाणां महात्मनाम् ॥

तस्मिन्निपतिते भूमौ त्रैलोक्यं सचराचरम् ॥ २८ ॥

एतदवस्थतां प्राप्तं तस्मात्तत्रैव गम्यताम् ॥

विष्णुना सह गीर्वाणास्तथा नीतिर्विधीयताम् ॥ २९ ॥

ततः क्षीरोदधिं जग्मुर्ब्रह्माद्यास्त्रिदिवौकसः ॥

यत्र शेते चतुर्बाहुर्योगनिद्रां च संगतः ॥ 7.1.187.३० ॥

तस्मै सर्वं समाचख्युस्तेनैव सहितास्ततः ॥

जग्मुर्यत्र महादेवो लिंगेन रहितो विभुः ॥ ३१ ॥

ऊचुः समाहिताः सर्वे प्रणिपत्य दिवौकसः ॥३२॥

लिंगमुत्क्षिप्यतामेतद्यत्क्षितौ पतितं विभो ॥

एते महार्णवाः सर्वे प्लावयंति वसुंधराम् ॥३३॥

॥ भगवानुवाच ॥ ॥

ऋषिभिः पातितं ह्येतन्मम लिंगं सुरेश्वराः ॥

न तु शक्यो मया कर्तुं बाधस्तेषां महात्मनाम् ॥३४॥

शापो हि भार्गवेन्द्राणामतो मे श्रूयतां वचः ॥

पूजयध्वं सुराः सर्वे ब्रह्मविष्णुपुरस्सराः ॥३५॥

लिंगमेतत्ततः सर्वे सर्वं लिप्सथ सत्तमाः ॥

प्रकृतिं सागराः सर्वे यास्यंति गिरयस्तथा ॥ ३६ ॥

एतत्पुण्यतमे क्षेत्रे धृत्वा सर्वे समाहिताः ॥

अथोद्धृत्य सुराः सर्वे प्रभासं क्षेत्रमागताः ॥३७॥

तत्रैव निदधुः सर्वे ततः पूजां प्रचक्रिरे ॥

ब्रह्मणा पूजितं लिंगं विष्णुना प्रभविष्णुना ॥ ३८ ॥

शक्रेणाथ कुबेरेण यमेन वरुणेन च ॥

ऊचुश्चैव ततो देवा लिंगं संपूज्य भक्तितः ॥ ३९ ॥

अद्यप्रभृति रुद्रस्य लिंगं संपूज्य भक्तितः ॥

भविष्यामो न संदेहस्तथा पितृगणाश्च ये ॥ 7.1.187.४० ॥

य एनं पूजयिष्यंति भक्तियुक्ताश्च मानवाः ॥

यास्यंति ते सुरावासं सशरीरा नरोत्तमाः ॥ ४१ ॥

अत्रैव प्रथमं लिगं यतोस्माऽभिः प्रतिष्ठितम् ॥

प्रभासं नाम चास्यापि प्रभासेति भविष्यति ॥ ४२ ॥

एवमुक्त्वा गताः सर्वे त्रिदिवं सुरसत्तमाः ॥

तं दृष्ट्वा त्रिदिवं यान्ति भूयांसः प्राणिनो भुवि ॥ ४३ ॥

ततस्त्रिविष्टपं व्याप्तं बहुभिः प्राणिभिः प्रिये ॥

तद्दृष्ट्वा त्रिदिवं व्याप्तं सहस्राक्षः सुदुःखितः ॥ ४४ ॥

ज्ञात्वा लिंगप्रभावं तु ततश्चागत्य भूतलम् ॥

वज्रेणाच्छादयामास समंतात्स वरानने ॥ ४५ ॥

ततः प्रभृति नो देवि स्वर्गं गच्छंति मानवाः ॥

इति संक्षेपतः प्रोक्तः प्रभासस्य महोदयः ॥

सर्वपापोपशमनः सर्वकामफलं प्रदः ॥४६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेप्रभासक्षेत्रमाहात्म्ये प्रभासपञ्चकमाहात्म्यवर्णनंनाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥ १८७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८८

https://sa.wikisource.org/s/gbs



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्र स्थाने तु संस्थितम् ॥

रुद्रेश्वरेतिनामानं स्वयंभूतं धरातले ॥ १ ॥

आदिप्रभासात्पुरतो धनुषां त्रितये स्थितम् ॥

रुद्रेण ध्यानमास्थाय स्वं तेजस्तत्र योजितम् ॥ २ ॥

ततो रुद्रेश्वरंनाम सर्वपातकनाशनम् ॥

तं दृष्ट्वा पूजयित्वा च सर्वान्कामानवाप्नुयात् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रुद्रेश्वरमाहात्म्यवर्णनंनामाष्टाशीत्युत्तरशततमोऽध्यायः ॥ १८८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १८९



॥ ईश्वर उवाच ॥ ॥

तस्यैव पश्चिमे भागे नातिदूरे व्यवस्थितम् ॥

चण्डिका कर्ममोटी च योगिनी कोटिसंयुता ॥

पीठत्रयं महादेवि आद्यं त्रैलोक्यवन्दितम् ॥ १ ॥

नवम्यां तत्र संपूज्य देवीपीठं च योगिनीम् ॥

स सर्वान्प्राप्नुयात्कामान्भवेत्स्वर्गांगनाप्रियः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासज्ञेत्रमाहात्म्ये कर्ममोटीमाहात्म्यवर्णनंनामैकोननवत्युत्तरशततमोऽध्यायः ॥ १८९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्र मुक्तिप्रदं हरिम् ॥

प्रभासान्नैर्ऋते भागे नातिदूरे व्यवस्थितम् ॥ १ ॥

एकादश्यां जिताहारो यस्तं देवि प्रपूजयेत् ॥

माघेमासे विशेषेण सोऽग्निष्टोमफलं लभेत् ॥ २ ॥

यस्तत्रानशनं कुर्याद्व्रतं चान्द्रायणादिकम् ॥

सोऽन्य तीर्थात्कोटिगुणं प्राप्नुयात्फलमीप्सितम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये मोक्षस्वामिमाहात्म्यवर्णनंनाम नवत्युत्तरशततमोऽध्यायः ॥ १९० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अजीगर्तेश्वरं हरम् ॥

चन्द्रवापीसमीपस्थं कर्ममोटीसमीपतः ॥ १ ॥

तस्यां स्नात्वा महादेवि यस्तल्लिगं प्रपूजयेत् ॥

स मुक्तः पातकैर्घोरैर्गच्छेच्छिवपदं महत् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येऽजीगर्तेश्वरमाहात्म्यवर्णनं नामैकनवत्युत्तरशततमोऽध्यायः ॥ १९१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९२

https://sa.wikisource.org/s/gbw

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विश्वकर्मप्रतिष्ठितम् ॥

लिंगं महाप्रभावं हि मोक्षस्वामिन उत्तरे ॥ १ ॥

धनुषां पंचके देवि स्थितं पातकनाशनम् ॥ २ ॥

तं दृष्ट्वा मानवः सम्यग्यात्राफलमवाप्नुयात् ॥

वाचिकं मानसं पापं दर्शनात्तस्य नश्यति ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये विश्वकर्मेश्वरमाहात्म्यवर्णनंनाम द्विनवत्युत्तरशततमोऽध्यायः ॥ १९२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यमेश्वरमनुत्तमम् ॥

तस्यैव नैर्ऋते भागे नातिदूरे व्यवस्थितम् ॥ १ ॥

दर्शनात्पापशमनं सर्वकामफलप्रदम् ॥ ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये यमेश्वरमाहात्म्यवर्णनं नाम त्रिणवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं देवैः प्रतिष्ठितम् ॥

ज्ञात्वा प्रभावं क्षेत्रस्य सर्वपातकनाशनम् ॥ १ ॥

तत्र कृत्वा तपश्चोग्रं लिंगं देवैः प्रतिष्ठितम् ॥

तं दृष्ट्वा मानवो देवि कृतकृत्यः प्रजायते ॥ २ ॥

गोदानं तत्र देयं तु ब्राह्मणे वेदपारगे ॥

सम्यक्च लभते देवि यात्रायाः फलमूर्जितम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्येऽमरेश्वरमाहात्म्यवर्णनंनाम चतुर्णवत्युत्तरशततमोऽध्यायः ॥ १९४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९५



॥ ईश्वर उवाच ॥ ॥

ततो वृद्धप्रभासं तु गच्छेच्च नियतात्मवान् ॥

आदिप्रभासाद्दक्षिणतो नातिदूरे व्यवस्थितम् ॥ १ ॥

चतुर्मुखं महालिंगं दर्शनात्पापनाशनम् ॥ २ ॥

॥ श्रीदेव्युवाच ॥ ॥

कथं वृद्धप्रभासं तु नाम तस्याभवत्प्रभो ॥

तस्मिन्दृष्टे फलं किं स्यात्स्तुते संपूजिते तथा ॥ ३ ॥

एतत्कथय मे देव संक्षेपान्नातिविस्तरात् ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

आदौ स्वायंभुवे देवि पूर्वमन्वन्तरे पुरा ॥

त्रेतायुगे चतुर्थे तु प्रभासे क्षेत्र उत्तमे ॥ ५ ॥

तस्मिन्काले महादेवि पूर्वमन्वंतरे पुरा ॥

त्रेतायुगे चतुर्थे तु ऋषयस्तत्र संगताः ॥ ६ ॥

दर्शनार्थं प्रभासस्य उत्तरापथगामिनः ॥

तं दृष्ट्वाऽऽच्छादितं देवं वज्रेण तु महेश्वरि ॥ ७ ॥

विषादं परमं जग्मुर्वाक्यं चेदमथाबुवन् ॥

अदृष्ट्वा शांकरं लिगं न यास्यामो वयं गृहम् ॥ ८ ॥

स्वर्गार्थिनो वयं प्राप्ता महदध्वानमेव हि ॥

तस्मादत्रैव तिष्ठामो यावल्लिंगस्य दर्शनम् ॥ ९ ॥

एवं ते निश्चयं कृत्वा परस्मिंस्तपसि स्थिताः ॥

वर्षास्वाकाशगा भूत्वा हेमंते सलिलाश्रयाः ॥ 7.1.195.१० ॥

पञ्चाग्निसाधना ग्रीष्मे नियता ब्रह्मचारिणः ॥

बहून्वर्षगणान्विप्रा जराग्रस्तास्तदाऽभवन् ॥ ११ ॥

एवं वृद्धत्वमापन्ना यदा ते वरवर्णिनि ॥

छन्द्यमाना वरैस्ते तु शंकरेण महात्मना ॥ १२ ॥

लिंगस्य दर्शनं मुक्त्वा न तेऽन्यं वव्रिरे वरम् ॥ १३ ॥

तेषां तु निश्चयं ज्ञात्वा सर्वेषां वृषभध्वजः ॥

अनुकम्पापरो भूत्वा स्वलिंगं तानदर्शयत् ॥ १४ ॥

एतस्मिन्नेव काले तु भित्त्वा चैव वसुन्धराम् ॥

उत्थितं सहसा लिंगं तदेव वरवर्णिनि ॥ १५ ॥

ऋषयस्ते च तं दृष्ट्वा सर्वे च त्रिदिवं गताः ॥

अथ तेषु प्रयातेषु शक्रस्तत्समना ह्यभूत् ॥ १६ ॥

तमपि च्छादयामास वज्रेण शतपर्वणा ॥ १७ ॥

वृद्धभावे यतस्तेषामृषीणां दर्शनं गतः ॥

अतो वृद्धप्रभासं तत्कीर्त्यते वसुधातले ॥ १८ ॥!

तस्मिन्दृष्टे वरारोहे अद्यापि लभते फलम् ॥

राजसूयाश्वमेधानां नरो भक्तिसमन्वितः ॥ १९ ॥

एवं तत्र समुत्पन्नं प्रभासं वृद्धसंज्ञकम् ॥

तत्रोक्षा ब्राह्मणे देयः सम्यग्यात्राफलेप्सुभिः ॥ 7.1.195.२० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वृद्धप्रभासमाहात्म्यवर्णनंनाम पञ्चनवत्युत्तरशततमोऽध्यायः ॥ १९५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि प्रभासं जलसंस्थितम् ॥

वृद्धप्रभासाद्दक्षिणतो नातिदूरे व्यवस्थितम् ॥ १ ॥

तस्यैव देवि देवस्य शृणु माहात्म्यमुत्तमम् ॥ २ ॥

जामदग्न्येन रामेण यदा क्षत्त्रवधः कृतः ॥

तदाऽस्य परमा जाता घृणा मनसि भामिनि ॥ ३ ॥

ततस्त्वाराधयामास महादेवं सुरेश्वरम्॥

उग्रं तपः समास्थाय बहून्वर्ष गणान्प्रिये ॥ ४ ॥

ततस्तुष्टो महादेवस्तस्य प्रत्यक्षतां गतः ॥

अब्रवीद्वरदस्तेऽहं वरं वरय सुव्रत ॥ ५ ॥

॥ राम उवाच ॥ ॥

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥

दर्शयस्व स्वकं लिंगं यज्ञे वज्रेण छादितम् ॥ ६ ॥

घृणा मे महती जाता हत्वेमान्क्षत्रियान्बहून् ॥

दर्शनात्तव लिंगस्य येन मे नश्यते घृणा ॥ ७ ॥

तथा मे पातकं सर्वं प्रसादात्तव शंकर ॥ ८ ॥

॥ शंकर उवाच ॥ ॥

मम लिंगं सहस्राक्ष उत्थितं तु पुनःपुनः ॥

वज्रेणाच्छादयत्येव भयेन महता वृतः ॥ ९ ॥

न तेऽहं दर्शनं यास्ये लिंगरूपी कदाचन ॥ 7.1.196.१० ॥

यन्मां वदसि घृणया वृतोऽहं पातकेन तु ॥

तत्तेऽहं नाशयिष्यामि स्पर्शनात्तु द्विजोत्तम ॥ ११ ॥

अस्मिञ्जलाश्रये पुण्ये जलमध्ये महामते ॥

उत्थास्यति महालिंगं तस्य त्वं दर्शनं कुरु ॥ ॥ १२ ॥

गमिष्यति घृणा सर्वा निष्पापस्त्वं भविष्यसि ॥

उक्त्वैवमुदतिष्ठच्च जलमध्याद्वरानने ॥ १३ ॥

जलप्रभासनामास्य ततो जातं धरातले ॥

तस्यालं स्पर्शनाद्देवि शिवलोकं व्रजेन्नरः ॥ १४ ॥

एकं भोजयते योऽत्र ब्राह्मणं शंसितव्रतम् ॥

भोजितोऽहं भवेत्तेन सपत्नीको न संशयः ॥ १५ ॥

एषा जलप्रभासस्य संभूतिस्ते मयोदिता ॥

श्रुता पापोपशमनी सर्वकामफलप्रदा ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये जलप्रभासमाहात्म्यवर्णनंनाम षण्णवत्युत्तरशततमोऽध्यायः ॥ १९६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि जमदग्नीश्वरं शिवम् ॥

वृद्धप्रभाससामीप्ये नातिदूरे व्यवस्थितम् ॥ १ ॥

सर्वपापोपशमनं स्थापितं जमदग्निना ॥

तं दृष्ट्वा मानवो देवि मुच्यते च ऋणत्रयात् ॥ २ ॥

स्नात्वा निधानवाप्यां च संपूज्य प्राप्नुयाद्धनम् ॥

निधानं पांडवैर्लब्धं तत्र स्थाने पुरा प्रिये ॥ ३ ॥

निधानेनैव सा ख्याता वापी त्रैलोक्यवंदिता ॥ ४ ॥

तस्यां स्नात्वा महादेवि दुर्भगा सुभगा भवेत् ॥

लभते वाञ्छितान्कामानिति प्रोक्तं मया तव ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशातिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये जमदग्नीश्वरमाहात्म्यवर्णनंनाम सप्तनवत्युत्तरशततमोऽध्यायः ॥ १९७ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९८

https://sa.wikisource.org/s/gc2
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि महाप्रभासमुत्तमम् ॥

जलप्रभासतो याम्ये यममार्गविघातकम् ॥ १ ॥

शृणु तस्यैव माहात्म्यं यथा जातं धरातले ॥ ॥ २ ॥

पूर्वं त्रेतायुगे देवि स्पर्शलिंगं तु तत्स्मृतम् ॥

दिव्यं तेजोमयं नृणां स्पर्शनान्मुक्तिदायकम् ॥ ३ ॥

अथ काले च कस्मिंश्चिद्वज्रिणाच्छादितं प्रिये ॥

इन्द्रेणागत्य वसुधां भयाक्रांतेन सुन्दरि ॥ ४ ॥

उष्मा तदुद्भवो देवि निर्गच्छन्नवरोधितः ॥

दशकोटिप्रविस्तीर्णं ज्वालाग्रं लिंगरूपधृक् ॥ ५ ॥

प्रभासक्षेत्रमास्थाय भित्वाऽऽविर्भावमास्थितम् ॥

वज्रेण रुंधिते देवि भित्त्वा चैव वसुंधराम् ॥ ६ ॥

धूमसंघैः समेतं तु व्यापयामास तज्जगत् ॥

ततस्त्रैलोक्यमखिलं ज्वालाभिर्व्याकुलीकृतम् ॥ ७ ॥

ततः सुरगणाः सर्व ऋषयो वेदपारगाः ॥

अस्तुवन्विविधैः सूक्तैर्वेदोक्तैः शशिशेखरम् ॥ ८ ॥

संहरस्व सुरश्रेष्ठ तेजः स्वदहनात्मकम् ॥ त्रै

लोक्यं व्याकुलीभूतमेवं सर्वं चराचरम् ॥

न यावत्प्रलयं याति तावद्रक्ष सुरेश्वर ॥ ९ ॥

॥ ईश्वर उवाच ॥ ॥

एवमाभाषमाणेषु त्रिदिवेषु सुरेश्वरि ॥

तत्तेजः पञ्चधाविष्टं व्याप्याशेषं जगत्त्रयम् ॥ ॥ 7.1.198.१० ॥

पञ्चप्रभासरूपेण भित्वा तत्र वसुन्धराम्॥

येन मार्गेण निष्क्रान्तं तन्मार्गे च महन्महः ॥ ११ ॥

तत्र तैः स्थापितं द्वारं सुप्रदेशेऽश्मजं प्रिये ॥

पिहितेऽथ च रंध्रेऽस्मिन्धूमो नाशमुपेयिवान् ॥ १२ ॥

स्वस्थाश्चैवाभवँल्लोकास्तेजस्तत्रैव संस्थितम् ॥

एवं मया प्रेरितास्ते लिंगं तत्र समादधुः ॥ १३ ॥

तन्महस्तत्र देवेशि विश्राममकरोत्तदा ॥

ततो महाप्रभासेति कीर्त्यते देवदानवैः ॥ १४ ॥

यस्तं पूजयते भक्त्या लिंगं पुष्पैः पृथग्विधैः ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ १५ ॥

दृष्टेन तेन देवेशि मुच्यते पातकैर्नरः ॥

लभते वाञ्छितान्कामान्मनसा चेप्सितान्प्रिये ॥ १६ ॥

हिरण्यं तत्र दातव्यं ब्राह्मणे शंसितव्रते ॥

गोदानं विधिवत्तत्र देयं चैव द्विजन्मने ॥ १७ ॥

एवं कृत्वा महादेवि लभते जन्मनः फलम् ॥

राजसूयाश्वमेधानां प्राप्नुयात्फलमूर्जितम् ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये पञ्चमप्रभासक्षेत्रमाहात्म्यवर्णनंनामाष्टानवत्युत्तरशततमोऽध्यायः ॥ १९८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः १९९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्य दक्षिणतः स्थितम् ॥

सरस्वत्यास्तटे रम्ये देवं तत्र कृतस्मरम् ॥ १ ॥

स्वयंभूतं महादेवि सर्वपापप्रणाशनम् ॥

तस्योत्पत्तिं प्रवक्ष्यामि यथा जातं महीतले ॥ २ ॥

पुरा कामो मया दग्धो यदा तत्र वरानने ॥

तदा रतिः समागम्य विललाप सुदुःखिता ॥ ३ ॥

तां तु शोकातुरां दृष्ट्वा तत्राहं करुणान्वितः ॥

अवोचं मा रुदिष्वेति तव भर्ता पुनः शुभे ॥

समुत्थास्यति कालेन मत्प्रसादान्न संशयः ॥ ४ ॥

॥ देव्युवाच ॥ ॥

किमर्थं स पुरा दग्धः कामदेवस्त्वया विभो ॥

कथमाप पुनर्जन्म विस्तरात्कथयस्व मे ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

दक्षः प्रजापतिः पूर्वं बभूव त्वत्पिता प्रिये ॥

शतं सुतानां जज्ञेऽस्य गौरीणां दीर्घचक्षुषाम् ॥ ६ ॥

ददौ त्वां प्रथमं मह्यं सतीनामेति कीर्तिताम् ॥

ददौ दश च धर्माय श्रद्धा मेधा धृतिः क्षमा ॥ ७ ॥

अनसूया शुचिर्लज्जा स्मृतिः शक्तिः श्रुतिस्तथा ॥

द्वे भार्ये कामदेवाय रतिः प्रीतिस्तथैव च ॥ ८ ॥

एकां स्वाहां ददौ वह्नेः पितॄणां च ततः स्वधाम् ॥

सप्तविंशच्छशाङ्काय अश्विन्याद्याः प्रकीर्तिताः ॥ ९ ॥

तवापि विदिता देवि रेवत्यन्तास्तथा जने ॥

कश्यपाय ददौ देवि स तु कन्यास्त्रयोदश ॥ 7.1.199.१० ॥

अदितिश्च दितिश्चैव विनता कद्रुरेव च ॥
सिंहिका सुप्रभा चैव उलूकी या वरानने ॥ ११ ॥
अनुविद्धा सिता चैव ईर्ष्या हिंसा तथा परा ॥
माया निष्कृतिसंयुक्ता दक्षः पूर्वं महामतिः ॥ १२ ॥
गौरी च सुप्रभा चैव वार्त्ता साध्वी सुमालिका ॥
वरुणाय ददौ पञ्च तदाऽसौ पर्वतात्मजे ॥ १३ ॥
भद्रा च मदिरा चैव विद्या धन्या धना शुभा ॥
ददौ पञ्च कुबेराय पत्न्यर्थं पर्वतात्मजे ॥ १४ ॥
जया च विजया चैव मधुस्पन्दा इरावती ॥
सुप्रिया जनका कान्ता सुभद्रा धार्मिका शुभा ॥ १५ ॥
रुद्राणां प्रददौ कन्या दशानां धर्मवित्तदा ॥
प्रभावती सुभद्रा च विमला निर्मलाऽनृता ॥ १६ ॥
तीव्रा दक्षारुणा विद्या धारपाला च वर्चसा ॥
आदित्यानां ददौ दक्षः कन्याद्वादशकं प्रिये ॥ १७ ॥
योगनिद्राभिभूतस्य संसर्पा सरमा गुहा ॥
माला चंपा तथा ज्योत्स्ना स विश्वेभ्यश्च एव च ॥ १८ ॥
अश्विभ्यां द्वे तथा कन्ये सुवेषा भूषणा शुभा ॥
एका कन्या तथा वायोर्दत्ता एताः प्रकीर्तिताः ॥ १९ ॥
सावित्रीं ब्रह्मणे प्रादाल्लक्ष्मीं विष्णोर्महात्मनः ॥
कस्यचित्त्वथ कालस्य स ईजे दक्षिणावता ॥ 7.1.199.२० ॥
यज्ञेन पर्वतसुते हिमवन्ते महागिरौ ॥
यज्ञवाटो ह्यभूत्तस्य सर्वकामसमृद्धिमान् ॥ २१ ॥
तस्मिन्यज्ञे समायाता आदित्या वसव स्तथा ॥
विश्वेदेवाश्च मरुतो लोकपालाश्च सर्वशः ॥ २२ ॥
ब्रह्मा विष्णुः सहस्राक्षो वारुणो यम एव च ॥
धनदश्च कुमारश्च तथा नद्यश्च सागराः ॥ ॥ २३ ॥
वाप्यः कूपास्तथा चैव तडागाः पल्वलानि च ॥
सुपर्णश्चाथ ये नागाः सर्वे मूर्ता व्यवस्थिताः ॥ २४ ॥

दानवाप्सरसश्चैव यक्षाः किन्नरगुह्यकाः ॥
सानुगास्ते सभार्याश्च वेदवेदांगपारगाः ॥ २५ ॥
महर्षयो महाभागास्तथा देवर्षयश्च ये ॥
ते भार्यासहितास्तत्र वसंति च वरानने ॥२६॥
कपालमालाभरणश्चिताभस्म बिभर्ति यः ॥
अपवित्रतया शंभुर्नाहूतस्तु तथाविधः ॥ २७ ॥
यतस्ततः समायाताः कैलासे पर्वतोत्तमे ॥
अश्विन्याद्या भगिन्यस्तास्त्वां प्रतीदं वचोऽब्रुवन् ॥ २८ ॥
किं तुष्टेव च कल्याणि तिष्ठसि त्वं सुमध्यमे ॥
वयं च प्रस्थिताः सर्वाः पितुर्यज्ञे सभर्तृकाः॥२९॥
वयमाकारितास्तेन सुताः सर्वा यशस्विनि ॥
न त्वामाहूतवान्दक्षस्त्रपते शंकराद्यतः॥7.1.199.३०॥
तासां वचनमाकर्ण्य सती प्राह क्रुधान्विता॥
हा धिग्दक्ष दुराचार किं वदिष्ये महेश्वरम् ॥३१॥
कथं संदर्शये वक्त्रमित्युक्त्वाऽऽत्मानमात्मना ॥
विससर्ज तपोयोगात्सस्मारान्यन्न किञ्चन ॥३२॥
अथ दृष्ट्वा महादेवः सतीं प्राणैर्विना स्थिताम् ॥
अवमानात्तथाऽऽत्मानं त्यक्त्वा मत्वा कपालिनम् ॥३३॥
गणान्संप्रेषयामास यज्ञविध्वंसनाय च ॥
ते गताश्च गणा रौद्राः शतशोऽथ सहस्रशः ॥ ३४ ॥
विकृता विकृताकारा असंख्याता महाबलाः ॥
रुद्रेण प्रेरितान्दृष्ट्वा वीरभद्रपुरोगमान् ॥३५॥
ततो देवगणाः सर्वे वसवः सह भास्करैः ॥
विश्वेदेवाश्च साध्याश्च धनुर्हस्ता महाबलाः ॥ ३६ ॥
युद्धाय च विनिष्क्रान्ता मुञ्चन्तः सायकाञ्छितान् ॥
ते समेत्य ततोऽन्योन्यं प्रमथा विबुधैः सह ॥ ३७ ॥
मुमुचुः शरवर्षाणि वारिधारां यथा घनाः ॥
तेषां हस्ती गणेनाथ शूलेन हृदि भेदितः ॥ ३८ ॥

स तु तेन प्रहारेण विसंज्ञो निषसाद ह ॥
अथ मुष्ट्या हतः कुम्भे नाग ऐरावणस्तदा ॥ ३९ ॥
सहसा स हतस्तेन वारणो भैरवान्रवान्॥
विनदञ्जवमास्थाय यज्ञवाटमुपाद्रवत् ॥ 7.1.199.४० ॥
विश्वेदेवा निरुच्छ्वासाः कृता रौद्रैर्महाशरैः ॥
चकर्ष स धनुष्येण वसुमान्बलवत्तरः ॥ ॥ ४१ ॥
निस्तेजसस्तदादित्याः कृतास्तेन रणाजिरे ॥
एतस्मिन्नन्तरे देवाः कृतास्तेन पराङ्मुखाः ॥ ४२ ॥
ततस्ते शरणं जग्मुर्विष्णुं तत्र च संस्थितम् ॥
ततः कोपसमाविष्टो विष्णुर्देवान्सवासवान् ॥ ४३ ॥
दृष्ट्वा विद्रावितान्सर्वान्मुमोचाशु सुदर्शनम् ॥
तमापतन्तं वेगेन विष्णोश्चक्रं सुदर्शनम् ॥ ४४ ॥
प्रसार्य वक्त्रं सहसा उदरस्थं चकार ह ॥
तस्मिंश्चक्रे तदा ग्रस्ते अमोघे पर्वतात्मजे ॥ ४५ ॥
चुकोप भगवान्विष्णुः शार्ङ्गहस्तो ऽभ्यधावत ॥
स हत्वा दशभिस्तीक्ष्णैर्नंदिं भृङ्गिं शतेन च ॥ ४६ ॥
महाकालं सहस्रेण ह्ययुतेन गणाधिपम् ॥
बाणानामयुतैर्भित्त्वा वीरभद्रमुपाद्रवत् ॥ ४७ ॥
तं हत्वा गदया विष्णुर्विह्वलं रुधिरोक्षितम् ॥
गृहीत्वा पादयोर्भूमौ निजघानातिरोषितः ॥ ४८ ॥
हन्यमानस्य तस्याथ भूमौ चक्रं सुदर्शनम्॥
रुधिरोद्गारसंयुक्तं प्रहारमकरोन्न तु ॥४९॥
रुद्रलब्धवरो देवि वीरभद्रो गणेश्वरः ॥
यन्न पञ्चत्वमापन्नो गदया पीडितोऽपि सः ॥ 7.1.199.५० ॥
पतितं वीक्ष्य तं सर्वे विष्णुतेजोबलार्दिताः ॥
विद्रुताः सर्वतो याता यत्र देवो महेश्वरः ॥ ५१ ॥
तस्मै सर्वं तथा वृत्तं समाचख्युः पराभवम् ॥
विक्रमं वीरभद्रस्य ततः क्रुद्धो महेश्वरः ॥ ५२ ॥

प्रगृह्य सहसा शूलं प्रस्थितः स्वगणैः सह ॥
यज्ञवाटं तु दक्षस्य पराभवभवं ततः ॥
विक्रमन्वीरभद्रेण यत्र विष्णुः स्वयं स्थितः ॥५३॥
तमायान्तं समालोक्य कोपयुक्तं महेश्वरम् ॥
संग्रामे सोऽजयं मत्वा तत्रैवान्तरधीयत ॥५४॥
मरुद्भिः सार्धमिन्द्रोऽपि वसुभिः सह किन्नरैः ॥
शिवः क्रोधपरीतात्मा ततश्चादर्शनं गतः ॥५५॥
केवलं ब्राह्मणास्तत्र स्थिताः सदसि भामिनि ॥
ते दृष्ट्वा शंकरं प्राप्तं कोपसंरक्तलोचनम् ॥ ५६ ॥
होमं चक्रुस्ततो भीता रुद्रमंत्रैः समंततः ॥
अन्ये त्राससमायुक्ताः पलायंते दिशो दश ॥ ५७ ॥
अथागत्य महादेवो दृष्ट्वा तान्ब्राह्मणोत्तमान् ॥
अपश्यमानो विबुधांस्तत्र यज्ञं जघान सः ॥ ५८ ॥
स च मृगवपुर्भूत्वा प्रणष्टः शिवभीतितः ॥
पृष्ठतस्तु धनुष्पाणिर्जगाम भगवाञ्छिवः ॥
अद्यापि दृश्यते व्योम्नि तारारूपो महेश्वरि ॥ ५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये दक्षयज्ञविध्वंसनोनाम नवनवत्युत्तरशततमोऽध्यायः ॥ १९९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २००



॥ ईश्वर उवाच ॥ ॥

एवं विध्वंसिते यज्ञे गतास्ते ब्राह्मणा गृहम् ॥

अप्राप्तकामना देवि ये चान्ये तत्र वै गताः ॥ १ ॥

हरोऽपि विगतामर्षः कैलासं पर्वतं गतः ॥ २ ॥

एतस्मिन्नेव काले तु तारकोनाम दानवः ॥

उत्पन्नः स महाबाहुर्देवानां बलदर्पहा ॥ ३ ॥

तेन इन्द्रादिकान्सर्वान्सुराञ्जित्वा महाहवे ॥

स्वर्गः स्वैर्व्यापितो देवि ब्रह्मलोकं ततो गताः ॥

ऊचुः सुरा दुःखयुक्ता ब्रह्माणं पर्वतात्मजे ॥ ४ ॥

तारकेण सुरश्रेष्ठ स्वर्गान्निर्वासिता वयम् ॥

स्वयमिन्द्रः समभवद्वसवोऽन्ये तथा कृताः ॥ ५ ॥

रुद्राः साध्यास्तथा विश्वे अश्विनौ मरुतस्तथा ॥

आदित्याश्च वधोपायं तस्माद्वद पितामह ॥ ६ ॥

॥ ब्रह्मोवाच ॥ ॥

अवध्यः स तु सर्वेषां देवानामिति मे मतिः ॥

ऋते तु शांकरं तेजो नान्येन विनिपात्यते ॥

तस्माद्गच्छत भद्रं वो देवदेवं महेश्वरम् ॥ ७ ॥

तस्य भार्या मृता पूर्वं जाता हिमवतो गृहे ॥

तस्यां च जायते पुत्रः स हनिष्यति तारकम् ॥

तस्मात्प्रसादयध्वं वै तदर्थं शूलपाणिनम् ॥ ८ ॥

ततो देवैः समादिष्टः कामदेवो वरानने ॥

मृतभार्यं हरं गत्वा ततः पीडय सायकैः ॥ ९ ॥

येनासौ कामसंतप्तो भार्यार्थं यत्नवान्भवेत् ॥६

अयं गच्छतु ते भ्राता वसंतश्च मनोहरः ॥ 7.1.200.१० ॥

स तथेति प्रतिज्ञाय कैलासं पर्वतं गतः ॥
ततो दृष्ट्वा महादेवः कामदेवं धृतायुधम् ॥ ११ ॥
वसन्तसहितं देवि रुद्रोऽन्धकनिषूदनः ॥
गंगाद्वारमनुप्राप्य अपश्यद्यावदग्रतः ॥ १२ ॥
दत्तायुधं कामदेवं दुद्रुवे स भयात्पुनः ॥
ततो वाराणसीं गत्वा नैमिषं पुष्करं तथा ॥ १३ ॥
श्रीकंठं रुद्रकोटिं च कुरुक्षेत्रं गयां तथा ॥
ज्वालामार्गं प्रयागं च विशालामर्बुदं शुभम् ॥ १४ ॥
बहून्वर्षगणानेवं भ्रमन्स धरणीतले ॥
कामदेवभयाद्देवि देवदेवो महेश्वरः ॥ १५ ॥
अवैक्षत तदा कामं विस्फार्य नयनं तदा ॥
तृतीयं देवदेवेशि देवदेवस्त्रिलोचनः ॥ १६ ॥
तस्य तं वीक्षमाणस्य संजाताः पावकार्चिषः ॥
ताभिः स धनुषा युक्तो भस्मसात्समपद्यत ॥ १७ ॥
तं दग्ध्वा भगवाञ्छंभुर्गत्वा रोषस्य निर्णयम् ॥
निवासमकरोत्तत्र क्षेत्रे प्राभासिके शुभे ॥ १८ ॥
तस्मिन्दग्धे तदा कामे रतिः शोकपरायणा ॥
विललाप सुदुःखार्ता पतिभक्तिपरायणा ॥ १९ ॥
हा नाथनाथ भोः स्वामिन्किं जहासि पतिव्रताम् ॥
पतिव्रतां पतिप्राणां कस्मान्मां त्यजसि प्रभो ॥ 7.1.200.२० ॥
एवं विलपतीं तां तु वागुवाचाशरीरिणी ॥
मा त्वं रुद विशालाक्षि पुनरेव पतिस्तव ॥ २१ ॥
प्रसादाद्देवदेवस्य उच्छ्वास्यति शिवस्य तु ॥
एतां वाचं रतिः श्रुत्वा ततः स्वस्था बभूव ह ॥ २२ ॥
ततो देवाः शिवं नत्वा प्रार्थयामासुरीश्वरि ॥
कलत्रसंग्रहं देव कुरु कार्यार्थसंग्रहे ॥ २३ ॥
एष कामस्त्वया दग्धः क्रोधेन महता स्वयम् ॥
विना तेन विभो नष्टा सृष्टिर्वै धरणीतले ॥ २४ ॥

॥ भगवानुवाच ॥ ॥

एष कामो मया दग्धः क्रोधेन सुरसत्तमाः ॥

तस्मादनंग एवैष प्रजासु प्रचरिष्यति ॥

तद्वीर्यस्तत्प्रभावश्च विना देहं भविष्यति ॥ २५ ॥

॥ देवा ऊचुः ॥ ॥

भगवन्कुरु पूर्वं त्वं संस्मरस्व रतीश्वरम् ॥

हिताय सर्व लोकानां यथा नः प्रत्ययो भवेत् ॥ २६ ॥

ततः स स्मृतवान्कामं स्वयं देवो महेश्वरः ॥

ततस्तच्छाश्वतं लिंगं समुत्तस्थौ महीतले ॥ २७ ॥

कृतस्मरः पुनस्तत्र अनंगो बलवांस्तथा ॥

तेनोढा शैलजा तेन शंकरेण महात्मना ॥ २८ ॥

जातः स्कन्दः सुरश्रेष्ठस्तारको येन सूदितः ॥

पतितेनैव लिंगेन यस्माच्चैव कृतस्मरः ॥ २९ ॥

तस्मात्कृतस्मरो लोके कीर्त्यते स महीतले ॥

तं दृष्ट्वा न जडो नांधो नासुखी न च दुर्भगः ॥

जायते तु कदा मर्त्यो न दरिद्रो न रोगवान् ॥ 7.1.200.३० ॥

एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥

दग्धो यथा स्मरः पूर्वं पुनर्वीर्यान्वितः स्थितः ॥ ३१ ॥

॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं कुण्डं दक्षिणेन कृतस्मरात् ॥

कामकुंडेति वै नाम यत्रोद्भूतः पुनः स्मरः ॥ ३२ ॥

अनंगरूपी देव्यत्र स्नानाद्वै रूपवान्भवेत् ॥

इक्षवस्तत्र वै देयाः सुवर्णं गास्तथैव च ॥

वस्त्राणि चैव विधिवद्ब्राह्मणे वेदपारगे ॥३३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कामकुण्डमाहात्म्यवर्णनंनाम द्विशततमोऽध्यायः ॥ २०० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०१



॥ ईश्वर उवाच ॥ ॥

तस्मिन्स्थाने महादेवि स्मशानं कालभैरवम् ॥

ब्रह्मकुण्डं वरारोहे यावद्देवः कृतस्मरः॥१॥

तत्र ये प्राणिनो दग्धा मृताः कालविपर्ययात् ॥

ते सर्वे मुक्तिमायांति महापातकिनोऽपि वा ॥२॥

कृतस्मरान्महादेवि यावन्मंकीश्वरः स्थितः ॥

महास्मशानं तद्देवि अपुनर्भवदायकम् ॥३॥

तस्मिन्स्थाने वहेद्यत्र विषुवं प्राणिनां प्रिये ॥

तत्रोषरं स्मृतं क्षेत्रं तन्मे प्रियतरं सदा ॥४॥

कल्पांतेऽपि न मुंचामि अविमुक्तात्प्रियं मम॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कालभैरवस्मशानमाहात्म्यवर्णनं नामैकोत्तरद्विशततमोऽध्यायः ॥ २०१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि रामेश्वरमनुत्तमम् ॥

मंकीशाद्दक्षिणे भागे आग्नेये तु कृतस्मरात् ॥

पूर्वतस्तु सरस्वत्या बलभद्रप्रतिष्ठितम् ॥ १ ॥

यत्र मुक्तोऽभवद्देवि रामो ब्रह्मवधात्किल ॥

पातकात्प्रतिलोमां तामगाहत सरस्वतीम् ॥ २ ॥

॥ देव्युवाच ॥ ॥

कथं स पातकान्मुक्तः कथं पापमभूत्पुरा ॥

कथं तत्स्थापितं लिंगं किंप्रभावं वदस्व मे ॥ ३ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥

यां श्रुत्वा मानवो देवि मुक्तः संसारसागरात् ॥

सर्वान्कामान्स लभते सततं मनसि प्रियान् ॥ ४ ॥

रामः पूर्वं परां प्रीतिं कृत्वा कृष्णस्य लांगली ॥

चिन्तयामास बहुधा किं कृतं सुकृतं भवेत् ॥ ५ ॥

कृष्णेन हि विना नाहं यास्ये दुर्योधनान्तिकम् ॥

पाण्डवान्वा समाश्रित्य कथं दुर्योधनं नृपम् ॥ ६ ॥

जामातरं तथा शिष्यं घातयिष्ये नरेश्वरम् ॥

तस्मान्न पार्थं यास्यामि नापि दुर्योधनं नृपम् ॥ ७ ॥

तीर्थेष्वाप्लावयिष्यामि तावदात्मानमात्मना ॥

कुरूणां पाण्डवानां च यावदंताय कल्पते ॥ ॥ ८ ॥

इत्यादिश्य हृषीकेशं पार्थदुर्योधनावपि ॥

जगाम द्वारकां शौरिः स्वसैन्यैश्च परीवृतः ॥ ९ ॥

गत्वा द्वारावतीं रामो हृष्टतुष्टजनाकुलाम् ॥

स्वैरन्तःपुरगैः सार्धं पपौ पानं हलायुधः ॥ 7.1.202.१० ॥

पीतपानो जगामाथ रैवतोद्यानमृद्धिमत् ॥

हस्ते गृहीत्वा स गदां रेवत्यादिभिरन्वितः ॥ ११ ॥

स्त्रीकदंबकमध्यस्थो ययौ मत्तवदास्खलन् ॥

ददर्श च वनं वीरो रमणीयमनुत्तमम् ॥ १२ ॥

सर्वत्र तरुपुष्पाढ्यं शाखामृगगणाकुलम् ॥

पुष्प पद्मवनोपेतं सपल्वलमहावनम् ॥ १३ ॥

स शृण्वन्प्रीतिजनकान्वन्यान्मदकलाञ्छुभान् ॥

श्रोत्ररम्यान्सुमधुराञ्छब्दान्खगसुखेरितान् ॥ १४ ॥

सर्वतः फलरत्नाढ्यान्सर्वतः कुसुमोज्ज्वलान् ॥

अपश्यत्पादपांश्चैव विहगैरनुमोदितान् ॥ १५ ॥

आम्रानाग्रातकान्भव्यान्नालिकेरान्सतिंदुकान् ॥

आबल्वनांस्था पीतान्दाडिमान्बीजपूरकान्॥

पनसाँल्लकुचान्मोचांस्तापांश्चापि मनोहरान् ॥

पालेवतान्कुसंकुल्लान्नलिनानथ वेतसान् ॥ १७ ॥

भल्लातकानामलकींस्तिन्दुकांश्च महाफलान् ॥

इंगुदान्करमर्दांश्च हरीतकबिभीतकान् ॥ १८ ॥

एतानन्यांश्च स तरून्ददर्श यदुनन्दनः ॥

तथैवाशोकपुन्नागकेतकीबकुलांस्तथा ॥ १९ ॥

चंपकान्सप्तपर्णांश्च कर्णिकारान्सुमालतीः ॥

पारिजातान्कोविदारा न्मन्दारेन्दीवरांस्तथा ॥ 7.1.202.२० ॥

पाटलान्पुष्पितान्रम्भान्देवदारुद्रुमांस्तथा ॥

शालांस्तालांश्च स्तमालांनिचुलान्वञ्जुलांस्तथा ॥ २१ ॥

चकोरैः शतपत्रैश्च भृंगराजैः समावृतान् ॥

कोकिलैः कलविंकैश्च हारीतैर्जीवजीवकैः ॥ २२ ॥

प्रियपुत्रैश्चातकैश्च शुकैरन्यैर्विहंगमैः ॥

श्रोत्ररम्यं सुमधुरं कूज द्भिश्चाप्यधिष्ठितैः ॥ २३ ॥

सरांसि च सपद्मानि मनोज्ञसलिलानि च ॥

कुमुदैः पुण्डरीकैश्च तथा रोचनकोत्पलैः ॥ २४ ॥

कह्लारैः कमलैश्चापि चर्चितानि समंततः ॥

कदंबैश्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥ २५ ॥

कारण्डवैः प्लवैर्हंसैः कूर्मैर्मंडुभिरेव च ॥

एतैरन्यैश्च कीर्णानि तथान्यैर्जलवा सिभिः ॥ २६ ॥

क्रमेण संचरन्रामः प्रेक्षमाणो मनोरमम् ॥

जगामानुगतः स्त्रीभिर्लतागृहमनुत्तमम् ॥ २७ ॥

स ददर्श द्विजांस्तत्र वेदवेदांगपार गान् ॥

कौशिकान्भार्गवांश्चैव भारद्वाजांश्च गौतमान् ॥ २८ ॥

विविधेषु च संभूतान्वंशेषु द्विजसत्तमान् ॥

कथाश्रवणसोत्कण्ठानुपविष्टान्महा त्मनः ॥ २९ ॥

कृष्णाजिनोत्तरीयेषु कूर्चेषु च वृसीषु च ॥

सूते च तेषां मध्यस्थं कथयानं कथाः शुभाः ॥ 7.1.202.३० ॥

पौराणिकाः सुरर्षीणामा द्यानां चरितक्रियाः ॥

दृष्ट्वा रामं द्विजाः सर्वे मधुपानारुणेक्षणम् ॥ ३१ ॥

मत्तोऽयमिति मन्वानाः समुत्तस्थुस्त्वरान्विताः ॥

पूजयन्तो हलधरं तमृते सूतवंशजम् ॥ ३२ ॥

ततः क्रोधसमाविष्टो हली सूतं महाबलः ॥

निजघान विवृत्ताक्षः क्षोभिताशेषदानवः ॥ ३३ ॥

अन्वासिते पदं ब्राह्म्यं तस्मिन्सूते निपातिते ॥

निष्क्रान्तास्ते द्विजाः सर्वे वनात्कृष्णाजिनांबराः ॥ ३४ ॥

अवधूतं तथात्मानं मन्यमानो हलायुधः ॥

चिन्तयामास सुमहन्मया पापमिदं कृतम् ॥ ३५ ॥

ब्रह्मासनगतो ह्येष यः सूतो विनिपातितः॥

तथा ह्येते द्विजाः सर्वे मामवेक्ष्य विनिर्गताः ॥ ३६ ॥

शरीरस्य च मे गन्धो लोहस्येवासुखावहः ॥

आत्मानं चावगच्छामि ब्रह्मघ्नमिति कुत्सितम् ॥ ३७ ॥

धिङ्ममार्थं तथा मद्यं महिमानमकीर्तिदम् ॥

येना विष्टेन सुमहन्मया पापमिदं कृतम्॥३८॥

स्मृत्युक्तं ते करिष्यामि प्रायश्चित्तं यथाविधि॥

उक्तमस्त्येव मनुना प्रायश्चित्तादिकं क्रमात्॥३९॥

जपः प्रच्छन्नपापानां मनस्ताप एव च॥

भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम्॥7.1.202.४॥

क्षेत्रेश्वरस्य विज्ञानाद्विशुद्धिः परमा मता॥

शरीरस्य विशुद्धिस्तु प्रायश्चित्तैः पृथग्विधैः॥ ४१॥

ततोऽद्यतः करिष्यामि व्रतं द्वादशवार्षिकम्॥

स्वकर्मख्यापनं कुर्वन्प्रायश्चित्तमनुत्तमम्॥४२॥

इयं विशुद्धिरज्ञानाद्धत्वा चाकामतो द्विजम् ॥

कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥ ४३ ॥

यः कामतो महापापं नरः कुर्य्यात्कथंचन ॥

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥ ४४ ॥

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ॥

कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् ॥ ४५ ॥

विधिः प्राथमिकस्तस्माद्द्वितीये द्विगुणं चरेत् ॥

तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥ ४६ ॥

औषधं स्नेहमाहारं ददद्गोब्राह्मणादिषु ॥

दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते ॥ ४७ ॥

अकारणं तु यः कश्चिद्द्विजः प्राणान्परित्यजेत् ॥

तस्यैव तत्र दोषः स्यान्न तु योऽस्मै ददाति तत् ॥ ४८ ॥

परिष्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि ॥

निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात् ॥ ४९ ॥

त्रिवार्षिकं व्रतं कुर्या त्प्रतिलोमां सरस्वतीम् ॥

गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम् ॥ 7.1.202.५० ॥

उद्दिश्य कुपितो हत्वा तोषितं वासयेत्पुनः ॥

तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते ॥ ५१ ॥

षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥

बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् ॥ ५२ ॥

यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः ॥

प्रायश्चित्ते व्यवसिते यदि कर्ता विपद्यते ॥ ५३ ॥

एनस्तत्प्राप्नुयादेनमिह लोके परत्र च ॥

तदहं किं करोम्येष क्व गच्छामि दुरात्मवान् ॥ ५४ ॥

धिङ्मां च पापचरितं महादुष्कृतकर्मिणम् ॥ ५५ ॥

॥ ईश्वर उवाच ॥ ॥

इत्येवं विलपन्यावच्छोका कुलितमानसः ॥

तावदाकाशसंभूता वागुवाचाशरीरिणी ॥ ५६ ॥

भोभो राम न संतापस्त्वया कार्यः कथंचन ॥

गच्छ प्राभासिकं क्षेत्रं यत्र देवी सरस्वती ॥ ५७ ॥

पञ्चस्रोताः स्थिता तत्र पञ्चपातकनाशनी ॥

नदीनां प्रवरा सा तु ब्रह्मभूता सरस्वती ॥ ५८ ॥

एकतः सर्वतीर्थानि ब्रह्माण्डे सचराचरे ॥

गंगादीनि नरश्रेष्ठ तेषां पुण्या सरस्वती ॥ ५९ ॥

तावद्गर्जंति पापानि ब्रह्महत्यादिकानि च ॥

यावन्न दृश्यते देवी प्रभासस्था सर स्वती ॥ 7.1.202.६० ॥

तस्मात्तत्रैव गच्छ त्वं यत्र देवी सरस्वती ॥

नान्यैस्तीर्थैः सहस्रैस्त्वं कर्तुं शक्यो विकल्मषः ॥ ६१ ॥

तन्मा कार्षीर्विलंबं त्वं गच्छ तीरं महोदधेः ॥

प्राभासिके महादेवीं प्रतिलोमां विगाहय ॥ ६२ ॥

तत्रैवाराधय विभुं लिंगरूपिणमीश्वरम् ॥

प्रतिष्ठाप्य महापापाच्छारी रात्त्वं विमोक्ष्यसि ॥ ६३ ॥

इति श्रुत्वा वचो रामः परमानंदपूरितः ॥

प्रभासक्षेत्रगमने मतिं चक्रे महामनाः ॥ ६४ ॥

ततः स्वसैन्यसंयुक्तो द्रव्योपस्करसंयुतः ॥

आजगाम महाक्षेत्रं प्रभासमिति विश्रुतम् ॥ ६५ ॥

दृष्ट्वा मनोरम तीर्थं सरस्वत्यब्धिसंगमे ॥

चकार हृदि संकल्पं प्रति लोमावगाहने ॥ ६६ ॥

आहूय ब्राह्मणांस्तत्र प्रभासक्षेत्रवासिनः ॥

सम्यग्यात्राविधानेन यात्रां तत्राकरोद्विभुः ॥ ६७ ॥

यानि प्राभासिके क्षेत्रे तीर्थानि विविधानि तु ॥

रवियोजनसंस्थानि तेषु यात्रां चकार सः ॥ ६८ ॥

प्रत्येकं च ददौ तेषु दानानि विविधानि तु ॥

तथाऽधः स्थाप यामास सरस्वत्यब्धिसंगमे ॥ ६९ ॥

पूर्वभागे महालिंगं कृत्वा यज्ञविधिक्रियाम् ॥

एवं कृते महादेवि विमुक्तः पातकैरभूत् ॥ 7.1.202.७० ॥

निर्मलांगस्ततो देवि दिनानि दश संस्थितः ॥

ततस्तां चैव स स्नात्वा प्रतिलोमां क्रमाद्ययौ ॥

प्लक्षावहरणं यावत्समुद्राच्च हिमाह्वयम् ॥ ॥ ७१ ॥

एवं मुक्तः स पापौघै रामोऽभूत्प्रथितः प्रिये ॥

तस्य लिंगस्य माहात्म्यात्सरस्वत्याः प्रसादतः ॥ ७२ ॥

यस्तत्पूजयते देवि लिंगं पापभयापहम् ॥

रामेश्वरेति कथितं सोऽपि मुच्येत पातकात् ॥ ७३ ॥

अष्टम्यां च विशेषेण ब्रह्मकूर्चविधानतः ॥

यस्तत्र कुरुते देवि सोऽश्वमेधफलं लभेत् ॥ ७४ ॥

स्नात्वा तत्र वरारोहे सरस्वत्यब्धिसंगमे ॥

रामेश्वरेतिनामानं ततः संपूज्य शंकरम् ॥

गोदानं तत्र देयं तु सम्यग्यात्राफलेप्सुभिः ॥ ७५ ॥

इत्येवं कथितं देवि रामेश्वरमहोदयम् ॥

यच्छ्रुत्वा मानवः सम्यक्छ्रद्धावान्प्राप्नुयाद्दिवम् ॥ ७६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रामेश्वरक्षेत्रमाहात्म्यवर्णनंनाम द्व्युत्तरद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०३



॥ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मंकीश्वर महालयम् ॥

रामेशादुत्तरे भागे देवमातुः समीपगम् ॥ १ ॥

अर्कस्थलात्ततो याम्ये पूर्वतश्च कृतस्मरात् ॥

लिंगं महाप्रभावं तु मंकिना स्थापितं पुरा ॥ २ ॥

तं दृष्ट्वा मानवः सम्यगश्वमेधफलं लभेत् ॥ ३ ॥

॥ देव्युवाच ॥ ॥

कोऽसौ मंकिर्महादेव कथं लिंगं प्रतिष्ठितम् ॥

किं प्रभावं च तल्लिंगमेतन्मे वद विस्तरात् ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

मंकिर्नामाभवत्पूर्वं कुब्जकायो द्विजोत्तमः ॥

प्रभासं क्षेत्रमासाद्यतपस्तेपे महत्तमम् ॥ ५ ॥

प्रतिष्ठाप्य महादेवं शिवभक्तिपरायणः ॥

न तुतोष हरस्तस्य वहुवर्षगणार्चितः ॥ ६ ॥

तस्यैवं तप्यमानस्य सिद्धिं प्राप्ता ह्यनेकशः ॥

तत्राराध्य महादेवं स्वर्गलोकमितो गताः ॥ ७ ॥

ततो दुःखं समभवन्मंकेस्तत्र वरानने ॥

कस्मान्मे भगवांस्तुष्टिं न गच्छति महेश्वरः ॥ ८ ॥

ततस्तीव्ररतिं चक्रे कृत्वा तीव्रनिवर्तनम् ॥

एवं वृद्धत्वमापन्नो जपध्यानपरायणः ॥ ९ ॥

तस्य तुष्टो महादेवो वयसोऽन्ते वरं ददौ ॥

परितुष्टोऽस्मि ते मंके ब्रूहि किं करवाणि ते ॥ 7.1.203.१० ॥

॥ मंकिरुवाच ॥ ॥

किं वरेण सुरश्रेष्ठ मम वृद्धस्य सांप्रतम् ॥

किञ्चिन्मे परमं दुःखं स्थितस्यात्र परं प्रभो ॥ ११ ॥

॥ शिव उवाच ॥ ॥

शृणु यत्कारणं तत्र तेषां तव तपस्विनाम् ॥

व्रतचर्याप्तये विप्राः पूजयन्त्यधिकं हि ते ॥१२॥

ते पुष्पाणि समानीय नानावर्णानि सर्वशः ॥

वृक्षाणामतिगंधीनि न तेषां हर्षकारणम् ॥ १३ ॥

त्वं पुनः कुब्जरूपश्च यज्ञपूजापरायणः ॥

न च प्राप्नोषि वृक्षाणां शाखाग्राण्यतियत्नवान् ॥ १४ ॥

एकेनापि प्रदत्तेन पुष्पेण द्विजसत्तम ॥

भक्त्या शिरसि लिंगस्य लभ्यते याज्ञिकं फलम्॥ १५ ॥

लिंगस्य दक्षिणे ब्रह्मा स्वयमेव व्यवस्थितः ॥

वामे च भगवान्विष्णुर्मध्येहं वै प्रतिष्ठितः ॥ १६ ॥

त्रयोऽपि पूजितास्तेन येन लिंगं प्रपूजितम् ॥ १७ ॥

बिल्वपत्रं शमीपत्रं करवीरं च मालतीम् ॥

उन्मत्तकं चम्पकं च सद्यः प्रीतिकरं भवेत् ॥ १८ ॥

चंपकाशोक कह्लारैः करवीरैस्तथा मम ॥

पूजेष्टा द्विजशार्दूल ये चान्ये वहुगंधिनः ॥

एतैर्हि पूजितो नित्यं शीघ्रं तुष्टिं प्रयाम्यहम् ॥ १९ ॥ ॥

॥ ब्राह्मण उवाच ॥ ॥

यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥

इहागत्य नरः स्नात्वा यो जलेनापि सिञ्चति ॥ 7.1.203.२० ॥

लिंगमेतद्धि सर्वासां पूजानां फलमाप्नुयात् ॥

अद्यप्रभृति ये वृक्षा दैविकाः पार्थिवाश्च ये ॥

तेषां सान्निध्यमत्रास्तु प्रसादात्तव शंकर ॥ २१ ॥

॥ भगवानुवाच ॥ ॥

सलिलेनापि यः पूजामस्मिँल्लिंगे विधास्यति ॥

तस्य पूजाफलं सर्वं भविष्यति द्विजोत्तम ॥ ॥ २२ ॥

वृक्षाणामत्रसान्निध्यं सर्वेषां च भविष्यति ॥

अद्यप्रभृति नाम्नैतन्नागस्थानं भविष्यति ॥ २३ ॥

यतस्तु सर्वनागानां सांनिध्य मत्र संस्थितम् ।

त्वमपि द्विजशार्दूल प्रयास्यसि ममान्तिकम् ॥ २४ ॥

एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत ॥

मंकिस्तु देहमुत्सज्य शिवलोकं ततो गतः ॥ २५ ॥

इत्येवं कथितं देवि मंकीशोद्भवमुत्तमम् ॥

श्रुतं हरति पापानि सम्यक्छ्रद्धासमन्वितैः ॥ २६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मंकीश्वरमाहात्म्यवर्णनंनाम त्र्युत्तरद्विशततमोऽध्यायः ॥ ॥ २०३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०४

https://sa.wikisource.org/s/g57
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

भगवन्देवदेवेश संसारार्णवतारक ॥

सरस्वत्याश्च माहात्म्यं विस्तरात्कथयस्व मे ॥ १ ॥

यात्रागतानां देवेशि पुरुषाणां जितात्मनाम्॥

मुखद्वारे तु किं पुण्यं स्नानदाने च शंकर ॥ २ ॥

अवगाहनेन चान्यत्र फलं किंस्वित्प्रजायते ॥

श्राद्धस्य किं विधानं तु के मंत्रास्तत्र के द्विजाः ॥ ३ ॥

किं ग्राह्यं किञ्च भोक्तव्यं ब्राह्मणैः श्राद्धकर्मणि ॥

कानि दानानि देयानि नृभिर्यात्रा फलेप्सुभिः ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देविप्रवक्ष्यामि दानश्राद्धविधिक्रमम् ॥

सरस्वत्याश्च माहात्म्यं कीर्त्यमानं निबोध मे ॥ ५ ॥

पुण्यं सारस्वतं तोयं यत्र तत्रावगाह्यते ॥

सागरेण तु संमिश्रं देवानामपि दुर्लभम् ॥ ६ ॥

सरस्वती सर्वनदीषु पुण्या सरस्वती लोकसुखावगाहा ॥

सरस्वतीं प्राप्य न दुःखिता नराः सदा न शोचंति परत्र चेह वा ॥ ७ ॥

पुण्यं सारस्वतं तीर्थं पुण्यकृल्लभते नरः ॥

दुर्लभं त्रिषु लोकेषु वैशाख्या सोमपर्वणि। ॥ ८ ॥

अमा सोमेन संयुक्ता यदि तत्रैव लभ्यते ॥

तत्र किं क्रियते देवि पर्वकोटिशतैरपि ॥ ९ ॥

चान्द्रायणानि कृच्छ्राणि महासां तपनानि च ॥

प्रायश्चित्तानि दीयन्ते यत्र नास्ति सरस्वती ॥7.1.204.१०॥

यावदस्थि शरीरस्य तिष्ठेत्सारस्वते जले ॥

तावद्वर्षसहस्राणि विष्णुलोके वसे न्नरः ॥

जात्यन्धैस्ते समा ज्ञेया मृतैः पंगुभिरेव च ॥ ११ ॥

समर्था ये न पश्यन्ति प्रभासस्थां सरस्वतीम् ॥

ते देशास्तानि तीर्थानि आश्रमास्ते च पर्वताः ॥ १२ ॥

येषां सरस्वती देवी मध्ये याति सरिद्वरा ॥

त्रैलोक्यपावनीं पुण्यां संश्रिता ये सरस्वतीम् ॥

संसारकर्दमामोदमाजिघ्रन्ति न ते पुनः ॥ १३ ॥

शब्दविद्येव विस्तीर्णा मतैव जगतः प्रिया ॥

सतां मतिरिव स्वच्छा रमणीया सरस्वती ॥ १४ ॥

त्रैलोक्यशोभितां देवीं दिव्य तोयां सुनिर्मलाम्॥

स नीचो यः पुमानेतां न वन्देत सरस्वतीम् ॥ १५ ॥

स्वर्गनिश्रेणिसंभूता प्रभासे तु सरस्वती ॥

नापुण्यवद्भिः संप्राप्तुं पुंभिः शक्या महानदी ॥ १६ ॥

चन्द्रभागा च गंगा च तथा यत्र सरस्वती ॥

देवास्ते न मनुष्यास्ते तिस्रो नद्यः पिबन्ति ये ॥१७॥

सत्यमेव मया देवि जाह्नवी शिरसा धृता ॥

याः काश्चित्सरितो लोके तासां पुण्या सरस्वती ॥ १८॥

दर्शनेन सरस्वत्या राजसूयो न राजते ॥

गंडूषश्चाश्वमेधाद्वै सर्व क्रतुवरं पयः ॥१९॥

भस्मास्थिचर्मतोयानि नखकेशादिकानि च ॥

वातैरपि धुतान्येव तथा सारस्वते जले ॥7.1.204.२॥।

वहन्ति येषां कालेन ते न काल वशा नराः ॥

देवि किं बहुनोक्तेन वर्णितेन पुनःपुनः॥

सरस्वत्याः परं तीर्थं न भूतं न भविष्यति ॥२१॥

तत्रैव दुर्लभं स्नानं यत्र सागरसंगमः ॥

तत्र स्नानेन दानेन कोटियज्ञफलं लभेत् ॥२२॥

यत्र सारस्वतं तोयं सागरोर्मिसमाकुलम् ॥

तत्र स्नास्यंति ये मर्त्या भाग्यवन्तो युगेयुगे ॥२३॥

ते धन्यास्ते नमस्कार्यास्तेषां स्फीततरं यशः ॥

येषां कलेवरं नृणां सिक्तं सारस्वतैर्जलैः ॥ २४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सरस्वतीसंगममाहात्म्यवर्णनंनाम चतुरुत्तरद्विशततमोऽध्यायः ॥ २०४ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०५

https://sa.wikisource.org/s/g4n
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ देव्युवाच ॥ ॥

भगन्देवदेवेश संसारार्णवतारक ॥

ब्रूहि श्राद्धविधिं पुण्यं विस्तराज्जगतांपते ॥ १ ॥

कस्मिन्वासरभागे तु श्राद्धकृच्छ्राद्धमाचरेत् ॥

अस्मिन्सरस्वती तीर्थे प्रभासक्षेत्र उत्तमे ॥ २ ॥

कस्मिंस्तीर्थे कृतं श्राद्धं बहुपुण्यफलं भवेत् ॥

एतत्सर्वं महादेव यथावद्वक्तुमर्हसि ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

प्रातःकाले मुहूर्तांस्त्रीन्संगवस्तावदेव तु ॥

मध्याह्नस्त्रिमुहूर्तः स्यादपराह्नस्ततः परम् ॥ ४ ॥

सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् ॥

राक्षसीनाम सा वेला गर्हिता सर्वकर्मसु ॥ ५ ॥

अह्नो मुहूर्ता विख्याता दशपंच च सर्वदा ॥

तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ ६ ॥

मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ॥

तस्मादनंतफलदस्तदारम्भो भविष्यति ॥ ७ ॥

मध्याह्नः खड्गपात्रं तु तथान्ये कालकम्बलाः ॥।

रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ ८ ॥

पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ॥

अष्ट चैवं मतास्तस्मात्कुतपा इति विश्रुताः। ॥ ९ ॥

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ॥

मुहूर्तपञ्चकं चैव स्वधाभवनमिष्यते ॥ 7.1.205.१० ॥

विष्णोर्देहसमुद्भूताः कुशाः कृष्णास्तिलास्तथा ॥।

श्राद्धस्य रक्षणार्थाय एतत्प्राहुर्दिवौकसः ॥ ११ ॥

तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः ॥
सदर्भहस्तेनैकेन श्राद्धसेवनमिष्यते ॥ १२ ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥
त्रीणि चात्र प्रशंसंति शुद्धिमक्रोधमत्वराम् ॥ १३ ॥
दौहित्रं खड्गमित्युक्तं ललाटे शृङ्गमस्ति यत् ॥
तस्य शृंगस्य यत्पात्रं तद्दौहित्रमिति स्मृतम् ॥ १४ ॥
क्षीरिणी वापि चित्रा गौस्तत्क्षीरायद्धृतं भवेत् ॥
तद्दौहित्रमिति प्रोक्तं दैवे पित्र्ये च कर्मणि ॥ १५ ॥
दर्भाग्रं दैवमित्युक्तं समूलाग्रं तु पैतृकम् ॥
तत्रावलंबिनो ये तु कुशास्ते कुतपाः स्मृताः ॥ १६ ॥
शरीरद्रव्यदाराभूमनोमंत्रद्वि जन्मनाम् ॥
शुद्धिः सप्तसु विज्ञेया श्राद्धकाले विशेषतः॥१७॥
सप्तधा द्रव्यशुद्धिस्तु सोत्तमा मध्यमाऽधमा ॥१८॥
श्रुतं शौर्यं तपः कन्या शिष्याद्यं चान्वयागतम् ॥
धनं सप्तविधं शुक्लमुपायोप्यस्य तादृशः ॥ १९ ॥
कुत्सितं कृषिवाणिज्यं शुक्लं शिल्पानुवृत्तिभिः ॥
कृतोपकारादाप्तं च शंबलं समुदाहृतम् ॥ 7.1.205.२० ॥
उत्कोचतश्च यत्प्राप्तं यत्प्राप्तं चैव साहसात् ॥
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥ २१ ॥
अन्यायोपार्जितैर्द्रव्यै र्यच्छ्राद्धं क्रियते नरैः ॥
तृप्यंति तेन चण्डालाः पुष्कसाद्यासु योनिषु ॥ २२ ॥
अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ॥
तेन तृप्तिमुपायांति ये पिशाचत्वमागताः ॥ २३ ॥
यत्पयः स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ॥
तेन ये तरुतां प्राप्तास्तेषांतृप्तिः प्रजायते ॥ २४ ॥
यास्तु गंधांबुकणिकाः पतंति धरणीतले ॥
ताभिराप्यायनं तेषां ये देवत्वमुपागताः ॥ २५ ॥
उद्धृतेष्वपि पिण्डेषु याश्चान्नकणिका भुवि ॥

ताभिराप्यायनं तेषां तिर्यक्त्वं च कुले गताः ॥२६॥

ये चादग्धाः कुले बालाः स्त्रियो याश्चाप्यसंस्कृताः ॥

विपन्नास्ते तु विकिरसंमार्जनसुलालसाः ॥२७॥

भुक्त्वा वा भ्रमते यच्च जलं यच्चाह्नि सेवते ॥

ब्राह्मणानां तथान्नेन तेन तृप्तिं प्रयांति ते ॥ २८ ॥

पिशाचत्वमनुप्राप्ताः कृमिकीटत्वमेव ये ॥

अथ कालान्प्रवक्ष्यामि कथ्यमा नान्निबोध मे ॥ २९ ॥

श्राद्धं कार्यममावास्यां मासिमासींदुसंक्षये ॥

तथाष्टकासु विप्राप्तौ सूर्येन्दुग्रहणे तथा ॥ 7.1.205.३० ॥

अयने विषुवे युग्मे सामान्ये चार्कसंक्रमे ॥

अमावास्याष्टकायां च कृष्णपक्षे विशेषतः ॥ ३१ ॥

आर्द्रामघारोहिणीषु द्रव्यब्राह्मणसंगमे ॥

गजच्छायाव्यतीपाते विष्टिवैधृति वासरे ॥ ३२ ॥

वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च ॥

पंचदश्यां तु माघस्य नभस्ये च त्रयोदशी ॥ ३३ ॥

युगादयः स्मृता एता दत्त स्याक्षयकारिकाः ॥ ३४ ॥

यस्य मन्वन्तरस्यादौ रथारूढो दिवाकरः ॥

माघमासस्य सप्तम्यां सा तु स्याद्रथसप्तमी ॥ ३५ ॥

वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च ॥

पंचमी चैत्रमासस्य तस्यैवान्त्या तथापरा ॥ ३६ ॥

शुक्लत्रयोदशी माघे कार्त्तिकस्य च सप्तमी ॥

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशीति च ॥

मन्वन्तराः स्मृता ह्येता दत्तस्याक्षयकारिकाः ॥ ३७ ॥

श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ॥

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तिथिः ॥ ३८ ॥

मन्वादयः स्मृताश्चैता दत्तस्याक्षयकारिकाः ॥

नवमी मार्गशीर्षस्य सप्तैताः संस्मरा म्यहम् ॥ ३९ ॥

कल्पनामादयो देवि दत्तस्याक्षयकारिकाः ॥

तथा मन्वन्तरस्यादौ द्वादशैव वरानने ॥ 7.1.205.४० ॥

नित्यं नैमित्तिकं काम्यं वृद्धि श्राद्धं सपिण्डकम् ॥

पार्वणं चातिविज्ञानं गोष्ठं शुद्ध्यर्थमुत्तमम् ॥ ४१ ॥

कर्मांगं नवमं प्रोक्तं दैवकं दशमं स्मृतम् ॥

एकादशं क्षयाहं तु पुष्ट्यर्थे द्वादशं स्मृतम् ॥ ४२ ॥

सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं स्मृतम् ॥

अहन्यहनि यच्छ्राद्धं नित्यं तत्परिकीर्तितम् ॥ ४३ ॥

वैश्वदेवविहीनं तु अशक्तावुदकेन तु ॥

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ॥ ४४ ॥

कामेन विहितं काम्यमभिप्रेतार्थसिद्धये ॥

वृद्धौ यत्क्रियते श्राद्धं वृद्धि श्राद्धं तदुच्यते ॥ ४५ ॥

ये समाना इति द्वाभ्यामेतच्छ्राद्धं सपिण्डनम् ॥

अमावास्यां तु यच्छ्राद्धं तत्पार्वणमुदाहृतम् ॥ ४६ ॥

गोष्ठ्यां यत्क्रि यते श्राद्धं तद्गोष्ठीश्राद्धमुच्यते ॥

क्रियते पापशुद्ध्यर्थं शुद्धिश्राद्धं तदुच्यते ॥ ४७ ॥

निषेककाले सोमे च सीमन्तोन्नयने तथा ॥

तथा पुंसवने चैव श्राद्धं कर्मांगमेव च ॥ ४८ ॥

देवमुद्दिश्य क्रियते यत्तद्दैवकमुच्यते ॥

गच्छेद्देशान्तरं यस्तु श्राद्धं कार्यं तु सर्पिषा ॥ ४९ ॥

पुष्ट्यर्थमेतद्विज्ञेयं क्षयाहं द्वादशं स्मृतम् ॥

मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् ॥ 7.1.205.५० ॥

मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि ॥

नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः ॥ ५१ ॥

मृताहर्यो न जानाति मानवो यदि वा क्वचित् ॥

तेन कार्यममावास्यां श्राद्धं माघेऽथ मार्गके ॥ ५२ ॥

अथ विप्रान्प्रवक्ष्यामि श्राद्धे ये केचन क्षमाः ॥

विशिष्टः श्रोत्रियो योगी वेदविद्यासमन्वितः ॥ ५३ ॥

त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडंगवित् ॥

दौहित्रकस्तु जामाता स्वस्रीयः श्वशुरस्तथा ॥ ५४ ॥

पञ्चाग्निकर्मनिष्ठश्च तपोनिष्ठश्च मातुलः ॥

पितृमातृपरश्चैव शिष्यसंबंधिबांधवः ॥ ५५ ॥

वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ॥

संबंधिनं तथा संतं दौहित्रं दुहितुः पतिम् ॥ ५६ ॥

भागिनेयं विशेषेण तथा बन्धुगणानपि ॥

नातिक्रमेन्नरस्त्वेतान्मूर्खानपि वरानने ॥ ५७ ॥

न ब्राह्मणान्परीक्षेत देवकर्मण्युप स्थिते ॥

पैत्रकर्मणि संप्राप्ते परीक्षेत प्रयत्नतः ॥ ५८ ॥

ये स्तेनाः पतिताः क्लीबा ये च नास्तिकवृत्तयः ॥

तान्हव्यकव्ययोर्विप्राननर्हान्मनुर ब्रवीत् ॥ ५९ ॥

जटिलं चानधीयानं दुर्बलं कितवं तथा ॥

याजयंति च ये शूद्रांस्तांश्च श्राद्धे न पूजयेत् ॥ 7.1.205.६० ॥

चिकित्सकान्देवलकान्मांस विक्रयिणस्तथा ॥

विपणैः पीरजीवंतो वर्ज्याः स्युर्हव्यकव्ययोः ॥ ६१ ॥

प्रेष्यो ग्राम्यश्च राज्ञश्च कुनखी श्यावदंतकः ॥

प्रतिरोद्धा गुरोश्चैव त्यक्ता ग्निर्वार्धुषिस्तथा ॥ ६२ ॥

यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ॥

ब्रह्मध्रुक्परिवित्तिश्च गणाभ्यन्तर एव च ॥ ६३ ॥

कुशीलश्चैव काणश्च वृषलीपतिरेव च ॥

पौनर्भवश्च कानीनः कितवो मद्यपस्तथा ॥ ६४ ॥

पापरोग्यभिशस्तश्च दांभिको रसविक्रयी ॥

धनुःशराणां कर्त्ता च यश्च स्याद्दिधिषूपतिः ॥ ६५ ॥

मित्रध्रुड्दूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥

भ्रमरी मण्डपाली च चित्रांगः पिशुनस्तथा ॥ ६६ ॥

उन्मत्तोऽधश्च बधिरो वेदनिन्दक एव च ॥

हयगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ॥ ६७ ॥

पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥

स्रोतःसंभेदको यश्च वेश्यानां पोषणे रतः ॥ ६८ ॥

गृहसंवेशको दूतः कृष्यारोपक एव च ॥

आखेटी श्येनजीवी च कन्यादूषक एव च ॥ ६९ ॥

हिंस्रो वृषलपुत्रश्च गणानां चैव याजकः ॥

आचारहीनः क्लीबश्च नित्ययाजनकस्तथा ॥ 7.1.205.७० ॥

कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥

औरभ्रिको माहिषिकः परपूर्वा पतिस्तथा ॥

प्रेतनिर्यातकाश्चैव वर्जनीयाः प्रयत्नतः ॥ ७१ ॥

एतान्वै गर्हिताचारानपांक्तेयान्द्विजाधमान् ॥

द्विजानां सति लाभे तू भयत्रैव विवर्जयेत् ॥ ७२ ॥

वीक्षांधो वैकतः काणः कुष्ठी च वृषलीपतिः ॥

पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥ ७३ ॥

यावद्भिः संस्पृशत्यङ्गैर्ब्राह्मणाञ्छूद्रयाजकः ॥

तावतां न भवेत्प्रेत्य दातुर्वा तस्य पैत्रिकम् ॥ ७४ ॥

आदौ माहिषकं दृष्ट्वा मध्ये च वृषलीपतिम् ॥

अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥ ७५ ॥

महिषी प्रोच्यते भार्या सा वैधव्येऽभिचारिणी ॥

तस्यां यः क्षपते दोषां स वै माहिषिकः स्मृतः ॥ ७६ ॥

वृषलीत्युच्यते शूद्री तस्या यश्च पतिर्भवेत् ॥

तदोष्ठलालासंसर्गात्पतितो वृषलीपतिः ॥ ॥ ७७ ॥

स्वं वृषं तु परित्यक्त्वा परेण तु वृषायते ॥

वृषली सा तु विज्ञेया न शूद्री वृषली भवेत् ॥ ७८ ॥

चण्डाली बंधकी वेश्या रजःस्था या च कन्यका ॥

कुटिला च स्वगोत्रा च वृषल्यः सप्त कीर्तिताः ॥ ७९ ॥

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ॥

पतिताः पितरस्तस्याः कन्या सा वृषली भवेत् ॥ 7.1.205.८० ॥

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानपूर्वतः ॥

अश्राद्धेयमपांक्तेयं तं विद्याद्वृषलीपतिम् ॥ ८१ ॥

गौरी कन्या प्रधाना वै मध्यमा कन्यका मता ॥
रोहिणी तत्समा ज्ञेया अधमा च रजस्वला ॥ ८२ ॥
अप्राप्ते रजसि गौरी प्राप्ते रजसि रोहिणी ॥
अव्यंजनकृता कन्या कुचहीना तु नग्निका ॥ ८३ ॥
सप्तवर्षा भवेद्गौरी नववर्षा तु नग्निका ॥
दशवर्षा भवेत्कन्या ह्यत ऊर्ध्वं रजस्वला ॥ ८४ ॥
व्यंजनैर्हन्ति वै पुत्रान्कुलं हन्यात्पयोधरा ॥
गतिमिष्टां तथा लोकान्हंति सा रजसा पितुः ॥ ८५ ॥
य उद्वहेद्रजोयुक्तां स ज्ञेयो वृषलीपतिः ॥ ८६ ॥
यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः ॥
तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ ८७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्राद्धकल्पे श्राद्धानर्हब्राह्मणपरीक्षणकथनंनाम पञ्चोत्तरद्विशततमो ऽध्यायः ॥ २०५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०६



॥ ईश्वर उवाच ॥ ॥

अथ श्राद्धविधिं वक्ष्ये पार्वणस्य विधानतः ॥

यथाक्रमं महादेवि शृणुष्वैकमनाः प्रिये ॥ १ ॥

कृत्वापसव्यं पूर्वेद्युः पितृपूर्वं निमंत्रयेत् ॥

भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदथ ॥ २ ॥

सवर्णान्प्रेषयेदाप्तान्द्विजानामुपमन्त्रणे ॥ ३ ॥

अभोज्यं ब्राह्मणस्यान्नं क्षत्रियाद्यैर्निमन्त्रितैः ॥

तथैव ब्राह्मणस्यान्नं ब्राह्मणेन निमन्त्रितौः ॥ ४ ॥

ब्राह्मणान्नं ददेच्छूद्रः शूद्रान्नं ब्राह्मणो ददेत् ॥

उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥ ५ ॥

उपनिक्षेपधर्मेण शूद्रान्नं यः पचेद्द्विजः ॥

अभोज्यं तद्भवेदन्नं स च विप्रः पतेदधः ॥ ६ ॥

शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम् ॥

शूद्राज्ज्ञानागमश्चैव ज्वलंतमपि पातयेत् ॥ ७ ॥

शूद्रान्नोपहता विप्रा विह्वला रतिलालसाः ॥

कुपिताः किं करिष्यंति निर्विषा इव पन्नगाः ॥८॥

नग्नः स्यान्मलवद्वासा नग्नः कौपीनवस्त्रधृक् ॥

द्विकच्छोऽनुत्तरीयश्च विकच्छोऽवस्त्र एव च ॥९॥

नग्नः काषायवस्त्रः स्यान्नग्नश्चार्धपटः स्मृतः ॥

अच्छिन्नाग्रं तु यद्वस्त्रं मृदा प्रक्षालितं तु यत् ॥ 7.1.206.१० ॥

अहतं धातुरक्तं वा तत्पवित्रमिति स्थितम् ॥

अग्रतो वसते मूर्खो दूरे चास्य गुणान्वितः ॥ ११ ॥

गुणान्विते च दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ॥

दूरस्थं पूजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥ १२ ॥
वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते ॥
क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम्॥१३॥
संध्ययोरुभयोर्जाप्ये भोजने दंतधावने॥
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः॥
गुरूणां संनिधौ दाने योगे चैव विशेषतः ॥
एतेषु मौनमातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥ १५ ॥
यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ॥
व्याहरेद्वैष्णवं मंत्रं स्मरेद्वा विष्णुमव्ययम् ॥ १६ ॥
दाने स्नाने जपे होमे भोजने देवतार्चने ॥
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ॥ १७ ॥
उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ॥
अग्निना भस्मना वापि यवेनाप्युदकेन वा ॥
द्वारसंक्रमणेनापि पंक्तिदोषो न विद्यते ॥ १८ ॥
इष्टश्राद्धे क्रतुर्दक्षो वृद्धौ सत्यवसू स्मृतौ ॥
नैमित्तिके कालकामौ काम्ये चाध्वविरोचनौ ॥ १९ ॥
पुरूरवा आर्द्रवश्च पार्वणे समुदाहृतौ ॥
पुष्टिं प्रजां च न्यग्रोधे बुद्धिं प्रज्ञां धृतिं स्मृतिम् ॥ 7.1.206.२० ॥
रक्षोघ्नं च यशस्यं च काश्मीर्यं पात्रमुच्यते ॥
सौभाग्यमुत्तमं लोके मधूके समुदाहृतम् ॥ २१ ॥
फाल्गुनपात्रे तु कुर्वाणः सर्वकामानवाप्नुयात् ॥
परां द्युतिमथार्के तु प्राकाश्यं च विशेषतः ॥ २२ ॥
बिल्वे लक्ष्मीं तपो मेधां नित्यमायुष्यमेव च ॥
क्षेत्रारामतडागेषु सर्वपात्रेषु चैव हि ॥ २३ ॥
वर्षत्यजस्रं पर्जन्ये वेणुपात्रेषु कुर्वतः ॥
एतेषां लभ्यते पुण्यं सुवर्णै रजतैस्तथा ॥ २४ ॥
पलाशफलन्यग्रोधप्लक्षाश्वत्थविकंकताः ॥
औदुम्बरस्तथा बिल्वं चंदनं यज्ञियाश्च ये ॥ २५ ॥

सरलो देवदारुश्च शालाश्च खदिरास्तथा ॥

समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥ २६ ॥

श्लेष्मातको नक्तमाल्यः कपित्थः शाल्मली तथा ॥

निंबो बिभीतकश्चैव श्राद्धकर्मणि गर्हिताः ॥२७॥

अनिष्टशब्दां संकीर्णा रूक्षां जन्तुमतीमपि ॥

प्रतिगंधां तु तां भूमिं श्राद्धकर्मणि गर्हयेत् ॥२८॥

त्रैशंकवं त्यजेद्देशंसर्वद्वादशयोजनम् ॥

उत्तरेण महानद्या दक्षिणेन च केवलम् ॥ २९ ॥

देशस्त्रैशं कवोनाम वर्जितः श्राद्धकर्मणि ॥

कारस्काराः कलिंगाश्च सिंधोरुत्तरमेव च ॥

प्रणष्टाश्रमधर्माश्च वर्ज्या देशाः प्रयत्नतः ॥7.1.206.३०॥

ब्राह्मणं तु कृतं प्रोक्तं त्रेता तु क्षत्रियं स्मृतम् ॥

वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतम् ॥३१॥

कृते तु पितरः पूज्यास्त्रेतायां च सुरास्तथा ॥

मुनयो द्वापरे नित्यं पाखंडाश्च कलौ युगे ॥३२॥

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ॥

कृष्णपक्षेऽपराह्णे तु रौहिणं न विलंघयेत् ॥३३॥

रत्निमात्रप्रमाणं च पितृतीर्थं तु संस्कृतम् ॥

उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमाः॥।

तथा श्यामाकनीवारा दूर्वाश्च समुदाहृताः ॥

स्व कीर्तिमतां श्रेष्ठो बहुकेशः प्रजापतिः ॥३५॥

तस्य केशा निपतिता भूमौ काशत्वमागताः ॥

तस्मान्मेध्याः सदा काशाः श्राद्धकर्मणि पूजिताः ॥३६॥

पिण्डनिर्वपणं तेषु कर्तव्यं भूतिमिच्छता॥

उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेशयेत्॥ ३७॥

अन्यत्र फलपुष्पेभ्यः पानकेभ्यश्च पण्डितः॥

हस्ते दत्त्वा तु वै स्नेहाल्लवणं व्यञ्जनानि च॥

आयसेन च पात्रेण तद्वै रक्षांसि भुञ्जते॥

द्विजपात्रेषु दत्त्वान्नं तूष्णीं संकल्पमाचरेत्॥३९॥

दर्व्यादिस्थेन नो तेषां संबन्धो दृश्यते यतः ॥

यश्च शूकरवद्भुंक्ते यश्च पाणितले द्विजः ॥

न तदश्नंति पितरो यः सवाचं समश्नुते ॥ 7.1.206.४० ॥

द्विहायनस्य वत्सस्य विशंत्यास्यं यथा सुखम् ॥

तथा कुर्यात्प्रमाणेन पिण्डान्व्यासेन भाषितम् ॥ ४१ ॥

न स्त्री प्रचालयेत्तानि ज्ञानहीनो न चाव्रतः ॥

स्वयं पुत्रोऽथवा यस्य वाञ्छेदभ्युदयं परम् ॥ ४२ ॥

भाजनेषु च तिष्ठत्सु स्वस्तिं कुर्वन्ति ये द्विजाः ॥

तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥ ४३ ॥

अप्स्वेकं प्लावयेत्पिण्डमेकं पत्न्यै निवेदयेत् ॥

एकं वै जुहुयादग्नावेषा तु त्रिविधा गतिः ॥ ४४ ॥

छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे च बह्वृचम् ॥

पुष्टिकर्मण्यथाध्वर्युं शान्तिकर्मण्यथर्वणम् ॥ ४५ ॥

द्वौ देवेऽथर्वणौ विप्रौ प्राङ्मुखौ च निवेशयेत् ॥

पित्र्ये ह्युदङ्मुखान्कुर्याद्बह्वृचाध्वर्युसामगान् ॥ ४६ ॥

जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका ॥

जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्॥ ४७ ॥

मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ॥

श्राद्धकर्मणि शस्तानि सैंधवं त्रपुसं तथा ॥ ४८॥

ब्राह्मणः कम्बलो गावः सूर्योग्निरतिथिश्च वै ॥

तिला दर्भाश्च कालश्च नवैते कुतपाः स्मृताः ॥ ४९ ॥

आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा ॥

नाचरेत्संग्रहे चैव तथैवास्तमुपागते ॥ 7.1.206.५० ॥

संशुद्धा स्याच्चतुर्थेऽह्नि स्नाता नारी रजस्वला ॥

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ॥ ५१ ॥

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥

आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥ ५२ ॥

सर्पविप्रहतानां च दंष्ट्रिशृंगिसरीसृपैः ॥
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ॥ ५३ ॥
चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ ५४ ॥
सर्वैरनुमतं कृत्वा ज्येष्ठेनैव च यत्कृतम् ॥
द्रव्येण च विभक्तेन सर्वैरेव कृतं भवेत् ॥ ॥ ५५ ॥
अमावास्यां पितृश्राद्धे मंथनं यस्तु कारयेत् ॥
तत्तक्रं मदिरातुल्यं घृतं गोमांसवत्स्मृतम् ॥ ५६ ॥
भुंजंति क्रमशः पूर्वे तथा पिंडाशिषो ऽपि च ॥
निमंत्रितो द्विजः श्राद्धे न शयीत स्त्रिया सह ॥ ५७ ॥
श्रादभुक्प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ॥
श्राद्धकर्ता न कुर्वीत दन्तानां धावनं बुधः ॥ ५८ ॥
वर्षेवर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ॥
मलमासे न कर्तव्यं व्यासस्य वचनं यथा ॥ ५९ ॥
गर्भे वार्धुषिके प्रेते भृत्ये मासानुमासिके ॥
आब्दिके च तथा श्राद्धे नाधिमासो विधीयते ॥ 7.1.206.६० ॥
विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ॥
आब्दिके पितृकार्ये तु चान्द्रो मासः प्रशस्यते ॥ ६१ ॥
यस्मिन्राशौ गते सूर्ये विपत्तिः स्याद्द्विजन्मनः ॥
तद्राशावेव कर्तव्यं पितृकार्यं मृतेऽहनि ॥ ६२ ॥
वषट्कारश्च होमश्च पर्व चाग्रायणं तथा ॥
मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत् ॥ ६३ ॥
अग्न्याध्येयं प्रतिष्ठां च यज्ञदानव्रतानि च ॥
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ ६४ ॥
मांगल्यमभिषेकं च मलमासे विवर्जयेत् ॥
नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे ॥
तीर्थे स्नानं गज च्छायां प्रेतश्राद्धं तथैव च ॥ ६५ ॥
रसा यत्र प्रशस्यन्ते भोक्तारो बंधुगोत्रिणः ॥

राजवार्तादि संक्रंदो रक्षःश्राद्धस्य लक्षणम्॥ ६६ ॥

श्राद्धं कृत्वा परश्राद्धे यस्तु भुंक्ते च विह्वलः ॥

पतंति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥६७॥

तैलमुद्वर्तनं स्नानं दन्तधावनमेव च ॥

क्लृप्तरोमनखेभ्यश्च दद्याद्दत्वापरेऽहनि ॥ ६८ ॥

निमन्त्रिता यथान्यायं हव्ये कव्ये द्विजोत्तमाः ॥

कथंचिदप्यतिक्रामेत्पापः शूकरतां व्रजेत् ॥ ६९ ॥

दैवे च पितृ श्राद्धे चाप्याशौचं जायते यदा ॥

आशौचान्तेऽथवा तत्र तेभ्यः श्राद्धं प्रदीयते ॥ 7.1.206.७० ॥

अथ श्राद्धावसाने तु आशिषस्तत्र दापयेत् ॥

दीर्घा नागास्तथा नद्यो विष्णोस्त्रीणि पदानि च ॥

एवमेषां प्रमाणेन दीर्घमायुरवाप्नुयाम् ॥ ७१ ॥

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ॥

ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः ॥ ७२॥

लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ॥

लक्ष्मीर्वसतु वासे मे सौमनस्यं ददातु मे ॥ ७३ ॥

अक्षतं चाऽस्तु मे पुण्यं शांतिः पुष्टिर्धृतिश्च मे ॥

यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥ ७४ ॥

दक्षिणायां तु सर्वत्र बहुदेयं तथास्तु नः ॥

एवमस्त्विवति तैर्वाच्यं मूर्ध्ना ग्राह्यं च तेन तत् ॥७५ ॥

पिंडमग्नौ सदा देयाद्भोगार्थी सततं नरः ॥

प्रजार्थं पत्न्यै वै दद्यान्मध्यमं मंत्रपूर्वकम् ॥ ७६ ॥

उत्तमां द्युतिमविच्छन्गोषु नित्यं प्रदापयेत् ॥

आज्ञामिच्छेद्यशः कीर्तिमप्सु नित्यं प्रवेशयेत् ॥ ७७ ॥

प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रदापयेत् ॥

कुमारलोकमन्विच्छन्कुक्कुटेभ्यः प्रदापयेत् ॥ ७८ ॥

आकाशे प्रक्षिपेद्वापि स्थितो वा दक्षिणामुखः ॥

पितॄणां स्थानमाकाशं दक्षिणा चैव दिक्तथा ॥ ७९ ॥

नक्तं तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात् ॥

सर्वस्वेनापि कर्तव्यं क्षिप्रं वै राहुदर्शनात् ॥ 7.1.206.८० ॥

उपरागे न कुर्याद्यः पंके गौरिव सीदति ॥

कुर्वाणस्तु तरेत्पापं सा च नौरिव सागरे ॥ ८१ ॥

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ॥

महायवा व्रीहियवास्तथैव च मसूरिकाः ॥ ८२ ॥

कृष्णाः श्वेताश्च वा ग्राह्याः श्राद्धकर्मणि सर्वदा ॥

बिल्वामलकमृद्वीकं पनसाम्रातदाडिमम् ॥ ८३ ॥

भव्यं पारापतं चैव खर्जूरं करमर्द्दकम् ॥

सकोरका बदर्यश्च तालकंदं तथा बिसम् ॥ ८४ ॥

तमालासनकंदं च मावेल्लं शतकंदली ॥

कालेयं कालशाकं च मुद्गान्नं च सुवर्चलम्॥८५॥

मांसं क्षीरं दधि शाकं व्योषं वेत्रांकुरस्तथा ॥

कट्फलं वज्रकं द्राक्षां लकुचं मोचमेव च ॥ ॥ ८६ ॥

प्रियामलकदुर्ग्रीवं तिंडुकं मधुसाह्वयम् ॥

वैकंकतं नालिकेरं शृङ्गाटकपरूषकम् ॥ ८७ ॥

पिप्पलीमरिचं चैव पटोली बृहतीफलम्॥

आरामस्य तु सीमाऽन्तः संभवं सर्वमेव तु ॥८८॥

एवमादीनि चान्यानि पुष्पाणि श्राद्धकर्मणि॥

मसूराः शतपुष्प्याश्च कुसुमं श्रीनिकेतनम् ॥८९॥

वर्या स्वातियवा नित्यं तथा वृषयवासकौ ॥

वंशा करीरा सुरसा मार्जिता भूतृणानि च ॥ 7.1.206.९० ॥

वर्जनीयानि वक्ष्यामि श्राद्धकर्मणि नित्यशः ॥

लशुनं गृंजनं चैव पलांडुं पिण्डमूलकम् ॥

मोगरं चात्र वैदेहं दीर्घमूलकमेव च ॥ ९१ ॥

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ॥

आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥ ९२ ॥

चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ॥

वृथा श्राद्धमवाप्नोति दाता च नरकं व्रजेत् ॥ ९३ ॥

लेखाप्रभृत्यथादित्ये मुहूर्तास्त्रय एव च ॥

प्रातस्तस्योत्तरं कालं भगमाहुर्विपश्चितः ॥ ९४ ॥

संगवस्त्रिमुहूर्तोऽयं मध्याह्नस्तु समन्ततः ॥

ततश्च त्रिमुहूर्ताश्च अपराह्णो विधीयते ॥ ९५ ॥

पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृतः ॥ ९६ ॥

॥ तथा च श्रुतिः ॥ ॥

यदैवादित्योऽथ वसन्तो यदा संगविकोऽथ ग्रीष्मो यदा वा माध्यंदिनोऽथ वर्षा यदपराह्णोऽथ शरत् ॥

घदेवास्तमेत्यथ हेमन्त इति ॥ ९७ ॥

प्रारभ्य कुतपे श्राद्धे कुर्यादारोहणं बुधः ॥

विधिज्ञो विधिमास्थाय रोहिणं न तु लंघयेत् ॥ ९८ ॥

अष्टमो यो मुहूर्तश्च कुतपः स निगद्यते ॥

नवमो रौहिणः प्रोक्त इति श्राद्धविदो विदुः ॥ ९९ ॥

एकोद्दिष्टं तु मध्याह्नं प्रातर्वै जातकर्मणि ॥

पित्र्यार्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ॥ 7.1.206.१०० ॥

वैश्वदेवे न पित्र्यार्थं न पित्र्यं वैश्वदेविके ॥

कृत्वा श्राद्धं महादेवि ब्राह्मणांश्च विसर्ज्य च ॥ १०१ ॥

वैश्वदेवादिकं कर्म ततः कुर्याद्वरानने ॥

बहुहव्येन्धने चाग्नौ सुसमिद्धे विशेषतः ॥ १०२ ॥

विधूमे लेलिहाने च कुर्यात्कर्म प्रसिद्धये ॥

अप्रबुद्धे सधूमे च जुहुयाद्यो हुताशने ॥ ॥ १०३ ॥

यजमानो भवेदन्धः कुपुत्र इति निश्चितम् ॥

दुर्गन्धश्चैव कृष्णश्च नीलश्चैव विशेषतः ॥ १०४ ॥

भूमिं विगाहते यत्र तत्र विद्यात्पराभवम् ॥

अर्चिष्मान्पिंगलशिखः सर्पिःकांचनसप्रभः ॥ १०५ ॥

स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात्कार्यसिद्धये ॥

अंजनाभ्यंजनं गंधान्मन्त्रप्रणयनं तथा ॥ १०६ ॥

काशैः पुनर्भवेत्कार्यं हयमेधफलं लभेत् ॥

अष्टजातिकपुष्पं च अञ्जनं नित्यमेव हि ॥ १०७ ॥

कृष्णेभ्यश्च तिलेभ्यश्च तैलं यत्नात्सुरक्षितम् ॥

चन्दनागरुणी चोभे तमालोशीरपद्मकम् ॥ १०८ ॥

धूपश्च गौग्गुलः श्रेष्ठस्तौरुष्को धूप एव च ॥

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ॥ १०९ ॥

गन्धवन्त्युपपन्नानि यानि चान्यानि कृत्स्नशः ॥

निशिगंधा जपा भिण्डिरूपकः सकुरंटकः ॥ 7.1.206.११० ॥

पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥

सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते ॥ १११ ॥

रजतस्य तथा किञ्चिद्दर्शनं पुण्यदायकम् ॥

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ॥ ११२ ॥

रक्षोघ्नं चैव वर्चस्यं पशून्पुत्रांश्च तारयेत् ॥

अथ मन्त्रं प्रवक्ष्यामि अमृतं ब्रह्मनिर्मितम् ॥ ११३ ॥

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥

नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥ ११४ ॥

आद्यावसाने श्राद्धस्य त्रिरावर्तमिमं जपन् ॥

अश्वमेधफलं ह्येतद्विप्रैः संज्ञाय पूजितम् ॥११५ ॥

पिण्डनिर्वपणे वापि जपेदेनं समाहितः ॥

पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥ ११६ ॥

सप्तार्चिषं प्रवक्ष्यामि सर्वकामशुभप्रदम् ॥ ११७ ॥

अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् ॥

नमस्यामि सदा तेषां ध्यायिनां दिव्यचक्षुषाम् ॥ ११८ ॥

इन्द्रादीनां च नेतारो दक्षमारीचयस्तया ॥

तान्नमस्यामि सर्वान्वै पितॄंश्चैवौषधीस्तथा ॥ ११९ ॥

नक्षत्राणां ग्रहाणां च वाय्वग्न्योश्च पितॄनपि ॥

द्यावापृथिव्योश्च सदा नमस्यामि कृताञ्जलिः ॥ 7.1.206.१२० ॥

नमः पितृभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ॥

स्वयंभुवे नमस्यामो ब्रह्मणे योगचक्षुषे ॥१२१॥

एतत्त्वदुक्तं सप्तर्षिब्रह्मर्षिगणसेवितम् ॥

पवित्रं परमं ह्येतच्छ्रीमद्रक्षोविनाशनम् ॥ १२२॥

अनेन विधिना युक्तस्त्रीन्वारांस्तु जपेन्नरः ॥

भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः ॥१२३॥

सप्तार्चिषं जपेद्यस्तु नित्यमेव समाहितः ॥

स तु सप्तसमुद्रायाः पृथिव्या एकराड्भवेत् ॥१२४॥

श्राद्धकल्पं पठेद्यो वै स भवेत्पंक्तिपावनः ॥

अष्टादशानां विद्यानां स च वै पारगः स्मृतः ॥ १२५ ॥

पूजां पुष्टिं स्मृतिं मेधां राज्यमारोग्यमेव च ॥

प्रीता नित्यं प्रयच्छन्ति मानुषाणां पितामहाः ॥ १२६ ॥

एवं प्रभासक्षेत्रे स सरस्वत्यब्धिसंगमे ॥

कुर्याच्छ्राद्धं विधानेन प्रभासे चैव भामिनि ॥ १२७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये सरस्वत्यब्धिसंगमे श्राद्धकल्पे श्राद्धविधिवर्णनंनाम षडुत्तरद्विशततमोऽध्यायः ॥ २०६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०७

https://sa.wikisource.org/s/gdx
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

॥ ईश्वर उवाच ॥ ॥

अतः परं प्रवक्ष्यामि श्राद्धदानान्यनुक्रमात् ॥

तारणाय च भूतानां सरस्वत्यब्धिसंगमे ॥ १ ॥

लोके श्रेष्ठतमं सर्वं ह्यात्मनश्चापि यत्प्रियम् ॥

सर्वं पितॄणां दातव्यं तदेवाक्षय्यमिच्छताम् ॥ २ ॥

जांबूनदमयं दिव्यं विमानं सूर्यसन्निभम् ॥

दिव्याप्सरोभिः संकीर्णमन्नदो लभतेऽक्षयम् ॥ ३ ॥

आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि ॥

आयुः प्रकाशमैश्वर्यं रूपं तु लभते च सः ॥ ४ ॥

कमण्डलुं च यो दद्याद्ब्राह्मणे वेदपारगे ॥

मधुक्षीरस्रवा धेनुर्दातारमनुगच्छति ॥ ५ ॥

यः श्राद्धे अभयं दद्यात्प्राणिनां जीवितैषिणाम् ॥

अश्वदानसहस्रेण रथदानशतेन च ॥

दन्तिनां च सहस्रेण अभयं च विशिष्यते ॥ ६ ॥

यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ॥

क्षिप्रं प्राप्नोति तत्सर्वं पितृभक्तस्तु मानवः ॥ ७ ॥

पितरः सर्वलोकेषु तिथिकालेषु देवताः ॥

सर्वे पुरुषमायांति निपानमिव धेनवः ॥ ८ ॥

मा स्म ते प्रतिगच्छेयुः पर्वकाले ह्यपूजिताः ॥

मोघास्तेषां भवन्त्वाशाः परत्रेह च मा क्वचित् ॥ ९ ॥

सरस्वत्यास्तु सान्निध्यं यस्त्वेकं भोजयेद्द्विजम् ॥

कोटिभोज्यफलं तस्य जायते नात्र संशयः ॥ 7.1.207.१० ॥

अमावास्यां नरो यस्तु परान्नमुपभुञ्जते ॥

तस्य मासकृतं पुण्यमन्नदातुः प्रजायते ॥ ११ ॥

षण्मासमयने भुंक्ते त्रीन्मासान्विषुवे स्मृतम् ॥

वर्षैर्द्वादशभिश्चैव यत्पुण्यं समुपार्जितम् ॥

तत्सर्वं विलयं याति भुक्त्वा सूर्येन्दुसंप्लवे ॥ १२ ॥

साग्रं मासं रवेः क्रान्तावाद्यश्राद्धे त्रिवत्सरम् ॥

मासिकेऽप्यथ वर्षस्य षण्मासे त्वर्धवत्सरम् ॥ १३ ॥

तथा संचयनश्राद्धे जातिजन्मकृतं नृणाम् ॥

मृत शय्याप्रतिग्राही वेदस्यैव च विक्रयी ॥

ब्रह्मस्वहारी च नरस्तस्य शुद्धिर्न विद्यते। ॥ १४ ॥

तडागानां सहस्रेण ह्यश्वमेधशतेन च ॥

गवां कोटि प्रदानेन भूमिहर्ता न शुद्ध्यति ॥ १५ ॥

सुवर्णमाषं गामेकां भूमेरप्यर्धमंगुलम् ॥

हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥ १६ ॥

ब्रह्महत्या सुरापानं दरिद्रस्य तु यद्धनम् ॥

गुरोः पत्नी हिरण्यं च स्वर्गस्थमपि पातयेत्। ॥ १७ ॥

सहस्रसंमिता धेनुरनड्वान्दश धेनवः ॥

दशानडुत्समं यानं दशयानसमो हयः ॥ १८ ॥

दशहयसमा कन्या भूमिदानं ततोऽधिकम् ॥

तस्मात्सर्वप्रयत्नेन विक्रयं नैव कारयेत् ॥ १९ ॥

विशेषतो महाक्षेत्रे सर्वपातकनाशने ॥

चितिकाष्ठं च वै स्पृष्ट्वा यज्ञयूपांस्तथैव च ॥

वेदविक्रयकर्तारं स्पृष्ट्वा स्नानं विधीयते ॥ 7.1.207.२० ॥

आदेशं पठते यस्तु आदेशं च ददाति यः ॥

द्वावेतौ पापकर्माणौ पातालतलवासिनौ ॥ २१ ॥

आदेशं पठते यस्तु राजद्वारे तु मानवः ॥

सोऽपि देवि भवेद्वृक्ष ऊषरे कंटकावृतः ॥

स्थितो वै नृपतिद्वारि यः कुर्याद्वेदविक्रयम् ॥२२॥

ब्रह्महत्यासमं पापं न भूतं न भविष्यति ॥

वरं कुर्वन्ध्रुवं देवि न कुर्याद्वेदविक्रयम् ॥२३॥

हत्वा गाश्च वरं मांसं भक्षयीत द्विजाधमः ॥

वरं जीवेत्समं म्लेच्छैर्न कुर्याद्वेदविक्रयम् ॥ २४ ॥

प्रत्यक्षोक्तिः प्रत्ययश्च प्रश्नपूर्वः प्रतिग्रहः ॥

याजनाऽध्यापने वादः षड्विधो वेदविक्रयः ॥ २५ ॥

वेदाक्षराणि यावन्ति नियुंक्ते स्वार्थकारणात् ॥

तावतीर्भ्रूणहत्या वै प्राप्नुयाद्वेदविक्रयी ॥ २६ ॥

वेदानुयोगाद्यो दद्याद्ब्राह्मणाय प्रतिग्रहम् ॥

स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥ २७ ॥

वैश्वदेवेन हीना ये हीनाश्चातिथ्यतोऽपि ये ॥

कर्मणा सर्ववृषला वेदयुक्ता ह्यपि द्विजाः ॥ २८ ॥

येषामध्ययनं नास्ति ये च केचिदनग्नयः ॥

कुलं वाऽश्रोत्रियं येषां ते सर्वे शूद्रजातयः ॥ २९ ॥

मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् ॥

मातुश्चैव वरारोहे स द्विजः शूद्रसंनिभः ॥ 7.1.207.३० ॥

मृतके यस्तु भुञ्जीत गृहीतशशिभास्करे ॥

गजच्छायासु यः कश्चित्तं च शूद्रवदाचरेत् ॥ ३१ ॥

ब्रह्मचारिणि यज्ञे च यतौ शिल्पिनि दीक्षिते ॥

यज्ञे विवाहे सत्रे च सूतकं न कदाचन ॥ ३२ ॥

गोरक्षकान्वणिजकांस्तथा कारुकुशीलवान् ॥

स्पृश्यान्वार्धुषिकांश्चैव विप्रान्शूद्रवदाचरेत् ॥ ३३ ॥

ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ॥

दाम्भिको दुष्कृतप्रायः स च शूद्रसमः स्मृतः ॥ ३४ ॥

अस्नाताशी मलं भुंक्ते अजापी पूयशोणितम् ॥

अहुत्वा तु कृमीन्भुंक्ते अदत्त्वा विषभोजनम् ॥ ३५ ॥

परान्नेन तु भुक्तेन मिथुनं योऽधिगच्छति ॥

यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥ ३६ ॥

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ॥

आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः ॥ ३७ ॥

कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च ॥

गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥ ३८ ॥

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ॥

विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥ ३९ ॥

गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ॥

नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ 7.1.207.४० ॥

सद्यः पतति मांसेन लाक्षया लवणेन च ॥

त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ ४१ ॥

रसा रसैर्नियंतव्या न त्वेव लवणं रसैः ॥

कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः ॥ ४२ ॥

भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ॥

कृमिभूतः स विष्ठायां पितृभिः सह मज्जति ॥ ४३ ॥

अपूपश्च हिरण्यं च गामश्वं पृथिवीं तिलान् ॥

अविद्वान्प्रतिगृह्णाति भस्मीभवति काष्ठवत् ॥४४॥

हिरण्यमायु रत्नं च भूर्गौश्चाकर्षतस्तनुम् ॥

अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाः प्रजाः ॥ ४५ ॥ तिल

अग्निहोत्री तपस्वी च क्षणवान्क्रियते यदि ॥

अग्निहोत्रं तपश्चैव सर्वं तद्धनिनो धनम् ॥ ४६ ॥

सोमविक्रयणे विष्ठा भेषजे पूयशोणितम् ॥

नष्टं देवलके दानं ह्यप्रतिष्ठं च वार्धुके ॥ ४७ ॥

देवार्चनपरो विप्रो वित्तार्थी भुवनत्रये ॥

असौ देवलकोनाम हव्यकव्येषु गर्हितः ॥ ४८ ॥

भ्रातुर्मृतस्यभार्यायां यो गच्छेत्कामपूर्वकम् ॥

धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥ ४९ ॥

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ 7.1.207.५० ॥

यो नरोऽन्यस्य वासांसि कूपोद्यानगृहाणि च ॥

अदत्तान्युपयुंजानः स तत्पापतुरीयभाक् ॥ ५१ ॥
आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते ॥
दातुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥ ५२ ॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥ ५३ ॥
भक्ष्यं नित्यमृतं ज्ञेयममृतं स्यादयाचितम् ॥
मृतं तु वृद्ध्याजीवित्वं प्रमृतं कर्षणं स्मृतम् ॥ ५४ ॥
सत्यानृतं च वाणिज्यं तेन चैवोपजीव्यते ॥
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत ॥ ५५ ॥
विप्रयोनिं समासाद्य संकरं परिवर्जयेत् ॥
मानुष्यं दुर्लभं लोके ब्राह्मण्यमधिकं ततः ॥ ५६ ॥
एकशय्यासनं पक्तिर्भाण्डपक्वान्नमिश्रणम् ॥
याजनाध्यापनं योनिस्तथा च सह भोजनम् ॥
नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह ॥ ५७ ॥
अजीवन्कर्मणा स्वेन विप्रः क्षात्त्रं समाश्रयेत् ॥
वैश्यकर्माऽथवा कुर्याद्वार्षलं परिवर्जयेत् ॥ ५८ ॥
कुसीदं कृषिवाणिज्यं प्रकुर्वीत स्वयं कृतम् ॥
आपत्काले स्वयं कुर्वन्स्नानेन स्पृश्यते द्विजः ॥ ॥५९॥
लब्धलाभः पितृन्देवान्ब्रांह्मणांश्चैव तर्पयेत् ॥
ते तृप्तास्तस्य तत्पापं शमयंति न संशयः ॥7.1.207.६०॥
जलगोशकटारामयाञ्चावृद्धिवणिक्क्रियाः ॥
अनूपं पर्वतो राजा दुर्भिक्षे जीविका स्मृताः ॥ ६१ ॥
असतोऽपि समादाय साधुभ्यो यः प्रयच्छति ॥
धनं स्वामिनमात्मानं संतारयति दुस्तरात् ॥ ६२ ॥
शूद्रे समगुणं दानं वैश्ये तद्द्विगुणं स्मृतम् ॥
श्रोत्रिये तच्च साहस्रमनन्तं चाग्निहोत्रिके ॥ ६३ ॥
ब्राह्मणातिक्रमो नास्ति नाचरेद्यो व्यवस्थितिम् ॥
ज्वलंतमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ६४ ॥

विद्यातपोभ्यां हीनेन नैव ग्राह्यः प्रतिग्रहः ॥

गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ ६५ ॥

तस्माच्छ्रोत्रिय एवार्हो गुणवाञ्छीलवाञ्छुचिः ॥

अव्यंगस्तत्र निर्दोषः पात्राणां परमं स्मृतम् ॥ ६६ ॥

कपालस्थं यथा तोयं श्वदृतौ च यथा पयः ॥

दूषितं स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ ६७ ॥

दत्तं पात्रमतिक्रम्य यदपात्रे प्रतिग्रहः ॥

तद्दत्तं गामतिक्रम्य गर्दभस्य गवाह्निकम् ॥ ६८ ॥

वृत्तं तस्मात्तु संरक्षेद्वित्तमेति गतं पुनः ॥

अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ६९ ॥

प्रथमं तु गुरौ दानं दत्त्वा श्रेष्ठमनुक्रमात् ॥

ततोऽन्येषां तु विप्राणां दद्यात्पात्रानुरूपतः ॥ 7.1.207.७० ॥

गुरौ च दत्तं यद्दानं दत्तं पात्रेषु मानवैः ॥

निष्फलं तद्भवेत्प्रेत्य यात्युताधोगतिं प्रति ॥ ७१ ॥

अवमानं गुरोः कृत्वा कोपयित्वा तु दुर्मतिः ॥

गुर्वमानहतो मूढो न शांतिमधि गच्छति ॥ ७२ ॥

गुरोरभावे तत्पुत्रं तद्भार्यां तत्सुतं विना ॥

पुत्रं प्रपौत्रं दौहित्रं ह्यन्यं वा तत्कुलोद्भवम् ॥ ७३ ॥

पंचयोजनमध्ये तु श्रूयते स्वगुरुर्यदा ॥

तदा नातिक्रमेद्दानं दद्यात्पात्रेषु मानवः ॥ ७४ ॥

यतिश्चेत्प्रार्थयेल्लोभाद्दीयमानं प्रतिग्रहम् ॥

न तस्य देयं विद्वद्भिर्न लोभः शस्यते यतेः ॥ ७५ ॥

धनं प्राप्य यतिर्लोके मौनं ज्ञानं च नाभ्यसेत् ॥

उपभोगं तु दानेन जीवितं ब्रह्मचर्यया ॥ ७६ ॥

कुले जन्म च दीक्षाभिर्ये गतास्ते नरोत्तमाः॥

सौभाग्यमाप्नुयाल्लोके नूनं रसविवर्जनात्॥७७॥

आयुष्मत्यः प्रजाः सर्वा भवन्त्यामिषवर्जनात्॥७८॥

चीरवल्कलधृक्त्यक्त्वा वस्त्राण्याभरणानि च॥

नागाधिपत्यं प्राप्नोति उपवासेन मानवः॥७९॥

क्रीडते सत्यवाक्येन स्वर्गे वै देवतैः सह॥

अहिंसया तथाऽऽरोग्यं दानात्कीर्तिमनुक्रमात्॥7.1.207.८०॥

द्विजशुश्रूषया राज्यं द्विजत्वं चातिपुष्कलम्॥

दिव्यरूपमवाप्नोति देवशुश्रूषया नरः॥८१॥

अन्नदानाद्भवेत्तृप्तिः सर्वकामैरनुत्तमैः ॥

दीपस्य तु प्रदानेन चक्षुष्माञ्जायते नरः ॥ ८२ ॥

तुष्टिर्भवेत्सर्वकालं प्रदानाद्गन्धमाल्ययोः ॥

लवणस्य तु दातारस्तिलानां सर्पिषस्तथा ॥

तेजस्विनोऽपि जायन्ते भोगिनश्चिरजीविनः ॥ ८३ ॥

सुचित्रवस्त्राभरणोपधानं दद्यान्नरो यः शयनं द्विजाय ॥

रूपान्वितां पक्ष्मवतीं मनोज्ञां भार्यामरालोपचितां लभेत्सः ॥ ८४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्राद्धकल्पे पात्रापात्रविचारवर्णनंनाम सप्तोत्तरद्विशततमोऽध्यायः ॥ २०७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०८



॥ देव्युवाच ॥ ॥

इदं देयमिदं देयमिति प्रोक्तं तु यच्छ्रुतौ ॥

दानादानविशेषांस्तु श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

कानि दानानि शस्तानि कस्मै देयानि कान्यपि ॥

कालं देशं च पात्रं च सर्वमाचक्ष्व मे विभो ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

वृथा जन्मानि चत्वारि वृथा दानानि षोडश ॥

सुजन्मानि च चत्वारि महादानानि षोडश ॥ ३ ॥

॥ देव्युवाच॥ ॥

एतद्विस्तरतो ब्रूहि देवदेवजगत्पते ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

वृथा जन्मानि चत्वारि यानि तानि निबोध मे ॥

कुपुत्राणां वृथा जन्म ये च धर्मबहिष्कृताः ॥

प्रवासं ये च गच्छंति परदाररताः सदा ॥ ५ ॥

परपाकं च येऽश्नंति पर दाररताश्च ये ॥

अप्रत्याख्यं वृथा दानं सदोषं च तथा प्रिये ॥ ६ ॥

आरूढपतिते चैव अन्यायोपार्जितं धनम् ॥

वृथा ब्रह्महने दानं पतिते तस्करे तथा ॥ ७ ॥

गुरोश्चाप्रीतिजनने कृतघ्ने ग्रामयाजके ॥

ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ ॥ ८ ॥

वेदविक्रयिणे चैव यस्य चोपपतिर्गृहे ॥

स्त्रीनिर्जिते च यद्दत्तं वृथादानानि षोडश ॥ ९ ॥

सुजन्म च सुपुत्राणां ये च धर्मे रता नराः ॥

प्रवासं न च गच्छंति परदारपराङ्मुखाः ॥ 7.1.208.१० ॥

गावः सुवर्णं रजतं रत्नानि च सरस्वती ॥
तिलाः कन्या गजोश्वश्च शय्या वस्त्रं तथा मही ॥ ११ ॥
धान्यं पयश्च च्छत्रं च गृहं चोपस्करान्वितम्॥
एतान्येव महादेवि महादानानि षोडश ॥ १२ ॥
गर्वावृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च ॥
भुंक्ते दानफलं तद्धि गर्भस्थो नात्र संशय ॥ १३ ॥
बालत्वेऽपि च सोऽश्नाति यद्दत्तं दंभकारणात् ॥
मन्युना मंतुना चैव तथैवार्थस्य कारणात् ॥ १४ ॥
देशे काले च पात्रे च शुद्धेन मनसा तथा ॥
न्यायार्जितं च यो दद्याद्यौवने स तदश्नुते ॥ १५ ॥
अन्यायेनार्जितं द्रव्यमपात्रे प्रतिपादितम् ॥
क्लिष्टं च विधिहीनं च वृद्धभावे तदश्नुते॥१६॥
तस्माद्देशे च काले च सुपात्रे विधिना नरः॥
शुभार्जितं प्रयुञ्जीत श्रद्धया शाठ्यवर्जितः॥ १७॥
स्वाध्यायाढ्यं योगवंतं प्रशांतं पुराणज्ञं पापभीरुं वदान्यम्॥
स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्रान्तं तादृशं पात्रमाहुः॥१८॥
सत्यं दमस्तपः शौचं सन्तोषोऽनैर्ष्यमार्जवम् ॥
ज्ञानं शमो दया दानमेतत्पात्रस्य लक्षणम् ॥ १९ ॥
एवंविधे तु यत्पात्रे गामेकां तु प्रयच्छति ॥
समानवत्सां कपिलां धेनुं सर्वगुणान्विताम् ॥ 7.1.208.२० ॥
रौप्यपादां स्वर्णशृङ्गीं रुद्रलोके महीयते ॥
एकां गां दशगुर्दद्याद्गोशती च तथा दश ॥ २१ ॥
शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः ॥
सुशीला सोमसंपन्ना तरुणी च पयस्विनी ॥
सवत्सा न्यायलब्धा च प्रदेया ब्राह्मणाय गौः ॥ २२ ॥
वंध्या सरोगा हीनांगी दुष्टा वृद्धा मृतप्रजा ॥
अन्यायलब्धा दूरस्था नेदृशी गां प्रदापयेत् ॥ २३ ॥
यो हीदृशीं गां ददाति देवोद्देशेन मानवः ॥

प्रत्युताधोगतिं याति क्लिश्यते च महेश्वरि ॥ २४ ॥

रुष्टा क्लिष्टा दुर्बला व्याधिता च न दातव्या या च मूल्यैरदत्तैः ॥

लेशो विप्रेभ्यो यया जायते वै तस्या दातुश्चाफलाः सर्वलोकाः ॥ २५ ॥

अतिथये प्रशान्ताय सीदते चाहिताग्नये ॥

श्रोत्रियाय तथैकापि दत्ता बहुगुणा भवेत् ॥ २६ ॥

गां विक्रीणाति चेद्देवि ब्राह्मणो ज्ञानदुर्बलः ॥

नासौ प्रशस्यते पात्रं ब्राह्मणो नैव स स्मृतः ॥ २७ ॥

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ॥

विभक्ता दक्षिणा ह्येषा दातारं नोपतिष्ठति ॥ २८ ॥

प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वलास्तथा ॥

वराश्चाप्सरसो यत्र तत्र गच्छंति गोप्रदाः ॥ २९ ॥

नास्ति भूमिसमं दानं नास्ति गंगासमा सरित् ॥

नास्ति सत्यात्परो धर्मो नान्यो देवो महेश्वरात् ॥ ॥ 7.1.208.३० ॥

उच्चैः पाषाणयुक्ता च न समा नैव चोषरा ॥

न नदीकूलविकटा भूमिर्देया कदाचन ॥ ३१ ॥

षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः ॥

आच्छेत्ता चानुमंता च तान्येव नरकं व्रजेत् ॥३२॥

कुरुते पुरुषः पापं यत्किञ्चिद्वृत्तिकर्शितः ॥

अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति ॥ ३३ ॥

छत्रं शय्यासनं शंखो गजाश्वाश्चामराः स्त्रियः ॥

भूमिश्चैषां प्रदानस्य शिवलोकः फलं स्मृतम् ॥ ३४ ॥

आदित्येऽहनि संक्रांतौ ग्रहणे चन्द्र सूर्ययोः ॥

पारणैश्चैव गोदाने नोपोष्यः पौत्रवान्गृही ॥ ३५ ॥

इन्दुक्षये तु संक्रान्त्यामेकादश्यां शते कृते ॥

उपवासं न कुर्वीत यदीच्छेत्संततिं ध्रुवम्॥ ३६ ॥

यथा शुक्ला तथा कृष्णा न विशेषोऽस्ति कश्चन ॥

तथापि वर्धते धर्मः शुक्लायामेव सर्वदा ॥ ३७ ॥

दशम्येकादशीविद्धा द्वादशी च क्षयं गता ॥

नक्तं तत्र प्रकुर्वीत नोपवासो विधीयते ॥ ३८ ॥

उपोष्यैकादशीं यस्तु त्रयोदश्यां तु पारणम् ॥

करोति तस्य नश्येत्तु द्वादश दद्वादशीफलम्॥३९॥

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्॥

दन्तानां काष्ठसंगाच्च हन्ति सप्तकुलानि वै॥7.1.208.४०॥

दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्॥

पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ ४१ ॥

हानिश्च संततेः प्रोक्ता दौर्भाग्यं समवाप्नुयात् ॥

द्रव्याभावेथ श्राद्धस्य विधिं वक्ष्यामि तत्त्वतः ॥ ४२ ॥

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ॥

षडर्घ्यान्पारयेत्तत्र तेभ्यो दद्याद्यथाविधि ॥ ४३ ॥

पिता भुंक्ते द्विज करे मुखे भुंक्ते पितामहः ॥

प्रपितामहस्तालुस्थः कण्ठे मातामहः स्मृतः ॥ ४४ ॥

प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः ॥

अलाभे ब्राह्मणस्यैव कुशः कार्यो द्विजः प्रिये ॥

इदं सर्वपुराणेभ्यः सारमुद्धत्य चोच्यते ॥ ४५ ॥

न चैतन्नास्तिके देयं पिशुने वेदनिन्दके ॥

प्रातःप्रातरिदं श्राव्यं पूजयित्वा महेश्वरम्॥ ४६ ॥

कुलीनं सर्वशास्त्रज्ञं यथा देवं महेश्वरम् ॥

अस्य धर्मस्य वक्तारं छत्रं दद्यात्प्रपूजयेत् ॥ ४७ ॥

अपूज्याद्वाचकाद्यस्तु श्लोकमेकं शृणोति च ॥

नासौ पुण्यमवाप्नोति शास्त्रचौरः स्मृतो हि सः ॥ ४८ ॥

तस्मात्सर्वप्रयत्नेन पूजयेद्वाचकं बुधः ॥

अन्यथा निष्फलं तस्य पुस्तकश्रवणं भवेत्॥ ४९ ॥

यस्यैव तिष्ठते गेहे शास्त्रमेतत्सदुर्लभम् ॥

तस्य देवि गृहे तीर्थैः सह तिष्ठेच्छिवः स्वयम् ॥ 7.1.208.५० ॥

बहुनात्र किमुक्तेन भवेन्मोक्षस्य भाजनम् ॥

न चैतत्पिशुने देयं नास्तिके दंभसंयुते । ५१ ॥

इदं शान्ताय दान्ताय देयं शैवद्विजन्मने ॥ ५२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये श्राद्धकल्पे दानपात्रब्राह्मणमाहात्म्यवर्णनंनामाष्टोत्तरद्विशततमो ऽध्यायः ॥ २०८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २०९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मार्कण्डेयेशमुत्तमम् ॥

तस्मादुत्तरदिग्भागे मार्कण्डेन प्रतिष्ठितम् ॥१॥

सावित्र्याः पूर्वभागे तु नातिदूरे व्यवस्थितम् ॥

महर्षिरभवत्पूर्वं मार्कण्डेय इति श्रुतः ॥ २ ॥

अजरश्चामरश्चैव प्रसादात्पद्मयोनिनः ॥

स गत्वा तत्र विप्रेन्द्रो देवदेवस्य शूलिनः ॥

लिंगं तु स्थापयामास ज्ञात्वा तत्क्षेत्रमुत्तमम् ॥ ३ ॥

स तं पूज्य विधानेन स्थित्वा दक्षिणतो मुनिः ॥

पद्मासनधरो भूत्वा ध्यानावस्थस्तदाऽभवत् ॥ ४ ॥

तस्य ध्यानरतस्यैव प्रयुतान्यर्बुदानि च ॥

युगानां समतीतानि न जानाति मुनीश्वरः ॥ ५ ॥

अथ लोपं समापन्नः प्रासादः शांकरः स्थितः ॥

कालेन महता देवि पांसुभिर्मारुतोद्भवैः ॥ ६ ॥

कस्यचित्त्वथ कालस्य प्रबुद्धो मुनिसत्तमः ॥

अपश्यत्पांसुभिर्व्याप्तं तत्सर्वं शिवमन्दिरम् ॥ ७ ॥

ततः कृच्छ्रात्स निष्क्रान्तः खनित्वा मुनिपुंगवः ॥

अकरोत्सुमहाद्वारं पूजार्थं तस्य भामिनि ॥ ८ ॥

प्रविश्य तत्र यो भक्त्या पूजयेद्वृषभध्वजम् ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ ॥ ९ ॥

देव्युवाच ॥

अमरत्वं कथं प्राप्तो मार्कण्डो मुनिसत्तमः ॥

अभवत्कौतुकं ह्येतत्तस्मात्त्वं वक्तुमर्हसि ॥ 7.1.209.१० ॥

अमरत्वं यतो नास्ति प्राणिनां भुवि शंकर ॥

देवानामपि कल्पांते स कथं न मृतो मुनिः ॥ ११ ॥

॥ ईश्वर उवाच ॥ ॥

अथातस्त्वां प्रव क्ष्यामि यथासावमरोऽभवत् ॥

आसीन्मुनिः पुराकल्पे मृकण्ड इति विश्रुतः ॥ १२ ॥

भृगोः पुत्रो महाभागः सभार्यस्तपसि स्थितः ॥

तस्य पुत्रस्तदा जातो वसतस्तु वनांतरे ॥ १३ ॥

स पाञ्चवार्षिको भूत्वा बाल एव गुणान्वितः ॥

कस्यचित्त्वथ कालस्य ज्ञानी तत्र समागतः ॥१४॥

तेन दृष्टस्तदा बालः प्रांगणे विचरन्प्रिये ॥

स्मृत्वाऽहसच्चिरं कालं भाव्यर्थं प्रति नोदितः ॥ १५ ॥

तस्य पित्रा स दृष्टस्तु सामुद्रज्ञो विदुत्तमः ॥

हास्यस्य कारणं पृष्टो विस्मयान्वितचेतसा ॥ १६ ॥

कस्मान्मे सुतमालोक्य स्मितं विप्र कृतं त्वया ॥

तत्र मे कारणं ब्रह्मन्यथावद्वक्तुमर्हसि ॥ ॥ १७ ॥

इति तस्य वचः श्रुत्वा ज्ञानी विप्रो वचोऽब्रवीत् ॥ १८ ॥

अयं पुत्रस्तव मुने सर्वलक्षणसंयुतः ॥

अद्यप्रभृति षण्मासमध्ये मृत्युमवाप्स्यति ॥ १९ ॥

यदि जीवेत्पुनरयं चिरायुर्वै भविष्यति ॥

अतो मया कृतं हास्यं विचित्रा कर्मणो गतिः ॥ 7.1.209.२० ॥

एतच्छ्रुत्वा वचो रौद्रं ज्ञानिना समुदाहृतम् ॥

व्रतोपनयनं चक्रे बालकस्य पिता तदा ॥ २१ ॥

आह चैनमृषिः पुत्रं दृष्ट्वा ब्राह्मणमागतम्॥

अभिवाद्यास्त्रयो वर्णास्ततः श्रेयो ह्यवाप्स्यसि ॥ २२ ॥

एवमुक्तः स वै विप्रः करोत्येवाभिवादनम् ॥

न वर्णावरजं वेत्ति बालभावाद्वरानने ॥ २३ ॥

पंचमासा ह्यतिक्रान्ता दिवसाः पञ्चविंशतिः ॥

एतस्मिन्नेव काले तु प्राप्ताः सप्तर्षयोऽमलाः ॥ २४ ॥

तीर्थयात्राप्रसंगेन तेन मार्गेण भामिनि ॥

कालेन तेन सर्वेऽथ यथावदभिवादनैः ॥

आयुष्मान्भव तैरुक्तः स बालो दण्डवल्कली ॥ २५ ॥

उक्त्वा ते तु पुनर्बालं वीक्ष्य वै क्षीणजीवितम् ॥

दिनानि पंच ते ह्यायुर्ज्ञात्वा भीतास्ततोऽनृतात् ॥ २६ ॥

ब्रह्मचारिणमादाय गतास्ते ब्रह्मणोऽन्तिके ॥

प्रतिमुच्याग्रतो बालं प्रणेमुस्ते पितामहम् ॥ २७ ॥

ततस्तेनापि बालेन ब्रह्मा चैवाभिवादितः ॥

चिरायुर्ब्रह्मणा बालः प्रोक्तोऽसावृषिसन्निधौ ॥ २८ ॥

ततस्ते मुनयः प्रीताः श्रुत्वा वाक्यं पितामहात् ॥

पितामहस्तु तान्दृष्ट्वा ऋषीन्प्रोवाच विस्मितान् ॥

केन कार्येण वाऽऽयाताः केन बालो निवेदितः ॥२९॥

॥ ऋषय ऊचुः ॥ ॥

भृगोः पुत्रो मृकण्डस्तु क्षीणायुस्तस्य बालकः ॥

अकालेन पिता ज्ञात्वा बबंधास्य च मेखलाम् ॥ 7.1.209.३० ॥

यज्ञोपवीतं च ततस्तेन विप्रेण बोधितः ॥

यं कञ्चिद्द्रक्ष्यसे लोके भ्रमन्तं भूतले द्विजम् ॥ ३१ ॥

तस्याभिवादनं कार्यं नित्यमेव च पुत्रक ॥

ततो वयमनेनैव दृष्टा बालेन सत्तम ॥ ॥ ३२ ॥

तीर्थयात्राप्रसंगेन दैवयोगात्पितामह ॥

चिरायुरेष वै प्रोक्तो ह्यमीभिश्चाभिवादितैः ॥ ३३ ॥

त्वत्सकाशं समानीतस्त्वया चैवमुदाहृतः ॥

कथं वागनृता देव ह्यस्माकं भवता सह ॥ ३४ ॥

उवाच बालमुद्दिश्य प्रहसन्पद्मसंभवः ॥

मत्समानायुषो बालो मार्कण्डेयो भविष्यति ॥ ३५ ॥

कल्पस्यादौ तथा चान्ते सहायो मे भविष्यति ॥

ततस्तु मुनयः प्रीता गृहीत्वा मुनिदारकम् ॥

तस्मिन्नेव प्रदेशे तु मुमुचुश्चेष्टितं यतः ॥ ३६ ॥

तीर्थयात्रां गता विप्रा मार्कण्डेयो गृहं ययौ ॥

गत्वा गृहमथोवाच मृकण्डं मुनिसत्तमम् ॥ ३७ ॥

ब्रह्मलोकमहं नीतो मुनिभिस्तात सप्तभिः ॥

उक्तोऽयं ब्रह्मणा कल्पस्यादौ चान्ते च मे सखा ॥ ३८ ॥

भविष्यति न संदेहो मत्समायुश्च बालकः ॥

ततस्तैः पुनरानीतो मुक्तश्चैवाश्रमं प्रति ॥ ३९ ॥

मत्कृते हि द्विजश्रेष्ठ यातु ते मनसो ज्वरः ॥

मार्कण्डेयवचः श्रुत्वा मृकण्डो मुनिसत्तमः ॥

जगाम परमं हर्षं क्षणमेकं सुदुःसहम् ॥ 7.1.209.४० ॥

ततौ धैर्यं समास्थाय वाक्यमेतदुवाच ह ॥ ४१ ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥

यत्त्वया मे सुपुत्रेण दृष्टो लोकपितामहः ॥ ४२ ॥

वाजपेयसहस्रेण राजसूयशतेन च ॥

यं न पश्यन्ति विद्वांसः स त्वया लीलया सुत ॥ ४३ ॥

दृष्टश्चिरायुरप्येवं कृतस्तेनाब्जयोनिना ॥

दिवारात्रमहं तात तव दुःखेन दुखितः ॥

न निद्रामनुगच्छामि तन्मेदुःखं गतं महत् ॥ ४४ ॥

इति श्रीस्कान्दे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये मार्कण्डेयेश्वरमाहात्म्यवर्णनंनाम नवोत्तरद्विशततमोऽध्यायः ॥ ॥ २०९.॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुलस्त्येश्वरमुत्तमम् ॥

मार्कंडेयोत्तरे भागे धनुषां पञ्चके स्थितम् ॥ १ ॥

तं दृष्ट्वा मानवो देवि पूजयित्वा विधानतः ॥

सप्तजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुलस्त्येश्वरमाहात्म्यवर्णनंनाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २११



॥ ईश्वर उवाच ॥ ॥

पुलस्त्येश्वरात्ततो देवि नैर्ऋते धनुषाष्टके ॥

पुलहेश्वरनामानं तं च भक्त्या प्रपूजयेत् ॥ १ ॥

हिरण्यदानं दत्त्वा वै सम्यग्यात्राफलं लभेत् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुलहेश्वरमाहात्म्यवर्णनंनामैकादशोत्तरद्विशततमोऽध्यायः ॥ २११ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१२



ईश्वर उवाच ॥ ॥

पुलहेश्वरात्ततो देवि नैर्ऋते धनुषाष्टके ॥

क्रत्वीश्वरेतिनामानं महाक्रतुफलप्रदम् ॥१॥

तं दृष्ट्वा मानवो देवि पौंडरीकफलं लभेत् ॥

सप्तजन्मनि दारिद्र्यं न दुःखं तत्र जायते ॥२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये क्रत्वीश्वरमाहात्म्यवर्णनंनाम द्वादशोत्तरद्विशततमोऽध्यायः॥ २१२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१३



ईश्वर उवाच॥

क्रत्वीशात्पूर्वदिग्भागे धनुःषोडशकान्तरे॥

कश्यपेश्वरनामानं महापातकनाशनम् ॥ १ ॥

तं दृष्ट्वा मानवो देवि धनवान्पुत्रवान्भवेत् ॥

सर्वपातकयुक्तोऽपि मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कश्यपेश्वरमाहात्म्यवर्णनंनाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥ २१३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१४



॥ ईश्वर उवाच ॥ ॥

धनुषामष्टभिस्तस्मादीशाने कश्यपेश्वरात् ॥

कौशकेश्वरनामानं महापातकनाशनम् ॥ १ ॥

वसिष्ठतनयान्हत्वा तत्र कौशिकसत्तमः ॥

स्थापयामास तल्लिंगं मुक्तपापस्ततोऽभवत् ॥ २ ॥

तं दृष्ट्वा पूजयित्वा तु लभते वाञ्छितं फलम्॥३॥

इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कौशिकेश्वरमाहात्म्यवर्णनंनामचतुर्दशोत्तरद्विशततमोऽध्यायः॥ ॥ २१४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कुमारेश्वरमुत्तमम् ॥

मार्कण्डेश्वरतो देवि दक्षिणे नातिदूरतः ॥

धनुर्विंशतिभिस्तत्र स्थितं स्वामिप्रतिष्ठितम् ॥ १ ॥

ततः कृत्वा तपो घोरं कार्त्तिकेयेन भाभिनि ॥

परदारापहारोत्थपापानां नाशहेतवे ॥ २ ॥

लिंगं स्थापितवांस्तत्र स मुक्तः किल्विषात्ततः ॥

वैराग्याद्यौवनं त्यक्त्वा कौमारं पुनराददे ॥ ३ ॥

पितॄन्हत्वा सुमाली च तमाराधितवान्पुरा ॥

सोऽपि मुक्तोऽभवद्देवि पापात्पितृवधोद्भवात् ॥ ४ ॥

कुमारेश्वरनामैतत्पूजितं वै सुरासुरैः ॥

तस्याग्रतः कुमारस्य कूपस्तिष्ठति भामिनि ॥ ५ ॥

तत्र स्नात्वा पूजयेद्यः शूलिनं स्वामिपूजितम् ॥

स मुक्तः पातकैः सर्वैर्गच्छेत्स्वामिपुरं महत् ॥ ६ ॥

शातकौंभमयं यस्तु ताम्रचूडं द्विजातये ॥

दद्यात्स्वामिनमुद्दिश्य स तु यात्राफलं लभेत् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये कुमारेश्वरमाहात्म्यवर्णनंनाम पञ्चदशोत्तरद्विशततमोऽध्यायः ॥ २१५ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१६



॥ ईश्वर उवाच॥ ॥

मार्कण्डेश्वरतो देवि उत्तरे लिंगमुत्तमम्॥

धनुषां पञ्चदशभिर्गौतमेश्वरनामकम् ॥ १ ॥

गुरुं हत्वा पुरा देवि गौतमः पापदुःखितः ॥

तत्र लिंगं प्रतिष्ठाप्य तस्मात्पापाद्व्यमुच्यत ॥ २ ॥

यस्तत्र कपिलां दद्यात्स्नात्वा नद्यां विधानतः ॥

संपूज्य विधिवल्लिंगं मुच्यते पञ्चपातकैः ॥३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गौतमेश्वरमाहात्म्यवर्णनंनाम षोडशोत्तरद्विशततमोऽध्यायः ॥२१६॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१७



॥ ईश्वर उवाच ॥ ॥

गौतमेश्वरतो देवि पश्चिमे नातिदूरतः ॥

धनुःषोडशभिर्देवि देवराजेश्वरः स्थितः ॥ १ ॥

लिंगं स स्थापयामास ततः पापैर्व्यमुच्यत ॥

यस्तं समाहितमनाः पूजयिष्यति मानवः ॥

स च मानवसंभूतात्पातकात्संप्रमोक्ष्यति ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये देवराजेश्वरमाहात्म्यवर्णनंनाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥२१७॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१८



॥ ॥ ईश्वर उवाच ॥ ॥

तत्रैव मानवं लिंगं मनुना संप्रतिष्ठितम् ॥

पूर्वं हत्वा सुतं देवि मनुः पापसमन्वितः ॥ १ ॥

क्षेत्रं पापहरं ज्ञात्वा तत्र प्रातिष्ठदीश्वरम्॥

मुक्तश्चैवाभवत्पापात्तस्मात्पुत्रवधोद्भवात्॥२॥

पूजयेन्मानवो यस्तु स मुक्तः पातकैर्भवेत् ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मानवेश्वरमाहात्म्यवर्णनंनामाष्टादशोत्तरद्विशततमोऽध्यायः ॥२१८॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २१९

https://sa.wikisource.org/s/geb
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्मादाग्नेयकोणे तु मार्कंडेयसमीपगम् ॥

गुहालिंगं महादेवि नीलकण्ठेति विश्रुतम् ॥ १ ॥

विष्णुना पूजितं पूर्वं सर्व पातकनाशनम् ॥ २ ॥

तत्र यः पूजयेद्भक्त्या तल्लिंगं पापमोचनम्॥

स पुत्रपशुमान्धीमान्मोदते पृथिवीतले ॥ ३ ॥

एवं तत्र महादेवि मार्कण्डेयेश सन्निधौ ॥

ऋषीणामाश्रमा येऽत्र दृश्यन्तेऽद्यापि भामिनि ॥ ४ ॥

अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ॥

तत्र स्थितानि देवेशि मार्कण्डेयाश्रमांतिके ॥ ५ ॥

ऋषीणां च गुहास्तत्र सर्वा लिंगसमन्विताः ॥

दृश्यन्ते पुण्यतपसां तदाश्रमनिवासिनाम् ॥ ६ ॥

तत्र यः स्थापयेल्लिंगं मार्कंडेशसमीपगम्॥

कुलानां शतमुद्धृत्य मोदते दिवि देववत् ॥ ७ ॥

सर्वे शिवमया लोकाः शिवे सर्वं प्रतिष्ठितम् ॥

तस्माच्छिवं यजेद्विद्वान्य इच्छेच्छ्रियमात्मनः ॥ ८ ॥

शिवभक्तो न यो राजा भक्तोऽन्येषु सुरेषु च ॥

स्वपतिं युवती त्यक्त्वा रमतेऽन्येषु वै यथा ॥ ९ ॥

ब्रह्मादयः सुराः सर्वे राजानश्च महर्द्धिकाः ॥

मानवा मुनयश्चैव सर्वे लिंगं यजंति च ॥ 7.1.219.१० ॥

स्वनामकृतचिह्नानि लिंगानींद्रादिभिः क्रमात् ॥

स्थापितानि यथा स्थाने मानवैरपि भूरिशः ॥ ११ ॥

स्थापनाद्ब्रह्महत्यां च भ्रूणहत्यां तथैव च ॥

महापापानि चान्यानि निस्तीर्णाः शिवतेजसा ॥ १२ ॥

वृत्रं हत्वा पुरा शक्रो माहेन्द्रं स्थाप्य शंकरम् ॥

लिंगं च मुक्तपापौघस्ततोऽसौ त्रिदिवं गतः ॥ १३ ॥

स्थापयित्वा शिवं सूर्यो गंगासागरसंगमे ॥

निरामयोऽभूत्सोमश्च प्रभासे पश्चिमोदधेः ॥ १४ ॥

काश्यां चैव तथादित्यः सह्ये गरुडकाश्यपौ ॥

प्रतिष्ठां परमां प्राप्तौ प्रतिष्ठाप्य जगत्पतिम् ॥ १५ ॥

ख्यातदोषा ह्यहिल्याऽपि भर्तृशप्ताऽभवत्तदा ॥

स्थाप्येशानं पुनः स्त्रीत्वं लेभे पुत्रांस्तथोत्तमान् ॥ १६ ॥

पश्यंत्यद्यापि याः स्नात्वा तत्राहिल्येश्वरं स्त्रियः ॥

पुरुषाश्चापि तद्दोषैर्मुच्यन्ते नात्र संशयः ॥ १७ ॥

स्थापयित्वेश्वरं श्वेतशैले बलिविरोचनौ ॥

उभावपि हि संजातावमरौ बलिनां वरौ ॥ ॥ १८ ॥

रामेण रावणं हत्वा ससैन्यं त्रिदशेश्वरम् ॥

स्थापितो विधिवद्भक्त्या तीरे नदनदीपतेः ॥ १९ ॥

स्वायंभुवर्षिदैवादिलिंगहीना न भूः क्वचित ॥ व्या

पारान्सकलांस्त्यक्त्वा पूजयध्वं शिवं सदा ॥

निकटा इव दृश्यंते कृतांतनगरोपगाः ॥ 7.1.219.२० ॥

देवि किं बहुनोक्तेन वर्णितेन पुनः पुनः ॥

प्रभासक्षेत्रसारं तु मार्कण्डेयाश्रमं प्रति ॥ २१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभास क्षेत्रमाहात्म्ये मार्कण्डेयेश्वरमाहात्म्यवर्णनंनामैकोनविंशत्युत्तरद्विशततमोऽध्यायः ॥ २१९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२०

https://sa.wikisource.org/s/gec
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं त्रैलोक्यपूजितम् ॥

वृषध्वजेश्वरं नाम स्थितं दक्षिणतस्तथा ॥ १ ॥

यत्तदक्षरमव्यक्तं परं यस्मान्न विद्यते ॥

योगगम्यमनाद्यंतं वृषभध्वज संमितम् ॥ २ ॥

सर्वाश्चर्यमयं देवि बुद्धिग्राह्यं निरामयम्॥

विश्वतः पाणिपादं च विश्वतोऽक्षिशिरोमुखम् ॥ ३ ॥

तं च देवं चिरं स्थाणुं वृषभध्वजसंज्ञितम् ॥

पृथुर्मरुच्च भरतः शशबिन्दुर्गयः शिबिः ॥ ४ ॥

रामोंऽबरीषो मांधाता दिलीपोऽथ भगीरथः ॥

सुहोत्रो रंतिदेवश्च ययातिः सगरस्तथा ॥ ५ ॥

षोडशैते नृपा धन्याः प्रभासं क्षेत्रमाश्रिताः ॥

वृषध्वजेशमाराध्य यज्ञैरिष्ट्वा दिवं गताः ॥ ६ ॥

सत्यं वच्मि हितं वच्मि सारं वच्मि पुनःपुनः ॥

असारे दग्धसंसारे सारं तत्र शिवार्चनम् ॥ ७ ॥

पुनर्जन्म पुनर्मृत्युः पुनः क्लेशः पुनर्जरा ॥

अहरहर्घटीन्यायो न कदाचिदपीदृशः ॥ ॥ ८ ॥

तदा श्वेतस्य संसारग्रन्थेरत्यन्तदुर्भिदः ॥

परं निर्मूलविच्छेदि क्रियतां तद्भवार्चनम् ॥ ९ ॥

तस्य चिन्तामणिर्गेहे तस्य कल्पद्रुमः कुले ॥

कुबेरः किंकरस्तस्य भक्तिर्यस्य शिवे स्थिता ॥ 7.1.220.१० ॥

सेयं लक्ष्मीः पुरा पुंसां सेयं भक्तिः समीहिता ॥

सेयं श्रेयस्करी मूर्तिर्भक्तिर्या वृषभध्वजे ॥ ११ ॥

पुष्पैः पंचभिरप्यत्र पूजयित्वा महेश्वरम् ॥

दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ १२ ॥

वृषभस्तत्र दातव्यो वृषभध्वज संनिधौ ॥

सर्वपातकनाशार्थं सम्यग्यात्राफलेप्सुभिः ॥ १३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये वृषभध्वजेश्वरमाहात्म्यवर्णनंनाम विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं च ऋणमोचनम् ॥

तस्मिन्दृष्टे ऋणं न स्यान्मातापितृसमुद्भवम् ॥ १ ॥

पितरस्तु पुरा सर्वे दिव्यक्षेत्रं समागताः ॥

प्रभासे तपसा युक्ताः स्थिता वर्षगणान्बहून् ॥ २ ॥

अग्निष्वात्ता बर्हिषदः सोमपा आज्यपास्तथा ॥

लिंगं संस्थापयामासुः सर्वे भक्तिपरायणाः ॥ ३ ॥

ततः कालेन महता तुष्टस्तेषां महेश्वरः ॥

ततः प्रत्यक्षतां गत्वा वाक्यमेतदुवाच ह ॥ ४ ॥

परितुष्टोऽस्मि भद्रं वो ब्रूत यन्मनसेप्सितम् ॥५॥

॥ पितर ऊचुः ॥ ॥

अस्माकं दीयतां वृत्तिर्जगत्यस्मिन्स्वयं कृते ॥

देवानां च ऋषीणां च मानुषाणां महीतले ॥ ६ ॥

भवानेव परो लोके सर्वेषां पद्मसंभव॥

आगत्य वर्णाश्चत्वार इह ये श्रद्धयान्विताः ॥ ७ ॥

पैतृकात्तु ऋणान्मुक्ता भवंतु गतकल्मषाः ॥

व्यन्तरत्वं सुरश्रेष्ठ येषां वै पितरो गताः ॥ ८ ॥

सर्प्पे वह्नि विषैर्वा ये नाशं नीताः पितामहाः ॥

अपुत्रा वा सपुत्रा वा सपिण्डीकरणं विना ॥ ९ ॥

न कृतानि पुरा येषामेकोद्दिष्टानि षोडश ॥

तथा नैव वृषोत्सर्गो गोहताश्चाथ चान्त्यजैः ॥ 7.1.221.१० ॥

अथापरे ये च मृताः शौचेन तु विना कृताः ॥

ते चात्र तर्पिताः सर्वे प्रयान्तु परमां गतिम् ॥ ११ ॥ ॥

॥ श्रीभगवानुवाच ॥ ॥

स्नात्वा तु सलिले पुण्ये पितृणां चैव तर्पणम् ॥

ये करिष्यंति मनुजाः पितृभक्तिपरायणाः ॥ १२ ॥

अहं वरप्रदस्तेषां तारयिष्यामि तत्क्षणात् ॥

पितॄन्सर्वान्न संदेहो यदि पापशतैर्वृताः ॥ १३ ॥

अस्मिंस्तीर्थे नरः स्नात्वा यो लिंगं पूजयिष्यति ॥

युष्माभिः स्थापितं लिंगं स मुक्तः पैतृकादृणात् ॥ १४॥

यस्मादृणात्प्रमुच्येत अस्य लिंगस्य दर्शनात् ॥

तस्मान्मया कृतं नाम ह्येतस्य ऋणमोचनम् ॥ । १५ ॥

॥ ईश्वर उवाच ॥ ॥

हिरण्यं मस्तके दत्त्वा यः स्नाति ऋणमोचने ॥

आत्मा वै तारितस्तेन दत्तं भवति गोशतम् ॥ १६ ॥

एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥

तस्मात्सर्वप्रयत्नेन तत्र श्राद्धं समाचरेत् ॥

पूजयेत्तन्महादेवि पितृलिंगं सुरप्रियम् ॥ १७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य ऋणमोचनमाहात्म्यवर्णनंनामैकविंशत्युत्तरद्विशततमो ऽध्यायः ॥ २२१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२२



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं लिंगं रुक्मवत्या प्रतिष्ठितम्॥

सर्वपापोपशमनं सर्वकामफलप्रदम्॥ १ ॥

तत्र स्नात्वा महातीर्थे लिंगं संप्लाव्य यत्नतः ॥

विप्रेभ्यो दापयेद्वित्तं मुच्यते सर्वपातकैः ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये रुक्मवतीश्वरमाहात्म्यवर्णनंनाम द्वाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं त्रैलोक्यपूजितम् ॥

गात्रोत्सर्गमिति ख्यातं तस्य दक्षिणतः स्थितम्॥ १ ॥

यत्र गात्रं परित्यक्तं बलभद्रेण धीमता ॥

अन्यैश्चैव महाभागैर्यादवैस्तत्र संयुगे ॥ २ ॥

यत्र ते यादवाः क्षीणा ब्रह्मशापबलाहिना ॥

एतत्पुरुषोत्तमं क्षेत्रं समन्ताद्धनुषां शतम्॥ ३ ॥

यत्र साक्षात्स्वयं देवि तिष्ठते पुरुषोत्तमः ॥

तदेव वैष्णवं क्षेत्रं कलौ पातकनाशनम्॥ ४ ॥

रहस्यं परमं देवि तीर्थानां प्रवरं हि तत्॥

पूर्वं कृतयुगे देवि प्रेततीर्थं च संस्मृतम् ॥

कलौ युगे तु संप्राप्ते गात्रोत्सर्गमिति त्वभूत् ॥ ५ ॥

ऋणमोचनपार्श्वे तु मध्ये तु पापमोचनात्॥

एतन्मध्यं समाश्रित्य मृतः पापैर्विमुच्यते ॥ ६ ॥

तस्य किं वर्ण्यते देवि यत्रानन्तफलं महत् ॥

अश्वमेधसहस्रस्य फलं स्नात्वा ह्यवाप्यते ॥ ७ ॥

यत्राश्वत्थं समासाद्य समाधिन्यस्तमानसः ॥

मुमोच दुस्त्यजान्प्राणान्ब्रह्मद्वारेण केशवः ॥ ८ ॥

तत्र नारायणं साक्षाद्बलभद्रं च रुक्मिणीम् ॥

पूजयित्वा विधानेन मुच्यते पातकत्रयात् ॥ ९ ॥

तत्र स्नात्वा नरो भक्त्या यः संतर्पयते पितॄन् ॥

प्रेतत्वात्पितरो मुक्ता भवन्ति श्राद्धदायिनः ॥ 7.1.223.१० ॥।

गोघ्नः सुरापो दुर्मेधा ब्रह्महा गुरुतल्पगः ॥

तत्र स्नात्वा नरः सद्यो विपापः संप्रपद्यते ॥ ११ ॥

बाल्ये वयसि यत्पापं वार्द्धके यौवनेऽपि वा ॥
अज्ञानाज्ज्ञानतो वापि यः करोति नरः प्रिये ॥
तत्र स्नात्वा प्रमुच्येत तीर्थे गात्रप्रमोचने ॥ १२ ॥
तत्र पिण्डप्रदानेन पितॄणां जायते परा ॥
तृप्तिर्वर्षशतं यावदेतदाह पुरा हरिः ॥ १३ ॥
यः पुनश्चान्नदानं तु तत्र कुर्यात्समाहितः ॥
तस्यान्वयेऽपि देवेशि न प्रेतो जायते नरः ॥१४॥ ॥
॥श्रीदेव्युवाच ॥ ॥
प्रेततीर्थमिति प्रोक्तं पश्चाद्गात्रविमोचनम् ॥
वद मे देवदेवेश प्रेततीर्थस्य कारणम्॥ १९ ॥
॥ ईश्वर उवाच॥ ॥
शृणु देवि प्रवक्ष्यामि प्रेततीर्थस्य कारणम्॥
यच्छ्रुत्वा मानवो भक्त्या मुक्तः स्यात्सर्वकिल्बिषैः ॥ १६ ॥
पुराऽऽसीद्गौतमोनाम महर्षिः शंसितव्रतः ॥
भृगुकल्पात्समायातः क्षेत्रे प्राभासिके शुभे ॥ १७ ॥
अयने चोत्तरे पुण्ये श्रीसोमेशदिदृक्षया ॥
दृष्ट्वा सोमेश्वरं देवं स्नात्वा तीर्थेषु कृत्स्नशः ॥ १८ ॥
स गच्छंस्तीर्थयात्रायां गात्रोत्सर्गं ततो गतः ॥ १९ ॥
अथासौ ब्राह्मणो देवि यावत्सीमामुपागतः ॥
तावद्विष्णुप्रियं तत्र ददृशे वैष्णवं वनम् ॥ 7.1.223.२० ॥
पुरुषोत्तमनामाढ्यं क्षेत्रं च धनुषां शतम् ॥
तस्मिन्क्षेत्रे स चापश्यत्पंच प्रेतान्सुदारुणान् ॥ २१ ॥
महावृक्षसमारूढान्महाकायान्महोत्कटान्॥
ऊर्ध्वकेशाञ्छंकुकर्णान्स्नायुनद्धकलेवरान् ॥ २२ ॥
विमांसरुधिरान्नग्नानथ कृष्णकलेवरान् ॥
दृष्ट्वाऽसौ भयसंत्रस्तो विनष्टोऽस्मीत्यचिन्तयत् ॥ २३ ॥
ध्यात्वाऽऽह सुचिरं कालं धैर्यमास्थाय यत्नतः ॥
के यूयं विकृताकारा दृष्टाः पूर्वं मया पुरा ॥ २४ ॥

न कदाचिद्यथा यूयं किमर्थं क्षेत्रमध्यतः ॥

धावमानाः सुदुःखार्ता एतन्मे कौतुकं महत् ॥ २५ ॥

॥ प्रेता ऊचुः ॥ ॥

वयं प्रेता महाभाग दूरादिह समागताः ॥

श्रुत्वा तीर्थवरं पुण्यं प्रवेशं न लभामहे ॥२६॥

गणैरंतर्धानगतैः प्रहारैर्जर्जरीकृताः ॥

लेखको रोहकश्चैव सूचकः शीघ्रगस्तथा ॥ २७ ॥

अहं पर्युषितोनाम पञ्चमः पापकृत्तमः ॥ २८ ॥

॥ गौतम उवाच ॥ ॥

प्रेतयोनौ प्रवृत्तानां केन नामानि कृत्स्नशः ॥

युष्माकं निर्मितान्येवमेतन्मे कौतुकं महत् ॥ २९ ॥

॥ प्रेता ऊचुः ॥ ॥

याचमानस्य विप्रस्य लिखत्येष धरातले ॥

नोत्तरं पठते किञ्चित्तेनासौ लेखकः स्मृतः ॥ 7.1.223.३० ॥

द्वितीयो ब्राह्मणभयात्प्रासादमधिरोहति ॥

ततोऽसौ रोहकाख्योऽभूच्छृणु विप्र तृतीयकम् ॥ ३१ ॥

सूचिता बहवोऽनेन ब्राह्मणा वित्तसंयुताः ।

राज्ञे पापेन तेनासौ सूचको भुवि विश्रुतः ॥ ३२॥

ब्राह्मणैः प्रार्थ्यमानस्तु शीघ्रं धावति नित्यशः ॥

न कदाचिद्ददाति स्म तेनासौ शीघ्रगः स्मृतः ॥ ३३ ॥

मया कदन्नं दत्तं च पर्युषितं ब्राह्मणोत्तमे ॥

ब्राह्मणेभ्यः सदा दानं मिष्टान्नेन तु पोषणम् ॥

तस्मात्पर्युषितोनाम संजातोऽहं धरातले ॥ ३४ ॥

॥ गौतम उवाच ॥ ॥

न विना भोजनेनैव वर्तन्ते प्राणिनो भुवि ॥

किमाहारा भवन्तो वै वदध्वं मम कौतुकात् ॥ ३५ ॥

॥ प्रेता ऊचुः ॥ ॥

प्राप्ते भोजनकाले तु यत्र युद्धं प्रवर्तते ॥

तस्यान्नस्य रसं सर्वं भुंजामो द्विजसत्तम ॥ ३६ ॥

नानुलिप्ते धरापृष्ठे यत्र भुंजन्ति मानवाः ॥

भ्रष्टशौचा द्विजश्रेष्ठ तदस्माकं तु भोजनम् ॥ ३७ ॥

अप्रक्षालितपादस्तु यो भुंक्ते दक्षिणामुखः ॥

यो वेष्टितशिरा भुंक्ते प्रेता भुंजन्ति नित्यशः ॥ ३८ ॥

श्राद्धं संपश्यते श्वा चेन्नारी चैव रजस्वला ॥

अन्त्यजः शूकरश्वान्नं तदस्माकं तु भोजनम् ॥ ३९ ॥

त्यक्त्वा क्रमागतं विप्रं पूजितं प्रपितामहैः ॥

यो दानं ददतेऽन्यस्मै तस्मै चाऽतुष्टचेतसा ॥ 7.1.223.४० ॥

तस्य दानस्य यत्पुण्यं तदस्माकं प्रजायते ॥

यस्मिन्गृहे सदोच्छिष्टं सदा च कलहो भवेत् ॥

वैश्वदेवविहीने तु तत्र भुंजामहे वयम् ॥ ४१ ॥

॥ गौतम उवाच ॥ ॥

युष्माकं कीदृशे गेहे प्रवेशो न च विद्यते ॥

सत्यं वदत माऽसत्यं सत्यं साधुषु संगतम् ॥ ४२ ॥

॥ प्रेता ऊचुः ॥ ॥

वैश्वदेवोद्भवा यत्र धूमवर्तिः प्रदृश्यते ॥

तस्मिन्गेहे न चास्माकं प्रवेशो विद्यते द्विज ॥ ४३ ॥

यस्मिन्गृहे प्रभाते तु क्रियते चोपलेपनम् ॥

विद्यते वेद निर्घोषस्तत्रास्माकं न किंचन ॥ ४४ ॥

॥ गौतम उवाच ॥ ॥

केन कर्मविपाकेन प्रेतत्वं व्रजते नरः ॥

एतन्मे विस्तरेणैव यथावद्वक्तु मर्हथ ॥ ४५ ॥

॥ प्रेता ऊचुः ॥ ॥

मृषाऽपहारिणो ये च ये चोच्छिष्टा व्रजन्ति च ॥

गोब्राह्मणहताश्चैव प्रेतत्वं ते व्रजन्ति हि ॥ ४६ ॥

पैशुन्यनिरता ये च कूटसाक्ष्यरता नराः ॥

न्यायपक्षे न वर्तंते मृताः प्रेता भवंति ते ॥ ४७ ॥

श्लेष्ममूत्रपुरीषाणि ये क्षिपन्ति सरोवरे ॥
प्रेतत्वं ते समासाद्य विचरंति च मानवाः ॥४८॥
दीयमानं तु विप्राणां गोषु विप्रातुरेषु च ॥
मा देहीति प्रजल्पन्तस्ते च प्रेता भवंति च ॥४९॥
शूद्रान्नेनोदरस्थेन यदि विप्रो म्रियेत वै ॥
प्रेतत्वं यात्यसौ नूनं यद्यपि स्यात्षडंगवित् ॥ 7.1.223.५० ॥
यस्त्रीन्हले बलीवर्दान्वाहयेन्मदसंयुतः ॥
अमावास्यां विशेषेण स प्रेतो जायते नरः ॥ ५१ ॥
नास्तिको निंदकः क्षुद्रो नित्यनैमित्त्यवर्जितः ॥
ब्राह्मणान्द्वेष्टि यो नूनं स प्रेतो जायते नरः ॥ ५२ ॥
विश्वासघातको यस्तु ब्रह्महा स्त्रीवधे रतः ॥
गोघ्नो गुरुघ्नः पितृहा स प्रेतो जायते नरः॥५३॥
यस्य नैव प्रदत्तानि एकोद्दिष्टानि षोडश ॥
मृतस्य न वृषोत्सर्गः स प्रेतो जायते नरः ॥ ५४ ॥
एतद्धि सर्वमाख्यातं यत्पृष्टाः स्म द्विजोत्तम ॥
भूयो ब्रूहि द्विजश्रेष्ठ यश्चास्ति तव संशयः ॥ ५५ ॥
॥ गौतम उवाच ॥ ॥
येन कर्मविपाकेनन प्रेतो जायते नरः ॥
तन्मे वदत निःशेषं कौतुकं मेऽत्र विद्यते ॥ ५६ ॥
॥ प्रेता ऊचुः ॥ ॥
तीर्थयात्रा रतो यस्तु देवार्चनपरायणः ॥
ब्राह्मणेषु सदा भक्तो न प्रेतो जायते नरः ॥ ५७ ॥
नित्यं शृणोति शास्त्राणि नित्यं सेवति पंडितान्॥
वृद्धांस्तु पृच्छते नित्यं न स प्रेतो विजायते ॥ ५८ ॥
एतस्मात्कारणात्प्राप्ता वयं सर्वे सुदूरतः ॥
शक्नुमो प्रवेष्टुं च पुण्येऽस्मिन्क्षेत्र उत्तमे ॥ ५९ ॥
निर्विण्णाः प्रेतरूपेण तस्मात्त्वं द्विजसत्तम ॥
गतिर्भव महाभाग सर्वेषां नः प्रयत्नतः ॥ 7.1.223.६० ॥

॥ गौतम उवाच ॥ ॥

कथं वो जायते मोक्षो वदध्वं कृत्स्नशो मम ॥

कृपयाविष्टचित्तोऽहं यतिष्ये नात्र संशयः ॥६१॥

॥ प्रेता ऊचुः ॥ ॥

प्रभूतकालमस्माकं प्रेतत्वे तिष्ठतां विभो ॥

न त्वभ्येति पुमान्कश्चिदस्माकं यो गतिर्भवेत् ॥ ६२ ॥

तस्मात्त्वं देहि नः श्राद्धं गत्वा क्षेत्रं तु वैष्णवम्॥

नामगोत्राणि चादाय मोक्षं यास्यामहे ततः ॥ ६३ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

ततोऽसौ ब्राह्मणो गत्वा दयाविष्टो हरेर्गृहम् ॥

श्राद्धं च प्रददौ तेषामेकैकस्य पृथक्पृथक् ॥ ६४ ॥

यस्ययस्य यदा श्राद्धं करोति द्विजसत्तमः ॥

स रात्रौ स्वप्न एत्यैनं दर्शने वाक्यमब्रवीत् ॥ ६५ ॥

प्रसादात्तव विप्रेन्द्र मुक्तोऽहं प्रेतयोनितः ॥

स्वस्ति तेऽस्तु गमिष्यामि विमानं मे ह्युपस्थितम् ॥ ६६ ॥

एवं संतारितास्तेन चत्वारस्ते द्विजोत्तमाः ॥ ६७ ॥

अथासौ ब्राह्मणश्रेष्ठः संप्राप्ते पञ्चमे दिने ॥

प्रददौ विधिपूर्वं तु श्राद्धं पर्युषितस्य च ॥ ६८ ॥

अथापश्यत स्वप्नान्ते प्राप्तं पर्युषितं नरम् ॥

दीनवाक्यं परिक्लिष्टं निःश्वसन्तं मुहुर्मुहुः ॥ ६९॥ ॥

॥ पर्युषित उवाच ॥ ॥

न मे जाता गतिर्विप्र मंदभाग्यस्य पापिनः ॥

मया हृतं तडागार्थं यद्वित्तं प्रगुणीकृतम् ॥ 7.1.223.७० ॥

॥ गौतम उवाच ॥ ॥

कथं ते जायते मोक्षो वद शीघ्रमशेषतः ॥

करिष्ये नात्र संदेहो यद्यपि स्यात्सुदुर्लभम् ॥ ७१ ॥

॥ पर्युषित उवाच ॥ ॥।

अयने चोत्तरे प्राप्ते गत्वा तीर्थं हरिप्रियम् ॥

श्राद्धं त्वं देहि मे नूनं ततो गतिर्भविष्यति ॥ ७२ ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्तः स विप्रेन्द्रस्तेन प्रेतेन वै मुनिः ॥

अयने चोत्तरे प्राप्ते गत्वा तीर्थं हरिप्रियम् ॥

प्रददौ विधिवच्छ्राद्धं ततः पर्युषिताय च ॥ ७३ ॥

ततः पर्युषितो रात्रौ स्वप्नान्ते वाक्यमब्रवीत् ॥

प्रसन्नवदनो भूत्वा दिव्यमाल्यवपुर्धरः ॥ ७४ ॥

॥ पर्युषित उवाच ॥ ॥

मुक्तोऽहं त्वत्प्रसादेन प्रेतभावाद्द्विजोत्तम ॥

स्वस्ति तेऽस्तु गमिष्यामि विमानं मे ह्युपस्थितम् ॥ ७५ ॥

देवत्वं च मया प्राप्तं समर्थोऽहं द्विजोत्तम ॥

वरं ददामि ते विप्र गृहाण त्वं वरं शुभम् ॥ ७६ ॥

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥

निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ७७ ॥

॥ गौतम उवाच ॥ ॥

यदि देयो वरोऽस्माकं समर्थोऽसि वरप्रद ॥

यत्र स्थाने मया दृष्टाः प्रेता यूयं सुदुःखिताः ॥

तत्राहं चाश्रमं कृत्वा करिष्ये चोत्तमं तपः ॥ ७८ ॥

निर्गतास्मि गृहं भूयो स्नात्वा तीर्थमिदं महत् ॥

तत्र यो भानवो भक्त्या पितृनुद्दिश्य भक्तितः ॥ ७९ ॥

विधिवद्दास्यति श्राद्धं स्नात्वा संतर्प्य देवताः ॥

युष्मत्प्रसादतस्तस्य ह्यन्वयेऽपि कदाचन ॥

मा भूयात्प्रेतभावो हि अपि पापान्वितस्य भोः ॥ 7.1.223.८० ॥

॥ पर्युषित उवाच ॥ ॥

गच्छ त्वं चाश्रमं तत्र कुरु ब्राह्मणसत्तम ॥

गमिष्यसि परां सिद्धिं लोके ख्यातिं गमिष्यसि ॥ ८१ ॥

तत्र ये मानवा भक्त्या श्राद्धं दास्यंति सत्तमाः ॥

पितृणां ते विमानस्था यास्यंति त्रिदिवालयम् ॥ ८२ ॥

न तेषां वंशजः कश्चित्प्रेतत्वं च गमिष्यति ॥

प्राहुः सप्तपदीं मैत्रीं पंडिताः स्थिरबुद्धयः ॥ ८३ ॥

मित्रतां तु पुरस्कृत्य किं तद्वक्ष्यामि तच्छृणु ॥

तवाश्रमपदं पुण्यं भविष्यति महीतले ॥ ८४ ॥

सर्वपापप्रशमनं सर्वदुःखवि नाशनम् ॥

मन्नाम्ना ख्यातिमायातु प्रेततीर्थमिति प्रभो ॥ ८५ ॥

॥ ईश्वर उवाच ॥ ॥

तं तथेति प्रतिज्ञाय गतस्तत्र द्विजोत्तमः ॥

यथा वेदोक्तमार्गेण सर्वं कृत्यं चकार सः ॥ ८६ ॥

सोऽपि स्वर्गमनुप्राप्तो हृष्टः पर्युषितः प्रिये ॥

एतत्सर्वं पुरावृत्तं स्थानेऽस्मिन्गात्रमोचने ॥ ८७ ॥

यः शृणोति नरः सम्यक्सर्वपापैः स मुच्यते ॥

शयनोत्थापने योगे यः पश्येत्पुरुषोत्तमम् ॥

गात्रोत्सर्गे तु गत्वाऽसौ यज्ञायुतफलं लभेत् ॥ ८८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुरुषोत्तमतीर्थप्रेततीर्थमाहात्म्यवर्णनंनाम त्रयोविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगमिंद्रप्रतिष्ठितम् ॥

पापमोचननामाढ्यं दक्षिणे पुरुषोत्तमात्॥ १ ॥

वृत्रं हत्वा पुरा शक्रो ब्रह्महत्यासमन्वितः ॥

अब्रवीत्स ऋषीन्दिव्यान्कथमेषा गमिष्यति ॥ २ ॥

ब्रह्महत्या हि दुष्प्रेक्ष्या विवर्णजननी मम ॥

दुर्गंधचारिणी चैव सर्वतेजोविनाशिनी ॥ ३ ॥

अथोचुस्तं सुरगणा नारदाद्या महर्षयः ॥

प्रभासं गच्छ देवेश क्षेत्रं पापहरं हि तत् ॥ ४ ॥

तत्राराध्य महादेवं मोक्ष्यसे ब्रह्महत्यया ॥

स तथेति प्रतिज्ञाय गतस्तत्र वरानने ॥ ५ ॥

लिंगं संस्थापयामास देवदेवस्य शूलिनः ॥

तस्य पूजारतो नित्यं धूपगंधानुलेपनैः ॥ ६ ॥

ततोऽस्य गात्रदौर्गंध्यं नाशमाश्वभ्यगच्छत ॥

विवर्णत्वं गतं सर्वं वपुश्चाभूत्तथोत्तमम्॥ ७ ॥

अथ हृष्टमना भूत्वा वाक्यमेतदुवाच ह ॥

तत्रागत्य नरो भक्त्या यश्चैनं पूजयिष्यति ॥ ८ ॥

ब्रह्महत्यादिकं पापं नाशं तस्य प्रयास्यति ॥

एवमुक्त्वा सहस्राक्षः प्रहृष्टस्त्रिदिवं ययौ ॥ ९ ॥

ब्रह्महत्याविनिर्मुक्तः पूज्यमानो दिवौकसैः ॥

गोदानं तत्र दातव्यं ब्राह्मणे वेदपारगे ॥

ब्रह्महत्यापनोदार्थं तत्र श्राद्धं समाचरेत् ॥ 7.1.224.१० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य इन्द्रेश्वरमाहात्म्यवर्णनंनाम चतुर्विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२५



॥ ईश्वर उवाच ॥ ॥

ततोगच्छेन्महादेवि देवं चाऽनरकेश्वरम्॥

तस्मादुत्तरदिग्भागे सर्वपातकनाशनम् ॥

तन्माहात्म्यं प्रवक्ष्यामि शृणु ह्येकमनाः प्रिये ॥ १॥

मथुरानाम विख्याता नगरी धरणीतले॥

तत्र विप्रोऽभवत्पूर्वं देवशर्मेति विश्रुतः ॥

अगस्त्यगोत्रो विद्वान्वै स तु दारिद्र्यपीडितः ॥ २ ॥

अथापरोऽभवत्तत्र तादृग्रूपवयोऽन्वितः ॥

तन्नाम गोत्रो देवेशि ब्राह्मणो वेदपारगः ॥ ३ ॥

अथ प्राह यमो दूतं रौद्रमूर्धशिरोरुहम् ॥

गच्छ भो मथुरां शीघ्रं देवशर्माणमानय ॥ ४ ॥

अथागत्य ततो दूतो गृहीत्वा तत्र वै गतः ॥

तं दृष्ट्वाथ यमो नत्वा प्राह दूतं क्रुधान्वितः ॥ ५ ॥

नायमानेतुमादिष्टो देवशर्मा मया तव ॥

अन्योस्ति देवशर्मा यस्त मानय गतायुषम् ॥

एनं विप्रं च दीर्घायुं नय तत्राविलंबितम् ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

अथाब्रवीद्ब्राह्मणो वै नाहं यास्ये गृहं विभो ॥

दारिद्र्येणातिनिर्विण्णो यावज्जीवं सुरेश्वर ॥

इहैव क्षपयिष्यामि शेषमायुस्तवांतिके ॥ ७ ॥

॥ यम उवाच ॥ ॥

अकाले नात्र चायाति कश्चिद्ब्राह्मणसत्तम ॥

मुहूर्तमपि नो जीवेत्पूर्णकालेन वै भुवि ॥ ८ ॥

अत एव हि मे नाम धर्मराजेति विश्रुतम् ॥ ९ ॥

न मे सुहृन्न मे द्वेष्यः कश्चिदस्ति धरातले ॥

विद्धः शरशतेनापि नाऽकाले म्रियते यतः ॥ 7.1.225.१० ॥

कुशाग्रेणापि विद्धः सन्काले पूर्णे न जीवति ॥

तस्माद्गच्छ द्विजश्रेष्ठ यावद्गात्रं न दह्यते ॥ ११ ॥

अथाब्रवीद्ब्राह्मणोऽसौ यदि प्रेषयसे प्रभो ॥

प्रश्नमेकं मया पृष्टो यथावद्वक्तुमर्हसि ॥ १२ ॥

न वृथा जायते देव साधूनां दर्शनं क्वचित् ॥

युष्माकं च विशेषेण तस्मादेतदब्रवीम्यहम् ॥ १३ ॥

एते ये नरका रौद्रा दृश्यन्ते च सुदारुणाः ॥

कर्मणा केन कं गच्छेन्मानवो नरकं यम ॥ १४ ॥

कति संख्याः स्युरेते च नरकाः किंप्रमाणतः ॥

एतत्सर्वं सुरश्रेष्ठ यथावद्वक्तुमर्हसि ॥ १५ ॥

॥ यम उवाच ॥ ॥

शृणु देव प्रवक्ष्यामि यावन्तो नरकाः स्थिताः ॥

कर्मणा येन गच्छेत मानवो द्विजसत्तम ॥

एकविंशत्समाख्याता नरका मम मन्दिरे ॥ १६ ॥

यानेतान्प्रेक्षसे विप्र यंत्र मध्ये व्यवस्थितान् ॥

पीड्यमानान्किंकरैर्मे कृतघ्नान्पा पसंयुतान् ॥ १७ ॥

लोहास्यवायसा येषां नेत्रोद्धारं प्रकुर्वते ॥

एतैर्निरीक्षितान्येव कलत्राणि दुरात्मभिः ॥ १८ ॥

परेषां द्विजशार्दूल सरागैः पापि भिः सदा ॥

कुम्भीपाकगतानेतानथ पश्यसि पापिनः ॥ १९ ॥

कूटसाक्ष्यरता ह्येते कटुवाङ्निरतास्तथा ॥

एते लोहमयास्तम्भान्संतप्तान्पावकप्र भान् ॥ 7.1.225.२० ॥

आलिंगंति दुरात्मानः परदाररतास्तु ये ॥

एते वैतरणीमध्ये पूयशोणितसंकुले ॥ २१ ॥

ये तिष्ठंति द्विजश्रेष्ठ सर्वे विश्वासघातकाः ॥

असिपत्रवने घोरे भिद्यन्ते ये तु खण्डशः ॥

ते नष्टाः स्वामिनं त्यक्त्वा संग्रामे समुपस्थिते ॥ २२ ॥
अंगारराशीन्वै दीप्तान्ये गाहन्ते नराधमाः ॥
स्वामिद्रोहरता ह्येते तथा हेतुप्रवादकाः ॥ २३ ॥
लोहशंकुभिराकीर्णमाक्रमन्ति नराधमाः ॥
क्रन्दमाना द्विजश्रेष्ठ उपानद्दानवर्जिताः ॥ २४ ॥
अधोमुखा निबद्धा ये वृक्षाग्रे पावकोपरि ॥
ब्रह्महत्यान्विताः सर्व एते चैव नराधमाः ॥ २५ ॥
मशकैर्मत्कुणैः काकैर्ये भक्ष्यंते विहंगमैः ॥
व्रतभंगरता ह्येते व्रतिना चैव हिंसकाः ॥ २६ ॥
कुठारकण्ठिता ह्येते भूयः संति तथाविधाः ॥
गोहन्तारो दुरात्मानो देवब्राह्मणानिंदका ॥ २७ ॥
ये भक्ष्यंते शृगालैश्च वृकैर्लोहमयैर्मुखैः ॥
परस्वानां च हर्तारः परस्त्रीणां च हर्तृकाः ॥
आत्ममांसानि ये पापा भक्षयंति बुभुक्षिताः ॥ ॥ २८ ॥
न दत्तमन्नमेतैस्तु कदाचिद्वै द्विजोत्तम ॥
रुधिरं ये पिबंत्येते वसापूयपरिप्लुतम् ॥
ब्राह्मणानां विनाशाय गवामेते सदा स्थिताः ॥ ॥ २९ ॥
कूटशाल्मलिबद्धाश्च तीक्ष्णकण्टकपीडिताः ॥
छिद्रान्वेषणसंयुक्ताः परेषां नित्यसंस्थिताः ॥ 7.1.225.३० ॥
क्रकचेन तु छिद्यन्ते य इमे द्विजसत्तम ॥
अभक्ष्यनिरता ह्येते स्वधर्मस्य विदूषकाः ॥ ३१ ॥
कन्याविक्रयकर्त्तारः कन्यानां जीवभंजकाः ॥
पुरीषमध्यगा ह्येते पच्यंते मम किंकरैः ॥ ३२ ॥
संदेशैर्दारुणैर्जिह्वा येषामुत्पाट्यते मुहुः ॥
वाग्लोपनिरता ह्येते मृषावादपरायणाः ॥ ३३ ॥
ये शीतेन प्रबाध्यंते वेप माना मुहुर्मुहुः ॥
देवस्वानां च हर्तारो ब्राह्मणानां विशेषतः ॥ ३४ ॥
तेषां शिरसि निक्षिप्तो भूरिभारो द्विजोत्तम ॥

अतोऽमी ब्राह्मणश्रेष्ठ पूत्का रयन्ति भैरवम् ॥ ३५ ॥

॥ यम उवाच ॥ ॥

एवमेतत्समाख्यातं तव सर्वं द्विजोत्तम ॥

नरकाणां स्वरूपं तु कर्मणां वै यथाक्रमम् ॥ ३६ ॥

गच्छ शीघ्रं महाभाग यावत्कायो न दह्यते ॥ ३७ ॥

॥ ब्राह्मण उवाच ॥ ॥

कथय त्वं सुरश्रेष्ठ मम सर्वं समाहितः ॥

न गच्छेत्कर्मणा येन नरकं मानवः क्वचित् ॥ ३८ ॥

सतां सप्तपदं मैत्रमित्याहुर्बुद्धिकोविदाः ॥

मित्रतां च पुरस्कृत्य समासाद्वक्तुमर्हसि ॥ ३९ ॥

॥ यम उवाच ॥ ॥

प्रभासं क्षेत्रमासाद्या नरकेश्वरमुत्तमम् ॥

यः पश्यति नरो भक्त्या नरकं स न पश्यति ॥ 7.1.225.४० ॥

स्थापितं यन्मया लिंगं शिवभक्त्या युतेन च ॥

एतद्गुह्यं मया प्रोक्तं तव प्रीत्यै द्विजोत्तम ॥ ४१ ॥

गोपनीयं प्रयत्नेन मम वाक्यादसंशयम् ॥

एवमुक्तस्तदा विप्रः स्वयमेवावनिं ययौ ॥ ४२ ॥

लब्ध्वा कलेवरं सोऽथ विस्मयं परमं गतः ॥

तत्स्मृत्वा वचनं सर्वं धर्मराजस्य धीमतः ॥ ४३ ॥

गत्वा तत्र स नित्यं वै पूजयामास तं प्रभुम् ॥

यावज्जीवं वरारोहे ततः सिद्धिं परां गतः ॥ ४४ ॥

तस्मात्सर्वप्रयत्नेन भक्त्या तमवलोकयन् ॥

अपि पातकयुक्तोऽपि न याति नरके नरः ॥ ४५ ॥

आश्वयुक्कृष्णपक्षे तु चतुर्दश्यां विधानतः ॥

यस्तत्र कुरुते श्राद्धं सोऽश्वमेधफलं लभेत् ॥ ४६ ॥

कृष्णाजिनं तत्र देयं ब्राह्मणे वेदपारगे ॥

यावत्तिलानां संख्यानं तावत्स्वर्गे महीयते ॥ ४७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये ऽनरकेश्वरमाहात्म्यवर्णनंनाम पञ्चविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२६



॥ ईश्वर उवाच ॥ ॥

तस्यैव पूर्वभागे तु नैर्ऋते पापमोचनात् ॥

मेघेश्वरेति विख्यातं सर्वपातकनाशनम् ॥ १ ॥

अनावृष्टिभये जाते शांतिं तत्रैव कारयेत् ॥

वारुणीं विप्रमुख्यैस्तु भावयेदुदकैर्महीम् ॥ २ ॥

मेघैः प्रतिष्ठितं लिंगं यत्र नित्यं प्रपूज्यते ॥

अनावृष्टिभयं किंचिन्न च तत्र प्रजायते ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मेघेश्वरमाहात्म्यवर्णनंनाम षड्विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२७





॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि बलभद्रप्रतिष्ठितम् ॥

लिंगं महापापहरं गात्रोत्सर्गात्तदुत्तरे ॥ १ ॥

महालिंगं महादेवि महासिद्धि फलप्रदम् ॥

बलभद्रेण विधिना स्थापितं पापशुद्धये ॥ २ ॥

यस्तं पूजयते भक्त्या गन्धपुष्पादिभिः क्रमात् ॥

तृतीयारेवतीयोगे स योगेशपदं लभेत् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बलभद्रेश्वरमाहात्म्य वर्णनंनाम सप्तविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मातृस्थानमनुत्तमम् ॥

भैरवेशेति विख्यातं सर्वभयविनाशनम् ॥ १ ॥

चतुर्दश्यां विधानेन कृष्णपक्षे यतात्मवान् ॥

पूजयेद्गन्धपुष्पैश्च बलिदानैस्तथोत्तमैः ॥ २ ॥

तं पुत्रमिव योगिन्यो रक्षंति भुवि मातरः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये भैरवेश्वरमातृगणमाहात्म्यवर्णनंनामाष्टाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २२९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गंगां त्रिपथगामिनीम् ॥

अनरकेशतो देवि ऐशान्यां दिशि संस्थिताम् ॥ १ ॥

स्वयंभूतां धरामध्यादानीतां विष्णुना पुरा ॥

यादवानां तु मुक्त्यर्थं सर्वपापोपशान्तये ॥ २ ॥

यस्तत्र कुरुते स्नानं कथंचित्पुण्यसंचयात् ॥

श्राद्धं चैव विधानेन न स शोचेत्कृताकृते ॥ ३ ॥

ब्रह्माण्डं सकलं दत्त्वा यत्पुण्यफलमाप्नुयात् ॥

तत्पुण्यं प्राप्नुयाद्देवि कार्तिक्यां जाह्नवीजले ॥ ४ ॥

कलौ युगे तु संप्राप्ते दुर्ल्लभं तत्र दर्शनम्॥

किं पुनः स्नानदानं तु प्रभासे जाह्नवीजले ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गंगामाहात्म्यवर्णनंनामैकोनत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २२९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं गणपतिप्रियम् ॥

तत्रैव संस्थितं सम्यङ्ज्ञया तत्र नियोजितः ॥ १ ॥

गङ्गाया दक्षिणे देवि क्षेत्ररक्षणतत्परः ॥

माघे कृष्णचतुर्दश्यां यस्तं पूजयते नरः ॥ २ ॥

दिव्यमोदकनैवेद्यैः पुष्पधूपादिभिः क्रमात् ॥

न तस्य जायते विघ्नं यावत्क्षेत्रे वसत्यसौ ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गणपतिमाहात्म्यवर्णनंनाम त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३० ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यत्र जांबवती नदी ॥

पुरा जांबवतीनाम विष्णोर्या महिषीप्रिया ॥

अपृच्छदर्जुनं साध्वी वद वार्तां कुरू द्वह ॥ १ ॥

तस्यास्तद्वचनं श्रुत्वा अर्जुनो निश्वसन्मुहुः ॥

वाष्पगद्गदया वाचा इदं वचनमब्रवीत् ॥ २ ॥

परित्यक्ता वयं भद्रे यादवैः सुमहात्मभिः ॥९

बलदेवस्य वीरस्य सात्यकेश्च महात्मनः ॥ ३ ॥

अन्येषां यदुवीराणां पापकर्मातिनिर्घृणः ॥

जिजीविषुरिह प्राप्तो वासुदेवनिराकृतः ॥ ४ ॥

सा श्रुत्वा भर्तृनिधनमर्जुनाच्च महासती ॥

गंगातीरे समुत्पाद्य पावकं पावकप्रभा ॥

समुत्सृज्य महाकायं नदीभूत्वा विनिर्ययौ ॥ ५ ॥

सा गृहीत्वा सती भर्तुर्भस्म सर्वं चितेस्तथा ॥

प्रविष्टा सागरं देवि तदा जांबवती शुभा ॥६॥

या नारी तत्र देवेशि भक्त्या स्नानं समाचरेत् ॥

तदन्वयेपि काचित्स्त्री न वैधव्यमवाप्नुयात् ॥ ७ ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥

नरो वा यदि वा नारी प्राप्नोति परमां गतिम् ॥ ८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये जांबवतीनदीमाहात्म्यवर्णनंनामैकत्रिंशदुत्तरद्वि शततमोऽध्यायः ॥ २३१ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कूपं त्रैलोक्यपूजितम् ॥

पश्चिमे तस्य तीर्थस्य पांडवानां महात्मनाम् ॥ १ ॥

यदाऽरण्यमनुप्राप्ताः पांडवाः पृथिवीतले ॥

भ्रममाणा महादेवि प्रभासं क्षेत्रमागताः ॥ २ ॥

ततस्ते न्यवसंस्तत्र किंचित्कालं समाहिताः ॥

गत्वा क्षेत्रं महापुण्यं ततः कृष्णाऽब्रवीदिदम् ॥ ३ ॥

ब्राह्मणानां सहस्राणि भुंजते भवतां गृहे ॥

दूरे जलाश्रयश्चैव न तावंतश्च किंकराः ॥ ४ ॥

तस्माज्जलाश्रयः कार्यं आश्रमस्य समीपतः ॥

यत्र स्नानं करिष्यामि युष्माकं संप्रसादतः ॥ ५ ॥

ततस्तु पांडवाः सर्वे सहितास्ते वरानने ॥

अखनंस्तत्र ते कूपं द्रौपदीवाक्यप्रेरिताः ॥ ६ ॥

अथाजगाम तत्रैव भगवान्देवकीसुतः ॥

श्रुत्वा समागतान्पार्थान्द्वारावत्याः सबांधवः ॥ ७ ॥

प्रद्युम्नेन च सांबेन गदेन निषधेन च ॥

युयुधानेन रामेण चारुदेष्णेन धीमता ॥ ८ ॥

अन्यैः परिवृतः शूरैर्यादवैर्युद्ध दुर्मदैः ॥

ते समेत्य यथान्यायं समस्ता यदुपुंगवाः ॥ ९ ॥

ततः कथावसाने च कस्मिंश्चित्कारणांतरे ॥

वासुदेवः पांडुसुतमिदं वचनमब्रवीत् ॥ ॥ 7.1.232.१० ॥

युधिष्ठिर महाबाहो किं ते कामकरोम्यहम् ॥

राज्यं धान्यं धनं चापि अथवा रिपुनाशनम् ॥ ११ ॥

॥ युधिष्ठिर उवाच ॥ ॥

शक्तस्त्वं यादवश्रेष्ठ सर्वकर्मस्ववसंशयः ॥
प्रतिज्ञातं त्वया पूर्वं वर्षैर्द्वादशभिः प्रियम्॥ १२ ॥
तन्नास्ति त्रिषु लोकेषु यन्न सिद्ध्यति भूतले ॥
त्वयि तुष्टे जगन्नाथ सर्वदेवनमस्कृते ॥ १३ ॥
अवश्यं यदि तुष्टोऽसि मम सर्वजगत्पते ॥
अत्र सांनिध्यमागच्छ कूपे नित्यं जनार्दन ॥ १४ ॥
अत्रागत्य नरो यस्तु भक्त्या स्नानं समाचरेत् ॥
स यातु वैष्णवं स्थानं प्रसादात्तव केशव ॥ १५ ॥
॥ ईश्वर उवाच ॥ ॥
एवं भविष्यतीत्युक्त्वा तदाऽमन्त्र्य युधिष्ठिरम् ॥
प्रययौ द्वारकां कृष्णः सर्वलोकनमस्कृतः ॥ १६ ॥
तस्मिञ्छ्राद्धं नरः कृत्वा वाजिमेधफलं लभेत् ॥
प्रसादाद्देवदेवस्य विष्णोरमिततेजसः ॥ १७ ॥
तदर्धं तर्पणेनैव स्नानात्पादमवाप्नुयात् ॥
तस्मात्सर्वप्रयत्नेन तत्र श्राद्धं समाचरेत् ॥ १८ ॥
ज्येष्ठस्य पौर्णमास्यां यः स्नानं श्राद्धं करिष्यति ॥
सावित्रीं चैव संपूज्य स यास्यति परमं पदम् ॥ १९ ॥
गोदानं तत्र देयं तु सम्यग्यात्राफलेप्सुभिः ॥7.1.232.२०॥
इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पांडवकूपमाहात्म्यवर्णनंनाम द्वात्रिंशदुत्तरद्विशततमोऽध्यायः ॥ ॥ २३२ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३३



॥ ईश्वर उवाच ॥ ॥

तत्रैव पूजयेद्देवि पंच लिंगानि भावितः ॥

प्रतिष्ठितानि देवेशि पांडवैश्च महात्मभिः ॥ १ ॥

यस्तान्पूजयते भक्त्या स मुक्तः पातकैर्भवेत् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पांडवेश्वरमाहात्म्यवर्णनंनाम त्रयस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तीर्थं त्रैलोक्यविश्रुतम् ॥

दशाश्वमेधिकंनाम महापातकनाशनम् ॥ १ ॥

वाजिमेधः पुरा चेष्टं दशभिस्तत्र भामिनि ॥

भरतेन समागत्य मत्वा क्षेत्रमनुत्तमम् ॥ २ ॥

तत्र तृप्तः सहस्राक्षः सोमनाथेन भामिनि ॥

कृपणाः खानपानैश्च दक्षिणाभिर्द्विजातयः ॥ ३ ॥

अथोचुस्त्रिदशाः सर्वे सुप्रीता भरतं नृपम् ॥

तुष्टास्तव महाबाहो यज्ञैः संतर्पिता वयम् ॥

वरं वृणीष्व राजेंद्र यत्ते मनसि वर्त्तते ॥ ४. ॥

॥ राजोवाच ॥ ॥

अत्रागत्य नरो भक्त्या यः स्नानं कुरुते नरः ॥

दशानामश्वमेधानां स प्राप्नोतु फलं शुभम् ॥. ५ ॥

॥ देवा ऊचुः ॥ ॥

दशानामश्वमेधानां श्रद्धया फलमाप्स्यति ॥

दशाश्वमेधिकंनाम तीर्थमेतन्महीतले ॥

ख्यातिं यास्यति राजेंद्र नात्र कार्या विचारणा ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

ततः प्रभृति तत्तीर्थं प्रख्यातं धरणीतले ॥

दशाश्वमेधिकमिति सर्वपापप्रणाशनम् ॥ ७ ॥

ऐंद्रवारुणमाश्रित्य गोमुखादाऽऽश्वमेधिकम् ॥

अत्रांतरे महादेवि शिवक्षेत्रं विदुर्बुधाः ॥ ८ ॥

सर्वपापहरं दिव्यं स्वर्गसोपानसंनिभम् ॥

सपादकोटितीर्थानां स्थानं तत्परिकीर्तितम ॥ ९ ॥

प्राणत्यागे कृते तत्र शिवलोके च मोदते ॥

तिर्यग्योनिगताः पापा कीटपक्षिमृगादयः ॥ 7.1.234.१० ॥

तेऽपि यांति परं स्थानं यत्र देवो महेश्वरः ॥

तिलोदकप्रदानेन मातृकाः पैतृकास्तथा ॥ ११ ॥

पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ॥

तत्रेष्टा ब्रह्मणा पूर्वमसंख्याता मखोत्तमाः ॥ १२ ॥

शक्रश्च देवराजत्वे तत्रेष्ट्वा समवाप्तवान् ॥

कार्त्तवीर्येण तत्रैव कृतं यज्ञशतं पुरा ॥ १३ ॥

एवं तत्प्रवरं स्थानं क्षेत्रगर्भांतिकं प्रिये ॥

मृतानां तत्र जंतूनामपुनर्भवदायकम् ॥ १४ ॥

वृषोत्सर्गं तु यस्तत्र कुर्याद्वै भावितात्मवान् ॥

यावंति वृषरोमाणि तावत्स्वर्गे महीयते ॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्र माहात्म्ये दशाश्वमेधमाहत्म्यवर्णनंनाम चतुस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३५

https://sa.wikisource.org/s/gen
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येल्लिंगत्रयमनुत्तमम् ॥

शतमेधं सहस्रमेधं कोटिमेधमिति क्रमात् ॥ १ ॥

दक्षिणे शतमेधं तु शतयज्ञफलप्रदम् ॥

कार्तवीर्य्येण तत्रैव कृतं यज्ञशतं पुरा ॥ २ ॥

प्रतिष्ठाप्य महालिंगं सर्वपातकनाशनम् ॥

मध्यभागेऽत्र यल्लिंगं कोटिमेधेति विश्रुतम् ॥ ३ ॥

तत्रेष्टा ब्रह्मणा पूर्वं कोटि संख्या मखोत्तमाः ॥

संस्थाप्य तु महादेवं शंकरं लोकशंकरम ॥ ४ ॥

तस्य उत्तरभागस्थं सहस्रक्रतुसंज्ञकम् ॥

शक्रश्च देवराजोऽपि सहस्रं यष्टवान्क्रतून् ॥ ५ ॥

प्रतिष्ठाप्य महालिंगं देवानामादिदैवतम् ॥

गंधपुष्पादिविधिना पंचामृतरसोदकैः ॥ ६ ॥

स प्राप्नुयात्फलं देवि लिंगनामोद्भवं क्रमात् ॥

गोदानं तत्र देयं तु सम्यग्यात्राफलेप्सुभिः ॥७॥

दशलक्षाणि तीर्थानां तत्र तिष्ठंति भामिनि ॥

लिंगत्रयं तथा मध्ये सर्वपातकनाशनम् ॥ ॥ ८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये दशाश्वमेधमाहात्म्ये शतमेधादि लिंगत्रयमाहात्म्यवर्णनंनाम पञ्चत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३६



ततो गच्छेन्महादेवि दुर्वासादित्यमुत्तमम् ॥

यत्र दुर्वाससा तप्तं तपो वर्षसहस्रकम् ॥

निराहारो जिताहारः सूर्याराधनतत्परः ॥ १ ॥

एवं कालेन महता दिव्यतेजा जनाधिपः ॥

प्रत्यक्षं दर्शनं गत्वा प्राह सूर्यो महामुनिम् ॥ २ ॥

॥ सूर्य उवाच ॥ ॥

मा ब्रह्मन्साहसं कार्षीर्वरं वरय सुव्रत ॥

अप्राप्यमपि दास्यामि यत्ते मनसि वर्तते ॥ ३ ॥ ॥

॥ दुर्वासा उवाच ॥ ॥

प्रसन्नो यदि मे देव वरार्हो यदि चाऽप्यहम् ॥

अत्र स्थाने त्वया स्थेयं यावत्तिष्ठति मेदिनी ॥ ४ ॥

दुर्वासादित्यना माऽत्र लोके ख्यातिं च गच्छतु ॥

मया प्रतिष्ठिता या तु प्रतिमा तव सुन्दरी ॥५ ॥

तस्यां सांनिध्यमेवास्तु तव देव जगत्पते ॥

सांनिध्यं कुरुत चात्र यमुना दुहिता तव ॥

त्वत्सुतस्तु महातेजा धर्मराजो महाबलः ॥ ६ ॥

॥ सूर्य उवाच ॥ ॥

एतत्सर्वं मुनिश्रेष्ठ त्वयोक्तं संभविष्यति ॥

तीर्थानां कोटिरन्या च गंगादीनां महामुने ॥ ७ ॥

आगमिष्यति ते स्थानं निश्चितं वचनान्मम ॥

अत्र स्थाने मया ब्रह्मन्स्थातव्यं सह दैवतैः ॥ ८॥

आदित्यानां प्रभावैस्तु ब्रह्मांडोदरवासिनाम्॥

तेषां माहात्म्यसंयुक्तः स्थास्ये चात्र महामुने ॥ ९ ॥

सवितॄणां सहस्रेण दृष्टेनैव तु यत्फलम् ॥

तत्फलं कोटिगुणितं दुर्वासादित्यदर्शनात्॥7.1.236.१०॥

लप्स्यंते प्राणिनः सर्वे यज्ञकोटिफलं तथा ॥

एवमुक्त्वा तदा सूर्यः सस्मार तनयां निजाम् ॥

तथा च धर्मराजानं सर्वप्राणिनियामकम् ॥ ११ ॥

स्मृतमात्रा तत्र भित्त्वा पातालतलमुद्ययौ ॥

सा नदीरूपिणी देवी तीर्थकोटिसमन्विता॥१२॥

यमश्च तत्र भगवान्कालदंडधरस्तदा ॥

ऊचतुः प्रणयोपेतौ सूर्यं भुवनसाक्षिणम् ॥ १३ ॥

॥ यम उवाच ॥ ॥

आज्ञापयतु मां देवो यमुनां च जगत्प्रभुः ॥

कार्यं यद्भाविनोऽर्थस्य तत्करिष्ये न संशयः ॥१४॥

॥ सूत उवाच ॥ ॥

अत्र क्षेत्रे स्वरूपेण स्थातव्यं वचनान्मम ॥

पापिनां प्राणिनां चात्र रक्षा कार्या प्रयत्नतः ॥ १५ ॥

सूर्यभक्ताः सदा रक्ष्या ब्राह्मणा गृहमेधिनः ॥

त्वं चापि यमुने चात्र कोटितीर्थेन संयुता ॥ १६ ॥

वस त्वं भव सुप्रीता स्थाने दुर्वाससोद्भवे ॥

इत्येवमुक्त्वा देवेशस्तत्र दुर्वाससोंऽतिके ॥१७॥

पश्यतां सर्वदेवानामंतर्द्धानमगात्प्रभुः ॥

दुर्वासास्तु तदा हृष्टो यावत्पश्यति स्वाश्रमम्॥१८॥

तावत्पातालमार्गेण यमुना प्रादुराभवत् ॥

यमश्च भगवांस्तत्र दृष्टः क्षेत्रपरूपधृक् ॥१९॥

॥ ईश्वर उवाच ॥ ॥

इत्थं समभवत्तत्र यमुनोद्भेदमुत्तमम्॥

कुण्डमादित्यतो याम्ये दुंदुभिस्तत्र पूर्वतः ॥ 7.1.236.२० ॥

क्षेत्रपालो महादेवि यतो दुंदुभिनिःस्वनः ॥

तत्र स्नात्वा महाकुण्डे यः संतर्पयते पितॄन्॥ २१ ॥

दश वर्षाणि पञ्चैव तृप्तिं यांति पितामहः ॥

पिंडदानेन दत्तेन पितॄणां तुष्टिमावहेत् ॥

नरके तु स्थितानां च मुक्तिर्भूयान्न संशयः ॥२२॥

माघे मासि सिते पक्षे सप्तम्यां संयतात्मवान् ॥

दुर्वासार्कं च संपूज्य मुच्यते ब्रह्महत्यया ॥ २३ ॥

स्नात्वा तु यमुना कुण्डे माधवे मासि मानवः ॥

पूजयेद्भक्तिभावेन रविं गगनभूषणम् ॥ २४ ॥

पठेत्सहस्रं नाम्ना तु दुर्वासादित्यसंनिधौ ॥

षण्मासान्मुच्यते जंतुर्यद्यपि ब्रह्महा नरः ॥ २५॥

सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् ॥

दुर्वासादित्यनामानं सूर्यं को नु न पूजयेत् ॥ २६ ॥

न तदस्ति भयं किंचिद्यदनेन न शाम्यति ॥

दर्शनेनापि सूर्यस्य तत्र दुर्वाससः प्रिये ॥ २७ ॥

संपद्यंते तथा कामाः सर्व एव यथेप्सिताः ॥

बंध्यानां पुत्रफलदं भीतानां भयनाशनम्॥ २८ ॥

भूतिप्रदं दरिद्राणां कुष्ठिनां परमौषधम् ॥

बालानां चैव सर्वेषां ग्रहरक्षोनिवारणम् ॥

महापापोपशमनं दुर्वासादित्यदर्शनम्॥ २९ ॥

हेमाश्वस्तत्र दातव्यः सूर्यमुद्दिश्य भामिनि ॥

ब्राह्मणे वेदसंयुक्ते तेन दत्ता मही भवेत् ॥ 7.1.236.३० ॥

यस्तत्र पूजयेद्देवं क्षेत्रपालं च दुन्दुभिम् ॥

स पुत्रपशुमान्धीमाञ्छ्रीमान्भवति मानवः ॥ ३१ ॥

न भयं जायते तस्य त्रिविधं वरवर्णिनि ॥

अर्धगव्यूतिमात्रं तु तत्र क्षेत्रं रवेः स्मृतम्॥ ३२ ॥

न तत्र प्रविशेज्जन्तुः सूर्यभक्तिविवर्जितः ॥

इत्येतत्कथितं देवि माहात्म्यं सूर्यदैवतम् ॥ ३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये दुर्वासादित्यमाहात्म्यवर्णनंनाम षट्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ ॥ २३६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यादवस्थलमुत्तमम् ॥

यादवा यत्र नष्टा वै षट्पंचाशच्च कोटयः ॥ १ ॥

यत्र वज्रेश्वरो देवो वज्रेणाराधितः सदा ॥

यत्राभूद्दिव्यदृष्टीनामृषीणामाश्रमं कुलम् ॥ २ ॥

॥ देव्युवाच ॥ ॥

कथं विनष्टा भगवन्ननन्धका वृष्णिभिः सह ॥

पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ॥ ३ ॥

केन शप्तास्तु ते वीरा नष्टा वृष्ण्यन्धकादयः ॥

भोजाश्चैव महादेव विस्तरेण वदस्व मे ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

षट्त्रिंशे च कलौ वर्षे संप्राप्तेऽन्धकवृष्णयः ॥

अन्योन्यं मुशलैस्ते हि निजघ्नुः कालनोदिताः ॥ ५ ॥

विश्वामित्रं च कण्वं च नारदं च यशस्विनम् ॥

सारणप्रमुखान्भोजान्ददृशुर्द्वारकां गतान् ॥ ६ ॥

ते वै सांबं समानिन्युर्भूषयित्वा स्त्रियं यथा ॥

अब्रुवन्नुपसंगम्य देवदंडनिपीडिताः ॥ ७ ॥

इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ॥

ऋषयः साधु जानीत किमियं जनयिष्यति ॥ ८ ॥

इत्युक्तास्ते तदा देवि विप्रलंभप्रधर्षिताः ॥

प्रत्यब्रुवंस्तान्मुनयस्तच्छृणुष्व यथातथम् ॥ ९ ॥

॥ ऋषय ऊचुः ॥ ॥

वृष्ण्यन्धकविनाशाय मुशलं घोरमायसम्॥

वासुदेवस्य दायादः सांबोऽयं जनयिष्यति ॥ 7.1.237.१० ॥

येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ॥

उच्छेत्तारः कुलं सर्वमृते रामाज्जनार्द्दनात् ॥ ११ ॥

त्यक्त्वा यास्यति वः श्रीमांत्यक्त्वा भूमिं हलायुधः ॥

जरा कृष्णं महाभागं शयानं तु निवेत्स्यति ॥ १२ ॥

इत्यब्रुवंस्ततो देवि प्रलब्धास्ते दुरात्मभिः ॥

मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् ॥ १३ ॥

तथोक्ता मुनयस्ते तु ततः केशवमभ्ययुः ॥

अथावदत्तदा वृष्णीञ्छ्रुत्वैवं मधुसूदनः ॥ १४ ॥

अभिज्ञो मतिमांस्तस्य भवितव्यं तथेति तत् ॥

एवमुक्त्वा हृषीकेशः प्रविवेश पुनर्गृहान् ॥ १५ ॥

कृतांतमन्यथाकर्त्तुं नैच्छत्स जगतः प्रभुः ॥

श्वोभूते सततः सांबो मुसलं तदसूत वै ॥१६॥

येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः॥

वृष्ण्यन्धकविनाशाय किंकरप्रतिमं महत् ॥ १७ ॥ (किंकर – यमकिंकर)

असूत शापजं घोरं तच्च राज्ञे न्यवेदयत् ॥

विषण्णोऽथ ततो राजा सूक्ष्मं चूर्णमकारयत् ॥ १८ ॥

प्राक्षिपत्सागरे तत्र पुरुषो राजशासितः ॥

अथोवाच स्वनगरे वचनादाहुकस्य हि ॥ १९ ॥

जनार्द्दनस्य रामस्य बभ्रोश्चैव महात्मनः ॥

अद्यप्रभृति सर्वेषां वृष्णन्धकगृहेष्विह ॥

सुरासवो न कर्त्तव्यः सर्वैर्विषयवासिभिः ॥ 7.1.237.२॥।

यश्च वो विदितं कुर्यादेवं कश्चित्क्वचिन्नरः ॥

स जीवञ्छूलमारोहेत्स्वयं कृत्वा सबांधवः ॥ २१ ॥

ततो राजभयात्सर्वे नियमं तत्र चक्रिरे ॥

नराः शासनमाज्ञाय रामस्याक्लिष्टकर्मणः ॥ २२ ॥

एवं प्रयतमानानां वृष्णीनामन्धकैः सह ॥

कालो गृहाणि सर्वाणि परिचक्राम नित्यशः ॥ २३ ॥

करालो विकटो मुंडः पुरुषः कृष्णपिंगलः ॥

सम्मार्जनी महाकेतुर्जपापुष्पावतंसकः ॥ २४ ॥

कृकलासवाहनश्च रत्तिकाकर्णभूषणः ॥

गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत पुनः क्वचित् ॥ २५ ॥

तस्य चासन्महेष्वासाः शरैः शतसहस्रशः ॥

न चाशक्यत वेद्धुं स सर्वभूताप्ययं सदा ॥ २६ ॥

उत्पेदिरे महावाता दारुणा हि दिने दिने ॥

वृष्ण्यन्धकविनाशाय बहवो लोमहर्षणाः ॥ २७ ॥

विवृद्ध्य मूषिका रथ्यावितुन्नमणिकास्तथा ॥

केशान्ददंशुः सुप्तानां नृणां युवतयो निशि ॥ २८ ॥

चीचीकूचीत्यवाशंत सारिका वृष्णिवेश्मसु ॥

नोपशाम्यति शब्दश्च स दिवारात्रमेव वा ॥ २९ ॥

अन्वकुर्वन्नुलूकाश्च वायसान्वृष्णिवेश्मसु ॥

अजाः शिवानां च रुतमन्वकुर्वत भामिनि ॥ 7.1.237.३० ॥

पांडुरारक्तपादाश्च विहगाः कालप्रेरिताः ॥

वृष्ण्यन्धकगृहेष्वेवं कपोता व्यचरंस्तदा ॥ ३१ ॥

व्यजायंत खरा गोषु करभाश्वाश्वतरीषु च ॥

शुनीष्वपि बिडालाश्च मूषका नकुलीषु च ॥ ३२ ॥

तापत्रयांत पापानि कुर्वंतो वृष्णयस्तथा ॥

अद्विषन्ब्राह्मणांश्चापि पितॄन्देवांस्तथैव च ॥३३॥

गुरूंश्चाप्यवमन्यंते न तु रामजनार्दनौ ॥

भार्याः पतीन्व्युच्चरंति पत्नीश्च पुरुषास्तथा ॥ ३४ ॥

विभावसुः प्रज्वलितो वामं विपरिवर्त्तते ॥

नीललोहितमांजिष्ठा विसृजंश्चार्चिषः पृथक् ॥ ३५ ॥

उदयास्तमने नित्यं पर्यस्तः स्याद्दिवाकरः ॥

व्यदृश्यत सकृत्पुंभिः कबन्धैः परिवारितः ॥ ३६ ॥

महानसेषु सिद्धांते संस्कृतेऽन्ने तु भामिनि ॥

उत्तार्यमाणे कृमयो दृश्यंते च वरानने ॥ ३७ ॥

पुण्याहे वाच्यमाने च पठत्सु च महात्मसु ॥

अभिधावंति श्रूयंते न चादृश्यत कश्चन ॥ ३८ ॥

परस्परस्य नक्षत्रं हन्यमानं पुनःपुनः ॥

ग्रहैरपश्यन्सर्वैस्ते नात्मनस्तु कथञ्चन ॥ ३९ ॥

न हुतं पाचयत्यग्निर्वृष्ण्यंधकपुरस्कृतम् ॥

समंतात्प्रत्यवाशंत रासभा दारुणस्वनाः ॥ 7.1.237.४० ॥

एवं पश्यन्हृषीकेशः संप्राप्तान्कालपर्ययान् ॥

त्रयोदशीं ह्यमावास्यां तां दृष्ट्वा प्राब्रवीदिदम्॥ ४१ ॥

त्रयोदशी पंचदशी कृतेयं राहुणा पुनः ॥

तदा च भारते युद्धे प्राप्ता चाद्य क्षयाय नः ॥ ४२ ॥

धिग्धिगित्येवकालं तं परिचिंत्य जनार्दनः ॥

मेने प्राप्तं स षट्त्रिंशं वर्षं केशिनिषूदनः ॥

पुत्रशोकाभिसंतप्ता गांधारी यदुवाच ह ॥ ४३ ॥

एवं पश्यन्हृषीकेशस्तदिदं समुपस्थितम्॥

इदं च समनुप्राप्तमब्रवीद्यद्युधिष्ठिरः ॥ ४४ ॥

पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान्सुदारुणान्॥

पुण्यग्रन्थस्य श्रवणाच्छांतिहोमाद्विशोधनात् ॥४५॥

पूततीर्थाभिषेकांच्च नान्यच्छ्रेयो भवेदिति ॥

इत्युक्त्वा वासुदेवस्तच्चिकीर्षन्सत्यमेव च ॥

आज्ञापयामास तदा तीर्थयात्रामरिंदमः ॥ ४६ ॥

अघोषयंत पुरुषास्तत्र केशवशासनात् ॥

तीर्थयात्रा प्रभासे वै कार्येति वरवर्णिनि ॥ ४७ ॥

अथारिष्टानि वक्ष्यामि पुरीं द्वारवतीं प्रति ॥

काली स्त्री पांडुरैर्दंतैः प्रविश्य नगरीं निशि ॥ ४८ ॥

स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां प्रति धावति ॥

अग्निहोत्रनिकेतं च सुमेध्येषु च वेश्मसु ॥ ४९ ॥

वृष्ण्यंधकांश्च खादंती स्वप्ने दृष्टा भयानका ॥

कुर्वंती भीषणं नादं कुर्कुटश्वानसंयुता ॥ 7.1.237.५० ॥

तथा सहस्रशो रौद्राश्चतुर्बाहव एव च ॥

स्त्रीणां गर्भेष्वजायंत राक्षसा गुह्यकास्तथा ॥ ॥ ५१ ॥

अलंकाराश्च च्छत्राणि ध्वजाश्च कवचानि च ॥

ह्रियमाणानि दृश्यंते रक्षोभिस्तु भयानकैः ॥ ५२॥

यच्चाग्निदत्तं कृष्णस्य वज्रनाभमयस्मयम् ॥

दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ ५३ ॥

युक्तं रथं दिव्यमादित्यवर्णं भयावहं पश्यतो दारुकस्य ॥

ते सागरस्योपरिष्टाद्वर्तमानान्मनोजवांश्चतुरो वाजिमुख्यान् ॥ ५४ ॥

तालः सुपर्णश्च महाध्वजौ तौ सुपूजितौ रामजनार्दनाभ्याम् ॥

उच्चैर्जगुः स्वप्सरसो दिवानिशं वाचं चोचुर्गम्यतां तीर्थयात्राम् ॥ ५५ ॥

ततो जिगमिषंतस्ते वृष्ण्यंधकमहारथाः ॥

सांतःपुरास्तीर्थयात्रामीहंते स्म नरर्षभाः ॥५६॥

ततो मांसपरा हृष्टाः पेयं वेश्मसु वृष्णयः ॥

बहु नानाविधं चक्रुर्मांसानि विविधानि च ॥ ५७ ॥

तथा सीधुषु बद्धेषु निर्ययुर्नगराद्बहिः ॥

यानैरश्वैर्गजैश्चैव श्रीमंतस्तिग्मतेजसः ॥ ५८ ॥

ततः प्रभासे न्यवसन्यथोद्देशं यथागृहम् ॥

प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ ५९ ॥

निर्विष्टांस्तान्निशम्याथ समुद्रांते स योगवित् ॥

जगामामंत्र्य तान्वीरानुद्धवोर्थविशारदः ॥ 7.1.237.६० ॥

प्रस्थितं तं महात्मानमभिवाद्य कृतांजलिम्॥

जानन्विनाशं भोजानां नैच्छद्वारयितुं हरिः ॥ ६१ ॥

ततः कालपरीतास्ते वृष्ण्यंधकमहारथाः ॥

अपश्यन्नुद्धवं यांतं तेजसाऽऽदीप्य रोदसी ॥ ६२ ॥

ब्राह्मणार्थेषु यत्क्लृप्तमन्नं तेषां वरानने ॥

तद्वाहनेभ्यः प्रददुः सुरागंधरसान्वितम्॥६३॥

ततस्तूर्यशताकीर्णं नटनर्त्तकसंकुलम्॥

प्रावर्त्तत महापानं प्रभासे तिग्मतेजसाम्॥ ६४॥

कृष्णस्य संनिधौ रामः सहितः कृतवर्मणा ॥

अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥६५॥

ततः परिषदो मध्ये युयुधानो मदोत्कटः ॥

अब्रवीत्कृतवर्माणमवहस्यावमन्य च ॥ ६६ ॥

कः क्षत्रियो मन्यमानः सुप्तान्हन्यान्मृतानिव ॥

न तन्मृष्यत हार्दिक्यस्त्वया तत्साधु यत्कृतम् ॥ ६७ ॥

इत्युक्ते युयुधानेन पूजयामास तद्वचः ॥

प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमथ भर्त्सयन् ॥ ६८ ॥

ततः पुनरपि क्रुद्धः कृतवर्मा तमब्रवीत् ॥

निर्विशन्निव सावज्ञं तदा सव्येन पाणिना ॥ ६९ ॥

भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायोगतस्त्वया ॥

व्याधेनेव नृशंसेन कथं वैरेण घातितः ॥ 7.1.237.७० ॥

इति तस्य वचः श्रुत्वा केशवः परवीरहा ॥

तिर्यक्सरोषया दृष्ट्या वीक्षांचक्रे समः पुमान् ॥ ७१ ॥

मणिं स्यमंतकं चैव यः स सत्राजितोऽभवत् ॥

स कथं स्मारयामास सात्यकिर्मधुसूदनम् ॥ ७२ ॥

तच्छ्रुत्वा केशवस्यांकमगमद्रुदती सती ॥

सत्यभामा प्रक्षुभिता कोपयन्ती जनार्द्दनम् ॥ ७३ ॥

तत उत्थाय स क्रोधात्सात्यकिर्वाक्यमब्रवीत् ॥

पंचानां द्रौपदेयानां धृष्टद्युम्नशिखंडिनः ॥ ७४ ॥

एष गच्छामि पदवीं सत्ये तव पथे सदा ॥

सौप्तिके निहता ये च सुप्तास्तेन दुरात्मना ॥ ७५ ॥

द्रोणपुत्रसहायेन पापेन कृतवर्मणा ॥

समाप्तं चायुरस्याद्य यशश्चापि सुमध्यमे ॥ ७६ ॥

इतीदमुक्त्वा खड्गेन केशवस्य समीपतः ॥

अभिहत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ ७७ ॥

तथान्यानपि निघ्नंतं युयुधानं समंततः ॥

अन्वधावद्धृषीकेशो विनिवारयिषुस्तथा ॥ ७८ ॥

एकीभूतास्ततस्तस्य कालपर्यायप्रेरिताः ॥

भोजांधका महाराजं शैनेयं पर्यवारयन् ॥ ७९ ॥

तान्दृष्ट्वाऽऽपततस्तूर्णमभिक्रुद्धाञ्जनार्द्दनः ॥

न चुक्रोध महातेजा जानन्कालस्य पर्ययम् ॥ 7.1.237.८० ॥

ते च पानमदाविष्टाश्चोदिताश्चैव मन्युना ॥

युयुधानमथाजघ्नुरुच्छिष्टै र्भोजनैस्तथा ॥ ८१ ॥

हन्यमाने तु शैनेये कुद्धो रुक्मिणिनंदनः ॥

तदंतरमथाधावन्मोक्षयिष्यञ्छिनेः सुतम् ॥ ८२ ॥

स भोजैः सह संयुक्तः सात्यकिश्चांधकैः सह ॥

बहुत्वात्तु हतौ वीरावुभौ कृष्णस्य पश्यतः ॥ ८३ ॥

हतं दृष्ट्वा तु शैनेयं पुत्रं च यदुनंदनः ॥

एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः ॥ ८४ ॥

तदभून्मुशलं घोरं वज्रकल्पमयस्मयम् ॥

जघान तेन कृष्णोपि ये तस्य प्रमुखे स्थिताः ॥ ८९ ॥

ततोंऽधकाश्च भोजाश्च शिनयो वृष्णयस्तदा ॥

न्यघ्नन्नन्योन्यमाक्रन्दैर्मुशलैः कालप्रेरिताः ॥ ८६ ॥

यश्चैकामेरकां कश्चिज्जग्राह रुषितो नरः ॥

वज्रभूता च सा देवि ह्यदृश्यत तदा प्रिये ॥ ८७ ॥

तृणं च मुशलीभूतमण्वपि तत्र दृश्यते ॥

ब्रह्मदंडकृतं सर्वमिति तद्विद्धि भामिनि ॥ ८८ ॥

आविध्याविध्य देवेशि प्रहरंति स्म सायकान्॥

तद्वज्रभूतं मुशलमपश्यंत तदा दृढम् ॥ ८९ ॥

अवधीत्पितरं पुत्रः पिता पुत्रं च भामिनि ॥

मत्तास्ते पर्यटंति स्म योधमानाः परस्परम् ॥ 7.1.237.९० ॥

पतंगा इव चाग्नौ तु न्यपतन्यदुपुंगवाः ॥

नासीत्पलायने बुद्धिर्वध्यमानस्य कस्यचित् ॥ ९१ ॥

तं तु पश्यन्महाबाहुर्जानन्कालस्यपर्ययम् ॥

मुशलं समवष्टभ्य तस्थौ स मधुसूदनः ॥ ९२ ॥

सांबं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ॥

प्रद्युम्नमनिरुद्धं च ततश्चुक्रोध भामिनि ॥ ९३ ॥

यादवान्क्ष्माशयानांश्च भृशं कोपसमन्वितः ॥

स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ९४ ॥

एवं तत्र महादेवि अभवद्यादव स्थलम् ॥

गव्यूतिमात्रं तद्देवि यादवानां चिताः स्मृताः ॥ ९५ ॥

तेषां किलास्थिनिचयैः स्थलरूपं बभूव तत् ॥

भस्मपुंजनिभाकारं तेनाभूद्यादव स्थलम् ॥ ९६ ॥

दिव्यरत्नसमायुक्तं मणिमाणिक्यपूरितम् ॥

यादवानां किरीटैश्च दिव्यगन्धैः सुपूरितम्॥ ९७ ॥

तेषां रक्षानिमित्तं हि गंगा गणपतिस्तथा ॥

यादवानां तु सर्वेषां जीवितो वज्र एव हि ॥ ९८ ॥

वयसोंते ततः सोऽपि प्रभासं क्षेत्रमागतः ॥

निषिच्य स्वसुतं राज्ये नाम्ना ख्यातं महद्बलम् ॥ ९९ ॥

तेनापि स्थापितं लिंगं यादवेन्द्रेण धीमता ॥

वज्रेश्वरमिति ख्यातं तत्स्थितं यादवस्थले ॥7.1.237.१००॥

तत्रैव सुचिरं कालं तपस्तप्तं सुपुष्कलम् ॥

नारदस्योपदेशेन प्रभासे पापनाशने ॥ १०१ ॥

प्राप्तवान्परमां सिद्धिं स राजा यादवोत्तमः ॥

तत्रैव यो नरः सम्यक्स्नात्वा जांबवती जले ॥ १०२ ॥

वज्रेश्वरं तु संपूज्य ब्राह्मणांस्तत्र भोजयेत् ॥

यादवस्थलसामीप्ये गोसहस्रफलं लभेत् ॥ १०३ ॥

षट्कोणं तत्र दातव्यमंगुल्या यादवस्थले ॥

यात्राफलमवाप्नोति सम्यक्छ्रद्धासमन्वितः ॥ १०४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेप्रभासक्षेत्रमाहात्म्ये यादवस्थलोत्पत्तौ वज्रेश्वरमाहात्म्यवर्णनंनाम सप्तत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्यां पापनाशिनीम् ॥

सर्वकामप्रदां पुण्यां दारिद्र्यस्यांतकारिणीम् ॥ १ ॥

तत्र स्नात्वा विधानेन कृत्वा पिंडोदक क्रियाम् ॥

प्राप्नुयादक्षयाँल्लोकान्पितॄनुद्धृत्य पापतः ॥२॥

एकं यो भोजयेत्तत्र ब्राह्मणं शंसितव्रतम् ॥

तेनायुतसहस्रं हि भोजितं स्याद्द्विजन्मनाम् ॥ ॥ ३ ॥

तत्र हेमरथा देयो ब्राह्मणे वेदपारगे ॥

विधिना शिवमुद्दिश्य यात्रायुतफलं लभेत् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिताया सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये हिरण्यानदीमाहात्म्यवर्णनंनामाष्टात्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २३९

https://sa.wikisource.org/s/ger
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्यापार्श्वतः स्थितम् ॥

प्रत्युक्तं नागरादित्यं सर्वव्याधिविनाशनम् ॥ १ ॥

पुरा सत्राजिता राज्ञा द्वारवत्यां गतेन तु ॥

आराधितो भास्करोऽभूद्यादवेन महात्मना ॥ २ ॥

महाव्रतमुपास्थाय निघ्नपुत्रेण धीमता ॥

तस्य तुष्टस्तदा भानुः स्यमन्तकमणिं ददौ ॥३॥

स मणिः सवते नित्यं भारानष्टौ दिनेदिने ॥ (सवते- सूते)

सुवर्णस्य सुशुद्धस्य भक्त्या व्रततपोयुतः ॥ ४ ॥

भूयोऽपि भानुना प्रोक्तो वरं ब्रूहि वरानने ॥

स चाह देवदेवेशं भास्करं वारितस्करम् ॥ ५ ॥

यदि तुष्टोऽसि मे देव वरदानं करोषि च ॥

अत्रैव चाश्रमे पुण्ये नित्यं संनिहितो भव ॥ ६ ॥

एवं भविष्यतीत्युक्त्वा सूर्यः सत्राजितं नृपम् ॥

अभिनंद्य वरं तस्य तत्रैवादर्शनं गतः ॥ ७ ॥

तेनापि निघ्नपुत्रेण देवदेवस्य भास्वतः ॥

स्थापिता प्रतिमा शुभ्रा तत्रैव वरवर्णिनि ॥ ८ ॥

शंखदुंदुभिनिर्घोषैर्ब्रह्मघोषैश्चपुष्कलैः ॥

ततस्तुनागरान्सर्वान्समाहूय द्विजोत्तमान् ॥

अब्रवीत्प्रणतो भूत्वा दत्त्वा वृत्तिमनुत्तमाम् ॥९॥

युष्मत्पादप्रसादेन सूर्यस्यानुग्रहेण वै ॥

साधयित्वा तपश्चोग्रं स्थापिता प्रतिमा मया ॥7.1.239.१०॥

इंद्रलोकादिहानीता जित्वा शक्रं सुरारिणा॥

दशाननस्य पुत्रेण लंकायां स्थापिता पुरा ॥११॥

तं निहत्य तु रामेण लक्ष्मणानुगतेन वै॥
अयोध्यायां समानीता सौमित्रिजयलक्षिका॥१२॥
मित्रावरुणपुत्राय वसिष्ठाय समर्पिता॥
तेनापि मम तुष्टेन द्वारकायां निवेदिता॥१३॥
मयापि स्थापिता चात्र ज्ञात्वा क्षेत्रमनुत्तमम् ॥
किमत्र बहुनोक्तेन भवद्भिः सर्वथैव हि ॥१४॥
परिपाल्या प्रयत्नेन यावच्चंद्रार्कतारकम्॥
तस्माद्युष्माकमादिष्टा प्रतिमेयं मया शुभा ॥ १५ ॥
नागराणां तु विप्राणां सोमेशपुरवासिनाम् ॥
तस्मान्नाम मया दत्तं नागरादित्यमेव हि ॥ १६ ॥
॥ ब्राह्मणा ऊचुः॥ ॥
सर्वमेव करिष्यामो देवस्य परिपालनम् ॥
यावन्मही च चंद्रार्कौ यावत्तिष्ठति सागरः ॥
तावत्ते ह्यक्षया कीर्तिः स्थाने चास्मिन्भविष्यति॥१७॥
एवमुक्त्वा तु ते सर्वे नागरा द्विजपुंगवाः ॥
राजापि तुष्टः प्रययौ तदा द्वारवतीं पुरीम् ॥१८ ॥
॥ ईश्वर उवाच ॥ ॥
शृणु देवि प्रवक्ष्यामि तस्मिन्दृष्टे तु यत्फलम् ॥
गोशतस्य प्रयागेषु सम्यग्दत्तस्य यत्फलम् ॥
तत्फलं समवाप्नोति नागरार्कस्य दर्शनात्॥ १९॥
दारिद्र्यदुःखशोकार्त्तैः कोन्योस्ति हरणक्षमः॥
प्रभासे पावने क्षेत्रे मुक्त्वा नागरभास्करम् ॥ 7.1.239.२० ॥
बंधकुष्ठादिकं दुःखं ये भजंत्यल्पबुद्धयः ॥
तत्र ते नैव जानंति वैद्यं नागरभास्करम् ॥ २१ ॥
स्नात्वा हिरण्यातोयेन यस्तं पूजयते नरः ॥
कल्पकोटिसहस्राणि सूर्यलोके महीयते ॥२२॥
शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ॥
महाजया तदा ख्याता सप्तमी भास्करप्रिया ॥ २३ ॥

स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ॥
सर्वं कोटिगुणं प्रोक्तं भास्करस्यवचो यथा ॥ २४ ॥
एकं यो भोजयेत्तत्र ब्राह्मणं सूर्यसंनिधौ ॥
कोटिभोज्यं कृतं तेन इत्याह भगवान्हरिः ॥ २५ ॥
एतन्मया ते कथितं पुरा नोक्तं वरानने ॥
यः शृणोति नरो भक्त्या स गच्छेद्भास्करं पदम्॥२६॥
सूर्यस्य देवि नामानि रहस्यानि शृणुश्व मे॥
अलं नामसहस्रेण पठस्वैनं शुभं स्तवम्॥२७॥
विकर्त्तनो विवस्वांश्च मार्त्तंडो भास्करो रविः ॥
लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ॥ २८ ॥
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ॥
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ २९ ॥
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥
एकविंशक इत्येष नागरार्कस्तवः स्मृतः ॥ 7.1.239.३० ॥
स्तवराज इति ख्यातः शरीरारोग्यवृद्धिदः ॥ ३१ ॥
य एतेन महादेवि द्वे संध्येऽस्तमनोदये ॥
नागरार्कं तु संस्तौति स लभेद्वांछितं फलम्॥ ३२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये नागरार्कमाहात्म्यवर्णनंनामैकोनचत्वारिंशदुत्तरद्विशततमो ऽध्यायः ॥ २३९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि बलभद्रं सुरेश्वरम् ॥

सुभद्रां च तथा कृष्णं सर्वपातकनाशनम् ॥ १ ॥

पूर्व कल्पे महादेवि देहमत्रात्यजद्धरिः ॥

अस्मिन्कल्पेपि च पुनर्गात्रोत्सर्गमिति स्मृतम् ॥ २ ॥

तत्र ये पूजयिष्यंति नागरादित्यसंनिधौ ॥

बलभद्रं सुभद्रां च कृष्णं ते स्वर्गगामिनः ॥३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये बलभद्र सुभद्रा कृष्ण माहात्म्यवर्णनंनाम चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४१



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येद्बलभद्रकलेवरम् ॥

शेषरूपेण यत्रासौ प्रात्यजत्स्वकलेवरम्॥ १ ॥

गतस्त्रैसंगमे तीर्थे तत्र पातालवर्त्मना ॥

अस्मिन्मित्रवने देवि गव्यूतिद्वयविस्तृते ॥ २ ॥

कलेवरं स्थितं देवि लिंगाकारं महाप्रभम् ॥

रेवत्या सहितं तत्र शेषनामेति विश्रुतम् ॥३॥

यत्र सिद्धः पुरा देवि जरानामा तु कौलिकः ॥

विष्णुहंता भल्लतीर्थे सोऽस्मिन्स्थाने लयं गतः ॥ ४ ॥

तत्प्रभृत्येव सकले शेष इत्यभिविश्रुतः ॥

चैत्रे शुक्लत्रयोदश्यां यस्तं पूजयते नरः ॥

स पुत्रपौत्रपशुमान्वर्षं क्षेमेण गच्छति ॥५॥

मसूरिकादिरोगेभ्यः शिशूनां न भयं भवेत् ॥

विस्फोटकादिरोगेभ्यो न भयं जायते क्वचित् ॥६॥

अस्मिन्क्षेत्रे महासिद्धे सिद्धयज्ञस्तु यः स्मृतः ॥

वर्णानां सांतरालानां सर्वेषां चातिवल्लभः ॥७॥

पशुपुष्पोपहारैश्च बलिदानैः पृथग्विधैः ॥

संतुष्टिं शीघ्रमायाति शेषोऽशेषाघनाशनः ॥ ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शेषमाहात्म्यवर्णनंनामैकचत्वारिंश दुत्तरद्विशततमोऽध्यायः ॥ २४१ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यत्र देवीकुमारिका ॥

तस्यैव पूर्वदिग्भागे स्थिता रक्षार्थमेव हि ॥ १ ॥

पुरा रथंतरे कल्पे रुरुर्नाम महासुरः ॥

उत्पन्नः स महाकायः सर्वलोकभयावहः ॥ २ ॥

तेन देवाः सगन्धर्वास्त्रासितास्त्रिदशा लयात् ॥

तस्य भीत्या ततः सर्वे ब्रह्मलोकमधिस्थिताः ॥ ३ ॥

तथा भूमितले विप्रान्यज्वनोऽथ तपस्विनः ॥

निजघान स दुष्टात्मा ये चान्ये धर्मचारिणः ॥ ४ ॥

निःस्वाध्यायवषट्कारं तदाऽऽसीद्धरणीतलम्॥

नष्टयज्ञोत्सवं सर्वं रुरोर्भयनिपीडितम्॥ ५ ॥

ततः प्रव्यथिता देवास्तथा सर्वे महर्षयः ॥

समेत्यामंत्रयन्मंत्रं वधार्थं तस्य दुर्मतेः ॥ ६ ॥

ततः कायोद्भवः स्वेदः सर्वेषां समजायत ॥

तेषां चिंतयतां देवि निरोधाज्जगृहुश्च तम् ॥ ॥७॥

तत्र कन्या समुत्पन्ना दिव्या कमललोचना ॥

व्यापयंती दिशः सर्वाः सर्वेषां पुरतः स्थिता ॥८॥

सर्वान्देवांस्ततः प्राह किमर्थं निर्मितास्म्य हम् ॥

तद्वः कार्यं करिष्यामि श्रुत्वा तस्यास्तदा गिरम्॥ ९ ॥

आचख्युः संकटं तस्यास्ते देवा रुरुचेष्टितम् ॥

श्रुत्वा जहास सा देवी देवानां कार्य सिद्धये ॥ 7.1.242.१० ॥

तस्या हसंत्या निश्चेरुर्वरांगाः कन्यकाः पुनः ॥

पाशांकुशधराः सर्वाः पीनश्रोणिपयोधराः ॥ ११ ॥

फेत्कारारावमात्रेण त्रास यंत्यश्चराचरम् ॥

अन्वगात्सा रुरुर्यत्र ताभिः सार्द्धं यशस्विनी ॥ १२ ॥

अथाभूत्तुमुलं तासां युद्धं घोरं तु तैः सह ॥

शस्त्रास्त्रैर्विविधैर्घोरैः शत्रुपक्ष क्षयंकरैः ॥ १३ ॥

ताभिस्तदनुगाः सर्वे प्रहारैर्जर्जरीकृताः॥

पराङ्मुखाः क्षणेनैव जाताः केचिन्निपातिताः ॥ १४ ॥

ततो हतं बलं दृष्ट्वा रुरुर्मायामथाऽसृजत् ॥

तामसींनाम देवेशि तयामुह्यत नैव सा ॥ १५ ॥

तमोभूते ततस्तत्र देवी दैत्यं तदा रुरुम् ॥

शक्त्या बिभेद हृदये ततो मूर्छां जगाम ह ॥ १६ ॥

मुहूर्त्ताल्लब्धसंज्ञोऽथ ज्ञात्वा तस्याः पराक्रमम् ॥

पलायनकृतोत्साहः समुद्राभिमुखो ययौ ॥ १७ ॥

साऽपि देवी जगामाथ पृष्ठतोऽस्य दुरात्मनः ॥

स्तूयमाना सुरगणैः किंनरैः समहोरगैः ॥ १८ ॥

ततः प्रविश्य जलधिं तं दृष्ट्वा दानवं रुषा ॥

खड्गाग्रेण शिरश्छित्त्वा चर्ममुण्डधरा ततः ॥ १९ ॥

निश्चक्राम पुनस्तस्मात्प्रभासं क्षेत्रमागता ॥

कन्या सैन्येन संयुक्ता बहुरूपेण भास्वता ॥ 7.1.242.२० ॥

देवैः सुविस्मितैर्दृष्टा चर्ममुण्डधरा वरा ॥

ततो देवाः स्तुतिं चक्रुः कृतांजलिपुटाः स्थिताः ॥ २१ ॥

॥ देवा ऊचुः ॥ ॥

जय त्वं देवि चामुंडे जय भूतापहारिणि ॥

जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥ २२ ॥

भीमरूपे शिवे विद्ये महामाये महोदये ॥

महाभागे जये जृम्भे भीमाक्षि भीमदर्शने ॥ २३ ॥

महामाये विचित्रांगि गेयनृत्यप्रिये शुभे ॥

विकरालि महाकालि कालिके कालरूपिणि ॥ २४ ॥

प्रासहस्ते दण्डहस्ते भीमहस्ते भयानने ॥

चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले ॥

शवयानस्थिते देवि प्रेतसंघनिषेविते ॥ २५ ॥

एवं स्तुता तदा देवी सर्वैः शक्रपुरोगमैः ॥

प्रहृष्टवदना भूत्वा वाक्यमेतदुवाच ह ॥ २६ ॥

वरं वृणुध्वं भद्रं वो नित्यं यन्मनसि स्थितम् ॥

अहं दास्यामि तत्सर्वं यद्यपि स्यात्सुदुर्ल्लभम् ॥ २७ ॥

॥ देवा ऊचुः ॥ ॥

कृतकृत्यास्त्वया भद्रे दानवस्य निषूदनात् ॥ २८ ॥

स्तोत्रेणानेन यो देवि त्वां वै स्तौति वरानने ॥

तस्य त्वं वरदा देवि भव सर्वगता सती ॥ २९ ॥

यश्चेदं शृणुयाद्भक्त्या तव देवि समुद्भवम् ॥

सर्वपापविनिर्मुक्तः स प्राप्नोतु परां गतिम् ॥ 7.1.242.३० ॥

अस्मिन्क्षेत्रे त्वया देवि स्थितिः कार्या सदा शुभे ॥ ३१ ॥

अत्र त्वां पूजयेद्यस्तु शुक्लपक्षे समाहितः ॥

नवम्यामाश्विने मासि तस्य कार्यं सदा शुभम्॥ ३२ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्ता महादेवी तत्रैव निरताऽभवत् ॥

देवास्त्रिविष्टपं जग्मुः प्रहृष्टा हतशत्रवः ॥३३॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां सहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुमारीमाहात्म्यवर्णनंनाम द्विचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥२४२॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि क्षेत्रपालं महाप्रभम् ॥

ईशाने संस्थितं देवं मंत्रमालाविभूषितम् ॥ १ ॥

हिरण्यातटमाश्रित्य रक्षार्थं समुपस्थितम् ॥

तत्रैव हीरकं क्षेत्रं तस्मिन्नक्षां करोति सः ॥ २ ॥

कृष्णपक्षे त्रयोदश्यां तत्र तं पूजयेन्नरः ॥

गंधपुष्पोपहारैश्च तथा बलि निवेदनैः ॥ ३ ॥

एवं संपूजितो देवः सर्वकामप्रदो भवेत् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मंत्रावलिक्षेत्रपालमाहात्म्यवर्णनंनाम त्रिचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विचित्रेश्वरमुत्तमम् ॥

हिरण्यातीरनिलयं महापातकनाशनम् ॥ १ ॥

विचित्रेण महादेवि लेखकेन यमस्य च ॥

तपः कृत्वा महारौद्रं लिंगं तत्र प्रतिष्ठितम्॥ २ ॥

तं दृष्ट्वा मानवो देवि यमलोकं न पश्यति ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये विचित्रेश्वरमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्रैवोपरिसंस्थितम् ॥

सरस्वत्यास्तटे देवि पर्णादित्यस्य पश्चिमे ॥ १ ॥

तत्रास्ते सुमहल्लिंगं स्थापितं ब्रह्मणा पुरा ॥

ब्रह्मेश्वरेति विख्यातं सर्वपातकनाशनम् ॥ २ ॥

तत्र स्नात्वा द्वितीयायां सोपवासो जितेंद्रियः ॥

अर्चयेद्देवदेवेशं नाम्ना ब्रह्मेश्वरं शुभम्॥

तर्पयेच्च पितॄञ्छ्राद्धे यदीच्छेच्छाश्वतं पदम् ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनाम पञ्चचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४६



॥ ईश्वर उवाच ॥ ॥।

ततो गच्छेन्महादेवि पिंगलीं पापनाशिनीम् ॥

ऋषितीर्थात्पश्चिमतो नदीं सागरगामिनीम् ॥ १ ॥

तस्याः संदर्शनाद्देवि रूपवाञ्जायते नरः ॥

पुरा महर्षयः प्राप्ताः सोमेश्वरदिदृक्षया ॥ २ ॥

प्रभासं क्षेत्रमासाद्य नदीतीरे व्यवस्थिताः ॥

दाक्षिणात्या महादेवि कृष्णवर्णा विरूपकाः ॥३॥

तत्राश्रमवरे स्नात्वा पश्यन्तो रूपमात्मनः ॥

कामेन सदृशं सर्वे विस्मयं परमं गताः ॥ ४ ॥

ततस्ते सहिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥

अत्र स्नाता वयं सर्वे यतः पिंगत्वमागताः ॥

अतः प्रभृति नामास्यास्ततः पिंगा भविष्यति ॥ ५ ॥

येत्र स्नानं करिष्यन्ति भक्त्या परमया युताः ॥

न तेषामन्वये कश्चिद्भविष्यति कुरूपवान् ॥ ६ ॥

दर्शनात्पितृमेधस्य लप्स्यते मानवः फलम् ॥

स्नानेन द्विगुणं पुण्यं तर्पणेन चतुर्गुणम् ॥ ७ ॥

असंख्यातं फलं तस्य योऽत्र श्राद्धं करिष्यति ॥

एवमुक्त्वा ततः सर्व ऋषयो वरवर्णिनि ॥ ८ ॥

व्यभजंस्तन्नदीतीरं सर्वे ते मुनिसत्तमाः ॥

यज्ञोपवीतमात्राणि चक्रुस्तीर्थानि सर्वतः ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पिंगा नदीमाहात्म्यवर्णनंनाम षट्चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४७



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येत्सूर्यं पापप्रणाशनम् ॥

तथा च पिंगलां देवीं पार्वतीरूपधारिणीम् ॥ १ ॥

तृतीयायां विशेषेण ह्युपवासं करोति यः ॥

सर्वान्कामानवाप्नोति धनवान्पुत्रवान्भवेत् ॥ २ ॥

तत्रैव संस्थितं पश्येच्छुकेश्वरमिति श्रुतम् ॥

तं दृष्ट्वा मानवो देवि मुक्तः स्यात्सर्वपातकैः ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पिंगलादित्यपिंगादेवीशुक्रेश्वरमाहात्म्यवर्णनंनाम सप्तचत्वारिंश दुत्तरद्विशततमोऽध्यायः ॥ २४७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४८

https://sa.wikisource.org/s/gf1
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पूर्वोक्तं ब्रह्मपूजितम् ॥

सरस्वत्यास्तटे संस्थं पर्णादित्यस्य पश्चिमे ॥ १ ॥

तस्योत्पत्तिं प्रवक्ष्यामि शृणुष्वैकमनाः प्रिये ॥

सृजतो ब्रह्मणः पूर्वं भूतग्रामं चतुर्विधम् ॥ २ ॥

उत्पन्नाद्भुतरूपाढ्या नारी कमललोचना ॥

कंबुग्रीवा सुकेशांता बिंबोष्ठी तनुमध्यमा ॥ ३ ॥

गंभीरनाभिः सुश्रोणी पीनश्रोणिपयोधरा ॥

पूर्णचन्द्रमुखी सा तु गूढगुल्फा सितानना ॥ ४ ॥

न देवी न च गन्धर्वी नासुरी न च पन्नगी ॥

यादृग्रूपा वरारोहा तादृशी सा व्यजायत ॥ ५ ॥

तां दृष्ट्वा रूपसंपन्नां ब्रह्मा कामवशोऽभवत् ॥

अथ तां प्रार्थयामास रत्यर्थं वरवर्णिनि ॥ ६ ॥

अथ प्रार्थयतस्तस्य न्यपतत्पंचमं शिरः ॥

खररूपं महादेवि तेन पापेन तत्क्षणात्॥ ७ ॥

ततो ज्ञात्वा महत्पापं दुहितुः कामसंभवम् ॥

घृणया परया युक्तः प्रभासं क्षेत्रमागतः ॥ ८ ॥

न कायस्य यतः शुद्धिर्विना तीर्थावगाहनात् ॥

स स्नातः सलिले पुण्ये सरस्वत्या वरानने ॥ ९ ॥

लिंगं संस्थापयामास देवदेवस्य शूलिनः ॥

ततो विकल्मषो भूत्वा जगाम स्वगृहं पुनः ॥ 7.1.248.१० ॥

स्नात्वा सारस्वते तोये यस्तल्लिंगं प्रपश्यति ॥

सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ११ ॥

चैत्रे शुक्लचतुर्दश्यां यस्तं पश्यति मानवः ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ १२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनामाष्टचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २४९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं वै संगमेश्वरम् ॥

गोलक्षमिति विख्यातं सर्वपातकनाशनम् । १ ॥

तस्यैव पश्चिमे भागे सर्वकामफलप्रदम् ॥

ऋषिरुद्दालकोनाम पुरा ह्यासीन्महातपाः ॥ २ ॥

स पुरा संगमं प्राप्य सर्वपापप्रणाशनम् ॥

सरस्वत्याश्च पिंगायास्तपस्तेपे सुरेश्वरि ॥ ३ ॥

ततस्तपस्यतस्तस्य तपो रौद्रं महात्मनः ॥

पुरतो ह्युत्थितं लिंगं भक्त्या युक्तस्य सुन्दरि ॥ ४ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

उद्दालक महाबाहो शृणुष्वैतद्वचो मम ॥ ५ ॥

अद्यप्रभृति वासोऽत्र मम नित्यं भविष्यति ॥

यस्मादत्र समुत्पन्नं संगमे लिंगमुत्तमम् ॥

संगमेश्वरमित्येव नाम चास्य भवि ष्यति ॥ ६ ॥

येत्र स्नानं नराः कृत्वा संगमे लोकविश्रुते ॥

संगमेश्वरमीक्षन्ते ते यांति परमां गतिम् ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

ततस्तं पूजयामास दिवारात्रमतंद्रितः ॥

ततो देहावसानेऽसौ गतो यत्र महेश्वरः ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे ,प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संगमेश्वरमाहात्म्यवर्णनंनामैकोनपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २४९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं त्रैलोक्यविश्रुतम् ॥

गंगेश्वरेति विख्यातं संगमेश्वरपश्चिमे ॥ १ ॥

यदा गंगा समाहूता विष्णुना प्रभविष्णुना ॥

अन्तकालेऽभिषेकार्थं स्वकायस्य वरानने ॥ २ ॥

ततो दृष्ट्वा तु तत्क्षेत्रं पुण्यं ह्यृषिनिषेवितम् ॥

सर्वत्र व्यापितं लिंगैराश्रमैश्च तपस्विनाम् ॥ ३ ॥

ततो गंगासरिच्छ्रेष्ठा पूर्वसागरगामिनी ॥

स्थापयामास तल्लिंगं शिवभक्तिपरायणा ॥ ४ ॥

तं दृष्ट्वा तु वरारोहे गंगास्नानफलं लभेत् ॥

अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गंगेश्वरमाहात्म्यवर्णनंनाम पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शंकरादित्यमुत्तमम् ॥

गंगेश्वरस्य पूर्वेण शंकरेण प्रतिष्ठितम् ॥ १ ॥

षष्ठ्यां चैव तु शुक्लायामेनं यः पूजयिष्यति ॥

गमिष्यति परं स्थानं यत्र देवो दिवाकरः ॥ २ ॥

रक्तचंदनमिश्रैश्च रक्तपुष्पैः समाहितः ॥

ताम्रपात्रे समाधाय योऽर्घ्यं दास्यति मानवः ॥

स यास्यति परां सिद्धिं न च याति दरिद्रताम्॥ ३ ॥

तस्मात्सर्वप्रयत्नेन तस्मिन्क्षेत्रे वरानने ॥

पूजयेच्छंकरादित्यं सर्वकामफलप्रदम् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शंकरादित्यमाहात्म्यवर्णनंनामैकपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५२

https://sa.wikisource.org/s/g55
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच.॥ ॥

ततो गच्छेन्महादेवि लिंगं त्रैलोक्यविश्रुतम् ॥

तत्र शंकरनाथेति प्रसिद्धं पापनाशनम् ॥ ॥ १ ॥

स्थापितं भानुना देवि कृत्वा तत्र महत्तपः ॥

तमर्चयित्वा देवेशं सोपवासो महेश्वरम्॥ २ ॥

ब्राह्मणान्भोजयेत्तत्र श्राद्धं कुर्याज्जितेन्द्रियः ॥

शक्त्या हिरण्यं वासांसि विप्रे दद्यात्समाहितः ॥

स याति परमं स्थानं नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शङ्करनाथमाहात्म्यवर्णनंनाम द्विपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५३



॥ ईश्वर उवाच ॥

ततो गच्छेन्महादेवि गुफेश्वरमनुत्तमम्॥

हिरण्या उत्तरे भागे सर्वपातकनाशनम् ॥

तं दृष्ट्वा मानवो देवि कोटिहत्यां व्यपोहति॥ १ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गुफेश्वरमाहात्म्यवर्णनंनाम त्रिपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥२५३॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५४



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येत्सर्वपातकनाशनम् ॥

घण्टेश्वरमिति ख्यातं देवदानववन्दितम् ॥

पूजितं ह्यृषिभिः सिद्धैर्वांछितार्थफलप्रदम् ॥ १ ॥

वारे सोमस्य चाष्टम्यां यस्तं पूजयते नरः ॥

स लभेद्वांछितान्कामान्मुक्तः स्यात्पातकेन हि ॥२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये घंटेश्वरमाहारत्म्यवर्णनंनाम चतुष्पञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तीर्थं त्रैलोक्यविश्रुतम् ॥

तस्यैव पश्चिमे भागे ऋषीणां पुण्यकर्मणाम् ॥ १ ॥

तस्मिंस्त्रिनेत्रा मत्स्याश्च दृश्यंतेऽद्यापि भामिनि ॥

अंगिरा गौतमोऽगस्त्यः सुमतिः सुसखिस्तथा ॥ २ ॥

विश्वामित्रः स्थूलशिराः संवर्त्तः प्रतिमर्द्दनः ॥

रैभ्यो बृहस्पतिश्चैव च्यवनः कश्यपो भृगुः ॥ ३ ॥

दुर्वासा जामदग्न्यश्च मार्कंडेयोऽथ गालवः ॥

उशनाऽथ भरद्वाजो यवक्रीतस्त्रितस्तथा ॥ ४ ॥

नारदः पर्वतश्चैव वसिष्ठोऽरुंधती तथा ॥ ५ ॥

काण्वोऽथ गौतमो धौम्यः शतानन्दोऽकृतव्रणः ॥

जमदग्निस्तथा रामो बकश्चेत्येवमादयः ॥

कृष्णद्वैपायनश्चैव पुत्रशिष्यैः समन्वितः ॥ ६ ॥

एतत्क्षेत्रं समा साद्य प्रभासं मुनिसत्तमाः ॥

तपस्तेपुर्महात्मानो विविधं परमाद्भुतम् ॥ ७ ॥

एवं ते नियतात्मानो दमयुक्तास्तपस्विनः ॥

समाधिना जिगीषन्ते ब्रह्मलोकं सनातनम्॥ ८ ॥

अथाभवदनावृष्टिः कदाचिन्महती प्रिये ॥

कृच्छ्रं प्राप्तो ह्यभूत्तत्र सर्वलोकः क्षुधार्दितः ॥ ९ ॥

ततो निरन्ने लोकेऽस्मिन्नात्मानं ते परीप्सवः ॥

मृतं कुमारमादाय कृच्छ्रं प्राप्तास्तदाऽपचन् ॥ 7.1.255.१० ॥

अथोपरिचरस्तत्र क्लिश्यमानान्हि तानृषीन्॥

दृष्ट्वा राजा वृषादर्भिः प्रोवाचेदं वचस्तदा॥ ११॥

राजोवाच ॥

प्रतिग्रहो ब्राह्मणानां दृष्टा वृत्तिरनिंदिता॥

तस्मात्प्रतिग्रहं मत्त गृह्णीध्वं मुनिपुंगवाः ॥ १२॥

मुद्गान्माषांश्च व्रीहींश्च तथा रत्नानि कांचनम् ॥

युष्माकं संप्रदास्यामि यच्चान्यदपि दुर्ल्लभम् ॥

निवर्त्तध्वमतः सर्वे ह्येतस्मात्पातकात्परम्॥॥ १३ ॥

॥ ऋषय ऊचुः ॥ ॥

तज्जानंतः कथं राजन्गृह्णीमस्ते प्रतिग्रहम् ॥ १४ ॥

दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ॥

दशध्वजि समा वेश्या दशवेश्यासमो नृपः ॥ १५ ॥

यो राज्ञां प्रतिगृह्णाति ब्राह्मणो लोभमोहितः ॥

तामिस्रादिषु घोरेषु नरकेषु स पच्यते ॥ १६ ॥

तद्गच्छ कुशलं तेऽस्तु सह दानेन पार्थिव ॥

अन्येषां दीयतामेतदित्युक्त्वा ते वनं ययुः ॥ १७ ॥

अथ राज्ञः समादेशात्तत्र गत्वा च मंत्रिणः ॥

ऊदुम्बराणि व्यकिरन्हेमगर्भाणि भूतले ॥१८॥

अथ तानि व्यचिन्वंश्च ऋषयो वरवर्णिनि ॥

गुरूणीति विदित्वा तु न ग्राह्याण्यंगिराऽब्रवीत् ॥ १९ ॥

॥ अत्रिरुवाच ॥ ॥

नास्महेनास्महे मूढ वयमज्ञानबुद्धयः ॥

हैमानीमानि जानीमः प्रतिबुद्धाः स्म जाड्यतः ॥7.1.255.२०॥

॥ वसिष्ठ उवाच ॥ ॥

धर्मार्थं संचयो यस्य द्रव्याणां स न शस्यते ॥

तपःसंचयनं मन्ये वसिष्ठो धनसंचयम् ॥ २१ ॥

त्यजध्वं संचयान्सर्वाञ्जातीनां समुपद्रवान् ॥

न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ॥ २२ ॥

यथायथा न गृह्णाति ब्राह्मणोऽसत्प्रतिग्रहम् ॥

तथातथाऽनिशं चास्य ब्रह्मतेजस्तु वर्धते ॥ २३ ॥

अकिंचनत्वं राज्यं च तुलया समतोलयम्॥

अकिंचनत्वमधिकं राज्यादपि न संशयः ॥ २४ ॥

॥कश्यप उवाच ॥ ॥

अनर्थो ब्राह्मणस्यैष यदर्थनिचयो महान् ॥

अर्थैश्वर्यविमूढोऽपि श्रेयसो भ्रश्यते द्विजः ॥ २५ ॥

अर्थसंपद्विमोहाय बहुशोकाय चैव हि ॥

तस्मादर्थमनर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ २६ ॥

यस्य धर्मार्थमप्यर्थास्तस्यापि न हि दृश्यते ॥

प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ॥२७॥

॥ भरद्वाज उवाच॥ ॥

जीर्यंति जीर्यतः केशा दंता जीर्यंति जीर्यतः॥

चक्षुः श्रोत्रे च जीर्येते तृष्णैका न तु जीर्यते ॥ २८ ॥

सूची सूत्र तथा वस्त्रे समानयति सूचिका ॥

तद्वत्संसारसूत्रस्य तृष्णा सूची विधीयते ॥ २९ ॥

यथा शृंगं रुरोः काये वर्द्धमाने हि वर्द्धते ॥

अनंतपारा दुर्वारा तृष्णा दुःखप्रदा सदा ॥

अधर्मबहुला चैव तस्मात्तां परिवर्जयेत्॥ ॥। 7.1.255.३० ॥

॥ गौतम उवाच ॥ ॥

संतुष्टः को न शक्नोति फलैश्चापि हि वर्त्तितुम्॥

सर्वोऽपींद्रियलोभेन संकटान्यभिगाहते ॥३१॥

सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् ॥

उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥ ३२ ॥

संतोषामृततृप्तानां यत्सुखं शांतचेतसाम्॥

कुतस्तद्धनलुब्धानां सुखं चाशांतचेतसाम् ॥३३॥

॥ विश्वामित्र उवाच ॥ ॥

कामं कामयमानस्य यदि कामः स सिद्ध्यति ॥

तथैनमपरः कामो भूयो विध्यति बाणवत् ॥३४॥

न जातु कामः कामानामुपभोगेन शाम्यति ॥

हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ३५ ॥

कामानभिलषन्लोभान्न नरः सुखमेधते॥

समालभ्य तरुच्छायां भवनं वाञ्छो नरः ॥३६॥

चतुःसागरसंयुक्तां यो भुंक्ते पृथिवीमिमाम् ॥

एकस्तु वनवासी च स कृतार्थो न पार्थिवः ॥३७॥ ॥

॥ जमदग्निरुवाच ॥ ॥

प्रतिग्रहसमर्थो यस्तपो वर्द्धयते महान्॥

न करोति तपस्तस्य जायते च सहस्रधा ॥ ३८ ॥

प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात् ॥

य एव ददतां लोकास्त एवाप्रतिगृह्णताम् ॥ ३९ ॥

॥ अरुंधत्युवाच ॥ ॥

बिसतंतुर्यथा नित्यं समंतान्नालसंस्थितः ॥

तृष्णा चैवमनाद्यंता तथा देहाश्रिता सदा ॥ 7.1.255.४० ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥

योऽसौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ॥ ४१ ॥

॥ चंडोवाच ॥ ॥

उग्रात्प्रतिग्रहाद्यस्माद्विभ्यत्येते महेश्वराः ॥

बलीयांसो दुर्बलवत्तथा चैव बिभेम्यहम् ॥ ४२ ॥

॥ पशुमुख उवाच ॥ ॥

यदाचरंति विद्वांसः सदा धर्मपरायणाः ॥

तदेव विदुषा कार्यमात्मनो हितमिच्छता ॥ ४३ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि च ॥

ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः ॥ ४४ ॥

ततस्ते विचरंतो वै ददृशुः सुमहत्सरः ॥

पद्मिनीभिः समाकीर्णं सर्वतो वरवर्णिनि ॥ ४५ ॥

तस्मिन्देशे तदा प्राप्तः परिव्राजः शुनोमुखः ॥

तेनैव सहितास्तत्र स्नाताः सर्वे महर्षयः ॥ ४६ ॥

तत्रावतारं कृत्वा तैर्गृहीतानि बिसानि तु ॥

निक्षिप्य सरसस्तीरे चक्रुः पुण्यां जलक्रियाम् ॥ ४७ ॥

अथोत्तीर्य जलात्तस्मात्ते समेत्य परस्परम् ॥

बिसानि तान्यपश्यंत इदं वचनमब्रुवन् ॥ ४८ ॥

॥ ऋषय ऊचुः ॥ ॥

केन क्षुधाभितप्तानामस्माकं पापकर्मणा ॥

बिसानि तानि सर्वाणि हृतानि च मुनीश्वराः ॥ ॥ ४९ ॥

ते शंकमानास्त्वन्योन्यं पर्यपृच्छन्द्विजोत्तमाः ॥

चक्रुस्ते शपथान्सर्वे यथान्यायं च भामिनि ॥ 7.1.255.५० ॥ ॥

कश्यप उवाच ॥ ॥

सर्वभक्षः स भवतु न्यासलोपं करोतु सः ॥

कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ ५१ ॥

॥ वसिष्ठ उवाच ॥ ॥

अनृतौ मैथुनं यातु पर नारीं विशेषतः ॥

अतिथिः स्यात्तथान्योन्यं बिसस्तैन्यं करोति यः ॥ ५२ ॥

॥ भरद्वाज उवाच॥

नृशंसो वै स भवतु समृद्ध्या चाप्यहंकृ तः ॥

मत्सरी पिशुनश्चैव बिसस्तैन्यं करोति यः ॥ ५३ ॥

॥ विश्वामित्र उवाच ॥ ॥

नित्यं कामरतः सोस्तु दिवा सेवतु मैथुनम् ॥

नीचकर्मरतश्चैव बिसस्तैन्यं करोति यः ॥ ५४ ॥

॥ जमदग्निरुवाच ॥ ॥

कन्यां यच्छतु वृद्धाय स भूयाद्वृषलीपतिः ॥

अस्तु वार्द्धुषिको नित्यं बिसस्तैन्यं करोति यः ॥ ५५ ॥

॥ गौतम उवाच ॥ ॥

स गृह्णात्वविकादानं करोतु हयविक्रयम् ॥

प्रकरोतु गुरोर्निंदां बिसस्तैन्यं करोति यः ॥ ५६ ॥

(?)अत्रिरुवाच ॥ ॥

मातरं पितरं नित्यं दुर्मतिः सोऽवमन्यताम् ॥

शूद्रं पृच्छतु धर्मार्थं बिसस्तैन्यं करोति यः ॥ ५७ ॥

॥ अरुन्धत्युवाच ॥ ॥

करोतु पत्युः पूर्वं सा भोजनं शयनं तथा ॥

नारी दुष्टसमाचारा बिसस्तैन्यं करोति या ॥ ५८ ॥

॥ चण्डोवाच ॥ ॥

स्वामिनः प्रतिकूलास्तु धर्मद्वेषं करोतु च ॥

साधुद्वेषपरा चैव बिसस्तैन्यं करोति या ॥५९॥

॥ पशुमुख उवाच ॥ ॥

परस्य प्रेष्यतां यातु सदा जन्मनिजन्मनि ॥

सर्वधर्म क्रियाहीनो बिसस्तैन्यं करोति यः॥7.1.255.६०॥

॥ शुनोमुख उवाच॥ ॥

वेदान्स पठतु न्यायाद्गृहस्थः स्यात्प्रियातिथिः ॥

सत्यं वदतु चाजस्रं बिसस्तैन्यं करोति यः ॥६१॥

॥ ऋषय ऊचुः ॥ ॥

इष्टमेतद्द्विजातीनां यस्त्वया शपथः कृतः ॥

त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनोमुख ॥६२॥

॥ शुनोमुख उवाच ॥ ॥

मया हृतानि सर्वेषां बिसानीमानि वै द्विजाः ॥

धर्मं वै श्रोतुकामेन जानीध्वं मां पुरंदरम्॥६३॥

अलोभादक्षया लोका जिता वै मुनिसत्तमाः ॥

प्रार्थयध्वं वरं शुभ्रं सर्वमेव ह्यसंशयम् ॥६४॥

॥ ऋषय ऊचुः ॥ ॥

इहागत्य नरो यस्तु त्रिरात्रोपोषितः शुचिः ॥

कृत्वा स्नानं पितॄंस्तर्प्य श्राद्धं कुर्यात्समाहितः ॥६५॥

सर्वतीर्थोद्भवं तस्य पुण्यं भूयात्पुरंदर ॥

नाधोगतिमवाप्नोति विबुधैस्सह मोदताम् ॥

तथेत्युक्त्वा ततः शक्रस्त त्रैवान्तर्हितोऽभवत्॥६६॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य ऋषितीर्थमाहात्म्य वर्णनं नाम पञ्चपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥२५५॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि नंदादित्यं समाहितः ॥

नंदेन स्थापितं पूर्वं तत्रैवामितबुद्धिना ॥१॥

नंदो राजा पुरा ह्यासीत्सर्वलोकसुखप्रदः ॥

न दुर्भिक्षं न च व्याधि नाकाले मरणं नृणाम्॥ २ ॥

तस्मिञ्छासति धर्मज्ञे न चावृष्टिकृतं भयम् ॥

कस्यचित्त्वथ कालस्य पूर्वकर्मानुसारतः॥ ३ ॥

कुष्ठेन महता व्याप्तो वैराग्यपरमं गतः॥

तेन रोगाभिभूतेन देवदेवो दिवाकरः॥

प्रतिष्ठितो नदीतीरे स च रोगाद्विमोचितः ॥ ४ ॥

॥ देव्युवाच ॥ ॥

किमसौ रोगवान्राजा सार्वभौमो महीपतिः ॥

तस्य धर्मरतस्यापि कस्माद्रोग समुद्भवः ॥ ५ ॥

॥ईश्वर उवाच ॥ ॥

एष धर्मसदाचारो नंदो राजा प्रतापवान् ॥

व्यचरत्सर्वलोकान्स विमानवरमास्थितः ॥ ६॥

विमानं तस्य तुष्टेन दत्तं वै विष्णुना स्वयम् ॥

कामगं वरवर्णेन बर्हिणेन विनादितम् ॥ ७ ॥

स कदाचिन्नृपश्रेष्ठो विचरंस्तत्र संस्थितः ॥

गतवान्मानसं दिव्यं सरो देवगणान्वितम्॥ ८ ॥

तत्रापश्यद्बृहत्पद्मं सरोमध्यगतं सितम् ॥

तत्र चांगुष्ठमात्रं तु स्थितं पुरुषसत्तमम् ॥ ९ ॥

रक्तवासोभिराच्छन्नं द्विभुजं तिग्मतेजसम् ॥

तं दृष्ट्वा सारथिं प्राह पद्ममेतत्समाहर ॥7.1.256.१०॥

इदं तु शिरसा बिभ्रत्सर्वलोकस्य सन्निधौ ॥

श्लाघनीयो भविष्यामि तस्मादाहर मा चिरम्॥ ११ ॥

एवमुक्तस्ततस्तेन सारथिः प्रविवेश ह ॥

ग्रहीतुमुपचक्राम तत्पद्मं वरवर्णिनि॥

स्पृष्टमात्रे तदा पद्मे हुंकारः समपद्यत॥१२॥

राजा च तत्क्षणात्तेन शब्देन समजायत ॥

कुष्ठी विगतवर्णश्च बलवीर्यविवर्जितः ॥ १३ ॥

तथागतमथात्मानं दृष्ट्वा स पुरुषर्षभः ॥

तस्थौ तत्रैव शोकार्तः किमेतदिति चिंतयन् ॥ १४ ॥

तस्य चिंतयतो धीमानाजगाम महातपाः ॥

वसिष्ठो ब्रह्मपुत्रस्तु स तं पप्रच्छ पार्थिवः ॥ १५ ॥

एष मे भगवञ्जातो देहस्यास्य विपर्ययः ॥

कुष्ठरोगाभिभूतात्मा नाहं जीवितुमुत्सहे ॥ १६ ॥

उपायं ब्रूहि मे ब्रह्मन्व्याधितस्य चिकित्सितम् ॥

उताहो व्रतमन्यद्वा दानं यज्ञमथापि वा ॥ १७ ॥

॥ वसिष्ठ उवाच ॥ ॥

एतद्ब्रह्मोद्भवं नाम पद्मं त्रैलोक्यविश्रुतम् ॥

दृष्टमात्रेण चानेन दृष्टाः स्युः सर्व देवताः ॥ १८ ॥

एतद्धि दृश्यते धन्यैः पद्मं कैः क्वापि पार्थिव ॥

एतस्मिन्दृष्टमात्रे तु यो जलं विशते नरः ॥ १९ ॥

सर्वपापविनिर्मुक्तः पदं निर्वाण माप्नुयात् ॥

एष दृष्ट्वा तु ते सूतो हर्तुं तोये प्रविष्टवान् ॥ 7.1.256.२० ॥

तव वाक्येन राजेंद्र मृतोऽसौ रोगवान्भवेत् ॥

ब्रह्मपुत्रोऽप्यहं तेन पश्यामि परमेश्वरम् ॥ २१ ॥

अहन्यहनि चागच्छंस्त्वं पुनर्दृष्टवानसि ॥

वांछंति देवता नित्यममुं हृदि मनोरथम् ॥ २२ ॥

मानसे ब्रह्मपद्मं तु दृष्ट्वा स्नात्वा कदा वयम् ॥

प्राप्स्यामः परमं ब्रह्म यद्गत्वा न पुनर्भवेत्॥२३॥

इदं च कारणं भूयो द्वितीयं शृणु पार्थिव ॥

कुष्ठस्य यत्त्वया प्राप्तं हर्तुकामेन पंकजम् ॥ ॥ २४ ॥

प्रद्योतनस्तु गर्भेऽस्मिन्स्वयमेव व्यवस्थितः ॥

तवैषा बुद्धिरभवद्दृष्ट्वेदं वरपंकजम् ॥ २५ ॥

धारयामि शिरस्येनं लोकमध्ये विभूषणम् ॥

इदं चिन्तयतः पापमेवं देवेन दर्शितम् ॥ २६ ॥

ततः सर्वप्रयत्नेन तमाराधय भास्करम् ॥

प्रसादाद्देवदेवस्य मोक्ष्यसे नात्र संशयः ॥२७॥

प्रभासं गच्छ राजेंद्र तीर्थं त्रैलोक्यविश्रुतम् ॥

तत्र सिद्धिर्भवेच्छीघ्रमार्त्तानां प्राणिनां भुवि ॥ २८ ॥

॥ ईश्वर उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा वसिष्ठस्य महात्मनः ॥

प्रभासं क्षेत्रमासाद्य माहेश्वर्यास्तटे शुभे ॥ २९ ॥

नंदादित्यं प्रतिष्ठाप्य गंधधूपानुलेपनैः ॥

पूजयामास तं देवि पुष्पैरुच्चावचैस्तथा ॥ 7.1.256.३० ॥

तस्य तुष्टो दिवानाथो वरदोऽहमथाब्रवीत् ॥ ३१ ॥

॥ नन्द उवाच ॥ ॥

कुष्ठेन महता व्याप्तं पश्य मां सुरसत्तम ॥

यथाऽयं नाशमायाति तथा कुरु दिवाकर ॥ ३२ ॥

सान्निध्यं कुरु देवेश स्थानेऽस्मिन्नित्यदा विभो ॥ ३३ ॥

॥ सूर्य उवाच ॥ ॥

नीरोगस्त्वं महाराज सद्य एव भविष्यसि ॥

अत्र ये मां समागत्य द्रक्ष्यंति च नरा भुवि ॥ ३४ ॥

सप्तम्यां सूर्यवारेण यास्यंति परमां गतिम्॥

अत्र मे सूर्यवारेण सांनिध्यं सप्तमीदिने ॥

भविष्यति न संदेहो गमिष्ये त्वं सुखी भव ॥ ३५ ॥

एवमुक्त्वा सहस्रांशुस्तत्रैवांतरधीयत ॥ ३६ ॥

नीरोगत्वमवा प्यासौ कृत्वा राज्यमनुत्तमम् ॥

जगाम परमं स्थानं यत्र देवो दिवाकरः ॥

तस्मिंस्तीर्थे नरः स्नात्वा कृत्वा श्राद्धं प्रयत्नतः ॥ ३७ ॥

नंदादित्यं पुनर्दृष्ट्वा न पुनर्मर्त्त्यतां व्रजेत॥

प्रदद्यात्कपिलां तत्र ब्राह्मणे वेदपारगे ॥ ३८ ॥

अहोरात्रोषितो भूत्वा घृतधेनुमथापि वा ॥

न तस्य गुणितुं शक्या संख्या पुण्यस्य केनचित् ॥ ३९ ॥

इत्येवं देवदेवस्य माहात्म्यं दीप्तदीधितेः ॥

कथितं तव सुश्रोणि सर्वपापप्रणाशनम् ॥ 7.1.256.४० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये नन्दादित्यमाहात्म्यवर्णनंनाम षट्पञ्चाशदुत्तरद्विशततमो ऽध्यायः ॥२५६॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि त्रितकूपमिति स्मृतम्॥

नंदादित्यस्य पूर्वेण योजनत्रितयेन तु ॥ १ ॥

पुरा बभूव राजेन्द्रः सौराष्ट्रविषये सुधीः ॥

आत्रेय इति विख्यातो वेदवेदांगपारगः ॥२॥

तस्य पुत्रत्रयं जज्ञ ऋतुकालाभिगामिनः ॥

एकतश्चद्वितश्चैव त्रितश्चैवेति भामिनि ॥३॥

त्रितस्तेषां कनिष्ठोऽभूद्वेदवेदांगपारगः ॥

सर्वैरेव गुणैर्युक्तो मूर्खो ज्येष्ठौ बभूवतुः ॥ ४ ॥

कस्यचित्त्वथकालस्य आत्रेयो द्विज सत्तमः ॥

तपः कृत्वा तु विपुलं कालधर्ममुपेयिवान्॥ ५ ॥

ततस्तेषां त्रितो राजा बभूव गुणवत्तरः ॥

धुरमाकर्षयामास पुत्रोऽयं तस्य या पुरा ॥ ६॥

तस्य बुद्धिः समुत्पन्ना कथं यज्ञं करोम्यहम् ॥

सन्निमंत्र्य द्विजश्रेष्ठान्यज्ञकर्मस्वधिष्ठितान् ॥ ७ ॥

इन्द्रादींश्च सुरान्सर्वानावाह्य विधिपूर्वकम् ॥

दक्षिणार्थं द्विजेन्द्राणां प्रभासं स जगाम ह ॥

गृहीत्वा भ्रातरौ ज्येष्ठौ गवार्थं प्रस्थितो द्विजः ॥ ८ ॥

यस्य यस्य गृहे याति स त्रितो वेदपारगः ॥

तत्र तत्र वरां पूजां लेभे गाश्चैव पुष्कलाः ॥ ९ ॥

एवं स गोधनं प्राप्य भ्रातृभ्यां सहितस्तदा ॥

गृहाय प्रस्थितो देवि निर्वृतिं परमां गतः ॥ 7.1.257.१० ॥

त्रितस्ताभ्यां पुरो याति पृष्ठतो भ्रातरौ च तौ ॥

गोधनं चालयंतस्ते प्रभासं क्षेत्रमागताः ॥ ११ ॥

अथ तद्गोधनं दृष्ट्वा भूरि दानार्थमाहृतम् ॥
भ्रातृभ्यां त्रितये चेति पापा मतिरजायत ॥ १२ ॥
परस्परमूचतुस्तौ भ्रातरौ दुष्टचेतसौ ॥
त्रितो यज्ञेषु कुशलो वेदेषु कुशलस्तथा॥ १३ ॥
मान्यः पूज्यश्च सर्वत्र आवां मूर्खौ निरर्थकौ ॥
एतद्धि गोधनं सर्वं त्रितो दास्यति सन्मखे ॥ १४ ॥
अस्माकं पितृपर्यातो यदाप्तं तत्समं भवेत्॥
तस्मादत्रैव युक्तोऽस्य वधो वै त्रितयज्विनः ॥ १५ ॥
एवं तौ निश्चयं कृत्वा प्रस्थितौ भ्रातरावुभौ ॥
त्रितस्तु पुरतो याति निर्विकल्प ऋजुः सुधीः ॥१६॥
अनु तत्र समुत्तस्थौ व्याघ्रो रौद्रतराकृतिः ॥
व्यादितास्यो रवं देवि व्यनद्भैरवं ततः ॥ १७ ॥
तस्य शब्देन ता गावो नष्टा जग्मुर्दिशो दश ॥
अन्धकूपो महांस्तत्र प्रदेशे दारुणोऽभवत् ॥ १८ ॥
एकतो दारुणो व्याघ्रः कूपोऽन्यत्र सुदारुणः ॥
दृष्ट्वा ते भ्रातरः सर्वे भयोद्विग्नाः प्रदुद्रुवुः॥१९ ॥
अथ ते विषमं प्राप्य तटं कूपस्य भामिनि ॥
स्थिता यावद्गतो व्याघ्रस्ततो गंतुं मनो दधुः ॥ 7.1.257.२० ॥
अथ ताभ्यां त्रितो देवि भ्रातृभ्यां नृपसत्तम ॥
प्रक्षिप्तो दारुणे कूपे जीर्णे तोयविवर्जिते ॥ २१ ॥
ततस्तद्गोधनं गृह्य प्रस्थितौ हृष्टमानसौ ॥
त्रितस्तु पतितस्तत्र कूपे जलविवर्जिते ॥ २२ ॥
चिन्तयामास मेधावी नाहं शोचामि जीवितुम् ॥
मयाहूता द्विजश्रेष्ठा यज्ञार्थं वेदपारगाः ॥
इन्द्राद्याश्च सुराः सर्वे स क्रतुः स्यान्न मे त्वतः ॥ २३ ॥
स एवं चिन्तयामास वेदवेदांगपारगः ॥
मानसं यज्ञमारभ्य तत्रैव वरवर्णिनि ॥ २४ ॥
स्वयमेव स सूक्तानि प्रोक्त्वा प्रोक्त्वा द्विजोत्तमः ॥

कृतवान्बालुकाहोमं तेन तुष्टाश्च देवताः ॥ २५ ॥

श्रद्धां तस्य विदित्वा तु भूयस्तृप्तास्तु देवताः ॥

आगत्य ब्राह्मणं प्रोचुः कूपमध्ये व्यवस्थितम् ॥ ॥ २६ ॥

॥ देवा ऊचुः ॥ ॥

भोभो विप्र त्वया नूनं सर्वे संतर्पिता वयम् ॥

मानसेन तु यज्ञेन तस्माद्ब्रूहि मनोगतम् ॥ २७ ॥

॥ ब्राह्मण उवाच ॥ ॥

यदि देवाः प्रसन्ना मे कूपान्निष्क्रमणे त्वहम् ॥

यष्टा स्वं मंदिरं गत्वा देवयज्ञं करोम्यहम्॥ २८ ॥

॥ ईश्वर उवाच ॥

अथ देवैः समादिष्टा तस्मिन्कूपे सरस्वती ॥

निर्गत्य वसुधां भित्त्वा पूरयामास वारिणा ॥ २९ ॥

अथ निष्क्रम्य विप्रोऽसौ यातः स्वभवनं प्रति ॥

ततः प्रभृति देवेशि त्रितकूपः स उच्यते ॥ 7.1.257.३० ॥

स्नात्वा तत्र शुचिर्भूत्वा त्वथ संतर्पयेत्पितॄन् ॥

अश्वमेधमवाप्नोति सर्वपापविवर्जितः ॥ ३१ ॥

तिल दानं तु देवेशि तत्र शस्तं सकाञ्चनम् ॥

पितॄणां वल्लभं तीर्थं नित्यं चैव तु भामिनि ॥ ३२ ॥

अग्निष्वात्ता बर्हिषद आयंतुन इति स्मृताः ॥

ये दिव्याः पितरो देवि तेषां सांनिध्यमत्र हि ॥ ३३ ॥

दर्शनादपि तीर्थस्य तस्य वै सुरसत्तमे ॥

मुच्यन्ते प्राणिनः पापादाजन्ममरणांतिकात् ॥ ॥ ३४ ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥

प्रभासं क्षेत्रमासाद्य यदीच्छेच्छ्रेय आत्मनः ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये त्रितकूपमाहात्म्यवर्णनंनाम सप्तपञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५७॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५८



॥ ॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शशापानमिति स्मृतम् ॥

तस्यैव दक्षिणे तीर्थं सर्वपापप्रणाशनम् ॥ १ ॥

यस्मिन्स्नात्वा नरः सम्यङ्नापमृत्युभयं लभेत् ॥

शृणु यस्मात्तदुत्पत्तिं वदतो मम वल्लभे ॥ २ ॥

मथित्वा सागरं देवा गृहीत्वाऽमृतमुत्तमम् ॥

सत्वरास्तत्र ते गत्वा पपुश्चैव यथेप्सया ॥ ३ ॥

पिबतां तत्र पीयूषं देवानां वरवर्णिनि ॥

बिंदवः पतिता भूमौ शतशोथ सहस्रशः ॥ ४ ॥

एतस्मिन्नेव काले तु शशकस्तत्र चागतः ॥

प्रविष्टः सलिले तत्र तृषार्तो वरवर्णिनि ॥ ५ ॥

अमरत्वमनुप्राप्तो वर्द्धते सलिलालये ॥

तं दृष्ट्वा त्रिदशाः सर्वे स्पर्द्धमाना मुहुर्मुहुः ॥

ज्ञात्वामृतान्वितं तोयं मंत्रं चक्रुर्भयान्विताः ॥ ६ ॥

अमृतं पतितं भूमौ भक्षयिष्यंति मानवाः ॥

ततोऽमर्त्या भविष्यंति नात्र कार्या विचारणा ॥ ७ ॥

तिर्यग्योन्यां समुत्पन्नः कृपणः शशको ह्ययम् ॥

अस्माभिः स्पर्द्धते तस्मात्ततो भयमुपस्थितम् ॥ ८ ॥

अथ प्राप्तो निशानाथो व्याधिना स परिप्लुतः ॥

अब्रवीत्त्रिदशान्सर्वानमृतं मे प्रयच्छत ॥ ९ ॥

कृच्छ्रेण महता प्राप्तो नाहं शक्तो विसर्पितुम् ॥

अथोचुस्त्रिदशाः सर्वे सर्वमस्माभिर्भक्षितम् ॥ 7.1.258.१० ॥

विस्मृतस्त्वं निशानाथ चिरात्कस्मादिहागतः ॥

कुरुष्व वचनं चंद्र अस्माकं तिमिरापह ॥ ॥ ११ ॥

अस्मिञ्जलेऽमृतं भूरि पतितं पिबतां हि नः ॥
तत्पिबस्व निशानाथ सर्वमेतज्जलाशयम् ॥ १२ ॥
अर्द्धं निपतितं चात्र सत्यमेतन्निशामय ॥
तेषां तद्वचनं श्रुत्वा शीतरश्मिस्त्वरान्वितः ॥ १३ ॥
तृषार्तो वाऽपिबत्तोयं शशकेन समन्वितम् ॥
अस्थिशेषं तु तत्तस्य कायं पीयूषभक्षणात् ॥ १४ ॥
तत्क्षणात्पुष्टिमगमत्कांत्या परमया युतः ॥
धातुषु क्षीयमाणेषु पुष्टो हि सुधया हि सः ॥ १५ ॥
स चापि शशकस्तस्य न मृतो जठरं गतः ॥
अद्यापि दृश्यते तत्र देहे पीयूषभक्षणात् ॥१६॥
तत्क्षणात्तुष्टिमगमत्कांत्या परमया युतः ॥
अब्रुवन्खन्यतामेतद्यथा भूयो जलं भवेत् ॥ ॥ १७ ॥
अस्माकं संगमादेतच्छुष्कं श्वभ्रं जलाशयम् ॥
तद्युक्तं च कृतं कर्म नैतत्साधुविचेष्टितम् ॥ १८ ॥
ततोऽखनंश्च ते सर्वे यावत्तोयविनिर्गमः ॥
अथाब्रुवंस्ततः सर्वे हर्षेण महतान्विताः ॥ १९ ॥
यस्माच्छशेन संयुक्तं पीतमेतज्जलाशयम् ॥
चंद्रेण हि शशापानं तस्मादेतद्भविष्यति ॥ ॥ 7.1.258.२० ॥
अत्रागत्य नरः स्नानं यः करिष्यति भक्तितः ॥
स यास्यति परं स्थानं यत्र देवो महेश्वरः ॥ २१ ॥
अत्रान्नं संप्रदास्यंति ब्राह्मणेभ्यः समा हिताः ॥
सर्वयज्ञफलं तेषां भविष्यति न संशयः ॥ २२ ॥
अस्मिन्दृष्टे सुराः सर्वे दृष्टाः स्युः सर्वदेवताः ॥
एवमुक्त्वा सुराः सर्वे जग्मुश्चैव सुरालयम्॥ २३ ॥
अथ कालेन महता प्राप्ता तत्र सरस्वती ॥
वडवाग्निं समादाय तयानुप्लावितं पुनः ॥२४॥
ततो मेध्यतरं जातं तीर्थं च वरवर्णिनि ॥
तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शशापानमाहात्म्यवर्णनंनामाष्टापञ्चाशदुत्तरद्विशततमोऽध्यायः ॥ २५८ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २५९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पर्णादित्यं सुरेश्वरम् ॥

प्राचीसरस्वतीकूले तटे चोत्तरतः स्थितम्॥ १ ॥

पुरा त्रेतायुगे देवि पर्णादोनाम वै द्विजः ॥

प्रभासं क्षेत्रमासाद्य तपस्तेपे सुदारुणम् ॥

आराधयामास रविं भक्त्या परमया युतः ॥ २ ॥

तर्पयित्वा ततः सूर्यं धूपमाल्यविलेपनैः ॥

वेदोक्तैः स्तवनैः सूक्तैर्दिवारात्रं समाहितः ॥ ३ ॥

एवं च ध्यायतस्तस्य कालेन महता ततः ॥

तुतोष भगवान्सूर्यो वाक्यमेतदुवाच ह ॥ ४ ॥

परितुष्टोऽस्मि विप्रेन्द्र तपसानेन सुव्रत ॥

वरं वरय भद्रं ते नित्यं यन्मनसेप्सितम्॥ ५ ॥

॥ ब्राह्मण उवाच ॥ ॥

एष एव वरः कामो यत्तुष्टो भगवान्स्वयम् ॥

दर्शनं तव देवेश स्वप्नेष्वपि च दुर्ल्लभम्॥ ६ ॥

अवश्यं यदि दातव्यो वरो मम दिवाकर ॥

अत्र संनिहतो देव सदा त्वं भव भास्कर ॥ ७ ॥

तव प्रसादात्ते यांतु तव लोकं दिवा कर ॥

एवं भविष्यतीत्युक्त्वा ह्यन्तर्धानं गतो रविः ॥ ८ ॥

पर्णादोऽपि स्थितस्तत्र तस्याराधनतत्परः ॥

तत्र भाद्रपदे मासे षष्ठ्यां स्नानं समाचरेत् ॥

पर्णादित्यं ततः पश्येन्न स दुःखमवाप्नुयात् ॥ ९ ॥

गोशतस्य प्रयागे तु सम्यग्दत्तस्य यत्फलम् ॥

तत्फलं लभते मर्त्यः पर्णादित्यस्य दर्शनात् ॥ 7.1.259.१० ॥

ये सेवंते महाकुष्ठं पांगुल्यं च विवर्चिकाः ॥
पर्णादित्यं न जानंति नूनं ते मंदबुद्धयः ॥ ११ ॥

इति श्रीस्कान्दे महपुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये पर्णादित्यमाहात्म्यवर्णनंनामैकोनषष्ट्युत्तरद्विशततमोऽध्यायः ॥२५९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं सिद्धेश्वरं परम् ॥

तस्यैव पश्चिमे भागे सिद्धैः संस्थापितं पुरा ॥१ ॥

सिद्धा नाम सुराः पूर्वं तत्रागत्य वरानने ॥

लिंगं संस्थापयामासुः सिद्ध्यर्थं सर्ववस्तुषु ॥ २॥

ततस्तुष्टो महादेवि तेषां दृष्ट्वा तपो महत् ॥

अणिमादिकमैश्वर्यं तेषां सर्वं ददौ शिवः ॥ ३ ॥

अब्रवीदत्र मे नित्यं सानिध्यं च भविष्यति ॥ ४ ॥

चैत्रे शुक्लचतुर्द्दश्यां योऽत्र मां पूजयिष्यति ॥

स यास्यति परं स्थानं प्रसादान्मम पुण्यकृत् ॥ ५ ॥

एवमुक्त्वाऽथ भगवाञ्जगामादर्शनं ततः ॥

सिद्धाश्चैव तदाऽऽगत्य पूजयंति महेश्वरम् ॥ ६ ॥

यस्तमाराधयेद्भक्त्या संसिद्धिं लभतेऽद्भुताम्॥

ईप्सितां च सुरश्रेष्ठे तस्मात्तं पूजयेत्सदा ॥ ७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनंनाम षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यत्र न्यंकुमती नदी ॥

मर्यादार्थं समानीता क्षेत्रशांत्यै च शंभुना ॥ १ ॥

तस्यैव दक्षिणे भागे सर्वपापप्रणाशिनी ॥

तस्यां स्नात्वा च वै सम्यग्यः श्राद्धं कुरुते नरः ॥

स पितॄंस्तारयेत्सर्वान्नरकान्नात्र संशयः ॥ २ ॥

वैशाखे शुक्लपक्षे तु तृतीयायां च भामिनि ॥

स्नात्वा तु तर्पयेद्भक्त्या तिलदर्भजलैः प्रिये ॥

श्राद्धं कृतं भवेत्तेन गंगायां नात्र संशयः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्यवर्णनंनामैकषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि वराहं तत्र संस्थितम् ॥

गोष्पदाद्दक्षिणे भागे स्थितं पापप्रणाशनम् ॥ १ ॥

एकादश्यां सिते पक्षे यस्तं पूजयते नरः ॥

स मुक्तः पातकैः सर्वैर्गच्छेद्विष्णुपदं महत् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये वराहस्वामिमाहात्म्यवर्णनंनाम द्विषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि च्छायालिंगमिति स्मृतम् ॥

उत्तरे न्यंकुमत्याश्च बह्वाश्चर्यं महत्फलम् ॥ १ ॥

तं दृष्ट्वा मानवो देवि मुच्यते पंचपातकैः ॥

सार्द्धद्वादशहस्तं तु योजनत्रितयेन तु ॥

न पश्यंति महादेवि पापिष्ठा ये तु मानवाः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये छायालिंग माहात्म्यवर्णनंनाम त्रिषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६४



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थिता देवि गुफा पातकनाशिनी ॥

ऋषीणां संस्थितिर्यत्र सिद्धानां पुण्यचेतसाम् ॥ १ ॥

तत्र गत्वा महादेवि गुफां यः पश्यते नरः ॥

स मुक्तः सर्वपापेभ्यश्चांद्रायणफलं लभेत्॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये नंदिनीगुफामाहात्म्यवर्णनंनाम चतुःषष्ट्यु त्तरद्विशततमोऽध्यायः ॥ २६४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६५

https://sa.wikisource.org/s/gfe



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि ऐशान्यां दिशि संस्थिताम् ॥

देवीं कनकनंदाख्यां सर्वकामफलप्रदाम्॥ १ ॥

तत्र शुक्लतृतीयायां चैत्रे मासि विधानतः ॥

यात्रां कुर्याच्च मतिमान्सर्वकाममवाप्नुयात् ॥ २ ॥

इति श्रीस्कांदे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कनकनंदामाहात्म्यवर्णनंनाम पंचषष्ट्युत्तरद्विशततमोऽध्यायः॥ ॥ २६५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कुम्भीश्वरमनुत्तमम् ॥

शरभस्थानतः पूर्वे नातिदूरे व्यवस्थितम् ॥

तं दृष्ट्वा मानवो देवि मुच्यते सर्वपातकैः ॥१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कुंभीश्वरमाहात्म्यवर्णनंनाम षट्षष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि स्थानं गंगापथेति च ॥

यत्र गंगा महास्रोता गंगेश्वरः शिवस्तथा ॥ १ ॥

समुद्रगामिनी देवि सा गंगा पापनाशिनी ॥

उत्तानेति भुवि ख्याता नदी त्रैलोक्यभूषणा ॥ २ ॥

तत्र स्नात्वा महादेवि गंगेशं यस्तु पूजयेत्॥

मुक्तः स्यात्पातकैर्घोरैरश्वमेधायुतं लभेत्॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गङ्गापथगंगेश्वरमाहात्म्यवर्णनंनाम सप्तषष्ट्युत्तरद्विशततमोऽध्यायः ॥ २६७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि चमसोद्भेदमुत्तमम् ॥

यत्र ब्रह्माऽकरोत्सत्रं वर्षाणामयुतं प्रिये ॥ १ ॥

चमसैः पीतवन्तस्ते सोमं देवा महर्षयः ॥

चमसोद्भेदनामेति तेन ख्यातं धरातले ॥ २ ॥

तत्र स्नात्वा सरस्वत्यां पिंडदानं ददाति यः ॥

गयाकोटिगुणं पुण्यं वैशाख्यां प्राप्नुयान्नरः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चमसोद्भेदमाहात्म्य वर्णनंनामाष्टषष्ट्युत्तरद्विशततमोऽध्यायः ॥। २६८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २६९





॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विदुरस्याश्रमं महत् ॥

यत्राकरोत्तपो रौद्रं विदुरो धर्म मूर्त्तिमान् ॥ १ ॥

प्रतिष्ठाप्य महादेवं लिंगं त्रिभुवनेश्वरम् ॥

तं दृष्ट्वा मानवो देवि सर्वान्कामानवाप्नुयात् ॥२॥

विदुराट्टालकं नाम गणगंधर्वसेवितम् ॥

द्वादशस्थानकं स्थानं नाल्पपुण्येन लभ्यते ॥ ३ ॥

नावर्षणं भवेत्तत्र कदाचिदपि पार्वति ॥

लिंगानि तत्र दिव्यानि पश्येत्पापोपशांतये ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये विदुराश्रम माहात्म्यवर्णनंनामैकोनसप्तत्युत्तरद्विशततमोऽध्यायः ॥२६९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि यत्र प्राची सरस्वती ॥

तत्र स्थाने स्थितं लिंगं मंकीश्वरमिति श्रुतम् ॥ १ ॥

तस्योत्पत्तिं प्रवक्ष्यामि सर्वपातकनाशिनीम् ॥

शृणु देवि महाभागे ह्याश्चर्यं यदभूत्पुरा ॥ २ ॥

ऋषिर्मंकणको नाम स तेपे परमं तपः ॥

प्राचीमेत्य यताहारो नित्यं स्वाध्यायतत्परः॥ ३ ॥

बहुवर्षसहस्राणि तस्यातीतानि भामिनि ॥

कस्यचित्त्वथ कालस्य विद्धादस्य वरानने ॥ ४ ॥

कराच्छाकरसो जातः कुशाग्रेणेति नः श्रुतम् ॥

स तं दृष्ट्वा महाश्चर्यं विस्मयं परमं गतः॥५॥

मेने सिद्धिं परां प्राप्तो हर्षान्नृत्यमथाकरोत् ॥

तस्मिन्संनृत्यमाने च जगत्स्थावरजंगमम् ॥ ६ ॥

अनर्त्तत वरारोहे प्रभावात्तस्य वै मुनेः ॥

ततो देवा महेंद्राद्या ब्रह्मविष्णुपुरस्सराः ॥

ऊचुस्त्रिपुरहंतारं नायं नृत्येत्तथा कुरु ॥ ७ ॥

चलिताः पर्वताः स्थानात्क्षुभितो मकरालयः ॥

धरणी खण्डशो देव वृक्षाश्च निधनं गताः ॥ ८ ॥

उत्पथाश्च महानद्यो ग्रहा उन्मार्गसंस्थिताः ॥

त्रैलोक्यं व्याकुलीभूतं यावत्प्राप्नोति संक्षयम् ॥९॥

तावन्निवारयस्वैनं नान्यः शक्तो निवारणे ॥ 7.1.270.१० ॥

स तथेति प्रतिज्ञाय गत्वा तस्य समीपतः ॥

द्विजरूपं समास्थाय तमृषिं वाक्यमब्रवीत् ॥ ११ ॥

को हर्षविषयः कस्मात्त्वयैतन्नृत्यते द्विज ॥

तस्मात्कार्यं वदाशु त्वं परं कौतूहलं द्विजः ॥ १२ ॥

॥ ऋषिरुवाच ॥ ॥

किं न पश्यसि मे ब्रह्मन्कराच्छाकर सं च्युतम्॥

अत एव हि मे नृत्यं सिद्धोऽहं नात्र संशयः ॥ १३ ॥

॥ ईश्वर उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा भगवांस्त्रिपुरांतकः ॥

अंगुष्ठं ताडयामास अंगुल्यग्रेण भामिनि ॥ १४ ॥

ततो विनिर्गतं भस्म तत्क्षणाद्धिमपांडुरम् ॥

अथाब्रवीत्प्रहस्यैनं भगवान्भूतभावनः ॥ १५ ॥

पश्य मेंऽगुष्ठतो ब्रह्मन्भूरि भस्म विनिर्गतम् ॥

न नृत्येऽहं न मे हर्षस्तथापि मुनिसत्तम ॥ १६ ॥

तद्दृष्ट्वा सुमहाश्चर्यं विस्मयं परमं गतः ॥

अब्रवीत्प्रांजलिर्भूत्वा हर्षगद्गदया गिरा ॥ १७ ॥

नान्यं देवमहं मन्ये .त्वां मुक्त्वा वृषभध्वजम् ॥

नान्यस्य विद्यते शक्तिरीदृशी धरणीतले ॥ १८ ॥ ॥

॥ भगवानुवाच ॥ ॥

ज्ञातोऽस्मि मुनिशार्दूल त्वया वेदविदां वर ॥

वरं वरय भद्रं ते नित्यं यन्मनसेप्सितम् ॥ १९ ॥

॥ ऋषिरुवाच ॥ ॥

प्रसादाद्देवदेवस्य नृत्येन महता विभो ॥

यथा न स्यात्तपोहानिस्तथा नीतिर्विधीयताम् ॥ 7.1.270.२० ॥

॥ शंभुरुवाच ॥ ॥

तपस्ते वर्द्धतां विप्र मत्प्रसादात्सहस्रधा ॥

प्राचीमन्विह वत्स्यामि त्वया सार्द्धमहं सदा ॥ २१ ॥

सरस्वती महापुण्या क्षेत्रे चास्मिन्विशेषतः ॥

सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ॥ २२ ॥

प्राचीने ह्यृषिशार्दूल न चेहागच्छते पुनः ॥

आप्लुतो वाजिमेधस्य फलं प्राप्नोति पुष्कलम् ॥ २३ ॥

नियमैश्चोप वासैश्च शोषयन्देहमात्मनः॥
जलाहारा वायुभक्षाः पर्णाहाराश्च तापसाः ॥
तथा च स्थंडिलशया ये चान्ये नियताः पृथक् ॥।२४॥
ये स्नानमाचरिष्यंति तीर्थेऽस्मिन्नियमान्विताः ॥
ते यांति परमां सिद्धिं ब्रह्मणः परमं पदम् ॥ २५ ॥
अस्मिंस्तीर्थे तु यो दानं त्रुटिमात्रं च कांचनम् ॥
ददाति द्विजमुख्याय मेरुतुल्यं भवेत्फलम् ॥२६॥
अस्मिंस्तीर्थे तु ये श्राद्धं करिष्यंतीह मानवाः॥
एकविंशत्कुलोपेताः स्वर्गं यास्यंति ते ध्रुवम् ॥२७॥
पितृणां वल्लभं तीर्थं पिंडेनैकेन तर्पिताः ॥
ब्रह्मलोकं गमिष्यंति सुपुत्रेणेह तारिताः ॥ २८ ॥
भूयश्चान्नं प्रयच्छंति मोक्षमार्गं व्रजंति ते ॥ २९ ॥
अत्र ये शुभ कर्माणः प्रभासस्थां सरस्वतीम् ॥
पश्यंति तेपि यास्यंति स्वर्गलोकं द्विजोत्तमाः ॥7.1.270.३०॥
ये पुनस्तत्र भावेन नराः स्नानपरायणाः ॥
ब्रह्मलोकं समासाद्य ते रमिष्यंति सर्वदा ॥ ३१ ॥
दधि प्रदद्याद्योऽपीह ब्राह्मणाय मनोरमम् ॥
सोऽप्यग्निलोकमासाद्य भुंक्ते भोगान्सुशोभनान् ॥ ३२ ॥
ऊर्णाप्रावरणं योऽपि भक्त्या दद्याद्द्विजोत्तमे ॥
सोऽपि याति परां सिद्धिं मर्त्यैरन्यैः सुदुर्लभाम् ॥ ३३ ॥
ये चात्र मलनाशाय विशेयुर्मानवा जलम् ॥
गोप्रदानफलं तेषां सुखेन फलमादिशेत् ॥ ३४ ॥
भावेन हि नरः कश्चित्तत्र स्नानं समाचरेत् ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ३५ ॥
तर्पणात्पिंडदानाच्च नरकेष्वपि संस्थिताः ॥
स्वर्गं प्रयांति पितरः सुपुत्रेणेह तारिताः ॥ ३६ ॥
ते लभंतेऽक्षयांल्लोका न्ब्रह्मविष्ण्वीशशब्दितान् ॥
भूयस्त्वन्नं प्रयच्छन्ति मोक्षमार्गं लभंति ते ॥ ३७ ॥

स्वर्गनिश्रेणिसंभूता प्रभासे तु सरस्वती ॥

नापुण्यवद्भिः संप्राप्तुं पुंभिः शक्या महानदी ॥ ३८ ॥

प्राची सरस्वती चैव अन्यत्रैव तु दुर्लभा ॥

विशेषेण कुरुक्षेत्रे प्रभासे पुष्करे तथा ॥ ३९ ॥

प्राचीं सरस्वतीं प्राप्य योन्यत्तीर्थं हि मार्गते ॥

स करस्थं समुत्सृज्य कूर्परेण समाचरेत् ॥ 7.1.270.४० ॥

कृष्णपक्षे चतुर्दश्यां स्नानं च विहितं सदा ॥

पिण्याकेंगुदकेनापि पिंडं तत्र ददाति यः ॥

पितॄणामक्षयं भूयात्पितृलोकं स गच्छति ॥ ४१ ॥

सरस्वतीवाससमा कुतो रतिः सरस्वतीवाससमाः कुतो गुणाः ॥

सरस्वतीं प्राप्य गता दिवं नराः पुनः स्मरिष्यंति नदीं सरस्वतीम् ॥ ४२ ॥

॥ ईश्वर उवाच ॥ ॥

उक्त्वैवं भगवान्देवस्तत्रैवांतरधीयत ॥

सांनिध्यमकरोत्तत्र ततःप्रभृति शंकरः ॥ ४३ ॥

अत्र गाथा पुरा गीता विष्णुना प्रभविष्णुना ॥

स्नेहार्द्रेण च चित्तेन धर्मपुत्रं प्रति प्रिये ॥ ४४ ॥

मा गंगां व्रज कौंतेय मा प्रयागं च पुष्करम् ॥

तत्र गच्छ कुरुश्रेष्ठ यत्र प्राची सरस्वती ॥ ४५ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥

माहात्म्यं च सरस्वत्या भूयः किं श्रोतुमिच्छसि ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्राचीसरस्वतीमंकीश्वरमाहात्म्यवर्णनंनाम सप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७१

https://sa.wikisource.org/s/gfk
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्यैव संनिकृष्टे तु लिंगं ज्वालेश्वरं स्मृतम् ॥

शरः पाशुपतो यत्र ज्वलन्वै त्रिपुरारिणा ॥ १ ॥

पातितो यत्प्रदेशे तु तेन ज्वालेश्वरः स्मृतः ॥

तं दृष्ट्वा मानवो देवि मुच्यते सर्वपातकैः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशातिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये ज्वालेश्वरमाहात्म्यवर्णनंनामैकसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७२



॥ ईश्वर उवाच ॥ ॥

तत्रैव संस्थितं पश्येत्प्राची देव्यास्तु संनिधौ॥

लिंगत्रयं समाख्यातं त्रिपुराणां महात्मनाम् ॥१॥

विद्युन्माली तारकाख्यः कपोलाख्यस्तथैव च ॥

तैश्च प्रतिष्ठितं लिंगं दृष्ट्वा पापैः प्रमुच्यते ॥२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये त्रिपुरलिंगत्रयमाहात्म्य वर्णनंनाम द्विसप्तत्युत्तरद्विशततमोऽध्यायः ॥२७२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७३

https://sa.wikisource.org/s/g4q



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शंडतीर्थमनुत्तमम् ॥

सर्वपापोपशमनं सर्वकामफलप्रदम् ॥ १ ॥

तस्योत्पत्तिं प्रवक्ष्यामि शृणुष्वैकमनाः प्रिये ॥

पुरा पंचशिरा आसीद्ब्रह्मा लोकपितामहः ॥ २ ॥

शिरस्तस्य मया छिन्नं कस्मिंश्चित्कारणांतरे ॥

तत्र गंधवती जाता ब्रह्मणः सा च शोणितैः ॥ ३ ॥

तत्रोद्गता महातालास्तेन तालवनं स्मृतम् ॥

अथ करतले लग्नं कपालं ब्रह्मणो मम ॥ ४ ॥

शरीरं कृष्णतां यातं मम चैव वृषस्य च ॥

अथ तीर्थान्यनेकानि गतोहं पापशंकया ॥ ५ ॥

न क्वचिद्व्रजते पापं ततः प्रभासमागतः ॥

क्षेत्रे तत्र मया दृष्टा प्राची देवी सरस्वती ॥ ६ ॥

तत्र मे वृषभः स्नातुं प्रविष्टो जलमध्यतः ॥

तत्क्षणाच्छ्वेतता प्राप्तो मुक्तोहमपि हत्यया ॥ ७ ॥

करमध्ये च मे लग्नं कपालं पतितं तदा ॥

कपालमोचनश्चासौ लिंगरूपी स्थितोऽभवत् ॥ ८ ॥

तत्रापि यो ददेच्छ्राद्धं प्राचीदेव्यास्तु संनिधौ ॥

मातृकं पैतृकं चैव तृप्तं कुलशतं तथा ॥ ९ ॥

भवेच्च तस्य तृप्तिस्तु यावत्कल्पास्तु सप्ततिः ॥

मास आश्वयुजे देवि कृष्णपक्षे चतुर्दशी ॥

तत्र दद्यात्तु यः श्राद्धं दक्षिणामूर्तिमाश्रितः ॥ 7.1.273.१० ॥

यथावित्तोपचारेण सुपात्रे च यथाविधि ॥

यावद्युगसहस्रं तु तृप्ताः स्युस्ते पितामहाः ॥ ११ ॥

अन्नसुवर्णदानं च दधिकंबलमेव च ॥
तत्र देयं विधानेन सर्वपापोपशुद्धये ॥ १२ ॥
कृष्णरूपी वृषो देवि यदा श्वेतत्वमागतः ॥
शंडतीर्थमितिख्यातं तेन त्रैलोक्यपूजितम् ॥ १३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शंडतीर्थमाहात्म्यवर्णनंनाम त्रिसप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७४

https://sa.wikisource.org/s/gfm
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सूर्यप्राचीं महाप्रभाम् ॥

सर्वपापोपशमनीं सर्वकामफलप्रदाम् ॥ १ ॥

तत्र स्नात्वा महादेवि मुच्यते पञ्चपातकैः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सूर्यप्राचीमाहात्म्यवर्णनंनाम चतुःसप्त त्युत्तरद्विशततमोऽध्यायः ॥ २७४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७५

https://sa.wikisource.org/s/gfn



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं चैव त्रिलोचनम् ॥

ऋषितीर्थसमीपे तु सर्वपातकनाशनम् ॥

न्यङ्कुमत्युत्तरे कूल ऋषिभिः पूजितं पुरा ॥ १ ॥

त्रिनेत्रा मत्स्यका यत्र जलं स्फटिकसन्निभम् ॥

तत्र स्नात्वा नरो देवि मुच्यते ब्रह्महत्यया ॥ २ ॥

कृष्णपक्षे चतुर्द्दश्यां मासे भाद्रपदे तथा ॥

उपवासं तु कुर्वीत रात्रौ जागरणं तथा ॥ ३ ॥

प्रातः श्राद्धं प्रकुर्वीत विधिवत्पूजयेच्छिवम् ॥

रुद्रलोके वसेद्देवि वर्षाणामयुतत्रयम् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये त्रिनेत्रेश्वरमाहात्म्यवर्णनंनाम पञ्चसप्तत्युत्तरद्विशततमोऽध्यायः॥ २७५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७६

https://sa.wikisource.org/s/gfo
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि ऋषितीर्थस्य सन्निधौ ॥

कामिकं हि परं क्षेत्रं देविकानाम नामतः ॥ १ ॥

महासिद्धिवनं तत्र ऋषिसिद्धसमावृतम् ॥

नानाद्रुमलताकीर्णं पर्वतैरुपशोभितम्॥ २ ॥

चंपकैर्बकुलैर्दिव्यैरशोकैः स्तबकैः परैः ॥

पुन्नागैः किंकिरातैश्च सुगन्धैर्नागकेसरैः ॥ ३ ॥

मल्लिकोत्पलपुष्पैश्च पाटलापारिजातकैः ॥

चूतचंपकपित्थैश्च श्रीफलैः पनसैस्तथा ॥ ४ ॥

खर्जूरैर्बदरैश्चान्यैर्मातुलिंगैः सदाडिमैः ॥

जंबीरैश्चैव दिव्यैश्च नारंगैरुप शोभितम्॥ ५ ॥

शिखिभिः कोकिलाभिश्च गीयमानं तु षट्पदैः ॥

मृगैर्ऋक्षैर्वराहैश्च सिंहैर्व्याघ्रैस्तथा परैः ॥ ६ ॥

श्वापदैर्विविधाकारैः कन्दरै र्गह्वरैस्तथा ॥

सुरासुरगणैः सिद्धैर्यक्षगन्धर्वपन्नगैः ॥ ७ ॥

अप्सरोरगनागैश्च बहुभिस्तु समाकुलम् ॥

केचित्स्तुवंति ईशं तु केचिन्नृत्यंति चाग्रतः ॥ ८ ॥

पुष्पैर्वृष्टिं तु मुञ्चंति मुखवाद्यानि चापरे ॥

हसंति चापरे हृष्टा गर्जंति च तथापरे ॥ ९ ॥

ऊर्द्ध्वबाहवस्तथा चान्ये अन्ये ध्यायंति तद्गताः ॥

तस्मिन्स्थानं महादेवि देविकायास्तटे शुभे ॥ 7.1.276.१० ॥

उमापतीश्वरो नाम तत्राहं संस्थितः सदा ॥

युगेयुगे सदा पूर्णे कल्पे मन्वन्तरे तथा ॥ ११ ॥

न त्यजामि सदा देवि देविकायास्तटं शुभम् ॥

दुर्ल्लभं सर्वलोकेऽस्मिन्पवित्रं सुप्रियं हि मे ॥ १२ ॥

त्वया सह स्थितश्चाहं तस्मि न्स्थाने वरानने ॥

उमया युक्तदेहत्वात्तेन ख्यातं उमापतिः ॥ १३ ॥

पुष्यमासे त्वमावस्यां दद्याच्छ्राद्धं समाहितः ॥

न पश्यामि क्षयं तस्य तस्मिन्दत्तस्य पार्वति ॥ १४ ॥

ब्रह्महत्यासहस्रं तु तस्य दर्शनतो व्रजेत् ॥

गोभूहिरण्यवासांसि तत्र दद्याद्विचक्षणः ॥ १५ ॥

स एकः परमः पुत्रो यो गत्वा तत्र सुन्दरि ॥

ददेच्छ्राद्धं पितॄणां च तस्यांतो नैव विद्यते ॥ १६ ॥

देवैः सर्वैः समाहूता स्नानार्थं सा सरिद्वरा ॥

देविकेति समाख्याता तेन सा पापनाशिनी ॥ १७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविकायामुमापतिमाहात्म्यवर्णनंनाम षट्सप्तत्युत्तरद्विशततमोऽध्यायः ॥ २७६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७७



तत्रैव संस्थितं पश्येद्भूधरंनाम नामतः ॥

उद्धृत्य पृथिवीं यस्माद्दंष्ट्राग्रेण दधार सः ॥ १ ॥

भूधरस्तेन चाख्यातो देविकातटसंस्थितः ॥

वेदपादो यूपदंष्ट्रः क्रतुदन्तः स्रुचीमुखः ॥ २ ॥

अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥

अहोरात्रेक्षणपरो वेदांगश्रुतिभूषणः ॥ ३ ॥

आद्यनासः स्रुवतुंडः सामघोषस्वनो महान् ॥

प्राग्वंशकायो द्युतिमा न्नानादीक्षाविराजितः ॥ ४ ॥

दक्षिणाहृदयो योगी महासत्रशयो महान् ॥

उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥ ५ ॥

नानाच्छन्दोगतिपथो ब्रह्मोक्तक्रमविक्रमः ॥

भूत्वा यज्ञवराहोऽसौ तत्र स्थाने स्थितोऽभवत् ॥ ६ ॥

पुष्यमासे ह्यमावास्यामेकादश्यामथापि वा ॥

प्राप्ते प्रावृषि काले च ज्ञात्वा कन्यागतं रविम् ॥ ७ ॥

पायसं गुडसंयुक्तं हविष्यं च गुडप्लुतम् ॥

नमो वः पितरो रसाय अन्नाद्यमभिमंत्रयेत् ॥ ८ ॥

तेजोऽसिशुक्रमित्याज्यं दधिक्राव्णेन वै दधि ॥

क्षीरमाज्याय मन्त्रेण व्यञ्जनानि च यानि तु ॥ ९ ॥

भक्ष्यभोज्यानि सर्वाणि महानिन्द्रेण दापयेत् ॥

संवत्स रोनियो मंत्रं जप्त्वा तेनोदकं द्विजः ॥ 7.1.277.१० ॥

एवं संभोज्य वै विप्रान्पिण्डदानं तु दापयेत् ॥

इत्यनेन विधानेन यस्तत्र श्राद्धकृद्भवेत् ॥११॥

तस्य तृप्तास्तु पितरो यावदिंद्राश्चतुर्द्दश ॥

गयाश्राद्धं विनापीह गयाश्राद्धफलं लभेत्॥१२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविकामाहात्म्ये भूधरयज्ञवराहमाहात्म्यवर्णनंनाम सप्तसप्तत्युत्तरद्विशततमोऽध्यायः ॥२७७॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७८

https://sa.wikisource.org/s/g4y
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ईश्वर उवाच॥॥

ततो गच्छेन्महादेवि शूलस्थानमिति श्रुतम्॥

देविकायास्तटे रम्ये भास्करं वारितस्करम् ॥ १ ॥

यत्रातपत्तपो घोरं वाल्मीकिर्मुनिपुंगवः ॥

वाल्मीकिनामा विप्रर्षिर्यत्र सिद्धो महामुनिः ॥ २ ॥

यत्र सप्तर्षयो मुष्टास्तेनैव मुनिना प्रिये ॥

तस्यैव पश्चिमे भागे मरीचिप्रमुखा द्विजाः ॥ ३ ॥

॥ देव्युवाच ॥ ॥

कथं तु सिद्धो वाल्मीकिः कथं चौर्येऽकरोन्मनः ॥

कथं सप्तर्षयो मुष्टा एतन्मे वद शंकर ॥ ४ ॥

॥ ईश्वर उवाच॥ ॥

आसीत्पूर्वं द्विजो देवि नाम्ना ख्यातः शमीमुखः ॥

गार्हस्थ्ये वर्तमानस्य तस्य पुत्रो व्यजायत ॥

वैशाख इति नाम्नाऽसौ रौद्रकर्मा व्यजायत ॥ ५ ॥

मुक्त्वैकां गुरुशुश्रूषां नान्यत्किंचिदसौ द्विजः ॥

अकरोच्छोभनं कर्म दिवाप्रभृति नित्यशः ॥ ६ ॥

अथ कालेन महता पितरौ तस्य तौ प्रिये ॥

वार्द्धक्यभावमापन्नौ भर्तव्यौ तस्य विह्वलौ ॥ ७ ॥

स नित्यं पदवीं गत्वा मुष्ट्वा लोकान्स्वशक्तितः ॥

द्रव्यमादाय पितरौ भार्यां चापि पुपोष च ॥ ८ ॥

कस्यचित्त्वथ कालस्य तेन मार्गेण गच्छतः ॥

सप्तर्षींश्च तदापश्यत्तीर्थयात्रापरायणान् ॥ ९ ॥

तान्दृष्ट्वा यष्टिमुद्यम्य भर्त्सयन्प रुषाक्षरैः ॥

वाक्यैरुवाच तान्सर्वांस्तिष्ठध्वमिति भूरिशः ॥ 7.1.278.१० ॥

अथ ते मुनयः शांताः समलोष्टाश्मकांचनाः ॥
समाः शत्रौ च मित्रे च रोषरागविवर्जिताः ॥ ११ ॥
अस्माकं दर्शनं चास्य संभाष्यमृषिभिः सह ॥
संजातं निष्फलं मा स्यादित्युवाचांगिरा वचः ॥ १२ ॥ ॥
॥ अंगिरा उवाच ॥ ॥
भोभोस्तस्कर मे वाक्यं शृणुष्वावहितः क्षणात् ॥
आत्मनस्तु हितार्थाय सत्यं चैव वदाम्यहम् ॥
तव कः पोष्यवर्गोऽस्ति तच्च सर्वं वदस्व मे ॥ १३ ॥
॥ तस्कर उवाच ॥ ॥
स्यातां मे पितरौ वृद्धौ भार्यैकाऽपत्यवर्ज्जिता ॥
एका दासी ह्यहं षष्ठो नान्यदस्त्यधिकं मुने ॥ १४ ॥
॥ अंगिरा उवाच ॥ ॥
गत्वा पृच्छस्व तान्सर्वान्पुष्टान्पापार्जितैर्धनैः॥
अहं करोमि पापानि सर्वे यूयं तु भक्षकाः ॥१५॥
तत्पापं भविता कस्य कथयंत्विति मे लघु ॥
तथैव गत्वा पप्रच्छ पितरौ तावथोचतुः ॥१६॥
॥ मातापितरावूचतुः॥ ॥
एकः पापानि कुरुते फलं भुंक्ते महा जनः ॥
भोक्तारो विप्रमुच्यंते कर्ता दोषेण लिप्यते ॥१७॥
यः करोत्यशुभं कर्म कुटुंबार्थं तु मंदधीः॥
आत्मा न वल्लभस्तस्य नूनं पुंसः सुपापिनः ॥ १८ ॥
॥ ईश्वर उवाच ॥ ॥
तयोः स वचनं श्रुत्वा पुनर्भीतमनास्तदा ॥
तयोस्तु संनतिं कृत्वा पितरौ पुनरब्रवीत्॥ १९ ॥
युवाभ्यां हितमेवाहं यत्करोम्यशुभं क्वचित् ॥
तस्यांशं भुज्यते किंचिद्युवाभ्यां वा न वोच्यताम् ॥7.1.278.२०॥
॥ पितरावूचतुः ॥ ॥
पूर्वे वयसि पुत्र त्वमावाभ्यां पाल्य एव हि ॥

उत्तरे तु वयं पाल्याः सम्यक्पुत्र त्वया पुनः ॥ २१ ॥

इतरेतरधर्मोऽयं निर्दिष्टः पद्मयोनिना ॥

आवाभ्यां यत्कृतं कर्म युष्मदर्थं शुभाशुभम् ॥

भोक्ष्यामो वयमेवेह तत्सर्वं नात्र संशयः ॥ ।२२ ॥

अथ त्वमपि यद्वत्स प्रकरोषि शुभाशुभम् ॥

भोक्ष्यसे सकलं तद्वत्स्वयं नान्यः परत्र च ॥२३॥

अवश्यं स्वयमश्नाति कृतं कर्म शुभाशुभम्।

तस्मान्नरेण कर्तव्यं शुभं कर्म विपश्चिता ॥ २४ ॥

चौर्यं वाथ कृषिं वाथ कुसीदं वाथ पुत्रक ॥

वाणिज्यमथवा प्रेष्यं कृत्वाऽस्माकं च भोजनम् ॥

अहर्निशं त्वया देयं न दोषोऽस्मासु पुत्रक ॥ २५ ॥

ताभ्यां तद्वचनं श्रुत्वा ततो भार्यामभाषत ।

तदेव वाक्यं साऽवोचद्यत्प्रोक्तं गुरुभिः पुरा ॥

ततो वैराग्यमापन्नो वैशाखो मुनिसत्तमः ॥ २६ ॥

गर्हयन्नेवमात्मानं भूयोभूयः सुदुःखितः ॥

धिङ्मां दुष्कृतकर्माणं पापकर्मरतं सदा ॥ २७ ॥

विवेकेन परित्यक्तं सत्संगेन विवर्जितम् ॥

यः करोति नरः पापं न सेवयति पंडितान् ॥

न चात्मा वल्लभस्तस्य एतन्मे वर्तते हृदि ॥ २८ ॥

एवं विकल्पहृदयो गत्वा स ऋषिसन्निधौ ॥

उवाच श्लक्ष्णया वाचा गम्यतामिति सादरम् ॥ ॥ २९ ॥

वृसी प्रगृह्यतामेषा तथैव च कमण्डलुः ॥

वल्कलानि च चीराणि मृगचर्माण्यशेषतः ॥ 7.1.278.३० ॥

क्षम्यतामपराधो मे दीनस्य कृपणस्य च ॥

सत्संगेन वियुक्तस्य मूर्खस्य मुनिसत्तमाः ॥ ३१ ॥

अद्यप्रभृति निवृत्तः कर्मणोऽस्याहमेव च ॥

रौद्रस्य सुनृशंसस्य साधुभिर्गर्हितस्य च ॥

तस्मात्कथयतास्माकं निवृत्तिं चास्य कर्मणः॥३२॥

येन युष्मत्प्रसादेन पापान्मोक्षमहं व्रजे॥

उपवासोऽथ मन्त्रो वा नियमो वाथ संयमः॥३३॥

॥ ऋषय ऊचुः॥ ॥

साधु पृष्टं त्वया वत्स तत्त्वमेकमनाः शृणु॥

संगृह्य कीर्तयिष्यामस्त्वयाऽऽख्येयं न कस्यचित्॥३४॥

तेन जप्तेन पापत्मन्मोक्षं प्राप्स्यसि निश्चितम्॥

झाटघोटस्त्वया कीर्त्यो मन्त्रोऽयं चतुरक्षरः॥३५॥

सर्वपापहरो नृणां स्वर्गमोक्षफलप्रदः॥

स तदैवं हि तैः प्रोक्तो वैशाखो मुनिपुंगवैः ॥

तस्थौ जाप्यपरो नित्यं गतास्ते मुनिपुंगवाः ॥ ३६ ॥

तस्यैवं जपतो देवि देविकायास्तटे शुभे ॥

अनिशं गुरु भक्तस्य समाधिः समपद्यत ॥ ३७ ॥

क्षुत्पिपासा तदा नष्टा शुद्धिमायात्कलेवरम् ॥ ३८ ॥

मंत्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ॥

यादृशी भाव ना यस्य सिद्धिर्भवति तादृशी ॥ ३९ ॥

निर्मलोऽयं स्वभावेन परमात्मा यथा हितः ॥

उपाधिसंगमासाद्य विकारं स्फटिको यथा॥ 7.1.278.४० ॥

यथा च भ्रमरी वंध्या लब्ध्वा जीवमणुं क्वचित् ॥

स्वस्थाने स्थाप्य तं ध्यायेद्भ्रमरी ध्यानसंयुता ॥ ४१ ॥

स तु तद्ध्यानसंवृद्धो जीवो भवति तादृशः ॥

अन्ययोन्युद्भवो वापि तथा निदर्शनं सताम्॥४२॥

आदिष्टो गुरुणा यश्च विकल्पं यदि गच्छति॥

नासौ सिद्धिमवाप्नोति मंदभाग्यो यथा निधिम्॥ !॥ ४३ ॥

एवं वर्षसहस्राणि समतीतानि भूरिशः॥

तस्य जाप्यपरस्यैव अमृतत्वं गतस्य च ॥ ४४ ॥

ततः कालक्रमेणैव वल्मीकेन स वेष्टितः ॥

येनासौ सर्वतो व्याप्तो न च तं स बुबोध वै ॥ ४५ ॥

कस्यचित्त्वथकालस्य मुनयस्ते समागताः ॥

तं प्रदेशं तु संप्रेक्ष्य सहाय्यमितरेतरम्॥

ऊचुः परस्परं सर्वे दत्त्वा चैव करैः करम् ॥४६॥

॥ ऋषय ऊचुः ॥ ॥

अत्रासौ तस्करः प्राप्तो वैशाखो दारुणाकृतिः ॥

येन सर्वे वयं मुष्टा अस्मि न्स्थाने समागताः ॥ ४७ ॥

एवं संजल्पमानास्ते शुश्रुवुः शब्दमुत्तमम् ॥

वल्मीकमध्यतो व्यक्तं ततस्ते कौतुकान्विताः ॥ ४८ ॥

अखनंस्तत्र वल्मीकं कुशीभिः पर्वतोपमम् ॥ ४९ ॥

अथ ते ददृशुस्तत्र विशाखं मुनिसत्तमाः ॥

जपंतमसकृन्मत्रं तमेव चतुरक्षरम् ॥ 7.1.278.५० ॥

तं समाधिगतं ज्ञात्वा भेषजैर्योगसंमतैः ॥

ममर्दुः सर्वतो विप्रास्तत्र सुप्ततनौ भृशम् ॥ ५१ ॥

ततोऽब्रवीदृषीन्सर्वान्स्वमर्थं गृह्यतां द्विजाः ॥

युष्मदीयं गृहीतं यत्पा पेनाकृतबुद्धिना ॥ ५२ ॥

गम्यतां तीर्थयात्रायां सर्वे मुक्ता मया द्विजाः ॥

वाच्यौ मे पितरौ गत्वा तथा भार्या द्विजोत्तमाः ॥ ५३ ॥

सर्व संगपरित्यक्तो विशाखः समपद्यत ॥

दर्शनं कांक्षते नैव भवद्भिस्तु यथा पुरा ॥ ५४ ॥

॥ ऋषय ऊचुः ॥ ॥

बहुवर्षाण्यतीतानि तवात्र वसतो मुने ॥

सर्वे ते निधनं प्राप्ता ये चान्ये ते कुटुंबिनः ॥ ५५ ॥

वयं चिरात्समायाताः स्थानेऽस्मिन्मुनिसत्तमाः ॥

स त्वं सिद्धिमनुप्राप्तो मंत्रादस्मादसंशयम् ॥ ५६ ॥

यस्मात्त्वं मंत्रमेकाग्रो ध्यायन्वल्मीकमाश्रितः ॥

तस्माद्वाल्मीकिनामा त्वं भविष्यसि महीतले ॥ ५७ ॥

स्वच्छंदा भारती देवी जिह्वाग्रे ते भविष्यति ॥

कृत्वा रामायणं काव्यं ततो मोक्षं गमिष्यसि॥ ५८ ॥

विशाख उवाच ॥

गृह्यतां द्विजशार्दूलाः प्रसन्ना गुरुदक्षिणाम्॥

येनाहमनृणो भूत्वा करोमि सुमहत्तपः ॥ ५९ ॥

॥ ऋषय ऊचुः ॥ ॥

एषा नो दक्षिणा विप्र यस्त्वं सिद्धिमुपागतः ॥

सर्वकामसमृद्धात्मा कृतकृत्या वयं मुने ॥ 7.1.278.६० ॥

वरं वरय भूयस्त्वं यस्ते मनसि वर्तते ॥ ६१ ॥

॥ वाल्मीकिरुवाच ॥ ॥

भवंतो यदि तुष्टा मे यदि देयो वरो मम ॥

कथ्यतां तर्हि मे शीघ्रं को देवो ह्यत्र संस्थितः ॥

देविकायास्तटे रम्ये सर्वकामफलप्रदः ॥ ६२ ॥

॥ ऋषय ऊचुः ॥ ॥

शृणुष्वैकमना विप्र यो देवश्चात्र संस्थितः ॥

पश्य निंबमिमं विप्र बहुशाखाप्रविस्तरम् ॥ ६३ ॥

अस्य मूले स्थितः सूर्य्यः कल्पादौ ब्रह्मणोंऽशजः ॥

तमाराधय यत्तेसावस्य स्थानस्य देवता ॥ ६४ ॥

सूर्यक्षेत्रं समाख्यातमिदं गव्यूतिमात्रकम् ॥

अत्र स्थाने स्थिता येपि तेषां स्वर्गो ध्रुवं भवेत् ॥ ६५ ॥

अद्यप्रभृति विप्रेन्द्र मूलस्थानमिति श्रुतम् ॥

स्थानं सूर्यस्य विप्रेन्द्र कार्या चात्र त्वया स्थितिः ॥ ॥ ६६ ॥

अद्यप्रभृति विप्रेंद्र तीर्थमेतन्महीतले ॥

गमिष्यति परां ख्यातिं देविकातटमाश्रितम् ॥ ६७ ॥

वयं मुष्टा यतो विप्र मूलस्थाने पुरा स्थिताः ॥

मूलस्थानेति वै नाम लोके ख्यातिं गमिष्यति ॥ ६८ ॥

अत्र ये मानवा भक्त्या स्नानं सूर्यस्य संगमे ॥

उत्तरे तु करिष्यंति ते यास्यंति त्रिविष्टपम् ॥ ६९ ॥

तर्पणं तिलमिश्रेण जलेन द्विजसत्तमाः ॥

गयाश्राद्धसमा तुष्टिः पितृणां च भविष्यति ॥ 7.1.278.७० ॥

अत्र ये मानवा भक्त्या श्राद्धं दास्यंति सत्तमाः ॥

शाकमूलफलैर्वापि सम्यक्छ्रद्धासमन्विताः ॥ ७१ ॥

तेषां यास्यंति पितरो मोक्षं नैवात्र संशयः ॥ ७२ ।

अपि कीटपतंगा ये पक्षिणः पशवो मृगाः ॥

तृषार्ता जलसंस्पर्शाद्यास्यंति परमां गतिम् ॥ ७३ ॥

वयमेव सदात्रस्थाः श्रावणे मासि सत्तम ॥

पौर्णमास्यां भविष्यामस्तव स्नेहादसंशयम् ॥ ७४ ॥

तस्मिन्नहनि यस्तोयैः पितॄन्संतर्पयिष्यति ॥

तस्याष्टादशकुष्ठानि क्षयं यास्यंति तत्क्षणात् ॥ ७५ ॥

कपालोदुम्बराख्यैंद्रमण्डलाख्यविचर्चिकाः ॥

ऋष्यचर्मैककिटिभसिध्मालसविपादिकाः ॥ ७६ ॥

दद्रुसिता रुचिस्फोटं पुण्डरीकं सकाकणम् ॥

पामा चर्मदलं चेति कुष्ठान्यष्टादशैव तु ॥ ७७ ॥

गमिष्यंति न संदेह इत्युक्त्वांतर्दधुश्च ते ॥

ऋषिः सिषेवे च रविं चक्रे रामायणं ततः ॥ ७८ ॥

तस्मात्पश्येच्च तं देवं सर्वयज्ञफलप्रदम् ॥

शृणुयाच्च कथां चैनां सर्वपातकनाशिनीम् ॥ ७९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविकामाहात्म्यमूलस्थानमाहात्म्यवर्णनंनामाष्टसप्तत्युत्तर द्विशततमोऽध्यायः ॥२७८॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २७९

https://sa.wikisource.org/s/gfp
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥

ततो गच्छेन्महादेवि च्यवनार्कमनुत्तमम् ॥

हिरण्यापूर्वभागस्थं च्यवनेन प्रतिष्ठितम्॥१॥

सर्वकामप्रदं नृणां पूजितं विधिवन्नरैः ॥

सप्तम्यां च विधानेन यः स्तोष्यति रविं नरः ॥ २ ॥

अष्टोत्तरशतैर्नाम्नां सम्यक्छ्रद्धासमन्वितः ॥

शृणु तानि महादेवि शुचिर्भूत्वा समाहितः ॥ ३ ॥

क्षणं त्वं कुरु देवेशि सर्वं वक्ष्याम्यशेषतः ॥

धौम्येन तु यथापूर्वं पार्थाय सुमहात्मने ॥ ४ ॥

नामाष्टशतमाख्यातं तच्छृणुष्व महामते ॥

सूर्योऽर्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः ॥ ५ ॥

गभस्तिमानजः कालो मृत्युर्द्धाता प्रभाकरः ॥

पृथिव्यापश्च तेजश्च खं वायुश्च परायणः ॥ ६ ॥

सोमो बृहस्पतिः शुक्रो बुधोऽगारक एव च ॥

इन्द्रो विवस्वान्दीप्तांशुः शुचिः सौरिः शनैश्चरः ॥ ॥ ७ ॥

ब्रह्मा रुद्रश्च विष्णुश्च स्कन्दो वैश्रवणो यमः ॥

वैद्युतो जाठरश्चाग्निरिंधनस्तेजसां पतिः ॥ ८ ॥

धर्मध्वजो वेदकर्त्ता वेदांगो वेदवाहनः ॥

कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ॥ ९ ॥

कलाकाष्ठामुहूर्त्ताश्च पक्षा मासा अहर्निशाः ॥

संवत्सरकरोऽश्वस्थः कालचक्रो विभावसुः ॥ 7.1.279.१० ॥

पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥

लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः ॥११॥

वरुणः सागरोंशुश्च जीवन्तो जीवनोऽरिहा ॥

भूताश्रयो भूतपतिः सर्वभूतनिषेवितः ॥ १२ ॥

स्रष्टा संवर्त्तको वह्निः सर्वस्यादिकरोऽमलः ॥

अनंतः कपिलो भानुः कामदः सर्वतोमुखः ॥ १३ ॥

जयो विषादो वरदः सर्वधातुनिषेवितः ॥

समः सुवर्णो भूतादिः शीघ्रगः प्राणधारकः ॥ १४ ॥

धन्वंतरिर्धूमकेतुरादिदेवोऽदितेः सुतः॥

द्वादशात्माऽरविंदाक्षः पिता माता पितामहः ॥१५॥

स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥

देहकर्त्ता प्रशांतात्मा विश्वात्मा विश्वतोमुखः ॥

चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषाऽन्वितः ॥ १५ ॥

एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः ॥

नाम्नामष्टोत्तरशतं प्रोक्तं शक्रेण धीमता ॥ १७ ॥

शक्राच्च नारदः प्राप्तो धौम्यस्तु तदनन्तरम् ॥

धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ॥ १८ ॥

एतानि कीर्तनीयस्य सूर्यस्यामिततेजसः ॥

नामानि यः पठेन्नित्यं सर्वान्कामानवाप्नुयात् ॥ १९ ॥

सुरपितृमनुजयक्षसेवितमसुरनिशाचरसिद्धवंदितम् ॥

वरकनकहुताशनप्रभं त्वमपि नम हिताय भास्करम् ॥ 7.1.279.२० ॥

सूर्योदये यस्तु समाहितः पठेत्स पुत्रलाभं धनरत्नसंचयान् ॥

लभेत जातिस्मरतां सदा नरः स्मृतिं च मेधां च स विंदते पुमान् ॥॥ २१॥

इमं स्तवं देववरस्य यो नरः प्रकीर्त्तयेच्छुद्धमनाः समाहितः ॥

स मुच्यते शोकदवाग्निसारात्लभेत कामान्मनसा यथेप्सितान् ॥२२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये च्यवनादित्यमाहात्म्यसूर्याष्टोत्तरशतनाम माहात्म्यवर्णनंनामैकोनाशीत्युत्तरद्विशततमोऽध्यायः॥ २७९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८०

https://sa.wikisource.org/s/gfq



ईश्वर उवाच॥

ततो गच्छेन्महादेवि च्यवनेश्वरमुत्तमम्॥

तत्रैव संस्थितं लिंगं सर्वपातकनाशनम् ॥ १ ॥

यत्र शर्यातिना दत्ता सुकन्या सा महर्षये ॥

यत्र संस्तंभितं सैन्यमानाहार्त्तमथाकरोत् ॥ २ ॥। (आनाह – जठर आध्मानम्)

एष शर्यातियज्ञस्य देशो देवि प्रकाशते ॥

प्रभासक्षेत्रमध्ये तु साक्षात्पातकनाशनः ॥ ३ ॥

साक्षात्तत्राभजत्सोममश्विभ्यां सह कौशिकः ॥

चुकोप भार्गवश्चैव महेन्द्राय महातपाः ॥ ४ ॥

संस्तंभयामास च तं वासवं च्यवनः प्रभुः ॥

सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ॥ ५ ॥ ॥

॥ देव्युवाच ॥ ॥

कथं विष्टंभितस्तेन भगवान्पाकशासनः ॥

किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ ६ ॥

नासत्यौ च कथं ब्रह्मन्कृ तवान्सोमपायिनौ ॥

तत्सर्वं च यथावृत्तमाख्यातु भगवान्मम ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम नामतः ॥

स प्रभासं समासाद्य तपस्तेपे महामुनिः ॥ ८ ॥

स्थाणुभूतो महातेजा वीरस्थाने च भामिनि ॥

अतिष्ठत्सुचिरं कालमेकदेशे वरानने ॥ ९ ॥

स वल्मीकोऽभवत्तत्र लताभिरभिसंवृतः ॥

कालेन महता देवि समाकीर्णः पिपीलकैः ॥ 7.1.280.१० ॥

स तथा संवृतो धीमान्मृत्पिंड इव सर्वतः ॥

तप्यते स्म तपो घोरं वल्मीकेन समावृतः ॥ ११ ॥

अथास्य यातकालस्य शर्यातिर्नाम पार्थिवः ॥

तीर्थयात्राप्रसंगेन श्रीसोमेशदिदृक्षया ॥

आजगाम महाक्षेत्रं प्रभासं पापनाशनम् ॥ १२ ॥

तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहाः ॥

एकैव तु सुता शुभ्रा सुकन्यानाम नामतः ॥ ॥ १३ ॥

सा सखीभिः परिवृता सर्वाभरणभूषिता ॥

चंक्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ १४ ॥

सा चैव सुदती तत्र पश्यमाना मनोरमान् ॥

वनस्पतीन्विचिन्वंती विजहार सखीवृता ॥ १५ ॥

रूपेण वयसा चैव सुरापानमदेन च ॥

बभंज वनवृक्षाणां शाखाः परम पुष्पिताः ॥ १६ ॥

तां सखीरहितामेकामेकवस्त्रामलंकृताम् ॥

ददर्श भार्गवो धीमांश्चरंतीमिव विद्युतम् ॥ १७ ॥

तां पश्यमानो विजने स रेमे परमद्युतिः ॥

क्षामकण्ठश्च ब्रह्मर्षिस्तपोबलसमन्वितः ॥ १८ ॥

तामभाषत कल्याणीं सा चास्य न शृणोति वै ॥

ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ॥ १९ ॥

कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ॥

किन्नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥ 7.1.280.२० ॥

अक्रुध्यत्स तया विद्धो नेत्रे परममन्युमान् ॥

ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥ २१ ॥

ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम् ॥

तथागतमभिभेक्ष्य पर्यतप्यत पार्थिवः ॥ २२ ॥

तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ॥

केनापकृतमद्येह भार्गवस्य महात्मनः ॥

ज्ञातं वा यदि वाऽज्ञातं तदिदं ब्रूत मा चिरम्॥ २३ ॥

तत्रोचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ॥

सर्वोपायैर्यथाकामं भवान्समधिगच्छतु ॥ २४ ॥

ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ॥

पर्यपृच्छत्सुहृद्वर्गं प्रत्यजानन्न चैव ते ॥ २५ ॥

आनाहार्तं ततो दृष्ट्वा तत्सैन्यं संमुखोदितम्॥

पितरं दुःखितं चापि सुकन्यैवमथाब्रवीत् ॥ २६ ॥

मया तातेह वल्मीके दृष्टं सर्वमभिज्वलत् ॥

उद्योतवदविज्ञानात्तन्मया विद्धमन्तिकात् ॥ २७ ॥

एतच्छ्रुत्वा तु शर्याति र्वल्मीकं क्षिप्रमभ्यगात्॥

तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् ॥ २८ ॥

अथावदत्स्वसैन्यार्थं प्रांजलिः स महीपतिः ॥

अज्ञानाद्बालया यत्ते कृतं तत्क्षंतुमर्हसि ॥ २९ ॥

ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ॥

रूपौदार्यसमायुक्तां लोभमोहसमावृताम् ॥ 7.1.280.३० ॥

तामेव प्रतिगृह्याहं राजन्दुहितरं तव ॥

क्षमिष्यामि महीपाल सत्यमेतद्ब्रवीमि ते ॥ ३१ ॥

॥ ईश्वर उवाच ॥ ॥

ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन्॥

ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ ३२ ॥

प्रतिगृह्य च तां कन्यां भगवान्प्रससाद ह ॥

प्राप्ते प्रसादे राजा तु ससैन्यः पुरमाव्रजत् ॥ ३३ ॥

सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दितम् ॥

नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ ३४ ॥

अग्नीनामतिथीनां च शुश्रूषुरनसूयया ॥

समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ ३५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभास क्षेत्रमाहात्म्ये च्यवनेश्वरमाहात्म्यवर्णनंनामाशीत्युत्तरद्विशततमोऽध्यायः ॥ २८० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८१



॥ ईश्वर उवाच ॥ ॥

कस्यचित्त्वथ कालस्य त्रिदशावश्विनौ प्रिये ॥

कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ १ ॥

तां दृष्ट्वा दर्शनीयांगीं देवराजसुतामिव ॥

ऊचतुः समभिद्रुत्य नासत्यावश्विनावथ ॥ २ ॥

कस्य त्वमसि वामोरु किं वनेऽस्मिंश्चिकीर्षसि॥

इच्छावस्त्वां च विज्ञातुं तत्त्वमाख्याहि शोभने ॥ ३ ॥

ततः सुकन्या संवीता तावुवाच सुरोत्तमौ ॥

शर्यातितनयां वित्तं भार्यां च च्यवनस्य माम् ॥ ४ ॥

ततोऽश्विनौ प्रहस्यैनामब्रूतां पुनरेव तु ॥

कथं त्वं च विदित्वा तु पित्रा दत्ताऽऽगता वने ॥ ५ ॥

भ्राजसे गगनोद्देशे विद्युत्सौदामनी यथा ॥

न देवेष्वपि तुल्यां हि तव पश्याव भामिनि ॥ ६ ॥

सर्वाभरणसंपन्ना परमांबरधारिणी ॥

मामैवमनवद्यांगि त्यजैनमविवेकिनम् ॥ ७ ॥

कस्मादेवंविधा भूत्वा जराजर्जरितं भुवि ॥

त्वमुपास्ये हि कल्याणि कामभावबहिष्कृतम् ॥ ८ ॥

असमर्थं परित्राणे पोषणे वा शुचिस्मिते ॥

सा त्वं च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥ ९ ॥

पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ॥

एवमुक्ता सुकन्या सा सुरौताविदमब्रवीत् ॥7.1.281.१० ॥

रताऽहं च्यवने पत्यौ न चैवं परिशंकतम् ॥

तावब्रूतां पुनश्चैतामावां देवभिषग्वरौ ॥ ११ ॥

युवानं रूपसंपन्नं करिष्यावः पतिं तव ॥

ततस्तस्यावयोश्चैव पतिमेकतमं वृणु ॥ १२ ॥
एतेन समयेनावां शमं नय सुमध्यमे ॥
सा तयोर्वचनाद्देवि उपसंगम्य भार्गवम् ॥
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति ॥ १३ ॥
तद्वाक्यं च्यवनो भार्यामुवाचाद्रियतामिति ॥
इत्युक्ता च्यवनेनाथ सुकन्या तावुवाच वै ॥ १४ ॥
एवं देवौ भवद्भ्यां यत्प्रोक्तं तत्क्रियतां लघु ॥
इत्युक्तौ भिषजौ तत्र तया चैव सुकन्यया ॥
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥ १५ ॥
ततोऽपश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ॥
अश्विनावपि तद्देवि ततः प्राविशतां जलम् ॥ १६ ॥
ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्ततः ॥
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः ॥ १७ ॥
दिव्यवेषधराश्चैव मनसः प्रीतिवर्द्धनाः ॥
तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे ॥ १८ ॥
अस्माकमीप्सितं भद्रे यतस्त्वं वरवर्णिनी ॥
यत्र वाप्यभि कामासि तं वृणीष्व सुशोभने ॥ १९ ॥
सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ॥
निश्चित्य मनसा बुद्ध्या देवि वव्रे पतिं स्वकम् ॥ 7.1.281.२० ॥
लब्ध्वा तु च्यवनो भार्यां वयोरूपमवस्थितः ॥
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ॥ २१ ॥
यदहं रूपसंपन्नो वयसा च समन्वितः ॥
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवान्निजाम् ॥
तदब्रूतं वै विधास्यामि भवतोर्यदभीप्सितम् ॥ २२ ॥
॥ अश्विनावूचतुः ॥ ॥
आवां तु देवभिषजौ न च शक्रः करोति नौ ॥
सोमपानार्हतां तस्मात्कुरु नौ सोमपायिनौ ॥ २३ ॥
॥ च्यवन उवाच ॥ ॥

अहं वां यज्ञभागार्हौ करिष्ये सोमपायिनौ ॥ २४ ॥

॥ ईश्वर उवाच ॥ ॥

ततस्तौ हृष्टमनसौ नासत्यौ दिवि जग्मतुः ॥

च्यवनोऽपि सुकन्या च सुराविव विजह्रतुः ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये च्यवनेश्वर माहात्म्यवर्णनंनामैकाशीत्युत्तरद्विशततमोऽध्यायः ॥ २८१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८२

https://sa.wikisource.org/s/gfs
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततः श्रुत्वा च शर्यातिर्वलभीस्थान संस्थितः ॥

वयस्थं च्यवनं श्रुत्वा आनन्दोद्गतमानसः ॥ १ ॥

प्रहृष्टः सेनया सार्द्धं स प्रायाद्भार्गवाश्रमम् ॥

च्यवनं च सुकन्यां च हृष्टां देव सुतामिव ॥ २ ॥

गतो महीपः शर्यातिः कृत्स्नानंदमहोदधिः ॥

ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ॥

तत्रोपविष्टः कल्याणीः कथाश्चक्रे महामनाः ॥ ३ ॥

अथैनं भार्गवो देवि ह्युवाच परिसांत्वयन् ॥

याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ॥ ४ ॥

ततः परमसंहृष्टः शर्यातिः पृथिवीपतिः ॥

च्यवनस्य महादेवि तद्वाक्यं प्रत्यपूजयत् ॥ ५ ॥

प्रशस्तेऽहनि याज्ञीये सर्वकामसमृद्धिमत् ॥

कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥ ६ ॥

तत्रैव च्यवनो देवि याजयामास भार्गवम् ॥

अद्भुतानि च तत्रासन्यानि तानि महेश्वरि ॥ ७ ॥

अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ॥

तमिन्द्रो वारयामास मा गृहाण तयोर्ग्रहम् ॥ ८.॥

॥ इन्द्र उवाच ॥ ॥

उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ॥

भिषजौ देवतानां हि कर्मणा तेन गर्हितौ ॥ ९ ॥

॥ च्यवन उवाच ॥ ॥

माऽवमंस्था महात्मानौ रूपद्रविणवर्चसौ ॥

यौ चक्रतुश्च मामद्य वृंदारकमिवाजरम् ॥ 7.1.282.१० ॥

समत्वेनान्यदेवानां कथं वै नेक्षते भवान्॥

अश्विनावपि देवेन्द्र देवौ विद्धि परंतप ॥ ११ ॥

॥ इन्द्र उवाच ॥ ॥

चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ॥

लोके चरंतौ मर्त्यानां कथं सोममिहार्हतः ॥ १२ ॥

॥ ईश्वर उवाच ॥ ॥

एतदेव यदा वाक्यमाम्रेडयति वासवः ॥

अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः ॥ १३ ॥

ग्रहीष्यंतं ततः सोममश्विनोः सत्तमं तदा ॥

समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ १४ ॥

आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ॥

वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ १५ ॥

एवमुक्तः स्वयमिन्द्रमभिवीक्ष्य स भार्गवः ॥

जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥ १६ ॥

ततोऽस्मै प्राहरत्कोपाद्वज्रमिंद्रः शचीपतिः ॥

तस्य प्रहरतो बाहुं स्तंभयामास भार्गवः ॥ १७ ॥

स्तंभयित्वाथ च्यवनो जुहुवे मन्त्रतोऽनलम् ॥

कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ १८ ॥

तत्र कृत्योद्भवो यज्ञे मुनेस्तस्य तपोबलात् ॥

मदोनाम महावीर्यो महाकायो महासुरः ॥ १९ ॥

शरीरं यस्य निर्देष्टुमशक्यं च सुरासुरैः ॥

तस्य प्रमाणं वपुषा न तुल्यमिह विद्यते ॥ 7.1.282.२० ॥

तस्यास्यं चाभवेद्घोरं दंष्ट्रा दुर्दर्शनं महत् ॥

हनुरेकः स्थितस्तस्य भूमावेको दिवं गतः ॥ २१ ॥

चतस्रश्चापि ता दंष्ट्रा योजनानां शतंशतम् ॥

इतरे त्वस्य दशना बभूबुर्दशयोजनाः ॥२२ ॥

प्राकारसदृशाकारा मूलाग्रसमदर्शनाः ॥

नाम्ना पर्वतसंकाशाश्चायुतायुतयोजनाः ॥ २३ ॥

नेत्रे रविशशिप्रख्ये भ्रुवावंतकसन्निभे ॥
लेलिहज्जिजह्वया वक्त्रं विद्युच्चलितलोलया ॥
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ॥ २४ ॥
स भक्षयिष्यन्संक्रुद्धः शतक्रतुमुपाद्रवत् ॥
महता घोरनादेन लोकाञ्छब्देन छादयन् ॥ २५ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये च्यवनेश्वरमाहात्म्ये च्यवनेन नासत्ययज्ञभागप्रतिरोधकवज्र मोचनोद्यतशक्रनाशाय कृत्योद्भवमदनामकमहाऽसुरोत्पादनवृत्तान्तवर्णनंनाम द्व्यशीत्युत्तरद्विशततमोऽध्यायः ॥ २८२ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८३



॥ ईश्वर उवाच ॥ ॥

तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः ॥

आयांतं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ १ ॥

भयात्स्तंभितरूपेण लेलिहानं मुहुर्मुहुः ॥

प्रणतोऽब्रवीन्महादेवि च्यवनं भयपीडितः ॥ २ ॥

सोमार्हावश्विनावेतावद्यप्रभृति भार्गव ॥

भविष्यतः सर्वमेतद्वचः सत्यं ब्रवीमि ते ॥ ३ ॥

मा ते मिथ्या समारम्भो भवत्वथ तपोधन ॥

जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ॥ ४ ॥

सोमार्हावश्विनावेतौ यथैवाद्य त्वया कृतौ ॥

भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ॥ ५ ॥

सुकन्यायाः पितुश्चास्य लोके कीर्तिर्भवेदिति ॥

अतो मयैतद्विहितं तद्वीर्यस्य प्रकाशनम् ॥

तस्मात्प्रसादं कुरु मे भवत्वेतद्यथेच्छसि ॥ ६ ॥

एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ॥

मन्युर्व्युपारमच्छीघ्रं मानश्चैव सुरेशितुः ॥ ७ ॥

मदं च व्यभजद्देवि पाने स्त्रीषु च वीर्यवान् ॥

अक्षेषु मृगयायां च पूर्वं सृष्टं पुनःपुनः ॥

तथा मदं विनिक्षिप्य शक्रं संतर्प्य चेंदुना ॥ ८ ॥

अश्विभ्यां सहितान्सर्वान्याजयित्वा च तं नृपम् ॥

विख्याप्य वीर्यं सर्वेषु लोकेषु वरवर्णिनि ॥ ९ ॥

सुकन्यया महारण्ये क्षेत्रेऽस्मिन्विजहार सः ॥

तस्यैतद्देवि संयुक्तं च्यवनेश्वरनामभृत् ॥ 7.1.283.१० ॥

लिंगं महापापहरं च्यव नेन प्रतिष्ठितम् ॥

पूजयेत्तं विधानेन सोऽश्वमेधफलं लभेत् ॥११॥

तस्माच्चन्द्रमसस्तीर्थमृषयः पर्युपासते ॥

वैखानसाख्या ऋषयो वालखिल्यास्तथैव च ॥ १२ ॥

अत्राश्विने मासि नरः पौर्णमास्यां विशेषतः ॥

श्राद्धं कुर्याद्विधानेन ब्राह्मणान्भोजयेत्पृथक् ॥

कोटितीर्थफलं तस्य भवेन्नैऽवात्र संशयः ॥ १३ ॥

य इमां शृणुयाद्देवि कथां पातकनाशिनीम् ॥

समस्तजन्मसंभूतात्पापान्मुक्तो भवेन्नरः ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये च्यवनेश्वरमाहात्म्यवर्णनंनाम त्र्यशीत्युत्तरद्विशततमोऽध्यायः ॥२८३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सुकन्यासर उतमम् ॥

यत्राश्विनौ निमग्नौ तौ च्यवनेन सहांबिके ॥

समानरूपो ह्यभवच्च्यवनो यत्र सोऽश्विना ॥ १ ॥

यत्र प्राप्तवती कामं सुकन्या वरवर्णिनी ॥

सरःस्नानप्रभावेन तेन कन्यासरः स्मृतम् ॥

तत्र स्नाता शुभा नारी तृतीयायां विशेषतः ॥ २ ॥

सप्तजन्मसहस्राणि गृहभंगं न चाप्नुयात् ॥

दरिद्रो विकलो दीनो नांधस्तस्या भवेत्पतिः ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये च्यवनेश्वरमाहात्म्ये सुकन्यासरोमाहात्म्यवर्णनंनाम चतुरशीत्युत्तर द्विशततमोऽध्यायः ॥ २८४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८५

https://sa.wikisource.org/s/gfv
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पुनर्न्यंकुमतीं नदीम् ॥

तत्र कृत्वा गयाश्राद्धं गोष्पदे तीर्थ उत्तमे ॥ १ ॥

ततः पश्येद्वराहं तु तस्माद्धरिगृहं व्रजेत् ॥

तत्र मातृस्तु संपूज्य स्नात्वा सागरसंगमे ॥ २ ॥

न्यंकुमत्यर्णवोपेते ततः पूर्वमनु व्रजेत् ॥

अगस्तेराश्रमं दिव्यं क्षुधाहरमितिस्मृतम् ॥ ३ ॥

यत्रेल्वलं च वातापिं संहृत्य भगवान्मुनिः ॥

मुक्त्वाऽऽपद्भ्यो ब्राह्मणांश्च तेभ्यः स्थानं ततो ददौ ॥ ४ ॥

अगस्त्याश्रममेतद्धि अगस्तिप्रियमुत्तमम् ॥

न्यंकुमत्यास्तटे रम्ये सर्वपातकनाशने ॥ ५ ॥

॥ देव्युवाच ॥ ॥

अगस्तिनेह वातापिः किमर्थमुपशामितः ॥

अत्र वै किंप्रभावश्च स दैत्यो ब्राह्मणांतकः ॥

किमर्थं चोद्गतो मन्युरगस्तेस्तु महात्मनः ॥६॥

॥ ईश्वर उवाच ॥ ॥

इल्वलो नाम दैत्येन्द्र आसीद्वै वरवर्णिनि ॥

मणिमत्यां पुरा पुर्यां वातापिस्तस्य चानुजः ॥ ७ ॥

स ब्राह्मणं तपोयुक्तमुवाच दितिनंदनः ॥

पुत्र मे भगवन्नेकमिंद्रतुल्यं प्रयच्छतु ॥८॥

तस्मिन्स ब्राह्मणो नैच्छत्पुत्रं दातुं तथाविधम् ॥

चुक्रोध दितिजस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ९ ॥

प्रभासक्षेत्रमासाद्य स दैत्यः पापबुद्धिमान् ॥

मेषरूपी च वातापिः कामरूपोऽभवत्क्षणात् ॥ 7.1.285.१० ॥

संस्कृत्य भोजयेत्तत्र विप्रान्स च जिघांसति ॥
समा ह्वयति तं वाचा गतं चैव ततः क्षयम् ॥ ११ ॥
स पुनर्देहमास्थाय जीवन्स्म प्रत्यदृश्यत ॥
ततो वातापिरपि तं छागं कृत्वा सुसंस्कृतम् ॥
ब्राह्मणं भोजयित्वा तु पुनरेव समाह्वयत् ॥ १२ ॥
स तस्य पार्श्वं निर्भिद्य ब्राह्मणस्य महात्मनः ॥
वातापिः प्रहसंस्तत्र निश्चक्राम द्विजोदरात् ॥ १३ ॥
एवं स ब्राह्मणान्देवि भोजयित्वा पुनःपुनः ॥
विनिर्भिद्योदरं तेषामेवं हंति द्विजान्बहून् ॥१४॥
ततो वै ब्राह्मणाः सर्वे भयभीताः प्रदुद्रुवुः ॥
अगस्तेराश्रमं जग्मुः कथयामासुरग्रतः ॥ १५ ॥
भगवञ्छृणु नो वाक्यमस्माकं तु भयावहम् ॥
निमंत्रिताः स्म सर्वे वा इल्वलेन वयं प्रभो ॥ १६ ॥
अस्माकं मृत्युरूपं तद्भोजनं नास्ति संशयः ॥
तदस्मान्रक्ष भगवन्विषण्णागतचेतसः ॥ १७ ॥
ततः प्रभासमासाद्य यत्र तौ दैत्यपुंगवौ ॥
ब्रह्मघ्नौ पापनिरतौ ददर्श स महामुनिः ॥ १८ ॥
वातापिं संस्कृतं दृष्ट्वा मेषरूपं महासुरम् ॥
उवाच देहि मे भोज्यं बुभुक्षा मम वर्तते ॥ १९ ॥
इत्युक्तौ स्वागतं तत्र चक्राते मुनये तदा ॥
भगवन्भोजनं तुभ्यं दास्येऽहं बहुविस्तरम् ॥
कियन्मानस्तवाहारस्तावन्मानं पचाम्यहम् ॥ 7.1.285.२० ॥
॥ अगस्त्य उवाच ॥ ॥
अन्नं पचस्व दैत्येन्द्र किंचित्तृप्तिर्भविष्यति ॥
एवमस्त्विवति दैत्येन्द्रः पक्वमाह महामुने ॥२१॥
आस्यतामासनमिदं भुज्यतां स्वेच्छया मुने ॥
इत्युक्तोऽघोरमंत्रं स जपन्कल्पांतकारकम् ॥
धुर्यासनमथासाद्य निषसाद महामुनिः ॥ २२ ॥

तं पर्यवेषद्दैत्येंद्र इल्वलः प्रहसन्निव ॥

शतहस्तप्रमाणेन राशिमन्नस्य सोऽकरोत् ॥ २३ ॥

ततो हृष्टमनाऽगस्त्यः प्राग्रसत्कवलद्वयम् ॥

रूपं कृत्वा महत्तद्वद्यद्वत्सागरशोषणे ॥ २४ ॥

समस्तमेव तद्भोज्यं वातापिं बुभुजे ततः ॥

भुक्तवत्यसुरो ह्वानमकरोत्तस्य इल्वलः ॥ २५ ॥

ततोऽसौ दत्तवानन्नमगस्त्यस्य महात्मनः ॥

भस्मीचकार सर्वं स तदन्नं च सदानवम् ॥२६॥

इल्वलं क्रोधमुष्ट्या तु भस्मीचक्रे महामुनिः ॥

ततो हाहारवं कृत्वा सर्वे दैत्या ननंशिरे ॥ २७ ॥

ततोऽगस्त्यो महातेजा आहूय द्विजपुंगवान् ॥

तत्स्थानं च ददौ तेभ्यो दैत्यानां द्रव्यपूरितम्॥ २८ ॥

क्षुधा हृता ततो देवि तत्रागस्त्यस्य दानवैः ॥

तेन क्षुधा हरंनाम स्थानमासीद्विजन्मनाम् ॥ २९ ॥

तस्य पश्चिमभागे तु नातिदूरे व्यवस्थितम् ॥

गंगेश्वरमिति ख्यातं गंगया यत्प्रतिष्ठितम् ॥ 7.1.285.३० ॥

वातापिभक्षणेपूर्वमगस्त्येन महात्मना ॥

दैत्यसंभक्षणोत्पन्नसर्वपातकशुद्धये ॥

समाहूता महादेवि गंगापातकनाशिनी ॥ ३१ ॥

ततो देवि समा याता गंगा पातकनाशिनी ॥

शुद्धिं चकार तस्यर्षेस्तत्र स्थाने स्थिताऽभवत् ॥३२॥

अगस्त्यस्याऽऽश्रमे रम्ये नृणां पापभयापहे ॥

तत्र गंगेश्वरं दृष्ट्वा अभक्ष्योद्भवपातकात्॥

मुच्यते नात्र संदेहः स्नानदानजपादिना ॥ ३३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेप्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्येऽगस्त्याश्रमगंगेश्वरमाहात्म्यवर्णनंनाम पञ्चाशीत्युत्तरद्विशततमोऽध्यायः॥ २८५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि बालार्कं पापनाशनम् ॥

अगस्त्याश्रमतो देवि उत्तरे नातिदूरतः ॥ १ ॥

बाल एव तु यत्रार्कस्तपस्तेपे पुरा प्रिये ॥

तेन बालार्क इत्येतन्नाम ख्यातं धरातले ॥ २ ॥

तं दृष्ट्वा रविवारेण न कुष्ठी जायते नरः ॥

बालानां रोगजा पीडा न संभूयात्कदाचन ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये बालार्कमाहात्म्यवर्णनंनाम षडशीत्युत्तरद्विशततमोऽध्यायः ॥ २८६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८७



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि अजापालेश्वरीं शुभाम् ॥

अगस्त्यस्थानपूर्वेण नातिदूरे व्यवस्थिताम् ॥ १ ॥

रघुवंशसमुद्भूतो ह्यजापालो नृपोत्तमः ॥

स तत्र देवीमाराध्य पापरोगवशंकरीम् ॥ २ ॥

अजारूपांश्च रोगान्वै चारयामास भूमिपः ॥

तत्र तां स्थापयामास स्वनाम्ना पापनाशिनीम् ॥। ॥ ३ ॥

यस्तां पूजयते भक्त्या तृतीयायां विधानतः ॥

बल बुद्धिर्यशो विद्यां सौभाग्यं प्राप्नुयान्नरः ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्येऽजापालेश्वरीमाहात्म्यवर्णनंनाम सप्ताशीत्युत्तरद्विशततमोऽध्यायः ।। २८७ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि बालादित्यमिति श्रुतम् ॥

अगत्स्यस्थानतः पूर्वे गव्यूतिद्वितयेन तु॥ १ ॥

स्थानं सपाटिकानाम तस्यदक्षिणतः स्थितम् ॥

गव्यूतिमात्रं देवेशि बालार्क इति विश्रुतम् ॥ २ ॥

यत्र चाराधिता विद्या विश्वामित्रेण धीमता ॥

संस्थाप्य लिंगत्रितयं प्रतिष्ठाप्य तथा रविम् ॥ ३ ॥

विद्यायाः साधनं चक्रे सिद्धिं सूर्यादवाप्तवान् ।

बालादित्येति तेनासौ ततः ख्यातिमगात्प्रभुः ॥ ४ ॥

तं दृष्ट्वा मानवो देवि भास्करपापतस्करम्॥

न दारिद्र्यमवाप्नोति यावज्जीवति मानवः ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बालार्कमाहात्म्यवर्णनंनामाष्टाशीत्युत्तरद्विशततमोऽध्यायः ॥ २८८ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २८९

https://sa.wikisource.org/s/gfz
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्यैव दक्षिणे देवि तस्माद्गव्यूतिमात्रतः ॥

पातालगामिनी गंगा संस्थिता पापनाशिनी ॥ १ ॥

विश्वामित्रेण चाहूता स्नानार्थं वरवर्णिनि ॥

तत्र स्नात्वा महादेवि मुच्यते सर्वपातकैः ॥ २ ॥

तत्र गंगेश्वरं दृष्ट्वा विश्वामित्रेश्वरं तथा ॥

बालेश्वरं च संप्रेक्ष्य सर्वान्कामानवाप्नुयात् ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बालार्कमाहात्म्ये पाताल गंगेश्वरविश्वामित्रेश्वरबालेश्वराभिधलिंगत्रयमाहात्म्यवर्णनंनामैकोननवत्युत्तरद्विशततमोऽध्यायः ॥ २८९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कुबेरस्थानमुत्तमम् ॥

यत्र सिद्धः पुरा देवि कुबेरो धनदोऽभवत् ॥ १ ॥

ब्राह्मणश्चौररूपेण तत्र स्थानेऽवसत्पुरा ॥

स च मे भक्तियोगेन पुरा वै धनदः कृतः॥ २ ॥

॥ देव्युवाच ॥ ॥

कथं स ब्राह्मणो भूत्वा चौररूपो नराधमः ॥

तन्मे कथय देवेश धनदः स यथाऽभवत् ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

तस्मिन्नर्थे महादेवि यद्वृत्तं चौत्तमेंऽतरे ॥

कथयिष्यामि तत्सर्वं शिवमाहात्म्यसूचकम् ॥ ४ ॥

कश्चिदासीद्द्विजो देवि देवशर्मेति विश्रुतः ॥

प्रभासक्षेत्रनिलयो न्यंकुमत्यास्तटेऽवसत् ॥ ५ ॥

पुत्रक्षेत्रकलत्रादिव्यापारैकरतः सदा ॥

विहायाथ स गार्हस्थ्यं धनार्थं लोभ मोहितः ॥

प्रचचार महीमेतां सग्रामनगरांतराम् ॥ ६ ॥

भार्या तस्य विलोलाक्षी तस्य गेहाद्विनिर्गता ॥

स्वच्छंदचारिणी नित्यं नित्यं चानंगमोहिता ॥ ७ ॥

तस्यां कदाचित्पुत्रस्तु शूद्राज्जातो विधेर्वशात् ॥

दुष्टात्माऽतीव निर्मुक्तो नाम्ना दुःसह इत्यतः ॥ ८ ॥

सोऽथ कालेन महता नामकर्मप्रवर्तितः ॥

व्यसनोपहतः पापस्त्यक्तो बन्धुजनैस्तथा ॥ ९ ॥

पूजोपकरणं द्रव्यं स कस्मिंश्चिच्छिवालये ॥

बहुदोषामुखे दृष्ट्वा हर्तुकामोऽविशत्ततः॥। ॥ 7.1.290.१०॥

यावद्दीपो गतप्रायो वर्त्तिच्छेदोऽभवत्किल ॥

तावत्तेन दशा दत्ता द्रव्यान्वेषणकारणात् ॥ ११ ॥

प्रबुद्धश्चोत्थितस्तत्र देवपूजाकरो नरः ॥

कोऽयं कोयमिति प्रोच्चैर्व्याहरत्परिघायुधः ॥१२॥

स च प्राणभयान्नष्टः शूद्रजश्चापि मूढधीः ॥

विनिन्दन्नात्मनो जन्म कर्म चापि सुदुःखित॥१३॥

पुरपालैर्हतोऽवन्यां मृतः कालादभूच्च सः॥

गंधारविषये राजा ख्यातो नाम्ना सुदुर्मुखः॥१४॥

गीतवाद्यरतस्तत्र वेश्यासु निरतो भृशम्॥

प्रजोपद्रवकृन्मूर्खः सर्वधर्मबहिष्कृतः ॥ १५ ॥

किन्त्वर्चयन्सदैवासौ लिंगं राज्यक्रमागतम् ॥

पुष्पस्रग्धूपनैवेद्यगंधादिभिरमन्त्रवत् ॥१६ ॥

मुख्येषु च सदा काले देवतायतनेषु च ॥

दद्यात्स बहुलान्दीपान्वर्तिभिश्च समुज्ज्वलान् ॥ १७ ॥

कदाचिन्मृगयासक्तो बभ्राम स च वीर्यवान्॥

प्रभास क्षेत्रमागात्य पूर्वसंस्कारभावितः ॥ १८ ॥

परैरभिहतो युद्धे न्यंकुमत्यास्तटे शुभे ॥

शिवपूजाविधानेन विध्वस्ताशेषपातकः ॥ १९ ॥

ततो विश्रवसश्चासौ पुत्रोऽभूद्भुवि विश्रुतः ॥

यः स एव महातेजाः सर्वयज्ञाधिपो बली ॥ 7.1.290.२० ॥

कुबेर इति धर्मात्मा श्रुतशीलसमन्वितः ॥

लिंगं प्रतिष्ठयामास न्यंकुमत्याश्च पूर्वतः ॥ २१ ॥

कौबेरात्पश्चिमे भागे सोमनाथेति विश्रुतम् ॥

संपूज्य च यथेशानं न्यंकुमत्यास्तटे शुभे ॥

स्तोत्रेणानेन चास्तौषीद्भक्त्या तं सर्वकामदम् ॥ २२ ॥

मूर्तिः क्वापि महेश्वरस्य महती यज्ञस्य मूलोदया तुम्बी तुंगफलावती च शतशो ब्रह्माण्डकोटिस्तथा ॥

यन्मानं न पितामहो न च हरिर्ब्रह्माण्डमध्यस्थितो जानात्यन्यसुरेषु का च गणना सा संततं वोऽवतात् ॥

२३ ॥

नमाम्यहं देवमजं पुराणमु पेन्द्रमिन्द्रावरराजजुष्टम् ॥

शशांकसूर्याग्निसमाननेत्रं वृषेन्द्रचिह्नं प्रलयादिहेतुम् ॥ २४ ॥

सर्वेश्वरैकत्रिबलैकबन्धुं योगाधिगम्यं जगतोऽधिवासम् ॥

तं विस्मयाधारमनंतशक्तिं ज्ञानोद्भवं धैर्यगुणाधिकं च ॥ २५ ॥

पिनाकपाशांकुशशूलहस्तं कपर्दिनं मेघसमानघोषम् ॥

सकालकण्ठं स्फटिकावभासं नमामि शंभुं भुवनैकनाथम् ॥ २६ ॥

कपालिनं मालिनमादिदेवं जटाधरं भीमभुजंगहारम् ॥

प्रभासितारं च सहस्रमूर्तिं सहस्रशीर्षं पुरुषं विशिष्टम् ॥ २७ ॥

यदक्षरं निर्गुणमप्रमेयं सज्योतिरेकं प्रवदंति संतः ॥

दूरंगमं वेद्यमनिंद्यवन्ध्यं सर्वेषु हृत्स्थं परमं पवित्रम् ॥ २८ ॥

तेजोनिभं बालमृगांकमौलिं नमामि रुद्रं स्फुरदुग्रवक्त्रम् ॥

कालेन्धनं कामदमस्तसंगं धर्मासनस्थं प्रकृतिद्वयस्थम् ॥ २९ ॥

अतीन्द्रियं विश्वभुजं जितारिं गुणत्रयातीतमजं निरीहम् ॥

तमोमयं वेदमयं चिदंशं प्रजापतीशं पुरुहूतमिन्द्रम् ॥

अनागतैकध्वनिरूपमाद्यं ध्यायंति यं योगविदो यतीन्द्राः ॥ 7.1.290.३० ॥

संसारपाशच्छिदुरं विमुक्तः पुनः पुनस्त्वां प्रणमामि देवम् ॥ ३१ ॥

निरूपमास्यं च बलप्रभावं न च स्वभावं परमस्य पुंसः ॥

विज्ञायते विष्णुपितामहाद्यैस्तं वामदेवं प्रणमाम्यचिंत्यम् ॥ ३२ ॥

शिवं समाराध्य तमुग्रमूर्त्तिं पपौ समुद्रं भगवानगस्त्यः ॥

लेभे दिलीपोऽप्यखिलांश्च कामांस्तं विश्वयोनिं शरणं प्रपद्ये ॥ ३३ ॥

देवेन्द्रवन्द्योद्धर मामनाथं शम्भो कृपाकारुणिकः किल त्वम् ॥

दुःखाऽर्णवे मग्नमुमेश दीनं समुद्धर त्वं भव शंकरोऽसि ॥ ३४ ॥

संपूजयन्तो दिवि देवसंघा ब्रह्मेन्द्ररुद्रा विहरंति कामम् ॥

तं स्तौमि नौमीह जपामि शर्वं वन्देऽभिवंद्यं शरणं प्रपन्नः ॥३५॥

स्तुत्वैवमीशं विरराम यावत्तावत्स रुद्रोऽर्कसहस्रतेजाः ॥

ददौ च तस्मै वरदोंऽधकारिर्वरत्रयं वैश्रवणाय देवः॥

सख्यं च दिक्पालपदं चतुर्थं धनाधिपत्यं च दिवौकसां च ॥ ३६ ॥

यस्मादत्र त्वया सम्यङ्न्यंकुमत्यास्तटे शुभे ॥

आराधितोऽहं विधिवत्कृत्वा मूर्त्तिं महीमयीम् ॥ ३७ ॥

तस्मात्तवैव नाम्ना तत्स्थानं ख्यातं भविष्यति ॥

कुबेरनगरेत्येवं मम प्रीतिप्रदायकम् ॥ ३८॥

त्वया प्रतिष्ठितं लिंगमस्मात्स्थानाच्च पश्चिमे ॥

उमानाथस्य विधिवत्सोमनाथेति तत्स्मृतम् ॥ ३९ ॥

श्रीपंचम्यां विधानेन यस्तच्च पूजयिष्यति ॥

सप्तपुरुषावधिर्यावत्तस्य लक्ष्मीर्भविष्यति ॥ 7.1.290.४० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्ये कुबेरनगरोत्पत्तिकुबेरस्थापितसोमनाथमाहात्म्यवर्णनंनाम नवत्युत्तरद्विशततमोऽध्यायः ॥२९०॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९१



॥ ईश्वर उवाच ॥ ॥

तस्मादुत्तरभागे तु स्थानात्कौबेरसंज्ञकात् ॥

भद्रकाली महादेवि वांछितार्थप्रदायिनी ॥ १ ॥

दक्षयज्ञस्य विध्वंसे वीरभद्रसमन्विता ॥

भद्रकाली महादेवी दक्षयज्ञविनाशिनी ॥ २ ॥

चैत्रे मासि तृतीयायां देवीं तां यस्तु पूजयेत् ॥

नवकोट्यस्तु चामुण्डा भविष्यंति सुपूजिताः ॥

सौभाग्यं विजयं चैव तस्य लक्ष्मीर्भविष्यति ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्ये भद्रकालीमाहात्म्यवर्णनंनामैकनवत्युत्तरद्विशततमोऽध्यायः ॥ २९१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९२



॥ ईश्वर उवाच ॥ ॥

तस्मादुत्तरभागे तु स्थानात्कौरवसंज्ञकात् ॥

भद्रकाली महादेवि तपः कृत्वा सुदुस्तरम् ॥ १ ॥

रविं संस्थापयामास भक्त्या परमया युता ॥

रविवारेण सप्तम्यां रक्त पुष्पानुलेपनैः ॥ २ ॥

यस्तं पूजयते भक्त्या कोटियज्ञफलं लभेत् ॥

मुच्यते वातपित्तोत्थै रोगैरन्यैश्च पुष्कलैः ॥ ३ ॥

अश्वस्तत्रैव दातव्यः सम्यग्यात्राफलेप्सुभिः ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्ये भद्रकालीबालार्कमाहात्म्यवर्णनंनाम द्विनवत्युत्तरद्विशततमोऽध्यायः ॥ २९२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९३



॥ ईश्वर उवाच ॥ ॥

तस्माद्वैश्रवण स्थानान्नैर्ऋत्यां वरवर्णिनि ॥

स्वयं स्थितः कुबेरस्तु सर्वदारिद्र्यनाशनः ॥ १ ॥

मकरादिनिधानैस्तु अष्टाभिः परिभूषितः ॥

पञ्चम्यां पूजयेद्भक्त्या गन्धपुष्पानुलेपनैः ॥

निधानप्राप्तिरतुला निर्विघ्ना तस्य जायते ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभामक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्ये कुबेरस्थानोत्पत्तौ कुबेरमाहात्म्यवर्णनंनाम त्रिनवत्युत्तरद्विशततमोऽध्यायः ॥ २९३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९४



॥ ईश्वर उवाच ॥

ततो गच्छेन्महादेवि कौबेरात्पूर्वसंस्थितम् ॥

गव्यूतिपंचके देवि पुष्करंनाम नामतः ॥

यत्र सिद्धो महादेवि कैवर्तो मत्स्यघातकः ॥ १ ॥

॥ देव्युवाच ॥ ॥

सविस्तरं मम ब्रूहि कथं स सिद्धिमाप वै ॥

कथयस्व प्रसादेन देवदेव महेश्वर ॥ २ ॥

॥ ॥ ईश्वर उवाच ॥ ॥

शृणु त्वं यत्पुरावृत्तं देवि स्वारोचिषेंतरे ॥

आसीत्कश्चिद्दुराचारः कैवर्तो मत्स्यघातकः ॥ ३ ॥

स कदाचिच्चरन्पापः पुष्करे तु जगाम वै ॥

ददर्श शांकरं वेश्म लतापादपसंकुलम् ॥ ४ ॥

स माघमासे शीतार्तः क्लिन्नजालसमन्वितः ॥

प्रासादमारुरोहार्तः सूर्यतापजिघृक्षया ॥ ५ ॥

ततः स क्लिन्नजालं तच्छोषणाय रवेः करैः ॥

प्रासादध्वजदंडाग्रे संप्रसारितवांस्तदा ॥ ६ ॥

ततः प्रासादतो देवि जाड्यात्संपतितः क्रमात् ॥

स मृतः सहसा देवि तस्मिन्क्षेत्रे शिवस्य च ॥ ७ ॥

जालं तस्य प्रभूतेन जीर्णकालेन यत्तदा ॥

ध्वजा बद्धा यतो जालैः प्रासादे सा शुभेऽभवत् ॥ ८ ॥

ततोऽसौ ध्वजमाहात्म्याज्जातोऽवन्यां नराधिपः ॥

ऋतध्वजेति विख्यातः सौराष्ट्रविषये सुधीः ॥

स हि स्फूर्जद्ध्वजाग्रेण रथेन पर्यटन्महीम् ॥ ९ ॥

कामभोगाभिभूतात्मा राज्यं चक्रे प्रतापवान् ॥

ततोऽसौ भवने शंभोर्ददौ शोभासमन्विताम् ॥

ध्वजां शुभ्रां विचित्रां च नान्यत्किंचिदपि प्रभुः ॥ 7.1.294.१० ॥

ततो जातिस्मरो राजा प्रभासक्षेत्रमागतः॥

तत्रायतनं ध्वजाजालसमन्वितम्॥११॥

अजोगन्धस्य देवस्य पूर्वमाराधितस्य च ॥

प्रासादं कारयामास शिवोपकरणानि च॥१२॥

नित्यं पूजयते भक्त्या तल्लिंगं पापनाशनम् ॥

दशवर्षसहस्राणि राज्यं चक्रे महामनाः ॥ १३ ॥

तल्लिंगस्य प्रभावेन ततः कालाद्दिवं गतः ॥

तस्मात्तत्र प्रयत्नेन गत्वा लिंगं प्रपूजयेत् ॥ १४ ॥

स्नात्वा पश्चिमतः कुण्डे पुष्करे पापतस्करे ॥

यत्र ब्रह्माऽयजत्पूर्वं यज्ञैर्विपुलदक्षिणैः ॥ १५ ॥

समाहूय च तीर्थानि पुष्करात्तत्र भामिनि ॥

तस्मिन्कुण्डे तु विन्यस्य अजोगन्ध समीपतः ॥

प्रतिष्ठाप्य महालिंगमजोगन्धेति नामतः ॥ १६ ॥

त्रिपुष्करे महादेवि कुण्डे पातकनाशने ॥

सौवर्णं कमलं तत्र दद्याद्ब्राह्मणपुंगवे ॥ १७ ॥

देवं संपूज्य विधिवद्गन्धपुष्पाक्षतादिभिः ॥

मुच्यते पातकैः सर्वैः सप्तजन्मार्जितैरपि ॥ १८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये पुष्कर माहात्म्येऽजोगन्धेश्वरमाहात्म्यवर्णनंनाम चतुर्णवत्युत्तरद्विशततमोऽध्यायः ॥ २९४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९५



॥ ईश्वर उवाच ॥ ॥

तस्मादीशान दिग्भागे इन्द्रस्थानमनुत्तमम् ॥

गव्यूतिपञ्चमात्रेण यत्र चन्द्रसरः प्रिये ॥ १ ॥

तस्मादुत्तरदिग्भागे नातिदूरे व्यवस्थितम् ॥

यत्र चन्द्रोदकं देवि जरादारिद्र्यनाशनम् ॥ २॥

चन्द्रानुवृद्ध्या तद्वृद्धिः क्षयस्तत्संक्षये भवेत्॥

तस्मिन्पापयुगेऽप्येवं कदाचित्संप्रदृश्यते॥३॥

तत्र स्नात्वा महादेवि यदि पापसहस्रकम्॥

कृतं सोऽत्र समायाति नात्र कार्या विचारणा॥४॥

तत्राहिल्याप्रसंगोत्थमहापातकभीरुणा॥

गौतमोद्भवशापेन विलक्ष्यीकृतचेतसा ॥ ५ ॥

इन्द्रेण च पुरा देवि इष्टं विपुलदक्षिणैः ॥

तत्र वर्षसहस्राणि संस्थाप्य शिवमीश्वरम् ॥

इन्द्रेश्वरेति नाम्ना वै सर्वपातक नाशनम् ॥ ६ ॥

चन्द्रतीर्थे नरः स्नात्वा संतर्प्य पितृदेवताः ॥

इन्द्रेश्वरं च संपूज्य मुच्यते नात्र संशयः ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चन्द्रोदकतीर्थमाहात्म्य इन्द्रेश्वरमाहात्म्यवर्णनंनाम पञ्चनवत्युत्तर द्विशततमोऽध्यायः ॥ २९५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९६



॥ ईश्वर उवाच ॥ ॥

तस्मादाग्नेयदिग्भागे गव्यूतिसप्तकेन च ॥

स्थानं देवकुलंनाम देवानां यत्र संगमः ॥ १ ॥

ऋषीणां यत्र सिद्धानां पुरा लिंगे निपातिते ॥

यस्माज्जातो महादेवि तस्माद्देवकुलं स्मृतम् ॥ २ ॥

तस्य पश्चिमदिग्भाग ऋषितोया महानदी ॥

ऋषीणां वल्लभा देवि सर्वपातकनाशिनी ॥ ३ ॥

तत्र स्नात्वा नरः सम्यक्पितॄणां निर्वपेन्नरः ॥

सप्तवर्षायुतान्येव पितॄणां तृप्तिमावहेत् ॥ ४ ॥

सुवर्णं तत्र देयं तु अजिनं कंबलं तथा ॥

आषाढे त्वमावास्यायां यत्किञ्चिद्दीयते ध्रुवम् ॥ ५ ॥

वर्द्धते षोडशगुणं यावदायाति पूर्णिमा ॥ ६ ॥

सुवर्णं तत्र देयं तु अजिनं कंबलं तथा ॥

मुच्यते पातकैः सर्वैः सप्तजन्मकृतैरपि ॥ ७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य ऋषितोयानदीमाहात्म्यवर्णनंनाम षण्णवत्युत्तरद्विशततमोऽध्यायः ॥२९६॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९७



॥ देव्युवाच ॥ ॥

देवदेव जगन्नाथ संसारार्णवतारक ॥

सविस्तरं तु मे ब्रूहि ऋषितोयामहोदयम् ॥ १ ॥

ऋषितोयेति तन्नाम कथं ख्यातं धरातले ॥

कथं सा पुनरायाता देवदारुवने शुभे ॥ २ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि सावधाना वचो मम ॥

माहात्म्यमृषितोयायाः सर्वपातकनाशनम् ॥ ३ ॥

देवदारुवने पुण्य ऋषयस्तपसा युताः ॥

निवसंति वरारोहे शतशोथ सहस्रशः ॥ ४ ॥

तेषां निवसतां तत्र बहुकालो गतः प्रिये ॥

पुत्रपौत्रैः प्रवृद्धास्ते दारुकं व्याप्य संस्थिताः ॥ ८५ ॥

ते सर्वे चिंतयामासुः समेत्य च परस्परम् ॥

सरस्वती महापुण्या शिरस्याधाय वाडवम् ॥ ६ ॥

प्रभासं चिरकालेन क्षेत्रं चैव गमिष्यति ॥

वापीकूपतडागादि मुक्त्वा सागरगामिनीम् ॥ ७ ॥

नाह्लादं कुरुते चेतः स्नानदानजपेषु च ॥

ब्रह्माणं प्रार्थयिष्यामो गत्वा ब्रह्मनिकेतनम् ॥ ८ ॥

॥ ईश्वर उवाच ॥ ॥

एवं निमन्त्र्य ते सर्वे ऋषयस्तपसोज्ज्वलाः॥

गतास्ते ब्रह्मलोकं तु द्रष्टुं देवं पितामहम् ॥

तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्माणं कमलोद्भवम् ॥ ९ ॥

॥ ऋषय ऊचुः ॥ ॥

नमः प्रणवरूपाय विश्व कर्त्रे नमोनमः ॥

तथा विश्वस्य रक्षित्रे नमोऽस्तु परमात्मने ॥ 7.1.297.१० ॥

तथा तस्यैव संहर्त्रे नमो ब्रह्मस्वरूपिणे ॥

पितामह नमस्तुभ्यं सुरज्येष्ठ नमोऽस्तु ते ॥ ११ ॥

चतुर्वक्त्र नमस्तुभ्यं पद्मयोने नमोऽस्तु ते ॥

विरंचये नमस्तुभ्यं विधये वेधसे नमः ॥ १२ ॥

चिदानन्द नमस्तुभ्यं हिरण्यगर्भ ते नमः ॥

हंसवाहन ते नित्यं पद्मासन नमोऽस्तुते ॥ १३ ॥

एवं संस्तुवतां तेषामृषीणामूर्ध्वरेतसाम् ॥

उवाच परमप्रीतो ब्रह्मा लोक पितामहः ॥ १४ ॥

स्वागतं वै द्विजश्रेष्ठा युष्माकं कृतवानहम् ॥

स्तोत्रेणानेन दिव्येन वृणुध्वं वरमुत्तमम् ॥ १५ ॥

॥ ऋषय ऊचुः ॥ ॥

अभिषेकाय नो देव नदी पापप्रणाशिनी ॥

विलोक्यते सुरश्रेष्ठ देहि नो वरमुत्तमम् ॥ १६ ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्तस्तैस्तदा ब्रह्मा मुनिभिस्तपसोज्ज्वलैः ॥

वीक्षांचक्रे तदा सर्वा मूर्तिमत्यश्च निम्नगाः ॥ १७ ॥

गङ्गा च यमुना चैव तथा देवी सरस्वती ॥

चन्द्रभागा च रेवा च शरयूर्गंडकी तथा ॥ १८ ॥

तापी चैव वरारोहे तथा गोदावरी नदी ॥

कावेरी चन्द्रपुत्री च शिप्रा चर्मण्वती तथा ॥ १९ ॥

सिन्धुश्च वेदिका चैव नदाः सर्वे वरानने ॥

मूर्तिमत्यः स्थिताः सर्वाः पवित्राः पापनाशिनी ॥ 7.1.297.२० ॥

दृष्ट्वा पितामहः सर्वा गत्वरा धरणीं प्रति ॥

देवदारुवने रम्ये प्रभासे क्षेत्र उत्तमे ॥

कमण्डलौ कृता दृष्टिर्विविशुस्ताः कमण्डलुम् ॥ २१ ॥ ।

। ब्रह्मोवाच ॥ ॥

धृताः सर्वा महापुण्या नद्यो ब्रह्मकमण्डलौ॥

प्रविष्टाः पृथिवीं यांतु ऋषीणामनुकम्पया ॥ २२ ॥
प्रहिणोमि यद्येकां च ह्यन्या रुष्यति मे द्विजाः ॥
तस्मात्सर्वाः प्रमोक्ष्यामि कमण्डलुकृतालयाः ॥ २३ ॥
॥ ईश्वर उवाच ॥
ततो ब्रह्मा मुमोचाऽथ तत्रस्थाश्च महापगाः ॥
मुक्त्वा ब्रह्मा मुनीन्सर्वान्प्रोवाचेदं पुनःपुनः ॥ २४ ॥
ऋषिभिः प्रार्थ्यमानेन नद्यो मुक्ता मया यतः ॥
तोयरूपा महावेगा अभिषेकाय सत्वराः ॥ २५ ॥
ऋषितोयेति नाम्ना सा भविष्यति धरातले ॥
ऋषीणां वल्लभा देवी सर्वपातकनाशिनी ॥ २६ ॥
॥ ईश्वर उवाच ॥ ॥
एवं देवि समायाता देवदारुवने नदी ॥
ऋषितोयेति विख्याता पवित्रा च वरानने ॥ २७ ॥
तूर्यदुंदुभिनिर्घोषैर्वेदमङ्गलनिःस्वनैः ॥
समुद्रं प्रापिता देवी ऋषिभिर्वेदपारगैः ॥ २८ ॥
सर्वत्र सुलभा देवी त्रिषु स्थानेषु दुर्लभा ॥
महोदये महातीर्थे मूलचंडीशसन्निधौ ॥ २९ ॥
समुद्रेण समेता तु यत्र सा पूर्ववाहिनी ॥
यत्रर्षितोया लभ्येत तत्र किं मृग्यते परम् ॥7.1.297.३०॥
मनुष्यास्ते सदा धन्यास्तत्तोयं तु पिबंति ये ॥
अस्थीनि यत्र लीयंते षण्मासाभ्यन्तरेण तु ॥ ३१ ॥
प्रातःकाले वहेद्गंगा सायं च यमुना तथा ॥ ३२ ॥
नदीसहस्रसंयुक्ता मध्याह्ने तु सरस्वती ॥
अपराह्ने वहेद्रेवा सायाह्ने सूर्यपुत्रिका ॥ ३३ ॥
एवं जानन्नरो यस्तु तत्र स्नान विचक्षणः ॥
आचरेद्विधिना श्राद्धं स तस्याः फलभाग्भवेत् ॥ ३४ ॥
एवं संक्षेपतः प्रोक्तमृषितोयामहोदयम् ॥

सर्वपापहरं नृणां सर्वकामफलप्रदम् ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य ऋषितोयामाहात्म्यवर्णनंनाम सप्तनवत्युत्तरद्विशततमोऽध्यायः ॥ २९७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९८



ईश्वर उवाच ॥ ॥

ऋषितोयापश्चिमे तु तत्र गव्यूतिमात्रतः ॥

संगालेश्वरनामास्ति सर्वपातकनाशनः ॥ १ ॥

गुप्तस्तत्र प्रयागश्च देवो वै माधवस्तथा ॥

जाह्नवी यमुना चैव देवी तत्र सरस्वती ॥ २ ॥

अन्यानि तत्र तीर्थानि बहूनि च वरानने ॥

स्नात्वा दृष्ट्वा पूजयित्वा मुक्तः स्यात्सर्वकिल्बिषैः ॥ ३ ॥

॥ पार्वत्युवाच ॥ ॥

कथय त्वं महेशान सर्वदेवनमस्कृत ॥

तीर्थराजः प्रयागस्तु कथं विष्णुः सनातनः ॥ ४ ॥

कथं गंगा च यमुना तथा देवी सरस्वती ॥

अन्यान्यपि बहून्येव तीर्थानि वृषभध्वज ॥ ५ ॥

समायातानि तत्रैव संगालेश्वरसंनिधौ ॥

संगालेशेति किं नाम ह्येतन्मे वद कौतुकम् ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

पुरा वै लिंगपतने सर्वदेवसमागमे ॥

सार्धत्रितयकोटीनि पुण्यानि सुरसुन्दरि ॥ ७ ॥

तीर्थानि तीर्थराजोऽयं प्रयागः समुपस्थितः ॥

आत्मानं गोपयामास तीर्थकोटिभिरावृतम् ॥ ८ ॥

ततस्तत्र समायाता ब्रह्मविष्णुपुरोगमाः ॥

विबुधास्तीर्थराजं तं ददृशुर्दिव्यचक्षुषा ॥ ९ ॥

तीर्थकोटिभिराकीर्णं पवित्रं पापनाशनम् ॥

लिंगस्य पतनं श्रुत्वा महादुःखेन संवृताः ॥ 7.1.298.१० ॥

स्थिताः सर्वे तदा देवि ब्रह्माद्याः सुरसत्तमाः ॥ ११ ॥

एतस्मिन्नेव काले तु देवो रुद्रः सनातनः ॥
निरानंदः समायातो वाक्यमेतदुवाच ह ॥ १२ ॥
शृणुध्वं वचनं देवा ब्रह्मविष्णुपुरोगमाः ॥
ऋषिशापान्निपतितं मम लिंगमनुत्तमम् ॥
तस्माल्लिंगं पूजयत सर्व कामार्थसिद्धये ॥१३ ॥
एवमुक्त्वा महादेवो देशे तस्मिन्स्थितः प्रिये ॥
ब्राह्मं च वैष्णवं रौद्रं तत्र कुण्डत्रयं स्मृतम् ॥ १४ ॥
चतुर्थं त्रिसंगमाख्यं नदीनां यत्र संगमः ॥
गंगायाश्च सरस्वत्याः सूर्यपुत्र्यास्तथैव च ॥ १५ ॥
कोटिरेका च तीर्थानां ब्रह्मकुण्डे व्यवस्थिता ॥
तथा च वैष्णवे कुण्डे कोटिरेका प्रकीर्तिता ॥ १६ ॥
सार्धकोटिस्तु संप्रोक्ता शिवकुण्डे प्रकीर्तिता ॥
पश्चिमे ब्रह्मकुण्डं च पूर्वे वै वैष्णवं स्मृतम् ॥ १७ ॥
मध्यभागे स्थितं यच्च रुद्रकुण्डं प्रकीर्तितम् ॥
कुण्डमध्याद्विनिर्गत्य यत्र गंगा वरानने ॥ १८ ॥
सूर्यपुत्र्या समेता च तत्त्रिसंगम उच्यते ॥
अनयोरंतरे सूक्ष्मे तत्र गुप्ता सरस्वती ॥ १९ ॥
एषु सन्निहितो नित्यं प्रयागस्तीर्थनायकः ॥
अत्रागत्य नरो यस्तु माघमासे वरानने ॥ 7.1.298.२० ॥
स्नायात्प्रभातसमये मकरस्थे रवौ प्रिये ॥
किञ्चिदभ्युदिते सूर्ये शृणु तस्य च यत्फलम् ॥ २१ ॥
आद्येनैकेन स्नानेन पापं यन्मनसा कृतम्॥
व्यपोहति नरः सम्यक्छ्रद्धायुक्तो जितेन्द्रियः ॥ २२ ॥
वाचिकं तु द्वितीयेन कायिकं तु तृतीयकात् ॥
संसर्गजं चतुर्थेन रहस्यं पञ्चमेन तु ॥ २३ ॥
उपपातकानि षष्ठेन स्नानेनैव व्यपोहति॥२४॥
अभिषेकेण कुण्डानां सप्तकृत्वो वरानने॥
महांति चैव पापानि क्षाल्यंते पुरुषैः सदा॥२५॥

यः स्नाति सकलं मासं प्रयागे गुप्तसंज्ञके ॥
ब्रह्मादिभिर्न तद्वक्तुं शक्यते कल्पकोटिभिः ॥ २६ ॥
यानि कानि च तीर्थानि प्रभासे संति भामिनि ॥
तेभ्योऽतिवल्लभं तीर्थं सर्वपापप्रणाशनम् ॥ २७ ॥
एषां संरक्षणार्थाय मया वै तत्र मातरः ॥
पूजनीयाः प्रयत्नेन नैवेद्यैर्विविधैः शुभैः ॥ २८ ॥
कृष्णपक्षे चतुर्दश्यां श्रद्धायुक्तेन चेतसा ॥
तासामनुचरा देवि भूतप्रेताश्च कोटिशः ॥ २९ ॥
तेषां भयविनाशाय ता मातृश्च प्रपूजयेत् ॥
अस्मिंस्तीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति ॥7.1.298.३०॥
यः कश्चित्कुरुते श्राद्धं पितॄनुद्दिश्य भक्तितः ॥
उद्धरेच्च पितुर्वर्गं मातुर्वर्गं नरोत्तमः ॥३१॥
वृषभस्तत्र दातव्यः सम्यग्यात्राफलेप्सुभिः ॥
एवं यः कुरुते यात्रां तस्य फलमनन्तकम् ॥ ३२ ॥
एवं गुप्तप्रयागस्य माहात्म्यं कथितं तव ॥
श्रुत्वाभिनन्द्य पुरुषः प्राप्नुयाच्छंकरालयम् ॥ ३३ ॥

इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गुप्तप्रया गमाहात्म्यवर्णनंनामाष्टनवत्युत्तरद्विशततमोऽध्यायः ॥ २९८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः २९९



॥ ईश्वर उवाच ॥ ॥

तस्यैव दक्षिणे भागे नातिदूरे व्यवस्थितम्॥

शंखचक्रगदाधारी माधवस्तत्र संस्थितः ॥ १ ॥

एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ॥

यस्तं पूजयते भक्त्या गंधपुष्पानुलेपनैः ॥

स याति परमं स्थानमपुनर्भवदायकम् ॥ २ ॥

अत्र गाथा पुरा गीता ब्रह्मणा लोककर्तृणा ॥

विष्णुकुण्डे नरः स्नात्वा यो वै माधवमर्चयेत् ॥

स यास्यति परं स्थानं यत्र देवो हरिः स्वयम् ॥ ३ ॥

एतत्ते सर्वमाख्यातं माहात्म्यं विष्णुदैवतम् ॥

सर्वकामप्रदं नृणां सर्वपातकनाशनम्॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये माधवमाहात्म्यवर्णनंनाम नवनवत्युत्तरद्वि शततमोऽध्यायः ॥ २९९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३००

https://sa.wikisource.org/s/gga
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्यैवोत्तरदिग्भागे किञ्चिद्वायव्यसंस्थितम् ॥

संगालेश्वरनामास्ति सर्वपातकनाशनम् ॥ १ ॥

तत्र ब्रह्मा च विष्णुश्च लिंगस्याराधनोद्यतौ ॥

शक्रश्चैव महातेजा लिंगं पूजितवान्प्रिये ॥ २ ॥

वरुणो धनदश्चैव धर्मराजोऽथ पावकः ॥

आदित्यैर्वसुभिश्चैव लोकपालैः समंततः ॥ ३ ॥

आराधितं महालिंगं संगालेश्वरनामभृत् ॥

पूजयित्वा तु ते सर्वे दृष्ट्वा माहात्म्यमुत्तमम् ॥ ४ ॥

ऊचुश्च सहसा देवि परमानंदसंयुताः ॥

देवानां निवहैर्यस्मात्समागत्य प्रतिष्ठितम् ॥

संगालेश्वरनामास्य भविष्यति धरातले ॥ ५ ॥

संगालेश्वरनामानं पूजयिष्यंति मानवाः ॥

न तेषामन्वये कश्चिन्निर्धनः संभविष्यति ॥ ६ ॥

गोसहस्रस्य दत्तस्य कुरुक्षेत्रे च यत्फलम् ॥

तत्फलं समवाप्नोति संगालेश्वरदर्शनात् ॥ ७ ॥

अमावास्यां च संप्राप्य स्नानं कृत्वा विधानतः ॥

यः करोति नरः श्राद्धं पितॄणां रोषवर्जितः ॥

पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ॥ ८ ॥

अर्धक्रोशं च तत्क्षेत्रं समंतात्परिमण्डलम् ॥

सर्वकामप्रदं नृणां सर्वपातकनाशनम् ॥ ९ ॥

अस्मिन्क्षेत्रे महादेवि जीवा उत्तममध्यमाः ॥

कालेन निधनं प्राप्तास्तेऽपि यांति परां गतिम् ॥7.1.300.१०॥।

गृहीत्वानशनं ये तु प्राणांस्त्यक्ष्यंति मानवाः ॥

निश्चयं ते महादेवि लीयंते परमेश्वरे ॥११॥

गवा हता द्विजहता ये च वै दंष्ट्रिभिर्हता॥

आत्मनो घातका ये तु सर्पदष्टाश्च ये मृताः ॥ १२ ॥

शय्यायां विगतप्राणा ये च शौचविवर्जिताः ॥

अस्मिंस्तीर्थे महापुण्ये अपुनर्भवदायके॥ १३ ॥

दत्तैः षोडशभिः श्राद्धैर्वृषोत्सर्गे कृते पुनः ॥

विधिवद्भोजितैर्विप्रैर्भवेन्मुक्तिर्न संशयः ॥ १४ ॥

एवमुक्त्वा सुराः सर्वे गतवंतस्त्रिविष्टपम् ॥ १५ ॥

संगालेश्वरमाहात्म्यं संक्षेपात्कथितं तव ॥

श्रुतं हरति पापानि दुःखशोकांस्तथैव च ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये संगालेश्वरमाहात्म्यवर्णनंनाम त्रिशततमोऽध्यायः ॥ ३०० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सिद्धेश्वरमनुत्तमम् ॥

तस्यैव पूर्वदिग्भागे नातिदूरे व्यवस्थितम् ॥ १ ॥

यदा देवैः समेत्याशु शिवलिंगं प्रतिष्ठितम् ॥

संगालेश्वर नामाढ्यं सर्वपापहरं शुभम् ॥ २ ॥

तदा सिद्धगणाः सर्वे समाराध्य वृषध्वजम् ॥

स्थापयांचक्रिरे लिंगं सर्वसिद्धिप्रदायकम् ॥ ३ ॥

तत्सिद्धेश्वर नामाढ्यं महापातकनाशनम् ॥

तुष्टुवुर्विविधैः स्तोत्रैस्तदा सिद्धगणाः शिवम् ॥ ४ ॥

ततस्तुष्टो महादेवो याच्यतां वरमुत्तमम् ॥

नमस्कृत्य ततः सर्वे प्रोचुश्च शशिशेखरम् ॥ ५ ॥

इहागत्य नरो यस्तु स्नात्वा च विधिपूर्वकम् ॥

अर्चयेत्सिद्धनाथं च जपेच्च शतरुद्रियम् ॥ ६ ॥

अघोरं वा जपेन्मन्त्रं गायत्र्यं च महेश्वरम् ॥

षण्मासाभ्यन्तरेणैव जपेच्च मुनिसत्तमाः ॥

अणिमादिगुणैश्वर्यं संसिद्धिं प्राप्नुयाद्ध्रुवम् ॥७ ॥

॥ ईश्वर उवाच ॥ ॥

एवं भविष्यतीत्युक्त्वा ह्यंतर्धानं गतो हरः ॥

सिद्धेश्वरं तु संपूज्य ह्यघोरं च जपेन्नरः ॥ ८ ॥

आश्वयुक्कृष्णपक्षे तु चतुर्दश्यां महानिशि ॥

धैर्यमालंब्य निर्भीकः स सिद्धिं प्राप्नुयान्नरः ॥ ९ ॥

इत्येतत्कथितं देवि माहात्म्यं पापनाशनम् ॥

सिद्धेश्वरस्य देवस्य सर्वकामफलप्रदम् ॥ 7.1.301.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य सिद्धेश्वरमाहात्म्यवर्णनंनामैकोत्तरत्रिशत तमोऽध्यायः ॥ ३०१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गंधर्वेश्वरमुत्तमम् ॥

तस्यैवोत्तरदिग्भागे धनुषां पंचके स्थितम् ॥१॥

तं दृष्ट्वा च महादेवि रूपवाञ्जायते नरः ॥

गंधर्वैः स्थापितं लिंगं स्नात्वा संपूजयेत्सकृत् ॥

सर्वान्कामानवाप्नोति रक्तकण्ठश्च जायते ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये गंधर्वेश्वरमाहात्म्यवर्णनंनाम द्व्युत्तरत्रिशततमोऽध्यायः ॥ ३०२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि उत्तरे देवमुत्तमम् ॥

यस्तमाराधयेद्देवं महापातकनाशनम् ॥ ॥ १ ॥

तस्यैव पश्चिमे भागे धनुषां त्रितये स्थितम् ॥

शेषादिप्रमुखैर्नागैर्महता तपसा युतैः ॥

समाराध्य महादेवं स्थापितं लिंगमुत्तमम् ॥ २ ॥

यस्तमाराधयेद्देवं सर्पैराराधितं पुरा ॥

न विषं क्रमते देहे तस्य जन्मावधि प्रिये ॥ ३ ॥

सर्पास्तस्य प्रसीदन्ति न कुंथंति कदाचन ॥

तस्मात्सर्वं प्रयत्नेन तल्लिंगं पूजयेन्नरः ॥ ४ ॥

तत्र लिंगान्यनेकानि ऋषिभिः स्थापितानि तु ॥

गंगातीरे महापुण्ये पश्चिमे वरवर्णिनि ॥ ५ ॥

तानि दृष्ट्वा पूजयित्वा सर्वपापैः प्रमुच्यते ॥

अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संगालेश्वरमाहात्म्य उत्तरेश्वरमाहात्म्यवर्णनंनाम त्र्युत्तरत्रिशततमोऽध्यायः ॥ ३०३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गंगां त्रिपथगामिनीम् ॥

संगालेशादथैशान्यां धनुषां सप्तके स्थिताम्॥ १ ॥

तस्यां त्रिनेत्रा मत्स्याः स्युर्नित्यमांभसिकाः प्रिये ॥

कलौयुगेऽपि दृश्यंते सत्यंसत्यं मयोदितम् ॥ २ ॥

तस्यां स्नात्वा महादेवि मुच्यते पञ्चपातकैः ॥ ३ ॥

॥ सूत उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा विस्मिता गिरिजा सती ॥

उवाच तं द्विजश्रेष्ठाः प्रचलच्चंद्रशेखरम् ॥४॥

॥ पार्वत्युवाच ॥ ॥

कथं तत्र समायाता गंगा त्रिपथगामिनी ॥

कथं त्रिनेत्राः संजाता मत्स्या आंभसिकाः शिव ॥ ५ ॥

एतद्विस्तरतो ब्रूहि यद्यहं ते प्रिया विभो ॥ ६ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि यदि पृच्छसि मां शुभे ॥

आस्तिकाः श्रद्दधानाश्च भवंतीति मतिर्मम ॥ ७॥

यदा शप्तो महादेवो ह्यज्ञानतिमिरावृतैः ॥

ऋषिभिः कोपयुक्तैश्च कस्मिंश्चित्कारणांतरे ॥ ८ ॥

तदा ते मुनयः सर्वे शप्तं ज्ञात्वा महेश्वरम् ॥

निरानंदं जगत्सर्वं दृष्ट्वा चात्मानमेव च ॥ ९ ॥

आराध्य परमेशानं दधतं गजरूपकम् ॥

उन्नतं स्थानमानीय सानंदं चक्रिरे द्विजाः ॥ 7.1.304.१० ॥

ततः प्रभृति सर्वे ते शिवद्रोहकरं परम् ॥

आत्मानं मेनिरे नित्यं प्रसन्नेऽपि महेश्वरे ॥ ११ ॥

महोदयान्महातीर्थं सर्व आगत्य सत्वरम् ॥

तपस्तेपुर्महाघोरं संगालेश्वरसन्निधौ ॥ १२ ॥

संगालेश्वरनामानं सर्वे पूज्य यथाविधि ॥

भृगुरत्रिस्तथा मंकिः कश्यपः कण्व एव च ॥ १३ ॥

गौतमः कौशिकश्चैव कुशिकश्च महातपाः ॥

शूकरोऽथ भरद्वाजो भार्गविश्च महातपाः ॥ १४ ॥

जातूकर्ण्यो वसिष्ठश्च सावर्णिश्च पराशरः ॥

शांडिल्यश्च पुलस्त्यश्च वत्सश्चैव महातपाः ॥ १५ ॥

एते चान्ये च बहवो ह्यसंख्याता महर्षयः ॥ १६ ॥

संगालेश्वरमासाद्य प्रभासे पापनाशने ॥

तपः कुर्वंति सततं प्रतिष्ठाप्य महेश्वरम् ॥ १७ ॥

ततः कालेन महता ते सर्वे मुनिपुंगवाः ॥

ध्यानात्त्रिलोचनस्यैव अदृष्टे तु महेश्वरे ॥ १८ ॥

त्रिनेत्रत्वमनुप्राप्तास्तपोनिष्ठास्तपोधनाः ॥

परस्परं वीक्षमाणास्त्रिनेत्रस्याभिशंकया ॥ १९ ॥

स्तुवंति विविधैः स्तोत्रैर्मन्यमाना महेश्वरम् ॥

ज्ञात्वा ध्यानेन देवस्य त्रिनेत्रत्वमुपागताः ॥ 7.1.304.२० ॥

चकुरुग्रं तपस्ते तु पूजां देवस्य शूलिनः ॥

तेषु वै तप्यमानेषु कृपाविष्टो महेश्वरः ॥ २१ ॥

उवाच तान्मुनीन्सर्वाञ्छृणुध्वं वरमुत्तमम्॥

प्रसन्नोऽहं मुनिश्रेष्ठास्तपसा पूजयापि च ॥ २२ ॥

॥ ऋषय ऊचुः ॥ ॥

यदि प्रसन्नो देवेश वरं नो दातुमर्हसि ॥

गंगामानय वेगेन ह्यभिषेकाय नो हर ॥ २३ ॥

तस्यां कृताभिषेकास्तु तव द्रोहकरा वयम् ॥

अज्ञानभावात्पूतत्वं यास्यामः पृथिवीतले ॥ २४ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

यूयं पवित्रकरणाः पावनानां च पावनाः ॥

गंगां चैवानयिष्यामि युष्माकं चित्ततुष्टये ॥ २५ ॥

पावित्र्याद्भवतां जातं त्रैनेत्र्यं मुनिसत्तमाः ॥

एवमुक्त्वा ततः शंभुर्ध्यानस्तिमितलोचनः ॥

सस्मार क्षणमात्रेण गंगां मीनकुलावृताम् ॥ २६ ॥

स्मृतमात्रा तदा देवी गंगा त्रिपथगामिनी ॥

भित्वा भूमितलं प्राप्ता तत्र मीनकुलावृता ॥ २७ ॥

ऋषिभिश्च यदा दृष्टा गंगा मीनयुता शुभा ॥

दृष्टमात्रास्तु ते मत्स्यास्त्रिनेत्रत्वमुपागताः ॥ २८ ॥

॥ ईश्वर उवाच ॥ ॥

युष्माकं दर्शनाद्विप्रास्त्रिनेत्रत्वमुपागताः ॥

एतन्निदर्शनं सर्वं लोकानां च प्रदर्शनम् ॥ २९ ॥ ॥।

॥ ऋषय ऊचुः ॥ ॥

अस्मिन्कुंडे महादेव मत्स्यानां संततिः सदा ॥

त्रिनेत्रा त्वत्प्रसादेन भूयात्सर्वा युगेयुगे ॥ 7.1.304.३० ॥

अस्मिन्कुंडे समागत्य नरः स्नानं करोति यः ॥

ददाति हेम विप्राय गाश्च वस्त्रं तथा तिलान् ॥ ३१ ॥

अमावास्यां विशेषेण त्रिनेत्रः स प्रजायताम् ॥

एवं भविष्यतीत्युक्त्वा ह्यन्तर्धानं गतो हरः ॥ ३२ ॥

ब्राह्मणास्तुष्टिसंयुक्ता गताः सर्वे महोदयम् ॥ ३३ ॥

एतत्ते कथितं देवि गंगामाहात्म्यमुत्तमम् ॥

श्रुतं पापप्रशमनं सर्वकामफलप्रदम् ॥ ३४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संगालेश्वरसमीपवर्ति गंगामाहात्म्यवर्णनंनाम चतुरुत्तरत्रिशततमोऽध्यायः ॥ ३०४

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्याः पूर्वेण संस्थितम्॥

नारदादित्यनामानं जरादारिद्र्यनाशनम् ॥ १ ॥

पश्चिमे मूलचंडीशाद्धनुषां च शतत्रये ॥

आराध्य नारदो देवि भास्करं वारितस्करम् ॥

जरा निर्मुक्तदेहस्तु तत्क्षणात्समपद्यत ॥२ ॥

॥ देव्युवाच ॥ ॥

कथं जरामनुप्राप्तो नारदो मुनिपुंगवः ॥

कथमाराधितः सूर्य एतन्मे वद शंकर ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

यदा द्वारवतीं प्राप्तो नारदो मुनिपुंगवः ॥

सर्वे दृष्टास्तदा तेन विष्णोः पुत्रा महाबलाः ॥ ४ ॥

तद्राजकुलमध्ये तु क्रीडमाना परस्परम् ॥ आयांतं नारदं दृष्ट्वा सर्वे विनयसंयुताः ॥ ५ ॥

नमश्चक्रुर्यथान्यायं विना सांबं त्वरान्विताः ॥

अविनीतं तु तं दृष्ट्वा कथयामास नारदः ॥ ६ ॥

शरीरमदमत्तोऽसि यस्मात्सांब हरेः सुत ॥

अचिरेणैव कालेन शापं प्राप्स्यसि दारुणम् ॥ ७॥

॥ सांब उवाच ॥ ॥

नमस्कारेण किं कार्यमृषीणां च जितात्मनाम्॥

आशीर्वादेन तेषां च तपोहानिः प्रजायते ॥ ८ ॥

मुनीनां यः स्वभावो हि त्वयि लेशो न नारद ॥

विद्यते ब्रह्मणः पुत्र उच्यते किमतः परम्॥ ९ ॥

न कलत्रं न ते पुत्रा न च पौत्रप्रपौत्रकाः ॥

न गृहं नैव च द्वारं न हि गावो न वत्सकाः ॥ 7.1.305.१० ॥

ब्रह्मणो मानसः पुत्रो ब्रह्मचर्ये व्यवस्थितः ॥

अयुक्तं कुरुते नित्यं कस्मात्प्रकृतिरीदृशी ॥ ११ ॥

युद्धं विना न ते सौख्यं सौख्यं न कलहं विना ॥

यादृशस्तादृशो वापि वाग्वादोऽपि सदा प्रियः ॥ १२ ॥

स्नानं संध्या जपो होमस्तर्पणं पितृदेवयोः ॥

नारदः कुरुते चान्यदन्यत्कुर्वंति ब्राह्मणाः ॥ १३ ॥

कौमारेण तु गर्विष्ठो यस्मान्मां शापयिष्यसि ॥

तस्मात्त्वमपि विप्रर्षे जरायुक्तो भविष्यसि ॥ १४ ॥

एवं शप्तस्तदा देवि नारदो मुनिपुंगवः ॥

एकान्ते निर्मले स्थाने कंटकास्थिविवर्जिते ॥ १५ ॥

कृष्णाजिनपरिच्छिन्ने ह्युपविष्टो वरासने ॥

ऋषितोया तटे रम्ये प्रतिष्ठाप्य महामुनिः ॥ १६ ॥

सूर्यस्य प्रतिमां रम्यां सर्वदारिद्र्यनाशिनीम् ॥

तुष्टाव विविधैः स्तोत्रैरादित्यं तिमिरापहम् ॥ १७ ॥

नमस्त ऋक्स्वरूपाय साम्नां धामग ते नमः ॥

ज्ञानैकरूपदेहाय निर्धूततमसे नमः ॥ १८ ॥

शुद्धज्योतिःस्वरूपाय निर्मूर्तायामलात्मने ॥

वरिष्ठाय वरेण्याय सर्वस्मै परमात्मने ॥ १९ ॥

नमोऽखिलजगद्व्यापिस्वरूपानंदमूर्तये ॥

सर्वकारणपूताय निष्ठायै ज्ञानचेतसाम् ॥ 7.1.305.२० ॥

नमः सर्वस्वरूपाय प्रकाशालक्ष्यरूपिणे ॥

भास्कराय नमस्तुभ्यं तथा दिनकृते नमः ॥ २१ ॥

॥ ईश्वर उवाच ॥ ॥

एवं संस्तुवतस्तस्य पुरतस्तस्य चेतसा ॥

प्रादुर्बभूव देवेशि जगच्चक्षुः सनातनः ॥

उवाच परमं प्रीतो नारदं मुनिपुंगवम् ॥ २२ ॥

॥ सूर्य उवाच ॥ ॥

वरं वरय विप्रर्षे यस्ते मनसि वर्तते ॥

तुष्टोऽहं तव दास्यामि यद्यपि स्यात्सुदुर्लभम् ॥ २३ ॥

॥ नारद उवाच ॥

कुमार वयसा युक्तो जरायुक्तकलेवरः ॥

प्रसादात्स्यां हि ते देव यदि तुष्टो दिवाकर ॥ २४ ॥

सप्तम्यां रविवारेण यस्त्वां पश्यति मानवः ॥

तस्य रोग भयं माऽस्तु प्रसादात्तिमिरापह॥ २५ ॥

॥ ईश्वर उवाच ॥ ॥

एवं भविष्यतीत्युक्त्वा ह्यन्तर्धानं गतो रविः ॥

इत्येतत्कथितं देवि माहात्म्यं सकलं तव ॥

नारदादित्यदेवस्य सर्वपातकनाशनम्॥ २६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये नारदादित्यमाहात्म्यवर्णनंनाम पञ्चोत्तरत्रिशततमोऽध्यायः ॥ ३०५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सांबादित्यमनुत्तमम् ॥

तस्मादुत्तरभागे तु सर्वपातकनाशनम् ॥ १ ॥

यत्र सांबस्तपस्तप्त्वा ह्याराध्य च दिवाकरम् ॥

प्राप्तवान्सुन्दरं देहं सहस्रांशुप्रसादतः ॥ २ ॥

यदा रोषेण संशप्तः पित्रा जांबवतीसुतः ॥

आराधयामास तदा विष्णुं कमललोचनम् ॥ ३ ॥

अनुग्रहार्थं शापस्य सांबो जांबवतीसुतः ॥

प्रसन्नवदनो भूत्वा विष्णुः प्रोवाच तं प्रति ॥ ४ ॥

गच्छ प्राभासिके क्षेत्रे ब्रह्मभागमनुत्तमम् ॥

ऋषितोयातटे रम्ये ब्राह्मणैरुपशोभिते ॥ ५ ॥

तत्राऽहं सूर्यरूपेण वरं दास्यामि पुत्रक ॥

इत्युक्तः स तदा सांबो विष्णुना प्रभविष्णुना ॥ ६ ॥

गतः प्राभासिके क्षेत्रे रम्ये शिवपुरे शिवे ॥

तत्राराध्य परं देवं भास्करं वारितस्करम् ॥ ७ ॥

प्रसादयामास तदा स्तुत्वा स्तोत्रैरनेकधा ॥ ८ ॥

प्रत्युवाच रविः सांबं प्रसन्नस्ते स्तवेन वै ॥

शीघ्रं गच्छ नरश्रेष्ठ ऋषितोयातटे शुभे ॥ ९ ॥

इत्युक्तः स तदाऽऽगत्य ऋषितोयातटं शुभम् ॥

नारदो यत्र ब्रह्मर्षिस्तपस्तप्यति चैव हि ॥ 7.1.306.१० ॥

तत्र गत्वा हरेः सूनुरुन्नतस्थानवासिनः ॥

आसन्ये ब्राह्मणास्तान्स इदं वचनमब्रवीत् ॥ ११ ॥

॥ सांब उवाच ॥ ॥

एष वै ब्रह्मणो भागः प्रभासे क्षेत्र उत्तमे ॥

अत्र वै ब्राह्मणा ये तु ते वै श्रेष्ठाः स्मृता भुवि ॥ १२ ॥

भवतां वचनाद्विप्राः सूर्यमाराधयाम्यहम् ॥

मम वै पूर्वमादिष्टं स्थानमेतच्च विष्णुना ॥ १३ ॥

॥ विप्रा ऊचुः ॥ ॥

सिद्धिस्ते भविता सांब आराधय दिवाकरम् ॥

इत्युक्तः स तदा विप्रैः प्रविष्टोऽथ प्रभाकरम्॥ १४ ॥

नित्यमाराधयामास सांबो जांबवतीसुतः ॥

तपोनिष्ठं च तं दृष्ट्वा विष्णुः कारुणिको महान् ॥ १५ ॥

इदं वै चिन्तयामास पुत्रवात्सल्यसंयुतः ॥

यथैश्वर्यप्रदो रुद्रो यथा विष्णुश्च मुक्तिदः ॥ १६ ॥

यज्ञैरिष्टो हि देवेन्द्रो यथा स्वर्गप्रदः स्मृतः ॥

शुद्धिकर्तृ यथा तोयं मृत्तिकाभस्मसंयुतम् ॥

दहनात्मा यथा वह्निर्विघ्नहर्त्ता गणेश्वरः ॥ १७ ॥

स्वच्छंदभारतीदाने यथा ब्रह्मसुता नृणाम् ॥

तथाऽऽरोग्यप्रदाता च नान्यो देवो दिवाकरात् ॥ १८ ॥

अनेकधाऽऽराधितोऽपि स देवो भास्करः शुचिः ॥

न ददाति वरं यत्तु तन्मे शापस्य कारणात् ॥ १९ ॥

एवं संचिन्त्य भगवान्विष्णुः कमललोचनः ॥

सूर्यरूपं समाश्रित्य तस्य तुष्टो जनार्दनः ॥ 7.1.306.२० ॥

योऽपरनारायणख्यस्तस्यैव सन्निधौ स्थितः ॥

प्रत्यक्षः स ततो विष्णुः सूर्यरूपी दिवाकरः ॥

उवाच परमप्रीतो वरदः पुण्यकर्मणाम् ॥ २१ ॥

अलं क्लेशेन ते सांब किमर्थं तप्यसे तपः ॥

प्रसन्नोऽहं हरेः सूनो वरं वरय सुव्रत ॥ २२ ॥

॥ सांब उवाच ॥ ॥

निर्मलस्त्वत्प्रसादेन कुष्ठमुक्तकलेवरः ॥

भवानि देवदेवेश प्रत्यक्षाऽम्बरभूषण ॥

अस्मिन्स्थाने स्थितो रम्ये नित्यं सन्निहितो भव ॥ २३ ॥

॥ सूर्य उवाच ॥ ॥

अधुना निर्मलो देहस्तव सांब भविष्यति ॥ इहागत्य नरो यस्तु सप्तम्यां रविवासरे ॥

उपवासपरो भूत्वा रात्रौ जागरणे स्थितः ॥ २४ ॥

अष्टादशानि कुष्ठानि पापरोगास्तथैव च ॥

कदाचिन्न भविष्यन्ति कुले तस्य महात्मनः ॥ २५ ॥

कृत्वा स्नानं नरो यस्तु भक्तियुक्तो जितेन्द्रियः ॥

पूजयेद्रविवारेण सांबादित्यं महाप्रभम् ॥

स रोगहीनो धनवान्पुत्रवाञ्जायते नरः ॥ २६ ॥

तस्यैव पूर्वदिग्भागे किञ्चिदीशानमाश्रितम् ॥

कुंडं पापहरं पुण्यं स्वच्छोदपरि पूरितम्॥ २७ ॥

तत्र स्नात्वा च् विधिवत्कुर्याच्छ्राद्धं विचक्षणः ॥

भोजयेद्ब्राह्मणान्यस्तु सांबादित्यं प्रपूजयेत् ॥ २८ ॥

सर्वकामसमृद्धात्मा सूर्य लोके महीयते ॥ २९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये सांबादित्य माहात्म्यवर्णनंनाम षड्डुत्तरत्रिशततमोध्यायः ॥ ३०६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०७



॥ ईश्वर उवाच ॥ ॥

सांबादित्याच्च पूर्वेण किञ्चिदाग्नेयसंस्थितः ॥

अपरनारायणोनाम यस्मान्नास्ति परो भुवि ॥ १ ॥

स तु सांबस्य देवेशि सूर्यो विष्णुस्वरूपवान् ॥

अपरां मूर्तिमास्थाय विष्णुरूपो वरं ददौ ॥ २ ॥

तेनापरेति नाम्ना वै ख्यातो विष्णुः पुराऽभवत् ॥

फाल्गुनामलपक्षे तु एकादश्यां विधानतः ॥ ३ ॥

पूजयेत्पुण्डरीकाक्षं तत्र सूर्यस्वरूपिणम् ॥

मुक्तो भवति पापेभ्यः सर्वकामैः समृध्यते ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खंडे प्रथमे प्रभासक्षेत्रमाहात्स्येऽपरनारायणमाहात्म्यवर्णनंनाम सप्तोत्तरत्रिशततमोऽध्यायः ॥ ३०७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०८

https://sa.wikisource.org/s/ghq
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्मान्नारायणात्पूर्वे किंचिदीशानसंस्थितम् ॥

मूलचण्डीशनाम्ना तु विख्यातं भुवनत्रयं ॥ १ ॥

यत्र लिंगं पुराऽस्माकं पातितं त्वृषिभिः प्रिये ॥

क्रोधरक्तेक्षणैर्देवि मूलचण्डीशता? गतम् ॥ २ ॥

आद्यं लिंगोद्भवं देवि ऋषिकोपान्निपातितम् ॥

ये केचिदृषयस्तत्र देवदारुवने स्थिताः ॥ ३ ॥

कालांतरे महादेवि अहं तत्र समागतः ॥

तेषां जिज्ञासया देवि ततस्ते रोषिता भवन् ॥

शप्तस्ततोऽहं देवेशि चक्रुर्मे लिंगपातनम् ॥ ४ ॥ ॥

॥ देव्युवाच ॥ ॥

रोषोपहतसद्भावाः कथमेते द्विजातयः ॥

संजाता एतदाख्याहि परं कौतूहलं मम ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

डिंडि रूपः पुरा देवि भूत्वाऽहं दारुके वने ॥

ऋषीणामाश्रमे पुण्ये नग्नो भिक्षाचरोऽभवम् ॥

भिक्षंतमाश्रमे दृष्ट्वा ताः सर्वा ऋषियोषितः ॥ ६ ॥

कामस्य वशमापन्नाः प्रियमुत्सृज्य सर्वतः॥

तमूर्ध्वलिंगमालोक्य जटामुकुटधारिणम् ॥ ७ ॥ ॥

भिक्षंतं भस्मदिग्धांगं झषकेतुमिवापरम् ॥

विक्षोभिताश्च नः सर्वे दारा एतेन डिंडिना ॥ ८ ॥

तस्माच्छापं च दास्याम ऋषयस्ते तदाऽब्रुवन् ॥

ततः शापोदकं गृह्य संध्यात्वाऽथ तपोधनाः ॥ ९ ॥

अस्य लिंगमधो यातु दृश्यते यत्सदोन्नतम् ॥

इत्युक्ते पतितं लिंगं तत्र देवकुले मम ॥ 7.1.308.१० ॥

मूलचण्डीशनाम्ना तु विख्यातं भुवनत्रये ॥

तल्लिंगं पतितं दृष्ट्वा कोपोपहतचेतसः ॥

पुनर्हंतुं समारब्धा डिंडिनं ते तपोधनाः ॥ ११ ॥

वृसिकापाणयः केचित्कमंडलुधराः परे ॥

गृहीत्वा पादुकाश्चान्ये तस्य धावंति पृष्ठतः ॥ १२ ॥

डिंडिश्चांतर्हितो भूत्वा त्वामुवाच सुमध्यमाम् ॥

रोषोपहतचेतस्कान्पश्यैतांस्त्वं तपोधनान् ॥ १३ ॥

एतस्मात्कारणाद्देवि तव वाक्यान्मयाऽनघे ॥

न कृतोऽनुग्रहस्तेषां सरोषाणां तपस्विनाम् ॥ १४ ॥

अत्रांतरे ते मुनयो ह्यपश्यंतो हि डिंडिनम् ॥

निरानंदं गताः सर्वे द्रष्टुं देवं पितामहम्॥ १५ ॥

तं दृष्ट्वा विबुधेशानं विरंचिं विगतज्वरम् ॥

प्रणम्य शिरसा सर्व ऋषयः प्राहुरंजसा ॥ १६ ॥

भगवन्डिंडि रूपेण कश्चिदस्ति तपोधनः ॥

विध्वंसनाय दाराणां प्रविष्टः किल भिक्षितुम्॥ १७ ॥

शप्तोऽस्माभिस्तु दुर्वृत्तस्तस्य लिंगं निपातितम्॥

तस्मिन्निपतितेऽस्माकं तथैव पतितानि च ॥ १८ ॥

गतोऽसौ कारणात्तस्मात्तल्लिंगे पतिते वयम् ॥

निरानंदाः स्थिताः सर्व आचक्ष्वैतद्धि कारणम् ॥१९॥। ॥

॥ ब्रह्मोवाच ॥ ॥

अशोभनमिदं कार्यं युष्माभिर्यत्कृतं महत्।

रुद्रस्यातिसुरूपस्य सेर्ष्या ये हन्तुमुद्यताः ॥7.1.308.२०॥

आसुरीं दानवीं दैवीं यक्षिणीं किंनरीं तथा ॥

विद्याधरीं च गन्धर्वीं नागकन्यां मनोरमाम् ॥

एता वरस्त्रियस्त्यक्त्वा युष्मदीयासु तास्वपि ॥ २१ ॥

आह्लादं कुरुते सर्वे नैव जानीत भो द्विजाः ॥

त्रैलोक्यनायकां सर्वां रूपातिशयसंयुताम् ॥ २२ ॥

तां त्यक्त्वा मुनिपत्नीनामाह्लादं कुरुते कथम् ॥

तया रुद्रो हि विज्ञप्त ऋषीणां कुर्वनुग्रहम् ॥ २३ ॥

तेन वाक्येन पार्वत्या जिज्ञासार्थं कृतं मनः ॥

चतुर्द्दशविधस्यापि भूतग्रामस्य यः प्रभुः ॥ २४ ॥

स शप्तो डिंडिरूपस्तु भवद्भिः करणेश्वरः ॥

तच्छापाच्छप्तमेवैतत्समस्तं तद्गुणास्पदम् ॥

देवतिर्यङ्मनुष्याणां निरानंदमिति स्थितम् ॥ २५ ॥

शापेनानेन भवतां महा दोषः प्रजायते ॥

आराध्यं नान्यथा लिंगमुन्नतिं यात्यधोगतम् ॥ २६ ॥

एवमुक्तेऽथ देवेन विप्रा ऊचुः पितामहम् ॥

द्रष्टव्यः कुत्र सोऽस्माभिः कथयस्व यथास्थितम् ॥ २७ ॥

॥ ब्रह्मोवाच ॥ ॥

आस्ते गजस्वरूपेण कुबेराश्रमसंस्थितः ॥

तत्र गत्वा तमासाद्य तोषयध्वं पिनाकिनम् ॥ ॥ २८ ॥

एतच्छ्रुत्वा वचस्तस्य सर्वे ते हृष्टमानसाः ॥

गंतुं प्रवृत्ताः सहसा कोटिसंख्यास्तपोधनाः ॥ २९ ॥

चिंतयंतः शुभं देशं द्रष्टुं तं गजरूपिणम् ॥

रुद्रं पितामहाख्यातं कुबेराश्रमवासिनम् ॥ 7.1.308.३० ॥

क्षुत्क्षामकंठास्तृषितान्गौरी मत्वा तपोधनान् ॥

आदाय गोरसं तेषां कारुण्यात्सा पुरः स्थिता ॥ ३१ ॥

असितां कुटिलां स्निग्धामायतां भुजगीमिव ॥

वेणीं शिरसि बिभ्राणा गौरी गोरससंयुता ॥ ३२ ॥

सा तानाह मुनीन्सर्वान्यन्मया पर्वताहृतम्॥

कपित्थफलसंगंधं गोरसं त्वमृतोपमम् ॥३३॥

तयैवमुक्ता विप्रास्तु आहुस्तां विपुलेक्षणाम् ॥

स्नात्वा च सर्वे पास्यामो गोरसं तु त्वयाहृतम् ॥ ३४ ॥

ततः श्रुत्वा तथा देव्या स्नानार्थं तीर्थमुत्तमम् ॥

तप्तोदकेनसंपूर्णं कृतं कुण्डं मनोरमम् ॥ ३५ ॥

तत्र ते संप्लुताः सर्वे विमुक्ता विपुलाच्छ्रमात्॥
कृताऽऽह्वा गोरसस्वैव पानार्थं समुपस्थिताः॥३६॥
पत्रैर्दिवाकरतरोर्विधाय पुटकाञ्छुभान् ॥
उपविश्य क्रमात्सर्वे ते पिबंति स्म गोरसम् ॥ ३७ ॥
गोरसेन तदा तेषाममृतेनेव पूरितान्॥
बुभुक्षितानां पुटकान्मुनीनां तृप्तिकारणात् ॥३८॥
पुनः पूरयते गौरी पीत्वा ते तृप्तिमागताः॥
क्षुत्तृषाश्रमनिर्मुक्ताः पुनर्जाता इव स्थिताः ॥३९॥
स्वस्थचित्तैस्ततो ज्ञात्वा नेयं गोपालिसंज्ञिका ॥
अनुग्रहार्थमस्माकं गौरीयं समुपागता ॥7.1.308.४०॥
प्रणम्य शिरसा सर्वे तामूचुस्ते सुमध्यमाम्॥
उमे कथय कुत्रस्थं द्रक्ष्यामो रुद्रमेकदा ॥ ४१ ॥
तथोक्तास्ते महात्मानस्तं पश्यत महागजम् ॥
गजतां च समासाद्य संचरंतं महाबलम् ॥ ४२ ॥
भवद्भिर्निजभक्त्यायं संग्राह्यो हि यथासुखम् ॥
ते तद्वचनमासाद्य समेत्यैकत्र च द्विजाः ॥ ॥ ४३ ॥
पवित्रास्तं गजं द्रष्टुं भावितेनांतरात्मना ॥
यत्रैकत्र स्थिता विप्रास्तत्र तीर्थं महोदयम् ॥
संगमेश्वरसंज्ञं तु पूर्वं सर्वत्र विश्रुतम् ॥ ४४ ॥
ततस्तस्मात्प्रवृत्तास्ते द्रष्टुकामा महागजम् ॥
कुंडिकाः संपरित्यज्य संनह्यात्मानमात्मना ॥४५॥
यत्र ताः कुंडिकास्त्यक्तास्तत्तीर्थं कुण्डिकाह्वयम् ॥
सर्वपापहरं पुंसां दृष्टाऽदृष्टफलप्रदम् ॥ ४६ ॥
कुबेरस्याश्रमं प्राप्य ततस्ते मुनिसत्तमाः ॥
नालिकेरवनीसंस्थं ददृशुस्तं द्विपं तदा ॥ ४७ ॥
करे ग्रहीतुमारब्धाः स्वकरैर्हृष्टमानसाः ॥
गजस्तान्करसंलग्नान्विचिक्षेप तपोधनान् ॥ ४८ ॥
काश्चिदंगसमालग्नान्समंताद्भयवर्जितान् ॥

एवं स तैः पुनः सर्वैर्मशकैरिव चेष्टितम् ॥ ४९ ॥

क्रीडां करोति विविधां वनसंस्थो हरद्विपः ॥

तद्रूपं संपरित्यज्य रुद्रो रौद्रगजात्मकम् ॥ 7.1.308.५० ॥

पुनरन्यच्चकारासौ डिंडिरूपं मनोरमम् ॥

जयशब्दप्रघोषेण वेदमङ्गलगीतकैः ॥ ५१ ॥

उन्नामितं पुनस्तेन यत्र लिंगं महोदयम् ॥

तदुन्नतमिति प्रोक्तं स्थानं स्थानवतां वरम् ॥ ५२ ॥

गजरूपधरस्तत्र स्थितः स्थाने महाबलः ॥

गणनाथस्वरूपेण ह्युन्नतो जगति स्थितः ॥ ५३ ॥

डिंडिरूप धरो भूत्वा रुद्रः प्राह तपोधनान् ॥

यन्मया भवतां कार्यं कर्तव्यं तदिहोच्यताम् ॥ ५४ ॥

एवमुक्तस्तु तैरुक्तः सर्वज्ञानक्रियापरैः ॥

सानन्दाः प्राणिनः संतु त्वत्प्रसादात्पुरा यथा ॥ ५५ ॥

क्षंतव्यं देवदेवेश कृतं यन्मूढमानसैः ॥

त्वत्प्रसादात्सुरेशान तत्त्वं सानुग्रहो भव ॥ ५६ ॥

एवमस्त्विवति तेनोक्तास्ते सर्वे विगतज्वराः ॥

तल्लिंगानुकृतिं लिंगमीजिरे मुनयस्तथा ॥

चक्रुस्ते मुनयः सर्वे स्तुतिं विगतमत्सराः ॥ ५७ ॥

क्षमस्व देवदेवेश कुर्वस्माकमनुग्रहम् ॥

अस्मिँल्लिंगे लयं गच्छ मूलचण्डीशसंज्ञके ॥

त्रिकालं देवदेवेश ग्राह्या ह्यत्र कला त्वया ॥ ५८ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

चण्डी तु प्रोच्यते देवी तस्या ईशस्त्वहं स्मृतः ॥

तस्य मूलं स्मृतं लिंगं तदत्र पतितं यतः ॥ ५९ ॥

तस्मात्तन्मूल चण्डीश इति ख्यातिं गमिष्यति ॥ वा

पीकूपतडागानां शतैस्तु विपुलैरपि ॥ 7.1.308.६० ॥

कृतैर्यज्जायते पुण्यं तत्पुण्यं लिंगदर्शनात् ॥

ब्रह्माण्डं सकलं दत्त्वा यत्पुण्यफलमाप्नुयात् ॥ ६१ ॥

तत्पुण्यं लभते देवि मूलचण्डीशदर्शनात् ॥

तत्र दानानि देयानि षोडशैव नरोत्तमैः ॥ ६२ ॥

एवं तद्भविता सर्वं यन्मयोक्तं द्विजोत्तमाः ॥

यात दारुवनं विप्राः सर्वे यूयं तपोधनाः ॥

मया सर्वे समादिष्टा यात दारुवनं द्विजाः ॥ ६३ ॥

ततस्तु संप्राप्य महद्वचो मम सर्वे प्रहृष्टा मुनयो महोदयम् ॥

गत्वा च तद्दारुवनं महेश्वरि पुनश्च चेरुः सुतपस्तपोधनाः ॥ ६४ ॥

एतस्मात्कारणाद्देवि मूलचण्डीशसंज्ञितम् ॥

लिंगं पापहरं नृणामर्द्धचन्द्रेण भूषितम् ॥ ६५ ॥

दोहनी दुग्धदानेन मुनीनां तृषितात्मनाम् ॥

श्रमापहारं यद्देवि त्वया कृतमनुत्तमम् ॥

तत्तप्तोदकनाम्ना वा अभूत्कुण्डं धरातले ॥६६ ॥

ऋषितोयाजले स्नात्वा चण्डीशं यः प्रपूजयेत् ॥

स प्रचण्डो भवेद्भूमौ भुवनानामधीश्वरः ॥ ६७ ॥

एतत्संक्षेपतो देवि माहात्म्यं कीर्तितं तव ॥

मूलचण्डीशदेवस्य श्रुतं पातकनाशनम् ॥ ६८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये तप्तोदककुण्डोत्पत्तौ मूलचण्डीशोत्पत्तिमाहात्म्यवर्णनंनामाष्टोत्तर त्रिशततमोऽध्यायः ॥ ३०८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३०९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विनायकमनुत्तमम् ॥

चतुर्मुखेति विख्यातं चण्डीशादुत्तरे स्थितम् ॥ १ ॥

किञ्चिदीशानदिग्भागे धनुषां च चतुष्टये ॥

तं प्रयत्नाच्च संपूज्य सर्वविघ्नैः प्रमुच्यते ॥ २ ॥

गन्धपुष्पादिभिस्तत्र भक्ष्यैर्भोज्यैः समोदकैः ॥

चतुर्मुखं चतुर्थ्यां तु संपूज्य सिद्धिभाग्भवेत् ॥ ३ ॥

इति श्रीस्कांदे महपुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये चतुर्मुखविनायक माहात्म्यवर्णनंनाम नवोत्तरत्रिशततमोऽध्यायः ॥ ॥ ३०९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१०





॥ ईश्वर उवाच ॥ ॥

तस्माद्वायव्यदिग्भागे धनुषां द्वितये स्थितम् ॥

कलंबेश्वरनामानं सर्वपातकनाशनम् ॥ ॥ १ ॥

तं दृष्ट्वा पूजयित्वा च मुक्तः स्यात्सर्वकिल्बिषैः॥।

सोमवारे त्वमावास्या तत्रैव बहुपुण्यदा ॥

विप्राणां भोजनं देयं तत्र पुण्य फलेप्सुभिः ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कलंबेश्वरमाहात्म्य वर्णनंनाम दशोत्तरत्रिशततमोऽध्यायः ॥ ३१० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३११



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गोपालस्वामिनं हरिम् ॥

चण्डीशात्पूर्वदिग्भागे धनुषां विंशतौ स्थितम् ॥ १ ॥

सर्वपापोपशमनं दारिद्र्यौघविनाशनम्॥

तं दृष्ट्वा पूजयित्वा च माघे मासि विशेषतः ॥

पूजा जागरणं कृत्वा तत्र गच्छेत्परं पदम् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गोपाल स्वामिहरिमाहात्म्यवर्णनंनामैकादशोत्तरत्रिशततमोऽध्यायः ॥ ३११ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१२



॥ ईश्वर उवाच ॥ ॥

तस्मादुत्तरदिग्भागे धनुषामष्टभिः प्रिये ॥

बकुलस्वामिनं सूर्यं तं पश्येद्दुःखनाशनम् ॥ १ ॥

रविवारेण सप्तम्यां कुर्याज्जागरणं नरः ॥

सर्वान्कामानवाप्नोति सूर्यलोके महीयते ॥ ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये बकुलस्वामिमाहात्म्यवर्णनंनाम द्वाद शोत्तरत्रिशततमोऽध्यायः ॥ ३१२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१३



॥ ईश्वर उवाच ॥ ॥

तस्माद्वायव्यदिग्भागे धनुःषोडशभिः स्थितः ॥

उत्तरार्कश्च नाम्ना वै सद्यः प्रत्ययकारकः ॥

मुच्यते सर्वरोगैस्तु कृत्वा वै निंबसप्तमीम्॥ १ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उत्तरार्कमाहात्म्यवर्णनंनाम त्रयोदशोत्तरत्रिशततमोऽध्यायः ॥ ३१३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१४



॥ ईश्वर उवाच ॥ ॥

अथ देवकुलाग्नेय्यां गव्यूत्या तत्र संस्थितम् ॥

समुद्रस्य तटे रम्यमृषितीर्थमनुत्तमम् ॥ १ ॥

पाषाणाकृतयस्तत्र ऋषयोऽद्यापि संस्थिताः ॥

दृश्यंते मानुषे देवि सर्वपातकनाशनाः ॥ २ ॥

तत्र ज्येष्ठे त्वमावास्यां प्राप्यते नाधमैर्न्नरैः ॥

पिंडदानं विशेषेण स्नानं श्रद्धासमन्वितैः ॥ ३ ॥

ऋषितोयासंगमे तु स्नानं श्राद्धं सुदुर्लभम् ॥

गोप्रदानं प्रशंसंति तत्र ते मुनिपुगवाः ॥

भोजनं ब्राह्मणानां तु यथाशक्त्या प्रदापयेत् ॥४॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मूलचंडीशमाहात्म्य ऋषितीर्थसंगममाहात्म्यवर्णनंनाम चतुर्दशोत्तरत्रिशततमोऽध्यायः ॥ ३१४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मरुदार्यां महाप्रभाम् ॥

तस्मात्पश्चिमदिग्भागे क्रोशार्द्धेन व्यवस्थिताम् ॥ १ ॥

मरुद्भिः पूजितां देवीं सर्वकामफलप्रदाम् ॥

महानवम्यां यत्नेन सप्तम्यां पूजयेन्नरः ॥

गंधपुष्पादिविधिना सर्वकामप्रसिद्धये ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मरुदार्यादेवीमाहात्म्यवर्णनंनाम पंचदशोत्तरत्रिशततमोऽध्यायः ॥ ३१५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१६



॥ ईश्वर उवाच ॥ ॥

अथ देवकुलात्पूर्वे पंचगव्यूतिमात्रतः ॥

शंबरस्थान मध्ये तु क्षेमादित्येति विश्रुतः ॥ १ ॥

तं दृष्ट्वा मानवो देवि भवेत्क्षेमार्थसिद्धिभाक् ॥

सप्तम्यां रविवारेण पूजितः सर्वकामदः ॥ २ ॥

इति देवकुलस्थाने कथिता तीर्थसंस्थितिः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्र माहात्म्ये क्षेमादित्यमाहात्म्यवर्णनंनाम षोडशोत्तरत्रिशततमोऽध्यायः ॥ ३१६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१७

https://sa.wikisource.org/s/ghz
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवीं कंटकशोषिणीम् ॥

उत्तरेण देवकुलाद्दक्षिणेनोन्नतात्स्थितात् ॥ १ ॥

तस्योत्पत्तिं प्रवक्ष्यामि शृणु ह्येकमनाः प्रिये ॥

उन्नताद्दक्षिणे भागे यजंते द्विजसत्तमाः ॥ २ ॥

भृगुरत्रिर्मरीचिश्च भरद्वाजोऽथ कश्यपः ॥

कण्वो मंकिश्च सावर्णिर्जातूकर्ण्यस्तथैव च ॥ ३ ॥

वत्सश्चैव वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः ॥

मनुर्यमोऽगिरा विष्णुः शातातपपराशरौ ॥ ४ ॥

शांडिल्यः कौशिकश्चैव गौतमो गार्ग्य एव च ॥

दाल्भ्यश्च शौनकश्चैव शाकल्यो गालवस्तथा ॥ ५ ॥

जाबालिर्मुद्गलश्चैव ऋष्यशृंगो विभांडकः ॥

विश्वामित्रः शतानंदो जह्नुर्विश्वावसुस्तथा ॥ ६ ॥

एते चान्ये च मुनयो यजंते विविधैर्मखैः ॥

यज्ञवाटं च निर्माय ऋषितोयातटे शुभे ॥ ७ ॥

देवगन्धर्वनृत्यैश्च वेणुवीणानिनादितम् ॥

वेदध्वनितघोषेण यज्ञहोमाग्निहोत्रजैः ॥ ८ ॥

धूपैः समावृतं सर्वमाज्यगंधिभिरर्चितम् ॥

शोभितं मुनिभिर्दिव्यैश्चातुर्वेद्यैर्द्विजोत्तमैः ॥ ९ ॥

एवंविधं प्रदेशं तु दृष्ट्वा दैत्या महाबलाः ॥

समुद्रमध्यादायाता यज्ञविध्वंसहेतवे ॥ 7.1.317.१० ॥

मायाविनो महाकायाः श्यामवर्णा महोदराः ॥

लंबभ्रूश्मश्रुनासाग्रा रक्ताक्षा रक्तमूर्धजाः ॥ ११ ॥

यज्ञं समागताः सर्वे दैत्याश्चैव वरानने ॥

तान्दृष्ट्वा मुनयः सर्वे रौद्ररूपान्भयंकरान् ॥ १२ ॥

केचिन्निपतिता भूमौ तथान्ये ऽग्नौ स्रुचीकराः ॥

पत्नीशालां समाविष्टा हविर्धानं तथा परे ॥ १३ ॥

ऋत्विजस्तु सदोमध्ये स्थिता वाचंयमास्तथा ॥ १४ ॥

एवं देवि यदा वृत्तं मुनीनां च महात्मनाम् ॥

तदाध्वर्युर्महातेजा धैर्यमालम्ब्य सादरः ॥ १५ ॥

अग्निहोत्रं हविष्यं च हविर्विन्यस्य मन्त्रवित् ॥

सुसमिद्धं जुहावाग्निं रक्षसां नाशहेतवे ॥ १६ ॥

हुते हविषि देवेशि तत्क्षणादेव चोत्थिता ॥

शक्तिः शक्तित्रिशूलाढ्या चर्महस्ता महोज्ज्वला ॥ १७ ॥

तया ते निहता दैत्या यज्ञविध्वंसकारिणः ॥

ततस्तां विविधैः स्तोत्रैर्मुनयस्तुष्टुवुस्तदा ॥ १८ ॥

प्रसन्ना भूयसी देवी तानृषीन्प्रत्युवाच ह ॥

वरं वृणुध्वं मुनयो दास्यामि वरमुत्तमम्॥ १९ ॥

॥ ऋषय ऊचुः ॥ ॥

कृतं वै सकलं कार्यं यज्ञा नो रक्षितास्त्वया ॥

यदि देयो वरोऽस्माकं त्वया चासुरमर्द्दिनि ॥ 7.1.317.२० ॥

अस्मिन्स्थाने सदा तिष्ठ मुनीनां हितकाम्यया ॥

कंटकाः शोषिता दैत्यास्तेन कंटकशोषिणी ॥

अद्यप्रभृति नामास्तु तेन देवि सदा त्विह ॥ २१ ॥

॥ ईश्वर उवाच ॥ ॥

एवं भविष्यतीत्युक्त्वा सा देव्यन्तर्हिता तदा ॥

अष्टम्यां वा नवम्यां वा पूजयिष्यति मा नवः ॥ २२ ॥

राक्षसेभ्यः पिशाचेभ्यो भयं तस्य न जायते ॥

प्राप्नुयात्परमां सिद्धिं मानवो नात्र संशयः ॥ २३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कंटकशोषणीमाहात्म्यवर्णनंनाम सप्तदशोत्तरत्रिशततमोऽध्यायः ॥३१७॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१८



॥ ईश्वर उवाच ॥ ॥

तस्याश्च पूर्वदिग्भागे नातिदूरे व्यवस्थितम् ॥

लिंगं महाप्रभावं हि सर्वपातकनाशनम् ॥ १ ॥

ब्रह्मेश्वरेति नामाढ्यं ब्राह्मणैश्च प्रतिष्ठितम् ॥

ऋषितोयाजले स्नात्वा तल्लिंगं यः प्रपूजयेत् ॥

स भवेद्वेदविद्विप्रो जाड्यभावविवर्जितः ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनामाष्टादशोत्तरत्रिशततमो ऽध्यायः ॥ ३१८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३१९

https://sa.wikisource.org/s/gi1
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि ह्युन्नतस्थानमुत्तमम् ॥

तस्यैवोत्तरदिग्भाग ऋषितोयातटे शुभे ॥ १ ॥

एतत्स्थानं महादेवि विप्रेभ्यः प्राददां बलात् ॥

सर्वसीमासमायुक्तं चंडीगणसुरक्षितम् ॥ २ ॥

॥ देव्युवाच ॥ ॥

कथमुन्नतनामास्य बभूव सुरसत्तम ॥

कथं त्वया बलाद्दत्तं कियत्सीमासमन्वितम् ॥ ३ ॥

एतत्सर्वं ममाचक्ष्व संक्षेपान्नातिविस्तरात् ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥

यां श्रुत्वा मानवो देवि मुच्यते सर्वपातकैः ॥ ५ ॥

एतत्सर्वं पुरा प्रोक्तं स्थानसंकेतकारणम् ॥

तृतीये ब्रह्मणः कुंडे सृष्टिसंक्षेपसूचके ॥ ६ ॥

तथापि ते प्रवक्ष्यामि संक्षेपाच्छृणु पार्वति ॥ ७ ॥

उन्नामितं पुनस्तत्र यत्र लिंगं महोदये ॥

तदुन्नतमिति प्रोक्तं स्थानं स्थानवतां वरम्॥ ८ ॥

अथवा चोन्नतं द्वारं पूर्वं प्राभासिकस्य वै ॥

तदुन्नतमिति प्रोक्तं स्थानं स्थानवतां वरम् ॥ ९ ॥

विद्यया तपसा चैव यत्रोत्कृष्टा महर्षयः ॥

तदुन्नतमिति प्रोक्तं स्थानं स्थानवतां वरम् ॥ 7.1.319.१० ॥

यदा देवकुले विप्रा मूलचंडीशसंज्ञकम् ॥

प्रसाद्य च महादेवं पुनः प्राप्ता महोदयम् ॥ ११ ॥

षष्टिवर्षसहस्राणि तपस्तेपुर्महर्षयः ॥

ध्यायमाना महेशानमनादिनिधनं परम् ॥ १२ ॥
तेषु वै तप्यमानेषु कोटिसंख्येषु पार्वति ॥
ऋषितोयातटे रम्ये पवित्रे पापनाशने ॥
भिक्षुर्भूत्वा गतश्चाहं पुनस्तत्रैव भामिनि ॥ १३ ॥
त्रिकालं दर्शिभिस्तत्र दोषरागविवर्जितैः ॥
तपस्विभिस्तदा सर्वैर्लक्षितोऽहं वरानने ॥ १४ ॥
दृष्टमात्रस्तदा विप्रैर्विरराम महेश्वरः ॥
क्व यासि विदितो देव इत्युक्त्वानुययुर्द्विजाः ॥ १५ ॥
यावदायांति मुनय ईशेशेति प्रभाषकाः ॥
धावमानाः स्वतपसा द्योतयन्तो दिशोदश ॥ १६ ॥
लिंगमेव प्रपश्यंति न पश्यंति महेश्वरम् ॥ १७ ॥
येये च ददृशुर्लिंगं मूलचण्डीशसंज्ञकम् ॥
तदा च मुनयः सर्वे सदेहाः स्वर्गमाययुः ॥ १८ ॥
यदा त्रिविष्टपं व्याप्तं दृष्टं वै शतयज्वना ॥
आयांति च तथैवान्ये मुनयस्तपसोज्वलाः ॥ १९ ॥
एतदंतरमासाद्य समागत्य महीतले ॥
लिंगमाच्छादयामास वज्रेणैव शतक्रतुः ॥ 7.1.319.२० ॥
अष्टादशसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥
स्थितानि न तु पश्यंति लिंगमेतदनुत्तमम् ॥ २१ ॥
शक्रस्तु सहसा दृष्टो वज्रेणैव समन्वितः ॥
यावद्वदंति शापं ते तावन्नष्टः पुरंदरः ॥ २२॥
दृष्ट्वा तान्कोपसंयुक्तान्भगवांस्त्रिपुरांतकः ॥
उवाच सांत्वयन्देवो वाचा मधुरया मुनीन् ॥ २३ ॥
कथं खिन्ना द्विजश्रेष्ठाः सदा शांतिपरायणाः ॥
प्रसन्नवदना भूत्वा श्रूयतां वचनं मम ॥ २४ ॥
भवद्भिर्ज्ञानसंयुक्तैः स्वर्गः किं मन्यते बहु ॥
यत्रैके वसवः प्रोक्ता आदित्याश्च तथा परे ॥२५ ॥
रुद्रसंज्ञास्तथा चैके ह्यश्विनावपि चापरौ ॥

एतेषामधिपः कश्चिदेक इन्द्रः प्रकीर्तितः ॥ २६ ॥

स्वपुण्यसंख्यया प्राप्ते यस्माद्विभ्रश्यते नरैः ॥

एवं दुःखसमायुक्तः स्वर्गो नैवेष्यते बुधैः ॥ २७ ॥

एतस्मात्कारणाद्विप्राः कुरुध्वं वचनं मम ॥

गृह्णीध्वं नगरं रम्यं निवासाय महाप्रभम् ॥ २८ ॥

हूयंतामग्निहोत्राणि देवताः सर्वदा द्विजाः ॥

इज्यंतां विविधैर्यागैः क्रियतां पितृपूजनम् ॥ २९ ॥

आतिथ्यं क्रियता नित्यं वेदाभ्यासस्तथैव हि ॥ 7.1.319.३० ॥

एवं हि कुर्वतां नित्यं विना ज्ञानस्य संचयैः ॥

प्रसादान्मम विप्रेन्द्राः प्रांते मुक्तिर्भविष्यति ॥ ३१ ॥

॥ ऋषय ऊचुः ॥ ॥

असमर्थाः परित्राणे जिताहारास्तपोन्विताः ॥

नगरेणेह किं कुर्मस्तव भक्तिमभीप्सवः ॥ ॥ ३२ ॥

॥ ईश्वर उवाच ॥ ॥

भविष्यति सदा भक्तिर्युष्माकं परमेश्वरे ॥

गृह्णीध्वं नगरं रम्यं कुरुध्वं वचनं मम ॥ ३३ ॥

इत्युक्त्वा भगवान्देव ईषन्मीलितलोचनः ॥

सस्मार विश्वकर्माणं सर्वशिल्पवतां वरम् ॥ ३४ ॥

स्मृतमात्रो विश्वकर्मा प्रांजलिश्चाग्रतः स्थितः ॥

आज्ञापयतु मां देवो वचनं करवाणि ते ॥ ३५ ॥

॥ ईश्वर उवाच ॥ ॥

नगरं क्रियतां त्वष्टर्विप्रार्थं सुंदरं शुभम् ॥ ३६ ॥

इत्युक्तो विश्वकर्मा स भूमिं वीक्ष्य समंततः ॥

उवाच प्रणतो भूत्वा शंकरं लोकशंकरम् ॥ ३७ ॥

परीक्षिता मया भूमिर्न युक्तं नगरं त्विह ॥

अत्र देवकुलं साक्षाल्लिंगस्य पतनं तथा ॥ ३८ ॥

यतिभिश्चात्र वस्तव्यं न युक्तं गृहमेधिनाम् ॥ ३९ ॥

त्रिरात्रं पंचरात्रं वा सप्तरात्रं महेश्वर ॥

पक्षं मासमृतुं वापि ह्ययनं यावदेव च ॥

पुत्रदारयुतैस्तीर्थे वस्तव्यं गृहमेधिभिः ॥ 7.1.319.४० ॥

वसत्यूर्ध्वं तु षण्मासाद्यदा तीर्थे गृहाधिपः ॥

अवज्ञा जायते तस्य मनश्चापल्यभावतः ॥

तदा धर्माद्विनश्यंति सकला गृहमेधिनः ॥ ४१ ॥

इत्युक्तः स तदा देवस्तेन वै विश्वकर्मणा ॥

पुनः प्रोवाच तं तस्य प्रशस्य वचनं शिवः ॥ ४२ ॥

रोचते मे न वासोऽत्र विप्राणां गृहमेधिनाम् ॥

यत्र चोन्नामितं लिंगमृषितोयातटे शुभे ॥

तत्र निर्मापय त्वष्टर्नगरं शिल्पिनां वर ॥ ४३ ॥

तस्य तद्वचनं श्रुत्वा विश्वकर्मा त्वरान्वितः ॥

गत्वा चकार नगरं शिल्पिकोटिभिरावृतः ॥ ४४ ॥

उन्नतं नाम यल्लोके विख्यातं सुरसुन्दरि ॥

ततो हृष्टमना भूत्वा विलोक्य नगरं शिवः ॥

आहूय ब्राह्मणान्सर्वानुवाचानतकन्धरः ॥४५ ॥

इदं स्थानं वरं रम्यं निर्मितं विश्वकर्मणा ॥

ग्रामाणां च सहस्रैस्तु प्रोक्तं सर्वासु दिक्षु च॥४६ ॥

नगरात्सर्वतः पुण्यो देशो नग्नहरः स्मृतः ॥

अष्टयोजनविस्तीर्ण आयामव्यासतस्तथा ॥ ४७ ॥

नग्नो भूत्वा हरो यत्र देशे भ्रांतो यदृच्छया ॥

तं नग्नहरमित्याहुर्देशं पुण्यतमं जनाः ॥ ४८ ॥

पूर्वे तु शांकरी चाऽऽर्या पश्चिमे न्यंकुमत्यपि ॥

उत्तरे कनकनंदा दक्षिणे सागरावधिः ॥

एतदंतरमासाद्य देशो नग्नहरः स्मृतः ॥ ४९ ॥

अष्टयोजनमानेन आयामव्यासतस्तथा ॥

प्रोक्तोऽयं सकलो देश उन्नतेन समं मया ॥ 7.1.319.५० ॥

गृह्यतां नगरश्रेष्ठं प्रसीदध्वं द्विजोत्तमाः ॥

अत्र भक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ ५१ ॥

इत्युक्तास्ते तदा सर्वे विप्रा ऊचुर्महेश्वरम् ॥ ५२ ॥

॥ विप्रा ऊचुः ॥ ॥

ईश्वराज्ञा वृथा कर्तुं न शक्या परमात्मनः ॥

तपोऽग्निहोत्रनिष्ठानां वेदाध्ययनशालिनाम् ॥५३॥

अस्माकं रक्षिता कोऽस्ति कलिकाले च दारुणे ॥

को दाताऽऽरोग्यदः कश्च को वै मुक्तिं प्रदास्यति ॥ ५४ ॥

॥ ईश्वर उवाच ॥ ॥

महाकाल स्वरूपेण स्थित्वा तीर्थे महोदये ॥

नाशयिष्यामि शत्रून्वः सम्यगाराधितो ह्यहम् ॥ ५५ ॥

उन्नतो विघ्नराजस्तु विघ्नच्छेत्ता भविष्यति ॥

गणनाथस्वरूपोऽयं धनदो निधीनां पतिः ॥ ५६ ॥

युष्मभ्यं दास्यति द्रव्यं सम्यगाराधितोऽपि सः ॥

आरोग्यदायको नित्यं दुर्गादित्यो भविष्यति ॥ ५७ ॥

महोदयं महानन्ददायकं वो भविष्यति ॥

सम्यगाराधितो ब्रह्मा सर्वकार्येषु सर्वदा ॥

सर्वान्कामांश्च मुक्तिं च युष्मभ्यं संप्रदास्यति ॥ ५८ ॥

॥ विप्रा ऊचुः ॥ ॥

यदि तीर्थानि तिष्ठंति सर्वाणि सुरसत्तम ॥

संगालेश्वरतीर्थे च तथा देवकुले शिवे ॥ ॥ ५९ ॥

कलावपि महारौद्रे ह्यस्माकं पावनाय वै ॥

स्थातव्यं तर्हि गृह्णीमो नान्यथा च महेश्वर ॥ 7.1.319.६० ॥

स तथेति प्रतिज्ञाय ददौ तेभ्यः पुरं वरम् ॥

सप्तभौमैः शशांकाभैः प्रासादैः परिभूषितम् ॥

नानाग्रामसमायुक्तं सर्वतः सीमयान्वितम् ॥ ६१ ॥

॥ सूत उवाच ॥ ॥

एवं तेभ्यो हि नगरं दत्त्वा देवो महेश्वरः ॥

ददर्श विश्वकर्माणं प्राञ्जलिं पुरतः स्थितम् ॥ ६२ ॥

॥ विश्वकर्मोवाच ॥ ॥

विलोक्यतां महादेव नगरं नगरोपमम् ॥

सौवर्णस्थलमारुह्य निर्मितं त्वत्प्रसादतः ॥ ६३ ॥

विश्वकर्मवचः श्रुत्वा भगवांस्त्रिपुरान्तकः ॥

समारुरोह स्थलकं सह सर्वैर्महर्षिभिः ॥ ६४ ॥

नगरं विलोकयामास रम्यं प्राकारमण्डितम् ॥

ऋषयस्तुष्टुवुः सर्वे तत्रस्थं त्रिपुरान्तकम् ॥

तानुवाच महादेवो वृणुध्वं वरमुत्त मम्॥ ६५ ॥

॥ ऋषय ऊचुः ॥ ॥

यदि तुष्टो महादेव स्थलकेश्वरनामभृत् ॥

अवलोकयंश्च नगरं सदा तिष्ठ स्थले हर ॥ ६६ ॥

इत्युक्तस्तैस्तदा देवः स्थलकेऽस्मिन्सदा स्थितः ॥

कृते रत्नमयं देवि त्रेतायां च हिरण्मयम् ॥ ६७ ॥

रौप्यं च द्वापरे प्रोक्तं स्थलमश्ममयं कलौ ॥

एवं तत्र स्थितो देवः स्थलकेश्वरनामतः ॥ ६८ ॥

सदा पूज्यो महादेव उन्नतस्थानवासिभिः ॥

माघे मासि चतुर्दश्यां विशेषस्तत्र जागरे ॥ ६९ ॥

इत्येतत्कथितं देवि ह्युन्नतस्य महोद्यम् ॥

श्रुतं पापहरं नृणां सर्वकामफलप्रदम् ॥ 7.1.319.७० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उन्नतस्थानमाहात्म्यवर्णनंनामैकोनविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३१९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२०

https://sa.wikisource.org/s/gi2

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्माच्च पूर्वदिग्भागे किञ्चिदाग्नेयसंस्थितम् ॥

लिंगद्वयं महापुण्यं विश्वकर्मप्रतिष्ठितम् ॥ १ ॥

यदा वै नगरं कर्तुं त्वष्टा तत्र समागतः ॥

प्रतिष्ठाप्य महादेवं नगरं कृतवांस्ततः ॥ २ ॥

कृत्वा च नगरं रम्यं लिंगस्यास्य प्रभावतः ॥

पुनः प्रतिष्ठितं लिंगं तेन वै विश्वकर्मणा ॥ ३ ॥

कर्मादौ कर्मणश्चान्ते यात्रोद्वाहगृहादिके ॥

लिंगद्वयं पूजयित्वा सिद्धिमाप्नोति तत्क्षणात् ॥ ४ ॥

तस्मात्सर्वप्रयत्नेन गंधामृतरसोदकैः ॥

नैवेद्यै विविधैर्देवि लिंगयुग्मं प्रपूजयेत् ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उन्नतस्थानमाहात्म्ये लिंगद्वयमाहात्म्यवर्णनंनाम विंशोत्तरत्रिशततमोऽध्यायः ॥ ३२० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२१



॥ ईश्वर उवाच ॥ ॥

अथ ते कीर्तयिष्यामि रहस्यं स्थानमुत्तमम् ॥

सर्वपापहरं नृणामुन्नतस्थानवासिनाम् ॥ १ ॥

श्रेष्ठदेवस्य माहात्म्यं ब्रह्मणोऽव्यक्तजन्मनः ॥

उन्नतस्थानसंस्थस्य देवस्य बालरूपिणः ॥

यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ २ ॥

॥ देव्युवाच ॥

बालरूपीति यत्प्रोक्तमुन्नतं तत्कथं वद ॥

स्थानेष्वन्येषु सर्वत्र वृद्धरूपी पितामहः ॥ ३ ॥

कस्मिन्स्थाने स्थितस्तत्र किमर्थं तत्र वा गतः ॥

कथं स पूज्यो विप्रेन्द्रैस्तिथौ कस्यां क्रमाद्वद ॥ ४ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

ऋषितोयापश्चिमे तु ऐशान्यां स्थलकेश्वरात् ॥

ब्रह्मणः परमं स्थानं ब्रह्मलोक इवापरः ॥ ५ ॥

ब्रह्मा विष्णुश्च रुद्रश्च पूज्याः प्राभासिके सदा ॥

ब्रह्मभागे स्थितो ब्रह्मा ऋषितोयातटे शुभे ॥ ६ ॥

रुद्रभागेऽग्नितीर्थे च पूज्यो रुद्रः सनातनः ॥

गिरौ रैवतके रम्ये पूज्यो दामोदरो हरिः ॥ ७ ॥

सोमेन प्रार्थितो देवो बालरूपी पितामहः ॥

आगतश्चाष्टवर्षस्तु ह्युन्नते स्थान उत्तमे ॥ ८ ॥

दृष्ट्वा ब्रह्मा द्विजाञ्छ्रेष्ठांस्तत्र स्थाने स्थितो विभुः ॥ ९ ॥

नास्ति ब्रह्मसमो देवो नास्ति ब्रह्मसमो गुरुः ॥

नास्ति ब्रह्मसमं ज्ञानं नास्ति ब्रह्मसमं तपः ॥ 7.1.321.१० ॥

तावद्भ्रमंति संसारे दुःखशोकभयाप्लुताः ॥

न भवंति सुरज्येष्ठे यावद्भक्ताः पितामहे ॥ ११ ॥

समासक्तं यथा चित्तं जंतोर्विषयगोचरे ॥

यद्येवं ब्रह्मणि न्यस्तं को न मुच्येत बंधनात् ॥ १२ ॥

परमायुः स्मृतो ब्रह्मा परार्धं तस्य वै गतम् ॥

उन्नतस्थानसंस्थस्य द्वितीयं भविताऽधुना ॥ १३ ॥।

यदासावुन्नते स्थाने ब्रह्मलोकात्पितामहः ॥

आगतश्चाष्टवर्षस्तु बालरूपी तदोच्यते ॥ १४ ॥

स्थानेष्वन्येषु विप्राणां वृद्धरूपी पितामहः ॥

युक्तं तदुन्नतस्थानं सदा च ब्रह्मणः प्रियम् ॥ १५ ॥

स्नात्वा च विधिवत्पूर्वं ब्रह्मकुंडे नरोत्तम ॥

पूजयेत्पुष्पधूपाद्यैर्ब्रह्माणं बालरूपिणम् ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उन्नतस्थाने ब्रह्ममाहात्म्यवर्णनंनामैकविंशत्युत्तर त्रिशततमोध्यायः ॥ ३२१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्य दक्षिणसंस्थितम् ॥

दुर्गादित्येतिनामानं सर्वपापप्रणाशनम् ॥ १ ॥

यदा दुःखमनुप्राप्ता दुर्गा दुःखविनाशिनी ॥

सूर्यमाराधयामास तदा दुःखविनुत्तये ॥ २ ॥

ततः कालेन बहुना तस्यास्तुष्टो दिवाकरः ॥

उवाच मधुरं वाक्यं दुर्गां देवो महाप्रभाम् ॥

वरं वरय देवेशि तपसा तुष्टवानहम् ॥ ३ ॥

॥ दुर्गोवाच ॥ ॥

यदि तुष्टो दिवानाथ दुःखसंघं विनाशय ॥ ४ ॥

॥ सूर्य उवाच ॥ ॥

अचिरेणैव कालेन भगवांस्त्रिपुरांतकः ॥

संप्राप्स्यत्युत्तमं लिंगमुन्नते स्थान उत्तमे ॥ ५ ॥

दुर्गादित्येति मे नाम इह देवि भविष्यति ॥

एवमुक्त्वा महादेवि तत्रैवान्तर्दधे रविः ॥

सप्तम्यां रविवारेण दुर्गादित्यं प्रपूजयेत् ॥ ६ ॥

तस्य दुःखानि सर्वाणि कुष्ठानि विविधानि च ॥

विलयं यांति देवेशि दुर्गादित्यप्रपूजनात् ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसा हरुयां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये दुर्गादित्यमाहात्म्यवर्णनंनाम द्वाविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२३



॥ ईश्वर उवाच ॥ ॥

ततः पश्येन्महादेवि तस्य दक्षिणतः स्थितम् ॥

क्षेमेश्वरेति विख्यातमृषितोयातटे स्थितम् ॥ १ ॥

भूतीश्वरेति नामास्य पूर्वं च परिकीर्तितम् ॥

क्षेमेशेति कलौ देवि तस्य नाम प्रकीर्तितम् ॥२॥

तं दृष्ट्वा पूजयित्वा च मुक्तः स्यात्सर्वकिल्बिषैः ॥३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये क्षेमेश्वरमाहात्म्यवर्णनंनाम त्रयोविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२४



॥ ईश्वर उवाच ॥ ॥

तस्मादुत्तरदिग्भागे किंचिद्वायव्यमाश्रितम् ॥

विनायकं प्रपश्येच्च सर्वसिद्धिप्रदायकम् ॥ १ ॥

योऽसौ देवि मया ख्यातः सखा मे धनदः पुरा ॥

गणनाथस्वरूपेण निधीनां परिपालकः ॥

लोकानां सिद्धिदानार्थमस्मिन्स्थाने स्थितः प्रिये ॥ २ ॥

चतुर्थ्यां भौमवारेण भक्ष्यभोज्यः समोदकैः ॥

पूजयेद्विधिवद्देवि तस्य सिद्धिर्भवेद्ध्रुवम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गणनाथमाहात्म्यवर्णनंनाम चतुर्विंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विनायकमनुत्तमम् ॥

ऋषितोयातटे रम्ये सर्वविघ्ननिवारणम् ॥ १ ॥

योऽसौ देवगणाध्यक्षः साक्षाच्च त्रिपुरान्तकः ॥

गजरूपं समाश्रित्य ह्युन्नते जगति स्थितः ॥

प्राभासिके महाक्षेत्रे गणानां कोटिभिर्वृतः ॥ २ ॥

तस्मात्सर्वप्रयत्नेन यात्रा निर्विघ्नहेतवे ॥

आराध्यो गणनाथश्च पुष्पधूपादिभिः सदा ॥ ३ ॥

चतुर्थ्यां च चतुर्थ्यां च सर्वैर्नगरवासिभिः ॥

तस्मिन्महोत्सवः कार्यो राष्ट्रक्षेमार्थ सिद्धये ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उन्नतस्वामिमाहात्म्यवर्णनं नाम पंचविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्यैवोत्तरतः स्थितम् ॥

महाकालेश्वरं देवं सर्वरक्षाकरं परम् ॥ १ ॥

अधिष्ठाता पुरस्यास्य भैरवो रुद्ररूपधृक् ॥

दर्शे च पूर्णिमायां च महापूजां प्रकारयेत् ॥ २ ॥

महोदये नरः स्नात्वा महाकालं प्रपश्यति ॥

धनाढ्यो जायते लोके सप्तजन्मसहस्रकम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये महाकालमाहात्म्यवर्णनंनाम षड्विंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२७



॥ ईश्वर उवाच ॥ ॥

ततो महोदयं गच्छेत्तस्मादीशानसंस्थितम् ॥ १ ॥

विधिना तत्र यः स्नाति तर्पयेत्पितृदेवताः ॥

प्रतिग्रहकृताद्दोषान्न भयं तस्य विद्यते ॥ २ ॥

महोदयं महानन्ददायकं च द्विजन्मनाम् ॥

प्रतिग्रहप्रसक्तानां विषयासक्तचेतसाम् ॥

तेषामपि ददेन्मुक्तिं तेन ख्यातं महोदयम् ॥ ३ ॥

तस्य वै रक्षणार्थाय महाकालस्य चोत्तरे ॥

नियुक्ताश्च महादेवि मातरस्तत्र संस्थिताः ॥

तस्मिन्स्नात्वा नरः पूर्वं मातृस्ताश्च प्रपूजयेत् ॥ ४ ॥

एवं देवि मया ख्यातं महोदयमहोदयम् ॥

सर्वपापहरं नृणामभिषेकाच्च मुक्तिदम् ॥ ५ ॥

अर्धक्रोशे च तत्तीर्थं समंतात्परिमंडलम् ॥

एतन्मध्यं महासारं सदैव मुनिवल्लभम् ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये महोदयमाहात्म्यवर्णनंनाम सप्त विंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२८



॥ ईश्वर उवाच ॥ ॥

तस्माद्वायव्यदिग्भागे स्थितं पापप्रणाशनम् ॥

संगमेश्वरनामाढ्यमृषयो यत्र संगताः ॥ १ ॥

तस्यैव पूर्वदिग्भागे कुण्डिका पापनाशिनी ॥

वडवानलसंयुक्ता यत्रायाता सरस्वती ॥ २ ॥

कुंडिकायां नरः स्नात्वा संगमेश्वरमर्चयेत् ॥

तस्य जन्मसहस्राणि लक्ष्म्याः पुत्रै प्रियैः सह ॥

असंगमं महादेवि न कदाचित्प्रजायते ॥ ३ ॥

मुच्यते पातकैः सर्वैराजन्म मरणांतिकैः ॥४॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संगमेश्वरमाहात्म्यवर्णनं नामाष्टाविंशत्युत्तरत्रिशततमोऽध्यायः ॥ ३२८॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३२९



॥ ईश्वर उवाच ॥ ॥

अथोत्तरे देवकुलात्तत्र गव्यूतिमात्रतः ॥

उत्तमस्थानमिति च प्रख्यातं धरणीतले ॥ १ ॥

तस्योत्तरे तु दिग्भागे धनुर्द्वादशकांतरे ॥

उन्नतो विघ्नराजस्तु सर्वप्रत्यूहनाशनः ॥ २ ॥

चतुर्थ्यां पूजितः सम्यक्सुगंधैः फलमोदकैः ॥ ददाति वांछितान्कामांस्त्रैलोक्ये विजयी भवेत् ॥३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य उन्नतविनायकमाहात्म्यवर्णनंनामैकोनत्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३२९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३०

https://sa.wikisource.org/s/gic
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

तस्मात्तदुन्नतस्थानादुत्तरे योजनत्रयात् ॥

तत्र तप्तोदकस्वामी तलो यत्र हतः पुरा ॥ १ ॥

दैत्यानामधिपो देवि विष्णुना प्रभविष्णुना ॥

कृत्वा वर्षशतं युद्धं तलस्वामी ततोऽभवत् ॥ २ ॥

तप्तकुण्डे नरः स्नात्वा तलस्वामिनमर्चयेत् ॥

हृत्वा पिंडप्रदानं तु कोटियात्राफलं लभेत् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये तलस्वामिमाहात्म्यवर्णनंनाम त्रिंशदुत्तरत्रिश ततमोऽध्यायः ॥ ३३० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कालमेघेति विश्रुतम् ॥

तस्मात्तं पूर्वदिग्भागे क्षेत्रपं लिंगरूपिणम् ॥ १ ॥

अष्टम्यां वा चतुर्द्दश्यां पूज्योऽसौ बलिभिर्नरैः ॥

वांछितार्थप्रदः सम्यक्स कलौ कल्पपादपः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये कालमेघमाहात्म्यवर्णनंनामैकत्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३१ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३२



॥ ईश्वर उवाच ॥ ॥

तस्माद्दक्षिणदिग्भागे धनुषां पंचभिः प्रिये ॥

तत्र तप्तोदकुंडानि संत्यद्यापि वरानने ॥ १ ॥

कुण्डतः पूर्वदिग्भागे धनुषां पञ्चविंशतौ ॥

रुक्मिणी संस्थिता देवी सर्वपातकनाशिनी ॥ २॥

स्नात्वा तप्तोदके कुण्डे कोटिहत्याविनाशने॥

ततः संपूजयेद्देवीं रुक्मिणीं रुक्मदायिनीम् ॥

सप्त जन्मानि नारीणां गृहभंगो न जायते ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये रुक्मिणीमाहात्म्यवर्णनंनाम द्वात्रिंशदुत्तरत्रिशततमोऽध्याय ॥ ३३२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३३



॥ ईश्वर उवाच ॥ ॥

बलभद्राच्च पूर्वेण स्थिता चासीत्सरिद्वरा ॥

दुर्वासेश्वरनामेति बललिंगं प्रतिष्ठितम् ॥ १ ॥

सर्वपापप्रशमनं दृष्टं सर्वसुखावहम्॥

स्नात्वा चास्य त्वमावास्यां पिंडदानं ददाति यः ॥ २ ॥

कल्पकोटिशतं साग्रं पितॄणां तृप्तिमावहेत् ॥

दुर्वासेश्वरनामानं तत्र पूज्य विधानतः ॥ ३ ॥

कोटियज्ञफलं प्राप्य सर्वान्कामा नवाप्नुयात्॥

तत्र लिंगान्यनेकानि ऋषिभिः स्थापितानि तु ॥ ४ ॥

दृष्ट्वा स्पृष्ट्वा पूजयित्वा मुक्तः स्यात्सर्वकिल्बिषैः ॥

इत्येतत्कथितं देवि क्षेत्राद्यं तं यथाक्रमम् ॥ ५ ॥

भद्रायाः पश्चिमात्पूर्वं यथानुक्रममादितः ॥

श्रुतं पापोपशमनं कोटियज्ञफलप्रदम् ॥ ६ ॥

अथ क्षेत्रस्य परिधिस्थानं मधुमतीति च ॥

तस्मान्नैर्ऋत्यदिग्भागे स्थानं खंडघटेति च ॥ ७ ॥

तत्र पिंगेश्वरो देवः समुद्रतटसन्निधौ ॥

कूपानां सप्तकं तत्र पितॄणां यत्र पाणयः ॥

दृश्यंतेऽद्यापि देवेशि यत्र पर्वणिपर्वणि ॥ ८ ॥

तत्र श्राद्धं नरः कृत्वा गयाकोटिगुणं फलम् ॥

लभते नाऽत्र सन्देहः सोमामा यदि जायते ॥ ९ ॥

तत्रैव नातिदूरे तु भद्रायाः संगमः स्मृतः ॥

पश्चिमात्संगमात्पूर्वः संगमः समुदाहृतः ॥ 7.1.333.१० ॥

यत्पुण्यं लभते देवि पूर्व पश्चिमसंगमे ॥

गंगासागरयोस्तत्र तद्भद्रासंगमे लभेत् ॥ ११ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये तप्तोदकस्वामिमाहात्म्ये मधुमत्यां पिंगेश्वरभद्रामाहात्म्यवर्णनंनाम त्रयस्त्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३४

https://sa.wikisource.org/s/gie



॥ ईश्वर उवाच ॥ ॥

भगवन्देवदेवेश संसारार्णवतारक ॥ पृच्छामि त्वामहं भक्त्या किञ्चित्कौतूहलात्पुनः ॥ १ ॥

यत्त्वया कथितं देव तलस्वामिमहोदयम् ॥

किं तत्र कारणं देव तलो येन निपातितः ॥ २ ॥

कोऽसौ तलः समाख्यातः किंवीर्यः किंपरायणः ॥

कस्मात्स्थानात्समुत्पन्नः कथं जातश्च मे वद ॥ ३ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि रहस्यं पापनाशनम् ॥

यन्न कस्यचिदाख्यातं तत्ते वक्ष्याम्य शेषतः ॥ ४ ॥

देवा अपि न जानंति तलसोत्पत्तिकारणम् ॥

पूर्वं कृतयुगे देवि गोविन्देति प्रकीर्तितः ॥ ५ ॥

त्रेतायां वामनः स्वामी स्तुतिस्वामी तृतीयके ॥

कलौ युगे महादेवि तलस्वामी प्रकीर्तितः ॥ ६ ॥

तथा तप्तोदकस्वामी तस्य नामांतरं प्रिये ॥

अधुना संप्रवक्ष्यामि तलोत्पत्तिं तव प्रिये ॥ ७ ॥

आसीन्महेन्द्रनामा च दानवो रौद्ररूपधृक् ॥

कोटिवर्षाणि तेनैव तपस्तप्तं पुरा प्रिये ॥ ८ ॥

स तपोबलमाविष्टो जिग्ये देवान्सवासवान् ॥

जित्वा देवांस्ततः सर्वांस्ततः काले समागतः ॥ ९ ॥

युद्धं स प्रार्थयामास मया सार्द्धं सुभीषणम् ॥

ततोऽभवन्महायुद्धं ब्रह्माण्डक्षयकारकम् ॥ 7.1.334.१० ॥

ततः कोपान्महायुद्धे मम देहाद्वरानने ॥

ज्वाला तत्र समुत्पन्ना तन्मध्ये स तलोऽभवत् ॥ ११ ॥

तेन दृष्टो महेन्द्रोऽसौ गर्जन्गिरिगुहाश्रयः ॥ १२ ॥

कथं गर्जसि हे मूढ युद्धं कुरु मया सह ॥

इत्युक्ते तत्र देवेशि तेन युद्धमवर्तत ॥ १३ ॥

तत्र प्रवर्त्तिते युद्धे तलमाहेन्द्रयोस्तयोः ॥ १४ ॥

रुद्रवीर्यस्य युक्तेन तलेनोदारकर्मणा ॥

मल्लयुद्धेन बलिना महेन्द्रो विनिपातितः ॥ १५ ॥

ततस्तं पतितं दृष्ट्वा विस्मयं स तलो गतः ॥

गतप्राणं तदा ज्ञात्वा हर्षान्नृत्यमथाकरोत् ॥ १६ ॥

तस्मिन्संनृत्यमाने तु सर्वे स्थावरजंगमम् ॥

चकंपे तु वरारोहे प्रभावात्तस्य वीर्यतः ॥ १७ ॥

ततो भारभराक्रान्ता धरणी तलपीडिता ॥

अतीवभयसंत्रस्ताः सदेवासुरमानुषाः ॥ १८ ॥

क्षुभिता गिरयः सर्वे विद्रुताश्च महार्णवाः॥

तरवो निधनं जग्मुर्नद्यो वाहांश्च तत्यजुः॥१९॥

गतप्रभावाः सूर्याद्या ज्योतींषि न विरेजिरे॥

त्रैलोक्यं व्याकुलीभूतं तलनृत्यप्रभावतः ॥ 7.1.334.२० ॥

ततो देवगणाः सर्वे शरणं रुद्रमाययुः ॥

वृत्तं यथावत्कथितं ततो रुद्र उवाच तान् ॥२१॥

अवध्यो मे तलो देवाः पुत्रत्वे हि प्रतिष्ठितः ॥

एवमुक्त्वा हृषीकेशं प्रभासक्षेत्रवासिनम् ॥ २२ ॥

स्तुतिस्वामीतिनामानं स्थितं दुर्वाससः पुरः ॥

प्रभासक्षेत्रसामीप्ये पूर्वभागे प्रतिष्ठितम् ॥ २३ ॥

तप्तोदकुंडसामीप्ये तत्र गच्छत भोः सुराः ॥

कल्पेकल्पे तु तेनैव विध्यतेऽसौ हि दानवः ॥ २४ ॥

एवमुक्ते तदा देवाः प्रभासं क्षेत्रमागताः ॥

तत्र ते विबुधा जग्मुर्यत्र तप्तोदकाधिपः ॥ २५ ॥

दृष्ट्वा नारायणं तत्र देवाः श्रद्धासमन्विताः ॥

तुष्टुवुः परया भक्त्या देवदेवं जनार्द्दनम्॥ २६ ॥

वैकुंठ त्राहि नो देवांस्तलेनोच्चाटिता वयम् ॥

महेन्द्रक्रोधसंभूतरुद्रतेजोद्भवेन वै ॥ २७ ॥

अस्माभी रुद्रसामीप्ये कार्यं सर्वं निवेदितम् ॥

ततः प्रस्थापिताः सर्वे रुद्रेण परमेष्ठिना ॥

तव पार्श्वे महादेव नस्त्वं देव गतिर्भव ॥ २८ ॥

इति श्रुत्वा वचस्तेषां देवदेवो जनार्द्दनः ॥

दानवस्यवधार्थाय देवानां रक्षणाय च ॥

चक्रे यत्नं महाबाहुः प्रभासक्षेत्रवल्लभः ॥ २९ ॥

समाहूय तदा दैत्यं प्रभासक्षेत्रमध्यतः ॥

युद्धं चक्रे ततो देवि विश्वप्रलयकारकम् ॥7.1.334.३० ॥

ततस्तु देवाः सर्वे च स्वसैन्यपरिवारिताः ॥

चक्रुर्युद्धं च दैत्येन सुमहल्लोमहर्षणम् ॥ ३१ ॥

ततः पर्वतसंकाशं दृष्ट्वा दैत्यं महाबलम् ॥

उवाच चपलापांगो गरुडकृतवाहनः ॥ ३२ ॥

अहो दैत्य महाबाहो मल्लयुद्धं ददस्व मे ॥

त्वद्बाहुयुगलं दृष्ट्वा न युद्धे वांछितं मम ॥ ३३ ॥

नारायणवचः श्रुत्वा करमुद्यम्य दानवः ॥

अभ्यधावत्तदा दैत्यः कालान्तकसमप्रभः ॥ ३४ ॥

ततः प्रवर्तितं युद्धमन्योन्यं जयकांक्षिणोः ॥

जंघाभ्यां पादबन्धेन बाहुभ्यां बाहुबंधनम् ॥ ३५ ॥

कंठेन बन्धयन्कंठमुदरेणोदरं तथा ॥ एतस्मिन्नन्तरे देवाः सभयाः संबभूविरे ॥ ३६ ॥

ततः पीडासमाक्रांतो विष्णुः संस्मरते हरम् ॥

तत्क्षणादागतो रुद्रः किं करोमि महाबलः ॥ ३७ ॥ ॥

॥ विष्णुरुवाच ॥ ॥

श्रांतोऽहं देवदेवेश मल्लयुद्धेन शंकर ॥

तप्तोदकं कुरुष्वेह श्रमनाशाय सांप्रतम् ॥ ३८ ॥

ततस्तलं हनिष्यामि क्षण मात्रेण भैरवम् ॥ ३९ ॥

॥ ईश्वर उवाच ॥ ॥

आदौ कृतयुगे कृष्ण उमया यत्कृतं पुरा ॥

ऋषीणां श्रमनाशार्थं तप्तोदं तत्र निर्मितम् ॥ 7.1.334.४० ॥

तद्दैत्यपापमाहात्म्यात्पुनः शीतलतां गतम् ॥

पुनस्तदुष्णतां नीतं ततः कल्पांतसंस्थितौ ॥ ४१ ॥

एवमुक्त्वा तदा देवं वीक्षांचक्रे महेश्वरः ॥

तृतीय लोचनेनैव ज्वालामालोपशोभिना ॥ ४२ ॥

तेन ज्वालासमूहेन व्याप्तं कुण्डं चतुर्दिशम् ॥

तप्तोदकुण्डमभवत्तेन ख्यातं धरातले ॥ ४३ ॥

ततो नारायणेनेह क्षालितं गात्रसुत्तमम्॥

क्षालनात्तस्य देवस्य श्रमो नाशमुपागमत् ॥ ४४ ॥

ततस्तुष्टमना देवस्तीर्थानां दशकोटिकाः ॥

स स्मृत्वा तत्र विधिवत्क्षिप्त्वा स्नात्वा वरानने ॥ ४५ ॥

ततश्चक्रे महायुद्धं तलेनातिभयंकरम् ॥

जघान स तलं दैत्यं मुष्टिघातेन मस्तके ॥ ४६ ॥

तस्मिन्प्रवृत्ते तुमुले तु युद्धे चकंपिरे भूभिसमेतलोकाः ॥

वित्रस्तदेवा न दिशो विरेजुर्महांधकारावृतमूर्छितं जगत् ॥ ४७ ॥

नष्टाश्च सिद्धा जगतोऽस्य शांतिं करोतु वै पापविनाशनो हरिः ॥

त्राहीति देवेशि महर्षिसंघा भूतानि भीतानि तथा वदन्ति ॥४८॥

ततो वै मल्लयुद्धेन पातितो भुवि दानवः॥

कंठमाक्रम्य पादेन खड्गेन परिपीडितः ॥ ४९ ॥

हास्यं चकार दैत्योऽथ विष्णुनाऽऽक्रांतकंधरः ॥

तमाह पुण्डरीकाक्ष किमेतद्धास्यकारणम् ॥7.1.334.५०॥

वृद्धौ हर्षमवाप्नोति क्षये भवति दुःखितः ॥

इत्येषा लौकिकी गाथा तत्ते दैत्य विपर्ययः ॥५१॥

इत्युक्तस्तु तदा दैत्यः प्रत्युवाच जनार्द्दनम् ॥

अग्निष्टोमादिभिर्यज्ञैर्वेदाभ्यासैरनेकधा ॥ ५२ ॥

नित्योपवासनियमैः स्नानदानैर्जपादिभिः ॥

निर्मलैर्योगयुक्तैश्च प्राप्यते यत्परं पदम् ॥ ५३ ॥

तन्मया दुष्टभावेन प्राप्तं विष्णोः परं पदम् ॥

इत्युक्ते भगवान्विष्णुर्वरदानपरोऽभवत् ॥ ५४ ॥

उवाच परमं वाक्यं तलं दैत्याधिनायकम् ॥

वरं वरय दैत्येंद्र यत्ते मनसि संस्थितम् ॥ ५५ ॥

इति विष्णोर्वचः श्रुत्वा प्रार्थयामास दानवः ॥

ममाख्या वर्त्तते लोके तथा कुरु महीधर ॥ ५६ ॥

मार्गमासे तु शुक्लायामेकादश्यां समाहितः ॥

यस्त्वां पश्यति भावेन तस्य पापं विनश्यतु ॥ ५७ ॥

एवं भविष्यतीत्युक्त्वा देवो हर्षमुपागतः ॥

नानादुंदुभयो नेदुः पुष्पवर्षं पपात च ॥ ५८ ॥

विष्णोर्मूर्ध्नि महाभागे लोकाः स्वस्था बभूविरे ॥

ततो देवगणाः सर्वे नृत्यंति च मुदान्विताः ॥

वदंति हर्षसंयुक्ता नारायणपरायणाः ॥ ५९ ॥

एतत्तीर्थं महातीर्थं सर्वपापप्रणाशनम् ॥

श्रमापनोदनं विष्णोर्ब्रह्महत्यादिशोधनम् ॥7.1.334.६०॥

स्थितो नारायणस्तत्र भैरवस्तत्र शंकरः ॥

क्षेत्रपालस्वरूपेण कालमेघेति विश्रुतः ॥ ६१ ॥

तस्य यात्राविधिं वक्ष्ये गत्वा तत्र शुचिर्नरः ॥

स्मरेद्विष्णुं महादेवि तलस्वामीति यः श्रुतः ॥ ६२ ॥

स्तुयाद्विष्णुं महादेवि इदं विष्णुरृचा प्रिये ॥

सहस्रशीर्षामंत्रेण तर्पणादि प्रकारयेत् ॥ ६३ ॥

एवं स्नात्वा विधानेन दत्त्वा चार्घ्यं जनार्द्दने ॥

संपूज्य गंधपुष्पैश्च वस्त्रैः पुष्पानुलेपनैः ॥ ६४ ॥

मधुनेक्षुरसेनैव कुंकुमेन विलेपयेत् ॥

कर्पूरोशीरमिश्रेण मृगनाभियुतेन च ॥ ६५ ॥

वस्त्रैः संवेष्टयेत्पश्चाद्दद्यान्नैवेद्यमुत्तमम् ॥

धर्मश्रवणसंयुक्तं कार्यं जागरणं ततः ॥ ६६ ॥

वृषभस्तत्र दातव्यः सुवर्णं वस्त्रयुग्मकम् ॥ ।

विप्राय वेदयुक्ताय श्रोत्रियाय प्रदापयेत् ॥ ६७ ॥

उपवासं ततः कुर्यात्तस्मिन्नहनि भामिनि ॥

रुक्मिणीं च प्रपश्येत नमस्कृत्य जनार्द्दनम् ॥ ६८ ॥

एवं कृत्वा नरो भक्त्या लभते जन्मजं फलम् ॥

सर्वेषामेव यज्ञानां दानानां लभते फलम् ॥ ६९ ॥

तथा च सर्वतीर्थानां व्रतानां लभते फलम् ॥

उद्धरेत्तु पितुर्वर्गं मातृवर्गं तथैव च ॥ 7.1.334.७० ॥

जन्मप्रभृतिपापानां कृतानां नाशनं भवेत् ॥

न दुःखं च न दारिद्र्यं दुर्भगत्वं न जायते ॥ ७१ ॥

सप्त जन्मांतरं यावत्तलस्वामिप्रदर्शनात् ॥

सुवर्णानां सहस्रेण ब्राह्मणे वेदपारगे ॥

दत्तेन यत्फलं देवि तत्कुण्डे स्नानतो लभेत् ॥ ७२ ॥

एवं तलस्वामिचरित्रमुत्तमं श्रुतं पुरा सिद्धमहर्षिसंघैः ॥

श्रुत्वा प्रभावं तलदेवसन्निधौ प्राप्नोति सर्वं मनसा यदीप्सितम् ॥ ७३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये तलस्वामिमाहात्म्यवर्णनंनाम चतुस्त्रिंशदुत्तरत्रिशततमो ऽध्यायः ॥ ३३४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३५



॥ ईश्वर उवाच ॥ ॥

ततः पश्चिमतो गच्छेन्न्यंकुमत्यास्तटे शुभे ॥

दक्षिणां दिशमाश्रित्य स्थितं तीर्थं महाप्रभम् ॥ १ ॥

शंखावर्त्तमितिख्यातं यत्र चित्रांकिता शिला ॥

स्वयंभूता महादेवि रक्तगर्भा सुशोभना ॥ २ ॥

छिन्ने त्वद्यापि तत्रैव सुरक्तं संप्रदृश्यते ॥

विष्णुक्षेत्रं हि तत्प्रोक्तं शंखो यत्र हतः पुरा ॥ ३ ॥

वेदापहारी देवेशि विष्णुना प्रभविष्णुना ॥

कृतं शखोदकं तीर्थं शंखाकारं तु दृश्यते ॥ ४ ॥

तत्र स्नात्वा नरो देवि मुच्यते ब्रह्महत्यया ॥

सप्त जन्मानि विप्रत्वं शूद्रस्यापि प्रजा यते ॥ ५ ॥

पूर्वं तत्रैव गत्वा च ततो रुद्रगयां व्रजेत् ॥

गोदानं तत्र देयं तु सम्यग्यात्राफलेप्सुभिः ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शंखावर्त्ततीर्थमाहात्म्यवर्णनंनाम पञ्चत्रिंशदुत्तरत्रिशत तमोऽध्यायः ॥ ३३५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गोष्पदं तीर्थमुत्तमम् ॥

यत्र श्राद्धं नरः कृत्वा गयासप्तगुणं फलम्॥

लभते नात्र संदेहो यदि श्रद्धा दृढा भवेत् ॥ १ ॥

यत्र श्राद्धं पृथुः कृत्वा पितरं पापयोनितः ॥ उद्दधार महादेवि वेनंनाम महाप्रभुम् ॥ ॥ २ ॥

॥ देव्युवाच ॥ ॥

कस्मिन्स्थाने स्थितं तीर्थमुत्पत्तिस्तस्य कीदृशी ॥

कथं स वेनराजो वा उद्धृतः पापयोनितः ॥ ३ ॥

गयासप्तगुणं पुण्यं कथं तत्र प्रजायते ॥

श्राद्धस्य किं विधानं तु के मंत्रास्तत्र के द्विजाः ॥

एतन्मे कौतुकं देव यथावद्वक्तुमर्हसि ॥ ४ ॥

॥ ईश्वर उवाच ॥ ॥

इदं रहस्यं देवेशि यत्त्वया परिपृच्छितम्॥

अप्रकाश्यमिदं तीर्थमस्मिन्पापयुगे प्रिये ॥ ५ ॥

तथापि संप्रवक्ष्यामि तव स्नेहात्सुरेश्वरि ॥

न पापिन इदं ब्रूयान्नैव तर्करताय वै ॥ ६ ॥

न नास्तिकाय देवेशि न सुवर्णेतराय च ॥

अस्ति देवि महासिद्धा पुण्या न्यंकुमती नदी ॥ ७ ॥

मर्यादार्थं मयाऽऽनीता क्षेत्रस्यास्य महेश्वरि॥

संस्थिता पापशमनी पर्णादित्याच्च दक्षिणे॥ ८ ॥

नारायणगृहात्सौम्ये नातिदूरे व्यवस्थिता॥

तस्या मध्ये महादेवि तीर्थं त्रैलोक्यविश्रुतम् ॥ ९ ॥

गोष्पदं नाम विख्यातं कोटिपापहरं नृणाम्॥

गोष्पदस्य समीपे तु नातिदूरे व्यवस्थितः ॥ 7.1.336.१० ॥

अनन्तो नाम नागेन्द्रः स्वयंभूतो धरातले ॥
तस्य तीर्थस्य रक्षार्थं विष्णुना सन्नियोजितः ॥ ११ ॥
कांक्षंति पितरः पुत्रान्नरकादतिभीरवः ॥
गंता यो गोष्पदे पुत्रः स नस्त्राता भविष्यति ॥
गोष्पदे च सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ॥ १२ ॥
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किं न दास्यति ॥
अपि स्यात्स कुलेऽस्माकं यो नो दद्याज्जलांजलिम् ॥
प्रभासक्षेत्रमासाद्य गोष्पदे तीर्थ उत्तमे ॥ १३ ॥
अपि स्यात्स कुलेऽस्माकं खड्गमांसेन यः सकृत् ॥
श्राद्धं कुर्यात्प्रयत्नेन कालशाकेन वा पुनः ॥ १४ ॥
अपि स्यात्स कुलेऽस्माकं गोष्पदे दत्तदीपकः ॥
आकल्पकालिका दीप्तिस्तेनाऽस्माकं भविष्यति ॥ १५ ॥
गोष्पदे चान्नशता यः पितरस्तेन पुत्रिणः ॥
दिनमेकमपि स्थित्वा पुनात्यासप्तमं कुलम् ॥ ॥ १६ ॥
पिण्डं दद्याच्च पित्रादेरात्मनोऽपि स्वयं नरः ॥
पिण्याकेंगुदकेनापि तेन मुच्येद्वरानने ॥ १७ ॥
ब्रह्मज्ञानेन किं योगैर्गोग्रहे मरणेन किम् ॥
किं कुरुक्षेत्रवासेन गोष्पदे यदि गच्छति ॥ १८ ॥
सकृत्तीर्थाभिगमनं सकृत्पिण्डप्रपातनम् ॥
दुर्ल्लभं किं पुनर्नित्यमस्मिंस्तीर्थे व्यवस्थितम्॥ १९ ॥
अर्द्धकोशं तु तत्तीर्थं तदर्द्धार्द्धं तु दुर्ल्लभम् ॥
तन्मध्ये श्राद्धकृत्पुण्यं गयासप्तगुणं लभेत् ॥ 7.1.336.२० ॥
श्राद्धकृद्गोष्पदे यस्तु पितॄणामनृणो हि सः ॥
पदमध्ये विशेषेण कुलानां शतमुद्धरेत् ॥ २१ ॥
गृहाच्चलितमात्रस्य गोष्पदे गमनं प्रति ॥
स्वर्गारोहणसोपानं पितॄणां तु पदेपदे ॥ २२ ॥
पायसेनैव मधुना सक्तुना पिष्टकेन च ॥
चरुणा तंदुलाद्यैर्वा पिंडदानं विधीयते ॥ २३ ॥

गोप्रचारे तु यः पिण्डा ञ्छमीपत्रप्रमाणतः ॥

कन्दमूलफलाद्यैर्वा दत्त्वा स्वर्गं नयेत्पितॄन् ॥ २४ ॥

गोष्पदे पिण्डदानेन यत्फलं लभते नरः ॥

न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ २५ ॥

अथातः संप्रवक्ष्यामि सम्यग्यात्राविधिं शुभम् ॥

यात्राविधानं च तथा सम्यक्छ्रद्धान्विता शृणु ॥ ॥ २६ ॥

यदि तीर्थं नरो गच्छेद्गयाश्राद्धफलेप्सया ॥

तथाविधविधानेन यात्रा कुर्याद्विचक्षणः ॥ २७ ॥

ब्रह्मचारी शुचिर्भूत्वा हस्तपादेषु संयतः ॥

श्रद्धावानास्तिको भावी गच्छेत्तीर्थं ततः सुधीः ॥ २८ ॥

न नास्तिकस्य संसर्गं तस्मिंस्तीर्थे नरश्चरेत् ॥

सर्वोपस्करसंयुक्तः श्राद्धार्हं द्रव्यसंयुतः ॥

गच्छेत्तीर्थं साधुसंगी गयां मनसि मानयन् ॥ २९ ॥

एवं यस्तु द्विजो गच्छेत्प्रतिग्रहविवर्जितः ॥

पदेपदेऽश्वमेधस्य फलं प्राप्नोत्य संशयम्॥ 7.1.336.३० ॥

तत्र स्नात्वा न्यंकुमत्यां सिद्धये पितृमुक्तये ॥

स्नात्वाथ तर्प्पणं कुर्याद्देवादीनां यथाविधि ॥ ३१ ॥

ब्रह्मादिस्तंबपर्यंता देवर्षि मनुमानवाः ॥

तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥ ३२ ॥

एवं संतर्प्य विधिना कृत्वा होमादिकं नरः ॥

श्राद्धं सपिण्डकं कुर्यात्स्वतंत्रोक्तविधानतः ॥ ३३ ॥

आमन्त्र्य ब्राह्मणांस्तत्र शास्त्रजान्दोषवर्जितान् ॥

एवं कृतोपचारस्तु इमं मन्त्रमुदीरयेत् ॥ ३४ ॥

कव्यवाडनलः सोमो यमश्चैवार्यमा तथा ॥

अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥

आगच्छन्तु महाभागा युष्माभी रक्षिता स्त्विह ॥ ३५ ॥

मदीयाः पितरो ये च कुले जाताः सनाभयः ॥

तेषां पिण्डप्रदाताऽहमागतोऽस्मिन्पितामहाः ॥ ३६ ॥

एवमुक्त्वा महादेवि इमं मन्त्रमुदीरयेत् ॥ ३७ ॥

पिता पितामहश्चैव तथैव प्रपितामहः ॥

माता पितामही चैव तथैव प्रपितामही ॥ ३८ ॥

मातामहः प्रमाता च तथा वृद्धप्रमातृकः ॥

तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ३९ ॥

ॐ नमो भानवे भर्त्रेऽब्जभौमसोमरू पिणे ॥

एवं नत्वाऽर्चयित्वा तु इमां स्तुतिमथो पठेत् ॥ 7.1.336.४० ॥

तत्र गोष्पदसामीप्ये चरुणा सुशृतेन च ॥

पितॄणामनाथानां च मंत्रैः पिंडांश्च निर्वपेत् ॥ ४१ ॥

अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ॥

रौरवे चांधतामिस्रे कालसूत्रे च ये गताः ॥

तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ ॥ ४२ ॥

अनेकयातनासंस्थाः प्रेतलोकेषु ये गताः ॥

तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ ४३ ॥

पशुयोनिगता ये च ये च कीटसरी सृपाः ॥

अथवा वृक्षयोनिस्थास्तेभ्यः पिंडं ददाम्यहम् ॥४४॥

असंख्या यातनासंस्था ये नीता यमशासकैः॥

तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ ४५ ॥

येऽबांधवा बांधवा ये येऽन्यजन्मनि बांधवाः ॥

ते सर्वे तृप्तिमायांतु पिंडेनानेन सर्वदा ॥ ४६ ॥

ये केचित्प्रेतरूपेण वर्त्तंते पितरो मम ॥

ते सर्वे तृप्तिमायांतु पिंडेनानेन सर्वदा ॥ ४७ ॥

दिव्यांतरिक्षभूमिस्थपितरो बांधवादयः ॥

मृताश्चासंस्कृता ये च तेषां पिंडोस्तु मुक्तये ॥ ॥ ४८ ॥

पितृवंशे मृता ये च मातृवंशे तथैव च ॥

गुरुश्वशुरबंधूनां ये चान्ये बांधवा मृताः ॥ ४९ ॥

ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥

क्रियालोपगता ये च जात्यंधाः पंगवस्तथा ॥ 7.1.336.५० ॥

विरूपा आमगर्भा येऽज्ञाता ज्ञाताः कुले मम ॥
तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठताम्॥ ॥५१॥
प्रेतत्वात्पितरो मुक्ता भवंतु मम शाश्वतम् ॥
यत्किंचिन्मधुसमिश्रं गोक्षीरं घृतपायसम् ॥५२॥
अक्षय्यमुपतिष्ठेत्वत्त्वस्मिंस्तीर्थे तु गोष्पदे॥
स्वाध्यायं श्रावयेत्तत्र पुराणान्यखिलान्यपि ॥ ५३ ॥
ब्रह्मविष्ण्वर्करुद्राणां स्तवानि विविधानि च॥
ऐंद्राणि सोमसूक्तानि पावमानीश्च शक्तितः ॥ ॥ ५४ ॥
बृहद्रथंतरं तद्वज्ज्येष्ठसाम सरौरवम्॥
तथैव शांतिकाध्यायं मधुब्राह्मणमेव च ॥५५॥
मंडलं ब्राह्मणं तत्र प्रीतकारि च यत्पुनः ॥
विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत्॥५६॥
एवं न्यंकुमतीमध्ये गोष्पदे तीर्थ उत्तमे ॥
दत्त्वा पिंडांश्च विधिवत्पुनर्मंत्रमिमं पठेत् ॥ ५७ ॥
साक्षिणः संतु मे देवा ब्रह्माद्या ऋषिपुंगवाः ॥
मयेदं तीर्थमासाद्य पितृणां निष्कृतिः कृता ॥५८॥
आगतोऽस्मि इदं तीर्थं पितृकार्ये सुरोत्तमाः ॥
भवंतु साक्षिणः सर्वे मुक्तश्चाहमृणत्रयात्॥ ५९ ॥
एवं प्रदक्षिणीकृत्य गोष्पदं तीर्थमुत्तमम् ॥
विप्रेभ्यो दक्षिणां दत्त्वा नद्यां पिंडान्विसर्जयेत् ॥ 7.1.336.६० ॥
गोदानं तत्र देयं तु तद्वत्कृष्णाजिनं प्रिये ॥
अष्टकासु च वृद्धौ च गयायां मृतवासरे ॥ ६१ ॥
अत्र मातुः पृथक्छ्राद्धमन्यत्र पतिना सह ॥
वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम्॥ ६२ ॥
गयावदत्रैव पुनः श्राद्धं कार्यं नरोत्तमैः ॥
तस्माद्ब्रह्मगया प्रोक्ता इयं सा विष्णुना स्वयम् ॥ ६३ ॥
गंधदानेन गंधाप्तिः सौभाग्यं पुष्पदानतः ॥
धूपदानेन राज्याप्तिर्दीप्तिर्दीपप्रदानतः ॥ ६४ ॥

ध्वजदानात्पापहानिर्यात्राकृद्ब्रह्मलोकभाक् ॥
श्राद्धपिंडप्रदो लोके विष्णुर्नेष्यति वै पितॄन्॥ ६५ ॥
एकं यो भोजयेत्तत्र ब्राह्मणं शंसितव्रतम्॥
गोप्रचारे महातीर्थे कोटिर्भवतिभोजिता ॥ ६६ ॥
इति संक्षेपतः प्रोक्तस्तत्र श्राद्धविधिस्तव ॥
अथ ते कथयिष्यामि इतिहासं पुरातनम् ॥ ६७ ॥
वेनस्य राज्ञश्चरितं पृथोश्चैव महात्मनः ॥
यथा तत्राभवन्मुक्तिस्तस्य चांडालयोनितः ॥
तत्सर्वं शृणु देवेशि सम्यक्छ्रद्धासमान्विता ॥ ६८ ॥
पिशुनाय न पापाय नाशिष्यायाहिताय च ॥
कथनीयमिदं पुण्यं नाव्रताय कथंचन ॥ ६९ ॥
स्वर्ग्यं यशस्यमायुष्यं धन्यं वेदेन संमितम् ॥
रहस्यमृषिभिः प्रोक्तं शृणुयाद्योऽनसूयकः ॥ 7.1.336.७० ॥
यश्चैनं श्रावयेन्मर्त्यः पृथो वैन्यस्य संभवम् ॥
ब्राह्मणेभ्यो नमस्कृत्वा न स शोचेत्कृताऽकृते ॥७१॥
गोप्ता धर्मस्य राजाऽसौ बभौ चात्रिसमप्रभः ॥
अत्रिवंशसमुत्पन्नो ह्यंगो नाम प्रजापतिः ॥ ७२ ॥
तस्य पुत्रोऽभवेद्वेनो नात्यर्थं धार्मिकस्तथा ॥
जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः॥७३ ॥
समातामह दोषेण तेन कालात्मकाननः ॥
स धर्मं पृष्ठतः कृत्वा पापबुद्धिरजायत ॥ ७४ ॥
स्थितिमुत्थापयामास धर्मोपेतां सनातनीम् ॥
वेदशास्त्राण्यतिक्रम्य ह्यधर्मे निरतोऽभवत् ॥ ७५ ॥
निःस्वाध्यायवषट्काराः प्रजास्तस्मिन्प्रशासति ॥
डिंडिमं घोषयामास स राजा विषये स्वके ॥ ७६ ॥
न दातव्यं न यष्टव्यं मयि राज्यं प्रशासति ॥
आसीत्प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥ ७७॥
अहमीड्यश्च पूज्यश्च सर्वयज्ञैर्द्विजोत्तमैः ॥

मयि यज्ञा विधातव्या मयि होतव्यमित्यपि ॥७८॥

तमतिक्रांतमर्यादं प्रजापीडनतत्परम् ॥

ऊचुर्महर्षयः क्रुद्धा मरीचिप्रमुखास्तदा ॥७९॥

माऽधर्मं वेन कार्षीस्त्वं नैष धर्मः सनातनः ॥

अत्रेर्वंशे प्रसूतोऽसि प्रजापतिरसंशयम् ॥ 7.1.336.८० ॥

पालयिष्ये प्रजाश्चेति पूर्वं ते समयः कृतः ॥

तांस्तथावादिनः सर्वान्ब्रह्मर्षीनब्रवीत्तदा ॥ ८१ ॥

वेनः प्रहस्य दुर्बुद्धिरिदं वचनकोविदः ॥

स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वा मया ॥ ८२ ॥

वीर्यश्रुततपःसत्यैर्मयान्यः कः समो भुवि ॥

मदात्मानो न नूनं मां यूयं जानीथ तत्त्वतः ॥ ८३ ॥

प्रभवं सर्वलोकानां धर्माणां च विशेषतः॥

इत्थं देहेन पृथिवीं भावेन यजनेन च ॥ ८४ ॥

सृजेयं च ग्रसेयं च नात्र कार्या विचारणा ॥

यदा न शक्यते स्तंभान्मत्तश्चैव विमोहितः ॥ ८५ ॥

अनुनेतुं नृपो वेनस्तत्र क्रुद्धा महर्षयः ॥

आथर्वणेन मंत्रेण हत्वा तं ते महाबलम् ॥ ८६ ॥

ततोऽस्य वामबाहुं ते ममंथुर्भृशकोपिताः ॥

तस्माच्च मथ्यमानाद्वै जज्ञे पूर्वमिति श्रुतिः ॥ ८७ ॥

ह्रस्वोऽतिमात्रः पुरुषः कृष्णश्चापि तदा प्रिये ॥

स भीतः प्राञ्जलिश्चैव तस्थिवान्संमुखे प्रिये ॥ ८८ ॥

तमार्त्तं विह्वलं दृष्ट्वा निषीदेत्यब्रुवन्किल ॥

निषादो वंशकर्ता वै तेनाभूत्पृथुविक्रमः ॥ ८९ ॥

धीवरानसृजच्चापि वेनपापसमुद्भवान् ॥

ये चान्ये विन्ध्यनिलयास्तथा वै तुंबराः खसाः ॥ 7.1.336.९० ॥

अधर्मे रुचयश्चापि वर्द्धिता वेनपापजाः ॥

पुनर्महर्षयस्तेथ पाणिं वेनस्य दक्षिणम् ॥९१॥

अरणीमिव संरब्धा ममंथुर्जात मन्यवः ॥

पृथुस्तस्मात्समुत्पन्नः कराज्ज्वलनसंनिभः ॥ ९२ ॥

पृथोः करतलाच्चापि यस्माजातस्ततः पृथुः ॥

दीप्यमानश्च वपुषा साक्षादग्निरिव ज्वलन् ॥ ९३ ॥

धनुराजगवं गृह्य शरांश्चाशीविषोपमान् ॥

खड्गं च रक्षन्रक्षार्थं कवचं च महाप्रभम् ॥ ९४ ॥

तस्मिञ्जातेऽथ भूतानि संप्रहृष्टानि सर्वशः ॥

संबभूवुर्महादेवि वेनश्च त्रिदिवं गतः ॥ ९५ ॥

ततो नद्यः समुद्राश्च रत्नान्यादाय सर्वशः ॥

अभिषेकाय ते सर्वे राजानमुपतस्थिरे ॥ ॥ ९६ ॥

पितामहश्च भगवानृषिभिश्च सहामरैः ॥

स्थावराणि च भूतानि जंगमानि च सर्वशः ॥ ९७ ॥

समागम्य तदा वैन्यमभ्यषिंचन्नराधि पम् ॥

सोऽभिषिक्तो महातेजा देवैरंगिरसादिभिः ॥ ९८ ॥

अधिराज्ये महाभागः पृथुर्वैन्यः प्रतापवान् ॥

पित्रा न रंजिताश्चास्य प्रजा वैन्येन रंजिताः ॥ ९९ ॥

ततो राजेति नामास्य अनुरागादजायत ॥

आपः स्तस्तंभिरे चास्य समुद्रमभियास्यतः ॥ 7.1.336.१०० ॥

पर्वताश्चापि शीर्यंते ध्वजसंगोऽपि नाऽभवत् ॥

अकृष्टपच्या पृथिवी सिध्यंत्यन्नानि चिंतया ॥

सर्वकामदुघा गावः पुटकेपुटके मधु ॥ १०१ ॥

तस्मिन्नेव तदा काले पुन र्जज्ञेऽथ मागधः ॥

सामगेषु च गायत्सु स्रुग्भांडाद्वैश्वदेविकात् ॥ १०२ ॥

सामगेषु समुत्पन्नस्तस्मान्मगध उच्यते ॥

ऐंद्रेण हविषा चापि हविः पृक्तं बृहस्पतिः ॥ १०३ ॥

यदा जुहाव चेंद्राय ततस्ततो व्यजायत ॥

प्रमादस्तत्र संजज्ञे प्रायश्चित्तं च कर्मसु ॥ १०४ ॥

शेषहव्येन यत्पृक्तमभिभूतं गुरोर्हविः ॥

अधरोत्तरस्वारेण जज्ञे तद्वर्णवैकृतम् ॥१०५॥

यज्ञस्तस्यां समभवद्ब्राह्मण्यां क्षत्रयोनितः ॥

ततः पूर्वेण साधर्म्यात्तुल्यधर्माः प्रकीर्त्तिताः॥ ॥ १०६ ॥

मध्यमो ह्येष तत्त्वस्य धर्मः क्षत्रोपजीवनम् ॥

रथनागाश्वचरितं जघन्यं च चिकित्सितम् ॥ १०७ ॥

पृथोः कथार्थं तौ तत्र समा हूतौ महर्षिभिः ॥

तावूचुर्मुनयः सर्वे स्तूयतामिति पार्थिवः ॥ १०८ ॥

कर्मभिश्चानुरूपो हि यतोयं पृथिवीपतिः ॥

तानूचतुस्तदा सर्वानृषींश्च सूतमागधौ ॥ १०९ ॥

आवां देवानृषींश्चैव प्रीणयाव स्वकर्मभिः ॥

न चास्य विद्वो वै कर्म न तथा लक्षणं यश ॥ 7.1.336.११० ॥

स्तोत्रं येनास्य संकुर्वो राज्ञस्तेजस्विनो द्विजाः ॥

ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति ॥१११॥

यानि कर्माणि कृतवान्पृथुः पश्चान्महाबलः ॥

तानि गीतानि बद्धानि स्तुवद्भिः सूतमागधैः ॥ ११२ ॥

ततः श्रुतार्थः सुप्रीतः पृथुः प्रादात्प्रजेश्वरः ॥

अनूपदेशं सूताय मागधान्मागधाय च ॥ १ १३॥

तदादि पृथिवीपालाः स्तूयन्ते सूतमागधैः ॥

आशीर्वादैः प्रशंस्यंते सूतमागधबंदिभिः ॥ ११४ ॥

तं दृष्ट्वा परमं प्रीताः प्रजा ऊचुर्महर्षयः ॥

एष वो वृत्तिदो वैन्यो विहितोऽथ नराधिपः ॥ ११५ ॥

ततो वैन्यं महाभागं प्रजाः समभिदुद्रुवुः ॥

त्वं नो वृत्तिविधातेति महर्षिवचनात्तथा ॥ ॥ ११६ ॥

सोऽभीहितः प्रजाभिस्तु प्रजाहितचिकीर्षया ॥

धनुर्गृहीत्वा बाणांश्च वसुधामार्दयद्वली ॥ ११७ ॥

ततो वैन्यभयत्रस्ता गौर्भूत्वा प्राद्रवन्मही ॥

तां धेनुं पृथुरादाय द्रवन्तीमन्वधावत ॥ ११८ ॥

सा लोकान्ब्रह्मलोकादीन्गत्वा वैन्यभयात्तदा ॥

ददर्श चाग्रतो वैन्यं कार्मुकोद्यतपाणिनम् ॥ ११९ ॥

ज्वलद्भिर्विशिखैस्तीक्ष्णैर्दीप्ततेजःसमन्वितैः ॥

महायोगं महात्मानं दुर्द्धर्षममरैरपि ॥ 7.1.336.१२० ॥

अलभंती तु सा त्राणं वैन्यमेवाभ्यपद्यत ॥

कृतांजलिपुटा देवी पूज्या लोकैस्त्रिभिस्सदा ॥१२१॥

उवाच चैनं नाधर्म्यं स्त्रीवधं परिपश्यसि ॥

कथं धारयिता चासि प्रजा राजन्मया विना ॥ १२२ ॥

मयि लोकाः स्थिता राजन्मयेदं धार्यते जगत् ॥

मदृते तु विनश्येयुः प्रजाः पार्थिव विद्धि तत् ॥ १२३ ॥

स मां नार्हसि हंतुं वै श्रेयश्चेत्त्वं चिकीर्षसि ॥

प्रजानां पृथिवीपाल शृणुष्वेदं वचो मम ॥१२४॥

उपायतः समारब्धाः सर्वे सिध्यंत्युपक्रमाः ॥

हत्वा मां त्वं न शक्तो वै प्रजाः पालयितुं नृप ॥ १२५ ॥

अनुकूला भविष्यामि त्यज कोपं महाद्युते ॥

अवध्याश्च स्त्रियः प्राहुस्तिर्यग्योनिगता अपि ॥ ॥१२६॥

एकस्मिन्निधनं प्राप्ते पापिष्ठे क्रूरकर्मणि ॥

बहूनां भवति क्षेमस्तत्र पुण्यप्रदो वधः ॥

सत्येवं पृथिवीपाल धर्म्मं मा त्यक्तुमर्हसि ॥१२७॥

एवंविधं तु तद्वाक्यं श्रुत्वा राजा महाबलः ॥

क्रोधं निगृह्य धर्मात्मा वसुधामिदमब्रवीत् ॥ १२८ ॥

एकस्यार्थे च यो हन्यादात्मनो वा परस्य वा ॥

एकं वापि बहून्वापि कामतश्चास्ति पातकम् ॥ १२९ ॥

यस्मिंस्तु निधनं प्राप्ता एधन्ते बहवः सुखम् ॥

तस्मिन्हते च भूयो हि पातकं नास्ति तस्य वै ॥ 7.1.336.१३० ॥

सोऽहं प्रजानिमित्तं त्वां हनिष्यामि वसुन्धरे ॥

यदि मे वचनं नाद्य करिष्यसि जगद्धितम् ॥ १३१ ॥

त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीम्॥

आत्मानं पृथुकृत्वेह प्रजा धारयितास्म्यहम् ॥१३२॥

सा त्वं वचनमास्थाय मम धर्मभृतांवरे॥

सञ्जीवय प्रजा नित्यं शक्ता ह्यसि न संशयः ॥ १३३ ॥

दुहितृत्वं हि मे गच्छ एवमेतन्महच्छरम् ॥

नियच्छे त्वद्वधार्थं च प्रयुक्तं घोरदर्शनम् ॥

प्रत्युवाच ततो वैन्यमेवमुक्ता महासती ॥ १३४ ॥

सर्वमेतदहं राजन्विधास्यामि न संशयः ॥

वत्सं तु मम संयुक्ष्व क्षरेयं येन वत्सला ॥ १३५ ॥

समां च कुरु सर्वत्र मां त्वं सर्वभृतां वर ॥

यथा विस्यन्दमानाहं क्षीरं सर्वत्र भावये ॥१३६॥

॥ ईश्वर उवाच ॥ ॥

तत उत्सारयामास शिलाजालानि सर्वशः॥

धनुष्कोट्या ततो वैन्यस्तेन शैला विवर्द्धिताः ॥१३७॥

मन्वतरेष्वतीतेषु चैवमासीद्वसुन्धरा ॥

स्वभावेनाभवत्तस्याः समानि विषमाणि च ॥१३८॥

न हि पूर्वनिसर्गे वै विषमं पृथिवीतलम्॥

प्रविभागः पुराणां च ग्रामाणां चाथ विद्यते ॥ १३९ ॥

न सस्यानि न गोरक्षं न कृषिर्न वणिक्पथः ॥ 7.1.336.१४० ॥

चाक्षुषस्यांतरे पूर्वमासीदेतत्पुरा किल ॥

वैवस्वतेऽन्तरे चास्मिन्सर्वस्यैतस्य संभवः ॥

समत्वं यत्रयत्रासीद्भूमेः कस्मिंश्चिदेव हि॥१४१॥

तत्रतत्र प्रजास्ता वै निवसन्ति स्म सर्वदा ॥

आहारः फलमूलं तु प्रजानामभवत्किल ॥ १४२ ॥

कृच्छ्रेणैव तदा तासामित्येवमनुशुश्रुम ॥

वैन्यात्प्रभृतिलोकेऽस्मिन्सर्वस्यैतस्य संभवः ॥१४३॥

संकल्पयित्वा वत्सं तु चाक्षुषं मनुमीश्वरम् ॥

पृथुर्दुदोह सस्यानि स्वहस्ते पृथिवीं ततः ॥१४४॥

सस्यानि तेन दुग्धा वै वेन्येनेयं वसुन्धरा ॥

मनुं वै चाक्षुषं कृत्वा वत्सं पात्रे च भूमये ॥ १४५ ॥

तेनान्नेन तदा ता वै वर्त्तयन्ते सदा प्रजाः ॥

ऋषिभिः श्रूयते चापि पुनर्दुग्धा वसुन्धरा ॥१४६॥

वत्सः सोमस्ततस्तेषां दोग्धा चापि बृहस्पतिः ॥

पात्रमासन्हि च्छन्दांसि गायत्र्यादीनि सर्वशः ॥ १४७ ॥

क्षीरमासीत्तदा तेषां तपो ब्रह्म च शाश्वतम्॥

पुनस्ततो देवगणैः पुरंदरपुरोगमैः ॥ १४८ ॥

सौवर्णं पात्रमादाय दुग्धेयं श्रूयते मही ॥

वत्सस्तु मघवा चासीद्दोग्धा च सविताऽभवत् ॥ १४९ ॥

क्षीरमूर्जामधु प्रोक्तं वर्तते तेन देवताः ॥

पितृभिः श्रूयते चापि पुनर्दुग्धा वसुन्धरा ॥ ॥ 7.1.336.१५० ॥

राजतं पात्रमादाय स्वधा त्वक्षय्यतृप्तये ॥

वैवस्वतो यमस्त्वासीत्तेषां वत्सः प्रतापवान् ॥ १५१ ॥

अंतकश्चाभवद्दोग्धा पितृणां भगवा न्प्रभुः ॥

असुरैः श्रूयते चापि पुनर्दुग्धा वसुन्धरा ॥ १५२ ॥

आयसं पात्रमादाय बलमाधाय सर्वशः ॥

विरोचनस्तु प्राह्लादिस्तेषां वत्सः प्रतापवान् ॥ १५३ ॥

ऋत्विग्द्विमूर्द्धा दैत्यानां दोग्धा तु दितिनन्दनः ॥

मायाक्षीरं दुदोहासौ दैत्यानां तृप्तिकारकम् ॥ १५४ ॥

तेनैते माययाऽद्यापि सर्वे मायाविदोऽसुराः ॥

वर्त्तयंति महावीर्यास्तदेतेषां परं बलम्॥ १५५ ॥

नागैश्च श्रूयते दुग्धा वत्सं कृत्वा तु तक्षकम् ॥

अलाबुपात्रमादाय विषं क्षीरं तदा महत् ॥ १५६ ॥

तेषां वै वासुकिर्दोग्धा काद्रवेयो महायशाः ॥

नागानां वै महादेवि सर्पाणां चैव सर्वशः ॥१५७॥

तेन वै वर्त्तयन्त्युग्रा महाकाया विषोल्बणाः ॥

तदाहारास्तदाचारास्तद्वीर्यास्तदपाश्रयाः ॥ १५८ ॥

आमपात्रे पुनर्दुग्धा त्वंतर्द्धानमियं मही ॥

वत्सं वैश्रवणं कृत्वा यक्षपुण्यजनैस्तथा ॥ १५९ ॥

दोग्धा रजतनागस्तु चिन्तामणिचरस्तु यः ॥

यक्षाधिपो महातेजा वशी ज्ञानी महातपाः ॥ 7.1.336.१६० ॥

तेन ते वर्त्तयं तीति यक्षा वसुभिरूर्जितैः ॥

राक्षसैश्च पिशाचैश्च पुनर्दुग्धा वसुन्धरा ॥ १६१ ॥

ब्रह्मोपेन्द्रस्तु दोग्धा वै तेषामासीत्कुबेरतः ॥

वत्सः सुमाली बलवान्क्षीरं रुधिरमेव च ॥१६२॥

कपालपात्रे निर्दुग्धा त्वंतर्द्धानं तु राक्षसैः ॥

तेन क्षीरेण रक्षांसि वर्त्तयन्तीह सर्वशः ॥१६३॥

पद्मपत्रेषु वै दुग्धा गंधर्वाप्सरसां गणैः ॥

वत्सं चैत्ररथं कृत्वा शुचिगन्धान्मही तदा ॥ १६४ ॥

तेषां वत्सो रुचिस्त्वासीद्दोग्धा पुत्रो मुनेः शुभः ॥

शैलैस्तु श्रूयते देवि पुनर्दुग्धा वसुंधरा ॥ १६५ ॥

तदौषधीर्मूर्तिमती रत्नानि विविधानि च ॥

वत्सस्तु हिमवांस्तेषां दोग्धा मेरुर्महागिरिः ॥ १६६ ॥

पात्रं शिलामयं ह्यासीत्तेन शैलाः प्रतिष्ठिताः ॥

श्रूयते वृक्षवीरुद्भिः पुनर्दुग्धा वसुन्धरा ॥ १६७ ॥

पालाशं पात्रमादाय च्छिन्नदग्धप्ररोहणम् ॥

दोग्धा तु पुष्पितः शालः प्लक्षो वत्सो यशस्विनि ॥

सर्वकामदुघा दोग्धा पृथिवी भूतभाविनी ॥ १६८ ॥

सैषा धात्री विधात्री च धरणी च वसुन्धरा ॥

दुग्धा हितार्थं लोकानां पृथुना इति नः श्रुतम् ॥ १६९ ॥

चराचरस्य लोकस्य प्रतिष्ठा योनिरेव च ॥

आसीदियं समुद्रांता मेदिनीति परिश्रुता॥7.1.336.१७०॥

मधुकैटभयोः पूर्वं मेदोमांसपरिप्लुता ॥

वसुन्धारयते यस्माद्वसुधा तेन कीर्तिता ॥ १७१ ॥

ततोऽभ्युपगमाद्राज्ञः पृथोर्वैन्यस्य धीमतः ॥

दुहितृत्वमनुप्राप्ता पृथिवीत्युच्यते ततः ॥ १७२ ॥

प्रथिता प्रविभक्ता च शोभिता च वसुन्धरा ॥

दुग्धा हि यत्नतो राज्ञा पत्तनाकरमालिनी ॥ १७३ ॥

एवं प्रभावो राजासीद्वैन्यः स नृपसत्तमः ॥
ततः स रंजयामास धर्मेण पृथिवीं तदा ॥ १७४ ॥
ततो राजेति शब्दोऽथ पृथिव्यां रंजनादभूत् ॥
स राज्यं प्राप्य वैन्यस्तु चिंतयामास पार्थिवः ॥ १७५ ॥
पिता मम ह्यधर्मिष्ठो यज्ञाद्युच्छित्तिकारकः॥
कस्मिन्स्थाने गतश्चासौ ज्ञेयं स्थानं कथं मया ॥ १७६ ॥
कथं तस्य क्रिया कार्या हतस्य ब्राह्मणैः किल ॥
कथं गतिर्भवेत्तस्य यज्ञदानक्रियाबलात् ॥ १७७ ॥
इत्येव चिंतया तस्य नारदोभ्याजगाम ह ॥
तस्यैवमासनं दत्त्वा प्रणिपत्य च पृष्टवान् ॥ १७८ ॥
भगवन्सर्वलोकस्य जानासि त्वं शुभाशुभम् ॥
पिता मम दुराचारो देवब्राह्मणनिंदकः ॥ १७९ ॥
स्वकर्मणा हतो विप्रैः परलोकमवाप्तवान् ॥
कस्मिंस्थाने गतस्तातः श्वभ्रं वा स्वर्गमेव च ॥ 7.1.336.१८० ॥
ततोऽब्रवीन्नारदस्तु ज्ञात्वा दिव्येन चक्षुषा ॥
शृणु राजन्महाबाहो यत्र तिष्ठति ते पिता ॥ १८१ ॥
अत्र देशो मरुर्नाम जलवृक्षविवर्जितः ॥
तत्र देशे महारौद्रे जनकस्ते नरोत्तम ॥ १८२ ॥
म्लेच्छमध्ये समुत्पन्नो यक्ष्मी कुष्ठसमन्वितः ॥
उच्छिष्टभोजी म्लेच्छानां कृमिभिः संयुतो व्रणैः ॥ ॥ १८३ ॥
तच्छ्रुत्वा वचनं तस्य नारदस्य महात्मनः ॥
हाहाकारं ततः कृत्वा मूर्छितो निपपात ह ॥१८४ ॥
चिंतयामास दुःखार्तः कथं कार्यं मया भवेत् ॥
इत्येवं चिंतयानस्य मतिर्जाता महात्मनः ॥
पुत्रः स कथ्यते लोके पितरं त्रायते तु यः ॥ १८५ ॥
स कथं तु मया तातः पापान्मुक्तो भविष्यति ॥
एवं संचिंत्य स ततो नारदं पर्यपृच्छत ॥ १८६ ॥
भगवन्कथितं सर्वं पितुर्मम विचेष्टितम् ॥

केन तस्य भवेन्मुक्तिः कर्मणा द्विजसत्तम ॥
व्रतैर्दानैस्तपोभिर्वा तीर्थानां यात्रया वद ॥ १७७ ॥
॥ नारद उवाच ॥ ॥
गच्छ राजन्प्रधानानि तीर्थानि मनुजेश्वर ॥
पितरं तेषु चानीय तस्माद्राजन्मरुस्थलात् ॥ १८८ ॥
यत्र देवाः सप्रभावास्तीर्थानि विमलानि च ॥
तत्र गच्छ महाराज तीर्थयात्रां कुरु प्रभो ॥ १८९ ॥
एवं ह्यवितथं विद्धि मोक्षस्ते भविता पितुः ॥
तच्छ्रुत्वा वचनं राजा नारदस्य महात्मनः ॥
सचिवे भारमाधाय स्वराजस्य जगाम ह ॥ 7.1.336.१९० ॥
स गत्वा मरुभूमिं तु म्लेच्छमध्ये ददर्श ह ॥
कुष्ठरोगेण महता क्षयेण च समावृतम् ॥ १९१ ॥
गव्यूतिमात्रं तत्रैव शून्यं मानुषवर्जितम् ॥
एवं दृष्ट्वा स राजा तु संतप्तो वाक्यमब्रवीत् ॥ १९२ ॥
हे म्लेच्छ रोगिपुरुषं स्वगृहं च नयाम्यहम् ॥
तत्राहमेनं निरुजं करोमि यदि मन्यथ ॥ १९३ ॥
ज्ञात्वेति सर्वे ते म्लेच्छाः पुरुषं तं दयापरम् ॥
ऊचुः प्रणतसर्वांगाः शीघ्र नय जगत्पते ॥
अस्मद्भाग्यवशान्नाथ त्वमेवात्र समागतः ॥ १९४ ॥
दुर्गंधोपहता लोकास्त्वया नाथ सुखीकृताः ॥
तत आनाय्य पुरुषाञ्छिबिकावाहनोचितान् ॥ १९५ ॥
ततः श्रुत्वा तु वचनं तस्य राज्ञो दयावहम् ॥
प्रापुस्तीर्थान्यनेकानि केदारादीनि कोटिशः ॥ १९६ ॥
यत्रयत्र स गच्छेत वैन्यो वेनेन संयुतः ॥
तत्र तत्रैव तीर्थानामाक्रंदः श्रूयते महान्॥ ॥ १९७ ॥
हा दैव रिपुरायाति अस्माकं नाशहेतवे ॥
अधुना क्व गमिष्याम इति चिंता पुनःपुनः॥१९८॥
दर्शनेनापि तस्यैव हाहाकारं विधाय वै॥ ।

पलायंते च तीर्थानि देवा नश्यंति तत्क्षणात् ॥१९९॥

एवं वर्षत्रयं राजा तीर्थयात्रां चकार वै ॥

न तस्य मुक्तिर्ददृशे ततः शोकमगात्परम् ॥7.1.336.२००॥

ततस्तु प्रेरिता भृत्याः कुरुक्षेत्रे महाप्रभे ॥

यदि वापि पुनस्तत्र पापमुक्तिर्भवेत्ततः ॥ २०१ ॥

गृहीत्वा शिबिकां स्कन्धे कुरुक्षेत्रे गताः प्रिये ॥

तत्र नीत्वा स्थाणुतीर्थमवतार्य च ते गताः ॥ २०२ ॥

ततः स राजा मध्याह्ने चिकीर्षुः स्नानमादरात् ॥

तस्यैव तु पितुस्तत्र तथा दानानि षोडश ॥ २०३ ॥

ब्राह्मणेभ्यस्तथा दित्सुः श्रद्धावान्भावतत्परः ॥

ततो वायुश्चांतरिक्ष इदं वचनमब्रवीत् ॥ २०४ ॥

मा तात साहसं कुर्यास्तीर्थं रक्ष प्रयत्नतः ॥

अयं पापेन घोरेण समंतात्परिवेष्टितः ॥ २०५ ॥

वेदनिन्दासमाचारो ब्रह्महत्याशतैर्युतः ॥

सोऽयं पापो दुराचारस्तीर्थं नाशं नयिष्यति ॥ २०६ ॥

मा तीर्थं नाशय विभो महदेनो भविष्यति ॥

एतद्वायोर्वचः श्रुत्वा दुःखेन महतार्दितः ॥

उवाच शोकसंतप्तः पितुर्दुःखेन दुःखितः ॥ २०७ ॥

हा दैवेति च चुक्रोश ऊर्द्ध्वबाहुः पुनःपुनः ॥

एष घोरेण पापेन अतीव परिवेष्टितः ॥ २०८ ॥

यदनेनापि तीर्थेन शुद्धः कर्त्तुं न शक्यते ॥

प्रायश्चित्तं करिष्येऽहं पितुरर्थे न संशयः ॥ २०९ ॥

एवं तस्य वचः श्रुत्वा दयां कृत्वा महीयसीम् ॥

अन्तरिक्षभवां वाचं खेचराः पुनरब्रुवन् ॥ 7.1.336.२१० ॥

भोभो राजन्नृपश्रेष्ठ त्यक्त्वा शोकं वचः शृणु ॥

येन ते जनकस्यास्य भवेत्पापक्षयो महान् ॥ २११ ॥

अस्ति क्षेत्रं महासिद्धं प्रभासमिति विश्रुतम् ॥

सर्वपापप्रशमनं महापातकनाशनम् ॥ २१२ ॥

ब्रह्मतत्त्वं हरितत्त्वं रुद्रतत्त्वं तृतीयकम् ॥
तस्मिन्नेव महाक्षेत्रे प्रभासे शंकरप्रिये ॥ २१३ ॥
शाक्तेयं यदि वा चांद्रं सौरं सारस्वतं तथा ॥
आग्नेयं वारुणं चापि स्मृतं क्षेत्रमनुत्तमम् ॥ २१४ ॥
ब्रह्माण्डे यानि तीर्थानि पुरा क्षेत्राणि यानि तु ॥
प्रभासमागमिष्यन्ति संप्राप्ते तु कलौ युगे ॥ २१५ ॥
अष्टौ कोटिसहस्राणि अष्टौ कोटिशतानि च ॥
क्षेत्रं रक्षंति तत्रस्थाः प्रभासं शांकरा गणाः ॥ २१६ ॥
इयं सरस्वती पुण्या सर्वत्रैव हि विद्यते ॥
पञ्चस्रोताः प्रभासे तु दुष्प्राप्या त्रिदशैरपि ॥ २१७ ॥
तस्या यत्पञ्चमं स्रोतन्यंकुमत्यास्तटानि च ॥
तस्य मध्ये स्थितं तीर्थं गोष्पदेति च विश्रुतम् ॥ २१८ ॥
तत्र प्रेतशिला मध्ये प्रेतानां मुक्तिदायिका ॥
यत्र प्रेताः पुरा मुक्ता अष्टाविंशतिकोटयः ॥ २१९ ॥
पापिनां मुक्तिदं तीर्थमाद्या रुद्रगया स्मृता ॥
तदस्मिन्गोष्पदंनाम कलौ ख्यातं धरातले ॥ 7.1.336.२२० ॥
यदा क्षीरोदमथनान्निःसृता लोकमातरः ॥
तदा देवैः समेतास्तु आगतास्तीर्थसन्निधौ ॥ २२१ ॥
पदं तत्र निमग्नं च नन्दायाश्च शिलातले ॥
शिलां खुरांकितां दृष्ट्वा जानुदेशांकितां तथा ॥ २२२ ॥
विस्मिताः सर्वदेवा वै पप्रच्छुर्गां च नन्दिनीम् ॥
किमेतद्दृश्यते देवि पदं प्रेतशिलातले ॥
कथं तु खेदः सञ्जातश्चास्माकं स्खलनं कथम्॥ २२३ ॥
॥ नन्दिन्युवाच ॥ ॥
इदं मम पदं देवाः शिलासंस्थं विराजते ॥
गगनांगणभूमिस्थं चन्द्रबिंबमिवापरम्॥ २२४ ॥
अद्यप्रभृति भो देवास्त्रैलोक्ये सचराचरे ॥
गोष्पदंनाम विख्यातं लोके ख्यातिं गमिष्यति ॥ २२५ ॥

अत्रागत्य नरो यस्तु स्नानं श्राद्धं करिष्यति ॥

गयासप्तगुणंतस्य फलं देवा भविष्यति ॥ २२६ ॥

न वारो न च नक्षत्रं न कालस्तत्र कारणम्॥

यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥ २२७ ॥

अथवा पर्वकांक्षा चेत्तानि मे शृणुपार्वति ॥

अयने विषुवे युग्मे सामान्ये चार्कसंक्रमे ॥ २२८ ॥

अमावास्याष्टकायां च कृष्णपक्षे विशेषतः ॥

आर्द्रामघारोहिणीषु द्रव्यब्राह्मणसंगमे ॥ २२९ ॥

गजच्छाया व्यतीपाते वैधृते धृतचामरे ॥

वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य तु ॥ 7.1.336.२३० ॥

पञ्चदश्यां च माघस्य नभस्ये च त्रयोदशीम् ॥

युगादयः स्मृता ह्येतास्तस्मिन्काले च वा पुनः ॥ २३१ ॥

मन्वन्तरादौ कार्यं च तत्र श्राद्धं विजानता ॥

आश्वयुक्छुक्लनवमी द्वादशी कार्तिके तथा ॥२३२॥

तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ॥ २३३ ॥

आषाढस्यापि दशमी माघमासस्य सप्तमी ॥

श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ॥ २३४ ॥

कार्तिकी फाल्गुनी चैव ज्यैष्ठी पञ्चदशी तथा ॥

मन्वन्तरादयश्चैता दत्तस्या क्षयकारिकाः ॥ २३५ ॥

वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च ॥

पञ्चमी चैत्रमासस्य तस्यैवांत्या तथा परा ॥ २३६ ॥

शुक्ला त्रयो दशी माघे कार्तिकस्य तु सप्तमी ॥

नवमी मार्गशीर्षस्य सप्तैताः कल्पकादिमाः ॥ २३७ ॥

कल्पतृप्तिर्भवेच्छ्राद्धे कल्पादौ तु कृते पुरा ॥

इत्येवमुक्त्वा सा नन्दा देवानां प्रतिनन्दिनी ॥

अन्तर्द्धानं जगामाशु दीपो वातहतो यथा ॥२३८॥

इतीदं कौतुकं दृष्ट्वा सर्वे देवाः सवासवाः ॥

ब्रह्मर्षयो देवर्षयः श्लोकं पौराणिकं जगुः ॥ २३९ ॥

अहो तीर्थस्य माहात्म्यं नन्दायास्तपसो बलम् ॥

सकृच्छ्राद्धेन दत्तेन गयासप्तगुणं फलम् ॥ 7.1.336.२४० ॥

एवमुक्त्वा ततोदेवाश्चक्रुः श्राद्धादिकां क्रियाम्॥

यथोक्तं फलमापुस्ते नंदिन्या पूर्वभाषितम् ॥ २४१ ॥

इत्थं त्वमपि राजेन्द्र गच्छ शीघ्रं हि गोष्पदम्॥

तत्र श्राद्धादिकं कृत्वा लप्स्यसे फलमीप्सितम् ॥ २४२ ॥

अयं ते जनको राजन्पापिनां प्रवरः स्मृतः ॥

नान्यैस्तीर्थशतैः शक्यः प्रोद्धर्तुं गोष्पदं विना ॥ २४३ ॥

तस्माद्व्रज महाराज मा कार्षीस्त्वं विलंबनम् ॥

एवं श्रुत्वा तदा राजा प्रभासं क्षेत्रमागतः ॥२४४॥

तत्र स्थानस्थितान्विप्रांस्तीर्थमाहात्म्यकोविदान्॥

अग्रेकृत्य महाराजो ययौ न्यंकुमतीं नदीम् ॥ २४५ ॥

तै राज्ञो दर्शितं तीर्थं पदं प्रेतशिलास्थितम् ॥

तद्दृष्ट्वा विमलं तीर्थं विस्मयोत्फुल्ललोचनः ॥

चक्रे कुण्डानि वेदीश्च मण्डपान्यज्ञसिद्धये ॥ २४६ ॥

ततो यज्ञः समारब्धो विधिवद्भूरिदक्षिणः ॥

प्रत्यक्षं पितर स्तस्य बभूवुर्ज्वलनप्रभाः ॥ २४७ ॥

ततः श्रद्धां समास्थाय श्राद्धैर्यज्ञैर्महोदयम् ॥

ते चाब्रुवन्वचस्तुष्टाः पितरो राजसत्तमम् ॥ २४८ ॥

धन्योऽसि राजन्पुण्योऽसि वयं धन्यतरास्त्वया ॥

यदत्र तीर्थे श्राद्धेन उद्धृता भवता वयम् ॥ २४९ ॥

एवमुक्त्वा ततः सर्वे वेनेन पितरः सह ॥

विमानवरसंस्थाश्च जग्मुस्ते त्रिदिवालयम् ॥ 7.1.336.२५० ॥

गच्छन्नुवाच वेनस्तं राजानं पृथुवक्षसम् ॥

राजञ्जन्मानि चत्वारि अभूवं चान्यजन्मनि ॥ २५१ ॥

कुष्ठी पापो दुराचारश्चांडालोच्छिष्टभुक्तथा ॥

सोऽहं पापविनिर्मुक्तो गच्छामि त्रिदिवालयम् ॥ २५२ ॥

तद्गच्छ त्वं महाभाग राज्यं भुंक्ष्व चिराय च ॥
कृतं ते सकलं कार्यं पुत्रेण क्रियते च यत् ॥ २५३ ॥
एवं श्रुत्वा तदा राजा मुमुदे ज्ञातिसंयुतः ॥
ब्राह्मणान्हर्षयामास दानैर्भूकांचनादिभिः ॥ २५४ ॥
न तदस्ति जगत्यस्मिंस्तत्र यन्न ददौ नृपः ॥
दृष्ट्वा प्रभावं तीर्थस्य प्रत्यक्षं पितृदर्शनम् ॥२५५॥
एवं राजा स कृत्वा तु स्वकीयं स्थान माययौ ॥
भुक्त्वा भूमिं तु सकलां प्रेत्य स्वर्गं समाप्तवान् ॥ २५६ ॥
एवं प्रभावं तत्क्षेत्रं प्रभासं पापनाशनम् ॥
यस्मिन्नायांति तीर्थानि देवास्तिष्ठंति कोटिशः ॥ २५७ ॥
प्रभासं क्षेत्रमासाद्य योन्यत्तीर्थं हि मार्गते ॥
स करस्थं समुत्सृज्य कूर्परेण समालिहेत् ॥ २५८ ॥
अब्रुवन्पितरश्चैनां गाथां पौराणिकीं प्रिये ॥
गयां गंतुं न शक्नोति यदि पुत्रः कथंचन ॥
तदा यत्नेन गंतव्यं गोष्पदं तीर्थमुत्तमम् ॥ २५९ ॥
कन्दैर्मूलैः फलैर्वापि पिण्याकेंगुदकेन वा ॥
अपि नः स कुले भूयाद्योऽत्र श्राद्धं प्रदास्यति ॥ 7.1.336.२६० ॥
तत्र स्नात्वा प्रयत्नेन ब्राह्मणान्वेदवित्तमान् ॥
आमंत्र्य विधिवच्छ्राद्धे भोजयित्वा प्रयत्नतः ॥
पिंडदानं तु कर्त्तव्यं पितृणां तृप्तिमिच्छताम् ॥२६१॥
न तिथिर्न च नक्षत्रं पर्व मासादिकं न हि ॥
सर्वदा तत्र गंतव्यं श्रद्धा युक्तेन चेतसा ॥ २६२ ॥
न कालनियमस्तत्र प्रमाणं दर्शनं यतः ॥
तत्राक्षयतृतीयायां दुर्ल्लभं गमनं प्रिये ॥ २६३ ॥
कार्त्तिक्यां माघसप्तम्यां पद्मके वाऽथ पर्वणि ॥२६४॥
हिरण्यदानं गोदानं वस्त्रं रूप्यं घृतं तिलाः ॥
दातव्यास्तत्र युक्तेन पितॄणां तृप्तिमिच्छता ॥ २६५ ॥
एवं ते कथितं देवि तीर्थगुह्यं महोदयम् ॥

न कथ्यं दुष्टबुद्धीनां पापिनां क्रूरचेतसाम् ॥२६६॥

श्रद्धायुक्ताय दातव्यं पितृभक्तिरताय च ॥

श्राद्धकाले विशेषेण पठे द्भक्त्या पुराणवित् ॥ २६७ ॥

पितृणां जायते तृप्तिस्तेन द्वादशवार्षिकी ॥

श्रोतव्यं प्रयतैर्नित्यं नरैर्नरकभीरुभिः ॥

पठितव्यं सदा भक्त्या विप्राणां भुंजता पुरः ॥ २६८ ॥

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥

श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदंति ॥२६९॥

इदं रहस्य यशसो निधानमिदं पितृणामतिवल्लभं च ॥

इदं च वेदेष्वमृताय नित्यमिदं महापापहरं च पुंसाम् ॥ 7.1.336.२७० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीनदीमाहात्म्ये गोष्पदतीर्थमाहात्म्यवर्णनंनाम षट्त्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३७

https://sa.wikisource.org/s/giw
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि नारायणगृहं परम् ॥

गोष्पदाद्दक्षिणे भागे सागरस्य तटे शुभे ॥ १ ॥

न्यंकुमत्याः समीपे तु सर्वपातकनाशने ॥

तत्रकल्पांतरस्थायी स्वयं तिष्ठति केशवः ॥ २ ॥

पितॄणामुद्धरणार्थाय ह्यस्मिन्रौद्रे कलौ युगे ॥

यदा दैत्यविनाशं स कुरुते भगवान्हरिः ॥ ३ ॥

विश्रामार्थं तदा तत्र गृहे तिष्ठति नित्यशः ॥

नारायणगृहं तेन विख्यातं जगतीतले ॥ ४॥

कृते जनार्दनोनाम त्रेतायां मधुसूदनः ॥

द्वापरे पुण्डरीकाक्षः कलौ नारायणः स्मृतः ॥ ५ ॥

एवं चतुर्युगे प्राप्ते पुनःपुनररिन्दम ॥

कृत्वा धर्मव्यवस्थानं तत्स्थानं प्रतिपद्यते ॥ ६ ॥

एकादश्यां निराहारो यस्तं देवं प्रपश्यति ॥

स पश्यति ध्रुवं स्थाने प्रत्यानन्तं हरेः पदम् ॥ ७॥

तेन पीतानि वस्त्राणि देयानि द्विजपुंगवे ॥

स्नानं श्राद्धं च कर्तव्यं सम्यग्यात्राफलेप्सुभिः ॥ ८ ॥

इति ते कथितं महाप्रभावं हरिसंकेतनिकेतनोद्भवम् ॥

शृणुते वा प्रयतस्तु यः सुधीः पठते वा लभते स सद्गतिम् ॥ ९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये न्यंकुमतीमाहात्म्ये नारायणगृहमाहात्म्यवर्णनंनाम सप्तत्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३८

https://sa.wikisource.org/s/g5d
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देविकातटसंस्थितम् ॥

जालेश्वरेति विख्यातं सुरासुरनमस्कृतम् ॥ १ ॥

मन्वन्तरे चाक्षुषे च सम्प्राप्ते द्वापरे युगे ॥

नाम्ना जालेश्वरं लिंगं देविकातटसंस्थितम् ॥ २ ॥

पूज्यते नागकन्याभिर्न तत्पश्यंति मानवाः ॥

महा तेजोमणिमयं चंद्रबिंबसमप्रभम् ॥

स्मरणात्तस्य देवस्य ब्रह्महत्या प्रणश्यति ॥ ३ ॥

॥ देव्युवाच ॥ ॥

कथं जालेश्वरं नाम कस्मिन्काले बभूव तत् ॥ ४ ॥

साधुभिः सह संवासात्के गुणाः परिकीर्त्तिताः ॥

के लोकाः कानि पुण्यानि तत्सर्वं शंस मे प्रभो ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥

नाभागस्य च संवादमापस्तंबतपोनिधेः ॥ ६ ॥

महर्षिरात्मवान्पूर्वमापस्तंबो द्विजाग्रणीः ॥

उपावसन्सदा रम्भो बभूव भगवांस्तदा ॥ ७ ॥

नित्यं क्रोधं च लोभं च मोहं द्रोहं विसृज्य सः ॥

देविकासरितो मध्ये विवेश सलिलाशये ॥ ८ ॥

क्षेत्रे प्राभासिके रम्ये सम्यग्ज्ञात्वा शिवप्रिये ॥

तत्रास्य वसतः कालः समतीतो महांस्तदा ॥ ९ ॥

परेण ध्यानयोगेन स्थाणुभूतस्य तिष्ठतः ॥

ततः कदाचिदागत्य तं देशं मत्स्यजीविनः ॥ 7.1.338.१० ॥

प्रसार्य सुमहज्जालं सर्वे चाकर्षयन्बलात् ॥

अथ तं च महामत्स्यं निषादा बलदर्पिताः ॥ ११ ॥
तस्मादुत्तारयामासुः सलिलाद्ब्रह्मनंदनम् ॥
तं दृष्ट्वा तपसा दीप्तं कैवर्त्ता भयविह्वलाः ॥
शिरोभिः प्रणिपत्योच्चैरिदं वचनमब्रुवन् ॥ १२ ॥ ॥
निषादा ऊचुः ॥ ॥
अज्ञानात्कृतपापानामस्माकं क्षन्तुमर्हसि ॥
किं वा कार्यं प्रियं तेऽद्य तदाज्ञापय सुव्रत ॥ १३ ॥
स मुनिस्तन्महद्दृष्ट्वा मत्स्यानां कदनं कृतम्॥
कृपया परयाविष्टो दाशान्प्रोवाच दुःखितः ॥ १४ ॥
केन मे स्यादुपायो हि सर्वे स्वार्थे बत स्थिताः ॥
ज्ञानिनामपि यच्चेतः केवलात्महिते रतम् ॥ १५ ॥
ज्ञानिनोपि यदा स्वार्थमाश्रित्य ध्यानमास्थिताः ॥
दुःखार्त्तानीह सत्त्वानि क्व यास्यंति सुखं ततः ॥ १६ ॥
योऽभिवांछति भोक्तुं वै दुःखान्येकांततो जनः ॥
पापात्पापतरं तं हि प्रवदंति मुमुक्षवः ॥ १७ ॥
को नु मे स्यादुपायो हि येनाहं दुःखितात्मवान्॥
अंतः प्रविष्टः सत्त्वानां भवेयं सर्वदुःखभुक् ॥ १८ ॥
यन्ममास्ति शुभं किंचित्तदेनानुपगच्छतु ॥
यत्कृतं दुष्कृतं तैश्च तदशेषमुपेतु माम् ॥ १९ ॥
दृष्ट्वांधान्कृपणान्व्यंगाननाथान्रोगिणस्तथा ॥
दया न जायते यस्य स रक्ष इति मे मतिः ॥ 7.1.338.२० ॥
प्राणसंशयमापन्नान्प्राणिनो भयविह्वलान् ॥
यो न रक्षति शक्तोपि स तत्पापं समश्नुते ॥ २१ ॥
आहुर्जनानामार्त्तानां सुखं यदुपजायते ॥
तस्य स्वर्गोऽपवर्गो वा कलां नार्हति षोडशीम् ॥ ॥ २२ ॥
तस्मान्नैतानहं दीनांस्त्यक्त्वा मीनान्सुदुःखितान् ॥
पदमात्रं तु यास्यामि किं पुनस्त्रिदशालयम् ॥ २३ ॥
॥ ईश्वर उवाच ॥ ॥

निशम्यैतदृषेर्वाक्यं दाशास्ते जातसंभ्रमाः ॥

यथावृत्तं तु तत्सर्वं नाभागाय न्यवेदयन् ॥ २४ ॥

नाभागोऽपि ततः श्रुत्वा तं द्रष्टुं ब्रह्मनन्दनम् ॥

त्वरितः प्रययौ तत्र सामात्यः सपुरोहितः ॥ २५ ॥

स सम्यक्पूजयित्वा तं देवकल्पमुनिं नृपः ॥

प्रोवाच भगवन्ब्रूहि किं करोमि तवाज्ञया ॥२६॥ ॥

॥ आपस्तंब उवाच ॥ ॥

श्रमेण महताविष्टाः कैवर्त्ता दुःखजीविनः ॥

मम मूल्यं प्रयच्छेति यद्योग्यं मन्यसे नृप ॥ २७ ॥

॥ नाभाग उवाच ॥ ॥

सहस्राणां शतं मूल्यं निषादेभ्यो ददाम्यहम् ॥

निग्रहाख्यस्य भगवन्यथाह ब्रह्मनंदनः ॥ २८ ॥

॥ आपस्तंब उवाच ॥ ॥

नाहं शतसहस्रैश्च नियम्यः पार्थिव त्वया ॥

सदृशं दीयतां मूल्यममात्यैः सह चिंतय ॥ २९ ॥

॥ नाभाग उवाच ॥ ॥

कोटिः प्रदीयतां मूल्यं निषादेभ्यो द्विजोत्तम ॥

यद्येतदपि ते मूल्यं ततो भूयः प्रदीयते ॥ 7.1.338.३० ॥ ॥

आपस्तंब उवाच ॥ ॥

नार्हं मूल्यं च मे कोटिरधिकं वापि पार्थिव ॥

सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिंतय ॥ ३१ ॥

॥ नाभाग उवाच ॥ ॥

अर्द्धराज्यं समस्तं वा निषादेभ्यः प्रदीयताम् ॥

एतन्मूल्यमहं मन्ये किं वाऽन्यन्मन्यसे द्विज ॥ ३२ ॥

॥ आपस्तंब उवाच ॥ ॥

अर्धराज्यसमस्तं वा नाहमर्हामि पार्थिव ॥

सदृशं दीयतां मूल्यमृषिभिः सह चिंतय ॥ ३३ ॥

महर्षेस्तद्वचः श्रुत्वा नाभागः स विषादवान् ॥

चिन्तयामास दुःखार्तः सामात्यः सपुरोहितः ॥ ३४ ॥

ततः कश्चिदृषिस्तत्र लोमशस्तु महातपाः ॥

नाभागमब्रवीन्मा भैस्तोषयिष्यामि तं मुनिम् ॥ ३५ ॥

॥ नाभाग उवाच ॥ ॥

ब्रूहि मूल्यं महाभाग मुनेरस्य महात्मनः ॥

परित्रायस्व मामस्मात्सज्ञातिकुलबांधवम् ॥ ३६ ॥

निर्दहेद्भगवान्रुद्रस्त्रैलोक्यं सचराचरम्॥

किं पुनर्मानुषं हीनमत्यंतवि षयात्मकम् ॥ ३७ ॥

॥ लोमश उवाच ॥ ॥

त्वमीड्यो हि महाराज जगत्पूज्यो द्विजोत्तमः ॥

गावश्च दिव्यास्तस्माद्गौर्मूल्यमम्यै प्रदीयताम्॥ ३९ ॥

तच्छ्रुत्वा वचनं राजा सामात्यः सपुरोहितः ॥

हर्षेण महताविष्टः प्रोवाचेदं वचोमुनिम् ॥ ३९ ॥

उत्तिष्ठोत्तिष्ठ भगवन्क्रीत एव न संशयः ॥

एतद्योग्यतमं मूल्यं भवतो मुनिसत्तम ॥ 7.1.338.४० ॥

॥ आपस्तंब उवाच ॥ ॥

उत्तिष्ठाम्येष सुप्रीतः सम्यक्क्रीतोऽस्मि पार्थिव ॥

गोभ्यो मूल्यं न पश्यामि पवित्रं परमं भुवि ॥ ४१ ॥

गावः प्रदक्षिणीकार्याः पूजनीयाश्च नित्यशः ॥

मंगलायतनं देव्यः सृष्टा ह्येताः स्वयंभुवा॥ ॥ ४२ ॥

अग्न्यगाराणि विप्राणां देवतायतनानि च ॥

यद्गोमयेन शुद्ध्यंति किंभूतमधिकं ततः ॥४३॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च ॥

गवां पंच पवित्राणि पुनंति सकलं जगत् ॥४४॥

गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ॥

गावो मे हृदये चैव गवां मध्ये वसाम्यहम ॥४५॥

एवं जपन्नरो मंत्रं त्रिसंध्यं नियतः शुचिः ॥

मुच्यते सर्वपापेभ्यः स्वर्गलोकं च गच्छति ॥ ४६ ॥

तृणाहारपरा गावः कर्त्तव्या भक्तितोऽन्वहम्॥

अकृत्वा स्वयमाहारं कुर्वन्प्राप्नोति दुर्गतिम् ॥ ४७ ॥

तेनाग्नयो हुताः सम्यक्पितरश्चापि तर्पिताः ॥

देवाश्च पूजितास्तेन यो ददाति गवाह्निकम्॥४८॥

मन्त्रः ॥

सौरभेयी जगत्पूज्या देवी विष्णुपदे स्थिता ॥

सर्वमेव मया दत्तं प्रतीच्छतु सुतोषिता॥४९॥

रक्षणाद्बालपुत्राणां गवां कण्डूयनात्तथा ॥

क्षीणार्तरक्षणाच्चैव नरः स्वर्गे महीयते । 7.1.338.५० ॥

आदिर्गावो हि मर्त्यस्य मध्ये चांते प्रकीर्तिताः ॥

रक्षंति तास्तु देवानां क्षीराज्यममृतं सदा ॥ ५१ ॥

तस्माद्गावः प्रदातव्याः पूजनीयाश्च नित्यशः ॥

स्वर्गस्य संगमा ह्येताः सोपानमिव निर्मिताः ॥ ५२ ॥

एतच्छ्रुत्वा निषादास्ते गवां माहात्म्यमुत्त मम् ॥

प्रणिपत्य महात्मानमापस्तंबमथाब्रुवन् ॥ ५३ ॥

॥ निषादा ऊचुः ॥ ॥

संभाषो दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ॥

पावनानि किलैतानि साधूनामिति च श्रुतम् ॥ ५४ ॥

संभाषो दर्शनं चैव सहास्माभिः कृतं त्वया ॥

कुरुष्वानुग्रहं तस्माद्गौरेषा प्रतिगृह्यताम् ॥ ५५ ॥

॥ आपस्तंब उवाच ॥ ॥

एता वः प्रतिगृह्णामि गां यूयं मुक्तकिल्विषाः ॥

निषादा गच्छत स्वर्गं सह मत्स्यैर्जलोद्धृतैः ॥५६॥

प्राणिनां प्रीतिमुत्पाद्य निन्दिते नापि कर्मणा ॥

नरकं यदि पश्यामि वत्स्यामि स्वर्ग एव तत् ॥ ५७ ॥

यन्मया सुकृतं किञ्चिन्मनोवाक्कायकर्मभिः ॥

कृतं स्यात्तेन दुःखार्ताः सर्वे यांतु शुभां गतिम् ॥ ५८ ॥

ततस्तस्य प्रसादेन महर्षेर्भावितात्मनः ॥

निषादास्तेन वाक्येन सह मत्स्यैर्दिवं गताः ॥ ५९ ॥

तान्दृष्ट्वा व्रजतः स्वर्गं समत्स्यान्मत्स्यजीविनः ॥

सामात्यभृत्यो नृपतिर्विस्मयादिदमब्रवीत् ॥ 7.1.338.६० ॥

सेव्याः श्रेयोऽर्थिभिः सन्तः पुण्यतीर्थे जलोपमाः ॥

क्षणो पासनमप्यत्र न येषां निष्फलं भवेत् ॥ ६१ ॥

सद्भिः सह सदासीत सद्भिः कुर्वीत सत्कथाम् ॥

सतां व्रतेन वर्तेत नासद्भिः किञ्चिदाचरेत् ॥ ६२ ॥

सतां समागमादेते समत्स्या मत्स्यजीविनः ॥

त्रिविष्टपमनुप्राप्ता नराः पुण्यकृतो यथा ॥ ६३ ॥

आपस्तंबो मुनिस्तत्र लोमशश्च महामनाः ॥

वरैस्तं विविधैरिष्टैश्छंदयामासतुर्नृपम्॥ ६४ ॥

ततः स वरयामास धर्मबुद्धिं सुदुर्लभाम् ॥

तथेति चोक्त्वा तौ प्रीत्या तं नृपं वै शशंसतुः ॥ ६५ ॥

अहो धन्योऽसि राजेन्द्र यत्ते धर्मपरा मतिः ॥

धर्मः सुदुर्लभः पुंसां विशेषेण महीक्षिताम् ॥ ६६ ॥

यदि राजा मदाविष्टः स्वधर्मं न परि त्यजेत् ॥

ततो जगति कस्तस्मात्पुमानभ्यधिको भवेत् ॥ ६७ ॥

ध्रुवं जन्म सदा राज्ञां मोहश्चापि सदा ध्रुवः ॥

मोहाद्ध्रुवश्च नरको राज्यं निन्दन्त्यतो बुधाः ॥ ६८ ॥

राज्यं हि बहु मन्यंते नरा विषयलोलुपाः ॥

मनीषिणस्तु पश्यन्ति तदेव नरकोपमम् ॥ ६९ ॥

तस्माल्लोकद्वयध्वंसी न कर्त्तव्यो मदस्त्वया ॥

यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ॥ 7.1.338.७० ॥

॥ ईश्वर उवाच ॥ ॥

इत्युक्त्वा तौ महात्मानौ जग्मतुः स्वं स्वमाश्रमम् ॥

नाभागोऽपि वरं लब्ध्वा प्रहृष्टः प्राविशत्पुरम् ॥ ७१ ॥

एतत्ते कथितं देवि प्रभावं देविकोद्भवम् ॥

ऋषिणा स्थापितश्चापि भवो जाले श्वरस्तदा ॥ ७२ ॥

जाले निपतितो यस्माद्दाशानामृषिसत्तमः ॥
जालेश्वरेति नामासौ विख्यातः पृथिवीतले ॥ ७३ ॥
तत्र स्नात्वा महादेवि जालेश्वरसमर्चनात् ॥
आपस्तंबश्च नाभागो निषादा मत्स्यजीविनः ॥ ७४ ॥
मत्स्यैः सह गताः स्वर्गं देविकायाः प्रभावतः ॥
चैत्रस्यैव तु मासस्य शुक्लपक्षे त्रयोदशीम् ॥ ७५ ॥
दद्यात्पिण्डं पितृभ्यो यस्तस्यांतो नैव विद्यते ॥
गोदानं तत्र देयं तु ब्राह्मणे वेदपारगे ॥
श्रोतव्यं चैव माहात्म्यं द्रष्टव्यो जालकेश्वरः ॥ ७६ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविका नदीमाहात्म्ये जालेश्वरमाहात्म्यवर्णनंनामाष्टात्रिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३३८ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३३९

https://sa.wikisource.org/s/g5f
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कूपं त्रैलोक्यविश्रुतम् ॥

देविकायास्तटे रम्ये हुंकारेणैव पूर्यते ॥ १ ॥

ततोऽधस्तात्पुनर्याति सलिलं तत्र भामिनि ॥

तण्डीनाम पुरा प्रोक्तो देविकातटमास्थितः ॥ २ ॥

तपस्तेपे महादेवि शिवभक्तिपरायणः ॥

तस्यैवं तप्यमानस्य तस्मिन्देशे वरानने ॥ ३ ॥

आजगाम मृगो वृद्धस्तं देशमन्ध दृक्प्रिये ॥

स पपात महागर्ते अगाधे जलवर्जिते ॥ ४ ॥

तं दृष्ट्वा कृपयाविष्टः स मुनिर्मौनमास्थितः ॥

हुंकारं कुरुते तत्र भूयोभूयश्च भामिनि ॥ ५ ॥

अथ हुंकारशब्देन तस्य गर्तः प्रपूरितः ॥

ततो मृगो विनिष्क्रांतः कृच्छ्रेण सलिलात्प्रिये ॥ ६ ॥

मानुषं रूपमाश्रित्य तमृषिं पर्यपृच्छत ॥

विस्मयं परमं गत्वा काम्यदं कर्मणः फलम् ॥ ७ ॥

मृगत्वे पतितश्चात्र नरो भूत्वा विनिर्गतः ॥

सोऽब्रवीत्तस्य माहात्म्यं सलिलस्य द्विजोत्तमः ॥ ८ ॥

अतोऽहं नरतां प्राप्तो नान्यदस्तीह कारणम् ॥

ततस्तत्सलिलं भूयः प्रविष्टं धरणीतले ॥ ९ ॥

ततो हुंकृतवान्भूयः स ऋषिः कौतुकान्वितः ॥

आपूरितः पुनः कूपः सलिलेन पुरा यथा ॥ 7.1.339.१० ॥

ततः स कृतवान्स्नानं तथा च पितृतर्पणम्॥

मत्वा तीर्थवरं तत्र ततः प्राप्तः परां गतिम् ॥ ११ ॥

अद्यापि हुंकृते तस्मिन्सलिलौघः प्रवर्तते ॥

तत्र गत्वा नरो भक्त्या अपि पापरतोऽपि यः ॥ १२ ॥

न मानुष्यं पुनर्जन्म प्राप्नोति जगतीतले ॥

तत्र स्नात्वा शुचिर्भूत्वा यः श्राद्धं कुरुते नरः ॥ १३ ॥

मुच्यते सर्वपापेभ्यः पितृलोके महीयते ॥

कुलानि तारयेत्सप्त अतीताऽनागतानि च ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविकामाहात्म्ये हुंकारकूपमाहात्म्यवर्णनंनामैकोनचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ॥ ३३९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तत्र स्थाने तु संस्थितम्॥

चण्डीश्वरं महालिंगं सर्वपातकनाशनम् ॥ १ ॥

तत्र शुक्लचतुर्द्दश्यां कार्तिके मासि भामिनि ॥

उपवासपरो भूत्वा यः करोति प्रजागरम् ॥

स याति परमं स्थानं यत्र देवो महेश्वरः ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये देविकामाहात्म्ये चण्डीश्वरमाहात्म्यवर्णनं नाम चत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४१



॥ ईश्वर उवाच ॥ ॥

आशापूरं ततो गच्छेद्विघ्नराजमकल्मषम् ॥

शशिभूषण वायव्ये संस्थितं विघ्ननाशनम्॥

आशां पूरयते यस्मात्तेनाशापूरकः स्मृतः ॥१ ॥

यत्र रामेण देवेशि सीतया लक्ष्मणेन च ॥

समाराध्य च विघ्नेशं प्राप्तं काममभीप्सितम्॥ २ ॥

यत्र चंद्रमसा देवि समाराध्य गणाधिपम् ॥

लब्धं तद्वांछितं पूर्वं सर्वकुष्ठविनाशनम् ॥ ३ ॥

चतुर्थ्यां शुक्लपक्षे च मासि भाद्रपदे तथा ॥

तत्र संपूज्य देवेशं मोदकैर्भोजयेद्द्विजान् ॥ ४ ॥

वाञ्छितां लभते सिद्धिं विघ्नराजप्रसादतः ॥

क्षेत्रस्यास्य महादेवि रक्षार्थं तु मया पुरा ॥ ५ ॥

ततो नियुक्तो देवेशि यायिनां विघ्ननाशनः ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य आशापूरविघ्नराज माहात्म्यवर्णनंनामैकचत्शरिंशदुत्तर त्रिशततमोऽध्यायः ॥ ३४१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४२



॥ ईश्वर उवाच ॥ ॥

तस्य दक्षिणनैर्ऋत्ये नातिदूरे व्यवस्थितम् ॥

लिंगं पापहरं देवि स्वयं सोमप्रतिष्ठितम् ॥ १ ॥

तत्रैवामृतकुण्डं तु कलाकुण्डं तु तत्स्मृतम् ॥

तत्र स्नात्वा तु चंद्रेशं यो नरः पूजयिष्यति ॥ २ ॥

स तु वर्षसहस्रस्य तपःफलमवाप्स्यति ॥

तत्रैव संस्थितं देवि तडागं चंद्रनिर्मितम् ॥ ३ ॥

धनुःषोडशविस्तारं चंद्रेशात्पूर्वपश्चिमे ॥

तत्पूर्वं ते समाख्यातं मुक्तिदानादिपूर्वकम् ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्य आशापूरमाहात्म्ये चंद्रेश्वरकलाकुण्डतीर्थमाहात्म्यवर्णनंनाम द्विचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ॥ ३४२ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कपिलेश्वरमुत्तमम् ॥

शीराभूषणपूर्वेण कोटितीर्थाच्च पश्चिमे ॥१ ॥

जरद्गवेशाद्दक्षिणे समुद्रोत्तरतस्तथा ॥

एतद्वै कापिलं क्षेत्रं नापुण्यैः प्राप्यते नरैः ॥ २ ॥

कपिलेन पुरा देवि यत्र तप्तं तपो महत् ॥

वर्षाणामयुतं साग्रं प्रतिष्ठाप्य महेश्वरम् ॥ ३ ॥

समाहूता तत्र देवी कपिलधारा महानदी ॥

समुद्रमध्ये साऽद्यापि पुण्यवद्भिः प्रदृश्यते ॥ ४ ॥

तत्र स्नात्वा महादेवि कपिलाषष्ठ्यां विशेषतः ॥

कपिलां दापयेत्तत्र गोकोटिफलभाग्भवेत् ॥ ५ ॥

सर्वेषां चैव पापानां प्रायश्चित्तमिदं स्मृतम् ॥

कपिलेश्वरं तु संपूज्य कन्याकोटिफलं लभेत् ॥ ६ ॥

॥ देव्युवाच ॥ ॥

आश्चर्यं मम देवेश कपिलषष्ठ्या महेश्वर ॥

विधानं श्रोतुमिच्छामि दानमन्त्रादि पूर्वकम् ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

जन्मजीवितमध्ये तु यद्येका लभ्यते नरैः ॥

संयोगयुक्ता सा षष्ठी तत्किं देवि ब्रवीम्यहम् ॥ ८ ॥

प्रौष्ठपद्यसिते पक्षे षष्ठ्यामंगारको यदि ॥

व्यतीपातश्च रोहिण्यां सा षष्ठी कपिला स्मृता ॥९॥

तत्र क्षेत्रे नरः स्नात्वा अथवार्कस्थले शुभे ॥

मृदा शुक्ल तिलैश्चैव कपिलासंगमे शुभे ॥ 7.1.343.१० ॥

कृतस्नानजपः पश्चात्सूर्यायार्घ्यं निवेदयेत् ॥

रक्तचंदनतोयेन करवीरयुतेन च ॥

कृत्वार्घपात्रं शिरसि मंत्रेणानेन दापयेत् ॥ ११ ॥

नमस्त्रैलोक्यनाथाय उद्भासितजगत्त्रय ॥

वेदरश्मे नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते ॥ १२ ॥

सूर्यं प्रदक्षिणीकृत्य संपूज्य कपिलेश्वरम्॥

उपलिप्ते शुभे देशे पुष्पाक्षतविभूषिते ॥ १३ ॥

स्थापयेदव्रणं कुम्भं चन्दनोदकपूरितम् ॥

पंचरत्नसमायुक्तं दूर्वापुष्पाक्षतान्वितम्॥१४॥

रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतम् ॥

रथो रुक्मफलस्यैव एकचित्रविचित्रितः ॥ १५ ॥

सौवर्णपलसंयुक्तां मूर्तिं सूर्यस्य कारयेत्॥

कुंभस्योपरि संस्थाप्य गंधपुष्पैः समर्चयेत् ॥ १६ ॥

कपिलेश्वरसान्निध्ये मण्डपे होमसंस्कृते ॥

आदित्यं पूजयेद्देवं नामभिः स्वैर्यथोदितैः ॥ ॥ १७ ॥

आदित्यभास्कर रवे भानो स्वयं दिवाकर ॥

प्रभाकर नमस्तुभ्यं ससारान्मां समुद्धर ॥ १८ ॥

भुक्तिमुक्तिप्रदो यस्मात्तस्माच्छांतिं प्रयच्छ नः ॥१९॥

॥ प्रार्थनामन्त्रः ॥ ॥

नमोनमस्ते वरद ऋक्सामयजुषांपते ॥

नमोऽस्तुविश्वरूपाय विश्वधाम्ने नमोऽस्तु ते ॥7.1.343.२०॥

अमृतं देवि ते क्षीरं पवित्रमिह पुष्टिदम्॥

त्वत्प्रसादात्प्रमुच्यंते मनुजाः सर्वपातकैः ॥ २१ ॥

ब्रह्मणोत्पादिते देवि वह्निकुण्डान्महाप्रभे ॥

नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते ॥२२॥

सर्वदेवमये देवि सर्वतीर्थमये शुभे॥

दातारं पूजयानं मां ब्रह्मलोकं नय स्वयम्॥२३ ॥

॥ पूजामंत्रः ॥ ॥

एवं संपूज्य कपिलां कुम्भस्थं च दिवाकरम्॥

ब्राह्मणे वेदविदुष उभयं प्रतिपादयेत् ॥२४॥

व्यासाय सूर्यभक्ताय मंत्रेणानेन दापयेत् ॥२५॥

दिव्यमूर्त्तिर्जगच्चक्षु र्द्वादशात्मा दिवाकरः ॥

कपिलासहितो देवो मम मुक्तिं प्रयच्छतु ॥ २६ ॥

यस्मात्त्वं कपिले पुण्या सर्वलोकस्य पावनी ॥

प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव ॥ २७ ॥

पलेन दक्षिणा कार्या तदर्धार्धेन वा पुनः ॥

शक्तितो दक्षिणायुक्तां तां धेनुं प्रतिपादयेत् ॥ २८ ॥

योऽनेन विधिना कुर्या त्षष्ठीं कपिलसंज्ञिताम्॥

सोऽश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ २९ ॥

यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलम् ॥

तत्फलं सर्वमाप्नोति यः षष्ठीं कपिलां चरेत् ॥ 7.1.343.३० ॥

कपिलाकोटिसहस्राणि कपिलाकोटिशतानि च ॥

सूर्यपर्वणि यद्दत्त्वा तत्फलं कोटिशो भवेत् ॥ ३१ ॥

कोटिगोरोम संख्यानि वर्षाणि वरवर्णिनि ॥

तावत्स वसते स्वर्गे यः षष्ठीं कपिलां चरेत् ॥ ३२ ॥

ज्ञानतोऽज्ञानतो वापि यत्पापं पूर्वसंचितम् ॥

तत्सर्वं नाशमायाति इत्याह कपिलो मुनिः ॥३३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कपि लधाराकपिलेश्वरमाहात्म्ये कपिलाषष्ठीव्रतविधानमाहात्म्यवर्णनंनाम त्रिचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं पापप्रणाशनम् ॥

कपिलेश्वरस्यैशान्यामुत्तरेण व्यवस्थितम् ॥ १ ॥

जरद्गवेश्वरंनाम जरद्गवप्रतिष्ठितम् ॥

ब्रह्महत्यादि पापानां नाशनं नात्र संशयः ॥ २ ॥

तत्रैव संस्थिता देवि देवी अंशुमती नदी ॥

तत्र स्नात्वा विधानेन पिडदानं तु दापयेत् ॥ ३ ॥

वर्षकोटिशतं साग्रं पितॄणां तृप्तिमावहेत् ॥

वृषभस्तत्र दातव्यो ब्राह्मणे वेदपारगे ॥ ४ ॥

ततस्तु पूजयेद्देवं गन्धपुष्पैर्जरद्गवम् ॥

पञ्चामृतरसेनैव तथा गुग्गु लुधूपनैः ॥ ५ ॥

स्तुतिदण्डनमस्कारैः प्रदक्षिणैरहर्निशम् ॥

ब्राह्मणान्भोजयेत्तत्र भक्ष्यभोज्यैः पृथग्विधैः ॥

एकेन भोजितेनैव कोटिर्भवति भोजिता ॥ ६ ॥

कृते सिद्धोदकंनाम तत्तीर्थं परिकीर्त्तितम् ॥

जरद्गवेश्वरं तीर्थं कलौ तु परिकीर्त्यते ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्येंऽशुमतीमाहात्म्ये जरद्गवेश्वरमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं वै हाटकेश्वरम् ॥

जरद्गवात्पूर्वभागे धनुषां षष्टिभिस्त्रिभिः ॥ १ ॥

नाम्ना नलेश्वरं देवि स्थापितं तु नलेन वै ॥

दमयन्तीयुतेनैव ज्ञात्वा क्षेत्रं तदुत्तमम् ॥ २ ॥

तं दृष्ट्वा मानवो देवि पूजयित्वा विधानतः ॥ कलिभिर्मुच्यते जंतुर्द्यूते च विजयी भवेत् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये नलेश्वरमाहात्म्यवर्णनंनाम पञ्चचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४६



॥ ईश्वर उवाच ॥ ॥

तस्मादाग्नेयदिग्भागे स्थितः कर्कोटको रविः ॥

पूर्वकल्पे महादेवि स्मृतः कर्कोटकान्वितः ॥ १ ॥

तस्य दर्शनमात्रेण प्रीताः स्युः सर्वदेवताः ॥

सप्तम्यां रविवारेण धूप गंधानुलेपनैः ॥

पूजयेद्यो विधानेन मुच्यते सर्वकिल्बिषैः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कर्कोटकार्कमाहात्म्यवर्णनंनाम षटचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४६अ

https://sa.wikisource.org/s/gj5
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि लिंगं वै हाटकेश्वरम् ॥

नलेश्वरात्पूर्वभागे शतधन्वंतरद्वये ॥ १ ॥

अगस्त्याम्रवनंनाम तत्र स्थाने तु संस्थितम् ॥

चिंतामणेस्तु पूर्वेण ईशाने त्रिशतंधनुः ॥

तत्र पूर्वं तपस्तप्तमगस्त्येन महात्मना ॥ २ ॥

॥ देव्युवाच ॥ ॥

कस्मिन्काले महादेव सर्वं विस्तरतो वद ॥ ३ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

पुरा दैत्यगणा रौद्रा बभूवुर्वरवर्णिनि ॥

कालकेया इति ख्यातास्त्रैलोक्योच्छेदकारकाः ॥ ४ ॥

अथ ते निहताः सर्वे विष्णुना प्रभविष्णुना ॥

दैत्यसूदननाम्ना तु प्रभासक्षेत्रवासिना ॥ ५ ॥

कृत्वा व्याघ्रस्य रूपं तु नाम्ना चक्रमुखीति च ॥

हता वै तेन रूपेण ततोऽभूद्दैत्यसूदनः ॥ ६ ॥

हतशेषाः समुद्रांते प्रविष्टा भयविह्वलाः ॥

ततस्ते मंत्रयामासुः पीड्यंते देवताः कथम् ॥७॥

हन्यंतां धर्मिणो येऽत्र विद्यंते धर णीतले ॥

तपःस्वाध्यायनिरता यज्ञदानरताश्च ये ॥ ५ ॥

अथ ते समयं कृत्वा रात्रौ निष्क्रम्य सागरात् ॥

निर्जघ्नुस्तापसांस्तत्र यज्ञदानरतान्प्रिये ॥ ९ ॥

प्रभासे तु महादेवि तत्र द्वादशयोजने ॥

वसिष्ठस्याश्रमे तत्र महर्षीणां महात्मनाम् ॥ 7.1.346(2).१० ॥

भक्षितानि सहस्राणि पंच सप्त च तापसान् ॥

शतानि पंच रैभ्यस्य विश्वामित्रस्य षोडश ॥ ११ ॥

च्यवनस्य च सप्तैव जाबालेर्द्विशतं मुनेः ॥

वालखिल्याश्रमे पुण्ये षट्छतानि दुरात्मभिः ॥ १२ ॥

यत्र क्वचिद्भवेद्यज्ञस्तत्र गत्वा निशागमे ॥

यज्ञदानसमायुक्तानृत्विजो भक्षयंति च ॥ १३ ॥

ततो भयाकुलाः सर्वे बभूवुर्जगती तले ॥

न च कश्चिद्विजानाति दैत्यानां तु विचेष्टितम् ॥ १४ ॥

रात्रौ स्वपंति मुनयः सुखशय्यागताश्च ते ॥

प्रभाते त्वध्वरे तेषामस्थिसंघाश्च केवलम् ॥१५॥

ततो धर्मक्रियास्त्यक्ता भूतले सर्वमानवैः ॥

निःस्वाध्यायवषट्कारं भूतलं समपद्यत ॥ १६ ॥

अथान्ये तापसा रात्रौ संयुताश्च च धृतायुधाः ॥

अथोच्छेदं गते धर्मे पीडितास्त्रिदिवौकसः ॥ १७ ॥

किमेतदिति जल्पंतो ब्रह्माणं शरणं गताः ॥

भगवंस्तापसाः सर्वे तथा ये ज्ञानशीलिनः ॥ १८ ॥

भक्ष्यन्ते केनचिद्रात्रौ मृत्युमेव प्रयान्ति च ॥

नष्टधर्मक्रियाः सर्वे भूतले प्रपितामह ॥ १९ ॥

यो धर्ममाचरेदह्नि स रात्रौ मृत्युमेति च ॥

न स्वाध्यायवषट्कारं समस्ते भूतले विभो ॥ 7.1.346(2).२० ॥

धर्माभावाद्वयं सर्वे संदेहं परमं गताः ॥

तेषां तद्वचनं श्रुत्वा ध्यात्वा देवः पितामहः ॥

अब्रवीत्त्रिदशान्सर्वान्सन्देहं परमं गतान् ॥ २१ ॥

कालेया इति विख्याता दानवा रौद्रकारिणः ॥

ते समुद्रं समासाद्य तापसान्भक्षयंति च ॥ २२ ॥

युष्माकं च विनाशाय ते न शक्या निषूदितुम् ॥

यतध्वमेषां नाशाय नो चेन्नाशो भविष्यति ॥ २३ ॥

व्रजध्वं भूतले शीघ्रमगस्त्यो यत्र तिष्ठति॥

व्रतचर्यारतो नित्यं प्रभासे क्षेत्र उत्तमे ॥ २४ ॥

स शक्तः सागरं पातुं मित्रावरुणसंभवः ॥

प्रसाद्यश्च स युष्माभिः समुद्रं पिब सत्तम ॥ २५ ॥

ततस्तथा कृते तेन ते सर्वे दानवाधमाः ॥

वध्या युष्माकं भविष्यंति एवं च त्रिदिवेश्वराः ॥ २६ ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्ताः सुराः सर्वे ब्रह्मणा लोककारिणा ॥

प्रभासं क्षेत्रमासाद्य अगस्त्यं शरणं गताः ॥ २७ ॥

॥ देवा ऊचुः ॥ ॥

रक्षरक्ष द्विजश्रेष्ठ त्रैलोक्यं संशयं गतम् ।।

कालकेयैः प्रतिध्वस्तं समुद्रं समुपाश्रितैः ॥ २८ ॥

तं शोषय द्विजश्रेष्ठ हितार्थं त्रिदिवौकसाम् ॥

नान्यः शक्तः पुमान्कश्चित्कर्तुमीदृक्क्रिया विभो ॥ २९ ॥

॥ ईश्वर उवाच ॥ ॥

एवमुक्तः सुरगणैरगस्त्यो मुनिपुङ्गवः ॥

जगाम त्रिदशैः सार्धं समुद्रं प्रति हर्षितः ॥ 7.1.346(2).३० ॥

गीयमानस्तु गंधर्वैः स्तूयमानस्तु किन्नरैः ॥

श्लाघ्यमानस्तु विबुधैर्वाक्यमेतदुवाच ह ॥ ३१ ॥

एष त्रैलोक्यरक्षार्थं शोषयामि महार्णवम् ॥

द्रक्ष्यध्वं कौतुकं देवाः समीनमकरैर्महत् ॥ ३२ ॥

एवमुक्त्वा द्विजश्रेष्ठो ह्यगस्त्यो भगवान्मुनिः ॥

गंडूषमकरोत्सर्वं सागरं सरितांपतिम् ॥ ३३ ॥

पीते तत्र महासिन्धावगत्स्ये न महात्मना ॥

दानवा भयसंत्रस्ता इतश्चेतश्च बभ्रमुः ॥ ३४ ॥

वध्यमानाः सुरैस्तत्र शस्त्रैः सुनिशितैस्तथा ॥

कांतारमन्ये गच्छंतः पलायनपरायणा ॥ ३५ ॥

हतभूयेषु दैत्येषु विदार्य धरणीतलम् ॥

पातालं विविशुस्तूर्णं रुधिरेण परिप्लुताः ॥ ३६ ॥

अथोचुस्त्रिदशा हृष्टा अगस्त्यं मुनिसत्तमम् ॥

सिद्धं नो वांछितं सर्वं पूर्यतां सागरः पुनः ॥ ३७ ॥

॥ अगस्त्य उवाच ॥ ॥

जीर्णं तोयं मया देवास्तथैवामेध्यतां गतम् ॥

उत्पत्स्यति रघूणां हि कुले नृपतिसत्तमः ॥ ३८ ॥

भगीरथेति विख्यातः सर्वशस्त्रभृतां वरः ॥

स ज्ञातिकारणादेव गंगां तत्रानयिष्यति ॥ ३९ ॥

ब्रह्मलोकात्सरिच्छ्रेष्ठां तया पूर्णो भविष्यति॥

एवमुक्त्वा सुरैः सार्द्धं स्वस्थानं चागमन्मुनिः ॥ 7.1.346(2).४० ॥

ततः स्वमाश्रमं प्राप्तं देवा वाक्यमथाब्रुवन् ॥

अनेन कर्मणा ब्रह्मन्परितुष्टा वयं मुने ॥ ४१ ॥

किं कुर्मो ब्रूहि तेऽभीष्टं यद्यपि स्यात्सुदुर्लभम् ॥ ४२ ॥

॥ अगस्त्य उवाच ॥ ॥

यावद्ब्रह्मसहस्राणि पंचविंशतिकोटयः ॥

वैमानिको भविष्यामि दक्षिणांबरमूर्द्धनि ॥ ४३ ॥

अत्रागत्य नरो यस्तु ममाश्रमपदे शुभे ॥

हाटकेश्वरसांनिध्ये प्रभासक्षेत्र उत्तमे ॥ ४४ ॥

स्नानमाचरते सम्यक्स यातु परमां गतिम् ॥

पातालादवतीर्णं तं लिंगरूपं महेश्वरम् ॥ ४५ ॥

मया तपः प्रभावेन स्थापितं यः प्रपूजयेत् ॥

दिनेदिने भवेत्तस्य गोशतस्य फलं ध्रुवम् ॥ ४६ ॥

लोपामुद्रासहायं मां यो मर्त्यः संप्रपूजयेत् ॥

अर्घ्यं दद्याद्विधानेन काश पुष्पैः समाहितः ॥ ४७ ॥

प्राप्ते शरदि काले च स यातु परमां गतिम् ॥

लोपामुद्रासहायं मां हाटकेश्वरसंयुतम् ॥ ४८ ॥

अयने चोत्तरे पूज्य गोलक्ष फलमाप्नुयात् ॥

यः श्राद्धं कुरुते चात्र अयने चोत्तरे द्विजः॥

भूयात्तस्य फलं कृत्स्नं गयाश्राद्धस्य सत्तमाः ॥ ४९ ॥

॥ ईश्वर उवाच ॥ ॥

बाढमित्ये व ते चोक्त्वा सर्वे देवाः सवासवाः॥

स्वस्थानं तु गताः सर्वे संहृष्टमनसस्तदा ॥7.1.346(2).५०॥

तस्मात्सर्वप्रयत्नेन प्राप्ते शरदि मानवः॥

अगस्त्यस्याश्रमं गत्वा हाटकेशं प्रपूजयेत् ॥ ५१ ॥

अगस्त्येश्वरनामानं कल्पलिंगं सुरप्रियम् ॥

यश्चैतच्छुणुयाद्भक्त्या ऋषेस्तस्य विचेष्टितम्॥

अहोरात्रकृतात्पापात्तत्क्षणा देव मुच्यते ॥ ५२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये हाटकेश्वरमाहात्म्य वर्णनंनाम षट्चत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४६(?) ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४७

https://sa.wikisource.org/s/gj4
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि पश्चिमे नारदेश्वरीम् ॥

नारदेश्वरसांनिध्ये सर्वदौर्भाग्यनाशनीम् ॥ १ ॥

या नारी पूजयेद्देवीं तृतीयायां समाहिता ॥

तदन्वये न दौर्भाग्ययुक्ता नारी भविष्यति ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये नारदेश्वरीमाहात्म्यवर्णनंनाम सप्तचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवीं मंत्रविभूषणाम् ॥

भीमेश्वरस्य सान्निध्ये सोमेनाराधितां पुरा ॥ १ ॥

श्रावणे मासि विधिना या नारी तां प्रपूजयेत् ॥

तृतीयायां शुक्लपक्षे सा दुःखैर्मुच्यतेऽखिलैः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मन्त्रविभूषणागौरी माहात्म्यवर्णनंनामाष्टाचत्वारिंशदुत्तरत्रिशततमोऽध्यायः ॥ ३४८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३४९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि विश्वेशं दुर्गकूटकम् ॥

भल्लतीर्थस्य पूर्वेण योगिनीचक्रदक्षिणे ॥ १ ॥

आराधितोऽसौ भीमेन सर्वकामप्रदोऽभवत् ॥

फाल्गुनस्य चतुर्थ्यां तु शुक्लपक्षे विधानतः ॥ ॥ २ ॥

यस्तं पूजयते देवं गन्धपुष्पैः समोदकैः ॥

निर्विघ्नं जायते तस्य वर्षमेकं न संशयः ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये दुर्गकूटगणपतिमाहात्म्यवर्णनंनामैकोनपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३४९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५०



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तस्माद्वै कौरवेश्वरीम् ॥

यस्य नाम्ना कुरुक्षेत्रं तेन साराधिता पुरा ॥ १ ॥

आराधिताऽसौ भीमेन कृत्वा क्षेत्रस्य रक्षणम् ॥

महानवम्यां यत्नेन यस्तां पूजयते नरः ॥

तं पुत्रमिव कल्याणी रक्षते नात्र संशयः ॥ २ ॥

भोजनं तत्र दातव्यं दंपतीनां न संशयः ॥

दिव्यैर्भक्ष्यैः सुमिष्टान्नैः सा तुष्यति ततः स्तुता ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कौरवेश्वरीमाहात्म्यवर्णनंनाम पञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५१



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि सुपर्णेलां च भैरवीम् ॥

दुर्गकूटाद्दक्षिणतो धनुःपंचशतांतरे ॥ १ ॥

सुपर्णेन पुरा देवि पातालादमृतं हृतम् ॥

गृहीत्वा तत्र मुक्तं तु नागानां पश्यतां किल ॥ २ ॥

ततो देव्या तदा दृष्ट्वा रक्षितं नागपार्श्वतः ॥

ततः सुपर्णेलेत्येवं ख्याता सा वसुधातले ॥ ३ ॥

इला तु कथ्यते भूमिः सुपर्णेन प्रतिष्ठिता ॥

ततः सुपर्णेलेत्येव नाम्ना पातकनाशिनी ॥ ४ ॥

सुपर्णकुण्डे तत्रैव स्नात्वा तां पूजयेन्नरः ॥

विप्रेभ्यो भोजनं दद्यान्नापद्भिर्म्रियते नरः ॥

जीववत्सा भवेन्नारी आत्मजैश्चाप्यलंकृता ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये सुपर्णेलामाहात्म्यवर्णनंनामैकपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥३५१॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५२

https://sa.wikisource.org/s/gja
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि भल्लतीर्थमनुत्तमम् ॥

तस्याश्च पश्चिमे भागे यत्र विष्णुश्चतुर्भुजः ॥ १ ॥

यत्र त्यक्तं शरीरं तु विष्णुना प्रभविष्णुना ॥

तस्मिन्मित्रवने रम्ये योजनार्द्धार्द्धविस्तृते ॥ २ ॥

युगेयुगे महादेवि कल्पमन्वतरादिषु ॥

तत्रैव संस्थितिर्विष्णोर्नान्यत्र च रतिर्भवेत् ॥ ३ ॥

क्षेत्राणामादिक्षेत्रं तु वैष्णवं तद्विदुर्बुधाः॥

तिस्रः कोट्यर्द्धकोटिश्च तीर्थानां प्रवराणि च॥ ४ ॥

दिवि भुव्यंतरिक्षे च तानि तत्रैव भामिनि॥

तत्र मूर्तिमती गंगा स्वयमेव व्यवस्थिता ॥ ५ ॥

विष्णोः संप्लवनार्थाय प्राणिनां च हिताय वै ॥

गंगा गया कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ ६ ॥

पुरी द्वारवतीं त्यक्त्वा अत्रैव वसते हरिः ॥

तस्यौर्ध्वदैहिकं देवि प्रकरोमि युगेयुगे ॥ ७ ॥

नभस्ये द्वादशीयोगे तत्र गत्वा स्वयं प्रिये ॥

करोमि तद्विधानेन तत्र ब्राह्मणपुंगवैः ॥ ८ ॥

तत्र दत्त्वा तु दानानि विधिवद्वेदपारगे ॥

तत्रैव द्वादशीयोगे स्नात्वा चैव विधानतः ॥ ९ ॥

सन्तर्प्य च पितॄन्भक्त्या मुच्यते सर्वपातकैः ॥

तत्र विष्णुं तु संपूज्य कृत्वा जागरणं निशि ॥ 7.1.352.१० ॥

दीपादिदानं कृत्वा तु कृतकृत्योऽभिजायते ॥ ११ ॥

अथ तस्य प्रवक्ष्यामि पुरावृत्त महं प्रिये ॥

संहृत्य यादवान्सर्वान्वासुदेवः प्रतापवान् ॥ १२ ॥

दुर्वाससाऽनुलिप्तेन पायसेन पदस्तले ॥
वज्रांगभूतदेहस्तु सर्वव्यापी जनार्द्दनः ॥ ॥ १३ ॥
गत्वा तीरे समुद्रस्य समाधिस्थो बभूव ह ॥
सर्वस्रोतांसि संयम्य निवेश्यात्मानमात्मनि ॥ १४ ॥
एतस्मिन्नंतरे प्राप्तो बाणहस्तो जराभिधः ॥
दाशपुत्रोऽतिकृष्णांगो मत्स्यघाती च पापकृत् ॥ १५ ॥
तेन दृष्टस्ततो दूरान्निषादात्मसमुद्भवः ॥
विष्णोः पदं मृगं मत्वा शरं तस्य मुमोच ह ॥ १६ ॥
ततोऽसौ पश्यते यावद्गत्वा तस्य च संनिधौ ॥
चतुर्बाहुं महाकायं शंखचक्रगदाधरम् ॥ १७ ॥
पुरुषं नीलमेघाभं पुडरीकनिभे क्षणम् ॥
तं दृष्ट्वा भयभीतस्तु वेपमानः कृतांजलिः ॥
अब्रवीन्न मया ज्ञातस्त्वं विभो दिव्यरूपधृक् ॥ १८ ॥
अज्ञानात्त्वं मया विद्धस्त्वत्पदाग्रे सुरोत्तम ॥
क्षन्तुमर्हसि मे नाथ न त्वं क्रोद्धुमिहार्हसि ॥ १९ ॥
॥ विष्णुरुवाच ॥ ॥
शापस्यांतोद्य मे भद्र शरपातात्कृतस्त्वया ॥
तस्मात्त्वं मत्प्रसादेन स्वर्गं गच्छ महाद्युते ॥ 7.1.352.२० ॥
ये चान्ये मामिहागत्य द्रक्ष्यंति हि नरोत्तमाः ॥
ते यास्यंति परं स्थानं यत्राहं नित्यसंस्थितः ॥ २१ ॥
भल्लेनाहं यतो विद्धस्त्वया पादतले शुभे ॥
भल्लतीर्थमिति ख्यातं ततो ह्येतद्भविष्यति ॥ २२ ॥
हरिक्षेत्रमिति प्रोक्तं पूर्वं स्वायंभुवेऽन्तरे ॥ २३ ॥
॥ ईश्वर उवाच ॥ ॥
इत्युक्त्वांतर्दधे विष्णुर्लुब्धकोऽपि दिवं गतः ॥
येऽत्र स्नानं करिष्यंति भक्त्या परमया युताः ॥
विष्णुलोकं गमिष्यंति प्रीत्या ते मत्प्रसादतः ॥ २४ ॥
येऽत्र श्राद्धं करिष्यंति पितृभक्तिपरायणाः ॥

तृप्तिं तेषां गमिष्यंति पितरश्चैव तर्पिताः ॥ २५ ॥

तस्मात्सर्वप्रयत्नेन प्राप्य तत्क्षेत्रमुत्तमम् ॥

दृश्यो देवश्चतुर्बाहुः स्नात्वा तीर्थे तु भल्लके ॥ २६ ॥

मद्भक्तिबलदर्पिष्ठा मत्प्रियं न नमंति ये ॥

वासुदेवं न ते ज्ञेया मद्भक्ताः पापिनो हि ते॥२७॥

मद्भक्तोऽपि हि यो भूत्वा भुंक्त एकादशीदिने॥

मल्लिंगस्यार्चनं कार्यं न तेन पापबुद्धिना॥२८॥

या तिथिर्दयिता विष्णोः सा तिथिर्मम वल्लभा॥

न तां चोपोषयेद्यस्तु स पापिष्ठतराधिकः॥२९॥

तद्वत्स द्वादशीयोगे भल्लतीर्थस्य संनिधौ॥

यस्तु मां पूजयेद्भक्त्या नारी वाऽपि नरोऽपि वा ॥

तस्य जन्मसहस्राणि गृहभंगो न जायते॥7.1.352.३०॥

इत्येतत्कथितं देवि माहात्म्यं पापनाशनम्॥

भल्लतीर्थस्य विष्णोस्तु सर्व पातकनाशनम् ॥३१॥

तत्र विष्णोस्तु सांनिध्ये वायव्ये कुम्भमुत्तमम्॥

भल्लतीर्थं तु विख्यातं यत्र भल्लहतो हरिः ॥३२॥

तत्र देयानि वासांसि पदं गावो विधानतः ॥

देयानि विप्रमुख्येभ्यः सम्यग्यात्राफलेप्सुभिः॥३३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये भल्लतीर्थमाहात्म्यवर्णनंनाम द्विपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥३५२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि कर्दमालमनुत्तमम् ॥

तीर्थं त्रैलोक्यविख्यातं सर्वपातकनाशनम् ॥ १ ॥

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजंगमे ॥

चन्द्रार्कतपने नष्टे ज्योतिषि प्रलयं गते ॥ २ ॥

रसातलगतामुर्वीं दृष्ट्वा देवो जनार्दनः ॥

वाराहं रूपमास्थाय दंष्ट्राग्रेण वरानने ॥

उत्क्षिप्य धरणीं मूर्ध्ना स्वस्थाने संन्यवेशयत् ॥ ३॥

उद्धृत्य भगवान्विष्णुर्वाक्यमेतदुवाच ह ॥ ४ ॥

अत्र स्थाने स्थितेनैव मया त्वं देवि चोद्धृता ॥

ममात्र नियतं वासः सदैवायं भविष्यति ॥ ५ ॥

ये पितॄंस्तर्पयिष्यंति कर्दमाले वरानने ॥

आकल्पं तर्पितास्तेन भविष्यंति न संशयः ॥ ६ ॥

तत्र श्राद्धं करिष्यंति शाकैर्मूलफलेन वा ॥

भविष्यति कृतं श्राद्धं सर्वतीर्थेषु वै शुभे ॥ ७ ॥

अत्र तीर्थे नरः स्नात्वा यो मां पश्यति मानवः ॥

अपि कीटपतंगा ये निधनं यांति मानवाः ॥

ते मृतास्त्रि दिवं यान्ति सुकृतेन यथा द्विजाः ॥ ८ ॥

ततो द्वीपेषु जायन्ते धनाढ्याश्चोत्तमे कुले ॥

दंष्ट्राभेदेन यत्तोयं निर्गतं ते शरीरतः ॥ ९ ॥

तत्र स्नात्वा नरो देवि तिर्यग्योनौ न जायते ॥ 7.1.353.१० ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि यथावृत्तमाश्चर्यं तत्र वै पुरा ॥

मृगयूथं सुसन्त्रस्तं लुब्धकैः परिपीडितम् ॥

प्रविष्टं कर्दमाले तु सद्यो मानुषतां गतम् ॥ ११ ॥

अथ ते लुब्धका दृष्ट्वा विस्मयोत्फुल्ललोचनाः ॥

अपृच्छंत च संभ्रातास्तान्मर्त्यान्वरवर्णिनि ॥ १२ ॥

मृगयूथमनुप्राप्तं केन मार्गेण निर्गतम् ॥

अथोचुस्ते वयं प्राप्ता मानुषं मृगरूपिणः ॥ १३ ॥

एतत्तीर्थप्रभावोऽयं न विद्मो ह्यात्म कारणम् ॥

ततस्ते लुब्धकास्त्यक्त्वा धनूंषि सशराणि च ॥

तत्र स्नात्वा महाभागे मुक्ताश्च सर्वपातकैः ॥ १४ ॥

॥ पार्वत्युवाच ॥ ॥

भगवन्विस्तरं ब्रूहि कर्दमालमहोदयम् ॥

उत्पत्तिं च विधानं च क्षेत्रसीमादिकं क्रमात् ॥ १५ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि रहस्यं तु कर्द मालसमुद्भवम् ॥

गूढं ब्रह्मर्षिसर्वस्वं न देयं कस्यचित्त्वया ॥ १६ ॥

पूर्वमेकार्णवे घोरे नष्टे स्थावरजंगमे ॥

चन्द्रार्कपवने नष्टे ज्योतिषि प्रलयं गते ॥ १७ ॥

एकार्णवं जगदिदं ब्रह्मापश्यदशेषतः ॥

तस्मिन्वसुमती मग्ना पातालतलमागता ॥ १८ ॥

ततो यज्ञवराहोऽसौ कृत्वा यज्ञमयं वपुः ॥

उद्दधार महीं कृत्स्नां दंष्ट्राग्रेण वरानने ॥ १९ ॥

॥ ईश्वर उवाच ॥

॥ वेदपादो यूपदंष्ट्रः क्रतुदंतःस्रुचीमुखः ॥
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षा महातपाः ॥ 7.1.353.२० ॥

॥ ईश्वर उवाच ॥
अहोरात्रेक्षणपरो वेदांगश्रुतिभूषणः ॥
आज्यनासः स्रुवतुडः सामघोषस्वनो महान् ॥ २१ ॥
प्राग्वंशकायो द्युतिमान्मात्रादीक्षाभिरावृतः ॥
दक्षिणा हृदयो योगी महासत्रमहो महान् ॥ २२ ॥
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥
नानाच्छन्दोगतिपथो ब्रह्मोक्तक्रमविक्रमः ॥२३ ॥
भूत्वा यज्ञवराहोऽसावुद्दधार महीं ततः ॥
तस्योद्धृतवतः पृथ्वीं दंष्ट्राग्रं निर्गतं बहिः ॥ २४ ॥
तस्मिन्प्राभासिके क्षेत्रे कर्द्दमेन विलेपितम् ॥
तद्दंष्ट्राग्रं यतो देवि कर्द्दमालं ततः स्मृतम् ॥ २५ ॥
दण्डोद्भेदं महाकुण्डं यत्र दंष्ट्रा सुसंस्थिता ॥
तद्दंष्ट्रयोद्धृतं तोयं कोटिगंगाभिषेकवत् ॥ २६ ॥
तत्र गव्यूति मात्रं तु विष्णुक्षेत्रं सनातनम् ॥
देशांतरं गता ये च दण्डोद्भेदे म्रियंति वै ॥
यावत्कल्पसहस्राणि विष्णुलोकं व्रजंति ते ॥२७॥
यस्तु पश्येन्महादेवि कर्दमाले तु सूकरम् ॥
कोटिहिंसायुतो वापि स प्राप्स्यति परां गतिम् ॥ २८ ॥
दशजन्मकृतं पापं नश्येत्तद्दर्शनात्प्रिये ॥
जन्मान्तरसहस्रेषु यत्कृतं पापसंचयम् ॥ २९ ॥
कर्दमाले तु वाराहं दृष्ट्वा तन्नाशमेष्यति ॥
हेमकोटिसहस्राणि गवां कोटिशतानि च ॥ 7.1.353.३० ॥
दत्त्वा यल्लभते पुण्यं सकृद्वाराहदर्शनात् ॥
कलौ युगे महारौद्रे प्राणिनां च भयावहे ॥
नान्यत्र जायते मुक्तिर्मुक्त्वा क्षेत्रं तु सौकरम् ॥ ३१ ॥
एतत्सारतरं देवि प्रोक्तमुद्देशतस्तव ॥
कर्द्दमालस्य माहात्म्यं सर्वपातकनाशनम् ॥ ३२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कर्द्दमालमाहात्म्यवर्णनंनाम त्रिपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥३५३ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५४





॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवगुप्तेश्वरं प्रिये ॥

तत्र पश्चिमवायव्ये यत्र सोमोऽकरोत्तपः ॥ १ ॥

गुप्तो भूत्वा कुष्ठरोगाल्लज्जयाधोमुखः स्थितः ॥

दिव्यं वर्षसहस्रं तु प्रभासक्षेत्र उत्तमे ॥ २ ॥

ततः प्रत्यक्षतां यातः सर्वदेवपतिः शिवः ॥

तुष्टो बभूव चंद्रस्य क्षयनाशं तथाऽकरोत् ॥ ३ ॥

क्षयरोगविनिर्मुक्तस्ततोऽभून्मृगलांछनः ॥

प्रतिष्ठाप्य महालिंगं सुरासुरनमस्कृतम् ॥ ४ ॥

गुप्तस्तेपे तपो यस्मात्तस्माद्गुप्तेश्वरः स्मृतः ॥

सर्वकुष्ठहरो देवो दर्शनात्स्पर्शनादपि ॥ ५ ॥

सोमवारे विशेषेण यस्तल्लिंगं प्रपूजयेत् ॥

तस्यान्वयेऽपि देवेशि कुष्ठी कश्चिन्न जायते ॥ ६ ॥

इति श्रीस्कान्दे महा पुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये गुप्तेश्वरमाहात्म्यवर्णनंनाम चतुष्पञ्चाशदुत्तरत्रिशततमो ऽध्यायः ॥ ३५४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि देवं बहुसुवर्णकम् ॥

हिरण्यापूर्वदिग्भागे स्थाने बहुसुवर्णके ॥ १ ॥

धर्मपुत्रेण यत्रैव कृतो यज्ञः सुदुष्करः ॥

नाम्ना बहुसुवर्णेति स्थाप्य लिंगं महाप्रभम् ॥ २ ॥

सर्वक्रतूनां फलदं नाम्ना सर्वेश्वरं विदुः ॥

तत्रैव संस्थितं लिंगं पूर्णं सारस्वतैर्जलैः ॥ ३ ॥

स्नात्वा तत्र वरारोहे पिण्डदानं ददाति यः ॥

कुलकोटिं समुद्धृत्य रुद्रलोके महीयते ॥ ४ ॥

यस्तं पूज यते भक्त्या गन्धपुष्पैर्विधानतः ॥

कोटिपूजाफलं तस्य तथेत्याह सदाशिवः ॥ ५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये बहुसुवर्णेश्वरमाहात्म्यवर्णनंनाम पञ्चपञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५६



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि शृंगेश्वरमनुत्तमम् ॥

शुकस्थानस्य सान्निध्ये सर्वपातकनाशनम् ॥ १ ॥

स्नात्वा तत्रैव विधिवच्छृंगेशं पूजयेन्नरः ॥

मुक्तः स्यात्पातकैः सर्वैर्ऋष्यशृंगो यथा पुरा ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शृंगेश्वरमाहात्म्यवर्णनंनाम षट्पञ्चाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५७



॥ ईश्वर उवाच ॥ ॥

तस्मादीशानदिग्भागे तत्कोटिनगरं स्मृतम् ॥

तस्य दक्षिणदिग्भागे स्थितं योजनमात्रकम् ॥

कोटीश्वरं महालिंगं कोटियज्ञफलप्रदम् ॥ १ ॥

स्नात्वा तत्र विधानेन यस्तल्लिंगं प्रपूजयेत् ॥

स मुक्तः पातकैः सर्वैः कोटियज्ञफलं लभेत् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कोटीश्वरमाहात्म्यवर्णनंनाम सप्तपंचाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५८



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि तीर्थं नारायणाभिधम् ॥

तस्यैवेशानदिग्भागे वापी शांडिल्यकीर्तिता ॥ १ ॥

स्नात्वा तत्रैव विधिवच्छांडिल्यं यः प्रपूजयेत् ॥

ऋषिपंचम्यां विधिना नारी चैव पतिव्रता ॥

स्पृष्ट्वास्पृष्ट्वा विमुच्येत रजोदोषभयाद्ध्रुवम् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये नारायणतीर्थमाहात्म्यवर्णनंनामा ष्टापंचाशदुत्तरत्रिशततमोऽध्यायः ॥ ३५८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३५९



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि स्थानं शृंगसरोऽभिधम् ॥ १ ॥

शृंगारेश्वरनामा च तत्र देवः प्रतिष्ठितः ॥

शृङ्गारं विधिवच्चक्रे यत्र गोपीयुतो हरिः ॥ २ ॥

शृङ्गारेश्वरनामा च तेन पापौघनाशनः ॥

पूजयेद्यो विधानेन तत्र स्थाने स्थितं भवम् ॥

दारिद्र्यदुःखसंयुक्तो न स भूयाद्भवे क्वचित् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये शृंगारेश्वरमाहात्म्यवर्णनंनामैकोनषष्ट्युत्तरत्रिशततमोऽध्यायः ॥ ३५९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६०



॥ ॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्यातटसंस्थितम् ॥

घटिकास्थानमिति च यत्र सिद्धः पुरा ऋषिः ॥ १ ॥

नाड्यैकया मृकण्डस्तु ध्यानयोगाद्वरानने ॥

तत्रैव स्थापितं लिंगं मार्कंडेश्वरनामतः ॥

सर्वपापोपशमनं दर्शनात्पूजनादपि ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये मार्कंडेश्वरमाहात्म्यवर्णनंनाम षष्ट्युत्तर त्रिशततमोऽध्यायः ॥ ३६० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६१

https://sa.wikisource.org/s/gji
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मण्डूकेश्वरमित्यपि ॥

मांडूक्यायननाम्ना वै लिंगं तत्र प्रतिष्ठितम् ॥ १ ॥

तत्र कोटिह्रदो देवि तथा कोटीश्वरः शिवः ॥

तत्र मातृगणश्चैव स्थितः कामफलप्रदः ॥ २ ॥

स्नात्वा कोटि ह्रदे तीर्थे तल्लिंगं यः प्रपूजयेत् ॥

मातॄस्तत्रैव संपूज्य दुःखशोकाद्विमुच्यते ॥ ३ ॥

तस्मात्पूर्वेण देवेशि योजनैकेन निर्मलम् ॥

त्रितकूपेति विख्यातं सर्वपातकनाशनम् ॥

सर्वेषां देवि तीर्थानां यत्तत्रैव व्यवस्थितिः ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये कोटिह्रद मण्डूकेश्वरमाहात्म्य वर्णनं नामैकषष्ट्युत्तरत्रिशततमोऽध्यायः ॥ ३६१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि गोष्पदस्योत्तरे स्थितम् ॥

गव्यूतिद्वितयेनैव वलाय इति विश्रुतम् ॥ १ ॥

तत्रैकादशरुद्राणां स्थानलिंगान्यपि प्रिये ॥

अजैकपादहिर्बुध्न्यः संतीत्यादीनि नामतः ॥

पूजयेत्तानि विधिवन्मुच्यते सर्वपातकैः ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्य एकादशरुद्रलिंगमाहात्म्यवर्णनंनाम द्विषष्ट्युत्तरत्रिशततमोऽध्यायः ॥ ३६२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६३



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्यातटसंस्थितम् ॥

स्थानं तुण्डपुरंनाम यत्रासौ घर्घरो ह्रदः ॥ १ ॥

तत्र कन्देश्वरो देवो यत्र बद्धा जटा मया ॥

तत्र स्नात्वा नरः सम्यक्तं देवं यः प्रपूजयेत् ॥

स मुक्तः पातकैर्घोरैः प्राप्नुयाच्छासनं शुभम् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये हिरण्यातुण्डपुर घर्घरह्रदकन्देश्वर माहात्म्यवर्णनंनाम त्रिषष्ट्युत्तरत्रिशतत मोऽध्यायः ॥३६३॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६४



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि संवर्तेश्वरमुत्तमम् ॥

इन्द्रेश्वरात्पश्चिमतः पूर्वतश्चार्कभास्करात ॥ १ ॥

तं दृष्ट्वा तु महादेवं स्नात्वा पुष्करिणीजले ॥

दशानामश्वमेधानां फलमाप्नोति मानवः ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये संवर्तेश्वरमाहात्म्यवर्णनंनाम चतुष्षष्ट्युत्तरत्रिशततमोऽध्यायः ॥ ३६४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/प्रभासक्षेत्र माहात्म्यम्/अध्यायः ३६५

https://sa.wikisource.org/s/gjm
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | प्रभासक्षेत्र माहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि हिरण्यायाश्च उत्तरे ॥

सिद्धिस्थानानि दिव्यानि यत्र सिद्धा महर्षयः ॥ १ ॥

तत्र लिंगान्यनेकानि शक्यंते कथितुं न हि ॥

साग्रं शतं पुनस्तत्र लिंगानां प्रवरं स्मृतम् ॥२॥

वज्रिण्यास्तु तटे देवि लिंगान्येकोनविंशतिः ॥

न्यंकुमत्यास्तटे देवि सहस्रं द्विशताधिकम् ॥ ३ ॥

प्राधान्येन वरारोहे पूर्वे स्वायंभुवेंऽतरे ॥

कपिलायास्तटेदेवि लिंगानां षष्टिरुत्तमा ॥ ४ ॥

सरस्वत्यां पुनस्तत्र लिंगसंख्या न विद्यते ॥

एवं पंचमुखा देवि लिंगमाला विभूषिता ॥ ५ ॥

प्रभासे कथिता देवि पंचस्रोताः सरस्वती ॥

यस्याः प्रवाहैः संभिन्नं क्षेत्रं द्वादशयोजनम् ॥ ॥ ६॥

तत्र वापीषु कूपेषु यत्र तत्रोद्भवं जलम् ॥

सारस्वतं तु तज्ज्ञेयं ते धन्या ये पिबंति तत् ॥ ७ ॥

यत्रतत्र नरः स्नात्वा सम्यक्छ्रद्धासमन्वितः ॥

सारस्वतस्नानफलं लभते नात्र संशयः ॥ ८ ॥

यत्प्रोक्तं स्पर्शलिंगं तु श्रीसोमेशेति विश्रुतम् ॥

प्रभासक्षेत्रलिंगानां कला तस्यैव शांकरी ॥९ ॥

यद्वा तद्वा पूजयित्वा लिंगं क्षेत्रस्य मध्यगम् ॥

श्रीसोमेशमिति ज्ञात्वा सोमेशः पूजितो भवेत् ॥7.1.366.१०॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये प्रकीर्णस्थानलिंगमाहात्म्यवर्णनंनाम पंचषष्ट्युत्तरत्रिशततमोऽध्यायः ॥ ३६५ ॥

इति श्रीस्कान्दे महापुराणे सप्तमे प्रभासखण्डे प्रथमं प्रभासक्षेत्र माहात्म्यं सम्पूर्णम् ॥ ( ७-१) ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०१



॥ श्रीगणेशाय नमः ॥

श्रीसरस्वत्यै नमः ॥

॥ अथ श्रीस्कादे महापुराणे सप्तमे प्रभासखण्डे द्वितीयं श्रीवस्त्रापथक्षेत्रमाहात्म्यं प्रारभ्यते ॥ ॥

॥ ईश्वर उवाच ॥ ॥

अथ ते संप्रवक्ष्यामि क्षेत्रगर्भं महोदयम् ॥

तद्वस्त्रापथमाहात्म्यं यत्र रैवतको गिरिः ॥ १ ॥

दामोदरं रैवतके भवं वस्त्रापथे तथा ॥

एतद्रैवतकं क्षेत्रं वस्त्रापथमिति स्मृतम् ॥ २ ॥

सुवर्णरेवा यत्रस्था नदी पातकनाशनी ॥

यत्र साक्षात्स्थितः कृष्णो दामोदर इति स्मृतः ॥ ३ ॥

यत्र स्थितं मृगीकुण्डं महापातकनाशनम् ॥

सकृच्छ्राद्धे कृते यत्र कल्पकोटिसहस्रकम् ॥

पितॄणां जायते तृप्तिरपुनर्भवकांक्षिणी ॥ ४ ॥

॥ देव्युवाच ॥ ॥

भगवन्विस्तराद्ब्रूहि दामोदरमहोदयम् ॥

क्षेत्रगर्भस्य माहात्म्यं कर्णिकारूपसंस्थितम् ॥ ५ ॥

॥ ईश्वर उवाच ॥ ॥

शृणु देवि प्रवक्ष्यामि दामोदरहरिं प्रति ॥

इतिहासं पुराख्यातमृषिभिः कल्पवासिभिः ॥ ६ ॥

गंगातीरे शुभे रम्ये पुण्ये जनपदाकुले ॥

ऋषिभिः सेविते नित्यं स्वर्गमार्गप्रदे ध्रुवम् ॥ ७ ॥

तत्र ज्ञानविदो विप्रा यजंति विविधैर्मखैः ॥

ऋषयः सांख्ययोगेन दानेनैवेतरे जनाः ॥ ८ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा स्वर्गमभीप्सवः ॥
सेवंते तज्जलं दिव्यं देवानामपि दुर्लभम् ॥ ९ ॥
तत्र राजा गजोनाम बली सर्वजनाधिपः ॥
गंगाजलाभिषेकार्थं त्यक्त्वा राज्यं जगाम ह ॥ 7.2.1.१० ॥
भार्या तस्य सती साध्वी पुत्रिणी रूपसंयुता ॥
साऽप्ययात्सह तेनैव भर्त्रा वै भर्तृवत्सला ॥ ११ ॥
संगता नाम नाम्ना च दक्षा दाक्षायणी यथा ॥
एवं निवसतोस्तत्र वर्षाणामयुतं गतम् ॥ १२ ॥
आजगाम ऋषिस्तत्र भद्रोनाम महायशाः ॥
सहितो बहुभिर्विप्रैर्जपहोमपरायणैः ॥ १३ ॥
त्यक्त्वा संसारमार्गं तु स्वर्गमार्गजिगीषवः ॥
गंगानिषेवणं कृत्वा स्फोटयित्वाऽऽत्मजं मलम् ॥ १४ ॥
जलं दत्त्वा तु भूतेभ्यः पूजयित्वा जनार्द्दनम्॥
यावद्यांति नदीतीर ऋषयो भद्रकादयः ॥
तावत्पश्यंति राजानं गजं वरगजोपमम् ॥१५॥
तेनैव दृष्टा मुनयो राज्ञा निहतकल्मषाः ॥
सप्तर्षयो यथा स्वर्गे सुरराजेन धीमता ॥१६॥
तमृषिं स च संप्रेक्ष्य पदानि दश पंच च ॥
आगच्छन्त्वत्र पूजार्हा भवतो मम मन्दिरम्॥ १७ ॥
पश्यंतु संगतां सर्वे मम भार्यां यशस्विनीम् ॥
तस्याः पूजां समादाय यो मार्गो मनसि स्थितः ॥ १८ ॥
तं गच्छध्वं महाभागाः पुण्याः पुण्यमभीप्सवः ॥
एवमुक्तास्तु ते राज्ञा ऋषयः कौतुकान्विताः ॥
आजग्मुर्मंदिरं शुभ्रं पुरंदरपुरोपमम् ॥ १९ ॥
आसनानि विचित्राणि दत्त्वा तेषां मनस्विनी ॥
संगता राजराजेन सार्द्धमग्रे व्यवस्थिता ॥7.2.1.२०॥
कृत्वा करपुटं राजा ऋषीणां पुण्यकर्मणाम् ॥
बभाषे वचनं राजा भद्रो भद्रं सुसंगतम्॥२१॥

वसुधा वसुसंपूर्णा मंडिता नगरी पुरी ॥
पर्वतैश्च समुद्रैश्च सरिद्भिश्च सरोवरैः ॥२२॥
ग्रामैश्चतुष्पथैर्घोरैर्गोकुलैराकुलीकृता ॥
नररत्नैरश्वरत्नैर्गजरत्नैस्तु संकुला ॥ २३ ॥
दुस्त्यजा भोगभोक्तृणां परं ज्ञानमजानताम् ॥
संसारेऽत्र महाघोरे पुनरावृत्तिकारिणि ॥ २४ ॥
पतंति पुरुषा भद्र पत्राणीव पुनःपुनः ॥
कृतेन येन विप्रेंद्र स्वर्गं प्राप्नोति निर्मलम् ॥
दानेन तपसा चैव तत्त्वमा चक्ष्व सुव्रत ॥ २५ ॥
॥ भद्र उवाच ॥ ॥
तीर्थानि तोयपूर्णानि देवाः पाषाणमृन्मयाः ॥
आत्मस्थं ये न पश्यंति ते न पश्यंति तत्परम् ॥ २६ ॥
संति तीर्थान्यनेकानि पुण्यान्यायतनानि च ॥
पुण्यतोया पवित्रश्च सरितः सागरास्तथा ॥
बहुपुण्यप्रदा पृथ्वी स्थानेस्थाने पदेपदे ॥ २७ ॥
यद्यस्ति तव राजेंद्र ज्ञानं ज्ञानवतां वर ॥
विष्णुं जिष्णुं हृषीकेशं शंखिनं गदिनं तथा ॥ २८ ॥
चतुर्भुजं महाबाहुं प्रभासे दैत्यसूदनम् ॥
वाराहं वामनं चैव नारसिंहं बलार्जुनम् ॥ २९ ॥
रामं रामं च रामं च पुरुषोत्तममेव च ॥
पुंडरीकेक्षणं चैव गदापाणिं तथैव च ॥ 7.2.1.३० ॥
राघवं शक्रदमनं गोविंदं बहुपुण्यदम् ॥
जयं च भूधरं चैव देवदेवं जनार्द्दनम् ॥ ३१ ॥
सुरोत्तमं श्रीधरं च हरिं योगीश्वरं तथा ॥
कपिलेशं भूतनाथं श्वेतद्वीपपतिं हरिम् ॥ ३२ ॥
बदर्याश्रमवासौ च नरनारायणौ तथा ॥
पद्मनाभं सुनाभं च हयग्रीवं विशां पते ॥ ३३ ॥
द्विजनाथं धरानाथं खड्गपाणिं तथैव च ॥

दामोदरं जलावासं सर्वपापहरं हरिम् ॥३४॥
एतान्येव हि स्थानानि देवदेवस्य चक्रिणः ॥
गच्छते यत्र तत्रैव मुच्यते सर्वपातकैः ॥ ३५ ॥
गंगा च यमुना चैव तथा देवी सरस्वती ॥
दृषद्वती गोमती च तापी कावेरिणी तथा ॥ ३६ ॥ । ।
नर्मदा शर्मदा चैव नदी गोदावरी तथा ॥
शतद्रुश्च तथा विंध्या पयोष्णी वरदा तथा ॥ ३७ ॥
चर्मण्वती च सरयूर्गंडकी चंडपापहा ॥
चंद्रभागा विपाशा च शोणश्चैव पुनःपुनः ॥ ३८ ॥
एताश्चान्याश्च बहवो हिमवत्प्रभवाः शुभाः ॥
तासु स्नातो नरः स्वर्गं याति पातकवर्जितः ॥ ३९ ॥
वनानि नंदनादीनि पर्वता मंदरादयः ॥
नामोच्चारेण येषां हि पापं याति रसातले ॥7.2.1.४० ॥
॥ गज उवाच ॥ ॥
भद्रं हि भाषितं भद्र आख्यानममृतोपमम् ॥
पृच्छामि सर्वधर्मज्ञ त्वामहं किंचिदेव हि ॥ ४१ ॥
यस्मिन्मासे दिने यस्मिंस्तीर्थे यस्मिन्क्रमान्नरैः ॥
अक्षयं सेव्यते स्वर्गस्तन्ममाचक्ष्व सुव्रत ॥ ४२ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥
अक्षयो येन वै स्वर्गस्तन्मे गदितुमर्हसि ॥ ४३ ॥
॥ भद्र उवाच ॥ ॥
श्रूयतां राजशार्दूल कथां कथयतो मम ॥
यां श्रुत्वा मुच्यते पापान्नरो नरवरोत्तम ॥ ४४ ॥
ऋषीणां कथितं पूर्वं नारदेन महात्मना ॥ ४५ ॥
एवं पृष्टश्च तैः सर्वैर्नारदो मुनिसत्तमः ॥
कथयामास संहृष्टो मेघदुदुभिनिस्वनैः ॥ ४६ ॥
रम्ये हिमवतः पृष्ठे समवाये मया श्रुतम्॥
तदहं तव वक्ष्यामि श्रोतुकामं नरर्षभ ॥ ४७ ॥

तीर्थान्येव हि सर्वाणि पुनरावर्त्तकानि तु ॥
अक्षयाँल्लभते लोकांस्तत्तीर्थं कथयामि ते ॥ ४८ ॥
मार्गशीर्षे कान्यकुब्ज उषित्वा राजसत्तम ॥
न शोचति नरो नारी स्वर्गं याति परावरम् ॥४९॥
पौषस्य पौर्णमासी या यदि सा क्रियतेऽर्बुदे ॥
वर्षाणामर्बुदं स्वर्गे मोदते पितृभिः सह ॥7.2.1.५०॥
माघ्यां यदि गयाश्राद्धं पितॄणां यच्छते नरः ॥ त्र
याणामपि देवानां चतुर्थः स प्रजायते ॥५१॥
फाल्गुन्यां हिमवत्पृष्ठे वसन्नेकां निशां नरः ॥
स याति परमं स्थानं यत्र देवो जनार्द्दनः ॥ ५२ ॥
चैत्र्यां श्राद्धं प्रभासे तु ये कुर्वंति मनीषिणः ॥
न ते मर्त्त्या भवन्तीह कुलजैः सह सत्तमाः ॥ ५३ ॥
चतुर्भुजे तु वैशाख्यां ये कुर्वंति जलप्रिये ॥
तथावंत्यां नरः कश्चित्स याति परमां गतिम् ॥ ५४ ॥
ज्यैष्ठ्यां ज्येष्ठर्क्षयुक्तायां श्राद्धं च त्रितकूपके ॥
कुर्युर्युगानि ते त्रीणि वसंति नाकसद्मनि ॥ ५५ ॥
यो व्रजेशवने नद्यां दिनानि नव पंच च ॥
तिष्ठते च नरः स्वर्गं वैकुण्ठमभिगच्छति ॥ ५६ ॥
श्रावणस्य तु मासस्य पूर्णायां पूर्वसागरे ॥
स्नानं दानं जपं श्राद्धं नरः कुर्वन्न शोचति ॥ ५७ ॥
तथा भाद्रपदे क्षेत्रे प्रभासे शशिभूषणम् ॥
पूजयित्वा नरो लिंगं देवलिंगी भवेत्ततः ॥ ५८ ॥
आश्विने चंद्रभागायां श्राद्धं स्नानं करोति यः ॥
स्थानं युगसहस्राणां कृतं तेन त्रिविष्टपे ॥ ५९ ॥
अष्टाक्षरैश्चतुर्बाहुं ध्यायंति मुनिसत्तमाः ॥
बहुनाऽत्र किमुक्तेन गजाहं प्रवदामि ते ॥ 7.2.1.६० ॥
दामोदरसमं तीर्थं न भूतं न भविष्यति ॥
मासानां कार्त्तिकः श्रेष्ठः कार्त्तिके भीष्मपंचकम् ॥ ६१ ॥

तत्रापि द्वादशी श्रेष्ठा राजन्दामोदरे जले ॥
किमन्यैर्बहुभिस्तीर्थैः किं क्षेत्रैः किं महावनैः ॥
दामोदरे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ६२ ॥
॥ गज उवाच ॥ ॥
भद्र भद्रं त्वया प्रोक्तं रसायनमिवापरम् ॥
भूयोऽहं श्रोतुमिच्छामि तीर्थस्यास्य महाफलम् ॥ ६३ ॥
के देशाः किं प्रमाणं तु का नदी केः च पर्वताः ॥
जना वसंति के तत्र ऋषयः के तपस्विनः ॥ ६४ ॥
॥ भद्र उवाच ॥ ॥
पृथिवी वसुसंपूर्णा सागरेण तु वेष्टिता ॥
मंडिता नगरैर्ग्रामैः सुरैः परपुरंजय ॥ ६५ ॥
वाराणसी प्रभासं च संगमं सितकृष्णयोः ॥
एवं साराणि तीर्थानि यस्मान्मृत्युहराणि च ॥ ६६ ॥
दामोदरेति ये नूनं स्मरंतो यत्र तत्र हि॥
ते वसंति हरेर्गेहं न सरंति कदाचन ॥ ६७ ॥
सोमनाथस्य सान्निध्य उदयन्तो गिरिर्महान् ॥
तस्य पश्चिमभागे तु रैवतक इति स्मृतः ॥ ६८ ॥
वाहिनी वहते तत्र नदी कांचनशेखरात् ॥
धातवस्तत्र ते रक्ताः श्वेता नीलास्तथाऽसिताः ॥ ६९ ॥
पाषाणाः कुञ्जराकाराश्चान्ये सैरिभसन्निभाः ॥
चणकाकृतयश्चान्ये अन्ये गोक्षुरकप्रभाः ॥ 7.2.1.७० ॥
वृक्षा वल्ल्यश्च गुल्माश्च संतानाः संत्यनेकशः ॥
सर्वं तत्कांचनमयं मूलं पुष्पं फलं दलम् ॥ ७१ ॥
न हि पश्यति पापात्मा मुक्तः पापेन पश्यति ॥
सेव्यते स गिरिर्नित्यं धातुवादपरैर्नरैः ॥ ७२ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः शूद्रानुगैर्बहिः ॥
पक्षिणस्तत्र बहवः शिवाशिवगिरस्तदा ॥ ७३ ॥
हंससारसचक्राह्वाः शुककोकिलबर्हिणः ॥

मृगाश्च वानरेन्द्राश्च हंसा व्याघ्रास्तथैव च ॥ ७४ ॥

तत्तीर्थस्य प्रभावेन न दुष्टान्याचरंति ते ॥

कालेन मृत्युमायांति पशुपक्षिसरीसृपाः ॥ ७८५ ॥

सर्वे विमानमारूढा गच्छन्ति हरिमन्दिरम्॥

वायुना पातितं यत्र पत्रपुष्पफलादिकम् ॥ ७६ ॥

तस्या नद्या जलं स्पृष्ट्वा सर्वं वै मुक्तिमाप्नुते ॥

सा नदी पृथिवीं भित्त्वा पातालादागता नृप ॥ ७७ ॥

पूर्वं पन्नगराजस्तु तेन मार्गेण चागतः ॥

स्नातुं दामोदरे तीर्थे यममृत्युप्रघातिनि ॥ ७८ ॥

स्वर्गादागत्य चन्द्रोऽपि यष्टुं यज्ञं सुपुष्कलम् ॥

यक्ष्मरोगाद्विनिर्मुक्तो गतः स्वर्गं निरामयः ॥ ७९ ॥

बलिना चैव दानानि दत्तान्यागत्य कार्तिके ॥

हरिश्चन्द्रेण विधिना नलेन नहुषेण च ॥ 7.2.1.८० ॥

नाभागेनांबरीषाद्यैः कृतं कर्म सुदुष्करम् ॥

दत्त्वा दानान्यनेकानि गजा गावो हया रथाः ॥ ८१ ॥

अनडुत्कांचना भूमिं रत्नानि विविधानि च ॥

छत्राणि विप्रमुख्येभ्यो यानानि चैव वाससी ॥ ८२ ॥

अन्नानि रसमिश्राणि दत्त्वा दामोदराग्रतः ॥

गतास्ते विष्णु भुवनं नागच्छंति महीतले ॥ ८३ ॥

पत्रं पुष्पं फलं तोयं तस्मिंस्तीर्थे ददाति यः ॥

द्विजानां भक्तिसंयुक्तः स याति जलशायिनम् ॥ ८४ ॥

प्रकृतिं चापि यो दद्यान्मुष्टिं वाथ क्षुधार्थिने ॥

विमानवरमारूढः स सोमं प्रति गच्छति ॥ ८५ ॥

दामोदराग्रतः कृत्वा पर्वतानन्नसंभवान् ॥

पूजितान्फलपुष्पैश्च दीपं दद्यात्सवर्त्तिकम् ॥ ८६ ॥

अवाप्य दुष्करं स्थानं कुलानां तारयेच्छतम् ॥

चतुरंगुलमात्रेपि दत्ते दामोदराग्रतः ॥ ८७ ॥

दाने युगसहस्राणि स्वर्गलोके महीयते ॥

मा गच्छ हिमवत्पृष्ठं मलयं मा च मन्दरम् ॥ ८८ ॥

गच्छ रैवतकं शैलं यत्र दामोदरः स्थितः ॥

कृत्वा मासोपवासं तु द्विजो दामोदराग्रतः ॥ ८९ ॥

न निवर्तति कालेन दामोदरपुरं व्रजेत् ॥

करोत्यनशनं यश्च नरो नार्यथवा पुनः ॥

सर्व लोकानतिक्रम्य स हरेर्गेहमाप्नुयात् ॥ 7.2.1.९० ॥

विघ्नानि तत्र तिष्ठन्ति नित्यं पञ्चशतानि च ॥

धर्मविध्वंसकर्तॄणि नरस्तत्र न गच्छति ॥ ९१ ॥

प्रद्युम्नबलशैनेयगदाचक्रादिभिः सदा ॥

शतलक्षप्रमाणैस्तु सेव्यते स गिरिर्महान् ॥ ९२ ॥

क्रीडंति नार्यस्तेषां हि नित्यं दामोदराग्रतः ॥

सुचन्द्रवदना गौर्यः श्यामाश्चैव सुमध्यमाः ॥ ९३ ॥

नितंबिन्यः सुकेशाश्च शुभ्राः स्वायतलोचनाः ॥

सुगंडा ललिताश्चैव सुकक्षाः सुपयोधराः ॥ ९४ ॥

शोभमानाः सुजंघाश्च सुपादाः सुन्दरांगुलीः ॥

राजपुत्र्यो गिरौ तस्मिन्हसंति च रमंति च ॥ ९५ ॥

कौसुंभं पादयुगले कुंकुमं पीतकंचुकम्॥

ब्राह्मणीभ्यो ददन्तीह स्पर्द्धमानाः पृथक्पृथक् ॥ ९६ ॥

भक्ष्यं भोज्यं च पेयं च लेह्यं चोष्यं च पिच्छिलम् ॥

तांबूलं पुष्पसंयुक्तं कार्तिके हरिवासरे ॥ ९७ ॥

दृष्ट्वा तु रेवतीकुंडं प्रदद्यात्फलमुत्तमम् ॥

पुत्रिणी ऋद्धिसंपन्ना सुभगा जायते सती ॥ ९८ ॥

एवं कृत्वा तु सा रात्रि नीयते निद्रया विना ॥

वेदघोषैः सुपुण्यैस्तु भारताख्यानवाचनैः ॥ ९९ ॥

हुंकृतैस्तलशब्दैश्च तालशब्दैः पुनःपुनः ॥

देशभाषाविभाषिण्यो रामामण्डलमध्यतः ॥

हास्यनृत्यसमायुक्ता राजन्दामोदराग्रतः ॥ 7.2.1.१०० ॥

पञ्चपाषाणकं हर्म्यं यः करोति शिवालयम् ॥

पंचवर्षसहस्राणि स्वर्ग लोके महीयते ॥ १०१ ॥

दशपाषाणसंयुक्तं कृत्वा दामोदराग्रतः ॥

दशवर्षसहस्राणि स्वर्गे हल्लति मल्लति ॥ १०२ ॥

शतपाषाणकं हर्म्यं यः करोति महन्नृप ॥

मन्दिरं सुन्दरं शुभ्रं स याति हरिमन्दिरम् ॥ १०३ ॥

कृत्वा साहस्रिकं चैत्यं बहुरूपसमन्वितम् ॥

सर्वाँल्लोकानतिक्रम्य परं ब्रह्माधिगच्छति ॥ १०४ ॥

पंचवर्णध्वजं दद्याद्दामोदरगृहोपरि ॥

तं तु प्रमाणवर्षाणि दिव्यानि स दिवं व्रजेत् ॥ १०५ ॥

तस्य गव्यूतिमात्रेण क्षेत्रं वस्त्रापथं शुभम् ॥

यद्दृष्ट्वा सर्वपापानि विलीयन्ते बहूनि च ॥ १०६ ॥

राजंस्तत्पदमायाति यद्गत्वा न निवर्त्तते ॥

पूजयित्वा भवं देवं भवसंभवनाशनम् ॥ १०७ ॥

नरो नारी नृपश्रेष्ठ शिवलोके महीयते ॥

तच्छ्रुत्वा वचनं तस्य भद्रस्य च सुभाषितम् ॥ १०८ ॥

आगतः कार्तिकीं कर्त्तुं देवे दामोदरे ततः ॥

ऋग्यजुःसामसंयुक्तैर्ब्राह्मणैर्ब्रह्मवित्तमैः ॥ १०९ ॥

क्षत्रियैः क्षत्रधर्मज्ञैर्वैश्यैर्दानपरायणैः ॥

सह शूद्रैः समायातस्तस्मिंस्तीर्थे गजो नृपः ॥ 7.2.1.११० ॥

दत्त्वा दानान्यनेकानि हुत्वा हविर्हुताशने ॥

अग्निष्टोमादिकान्यज्ञान्हयमेधादिकान्बहून् ॥

चकार विधिवद्राजा गजस्तत्र समाहितः ॥ १११ ॥

ततश्च न्यवसत्तत्र तपः कर्तुं सहर्षिभिः ॥

ऊर्द्ध्वपादाः स्थिता विप्राः पीत्वा धूममधोमुखाः ॥

शुष्कपत्राशनाश्चान्ये अन्ये वै फलभोजनाः ॥ ११२ ॥

मूलानि चान्ये भक्षंति अन्ये वार्यंशना द्विजाः ॥

आलोकंति स्वमन्ये च तथान्ये जलशायिनः ॥ ११३ ॥

पञ्चाग्निसाधकाश्चान्ये शिलाचूर्णस्य भक्षकाः ॥

जपंति चान्ये संशुद्धा गायत्रीं वेदमातरम् ॥

सावित्रीं मनसा चान्ये देवीमन्ये सरस्वतीम्॥ ११४ ॥

सूक्तानि हि पवित्राणि ब्रह्मणा निर्मितानि च ॥

अन्येऽवसंस्तदा तत्र द्वादशाक्षरचिन्तकाः ॥ ११५ ॥

आलोक्य सर्वशास्त्राणि विचार्य च पुनःपुनः ॥

इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ११६ ॥

आराधितः सुदुष्पारे भवे भगवतो विना ॥

तथा नान्यो महादेवात्पतन्तं योऽभिरक्षति ॥ ११७ ॥

गतागतानि वर्तंते चंद्रसूर्यादयो ग्रहाः ॥

अद्यापि न निवर्तंते द्वादशाक्षरचिंतकाः ॥ ११८ ॥।

येऽक्षरा ऋषयश्चान्ये देवलोकजिगीषवः ॥

प्राप्नुवंति ततः स्थानं दग्धबीजं च तत्तथा ॥ ११९ ॥

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ 7.2.1.१२० ॥

एकभक्तं तथा नक्तमयाच्यमुषितं तथा॥

एवमादीनि चान्यानि कृत्वा दामोदराग्रतः ॥

कृतकृत्या भवंतीह यावदाभूतसंप्लवम्॥ १२१ ॥

स राजा ऋषिभिः सार्द्धं यावत्तिष्ठति तत्र वै ॥

विमानानि सहस्राणि तावत्तत्रागतानि च ॥ १२२ ॥

गंधर्वाप्सरस्तत्र सिद्धचारणकिन्नराः ॥

सर्वे विमानमारूढाः शतशोऽथ सहस्रशः ॥ १२३॥

सर्वैर्जनपदैः सार्द्ध स राजा भार्यया सह ॥

गतो विमानमारूढो यत्तत्पदमनामयम् ॥ १२४ ॥

य इदं पठते नित्यं शृणुयाद्वाऽपि मानवः ॥

सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ १२५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये दामोदरमाहात्म्यवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०२



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि क्षेत्रं वस्त्रापथं पुनः ॥

यत्प्रभासस्य सर्वस्वं क्षेत्रं नाभिः प्रियं मम ॥ १ ॥

यत्र साक्षाद्भवो देवः सृष्टिसंहारकारकः ॥

पृथिव्यां स त्वधिष्ठाता तत्त्वानामादिमः प्रभुः ॥ २ ॥

स स्वयंभूः स्थितस्तत्र प्रभासे भूतिदो भवः ॥

भवतीदं जगद्यस्मात्तस्माद्भव इति स्मृतः ॥ ३ ॥

यः सकृत्कुरुते यात्रां क्षेत्रे वस्त्रापथे पुनः ॥

विगाह्य तत्र तीर्थानि कृतकृत्यः स जायते ॥ ४ ॥

अथ दृष्ट्वा भवं देवं सकृत्पूज्यविधानतः ॥

केदारयात्राफलभाक्स भवेन्मनुजोत्तमः ॥ ५ ॥

चैत्रे मासि भवं दृष्ट्वा न पुनर्जायते भुवि ॥

वैशाख्यामथवा सम्यग्भवं दृष्ट्वा विमुच्यते ॥ ६ ॥

वाराणस्यां कुरुक्षेत्रे नर्मदायां तु यत्फलम् ॥

तत्फलं निमिषार्द्धेन भवं दृष्ट्वा दिनेदिने ॥ ७ ॥

दुर्ल्लभस्तत्र वासस्तु दुर्ल्लभं भवदर्शनम् ॥

प्रेतत्वं नैव तस्यास्ति न याम्या नारकी व्यथा ॥ ८ ॥

येषां भवालये प्राणा गता वै वरवर्णिनि ॥

धन्यानामपि धन्यास्ते देवानामपि देवताः ॥ ९ ॥

वस्त्रापथे मतिर्येषां भवे येषां मतिः स्थिरा ॥

गोदानं तत्र शंसंति ब्राह्मणानां च भोजनम्॥

पिंडदानं च तत्रैव कल्पांतं तृप्तिमा वहेत्॥ 7.2.2.१० ॥

इति संक्षेपतः प्रोक्तं माहात्म्यं ते भवोद्भवम् ॥

श्रुतं पापोपशमनं यज्ञायुतफलप्रदम् ॥ ११ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये वस्त्रापथक्षेत्रभवमाहात्म्यवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०३



॥ ईश्वर उवाच ॥

अथ वस्त्रापथे क्षेत्रे संति तीर्थानि कोटिशः॥

तथापि सारं ते वच्मि सर्वतीर्थमहोदयम् ॥ १ ॥

दामोदरे नदी प्रोक्ता स्वर्णरेषेति या स्मृता ॥

ब्रह्मकुण्डं च तत्रैव तथा ब्रह्मेश्वरः स्मृतः ॥ २ ॥

कालमेघश्च संप्रोक्तो भवो दामोदरः स्मृतः ॥

गव्यूतिद्वितयेनैव कालिका तत्र कीर्तिता ॥ ३ ॥

इन्द्रेश्वरश्च तत्रैव रैवतः पर्वतस्तथा ॥

उज्जयंतश्च तत्रैव देवः कुम्भीश्वरः स्मृतः ॥ ४ ॥

भीमेश्वरश्च तत्रैव ततः क्षेत्रं महाप्रभम् ॥

तैलसारणिकंनाम त्रेतायां हैममारकम् ॥ ५ ॥

पंचगव्यूतिमात्रं तु तत्क्षेत्रं संप्रकीर्तितम् ॥

मृगीकुण्डं च तत्रैव सर्वपातकनाशनम् ॥ ६ ॥

एतद्वस्त्रापथं क्षेत्रं रत्नधात्वोस्तथाऽऽकरम् ॥

कथितं तव देवेशि पुनः संक्षेपतो मया ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये प्रवरतीर्थानुकीर्तननाम तृतीयोऽध्यायः ॥ ३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०४

https://sa.wikisource.org/s/gk3

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि दुन्नाविल्लेति विश्रुतम् ॥

योजनस्यांतरे देवि पश्चिमे मंगलस्थितेः ॥ १ ॥

दुन्नको यत्र भीमेन भुक्त्वा त्यक्तः पुरा प्रिये ॥

तत्रैव विवरं दिव्यं महा पातालमार्गदम् ॥ २ ॥

तस्य कल्पः पुरा प्रोक्तः पातालोत्तरसंग्रहे ॥

तत्र लिंगान्यनेकानि सिद्धस्थानानि षोडश ॥ ३ ॥

सुवर्णस्याकरः पूर्वं तत्स्थानमभवत्प्रिये ॥

तस्मिन्स्थाने नरैर्देवि गन्तव्यं भूतिलिप्सया ॥ ४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये दुन्नाविल्लहृद्गिरिस्थानमाहात्म्यवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०५



॥ ईश्वर उवाच ॥ ॥

ततो गच्छेन्महादेवि मंगलात्पश्चिमे स्थितम् ॥

गंगास्रोतस्तथा लिंगं सुरार्कं च विशेषतः ॥ १ ॥

तान्गच्छेद्विधिवद्देवि यदि यात्राफलेप्सुता ॥

स्नात्वा पिण्डप्रदानं च कुर्यात्तत्र यथार्थतः ॥

ब्राह्मणेभ्यस्तथा देयमन्नं भूरि सदक्षिणम् ॥ २ ॥

इति ते कथितं मया प्रिये कलिपापौघविनाशनं शुभम् ॥

निखिलं तीर्थमहोदयोदयं पठितं सद्विनिहंति पापसंहतिम् ॥ ३ ॥

इदं न देयं दुर्बुद्धेः सुतरां पापनाशनम् ॥

श्रोतव्यं विधिना तद्वद्भविष्योक्तविधानतः ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये गंगेश्वरमाहात्म्यवर्णनंनाम पंचमोऽध्यायः ॥ ५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/gk5
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ ईश्वर उवाच ॥ ॥

अधुना संप्रवक्ष्यामि मंगलात्पश्चिमे व्रजेत् ॥

तत्र सिद्धेश्वरं पश्येत्सर्वसिद्धिप्रदायकम् ॥ १ ॥

तत्रैव चक्रतीर्थं तु तीर्थकोटिफलप्रदम् ॥

लोकेश्वरं स्वयंभूतं पूर्वमिंद्रेश्वरेति च ॥ २ ॥

दृष्ट्वा तं विधिवद्देवि ततो यक्षवनं व्रजेत् ॥

मंगलात्पश्चिमे भागे यत्र देवी स्वयं स्थिता ॥ ३ ॥

यक्षेश्वरी महाभागा वांछितार्थप्रदायिनी ॥

तां संपूज्य विधानेन ततो वस्त्रापथं पुनः ॥ ४ ॥

गिरिं रैवतकं गत्वा कुर्याद्यात्राविधानतः ॥

मृगीकुंडादितीर्थानि संति तत्रैव कोटिशः ॥ ५ ॥

यद्भुक्तिशिखरे देवि सीमालिंगं हि तत्स्मृतम् ॥

दशकोटिस्तु तीर्थानि तत्र संति वरान ने ॥ ६ ॥

यत्र वै यादवाः सिद्धाः कलौ ये बुद्धिरूपिणः ॥

शतसहस्रार्बुदं च लिंगं तत्रैव तिष्ठति ॥ ७ ॥

गजेंद्रस्य पदं तत्र तत्रैव रसकूपिकाः ॥

सप्त कुण्डानि तत्रैव रैवते पर्वतोत्तमे ॥ ८ ॥

अंबिका च स्थिता देवी प्रद्युम्नः सांब एव च ॥

लिंगाकारे पर्वते तु तत्र तीर्थानि कोटिशः ॥ ९ ॥

मृगीकुंडं च तत्रैव कालमेघस्तथैव च ॥

क्षेत्रपालस्वरूपेण महोदधि स्वयं स्थितः ॥

दामोदरश्च तत्रैव भवो ब्रह्माडनायकः ॥ 7.2.6.१० ॥ ॥

॥ पार्वत्युवाच ॥ ॥

श्रुतानि तव तीर्थानि देवेश वदतस्तव ॥

गंगा सरस्वती पुण्या यमुना च महानदी ॥ ११ ॥

गोदावरी गोमती च नदी तापी च नर्मदा ॥

सरयूः स्वर्णरेखा च तमसा पापनाशिनी ॥ १२ ॥

नद्यः समुद्रसंयोगाः सर्वाः पुण्याः श्रुता मया ॥

मोक्षारण्यानि दिव्यानि। दिव्यक्षेत्राणि यानि च ॥ १३ ॥

नगर्यो मुक्तिदायिन्यस्ताः श्रुतास्त्वत्प्रसादतः ॥

ब्रह्मविष्णुशिवादीनां सूर्येंदुवरुणस्य च ॥ १४ ॥

देवताना मृषीणां च संति स्थानान्यनेकशः ॥

परं देव त्वया पुण्यं प्रभासं कथितं मम ॥ १५ ॥

तस्माद्यच्चाधिकं प्रोक्तं क्षेत्रं वस्त्रापथं त्वया ॥

शृण्वंत्या च मया पूर्वं न पृष्टं कारणं तदा ॥ १६ ॥

इदानीं च श्रुतं सर्वं स्वस्थाहं कारणं वद ॥

प्रभावं प्रथमं ब्रूहि क्षेत्रस्य च भवस्य च ॥ १७ ॥

कस्मिन्देशे च तत्तीर्थं शिवः केनात्र संस्थितः ॥

स्वयंभूर्भगवान्रुद्रः कथं तत्र स्थितः स्वयम् ॥

प्रभो मे महदाश्चर्यं वर्तते तद्वदाधुना ॥ १८ ॥

॥ ईश्वर उवाच ॥ ॥

वस्त्रापथस्य क्षेत्रस्य प्रभावं प्रथमं शृणु ॥

पश्चाद्भवस्य माहात्म्यं शृणु त्वं च वरानने ॥ १९ ॥

कान्यकुब्जे महाक्षेत्रे राजा भोजेति विश्रुतः ॥

पुरा पुण्ययुगे धर्म्यः प्रजा धर्मेण शासति ॥ 7.2.6.२० ॥

विशालाक्षो दीर्घबाहुर्विद्वान्वाग्ग्मी प्रियंवदः ॥

सर्वलक्षणसंपूर्णो बह्वाश्चर्यविलोककः ॥ २१ ॥

वनात्कदाचिदभ्येत्य वनपालोब्रवीदिदम् ॥

आश्चर्यं भ्रमता देव वने दृष्टं मयाधुना ॥ २२ ॥

गिरौ विषमभूभागे वहुवृक्षसमाकुले ॥

मृगयूथगता नारी मया दृष्टा मृगानना ॥ २३ ॥

मृगवत्प्लवते बाला सदा तत्रैव दृश्यते ॥

इति श्रुत्वा वचो राजा तुष्टस्तस्मै धनं ददौ ॥ २४ ॥
चतुरं तुरगं दिव्यं वाससी स्वर्णभूषणम्॥
इदानीमेव यास्यामि सेनाध्यक्ष त्वया सह ॥२५॥
अश्वानां दशसाहस्रं वागुराणां त्वनेकधा ॥
पत्तयो यांतु सर्वत्र वेष्टयंतु गिरिंवरम् ॥२६॥
न हंतव्यो मृगः कश्चिद्रक्षणीया हि सा मृगी ॥
स्त्रीवेषधारिणी नारी मृगी भवति भूतले ॥२७॥
क्व यास्यति वराकी सा मद्बलैः परिपीडिता ॥
शस्त्रास्त्रवर्जितं सैन्यं वनपालपदानुगम् ॥२८॥
अहोरात्रेण संप्राप्तं बहुव्याधजनाग्रतः ॥
अश्वाधिरूढो बलवान्भोजराजो ययौ स्वयम् ॥ २९ ॥
निःशब्दपदसञ्चारः संज्ञासंकेतभाषकः ॥
गिरिं संवेष्टयामास वागुराभिः स्वयं नृपः ॥ 7.2.6.३० ॥
वनपालेन सहितो मृगयूथं ददर्श सः ॥
सा मृगी मृगमध्यस्था नारीदेहा मुखे मृगी ॥
मृगवच्चेष्टते बाला धावते च मृगैः सह ॥ ३१ ॥
अश्वगंधान्समाघ्राय सन्त्रस्ता मृगयूथपाः ॥
क्षुब्धा भ्रान्ताः क्षणे तस्मिन्सर्वे यांति दिशो दश ॥ ३२ ॥
मृगवक्त्रा तु या नारी मृगैः कतिपयैः सह ॥
प्लवमाना निपतिता वागुरायां विचेतना ॥ ३३ ॥
बलाध्यक्षेण विधृता मृगैः सह शनैर्नृपः ॥
ददर्श महदाश्चर्यं भोजराजो जनैर्वृतः ॥ ३४ ॥
ततः कोलाहलो जातः परमानंदिनिस्वनः ॥
मृगैः सह समानिन्ये कान्यकुब्जं मृगीं नृपः ॥ ३५ ॥
दिव्यवस्त्रसमाच्छन्ना दिव्याभरणभूषिता ॥
नरयानस्थिता नारी प्रविवेश मृगैर्वृता ॥ ३६ ॥
वादित्रैर्ब्रह्मघोषैश्च नीयते नृपमंदिरम् ॥
जनैर्जानपदैर्मार्गे दृश्यते नृपमन्दिरे ॥ ३७ ॥

नीयमाना नागरैश्च महदाश्चर्यभाषकैः ॥
पुण्ये मुहूर्ते संप्राप्ते सा मृगी नृपमन्दिरम् ॥ ३८ ॥
प्रतीहारेण राजेन्द्र वचसा वारितो जनः ॥
गतः सेनापतिः सैन्यं गृहीत्वा स्वनिकेतनम् ॥ ३९ ॥
राजापि स्वगृहं प्राप्य स्नात्वा संपूज्य देवताः ॥
तां मृगीं स्नापयामास दिव्यगन्धानुलेपनाम्॥ 7.2.6.४० ॥
कुङ्कुमेन विलिप्तांगीं दिव्यवस्त्रावगुंठिताम् ॥
यथोचितं यथास्थानं दिव्याभरणभूषिताम् ॥ ४१ ॥
एकांते निर्जने राजा बभाषे चारुलोचनाम् ॥
का त्वं कस्य सुता केन कारणेन मृगैः सह ॥ ४२ ॥
स्त्रीणां शरीरं ते कस्मान्मृगीणां वदनं कुतः ॥
इति सर्वं समाचक्ष्व परं कौतूहलं हि मे ॥ ४३ ॥
एवं सा प्रोच्यमानापि न बभाषे कथंचन ॥
मूकवन्न विजानाति न च भुंक्ते सुलोचना ॥ ४४ ॥
न भुंक्ते पृथिवीपालो न राज्यं बहु मन्यते ॥
न दारैर्विद्यते कार्यं नाश्वैर्न च गजै रथैः ॥ ४५ ॥
तदेव राज्यं ते दारास्ते गजास्तद्धनं बहु ॥
प्रमदामदसंरक्तं यत्र संक्रीडते मनः ॥ ४६ ॥
आहूयाह प्रतीहारं तया संमोहितो नृपः ॥
पुरोधसं गुरुं विप्रानाचार्याञ्छीघ्रमानय ॥ ४७ ॥
दैवज्ञानथ मन्त्रज्ञान्भिषजस्तांत्रिकांस्तथा ॥
इति सन्नोदितो राज्ञा प्रतीहारो ययौ स्वयम् ॥ ४८ ॥
आजगाम स वेगेन समानीय द्विजोत्तमान्॥
राज्ञे विज्ञापयामास देव विप्राः समागताः ॥ ४९ ॥
प्रवेशय गुरुं द्वाःस्थं संप्राप्तान्मद्धिते रतान् ॥
इति सन्नोदितो राज्ञा तथा चक्रे स बुद्धिमान्॥ 7.2.6.५० ॥
अभ्युत्थाय नृपः पूर्वं नमस्कृत्य प्रपूज्य च ॥
आसनेषूपविष्टांस्तान्बभाषे कार्यतत्परः ॥ ५१ ॥

इदमाश्चर्यमेवैकं कथं शक्यं निवेदितुम् ॥
जानीत हि स्वयं सर्वे लोकतः शास्त्रतोऽपि वा ॥ ५२ ॥
कथमेषा समुत्पन्ना कस्येदं कर्मणः फलम् ॥
अस्यां केन प्रकारेण वचनं मानुषं भवेत् ॥ ५३ ॥
स्वयं मनुष्यवदना कथमेषा भविष्यति ॥
सावधानैर्द्विजैर्भूयः सर्वं संचिन्त्य चोच्यताम् ॥ ५४ ॥
॥ विप्रा ऊचुः ॥ ॥
देव सारस्वतो नाम कुरुक्षेत्रे द्विजोत्तमः ॥
ऊर्द्ध्वरेताः सरस्वत्यां तपस्तेपे जितेन्द्रियः ॥ ५५ ॥
कथयिष्यति सर्वं ते तेनादिष्टा मृगी स्वयम् ॥
इति श्रुत्वा वचो राजा ययौ सारस्वतं द्विजम् ॥ ५६ ॥
सरस्वतीजले स्नातं प्रभासे ध्यानतत्परम् ॥
दृष्ट्वा प्रदक्षिणीकृत्य साष्टांगं तं प्रणम्य च ॥
उपविष्टो नृपो भूमौ प्रांजलिः सञ्जितेन्द्रियः ॥ ५७ ॥
मनुष्यपदसंचारं श्रुत्वा ज्ञात्वा च कारणम् ॥
सारस्वतो बभाषेऽथ तं नृपं भक्तितत्परम् ॥ ५८ ॥
॥ सारस्वत उवाच ॥ ॥
भोजराज शुभं तेस्तु ज्ञातं तत्कारणं मया ॥
मृगानना त्वया नारी समानीता वनात्किल ॥ ५९ ॥
महदाश्चर्यमेवैतत्तव चेतसि वर्त्तते ॥
आदिष्टा तु मया बाला सर्वं ते कथयिष्यति ॥ 7.2.6.६० ॥
जानाम्यहं महाराज चरित्रं जन्म यादृशम् ॥
आश्चर्यं संभवेल्लोके कथ्यमानं तया स्वयम् ॥ ६१ ॥
इत्यादिश्य गतो वेगाद्रथेनादित्यवर्चसा ॥
अहोरात्रद्वयेनैव संप्राप्तो नृप मन्दिरम् ॥ ६२ ॥
प्रविश्य च मृगीं दृष्ट्वा यत्रास्ते मृगलोचना ॥
तया सारस्वतो ज्ञातो धर्मज्ञः सर्वविद्द्विजः ॥ ६३ ॥
॥ मृग्युवाच ॥ ॥

एष सर्वं हि जानाति कारणं यच्च यादृशम् ॥
वर्त्तमानं भविष्यं च भूतं यद्भुवनत्रये ॥ ६४ ॥
एतेन मरणं ज्ञातं मदीयं पूर्वजन्मनि ॥
वस्त्रापथे महाक्षेत्रे तपस्तप्तं भवालये ॥ ६५ ॥
विधूय कलुषं सर्वं ज्ञानमुत्पाद्य यत्नतः ॥
जरामरणनिर्मुक्तः प्रत्यक्षं दृष्टवान्भवम् ॥ ६६ ॥
अस्य तुष्टो भवो देवो ज्ञातं तीर्थस्य कारणम् ॥
आदिष्टया मया वाच्यं भवेज्जन्मनि कारणम् ॥ ६७ ॥
इति चिन्तापरा यावत्तावद्विप्रः समागतः ॥
तस्मै प्रणामपरमा मूर्च्छिता निपपात सा ॥ ६८ ॥
अथ सारस्वतो ज्ञानाज्ज्ञातवान्कारणं च तत् ॥
आनयन्तु द्विजा वेगात्कलशं तोयसंभृतम् ॥ ॥ ६९ ॥
सर्वौषधीः पल्लवांश्च दूर्वाः पुष्पाणि चाक्षतान्॥
धूपं च चंदनं चैव गोमयं मधुसर्पिषी ॥ 7.2.6.७० ॥
इत्यादिष्टैर्द्विजैर्वेगात्समानीतं नृपाज्ञया ॥
उपलिप्य च भूभागं स्वस्तिकं संनिवेश्य च ॥ ७१ ॥
तत्राग्निकार्यं कृत्वाऽथ वेदान्कुंभे निधाय सः ॥
इन्द्रं तस्मिंश्च विन्यस्य दिक्पालांश्च यथाक्रमम् ॥
हुत्वाग्निं स चरुं कृत्वा ग्रहपूजामकारयत् ॥ ७२ ॥
तोयं सुवर्णपात्रस्थं कृत्वा कुंभान्स्वयं गुरुः ॥
अभिषेकं ततश्चक्रे मुहूर्ते सार्वकामिके ॥ ७३ ॥
अभिषिक्ता तु सा तेन पूता स्नानार्थवारिणा ॥
जाता सचेतना बाला सर्वं पश्यति चक्षुषा ॥ ७४ ॥
शृणोति सर्वं जानाति चरित्रं पूर्वजन्मनः ॥
बदरीफलमात्रं तु पुरोडाशं ददौ गुरुः ॥ ७५ ॥
तयोपभुक्तं यत्नेन ततश्चक्रे स मार्ज्जनम् ॥
मानुषे वचने कर्णे ददौ ज्ञानं गुरुस्ततः ॥ ७६ ॥
गुरवे दक्षिणां दत्त्वा ततः सा च मृगानना ॥

भोजराजाय सर्व च चरित्रं पूर्वजन्मनः ॥ ॥ ७७ ॥

वक्तुं प्रचक्रमे बाल्याद्यद्वृत्तं पूर्वजन्मनि ॥

नमस्कृत्य गुरुं पूर्वं ब्राह्मणान्क्षत्रियांस्तथा ॥ ७८ ॥

॥ मृग्युवाच ॥ ॥

न विषादस्त्वया कार्यो राजञ्छ्रुत्वा मयोदितम् ॥

इतस्त्वं सप्तमे स्थाने कलिंगाधिपतेः सुतः ॥ ७९ ॥

मृते पितरि बालस्त्वं स्वभिषिक्तः स्वमंत्रिभिः ॥

अहं हि वंगराजस्य संजाता दुहिता किल ॥ 7.2.6.८० ॥

परिणीता त्वया देव पित्रा दत्ता स्वयं नृप ॥

त्वयाऽहं पट्टमहिषी कृता योषिद्वरा यतः ॥ ८१ ॥

युवा जातः क्रमेणैव हिंस्रः क्रूरो बभूव ह ॥

न वेदशास्त्रकुशलो दयाधर्मविवर्जितः ॥ ८२ ॥

लुब्धो मानी महाक्रोधी सत्याचार बहिष्कृतः ॥

न देवं न गुरुं विप्रान्नो जानाति दुराशयः ॥ ८३ ॥

विरक्ता हि प्रजास्तस्य ब्राह्मणोच्छेदकारकः ॥

समासन्नैर्नृपैस्तस्य देशः सर्वो विलुंपितः ॥

सैन्यं सर्वं समादाय युद्धायोपजगाम सः ॥ ८४ ॥

सहैवाहं गता देव युद्धं जातं नृपैः सह ॥

हारितं सैनिकैस्तस्य गता नष्टा दिशो दश ॥ ८५ ॥

त्यक्त्वा धर्मं निजं राजा पलायनपरोऽभवत् ॥

गच्छमानस्तु नृपतिः शत्रुभिः परिपीडितः ॥ ८६ ॥

तवास्मिवादी दुष्टात्मा हतो लोकविरोधकः ॥

देहं तस्य गृहीत्वाग्नौ प्रविष्टाहं नृपोत्तम ॥ ८७ ॥

मृतस्यैवं गतिर्नास्ति नरके स विपच्यते ॥

मृतं कांतं समादाय भार्याग्नौ प्रविशेद्यदि ॥ ८८ ॥

सा तारयति पापिष्ठं यावदाभूतसंप्लवम् ॥

इह पापक्षयं कृत्वा पश्चात्स्वर्गे महीयते ॥ ८९ ॥

अतस्त्वं ब्राह्मणो जातो देशे मालवके नृप ॥

तस्यैव तत्र भार्याहं संभूता ब्राह्मणी नृप ॥ 7.2.6.९० ॥

धनधान्यसमृद्धोऽभूत्तथा जीवधनाधिकः ॥

मृतः पिता मृता माता स च भ्रातृविवर्जितः ॥ ९१ ॥

धनधान्यसमृद्धोऽपि लुब्धो भ्रमति भूतले ॥

अतीव कोपनो विप्रो वेदपाठविवर्जितः ॥ ९२ ॥

स्नानसंध्यादिहीनश्च मायावी याचते जनम् ॥

भक्तिं करोमि परमां स च क्रुध्यति मां प्रति ॥ ९३ ॥

संतानं तस्य वै नास्ति धनरक्षापरो हि सः ॥

न ददाति न चाश्नाति न जुहोति स रक्षति ॥ ९४ ॥

न तर्पणं तिलैर्विप्रो विदधात्यतिलो भतः ॥

कार्तिकेऽपि च संप्राप्ते विष्णुपूजाविवर्जितः ॥ ९५ ॥

दीपं ददाति नो विप्रो मासमेकं निरन्तरम् ॥

न भुंक्ते शाकपत्रं स एकाहारो निरंतरम् ॥ ९६ ॥

मासे नभस्ये संप्राप्ते प्राप्ते कृष्णे नृपोत्तम ॥

न करोति गृहे श्राद्धं स्नानतर्पणवर्जितः ॥ ९७ ॥

न जानाति दिनं पित्र्यं पक्षमेकं निरन्तरम् ॥

अन्यत्र भुंक्ते विप्रोऽसौ क्षयाहेऽपि समागते ॥ ९८ ॥

मकरस्थेऽपि संक्रांतौ कृशरान्नं ददाति न ॥

तिलान्सुवर्णं तारं वा वस्त्रं वा फलमेव च ॥

शाकपत्रं स पुष्पं वा न ददाति तथैंधनम् ॥ ९९ ॥

गवां गवाह्निकं नैव कथं मुक्तिर्भविष्यति ॥

न याति विष्णुशरणं संप्राप्ते दक्षिणायने ॥ 7.2.6.१०० ॥

धेनुं ददाति नो विप्रो ग्रहणे चंद्रसूर्ययोः ॥ १०१ ॥

एकापि दत्ता सुपयस्विनी सा सवस्त्रघंटाभरणोपपन्ना ॥

वत्सेन युक्ता हि ददाति दात्रे मुक्तिं कुलस्यास्य करोति वृद्धिम्॥ १०२ ॥

यावंति रोमाणि भवंति तस्यास्तावंति वर्षाणि महीयते सः ॥

ब्रह्मालये सिद्ध गणैर्वृतोऽसौ संतिष्ठते सूर्यसमानतेजाः ॥ १०३ ॥

देवालयं नो विदधाति वापीं कूपं तडागं न करोति कुण्डम् ॥

पुण्यं विवाहं सुजनोपकारं नासौ सतां वा द्विजमंदिरं च ॥ १०४ ॥

धनं सदा भूमिगतं करोति धर्मं न जानाति कुलस्य चासौ ॥

अहं हि तस्यानुगता भवामि कथं हि कांतं परिवं चयामि ॥ १०५ ॥

एवं हि वर्त्तमानः स कालधर्ममुपेयिवान् ॥

धनलोभान्मया देव मरणं परिवर्जितम् ॥१०६॥

पश्यन्त्या गोत्रिभिः सर्वं गृहीतं धनसंचयम् ॥

कालेन महता देव मृताऽहं द्विजमंदिरे ॥ १०७ ॥

श्वेतसर्पः समभवद्देशे तस्मिन्नरोत्तम ॥

तत्रैवाहं ब्राह्मणस्य संजाता तनया नृप ॥ १०८ ॥

वर्षेष्टमे तु संप्राप्ते परिणीता द्विजन्मना ॥

तस्मिन्नेव गृहे सर्पो मदीये वसते नृप ॥ १०९ ॥

भार्या ममेति संदष्टो रात्रौ भर्त्ता महा हिना ॥

मृतोऽपि ब्राह्मणैः सर्पो लगुडैर्विनिपातितः ॥ 7.2.6.११० ॥

वैधव्यं मम दत्त्वा तु द्विजसर्पौ मृतावुभौ ॥

पित्रा मात्रा महाशोकं कृत्वा मे मुण्डितं शिरः ॥ १११ ॥

वसाना श्वेतवस्त्रं च विष्णुभक्तिपरायणा ॥

मासोपवासनिरता यानि तीर्थान्यनेकशः ॥ ११२ ॥

सर्पस्तु मकरो जातो गोदावर्यां शिवालये ॥

देवं भीमेश्वरं द्रष्टुं गताऽहं स्वजनैः सह ॥ ११३ ॥

यावत्स्नातुं प्रविष्टाऽहं वृता सर्वजनैर्नृप ॥

मकरेण तदा दृष्टा भार्येयं मम वल्लभा ॥

गृहीता मकरेणाहं नेतुमंतर्जले नृप ॥ ११४ ॥

हाहाकारः समभवज्जनः क्षुब्धः समंततः ॥

कुंताघातेन केनासौ मकरस्तु निपातितः ॥ ११५ ॥

झषवक्त्रः स्थिता चाहं मृता कृष्टा जनैर्बहिः ॥

अग्निं दत्त्वा जले क्षिप्त्वा भस्म लोका गृहान्गताः ॥ ११६ ॥

स्त्रीवधाल्लुब्ध्वको जातो झषस्तीर्थप्रभावतः ॥

मानुषीं योनिमापन्नस्तस्मिन्नेव महावने ॥११७॥

अग्नेर्जलाच्च सर्पाच्च गजात्सिंहादवृषादपि ॥
झषाद्विस्फोटकान्मृत्युर्येषां ते नरके गताः ॥ ११८ ॥
आत्महा भ्रूणहा स्त्रीहा ब्रह्मघ्नः कूटसाक्ष्यदः ॥
कन्याविक्रयकर्ता च मिथ्या व्रतधरस्तु यः ॥ ॥ ११९ ॥
विक्रीणाति क्रतुं यस्तु मद्यपः स्याद्द्विजस्तु यः ॥
राजद्रोही स्वर्णचौरो ब्रह्मवृत्तिविलोपकः ॥ 7.2.6.१२० ॥
गोघ्नस्तु निक्षेपहरो ग्रामसीमाहरस्तु यः ॥
सर्वे ते नरकं यांति या च स्त्री पतिवंचका ॥ १२१ ॥
झषमृत्युप्रभावेन जाता क्रौंची वने नृप ॥
गोदावरीवने व्याधो भ्रमते मृगमार्गकः ॥ १२२ ॥
वने क्रौंचः सकामो मां मुदा कामयितुमुद्यतः ॥
दृष्टाहं भ्रमता तेन व्याधेनाकृष्य कार्मुकम् ॥ १२३ ॥
हतः क्रौंचो मृतो राज न्नष्टा स्थानादहं ततः ॥
गोदावरीवने तस्मिन्नेवंरूपं ददर्श तम् ॥ १२४ ॥
ऋषिर्व्याधं शशापाथ दृष्ट्वा कर्म विगर्हितम् ॥
कामधर्ममकुर्वाणं प्रिया संभाषतत्परम् ॥
क्रौंचं त्वमवधीर्यस्मात्तस्मात्सिंहो भविष्यसि ॥ १२५ ॥
ऋषिस्तेन विनीतेन स्थित्वा सन्तोषितो नृप ॥
ऋषिर्वदति तस्याग्रे न मे मिथ्या वचो भवेत् ॥ १२६ ॥
सिंहस्थस्य प्रसादं ते करिष्ये मुक्तिहेतवे ॥
सुराष्ट्रदेशे भविता सिंहो रैवतके गिरौ ॥ १२७ ॥
वस्त्रापथे महा क्षेत्रे मुक्तिस्ते विहिता ध्रुवा ॥
इत्युक्त्वा स ऋषिर्देव गतो भीमेश्वरं प्रति ॥
दुर्वचःश्रवणाद्व्याधः क्रमात्पंचत्वमाययौ ॥ १२८ ॥
क्रौंची क्रौंचवियोगेन गता सा च वनांतरे ॥
मृता दैववशाज्जाता मृगी रैवतके गिरौ ॥ १२९ ॥
मृगयूथगता नित्यं मोदते मदविह्वला ॥
व्याधः सिंहः समभवद्गिरेस्तस्य महावने ॥ 7.2.6.१३० ॥

कामार्ता भ्रमता दृष्टा मृगी सिंहेन यत्नतः ॥
तत्र संभ्रमते नित्यं सिंहश्चापि मृगी वने ॥ १३१ ॥
सिंहोऽपि दैवयोगेन ममेयमिति मन्यते ॥
परं हिंस्रस्वभावेन तामादातुं प्रचक्रमे ॥ १३२ ॥
चलत्वं मृगजातीनां विहितं वेधसा स्वयम् ॥
पुनर्गता मृगी यूथं क्रीडते चारुलोचना ॥ १३३ ॥
भवस्य पश्चिमे भागे तत्र रैवतके गिरौ ॥
अनुयातः शनैः सोऽथ मृगेन्द्रो मृगयूथपः ॥
उत्पपात ततः सिंहो संघस्य मूर्द्धनि ॥ १३४ ॥
सिंहस्य न मृगैः कार्यं हरिणीं प्रति पश्यतः ॥
यत्र सा हरिणी याति ययौ सिंहस्तथैव ताम् ॥ १३५ ॥
यदा वेगं मृगी चक्रे सिंहः कुद्धस्तदा वने ॥
सिंहोऽपि वेगवाञ्जातो मृगीवेगाधिकोऽभवत् । १३६ ॥
यदा सिंहेन संक्रांता ददौ झम्पां मृगी तु सा ॥
भवस्याग्रे नदीतोये पतिता जलमूर्द्धनि ॥ १३७ ॥
लंबते तु शरीरं मे वेणौ प्रोतं शिरो मम ॥
सिंहः सहैव पतितो मृतः पयसि मध्यतः ॥ १३८ ॥
स्वर्णरेषाजले देव विशीर्णं मम तद्वपुः ॥
न तु वक्त्रं निपतितं त्वक्सारशिरसि स्थितम् ॥ १३९ ॥
एतच्चरित्रं यत्सर्वं दृष्टं सारस्वतेन वै ॥
तत्तीर्थस्य प्रभावेन सिंहस्त्वं समजायथाः ॥ 7.2.6.१४० ॥
इदं हि सप्तमं जन्म सर्वपापक्षयोदयम् ॥
कान्यकुब्जे महादेशे राजा भोजेतिविश्रुतः ॥ १४१ ॥
अहं हि हरिणीगर्भे जाता मानुषरूपिणी ॥
जातं वक्त्रं मृगीणां मे यस्मान्न पतितं जले ॥ १४२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये भवमाहात्म्ये मृगाननाभोजवृत्तान्तवर्णने सारस्वतमहर्षिसंस्कृतपुरोडाशप्राशनसमुपलब्धस्पष्टवाक्प्रसर मृगाननाकथितोभयप्राक्सप्तजन्मवृत्तान्तवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/gk6
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ राजोवाच ॥ ॥

कथं त्वं हरिणीरूपे जाता मानुषरूपिणी ॥

केन संवर्धिता बाल्ये कथं ते रूपमीदृशम् ॥ १ ॥

॥ मृग्युवाच ॥ ॥

शृणु देव प्रवक्ष्यामि यद्वृत्तं कन्यके वने ॥

ऋषिरुद्दालकोनाम गंगाकूले महातपाः ॥ २ ॥

प्रभाते मूत्रमुत्सृष्टुं गतो देव वनांतरे ॥

मूत्रांते पतितो भूमौ वीर्यबिंदुर्द्विजन्मनः ॥ ३ ॥

यावत्स चलितो विप्रः शौचं कृत्वा प्रयत्नतः ॥

तावन्मृगी समायाता दृष्ट्वा पुष्पवनांतरात् ॥ ४ ॥

चापल्याद्भक्षितं वीर्यं दृष्टं ब्रह्मर्षिणा स्वयम् ॥

यस्मादश्नाति मे वीर्यं तस्माद्गर्भो भविष्यति ॥ ५ ॥

ममरूपा तववक्त्रा नारी गर्भे भविष्यति ॥

वर्द्धयिष्यति देव्यस्तां रसैर्दिव्यैः सुतां तव ॥ ६ ॥

केनापि दैवयोगेन ज्ञानं तस्या भविष्यति ॥

एवमुद्दालकादेव संजाताहं मृगानना ॥

प्रविश्याग्नौ मृता पूर्वं त्वया सार्द्धं नराधिप ॥ ७ ॥

तस्माज्जातं सतीत्वं मे सप्तजन्मनि वै प्रभो ॥

यत्त्वया कुर्वता राज्यं पापं वै समुपार्जितम् ॥ ८ ॥

क्षत्त्रधर्मं परित्यज्य पलायनपरो मृतः ॥

तदेनो हि मया दग्धं चिताग्नौ नृपसत्तम ॥ ९ ॥

पतिं गृहीत्वा या नारी मृतमग्नौ विशेद्यदि ॥

सा तारयति भर्तारमात्मानं च कुलद्वयम् ॥ 7.2.7.१० ॥

गोग्रहे देशभंगे च संग्रामे सम्मुखे मृतः ॥

स सूर्यमण्डलं भित्त्वा ब्रह्मलोके महीयते ॥११॥

अनाशकं यो विदधाति मर्त्यो दिनेदिने यज्ञसहस्रपुण्यम् ॥

स याति यानेन गणान्वितेन विधूय पापानि सुरैः स पूज्यते ॥ १२॥

गंगाजले प्रयागे वा केदारे पुष्करे च ये ॥

वस्त्रापथे प्रभासे च मृतास्ते स्वर्गगामिनः ॥ १३ ॥

द्वारावत्यां कुरुक्षेत्रे योगाभ्यासेन ये मृताः ॥

हरिरित्यक्षरं मृत्यौ येषां ते स्वर्गगामिनः ॥ १४ ॥

पूजयित्वा हरिं ये तु भूमौ दर्भतिलैः सह ॥

तिलांश्च पञ्चलोहं च दत्त्वा ये तु पयस्विनीम् ॥ १५ ॥

ये मृता राजशार्दूल ते नराः स्वर्ग गामिनः ॥

उत्पाद्य पुत्रान्संस्थाप्य पितृपैतामहे पदे ॥ १६ ॥

निर्मला निष्कलंका ये ते मृताः स्वर्गगामिनः ॥

व्रतोपवासनिरताः सत्याचारपरायणाः ॥

अहिंसानिरताः शांतास्ते नराः स्वर्गगामिनः ॥ १७ ॥

सापवादो रणं त्यक्त्वा मृतो यस्मान्नराधिप ॥

सप्तयोनिषु ते जन्म तस्माज्जातं मया सह ॥ १८ ॥

त्वां विना मे पतिर्मा भून्मरणे याचितं मया ॥

तदांतरिक्षे राजेन्द्र वागुवाचाशरीरिणी ॥

आदौ पापफलं भुक्त्वा पश्चा त्स्वर्गं गमिष्यसि ॥ १९॥

यदि वस्त्रापथे गत्वा शिरः कश्चिद्विमुंचति ॥

स्वर्णरेखाजले राजन्मानुषं स्यान्मुखं मम ॥ 7.2.7.२० ॥

अहं मानुषवक्त्राऽस्मि पापच्छायाऽऽवृतं मुखम् ॥

दृश्यते मृगवक्त्राभं तस्माच्छीघ्रं विमुंचय ॥ २१ ॥

इति श्रुत्वा वचो राजा सारस्वतमुदैक्षत ॥

जनो विहस्य सानन्दं सर्वं सत्यं मृगीवचः ॥ २२ ॥

इत्युक्त्वाऽऽह द्विजेन्द्रः स एवं कुरु नृपोत्तम ॥

एवं राज्ञा समादिष्टः प्रतीहारो ययौ वनम् ॥ २३ ॥

वस्त्रापथे महातीर्थे भवं द्रष्टुं त्वरान्वितः ॥

त्वक्सारजालिर्महती स्वर्णरेखाजलोपरि ॥ २४ ॥
वर्त्तते तच्छिरो यत्र वंशप्रोतं महावने ॥
सारस्वतस्य शिष्येण कुशलेन निवेदितम्॥ २५ ॥
तीर्थं वस्त्रापथं गत्वा भवस्याग्रे महानदी ॥
जाले तत्र शिरो दृष्टं तच्च तोये विमोचितम् ॥ २६ ॥
स्नात्वा संपूज्य तीर्थेशं प्रतीहारः समभ्यगात् ॥
शिष्येण सहितो वेगाद्रथेनादित्यवर्चसा ॥ २७ ॥
यदागतः प्रतीहारस्तदा सारस्वतेन सा ॥
वृता चान्द्रायणेनैव मासमेकं निरन्तरम् ॥ २८ ॥
संपूर्णे तु व्रते तस्या दिव्यं वक्त्रं सुलोचनम् ॥
सुशोभनं दीर्घकेशं दीर्घकर्णं शुभद्विजम् ॥ २९ ॥
कम्बुग्रीवं पद्मगंधं सर्वलक्षणसंयुतम्॥
व्रतांते मूर्च्छिता बाला गतज्ञाना वभूव सा ॥ 7.2.7.३० ॥
न देवी न च गंधर्वी नासुरी न च किंनरी ॥
यादृशी सा तदा जाता तीर्थभावेन सुन्दरी ॥ ३१ ॥
परिणीता तु सा तेन भोजराजेन सुन्दरी ॥
मृगीमुखीति विख्याता देवी सा भुवनेश्वरी ॥ ३२ ॥
न जानाति पुनः किंचिद्यद्वृत्तं राजमन्दिरे ॥
कृता सा पट्टमहिषी भोजराजेन धीमता ॥ ३३ ॥
॥ ईश्वर उवाच ॥ ॥
देशानां प्रवरो देशो गिरीणां प्रवरो गिरिः ॥
क्षेत्राणामुत्तमं क्षेत्रं वनानामुत्तमं वनम् ॥ ३४ ॥
गंगा सरस्वती तापी स्वर्णरेखाजले स्थिता ॥
ब्रह्मा विष्णुश्च सूर्यश्च सर्व इन्द्रादयः सुराः ॥ ३५ ॥
नागा यक्षाश्च गन्धर्वा अस्मिन्क्षेत्रे व्यवस्थिताः ॥
ब्रह्मांडं निर्मितं येन त्रैलोक्यं सचराचरम् ॥ ३६ ॥
देवा ब्रह्मादयो जाताः स भवोऽत्र व्यवस्थितः ॥
शिवो भवेति विख्यातः स्वयं देवस्त्रिलोचनः ॥ ३७ ॥

वेवेति स्कन्दरचनाद्भवानी चात्र संस्थिता ॥

अतो यन्नाधिकं प्रोक्तं तीर्थं देवि मया तव ॥ ३८ ॥

तस्मिञ्जले स्नानपरो नरो यदि संध्यां विधायानु करोति तर्पणम् ॥

श्राद्धं पितृणां च ददाति दक्षिणां भवोद्भवं पश्यति मुच्यते भवात् ॥ ३९ ॥

अथ यदि भवपूजां दिव्यपुष्पैः करोति तदनु शिवशिवेति स्तोत्रपाठं च गीतम् ॥

सुरवर गणवृन्दैः स्तूयमानो विमानैः सुरवरशिवरूपो मानवो याति नाकम् ॥ 7.2.7.४० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये स्वर्णरेखायां मृगाननायाः पूर्वजन्ममृगमुखप्रक्षेपणेन दिव्यमुखत्वप्राप्त्युत्तरं भोजनृपतिपरिणय वृत्तान्तपूर्वकं स्वर्णरेखामाहात्म्यवर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०८



॥ भोजराज उवाच ॥ ॥

प्रभो सारस्वत मया श्रुतं माहात्म्यमुत्तमम् ॥

वस्त्रापथस्य क्षेत्रस्य गिरे रैवतकस्य च ॥ १ ॥

विशेषेण स्वर्णरेखाभवस्य च जलस्य च ॥

इदानीं श्रोतुमिच्छामि तीर्थोत्पत्तिं वदस्व मे॥ २ ॥

ब्रह्मविष्णुशिवादीनां मध्ये कोऽयं व्यवस्थितः ॥

केयं नदी स्वर्णरेखा सर्वपातकनाशिनी ॥ ३ ॥

कस्माद्ब्रह्मादया देवा अस्मिंस्तीर्थे समागताः ॥

कथं नारायणो देवः स्वयमेव समागतः ॥ ४ ॥

हेमालयं परित्यज्य भवानी गिरिमूर्द्धनि ॥

संस्थिता स्कन्दमादाय देवैरिन्द्रादिभिः सह ॥ ५ ॥

॥ सारस्वत उवाच ॥ ॥

शृणु सर्वं महाराज कथयिष्ये सविस्तरम् ॥

येन वै कथ्यमानेन सर्वपापक्षयो भवेत् ॥ ६ ॥

पुरा ब्रह्मदिनस्यांते जगदेतच्चराचरम् ॥

संहृत्य भगवान्रुद्रो ब्रह्मविष्णुपुरस्कृतः ॥ ७ ॥

तां च ते सकलां रात्रिमेकमूर्त्तिभवास्त्रयः ॥

तिष्ठन्ति रात्रि पर्यन्ते पुनर्भिन्ना भवंति ते ॥ ८ ॥

ब्रह्मविष्णुशिवा देवा रजःसत्त्वतमोमयाः ॥

सृष्टिं करोति भगवान्ब्रह्मा पालयते हरिः ॥ ९ ॥

सर्वं संहरते रुद्रो जगत्कालप्रमाणतः ॥

तेनादौ भगवान्सृष्टो दक्षो नाम प्रजापतिः ॥ 7.2.8.१० ॥

सर्वे संक्षेपतः कृत्वा ब्रह्माण्डं सचरा चरम् ॥

भिन्ना देवास्त्रयो जाताः सत्यलोकव्यवस्थिताः ॥ ११ ॥

त्रयो भुवं समासाद्य कौतुकाविष्टचेतसः ॥

कैलासं ते गिरिवरं समारूढाः सुरेर्वृताः ॥ १२ ॥

अहं ज्येष्ठो अहं ज्येष्ठो वादोऽभूद्ब्रह्मरुद्रयोः ॥

तदा क्रुद्धो महादेवो ब्रह्माणं हन्तुमुद्यतः ॥ १३ ॥

विष्णुना वारितो ब्रह्मा न ते वादस्तु युज्यते ॥

तत्त्वं नाहं यदा नेदं ब्रह्मांडं सचराचरम् ॥ १४ ॥

एक एव तदा देवो जले शेते महेश्वरः ॥

जागर्ति च यदा देवः स्वेच्छया कौतुकात्ततः ॥ १५ ॥

अनेन त्वं कृतः पूर्वमहं पश्चात्त्वया कृतः ॥

ब्रह्मांडं कूर्मरूपेण धृतमस्य प्रसादतः ॥ १६ ॥

अनुप्रविष्टा ब्रह्मांडं प्रसादाच्छंकरस्य च ॥

सृष्टिस्त्वया कृता सर्वा मयि रक्षा व्यवस्थिता ॥ १७ ॥

उदासीनवदासीनः संसारात्सारमीक्षते ॥

एक एव शिवो देवः सर्वव्यापी महेश्वरः ॥ १८ ॥

पितामहत्वं संजातं प्रसादाच्छंकरस्य ते ॥

प्रसादयामास हरं श्रुत्वा ब्रह्मा वचो हरेः ॥ १९ ॥

अनादिनिधनो देवो बहुशीर्षो महाभुजः ॥

इत्यादिवेदवचनैस्ततस्तुष्टो महेश्वरः ॥

प्राह ब्रह्मन्वरं यत्ते वृणीष्व मनसि स्थितम् ॥ 7.2.8.२० ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये ब्रह्मरुद्रविवादे विष्णुवचनेन ब्रह्मकृतरुद्रप्रसादनवर्णनंनामाष्टमोऽध्यायः ॥८॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/gk8
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ ब्रह्मोवाच ॥ ॥

यदि सृष्टं मया सर्वं त्रैलोक्यं सचराचरम् ॥

तदा मूर्तिमिमां त्यक्त्वा भवः सृष्टो मयाऽधुना ॥ १ ॥

पितामहमहत्त्वं स्यात्तथा शीघ्रं विधीयताम् ॥

ब्रह्मणो वचनं श्रुत्वा विष्णुना स प्रमोदितः ॥ २ ॥

महदाश्चर्यजनके संप्राप्तो गिरिमूर्द्धनि ॥

न विचारस्त्वयाकार्यः कर्त्तव्यं ब्रह्मभाषितम् ॥ ३ ॥

तथेत्युक्त्वा शिवो देवस्तत्रैवांतरधीयत ॥

ब्रह्मा ययौ मेरुशृंगं मनसः शिरसि स्थितम् ॥ ४ ॥

तपस्तेपे प्रजानाथो वेदोच्चारणतत्परः ॥

अथर्ववेदोच्चरणं यावच्चक्रे पितामहः ॥ ५ ॥

मुखाद्रुद्रः समभवद्रौद्ररूपो भवापहः॥

अर्द्धनारीनरवपुर्दुष्प्रेक्ष्योऽतिभयंकरः॥६॥

विभजात्मानमित्युक्त्वा ब्रह्मा चांतर्दधे भयात् ॥

तथोक्तोसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाऽकरोत् ॥ ७ ॥

बिभेद पुरुषत्वं च दशधा चैकधा पुनः ॥

एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥ ८ ॥

कृत्वा नामानि सर्वेषां देवकार्ये नियोजिताः ॥

विभज्य पुनरीशानी स्वात्मानं शंकराद्विभोः ॥ ९ ॥

महादेवनियोगेन पितामहमुपस्थिता ॥

तामाह भगवान्ब्रह्मा दक्षस्य दुहिता भव ॥ 7.2.9.१० ॥

सापि तस्य नियोगेन प्रादुरासीत्प्रजापतेः ॥

नियोगाद्ब्रह्मणो दक्षो ददौ रुद्राय तां सतीम् ॥११॥

दाक्षीं रुद्रोऽपि जग्राह स्वकीयामेव शूलभृत् ॥

अथ ब्रह्मा बभाषे तं सृष्टिं कुरु सतीपते ॥१२॥ ॥

॥ रुद्र उवाच ॥ ॥

सृष्टिर्मया न कर्त्तव्या कर्त्तव्या भवता स्वयम् ॥

पालनं विष्णुना कार्यं संहर्ताऽहं व्यवस्थितः ॥१३॥

स्थाणुवत्संस्थितो यस्मा त्तस्मात्स्थाणुर्भवाम्यहम् ॥१४॥

रजोरूपाः सत्त्वरूपास्तमोरूपाश्च ये नराः ॥

सर्वे ते भवता कार्या गुणत्रयविभागतः॥१५॥

यदा ते तामसैः कार्यं तदा रौद्रो भव स्वयम् ॥

यदा ते राजसैः कार्यं तदा त्वं राजसो भव॥

सात्त्विकैस्ते यदा कार्यं तदा त्वं सात्त्विको भव ॥१६॥

॥ ईश्वर उवाच ॥ ॥

इत्याज्ञाप्य च ब्रह्माणं स्वयं सृष्ट्यादिकर्मसु ॥

गृहीत्वा तां सतीं रुद्रः कैलासमधितिष्ठति ॥ १७ ॥

दक्षः कालेन महता हरस्यालयमाययौ ॥ १८॥

अथ रुद्रः समुत्थाय कृतवान्गौरवं बहु ॥

ततो यथोचितां पूजां न दक्षो बहु मन्यते ॥१९॥

तदा वै तमसाविष्टः सोऽधिकं ब्राह्मणः शुभः॥

पूजामनर्घ्यामन्विच्छञ्जगाम कुपितो गृहम् ॥ 7.2.9.२० ॥

कदाचित्तां गृहं प्राप्तां सतीं दक्षः सुदुर्मनाः ॥

भर्त्रा सह विनिंद्यैनां भर्त्सयामास वै रुषा ॥२१॥

पंच -वक्त्रो दशभुजो मुखे नेत्रत्रयान्वितः॥

कपर्द्दी खंडचंद्रोसौ तथासौ नीललोहितः॥२२॥

कपाली शूलहस्तोऽसौ गजचर्मावगुंठितः ॥

नास्य माता न च पिता न भ्राता न च बान्धवः ॥२३॥

सर्पास्थिमंडितग्रीवस्त्यक्त्वा हेमविभूषणम् ॥

भिक्षया भोजनं यस्य कथमन्नं प्रदास्यति ॥ २४ ॥

कदाचित्पूर्वतो याति गच्छन्याति स पश्चिमे ॥

दक्षिणस्यां वृषो याति स्वयं याति स चोत्तरे ॥ २५ ॥

तिर्यगूर्ध्वमधो याति नैव याति न तिष्ठति ॥
इति चित्रं चरित्रं ते भर्तुर्नान्यस्य दृश्यते ॥ २६ ॥
निर्गुणः स गुणातीतो निःस्नेहो मूकवत्स्थितः ॥
सर्वज्ञः सर्वगः सर्वः पठ्यते भुवनत्रये ॥ २७ ॥
कदाचिन्नैव जानाति न शृणोति न पश्यति ॥
दैत्यानां दानवानां च राक्षसानां ददाति यः ॥२८॥
न चास्य च पिता कश्चिन्न च भ्रातास्ति कश्चन ॥
एक एव वृषारूढो नग्नो भ्रमति भूतले ॥२९॥
न गृहं न धनं गोत्रमनादिनिधनोव्ययः ॥
स्थिरबुद्धिर्न चैवासौ क्रीडते भुवनत्रये ॥7.2.9.३०॥
कदाचित्सत्यलोके सौ पातालमधितिष्ठति ॥
गिरिसानुषु शेतेऽसावशिवोपि शिवः स्मृतः ॥ ३१ ॥
श्रीखंडादीनि संत्यज्य सदा भस्मावगुंठितः॥
सर्वदेति वचः सत्यं किमन्यत्स प्रदास्यति॥ ३२ ॥
धिक्त्वां जामातरं धिक्तं ययोः स्नेहः परस्परम् ॥
तस्य त्वं वल्लभा भार्या स च प्राणाधिकस्तव ॥ ३३ ॥
न च पित्रास्ति ते कार्यं न मात्रा न सखीषु च ॥
केवलं भर्तृभक्ता त्वं तस्माद्गच्छ गृहान्मम ॥३४॥
अन्ये जामातरः सर्वे भर्तुस्तव पिनाकिनः ॥
त्वमद्यैवाशु चास्माकं गृहाद्गच्छ वरं प्रति ॥ ३५ ॥
तस्य तद्वाक्यमाकर्ण्य सा देवी शंकरप्रिया ॥
विनिंद्य पितरं दक्षं ध्यात्वा देवं महेश्वरम् ॥ ३६ ॥
श्वेतवस्त्रा जले स्नात्वा ददाहात्मानमात्मना ॥
याचितस्तु शिवो भर्ता पुनर्जन्मांतरे तया ॥३७॥
पिता मे हिमवानस्तु मेनागर्भे भवाम्यहम् ॥
अत्रांतरे(?) हिमवता तपसा तोषितो हरः ॥
प्रत्यक्षं दर्शनं दत्त्वा हिमवंतं वचोऽब्रवीत् ॥ ३८ ॥
एषा दत्ता सुता तुभ्यं परिणेष्यामि तामहम् ॥

देवानां कार्य्यसिद्ध्यर्थं गिरिराजो भविष्यसि ॥ ३९ ॥

आत्ममूर्त्तौ प्रविष्टां तां ज्ञात्वा देवो महेश्वरः ॥

शशाप दक्षं कुपितः समागत्याथ तद्गृहम् ॥ 7.2.9.४० ॥

त्यक्त्वा देहमिमं ब्राह्म्यं क्षत्रियाणां कुले भव ॥

स्वायंभुवत्वं संत्यज्य दक्ष प्राचेतसो भव ॥ ४१ ॥

स्वस्यां सुतायामूढायां पुत्रमुत्पादयिष्यसि ॥

एवं शप्त्वा महादेवो ययौ कैलासपर्वतम् ॥ ४२ ॥

स्वायभुवोऽपि कालेन दक्षः प्राचेतसोऽभवत् ॥

भवानीं स सुतां लब्ध्वा गिरिस्तुष्टो हिमा लयः ॥ ४३ ॥

मेनापि तां सुतां लब्ध्वा धन्यं मेने गृहाश्रमम् ॥

तां दृष्ट्वा जायमानां च स्वेच्छयैव वराननाम् ॥ ४४ ॥

मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम्॥

पश्य बालामिमां राजन्राजीवसदृशाननाम्॥ ४५ ॥

हिताय सर्वभूतानां जातां च तपसा शुभाम् ॥

सोऽपि दृष्ट्वा महादेवीं तरुणादित्यसन्निभाम् ॥ ४६ ॥

कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम्॥

अष्टहस्तां विशालाक्षीं चंद्रावयवभूषणाम् ॥ ४७ ॥

प्रणम्य शिरसा भूमौ तेजसा तु सुविह्वलः ॥

भीतः कृतांजलिः स्तब्धः प्रोवाच परमेश्वरीम् ॥ ४८ ॥

॥ हिमवानुवाच ॥ ॥

का त्वं देवि विशालाक्षि शंस मे संशयो महान् ॥ ४९ ॥

॥ देव्युवाच ॥ ॥

मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम् ॥

अनन्यामव्ययामेकां यां पश्यंति मुमुक्षवः ॥ 7.2.9.५० ॥

दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥

एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ॥ ५१ ॥

सूर्यकोटिप्रतीकाशं तेजोबिंबं निराकुलम् ॥

ज्वाला मालासहस्राढ्यं कालानलशतोपमम् ॥ ५२ ॥

दंष्ट्राकरालमुद्धर्षं जटामंडलमंडितम् ॥
प्रशांतं सौम्यवदनमनंताश्चर्यसंयुतम् ॥ ५३ ॥
चंद्रावयवलक्ष्माणं चंद्रकोटिसमप्रभम् ॥
किरीटिनं गदाहस्तं नुपुरैरुपशोभितम् ॥ ५४॥
दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ॥
शंखचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ॥ ५५ ॥
अंडस्थं चांडबाह्यस्थं बाह्यमभ्यंतरं परम् ॥
सर्वशक्तिमयं शुभ्रं सर्वालंकारसंयुतम् ॥५६॥
ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमान पदांबुजम् ॥
सर्वतः पाणिपादांतं सर्वतोऽक्षिशिरोमुखम्॥ ५७ ॥
सर्वमावृत्य तिष्ठंतं ददर्श परमेश्वरम् ॥
दृष्ट्वा नन्दीश्वरं देवं देव्या महेश्वरं परम् ॥ ॥ ५८ ॥
भयेन च समाविष्टः स राजा हृष्टमानसः ॥
आत्मन्याधाय चात्मानमोंकारं समनुस्मरन् ॥ ५९ ॥
नाम्नामष्टसहस्रेण स्तुत्वाऽसौ हिम वान्गिरिः ॥ 7.2.9.६० ॥
भूयः प्रणम्य भूतात्मा प्रोवाचेदं कृतांजलिः ॥
यदेतदैश्वरं रूपं जातं ते परमेश्वरि ॥ ६१ ॥
भीतोऽस्मि सांप्रतं दृष्ट्वा तत्त्वमन्यत्प्रदर्शय ॥
एवमुक्ता च सा देवी तेन शैलेन पार्वती ॥ ६२ ॥
संहृत्य दर्शयामास स्वरूपमपरं परम् ॥
नीलोत्पलदलप्रख्यं नीलोत्पलसुगंधिकम् ॥ ॥६३॥
द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ॥
रक्तपादांबुजतलं सुरक्तकरपल्लवम् ॥६४॥
श्रीमद्विशालसद्वृत्तं ललाटतिलकोज्ज्वलम् ॥
भूषितं चारुसर्वांगं भूषणैरतिकोमलम् ॥६५॥
दधानं चोरसा मालां विशालां हेमनिर्मिताम् ॥
ईषत्स्मितं सुबिंबोष्ठं नूपुरारावशोभितम् ॥ ६६ ॥
प्रसन्नवदनं दिव्यं चारुभ्रूमहिमास्पदम् ॥

तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ॥
भयं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ॥ ६७ ॥
॥ हिमवानुवाच ॥ ॥
अद्य मे सफलं जन्म अद्य मे सफलाः क्रियाः ॥
यन्मे साक्षात्त्वमव्यक्ता प्रसन्ना दृष्टिगोचरा ॥
इदानीं किं मया कार्यं तन्मे ब्रूहि महेश्वरि ॥६८॥ ॥
॥ महेश्वर्युवाच ॥ ॥
शिवपूजा त्वया कार्या ध्यानेन तपसा सदा ॥
अहं तस्मै प्रदातव्या केनचित्कारणेन वै ॥ ६९ ॥
यादृशस्तु त्वया दृष्टो ध्येयो वै तादृशस्त्वया ॥
एक एव शिवो देवः सर्वाधारो धराधरः ॥7.2.9.७०॥
॥ सारस्वत उवाच ॥ ॥
तपश्च कृतवान्रुद्रः समागम्य हिमाचलम् ॥
तस्योमा परमां भक्तिं चकार शिवसंनिधौ ॥७१॥
देवकार्येण केनापि देवो वै ज्ञापितः प्रभुः ॥
उपयेमे हरो देवीमुमां त्रिभुवनेश्वरीम् ॥ ७२ ॥
स शप्तः शंभुना पूर्वं दक्षः प्राचेतसो नृपः ॥
विनिंद्य पूर्ववैरेण गंगाद्वारेऽयजद्धरिम् ॥७३॥
देवाश्च यज्ञभागार्थमाहूता विष्णुना स्वयम् ॥
सहैव मुनिभिः सर्वैरागता मुनिपुंगवाः ॥ ७४ ॥
दृष्ट्वा देवकुलं कृत्स्नं शंकरेण विनाऽऽगतम् ॥
दधीचो नाम विप्रर्षिः प्राचेतसमथाब्रवीत् ॥ ७५ ॥
॥ दधीचिरुवाच ॥ ॥
ब्रह्माद्यास्तु पिशाचांता यस्याज्ञानुविधायिनः ॥
स हि वः सांप्रतं रुद्रो विधिना किं न पूज्यते ॥ ७६ ॥
॥ दक्ष उवाच ॥ ॥
सर्वेष्वेव हि यज्ञेषु न भागः परिकल्पितः ॥
न मंत्रा भार्यया सार्द्धं शंकरस्येति नेष्यते ॥ ७७ ॥

विहस्य दक्षं कुपितो वचः प्राह महामुनिः ॥
शृण्वतां सर्वदेवानां सर्वज्ञानमयः स्वयम् ॥७८॥
यतः प्रवृत्तिर्विश्वात्मा यश्चासौ भुवनेश्वरः ॥
न त्वं पूजयसे रुद्रं देवैः संपूज्यते हरः ॥७९॥
॥ दक्ष उवाच ॥ ॥
अस्थिमालाधरो नग्नः संहर्ता तामसो हरः ॥
विषकंठः शूलहस्तः कपाली नागवेष्टितः ॥ 7.2.9.८० ॥
ईश्वरो हि जगत्स्रष्टा प्रभुर्योऽसौ सनातनः ॥
सत्त्वात्मकोऽसौ भगवानिज्यते सर्वकर्मसु ॥ ८१ ॥
॥ दधीचिरुवाच ॥ ॥
किं त्वया भगवानेष सहस्रांशुर्न दृश्यते ॥
सर्वलोकैकसंहर्ता कालात्मा परमेश्वरः ॥ ८२ ॥
एष रुद्रो महादेवः कपर्द्दी चाग्रणीर्हरः ॥
आदित्यो भगवान्सूर्यो नीलग्रीवो विलोहितः ॥ ८३ ॥ ॥
॥ दक्ष उवाच ॥ ॥
य एते द्वादशादित्या आगता यज्ञभागिनः ॥
सर्वे सूर्या इति ज्ञेया न ह्यन्यो विद्यते रविः ॥ ८८४ ॥
एवमुक्ते तु मुनयः समायाता दिदृक्षवः ॥
बाढमित्यब्रुवन्दक्षं तस्य साहाय्यकारिणः ॥ ८५ ॥
तपसाविष्टमनसो न पश्यंति वृषध्वजम् ॥
सहस्रशोऽथ शतशो बहुशोऽथ य एव हि ॥ ८६ ॥
देवांश्च सर्वे भागार्थमागता वासवादयः ॥
नापश्यन्देवमीशानमृते नारायणं हरिम् ॥ ८७ ॥
रुद्रं क्रोधपरं दृष्ट्वा ब्रह्मा ब्रह्मासनाद्ययौ ॥
अन्तर्हिते भगवति दक्षो नारायणं हरिम् ॥ ८८ ॥
रक्षकं जगतां देवं जगाम शरणं स्वयम् ॥
प्रवर्तयामास च तं यज्ञं दक्षोऽथ निर्भयः ॥ ८९ ॥
रक्षको भगवान्विष्णुः शरणागतरक्षकः ॥

पुनः प्राहाध्वरे दक्षं दधीचो भगवन्नृप ॥ 7.2.9.९० ॥

निर्भयः शृणु दक्ष त्वं यज्ञभंगो भवि ष्यति ॥

अपूज्यपूजनाद्दक्ष पूज्यस्य च विवर्जनात् ॥ ९१ ॥

नरः पापमवाप्नोति महद्वै नात्र संशयः ॥

असतां प्रग्रहो यत्र सतां चैव विमानता ॥ ॥ ९२ ॥

दण्डो देवकृतस्तत्र सद्यः पतति दारुणः ॥

एवमुक्त्वा स विप्रर्षिः शशापेश्वरविद्विषः ॥ ९३ ॥

यस्माद्बहिष्कृतो देवो भवद्भिः परमेश्वरः ॥

भविष्यध्वं त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः ॥ ९४ ॥

मिथ्यारीतिसमाचारा मिथ्याज्ञानप्रभाषिणः ॥

प्राप्ते कलियुगे घोरे कलिजैः किल पीडिताः ॥ ९५ ॥

कृत्वा तपोबलं घोरं गच्छध्वं नरकं पुनः ॥

भविष्यति हृषीकेशः स्वामी वोऽपि पराङ्मुखः ॥ ९६ ॥

॥ सारस्वत उवाच ॥ ॥

एवमुक्त्वा स ब्रह्मर्षिर्विरराम तपोनिधिः ॥

जगाम मनसा रुद्रमशेषाध्वरनाशनम् ॥ ९७ ॥

एतस्मिन्नंतरे देवी महादेवं महेश्वरम् ॥

गत्वा विज्ञापयामास ज्ञात्वा दक्षमखं शिवा ॥ ९८ ॥

॥ देव्युवाच ॥ ॥

दक्षो यज्ञेन यजते पिता मे पूर्वजन्मनि ॥

तेन त्वं दूषितः पूर्वमहं चातीव दुःखिता ॥

विनाशयस्व तं यज्ञं वरमेनं वृणोम्यहम् ॥ ९९ ॥

॥ सारस्वत उवाच ॥ ॥

एवं विज्ञापितो देव्या देवदेवो महेश्वरः ॥

ससर्ज सहसा रुद्रं दक्षयज्ञजिघांसया ॥ 7.2.9.१०० ॥

सहस्रशिरसं क्रूरं सहस्राक्षं महाभुजम् ॥

सहस्रपाणिं दुर्द्धर्षं युगांतानलसन्निभम् ॥ १०१ ॥

दंष्ट्राकरालं दुष्प्रेक्ष्यं शंखचक्रधरं प्रभुम्॥

दण्डहस्तं महानादं शार्ङ्गिणं भूतिभूषणम् ॥ १०२ ॥

वीरभद्र इति ख्यातं देवदेवसमन्वितम् ॥

स जातमात्रो देवेशमुपतस्थे कृतांजलिः ॥ १०३ ॥

तमाह दक्षस्य मखं विनाशय शमस्तु तं ॥

विनिन्ध मां स यजते गंगाद्वारे गणेश्वर ॥ १०४ ॥

ततो बंधप्रमुक्तेन सिंहेनेव च लीलया ॥

वीरभद्रेण दक्षस्य नाशार्थं रोम चोद्धुतम् ॥ १०५ ॥

रोम्णा सहस्रशो रुद्रा निसृष्टास्तेन धीमता ॥

रोमजा इति विख्यातास्तत्र साहाय्यकारिणः ॥ १०६ ॥

शूलशक्तिगदाहस्ता दण्डोपलकरास्तथा ॥

कालाग्निरुद्रसंकाशा नादयन्तो दिशो दश ॥१०७॥

सर्वे वृषसमारूढाः सभा र्याश्चातिभीषणाः ॥

समाश्रित्य गणश्रेष्ठं ययुर्दक्षमखं प्रति ॥ १०८ ॥

देवांगनासहस्राढ्यमप्सरोगीतिनादितम् ॥

वीणावेणुनिनादाढ्यं वेदवादाभि नादितम् ॥ १०९ ॥

दृष्ट्वा दक्षं समासीनं देवैर्ब्रह्मर्षिभिः सह ॥

उवाच स वृषारूढो दक्षं वीरः स्मयन्निव ॥ 7.2.9.११० ॥

वयं ह्यचतुराः सर्वे शर्वस्यामितते जसः ॥

भागार्थलिप्सया प्राप्ता भागान्यच्छ त्वमीप्सितान् ॥ १११ ॥

भागो भवद्भ्यो देयस्तु नास्मभ्यमिति कथ्यताम् ॥

ततो वयं विनिश्चित्य करिष्यामो यथोचितम् ॥ ११२ ॥

एवमुक्ता गणेशेन प्रजापतिपुरःसराः ॥ ११३ ॥

॥ देवा ऊचुः ॥ ॥

प्रमाणं नो विजानीथ भागं मंत्रा इति धुवम्॥ ११४ ॥

॥ मंत्रा ऊचुः ॥ ॥

सुरा यूयं तमोभूतास्तमोपहतचेतसः ॥

ये नाध्वरस्य राजानं पूजयेयुर्महेश्वरम् ॥ ११५ ॥

ईश्वरः सर्वभूतानां सर्वदेवतनुर्हरः ॥

॥ गण उवाच ॥ ॥

पूज्यते सर्वयज्ञेषु कथं दक्षो न पूजयेत्॥११६॥

मंत्राः प्रमाणं न कृता युष्माभिर्बलगर्वितैः ॥

यस्मादसह्यं तस्मान्नो नाशयाम्यद्य गर्वितम् ॥११७॥

इत्युक्त्वा यज्ञशालां तां देवोऽहन्गणपुंगवः ॥

गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः॥११८॥

प्रस्तोतारं सहोतारमध्वर्युं च गणेश्वरः ॥

गृहीत्वा भीषणाः सर्वे गंगास्रोतसि चिक्षिपुः ॥११९॥

वीरभद्रोऽपि दीप्तात्मा वज्रयुक्तं करं हरेः॥

व्यष्टंभयददीनात्मा तथान्येषां दिवौकसाम् ॥ 7.2.9.१२० ॥

भगनेत्रे तथोत्पाट्य कराग्रेणैव लीलया ॥

निहत्य मुष्टिना दंडैः सप्ताश्वं च न्यपातयत् ॥ १२१ ॥

तथा चंद्रमसं देवं पादांगुष्ठेन लीलया ॥

धर्षयामास वलवान्स्मयमानो गणेश्वरः ॥ १२२ ॥

वह्नेर्हस्तद्वयं छित्त्वा जिह्वामुत्पाट्य लीलया ॥

जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वरान् ॥ १२३ ॥

तथा विष्णुं सगरुडं समायातं महाबलः ॥

विव्याध निशितैर्बाणैः स्तंभयित्वा सुदर्शनम् ॥ १२४ ॥

ततः सहस्रशो भद्रः ससर्ज गरुडान्बहून् ॥

वैनतेयादभ्यधिकान्गरुडं ते प्रदुद्रुवुः ॥ १२५ ॥

तान्दृष्ट्वा गरुडो धीमान्पलायनपरोऽभवत् ॥

तत्स्थितो माधवो वेगाद्यथा गौः सिंहपीडिता ॥ १२६ ॥

अंतर्हिते वैनतेये विष्णौ च पद्मसंभवः ॥

आगत्य वारयामास वीरभद्रं शिवप्रियम् ॥ १२७ ॥

प्रसादयामास स तं गौरवात्परमेष्ठिनः ॥

तेऽदृश्यं नैव जानंति रुद्रं तत्रागतं सुराः ॥ १२८ ॥

स देवो विष्णुना ज्ञातो ब्रह्मणा च दधीचिना ॥

तुष्टाव भगवान्ब्रह्मा दक्षो विष्णुर्दिवौकसः॥ १२९ ॥

विशेषात्पार्वतीं देवीमीश्वरार्द्धशरीरिणीम् ॥
स्तोत्रैर्नानाविधैर्दक्षः प्रणम्य च कृताञ्जलिः ॥ 7.2.9.१३० ॥
ततो भगवती प्राह प्रहसंती महेश्वरम् ॥
त्वमेव जगतः स्रष्टा संहर्ता चैव रक्षकः ॥ १३१ ॥
अनुग्राह्यो भगवता दक्षश्चापि दिवौ कसः ॥
ततः प्रहस्य भगवान्कर्पद्दी नीललोहितः ॥
उवाच प्रणतान्देवान्दक्षं प्राचेतसं हरः ॥१३२॥
गच्छध्वं देवताः सर्वाः प्रसन्नो भवतामहम् ॥
संपूज्यः सर्वयज्ञेषु प्रथमं देवकर्मणि ॥ १३३ ॥
त्वं चापि शृणु मे दक्ष वचनं सर्वरक्षणम् ॥
त्यक्त्वा लोकेषणामेनां मद्भक्तो भव यत्नतः ॥ १३४ ॥
भविष्यसि गणेशानः कल्पांतेऽनुग्रहान्मम ॥
तावत्तिष्ठ ममादेशात्स्वाधिकारेषु निर्वृतः ॥
इत्युक्त्वाऽदर्शनं प्राप्तो दक्षस्यामिततेजसः ॥ १३५ ॥
दधीचिना शिवो दृष्टो विज्ञप्तः शापमोचने ॥
कथं शापं मया दत्तं तरिष्यंति तवाज्ञया ॥ १३६ ॥
॥ शिव उवाच ॥ ॥
भविष्यंति त्रयी बाह्याः संप्राप्ते तु कलौ युगे ॥
पठिष्यंति च ये वेदास्ते विप्राः स्वर्गगामिनः ॥ १३७ ॥
आगमा विष्णुरचिताः पठ्यन्ते ये द्विजातिभिः ॥
तेपि स्वर्गं प्रयास्यंति मत्प्रसादान्न संशयः ॥ १३८ ॥
कलिकालप्रभावेन येषां पाठो न विद्यते ॥
गृहस्थधर्माचरणं कर्तव्यं मम पूजनम् ॥ १३९ ॥
अवश्यं च मया कार्यं तेषां पापविमोचनम् ॥
भिक्षां भ्रमामि मध्याह्ने अतीते भस्मगुंठितः ॥ 7.2.9.१४० ॥
जटाजूटधरः शांतो भिक्षापात्रकरो द्विजः ॥
यो ददाति च मे भिक्षां स्वर्गं याति स मानवः ॥ १४१ ॥
उपानहौ वा च्छत्रं वा कौपीनं वा कमंडलुम् ॥

यो ददाति तपस्विभ्यो नरो मुक्तः स पातकैः ॥

दधीचेः स वरान्दत्त्वा वभाषे सह विष्णुना ॥ १४२ ॥

॥ रुद्र उवाच ॥ ॥

यस्ते मित्रं स मे मित्रं यस्ते रिपुः स मे रिपुः ॥

यस्त्वां पूजयते विष्णो स मां पूजयते ध्रुवम् ॥ १४३ ॥

यः स्तौति त्वां स मां स्तौति प्रियो यस्ते स मे प्रियः ॥

अहं यत्र च तत्र त्वं नास्ति भेदः परस्परम् ॥ १४४ ॥

॥ कृष्ण उवाच ॥ ॥

एवमेतत्परं देव वक्तव्यं यत्तथैव तत् ॥

अर्द्धनारीनरवपुर्यदा दृष्टो मया पुरा ॥ १४५ ॥

नेयं नारी मया दृष्टा दृष्टं रूपं किलात्मनः ॥

शंखचक्रगदाहस्तं वनमालाविभूषितम् ॥ १४६ ॥

श्रीवत्सांकं पीतवस्त्रं कौस्तुभेन विराजि तम् ॥

द्वितीयार्द्धं मया दृष्टं शूलहस्तं त्रिलोचनम् ॥ १४७ ॥

चंद्रावयवसंयुक्तं जटाजूटकपालिनम् ॥

एकीभावं प्रपन्नोहं यथा पूर्वं तथाऽधुना ॥

न मां गौरी प्रपश्येत प्रपश्यामि तथैव च ॥ १४८ ॥

॥ ईश्वर उवाच ॥ ॥

आवयोरंतरं नास्ति चैकरूपावुभावपि ॥

यो जानाति स जानाति सत्यलोकं स गच्छति ॥ १४९ ॥

इत्युक्त्वा स ययौ तत्र कैलासं पर्वतोत्तमम् ॥

कृष्णोपि मंदरं प्राप्तो देवकार्येण केनचित् ॥ 7.2.9.१५० ॥

अत्रांतरे दैत्यराजो महादेवप्रसादतः ॥

हिरण्यनेत्रतनयो बाधतेसौ जगत्त्रयम् ॥ १५१ ॥

अमरत्वं हराल्लब्ध्वा कामांधो नैव पश्यति ॥

हरांगधारिणीं देवीं दिव्यरूपां सुलोचनाम् ॥१५२॥

ममेति स च जानाति याचते च हरं प्रति॥

हरोऽपि कार्यव्यसनस्त्यक्त्वा कैलासपर्वतम् ॥१५३॥

मंदरं समनुप्राप्तो देवं द्रष्टुं जनार्द्दनम् ॥
परस्परं समालोच्यामुंचद्देवीं स मंदरे ॥ १५४ ॥
नारायणगृहे देवी स्थिता देवीगणैर्वृता ॥
अत्रांतरे गौतमस्तु गोवधान्मलिनीकृतः ॥ १५५ ॥
पवित्रीकरणायास्य भिक्षुरूपधरो हरः ॥
गौतमस्य गृहं प्राप्तो मंदरं चांधको गतः ॥१५६॥
ययाचे पार्वतीं दुष्टो युद्धं चक्रे स विष्णुना ॥
हारितं तु गणैः सर्वैर्देवीं दैत्यो न पश्यति ॥१५७॥
स्त्रीरूपधारी कृष्णोऽसौ गौरीं रक्षति मंदिरे ॥
गौरीणां तु शतं चक्रे हरिस्तत्र स मायया ॥ १५८ ॥
विष्णोर्देहसमुद्भूता दिव्यरूपा वरस्त्रियः ॥
अन्धको नैव जानाति कैषा गौरी नु पार्वती ॥ १५९ ॥
विलंबस्तत्र सञ्जातो मोहितो विष्णुमायया ॥
तावच्छिवः समायातः कृत्वा गौतमपावनम् ॥ 7.2.9.१६० ॥
भिक्षामात्रेण चान्नेन गौतमो निर्मलीकृतः ॥
सोंधकेन तदा युद्धं चक्रे रुद्रोऽपि कोपितः ॥ १६१ ॥
अमरोऽसौ हराज्जातः शूले प्रोतः सुदारुणे ॥
शूलस्थस्तु स्तुतिं चक्रे तस्य तुष्टो महेश्वरः ॥ १६२ ॥
गणेशत्वं ददौ तस्मै यावदाभूतसंप्लवम् ॥
स्वसरूपामुमादेवीं कृष्णस्तस्मै ददौ स्वयम् ॥ १६३ ॥
गौरीरूपाः स्त्रियश्चान्या धरित्र्यां तास्तु प्रेषिताः ॥
कृत्वा नामानि सर्वासां लोके पूज्या भविष्यथ ॥ १६४ ॥
एता ये पूजयिष्यंति पूजयिष्यन्ति ते शिवाम् ॥
शिवां ये पूजयिष्यंति तेऽर्चयन्ते हरं हरिम् ॥१६५॥
उमां समादाय ययौ हरो गिरिं वृषं समारुह्य सुरासुरार्चितः ॥
हरिस्तु रेमे रमया सहांधके हते च देवाः सुरराजमाययुः ॥१६५॥
ब्रह्मेशनारायणपुण्यचेतसां शृण्वन्ति चित्रं चरितं महात्मनाम्॥
मुच्यंति पापैः कलिकालसंभवैर्यास्यंति नाकं गणवृन्दवंदिताः ॥ १६७ ॥

एवं काले वर्त्तमाने हरः कैलासपर्वते ॥

रक्षोदानवदैत्यैस्तु गृह्यतेऽसौ वरान्बहून् ॥ १६८ ॥

ब्रह्मदत्तवरो रौद्रस्तारकाख्यो महासुरः ॥

तेन सर्वं जगद्व्याप्तं तस्य नष्टा सुरा रणे ॥ १६९ ॥

महादेवसुतेनाजौ हंतव्योऽसौ ससर्ज तम् ॥

कार्तिकेयमुमापुत्रं रुद्रवीर्यसमुद्भवम् ॥ 7.2.9.१७० ॥

देवैरिन्द्रादिभिः सर्वैः सेनाध्यक्ष्येभिषेचितः ॥

तेनापि दैवयोगेन तारकाख्यो निपातितः ॥ १७१ ॥

कैलासशिखरासीनो देवदेवो जगद्गुरुः ॥

उमया सह संतुष्टो नन्दिभद्रादिभिर्वृतः ॥ १७२ ॥

स्कन्देन गजवक्त्रेण धनाध्यक्षेण संयुतः ॥

अथ हासपरं देवं शनैः प्रोवाच तं शिवा ॥ १७३ ॥

केन देव प्रकारेण तोषं यास्यसि शंकर ॥

मर्त्यानां केन दानेन तपसा नियमेन वा ॥ १७४ ॥

केन वा कर्मणा देव केन मन्त्रेण वा पुनः ॥

स्नानेन केन देवेश केन धूपेन तुष्यसि ॥ १७५ ॥

पुष्पेण केन मे नाथ केन पत्रेण शंकर ॥

कया संतुष्यसे स्तुत्या साहसेन च केन वै ॥ १७६ ॥

नैवेद्येन च केन त्वं केन होमेन तुष्यसि ॥

केन कष्टेन वा देव केनार्घेण मम प्रभो ॥ १७७ ॥

षोडशैते मया प्रश्नाः पृष्टा मे निर्णयं वद ॥ १७८ ॥

॥ शंकर उवाच ॥ ॥

साधु पृष्टं त्वया देवि कथयिष्ये मम प्रियम् ॥

शिवपूजाप्रकारोऽयं क्रियते वचसा गुरोः ॥१७९॥

अभयं सर्वजंतूनां दानं देवि मम प्रियम् ॥

सत्यं तपः समाख्यातं परदारविवर्जनम् ॥ 7.2.9.१८० ॥

प्रियो मे नियमो देवि कर्म तल्लोकरञ्जनम् ॥

मयों नमः शिवायेति मन्त्रोऽयमुररीकृतः ॥ १८१ ॥

सर्वपापविनिर्मुक्तो मम देवि स वल्लभः ॥

पापत्यागो भवेत्स्नानं धूपो मे गौग्गुलः प्रियः ॥ ॥ १८२ ॥

धत्तूरकस्य पुष्पं मे बिल्वपत्रं मम प्रियम् ॥

स्तुतिः शिवशिवायेति साहसं रणकर्मणि ॥ १८३ ॥

न बिभेति नरो यस्तु तस्याग्रे संभवाम्यहम् ॥

हंतकारो गवां यस्तु नैवेद्यं मम वल्लभम् ॥ १८४ ॥

पूर्णाहुत्या परा प्रीतिर्जायते मम सुन्दरि॥

शुश्रूषा वल्लभं कष्टं यतीनां च तपस्विनाम् ॥ १८५ ॥

सूर्योदये महादेवि मध्याह्नेऽस्तमने तथा ॥

अर्घो यो दीयते सूर्ये वल्लभोऽसौ मम प्रिये ॥ १८६ ॥

किं दानैः किं तपोभिर्वा किं यज्ञैर्भाववर्जितैः॥

दया सत्यं घृणाऽस्तेयं दंभपैशुन्यवर्जितम्॥

भक्त्या यद्दीयते स्तोकं देवि तद्वल्लभं मम॥ १८७॥

एवं यावत्कथयति प्रश्नान्सूक्ष्मान्यथोदितान् ॥

तावद्ब्रह्मादिभिर्देवैर्विष्णुस्तत्र ययौ स्वयम् ॥ १८८ ॥

॥ विष्णुरुवाच ॥ ॥

नाहं पालयितुं शक्तस्त्वं ददासि वरान्बहून् ॥

दैत्यानां दानवादीनां राक्षसानां महेश्वर ॥ १८९ ॥

विकृतिं यांति पश्चात्ते कष्टं वध्या भवंति मे ॥

पत्रेण पुष्पमात्रेण ॐकारेण शिवेन च ॥

मुक्तिं याति नरो देव भवभक्तिं करोतु कः ॥ 7.2.9.१९० ॥

इन्द्रादयोऽपि ये देवा यज्ञैराप्याययंति ते ॥

न यजंति द्विजा यज्ञान्भिक्षादानेन तुष्यसि ॥ १९१ ॥

॥ रुद्र उवाच ॥ ॥

इन्द्रादिभिर्न मे कार्यं ब्रह्मा मे किं करिष्यति ॥

येन केन प्रकारेण प्रजाः पाल्यास्त्वया ऽधुना ॥ १९२ ॥

मदीया प्रकृतिस्त्वेषा तां कथं त्यक्तुमुत्सहे ॥

त्वयाहं ब्रह्मणा देवैर्वरकर्मणि योजितः ॥ १९३ ॥

इदानीमेव किं नष्टं मुक्त्वा देवीं तवाग्रतः ॥

भूत्वा मूर्तिं परित्यज्य एकाकी विचराम्यहम् ॥ १९४ ॥

इत्युक्त्वा स शिवो देवस्तत्रैवांतरधीयत ॥

गते तस्मिञ्छिवे तत्र संक्षोभः सुमहानभूत् ॥ १९५ ॥

उमा प्रोवाच चेन्द्रादीन्ब्रह्मविष्णुगणांस्तथा ॥

इदानीं किं मया कार्यं भवद्भिः शिववर्जितैः ॥ १९६ ॥

अत्रान्तरे च ये चान्ये देवास्तत्र समागताः ॥

ऋषयश्चैव सिद्धाश्च तथा नारदपर्वतौ ॥ १९७ ॥

गंगासरस्वतीनद्यो नागा यक्षाः समागताः ॥

ब्रह्मादिभिः समालोच्य कथमेतद्भविष्यति ॥ १९८ ॥

॥ विष्णुरुवाच ॥ ॥

सहैव गम्यतां तत्र यत्र देवो गतः शिवः ॥

स्वल्पा यासेन ते यान्तु नराः स्वर्गं शिवाज्ञया ॥ १९९ ॥

सत्यलोके नरा यान्तु देवा यान्तु धरातलम् ॥

रक्षोदानवदैत्यानां वरान्यच्छतु शंकरः ॥ 7.2.9.२०० ॥

तेषां बाधा मया कार्या यै च स्युर्धर्मलोपकाः ॥

दृष्टे शिवे मया कार्या व्यवस्था स्वर्गगामिनाम् ॥ ॥ २०१ ॥

त्रयीधर्मं परित्यज्य येऽन्यं धर्ममुपासते ॥

ते नरा नरकं यांतु यावदाभूतसंप्लवम् ॥ २०२ ॥

यदाऽदृश्यः शिवो जातः प्रवि वेश गिरेर्वनम् ॥

गिरीणां मध्यमास्थाय त्यक्त्वा दिव्ये स वाससी ॥ २०३ ॥

गजाजिनं परित्यज्य त्यक्त्वा मूर्त्तिं महेश्वरः ॥

भित्त्वा भूमितलं देवः स्थाणुरूपो बभूव सः ॥ २०४ ॥

यस्मात्स्वंयभूर्भवति भवंस्तस्मात्स्वयं हरः ॥

अत्रांतरे सुराः सर्वे न पश्यंति महेश्वरम् ॥

ज्ञानातीतं कलातीतं दिव्यध्यानबहिः स्थितम् ॥ २०५ ॥

यदा देवा व्याकुलाः संपतंति रविर्वायुरंबरं तोयमुर्वी ॥

निजे स्थाने वर्त्तमाना उमायाः शशंसुर्वै देवदेवं सुराणाम् ॥ २०६ ॥

स्वर्गे धरित्र्यां चरितं तलेषु देवेषु मर्त्येषु सरीसृपेषु ॥

स्थूलेषु सूक्ष्मेषु यथा तथैव सत्यं हि वाच्यं पदमस्मदीयम् ॥ २०७ ॥

ततो देवाः प्रचलिताः कृत्वा गौरीं पुरस्सरम् ॥

नंदि भद्रादयः सर्वे देवा इंद्रादयस्तथा ॥ २०८ ॥

स्कन्देन सहिता देवी सिंहारूढा ययौ स्वयम् ॥

अधिरुह्य गरुत्मंतं ययौ विष्णुः सनातनः ॥ २०९ ॥

हंसाधिरूढो भगवान्ब्रह्मा याति स पृष्ठतः ॥

ऐरावतं समारुह्य देवराजोऽगमत्स्वयम् ॥ ॥ 7.2.9.२१० ॥

गंगा सरस्वती देवी यमुना च महानदी ॥

देवताश्च गताः सर्वे नागा यक्षाः सकिंनराः ॥ २११ ॥

गताः संक्षेपतः सर्वे यत्र देवो महेश्वरः ॥

अधिरुह्य गिरेः शृंगमंबा देवी व्यवस्थिता ॥ २१२ ॥

विष्णुर्मुक्त्वा गरुत्मंतं स्थितो रैवतके गिरौ ॥

स्तुतिं चक्रे तदा देवी जगुर्गीतं सुसंयताः ॥ २१३ ॥

ऐरावतपदाक्रांतो न चचाल स पर्वतः ॥

भित्त्वा भूमितलं तत्र नागराजः समागतः ॥ २१४ ॥

गंगाद्याः सरितः सर्वास्तेन रंध्रेण चागताः ॥

ब्रह्मा विष्णुर्यदा देवाः स्तुतिं चक्रुः समंततः ॥ २१५ ॥

ददर्श रूपं भगवान्भवो देवस्तदा हरः ॥ २१६ ॥

ततो हृष्टाः सुराः सर्वे अंबा हृष्टा गणाश्च ते ॥

गम्यतां देव कैलासं देव्येति संप्रमोदितः ॥ २१७ ॥

॥ ईश्वर उवाच ॥ ॥

यदि हृष्टाः सुराः सर्वे गंगाद्याः सरितस्तथा ॥

गिरौ रैवतके विष्णुरंबा चात्रैव तिष्ठतु ॥२१८॥

सरस्वती च यमुना रेवा चास्मिन्व्यवस्थिताः ॥

स्वर्णरूपं जलं यस्मात्स्वर्णरेखेति सा नदी ॥ २१९ ॥

वस्त्रापथमिदं क्षेत्रं भवो देवोऽत्र तिष्ठतु ॥

तीर्थमेतन्मया प्रोक्तं भुक्तिमुक्तिप्रदायकम् ॥

अत्र स्नातो नरो नारी मुच्यते सर्व पातकैः ॥7.2.9.२२०॥

इति प्रोच्य शिवो देवः कलां न्यस्य भवे तदा ॥

पश्यतां सर्वदेवानां ययौ कैलासपर्वतम् ॥ २२१ ॥

अंबेति स्कन्दवदनात्कलां न्यस्य गिरौ तदा ॥

देवेन सहिता देवी वृषारूढा ययौ स्वयम् ॥ २२२ ॥

नारायणो रैवतके गिरौ रम्ये स्थितः स्वयम् ॥

कल्पादौ च युगादौ च स्थितो विष्णुः सदा गिरौ ॥ २२३ ॥

बहुरात्रस्थितो देवः कृत्वा दैत्यनिबर्हणम् ॥

रेमे रैवतके देवो यावदाभूतसंप्लवम् ॥ २२४ ॥

नारसिंहेन रूपेण हिरण्यकशिपुर्हतः ॥

हत्वा तदा गतस्तत्र नारसिंहं मुमोच ह ॥ २२५ ॥

महावराहरूपेण हिरण्याक्षो निपातितः ॥

तदेव मुक्त्वा देवेशः स्थितो रैवतके गिरौ ॥ २२६ ॥

स पृथुं पार्थिवं कृत्वा देवकार्येण वै नृप ॥

गिरौ रैवतके देव उवास सुरपूजितः ॥ २२७ ॥

अत्रागत्य पृथुः पूर्वं चक्रे देवप्रपूजनम् ॥

जपमाला तदा कण्ठे पृथुना संनिवेशिता ॥

दामोदरेति देवेशनाम चक्रे पृथुः स्वयम् ॥ २२८ ॥

वस्त्रापथे देववरो भवः स्थितो दामोदरो रैवतके व्यवस्थितः ॥

अंबेतिदेवी गिरिमूर्ध्नि संस्थिता देवाश्च सर्वे परितः प्रतिष्ठिताः ॥ २२९ ॥

क्षेत्राधिपास्तीर्थवरस्य रक्षका देवेन मुक्ता भवसंनिधानतः ॥

पश्यंति ये देववरं भवाभिधं मुच्यंति ते यांति दिवं नरा भुवः ॥ 7.2.9.२३० ॥

वस्त्रापथस्य क्षेत्रस्य भवस्य च मया तव ॥

उत्पत्तिः कथिता राजन्किमन्यच्छ्रोतुमिच्छसि ॥ २३१ ॥

शृणोति पठते यश्च कथां चेमां समंततः ॥

सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ २३२ ॥

ब्रह्मघ्नश्च सुरापश्च भ्रूणहा गुरुतल्पगः ॥

स्वर्णरेखाजले स्नातो मुच्यते सर्वपातकैः ॥ २३३ ॥

ये च कीटपतंगाद्याः स्वर्णरेखा जले मृताः ॥

सर्वपातकनिर्मुक्तास्ते प्रयांति सुरालयम् ॥ १३४ ॥

स्वर्णरेखाजले स्नात्वा संध्यां श्राद्धं करोति यः ॥

वस्त्रापथे भवं पूज्य ब्रह्मलोकं स गच्छति ॥ २३५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे वस्त्रापथक्षेत्रमाहात्म्ये भवोत्पत्तिवृत्तांत वर्णनंनाम नवमोऽध्यायः ॥ ९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १०



॥ पार्वत्युवाच ॥ ॥

अहो तीर्थस्य माहात्म्यं गिरे रैवतकस्य च ॥

भवस्य देवदेवस्य तथा वस्त्रापथस्य च ॥ १ ॥

गंगा सरस्वती चैव गोमती नर्मदा नदी ॥

स्वर्णरेखाजले सर्वास्तथा ब्रह्मा सवासवः ॥ २ ॥

ब्रह्मेन्द्र विष्णुमुख्यानां देवानां शंकरस्य च ॥

वासो विरचितस्तत्र यावद्ब्रह्मदिनं भवेत् ॥ ३ ॥

क्षेत्रतीर्थप्रभावं च प्रसादात्तव शंकर ॥

श्रुतं सविस्तरं सर्वमिदं त्वदुदितं मया ॥ ४ ॥

महेश्वर प्रभो ब्रूहि किं चकार जनेश्वरः ॥

भोजराजो मृगीं प्राप्य स च सारस्वतो मुनिः ॥ ५ ॥ ॥

॥ ईश्वर उवाच ॥ ॥

तासु सर्वासु नारीषु रूपौदार्यगुणाधिका ॥

नित्यं प्रमुदिता शांता नित्यं मंगलकारिका ॥ ६ ॥

माता स्वसा सखी पुत्री स्त्रीषु संबन्धवर्धनी ॥

पिता भ्राता गुरुः पुत्रः पुरुषेषु तथा कृतः ॥ ७ ॥

एवं गुणवतीं भार्यां प्राप्य हृष्टो जनेश्वरः ॥

सारस्वतं मुनिं स्तुत्वा राजा वचनमब्रवीत् ॥ ८ ॥

॥ राजोवाच ॥ ॥

ब्रह्मा विष्णुर्हरः सूर्य इन्द्रोऽग्निर्मरुतां गणः ॥

ब्रह्मचर्येण तपसा त्वया सन्तोषिताः प्रभो ॥ ९ ॥

दैवतं परमं मे त्वं पिता माता गुरुः प्रभुः ॥

येन जन्मांतरं सर्वं प्रत्यक्षं कथितं मम ॥ 7.2.10.१० ॥

सुराष्ट्रदेशो विख्यातो गिरी रैवतको महान् ॥

भवः स्वयंभूर्भगवान्क्षेत्रे वस्त्रापथे श्रुतः ॥ ११ ॥

उज्जयंतगिरेर्मूर्ध्नि गौरीस्कन्दगणेश्वराः ॥

भावयंतो भवं सर्वे संस्थिता ब्रह्मवासरम् ॥ १२ ॥

वामनो नगरं स्थाप्य शिवं सिद्धेश्वरं प्रति ॥

जित्वा दैत्यं बलिं बद्ध्वा स्वयं रैवतके स्थितः ॥ १३ ॥

इत्येतत्सर्वमाश्चर्यं जीवद्भिर्यदि दृश्यते ॥

तीर्थयात्राविधानेन भवो वस्त्रापथे हरिः ॥ १४ ॥

त्यक्त्वा राज्यं प्रियान्पुत्रान्पत्त्यश्वरथकुञ्जरान् ॥

पुत्रं राज्ये प्रतिष्ठाप्य गन्तव्यं निश्चितं मया ॥ १५ ॥

त्वत्प्रसादाच्छ्रुतं सर्वं गम्यते यदि दृश्यते ॥

तीर्थयात्राविधानेन भवो वस्त्रापथे हरिः ॥ १६ ॥

सूर्यलोकं सोमलोकमिंद्रलोकं हरेः पुरम् ॥

ब्रह्मलोकमतिक्रम्य यास्येऽहं शिवमंदिरम् ॥ १७ ॥

श्रुत्वा हि वाक्यं विविधं नरेन्द्रात्प्रहृष्टरोमा स मुनिर्बभूव ॥

जिज्ञासमानो हि नृपस्य सर्वं निवारयामास मुनिर्नरेन्द्रम् ॥ १८ ॥

॥ सारस्वत उवाच ॥ ॥

गृहेऽपि देवा हरविष्णुमुख्या जलानि दर्भा नृपते तिलाश्च ॥

अनेकदेशांतरदर्शनार्थं मनो निवार्यं नृपते त्वयेति ॥ १९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये वस्त्रापथ क्षेत्रयात्रोत्सुकस्य भोजभूपस्य सारस्वतमुनिकृतोपदेशवर्णनंनाम दशमोऽध्यायः ॥ १० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः ११



॥ ईश्वर उवाच ॥ ॥

सारस्वतस्य विप्रस्य श्रुत्वा भोजनृपो वचः ॥

विवर्णवदनो भूत्वा प्रगृह्यांघ्री वचोऽब्रवीत् ॥ १ ॥

मुने नैवं त्वया वाच्यं गंतव्यं निश्चितं मया ॥

नराणां पुण्यदा यात्रा कथयस्व कथं भवेत् ॥ २ ॥

किं ग्राह्यं किं च मोक्तव्यं किं देयं किं न दीयते ॥

तीर्थोपवासः स्नानं च संध्यास्नानविधिक्रमः ॥

पूजा निद्रा जपो रात्रौ सर्वं संक्षेपतो वद ॥ ३ ॥

॥ सारस्वत उवाच ॥ ॥

सुराष्ट्रदेशे गन्तव्यं गिरौ रैवतके यदि ॥

नृप यात्राविधिं वक्ष्ये त्वमेकाग्रमनाः शृणु ॥ ॥ ४ ॥

बृहस्पतिबलं गृह्य सूर्यं संतर्प्य चोत्तमम् ॥

वामतः पृष्ठतः सर्वं वृत्वा संशोध्य वासरम् ॥ ५ ॥

चंद्रलग्नं ग्रहाज्ज्ञात्वा बलिष्ठाज्जन्मराशितः॥

शकुनं च शुभं लब्ध्वा प्रस्थातव्यं नृपैर्नृप ॥ ६ ॥

तीर्थे सदैव गंतव्यं सर्वे मासाश्च शोभनाः ॥

तिथयश्चोत्तमाः सर्वाः स्नानदानार्चनादिषु ॥ ७ ॥

अष्टम्यां च चतुर्दश्यां मासांते पूर्णिमादिने ॥

संक्रांतौ ग्रहणे काला एते प्रोक्ता भवार्चने ॥८॥

कैलासं पर्वतं त्यक्त्वा देवीं देवांश्च संगतान्॥

वैशाखे पंचदश्यां तु भूमिं भित्त्वा भवोऽभवत् ॥ ९ ॥

तस्मिन्नेव दिने देवी स्वर्णरेखा नदी तलात् ॥

पंथानं वासुकिं प्राप्य सर्वपापप्रणाशनी ॥ 7.2.11.१० ॥ ।

ऐरावतपदाक्रांत उज्जयन्तो महागिरिः ॥

सुस्राव तोयं बहुधा गजपादोद्भवं शुचि ॥ ११ ॥
देवा ब्रह्मादयः सर्वे गंगाद्याः सरितस्तथा ॥
वस्त्रापथे महाक्षेत्रे भवभावेन संगताः ॥ १२ ॥
वस्त्रापथस्य क्षेत्रस्य प्रमाणं शृणु भूपते ॥
हरस्य त्यजतो भूमौ पतितं वस्त्रभूषणम् ॥ १३ ॥
तावन्मात्रं स्मृतं क्षेत्रं देवैर्वस्त्रापथं कृतम् ॥
उत्तरेण नदी भद्रा पूर्वस्यां योजनद्वयम् ॥ १४ ॥
दक्षिणेन बलेः स्थानमुज्जयन्तो नदीमनु ॥
अपरस्यां परं नद्यो संगमं वामनात्पुरात् ॥ १५ ॥
एतद्वस्त्रापथं क्षेत्रं भुक्तिमुक्तिप्रदायकम् ॥
क्षेत्रस्य विस्तरो ज्ञेयो योजनानां चतुष्टयम् ॥ १६ ॥
वैशाखपंचदश्यां तु भवो भावेन भूपते ॥
पूज्यते शिवलोके तु स्थीयते ब्रह्मवासरम् ॥ १७ ॥
अतो वसंते संप्राप्ते प्रयाणं कुरु भूपते ॥
निगृह्य नियमान्भूत्वा शुचिः स्नातो जितेन्द्रियः ॥ १८ ॥
गजवाजिरथांस्त्यक्त्वा पदाभ्यां याति यो नरः ॥
पुष्पकेण विमानेन स याति शिवमंदिरम् ॥ १९ ॥
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
भिक्षाहारेण तोयेन फलाहारेण वा यदि ॥ 7.2.11.२० ॥
उपवासेन कृच्छ्रेण शाकाहारेण याति यः ॥
स याति सुन्दरीवृन्दैर्वीज्यमानो गणैर्दिवि ॥ २१ ॥
मलस्नानं विना मार्गे पादाभ्यंगविवर्जितः ॥
मलधारी क्षीणतनुर्यष्टिहस्तो जितेन्द्रियः ॥ २२ ॥
शीतातपजलक्लिष्टः शिवस्मरणतत्परः ॥
यदि याति नरो याति स भित्त्वा सूर्यमंडलम् ॥ २३ ॥
नरकस्थानपि पितॄन्मातृतः पितृतो नृप ॥
अक्षयं सप्त सप्तैव नयेदेवं शिवालये ॥ २४ ॥
लुण्ठन्भूमौ यदा याति मृगचर्मावगुंठितः ॥

दण्डप्रमाणभूमेर्वा संख्यां कुर्वन्नरो यदि ॥ २५ ॥

अरण्ये निर्जले स्थाने जलांतःपरिपीडितः ॥

शरण्यं शंकरं कृत्वा मनो निश्चलमात्मनः ॥ २६ ॥

सप्तद्वीपवतीं पृथ्वीं समुद्रवसनां नृप ॥

स लब्ध्वा बहुभिर्यज्ञैर्यज्ञे दत्त्वा च मेदिनीम् ॥ २७ ॥

सप्तभौमविमानस्थो दिव्यदेहो हराकृतिः ॥

निरीक्ष्य मेदिनीं मंदं कृत मंगलमण्डनम् ॥ २८ ॥

मृगनेत्राभुजस्पर्शलग्नपीनपयोधरः ॥

गीतवाद्यविनोदेन सत्यलोकं व्रजेन्नरः ॥ २९ ॥

विधाय भुजवेगं वा पादौ बद्ध्वा शनैः शनैः ॥

मौनेन मानुषो मायां त्यक्त्वा याति शिवालये ॥ 7.2.11.३० ॥

ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ॥

कृतघ्नो मुच्यते पापैर्मृतो मुक्तिमवाप्नुयात् ॥ ३१ ॥

मातरं पितरं देशं भ्रातरं स्वजनबांधवान् ॥

ग्रामं भूमिं गृहं त्यक्त्वा कृत्वा चेंद्रियसंयमम् ॥ ३२ ॥

गृहीत्वा शिवसंस्कारं नरो भ्राम्यति भूतले ॥

द्रष्टुं तीर्थान्यनेकानि पुण्यान्यायतनानि च ॥ ३३ ॥

कस्मिंस्तीर्थे शुभे स्थाने छित्त्वा संसारबन्धनम् ॥

अभयां दक्षिणां दत्त्वा शिवशिवेति भाषकः ॥ ३४ ॥

एकांते निर्जने स्थाने शिवस्मरणतत्परः ॥

यदि तिष्ठति तं यान्ति नमस्कर्तुं नराधिप ॥ ३५ ॥

आयांति देवताः सर्वे चिह्नं तस्य निरीक्षितुम् ॥

विमानवृन्दैर्नेतव्यः कदासौ पुरुषोत्तमः ॥ ३६ ॥

यदा तु पञ्चत्वमुपैति काले कलेवरं स्कन्धकृतं नरैश्च ॥

निरीक्ष्यमाणः सुरसुन्दरीभिः स नीयमानो मदविह्वलाभिः ॥ ३७ ॥

सुरेन्द्रसूर्याग्निधनेशरुद्रैः संपूज्यमानः शिवरूपधारी ॥

सुरादिलोकान्प्रविमुच्य वेगाच्छिवालये तिष्ठति रुद्रभक्तः ॥ ३८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे द्वितीये वस्त्रापथक्षेत्र माहात्म्ये वस्त्रापथयात्राविधानवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १२

https://sa.wikisource.org/s/gkb
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ सारस्वत उवाच ॥ ॥

गंगोदकं मधुघृते कुंकुमागुरुचंद नम् ॥

गुग्गुलं बिल्वपत्राणि बकपुष्पं च यो वहेत् ॥ १ ॥

पदचारी शुचितनुर्भारं स्कन्धे निधाय च ॥

तीर्थे स्नात्वा शिवं विष्णुं ब्रह्माणं शंकरं प्रियम् ॥ २ ॥

दृष्ट्वा निवेदयेद्यस्तु स मुक्तः सर्वबन्धनैः ॥

स नरो गणतां याति यावदाभूतसंप्लवम् ॥ ३ ॥

कलत्रमित्रपुत्रैर्वा भ्रातृभिः स्वजनैर्नरैः ॥

सहितो वा नरैर्याति तीर्थे देवं विचिंत्य च ॥ ४ ॥

देवमूर्तिं शुभां कृत्वा रथस्थां सुप्रतिष्ठिताम् ॥

चन्दनागुरुकर्पूरैरर्चितां कुंकुमेन च ॥ ५ ॥

पूजयन्विविधैः पुष्पैर्धूपदीपादिकैर्नृप ॥

गीतनृत्यैः सवादित्रैर्हास्यलास्यैरनेकधा ॥ ६ ॥

धरित्रीं कांचनं गाश्च जलान्नवसनानि च ॥

तृणेन्धने प्रियां वाणीं यच्छन्याति नरो यदि ॥ ७ ॥

देवांगनाकरग्राहगृहीतो नन्दनं वनम् ॥

प्राप्य भुंक्ते शुभान्भोगान्यावदाचन्द्रतारकम् ॥ ८ ॥

तीर्थे संचरितः पुरुषो रोगैः प्राणान्विमुञ्चति ॥

अदृष्ट्वा दैवतं तीर्थे दृष्टतीर्थफलं लभेत् ॥ ९ ॥

संसारदोषान्विविधान्विचिन्त्य स्त्रीपुत्रमित्रेष्वपि बंधमुक्तः ॥

विज्ञाय बद्धं पुरुषं प्रधानैः स सर्वतीर्थानि करोति देहम् ॥ 7.2.12.१० ॥

आजन्मजन्मांन्तरसंचितानि दग्ध्वा स पापानि नरो नरेन्द्र ॥

तेजोमयं सर्वगतं पुराणं भवोद्भवं पश्यति मुच्यते सः ॥११॥

तीर्थे विप्रवचो ग्राह्यं स्नात्वा संध्यार्चनादिकम् ॥

दर्भास्तिला हविष्यान्नं प्रयोगाः श्रद्धया कृताः ॥१२॥

अगस्त्यं भृङ्गराजं च पुष्पं शतदलं शुभम् ॥

कर्पूरागुरुश्रीखंडं कुंकुमं तुलसीदलम् ॥ १३ ॥

बिल्वप्रमाणपिंडेषु दीपोद्योतितभूमिषु ॥

तांबूल फलनैवेद्यं तिलदर्भोदकेन च ॥ १४ ॥

तीर्थे संकल्पितं मर्त्यैस्तदनंतं प्रजायते ॥

अयने विषुवे चैव संक्रांतौ ग्रहणेषु च ॥ १५ ॥

मासांतेऽपर पक्षे तु क्षयाहे पितृमातृके ॥

गजच्छायां त्रयोदश्यां द्रव्ये प्राप्तौ द्विजोत्तमः ॥ १६ ॥

गृहे श्राद्धं प्रकुर्वीत पितॄणामृणमुक्तये ॥

गृहाच्छतगुणं नद्यां या नदी याति सागरम् ॥ १७ ॥

प्रभासे पुष्करे राजन्गंगायां पिंडतारके ॥

प्रयागे नृपगोमत्यां भवदामोदराग्रतः ॥ १८ ॥

नर्मदादिषु तीर्थेषु कुर्याच्छ्राद्धं नरो यदि ॥

सर्वपापविनिर्मुक्तः पितरो यांति सद्गतिम्॥ १९ ॥

संतानमुत्तमं लब्ध्वा भुक्त्वा भोगाननुत्तमान् ॥

दिव्यं विमानमारुह्य प्रान्ते याति सुरालयम्॥ 7.2.12.२० ॥

जातकर्मादियज्ञेषु विवाहे यज्ञकर्मणि ॥

देवप्रतिष्ठाप्रारंभे वृद्धिश्राद्धं प्रकल्पयेत् ॥ २१ ॥

तृप्यन्ति देवताः सर्वा स्तृप्यंति पितरो नृणाम्॥

वृद्धिश्राद्धकृतो गेहे जायते सर्वमंगलम् ॥ २२ ॥

कामः क्रोधश्च लोभश्च मोहो मद्यमदादयः ॥

माया मात्सर्यपैशुन्यमविवेको विचारणा ॥ २३ ॥

अहंकारो यदृच्छा च चापल्यं लौल्यता नृप ॥

अत्यायासोप्यनायासः प्रमादो द्रोहसाहसम् ॥ २४ ॥

आलस्यं दीर्घसूत्रत्वं परदारोपसेवनम् ॥

अल्पाहारो निराहारः शोकश्चौर्यं नृपोत्तम ॥ २५ ॥

एतान्दोषान्गृहे नित्यं वर्जयन्यदि वर्तते ॥

स नरो मण्डनं भूमेर्देशस्य नगरस्य च ॥ २६ ॥
श्रीमान्विद्वान्कुलीनोऽसौ स एव पुरुषोत्तमः ॥
सर्वतीर्थाभिषेकश्च नित्यं तस्य प्रजायते ॥ २७ ॥
तदा तीर्थफलं सम्यक्त्यक्तदोषस्य जायते ॥
स्नानं सन्ध्या जपो होमः पितृदेवर्षितर्पणम् ॥
श्राद्धं देवस्य पूजा च त्यक्तदोषस्य जायते ॥ २८ ॥
प्रयागे वा कुरुक्षेत्रे सरस्वत्यां च सागरे ॥
गयायां वा रुद्रपदे नरनारायणाश्रमे ॥ २९ ॥
प्रभासे पुष्करे कृष्णे गोमत्यां पिंडतारके ॥
वस्त्रापथे गिरौ पुण्ये तथा दामोदरे नृप ॥ 7.2.12.३० ॥
भीमेश्वरे नर्मदायां स्कांदे रामेश्वरादिषु ॥
उज्जयिन्यां महाकाले वाराणस्यां च भूर्भुवः ॥ ३१ ॥
कालिंद्यां मथुरायां च सकृद्याति नरो यदि ॥
सदोषो मुच्यते दोषैर्ब्रह्महत्यादिभिः कृतैः ॥ ॥ ३२ ॥
अपि कीटः पतंगो वा पक्षी वा सूकरोऽपि वा ॥
खरोष्ट्रकुंजरा वाजिमृगसिंहसरीसृपाः ॥ ३३ ॥
ज्ञानतोऽज्ञानतो राजंस्तेषु स्था नेषु ये मृताः ॥
सर्वे ते पुण्यकर्माणः स्वर्गं भुक्त्वा सुखं बहु ॥ ३४ ॥
चतुर्वर्णेषु सर्वे ते जायंते कर्मबंधनात् ॥
कर्मबंधं विहायाशु मुक्तिं यांति नराः पुनः ॥ ३५ ॥
मोदंते तीर्थमरणात्स्वर्गभोगावसानतः ॥
संप्राप्य भारते खंडे कर्मभूमिं महोदयम् ॥ ३६ ॥
अनेकाश्चर्यसंयुक्तं बहुपर्वतमंडितम् ॥
गंगायाः सरितः सर्वाः समुद्रैः सह संगताः ॥ ३७ ॥
पदेपदे निधानानि संति तीर्थान्यनेकशः ॥
येषां स्मरणमात्रेण सर्वपापक्षयो भवेत् ॥ ३८ ॥
पातालमार्गा बहवः स्वर्गमार्गश्च दृश्यते ॥
गगने दृश्यते सूर्यो हृदये दृश्यते हरः ॥ ३९ ॥

ध्यानेन ज्ञानयोगेन तपसा वचसा गुरोः ॥

सत्येन साहसेनैव दृश्यते भुवनत्रयम् ॥ 7.2.12.४० ॥

वेदस्मृतिपुराणैश्च ये न पश्यंति भूतलम् ॥

पातालं स्वर्गलोकं च वंचितास्ते नरा इह ॥ ४१ ॥

ये विरज्यंति न स्त्रीषु कामासक्ता विचेतसः ॥

देहोन्यथा वरस्त्रीणामन्यथा तैश्च चिंतितम् ॥ ४२ ॥

जन्मभूमिषु ते रक्ता जन्यंते जंतवः पुनः ॥

मुक्तिमार्गात्पुनर्भ्रष्टा जायंते पशुयोनिषु ॥ ४३ ॥

धनानि संप्राप्य वराटिकां ये द्विजातिमुख्याय विधाय पूजाम् ॥

यच्छंति नो निर्मलचेतना ये नराधमा दैवहता मृतास्ते ॥ ४४ ॥

देहं सुपुष्टं विजरं च यौवनं लब्ध्वा न गंगादिषु यांति ये नराः ॥

माता पिता नो न सुतो न बांधवो भार्या स्वसा नो दुहिता न विद्यते ॥ ४५ ॥

एकस्तु यो याति कथं न क्लिश्यते मूर्खो न जानाति भवं महेश्वरम् ॥

स्नात्वा न पश्यंति हरं महेश्वरं दैवेन ते वै मुषिता नराधमाः ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये यात्रा विधिवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १३

https://sa.wikisource.org/s/gkc
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ सारस्वत उवाच ॥ ॥

छित्त्वा शुभाशुभं कर्म मुक्तिमिच्छेच्छिवां ततः ॥

इदं न शक्यते कर्त्तुं शुभं कार्यं तदा नरैः ॥ १ ॥

उत्थायोत्थाय स्नातव्यं पूज्यौ हरिहरौ स्वयम् ॥

सत्यं वाच्यं हितं कार्यं दानं देयं स्वशक्तितः ॥ २ ॥

परापवादभीरुत्वं परदारान्विवर्जयेत् ॥

सुवर्णभूमिहरणब्रह्मदेवस्ववर्जनम् ॥ ३ ॥

ब्राह्मणस्त्रीनरेंद्राणां बालवृद्धतपस्विनाम् ॥

पितृमातृगुरूणां च नाप्रियं मनसा वदेत् ॥ ४ ॥

देशकालपरिज्ञानं पात्रापात्रविवेचनम् ॥

छाया नृणां न वक्तव्या तक्राग्नींधनकांजिकम् ॥५॥

औषधं शाकमर्थिभ्यो दातव्यं गृह मेधिभिः ॥

एकादशीपंचदशीचतुर्दश्यष्टमीषु च ॥ ६ ॥

अमावास्याव्यतीपातसंक्रांतिग्रहणेषु च ॥

वैधृते पितृमात्रोश्च क्षयाहदिवसेषु च ॥ ७ ॥

युगादिमन्वादिदिने गृहे कार्यो महोत्सवः ॥

तीर्थे वा गमनं कार्यं गृहाच्छतगुणं यतः ॥ ८ ॥

इद्रियाणां जयः कार्यो मद्यं द्यूतं विवर्जयेत् ॥

विवादं गमनं युद्धं गृही यत्नेन वर्जयेत् ॥ ९ ॥

स्नानं दानं जपो होमो देवपूजा द्विजार्चनम् ॥

अक्षयं जायते सर्वं विधिवच्चेद्भवेत्कृतम् ॥ 7.2.13.१० ॥

एकापि गौः प्रदातव्या वस्त्रालंकारभूषणा ॥

दोग्ध्री सवत्सा तरुणी द्विजमुख्याय कल्पिता ॥ ११ ॥

संप्राप्य भारतं खंडं मानुषं जन्म चोत्तमम् ॥

धन्यो ददाति यो धेनुं स नरः सूर्यमण्डलम्॥
भित्त्वा याति विमानेन गम्यमानो गवादिभिः ॥१२॥
सप्त जन्मानि पापानि कृत्वा पापीह चाधमः॥
एको ददाति यो धेनुं मुच्यते सर्वपातकैः ॥ १३ ॥
यदा स नीयते बद्धो यममार्गेण किंकरैः ॥
तदा नंदा समागत्य स्वं पुत्रमिव पश्यति ॥ १४ ॥
विजित्य हुंकृतेनैव तान्दूतान्दूरतः स्थितान् ॥
गोप्रदं तं समादाय प्रयाति शिवमन्दिरम् ॥१५॥
वृषो धर्म हति प्रोक्तो येन मुक्तः स मुच्यते ॥
गोषु मध्ये पितॄन्सर्वान्हरमुद्दिश्य वा हरिम् ॥१६॥
सूर्यब्रह्मपुरे वासो जायते ब्रह्मवासरे ॥
दृढं ककुद्मिनं संतं युवानं भारसाधनम् ॥१७॥
हलक्षमं बलीवर्दं दत्त्वा विप्राय पर्वसु ॥
तमारुह्य नरो याति गोलोकं शिवसंनिधौ ॥ १८ ॥
अश्वं सास्तरणं दत्त्वा खलीनेन च संयुतम् ॥
अश्वराजबलात्स्वर्गे मोदते ब्राह्मवासरम् ॥ १९ ॥
गजदानाद्गजेंद्रेण नीयते नंदनं वनम् ॥
पृथिव्यां सागरांतायामेष राजा भविष्यति ॥7.2.13.२०॥
गृहं सोपस्करं दत्त्वा विप्राय गृहमेधिने ॥
लभते नंदने दिव्यं विमानं सार्वकामिकम् ॥ २१ ॥
द्रव्यं पृथिव्यां परमं सुवर्णं हृष्यंति देवा यदि दीयते ततः ॥
सूर्योपि तस्मै रुचिरं विमानं ददाति तावद्भ्रमतेऽत्र यावत् ॥२२॥
रौप्यं पितॄणामतिवल्लभं तद्दत्त्वा नरो निर्मलतामुपैति ॥
सोमस्य लोकं लभते स तावद्ध्रुवे निवद्धा ऋषयो हि यावत् ॥ २३ ॥
श्रीखंडकर्पूरसमाकुलानि तांबूलरत्नादिफलानि दत्त्वा ॥
पुष्पाणि वस्त्राणि सुखेन याति साकं शशांकं दिवि देववृंदैः ॥ ॥ २४ ॥
तक्रोदकतैलघृतदुग्धेक्षुरसमधूनि यो दद्यात् ॥
खर्जूरखंडद्राक्षावातामांजीरकैः साकम् ॥ २५ ॥

दर्भाक्षतमृद्गोमयदूर्वायज्ञोपवीतानि ॥
तिलचर्मसूर्यपिटकं दत्त्वा ख्यातश्चिरं स्वर्गे ॥ २६ ॥
आत्माहाराच्चतुर्भागं सिद्धान्नाद्यदि दीयते ॥
हन्तकारः स तं दत्त्वा ध्रुवं याति ध्रुवालये ॥ ॥ २७ ॥
आत्माहारप्रमाणेन प्रत्यहं गोषु दीयते ॥
गवाह्निकं तासु दत्त्वा नरो याति सुरालयम् ॥ २८ ॥
कंडनीपेषणीचुल्लीमार्जनीभिश्च यत्कृतम् ॥
पापं गृही क्षालयति ददद्भिक्षां दिनं प्रति ॥ २९ ॥
ग्रासमात्रा भवेद्भिक्षा सा नित्यं यत्र दीयते ॥
तद्गृहं गृहमन्यच्च स्मशानमिव दृश्यते ॥ 7.2.13.३० ॥
कुम्भान्सोदकसिद्धान्नांश्छत्रोपानत्कमंडलुम् ॥
अंगुलीयकवासांसि दत्त्वा याति नरो दिवि ॥ ३१ ॥
श्रांतस्य यानं तृषितस्य पानमन्नं क्षुधार्तस्य नरो नरेन्द्र ॥
दत्त्वा विमानेन सुरांगनाभिः संस्तूयमानस्त्रिदिवं स याति ॥ ३२ ॥
भोजनं सततं देयं यथाशक्त्या घृत प्लुतम् ॥
तन्मया हि यतः प्राणा अतः पुष्यंति प्राणिनः ॥ ३३ ॥
क्षुत्पीडा महती लोके ह्यन्नं तद्भेषजं स्मृतम् ॥
तेन सा शांतिमायाति ततोन्नं देयमुत्तमम् ॥ ३४ ॥
अन्नं वस्त्रं फलं तोयं तक्रं शाकं घृतं मधु ॥
पत्रं पुष्पं तथोपानत्कंथां यष्टिं कमंडलुम् ॥ ३५ ॥
छत्रपात्रे व्रतं विद्या अक्षमाला सुरार्चनम् ॥
कन्या कुशोपवीतानि बीजौषधगृहाणि च ॥ ३६ ॥
सस्यं क्षेत्रं यज्ञपात्रं योगपट्टं च पादुके ॥
कृष्णाजिनं बुद्धिदानं धर्मादेशकथानकम् ॥ ३७ ॥
अथैतत्संततं देयं तेन श्रेयो महद्भवेत् ॥
सर्वपापक्षयं कृत्वा दाता याति शिवालयम् ॥ ३८ ॥
श्राद्धे गृहस्था भोक्तव्याः कुलीना वेदपारगाः ॥
अक्रोधनाः स्नानशीलाः स्वदेशाचारतत्पराः ॥ ३९ ॥

आमंत्र्य पूर्वदिवसे निरीहा अपि ये द्विजाः ॥

अलोलुपा व्याधिहीना न तु ये ग्रामयाजिनः ॥ 7.2.13.४० ॥

तेषां पुरः प्रदातव्यं पिंडदानं विधानतः ॥

श्राद्धं श्रद्धाविहीनेन कृतमप्यकृतं भवेत् ॥ ४१ ॥

तस्माच्छ्रद्धान्वितैः श्राद्धं कर्तव्यं क्रोधवर्जितैः ॥

वानप्रस्थो ब्रह्मचारी पथिकस्तीर्थसेवकः ॥ ४२ ॥

अतिथिर्वैश्वदेवांते स पूज्यः श्राद्धकर्मणि ॥

सर्वदा यतयः पूज्याः स्वशक्त्या गृहमेधिभिः ॥ ४३ ॥

यात्राविधिमथो वक्ष्ये सेतिहासं नृपोत्तम ॥ ४४ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये तीर्थयात्राविधिवर्णने श्राद्धदानादिमाहात्म्यवर्णनंनाम त्रयोदशोऽध्यायः ॥ ॥ १३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १४



॥ सारस्वत उवाच ॥ ॥

वस्त्रापथे महाक्षेत्रे नगरे वामने पुरा ॥

पुत्रशोकाभिसंतप्तो वसिष्ठो भगवानृषिः ॥ १ ॥

आजगाम तपस्तप्तुं स्वर्णरेखानदीतटे ॥

ईशानकोणे नगरात्स्वर्णरेखानदीजले ॥ २ ॥

स्नात्वा ध्यात्वा शिवं देवं मनसाऽचिन्तयद्यदा ॥

तदा रुद्रः समायातस्त्रिनेत्रो वृषभध्वजः ॥

महर्षे तव तुष्टोऽहं किं करोमि वदस्व तत् ॥ ३ ॥

॥ वसिष्ठ उवाच ॥ ॥

यदि तुष्टो महादेव वरो देयो ममाधुना ॥

तदाऽत्र भवता स्थेयं यावदाचंद्रतारकम् ॥ ४ ॥

अत्र स्नानं करिष्यंति ये नराः पापकर्मिणः ॥

तेषां पापक्षयो देव कर्तव्यो भवता सदा ॥ ५ ॥

नरा ये पापकर्माणः पूजयंति त्रिलोचनम् ॥

तान्नरान्नय देवेश विमानैः शिवमंदिरम् ॥ ६ ॥

॥ सारस्वत उवाच ॥ ॥

तथेत्युक्ता हरो देवस्तत्रैवांतर धीयत ॥

हिरण्यकशिपुं हत्वा नरसिंहो महाबलः ॥

त्रैलोक्यमिंद्राय ददौ कालरुद्रं स्वयं ययौ ॥ ७ ॥

तदन्वये बलिर्जातः स चातीव बला धिकः ॥

एकातपत्रां पृथिवीं बलिश्चक्रे बलाधिकः ॥

अकृष्टपच्या सुजला धरित्री सस्यशालिनी ॥ ८ ॥

गन्धवंति च पुष्पाणि रसवंति फलानि च ॥

आस्कन्धफलिनो वृक्षाः पुटके पुटके मधु ॥ ९ ॥

चतुर्वेदा द्विजाः सर्वे क्षत्रिया युद्धकोविदाः ॥
गोषु सेवापरा वैश्याः शूद्राः शुश्रूषणे रताः ॥ ॥ 7.2.14.१० ॥
सदाचारा जनपदा ईतिव्याधिविवर्जिताः ॥
हृष्टपुष्टजनाः सर्वे सदानंदाः सदोद्यताः ॥ ११ ॥
कुंकुमागुरुलिप्तांगाः सुवेषाः साधुमंडिताः ॥
दारिद्र्यदुःखमरणैर्विमुक्ताश्चिरजीविनः ॥ १२ ॥
दीपोद्द्योतितभूभागा रात्रावपि यथा दिने ॥
विचरंति तथा मर्त्या देवा देवालये यथा ॥ ॥ १३ ॥
पृथिव्यां स्वर्गरूपायां राज्यं चक्रेऽसुरो बलिः ॥
नित्यं विवाहवादित्रैर्नादितं भूपमंदिरम् ॥ १४ ॥
धरित्रीं बुभुजे दैत्यो देवराजो यथा दिवि ॥
देवेन्द्रो बलिना नित्यं यज्ञैः संतोषितस्तदा ॥ १५ ॥
देवानां दानवानां च नास्ति युद्धं परस्परम् ॥
एक एव महीपालो युद्धं नास्ति धरातले ॥ १६ ॥
सपत्नककलिर्नाम नास्ति युद्धं हरेर्गजैः ॥
न सर्प्पनकुलैर्नित्यं न बिडालैश्च मूषकैः ॥ १७ ॥
मैत्रीभावं गतं सर्वं जगत्स्थावर जंगमम् ॥
त्रैलोक्यभ्रमणं कृत्वा नारदो नंदने वने ॥ १८ ॥
गतो न पश्यते युद्धं त्रैलोक्ये सचराचरे ॥
तावत्तस्योदरे पीडा महती समजायत ॥ १९ ॥
न मे स्नानादिना कार्यं तर्प्पणैः किं प्रयोजनम् ॥
जपहोमादिना सर्वमन्यथा मम चेष्टितम् ॥ 7.2.14.२० ॥
तत्स्नानं यत्र युध्यन्ते गजा दंतविघट्टनैः ॥
सा संध्या यत्र निहतैः कबन्धैर्भूर्विभूषिता ॥ २१ ॥
कुंतघातविनिर्भिन्नगजकुम्भोद्भवासृजा ॥
तृप्यंति यत्र क्रव्यादास्तर्पणं तन्मम प्रियम् ॥ २२ ॥
गजशीर्षैरगम्यास्ते निहताः क्षत्रिया रणे ॥
स होमो यत्र हूयंते गजाश्च नरपुंगवाः ॥ २३ ॥

शब्दाग्नौ नारदस्यायं होमस्त्रै लोक्यविश्रुतः ॥

छिन्नपादशिरोहस्तैरंतरांत्रविलबितैः ॥ २४ ॥

यदर्च्यते भूमितलं तन्मे नित्यं सुरार्चनम् ॥

किं देवैर्दिवि मे कार्यं किं मनुष्यैर्धरातले ॥ २५ ॥

पन्नगैः किं तु पाताले न युध्यन्ते परस्परम् ॥

तथा करिष्ये देवेन्द्रादुपेन्द्राच्च धरातले ॥ २६ ॥

रसातलं बलिर्यातु सत्यमस्तु वचो मम ॥

जीवितेनापि राज्येन यदा दामोदरं हरिम् ॥ २७ ॥

तोषयिष्यति यत्नेन तदेन्द्रोऽसौ भविष्यति ॥

देवेन्द्रो वृत्रहा भूत्वा भ्रष्टराज्यो भविष्यति ॥ २८ ॥

यदा वस्त्रापथे गत्वा भवं भावेन पूजयेत् ॥

सुराधिपस्तदा भूयो ब्रह्महत्याविवर्जितः ॥ २९ ॥

अनेन मन्त्रजाप्येन स शांतोदरवे दनः ॥

नारदो देवराजस्य समीपं सहसा ययौ ॥ 7.2.14.३० ॥

सिंहासनं समारुह्य नन्दने संस्थितो हरिः ॥

आस्ते परिवृतो देवेर्देवराजो महाबलः ॥ ॥ ३१ ॥

निरीक्षमाणो नृत्यन्तीं रंभां तां सुरसुन्दरीम्॥

आयांतं ददृशे देवो नारदं विस्मयान्वितः ॥ ३२ ॥

अहो विरुद्धो भगवान्नारदो मयि दृश्यते ॥

नृत्यते किं न वा नृत्ये गीयते किं न गीयते ॥ ३३ ॥

वाद्यतां तालमानैः किं यावच्चिंतापरो हरिः ॥

ऋषिः समागतस्तावज्जलाभ्युक्षणत त्परः ॥ ३४ ॥

सिंहासनं परित्यज्य समुत्थायाग्रतः स्थितः ॥

स्वागतेनाभिवाद्याथ बभाषे नारदं हरिः ॥ ३२ ॥

महर्षे स्वागतं तेऽद्य कुतो वाऽऽग म्यते त्वया ॥

स्नाने संध्यार्चने होमे कुशलं तव विद्यते ॥ ३६ ॥

इति प्रोक्तो विहस्याथ बभाषे नारदो हरिम् ॥

यद्येतज्जायते मह्यं किमन्येन प्रयोजनम् ॥ ३७॥

प्रेक्षणीकस्य ते स्थानं नाहं पश्यामि स्वर्पते ॥

यावद्राज्यं बलेस्तावत्त्वया मे न प्रयोजनम् ॥ ३८ ॥

आदित्याद्या ग्रहाः सर्वे काल मानेन योजिताः ॥

आहुत्या प्लाविता मेघा वर्षंति हृषिता भुवि ॥३९॥

रोगादिमरणं नास्ति यमो धर्मेण पीडितः ॥7.2.14.४०॥

एकातपत्रां पृथिवीं बुभुजे स नराधिपः ॥

त्रैलोक्यनाथेति महानृपेति संग्रामविद्याकुशलेति नित्यम् ॥

त्रैलोक्यलक्ष्मीकुचकामुकेति संस्तूयते चारणबंदिवृन्दैः ।४१॥

ब्रह्मेति कृष्णेति हरेति भूमाविंद्रेति सूर्येति धनाधिपेति ॥

देवारिनाथेति सुराधिपेति जेगीयते चारणबंदिवृन्दैः ॥ ४२ ॥

युद्धं विना दैत्यगणा हसंति मत्ताः प्रमत्ताः करिणो नदंति ॥

रथाधिरूढाः पुरुषा भ्रमंति सेनाधिपा स्त्रीषु गृहे रमंति॥४३॥

यज्ञाग्निधूमेन नभो विराजते सुवर्णरूपा पृथिवी विराजते॥

शून्यं तु वेदैर्भुवनं च शोभते धिष्ण्यं बलेर्दैत्यैगणैश्च शोभते ॥ ४४ ॥

बलिर्न जानाति सुराधिपं त्वां सुराश्च सर्वे बलियज्ञभोजिनः ॥

त्वमेव तेऽरिं हृदि चिंतय स्वयं युक्तं तवेदं कथितं मयेति ॥ ४५ ॥

रंभा न राजते रंगे मेनका त्वां न मन्यते ॥

तिलोत्तमापि मनुते बलिराजं सुरेश्वरम् ॥ ४६ ॥

उर्वशी चैव तं याति सुकेशा सह भाषते ॥

मञ्जुघोषा मुखं वक्त्रं कृत्वा त्वां न निरीक्षते ॥ ४७ ॥

पुलोमा पुलकोद्भेदं न करोति बलिं विना ॥

पौलोमी पुरतो गत्वा बलिं स्तौति च मंथरा ॥ ४८ ॥

नारदः पर्वतश्चैव हाहा हूहूश्च तुंबुरुः ॥

बलिराज्यं प्रशंसंति रुद्रस्याग्रे मया श्रुतम् ॥ ॥ ४९ ॥

आज्याहुतीभिः सन्तुष्टा ऋषयो ब्रह्मसद्मनि ॥

ब्रह्मणोऽग्रे प्रशंसंति तदेवं कथितं मया ॥ 7.2.14.५० ॥

बृहस्पतिर्यदाचष्टे न तद्वाच्यं मया तव ॥

इंद्राणी बलिनं मत्वा बलिं चित्रेषु पश्यति ॥ ५१ ॥

अनेन वाक्येन सुराधिपस्तु चचाल कोपावरितस्तदानीम् ॥
गजेति वज्रेति जगाद सूतं समानयासिं कवचं रथं च ॥ ५२ ॥
रथेन सूर्यो मरुतो गजेन वृषेण रुद्रो महिषेण सौरिः ॥
वाद्यंतु वाद्यानि रणाय मेऽद्य चण्डी गणेशास्त्वरिताः प्रयातु ॥ ५३ ॥
दृष्ट्वा सुरेन्द्रं संक्रुद्धं बृहस्पतिरुदारधीः ॥
ऋषिमध्ये गतो विद्वान्बभाषे समयोचितम् ॥ ५४ ॥
सामाद्या नीतयः प्रोक्ताश्चतस्रो मनुना पुरा ॥
सामसाध्येषु कार्येषु दण्डस्तेन न पात्यताम् ॥ ५५ ॥
अतो ह्युपेन्द्र्माहूय मंत्रयन्तु सुरोत्तमाः ॥
तदधीनं जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ५६ ॥
विनष्टेषु च कार्येषु तस्य वाच्यं शुभाशुभम् ॥
स एव प्रथमं गच्छेत्पृथिव्यां स्वार्थसिद्धये ॥ ५७ ॥
तथेति देवैर्विज्ञप्तस्तथा चक्रे सुरेश्वरः ॥
मन्दरेऽथ गिरौ विष्णुः सत्यलोकात्समागतः ॥ ५८ ॥
ऋषयस्तत्र ते यांतु समानेतुं जनार्द्दनम् ॥
इत्युक्तो नारदः स्वर्गात्स्नातुं प्राप्तः स मन्दरे ॥ ५९ ॥
गौतमोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ कश्यपः ॥
जमदग्निर्वसिष्ठश्च संप्राप्ता हरिमन्दिरे ॥ 7.2.14.६० ॥
गिरौ गंगा जले स्नानं संध्यां चक्रे स नारदः ॥
यावदास्ते तदा हृष्टा वालखिल्या महर्षयः ॥ ६१ ॥
विनयेनाभिवाद्याथ कथयामास नारदः ॥
ऋषयो मन्दरे प्राप्ता विष्णुं नेतुं सुरालये ॥ ६२ ॥
ऋषयो दर्शनं कर्त्तुं भवतामपि युज्यते ॥
तदेतद्वचनं श्रुत्वा हर्षितास्ते महर्षयः ॥ ६३ ॥
अंगुष्ठपर्वमात्रांस्तान्वामनान्हरिमन्दिरे॥
गतान्गंगाजले स्नातुं वालखिल्यान्पुरो हरिः॥ ६४॥
जहास वामनान्सर्वान्भाविकार्यबलात्ततः॥
ब्रह्मपुत्रा वालखिल्याः सर्वे ते शंसितव्रताः ॥ ६५ ॥

लज्जान्विताः क्रोधपरा उच्चैरूचुः परस्परम् ॥

केनापि देवकार्येण वामनोऽयं भविष्यति ॥ ६६ ॥

ऋषिभिर्वि ष्णुना सर्वे प्रतिबोध्य प्रसादिताः ॥

भाग्यमोक्षः कदा विष्णोर्भविष्यति तदुच्यताम् ॥६७॥

प्रभासादधिकं क्षेत्रं यदा वस्त्रापथं भवेत् ॥

भविष्यति तदा वृद्धिर्ध्रुवमण्डलव्यापिनी ॥

तथा वस्त्रापथं क्षेत्रं भविष्यति यवाधिकम् ॥ ६८ ॥

दृष्ट्वा सोमेश्वरं देवं दोषमुक्तो भविष्यति ॥

असाध्यसाधनी शक्तिर्भविष्यति स्थिरा तव ॥ ६९ ॥

वस्त्रापथे सोमनाथं यः पश्यति स पश्यति ॥

इन्द्रोपेन्द्रौ समालिंग्याथासीनौ तौ वरासने ॥ 7.2.14.७० ॥ ॥

॥ विष्णुरुवाच ॥ ॥

किं ते कार्यं देवराज तदवश्यं करोम्यहम् ॥ ७१ ॥

॥ इन्द्र उवाच ॥ ॥

हिरण्यकशिपोर्वंशे बलिर्दैत्यो महा बलः ॥

तेनेदं सकलं व्याप्तं देवा यज्ञभुजः कृताः ॥ ७२ ॥

देवलोके भूमिलोको गतः सर्वोऽपि केशव ॥

यावन्नो विकृतिं याति पूर्ववैरमनुस्मरन् ॥

भ्रष्टराज्यो बलिस्तावत्पातालमधितिष्ठतु ॥ ७३ ॥

सूर्यसोमान्वये कश्चिद्राजा भवतु भूतले ॥ ७४ ॥

॥ सारस्वत उवाच ॥ ॥

इत्येतद्वचनं श्रुत्वा स्वयं संचिन्त्य चेतसा ॥

तथा करिष्ये तं प्रोच्य मुनीन्प्राह जनार्दनः ॥ ७५ ॥

ऋषयस्तत्र गच्छंतु कारयन्तु महामखम् ॥

अहं तत्रागमिष्यामि साधयिष्यामि तं बलिम् ॥ ७६ ॥

इत्युक्ता मुनयः सर्वे गतास्ते यज्ञमण्डपे ॥

द्वादशाहो महायज्ञः प्रारब्धः सर्वदक्षिणः ॥ ७७ ॥

सुराष्ट्रदेशं विख्यातं क्षेत्रं वस्त्रापथं नृप ॥

तस्य दक्षिणदिग्भागे बलेः सिद्धं महापुरम् ॥ ७८ ॥
क्षेत्राद्बहिः समारब्धो यज्ञः सर्वस्वदक्षिणः ॥
शुक्रेणामन्त्रिताः सर्वे मुनयो यज्ञकर्मणि ॥
अतिहृष्टो बलिर्यज्ञे ददौ दानान्यनेकधा ॥ ७९ ॥
स्वर्णपात्रेषु सर्वेषु दीयते भोजनं बहु ॥
अतिथिर्ब्राह्मणो विद्वान्सर्वस्वेनापि पूज्यते ॥
दानाद्यज्ञो भवेत्पूर्णो दानहीनो वृथा भवेत् ॥ 7.2.14.८० ॥
एतस्मिन्नेव काले तु विष्णुर्वामनतां गतः ॥
मध्यदेशे चतुर्वेदो ब्राह्मणस्तीर्थयात्रिकः ॥
महोदरो ह्रस्वभुजः खञ्जपादो महाशिराः ॥ ८१ ॥
महाहनुः स्थूलजंघः स्थूलग्रीवोऽतिलंपटः ॥
श्वेतवस्त्रो बद्धशिखश्छत्रोपानत्कमण्डलून् ॥ ८२ ॥
द्रष्टुं तीर्थान्यनेकानि बभ्राम स महीतले ॥
सुराष्ट्रदेशे संप्राप्तः क्षेत्रे वस्त्रापथे द्विजः ॥ ८३ ॥
स्वर्णरेखा नदीतीरे चिंतयामास वामनः ॥
प्रथमं किं भवं दृष्ट्वा यामि सोमेश्वरं शिवम् ॥ ८४ ॥
अथ सोमेश्वरं पूज्य पश्चाद्यास्यामि मन्दरम् ॥
इति चिन्तापरो भूत्वा कृत्यं सञ्चिन्त्य चेतसा ॥
अत्र स्थितः सोमनाथं पूजयिष्यामि निश्चितम् ॥ ८५ ॥
वस्त्रापथे महाक्षेत्रे भवं सोमेश्वरं वृथा ॥
पूजयंति जना नित्यं तथा कार्यं मया ध्रुवम् ॥ ८६ ॥
देशानामुत्तमो देशो गिरीणामुत्तमो गिरिः ॥
क्षेत्राणामुत्तमं क्षेत्रं नदीनामुत्तमा सरित् ॥ ८७ ॥
दिव्यं वनं वनानां तु देवानामुत्तमो भवः ॥
यदा सोमेश्वरो देवो भूमिं भित्त्वा भविष्यति ॥ ८८ ॥
तदाम्रमण्डले दिव्यं क्षेत्रमेतद्यवाधिकम् ॥
चैत्र शुक्लचतुर्दश्यामग्निसाधनतत्परः ॥ ८९ ॥
ऊर्ध्वबाहुः सूर्यकाले भवं तावत्स पश्यति ॥

मध्यंदिनं परं याते दिननाथे विलंबिते ॥ 7.2.14.९० ॥

अग्नि तापांगसंतप्तस्तावत्पश्यति शंकरम् ॥

सोमनाथं शिवं शांतं सर्वदेवनमस्कृतम् ॥

अर्घ्येण पुष्पमिश्रेण जलमिश्रेण भामिनि ॥ ९१ ॥ ॥

॥ सारस्वत उवाच ॥ ॥

भूमिं भित्त्वाथ देवेशः स्वयं सोमेश्वरः स्थितः ॥

लिंगरूपो महादेवो यावदाब्रह्मवासरम् ॥ ९२ ॥

॥ सोमेश्वर उवाच ॥ ॥

सिद्धस्त्वं मत्प्रसादेन कार्यं सिद्धं भविष्यति ॥

इत्युक्तो वामनो देवं प्रत्युवाच महेश्वरम् ॥ ९३ ॥

॥ वामन उवाच ॥ ॥

यदि तुष्टो महादेव यदि देयो वरो मम ॥

तदाऽत्र लिंगे स्थातव्यमस्तु दिव्यं पुरो मम ॥ ९४ ॥

यस्तु स्वायंभुवं लिंगं वामने नगरे मम ॥

पूजयिष्यति ब्रह्मघ्नो गोघ्नो वा बालघातकः ॥ ९५ ॥

गुरुद्रोही स्वर्णचोरो मुच्यते सर्वपातकैः ॥

निर्दोषः पूजयेद्यस्तु सकृत्सोमेश्वरं हरम् ॥ ९६ ॥

मृतो विमानमारुह्य दिव्यस्त्रीपरिवेष्टितः ॥

संस्तूयमानो दिक्पालैर्यातु स्वर्गे शिवालये ॥ ९७ ॥

ब्रह्मलोकमतिक्रम्य रुद्रलोके स गच्छतु ॥

तथेत्युक्त्वा सोमनाथस्तत्रैवान्तरधीयत ॥ ९८ ॥

प्रकाश्य वामनो लिगं सोमनाथं स्वयंभुवम् ॥

प्राप्तज्ञानो लब्धवृद्धिर्ययौ द्रष्टुं भवं हरम् ॥ ९९ ॥

गंगाद्याः सरितः सर्वाः स्वर्णरेखाजले स्थिताः ॥

एतां सोमेश्वरोत्पत्तिं ये शृण्वंति नराः स्त्रियः ॥

सर्वपापक्षयस्तेषां जायते नात्र संशयः ॥7.2.14.१०० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये सोमेश्वरोत्पत्तिवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १५

https://sa.wikisource.org/s/gke
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ सारस्वत उवाच ॥ ॥

अथासौ वामनो विप्रो लब्धज्ञानो भवार्चने ॥

जगाम तद्वनं रम्यं गिरे रैवतकस्य यत् ॥ १ ॥

यत्र वृक्षा बहुविधा दीर्घशाखाः फलान्विताः ॥

वटोदुम्बरबिल्वाश्च सर्जार्जुनकदंबकाः ॥ २ ॥

पलाशाश्वत्थनिंबाश्च धवाटीवारुणीद्रुमाः ॥

शमीकंकोललिंबांश्च बीजपूरी च दाडिमः ॥३॥

बदरी निंबकः पूगः कदली शल्लकी शिवा॥

तालहिंतालशिरसा बीजकावंशखादिराः ॥४॥

अजगासनगागुच्छा इंगुदीकोरवैंगुदाः ॥

ब्रह्मवृक्षाः कुरुबकाः करंजाः पुत्रजीविनः॥ ॥ ५ ॥

अंकोल्लाः पारिभद्राश्च कलंबाः पनसास्तथा ॥

उज्ज्वलाश्च हरिद्राश्च गंगडीवायवा द्रुमाः ॥ ६ ॥

तेसुण्डकाः शिरीषाश्च खर्जूरीकरवंदिकाः॥

सेवाली शाल्मली शाला मधूकाश्च विभीतकाः ॥७॥

हरीतक्यः कटाहाश्च कर्यष्टा आटरूषकाः ॥

विकच्छवः कपित्थाश्च रोहिणीवेत्रकद्रुमाः ॥८॥

मदनफलानिर्गुण्डीपाटलानंदिपादपाः ॥

लवंगैलालवल्यश्च सन्ताना अगरुद्रुमाः ॥ ९ ॥

श्रीखण्डकर्पूरनगाः कल्पवृक्षा नगोतमाः ॥

वामनेन तदा दृष्टाश्छायावृक्षाः सुरार्चिताः ॥ 7.2.15.१० ॥

उदयास्तमने येषां छाया न प्रतिहन्यते ॥

तेषां दर्शनमात्रेण सर्वपापक्षयो भवेत् ॥ ११ ॥

ये जनाः पुण्यकर्माणस्तेषां ते दृष्टिगोचराः ॥

एतान्पश्यन्ययौ वृक्षांस्ततो रैवतकं गिरिम् ॥ १२ ॥

यावन्निरीक्षते तुंगं शिखरं तस्य मूर्द्धनि ॥

आश्चर्यं ददृशे विप्रो महल्लोकभयंकरम् ॥ १३ ॥

धूमज्वलनमध्यस्थान्पुरुषान्पंच पश्यति ॥

कृष्णांगान्खेचरान्रौद्रान्कृष्णागुरुविभूषितान् ॥ १४ ॥

सारमेय समारूढान्करिहस्तान्समेखलान् ॥

खड्गखेटकहस्तांश्च डमरुड्डामरस्वनान्॥।३५।

सघर्घरीकचरणन्यासनादितपर्वतान् ॥

फेत्कारभासुराकारान्काशकुञ्चितमूर्द्धजान् ॥ १६ ॥

नरमांसवसासारकवलव्यग्रतालुकान् ॥

जनगंधसमाज्ञानभवतीव्रविलोचनान् ॥ १७ ॥

पञ्चाग्निसाधनाव्याप्तदिव्यचक्षुः प्रभावतः ॥

देवान्पश्यति विप्रेन्द्रो ज्ञातकार्यपरंपरः ॥ १८ ॥

एते क्षेत्राधिपाः पञ्च महादेवेन निर्मिताः ॥

महाबला रैवतके निवसंति गिरौ सदा ॥ ॥ १९ ॥

स्वेच्छाचारान्नरान्मर्त्यान्वारयति नगे तथा ॥

हरिं हरं नदीं देवीं न पश्यंति गिरिं यथा ॥ 7.2.15.२० ॥

दृष्ट्वा ज्ञात्वा स्तुतिं चक्रे ध्यात्वा देवं महेश्वरम् ॥

जयंति दुष्टदैत्येंद्रयुद्धध्यानांकितं वपुः ॥

बिभ्रति भ्रातरो ये ते पंचेंद्रसमविक्रमाः ॥ २१ ॥

रुद्रवक्त्रोद्भवा दक्षा दक्षाध्वरविनाशकाः ॥

स्वावलीढाहुतीनष्टभीतवाडवनंदिताः ॥२२ ॥

कुङ्कुमागरुकर्पूरलिप्तांगाः सुविभूषिताः ॥

मदिरामोदमत्तांगनृत्यगीतकराः सुराः॥२३॥

ब्रह्मांडभ्रमणश्रांत स्वगंधत्रस्तसंचराः ॥

मनोजवाः कामगमा क्षेत्रपाला जयंति ते ॥ २४ ॥

इत्यादिवचनात्तुष्टा द्विजस्याग्रे स्वयं स्थिताः ॥

एकपादोऽस्म्यहं चैको द्वितीयो गिरिदारुणः ॥ २५ ॥

तृतीयो मेघनादस्तु सिंहनादश्चतुर्थकः ॥

पंचमः कालमेघोऽहं कुर्मः किं ते वदस्व तत् ॥ २६ ॥ ॥ ॥

॥ द्विज उवाच ॥ ॥

यदि तुष्टा भवंतो मे यदि देयो वरो ध्रुवम् ॥

अहो आप्रलयं यावत्स्थातव्यं मत्प्रतिष्ठितैः ॥ २७ ॥

एकपादो गिरि तटे प्रहर्षात्प्रथमं स्थितः ॥

वसतौ वसता तेन गिरौ च गिरिदारुणः ॥ २८ ॥

प्रतिष्ठितः प्रसाद्याथ वरदोऽसौ स्वयं स्थितः ॥

उज्जयंतगिरेर्मूर्ध्नि मेघनादः स्वयं ययौ ॥ २९ ॥

भवानीशंकरं रम्यं सिंहनादस्तथाविशत् ॥

स्वयं वस्त्रापथेनैव भवस्याग्रे निरूपितः ॥ 7.2.15.३० ॥

स्वणरेखानदीतीरे कालमेघो महाबलः ॥

सर्वलोकोपकारार्थं तीर्थं संस्थापितं पुरा ॥ ३१ ॥

वामनेन स्वयं गत्वा क्षेत्रपालास्तु पूजिताः ॥

पुरा युगादौ राजेंद्र सर्वे देवाः समागताः ॥ ३२ ॥

सुराष्ट्रदेशे संप्राप्ताः पुण्ये रैवतके गिरौ ॥

रक्षार्थं सर्वलोकानां वधार्थं देववैरिणाम् ॥ ३३ ॥

विष्णोः कण्ठे तदा मुक्ता जयमाला सुरोत्तमैः ॥

दामोदरेति विख्यातं दत्तं नामोत्तमं हरेः ॥ ३४ ॥

तत्रादौ कार्तिके शुक्ले वासरे विष्णुवल्लभे ॥

उपोष्य सहिते देवैस्तत्तीर्थं विष्णुना कृतम् ॥ ३५ ॥

सर्वतीर्थमयी पुण्या स्वर्णरेखा नदी स्थिता ॥

भुक्तिमुक्तिप्रदं पुण्यं विष्णुलोकप्रदायकम् ॥ ३६ ॥

क्षालनं सर्वपापानां रोगदारिद्र्यनाशनम् ॥

दामोदरं रैवतके परमानंददायकम् ॥ ३७ ॥

ये पश्यंति विमानैस्ते नीयंते विष्णुमंदिरे ॥

न गृहे कार्तिकः कार्यो विशेषाद्भीष्मपंचकम्॥ ३८ ॥

पंचकाद्द्वादशी श्रेष्ठा कार्या दामोदरे जले ॥

प्रातःस्नानं प्रकर्त्तव्यं संप्राप्ते कार्तिके जनैः ॥ ३९॥

मासोपवासः कर्त्तव्यो यतिभिर्ब्रह्मचारिभिः ॥

सतीभिर्विधवाभिश्च मुक्तिस्थानमभीप्सुभिः ॥ 7.2.15.४० ॥

एकभक्तेन नक्तेन तथैवायाचितेन च ॥

उपवासेवन कृच्छ्रेण शाकाहारेण वा पुनः ॥ ४१ ॥

संसेव्यः कार्त्तिके विष्णुर्दीपदानपरैर्नरैः ॥

ब्रह्मचर्यपरैर्मासो नीयते यदि मानवैः ॥ ४२ ॥

तदा विष्णुपुरे वासः क्रियते विष्णुना सह ॥

पञ्चोपवासाः कर्त्तव्याः संप्राप्ते भीष्मपंचके ॥ ४३ ॥

एकादशीं समारभ्य पंचमी पूर्णिमादिनम्॥

तदेतत्पंचकं प्रोक्तं सर्वपापहरं नृणाम्॥ ४४ ॥

सर्वेषामपि मासानां पञ्चकात्कार्तिकादपि ॥

एकादशी कार्तिकस्य पुण्या दामोदरे कृता ॥ ४५ ॥

मिष्टान्नं कार्तिके देयं हविष्यं सघृतप्लुतम्॥

सुवर्णं रजतं वस्त्रं तोयमन्नं फलानि च ॥ ४६ ॥

मासांते विविधं देयं गौस्तिलाः कुसुमानि च ॥

सर्वदानेषु यत्पुण्यं सर्व तीर्थेषु यत्फलम्॥ ४७ ॥

अश्वमेधादिभिर्यज्ञैर्गयायां पिंडदस्य यत् ॥

तत्फलं जायते नृणां दृष्टे दामोदरे नृप ॥ ४८ ॥

एकादश्यां कृतस्नानो देव पूजापरो भवेत् ॥

स्नाप्य पञ्चामृतेनैव ततस्तीर्थोदकेन च ॥ ४९ ॥

कुंकुमागरुश्रीखंडकर्पूरोदकमिश्रितैः ॥

पूजयित्वा ततः पुष्पैः शतपत्रैः सुगं धिभिः ॥ 7.2.15.५० ॥

मालतीकुसुमैः शुभ्रैर्बहुभिस्तुलसीदलैः ॥

वस्त्रयज्ञोपवीतं च दत्त्वा धूपं प्रधूपयेत्॥५१॥

दीपं दद्याद्घृतेनैव तैलेनापि घृतं विना॥

नैवेद्यं विविधं देयं फलं तांबूलमेव च ॥ ५२ ॥

प्रासादपूजा कर्त्तव्या ध्वजदानादिना नृप ॥

गौः सवत्सा ततो देया संसारार्णवतारिणी ॥ ५३ ॥

ततः प्रदक्षिणां कृत्वा गीतवादित्रनिस्वनैः ॥

वेदपाठपुराणैश्च व्याख्यादिव्यकथादिभिः ॥ ५४ ॥

देवाग्रे जागरः कार्यो दीपो देयोऽतिभूमिषु ॥

सप्तधान्यमयाः सप्त पर्वता दीपसंयुताः ॥ ५५ ॥

फलतांबूलपक्वान्नपूरिताः परिकल्पिताः ॥

विद्वद्भिः श्रोत्रियैः श्रांतैर्ब्राह्मणैर्गृहमेधिभिः ॥ ५६ ॥

स्त्रीभिश्च नरशार्दूल श्रोतव्या वैष्णवी कथा ॥

एवं जागरणं कार्यं रागक्रोधविवर्जितैः ॥ ५७ ॥

कृत्वा जागरणं रात्रावुदिते सूर्यमडले ॥

पूर्वां संध्यां ततः स्नात्वा कृत्वा मध्याह्नमाचरेत्॥५८॥

देवान्पितॄन्मनुष्यांश्च संतर्प्य विधिपूर्वकम्॥

कृत्वा श्राद्धं पितॄणां तु दद्याद्दानं स्वशक्तितः॥ ५९॥

देवं दामोदरं पूज्य पुष्पधूपादिना पुनः ॥

नरसिंहं सुरं पूज्य वैनतेयं च पूजयेत् ॥ 7.2.15.६० ॥

कृत्वा जागरणं रात्रावुत्थाप्य मधुसूदनम् ॥

द्वादशीभुक्तिमासाद्य कार्यं पारणकं नरैः ॥ ६१ ॥

ब्राह्मणान्भोजयित्वा च सहितः पुत्रबांधवैः ॥

विकलांधकृपणानां देयमन्नं स्वशक्तितः ॥ ६२ ॥

दामोदरे रैवतके स्वर्णरेखानदीजले ॥

एवं यः कुरुते यात्रां तस्य पुण्यफलं शृणु ॥ ६३ ॥

ब्रह्मघ्नश्च सुरापश्च ग्रामसीमाविलोपकः ॥

राजद्रोही गुरुद्रोही मिथ्याव्रतधरश्च यः ॥ ६४ ॥

कूटसाक्ष्यप्रदो यश्च यश्च न्यासापहारकः ॥

बालस्त्रीघातको विप्रः संध्यास्नानविवर्जितः ॥ ६५ ॥

देवब्रह्म स्वहर्त्ता च वेदविक्रयकारकः ॥

कन्याविक्रयकर्त्ता च देवब्राह्मणनिंदकः ॥६६॥

विश्वासघातको विप्रः शूद्रान्नादोऽथ लुब्धकः ॥

नायकः परदाराणां स्वयंदत्तापहारकः ॥ ६७ ॥

पर्वमैथुनसेवी च तथा वै सेतुभेदकः ॥

परिणीतामृतुस्नातां स्वयं यो नाभिगच्छति ॥ ६८ ॥

ब्राह्मणी विधवा बाला न भवेच्छ्रुतधारिणी ॥

महापातकिनश्चैते तथान्ये बहवो नृप ॥ ६९ ॥

स्वर्णरेखाजले स्नात्वा दृष्ट्वा दामोदरं हरिम् ॥

रात्रौ जागरणं कृत्वा मुच्यते सर्वपातकैः ॥ 7.2.15.७० ॥

न तु ये पापकर्माणः समायाताः प्रजागरे ॥

संसारसागरे तीर्थे गच्छंति न हरेः पुरम् ॥ ७१ ॥

यथा यथा याति नरः प्रजागरे तथातथा विष्णुपुरे विचिंत्यते ॥

वासः सुरैर्वैष्णवलोकहेतवे मृदंगगीतध्वनिनादिते गृहे ॥ ७२ ॥

गदासि शंखारिधराश्चतुर्भुजा दैतेयदर्पापहरूपधारिणः ॥

प्रगीयमानाः सुरसुंदरीभिस्ते यांति खं खेचरगात्रसंगाः ॥ ७३ ॥

वाराहकल्पे प्रथमं युगादौ दामोदरो रैवतके प्रसिद्धः ॥

सैषा नदी या सरितां वरिष्ठा सोऽयं हरिर्यो भुवनस्य कर्ता ॥ ७४ ॥

इदं पुराणं पठते शृणोति नरो विमानैर्मधुसूद नालये ॥

देवांगनादत्तभुजश्चतुर्भुजः स नीयते देवगणैरभिष्टुतः ॥ ७५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये सारस्वतप्रोक्ततीर्थयात्राविधाने श्रीदामोदरमाहात्म्यवर्णनंनाम पंचदशोऽध्यायः ॥१५॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/gkf
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | वस्त्रापथक्षेत्रमाहात्म्यम्

॥ राजोवाच ॥

अथासौ वामनो विप्रः प्रविष्टो गहने वने ॥

एकाकी किं चकाराथ कौतुकं तद्वदस्व मे ॥ १ ॥

॥ सारस्वत उवाच ॥ ॥

अथासौ वामनो विप्रो गत्वा रैवतके गिरौ ॥

स्वर्णरेखानदीतोये स्नात्वाथ विधिपूर्वकम् ॥ २ ॥

सुगंधपुष्पधूपाद्यैर्देवं संपूज्य भक्तितः ॥

तस्थौ तदग्रतो राजन्नेकाकी निर्जने वने ॥३ ॥

सर्वसत्त्वसमायुक्ते सरीसृपसमाकुले॥

अनेकस्वरसंघुष्टे मयूरध्वनिनादिते ॥ ४ ॥

कोकिलारावरम्ये च वनकुक्कुटघोषिते ॥

खद्योतद्योतिते तस्मिन्वलीमुखविधूनिते ॥५॥

क्वचिद्वंशाग्निना शांते क्वचित्पुष्पितपादपे ॥

गगनासक्तविटपे सूर्यतापविवर्जिते ॥६॥

लुब्धकाघात संत्रस्तभ्रांतसूकरशंबरे ॥

संहृष्टक्षत्रियवातस्थानदानविचक्षणे ॥ ७॥

अनेकाश्चर्यसंपन्नं सस्मार मनसा हरिम् ॥

तं भीतमिव विज्ञाय नरसिंहः समाययौ ॥ ८ ॥

रक्षार्थं तस्य विप्रस्य बभाषे पुरतः स्थितः ॥

न भेतव्यं त्वया विप्र वद ते किं करोम्यहम् ॥ ९ ॥

॥ विप्र उवाच ॥ ॥

यदि तुष्टो वरो देयो नरसिंह त्वया मम ॥

सदात्र रक्षा कर्त्तव्या सर्वेषां तीर्थवासिनाम् ॥7.2.16.१० ॥

देवस्याग्रे सदा स्थेयं यावदिंद्राश्चतुर्द्दश ॥

एवमस्त्विति तं प्रोच्य तथा चक्रे हरिस्तदा ॥ ११ ॥

अतो दामोदरस्याग्रे नरसिंहः स पूज्यते ॥

वनं सौम्यं कृतं तेन तीर्थरक्षां करोति सः ॥ १२ ॥

भूतप्रेतादिसंवासो वने तस्मिन्न जायते ॥

नरसिंहप्रभावेन नष्टं सिंहादिजं भयम् ॥ १३॥

कार्त्तिके वासरे विष्णोर्द्वादश्यां पारणे कृते ॥

दामोदरं नमस्कृत्य भवं द्रष्टुं ततो ययौ ॥ १४ ॥

चतुर्दश्यां कृतस्नानो भवं संपूज्य भावतः ॥

भवभावभवं पापं भस्मीभूतं भवार्चनात् ॥ १५॥

स क्षीणपापनिचयो जातो देवस्य दर्शनात् ॥

भवस्याग्रे स्थितं शांतं तथा वस्त्रापथस्य च ॥ १६॥

तं कालमेघं समभ्यर्च्य ततो वस्त्रापथं ययौ ॥

देवं संपूज्य मंत्रैः स वेदोक्तैर्विधिपूर्वकम् ॥ १७ ॥

धूपदीपादिनैवेद्यैः सर्वं चक्रे स वामनः ॥

प्रदक्षिणाशतं कृत्वा भवस्याग्रे व्यवस्थितः ॥ १८ ॥

यावन्निरीक्षते सर्वं तावत्पश्यति पर्वतम् ॥

उज्जयंतं गिरिवरं मैनाकस्य सहोदरम् ॥ १९ ॥

सुराष्ट्रदेशे विख्यातं युगादौ प्रथमं स्थितम् ॥

भूधरं भूधरैर्युक्तं शिलापादपमंडितम् ॥ 7.2.16.२० ॥

तं दृष्ट्वा चिंतयामास सूक्ष्मान्धर्मान्स वामनः ॥

अल्पायासान्सुबहुलान्पुत्रलक्ष्मीप्रदायकान् ॥ २१ ॥

अवश्यं क्रिय माणेषु स्वधर्म उपजायते ॥

दृष्ट्वा नदीं सागरगां स्नात्वा पापैः प्रमुच्यते ॥ २२ ॥

गां स्पृष्ट्वा ब्राह्मणं नत्वा संपूज्य गुरुदेवताः ॥

तपस्विनं यतिं शांतं श्रोत्रियं ब्रह्मचारिणम् ॥ २३ ॥

पितरं मातरं भगिनीं तत्पतिं दुहितां पतिम् ॥

भागिनेयमथ दौहित्रं मित्रसंबधिबांधवान् ॥

संभोज्य पातकैः सर्वैर्मुच्यंते गृहमेधिनः ॥ २४ ॥

राजा गजाश्वनकुलं सतीवृषमहीधराः ॥
आदर्शक्षीरवृक्षाश्च सतताऩ्नप्रदास्तु ते ॥ २५ ॥
दृष्टमात्राः पुनन्त्येते ये नित्यं सत्यवादिनः ॥
वेदधर्मकथां श्रुत्वा भुक्तिमुक्तिप्रदा नरान् ॥२६॥
स्मृत्वा हरिहरौ गंगां कृत्वा तीरेण मार्जनम् ॥
गत्वा जागरणे विष्णोर्दत्त्वा दानं च शक्तितः ॥ २७॥
तांबूलं कुसुमं दीपं नैवेद्यं तुलसीदलम् ॥
गीतं नृत्यं च वाद्यं च विधाय सुरमंदिरे ॥ २८ ॥
एते सूक्ष्माः स्मृता धर्माः क्रियमाणा महोदयाः ॥
अतो गिरीन्द्रं पश्यामि सर्वदेवालयं शुभम् ॥२९ ॥
तेषां करतले स्वर्गः शिखरं यांति ये नराः ॥ 7.2.16.३०॥
इति ज्ञात्वा समा रूढो वामनो गिरिमूर्द्धनि ॥
ऐरावतपदाक्रांत्या यत्र तोयं विनिःसृतम् ॥३१॥
ततः शिखरमारूढां भवानीं स्कन्दमातरम् ॥
द्रष्टुं स वामनो याति शिखरे गगनाश्रिते ॥ ३२ ॥
यथायथा गिरिवरे समारोहंति मानवाः ॥
तथातथा विमुच्यंते पातकैः सर्वदेहिनः ॥ ३३ ॥
इति कृत्वा मतिं विप्रो जगाम गिरिमूर्द्धनि ॥
भवभक्तो भवानीं स ददर्श स्कन्दमातरम् ॥३४॥
अंबेति भाषते स्कंदस्ततोऽन्ये सर्वदेवताः ॥
पृथिव्यां मानवाः सर्वे पाताले सर्वपन्नगाः ॥ ३५ ॥
अतो ह्यंबेति विख्याता पूज्यते गिरिमूर्द्धनि ॥
संपूज्य विविधैर्मुख्यैः फलैर्नानाविधैर्द्विजः ॥ ३६ ॥
गगनासक्तशिखरे संस्थितः कौतुकान्वितः ॥
एकाकी शिखरे तस्मिन्नूर्द्ध्वबाहुर्व्यवस्थितः ॥३७॥
निरीक्ष्य मेदिनीं सर्वां सपर्वतससागराम्॥
आद्यं सनातनं देवं भास्करं त्रिगुणात्मकम् ॥३८॥
सर्वतेजोमयं सर्वदेवं देवैर्नमस्कृतम् ॥

भ्रममाणं निराधारं कालमानप्रयोजकम् ॥३९॥
यावत्पश्यति तं विप्रस्तावत्पश्यति शंकरम् ॥
दिगंबरं भवं देवं समंतादश्मगुंठितम् ॥ 7.2.16.४० ॥
बुद्धरूपाकृतिं देवं सर्वज्ञं गुणभूषितम् ॥
कृशांगं जटिलं सौम्यं व्योममार्गे स्वयं स्थितम् ॥ ४१ ॥ ॥
॥ श्रीशिव उवाच ॥ ॥
शृणु वामन तुष्टोऽहं दास्ये ते विविधान्वरान् ॥
त्रैलोक्यव्यापिनी वृद्धिर्भविष्यति न संशयः ॥ ४२ ॥
प्रतिभास्यंति ते वेदा गीतनृत्यादिकं च यत् ॥
असाध्यसाधनी शक्ति भविष्यति तव स्थिरा ॥
परं वस्त्रापथे गत्वा कुरु तीर्थावलोकनम् ॥ ४३ ॥
॥ वामन उवाच ॥ ॥
वस्त्रापथे महादेव यानि तीर्थानि तानि मे ॥
वद देव विशेषेण यद्यस्ति करुणा मयि ॥४४॥
॥ रुद्र उवाच ॥ ॥
वस्त्रापथस्य वायव्ये कोणे दिव्यं सरोवरम् ॥
तस्य पश्चिमदिग्भागे जालिर्गहनपल्लवा ॥ ४५ ॥
बिल्ववृक्षमयी मध्ये लिंगं तत्रास्ति मृन्मयम् ॥
यत्रासौ लुब्धकः सिद्धो गतो मम पुरे पुरा ॥ ४६ ॥
तस्य दर्शनमात्रेण ब्रह्महत्या विनश्यति ॥
इंद्रो वै वृत्रहा यस्मिन्विमुक्तो ब्रह्महत्यया ॥ ४७ ॥
तस्माद्रुत्तरदिग्भागे धनदेन प्रतिष्ठितम् ॥
लिंगं त्रैलोक्यविख्यातं तत्र देवी त्रिशूलिनी ॥ ४८ ॥
यस्या दर्शनमात्रेण पुत्रोऽस्य नलकूबर॥
पाशानुषक्तहस्तोऽभूद्देवं चक्रे त्रिशूलिनम् ॥ ४९ ॥
भवस्य नैर्ऋते कोणे गणो हेरंबसंज्ञितः ॥
यमेन कुर्वता लिंगं प्रथमं च प्रतिष्ठितः ॥ 7.2.16.५० ॥
विचित्रं तस्य माहात्म्यं चित्रगुप्तोऽति विस्मितः ॥

दृष्ट्वा समागतो द्रष्टुं देवं तं मृन्मयं पुरा ॥ ५१ ॥

तेनापि निर्मितं लिंगं तस्मिन्क्षेत्रे द्विजोत्तम ॥

चित्रगुप्तेश्वरंनाम विख्यातं भुवन त्रये ॥ ५२ ॥

पश्चिमेन चकारोच्चैः प्रजापतिरुदारधीः ॥

केदाराख्यं तदा लिंगं गिरौ रैवतके स्थितम् ॥

प्रजापतिः स्वयं तस्थौ तत्र पर्वतसानुनि ॥ ५३ ॥

॥ रुद्र उवाच ॥ ॥

इंद्रेश्वरस्य माहात्म्यं कथयिष्ये शृणुष्व तत् ॥

ईशानकोणे विख्यातं भवस्य विदितं मम ॥ ५४ ॥

॥वामन उवाच ॥ ॥

कस्मादिंद्रः समायातः कथं चक्रे हरं हरिः॥

कथां सविस्तरामेतां कथयस्व मम प्रभो ॥ ५५ ॥

॥ रुद्र उवाच ॥ ॥

लुब्धकस्तु पुरा सिद्धः शिवरात्रिप्रजागरात् ॥

शिवलोके तदा प्राप्तं विमानं गणसंयुतम् ॥ ५६ ॥

सर्वत्रगं सुरुचिरं दिव्यस्त्रीगीतनादितम् ॥ तदारुह्य समायातो द्रष्टुं तां नगरीं हरेः ॥ ५७ ॥

यस्यां युद्धं समभवद्गणानां यमकिंकरैः ॥

आगच्छमानं तं ज्ञात्वा देवराजेन चिंतितम् ॥ ५८ ॥

पूज्योऽयं हरवत्सर्वैश्चित्रगुप्तयमादिभिः ॥

इंद्रो गजं समारुह्य महिषेण यमो यतः ॥ ५९ ॥

विधाय लेखनीं कर्णे चित्रगुप्तो यमाज्ञया ॥

ततो हूता गणाः सर्वे ये नीता धरणीतलात् ॥ 7.2.16.६० ॥

निजापराधसंतप्ता गतास्ते दक्षिणामुखम् ॥ आथित्यपू

जा कर्तव्या लुब्धके गृहमागते ॥ ६१ ॥

अपूजिते गते ह्यस्मिन्हरो मां शपयिष्यति ॥

तस्मात्पूजां करिष्यामि यथा तुष्यति शंकरः ॥ ६२ ॥

देवं द्रष्टुं समायातं ददर्शादूरतः स्थितम्॥

विमानस्थं हराकारं सूर्यकोटिसमप्रभम् ॥ ६३ ॥

संस्तूयमानं चरितैः शिवरात्रेः शिवस्य च ॥

माघे मासे चतुर्द्दश्यां कृष्णायां जागरे कृते ॥६४॥

तदेवं जायते सर्वं सुरेश्वर धरातले ॥

एवं देवांगना काचिदाचक्षंती पुरंदरम् ॥

निवार्य हस्तमुद्यम्य गजेंद्रं चारुलोचना ॥ ६५ ॥

किं दानैर्बहुभिर्दत्तैर्व्रतैः किं किं सुरार्चनैः ॥

किं योगैः किं तपोभिश्च ब्रह्मचर्य्यैः सुरेश्वर ॥ ६६ ॥

गयायां पिंडदानेन प्रयागमरणेन किम् ॥

सोमेश्वरे सरस्वत्यां सोमपर्वणि किं गतैः ॥ ६७ ॥

कुरुक्षेत्रगतैः किं स्याद्राहुग्रस्ते दिवाकरे ॥

तुलासुवर्णदानेन वेदपाठेन किं भवेत् ॥६८॥

सर्वपापक्षयो येन वृषोत्सर्गेण तेन किम् ॥

गोदानं किं करोत्येवं जलदानं तथैव च ॥ ६९ ॥

अयने विषुवे चैव संक्रांतौ कीदृशं फलम् ॥

माघमासे चतुर्दश्यां यादृशं जागरे कृते ॥ 7.2.16.७० ॥

यमः संभाषते वाण्या महिषोपरि संस्थितः ॥

पश्य रुद्रस्य माहात्म्यं चित्रगुप्त विचारय ॥ ७१ ॥

अयं स लुब्धको येन हरः संपूजितः पुरा ॥

सुराष्ट्रदेशे विख्यातं तीर्थं वस्त्रापथं शृणु ॥ ७२ ॥

उज्जयंतो गिरिस्तत्र तथा रैवतको गिरिः ॥

महती वर्त्तते जालिस्तयोर्मध्ये मया श्रुतम् ॥ ७३ ॥

मृन्मयं वर्तते लिगं रात्रौ चानेन पूजितः ॥

रात्रौ जागरणं कर्तुं येन कार्येण चागतः ॥ ७४ ॥

तदस्माभिः कथं वाच्यं स्वयं जानंति ते सुराः ॥

वरांगना वरं द्रष्टुं वरयंति परस्परम् ॥

इंद्रावासात्समायाता नंदने वेगवत्तराः ॥ ७५ ॥

विरंचिना रायणशंकरत्विषा देहेन चागच्छति कोऽपि पूरुषः ॥

पुरीं सुरेशाधिपतेर्निरीक्षितुं भर्त्ता ममायं तव चास्ति किं पतिः ॥ ७६ ॥

मृदंगवीणा पटहस्वरस्तुतैः प्रवोधिताभिः सुरराजमन्दिरे ॥
देवो हरोऽयं न नरो हराकृतिर्दृष्टोंगनाभिस्तव किं किमावयोः ॥ ७७ ॥
गायंति काश्चिद्विहसंति काश्चिन्नृत्यंति काश्चित्प्रपठंति काश्चित् ॥
वदन्ति काश्चिज्जयशब्दसंयुतैर्वाक्यैरनेकैर्गुरुसन्निधाने ॥ ७८ ॥
काचिच्छिवं स्तौति शिवां तथान्या पृच्छत्यथान्या किमु बिल्वपत्रात् ॥
किं वोपवासेन फलं तवेदं निद्राक्षयेणाथ फलं तवैतत् ॥ ७९ ॥
तासां नानाविधा वाचः श्रूयन्ते नन्दने वने ॥
ब्रह्मलोकादिका वार्त्ताः कृत्वा च तदनन्तरम् ॥ 7.2.16.८० ॥
देवेन्द्रो लुब्धकं भूयो बभाषे कौतुकान्वितः॥
कस्मिन्देशे गिरौ जालिर्लिंगं यत्रास्ति दर्शय ॥ ८१ ॥
॥ लुब्धक उवाच ॥ ॥
सुराष्ट्रदेशे विख्यातो यस्मिन्देशे सरस्वती ॥
वाडवं शिरसा धृत्वा प्रविष्टा लवणोदधौ ॥ ८२ ॥
यत्र सा गोमती याति यत्रास्ते गन्धमादनः ॥
उज्जयंतो गिरिवरो यत्र रैवतको गिरिः ॥ ८३ ॥
तत्र वस्त्रापथं क्षेत्रं भवस्तत्र व्यवस्थितः ॥
तत्रास्ते मृन्मयं लिंगं जालिमध्ये सुरोत्तम ॥ ८४ ॥
॥ इन्द्र उवाच ॥ ॥
सहितैस्तत्र गंतव्यं पूजयिष्ये भवं स्वयम् ॥
जालिमध्ये तथा लिंगं दर्शयस्व च लुब्धक ॥ ८५ ॥
परदारादिकं पापं दैत्यानां तु विकृंतने ॥
वधे वृत्रस्य संजातं तत्सर्वं क्षालयाम्यहम् ॥ ८६ ॥
इत्युक्त्वा सहिताः सर्वे संप्राप्ता गिरिमूर्द्धनि॥
वाहनानि च ते त्यक्त्वा प्रस्थिताः पादचारिणः ॥ ८७ ॥
उज्जयन्तगिरेर्मूर्ध्नि गजराजः समागतः ॥
तदाग्रचरणं तस्य ददौ मूर्धनि कारणात् ॥ ८८ ॥
तेनाक्रान्तो गिरिवरस्तोयं सुस्राव निर्मलम् ॥
गजपादोद्भवं वारि भविष्यति सदा स्थिरम् ॥ ८९ ॥

इति प्रोक्तं सुरेन्द्रेण लोकानां हितकाम्यया ॥
सर्वे समागतास्तत्र यत्र जालिर्व्यवस्थिता ॥ 7.2.16.९० ॥
संपूज्य विविधैः पुष्पैर्माघमासे चतुर्दशी ॥
तस्यां जागरणं कृत्वा सञ्जातो निर्मलो हरिः ॥ ९१ ॥
वस्त्रापथे भवं पूज्य हरिं रैवतके गिरौ ॥
इन्द्रेश्वरं प्रतिष्ठाप्य संप्राप्तः स्वनिकतनम्॥ ९२ ॥
लुब्धकोऽपि विमानेन संप्राप्तो हरिमन्दिरे ॥
इत्युक्त्वा स भवो देवस्तत्रैवांतरधीयत ॥ ९३ ॥
वामनोपि ततश्चक्रे तत्र तीर्थावगाहनम् ॥
यादृग्रूपः शिवो दृष्टः सूर्यबिंबे दिगंबरः ॥ ९४ ॥
पद्मासनस्थितः सौम्यस्तथा तं तत्र संस्मरन् ॥
प्रतिष्ठाप्य महामूर्त्तिं पूजयामास वासरम् ॥ ९५ ॥
मनोऽभीष्टार्थसिद्ध्यर्थं ततः सिद्धिमवाप्तवान् ॥
नेमिनाथशिवेत्येवं नाम चक्रे स वामनः ॥ ९६॥
भवस्य पश्चिमे भागे प्रत्यासन्ने धरातले ॥
वामनो वसतिं चक्रे तीर्थे वस्त्रापथे तदा ॥ ९७ ॥
अतो यवाधिकं प्रोक्तं तीर्थं देवैः सवासवैः ॥
इंद्रेण कुर्वता देवं समागत्य भवाग्रतः ॥ ९८ ॥
यवाधिकं प्रभासात्तु तीर्थमेतद्भवाज्ञया ॥
अन्येषां षड्गुणं तीर्थं भविष्यति शिवाज्ञया ॥ ९९ ॥
इत्येतत्कथितं सर्वं किमन्यत्परिपृच्छसि ॥ 7.2.16.१०० ॥ ॥
॥ राजोवाच ॥ ॥
शिवरात्रिप्रभावोयमतुलः परिकीर्त्तितः ॥
अजानता कृता तेन लुब्धकेन पुरा श्रुतम् ॥ १०१ ॥
इदानीं वद कर्त्तव्या कथमन्यैर्जनैर्विभो ॥
किं ग्राह्यं किं नु मोक्तव्यं शिवरात्र्यां वदस्व मे ॥ १०२ ॥
॥ सारस्वत उवाच ॥ ॥
संप्राप्य मानुषं जन्म ज्ञात्वा देवं महेश्वरम् ॥

शिवरात्रिः सदा कार्या भुक्तिमुक्तिप्रदायिनी ॥ १०३ ॥
ईदृशं जायते पुण्यमेकया कृतया नृप ॥
ये कुर्वंति सदा मर्त्यास्तेषां पुण्यमनंतकम् ॥१०४ ॥
द्वादशाब्दं व्रतमिदं कर्तव्यं प्रतिवत्सरम्॥
जीवितं चंचलं नृणां यदि कर्तुं न शक्यते ॥ १०५ ॥
तदा द्वादशभिर्मासैर्व्रत मेतत्समाप्यते ॥
माघमासे चतुर्दश्यां प्रारम्भः क्रियते नृप ॥ १०६ ॥
प्रतिमासं ततः कार्यं पौषांते तु समाप्यते ॥
विघ्नश्चेज्जायते मध्ये कथं चिद्दैवयोगतः ॥ १०७ ॥
न भवेद्व्रतभंगस्तु पुनः कार्यमनन्तरम् ॥
द्वादशैव प्रकर्तव्याः कृत्वा संख्या विशेषतः ॥ १०८ ॥
कृतं न नश्यते लोके शुभं वा यदि वाऽशुभम् ॥
कृष्णायां तु चतुर्दश्यां कृतपूर्वाह्णिकक्रियः ॥ १०९ ॥
उपवासनियमो ग्राह्यो नद्यां स्नानं विधीयते ॥
तदभावे तडागादौ कार्यं स्नानं स्वशक्तितः ॥ 7.2.16.११० ॥
तैलाभ्यंगो न कर्तव्यो न कार्यं गमनं क्वचित् ॥
तीर्थसेवा प्रकर्त्तव्या तस्मिंश्चागमनं शुभम् ॥ १११ ॥
शिवरात्रिः सदा कार्या लिंगे स्वायंभुवे नरैः ॥
तदभावे महापुण्ये लिंगे वर्षशताधिके ॥ ११२ ॥
गिरौ वने समुद्रांते नद्यां यच्च शिवालये ॥
तद्वै स्वायंभुवं लिंगं स्वयं तत्रैव संस्थितम् ॥ ११३ ॥
वालुलिंगादिकं लिंगं पूजितं फलदं स्मृतम् ॥
दिवा संपूज्य यत्नेन पुष्पधूपादिना नरः ॥ ११४ ॥
वर्जयेन्मदिरां द्यूतं नारीं नखनिकृन्तनम् ॥
ब्रह्मचर्यपरैः शांतैः कर्तव्यं समुपोषणम् ॥ ११५ ॥
रात्रौ देवाग्रतो गत्वा कर्त्तव्याः सप्त पर्वताः ॥
पक्वान्नफलतांबूलपुष्पधूपादिचर्चिताः ॥ ११६ ॥
घृतेन दीपः कर्तव्यः पापनाशनहेतवे ॥

यतो दीपस्य माहात्म्यं विज्ञेयं मुक्तिदायकम् ॥ ११७ ॥

दीपः सदैव कर्त्तव्यो गृहे देवालये नरैः ॥

दिवा निशि च संध्यायां दीपः कार्यः स्वशक्तितः ॥ ११८ ॥

किञ्चिदुद्द्योतमात्रेण देवास्तुष्यंति भूतले ॥

पितॄणां प्रथमं दीपः कर्त्तव्यः श्राद्धकर्मणि ॥ ११९ ॥

रात्रौ जागरणं कार्यं यथा निद्रा न जा यते ॥

शिवरात्रिप्रभावोऽयं श्रोतव्यः शिवसंनिधौ ॥ 7.2.16.१२० ॥

शिवस्य चरितं रात्रौ श्रोतव्यं बहुविस्तरम् ॥

गीतं नृत्यं तथा वाद्यं कर्तव्यं शिवसंनिधौ ॥ १२१ ॥

एवं सा नीयते रात्रिर्मुख्यं जागरणं यतः ॥

रात्रौ देयानि दानानि शक्त्या वै तत्र जागरे ॥ १२२ ॥

पुनः स्नात्वा प्रभाते तु कर्त्तव्यं शिवपूजनम् ॥

पूजनीयाश्च यतयो भोजनाच्छादनादिभिः ॥ १२३ ॥

तपस्विनां प्रदातव्यं भोजनं गृहमेधिभिः ॥

द्वादशाष्टौ च चत्वारो भोक्तव्या एक एव वा ॥ १२४ ॥

एकोऽपि ब्रह्मचारी यो ब्रह्मविच्छिवपूजकः ॥

सहस्राणां समो भक्त्या गृहे संभोजितो भवेत् ॥ १२५ ॥।

अक्षारालवणं पत्रे भोक्तव्यं वाग्यतैः स्वयम् ॥

पुत्रमित्रकलत्राणां दातव्यं भोजनं पुरः ॥ १२६ ॥

अनेन विधिना कार्या शिवरात्रिः शिवव्रतैः ॥

द्वादशैता यदा पूर्णास्तिलपात्राणि वै तदा ॥ १२७ ॥

द्वादशैव प्रदेयानिगुरुब्राह्मणज्ञातिषु ॥

व्रतांते गौः प्रदातव्या कृष्णा वत्सयुता दृढा ॥१२८॥

सवस्त्राभरणा देया घंटाभरणभूषिता ॥

अंगुलीयकवासांसि च्छत्रोपानत्कमण्डलु ॥ १२९ ॥

गुरवे दक्षिणा देयाब्राह्मणेभ्यः स्वशक्तितः ॥

एवं कृत्वा ततो देयं तपस्विभ्योऽथ भोजनम् ॥

मिष्टान्नं विविधं दत्त्वा क्षमाप्य च विसर्जयेत् ॥ 7.2.16.१३० ॥

एवं यः कुरुते सत्यं तस्य पापं न विद्यते ॥

संतानमुत्तमं लब्ध्वा भुक्त्वा भोगाननुत्तमान्॥ १३१ ॥

दिव्यविमानमारूढो दिव्यस्त्रीपरिवेष्टितः ॥

गतिवादित्रनिर्घोषैर्नीयते शिवमन्दिरे॥१३२॥

तदेतत्कथितं पुण्यं शिवरात्रिव्रतं मया ॥

कृतेन येन लोकानां सर्वपापक्षयो भवेत् ॥ १३३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये शिवरात्रिमाहात्म्यवर्णनंनाम षोडशोऽध्यायः ॥ १६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १७



॥ राजोवाच ॥ ॥

विचित्रमिदमाख्यानं त्वत्प्रसादाच्छ्रुतं मया ॥

दृष्ट्वा नारायणं शक्रं नारदो मंदरे गिरौ ॥ १ ॥

किं चकार मुनींद्रोऽथ तन्मे विस्तरतो मुने ॥

वद संसारसरणोद्भूतमायाप्रपीडितम् ॥

कथामृतजलौघेन वितृषं कुरु मां प्रभो ॥ २ ॥

॥ सारस्वत उवाच ॥ ॥

अथासौ नारदो देवं ज्ञात्वा शप्तं द्विजन्मना ॥

भृगुणा च तथा पूर्वं नान्यथैतद्भविष्यति ॥ ३ ॥

भविष्यं यद्भवं देव वर्तमानं विचिंत्यताम् ॥

अयं च वामनो भूत्वा विष्णुर्यास्यति तां पुरीम् ॥ ४ ॥

निग्रहं स बलेः पश्चात्करिष्यति मम प्रियम् ॥

युद्धं विना कथं स्थेयं वर्तमानं महोल्बणम् ॥ ५ ॥

देवदानवयुद्धानि दैत्यगन्धर्व रक्षसाम् ॥

निवारितानि सर्वाणि सरीसृपपतत्रिणाम् ॥ ६ ॥

सापत्नजः कलिर्नास्ति मम भाग्यपरिक्षये ॥

देवेन्द्रो गुरुणा पूर्वं वारितः किं करोम्यहम् ॥ ७ ॥

माननीयो गुरुर्मेऽयमतस्तं न शपाम्यहम् ॥

युद्धार्थं तु ततो यत्नो न सिध्यति करोमि किम् ॥ ८ ॥

केनापि दैवयोगेन पुरुषार्थो न सिध्यति ॥

तथापि यत्नः कर्तव्यः पुरुषार्थे विपश्चिता ॥

दैवं पुरुषकारेण विनापि फलति क्वचित् ॥ ९ ॥

यदुक्तं तद्वचो व्यर्थं यतः सिद्धिः प्रयत्नतः ॥

बलिं गत्वा भणिष्यामि यथा युद्धं करिष्यति ॥ 7.2.17.१० ॥

न श्रोष्यति स चेद्वाक्यं निश्चितं तं शपाम्यहम् ॥
इत्युक्त्वा स ययौ वेगान्नारदो बलिमंदिरे ॥
निमेषांतरमात्रेण शिष्याभ्यां गगने स्थितः ॥ ११ ॥
प्रासादे शैलसंकाशे सप्तभौमे महोज्ज्वले ॥
तस्योपरि सभा दिव्या निर्मिता विश्वकर्मणा ॥ १२ ॥
तस्यां सिंहासनं दिव्यं तत्रासीनो बलिर्नृप ॥
दैत्यैः परिवृतः सर्वैः प्रौढिहास्यकथापरैः ॥ १३ ॥
ऋषिभिर्ब्राह्मणैः शांतैस्त थैवोशनसा स्वयम्॥
पुत्रमित्रकलत्रैश्च संवृतो दिव्यमन्दिरे ॥ १४ ॥
देवांगनाकरग्राहगृहीतैर्दिव्यचामरैः ॥
संवीज्यमानो दैत्येन्द्रः स्तूयमानः स चारणैः ॥ १५ ॥
यावदास्ते मदोन्मत्ता मन्त्रयंति परस्परम् ॥
दैत्यदानवमुख्या ये ते सर्वे युद्धकांक्षिणः ॥ १६ ॥
उत्थायोत्थाय भाषंते प्रगल्भंते सुरैः सह ॥
अस्मदीयमिदं सर्वं त्रैलोक्यं सांप्रतं गतम् ॥ १७ ॥
शुक्रबुद्ध्या विना युद्धं प्राप्स्यते किं महोदयः ॥
दैत्येन्द्रो देवराजेन स्नेहं च कुरुतो यदि ॥ १८ ॥
ऐरावणं सदा मत्तं कथं नो याचते बलिः ॥
चतुरं तुरगं कस्मान्नार्पयति दिवाकरः ॥ १९ ॥
यावन्नाक्रम्यते लुब्धो धनाध्यक्षो रणाजिरे ॥
तावन्नार्पयते वित्तं यदा तत्संचितं सुरैः ॥ 7.2.17.२० ॥
न दर्शयति रत्नानि जलराशी रसातलात् ॥
यावन्न मन्दरं क्षिप्त्वा विमथ्नीमो वयं च तम् ॥ २१ ॥
यथामृतकलाश्चन्द्राद्भुज्यन्ते क्रमशः सुरैः ॥
एवं भागं बलेः कस्मान्न ददाति जलात्मकः ॥ २२ ॥
स्वर्धुनी शीतलो वातः पद्मकिंजल्कवासितः ॥
स्वर्गे वाति शनैर्यद्वत्तथा न बलिमंदिरे ॥ २३ ॥
इन्द्रचापोद्यता मेघा जलं मुंचंति भूतले॥

बलिखड्गोद्धुताः स्वर्गं पुनस्ते यांति भूतलात्॥२४॥

अस्मदीये धरापृष्ठे यमो मारयते जनम् ॥

नैवं स्वर्गे न पाताले पश्याहो कार्यकारणम् ॥२५॥

आयुर्वृत्तिं सुतान्सौख्यमस्माकं लिखति स्वयम् ॥

ललाटे चित्रगुप्तोऽसौ न देवानां तु तत्समम् ॥२६॥

वर्षाशीतातपाः काला वर्तंते भुवि सांप्रतम् ॥

न स्वर्गे नैव पाताले भीता भूमौ भ्रमंति हि ॥ २७ ॥

एकवीर्योद्भवा यूयं स्वस्रीया देवदानवाः ॥

भूमौ स्थिता वयं कस्माद्देवाः केनोपरिकृताः ॥ ॥२८॥

समुद्रे मथ्यमाने तु दैत्येन्द्रो वंचितः सुरैः ॥

एकतः सर्वदेवाश्च बलिश्चैवैकतः स्थितः ॥२९॥

उत्पन्नेषु च रत्नेषु भाग्यं वै यस्य यादृशम् ॥

गजाश्वकल्पवृक्षाद्याश्चंद्रगोगणदंतिनः ॥7.2.17.३०॥

गृहीत्वा ह्यमृतं देवैर्वयं पाने नियोजिताः ॥

एतया चूर्णिता यूयं न जानीथातिगर्विताः ॥ ३१ ॥

पीतावशेषं पीयूषं सत्यलोके धृतं सुरैः ॥

अहोतिकुटिला देवाः कस्माच्छेषं न दीयते ॥ ३२ ॥

सुरामृतमिति ज्ञात्वा पीयूषाद्वंचिता वयम् ॥

तिलतैलमेवमिष्टं यैर्न दृष्टं घृतं क्वचित्॥ ३३ ॥

विष्णोर्वक्रचरित्राणां संख्या कर्तु न शक्यते॥

तथापि कथ्यते तुष्टैर्हृष्टैस्तैर्यदनुष्ठितम् ॥३४॥

गौरांगी सुन्दरी सुभ्रूः पीनोन्नतपयोधरा ॥

सुकेशा चंद्रवदना कर्णासक्तविलोचना॥३५॥

वलित्रयांकिता मध्ये बाला मुष्ट्यापि गृह्यते ॥

स्थलारविंदचरणा लतेव भुजभूषिता ॥ ३६ ॥

सा सर्वाभरणोपेता सर्वलक्षणसंयुता ॥

त्रैलोक्यमोहिनी देवी संजाताऽमृतमन्थने ॥ ३७ ॥

अमृतादुत्थिता पूर्वं यस्य सा तस्य तद्ध्रुवम् ॥

त्रैलोक्यं वशगं तस्य यस्य सा चारुलोचना ॥ ३८ ॥

तया संमोहिताः सर्वे देवदानवराक्षसाः ॥

विमुच्य मन्थनं सर्वे तां ग्रहीतुं समुद्यताः ॥ ३९ ॥

एका स्त्री बहवो देवा दानवादैत्यराक्षसाः ॥

विवादः सुमहाञ्जातः कथमत्र भविष्यति ॥ 7.2.17.४० ॥

आगत्य विष्णुना सर्वे भुजे धृत्वा निवारिताः ॥

अस्यार्थे किमहो वादः क्रियते भोः परस्परम् ॥ ४१ ॥

अमृतार्थे समारम्भो महिलार्थे विनश्यति ॥

संकेतं प्रथमं कृत्वा विष्णुना चुंबिता पुनः ॥ ४२ ॥

दिव्यरूपधरः स्रग्वी वनमालाविभूषितः ॥

कौस्तुभोद्द्योतिततनुः शंखचक्रगदाधरः ॥४३॥

तस्या हस्ते शुभां मालां दत्त्वा विष्णुः पुरः स्थितः ॥

उद्धृत्य बाहुं सर्वेषां बभाषे वचनं हरिः ॥ ४४ ॥

कुर्वंतु कुण्डलं सर्वे तिष्ठन्तु स्वयमासने ॥

विलोक्य स्वेच्छया लक्ष्मीर्वरमालां प्रयच्छतु ॥ ४५ ॥

स्वयंवरविभेदं यः करिष्यत्यतिलंपटः ॥

स वध्यः सहितैः सर्वैः परस्त्रीलुब्धको यथा ॥ ४६ ॥

परदारकृतं पापं स्त्रीवध्या तस्य जायताम्॥

अन्योऽपि यः करोत्येवमेवमस्तु तदुच्यताम्॥४७॥

साधारणं हरिं ज्ञात्वा तथेत्युक्त्वा तथा कृतम्॥

देवदानवदैत्यानां गंधर्वोरगरक्षसाम्॥

मध्ये योऽभिमतो भर्ता स ते सत्यं भवेदिति ॥४८ ॥

तेनासौ मोहिता पूर्वं दृष्टिदानेन कर्षिता ॥

आद्यं संमोहनं स्त्रीणां चक्रे दृष्टिनिरीक्षणम्॥४९॥

एवमेवेति तत्कर्णे हस्तं दत्त्वा यदुच्यते॥

दधाति हृदि यं नारी कामबाणप्रपीडिता ॥ 7.2.17.५० ॥

तमेव वरयेदत्र कश्चिन्नास्त्येव संशयः ॥

संजाते कलहे पूर्वं हरिणा तं निवर्तितुम् ॥ ५१ ॥

यदा गृहीता सर्वैः सा हरिं नैव विमुंचति ॥
त्वमेव भर्ता साऽऽचष्टे मुंच मां व्रज दूरतः ॥ ५२ ॥
मुक्त्वा दूरं ततो विष्णुः प्रविष्टः सुरमण्डले ॥
तदा सर्वे च मामुक्त्वा यथास्थानं स्वयं गताः ॥५३॥
आचष्ट विजया पूर्वं सर्वान्देवान्यथाक्रमम्॥
सा च निरीक्षते पश्चात्तं विचार्य विमुञ्चति ॥ ५४ ॥
उदासीनः शिवः शांतो गौरीकांतस्त्रिलोचनः ॥
नान्यां निरीक्षते नित्यं ध्यानासक्तस्त्रिलोचनः ॥ ५५ ॥
पितामहोयमित्युक्तं यदा सख्या तदा तया ॥
नमस्कृत्य गतं दूरे कृत्वा मौनं न पश्यति ॥ ५६ ॥
आदित्यं पद्मकं मुञ्च दहनं दहनात्मकम्॥
वाति वातो गता दूरे वरुणो मे पिता यतः ॥ ५७ ॥
पौलोमीवदनासक्तो देवेन्द्रो मे न रोचते ॥ ५८ ॥
वधबंधकृतच्छेदभेददण्डविकर्ष णम्॥
कुर्वन्न कुरुते सौम्यं रूपं वैवस्वतो यमः ॥ ५९ ॥
देवदानवगंधर्वदैत्यपन्नगराक्षसान् ॥ 7.2.17.६० ॥
दृष्ट्वात्युग्रांस्ततो याति दृष्टोऽसौ पुरुषो त्तमः ॥
कर्णांतलोचनभ्रांतवक्त्रं दृष्ट्यावलोक्य तम् ॥ ६१ ॥
सौभाग्यातिशयाक्रांतं रम्यं काममनोहरम् ॥
संजातपुलकोद्भेदस्वेदवारिकणांकितम् ॥ ॥ ६२ ॥
देवदानवदैत्येन्द्रक्रोधदृष्टिनिरीक्षितम् ॥
रम्यं रामा वरं चक्रे ददौ मालां ततः स्वयम्॥६३॥
दैत्याः परस्परं प्रोचुः प्रेक्ष्य तत्सुरचेष्टितम् ॥
विभागं पश्य देवानां स्वर्गे सर्वे स्वयं गताः॥ ६४॥
पातालस्य तले यूयं मानवा धरणीतले॥
देवास्त्रिभुवने यांतु न वयं स्वर्गगामिनः॥ ६५॥
मानवाः क्षत्रिया राज्यं कुर्वंतु पृथिवीतले॥
पातालं तु परित्यज्य धात्री यदि तु रक्ष्यते॥ ६६॥

दैत्यदानवजैः कैश्चिद्राक्षसैस्तन्न शोभनम्॥
अथ किं बहुनोक्तेन राजा त्रिभुवने बलिः॥६७॥
संविभज्याथ रत्नानि समं राज्यं विधीयताम्॥
यावदेवं प्रगल्भंते तावत्पश्यंति नारदम् ॥ ६८ ॥
गगनात्समुपायांतं द्वितीयमिव भास्करम् ॥
ब्रह्मदंडकरासक्तयुद्धपुस्तकधारिणम् ॥ ६९ ॥
कृष्णाजिनधरं शांतं छत्रवीणाकमण्डलून् ॥
मौंजीगुणत्रयासक्तग्रंथिप्रवरमेखलम् ॥ 7.2.17.७० ॥
ब्रह्मरूपधरं शांतं दिव्यरुद्राक्षभूषितम् ॥
गत कल्पकृतग्रंथिसूत्रमालावलंबितम् ॥ ७१ ॥
विरंचिहरसंवादो जन्माहंकारगर्वितः ॥
संक्रुद्धैः क्रियते कोऽद्य चिंतातत्परमानसम् ॥ ॥ ७२ ॥
आयातं नारदं दृष्ट्वा विस्मिताः समुपस्थिताः ॥
प्रभो प्रसादः क्रियतामागंतव्यं गृहे मम ॥ ७३ ॥
धन्योऽहं कृतपुण्योऽहं यस्य मे त्वं गृहागतः ॥
इत्युक्तो बलिना विप्रो विवेशासुरमंदिरे ॥
आसनं पाद्यमर्घ्यं च दत्त्वा संपूजितो द्विजः ॥ ७४ ॥
प्रविश्य सहिताः सर्वे संविष्टा दैत्यदानवाः ॥
शुक्रेण सहितो दैत्यो बभाषे नारदं बलिः ॥ ७५ ॥
इदं राज्यमिमे दारा इमे पुत्रा अहं बलिः ॥
ब्रूहि येनात्र ते कार्यं दानं मे प्रथमं व्रतम् ॥ ७६ ॥
॥ नारद उवाच ॥ ॥
भक्त्या तुष्यंति ये विप्रास्ते विप्रा भूमिदेवताः ॥
न तु ये पूजिताः शक्त्या पुनर्याचंति तेऽधमाः॥ । ॥ ७७ ॥
त्वयाऽहं पूजितो हृष्टो न वित्तैर्मे प्रयोजनम् ॥
हृष्टोऽहं तव राज्येन यज्ञैर्दानैर्व्रतैस्तथा ॥ ७८. ॥
देवैः कृतं विप्रियं ते किंचित्पश्याम्यहं बले ॥
त्वया संपूज्यमानोऽपि देवराजो न तुष्यति ॥ ७९ ॥

न क्षमंति सुराः सर्वे तव राज्यं धरातले ॥

स्वर्गे मे तापको जातो देवानां तव विग्रहे ॥ ॥ 7.2.17.८० ॥

संनह्य प्रथमं याति यः सैन्यं शत्रुभूमिषु ॥

स क्षत्रियो विजयते तस्य राज्यं च वर्धते ॥८१॥

उच्छेदस्तव राज्यस्य भविष्यति श्रुतं मया ॥

एवं ज्ञात्वा यथायुक्तं तच्छीघ्रं तु विधीयताम् ॥ ८२ ॥

॥ बलिरुवाच ॥ ॥

यैर्गुणैः कुरुते राज्यं राजा तान्वद मे विभो ॥

दानं पात्रे प्रदातव्यं मया त्वमपि तं वद ॥ ८३ ॥

॥ नारद उवाच ॥ ॥

षड्विंशद्गुणसंपन्नो राजा राज्यं करोति च ॥

स राज्यफलमाप्नोति शृणु तत्कथयाम्यहम् ॥ ८४ ॥

चरेद्धर्मानकटुको मुंचेत्स्नेहमनास्तिके ॥

अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥८५॥

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ॥

दाता चाऽऽयामवर्जः स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ ८६ ॥

संदधीत न चानार्यान्विगृह्णीयान्न बंधुभिः ॥

नानाप्तैश्चारयेच्चारान्कुर्यात्कार्यमपीडयन् ॥८७॥

अर्थान्ब्रूयान्न चापत्सु गुणान्ब्रूयान्न चात्मनः ॥

आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ८८ ॥

नापरीक्ष्य नयेद्दण्डं न च मंत्रं प्रकाशयेत् ॥

विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ८९ ॥

आप्तैः सुगुप्तदारः स्याद्रक्ष्यश्चान्यो घृणी नृपः ॥

स्त्रियं सेवेत नात्यर्थं मृष्टं भुंजीत नाऽहितम् ॥ 7.2.17.९० ॥

अस्तेयः पूजयेन्मान्यान्गुरुं सेवेदमायया ॥

अर्च्यो देवो न दम्भेन श्रियमिच्छेदकुत्सिताम् ॥ ९१ ॥

सेवेत प्रणयं कृत्वा दक्षः स्यादथ कालवित् ॥

सांत्ववाक्यं सदा वाच्यमनुगृह्णन्न चाक्षिपेत्॥ ९२ ॥

प्रहरेन्न च विप्राय हत्वा शत्रून्न शेषयेत् ॥
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥ ९३ ॥
एवं राज्ये चिरं स्थेयं यदि श्रेय इहेच्छसि ॥
तपःस्वाध्यायदानानि तीर्थयात्राऽऽश्रमाणि च ॥ ९४ ॥
योगेनात्मप्रबोधस्य कलां नार्हति षोडशीम् ॥
त्वया संसारवैराग्यं कर्त्तव्यं विप्रपूजनम् ॥९५॥
यष्टव्यं विविधैर्यज्ञैर्ध्येयो नारायणो हरिः ॥
प्रसंगेन समायातो यास्ये रैवतके गिरौ ॥ ९६ ॥
तत्रास्ते भगवान्विष्णुर्नदी त्रैलोक्यपावनी ॥
तत्रास्ते च शिवावृक्षो बहुपुष्पफलान्वितः ॥
तत्र गत्वा करिष्यामि व्रतं तद्विष्णुवल्लभम् ॥ ९७ ॥
॥ बलिरुवाच ॥ ॥
कोऽयं रैवतकोनाम व्रतं किं विष्णुवल्लभम् ॥
शिवावृक्षास्तु के प्रोक्तास्तत्कथं कथयस्व मे ॥ ९८ ॥ ॥
॥ नारद उवाच ॥ ॥
पुरा युगादौ दैत्येन्द्र सपक्षाः पर्वताः कृताः ॥
संचिंत्य ब्रह्मणा पश्चादचलास्ते कृताः पुनः ॥ ९९ ॥
उत्पतंति महाकाया निपतंति यदृच्छया ॥
मेरुमंदरकैलासा वचसा संस्थिताः स्थिराः ॥ 7.2.17.१०० ॥
वारिता न स्थिता ये तु त इंद्रेण स्थिरीकृताः ॥
मेरोर्दक्षिण शृंगे तु कुमुदेति स पर्वतः ॥ १०१ ॥
दिव्यः सपक्षः सौवर्णो दिव्यवृक्षैः समावृतः ॥
तस्योपरि पुरी दिव्या वैष्णवी विष्णुना कृता ॥ १०२ ॥
तस्या मध्ये गृहं दिव्यं यस्मिल्लँक्ष्मीः सदा स्थिता ॥
मेरोः शृंगे पुरी रम्या गृहं तत्र मनोरमम् ॥ १०३ ॥
तत्रास्ते स भवो देवो भवानी यत्र संस्थिता ॥
सभा माहेश्वरी रम्या सौवर्णी रत्नमंडिता ॥ १०४ ॥
तत्रास्ते भगवान्विष्णुर्देवैर्ब्रह्मादिभिर्वृतः ॥

तस्यां विष्णुः सदा याति देवं द्रष्टुं महेश्वरम् ॥ १०५ ॥
सौवर्णैः कुमुदैर्यस्मादसौ सर्वत्र मंडितः ॥
कुमुदेति कृतं नाम देवैस्तत्र समागतैः ॥ १०६ ॥
एकदा भगवान्रुद्रो गिरौ तस्मिन्समागतः ॥
द्रष्टुं तच्छिखरे रम्ये तां पुरीं विष्णुपालिताम् ॥ १०७ ॥
गृहागतं हरं दृष्ट्वा हरिणा स तु पूजितः ॥
लक्ष्म्या संपूजिता गौरी हर्षिता तत्र संस्थिता ॥ १०८ ॥
एकासनोपविष्टौ तौ मंत्रयंतौ परस्परम् ॥
हरेण कारणं ज्ञात्वा तत्सर्वं कथितं हरेः ॥ १०९ ॥
त्वयेयं नगरी कार्या मंदरे पर्वतोत्तमे ॥
प्रष्टव्यः कारणं नाहमवश्यं तद्भविष्यति ॥ 7.2.17.११० ॥
हर एव विजानाति कारणं कतमोऽपि न ॥
एवं तथेति तौ प्रोक्त्वा संस्थितौ पर्वतोऽपि सः ॥ १११ ॥
तं दृष्ट्वा संगतं रुद्रं कुमुदः स्वयमाययौ ॥
धन्योऽहं कृतपुण्योऽहं यस्य मे गृहमागतौ ॥ ११२ ॥
द्वाभ्यामुक्तो गिरिवरो ददाव किं वरं तव ॥
इत्युक्तः पर्वतस्ताभ्यां वरं वव्रे स मूढधीः ॥ ११३ ॥
भविष्यत्कार्यहेतुत्वाद्भविष्यति न तद्वृथा ॥
यत्राहं तत्र वस्तव्यं भवद्भ्यामस्तु मे वरः ॥ ११४ ॥
मत्सन्निधौ समागत्य स्थातव्यं ब्रह्मवासरम् ॥
तथेत्युक्त्वा सपत्नीकौ गतौ हरिहरावुभौ ॥ ११६ ॥
पञ्चमो यो मनुः पूर्वं रैवतो नाम विश्रुतः ॥
तस्योत्पत्तौ तु यद्वृत्तं कुमुदाग्रे शृणुष्व तत् ॥ ११६ ॥
ऋषिरासीन्महाभाग ऋतवागिति विश्रुतः ॥
तस्यापुत्रस्य पुत्रोऽभूद्रेवत्यन्ते महात्मनः ॥ ११७ ॥
स तस्य विधिवच्चक्रे जातकर्मादिकाः क्रियाः ॥
तथोपनयनाद्याश्च स चाशीलोऽभवन्नृप ॥ ११८ ॥
यतः प्रभृति जातोऽसौ ततः प्रभृत्यसावृषिः ॥

दीर्घरोगपरामर्शमवापातीव दुर्द्धरम् ॥ ११९ ॥।
माता चास्य परामार्तिं कुष्ठरोगाभिपीडिता ॥
जगाम चिन्तां स ऋषिः किमेतदिति दुःखितः ॥ 7.2.17.१२० ॥
मूर्खस्तु मंदधीः पुत्रो दुःखं जनयते पितुः ॥
अमार्गगो विशेषेण दुःखाद्दुःखतरं हि तत् ॥ १२१ ॥
अपुत्रता मनुष्याणां श्रेयसे न कुपुत्रता ॥
सुहृदां नोपकाराय पितॄणां नापि तृप्तये ॥ १२२ ॥
सुपुत्रो हृदयेऽभ्येति मातापित्रोर्दिनेदिने ॥
पित्रोर्दुःखाय धिग्जन्म तस्य दुष्कृतकर्मणः ॥ १२३ ॥
धन्यास्ते तनया ये स्युः सवर्लोकाभिसंमताः ॥
परोपकारिणः शांताः साधुकर्मण्यनुव्रताः ॥ १२४ ॥
अनिर्वृतं निरानंदं दुःखशोकपरिप्लुतम् ॥
नरकाय न स्वर्गाय कुपुत्रत्वं हि जन्मिनः ॥ १२५ ॥
करोति सुहृदां दैन्यमहितानां तथा मुदम् ॥
अकाले तु जरां पित्रोः कुपुत्रः कुरुते किल ॥ १२६ ॥
॥ नारद उवाच ॥
एवं सोऽत्यन्तदुष्टस्य पुत्रस्य चरितैर्मुनिः ॥
दह्यमानमनोवृत्तिर्वृद्धगर्गमपृच्छत ॥ १२७ ॥
॥ ऋतवागुवाच ॥ ॥
सुव्रतेन पुरा वेदा अधीता विधिना मया ॥
समाप्य विद्या विधवत्कृतो दारपरिग्रहः ॥ १२८ ॥
सदारेण हि याः कार्याः श्रौतस्मार्त्तादिकाः क्रियाः ॥
ताः कृताश्च विधानेन कामं समनुरुध्य च ॥ १२९ ॥
पुत्रार्थं जनितश्चायं पुंनाम्नो विच्युतौ मुने ॥
सोऽयं किमात्मदोषेण मातुर्दोषेण किं मम ॥
अस्मद्दुःखावहो जातो दौःशील्याद्वद कोविद ॥ 7.2.17.१३० ॥
॥ गर्ग उवाच ॥ ॥
रेवत्यन्ते मुनिश्रेष्ठ जातोऽयं तनयस्तव ॥

तेन दुःखाय ते दुष्टे काले यस्मादजायत ॥ १३१ ॥

तवापचारो नैवास्य मातुर्नापि कुलस्य च ॥

अन्यद्दौःशील्यहेतुत्वं रेवत्यंत उपागतम् ॥ १३२ ॥

रेवती अश्विनोर्मध्यमाश्लेषामघयोस्तथा ॥

ज्येष्ठामूलर्क्षयोः प्रोक्तं गंडांतं तु भयावहम् ॥ १३३ ॥

गंडत्रये तु ये जाता नरनारीतुरंगमाः ॥

तिष्ठंति न चिरं गेहे तिष्ठन्तोऽपि भयंकराः ॥

एवमुक्तोऽथ गर्गेण चुक्रोधातीव कोपनः ॥ १३४ ॥

॥ ऋतवागुवाच ॥ ॥

यस्मान्ममैक पुत्रस्य रेवत्यन्ते समुद्भवः ॥ १३५ ॥

रेवती किं न जानाति मां विप्रः शापयिष्यति ॥

जाज्वल्यमाना गगनात्तस्मात्पततु रेवती ॥ १३६ ॥ ॥

॥ नारद उवाच ॥ ॥

तेनैवं व्याहृते वाक्ये रेवत्यृक्षं पपात ह ॥

पश्यतः सर्वलोकस्य विस्मयाविष्टचेतसः ॥ १३७ ॥

ईश्वरेच्छाप्रभावेन पतिता गिरिमूर्द्धनि ॥

रेवत्यृक्षं निपतितं कुमुदाद्रौ समन्ततः ॥ १३८ ॥

सुराष्ट्रदेशे स प्राप्तः पतितो भूतले शुभे ॥

हिमाचलस्य पुत्रो य उज्जयंतो गिरिर्महान्॥ १३९ ॥

कुमुदेन समं मैत्री कृता पूर्वं परस्परम् ॥

यत्र त्वं स्थास्यसे स्थाता तत्राहमपि निश्चितम् ॥ 7.2.17.१४० ॥

इति कृत्वा गृहीत्वाथ गंगावारि सयामुनम् ॥

सारस्वतं तथा पुण्यं सिंचितुं तं समागतः ॥ १४१ ॥

आहूतसंप्लवं यावत्संस्थितौ तौ परस्परम् ॥

कुमुदाद्रिश्च तत्पातात्ख्यातो रैवतकोऽभवत् ॥ १४२ ॥

अतीव रम्यः सर्वस्यां पृथिव्यां पृथिवीपते ॥

कुमुदाद्रिश्च सौवर्णो रेवतीच्यवनात्पुनः ॥ १४३ ॥

पंकजाभः स बाह्येन जातो वर्णेन भूपते ॥

मेरुवर्णः स मध्ये तु सौवर्णः पर्वतोत्तमः ॥ १४४ ॥

ततः सञ्जनयामास कन्यां रैवतको गिरिः ॥

रेवतीकांति संभूतां रेवतीसदृशाननाम्॥ १४५ ॥

प्रमुचो नाम राजर्षिस्तेन दृष्टा वरांगना ॥

पितृवद्रेवतीनाम कृतं तस्या नृपोत्तम ॥ १४६ ॥

रेवतीति च विख्याता सा सर्वत्र वरांगना ॥

सर्वतेजोमयं स्थानं सर्वतीर्थजलाश्रयम् ॥ १४७ ॥

गंगाजलप्रवाहैश्च संयुक्तं यामुनैस्तथा ॥

स्थितं सारस्वतं तोयं तत्र गर्तेषु तत्त्रयम् ॥ १४८ ॥

विख्यातं रेवतीकुंडं यत्र जाता च रेवती ॥

स्मरणाद्दर्शनात्स्नानात्सर्वपापक्षयो भवेत् ॥ १४९ ॥

सा बाला वर्द्धिता तेन प्रमुंचेन महात्मना ॥

यौवनं तु तया प्राप्तं तस्मिन्रैवतके गिरौ ॥ 7.2.17.१५० ॥

तां तु यौवनसंपन्नां दृष्ट्वाऽथ प्रमुचो मुनि ॥

एकांते चिन्तयामास कोऽस्या भर्ता भविष्यति ॥ १५१ ॥

हूत्वाहूत्वा स पप्रच्छ गुरुं वह्निं द्विजोत्तमः ॥

प्रसादं कुरु मे ब्रूहि कोऽस्या भर्ता भविष्यति ॥ १५२ ॥

अन्योऽस्याः सदृशः कोऽपि वंशे नास्ति करोमि किम् ॥

वह्निकुण्डात्समुत्थाय प्रोक्तवान्हव्यवाहनः ॥ १५३ ॥

शृणु मे वचनं विप्र योऽस्या भर्ता भविष्यति ॥

प्रियव्रतान्वयभवो महाबलपराक्रमः ॥ १५४ ॥

पुत्रो विक्रमशीलस्य कालिंदीजठरोद्भवः ॥

दुर्दमो नाम भविता भर्ता ह्यस्या महीपतिः ॥ १५५ ॥

अत्रांतरे समायातो दुर्दमः स महीपतिः ॥

गिरौ मृगवधाकांक्षी मुनिं गेहे न पश्यति ॥

प्रियेऽयि तातः क्व गत एहि सत्यं ब्रवीहि मे ॥ १५६ ॥

॥ नारद उवाच ॥ ॥

अग्निशालास्थितेनैव तच्छ्रुतं वचनं प्रियम् ॥

प्रियेत्यामन्त्रणं कोऽयं करोति मम वेश्मनि ॥ ॥ १५७ ॥

स ददर्श महात्मानं राजानं दुर्दमं मुनिः ॥

जहर्ष दुर्दमं दृष्ट्वा मुनिः प्राह स गौतमम् ॥ १५८ ॥

शिष्यं विनयसम्पन्नमर्घ्यं पाद्यं समानय ॥

एकं तावदयं भूपश्चिरकालादुपागतः ॥ १५९ ॥

जामाता सांप्रतं राजा योग्यास्य च सुता मम ॥

ततः स चिंतयामास राजा जामातृ कारणम्॥ 7.2.17.१६० ॥

मौनेन विधिना राजा जगृहेऽर्घ्यं द्विजाज्ञया ॥

तमासनगतं विप्रो गृहीतार्घ्यं महामुनिः ॥ १६१ ॥

प्रस्तुतं प्राह राजेन्द्रं नृपते कुशलं पुरे ॥

कोशे बले च मित्रे च भृत्यामात्य प्रजासु च ॥

तथात्मनि महाबाहो यत्र सर्वं प्रतिष्ठितम् ॥ १६२ ॥

पत्नी च ते कुशलिनी याऽत्र स्थाने हि तिष्ठति ॥

अन्यासां कुशलं ब्रूहि याः संति तव मंदिरे ॥ १६३ ॥

॥ राजोवाच ॥ ॥

त्वत्प्रसादादकुशलं नास्ति राज्ये क्वचिन्मम ॥

जातकौतूहलोऽस्म्यस्मि मम भार्याऽत्र का मुने ॥ १६४ ॥

॥ प्रमुच उवाच ॥ ॥

रेवती ते वरा भार्या किं न वेत्सि नृपोत्तम ॥

त्रैलोक्यसुन्दरी या तु कथं सा विस्मृता तव ॥ १६५ ॥

॥ राजोवाच ॥ ॥

सुभद्रां शांतपापां च कावेरीतनयां तथा ॥

सूरात्मजानुजातां च कदंबां च वरप्रजाम् ॥ १६६ ॥

विपाठां नंदिनीं चैव वेद्मि भार्यां गृहे मम ॥

तिष्ठन्ति नैव जानामि भार्या मे रेवती कुतः ॥।३६७ ॥

ऋषिरुवाच ॥ ॥

प्रियेति सांप्रतं प्रोक्ता रेवती सा प्रिया तव ॥

तदन्यथा न भविता वचनं नृपसत्तम ॥ १६८ ॥

॥ राजोवाच ॥ ॥

नास्ति भावकृतो दोषः क्षम्यतां तद्वचो मम ॥

विनिर्गतं वचोवक्त्रान्नाहं जाने द्विजोत्तम ॥ १६९ ॥

॥ ऋषिरुवाच ॥ ॥

नास्ति भावकृतो दोषः परिवेघ्नि कुरुष्व तत् ॥

वह्निना कथितस्त्वं मे जामाताद्य भविष्यसि ॥ 7.2.17.१७० ॥

इत्यादिवचनै राजा भार्या मेने स रेवतीम् ॥

ऋषिस्तथोद्यतः कर्तुं विवाहं विधि पूर्वकम् ॥

उवाच कन्या पितरं किञ्चिन्मे श्रूयतां पितः ॥ १७१ ॥

यदि मे पतिना तात विवाहं कर्तुमिच्छसि ॥

रेवत्यृक्षं विवाहं मे तत्करोतु प्रसादतः ॥ १७२ ॥

॥ ऋषिरुवाच ॥ ॥

रेवत्यृक्षश्च न वै भद्रे चन्द्रयोगे दिवि स्थितम् ॥

ऋक्षाण्यन्यान्यपि संति सुभ्रूर्वैवाहकानि च ॥ १७३ ॥ ॥

॥ कन्योवाच ॥ ॥

तात तेन विना कालो विकलः प्रतिभाति मे ॥

विवाहो विकले तात मद्विधायाः कथं भवेत् ॥ १७४।

॥ प्रमुञ्च उवाच ॥ ॥

ऋतवागिति विख्यातस्तपस्वी रेवतीं प्रति ॥

चकार कोपं क्रुद्धेन तेनर्क्षं तन्निपातितम् ॥ १७५ ॥

मया चास्मै प्रतिज्ञाता भार्येति विदितं तव ॥

न चेच्छसि विवाहं त्वं संकटं नः समागतम् ॥ १७६ ॥

॥ कन्योवाच ॥ ॥

ऋतवागेव स मुनिः किमेतत्तप्तवान्स्वयम् ॥

न त्वया मम तातेन ब्रह्मबन्धोः सुताऽस्मि किम् ॥ १७७ ॥

॥ ऋषिरुवाच ॥ ॥

ब्रह्मबन्धोः सुता न त्वं तपस्वी नास्ति मेऽधिकः ॥

सुता त्वं च मया देया नान्यत्कर्तुं समुत्सहे ॥ १७८ ॥

॥ कन्योवाच ॥ ॥

तपस्वी यदि मे तातस्तत्किमृक्षमिदं दिवि ॥

समारोप्य विवाहो मे कस्मान्न क्रियते पुनः ॥ १७९ ॥

॥ ऋषिरुवाच ॥ ॥

एवं भवतु भद्रं ते भद्रे प्रीतिमती भव ॥

आरोपयामीन्दुमार्गे रेवत्यृक्षं कृते तव ॥ 7.2.17.१८० ॥

ततस्तपःप्रभावेन रेवत्यृक्षं महामुनिः ॥

यथा पूर्वं तथा चक्रे सोमयोगि द्विजोत्तमः ॥

विवाहं दुहितुः कृत्वा जामातरमुवाच ह ॥ १८१ ॥

औद्वाहिकं ते भूपाल कथ्यतां किं ददाम्यहम्॥

दुष्प्रापमपि दास्यामि विद्यते मे महत्तपः ॥ १८२ ॥

॥ राजोवाच ॥ ॥

मनोः स्वायंभुवस्याहमुत्पन्नः संततौ मुने ॥

मन्वंतराधिपं पुत्रं त्वत्प्रसादाद्वृणोम्यहम् ॥ १८३ ॥

॥ ऋषिरुवाच ॥ ॥

भविष्यति महीपालो महाबलपराक्रमः॥

रेवती रेवतीकुण्डे स्नात्वा पुत्रं जनिष्यति॥ १८४॥

एवं कृत्वा गतो राजा सा च पुत्रमजीजनत्॥

रैवतेति कृतं नाम बभूव स मनुर्नृपः॥ १८५॥

अमुना च तदा प्रोक्तमस्मिन्नैवतके गिरौ॥

स्त्रियः स्नानं करिष्यंति तासां पुत्रा महाबलाः॥

दीर्घायुषो भविष्यंति दुःखदारिद्र्यवर्जिताः ॥ १८६ ॥

॥ नारद उवाच ॥ ॥

इत्युक्ते पर्वतो राजन्दीर्घो भूत्वा पपात सः ॥

एतौ तौ संस्मृतौ देवौ सभार्यौ हरिशंकरौ ॥ १८७ ॥

स्मृतमात्रौ तदाऽऽयातौ तेन बद्धौ पुरा यतः ॥

यत्राहं तत्र स्थातव्यं भवद्भ्यामिति निश्चितम् ॥१८८॥

अतो विष्णुहरौ देवौ स्थितौ तौ पर्वतोत्तमे ॥

गिरौ रैवतके रम्ये स्वर्णरेखानदीजले ॥

आराधयद्धरिं देवं रेवती तां च सोब्रवीत् ॥ १८९ ॥

भवताच्चंद्रयोगस्ते गगने ब्राह्मणाज्ञया ॥

अन्यद्वृणीष्व तुष्टोऽहं वरं मनसि यत्स्थितम् ॥ 7.2.17.१९० ॥

॥ रेवत्युवाच ॥ ॥

गिरौ रैवतके देव स्थातव्यं भवता सदा ॥

मया स्नानं कृतं यत्र तत्र स्नास्यंति ये जनाः ॥ १९१ ॥

तेषां विष्णुपुरे वासो भवत्विति वृतं मया ॥

एवमस्तु तदा प्रोच्य गिरौ रैवतके स्थितः ॥

दामोदरश्चतुर्बाहुः स्वयं रुद्रोपि संस्थितः ॥ १९२ ॥

गंगाद्याः सरितः सर्वाः संस्थिता विष्णुना सह ॥

क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः ॥ १९३ ॥

आमर्द्दे देवदैत्यानां तेन सामर्दकी स्मृता ॥ ॥

अस्मिन्वृक्षे स्थिता लक्ष्मीः सदा पितृगृहे नृप ॥ १९४ ॥

शिवालक्ष्मीः स्मृतो वृक्षः सेव्यते सुरसत्तमैः ॥

देवैर्ब्रह्मादिभिः सर्वैर्वृक्षोऽसौ वैष्णवः स्मृतः॥ १९५॥

सर्वैः संचिंत्य मुक्तोऽसौ गिरौ रैवतके पुरा॥

अस्य वृक्षस्य यात्रां ये करिष्यंति हरेर्दिने ॥ १९६॥

फाल्गुने च सिते पक्ष एकादश्यां नृपोत्तम॥

तेषां पुत्राश्च पौत्राश्च भविष्यंति गुणाधिकाः॥

प्रांते विष्णुपुरे वासो जायतेनात्र संशयः ॥१९७॥

॥ बलिरुवाच ॥ ॥

कथमेतद्व्रतं कार्यं वैष्णवं विष्णुवल्लभम् ॥

रात्रौ जागरणं कार्यं विधिना केन तद्वद ॥ १९८ ॥

॥ नारद उवाच ॥ ॥

फाल्गुनस्य सिते पक्ष एकादश्यामुपोषितः ॥

स्नात्वा नद्यां तडागे वा वाप्यां कूपे गृहेऽपि वा ॥ १९९ ॥

गत्वा गिरौ वने वाऽपि यत्र सा प्राप्यते शिवा ॥

पूज्या पुष्पैः शुभै रात्रौ कार्यं जागरणं नरैः ॥ 7.2.17.२०० ॥

अष्टाधिकशतैः कार्या फलैस्तस्याः प्रदक्षिणा ॥

प्रदक्षिणीकृत्य नगं भोक्तव्यं तु फलं नरैः ॥२०१॥

करकं जलपूर्णं तु कर्त्तव्यं पात्रसंयुतम् ॥

हविष्यान्नं तु कर्त्तव्यं दीपः कार्यो विधानतः ॥ २०२ ॥

एवं जागरणं कार्यं कथाश्रवणतत्परैः ॥

मुच्यंते देहिनः पापैः कलिजैः कायसंभवैः ॥ २०३ ॥

देहांते ते नराः सर्वे पूज्यंते हरिमंदिरे ॥ २०४ ॥

॥ सारस्वत उवाच ॥ ॥

इत्युक्त्वा नारदो दैत्यं ययौ रैवतकं गिरिम् ॥

दैत्येन्द्रो मंत्रयामास किंकार्यं सांप्रतं मया ॥ २०५ ॥

न रोचते सुरैः सार्द्धं विग्रहो मे सुरोत्तमाः ॥ २०६ ॥

॥ मंत्रिण ऊचुः ॥ ॥

नास्ति क्षमा भृशं तेषां क्षत्रियाणां गृहे सताम्॥

अशक्तमपि मंस्यंते स्वयमायांति ते यतः ॥

तस्मात्स्वयं प्रयास्यामो देवेन्द्रं सहिता वयम् ॥ २०७ ॥

इति श्रुत्वा ददौ ढक्कां प्रथमं सुरविग्रहे ॥

गृहीत्वा वाहिनीं दैत्याः प्रस्थिता मेरु पर्वते ॥ २०८ ॥

यत्र सा नगरी रम्या देवराजस्य पूर्वतः ॥

आगच्छमानां तां ज्ञात्वा वाहिनीं मेरुपर्वते ॥ २०९ ॥

देवराजसमादेशाच्चलिता देव वाहिनी ॥

सुमेरोः पूर्वदिग्भागे युद्धमासीत्परस्परम्॥ 7.2.17.२१० ॥

देवसैन्यं यदा सर्वं दैत्यसैन्येनसंयुतम्॥

महाप्रलयसादृश्यं युद्धं वृत्तं तदा तयोः ॥ ॥ २११ ॥

ऐरावणं समारुह्य देवराजः समागतः ॥

रथमारुह्य दैत्येन्द्रो युद्धायान्ये समागताः ॥ २१२ ॥

देवा यज्ञभुजो यस्मात्तस्मान्न युद्ध कांक्षिणः ॥
ऐरावणो बलिं दृष्ट्वा न चचालाग्रतो मृधे ॥ २१३ ॥
संग्रामे विमुखो याति दिग्गजैः परिवेष्टितः ॥
अध्वरे बाहुना येन संकल्पं कृतवान्बलिः ॥ २१४ ॥
तेन वै स सुरान्सर्वान्वारयामास संयुगे ॥
वारिता विमुखा यांति देवराजः करोतु किम् ॥ २१५ ॥
कुलिशं न कुरुते कर्म भुजमुक्तं न गच्छति ॥२१६॥
एवं बहूनि युद्धानि निवृत्तानि तदा तयोः ॥
न हंतुं शक्यंते युद्धे देवैर्दैत्या महाबलाः ॥ २१७ ॥
बलाकांक्षाः स्थिता देवा गुरुणा ते प्रबोधिताः॥
अमरा देवताः सर्व इति शुक्रेण वारिताः ॥ २१८ ॥
अवतारं हरेर्ज्ञात्वा पञ्चमं वामनं स्थितम् ॥
अतिहृष्टोऽमरावत्यां राज्यं चक्रे सुरेश्वरः ॥ २१९ ॥
ननर्त्त युद्धे दैत्येन्द्रः स्वगृहे यजते सुरान्॥
पातालाभिसृता दैत्या राज्यं कुर्वंति मानवाः ॥ 7.2.17.२२० ॥
तदा देवगणाः सर्वे मन्त्रयन्ति सुरैः सह ॥
दैत्यो लोकद्वयं शास्ति स्वर्गं शास्ति सुरेश्वरः ॥ २२१ ॥
क्षंतव्यं तावदेवास्य वामनो रैवतं गिरिम्॥
यावद्याति सुरैः कार्यं मौनं दैत्यजितैरपि ॥ २२२ ॥
यदाप्रभृति सञ्जातो वामनो धरणीतले ॥
तदाप्रभृति दैत्यानां दुनिर्मित्तानि जज्ञिरे ॥ २२३ ॥
शिवा प्रविश्य नगरे रौति सा विस्वरं निशि ॥
भ्रमन्ति नगरे काका दिवारात्रं विराविणः ॥ २२४ ॥
सर्प्पाः सर्प्पंति गेहेषु कृष्णा रौद्रा विषोल्बणाः ॥
कंका गृध्रा बका भ्रांता भ्रमन्ति नगरोपरि ॥ २२५ ॥
जायन्ते विमुखा गर्भाः स्त्रीषु गोषु मृगीषु वा ॥
घृतं दुग्धं च नैवास्ति तिले तैलं न विद्यते ॥ २२६ ॥
जने जानपदो नित्यं युध्यते च परस्परम् ॥

काली करालवदना दीर्घकेशी विलोचना ॥ २२७ ॥

अज्ञाता रुदती याति नगरे सा गृहं प्रति ॥

कोऽयं न ज्ञायते कस्मात्तपस्वी भस्मगुंठितः ॥ २२८ ॥

यतिर्मौनव्रती नग्न पुरो याति गृहेगृहे ॥

डमरूड्डामरुं पश्चाद्धुंकारं विदधाति च ॥२२९॥

अकाले कुपिता मेघा जलं मुञ्चंति पुष्कलम् ॥

करकैः पूरिता गर्भा गर्जंति गिरयो बहु ॥ 7.2.17.२३० ॥

समजायत भूकंपो दिग्दाहश्चाप्यजायत ॥

मिलित्वा श्वगणः सर्वो मुखमुच्चैर्विधाय च ॥ २३१ ॥

रौति रात्रौ पुरे नित्यं घूकः शब्दं विशब्दते ॥

बलिराज्यक्षयो जातो दिवि केतूदयो निशि॥ ॥ २३२ ॥

आदित्यमण्डले वेधः कीलकैर्दृश्यते कृतः ॥

कबन्धसंकुले व्योम्नि चन्द्रमा न प्रकाशते ॥ २३३ ॥

स जातो रोहिणीवेधो यो जातो युगव्यत्यये ॥

नक्षत्राणि दिवा लोकैर्गण्यन्ते गुणवत्तरैः ॥ २३४ ॥

बीजानां व्यत्ययो जज्ञे भूमिस्त्रीगोमृगीषु च ॥

अश्वा ह्रेषंति सहसा मदं कुर्वंति नो गजाः ॥ २३९ ॥

मन्त्रिणां मंत्रितो मन्त्रो भिद्यते राज्यसंक्षये ॥

घृताहुत्या हुतो वह्निर्ज्वलति न तदा द्विजैः ॥ २३६ ॥

प्रचण्डः पावनो वाति वात्यया घूर्णितद्रुमः ॥

ध्वजा ज्वलन्ति चैत्येषु नभो भवति धूसरम् ॥ २३७ ॥

एते चान्ये च बहव उत्पाता बलिनो गृहे ॥

संजाता वामने जाते नारदागमनादनु ॥ २३८ ॥

अन्यच्च जायते रौद्रं यद्दिवा स्वप्नदर्शनम् ॥

संनह्यंते यदा दैत्याः पतिता निपतंति च ॥ २३९ ॥

निमित्तानि स सैन्यस्य दृष्ट्वैवं न प्रवर्त्तते ॥

सदा संतिष्ठते गेहे राज्यं च कुरुते बलिः ॥ 7.2.17.२४० ॥

शरीरे न सुखं तस्य गात्रभंगः शिरोव्यथा ॥

ज्वरितो न सुखं शेते न भुंक्ते न पिबत्यसौ ॥
न भुक्तं जीर्यते लोकः सर्वोपि व्याकुलीकृतः ॥२४१॥
विपरीतं जगद्दृष्ट्वा बलिर्व्याकुलमानसः ॥
मन्त्रयामास किमिदं ब्राह्मणैः सह दुःखितः ॥ २४२ ॥
शुक्रं गुरुं समानीय सभायां संनिवेश्य च ॥
पप्रच्छ कुशलं दैत्यो भक्त्या परमया युतः ॥
विपरीतमिदं सर्वं वर्त्तते तद्वदस्व मे ॥ २४३ ॥
नारदेन यदुक्तं मे गुरो सत्यं भविष्यति ॥
उत्पातशांतिकं ब्रूहि ब्राह्मणैः सहितो मम ॥ २४४ ॥
॥ शुक्र उवाच ॥ ॥
उत्पातशांतये कार्यो यज्ञः सर्वस्वदक्षिणः ॥
ब्राह्मणैः क्षत्रियैः सार्द्धं द्वादशाब्दो विधीयताम् ॥ २४५ ॥
ऋषयो ब्राह्मणा ये च मुनयो ब्रह्मचारिणः ॥
आगच्छन्तु महायज्ञे ये च दूरेऽपि संस्थिताः ॥ २४६ ॥
नगरात्पूर्वदिग्भागे कर्त्तव्यो यज्ञमण्डपः ॥
यस्य यस्याभिरुचितं देयं दानं त्वया नृप ॥
तथा करिष्य इत्युक्त्वा यज्ञार्थं तत्परोभवत् ॥ २४७ ॥
आनाय्य ब्राह्मणान्सर्वान्कुशलान्यज्ञकर्मणि ॥
गृहीता यज्ञदीक्षा तैर्यज्ञे वै सर्व दक्षिणे ॥ २४८ ॥
ब्राह्मणाय मया देयं सर्वस्वमिह याचिते ॥
शरीरपुत्रमित्राणि दारान्दास्यामि याचितः ॥ २४९ ॥
दातव्यं सततं दानं ब्राह्मणेभ्यो मयाध्वरे ॥
वारितेनापि न स्थेयं दातव्यं निश्चितं मया ॥
याचितश्चेन्न दास्यामि तदा व्यर्थो ममाऽध्वरः ॥7.2.17.२५०॥
विधाय मण्डपं दिव्यं बहुयोजनविस्तरम् ॥
तत्र दानानि दीयन्ते भोजनाच्छादनानि च ॥ २५१॥
सप्तर्षयः समायाता गगनाद्धरणीतले ॥
दिग्भ्यः समागताः सर्वे ब्राह्मणाः संति ये भुवि ॥ २५२ ॥

क्षत्रियाश्च समायाता विगृह्य विविधं वसु ॥

निवेदयन्ति ते राज्ञे प्रारब्धे यज्ञकर्मणि ॥ २५३ ॥

आसमुद्रात्समायाता नटनर्त्तकयाचकाः ॥

गीतवादित्रनिर्घोषो वेदध्वनिविमिश्रितः ॥ २५४ ॥

त्रैलोक्यं बधिरीचक्रे देहिदेहीति याचितम् ॥

मा देहीति वचो नास्ति स्तोकं देहीति चैव न ॥ २५५ ॥

यद्यद्यो याचते वस्तु तत्तस्मै तत्र दीयते ॥

ब्राह्मणो हि न सोऽप्यस्ति यो हि तं बहु याचते ॥ २५६ ॥

भोजनाच्छादनार्थं च न गृह्णंति द्विजातयः ॥

सुवर्णरत्नरौप्याणि तथाश्वरथकुंजरान्॥२५७॥

गृहगोभूमिग्रामांश्च न गृह्णंति द्विजातयः ॥

बलिराज्येन संतुष्टाः किं कुर्वंति धनेन ते ॥ २५८ ॥

एवं प्रवर्तते यज्ञो महान्सर्वस्वदक्षिणः ॥ २५९ ॥

नृत्यंति गायंति पठंति चान्ये स्तुवंति यज्ञं बहुदानयुक्तम् ॥

ब्रह्मेन्द्र रुद्रग्रहसूर्यचंद्राः प्रसादिता आहुतिभिश्च मन्त्रैः ॥ 7.2.17.२६० ॥

बलिं प्रशंसंति गुरुं तथान्ये होतारमेके परिवारमेके ॥

प्रजापतेर्नापि सुराधिपस्य समाप्यते चेदथ यास्यति ध्रुवम्॥

प्रदाय राज्यं द्विजपुंगवेभ्यः सपुत्रमित्रैः सहितो रसातलम् ॥२६१॥

इतीति वाचः प्रवदंति वाडवाः शृण्वंति दैत्याः किमिदं वदंति ॥

बलेः पुरःस्थाः कथयंति संगता बलिः प्रहृष्टः प्रददाति याचितम् ॥ २६२ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये बलियज्ञप्रभाववर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/gkh



॥ राजोवाच ॥ ॥

वस्त्रापथे महाक्षेत्रे सम्प्राप्तो वामनो यदा ॥

तदाप्रभृति किं चक्रे तन्मे विस्तरतो वद ॥ १ ॥

॥ सारस्वत उवाच ॥ ॥

वामनो वसतिं चक्रे भवस्याग्रे नृपोत्तम ॥

स्वर्णरेखाजले स्नात्वा भवं सम्पूज्य भावतः ॥ २ ॥

एकांते निर्मले स्थाने कण्टकास्थिविवर्जिते ॥

कृष्णाजिनपरिच्छन्न उपविष्टो वरा सने ॥ ३ ॥

कृत्वा पद्मासनं धीरो निश्चलोऽभूद्द्विजोत्तमः ॥

विधाय कन्धराबंधमृजुनासावलोककः ॥ ४ ॥

गृहक्षेत्रकलत्राणां चिंतां मुक्त्वा धनस्य च ॥

मायां च वैष्णवीं त्यक्त्वा कृतमौनो जितेन्द्रियः ॥ ५ ॥

निराहारो जितक्रोधो मुक्तसंसारबंधनः ॥

भुजौ पद्मासने कृत्वा किञ्चिन्मीलितलो चनः ॥

मनोतिचंचलं ज्ञात्वा स्थिरं चक्रे हृदि द्विजः ॥ ६ ॥

क्रमेणाभ्यासयोगेन भिन्नांश्चक्रे स चैकतः ॥

प्राणापानव्यानोदानसमानाख्यांश्च मारुतान् ॥ ६४ ॥

एवं तं हृदये कृत्वा गृहीत्वा सर्वसन्धिषु ॥

आनीय ब्रह्मणः स्थाने दृढं ब्रह्मण्ययोजयत् ॥ ८ ॥

गृहीत्वा पवनं बाह्यं यदा पूर यते तनुम् ॥

तदा स पूरको ज्ञेयो रेचकं तु वदाम्यहम् ॥ ९ ॥

यदा चाभ्यन्तरो वायुर्बाह्ये याति क्रमान्नृप ॥

तदा स रेचको ज्ञेयः स्तम्भनात्कुम्भको भवेत् ॥ 7.2.18.१० ॥

पञ्चविंशतितत्त्वानि यदा जानंति योगिनः ॥

मुच्यन्ते पातकैः सर्वैः सप्तजन्मकृतैरपि ॥ ११ ॥

॥ राजोवाच ॥

कानि तत्त्वानि को देही किं ज्ञेयं योगिनां वद ॥

उत्पन्नज्ञानसद्भावो योगयुक्तः कथं भवेत् ॥ १२ ॥

॥ ईश्वर उवाच ॥ ॥

प्रकृतिश्च ततो बुद्धिरहंकारस्ततोऽभवत् ॥

तन्मात्रपंचकं तस्मादेषा प्रकृतिरष्टधा ॥ १३ ॥

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेंद्रियाणि च ॥

एकादशं मनो विद्धि महा भूतानि पंच च ॥ १४ ॥

गणः षोडशकः सांख्ये विस्तरेण प्रकीर्तितः ॥

चतुर्विंशतितत्त्वानि पुरुषः पंचविंशकः ॥ १५ ॥

देहीति प्रोच्यते देहे स चात्मानं च पश्यति ॥

विंदन्ति परमात्मानं षष्ठं तं विंशतेः परम् ॥ १६ ॥

आसनादिप्रकारा ये ते ज्ञेयाः प्रथमं सदा ॥

यदा दीपशिखाप्रायं ज्योतिः पश्यंति ते हृदि ॥ १७ ॥

उत्पन्नज्ञानसद्भावा भण्यास्ते योगिनो बुधैः ॥

पूर्वं जरां जरयति रोगा नश्यति दूरतः ॥ १८ ॥

सर्वपापचये क्षीणे पश्चान्मृत्युं स विंदति ॥

मृतो लोके नरो नास्ति योगी जानाति चेत्स्वयम् ॥ १९ ॥

तदा द्वाराणि संरुद्ध्य दश प्राणान्स मुञ्चति ॥

पुण्य पापक्षयं कृत्वा प्राणा गच्छंति योगिनाम् ॥

अणिमादिगुणैश्वर्यं प्राप्नुवंति शिवालये ॥ 7.2.18.२० ॥

अनेन ध्यानयोगेन भवं पश्यति मानवः ॥

मनसा चिंतितं सर्वं सम्प्राप्तं भवदर्शनात् ॥ २१ ॥

एवमास्ते यदा विप्रो वामनो भवसन्निधौ ॥

गगनादवतीर्णं तं तदा पश्यति नारदम् ॥२२॥

॥ वामन उवाच ॥ ॥

महर्षे कुशलं तेऽद्य कस्मादागम्यते त्वया ॥

प्रणमामि महर्षे त्वां ब्रह्मैव त्वं जगत्त्रये ॥ २३ ॥

॥ नारद उवाच ॥ ॥

स्वर्ग लोकादहं प्राप्तः कुशलं किं ब्रवीमि ते ॥ २४ ॥

यातायातैर्दिनेशस्य पूर्य्यते ब्रह्मणो दिनम् ॥

दिनांते जायते रात्री रात्रौ नश्यंति देवताः ॥ २५ ॥

का कथा मृत्युलोकस्य ये म्रियंते दिनेदिने ॥

नभो धूमाकुलं जातं देवा बलिगृहे गताः ॥ २६ ॥

सप्तर्षयो गतास्तत्र ब्रह्मणा ब्रह्मचारिणः ॥

हाहाहूहूस्तुंबरुश्च गतौ नारदपर्वतौ ॥ २७ ॥

अप्सरोगणगन्धर्वाः संप्राप्ता बलिमंदिरे ॥

उत्पातशांतिको यज्ञः क्रियते बलिना स्वयम् ॥ २८ ॥

तत्रैव गन्तुमिच्छामि द्रष्टुं यज्ञं बलेर्गृहे ॥

सहस्रमेकं यज्ञानामेकोनं विदधे बलिः ॥ २९ ॥

दैत्यानां भुवनं सर्वं संपूर्णेऽस्मिन्भविष्यति ॥

असावतिशयः कोऽपि प्रारब्धो यज्ञकर्मणि ॥

द्विजातिभ्यो मया देयं येन यद्याच्यते स्वयम् ॥ 7.2.18.३० ॥

वारितेनापि मे देयं सत्यमस्तु वचो मम ॥

आत्मानमपि दारांश्च राज्यं पुत्रान्प्रियान्मम ॥ ३१ ॥

प्रार्थितश्चेन्न दास्यामि व्यर्थो भवतु मेऽध्वरः ॥

अनेन वचसा जाता महती मे शिरो व्यथा ॥

प्रतिज्ञाय कथं यज्ञः संपूर्णोऽयं भविष्यति ॥ ३२ ॥

भंगोपायं न पश्यामि भ्रमामि भुवनत्रये ॥

विध्वंसकारिणं ज्ञात्वा भवंतं पर्युपस्थितः ॥ ३३ ॥

यथा न पूर्यते यज्ञस्तथेदानीं विधीयताम् ॥ ३४ ॥

॥ वामन उवाच ॥ ॥

महर्षे शृणु मे वाक्यं का शक्तिर्मम विद्यते ॥

कोऽहं कस्मात्करिष्यामि यज्ञे देवाः समागताः ॥ ३५ ॥

ऋषयो ब्राह्मणाः सर्वे कथं व्यर्थो भविष्यति ॥

अपरं शृणु मे वाक्यं ब्रह्मर्षे ब्रह्मणस्पते ॥ ३६ ॥

न कलत्रं न ते पुत्राः कस्मात्प्रकृतिरीदृशी ॥

युद्धं विना न ते सौख्यं न सौख्यं कलहं विना ॥ ३७ ॥

यादृशस्ता दृशो वाऽपि वाग्वादोऽपि सदा प्रियः ॥

स्नानं संध्या जपो होमस्तर्पणं पितृदेवयोः ॥ ३६ ॥

नारदः कुरुते चान्यदन्यत्कुर्वंति ब्राह्मणाः ॥

ममापि कौतुकं जातं महर्षे वद सत्वरम् ॥ ३९ ॥

॥ नारद उवाच ॥ ॥

पाद्मकल्पे व्यतिक्रांते रात्र्यंते शृणु वामन॥

ब्रह्माण्डं वारिणा व्याप्तमन्यत्किं चिन्न विद्यते ॥ 7.2.18.४० ॥

अप्सु शेते देवदेवः स च नारायणः स्मृतः ॥

स ब्रह्मा स शिवो नास्ति भेदस्तेषां परस्परम् ॥ ४१ ॥

यदा भवंति ते भिन्ना स्तदा देवत्रयं च ते ॥

कर्तुं वाराहकल्पं तु भिन्ना जातास्त्रयस्तदा ॥ ४२ ॥

ब्रह्मविष्णुहरा देवा रजःसत्त्वतमोमयाः ॥

सृष्टिं ब्रह्मा करोत्येवं तां च पालयते हरिः ॥४३॥

हरः संहरते सर्वं त्रैलोक्यं सचराचरम् ॥

एवं प्रवर्त्य देवेश उपविष्टा वरासने ॥

कैलासशिखरे रम्ये मंत्रयंति परस्परम् ॥४४॥

त्रयाणां को वरो देवः को ज्येष्ठः को गुणाधिकः॥

चतुर्थो नास्ति यो वेत्ति सहसा ते त्रयः स्थिताः॥४५॥

तेभ्यः समुत्थितं ज्योतिरेकीभूतं तदंबरे॥

कालमानेन युक्तं तद्भ्राम्ते रविमंडलम् ॥४६॥

अहं ज्येष्ठो ह्यहं ज्येष्ठो वादोऽभूद्धरब्रह्मणोः ॥

द्वयोर्विवदतोः क्रोधात्संजातोऽहं मुखात्प्रभो ॥ ४७ ॥

कथं देव न जानासि यदुक्तं ब्रह्मणा तदा ॥

दशावतारास्ते रंतुं मत्स्यकूर्मादयः पुरा ॥ ४८ ॥

रुद्रेण वारिता गत्वा कलहो वो न युज्यते ॥

तथैव कृतवान्विष्णुरवतारान्दशैव तान् ॥ ४९ ॥

कल्पादौ ब्रह्मणो वक्त्रात्संजातोऽहं द्विजोत्तम ॥

कलहाजन्म मे यस्मात्तस्मान्मे कलहः प्रियः ॥ 7.2.18.५० ॥

कल्पादौ सृजता पूर्वं चिन्वितं ब्रह्मणा स्वयम् ॥

वेदान्तिना कथं सृष्टिः कर्तव्याऽहो हरे मया ॥ ५१ ॥

नष्टान्वेदान्न जानामि क्व वेदास्ते गता इति ॥

पृथ्वीमपि न जानामि किं स्थाने किमधो गता ॥ ५२ ॥

गंतुं न विद्यते शक्तिर्जलमध्ये ममाधुना ॥

अवतारैस्त्वया कार्यं दशभिः सृष्टिरक्षण म् ॥ ९३ ॥

जले जलेचरो मत्स्यो महानद्यां भविष्यसि ॥

आदाय वेदान्वेगेन मम त्वं दातुमर्हसि ॥ ५४ ॥

तथा च कृतवान्देवो मत्स्यरूपं जले महत् ॥

वेदान्समानयामास ददौ च ब्रह्मणे पुरा ॥

कूर्मरूपं पुनः कृत्वा मंदरं धारयिष्यसि ॥ ५५ ॥

इत्युक्तो ब्रह्मणा विष्णुर्लक्ष्मीस्त्वां वरयिष्यति ॥

पुरा चित्रं चरित्रं ते मथने दृष्टवानहम् ॥५६॥

यदा रसातलं प्राप्ता पृथिवी नैव दृश्यते ॥

ब्रह्मांडार्थे स्थानकृते तत्र सा नैव दृश्यते ॥ ॥ ५७॥

वाराहं क्रियतां रूपं ब्रह्मणा प्रेरितः स्वयम् ॥

महावराहरूपं स कृत्वा भूमेरधो गतः ॥ ५८ ॥

उद्धृत्य च तदा विष्णुर्दंष्ट्राग्रेण वसुंधराम् ॥

स निनाय यथास्थानं मुस्तां व धरणीतलात् ॥ ५९ ॥

अवतारं तृतीयं वै हरस्यापि मनोहरम् ॥

येन सा पृथिवी पृथ्वी पर्वतैः सहिता धृता ॥7.2.18.६०॥

चतुर्थं नरसिंहं वै कथयामि सुदारुणम्॥

आदित्या अदितेः पुत्रा दितेः पुत्रौ महावलौ ॥ ६१ ॥

हिरण्यकशिपुर्दैत्यो हिरण्याक्षो महाबलः ॥

स्वर्गे देवाः स्थिताः सर्वे पाताले दैत्यदानवाः ॥ ६२ ॥

हिरण्यकशिपुश्चक्रे दैत्यो राज्यं रसातले ॥
मनुपुत्रा धरापृष्ठे स्थापिता देवदानवैः ॥ ६३ ॥
व्यवस्थां तामतिक्रम्य हिरण्यकशिपुर्द्विज ॥
राज्यं चक्रे धरापृष्ठे सुरेन्द्रं स विजित्य च ॥ ६४ ॥
सप्तद्वीपवतीं पृथ्वीं गृहीत्वा साऽमरावतीम्॥
ग्रहीतुकामो बुभुजे पुत्रपौत्रैः कृतादरः ॥ ६५ ॥
प्रह्लादप्रमुखान्पुत्रान्स पीडयति मंदधीः ॥
पुत्रेषु पाठ्यमानेषु प्रह्लादोऽपि पपाठ तत् ॥ ६६ ॥
येन वै पठ्यमानेन जायते तस्य वेदना ॥
भुवनद्वयराज्येन दैत्यो देवान्न मन्यते ॥ ६७ ॥
तपसा तोषितो ब्रह्मा ददौ तस्मै वरं प्रभुः ॥
अमरत्वं स देवेभ्यो मनुष्येभ्यः सुरोत्तम ॥ ६८ ॥
कस्मादपि न मे भूयान्मरणं यदि चेद्भवेत् ॥
किंचित्सिंहो नरः किंचिद्यो भवेद्धरणीधरः ॥ ६९ ॥
तस्मात्कररुहैर्भिन्नो मरिष्ये न धरातले ॥
एवं भविष्यतीत्युक्त्वा गतो ब्रह्मा च विस्मयम् ॥ 7.2.18.७० ॥
कालेन गच्छता तस्य संजातो विग्रहो महान्॥
देवाः किं मे करिष्यंति विष्णुना किं प्रयोजनम् ॥ ७१ ॥
यष्टव्योऽहं सदा यज्ञै रुद्रः किं मे करिष्यति ॥
एवं हि वर्त्तमानस्य प्रह्लादः स्तौति तं हरिम् ॥ ॥ ७२ ॥
येनास्य जायते मृत्युस्तमेव स्मरते हरिम् ॥
यदासौ वार्यमाणोऽपि विरौति च हरिं हरिम् ॥ ७३ ॥
चतुर्भुजं शंखगदासिधारिणं पीतांबरं कौस्तुभ लाञ्छितं सदा ॥
स्मरामि विष्णुं जगदेकनायकं ददाति मुक्तिं स्मृतमात्र एव यः ॥ ७४ ॥
अनेन वचसा क्षुब्धो दैत्यो देत्यान्दि देश ह ॥
मारयध्वं तु तं दुष्टं गज सर्पजलाग्नितः ॥ ७५ ॥
॥ प्रह्लाद उवाच ॥ ॥
गजेपि विष्णुर्भुजगेऽपि विष्णुर्जलेऽपि विष्णुर्ज्वलनेऽपि विष्णुः ॥

त्वयि स्थितो दैत्य मयि स्थितश्च विष्णुं विना दैत्यगणाऽपि नास्ति ॥ ७६ ॥

यदा स मार्यमाणोऽपि मृत्युं प्राप्नोति न क्वचित् ॥

हिरण्यकशिपोर्वक्षो दह्यते क्रोधवह्निना ॥

तदा शिक्षयितुं पुत्रं मुखाग्रे संनिवेश्य च ॥ ७७ ॥

वचोभिः कठिनैः पुत्रं स्वयं हन्तुं समुद्यतः ॥ ।

धिक्त्वा नारायणं स्तौषि ममारिं स्तौषि चेत्पुनः॥७८॥

पुष्पलावं लविष्यामि शिरस्तेऽहं वरासिना ॥

अहं विष्णुरहं ब्रह्मा रुद्र इन्द्रो वरं वद ॥७९॥

आत्मीयं पितरं मुक्त्वा कमन्यं स्तौषि बालक ॥ 7.2.18.८० ॥

यदा न पठते बालः स्तौति नो पितरं स्वकम् ॥

दण्डेनाहत्य गुरुणा प्रह्लादः प्रेरितः पुनः॥

वदैकं वचनं शिष्य देहि मे गुरुदक्षिणाम्॥ ८१ ॥

यथा मे तुष्यते स्वामी ददाति विपुलं धनम् ॥ ८२ ॥

॥ प्रह्लाद उवाच ॥ ॥

प्रहरस्व प्रथमं मां करिष्ये वचनं गुरो ॥

स्तौमि विष्णुमहं येन त्रैलोक्यं सचराचरम्॥ ८३ ॥

कृतं संवर्द्धितं शांतं स मे विष्णुः प्रसीदतु ॥

ब्रह्मा विष्णुर्हरो विष्णु रिन्द्रो वायुर्यमोऽनलः ॥८४॥

प्रकृत्यादीनि तत्त्वानि पुरुषं पंचविंशकम् ॥

पितृदेहे गुरोर्देहे मम देहेऽपि संस्थितः ॥ ८५ ॥

एवं जानन्कथं स्तौमि म्रियमाणं नराधमम् ॥ ८६ ॥

॥ गुरुरुवाच ॥ ॥

नरेषु कोऽधमः शिष्य जन्मादिमरणेऽधम ॥

कथं न पितरं स्तौषि म्रियमाणो हरिं हरिम् ॥ । ॥ ८७ ॥

॥ प्रह्लाद उवाच ॥ ॥

भोजने शयने याने ज्वरे निष्ठीवने रणे ॥

हरिरित्यक्षरं नास्ति मरणेऽसौ नराधमः ॥ ८- ॥

भये राजकुले युद्धे व्याधौ स्त्रीसंगमे वने ॥

अशक्तौ वाऽथ संन्यासे मरणे भूमिसंस्थिताः ॥

स्मरंति मातरं मूर्खाः पितरं च नराधमाः ॥८९॥

माता नास्ति पिता नास्ति नास्ति मे स्वजनो जनः ॥

हरिं विना न कोऽप्यस्ति यद्युक्तं तद्विधीयताम् ॥ 7.2.18.९० ॥

इत्यादिवचनैः क्रुद्धो हन्तुं दैत्यः समुत्थितः॥

तदा माता समागत्य पुत्रस्य पुरतः स्थिता ॥९१॥

भ्रातरः स्वजनो भगिनी भाषते मा हरिं वद ॥

अहं माता स्वसा चेयं भ्रातरः स्वजनो जनः ॥

यथा संमिलितैर्वत्स स्थीयते वहुवासरम् ॥ ९२ ॥

॥ प्रह्लाद उवाच ॥ ॥

माता मे का स्वसा मे का भ्रातरः के पिता च कः ॥

स्वजनं शृणु मे मातः सहितैः स्थीयते सदा ॥ ९३ ॥

यस्याः पीतं मया मूत्रं पुरीषमुदरे बहु ॥

सा माता नरकोऽस्माकमग्रे वक्तुं न शक्यते ॥ ९४ ॥

निर्मितो न द्वितीयस्तु निर्मितो विश्वकर्मणा ॥

त्वादृशस्तु पुमान्कश्चिद्यस्य नो हृदये हरिः ॥ ९५ ॥

दशमासं ध्रुवं मन्ये मूत्रं पास्यति तर्पितः ॥

भ्रातरो भ्रातरः सत्यं गर्भेऽपि स्युः कथं यदि ॥ ९६ ॥

युध्यतस्तान्कथं माता वराकी वारयिष्यति ॥

स्वजनो दृश्यते वृद्धः परेषु पण्डितायते ॥ ९७ ॥

कुटुंबं भण्यते कस्माद्यश्च नायाति याति च ॥

बंधनं च कुटुम्बस्य जायते नरकाय नः ॥ ९८ ॥

माता मे विद्यते चान्या पितान्यो भ्रातरश्च ये॥

स्वसा स्वजनसम्वन्धं ज्ञात्वा मुक्तिमवाप्नुयात् ॥ ९९ ॥

माता प्रकृतिरस्माकं स्वसा बुद्धिर्निगद्यते ॥

अहंकारस्ततो जातो योऽहमित्यनुमीयते ॥ ॥ 7.2.18.१०० ॥

तन्मात्राः सोदराः पञ्च ये गच्छन्ति सहैव मे ॥

एषा प्रकृतिरस्माकं विकारः स्वजनो मम ॥ १०१ ॥

एतेषां वाहको यस्तु पुरुषः पञ्च विंशकः ॥
स मे पिता शरीरेऽस्मिन्परमात्मा हरिः स्थितः ॥ १०२ ॥
यद्यसौ चित्यन्ते चित्ते दृश्यते हृदये हरिः ॥
अणिमादिगुणैश्वर्यं पदं तस्यैव जायते ॥ १०३ ॥
भवता सम्मतं राज्यं तन्मे नित्यं तृणैः समम् ॥
यत्र नो पूज्यते विष्णुर्ब्रह्मा रुद्रोऽनिलोऽनलः ॥ १०४ ॥
प्रत्यक्षो दृश्यते यस्तु निरालम्बो भ्रमत्यसौ ॥
स एव भगवान्विष्णुर्य एते गगने स्थिताः ॥ १०५ ॥
ध्रुवे बद्धा ग्रहाः सर्वे य एतेऽप्युडवः स्थिताः ॥
ते सर्वे विष्णुवचसा न पतंति धरातले ॥ १०६ ॥
काले विनाशः सर्वेषां तेनैव विहितः स्वयम् ॥
इति संचिंत्य मे नास्ति भवद्भ्यो मरणाद्भयम् ॥ १०७ ॥
इति तद्वचनस्यांते पदा हत्वा पिताऽब्रवीत् ॥
कुत्राऽसौ हन्मि तत्पूर्वं पश्चात्त्वां हरिभाषिणम् ॥ १०८ ॥
॥ प्रह्लाद उवाच ॥ ॥
पृथिव्यादीनि भूतानि तान्येव भगवान्हरिः ॥
स्थले जले किं बहुना सर्वं विष्णुमयं जगत् ॥ १०९ ॥
तृणे काष्ठे गृहे क्षेत्रे द्रव्ये देहे स्थितो हरिः ॥
ज्ञायते ज्ञानयोगेन दृश्यते किं नु चक्षुषा ॥ 7.2.18.११० ॥
ब्रह्मालये याति रसातले वा धरातलेऽसौ भ्रमति क्षणेन ॥
आघ्राति गन्धं विदधाति सर्वं शृणोति जानाति स चात्र विष्णुः ॥ १११ ॥
इत्युक्तः सहजां मायां त्यक्त्वा सिंहासनोत्थितः ॥
दृढं परिकरं बद्ध्वा खड्गं चाकृष्य चोज्ज्वलम् ॥ ११२ ॥
हत्वा तं फलकाग्रेण बभाषे दुस्सहं वचः ॥
इदानीं स्मर रे विष्णुं नो चेज्जवलितकु ण्डलम् ॥
पतिष्यति शिरो भूमौ फलं पक्वं यथा नगात् ॥ ११३ ॥
नो चेद्दर्शय तं विष्णुमस्मात्स्तंभाद्विनिर्गतम् ॥
प्रह्लादस्तु भयं त्यक्त्वा चक्रे पद्मासनं भुवि ॥ ११४ ॥

विधाय कंधरां नेतुमुच्चैः श्वासं निरुध्य च ॥
हृदि ध्यात्वा हरिं देवं मरणायोन्मुखः स्थितः ॥ ११५ ॥
प्रभो मया तदा दृष्टमाश्चर्यं गगनाद्भुवि ॥
पुष्पमाला स्थिता कण्ठे प्रह्लादस्य स्वयं गता ॥ ११६ ॥
गगनं व्याप्यमानं च किंकिमेवं कृतं जनैः ॥
झटिति त्रुट्यति स्तम्भाच्छब्देन क्षुभितो जनः ॥ ११७ ॥
धरणी याति पातालं द्यौर्वा भूमिं समेष्यति ॥
पतिष्यति शिरो भूमौ खड्गघाताहतं नु किम् ॥ ११८ ॥
तावत्स्तंभाद्विनिष्क्रान्तः सिंहनादो भयंकरः ॥
भूमौ निपतिताः सर्वे दैत्याः शब्देन मूर्च्छिताः ॥ ११९ ॥
हिरण्यकशिपोर्हस्तात्खड्गचर्म पपात च ॥
न स जानाति किं किमेतदिति पुनःपुनः ॥ 7.2.18.१२० ॥
उत्थितो वीक्षते यावत्तावत्पश्यति तं हरिम् ॥
अधो नरं स्थितं सिंहमुपरिष्टाद्विभी षणम् ॥ १२१ ॥
दंष्ट्रा करालवदनं लेलिहानमिवांबरम् ॥
जाज्वल्यमानवपुषं पुच्छाच्छोटितमस्तकम् ॥ १२२ ॥
महाकण्ठकृतारावं सशब्द मिव तोयदम् ॥
समुच्छ्वसितकेशांतं दुर्निरीक्ष्यं सुरासुरैः ॥ १२३ ॥
नरसिंहमथो दृष्ट्वा निपपात पुनः क्षितौ ॥
विगृह्य केशपाशे तं भ्रामयामास चांबरम् ॥ १२४ ॥
भ्रामयित्वा शतगुणं पृथिव्यां समपोथयत् ॥
न ममार स दैत्येन्द्रो ब्रह्मणो वरकारणात् ॥ १२५ ॥
गगनस्थैस्तदा देवै रुच्चैः संस्मारितो हरिः ॥
दैत्यं जानुनि चानीय वक्षो हृष्टो निरीक्ष्य च ॥ १२६ ॥
जयजयेति यक्षानां सुराणां सोऽवधारयत् ॥
शब्दं कर्णे भुजौ सज्जौ कृत्वा तौ पद्मलांछितौ ॥ १२७ ॥
बिभेद वक्षो दैत्यस्य वज्रघातकिणांकितम्॥
नखैः कुन्दसुमप्रख्यैरस्थिसंघातकर्शितम् ॥ १२८ ॥

भिन्ने वक्षसि दैत्येन्द्रो ममारच पपात च ॥

तदा सहर्षमभवत्त्रैलोक्यं सचराचरम्॥ १२९ ॥

ममापि तृप्तिः सञ्जाता प्रसादात्तव केशव॥

यदा पुरत्रये दग्धे प्रसादाच्छंकरस्य च ॥ 7.2.18.१३० ॥

हिण्याक्षे पुनर्जाता सा काले विनिपातिते ॥

इदानीं नास्ति मे तृप्तिः कुत्र यामि करोमि किम्॥ १३१ ॥

पृथिव्यां क्षत्रियाः सन्ति न युध्यंते परस्परम्॥

देवानां दानवैः सार्द्धं नास्ति युद्धं कथं प्रभो ॥१३२॥

इदानीं बलिना व्याप्तं त्रैलोक्यं सचराचरम्॥

पञ्चमो योऽवतारस्ते न जाने किं करिष्यति ॥

वलिनिग्रहकालोऽयं तद्दर्शय जनार्दन ॥ १३३ ॥

॥ सारस्वत उवाच ॥ ॥

तदेतत्सकलं श्रुत्वा बभाषे वामनो मुनिम् ॥ १३४ ॥

॥ वामन उवाच ॥ ॥

शृणु नारद यद्वृत्तं हिण्यकशिपौ हते ॥

दैत्यराजः कृतो राजा प्रह्लादोऽतीव वैष्णवः ॥ १३५ ॥

तेन राज्यं धरापृष्ठे कृतं संवत्सरान्बहून्॥

तस्यापि कुर्वतो राज्यं विग्रहो हि सुरैः समम् ॥ १३६ ॥

नो पश्याम्यपि दैत्यानां पूर्ववैरमनुस्मरन्॥

उत्पाद्य पुत्रान्सबहून्राज्यं चक्रे स पुष्कलम्॥१३७॥

विरोचनाद्बलिर्जातो बाल एव यदाऽभवत् ॥

एकान्ते स हरिं ज्ञात्वा तदा योगेन केनचित् ॥ १३८ ॥

मुक्त्वा राज्यं प्रियान्पुत्रान्गतोऽसौ गिरिसानुषु ॥

कल्पान्तस्थायिनं देहं तस्य चक्रे जनार्द्दनः ॥ १३९ ॥

दैत्यानां दानवानां च बहूनां राज्यकारणे ॥

विवादोतीव संजातः को नो राजा भवेदिति ॥ 7.2.18.१४० ॥

॥ नारद उवाच ॥ ॥

हिण्याक्षस्य ये पुत्राः पौत्राश्च बलवत्तराः ॥

विरोचनप्रभृतयः सन्ति ये बलवत्तराः ॥ १४१ ॥

वृषपर्वापि बलवान्राज्यार्थे समुपस्थितः ॥

इन्द्रवित्तेशवरुणा वायुः सूर्योनलो यमः ॥ १४२ ॥

दैत्येन सदृशा न स्युर्बलरूपक्षमादिभिः ॥

औदार्यादिगुणैः कृत्वा सन्तत्या चासुराधिकः ॥ १४३ ॥

शुक्रेणा चार्यमाणास्ते युद्ध्यंते च परस्परम्॥

अमृताहरणे दौष्ट्यं यदा दैत्याः स्मरन्ति तत् ॥१४४॥

पीतावशेषममृतं कस्माद्यच्छंति देवताः ॥

नास्माकमिति संनह्य युध्यन्ते च परस्परम् ॥ १४५ ॥

कदाचिदपि नो युद्धं विश्रांतिमुपगच्छति ॥

एककार्योद्यता यस्माद्बहवो दैत्यदानवाः ॥ १४६ ॥

पीत्वाऽमृतं सुरा जाता अमरास्ते जयन्ति च ॥

देवदानवदैत्यानां गन्धर्वोरगरक्षसाम् ॥

विष्णुर्बलाधिको युद्धे तदेतत्कारणं वद ॥ १४७ ॥ ॥

॥ वामन उवाच ॥ ॥

अनादिनिधनः कर्त्ता पाता हर्त्ता जनार्दनः॥

एकोऽयं स शिवो देवः स चायं ब्रह्मसंज्ञितः ॥

एकस्य तु यदा कार्यं जायते भुवने नृप ॥ १४८ ॥

तस्य देहं समाश्रित्य मृत्युकार्यं कुर्वंति ते ॥

ब्रह्मांडं सकलं विष्णोः करदं वरदो यतः ॥

तस्माद्बलाधिको विष्णुर्न तथान्योऽस्ति कश्चन ॥ १४९ ॥

पालनायोद्यतो विष्णुः किमन्यैश्चर्मचक्षुभिः ॥

इन्द्राद्याश्च सुराः सर्वे विष्णोर्व्यापारकारिणः ॥ 7.2.18.१५० ॥

सृष्टिं कृत्वा ततो ब्रह्मा कैलासे संस्थितो हरः ॥

न शक्यते सुरैर्विष्णुर्भ्राम्यन्ते भुवनत्रये ॥ १५१ ॥

जगत्यस्मिन्यदा कश्चिद्वैपरीत्येन वर्तते ॥

तस्योच्छेदं समागत्य करोत्येव जनार्दनः ॥ १५२ ॥

त्वमेजय महाबाहो न मनो नारदाऽदयम् ॥

सर्वपापहरां दिव्यां तां कथां कथयाम्यहम् ॥ १५३ ॥

पुरा विवदतां तेषां दैत्यानां राज्यहेतवे ॥

प्रह्लादेन समागत्य व्यवस्था विहिता स्वयम् ॥ १५४ ॥

सर्वलक्षणसं पन्नो दीर्घायुर्बलवत्तरः ॥

यज्ञशीलः सदानंदो बहुपुत्रोतिदुर्जयः ॥ १५५ ॥

न युध्यते सुरैः साकं विष्णुं यो वेत्ति दुर्जयम् ॥

संग्रामे मरणं नास्ति यस्य यः सर्वदक्षिणः ॥ १५६ ॥

आत्मनो वचनं व्यर्थं न करोति कथंचन ॥

सर्वेषां पुत्रपौत्राणां मध्ये यो राजते श्रिया ॥ १५७ ॥

अभिषिक्तस्तु शुक्रेण स वो राजा भवेदिति ॥

गुरुप्रमाणमित्युक्त्वा ययौ यत्रागतः पुनः ॥ १५८ ॥

तथा च कृतवंतस्ते सहिता दैत्यदानवाः ॥

विरोचनप्रभृतयः पुत्राः पौत्राः स्वयंगताः ॥ १५९ ॥

प्रत्येकं वीक्षिताः सर्वे गुरुणा ज्ञानपूर्वकम् ॥

प्रह्लादेन गुणाः प्रोक्ता न ते संति विरोचने ॥7.2.18.१६०॥

अन्येषामपि दैत्यानां वृषपर्वापि नेदृशः ॥

यथा निरीक्षिताः पुत्रा बलिप्रभृतयो मुने ॥

सर्वान्संवीक्ष्य शुक्रेण बलौ दृष्टा गुणास्तथा ॥ १६१ ॥

बलिदेहेऽधिकान्दृष्ट्वा दैत्येभ्यो विनिवेदिताः ॥

बलिर्गुणाधिको दैत्याः कथं कार्यं भवेन्मया ॥ १६२ ॥

केनापि दैवयोगेन बलिरिंद्रो भविष्यति ॥

यादृशस्तु पिता लोके तादृशस्तु सुतो भवेत् ॥ १६३ ॥

पौत्रश्च निश्चितं तादृग्भवतीति न चेत्सुतः ॥

प्रह्लादस्तु महायोगी वैष्णवो विष्णुवल्लभः ॥ १६४ ॥

तस्माद्विरोचने केचिद्धिरण्यकशिपोर्गुणाः ॥

ज्येष्ठो विरोचनो राज्ये यदि चेत्क्रियतेऽसुराः ॥

नरसिंहः समागत्य निश्चितं मारयिष्यति ॥ १६५ ॥

मुक्तं विरोचनेनापि राज्यं मरणभीरुणा ॥

प्रह्लादस्य गुणाः सर्वे बलिदेहे व्यवस्थिताः ॥ १६६ ॥
एवं ते समयं कृत्वा बलिं राज्येऽभ्यषिंचय न् ॥
यः प्रह्लादः स वै विष्णुर्यो विष्णुः स बलिः स्वयम् ॥ १६७ ॥
अतो मित्रीकृतो देवैर्विग्रहैस्तु विवर्जितः ॥
एकीभावं कृतं सर्वं बलिराज्ये सुरासुरैः ॥ १६८ ॥
तस्यापि भाषितं श्रुत्वा देवेंद्रो मम मंदिरे ॥
समागता वालखिल्याः शप्तोहं वामनः कृतः ॥ १६९ ॥
प्रसाद्य ते मया प्रोक्ताः शापमुक्तिप्रदा मम ॥
भविष्यतीति तैरुक्तं बलिनिग्रहणादनु ॥ 7.2.18.१७० ॥
तवापि कौतुकं युद्धे बलिर्यज्ञं करोति च ॥
देवानां निग्रहो नास्ति सर्वे यज्ञे समागताः ॥ १७१ ॥
स मां यजति यज्ञेन वधं तस्य करोतु कः ॥
अहं च वामनो जातो नारदः कौतुकान्वितः ॥ १७२ ॥
विपरीतमिदं सर्वं वर्त्तते मम चेतसि ॥
तथाऽपि क्रमयोगेन सर्वं भव्यं करोम्यहम् ॥ १७३ ॥
॥ नारद उवाच ॥ ॥
प्रसादं कुरु देवेश युद्धार्थं कौतुकं मम ॥
एकेन ब्राह्मणेनाजौ हन्यंते क्षत्रिया यदा ॥
पित्रा प्रोक्तं च मे पूर्वं तदा युद्धं भविष्यति॥१७४॥
ब्राह्मणोसि भवाञ्जातः कदा युद्धं करिष्यसि ॥
विहस्य वामनो ब्रूते सत्यं तव भविष्यति ॥१७५॥
जमदग्निसुतो भूत्वा गुरुं कृत्वा महेश्वरम्॥
कार्त्तवीर्यं वधिष्यामि बहुभिः क्षत्रियैः सह॥१७६॥
समंतपंचके पंच करिष्ये रुधिरह्रदान् ॥
तत्राहं तर्पयिष्यामि पितॄनथ पितामहान् ॥ १७७ ॥
पुण्यक्षेत्रं करिष्यामि भवांस्तत्रागमिष्य ति ॥
परं च कौतुकं युद्धे भविष्यति तव प्रियम् ॥ १७८ ॥
ब्राह्मणेभ्यो ग्रहीष्यंति यदा कुं क्षत्रियाः पुनः ॥

तदैव तान्हनिष्यामि पुनर्दा स्यामि मेदिनीम् ॥ १७९ ॥

त्रिसप्तवारं दास्यामि जित्वा जित्वा वसुंधराम् ॥

शस्त्रन्यासं करिष्यामि निर्विण्णो युद्धकर्मणि ॥

विहरिष्यामि रम्येषु वनेषु गिरिसानुषु ॥ 7.2.18.१८० ॥

लंकायां रावणो राज्यं करिष्यति महाबलः ॥

त्रैलोक्यकंटकं नाम यदासौ धारयिष्यति ॥ १८१ ॥

तदा दाशरथी रामः कौसल्यानंदवर्द्धनः ॥

भविष्ये भ्रातृभिः सार्द्धं गमिष्ये यज्ञमंडपे ॥ १८२ ॥

ताडकां ताडयित्वाहं सुबाहुं यज्ञमंदिरे ॥

नीत्वा यज्ञाद्गमिष्यामि सीतायास्तु स्वयंवरे ॥ १८३ ॥

परिणेष्याभि तां सीतां भंक्त्वा माहेश्वरं धनुः ॥

त्यक्त्वा राज्यं गमिष्यामि वने वर्षांश्चतुर्दश ॥ १८४ ॥

सीताहरणजं दुःखं प्रथमं मे भविष्यति ॥

नासाकर्णविहीनां तां करिष्ये राक्षसीं वने ॥ १८५ ॥

चतुर्द्दशसहस्राणि त्रिशिरःखरदूषणान् ॥

द्हत्वा हनिष्ये मारीचं राक्षसं मृगरूपिणम् ॥१८६॥

हृतदारो गमिष्यामि दग्ध्वा गृध्रं जटायुषम् ॥

सुग्रीवेण समं मैत्रीं कृत्वा हत्वाऽथ वालिनम् ॥ १८७ ॥

समुद्रं बंधयिष्यामि नलप्रमुखवानरैः ॥

लंकां संवेष्टयिष्यामि मारयिष्यामि राक्षसान् ॥ १८८ ॥

कुम्भकर्णं निहत्याजौ मेघनादं ततो रणे ॥

निहत्य रावणं रक्षः पश्यतां सर्वरक्षसाम् ॥ १८९ ॥

विभीषणाय दास्यामि लंकां देवविनिर्मिताम्॥

अयोध्यां पुनरागत्य कृत्वा राज्यमकंटकम् ॥7.2.18.१९०॥

कालदुर्वाससोश्चित्रचरित्रेणामरावतीम् ॥

यास्येहं भ्रातृभिः सार्द्धं राज्यं पुत्रे निवेद्य च ॥१९१॥

द्वापरे समनुप्राप्ते क्षत्रियैर्बहुभिर्मही॥

भाराक्रांता न शक्नोति पातालं गंतुमुद्यता ॥१९२॥

मथुरायां तदा कर्त्ता कंसो राज्यं महासुरः ॥
शिशुपालजरासंधौ कालनेमिर्महासुरः ॥ १९३ ॥
पौंड्रको वासुदेवश्च बाणो राजा महासुरः ॥
गजवाजितुरंगाढ्या वध्यंते मे तदा मुने ॥ १९४ ॥
कलौ स्वल्पोदका मेघा अल्पदुग्धाश्च धेनवः ॥
दुग्धे घृतं न चैवास्ति नास्ति सत्यं जनेषु च ॥ १९५ ॥
चोरैरुपहता लोका व्याधिभिः परिपीडिताः ॥
त्रातारं नाभि गच्छंति युद्धावस्थां गता अपि ॥ १९६ ॥
क्षुद्राः पश्चिमवाहिन्यो नद्यः शुष्यंति कार्त्तिके ॥
एकादशीव्रतं नास्ति कृष्णा या च चतुर्द्दशी ॥१९७॥
न जानाति जनः कश्चिद्विक्रांतमपि स्वे गृहे ॥
दरिद्रोपहतं सर्वं संध्यास्नानविवर्जितम् ॥
भविष्यति कलौ सर्वं न तत्पूर्वयुगत्रये ॥ १९८ ॥
पितरं मातरं पुत्रस्त्यक्त्वा भार्यां निषेवते ॥
न गुरुः स्वजनः कश्चित्कोऽपि कं नानुसेवते ॥ १९९ ॥
यथायथा कलिर्व्याप्तिं करोति धरणीतले ॥
तथातथा जनः सर्व एकाकारो भविष्यति ॥ 7.2.18.२०० ॥
म्लेच्छैरुपहतं सर्वं संध्यास्नानविवर्जितम्॥
कल्किरित्यभिविख्यातो भविष्ये ब्राह्मणो ह्यहम् ॥२०१॥
म्लेच्छानां छेदनं कृत्वा याज्ञवल्यपुरोहितः ॥
बहुस्वर्णेन यज्ञेन यक्ष्ये निष्कृतिकारणात् ॥ २०२ ॥
भविष्यंत्यवतारा मे युद्धं तेषु भविष्यति ॥
इदानीं बलिना युद्धं करिष्यंति न देवताः ॥ २०३ ॥
स मां यजति दैत्येन्द्रो न मे वध्यो बलिर्भवेत् ॥
सर्वस्वदाननियमं करोति स महाध्वरे ॥ ॥ २०४ ॥
॥ सारस्वत उवाच ॥ ॥
इत्युक्त्वा नारदं देवो विसृज्य तमथाभ्यगात् ॥
द्रष्टुं बलिकृतं यज्ञं देवकार्यप्रसिद्धये ॥ २०५ ॥

वामनो नगरं गत्वा वीक्षमाणो गृहाद्गृहम् ॥
ब्राह्मणानां गृहं गत्वा भोजनं स तु याचते ॥ २०६ ॥
नित्यं स्नानपरो विप्रो वेदाध्ययनतत्परः ॥
वामनो लभते भिक्षां भोजनं द्विजमंदिरे ॥ २०७ ॥
चतुष्पथेषु रम्येषु देवतायतनेषु च ॥
आस्ते परिवृतो लोकैश्चालयन्विपुलां कटिम् ॥ २०८ ॥
शिरो विधूनते स्थूलं स्थूलस्कन्धो महाहनुः ॥
नृत्यते तालमानेन गायत्यतिमनोहरम्॥ २०९ ॥
वेदानधीते चतुरो वामनो द्विजसंसदि ॥
दैत्यानां तनयाः सर्वे ब्राह्मणानां तथैव च ॥ 7.2.18.२१० ॥
वामनं पर्युपासंते दिवारात्रं मनोरमम् ॥
अथ तैः सकलैर्नीतो वामनो यज्ञमंडपे ॥ २११ ॥
निश्चितं मठिकास्थानं याचितव्यो बलिस्त्वया ॥
तदास्माकं महच्छ्रेयो देशस्य नगरस्य च ॥ २१२ ॥
विज्ञप्तो वामनः सर्वैर्दैत्यद्विजकुमारकैः ॥
वामन वस्तव्यं दैत्येंद्रनगरे सदा ॥ २१३ ॥
॥ सारस्वत उवाच ॥ ॥
प्रविवेश तथेत्युक्त्वा वामनो यज्ञमंडपे ॥
ततः कोलाहलो जातो द्वाःस्थैर्द्वारि कृतो महान्॥ २१४ ॥
ब्राह्मणैर्बहुभिः सार्द्धं वेदानुच्चारयन्स्थितः ॥
ततो वेदध्वनिर्जातो महान्वै यज्ञमंडप्रे ॥ २१५ ॥
प्रविष्टौ प्रथमं दैत्यौ दैत्याय विनिवेदितः ॥
द्रष्टुं समागतो देव ब्राह्मणो वामनोऽध्वरे ॥ २१६ ॥
भवंतं कौतुकात्तावदद्वारदेशे समाविशत् ॥
एक एव यथायाति वामनस्तव सन्निधौ ॥ २१७ ॥
निरीहो वामनो देव यावत्तत्रैव किंचन ॥
वेदानां तु ध्वनिं कृत्वा चतुर्णामेकवक्त्रतः ॥ २१८ ॥
बलिर्हृष्टोऽब्रवीद्वाक्यं द्वाःस्थमेनं प्रवेशय ॥

पूजयिष्यामि विप्रेद्रं दास्ये चास्य यदीप्सितम् ॥२१९॥

स्मरामि स्मृतिवाक्यानि यानि प्राह गुरुर्मम ॥

किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम्॥ 7.2.18.२२० ॥

आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥

यज्ञे प्रवर्त्तमाने तु दातव्या दक्षिणा मया ॥२२१॥

वामनो न विचार्यस्तु सत्यमस्तु वचो मम ॥

इति श्रुत्वा गुरुः शुक्रो वारयामास तं बलिम्॥ २२२ ॥

शुक्र उवाच ॥ ॥

द्वारि पूज्या द्विजाः सर्वे दीनांध कृपणादयः ॥

बधिरा वामनाः कुब्जा रोगिणो ये तु निष्ठुराः ॥२२३॥

सुवर्णरजतैर्वस्त्रैर्वामनो द्वारि पूज्यताम् ॥

चतुर्णां तु वृथा जन्म वृथा दानानि षोडश ॥ २२४ ॥

अपुत्राणां वृथा जन्म ये च धर्मबहिष्कृताः ॥

परपाकं च येश्नंति परदाररताश्च ये ॥२२५॥

अन्यायेनार्जितं वित्तं न देयं श्रेय इच्छता ॥

व्यर्थमब्राह्मणे दानमारूढपतिते तथा ॥२२६॥

संध्याहीने द्विजे नष्टे पतिते तस्करे तथा ॥

गुरोश्चाप्रीतिजनके पितृमातृपराङ्मुखे ॥ ॥ २२७ ॥

ब्रह्मबन्धौ च यद्दतं यद्दत्तं वृषलीपतौ ॥

वेदविक्रयके चैव कृतघ्ने ग्रामयाजके ॥ २२८ ॥

स्त्रीनिर्जिते च यद्दत्तं व्यालग्राहे तथैव च ॥

परिवारेषु यद्दत्तं वृथा दानानि षोडश ॥ २२९ ॥

॥ सारस्वत उवाच ॥ ॥

अत्रांतरे बलिर्ब्रूते नैवं वाच्यं त्वया गुरो ॥

वेदानधीते यः कश्चित्स मे विष्णुः समागतः ॥ 7.2.18.२३० ॥

न विलंबस्तु कर्त्तव्यः श्रोत्रिये गृहमागते ॥

अभ्युत्थानेन वचसा पादप्रक्षालनेन च ॥ २३१ ॥

यथा शक्त्या प्रदातव्यं भोजनं गृहमेधिना ॥

अपूजितो यदा याति वामनो मंडपाद्बहिः ॥ २३२ ॥

तदायं व्यर्थतां याति यज्ञः सर्वस्वदक्षिणः ॥

अत्रांतरे समानीतो वामनो बलिसंनिधौ ॥ २३३ ॥

आयांतं ददृशे दैत्यो वामनं विष्णुरूपिणम् ॥

जाज्वल्यमानं वपुषा पिंगलं सूर्यसंनिभम् ॥२३४॥

उत्थायाभिमुखः प्रायान्नमस्कृत्याग्रतः स्थितः ॥

धन्योऽहं यस्य मे यज्ञे प्राप्तो विष्णुसमो द्विजः ॥ २३५ ॥

वेदिमध्ये समानीतो ददौ तस्यासनं बलिः ॥

पाद्यमाचमनीयं च दत्त्वार्घ्यं विष्टरं बलिः ॥

श्रीखंडगंधपुष्पाद्यैः पूजयित्वाग्रतः स्थितः ॥ २३६ ॥

मधुपर्कं च गां तस्मै सत्वरं स निवेद्य च ॥

आघ्राते मधुपर्के च वामनेन ततः परम् ॥ २३७ ॥

स्वागतं बलिना प्रोक्तं स्वस्तीत्युक्तं द्विजन्मना ॥

अहमर्थी समायातो दीयतां वद किं विभो ॥ २३८ ॥

मेदिनीं देहि मे दैत्य कियन्मात्रां द्विजोत्तम ॥

वासार्थं मम दैत्येन्द्र दीयतां मे क्रम त्रयम् ॥ २३९ ॥

विधाय मठिकां दिव्यां शिष्यानध्यापयाम्यहम् ॥

दत्तं क्रमत्रयं तुभ्यं गृहीतं वामनोऽब्रवीत् ॥ 7.2.18.२४० ॥

मा देहीत्यवदच्छुक्रो विष्णुरेव सनातनः ॥

हृष्टो ब्रूते बलिः शुक्रं पात्रं स्यात्किमतः परम् ॥ २४१ ॥

सव्यं कृत्वा बलिर्दर्भान्साक्षतान्दक्षिणे करे ॥

प्रयोगं न गुरुश्चक्रे न मुंचति जलं करे ॥ २४२ ॥

विस्मिता ऋषयः सर्वे होतारो ये सभासदः ॥

ब्राह्मणा बटवो दैत्या भार्यापुत्राश्च बांधवाः ॥ २४३ ॥

दत्तं गृहीतमित्युक्ते कस्मात्तोयं न मुञ्चति ॥

वामनाय करे तोयं विवेकाय प्रदीयते ॥ २४४ ॥

यद्दानं वचसा दत्तं कर्मणा नोपपाद्यते ॥

विधाय नरके पूये यजमानं न निष्कृतिः ॥ २४५ ॥

उशना प्राह दैत्येन्द्र वामनो हरिरित्ययम् ॥
केनापि दैवयोगेन त्वां द्रष्टुं समुपागतः ॥ २४६ ॥
अप्रियं वा प्रियं वापि न जाने किं करिष्यति ॥
बभाषे भार्गवं यष्टा श्रूयतां वचनं गुरो ॥ २४७ ॥
प्रोच्यते दानकालेषु यजमानैर्द्विजैरपि ॥
अहमिन्द्रो द्विजो विष्णुर्द्रव्यमादित्यदेवता ॥
तत्कथं न मया देयं विष्णवे प्रीयतामिति ॥ २४८ ॥
इत्युक्त्वा स ददौ तोयं वामनाय करे बलिः ॥
ततः किमिदमित्युक्त्वा संस्थितो मण्डपाद्बहिः ॥२४९॥
मध्येऽपि वामनो विप्रो बलिमात्रो वभूव सः ॥
दत्तहस्तोऽसुरेन्द्रेण ग्रहीतुं तु पदत्रयम् ॥7.2.18.२५० ॥
यजमानद्विजौ हृष्टौ दृष्टौ यज्ञे सुरादिभिः ॥
ववृधे वामनोतीव कृत्वा रूपं चतुर्भुजम् ॥२५१॥
नारदोऽपि समायातो बभाषे कि कृतं बले ॥
शिष्याभ्यां सहितो हृष्टो नरीनर्ति पुरः स्थितः ॥ २५२ ॥
गृहाण दक्षिणां देव सभार्यो भाषते बलिः ॥
अद्य किं न मया प्राप्तं यद्गृह्णाति जनार्द्दनः ॥ ॥ २५३ ॥
सार्द्धक्रमक्षयं कृत्वा धरणीं याचते त्रयम् ॥
यदस्ति तेन कर्तव्यः सन्तोषो मधुसूदन ॥ २५४ ॥
वर्द्धमानं हरिं दृष्ट्वा ब्राह्मणा ऋषयः सुराः ॥
तुष्टुवुर्गगने यांतं भगवंतं जनार्द्दनम् ॥ २५५ ॥
॥ देवर्षय ऊचुः ॥ ॥
जय देव जयानन्त जय विष्णो जयाऽच्युत ॥
जय मत्स्य नमस्तुभ्यं जय कूर्म धराधर ॥ २५६ ॥
वराहाय नमस्तुभ्यं नरसिंह नमोनमः ॥
जामदग्न्य नमस्तुभ्यं जय राम सलक्ष्मण ॥ २५७ ॥
जय कृष्ण जगन्नाथ जय देवकिनन्दन ॥
नमामि बुद्धं कृष्णं च कल्किनं प्रणमाम्यहम् ॥२५८॥

॥ सारस्वत उवाच ॥ ॥

नरीनर्ति तथा स्तौति नारदो गगनं गतः ॥

योगिनः सनकाद्या ये स्तुवंति च जनार्दनम् ॥ २५९ ॥

अन्तरिक्षे गते कृष्णे वर्द्धमाने बलेः पुरः ॥

ऊर्ध्ववक्त्राः स्थिताः सर्वे निरी क्षन्ते दिवाकरम् ॥ 7.2.18.२६० ॥

दृष्टच्छत्राकृतिस्तावत्पश्चादूर्ध्वं गतो हरिः ॥

चूडामणिरिवाभाति भास्करो हरिमस्तके ॥ २६१ ॥

दैत्यैर्निरीक्षितः सम्यग्ललाटे तिलकायते ॥

हरिः संवर्द्धते यावत्कर्णेऽसौ कुण्डलायते ॥२६२॥

वर्द्धमानस्य च हरेर्हृदये कौस्तुभायते ॥

इंद्राद्या देवता रुद्रा वसवो गगने स्थिताः ॥ २६३ ॥

ऊर्ध्वं पुनर्यत्र हरिर्न तत्र गगनं मतम् ॥

वनमाला तदा कण्ठे वासवेन निवेशिता ॥ २६४ ॥

पृथिवी कम्पते सर्वा दिविस्थं सूर्यमण्डलम् ॥

किं भविष्यति दैत्यास्ते भीताः पश्यंति भास्करम् ॥ २६५ ॥

नाभौ पद्मायते सूर्यः कटौ च रशनायते ॥

एवं संवर्द्धितो विष्णुर्जगृहे च पदद्वयम् ॥ २६६ ॥

स्थानं नास्ति तृतीयस्य ब्रह्मांडं सकलं कृतम् ॥

अहर्दण्डो जगत्स्रष्टा ब्रह्मदंडायते तदा ॥ २६७ ॥

देवदानव गंधर्वमनुष्योरगपन्नगैः ॥

पूज्यते चरणो विष्णोः स्तूयते चानुमीयते ॥ २६८ ॥

धर्मात्मा यतदण्डो हि गंधर्वैर्गीयते मुहुः ॥

ज्योतिश्चक्राक्षदंडः किं हरिणा निर्मितः स्वयम् ॥ २६९ ॥

जित्वेदं भुवनं गंगा ध्वजदंडोऽमरैः कृतः ॥

त्रिविक्रमांघ्रिदण्डोऽयं कीर्तिदंडायते ध्रुवम्॥ 7.2.18.२७० ॥

वेगेनाक्षिप्य हरिणा नीतो ब्रह्मांडमस्तके ॥

पादस्तन्मस्तकं भित्त्वा बहिर्यास्यति वेगतः ॥ २७१ ॥

तावद्ब्रह्मांडवेगोऽयं विराडिति हि संज्ञितः ॥

स सर्व बीजरूपो हि परमात्मेति गद्यते ॥ २७२ ॥

तेनेदं सकलं जातं पादस्याग्रे व्यवस्थितम्॥

ब्रह्मांडभेदनं कृत्वा न गन्तव्यं बहिस्त्वया ॥ २७३ ॥

तेनैव सह ब्रह्मांडे पफाल चरणो हरेः ॥

ब्रह्मांडं जर्जरं जातं पादसंकोचनादपि ॥ २७४ ॥

भिन्ने तस्मिन्समायातं ब्राह्मं तोयं जगत्त्रये ॥

विष्णुपादोद्भवा गंगा मस्तकान्निःसृता तदा ॥ २७५ ॥

त्रैलोक्यप्लाविनी देवी या रुद्रेण स्वयं धृता ॥

स्वर्धुनी पूज्यते स्वर्गे गंगेति गां गता सती ॥ ॥ २७६ ॥

पाताले सा यदा प्राप्ता ख्याता त्रिपथगैव सा ॥

यस्याः स्मरणमात्रेण सर्वपापक्षयो भवेत् ॥ २७७ ॥

दर्शनादश्वमेधस्य संपूर्णस्य फलं लभेत् ॥

स्नानमात्रेण नश्येत सप्तजन्मकृतं त्वघम् ॥२७८॥

स्नात्वा संपूजयेद्यस्तु देवौ हरिहरौ नरः ॥

इन्द्रलोकमतिक्रम्य विष्णुलोके महीयते ॥ ॥ २७९ ॥

विष्णुपादोदकं पीत्वा ज्ञात्वा तत्त्वानि संयमी ॥

उपोष्य दिवसं विष्णोर्मुक्तिं गच्छति देहवान्॥ 7.2.18.२८० ॥

शुद्धस्वभावसत्त्वस्था विरक्ता जन्मभूमिषु ॥

संसारबंधनं छित्त्वा याति ते परमां गतिम् ॥ २८१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये बलिनिग्रहवृत्तांतवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/वस्त्रापथक्षेत्रमाहात्म्यम्/अध्यायः १९



॥ राजोवाच ॥ ॥

गृहीत्वा दक्षिणां दैत्यान्महाविष्णुर्जनार्दनः ॥।

चकार किं ममाचक्ष्व परं कौतूहलं हि मे ॥ १ ॥

॥ सारस्वत उवाच ॥ ॥

एवं स्तुतः सुरैर्देवो गृहीत्वा मेदिनीं हरिः ॥

बलिं निर्वासयामास संपूर्णे यज्ञकर्मणि ॥

यज्ञांते दक्षिणां लब्ध्वा संपूर्णोऽभूदथाध्वरः ॥ २ ॥

भगवानप्यसंपूर्णे तृतीये तु क्रमे विभुः ॥

समभ्येत्य बलिं प्राह ईषत्प्रस्फुरिताधरः ॥ ३ ॥

ऋणे भवति दैत्येन्द्र बंधनं घोरदर्शनम् ॥

त्वं पूरय पदं तन्मे नोचेद्बन्धं प्रतीच्छ भोः ॥ ४ ॥

तन्मुरारिवचः श्रुत्वा पुरो भूत्वा बलेः सुतः ॥

बाणो वामनमाचष्टे तदा तं विश्वरूपिणम् ॥ ५ ॥

कृत्वा महीमल्पतरां वपुः कृत्वा तु वामनम्॥

पदत्रयं याचयित्वा विश्वरूपमगाः कथम् ॥ ६ ॥

यदि तृतीयं क्रमणं याचसे जगदीश्वर ॥

पुनर्वामनतां याहि बलिर्दास्यति तत्पदम्॥ ७ ॥

यादृग्विधाय बलिना वामनायोदकं कृतम्॥

तत्तादृशाय दातव्यमथ किं विश्वरूपिणे ॥ ८ ॥

भवत्कृतमिदं विश्वं विश्वस्मिन्वर्तते बलिः ॥

छद्मना नैव गृह्णन्ति साधवो ये महेश्वर ॥ ९ ॥

जगदेतज्जगन्नाथ तावकं यदि मन्यसे ॥

ज्ञात्वा बलिममर्यादं भवद्भक्तिपराङ्मुखम् ॥ 7.2.19.१० ॥

कंठपाशेन निष्कास्य केन वै वार्यते भवान्॥

गोपालमन्यं कुरुते रक्षणाय च गोपतिः ॥
सुतृणं चारयन्पूर्वो गोपः किं कुरुते तदा ॥ ११ ॥
इत्येवमुक्ते तेनाथ वचने बलिसूनुना ॥
प्रोवाच भगवान्वाक्यमादिकर्ता जनार्दनः ॥१२॥
यान्युक्तानि वचांसीत्थं त्वया बालेन सांप्रतम्॥
तेषां त्वं हेतुसंयुक्तं शृणु प्रत्युत्तरं मम ॥ १३ ॥
पूर्वमुक्तस्तव पिता मया बाण पदत्रयम् ॥
देहि मह्यं प्रमाणेन तदेतत्समनुष्ठितम् ॥ १४ ॥
किं न वेत्ति प्रमाणं मे बलिस्तव पिता सुत ॥
बलेरपि हितार्थाय कृतमेतत्पदत्रयम् ॥ १५ ॥
तस्माद्यन्मम बालेय त्वत्पित्रांऽबु करे महत् ॥
दत्तं तेनास्य सुतले कल्पं यावद्वसिष्यति ॥ १६ ॥
गते मन्वन्तरे बाण श्राद्धदेवस्य साम्प्रतम् ॥
सावर्णिके त्वागते च बलिरिन्द्रो भविष्यति ॥ १७ ॥
इति प्रोक्त्वा बलिसुतं बाणं देवस्त्रिविक्रमः ॥
प्रोवाच बलिमभ्येत्य वचनं मधुराक्षरम् ॥ १८ ॥
॥ श्रीभगवानुवाच ॥ ॥
अपूर्णदक्षिणे यागे गच्छ राजन्महातलम् ॥
सुतलंनाम पातालं वस तत्र निरामयः ॥ १९ ॥
॥ बलिरुवाच ॥ ॥
सुतलस्थस्य मे नाथ कथं चरणयोस्तव ॥
दर्शनं पूजनं भोगो निवसामि यथासुखम् ॥ 7.2.19.२०
॥ श्रीभगवानुवाच ॥ ॥
दैत्येन्द्र हृदये नित्यं तावके निवसाम्यहम् ॥
अतस्ते दर्शनं प्राप्तः पुनः स्थास्ये तवान्तिकम् ॥ २१ ॥
तथान्यमुत्सवं पुण्यं वृत्ते शक्रमहोत्सवे ॥
दीपप्रतिपन्नामाऽसौ तत्र भावी महोत्सवः ॥ २२ ॥
तत्र त्वां नरशार्दूला हृष्टाः पुष्टाः स्वलंकृताः ॥

पुष्पदीपप्रदानेन अर्चयिष्यंति यत्नतः ॥ ॥ २३ ॥

तत्रोत्सवः पुण्यतमो भविष्यति धरातले ॥

तव नामांकितो दैत्य तेन त्वं वत्सरं सुखी ॥ २४ ॥

भविष्यसि नरा ये तु दृढभक्तिसहा न्विताः ॥

त्वामर्चयन्ति विधिवत्तेऽपि स्युः सुखभागिनः ॥ २५ ॥

यथैव राज्यं भवतस्तु सांप्रतं तथैव सा भाव्यथ कौमुदीति ॥

इत्येवमुक्त्वा मधुमदितीश्वरं निवासयित्वा सुतलं सभार्यकम् ॥ २६ ॥

उर्वी समादाय जगाम तूर्णं स शक्रसद्मामरसंघजुष्टम् ॥

दत्त्वा मघोने मधुजित्त्रिविष्टपं कृत्वा तु देवान्मखभागभोगिनः ॥ २७ ॥

अन्तर्दधे विश्वपतिर्महेशः संपश्यतां वै वसुधाधिपानाम् ॥ २८ ॥

गृहीत्वेति बले राज्यं मनुपुत्रे नियोजितम् ॥

द्वीपांतरे च ते दैत्याः प्रेषिताश्चाज्ञया स्वयम् ॥२९॥

पातालनिलया ये तु ते तत्रैव निवेशिताः ॥

देवानां परमो हर्षः संजातो बलिनिग्रहे ॥7.2.19.३०॥

निवासाय पुनश्चक्रे वामनो वामनो मनः ॥

तत्र क्षेत्रे स्वनगरे वामनः स न्युवास ह ॥ ३१ ॥

॥ सारस्वत उवाच ॥ ॥

प्रादुर्भावस्ते कथितो नरेन्द्र पुण्यः शुचिर्वामनस्याघहारी ॥

स्मृते यस्मिन्संश्रुते कीर्तिते च पापं यायात्संक्षयं पुण्यमेति ॥ ३२ ॥

॥ ईश्वर उवाच ॥ ॥

इति सारस्वतवचः श्रुत्वा भोजः स भूपतिः ॥

नमस्कृत्य मुनिश्रेष्ठं पूजयामास भक्तितः ॥ ३३ ॥

ततो यथोक्तविधिना स भोजो नृपसत्तमः ॥

वस्त्रापथक्षेत्र यात्रां परिवारजनैः सह ॥

कृत्वा कृतार्थतां प्राप्तो जगामान्ते परं पदम् ॥ ३४ ॥

एतन्मया पुण्यतमं प्रभासक्षेत्रे च वस्त्रापथमीरितं ते ॥

श्रुत्वा पठित्वा परया समेतो भक्त्या तु विष्णोः पदमभ्युपैति ॥ ३५ ॥

यथा पापानि धूयंते गंगावारिविगाहनात् ॥

तथा पुराणश्रवणाद्दुरितानां विना शनम् ॥ ३६ ॥

इदं रहस्यं परमं तवोक्तं न वाच्यमेतद्धरिभक्तिवर्जिते ॥

द्विजस्य निन्दानिरतेऽतिपापे गुरावभक्ते कृतपापबुद्धौ ॥ ३७ ॥

इदं पठेद्यो नियतं मनुष्यः कृतभावनः ॥

तस्य भक्तिः शिवे कृष्णे निश्चला जायते ध्रुवम् ॥ ३८ ॥

तद्भक्त्या सकलानर्थान्प्राप्नोति पुरुषोत्तमः ॥।

पुराणवाचिने दद्याद्गोभूस्वर्णविभूषणम् ॥३९॥

वित्तशाठ्यं न कर्तव्यं कुर्वन्दारिद्र्यमाप्नुयात् ॥

त्रिःकृत्वा प्रपठञ्छृण्वंन्सर्वान्कामानवाप्नुयात् ॥7.2.19.४०॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे द्वितीये वस्त्रापथक्षेत्रमाहात्म्ये बलये वामनकृतवरप्रदानवृत्तान्तवर्णन पूर्वकं वस्त्रापथक्षेत्रयात्रामाहात्म्य सारस्वतभोजसंवादसमाप्तिपुरःसर वस्त्रापथक्षेत्रमाहात्म्यसमाप्तिवर्णनं नामैकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥

इति श्रीस्कान्दे महापुराणे सप्तमे प्रभासखण्डे द्वितीयं वस्त्रापथक्षेत्रमाहात्म्यं सम्पूर्णम् ॥ ( ७ - २) ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०१



॥ श्रीगणेशाय नमः ॥

अथ तृतीयमर्बुदखण्डं प्रारभ्यते ॥

॥ व्यास उवाच ॥ ॥

ॐनमोनंताय सूक्ष्माय ज्ञानगम्याय वेधसे ॥

शुद्धाय विश्वरूपाय देवदेवाय शंभवे ॥ १ ॥

॥ ऋषय ऊचुः ॥ ॥

कथितो वंशविस्तारो भवता सोमसूर्ययोः ॥

मन्वंतराणि सर्वाणि सृष्टिश्चैव पृथग्विधा ॥ २ ॥

अधुना श्रोतुमिच्छामस्तीर्थमाहात्म्यमुत्तमम् ॥

कानि तीर्थानि पुण्यानि भूतलेऽस्मिन्महामते ॥ ३ ॥

॥ सूत उवाच ॥ ॥

नाना तीर्थानि लोकेऽस्मिन्येषां संख्या न विद्यते ॥

तिस्रः कोट्योऽर्द्धकोटिश्च तेषां संख्या कृता पुरा ॥ ४ ॥

क्षेत्राणि सरितश्चैव पर्वताश्च नदा स्तथा ॥

ऋषीणां तपसो वीर्यान्माहात्म्यं परमं गताः ॥ ५ ॥

तेषां मध्येऽर्बुदोनाम सर्वपापहरोऽनघः ॥

अस्पृष्टः कलिदोषेण वसिष्ठस्य प्रभावतः ॥ ६ ॥

पुनंति सर्वतीर्थानि स्नानदानादिकैर्यथा ॥

अर्बुदो दर्शनादेव सर्वपापहरो नृणाम् ॥ ७ ॥

॥ ऋषय ऊचुः ॥ ॥

किं प्रमाणोऽर्बुदो नाम कस्मिन्देशे व्यवस्थितः ॥

कथं वासिष्ठमाहात्म्यात्प्रथितो धरणीतले ॥ ८ ॥

कानि तीर्थानि मुख्यानि ह्यर्बुदे संति पर्वते ॥

सर्वं विस्तरतो ब्रूहि परं कौतूहलं हि नः ॥ ९ ॥

॥ सूत उवाच ॥ ॥

अहं च संप्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥

अर्बुदस्य द्विजश्रेष्ठा माहात्म्यं च यथा श्रुतम् ॥ 7.3.1.१० ॥

वसिष्ठो नाम देवर्षिः पितामहसमुद्भवः ॥

स पूर्वं भूतलं प्राप्तस्तपस्तेपे सुदारुणम् ॥ ११ ॥

नियतो नियताहारः सर्वभूतहिते रतः ॥

वर्षास्वाकाशवासी च हेमंते सलिलाशयः ॥ १२ ॥

पंचाग्निसाधको ग्रीष्मे जपहोमपरायणः ॥

केनचित्त्वथ कालेन तस्य धेनुः पयस्विनी ॥

नंदिनीति सुविख्याता सा वै कामदुघा शुभा ॥ १३ ॥

सा कदाचिद्धरापृष्ठे भ्रममाणा तृणाशया ॥

पतिता दारुणे श्वभ्रे अगाधे तिमिरावृते ॥ १४ ॥

एतस्मिन्नेव काले तु भगवांस्तीक्ष्णदीधितिः ॥

अस्तं गतो न संप्राप्ता नंदिनी मुनिसत्तमाः ॥ १५ ॥

तस्याः क्षीरेण नित्यं स सायं प्रातर्द्विजो मुनिः ॥

करोति होममग्नौ हि सुसमिद्धे जितव्रतः ॥ १६ ॥

अथ चिंतापरो विप्रः प्रायश्चित्तभयाद्ध्रुवम् ॥

वीक्षांचक्रे वने तस्मिन्समेषु विषमेषु च ॥ १७ ॥

स तच्छ्वभ्रमथासाद्य भूंभारावमथाशृणोत् ॥

तां प्रोवाच मुनिश्रेष्ठः कथं त्वं पतिता शुभे ॥ १८ ॥

अहं होमस्य चोद्वेगान्निःसृतस्त्वामवेक्षितुम्॥

साऽब्रवीद्भक्षमाणाहं विप्रर्षे तृणवांछया ॥ १९ ॥

पतितात्र विभो त्राहि कृच्छ्रादस्मात्सुदुःसहात् ॥

तस्यास्तद्वचनं श्रुत्वा स मुनिर्ध्यान मास्थितः ॥ 7.3.1.२० ॥

सरस्वतीं समादध्यौ नदीं त्रैलोक्यपावनीम् ॥

सा ध्याता मनसा तेन मुनिना तत्र तत्क्षणात् ॥ २१ ॥

श्वभ्रं तत्पूरयामास समंताद्विमलैर्जलैः ॥

परिपूर्णं ततः श्वभ्रे निष्क्रांता नंदिनी तदा ॥ २२ ॥
संहृष्टा मुनिना सार्द्धं ययावाश्रमसम्मुखम् ॥ २३ ॥
स दृष्ट्वा श्वभ्रमध्यं तं गंभीरं च महामुनिः ॥
चिंतयामास मेधावी श्वभ्रस्यैव प्रपूरणे ॥ २४ ॥
तस्य चिंतयतो विप्रा बुद्धिरेषोदपद्यत ॥
आनीय पर्वतं मुक्त्वा श्वभ्रमेतत्प्रपूर्यते ॥
तस्माद्गच्छाम्यहं शीघ्रं हिमवन्तं नगोत्तमम् ॥ २५ ॥
स एव पर्वतं चात्र प्रेषयिष्यति भूधरः ॥
येन स्यात्परिपूर्णं च श्वभ्रमेतन्महात्मना ॥ २६ ॥
ततो जगाम स मुनिर्हिमवन्तं नगोत्तमम् ॥
दृष्ट्वा वसिष्ठमायांतं हिम वान्हृष्टमानसः ॥
अर्घ्यपाद्यादिसंस्कारैः संपूज्य इदमब्रवीत् ॥ २७ ॥
स्वागतं ते मुनिश्रेष्ठ सफलं मेऽद्य जीवितम् ॥
यद्भवान्मे गृहे प्राप्तः पूज्यः सर्वदिवौकसाम् ॥ २८ ॥
ब्रूहि कार्यं मुनिश्रेष्ठ अपि जीवितमात्मनः ॥
नूनं तुभ्यं प्रदास्यामि नियोगो दीयतां मम ॥२९॥
॥वसिष्ठ उवाच॥ ॥
ममाश्रमस्य सांनिध्ये श्वभ्रमस्ति सुदारुणम् ॥
अगाधं नन्दिनी तत्र पतिता धेनुरुत्तमा ॥ 7.3.1.३० ॥
यत्नादाकर्षिता तस्माद्भूयः पतनजाद्भयात् ॥
तवांतिकमनुप्राप्तो नान्यो योग्यो महीपतिः ॥ ३१ ॥
तस्मात्कञ्चिन्नगश्रेष्ठं तत्र प्रेषय भूधरम्॥
येन तत्पूर्यते श्वभ्रं भृशं प्रेषय तादृशम् ॥ ३२ ॥
॥ हिमवानुवाच ॥ ॥
किंप्रमाणं मुने श्वभ्रं विस्तारायामतो वद ॥
तत्प्रमाणं नगं कंचित्प्रेषयामि विचिंत्य च ॥ ३३ ॥
॥ वसिष्ठ उवाच ॥ ॥
द्विसहस्रं तु दैर्घ्येण विस्तरेण त्रिसहस्रकम्॥

न संख्या विद्यतेऽधस्तात्तस्य पर्वतसत्तम ॥ ३४ ॥

॥ हिमवानुवाच ॥ ॥

कथं तेन प्रमाणेन सञ्जातो विवरो महान्॥

अभूत्कौतूहलं तेन सर्वं विस्तरतो वद ॥ ३५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे तृतीयेऽर्बुदखण्डे वसिष्ठाश्रमसमीपवर्ति विवरवृत्तान्तोपक्रमवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०२

https://sa.wikisource.org/s/gkp



॥ वसिष्ठ उवाच ॥ ॥

आसीत्पूर्वं मुनिर्नाम्ना गौतमश्च महातपाः ॥

अहिल्या दयिता तस्य धर्मपत्नी यशस्विनी ॥ १ ॥

शिष्यानध्यापयामास स मुनिः शतशस्तदा ॥

श्रुताध्ययनसंपन्नान्विससर्ज ततो गृहान्॥ २ ॥

तस्यान्योऽपि च यः शिष्यो गुरुभक्तिपरायणः ॥

उत्तंको नाम मेधावी न्यवसत्तस्य मन्दिरे ॥ ३ ॥

न तं विसर्जयामास जरयापि परिप्लुतम्॥

उत्तंकोऽपि सुशिष्यत्वान्नो वेत्ति पलितं शिरः ॥ ४ ॥

जातकार्यसमायुक्तो विद्यापारंगतोऽपि सः ॥

केनचित्त्वथ कालेन काष्ठार्थं स बहिर्ययौ ॥ ५ ॥

प्रभूतानि समादाय आश्रमं परमं गतः ॥

अथासौ न्यक्षिपत्तत्र भूतले काष्ठसंचयम्॥ ६ ॥

काष्ठलग्नां तदा श्वेतां जटामेकां ददर्श सः ॥

स दृष्ट्वा दुःखमापन्नः कृपणं पर्यचिन्तयत् ॥७॥

धिग्धिङ्मे जीवितं नष्टं कुतः कार्यरतस्य च ॥

कलत्र संग्रहं नैव मया कृतमबुद्धिना॥८॥

भविष्यति कुलच्छेदः शैथिल्यान्मम दुर्मतेः॥

गुरुपत्न्या च संदृष्ट उत्तंको दुःखितस्तदा॥९॥

तस्य दुःखं तथा क्षिप्रं गौतमाय निवेदितम्॥

गौतमेन तथेत्युक्त्वा मृदुवाण्या स भाषितः॥7.3.2.१०॥

वत्स गच्छ गृहं त्वं च अग्निहोत्रादिकाः क्रियाः॥

पालयस्व विधानेन पत्न्या सह न संशयः ॥ ११ ॥

इत्युक्तो गुरुणा सोऽपि प्रत्युवाच गुरुं प्रति ॥

दक्षिणां प्रार्थय स्वामिन्नहं दास्याम्यसंशयम् ॥ १२ ॥

॥ गौतम उवाच ॥ ॥

सेवा कृता त्वया वत्स महती मम सर्वदा ॥

तेनैव परिपूर्णत्वं जातं मे नात्र संशयः ॥ १३ ॥ ॥

॥ उत्तंक उवाच ॥ ॥

किंचिद्ग्राह्यं त्वया स्वामिन्सन्तोषो जायते मम ॥

त्वत्प्रसादान्मुनिश्रेष्ठ विद्यापारंगतोऽस्म्यहम् ॥ १४ ॥

॥ गौतम उवाच ॥ ॥

न ग्राह्यं च मया पुत्र सन्तुष्टः सेवयास्म्यहम् ॥

नेच्छाम्यहं धनं त्वत्तः सुखं गच्छ गृहं प्रति ॥ १५ ॥

इत्युक्तो गुरुणा सोऽपि मातरं चाभ्यभाषत ॥

किंचिद्ग्राह्यं मया मातः सन्तोषो दीयतां मम ॥ १६ ॥

॥ गुरुपत्न्युवाच ॥ ॥

सौदासं गच्छ पुत्र त्वं ममाज्ञां कुरु सत्वरम् ॥

मदयन्ती प्रिया तस्य धर्मपत्नी यशस्विनी ॥ १७ ॥

कुण्डलेऽथानय क्षिप्रं मदयंत्याश्च पुत्रक ॥

नो चेच्छापं प्रदास्यामि पञ्चमेऽह्नि न आगतः ॥ १८ ॥

इत्युक्तो गुरुपत्न्या स प्रस्थितः सत्वरं तदा ॥

सौदासस्यगृहं प्राप व्याघ्रास्यं तं च दृष्टवान् ॥ १९ ॥

दृष्ट्वा प्राह तदा विप्रं भक्षणार्थमुपस्थितम् ॥

भक्षयिष्यामि वै विप्र त्वामहं नात्र संशयः ॥ 7.3.2.२० ॥

॥ उत्तंक उवाच ॥ ॥

अवश्यं भक्षय त्वं मामेकं शृणु नराधिप ॥

देहि मे कुण्डले तात दत्त्वाऽहं गुरवे पुनः ॥

आगमिष्यामि भक्षस्व मा त्वं कार्यविवर्जितम् ॥ २१ ॥

॥ सौदास उवाच ॥ ॥

गच्छ त्वं मन्दिरे दुर्गे यत्राऽऽस्ते दयिता मम ॥

तां त्वमासाद्य यत्नेन जीवितव्यभयाद्द्विज ॥ २२ ॥

याच्यतां मम वाक्येन सा ते दास्यति कुण्डले ॥
त्वया च नान्यथा कार्यं यत्सत्यं द्विजसत्तम ॥ २३ ॥
॥ वसिष्ठ उवाच ॥ ॥
मदयन्त्याः समीपं तु गत्वोवाच द्विजोत्तमः ॥
देहि मे कुण्डले देवि सौदासस्त्वां समादिशत् ॥२४॥
॥ मदयंत्युवाच ॥ ॥
सन्देहोऽद्यापि मे विप्र कुण्डले द्विजसत्तम ॥
अभिज्ञानं त्वमानीय नृपस्य द्विज दर्शय ॥ २५ ॥
स गत्वा त्वरितं भूपमभिज्ञानमयाचत ॥ २६ ॥
॥ सौदास उवाच ॥ ॥
यैर्विना सुगतिर्नास्ति दुर्गतिं ये नयंति वै ॥
गत्वैवं ब्रूहि तां साध्वीं मम वाक्यं द्विजोत्तम ॥
प्रदास्यति ततो नूनं कुण्डले रत्नमंडिते ॥ २७ ॥
॥ वसिष्ठ उवाच ॥ ॥
प्रत्यभिज्ञानमादाय गत्वा तस्यै न्यवेदयत् ॥ २८ ॥
ततोऽसौ प्रददौ तस्मै गृह्ण मे कुण्डले द्विज ॥
उवाच यत्नमास्थाय नीयतां द्विजसत्तम ॥ २९ ॥
एते च वांछते नित्यं तक्षको द्विज कुण्डले ॥
स तथेति समादाय विस्मयोत्फुल्ललोचनः ॥
कौतुकात्पुनरागत्य राजानं वाक्यमब्रवीत्॥7.3.2.३०॥
अभिज्ञानान्मया भूप सम्प्राप्ते दीप्तकुण्डले ॥
वाक्यार्थस्तु न विज्ञातस्ततोऽहं पुनरागतः ॥३१॥
कौतुकाद्वद मे राजन्स्वकार्ये च यथास्थितम् ॥
कैर्विना सुगतिर्नास्ति दुर्गतिं के नयंति च ॥ ३२ ॥
॥ सौदास उवाच ॥ ॥
आराधिता द्विजा विप्र भवंति सुगतिप्रदाः ॥
असन्तुष्टा दुर्गतिदाः सद्यो मम यथा पुरा ॥३३ ॥
एतावान्मम शापोऽयं वसिष्ठस्य महात्मनः।।

तेनोक्तं त्वां यदा कश्चित्प्रश्नं विख्यापयिष्यति ॥ ३४ ॥
तदा दोषविनिर्मुक्तो भविष्यसि न संशयः ॥
त्वत्प्रसादाद्विनिर्मुक्तो ह्यहं शापाद्द्विजोत्तम ॥
सात्त्विकं धाम चापन्नो गच्छ विप्र नमोऽस्तु ते ॥ ३५ ॥
॥ वसिष्ठ उवाच॥ ॥
उत्तंकस्तेन निर्मुक्तः सत्वरं पथमाश्रितः ॥
गच्छंश्चातिक्षुधाविष्टो ऽपश्यद्बिल्वफलानि सः ॥ ३६ ॥
ततः कृष्णाजिने बद्ध्वा कुण्डले न्यस्य भूतले ॥
आरुरोह फलाकांक्षी स मुनिः क्षुधयाऽन्वितः ॥ ३७ ॥
एतस्मिन्नेव काले तु तक्षकः पन्नगोत्तमः ॥
गृहीत्वा कुण्डले तूर्णमगमद्दक्षिणामुखः ॥ ३८ ॥
अथोत्तंकः फलाहारी अवतीर्य धरातले ॥
सर्वतोऽन्वेषयामास वेगेन महता वृतः ॥ ३९ ॥
स दृष्ट्वा सम्मुखं प्राप्तं समीपं पन्नगोत्तमः ॥
प्रविवेश बिलं रौद्रमन्धकारेण संवृतम् ॥ 7.3.2.४० ॥
उत्तंकोऽपि बिलं प्राप्तः प्रविश्य तमसावृतम्॥
दण्डकाष्ठं समादाय कुपितोह्यखनत्तदा ॥ ॥ ४१ ॥
तं तथा दुःखितं दृष्ट्वा सक्लेशं गुरुकार्यतः ॥
वज्रमारोपयामास दण्डांते पाकशासनः ॥४२॥
ततो विदारयामास स शीघ्रं धरणीतलम् ॥
प्रविष्टश्चैव पातालं कुण्डलार्थं परिभ्रमन् ॥४३॥
सोऽपश्यद्वाजिनं तत्र सर्वश्वेतं गुणान्वितम्॥
तेनोक्तः स्पृश मे गुह्यं ततः कार्यं भविष्यति ॥४४॥
स चकार तथा शीघ्रं ततो धूमो व्यजायत ॥
पातालं तेन सर्वत्र व्याप्तं भूधर वह्निना ॥ ४५ ॥
ततश्च व्याकुलाः सर्वे पन्नगाः समुपाद्रवन्॥
तक्षकं पुरतः कृत्वा संप्राप्ताः कुण्डलान्विताः ॥
उत्तंकाय ततो दत्त्वा प्रणिपत्य ययुर्गृहम्॥ ४६ ॥

॥ वसिष्ठ उवाच ॥ ॥

अथाश्वस्तमुवाचेदमहमग्निर्द्विजोत्तम ॥

यस्त्वयाऽऽराधितः पूर्वमुपाध्यायनिदेशतः ॥ ४७ ॥

ज्ञात्वा त्वां दुःखितं प्राप्तमिह प्राप्तः कृपापरः ॥

सर्वथा त्वं च मे पृष्ठं भगवञ्छीघ्रमारुह ॥ ४८ ॥

नयामि तत्र यत्रास्ते गुरुः सर्वगुणालयः ॥

आरूढस्तस्य पृष्ठे स प्रतस्थे ह्याश्रमं प्रति ॥ ४९ ॥

तत्क्षणात्समनुप्राप्तो गौतमस्य निवेशनम् ॥

एतस्मिन्नेव काले तु अहिल्या कृतमंडना ॥7.3.2.५०॥

स्नाता चाभ्येत्य भर्तारं साध्वी वाक्यमुवाच ह ॥

उत्तंकोऽद्य न संप्राप्तः शापं दास्याम्यहं ध्रुवम् ॥ ५१ ॥

शिथिलो गुरुकृत्येषु स यदालक्षितो मया ॥

तस्या वाक्यावसाने तु उत्तंकः पर्य्यदृश्यत ॥ ५२ ॥

प्रसन्नवदनो हृष्टः कुण्डलाभ्यां समन्वितः ॥

प्रणिपत्य स तां भक्त्या कुण्डले संन्यवेदयत् ॥ ५३ ॥

सा दृष्ट्वा तत्क्षणात्साध्वी कर्णाभ्यां संन्यवेशयत्॥

स्वगृहाय ततस्तूर्णमुत्तंकं विससर्ज ह ॥ ५४ ॥

॥ वसिष्ठ उवाच ॥ ॥

एवं स विवरो जातस्तक्षकोत्तंककारणात् ॥

यथा मे चिंत्यते नित्यं धेन्वर्थं श्वभ्रपूरणे ॥ ५५ ॥

तस्मात्त्वं पूरय क्षिप्रं नान्यः शक्तोऽत्र कर्मणि ॥

शीघ्रं कुरु नगश्रेष्ठ मम कार्यमसंशयम् ॥ ५६ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे विवरोत्पत्तिवृत्तांते गौतमशिष्योत्तंकचरित्रवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०३

https://sa.wikisource.org/s/gkq
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ सूत उवाच ॥ ॥

श्रुत्वा हिमाचलो वाक्यं वसिष्ठस्य महात्मनः॥

चिन्तयामास तत्कार्यं विवरस्य प्रपूरणे॥१॥

चिरं विचार्य तमृषिमिदमाह नगोत्तमः॥

क उपायो नगानां वै तत्र गंतुं वदस्व मे ॥२॥

पक्षच्छेदस्तु शक्रेण सर्वेषां च पुरा कृतः ॥

तस्मादस्य मुनिश्रेष्ठ कार्यस्य पश्य निश्चयम्॥३॥ ॥

॥ वसिष्ठ उवाच ॥ ॥

अस्त्युपायो नगानां तु तत्र नेतुं महानग ॥

तवायं तनयस्तत्र विख्यातो नंदिवर्द्धनः ॥४॥

तस्यार्बुद इति ख्पातो वयस्यः परमं प्रियः ॥

नागः प्राणभृतां श्रेष्ठः खेचरोऽपि च वीर्यवान् ॥५॥

स वा ऊर्ध्वगतिः क्षिप्रं क्षणान्नेष्यत्यसंशयः ॥

लीलया सर्वकृत्येषु तं विदित्वाऽहमागतः ॥६॥

आदेशो दीयतामस्य दुःखं कर्तुं च नार्हसि ॥

अवश्यं यदि भक्तोऽसि तत्र प्रेषय सत्वरम्॥७॥

॥सूत उवाच॥ ॥

वसिष्ठस्य वचः श्रुत्वा हिमवान्पुत्रवत्सलः ॥

दुःखेन महताऽऽविष्टश्चिंतयामास भूधरः ॥८॥

मैनाकस्तनयोऽस्माकं प्रविष्टः सागरे भयात् ॥

ज्येष्ठं तु सर्वथा चाथ वसिष्ठो नेतुमागतः ॥

किं कृत्यमधुनाऽस्माकं कथं श्रेयो भविष्यति ॥ ९ ॥

इतः शापभयं तीव्रमितो दुःखं च पुत्रजम्॥

वरं पुत्रवियोगोऽस्तु न शापो द्विजसंभवः ॥ 7.3.3.१० ॥

स एवं निश्चयं कृत्वा नंदिवर्धनमुक्तवान् ॥
गच्छ त्वं पुत्र मे वाक्याद्वसिष्ठस्याश्रमं प्रति ॥ ११ ॥
तत्रास्ति विवरो रौद्रस्तं प्रपूरय सत्वरम् ॥
अर्बुदं नागमादाय मित्रं प्राणभृतां वरम् ॥ १२ ॥
॥ नंदिवर्द्धन उवाच ॥ ॥
पापीयान्स विभो देशः फलमूलैर्विवर्जितः ॥
पालाशैः खादिरैराढ्यो धवैः शाल्मलिभिस्तथा ॥ १३ ॥
सुनिष्ठुरैर्नृपशुभिर्भिल्लैश्च विविधैरपि ॥
नद्यो वहंति नो तत्र दुष्टा लोकाश्च वासिनः ॥
नार्होऽहं पर्वतश्रेष्ठ तत्र गंतुं कथंचन ॥ १४ ॥
अथोवाच वसिष्ठस्तं संत्रस्तं नंदिवर्द्धनम् ॥
मा भीः कार्या त्वया तत्र देशे दौष्ट्यात्कथंचन ॥ १५ ॥
तव मूर्ध्नि सदा वासो मम तत्र भविष्यति ॥
तीर्थानि सरितो देवाः पुण्यान्यायतनानि च ॥ १६ ॥
वृक्षाश्च विविधाकाराः पत्रपुष्पफलान्विताः ॥
सदा तत्र भविष्यंति मृगाश्च विहगाः शुभाः ॥ १७ ॥
अहमेवानयिष्यामि तवार्थे च महेश्वरम् ॥
तदा स्थास्यंति वै तत्र सर्वे देवाः सवासवाः ॥ ॥ १८ ॥
॥ सूत उवाच ॥ ॥
वसिष्ठस्य वचः श्रुत्व संहृष्टो नंदिवर्द्धनः ॥
अर्बुदं नागमासाद्य वाक्यमेतदुवाच ह ॥ १९ ॥
तत्र यावोऽद्य भद्रं ते वयस्य विनयान्वित ॥
एतत्कार्यमहं मन्ये सांप्रतं द्विजसंभवम् ॥ 7.3.3.२० ॥
॥ अर्बुद उवाच ॥ ॥
अहं तत्रागमिष्यामि स्नेहात्ते पर्वतात्मज ॥
तत्रैव च वसिष्यामि त्वया सार्द्धमसंशयम्॥ २१ ॥
किं त्वहं प्रणयाद्भ्रातर्वक्ष्यामि यद्वचः शृषु ॥
प्रणयान्नान्यथा कार्यं यद्यहं तव संमतः ॥ २२ ॥

मन्नाम्ना ख्यातिमायातु नान्यत्किंचिद्वृणोम्यहम्॥

ततः सोऽपि प्रतिज्ञाय आरूढस्तस्य चोपरि ॥

प्रणम्य पितरौ चैव प्रतस्थे मुनिना सह ॥ २३ ॥

दिव्यैर्वृक्षैः शुभैः पूर्णैर्नदीनिर्झरसंकुलैः ॥

मधुरैर्विहगैर्युक्तो मृगैः सौम्यैः समन्वितः ॥ २४ ॥

मुक्तोऽर्बुदेन तत्रैव विवरे मुनिवाक्यतः ॥

समस्तस्तत्रानासाग्रं गतः पर्वतसत्तमः ॥ २५ ॥

विमुक्तो विवरे तस्मिन्नर्बुदेन महात्मना ॥

परिपूर्णे महारौद्रे संतुष्टो मुनिपुंगवः ॥ २६ ॥

ब्रवीच्चार्बुदं नागं वरं वरय सुव्रत ॥

परितुष्टोऽस्मि ते भद्र कर्मणानेन पन्नग ॥ २७ ॥

॥ अर्बुद उवाच ॥ ॥

एष एव वरोऽस्माकं यत्त्वं तुष्टो महामुने ॥

अवश्यं यदि दातव्यं तच्छृणुष्व द्विजोत्तम ॥ २८ ॥

यच्चैतच्छिखरे ह्यस्मिन्निर्झरं निर्मलोदकम् ॥

नागतीर्थमिति ख्यातिं भूतले यातु सर्वतः ॥ २९ ॥

अत्रैवाहं वसिष्यामि मित्रस्नेहात्सदा मुने ॥

तत्र स्नात्वा दिवं यातु मानवस्त्वत्प्रसादतः ॥ 7.3.3.३० ॥

अपि वंध्या च या नारी स्नानमात्रं समाचरेत्॥

सा स्यात्पुत्रवती विप्र सुखसौभाग्यसंयुता ॥ ३१ ॥

॥ वसिष्ठ उवाच ॥ ॥

या वंध्यास्मिञ्जले पूर्णे स्नानमात्रं करिष्यति ॥

सापि पुत्रमवाप्नोति सर्वलक्षणलक्षितम् ॥ ३२ ॥

नभसः शुक्लपंचम्यां फलैः पूजां करोति च ॥

अपि वर्षशता नारी सा भविष्यति पुत्रिणी ॥ ३३ ॥

येऽत्र स्नानं करिष्यंति ह्यस्मिंस्तीर्थे च भक्तितः ॥

यास्यंति ते परं स्थानं जरामरणवर्जितम् ॥ ३४ ॥

श्राद्धं चात्र करिष्यंति पंचम्यां ये समाहिताः ॥

मासे नभसि तीर्थस्य फलं तेषां भविष्यति ॥ ३५ ॥

॥ सूत उवाच ॥ ॥

एवं दत्त्वा वरं तस्य वसिष्ठो भगवान्मुनिः ॥

नंदिवर्द्धनमभ्येत्य वाक्यमेतदुवाच ह ॥ ३६ ॥

वरं च व्रियतां वत्स परितुष्टोऽस्मि तेऽनघ ॥

विनयात्सौहृदात्सर्वं दास्यामि यत्सुदुर्ल्लभम्॥ ३७ ॥

॥ नंदिवर्द्धन उवाच ॥ ॥

तवास्तु वचनं सत्यं पूर्वोक्तं मुनिसत्तम ॥

सांनिध्यं जायतामत्र अवश्यं तव सर्वदा ॥ ३८ ॥

यथाहमर्बुदेत्येवं ख्यातिं गच्छामि भूतले ॥

प्रसादाच्चैव ते भूयादेतन्मे मनसि स्थितम् ॥ ३९ ॥

॥ सूत उवाच ॥ ॥

एवमस्त्विवति तं प्रोच्य वसिष्ठो भगवान्मुनिः ॥

चक्रे स्वमाश्रमं तत्र तस्य वाक्येन नोदितः ॥ 7.3.3.४० ॥

पनसैश्चंपकैराम्रैः प्रियंगुबिल्वदाडिमैः ॥

नानापक्षिसमायुक्तो देवगन्धर्वसेवितः ॥ ४१ ॥

तस्थौ तत्र मुनिश्रेष्ठो ह्यरुंधत्या समन्वितः ॥

गोमतीमानयामास तपसा मुनिसत्तमः ॥ ४२ ॥

यस्यां स्नात्वा दिवं यांति अतिपापकृतो नराः ॥

माघमासे विशेषेण मकरस्थे दिवाकरे ॥ ४३ ॥

येत्र स्नानं करिष्यंति ते यास्यंति परां गतिम् ॥४४॥

माघमासे विशेषेण तिलदानं करोति यः ॥

तिलसंख्यानि वर्षाणि स्वर्गे तिष्ठति मानवः ॥ ४५ ॥

बहुना किमिहोक्तेन स्तानमात्रं समाचरेत् ॥ ४६ ॥

वसिष्ठस्य मुखं दृष्ट्वा पुनर्जन्म न विद्यते ॥

अरुंधती पूजनीया पूजनीया विशेषतः ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे वसिष्ठाज्ञया नन्दिवर्धनपर्वतेन विवरपूरणवर्णनंनाम तृतीयोऽध्यायः ॥३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०४

https://sa.wikisource.org/s/gkr
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

सूत उवाच ॥ ॥

स कृत्वा स्वाश्रमं तत्र वसिष्ठो भगवान्मुनिः ॥

तत्र शंभोर्निवासाय तपस्तेपे सुदारुणम्॥ १ ॥

स बभूव मुनिः सम्यक्फलाहारसमन्वितः ॥

शीर्ण पर्णाशनः पश्चाद्द्वे शते समपद्यत ॥ २ ॥

जलाहारः पञ्चशतवर्षाणि संबभूव ह ॥

वर्षाणां वायुभक्षोऽभूत्ततो दशशतानि च ॥ ३ ॥

पञ्चाग्निसाधको ग्रीष्मे हेमन्ते सलिलाशयः ॥

वर्षास्वाकाशवासी च सहस्रं च ततोऽभवत् ॥ ४ ॥

ततस्तुष्टो महादेवस्तस्यर्षेः सुमहात्मनः ॥

भित्त्वा तं पर्वतं सद्यस्तत्पुरो लिंगमुत्थितम् ॥

तं दृष्ट्वा विस्मयाविष्टो मुनिः स्तोत्रमुदैरयत्॥ ५ ॥

नमः शिवाय शुद्धाय सर्वगायाऽमृताय च ॥

कपर्द्दिने नमस्तुभ्यं नमस्तस्मै त्रिमूर्त्तये ॥ ६ ॥

नमः स्थूलाय सूक्ष्माय व्यापकाय महात्मने ॥

निषंगिणे नमस्तुभ्यं त्रिनेत्राय नमोनमः ॥ ७ ॥

नमश्चन्द्रकलाधार नमो दिग्वसनाय च ॥

पिनाकपाणये तुभ्यमष्टमूर्ते नमोनमः ॥ ८॥

नमस्ते ज्ञानरूपाय ज्ञानगम्याय ते नमः ॥

नमस्ते ज्ञानदेहाय सर्वज्ञानमयाय च ॥ ९ ॥

काशीपते नमस्तुभ्यं गिरिशाय नमोनमः ॥

जगत्कारणरूपाय महादेवाय ते नमः ॥ 7.3.4.१० ॥

गौरीकान्त नम स्तुभ्यं नमस्तुभ्यं शिवात्मने ॥

ब्रह्मविष्णुस्वरूपाय त्रिनेत्राय नमोनमः ॥ ११ ॥

विश्वरूपाय शुद्धाय नमस्तुभ्यं महात्मने ॥

नमो विश्वस्वरूपाय सर्वदेवमयाय च ॥ १२ ॥

॥ सूत उवाच ॥ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

परितुष्टोऽस्मि ते भद्रं वरं वरय सुव्रत ॥ १३ ॥

इत्युक्त्वा पर्वतं भित्त्वा तत्पुरो लिंगमुत्थितम् ॥ १४ ॥

॥ वसिष्ठ उवाच ॥ ॥

लिंगेऽस्मिंस्तव सांनिध्यं सदा भवतु शंकर ॥

मया पूर्वं प्रतिज्ञातं नगस्येह महात्मने ॥

सत्यं कुरु वचो मे त्वं यदि तुष्टोऽसि शंकर ॥ १५ ॥

॥ श्रीभगवानुवाच ॥ ॥

अद्यप्रभृति लिंगेऽस्मिन्सांनिध्यं मे भविष्यति ॥

त्वद्वाक्याद्ब्राह्मणश्रेष्ठ सर्वं सत्यं भविष्यति ॥ १६ ॥

स्तोत्रेणानेन यो मर्त्यो मां स्तविष्यति भक्तितः ॥

कृष्णपक्षे चतुर्दश्यामाश्विने मुनिसत्तम ॥ १७ ॥

मत्प्रियार्थं तु शक्रेण प्रेषिता मुनिसत्तम ॥

मन्दाकिनीति विख्याता नदी त्रैलोक्यपाविनी ॥ १८ ॥

देवस्योत्तरदिग्भागे कुंडं तिष्ठति नित्यशः ॥

तस्यां स्नात्वा मुनिश्रेष्ठ लिंगं मे पश्यते तु यः ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ १९ ॥

अचलं भेदयित्वा तु यस्मान्मे लिंगमुद्गतम्॥

अचलेश्वरनाम्नैव लोके ख्यातिं गमिष्यति ॥ 7.3.4.२० ॥

अस्य लिंगस्य माहात्म्यान्न कदाचिच्चलिष्यति ॥

सर्वथा म इदं लिंगं प्रलयान्ते न चाल्यते ॥ २१ ॥

॥ सूत उवाच ॥

एतावदुक्त्वा वचनं विरराम महेश्वरः ॥

वसिष्ठोऽपि सुहृष्टात्मा गौतमाद्या मुनीश्वराः ॥ २२ ॥

शक्रादयस्ततो देवास्तीर्थान्यायतनानि च ॥

आनयामास ब्रह्मर्षिस्तपसा पर्वतोत्तमे ॥ २३ ॥

ततस्तुष्टः सुरश्रेष्ठस्तत्र वासमथाकरोत्॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडेऽचलेश्वरोत्पत्ति वर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०५

https://sa.wikisource.org/s/gks
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ ऋषय ऊचुः ॥ ॥

अर्बुदस्य च माहात्म्यं विस्तरेण वदस्व नः ॥

कौतुकं सूत नो जातं कथयस्व यथा शुभम् ॥ १ ॥

॥ सूत उवाच ॥ ॥

पुरासीच्च ऋषिश्रेष्ठः पुलस्त्यो भगवान्मुनिः ॥

ययातेश्च गृहे यातस्तं नत्वा चाब्रवीन्नृपः॥ २ ॥ ।

। ययातिरुवाच ॥ ॥

स्वागतं ते मुनिश्रेष्ठ सफलं मेऽद्यजीवितम् ॥

कथयस्व प्रसादेन कथामर्बुदसंभवाम् ॥ ३ ॥

अर्बुदाख्यो नगो नाम विख्यातो यो धरातले ॥

तस्य यात्राक्रमं ब्रूहि तत्फलं द्विजसत्तम ॥ ४ ॥

सर्वं विस्तरतो ब्रूहि तीर्थयात्रापरायण ॥

तस्माद्वद मुनिश्रेष्ठ येन यात्रां करोम्यहम् ॥५ ॥

॥ पुलस्त्य उवाच ॥ ॥

बहुधर्ममयो राजन्नर्बुदः पर्वतोत्तमः ॥

अशक्तो विस्तराद्वक्तुमपि वर्षशतैरपि ॥ ६ ॥

संक्षेपादेव वक्ष्यामि तीर्थमुख्यानि ते तथा ॥

नागतीर्थं तु तत्राद्यं सर्वकामप्रदं नृणाम् ॥ ७ ॥

नारीणां च विशेषेण पुत्रसौभाग्यदायकम् ॥

शृणु राजन्पुरावृत्तं यतोऽत्याश्चर्यमुत्तमम्॥ ८ ॥

गौतमी ब्राह्मणी नाम्ना सती साध्वी पतिव्रता ॥

बालवैधव्यसंप्राप्ता तीर्थयात्रापरायणा ॥ ९ ॥

अर्बुदं सा च संप्राप्ता नागतीर्थं विवेश ह ॥

तस्मिञ्जले निमग्ना सा स्नातुमभ्याययौ पुरा ॥ 7.3.5.१० ॥

नायका पुत्रसंयुक्ता तत्तीर्थं समुपागता ॥

शुश्रूषां सा तस्तस्याश्चक्रे नानाविधां नृप ॥ ११ ॥

सर्वोपकरणैर्दर्भैः सुमनोभिः पृथग्विधैः ॥

अथ सा चिंतयामास गौतमी पुत्रदुःखिता ॥ १२ ॥

धन्योऽयं तनयो ह्यस्याः शुश्रूषां कुरुते सदा ॥

पुत्रयुक्ता त्वियं धन्या धिगहं पुत्रवर्जिता ॥ १३ ॥

अहं भर्त्रा वियुक्ता च पुत्रहीना सुदुःखिता ॥

अथ सा निर्गता तस्मात्सलिलान्नृपसत्तम ॥१४॥

विनाऽपि भर्तृसंयोगात्सद्यो गर्भवती ह्यभूत् ॥

सा गर्भलक्षणैर्युक्ता सुजनव्रीडयाऽन्विता ॥ १५ ॥

चकार मरणे बुद्धिं ज्वालयामास पावकम् ॥ एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥ १६ ॥

॥ वागुवाच ॥ ॥

नो त्वं गौतमि चित्याग्नौ प्रवेशं कर्तुमर्हसि ॥

दोषो नास्ति तवात्रार्थे तीर्थस्यास्य प्रभावतः ॥ १७ ॥

यो यद्वांछति चित्ते च जलमध्ये स्थितो नरः ॥

चिन्तितं च तदाप्नोति नारी वा नात्र संशयः ॥ १८ ॥

त्वया तस्याः सुतं दृष्ट्वा पुत्रवांछा कृता हृदि ॥

तव गर्भगतो नूनं पुत्रः पुत्रि भविष्यति ॥ १९ ॥

तस्माद्विरम भद्रं ते निर्दोषासि पतिव्रते ॥

विरराम ततः साध्वी गौतमी मरणान्नृप ॥ 7.3.5.२० ॥

श्रुत्वाऽऽकाशगतां वाणीं देवदूतेन भाषिताम् ॥

दृष्ट्वा पतिं विना गर्भं वाक्यमेत दुवाच ह ॥ २१ ॥

अहो तीर्थप्रभावोऽयमपूर्वः प्रतिभाति मे ॥

यत्र संजायते गर्भः स्त्रीणां शुक्ररजोविना ॥ २२ ॥

नाहं कुत्रापि यास्यामि मुक्त्वेदं तीर्थमुत्तमम् ॥

एवमुक्त्वा ततः साध्वी तत्रैव न्यवसत्सदा ॥२३॥

पुत्रं वै जनयामास सर्वलक्षणलक्षितम् ॥

तत्र पार्थिवशार्दूल कृष्णपक्षे ऽश्विनस्य च ॥२४॥

यः पुनः कुरुते श्राद्धं तस्य वंशो न नश्यति ॥
न प्रेतो जायते राजन्वंशे तस्य कदाचन ॥२५॥
यः पुमान्कामरहितः स्नानं तत्र समाचरेत्॥
श्राद्धं च पार्थिवश्रेष्ठ तस्य लोकाः सनातनाः ॥२६॥
या स्त्री पुष्पफलान्येव तीर्थे चास्मिन्विसर्जयेत् ॥
सा स्यात्पुत्रवती धन्या सौभाग्यं च प्रपद्यते ॥ २७ ॥
निष्कामा स्वर्गमाप्नोति दुष्प्राप्यं त्रिदशैरपि ॥
तस्मात्सर्वप्रयत्नेन यात्रां तस्य समाचरेत् ॥ २८ ॥
इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे नागतीर्थमाहात्म्यवर्णनंनाम पंचमोऽध्यायः ॥ ५ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०६

https://sa.wikisource.org/s/gkt
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ वसिष्ठं तपसां निधिम् ॥

यं दृष्ट्वा मानवः सम्यक्कृतार्थत्वमवाप्नुयात् ॥ १ ॥

तत्रास्ति जलसम्पूर्णं कुण्डं पापहरं नृणाम्॥

तस्मिन्कुण्डे नृपश्रेष्ठ वसिष्ठेन महात्मना ॥ २ ॥

गोमती च समानीता तपसा नृपसत्तम ॥

तत्र स्नातो नरः सम्यक्पातकै र्विप्रमुच्यते ॥३॥

ऋषिधान्येन यस्तत्र श्राद्धं नृप समाचरेत् ॥

स पितॄंस्तारयेत्सर्वान्पक्षयोरुभयोरपि ॥४॥

अत्र गाथा पुरा गीता नारदेन महात्म ना ॥

स्नात्वा पुण्योदके तत्र दृष्ट्वा तं मुनिसत्तमम् ॥ ५ ॥

किं गयाश्राद्धदानेन किमन्यैर्मखविस्तरैः ॥

वसिष्ठस्याश्रमं प्राप्य यः श्राद्धं कुरुते नरः ॥

स पितॄंस्तारयेत्सर्वानात्मना नृपसत्तम ॥ ६ ॥

तत्रैवारुंधती साध्वी वसिष्ठस्य समीपतः ॥

पूजनीया विशेषेण सर्वकामप्रदा नृणाम् ॥ ७ ॥

बाल्ये वयसि यत्पापं वार्द्धके यौवनेऽपि वा ॥

वसिष्ठदर्शनात्सद्यो नराणां याति संक्षयम् ॥८॥

दीपं प्रयच्छते यस्तु वसिष्ठाग्रे समाहितः ॥

सुखसौभाग्यसंयुक्तस्तेजस्वी जायते नरः ॥ ९ ॥

उपवासपरो यस्तु तत्रैका रजनीं नयेत् ॥

स याति परमं स्थानं यत्र सप्तर्षयोऽमलाः ॥ 7.3.6.१० ॥

त्रिरात्रिं कुरुते यस्तु वसिष्ठाग्रे समाहितः ॥

स याति च महर्लोकं जरामरणवर्जितः ॥ ११ ॥

यस्तु मासोपवासं च वसिष्ठाग्रे करोति च ॥

सोऽपि मुक्तिमवाप्नोति न याति स भवार्णवम्॥ १२॥

श्रावणस्य सिते पक्षे पौर्णमास्यां समाहितः॥

ऋषिं तर्पयते यस्तु ब्रह्मलोकं स गच्छति॥१३॥

वसिष्ठस्याग्रतो यस्तु गायत्र्यष्टशतं जपेत्॥

आजन्ममरणात्पापात्सद्यो मुच्येत मानवः॥ १४॥

वामदेवं यजेत्तत्र यदि श्रद्धासमन्वितः॥

अग्निष्टोमफलं राजन्सद्यः प्राप्नोति मानवः ॥ १५ ॥

तस्मात्सर्वप्रयत्नेन द्रष्टव्योऽसौ महामुनिः ॥

शुचिभिः श्रद्धया युक्तास्ते यास्यंति परं पदम् ॥ १६ ॥

तस्मात्सर्वात्मना राजन्वामदेवं च पूजयेत्॥ १७ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे वसिष्ठाश्रममाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०७

https://sa.wikisource.org/s/gku



पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ सुपुण्यमचलेश्वरम् ॥

यं दृष्ट्वा सिद्धिमाप्नोति नरः श्रद्धासमन्वितः ॥ १ ॥

तत्र कृष्णचतुर्दश्यां यः श्राद्धं कुरुते नरः ॥

आश्विने फाल्गुने वापि स याति परमां गतिम् ॥ २ ॥

यस्तु पूजयते भक्त्या दक्षिणां दिशमास्थितः ॥

पुष्पैः पत्रैः फलैश्चैव सोऽश्वमेधफलं लभेत् ॥ ३ ॥

पंचामृतेन यस्तत्र तर्पणं कुरु ते नरः ॥

सोऽपि देवस्य सांनिध्यं शिवलोकमवाप्नुयात् ॥ ४ ॥

प्रदक्षिणांते यस्तस्य प्रणामं कुरुते नरः ॥

नश्यंति सर्वपापानि प्रदक्षिणपदेपदे ॥ ५ ॥

तत्राश्चर्यमभूत्पूर्वं तत्त्वं शृणु महामते ॥

मया पूर्वं श्रुतं स्वर्गे नारदाच्छक्रसन्निधौ ॥ ६ ॥

तत्र पूर्वं शुको नीडं वृक्षे चैवाकरोद्द्विजः ॥

गतागतेन नीडस्य कुरुते तं प्रदक्षिणाम्॥ ७ ॥

न च भक्त्या महाराज पक्षियोनिसमुद्भवः ॥

अथासौ मृत्युमापन्नः कालेन महता शुकः ॥ ८ ॥

संजातः पार्थिवे वंशे राजा वेणुरिति स्मृतः ॥

जातिस्मरो महाराज सर्वशत्रुनिकृन्तनः ॥ ९ ॥

स तं स्मृत्वा प्रभावं हि प्रदक्षिणासमुद्भवम् ॥

अचलेश्वरमासाद्य प्रदक्षिणामथाकरोत् ॥ 7.3.7.१० ॥

नक्तं दिनं महाराज नान्यत्किंचित्करोति सः ॥

न तथा तपसे यत्नो न नैवेद्ये कथंचन ॥ ११ ॥

न पुष्पे धूपदाने च प्रदक्षिणापरः सदा ॥

केनचित्त्वथ कालेन मुनयोऽत्र समागताः ॥ १२ ॥

नारदः शौनकश्चैव हारीतो देवलस्तथा ॥

गालवः कपिलो नंदः सुहोत्रः कश्यपो नृपः ॥ १३ ॥

एते चान्ये च बहवो देवव्रतपरायणाः ॥

केचित्स्नानं कारयंति तस्य लिंगस्य भक्तितः ॥ १४ ॥

अन्ये च विविधां पूजां जपमन्ये समाहिताः ॥

एके नृत्यंति राजेंद्र गायंति च तथा परे ॥ १५ ॥

बलिमन्ये प्रयच्छंति स्तुतिं कुर्वंति चापरे ॥

अथाश्चर्यं परं दृष्ट्वा प्रदक्षिणापरं नृपम् ॥ १६ ॥

परं कौतुकमापन्ना वाक्यमेतदथाब्रुवन् ॥

प्रदक्षिणासमुद्भूतं कारणं ज्ञातुमिच्छवः ॥ १७ ॥ ॥

॥ ऋषय ऊचुः ॥ ॥

कस्मात्त्वं पार्थिवश्रेष्ठ प्रदक्षिणापरः सदा ॥

देवस्यास्य विशेषेण सत्यं नो वक्तुमर्हसि ॥ १८ ॥

न ददासि जलं लिंगे प्रभूतं सुमनोहरम् ॥

पुष्पधूपादिकं वाथ स्तोत्राणि विविधानि च ॥ १९ ॥

समर्थोऽसि तथान्येषां दानानां त्वं महीपते ॥

एतन्नः कौतुकं सर्वं यथावद्वक्तुमर्हसि ॥ 7.3.7.२० ॥

॥ वेणुरुवाच ॥ ॥

यदहं संप्रवक्ष्यामि श्रूयतां द्विजसत्तमाः ॥

पूर्वदेहांतरे वृत्तं सर्वं सत्यं विशेषतः ॥ २१ ॥

प्रासादेऽस्मिन्पुरा पक्षी शुकोऽहं स्थितवांस्तदा ॥

कृतवांश्च तदा देवं प्रदक्षिणामहर्निशम् ॥२२॥

कृपयाऽस्य प्रभावाच्च जातो जातिस्मरस्त्वहम् ॥

अधुना परया भक्त्या यत्करोमि प्रदक्षिणाम् ॥ २३ ॥

न जाने किं फलं मेऽद्य देवस्यास्य प्रसादतः ॥

एतस्मात्कारणाच्चाहं नान्यत्किंचित्करोमि भोः ॥ २४ ॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

वेणुवाक्यं ततः श्रुत्वा मुनयः शंसितव्रताः ॥

विस्मयोत्फुल्लनयनाः साधुसाध्विति चाब्रुवन् ॥ २५ ॥

ततः प्रदक्षिण पराः सर्वे तत्र महर्षयः ॥

बभूवुर्मुनयः सर्वे श्रद्धया परया युताः ॥ २६ ॥

सोऽपि राजा महाभागो वेणुः शंभोः प्रसादतः ॥

शाश्वतं स्थानमापन्नो दुर्ल्लभं त्रिदशैरपि ॥ २७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडेऽचलेश्वरप्रभाववर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०८

https://sa.wikisource.org/s/gkv



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ भद्रकर्णं महाह्रदम् ॥

त्रिनेत्राभाः शिला यत्र दृश्यंतेऽद्यापि भूरिशः ॥१॥

तस्यैव पश्चिमे भागे लिंगमस्ति पिनाकिनः ॥

यं दृष्ट्वा मानवस्तत्र त्रिनेत्रसदृशो भवेत् ॥ २ ॥

भद्रकर्णगणोनाम पुरासीच्छिववल्लभः ॥

तेनात्र स्थापितं लिंगं ह्रदश्चैव विनिर्मितः ॥ ३ ॥

केनचित्त्वथ कालेन संग्रामे दानवैः सह ॥

युयुधे पुरतः शंभोर्नानागणसमन्वितः ॥ ४ ॥

नष्टे स्कंदे हते सैन्ये वीरभद्रे पराजिते ॥

गतास्ते भयसंत्रस्ता महाकाले विनिर्जिते ॥ ५ ॥

बलवान्नमुचिर्नाम दानवो बलवत्तरः ॥

खड्गचर्मधरः शीघ्रं महेश्वरमुपाद्रवत् ॥ ६ ॥

भद्रकर्णस्तु तं दृष्ट्वा दानवं तदनंतरम् ॥

पतंतं संमुखस्तस्य तिष्ठतिष्ठेति चाब्रवीत् ॥ ७ ॥

छित्त्वाऽसिमसिना तस्य चर्म चापि महाबलः ॥

स्तनयोरंतरे दैत्यं कोपाविष्टोऽहनन्नृप ॥ ८ ॥

अथासौ निहतस्तेन प्रविश्य विपुलं तमः ॥

निपपात महीपृष्ठे वायुभग्न इव द्रुमः ॥

वधं प्राप्तस्तु दैत्योऽसौ नत्वा हरमसौ स्थितः ॥

सत्ये स्थितं च तं दृष्ट्वा ततस्तुष्टो महेश्वरः ॥ 7.3.8.१० ॥

॥ श्रीभगवानुवाच ॥ ॥

तव वीर्येण संतुष्टो धर्मेण च विशेषतः ॥

वरं वरय भद्रं ते नित्यं यो हृदये स्थितः ॥ ११ ॥

॥ भद्रकर्ण उवाच ॥ ॥

यन्मया स्थापितं लिंगमर्बुदे सुरसत्तम ॥

अत्रास्तु तव सांनिध्यं ह्रदेऽस्मिंश्च स्थिरो भव ॥ १२ ॥

॥ श्रीभगवानुवाच ॥ ॥

माघमासे चतुर्द्दश्यां कृष्णपक्षे सदा मम ॥

सांनिध्यं च विशेषेण ह्रदे लिंगे भविष्यति ॥ १३ ॥

भद्रकर्णह्रदे स्नात्वा त्रिनेत्रं यः समाहितः ॥

द्रक्ष्यते स तु मे स्थानं शाश्वतं यास्यति ध्रुवम् ॥ १४ ॥

तस्मात्सर्वत्र यत्नेन स्नानं तत्र समाचरेत् ॥

पूजयित्वा च तल्लिंगं शिवलोकं स गच्छति ॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे भद्रकर्णह्रदत्रिनेत्रमाहात्म्यवर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ०९

https://sa.wikisource.org/s/gkw
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं त्रैलोक्यविश्रुतम् ॥

केदारमिति विख्यातं सर्वपापहरं नृणाम् ॥ १ ॥

यत्र मन्दाकिनी पुण्या सरस्वत्या समागता ॥

तत्र स्नातो नरो राजन्मुच्यते सर्वकिल्बिषैः ॥ २ ॥

शृणु राजन्यथावृत्तमितिहास पुरातनम् ॥

ऋषिभिर्बहुधा गीतमर्बुदे पर्वतोत्तमे ॥ ३ ॥

अजपालो नृपश्रेष्ठः सूर्यवंशसमुद्भवः ॥

सप्तद्वीपवतीं पृथ्वीं स पाति नात्र संशयः ॥ ४ ॥

न हस्तिनो न पादाता न चाश्वास्तस्य भूपतेः ॥

न रथाश्च महाराज न कोशाश्च तथाविधाः ॥ ५ ॥

न गृह्णाति करं राजन्प्रजाभ्योथाधिकं नृप ॥

राज्यं स ईदृशं चक्रे सर्वलोकहिते रतः ॥६॥

जातापराधो भूपृष्ठे जायते चेत्कथंचन ॥

तं गत्वा निग्रहं तस्य चक्रुः शस्त्राणि तत्क्षणात् ॥ ७ ॥

एवमस्य नरेन्द्रस्य वर्तमानस्य भूतले ॥

सुखेन रमते लोको राज्ये निहतकंटके ॥ ८ ॥

कामं वर्षति पर्जन्यः सस्यानि रसवंति च ॥

गावः प्रभूतदुग्धाश्च विद्यमाने नराधिपे ॥ ९ ॥

केनचित्त्वथ कालेन वसिष्ठो भगवान्मुनिः ॥

तीर्थयात्राप्रसंगेन तस्य गेहमुपागतः ॥ 7.3.9.१० ॥

तं दृष्ट्वा पूजयामास शास्त्रदृष्टेन वर्त्मना ॥

प्रत्युत्थानाभिवादाभ्यामर्घ्यपाद्यादिभिस्तथा ॥ ११ ॥

एवं संपूजितस्तेन भक्त्या परमया नृप ॥

सुखोपविष्टो विश्रांतो वसिष्ठो मुनिसत्तमः ॥

राजर्षीणां कथाश्चक्रे देवर्षीणां तथैव च ॥ । ॥ १२ ॥

ततः कथावसाने तु कस्मिंश्चिन्नृपसत्तम ॥

पप्रच्छ विनयोपेतस्तं मुनिं शंसितव्रतम् ॥ १३ ॥

॥ अजपाल उवाच ॥ ॥

अतीतानागतं विप्र वर्त्तमानं तथैव च ॥

त्वं वेत्सि सकलं ब्रह्मंस्तपश्चर्याप्रभावतः ॥ १४ ॥

कौतुकं हृदि मे जातं वर्त्तते मुनिपुंगव ॥

प्रसादः क्रियतां मह्यं कथयस्व प्रसादतः ॥ १५ ॥

॥ वसिष्ठ उवाच॥ ॥

ब्रूहि पार्थिवशार्दूल यत्ते मनसि वर्त्तते ॥

कथयिष्यामि तत्सर्वं यद्यपि स्यात्सुदुर्ल्लभम् ॥ १६ ॥

॥ राजोवाच ॥ ॥

केन कर्मविपाकेन ममैतद्राज्यमुत्तमम् ॥

निष्कण्टकं सदा क्षेमं सर्वकामसमन्वितम् ॥ १७ ॥

न दीनो न च दुःखार्त्तो व्याधिग्रस्तो न कोऽपि च ॥

विद्यते मम राज्ये च न दरिद्रो महामुने ॥ १८ ॥

नारीयं मम साध्वी च प्राणेभ्योऽपि गरीयसी ॥

मच्चित्ता मद्गतप्राणा नित्यं मम हिते रता ॥

अनया चिंतितं ब्रह्मन्सर्वं विस्तरतो वद ॥ १९ ॥

किं दानस्य प्रभावेन व्रतयागस्य वा मुने ॥

तपसो वा मुनिश्रेष्ठ व्रतस्य नियमस्य च ॥ 7.3.9.२० ॥

जन्मान्तरकृतं पुण्यं परं कौतूहलं हि मे ॥

कथयस्व प्रसादेन विस्तरेण द्विजोत्तम ॥ २१ ॥ ॥

॥ वसिष्ठ उवाच ॥ ॥

शृणु सर्वं महीपाल विस्तरेण च कथ्यते ॥

न च मन्युस्त्वया कार्यो न च व्रीडा महामते ॥ २२ ॥

अन्यदेहांतरे राजञ्छूद्रजातिसमुद्भवः ॥

शूद्रजातिरियं साध्वी तव पत्नी ह्यभूत्पुरा ॥ २३ ॥
केनचित्त्वथ कालेन दुर्भिक्षे समुपस्थिते ॥
अन्नक्षयान्महाराज सर्व लोकः क्षुधार्दितः ॥ २४ ॥
ततस्त्वं भार्यया सार्द्धमन्यदेशांतरे गतः ॥
समारुह्य च कृच्छ्रेण कस्मिंश्चिद्गिरिनिर्झरे ॥ २५ ॥
त्वया दृष्टं मनोहारि शुभं पंकजकाननम् ॥
तत्र स्नात्वा पयः पीत्वा पितृदेवाः प्रतर्पिताः ॥ २६ ॥
मनसा चिंतितं ह्येतत्पद्मान्यादाय करोम्यहम् ॥
विक्रयं येन चाहारो भवेन्मम च सर्वथा ॥ २७ ॥
ततः पद्मानि भूरीणि गृहीत्वा भार्यया सह ॥
गतो यत्र जनो भूरि गतः पार्थिवसत्तम ॥ २८ ॥
न केऽपि प्रति गृह्णंति लोका दुर्भिक्षपीडिताः॥
भ्रमितस्त्वं च सर्वत्र श्रांतो वैराग्यमागतः ॥ २९ ॥
ततो दिनावसाने तु गुहामेकां समाश्रितः ॥
भूमौ पद्मानि निक्षिप्य क्षुधाविष्टः प्रसुप्तवान्॥ 7.3.9.३० ॥
एतस्मिन्नेव काले तु कर्णयोस्ते समागतः ॥
पठतां द्विजमुख्यानां ध्वनिर्वेदपुराणयोः ॥ ३१ ॥
तं श्रुत्वा सहसोत्थाय ज्ञात्वा जागरणं ततः ॥
पद्मान्यादाय तत्रैव सभार्यः शिवमंदिरे ॥ ३२ ॥
तत्र नागवती वेश्या शिवरात्रिपरायणा ॥
केदारे परया भक्त्या करोति निशि जागरम् ॥ ३३ ॥
तस्याः पार्श्वे स्थिता दासी त्वया पृष्टा नरेश्वर ॥
देवस्य पुरतो बाले किमर्थं रात्रिजागरम् ॥ ३४ ॥
तयोक्तं शिवरात्र्यां वै वेश्येयं वरवर्णिनी ॥
कुरुते नागवती नाम रात्रौ भक्त्या च जागरम् ॥ ३५ ॥
यः श्रद्धाभक्तिसंयुक्तः कुरुते रात्रिजागरम् ॥
पूजयित्वा महादेवं स याति परमं पदम्॥ ३६ ॥
कृत्वोपवासं पद्मैर्य्यः पूजयेत्त्र्यंबकं नरः ॥

स याति रुद्रसालोक्यं सेव्यमानो ऽप्सरोगणैः ॥ ३७ ॥
सकामो लभते कामान्देवैरपि सुदुर्ल्लभान् ॥
स त्वं पद्मानि मे देहि कांचनं च पलत्रयम्॥
एतेषां मूल्यमादाय प्राणाधारं समाचर ॥ ३८ ॥
ततस्त्वं भार्यया चोक्तो गृह्यमाणे च कांचने ॥
न ग्राह्यं मूल्यमेतेषां त्वया नाथ कथंचन ॥ ३९ ॥
उपवासो बलाज्जातो ह्यन्नाभावाद्द्वयोरपि ॥
पद्मैरेभिर्हरः पूज्यो द्वाभ्यामेवाद्य निश्चयम् ॥ 7.3.9.४०॥
इदं त्वयाऽद्य कर्त्तव्यं त्याज्यमस्यास्तु कांचनम्॥
भार्याया वचनं श्रुत्वा तैः पद्मैः पूजितः शिवः ॥४१॥
श्रद्धया च सभार्येण जागरं च शिवाग्रतः ॥
कृतं त्वया महाराज भार्यया शिवमंदिरे ॥४२॥
पुराणश्रवणं जातं तत्र पार्थिवसत्तम ॥
शिवरात्र्यां महाराज पद्मैस्तु पूजितः शिवः ॥४३॥
केदारस्याग्रतो भक्त्या रात्रौ जागरणं तथा॥
कृतं त्वया महाराज एकाग्रेण च चेतसा॥४४॥
ततःप्रभाते संजाते भिक्षां कृत्वा च पारणा ॥
कृता त्वया महाराज शिवाग्रे सह भार्यया ॥४४॥
ततः कालांतरेणैव कालधर्मं गतो भवान् ॥
भार्येयं च त्वया सार्धं संप्रविष्टा हुताशनम् ॥४६॥
ततो जाता महाराज दशार्णाधिपतेः सुता ॥
वैदेहे नगरे राजा जातस्त्वं पार्थिवोत्तम ॥ ४७ ॥
अजपाल इति ख्यातो नाम्ना च धरणीतले ॥
सर्वेषां प्राणिनां त्वं च वल्लभो नृपसत्तम ॥ ४८ ॥
एतस्मात्कारणाज्जाता भार्येयं प्राणसंमता ॥
भूयोऽपि तव संजाता यन्मां त्वं परिपृच्छसि ॥४९॥
तस्य देवस्य माहात्म्यात्केदारस्य महीपतेः ॥
राज्यं ते सुखदं नृणां तथा निहतकण्टकम् ॥ 7.3.9.५० ॥

प्राप्तं त्वया महाराज केदारस्य प्रसादतः ॥
येन त्वं सैन्यहीनोऽपि पृथिवीं परिरक्षसि ॥ ५१ ॥
॥ पुलस्त्य उवाच ॥ ॥
तस्य तद्वचनं श्रुत्वा स राजा विस्मयान्वितः ॥
गमनाय मतिं चक्रे केदारं प्रति भूमिपः ॥ ५२ ॥
स गत्वा पर्वते रम्ये पूजयित्वा च तं विभुम् ॥
शिवरात्रिपरः सम्यग्वर्षेवर्षे बभूव ह ॥ ५३ ॥
पुत्रं राज्ये च संस्थाप्य ततोऽर्बुदमथागमत् ॥
प्राप्तो मुक्तिं ततो भूयः सभार्यस्तत्प्रभावतः ॥ ५४ ॥
एतत्ते सर्वमाख्यातं केदारस्य महीपते ॥
माहात्म्यं शुभदं नृणां सर्व पापप्रणाशनम् ॥ ५५ ॥
माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्दशी ॥
शिवरात्रिरिति ख्याता भूतलेऽस्मिन्महामते ॥ ५६ ॥
तस्यां तु सर्वथा राजन्यात्रां तस्य समाचरेत्॥
केदारस्य महाराज प्रकुर्यात्पूजनं नृप ॥ ५७ ॥
माघकृष्णचतुर्दश्यां यः कुर्यात्तत्र जागरम् ॥
कृतोपवासो नृपते शिवलोकं स गच्छति ॥ ५८ ॥
स्नात्वा गंगासरस्वत्योः संगमे सर्वकामदे ॥
ये प्रपश्यन्ति केदारं ते यास्यंति परां गतिम् ॥ ५९ ॥
कुण्डे केदारसंज्ञे यः प्रपिबेद्विमलं जलम् ॥
सप्तपूर्वान्सप्त परान्पूर्वजांस्तारयेत्तु सः ॥ 7.3.9.६० ॥
यश्चैतच्छृणुयान्नित्यं भक्त्या परमया नृप ॥
सोऽपि पापैर्विमुच्येत केदारस्य प्रभावतः ॥ ६१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे केदारमाहात्म्यवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १०

https://sa.wikisource.org/s/gkx
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ ययातिरुवाच ॥ ॥

केदारं श्रूयते ब्रह्मन्पर्वते च हिमाचले ॥

गंगा तस्माद्विनिष्क्रान्ता प्रविष्टा पूर्वसागरम् ॥ १ ॥

तथा सरस्वती देवी चूतवृक्षाद्विनिर्गता ॥

पश्चिमं सागरं प्राप्ता गृहीत्वा वडवानलम्॥ २ ॥

कथमत्र समायातः केदारश्चात्र कौतुकम्॥

सर्वं विस्तरतो ब्रूहि विचित्रं मम भूसुर ॥ ३ ॥

॥ पुलस्त्य उवाच ॥ ॥

सत्यमेतन्महाराज यन्नोऽत्र परिपृच्छसि ॥

शृणुष्वावहितो भूत्वा यथा जातं श्रुतं तु वै ॥ ४ ॥

गंगाद्यानि च तीर्थानि केदाराद्या दिवौकसः ॥

मया सह पुरा देवाः शक्राद्या नृपसत्तमाः ॥ ५ ॥

ब्रह्माणं प्रति राजेन्द्र गताः सर्वे महर्षयः॥

सर्वे तत्र कथाश्चक्रुर्धर्म्या नाना पृथक्पृथक् ॥ ६ ॥

समुदाये च देवानां सर्वतीर्थानि पार्थिव ॥

क्षेत्राण्युप स्थितान्येव वनान्युपवनानि च ॥ ७ ॥

ततः कथाप्रसंगेन इन्द्रः प्राह चतुर्मुखम् ॥

कौतुकेन समायुक्तः पप्रच्छ नृपसत्तम ॥ ८ ॥ ॥

॥ इन्द्र उवाच ॥ ॥

भगवन्पुण्यमाहात्म्यं श्रोतुमिच्छामि सांप्रतम् ॥

प्रमाणं चैव सर्वेषां कृतादीनां पृथग्विधम् ॥ ९ ॥

॥ ब्रह्मोवाच ॥ ॥

लक्षं सप्तदश प्रोक्तं युगमानं सुराधिप ॥

अष्टाविंशतिभिः सार्द्धं सहस्रैः कृतमुच्यते ॥ 7.3.10.१० ॥

लक्षद्वादशभिः प्रोक्तं युगं त्रेताभिसंज्ञितम् ॥

षण्णवत्यधिकैश्चैव सहस्रैः परिमाणितम्॥ ११ ॥

लक्षाण्यष्टौ चतुःषष्टिसहस्रैः परिकीर्तितम् ॥

ततो वै द्वापरं नाम युगं देवप्रकीर्तितम् ॥ १२ ॥

लक्षैश्चतुर्भिर्विख्यातो द्वात्रिंशद्भिः कलिस्तथा॥

सहस्रैश्च सुरश्रेष्ठ युगमानमितीरितम्॥ १३॥

चतुष्पदः कृते धर्मः शुक्लवर्णो जनार्दनः॥

न दुर्भिक्षं न च व्याधिस्तस्मिन्भवति वै क्वचित् ॥ १४ ॥

क्रियते च तदा धर्मो नाकाले मरणं नृणाम् ॥

लांगलेन विना सस्यं भूरिक्षीराश्च धेनवः ॥ १५ ॥

कामः क्रोधो भयं लोभो मत्सरश्चाभ्यसूयता ॥

तस्मिन्युगे सहस्राक्ष न भवंति कदाचन ॥ १६ ॥

ततस्त्रेतायुगे जातस्त्रिपादो धर्म एव च ॥

चिरायुषो नरास्तस्मिन्रक्तवर्णो जनार्दनः ॥ १७ ॥

तस्मिन्यज्ञाः प्रवर्त्तंते प्राणिनामिष्टदायिनः ॥

न कामादिप्रवृत्तिश्च तस्मिन्संजायते नृणाम्॥ १८ ॥

तपसा ब्रह्मचर्येण स्नानैर्दानैः पृथग्विधैः ॥

तथा यज्ञैर्जपैर्होमैस्तत्र वृत्तिर्भवेन्नृणाम् ॥ १९ ॥

ततस्तु द्वापरं नाम तृतीयं युग मुच्यते ॥

द्विपदो धर्मः सञ्जातः पीतवर्णो जनार्द्दनः ॥ 7.3.10.२० ॥

फलाकांक्षाप्रवृत्तानि जपयज्ञतपांसि च ॥

सत्यानृतान्वितो लोको द्वापरे सुरसत्तम ॥ २१ ॥

तत्रान्योन्यं महीपाला युयुधुर्वसुधातले ॥

सुपूताश्च दिवं यांति यज्ञैरिष्ट्वा जनार्दनम् ॥ २२ ॥

ततः कलियुगं घोरं चतुर्थं तु प्रव र्त्तते ॥

एकपादो भवेद्धर्मः संत्रस्तो नित्यपूजने ॥ २३ ॥

कृष्णवर्णो भवेद्विष्णुः पापाधिक्यं प्रवर्तते ॥

माया च मत्सरश्चैव कामः क्रोधस्तथा भयम् ॥ २४ ॥

अर्थलुब्धास्तथा भूपा लोभमोहशतान्विताः ॥
अल्पायुषो नरास्तत्र अल्पसस्या च मेदिनी ॥ २५ ॥
अल्पक्षीरास्तथा गावः सत्यहीना द्विजातयः ॥
तत्र मायाविनो लोका जैह्वयौपस्थ्यपरायणाः ॥ २६ ॥
सत्यहीनास्तथा पापा भविष्यंति कलौ युगे ॥
तत्र षोडशमे वर्षे नराः पलितकुन्तलाः ॥ २७ ॥
नार्यो द्वादशमे वर्षे भविष्यंति सुगर्भिताः ॥
भविष्यति क्रमाद्वर्णसंकरश्च सुराधिप ॥ २८ ॥
एकाकारा भविष्यंति सर्ववर्णाश्रमाश्च वै ॥
नाशं यास्यंति यज्ञाश्च कुलधर्मः सनातनः ॥ २९ ॥
व्यर्थानि तत्र तीर्थानि म्लेच्छस्पृष्टानि सर्वशः ॥
भविष्यंति सुरश्रेष्ठ प्रभावरहितानि च ॥ 7.3.10.३० ॥
एतच्छ्रुत्वा ततो वाक्यं ब्रह्मणोऽव्यक्तजन्मनः ॥
तत्र स्थितानि तीर्थानि ब्रह्माणमिदमब्रुवन् ॥ ॥ ३१ ॥
॥ तीर्थान्यूचुः ॥ ॥
कथं वयं भविष्यामः संप्राप्ते दारुणे कलौ ॥
स्थानं नो ब्रूहि देवेश स्थातव्यं च सदैव हि ॥ ३२ ॥
॥ ब्रह्मोवाच ॥ ॥
अर्बुदः पर्वतश्रेष्ठः कलिस्तत्र न विद्यते ॥
अतस्तत्र च गंतव्यं तीर्थैरायतनैः सह ॥ ३३ ॥
अपि कृत्वा महत्पापमर्बुदं प्रेक्षते तु यः ॥
कलिदोषविनिर्मुक्तः स यास्यति परां गतिम् ॥३४॥
॥ पुलस्त्य उवाच ॥ ॥
एवमुक्त्वा चतुर्वक्त्रो ब्रह्मलोकं गतो नृप ॥
ततः सर्वाणि तीर्थानि गतानि च कलौ युगे ॥ ३५ ॥
भूमावर्बुदशैलेन्द्रे संस्थितानि कलेर्भयात् ॥
गंगा सरस्वती चैव यमुना पुष्कराणि च ॥ ३६ ॥
कुरुक्षेत्रं प्रभासं च ब्रह्मावर्तं तथैव च॥

तिस्रःकोट्योऽर्द्धकोटिश्च यानि तीर्थानि भूतले ॥ ३७ ॥

तेषां वासश्च सञ्जातः पर्वतेऽर्बुदसंज्ञिके ॥

एवं तत्र समापन्ना गंगा चैव सरस्वती ॥ ३८ ॥

तत्र शांता नराः सम्यक्परं निर्वाणमाप्नुयुः ॥

श्राद्धं कृत्वा महाराज स्वर्गे यांति च पूर्वजाः ॥ ३९ ॥

शृणु तत्राभवत्पूर्वं यदाश्चर्यं महामते ॥

ऋषिर्मंकणकोनाम सरस्वत्यास्तटे स्थितः ॥ 7.3.10.४० ॥

तपस्तेपे सुधर्मात्मा कामक्रोधविवर्जितः ॥

तस्यैवं वर्तमानस्य क्षुतमासीत्कदाचन ॥ ४१ ॥

पित्तं प्रपतितं तत्र तच्च रक्तमयं बभौ ॥

तद्दृष्ट्वाऽतीव हृष्टः स मंकणर्षिर्बभूव ह ॥ ४२ ॥

सिद्धोऽहमिति विज्ञाय ततो नृत्यं चकार सः ॥

तस्यैवं वर्तमानस्य जगत्स्थावरजंगमम् ॥ ४३ ॥

तत्र संक्षोभमापन्नं सागरा अपि चुक्षुभुः ॥

गृहकृत्यानि संत्यज्य सर्वे विस्मयमा गताः ॥ ४४ ॥

तस्यैवं नृत्यमानस्य सर्वे लोका नृपोत्तम ॥

ननृतुः पार्थिवश्रेष्ठ प्रभावात्तस्य सन्मुनेः ॥ ४५ ॥

ततो देवगणाः सर्वे गत्वा कामनिषूदनम् ॥

यथाऽयं नृत्यते नैव तथा कुरु महेश्वर ॥४६॥

अथ ब्राह्मणरूपेण शंभुनोक्तो द्विजोत्तमः ॥

त्वया ब्रह्मंस्तपस्तप्तमधुना नृत्यते कथम् ॥ ॥ ४७ ॥

॥ मंकण उवाच ॥ ॥

किं न पश्यसि हे ब्रह्मन्रक्तं पित्तं च मे स्थितम् ॥

संजातं सिद्धिमापन्नो रक्तं पित्तं यतो मम ॥ ४८ ॥

एतस्मात्कारणाद्धर्षाद्द्विज नृत्यं करोम्यहम् ॥

एवमुक्तस्ततस्तेन देवदेवो महेश्वरः ॥ ४९ ॥

तर्जन्या ताडयामास स्वांगुष्ठं नृपसत्तम ॥

ततोंगुष्ठाद्विनिष्क्रांतं भस्म वै बिसपांडुरम् ॥ 7.3.10.५० ॥

ततो मंकणकं प्राह पश्य विप्र करान्मम ॥
शुभ्रं भस्म विनिष्क्रांतं पश्य मे द्विज कौतुकम् ॥ ५१ ॥ ॥
॥ पुलस्त्य उवाच ॥ ॥
तद्दृष्ट्वा विस्मितो विप्रो ज्ञात्वा तं वृषभध्वजम् ॥
जानुभ्यामवनिं गत्वा वाक्यमेतदुवाच ह ॥५२॥
॥ मंकण उवाच ॥ ॥
नूनं भवान्महादेवः साक्षाद्दृष्टः प्रसीद मे ॥
निश्चितं त्वं मया ज्ञात एतन्मे हृदि वर्तते ॥ ५३ ॥
नान्यस्यायं प्रभावश्च त्वया यो मे प्रदर्शितः ॥
मां समुद्धर देवेश कृपां कृत्वा महेश्वर ॥ ५४ ॥
॥ श्रीमहादेव उवाच ॥ ॥
सम्यग्ज्ञातोऽस्मि विप्रेन्द्र त्वयाऽहं नात्र संशयः ॥
वरं वरय भद्रं ते नृत्याधिक्यं यतः कृतम् ॥ ५५ ॥
॥ मंकण उवाच ॥ ॥
येऽत्र स्नानं प्रकुर्वंति सरस्वत्यां समाहिताः ॥
त्वत्प्रसादात्फलं तेषां राजसूयाश्वमेधयोः ॥ ५६ ॥
॥ श्रीमहादेव उवाच ॥ ॥
येऽत्र स्नानं करिष्यंति सरस्वत्यां समाहिताः ॥
ते यास्यंति परं स्थानं जरामरणवर्जितम् ॥ ५७ ॥
अत्र गंगासरस्वत्योः संगमे लोकविश्रुते ॥
श्राद्धं कुर्युर्द्विजश्रेष्ठ ते यास्यंति परां गतिम् ॥ ५८ ॥
सुवर्णं येऽत्र दास्यंति यथाशक्त्या द्विजोत्तमे ॥
सर्व पापविनिर्मुक्तास्ते यास्यन्ति परां गतिम् ॥ ५९ ॥
इत्युक्त्वांतर्दधे राजन्देवदेवो महेश्वरः ॥ 7.3.10.६० ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डेऽर्बुदाचले कलियुगपभावात्सर्वतीर्थागमनवर्णनंनाम दशमोऽध्यायः ॥ १० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ११



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ देवं कोटीश्वरं परम् ॥

यं दृष्ट्वा मानवः सम्यक्परां सिद्धिमवाप्नुयात् ॥ १ ॥

शृणु तत्राभवत्पूर्वं यदाश्चर्यं महीपते ॥

दक्षिणस्या मुनिवराः कोटिसंख्याप्रमाणतः ॥ २ ॥

अन्योऽन्यं स्पर्धया सर्वे हेलयाऽर्बुदमागताः ॥

अहं पूर्वमहं पूर्वं प्रपश्याम्यचलेश्वरम् ॥ ३ ॥

आगमिष्यति यः पश्चाद्ब्राह्मणः श्वा भविष्यति ॥

पापीयान्भक्तिरहितः श्रद्धाहीनो भविष्यति ॥ ४ ॥

इत्येवं स्पर्धमानास्ते हेलयाऽर्बुदमागताः ॥

ततः सर्वे यतात्मानः सम्यग्व्रतपरायणाः ॥ ५ ॥

शांतास्तपस्विनः सर्वे वेदविद्याविशारदाः ॥

तेषामीहितमाज्ञाय सम्यक्कामनिषूदनः ॥ ६ ॥

कृपया परयाविष्टो भक्तिभावान्महेश्वरः ॥

कोटिं कृत्वाऽऽत्मलिंगानां तस्मिन्स्थाने व्यवस्थितः ॥ ७ ॥

एकस्मिन्नेव काले तु सर्वैर्दृष्टो महेश्वरः ॥

मुनिभिश्च नृपश्रेष्ठ कोटिसंख्यैः पृथक्पृथक् ॥ ८ ॥

अथ ते मुनयः सर्वे समं दृष्ट्वा महेश्वरम् ॥

विस्मयोत्फुल्लनयना साधुसाध्विति चाब्रुवन् ॥ ९ ॥

भक्तियुक्ता द्विजाः सर्वेऽस्तुवंस्ते वैदिकैः स्तवैः ॥

तेषां तुष्टस्ततः शंभुर्वाक्यमेतदुवाच ह ॥ 7.3.11.१० ॥ ॥

॥ श्रीमहादेव उवाच ॥ ॥

तुष्टोऽहं मुनयः सर्वे श्रद्धया परया हि वः ॥

वरं वै व्रियतां शीघ्रं सर्वैश्चैव पृथक्पृथक् ॥११॥

॥ ऋषय ऊचुः ॥ ॥

एष एव वरोऽस्माकं सर्वेषां हृदि वर्त्तितः ॥

युगपद्दर्शनाद्देव जायतां फलमुत्तमम् ॥ १२ ॥

॥ श्रीमहादेव उवाच ॥ ॥

न वृथा दर्शनं मे स्याद्विशेषाद्ब्राह्मणस्य च ॥

दर्शनं ये करिष्यंति तेषां च तीर्थजं फलम् ॥ १३ ॥

॥ मुनय ऊचुः ॥ ॥

अवश्यं यदि दातव्यो वरोऽस्माकं महेश्वर ॥

एकं कोटिमयं लिंगं क्रियतां वृषभध्वज ॥ १४ ॥

यस्मिन्दृष्टे फलं नृणां जायते कोटिलिंगजम् ॥

एवमेष वरोऽस्माकं दीयतां वृषभध्वज ॥ ॥ १५ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं सप्रार्थमानानां मुनीनां भावितात्मनाम् ॥

निर्भिद्य पर्वतश्रेष्ठं सहसा लिंगमुद्गतम् ॥ १६ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

कृपया परया सर्वांस्तानृषीन्वसुधाधिप ॥ १७ ॥

॥ वागुवाच ॥ ॥

कोटीश्वराख्यं मे लिंगं लोके ख्यातिं गमिष्यति ॥

माघकृष्णचतुर्द्दश्यां यश्चैनं पूजयिष्यति ॥ १८ ॥

सर्वं कोटिगुणं तस्य फलं विप्रा भविष्यति ॥

दाक्षिणात्यो नरो यस्तु श्राद्धमत्र करिष्यति ॥ १९ ॥

फलं कोटिगुणं तस्य गयाश्राद्धसमं भवेत् ॥

तस्माद्विशेषतः पूज्यं मम लिंगं च मानवैः ॥ 7.3.11.२० ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा तु सा वाणी विरराम महीपते ॥

ततस्ते मुनयः सर्वे गंधधूपानुलेपनैः ॥ २१ ॥

तल्लिंगं पूजयामासुः श्रद्धया परया नृप ॥

पूजयित्वा गताः सिद्धिं सर्वे लिंगप्रसादतः ॥ २२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभातखण्डे तृतीयेऽर्बुदखण्डे कोटीश्वरमाहात्म्यवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १२



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ रूपतीर्थमनुत्तमम् ॥

सर्वपापहरं नृणां रूपसौभण्यदायकम्॥ १ ॥

तत्र पूर्वं वपुर्नाम्ना लोके ख्याता वराप्सराः ॥

सिद्धिं गता महाराज यथा पूर्वं निगद्यते ॥ २ ॥

पुराऽऽसीत्काचिदाभीरी विरूपा विकृतानना ॥

लम्बोदरी च कुग्रीवा स्थूलदंतशिरोरुहा ॥ ३ ॥

एकदा फलमादातुं भ्रममाणाऽर्बुदाचले ॥

माघशुक्लतृतीयायां पतिता गिरिनिर्झरे ॥ ४ ॥

दिव्यमाल्यांबरधरा दिव्यैरंगैः समन्विता ॥

पद्मनेत्रा सुकेशांता सर्वलक्षणलक्षिता ॥ ५ ॥

सा संजाता महाराज तीर्थस्यास्य प्रभावतः ॥

एतस्मिन्नेव काले तु शक्रस्तत्र समागतः ॥ ६ ॥

क्रीडार्थं पर्वतश्रेष्ठे तां ददर्श शुभेक्षणाम् ॥

ततः कामशरैर्विद्धस्तामुवाच सुमध्यमाम् ॥ ७ ॥

॥ इन्द्र उवाच ॥ ॥

का त्वं वद वरारोहे किमर्थं त्वमिहागता ॥

देवी वा नागकन्या वा सिद्धा विद्याधरी तु वा ॥ ८ ॥

मनो मेऽपहृतं सुभ्रूस्त्वया च पद्मनेत्रया ॥

शक्रोऽहं सर्वदेवेशो भज मां चारुहासिनि ॥ ९ ॥

॥ नार्युवाच ॥ ॥

आभीरी त्रिदशाधीश तथाहं बहुभर्तृका ॥

फलार्थं तु समायाता पतिता गिरिनिर्झरे ॥ 7.3.12.१० ॥

स्नात्वा रूपमिदं प्राप्ता सुरूपं च शुभं मया ॥

दुर्ल्लभस्त्वं हि देवानां किं पुनर्मर्त्यजन्मनाम् ॥ ११ ॥
वशगास्ते सुराः सर्वे मयि किं क्रियते स्पृहा ॥
भज मां त्रिदशाधीश यथाकामं सुराधिप ॥ १२ ॥
॥ पुलस्त्य उवाच ॥ ॥
एवमुक्तस्तया शक्रः कामयामास तां तदा ॥
निवृत्तमदनो भूत्वा तामुवाच सुमध्यमाम् ॥ १३ ॥
॥ इन्द्र उवाच ॥ ॥
वरं वरय कल्याणि यत्ते मनसि वर्त्तते ॥
विनयात्तव तुष्टोऽहं दास्यामि वरमुत्तमम् ॥ १४ ॥
॥ नार्युवाच ॥ ॥
माघशुक्लतृतीयायां नरो वा वनिता तथा ॥
स्नानं यः कुरुते भक्त्या प्रीताः स्युः सर्वदेवताः ॥ १५ ॥
सुरूपं जायतां तेषां दुर्ल्लभं त्रिदशैरपि ॥
मां नय त्वं सहस्राक्ष सुरावासं सुराधिप ॥१६॥
॥ पुलस्त्य उवाच ॥ ॥
एवमस्त्विवति तामुक्त्वा गृहीत्वा तां सुराधिपः ॥
विमाने च तया सार्द्धं जगाम त्रिदिवं प्रति ॥ १७ ॥
वपुः प्राप्तं तया यस्मात्तस्मात्पा र्थिवसत्तम ॥
नाम्ना वपुरिति ख्याता सा बभूव वराप्सराः ॥ १८ ॥
माघशुक्लतृतीयायां देवास्तस्मिञ्जलाशये ॥
स्नानं सर्वे प्रकुर्वंति प्रभाते भक्तिसंयुताः ॥१९॥
तत्रान्या देवकन्याश्च सिद्धयक्षांगनास्तथा ॥
यस्तत्र कुरुते स्नानं तस्मिन्काले नराधिप ॥7.3.12.२०॥
रूपं च लभते तादृग्यादृग्लब्धं तया पुरा ॥
सर्वे तत्र भविष्यंति सिद्धविद्याधरोरगाः ॥ २१ ॥
तस्यैव पूर्वदिग्भागे बिलमस्ति सुशोभनम् ॥
यत्रागत्य प्रकुर्वंति स्नानं पातालकन्यकाः। ॥२२॥
तत्र स्नात्वा गृहीत्वापो बिले तस्मिन्व्रजंति ताः ॥

तत्र वैनायके पीठे महत्पाषाणजं जलम्॥२३॥
तेनोदकेन संयुक्तः सिद्धो भवति मानवः ॥
गृहीत्वा तज्जलं यस्तु यत्र यत्राभिगच्छति ॥ २४ ॥
स्वर्गे वा भूतले वापि न केनापि प्रधृष्यते ॥
तत्रास्ति विवरद्वारे तिलकोनाम पादपः ॥ २५ ॥
तस्य पुष्पैः फलैश्चैव सर्वं कार्यं प्रसिद्ध्यति ॥
भक्षणाद्धारणाद्वापि सिद्धो भवति मानवः ॥२६॥
तस्मिन्बिले तु पाषाणाः समन्ताच्छंखसन्निभाः ॥
तेनोदकेन संस्पृष्टा भवंति च हिरण्मयाः ॥ २७ ॥
वन्ध्या नारी जलं तत्र या पिबेत्तिलकान्वितम् ॥
अपि वर्षशताब्दा च सद्यो गर्भवती भवेत्॥ ॥ २८ ॥
व्याधिग्रस्तोऽपि यो मर्त्यः स्नानं तत्र समाचरेत् ॥
नीरोगो जायते सद्यो ग्रहग्रस्तो विमुच्यते ॥ २९ ॥
भूतप्रेतपिशाचानां दोषः सद्यः प्रणश्यति ॥
तेनोदकेन संस्पृष्टे सर्वं नश्यति दुष्कृतम् ॥ 7.3.12.३० ॥
अपि कीटपतंगा ये पिशाचाः पक्षिणो मृगाः ॥
तेनोदकेन ये स्पृष्टाः सद्यो यास्यंति सद्गतिम् ॥ ३१ ॥
॥ ययातिरुवाच ॥ ॥
अप्यद्भुतमिदं ब्रह्मन्माहात्म्यं भवता मम ॥
कथितं रूपतीर्थस्य न भूतं न भविष्यति ॥ ॥ ३२ ॥
किमत्र कारणं ब्रह्मन्सर्वेभ्योऽप्यधिकं स्मृतम् ॥
सर्वं विस्तरतो ब्रूहि परं कौतूहलं हि मे ॥ ३३ ॥
॥ पुलस्त्य उवाच ॥ ॥
तत्र पूर्वं तपस्तप्तमदित्या नृपसत्तम ॥
इन्द्रे राज्यपरिभ्रष्टे बलौ त्रैलोक्यनायके ॥
अवतीर्णश्चतुर्बाहुरदित्यां नृपसत्तम ॥ ३४ ॥
तस्मिञ्जाते महाविष्णावदित्या चासुरान्तके ॥
गुप्तया विवरद्वारे भयाद्दानवसंभवात् ॥ ३५ ॥

जातमात्रो हरिस्तस्मिन्स्थापितो निर्झरे तया ॥

तस्मात्पवित्रतां प्राप्तं तीर्थं नृणामभीष्टदम् ॥ ३६ ॥

न चान्यत्कारणं राजन्सत्यमेतन्मयोदितम् ॥

माघशुक्लतृतीयायां तत्र जातस्त्रिविक्रमः ॥ ३७ ॥

तिलकः सर्व वृक्षाग्र्यः पुत्रवत्परिपालितः ॥

अदित्या सेवितो नित्यं स्वहस्तेन जलैः शुभैः ॥ ३८ ॥

एतत्ते सर्वमाख्यातं तीर्थमाहात्म्यमुत्तमम् ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥

सर्वकामप्रदं नृणामिह लोके परत्र च ॥ ३९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे रूपतीर्थमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १३

https://sa.wikisource.org/s/gl0
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं त्रैलोक्यविश्रुतम् ॥

अंबरीषस्य राजर्षैरैशान्यां पापनाशनम् ॥ १ ॥

यत्र स्वयं हृषीकेशः काले च कलिसंज्ञके ॥

तस्य वाक्याद्दतस्तीर्थे स्वयं हि परितिष्ठति ॥ २ ॥

पुरासीत्पृथिवीपालो ह्यंबरीषो युगे कृते ॥

हरिमाराधयामास तपस्तेपे सुदुष्करम् ॥ ३ ॥

तस्मिंस्तीर्थे स राजेन्द्रो मितभक्षो जितेन्द्रियः ॥

सहस्रमेकं वर्षाणां तत आसीत्फलाशनः ॥ ४ ॥

सहस्रे द्वे ततो राजञ्छीर्णपर्णाशनोऽभवत्॥

सहस्रे द्वे ततो भूयो जलाहारो बभूव ह ॥ ५ ॥

सहस्रत्रितयं राजन्वायुभक्षो बभूव ह ॥

चिन्तयन्पुंडरीकाक्षं मानसे श्रद्धयान्वितः ॥ ६ ॥

दश वर्षसहस्रान्ते ततश्च नृपसत्तम ॥

तुतोष भगवान्विष्णुस्तस्यासौ दर्शनं ददौ ॥ ७ ॥

कृत्वा देवपते रूपमारुह्यैरावतं गजम् ॥

अब्रवीद्वरदोऽस्मीति अंबरीषं नराधिपम् ॥ ८ ॥

॥ इंद्र उवाच ॥ ॥

वरं वरय भद्रं ते राजन्यन्मनसीप्सितम् ॥

त्वां दृष्ट्वा भक्तिसंयुक्तमागतोऽहमसंशयम् ॥ ९ ॥ ॥

॥ अंबरीष उवाच ॥ ॥

मुक्तिं दातुमशक्तोसि त्वं च वृत्रनिषूदन ॥

तव प्रसादाद्देवेश त्रैलोक्यं मम वर्त्तते ॥

स्वागतं गच्छ देवेश न वरो रोचते मम ॥ 7.3.13.१० ॥

सर्वथा दास्यते मह्यं वरं तुष्टश्चतुर्भुजः ॥

तदाहं प्रतिगृह्णामि गच्छ देव नमोस्तु ते ॥ ११ ॥

॥ इन्द्र उवाच ॥ ॥

वरं वरय राजर्षे यत्ते मनसि वर्त्तते ॥

ब्रह्मविष्णुत्रिनेत्राणामहमीशो नृपोतम ॥ १२ ॥

अन्येषां चैव देवानां त्रैलोक्यस्याप्यहं विभुः ॥

वरं वरय तस्मात्त्वं प्रसादान्मे सुदुर्ल्लभम् ॥ १३ ॥

प्रसन्ने मयि राजेन्द्र प्रसन्नाः सर्वदेवताः ॥

कुरु मे वचनं राजन्गृह्यतां वरमुत्तमम् ॥ १४ ॥

॥ अंबरीष उवाच ॥ ॥

राजा त्वं सर्वदेवानां त्रैलोक्यस्य तथेश्वरः ॥

सप्तद्वीपवती राजा अहं वृत्रनिषूदन ॥ १५ ॥

हृषीकेशस्य सद्भक्तं विद्धि मां तात निश्चयम् ॥

आगतश्च हृषीकेशो वरं दास्यत्यसंशयम् ॥ १६ ॥

॥ इन्द्र उवाच ॥ ॥

ददतो मम भूपाल न गृह्णासि वरं यदि ॥

वज्रं त्वां प्रेरयिष्यामि वधाय कृतनिश्चयः ॥ १७ ॥

एवमुक्त्वा सहस्राक्षः सृक्किणी परिलेलिहन् ॥

कुलिशं भ्रामयामास गृहीत्वा दक्षिणे करे ॥ १८ ॥

तस्यैवं भ्राम्यमाणस्य महोत्पाता बभूविरे ॥

ततः पर्वतशृंगाणि विशीर्णानि समंततः ॥ १९ ॥

आवृतं गगन मेघैर्विधुन्वानैर्महीं तदा ॥

न किंचिद्दृश्यते तत्र सर्वं संतमसावृतम् ॥ 7.3.13.२० ॥

एतस्मिन्नेव काले तु स राजा हरिवत्सलः ॥

निमील्य लोचने स्वीये समाधिस्थो बभूव ह ॥ २१ ॥

ततस्तुष्टो जगन्नाथ साक्षात्प्रत्यक्षतां गतः ॥

ऐरावतः स गरुडस्तत्क्षणात्समजायत ॥ २२ ॥

तमुवाच हृषीकेशो मेघगंभीरया गिरा ॥

ध्यानस्थितं नृपश्रेष्ठं शंख चक्रगदाधरः ॥ २३ ॥ ॥

श्रीभगवानुवाच ॥ ॥

परितुष्टोऽस्मि ते वत्सानन्यभक्त जनेश्वर ॥

वरं वरय भद्रं ते यद्यपि स्यात्सुदुर्लभम् ॥ २४ ॥ ॥

॥ अंबरीष उवाच ॥ ॥

यदि प्रसन्नो भगवन्यदि देयो वरो मम ॥

संसाराब्धेस्तारणाय वरदो भव मे हरे ॥ २५ ॥

॥ पुलस्त्य उवाच ॥ ॥

अथाह भगवान्विष्णुरंबरीषं जनाधिपम् ॥

ज्ञानयोगं सुविस्तीर्णं संसारक्षयकारणम् ॥ २६ ॥

यस्मिञ्जाते नरः सद्यः संसारान्मुच्यते नृप ॥

श्रुत्वा स नृपतिः सम्यक्प्रणम्योवाच केशवम् ॥ २७ ॥

॥ अंबरीष उवाच ॥ ॥

भगवन्यस्त्वया प्रोक्तो योगोऽयं मम विस्तरात् ॥

दुर्ज्ञेयः स नृणां देव विशेषाच्च कलौ युगे ॥ २८ ॥

अपि चेत्सुप्रसन्नोऽसि क्रियायोगं ब्रवीहि मे ॥

लोकानां तारणार्थाय शंखचक्रगदाधर ॥ २९ ॥

॥ पुलस्त्य उवाच ॥ ॥

ततस्तस्मै नरेन्द्राय क्रियायोगं जनार्द्दनः ॥

यथायोग्यं नृपश्रेष्ठ कथयामास केशवः ॥ 7.3.13.३० ॥

तं श्रुत्वा तुष्टहृदयोंऽबरीषो वाक्यमब्रवीत् ॥ ३१ ॥

॥ अंबरीष उवाच ॥ ॥

यदि तुष्टोऽसि भगवन्रूपेणानेन माधव ॥

ममाश्रमे त्वं देवेश सदा सन्निहितो भव ॥ ३२ ॥

यतस्त्वत्प्रतिमामेकामर्चयामि विधानतः ॥

पूजयिष्यंति लोकास्त्वां शंखचक्रगदाधरम् ॥ ३३ ॥

॥ पुलस्त्य उवाच ॥ ॥

तथोक्तो माधवेनासौ चकार हरिमंदिरम् ॥

प्रतिमां पूजयामास गन्धपुष्पानुलेपनैः ॥ ३४ ॥

ततः कालेन महता भगवान्विष्णुमंदिरे ॥

तेनैव वपुषा प्राप्तः सपुत्रः सहबांधवः ॥ ३५ ॥

अद्यापि भगवान्विष्णुः सत्यवाक्येन भूपतेः ॥

सदा संनिहितो विष्णुस्तस्मिन्नवसरे कलौ ॥ ३६ ॥

तदारभ्य महाराज क्रियायोगो धरातले ॥

प्रवृत्तः प्रतिमाकारः काले च कलिसंज्ञके ॥ ३७ ॥

यस्तं पूजयते भक्त्या हृषीकेशे नृपार्बुदे ॥

स याति विष्णुसालोक्यं प्रसादाच्च हरेर्नृप ॥ ३८ ॥

एकादश्यां महाराज जागरं यः सदा नृप ॥

करिष्यति निराहारो हृषीकेशाग्रतः स्थितः ॥

स यास्यति परं स्थानं दुर्ल्लभं त्रिदशैरपि ॥ ॥ ३९ ॥

यत्पुण्यं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे ॥

तत्फलं लभते मर्त्यो हृषीकेशस्य दर्शनात् ॥ 7.3.13.४० ॥

शुक्ले वा यदि वा कृष्णे संप्राप्ते हरिवासरे ॥

यः पश्यति हृषीकेशमश्वमेधफलं लभेत् ॥ ४१ ॥

तस्मात्सर्वप्रयत्नेन पूजयेत्तु विधानतः ॥

यस्तत्र चतुरो मासन्सम्यग्व्रतपरायणः ॥

अभ्यर्चयेद्धृषीकेशं न स भूयोऽभिजायते ॥ ४२ ॥

एकः सर्वाणि तीर्थानि करोति नृपसत्तम ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ॥ ४३ ॥

एको दानानि सर्वाणि ब्राह्मणेभ्यः प्रयच्छति ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ४४ ॥

एकः कन्यासहस्रं तु प्रदद्याच्च यथाविधि ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ४५ ॥

सूर्यग्रहे कुरुक्षेत्रे दद्याद्दानमनुत्तमम् ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ४६ ॥

अग्निष्टोमादिभिर्यज्ञैर्यजत्येकः सदक्षिणैः॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ४७ ॥

एको हिमालयं गत्वा त्यजति स्व कलेवरम् ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥।४८॥।

एकस्तु भृगुपातेन त्यजेद्देहं सुतीर्थके ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ४९ ॥

एकः प्रायोपवेशेन प्राणांस्त्यजति मानवः ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ 7.3.13.५० ॥

ब्रह्मज्ञानं वदत्येकः श्रुत्वा ज्ञानवि शारदः ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ५१ ॥

गयाश्राद्धं करोत्येकः पितृपक्षे नृपोत्तम ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ५२ ॥

चांद्रायणसहस्रं च करोत्येकः समाहितः ॥

पश्यत्यन्यो हृषीकेशं चातुमास्यं समाहितः ॥ ५३ ॥

व्रतं तपः सहस्राब्दमेकः सम्यक्चरेन्नरः ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ५४ ॥

एकस्तु चतुरो वेदान्सम्यक्पठति ब्राह्मणः ॥

पश्यत्यन्यो हृषीकेशं चातुर्मास्यं समाहितः ॥ ५५ ॥

बहुना किमिहोक्तेन शृणु संक्षेपतो नृप ॥

एकतस्तु भवेत्सर्वमेकतो हरिदर्शनम् ॥ ५६ ॥

तस्मात्सर्वप्रयत्नेन स्थातव्यं हरिसंनिधौ ॥

अम्बरीषस्य राजर्षेः स्थानके पापनाशने ॥ ५७ ॥

एकतस्तु हृषीकेश एकतः कर्णिकेश्वरः ॥

तयोर्मर्त्या मृता ये च मानवा नृपसत्तम ॥ ५८ ॥

अपि कृत्वा महत्पापं गच्छंति हरिसन्निधौ ॥

हृषीकेशं समालोक्य सद्यो मुक्तिमवाप्नुयात् ॥ ५९ ॥

पुष्पमेकं हृषीकेशे यश्चारोपयते नृप ॥

सुखसौभाग्यसंयुक्त इह लोके परत्र च ॥ 7.3.13.६० ॥

हृषीकेशस्य यो भक्त्या करिष्यत्यनुलेपनम् ॥

स यास्यति परं स्थानं जरामरणवर्जितम् ॥ ६१ ॥

संमार्जनं च तस्याग्रे यः करोति समाहितः ॥

यावत्यो रेणवस्तत्र तावद्वर्षशतानि सः ॥

मोदते विष्णुलोकस्थो नात्र कार्या विचारणा ॥ ६२ ॥

कार्तिके शुक्लपक्षे च एकादश्यां नृपोत्तम ॥

दीपमारोपयेद्यश्च हृषीकेशाग्रतो नृप ॥ ६३ ॥

यथायथा प्रकाशेत पापं जन्मांतरार्जितम् ॥

तथातथा व्रजेन्नाशं तस्य कायादशेषतः ॥ ६४ ॥

पंचामृतेन यः पूजां हृषीकेशे करिष्यति ॥

दध्ना क्षीरेण वा यस्तु न स भूयोऽभिजायते ॥ ६५ ॥

तस्मात्सर्वप्रयत्नेन हृषीकेशं समर्चयेत् ॥

संसारबंधतो राजन्मुक्तिमाप्नोति मानवः ॥ ६६ ॥

हृषीकेशे विशेषेण कर्तव्यं पूजनं सदा ॥ ६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डे हृषीकेशमाहात्म्य वर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १४



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ देवं सिद्धेश्वरं परम् ॥

सिद्धिदं प्राणिनां सम्यक्सिद्धेन स्थापितं पुरा ॥ १ ॥

तत्र विश्वावसुर्नाम सिद्धस्तेपे महातपः ॥

बहुवर्षाणि संस्थाप्य शिवं भक्तिपरायणः ॥ २ ॥

जितक्रोधो जितमदो जितसर्वेंद्रियक्रियः ॥

तावद्वर्षसहस्रांते भगवान्वृषभध्वजः ॥

तुतोष नृपतेस्तस्य स्वयं दर्शनमाययौ ॥ ३ ॥

अब्रवीत्तं महादेवो वरदोस्मीति पार्थिव॥ ४ ॥

॥ श्रीभगवानुवाच ॥ ॥

वरं वरय भद्रं ते यत्ते मनसि वर्त्तते ॥

दास्यामि ते प्रसन्नोऽहं यद्यपि स्यात्सुदुर्लभम् ॥ ५ ॥ ॥

॥ विश्वावसुरुवाच ॥ ॥

एतल्लिंगं सुरश्रेष्ठ ध्यात्वा मनसि निश्चयम् ॥

सर्वान्कामानवाप्नोतु प्रसादात्तव शंकर ॥ ६॥

॥ पुलस्त्य उवाच ॥ ॥

एवमस्त्विति स प्रोच्य तत्रैवांतरधीयत ॥

सिद्धेश्वरं ततो गत्वा सिद्धिं याति सहस्रशः ॥ ७ ॥

प्रभावात्तस्य लिंगस्य कामानिष्टानवाप्नुयुः ॥

ततो धर्मक्रियाः सर्वा गता नाशं धरातले ॥ ८ ॥

न कश्चिद्यजते यज्ञैर्न दानानि प्रयच्छति ॥

सिद्धेश्वरप्रसादेन सिद्धिं यांति नरा भुवि ॥ ९ ॥

उच्छिन्नेषु च यज्ञेषु दानेषु नृपसत्तम ॥

इन्द्राद्यास्त्रिदशाः सर्वे परं दुःखमुपागताः ॥ 7.3.14.१० ॥

ज्ञात्वा यज्ञविघातं च तद्विघाताय वासवः ॥
वज्रेणाच्छादयामास यथा सिद्धिर्न जायते ॥ ११ ॥
तथापि संनिधौ तस्य सिद्धेशस्य नृपोत्तम ॥
कर्मणो जायते सिद्धिः पातकस्य परिक्षयः ॥ १२ ॥
यस्तु माघचतुर्द्दश्यां सोमवारे नृपोत्तम ॥
शुक्लायां वाथ कृष्णायां स्पृष्ट्वा सिद्धो भवेन्नरः ॥ १३ ॥
अद्यापि जायते सिद्धिः सत्यमेतन्मयोदितम्॥
तस्मात्सिद्धेश्वरं गत्वा नत्वा यास्यति सद्गतिम् ॥ १४ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे सिद्धेश्वरमाहात्म्यवर्णनंनाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १५



॥ पुलस्त्य उवाच ॥ ॥

ततः शुक्रेश्वरं गच्छेच्छुक्रेण स्थापितं पुरा ॥

यं दृष्ट्वा मानवः सद्यः सर्वपापैः प्रमुच्यते ॥ १ ॥

दृष्ट्वा दैत्यान्पुरा देवैर्निर्जितान्नृपसत्तम ॥

चिन्तयामास मेधावी भार्गवस्तान्प्रति द्विजः ॥ २ ॥

कथं दैत्याः सुराञ्जित्वा प्राप्स्यंति च महायशः ॥

आराध्य शंकरं सिद्धिं गच्छामि मनसेप्सितम् ॥ ३ ॥

एवं स निश्चयं कृत्वा गतोऽर्बुदमथाचलम् ॥

भूमे विवरमासाद्य तपस्तेपे सुदारुणम् ॥ ४ ॥

शिवलिंगं प्रतिष्ठाप्य धूपगंधानुलेपनैः ॥

अनिशं पूजयामास श्रद्धया परयान्वितः ॥ ५ ॥

ततो वर्षसहस्रांते तुतोष भगवाञ्छिवः ॥

तस्य संदर्शनं दत्वा वाक्यमेतदुवाच ह ॥ ६ ॥

॥ श्रीमहादेव उवाच ॥ ॥

परितुष्टोऽस्मि ते विप्र भक्त्या तव द्विजोत्तम ॥

वरं वरय भद्रं ते यद्यपि स्यात्सुदुर्लभम् ॥ ७ ॥

॥ शुक्र उवाच ॥ ॥

यदि तुष्टो महादेव विद्यां देहि महेश्वर ॥

यया जीवंति संप्राप्ता मृत्युं संख्येपि जंतवः ॥ ८ ॥

॥ पुलस्त्य उवाच ॥ ॥

प्रदाय वै शिवस्तस्मै तां विद्यां नृपसत्तम ॥

अब्रवीच्च पुनः शुक्रं वरमन्यं वृणीष्व मे ॥ ९ ॥

॥ शुक्र उवाच ॥ ॥

एतत्कार्तिकमासस्य शुक्लाष्टम्यां तु यः स्पृशेत् ॥

ततो लिंगं पूजयेच्च यः पुमाञ्छ्रद्धयान्वितः॥ 7.3.15.१० ॥

अल्पमृत्युभयं तस्य मा भूत्तव प्रसादतः ॥

इष्टान्कामानवाप्नोतु इहलोके परत्र च ॥ ११ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमस्त्विवति स प्रोच्य तत्रैवांतरधीयत ॥

शुक्रोपि दानवान्संख्ये हतान्देवैरनेकशः ॥१२॥

विद्यायाश्च प्रभावेन जीवयामास तान्मुनिः ॥

तस्याग्रेऽस्मिन्महाकुण्डं निर्मलं पापनाशनम् ॥ १३ ॥

तत्र स्नातो नरः सम्यक्पातकैश्च प्रमुच्यते ॥

तत्र श्राद्धेन राजेंद्र तुष्टा यांति पितामहाः ॥ १४ ॥

तर्पिताः सलिलेनैव किं पुनः पिंडदानतः ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥ १५ ॥

इति श्रीस्कांदे महापुराणएकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे तृतीयेऽर्बुदखण्डे शुक्रेश्वरमाहात्म्यवर्णनंनाम पंचदशोऽध्यायः ॥ १५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १६

https://sa.wikisource.org/s/gl3
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं पापप्रणाशनम्॥

मणिकर्णिकसंज्ञं तु सर्वलोकेषु विश्रुतम्॥१॥

यत्र सिद्धिं गता राजन्वालखिल्या महर्षयः॥

तैस्तत्र निर्मितं कुण्डं सुरम्यं गिरि गह्वरे ॥ २ ॥

तेषां तत्रोपविष्टानां मुनीनां भावितात्मनाम् ॥

महाश्चर्यमभूत्तत्र तत्त्वं शृणु नराधिप ॥ ३ ॥

किरातवनिता काचिन्नाम्ना च मणिकर्णिका ॥

अतिकृष्णा विरूपाक्षी कराला भीषणाकृतिः ॥ ४ ॥

तृषार्त्ता तत्र संप्राप्ता मध्यंदिनगते रवौ ॥

ग्रस्ते च राहुणा सूर्ये प्रविष्टा सलिले तु सा ॥ ५ ॥

एतस्मिन्नेव काले तु दिव्यरूपवपुर्धरा ॥

मुनीनां पश्यतां चैव विनिष्क्रांता सुमध्यमा ॥ ६ ॥

अथ तस्याः पतिः प्राप्तस्तदन्वेषणतत्परः ॥

पप्रच्छ तां वरारोहां पत्न्या दुःखेन दुःखितः ॥ ७ ॥

मम भार्यात्र संप्राप्ता यदि दृष्टा सुमध्यमे ॥

शीघ्रं वद वरारोहे बालकोऽयं तदुद्भवः ॥ ८ ॥

तृषार्त्तश्च क्षुधाविष्टो रुदते च मुहुर्मुहुः ॥

दृष्टा चेत्कथ्यतां सुभ्रूर्विनाऽयं तां मरिष्यति ॥ ९ ॥

॥ स्त्र्युवाच ॥ ॥

साऽहं ते दयिता कान्त तीर्थस्यास्य प्रभावतः ॥

दिव्यरूपमिदं प्राप्ता देवैरपि सुदुर्लभम् ॥ 7.3.16.१० ॥

त्वं चापि सलिले ह्यस्मिन्कुरु स्नानं त्वरान्वितः ॥

प्राप्स्यसि त्वं परं रूपं यथा प्राप्तं मयाऽनघ ॥ ११ ॥

अथासौ सह पुत्रेण प्रविष्टस्तत्र निर्झरे ॥
विमुक्ते भास्करे राजन्विरूपश्चाभवत्पुनः ॥ १२ ॥
दुःखेन मृत्युमापन्नस्तस्मिन्नेव जलाशये ॥
अथ सा भर्तृशोकाच्च मरणे कृतनिश्चया ॥ १३ ॥
चितिं कृत्वा समं तेन ज्वालयामास पावकम् ॥
अथ ते मुनयो दृष्ट्वा तथाशीलां शुभांगनाम् ॥ १४ ॥
कृपया परयाविष्टास्तामूचुर्विस्मयान्विताः ॥
सर्वे तस्याश्च संदृष्ट्वा साहसं च नृपोत्तम ॥ १५ ॥
॥ ऋषय ऊचुः ॥ ॥
दिव्यरूपं त्वया प्राप्तं देवैरपि सुदुर्लभम् ॥
कस्मादेनं सुपाप्मानमनुगच्छसि भामिनि ॥ १६ ॥
॥ स्त्र्युवाच ॥ ॥
पतिव्रताहं विप्रेन्द्राः सदा भर्तृपरायणा ॥
किं रूपेण करिष्यामि विना पत्या निजेन च ॥ १७ ॥
विरूपो वा सुरूपो वा दरिद्रो वा धनाधिपः ॥
स्त्रीणामेकः पतिर्भर्त्ता गतिर्नान्या जगत्त्रये ॥ १८ ॥
बालकोऽयं मुनिश्रेष्ठा भवच्छरणमागतः ॥
अहं कान्तेन संयुक्ता प्रविशामि हुताशनम् ॥ १९ ॥
॥ पुलस्त्य उवाच ॥ ॥
अथ ते मुनयः सर्वे ज्ञात्वा तस्याः सुनिश्चयम् ॥
कृपया परयाविष्टाः संवीक्ष्य च परस्परम् ॥ 7.3.16.२० ॥
ततो जीवापयामासुस्तत्पतिं ते मुनीश्वराः ॥
सद्रूपेण समायुक्तं दिव्य लक्षणलक्षितम् ॥ २१ ॥
एतस्मिन्नेव कालं तु विमानं मनसेप्सितम् ॥
देवकन्यासमाकीर्णं सद्यस्तत्र समागतम् ॥ २२ ॥
अथ तौ दंपती तेषां मुनीनां भावितात्मनाम् ॥
पुरतः प्रणिपत्याथ प्रस्थितौ त्रिदिवं प्रति ॥ २३ ॥
अथ तैर्मुनिभिः प्रोक्ता सा नारी मणिकर्णिका ॥

वरं वरय कल्याणि सर्वे तुष्टा वयं तव ॥ २४ ॥

पतिव्रतत्वेन तुष्टाः सत्येन च विशेषतः ॥

नास्माकं दर्शनं व्यर्थं जायते च कथंचन ॥ २५ ॥

॥ मणिकर्णिकोवाच ॥ ॥

यदि मां मुनयस्तुष्टाः प्रयच्छथ वरं मुदा ॥

यदत्रास्ति महालिंगं मन्नाम्ना तद्भविष्यति ॥ २६ ॥

एतदेव ममाभीष्टं नान्यदस्ति प्रयोजनम्॥

सर्वेषां च प्रसादेन स्वर्गं गच्छामि सांप्रतम् ॥ २७ ॥

॥ ऋषय ऊचुः ॥ ॥

एवं भवतु ते ख्यातिस्तीर्थलिंगे वरानने ॥

तव नामान्वितं जातं तीर्थं वै मणिकर्णिका ॥ २८ ॥

॥ पुलस्त्य उवाच ॥ ॥

भर्त्रा सह दिवं प्राप्ता पुत्रेणैव समन्विता ॥

वालखिल्यास्तपोनिष्ठा विशेषात्तत्र संस्थिताः ॥ २९ ॥

तत्र सूर्यग्रहे प्राप्ते स्नानदानादिकाः क्रियाः ॥

यः करोति फलं तस्य कुरुक्षेत्र समं भवेत् ॥ 7.3.16.३० ॥

यं यं काममभिध्याय स्नानं तत्र करोति यः ॥

तं तं प्राप्नोति राजेन्द्र सम्यग्ध्यानसमन्वितः ॥ ३१ ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥

तीर्थे दानं यथाशक्त्या देवर्षिपितृतर्पणम् ॥ ३२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डे मणिकर्णिकेश्वरमाहात्म्यवर्णनंनाम षोडशोऽध्यायः ॥ १६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १७

https://sa.wikisource.org/s/gl4
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

पंगु तीर्थं ततो गच्छेत्सर्वपातकनाशनम् ॥

यत्र पूर्वं तपस्तप्तं पंगुना ब्राह्मणेन च ॥ १ ॥

पंगुनामा द्विजः पूर्वं च्यवनस्यान्वयेऽभवत् ॥

अशक्तश्चलितुं भूमौ पंगुभावान्नृपोत्तम ॥ २ ॥

गृहकृत्यनियुक्तोऽसावेकदा बान्धवैर्नृप ॥

पंगुर्गंतुं न शक्तोऽसौ परं दुःखमवाप्तवान् ॥ ३ ॥

अथासौ तैः परित्यक्तो गत्वार्बुदमथाचलम् ॥

एकं सरः समासाद्य तपस्तेपे सुदारुणम् ॥ ४ ॥

लिंगं संस्थाप्य तत्रैव पूजयामास तं विभुम् ॥

गन्धपुष्पादिनैवेद्यैः सम्यक्छ्रद्धासमन्वितः ॥ ५ ॥

शिवभक्तिपरो जातो वायुभक्षो बभूव ह ॥

जपहोमरतो नित्यं पंगुनामा द्विजोत्तमः ॥ ६ ॥

ततस्तुष्टो महादेवो ब्राह्मणं नृपसत्तम ॥

पंगुं प्रति महाराज वाक्यमेतदुवाच ह ॥ ७ ॥

॥ ईश्वर उवाच ॥ ॥

पंगो तुष्टो महादेवो वरं वरय सुव्रत ॥

तव दास्याम्यहं सर्वं यद्यपि स्यात्सुदुर्लभम् ॥ ८ ॥

॥ पंगुरुवाच ॥ ॥

नाम्ना मे ख्यातिमायातु तीर्थमेतत्सुरेश्वर ॥

पंगुभावोऽत्र मे यातु प्रसादात्तव शंकर ॥ ९ ॥

तवास्तु सततं चात्र सांनिध्यं सह भार्यया ॥

एवमुक्तः स तेनाथ विप्रं प्रति वचोब्रवीत् ॥ 7.3.17.१० ॥

॥ ईश्वर उवाच ॥ ॥

नाम्ना तव द्विजश्रेष्ठ तीर्थमेतद्भविष्यति ॥

ख्यातिं तपःप्रभावेन तीर्थं यास्यति सत्तम ॥ ११ ॥

चैत्रशुक्लचतुर्द्दश्यां सांनिध्यं मे भवेत्तथा ॥ १२ ॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

स्नानमात्रेण विप्रोऽसौ दिव्यरूपमवाप ह ॥

तत्र तस्थौ महादेवो गौर्या सह महेश्वरः ॥ १३ ॥

तस्मिन्दिने नृपश्रेष्ठ स्नानं तत्र समाचरेत् ॥

स पंगुत्वाद्विनिर्मुक्तो दिव्यरूपमवाप्नुयात् ॥ १४ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे पंगुतीर्थमाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १८

https://sa.wikisource.org/s/gl5
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ ॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ यमतीर्थमनुत्तमम् ॥

मोचकं नरकेभ्यश्च प्राणिनां पापनाशनम् ॥ १ ॥

पुरा चित्रांगदो नाम राजा परमलोभवान् ॥

न तेन सुकृतं किंचित्कृतं पार्थिवसत्तम ॥ २ ॥

अतीव निष्ठुरो दुष्टो देवब्राह्मणपीडकः ॥

परदारहरो नित्यं परवित्तहरस्तथा ॥ ३ ॥

सत्यशौचविहीनस्तु मायामत्सरसंयुतः ॥

स कदाचिन्मृगयासक्त आरूढोऽर्बुदपर्वते ॥ ४ ॥

अटनात्स परिश्रांतः क्षुत्पिपासासमाकुलः ॥

तेन तत्र ह्रदः प्राप्तः स्वच्छोदकप्रपूरितः ॥ ५८ ॥

पद्मिनीभिः समाकीर्णो ग्राहनक्रझषाकुलः ॥

नानापक्षिसमायुक्तो मनोहारी सुविस्तरः ॥ ६ ॥

तृषार्तः संप्रविष्टः स तस्मिन्नेव जलाशये ॥

ग्राहेण तत्क्षणाद्धृत्वा भक्षितो नृपसत्तम ॥ ७ ॥

तस्यार्थे नरका रौद्रा निर्मिताश्च यमेन च ॥

यमदूतैस्ततः क्षिप्तः स नीत्वा पापकृत्तमः ॥ ८ ॥

तस्य स्पर्शेन ते सर्वे नरकस्था सुखं गताः ॥

ते दूता धर्मराजाय वृत्तांतं नरको द्भवम् ॥

आचख्युर्विस्मयाविष्टा नरकस्थानां सुखोद्भवम् ॥ ९ ॥

तदा वैवस्वतः प्राह भूमावस्त्यर्बुदाचलः ॥

तत्र मेऽतिप्रियं तीर्थं यत्र तप्तं मया तपः ॥ 7.3.18.१० ॥

तत्रासौ मृत्युमापन्नो भात्यदस्त्विह कारणम् ॥

तैरुक्तं सत्यमेतद्धि मृतोऽसावर्बुदाचले ॥

ग्राहेण स धृतस्तत्र मृत्युं प्राप्तो नृपाधमः ॥११॥ ॥

॥ यम उवाच ॥ ॥

मुच्यतामाशु तेनायं नानेयाश्चापरे जनाः ॥

ये मृता मम तीर्थे वै सर्वपातकनाशने ॥ १२ ॥

ततस्तैः किंकरैर्मुक्तो यमवाक्यान्नृपोत्तम ॥

त्रिविष्टपं मुदा प्राप्तः सेव्यमानोऽप्सरोगणैः॥ १३ ॥

यस्तु भक्तिसमायुक्तः स्नानं तत्र समाचरेत् ॥

स याति परमं स्थानं जरामरणवर्जितम् ॥ १४ ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥

चैत्रशुक्लत्रयोदश्यां यत्र सिद्धिं गतो यमः ॥ १५ ॥

तस्मिन्नेव नरः सम्यक्छ्राद्धकृत्यं समाचरेत् ॥

आकल्पं पितरस्तस्य स्वर्गे तिष्ठंति पार्थिव ॥१६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खंडे तृतीयेऽर्बुदखण्डे यमतीर्थमाहात्म्यवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः १९



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं पापप्रणाशनम् ॥

वाराहस्य हरेरिष्टं सदा वाससुखप्रदम् ॥ १ ॥

वाराहेणावतारेण पृथ्वी तत्र समुद्धृता ॥

हरिणोक्ता स्थिरा तिष्ठ न भेतव्यं कदाचन ॥ २ ॥

अहं चेतो गमिष्यामि वैकुण्ठे च पुनः शुभे ॥

वरं वरय कल्याणि यद्यदिष्टं सुदुर्लभम् ॥ ३ ॥

॥ पृथिव्युवाच ॥ ॥

यदि देयो वरो मह्यं शंखचक्रगदाधर ॥

अनेन वपुषा तिष्ठ ह्यस्मिंस्तीर्थे सदा हरे ॥ ४ ॥

॥ हरिरुवाच ॥ ॥

अनेन वपुषा देवि पर्वतेऽर्बुदसंज्ञके ॥

अहं स्थास्यामि ते वाक्यात्सदा लोक हिते रतः ॥ ५ ॥

ममाग्रे यो ह्रदः पुण्यः सुनिर्मलजलान्वितः ॥

माघमासे सिते पक्ष एकादश्यां समाहितः ॥ ६ ॥

तत्र स्नात्वा नरो भक्त्या मुच्यते ब्रह्महत्यया ॥

तत्र श्राद्धं करिष्यंति मनुष्याः श्रद्धयान्विताः ॥ ७ ॥

पितॄणां जायते तृप्तिर्यावदाभूतसंप्लवम् ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥ ८ ॥

॥ पुलस्त्य उवाच ॥ ॥

इत्युक्त्वांतर्दधे राजन्गोविंदो गरुडध्वजः ॥

तस्मिन्दिने नृपश्रेष्ठ स्नात्वा व्रतं समाचरेत् ॥९॥

तर्पणं पिंडदानं च यः कुर्याद्भक्तितत्परः ॥

स याति विष्णुसालोक्यं पूर्वजैः सह पार्थिव ॥ 7.3.19.१० ॥

तत्र दानं प्रशंसंति गत्वा ब्राह्मणसत्तमे ॥
अस्मिंस्तीर्थे नृपश्रेष्ठ गोदानं च करोति यः ॥ ११ ॥
रोमसंख्यानि वर्षाणि स्वर्गे तिष्ठति मानवः ॥
तस्मात्सर्वात्मना राजन्गोदानं च समाचरेत् ॥ १२ ॥
एकादश्यां विशेषेण कर्तव्यं स्नानमुत्तमम् ॥
दानं कुर्याद्यथाशक्त्या स याति परमां गतिम् ॥ १३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे वाराहतीर्थमाहात्म्यवर्णनंनामैकोनविंशोध्यायः ॥ १९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २०



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेत चंद्रेशं प्रभासं नृपसत्तम ॥

प्रभा तत्र पुरा प्राप्ता चंद्रेण सुमहात्मना ॥ १ ॥

दक्षस्य कन्यका राजन्सप्तविंशतिसंख्यया ॥

ऊढाश्चंद्रेण ताः सर्वा अश्विनीप्रमुखाः पुरा ॥ २ ॥

तासां मध्ये च रोहिण्या सह रेमे स नित्यदा ॥

त्यक्ताः सर्वाश्च चंद्रेण दक्षकन्याः सुदुःखिताः ॥

गत्वा स्वपितरं नत्वा प्राहुरस्राविलेक्षणाः ॥ ३ ॥

वयं त्यक्ताः प्रजानाथ निर्दोषाः पतिना ततः ॥

शरणं त्वामनुप्राप्ता दुःखेन महतान्विताः ॥ ४ ॥

गतिर्भव सुरश्रेष्ठ सर्वेषां त्वं हितं कुरु ॥

अस्माकमुपदिश्यैनं चंद्रं च रोहिणीरतम् ॥ ५ ॥

॥ पुलस्त्य उवाच ॥ ॥

स तासां वचनं श्रुत्वा गतो यत्र निशाकरः ॥

अब्रवीच्च समं पश्य सर्वासु तनयासु मे ॥ ६ ॥

अथ व्रीडासमायुक्तश्चंद्रस्तं प्रत्यभाषत ॥

तव वाक्यं करिष्यामि दक्ष गच्छ नमोस्तु ते ॥ ७ ॥

गते दक्षे ततो भूयश्चंद्रमा रोहिणीरतः ॥

त्यक्त्वा च कन्यकाः सर्वाः प्रजापतिसमुद्भवाः ॥ ८ ॥

अथ गत्वा पुनः सर्वा दक्षमूचुः सुदुःखिताः ॥

न कृतं तव वाक्यं वै चंद्रेणैव दुरात्मना ॥ ९ ॥

दौर्भाग्यदुःखसंतप्ता मरिष्याम न संशयः ॥

अनेन जीवितेनापि मरणं निश्चयं भवेत् ॥ 7.3.20.१० ॥

॥ पुलस्त्य उवाच ॥ ॥

अथ रोषसमायुक्तो दक्षो गत्वाऽब्रवीद्विधुम् ॥
मम वाक्यं त्वया चंद्र यस्मात्पाप कृतं न हि ॥ ११ ॥
क्षयमेष्यसि तस्मात्त्वं यक्ष्मणा नास्ति संशयः॥
एवं दत्त्वा ततः शापं गतो दक्षः स्वमालयम् ॥ १२ ॥
यक्ष्मणा व्यापितश्चंद्रः क्षयं याति दिनेदिने ॥
क्षीणो द्युतिविहीनस्तु चिंतयामास चंद्रमाः ॥ १३ ॥
कि कर्त्तव्यं मया तत्र ह्यस्मिञ्छापे सुदारुणे ॥
अथ किं पूजयिष्यामि सर्वकामप्रदं शिवम् ॥ १४ ॥
स एवं निश्चयं कृत्वा गतोर्बुदमथाचलम् ॥
तपस्तेपे जितक्रोधो जपहोमपरायणः ॥ १५ ॥
तस्मै तुष्टो महादेवो वर्षाणामयुते गते ॥
अब्रवीद्वरदोऽस्मीति ततोऽस्मै दर्शनं ददौ ॥ १६ ॥
॥ ईश्वर उवाच ॥ ॥
वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥
तव दास्याम्यहं चंद्र यद्यपि स्यात्सुदुर्ल्लभम्॥ १७ ॥
॥ चंद्र उवाच॥ ॥
व्याधिक्षयं सुरश्रेष्ठ कुरु मे त्रिपुरांतक ॥
यक्ष्मणा व्यापितो देहो ममायं च जगत्पते ॥ १८ ॥
॥ ईश्वर उवाच ॥ ॥
दक्षशापेन ते चंद्र यक्ष्मा काये व्यवस्थितः ॥
न शक्तो ह्यन्यथा कर्तुं शापस्तस्य महात्मनः ॥१९॥
तस्मात्त्वं तस्य ताः सर्वाः कन्यका मम वाक्यतः ॥
निशाकर समं पश्य तव व्याधिर्गमिष्यति ॥ 7.3.20.२० ॥
कृष्णे क्षयश्च ते चंद्र शुक्ले वृद्धिर्भविष्यति ॥
वरं वरय भद्रं ते अन्यमिष्टं सुदुर्ल्लभम्॥२१ ॥
॥ चंद्र उवाच ॥ ॥
चंद्रग्रहे नरो योऽत्र सोमवारे च शंकर ॥
भक्त्या स्नानं करोत्येव स यातु परमां गतिम् ॥ २२ ॥

पिण्डदानेन देवेश स्वर्गं गच्छंतु पूर्वजाः ॥

प्रसादात्तव देवेश तीर्थं भवतु मुक्तिदम् ॥ २३ ॥

॥ ईश्वर उवाच ॥ ॥

भविष्यंति नरोऽत्रैव विपाप्मानो निशाकर ॥

यस्मात्प्रभा त्वया प्राप्ता तीर्थेऽस्मिन्विमलोदके॥ २४ ॥

प्रभासतीर्थं विख्यातं तस्मादेतद्भविष्यति॥

यत्र सोमग्रहे प्राप्ते सोमवारे विशेषतः ॥ २५ ॥

करिष्यंति नराः स्नानं ते यास्यंति परां गतिम् ॥

येऽत्र श्राद्धं करिष्यंति पिंडदानं तथा नराः ॥ ॥ २६ ॥

गयाश्राद्धसमं पुण्यं तेषां चंद्र भविष्यति ॥

तथा दानं प्रकर्तव्यं सोम लोकैर्ग्रहे तव ॥ २७ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा विरूपाक्षस्तत्रैवांतरधीयत ॥

चन्द्रोऽपि बुभुजे सर्वाः पत्नीश्च दक्षसंभवाः ॥ २८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे चंद्रप्रभासतीर्थमाहात्म्यवर्णनंनाम विंशोऽध्यायः ॥ २० ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २१



॥ पुलस्त्य उवाच॥ ॥

ततो गच्छेन्नृपश्रेष्ठ पिण्डोदकमनुत्तमम् ॥

तीर्थं यत्र तपस्तप्तं पिण्डोदकद्विजातिना ॥ १ ॥

पुरा पिण्डोदकोनाम ब्राह्मणोऽभून्महामते ॥

मन्दप्रज्ञोऽल्पमेधावी सोपाध्यायेन पाठितः ॥ २ ॥

अशक्तोऽध्ययनं कर्तुं जाड्यभावान्महीपते ॥

स वैराग्यं परं गत्वा संप्राप्तो गिरिगह्वरे ॥ ३ ॥

एतस्मिन्नेव कालेतु तत्रैव च सरस्वती॥

वीणाविनोदसंयुक्ता विविक्ते तमुपस्थिता ॥ ४ ॥

तं दृष्ट्वा ब्राह्मणं खिन्नं वैराग्येण समन्वितम् ॥

कृपाविष्टा महादेवी वाक्यमेतदुवाच ह ॥ ५ ॥

॥ सरस्वत्युवाच ॥ ॥

कस्मात्त्वं खिद्यसे विप्र विरक्त इव भाससे ॥

कस्मान्न हृष्यसि हृदा कस्मादत्र त्वमागतः ॥

वद शीघ्रं महाभाग तवांतिके वसाम्यहम् ॥ ६ ॥

॥ पिण्डोदक उवाच ॥ ॥

अहं वैराग्यमापन्न उपाध्यायतिरस्कृतः ॥

ज्ञानहीनो महाभागे मृत्युं वांछामि सांप्रतम् ॥ ७ ॥

न मे सरस्वती देवी जिह्वाग्रे परिवर्तते ॥

कारणं नान्यदस्तीह मृत्योर्मम वरानने ॥ ॥

दृष्टोऽकस्मात्त्वया चाहं ततो यास्यामि चान्यतः ॥

मरणं हि मम श्रेयो मूकभावान्न जीवितम् ॥ ९ ॥

॥ सरस्वत्युवाच ॥. ॥

अहं सरस्वती देवी सदास्मिन्वरपर्वते॥

निशासुखे त्रयोदश्यां करोमि वसतिं द्विज ॥

तस्मात्त्वं प्रार्थय वरं यदभीष्टं सुदुर्लभम् ॥ 7.3.21.१० ॥

॥ पिण्डोदक उवाच ॥ ॥

प्रसादात्तव वै वाणि सर्वज्ञत्वं ममेप्सितम् ॥

एतत्तीर्थं तु मन्नाम्ना ख्यातिं यातु शुचिस्मिते ॥ ११ ॥

॥ सरस्वत्युवाच ॥ ॥

अद्यप्रभृति सर्वज्ञो ह्यत्र लोके भविष्यसि ॥

नाम्ना तव तथा तीर्थमेतत्ख्यातिं प्रयास्यति ॥१२॥

निशामुखे त्रयोदश्यां योऽत्र स्नानं करिष्यति ॥

भविष्यति स सर्वज्ञो यद्यपि स्यात्सुमन्दधीः ॥ १३ ॥

अत्र मे सततं वासो भविष्यति द्विजोत्तम ॥

यस्मात्तस्मात्सदा स्नानं कर्तव्यं सुसमाहितैः ॥ १४ ॥

एवमुक्त्वा ततो देवी तत्रैवांतरधीयत ॥

पिण्डोदको हि सर्वज्ञो भूत्वाथ स्वगृहं ययौ ॥

व्यस्मापयज्जनान्सर्वांस्तत्तीर्थस्य समाश्रयात् ॥ १५ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे पिण्डोदकतीर्थमाहात्म्यवर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥

---

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २२

https://sa.wikisource.org/s/gl9



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ श्रीमातां देववंदिताम् ॥

सर्वकामप्रदां नृणामिहलोके परत्र च ॥१॥

या च सर्वमयी शक्तिर्यया व्याप्तमिदं जगत् ॥

सा तस्मिन्पर्वते साक्षात्स्वयं वासमरोचयत् ॥२॥

पुरा देवयुगे राजा कलिंगोनाम दानवः ॥

जरामरणहीनोसौ देवानां च भयंकरः॥३॥

तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम्॥

बलप्रभावतः स्वर्गो जितस्तेन सुराधिपः ॥

ब्रह्मलोकमनुप्राप्तो देवैः सर्वैः समन्वितः ॥४॥

तेन दैत्येन सर्वेऽपि त्रासिताः सुरमानवाः ॥

कलिंगोनाम दैत्यः स स्वयमिन्द्रो बभूव ह ॥ ५ ॥

वसवो मरुतः साध्या विश्वेदेवाः सुरर्षयः ॥

तेन सर्वे कृता दैत्या यथायोग्यं नराधिप ॥ ६ ॥

यज्ञभागान्स्वयं सर्वे बुभुजुस्ते च दानवाः ॥

तपोऽर्थे च ततो देवा गताः सर्वेऽर्बुदाचलम् ॥ ७ ॥

अद्यापि देवताखातं त्रैलोक्ये ख्यातिमागतम् ॥

तत्र व्रतपराः सर्वे पत्रमूलफलाशिनः ॥ ८ ॥

अव्यक्ताः परमत्रासाद्ध्यायंतस्ते च संस्थिताः ॥

पंचाग्निसाधकाः केचित्तत्र व्रतपरायणाः ॥ ९ ॥

एकाहारा निराहारा वायुभक्षास्तथा परे ॥

अन्ये मासोपवासाश्च चान्द्रायणपरायणाः ॥ 7.3.22.१० ॥

कृच्छ्रसांतपने निष्ठा महापाराकिणः परे ॥

अंबुभक्षा वायुभक्षाः फेनपाश्चोष्मपाः परे ॥ ११ ॥

जपहोमपराश्चान्ये ध्यानासक्तास्तथा परे ॥

बलिनैवद्यदानैश्च गंधधूपैर्नराधिप ॥ १२ ॥

पूजयंतः परां शक्तिं देवीं स्वकार्यहेतवे ॥

एवं तेषां व्रतस्थानां तपसा भावितात्मनाम् ॥

विमुक्तिरभवद्राजन्सर्वेषां कर्मबन्धनात् ॥ १३ ॥

ततः पूर्णे सहस्रांते वर्षाणां नृपसत्तम॥

देवी प्रत्यक्षतां प्राप्ता कन्यकारूपधारिणी॥ १४॥

पूर्वं जाता महाराज धूममूर्तिर्भयावहा॥

ततो ज्वाला ततः कन्या शुक्लवासोऽनुलेपना॥

दृष्ट्वा तां तुष्टुवुर्देवाः कृतांजलिपुटास्ततः॥ १५॥

नमोऽस्तु सर्वगे देवि नमस्ते सर्वपूजिते॥

कामगेऽचिन्त्ये नमस्ते त्रिदशाश्रये ॥ १६ ॥

नमस्ते परमादेवि ब्रह्मयोने नमोनमः ॥

अर्धमात्रेक्षरे चैव तस्यार्धार्धे नमोनमः ॥ १७ ॥

नमस्ते पद्मपत्राक्षि विश्वमातर्नमोनमः ॥

नमस्ते वरदे देवि रजःसत्त्वतमोमयि ॥ १८ ॥

स्वस्वरूपस्थिते देवि त्वं च संसारलक्षणम् ॥

त्वं बुद्धिस्त्वं धृतिः क्षांतिस्त्वं स्वाहा त्वं स्वधा क्षमा ॥ १९ ॥

त्वं वृद्धिस्त्वं गतिः कर्त्री शची लक्ष्मीश्च पार्वती ॥

सावित्री त्वं च गायत्री अजेया पापनाशिनी ॥7.3.22.२०॥

यच्चान्यदत्र देवेशि त्रैलोक्येऽस्तीतिसंज्ञितम् ॥

तद्रूपं तावकं देवि पर्वतेषु च संस्थितम् ॥ २१ ॥

वह्निना च यथा काष्ठं तंतुना च यथा पटः ॥

तथा त्वया जगद्व्याप्तं गुप्ता त्वं सर्वतः स्थिता ॥ २२ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं स्तुता जगन्माता तानुवाच सुरोत्तमान् ॥

वरो मे याच्यतां शीघ्रमभीष्टः सुरसत्तमाः ॥ २३ ॥

किमत्र गुप्तभावेन तिष्ठथ श्वभ्रमध्यगाः ॥

मद्भक्तानां भयं नास्ति त्रैलोक्येपि चराचरे ॥ २४ ॥ ॥

॥ देवा ऊचुः ॥

कलिंगेन वयं देवि निरस्ताः संगरे मुहुः ॥

तेन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २५ ॥

यज्ञभागो हृतोऽस्माकं दैत्यानां स प्रकल्पितः ॥

तेन स्वर्गः समाक्रान्तः सुराः सर्वे निराकृताः ॥ २६ ॥

हत्वा दैत्यान्यथा भूयः शक्रः स्वपदमाप्नुयात् ॥

तथा कुरु महाभागे वर एषोऽस्मदीप्सितः ॥ २७ ॥

॥ देव्युवाच ॥ ॥

यथा यूयं मया सृष्टास्तथैवायं महासुरः ॥

विशेषो नास्ति मे कश्चिदुभयोः सुरसत्तमाः ॥ २८ ॥

तस्मात्तान्वारयिष्यामि शक्राद्यांस्त्रिदिवात्पुनः ॥

एवमुक्त्वा वरारोहा प्रेषयामास पार्थिव ॥ २९ ॥

दूतं कलिंगदैत्याय त्यज त्वं त्रिदिवं द्रुतम् ॥

स गत्वा बाष्कलिं दैत्यं सामपूर्वं वचोऽब्रवीत् ॥ 7.3.22.३० ॥

॥ दूत उवाच ॥ ॥

या सा सर्वगता देवी शक्तिरूपा शुचि स्मिता ॥

श्रीमाता जगतां माता देवैराराधिता परा ॥

तेषां तुष्टा च देवी त्वामिदं वचनमब्रवीत् ॥ ३१ ॥

स्वस्थानं गच्छ शीघ्रं त्वं शक्रो यातु त्रिविष्टपम् ॥

मद्वाक्याद्दानवश्रेष्ठ देवत्वं न भवेत्तव ॥ ३२ ॥

॥ पुलस्त्य उवाच ॥ ॥

स दूतवचनं श्रुत्वा दानवो मदगर्वितः ॥ ३४ ॥

अहं लोकेश्वरो मत्वा सगर्वमिदमब्रवीत् ॥ ३३ ॥

॥ बाष्कलिरुवाच ॥ ॥

का श्रीमातेति के देवा नास्मात्स्वर्गं त्यजाम्यहम् ॥

न तां जानामि तांश्चैव गत्वा ब्रूहि ममाज्ञया ॥ ३४ ॥

न भवद्भ्यस्त्वहं स्वर्गं प्रयच्छामि कथंचन ॥

दूतोऽवध्यो भवेद्राज्ञामपि वैरे सुदारुणे ॥

एतस्मात्कारणाद्दूत न त्वां प्राणैर्वियोजये ॥ ३५ ॥

श्रीमातां यदि मे दूत दर्शयिष्यसि चेत्ततः ॥

अभीष्टान्संप्रदास्यामि सत्यमेव ब्रवीम्यहम् ॥ ३६ ॥

अहं त्वया समं तत्र यास्ये यत्र स्थिता च सा ॥

निग्रहं च करिष्यामि वाक्यं मे सत्यकारणम् ॥ ३७ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा मदोन्मत्तो दूतेन च स दानवः ॥

अर्बुदं प्रययौ तूर्णं रोषेण महता वृतः ॥ ३८ ॥

दृष्ट्वा बाष्कलिमायांतं देवाः शक्रपुरोगमाः ॥

वार्यमाणास्तदा देव्या पलायनपरायणाः ॥ ३९ ॥

भयेन महताविष्टा दिशो भेजुः समंततः ॥

अथासौ बाष्कलिः प्राप्तः सैन्येन महता वृतः ॥ 7.3.22.४० ॥

श्रीमाता तिष्ठते यत्र पर्वतेर्बुदसंज्ञके ॥

दूतं च प्रेषयामास तमुवाच नराधिपः ॥ ४१ ॥

॥ बाष्कलिरुवाच ॥ ॥

गच्छ दूतवर ब्रूहि श्रीमातां चारुहासिनीम्॥

भार्या मे भव सुश्रोणि अहं ते वशगः सदा ॥ ४२ ॥

भविष्यति हि मे राज्यं सर्वं वशगतं तव ॥

अन्यथा धर्षयिष्यामि सर्वैः सार्द्धं सुरोत्तमैः ॥४३॥

किमिंद्रेणाल्पवीर्येण किमन्यैश्च वरानने ॥

सहस्राक्षो न मे तुल्यो न मे तुल्याः सुरासुराः ॥ ४४ ॥

॥ पुलस्त्य उवाच ॥ ॥

एतच्छ्रुत्वा ततो गत्वा स दूतः संन्यवेदयत् ॥

तस्य सर्वं यथावाक्यं तेनोक्तं च महीपते ॥४५॥

ततः श्रुत्वा स्मितं कृत्वा चिंतयामास भामिनी ॥

जरा मरणहीनोयं दैत्येन्द्रः शंभुना कृतः ॥ ४६ ॥

कथमस्य मया कार्यो निग्रहो देवताकृते ॥

पुनश्चिंतयते यावत्सा देवी दानवं प्रति ॥

तावत्तत्रागतः शीघ्रं स कामेन परिप्लुतः ॥ ४७ ॥

अथ दृष्टिनिपातेन सा देवी दानवाधिपम् ॥

व्यलोकयत्ततस्तस्या निश्चयः संबभूव ह ॥ ४८ ॥

ततो जहास सा देवीशनकैर्वृपसत्तम ॥

मुखात्तस्यास्ततः सैन्यं निष्क्रांतमतिभीषणम्॥ ४९ ॥

हस्तिनो हयवर्याश्च पादाताश्च पृथग्विधाः ॥

रथसाहस्रमारूढा योधाश्चापि सहस्रशः ॥ 7.3.22.५० ॥

तैः सैन्यं दानवेशस्य सर्वं शस्त्रैर्निपातितम् ॥

पश्यतस्तस्य दैत्यस्य निश्चलस्यासुरस्य च ॥ ५१ ॥

हते सैन्य बले तस्मिन्निंद्राद्यास्त्रिदिवौकसः ॥

तामूचुर्वचनं देवि दानवं हन्तुमर्हसि ॥

नास्मिञ्जीवति नो राज्यं स्वर्गे देवि भविष्यति ॥ ५२ ॥

॥ पुलस्त्य उवाच ॥ ॥

श्रुत्वा तद्वचनं तेषां ज्ञात्वा तं मृत्युवर्जितम् ॥

पर्वतस्य महाशृंगं दत्त्वा तस्योपरि स्वयम् ॥ ५३ ॥

निविष्टा सा जगन्माता श्रीमाता कामरूपिणी ॥

हिताय जगतां राजन्नद्यापि वरपर्वते ॥

तत्रैव वसते साक्षान्नृणां कामप्रदायिनी ॥ ५४ ॥

एतस्मिन्नेव काले तु सर्वे देवाः सवासवाः ॥

तुष्टुवुस्तां महाशक्तिं भयहन्त्रीं प्रहर्षिताः ॥ ५५ ॥

प्रसन्नाऽभूत्ततो देवी तेषां तत्र नराधिप ॥

स्वंस्वं स्थानं सुराः सर्वे परियांतु गतव्यथाः ॥

गत्वा स्थानं स्वकं सर्वे परिपांतु गतव्यथाः ॥ ५६ ॥

वरं वरय देवेन्द्र ब्रूहि यत्ते मनोगतम् ॥

तत्सर्वं संप्रदास्यामि तुष्टाहं भक्तितस्तव ॥ ५७ ॥ ॥

॥ इन्द्र उवाच ॥ ॥

यदि तुष्टासि मे देवि शाश्वते भक्तिवत्सले ॥

अत्रैव स्थीयतां तावत्स्वर्गे यावदहं विभुः ॥ ५८ ॥
प्रशास्मि राज्यं देवेशि शाश्वते भक्तवत्सले ॥
अजरश्चामरश्चैव यतो दैत्यः सुरेश्वरि ॥ ५९ ॥
हरेण निर्मितः पूर्वं येन तिष्ठति निश्चलः ॥
प्रसादात्तव लोकाश्च त्रयः संतु निरामयाः ॥7.3.22.६०॥
अत्र त्वां पूजयिष्यामो वयं सर्वे समेत्य च ॥
चैत्रशुक्लचतुर्द्दश्यां दृष्ट्वा त्वां यांतु सद्गतिम् ॥ ६१ ॥
॥ पुलस्त्य उवाच ॥ ॥
एवमुक्त्वा सहस्राक्षः सर्वदेवैः समन्वितः ॥
हृष्टस्त्रिविष्टपं प्राप्तो देव्यास्तस्याः प्रभावतः ॥ ६२ ॥
सापि तत्र स्थिता देवी देवानां हितकाम्यया ॥ ॥। ६३ ॥
यस्तां पश्यति चैत्रस्य चतुर्द्दश्यां सिते नृप ॥
स याति परमं स्थानं जरामरणवर्ज्जितम् ॥ ६४ ॥
किं व्रतैर्नियमैर्वापि दानैर्दत्ते नराधिप ॥
सर्वे तद्दर्शनस्यापि कलां नार्हंति षोडशीम् ॥ ६५ ॥
तत्रैव पादुके दिव्ये तया न्यस्ते नराधिप ॥
यस्ते पश्यति भूयोऽसौ संसारं न हि पश्यति ॥
सर्वान्कामानवाप्नोति इह लोके परत्र च ॥ ६६ ॥
॥ ययातिरुवाच ॥ ॥
कस्मिन्काले द्विजश्रेष्ठ देव्या मुक्तेऽत्र पादुके ॥
कस्माच्च कारणाद्ब्रूहि सर्वं विस्तरतो मम ॥ ६७ ॥
॥ पुलस्त्य उवाच ॥ ॥
तां देवीं मानवाः सर्वे संवीक्ष्य नृपसत्तम ॥
प्राप्नुवंति परां सिद्धिं द्विविधां धर्मकारिणः ॥ ६८ ॥
एतस्मिन्नेव काले तु यज्ञदानादिकाः क्रियाः ॥
प्रणष्टा भूतले राजंस्तीर्थयात्राव्रतोद्भवाः ॥ ६९ ॥
शून्यास्ते नरकाः सर्वे संबभूवुर्यमस्य ये ॥
यज्ञभागविहीनाश्च देवाः कष्टमुपागताः ॥ 7.3.22.७० ॥

अथ सर्वे नृपश्रेष्ठ देवास्तत्र समागताः ॥

ऊचुर्गत्वाऽर्बुदं तत्र श्रीमातां परमे श्वरीम्॥ ७१ ॥

॥ देवा ऊचुः ॥ ॥

अग्निष्टोमादिकाः सर्वाः क्रिया नष्टाः सुरेश्वरि ॥

मर्त्यलोके वयं तेन कर्मणातीव पीडिताः ॥ ७२ ॥

दृष्ट्वा त्वां देवि पाप्मानः सिद्धिं यांति सपूर्वजाः ॥

तस्माद्यथा वयं पुष्टिं व्रजामस्ते प्रसादतः ॥ ७३ ॥

न निष्क्रामति दैत्यश्च बाष्कलिस्त्वं तथा कुरु ॥ ७४ ॥

॥ पुलस्त्य उवाच ॥ ॥

तेषां तद्वचनं श्रुत्वा संचिंत्य सुचिरं तदा ॥

मुक्त्वा स्वे पादुके तत्र कृत्वा चाश्मसमुद्भवे ॥

देवानुवाच राजेंद्र सर्वानर्त्तिमुपागतान् ॥ ७५ ॥

॥ श्रीदेव्युवाच ॥ ॥

युष्मद्वाक्येन त्यक्तो हि मयाऽयं पर्वतोत्तमः ॥

विन्यस्ते पादुके तस्य रक्षार्थं बाष्कलेः सुराः ॥ ७६ ॥

मत्पादुकाभराक्रांतो न स दैत्यः सुरोत्तमाः ॥

स्थानात्प्रचलितुं शक्तः स्तंभितः स्याद्यथा मया ॥ ७७ ॥

एतच्छास्त्रं मया कृत्स्नं पादुकार्थं विनिर्मितम् ॥

अध्यात्मकं हितार्थाय प्राणिनां पृथिवीतले ॥ ७८ ॥

शास्त्रमार्गेण चानेन भक्त्या यः पादुके मम ॥

पूजयिष्यति सिद्धिः स्यात्तस्य मद्दर्शनोद्भवा ॥ ७९ ॥

चैत्रशुक्लचतुर्दश्यामहमत्रार्बुदे सदा ॥

अहोरात्रे वसिष्यामि सुगुप्ता गिरिगह्वरे ॥ ॥ 7.3.22.८० ॥

पर्वतोऽयं ममाभीष्टो न च त्यक्तुं मनो दधे ॥

तथापि संपरित्यक्तो युष्माकं हितकाम्यया ॥ ८१ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा तु सा देवी समंताद्देवकिंनरैः ॥

स्तूयमाना ययौ स्वर्गं मुक्त्वा ते पादुके शुभे ॥ ८२॥

अद्यापि सिद्धिमायांति योगिनो ध्यानतत्पराः ॥
तन्निष्ठास्तद्गतप्राणा यथा देव्याः प्रदर्शनात्॥ ८३ ॥
एतत्ते सर्वमाख्यातं यन्मां त्व परिपृच्छसि ॥
श्रीमातासंभवं पुण्यं पादुकाभ्यां च भूमिप ॥८४॥
यस्त्वेतत्पठते भक्त्या श्लाघते वाऽथ यो नरः ॥
सर्वपापैर्महाराज मुच्यते ज्ञानतत्परः ॥ ८५ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे श्रीमातामाहात्म्यवर्णनंनाम द्वाविंशोऽध्यायः ॥ २२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २३



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ शुक्लतीर्थमनुत्तमम् ॥

यत्ख्यातिमगमत्पूर्वं सकाशाद्दाशवर्गतः ॥ १ ॥

पुराऽऽसीद्रजको नाम्ना शमिलाक्षो महीपते ॥

नीलीमध्ये तु वस्त्राणि प्रक्षिप्तानि महीपते ॥ २ ॥

अथासौ भयमापन्नो ज्ञात्वा वस्त्रविडंबनम्॥

देशांतरं प्रस्थितोऽसौ स्वकुटुम्बसमावृतः ॥ ३ ॥

अथ तस्य सुता राजन्दाशकन्यासखी शुभा ॥

दुःखेन महताविष्टा दाश्यंतिकमुपाद्रवत् ॥ ४ ॥

तस्यै निवेदयामास भयं वस्त्रसमुद्भवम् ॥

विदेशचलनं चैव बाष्पगद्गदया गिरा ॥ ५ ॥

दाशकन्यापि दुःखेन तस्या दुःखसमन्विता ॥

अब्रवीद्वाष्पसंक्लिन्नां निश्वसंती मुहुर्मुहुः ॥ ६ ॥

॥ दाशकन्योवाच ॥ ॥

अस्त्युपायो महानत्र विदितो मम शोभने ॥

ध्रुवं तेन कृतेनैव निर्भयं ते च ते पितुः ॥ ७ ॥

अत्रास्ति निर्झरं सुभ्रूरर्बुदे वरवर्णिनि ॥

तत्र मे भ्रातरश्चैव तथान्ये मत्स्यजीविनः ॥ ८ ॥

यच्चान्यदपि तत्रैव क्षिप्यते सलिले शुभे ॥

तत्सर्वं शुक्लतामेति पश्य मे वपुरीदृशम् ॥ ९ ॥

सर्वेषामेव दाशानां तस्य तोयस्य मज्जनात् ॥

तानि वस्त्राणि तत्रैव तातस्तव सुमध्यमे ॥

जले प्रक्षालयेत्क्षिप्रं प्रयास्यंति सुशुक्लताम् ॥ 7.3.23.१० ॥

त्वयाऽत्र न भयं कार्यं गत्वा तातं निवारय ॥

प्रस्थितं परदेशाय नात्र कार्या विचारणा ॥ ११ ॥

॥ पुलस्त्य उवाच ॥ ॥

सा तस्या वचनं श्रुत्वा गत्वा सर्वं न्यवेदयत् ॥

जनकाय सुता तूर्णं ततोऽसौ तुष्टिमाप्तवान्॥ १२ ॥

प्रातरुत्थाय तूर्णं स निर्झरं तमुपाद्रवत्॥

क्षिप्तमात्राणि राजेन्द्र तानि वस्त्राणि तेन वै ॥ ॥ १३ ॥

तस्मिंस्तोयेतिशुक्लत्वं गतानि बहुलां ततः ॥

कांतिमापुश्च परमां तथा दृष्ट्वांबराणि च ॥ १४ ॥

अथासौ विस्मयाविष्टस्तानि चादाय सत्वरः ॥

राज्ञे निवेदयामास वृत्तांतं च तदुद्भवम् ॥ १५ ॥

ततो विस्मयमापन्नः स राजा तत्र निर्झरे ॥

अन्यानि नीलीरक्तानि वस्त्राणि चाक्षिपज्जले ॥ १६ ॥

सर्वाणि शुक्लतां यांति विशिष्टानि भवंति च ॥

ज्ञात्वा ततः परं तीर्थं स्नानं चक्रे यथाविधि ॥ १७ ॥

त्यक्त्वा राज्यं स तत्रैव तपस्तेपे महीपतिः ॥

ततः सिद्धिं परां प्राप्तस्तीर्थस्यास्य प्रभावतः ॥ १८ ॥

एकादश्यां नरस्तत्र यः श्राद्धं कुरुते नृप ॥

स कुलानि समुद्धृत्य दश याति दिवं ततः ॥

स्नानेनव विपापत्वं तत्क्षणादेव जायते ॥ १९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे शुक्लतीर्थमाहात्म्यवर्णनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २४



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ गुहामध्यनिवासिनी ॥

देवी कात्यायनी यत्र शुंभदानवनाशिनी ॥ १ ॥

शुंभोनाम महादैत्यः पुराऽऽसीत्पृथिवीतले ॥

तेन सर्वं जगद्व्याप्तं जित्वा देवान्रणाजिरे ॥ २ ॥

स शंकरवराद्दैत्यो देवदानवरक्षसाम्॥

अवध्यो योषितं मुक्त्वा सर्वेषां प्राणिनां भुवि ॥ ३ ॥

ततो देवगणाः सर्वे गत्वाऽर्बुदमथाचलम् ॥

तपस्तेपुर्वधार्थाय शुंभस्य जगतीपते ॥

देवीमाराधयामासुर्व्यक्तरूपां सुरेश्वरीम् ॥ ४ ॥

अथ तेषां प्रसन्ना सा दृष्टिगोचरमागता ॥

अब्रवीद्वरदास्मीति ब्रूत किं करवाणि च ॥ ५ ॥

॥ देवा ऊचुः ॥ ॥

सर्वं नोऽपहृतं देवि शुंभेन सुदुरात्मना ॥

तं निषूदय कल्याणि सोवध्योन्यैः सदा रणे ॥ ६ ॥

त्वया संरक्षिता देवि पुरा बाष्कलितो वयम् ॥ ७ ॥

नान्याऽस्माकं गतिर्मातस्त्वां मुक्त्वा चारुहासिनीम् ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्ता सुरैर्देवी गत्वा शुंभनिकेतनम्॥

आजुहाव रणे क्रुद्धा भर्त्सयित्वा मुहुर्मुहुः ॥ ७ ॥

स तया याचिते युद्धे ज्ञात्वा तां योषितं नृप ॥

अवज्ञाय ततो दैत्यः प्रेषयामास दानवान् ॥ ९ ॥

जीवग्राहेण दुष्टेयं गृह्यतां परुषस्वना ॥

क्रियतां दारुणो दंडो मम वाक्यान्न संशयः ॥ 7.3.24.१० ॥

अथ तस्य समादेशाद्दानवास्तां ततो द्रुतम् ॥

गत्वा निर्भर्त्सयामासुर्वेष्टयित्वा दिशो दश ॥ ११ ॥

ततोऽवलोकनाद्दैत्यास्तया ते भस्मसात्कृताः ॥

ततः शुंभः प्रकुपितः स्वयमेव समाययौ ॥१२॥

अब्रवीत्तिष्ठतिष्ठेति खड्गमुद्यम्य भीषणः ॥

सोऽपिदेव्या महाराज तथा चैवावलोकितः ॥१३॥

अभवद्भस्मसात्सद्यः पतंग इव पावकम्॥

हते तस्मिंस्ततो दैत्याः शेषाः पार्थिवसत्तम॥

भित्त्वा रसातलं जग्मुः पातालं भयसंयुताः ॥१४॥

ततो देवगणाः सर्वे तुष्टुवुस्तां सुरेश्वरीम्॥

अब्रुवंश्च वरं ब्रूहि यत्ते मनसि वर्त्तते ॥१५॥

देव्युवाच ॥ ॥

तत्रैव पर्वते स्थास्ये ह्यर्बुदेऽहं सुरोत्तमाः ॥

अभीष्टः पर्वतोऽस्माकं सं सदाऽर्बुदसंज्ञितः ॥१६॥

॥ देवा ऊचुः ॥ ॥

तत्रस्थां त्वां समालोक्य मर्त्या यांति त्रिविष्टपम् ॥

विना यज्ञैस्तथा दानैः स्वर्गः संकीर्णतां गतः॥

नान्यत्कारणमस्तीह निषेधस्य सुरेश्वरि ॥१७॥

॥ देव्युवाच ॥ ॥

तत्राहं विजने रम्ये गुहामध्ये सुरेश्वराः ॥

स्थास्यामि विरलाः केचिद्यास्यंति प्राणिनो मम ॥

दृष्टिगोचरमार्गे हि गत्वा तं पर्वतं प्रति ॥१७॥

॥ देवा ऊचुः ॥ ॥

यद्येवं देवि तेऽभीष्टमेवं कुरु शुचिस्मिते ॥

वयं त्वां तत्र द्रक्ष्यामः शुक्लाष्टम्यां सदा शुचेः ॥ १९ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्ताः सुरा देव्या प्रहृष्टास्त्रिदिवं ययुः ॥

सापि देवी गिरौ तत्र गत्वा चैवार्बुदे नृप ॥ 7.3.24.२० ॥

गुहामध्यं समासाद्य नित्यं जगद्धिताय वै ॥

विविक्ते न्यवसत्प्रीता दुर्ल्लभा सुरमानवैः ॥ २१ ॥

यस्तां पश्यति राजेन्द्र शुक्लाष्टम्यां समाहितः ॥

अभीष्टं स सदाप्नोति यद्यपि स्यात्सुदुर्ल्लभम् ॥२२॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे कात्यायनीमाहात्म्यवर्णनंनाम चतुर्विंशोऽध्यायः ॥ २४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २५

https://sa.wikisource.org/s/glc
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततः पिंडारकं गच्छेत्तीर्थं पापहरं नृप ॥

यत्र पूर्वं तपस्तप्तं मंकिना ब्राह्मणेन च ॥

सिद्धिं गतस्तथा राजंस्तीर्थस्यास्य प्रभावतः ॥ १ ॥

पुरा मंकिरभूद्विप्रो नाममात्रेण भूपते ॥

मूर्खो ब्राह्मणकृत्यानामनभिज्ञः सुमन्दधीः ॥ २ ॥

अथासौ पर्वते रम्ये लोकानां नृपसत्तम ॥

महिषी रक्षयामास ततः पिंडारकर्मणि ॥३॥

कस्यचित्त्वथ कालस्य तेन वित्तमुपार्जितम्॥

दूरात्कृच्छ्रेण च स्तोकं जगृहे गोयुगं ततः ॥ ४॥।

ततस्तद्दमयामास गोयुगं नृपसत्तम ॥

अथ दैववशाद्राजन्दमितं तस्य गोयुगम्॥ ५ ॥

निबद्धमुष्ट्रमासाद्य ग्रीवादेशे बलात्स्थितम् ॥

अथोष्ट्रस्त्वरया राजन्नुत्थितस्त्रासतत्परः ॥६॥

गोयुगेन हि ग्रीवायां लम्बमानेन भूपते ॥

तद्दृष्ट्वा सुमहाश्चर्यं विनाशं गोयुगस्य तु ॥ ७ ॥

मंकिर्वैराग्यमापन्नस्त्यक्त्वा ग्रामं वनं ययौ ॥

स गत्वा निर्झरं कञ्चिदर्बुदे नृपसत्तम ॥८॥

त्रिकालं कुरुते स्नानं गायत्रीजपमुत्तमम् ॥

तेनासौ गतपापोऽभूद्दिव्यदर्शी च भूमिप ॥९॥

एतस्मिन्नेव काले तु तेन मार्गेण शंकरः ॥

सह गौर्या विनिष्क्रांतः क्रीडार्थं रम्यपर्वते ॥7.3.25.१०॥

स दृष्टः सहसा तेन पिंडारेण महात्मना ॥

प्रणाममकरोद्राजंस्ततस्तं शंकरोऽब्रवीत् ॥ ११ ॥

न वृथा दर्शनं मे स्याद्वरो मे गृह्यतां द्विज ॥

यदभीष्टं महाराज यद्यपि स्यात्सुदुर्लभम् ॥ १२ ॥

॥ पिंडारक उवाच ॥ ॥

गणोऽहं तव देवेश भवानि त्रिपुरांतक ॥

यथा तथा कुरु विभो नान्यन्मे हृदि वर्तते ॥ १३ ॥

एतत्पिण्डारकं तीर्थं मम नाम्ना प्रसिध्यतु ॥ १४ ॥

॥ भगवानुवाच ॥ ॥

भविष्यसि गणोऽस्माकं देहांते त्वं द्विजोत्तम ॥

एतत्पिंडारकंनाम तीर्थमत्र भविष्यति ॥ १५ ॥

अहमत्र महाष्टम्यां निवेक्ष्यामि महामते ॥

ये च स्नानं करिष्यंति संप्राप्ते चाष्टमीदिने ॥

ते यास्यंति परं स्थानं यत्राहं नित्यसंस्थितः ॥ १६ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा महादेवस्तत्रैवांतरधीयत ॥।

मंकिः पिंडारकस्तत्र तपस्तेपे दिवानिशम् ॥ १७ ॥

ततः कालेन महता त्यक्त्वा देहं दिवं गतः ॥

यत्रास्ते भगवान्रुद्रो गणस्तत्र बभूव ह ॥ १८ ॥।

तस्मात्सर्वप्रयत्नेन स्नानं मन्त्रेण चाचरेत् ॥१९॥

राजेन्द्र महिषीदानमथाष्टम्यां विशेषतः ॥

य इच्छति सदाऽभीष्टमिह लोके परत्र च ॥7.3.25.२०॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे पिंडारकतीर्थमाहात्म्यवर्णनंनाम पंचविंशोऽध्यायः॥ २५॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २६

https://sa.wikisource.org/s/gld
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं त्रैलोक्यविश्रुतम् ॥

तस्मिन्कनखलंनाम पर्वते पापनाशने ॥ १ ॥

शृणु तत्राऽभवत्पूर्वं यदाश्चर्यं महीपते ॥

पार्थिवः सुमतिर्नाम संप्राप्तोऽर्बुदपर्वते ॥२॥

सूर्यग्रहे महीपाल तीर्थं कनखलं गतः ॥

तेन विप्रार्थमानीतं सुवर्णं जात्यमेव हि ॥३॥

प्रभूतं पतितं तोये प्रमादात्तस्य भूपतेः ॥

न लब्धं तेन भूपाल अन्वेषणपरेण च ॥ ४ ॥

ततः स्नात्वा गृहं प्राप्तः पश्चात्तापसमन्वितः ॥

ततः कालेन महता स भूयस्तत्र चागतः ॥ ५ ॥

स्नानार्थं भास्करे ग्रस्ते तं च देशमपश्यत ॥

चिंतयामास मेधावी ह्यस्मिन्देशे तदा मम ॥ ६ ॥

सुवर्णं पतितं हस्तान्न च लब्धं कथंचन ॥ ७ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं चिंतयतस्तस्य वागुवाचाशरीरिणी ॥

नात्र नाशोऽस्ति राजेन्द्र इह लोके परत्र च ॥ ८ ॥

अत्र कोटिगुणं जातं सुवर्णं यत्पुरातनम् ॥

पश्चात्तापस्त्वया भूरि कृतो यद्द्रव्यनाशने ॥ ९ ॥

तस्मात्संख्या च संजाता तथैवाकल्पितस्य च ॥

येऽत्र श्रद्धासमायुक्ताः सुवर्णैर्नृपसत्तम ॥

यत्राच्छ्राद्धं करिष्यंति सुवर्णं च विशेषतः ॥ 7.3.26.१० ॥

ब्राह्मणेभ्यः प्रदास्यंति संख्या तस्य न विद्यते ॥

अत्रान्वेषय देशे त्वं प्राप्स्यसे नाऽत्र संशयः ॥ ११ ॥

स श्रुत्वा भारती तत्र ह्याकाशादुत्थितां नृप ॥
अन्वेषमाणोऽस्मिन्देशे सुवर्णं तच्च लब्धवान् ॥ १२ ॥
शुभ्रं कोटिगुणं प्राज्यं ततस्तुष्टिं समागतः ॥
ज्ञात्वा तीर्थप्रभावं तं ब्राह्मणेभ्यः सहस्रशः ॥
प्रददौ च दयायुक्त उद्दिश्य पितृदेवताः ॥ १३ ॥
ततस्तस्य प्रभावेण स दानस्य महीपतिः ॥
संजातो धनदोनाम यक्षो नानाधनप्रदः ॥ १४ ॥
तत्र यः कुरुते श्राद्धं ग्रहे सूर्यस्य भूमिप ॥
आकल्पं पितरस्तस्य तृप्तिं यांति सुतर्पिताः ॥ १५ ॥
स्नानेन ऋषयो देवास्तुष्टिं यांति महोरगाः ॥
नाशः संजायते सद्यः पापस्य पृथिवीपते ॥ १६ ॥
तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥
यथाशक्त्या तथा दानं श्राद्धं च नृपसत्तम ॥ १७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे कनखलतीर्थमाहात्म्यवर्णनंनाम षड्विंशोऽध्यायः ॥ ॥ २६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २७



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ चक्रतीर्थमनुत्तमम् ॥

यत्र चक्रं पुरा मुक्तं विष्णुना प्रभविष्णुना ॥ १ ॥

निहत्य दानवान्संख्ये कृत्वा स्नानं सुनिर्झरे ॥

विष्णुः प्राक्षालयत्तोयं तेन तन्मेध्यतां गतम् ॥ २ ॥

तत्र श्राद्धं तु यः कुर्याच्छयने बोधने हरेः ॥

आकल्पं पितरस्तस्य तृप्तिं यांति नराधिप ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे चक्रतीर्थप्रभाववर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २८



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ सुपुण्यं मानुषं ह्रदम् ॥

यत्र स्नातो नरः सम्यङ्मनुष्यो जायते सदा ॥ १ ॥

न तिर्यक्त्वमवाप्नोति कृत्वाऽपि बहुपातकम् ॥

तत्राश्चर्यमभूत्पूर्वं यत्तच्छृणु नराधिप ॥ २ ॥

मृगयूथमनुप्राप्त व्याधव्याप्तं समन्ततः ॥

ते मृगा भयसन्त्रस्ताः प्रविष्टा जलमध्यतः ॥ ३ ॥

सद्यो मनुष्यतां प्राप्ताः पूर्वजातिस्मरास्तथा ॥

एतस्मिन्नेव काले तु व्याधास्ते समुपागताः ॥ ४ ॥

चापबाणधराः सर्वे यथा वै यमकिंकराः ॥

पप्रच्छुश्च मृगान्भूप मानुषत्वमुपागतान् ॥ ५ ॥

मृगयूथमनु प्राप्तमस्मिन्स्थाने जलाश्रये ॥

केन मार्गेण तद्यातं वदध्वं सत्वरं हि नः ॥

वयं सर्वे परिश्रांताः क्षुत्तृड्भ्यां च विशेषतः ॥ ६ ॥

॥ मनुष्या ऊचुः ॥ ॥

वयं ते हरिणाः सर्वे मानुष्यं भावमाश्रिताः ॥

तीर्थस्यास्य प्रभावेण सत्यमेतदसंशयम् ॥ ७ ॥

॥ पुलस्त्य उवाच ॥ ॥

ततस्ते शबराः सर्वे त्यक्त्वा चापानि पार्थिव ॥

कृत्वा स्नानं जले तस्मिन्सद्यः सिद्धिं गता नृप ॥ ८ ॥

ततः शक्रस्तु तद्दृष्ट्वा तीर्थं पापहरं नृप ॥

पूरयामास सर्वत्र पांसुभिर्नृपसत्तम ॥ ९ ॥

अद्यापि मनुजास्तत्र बुधाष्टम्यां नराधिप ॥

स्नानं ये प्रकरिष्यंति तिर्यक्त्वं न व्रजंति ते ॥ 7.3.28.१० ॥

पितृमेधफलं कृत्स्नं श्राद्धदानादवाप्नुयुः ॥ ११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे मनुष्यतीर्थप्रभाव वर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः २९

https://sa.wikisource.org/s/glg



॥ पौलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ कपिलातीर्थमुत्तमम् ॥

यत्र स्नातो नरः सम्यङ्मुच्यते सर्वकिल्बिषैः ॥ १ ॥

पुराऽभून्नृपतिर्नाम सुप्रभः परवीरहा ॥

नित्यं च मृगयाशीलो मृगाणामहिते रतः ॥ २ ॥

न तथा स्त्रीषु नो भोगे नाश्वयाने न वारणे ॥

तस्याभूदनुरागश्च यथा मृगविमर्द्दने ॥ ३ ॥

स कदाचिन्नृपश्रेष्ठ मृगासक्तोऽर्बुदं गतः ॥

अपश्यत्सानुदेशे च मृगीं शिशुसमावृताम् ॥ ४ ॥

स्तनं धयन्तीं सुस्निग्धां शिशोः क्षीरानुरागिणः ॥

सा तेन विद्धा बाणेन सहसा नतपर्वणा ॥ ५ ॥

अथ सा पार्थिवं दृष्ट्वा प्रगृहीतशरासनम् ॥

द्वितीयं योजयानं च मृगी बाणं सुनिर्मलम् ॥ ६ ॥

ततः सा कोपसन्तप्ता भूपालं प्रत्यभाषत ॥

नायं धर्मः स्मृतः क्षात्त्रो यस्त्वयाद्य निषेवितः ॥७ ॥

शयानो मैथुनासक्तः स्तनपो व्याधिपीडितः ॥

न हंतव्यो मृगो राजन्मृगी च शिशुना वृता ॥ ८ ॥

तदद्य मरणं जातं मम सर्वं नृपाधम ॥

तव बाणं समासाद्य पुत्रस्य च मया विना ॥ ९ ॥

यस्मादहमधर्मेण हता भूमिपते त्वया ॥

तस्मादत्रैव सानौ त्वं रौद्रव्याघ्रो भविष्यसि॥ 7.3.29.१० ॥

॥ पुलस्त्य उवाच ॥ ॥

तच्छ्रुत्वा सुमहत्पापं स नृपो भयसंकुलम् ॥

तां वै प्रसादयामास प्राणशेषां तदा मृगीम् ॥ ११ ॥

अविवेकान्मया भद्रे हता त्वं निर्घृणेन च ॥

कुरु शापविमोक्षं त्वं तस्माद्दीनस्य सन्मृगि ॥ १२ ॥

॥ मृग्युवाच ॥ ॥

यदा तु कपिलां नाम द्रक्ष्यसे त्वं पयस्विनीम् ॥

धेनुं तया समालापात्प्रकृतिं यास्यसे पुनः ॥ १३ ॥

एवमुक्त्वा मृगी राजाग्रतः प्राणैर्व्ययुज्यत ॥

पीडिता शरघातेन पुत्रस्नेहाद्विशेषतः ॥ १४ ॥

अथाऽसौ पार्थिवः सद्यो रौद्रास्यः समजायत ॥

व्याघ्रो दशकरालश्च तीक्ष्णदन्तनखस्तथा ॥

भक्षयामास तां सेनामात्मीयां क्रोधमूर्च्छितः ॥ १५ ॥

ततस्ते सैनिका राजन्हतशेषाः सुदुःखिताः ॥

स्वगृहाणि ययुस्तत्र यथा वृत्तं जने पुरे ॥ १६ ॥

निवेदयन्तो वृत्तांतं चत्वरेषु त्रिकेषु च ॥

यथा वै व्याघ्रतां प्राप्तः स राजाऽर्बुदपर्वते ॥ १७ ॥

तच्छ्रुत्वा वचनं तस्य पुत्रं भूरिपराक्रमम् ॥

राज्येऽभिषेचयामासु नाम्ना ख्यातं महौजसम् ॥ १८ ॥

कस्यचित्त्वथ कालस्य तस्मिन्सानौ नृपोत्तम ॥

तृषार्तं गोकुलं प्राप्तं गोपगोपीसमाकुलम् ॥ १९ ॥

तत्रैका गौः परिभ्रष्टा स्वयूथात्तृणतृष्णया ॥

कपिलेति च विख्याता स्वयूथस्याग्रगामिनी॥ ॥ 7.3.29.२० ॥

अच्छिन्नाग्रतृणं या तु सदा भक्षयते नृप ॥

अथ सा गह्वरं प्राप्ता गिरेः शून्यं भयंकरम् ॥ २१ ॥

तत्राससाद तां व्याघ्रो दंष्ट्रोत्कटमुखावहः ॥

सा तं दृष्टवती पापं त्रासमाप मृगीव हि ॥ २२ ॥

स्मरंती गोकुले बद्धं स्वसुतं क्षीरपायिनम् ॥

दुःखेन रुदतीं तां स दृष्ट्वोवाच मृगाधिपः ॥ २३ ॥

॥ व्याघ्र उवाच ॥ ॥

किं वृथा रुद्यते धेनो मां प्राप्य न हि जीवितम् ॥

विद्यते कस्यचिन्मूर्खे स्मरेष्टां देवतां ततः ॥ २४ ॥ ॥

॥ कपिलोवाच ॥ ॥

स्वजीवितभयाद्व्याघ्र न रोदिमि कथंचन ॥

पुत्रो मे बालको गोष्ठ्यां क्षीरपायी प्रतीक्षते ॥ २५ ॥

नाद्यापि स तृणा न्यत्ति तेनाहं शोकविक्लवा ॥

रोद्मि व्याघ्र सुतस्नेहात्सत्येनात्मानमालभे ॥ २६ ॥

पाययित्वा सुतं बालं दृष्ट्वा पृष्ट्वा जनं स्वकम् ॥

पुनः प्रत्यागमिष्यामि यदि त्वं मन्यसे विभो ॥ २७ ॥

॥ व्याघ्र उवाच ॥ ॥

गत्वा स्वसुतसांनिध्यं दृष्ट्वात्मीयं च गोकुलम् ॥

पुनरागमनं यत्ते न च तच्छ्रद्दधाम्यहम् ॥ २८ ॥

भयान्मां भाषसे चैवं नास्ति प्राणसमं भयम् ॥

तस्मात्प्राणभयान्न त्वमागमिष्यसि धेनुके ॥ २९ ॥

॥ कपिलो वाच ॥ ॥

शपथैरागमिष्यामि सत्यमेतच्छृणुष्व मे ॥

प्रत्ययो यदि ते भूयान्मां मुञ्च त्वं मृगाधिप ॥ 7.3.29.३० ॥

॥ व्याघ्र उवाच ॥ ॥

ब्रूहि ताञ्छपथान्भद्रे समागच्छसि यैः पुनः॥

ततोऽहं प्रत्ययं गत्वा मोचयिष्यामि वा न वा ॥ ३१ ॥

॥ कपिलोवाच ॥ ॥

वेदाध्ययनसंपन्नं ब्राह्मणं वंचयेत्तु यः ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३२ ॥

गुरुद्रोहरतानां च यत्पापं जायते नृणाम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३३ ॥

यत्पापं ब्राह्मणं हत्वा गां च हत्वा प्रजायते ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३४ ॥

मित्रद्रोहे च यत्पापं यत्पापं गुरुवंचके ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३५ ॥

यो गां स्पृशति पादेन ब्राह्मणं पावकं तथा ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३६ ॥

कूपारामतडागानां यो भंगं कुरुत नरः ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३७ ॥

कृतघ्नस्य च यत्पापं सूचकस्य च यद्भवेत् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३८ ॥

मद्यमांसरतानां च यत्पापं जायते नृणाम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ३९ ॥

राजपैशुन्यकर्तॄणां यत्पापं जायते नृणाम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ 7.3.29.४० ॥

वेदविक्रयकर्तॄणां यत्पापं संप्रजायते ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४१ ॥

दीयमानं द्विजातीनां निवारयति योऽल्पधीः ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४२ ॥

विश्वस्तघातकानां च यत्पापं समुदाहृतम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४३ ॥

द्विजद्वेषरतानां हि यत्पापं जायते नृणाम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४४ ॥

परवादरतानां च पापं यच्च दुरात्मनाम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ॥ ४५ ॥

रात्रौ ये पापकर्माणो भक्षंति दधिसक्तुकान् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४६ ॥

वृंताकं मूलकं श्वेतं रक्तं येऽश्नंति गृंजनम् ॥

तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ४७ ॥

॥ पुलस्त्य उवाच ॥ ॥

स तस्याः शपथाञ्छ्रुत्वा विस्मयोत्फुल्ललोचनः ॥

प्रत्ययं च तदा गत्वा व्याघ्रो वाक्यमथाब्रवीत् ॥ ४८ ॥

॥ व्याघ्र उवाच ॥ ॥

गच्छ त्वं गोकुले भद्रे पुनरागमनं कुरु ॥

न चैतदवगंतव्यं यदयं वञ्चितो मया ॥ ४९ ॥

कपिले गच्छ पश्य त्वं तनयं सुतवत्सले ॥

पाययित्वा स्तनं पूर्णमवघ्राय च मूर्धनि ॥ 7.3.29.५० ॥

मातरं भ्रातरं दृष्ट्वा सखीः स्वजनवबांधवान् ॥

सत्यमेवाग्रतः कृत्वा नान्यथा कर्तुमर्हसि ॥ ५१ ॥

॥ पुलस्त्य उवाच ॥ ॥

साऽनुज्ञाता मृगेन्द्रेण कपिला पुत्रवत्सला ॥।

अश्रुपूर्णमुखी दीना प्रस्थिता गोकुलं प्रति ॥ ५२ ॥

वेपमाना भयोद्विग्ना शोकसागरमध्यगा ॥

करिणीव हि रौद्रेण हरिणा सा बलीयसा ॥।

ततः स्वगोकुलं प्राप्ता रंभमाणा मुहुर्मुहुः ॥ ५३ ॥

तस्याः शब्दं ततः श्रुत्वा ज्ञात्वा वत्सः स्वमातरम् ॥

सम्मुखः प्रययौ तूर्णमूर्द्ध्वपुच्छः प्रहर्षितः ॥ ५४ ॥

अकालागमनं तस्या रौद्रं भंभारवं तथा ॥

दृष्ट्वा श्रुत्वा च वत्सोऽसौ शंकितः परिपृच्छति ॥ ५५ ॥

॥ वत्स उवाच ॥ ॥

न ते पश्यामि सौम्यत्वं दुर्मना इव लक्ष्यमे ॥

किमर्थमन्यवेलायां समायाता वदस्व मे ॥ ५६ ॥

॥ कपिलोवाच ॥ ॥

पिब पुत्र स्तनं पश्चात्कारणं चापि मे शृणु ॥

आगताऽहं तव स्नेहात्कुरु तृप्तिं यथेप्सिताम् ॥५७ ॥

अपश्चिममिदं पुत्र दुर्लभं मातृदर्शनम् ॥

मयाऽद्य पुत्र गंतव्यं शपथैरागता यतः ॥५८॥

व्याघ्रस्य कामरूपस्य दातव्यं जीवितं मया ॥

तेनाहं शपथैर्मुक्ता कारणात्तव पुत्रक ॥ ५९ ॥

मयाऽद्य तत्र गंतव्यं मृगराजसमीपतः ॥

यदा च शपथैः पुत्र दास्यामि च कलेवरम् ॥7.3.29.६०॥

॥ वत्स उवाच ॥ ॥

अहं तत्र गमिष्यामि यत्र त्वं गंतुमिच्छसि ॥

श्लाघ्यं हि मरणं मेऽद्य त्वया सह न संशयः ॥६१॥

एकाकिनाऽपि मर्त्तव्यं यस्मान्मया त्वया विना ॥

यदि मां सहितं तत्र त्वया व्याघ्रो वधिष्यति ॥६२॥

या गतिर्मातृभक्तानां ध्रुवं सा मे भविष्यति ॥

तस्मादवश्यं यास्यामि त्वया सह न संशयः ॥ ६३ ॥

अथवाऽत्रैव तिष्ठ त्वं शपथाः संतु मे तव ॥

तव स्थाने प्रयास्यामि मातस्त्वं यदि मन्यसे ॥ ६४ ॥

जनन्या विप्रयुक्तस्य जीवितं न हि मे प्रियम् ॥

नास्ति मातृसमः कश्चिद्बालानां क्षीरजीविनाम् ॥ ६५ ॥

नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः ॥

ये मातृनिरताः पुत्रास्ते यांति परमां गतिम् ॥ ६६ ॥

॥ कपिलोवाच ॥ ॥

ममैव विहितो मृत्युर्न ते पुत्रक सांप्रतम् ॥

न चायमन्यभूतानां मृत्युः स्यादन्यमृत्युतः ॥ ६७ ॥

अपश्चिममिदं पुत्र मातुः सन्देशमुत्तमम् ॥

शृणुष्वावहितो भूत्वा परिणामसुखावहम् ॥ ६८ ॥

वने चर सदा वत्स अप्रमादपरो भव ॥

प्रमादात्सर्वभूतानि विनश्यंति न संशयः ॥ ६९ ॥

न च लोभेन चर्तव्यं विषमस्थं तृणं क्वचित् ॥

लोभाद्विनाशो जंतूनामिह लोके परत्र च ॥ 7.3.29.७० ॥

समुद्रमटवीं युद्धं विशंते लोभमोहिताः ॥

लोभादि कार्यमत्युग्रं कुर्वंति त्याज्य एव सः ॥ ७१ ॥

लोभात्प्रमादादाश्वासात्पुरुषो बाध्यते त्रिभिः ॥

तस्माल्लोभो न कर्त्तव्यो न प्रमादो न विश्वसेत् ॥ ७२ ॥

आत्मा च सततं पुत्र रक्षितव्यः प्रयत्नतः ॥

सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छेभ्यस्तस्करादितः ॥७३॥

तिर्यग्भ्यः पापयोनिभ्यः सदा विचरता वने ॥
न च शोकस्त्वया कार्यः सर्वेषां मरणं ध्रुवम् ॥ ७४ ॥
अस्माकं प्रतिवाचं च शृणु शोकविनाशिनीम् ॥
यथा हि पथिकः कश्चिच्छायार्थी वृक्षमास्थितः ॥
विश्रान्तश्च पुनर्याति तद्वद्भूतसमागमः ॥ ७५ ॥
॥ पुलस्त्य उवाच ॥ ॥
एवं संभाष्य तं वत्समवघ्राय च मूर्द्धनि ॥
स्वमातरं सखीवर्गं ततो द्रष्टुं समागता ॥ ७६ ॥
अब्रवीच्च ततो वाक्यं पुत्रशोकेन दुःखिता ॥
अंबाः शृणुत मे वाक्यमपश्चिममिदं स्फुटम् ॥ ७७ ॥
अनाथमबलं दीनं फेनपं मम पुत्रकम् ॥
मातृशोकाभिसंतप्तं सर्वास्तं पालयिष्यथ ॥ ७८ ॥
भाविनीनामयं पुत्रः सांप्रतं च विशेषतः ॥
स्नपनीयः पायितव्यः पोष्यः पाल्यः स्वपुत्रवत् ॥ ७९ ॥
चरंतं विषमे स्थाने चरंतं परगोकुले ॥
अकार्येषु प्रवर्तंतं हे सख्यो वारयिष्यथ ॥ 7.3.29.८० ॥
क्षमध्वं च महाभागा यास्येऽहं सत्यसंश्रयात् ॥
यत्राऽसौ तिष्ठते व्याघ्रो मुक्ताऽहं येन सांप्रतम् ॥ ८१॥
सर्वास्ता वचनं श्रुत्वा तस्याः शोकसमन्विताः ॥
विषादं परमं गत्वा वाक्यमूचुः सुदुःखिताः॥ ८२॥
कपिले नैव गंतव्यं न ते दोषो भविष्यति॥
प्राणात्यये न दोषोऽस्ति संपराये च दारुणे॥ ८३॥
अत्र गाथा पुरा गीता मुनिभिर्धर्मवादिभिः॥
प्राणात्यये समुत्पन्ने शपथे नास्ति पातकम्॥ ८४॥
कपिलोवाच॥
प्राणिनां प्राण रक्षार्थं वदाम्येवानृतं वचः ॥
नात्मार्थमुपयुञ्जामि स्वल्पमप्यनृतं क्वचित् ॥ ८५ ॥
अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ॥

अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ८६ ॥

तस्मान्नानृतमात्मानं करिष्ये जीविताशया ॥

आज्ञापयतु मामार्या यास्ये यत्र मृगाधिपः ॥ ८७ ॥

॥ वयस्या ऊचुः ॥ ॥

कपिले त्वं नमस्कार्या सर्वैरपि सुरासुरैः ॥

यत्त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान् ॥ ८८ ॥

अवश्यं न च ते भावी मृत्युः सत्यात्कथंचन ॥

प्रमाणं यदि सत्यं हि व्रज पंथाः शिवोऽस्तु ते ॥ ८९ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्ता च कपिला गता यत्र मृगाधिपः ॥

अथासौ कपिलां दृष्ट्वा विस्मयोत्फुल्ललोचनः ॥

अब्रवीत्प्रश्रितं वाक्यं हर्षगद्गदया गिरा ॥ 7.3.29.९० ॥

॥ व्याघ्र उवाच ॥ ॥

स्वागतं तव कल्याणि कपिले सत्यवादिनि ॥

नहि सत्यवतां किंचिदशुभं विद्यते क्वचित् ॥ ९१ ॥

त्वयोक्तं कपिले पूर्वं शपथैरागमाय च ॥

तेन मे कौतुकं जातं याताऽऽगच्छेत्पुनः कथम् ॥ ९२ ॥

तस्माद्गच्छ मया मुक्ता यत्राऽसौ तनयस्तव ॥

तिष्ठते गोकुले बद्धः क्षीरपायी सुदुःखितः ॥९३॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

एतस्मिन्नेव काले तु स राजा प्रकृतिं गतः ॥

मृगीशापेन निर्मुक्तो दिव्यरूपवपुर्धरः ॥

ततोऽब्रवीत्प्रहृष्टात्मा कपिलां सत्यवादिनीम् ॥ ९४ ॥

॥ राजोवाच ॥ ॥

प्रसादात्तव मुक्तोऽहं शापादस्मात्सुदारुणात् ॥

किं ते प्रियं करोम्यद्य धेनुके ब्रूहि सत्वरम् ॥ ९५ ॥

॥ कपिलोवाच ॥ ॥

कृतकृत्याऽस्मि राजेन्द्र यत्त्वं मुक्तोऽसि किल्बिषात्॥

पिपासा बाधतेत्यर्थं सांप्रतं जलमानयम् ॥ ९६ ॥

नैवानृतं विजानीहि सत्यमेतन्मयोदितम् ॥ ९७ ॥

॥ पुलस्त्य उवाच ॥ ॥

अथासौ पार्थिवो हस्ते चापमादाय सत्वरम् ॥

सज्यं कृत्वा शरं गृह्य जघान धरणीतलम् ॥ ९८ ॥

ततः सलिलमुत्तस्थौ निर्मलं शीतलं शुभम् ॥

तत्र सा कपिला स्नात्वा वितृषा समपद्यत ॥ ९९ ॥

एतस्मिन्नन्तरे धर्मः स्वयं तत्र समागतः ॥

अब्रवीत्कपिलां हृष्टो वरं वरय शोभने ॥7.3.29.१०० ॥

तव सत्येन तुष्टोऽहं नास्ति ते सदृशी क्वचित् ॥

त्रैलोक्ये सकले धेनुर्न भविष्यति वै शुभे ॥ १०१ ॥

॥ कपिलोवाच ॥ ॥

प्रसादात्तव गच्छेय सह राज्ञा सगोकुला ॥

सुप्रभेण पदं दिव्यं जरामरणवर्जितम्॥ १०२ ॥

मन्नाम्ना ख्यातिमायातु पुण्यमेतज्जलाशयम् ॥

सर्वपापहरं नृणां सर्वकामप्रदं तथा ॥ १०३ ॥

॥ धर्म उवाच ॥ ॥

येऽत्र स्नानं करिष्यंति सुपुण्ये सलिले शुभे ॥

चतुर्द्दश्यां विशेषेण ते यास्यंति परां गतिम् ॥ १०४ ॥

तव नाम्ना सुपुण्यं हि तीर्थमेतद्भविष्यति ॥

दर्शमुद्दिश्य मर्त्यस्तु प्राप्स्यते गोसहस्रकम् ॥

स्नानाल्लक्षगुणं दानात्पुण्यं चैव तथाऽक्षयम् ॥ १०५ ॥

येऽत्र श्राद्धं करिष्यंति मानवाः सुसमाहिताः॥

सर्वदानफलं तेषां भुक्तिमुक्ती महात्मनाम् ॥ १०६ ॥

अपि कीटपतंगा ये तृषार्ताः सलिले शुभे ॥

मज्जयिष्यति यास्यंति तेऽपि स्थानं दिवौकसाम्॥ १०७ ॥

किं पुनर्भक्तिसंयुक्ता मानवाः सत्यवादिनः ॥

मनस्विनो महाभागाः श्रद्धावंतो विचक्षणाः ॥ १०८ ॥

॥ पुलस्त्य उवाच ॥ ॥

एतस्मिन्नेव काले तु विमानानि सहस्रशः ॥

समायातानि राजेंद्र कपिलायाः प्रभावतः ॥ १०९ ॥

तान्यारुह्याथ कपिला गोपगोकुलसंकुला ॥

सुप्रभेण समायुक्ता तत्पदं परमं गता ॥ 7.3.29.११० ॥

तस्मात्सर्वप्रयत्नेन तत्र स्नानं समाचरेत् ॥

श्राद्धं चैवात्मनः शक्त्या दानं पार्थिवसत्तम ॥ ॥ १११ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे कपिलातीर्थमाहात्म्यवर्णनंनामैकोनत्रिंशोऽध्यायः॥२९॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३०



पुलस्त्य उवाच॥

अग्नितीर्थं ततो गच्छेत्पावनं परमं नृणाम्॥

तत्र वह्निः पुरा नष्टो लब्धश्च त्रिदशैरपि॥ १ ॥

ययातिरुवाच॥

किमर्थं भगवन्वह्निः पुरा नष्टो द्विजोत्तम॥

कथं तत्रैव लब्धस्तु कौतुकं मे महामुने॥२॥

पुलस्त्य उवाच॥

पुरा वृष्टिनिरोधोऽभूद्यावद्द्वादशवत्सरान्॥

संशयं परमं प्राप्तः सर्वो लोकः क्षुधार्दितः ॥ ३ ॥

प्रायो मृतो मृतप्रायः शेषोऽभूद्धरणीतले ॥

नष्टा अरण्यजा ग्राम्याः पशवः पक्षिणो मृगाः ॥ ४ ॥

एवं कृच्छ्रमनुप्राप्ते मर्त्यलोके नराधिपः ॥

विश्वामित्रो मुनिवरः संदेहं परमं गतः ॥ ५ ॥

अन्नौषधिरसाभावादस्थिशेषो व्यजायत ॥

अन्यस्मिन्दिवसे प्राप्तः क्षुत्क्षामः पर्यटन्दिशः ॥ ६ ॥

चंडालनिलयं प्राप्तः क्षुत्तृषापीडितो भृशम् ॥

तत्रापश्यन्मृतं श्वानं शुष्कं पार्थिवसत्तम ॥ ७ ॥

तमादाय गृहं प्राप्तः प्रक्षाल्य सलिलेन तु ॥

क्षुत्क्षामः पाचयामास ततस्तं पावकेऽजुहोत् ॥ ८ ॥

अभक्ष्यभक्षणं ज्ञात्वा हव्यवाहस्ततो नृप ॥

शक्रस्योपरि मन्युं स्वं चक्रेऽतीव महीपते ॥ ९ ॥

नष्टौषधिरसे लोके युक्तमेतद्धि सांप्रतम् ॥

यादृगाप्तं हविस्तादृगग्निभक्षो विशिष्यते ॥ 7.3.30.१० ॥

नाभक्ष्यं भक्षयिष्यामि त्यजिष्ये क्षितिमंडलम् ॥

येन शक्रादयो देवा यांति कष्टतरां दशाम्॥ ११ ॥

एवं संचिंत्य मनसा सकोपो हव्यवाहनः ॥

प्रणष्टः सकलं हित्वा मर्त्यलोकं चराचरम् ॥ १२ ॥

प्रणष्टे सहसा वह्नावग्निष्टोमादिकाः क्रियाः ॥

प्रणष्टास्तु जनाः सर्वे विशेषात्संशयं गताः ॥ १३ ॥

ततो देवगणाः सर्वे संदेहं परमं गताः ॥

यज्ञभागविहीनत्वान्मंत्रं चक्रुस्ततो मिथः ॥ १४ ॥

त्यक्तस्तु वह्निना मर्त्यस्ततो नाशं गता नराः ॥

शेषनाशाद्वयं सर्वे विनंक्ष्यामो न संशयः ॥ १५ ॥

तस्मादन्वेष्यतां वह्निर्यत्र तिष्ठति सांप्रतम् ॥

यथा चरति मर्त्ये च तथा नीतिर्विधीयताम्॥ १६ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं ते निश्चयं कृत्वा सर्वे देवाः सवासवाः ॥

अन्वैषयंस्तथाग्निं ते समंतात्क्षितिमंडले ॥ १७ ॥

ततस्ते पुरतो दृष्ट्वा शुकं श्रांता दिवौकसः ॥

पप्रच्छुः श्रद्धया वह्निर्यदि दृष्टः प्रकथ्यताम् ॥१८॥

॥ शुक उवाच ॥ ॥

योऽयं वंशो महानग्रे प्रदग्धो वह्निसंगतः ॥

प्रणष्टो हव्यवाहोत्र मया दृष्टो महाद्युतिः ॥ १९ ॥

शुकेनावेदितो वह्निः शप्त्वा तं मन्युना वृतः ॥

गद्गदा भावि ते वाणी प्रोक्त्वेदं प्रस्थितो द्रुतम् ॥ 7.3.30.२० ॥

प्रविवेश शमीगर्भमश्वत्थं तरुसत्तमम् ॥

तत्रस्थो द्विपराज्ञा स कथितो विबुधान्प्रति ॥ २१ ॥

स तं प्रोवाच ते जिह्वा विपरीता भविष्यति ॥

ततो जलाशयं गत्वा पर्वतेऽर्बुदसंज्ञके ॥ २२ ॥

प्रविष्टो भगवान्वह्निर्यथा देवैर्न लक्ष्यते ॥

तत्रोत्थेन दर्दुरेण तेषां प्रोक्तो हुताशनः ॥ २३ ॥

अत्राऽसौ तिष्ठते वह्निर्निर्झरे पर्वतस्य च ॥

दग्धाश्च जलजाः सर्वे सुतप्तेनैव वारिणा ॥ ॥ २४ ॥
कृच्छ्रादहं विनिष्क्रांतस्तस्मान्मृत्युमुखात्सुराः ॥
तच्छ्रुत्वा यत्नमास्थाय प्रविष्टो हव्यवाहनः ॥ २५ ॥
भविष्यसि विजिह्वस्त्वं शस्वा तं दर्दुरं नृपः ॥ २६ ॥
ततो देवगणाः सर्वे निष्क्रांताः सलिलाश्रयात् ॥
संवेष्ट्य तुष्टुवुः सर्वे स्तवैर्वेदोद्भवैर्नृप ॥ २७ ॥
॥ देवा ऊचुः ॥ ॥
त्वमग्ने सर्वभूतानामंतश्चरसि पावक ॥
त्वया हीनं जगत्सर्वं नाशं यास्यति सत्वरम् ॥ २८ ॥
त्वं मुखं सर्वदेवानां त्वयि लोकाः प्रतिष्ठिताः ॥
भूलोके च त्वया त्यक्ते वयं सर्वे सवासवाः ॥
विनाशमेव यास्यामस्तस्मात्त्वं त्रातुमर्हसि ॥ २९ ॥
त्वं ब्रह्मा त्वं महादेवस्त्वं विष्णुस्त्वं दिवाकरः ॥
त्वं चंद्रस्त्वं च धनदो मरुत्त्वं च सुरेश्वरः ॥7.3.30.३०॥
इंद्राद्या विबुधाः सर्वे त्वदायत्ता हुताशन ॥
किमर्थं भगवन्मर्त्यं त्यक्त्वा त्वमत्र संस्थितः ॥
किमर्थं भगवन्नस्माननागांस्त्यक्तुमिच्छसि ॥ ३१ ॥
॥ पुलस्त्य उवाच ॥ ॥
वेष्टितो भगवान्वह्निर्देवैः स्तुतिपरायणैः ॥
तस्यैव निर्झरस्याथ तटस्थो वाक्यमब्रवीत् ॥ ३२ ॥
॥ वह्निरुवाच ॥ ॥
अभक्ष्यभक्षणे शक्रो मामिच्छति नियोजितुम् ॥
तेनैव न करोत्येष वृष्टिं मर्त्ये सुरेश्वरः ॥ ३३ ॥
अतोऽहं भूतलं त्यक्त्वा प्रविष्टो निर्झरे त्विह ॥
प्रणष्टान्नरसे लोके न चाहं स्थातुमुत्सहे ॥ ३४ ॥
॥ शक्र उवाच ॥ ॥
शृणु यस्मान्मया रोधः कृतो वृष्टेर्हुताशन ॥
देवापिर्नाम धर्मज्ञः क्षत्रियाणां यशस्करः ॥ ३५ ॥

प्रतीपस्तत्सुतः साधुः सर्वशीलवतां वरः ॥

देवापौ च गते स्वर्गं ज्येष्ठभ्रातरमग्रजम्॥

संत्यक्त्वा जगृहे राज्यं शंतनुस्तत्सुतोऽवरः ॥ ३६ ॥

एतस्मात्कारणाद्राज्ये तस्य वृष्टिर्निराकृता ॥

तवादेशात्करिष्यामि निवर्तस्व हुताशन ॥ ३७ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा सहस्राक्षः पुष्करावर्तकान्घनान् ॥

द्रुतमाज्ञापयामास वृष्ट्यर्थं जगतीतले॥ ३८॥

अथ शक्रसमादिष्टा विद्युत्वन्तो बलाहकाः॥

गम्भीरराविणः सर्वं भूतलं प्रचुरैर्जलैः॥

पूरयामासुरत्युग्रा द्युतिमन्तो महीपते॥ ३९॥

ततोऽगमत्परां तुष्टिं भगवान्हव्यवाहनः॥

रोचयामास भूपृष्ठे वसतिं देवकारणात्॥ 7.3.30.४०॥

देवा ऊचुः॥

तवाऽऽदेशात्कृता वृष्टिरन्यत्कार्यं हुताशन ॥

यत्ते प्रियं तदस्माकं सुशीघ्रं हि निवेदय ॥ ४१ ॥

॥ अग्निरुवाच ॥ ॥

एतज्जलाशयं पुण्यं मन्नाम्ना तीर्थमुत्तमम् ॥

ख्यातिं यातु धरापृष्ठे युष्माकं हि प्रसादतः ॥ ४२ ॥

॥ देवा ऊचुः ॥ ॥

अग्नितीर्थमिदं लोके प्रख्यातिं संप्रयास्यति ॥

अत्र स्नातो नरः सम्यगग्निलोकं प्रयास्यति ॥ ४३ ॥

यस्तिलान्दास्यति नरस्तीर्थेऽस्मिन्सुसमाहितः ॥

अग्निष्टोमस्य यज्ञस्य फलं तस्य भविष्यति ॥४४॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा सुराः सर्वे स्वस्वस्थानं ययुस्ततः ॥

वह्निश्च भगवान्राजन्यथापूर्वमवर्तत ॥ ४५ ॥

यश्चैत्पठते नित्यं प्रातरुत्थाय चोत्तमम् ॥ अग्नितीर्थस्य माहात्म्यं मुच्यते सर्वपातकैः ॥ ४६ ॥

अहोरात्रकृतात्पापात्स शृण्वन्नपि मुच्यते ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डेऽग्नितीर्थमाहात्म्यवर्णनंनाम त्रिंशोऽध्यायः ॥ ३० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३१

https://sa.wikisource.org/s/gli
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

रक्तानुबन्धं वै गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ॥

यत्र स्नातो नरः सम्यङ्मुच्यते ब्रह्महत्यया ॥ १ ॥

पुराऽऽसीत्पार्थिवोनाम इंद्रसेनो महीपतिः ॥

तस्याऽऽसीत्सुप्रिया भार्या सुनन्दानाम भामिनी ॥

पतिव्रता पतिप्राणा सदा पत्युः प्रिये स्थिता ॥ २ ॥

कस्यचित्त्वथ कालस्य स राजा सपरिग्रहः ॥

परदेशं गतो हंतुं शत्रुसंघं दुरासदम् ॥ ३ ॥

तं निहत्य धनं भूरि गृहीत्वा प्रस्थितो गृहम् ॥

ततोऽग्रे प्रेषयामास स दूतं कृत्रिमं नृप ॥ ४ ॥

सुनन्दां ब्रूहि गत्वा त्वमिन्द्रसेनो हतो रणे ॥

तदाकारस्ततो लक्ष्यः पातिव्रत्ये ममाज्ञया ॥ ५ ॥

यदि सा निश्चयं गच्छेन्मरणं प्रति भामिनी ॥

तदा रक्ष्या प्रयत्नेन वाच्यं हास्यं ममोद्भवम् ॥ ६ ॥

एवमुक्तो गतो दूतस्तत्क्षणान्नृपसत्तम ॥

तस्यै निवेददामास यदुक्तं तेन भूभुजा ॥ ७ ॥

अथ तस्य वचः श्रुत्वा सुनंदा चारुहासिनी ॥

गतप्राणा नृपश्रेष्ठ पतिप्राणा महासती ॥ ८ ॥

यस्मिन्काले मृता सा तु सुनन्दा शीलमंडना ॥

तस्मिन्काले नृपः सोऽपि तत्पापेन समाश्रितः ॥ ९ ॥

अथापश्यद्द्वितीयां स च्छायां गात्रस्य चोपरि ॥

तथा गुरुतरं कायं सालस्यं समपद्यत ॥ 7.3.31.१० ॥

तेजोहीनं सुदुर्गंधि विवर्णं नृपसत्तम ॥

अथ प्राप्तो गृहं राजा श्रुत्वा भार्यासमुद्भवम् ॥ ११ ॥

विनाशं दुःखशोकार्तः करुणं पर्यदेवयत्॥
स ज्ञात्वा पापमात्मानं स्त्रीहत्यासुविदूषितम्॥ १२ ॥
ब्राह्मणानां समादेशात्तथा यात्रापरोऽभवत् ॥
कृत्वौर्द्ध्वदैहिकं तस्या लघुमात्र परिग्रहः ॥
वाराणस्यां गतः पूर्वं तत्र दानं ददौ बहु ॥१३॥
कपालमोचने तीर्थे सर्वपापप्रणाशने ॥
त्रिनेत्रो यत्र निर्मुक्तः पुरा वै ब्रह्महत्यया ॥१४॥
तस्य च्छाया द्वितीया सा न नष्टा तत्र भूपते ॥
ततः कनखलं प्राप्तः सुपुण्यं शुद्धिदं नृणाम् ॥ १५ ॥
तथैव पुष्करारण्यं तस्मादमरकण्टकम् ॥
कुरुक्षेत्रं ततो राजन्प्राप्तोऽसौ नृपसत्तमः ॥ १६ ॥
प्रभासं सोमतीर्थं च ततस्तु कृमिजांगले ॥
एकहंसं ततो राजन्पुण्यपारिप्लवं ततः ॥ १७ ॥
रुद्रकोटिं विरूपाक्षं ततः पंचनदं नृप ॥
एवमादीनि तीर्थानि पुण्यान्यायतनानि च ॥
परिभ्रमन्महीपाल परिश्रांतो नराधिपः ॥ १८ ॥
ततो वर्षसहस्रांते संप्राप्तोऽर्बुदपर्वते ॥
तत्रापश्यन्नरपतिस्तीर्थान्यायतनानि च ॥ १९ ॥
तपस्विसंघान्विविधान्ब्राह्मणान्वेदपारगान् ॥
ददौ दानानि बहुशो ब्राह्मणेभ्यो यदृच्छया ॥ 7.3.31.२० ॥
प्राप्तो रक्तानुबंधं च तीर्थं तत्रैव पर्वते ॥
तत्र स्नातो विनिष्क्रांतो यावत्पश्यति भूमिपः ॥ २१ ॥
तावन्न दृश्यते च्छाया द्वितीया स्त्रीवधोद्भवा ॥
लघुत्वं सर्वगात्राणि संप्राप्तानि महीपते ॥ २२ ॥
विगन्धता प्रणष्टा च तेजोवृद्धिः पराभवत् ॥
ततो हृष्टमना भूत्वा दत्त्वा दानानि भूरिशः ॥
स्तूयमानश्चतुर्दिक्षु बंदिभिः प्रस्थितो गृहम् ॥ २३ ॥
ततो रक्तानुबंधस्य सोमातिक्रमणं नृप ॥

यावत्करोति राजेन्द्र तावदस्य पुनस्तथा ॥२४॥

सा च्छाया दृश्यते देहे द्वितीया नृपसत्तम ॥

स एव गन्धो गात्रेषु तेजोहानिश्च सा नृप ॥ २५ ॥

ततो दुःखाभिसंतप्तो गतस्तत्रैव तत्क्षणात् ॥

रक्तबंधमनुप्राप्तो विपाप्मा सोऽभवत्पुनः ॥ २६ ॥

स ज्ञात्वा तीर्थमाहात्म्यं परं पार्थिवसत्तमः ॥

तत्र दारूणि चाहृत्य चितां कृत्वा ततो नृप ॥

दानं दत्त्वा द्विजाग्रेभ्यः प्रविष्टो हव्यवाहनम् ॥ २७ ॥

ततो विमानमारुह्य परित्यज्य कलेवरम् ॥

दिव्यमाल्यांबरधरः शिवलोकमुपागमत् ॥ २८ ॥

शिवलोकमनुप्राप्ते तस्मिन्पार्थिवसत्तमे ॥

देवर्षयस्तदा वाक्यमिदमाहुः सुविस्मयात् ॥ २९ ॥

तीर्थेभ्यस्तु परं तीर्थमिदं वै पावनं परम् ॥

इन्द्रसेनो ह्यतः पापात्तीर्थसंगाद्व्यमुच्यत ॥ 7.3.31.३० ॥

ततः प्रभृति तत्तीर्थं ख्यातं च धरणीतले ॥

रक्तानां प्राणिनां यस्मादनुबन्धं करोति यत् ॥ ३१ ॥

रक्तानुबन्धमित्येव तस्मात्तत्कीर्त्यते क्षितौ ॥

तत्र सन्तर्प्य वै देवान्यः श्राद्धं कुरुते नृप ॥ ३२ ॥

तत्र संक्रमणे भानोर्यः स्नानं कुरुते नरः ॥

श्रद्धया परया युक्तो मुच्यते ब्रह्महत्यया ॥ ३३ ॥

पितृक्षेत्रे गयायां च श्राद्धं यः कुरुते नरः ॥

गयाश्राद्धसमं प्राहुः फलं तस्य महर्षयः ॥ ३४ ॥

चन्द्रसूर्योपरागे वा गोदानं नृपसत्तम ॥

यः करोति नरस्तत्र स कुलान्सप्त तारयेत् ॥ ३५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे रक्तानुबन्धमाहात्म्यवर्णनंनामैकत्रिंशोऽध्यायः ॥ ॥ ३१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३२

https://sa.wikisource.org/s/glj
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

पुलस्त्य उवाच ॥ ॥

महाविनायकं गच्छेत्ततः पार्थिवसत्तम ॥

यस्मिन्दृष्टे नृणां सद्यो निर्विघ्नत्वं प्रजायते ॥ १ ॥ ॥

॥ ययातिरुवाच ॥ ॥

कथं महत्त्वमगमत्पूर्वं तत्र विनायकः ॥

कस्मिन्काले द्विजश्रेष्ठ सर्वं विस्तरतो वद ॥ २ ॥ ॥

पुलस्त्य उवाच ॥ ॥

पुरोद्वर्त्तनजं लेपं गृहीत्वा नृप पार्वती ॥

विनोदार्थं चकाराथ बालकं सुकुमारकम् ॥ ३ ॥

लेपाभावाच्छिरोहीनं शेषांगावयवं नृप ॥

यथोक्तं निर्मयित्वा तं स्कन्दं वाक्यमथाब्रवीत् ॥ ४ ॥

लेपमानय भद्रं ते शिरोऽर्थं स्कन्द सत्वरम् ॥

येनायं पुत्रको मे स्याद्भ्राता ते परदुर्जयः ॥ ५ ॥

ततो गौरीसमादेशाल्लेपालब्धौ नृपोत्तम ॥

मत्तं गजवरं दृष्ट्वा शिरस्तस्य समानयत् ॥ ६ ॥

तस्मिन्नियोजयामास गात्रे लेपसमुद्भवे ॥

महद्वीदं शिरो भावि पुत्र कस्मात्त्वयाऽऽहृतम् ॥ ७ ॥

ब्रुवंत्याश्चापि पार्वत्या मा मेति च मुहुर्मुहुः ॥

न्यस्ते शिरसि तद्गात्रे दैवयोगान्नराधिप ॥ ८ ॥

विशेषान्नायकत्वं च गात्रेभ्यः समजायत ॥

बालकप्रतिमं कान्तं सर्वलक्षणलक्षितम् ॥ ९ ॥

त्रिगंभीरं चतुर्हस्तं सप्तरक्तं महीपते ॥

षडुन्नतं पञ्चदीर्घं पञ्चसूक्ष्मं सुसुन्दरम्॥ 7.3.32.१० ॥

त्रिविस्तीर्णं महाराज दृष्ट्वा गौरी सुविस्मिता ॥

सजीवं कारयामास स्वशक्त्या शक्तिरूपिणी ॥ ११ ॥

स सजीवः कृतो देव्या समुत्तस्थौ च तत्क्षणात् ॥

आदेशं याचयामास विनयानतकन्धरः ॥ १२ ॥

तं दृष्ट्वा चाद्भुताकारं प्रोक्त्वा पुत्रं मुहुर्मुहुः ॥

शंभोः सकाशमनयत्प्रहृष्टेनान्तरात्मना ॥ १३ ॥

ततोऽब्रवीत्सुतं देव ममैव गात्रलेपजम् ॥

देहि देव वरानित्थं महत्त्वं येन गच्छति ॥ १४ ॥

॥ श्रीभगवानुवाच ॥ ॥

शरीरस्थं शिरो मुख्यं यस्मात्पर्वतनन्दिनि ॥

महत्त्विदं शिरः प्रोक्तं त्वया स्कन्देन योजितम्॥ १५ ॥

विशेषान्नायकत्वं च गात्रे चास्य यतः स्थितम्॥

महाविनायको ह्येष तस्मान्नाम्ना भविष्यति ॥ १६॥

गणानां चैव सर्वेषामाधिपत्यं नगात्मजे ॥

अस्य दत्तं मया यस्माद्भविष्यति गणाधिपः ॥ १७ ॥

सर्वकार्येषु ये मर्त्याः पूर्वमेनं गणाधिपम् ॥

स्मरिष्यंति न वै तेषां कार्यहानिर्भविष्यति ॥ १८ ॥

ततोऽस्य प्रददौ स्कन्दः प्रक्रीडार्थं कुठारकम् ॥

तदेव चायुधं तस्य सुप्रियं हि सदाऽभवत् ॥ १९ ॥

ततो गौरी ददौ भोज्यपात्रं मोदकपूरितम् ॥

पुत्रस्नेहात्स तत्प्राप्य लास्यमेवं तदाऽकरोत् ॥ 7.3.32.२० ॥

तस्य भक्ष्यस्य गन्धेन निष्क्रान्तो मूषको बिलात् ॥

भक्षणाच्चामरो जातस्तस्य वाह्यो व्यजायत ॥ २१ ॥

॥ पुलस्त्य उवाच ॥ ॥

महाविनायको ह्येवं तत्र जातो मही पते ॥

तस्मिन्दृष्टे च यत्पुण्यं तत्त्वमेकमनाः शृणु ॥ २२ ॥

बाल्ये वयसि यत्पापं वार्द्धके यौवनेऽपि यत् ॥

करोति मानवो राजंस्तस्मात्पापात्प्रमुच्यते ॥ २३ ॥

माघमासे सिते पक्षे चतुर्थ्यां समुपोषितः ॥

यस्तं पश्यति वाग्ग्मी स सर्वज्ञश्च प्रजायते ॥

तस्याग्रे सुमहत्कुण्डं स्वच्छोदकपूरितम् ॥ २४ ॥

तत्र स्नात्वा नरो भक्त्या यः पश्यति विनायकम्॥

तस्यान्वयेऽपि सर्वज्ञा जायन्ते मानवा नृप ॥२५॥

गणानां त्वेति मंत्रेण कृत्वा वै त्रिः प्रदक्षिणम्॥

यस्तं पश्यति राजेन्द्र दुरितं न स पश्यति ॥ २६ ॥

तस्मात्सर्वप्रयत्नेन तं प्रपश्येद्विनायकम् ॥

य इच्छेत्सकलान्कामानिह लोके परत्र च ॥ २७ ॥

गृहस्थोऽपि च यो भक्त्या स्मरेत्कार्य उपस्थिते ॥

अविघ्नं तस्य तत्सर्वं संसिद्धिमुपगच्छति ॥ २८ ॥

प्रातरुत्थाय यो मर्त्यः स्मरेद्देवं विनायकम् ॥

तस्य तद्दिनजातानि सिद्धिं कृत्यानि यांति हि ॥ २९ ॥

विवाहे कलहे युद्धे प्रस्थाने कृषिकर्मणि ॥

प्रवेशे च स्मरेद्यस्तु भक्तिपूर्वं विनायकम् ॥

तस्य तद्वांछितं सर्वं प्रसादात्तस्य सिद्ध्यति ॥ 7.3.32.३० ॥

महाविनायकीं शांतिं यः करोति समाहितः ॥

न तं प्रेता ग्रहा रोगाः पीडयंति विनायकाः ॥३१॥

॥ ययातिरुवाच ॥ ॥

महावैनायिकीं शांतिं वद मे मुनिसत्तम ॥

के मंत्राः किं विधानं च परं कौतूहलं हि मे ॥ ३२ ॥

॥ पुलस्त्य उवाच ॥ ॥

शुक्लपक्षे शुभे वारे नक्षत्रे दोषवर्जिते ॥

श्रेष्ठचंद्रबले शांतिं गणेशस्य समाचरेत् ॥ ३३ ॥

पूर्वोत्तरे समे देशे कृत्वा वेदिं च मंडपम् ॥

मध्ये चाष्टदलं पद्मं गृह्यसूत्रं प्रयोजयेत् ॥३४॥

इन्द्रादिलोकपालांश्च दिक्षु सर्वासु भूपते ॥

गणेशपूर्विकाश्चापि मातरश्च विशेषतः ॥ ३५ ॥

गंधपुष्पोपहारैश्च यथोक्तैर्बलिविस्तरैः ॥

श्वेतवस्त्रयुगच्छन्नं कलशं जलपूरितम् ॥ ३६ ॥
तस्यैव पूर्वदिग्भागे सहिरण्यं फलान्वितम् ॥ ३७ ॥
गणानां त्वेति मंत्रेण सहस्रं चाष्टसंयुतम् ॥
जपेत्तत्र तथा चारून्पंचांगान्नृपसत्तम ॥ ३५ ॥
विनायकं समुद्दिश्य पुरः कुण्डे करात्मके ॥
चतुरस्रे योनियुते मेखलाभिर्विभूषिते ॥ ३९ ॥
मधुदूर्वाक्षतैहोमैर्ग्रहहोमादनंतरम् ॥
गणानां त्वेति मंत्रेण दशसाहस्रिकस्तथा ॥ 7.3.32.४० ॥
कार्यो वै पार्थिवश्रेष्ठ कार्यश्चोदङ्मुखैर्द्विजैः ॥
चतुर्भिश्चतुरै राजन्पीतवस्त्रानुलेपनैः ॥ ४१ ॥
पीतांबरधरैश्चैव धृतहेमांगुलीयकैः ॥
ततो होमावसाने तु यजमानं नृपोत्तम ॥ ४२ ॥
मृगचर्मोपरिस्थं च मंत्रैरेभिर्विधानतः ॥
स्नापयेत्प्राङ्मुखं शांतं शुक्लवस्त्रावगुंठितम् ॥ ४३ ॥
इमं मे गंगे यमुने पंचनद्यः सुपुष्करे ॥
श्रीसूक्तसहितं विष्णोः पावमानं वृषाकपिम् ॥ ४४ ॥
सम्यगुच्चार्य विघ्नानां ततो नाशं प्रपद्यते ॥
ग्रहाः सौम्यत्वमायांति भूता नश्यंति तत्क्षणात् ॥४५॥
आधयो व्याधयो रौद्रा दुष्टरोगा ज्वरादयः ॥
प्रणश्यंति द्रुतं सर्वे तथोत्पाताः सुदारुणाः ॥ ४६ ॥
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥
विनायकस्य माहात्म्यं महत्त्वं शांतिकं तथा ॥४७॥
यश्च कीर्तयते सम्यक्चतुर्थ्यां सुसमाहितः ॥
शृणोति वा नृपश्रेष्ठ तस्याऽविघ्नं सदा भवेत् ॥ ४८ ॥
यंयं काममभिध्यायन्यजेच्चेदं समाहितः ॥
तत्तदाप्नोति नूनं च गणनाथप्रसादतः ॥ ४९ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे विनायकमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३३



॥ पुलस्त्य उवाच ॥ ॥

ततः पार्थेश्वरं गच्छेद्देवं पातकनाशनम् ॥

यं दृष्ट्वा मानवः सम्यङ्मुच्यते सर्वपातकैः ॥ १ ॥

पार्थानाम्न्यभवत्साध्वी देवलस्य प्रिया सती ॥

तया पूर्वं तपस्तप्तं तत्र स्थाने महीपते ॥ २ ॥

सा पूर्वमभवद्वंध्या ऋषिपत्नी यशस्विनी ॥

वैराग्यं परमं गत्वा ततश्चैवार्बुदं गता ॥ ३ ॥

वायुभक्षा निराहारा समचित्ताऽऽसने स्थिता ॥

ततो वर्षसहस्रांते भक्त्या तस्या महीपते ॥ ॥ ४ ॥

उद्भिद्य धरणीपृष्ठं सहसा लिंगमुत्थितम् ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥ ५ ॥

पूजयैतन्महाभागे शिवलिंगं सुपावनम् ॥

त्वद्भक्त्या धरणीपृष्ठान्निःसृतं कामदं महत् ॥ ६ ॥

यो यं काममभिध्यायन्पूजयिष्यति मानवः ॥

अन्योपि तदभिप्रेतं प्राप्स्यते नात्र संशयः ॥ ॥ ७ ॥

पार्थेश्वराख्यमेतद्धि लोके ख्यातिं गमिष्यति ॥

एवमुक्त्वा ततो वाणी विरराम महीपते ॥८॥

ततः सा विस्मयाविष्टा पूजयामास तत्तदा ॥

ततः पुत्रशतं प्राप्तं दिव्यं वंशधरं तथा ॥ ९ ॥

ततः प्रभृति तल्लिंगं विख्यातं धरणीतले ॥

तत्रास्ति निर्मलं तोयं गिरिगह्वरनिःसृतम् ॥ 7.3.33.१० ॥

तत्र स्नात्वा नरः सम्यग्यस्तं पश्यति भावतः ॥

न स पश्यति संसारे दुःखं संतानसंभवम् ॥ ११ ॥

शुक्लपक्षे चतुर्द्दश्यां जागरं तस्य चाग्रतः ॥

यः करोति निराहारः स पुत्रं लभते ध्रुवम् ॥ १२ ॥

पिंडनिर्वापणं तत्र यः करोति समाहितः ॥

तस्य पुत्रत्वमायाति पितरस्तत्प्रसादतः ॥ ॥ १३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे पार्थेश्वरमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३४

https://sa.wikisource.org/s/gll
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

कृष्णतीर्थं ततो गच्छेत्कृष्णस्य दयितं सदा ॥

यत्र सन्निहितो नित्यं स्वयं विष्णुर्महीपते ॥ ॥

॥ ययातिरुवाच ॥ ॥

कृष्णतीर्थं कथं तत्र जातं ब्राह्मणसत्तम ॥

कस्मिन्काले मुने ब्रूहि सर्वं विस्तरतो मम ॥ ॥॥ २ ॥

॥ पुलस्त्य उवाच ॥ ॥

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजंगमे ॥

चंद्रार्कपवने नष्टे ज्योतिषि प्रलयं गते ॥ ३ ॥

ततो युगसहस्रांते विबुद्धः कमलासनः ॥

एकाकी चिंतयामास कथं सृष्टिर्भवेदिति ॥ ४ ॥

भ्रमंश्चापि चतुर्वक्त्रो यावत्पश्यति दूरतः ॥

चतुर्भुजं विशालाक्षं पुरुषं पुरतः स्थितम् ॥ ५ ॥

तं चोवाच चतुर्वक्त्रः कस्त्वं केन विनिर्मितः ॥

किमर्थमिह संप्राप्तः सर्वं विस्तरतो वद ॥ ६ ॥

तमुवाचाथ गोविंदः प्रहसञ्छलक्ष्णया गिरा ॥ ७ ॥

अहमाद्यः पुमानेको मया सृष्टो भवानपि ॥

स्रष्टुमिच्छामि भूयोऽपि भूतग्रामं चतुर्विधम् ॥ ८॥

॥ पुलस्त्य उवाच ॥ ॥

तस्य तद्वचनं श्रुत्वा क्रुद्धो देवः पितामहः ॥

अब्रवीत्परुषं वाक्यं भर्त्सयंश्च पुनःपुनः ॥ ९ ॥

सृष्टस्त्वं हि मया मूढ प्रथमोऽहमसंशयम् ॥

त्वादृशानां सहस्राणि करिष्येऽहमसंशयम् ॥ 7.3.34.१० ॥

एवं विवदमानौ तौ मिथो राजन्महाद्युती ॥

स्पर्धया रोषताम्राक्षौ युयुधाते परस्परम्॥ ११ ॥

मुष्टिभिर्बाहुभिश्चैव नखैर्दंतैर्विकर्षणैः ॥

एवं वर्षसहस्रं तु तयोर्युद्धमवर्त्तत ॥ १२ ॥

ततो वर्षसहस्रांते तयोर्मध्ये नृपोत्तम ॥

प्रादुर्भूतं महालिंगं दिव्यं तेजोमयं शुभम् ॥ १३ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

युद्धाद्ब्रह्मन्निवर्तस्व त्वं च विष्णो ममाज्ञया ॥ १४ ॥

एतन्माहेश्वरं लिंगं योऽस्य चांते गमिष्यति ॥

स ज्येष्ठः स विभुः कर्त्ता युवयोर्नात्र संशयः ॥ १५ ॥

अधोभागं व्रजत्वेक एकश्चोर्द्ध्वं ममाज्ञया ॥

तच्छ्रुत्वा सत्वरो ब्रह्मा व्योममार्गं समाश्रितः ॥ १६ ॥

विदार्य वसुधां कृष्णोऽप्यधस्तात्सत्वरं गतः ॥

स भित्त्वा सप्तपातालानधो यावत्प्रयाति च ॥

तावत्कालाग्निरुद्रस्तु दृष्टस्तेन महात्मना ॥ १७ ॥

गंतुमिच्छंस्ततोऽधस्ताद्यावद्वेगं करोति सः ॥

तावत्तस्यार्चिभिर्दग्धः कृष्णत्वं समपद्यत ॥ १८ ॥

ततो मूर्छाभिसंतप्तो दह्यमानोऽद्भुताग्निना ॥

निवर्त्य सहसा विष्णुर्वैलक्ष्यं परमं गतः ॥ १९ ॥

तथा लिंगं समासाद्य भक्त्या पूजा कृता ततः ॥

वेदोक्तैः परमैः सूक्ष्मैः स्तुतिं चक्रे महीपते ॥ 7.3.34.२० ॥

ब्रह्माऽपि व्योममार्गेण गतो हंसविमानतः ॥

दिव्यं वर्षसहस्रं तु तस्यांतं नाभ्यपद्यत ॥ २१ ॥

ततो वर्षसहस्रांते केतकीं सोऽप्यपश्यत ॥

आयांतीं व्योममार्गेण तया पृष्टश्चतुर्मुखः ॥ २२ ॥

क्व त्वया गम्यते ब्रह्मन्निरालंबे महापथि ॥

शून्ये तत्त्वं समाचक्ष्व परं कौतूहलं हि मे ॥ २३ ॥

॥ ब्रह्मोवाच ॥ ॥

मम स्पर्धा समुत्पन्ना विष्णुना सह शोभने ॥

लिंगस्यास्य हि पर्यंतं यो लभिष्यति चावयोः ॥ २४ ॥

स ज्यायानितरो हीनो ह्येतदुक्तं पिनाकिना ॥

प्रस्थितोऽहं ततश्चोर्द्ध्वमधोमार्गं गतो हरिः ॥ २५ ॥

लब्ध्वा लिंगस्य पर्यंतं यास्यामि क्षितिमंडले ॥

तस्य तद्वचनं श्रुत्वा तत्पुष्पमभ्यभाषत ॥ २६ ॥

व्यर्थश्रमोऽसि लोकेश नांतो लिंगस्य विद्यते ॥

चतुर्युगसहस्राणां कोटिरेका पितामह ॥ २७ ॥

लिंगमूर्ध्नः पतंत्या मे कालो जातो महाद्युते ॥

तथापि क्षिति पृष्ठं तु न प्राप्तास्मि कथंचन ॥ २८ ॥

यावत्कालेन हंसस्ते योजनं संप्रगच्छति ॥

तावत्कालेन गच्छामि योजनानामहं शतम् ॥ २९ ॥

तस्मान्निवर्तनं युक्तं मम वाक्येन ते विभो ॥

दर्शयित्वा च मां विष्णोर्ज्येष्ठत्वं व्रज सांप्रतम् ॥ 7.3.34.३० ॥

ततो हृष्टमना भूत्वा गृहीत्वा तां चतुर्मुखः ॥

पुनर्वर्षसहस्रांते भूमिपृष्ठमुपागतः ॥

दर्शयामास तां विष्णोरेषा लिंगस्य मूर्धतः ॥ ३१ ॥

मयाऽऽनीता शुभा माला लब्धश्चांतं चतुर्भुज ॥

त्वया लब्धो न चासत्यं वद मे पुरुषोत्तम ॥ ३२ ॥

॥ विष्णुरुवाच ॥ ॥

अनंतस्याप्रमेयस्य देवदेवस्य शूलिनः ॥

नाहं शक्तः परं पारं गंतुं ब्रह्मन्कथंचन ॥ ३३ ॥

यदि त्वयाऽस्य पर्यंतो लब्धो ब्रह्मन्कथंचन ॥

तत्ते तुष्टिं गतो नूनं देवदेवो महेश्वरः ॥ ३४ ॥

नान्यथा चास्य पर्यंतो दृश्यते केन चित्क्वचित् ॥

तस्माज्ज्येष्ठो भवाञ्छ्रेष्ठः कनिष्ठोऽहमसंशयम् ॥ ३५ ॥

॥ पुलस्त्य उवाच ॥ ॥

एतस्मिन्नेव काले तु भगवान्वृषभध्वजः ॥

कोपं चक्रे महाराज ब्रह्माणं प्रति तत्क्षणात् ॥ ३६ ॥

अथाह दर्शनं गत्वा धिग्धिग्व्यर्थप्रजल्पक ॥
मिथ्या प्रजल्पमानेन किमिदं साहसं कृतम् ॥ ॥ ३७ ॥
यस्मात्त्वया मृषा प्रोक्तं मम पर्यंतदर्शनम् ॥
तस्मात्त्वं सर्ववर्णानां पूजार्हो न भविष्यसि ॥ ३८ ॥
ये च त्वां पूजयिष्यंति मानवा मोह संयुताः ॥
ते कृच्छ्रं परमं प्राप्य नाशं यास्यंति कृत्स्नशः ॥ ३९ ॥
केतक्या च तथा प्रोक्तं यस्मात्तस्मात्सुदुष्टया ॥
अस्या हि स्पर्शनाल्लोकः श्वपाकत्वं प्रयास्यति ॥ 7.3.34.४० ॥
एवं शापो तयोर्दत्त्वा देवः प्रोवाच केशवम् ॥
प्रसन्नवदनो भूत्वा तदा तुष्टो महेश्वरः ॥ ४१ ॥
॥ भगवानुवाच ॥ ॥
वासुदेव महाबाहो तुष्टस्तेऽहं महामते॥
सत्यसंभाषणादेव वरं वरय सुव्रत ॥४२॥
॥ श्रीवासुदेव उवाच॥ ॥
एष एव वरः श्लाघ्यो यत्त्वं तुष्टो महेश्वरः ॥
न चापुण्यवतां देव त्वं तुष्टिमधिगच्छसि ॥
अवश्यं यदि मे देयो वरो देवेश्वर त्वया ॥४३॥
लिंगमेतदनंताख्यं लघुतां नय मा चिरम्॥
येन सृष्टिर्भवेल्लोके व्याप्तं विश्वमनेन तु ॥ ४४ ॥
॥ पुलस्त्य उवाच ॥ ॥
ततः संक्षिप्य तल्लिंगं लघु कृत्वा महेश्वरः ॥
अब्रवीत्केशवं भूयः शृणु वाक्यमिदं हरे ॥ ४५ ॥
एतन्मेध्यतमे देशे लिंगं स्थापय मे हरे ॥
पूजय त्वं विधानेन परं श्रेयः प्रपत्स्यसे ॥ ४६ ॥
मम तेजोविनिर्दग्धः कृष्णत्वं हि यतो गतः ॥
कृष्ण एव ततो नाम लोके ख्यातिं गमिष्यति ॥ ४७ ॥
कृष्णकृष्णेति ते नाम प्रातरुत्थाय मानवः ॥
कीर्तयिष्यति यो भक्त्या स याति परमां गतिम् ॥४८॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा तमीशानस्तत्रैवांतरधीयत ॥

वासुदेवोऽपि तल्लिंगं गृहीत्वाऽर्बुदपर्वते ॥

निर्झरे स्थापयामास सुपुण्ये विमलोदके ॥ ४९ ॥

कृष्णतीर्थं ततो जातं नाम्ना हि धरणीतले ॥

शृणु पार्थिवशार्दूल तत्र स्नातस्य यत्फलम् ॥ 7.3.34.५० ॥

स्नात्वा कृष्णह्रदे पुण्ये तल्लिंगं पश्यते तु यः ॥

सर्वतीर्थोद्भवं श्रेयः स मर्त्यो लभतेऽखिलम् ॥ ५१ ॥

तथा च सर्वदानानां निष्कामः प्राप्नुयात्फलम् ॥

सकामोऽपि फलं चेष्टं यद्यपि स्यात्सुदुर्ल्लभम् ॥ ५२ ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥

य इच्छेच्छाश्वतं श्रेयो नात्र कार्या विचारणा ॥ ५३ ॥

एकादश्यां महाराज निराहारो जितेन्द्रियः ॥

यस्तत्र जागरं कृत्वा लिंगस्याग्रे सुभक्तितः ॥ ५४ ॥

प्रभाते कुरुते श्राद्धं यस्तु श्रद्धासमन्वितः ॥

पितॄन्संतारयेत्सर्वान्पूर्वजैः सह धर्मवित् ॥ ५५ ॥

तिलान्कृष्णान्नरस्तत्र ब्राह्मणेभ्यो ददाति यः ॥

ब्रह्महत्यादिभिः पापैः स मर्त्यो मुच्यते ध्रुवम् ॥ ॥ ५६ ॥

दर्शनादेव राजेन्द्र कृष्णतीर्थस्य मानवः ॥

मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ ५७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे कृष्णतीर्थमाहात्म्यवर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३५

https://sa.wikisource.org/s/glm



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ तीर्थं पापप्रणाशनम् ॥

मामुह्रदमिति ख्यातं तस्मिन्पर्वतरोधसि ॥ १ ॥

तत्र स्नातो नरः सम्यक्छ्रद्धावान्सुसमाहितः ॥

मुच्यते पातकैर्घोरैः पूर्वजन्मकृतैरपि ॥ २ ॥

तस्य पश्चिमदिग्भागे लिंगमस्ति महीपते ॥

सर्वकामप्रदं नृणां स्थापितं मुद्गलेन तु ॥ ३ ॥

स्नात्वा मामुह्रदे पुण्ये यस्तल्लिंगं च पश्यति ॥

शुक्लपक्षे चतुर्द्दश्यां फाल्गुने मासि मानवः ॥

स प्राप्नोति परं श्रेयः सर्वतीर्थेषु दुर्लभम् ॥ ४ ॥

यस्तत्र कुरुते श्राद्धं दक्षिणां मूर्तिमाश्रितः ॥

पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम्॥ ५ ॥

तत्र दानं प्रशंसंति नीवाराणां महर्षयः ॥

शाकमूलादिभिः श्राद्धं पितृणां तुष्टिदं नृप ॥ ६ ॥

॥ ययातिरुवाच ॥ ॥

मामुह्रदमिति विभो कथं नामाऽभवत्पुरा ॥

मुद्गलस्याश्रमं ब्रूहि मम सर्वं विधानतः ॥ ७ ॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

तत्रस्थस्य पुरा राजन्मुद्गलस्य महात्मनः ॥

विमानं वरमादाय देवदूतः समागतः ॥ ८ ॥

सोऽब्रवीद्देवराज्ञाहं प्रेषितो मुनिसत्तम ॥

तवार्थायाऽऽरुहैनं त्वं विमानं गम्यतां दिवि॥ ९ ॥

॥ मुद्गल उवाच ॥ ॥

स्वर्गस्य ये गुणा दूत ये च दोषा प्रकीर्तिताः ॥।

तान्मे वद करिष्येऽहं श्रुत्वा वै यत्क्षमं भवेत्॥ 7.3.35.१० ॥

ब्रूहि तान्सकलान्दूत त्वागमिष्याम्यहं ततः ॥ ११ ॥

॥ देवदूत उवाच॥ ॥

अलमेतेन दर्पेण क्रियतां शक्रजल्पितम्॥

पुण्यैः स्वकैर्द्विजश्रेष्ठ समागच्छेरिदं ततः ॥ १२ ॥

॥ मुद्गल उवाच ॥ ॥

अश्रुतैस्तैर्न गच्छेऽहमेतन्मे हृदि निश्चितम् ॥

करिष्येऽहं तपो भूरि पूजयिष्ये महेश्वरम् ॥ १३ ॥

॥ दूत उवाच ॥ ॥

न शक्तः स्वर्गुणान्वक्तुमपि वर्षशतैरपि ॥

संक्षेपात्कथयिष्यामि यदि ते निश्चयः परः ॥ १४ ॥

नंदनादीनि रम्याणि तत्र देववनानि च ॥

अनन्यसदृशा भोगाः सदा तृप्तिर्द्विजोत्तम ॥४५॥।

बुभुक्षा नैव तृष्णा च निद्रालस्ये न च प्रभो ॥

रंभाद्यप्सरसो मुख्या गंधर्वास्तुंबरादयः ॥

रमयंति नरं तत्र गीतैर्नृत्यैरनेकशः ॥ १६ ॥

एवं च वसते तत्र जनः स्वर्गे तपोधन ॥

यावत्पुण्यक्षयस्तावत्पश्चात्पातमवाप्नुयात् ॥१७॥

एक एव मुने दोषः स्वर्लोके प्रतिभाति मे ॥

स एव पतनाख्यस्तु स्वर्गिणां च भयावहः ॥ १८ ॥

न पुण्यं लभते तत्र कर्तुं विप्र कथंचन ॥

कर्मभूमिरियं ब्रह्मन्भोगभूमिस्तु सा स्मृता ॥ १९ ॥

यदत्र क्रियते कर्म शुभं तत्रोप भुज्यते ॥

तथा दृष्ट्वा विमानस्थान्भूरिधर्मादिसंयुतान्॥7.3.35.२०॥

बहुतेजोन्वितान्स्वर्गे ह्यल्पपुण्यो द्विजोत्तम ॥

पश्चात्तापजदुःखेन स्वर्गस्थो दुःखितः सदा ॥ २१ ॥

न मया सुकृतं भूरि कृतं मर्त्ये कथंचन ॥ २२ ॥

तथा च पतमानांश्च दृष्ट्वा चान्यान्सहस्रशः ॥

आत्मनश्च महद्दुःखं जायते च तदद्भुतम्॥ २३ ॥

एतत्ते सर्वमाख्यातं गुणदोषसमुद्भवम् ॥

स्वर्गसंचेष्टितं ब्रह्मन्कुरुष्व यदभीप्सितम् ॥ २४ ॥

॥ मुद्गल उवाच ॥ ॥

पतनस्य भयं यत्र पुण्यहानिर्न वर्द्धनम्॥

तेन स्वर्गेण मे दूत नैव कार्यं कथंचन॥ २५॥

वाच्यस्त्वया ममादेशाद्देवराजः स्फुटं वचः॥

क्षम्यतामपराधो मे न स्वर्गाय स्पृहा मम॥ २६॥

तत्कर्माऽहं करिष्यामि येन नो पतनाद्भयम्।.

साधयिष्यामि ताँल्लोकान्ये सदा पातवर्जिताः॥ २७॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा नृपश्रेष्ठ मुद्गलः स्वर्गनिःस्पृहः ॥

स्थितस्तत्रैव निरतः शिवध्यानपरायणः ॥ २८ ॥

श्रुत्वा दूतोऽपि शक्रस्य तस्य वाक्यं सविस्तरम्॥

कथयामास शक्रस्य तं भूयः सोऽभ्यभाषत ॥ २९ ॥

देवदूताप्रमाणं च विमानं हि त्वया कृतम् ॥

न कृतं केन चित्पूर्वं न करिष्यति कश्चन ॥ 7.3.35.३० ॥

तस्मात्तत्र द्रुतं गत्वा बलादानय तं मुनिम् ॥

आनयस्वान्यथा शापं तव दास्याम्यसंशयम् ॥ ३१ । ॥

॥ पुलस्त्य उवाच ॥ ॥

शक्रस्य वचनं श्रुत्वा देवदूते भयान्वितः ॥

प्रस्थितः सत्वरं तत्र मुद्गलो यत्र तिष्ठति ॥ ३२ ॥

मुद्गलोऽपि विमानस्थं पुनर्दृष्ट्वा समागतम् ॥

मामुह्रदे प्रविश्याथ वारयामास तं तदा ॥ ३३ ॥

स तस्य वचनेनैव स्तंभितो लिखितो यथा ॥

चलितुं नैव शक्नोति प्रभावात्तस्य सन्मुनेः ॥ ३४ ॥

चिरकालगतं ज्ञात्वा दूतं तु त्रिदशाधिपः ॥

स्वयं तत्राययौ कोपादारुह्यैरावणं गजम् ॥ ३५ ॥।

अथ दृष्ट्वा तदा दूतं स्तंभितं मुद्गलेन तु ॥
वधार्थं तूद्यतस्तस्य स वज्रं भ्रामयंस्तदा ॥ ३६ ॥
एतस्मिन्नेव काले तु उत्पातास्तत्र दारुणाः ॥
अपसव्यं मृगाश्चक्रुः पशवः पक्षिणश्च ये ॥
तान्दृष्ट्वा चिन्तयामास मुद्गलो विस्मयान्वितः ॥ ३७ ॥
अथ दृष्ट्वांबरगतं वज्रोद्यतकरं हरिम् ॥
स्तंभयामास तं सद्यो दृष्टिपातेन मुद्गलः ॥ ३८ ॥
तत्र शक्रः स्तुतिं चक्रे भग्नोत्साहो नृपोत्तम ॥
मुञ्च मां ब्राह्मणश्रेष्ठ यास्यामि त्रिदशालयम् ॥ ३९ ॥
स्वर्गे वा यदि वा मर्त्ये तिष्ठ त्वं स्वेच्छया द्विज ॥
मया कृतः समुद्योगो हितार्थं ते मुने ह्ययम् ॥ 7.3.35.४० ॥
वरं वरय भद्रं ते नित्यं यो मनसि स्थितः ॥
तं ते सर्वं प्रदास्यामि यद्यपि स्यात्सुदुर्लभम् ॥ ४१ ॥
॥ मुद्गल उवाच ॥ ॥
एष एव वरः श्लाघ्यो यत्त्वं दृष्टः सुरेश्वर ॥
दर्शनं ते सहस्राक्ष स्वप्नेष्वपि सुदुर्लभम् ॥ ४२ ॥
अवश्यं यदि मे देयो वरो वृत्रनिषूदन ॥
त्वत्प्रसादेन मे मोक्षो जायतां शीघ्रमेव हि ॥ ४३ ॥
मा मु ह्रदं समागत्य दूतः प्रोक्तो मया यतः ॥
ततो मामुह्रदमिति ख्यातिं यातु धरातले ॥ ४४ ॥
तीर्थमेतत्सहस्राक्ष सर्व पापप्रणाशनम् ॥
अत्र स्नात्वा दिवं यांतु त्वत्प्रसादात्सुरेश्वर ॥ ४५ ॥
पिण्डदानात्परां प्रीतिं लभंतां पितरोऽत्र हि ॥ ४६ ॥
॥ इन्द्र उवाच ॥ ॥
मामुह्रदमिति ख्यातं तीर्थमेतद्भविष्यति ॥
वरिष्ठं नात्र सन्देहो मत्प्रसादाद्द्विजोत्तम ॥ ४७ ॥
अत्र ये फाल्गुने मासि पौर्णमास्यां समाहिताः ॥
करिष्यंति पुनः स्नानं ते यास्यंति परां गतिम् ॥ ४८ ॥

पिण्डदानाद्गयातुल्यं लप्स्यंते फलमुत्तमम् ॥
पुण्यदानफलं चात्र संख्याहीनं द्विजोत्तम ॥ ४९ ॥
॥ पुलस्त्य उवाच ॥ ॥
एवमुक्त्वा ययौ स्वर्गं दूतमादाय वज्रभृत् ॥
मुद्गलोऽपि परं ब्रह्म चिंतयन्ह्यनिशं ततः ॥ 7.3.35.५० ॥
शुक्लध्यानपरो भूत्वा मोक्षं प्राप्तस्ततोऽक्षयम् ॥ ५१ ॥
अत्र गाथा पुरा गीता नारदेन महात्मना ॥
बहुविप्रसमवाये पर्वतेस्मिन्महीपते ॥ ५२ ॥
मामु ह्रदे नरः स्नात्वा दृष्ट्वा तं मुद्गलेश्वरम् ॥
इह भुक्त्वाऽखिलान्कामानन्ते मुक्तिमवाप्स्यति ॥
एतस्मात्कारणाद्राजन्मामुह्रदमिति स्मृतम् ॥ ५३ ॥
तत्तीर्थं सर्वतीर्थानां प्रवरं लोकविश्रुतम् ॥
तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥ ५४ ॥
मोक्षकामो विशेषेण य इच्छेत्परमं पदम् ॥
चण्डिकाश्रममासाद्य किं पुनः परितप्यते ॥ ५५ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे प्रथमेऽर्बुदखण्डे मामुह्रदोत्पत्तिवर्णनंनाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३६

https://sa.wikisource.org/s/gln



॥ ययातिरुवाच ॥ ॥

चंडिकाया द्विजश्रेष्ठ कथं तत्राश्रमोऽभवत् ॥

कस्मिन्काले फलं तेन किं दृष्टेन भवेन्नृणाम् ॥ १ ॥

॥ पुलस्त्य उवाच ॥ ॥

शृणु राजन्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥

यां श्रुत्वा मानवः सम्यक्सर्वपापैः प्रमुच्यते ॥ २ ॥

पुरा देवयुगे राजन्महिषोनाम दानवः ॥

पितामहवराद्दृप्तः सर्वदेवभयंकरः ॥ ३ ॥

तेन शक्रादयो देवा जिताः संख्ये सहस्रशः ॥

भयात्तस्य दिवं हित्वा गतास्ते वै यथादिशम् ॥ ४ ॥

त्रैलोक्यं स वशे कृत्वा स्वयमिन्द्रो बभूव ह ॥ ५ ॥

आदित्या वसवो रुद्रा नासत्यौ मरुतां गणाः ॥

कृतास्तेन तथा दैत्या यथार्ह बलवत्तराः ॥ ६ ॥

वह्निर्भयं समापन्नस्त्यक्त्वा देवगणांस्तदा ॥

दानवेभ्यो हविर्भागं देवेभ्यो न प्रयच्छति ॥ ७ ॥

उद्द्योतं कुरुते सूर्यो याद्दक्तस्याभिसंमतः ॥

यज्ञभागं विनाऽप्येष भयात्पार्थिवसत्तम ॥ ८ ॥

लोकपालास्तथा सर्वे तस्य कर्म प्रचक्रिरे ॥

दासवत्पार्थिवश्रेष्ठ यज्ञभागं विनाकृताः ॥ ॥ ९ ॥

कस्यचित्त्वथ कालस्य सर्वे देवाः समेत्य तु ॥

पप्रच्छुर्विनयोपेता विप्रश्रेष्ठं बृहस्पतिम् ॥ 7.3.36.१० ॥

भगवान्किं वयं कुर्मः कुत्र यामो निराश्रयाः ॥

तस्माद्ब्रूहि क्षयोपायं महिषस्य दुरात्मनः ॥ ११ ॥

एवमुक्तो गुरुर्देवैर्ध्यात्वा कालं चिरं नृप ॥

ततस्तांस्त्रिदशान्प्राह जीवयन्निव भूपतेः ॥ १२ ॥

॥ बृहस्पतिरुवाच ॥ ॥

ब्रह्मलब्धवरो दैत्यः पौरुषे च व्यवस्थितः ॥

अवध्यः सर्वदेवानां मुक्त्वेकां योषितं सुराः ॥

व्रजध्वं सहितास्तस्मादर्बुदं पर्वतोत्तमम् ॥ १३ ॥

तपोऽर्थं तत्र संसिद्धिर्जायतामचिराद्धि वः ॥

शक्तिरूपां परां देवीं चंडिकां कामरूपिणीम्॥१४॥

आराधयध्वमेकांते यया व्याप्तमिदं जगत् ॥

सा तुष्टा वै वधार्थं तु महिषस्य दुरात्मनः ॥ १५ ॥

करिष्यति समुद्योगमवतारसमुद्भवम् ॥

तस्या हस्तेन सोऽवश्यं वधं प्राप्स्यति दुर्मतिः ॥ १६ ॥

अहं वः कीर्तयिष्यामि शक्तियं मंत्रमुत्तमम् ॥

पूजाविधानसंयुक्तं भुक्तिमुक्तिप्रदं शुभम् ॥ १७ ॥। ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्ताः सुराः सर्वे हर्षेण महतान्विताः ॥

तेनैव सहिता राजन्गताः पर्वतमर्बुदम् ॥ १८ ॥

तत्र स्नाताञ्छुचीन्सर्वान्दीक्षयामास गीष्पतिः ॥

शक्तियैः परमैर्मंत्रैः सद्यःसिद्धिकरैर्नृप ॥ १९ ॥

सार्धयामत्रयं तत्र परिवारसमन्विताः ॥

बलिपूजोपहारैश्च गंधं माल्यानुलेपनैः ॥ 7.3.36.२० ॥

मंत्रेण विविधेनैव चारुस्तोत्रेण भक्तितः ॥

प्रार्थयंतस्तथा नित्यं दीपज्योतिः समाहिताः ॥ २१ ॥

निर्ममा निरहंकारा गुरुभक्तिपरायणाः ॥

अंगन्याससमायुक्ताः समदर्शित्वमागताः ॥२२॥

एवं संतिष्ठमानानां तेषां पार्थिवसत्तम ॥

सप्त मासा व्यतिक्रांतास्ततस्तुष्टा सुरेश्वरी ॥ २३ ॥

दीपज्योतिःसमावेशात्तेषां गात्रेषु पार्थिव ॥

मंत्रेण परिपूतानां परं तेजो व्यवर्धत ॥ २४ ॥

द्वादशार्कप्रभा जाताः षण्मासाभ्यंतरेण ते ॥

अथ तांस्तेजसा युक्ताञ्ज्ञात्वा जीवो महीपते ॥ २५ ॥

मंडलं रचयामास सर्वसिद्धिप्रदायकम् ॥ उपवेश्य ततः सर्वान्समस्तांस्त्रिदशालयान् ॥ २६ ॥

तेषां शरीरगं तेजः शक्तियैर्मंत्रसत्तमैः ॥

आकृष्य न्यसयामास मंडले तत्र पार्थिव ॥ २७ ॥

ततस्तेजोमयी कन्या तत्र जाता स्वरूपिणी ॥

शक्तिरूपा महाकाया दिव्यलक्षणलक्षिता ॥ २८ ॥

इंद्रस्तस्यै ददौ वज्रं स्वपाशं च जलेश्वरः ॥

शक्तिं च भगवानग्निः सिंहयानं धनाधिपः ॥ २९ ॥

अन्ये चैव गणाः सर्वे निजशस्त्राणि हर्षिताः ॥

तस्यै ददुर्नृपश्रेष्ठ स्तुतिं चक्रुः समाहिताः ॥ 7.3.36.३० ॥

॥ देवा ऊचुः ॥ ॥

नमस्ते देवदेवेशि नमस्ते कांचनप्रभे ॥

नमस्ते पद्मपत्राक्षि नमस्ते जगदम्बिके ॥ ३१ ॥

नमस्ते विश्वरूपे च नमस्ते विश्वसंस्तुते ॥

त्वं मतिस्त्वं धृतिः कांतिस्त्वं सुधा त्वं विभावरी ॥ ३२ ॥

क्षमा ऋद्धिः प्रभा स्वाहा सावित्री कमला सती ॥

त्वं गौरी त्वं महामाया चामुण्डा त्वं सरस्वती ॥ ३३ ॥

भैरवी भीषणाकारा चंडमुंडासिधारिणी ॥

भूतप्रिया महाकाया घटाली विक्रमोत्कटा ॥ ३४ ॥

मद्यमांसप्रिया नित्यं भक्तत्राणपरायणा ॥

त्वया व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ३५ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं स्तुता सुरैः सर्वैस्ततो देवी प्रहर्षिता ॥

तानब्रवीद्वरं सर्वा गृह्णंतु मम देवताः ॥ ३६ ॥

॥ देवा ऊचुः ॥ ॥

दानवो महिषो नाम पितामहवरान्वितः ॥

अवध्यः सर्वभूतानां देवानां च तथा कृतः ॥ ३७ ॥

मुक्त्वैकां योषितं देवि तस्मात्त्वं विनिपातय ॥ ३८ ॥

॥ देव्युवाच ॥ ॥

गच्छध्वं त्रिदशाः सर्वे स्वानि स्थानानि निर्वृताः ॥ ३९ ॥

अहं तं सूदयिष्यामि समये पर्युपस्थिते ॥

एवमुक्ता गताः सर्वे देवाः स्थानानि हर्षिताः ॥ 7.3.36.४० ॥

देवी तत्रैव संहृष्टा स्थिता पर्वतरोधसि ॥

कस्यचित्त्वथकालस्य नारदो भगवान्मुनिः ॥ ४१ ॥

तत्र देवीं च संदृष्ट्वा तीर्थयात्रापरायणः ॥

त्रिविष्टपमनुप्राप्तो महिषो यत्र तिष्ठति ॥ ४२ ॥

तत्र दृष्ट्वा मुनिं प्राप्तं प्रणम्य महिषासुरः ॥

विनयेन समायुक्तो ह्यभ्युत्थानमथाकरोत् ॥४३॥

ततस्तं पूजयामास मधुपर्कार्घविष्टरैः ॥

सुखासीनं सुविश्रांतं ज्ञात्वा वाक्यमुवाच ह ॥ ४४ ॥

कुतो भवानितः प्राप्तः किमर्थं मुनिसत्तम ॥

अमी पुत्रास्तथा राज्यं कलत्राणि धनानि च ॥ ४५ ॥

अहं भृत्यसमायुक्तः किमनेन द्विजोत्तम ॥

सर्वं तेऽहं प्रदास्यामि ब्रूहि येन प्रयोजनम्॥ ४६ ॥

॥ नारद उवाच ॥ ॥

अभिनंदामि ते सर्वमेतत्त्वय्युपपद्यते ।

निःस्पृहा हि वयं नित्यं मुनिधर्मं समाश्रिताः ॥ ४७ ॥

कौतूहलादिह प्राप्तश्चिराते दर्शनं गतः ॥

मर्त्यलोकात्समायातो यास्यामि ब्रह्मणः पदम् ॥ ४८ ॥

॥ महिषासुर उवाच ॥ ॥

क्वचिद्दृष्टं त्वया किञ्चिदाश्चर्यं भूतले मुने ॥

दैवं वा मानुषं वापि दानवा लंभिता विभो ॥ ४९ ॥

॥ नारद उवाच ॥ ॥

अत्याश्चर्यं मया दृष्टं दानवेन्द्र धरातले ॥

यत्र दृष्टं क्वचित्पूर्वं त्रैलोक्ये सचराचरे ॥ 7.3.36.५० ॥

अस्त्यर्बुद इति ख्यातः पर्वतो धरणीतले ॥ ४॥

सर्वर्तुपुष्पितैर्वृक्षैः शोभितः स्वर्गसन्निभः ॥ ५१ ॥

बकुलैश्चंपकैश्चाम्रैरशोकैः कर्णिकारकैः ॥

शालैस्तालैश्च खर्जूरैर्वटैर्भल्लातकैर्धवैः ॥ ५२ ॥

सरलैः पनसैर्वृक्षैस्तिंदुकैः करवीरकैः ॥

मंदारैः पारिजातैश्च मलयैश्चंदनैस्तथा ॥ ५३ ॥

पुष्पजातिविशेषैश्च सुगंधैरप्यनेककैः ॥

खाद्यैः सर्वैस्तथा लेह्यैश्चोष्यैः फलवरैर्वृतः ॥ ५४ ॥

न स वृक्षो न सा वल्ली नौषधी सा धरातले ॥

न तत्र याऽसुरज्येष्ठ पर्वते वीक्षिता मया ॥ ५५ ॥

पक्षिणो मधुरारावाश्चकोरशिखिचातकाः ॥

कोकिला धार्तराष्ट्राश्च भ्रमराः श्वेतपत्रकाः ॥ ५६ ॥

येषां शब्दं समाकर्ण्य मुनयोऽपि समाहिताः ॥

क्षोभं यांति त्रिकालज्ञाः कंदर्पशरपीडिताः ॥ ५७ ॥

निर्झराणि सुरम्याणि नद्यश्च विमलोदकाः ॥

पद्मिनीखंडसंयुक्ता ह्रदाः शतसहस्रशः ॥ ५८ ॥

पद्मपत्रविशालाक्षा मध्यक्षामाः शुचिस्मिताः ॥

विवेकिनो नरास्तत्र शास्त्रव्रतसमन्विताः ॥ ५९ ॥

किं चात्र बहुनोक्तेन यत्किंचित्तत्र पर्वते ॥

स्वेदजांडजसंज्ञेया उद्भिज्जाश्च जरायुजाः ॥

सर्वलोकोत्तरास्तत्र दृश्यंते पर्वतोत्तमे ॥ 7.3.36.६० ॥

दशयोजनविस्तारो द्वाभ्यां संहितपर्वतः ॥

उच्चैः पंच च स श्रीमान्मर्त्ये स्वर्गो व्यजायत ॥ ६१ ॥

तत्राऽहं कौतुकाविष्ट इतश्चेतश्च वीक्षयन् ॥

सर्वाश्चर्यमयीं नारीमपश्यं लोकसुंदरीम् ॥ ६२ ॥

न देवी नापि गंधर्वी नासुरी न च मानुषी ॥

तादृग्रूपा मया दृष्टा न श्रुता च वरांगना ॥ ६३ ॥

रतिः प्रीतिरुमा लक्ष्मीः सावित्री च सरस्वती ॥

तस्या रूपस्य लेशेन नैतास्तुल्याः स्त्रियोऽखिलाः ॥ ६४ ॥

अहं दृष्ट्वा तथा रूपां नारीं कामेन पीडितः ॥

तदा दानवशार्दूल वैक्लव्यं परमं गतः ॥ ६५ ॥

ततो धैर्यमवष्टभ्य मया मनसि चिंतितम् ॥

न करिष्ये समालापं तया सह च कर्हिचित् ॥ ६६ ॥

यस्या दर्शनमात्रेण कामो मे हृदि वर्द्धितः ॥

तस्याः संभाषणेनेव किं भविष्यति मे पुनः ॥ ६७ ॥

चिरकालं तपस्तप्तं ब्रह्मचर्येण वै मया ॥

नाशं यास्यति तत्सर्वं विषयैर्निर्जितस्य च ॥

तस्माद्गच्छामि चान्यत्र यावन्न विकृतिर्भवेत् ॥ ६८ ॥

नारीनाम तपोविघ्नं पूर्वं सृष्टं स्वयंभुवा ॥

अर्गला स्वर्गमार्गस्य सोपानं नरकस्य च ॥ ६९ ॥

तावद्धैर्यं तपः सत्यं तावत्स्थैर्यं कुलत्रपा ॥

यावत्पश्यति नो नारीमैकांते च विशेषतः ॥ 7.3.36.७० ॥

एतत्संचिंत्य बहुधा निमील्य नयने ततः ॥

अप्रजल्प्य वरारोहां तामहं चात्र संस्थितः ॥ ७१ ॥

॥ पुलस्त्य उवाच ॥ ॥

नारदस्य वचः श्रुत्वा महिषः कामपीडितः ॥

श्रवणादपि राजेंद्र पुनः पप्रच्छ तं मुनिम् ॥ ७२ ॥

॥ महिषासुर उवाच ॥ ॥

काऽसौ ब्राह्मणशार्दूल तादृग्रूपा वरांगना ॥

यस्याः संदर्शनादेव भवानेव स्मरान्वितः ॥ ७३ ॥

देवी वा मानुषी वापि यक्षिणी पन्नगी मुने ॥

कुमारी वा सकांता वा ब्रूहि सर्वं सविस्तरम् ॥ ७४ ॥

॥ नारद उवाच ॥ ॥

न सा पृष्टा मया किंचिन्न जानामि तदन्वयम् ॥

एतन्मे वर्त्तते वित्ते सा कुमारी यशस्विनी ॥ ७६ ॥

अक्षमालाधरा बाला कमंडलुसमन्विता ॥

तपस्तेपे गिरौ तत्र हेतुना केनचिच्छुभा ॥ ७६ ॥

सोऽहं यास्यामि दैत्येश ब्रह्मलोकं सनातनम् ॥

नोत्सहे तत्कथां कर्तुं कामबाणभयातुरः ॥ ॥ ७७ ॥

एवमुक्त्वा ततो राजन्ब्रह्मलोकं गतो मुनिः ॥

महिषोऽपि स्मराविष्टश्चरं तस्याः समादिशत् ॥ ७८ ॥

गत्वा भवान्द्रुतं तत्र दृष्ट्वा तां च वरांगनाम्॥

किमर्थं सा तपस्तेपे को वै तस्याः परिग्रहः ॥ ७९ ॥

अथाऽसौ महिषादेशाद्दूतो गत्वार्बुदाचलम् ॥

दृष्ट्वा तां पद्मगर्भाभां ज्ञात्वा सर्व विचेष्टितम् ॥ 7.3.36.८० ॥

तस्मै निवेदयामास महिषाय सविस्मयः ॥

दृष्टा दैत्यवर स्त्री च सर्वलक्षणलक्षिता ॥ ८१ ॥

देवतेजोभवा कन्या साऽद्यापि वरवर्णिनी ॥

त्वद्वधार्थं तपस्तेपे कौमारव्रतमाश्रिता ॥ ८२ ॥

एवं तत्र भवंती स्म पृष्टाः सर्वे तपस्विनः ॥

सत्यमेतन्महाभाग कुरुष्व यदनंतरम् ॥ ८३ ॥

तस्या रूपं वयः कांतिर्वर्णितुं नैव शक्यते ॥

नालापं कुरुते बाला सा केनापि समं विभौ ॥ ८४ ॥

॥ पुलस्त्य उवाच ॥ ॥

तच्छ्रुत्वा महिषो वाक्यं भूयः कामनिपीडितः ॥

दूतं संप्रेषयामास दानवं च विचक्षणम् ॥८५ ॥

विचक्षण द्रुतं गत्वा मदर्थे तां तपस्विनीम् ॥

सामभेदप्रदानेन दंडेनापि समानय ॥ ८६ ॥

अथाऽसौ प्रययौ शीघ्रं प्रणिपत्य विचक्षणः ॥

अर्बुदे पर्वतश्रेष्ठे यत्र सा परमेश्वरी ॥

प्रणम्य विनयोपेतो वाक्यमेतदुवाच ताम्॥८७॥

महिषो नाम विख्यातस्त्रैलोक्याधिपतिर्बली॥

दनुवंशसमुद्भूतः कामरूपसमन्वितः॥८८॥

स त्वां वांछति कल्याणि धर्मपत्नीं स्वधर्मतः ॥

तस्माद्वरय भद्रं ते सर्वकामप्रदं पतिम् ॥ ८९ ॥

यदि स्यात्तव कांतोऽसौ त्वं च तस्य तथा प्रिया॥

तत्कृतार्थं द्वयोरेव यौवनं नात्र संशयः ॥ 7.3.36.९० ॥

एवमुक्ता ततस्तेन देवी वचनमब्रवीत् ॥

किञ्चित्कोपसमायुक्ता मुहुः प्रस्फुरिताधरा ॥ ९१ ॥

॥ देव्युवाच ॥ ॥।

अवध्यः सर्वथा दूतः सर्वत्र परिकीर्तितः ॥

अवस्थासु ततो न त्वं सहसा भस्मसात्कृतः ॥९२॥

गत्वा ब्रूहि दुराचारं महिषं दानवाधमम् ॥

नाहं शक्या त्वया पाप लब्धुं नान्येन केनचित् ॥ ९३ ॥

वधार्थं ते समुद्योग एष सर्वो मया कृतः ॥

तस्यास्तद्वचनं श्रुत्वा महिषं स पुनर्ययौ ॥ ९४ ॥

भयेन महताविष्टस्तस्या रूपेण विस्मितः ॥

सर्वं निवेदयामास महिषाय विचेष्टितम् ॥

तस्याश्चैव तथाऽऽलापानस्पृहत्वं च कृत्स्नशः ॥ ९५ ॥

तच्छुत्वा महिषो राजन्कामबाणप्रपीडितः ॥

सेनापतिं समाहूय वाक्यमेतदुवाच ह ॥९६॥

अर्बुदे पर्वते सेनां कल्पयस्व सुदुर्धराम् ॥

हस्त्यश्वकल्पितां भीमां रथपत्तिसमाकुलाम् ॥ ९७ ॥

ततोऽसौ कल्पयामास चतुरंगां वरूथिनीम् ॥

पताकाच्छत्रशबलां वादित्रारावभूषिताम् ॥ ९८ ॥

ततो द्विपाश्च संनद्धा दृश्यंतेऽधिष्ठिता भटैः ॥

इतश्चेतश्च धावन्तः सपक्षाः पर्वता इव ॥ ९९ ॥

अश्वाश्चैवाप्यकल्माषा वायुवेगाः सुवर्चसः ॥

अंगत्राणसमायुक्ताः शतशोऽथ सहस्रशः ॥ 7.3.36.१०० ॥

विमानप्रतिमाकारा रथास्तेन प्रकल्पिताः ॥

किंकिणीजालसद्घंटापताकाभिरलंकृताः ॥ १०१ ॥

पत्तयश्च महाकाया महेष्वासा महाबलाः ॥

असिचर्मधराश्चान्ये प्रासपट्टिशपाणयः ॥ १०२ ॥

लक्षमेकं मतंगानां रथानां त्रिगुणं ततः ॥

अश्वा दशगुणा राजन्नसंख्याताः पदातयः ॥ १०३ ॥

ततश्चार्बुदमासाद्य वेष्टयित्वा स दूरतः ॥

संमितैः सचिवैः सार्धं तदंतिकमुपाद्रवत् ॥ १०४ ॥

ध्यानस्थां वीक्ष्य तां देवीं कन्दर्पशरपीडितः ॥

ततोऽब्रवीत्स तां वाक्यं विनयेन समन्वितः ॥ १०५ ॥

श्रुत्वा तवेदृशं रूपमहं प्राप्तो वरानने ॥

गांधर्वेण विवाहेन तस्माद्वरय मां द्रुतम् ॥ १०६ ॥

षष्टिभार्यासहस्राणि मम संति शुचिस्मिते ॥

कृत्वा मां दर्पितं कांतं तासां त्वं स्वामिनी भव ॥ ॥ १०७ ॥

अनर्हं ते तपो बाले भुंक्ष्व भोगान्यथेप्सितान् ॥

त्रैलोक्यस्वामिनी भूत्वा मया सार्धमहर्निशम् ॥१०८॥

एवमुक्ताऽपि सा तेन नोत्तरं प्रत्यभाषत ॥

ततः कामसमाविष्टस्तदंतिकमुपाययौ ॥१०९॥

ततस्तं लोलुपं दृष्ट्वा सा देवी कोपसंयुता ॥

अस्मरद्वाहनं सिंहं समायातः स साऽऽरुहत् ॥ 7.3.36.११० ॥

अब्रवीत्परुषं वाक्यं गच्छगच्छेति चासकृत् ॥

नो चेत्त्वां च वधिष्यामि स्थानेऽस्मिन्दानवाधम ॥ १११ ॥

अथाऽसौ सचिवैः सार्द्धं समंतात्पर्यवेष्टयत् ॥

प्रग्रहार्थं तु तां देवीं कामबाणप्रपीडितः ॥ ११२ ॥

ततो जहास सा देवी सशब्दं परमेश्वरी ॥

तस्मादहर्निशं सार्द्धं निष्क्रांता पुरुषा घनाः ॥ ११३ ॥

सुसन्नद्धाः सशस्त्राश्च रोषेण महताऽन्विताः ॥

ततस्तानब्रवीद्देवी पापोऽयं वध्यतामिति ॥ ११४ ॥

ततस्ते सहिताः सर्वे महिषं समुपाद्रवन्॥

तिष्ठतिष्ठेति जल्पन्तो मुंचन्तोऽस्त्राणि भूरिशः ॥ ११५ ॥

ततः समभवद्युद्धं गणानां दानवैः सह ॥

ततस्ते सचिवाः सर्वे वैवस्वतगृहं गताः ॥ ११६ ॥

अथाऽसौ महिषो रुष्टः सचिवैर्विनिपातितैः ॥

स्वसैन्यमानयामास तस्मिन्पर्वतरोधसि ॥ ११७ ॥

रथप्रवरमारुह्य सारथिं समभाषत ॥

नय मां सारथे तूर्णं यत्र साऽऽस्ते व्यवस्थिता ॥ ११८ ॥

हत्वैनामद्य यास्यामि पारं रोषस्य दुस्तरम् ॥

एवमुक्तस्ततो राजन्प्रेरयामास सारथिः ॥ ११९ ॥

रथं तेनैव मार्गेण यत्र सा तिष्ठते ध्रुवम् ॥

एतस्मिन्नेव काले तु तत्रोत्पाताः सुदारुणाः ॥ 7.3.36.१२० ॥

बहवस्तेन मार्गेण येनासौ प्रस्थितो नृप ॥

सम्मुखः प्रववौ वातो रूक्षः कर्करसंयुतः ॥ १२१ ॥

पपात महती चोल्का निहत्य रविमंडलम् ॥

अपसव्यं मृगाश्चक्रुस्तस्य मार्गे नृपोत्तम ॥ १२२ ॥

उपविष्टास्तथा वांता बहुमूत्रं प्रसुस्रुवुः ॥

रथध्वजे समाविष्टो गृध्रः शब्दमथाकरोत् ॥ १२३ ॥

स तान्सर्वाननादृत्य महोत्पातान्सुदारुणान् ॥

प्रययौ सम्मुखस्तस्या देव्याः कोपपरायणः ॥ १२४ ॥

विमुंचंश्च शरान्नादांस्तिष्ठतिष्ठेति च ब्रुवन् ॥

न कश्चिद्दृश्यते तत्र तेषां मध्ये नृपोत्तम ॥ १२५ ॥

महिषं रोषसंयुक्तं यो वारयति संगरे ॥

तेन हत्वा गणगणान्कृतं रुधिरकर्दमम् ॥। ॥ १२६ ॥

ततो देवी समासाद्य प्रोक्ता गर्वेण पार्थिव ॥

न त्वया संगरो भीरु नूनं कर्तुं ममोचितः ॥ १२७ ॥

न च बालिशि मे वीर्यं न सौभाग्यं न वा धनम् ॥

न करोषि हि तेन त्वं मम वाक्यं कथञ्चन ॥ १२८ ॥

नूनं तत्त्वेन जानामि अवलिप्तासि भामिनि॥

कुरुष्वाद्यापि मे वाक्यं भार्या भव मम प्रिया ॥ १२९ ॥

स्त्रियं त्वां नोत्सहे हंतुं पौरुषे च व्यवस्थितः ॥

असकृन्निर्जितः संख्ये मया शक्रः सुरैः सह ॥ 7.3.36.१३० ॥

त्रैलोक्ये नास्ति मत्तुल्यः पुमान्कश्चिच्च बालिशि॥

एवमुक्ता ततो देवी कोपेन महताऽन्विता ॥ १३१ ॥

प्रगृह्य सशरं चापं वाक्यमेतदुवाच ह ॥

नालापो युज्यते पाप कर्तुं सह मम त्वया ॥ १३२ ॥

कुमार्याः कामयुक्तेन तथापि शृणु मे वचः ॥

न त्वया निर्जितः शक्रः स्ववीर्येण रणाजिरे ॥ १३३ ॥

पितामह वरं देवा मन्यंते दानवाधम ॥

गौरवात्तस्य तेन त्वमात्मानं मन्यसेऽधिकम् ॥ १३४ ॥

मुक्त्वैकां कामिनीं पाप त्वं कृतः पद्मयोनिना ॥

अवध्यः सर्वसत्त्वानां पुंसः जातौ धरातले ॥ १३५ ॥

पितामहवरः सोऽत्र जयशीलोऽसि दानव ॥

यदि ते पौरुषं चास्ति तच्छीघ्रं संप्रदर्शय ॥ १३६ ॥

एषा त्वामिषुभिस्तीक्ष्णैर्नयामि यमसादनम् ॥

एवमुक्त्वा ततो देवी शरानष्टौ मुमोच ह ॥ १३७ ॥

चतुर्भिश्चतुरो वाहाननयद्यमसादनम् ॥

सारथेश्च शिरः कायाच्छरेणैकेन चाक्षिपत् ॥ १३८ ॥

ध्वजं चिच्छेद चैकेन ततोऽन्येन हृदि क्षतः ॥

स गात्रविद्धो व्यथितो ध्वजयष्टिं समाश्रितः ॥ ॥ १३९ ॥

मूर्छया सहितो राजन्किंचित्कालमधोमुखः ॥

ततः स चेतनो भूत्वा मुमोच निशिताञ्छरान् ॥ 7.3.36.१४० ॥

देवी सखीसमायुक्ता सर्वदेशेष्वताडयत् ॥

ततः क्षुरप्रबाणेन धनुस्तस्य द्विधाऽकरोत् ॥ १४१ ॥

छिन्नधन्वा ततो दैत्यश्चर्मखड्गसमन्वितः ॥

विद्राव्य सहसा देवीं तिष्ठतिष्ठेति चाब्रवीत्॥ १४२ ॥

तस्य चापततस्तूर्णं खड्गं द्वाभ्यां ह्यकृन्तयत् ॥

शराभ्यामर्धबाणेन प्रहस्य प्रासमेव च ॥ १४३ ॥

विशस्त्रो विरथो राजन्स तदा दानवाधमः ॥

ततोऽस्मरच्छरान्भूप शस्त्राणि विविधानि च ॥ १४४ ॥

ब्रह्मास्त्रं मनसि ध्यायंस्तृणं तस्यै मुमोच सः ॥

मुक्तेनास्त्रेण तस्मिंस्तु धूमवर्तिर्व्यजायत ॥ १४५ ॥

एतस्मिन्नेव काले तु स ब्रह्मास्ते दिवौकसः ॥

परं भयमनुप्राप्ता दृष्ट्वा तस्य पराक्रमम् ॥ १४६ ॥

ततो देवी क्षणं ध्यात्वा तदस्त्रं पार्थिवोत्तम ॥

ब्रह्मास्त्रेणाहनत्तूर्णं ततो व्यर्थं व्यजायत ॥ १४७ ॥

ब्रह्मास्त्रे विफले जाते ह्याग्नेयं दानवोत्तमः ॥

प्रेषयामास तां क्रुद्धो ह्यहनद्वारुणेन सा॥ १४८ ॥

एवं नानाप्रकाराणि तेन मुक्तानि सा तदा ॥

अस्त्राणि विफलान्येव चक्रे देवी सहस्रशः ॥ १४९ ॥

एवं निःशेषितास्त्रोऽसौ दानवो बलवत्तरः।.

चकार परमां मायां दिव्यैरस्त्रैः सुरेश्वरी॥ 7.3.36.१५०॥

व्यक्षिपच्च महाकायं महिषं पर्वताकृतिम्॥

दीर्घतीक्ष्णविषाणाभ्यां युक्तमंजनसंनिभम्॥ १५१॥

सिंहस्कंधं च सा देवी ततस्तमध्यरोहत॥

खड्गेन तीक्ष्णेन शिरो देवी तस्य न्यकृंतत॥ १५२।

शूलेन भेदयामास पृष्ठदेशे सुरेश्वरी ॥

ततः कलेवरात्तस्मान्निश्चक्राम महान्पुमान् ॥ १५३ ॥

चर्मखड्गधरो रौद्रस्तिष्ठतिष्ठेति चाब्रवीत् ॥

तमप्येवं गृहीत्वा तत्केशपाशे सुरेश्वरी ॥ १५४ ॥

निस्त्रिंशेनाहनत्प्रोच्चैः स च प्राणैर्व्ययुज्यत ॥

दानवः पार्थिवश्रेष्ठ पार्श्वे सिंहविदारिते ॥ १५५ ॥

ततो जघान भूयोऽपि दानवान्सा रुषान्विता ॥

हतशेषाश्च ये दैत्या निर्भिद्य धरणीतलम् ॥ १५६ ॥

प्रविष्टा भयसंत्रस्ताः पातालं जीवितैषिणः ॥

ततो देव गणाः सर्वे वसवो मरुतोऽश्विनौ ॥१५७॥

विश्वेदेवास्तथा साध्या रुद्रा गुह्यककिन्नराः ॥

आदित्याः शक्रसंयुक्ताः समेत्य परमेश्वरीम् ॥ १५८ ॥

समंताद्दिव्यपुष्पैश्च तां देवीं समवाकिरन् ॥

स्तुवंतो विविधैः स्तोत्रैर्नमंतो भक्तितत्पराः ॥ १५९ ॥

युक्तं कृतं महेशानि यद्धतः पापकृत्तमः ॥

त्रैलोक्यं सकलं ध्वस्तं पापेनानेन सुंदरि ॥ 7.3.36.१६० ॥

त्वया दत्तं पुना राज्यं वासवस्य त्रिविष्टपे ॥

तस्माद्वरय भद्रं ते वरं यन्मनसीप्सितम् ॥

सर्वे देवाः प्रसन्नास्ते प्रदास्यंति न संशयः ॥ १६१ ॥

॥ देव्युवाच ॥ ॥

यदि देवाः प्रसन्ना मे यदि देयो वरो मम ॥

आश्रमोऽत्रैव मे पुण्यो जायतां ख्यातिसंयुतः॥ १६२॥

अस्मिंश्चाहं सदा देवाः स्थास्यामि वरपर्वते॥ १६३॥

रूपेणानेन देवेशि ये त्वां द्रक्ष्यंति मानवाः॥

आश्रमेऽत्र महापुण्ये ते यास्यंति परां गतिम्॥१६४॥

ब्रह्मज्ञानसमायुक्तास्ते भविष्यंति मानवाः॥ १६५॥

यस्माच्चंडं कृतं कर्म त्वया दानवसूदनात्॥

तस्मात्त्वं चंडिकानाम लोके ख्यातिं गमिष्यसि॥ १६६॥

तव नाम्ना तथा ख्यात आश्रमोऽयं भविष्यति॥ १६७॥

येऽत्र कृष्ण चतुर्द्दश्यामाश्विने मासि शोभने ॥ पिंडदानं करिष्यंति स्नानं कृत्वा समाहिताः ॥ १६८ ॥

गयाश्राद्धफलं कृत्यं तेषां देवि भविष्यति ॥ त्वद्दर्शनात्तथा मुक्तिः पातकस्य भविष्यति ॥ १६९ ॥

॥ कृष्ण उवाच ॥ ॥

एकरात्रिं भविष्यंति येऽत्र श्रद्धासमन्विताः ॥

उपवासपरास्तेषां पापं यास्यति संक्षयम् ॥ 7.3.36.१७० ॥

पुत्रहीनश्च यो मर्त्यो नारी वापि समाहिता ॥

तन्मनाः पिंडदानं वै तथा स्नानं करिष्यति ॥

अपुत्रो लभते शीघ्रं सुपुत्रं नात्र संशयः ॥ १७१ ॥

॥ इन्द्र उवाच ॥ ॥

भ्रष्टराज्यो नृपो योऽत्र स्नानं दानं करिष्यति ॥

सर्वशत्रुक्षयस्तस्य राज्यावाप्तिर्भविष्यति ॥ १७२ ॥ ॥

॥ अग्निरुवाच॥ ॥

अत्रागत्य शुचिः श्राद्धं यः करिष्यति मानवः ॥

आत्मवित्तानुसारेण तस्य यज्ञफलं भवेत् ॥१७३॥

॥ यम उवाच॥ ॥

अत्र स्नात्वा तिलान्यस्तु ब्राह्मणेभ्यः प्रदास्यति ॥

अल्पमृत्युभयं तस्य न कदाचिद्भविष्यति ॥१७४॥

॥ राक्षसा ऊचुः ॥ ॥

पिंडदानं नरा येऽत्र करिष्यंति तवाऽऽश्रमे ॥

प्रेतोत्थं न भयं तस्य देवि क्वापि भविष्यति ॥१७५॥

॥ वरुण उवाच ॥ ॥

स्नानार्थं ब्राह्मणेंद्राणां योऽत्र तोयं प्रदास्यति ॥

विमलस्तु सदा भावि इह लोके परत्र च ॥ १७६ ॥

॥ वायुरुवाच ॥ ॥

विलेपनानि शुभ्राणि सुगंधानि विशेषतः ॥

योत्र दास्यति विप्रेभ्यो नीरोगः स भविष्यति ॥ १७७ ॥

॥ धनद उवाच ॥ ॥

योऽत्र वित्तं यथाशक्त्या ब्राह्मणेभ्यः प्रदास्यति ॥

न भविष्यति लोके स वित्तहीनः कथंचन ॥ ॥ १७८ ॥

॥ ईश्वर उवाच ॥ ॥

योऽत्र व्रतपरो भूत्वा चातुर्मास्यं वसिष्यति ॥

इह लोके परे चैव तस्य भावि सदा सुखम् ॥ १७९ ॥ ॥

॥ वसव ऊचुः ॥ ॥

त्रिरात्रं यो नरः सम्यगुपवासं करिष्यति ॥

आजन्ममरणात्पापान्मुक्तः स च भविष्यति ॥।7.3.36.१८०॥।

॥ आदित्य उवाच ॥ ॥

अत्राश्रमपदे पुण्ये ये नरा भक्तिसंयुताः ॥

छत्रोपानत्प्रदातारस्तेषां लोकाः सनातनाः ॥ १८१ ॥

॥ अश्विनावूचतुः ॥ ॥

मिष्टान्नं श्रद्धयोपेतो ब्राह्मणाय प्रदास्यति ॥

योऽत्र तस्य परा प्रीतिर्भविष्यत्यविनाशिनी १। १८२ ॥

॥ तीर्थान्यूचुः ॥ ॥

अद्यप्रभृति सर्वेषां तीर्थानामिह संस्थितिः ॥

भविष्यति विशेषेण ह्याश्रमे लोकविश्रुते ॥१८३॥

कृष्णपक्षे चतुर्द्दश्यामाश्विने मासि भक्तितः ॥

उपवासपरो भूत्वा योऽत्र स्नानं करिष्यति ॥

सर्वेषामेव तीर्थानां स फलं हि लभिष्यति ॥ १-४ ॥

॥ गंधर्वा ऊचुः ॥ ॥

गीतवाद्यानि यश्चात्र प्रकरिष्यति मानवः ॥

सप्तजन्मांतराण्येव रूपवान्स भविष्यति ॥ १८५ ॥

॥ ऋषय ऊचुः ॥ ॥

आश्रमेऽस्मिंस्त्रिरात्रं य उपवासं करिष्यति ॥

चांद्रायणसहस्रस्य फलं तस्य भविष्यति ॥ १८६ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवं सर्वे वरान्दत्त्वा देव्यै देवा नृपोत्तम ॥

तदाज्ञया दिवं जग्मुर्देवी तत्रैव संस्थिता ॥ १८७ ॥

अथ मर्त्या दिवं जग्मुर्दृष्ट्वा देवीं तदाश्रमे ॥

अनायासेन संपूर्णास्ततो मर्त्यैस्त्रिविष्टपः ॥ १८८ ॥

अग्निष्टोमादिकाः सर्वाः क्रिया नष्टा धरातले ॥

धर्मक्रियास्तथा चान्या मुक्त्वा देव्याः प्रपूजनम् ॥ १८९ ॥

ततो भीतः सहस्राक्षः संमंत्र्य गुरुणा सह ॥

आह्वयामास वेगेन कामं क्रोधं भयं मदम् ॥ 7.3.36.१९० ॥

व्यामोहं गृहपुत्रोत्थं तृष्णामायासमन्वितम् ॥

गत्वा यूयं द्रुतं मर्त्ये स्थातुकामान्नरान्स्त्रियः ॥१९१॥

चंडिकायतने पुण्ये सेवध्वं हि ममाज्ञया ॥

विशेषेणाश्विने मासि कृष्णपक्षेंऽत्यवासरे ॥ १९२ ॥

एवमुक्तास्ततः सर्वे कामाद्यास्ते द्रुतं ययुः ॥

मर्त्यलोके महाराज रक्षां चक्रुश्च सर्वशः ॥ १९३ ॥

एवं ज्ञात्वा द्रुतं गच्छ तत्र पार्थिवसत्तम ॥

यदीच्छसि परं श्रेय इह लोके परत्र च ॥ १९४ ॥

यो याति चंडिकां द्रष्टुमबुर्दं प्रति पार्थिव ॥

नृत्यंति पितरस्तस्य गर्जंति च पितामहाः ॥ १९५ ॥

तारयिष्यति नः सर्वान्स पुत्रो य इहाश्रमे ॥

चंडिकायाः प्रगत्वाऽथ कुर्याच्छ्राद्धं समाहितः ॥ १९६ ॥

एकया लभ्यते राज्यं स्वर्गश्चैव द्वितीयया ॥

तृतीयया भवेन्मोक्षो यात्रया तत्र पार्थिव ॥ १९७ ॥

तस्मात्सर्वप्रयत्नेन यात्रां तत्र समाचरेत् ॥

अर्बुदे पर्वतश्रेष्ठे सर्वतीर्थमये शुभे ॥ १९८ ॥

तत्र श्लोकः पुरा गीतो नारदेन महर्षिणा ॥

स्नात्वा तत्राश्रमे पुण्ये बहुविप्र समागमे ॥ ११९ ॥

पुनंत्येवान्यतीर्थानि स्नानदानैरसंशयम् ॥

अर्बुदालोकनादेव विपाप्मा तत्र जायते ॥ 7.3.36.२०० ॥

यः शृणोति सदाख्यानमेत च्छ्रद्धासमन्वितः ॥

स प्राप्नोति नरश्रेष्ठ कामान्मनसि वांछितान् ॥ २०१ ॥

यस्यैतत्तिष्ठते गेहे लिखितं पुस्तकं नृप ॥

तस्यापि वांछिताः कामाः संपद्यते दिनेदिने ॥ २०२ ॥

पठति श्रद्धयोपेतो यो वा भूमिपते नरः ॥

सोऽपि यात्राफलं राजँल्लभते पुरुषोत्तमः ॥ २०३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे .तृतीयेऽर्बुदखण्डे चंडिकाश्रमोत्पत्तिमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३७

https://sa.wikisource.org/s/glx
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

नागह्रदं ततो गच्छेत्तीर्थं पापप्रणाशनम् ॥

यत्र नागैस्तपस्तप्तं रम्ये पर्वतरोधसि ॥ १ ॥

कद्रूशापं पुरा श्रुत्वा नागाः सर्वे भयातुराः ॥

पप्रच्छुर्नागराजानं शेषं प्रणतकन्धराः ॥ २ ॥

मातृशापेन संतप्ता वयं पन्नगसत्तम ॥

किं कुर्मः क्व च गच्छामः शापमोक्षो भवेत्कथम्॥ ३ ॥

॥ शेष उवाच ॥ ॥

प्रसादिता मया माता शापमुक्तिकृते पुरा ॥

तयोक्तं ये तपोयुक्ता धर्मात्मानः सुसंयताः ॥ ४ ॥

न दहिष्यति तान्वह्निर्यज्ञे पारिक्षितस्य हि ॥

तस्माद्गत्वार्बुदंनाम पर्वतं धरणीतले ॥ ५ ॥

तत्र यूयं तपोयुक्ता भवध्वं सुसमाहिताः ॥

यत्रास्ते सा स्वयं देवी चंडिका कामरूपिणी ॥ ६ ॥

यस्याः संकीर्त्तनेनापि नश्यंति विपदो ध्रुवम् ॥

आराधयध्वमनिशं तां देवीं मम वाक्यतः ॥ ७ ॥

तस्याः प्रसादतः सर्वे भविष्यथ गतज्वराः ॥

एतमेवात्र पश्यामि उपायं नागसत्तमाः ॥

दैवो वा मानुषो वाऽपि नान्यो वो मुक्तिकारकः ॥ ८ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्तास्ततो नागा नागराजेन पार्थिव ॥

प्रणम्य तं ततो जग्मुरर्बुदं पर्वतं प्रति ॥ ९ ॥

ते भित्त्वा धरणीपृष्ठं पर्वते तदनन्तरम् ॥

निजग्मुर्बिलमार्गेण कृत्वा श्वभ्रे सुविस्तरम् ॥ 7.3.37.१० ॥

ततो धृतव्रताः सर्वे देवी भक्तिपरायणाः ॥
वसंति भक्तिसंयुक्ताश्चण्डिकाराधनाय ते ॥ ११ ॥
तस्थुस्तत्र सदा होमं कुर्वन्तो जाप्यमुत्तमम् ॥
एकाहारा निराहारा वायुभक्षास्तथा परे ॥ १२ ॥
दन्तोलूखलिनः केचिदश्मकुट्टास्तथा परे ॥
पञ्चाग्निसाधकाश्चान्ये सद्यः प्रक्षालकास्तथा ॥ १३ ॥
गीतं वाद्यं तथा चक्रुरन्ये देवाः पुरस्तदा ॥
अनन्यश्रदयोपेतांस्तान्दृष्ट्वा पन्नगोत्तमान् ॥ १४ ॥
ततो देवी सुसन्तुष्टा वाक्यमेतदुवाच ह ॥ १५ ॥ ॥
॥ देव्युवाच ॥ ॥
परितुष्टास्मि वो वत्साः किमर्थं तप्यते तपः ॥
वरयध्वं वरं मत्तो यः स्थितो भवतां हृदि ॥ १६ ॥
॥ नागा ऊचुः ॥ ॥
मातृशापेन संतप्ता वयं देवि निराश्रयाः ॥
नागराजसमादेशाच्छरणं त्वां समागताः ॥ १७ ॥
सा त्वं रक्ष भयात्तस्माच्छापवह्निसमुद्भवात् ॥
वयं मात्रा पुरा शप्ताः कस्मिंश्चित्कारणान्तरे ॥
पारिक्षितस्य यज्ञे वः पावको भक्षयिष्यति ॥ १८ ॥
॥ देव्युवाच ॥ ॥
यावत्तस्य भवेद्यज्ञ स्तावद्यूयं ममान्तिके ॥
संतिष्ठत विना भीत्या भोगान्भुङ्ध्वं सुपुष्कलान् ॥ १९ ॥
समाप्ते च क्रतौ भूयो गंतारः स्वं निकेतनम् ॥
युष्माभिर्भेदितं यस्मादेतत्पर्वतकन्दरम् ॥ 7.3.37.२० ॥
नागह्रदं तु तत्तीर्थमेतद्भावि धरातले ॥
अत्र यः श्रावणे मासि पञ्चम्यां भक्तितत्परः ॥ २१ ॥
करिष्यति नरः स्नानं तस्य नाहिकृतं भयम् ॥
भविष्यति पुनः श्राद्धात्पितॄन्संतारयिष्यति ॥ २२ ॥
ये भोगा भूतले ख्याता ये दिव्या ये च मानुषाः ॥

नरो नित्यं लभिष्यति न संशयः ॥ २३ ॥

॥ पुलस्त्य उवाच ॥ ॥

ततो हृष्टा बभूवुस्ते मुक्त्वा तद्दारुणं भयम् ॥

देव्याः शरणमापन्नास्तस्थुस्तत्र नगोत्तमे ॥ २४ ॥

ततः कालेन महता सत्रे पारिक्षितस्य च ॥

निर्वृत्ते ते तदा जग्मुः सुनिर्वृत्ता रसातलम् ॥ २५ ॥

देव्या चैवाभ्यनुज्ञाताः प्रणिपत्य मुहुर्मुहुः ॥

कृच्छ्रात्पार्थिवशार्दूल तद्भक्त्या निश्चलीकृताः ॥ २६ ॥

अद्यापि कृष्णपंचम्यां श्रावणे मासि पार्थिव ॥

सान्निध्यं तत्र कुर्वंति देवीदर्शनलालसाः ॥ २७ ॥

तस्मात्सर्वप्रयत्नेन श्राद्धं तत्र समाचरेत् ॥

स्नानं च पार्थिवश्रेष्ठ य इच्छेच्छ्रेय आत्मनः ॥ २८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे नागोद्भवतीर्थमाहात्म्य वर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३८

https://sa.wikisource.org/s/gly
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

कुंडं तु शिवलिंगाख्यं ततो गच्छेन्महीपते ॥

यत्र सा जाह्नवी गुप्ता तिष्ठते भूपसत्तम ॥ १ ॥

तस्यां स्नातो नरः सम्यक्सर्वतीर्थफलं लभेत् ॥

मुच्यते पातकात्कृत्स्नादाजन्ममरणांतिकात् ॥ २ ॥

॥ ययाति रुवाच ॥ ॥

किमर्थं तत्र सा गुप्ता जाह्नवी तिष्ठते विभो ॥

कस्मिन्काले समायाता परं कौतूहलं हि मे ॥ ३ ॥

॥ पुलस्त्य उवाच ॥ ॥

यदा प्रसादितो देवैर्भगवान्वृषभध्वजः ॥

अर्बुदेऽस्मिन्सदा स्थेयमचलेन त्वया विभो ॥ ४॥

तत्र संस्थापिते लिंगे स्वयं देवेन शंभुना ॥

यत्पातितं पुरा लिंगं वालखिल्यैर्महर्षिभिः ॥ ५ ॥

अतिकोपसमायुक्तैः कस्मिंश्चित्कारणांतरे ॥

तदा देवेन प्रतिज्ञातं सर्वेषां त्रिदिवौकसाम् ॥ ६ ॥

अचले तु मयात्रैव स्थातव्यं नात्र संशयः ॥

ततः कालेन महता वसतस्तस्य तत्र च ॥ ७ ॥

अचलेश्वररूपस्य गंगा चित्ते व्यजायत ॥

कथं नित्यं तया सार्द्धं भविष्यति समागमः ॥ ८ ॥

अथ जानाति नो गौरी मानिनी परमेश्वरी ॥

तस्यैवं चिन्तयानस्य बहुशो नृपसत्तम ॥ ९ ॥

उपायं सुमहद्ध्यात्वा जाह्नवीसंगसंभवम् ॥

तेनादिष्टा गणाः सर्वे नंदिभृङ्गिपुरःसराः ॥ 7.3.38.१० ॥

अभिप्रायोऽस्ति मे कश्चिज्जलाश्रयव्रतोद्भवः ॥

क्रियतामुत्तमं कुण्डमस्मिन्पर्वतरोधसि ॥ ११ ॥
तत्राहं जलमध्यस्थः स्थास्यामि जलतत्परः ॥
तच्छ्रुत्वा त्वरितं चक्रुर्गणाः कुण्डमनेकशः ॥ १२ ॥
स्वच्छोदकसमाकीर्णं सुतीर्थं सुसुखावहम् ॥
ततो गौरीमनुज्ञाप्य जाह्नवीसंगलालसः ॥ १३ ॥
व्रतव्याजेन देवेशो विवेश तदनन्तरम् ॥
चिन्तयामास तत्रस्थो गंगां त्रैलोक्यपाविनीम् ॥ १४ ॥
सा ध्याता तत्क्षणात्तत्र शिवेन सह संगता ॥
एवं स भगवांस्तत्र जाह्नवीं भजते सदा ॥ १५ ॥
व्रतव्याजेन राजेन्द्र न तु गौरी व्यजानत ॥
कस्यचित्त्वथ कालस्य नारदो भगवान्मुनिः ॥
कैवल्यज्ञानसंपन्नस्तत्रायातः परिभ्रमन् ॥ १६ ॥
स तु दृष्ट्वा महादेवं जलस्थं व्रतधारिणम् ॥
कामजैरिंगितैर्युक्तं तत्राऽसौ विस्मयान्वितः ॥ १७ ॥
वक्त्रनेत्रविकारोऽयं किमस्य व्रतधारिणः ॥
ईदृक्कामसमायुक्तस्ततो ध्यानस्थितो मुनिः ॥ १८ ॥
अथाऽपश्यद्ध्यानदृष्ट्या गंगासक्तं महेश्वरम् ॥
गौर्या भयेन सव्याजं ततो विस्मयमागतः ॥ १९ ॥
तदा स कथयामास सर्वं हरविचेष्टितम् ॥ 7.3.38.२० ॥
ततो देवी त्वरायुक्ता ययौ यत्र महेश्वरः ॥
आताम्रनयना रोषाद्वेपमाना मुहुर्मुहुः ॥ २१ ॥
तां दृष्ट्वा कोपसंयुक्तां समायातां महेश्वरीम् ॥
उवाच जाह्नवी भीता ज्ञात्वा दिव्येन चक्षुषा ॥ २२ ॥
आवयोः संगमे देवी नारदेन निवेदिता ॥
सेयं रुष्टा समायाति कुरुष्व यदनन्तरम् ॥ २३ ॥
॥ श्रीमहादेव उवाच ॥ ॥
कर्तव्यं जाह्नवि श्रेयः पुरो गत्वा नगात्मजाम् ॥
अत्यर्थं मानिनी ह्येषा साम्ना च वशवर्तिनी ॥ २४ ॥

तत्क्षणाज्जायते साध्वी तस्मात्सामपरा भव ॥
नो चेच्छापं मया सार्धं तव दास्यत्यसंशयम् ॥ २५ ॥
एवमुक्ता च रुद्रेण जाह्नवी नृपसत्तम ॥
कुण्डान्निर्गत्य सा गंगा सम्मुखं प्रययौ तदा ॥ २६ ॥
प्रत्युद्ययौ सलज्जा च कृतांजलिपुरःसरा ॥
प्रणम्य शिरसा चेयं ततः प्राह स्वलंकृता ॥ २७ ॥
पुराऽहं तव कांतेन निपतन्ती नभस्तलात् ॥
धृता देवि तवा प्येतद्विदितं नृपतेः कृते ॥ २८ ॥
भगीरथाभिधानस्य ततः स्नेहो व्यवर्धत ॥
आवयोस्तव भीत्या च नाभूत्क्वापि समागमः ॥ २९ ॥
अधुना तव वाक्येन जानेऽहं न सुरेश्वरि ॥
समाहूताऽस्मि रुद्रेण किं वा स्वच्छन्दतः शुभे ॥ 7.3.38.३० ॥
त्रैलोक्यस्य प्रभुरयं तन्निष्क्रम्य कथञ्चन ॥
तस्मादत्रैव संप्राप्ता सत्यमेतन्मयोदितम् ॥ ३१ ॥
॥ पुलस्त्य उपाच ॥ ॥
तस्यास्तद्वचनं श्रुत्वा ततो देवी प्रहर्षिता ॥
प्रोवाच मधुरं वाक्यं सत्यमेतत्त्व योदितम्॥ ३२ ॥
तस्माद्वरय भद्रं ते वरं मत्तो यथेप्सितम् ॥
मुक्त्वैकं पतिधर्म्मत्वे मम कांतं महेश्वरम्॥ ३३ ॥
॥ गंगोवाच ॥ ॥
अपि दौर्भाग्ययुक्ताऽहं भार्या जाताऽस्मि शूलिनः ॥
तस्मादेकं दिनं देहि क्रीडनार्थमनेन तु ॥ ३४ ॥
चैत्रशुक्लत्रयोदश्यामहोरात्रं सुरेश्वरि ॥
शिवकुंडं तथास्त्वेतन्मया यस्मात्समावृतम् ॥ ३५ ॥
शिवगंगाभिधानं च तस्मात्कुण्डं धरातले ॥
ख्यातिं यातु प्रसादेन तव पर्वतनंदिनि ॥ ३६ ॥
॥ पुलस्त्य उवाच ॥ ॥
एवमस्त्विति सा देवी प्रोच्य गंगां महानदीम् ॥

ततो विसर्जयामास तामालिंग्य मुहुर्मुहुः ॥ ३७ ॥

गतायामथ गंगायामधोवक्त्रं सुलज्जितम् ॥

पाणौ गृह्य ययौ रुद्रं भ्रममाणा गृहं प्रति ॥३८॥

एवमेतत्पुरावृत्तं तस्मिन्कुण्डे नराधिप ॥

तस्मात्सर्वप्रयत्नेन चतुर्द्दश्यां समाहितः ॥ ३९ ॥

शुक्लायां चैत्रमासे तु स्नानं तत्र समाचरेत् ॥

सांनिध्याद्देवदेवस्य गंगायाश्च नृपोत्तम ॥ 7.3.38.४० ॥

यत्र संक्षयमायाति सर्वं तत्राशुभं कृतम् ॥

तत्र यो वृषभं दद्याद्ब्राह्मणाय नृपोत्तम ॥

तद्रोमसंख्ययास्वर्गे स पुमान्वसति ध्रुवम् ॥४१॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे शिवगंगाकुण्डोत्पत्तिमाहात्म्यवर्णनंनामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ३९

https://sa.wikisource.org/s/glz
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ ययातिरुवाच ॥ ॥

यत्त्वया कीर्तितं ब्रह्मन्पूर्वं देवैः प्रसादितः ॥

लिंगं संस्थापयामास स्थिररूपो महेश्वरः ॥ १ ॥

कस्मात्तत्पातितं लिंगं वालखिल्यैर्महात्मभिः ॥

कस्मात्तत्राचलो जातो देवदेवो महेश्वरः ॥ २ ॥

एतन्मे कौतुकं सर्वं यथावद्वक्तुमर्हसि ॥

तस्मिन्दृष्टे च किं पुण्यं नराणां तत्र जायते ॥ ३ ॥

॥ पुलस्त्य उवाच ॥ ॥

महेश्वरस्य माहात्म्यं शृणु पार्थिवसत्तम ॥

अत्र ते कीर्तयिष्यामि पूर्ववृत्तं कथांतरम् ॥ ४ ॥

यदा पञ्चत्वमापन्ना सती सत्यपराक्रमा ॥

अपमानेन दक्षस्य यज्ञे न च निमंत्रिता ॥ ५ ॥

तदा कामो द्रुतं गृह्य पुष्पचापं तमभ्यगात्॥

कन्दर्प्पं सहसा दृष्ट्वा सन्धितेषुं सुदुर्जयम् ॥ ६ ॥

आपतन्तं भयात्तस्य प्रणष्टस्त्रिपुरांतकः ॥

स तदा भ्रममाणश्च इतश्चेतश्च पार्थिव ॥ ७ ॥

वालखिल्याश्रमं प्राप्तः पुण्यं सद्वृक्षशोभितम् ॥

स तत्र भगवांस्तेषां दारैर्दृष्टः सुरूपवान्॥ ८ ॥

दिग्वासाः सुप्रियालापस्ततस्ताः काममोहिताः ॥

त्यक्त्वा पुत्रगृहाद्यं च सर्वास्तत्पृष्ठसंस्थिताः ॥

बभूवुश्चानिशं राजन्मां भजस्वेति चाब्रुवन् ॥ ९ ॥

चक्रुरालिंगनं काश्चिच्चुम्बनं च तथापराः ॥

अन्यास्तस्य हि लिंगं तत्स्पृशंति च मुहुर्मुहुः ॥ 7.3.39.१० ॥

स चापि भगवाञ्छम्भुर्निष्कामः परमेश्वरः ॥

जगद्व्याप्तिं समाश्रित्य सर्वप्राणिषु वर्तते ॥ ११ ॥

स चापि भगवाच्छंभुस्तासां सरति प्राङ्मुखः ॥

भ्रांतस्तत्राश्रमे तेषां दारान्कामेन पीडयन् ॥ १२ ॥

अथ ते मुनयो दृष्ट्वा विकृतिं दारसंभवाम् ॥

अजानन्तो महादेवं रुष्टास्तस्य महात्मनः ॥ ॥ १३ ॥

ददुः शापं सुसंतप्ताः कलत्रार्थे परंतप ॥

पततां पततां लिङ्गमेतत्ते पापकृत्तम ॥ १४ ॥

विडम्बयसि नो दारानजस्रं चास्य दर्शनात् ॥

ततश्चैवापतल्लिंगं तत्क्षणात्तत्पुरद्विषः ॥ १५ ॥

ब्रह्मवाक्येन राजर्षे चकम्पे वसुधा ततः ॥

शीर्णानि गिरिशृंगाणि चुक्षुभुर्मकरालयाः ॥ ॥ १६ ॥

ततो देवगणाः सर्वे भयत्रस्ता नराधिप ॥

अकाले प्रलयं मत्वा त्रैलोक्ये पर्यवस्थितम् ॥ १७ ॥

तत पितामहं जग्मु स्तस्मै सर्वं न्यवेदयन् ॥

प्रलयस्येव चिह्नानि दृश्यन्ते परमेश्वर ॥ १८ ॥

किं निमित्तं सुरश्रेष्ठ न जानीमो वयं प्रभो ॥

तेषां तद्वचनं श्रुत्वा चिरं ध्यात्वा पितामहः ॥ १९ ॥

अब्रवीत्पातितं लिंगं वालखिल्यैः पिनाकिनः ॥

तेनैते दारुणोत्पाताः संजाता भयसूचकाः ॥ 7.3.39.२० ॥

तस्मान्मया समायुक्ताः सर्वे तत्र दिवौकसः ॥

व्रजंतु येन तल्लिंगं स्थाने संस्थापयेच्छिवः ॥२१॥

यावन्नो जायते लोके प्रलयोऽ कालसंभवः ॥

एवं संमंत्र्य ते सर्वे ततोऽर्बुदमुपाययुः ॥ २२ ॥

वालखिल्याश्रमे यत्र तल्लिंगं निपपात ह ॥

तुष्टुवुर्विविधैः सूक्तैर्वेदोक्तैर्विनयान्विताः ॥ २३ ॥

॥ देवा ऊचुः ॥ ॥

नमस्ते देवदेवेश भक्तानां चाभयंकर ॥

नमस्ते सर्ववासाय सर्वयज्ञमयाय च ॥ २४ ॥

सर्वेश्वराय देवाय परमज्योतिषे नमः ॥

नमः स्फुटतर ज्ञानगम्याय वेधसे ॥ २५ ॥

त्र्यंबकाय च भीमाय पिनाकवरपाणये ॥

त्वयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ २६ ॥

संसारे विबुधश्रेष्ठ जगत्स्थावरजंगमम् ॥

न तदस्ति त्रिलोकेऽस्मिन्सुसूक्ष्ममपि शंकर ॥

यत्त्वया न प्रभो व्याप्तं सृष्टिसंहारकारणात् ॥ २७ ॥

पृथिव्यादीनि भूतानि त्वया सृष्टानि कामतः ॥

यास्यंति तानि भूयोऽपि तव काये जगत्पते ॥ २८ ॥

प्रसीद भगवंस्तस्माल्लिंगमेतत्सुरेश्वर ॥

स्थाने स्थापय भद्रं ते यावन्न स्यात्प्रजाक्षयः ॥ २९ ॥

॥ श्रीभगवानुवाच ॥ ॥

निर्विकारस्य मल्लिंगं वालखिल्यैः प्रपातितम्॥

कथं भूयः प्रगृह्णामि यावच्छुद्धिर्न जायते ॥ 7.3.39.३० ॥

शक्तोऽहं वालखिल्यानां निग्रहं कर्तुमञ्जसा ॥

किन्तु मे ब्राह्मणा मान्याः पूज्याश्च सुरसत्तमाः ॥ ३१ ॥

अचलं लिंगमेतद्धि नोद्धर्तुं शक्यते विभो ॥

एक एवात्र निर्दिष्ट उपायो नापरः स्मृतः ॥ ३२ ॥

यदि मे त्वं पुरा लिंगं पूजयेथाः पितामह ॥

ततो देवगणाः सर्वे ततो विप्रास्ततोऽपरे ॥ ३३ ॥

ततो नौ शांतिमागच्छेज्जगत्स्थावरजंगमम् ॥ ३४ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्तः स भगवाञ्छंकरेण नृपोत्तम ॥

ततस्तं पूजयामास ब्रह्मा पूर्वं सुभक्तितः ॥ ३५ ॥

ब्रह्मणोऽनन्तरं विष्णुस्ततः शक्र स्ततोऽपरे ॥

वालखिल्यादयो विप्रा मन्त्रैश्च शतरुद्रियैः ॥ ३६ ॥

ततस्ते दारुणोत्पाता उपशांताश्च तत्क्षणात् ॥

अभवत्सुमुखो लोको वृत्तो गन्धवहो मृदुः ॥ ३७ ॥

अथोवाच महादेवः सर्वांस्तांस्त्रिदशालयान्॥
वृणुध्वं सुवरं सर्वे मत्तो यन्मनसीप्सितम् ॥ ३८ ॥
॥ देवा ऊचुः ॥ ॥
तव लिंगस्य संस्पर्शादपि पापकृतो नराः ॥
स्वर्गं यास्यंति देवेश नाशं यास्यति किल्बिषम् ॥
व्रतदानानि सर्वाणि तीर्थयात्रायुतानि च ॥ ३९ ॥
तस्माद्वज्रेण देवेन्द्रस्तवैतल्लिंगमुत्तमम्॥
छादयिष्यति सर्वत्र यदि त्वं मन्यसे प्रभो ॥ 7.3.39.४० ॥
॥ श्रीभगवानुवाच ॥ ॥
अभिप्रायो ममाप्येष वर्तते हृदि पद्मज ॥
एवं करोतु देवेन्द्रः सर्वधर्मविवृद्धये ॥ ४१ ॥
पुलस्त्य उवाच ॥ ॥
ततः संछादयामास वज्रेण त्रिदशाधिपः ॥
तल्लिंगं सर्वमर्त्यानां यथाऽदृश्यं व्यजायत ॥ ४२ ॥
अद्यापि वज्रसंस्पर्शात्तत्सान्निध्यं गतो नरः ॥
आजन्ममरणात्पापान्मुच्यते नात्र संशयः ॥ ॥ ४३ ॥
माहात्म्यं कीर्तितं यस्मात्तल्लिंगे शंकरेण तु ॥
वस्त्रेणाच्छादितं चैव शक्रेणैव धरातले ॥ ४४ ॥
ततःप्रभृति लिंगस्य मर्त्ये पूजा व्यजायत ॥
पुरासीच्छंकरः पूज्यो यथान्ये त्रिदशालयाः ॥ ४५ ॥
एवमेतत्पुरावृत्तमर्बुदे पर्वतोत्तमे ॥
लिंगस्य पतनात्पूजां यन्मां त्वं परि पृच्छसि ॥ ४६ ॥
फाल्गुनान्तचतुर्द्दश्यां नैवेद्यं नूतनैर्यवैः ॥
यो ददात्यचलेशाय स भूयो नेह जायते ॥ ४७ ॥
ब्राह्मणान्भोजयेद्यस्तु भक्त्या तस्मिन्नवैर्यवैः ॥
यवसंख्याप्रमाणानि युगानि दिवि मोदते ॥ ४८ ॥
तत्र दानं प्रशंसन्ति सक्तूनां मुनिसत्तमाः ॥
नूतनानां महाराज यतः प्रोक्तं पुरारिणा ॥ ४९ ॥

किं दानैर्विविधैर्दत्तैः किं यज्ञैश्च सुविस्तरैः ॥
किं तीर्थैर्विविधैर्होमैस्तपोभिः किं च कष्टदैः ॥ 7.3.39.५० ॥
फाल्गुनान्तचतुर्द्दश्यां सुमहेश्वरसन्निधौ ॥
धर्माण्येतानि सर्वाणि कलां नार्हंति षोडशीम्॥ ५१ ॥
शृणु राजन्पुरा वृत्तं तत्राश्चर्यं यदुत्तमम् ॥
कश्चित्पापसमाचारः कुष्ठी क्षामतनुर्नरः ॥ ५२ ॥
भिक्षार्थमागतस्तत्र लोकैरन्यैः समन्वितः ॥
तेन भिक्षार्जितं तत्र सक्तूनां कुडवं नृप ॥ ५३ ॥
ततो रोग परिक्लेशाद्भोजनं न चकार सः ॥
दाघार्दितो जले तस्मिन्स्नातो भक्तिविवर्जितः ॥
सक्तून्कृत्वोपधाने तान्स च सुप्तो निशागमे ॥ ५४ ॥
ततो निद्राभिभूतस्य सारमेयो जहार च ॥
भक्षयामास युक्तोऽन्यैः सारमेयैर्बुभुक्षितः ॥ ५५ ॥
अथासौ विस्मयाद्राजन्पंचत्वं समुपस्थितः ॥
ततो जातिस्मरो जातो विदर्भाधिपतेर्गृहे ॥ ५६ ॥
भीमोनाम नृपश्रेष्ठ दमयन्तीपिता हि यः ॥
तं प्रभावं हि विज्ञाय सक्तूनां तत्र पर्वते ॥ ५७ ॥
फाल्गुनांतचतुर्दश्यां वर्षे वर्षे जगाम सः ॥
कृत्वा चैवोपवासं तु रात्रौ जागरणं तथा ॥ ५८ ॥
अचलेश्वरसान्निध्ये ददौ सक्तूंस्ततो बहून् ॥
सहिरण्यान्द्विजेन्द्राणां पशुपक्षिमृगेषु च ॥ ५९ ॥
अथ ते मुनयः सर्वे गालवप्रमुखा नृप ॥
पप्रच्छुः कौतुकाविष्टाः सक्तुदानकृते नृपम् ॥ 7.3.39.६० ॥
॥ ऋषय ऊचुः ॥ ॥
हस्त्वश्वरथदानानां शक्तिरस्ति तवाद्भुता ॥
कस्मात्सक्तून्प्रमुक्त्वा त्वं नान्यद्दातुमिहेच्छसि ॥ ६१ ॥
॥ पुलस्त्य उवाच ॥ ॥
अथाऽसौ कथयामास पूर्वमेतत्समुद्भवम् ॥

सक्तुदानस्य माहात्म्यं मुनीनां भावितात्मनाम् ॥ ६२ ॥

पूर्वं भक्त्या विहीनस्य शुना वै सक्तवो हृताः ॥

तत्प्रभावादियं प्राप्तिर्मम जाता द्विजोत्तमाः ॥ ६३ ॥

सांप्रतं भक्तिद त्तानां किं स्याज्जानामि नो फलम्॥

एतस्मात्कारणाद्दानं सक्तूनां प्रकरोम्यहम् ॥

तीर्थेऽस्मिन्भक्तिसंयुक्तः सत्येनात्मानमालभे ॥ ६४ ॥ ॥

॥ पुलस्त्य उवाच ॥ ॥

ततस्ते मुनयो हृष्टाः साधुसाध्विति चाब्रुवन्॥

चक्रुश्चैवात्मशक्त्या ते सक्तूनां दानमुत्तमम् ॥ ६५॥

एष प्रभावो राजर्षे सक्तुदानस्य कीर्त्तितः ॥

महेश्वरस्य माहात्म्यं सत्यं चापि प्रकीर्त्तितम् ॥ ६६ ॥

यश्चैतच्छृणुयाद्भक्त्या कथ्यमानं द्विजाननात् ॥

अहोरात्र कृतात्पापान्मुच्यते नात्र संशयः ॥ ६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे शिवलिंग महेश्वरमाहात्म्यवर्णनंपुरःसर सक्तुदानमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४०



॥ पुलस्त्य उवाच ॥ ॥

ततः कामेश्वरं गच्छेत्तत्र कामप्रतिष्ठितम् ॥

यस्मिन्दृष्टे सदा मर्त्यः सुरूपः सुप्रभो भवेत् ॥ १ ॥

॥ ययातिरुवाच ॥ ॥

त्वया प्रोक्तं पुरा शंभुः कामबाण भयात्किल ॥

वालखिल्याश्रमं प्राप्तो यत्र लिंगं पपात ह ॥ २ ॥

स कथं पूजितस्तेन शंभुर्मे कौतुकं महत् ॥

वद सर्वं द्विजश्रेष्ठ कामेश्वरनिवेशनम् ॥ ३ ॥

॥ पुलस्त्य उवाच ॥ ॥

मुक्तलिंगेऽपि देवेशे न स्मरस्तं मुमोच ह ॥

दर्शयन्नात्मनो बाणं तस्यासौ पृष्ठतः स्थितः ॥ ४ ॥

ततो वाराणसीं प्राप्तस्तद्भयात्त्रिपुरांतकः ॥

तत्राऽपि च तथा दृष्ट्वा धृतचापं मनोभवम्॥५॥

ततः प्रयागमापन्नः केदारं च ततः परम्॥

नैमिषं भद्रकर्णं च जंबूमार्गे त्रिपुष्करम् ॥६॥

गोकर्णं च प्रभासं च पुण्यं च कृमिजांगलम्॥

गगाद्वारं गयाशीर्षं कालाभीष्टं वटेश्वरम् ॥७॥

किं वा तेन बहूक्तेन तीर्थान्यायतनानि च ॥

असंख्यानि गतो देवः कामं च ददृशे तथा ॥ ८ ॥

यत्रयत्र महादेवस्तद्भयान्नृप गच्छति ॥

तत्रतत्र पुनः कामं प्रपश्यति धृतायुधम्॥ ९ ॥

कस्यचित्त्वथकालस्य पुनः प्राप्तोऽर्बुदं प्रति ॥

तत्रापश्यत्तथा काममाकर्णाकर्षितायुधम्॥

आकुंचितैकपादं च स्थिरदृष्टिं नृपो त्तम ॥ 7.3.40.१० ॥

अथाऽसौ भगवाञ्छांतः प्रियादुःखसमन्वितः ॥

क्रोधं चक्रे विशेषेण दृष्ट्वा तं पुरतः स्थितम्॥ ११ ॥

तस्य कोपाभिभूतस्य तृतीयान्नयनान्नृप ॥

निश्चक्राम महाज्वाला ययाऽसौ भस्मसात्कृतः ॥ १२ ॥

सचापः सशरो राजंस्तस्मिन्पर्वतरोधसि ॥

शंकरो रोषपर्यंतं गत्वा सौख्यमवाप्तवान्॥ १३ ॥

कैलासं पर्वतश्रेष्ठं जगाम सुरपूजितः ॥

दग्धे मनोभवे भार्या रतिरस्य पतिव्रता ॥

व्यलपत्करुणं दीना पतिशोकपरि प्लुता ॥ १४ ॥

ततो दारूणि चाहृत्य चितिं कृत्वा नराधिप ॥

आरुरोहाग्निसंदीप्तां चितिं सा पतिदुःखिता॥

तावदाकाशगां वाणीं शुश्राव च यशस्विनी॥ १५॥

वागुवाच॥

मा पुत्रि साहसं कार्षीस्तपसा तिष्ठ सुन्दरि॥

भूयः प्राप्स्यसि भर्त्तारं कामें तुष्टेन शंभुना॥१६॥

सा श्रुत्वा तां तदा वाणीं समुत्तस्थौ समुमध्यमा॥

देवमाराधयामास दिवानक्तमतंद्रिता॥

व्रतैर्दानैर्जपैर्होमैरुपवासैस्तथा परैः॥१७॥

ततो वर्ष सहस्रांते तुष्टस्तस्या महेश्वरः ॥

अब्रवीद्वद कल्याणि वरं यन्मनसि स्थितम् ॥ १८ ॥

॥ रतिरुवाच ॥ ॥

यदि तुष्टोऽसि मे देव भगवँल्लोक भावनः ॥

अक्षतांगः पुनः कामः कांतो मे जायतां पतिः ॥ १९ ॥

एवमुक्ते तया वाक्ये तत्क्षणात्समुपस्थितः ॥

यथा सुप्तो महाराज तद्वद्रूपः स हर्षित ॥ 7.3.40.२० ॥

इक्षुयष्टिमयं चापं पुष्पबाणसमन्वितम् ॥

भृंगश्रेणिमय्या मौर्व्या शोभितं सुमनोहरम् ॥ २१ ॥

ततो रतिसमायुक्तः प्रणिपत्य महेश्वरम्॥

अनुज्ञातस्तु तेनैव स्वव्यापारेऽभ्यवर्त्तत ॥ २२ ॥

स दृष्ट्वा शिवमाहात्म्यं श्रद्धां कृत्वा नृपोत्तम ॥

शिवं संस्थापयामास पर्वतेऽर्बुदसंज्ञिते ॥ २३ ॥

यस्मिन्दृष्टे महाराज नारी वा यदि वा नरः ॥

सप्तजन्मांतराण्येव न दौर्भाग्यमवाप्नुयात् ॥ २४ ॥

एवमेतन्मया ख्यातं यन्मां त्वं परिपृच्छसि ॥

कामेश्वरस्य माहात्म्यं कामदाह सविस्तरम् ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे कामेश्वरमाहात्म्यवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४१

https://sa.wikisource.org/s/gm1
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ मार्कंडेयस्य चाश्रमम्॥

यत्र पूर्वं तपस्तप्तं मार्कंडेन महात्मना ॥ १ ॥

मृकण्डो ब्राह्मणोनाम पुराऽऽसीच्छंसितव्रतः ॥

अन्ते वयसि संजातस्तस्य पुत्रोऽतिसुन्दरः ॥ २ ॥

सर्वलक्षणसंपूर्णः शांतः सूर्यसमप्रभः ॥

कस्यचित्त्वथ कालस्य तस्याश्रमपदे नृप ॥ ३ ॥

आगतो ब्राह्मणो ज्ञानी कश्चित्सामुद्रविच्छुभः ॥

ततोऽसौ क्रीडमानस्तु बालकः पंचवार्षिकः ॥ ४ ॥

आनासाग्रशिखाग्राभ्यां चिरं चैवावलोकितः ॥

ततोऽहसत्स सहसा तं मृकण्डो ह्यलक्षयत्॥ ५ ॥

अथाऽब्रवीच्चिरं दृष्टस्त्वया पुत्रो मम द्विज॥

ततो हसितवान्भूयः किमिदं कारणं वद॥ ६॥

असकृत्स मृकण्डेन यावत्पृष्टो द्विजोत्तमः ॥

उपरोधवशात्तस्मै यथार्थं संन्यवेदयत् ॥ ७ ॥

अस्य बालस्य चिह्नानि यानि काये द्विजोत्तम ॥

अजरश्चामरश्चैव तैर्भवेत्पुरुषः किल ॥ ८ ॥

षण्मासेनास्य बालस्य नूनं मृत्युर्भविष्यति ॥

एतस्मात्कारणाद्धास्यं मयाऽकारि द्विजोत्तम ॥

अनृतं नोक्तपूर्वं मे वैरिष्वपि कदाचन ॥ ९ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा तु स ज्ञानी उषित्वा तत्र शर्वरीम् ॥

मृकंडेनाभ्यनुज्ञात इष्टं देशं जगाम ह ॥ 7.3.41.१० ॥

मृकंडोपि सुतं ज्ञात्वा ततः क्षीणायुषं नृप ॥

पंचवार्षिकमप्यार्तश्चकारोपनयान्वितम् ॥ ११ ॥

श्रुताध्ययनसंपन्नं यंयं पश्यसि चाग्रतः ॥

तस्याभिवादनं कार्यं त्वया पुत्रक नित्यशः ॥ १२ ॥

ततश्चक्रे ब्रह्मचारी पितुर्वाक्यं विशेषतः ॥ १३ ॥

बालं वृद्धं युवानं च यंयं पश्यति चक्षुषा ॥

नमस्करोति तं सर्वं ब्राह्मणं विनयान्वितः ॥ १४ ॥

कस्यचित्त्वथ कालस्य तस्याश्रमसमीपतः ॥

सप्तर्षयः समायातास्तीर्थयात्रापरायणाः ॥ १५ ॥

अथ तान्सत्वरं गत्वा वंदयामास पार्थिव ॥

बालः सविनयोपेतः सर्वांश्चैव यथाक्रमम् ॥ १६ ॥

दीर्घायुर्भव तैरुक्तः स बालस्तुष्टितत्परैः ॥

आस्थिताश्च यथाभीष्टं देशं बालं विसर्ज्य तम् ॥ १७ ॥

तेषां मध्येंऽगिरानाम दिव्यज्ञानसमन्वितः ॥

तेनावलोकितो बालः सूक्ष्मदृष्ट्या परंतप ॥ १८ ॥

अथ तानब्रवीत्सर्वान्मुनीन्किंचित्सविस्मयः ॥

दीर्घायुर्न च बालोऽयं युष्माभिः संप्रकीर्तितः ॥ १९ ॥

गमिष्यति कुमारोऽयं निधनं पंचमे दिने ॥

तन्न युक्तं हि नो वाक्यमसत्यं द्विजसत्तमाः ॥ 7.3.41.२० ॥

यथाऽयं चिरजीवी स्यात्तथा नीतिर्विधीयताम् ॥

अथ ते मुनयो भीता मिथ्या वाक्यस्य पार्थिव ॥ २१ ॥

बालकं तं समादाय ब्रह्मलोकं गतास्तदा ॥

तत्र दृष्ट्वा चतुर्वक्त्रं नमश्चक्रुर्मुनीश्वराः ॥ २२ ॥

तेषामनंतरं तेन बालके नाभिवादितः ॥

दीर्घायुर्भव तेनाऽपि ब्रह्मणोक्तः स बालकः ॥ २३ ॥

ततः सप्तर्षयो हृष्टाः स्वचित्ते नृपसत्तम ॥

सुखासीनान्सविश्रांतानब्रवीन्मुनिपुंगवान् ॥ २४ ॥

॥ ब्रह्मोवाच ॥ ॥

परिपृच्छत किं कार्यं कुतो यूयमिहागताः ॥ २५ ॥

॥ ऋषय ऊचुः ॥ ॥

तीर्थयात्राप्रसंगेन भ्रममाणा महीतलम् ॥

अर्बुदं पर्वतं नाम तस्य तीर्थेषु वै गताः ॥ २६ ॥

अथागत्य द्रुतं दूराद्बालेनानेन वंदिताः ॥

दीर्घायुर्भव संदिष्टस्ततश्चायमनेकधा ॥

पंचमे दिवसेऽस्यापि मृत्युर्देव भविष्यति ॥ २७ ॥

यथा वयं त्वया सार्द्धमसत्या न चतुर्मुख ॥

भवामोऽस्य कृते देव तथा किंचिद्विधीयताम्॥ २८॥

अथ ब्रह्मा प्रहृष्टात्मा दृष्ट्वा तं मुनिदारकम् ॥

मत्प्रसादादयं बालो भावी कल्पायुरब्रवीत् ॥ २९ ॥

ततस्ते मुनयो हृष्टास्तमादाय गृहं प्रति ॥

प्रस्थिता ब्रह्मलोकात्तु नमस्कृत्वा चतुर्मुखम् ॥ 7.3.41.३० ॥

अथ तस्य पिता तत्र मृकंडो मुनिसत्तमः ॥

ततो भार्यासमायुक्तो विललाप सुदुःखितः ॥ ३१ ॥

हा पुत्रपुत्र करुणं रुदित्वा धर्मवत्सलः ॥

अनामंत्र्य च मां कस्माद्दीर्घं पंथानमाश्रितः ॥३२॥

अकृत्वापि क्रियाः कार्याः कथं मृत्युवशं गतः ॥

सोऽहं त्वया विना पुत्र न जीवामि कथंचन ॥ ३३ ॥

एवं विलपतस्तस्य बहुधा नृपसत्तम ॥

बालश्चाभ्यागतस्तत्र यत्र देशे पुरा स्थितः ॥ ३४ ॥

अथासौ प्रययौ बालः प्रहृष्टेनांतरात्मना ॥

तं दृष्ट्वा पथि तातश्च संप्रहृष्टो बभूव ह ॥ ३५ ॥

पप्रच्छांकं समारोप्य चिरागमन कारणम्॥

ततः स कथयामास सर्वं मुनिविचेष्टितम् ॥

दर्शनं ब्रह्मलोकस्य पद्मयोनेर्वरं तथा ॥ ३६ ॥

॥ बालक उवाच ॥ ॥

अजरश्चामरश्चाहं कृतस्तात स्वयंभुवा ॥

तस्मात्सत्यं मदर्थे ते व्येत्वसौ मानसो ज्वरः ॥३७॥

सोऽहमाराधयिष्यामि तथैव चतुराननम् ॥

कृत्वाऽऽश्रमपदं रम्यमर्बुदे पर्वतोत्तमे ॥ ३८ ॥

अमृतस्राविं तद्वाक्यं श्रुत्वा पुत्रस्य स द्विजः ॥

मृकंडो हर्षसंयुक्तो वाचमित्यब्रवीच्च तम् ॥ ३९ ॥

मार्क्कंडोऽपि द्रुतं गत्वा रम्य मर्बुदपर्वतम् ॥

तपस्तेपे सुविस्तीर्णं ध्यायन्देवं पितामहम्॥ 7.3.41.४० ॥

तस्याश्रमपदे पुण्ये श्रावणे मासि पार्थिव ॥

पौर्णमास्यां विशेषेण यः कुर्यात्पितृतर्पणम् ॥

पितृमेधफलं तस्य सकलं स्यादसंशयम् ॥४१॥

ऋषियोगेन यस्तत्र तर्पयेद्ब्राह्मणोत्तमान् ॥

ब्रह्मलोके चिरं वासस्तस्य संजायते नृप ॥ ॥ ४२ ॥

यः स्नानं कुरुते तत्र सम्यक्छ्रद्धासमन्वितः ॥

नाल्पमृत्युभयं तस्य कुले क्वापि प्रजायते ॥ ४३ ॥

इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्ड तृतीयेऽर्बुदखण्डे मार्कंडेयाश्रमपदोत्पत्तिवर्णनंनामैकचत्वारिंशोऽध्यायः ॥४१॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४२



॥ पुलस्त्य उवाच ॥

ततो गच्छेन्नृपश्रेष्ठ लिंगं पापहरं परम्॥

उद्दालकेन मुनिना स्थापितं लोकविश्रुतम् ॥ १ ॥

तस्मिन्स्पृष्टेऽथ वा दृष्टे पूजिते च विशेषतः ॥

सर्वरोग विनिर्मुक्तो गार्हस्थ्यं प्राप्नुयान्नरः ॥ २ ॥

सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥३॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्ड उद्दालकेश्वरमाहात्म्यवर्णनंनाम द्विचत्वारिंशोऽध्यायः ॥४२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४३



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ सिद्धलिंगं सुसिद्धिदम्॥

सिद्धैस्तु स्थापितं लिंगं सर्वपातकनाशनम् ॥ १ ॥

तत्रास्ति शोभनं कुण्डं सुनिर्मलजलान्वितम् ॥

तत्र स्नातो नरः सम्यङ्मुच्यते ब्रह्महत्यया ॥ २ ॥

यंयं काममभिध्यायंस्तत्र स्नाति नरो नृप ॥

अवश्यं तमवाप्नोति निष्ठांते च परां गतिम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे सिद्धेश्वरमहिमवर्णनंनाम त्रयश्चत्वारिंशोऽध्यायः ॥४३॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४४



पुलस्त्य उवाच ॥

ततो गच्छेन्नृपश्रेष्ठ गजतीर्थमनुत्तमम् ॥

यत्र पूर्वं तपस्तप्तं दिग्गजैर्भावितात्मभिः ॥ १ ॥

भूभारधरणैश्चान्यैरैरावणमुखैर्नृप ॥

तत्र स्नातो नरः सम्यग्गजदानफलं लभेत् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डे गजतीर्थप्रभाववर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४५



॥ पुलस्त्य उवाच॥ ॥

देवखातं ततो गच्छेत्सुपुण्यं तीर्थमुत्तमम् ॥

यत्ख्यातिर्विबुधैः सर्वैः स्वयमेव व्यधीयत ॥ १ ॥

तत्र यः कुरुते श्राद्धममावास्यां विशेषतः ॥

कन्यागते रवौ राजन्स लभेत्परमं पदम् ॥

पितॄन्स तारयत्येव प्राप्तानपि सुदुर्गतिम्॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे श्रीदेवखातोत्पत्तिमाहात्म्यवर्णनंनाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४६



॥ पुलस्त्य उवाच ॥ ॥

ततो व्यासेश्वरं गच्छेद्व्यासेन स्थापितं हि यत् ॥

तं दृष्ट्वा जायते मर्त्यो मेधावी मतिमाञ्छुचिः ॥

सप्तजन्मांतराण्येव व्यासस्य वचनं यथा ॥ १ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे व्यासतीर्थमाहात्म्यवर्णनंनाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४७



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ सुपूर्णं गौतमाश्रमम् ॥

यत्र पूर्वं तपस्तप्तं गौतमेन महात्मना ॥ १ ॥

पुराऽऽसीद्गौतमो नाम मुनिः परमधार्मिकः ॥

स भक्त्याऽऽराधयामास देवदेवं महेश्वरम् ॥ २ ॥

भक्त्याऽऽराधयमानस्य निर्भिद्य धरणीतलम् ॥

समुत्तस्थौ महल्लिंगं परं माहेश्वरं नृप ॥ ३ ॥

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ॥

पूजयैतन्महल्लिंगं त्वद्भक्त्या समुपस्थितम्॥

वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥४॥

॥ गौतम उवाच॥ ॥

अत्राश्रमपदे देव त्वया शम्भो जगत्पते ॥

सदा कार्यं हि सान्निध्यं यदि तुष्टो मम प्रभो॥ ५ ॥

यस्त्वां पश्यति सद्भक्त्या ब्रह्मलोकं स गच्छतु ॥ ६ ॥

॥ आकाशवाण्युवाच ॥ ॥

माघमासे चतुर्दश्यां योऽत्र मां वीक्षयिष्यति ॥

कृष्णायां ब्राह्मणश्रेष्ठ स यास्यति परां गतिम् ॥७॥

एवमुक्त्वा ततो वाणी विरराम महीपते ॥

तत्रास्ति कुण्डमपरं पवित्रं जलपूरितम्॥

तत्र स्नातो नरः सद्यः कुलं तारयतेऽखिलम् ॥ ८ ॥

यस्तत्र कुरुते श्राद्धं विशेषादिन्दुसंक्षये ॥

गयाश्राद्धफलं तस्य सकलं जायते ध्रुवम् ॥ ९ ॥

तत्र दानं प्रशंसंति तिलानां मुनिपुंगवाः ॥

तिलसंख्यानि वर्षाणि दानात्स्वर्गे वसेन्नृप ॥ 7.3.47.१० ॥

अर्बुदे गौतमी यात्रा सिंहस्थे च बृहस्पतौ ॥

अमायां सोमवारेण द्विषड्गोदावरीफलम् ॥ ११ ॥

षष्टिवर्षसहस्राणि भागीरथ्यवगाहने ॥

सकृद्गोदावरीस्नानात्सिंहस्थे च बृहस्पतौ ॥ १२ ॥

इति श्रीस्कान्दे महापुराण एकाशातिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे गौतमाश्रमतीर्थमाहात्म्यवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४८

https://sa.wikisource.org/s/gm8
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

कुलसंतारणं गच्छेत्तत्र तीर्थमनुत्तमम् ॥

यत्र स्नातो नरः सम्यक्कुलं तारयतेऽखिलम्॥ १ ॥

दश पूर्वान्भविष्यांश्च तथात्मानं नृपोत्तम ॥

उद्धरेच्छ्रद्धयायुक्तस्तत्र दानेन मानवः ॥ २ ॥

आसीदप्रस्तुतो नाम राजा पूर्वं स पापकृत् ॥

नापि दानं तथा ज्ञानं न ध्यानं न च सत्क्रिया ॥ ३ ॥

तस्मिञ्छासति लोकानां नासीत्सौख्यं कदाचन ॥

परदार रुचिर्नित्यं महादण्डपरश्च सः ॥ ४ ॥

न्यायतोऽन्यायतो वापि करोति धनसंग्रहम् ॥

स घातयति लोकांश्च निर्दोषान्पापकृत्तमः ॥ ५ ॥

ततो वार्धक्यमापन्नस्तथापि न शमं गतः ॥

कस्यचित्त्वथ कालस्य पितृभिः प्रतिबोधितः ॥

तं प्रसुप्तं समासाद्य नारकेयैः सुदुःखितैः ॥ ६॥

॥ पितर ऊचुः ॥ ॥

वयं शुद्धसमाचारा नित्यं धर्मपरायणाः ॥

दानयज्ञतपःशीलाः स्वदारनिरतास्तथा ॥ ७ ॥

स्वकर्मभिः कुलांगार दिवं प्राप्ता यथार्हतः ॥

कुपुत्रं त्वां समासाद्य नरकं समुपस्थिताः ॥

तस्मादुद्धर नः सर्वान्कृत्वा किंचिच्छुभार्चनम् ॥ ८ ॥

कर्मभिस्तव पापात्मन्वयं नरकमाश्रिताः ॥

नरकं दश यास्यंति भविष्याश्च तथा भवान् ॥ ९ ॥

एवमुक्त्वा च ते सर्वे पितरस्तु सुदुःखिताः ॥

याताश्च नरकं भूयः प्रबुद्धः सोऽपि पार्थिवः ॥ 7.3.48.१० ॥

ततो दुःखमनुप्राप्तः पितृवाक्यानि संस्मरन् ॥
रुरोद प्रातरुत्थाय तं भार्या प्रत्यभाषत ॥ ११ ॥
॥ इन्दुमत्युवाच ॥ ॥
किमर्थं राजशार्दूल त्वं रोदिषि महास्वनम् ॥
कथं ते कुशलं राज्ये शरीरे वा पुरेऽथवा ॥ १२ ॥ ॥
॥ राजोवाच ॥ ॥
मया दृष्टोऽद्य स्वप्नांते पिता ह्यथ पितामहः ॥
अपश्यं दुःखितान्देवि ताभ्यामथाग्रजान्पितृन् ॥ १३ ॥
उपालब्धोऽस्मि तैः सर्वैस्तव कर्मभिरीदृशैः ॥
दारुणे नरके प्राप्ता अधर्मादिविचेष्टितैः ॥ १४ ॥
अथान्ये दश यास्यन्ति भविष्याश्च भवानपि ॥
तस्मात्कृत्वा शुभं कर्म दुर्गतेश्चोद्धरस्व नः ॥ १५ ॥
एवमुक्तः प्रबुद्धोऽहं पितृभिर्वरवर्णिनि ॥
तेनाहं दुःखमापन्नस्तद्वाक्यं हृदि संस्मरन् ॥ १६ ॥ ॥
॥ इन्दुमत्युवाच ॥ ॥
सत्यमेतन्महाराज यदुक्तोऽसि पितामहैः ॥
न त्वया सुकृतं कर्म संस्मरेऽहं कृतं पुरा ॥ १७ ॥
यथा सुपुत्रमासाद्य तरंति पितरो नृप ॥
कुपुत्रेण तथा यांति नरकं नात्र संशयः ॥ १८ ॥
स त्वमाहूय विप्रेंद्रान्धर्मशास्त्रविचक्षणान् ॥
पृष्ट्वा तान्कुरु यच्छ्रेयः पितृणामात्मना सह ॥ १९ ॥
आनयामास राजाऽसौ ततो विप्राननेकशः ॥
वेदवेदांगतत्त्वज्ञान्धर्मशास्त्रविचक्षणान् ॥
उवाच विनयोपेतो भार्यया सहितो हितान्॥ 7.3.48.२० ॥
॥ राजोवाच ॥ ॥
कर्मणा केन पितरो निरयस्था द्विजोत्तमाः ॥
स्वर्गं यांति सुपुत्रेण तारिताः प्रोच्यतां स्फुटम् ॥ ॥ २१ ॥
॥ ब्राह्मणा ऊचुः ॥ ॥

पितृमेधेन राजेंद्र कृतेन विधिपूर्वकम् ॥

निरयस्था दिवं यांति यद्यपि स्युः सुपापिनः ॥ २२ ॥

॥ राजोवाच ॥ ॥

दीक्षयंतु द्विजाः सर्वे तदर्थं मां धृतव्रतम् ॥

यत्किंचिदत्र कर्तव्यं प्रोच्यतामखिलं हि तत् ॥ २३ ॥

तथोक्तास्ते नृपेंद्रेण ब्राह्मणाः सत्यवादिनः ॥

समग्राः पार्थिवं प्रोचुर्यदुक्तं यज्ञकर्मणि ॥ २४ ॥

दीक्षा ग्राह्या नृपश्रेष्ठ पुरश्चरणमादितः ॥

कृत्वा कायविशुद्ध्यर्थं ततः श्रेयस्करी भवेत् ॥ २५ ॥

स त्वं पापसमाचारो बाल्यात्प्रभृति पार्थिव ॥

असंख्यं पातकं तस्मात्तीर्थयात्रां समाचर ॥ २६ ॥

सर्वतीर्थाभिषिक्तस्त्वं यदा स्यान्नृपसत्तम ॥

प्रायश्चित्तेन योग्यः स्यास्ततो यज्ञस्य नान्यथा ॥ २७ ॥

प्रभासादीनि तीर्थानि यानि संति धरातले ॥

गंतव्यं तेषु सर्वेषु स्नानं कुरु समाहितः ॥ २८ ॥

मनसा गच्छ दुर्गाणि ददद्दानमनुत्तमम् ॥

नश्येत्तेनाशुभं किंचिदपि ब्रह्मवधोद्भवम् ॥

यन्न याति नृणां राजंस्तीर्थस्नानादिना भुवि ॥ २९ ॥

॥ पुलस्त्य उवाच ॥ ॥

विप्राणां वचनं श्रुत्वा स राजा श्रद्धयाऽन्वितः ॥

तीर्थयात्रापरो भूत्वा परिबभ्राम मेदिनीम्॥ ॥ 7.3.48.३० ॥

नियतो नियताहारो ददद्दानानि भूरिशः ॥

राज्ये पुत्रं प्रतिष्ठाप्य वसुं सत्यपराक्रमम् ॥ ३१ ॥

कस्यचित्त्वथ कालस्य तीर्थयात्रानुषंगतः ॥

यातोऽसौ नृपतिश्चैव ह्यर्बुदे निर्मलोदकम् ॥ ३२ ॥

स स्नानमकरोत्तत्र श्रद्धापूतेन चेतसा ॥

स्नातमात्रस्य तस्याथ तस्मिन्नेव जलाशये ॥ ॥ ३३ ॥

विमुक्ताः पितरो रौद्रान्नरकात्सुप्रहर्षिताः ॥

ततो दिव्यविमानस्था दिव्यमाल्यांबरान्विताः ॥ ३४ ॥

तमूचुस्तारिताः सर्वे वयं पुत्र त्वयाऽधुना ॥

तीर्थस्यास्य प्रभावेण भविष्याश्च तथा दश ॥ ३५ ॥

आत्मा च पार्थिवश्रेष्ठ स्नानाच्च जलतर्पणात् ॥

यस्मात्कुलं त्वया पुत्र तीर्थेऽस्मिंस्तारितं ततः ॥ ३६ ॥

कुलसंतारणंनाम तीर्थमेतद्भविष्यति ॥

तस्मात्त्वमपि राजेंद्र सहाऽस्माभिर्दिवं प्रति ॥

आगच्छानेन देहेन तीर्थस्यास्य प्रभावतः ॥ ३७ ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्तः स राजेंद्रो दिव्यकांतिवपुस्तदा ॥

तं विमानमथारुह्य गतः स्वर्गं च तैः सह ॥ ३८ ॥

एष प्रभावो राजर्षे कुलसंतारणस्य च ॥

मया ते वर्णितः सम्यग्भूयः किं परिपृच्छसि ॥ ३९ ॥

॥ ययातिरुवाच ॥ ॥

स किंप्रभावो राजा स तथा पापसमन्वितः ॥

स्वदेहेन गतः स्वर्गमेतन्मे कौतुकं महत् ॥ 7.3.48.४० ॥

॥ पुलस्त्य उवाच ॥ ॥

राकासोमव्यतीपात समकाले नृपोत्तम ॥

स स्नातो यत्र भूपालस्तन्महच्छ्रेयसे परम् ॥ ४१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे तृतीयेऽर्बुदखंडे कुलसंतारणतीर्थमाहात्म्यवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ४९

https://sa.wikisource.org/s/gm9



॥ पुलस्त्य उवाच ॥ ॥

रामतीर्थं ततो गच्छेत्पुण्यमृषिनिषेवितम्॥

तत्र स्नातस्य मर्त्यस्य जायते पापसंक्षयः ॥ १ ॥

पितॄणां च परा तुष्टिर्यावदाभूतसंप्लवम् ॥

पुरासीद्भार्गवो रामः सर्वशस्त्रभृतां वरः ॥ २ ॥

तेन पूर्वं तपस्तप्तं शत्रूणामिच्छता क्षयम्॥

ततः पाशुपतं नाम तस्यास्त्रं परमं ददौ ॥ ३ ॥

तपस्तुष्टो महादेवो गते वर्षशतत्रये ॥

अब्रवीद्वरदोऽस्मीति स वव्रे शत्रुसंक्षयम् ॥ ४ ॥

ततः पाशुपतं नाम तस्यास्त्रं परमं ददौ ॥

स्मरणेनापि शत्रूणां यस्य संजायते क्षयः ॥ ५ ॥

अब्रवीद्वचनं चापि प्रहस्य वृषभध्वजः ॥

जामदग्न्य महाबाहो शृणु मे परमं वचः ॥ ६ ॥

अस्त्रेणानेन युक्तस्त्वमजेयः सर्वदेहिनाम् ॥

भविष्यसि न संदेहो मत्प्रसादाद्भृगूद्वह ॥ ७ ॥

एतज्जलाशयं पुण्यं त्रैलोक्ये सचराचरे ॥

रामतीर्थमिति ख्यातं मत्प्रसादाद्भविष्यति ॥ ८ ॥

येऽत्र श्राद्धं करिष्यंति पौर्णमास्यां समाहिताः ॥

संप्राप्ते कार्तिके मासि कृत्तिकायोगसंयुते ॥ ९ ॥

पितृमेधफलं तेषामशेषं च भविष्यति ॥

तथा शत्रुक्षयो राजन्वासः स्वर्गेषु चाक्षयः ॥ 7.3.49.१० ॥

॥ पुलस्त्य उवाच ॥ ॥

एवमुक्त्वा महादेवस्ततश्चादर्शनं गतः ॥

रामोऽप्यसूदयत्क्षात्रं पितृदुःखेन दुःखितः ॥ ११ ॥

त्रिःसप्त तर्पयामास पितॄंस्तत्र प्रहर्षितः ॥
जमदग्नौ मृते तेन प्रतिज्ञातं महात्मना ॥ १२ ॥
दृष्ट्वा मातुः क्षतान्यंगे त्रिःसप्त मनुजाधिप ॥
शस्त्रजातानि विप्राणां समाजे समुपस्थिते ॥ १३ ॥
पिता मे निहतो यस्मात्क्षत्रियैस्तापसो द्विजः ॥
अयुध्यमान एवाथ तस्मात्कृत्वा त्रिसप्त वै ॥ १४ ॥
क्षत्त्रहीनामहं पृथ्वीं प्रदास्ये सलिलं पितुः ॥
तत्सर्वं तस्य संजातं तीर्थमाहात्म्यतो नृप ॥ १५ ॥
तस्मात्सर्वं प्रयत्नेन श्राद्धं तत्र समाचरेत् ॥
क्षत्रियश्च विशेषेण य इच्छेच्छत्रुसंक्षयम् ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे रामतीर्थमाहात्म्यवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५०

https://sa.wikisource.org/s/gma
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

कोटितीर्थं ततो गच्छेत्सर्वपातकनाशनम् ॥

तीर्थानां यत्र संजाता कोटिः पार्थिव हेलया ॥१॥

यदा स्यात्कलिकालस्तु रौद्रो राजन्महीतले ॥

म्लेच्छभूता जनाः सर्वे तत्स्पर्शात्तीर्थविप्लवः ॥ २ ॥

तिस्रः कोट्योऽर्धकोटिश्च तीर्थानां भूमिवासिनाम् ॥

तेषां कोटिस्ततोऽवात्सीत्पर्वतेऽर्बुदसंज्ञके ॥ ३ ॥

पुष्करे च तथा कोटिः कुरुक्षेत्रे च पार्थिव ॥

वाराणस्यामर्धकोटिः स्तुता देवैः सवासवैः ॥

राजन्नेतानि रक्षंति सर्वे देवाः सवासवाः ॥ ४ ॥

यदा यदा भयार्त्तानि म्लेच्छस्पर्शात्समंततः ॥

स्थानेष्वेतेषु तिष्ठंति तीर्थान्युक्तेषु सत्वरम् ॥ ५ ॥

कोटितीर्थानि त्रीण्येव तत्र जातानि भूतले ॥

अर्ध कोटिसमेतानि सर्वपापहराणि च ॥ ६ ॥

तस्मात्सर्वप्रयत्नेन स्नानं तत्र समाचरेत् ॥

कृष्णपक्षे त्रयोदश्यां नभस्ये च विशेषतः ॥ ७ ॥

तत्र स्नानादिकं सर्वं जपहोमादिकं च यत् ॥

सर्वं कोटिगुणं राजंस्तत्प्रसादादसंशयम् ॥ ८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे कोटितीर्थप्रभाववर्णनंनाम पंचाशत्तमोऽध्यायः ॥ ५० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५१

https://sa.wikisource.org/s/gmb
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ चंद्रोद्भेदमनुत्तमम् ॥

तीर्थं पापहरं नृणां निशानाथेन निर्मितम् ॥ १ ॥

प्रतिज्ञातं यदा राजन्ग्रहणे चंद्रसूर्ययोः ॥

राहुणा कृतवैरेण च्छिन्ने शिरसि विष्णुना ॥ २ ॥

तदा भयान्वितश्चन्द्रो मत्वा दैत्यं दुरासदम्॥

पीयूषभक्षणोद्युक्तं ततश्चार्बुदमभ्यगात् ॥ ३ ॥

तत्र भित्त्वा गिरेः शृंगे कृत्वा विवरमुत्तमम्॥

प्रविष्टस्तस्य मध्ये तु तपस्तेपे सुदुश्चरम्॥ ४ ॥

ततः कालेन महता तुष्टस्तस्य महेश्वरः ॥

अब्रवीद्वृणु भद्रं ते वरं यत्ते हृदिस्थितम् ॥ ५ ॥

॥ चंद्र उवाच ॥ ॥

प्रतिज्ञातं सुरश्रेष्ठ राहुणा ग्रहणं मम ॥

बलवानेष दुर्धर्षः प्रकृत्या सिंहिकासुतः ॥ ६ ॥

सांप्रतं भक्षितं तेन पीयूषं सुरसत्तम ॥

अहं मध्ये धृतश्चापि राहुणाऽसौ दुरासदः ॥ ७ ॥

पीयमानेऽमृते देव देवैः पूर्वं पराजितैः ॥

दैवतं रूपमास्थाय दानवोऽसौ समागतः ॥ ८ ॥

अपिबच्चामृतं राहुस्तेनास्य मृत्युवर्जितम् ॥

अमृतं चाक्षयं जातं शिरो देवभयप्रदम् ॥ ९ ॥

ततो देवैः कृतं साम ग्रहमध्ये प्रतिष्ठितः ॥

प्रतिज्ञाते ग्रहेऽस्माकं ततो मे भयमाविशत् ॥ 7.3.51.१० ॥

भयात्तस्य सुरश्रेष्ठ भित्त्वा शृंगं गिरेरिदम् ॥

कृतं श्वभ्रमगाधं च तपोऽर्थं सुरसत्तम ॥

तस्मादत्र प्रसादं मे कुरु कामनिषूदन ॥ ११ ॥

॥ भगवानुवाच ॥ ॥

अवध्यः सर्वदेवानामजेयः स महाबलः ॥

करिष्यति ग्रहं नूनं राहुः कोपपरायणः ॥

परं तव निशानाथ करिष्येऽहं प्रतिक्रियाम् ॥ १२ ॥

ग्रहणे तव संप्राप्ते स्नानदानादिकाः क्रियाः ॥

करिष्यंति जना लोके सम्यक्छ्रेयःसमन्विताः ॥ १३ ॥

ताभिस्तव न संतापः स्वल्पोऽप्येवं भविष्यति ॥

अक्षयं सुकृतं तेषां कृतं कर्म भविष्यति ॥ १४ ॥

ग्रहणे तव संजाते मम वाक्यादसंशयम् ॥

एतद्भिन्नं त्वया यस्मात्तपोऽर्थं शिखरं गिरेः ॥

चन्द्रोद्भेदमिति ख्यातं तीर्थं लोके भविष्यति ॥ १५ ॥

ग्रहणे तव संप्राप्ते योऽत्र स्नानं करिष्यति ॥

न तस्य पुनरेवात्र जन्म लोके भविष्यति ॥१६॥

यो वा सोमदिने स्नानं दर्शनं तत्र चाचरेत् ॥

तव लोके ध्रुवं वासस्तस्य चंद्र भविष्यति ॥ १७ ॥

एवमुक्त्वा स भगवांस्ततश्चांतर्दधे हरः॥

चन्द्रोऽपि प्रययौ हृष्टः स्वस्थानं नृपसत्तम ॥ १८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे चन्द्रोद्भेदतीर्थमाहात्म्यवर्णनंनामैकपंचाशत्तमोऽध्यायः ॥ ॥ ५१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५२

https://sa.wikisource.org/s/gmc
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ ईशानीशिखरं महत् ॥

यत्र गौर्या तपस्तप्तं सुपुण्यं लोकविश्रुतम् ॥ १ ॥

यस्य संदर्शनेनापि नरः पापात्प्रमुच्यते ॥

लभते चातिसौभाग्यं सप्तजन्मांतराणि च ॥ २ ॥

॥ ययातिरुवाच ॥ ॥

कस्मिन्काले तपस्तप्तं देव्या तत्र मुनीश्वर ॥

किमर्थं च महत्त्वेतत्कौतुकं वक्तुमर्हसि ॥ ३ ॥

॥ पुलस्त्य उवाच ॥ ॥

शृणु राजन्कथां दिव्यामद्भुतां लोकविश्रुताम् ॥

यस्याः संश्रवणादेव मुच्यते सर्वपातकैः ॥ ४ ॥

पुरा गौर्या समासक्तं ज्ञात्वा देवाः सवासवाः ॥

मंत्रं चक्रुर्भयाविष्टा एकांते समुपाश्रिताः ॥ ५ ॥

वीर्यं यदि त्रिनेत्रस्य क्षेत्रे गौर्याः पतिष्यति ॥

अस्माकं पतनं नूनं जगतश्च भविष्यति ॥ ६ ॥

संततेस्तु विनाशाय ततो गच्छामहे वयम्॥ ७ ॥

एवं संमंत्र्य देवास्ते कैलासं पर्वतं गताः ॥

ततस्तु नंदिना सर्वे निषिद्धाः समयं विना ॥ ८ ॥

॥ नंद्युवाच ॥ ॥

एकांते भगवान्रुद्रः सहगौर्या व्यवस्थितः ॥

तस्माद्देवगणाः सर्वे गच्छध्वं निलयं स्वकम् ॥ ९ ॥

अथ देवगणाः सर्वे वञ्चयित्वा च तं गणम्॥

प्रैषयंस्तत्र वायुं च गुप्तमूचुर्वचस्त्विदम्॥ 7.3.52.१० ॥

गत्वा वायो भवं ब्रूहि न कार्या संततिस्त्वया ॥

एवं देवगणा देव प्रार्थयंति भयातुराः ॥ ११ ॥

ततो वायुर्द्रुतं गत्वा स्थितो यत्र महेश्वरः ॥

उच्चैर्जगाद तद्वाक्यं यदुक्तं त्रिदशालयैः ॥ १२ ॥

ततस्तु भगवाञ्छर्वो व्रीडया परया युतः ॥

गौरीं त्यक्त्वा समुत्तस्थौ बाढमित्येव चाब्रवीत् ॥ १३ ॥

ततो गौरी सुदुःखार्ता शशाप त्रिदशालयान् ॥ १४ ॥

॥ गौर्युवाच ॥ ॥

यस्मादहं कृता देवैः पुत्रहीना समागतैः ॥

तस्मात्तेऽपि भविष्यन्ति सन्तानेन विवर्ज्जिताः ॥ १५ ॥

यस्माद्वायो समायातः स्थानेऽस्मिञ्जनवर्जिते ॥

तस्मात्कायविनिर्मुक्तस्त्वं भविष्यसि सर्वदा ॥ १६ ॥

एवमुक्त्वा ततो दीर्घं भर्तुः कोपपरायणा ॥

त्यक्त्वा पार्श्वं गता राजन्नर्बुदं नगसत्तमम्॥ १७ ॥

सुतार्थं सा तपस्तेपे यतवाक्कायमानसा ॥

ततो वर्षसहस्रान्ते देवदेवो महेश्वरः ॥९१८ ॥

इन्द्राद्यैर्विबुधैः सार्द्धं तदंतिकमुपागमत्॥

अथ शक्रो विनीतात्मा देवीं ता प्रत्यभाषत ॥ १९ ॥

एष देवः शिवः प्राप्तस्तव पार्श्वं स्वलज्जया ॥

नायाति तत्प्रसादोऽस्य क्रियता महती भव ॥ 7.3.52.२० ॥

॥ देव्युवाच ॥ ॥

त्यक्ताऽहं तव वाक्येन पतिना समयान्विता ॥

पुत्रं लब्ध्वा प्रयास्यामि तस्य पार्श्वे सुरेश्वर ॥ २१ ॥

तस्यास्तं निश्चयं ज्ञात्वा स्वयं देवः समाययौ ॥

अब्रवीत्प्रहसन्वाक्यं प्रसादः क्रियतामिति ॥ २२॥

दृष्टिदानेन देवेशि भाषणेन वरानने ॥

मया देवहितं कार्यं सर्वावस्थासु पार्वति ॥ २३ ॥

अकाले तेन मुक्ताऽसि निवृत्तिः सुरते कृता ॥

पुत्रार्थं ते समारंभो यतश्चासीत्सुरेश्वरि ॥ २४ ॥

तस्मात्ते भविता पुत्रो निजदेहसमुद्भवः ॥
मत्प्रसादादसंदिग्धं चतुर्थे दिवसे प्रिये ॥ २५ ॥
निजांगमलमादाय यादृग्रूपं सुरेश्वरि ॥
करिष्यसि न सन्देहस्तादृगेव भविष्यति ॥ २६ ॥
सद्यो देवगणानां च दैत्यानां च विशेषतः ॥
तथा वै सर्वमर्त्यानां सिद्धिदो बहुरूपधृक् ॥ २७ ॥
एवमुक्ता त्रिनेत्रेण परितुष्टा सुरेश्वरी ॥
आलापं पतिना चक्रे सार्द्धं हर्षसमन्विता ॥ २८ ॥
चतुर्थे दिवसे प्राप्ते ततः स्नात्वा शिवा नृप ॥
तदोद्वर्तनजं लेपं गृहीत्वा कौतुकात्किल ॥
चतुर्भुजं चकाराऽथ हरवाक्याद्विनायकम् ॥ २९ ॥
ततः सजीवतां प्राप्य हरवाक्येन तं तदा ॥
विशेषेण महाराज नायकोऽसौ कृतः क्षितौ ॥
सर्वेषां चैव मर्त्यानां ततः ख्यातो बभूव ह ॥ 7.3.52.३० ॥
विनायक इति श्रीमान्पूज्यस्त्रैलोक्यवासिनाम् ॥
सर्वेषां देवमुख्यानां बभूव हि विनायकः ॥ ३१ ॥
ततो देवगणाः सर्वे देवीप्रियहिते रताः ॥
तस्मै ददुर्वरान्दिव्यान्प्रोचुर्देवीं च पार्थिव ॥ ३२ ॥ ॥
॥ देवा ऊचुः ॥ ॥
तवायं तनयो देवि सर्वेषां नः पुरःसरः ॥
प्रथमं पूजिते चास्मिन्पूजा ग्राह्या ततः सुरैः ॥ ३३ ॥
एतच्छृंगं गिरे रम्यं तव संसेवनाच्छुभे ॥
सर्वपापहरं नृणां दर्शनाच्च भविष्यति ॥ ३४ ॥
येऽत्र स्नानं करिष्यन्ति सुपुण्ये सलिलाश्रये ॥
ते यांस्यंति परं स्थानं जरामरणवर्जितम् ॥ ३५ ॥
माघमासे तृतीयायां शुक्लायां ये समाहिताः ॥
सप्तजन्मांतराण्येव भविष्यन्ति सुखान्विताः ॥ ३६ ॥
एवमुक्त्वा सुराः सर्वे स्वस्थानं तु ततो गताः ॥

देवोऽपि सहितो देव्या कैलासं पर्वतं गतः ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्ड ईशानीशिखरमाहात्म्यवर्णनंनाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५३

https://sa.wikisource.org/s/gmd

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेद्ब्रह्मपदं तीर्थं त्रैलोक्यविश्रुतम् ॥

यत्र पूर्वं पदं न्यस्तं ब्रह्मणा लोककारिणा ॥ १ ॥

पुरा ब्रह्मादयो देवास्तत्र सर्वे समाहिताः ॥

अर्बुदे पर्वते रम्य ऋषयश्च सुनिर्मलाः ॥ २ ॥

अचलेश्वरयात्रायां सुभक्त्या भाविता नृप ॥

अथ ते मुनयः सर्वे प्रोचुर्देवं पितामहम् ॥ ३ ॥

॥ ऋषय ऊचुः ॥ ॥

प्रभूतनियमैर्होमैर्व्रतस्नानैश्च नित्यशः ॥

उपवासैश्च निर्विण्णा वयं सर्वे पितामह ॥ ४ ॥

तस्मात्सदुपदेशं त्वं किंचिद्दातुमिहार्हसि ॥

तरामो येन देवेश दुर्गं संसारसागरम् ॥ ५ ॥

अयाचितोपचारैश्च जपहोमैः सुदुष्करैः ॥

मन्त्रैर्व्रतैस्तथा दानैः स्वर्गप्राप्तिं वदस्व नः ॥ ६ ॥

तेषां तद्वचनं श्रुत्वा तदा देवः कृपान्वितः ॥

चिंतयामास सुचिरमिह किंचित्प्रहस्य च ॥७॥

ततः स्वकं पदं त्यक्त्वा रम्ये पर्वतरोधसि ॥

अथोवाच मुनीन्सर्वान्ब्रह्मा संश्लक्ष्णया गिरा ॥ ८ ॥

॥ ब्रह्मोवाच ॥ ॥

एतन्महापदं रम्यं सर्वपातकनाशनम् ॥

स्पृशंतु ऋषयः सर्वे ततो यास्यथ सद्गतिम् ॥ ॥९॥

विना स्नानेन दानेन व्रतहोमजपादिभिः॥

हितार्थं सर्वलोकानां मया न्यस्तं पदं शुभम्॥7.3.53.१०॥

अस्मिन्पदे मया न्यस्ते यांति लोकाः सहस्रशः॥

स्पृशंतु ऋषयः सर्वे देवाश्चापि पदं मम ॥ ११ ॥

एकैवात्र प्रकर्त्तव्या श्रद्धा वाऽव्यभिचारिणी ॥

यश्च श्रद्धान्वितः सम्यक्पदमेतन्मुनीश्वराः ॥ १२ ॥

पूजयिष्यति संप्राप्ते कार्तिके पूर्णिमादिने ॥

तोयैः फलैश्च विविधैर्गंधमाल्यानुलेपनैः ॥ १३ ॥

ब्राह्मणान्भोजयित्वा तु मिष्टान्नेन स्वशक्तितः ॥

स यास्यति न सन्देहो मम लोकं सुदुर्लभम् ॥ १४ ॥

॥ पुलस्त्य उवाच ॥ ॥

ततो मुनिगणाः सर्वे सम्यक्छ्रद्धासमन्विताः ॥

पूजयित्वा पदं तत्र ब्रह्मलोकं समागताः ॥ १५ ॥

तस्मात्सर्वप्रयत्नेन पदं पूज्यं नरोत्तम ॥

पितामहपदं सम्यक्छ्रद्धया स्वर्गदायकम्॥ १६ ॥

अन्यत्कौतूहलं राजन्महद्दृष्टं महाद्भुतम् ॥

पदस्य तस्य यच्छ्रुत्वा जायते विस्मयो महान् ॥ १७ ॥

आयामविस्तरेणाऽपि प्राप्ते कृतयुगे नृप ॥

न संख्या जायते राजञ्छुक्लवर्णस्य मानवैः ॥ १८ ॥

ततस्त्रेतायुगे प्राप्ते रक्तवर्णं प्रदृश्यते ॥

सुव्यक्तं संख्यया युक्तं सर्वलोकनमस्कृतम् ॥ १९ ॥

द्वापरे कपिलं तच्च लघुमात्रं प्रदृश्यते ॥

कलौ कृष्णं सुसूक्ष्मं च रम्ये पर्वतरोधसि ॥ 7.3.53.२० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखंडे ब्रह्मपदोत्पत्तिमाहात्म्यवर्णनंनाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५४

https://sa.wikisource.org/s/gme

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततस्त्रिपुष्करं गच्छेदभीष्टं पद्मजस्य च ॥

ब्रह्मणा तत्समानीतं पर्वतेऽर्बुदसंज्ञके ॥ १ ॥

वसिष्ठस्य पुरा सत्रे वर्त्तमाने नराधिप ॥

तस्मिन्नगे समायाता ब्रह्माद्याश्च सुरोत्तमाः ॥ २ ॥

प्रतिज्ञातं महाराज ब्रह्मणाऽव्यक्तजन्मना ॥

यावत्स्थास्ये नृलोकेऽस्मिंस्तावत्सन्ध्यां त्रिपुष्करे ॥

वंदयिष्यामि संप्राप्ते संध्याकाले समाहितः ॥ ३ ॥

एतस्मिन्नेव काले तु प्रस्थितः पुष्करं प्रति ॥

संध्यार्थं पद्मजो यावद्वसिष्ठस्तावदब्रवीत् ॥ ४ ॥

॥ वसिष्ठ उवाच ॥ ॥

कर्मकालश्च सम्प्राप्तो यज्ञेऽस्मिन्सुरसत्तम ॥

स विना न त्वया देव सिद्धिं यास्यति कर्हिचित् ॥ ५॥

तस्मादानय चात्रैव पद्मयोने त्रिपुष्करम् ॥

संध्योपास्तिं ततः कृत्वा तत्र भूयः सुरेश्वर ॥

ब्रह्मत्वं कुरु देवेश सत्रे चास्मिन्दयानिधे ॥ ६ ॥

एवमुक्तो वसिष्ठेन ब्रह्मा लोक पितामहः ॥

ध्यात्वा तत्रानयामास ज्येष्ठमध्यकनिष्ठिकम् ॥

पुष्करत्रितयं चागात्सुपुण्ये सलिलाशये ॥ ७ ॥

ततःप्रभृति संजातमर्बुदेऽस्मिंस्त्रिपुष्करम् ॥ ८ ॥

तत्र यः कार्तिके मासि पौर्णमास्यां समाहितः ॥

स्नानं करोति दानं च तस्य लोकाः सनातनाः ॥ ९ ॥

तस्य चोत्तरदिग्भागे सावित्रीकुण्डमुत्तमम् ॥

स्नानदानादिकं कुर्वन्यत्र याति शुभां गतिम् ॥ 7.3.54.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे त्रिपुष्करमाहात्म्यवर्णनंनाम चतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५५

https://sa.wikisource.org/s/gmf
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ पुण्यं रुद्रह्रदं शुभम् ॥

यत्र स्नातो नरो भक्त्या गणाधीशत्वमाप्नुयात् ॥ १ ॥

पुरा हत्वांऽधकं दैत्यं सगणो वृषभध्वजः ॥

ततः स्नातो ह्रदं कृत्वा ततो रुद्रह्रदोऽभवत् ॥ २ ॥

चतुर्द्दश्यां महाराज यस्तत्र कुरुते नरः ॥

स्नानं तस्य भवेत्पुण्यं सर्वतीर्थसमुद्भवम् ॥ ३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्डे रुद्रह्रदमाहात्म्यवर्णनंनाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ॥ ५५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५६

https://sa.wikisource.org/s/gmg



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ गुहेश्वरमनुत्तमम् ॥

गुहामध्ये गतं लिंगं सिद्धैः संपूजितं पुरा ॥ १ ॥

यंयं काममभिध्याय संपूजयति मानवः ॥

तंतं स लभते राजन्निष्कामो मोक्षमाप्नुयात् ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डे गुहेश्वरमाहात्म्यवर्णनंनाम षट्पञ्चाशत्तमोऽध्यायः ॥५६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५७

https://sa.wikisource.org/s/gmh
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

अवियुक्तवनं गच्छेत्ततः पार्थिवसत्तम ॥

यस्मिन्दृष्टे नरोभीष्टैर्न वियुज्येत कर्हिचित् ॥१॥

तत्र पूर्वं शची राजन्प्रविष्टा दुःखसंयुता ॥

नहुषेण हृते राज्ये देवेन्द्रस्य महात्मनः ॥ २ ॥

तत्प्रभावात्पुनः प्राप्तो वियुक्तोऽपि शतक्रतुः ॥

ततस्तस्य वरो दत्तो वनस्य हि तया नृप ॥ ३ ॥

नरो वा यदि वा नारी वियुक्ताऽत्र वने शुभे ॥

प्रियैर्निवास एकस्मिन्रात्रिमेकां वसिष्यति ॥ ४ ॥

स तेन लभते संगं भूय एव यथा मया ॥

प्रियैः स लभते वासमेकरात्रं वसन्नृप ॥ ५ ॥

फलदानं प्रशंसंति तत्र ब्राह्मणसत्तमाः ॥

वंध्यानां च विशेषेण यतः पुत्रफलं लभेत् ॥ ६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डेऽवियुक्तक्षेत्रमाहात्म्यवर्णनंनाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५८




॥ पुलस्त्य उवाच ॥ ॥

उमामाहेश्वरं गच्छेत्ततो राजन्सुपुण्यदम्॥

स्थापितं भक्तियुक्तेन धुन्धुमारेण यत्पुरा ॥ १ ॥

दांपत्यं पूजयेद्भक्त्या यस्तत्र मनुजाधिप ॥

सप्त जन्मांतराण्येव न स दौर्भाग्यमाप्नुयात ॥ २ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखण्ड उमामाहेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ५९

https://sa.wikisource.org/s/gmj



॥ पुलस्त्य उवाच ॥ ॥

ततो महौजसं गच्छेत्तीर्थं पातकनाशनम् ॥

यस्मिन्स्नातो नरो राजंस्तेजसा युज्यते ध्रुवम् ॥

ब्रह्महत्याग्निना शक्रः पुरा दैन्यं परं गतः ॥ १ ॥

निःश्रीकस्तेजसा हीनो दुर्गन्धेन समन्वितः ॥

परित्यक्तः सुरैः सर्वैर्विषादं परमं गतः ॥ २ ॥

ततः पप्रच्छ देवेन्द्रो द्विजश्रेष्ठं बृहस्पतिम् ॥

भगवंस्तेजसो वृद्धिः कथं स्यान्मे यथा पुरा ॥ ३ ॥

॥ बृहस्पतिरुवाच ॥ ॥

तीर्थयात्रां सुरश्रेष्ठ कुरुष्व धरणीतले ॥

तीर्थं विना ध्रुवं वृद्धिस्तेजसो न भविष्यति ॥४॥

ततस्तीर्थान्यनेकानि भ्रांत्वा शक्रो नराधिप ॥

क्रमेणैवार्बुदं प्राप्तस्तत्र दृष्ट्वा जलाशयम् ॥

स्नानं चक्रे ततः श्रान्तो महौजाः प्रत्यपद्यत ॥ ५ ॥

दुर्गन्धेन विनिर्मुक्तस्ततो देवैः समावृतः ॥

उवाच प्रहसन्वाक्यं शृणुध्वं सर्वदेवताः ॥ ६ ॥

येऽत्र स्नानं करिष्यन्ति प्राप्ते शक्रोच्छ्रये सदा ॥

आश्विने शुक्लपक्षांते ते यास्यंति परां गतिम् ॥

सुश्रीकाश्च भविष्यंति सदा जन्मनिजन्मनि ॥ ७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे महौजसतीर्थप्रभाववर्णनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ६०



॥ पुलस्त्य उवाच ॥ ॥

ततो गच्छेन्नृपश्रेष्ठ जंबूतीर्थमनुत्तमम् ॥

तत्र स्नातो नरः सम्यगिष्टं फलमवाप्नुयात्। ॥

जंबूद्वीपसमुत्थानां तीर्थानां नृपसत्तम ॥ १ ॥

आसीत्पुरा निमिर्नाम क्षत्रियः सूर्यवंशजः ॥

वयसः परिणामे स पर्वतं चार्बुदं गतः ॥ २ ॥

प्रायोपवेशनं कृत्वा स्थितस्तत्र समाहितः ॥

अथाजग्मुर्मुनिगणास्तस्य पार्श्वे सहस्रशः ॥ ३ ॥

चक्रुर्धर्मकथां पुण्यां राजर्षीणां महात्मनाम् ॥

देवर्षीणां पुराणानां तथान्येषां महात्मनाम् ॥ ४ ॥

ततः कश्चित्कथांते च लोमशो नाम सन्मुनिः ॥

कीर्त्तयामास माहात्म्यं सर्वतीर्थसमुद्भवम् ॥ ५ ॥

तच्छ्रुत्वा पार्थिवो राजन्निमिः परमदुर्मनाः ॥

बभूव न कृतं पूर्वं यतस्तीर्थावगाहनम् ॥ ६ ॥

ततः प्रोवाच तं विप्रमस्त्युपायो द्विजोत्तम ॥

कश्चिद्येन च सर्वेषां तीर्थानां लभ्यते फलम् ॥ ७ ॥ ॥

॥ लोमश उवाच ॥ ॥

दया मे नृप सञ्जाता त्वां दृष्ट्वा दुःखितं भृशम् ॥

तीर्थयात्राकृते यस्मात्करिष्येऽहं तव प्रियम् ॥ ८ ॥

अत्रैव चानयिष्यामि जंबूद्वीपोद्भवानि च ॥

सर्वतीर्थानि राजेन्द्र मन्त्रशक्त्या न संशयः ॥ ९ ॥

स्नानं कुरु महाराज ह्येकीभूतेषु तत्र च ॥

अस्मिञ्जलाशये पुण्ये सत्यमेतद्ब्रवीम्यहम् ॥ 7.3.60.१० ॥

एवमुक्त्वा स विप्रर्षिर्ध्यानं चक्रे समाहितः ॥

ततस्तीर्थानि सर्वाणि तत्रायातानि तत्क्षणात् ॥ ११ ॥

प्रत्ययार्थं च राजर्षे जंबूवृक्षो व्यजायत ॥

तत्र स्नानं नृपश्चक्रे सर्वतीर्थमये ध्रुवे ॥ १२ ॥

सदेहश्च गतः स्वर्गे तीर्थस्नानादनन्तरम् ॥

ततः प्रभृति तत्तीर्थं जंबूतीर्थमनुस्मृतम् ॥ १३ ॥

कन्यागते रवौ तत्र यः श्राद्धं कुरुते नरः ॥

गयाशीर्षसमं तस्य पुण्यमाहुर्महर्षयः ॥ १४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां सप्तमे प्रभासखंडे तृतीयेऽर्बुदखण्डे जंबूतीर्थप्रभाववर्णनंनाम षष्टितमोऽध्यायः ॥ ६० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ६१



॥ पुलस्त्य उवाच ॥ ॥

गंगाधरं ततो गच्छेत्सुपुण्यं विमलोदकम् ॥

येन गंगा धृता राजन्निपतन्ती नभस्तलात् ॥ १ ॥

आहूता देव देवेन ह्यचलेश्वररूपिणा ॥

हरेण रभसा राजन्यत्पुरा कथितं तव ॥ २ ॥

तत्र यः कुरुते स्नानमष्टम्यां च समाहितः ॥

स गच्छेत्परमं स्थानं देवै रपि सुदुर्लभम् ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयऽर्बुदखण्डे गंगाधरतीर्थमाहात्म्य वर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ६२



॥ पुलस्त्यस्य उवाच ॥ ॥

ततः कटेश्वरं गच्छेल्लिंगं गौरीविनिर्मितम् ॥

तथा गंगेश्वरं चान्यद्गङ्गया निर्मितं स्वयम् ॥ १ ॥

पुरा समभवद्युद्धमुमायाः सह गंगया ॥

सौभाग्यं प्रति राजेन्द्र ततो गौरीत्यभाषत ॥ २ ॥

यया संपूजितः शंभुः शीघ्रं यास्यति दर्शनम् ॥

सा सौभाग्यवती नूनभावयोः संभविष्यति ॥ ३ ॥

एवमुक्ता ततो गंगा सत्वरैत्यात्र पर्वते ॥

लिंगमन्वेषयामास चिरकालादवाप सा ॥ ४ ॥

दृष्ट्वा गौर्याथ कटकं पर्वतस्य मनोहरम् ॥

लिंगाकारं महाराज पूजयामास सा तदा ॥ ५ ॥

सम्यक्छ्रद्धासमोपेता ततस्तुष्टो महेश्वरः ॥

प्रददौ दर्शनं तस्या वरदोऽस्मीति चाब्रवीत् ॥ ६ ॥

॥ गौर्युवाच ॥ ॥

सापत्न्यजेर्ष्यया देव मया लिंगं प्रकल्पितम् ॥

तस्मात्कटेश्वराख्या च लोके चास्य भविष्यति ॥ ७ ॥

या नारी पतिना मुक्ता सपत्नीदुःखदुःखिता ॥

अस्य संदर्शनादेव सा भविष्यति विज्वरा ॥

सुतसौभाग्यसंपन्ना भर्तृप्राणसमा तथा ॥ ८ ॥

गंगयाराधितो देव एवमेव वरं ददौ ॥

तस्माल्लिंगद्वयं तच्च द्रष्टव्यं मनुजाधिप ॥ ९ ॥

विशेषतश्च नारीभिः सपत्नीदोषहानिदम् ॥

सुखसौभाग्यदं नित्यं तथाऽभीष्टप्रदं नृणाम् ॥ 7.3.62.१० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडे कटेश्वरगंगेश्वरमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ॥ ६२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/अर्बुदखण्डम्/अध्यायः ६३

https://sa.wikisource.org/s/gmn
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | अर्बुदखण्डम्

॥ पुलस्त्य उवाच ॥ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥

अर्बुदस्य महाराज माहात्म्यं हि समासतः ॥ १ ॥

विस्तरेण च संख्या स्यादपि वर्षशतैरपि ॥

असंख्यानीह तीर्थानि पुण्यान्यायतनानि च ॥

पदेपदे गृहाण्येव निर्मितानि महर्षिभिः ॥ २ ॥

न तत्तीर्थं न सा सिद्धिर्न स वृक्षो महीपते ॥

न सा नदी न देवेशो यस्य तत्रास्ति न स्थितिः ॥ ३ ॥

ये वसंति महाराज सुरम्येऽर्बुदपर्वते ॥

नूनं ते पुण्यकर्माणो न वसंति त्रिविष्टपे ॥ ४ ॥

किं तस्य जीवितेनार्थः किं धनैः किं जपैर्नृप ॥

यो न पश्यति मन्दात्मा समन्तादर्बुदाचलम् ॥ ५ ॥

अपि कीटपतंगा ये पशवः पक्षिणो मृगाः ॥

स्वेदजाश्चाण्डजाश्चापि ह्युद्भिज्जाश्च जरायुजाः ॥ ६ ॥

तस्मिन्मृता महाराज निष्कामाः कामतोऽपि वा ॥

ते यान्ति शिवसायुज्यं जरा मरणवर्जितम् ॥ ७ ॥

यश्चैतच्छुणुयान्नित्यं पुराणं श्रद्धयान्वितः ॥

अर्बुदस्य महाराज स यात्राफलमश्नुते ॥ ८ ॥

तस्मात्सर्वप्रयत्नेन यात्रां तत्र समाचरेत् ॥

य इच्छेदात्मनः सिद्धिमिह लोके परत्र च ॥ ९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे तृतीयेऽर्बुदखंडेऽर्बुदखण्डमाहात्म्यफलश्रुतिवर्णनंनाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

इति श्रीस्कान्दे महापुराणे सप्तमे प्रभासखण्डे तृतीयमर्बुदखण्डं सम्पूर्णम् ॥ ७ - ३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०१

https://sa.wikisource.org/s/gtn
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥॥श्रीगणेशाय नमः ॥ ॥

अथ स्कांदे महापुराणे सप्तमे प्रभासखण्डे चतुर्थं द्वारकामाहात्म्यम् ॥

॥ शौनक उवाच ॥ ॥

कथं सूत युगे ह्यस्मिन्रौद्रे वै कलिसंज्ञके ॥

बहुपाखंडसंकीर्णे प्राप्स्यामो मधुसूदनम् ॥ १ ॥

युगत्रये व्यतिक्रान्ते धर्माचारपरे सदा ॥

प्राप्ते कलियुगे घोरे क्व विष्णुर्भगवानिति ॥ २ ॥

॥ सूत उवाच ॥ ॥

दिवं याते महाराजे रामे दशरथात्मजे ॥

दुष्टराजन्यभारेण पीडिते धरणीतले ॥ ३ ॥

देवानां कार्यसिद्ध्यर्थं भूभारहरणाय च ॥

वसुदेवगृहे साक्षादाविर्भूते जनार्दने ॥ ४ ॥

नंदव्रजं गते देवे पूतनाशोषणे सति ॥

घातिते च तृणावर्ते शकटे परिवर्तिते ॥ ॥ ५ ॥

दमिते कालिये नागे प्रलंबे च निषूदिते ॥

धृते गोवर्धने शैले परित्राते च गोकुले ॥ ६ ॥

सुरभ्या चाभिषिक्ते तु इन्द्रे च विमदीकृते ॥

रासक्रीडारते देवे दारिते केशिदानवे ॥ ७ ॥

अक्रूरवचनाद्देवे मथुरायां गते हरौ ॥

हते कुवलयापीडे मल्लराजे च घातिते ॥ ८ ॥

पश्यतां देव दैत्यानां भोजराजे निपातिते ॥

यदुपुर्यामभिषिक्त उग्रसेने नराधिपे ॥ ९ ॥

जरासंधबले रौद्रे यवने च हते क्षितौ ॥

राजसूये क्रतुवरे चैद्ये चैव निपातिते ॥ 7.4.1.१० ॥

निवृत्ते भारते युद्धे भारे च क्षपिते भुवः ॥

यात्राव्याजसमानीते प्रभासं यादवे कुले ॥ ११ ॥

मद्यपानप्रसक्ते तु परस्परवधो द्यते ॥

कलहेनातिरौद्रेण विनष्टे यादवे कुले ॥ १२ ॥

गात्रं संत्यज्य चात्रैव गतेऽनंते धरातलात् ॥

अश्वत्थमूललमाश्रित्य समासीने जनार्दने ॥ ॥ १३ ॥

व्याधप्रहारभिन्नांगे परित्यक्ते कलेवरे ॥

स्वधामसंस्थिते देवे पार्थे च पुनरागते ॥ १४ ॥

यदुपुर्य्यां प्लावितायां सागरेण समंततः ॥

शक्रप्रस्थं ततो गत्वा कारयित्वा हरेर्गृहम् ॥ १५ ॥

द्वापरे च व्यतिक्रांते धर्माधर्मविमिश्रिते ॥

संप्राप्ते च महारौद्रे युगे वै कलिसंज्ञिते ॥ १६ ॥

क्षीयमाणे च सद्धर्मे विधर्मे प्रबले तथा ॥

नष्टधर्मक्रियायोगे वेदवादबहिष्कृते ॥

एकपादे स्थिते धर्मे वर्णाश्रमविवर्जिते ॥ १७ ॥

अस्मिन्युगे विलुलिते ह्यृषयो वनचारिणः ॥

समेत्यामंत्रयन्सर्वे गर्गच्यवनभार्गवाः ॥ १८ ॥

असितो देवलो धौम्यः क्रतुरुद्दालकस्तथा ॥

एते चान्ये च बहवः परस्परमथाब्रुवन् ॥ १९ ॥

पश्यध्वं मुनयः सर्वे कलिव्याप्तं दिगंतरम् ॥

समंतात्परिधावद्भिर्दस्युभिर्बाध्यते प्रजा ॥ 7.4.1.२० ॥

अधर्मपरमैः पुंभिः सत्यार्जवनिराकृतैः ॥

कथं स भगवान्विष्णुः संप्राप्यो मुनिसत्तमाः ॥ २१ ॥

को वा भवाब्धौ पततस्तारयिष्यति संगतान् ॥

न कलौ संभवस्तस्य त्रियुगो मधुसूदनः ॥

तं विना पुंडरीकाक्षं कथं स्याम कलौ युगे ॥ २२ ॥

तेषां चिंतयतामेवं दुःखितानां तपस्विनाम् ॥

उवाच वचनं तत्र ऋषिरुद्दालकस्तदा॥ २३॥

उद्दालक उवाच ॥

यावन्न कलिदोषेण लिप्यामो मुनिसत्तमाः ॥

अपापा ब्रह्मसदनं गच्छामः परिसंगताः ॥ २४ ॥

पृच्छामो लोकधातारं स्थितं विष्णुं कलौ युगे ॥

यदि विष्णुः कलौ न स्याद्रुद्रेण ब्रह्मणाऽसह ॥ २५ ॥

तं विना पुंडरीकाक्षं त्यक्ष्यामः स्वकलेवरम् ॥

विना भगवता लोके कः स्थास्यति कलौ युगे ॥ २६ ॥

तच्छ्रुत्वा वचनं तस्य ऋषयः संशितव्रताः ॥

साधुसाध्विति ते चोक्त्वा प्रस्थिता ब्रह्मणोंऽतिकम्॥ २७ ॥

कथयन्तः कथां विष्णोः स्वरूपमनुवर्णनम् ॥

तापसाः प्रययुः सर्वे संहृष्टा ब्रह्मणोंऽतिकम् ॥ ॥२८॥

ददृशुस्ते तदा देवमासीनं परमासने ॥

पितामहभूतगणैर्मूर्तामूर्तैर्वृतं तथा ॥ २९ ॥

दृष्ट्वा चतुर्मुखं देवं दंडवत्प्रणताः क्षितौ ॥

प्रणम्य देवदेवं तु स्तोत्रेण तुषुवुस्तदा ॥ 7.4.1.३० ॥

॥ ऋषय ऊचुः ॥ ॥

नमस्ते पद्मसंभूत चतुर्वक्त्राक्षयाव्यय ॥

नमस्ते सृष्टिकर्त्रे तु पितामह नमोऽस्तु ते ॥३१॥

एवं स्तुतः सन्मुनिभिः सुप्रीतः कमलोद्भवः ॥

पाद्यार्घ्येणाभिवन्द्यैतान्पप्रच्छ मुनिपुंगवान् ॥ ३२ ॥

॥ ब्रह्मोवाच ॥

किमागमनकृत्यं वो ब्रूत तत्त्वेन पुत्रकाः ॥

कुशलं वो महाभागाः पुत्रशिष्याग्निबन्धुषु ॥ ३३ ॥

॥ ऋषय ऊचुः ॥ ॥

भवत्प्रसादात्सकलं प्राप्तं नस्तपसः फलम् ॥

यद्भवंतं प्रपश्यामः सर्वदेवगुरुं प्रभुम् ॥ ३४ ॥

शृण्वेतत्कारणं शंभो एते प्राप्तास्तवांतिकम् ॥

युगत्रये व्यतिक्रांते कृतादिद्वापरांतके ॥ ३५ ॥

प्राप्ते कलियुगे घोरे क्व विष्णुः पृथिवीतले ॥

यं दृष्ट्वा परमां मुक्तिं यास्यामो मुक्तबन्धनाः ॥ ३६ ॥

॥ ब्रह्मोवाच ॥ ॥

मत्स्यकूर्मादिरूपैश्च भगवाञ्ज्ञायते मया ॥

विष्णोः पारमिकां मूर्तिं न जानामि द्विजोत्तमाः ॥ ३७ ॥

॥ ऋषय ऊचुः ॥ ॥

यदि त्वं न विजानासि तात विष्णोरवस्थितिम् ॥

गत्वा प्रयागं तत्रैव संत्यक्ष्यामः कलेवरम् ॥ ३८ ॥

॥ ब्रह्मोवाच ॥ ॥

मा विषादं व्रजध्वं हि उपदेक्ष्यामि वो हितम् ॥

इतो व्रजध्वं पातालं यत्रास्ते दैत्यसत्तमः ॥ ३९ ॥

तं गत्वा परिपृच्छध्वं प्रह्लादं दैत्यसत्तमम् ॥

स ज्ञास्यति हरेः स्थानं याथातथ्येन भो द्विजाः ॥7.4.1.४०॥

तच्छ्रुत्वा वचनं तस्य ब्रह्मणः परमात्मनः ॥

प्रणिपत्य च देवेशं प्रस्थितास्ते तपोधनाः ॥ ४१ ॥

जग्मुः संहृष्टमनसः स्तुवन्तो दैत्यसत्तमम् ॥

धन्यः स दैत्यराजोऽयं यो जानाति जनार्दनम् ॥ ४२ ॥

इति संचिंतयानास्ते प्राप्ता वै सुतलं द्विजाः ॥४३॥

गत्वा ते तस्य नगरं विविशुर्भवनोत्तमम् ॥

दूरादेव स तान्दृष्ट्वा बलिर्वैरोचनिस्तदा ॥

प्रत्युत्थायार्हयाञ्चक्रे प्रह्लादेन समन्वितः ॥ ४४ ॥

मधुपर्कं च गां चैव दत्त्वा चार्घ्यं तथैव च ॥

उवाच प्रांजलिर्भूत्वा प्रहृष्टेनांतरात्मना॥ ४५॥

स्वागतं वो महाभागाः सुव्युष्टा रजनी मम॥

भवतो यत्प्रपश्यामि ब्रूत किं करवाणि च॥ ४६॥

एवं हि दैत्यराजेन सत्कृतास्ते द्विजोत्तमाः॥

ऊचुः प्रहृष्टमनसो दानवेन्द्रसुतं तदा॥ ४७॥

ऋषय ऊचुः ॥ ॥

कार्यार्थिनस्तु संप्राप्ताः प्रह्लाद हरिवल्लभ ॥

तदस्माकं महाबाहो भवांस्त्राता भवार्णवात् ॥ ४८ ॥

कथं दैत्य युगे ह्यस्मिन्रौद्रे वै कलिसंज्ञके ॥

भविष्यामो विना विष्णुं भीतानामभयप्रदम् ॥ ४९ ॥

अस्मिन्युगे ह्यधर्मेण जितो धर्मः सनातनः ॥

अनृतेन जितं सत्यं विप्राश्च वृषलैर्जिताः ॥ 7.4.1.५० ॥

विटैर्जिता वेदमार्गाः स्त्रीभिश्च पुरुषा जिताः ॥

ब्राह्मणाश्चापि वध्यन्ते म्लेच्छ राजन्यरूपिभिः ॥ ५१ ॥

अस्मिन्विलुलितप्राये वर्णाश्रमविवर्जिते ॥

अविलुप्ते वेदमार्गे क्व विष्णुर्भगवानिति ॥ ५२ ॥

विना ज्ञानाद्विना ध्यानाद्विना चेंद्रियनिग्रहात् ॥

प्राप्यते भगवान्यत्र तद्गुह्यं कथयस्व नः ॥५३॥

दैत्यराज त्वमस्माकं सुहृन्मार्गप्रदर्शकः ॥

कथयस्व महाभाग यत्र तिष्ठति केशवः ॥ ५४ ॥

एवं स द्विजमुख्यैश्च संपृष्टो दैत्यसत्तमः ॥

प्रणम्य ब्राह्मणान्सर्वान्भक्त्या संहृष्टमानसः ॥ ५५ ॥

स नमस्कृत्य देवेभ्यो ब्रह्मणे परमात्मने ॥

भगवद्भक्तिर्युक्तः सन्व्याहर्तुमुपचक्रमे ॥ ५६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये कलिभीतमहर्षिभिर्ब्रह्मवचनात्प्रह्लादसंनिधौ कलियुगे भगवत्स्थितिविषये प्रश्नकरणवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०२



॥ प्रह्लाद उवाच ॥ ॥

सर्वेषामपि भूतानां दैत्यदानवरक्षसाम् ॥

भवन्तो वै पूज्यतमा देवादीनां तथैव च ॥१॥

अनुज्ञया तु युष्माकं प्रसादात्केशवस्य हि ॥

अधिष्ठानं भगवतः कथयामि निबोधत ॥ २ ॥

पश्चिमस्य समुद्रस्य तीरमाश्रित्य तिष्ठति ॥

कुशस्थलीति या पूर्वं कुशेन स्थापिता पुरी ॥ ३ ॥

वहते गोमती यत्र सागरेण समंततः ॥

द्वारावतीति सा विप्रा आनर्त्तेषु प्रकीर्त्तिता ॥ ४ ॥

तस्यां वसति विश्वात्मा सर्वकामप्रदो हरिः ॥

कला षोडशसंयुक्तो मूर्तिं द्वादशकान्वितः॥ ५ ॥

तदेव परमं धाम तदेव परमं पदम् ॥

द्वारका सा च वै धन्या यत्राऽऽस्ते मधुसूदनः ॥ ६ ॥

यत्र कृष्णश्चतुर्बाहुः शंखचक्रगदाधरः ॥

नरा मुक्तिं प्रयास्यंति तत्र गत्वा कलौ युगे ॥ ७ ॥

तच्छ्रुत्वा वचनं तस्य प्रह्लादस्य महात्मनः ॥

विस्मयाविष्टमनसस्त- मूचुर्मुनिसत्तमाः ॥ ८ ॥

॥ ऋषय ऊचुः ॥ ॥

क्षयं यदुकुले याते भारे चोपहृते भुवः ॥

प्रभासे यादवश्रेष्ठः स्वस्थानमगमद्धरिः ॥ ९ ॥

द्वारावत्या प्लावितायां समंतात्सागरेण हि ॥

कथं स भगवांस्तत्र कलौ दैत्य प्रकीर्त्यते ॥ 7.4.2.१० ॥

कथयस्व सुरश्रेष्ठ कथं विष्णुर्महीतले ॥

स्थितश्चानर्त्तविषय एतद्विस्तरतो वद॥ ११॥

उग्रसेने नरपतौ प्रशासति वसुन्धराम् ॥

कृष्णो यदुपुरीमेतां शोभयामास सर्वतः ॥१२॥

रममाणे रमानाथे रामाभिरमणे हरौ ॥

एकदा तु समासीने सभायां यदुसत्तमे १३ ॥

कथाभिः क्रियमाणाभिर्विचित्राभिरनेकधा ॥

उद्धवः कथयामास प्रचारं यदुनंदनम् ॥ १४ ॥

यात्रायामनुसंप्राप्तं दुर्वाससमकल्मषम् ॥

स्थितं तं गोमतीतीरे चक्रतीर्थसमीपतः ॥ १५ ॥

तच्छ्रुत्वा सहसोत्थाय भगवान्रुक्मिणीगृहम् ॥

जगाम हृष्टमनसा विश्वशक्तिरधोक्षजः ॥ १६ ॥

आगत्योवाच वैदर्भीं संप्राप्तमृषिसत्तमम् ॥

तपोनिर्धूत पाप्माऽयमत्रिपुत्रो महातपाः ॥ १७ ॥

आतिथ्येनार्चितो विप्रो दास्यते च महोदयम्॥

गृहिणी न गृहे यस्य सत्पात्रागमनं वृथा ॥ १८ ॥

तस्य देवा न गृह्णंति पितरश्च तथोदकम्॥

तदागच्छस्व गच्छामो निमंत्रयितुमत्रिजम् ॥ १९ ॥

तथेत्युक्त्वा तु सा देवी रथमारुरुहे सती ॥

रथमारुह्य देवेशो रुक्मिण्या सहितो हरिः ॥

जगाम तत्र यत्रास्ते दुर्वासा मुनिसत्तमः ॥ 7.4.2.२० ॥

दृष्ट्वा ज्वलंतं तपसा कूले नदनदीपतेः ॥

कापालिकस्य पुरतः सुस्नातं वरसीकरैः ॥ २१ ॥

प्रणम्य भगवान्भक्त्या पप्रच्छाऽनामयं ततः ॥

पश्चाद्विदर्भतनया रुक्मिणी प्रणनाम तम् ॥ २२ ॥

दुर्वासाश्चापि तौ दृष्ट्वा दर्शनार्थमुपागतौ ॥

पप्रच्छ कुशलं तत्र स्वागतेनाभिनंद्य च ॥२३॥

॥ दुर्वासा उवाच ॥ ॥

कुशलं कृष्ण सर्वत्र कुत्र वासस्तवाऽधुना ॥

कति दारा धनापत्यमेतद्विस्तरतो वद ॥ २४ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

समुद्रेण प्रदत्ता मे भूभिर्द्वादशयोजना ॥

तस्यां निवसतो ब्रह्मन्पुरी हेममयी मम ॥ २५ ॥

प्रासादास्तत्र सौवर्णा नवलक्षाणि संख्यया ॥

तस्यां वसामि संहृष्टस्त्वत्प्रसादात्सुनिर्भयः ॥ २६ ॥

तच्छुत्वा वचनं तस्य विस्मयाविष्टमानसः ॥

प्रत्युवाच स दुर्वासाः प्रहस्य मधुसूदनम्॥२७॥

वसंति तावका ये च तेषां संख्या वदस्व भोः ॥

यावत्यश्च महिष्यस्ते पुत्राः परिजनास्तथा ॥२८॥

॥ श्रीकृष्ण उवाच ॥ ॥

ब्रह्मन्षोडशसाहस्रं भार्य्याश्चाष्टाधिका मम॥

तासां मध्येऽभीष्टतमा विदर्भाधिपतेः सुता ॥ २९ ॥

एकैकस्या दश सुताः कन्या चैका तथा मुने ॥

षट्पंचाशद्यदूनां तु कोट्यः परिजनो मम॥ 7.4.2.३० ॥

शेषाः प्रकृतयो ब्रह्मंस्तेषां संख्या न विद्यते ॥

तच्छ्रुत्वा चिंतयामास किमेतदिति विस्मितः ॥ ३१ ॥

अहो ह्यनंतवीर्यस्य मायामाश्रित्य तिष्ठतः ॥

अनंता सर्वकर्तृत्वे प्रवृत्तिर्दृश्यतामिय म्॥३२॥

॥ दुर्वासा उवाच ॥ ॥

स्वागतं ते महाबाहो ब्रूहि किं करवाणि ते ॥

दर्शनेन त्वदीयेन प्रीतिमेति च मे मनः॥३३॥

॥ श्रीकृष्ण उवाच॥ ॥

यदि प्रसन्नो भगवांस्तदागच्छस्व मे गृहम्॥

शिरसा धार्य्य पादांबु प्रयास्यामि पवित्रताम्॥ ३४॥

दुर्वासा उवाच॥

अक्षमासारसर्वस्वं किं मां नयसि माधव॥

नय मां यदि मद्वाक्यं करोषि सह भार्यया॥३५॥

प्रह्लाद उवाच॥

एवमस्त्विति चोक्त्वा स प्रस्थितः स्वरथेन हि।
तं दृष्ट्वा प्रस्थितं विष्णुं प्रहस्योवाच भर्त्सयन्॥ ३६ ॥
॥ दुर्वासा उवाच ॥ ॥
दुर्वाससं न जानासि मुञ्चेमान्हयसत्तमान् ॥
त्वं च भार्या तथा चेयं वहतं स्वरथेन माम् ॥ ३७ ॥
॥श्रीकृष्ण उवाच ॥ ॥
भगवन्यथा प्रब्रवीषि विप्र कर्तास्मि तत्तथा ॥
त्वया कृपालुना ब्रह्मन्पारितोऽहं सबांधवः॥ ३८ ॥
॥ प्रह्लाद उवाच॥ ॥
तौ तथा ऋषिवर्य्योऽसौ युक्तां देवीं रथे स्वके ॥
तथैव पुण्डरीकाक्षं याहि याहीत्यभाषत॥ ३९ ॥
तं दृष्ट्वा देवताः सर्वा वहमानं रथं हरिम् ॥
साधुसाध्विति भाषंत ऊचुः सर्वे परस्परम् ॥ 7.4.2.४० ॥
अहो ब्रह्मण्यदेवस्य परां भक्तिं प्रपश्यत ॥
स्कन्धे कृत्वा धुरं यो हि वहते भार्य्यया सह ॥ ४१ ॥
विकीर्यमाणः कुसुमैः सुरसंघैर्जनार्दनः ॥
जगाम स रथं गृह्य सभार्यो द्वारकां प्रति ॥ ॥ ४२ ॥
उह्यमाने रथे तस्मिन्रुक्मिणी तृषिताऽभवत् ॥
उवाच कृष्णं वैदर्भी श्रमव्याकुललोचना ॥ ४३ ॥
श्रान्ता भारपरिक्लिष्टा वहती कोपनं द्विजम् ॥
पाययित्वोदकं कान्त नय मां मन्दिरं स्वकम् ॥ ४४ ॥
तच्छ्रुत्वा वचनं तस्याः पादाक्रान्त्या धरातलात् ॥
आनयामास भगवान्गगां त्रिपथगां शुभाम् ॥ ४५ ॥
तद्दृष्ट्वा निर्मलं शीतं सुगंधं पावनं तथा ॥
पपौ पिपासिता देवी रुक्मिणी जाह्नवीजलम् ॥ ४६॥
पीतं तया जलं दृष्ट्वा चुकोप ऋषिसत्तमः ॥
जज्वाल ज्वलनप्रख्यः शशाप परमेश्वरीम् ॥ ४७ ॥
॥ दुर्वासा उवाच ॥

मामपृष्ट्वा जलं यस्मात्पीतवत्यसि रुक्मिणी॥

तस्मात्पानरता नित्यं भविष्यसि न संशयः॥ ४८॥

अवियुक्ता रथाद्यस्मान्मामपृष्ट्वा जलं त्वया॥

पीतं तस्माच्च कृष्णेन वियुक्ता त्वं भविष्यसि ॥ ४९ ॥

॥ प्रह्लाद उवाच ॥ ॥

एतावदुक्त्वा वचनं क्रोधसंरक्तलोचनः ॥

परित्यज्य रथं विप्रो भूमावेवावतिष्ठति ॥ 7.4.2.५० ॥

एवं शप्ता तदा देवी रुदोदातीव विह्वला ॥

उवाच कृष्णं करुणं कथं स्थास्ये त्वया विना ॥ ५१ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

आयास्ये प्रत्यहं देवि द्विकालं भवनं तव ॥

यो मां पश्यति चात्रस्थं स त्वामेव प्रपश्यति ॥ ५२ ॥

मां हि दृष्ट्वा नरो यस्तु त्वां न पश्यति भक्तितः ॥

अर्द्धं यात्रा फलं तस्य भविष्यति न संशयः ॥ ५३ ॥

आश्वास्य च प्रियामेवं ब्राह्मणं यदुनन्दनः ॥

ततः प्रसादयामास दुर्वाससमकल्मषम् ॥ ५४ ॥

बाह्यो पवनमध्ये तु पूजयामास तं तथा ॥

अवनिज्य स्वयं पादौ विप्रपादावनेजनम् ॥

धारयामास शिरसा जगतः पावनो हरिः ॥ ५५ ॥

दत्त्वार्घ्यं गां च विप्राय मधुपर्कं स भक्तितः ॥

विधिवद्भोजयामास षड्रसेन द्विजोत्तमम् ॥ ५६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये दुर्वासो द्वारकानयन दुर्वासोदत्त रुक्मिणीशापवृत्तान्तवर्णनं नाम द्वितीयोऽध्यायः॥२॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०३

https://sa.wikisource.org/s/gto
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

ऋषय ऊचुः॥

अहो ब्रह्मण्यदेवस्य कृष्णस्यामिततेजसः ॥

महिमा यदयं नैव मृषा चक्रे मुनेर्वचः ॥ १ ॥

तेन चक्रे न रोषं स सेतुपालो जनार्दनः ॥

भृगोर्यश्चरणाघातं दधार हृदि लाञ्छनम् ॥ २ ॥

सा तु देवी कथं तेन प्रेयसा विप्रयोजिता ॥

एकाकिनी स्थिता तत्र कथ्यतामसुरेश्वर ॥ ३ ॥

उत्कण्ठिता अति वयं श्रोतुं द्वारवतीं मुदा ॥

इदमादौ बुभुत्सामश्चित्तखेदापनुत्तये ॥ ४ ॥

॥ प्रह्लाद उवाच ॥ ॥।

श्रूयतामृषयः सर्वे गदतो मम विस्तरात् ॥

यथा शापोद्भवं दुःखं मुमोच हरिवल्लभा ॥५॥

अथ दुर्वाससः शापमवाप्यारुन्तुदं तदा॥

यादवेन्द्रस्य गृहिणी सहसा पर्यदेवयत् ॥६॥ ॥

॥ रुक्मिण्युवाच ॥ ॥

कल्याणी बत वाणीयं लौकिकी संविभाव्यते ॥

कूपके चैव सिन्धौ च प्रमाणान्नाधिकं जलम् ॥ ७ ॥

यासाहं भूरिभाग्या वै प्राप्य नाथं जगत्पतिम्॥

इयमेकाकिनी जाता पौलस्त्याद्देवहेलनात् ॥ ८ ॥

क्व मंगलालयः श्रीमाननवद्यगुणो हरिः ॥

अल्पपुण्या सुसंबाधा कामिनी क्वातिचञ्चला ॥ ९ ॥

तथापि घटयामास धाता वंचनकोविदः ॥

विधानमशुभाया मे वियोगविषमव्यथम् ॥ 7.4.3.१० ॥

अन्यथा वर्णगुरवः स्नातास्त्रैविद्यवर्त्मनि ॥

कथं नु शप्तुमर्हन्ति स्वयं खिन्नामनागसम् ॥ ११ ॥

विदधे वज्रमयं तु किं न्विदं हृदयं मेऽतिकठोरमेव हि ॥

शतधा न विदीर्यते यतो विरहे दुर्विषहे मधुद्विषः ॥ १२ ॥

अधिकृत्य सुदुश्चरं तपः प्रतिलब्धः प्रथमं मयात्मजः ॥

तनयेन विनाकृताऽप्यहं न मृता पंचसु वासरेष्विह ॥ १३ ॥

उपलभ्य सुदारुणामिमामपि पीडामविताऽस्म्यहं तदा ॥

यदिदं विधुनोति कल्मषं खलु तन्मां समुपेत्य लक्षवृद्धिम् ॥ १४ ॥

इति साऽतिविलप्य दुःखितार्था कुररीतुल्यतया शुशोच वेगात् ॥

विरहेण विघूर्णिताशया द्विजशापापहता मुमूर्च्छ सद्यः ॥ १५ ॥

अथ दुर्वाससा शप्ता रुक्मिणी कृष्णवल्लभा ॥

मूर्च्छनामाप तत्रैव ह्याजगाम पयोनिधिः ॥ १६ ॥

सुधाशीकरगर्भेण पद्मकिंजल्कवायुना ॥

न्यवीजयदिमां देवीं रुक्मिणीं कृष्णवल्लभाम्॥ १७ ॥

एतस्मिन्नन्तरे तत्र व्योममार्गेण नारदः ॥

गायन्गुणान्भगवतो वीणापाणिः समागतः ॥ १८ ॥

स दृष्ट्वा सिंधुनाऽऽश्वास्यमानां विश्वस्य मातरम् ॥

अवतीर्य श्रुतकथो बोधयामास नारदः ॥ १९ ॥

॥ नारद उवाच ॥ ॥

मा खेदं देव देवेशि देवि त्वदधिपे पतौ ॥

दूरीकृते विप्रशापात्कुरु कल्याणि धीरताम् ॥ 7.4.3.२० ॥

त्वं हि साक्षाद्भगवती कृष्णश्च पुरुषोत्तमः ॥

अवतीर्णो धराभारमपनेतुं यदृच्छया ॥ २१ ॥

देवो ह्यसौ परं ब्रह्म सदाऽनिर्विण्णमानसः ॥

मायाशक्तिस्त्वमेतस्य सर्गस्थित्यन्तकारिणः ॥ २२ ॥

संहृत्य निखिलं शेते ययाऽसौ कलया स्वराट् ॥

तदापि न वियुज्येत त्वया विश्वपतिः प्रभुः ॥ २३ ॥

अवियुक्तस्त्वया नित्यं देवदेवो जगत्पतिः ॥

लीलावतारेष्वेतस्य सर्वेषु त्वं सहायिनी ॥ २४ ॥

योगं वियोगं च तथा न यात्येष त्वयाऽनघे ॥
विडंबयति भूतानामुपकाराय चेश्वरः ॥ २५ ॥
आराधनीयाः सततं भूदेवा भूतिमीप्सता ॥
प्रकोपनीया नैवैते तत्त्वज्ञा हि तपस्विनः ॥ २६ ॥
इत्येवं शिक्षयँल्लोकं वियोगं तेऽनुमन्यते ॥
मुनि शापाद्धरिः साक्षाद्गूढः कपटमानुषः ॥ २७॥
अपि स्मरसि कल्याणि जातो रघुकुले स्वयम्॥
लोकानुग्रहमन्विच्छन्भूभारहरणोत्सुकः ॥ २८ ॥
तं हरिं जगतामीशं रुक्मिणि त्वं न वेत्सि किम्॥
प्राणेभ्योऽपि गरीयांसमयं देवः स एव हि ॥ २९ ॥
येनेदं पूरितं विश्वं बहिरन्तश्च सुव्रते ॥
असंगस्य विभोः संगः कथं स्यादिति मन्मतिः ॥ 7.4.3.३० ॥
तया त्वया नियुक्तोऽसाविति प्रत्येमि सर्वशः ॥
तद्विमुञ्चाऽऽधिमत्यर्थमात्मानमनुसंस्मर॥
प्रसीद मातः संधेहि धीरतां स्वमनीषया ॥ ३१ ॥
इति ब्रुवति देवर्षाववसाने नदीपतिः ॥
प्रोवाच वचनं तस्यै वाचा मृदुसुवर्णया ॥ ३२ ॥ ॥
॥ समुद्र उवाच ॥ ॥
यदाह देवि देवर्षिर्नत्वा त्वां सत्यमेव तत् ॥
गीयसे त्वं हि वेदेषु नित्यं विष्णुः सहायिनी ॥ ३३ ॥
परः पुमानेव निरस्तविग्रहो गूढोऽधिपस्ते विदधाति भूयः ॥
विश्वं व्यवस्थापयति स्वरोचिषा त्वया सहायेन बिभर्ति मूर्तिम् ॥ ३४ ॥
तदेष परिखेदस्ते न मनागपि युज्यते ॥
वक्षःस्थलस्था भवती नित्यं श्रीवत्सलक्ष्मणः ॥ ३५ ॥
इयं भागीरथी देवी मदादेशादुपागता ॥
विनोदयिष्यत्यनिशं त्वां हि देवि शरीरिणी ॥ ३६ ॥
एतस्याः स्यान्मृदु स्वादु पयः पूरोपशोभितम् ॥
प्रदेशोऽयमशेषोऽपि भविता त्वत्सुखप्रदः ॥ ३७ ॥

नानाद्रुमलताकीर्णं निकुंजैरुपशोभितम् ॥

मातंगैश्च समाजुष्टं मंजुगुंजन्मधुव्रतम्॥ ३८ ॥

नवपल्लवभङ्गीभिः कुसुमस्तबकैः शुभैः ॥

फलैरमृतकल्पैश्च मंजरी राजिभिस्तथा ॥ ३९ ॥

नंदनस्य श्रिया जुष्टं मनोनयननन्दनम्॥

वनं रम्यतरं चात्र ह्यचिरेण भविष्यति ॥ 7.4.3.४० ॥

त्वया संबोधनीयाः स्म वयं मातः सदैव हि ॥

अगम्यरूपा विद्या त्वमस्माभिर्बोध्यसे कथम् ॥ ४१ ॥

तदा वामनुजानीहि प्रसीद परमेश्वरि ॥

नमस्ते विश्वजननि भूयो ऽपि च नमोनमः ॥ ४२ ॥

॥ प्रह्लाद उवाच ॥ ॥

एवमुक्त्वा जगद्धात्रीं जग्मतुस्तौ यथागतम् ॥

आजगाम च तत्रैव देवी भागीरथी स्वयम् ॥ ४३ ॥

वनं समभवत्तत्र दिव्यभूरुहसेवितम् ॥

सेव्यं समस्तलोकानां फलपुष्पसमृद्धिमत् .॥ ४४ ॥

प्रसादेन च भूतानां गंगाऽशेषाघहारिणी ॥

भूषयामास तद्देशं सा च विष्णुपदी सरित् ॥ ४५॥

देवो च मुनिवाक्येन गंगायाश्च विनोदनात् ॥

सौन्दर्या तस्य देशस्य किञ्चित्स्वास्थ्यमवाप ह ॥ ४६ ॥

अथ विष्णुपदीं देवीं श्रुत्वा सागरसंगताम् ॥

इतस्ततः समाजग्मुः श्रद्दधानाः पयस्विनीम् ॥४७॥

द्वारकावासिनश्चैव जनाः काननशोभया ॥

हृष्टचित्ताः समाजग्मुरनिशं रुक्मिणीवनम् ॥४८॥

श्रुत्वा तदखिलं सर्वं दुर्वासाः शांभवी कला ॥

चुकोप स्मयमानश्च भूय एतदभाषत ॥ ४९ ॥

॥ दुर्वासा उवाच ॥ ॥

कः प्रभुस्त्रिषु लोकेषु मह्यं वचनमन्यथा ॥

विधातुमपि देवानामाद्यो लोकपितामहः ॥ 7.4.3.५० ॥

किं न जानाति लोकोऽयं मयि रोषकषायिते ॥
शक्रं प्रति त्रिभुवनं भ्रष्टश्रीकमभूत्तदा ॥५१ ॥
मम शापमविज्ञाय नन्दनप्रतिमे वने ॥
कथं सा रुक्मिणी तत्र रमते जनसेविते ॥ ५२ ॥
तदेते तरवः सर्वे संत्वभोज्यफला नृणाम् ॥
विभ्रष्टसर्वसौभाग्याः कुसुमस्तबकोज्झिताः ॥ ५३ ॥
इयं तु शापनिर्दग्धा हरचूडामणिः सरित् ॥
वार्यस्याः स्यादपेयं तु नैवेह स्थातुमर्हति ॥५४॥
॥ प्रह्लाद उवाच ॥ ॥
तदा सर्वमभूत्तत्र यद्यदाह च वै मुनिः ॥
वाचि वीर्यं हि विप्राणां निर्मितं विष्णुना स्वयम् ॥ ५५ ॥
सा तु देवी तथा वृत्तमवेक्ष्य भृशदुःखिता ॥
मेने दुरत्ययं दैवमापतत्तत्पुनःपुनः ॥ ५६ ॥
ततस्तु सा विनिश्चित्य मरणं दुःखभेषजम् ॥
उत्तरीयांबरेणैव बहिः किञ्चित्प्रबद्ध्य तु ॥ ॥।५७॥
अथावबुध्य तत्सर्वं सर्वभूतगुहाशयः ॥
तां ज्ञात्वा सत्वरं चाऽऽगात्सुपर्णेन दयानिधिः ॥५८ ॥
ददर्श तादृशीं देवीं कण्ठपाशकरां विभुः ॥
अधस्तात्तरुशाखायां निमीलितविलोचनाम् ॥ ५९ ॥
विभ्रष्टभूषणगणां कृशदेहवल्लीं म्लानाननांबुजरुचं मरणे प्रसक्ताम् ॥
मेने स विग्रहवतीं करुणां कृपालुस्तां सौख्यदां गुणवतीं प्रणतार्तिहन्त्रीम् ॥ 7.4.3.६० ॥
संश्रुत्य साऽपि पतगाधिपते रवं वै प्रोन्मील्य नेत्रकमलेऽथ ददर्श कृष्णम् ॥
सामन्यत त्रिकविवर्तितलोचनाब्जं प्राप्तं तमिष्टसुहृदं निजजीवनाथम् ॥ ६१ ॥
सा रोमहर्षविवशा त्रपया परीता कोपानुरागकलुषा कृतविप्रलापा ॥
संवर्द्धितद्विगुणशोकभरा च देवी नानारसं बत दृशोर्विषयं प्रपेदे ॥ ६२ ॥
तस्याः ससाध्वसविसर्गचिकीर्षितायाः पाशं व्यपोह्य करचारु सरोरुहेण ॥
आदाय पाणिममृतोपमया च वाचा संजीवयन्निदमुदारमुदाजहार ॥ ६३ ॥
॥ श्रीकृष्ण उवाच ॥ ॥

किमेतत्साहसं भीरु चिकीर्षत्यविचारितम् ॥
ननु देवि ममाचक्ष्व किं नु ते खेदकारणम् ॥ ६४ ॥
त्वं विद्याऽहं परो बोधस्त्वं माया चेश्वरस्त्वहम् ॥
त्वं च बुद्धिरहं जीवो वियोगः कथमावयोः ॥ ६५ ॥
त्वया विमोहितात्मानो भ्राम्यन्त्यजभवादयः ॥
सा कथं क्षुभ्यसि त्वं तु किं स्वधाम न बुध्यसे ॥ ६६ ॥
त्वया हि बद्धा ऋषयस्ते चरन्तीह कर्मभिः ॥
तां त्वां कथमृषिः शप्तुं शक्नुयाद्वरवर्णिनि ॥ ६७ ॥
शिक्षार्थं त्विह लोकानामेवं मे देवि चेष्टितम् ॥
मन्मायया समाविष्टः कुरुते विवशः पुमान् ॥
पश्य कोपपरीतात्मा यः स शान्तो मुनीश्वरः ॥ ६८ ॥
॥ प्रह्लाद उवाच ॥ ॥
सोऽभ्येत्य भक्तिनम्रोऽथ दुर्वासा मुनिसत्तमः ॥
विचार्य मनसा सर्वं पश्चात्तापानुपाश्रयत् ॥ ६९ ॥
किं मया कृतमित्युक्त्वा तत्समीपमुपागमत् ॥
अपतद्विलुठन्भूमौ दण्डवच्चाश्रुसंप्लुतः ॥ 7.4.3.७० ॥
पितरौ जगतो देवौ क्षामयामास दीनवत् ॥
तुष्टाव सूक्तवाक्यैस्तु रहस्यैर्भक्तिसंयुतः ॥ ७१ ॥
आह चेदं जगन्नाथं यदि मय्यस्त्यनुग्रहः ॥
तदा पुरेव संयोगो देव देव्या विधीयताम् ॥ ७२ ॥
अथ प्रहस्य गोविन्दस्तमाह मुनिसत्तमम्॥
न हि ते वचनं जातु मृषा भवितुमर्हति ॥ ७३ ॥
मयैवं विहितः सेतुः कथमुच्छेद्यतां द्विज ॥
सद्भिराचरितः सेतुः सिद्धो लोकस्य पालकः ॥ ७४ ॥
दिनेदिने द्विकालं च आयास्ये मुनिसत्तम ॥
विनोदयिष्ये तां तां तु मुनिकन्यां च काम्यया ॥ ७५ ॥
तुष्यामि साधनैर्नान्यैर्मत्कथाकथनैरपि ॥
यथा संपूज्य मामत्र मम प्रीतिर्भविष्यति ॥ ७६ ॥

यदा च मयि वै(?)कुण्ठमधिरूढे महामुने ॥
प्रवेक्ष्यति तदा तेजो मम सर्वं त्रिविक्रमे ॥ ७७ ॥
रुक्मिणीयं च मन्मूर्तेः संयोगं पुनरेष्यति ॥
इयं भागीरथी चापि सागरेण समा गुणैः ॥
त्यक्त्वा ह्यशेषदुःखानि सुखं चैव गमिष्यति ॥ ७८ ॥
अनुग्रहं विधायैवमृषिणा सह केशवः ॥
विवेश स्वपुरीं तत्र विधायोपांतिकं मुनिम् ॥ ७९ ॥
सापि देवी च संबुध्य तदा तस्य विचेष्टितम्॥
अनुग्रहाद्भगवतो बभूव विगत ज्वरा ॥ 7.4.3.८० ॥
यतश्च मुक्ता दुःखेन तत्र देवी हरिप्रिया॥
ततो भागीरथी सा तु गदिता दुःखमोचिनी ॥ ८१ ॥
अमावास्यां पौर्णमास्यां यस्तस्याः संगमे शुभे ॥
स्नायादशेषदुःखात्तु स नरः परिमुच्यते ॥ ८२ ॥
अष्टम्यां च चतुर्दश्यां नवम्यां चावलोकिता ॥
नराणां रुक्मिणी देवी सर्वान्कामा न्प्रयच्छति ॥ ८३ ॥
इत्येतत्कथितं देव्या ऋषयो दुःखमोचनम् ॥
अनुग्रहश्च देवस्य किं भूयः श्रोतुमिच्छथ ॥ ८४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये रुक्मिणीदुःखमोचनवर्णनंनाम तृतीयोऽध्यायः ॥३॥ ॥७॥।

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०४



॥ श्रीप्रह्लाद उवाच ॥

एवं संपूजितस्तेन हरिणा ब्राह्मणोत्तमः ॥

उवाच परिसन्तुष्टो वरं ब्रूहीति केशवम्॥ १ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

यदि तुष्टोऽसि भगवन्यदि देयो वरो मम ॥

स्थातव्यमत्र भवता न त्यक्तव्यं कदाचन ॥ २ ॥

॥ दुर्वासा उवाच ॥ ॥

यदि तिष्ठाम्यहं कृष्ण तथा त्वमपि केशव ॥

तिष्ठस्व षोडशकलो नित्यं मद्वचनेन हि ॥ ३ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

येऽत्र पश्यंति भक्त्या त्वां मां चापि द्विजसत्तम ॥

किं दास्यसि फलं तेषां भाविनां भगवन्वद ॥ ४ ॥

॥ दुर्वासा उवाच ॥ ॥

यः स्नात्वा संगमे कृष्ण गोमत्याः सागरस्य च ॥

त्वां मां समर्चति नरः सर्वपापैः समुच्यते ॥५ ॥

तथान्यच्छृणु कृष्णात्र स्नात्वा दास्यति यद्धनम् ॥

मम दत्तस्य देवेश प्राप्नुयात्षोडशोत्तरम्॥ ६ ॥

॥ श्रीकृष्ण उवाच ॥

यो नरः पूजयित्वा त्वां पूजयिष्यति मामिह ॥

तस्य मुक्तिं प्रदास्यामि या सुरैरपि दुर्ल्लभा ॥ ७ ॥

॥ प्रह्लाद उवाच ॥ ॥

परस्परं वरौ दत्त्वा कृष्णदुर्वाससौ मुदा॥

ततः प्रभृति विप्रेन्द्रास्तस्मिन्स्थाने ह्यतिष्ठताम्॥

वरदानमिति प्रोक्तं तत्तीर्थं सर्वकामदम् ॥ ८ ॥

वरदाने नरः स्नातो गोसहस्रफलं लभेत् ॥
विष्णुदुर्वाससोर्यत्र वरदानमभूत्पुरा ॥ ९ ॥
तदाप्रभृति विप्रेन्द्रास्तिष्ठते द्वारकां हरिः ॥
दुर्वाससा गिरा बद्धो न जहाति कदाचन ॥ 7.4.4.१० ॥
यत्र त्रैविक्रमी मूर्तिर्वहते यत्र गोमती ॥
नरा मुक्तिं प्रयास्यंति चक्रतीर्थेन संगताः ॥ ११ ॥
कलेवरं परित्यक्तं प्रभासे हरिणा यदा ॥
कलाभिः सहितं तेजस्तस्यां मूर्तौ निवेशितम् ॥ १२ ॥
तस्मात्कलियुगे विप्रा नान्यत्र प्राप्यते हरिः ॥
यदि कार्य्यं हि कृष्णेन तत्र गच्छत मा चिरम् ॥ १३ ॥
॥ ऋषय ऊचुः ॥ ॥
साधु भागवतश्रेष्ठ साधु मार्गप्रदर्शक ॥
यत्त्वया हि परिज्ञातं तन्न जानाति कश्चन ॥ १४ ॥
किं फलं गमने तस्यां किं फलं कृष्णदर्शने ॥
कानि तीर्थानि तत्रैव के देवास्तद्वदस्व नः ॥ १५ ॥
कस्मिन्मासे तिथौ कस्यां कस्मिन्पर्वणि मानवैः ॥
गन्तव्यं कानि देयानि दानानि दनुजर्षभ ॥ १६ ॥
॥सूत उवाच ॥ ॥
इति पृष्टस्तदा तैस्तु महाभागवतोऽसुरः ॥
कथयामास विप्रेभ्यो भगवद्भक्तिसंयुतः ॥ १७ ॥
॥ प्रह्लाद उवाच ॥ ॥
भो भूमिदेवाः शृणुत परं गुह्यं सनातनम् ॥
यत्कस्यचिन्न चाख्यातं तद्वदामि सुविस्तरात् ॥ १८ ॥
यदा मतिं च कुरुते द्वारकागमनं प्रति ॥
तदा नरकनिर्मुक्ता गायन्ति पितरो दिवि ॥ १९ ॥
यावत्पदानि कृष्णस्य मार्गे गच्छति मानवः ॥
पदेपदेऽश्वमेधस्य यज्ञस्य लभते फलम् ॥ 7.4.4.२० ॥
यात्रार्थं देवदेवस्य यः प्रेरयति चापरान् ॥

मानवान्नात्र सन्देहो लभते वैष्णवं पदम् ॥ २१ ॥

द्वारकां गच्छमानस्य यो ददाति प्रतिश्रयम् ॥

तथैव मधुरां वाचं नन्दते क्रीडते हि सः ॥ २२ ॥

अध्वनि श्रांतदेहस्य वाहनं यः प्रयच्छति ॥

हंसयुक्तेन स नरो विमानेन दिवं व्रजेत् ॥ २३ ॥

यात्रायां गच्छमानस्य मध्याह्ने क्षुधितस्य च ॥

अन्नं ददाति यो भक्त्या शृणु तस्यापि यद्भवेत् ॥ २४ ॥

गयाश्राद्धेन यत्पुण्यं लभते मानवो भुवि ॥

अन्नदानेन तत्पुण्यं पितृणां तृप्तिरक्षया ॥ २५ ॥

उपानहौ तु यो दद्याद्द्वारकां प्रति गच्छताम्॥

कृष्णप्रसादात्स नरो गजस्कन्धेन गच्छति ॥ ॥२६॥

विघ्नमाचरते यस्तु द्वारकां प्रति गच्छताम्॥

नरके मज्जते मूढः कल्पमात्रं तु रौरवे॥२७॥

मार्गस्थितस्य यो धन्यः प्रयच्छति कमण्डलुम्॥

प्रपादानसहस्रस्य फलमाप्नोति मानवः॥२८॥

यात्रायां गच्छमानस्य पादभ्यंगं ददाति यः॥

पादप्रक्षालनं चैव सर्वान्कामानवाप्नुयात् ॥ २९ ॥

गाथां शृणोति यो विष्णोर्गीतं च गायतः पथि ॥

दानं ददाति विप्रेन्द्रास्तस्माद्धन्यतरो न हि॥ 7.4.4.३०॥

कैलासशिखरावासं श्वेताभ्रमिव निर्मलम् ॥

प्रासादं कृष्णदेवस्य यः पश्यति नरोत्तमः॥ ३१ ॥

दूराद्धेममयं दृष्ट्वा कलशं ध्वजसंयुतम्॥

वाहनं संपरित्यज्य लुठते धरणीं गतः ॥ ३२ ॥

पञ्चसूनाकृतं पापं तथाऽधर्मकृतं च यत् ॥

कृमिकीटपतंगाश्च निहताः पथि गच्छता ॥

परान्नं परपानीयमस्पृश्य स्पर्शसंगमम् ॥

तत्सर्वं नाशमाप्नोति भगवत्केतुदर्शनात् ॥ ३४॥

पठेन्नामसहस्रं तु स्तवराजमथापि वा ॥

गजेन्द्रमोक्षणं चैव पथि गच्छञ्छनैः शनैः ॥ ३५ ॥

गायमानो भगवतः प्रादुर्भावाननेकधा ॥

नृत्यद्भिर्हर्षसंयुक्तैर्हृष्यमाणः पुनःपुनः ॥

स्वयं नृत्यन्हर्षयुक्तो भक्तो गच्छेद्धरेः पुरम् ॥ ३६ ॥

विष्णोः क्रीडाकरं स्थानं भुक्तिमुक्तिप्रदायकम् ॥

यस्मिन्दृष्टे कलौ नृणां मुक्तिरेवोपजायते ॥ ३७ ॥

॥ प्रह्लाद उवाच ॥ ॥

पूर्वं हि देवराजेन बृहस्पतिरुदारधीः ॥

प्रणम्य परया भक्त्या पृष्टश्च स महामतिः ॥ ३८ ॥

॥ इन्द्र उवाच ॥ ॥

द्वारकायाश्च माहात्म्यं कथयस्व प्रसादतः ॥

चतुर्युगं यथाभागैर्धर्मवृद्धिं जनो लभेत् ॥ ३९ ॥

एतच्छ्रुत्वा महेन्द्रस्य वचनं मुनिसत्तमाः ॥

बृहस्पतिरुवाचैनं महेन्द्रं देव संवृतम्॥ 7.4.4.४० ॥

॥ बृहस्पतिरुवाच ॥ ॥

कृतं त्रेता द्वापरं च कलिश्च सुरसत्तम ॥

चतुर्युगमिदं प्रोक्तं तत्त्वतो मुनिसत्तमैः ॥ ४१ ॥

कृते धर्मश्चतुष्पादो वेदादिफलमेव च ॥

तीर्थं दानं तपो विद्या ध्यानमायुररोगता ॥ ४२ ॥

पादहीनं सर्वमेतद्युगं त्रेताभिधं प्रभो ॥

पादद्वयं द्वापरे तु सर्वस्यैतस्य वासव ॥ ४३ ॥

पादेनैकेन तत्सर्वं विभागे प्रथमे कलौ ॥

ऊर्ध्वं विनाशः सर्वस्य भविष्यति न संशयः ॥ ४४ ॥

मन्त्रास्तीर्थानि यज्ञाश्च तपो दैवादिकं तथा ॥

प्रगच्छंति समुच्छेदं वेदाः शास्त्राणि चैव हि ॥४५॥

म्लेच्छप्रायाश्च भूपाला भविष्यन्त्यमराधिप॥

लोकः करिष्यते निन्दां साधूनां व्रतचारिणाम् ॥ ४६ ॥

॥ प्रह्लाद उवाच ॥ ॥

श्रुत्वा बृहस्पतेर्वाक्यमेतत्तीर्थस्य भो द्विजाः ॥
प्रकंपिताः सुराः सर्वे म्लेच्छ संसर्गजाद्भयात् ॥ ४७ ॥
बृहस्पतिं सुरगुरुं पप्रच्छुर्विनयान्विताः ॥
म्लेच्छसंसर्गजो दोषो गंगयापि न पूयते ॥ ४८ ॥
कथयस्व प्रसादेन स्थानं कलिविवर्जितम् ॥
यत्र गत्वा निवत्स्यामो यास्यामो निर्वृतिं पराम् ॥ ४९ ॥
येन दुःखविनिर्मुक्ता भविष्यामो गतव्यथाः ॥
कृपया सुमुखो भूत्वा ब्रूहि तीर्थं हिताय नः ॥ 7.4.4.५० ॥
॥ प्रह्लाद उवाच ॥ ॥
एतच्छ्रुत्वा सुरेन्द्रस्य वाक्यमंगिरसां वरः ॥
चिरं ध्यात्वा जगादेदं वाक्यं देवपुरोहितः ॥ ॥ ५१ ॥
॥ बृहस्पतिरुवाच ॥ ॥
पञ्चक्रोशप्रमाणं हि तीर्थं तीर्थवरोत्तमम्॥
द्वारकानाम विख्यातं कलिदोषविवर्जितम्॥ ॥५२॥
विष्णुना निर्मितं स्थानं लोकस्य गतिदायकम् ॥
मुक्तिदं कलिकाले तु ज्ञानहीनजनस्य च ॥५३ ॥
ऊषरं कर्मणां क्षेत्रं पुण्यं पापविनाशनम्॥
न प्ररोहंति पापानि पुनर्नष्टानि तत्र वै ॥ ५४ ॥
तिस्रः कोटयोऽर्धकोटी च तीर्थानीह महीतले ॥ ५५ ॥
एवं तीर्थयुता तत्र द्वारका मुक्तिदायका ॥
सेवनीया प्रयत्नेन प्राप्य मानुष्यमुत्तमम् ॥५६॥
॥ प्रह्लाद उवाच ॥ ॥
बृहस्पतेर्वचः श्रुत्वा शतक्रतुरथाऽब्रवीत् ॥
वाचस्पते मम इहि द्वारवत्या महोदयम्॥
गमने किं फलं प्रोक्तं कृष्णदेवस्य दर्शने ॥ ५७ ॥
अन्यानि तत्र तीर्थानि मुख्यानि वद मे गुरो ॥
यथाभिषेके गोमत्याः फलं यदपि संगमे ॥५८॥। ॥
॥ बृहस्पतिरुवाच ॥ ॥

श्रूयतां तात वक्ष्यामि माहात्म्यं द्वारकोद्भवम् ॥
मनुष्यरूपो भगवान्यत्र क्रीडति केशवः ॥५९॥
नारायणः स ईशानो ध्येयश्चादौ जगन्मयः ॥
स एव देवतामुख्यः पुरीं द्वारवतीं स्थितः ॥ 7.4.4.६० ॥
एकैकस्मिन्पदे दत्ते पुरीं द्वारवतीं प्रति ॥
पुण्यं क्रतुसहस्रेण कलौ भवति देहिनाम् ॥६१॥
कलौ कृष्णपुरीं रम्यां ये गच्छंति नरोत्तमाः ॥
कुलकोटिशतैर्युक्तास्ते गच्छन्ति हरेः पदम् ॥६२॥
ये ध्यायंति मनोवृत्त्या गमनं द्वारकां प्रति ॥
तेषां विलीयते पापं पूर्वजन्मायुतैः कृतम् ॥ ६३ ॥
कृष्णस्य दर्शने बुद्धिर्जायते यस्य देहिनः ॥
वक्त्रावलोकनात्तस्य पापं याति सहस्रधा ॥ ६४ ॥
ये गता द्वारकायां च ये मृताः कृष्णसन्निधौ ॥
न तेषां पुनरावृत्तिर्यावदाभूतसंप्लवम् ॥६५॥
सुलभा मथुरा काशी ह्यवन्ती च तथा सुराः ॥
अयोध्या सुलभा लोके दुर्लभा द्वारका कलौ ॥ ६६ ॥
गत्वा कृष्णपुरीं रम्यां षण्मासात्कृष्णसंनिधौ॥
जीवन्मुक्तास्तु ते ज्ञेयाः सत्यमेतत्सुरोत्तम ॥ ६७ ॥
कृष्णक्रीडाकरं स्थानं वाञ्छन्ति मनसा प्रिये ॥
तेषां हृदि स्थितं पापं क्षालयेत्प्रेतनायकः ॥ ६८ ॥
अत्युग्राण्यपि पापानि तावत्तिष्ठन्ति विग्रहे ॥
यावन्न गच्छति नरः कलौ द्वारवतीं प्रति ॥ ६९ ॥
पुण्यसंख्या च तीर्थानां ब्रह्मणा विहिता पुरा ॥
दानाध्ययन संज्ञानां मुक्त्वा द्वारवतीं कलौ ॥ 7.4.4.७० ॥
चक्रतीर्थे तु यो गच्छेत्प्रसंगेनापि मानवः ॥
कुलैकविंशतियुतः स गच्छेत्परमं पदम् ॥ ७१ ॥
लोभेनाऽप्यपराधेन दम्भेन कपटेन वा ॥
चक्रतीर्थं च यो गच्छेन्न पुनर्विशते भवम् ॥ ७२ ॥

प्रयागे ह्यस्थिपातेन यत्फलं परिकीर्तितम् ॥
तदेव शतसाहस्रं चक्रतीर्थास्थिपातनात् ॥ ७३ ॥
पृथिव्यां चैव तत्तीर्थं परमं परिकीर्तितम् ॥
चक्रतीर्थमिति ख्यातं ब्रह्महत्याविनाशनम् ॥ ७४ ॥
ये ये कुले भविष्यंति तत्पूर्वं मानवाः क्षितौ ॥
सर्वे विष्णुपुरं यांति चक्रतीर्थास्थिपातनात् ॥ ७५ ॥
किं जातैर्बहुभिः पुत्रैर्गणनापूरकात्मकैः ॥
वरमेको भवेत्पुत्रश्चक्रतीर्थं तु यो व्रजेत् ॥ ७६ ॥
तपसा किं प्रतप्तेन दानेनाध्ययनेन किम् ॥
सर्वावस्थोऽपि मुच्येत गतः कृष्णपुरीं यदि ॥ ७७ ॥
कलिकाल कृतैर्दोषैरत्युग्रैरपि मानवः ॥
कलौ कृष्णमुखं दृष्ट्वा लिप्यते न कदाचन ॥ ७८ ॥
दानं चाध्ययनं शौचं कारणं न हि पुत्रक ॥
हीनवर्णोऽपि पापात्मा गतः कृष्णपुरीं यदि ॥ ७९ ॥
वाराणस्यां कुरुक्षेत्रे नर्मदायां च यत्फलम् ॥
तत्फलं निमिषार्धेन द्वारवत्यां दिनेदिने ॥ 7.4.4.८० ॥
धन्यानामपि धन्यास्ते देवानामपि देवताः ॥
कृष्णोपरि मतिर्येषां हीयते न कदाचन ॥ ८१ ॥
श्रवणद्वादशीयोगे गोमत्युदधिसंगमे ॥
स्नात्वा कृष्णसुतं दृष्ट्वा लिप्यते नैव स क्वचित् ॥ ८२ ॥
यस्य कस्यापि मासस्य द्वादशी प्राप्य मानवः ॥
कृष्णक्रीडापुरीं दृष्ट्वा मुक्तः संसारगह्वरात् ॥ ८३ ॥
येषां कृष्णालये प्राणा गताः सुरपते कलौ ॥
स्वर्गान्न तेषामावृत्तिः कल्पकोटिशतैरपि ॥ ८४ ॥
विज्ञेया मानुषा वत्स गर्भस्थास्ते महीतले ॥
द्वारवत्यां न यैर्देवो दृष्टः कंसनिषूदनः ॥ ८५ ॥
दुर्लभो द्वारकावासो दुर्लभं कृष्णदर्शनम् ॥
दुर्लभं गोमतीस्नानं दुर्लभो रुक्मिणीपतिः ॥ ८६ ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ॥

द्वापरे तु परो यज्ञः कलौ केशवकीर्तनम् ॥ ८७ ॥

हेमभारसहस्रैस्तु दत्तैर्यत्फलमाप्यते ॥

दृष्ट्वा तत्कोटि गुणितं हरेः सर्वप्रदं मुखम् ॥ ८८ ॥

द्वारकायां च यद्दत्तं शंखोद्धारे तथैव च ॥

पिंडारके महातीर्थे दत्तं चैवाक्षयं भवेत् ॥ ८९ ॥

गोमहिष्यादि यद्दत्तं सुवर्णवसनानि च ॥

वृषो भूमिग्रहो रूप्यं कन्यादानं तथैव च ॥ 7.4.4.९० ॥

यच्चान्यदपि देवेन्द्र त्रिषु स्थानेषु यच्छति ॥

तन्मुक्तिकारकं प्रोक्तं पितॄणामात्मनस्तथा ॥ ९१ ॥

ऊषरं हि यतो लोके क्षेत्रमेतत्प्रकीर्तितम् ॥

अतो मुक्तिकरं सर्वं दानं चोक्तं महर्षिभिः ॥ ९२ ॥

यत्किंचित्कुरुते तत्र दानं क्रीडावगाहनम् ॥

तदनन्तफलं प्राह भगवान्मधुसूदनः ॥ ९३ ॥

प्रेतत्वं नैव तस्यास्ति न याम्या नारकी व्यथा ॥

येन द्वारवतीं गत्वा कृतं कृष्णाऽवलोकनम् ॥ ९४ ॥

वारिमात्रेण गोमत्यां पिण्डदाने कृते कलौ ॥

पितॄणां जायते तृप्तिर्यावदाभूतसंप्लवम् ॥ ९५ ॥

नित्यं कृष्णपुरीं रम्यां ये स्मरन्ति गृहस्थिताः ॥

नमस्याः सर्वलोकानां देवानां च सुरोत्तम ॥ ९६ ॥

ब्रह्मज्ञानं गयाश्राद्धं मरणं गोग्रहेषु च ॥

वासः पुंसां द्वारकायां मुक्तिरेषा चतुर्विधा ॥ ९७ ॥

ब्रह्मज्ञानेन मुच्यन्ते प्रयागे मरणेन वा ॥

अथवा स्नानमात्रेण गोमत्यां कृष्णसंनिधौ ॥ ९८ ॥

कृतार्थः कृतपुण्योऽहं ब्रवीत्येवं महोदधिः ॥

पवित्रितं च मद्गात्रं गोमतीवारिसंप्लवात् ॥ ९९ ॥

अत्युग्राण्यपि पापानि तावत्तिष्ठंति विग्रहे ॥

यावत्स्नानं न गोमत्यां वारिणा पापहारिणा ॥ 7.4.4.१०० ॥

चक्रतीर्थे नरः स्नात्वा गोमत्यां रुक्मिणीह्रदे ॥
दृष्ट्वा कृष्णमुखं रम्यं कुलानां तारयेच्छतम् ॥ १०१ ॥
कृष्णं च ये द्वारवतीं मनुष्याः स्मरंति नित्यं हरिभक्तियुक्ताः ॥
विधूतपापाः किल संभवांते गच्छंति लोकं परमं मुरारेः ॥ १०२ ॥
अधौतपादः प्रथमं नमस्कुर्याद्गणेश्वरम् ॥
सर्वविघ्नविनाशश्च जायते नात्र संशयः ॥ १०३ ॥
नीलोत्पलदलश्यामं कृष्णं देवकिनन्दनम् ॥
दण्डवत्प्रणमेत्प्रीत्या प्रणमेदग्रजं पुनः ॥ १०४ ॥
बाल्ये च यत्कृतं पापं कौमारे यौवने तथा ॥
दर्शनात्कृष्णदेवस्य तन्नश्येन्नात्र संशयः ॥ १०५ ॥
वाण्याऽथ मनसा यच्च कर्मणा समुपार्जितम् ॥
पापं जन्मसहस्रेण तन्नश्येन्नात्र संशयः ॥ १०६ ॥
हेमभारसहस्रैस्तु दत्तैर्यत्फलमाप्यते ॥
तत्फलं कोटिगुणितं कृष्णवक्त्रावलोकनात् ॥ १०७ ॥
नमस्कृत्य च देवेशं पुण्डरीकाक्षमच्युतम् ॥
दुर्वाससं महेशानं द्वारकापरिरक्षकम् ॥१०८॥
प्रणम्य परया भक्त्या वैनतेयसमन्वितम् ।ऽ।
द्वारमागत्य च पुनः स्वर्गद्वारोपमं शुभम्॥ १०९ ॥
विश्रम्य च मुहूर्त्तार्द्धं सुहृद्भिर्बान्धवैर्वृतः ॥
तत्राश्रितान्समाहूय ब्राह्मणान्मन्त्रकोविदान् ॥
पूजाद्रव्यं समानीय ततस्तीर्थं व्रजेद्बुधः ॥ 7.4.4.११० ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकायात्राविधिवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०५



॥ प्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठा गोमतीं कृष्णसंश्रयाम् ॥

यस्या दर्शनमात्रेण मुच्यते सर्वपातकैः ॥

सर्वपापविनिर्मुक्तः कृष्णसायुज्यमाप्नुयात्॥ १ ॥

दुरितौघक्षयकरममंगल्यविनाशनम् ॥

सर्वकामप्रदं नृणां प्रणमेद्गोमतीजलम् ॥ २ ॥

महापापक्षयकरमगतीनांगतिप्रदम् ॥

पूर्वपुण्यवशात्प्राप्तं प्रणमेद्गोमतीजलम् ॥ ३ ॥

॥ ऋषय ऊचुः ॥ ॥

दैत्येन्द्र संशयोऽस्माकं तं त्वं छेत्तुमिहार्हसि ॥

इयं का गोमती तत्र केनानीता महामते ॥ ४ ॥

केन कार्यवशेनेह संप्राप्ता वरुणालयम् ॥

सर्वं भागवतश्रेष्ठ ह्येतद्विस्तरतो वद ॥ ५ ॥

॥ प्रह्लाद उवाच ॥ ॥

एकार्णवे पुरा भूते नष्टे स्थावर जंगमे ॥

तदा ब्रह्मा समभवद्विष्णोर्नाभिसरोरुहात् ॥ ६ ॥

आदिष्टः प्रभुणा ब्रह्मा सृजस्व विविधाः प्रजाः ॥

इति धाता समादिष्टो हरिणा सृष्टि कारणे ॥ ७ ॥

उक्त्वा बाढमिति ब्रह्मा ततः सृष्टौ मनो दधे ॥

ससर्ज मानसात्सद्यः सनकाद्यान्कुमारकान् ॥

उवाच वचनं ब्रह्मा प्रजाः सृजत पुत्रकाः ॥ ८ ॥

ब्रह्मणो वचनं श्रुत्वा ते कृतांजलयोऽब्रुवन् ॥

भगवन्भगवद्रूपं द्रष्टुकामा वयं प्रभो ॥ ९ ॥

न बन्धमनुवर्त्तामः सृष्टिरूपं दुरासदम्॥

इत्युक्त्वा ते ययुः सर्वे सनकाद्या कुमारकाः ॥ 7.4.5.१०॥

पश्चिमां दिशमास्थाय तीरे नदनदीपतेः ॥

तेजोमयस्य रूपस्य द्रष्टुकामा महात्मनः ॥

तस्मिन्मानसमाधाय तेपिरे परमं तपः ॥ ११ ॥

बहुवर्षसहस्रैस्तु प्रसन्ने धरणीधरे ॥

भित्त्वा जलं समुत्तस्थौ तेजोरूपं दुरासदम् ॥ ॥ १२ ॥

अनेकदैत्यदमनं बहुयंत्रविदारणम् ॥

सूर्यकोटिप्रभाभासं सहस्रारं सुदर्शनम् ॥ १३ ॥

तं दृष्ट्वा विस्मिताः सर्वे ब्रह्मपुत्राः परस्परम् ॥

वीक्षमाणा भगवतः परमायुधमुत्तमम् ॥ १४ ॥

तान्विलोक्य तथाभूतान्वागुवाचाशरीरिणी ॥

भो ब्रह्मपुत्रा भगवाञ्छीघ्रमाविर्भविष्यति ॥ १५ ॥

अर्हणार्थं भगवतः शीघ्रमर्घ्यं प्रकल्प्यताम्॥

आयुधं लोकनाथस्य द्विजाः शीघ्रं प्रसाद्यताम् ॥ १६ ॥

तच्छ्रुत्वाऽऽकाशवचनं तुष्टुवुस्ते सुदर्शनम् ॥ १ ॥

ऋषय उचुः ॥ ॥

ज्योतिर्मय नमस्तेऽस्तु नमस्ते हरिवल्लभ ॥

सुदर्शन नमस्तेऽस्तु सहस्राराऽक्षराऽव्यय ॥१८॥

नमस्ते सूर्यरूपाय ब्रह्म रूपाय ते नमः ॥

अमोघाय नमस्तुभ्यं रथांगाय नमोनमः ॥ १९ ॥

एवं ते पूजयामासुः सुमनोभिस्तथाऽक्षतैः ॥ 7.4.5.२० ॥

स्तवैर्नानाविधैः स्तुत्वा प्रणेमुर्हरिवल्लभम् ॥

तत्प्रसाद्य सुनाभं तु प्रभुसंदर्शनोत्सुकाः ॥ २० ॥

अस्मरन्मनसा देवं ब्रह्माणं पितरं स्वकम् ॥

तेषां तु चिंतितं ज्ञात्वा ब्रह्मा गंगामथाब्रवीत् ॥ २१ ॥

याहि शीघ्रं सरिच्छ्रेष्ठे पृथिव्यां हरिकारणात् ॥

गां गता त्वं महाभागे ततो बहुमताऽसि मे ॥ २२ ॥

उर्व्यां ते गोमती नाम सुप्रसिद्धं भविष्यति ॥ २३ ॥

वसिष्ठस्यानुगा भूत्वा याहि शीघ्रं धरातलम् ॥
तातं पुत्रीवानुयाता वसिष्ठतनया भव ॥ २४ ॥
बाढमित्येव सा देवी प्रस्थिता वरुणालयम् ॥
वसिष्ठस्त्वग्रतो याति तं गंगा पृष्ठतोऽन्वगात् ॥ २५ ॥
तां दृष्ट्वा मनुजाः सर्वे वसिष्ठेन समन्विताम् ॥
नमश्चक्रुर्महाभागां गच्छतो पश्चिमार्णवम् ॥ २६ ॥
आविर्बभूव तत्रैव यत्र ते मुनयः स्थिताः ॥
द्रष्टुकामा हरे रूपं श्रिया जुष्टं चतुर्भुजम् ॥ २७ ॥
दृष्ट्वा वसिष्ठमनुगामायान्तीं सुरपावनीम् ॥
अवाकिरन्महाभागां सुमनोभिश्च सर्वशः ॥ २८ ॥
दिव्यैर्माल्यैः सुगन्धैश्च गन्धधूपैस्तथाऽक्षतैः ॥
संपूज्य हृष्टमनसः साधुसाध्विति चाब्रुवन् ॥ २९ ॥
वसिष्ठं तेऽग्रगं दृष्ट्वा ह्युदतिष्ठंस्ततो द्विजाः ॥
अर्घ्यादिसत्क्रियां कृत्वा प्रहृष्टा इदमब्रुवन् ॥ ॥ 7.4.5.३० ॥
यस्मात्त्वया समानीता ह्यस्मिँल्लोके सरिद्वरा ॥
तस्मात्तव सुतेत्येवं ख्यातिं लोके गमिष्यति ॥ ३१ ॥
गोः स्वर्गादागता यस्मादिदं स्थानं मती मता ॥
तस्माद्धि गोमतीनाम ख्यातिं लोके गमिष्यति ॥ ३२ ॥
अस्या दर्शनमात्रेण मुक्तिं यास्यंति मानवाः ॥
किं पुनः स्नान दानादि कृत्वा यांति हरेः पदम् ॥ ३३ ॥
तामेव चार्घ्यं दत्त्वा ते योगींद्रा ईडिरे हरिम् ॥
परं पुरुषसूक्तेन पुरुषं शेषशायिनम् ॥ ३४ ॥
इति संस्तुवतां तेषां हरिराविर्बभूव ह ॥
पीतकौशेयवसनो वनमालाविभूषितः ॥
दिव्यमाल्यानुलिप्तांगो दिव्याभरणभूषितः ॥ ३५ ॥
शेषासनगतं देवं दिव्यानेकोद्यतायुधम् ॥
ज्वलत्किरीटमुकुटं स्फुरन्मकरकुंडलम् ॥ ३६ ॥
भक्ताभयप्रदं शांतं श्रीवत्सांकं महाभुजम् ॥

सदा प्रसन्नवदनं घनश्यामं चतुर्भुजम् ॥ ३७ ॥

पादसंवाहनासक्तलक्ष्म्या जुष्टं मनोहरम् ॥

तं दृष्ट्वा मुनयः सर्वे हर्षोत्कर्षसमन्विताः ॥

विष्णुं ते विष्णुसूक्तैश्च तुष्टुवुर्वेदसंभवैः ॥ ३८ ॥

एवं संस्तुवता तेषां विष्णुर्दीनानुकंपकः ॥

उवाच सुप्रसन्नेन मनसा द्विजसत्तमान् ॥ ३९ ॥

॥ श्रीभगवानुवाच ॥ ॥

भोभोः कुमारास्तुष्टोऽहं प्रदास्यामि यथेप्सितम् ॥

भविष्यथ ज्ञानयुता अस्पृष्टा मम मायया ॥ 7.4.5.४० ॥

यस्मान्मोक्षार्थिभिर्विप्रा जलेनाहं प्रसादितः ॥

तस्मादिदं परं तीर्थं सर्वकामप्रदं परम् ॥ ४१ ॥

अनुग्रहाय भवतां यत्र चक्रं सुदर्शनम् ॥

निःसृतं प्रथमं विप्रा जलं भित्त्वा ममाग्रतः ॥ ॥ ४२ ॥

चक्रतीर्थमिति ख्यातं तस्मादेतद्भविष्यति ॥

ममापि नियतं वासो भविष्यति महार्णवे ॥ ४३ ॥

येऽत्र स्नानं प्रकुर्वंति प्रसंगेनापि मानवाः ॥

चक्रतीर्थे द्विजश्रेष्ठास्तेषां मुक्तिः करे स्थिता ॥ ४४ ॥

भवतोऽपि सदा ह्यत्र तिष्ठध्वं च द्विजर्षभाः ॥

वायुभूतांतरिक्षस्थाः सर्वकामस्य दायकाः ॥ ४५ ॥

॥ प्रह्लाद उवाच ॥ ॥

तच्छ्रुत्वा हृष्टमनसः कृत्वार्घ्यं सुरपावनीम् ॥

अवनिज्य हरेः पादौ मूर्ध्नाऽपश्चाप्यधारयन् ॥ ॥ ४६ ॥

प्रक्षाल्य सा हरेः पादौ प्रविष्टा वरुणालयम् ॥

तस्मिन्महापापहरा गोमती सागरं गता ॥ ४७ ॥

वरं दत्त्वा ततो विष्णुस्तत्रैवान्तर धीयत ॥

सनकाद्या ब्रह्मसुतास्तस्थुस्तत्र समाहिताः ॥ ४८ ॥

एवं सा गोमती तत्र संजाता सागरंगमा ॥

सर्वपापहरा प्रोक्ता पूर्वगंगेति या श्रुता ॥ ॥ ४९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्यं सनत्कुमारतपोबलेन भगवत्प्रादुर्भाव वृत्तान्तवर्णनपुरःसर गोमत्युत्पत्तिमाहात्म्यवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०६

https://sa.wikisource.org/s/gtr
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ ऋषय ऊचुः ॥ ॥

साधुसाधु महाभाग प्रह्लादा सुरसत्तम ॥

येन नः कलिमध्ये तु दर्शितो भगवान्हरिः ॥ १ ॥

त्वन्मुखक्षीरसिंधूत्था कथेयममृतोपमा ॥

कर्णाभ्यां पिबतां तृप्तिर्मुनीनां न प्रजायते ॥

कथयस्व महाबाहो तीर्थयात्रां सुविस्तराम् ॥ २ ।

अस्माभिस्तत्र गंतव्यं वहते यत्र गोमती ॥

तिष्ठते यत्र भगवांश्चक्रतीर्थावलोककः ॥ ॥३ ॥

भवाब्धौ पतितांस्तात उद्धरस्व भवार्णवात् ॥

तीर्थयात्राविधानं च कथयस्व महामते ॥ ४ ॥

॥ प्रह्लाद उवाच ॥ ॥

गत्वा तु गोमतीतीरे प्रणमेद्दंडवच्च ताम् ॥

प्रक्षाल्य पाणिपादौ च कृत्वा च करयोः कुशान् ॥ ५ ॥

गृहीत्वा तु फलं शुभ्रमक्षतैश्च समन्वितम् ॥

प्राङ्मुखः प्रयतो भूत्वा दद्यादर्घ्यं विधानतः ॥ ६ ॥

ब्रह्मलोकात्समायाते वसिष्ठतनये शुभे ॥

सर्वपापविशुद्ध्यर्थं ददाम्यर्घ्यं तु गोमति ॥ ७ ॥

वसिष्ठतनये देवि सुरवंद्ये यशस्विनि ॥

त्रैलोक्यवंदिते देवि पापं मे हर गोमति ॥ ८ ॥

इत्युच्चार्य्य द्विजश्रेष्ठा मृदमालभ्य पाणिना ॥

विष्णुं संस्मृत्य मनसा मंत्रमेतमुदीरयेत् ॥ ९ ॥

अश्वक्रांते रथक्रांते विष्णुक्रांते वसुंधरे ॥

उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥ 7.4.6.१० ॥

मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥

त्वया हतेन पापेन पूतः संवत्सरं भवेत् ॥११॥
इत्येवं मृदमालिप्य स्नानं कुर्य्याद्यथाविधि ॥
आपो अस्मानिति स्नात्वा शृणुध्वं यत्फलं लभेत् ॥ १२ ॥
कुरुक्षेत्रे च यत्पुण्यं राहुग्रस्ते दिवाकरे ॥
स्नानमात्रेण तत्पुण्यं गोमत्यां कृष्णसन्निधौ ॥ १३ ॥
भक्त्या स्नात्वा तु तत्रैवं कुर्यात्कर्म यथोदितम्॥
देवान्पितॄन्मनुष्यांश्च तर्पयेद्भावसंयुतः ॥ १४ ॥
ये च रौरवसंस्था हि ये च कीटत्वमागताः ॥
गोमतीनीरदानेन मुक्तिं यांति न संशयः ॥ १५ ॥
विनाप्यक्षतदर्भैर्वा विना भावनया तथा ॥
वारिमात्रेण गोमत्यां गयाश्राद्धफलं लभेत् ॥ १६ ॥
ततश्च विप्रानाहूय वेदज्ञांस्तीरसंश्रयान् ॥
विश्वेदेवादि संपूज्य पितॄणां श्राद्धमाचरेत् ॥ १७ ॥
श्रद्धया परया युक्तः श्राद्धं कृत्वा विधानतः ॥
दक्षिणां च ततो दद्यात्सुवर्णं रजतं तथा ॥ १८ ॥
सुवर्णशृंगसहितां राजतखुरभूषिताम् ॥
रत्नपुच्छां वस्त्रयुतां ताम्रपृष्ठां सवत्सकाम् ॥ २९ ॥
दद्याद्विप्रं समभ्यर्च्य वस्त्रालंकारभूषणैः ॥
सप्तधान्ययुतां दद्याद्विष्णुर्मे प्रीयतामिति ॥ 7.4.6.२० ॥
आसीमांतं विसृज्यैतान्ब्राह्मणान्नियतेंद्रियः ॥
दीनांधकृपणेभ्यश्च दानं दद्यात्स्वशक्तितः ॥ २१ ॥
गोमती गोमयस्नानं गोदानं गोपिचन्दनम् ॥
दर्शनं गोपिनाथस्य गकाराः पंच दुर्लभाः ॥ २२ ॥
तस्माच्चैव प्रकर्तव्यं गोदानं गोमतीतटे ॥
एवं कृत्वा द्विजश्रेष्ठाः कृतकृत्यो भवेन्नरः ॥ २३ ॥
ये गता नरकं घोरं ये च प्रेतत्वमागताः ॥
पूर्वकर्मविपाकेन स्थावरत्वं गताश्च ये ॥ २४ ॥
पितृपक्षे च ये केचिन्मातृपक्षे कुलोद्भवाः ॥

सर्वे ते मुक्तिमायांति गोमत्या दर्शनात्कलौ ॥ २५ ॥
कृतं श्राद्धं नरैर्यैस्तु गोमत्यां भूसुरोत्तमाः ॥
हयमेधस्य यज्ञस्य फलमायांत्यसंशयम् ॥ २६ ॥
गंगास्नानेन यत्पुण्यं प्रयागे परिकीर्त्तितम् ॥
तत्पुण्यं समवाप्नोति गोमत्यां श्राद्धकृन्नरः ॥ २७ ॥
विष्णुलोकं हि गच्छंति पितरस्तत्कुलोद्भवाः ॥
अनेकजन्मसाहस्रं पापं याति न संशयः ॥ २८ ॥
वाचा च यत्कृतं पापं कर्मणा मनसा तथा॥
तत्सर्वं विलयं याति गोमतीदर्शनेन हि॥२९॥
यो नरः कार्त्तिके स्नानं गोमत्यां कुरुते द्विजाः॥
प्रसन्नो भगवांस्तस्य लक्ष्म्या सह न संशयः॥7.4.6.३०॥
प्रत्यहं हुतँ भोक्तारं तर्पयेत्सुसमाहितः॥
प्रत्यहं षड्रसं देयं भोजनं च द्विजातये॥३१॥
पूजयेत्कृष्णदेवं च प्रत्यहं भक्तितत्परः ॥
येन केनापि विप्रेन्द्राः स्थातव्यं नियमेन तु ॥३२॥
ब्राह्मणानुज्ञया तत्र गृह्णीयान्नियमान्नरः ॥
संपूर्णे कार्त्तिके मासि संप्राप्ते बोधवासरे ॥ ३३ ॥
पंचामृतेन देवेशं स्नापयेत्तीर्थवारिणा ॥
श्रीखण्डं कुंकुमोन्मिश्रं मृगनाभिसमन्वितम् ॥
विलेपयेच्च देवेशं भक्त्या दामोदरं हरिम् ॥ ३४ ॥
कुसुमैर्वारिसंभूतैस्तुलस्या करवीरकैः ॥
तद्देशसंभवैः पुष्पैः पूजयेद्गरुडध्वजम् ॥ ३५ ॥
नैवेद्यं रुचिरं दद्याद्वि ष्णुर्मे प्रीयतामिति ॥
गीतवाद्यादिनृत्येन तथा पुस्तकवाचनैः ॥ ३६ ॥
रात्रौ जागरणं कार्य्यं स्तोत्रैर्नानाविधैरपि ॥
आहूय ब्राह्मणान्भक्त्या भोजयेच्च स्वशक्तितः ॥ ३७ ॥
ततो रथस्थितं देवं पूजयेद्गरुडध्वजम् ॥
कार्तिकांते च विप्रेंद्रा गोमत्युदधिसंगमे ॥ ३८ ॥

स्नात्वा पितॄंश्च संतर्प्य पूजयेच्च जनार्द्दनम् ॥
सुवस्त्रैर्भूषणैश्चापि समभ्यर्च्य रमापतिम् ॥
अनुज्ञया तु विप्राणां व्रतं संपूर्णतां नयेत् ॥ ३९ ॥
एवं यः स्नाति विप्रेन्द्राः कार्त्तिके कृष्णसन्निधौ ॥
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥7.4.6.४०॥
माघस्नानं नरो भक्त्या गोमत्यां कुरुते तु यः ॥
वैनतेयोदये नित्यं संतुष्टः सह भार्यया ॥ ४१ ॥
तिला हिरण्यसहिता देया ब्राह्मणसत्तमे ॥
मोदका गुडसंमिश्राः प्रत्यहं दक्षिणान्विताः ॥ ४२ ॥
तिलैराज्याप्लुतैर्होमः कर्त्तव्यः प्रत्यहं नरैः ॥
होमार्थं सेवयेद्वह्निं न शीतार्थं कदाचन ॥४३॥
गोमत्यां स्नाति यो भक्त्या माघं माधववल्लभम् ॥
समाप्तौ रक्तवस्त्राणि कञ्चुकोष्णीषमेव च ॥ ४४ ॥
दद्यादुपानहौ भक्त्या कुंकुमं च विशेषतः ॥
कम्बलं तैलपक्वं च विष्णुर्मे प्रीयतामिति ॥ ४५ ॥
स्वामिकार्य्यमृतानां च संग्रामे शस्त्रसंकुले ॥
गवार्थे ब्राह्मणार्थे च मृतानां या गतिः स्मृता ॥ ४६ ॥
माघस्नाने च सा प्रोक्ता गोमत्यां नात्र संशयः ॥
सर्वदानफलं तस्य सर्व तीर्थफलं तथा ॥ ४७ ॥
माघस्नानान्नरो याति विष्णुलोकं सनातनम् ॥
सर्वान्कामानवाप्नोति समभ्यर्च्य जनार्द्दनम् ॥ ४८॥
माघं यः क्षपते सर्वं गोमत्युदधिसंगमे ॥
ब्राह्मणानुज्ञया विप्राः सर्वं संपूर्णतां व्रजेत् ॥ ४९ ॥
पापिनोऽपि द्विजश्रेष्ठा ये स्नाता गोमतीजले ॥
यज्विनां च गतिं यांति प्रसादाच्चक्रपाणिनः ॥ 7.4.6.५० ॥
ब्रह्मरुद्रपदादूर्ध्वं यत्पदं चक्रपाणिनः ॥
स्नानमात्रेण गोमत्यां तत्प्रोक्तं कृष्णसंनिधौ ॥ ५१ ॥
मित्रद्रोहे च यत्पापं यत्पापं गुरुघातिनि ॥

तत्पापं समवाप्नोति यात्राभंगं करोति यः ॥५२॥

ब्रह्मस्वहारिणः पापास्तथा देवस्वहारिणः ॥

स्नानमात्रेण शुद्ध्यंति गोमत्यां नात्र संशयः ॥ ५३ ॥

भीताऽभयप्रदानेन यत्पुण्यं लभते नरः ॥

तत्पुण्यं समवाप्नोति गोमत्यां स्नानमात्रतः ॥ ५४ ॥

भीताभय प्रदानेन पुत्रानिष्टान्न संशयः ॥

धनकामस्तु विपुलं लभते धनमूर्जितम्॥ ५५ ॥

प्राप्नुयादीप्सितान्कामान्गोमतीनीरसंगमे ॥

कृतकृत्यो भवेद्विप्रा ऋणान्मुच्येत पैतृकात् ॥ ५६ ॥

मनसा वचसा चैव कर्मणा यदुपार्जितम् ॥

तत्सर्वं नश्यते पापं गोमतीनीरसंगमात् ॥ ५७ ॥

पीतांबरधरो भूत्वा तथा गरुडवाहनः ॥

वनमाली चतुर्बाहुर्दिव्यगन्धानुलेपनः ॥

याति विष्णवालयं विप्रा अपुनर्भवलक्षणम् ॥ ५८ ॥

गोमतीस्नानमात्रेण मानवो नात्र संशयः ॥

सर्वपापविनिर्मुक्तो याति विष्णुं सनातनम् ॥ ५९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये गोमत्युदधिसंगमे स्नानदानादिमाहात्म्यवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०७

https://sa.wikisource.org/s/gts
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ श्रीप्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठा रथांगाख्यं महोदधिम् ॥

चक्रांका यत्र पाषाणा दृश्यंते मुक्तिदायकाः ॥ १ ॥

यैः पूज्यते जगन्नाथः प्रत्यहं भाव संयुतैः ॥

सदा नेत्रैरनिमिषैर्वीक्ष्यते च जनार्दनः ॥ २ ॥

यच्च साक्षाद्भगवता दृष्टं कृष्णेन दृष्टितः ॥

तत्तीर्थं सर्वपापघ्नं चक्राख्यं परमं हरेः ॥ ३ ॥

यस्य प्रसिद्धिः परमा त्रैलोक्ये सचराचरे ॥

प्रयागादधिकं यच्च मुक्तिदं ह्यस्ति पावनम् ॥ ४ ॥

सुरैरपि प्रपूज्यंते यत्रांगानि शरीरिणाम् ॥

अंकितानि च चक्रेण षण्मासान्नात्र संशयः ॥ ५ ॥

यद्दृष्ट्वा मुच्यते पापात्प्रसंगेनापि मानवः ॥

तत्तीर्थं सर्वतीर्थानां पावनं प्रवरं स्मृतम्॥ ॥ ६ ॥

तत्र गत्वा द्विजश्रेष्ठाः प्रक्षाल्य चरणौ मुदा ॥

करौ चास्यं चैव पुनः प्रणमेद्दंडवत्पुनः ॥ ७ ॥

प्रणिपत्य गृहीत्वार्घ्यं पंचरत्नसमन्वितम् ॥

सपुष्पाक्षतगंधैश्च फलहेमसुचंदनैः ॥ ८ ॥

संपन्नमर्घ्यमादाय मंत्रमेतमुदीरयेत् ॥

प्रत्यङ्मुखः सुनियतः संमुखो वा महोदधेः ॥९॥

ॐ नमो विष्णु रूपाय विष्णुचक्राय ते नमः ॥

गृहाणार्घ्यं मया दत्तं सर्वकामप्रदो भव ॥ 7.4.7.१० ॥

अग्निश्च तेजो मृडया च रुद्रो रेतोधा विष्णुरमृतस्य नाभिः ॥

एतदब्रुवन्वाडवाः सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥११॥

मृदमालभ्य सजलां विप्रा देवकरच्युताम् ॥

धारयित्वा तु शिरसा स्नानं कुर्य्याद्यथाविधि ॥ १२ ॥

तर्पयेच्च पितॄन्देवान्मनुष्यांश्च यथाक्रमम् ॥

तर्पयित्वा हविर्द्रव्यं प्रोक्षयित्वा च भक्तितः ॥ १३ ॥

अश्वमेधसहस्रेण सम्यग्यष्टेन यत्फलम् ॥

स्नानमात्रेण तत्प्रोक्तं चक्रतीर्थे द्विजोत्तमाः ॥ १४ ॥

प्रयागे यत्फलं प्रोक्तं माघ्यां माधवपूजने ॥

स्नानमात्रेण तत्प्रोक्तं चक्र तीर्थे द्विजोत्तमाः ॥ १५ ॥

कारयेच्च ततः श्राद्धं पितॄणां श्रद्धयान्वितः ॥

विश्वेदेवान्सुवर्णेन राजतेन तथा पितॄन् ॥ १६ ॥

संतर्प्य भोजनेनैव वस्त्रालंकारभूषणैः॥

दीनान्धकृपणेभ्यश्च दानं देयं स्वशक्तितः॥ १७॥

चक्रतीर्थे तीर्थवरे विशेषाद्द्विजसत्तमाः॥

रत्नदानं प्रकुर्वीत प्रीणनार्थं जगत्पतेः ॥ १८ ॥

गन्त्रीमनडुहा युक्तां सर्वास्तरणसंयुताम् ॥

सोपस्करां च दद्याद्वै विष्णुर्मे प्रीयतामिति॥ १९ ॥

सुविनीतं शीलयुतं तथा सोपस्करं हयम् ॥

भूषयित्वा च विप्राय दद्याद्दक्षिणया सह ॥ 7.4.7.२० ॥

एवं कृते द्विजश्रेष्ठाः कृतकृत्यो भवेन्नरः॥

मुक्तिं प्रयांति तस्यैव पितरस्त्रिकुलोद्भवाः ॥ २१ ॥

प्रेतयोनिं गता ये च ये च कीटत्वमागताः ॥

पच्यंते नरके ये च महारौरवसंज्ञके ॥ २२ ॥

ते सर्वे तृप्तिमायांति चकतीर्थ प्रभावतः ॥

श्राद्धे कृते द्विजश्रेष्ठा गयाश्राद्धफलं लभेत् ॥ २३ ॥

या गतिर्मातृभक्तानां यज्वनां या गतिः स्मृता ॥

चक्रतीर्थे द्विजश्रेष्ठाः स्नात्वा तां लभते नरः ॥ २४ ॥

श्राद्धं प्रशस्तं विप्रेंद्राः संप्राप्ते चंद्रसंक्षये ॥

सूर्यग्रहे विशेषेण कुरुक्षेत्रफलं स्मृतम् ॥

श्राद्धे स्नाने तथा दाने पितॄणां तर्पणे तथा॥ २५ ॥

प्रशस्तं चक्रतीर्थं च नात्र कार्य्या विचारणा ॥ २६ ॥

सर्वदा पावनं विप्राश्चक्रतीर्थं न संशयः ॥

यस्तु श्राद्धं प्रकुर्वीत यात्रायामागतो नरः ॥ २७ ॥

चक्रतीर्थे द्विजश्रेष्ठाः संपूज्य मधुसूदनम् ॥

पूजितेषु द्विजेंद्रेषु विष्णुसांनिध्यमाप्नुयात् ॥ २८ ॥

वाचा कृतं कर्मकृतं मनसां समुपार्जितम् ॥

स्नानमात्रेण तत्पापं नश्यते नात्र संशयः ॥ २९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभास खण्डे चतुर्थे द्वारकामाहात्म्ये गोमत्युदधिसंगमतीरस्थचक्रतीर्थमाहात्म्यवर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०८

https://sa.wikisource.org/s/gtt
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ प्रह्लाद उवाच ॥ ॥

मा गच्छध्वं सुरनदीं कालिंदीं मा सरस्वतीम् ॥

गच्छध्वं च द्विजश्रेष्ठा गोमत्युदधिसंगमे ॥ १ ॥

प्राप्यते हेलया यत्र सर्वे कामा न संशयः ॥

गोमतीजलकल्लोलैः क्रीडते यत्र सागरः ॥ २ ॥

पापघ्नं गोमतीतीरं प्राप्यते पुण्यवन्नरैः ॥

सागरेण च संमिश्रं महापातकनाशनम् ॥ ३ ॥

गोमती संगता यत्र सागरेण द्विजोत्तमाः ॥

मुक्तिद्वारं तु तत्प्रोक्तं कलिकाले न संशयः ॥ ४ ॥

यत्पुण्यं लभते तूर्णं गंगासागरसंगमे ॥

तत्पुण्यं समवाप्नोति गोमत्युदधिसंगमे ॥ ५ ॥

नमस्कृत्य च तोयेशं गोमतीं च सरिद्वराम् ॥

अर्घ्यं दद्याद्विधानेन कृत्वा च करयोः कुशान् ॥ ६ ॥

मंत्रेणानेन विप्रेंद्रा दद्यादर्घ्यं विधानतः ॥

ब्राह्मणैः सह संगत्य सदा तत्तीर्थवासिभिः ॥ ७ ॥

भक्त्या चार्घ्यं प्रदास्यामि देवाय परमा त्मने ॥

त्राहि मां पापिनं घोरं नमस्ते सुररूपिणे ॥ ८ ॥

तीर्थराज नमस्तुभ्यं रत्नाकर महार्णव ॥

गोमत्या सह गोविंद गृहाणार्घ्यं नमोऽस्तु ते ॥ ९॥

दत्त्वा चार्घ्यं शिखां बद्ध्वा संस्मृत्य जलशायिनम् ॥

कुर्याच्च प्राङ्मुखः स्नानं ततः प्रत्यङ्मुखस्तथा॥ 7.4.8.१०॥

स्नात्वा च परया भक्त्या पितॄन्संतर्पयेत्ततः ॥

विश्वेदेवादि संपूज्य पितॄणां श्राद्धमाचरेत् ॥ ११ ॥

यथोक्तां दक्षिणां दद्याद्विष्णुर्मे प्रीयतामिति ॥

विशेषतः प्रदातव्यं सुवर्णं विप्रसत्तमाः ॥ १२ ॥
 दंपत्योर्वाससी चैव कंचुकोष्णीषमेव च ॥
लक्ष्म्या सह जगन्नाथो विष्णुर्मे प्रीयतामिति ॥ १३ ॥
महादानानि सर्वाणि गोमत्युदधिसंगमे ॥
सप्तद्वीपपतिर्भूत्वा विष्णुलोके महीयते ॥ १४ ॥
यस्तुलापुरुषं दद्याद्गोमत्युदधिसंगमे ॥
सप्तद्वीपपतिर्भूत्वा विष्णुलोके महीयते ॥ १५ ॥
आत्मानं तोलयेद्यस्तु स्वर्णेन रजतेन वा ॥
वस्त्रैर्वा कुंकुमैर्वापि फलैर्वापि तथा रसैः ॥ १६ ॥
भुक्त्वा भोगान्सुविपुलांस्तथा कामान्मनोहरान् ॥
संपूज्यमानस्त्रिदशैर्याति विष्ण्वालयं नरः ॥ १७ ॥
हिरण्यरूप्यदानं च ह्यश्वं धेनुं तथैव च ॥
गोमतीसंगमे दत्त्वा सर्वान्कामानवाप्नुयात् ॥ १८ ॥
भूमिदानं च यो दद्याद्गोमत्युदधिसंगमे ॥
स्नात्वा शुचिर्हरिं स्मृत्वा तस्माद्धन्यतरो नहि ॥ १९ ॥
कन्यादानं च यः कुर्याद्विद्यादानमथापि वा ॥
गोमत्याः संगमे स्नात्वा याति ब्रह्मपदं नरः ॥ 7.4.8.२० ॥
यो दद्यात्स्वर्णधेनुं च घृतधेनुं समाहितः ॥
ब्रह्माण्डदानमपि वा तस्य पुण्यमनंतकम् ॥ २१ ॥
तथा लवणधेनुं च जलधेनुमथापि वा ॥
दत्त्वा याति परं स्थानं गोमत्युदधिसंगमे ॥ २२ ॥
युगादिषु च सर्वेषु गोमत्युदधिसंगमे ॥
स्नात्वा संतर्प्य च पितॄनक्षयं लोकमाप्नुयात् ॥ २३ ॥
आषाढ्यां च तथा माघ्यां कार्तिक्यां संगमे नरः ॥
पितॄणां तर्पणं स्नानं श्राद्धं पावकपूजनम् ॥
कुर्याच्चैव तथा दानं यदीच्छेदक्षयं पदम् ॥ २४ ॥
पितॄणां चाक्षया तृप्तिर्गयाश्राद्धेन वै यथा ॥
तद्वच्छ्राद्धान्महाभाग गोमत्युदधिसंगमे ॥ २५ ॥

कुर्य्यात्स्नानं तथा दानं पितॄणां तर्पणं तथा ॥
पञ्चकासु द्विजश्रेष्ठास्तथा चैवाष्टकासु च ॥ २६ ॥
वैधृतौ च व्यतीपाते छायायां कुंजरस्य च ॥
षष्ठ्यां च कपिलाख्यायां तथा हि द्वादशीषु च ॥ २७ ॥
गोमत्यां संगमे स्नात्वा दद्याद्दानं विशेषतः ॥
निर्मलं स्थानमाप्नोति यत्र गत्वा न शोचति ॥ २८ ॥
श्राद्धपक्षे त्वमावास्यां गोमत्युदधिसंगमे ॥
हेलया प्राप्यते पुण्यं दत्त्वा पिण्डं गयासमम् ॥ २९ ॥
तस्मात्सर्वं प्रयत्नेन त्वमावास्यां द्विजोत्तमाः ॥
श्राद्धं हि पितृपक्षांते कार्य्यं गोमतिसंगमे ॥ 7.4.8.३० ॥
यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ॥
पक्षश्राद्धकृतं पुण्यं दिनेनैकेन लभ्यते ॥ ३१ ॥
श्रद्धाहीनं मन्त्रहीनं पात्रहीनमथापि वा ॥
द्रव्यहीनं कालहीनं मनसः स्वास्थ्यवर्जितम् ॥ ३२ ॥
श्राद्धपक्षे ह्यमायां तु गोमत्युदधिसंगमे ॥
परिपूर्णं भवेत्सर्वं पितॄणां तृप्तिरक्षया ॥ ३३ ॥
गोमती कमला चैव चंद्रभागा तथैव च ॥
तिस्रस्तु संगता नद्यः प्रविष्टा वरुणालयम् ॥ ३४ ॥
गयायां पिंडदानेन प्रयागे ह्यस्थिपातने ॥
तत्पुण्यं समवाप्नोति पक्षांते श्राद्धकृन्नरः ॥ ३५ ॥
यदीच्छेत्सर्वतीर्थेषु हेलया त्वभिषेचनम् ॥
स्नानं कुर्वीत भक्त्या वै गोमत्युदधिसंगमे ॥ ३६ ॥
पक्षेपक्षे समग्रा तु पितृपूजा कृता च यैः ॥
सम्पूर्णा जायते तेषां गोमत्युदधिसंगमे ॥ ३१७ ॥
श्राद्धे कृते त्वमावस्यां पितृपक्षे च वै द्विजाः ॥
अपुत्रा चैव या नारी काकवंध्या च या भवेत् ॥ ३८ ॥
मृतपुत्रा तथा विप्राः संगमे स्नानमाचरेत् ॥
दोषैः प्रमुच्यते सर्वैर्गोमप्युदधिसंगमे ॥

स्नात्वा सुखमवाप्नोति प्रजां च चिरजीविनीम् ॥ ३९ ॥
यानि कानि च दानानि पृथिव्यां सम्भवंति हि ॥
तानि सर्वाणि देयानि गोमत्युदधिसंगमे ॥ 7.4.8.४० ॥
सर्वदैव च विप्रेन्द्रा विशेषात्सर्वपर्वसु ॥
स्नानं कुर्वीत नियतो गोमत्युदधिसंगमे ॥ ४१ ॥
दर्शनादेव पापस्य क्षयो भवति भो द्विजाः ॥
प्रणामे मनसस्तुष्टिर्मुक्तिश्चैवावगाहने ॥ ४२ ॥
श्राद्धे कृते पितॄणां तु तृप्तिर्भवति शाश्वती ॥
दाने मनोरथावाप्तिर्जायते नात्र संशयः ॥ ४३ ॥
कृतकृत्यास्तु ते धन्या यैः कृतं पितृतर्पणम् ॥
श्राद्धं च ऋषिशार्दूला गोमत्युदधिसंगमे ॥ ४४ ॥
पितृपक्षे च वै केचिन्मातृपक्षे तथैव च ॥
तथा श्वशुरपक्षे च ये चान्ये मित्रबांधवाः ॥ ४५ ॥
स्थावरत्वं गता ये च पुद्गलत्वं च ये गताः ॥
पिशाचत्वं गता ये च ये च प्रेतत्वमागताः ॥ ४६ ॥
तिर्य्यग्योनिगता ये च ये च कीटत्वमागताः ॥
स्नानमात्रेण ते सर्वे मुक्तिं यांति न संशयः ॥ ४७ ॥
किं पुनः श्राद्धदानादि गोमतीसंगमे तथा ॥
कृत्वा मुक्तिमवाप्नोति मानवो नात्र संशयः ॥ ४८ ॥
श्रवणद्वादशीयोगे गोमत्युदधिसंगमे ॥
स्नात्वा मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥ ४९ ॥
सन्त्यज्य सर्वतीर्थानि गोमत्युदधिसंगमे ॥
स्नानं कृत्वा तथा श्राद्धं कृतकृत्यो भवेन्नरः ॥
परं लोकमवाप्नोति ह्यर्चयित्वा तु वामनम् ॥ 7.4.8.५० ॥
सम्यक्स्नात्वा नरो यस्तु पूजयेद्गरुडध्वजम् ॥
पीतांबरधरो भूत्वा दिव्याभरणभूषितः ॥ ५१ ॥
वीक्ष्यमाणः सुरस्त्रीभिर्नागारिकृतकेतनः ॥
चतुर्भुजधरो भूत्वा वनमालाविभूषितः ॥

संस्तूयमानो मुनिभिर्याति विष्ण्वालयं नरः ॥ ५२ ॥

गोमतीसंगमे स्नात्वा कृतकृत्यो भवेन्नरः ॥

यत्र दैत्यवधं कृत्वा विष्णुना प्रभविष्णुना ॥ ५३ ॥

चक्रं प्रक्षालितं पूर्वं कृष्णेन स्वयमेव हि ॥

तेनैव चक्रतीर्थं हि ख्यातं लोकत्रये द्विजाः ॥ ५४ ॥

भवंति यत्र पाषाणाश्चक्रांका मुक्तिदायकाः ॥

यैः पूजितैर्जगन्नाथः कृष्णः सांनिध्यमाव्रजेत् ॥ ५५ ॥

तत्रैव यदि लभ्येत चक्रैर्द्वादशभिः सह ॥ ५६ ॥

द्वादशात्मा स विज्ञेयो मोक्षदः सर्वदेहिनाम् ॥

एकचक्रांकितो यस्तु द्वारवत्यां सुशोभनः ॥ ५७ ॥

सुदर्शनाभिधानोऽसौ मोक्षैकफलदो हि सः ॥

लक्ष्मीनारायणो द्वाभ्यां भुक्तिमुक्तिफलप्रदः ॥ ५८ ॥

त्रिभिस्त्रिविक्रमश्चैव त्रिवर्गफलदायकः ॥

श्रीप्रदो रिपुहन्ता च चतुर्भिः संयुतः स हि ॥ ५९ ॥

पञ्चभिर्वासुदेवस्तु जन्ममृत्युभयापहः ॥

प्रद्युम्नः षड्भिरेवासौ लक्ष्मीं कांतिं ददाति यः ॥ 7.4.8.६० ॥

सप्तभिर्बलभद्रश्च चक्रगोऽत्र प्रकीर्तितः ॥

लाञ्छितश्चाष्टभिर्भक्तिं ददाति पुरुषोत्तमः ॥ ६१ ॥

सर्वं दद्यान्नवव्यूहो दुर्लभो यः सुरैरपि ॥

दशावतारो दशमी राज्यदो नात्र संशयः ॥६२ ॥

एकादशभिरैश्वर्यं चक्रगः संप्रयच्छति ॥

निर्वाणं द्वादशात्मा च द्वादशभिर्ददाति च ॥ ६३ ॥

अत ऊर्ध्वं महाभागाः सौख्यमोक्षप्रदायकाः ॥

यतोऽत्र ते च पाषाणाः कृष्णचक्रेण चित्रिताः ॥ ६४ ॥

तेषां स्पर्शनमात्रेण मुच्यते सर्वकिल्बिषैः ॥

चक्रतीर्थे नरः स्नात्वा कृष्णचक्रेण चिह्नितः ॥ ६५ ॥

पूजयित्वा चक्रधरं हरिं ध्यायेत्सनातनम् ॥

नापुत्रो नाधनो रोगी न स संजायते नरः ॥ ६६ ॥

ब्रह्महत्यादिकं पापं मनोवाक्कायकर्मजम् ॥

तत्सर्वं विलयं याति सकृच्चक्रांकदर्शनात् ॥ ६७ ॥

म्लेच्छ देशे शुभे वापि चक्रांको दृश्यते यदि ॥

तत्र चैव हरिक्षेत्रं मुक्तिदं नात्र संशयः ॥ ६८ ॥

मृत्युकालेऽपि सम्प्राप्ते यदि ध्यायेद्धरिं नरः ॥

चक्रांकं धारयेदंगे स याति परमं पदम्॥६९॥

हृदयस्थे च चक्रांके पूतो भवति तत्क्षणात् ॥

नोपसर्पंति तं भीता दूताः कृष्णायुधं तदा ॥

वैष्णवं लोकमा प्नोति नात्र कार्या विचारणा ॥7.4.8.७० ॥

अपि पापसमाचारः किं पुनर्धार्मिकः शुचिः ॥

गोमती संगमे स्नात्वा चक्रतीर्थे तथैव च ॥

मुच्यते पातकैर्घोरै र्मानवो नात्र संशयः ॥७१॥

राजसाः सत्त्वमायांति विष्णुधर्मं सनातनम् ॥

क्षेत्रस्य तस्य माहात्म्यात्सत्यमेतत्प्रकीर्तितम् ॥ ७२ ॥

तामसं राजसं चापि यत्किञ्चिद्विष्णुपूजने ॥

तच्च सत्त्वत्वमायाति निम्नगा च यथार्णवे ॥ ७३ ॥

दुर्लभा द्वारका विप्र दुर्लभं गोमतीजलम् ॥

दुर्लभं जागरो रात्रौ दुर्लभं कृष्णदर्शनम् ॥ ७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये गोमत्युदधि संगमस्नानादिमाहात्म्यपूर्वक चक्रतीर्थमाहात्म्यवर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ०९

https://sa.wikisource.org/s/gtu
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ प्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठाः सप्तकुण्डान्सुविश्रुतान् ॥

सर्वपापप्रशमनानृद्धिबुद्धिविवर्द्धनान्॥१॥

आराधितः स च यदा हरिराविर्बभूव ह ॥

संस्तूयमानो मुनिभिर्लक्ष्म्या सह जगत्पतिः ॥ २ ॥

अर्हणं च तदा चक्रुर्हरये सुरगङ्गया ॥

वामपार्श्वे स्थितां पद्मामभिषेक्तुं समुद्यताम् ॥ ३ ॥

सनकाद्या ब्रह्मसुताः सप्तैते मनसा द्विजाः ॥

पृथक्पृथग्घ्रदान्कृत्वा सिषिचुः सागरोद्भवाम् ॥ ४ ॥

ततो लक्ष्मीह्रदाः प्रोक्ता देव्या नात्रैव संज्ञिताः ॥

प्राप्ते तु द्वापरस्यांते रुक्मिणीसंश्रयेण तु ॥ ५ ॥

रुक्मिणीह्रदमित्येवं कलौ ख्यातिं गताः पुनः ॥

भृगुणा सेवितं यस्माद्भृगुतीर्थमिति स्मृतम् ॥ ६ ॥

तस्मिन्गत्वा महाभागाः प्रक्षाल्य चरणौ मृदा ॥

आचम्य च कुशान्गृह्य प्राङ्मुखो नियतः शुचिः ॥ ७ ॥

संपूर्णं चार्घ्यमादाय फलपुष्पाक्षतादिभिः ॥

रजतं च शिरे कृत्वा मन्त्रमेतमुदीरयेत् ॥ ८ ॥

भक्त्या चार्घ्यं प्रदास्यामि ह्रदे रुक्मिणिसंज्ञिते ॥

सर्वपापविनाशाय रुक्मिण्याः प्रीणनाय च ॥ ९ ॥

स्नानं कुर्य्यात्ततो विप्राः कृत्वा शिरसि तारकम् ॥

देवान्मनुष्यान्सन्तर्प्य पितॄनथ विशेषतः ॥ 7.4.9.१० ॥

श्राद्धं ततः प्रकुर्वीत विप्रानाहूय भक्तितः ॥

दक्षिणां च ततो दद्याद्रजतं रुक्ममेव च ॥ ११ ॥

विशेषतः प्रदेयानि फलानि रसवन्ति च ॥

दम्पत्योर्भोजनं दद्यान्मिष्टान्नेन द्विजोत्तमाः ॥ १२॥

विप्रपत्न्यस्तु संपूज्याः स्त्रियश्चान्याः स्वशक्तितः ॥

कञ्चुकै रक्तवस्त्रैश्च रुक्मिणी प्रीयतामिति ॥ १३ ॥

एवं कृते द्विजश्रेष्ठाः कृतकृत्यो भवेन्नरः ॥

सर्वान्कामानवाप्नोति विष्णुलोकं स गच्छति ॥ १४ ॥

वसते च सदा गेहे लक्ष्मीस्तस्य न संशयः ॥

आरोग्यं मनसस्तुष्टिर्न चोद्वेगः कदाचन ॥ १५ ॥

पितॄणामक्षया तृप्तिः प्रजा भवति निश्चला ॥

हीनसत्त्वो नैव भवेद्दीर्घायुश्च भवेन्नरः ॥ १६ ॥

आढ्यो भवति सर्वत्र यः स्नातो रुक्मिणी ह्रदे ॥

न लक्ष्म्या मुच्यते विप्रा नालक्ष्म्या व्रियते नरः ॥ १७ ॥

न वैरं कलहस्तस्य यः स्नातो रुक्मिणीह्रदे ॥

गमनागमनं न स्यात्संसारभ्रमणं तथा ॥ १८ ॥

दुःखशोकौ कुतस्तस्य यः स्नातो रुक्मिणीह्रदे ॥

सर्वपापविनिर्मुक्तो महाभयविवर्जितः ॥ १९ ॥

सर्वान्कामानिह प्राप्य याति विष्णुपदं नरः ॥ 7.4.9.२० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारका माहात्म्ये रुक्मिणीह्रदमाहात्म्यवर्णनंनाम नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १०



॥ प्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठास्तीर्थं पापप्रणाशनम् ॥

कृकलासमिति ख्यातं नृगतीर्थमनुत्तमम् ॥ १ ॥

नृगो यत्र महीपालः कृकलासवपुर्धरः ॥

कृष्णेन सह संगत्य संप्राप परमां गतिम् ॥ २ ॥ ; ॥

॥ ऋषय ऊचुः ॥ ॥

नृगो नाम नृपः कोऽयं कथं कृष्णेन संगतः ॥

कर्मणा कृकलासत्वं केन तद्वद विस्तरात् ॥ ३ ॥

॥ प्रह्लाद उवाच ॥ ॥

नृगो नाम नृपो विप्राः सार्वभौमो बलान्वितः ॥

बुद्धिमान्धृतिमान्दक्षः श्रीमान्सर्वगुणान्वितः ॥ ४ ॥

अनेकशतसाहस्रा भूमिपा अपि तद्वशाः ॥ । ।

हस्त्यश्वरथसंघैश्च पत्तिभिर्बहुभिर्वृतः ॥ ५ ॥

सैन्यं च तस्य नृपतेः कोशं चैवाक्षयं तथा ॥

स नित्यं गुरुभक्तश्च देवताराधने रतः ॥ ६ ॥

महा दानानि विप्रेन्द्रा ददात्यनुदिनं नृपः ॥

शश्वत्स गोसहस्रं तु ददाति नृपसत्तमः ॥ ७ ॥

प्रक्षाल्य चरणौ भक्त्या ह्युपविश्यासने शुभे ॥

परिधाप्य शुभे क्षौमे सुगन्धेनोपलिप्य च ॥ ८ ॥

संपूज्य पुष्पमालाभि धूपेन च सुगन्धिना ॥

ददौ दक्षिणया सार्द्धं प्रतिविप्राय गां तदा ॥

तांबूलसहितां भक्त्या विष्णुर्मे प्रीयतामिति ॥ ९ ॥

एवं प्रददतस्तस्य यजतश्च तथा मखैः ॥

ययौ कालो द्विजश्रेष्ठा भोगांश्चैवानुभुञ्जतः ॥ 7.4.10.१० ॥

एकदा तु द्विजश्रेष्ठं जैमिनिं संशितव्रतम् ॥

श्रद्धया तं च नृपतिः प्रतिग्रहपराङ्मुखम् ॥

उवाच वाक्यं नृपतिः कृतांजलिपुटः स्थितः ॥ ११ ॥

मामुद्धर महाभाग कृपां कुरु तपोनिधे ॥

गृहाण गां मया दत्तां दयां कृत्वा ममोपरि ॥ १२ ॥

तच्छ्रुत्वा वचनं तस्य अनिच्छन्नपि गौरवात् ॥

नृपस्य चाब्रवीद्विप्र एवमस्त्विवति लज्जितः ॥ १३ ॥

अवनिज्य ततः पादौ शिरसा धारयज्जलम् ॥

सुवर्णशृंगसहितां रौप्यखुरविभूषिताम् ॥ १४ ॥

रत्नपुच्छां कांस्यदोहां सितवस्त्रावगुंठिताम् ॥

समभ्यर्च्य च विप्रेन्द्रं ददौ दक्षिणयान्विताम् ॥ १५ ॥

आसीमान्तमनुव्रज्य हृष्टो राजा बभूव ह ॥

तरुणीं हंसवर्णां च हंसीनामेति विश्रुताम् ॥ १६ ॥

गां गृह्य स्वगृहं प्राप्तो दाम्ना बद्धां सवत्सकाम् ॥

स तस्यै यवसं चार्द्रं ददौ ब्राह्मणसत्तमः ॥ १७ ॥ ॥

सुतृप्ता यवसेनैव मध्याह्ने तृषितां तदा ॥

गृहीत्वा निर्ययौ विप्रो दामबद्धां जलाशयम् ॥ १८ ॥

मार्गे गजाश्वसंबाधे त्रस्ता सा उष्ट्रदर्शनात् ॥

हस्तादाच्छिद्य सा धेनुर्ब्राह्मणस्य ययौ तदा ॥ १९ ॥

विचिन्वन्सकलामुर्वी नापश्यत्तां द्विजर्षभः ॥

सा ययौ विद्रुता धेनुस्तन्महद्राजगोधनम् ॥ ॥ 7.4.10.२० ॥

द्वितीयेऽह्नि पुनर्विप्रमाहूय नृपसत्तमः ॥

संपूज्य विधिवद्भक्त्या वस्त्रालंकारभूषणैः ॥ २१ ॥

विधिवद्गां ददौ तां च स नृपः सोमशर्मणे ॥

गृहीत्वा राजभवनान्निर्ययौ गां द्विजर्षभः ॥ २२ ॥

आशंसमानो राजानं धर्मज्ञमिति कोविदम् ॥

स च विप्रो विचिन्वानः सर्वतो गां सुदुःखितः ॥ ॥ २३ ॥

ददर्श पथि गच्छन्तीं पृष्ठतः सोमशर्मणः ॥

दृष्ट्वा तां गां च स मुनिर्जैमिनिस्तमभाषत ॥ २४ ॥

मम गां चापि हृत्वा त्वं नयसे दस्युवत्कथम् ॥

स तस्य वचनं श्रुत्वा विस्मयं दस्युकीर्त्तनात् ॥ २५ ॥

राजतो हि मया लब्धां गां नयामि स्वमन्दिरम् ॥

गोहर्त्तेति च मां कस्माद्ब्रवीषि द्विजसत्तम ॥ २६ ॥

॥ ब्राह्मण उवाच ॥ ॥

मयापि राजतो लब्धा ममेयं गौर्न संशयः ॥

कथं नयसि विप्र त्वं मयि जीवति मन्दिरम् ॥ २७ ॥

सोऽब्रवीदद्य मे लब्धा कथं मां वदसे मृषा ॥

सोऽब्रवीद्ध्यो मया लब्धा बलान्नेतुं त्वमिच्छसि ॥ २८ ॥

ममेयमिति संक्रुद्धः सोमशर्माऽब्रवीद्वचः ॥

प्रज्वलत्क्रोधरक्ताक्षो ममेयमिति सोऽपरः ॥ २९ ॥

विवदतौ तथा विप्रौ राजद्वारमुपागतौ ॥

कुर्वाणौ कलहं घोरं त्यक्तुकामौ स्वजीवितम् ॥ 7.4.10.३० ॥

संक्रुद्धौ ब्राह्मणौ दृष्ट्वा शपन्तौ तौ परस्परम् ॥

राज्ञे निवेदयामास द्वास्थं प्रणयपूर्वकम् ॥ ३१ ॥

अवज्ञाय तदा विप्रौ विवदन्तौ रुषान्वितौ ॥

कामव्याकुलचेतस्को न बहिर्निःसृतो नृपः ॥ ३२ ॥

एवं विवदमानौ तौ त्रिरात्रं समुपस्थितौ ॥

अवज्ञातौ नृपेणाथ राजानं प्रति च क्रुधा ॥ ३३ ॥

ऊचतुः कुपितो वाक्यं सामर्षौ नृपतिं प्रति ॥

अवमन्यसे नौ यस्मात्त्वं न निर्गच्छसि मन्दिरात् ॥ ३४ ॥

शास्ता भवान्प्रजानां हि न न्यायेन नियोक्ष्यति ॥

भविष्यति भवांस्तस्मात्कृकलासो न संशयः ॥ ३५ ॥

एवं शस्वा तदा विप्रावन्यस्मै गां प्रदाय तौ ॥

क्षुधितौ खेदसंयुक्तौ स्वगृहं गन्तुमुद्यतौ ॥३६॥

प्रस्थितौ तौ नृगो द्वार आगत्य समुपस्थितः ॥

दंडवत्प्रणिपत्याऽऽशु कृतांजलिरभाषत ॥ ३७ ॥

अमोघवचना यूयं तत्तथा न तदन्यथा ॥
ममोपरि कृपां कृत्वा शापांत उपदिश्यताम् ॥ ३८ ॥
तस्य तद्वचनं श्रुत्वा ऊचतुर्वचनं नृपम् ॥
द्वापरस्य युगस्यान्तं भगवान्देवकीसुतः ॥ ३९ ॥
वसुदेवगृहे राजन्हरिराविर्भविष्यति ॥
तस्य संस्पर्शनादेव शापमुक्तिर्भविष्यति ॥ 7.4.10.४० ॥
इत्युक्त्वा तौ तदा विप्रौ प्रयातौ स्वनिवेशनम् ॥
राजा बहुविधान्भोगान्भुक्त्वा दत्त्वा च भूरिशः ॥ ॥ ४१ ॥
इष्ट्वा च विविधैर्यज्ञैः कालधर्ममुपेयिवान् ॥
ततः स गतवान्विप्रा धर्मराजनिवेशनम् ॥ ४२ ॥
सत्कृत्योक्तो यमेनाथ स्वागतेन नृपोत्तमः ॥
प्रथमं सुकृतं राजन्नथवा दुष्कृतं त्वया ॥
भोक्तव्यमिति मे ब्रूहि तत्ते संपाद्यते मया ॥ ४३ ॥
॥ नृग उवाच ॥ ॥
यद्यस्ति दुष्कृतं किंचित्प्रथमं प्रतिपादय ॥
अनुज्ञातो यमेनैवं कृकलासो भवेति वै ॥
ततो वर्षसहस्राणि कृकलासत्वमाप्तवान् ॥ ४४ ॥
एकस्मिन्दिवसे विप्राः सर्वे यदुकुमारकाः ॥
वनं जग्मुर्मृगान्हन्तुं सर्वे कृष्णसमन्विताः ॥ ४५ ॥
तृषार्दिताश्च मध्याह्ने विचिन्वंतो जलं ह्रदे ॥
सत्वं च सुमहत्तत्र कृकलासं च संस्थितम् ॥ ४६ ॥
चक्रुश्चोद्धरणे तस्य यत्नं यदुकुमारकाः ॥
आकृष्यमाणः स तदा गुरुत्वान्न चचाल ह ॥ ४७ ॥
यदा न शेकुस्ते सर्व आचख्युः कृष्णरामयोः ॥
ददर्श तं तदा कृष्णो नृगं मत्वा हसन्निव ॥ ४८ ॥
चिक्षेप वामहस्तेन लीलयैव जगत्पतिः ॥
स संस्पृष्टो भगवता विमुक्तः शापबंधनात् ॥४९॥
त्यक्त्वा कलेवरं राजा दिव्यमाल्यानुलेपनः ॥

कृतांजलिरुवाचेदं भक्त्या परमया युतः ॥ 7.4.10.५० ॥

नमस्ते जगदाधार सर्गस्थित्यंतकारिणे ॥

सहस्रशिरसे तुभ्यं ब्रह्मणेऽनंतशक्तये ॥ ५१ ॥

एवं संस्तुवतः प्राह भगवान्देवकीसुतः ॥

ददामि ते वरं तुष्टो यत्ते मनसि वर्त्तते ॥ ५२ ॥

याहि पुण्यकृताँल्लोकान्दर्शनात्स्पर्शनाच्च मे ॥

एवमुक्तः स देवेन संप्रहृष्टतनूरुहः ॥ ५३ ॥

उवाच यदि तुष्टोऽसि यदि देयो वरो मम ॥

गर्त्तेयं मम नाम्ना तु ख्यातिं गच्छतु केशव ॥ ५४ ॥

यः स्नात्वा परया भक्त्या पितॄन्संतर्पयिष्यति ॥

त्वत्प्रसादेन गोविंद विष्णुलोकं स गच्छतु ॥ ५५ ॥

एवमुक्त्वा स भगवान्पुनर्द्वारावतीमगात् ॥ ५६ ॥

स च राजा विमानेन दिव्यमाल्यानुलेपनः ॥

जगाम भवनं विष्णोर्विबुधैरनुसंस्तुतः ॥ ५७ ॥

॥ प्रह्लाद उवाच ॥ ॥

तदाप्रभृति विप्रेंद्राः स कूपो नृगसंज्ञया ॥

वरदानाच्च कृष्णस्य पावनः सर्वदेहिनाम् ॥ ॥ ५८ ॥

तत्र गत्वा द्विजश्रेष्ठा ह्यर्घ्यं दद्याद्यथाविधि ॥

फलपुष्पाक्षतैर्युक्तं चंदनेन च भूसुराः ॥ ५९ ॥

नमस्ते विश्वरूपाय विष्णवे परमात्मने ॥

अर्घ्यं गृहाण देवेश कूपेऽस्मिन्नृगसंज्ञके ॥ 7.4.10.६० ॥

ततः स्नायाद्द्विजश्रेष्ठा मृदमालिप्य पाणिना ॥

संतर्पयेत्पितॄन्देवान्मनुष्यांश्च यथाक्रमात् ॥ ॥ ६१ ॥

ततः श्राद्धं प्रकुर्वीत पितॄणां श्रद्धयान्वितः ॥

विप्रेभ्यो भोजनं दद्याद्दक्षिणां च स्वशक्तितः ॥ ६२ ॥

विशेषतः प्रदातव्या सवत्सा गौः स्वलंकृता ॥

शय्या सोपस्करां दद्याद्विष्णुर्मे प्रीयतामिति ॥ ६३ ॥

दीनांधकृपणानां च सदा तत्तीरवासिनाम् ॥

दद्याद्दानं स्वशक्त्या च वित्त शाठ्यविवर्जितः ॥६४॥

स्नानमात्रेण विप्रेन्द्रा लभेद्गोदानजं फलम्॥

पितृणां श्राद्धदानेन वियोनिं न च गच्छति ॥६५॥

कृकलासे कृतं श्राद्धं येनैव तर्पणं तथा ॥

स गच्छेद्विष्णुलोकं तु पितृभिः सहितो नरः ॥ ६६ ॥

तथा मनोरथावाप्तिर्यात्रा च सफला भवेत् ॥

सर्वतीर्थफलावाप्तिं लभते नात्र संशयः ॥ ६७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये कृकलासापरनामकनृग तीर्थमाहात्म्यवर्णनंनाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ११

https://sa.wikisource.org/s/gtw



॥ प्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठास्तीर्थं विष्णुपदोद्भवम् ॥

यस्य दर्शनमात्रेण गंगास्नानफलं लभेत् ॥ १ ॥

यस्योत्पत्तिर्मया पूर्वं कथिता द्विजसत्तमाः ॥

यस्य संस्मरणादेव कीर्तनात्पापनाशनम् ॥ २ ॥

हरिणा या समानीता रुक्मिण्यर्थे महात्मना ॥

यस्या गण्डूषमात्रेण हयमेधफलं लभेत् ॥ ३ ॥

विष्णोः पादप्रसूताया वैष्णवीति च विश्रुता ॥

तत्र गत्वा महाभाग गृहीत्वाऽर्घ्यं विधानतः ॥ ४ ॥

नमस्ये त्वां भगवति विष्णुपादतलोद्भवे ॥

गृहाणार्घ्यमिदं देवि गंगे त्वं हरिणा सह ॥ ५ ॥

इत्युच्चार्य द्विजश्रेष्ठा मृदमालभ्य पाणिना ॥

प्राङ्मुखः संयतो भूत्वा स्नानं कुर्यादतन्द्रितः ॥ ६ ॥

देवान्पितॄन्मनुष्यांश्च तर्पितव्यं तिलाक्षतैः ॥

उपहृत्योपहारांश्च ह्याहूय ब्राह्मणांस्ततः ॥ ७ ॥

श्रद्धया परया युक्तः श्राद्धं कुर्याद्विचक्षणः ॥

यथोक्तां दक्षिणां दद्यात्सुवर्णं रजतं तथा ॥ ८ ॥

दीनान्ध कृपणानाञ्च दानं देयं स्वशक्तितः ॥

विशेषतः प्रदातव्यं सुवर्णं द्विजसत्तमाः ॥ ९ ॥

उपानहौ ततो देये जलकुम्भं द्विजातये ॥

दध्योदनं सलवणं शाकजीरकसंयुतम् ॥ 7.4.11.१० ॥

रक्तवस्त्रैः कंचुकीभी रुक्मिणीं परिधापयेत् ॥

विप्रपत्नीश्च विप्रांश्च विष्णुर्मेप्रीयतामिति॥ ११ ॥

एवं कृते द्विज श्रेष्ठाः कृतकृत्यो भवेन्नरः॥

पितृणामक्षया तृप्तिर्गयाश्राद्धेन वै यथा ॥ १२ ॥

वैष्णवं लोकमायान्ति पितरस्त्रिकुलोद्भवाः ॥

जीवते स श्रियायुक्तः पुत्रपौत्रसमन्वितः ॥ १३ ॥

प्रीतः सदा भवेत्तस्य रुक्मिण्या सह केशवः ॥

यच्छते वाञ्छितान्सर्वानैहिकामुष्मिकान्प्रभुः ॥ १४ ॥

एतन्माहात्म्यमतुलं विष्णुपादोद्भवं तथा ॥

यः शृणोति हरौ भक्त्या सर्वपापैः स मुच्यते ॥ १५ ॥

श्रुत्वाऽध्यायमिमं पुण्यं सर्वपापैः प्रमुच्यते ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये विष्णुपदतीर्थमाहात्म्यवर्णनंनामैकादशोऽध्याय.॥ ॥ ११ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १२



॥ प्रह्लाद उवाच ॥ ॥

ततो गच्छेद्द्विजश्रेष्ठा गोप्रचारमतः परम् ॥

यत्र स्नात्वा नरो भक्त्या लभेद्गोदानजं फलम् ॥ १ ॥

यत्र स्नातो जगन्नाथो नभस्ये दैवतैर्वृतः ॥

कटदानं च तत्प्रोक्तं द्वादश्यां द्विजसत्तमाः ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं तु तत्र दैत्येन्द्राऽभवद्वै गोप्रचारकम् ॥

तीर्थं कथय तत्त्वेन यत्र स्नातो जनार्द्दनः ॥ ३ ॥

॥ प्रह्लाद उवाच ॥ ॥

हते कंसे भोजराजे कृष्णेनामिततेजसा ॥

उग्रसेने चाभिषिक्ते मधुपुर्य्यां महात्मना ॥ ४ ॥

उद्धवं प्रेषयामास गोकुले गोकुलप्रियः ॥

सुहृदां प्रियकामार्थं गोपगोपीजनस्य च ॥ ५ ॥

नमस्कृत्य च गोविदं प्रययौ नंदगोकुलम् ॥

स तत्सदृशवेषेण वस्त्रालंकारभूषणैः ॥ ६ ॥

तं दृष्ट्वा दिवसस्यांते गोविंदानुचरं प्रियम् ॥

उद्धवं पूजयामास वस्त्रालंकारभूषणैः ॥ ७ ॥

तं भुक्तवंतं विश्रांतं यशोदा पुत्रवत्सला ॥

आनंदबाष्पपूर्णाक्षी पप्रच्छानामयं हरेः ॥ ८ ॥

कच्चिद्धि स्तः सुखं पुत्रौ रामकृष्णौ यदूत्तमौ ॥

कच्चित्स्मरति गोविंदो वयस्यान्गोपबालकान् ॥ ९ ॥

कच्चिदेष्यति गोविंदो गोकुलं मधुरेश्वरः ॥

तारयिष्यति पुत्रोऽसौ गोकुलं वृजिनार्णवात् ॥ 7.4.12.१० ॥

इत्युक्त्वा बाष्पपूर्णाक्षौ यशोदा नंद एव च ॥

दीर्घं रुरुदतुर्दीनौ पुत्रस्नेहवशंगतौ ॥ ११ ॥

उद्धवस्तौ ततो दृष्ट्वा प्राणसंशयमागतौ ॥

मधुरैः कृष्णसंदेशैः स्नेहयुक्तैरजीवयत् ॥ १२ ॥

नमस्करोति भवतीं भवंतं च सहाग्रजः ॥

अनामयं पृष्टवांश्च तौ च क्षेमेण तिष्ठतः ॥ १३ ॥

क्षिप्रमेष्यति दाशार्हो रामेण सहितो विभुः ॥

अत्रागत्य जगन्नाथो विधास्यति च वो हितम् ॥ १४ ॥

इत्येवं कृष्णसंदेशैः समाश्वास्योद्धवस्तदा ॥

सुखं सुष्वाप शयने नन्दाद्यैरभिनंदितः ॥ १५ ॥

गोप्यस्तदा रथं दृष्ट्वा द्वारे नंदस्य विस्मिताः ॥

कोऽयं कोऽयमिति प्राहुः कृष्णागमनशंकया ॥ १६ ॥

गोपालराजस्य गृहे रथेनादित्यवर्चसा ॥

समागतो महाबाहुः कृष्णवेषानुगस्तथा ॥ १७ ॥

परस्परं समागम्य सर्वास्ता व्रजयोषितः ॥

विविक्ते कृष्णदूतं तं पप्रच्छुः शोककर्षिताः ॥ १८ ॥ ॥

श्रीगोप्य ऊचुः ॥ ॥

कस्मात्त्वमिह संप्राप्तः किं ते कार्य्यमिहाद्य वै ॥

दस्युरूपप्रतिच्छन्नो ह्यस्मान्संहर्तुमिच्छसि ॥ १९ ॥

पूर्वमेव हतं तेन कृष्णेन हृदयादिकम्॥

पाययित्वाऽधरविषं योषिद्व्रातं पलायितः ॥ 7.4.12.२० ॥

इत्येवमुक्त्वा ता गोप्यो मुमुहुः शोकविह्वलाः ॥

ईक्षंत्यः कृष्णदासं तं निपेतुर्धरणीतले ॥ २१ ॥

उद्धवस्तं जनं दृष्ट्वा कृष्णस्नेहहृताशयम् ॥

आश्वासयामास तदा वाक्यैः श्रोत्रसुखावहैः ॥ २२ ॥

॥ उद्धव उवाच ॥ ॥

भगवानपि दाशार्हः कन्दर्पशरपीडितः ॥

न भुंक्ते न स्वपिति च चिन्तयन्वस्त्वहर्निशम् ॥ २३ ॥

तच्छ्रुत्वा वचनं तस्य ललिता क्रोधमूर्छिता ॥

उद्धवं ताम्रनयना प्रोवाच रुदती तदा ॥ २४ ॥

॥ ललितोवाच ॥ ॥

असत्यो भिन्नमर्य्यादः क्रूरः क्रूरजनप्रियः ॥

त्वं मा कृथा नः पुरतः कथां तस्याऽकृतात्मनः ॥ २५ ॥

धिग्धिक्पापसमाचारो धिग्धिग्वै निष्ठुराशयः ॥

हित्वा यः स्त्रीजनं मूढो गतो द्वारवतीं हरिः ॥ २६ ॥ ॥

॥ श्यामलोवाच ॥ ॥

किं तस्य मन्दभाग्यस्य अल्पपुण्यस्य दुर्मतेः ॥

मा कुरुध्वं कथाः साध्व्यः कथां कथयताऽपराम् ॥ २७ ॥ ॥

॥ धन्योवाच ॥ ॥

केनायं हि समानीतो दूतो दुष्टजनस्य च ॥

यातु तेन पथा पापः पुनर्नायाति येन च ॥२८॥

॥ विशाखोवाच ॥ ॥

न शीलं न कुलं यस्य नास्ति पापकृतं भयम् ॥

तस्य स्त्रीहनने साध्व्यो ज्ञायते जन्म कर्म च ॥

हीनस्य पुरुषार्थेन तेन संगो निरर्थकः ॥ २९ ॥ ॥

॥ राधोवाच ॥ ॥

भूतानां घातने यस्य नास्ति पापकृतं भयम् ॥

तस्य स्त्रीहनने साध्व्यः शंका कापि न विद्यते ॥ 7.4.12.३० ॥

॥ शैब्योवाच ॥ ॥

सत्यं ब्रूहि महाभाग किं करोति यदूत्तमः ॥

संगतो नागरस्त्रीभिरस्माकं किं कथां स्मरेत् ॥ ३१ ॥

॥ पद्मोवाच ॥ ॥

कदोद्धव महाभाग नागरीजनवल्लभः ॥

समेष्यतीह दाशार्हः पद्मपत्रायतेक्षणः ॥ ३२ ॥

॥ भद्रोवाच ॥ ॥

हा कृष्ण हा गोपवर हा गोपीजनवल्लभ ॥

समुद्धर महाबाहो गोपीः संसारसागरात्॥ ३३ ॥

॥ प्रह्लाद उवाच ॥ ॥

इति ता विविधैर्वाक्यैर्विलपंत्यो व्रजस्त्रियः ॥

रुरुदुः सुस्वरं देव्यः स्मरंत्यः कृष्ण चेष्टितम् ॥ ३४ ॥

तासां तद्रुदितं श्रुत्वा भक्तिस्नेहसमन्वितः ॥

विस्मयं परमं गत्वा साधुसाध्विति चाब्रवीत् ॥ ३५ ॥

॥ उद्धव उवाच ॥ ॥

यं न ब्रह्मा न च हरो न देवा न महर्षयः ॥

स्वभावमनुगच्छंति सर्वा धन्या व्रजस्त्रियः ॥ ३६ ॥

सर्वासां सफलं जन्म जीवितं यौवनं धनम् ॥

यासां भवेद्भगवति भक्तिरव्यभिचारिणी ॥ ३७ ॥

॥ गोप्य ऊचुः ॥ ॥

साधु दर्शय गोविंदं साधु दर्शय वल्लभम् ॥

नयास्मान्साधु तत्रैव यत्र तिष्ठति सोऽच्युतः ॥ ३७ ॥

॥ प्रह्लाद उवाच ॥ ॥

तासां तद्भाषितं श्रुत्वा तथा विलपितं बहु ॥

बाढमित्येव ता ऊच उद्धवः स्नेहविह्वलाः ॥ ३९ ॥

उद्धवेन समं सर्वास्ततस्ता व्रजयोषितः ॥

अनुजग्मुर्मुदा युक्ताः कृष्णदर्शनलालसाः ॥ 7.4.12.४० ॥

गायन्त्यः प्रियगीतानि तद्बालचरितानि च ॥

जग्मुः सहैव शनकैरुद्धवेन व्रजांगनाः ॥ ४१ ॥

यदुपुर्य्यां ततो दृष्ट्वा उद्यानविपिनावलीः ॥

अद्य देवं प्रपश्यामः कृष्णाख्यं नंदनंदनम् ॥ ॥ ४२ ॥

द्वारवत्यां तु गमनाद्ध्यानाल्लक्ष्मीपतेस्तदा ॥

अशेषकल्मषान्मुक्ता विध्वस्ताखिलबन्धनाः ॥ ४३ ॥

संप्राप्तास्तास्ततः सर्वास्तीरे मयसरस्य च ॥

प्रणिपत्योद्धवः प्राह गोपिकाः कृष्णदेवताः ॥ ४४ ॥

स्थीयतां मातरश्चात्रात्रैवेष्यति महाभुजः ॥

कृष्णः कमलपत्राक्षो विधास्यति च वो हितम् ॥ ४५ ॥

॥ गोप्य ऊचुः ॥ ॥

कस्योद्धव इदं चात्र सरः सारसशोभितम् ॥

संपूर्णं पंकजैश्चित्रैः कल्हारकुमुदोत्पलैः ॥ ४६ ॥ ॥

॥ उद्धव उवाच ॥ ॥

मयो नाम महादैत्यो मायावी लोकविश्रुतः ॥

कृतं तेन सरः शुभ्रं तस्य नाम्ना च विश्रुतम् ॥ ४७ ॥

॥ श्रीगोप्य ऊचुः ॥ ॥

शीघ्रमानय गोविंदं साधु दर्शय चाच्युतम्॥

नयनानंदजननं तापत्रयविनाशनम् ॥ ४८ ॥

तच्छ्रुत्वा वचनं तासां गोपिकानां तदोद्धवः ॥

दूतैः समानयामास श्रीकृष्णं शीघ्रयायिभिः ॥ ४९ ॥

आयांतं शीघ्रयानेन दृष्ट्वा देवकिनंदनम् ॥

भ्राजमानं सुवपुषा वनमालाविभूषितम् ॥ ॥ 7.4.12.५० ॥

ज्वलत्किरीटमुकुटं स्फुरन्मकरकुण्डलम्॥

श्रीवत्सांकं महाबाहुं पीतकौशेयवाससम् ॥ ५१ ॥

आतपत्रैर्वृतं मूर्ध्नि संवृतं वृष्णिपुंगवैः ॥

संस्तुतं बंदिमुख्यैश्च गीतवादित्रनिस्वनैः ॥ ५२ ॥

पौरजानपदैर्लोकैर्वैष्णवैः सर्वतो वृतम् ॥

पश्यन्तं हंसमिथुनैः सरः सारसशोभितम् ॥५३ ॥

तं दृष्ट्वाऽच्युतमायांतं लोककांतं मनोहरम् ॥

प्रियं प्रियाश्चिराद्दृष्ट्वा मुमुहुस्ता व्रजांगनाः ॥ ५४ ॥

चिराय संज्ञां संप्राप्य विलेपुश्च सुदुःखिताः ॥

हा नाथ कांत हा कृष्ण हा व्रजेश मनोहर ॥५५ ॥

संवर्धितोऽसि यैर्बाल्ये क्रीडितो वत्सपालकैः ॥

तेऽपि त्वया परित्यक्ताः कथं दुष्टोऽसि निर्घृणः ॥ ५६ ॥

न ते धर्मो न सौहार्द्दं न सत्यं सख्यमेव च ॥

पितृमातृपरित्यागी कथं यास्यसि सद्गतिम् ॥ ५७ ॥

स्वामिन्भक्तपरित्यागः सर्वशास्त्रेषु गर्हितः ॥

त्यजताऽस्मान्वने वीर धर्मो नावेक्षितस्त्वया ॥ ५८ ॥

॥ प्रह्लाद उवाच ॥ ॥

श्रुत्वा तासां विलपितं गोपीनां नंद नंदन।

अनन्यशरणाः सर्वा भावज्ञो भगवान्विभुः॥

सांत्वयामास वचनैर्व्रजेशस्ता व्रजांगनाः॥ ५९॥

अध्यात्मशिक्षया गोपीः प्रभुस्ता अन्वशिक्षयत्॥ 7.4.12.६०॥

श्रीभगवानुवाच॥

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्॥

वसामि हृदये शश्वद्भूतानामविशेषतः॥६१॥

अहं सर्वस्य प्रभवो मत्तो देवाः सवासवाः ॥

आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ॥ ६२ ॥

ब्रह्मा रुद्रश्च विष्णुश्च सनकाद्या महर्षयः ॥

इंद्रियाणि मनो बुद्धिस्तथा सत्त्वं रजस्तमः ॥ ६३ ॥

कामः क्रोधश्च लोभश्च मोहोऽहंकार एव च ॥

एतत्सर्वमशेषेण मत्तो गोप्यः प्रवर्त्तते ॥ ६४ ॥

एतज्ज्ञात्वा महाभागा मा स्म कृध्वं मनः शुचि ॥

सर्वभूतेषु मां नित्यं भावयध्वमकल्मषाः॥ ६५ ॥

॥ प्रह्लाद उवाच ॥ ॥

ताः कृष्णवचनं श्रुत्वा गोप्यो विध्वस्तबन्धनाः ॥

विमुक्तसंशयक्लेशा दर्शनानन्दसंप्लुताः॥

ऊचुश्च गोपवध्वस्ताः कृष्णं निर्मलमानसाः ॥ ६६ ॥ ॥

॥ गोप्य ऊचुः ॥ ॥

अद्य नः सफलं जन्म अद्य नः सफला दृशः ॥

यत्त्वां पश्याम गोविन्द नागरीजनवल्लभम् ॥ ६७ ॥

पुण्यहीना न पश्यंति कृष्णाख्यं पुरुषं परम् ॥

वाक्यैर्हेत्वर्थसंयुक्तैर्यदि संबोधिता वयम् ॥

तथापि माया हृदयान्नापैति मधुसूदन ॥ ६८ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

दर्शनात्स्पर्शनाच्चास्य विमुक्ताऽशेषबन्धनाः ॥

स्नात्वा च सकलान्कामानवाप्स्यथ व्रजांगनाः ॥ ६९ ॥

॥ गोप्य ऊचुः ॥ ॥

अद्भुतो हि प्रभावस्ते सरसोऽस्य उदाहृतः ॥

विधिं ब्रूहि जगन्नाथ विस्तराद्वृष्णिनन्दन ॥ 7.4.12.७० ॥

॥ श्रीकृष्ण उवाच ॥ ॥

भवतीनां मया सार्द्धं सञ्जातमत्र दर्शनम् ॥

तस्मान्मया सदा ह्यत्र स्नातव्यं नियमेन हि ॥ ७१ ॥

यः स्नात्वा परया भक्त्या पितॄन्सन्तर्पयिष्यति ॥

श्रावणस्य सिते पक्षे द्वादश्यां नियतः शुचिः ॥ ७२ ॥

दत्त्वा दानं स्वशक्त्या च मामुद्दिश्य तथा पितॄन् ॥

लभते वैष्णवं लोकं पितृभिः परिवारितः ॥ ७३ ॥

मय तीर्थं समासाद्य कृत्वा च करयोः कुशान् ॥

फलमेकं गृहीत्वा तु मन्त्रेणार्घ्यं प्रदापयेत् !। ७४ ॥

गृहान्धकूपे पतितं माया पाशशतैर्वृतम् ॥

मामुद्धर महीनाथ गृहाणार्घ्यं नमोऽस्तु ते ॥ ७५ ॥

॥ अर्घ्यमन्त्रः ॥ ॥

स्नात्वा यः परया भक्त्या पितॄन्संतर्प्य भावतः ॥

कुर्याच्छ्राद्धं च परया पितृभक्त्या समन्वितः ॥ ७६ ॥

दक्षिणां च ततो दद्याद्रजतं रुक्ममेव च ॥

विशेषतः प्रदातव्यं पायसं च सशर्करम् ॥ ७७ ॥

नवनीतं घृतं छत्रं कंबलाजिनमेव च ॥

भवतीभिः समं यस्मात्संजातं मम दर्शनम् ॥

आगंतव्यं मया तस्मात्सदा ह्यस्मिञ्जलाशये ॥ ७८ ॥

योऽत्र स्नानं प्रकुरुते मयस्य सरसि प्रियाः ॥

गंगास्नानफलं तस्य विष्णुलोकस्तथाऽक्षयः ॥ ७९ ॥

मुक्तिं प्रयांति तस्यैव पितरस्त्रिकुलोद्भवाः ॥

पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः ॥

यावज्जीवं सुखं भुक्त्वा चान्ते हरिपुरं व्रजेत् ॥ 7.4.12.८० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये मयनिर्मितसरोमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ॥१२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १३



॥ श्रीप्रह्लाद उवाच ॥ ॥

इति कृष्णवचः श्रुत्वा गोप्यः संहृष्टमानसाः ॥

तस्मिन्मयसरे स्नात्वा विमुक्ताऽशेषबन्धनाः ॥ १ ॥

कृष्णदर्शनसंजातपरमानन्दसंप्लुताः ॥

ऊचुश्च वचनं गोप्यो मधुरं माधवं प्रति ॥ २ ॥

॥ गोप्य ऊचुः ॥ ॥

धन्यः स दैत्यप्रवरो मयो येन कृतं सरः ॥

यस्मिंस्त्वं देवतैः सार्द्धं समेष्यसि जगत्पते ॥ ३ ॥

यदि तुष्टोऽसि भगवन्ननुग्राह्या वयं यदि ॥

अस्माकमपि वार्ष्णेय कारयस्व सरोत्तमम् ॥ ४ ॥

कीर्त्तनान्मृत्युलोकेऽस्मिंस्तव संदर्शनेन हि ॥

अहर्निशं तव ध्यानाद्यास्यामः परमां गतिम् ॥ ५ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

करिष्ये वः प्रियं साध्व्यो यूयं मम परिग्रहाः ॥

अनुग्राह्या मया नित्यं भक्तिग्राह्योऽस्मि सर्वदा ॥ ६ ॥

॥ प्रह्लाद उवाच ॥ ॥

इत्युक्त्वा भगवान्कृष्णो गोपीनां हितकाम्यया ॥

सरसः सन्निधौ तस्य सरस्त्वन्यच्चकार ह ॥ ७ ॥

तदगाधं स्वच्छजलं नलिनीदलशोभितम् ॥

हंससारसयुग्मैश्च चक्रवाकैश्च शोभितम् ॥ ८ ॥

कुमुदोत्पलकह्लारपद्मिनीखण्डमण्डितम् ॥

सेवितं द्विजमुख्यैश्च सिद्धविद्याधरैस्तथा ॥ ९ ॥

सेवितं यदुनारीभिस्तथा यदुकुमारकैः ॥

दिवारात्रौ सुसंपूर्णं सर्वैर्जानपदैर्जनैः ॥ 7.4.13.१० ॥

तं दृष्ट्वा जलकल्लोलैः सुसंपूर्णं जलाशयम् ॥
हर्षाद्गोपीजनं कृष्णः प्रोवाच वचनं तदा ॥ ११ ॥
पश्यध्वं गोपिकाः शुभ्रं सरः सरं समीपतः ॥
स्वच्छमिष्टजलापूर्णं सज्जनानां यथा मनः ॥ १२ ॥
कारणाद्भवतीनां च यस्मात्कृतमिदं सरः ॥
भवतीनां तथा नाम्ना ख्यातमेतद्भविष्यति ॥ १३ ॥
गोर्वाचावाचकः शब्दो भवतीभिर्मया सह ॥
गोप्रचारेति वै नाम्नां ख्यातिं लोके गमिष्यति ॥ १४ ॥
युष्माकं प्रियकामार्थं यस्मात्कृतमिदं सरः ॥
तस्माद्गोपीसर इति ख्यातिं लोके गमिष्यति ॥ १५ ॥
॥ गोप्य ऊचुः ॥ ॥
अनुग्राह्या यदि वयमस्मन्नाम्ना कृतं सरः ॥
अन्यत्किमपि वार्ष्णेय प्रार्थयामो वदस्व नः ॥ १६ ॥
॥ श्रीकृष्ण उवाच ॥ ॥
प्रार्थ्यतां यदभिप्रेतं यद्वो मनसि वर्तते ॥
भक्त्या समागता यूयं नास्त्यदेयं ततो मया ॥ १७ ॥
॥ गोप्य ऊचुः ॥ ॥
यदि तुष्टोऽसि भगवन्यदि देयो वरो हि नः ॥
तस्मात्त्वया सदा कृष्ण नरयानेन माधव ॥ १८ ॥
अत्रागत्य नभस्येऽस्मिन्स्नातव्यं नियमेन हि ॥
यत्र त्वं तत्र देवाश्च यज्ञास्तीर्थानि केशव ॥ १९ ॥
यत्र त्वं तत्र दानानि व्रतानि नियमाश्च ये ॥
ओंकारश्च वषट्कारः स्वाहाकारः स्वधा तथा ॥ 7.4.13.२० ॥
भूर्भुवःस्वर्महर्ल्लोको जनः सत्यं तपस्तथा ॥
त्वन्मयं हि जगत्सर्वं सदेवासुरमानुषम् ॥२१ ॥
तस्मात्त्वयि जगन्नाथे ह्यत्र स्नाते जनार्दने ॥
स्नातमत्र त्रिभुवनं भविष्यति न संशयः ॥ २२ ॥
त्रैलोक्यपावनी गंगा तव पादजलं हि तत् ॥

लक्ष्मीर्वक्षःस्थलस्थाने मुखे देवी सरस्वती ॥ २३ ॥

सर्वभूतमयश्चात्र ततस्त्वं जगदीश्वर ॥

यद्ददासि मनुष्याणां भविष्याणां कलौ युगे ॥

तद्वदस्व महाबाहो कृपां कृत्वा जगत्पते ॥ २४ ॥

यात्रायामागतानां च अथ षण्मासवासिनाम् ॥

सदैवात्र स्थितानां च यत्फलं तद्वदस्व नः ॥ २५ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

यत्फलं हि मनुष्याणां स्नातानां गोपिकासरे ॥

तच्छृणुध्वमसंदिग्धं प्रसन्ने मयि गोपिकाः ॥ २६ ॥

सोपस्करां सवत्सां च वस्त्रालंकारभूषिताम् ॥

यथोक्तदक्षिणोपेतां ब्राह्मणाय कुटुंबिने ॥ २७ ॥

सदाचाराय शुद्धाय दरिद्रायानुकारिणे ॥

गां दत्त्वा फलमाप्नोति स्नानमात्रेण तत्फलम् ॥ २८ ॥

यावत्पदानि मनुजः कृष्णेन सह गच्छति ॥

कुलानि देव्यस्तावंति वसंति हरिमन्दिरे ॥ २९ ॥

कृष्णेन सह गच्छन्ति गीतवादित्रनिस्वनैः ॥

स्तुवन्तो विविधैः स्तोत्रैर्गोविंदं गोपिकासरे ॥ 7.4.13.३० ॥

न मातुर्जठरे तेषां यातना जायते नृणाम् ॥

सर्वान्कामानवाप्यांते वैष्णवं लोकमाप्नुयुः ॥ ३१ ॥

अर्घ्यं दत्त्वा विधानेन स्नानं कुर्याद्विचक्षणः ॥

मंत्रेणानेन वै साध्व्यः श्रद्धया परया युतः ॥ ३२ ॥

नमस्ते गोपरूपाय विष्णवे परमात्मने ॥

गोप्रचारे जगन्नाथ गृहाणार्घ्यं नमोऽस्तु ते ॥ ३३ ॥

अर्घ्यं दत्त्वा विधानेन मृदमालिप्य पाणिना ॥

स्नायाच्छ्रद्धासमायुक्तस्तर्पयेत्पितृदेवताः ॥ ३४ ॥

श्राद्धं कुर्य्यात्ततो भक्त्या एकचित्तः समाहितः ॥

यथोक्तदक्षिणा दद्याद्रजतं रुक्ममेव च ॥ ३५ ॥

विशेषतः प्रदातव्यं तांबूलं कज्जलं तथा ॥

दुकूलानि च देयानि तथा कौसुंभकानि च ॥ ३६ ॥

दंपत्योर्वाससी चैव भूषणानि स्वशक्तितः ॥

गावो देया द्विजातिभ्यो वृषभाश्च धुरंधराः ॥

दीनांधकृपणानां च दानं देयं स्वशक्तितः ॥ ३७ ॥

एवं कृत्वा नरः सम्यगुत्तमां गतिमाप्नुयात् ॥

प्रयांति परमं लोकं पितरस्त्रिकुलोद्भवाः ॥ ३८ ॥

लभते पुत्रकामस्तु पुत्रानिष्टान्मनोरमान् ॥ ३९ ॥

यं यं कामयते कामं स्वर्गमोक्षादिकं नरः ॥

तत्सर्वं समवाप्नोति यः स्नाति गोपिकासरे ॥ 7.4.13.४० ॥

यावल्लोका भविष्यंति तावत्स्थास्यति वै सरः ॥

यावत्सरो यशस्तावद्भवतीनां भविष्यति ॥ ४१ ॥

यावत्कीर्तिर्मनुष्येषु तावत्स्वर्गे महीयते ॥

विमुक्ताः सकलात्पापाद्यास्यंति परमां गतिम् ॥ ४२ ॥

तत्पुण्यं गोपीसर इदं जलैः पूर्णं सदैव हि ॥

अवगाह्यं मया गोप्यो नभस्ये नियमेन हि ॥ ४३ ॥

भवत्यः पतिभावेन ब्रह्मभावेन वा पुनः ॥

चिंतयंत्यः परं मां हि परागतिमवाप्स्यथ ॥ ४४ ॥

॥ प्रह्लाद उवाच ॥ ॥

अनुज्ञाता भगवता ततस्ता गोपकन्यकाः ॥

नमस्कृत्य च गोविंदं ययुः सर्वा यथागता ॥ ४५ ॥

भगवानपि गोविंद उद्धवेन समन्वितः ॥

विसृज्य गोपिकाः कृष्णः स्वकं मंदिरमाविशत् ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये गोपीसरस्तीर्थमाहात्म्यवर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १४

https://sa.wikisource.org/s/gtz



॥ श्रीप्रह्लाद उवाच ॥ ॥

संत्यनेकानि तीर्थानि बह्वाश्चर्यकराणि च ॥

प्राप्ते कलियुगे घोरे तानि पुप्लुविरेर्णवे ॥ १ ॥

उद्देशतो मया विप्राः कीर्त्यमाना निबोधत ॥

संक्षेपतो विप्रवरा यथा तेषां च याः क्रियाः ॥ २ ॥

संहृत्य च भुवो भारं साधू न्संस्थाप्य सत्पथे ॥

द्वारवत्यामगात्कृष्णो वृष्णिसंघैः समावृतः ॥ ३ ॥

दर्शनार्थं तदा ब्रह्मा दैवतैः परिवारितः ॥

वरुणो यमवित्तेशौ सूर्य्याचन्द्रमसौ तथा ॥ ४ ॥

आगत्य सह कृष्णेन कार्यं संसाध्य चात्मनः ॥

वेधाश्चक्रे तदा तीर्थं स्वनाम्ना कीर्तितं भुवि ॥ ५ ॥

ब्रह्मकुण्डमिति ख्यातं सर्वपापहरं शुभम् ॥

तत्तीरे स्थापयामास सहस्रकिरणं प्रभुम् ॥ ६ ॥

मूलं सुराणां हि किल ब्रह्मा लोकपितामहः ॥

तेन संस्थापितं यस्मान्मूल स्थानमिति स्मृतम् ॥ ७ ॥

ब्रह्मतीर्थं तु तद्दृष्ट्वा चन्द्रश्चक्रे ततः सरः ॥

तडागं चन्द्रनाम्ना वै सर्वपापप्रणाशनम् ॥ ८ ॥

तं दृष्ट्वा तेजसा युक्तं संहृष्टाः सुरसत्तमाः ॥

ऊचुस्ते लोकस्रष्टारं शृणुष्व वचनं हि नः ॥ ९ ॥

योऽत्र स्नानं प्रकुरुते पितॄन्संतर्पयिष्यति ॥

पूजयिष्यति देवेशं मूलस्थानं सुरर्षभ ॥ 7.4.14.१० ॥

सर्वपापविनिर्मुक्तो धनधान्यसमन्वितः ॥

सप्तम्यां माघमासस्य शुक्लपक्षे द्विजर्षभाः ॥

योऽत्र स्नानं प्रकुरुते मानवो भक्तिसंयुतः ॥ ११ ॥

मूलस्थानं च देवेश संस्नाप्य प्रविलेपयेत् ॥
पूजयिष्यति वस्त्राद्यैः स्वशक्त्या भूषणैस्तथा ॥ १२ ॥
पुष्पधूपादिभिश्चैव नैवेद्येन च मानवः ॥
सर्वान्कामानवाप्नोति ब्रह्मलोकं स गच्छति ॥ १३ ॥
सावित्रीं च ततो दृष्ट्वा ब्रह्मणा स्थापितां च वै ॥
कृत्वा चायतनं दिव्यं स्वां मूर्तिं सन्निवेश्य च ॥
नाम चक्रे तदा देव्याः स्वयं तस्याः पितामहः ॥ १४ ॥
यः पश्यति स्वयं भक्त्या कृष्णं दृष्ट्वा जगत्पतिम् ॥
सावित्रीं स सुखी भूत्वा सर्वान्कामानवाप्नुयात् ॥ १५ ॥
आयुरारोग्यमैश्वर्य्यं पुत्रसन्तानमेव च ॥
न दौर्भाग्यं भवेत्तस्य न दारिद्यं न मूर्खता ॥
न च व्याधिभयं तस्य यः पश्यति विधिं नरः ॥ १६ ॥
गत्वा संस्नापयेद्देवीं कुंकुमेन कुसुंभकैः ॥
संछाद्य वस्त्रैः संपूज्य पुष्पैर्नानाविधै स्तथा ॥ १७ ॥
नैवेद्यफलतांबूलग्रीवासूत्रकदीपकैः ॥
संपूज्य परया भक्त्या यात्रां च सफला लभेत् ॥ १८ ॥
न वैधव्यं न दौर्भाग्यं न वंध्या न मृतप्रजा ॥
विधिर्दृष्टो नरैर्यैस्तु कुले तेषां प्रजायते ॥ १९ ॥
तस्मात्सर्वप्रयत्नेन विधिं पश्येत्सुभावतः ॥
परितुष्टो भवेत्कृष्णो यात्रा च सफला भवेत् ॥ 7.4.14.२० ॥
॥ प्रह्लाद उवाच ॥ ॥
ब्रह्मणा स्थापितं दृष्ट्वा सरः परमशोभनम् ॥
इन्द्रश्चक्रे महाभागः सरः परमशोभनम् ॥ २१ ॥
स्थापयामास देवेशो लिंगमप्रतिमौजसम् ॥
तस्मिन्स्नात्वा च लभते यस्मादिन्द्रपदं नरः ॥ २२ ॥
तस्मादिन्द्रपदं नाम सुप्रसिद्धं धरातले ॥
इन्द्रेण स्थापितं लिंगं यस्माद्भावनया सह ॥
प्रसिद्धमिंद्रनाम्ना वा इन्द्रेश्वरमिति स्मृतम् ॥२३॥

यस्य प्रसिद्धिरतुला वृद्धिलिंगमिति द्विजाः॥
यस्य दर्शनमात्रेण मुच्यते सर्वपातकैः ॥ २४ ॥
पितॄणामक्षया तृप्तिर्जायते द्विजसत्तमाः ॥
अष्टम्यां च चतुर्द्दश्यां स्नात्वा चेन्द्रपदे नरः ॥ २५ ॥
इन्द्रेश्वरं च संपूज्य याति मुक्तिपदं नरः ॥
विशेषतस्तु संपूज्यो मकरस्थे दिवाकरे ॥ २६ ॥
उत्तरायणसंक्रांतौ लिंगपूरणकेन हि ॥
शिवरात्रौ विशेषेण संपूज्य उमया सह ॥
रात्रौ जागरणं कृत्वा परमं लोकमाप्नुयात् ॥ २७ ॥
॥ प्रह्लाद उवाच॥ ॥
ब्रह्मतीर्थं च तद्दृष्ट्वा तथा शक्रसरोभवम् ॥
दर्शयन्विष्णुना सार्द्धमेकरूपत्वमाप्नुयात् ॥ २८ ॥
सरश्चकार देवेशो भगवान्पार्वतीपतिः ॥
सुमृष्टनिर्मलजलं नलिनीदलशोभितम् ॥ २९ ॥
उत्पलैः सर्वतश्छन्नं सरः सारसशोभितम् ॥
तदगाधजलं दृष्ट्वा स्वयमेव पिनाकधृक् ॥
सब्रह्मविष्णुना सार्द्धं स्नातस्तत्र वृषध्वजः ॥ 7.4.14.३० ॥
ते देवास्तत्सरो दृष्ट्वा ब्रह्मविष्णुसुराऽसुराः ॥
ऊचुः सर्वे सुसंहृष्टा वीक्षंतः पार्वतीपतिम् ॥ ३१ ॥
यस्मात्कृतमिदं देवा ईश्वरेण महत्सरः ॥
महादेव सरोनाम सुप्रसिद्धं भविष्यति ॥ ३२ ॥
योऽत्र स्नानं प्रकुरुते पितॄणां तर्पणं तथा ॥
श्राद्धं पितॄणां भक्त्या च स गच्छेत्परमां गतिम् ॥ ३३ ॥
सुप्रसन्ना भविष्यन्ति सर्वे देवा न संशयः ॥
दर्शनात्पापनिर्मुक्तो महादेवसरस्य च ॥ ३४ ॥
महेशस्य च तद्दृष्ट्वा सरः परमशोभनम् ॥
चकार पार्वती तत्र सरश्चाप्रतिमं तथा ॥ ३५ ॥
गौरीसर इति ख्यातं सर्वपापप्रणाशनम् ॥

तत्र स्नात्वा नरो भक्त्या न दुर्गतिमवाप्नुयात् ॥ ३६ ॥
न दौर्भाग्यं स्त्रियश्चैव न वैधव्यं कदाचन ॥
स्नात्वा गौरीतीर्थवरे सर्वान्कामानवाप्नुयात् ॥३७॥
वरुणश्च ततो दृष्ट्वा पुण्यान्यायतनानि च ॥
चकार च सरो दिव्यं विष्णुभक्तिसमन्वितः ॥ ३८ ॥
नाम्ना वरुणपदं तच्च पापक्षयकरं भुवि ॥
नभस्ये पौर्णमास्यां च संतर्प्य पितृदेवताः ॥ ३९ ॥
श्राद्धं कृत्वा विधानेन पितॄणां श्रद्धयान्वितः ॥
उत्तमं लोकमाप्नोति यत्र गत्वा न शोचति ॥ 7.4.14.४० ॥
प्रदद्यादुदकुम्भांश्च दध्योदनसमन्वितान् ॥
गाश्च वासांसि रत्नानि विष्णुर्मे प्रीयतामिति ॥ ४१ ॥
सरो दृष्ट्वा जलेशस्य सरश्चक्रे धनेश्वरः ॥
यक्षाधिपसरोनाम सुप्रसिद्धं धरातले ॥ ४२ ॥
तथा तत्र नरो भक्त्या संपूज्य पितृदेवताः ॥
सर्वान्कामानवाप्नोति दद्याद्वस्त्रद्विजातये ॥ ४३ ॥
॥ प्रह्लाद उवाच ॥ ॥
विष्णुं वरप्रदं श्रुत्वा भ्रातॄणां ब्रह्मनंदनाः ॥
मंदाकिनी वसिष्ठेन समानीता धरातले ॥ ४४ ॥
अम्बरीषादयः सर्व आजग्मुः कृष्णपालिताम्॥
द्वारवत्यां च ते दृष्ट्वा गोमतीं सागरंगमाम् ॥ ४५ ॥
तीर्थानि देवतानां च पुण्यान्यायतनानि च ॥
तीर्थं पंचनदं चक्रुः प्रजानां पतयस्तथा ॥ ४६ ॥
पंच नद्यः समाहूतास्तत्राऽऽजग्मुः सुरान्विताः ॥
मरीचये गोमती च लक्ष्मणा चात्रये तथा ॥ ४७ ॥
चंद्रभागा चांगिरसे पुलहाय कुशावती ॥
पावनार्थं जांबवती जगाम क्रतवे तथा ॥ ४८ ॥
तासु स्नात्वा महाभागा ब्रह्मपुत्रा यशस्विनः ॥
नाम तस्य तदा चक्रुः पंचनद्यश्च तापसाः ॥४९॥

तस्मात्पंचनदं तीर्थं सर्वपापप्रणाशनम् ॥

स्नातव्यं तत्र मनुजैः स्वर्गमोक्षार्थिभिस्तदा ॥ 7.4.14.५० ॥

तत्र गत्वा सुनियतो गृहीत्वार्घ्यं फलेन हि ॥

मंत्रेणानेन वै विप्रा दद्यादर्घ्यं विधानतः ॥ ५१ ॥

ब्रह्मपुत्रैः समानीताः पंचैताः सरितां वराः ॥

गृह्णंत्वर्घ्यमिमं देव्यः सर्वपापप्रशांतये ॥५२॥

॥ इत्यर्घ्यमन्त्रः ॥ ॥

स्नानं कृत्वा विधानेन पितॄन्संतर्प्पयेन्नरः ॥

श्राद्धं कुर्य्याद्विधानेन श्रद्धया परया युतः ॥५३॥

पंचरत्नं ततो देयं सप्तधान्यं द्विजातये ॥

दीनांधकृपणानां च दानं दद्यात्स्वशक्तितः ॥ ५४ ॥

सर्वान्कामानवाप्नोति विष्णुलोकं स गच्छति ॥

पुत्रपौत्रसमायुक्तः परं सुखमवाप्नुयात् ॥ ५५ ॥

प्रेतयोनिं गता ये च ये च कीटत्वमागताः ॥

सर्वे ते मुक्तिमायांति पितरस्त्रिकुलोद्भवाः ॥ ५६ ॥

श्रुत्वाऽध्यायमिमं पुण्यं शिवलोके च मोदते ॥

सर्वपाप विनिर्मुक्तः स याति परमं पदम् ॥ ५७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये पञ्चनदतीर्थमाहात्म्यवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १५

https://sa.wikisource.org/s/gu0



॥ प्रह्लाद उवाच । ॥

श्रुत्वा तमागतं देवं ब्रह्माणं पितरं स्वकम् ॥

सनकाद्या नमस्कर्त्तुं जग्मुः सर्वे पितामहम् ॥१॥

तं दृष्ट्वा लोककर्त्तारं दण्डवत्प्रणताः क्षितौ ॥

ततो दृष्ट्वा स तनयान्संगृह्य परिषस्वजे ॥२॥

पृष्टश्चानामयं तैस्तु पृष्ट्वा तान्समुवाच ह ॥

आराधितो यैर्भगवान्धन्या यूयं वयं तथा ॥ ३ ॥

संसिद्धिं परमां याता भगवद्दर्शनेन हि ॥

न ज्ञातं पुत्रकाः सम्यगज्ञानाद्बालबुद्धिभिः ॥ ४ ॥

येनार्चितो महादेवस्तस्य तुष्यति केशवः ॥

अनर्चिते नीलकण्ठे न गृह्णात्यर्चनं हरिः ॥

तस्मात्सर्वप्रयत्नेन पूज्यतां नीललोहितः॥ ५॥

येन संपूर्णतां याति कृष्णपूजा कृता सदा॥

तच्छ्रुत्वा वचनं तस्या ब्रह्मपुत्रा ययुस्तदा॥ ६॥

देवागाराग्रतो गत्वा योगसिद्धा महर्षयः॥

लिंगं संस्थापयामासुः शिवभक्तिपुरस्कृता॥ ७॥

संस्थाप्य शिवलिंगं ते स्नानार्थं मुनिसत्तमाः॥

कूपं चक्रुस्ततः सर्व ऋषयः संशितव्रताः ॥ ८ ॥

दृष्ट्वा तममृतप्रख्यं जलपूर्णं सुनिर्मलम् ॥

संहृष्टा ऋषयः सर्वे साधुसाध्विति चाब्रुवन् ॥ ९ ॥

स्थापितं शिवलिंगं च दृष्ट्वा लोकपितामहः ॥

उवाच वचनं ब्रह्मा प्रीतः पुत्रांस्तदा द्विजाः ॥ 7.4.15.१० ॥

॥ ब्रह्मोवाच ॥ ॥

भवद्भिर्योगसंसिद्धैर्यस्मात्संस्थापितः शिवः ॥

तस्मात्सिद्धेश्वर इति ख्यातिं लोके गमिष्यति ॥ ११ ॥

समीपे शितिकण्ठस्य कूपोयमृषिभिः कृतः ॥

ऋषितीर्थमिति ख्यातं तस्माल्लोके भविष्यति। ॥ १२ ॥

विना श्राद्धेन विप्रेन्द्रा दानेन पितृतर्पणात् ॥

भक्तितः स्नानमात्रेण पितृभिः सह मुच्यते ॥ १३ ॥

असत्यवादिनो ये च परनिन्दा परायणाः ॥

स्नानमात्रेण शुध्यन्ति ऋषितीर्थे न संशयः ॥ १४ ॥

स्नानं प्रशस्तं विषुवे मन्वादिषु तथैव च ॥

तथा कृतयुगाद्यायां माघस्य द्विजसत्तमाः ॥ १५ ॥

शिवरात्रौ वसेद्यस्तु लिंगे सिद्धेशसंज्ञिते ॥

स्नात्वा ऋषिकृते तीर्थे किं तस्यान्येन वै द्विजाः ॥

गत्वा तत्र महाभागा गृहीत्वा फलमुत्तमम् ॥ १६ ॥

अर्घ्यं दत्त्वा विधानेन कृत्वा च करयोः कुशान् ॥

गृह्णंत्वर्घ्यमिमं देवा योगसिद्धा महर्षयः ॥ १७ ॥

ऋषितीर्थे च पापघ्ने सिद्धेश्वरसमन्विते ॥

दत्त्वार्घ्यं मृदमालभ्य स्नानं कुर्यात्समाहितः ॥१८॥

तर्पयेच्च पितृन्देवान्मनुष्यांश्च यथाक्रमम् ॥

ततः श्राद्धं प्रकुर्वीत पितॄणां श्रद्धयाऽन्वितः ॥ १९ ॥

तथा च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः ॥

विशेषतः प्रदेयानि फलानि रसवंति च ॥ 7.4.15.२० ॥

दद्याच्छ्यामाकनीवारान्विद्रुमं चाजिनानि च ॥

सप्तधान्यानि शालींश्च सक्तूंश्च गुडसंयुतान् ॥ २१ ॥

गंधमाल्यानि तांबूलं वस्त्राणि च तथा पयः ॥

एवं कृत्वा समग्रं च कृतकृत्यो भवेन्नरः ॥ २२ ॥

पूजयित्वा महादेवं सिद्धेश्वरमुमापतिम् ॥

सफलं जन्म मर्त्यस्य जीवितं च सुजीवितम् ॥ २३ ॥

यः स्नात्वा ऋषितीर्थे तु पश्येत्सिद्धेश्वरं शिवम् ॥

पितरस्तस्य तुष्यन्ति तुष्यन्ति च पितामहाः ॥ २४ ॥

अपुत्रा पुत्रिणः स्युस्ते पुत्रिणश्चापि पौत्रिणः ॥

निर्धना धनवंतश्च सिद्धेश्वररता नराः ॥ २५ ॥

दुष्कृतं याति विलयं सुकृतं च विवर्द्धते ॥

भवेन्मनोरथावाप्तिः प्रणते सिद्धनायके ॥ २६ ॥

ऋषितीर्थे नरः स्नात्वा दृष्ट्वा सिद्धेश्वरं हरम् ॥

सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ २७ ॥

शिवरात्र्यां विशेषेण सिद्धेशः संप्रपूजितः ॥

यंयं कामयते कामं तं ददाति न संशयः ॥

चिन्तामणिसमः स्वामी ह्यथवा चाक्षयो निधिः ॥२८॥

श्रुत्वाध्यायमिमं पुण्यं सर्वाघहरणं परम् ॥

प्रयाति परमं स्थानं मानवः श्रद्धयान्वितः॥२९॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारका माहात्म्य ऋषितीर्थसिद्धेश्वरमाहात्म्यवर्णनंनाम पञ्चदशोऽध्यायः॥१५॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १६

https://sa.wikisource.org/s/gu1
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

प्रह्लाद उवाच॥

ततो गच्छेद्द्विजश्रेष्ठा गदातीर्थमनुत्तमम्॥

यत्र स्नात्वा नरो भक्त्या लभेद्भूदानजं फलम्॥ १ ॥

तर्पयेत्पितृदेवांश्च ऋषींश्चैव यथाक्रमम् ॥

श्राद्धं च कारयेत्तत्र पितृणां तृप्तिहेतवे ॥ २ ॥

गदातीर्थे तु देवेशं विष्णुं वाराहरूपिणम् ॥

समभ्यर्च्य नरो भक्त्या विष्णुलोके महीयते ॥ ३ ॥

नागतीर्थं ततो गच्छेत्सरः परमशो भनम्॥

यत्र स्नात्वा नरः सम्यङ्नागलोकमवाप्नुयात् ॥ ४ ॥

भद्रतीर्थं ततो गच्छेत्सरस्त्रिभुवनार्चितम् ॥

स्नानमात्रेण लभते तिलधेनुफलं नरः ॥ ॥ ५ ॥

चित्रातीर्थं ततो गच्छेत्सरः परमशोभनम् ॥

स्नानमात्रेण लभते घृतधेनुफलं नरः ॥ ६ ॥

यदा द्वारावती विप्रा प्लाविता सागरेण हि ॥

पुण्यानि बहुतीर्थानि च्छन्नानि जलपांसुभिः ॥ ७ ॥

दृश्यानि कतिचित्संति ह्यदृश्यान्यपराणि च ॥

तानि सर्वाणि विप्रेन्द्राः कथयिष्यामि सर्वतः ॥ ८ ॥

चंद्रभागां ततो गच्छेत्सर्वपापप्रणाशिनीम् ॥

यत्र स्नात्वा नरो भक्त्या वाजपेयफलं लभेत् ॥ ९ ॥

देवी चंद्रार्चिता यत्र यशोदा नंदनंदिनी ॥

कौमारिका शक्तिहस्ता खड्गखेटकधारिणी ॥ 7.4.16.१०॥

केश्यादिदैत्यदलिनी स्वसा वै रामकृष्णयोः ॥

यस्या दर्शनमात्रेण सर्वान्कामानवाप्नुयात्॥ ११ ॥

ततो गच्छेत विप्रेन्द्रास्तीर्थं महिषसंज्ञकम् ॥

यस्य दर्शनमात्रेण मुच्यते सर्वपातकैः ॥ १२ ॥

मुक्तिद्वारं ततो गच्छेत्तीर्थं पाप प्रणाशनम्॥ १३ ॥

वसिष्ठेन समानीता मुनिना यत्र गोमती ॥

स्नातो भवति गंगायां यत्र स्नात्वा कलौ युगे ॥ १४ ॥

गोमती निःसृता यस्मा त्प्रविष्टा वरुणालयम् ॥

तत्र स्नात्वा नरो भक्त्या अश्वमेधफलं लभेत् ॥ १५ ॥

भृगुणा हि तपस्तप्तं स्थापिता यत्र चांबिका ॥

भृग्वर्चिता ततो देवी प्रसिद्धा श्रूयते क्षितौ ॥ १६ ॥

संसिद्धिं परमां याति यस्याः संस्मरणान्नरः ॥

शिवलिंगान्यनेकानि यत्र सन्ति महीतले ॥१७॥

ततो गच्छेत विप्रेन्द्राः कालिन्दीसर उत्तमम्॥

कालिन्दी सूर्यतनया सरश्चक्रे त्वनुत्तमम् ॥ १८ ॥

तत्र स्नात्वा नरो भक्त्या न दुर्गतिमवाप्नुयात् ॥

सांबतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम्॥ १९ ॥

कृत्वा श्राद्धं च विधिवल्लभेद्गोदानजं फलम् ॥ 7.4.16.२० ॥

गच्छेच्च शांकरं तीर्थं ततस्त्रैलोक्यपावनम् ॥

यत्र स्नात्वा नरो भक्त्या लभेद्बहुसुवर्णकम् ॥ २१ ॥

ततो नागसरो गच्छेत्तीर्थं पापप्रणाशनम् ॥

पितॄन्सन्तर्प्य विधिवन्नागलोकमवाप्नुयात् ॥ २२ ॥

लक्ष्मीं नदीं ततो गच्छेद्गच्छन्तीं सागरं प्रति ॥

यस्या दर्शनमात्रेण मुच्यते सर्वपातकैः ॥ २३ ॥

श्राद्धे कृते तु विप्रेन्द्राः पितरो मुक्तिमाप्नुयुः ॥

दाने मनोरथावाप्तिर्जायते नात्र संशयः॥ २४॥

कंबुसरस्ततो गच्छेत्तीर्थं पापप्रणाशनम्॥

तर्पणे च कृते श्राद्धे ह्यग्निष्टोमफलं लभेत्॥२५॥

कुशतीर्थं ततो गच्छेत्स्नात्वा सन्तर्पयेत्पितॄन्॥

दानं दत्त्वा यथाशक्त्या निर्मलं लोकमाप्नुयात्॥२६॥

द्युम्नतीर्थं च तत्रैव सर्वपापप्रणाशनम्॥

कृत्वा श्राद्धं च तत्रैव वाजिमेधफलं लभेत् ॥ २७ ॥

कुशतीर्थं ततो गच्छेत्पितॄणां तृप्तिरक्षया ॥

यत्र श्राद्धात्तर्पणाच्च जायते नात्र संशयः ॥ ॥ २८ ॥

जालतीर्थं ततो गच्छेत्सर्वपापहरं शुभम् ॥

दुर्वाससा यत्र शप्ताः कोपाद्यदुकुमारकाः ॥ २९ ॥

देवो जालेश्वरस्तत्र सं बभूव उमापतिः ॥

जालेश्वरं नरो दृष्ट्वा सद्यः पापात्प्रमुच्यते ॥ 7.4.16.३० ॥

संपूज्य देवं भक्त्या च शिवलोकमवाप्नुयात् ॥ ३१ ॥

चक्रस्वामिसुतीर्थं च ततो गच्छेद्धि मानवः ॥

कृत्वा स्नानं पितॄंस्तर्प्य विष्णुलोकमवाप्नुयात् ॥ ३२ ॥

जरत्कारुकृतं तीर्थं सर्वपापप्रणाशनम् ॥

स्नात्वा तत्र द्विजश्रेष्ठा न दुर्गतिमवाप्नुयात् ॥ ३३ ॥

ततो गच्छेद्द्विजश्रेष्ठास्तीर्थं खञ्जनकाभिधम् ॥

आसीत्खञ्जनको नाम दैत्यश्चातिबलान्वितः ॥ ३४ ॥

ततः खञ्जनकं तीर्थं तस्य नाम्नेति विश्रुतम् ॥

तत्र स्नात्वा नरो याति सोमलोकं न संशयः ॥ ३५ ॥

सन्ति तीर्थान्यनेकानि सुगुप्तानि द्विजोत्तमाः ॥

तानि गच्छेत्तु विप्रेन्द्राः सर्वपापापनुत्तये ॥ ३६ ॥

ततो गच्छेद्द्विजश्रेष्ठास्तीर्थमानकदुन्दुभेः ॥

शूरतीर्थं परमकं गदतीर्थमतः परम् ॥ ३७ ॥

गावल्गणस्य तीर्थं च अक्रूरस्य महात्मनः ॥

बलदेवस्य तीर्थं तु उग्रसेनस्य चापरम् ॥ ३८ ॥

अर्जुनस्य च तीर्थं तु सुभद्रातीर्थमेव च ॥

देवकीतीर्थमाद्यं तु रोहिणीतीर्थमेव च ॥ ३९ ॥

उद्धवस्य च तीर्थं तु सारंगाख्यं तथैव च ॥

सत्यभामाकृतं तीर्थं भद्रातीर्थमतः परम् ॥ 7.4.16.४० ॥

जामदग्न्यस्य तीर्थं तु रामस्य च महात्मनः ॥

भासतीर्थं च तत्रैव शुकतीर्थमतः परम् ॥ ४१ ॥

कर्दमस्य च तीर्थं तु कपिलस्य महात्मनः ॥
सोमतीर्थं च तत्रैव रोहिणीतीर्थमेव च ॥ ४२ ॥
एतान्यन्यानि संक्षेपान्मया वः कथितानि च ॥
सर्वपापहराणीह मोक्षदानि न संशयः ॥ ४३ ॥
प्रच्छन्नानि द्विजवरास्तीर्थानि कलिसंक्रमे ॥
प्लावितानि समुद्रेण पांसुनाऽप्युदकेन च ॥ ४४ ॥
एतन्मया वः कथितं संक्षेपात्तीर्थविस्तरम् ॥
आत्मप्रज्ञानुमानेन किमन्यच्छ्रोतुमिच्छथ ॥ ४५ ॥
शृणुयात्परया भक्त्या तीर्थयात्रामिमां द्विजाः ॥
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारका माहात्म्ये तीर्थवृन्दमाहात्म्यवर्णनंनाम षोडशोऽध्यायः ॥ १६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १७

https://sa.wikisource.org/s/gu2



॥ प्रह्लाद उवाच ॥ ॥

कृत्वाऽभिषेकं तीर्थेषु यथावद्दत्त दक्षिणः ॥

पूजयेच्च ततो देवं कृष्णाख्यं पुरुषं परम् ॥ १ ॥

॥ ऋषय ऊचुः ॥ ॥

पूजाविधिं तु कृष्णस्य श्रोतुकामाः समासतः ॥

कथयाऽऽचरणोपेतं यथावद्दैत्यसत्तम ॥ २ ॥

द्वारपालाश्च के तत्र कः पूर्वं कश्च पृष्ठतः ॥

पुरीयं सर्वतो दैत्य तिष्ठते केन पालिता ॥ ३ ॥

आनुपूर्व्यात्समासेन पूजनीया यथाविधि ॥

कथयस्व विधिज्ञोऽसि कृष्णैकचरणप्रियः ॥ ४ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

श्रूयतां पूजनं विप्राः श्रुतपूर्वं विधानतः ॥

कलौ कृष्णस्य विप्रेन्द्रा यथावदनुपूर्वशः ॥ ५ ॥

पूर्वद्वारस्थितान्देवाञ्छृणुध्वं सुसमाहिताः ॥

जयंतः प्रथमं पूज्यः सर्वपापहरः शुभः ॥ ६ ॥

स्थापितो देवराजेन पूजार्थं केशवस्य हि ॥

तस्यैवानुचरान्वक्ष्ये तान्निबोधत सत्तमाः ॥ ७ ॥

वज्रनाभः सुनाभश्च वज्रबाहुर्महा हनुः ॥

वज्रदंष्ट्रो वज्रधारी वज्रहा वज्रलोचनः ॥ ८ ॥

श्वेतमूर्धा श्वेतमाली जयन्तानुचराश्च ते ॥

एते शस्त्रोद्यतकरा रक्षन्ते तमहर्निशम् ॥ ९ ॥

पूर्वद्वारे सुसंनद्धा जयन्तोद्देशकारिणः ॥

पूर्वद्वारे च रक्षार्थं नरनाथो विनायकः ॥ 7.4.17.१० ॥

तरुणार्कश्च वै सूर्यो देव्यो वै सहमातरः ॥

ईश्वरश्चापि दुर्वासा नागराजस्तु तक्षकः ॥ ११ ॥

सेनानीः कार्तिकेयश्च राक्षसश्च महाहनुः ॥

तत्र दीर्घनखोनाम दानवः सुप्रतिष्ठितः ॥ १२ ॥

विश्वावसुश्च गन्धर्वो मेनका च वराप्सराः ॥

सनत्कुमारसहितो वसिष्ठो भगवानृषिः ॥ १३ ॥

एते पूज्याः पूर्वतस्तु न्यग्रोधश्च महाद्रुमः ॥

पूर्वद्वारस्थिता ह्येत आग्नेयाञ्छृणुताथ मे ॥ १४ ॥

ज्वालामुखोऽथ रक्ताक्षः स्मशाननिलयः क्रथः ॥

मांसादो रुधिराहारः कृष्णः कृष्णजटाधरः ॥ १५ ॥

त्रासनो भञ्जनश्चैव ह्याग्न्येय्यां दिशि संस्थिताः ॥

दिशं रक्षंति संनद्धा दक्षिणां शृणुताथ मे ॥ १६ ॥

दण्डपाणिर्महानादः पाशहस्तः सुलोचनः ॥

अनिवर्त्यक्रमश्चैव तथा दुंदुभिनिस्वनः ॥ १७ ॥

खरस्वनो घर्घरवाक्तथा मौनप्रियः सदा ॥

मल्लिकाक्षश्च एतेषां प्रणतो द्वारपालकः ॥ १८ ॥

दक्षिणद्वाररक्षार्थं दुन्दुभिश्च विनायकः ॥

महिषार्कश्च वै सूर्यो भूषणश्च तथेश्वरः ॥ १९ ॥

चण्डिका च तथा देवी ह्यूर्द्ध्वबाहुश्च राक्षसः ॥

पद्माक्षः क्षेत्रपालश्च नागश्चाश्वतरस्तथा ॥ 7.4.17.२० ॥

चित्रांगदश्च गन्धर्व उर्वशी च वराप्सराः ॥

यो राजा सर्ववृक्षाणां शालश्चापि महाद्रुमः ॥ २१ ॥

सनातन ऋषिश्रेष्ठो ह्यगस्त्यश्च महातपाः ॥

एते याम्यदिशि द्वारं रक्षन्ति सुसमाहिताः ॥ २२ ॥

गीतकृन्नर्तको नग्नः कंबली दहनप्रियः ॥

हसनो नेत्रभंगश्च भ्रूविकारो विजृंभकः ॥ २३ ॥

मुशली प्रभुरेतेषां संनद्धो वर्तते द्विजाः ॥

रक्षन्ति नैर्ऋतीमाशां पश्चिमां शृणुतापरान् ॥ २४ ॥

स्वस्तिकः शंखमूर्द्धा च नीलवासाः शुभाननः॥

पाशहस्तः शूलहस्त एकपादैकलोचनः॥ २५॥

पश्चिमायां दिशि तथा पुष्पदन्तो विनायकः॥

उद्धवार्कश्च वै सूर्यः शिवः सत्राजितेश्वरः ॥ २६ ॥

तुंबरुर्नामगन्धर्वो घृताची च वराप्सराः ॥

महोदरश्च नागेन्द्रो राक्षसश्च घटोत्कचः ॥ २७ ॥

दैत्यः पञ्चजनोनाम ऋषिः कश्यप एव च ॥

देवी कपालिनीनाम अश्वत्थस्तु महाद्रुमः ॥ २८ ॥

कपिलः क्षेत्रपालश्च प्रतीचीं पाति वै दिशम् ॥

नमस्कार्यास्तथा पूज्या वायव्यो शृणुतापरान् ॥ २९ ॥

भंजनो भैरवश्चैव कालिकोऽथ घटोदरः ॥

झंझकामर्दनः पिंगो रुरुः सर्वभुजोव्रणी ॥7.4.17.३०॥

सुपार्श्वः प्रभुरेतेषां संनद्धः पालयन्दिशम् ॥

उदीच्यां दिशि विप्रेन्द्राः श्यामलश्च गणाधिपः ॥ ३१ ॥

मन्वन्तको विरूपाक्षो गोलकः श्वेत संप्लुतः ॥

उन्मत्तः प्रभुरेतेषामुदीच्यां पालयन्दिशम् ॥ ३२ ॥

मूलस्थानश्च वै सूर्य्य इन्द्रेशश्च महेश्वरः ॥

देवी कण्ठेश्वरीनाम क्षेत्रपालश्च खञ्जनः ॥ ३३ ॥

वासुकिर्नागराजश्च कूर्मपृष्ठश्च दानवः ॥

सनकश्च ऋषिश्रेष्ठो गोलको राक्षसस्तथा ॥ ३४ ॥

नारदोनाम गन्धर्वो रंभा चैव वराप्सराः ॥

एते पूज्याः प्रयत्नेन प्लक्षोनाम महाद्रुमः ॥ ३५ ॥

यक्षेशः सवितानाम श्यामः पूज्यः प्रयत्नतः ॥

ऐशान्यां दिशि विप्रेन्द्राः स्थिता ये तान्वदाम्यहम्॥ ३६ ॥

दुर्धरो भैरवारावः किंकिणीको महाबलः ॥

करालो विकटो मूलो बलिभुक्तो बलिप्रियः ॥ ३७ ॥

एतेषां क्षेत्रपालानां सस्त्रीणां च द्विजोत्तमाः ॥

नेता प्रभु(म?)श्च स्वामी च जयन्तः पालकस्तथा ॥ ३८ ॥

निगृह्णात्यनुगृह्णाति रक्षिता पुरवासिनाम् ॥

जयन्तादेशमादाय ते दुष्टान्घातयन्ति च ॥ ३९ ॥

नागस्थलस्थितः स्वामी जयन्तः पालकः सदा ॥

नागराजैः परिवृतः पूजनीयः प्रयत्नतः ॥ 7.4.17.४० ॥

मांसप्रियमुखाश्चैत ऐशानीं पांति वै दिशम् ॥

सहस्रशीर्षको देवः शेषो नागस्थलस्थितः ॥

अनन्तो वासुकिश्चैव तक्षकः पद्म एव च ॥ ४१ ॥

शंखः कंबलकश्चैव नागश्चाश्वतरस्तथा ॥

मुक्तकः कालियश्चैव जनकोऽथापराजितः ॥ ४२ ॥

कर्कोटकमुखा नागास्ते च सन्ति सहस्रशः ॥

ते पूज्या गंधपुष्पैश्च बलिभिर्धूपदीपकैः ॥४३॥

पायसेन च मांसेन ह्यन्नाद्यैः सुरया तथा ॥

ततः संपूज्य देवशं जयंतं रक्षिणां वरम् ॥ ४४ ॥

गंध पुष्पोपहारैश्च धूपवस्त्रादिभूषणैः ॥

ततो गच्छेद्द्विजश्रेष्ठाः कृष्णं देवकिनन्दनम् ॥

संपूज्यः प्रथमं तत्र गणेशो रुक्मिसंज्ञकः॥४५॥

॥ ऋषय ऊचुः ॥ ॥

कथं स रुक्मिदैत्येन्द्रो यो दुष्टो गणतां गतः ॥

साक्षाद्भगवतो द्वारि प्रत्यहं पूज्यते नरः ॥ ४६ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

कृष्णाय रुक्मिणीं दातुं यदा भीष्मक उद्यतः ॥

तद्द्वेषात्क्रोधसंयुक्तो रुक्मी चैद्यममन्यत ॥४७॥

यदा जहार भगवान्रुक्मिणीमंबिकालयात् ॥

सर्वान्विद्राव्य वै भूपाञ्जरासन्धमुखान्रणे ॥४८॥

तदा रुक्मी महाबाहुर्भीष्मकस्य सुतो बली ॥

नाहत्वा विनिवर्तिष्ये तमहं यादवं रणे ॥४९॥

प्रतिज्ञां सर्वभूपानां शृण्वतां कृतवान्द्विजाः॥

एवमुक्त्वा स सन्नद्धो युद्धाय परिधावितः॥7.4.17.५०॥

अक्षौहिण्या दलेनैवायुद्ध्यत्कृष्णेन भो द्विजाः ॥

स युध्यमानः कृष्णेन वध्यमानो हतौजसः ॥५१॥

बद्धो भगवता तत्र कृत्वा वैरूप्यमेव च ॥

रामेण बंधनान्मुक्तो मरणाय मतिं दधौ ॥५२॥

रुक्मिणी भ्रातरं दृष्ट्वा मरणे कृतनिश्चयम्॥

उवाच कृष्णं वैदर्भी भ्रातरं ह्यानयस्व मे ॥५३॥

ततस्तत्प्रियकामार्थमनुमान्य जनार्द्दनः॥

चकार पार्षदां मध्ये प्रवरं विघ्ननाशनम् ॥५४॥

एतस्मात्कारणाद्विप्राः प्रथमं पूज्यते सदा ॥

गंधधूपाक्षतैर्वस्त्रैर्मोदकैस्तं प्रतर्पयेत् ॥५५॥

तस्मिंस्तुष्टे जगन्नाथस्तुष्टो भवति नान्यथा ॥५६॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये भगवत्परिचारकवर्गकथनपूर्वकरुक्मिगर्वपरिहारवृत्तान्तवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १८

https://sa.wikisource.org/s/gu3

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ श्रीप्रह्लाद उवाच ॥ ॥

पूजयेद्गणनाथं तं रुक्मिणं रुक्मभूषितम् ॥

दुर्वाससं च कृष्णं च बलभद्रं च भक्तितः ॥ १ ॥

यजत्येको महायज्ञैः संपूर्णवरदक्षिणैः ॥

एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥ २ ॥

वापीकूपतडागानि करोत्येकः समाहितः ॥

एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥ ३ ॥

गोभूतिलहिरण्यादि ददात्येको दिनेदिने ॥

एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥ ४ ॥

प्राणायामादिसंयुक्तो जपध्यानपरायणः ॥

एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥ ५ ॥

जाह्नव्यादिषु तीर्थेषु सुस्नात्वैकः समाहितः ॥

एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥६॥

त्रिभिर्विक्रमणैर्येन विक्रांतं भुवनत्रयम् ॥

त्रिविक्रमं च तं दृष्ट्वा मुच्यते पातकत्रयात् ॥ ७ ॥

॥ ऋषय ऊचुः ॥ ॥

कथं त्रैविक्रमी मूर्त्तिरागतेयं धरातले ॥

कलान्यासाच्च कृष्णत्वं कदेयं प्राप्तवत्यथ ॥ ८ ॥

दैत्य संशयमस्माकं छेत्तुमर्हस्यशेषतः ॥

दुर्वाससश्च कृष्णस्य संभवः कथ्यतामिति ॥ ९ ॥

॥ प्रह्लाद उवाच ॥ ॥

तच्छ्रूयतां द्विजश्रेष्ठा यथा मूर्तिस्त्रिविक्रमी ॥

दुर्वाससा समायुक्ता संभूता धरणीतले ॥ 7.4.18.१० ॥

पूर्वं कृतयुगस्यांते बलिना च पुरंदरः ॥

निर्जित्य भ्रंशितः स्थानात्तदर्थं मधुसूदनः ॥ ॥ ११ ॥

कश्यपाद्वामनो जज्ञे ततोऽभूच्च त्रिविक्रमः ॥

त्रिभिः क्रमैर्मिताँल्लोकानाक्रम्य मधुहा हरिः ॥ १२ ॥

बलिं चकार भगवान्पातालतलवासि नम् ॥

भक्त्या त्वनन्यया कृष्णो दैत्येन परितोषितः ॥ १३ ॥

स्वयं चैवाऽवसत्तत्र भक्त्या क्रीतो हरिस्तदा ॥

अनुग्रहाय भगवान्द्वारपालो बभूव ह ॥१४॥

दुर्वासाश्चापि भगवानात्रेयो मुनिसत्तमः॥

अटंस्तीर्थानि मोक्षार्थं मुक्तिक्षेत्रमचिंतयत् ॥१५॥

एवं चितयमानः स ज्ञानदृष्ट्या महामुनिः॥

गोमत्या संगमो यत्र चक्रतीर्थेन भो द्विजाः ॥ १६ ॥

तन्मुक्तिक्षेत्रमाज्ञाय गमनाय मतिं दधे ॥

सोतीत्य नगरग्रामानुद्यानानि वनानि च ॥ १७ ॥

आनर्त्तविषयं प्राप्य दैत्यभूमिं विवेश ह ॥

निःस्वाध्यायवषट्कारां वेदध्वनिविवर्ज्जिताम् ॥१८॥

कुशेन दैत्यराजेन सेवितां पालितां तथा ॥

बहुम्लेच्छ समाकीर्णामधर्मोपार्जकैर्जनैः ॥ १९ ॥

प्रत्यासन्नामिति ज्ञात्वा चक्रतीर्थमगाद्द्विजः ॥

स्नात्वा च संगमे पुण्ये मोक्ष्येऽहं च कृताह्निकः ॥ 7.4.18.२० ॥

इति कृत्वा स नियमं ययौ शीघ्रं मुनिस्तदा ॥

स्नात्वा शीघ्रं प्रयास्यामि दैत्यभूमिं विहाय च॥२१॥

इत्येवं चिंतयन्मार्गे शीघ्रमेव जगाम सः॥

दृष्ट्वा च संगमं पुण्यं गोमत्या सागरस्य च ॥ २२ ॥

निधाय वाससी तत्र मृदमालभ्य गोमयम् ॥

शिखां च बद्ध्वा करयोः कृत्वा च नियतः कुशान् ॥ ॥ २३ ॥

यावत्स्नाति च विप्रोऽसौ दृष्टो दैत्यैर्दुरात्मभिः ॥

ब्रुवंतः कोऽयमित्येवं हन्यतांहन्यतामिति ॥२४॥

अस्माभिः पालिते देशे कः स्नाति मनुजाधमः ॥

ब्रुवंत इति जघ्नुस्ते जानुभिर्मुष्टिभिस्तथा ॥ २५ ॥

ब्राह्मणोऽहं न हंतव्यः श्रुत्वा चाऽतीव पीडितः ॥

तं दृष्ट्वा हन्यमानं तु ब्राह्मणं तैर्दुरात्मभिः ॥ २६ ॥

निवारयामास च तान्नुरुर्नाम महासुरः ॥

जगृहुस्तस्य वस्त्राणि कुशांस्ते चिक्षिपुर्जले ॥ २७ ॥

चकर्षुश्चरणौ गृह्य शपंतो दुष्टचेतसः ॥

पदे गृहीत्वा तमृषिं नीत्वा सीम्नि व्यसर्जयन् ॥ २८ ॥

तं तदा मूर्छितप्रायं दृष्ट्वोचुः कुपिताश्च ते ॥

अत्रागतो यदि पुनर्हनिष्यामो न संशयः ॥

आनर्त्तविषयांस्तान्वै दृष्ट्वा तत्र जलाशयम् ॥ २९ ॥

प्राणसंशयमापन्नस्ततश्चिंतापरोऽभवत् ॥

शप्येहं यदि दैतेयांस्तपसः किं व्ययेन मे ॥ 7.4.18.३० ॥

अथवा नियमभ्रष्टस्त्यक्ष्ये चेदं कलेवरम् ॥

मम पक्षं च कः कुर्य्यात्को मे दास्यति जीवितम् ॥ ३१ ॥

चक्रतीर्थे च कः स्नानं कारयिष्यति मामिह ॥

को वा दैत्यगणानेताञ्छक्तो जेतुं महामृधे ॥

तं विना पुण्डरीकाक्षं भक्तानामभयप्रदम् ॥ ३२ ॥

ब्रह्मादीनां च नेतारं शरणागतवत्सलम् ॥

चक्रहस्तं विना मेद्य कोन्यः शर्म्मप्रदो भवेत् ॥ ३३ ॥

इति ध्यात्वा च सुचिरं ज्ञात्वा पातालवासि नम् ॥

आत्रेयो विष्णुशरणं जगाम धरणीतलम् ॥ ३४ ॥

उपवासैः कृशो दीनो भूतलं प्रविवेश ह ॥

स दैत्यराजभवनं गन्धर्वाप्सरसावृतम् ॥ ॥ ३५ ॥

शोभितं सुरमुख्येन विष्णुना प्रभविष्णुना ॥

दुर्वासाः प्रविवेशाथ प्रहृष्टेनांतरात्मना॥ ३६ ॥

दुर्वाससमथायांतं दृष्ट्वा दैत्यपतिस्तदा ॥

प्रत्युत्थायार्हयांचक्रे स्वासने संन्यवेशयत् ॥३७॥

मधुपर्कं च गां चैव दत्त्वार्घ्यं पार्श्वतः स्थितः ॥

प्रोवाच प्रणतो ब्रह्मन्कथमत्रागतो भवान् ॥३८॥

सुखोपविष्टः स ऋषिस्तत्रापश्यत्त्रिविक्रमम् ॥

दैत्येन्द्रद्वारदेशे तु तिष्ठन्तमकुतोभयम् ॥ ३९ ॥

तं दृष्ट्वा देवदेवेशं श्रीवत्सांकं चतुर्भुजम् ॥

रुरोद स ऋषिश्रेष्ठस्त्राहित्राहीत्युवाच च ॥ 7.4.18.४० ॥

संसारभयभीतानां दुःखितानां जनार्दन ॥

शत्रुभिः परिभूतानां शरणं भव केशव ॥ ४१ ॥

मम दुःखाभितप्तस्य शत्रुभिः कर्षितस्य च ॥

पराभूतस्य दीनस्य क्षुधया पीडितस्य च ॥ ४२ ॥

अपूर्णनियमस्याऽथ क्लेशितत्य च दानवैः ॥

ब्रह्मण्यदेव विप्रस्य शरणं भव केशव ॥ ४३ ॥

इत्युक्त्वा दर्शयामास शरीरं दैत्यताडितम् ॥

तद्ब्राह्मणावमानं च दृष्ट्वा चुक्रोध वामनः ॥ ४४ ॥

केनापमानितो ब्रह्मन्नियमः केन खण्डितः ॥

कथयस्व महाभाग धर्मपाले मयि स्थिते ॥ ४५ ॥

॥ दुर्वासा उवाच ॥ ॥

मुक्तितीर्थमहं ज्ञात्वा ज्ञानेन मधुसूदन ॥

चक्रतीर्थं गतः स्नातुं यात्रायां हर्षसंयुतः ॥ ४६ ॥

अकृतस्नान एवाऽहं दृष्टो दैत्यैर्दुरासदैः ॥

गले गृहीतः कृष्णाहं मुष्टिभिस्ताडितस्तथा ॥ ४७ ॥

बलाद्गृहीत्वा वासांसि कुशांश्चैवाक्षतैः सह ॥

जले क्षिप्त्वा चरणयोर्गृहीत्वा मां समाकृषन् ॥ ४८ ॥

सीमांते मां तु प्रक्षिप्य प्रोचुस्ते दानवाधमाः ॥

हनिष्यामो यदि पुनरागंतासि न संशयः ॥ ४९ ॥

स्नातोऽहं चक्रतीर्थे तु करिष्ये भोजनं विभो ॥

तस्मात्स्नापय गोविंद नियमं सफलं कुरु ॥ 7.4.18.५० ॥

तव प्रसादात्स्नात्वाऽहं भुक्त्वा च प्रीतमानसः ॥

प्रतिज्ञां सफलां कृत्वा विचरिष्ये महीमिमाम् ॥ ५१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये चक्रतीर्थमाहात्म्ये राक्षसकृतदुर्वासःपराभववृत्तान्तवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः १९

https://sa.wikisource.org/s/gu4



॥ प्रह्लाद उवाच ॥ ॥

तच्छ्रुत्वा देवदेवेशश्चिंतयित्वा पुनःपुनः ॥ उवाच वचनं तत्र दुर्वाससमकल्मषम् ॥ १॥

॥ श्रीभगवानुवाच ॥ ॥

पराधीनोऽस्मि विप्रेन्द्र भक्त्या क्रीतोऽस्मि नान्यथा ॥

बलेरादेशकारी च दैत्येन्द्रवशगो ह्यहम्॥ २ ॥

तस्मात्प्रार्थय विप्रेन्द्र दैत्यं वैरोचनिं बलिम्॥

अस्यादेशात्करिष्यामि यदभीष्टं तवाधुना ॥ ३ ॥

तच्छ्रुत्वा वचनं विप्रो बलिं प्रोवाच सत्वरम् ॥

यज्वनां त्वं वरिष्ठश्च दातॄणां त्वं मतोऽधिकः ॥ ४ ॥

पारावारः कृपायाश्च दयां कुरु ममोपरि ॥

प्रेषयस्व महाभाग देवं दैत्यविनिग्रहे ॥ ५ ॥

संपूर्णनियमः स्नातस्त्वत्प्रसादाद्भवाम्यहम्॥

तच्छुत्वा वचनं दैत्यो नातिहृष्टमनास्तदा ॥

दुर्वाससमुवाचेदं नैतदेवं भविष्यति ॥ ६ ॥

अन्यत्प्रार्थय विप्रेन्द्र यत्ते मनसि वर्त्तते ॥

तद्दास्यामि न सन्देहो यद्यपि स्यात्सुदुर्लभम् ॥ ७ ॥

आत्मानमपि दास्यामि नाहं त्यक्ष्ये हरिं द्विज ॥

बहुभिः सुकृतैः प्राप्तं कथं त्यक्ष्यामि केशवम् ॥ ८ ॥

॥ दुर्वासा उवाच ॥ ॥

नातिलुब्धं हि मां विद्धि किमन्यत्प्रार्थयाम्यहम् ॥

रक्ष मे जीवितं दैत्य प्रेषयस्व जनार्द्दनम् ॥ ९ ॥

॥ बलिरुवाच ॥ ॥

जानासि त्वं यथा विप्र हिरण्याक्षं निपातितम् ॥

भूत्वा यज्ञवराहस्तु दधारोर्वी बलाद्दिवि ॥ 7.4.19.१० ॥

यथा च दैत्यप्रवरमवध्यं दैत्यदानवैः ॥

हतवान्हिरण्यकशिपुं नृसिंहः सर्वगः प्रभुः ॥ ११ ॥

तथैव वृत्रं नमुचिं रक्षो लंकेश संज्ञकम् ॥

जघान मायया विष्णुः सुरार्थं सुरसत्तमः ॥ १२ ॥

प्रथमं वामनो भूत्वा ह्ययाचत पदत्रयम् ॥

पुनस्त्रिविक्रमो भूत्वा भुवनानि जहार मे ॥ १३ ॥

मया पुण्यवशाद्विष्णुर्यदि प्राप्तः कथञ्चन ॥

नाहं त्यक्ष्ये जगन्नाथं मायावामनकं प्रभुम् ॥ १४ ॥

॥ दुर्वासा उवाच ॥ ॥

नाहं भोक्ष्ये विना स्नानं गोमत्युदधिसंगमे ॥

यदि न प्रेष्यसि हरिं ततस्त्यक्ष्ये कलेवरम् ॥ १५ ॥

॥ बलिरुवाच ॥ ॥

यद्भाव्यं तद्भवतु ते यज्जानासि तथा कुरु ॥

ब्रह्मरुद्रेन्द्रनमितं नाहं त्यक्ष्ये पदद्वयम् ॥ १६ ॥

तदा विवदमानौ तौ दृष्ट्वा स जगदीश्वरः ॥

ब्रह्मण्यदेवः कृपया ब्राह्मणं तमुवाच ह ॥ १७ ॥

स्वस्थो भव द्विजश्रेष्ठ स्नापयिष्ये न संशयः ॥

हत्वा दैत्यगणान्सर्वान्गोमत्युदधिसंगमे ॥ १८ ॥

॥ प्रह्लाद उवाच ॥ ॥ ।

श्रुत्वा भगवतो वाक्यं ब्राह्मणं प्रति दैत्यराट् ॥

दृढं जग्राह चरणौ पतित्वा पादयोस्तदा ॥ १९ ॥

ततः समृद्धिमगमत्पादौ दत्त्वा बलेः प्रभुः ॥

शंखचक्रगदापाणिर्विष्णुर्दुर्वाससाऽन्वितः ॥ 7.4.19.२० ॥

प्रस्थितौ तौ तदा दृष्ट्वा दुर्वाससजनार्द्दनौ ॥

अनन्तः पुरुषो ऽगच्छन्मुशली च हलायुधः ॥ २१ ॥

मुशली चाग्रतोऽगच्छत्ततो विष्णुस्त्रिविक्रमः ॥

तयोरन्वगमद्विप्रा दुर्वासा भूतलाद्बहिः ॥ २२ ॥

भित्त्वा रसातलं सर्वे समुत्तस्थुस्त्वरान्विताः ॥

आविर्बभूवुस्तत्रैव गोमत्युदधिसंगमे ॥ २३ ॥

सन्नद्धौ दृढधन्वानौ संकर्षणजनार्दनौ ॥

ऊचतुस्तौ तदा विप्रं कुरु स्नानं यदृच्छया ॥ २४ ॥

तयोस्तु वचनं श्रुत्वा स्नानं चक्रे त्वरान्वितः ॥

स्नात्वा चावश्यकं कर्म कर्तुमारभत द्विजः ॥ २५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये चक्रतीर्थे कृष्णबलरामदुर्वाससमागमपूर्वकं दुर्वाससः स्नानाद्याह्निकविधिविधान-वर्णनंनामैकोनविंशतितमोऽध्यायः ॥ ॥ १९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २०

https://sa.wikisource.org/s/gu5
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ प्रह्लाद उवाच ॥ ॥

ब्रह्मघोषध्वनिं श्रुत्वा दानवो दुर्मुखस्तदा ॥

क्रोधसंरक्तनयनो दुर्वाससमथाब्रवीत् ॥ १ ॥

हन्यमानस्त्वमस्माभिर्यदि मुक्तोसि वै द्विज ॥

कस्मात्पुनः समायातो मरणाय च दुष्टधीः ॥ २ ॥

इत्युक्त्वा मुष्टिना हन्तुं प्राद्रवद्दानवाधमः ॥

प्राह प्रधावमानं तं दुर्वासा मुनिसत्तमः ॥ ३ ॥

स्पर्शं मा कुरु पापिष्ठ ब्राह्मणं मां कृताह्निकम् ॥

तं दृष्ट्वा दानवं विष्णुर्ब्राह्मणं हन्तुमुद्यतम् ॥ १३ ॥

तस्य क्रुद्धो जगन्नाथो दुर्वाससः कृते तदा ॥

चक्रेण क्षुरधारेण शिरश्चिच्छेद लीलया ॥ ५ ॥

॥ प्रह्लाद उवाच ॥ ॥

दुर्मुखं निहतं दृष्ट्वा दानवो दुःसहस्तदा ॥

आक्रोशदुच्चैर्दितिजाञ्छीघ्रमागम्यतामिति ॥६॥

श्रुत्वा दैत्यगणाः सर्वे दुर्मुखं निहतं तदा ॥

दुर्वाससं पुनस्तत्र परित्रातं च विष्णुना ॥ ॥ ७ ॥

कूर्मपृष्ठो गोलकश्च क्रोधनो वेददूषकः ॥

यज्ञघ्नो यज्ञहंता च धर्मान्तकस्तपस्विहा ॥ ८ ॥

एते चान्ये च बहवो विविधायुधपाणयः ॥ ॥

क्रोधसंरक्तनयनाः शपन्तो ब्राह्मणं तथा ॥ ९ ॥

परिक्षिप्य तदात्रेयं विष्णुं संकर्षणं तथा ॥

तोमरैर्भिन्दिपालैश्च मुशलैश्च भुशुंडिभिः ॥ 7.4.20.१० ॥

अस्त्रैर्नानाविधैश्चापि युयुधुः क्रोधमूर्छिताः ॥

दानवैः संवृतो विष्णुः समन्ताद्घोरदर्शनैः ॥ ११ ॥

संकर्षणश्च शुशुभे चंद्रादित्यौ घनैरिव ॥

गृहीत्वा धनुषी दिव्ये शीघ्रं संयोज्य चाशुगान् ॥ १२ ॥

तान्मार्गणगणैर्दैत्याञ्जघ्नतुस्ते महामृधे ॥

ते हन्यमानाः समरे विष्णुना विद्रुता दिशः ॥ १३ ॥

दानवान्विद्रुतान्दृष्ट्वा विष्णुना निहतान्परान् ॥

गोलकः कूर्मपृष्ठश्च मानं कृत्वा न्यवर्तताम् ॥ १४ ॥

संकर्षणं गोलकश्च ह्याजघान त्रिभिः शरैः ॥

अनन्तं व्यथितं दृष्ट्वा गोलकः क्रोधमूर्छितः ॥१५ ॥

उत्पत्य तरसा मूर्ध्नि दुर्वाससमताडयत् ॥

स मुष्टिघाताभिहतश्चुक्रोश पतितः क्षितौ ॥१६॥

संकर्षणस्तु पतितं दृष्ट्वा मूर्ध्नि प्रताडितम् ॥

दृष्ट्वा चुकोप भगवांस्तिष्ठतिष्ठेति चाब्रवीत् ॥

संगृह्य मुशलं वीरो जघान समरे रिपुम् ॥ १७ ॥

मुशलेनाहतो मूर्ध्नि गोलको विकलेन्द्रियः ॥

संभिन्नमस्तकश्चैव पपात च ममार च ॥ १८ ॥

गोलकं पतितं दृष्ट्वा क्रन्दंतं ब्राह्मणं तथा ॥

कूर्मपृष्ठं च भगवान्विष्णुर्हन्तुं मनो दधे ॥

नाराचेन सुतीक्ष्णेन जघान हृदये रिपुम् ॥ १९ ॥

स विष्णुबाणाभिहतस्त्यक्तशस्त्रः पलायितः ॥

तस्मिन्प्रभिन्नेऽतिबले गते वै कूर्मपृष्ठके ॥

अभज्यत बलं सर्वं विद्रुतं च दिशो दश ॥ 7.4.20.२० ॥

तत्प्रभग्नं बलं सर्वं निहतं गोलकं तथा ॥

द्वारस्थः कथयामास दैत्यराज्ञे कुशाय सः ॥ २१ ॥

गोलकं निहतं श्रुत्वा दैत्यानन्यांश्च दैत्यराट् ॥

योधानाज्ञापयामास सन्नद्धान्स्वबलस्य च ॥ २२ ॥

आज्ञां कुशस्य ते लब्ध्वा दैत्याः पंचजनादयः ॥

युद्धायाभिमुखाः सर्वे रथैर्नागैश्च निर्ययुः ॥ २३ ॥

अनीकं दशसाहस्रं कूर्मपृष्ठस्य निर्ययौ ॥

अयुते द्वे रथानां तु नागानामयुतं तथा ॥ २४ ॥

दशायुतानि चाश्वानामुष्ट्राणां च तथैव च ॥

बकश्च निर्ययौ दैत्यो बहुसैन्यसमन्वितः ॥ २५ ॥

तथा दीर्घनखो दैत्यः स्वेनानीकेन संवृतः ॥

मंत्रिपुत्रो महामायो दैत्यराज कुशस्य वै ॥

निर्ययौ विघसो दैत्यः प्रघसश्च महाबलः ॥ २६ ॥

ऊर्द्ध्वबाहुर्वक्रशिराः कञ्चुकश्च शिवोलुकैः ॥

ब्रह्मघ्नो यज्ञहा दैत्यो राहुर्बर्बरकस्तथा ॥ २७ ॥

सुनामा वसुनामा च मंत्रिणौ बुद्धिसत्तमौ ॥

सेनापतिश्चोग्रदंष्टस्तस्य भ्राता महाहनुः ॥ २८ ॥

एते चान्ये च बहवो दैत्याः क्रोधसमन्विताः ॥

महता रथघोषेण निर्ययुर्युद्धकांक्षिणः ॥ २९ ॥

स्नात्वा शुक्लांबरधरः शुक्लमालाविभूषितः ॥

कुशः शंभुं महादेवं भवानीपतिमव्ययम् ॥

आर्चयमास भूतेशं परमेण समाधिना ॥ 7.4.20.३० ॥

पंचामृतेन संस्नाप्य तथा गन्धैर्वि लिप्य च ॥

अर्चयामास दैत्येन्द्रो ह्यनेककुसुमोत्करैः ॥ ३१ ॥

गीतवादित्रशब्दैश्च तथा मंगलवाचकैः ॥

पूजयित्वा महादेवं ब्राह्मणान्स्वस्ति वाच्य च ॥ ३२ ॥

भूषयित्वा भूषणैश्च मणिवज्रविभूषणैः ॥

मुकुटेनार्कवर्णेन ज्वलद्भास्कररोचिषा ॥ ३३ ॥

भ्राजमानो दैत्यराजो हारेणाऽतीव शोभितः ॥

संनह्य च महाबाहुः सारथिं समुदैक्षत ॥ ३४ ॥

सुनामानं वसुं चैव मंत्रिणौ वाक्यमब्रवीत् ॥

कश्चायमसुरान्हंति किमर्थं ज्ञायतामिति ॥ ॥ ३५ ॥

तस्य तद्वचनं श्रुत्वा रुरुर्वचनमब्रवीत् ॥

गतेह्नि ब्राह्मणः स्नातुं गोमत्याः संगमे किल ॥ ३६ ॥

आगतः प्रतिषिद्धः सन्दैत्यैस्तत्र मही पते ॥

तेन विष्णुः समानीतः संकर्षणसमन्वितः ॥ ३७ ॥

सोऽस्मान्हंति महाराज ब्रह्मण्यो जगदीश्वरः ॥

तेन ते बहवो दैत्या हताः केचित्पलायिताः ॥ ३८ ॥

॥ सुनामोवाच ॥ ॥

स्नात्वा गच्छतु विप्रोऽसौ वासुदेवसमन्वितः ॥

राजन्वृथा विग्रहेण किं कार्यं कथयस्व नः ॥ ३९ ॥

तस्य तद्वचनं श्रुत्वा कुशः क्रोधसमन्वितः ॥

कथं गोलकहंतारं न हनिष्यामि केशवम् ॥7.4.20.४०॥

एतावदुक्त्वा स क्रुद्धो ययौ दैत्यपतिस्तदा ॥

ततो वादित्र शब्दैश्च भेरीशब्दैः समन्वितः ॥ ४१ ॥

ददर्श तत्र देवेशं सहस्रशिरसं प्रभुम् ॥

तथा विष्णुं चक्रपाणिं दुर्वाससमकल्मषम् ॥ ४२ ॥

ईश्वरांशं च तं दृष्ट्वा न हन्तव्योऽयमीश्वरः ॥

विष्णुमुद्दिश्य तान्सर्वान्प्रेरयामास दानवान् ॥ ४३ ॥

नागैः पर्वतसंकाशै रथैर्जलदसन्निभैः ॥

अश्वैर्महाजवैश्चैव परिवव्रुः समंततः ॥ ४४ ॥

ततो युद्धं समभवद्देवयोर्दानवैः सह ॥

आच्छादितौ तौ ददृशुर्दैत्यैर्देवगणास्तदा ॥ ४५ ॥

ततो गृहीत्वा मुशलं हलं च बलवान्हली ॥

जघान दैत्यप्रवरान्कालानलयमोपमान् ॥ ४६ ॥

ते हन्यमाना दैतेया बलेन बलशालिना ॥

सर्वतो विद्रुता भग्नाः कुशमेव ययुस्तदा ॥ ४७ ॥

बकश्च यज्ञकोपश्च ब्रह्मघ्नो वेददूषकः ॥

महामखघ्नो जंभश्च राहुर्वक्रशिरास्तथा ॥४८॥

एते चान्ये च बहवः प्रवरा दानवोत्तमाः ॥

क्रोधसंरक्तनयना बिभिदुस्ते जनार्द्दनम् ॥ ४९ ॥

ततः क्रोधसमायुक्तौ संकर्षणजनार्दनौ ॥

चक्रलांगलघातेन जघ्नतुर्दानवोत्तमान् ॥ 7.4.20.५० ॥ ।

चक्रेण च शिरः कायाच्चिच्छेदाशु बकस्य वै ॥
चूर्णयामास मुशली यज्ञहंतारमेव च ॥ ५१ ॥
राहुं जघान चक्रेण तथान्यान्मुशलेन च ॥
ते हता हन्यमानाश्च भग्ना जग्मुर्दिशो दश ॥५२॥
कुशः स्वां वाहिनीं दृष्ट्वा विद्रुतां निहतां तथा ॥
क्रोधसंरक्तनयनः प्राह याहीति सारथिम् ॥५३॥
स तयोरंतिकं गत्वा नाम विश्राव्य चात्मनः ॥
उवाच कस्त्वं दैतेयान्मम हंसि गदाधर ॥ ५४ ॥
॥ श्रीवासुदेव उवाच ॥ ॥
यस्माद्विमुक्तिदं पुण्यं गोमत्युदधिसंगमम् ॥
रुद्धं दुरात्मभिः पापैस्तस्मात्ते निहता मया ॥ ५५ ॥
॥ कुश उवाच ॥ ॥
मां न जानासि चात्रस्थं कथं जीवन्प्रयास्यसि ॥
युध्यस्व त्वं स्थिरो भूत्वा ततस्त्यक्ष्यसि जीवितम् ॥ ५६ ॥
इत्युक्त्वा पंचविंशत्या ताडयामास केशवम् ॥
अनंतं चाष्टभिर्बाणैर्हत्वाऽऽत्रेयं निरीक्ष्य तम् ॥
ईश्वरांशं च तं दृष्ट्वा प्राह याहीति मा चिरम् ॥ ५७ ॥
स बाणैर्भिन्नसर्वांगः शार्ङ्गं हि धनुषां वरम् ॥
विकृष्य घातयामास चतुर्भिश्चतुरो हयान् ॥ ५८ ॥
सारथेस्तु शिरः कायादर्द्धचंद्रेण पत्त्रिणा ॥
चिच्छेद धनुरेकेन ध्वजमेकेन चिच्छिदे ॥ ५९ ॥
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥
प्रगृह्य च महाखड्गमुवाच वचनं तदा ॥ 7.4.20.६० ॥
यदि त्वां पातयिष्यामि कीर्तिर्मे ह्यतुला भवेत् ॥
पातितोऽहं त्वया वीर यास्यामि परमां गतिम् ॥ ६१ ॥
तिष्ठतिष्ठ हरे स्थाने शरणं मे सदाशिवः ॥
धावंतमतिसंक्रुद्धं खड्गहस्तं निरीक्ष्य तम् ॥
चक्रेण शितधारेण शिरश्चिच्छेद लीलया ॥ ६२ ॥

तं छिन्नशिरसं भूमौ पतितं वीक्ष्य दानवम् ॥
अथोवाह रथेनाजौ दैत्यः खंजनकस्तथा ॥ ६३ ॥
अपयाते कुशे दैत्ये विष्णुः संकर्षणस्तदा ॥
दुर्वाससा च सहितः संन्यवर्तत हर्षितः ॥ ६४ ॥
शिवालये तु पतितं कुशं निक्षिप्य दानवः ॥
स्नानगन्धार्चनैर्धूपैर्गीतवाद्यैरतोषयत् ॥ ६५ ॥
अवाप जीवितं सद्यः प्रसादाच्छंकरस्य च ॥
उत्थितः स तदा दैत्यो ब्रुवञ्छिवशिवेति च ॥ ६६ ॥
तं पुनर्जीवितं दृष्ट्वा दैत्यं दैत्यगणस्तदा ॥
उवाच सुमना वाक्यं वर्द्धस्व सुचिरं विभो ॥६७॥
स्नापयित्वा यदि पुनर्ब्राह्मणं विनिवर्त्तते ॥
यथेष्टं गच्छतु तदा किं वृथा विग्रहेण ते ॥ ६८ ॥
तस्य तद्वचनं श्रुत्वा कुशो वचनमब्रवीत् ॥
गच्छ प्रेषय तौ शीघ्रं विप्रत्राणकरावुभौ ॥ ६९ ॥
स च राज्ञा समादिष्ट सुमना मुनिसत्तमाः ॥
उवाच विष्णुमानम्य नमस्कृत्य हलायुधम् ॥ 7.4.20.७० ॥
कुशेन प्रेषितश्चास्मि समीपे ते जनार्दन ॥
किं तवापकृतं नाथ येन दैत्याञ्जिघांससि॥ ७१॥
दुर्वाससं स्नापयित्वा गच्छ मुक्तोऽसि मानद ॥
अमरत्वं महादेवात्प्राप्तं विद्धि कुशेन हि ॥ ७२ ॥ ॥
॥ श्रीविष्णुरुवाच ॥ ॥
मुक्तितीर्थमिदं रुद्धं भवद्भिः पापकर्मभिः ॥
तस्माद्धनिष्ये सर्वांश्च दानवान्नात्र संशयः ॥७३॥
दुर्वाससश्च ये दर्भास्तिलाश्चैवाक्षतैः सह ॥
पुनस्तानानयध्वं हि क्षिप्ता ये वरुणालये ॥ ७४ ॥
सवाहनपरीवाराः सजातिकुलबांधवाः ॥
पुण्यतीर्थमिदं हित्वा प्रविशध्वं धरातले ॥ ७५ ॥
सुमनास्तद्वचः श्रुत्वा क्रोधसंरक्तलोचनः ॥

युध्यध्वमिति तं चोक्त्वा नैतदेवं भविष्यति ॥ ७६ ॥

कुशाय कथयामास यदुक्तं शार्ङ्गधन्विना ॥

क्रुद्धस्तद्वचनं श्रुत्वा मंत्रिणा समुदीरितम् ॥ ७७ ॥

रथमारुह्य वेगेन ययौ योद्धुमरिंदमः ॥

संस्मृत्य मनसा देवं पिनाकिं वृषभध्वजम् ॥ ७८ ॥

ततः प्रववृते युद्धं सुमहल्लोमहर्षणम् ॥

अन्येषां दानवानां च केशवस्य कुशस्य च ॥ ७९ ॥

यज्ञघ्नो गदया गुर्व्या संकर्षणमताडयत् ॥

संकर्षणहतः शीर्ष्णि मुसलेन पपात ह ॥ 7.4.20.८० ॥

कञ्चुकं च जघानाशु चक्रेण भगवान्हरिः ॥

उल्मुकश्चाथ निहतो ब्रह्मघ्नश्च निपातितः ॥ ॥ ८१ ॥

एते चान्ये च बहवो घातिताः केशवेन हि ॥

दानवान्पतितान्दृष्ट्वा कुशः परमकोपितः ॥८२॥

जघान युधि संरब्धः परमास्त्रेण केशवम् ॥

भगवान्क्रोधसंयुक्तश्चक्रेण चाहरच्छिरः ॥ ८३ ॥

तं छिन्नशिरसं भूमौ पातितं वीक्ष्य केशवः ॥

चिच्छेद बाहू पादौ च खड्गेन तिलशस्तथा ॥८४॥

खंडशो घातितं दृष्ट्वा केशवेन कुशं तदा ॥

संगृह्य ते पुनर्दैत्या निन्युः सर्वे शिवालयम् ॥ ८५ ॥

प्रसादाच्छूलिनः सद्यो जीवितं प्राप्य दानवः ॥

उत्थितः सहसा क्रुद्धः क्व विष्णुरिति चाब्रवीत् ॥ ८६ ॥

गदामुद्यम्य संक्रुद्धो योद्धुमागाज्जनार्द्दनम् ॥

तमुद्यतगदं दृष्ट्वा निहतं जीवितं पुनः ॥ ॥ ८७ ॥

दुर्वाससमथोवाच किमिदं न म्रियेत यत् ॥

मयाऽसकृच्छिरश्छिन्नं खंडशस्तिलशः कृतम् ॥ ८८ ॥

जीवत्ययं पुनः कस्मात्कारणं कथ यस्व नः ॥

इत्युक्तश्चिंतयामास ध्यानेन ऋषिसत्तमः ॥ ८९ ॥

ज्ञात्वा तत्कारणं सर्वमुवाच मधुसूदनम् ॥

महादेवेन तुष्टेन कुशोऽयममरः कृतः ॥ ॥ 7.4.20.९० ॥

खंडशश्च कृतश्चापि न च प्राणैर्वियुज्यते ॥

ततः स विस्मयाविष्टो हंतव्योऽयं मया कथम् ॥ ९१ ॥

उपायं च करिष्यामि येनायं न भवे दिति ॥

ततः स जीवितं प्राप्य प्रसादाच्छंकरस्य च ॥

चर्मखड्गमथादाय तिष्ठतिष्ठेति चाब्रवीत् ॥ ९२ ॥

तमायांतं ततो दृष्ट्वा कुशं शिवपरिग्रहम् ॥

जघान गदया गुर्व्या गदाहस्तं तदा कुशम् ॥ ९३ ॥

स भिन्नमूर्द्धा न्यपतत्केशवेनाभिताडितः ॥

भूमौ निपतितं वेगात्परिगृह्य कुशं हरिः ॥ ॥ ९४ ॥

गर्ते निक्षिप्य तद्देहं पूरयामास वै पुनः ॥

लिंगं संस्थापयामास तस्योपरि जनार्द्दनः ॥ ९५ ॥

स लब्धसंज्ञो दनुजः शिवलिंगमपश्यत ॥

आत्मोपरिस्थितं तच्च तदा चिन्तापरोऽभवत्॥ ९६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये चक्रतीर्थे राक्षसकुशविष्णुयुद्धे कुशराक्षसोपरि विष्णुना शिवलिंगस्थापनवर्णनंनाम विंशतितमोऽध्यायः ॥ २० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २१



॥ श्रीप्रह्लाद उवाच ॥ ॥

शिवलिगमलंघ्यं हि बुद्धिपूर्वं हतो ह्यहम् ॥

उवाच कृष्णं दनुजश्छलितोऽहं त्वयाऽनघ ॥ १ ॥

॥ श्रीविष्णु रुवाच ॥ ॥

परितुष्टोस्मि ते दैत्य शौर्येण शिवसंश्रयात् ॥

वरं वरय भद्रं ते यदिच्छसि महामते ॥ २ ॥

॥ कुश उवाच ॥ ॥

यथा पूज्यो महादेवो मम त्वं च तथा हरे ॥

एक एव द्विधामूर्तिस्तस्मात्त्वां वरयाम्यहम् ॥ ३ ॥

शिवलिंगं त्वया नाथ स्थापितं यन्ममोपरि ॥

मम नाम्ना भवतु च कुशेश्वर इति स्मृतम् ॥४॥

अनुग्राह्यो यद्यहं ते मम कीर्तिर्भवत्वियम् ॥

एवं भविष्यतीत्युक्तस्तत्रैवावस्थितोऽसुरः ॥ ५ ॥

ततोऽन्यदानवान्सर्वान्प्रेषयामास माधवः ॥

रसातलगता केचित्केचिद्विष्णुं समागताः ॥ ६ ॥

अनंतः संस्थितस्तत्र विष्णुश्च तदनंतरम् ॥

ज्ञात्वा विमुक्तिदं तीर्थं दुर्वासा मुनिपुंगवः ॥ ७ ॥

गोमत्यां चक्रतीर्थे च भगवांश्च त्रिविक्रमः ॥

तेन तन्मुक्तिदं मत्वा दुर्वासास्तत्र संस्थितः ॥ ८ ॥

एवं त्रिविक्रमः स्वामी तदाप्रभृति संस्थितः ॥

कलौ पुनः कलान्यासात्कृष्णत्वमगमत्प्रभुः ॥ ९ ॥

॥ प्रह्लाद उवाच ॥ ॥

पूजाविधिं हरेर्विप्राः शृणुध्वं सुसमाहिताः ॥

विशेषात्फलदः प्रोक्तः पूजितो मधुमाधवे ॥ 7.4.21.१० ॥

मधुसूदनीं नरो यस्तु द्वारवत्यां करोति च ॥
पूजयेत्कृष्णदेवं च स्नापयित्वा विलिप्य च ॥ ११ ॥
गन्धैश्च वाससाऽऽच्छाद्य धूपैर्दीपैरनेकधा ॥
नैवेद्यैर्भूषणैश्चैव तांबूलेन फलेन च ॥ १२ ॥
आरार्तिकेन संपूज्य दण्डवत्प्रणिपत्य च ॥
घृतेन दीपकं दत्त्वा रात्रौ जागरणं तथा ॥
कुर्य्याच्च गीतवादित्रैस्तथा पुस्तकवाचकैः ॥ १३ ॥
कृत्वा चैवं विधिं भक्त्या सर्वान्कामानवाप्नु यात् ॥ १४ ॥
तथा नभसि सम्पूज्य पवित्रारोपणेन च ॥
पितृणां चाक्षया तृप्तिः सफलाः स्युर्मनोरथाः ॥ १५ ॥
प्रबोधवासरे प्राप्ते कार्तिके द्विज सत्तमाः ॥
संपूज्य कृष्णं देवेशं परां गतिमवाप्नुयात् ॥ १६ ॥
तथा नभस्ये संपूज्य पवित्रारोपणेन च ॥
सर्वान्कामानवाप्नोति विष्णुलोकं च गच्छति ॥ १७ ॥
युगादिषु च संपूज्य ह्ययने दक्षिणोत्तरे ॥
आषाढज्येष्ठमाघेषु पौषादिद्वादशीषु च ॥ १८ ॥
कलौ कृष्णं पूजयित्वा गोमत्युदधिसंगमे ॥
विमलं लोकमाप्नोति यत्र गत्वा न शोचति ॥ १९ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये गोमतीतीरस्थ क्षेत्रस्थ भगवत्पूजामाहात्म्यवर्णनंनामैकविंशतितमोऽध्यायः ॥ २१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २२

https://sa.wikisource.org/s/gwq
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ श्रीप्रह्लाद उवाच ॥ ॥

शृणुध्वं द्विजशार्दूला यथावत्कथयामि वः ॥

स्नापयित्वा जगन्नाथं तथा गंधैर्विलिप्य च ॥

पूजयित्वा तुलस्या तु भूषयित्वा च भूषणैः ॥ १ ॥

नैवेद्येन च सन्तर्प्य तथा नीराजनादिभिः ॥

दुर्वाससं तथा पूज्य पुंडरीकाक्षमेव च ॥२॥

अनंतं वैनतेयादीन्भक्त्या सम्पूज्य मानवः ॥

दद्याद्दानं स्वशक्त्या च वित्तशाठ्यविवर्जितः ॥ ३ ॥

दीनांधकृपणांस्तत्र तर्पयेच्च समाश्रितान् ॥ ४ ॥

रुक्मिणीं च ततो गच्छेद्विदर्भतनयां नरः ॥

उपहृत्योपहारांश्च बलिभिर्गंधदीपकैः ॥ ५ ॥

पीडयंति ग्रहास्तावद्व्याधयोऽभिभवंति च ॥

भक्त्या न पश्यति नरो यावत्कृष्णप्रियां कलौ ॥ ६ ॥

उपसर्गभयं तावद्दुःखं च भूतसंभवम् ॥

भक्त्या न पश्यति नरो यावत्कृष्णप्रियां कलौ ॥ ७ ॥

भवेद्दरिद्री दुःखी च तावद्वै परयाचकः ॥

भक्त्या न पश्यति नरो यावत्कृष्णप्रियां कलौ ॥ ८ ॥

तावन्मृतप्रजा नारी दुर्भाग्या दुःखसंयुता ॥

भक्त्या न पश्यति यदा नारीकृष्णप्रियां तथा ॥ ९ ॥

तावच्छत्रुभयं पुंसां गृहभंगं च मूर्खता ॥

भक्त्या न पश्यति नरो यावत्कृष्णप्रियां कलौ॥7.4.22.१०॥

संपूज्य कृष्णं विधिवद्रुक्मिणीं पूजयेत्ततः ॥

स्नापयेद्दधिदुग्धाभ्यां मधुशर्करया तथा ॥ ११ ॥

घृतेन विविधैर्गन्धैस्तथैवेक्षुरसेन च ॥

तीर्थोदकेन संस्नाप्य सर्वान्कामानवाप्नुयात् ॥ १२ ॥

एवं यः स्नापये द्देवीं रुक्मिणीं कृष्णवल्लभाम् ॥

न तस्य दुर्ल्लभं किंचिदिह लोके परत्र च ॥ १३ ॥

श्रीखण्डकुंकुमेनैव तथा मृगमदेन च ॥

विलेपयेदपुत्रस्तु स पुत्रं लभते धुवम् ॥ १४ ॥

सदा स भोगी भवति रूपवाञ्जनपूजितः ॥

पूजयेन्मालतीपुष्पैः शतपत्रैः सुगन्धिभिः ॥ १५ ॥

करवीरैर्मल्लिकाभिश्च चम्पकैस्तु विशेषतः ॥

कमलैर्वारिसंभूतैः केतकीभिश्च पाटलैः ॥ १६ ॥

धूपेनागुरुणा चैव पूजयेद्गौग्गु लेन च ॥

वस्त्रैः सुकोमलैः शुभ्रैर्नानादेशसमुद्भवैः ॥ १७ ॥

भक्त्या संछाद्य वैदर्भीं रुक्मिणीं कृष्णवल्लभाम् ॥

भूषणैर्भूषयेद्देवीं मणिरत्न समन्वितैः ॥ १८ ॥

तस्मिन्कुले नाऽसुखः स्यान्नाऽधर्मो नाऽधनस्तथा ॥

नाऽपुत्रो न विकर्मस्थः कितवो नीचसेवकः ॥ १९ ॥

यैः पूजिता जगन्माता रुक्मिणी मानवैः कलौ ॥

नैवेद्यैर्भक्ष्यभोज्याद्यैर्देवी मे प्रीयतामिति ॥

तांबूलं च सकर्पूरं भावेन विनिवेदयेत् ॥ 7.4.22.२० ॥

गृहीत्वा च फलं शुभ्रं ह्यक्षतैश्च समन्वितम्॥

मन्त्रेणानेन वै विप्रा ह्यर्घ्यं दद्याद्विधानतः ॥ २१ ॥

कृष्णप्रिये नमस्तुभ्यं विदर्भाधिपनंदिनि ॥

सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते ॥ २२ ॥

आरार्तिकं ततः कुर्याज्ज्वलन्तं भावनान्वितः ॥

नीराजनं प्रकर्तव्यं कर्पूरेण विशेषतः ॥ २३ ॥

शंखे कृत्वा तु पानीयं भ्रामयेद्भावसंयुतः ॥

भ्रामयित्वा च शिरसा धारणीयं विशुद्धये ॥ २४ ॥

दण्डवत्प्रणमेद्भूमौ नमः कृष्णप्रियेति च ॥

विप्रपत्नीश्च विप्रांश्च पूजयेच्छक्तितो द्विजाः॥ २५ ॥

ग्रीवासूत्रकसिन्दूरैर्वासोभिः कञ्चुकैस्तथा ॥

सुगन्धकुसुमैरर्च्य कुंकुमेन विलिप्य च ॥ २६ ॥

कौसुंभकैः कज्जलेन तांबूलेन च तोषयेत् ॥

भक्ष्यैर्भोज्यैमोदकैश्च इक्षुभिर्मधुसर्पिभिः ॥ २७ ॥

प्रीतो भवति देवेशो रुक्मिण्या सह केशवः ॥

विशेषतः फलानीह दातव्यानि द्विजोत्तमाः ॥ २८ ॥

उन्मत्तकं ततो देवं द्वारपालं प्रपूजयेत् ॥

स्नापयित्वा सुगन्धेन कुंकुमेन विलिप्य च ॥ २९ ॥

धूपेन धूपयित्वा तु पुष्पाद्यैः संप्रपूजयेत ॥

नैवेद्यैर्भक्ष्यभोज्यैश्च मांसेन सुरया तथा ॥ 7.4.22.३० ॥

प्रभूतबलिभिश्चैव पिष्टेन विविधेन च ॥

योगिनीनां चतुःषष्टिं तस्मिन्पीठे प्रपूजयेत् ॥ ३१ ॥

अर्चयेद्धरसिद्धिं च क्षेत्रपालं च सर्वशः ॥

विरूपस्वामिनीं तत्र तथा वै सप्तमातरः ॥ ३२ ॥

अष्टमूर्तीः कृष्णपत्नीः पीठे तस्मिन्प्रपूजयेत् ॥

रुक्मिणीं सत्यभामां च शुभां जांबवतीं तथा ॥ ३३ ॥

मित्रविन्दां च कालिन्दीं भद्रां नाग्नजितीं तथा ॥

अष्टमीं लक्ष्मणां तत्र पूजयेत्कृष्णवल्लभाः ॥ ३४ ॥

एताः संपूज्य विधिवत्संतर्प्य दधिपायसैः ॥

गीतवादित्रघोषेण दीपैर्जागरणेन च ॥ ३५ ॥

पुत्र पौत्रसमायुक्तो धनधान्यसमन्वितः ॥

सर्वान्कामानवाप्नोति तस्य विष्णुः प्रसीदति ॥ ३६ ॥

किं तस्य वहुदानैस्तु किं व्रतैर्नियमैस्तथा ॥

येन दृष्टा जगन्माता रुक्मिणी कृष्णवल्लभा ॥ ३७ ॥

किं यज्ञैर्बहुभिस्तस्य संपूर्णवरदक्षिणैः ॥

येन दृष्टा जगन्माता रुक्मिणी कृष्णवल्लभा ॥ ३८ ॥

तेन दत्तं हुतं तेन जप्तं तेन सनातनम् ॥

येन दृष्टा जगन्माता रुक्मिणी कृष्णवल्लभा ॥३९॥

हेलया तेन संप्राप्ताः सिद्धयोऽष्टौ न संशयः ॥
गत्वा द्वारवतीं येन दृष्टा केशववल्लभा ॥ 7.4.22.४० ॥
सफलं जीवितं तस्य सफलाश्च मनोरथाः ॥
कलौ कृष्णपुरीं गत्वा दृष्ट्वा माधववल्लभाम् ॥ ४१ ॥
देव राज्येन किं तस्य तथा मुक्तिपदेन च ॥
न दृष्टा चेज्जगन्माता रुक्मिणी कृष्णवल्लभा ॥ ४२ ॥
तस्मात्सर्वप्रयत्नेन रुक्मिणी कृष्णवल्लभा ॥
सदाऽर्चनीया मनुजैर्द्रष्टव्या सर्वकामदा॥४३॥
विशेषतः पूजनीया नवरात्रे सदाश्विने ॥
नवम्यां तु नरैर्यैस्तु पूजिता हरिवल्लभा॥४१॥
स्नानगन्धादि वस्त्रैस्तु प्रभूतबलिभिस्तथा ॥
गीतवादित्रघोषेण दीपजागरणेन च ॥
तोषिता भीष्मकसुता सर्वान्कामान्प्रयच्छति ॥ ४५ ॥
तथा दीपोत्सवदिने चतुर्द्दश्यां समाहितः ॥
पूजयित्वा यथाशास्त्रमीप्सितं लभते फलम् ॥ ४६ ॥
माघमासे सिताष्टम्यां कन्दर्प्पजननी तु यैः ॥
पूजिता गन्धपुष्पाद्यैरुपहारैरनेकशः ॥
सफलं जीवितं तेषां सफलाश्च मनोरथाः ॥ ४७ ॥
द्वादश्यां चैत्रमासे तु कृष्णेन सह रुक्मिणीम् ॥
ये पश्यंति नरा देवीं रुक्मिणीं मधुमाधवे ॥
कृष्णेन सह गच्छन्तीं धन्यास्ते मानवा भुवि ॥४८॥
पुत्रपौत्रसमायुक्ता धनधान्यसमन्विताः॥
जीविते व्याधिनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ४९ ॥
ज्येष्ठाष्टम्यां नरैर्यैस्तु पूजिता कृष्णवल्लभा ॥
तेषां मनोरथावाप्तिर्जायते नात्र संशयः ॥ 7.4.22.५० ॥
तथा भाद्रपदे मासि मातुः पूजा कृता तु यैः ॥
सर्वपापविनिर्मुक्ता यांति विष्णुपदे नराः ॥ ५१ ॥
कार्तिके मासि द्वादश्यां रुक्मिणीं कृष्णसंयुताम् ॥

ये पश्यंति नरास्तेषां न भयं विद्यते क्वचित् ॥ ५२ ॥

यस्त्वेकत्र स्थितां पश्येद्रुक्मिणीं कृष्णसंयुताम् ॥

सफलं जीवितं तस्य ह्यक्षया पुत्रसंततिः ॥

अक्षयं धनधान्यं च कदा नैव दरिद्रता ॥ ५३ ॥

य एवं रुक्मिणीं पश्येत्पूजयेत्कृष्णवल्लभाम् ॥

सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ५४ ॥

यः स्नायात्सर्वतीर्थेषु दानं शक्त्या ददाति यः ॥

तस्य पुण्यफलं चैव लोके यज्जायते द्विजाः ॥

कथितं तदशेषेण कलौ कृष्णस्य संस्थितौ ॥ ५५ ॥

द्वारावतीं विना विप्रा मुक्तिर्न प्राप्यते कलौ ॥

पुराणसंहितामेतां कृतवान्बलिबन्धनः ॥

ददौ स तु प्रसादेन पूर्वं मह्यं द्विजोत्तमाः ॥ ५६ ॥

इहार्थे च पुरा प्रोक्तं इतिहासो द्विजोत्तमाः ॥

प्रद्युम्नेन सुसंवादे मार्कण्डेन महात्मना ॥ ५७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये रुक्मिणीपूजनमाहात्म्यवर्णनंनाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥ छ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २३

https://sa.wikisource.org/s/gwr
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ मार्कंडेय उवाच ॥ ॥

द्वारकायाश्च माहात्म्यमिंद्रद्युम्न निबोध मे ॥

कलौ निवसते यत्र क्लेशहा रुक्मिणीपतिः ॥ १ ॥

कलौ कृष्णस्य माहात्म्यं ये शृण्वंति पठंति च ॥

न तेषां जायते वासो यमलोके युगाष्टकम् ॥ २ ॥

नित्यं कृष्णकथा यस्य प्राणादपि गरीयसी ॥

न तस्य दुर्ल्लभं किंचिदिह लोके परं नृप ॥ ३ ॥

मन्वंतरसहस्रैस्तु काशीवासेन यत्फलम् ॥

तत्फलं द्वारकावासे वसतां पंचभिर्दिनैः ॥ ४ ॥

कलौ निवसते यस्तु श्वपचो द्वारकां यदि ॥

यतीनां गतिमाप्नोति प्राह ह्येवं प्रजापतिः ॥५ ॥

द्वारकां गंतुकामं यः प्रत्यहं कुरुते नरः ॥

फलमाप्नोति मनुजः कुरुक्षेत्रसमुद्भवम् ॥ ६ ॥

सोमग्रहे च यत्प्रोक्तं यत्फलं सोमनायके ॥

दृष्ट्वा तत्फलमाप्नोति द्वारवत्यां जनार्द्दनम् ॥ ७ ॥

पुष्करे कार्त्तिकीं कृत्वा यत्फलं वर्षकोटिभिः ॥

तत्फलं द्वारकावासे दिनेनैकेन जायते ॥ ८ ॥

द्वारकायां दिनैकेन दृष्टे देवकिनंदने ॥

फलं कोटिगुणं ज्ञेयमत्र लक्षशतोद्भवम् ॥ ९ ॥

कलौ निवसतां भूप धन्यास्तेषां मनोरथाः ॥

कृष्णस्य दर्शने नित्यं द्वारकागमने मतिः ॥ 7.4.23.१० ॥

एकामपि द्वादशीं तु यः करोति नृपोत्तम ॥

कृष्णस्य सन्निधौ भूप द्वारकायाः फलं शृणु ॥ ११ ॥

धन्यास्ते कृतकृत्यास्ते ते जना लोकपावनाः ॥

दृष्टं कृष्णमुखं यैस्तु पापकोट्ययुतापहम् ॥ १२ ॥

यत्फलं व्रतसंयुक्तैर्वासरैः कृष्णसंयुतैः ॥

यज्ञैर्दानैर्बृहद्भिश्च द्वारकायां तथैकया ॥ १३ ॥

क्षीरस्नानं प्रकुर्वंति ये नराः कृष्ण मूर्धनि ॥

शताश्वमेधजं पुण्यं बिंदुना बिंदुना स्मृतम् ॥ १४ ॥

दधि क्षीराद्दशगुणं घृतं दध्नो दशोत्तरम् ॥

घृताद्दशगुणं क्षौद्रं क्षौद्राद्दशगुणोत्तरम् ॥। । १५॥

पुष्पोदकं च रत्नोदं वर्द्धनं च दशोत्तरम्॥

मंत्रोदकं च गंधोदं तथैव नृपसत्तम॥ १६ ॥

इक्षो रसेन स्नपनं शतवाजिमखैः समम्॥

तथैव तीर्थनीरं स फलं यच्छति भूमिप ॥१७ ॥

कृष्णं स्नानार्द्रगात्रं च वस्त्रेण परिमार्जति॥

तस्य लक्षार्जितस्यापि भवेत्पापस्य मार्जनम्॥ १८ ॥

स्नापयित्वा जगन्नाथं पुष्पमालावरोहणम् ॥

कुरुते प्रतिपुष्पं तु स्वर्णनिष्कायुतं फलम् ॥ १९ ॥

स्नानकाले तु देवस्य शंखादीनां तु वादनम् ।

कुरुते ब्रह्मलोके तु वसते ब्रह्मवासरम् ॥ 7.4.23.२० ॥

स्नानकाले स कृष्णस्य पठेन्नामसहस्रकम् ॥

प्रत्यक्षरं लभेत्प्रेष्टं कपिलागोशतोद्भवम् ॥ २१ ॥

फलमेतन्महीपाल गीतायाः परिकीर्तितम् ॥

गजेंद्रमोक्षणेनैवं स्तवराजेन कीर्तितम् ॥ २२ ॥

स्तवैर्ऋषिकृतैरन्यैः पठितैश्च नराधिप ॥

तोषमाप्नोति देवेशः सर्वान्कामान्प्रयच्छति ॥ २३ ॥

किं पुनर्वेदपाठं तु स्नानकाले करोति यः ॥

तस्य यल्लभते पुण्यं न ज्ञातं नरनायक ॥ २४ ॥

स्नान काले च संप्राप्ते कृष्णस्याग्रे तु नर्तनम् ॥

गीतं चैव पुनस्तत्र स्तवनं वदनेन हि ॥२५ ॥

स्नानकाले तु कृष्णस्य जयशब्दं करोति यः ॥

करताल समायुक्तं गीतनृत्यं करोति च ॥२६॥

तत्र चेष्टां प्रकुर्वाणो हसते जल्पतेऽपि वा ॥

मुक्तं तेन परं मातुर्योनियंत्रस्य निर्गमम् ॥ २७ ॥

नोत्तानशायी भवति मातुरंके नरेश्वर ॥

गुणान्पठति कृष्णस्य यः काले स्नानकर्मणः ॥ २८ ॥

चंदनागुरुमिश्रेण कंकुमेन सुगंधिना ॥

विलेपयति यः कृष्णं कर्पूरमृगनाभिना ॥

कल्पं तु भवने विष्णोर्वसते पितृभिः सह ॥२९॥

प्रत्येकं चंदनादीनामिंद्रद्युम्न न चान्यथा ॥

नानादेशसमुद्भूतैः सुवस्त्रैश्च सुकोमलैः ॥ 7.4.23.३० ॥

धूपयित्वा सुगंधैश्च यो धूपयति मानवः ॥

मन्वंतराणि वसते तत्संख्यानि हरेर्गृहे ॥३१॥

स्वशक्त्या देवदेवेशं भूषणैर्भूषयंति च ॥

हेमजैरतुलैः शुभ्रैर्मणिजैश्च सुशोभनैः ॥ ३२ ॥

तेषां फलं महाराज रुद्राश्च वासवादयः ॥ ३३ ॥

जानंति मुनयो नैव वर्जयित्वा तु माधवम् ॥

येऽर्चयंति जगन्नाथं कृष्णं कलिमलापहम् ॥

केतकीतुलसीपत्रैः पुष्पैर्मालतिसंभवैः ॥ ३४ ॥

तद्देशसंभवैश्चान्यैर्भूरिभिः कुसुमैर्नृप ॥

एकैकं नृप शार्दूल राजसूयसमं स्मृतम् ॥ ३५ ॥

ये कुर्वंति नराः पूजां स्वशक्त्या रुक्मिणीपतेः ॥

क्रीडंति विष्णुलोके ते मन्वतरशतं नराः ॥ ३६ ॥

यः पुनस्तुलसीपत्रैः कोमलमंजरीयुतैः ॥

पूजयेच्छ्रद्धया यस्तु कृष्णं देवकिनंदनम् ॥ ३७ ॥

या गतिर्योगयुक्तानां या गतिर्योगशालिनाम् ॥

या गतिर्दानशीलानां या गतिस्तीर्थसेविनाम् ॥ ३८ ॥

या गतिर्मातृभक्तानां द्वादशीं वेधवर्जिताम् ॥

कुर्वतां जागरं विष्णोर्नृत्यतां गायतां फलम् ॥३९॥

वैष्णवानां तु भक्तानां यत्फलं वेदवादिनाम् ॥
पठतां वैष्णवं शास्त्रं वैष्णवानां तु यच्छताम् ॥ 7.4.23.४० ॥
तुलसीमालया कृष्णः पूजितो रुक्मिणी पतिः ॥
फलमेतन्महीपाल यच्छते नात्र सशयः ॥ ४१ ॥
यथा लक्ष्मीः प्रिया विष्णोस्तुलसी च ततोऽधिका ॥
द्वारकायां समुत्पन्ना विशेषेण फलाधिका ॥ ४२ ॥
यत्र तत्र स्थितो विष्णुस्तुलसीदलमालया ॥
पूजितो द्वारकातुल्यं पुण्यं स यच्छते कलौ ॥ ४३ ॥
योऽर्चयेत्केतकीपत्रैः कृष्णं कलिमलापहम् ॥
पत्रेपत्रेऽश्वमेधस्यफलं यच्छति भूभुज ॥४४॥
योऽर्चयेन्मालतीपुष्पैः कृष्णं त्रिभुवनेश्वरम् ॥
तेनाप्तं नास्ति संदेहो यत्फलं दुर्लभं हरेः ॥ ४५ ॥
ऋतुकालोद्भवैः पुष्पैर्योऽर्चयेद्रुक्मिणीपतिम् ॥
सर्वान्कामानवाप्नोति दुर्लभान्देवमानुषैः ॥ ४६ ॥
कृष्णेनागुरुणा कृष्णं धूपयंति कलौ युगे ॥
सकर्पूरेण राजेन्द्र कृष्णतुल्या भवंति ते ॥ ४७ ॥
साज्येन गुग्गुलेनापि सुगंधेन जनार्द्दनम् ॥
धूपयित्वा नरो याति पदं भूयः सदा शिवम् ॥ ४८ ॥
यो ददाति महीपाल कृष्णस्याग्रे तु दीपकम् ॥
पातकं तु समुत्सृज्य ज्योतीरूपं लभेत्पदम् ॥ ४९ ॥
द्वारे कृष्णस्य यो नित्यं दीपमालां करोति हि ॥
सप्तद्वीपवतीराज्यं द्वीपेद्वीपे फलं लभेत् ॥ 7.4.23.५० ॥
नैवेद्यानि मनोज्ञानि कृष्णाय विनिवेदयेत् ॥
कल्पांतं तत्पितॄणां हि तृप्तिर्भवति शाश्वती ॥ ५१ ॥
फलानि यच्छते यो वै सुहृद्यानि नरेश्वर ॥
जायंते तस्य कल्पांतं सफलास्तु मनोरथाः ॥ ५२ ॥
तांबूलं तु सकर्पूरं सपूगं नरनायक ॥
कृष्णाय यच्छते यो वै पदं तस्याग्निदैवतम् ॥ ५३ ॥

सनीरं कर्पुरोपेतं कुंभं कृष्णाग्रतो न्यसेत् ॥
कल्पांते न जलापेक्षां कुर्वंति च पितामहाः ॥५४॥
व्यजनेनाथ वस्त्रेण सुभक्त्या मातरिश्वना ॥
देवदेवस्य राजेन्द्र कुरुते धर्मवारणम्॥५९॥
तत्कुले नास्ति पापिष्ठो न च लोके यमस्य च ॥
वायुलोकान्महीपाल न पुनर्विद्यते गतिः॥५६॥
कृष्णवेश्मनि यः कुर्य्यात्सधूपं पुष्पमंडपम् ॥
सपुष्पकविमानैस्तु क्रीडते कोटिभिर्द्दिवि॥५७॥
चलच्चामरवातेन कृष्णं यस्तोषयेन्नरः ॥
तस्योत्तमांगं देवेशश्चुंबते स्वमुखेन हि ॥५८॥
यः कुर्यात्कृष्णभवनं कदलीस्तंभशोभितम् ॥ ॥
वसत्यर्कलोके तु यावद्वसति मेदिनी ॥ ५९ ॥
धूपं चंदनमालां तु कुरुते कृष्णसद्मनि ॥
देवकन्यायुतैर्लक्षैः सेव्यते सुरनायकैः ॥ 7.4.23.६० ॥
ध्वजमारोपयेद्यस्तु प्रासादोपरि भक्तितः ॥
तस्य ब्रह्मपदे वासः क्रीडते ब्रह्मणा सह ॥ ६१ ॥
प्रांगणं वर्णकोपेतं स्वस्तिकैश्च समन्वितैः ॥
देवदेवस्य कुरुते क्रीडते भुवनत्रये॥६२॥
यो दद्यान्मण्डपे पुष्पप्रकरं रुक्मिणीपतेः॥
देवोद्यानेषु सर्वेषु क्रीडते नरनायकैः॥६३॥
प्रासादे देवदेवस्य चित्रकर्म करोति यः॥
वसते रुद्रलोके तु यावत्तिष्ठंति सागराः॥६४॥
दद्याच्चन्द्रमयं यस्तु कृष्णोपरि नरेश्वर॥
वसते द्वारकां यावत्सोमलोके स तिष्ठति ॥६५ ॥
छत्रं बहुशलाकं तु किंकिणीवस्त्रगुण्ठितम् ॥
दिव्यरत्नैश्च संयुक्तं हेमदण्डसमन्वितम् ॥ ६६ ॥
समर्पयति कृष्णाय च्छत्रं लक्षार्बुदैर्वृतम् ॥
अमरैः सहितः सर्वैः क्रीडते पितृभिः सह ॥ ६७ ॥

दद्यान्नरविमानं तु कृष्णाय नरनायक ॥
सत्कृतो धनदेनैव वसते ब्रह्मवासरम् ॥ ६८ ॥
कृता पूजा दिकं भूप ज्वलंतं कृष्णमूर्द्धनि ॥
आरार्तिकं प्रकुर्वाणो मोदते कृष्णसन्निधौ ॥ ६९ ॥
दीप्तिमंतं सकर्पूरं करोत्यारार्तिकं नृप ॥
कृष्णस्य वसते लोके सप्तकल्पानि मानवः ॥ 7.4.23.७० ॥
धृत्वा शंखोदकं यस्तु भ्रामयेत्केशवोपरि ॥
संनिधौ वसते विष्णोः कल्पांतं क्षीरसागरे ॥ ७१ ॥
एवं कृत्वा तु कृप्णस्य यः करोति प्रदक्षिणाम् ॥
पठन्नामसहस्रं तु स्तवमन्यं पठन्नृप ॥
सप्तद्वीपवतीपुण्यं लभते तु पदेपदे ॥ ७२ ॥
कुर्य्याद्दण्डनमस्कारमश्वमेधायुतैः समम् ॥
कृष्णं संतोषयेद्यस्तु सुगीतैर्मधुरैः स्वरैः ॥
सामवेदफलं तस्य जायते नात्र संशयः ॥ ७३ ॥
यो नृत्यति प्रहृष्टात्मा भावैर्बहु सुभक्तितः ॥
स निर्द्दहति पापानि मन्वंतरकृतान्यपि ॥ ७४ ॥
यः कृष्णाग्रे महाभक्त्या कुर्य्यात्पुस्तकवाचनम् ॥
प्रत्यक्षरं लभेत्पुण्यं कपिलाशतदानजम् ॥ ।७५॥
ऋग्यजुःसामभिर्वाग्भिः कृष्णं संतोषयंति ये ॥
कल्पांतं ब्रह्मलोके तु ते वसंति द्विजोत्तमाः ॥ ७६ ॥
योगशास्त्राणि वेदांता न्पुराणं कृष्णसन्निधौ ॥
पठंति रविबिंबं ते भित्त्वा यांति हरेर्लयम् ॥ ७७ ॥
गीता नामसहस्रं तु स्तवराजो ह्यनुस्मृतिः ॥
गजेन्द्रमोक्षणं चैव कृष्णस्यातीव वल्लभम् ॥ ७८ ॥
श्रीमद्भागवतं यस्तु पठते कृष्णसन्निधौ ॥
कुलकोटिशतैर्युक्तः क्रीडते योगिभिः सदा ॥ ७९ ॥
यः पठेद्रामचरितं भारतं व्यासभाषितम् ॥
पुराणानि महीपाल प्राप्तो मुक्तिं न संशयः ॥7.4.23.८०॥

द्वादशीवासरे प्राप्त एवं कुर्वंति ये नराः ॥
गीताद्यैः शतसाहस्रं पुण्यं यच्छति केशवः ॥ ८१ ॥
जागरे कोटिगुणितं पुण्यं भवति भूभिप ॥
वसतां द्वारकावासात्प्रत्यहं लभते फलम् ॥८२॥
गोमतीनीरपूतानां कृष्णवक्त्रावलोकि नाम् ॥
दर्शनात्पातकं तेषां याति वर्षशतार्जितम् ॥८३॥
धन्यास्ते मानुषे लोके गोमत्युदधिवारिणा॥
तर्पयंति पितृन्देवान्गत्वा द्वारवतीं कलौ ॥ ॥८४॥
गंगाद्वारे प्रयागे च गंगायां कुरुजांगले ॥
प्रभासे शुक्लतीर्थे च श्रीस्थले पुष्करेऽपि च ॥८५॥
स्नानेन पिंडदानेन पितृणां तर्पणे कृते ॥
तृप्तिर्भवति भूपाल तथा गोमतिदर्शनात् ॥८६॥
योजनैर्बहुभिस्तिष्ठन्गोमतीति च यो वदेत् ॥
चांद्रायणसहस्रस्य फलमाप्नोति यत्नतः ॥ ८७ ॥
धन्या द्वारवती लोके वहते यत्र गोमती ॥
स्वयं तु तिष्ठते यत्र नित्यं रुक्मिणिवल्लभः ॥८८॥
न स्नाता गोमतीतीरे कलौ पापेन मोहिताः ॥
भविष्यति कथं तेषां पापबंधस्य संक्षयः ॥ ८९ ॥
निर्मिता स्वर्गनिःश्रेणी कलौ कृष्णेन गोमती ॥
मनसः प्रीतिजननी जंतूनां नरसत्तम ॥ 7.4.23.९० ॥
न दृश्यं स्वर्गसोपानं दृश्यते गोमतीसमम्॥
सुखदं पापिनां पुंसां स्नानमात्रेण मोक्षदम् ॥ ९१ ॥
गोमतीनीरसंयुक्तो यत्र गर्जति सागरः ॥
तत्र गच्छेन्नरव्याघ्र कृष्णस्तिष्ठति यत्र वै॥ ९२ ॥
यत्र चक्रांकितशिला गोमत्युदधिनिःसृताः ॥
यच्छंति पूजिता मोक्षं तां पुरीं को न सेवते ॥ ९३ ॥
यत्र चक्रांकिता मृत्स्ना तिष्ठते निर्मला नृप ॥
कलौ पापविनाशार्थं तां पुरीं को न सेवते ॥ ९४ ॥

अप्रदृश्या पुरा लोके दैत्यदानवरक्षसाम् ॥
शरण्या देवतादीनां पुरीं तां को न सेवते ॥ ९५ ॥
त्यजते यां कलौ नैव कृष्णो देवकिनन्दनः ॥
कर्मणा मनसा वाचा तां पुरीं को न सेवते ॥ ९६ ॥
॥ मार्कंडेय उवाच ॥ ॥
शृणु राजन्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥
यां श्रुत्वा मुच्यते नूनं दुःखसंसार बंधनात् ॥ ९७ ॥
अवन्तीविषये पूर्वं ब्राह्मणो वेदपारगः ॥
चंद्रशर्मेति विख्यातः शिवभक्तः सदा नृप ॥ ९८ ॥
मनसा कर्मणा वाचा नान्यं ध्याति सदाशिवात् ॥
शैवाद्व्रताद्व्रतं नान्यत्करोति च नराधिप ॥ ९९ ॥
नोपवासं हरिदिने कुरुते न व्रतं हरेः ॥
विना चतुर्दशीं राजन्नान्यदेवसमुद्भवम् ॥ 7.4.23.१०० ॥
यत्रयत्र शिवक्षेत्रं यत्र तीर्थं तु शांकरम् ॥
तत्र गच्छति राजेन्द्र वैष्णवं नैव गच्छति ॥ १०१ ॥
प्रतिवर्षं तु कुरुते सोमनाथस्य दर्शनम् ॥
न जहाति विशेषेण सोमपर्व नरेश्वर ॥ १०२ ॥
एवं प्रकुर्वतस्तस्य वर्षाणि नवसप्ततिः ॥
गतानि किल राजेन्द्र शिवभक्तिं प्रकुर्वतः॥१०३॥
कदाचित्सोमपर्वण्यागते सोमोपनायकम्॥
नानादेशान्महीपाल ह्यसंख्याताश्च मानवाः॥ १०४॥
गताः कृष्णपुरीं सर्वे दृष्ट्वा सोमेश्वरं प्रभुम्॥
आहूतस्तैश्चंद्रशर्मा न गतो द्वारकां पुरीम्॥१०५॥
शिवक्षेत्रात्परं तीर्थं नाहं मन्ये जग त्त्रये ॥
नान्यदेवो मया ज्ञात ईश्वराद्देवनायकात् ॥ १०६ ॥
विनाऽन्ये चंद्रशर्माणं गतास्ते द्वारकां पुरीम् ॥
अन्यस्मिन्दिवसे राजन्गच्छतः स्वगृहं प्रति ॥
चक्रुस्ते दर्शनं स्वप्ने चंद्रशर्मपितामहाः ॥ १०८ ॥

प्रेतभूता महाकायाः क्षुत्क्षामाश्चैव भीषणाः ॥

दृष्ट्वा स्वप्नं महा रौद्रं भीतोऽसौ च प्रकंपितः ॥ १०९ ॥

॥ चन्द्रशर्मोवाच ॥ ॥

के यूयं विकृताकारा जंतूनां च भयानकाः ॥

पृथ्वीसमुद्भवा जीवा न दृष्टा न श्रुता मया ॥ 7.4.23.११० ॥

॥ प्रेता ऊचुः ॥ ॥

मा भयं कुरु विप्रेंद्र तव पूर्वपितामहाः ॥

आगतास्त्वत्समीपे तु महादुःखेन पीडिताः ॥ १११ ॥ ॥

॥ चन्द्रशर्मोवाच ॥ ॥

इष्टं दत्तं तपस्तप्तं भवद्भिर्मत्पितामहैः ॥

प्रेतत्वे कारणं यत्स्याद्भवतां विस्मयो मम ॥११२॥

॥ प्रेता ऊचुः ॥ ॥

शृणु पुत्र प्रवक्ष्यामः प्रेतयोनेस्तु कारणम् ॥

वासरं वासुदेवस्य सदा विद्धं कृतं पुरा ॥ ११३ ॥

प्रेतत्वं तेन संप्राप्तमस्माभिः शृणु पुत्रक ॥

विशेषेण कृतं रात्रौ विद्धं जागरणं हरेः ॥ ११४ ॥

पतनं नरके घोरे भविष्यति न संशयः ॥

त्वया सह न संदेहो यावदाभूतसंप्लवम् ॥ ११५ ॥

चन्द्रशर्मोवाच ॥ ॥

हरिभक्तिविहीनानां द्वादशीव्रतवर्जिनाम्॥

नाशं न याति प्रेतत्वं पूजितैः शंकरादिभिः ॥११६॥

न वा सन्तोषितो देवो भक्त्या त्रिपुरनाशनः ॥

प्रदास्यति गतिं नूनं प्रेतत्वं न गमिष्यति ॥ ११७ ॥

॥ प्रेता ऊचुः ॥ ॥

प्रायश्चित्तं विना पुत्र द्वादशीवेधसंभवम् ॥

आपन्न गच्छते नूनं प्रेतत्वं नैव गच्छति ॥ ११८ ॥

प्रायश्चित्ती सदा पुत्र पूजयानोऽपि शंकरम् ॥

विना केशवपूजाभिः पापं भजति गोवधम् ॥ ११९ ॥

प्रथमं केशवः पूज्यः पश्चाद्देवो महेश्वरः ॥

पूजनीयाश्च भक्त्या वै याश्चान्याः संति देवताः ॥ 7.4.23.१२० ॥

मूलाच्छाखाः प्रशाखाश्च भवंति बहुशस्ततः ॥

वासुदेवात्समुद्भूतं जगदेतच्चराचरम्॥ १२१ ॥

तस्मान्मूलं परित्यज्य शाखां नैवार्चयेद्बुधः ॥

विशेषेण जगन्नाथं त्रैलोक्याधिपतिं हरिम् ॥ १२२॥

तद्दिने ये प्रकुर्वंति सम्यग्वेधेन शोभितम् ॥

सशल्यं तन्न संदेहः प्रेतत्वं याति तेन च ॥ १२३ ॥

हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥

पूजां गृह्णाति नो सूर्यस्तथा चैव पितामहाः ॥ १२४ ॥

प्रेतास्ते ये प्रकुर्वंति सशल्यं वासरं हरेः ॥

पौर्णमासीद्वये प्राप्ते राका साग्निविवर्जिता ॥ १२५ ॥

विशेषेण तु वैशाखी श्राद्धादीनां प्रशस्यते ॥

वैशाखे तु तृतीयां वै पूर्वविद्धां करोति यः ॥ १२६ ॥

हव्यं देवा न गृह्णंति कव्यं चैव पितामहाः॥

यत्र देवा न गृह्णंति कथं तत्र पितामहाः ॥

तस्मात्कार्य्या तृतीया च पूर्वविद्धा बुधैर्नरैः ॥ १२७ ॥

कुर्वते यदि मोहाद्वा प्रेतत्वं शाश्वतं ततः ॥

नापयाति कृतैः पुण्यैर्बहुशस्तीर्थसेवनैः ॥ १२८ ॥

दशमीं पौर्णमासीं च पित्रोः सांवत्सरं दिनम् ॥

पूर्वविद्धं प्रकुर्वाणो नरकं प्रतिपद्यते ॥ १२९॥

दर्शश्च पौर्णमासी च साग्निकैः पूर्वसंयुता ॥

नाग्निहीनैस्तु कर्तव्या पुनराह प्रजापतिः ॥7.4.23.१३०॥

क्षयाहे तु पुनः प्रोक्ता स्वकालव्यापिनी तिथिः ॥

श्राद्धं तत्र प्रकर्तव्यं ह्रासवृद्धी न कारणम् ॥ १३१ ॥

तत्रोक्तं मनुना पुत्र वेदांतैर्भाष्यकारिभिः ॥

तत्प्रमाणं प्रकर्तव्यं प्रेतत्वं भवतोऽन्यथा ॥ ॥ १३२ ॥

एतै. प्रकारैः प्रेतत्वं प्राणिनां जायते भुवि ॥

निरीक्ष्य धर्मशास्त्राणि कार्य्यं विहितमात्मनः ॥ १३३ ॥
प्रणम्य सोमनाथं तु यात्रां कृत्वा न गच्छति ॥
कृष्णस्य दर्शनार्थाय तस्य किं जायते फलम् ॥ १३४ ॥
कथ्यते परमा मूर्तिर्हरिरीश्वरसं संस्थिता॥
विभेदो नात्र कर्तव्यो यथा शंभुस्तथा हरिः॥ १३५॥
कृष्णस्य सोमनाथस्य नांतरं दृश्यते क्वचित्॥
यात्रा श्रीसोमनाथस्य संपूर्णा कृष्णदर्शनात्॥ १३६॥
तस्मादुभयतः पुत्र गन्तव्यं नात्र संशयः॥
दृष्ट्वा सोमेश्वरं देवं गंतव्यं द्वारकां प्रति॥ १३७॥
प्रभासे सोमनाथस्य लिंगमध्ये व्यवस्थितः ॥
स्वयं तिष्ठति पुण्यात्मा भोगं गृह्णाति केशवः ॥ १३८ ॥
दृष्ट्वा सोमेश्वरं देवं द्वारकां न नरो गतः ॥
पतनं नरके घोरे पितॄणां च भविष्यति ॥ १३९ ॥
विशेषेण त्वया वत्स न कृतं द्वादशीव्रतम् ॥
व्रतं कृतं यदस्माभिस्तत्कृतं वेधसंयुतम् ॥
निर्गमं यमलोकाद्धि तदस्माकं न दृश्यते ॥ 7.4.23.१४० ॥
॥ चन्द्रशर्मोवाच ॥ ॥
यदि तात मयाऽज्ञानान्न कृतं द्वादशीव्रतम् ॥
कस्मात्कृतं सशल्यं तु भवद्भिर्द्वादशीव्रतम् ॥ १४१ ॥
॥ प्रेता ऊचुः ॥ ॥
कुविप्रैस्तु कुदैवज्ञैः शुक्रमायाविमोहितैः ॥
पारुष्यताहेतुकैश्च प्रेतयोनिमिमां गताः ॥ ॥ १४२ ॥
दत्तं तप्तं हुतं जप्तमस्माकं विफलं गतम् ॥
संप्राप्ता प्रेतयोनिस्तु सशल्याद्वादशीव्रतात् ॥ १४३ ॥
सशल्यं ये प्रकुर्वंति वासरं केशव प्रियम् ॥
तेषां पितामहाः स्वर्गात्प्रेतत्वं यांति पुत्रक ॥ १४४ ॥
॥ चन्द्रशर्मोवाच ॥ ॥
प्रेतत्वं नाशमायाति कथमेतत्पितामहाः ॥

कर्मणा केन तत्सर्वं यच्चाहं प्रकरोमि तत् ॥ १४५ ॥

॥ प्रेता ऊचुः ॥ ॥

मा गयां मा प्रयागं च पुष्करे कुरुजांगले ॥

अयोध्यायामवंत्यां वा मधुरायां न चार्बुदे ॥ १४६ ॥

न चान्यत्तीर्थलक्षं तु वर्जयित्वा तु गोमतीम् ॥

गंगा सरस्वती चैव नर्मदा नैव पुष्करम् ॥ १४७ ॥

यादृशं गोमतीतीरे कलौ प्रेतत्वनाशनम् ॥

गोमतीनीरदानेन कृष्णवक्त्रविलोकनात् ॥ १४८ ॥

विलयं यांति पापानि जन्मकोटिकृतान्यपि ॥

वृथा संन्यासिनां पुण्यं वृथा च वनवासिनाम् ॥ १४९ ॥

सशल्यं वासरं विष्णोः कुर्वंति यदि पुत्रक ॥

तस्माद्गच्छ मुखं पश्य पूर्णचन्द्रसमं मुखम् ॥ 7.4.23.१५० ॥

कृष्णस्य द्वारकां गत्वा यथास्माकं गतिर्भवेत् ॥

विफलं तव संजाता न कृतं यदुपार्ज्जितम् ॥ १५१ ॥

तद्व्यर्थ सकलं जातं विना केशव पूजनात् ॥

विना केशवपूजायाः शंकरो यस्त्वयार्च्चितः ॥

तत्पुण्यं विफलं जातं प्रेतयोनिं गमिष्यसि ॥ १५२ ॥

संपूर्णं तव पुण्यं च द्वारका कृष्णदर्शनात् ॥

भविष्यति न सन्देहो गोमत्युदधिसन्निधौ ॥ १५३ ॥

दृष्ट्वा सोमेश्वरं देवं कृष्णं यदि न पश्यति ॥

यात्राफलं न चाप्नोति वदत्येवं स्वयं शिवः ॥ १५४ ॥

दृष्टोऽहं तैर्न सन्देहो यैः कृतं कृष्णदर्शनम् ॥

एका मूर्तिर्न सन्देहो मम कृष्णस्य नांतरम् ॥ १५५ ॥

दृष्ट्वा मां द्वारकां गत्वा कर्त्तव्यं कृष्णदर्शनम् ॥

दृष्ट्वा कृष्णं तु मां पश्येद्यास्यत्येव महाफलम् ॥ १५६ ॥

कृष्णदर्शनपूतात्मा यो मां पश्यति मानवः ॥

न तस्य पुनरावृत्तिर्मम लोकाच्च वैष्णवात् ॥ १५७ ॥

इत्याह देवदेवेशः स्वयं सोमपतिः पुरा ॥

विप्राणां श्रुतमस्माभिर्वदतां पुष्करे सताम् ॥ १५८ ॥

तस्माद्गच्छ प्रयाणार्थं कुरु कृष्णस्य दर्शनम् ॥

अन्यथा यास्यसे योनिं पैशाचीं पापदायिनीम् ॥ १५९ ॥

कृतापराधोऽपि यदा कुरुते कृष्णदर्शनम् ॥

मुच्यते नाऽत्र संदेहः पापाज्जन्मकृतादपि ॥ 7.4.23.१६० ॥

पूजिते देवदेवेशे कृष्णे देवकिनन्दने ॥

पूजिता देवताः सर्वा ब्रह्मरुद्रभगादिकाः ॥ १६१ ॥

विना कृष्णस्य पूजां च रुद्राद्यास्त्रिदिवौकसः ॥

पूजिता नैव कुर्वंति तुष्टिं पुत्र पितामहाः ॥ १६२ ॥

तस्माद्द्वारवतीं गत्वा कृष्णस्य दर्शनं कुरु ॥

प्रेतयोनेर्विनिर्मुक्ता यास्यामः परमां गतिम् ॥ १६३ ॥

गोमतीनीरधौतानि यस्यांगानि कलौ युगे ॥

मुनिभिर्योनिगमनं तस्य दृष्टं न पुत्रक ॥ १६४ ॥

ताडिताः पादयुग्मेन गोमतीनीरवीचयः ॥

अगतीनां प्रकुर्वंति गतिं वै ब्रह्मवादिनाम् ॥ १६५ ॥

यः पुनः कुरुते श्राद्धं गोमत्युदधिसंगमे ॥

पितॄणां जायते तृप्तिर्यावदाभूतसंप्लवम् ॥ १६६ ॥

ससागरधरायां च सर्वतीर्थेषु यत्फलम् ॥

दिनेनैकेन तत्पुण्यं द्वारकाकृष्णसन्निधौ ॥ १६७ ॥

यत्फलं त्रिदशैर्दृष्टं सर्वतीर्थसमुद्भवम् ॥

तत्फलं लभते सर्वं द्वारकायां दिनेदिने ॥ १६८ ॥

तीर्थकोटिसहस्रैस्तु कृतैः श्राद्धैश्च यत्फलम् ॥

पितॄणां तत्फलं प्रोक्तं गोमतीतिलतर्पणात् ॥ १६९ ॥

यतीनां भोजनं यस्तु यच्छते कृष्णमन्दिरे ॥

सिक्थेसिक्थे भवेत्तृप्तिः पितॄणां युगसंख्यया ॥ 7.4.23.१७० ॥

कौपीनाच्छादनं छत्रं पादुके च कमण्डलुम् ॥

दत्त्वा संन्यासिनां याति सप्त कल्पानि तत्फलम् ॥ १७१ ॥

धन्यास्ते मानवाः पुत्र वसन्ति श्वपचादयः ॥

द्वारकायां गतिं यांति वसतां तत्र योगिनाम् ॥ ॥ १७२ ॥

त्रिकालं ये प्रपश्यंति वदनं प्रत्यहं हरेः ॥

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ १७३ ॥

या नारी विधवा भूत्वा कुरुते द्वारकाश्रयम् ॥

कुलायुतसहस्रं तु नयते परमं पदम् ॥ १७४ ॥

पुत्रेणापीह किं कार्य्यं न गतो द्वारकां यदि ॥

नारी पुत्रशताच्छ्रेष्ठा गत्वा कृष्णपुरीं वसेत् ॥ ॥ १७५ ॥

कृष्णं कृष्णपुरीं गत्वा योऽर्च्चयेत्तुलसीदलैः ॥

प्राप्तं जन्मफलं तेन तारिताः प्रपितामहाः ॥ १७६ ॥

तुलसीदलमालां तु कृष्णोत्तीर्णां तु यो वहेत् ॥

पत्रेपत्रेऽश्वमेधानां दशानां लभते फलम् ॥ १७७ ॥

तुलसीकाष्ठसंभूतां यो मालां वहते नरः ॥

फलं यच्छति दैत्यारिः प्रत्यहं द्वारकोद्भवम् ॥ १७८ ॥

निवेद्य विष्णवे मालां तुलसीकाष्ठसंभवाम् ॥

वहते यो नरो भक्त्या तस्य नैवास्ति पातकम् ॥

सदा प्रीतमनास्तस्य कृष्णो देवकिनंदनः ॥ १७९ ॥

तुलसीकाष्ठसंभूतं शिरोबाह्वादिभूषणम् ॥

जायते यस्य मर्त्यस्य तस्य देहे सदा हरिः ॥ 7.4.23.१८० ॥

तुलसीमालया यस्तु भूषितः कर्म चाऽऽचरेत् ॥

पितॄणां देवतानां च कृतं कोटिगुणं कलौ ॥१८१॥

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ॥

दृष्ट्वा दूरेण नश्यंति वातोद्धूता यथाऽलयः ॥ १८२ ॥

जायते तद्ग्रहे नैव पापसंक्रमणं कुतः ॥

श्रुतं पुराणमस्माभिः कथितं ब्रह्मवादिभिः ॥ १८३ ॥

तस्मान्माला त्वया धार्य्या तुलसीकाष्ठसंभवा ॥

हरते नात्र संदेह ऐहिकामुष्मिकं त्वघम् ॥ १८४ ॥

तुलसीमालया यस्तु भूषितो भ्रमते यदि ॥

दुःस्वप्नं दुर्निमित्तं च न भयं शात्रवं क्वचित् ॥ १८५ ॥

कृत्वा वै तीर्थसंन्यासं यतयो विधवाः स्त्रियः ॥

जीवन्मुक्ताः कलौ ज्ञेयाः कुलकोटिसमन्विताः ॥ ॥ १८६ ॥

धारयंति न ये मालां हैतुकाः पापमोहिताः ॥

नरकान्न निवर्तंते दग्धाः कोपाग्निना हरेः ॥ १८७ ॥

उन्मीलिनी वंजुलिनी त्रिस्पृशा पक्षवर्द्धिनी ॥

त्वया पुत्र प्रकर्त्तव्या जयंती विजया जया ॥ १८८ ॥

पापघ्नी चाष्टमी प्रोक्ता कृष्णस्यातीव वल्लभा ॥

कृता कलौ युगे पुत्र द्वारका मोक्षदायिनी ॥ १८९ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वारकागमनमाहात्म्य तुलसीधारणमाहात्म्यवर्णनंनाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २४



॥ श्रीमार्कंडेय उवाच ॥ ॥

पितृणां प्रेतरूपाणां कृत्वा वाक्यं महीपते ॥

चंद्रशर्मा द्विजश्रेष्ठो द्वारकां समुपागतः ॥ १ ॥

रुक्मिणीसहितः कृष्णो यत्र तिष्ठति चान्वहम् ॥

यत्र तिष्ठंति तीर्थानि तत्र यातो द्विजोत्तमः ॥ २ ॥

यत्र तिष्ठंति यज्ञाश्च यत्र तिष्ठंति देवताः ॥

यत्र तिष्ठंति ऋषयो मुनयो योगवित्तमाः ॥ ३ ॥

या पुरी सिद्धगंधर्वैः सेव्यते किंनरैर्नरैः ॥

अप्सरोगणयक्षैश्च द्वारका सर्वकामदा ॥ ४ ॥

स्वर्गारोहणनिश्रेणी वहते यत्र गोमती ॥

सा पुरी मोक्षदा नृणां दृष्टा विप्रवरेण हि ॥५॥

यस्याः सीमां प्रविष्टस्य ब्रह्महत्यादिपातकम् ॥

नश्यते दर्शनादेव तां पुरीं को न सेवते ॥ ६ ॥

गत्वा कृष्णपुरीं दृष्ट्वा गोमतीं चैव सागरम् ॥

मन्ये कृतार्थमात्मानं जीवितं यौवनं धनम् ॥ ७ ॥

दृष्ट्वा कृष्णपुरीं रम्यां कृष्णस्य मुखपंकजम् ॥

धन्योऽहं कृत्यकृत्योहं सभाग्योऽहं धरातले ॥ ॥ ८ ॥

दृष्ट्वा कृष्णमुखं रम्यं रुक्मिणीं द्वारकां पुरीम्॥

तीर्थकोटिसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥९॥

पुण्यैर्लक्षसहस्रैस्तु प्राप्ता द्वारवती शुभा ॥

शुक्ला वैशाखमासे तु संप्राप्ता मधुसूदनी ॥ 7.4.24.१० ॥

द्वादशी त्रिस्पृशानाम पापकोटिशतापहा ॥

धन्याः सर्वे मनुष्यास्ते वैशाखे मधुसूदनी ॥१ १॥

संप्राप्ता त्रिस्पृशा यैस्तु बुधवारेण संयुता ॥

न यज्ञैस्तु न वेदैस्तु न तीर्थैः कोटिसेवितैः ॥
प्राप्यते तत्फलं नैव द्वारकायां यथा नृणाम् ॥ १२ ॥
एवमुक्त्वा द्विजश्रेष्ठो गोमतीतीरमाश्रितः ॥
उपस्पृश्य यथान्यायं शास्त्रदृष्टेन कर्मणा ॥ १३ ॥
कृत्वा स्नानं यथोक्तं तु संतर्प्य पितृदेवताः ॥
चक्रतीर्थात्समादाय शिलांश्चक्रांकिताञ्छुभान् ॥
पूजिताः पुरुषसूक्तेन यथोक्तविधिना नृप ॥ १४ ॥
शिवपूजा कृता पश्चात्संस्मृत्य पितृभाषितम् ॥
दत्त्वा पिंडोदकं सम्यक्पितॄणां विधिपूर्वकम् ॥१५॥
विलेपनं च वस्त्राणि पुष्पाणि धूपदीपको ॥
नैवेद्यानि मनोज्ञानि कंदमूलफलानि च ॥ १६ ॥
तांबूलं च सकर्पूरं कृत्वा नीराजनादिकम् ॥
प्रदक्षिणां नमस्कारं स्तुतिपूर्वं पुनःपुनः ॥ १७ ॥
क्षमापयित्वा देवेशं चक्रे जागरणं ततः ॥
यामत्रये व्यतीते तु चंद्रशर्मा ह्युवाच ह ॥ १८ ॥
आतुरस्य च दीनस्य शृणु कृष्ण वचो मम ॥
संसारभयसंत्रस्तं मां त्वमुद्धर केशव ॥१९॥
त्वत्पादांबुज भक्तानां न दुःखं पापिनामपि ॥
किं पुनः पापहीनानां द्वादशीसेविनां नृणाम्॥7.4.24.२०॥
दशमीवेधजं पापं कथितं मम पूर्वजैः ॥
दुष्कृतं नाशमायातु त्वत्प्रसादाज्जनार्द्दन ॥ २१ ॥
सविद्धं त्वद्दिनं कृष्ण यत्कृतं जागरं हरे ॥
तत्पापं विलयं यातु यथालवणमंभसि ॥ २२ ॥
सविद्धं वासरं यस्मा त्कृतं मम पितामहैः ॥
प्रेतत्वं तेन संप्राप्तं महादुःखप्रसाधकम् ॥ २३ ॥
यथा प्रेतत्वनिर्मुक्ता मम पूर्वपितामहाः ॥
मुक्तिं प्रयांति देवेश तथा कुरु जगत्पते ॥ २४ ॥
पुनरेव यदुश्रेष्ठ प्रसादं कर्तुमर्हसि ॥

अविद्यामोहितेनापि न कृतं तव पूजनम् ॥ २५ ॥

मया पापेन देवेश शिवभक्तिः समाश्रिता ॥

तव भक्तिः कृता नैव न कृतं तव वासरम् ॥ २६ ॥

न दृष्टा द्वारका कृष्ण न स्नातो गोमतीजले ॥

न दृष्टं पादपद्मं च त्वदीयं मोक्षदा यकम् ॥ २७ ॥

न कृता द्वारकायात्रा दृष्ट्वा सोमेश्वरं प्रभुम् ॥

विफलं सुकृतं जातं यन्मया समुपार्जितम् ॥ २८ ॥

मत्पूर्वजैस्तु कथितं सर्वमेव सुरेश्वर ॥

तत्पुण्यं मा वृथा यातु प्रसादात्तव केशव ॥ २९ ॥

दृष्टं तु तव वक्त्रं च दुर्ल्लभं भुवनत्रये ॥

तन्नास्ति देवकीपुत्र पुराणेषु श्रुतं मया ॥7.4.24.३०॥

सापराधास्तु ये केचिच्छिशुपालादयः स्मृताः ॥

त्वत्करेण हताः कोपान्मुक्तिं प्राप्ता महीवराः ॥ ३१ ॥

अद्यप्रभृति कर्त्तव्यं पूजनं प्रत्यहं च तत्॥

पलार्धेनापि विद्धं स्याद्भोक्तव्यं वासरे तव ॥ ३२ ॥

त्वत्प्रिया च मया कार्य्या द्वादशी व्रतसंयुता ॥

भक्तिर्भागवतानां च कार्य्या प्राणैर्द्धनैरपि ॥॥ ३३ ॥

नित्यं नामसहस्रं तु पठनीयं तव प्रियम् ॥

पूजा तु तुलसीपत्रैर्मया कार्या सदैव हि ॥ ३४ ॥

तुलसीकाष्ठसंभूता माला धार्य्या सदा मया ॥

नृत्यं गीतं च कर्त्तव्यं संप्राप्ते जागरे तव ॥ ३५ ॥

द्वारकायां प्रकर्त्तव्यं प्रत्यहं गमनं मया ॥

त्वत्कथाश्रवणार्थं च नित्यं पुस्तकवाचनम् ॥ ३६ ॥

नित्यं पादोदकं मूर्ध्ना मया धार्यं सुभक्तितः ॥

नैवेद्यभक्षणं चैव करिष्यामि सुभक्तितः ॥ ३७ ॥

निर्माल्यं शिरसा धार्य्यं त्वदीयं सादरं मया ॥

तव दत्त्वा यदिष्टं तु भक्षणीयं सदा मया ॥ ३८ ॥

तथा तथा प्रकर्त्तव्यं येन तुष्टिर्भवेत्तव ॥

तथ्यमेतन्मया कृष्ण तवाग्रे परिकीर्तितम् ॥ ३९ ॥

॥ श्रीकृष्ण उवाच ॥ ॥

साधुसाधु महाभाग चन्द्रशर्मन्द्विजोत्तम ॥

आगमिष्यंति मल्लोके त्वया सह पितामहाः ॥ 7.4.24.४० ॥

पश्य प्रेतत्वनिर्मुक्ता मत्प्रसादाद्द्विजोत्तम ॥

आकाशे गरुडारूढास्तव पूर्वपितामहाः ॥ ४१ ॥

॥ पितामहा ऊचुः ॥ ॥

त्वत्प्रसादाद्वयं पुत्र मुक्तिं प्राप्ता न संशयः ॥

प्रेतयोनेर्विनिर्मुक्ताः कृष्णवक्त्रावलोकनात् ॥ ४२.॥

धन्यास्ते मानुषे लोके पुत्रपौत्रप्रपौत्रकाः ॥

दृष्ट्वा श्रीसोमनाथं तु कृष्णं पश्यंति द्वारकाम् ॥ ४३ ॥

धन्या च विधवा नारी कृष्णयात्रां करोति या ॥

उद्धरिष्यति लोकेऽस्मिन्कुलानां निरयाच्छतम् ॥ ४४ ॥।

श्वपचोऽपि करोत्येवं यात्रां च हरिशांकरीम्॥

स याति परमां मुक्तिं पितृभिः परिवारितः ॥ ४५ ॥

यः पुनस्तीर्थसंन्यासं कृत्वा तिष्ठति तत्र वै ॥

विष्णुलोकान्निवृत्तिर्न कल्पकोटिशतैरपि ॥४६॥

वंचितास्ते न सन्देहो दृष्ट्वा सोमेश्वरं प्रभुम् ॥

दृष्टं कृष्णमुखं नैव न स्नाता गोमतीजले ॥ ४७ ॥

किं जलैर्बहुभिः पुण्यैस्तीर्थकोटिसमुद्भवैः ॥

दृष्ट्वा सोमेश्वरं यस्तु द्वारकां नैव गच्छति ॥

धिक्कुर्वंति च तं पापं पितरो दिवि संस्थिताः ॥ ४८ ॥

दृष्ट्वा सोमेश्वरं देवं कृष्णं दृष्ट्वा पुनः शिवम्॥

सौपर्णे कथितं पुण्यं यात्राशतसमुद्भवम् ॥ ४९ ॥

दृष्ट्वा सोमेश्वरं देवं कृष्णं नैव प्रपश्यति ॥

मोहाद्व्यर्थगतं तस्य सर्वं संसारकर्म वै ॥ 7.4.24.५० ॥

आगत्य यः प्रभासे च कृष्णं पश्यति वै नरः ॥

प्रभासायुतसंख्यं तु फलमाप्नोति यत्नतः ॥ ५१ ॥

यस्मात्सर्वाणि तीर्थानि सर्वे देवास्तथा मखाः ॥

द्वारकायां समायांति त्रिकालं कृष्णसंनिधौ ॥ ५२ ॥

तीर्थैर्नानाविधैः पुत्र तत्स्थानैः किं प्रयोजनम् ॥

फलं समस्ततीर्थानां दृष्ट्वा द्वारवतीं लभेत् ॥ ५३ ॥

हते कंसे जरासन्धे नरके च निपातिते ॥

उत्तारिते भुवो भारे कृष्णो देवकिनंदनः ॥

चक्रे द्वारवतीं रम्यां सन्निधौ सागरस्य च ॥ ५४ ॥

स्थितः प्रीतमनाः कृष्णो लप्स्यते कामिनीसुखम् ॥ ५५ ॥

ब्रह्माग्निवायुसूर्याश्च वासवाद्या दिवौकसः ॥

मर्त्या विप्राश्च राजानः पातालात्पन्नगेश्वराः ॥ ५६ ॥

नद्यो नदाश्च शैलाश्च वनान्युपवनानि च ॥

पुरग्रामा ह्यरण्यानि सागराश्च सरांसि च ॥ ५७ ॥

यक्षाश्चासुरगंधर्वाः सिद्धा विद्याधरास्तथा ॥

रम्भाद्यप्सरसश्चैव प्रह्लादाद्या दितेः सुताः ॥

रक्षा विभीषणाद्याश्च धनदो रक्ष नायकः ॥ ५८ ॥

ऋषयो मुनयः सिद्धाः सनकाद्याश्च योगिनः ॥

ग्रहा ऋक्षाणि योगाश्च ध्रुवः परमवैष्णवः ॥ ५९ ॥

यत्किंचित्त्रिषु लोकेषु तिष्ठते स्थाणुजंगमम् ॥

श्रीकृष्णसन्निधौ नित्यं प्रत्यहं तिष्ठते सदा ॥ 7.4.24.६० ॥

न त्यजंति पुरीं पुण्यां द्वारकां कृष्णसेविताम् ॥

सा त्वया सेविता पुत्र सांप्रतं कृष्णदर्शनात् ॥

पिशाचयोनिनिर्मुक्ता यास्यामः परमां गतिम् ॥ ६१ ॥

द्वादशीवेधजंपापं द्वारकायाः प्रभावतः ॥

नष्टं पुत्र न सन्देहः संप्राप्ताः परमं पदम् ॥ ६२ ॥

द्वादशीवेधसम्भूतं यत्त्वया पापमर्जितम् ॥

कृष्णस्य दर्शनात्क्षीणं न जह्यं द्वादशीव्रतम् ॥ ६३ ॥

रक्षणीयं प्रयत्नेन वेधो दशमिसम्भवः ॥

नो चेत्पुत्र न संदेहः प्रेतयोनिमवाप्स्यसि ॥ ६४ ॥

त्रैलोक्य संभवं पापं तेषां भवति भूतले॥
सशल्यं ये प्रकुर्वंति वासरं कृष्णसंज्ञकम्॥६५॥
प्रायश्चित्तं न तस्यास्ति सशल्यं वासरं हरेः ॥
ये कुर्वंति न ते यांति मन्वतरशतैर्दिवम् ॥ ६६ ॥
प्रेतत्वं दुःसहं पुत्र दुःसहा यमयातना ॥
तस्मात्पुत्र न कर्त्तव्यं सशल्यं द्वादशीव्रतम् ॥ ६७ ॥
कारयंति हि ये त्वज्ञाः कूटयुक्ताश्च हेतुकाः ॥
प्रेतयोनिं प्रयास्यंति पितृभिः सह सर्वतः ॥ ६८ ॥
द्वादशी दशमीविद्धा संतानप्रविनाशिनी ॥
ध्वंसिनी पूर्वपुण्यानां कृष्णभक्तिविनाशिनी ॥६९॥
स्वस्ति तेऽस्तु गमिष्यामः प्रसादाद्रुक्मिणीपतेः ॥
प्राप्तं विष्णुपदं पुत्र अपुनर्भवसंज्ञकम् ॥7.4.24.७०॥ ॥
॥ श्रीकृष्ण उवाच ॥ ॥
चंद्रशर्मन्प्रसन्नोऽहं तव भक्त्या द्विजोत्तम ॥
शैवभावप्रपन्नोऽपि यस्त्वं जातोऽसि वैष्णवः ॥ ७१ ॥
नवसप्ततिवर्षाणि न कृतं वासरे मम ॥
संपूर्णं मत्प्रसादेन तव जातं न संशयः ॥७२॥
एकेनैवोपवासेन त्रिस्पृशासंभवेन हि ॥
द्वारकायाः प्रसादेन मद्दृष्ट्यालोकनेन हि ॥ ७३ ॥
अविद्यामोहितेनैव शिवभक्त्या ममार्चनम् ॥
न कृतं मत्प्रसादेन कृतं चैव भविष्यति ॥ ७४ ॥
वैशाखे यैरहं दृष्टो द्वारकायां द्विजोत्तम ॥
त्रिस्पृशावासरे चैव वंजुलीवासरे तथा ॥ ७५ ॥
उन्मीलिनीदिने प्राप्ते प्राप्ते वा पक्षवर्द्धिनी ॥
नैतेषां चापराधोऽस्ति यद्यपि ब्रह्मघातकाः ॥ ७६ ॥
जन्मप्रभृति पुण्यस्य प्रकृतस्यापि भूसुर ॥
मत्पुरीदर्शनेनापि फलभागी भवेन्नरः ॥ ७७ ॥
दृष्ट्वा समस्ततीर्थानि प्रभासादीनि भूतले ॥

मत्पुरीदर्शनेनैव पृष्ट्वाऽपीह भवेत्फलम् ॥ ७८ ॥

माहात्म्यं द्वारकायास्तु मद्दिने यत्र तत्र वा ॥

पठेन्मम पुरीं पुण्यां लभते मत्प्रसादतः ॥ ७९ ॥

मत्पुरीं वसतां पुण्यं त्रिकालं मम दर्शनात् ॥

तत्फलं समवाप्नोति यस्त्विदं पठते कलौ ॥ 7.4.24.८० ॥

कलौ काशी च मथुरा ह्यवंती च द्विजोत्तम ॥

अयोध्या च तथा माया कांची चैव च मत्पुरी ॥ ८१ ॥

शालिग्रामभवं चैव बदरी च तथोत्तमा ॥

कुरुक्षेत्रं भृगुक्षेत्रं पुष्करं शुभसंज्ञकम् ॥८२॥

प्रयागं च प्रभासं च क्षेत्रं वै हाटकेश्वरम् ॥

गंगाद्वारं शौकरं च गंगासागरसंगमम् ॥ ८३ ॥

नैमिषं दण्डकारण्यं तथा वृन्दावनं द्विज ॥

सैंधवं चार्बुदाख्यं च सर्वाण्यायतनानि च ॥ ८४ ॥

वनानि मागधादीनि पुष्कराणि द्विजोत्तम ॥

शैलराजादयः शैला हिमाद्रिप्रमुखा हि ये ॥ ८५ ॥

गंगादयश्च सरितो भूतले संति यानि वै ॥

तीर्थानि त्रिषु कालेषु समानि द्वारकापुरः ॥ ८६ ॥

कलिना कलितं सर्वं वर्जयित्वा तु मत्पुरीम् ॥

विप्र वर्षशते प्राप्ते मत्पुर्यां मम दर्शने ॥ ८७ ॥

तव मृत्युर्महीदेव मत्प्रसादाद्भविष्यति ॥

त्रिस्पृशावासरे प्राप्ते वैशाखे शुक्लपक्षतः ॥ ८८ ॥

संगमे बुधवारस्य दिवा भूमौ ममाग्रतः ॥

दशमं द्वारमासाद्य तव प्राणस्य निर्गमम् ॥

भविष्यति न संदेहो मत्प्रसादेन भूसुर ॥ ८९ ॥

स्वस्थानं गच्छ विप्रेंद्र सर्वान्कामानवाप्स्यसि ॥

मद्भक्तानां युगांतेऽपि विनाशो नोपपद्यते ॥ 7.4.24.९० ॥

मद्भक्तिं वहतां पुंसामिह लोके परेऽपि वा ॥

नाशुभं विद्यते किंचित्कुलकोटिं नयेद्दिवम् ॥ ९१ ॥

॥ मार्कण्डेय उवाच ॥ ॥

ततो वर्षशते प्राप्ते गत्वा द्वारवतीं पुरीम् ॥

प्राणान्कृष्णोपदेशेन त्यक्त्वा मोक्षं जगाम ह ॥ ९२॥

इन्द्रद्युम्न तदाख्यातं माहात्म्यं द्वारकाभवम् ॥

पुनरेव् प्रवक्ष्यामि यत्ते मनसि वर्त्तते ॥ ९३ ॥

शृण्वतां पठतां चैव माहा त्म्यं द्वारकाभवम् ॥

सर्वं फलमवाप्नोति कृष्णेन कथितं च यत् ॥ ९४ ॥

विस्तारयंति लोकेऽस्मिँल्लिखितं यस्य वेश्मनि ॥

प्रत्यक्षं द्वारकापुण्यं प्राप्यते कृष्णसंभवम् ॥ ९५॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकाखण्डे चन्द्रशर्मोपाख्याने चन्द्रशर्मणो द्वारकागमनपूर्वक कृष्णदत्तवरग्रहणादि द्वारकानगरीश्रैष्ठ्यमाहात्म्यवर्णनंनाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २५



॥ इंद्रद्युम्न उवाच ॥ ॥

कथयस्व मुनिश्रेष्ठ किंचित्कौतूहलं मम ॥

पुण्यं पवित्रं पापघ्नं तीर्थं तु वद विस्तरात् ॥ १ ॥

॥ मार्कण्डेय उवाच ॥ ॥

मथुरा द्वारकाऽयोध्या कलिकाले पुरीत्रयम् ॥

धर्मार्थकामदं भूप मोक्षदं हरिवल्लभम् ॥ २ ॥

मधुरायां तु कालिंदी गोमती कृष्णसन्निधौ ॥

अयोध्यायां तु सरयूर्मुक्तिदा सेविता सदा ॥ ३ ॥

द्वारवत्यामयोध्यायां कृष्णं रामं शुभप्रदम् ॥

मथुरायां हरिं विष्णुं स्मृत्वा मुक्तिमवाप्नुयात् ॥ ४ ॥

धन्या सा मथुरा लोके यत्र जातो हरिः स्वयम् ॥

द्वारका सफला लोके क्रीडितं यत्र विष्णुना ॥ ५ ॥

धन्यानामपि सा पूज्या अयोध्या सर्वकामदा ॥

या स्वयं रामदेवेन पालिता धर्मबुद्धिना ॥ ६ ॥

यद्ददाति फलं काशी सेविता कल्पसंख्यया ॥

कला ददाति मथुरा वासरेणापि तत्फलम् ॥ ७ ॥

मन्वंतरसहस्रे तु प्रयागे यत्फलं भवेत् ॥

निमिषार्द्धेन वसतां द्वारकायां तु तत्फलम् ॥ ८ ॥

प्रभासे च कुरुक्षेत्रे यत्फलं वत्सरैः शतैः ॥

वसतां निमिषार्द्धेन ह्ययोध्यायां च तद्भवेत् ॥ ९ ॥

अयोध्याधिपतिं रामं मथुरायां तु केशवम् ॥

द्वारकावासिनं कृष्णं कीर्तनं चापि दुर्ल्लभम् ॥ 7.4.25.१० ॥

मथुराकीर्तनेनापि श्रवणाद्द्वारकापुरः ॥

अयोध्यादर्शनेनापि त्रिशुद्धं च पदं व्रजेत्॥ ११ ॥

कृष्णं स्वयंभुवं देवं द्वारका त्रिदिवोपमा ॥
श्रुता चाप्यथवा दृष्टा कुरुते जन्मसंक्षयम् ॥ १२ ॥
श्रुताभिलिखिता दृष्टा ह्ययोध्या मथुरापुरी ॥
पापं हरति कल्पोत्थं द्वारका च तृतीयका ॥ १३ ॥
कृष्णं विष्णुं हरिं देवं विश्रांतं च कलौ स्मृतम् ॥
द्वादश्यां जागरे रात्रावश्वमेधायुतं फलम् ॥ १४ ॥
बालक्रीडनकं स्थानं ये स्मरंति दिनेदिने ॥
स्वर्णशैलपदं नृणां जायते राजसत्तम ॥ १५ ॥
धन्यास्ते मानवा लोके कलिकाले नरोत्तम॥
प्लवनं सिंधुतोयेन गोमत्यां यैर्नरैः कृतम् ॥ १६ ॥
पश्चिमाशां नरः स्नात्वा कृत्वा वै करसंपुटम् ॥
द्वारकां ये स्मरिष्यंति तेषां कोटिगुणं फलम् ॥ १७ ॥
मनसा चिन्तयेद्यो वै कलौ द्वारवतीं पुरीम् ॥
कपिलाऽयुतपुण्यं च लभते हेलया नरः ॥ १८ ॥
गंगासागरजं पुण्यं गंगाद्वारभवं तथा ॥
कलौ द्वारवतीं गत्वा प्राप्नोति मनुजाधिप ॥ १९ ॥
सप्तकल्पस्मरो भूप मार्कण्डेयः स्मराम्यहम् ॥
समाना वाऽधिका वापि द्वारवत्या न कापि पूः ॥7.4.25.२०॥
दुर्वाससा समो धन्यो नास्ति नाप्यधिको नृप ॥
भाषाबंधं येन कृत्वा द्वारकायां धृतो हरिः ॥ २१ ॥
मा काशीं मा कुरुक्षेत्रं प्रभासं मा च पुष्करम् ॥
द्वारकां गच्छ राजर्षे पश्य कृष्णमुखं शुभम् ॥ २२ ॥
अश्वमेधसहस्रं तु राजसूयशतं कलौ ॥
पदेपदे च लभते द्वारकां याति यो नरः ॥ २३ ॥
सफलं जीवितं तेषां कलौ नृपवरोत्तम ॥ ये
षां न स्खलितं चित्तं द्वारकां प्रति गच्छताम् ॥ २४ ॥
माता च पुत्रिणी तेन पिता चैव पितामहाः ॥
पिंडदानं कृतं येन गोमत्यां कृष्णसन्निधौ ॥ २५ ॥

गोपीचन्दनमुद्रां तु कृत्वा भ्रमति भूतले ॥

सोऽपि देशो भवेत्पूतः किं पुनर्यत्र संस्थितम् ॥ २६ ॥

द्वारकायां समुद्भूतां तुलसीं कृष्णसेविताम् ॥

नित्यं बिभर्ति शिरसा स भवेत्त्रिदशाधिपः॥ २७ ॥

दैत्यारेर्भगवत्तिथिश्च विजया नीरं च गगोद्भवं नित्यंकाशिपुरी तथैव तुलसी धात्रीफलं वल्लभम्॥२८॥

शास्त्रं भागवतं तथा च दयितं रामायणं द्वारका पुण्यं मालतिसम्भवं सुदयितं गीतं कृतं जागरम् ॥ २९ ॥

गृहे यस्य सदा तिष्ठेद्गोपीचन्दनमृत्तिका ॥

द्वारका तिष्ठते तत्र कृष्णेन सहिता कलौ ॥ 7.4.25.३० ॥

कृतघ्नो वाऽथ गोघ्नोऽपि हैतुकः कृत्स्नपापकृत् ॥

गोपीचन्दनसंपर्कात्पूतो भवति तत्क्षणात् ॥ ३१ ॥

गोपीचन्दनखंडं तु यो ददातीह वैष्णवे ॥

कुलमेकोत्तरं तेन शतं तारितमेव वा ॥ ३२ ॥

द्वारकासम्भवा भूप तुलसी यस्य मंदिरे ॥

तस्य वैवस्वतो नित्यं बिभेति सह किंकरैः ॥ ॥ ३३ ॥

द्वारकासंभवा मृत्स्ना तुलसीकृष्णकीर्तनम् ॥

क्रतुकोटिशतं पुण्यं कथितं व्याससूनुना ॥ ३४ ॥

आलोड्य सर्वशास्त्राणि पुराणानि पुनःपुनः ॥

मया दृष्टा महीपाल न द्वारकासमा पुरी ॥ ३५ ॥

द्वारकागमनं येन कृतं कृष्णस्य कीर्तनम् ॥

स्नातं तीर्थसहस्रैस्तु तेनेष्टं क्रतुकोटिभिः ॥३६॥

इद्रियाणां तु दमनं किं करिष्यति देहिनाम् ॥

सांख्यमध्ययनं चापि द्वारकां गच्छते न चेत् ॥३७॥

पशवस्ते न सन्देहो गर्दभेन समा जनाः ॥

दृष्टं कृष्णमुखं यैर्न गत्वा द्वारवतीं पुरीम् ॥ ३८ ॥

कृतकृत्यास्तु ते धन्या द्वादश्यां जागरे हरेः ॥

कृत्वा जागरणं भक्त्या नृत्यमाना मुहुर्मुहुः ॥३९॥

कृष्णालयं तु यो गत्वा गोमत्यां पिंडपातनम् ॥

करोति शक्त्या दानं च मुक्तास्तस्य पितामहाः ॥7.4.25.४०॥

प्रेतत्वं च पिशा चत्वं न भवेत्तस्य देहिनः ॥
जन्मजन्मनि राजेंद्र यो गतो द्वारकां पुरीम् ॥ ४१ ॥
अनशनेन यत्पुण्यं प्रयागे त्यजतस्तनुम् ॥
द्वादश्यां निमिषार्द्धेन तत्फलं कृष्णसन्निधौ ॥ ४२ ॥
सूर्यग्रहे गवां कोटिं दत्त्वा यत्फलमाप्नुयात् ॥
तत्फलं कलिकाले तु द्वारवत्यां दिनेदिने ॥ ४३ ॥
कोटिभारं सुवर्णस्य ग्रहणे चंद्रसूर्ययोः ॥
दत्त्वा यत्फलमाप्नोति तत्फलं कृष्णदर्शने ॥ ४४ ॥
दोलासंस्थं च ये कृष्णं पश्यंति मधुमाधवे ॥
तेषां पुत्राश्च पौत्राश्च मातामहपितामहाः ॥ ४५ ॥
श्वशुराद्याः सभृत्याश्च पशवश्च नरोत्तम ॥
क्रीडंति विष्णुना सार्द्धं यावदाभूतसंप्लवम् ॥ ४६ ॥
या काचिद्द्वादशी भूप जायते कृष्णसन्निधौ ॥
पश्यामि नांतरं किञ्चित्कलिकाले विशेषतः ॥ ४७ ॥
कृष्णस्य सन्निधौ नित्यं वासरा द्वादशीसमाः ॥
युगादिभिः समाः सर्वे नित्यं कृष्णस्य सन्निधौ॥४८॥
कलौ द्वारवती सेव्या ज्ञात्वा पुण्यं विशेषतः ॥
षटपुर्यश्चैव सुलभा दुर्ल्लभा द्वारका कलौ॥४९॥
स्मरणात्कीर्तनाद्यस्माद्भुक्तिमुक्ती सदा नृणाम् ॥
दुर्वाससा तु ऋषिणा रक्षिता तिष्ठते पुरी॥7.4.25.५०॥
कलौ न शक्यते गंतुं विना कृष्णप्रसादतः ॥
कृष्णस्य दर्शनं कर्तुं यान्ति रुद्रादयः सुराः॥५१॥
त्रिकालं जगतीनाथ रुक्मिणीदर्शनाय च ॥
सफला भारती तस्य कृष्णकृष्णेति या वदेत्॥५२॥
द्वारका यायिनं दृष्ट्वा गायंति दिविसंस्थिताः ॥
नरकात्पितरो मुक्ताः प्रचलंति हसंति च ॥५३॥
गोप्यं यत्पातकं पुंसां गोमती तद्व्यपोहति ॥
स्मरणात्कीर्तनाद्वापि किं पुनः प्लवने कृते ॥ ५४ ॥

रुक्मिणीसहितं देवं शंखोद्धारे च शंखिनम् ॥
पिंडारके चतुर्बाहुं दृष्ट्वाऽन्यैः किं करिष्यति ॥५५॥
रुक्मिणी देवकीपुत्रश्चक्रतीर्थं च गोमती ॥
गोपीनां चंदनं लोके तुलसी दुर्लभा कलौ ॥ ५६ ॥
दुर्लभास्ते सुता ज्ञेया धरणीपापनाशकाः ॥
गयां गत्वा तु ये पिंडं द्वारकां कृष्णदर्शनम् ॥
करिष्यंति कलौ प्राप्ते वंजुलीसमुपोषणम् ॥ ५७ ॥
समं पुण्यफलं तेषां वंजुली द्वारका समा ॥
येन न्यूना नाधिकाऽपि कथितं विष्णुना स्वयम् ॥ ५८ ॥
वंजुली चाधिकां राजञ्छृणु वक्ष्यामि कारणम्॥
द्वादश्यामुपवासेन द्वादश्यां पारणेन तु ॥
प्राप्यते हेलया चैव तद्विष्णोः परमं पदम् ॥ ५९ ॥
गृहेषु वसतां तीर्थं गृहेषु वसतां तपः ॥
गृहेषु वसतां मोक्षो वंजुलीसमुपोषणात् ॥ 7.4.25.६० ॥
वंजुली द्वारका गंगा गया गोविंदकीर्त्तनम् ॥
गोमती गोकुलं गीता दुर्ल्लभं गोपिचन्दनम् ॥ ६१ ॥
एतच्छृणोति यो भक्त्या कृत्वा मनसि केशवम् ॥
अश्वमेधसहस्रस्य फलमाप्नोति मानवः ॥ ६२ ॥
श्रोष्यंति जागरे ये वै माहात्म्यं केशवस्य च ॥
सर्वपापविनिर्मुक्ताः पदं यास्यंति वैष्णवम् ॥ ॥ ६३ ॥
पठिष्यंति नरा नित्यं ये वै श्रोप्यंति भक्तितः ॥
तुलापुरुषदानस्य फलं ते प्राप्नुवंति हि॥ ६४॥
कृष्णजागरणे दानं यच्चाल्पमपि दीयते ॥
सर्वं कोटिगुणं ज्ञेयमित्याहुः कवयो नृप ॥ ६५ ॥
मानकूटं तुलाकूटं कन्याहयगवां क्रयात् ॥
तत्सर्वं विलयं याति द्वादश्यां जागरे कृते ॥ ६६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये वंजुलीद्वारकागंगागयागोविन्दगोमतीगोकुल गीतागोपीचन्दनमाहात्म्यवर्णनंनाम पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २६



॥ श्रीमार्कण्डेय उवाच ॥ ॥

प्रह्लादं सर्वधर्मज्ञं वेदशास्त्रार्थपारगम् ॥

वैष्णवागमतत्त्वज्ञं भगवद्भक्तितत्परम् ॥ १ ॥

सुखासीनं महाप्राज्ञमृषयो द्रष्टुमागताः ॥

सर्वशास्त्रार्थतत्त्वज्ञाः स्वधर्मप्रतिपालकाः ॥ ॥ २ ॥

॥ ऋषय ऊचुः ॥ ॥

विना ज्ञानाद्विना ध्यानाद्विना चेन्द्रियनिग्रहात् ॥

अनायासेन येनैतत्प्राप्यते परमं पदम् ॥ ३ ॥

संक्षेपात्कथय स्नेहाद्दृष्टादृष्टफलोदयम् ॥

धर्मान्मनुजशार्दूल ब्रूहि सर्वानशेषतः ॥ ४ ॥

इत्युक्तोऽसौ महाभागो नारायणपरायणः ॥

कथयामास संक्षेपात्सर्वलोकहितोद्यतः ॥ ५ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

श्रूयतामभिधास्यामि गुह्याद्गुह्यतरं महत् ॥

यस्य संश्रवणादेव सर्वपापक्षयो भवेत् ॥ ॥ ६ ॥

अष्टादशपुराणानां सारात्सारतरं च यत् ॥

तदहं कथयिष्यामि भुक्तिमुक्तिफलप्रदम् ॥ ७ ॥

सुखासीनं महादेवं जगतः कारणं परम् ॥

पप्रच्छ षण्मुखो भक्त्या सर्वलोकहितोद्यतः ॥ ८ ॥

॥ स्कन्द उवाच ॥ ॥

भगवन्सर्वलोकानां दुःखसंसारभेषजम् ॥

कथयस्व प्रसादेन सुखोपायं विमुक्तये ॥ ९ ॥

॥ ईश्वर उवाच ॥ ॥

चतुर्विधं तु यत्पापं कोटिजन्मार्जितं कलौ ॥

जागरे वैष्णवं शास्त्रं वाचयित्वा व्यपोहति ॥7.4.26.१०॥

वैष्णवस्य तु शास्त्रस्य यो वक्ता जागरे हरेः ॥

मद्भक्तं तं विजानीयाद्विपन्नस्त्वन्यथा भवेत् ॥ ११ ॥

हरिजागरणं कार्यं मद्भक्तेन विजानता ॥

अन्यथा पापिनो ज्ञेया ये द्विषन्ति जनार्द्दनम् ॥ १२ ॥

जागरं ये च कुर्वंति गायंति हरिवासरे ॥

अग्निष्टोमफलं तेषां निमिषार्द्धेन षण्मुख॥१३॥

जागरे पश्यतां विष्णोर्मुखं रात्रौ मुहुर्मुहुः ॥

येषां हृष्यंति रोमाणि रात्रौ जागरणे हरेः ॥

कुलानि दिवि तावंति वसंति हरिसन्निधौ ॥ १४ ॥

यमस्य पथि निर्मुक्ता जनाः पापशतैर्वृताः॥

गीतशास्त्रविनोदेन द्वादशीजागरान्विताः ॥ १५ ॥

सुप्रभाता निशा तेषां धन्याः सुकृतिनो नराः ॥

प्राणात्ययेन मुह्यंति यैः कृतं जागरं हरेः ॥१६॥

पुत्रिणस्ते नरा लोके धनिनः ख्यातपौरुषाः ॥

येषां वंशोद्भवाः पुत्राः कुर्वंति हरिजागरम् ॥१७॥

इष्टं मखैः कृतं दानं दत्तं पिंडं गयाशिरे ॥

स्नातं नित्यं प्रयागे तु यैः कृतं जागरं हरेः ॥ १८ ॥

दयिता विष्णुभक्ताश्च नित्यं मम षडानन ॥

कुर्वंति वासरं विष्णोर्यस्माज्जागरणं हितम् ॥१९ ॥

श्रुत्वा हर्षं न चाप्नोति जागरं न करोति यः ॥

प्रकटीकरोति तन्नूनं जनन्या दुर्विचेष्टितम् ॥ 7.4.26.२० ॥

संप्राप्य वासरं विष्णोर्न येषां जागरो हरेः ॥

व्यर्थं गतं च तत्पुण्यं तेषां वर्षशतोद्भवम् ॥ २१ ॥

पुत्रो वा पुत्रपुत्रो वा दौहित्रो दुहिताऽपि वा ॥ ।

करिष्यति कुलेऽस्माकं कलौ जागरणं हरेः ॥ २२ ॥

पात्यमानाः प्रजल्पंति पितरो यमकिंकरैः ॥

मुक्तिर्भविष्यत्यस्माकं नरकाज्जागरे कृते ॥२३॥ ।

नान्यथा जायतेऽस्माकं मुक्तिर्यज्ञशतैरपि ॥

विना जागरणेनैव नरलोकात्कथंचन ॥

तस्माज्जागरणं कार्यं पितॄणां हितमिच्छता ॥ २४ ॥

भक्तिर्भागवतानां च गोविंदस्यापि कीर्तनम् ॥

न देहग्रहणं तस्मात्पुनर्लोके भविष्यति ॥ २५ ॥

जागरं कुरुते यश्च संगमे विजयादिने ॥

पुनर्देहप्रजननं दग्धं तेनाऽऽत्मना स्वयम् ॥ २६ ॥

त्रिस्पृशा वासरं येन कृतं जागरणान्वितम् ॥

केशवस्य शरीरे तु स लीनो नात्र संशयः ॥२७ ॥

उन्मीलिनी कृता येन रात्रौ जागरणान्विता ॥

प्रभवंति न पापानि स्थूलसूक्ष्माणि तस्य तु ॥ २८ ॥

सतालवाद्यसंयुक्तं संगीतं जागरं हरेः ॥

यः कारयति देवस्य द्वादश्यां दानसंयुतम् ॥ २९ ॥

तस्य पुण्यं प्रवक्ष्यामि महाभागवतस्य हि ॥

तिलप्रस्थहस्रं तु सहिरण्यं द्विजातये ॥

दत्त्वा यत्फलमाप्नोति ह्ययने रविसंक्रमे ॥ 7.4.26.३० ॥

हेमभारशतं नित्यं सवत्सं कपिलायुतम् ॥

प्रेक्षणीयप्रदानेन तत्फलं प्राप्नुयात्कलौ ॥ ३१ ॥

यः पुनर्वासरे पुत्र दिव्यैर्ऋषिकृतैः स्तवैः ॥

तोषयेत्पद्मनाभं वै वैदिकैर्विष्णुसामभिः ॥ ३२ ॥

ऋग्यजुःसामसम्भूतैर्वैष्णवैश्चैव पुत्रक ॥

संस्कृतैः प्राकृतैः स्तोत्रैरन्यैश्च विविधैस्तथा ॥ ३३ ॥

प्रीतिं करोति देवेशो द्वादश्यां जागरे स्थितः ॥

शृणु पुण्यं समासेन यद्गीतं ब्रह्मणा मम ॥ ३४ ॥

त्रिःसप्तकृत्वो धरणीं त्रिगुणीकृत्य षण्मुख ॥

दत्त्वा यत्फलमाप्नोति तत्फलं प्राप्नुयान्नरः ॥ ३५ ॥

गवां शतसहस्रेण सवत्सेनापि यत्फलम् ॥

तत्फलं प्राप्नुयान्मर्त्यः स्तोत्रैर्यस्तोषयेद्धरिम् ॥ ३६ ॥

वैदिकी दशगुणा प्रीतिर्यामेनैकेन जागरे ॥
एवं फलानुसारेण कार्य्यं जागरणं हरेः ॥ ३७ ॥
यः पुनः पठते रात्रौ गीतां नामसहस्रकम् ॥
द्वादश्यां पुरतो विष्णोर्वैष्णवानां समीपतः ॥ ३८ ॥
पुण्यं भागवतं स्कांदपुराणं दयितं हरेः ॥
माधुरं बालचरितं गोपीनां चरितं तथा ॥ ३९ ॥
एतान्पठति रात्रौ यः पूजयित्वा तु केशवम् ॥
न वेद्म्यहं फलं वत्स यदि ज्ञास्यति केशवः ॥ 7.4.26.४० ॥
दीपं प्रज्वालयेद्रात्रौ यः स्तवैर्हरिजागरे ॥
न चास्तं गच्छते तस्य पुण्यं कल्पशतैरपि ॥ ४१ ॥
मंजरीसहितैः पत्रैस्तुलसीसम्भवैर्हरिम् ॥
जागरे पूजयेद्भक्त्या नास्ति तस्य पुनर्भवः ॥ ४२ ॥
स्नानं विलेपनं पूजा धूपं दीपं च संस्तवम् ॥
नैवेद्यं च सतांबूलं जागरे दत्तमक्षयम् ॥४३॥
ध्यातुमिच्छति षड्वक्त्रं यो मां भक्तिपरायणः ॥
स करोतु महाभक्त्या द्वादश्यां जागरं हरेः ॥ ४४ ॥
वासरे वासुदेवस्य सर्वे देवाः सवासवाः ॥
देहमाश्रित्य तिष्ठंति ये प्रकुर्वंति जागरम् ॥ ४५ ॥
जागरेवासुदेवस्य महाभारतकीर्तनम् ॥
ये कुर्वंति गतिं यांति योगिनां ते न संशयः ॥ ४६ ॥
चरितं रामदेवस्य ये वधं रावणस्य च ॥
पठंति जागरे विष्णोस्ते यांति परमां गतिम ॥ ४७
अधीत्य चतुरो वेदान्कृत्वा चैवार्चनं हरेः ॥
स्नात्वा च सर्वतीर्थेषु जागरे तत्फलं हरेः ॥ ४९ ॥
रथानामयुतैर्यत्तु सहस्रैर्वरवारणैः ॥ लक्षेणाश्ववराणां तु तत्फलं जागरे हरेः ॥ ४९ ॥
धान्यशैलसहस्रैस्तु तुलापुरुषको टिभिः ॥
यत्फलं मुनिभिः प्रोक्तं तत्फलं जागरे हरेः ॥ 7.4.26.५० ॥
कन्याकोटिप्रदानं च स्वर्णभारशतं तथा ॥

दत्तं रत्नायुतशतं यैः कृतो जागरो हरेः ॥ ५१ ॥

अष्टादशपुराणैस्तु पठितैर्यत्फलं भवेत् ॥

तत्फलं शतसाहस्रं कृते जागरणे हरेः ॥ ५२ ॥

मन्वादि पठतां शास्त्रं यत्फलं हि द्विजन्मनः ॥

अधिकं फलमाप्नोति कुर्वाणो जागरं हरेः ॥ ५३ ॥

दुर्भिक्षे चान्नदातॄणां पुंसां भवति यत्फलम् ॥

संन्यासिनां सहस्रैस्तु यत्फलं भोजितैः कलौ ॥

फलं तत्समवाप्नोति कुर्वतां जागरं हरेः ॥ ५४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वादशीजागरणमाहात्म्यवर्णनंनाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २७



॥ ईश्वर उवाच ॥ ॥

स्थित्वा द्वादशिजागरे क्रतु समे दुःखापहे पुण्यदे रम्यं भागवतं शृणोति पुरुषः कृत्वा हरेः पूजनम् ॥

पुण्यं वाजिमखस्य कोटिगुणितं संप्राप्य भक्तोत्तमश्छित्त्वा पाशसमूह पक्षनिचयं प्राप्नोति कृष्णालयम् ॥ १ ॥

हत्यापापसमूहकोटिनिचयैर्गुर्वंगना- कोटिभिःस्तेयैर्लक्षगुणैर्गुरोर्वधकरैः संवेष्टितो यद्यपि ॥

श्रुत्वा भागवतं छिनत्ति सकलं कृत्वा हरेर्जागरं मुक्तिं याति नरेन्द्र निर्मलवपुर्भित्त्वा रवेर्मंडलम् ॥ २ ॥

एकादशी द्वादशिसंप्रविष्टा कृता नभस्ये श्रवणेन युक्ता ॥

विशेषतः सोमसुतेन संगमे करोति मुक्तिं प्रपितामहानाम् ॥ ३ ॥

यद्दीयते द्वादशिवासरे शुभे विष्णुं समुद्दिश्य तथा पितॄणाम् ॥

पर्य्याप्तमिष्टैः क्रतुतीर्थदानैर्भक्त्या प्रदत्तं खलु मेरुतुल्यम् ॥ ४ ॥

महानदीं प्राप्य दिनं च विष्णोस्तोयांजलिं यस्तुपितॄन्ददाति ॥

श्राद्धं कृतं तेन समाः सहस्रं यच्छन्ति कामान्पितरः सुतृप्ताः ॥५॥

शरणागतानां परिपालनेन ह्यन्नप्रदानेन शृणुष्व पुत्र ॥

ऋणप्रदाने द्विजदेवतानां तद्वै फलं जागरणेन् विष्णोः ॥ ६ ॥

यः स्वर्णधेनुं मधुनीरधेनुं कृष्णाजिनं रौप्यसुवर्णमेरु ॥

ब्रह्मांडदानं प्रददाति याति स वै फलं जागरणेन विष्णोः ॥ ७ ॥

सत्येन शौचेन दमेन यत्फलं क्षमादयादानबलेन षण्मुख ॥

दशाश्वमेधैर्बहुदक्षिणैश्च तेषां फलं जागरणेन विष्णोः ॥ ८ ॥

स्नानेन यत्प्राप्य नदीं वीरष्ठां यत्पिंडदानेन पितुर्गयायाम् ॥

यद्धेमदानात्कुरुजांगले च तत्स्यात्फलं जागरणेन विष्णोः ॥ ९ ॥

हत्यायुतानां यदि संचितानिस्तेयानि रुक्मस्य तथामितानि ॥

निहंत्यनेकानि पुराकृतानि श्रीजागरे ये प्रपठंति गीतम् ॥ 7.4.27.१० ॥

मार्गं न ते सौरपुरस्य दूतान्वनांतरं षण्मुख किंचिदन्यत् ॥

स्वप्ने न पश्यंति च ते मनुष्या येषां गता जागरणेन निद्रा ॥ ११ ॥

काषायवस्त्रैश्च जटाभरैश्च पूर्ताग्निहोत्रैः किमु चान्य मन्त्रैः ॥

धर्मार्थकामवरमोक्षकरीं च भद्रामेकां भजस्व कलिकालविनाशिनीं च ॥ १२ ॥

इत्युक्तपूर्वं किल नारदेन श्रेयोर्थबुद्ध्या विनतासुताय ॥

कृष्णात्परं नान्यदिहास्ति दैवं व्रतं तदह्नः परमं न किंचित् ॥ १३ ॥

भोभोः सुराः शृणुत नारद इत्यवोचद्भोभोः खगेन्द्रऋषिसिद्धमुनीन्द्रसंघाः ॥

उत्क्षिप्य बाहुमथ भक्तजनेन चोक्तं नैकादशीव्रतसमं व्रतमस्ति किंचित्॥ १४ ॥

पक्षीन्द्र पापपुरुषा न हरिं भजंति तद्भक्तिशास्त्रनिरता न कलौ भवंति ॥

कुर्वंति मूढमनसो दशमीविमिश्रामेकादशीं शुभदिनं च परित्यजंति ॥ १५ ॥

आर्त्तः सदा चैव सदा च रोगी पापी सदा चैव सदा च दुःखी ॥

सदा कुलघ्नोऽथ सदा च नारकी विद्धं मुरारेर्दिनमाश्रयेत्तु यः ॥ १६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहिताया सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वादशीजागरणस्य सर्वतोवरेण्यत्ववर्णनंनाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २८

https://sa.wikisource.org/s/gww



॥ मार्कण्डेय उवाच ॥ ॥

कृत्वा जागरणं विष्णोर्यथान्यायं नरेश्वर ॥

पितॄन्यच्छति पुण्यं च ततः किं कुरुते यमः ॥ १ ॥

भुक्तो वा यदि वाऽभुक्तः स्वच्छो वाऽस्वच्छ एव वा ॥

विमुक्तिः कथिता तत्र हरिजागरणान्नृणाम् ॥२॥

अस्नातो वा नरः स्नातो जागरे समुपस्थिते ॥

सर्वतीर्थाप्लुतो ज्ञेयस्तं दृष्ट्वा दिवमाव्रजेत् ॥ ३ ॥

श्वपचा जागरं कृत्वा पदं निर्वाणमागताः ॥

किं पुनर्वर्णसंभूताः सदाचारपरास्तथा ॥ ४ ॥

युवतीनादमाकर्ण्य यथा निद्रा न जायते ॥

जागरे चैवमेव स्यात्तत्कथानां च कीर्तने ॥ ५ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥

उत्कल्लनं मनःपापं शोधयेद्विष्णु जागरः ॥ ६ ॥

विमुक्तिः कामुकस्योक्ता किं पुनर्वीक्षतां हरिम् ॥ ७ ॥

वाचिकं मानसं पापं करणैर्यदुपार्जितम्॥

अन्यैर्निमिषमात्रेण व्यपोहति न संशयः ॥ ८ ॥

गोष्ठ्यां समागता ये तु तेषां पापं कुतः स्मृतम् ॥

मातृपूजा गयाश्राद्धं सुतीर्थगमनं तथा ॥

जागरस्य नृणां राजन्समानि कवयो विदुः ॥ ९ ॥

जननीपूजनं भूप ह्यश्वमेधायुतैः समम् ॥

पूर्णं वर्षशतं भूप कुशाग्रेणोद्धृतं जलम् ॥ 7.4.28.१० ॥

पिबन्पात्रे द्विजः सम्यक्तीर्थे पुष्करसंज्ञिते ॥

जागरस्यैव चैतानि कलां नार्हंति षोडशीम् ॥ ११ ॥

कृत्वा कांचनसंपूर्णां वसुधां वसुधाधिप ॥

दत्त्वा यत्फलमाप्नोति तत्फलं हरिजागरे ॥ १२ ॥

निकृंतनं कर्मणश्च ह्यात्मना दुष्कृतं कृतम् ॥

व्यपोहति न संदेहो येन जागरणं कृतम् ॥ ॥

संक्षेपतः प्रवक्ष्यामि पुनरेव महीपते ॥

जागरे पद्मनाभस्य यत्फलं कवयो विदुः ॥ १४ ॥

रवेर्बिंबमिदं भित्त्वा स योगी हरिजागरे ॥

प्रयाति परमं स्थानं योगिगम्यं निरंजनम् ॥

सांख्ययोगैः सुदुःखेन प्राप्यते यत्पदं हरेः ॥ १५ ॥

नद्यो नदा यथा यांति सागरे संस्थितिं क्रमात् ॥

एवं जागरणात्सर्वे तत्पदे यांति संस्थितिम् ॥ १६ ॥

मेरुमंदरमानानि कृत्वा पापानि वा नरः ॥

हरिजागरणे तानि व्यपोहति न संशयः ॥ १७ ॥

राज्यं स्वर्गं तथा मोक्षं यच्चान्यदीप्सितं नृणाम् ॥

ददाति भगवान्कृष्णः स्वगीतैर्जागरे स्थितः ॥ १८ ॥

जागरेणैव पापानां श्वपचानां महीपते ॥

तत्पदं कविभिः प्रोक्तं किं पुनस्तु द्विजन्मनाम् ॥ १९ ॥

जपध्यानविहीनस्य गायकस्यापि भूपते ॥

कर्मभ्रष्टस्य च प्रोक्तो मोक्षस्तु हरिजागरे ॥ 7.4.28.२० ॥

तन्नास्ति त्रिषु लोकेषु पुण्यं पुण्यवतां नृणाम् ॥

यत्तु साधयते भूप जागरे संव्यवस्थितः ॥ २१ ॥

त्वया पुनरिदं कार्य्यं स्मर्त्तव्यो गरुडध्वजः ॥

एकादश्यां न भोक्तव्यं कर्तव्यं जागरं सदा ॥ २२ ॥

जागरे वर्त्तमानस्य श्वपचस्य गतिर्भवेत् ॥

किंपुनर्वर्णजातीनां वैष्णवानां महीपते ॥ २३ ॥

ये तु जागरणे निद्रां न यांति नृपपुंगव ॥

न तेषां जननी याति खेदं गर्भावधारणात् ॥ २४ ॥

तस्माज्जागरणं कार्य्यं मातुर्जठरवर्जिभिः ॥

भीतेर्मोक्षपरैर्मर्त्यैः सुखचेष्टाबहिष्कृतैः ॥ २५ ॥

यस्तु जागरणं रात्रौ कुर्याद्भक्तिसमन्वितः ॥

निमिषेनिमिषे राजन्नश्वमेधफलं लभेत् ॥ २६ ॥

शयनो त्थापनाभ्यां च समं पुण्यमुदाहृतम् ॥

विशेषो नास्ति भूपाल विष्णुना कथितं पुरा ॥ २७ ॥

ब्राह्मणाः क्षत्रिया वैश्याः स्थिताः शूद्राश्च जागरे ॥

पक्षिणः कृमिकीटाश्च ह्यनेके चैव जंतवः ॥

ते गताः परमं स्थानं योगिगम्यं निरंजनम् ॥ २८ ॥

यानि कानि च पापानि ब्रह्महत्यासमानि च ॥

कृष्णजागरणे तानि क्षयं यांति न संशयः ॥ २९ ॥

एकतः क्रतवः सर्वे सर्वतीर्थसमन्विताः ॥

एकतो देवदेवस्य जागरः कृष्णवल्लभः ॥

न समं ह्यधिकः प्रोक्तः कविभिः कृष्णजागरः ॥ 7.4.28.३० ॥

सूर्यशक्रादयो देवा ब्रह्मरुद्रादयो गणाः ॥

नित्यमेव समायांति जागरे कृष्णवल्लभे ॥ ३१ ॥

गंगा सरस्वती रेवा यमुना च शतह्रदा॥

चंद्रभागा वितस्ता च नद्यः सर्वाश्च तत्र वै ॥३२॥

सरांसि च ह्रदाश्चैव समुद्राः कृत्स्नशो नृप ॥

एकादश्यां नृपश्रेष्ठ गच्छंति हरिजागरे ॥ ३३ ॥

स्पृहणीयास्तु देवेभ्यो ये नराः कृष्णजागरे ॥

नृत्यं गीतं प्रकुर्वंति वीणावाद्यं तथैव च ॥ ३४ ॥

भक्त्या वाऽप्यथवाऽभक्त्या शुचिर्वाप्यथवाऽशुचिः ॥

कृत्वा जागरणं विष्णोर्मुच्यते पापकोटिभिः ॥ ३५ ॥

पादयोः पांसुकणिका यावत्तिष्ठंति भूतले ॥

तावद्वर्षसहस्राणि जागरी वसते दिवि ॥ ३६ ॥

तस्माद्गृहं प्रगन्तव्यं जागरे माधवस्य च ॥

कलौ मलविनाशाय द्वादशद्वादशीषु च ॥ ३७ ॥

सुबहून्यपि पापानि कृत्वा जागरणं हरेः ॥

निर्द्दहेन्मेरुतुल्यानि युगकोटिशतान्यपि ॥ ३८ ॥

उन्मीलिनी महीपाल यैः कृता प्रीतिसंयुतैः ॥

कलौ जागरणोपेता फलं वक्ष्यामि तच्छृणु ॥ ३९ ॥

स्थितौ युगसहस्रं तु पादेनैकेन भूतले ॥

काश्यां च जाह्नवीतीरे तत्फलं लभते नरः ॥7.4.28.४०॥

भवेद्युगसहस्रं च विनाऽऽहारेण यत्फलम्॥

उन्मीलिनीं समासाद्य फलं जागरणे हरेः ॥ ४१ ॥

दुष्प्राप्यं वैष्णवं स्थानं मखकोटिशतैः कृतैः ॥

हेलया प्राप्यते नूनं द्वादश्यां जागरे कृते ॥ ४२ ॥

न कुर्वंति व्रतं विष्णोर्जागरेण समन्वितम् ॥

परस्वं पारदार्यं च पापं तान्प्रति गच्छति ॥४३॥

एकेनैवोपवासेन भावहीनास्तु मानवाः ॥

निर्द्दग्धाऽखिलपापास्ते प्रयांति स्वर्गकाननम् ॥ ४४ ॥

यत्र भागवतं शास्त्रं यत्र जागरणं हरेः ॥

शालिग्रामशिला यत्र तत्र गच्छेद्धरिः स्वयम्॥ ४५ ॥

न पुर्य्यः पावनाः सप्त कलौ वेदवचो नहि ॥

यादृशं वासरं विष्णोः पावनं जागरान्वितम्॥ ४६ ॥

संप्राप्ते वासरे विष्णोर्ये न कुर्वंति जागरम्॥

मज्जंति नरके घोरे नरानार्य्यो न संशयः ॥ ४७ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वादशीजागणरणमाहात्म्यवर्णनंनामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः २९

https://sa.wikisource.org/s/gwx



॥ प्रह्लाद उवाच ॥ ॥

अथान्यच्च प्रवक्ष्यामि गुह्याद्गुह्यतरं महत् ॥

द्वारकायाः परं पुण्यं माहात्म्यं ह्युत्तमोत्तमम् ॥ १ ॥

इतिहासं पुरावृत्तं वर्णयिष्ये मनोहरम् ॥

तीर्थक्षेत्रादिदेवानामृषीणां संशयापहम् ॥२॥

सौभाग्यमतुलं दृष्ट्वा सिंहराशिगते गुरौ ॥

गोदावर्य्यां द्विजश्रेष्ठा नारदो भगवत्प्रियः ॥ ३ ॥

गौतमस्याऽभितो दृष्ट्वा त्रैलोक्यसंभवानि वै ॥

तीर्थानि सरितः सर्वा विस्मयं परमं गतः ॥ ४ ॥

तत्र काशी कुरुक्षेत्रमयोध्या मथुरापुरी ॥

माया कांची ह्यवंती च अरण्यान्याश्रमैः सह ॥ ५ ॥

हरिक्षेत्रं गया मिश्रक्षेत्रं च पुरुषोत्तमम् ॥

प्रभासादीनि पुण्यानि मुक्तिक्षेत्राण्यशेषतः ॥ ६ ॥

जाह्नवी यमुना रेवा तत्र पुण्या सरस्वती ॥

सरयूर्गंडकी तापी पयोष्णी सरितां वरा ॥ ७ ॥

कृष्णा भीमरथी पुण्या कावेर्य्याद्याः सरिद्वराः ॥

स्वर्गे मर्त्ये च पाताले वर्त्तमानाः सतीर्थकाः ॥ ८ ॥

स्थिता गोदावरीतीरे सिंहराशिं गते गुरौ ॥

तथा च पुष्करादीनि सप्तसिंधुसरांसि च ॥ ९ ॥

मेर्वादिपर्वताः पुण्या दर्शनात्पापनाशनाः ॥

तीर्थराज प्रयागश्च सर्वतीर्थसमन्वितः ॥ 7.4.29.१० ॥

वेदोपवेदाः शास्त्राणि पुराणानि च सर्वशः ॥

सिद्धा मुनिगणाः सर्वे देवर्षिपितृदेवताः ॥ ११ ॥

चंद्रादित्यौ सुरगणाः सिंहस्थे च बृहस्पतौ ॥

स्थिता गोदावरीतीरे वर्षमेकं प्रहर्षिताः ॥१२ ॥

यानि कानि च पुण्यानि तीर्थक्षेत्राणि संति वै ॥

त्रैलोक्ये तानि सर्वाणि गौतम्यां वीक्ष्य विस्मिताः ॥ १३ ॥

देवर्षिर्नारदस्तत्र मुनिभिर्मुदितोऽवसत् ॥

सिंहस्यांते(स्थांते) च सर्वाणि स्वस्थानगमनाय वै ॥१४॥

आमन्त्र्य गौतमीं देवीं स्थितानि पुरतस्ततः ॥

सर्वेषां शृण्वतां विप्रा गौतमी खिन्नमानसा ॥

तप्ता दुर्जनसंसर्गान्नारदं दुःखिताऽब्रवीत् ॥ १५ ॥

॥ गौतम्युवाच ॥ ॥

पश्यैतानि सुतीर्थानि गंगाद्याः सरितोऽमलाः ॥

सागरा गिरयः पुण्या गयात्रितयमेव च॥१६॥

क्षेत्राणि मोक्षदान्यंग त्रैलोक्यजानि नारद ॥

देवाश्च पितरः सिद्धा ऋषयो मानवादयः ॥१७॥

तीर्थ राज प्रयागश्च सर्वतीर्थसमन्वितः ॥

एतेषामेव सर्वेषां मत्संसर्गान्महामुने ॥

विशुद्धानां प्रकाशेन राजते भुवनत्रयम् ॥१८॥

प्रयांति तानि सर्वाणि स्वंस्वं स्थानं प्रति प्रभो ॥

अधुनाऽहं परिश्रांता दह्यमाना त्वहर्निशम् ॥१९॥

दुर्जनानां सुसंपर्काद्भृशं पापात्मना प्रभो ॥

सौभण्यमधुना प्राप्तं सत्संसर्गेण नारद ॥7.4.29.२०॥

प्रयांत्येतानि सर्वाणि स्वस्थानं मुदितानि च ॥२१॥

एतानि मत्प्रसादेन पुण्यानि कथितानि च ॥

कथय श्रमशांत्यर्थं दुःखि ता किं करोम्यहम्॥२२॥

॥ प्रह्लाद उवाच ॥ ॥

गोदावर्य्या वचः श्रुत्वा भगवान्नारदो द्विजाः ॥

क्षणं ध्यात्वा तु दुःखार्त्तः प्राह संशयमानसः ॥२३॥ ॥

॥ नारद उवाच ॥ ॥

अहो अत्यद्भुतं ह्येतद्गौतम्या व्यसनं महत् ॥

पश्यन्त्वसंशयं देवास्तीर्थक्षेत्रसरिद्वराः॥२४॥

सत्पुण्यनिचयो यस्यां युष्माकं समभूद्ध्रुवम् ॥

तस्याः पापाग्निशमनं कथं स्यादिति चिन्त्यताम्॥ २५ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

तदा चिन्तयतां तेषां सर्वेषां भावितात्मनाम् ॥

गौतमो भगवांस्तत्र समायातो मुनीश्वराः ॥ २६ ॥

दृष्ट्वा तमृषयो देवा यथोचितमपूजयन् ॥

जाह्नवी यमुना पुण्या नर्मदा च सरस्वती ॥ २७ ॥

अन्याश्च सर्वाः सरितस्त्रैलोक्यमनुवर्तिताः ॥

वाराणसी कुरुक्षेत्र प्रमुखान्याश्रमैः सह ॥

युगपत्तानि सर्वाणि संपूज्य मुनिमब्रुवन्॥२८॥

त्वत्प्रसादेन वै त्राताः सम्यक्छुद्धा महामुने ॥

यदानीता त्वया गंगा गौतमी भूतलं प्रति ॥२९॥

कृतार्था मानवाः सर्वे सर्वपापविवर्जिताः ॥

किंतु दुर्जनसंपर्कात्संतप्ता गौतमी भृशम्॥7.4.29.३०॥

कथं पापैर्विनिर्मुक्ता परमानन्दसंप्लुता ॥

सुप्रभा जायते देवी तद्गौतम विचिन्त्यताम् ॥ ३१ ॥

॥ प्रह्लाद उवाच ॥ ॥

एवमुक्तो मुनिस्तैस्तु चिन्ताकुलितमानसः ॥

नारदस्य मुखं वीक्ष्य प्रहसन्गौतमोऽब्रवीत् ॥ ३२ ॥

॥ गौतम उवाच ॥ ॥

सर्वेषां क्षेत्रतीर्थानां महाशुभविनाशिनी ॥

गौतमीयं महाभागा अस्यास्तापः क्व शाम्यति ॥३३॥

नास्ति लोकत्रये तीर्थं स्नातुं सिंहगते गुरौ ॥

यद्वै नायाति गौतम्यां क्षेत्रं चापि विशुद्धये ॥

काशीप्रयागमुख्यानि राजंते यत्प्रसादतः ॥ ३४ ॥

वदंतु मुनयः सर्वे क्षेत्रतीर्थसमाश्रिताः ॥

शुद्धं विचार्यं यत्कार्य्यं मयाऽस्मिञ्जातसंकटे ॥ ३५ ॥

॥ प्रह्लाद उवाच ॥ ॥

इत्युक्त्वा मुनयः सर्वे नोचुः किञ्चिद्विमोहिताः ॥

तत्रोपायमविज्ञाय गौतमीं गौतमोऽब्रवीत् ॥ ३६ ॥

॥ गौतम उवाच ॥ ॥

आनीतासि मया देवि तपसाऽऽराध्य शंकरम्॥

वदिष्यति स चोपायमित्युक्त्वाऽचिन्तयत्तदा ॥३७॥

गौतमः श्रद्धया भक्त्या गंगामौलिमखंडधीः ॥

तदाऽभून्महदाश्चर्यं शृण्वंतु ऋषयोऽमलाः ॥ ३८ ॥

ध्यायमाने महादेवे गौतमेन महात्मना ॥

अकस्मादभवद्वाणी हर्षयन्ती जगत्त्रयम् ॥ ३९ ॥

नादयन्ती दिशः सर्वा आब्रह्मभुवनं द्विजाः ॥

अरूपलक्षणाकारा विषादशमनी शुभा ॥। ॥ 7.4.29.४० ॥

॥ दिव्यवाण्युवाच ॥ ॥

अहो बत महाश्चर्य्यं सर्वेषां सुखदे शुभे ॥

प्रसंगेऽत्र महाक्षेत्रे मग्ना दुःखार्णवे बुधाः॥ ४१ ॥

अहो हे गौतमाचार्य्य ऋषयो नारदादयः ॥

शृण्वंतु तीर्थक्षेत्राणि कृपया संवदाम्यहम् ॥ ४२ ॥

पश्चिमस्य समुद्रस्य तीरमाश्रित्य वर्तते ॥

अस्माच्च दिशि वायव्यां द्वारकाक्षेत्रमुत्तमम् ॥ ४३ ॥

यत्राऽऽस्ते गोमती पुण्या सागरेण समन्विता ॥

पश्चिमाभिमुखो यत्र महाविष्णुः सदा स्थितः ॥ ४४ ॥

अनेकपापराशीनामुग्राणामपि सर्वदा ॥

दाहस्थान समाख्यातमिन्धनानां यथाऽनलः ॥ ४५ ॥

देवविश्वद्रुहो यत्र दग्ध्वा पातकमद्भुतम् ॥

लोकत्रयवधाज्जातं विराजतेऽर्कवत्सदा ॥ ४६ ॥

तद्गम्यतां महाभागा गोमतीमघदाहकाम् ॥

गोदावरीं पुरस्कृत्य क्षेत्रतीर्थसमन्विताम् ॥ ४७ ॥

प्राप्य द्वारवतीं पुण्यां मत्प्रसादाद्द्विजोत्तमाः ॥

प्रभावाद्द्वारकायाश्च सत्यमाविर्भविष्यति ॥ ४८ ॥

॥ प्रह्लाद उवाच ॥ ॥

इत्युक्ते सति ते सर्वे हर्ष निर्भरमानसाः ॥

श्रुत्वा सर्वोत्तमं क्षेत्रं जगर्जुर्हरिनामभिः ॥ ४९ ॥

जितं भो जितमस्भाभिर्धन्या धन्यतमा वयम् ॥

दैवादपगतो मोहो ज्ञातं तीर्थोत्तमोत्तमम् ॥ 7.4.29.५० ॥

तदा सर्वाणि तीर्थानि क्षेत्रारण्याश्रमैः सह ॥

वाराणसीप्रयागादि सरांसि सिन्धवो नगाः ॥ ५१ ॥

गया च देवखातानि पितरो देवमानवाः ॥

श्रुत्वा प्रमुदिता वाचं प्रोचुर्जयजयेति च ॥ ५२ ॥

अहो सर्वोत्तमं क्षेत्रं सर्वेषां नोऽघनाशनम् ॥

राजानं तीर्थराजानं द्वारकां शिरसा नमः॥ ९३ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

श्रुत्वा सर्वोत्तमं क्षेत्रं तीर्थं सर्वोत्तमोत्तमम् ॥

देवोत्तमोत्तमं देवं श्रीकृष्णं क्लेशनाशनम् ॥५४॥

उत्कण्ठा ह्यभवत्तेषां तीर्थादीनां ह्यनुत्तमा ॥

प्रोचुरन्योन्यतो वाचं सर्वाणि युगपत्तदा ॥ ५५ ॥

॥ ऋषितीर्थदेवा ऊचुः ॥ ॥

कदा द्रक्ष्यामहे पुण्यां द्वारकां कृष्णपालिताम् ॥

श्रीकृष्णदेवमूर्तिं च कृष्णवक्त्रं सुशोभितम् ॥ ५६ ॥

कदा नु गोमतीस्नानमस्माकं तु भविष्यति ॥

चक्रतीर्थे कदा स्नात्वा कृष्णदेवस्य मंदिरम् ॥

द्रक्ष्यामः सुमहापुण्यं मुक्तिद्वारमपावृतम् ॥ ५७ ॥

दुर्ल्लभो द्वारकावासो दुर्ल्लभं कृष्णदर्शनम् ॥

दुर्ल्लभं गोमती स्नानं रुक्मिणीदर्शनं द्विजाः ॥ ५८ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये गौतमीतीरस्थसमस्ततीर्थक्षेत्रादीनां देववाण्या द्वारकाप्रभावं श्रुत्वा द्वारकागमनोत्सुकतापूर्वक गोमतीवर्णनंनामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३०

https://sa.wikisource.org/s/gwy
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ ॥ श्रीप्रह्लाद उवाच ॥ ॥

तदा तेषां सुतीर्थानां क्षेत्राणामभवन्मुदः ॥

गन्तुं द्वारवतीं पुण्यां सर्वेषामपि सर्वशः ॥ १ ॥

द्वारकागमने दृष्ट्वा तथा नारदगौतमौ ॥

महोत्सवो महांस्तत्र भविष्यति मनोहरः ॥२ ॥

तीर्थानां कृष्णयात्रायां गन्तव्यमित्यवो चतुः ॥

अथ ते ह्यृषयो देवाः सर्वतीर्थसमन्विताः ॥ ३ ॥

गौतमीं तु पुरस्कृत्य ययुर्द्वारवतीं मुदा ॥

तदा सर्वाणि तीर्थानि क्षेत्रारण्यानि कृत्स्नशः ॥

द्वारकागमनं चक्रुः सानन्दा ऋषयः सुराः ॥ ४ ॥

श्रद्धया परया भक्त्या कृष्णदर्शनलालसाः॥

वीणानिनादतत्त्वज्ञं नारदं पथि तेऽ ब्रुवन्॥ ५ ॥

॥ ऋषय ऊचुः ॥ ॥

राशयः पुण्यपुञ्जानां कृता वै तपसां तथा ॥

यज्ञदानव्रतानां च तीर्थानां महतां भुवि ॥ ६ ॥

संप्राप्तस्तत्प्रसादोऽयं यद्द्रक्ष्यामः कुशस्थलीम् ॥

पृच्छामहेऽधुना त्वां वै योगिनां परमं गुरुम् ॥ ७ ॥

द्वारकायास्तु यात्रायां को विधिः संप्रकीर्तितः ॥

नियमः कोऽत्र कर्तव्यो वर्जनीयं च किं मुने ॥ ८ ॥

श्रोतव्यं कीर्तितव्यं च स्मर्तव्यं किं च वै पथि ॥

उत्सवाश्चात्र के प्रोक्ता द्वारकायाश्च तत्पथि॥।

एकैकश्च महाभाग भक्तानन्दविवर्द्धनम् ॥

एतत्सर्वं महाभाग कृपया संप्रकीर्त्यताम् ॥ 7.4.30.१० ॥

॥ श्रीनारद उवाच ॥ ॥

कृताभ्यंगस्तु पूर्वेद्युः संपूज्य श्रद्धया हरिम्॥

भोजयेद्वैष्णवान्विप्रान्स्वशक्त्या संप्रहर्षितः ॥ ११ ॥

अनुज्ञातो महाविष्णोः प्रसादमुपयुज्य वै ॥

शयीत भुवि सुप्रीतो द्वारकां कृष्णमानसः ॥ १२ ॥

श्वोभूते तु शुचिः स्नातः संपूज्य जगदीश्वरम् ॥

प्रदक्षिणं नमस्कृत्य महाविष्णोरनुज्ञया ॥

पृष्ट्वा कुलवृद्धांश्च ब्राह्मणान्वैष्णवान्प्रियान्॥ १२ ॥

ततस्तु तदनुज्ञातो गीतवादित्रसंस्तवैः ॥

यात्रारंभं प्रकुर्वीत द्वारकायां प्रहर्षितः ॥ १४ ॥

द्वारकां गच्छमानस्तु शान्तो दांतः शुचिः सदा ॥

ब्रह्मचर्यमधः शय्यां कुर्वीत नियतेन्द्रियः ॥ १५ ॥

सहस्रनामपठनं पुराणपठनं तथा ॥

कर्त्तव्यं सकृपं चित्तं सतां शुश्रूषणं तथा ॥ १६ ॥

अन्नदानादिकं सर्वं विभवे सति मानवः ॥

अपि स्वल्पं स्वशक्त्या वै कृतं कोटिगुणं भवेत् ॥ १७ ॥

पथि कृष्णस्य यो भक्त्या ग्रासमेकं प्रयच्छति ॥

द्वीपांता तेन दत्ता भूः पुण्यस्यान्तो न विद्यते ॥ १८ ॥

किं पुनर्द्वारकाक्षेत्रे कृष्णस्य च समीपतः ॥

कलावेकेकसिक्थे च राजसूयायुतं फलम्॥ १९ ॥

गयाश्राद्धसहस्राणि कृतानि शतसंख्यया ॥

अन्नदानं कृतं यैस्तु द्वारकापथि मानवैः ॥ 7.4.30.२० ॥

औषधं चान्नपानीयं पादुके कंबलं तथा॥

वासांस्युपानहौ चैव वित्तं च विभवे सति ॥

वर्जयेत्संकरं विद्वान्यूथालापांस्तथैव च ॥ २१ ॥

परनिन्दां च पैशुन्यं परस्य परिवञ्चनम् ॥

परान्नं परपाकं च सति वित्ते त्यजेद्बुधः ॥ २२ ॥

न दोषो हीनवित्तस्य तावन्मात्रपरिग्रहे ॥

श्रोतव्या सत्कथा विष्णोर्नामसंकीर्त्तनामृतम्॥ २३ ॥

द्वारकापथिगच्छद्भिरन्योन्यं भक्तिवर्द्धनम् ॥

जप्तव्यं वैदिकं जाप्यं स्तोत्रमागमिकं तथा ॥ २४ ॥

यात्रायां यत्फलं प्रोक्तं श्रीकृष्णस्य च वै कलौ ॥

न शक्यते मया वक्तुं वदनैर्युगसंख्यया ॥ २५ ॥

इत्येतत्कथितं सर्वं यत्पृष्टं तु द्विजोत्तमाः ॥

यतध्वं तत्प्रयत्नेन विष्णुप्राप्तौ च सत्वरम् ॥ २६ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

एवं ते नारदेनोक्ता मुनयो हृष्टमानसाः ॥

चक्रुस्ते सहिताः सर्वे कृष्णदेवस्य तत्पथि ॥ २७ ॥

केचिच्छृण्वन्ति ता विष्णोः सत्कथा लोकविश्रुताः ॥

यासां संश्रवणादेव भगवान्विशते हृदि ॥ २८ ॥

कीर्त्यमानानि नामानि महापुण्यप्रदानि वै ॥

पावनानि सदा लोके कलौ विप्रा विशेषतः ॥ २९ ॥

पुराणसंहिता दिव्या मुनिभिः परिकीर्तिताः ॥

प्रकाशयंति या विष्णोर्महिमानं सुमंगलम् ॥ 7.4.30.३० ॥

सद्गुणाः कर्मवीर्य्याणि कृतानि विष्णुना पुरा ॥

लीलावताररूपैस्तु शृण्वन्ति परया मुदा ॥ ॥३१॥

अपरे वासुदेवस्य चरितानि सुमंगलाः ॥

वदंति परया भक्त्या सानन्दाः साश्रुलोचनाः ॥ ३२ ॥

अन्ये स्मरंति देवेशमनादिनिधनं विभुम्॥

केचिज्जपंति मुनयः स्तोत्राणि परया मुदा ॥ ३३ ॥

केचित्तु शतनामानि जपन्ति मुनयः पथि ॥

अन्ये सहस्रनामानि लक्षनाम तथाऽपरे ॥ ३४ ॥

केचिल्लौकिकगीतानि हरिनामानि हर्षिताः ॥

उत्सवैश्च व्रजंत्यन्ये पताकादिविभूषिताः ॥ ३५ ॥

गीतवादित्रघोषेण करतालस्वनेन च ॥ ॥

नास्ति धन्यतमस्तस्मात्त्रिषु लोकेषु कश्चन ॥ ३६ ॥

दर्शनं यस्य संजातं वैष्णवानामनुत्तमम्॥

तथैव जाह्नवी पुण्या यमुना च सरस्वती ॥ ॥ ३७ ॥

रेवाद्याः सरितः सर्वाः प्रचक्रुर्गीतनर्त्तनम् ॥

प्रयागादीनि तीर्थानि सागराः पर्वतोत्तमाः ॥ ३८ ॥

वाराणसी कुरुक्षेत्रं पुण्यान्यन्यानि कृत्स्नशः ॥

त्रैलोक्ये यानि तीर्थानि क्षेत्राणि देवनायकाः ॥

चक्रुर्गीतं च नृत्यं च द्वारकायाश्च सत्पथि ॥ ३९ ॥

एकैकस्मिन्पदे दत्ते द्वारकापथि गच्छताम् ॥

पुण्यं क्रतुसहस्राणां तत्पादरजसंख्यया ॥ 7.4.30.४० ॥

अथ ते मुनयः सर्वे तीर्थक्षेत्रादिसंयुताः ॥

श्रीमत्कृष्णालयं दूराद्ददृशुर्नारदादयः ॥ ४१ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वारकां प्रति गोदावर्यादितीर्थक्षेत्रदेव महर्षिगमनोत्सवयात्रावर्णनंनाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३१



॥ प्रह्लाद उवाच॥। ॥

दिव्यस्वप्रभया ध्वांतं भूतानां नाशयन्सदा ॥

जनयन्परमानंदं भक्तानां च भयापहः ॥ १ ॥

पताकाभिर्ध्वजस्थाभिर्द्वारकाजयवर्द्धनः ॥

दिव्यपुण्यप्रकाशेन राजते गिरिराडिव ॥ २ ॥

दृष्ट्वाऽऽलयं तदा विष्णोस्तदायुधविभूषितम्॥

विहाय पादुके च्छत्रं दण्डवत्पतिता भुवि ॥ ३ ॥

भूमिसंलुठनं तेषां तीर्थानामद्भुतं महत् ॥

अभवद्विप्र शार्दूलाः क्षेत्रादीनां च सर्वशः ॥ ४ ॥

वाराणसी कुरुक्षेत्रं प्रयागो जाह्नवी तथा ॥

यमुना नर्मदा पुण्या पुण्या प्राची सरस्वती ॥ ५ ॥

गोदावरी महापुण्या गया तिस्रस्तु मंगलाः ॥

शालिग्रामं महाक्षेत्रं पुण्या चक्रनदी शुभा ॥ ६ ॥

पयोष्णी तपती कृष्णा कावेर्य्याद्याः सुपुण्यदाः ॥

पुष्करादीनि तीर्थानि सागराः पर्वतोत्तमाः ॥ ७ ॥

अयोध्या मथुरा माया अवंत्याद्याश्च मुक्तिदाः ॥

श्रीरंगाख्यमनंतं च प्रभासं च विशेषतः ॥ ८ ॥

पुरुषोत्तमं महाक्षेत्रमरण्यान्यादयः शुभाः ॥

त्रैलोक्ये वर्त्तमानानि सर्वतीर्थानि सर्वशः ॥ ९ ॥

दृष्ट्वा कृष्णालयं पुण्यं मुहुर्मुहुः प्रहर्षिताः ॥

जय शब्दैर्नमःशब्दैर्गर्जंतो हरिनामभिः ॥ 7.4.31.१० ॥

आनंदाश्रूणि मुंचंतः प्रेम्णा गद्गदया गिरा ॥

स्तुवंति मुनयः सर्वे तीर्थादीनि च सर्वशः ॥ ११ ॥

अथ संस्तुवतां तेषामन्योन्यं मुदितात्मनाम् ॥

वीक्ष्य वक्त्राणि सर्वेषां महर्षिर्नारदोऽब्रवीत् ॥ १२ ॥

॥ श्रीनारद उवाच ॥ ॥

राशयः पुण्य पुंजानां कृता युष्माभिरुत्तमाः ॥

तज्जन्मना सहस्रैस्तु यद्दृष्टं कृष्णमंदिरम् ॥ १३ ॥

दर्शनं कृष्णदेवस्य द्वारकागमने मतिः ॥

दृढभक्तिर्महाविष्णोर्नाल्पस्य तपसः फलम् ॥ १४ ॥

धन्या वै पूर्वजास्तेषां वंशजाः कृष्णदर्शनं ॥

सोत्सवा द्वारकां यांति पश्यंति च हरिप्रियाम् ॥ १९ ॥

धन्येयं गौतमी गंगा गौतमोऽयं महातपाः ॥

यत्प्रसादेन सर्वेषां कल्याणं समुपस्थितम् ॥ १६ ॥

यज्ञाध्ययनदानानां तपोव्रतसमाधिनाम्॥

संप्राप्तफलमस्माभिर्युष्माभिः सर्वतीर्थकाः ॥ १७ ॥

यूयं सर्वाणि तीर्थानि क्षेत्राणि चैव कृत्स्नशः ॥

कृष्णाज्ञया सर्वकालं तिष्ठध्वं सर्वदैवतैः ॥ ॥ १८ ॥

वसंति येऽत्र ते धन्या एकाहमपि पावनाः ॥

पश्यंतु सुमहाभागा गोदावर्य्यत्र जाह्नवी ॥ १९ ॥

इयं च शोभते पुण्या द्वारका कृष्ण वल्लभा ॥

प्रपश्यंतु महाभागास्तथा वाराणसीं शुभाम् ॥ 7.4.31.२० ॥

क्षेत्राणि कुरुमुख्यानि पश्यंतु द्वारकां प्रभोः ॥

तादृशी मथुरा काशी मायाऽध्योध्या च राजते ॥ २१ ॥

अवन्ती न च कांची च क्षेत्रं च पुरुषोत्तमम् ॥

सूर्योपरागकालेऽपि कुरुक्षेत्रं न राजते ॥ २२ ॥

ईदृशं न गयातीर्थं यादृगेतत्प्रकाशते ॥ २३ ॥

ग्रहनक्षत्रताराणां यथा सूर्य्यो विराजते ॥

सक्षेत्रतीर्थराजानां द्वारकार्को विराजते ॥ २४ ॥

॥ प्रह्लाद उवाच ॥ ॥

निशम्य नारदेनोक्तं प्रहृष्टाश्च तथा द्विजाः ॥

क्षेत्राणि सर्वतीर्थानि पुरस्कृत्य च गौतमम् ॥ २५ ॥

विहाय गौतमीं तत्र प्रययुर्ह्यग्रतोग्रतः ॥
प्रहृष्टा गौतमी तत्र प्रणम्य त्वरिता ययौ ॥ २६ ॥
गीतवाद्यैश्च नृत्यैश्च पताकाभिः समंततः ॥
प्रययुः स्तोत्रपाठैश्च सर्वे ते द्वारकाश्रये ॥ २७ ॥
स तीर्थान्यग्रतः कृत्वा मध्ये कृत्वा तु शोभनम् ॥
प्रयागं तीर्थराजं च प्रहृष्टं क्षेत्रदर्शनात् ॥ २८ ॥
ततः पश्चात्सरित्स्नानं चकार ऋषिसत्तमः ॥
जाह्नवी गौतमी रेवा यमुनाप्राक्सरस्वती ॥ २९ ॥
सरयूर्गंडकी तापी पयोष्णी यमुना तथा ॥
कृष्णा भीमरथी गंगा कावेरी चाघनाशिनी ॥ ॥ 7.4.31.३० ॥
मंदाकिनी महापुण्या पुण्या भोगवती नदी ॥
व्रजंति युगपत्सर्वाः पश्यंत्यो द्वारकां पुरीम् ॥ ३१ ॥
ततस्ते सागराः सप्त स्वैःस्वैस्तीर्थैः समन्विताः ॥
ततः पश्चादरण्यान्याश्रमैः पुण्यैर्युतानि च ॥ ३२ ॥
ततस्तु पर्वता रम्या मेर्वाद्यास्तु सुशोभनाः ॥
नृत्यंतो गायमानाश्च स्तवाद्यैस्तु महर्षिभिः ॥ ३३ ॥
ततश्च ऋषयो देवाः समंताद्धृष्टमानसाः ॥
गायंतो नृत्यमानाश्च गर्जंतो हरिनामभिः ॥ ३४ ॥
वादित्रनिनदैरुच्चैर्जयशब्दैः प्रहर्षिताः ॥
प्राप्तास्ते गोमतीतीरं सर्वयज्ञसमन्विताः ॥
ववंदिरे महापुण्याः सर्वे ते हृष्टमानसाः ॥ ३५ ॥
॥ श्रीनारद उवाच ॥ ॥
हे भागीरथि हे रेवे यमुने शृणु गौतमि ॥
श्रेष्ठा श्रीगोमतीदेवी विख्याता भुवनत्रये ॥ ३६ ॥
यस्याः सकृज्जलस्नानं स्पर्द्धते ब्रह्मविद्यया ॥
तेन वै गोमती सेयं सर्वतीर्थोत्तमोत्तमा ॥
ब्रह्मज्ञानेन मुच्यंते प्रयागमरणेन वा ॥
स्नानमात्रेण गोमत्यां मुच्यते पूर्वजैः सह ॥ ३७ ॥

॥ प्रह्लाद उवाच ॥ ॥

निशम्य तानि तीर्थानि माहात्म्यं महदद्भुतम् ॥

गोमत्याः श्रद्धया स्नात्वा उत्सवैरग्रतो ययुः ॥ ३८ ॥

ततः क्षेत्राणि तीर्थानि सरितः सागरादयः ॥

ददृशुर्द्वारकां रम्यामागता द्वारमण्डपे ॥ ३९ ॥

स्थितां सिंहासने दिव्ये मणिकांचनभूषिते ॥

सुन्दरां शुक्ल वर्णां च रुद्रादित्यसमप्रभाम् ॥ 7.4.31.४० ॥

दिव्यवस्त्रां सुगंधाढ्यां रत्नाभरणभूषिताम् ॥

किरीटकुण्डलैर्दिव्यैः शोभितां कंकणादिभिः ॥ ४१ ॥

वरदाभयहस्तां च शंखचक्रगदायुधाम्॥

श्वेतातपत्रशोभाढ्यां चामरव्यजनादिभिः ॥ ४२ ॥

संस्तवैः स्तूयमानां च गीतवाद्यादिहर्षिताम् ॥

महासिंहासनस्थां तु दृष्ट्वा द्वारवतीं पुरीम्॥

प्रणेमुर्युगपत्सर्वे सर्वाणि च सुभक्तितः ॥ ४३ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये मूर्तिमतीद्वारवतीदर्शनवर्णनंनामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३२

https://sa.wikisource.org/s/gxa



॥ प्रह्लाद उवाच ॥

नारदस्त्वग्रतो गत्वा प्रणम्याथ हरिप्रियाम् ॥

उवाच ललितां वाचं हर्षयन्द्वारकां पुरीम् ॥ १ ॥

॥ श्रीनारद उवाच ॥ ॥

पश्यपश्य महाभागे सर्वे प्राप्ताः सुशोभने ॥

तीर्थक्षेत्राणि देवाश्च ऋषयश्चैव कृत्स्नशः ॥ २ ॥

पश्येमं पुरतः प्राप्तं प्रयागं तीर्थकैः सह ॥

द्वारके तव पादाब्जे लुण्ठंते श्रद्धयाद्भुतम् ॥ ३ ॥

इदं तु पुष्करं तीर्थं नमति श्रद्धया शुभे ॥

इयं तु गौतमी पुण्या सर्वतीर्थसमाश्रया ॥ ४ ॥

सिंहस्थे च गुरौ भद्रे संप्राप्ता सौभगं महत् ॥

किन्तु दुर्जनसंसर्गाद्दग्धा पापाग्निना भृशम् ॥ ५ ॥

तत्रोपायमभिज्ञाय ऋषीणां शृण्वतां तदा ॥

श्रुत्वा कर्णे महच्छब्दं संप्राप्तेयं तवांतिकम् ॥ ६ ॥

नमस्करोति देवि त्वां द्वारके गौतमी शुभा ॥

पश्यपश्य महापुण्या इयं भागीरथी शुभा ॥ ७ ॥

नमस्करोति ते पादौ संहृष्टा च पुनःपुनः ॥

पश्येमां नर्मदां रम्यां प्रणतां तव पादयोः ॥ ८ ॥

यमुना चन्द्रभागेयमियं प्राचीसरस्वती ॥

सरयूर्गंडकी प्राप्ता गोमती पूर्ववाहिनी ॥ ॥ ९ ॥

शोणः सिन्धुनदी चैता अन्याश्च सरितां वराः ॥

कृष्णा भीमरथी पुण्या कावेर्य्याद्याः सरिद्वराः ॥ 7.4.32.१० ॥

सीताचक्षुर्नदी भद्रा नमंत्येताः पदांबुजम् ॥

द्वारके ता महापुण्याः सप्तद्वीपोद्भवाः पराः॥११॥

मन्दाकिनी महापुण्या भोगवत्यादिसंयुता॥

पश्याश्चर्यमिदं भद्रे वाराणसी विमुक्तिदा ॥१२॥

भक्त्या ते च पदांभोजं शिरस्याधाय वर्तते ॥

कुरुक्षेत्रं महापुण्यं नमति त्वामहर्निशम् ॥१३॥

द्वारके मथुरां पश्य प्रणतां तव पादयोः ॥

अयोध्याऽवंतिकामायास्ता नमंति पदांबुजम्॥ १४ ॥

कांची गया विशाला च विरजा लुठति क्षितौ ॥

शालिग्रामं महाक्षेत्रं पतितं तव पादयोः॥

विराजते प्रभासं च क्षेत्रं च पुरुषोत्तमम् ॥ १५ ॥

भार्गवादीनि चान्यानि सर्वक्षेत्राणि सुन्दरि ॥

द्वारके प्रणमंति त्वां भक्त्योत्थाय पुनःपुनः ॥ ॥ १६ ॥

पश्येमान्सागरान्सप्त पतितस्तांब पादयोः ॥

पश्यारण्यानि सर्वाणि नैमिषं प्रणतं पुरः ॥ १७ ॥

धनुष्कं च दशारण्यं दंडकारण्यमर्बुदम्॥

नारायणाश्रमं पश्य द्वारके प्रणतं तथा ॥ १८ ॥

अयं मेरुश्च कैलासो मन्दराद्याः सहस्रशः ॥

हिमाद्रिर्विंध्यशैलश्च श्रीशैलाद्याः प्रहर्षिताः ॥

एते ह्यृषिगणाः सर्वे नमंतिस्म पुनःपुनः ॥ १९ ॥

गंगाद्याः सागराः शैला नृत्यंति पुरतस्तव ॥

ऋषिदेवगणाः सर्वे सर्वे गर्जंति नामभिः ॥ 7.4.32.२० ॥ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

इत्येवं वदतस्तस्य द्वारका हृष्टमानसा ॥

नृत्यतो मुदितान्वीक्ष्य सर्वान्प्रेम्णाभिनंद्य च ॥

उवाच ललिता वाचं गौतमीं स्पृश्य पाणिना ॥ २१ ॥

भागीरथीप्रयागादीन्क्षेत्रादीनथ सर्वशः ॥

द्वारका मधुरालापैः सर्वानानंदयत्तदा ॥ २२ ॥

अथाश्चर्यमभूत्तत्र सर्वानंदविवर्द्धनम् ॥

अथ तावत्तदाऽऽकाशे गीतवाद्यजयस्वनाः ॥ २३ ॥

गर्जनानि सुपुण्यानि हरिशब्दैः पृथक्पृथक् ॥
अपश्यन्वै तदा सर्वे ब्रह्माद्या देवनायकाः ॥ २४ ॥
महेशः स्वगणैः सार्द्धं भवान्या समदृश्यत ॥
इन्द्रस्तु त्रिदशैः सार्द्धं यक्षगन्धर्वकिन्नरैः ॥ २५ ॥
मरुद्भिर्लोकपालैश्चा नृत्यमानाः प्रहर्षिताः ॥
सिद्धविद्याधराः सर्वे वस्वादित्याश्च सग्रहाः ॥ २६ ॥
भृग्वाद्याः सनकाद्याश्च नृत्यमानाः प्रहर्षिताः ॥
ब्रह्माणं च नमस्कृत्य सप्तस्वर्गस्थिताः सुराः ॥ २७ ॥
ऊचुस्ते द्वारकां दृष्ट्वा ब्रह्मेशानादयस्तदा ॥
हर्षविह्वलितात्मानो वीक्ष्याऽन्योन्यं च विस्मिताः ॥ २८ ॥ ॥
॥ देवा ऊचुः ॥ ॥
सेयं वै द्वारका देवी वहते यत्र गोमती ॥
यत्राऽऽस्ते भगवान्कृष्णः सेयं पुण्या विराजते ॥ २९ ॥
सर्वक्षेत्रोत्तमा या च सर्वतीर्थोत्तमोत्तमा ॥
स्वर्गादप्यधिका भूमौ द्वारकेयं प्रकाशते ॥ 7.4.32.३० ॥
एतद्वै चक्रतीर्थं च यच्छिला चक्र चिह्निता ॥
मुक्तिदा पापिनां लोके म्लेच्छदेशेऽपि पूजिता ॥ ३१ ॥
॥ प्रह्लाद उवाच ॥ ॥
ब्रह्मादीनागतान्दृष्ट्वा विस्मिता नारदादयः ॥
क्षेत्राणि तीर्थमुख्यानि विस्मितानि सरिद्वराः ॥
प्रणेमुर्युगपत्सर्वे सर्वाः सर्वाणि सर्वशः ॥ ३२ ॥
ब्रह्मादीनां च तीर्थानां दृष्ट्वा यात्रां मनोहराम् ॥
द्वारकां प्रति विप्रेन्द्रा विस्मिता द्वारकौकसः ॥ ३३ ॥
दृष्ट्वा देवगणाः सर्वे द्वारकां प्रति मंदिरे ॥
गीतवाद्यादि निर्घोषैर्नृत्यमानाः प्रहर्षिताः ॥ ३४ ॥
वदन्तो जयशब्दांश्च सेयं कृष्णप्रियेति च ॥
दृष्ट्वा ब्रह्ममहेशानौ द्वारकां प्रीतमानसौ ॥ ३५ ॥
त्यक्त्वा च वाहने श्रेष्ठे दण्डवत्पतितौ भुवि ॥

ऊचतुश्च तदा देवौ द्वारकां प्रति हर्षितौ ॥ ३६ ॥

श्रेष्ठा त्वमम्ब सर्वेभ्योऽस्मदादिभ्योऽपि सर्वतः ॥

यतस्त्वां न त्यजेत्साक्षाद्भगवान्विष्णुरव्ययः ॥ ३७ ॥

अतो दर्शय देवेशं कृष्णं कंसविनाशनम् ॥

यद्दर्शनान्महासिद्धिः सर्वेषां च भविष्यति ॥ ३८ ॥ ॥

॥ प्रह्लाद उवाच ॥ ॥

इत्युक्त्वा प्रययौ देवी तीर्थक्षेत्रादिसंयुता ॥

ब्रह्मेशानौ पुरस्कृत्य हृष्टौ दृष्ट्वा महोत्सवान् ॥ ३९ ॥

गीतवाद्यपताकैश्च दिव्योपायनपाणिभिः ॥

प्राप्योवाच ततो देवान्द्वारका हर्षविह्वला ॥ 7.4.32.४० ॥

पश्यतां पश्यतां देवाः सोऽयं वै द्वारकेश्वरः ॥

प्राप्य संदर्शनं यस्य मुक्तानां यत्फलं भवेत् ॥

न विद्यते सहस्रेषु ब्रह्मांडेषु च यत्फलम् ॥ ४१ ॥

ततो देवगणाः सर्वे क्षेत्रतीर्थादिसंयुताः ॥

पश्चिमाभिमुखं दृष्ट्वा कृष्णं क्लेशविनाशनम् ॥

प्रणेमुर्युगपत्सर्वे प्रहृष्टाः समुपागताः ॥ ४२ ॥

गीतवाद्यप्रघोषैश्च नृत्यमानाः समंततः ॥

जयशब्दं नमःशब्दं गर्जंतो हरिनामभिः ॥ ४३ ॥

ब्रह्मा भवो भवानी च सेन्द्रा देवगणा भुवि ॥

दृष्ट्वा कृष्णं प्रणेमुस्ते भक्त्योत्थाय पुनःपुनः॥ ४४ ॥

प्रयागादीनि तीर्थानि गंगाद्याः सरितोऽमलाः ॥

ऋषयो देवगंधर्वाः शुकाद्याः सनकादयः ॥

वीक्ष्य वक्त्रं महाविष्णोः प्रणेमुश्च मुहुर्मुहुः ॥ ४५ ॥

कृष्णकृष्णेति कृष्णेति जय कृष्णेति वादिनः ॥

स्नात्वा तु गोमतीनीरे तीरे चैव महोदधेः ॥

कमलासनः संहृष्टः श्रीमत्कृष्णमपूजयत् ॥ ४६ ॥

स्वर्धेनुपयसा स्नाप्य दिव्यैश्चा मृतपंचकैः ॥

भवश्चाथ भवानी च पूजयामास भक्तितः ॥ ४७ ॥

इन्द्रो देवगणाः सर्वे योगिनः सनकादयः ॥

ऋषयो नारदाद्याश्च गंगाद्याश्च सरिद्वराः ॥ ४८ ॥

अमूल्याभरणैर्भक्त्या महारत्नविनिर्मितैः ॥

दिव्यैर्माल्यैरनेकैश्च नन्दनादिसमुद्भवैः ॥ ४९ ॥

प्रियया श्रीतुलस्या वै श्रीमत्कृष्णमपूजयन् ॥

धूपैर्नीराजनैर्दिव्यैः कर्पूरैश्च पृथक्पृथक् ॥ 7.4.32.५० ॥

नैवेद्यैर्विविधैः पुष्पैर्दिव्यैः कर्पूरवासितैः ॥

सकर्पूरैश्च तांबूलैः प्रियैश्चोपायनैस्तथा ॥५१

महामांगलिकैः सर्वैः सुदिव्यैर्मंगलाऽऽर्तिकैः ॥

संपूज्यैवं महाविष्णुं कृष्णं क्लेशविनाशनम् ॥

प्रहृष्टा ननृतुः सर्वे गीतवाद्यप्रहर्षिताः ॥५२ ॥

पुरतः कृष्णदेवस्य ह्यप्सरोभिः समन्विताः ॥

ब्रह्मा च ब्रह्मपुत्राश्च ततः सेन्द्रा मरुद्गणाः ॥ ५३ ॥

ब्रह्मादीन्नृत्यतः प्रेक्ष्य भगवान्कमलेक्षणः ॥

वारयामास हस्तेन प्रीतः प्राह सुरान्विभुः॥ ५४ ॥

॥ श्रीभगवानुवाच ॥ ॥

भोभो ब्रह्मन्महेशान हे भवानि महेश्वरि ॥

क्षेत्राणि सर्वतीर्थानि नारदः सनकादयः ॥

प्रीतोऽहं भवता सम्यक्सर्वान्कामानवाप्स्यथ ॥ ५५ ॥

॥ प्रह्लाद उवाच ॥ ॥

तदाभिलषिताँल्लब्ध्वा स र्वान्कामवरानथ ॥

भक्त्या परमया श्रीमत्कृष्णं प्रोचुः प्रहर्षिताः ॥ ५६ ॥

॥ देवा ऊचुः ॥ ॥

प्राप्तः कामवरोऽस्माभिः सर्वतः कृपया विभो ॥

सप्रेमा त्वत्पदांभोजे भक्तिर्भव्याऽनपायिनी ॥ ५७ ॥

॥ प्रह्लाद उवाच ॥ ॥

तथैव पूजयामासू रुक्मिणीं कृष्णवल्लभाम् ॥

अथ ब्रह्ममहेशानौ सर्वेषां शृण्व तामिदम् ॥ ५८ ॥

श्रद्धया परया युक्तौ द्वारकां प्रत्यवोचतुः ॥

त्वं देवि सर्वतीर्थानां क्षेत्राणामुत्तमोत्तमा ॥ ५९ ॥

पर्वतानां यथा मेरुः सिन्धूनां सागरो यथा ॥

प्राणो यथा शरीराणामिन्द्रियाणां तु वै मनः ॥ 7.4.32.६० ॥

तेजस्विनां यथा वह्निस्तत्त्वानां चैत्य ईज्यते ॥

यथा ग्रहर्क्षताराणां सोमो वै ज्योतिषां धुवम् ॥

एषां प्रकाशपुंजानां यथा सूर्य्यः प्रकाशते ॥ ६१ ॥

यथा नः सर्वदेवानां महाविष्णुरयं महान् ॥

तथैव सर्वतीर्थानां पूज्येयं द्वारका शुभा ॥ ६२ ॥

॥ प्रह्लाद उवाच ॥ ॥

इत्युक्त्वा सर्वदेवानां क्षेत्रादीनां च सत्तमाः ॥

आधिपत्ये सुरेशानौ द्वारकामभिषेचतुः ॥ ६३ ॥

ब्रह्मेशानौ तथा देवाः प्रजेशा ऋषयोऽमलाः ॥

तीर्थानां क्षेत्रराजानां महाराजत्वकारणम्॥६४॥

चक्रुर्महाभिषेकं तु द्वारकायाः प्रहर्षिताः॥

वादयन्तो विचित्राणि वादित्राणि महोत्सवे ॥ ६५ ॥

दिव्यैः पञ्चामृतैस्तोयैः सर्वतीर्थसमुद्भवैः ॥

पुण्यैश्चाकाशगंगाया दिग्गजानां करोद्धृतैः ॥ ६६ ॥

अथ वासांसि दिव्यानि दत्त्वा चाऽऽचमनं तथा ॥

चर्चितां चन्दनैर्दिव्यैर्दिव्याभरणभूषिताम् ॥ ६७ ॥

पूजां च चक्रिरे पुष्पैश्चंदनादिसमुद्भवैः ॥

तदा जाता महादिव्या पुरुषाः पार्षदा हरेः ॥ ६८ ॥

विष्वक्सेनसुनंदाद्या द्योतयन्तो दिशो दश ॥

जयशब्दं नमःशब्दं वदंतः पुष्पवर्षिणः ॥ ६९ ॥

गीतवादित्रघोषेण नृत्यमानाः प्रहर्षिताः ॥

किरीटकुण्डलैर्हारैर्वैजयंत्या विभूषिताः ॥ 7.4.32.७० ॥

श्यामाश्चतुर्भुजाः पीतवस्त्रमाल्यैर्विभूषिताः ॥

स्वप्रभा दीप्यमानौ ते दृष्ट्वा ब्रह्ममहेश्वरौ ॥ ७१ ॥

नारदं सनकादींश्च महाभागवतानृषीन् ॥
तेऽपि तानपि संहृष्टाः प्रहर्षागतसंभ्रमाः ॥७२॥
ववंदिरे ततो ऽन्योऽन्यं हृष्टा आलिंगनादिभिः ॥
ऋषयोऽन्ये च देवाश्च प्रणेमुर्विष्णुपार्षदान् ॥ ७३ ॥
अथ ते समुपागम्य द्वारकां विष्णुपार्षदाः ॥
नत्वाऽथ द्वारकानाथं द्वारकां वै तथैव च ॥ ७४ ॥
संपूज्य श्रद्धया भक्त्या निःश्रेयसवनोद्भवैः ॥
कुसुमैर्विविधैर्दिव्यैस्तुलस्या तद्वनोत्थया ॥ ७५ ॥
तदुत्पन्नैः फलैर्दिव्यैर्धूपैर्नीराजनैः प्रभुम् ॥
विविधैश्चान्नतांबूलैर्दत्त्वा कृष्णमतोषयन् ॥ ७६ ॥
क्षेत्रतीर्थादिराजानां महाराजस्त्वमीश्वरि ॥
इति सर्वे वदन्तस्तु द्वारकां च ववंदिरे ॥ ७७ ॥
एतस्मिन्नंतरे विप्रा देवदुन्दुभिनिस्वनाः ॥
अश्रूयंत महाशब्दा अभवन्पुष्पवृष्टयः ॥७८॥
अथाऽऽसीन्महदाश्चर्य्यं शृण्वन्तु ऋषिसत्तमाः ॥
कुरुक्षेत्रं प्रयागं च सव्यदक्षिणपार्श्वयोः ॥ ७९ ॥
स्थित्वा जगृहतुर्द्दिव्ये श्वेतच्छत्रे मनोहरे ॥
द्वारकायस्तथा शुभ्रे चामरव्यजने शुभे ॥ 7.4.32.८० ॥
अयोध्या मथुरा माया वाराणसी जयस्वनैः ॥
स्तुवंत्यन्यास्तथान्यानि सर्वक्षेत्राणि सर्वशः ॥ ८१ ॥
तीर्थानि सरितः सर्वा द्वारकाया मुखांबुजम् ॥
पश्यतः परमानंदं लेभिरे देवमानवाः ॥ ८२ ॥
आहुश्च पार्षदा विष्णोर्धन्यान्येतानि सर्वशः ॥
दृष्ट्वा तु द्वारकां पुण्यां सर्वलोकैकमण्डनाम् ॥ ८३ ॥
वेदयज्ञतपोजाप्यैः सम्यगाराधितो हरिः ॥
प्रसीदेद्यस्य तस्य स्याद्द्वारकागमने मतिः ॥ ८४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये विष्णुपार्षदवर्णितद्वारकामाहात्म्यवर्णनंनाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३३



॥ श्रीप्रह्लाद उवाच ॥ ॥

श्रुत्वा ब्रह्ममहेशानौ यदुक्तं विष्णुपार्षदैः ॥

द्वारकायास्तु माहात्म्यं तद्वर्णयितुमूचतुः॥ ॥ १ ॥

॥ श्रीब्रह्मेशानावूचतुः ॥ ॥

भोभोः क्षेत्राणि तीर्थानि सरांसि सागरादयः ॥

प्रयागादीनि तीर्थानि काश्याद्या मुक्तिदायकाः ॥ २ ॥

भवतां तीर्थराजानां महाराजस्त्वियं शुभा ॥

द्वारका सेवनीया वै स्थीयतां स्वेच्छया बहिः ॥ ३ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

महेशवचनं श्रुत्वा सर्वेषामुत्सवोऽभवत् ॥

प्रदक्षिणां ततः कृत्वा द्वारकां प्रणिपत्य च ॥

आवासं चक्रिरे तत्र क्षेत्रतीर्थानि हर्षतः ॥ ४ ॥

भागीरथी प्रयागं च यमुना च सरस्वती ॥

सरयूगंडकी पुण्या गोमती पूर्ववाहिनी ॥ ५ ॥

अन्याश्च सरितः सर्वाः सिन्धुशोणौ नदौ तथा ॥

पंचाशत्कोटिभिस्तीर्थैर्दिग्भागे ह्युत्तरे स्थिताः ॥

लंपटाः कृष्णसेवायां पश्यतो द्वारकां मुहुः ॥ ६ ॥

मन्दाकिनी तथा पुण्या नदी भागीरथी च या ॥

महानदी नर्मदा च शिप्रा प्राची सरस्वती ॥ ७ ॥

चक्षुर्भद्रा तथा सीता नद्योऽन्याः पापनाशिनी ॥

वर्तंते पूर्वदिग्भागे तीर्थैश्च षष्टिकोटिभिः ॥ ८ ॥

पयोष्णी तपती पुण्या विदर्भा च पयस्विनी ॥

गोदावरी महापुण्या भीमा कृष्णानदी तथा ॥ ९ ॥

कावेरीप्रमुखाः पुण्या अन्यैश्चैवाघनाशिनीः ॥

स्वतीर्थसहिता भक्त्या नवनवतिकोटिभिः ॥ 7.4.33.१० ॥

स्थिता दक्षिणदिग्भागे द्वारकासेवनोत्सुकाः ॥

क्रीडंति गोमतीनीरे तीरे च कृष्णसन्निधौ ॥१ १॥

सप्तद्वीपेषु याः संति तथाऽन्या वै सरिद्वराः ॥

सागराश्च तथा सप्त पश्चिमायां दिशि स्थिताः ॥१२॥

क्रीडंति चक्रतीर्थे वै तीर्थैश्च शतकोटिभिः॥

पश्यंति च मुहुः कृष्णं पश्चिमाभिमुखं सदा ॥ १३ ॥

विदिशासु च सर्वासु तीर्थसंख्या न विद्यते ॥

पुष्करादीनि तीर्थानि विशाला विरजा गया ॥ १४ ॥

शतैककोटिभिस्तीर्थैर्गोमत्युदधिसंगमे ॥

वर्त्तंते कृष्णसेवायां सोत्सवानि द्विजोत्तमाः ॥ १५ ॥

वाराणसी पूरैशान्यामवन्ती पूर्वदिक्स्थिता ॥

आग्नेय्यां दिशि कांती च दक्षिणे मथुरा स्थिता ॥ १६ ॥

नैर्ऋत्यां च तथा माया अयोध्या पश्चिमे स्थिताः॥

वायव्यां तु कुरुक्षेत्रं हरिक्षेत्रं तथोत्तरे ॥ १७ ॥

शिवक्षेत्रं च ऐशान्यामैंद्र्यां च पुरुषोत्तमः ॥

आग्नेय्यां च भृगुक्षेत्रं प्रभासं दक्षिणाश्रितम्॥१८॥

श्रीरंगं नैर्ऋते भागे लोहदंडं तु पश्चिमे ॥

नारसिंहानि वायव्ये कोकामुख्यं तथोत्तरे ॥ १९ ॥

कामाख्या रेणुकादीनि शाक्तेयानि च सर्वशः ॥

क्षेत्रराजानि सर्वाणि यथास्थाने वसंति हि ॥ 7.4.33.२० ॥

उत्तरे चैव सौराणि गाणपत्यानि कृत्स्नशः ॥

क्षेत्राण्युत्तरतः संति रुक्मिण्याः सन्निधौ द्विजाः ॥ २१ ॥

धेनुकं नैमिषारण्यं दंडकं सैंधवं तथा ॥

दशारण्यमर्बुदं च नरनारायणाश्रमम् ॥ २२ ॥

यथादिशं वसंति स्म द्वारकायाः समन्ततः ॥

मेर्वाद्याः पर्वताः सौम्ये द्वारकासेवनोत्सुकाः ॥ २३ ॥

कैलासाद्याश्च ऐशान्यामैन्द्र्यां हिमवदादयः ॥

श्रीशैलाद्याश्च आग्नेय्यां सिंहाद्र्याद्या यमे तथा ॥ २४ ॥

नैर्ऋत्यां वाममार्गाद्या महेन्द्रऋषभादयः ॥

अन्ये च पुण्यशैलाश्च सलोकालोक मानसाः ॥

द्वारकां परितः संति पर्य्युपासंति प्रत्यहम् ॥ २५ ॥

एवं ब्रह्मादयो देवा ऋषयः सनकादयः ॥

क्षेत्रतीर्थादिभिर्युक्ता अन्यैः पुण्यतमैस्तथा ॥ २६ ॥

श्रद्धया परया भक्त्या कन्याराशिस्थिते गुरौ ॥

आयांति द्वारकां द्रष्टुं ब्राहम्याद्याश्च प्रहर्षिताः॥ २७ ॥

इति श्रीस्कान्दे महा पुराण एकाशीतिसाहस्र्यां संहिताया सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकामाहात्म्यवर्णनपूवकं द्वारकायां सर्वतीर्थक्षेत्रादिकृतनिवास वर्णनंनाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३४



॥ श्रीप्रह्लाद उवाच ॥ ॥

एवमद्भुतमाहात्म्यं द्वारकायां मुनीश्वराः ॥

सर्वेषां क्षेत्रतीर्थानां महापापविदारकम्॥१॥

वर्णानामश्रमाणां च पतितानां विशेषतः।

महापापहरं प्रोक्तं महापुण्यविवर्द्धनं॥२॥

अत्युग्रपापराशीनां दाहस्थानं यथा स्मृतम् ॥

द्वारकागमनं विप्राः किं पुनर्द्वारकास्थितिः ॥ ३ ॥

विशेषेण तु विप्रेन्द्राः कन्याराशिस्थिते गुरौ ॥

ब्रह्मादयोपि दृश्यंते यत्र तीर्थैश्च संयुताः ॥ ४ ॥

प्रतिवर्षं प्रकुर्वंति द्वारकागमनं नराः ॥

तेषां पादरजः स्पृष्ट्वा दिवं यांति च पापिनः ॥ ५॥

गोमती नीरपूतानां कृष्णवक्त्रावलोकिनाम् ॥

दर्शनात्पातकं तेषां याति जन्मशतार्जितम् ॥ ६ ॥

इतिहासेन पूर्वोक्तं श्रूयतां मुनिपुङ्गवाः ॥

दिलीपवसिष्ठ संवादे परमाश्चर्य्यवर्द्धनम् ॥ ७ ॥

काश्यां तु वज्रलेपो हि क्षेत्र एकत्र नश्यति ॥

यातुर्दर्शनतः श्रुत्वा दिलीपो वाक्यमब्रवीत् ॥ ८ ॥

॥ दिलीप उवाच ॥ ॥

वज्रलेपश्च काश्यां तु घोरो यत्र विनश्यति ॥

कृत्स्नशोऽथ महापुण्यं प्राप्यं यत्र तदस्ति किम् ॥ ९ ॥

न प्ररोहंति पापानि यस्मिन्क्षेत्रे द्विजोत्तम ॥

तत्क्षेत्रं कथ्यतां पुण्यं यत्र पापं प्रणश्यति ॥7.4.34.१०॥

॥ वसिष्ठ उवाच ॥ ॥

आसीत्काश्यां पुरा कश्चित्त्रिदण्डी मोक्षधर्मवित् ॥

जपन्दशाश्वेमेधे तु गायत्रीं च समाहितः॥ ११ ॥

तत्र काचित्समायाता युवती गजगामिनी ॥

तीरे संस्थाप्य वासांसि गंगायाः श्रमशान्तये ॥

प्रविष्टा च जले नग्ना जलक्रीडां चकार ह ॥ १२ ॥

नग्नां तां क्रीडतीं वीक्ष्य यतिर्मदनपूरितः ॥

दैवाग्निभ्रंशितो मार्गात्सहसा च विमोहितः ॥ १३ ॥

मनसा कामयामास साऽपि तं तरुणं यतिम् ॥

तयोश्च संगतिस्तत्र संजाता पापकर्मणोः ॥ १४ ॥

तया विमोहितः सद्यस्तामेवानुससार सः ॥

तत्प्रीत्यै चार्जयामास धनमन्यायतस्तदा ॥ १५ ॥

वाराणस्यां हि न त्यक्तश्चंडालस्य प्रतिग्रहः ॥

स्नानहीनः सदा पापी रात्रौ चौर्य्येण वर्त्तते ॥१६॥

कस्मिंश्चित्समये पापी मांसार्थी तु वनं गतः ॥

ददर्श प्रमदां तत्र मातंगीं मदिरेक्षणाम् ॥ १७ ॥

तस्याः प्रथमतारुण्यं दृष्ट्वा गर्वेण पाप्मना ॥

वनेऽथ निर्जने तत्र मातंगीसंगमेयिवान् ॥ १८ ॥

तया सहान्नपानादि कृतवान्पापमोहितः ॥

अश्नाति सुरया पंकं गोमांसं पापलंपटः ॥ १९ ॥

तद्गृहे निधनं प्राप्तः पापात्मा सर्वभक्षकः ॥

वाराणसीप्रभावेन न प्राप्तो नरकं तदा ॥ 7.4.34.२० ॥

किं तु तत्र कृतं पापं वज्रलेपं सुदारुणम् ॥

शूद्रीसंपर्क पापेन जातोऽसौ क्रूरयोनिषु ॥ २१ ॥

वृको व्याघ्रोरगः श्वानः शृगालः सूकरोऽभवत् ॥

दुरंतां यातनां प्राप्तः शमलेशं न विन्दति ॥ २२ ॥

एवं जन्मसहस्रैस्तु न तस्य पापकर्मणः ॥

मातंग्या संगजं पापं व्यनश्यत युगायुतैः ॥ २३ ।

ततोऽसौ सप्तमे जातः शशकश्चैव जन्मनि ॥

ततोऽसौ राक्षसो जातः पापात्मा सर्वभक्षकः ॥ २४ ॥

प्राणिनो भक्षयन्सर्वान्संप्राप्तो विंध्यपर्वते ॥

अस्मादनन्तरं भाव्यं कृकलासत्वमद्भुतम्॥ ॥ २५ ॥

शूद्रीसंगजपापेन भाव्यं च कृमियोनिना ॥

मातंगीसंगमे प्रोक्तं फलं ह्यतिजुगुप्सितम् ॥ २६ ॥

युगायुतं सहस्रैस्तु भोक्ष्यमाणं सुदारुणम् ॥

अत्याश्चर्य्यमभूत्तत्र दिलीप श्रूयतां महत् ॥ २७ ॥

आलोकितं च विंध्याद्रौ सर्वेषां विस्मयास्पदम् ॥

दृष्ट्वा द्वारावतीं कश्चित्कृष्णवक्त्रं सुशोभनम् ॥ २८ ॥

गोमतीनीरपूतस्तु विंध्यं प्राप्तः स पांथिकः ॥

मात्रां कृष्णप्रसादस्य स्कन्धे कृत्वा प्रहर्षितः ॥ २९ ॥

प्रयास्यन्स्वगृहं तत्र ददर्श पथि राक्षसम् ॥

द्रुतं च क्रूरकर्माणं दृष्ट्वा भक्षितुमागतम् ॥ 7.4.34.३० ॥

तस्य दर्शनमात्रेण वज्रलेपः सुदारुणः ॥

वाराणसीसमुद्भूतो भस्मसादभवत्क्षणात् ॥ ३१ ॥

जन्मकोटिशतेनापि यो न शक्यो व्यपोहितुम् ॥

तत्पापपर्वतान्मुक्तः कृष्णपांथिकदर्शनात् ॥ ३२ ॥

दग्धेऽथ क्रूरभावे तु घनमुक्तो यथा शशी ॥

रेजे पुण्यप्रकाशेन कृष्णपांथिकदर्शनात् ॥ ३३ ॥

ततोऽभिमुखमभ्येत्य द्वारकापथिकं मुदा ॥

ननाम श्रद्धया भूमौ तद्दर्शनमहोत्सवः ॥ ३४ ॥

नत्वाऽथ विस्मितः प्राह अहोऽद्य तव दर्शनात् ॥

गतो घोरतमो भावः प्राप्ता संसिद्धिरुत्तमा ॥ ३५ ॥

कस्मात्त्वमागतो भद्र प्रभावः कीदृशस्तव ॥

वज्रलेपस्तु काश्यां वै दग्धस्ते दर्शनादनु ॥ ३६ ॥

॥ वसिष्ठ उवाच ॥ ॥

इत्येवं राक्षसेनोक्तं श्रुत्वा कृष्णस्य पांथिकः ॥

विस्मयं परमापन्नः प्राह तं हर्षमानसः ॥ ३७ ॥

॥ पांथिक उवाच ॥ ॥।

श्रीमद्द्वारवतीं दृष्ट्वा ह्यागतोऽस्म्यत्र राक्षस ॥

वज्रलेपहरोऽस्माकं प्रभावः कृष्णदर्शनात्॥ ३८ ॥

गोमत्यां यः सकृत्स्नात्वा पश्येत्कृष्णमुखांबुजम् ॥।

सर्वानुद्धरते पापादपि त्रैलाक्यदाहकात् ॥ ३९ ॥

॥ वसिष्ठ उवाच ॥ ॥

इत्युक्तो राक्षसो हृष्टः शुद्धात्मा भक्तिसंयुतः ॥

नत्वा प्रदक्षिणं कृत्वा संप्राप्तो द्वारकां तदा ॥ 7.4.34.४० ॥

गोमत्यां स तनुं त्यक्त्वा प्राप्तोऽसौ वैष्णवं पदम् ॥

स्तूयमानः सुरेशानैर्गंधर्वैः पुष्पवृष्टिभिः ॥ ४१ ॥

इत्थं महाप्रभावो हि द्वारकायाः प्रकीर्त्तितः ॥

न प्ररोहंति पापानि यस्याः पांथिकदर्शनात् ॥

द्वारकायां तु किं वाच्यं न प्ररोहंति पातकम् ॥ ४२ ॥

इत्येतत्कथितं राजन्यत्पृष्टोहं त्वयाऽनघ ॥

सर्वक्षेत्रोत्तमं क्षेत्रं वज्रलेपविनाशनम् ॥ ४३ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

वसिष्ठेनोदितं श्रुत्वा दिलीपो हृष्ट मानसः ॥

द्वारकां क्षेत्रराजं तं ज्ञात्वा च विस्मयं ययौ ॥ ४४ ॥

ययौ द्वारवतीं हृष्टो देवदेवस्य सादरम् ॥

कृष्णं दृष्ट्वा परां सिद्धिं संप्राप्तो देवमंदिरे ॥ ४५ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकापान्थदर्शन मात्रतः काश्यां कृतस्य पापवज्रलेपस्य विनाशने यतिवृत्तान्तवर्णनपूर्वकं दिलीपकृतद्वारकायात्रावर्णनंनाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३५

https://sa.wikisource.org/s/gxd



॥ प्रह्लाद उवाच ॥ ॥

अहो क्षेत्रस्य माहात्म्यं समंताद्दशयोजनम् ॥

दिविष्ठा यत्र पश्यंति सर्वानेव चतुर्भुजान् ॥ १ ॥

अहो क्षेत्रस्य माहात्म्यं दृष्ट्वा नित्यं चतुर्भुजान् ॥

द्वारकावासिनः सर्वान्नमस्यंति दिवौकसः ॥ २ ॥

अहो क्षेत्रस्य माहात्म्यं सर्वशास्त्रेषु विश्रुतम् ॥

अहो क्षेत्रस्य माहात्म्यं शृण्वंतु ऋषयोऽमलाः ॥ ३ ॥

मुक्तिं नेच्छंति यत्रस्थाः कृष्णसेवोत्सुकाः सदा ॥

यत्रत्याश्चैव पाषाणा यत्र क्वापि विमुक्तिदाः ॥ ४ ॥

अपि कीट पतंगाद्याः पशवोऽथ सरीसृपाः ॥

विमुक्ताः पापिनः सर्वे द्वारकायाः प्रसादतः ॥

किं पुनर्मानवा नित्यं द्वारकायां वसंति ये ॥ ५ ॥

या गतिः सर्वजंतूनां द्वारकापुरवासिनाम् ॥

सा गतिर्दुर्लभा नूनं मुनीनामूर्द्ध्वरेतसाम् ॥ ६ ॥

सर्वेषु क्षेत्रतीर्थेषु वसतां वर्षकोटिभिः ॥

तत्फलं निमिषार्द्धेन द्वारकायां दिनेदिने ॥ ७ ॥

द्वारकायां स्थिताः सर्वे नरा नार्य्यश्चतुर्भुजाः ॥

द्वारकावासिनः सर्वान्यः पश्येत्कलुषापहान् ॥

सत्यंसत्यं द्विजश्रेष्ठाः कृष्णस्यातिप्रियो भवेत् ॥ ८ ॥

द्वारकावासिनो ये वै निंदंति पुरुषाधमाः ॥

कृष्णस्नेहविहीनास्ते पतंति दुःखसागरे ॥ ९ ॥

जयंतेन भृशं त्रस्ताः शूलाग्रारोपिताश्चिरम् ॥

कर्षितास्ताडितास्ते वै मूर्च्छिताः पुनरुत्थिताः ॥ 7.4.35.१० ॥

त्राहित्राहि जयंत त्वं वदंतो हि भयातुराः ॥

स्मरंतः पूर्वपापं ते जयंतेन प्रताडिताः ॥११॥

॥ जयंत उवाच ॥ ॥

किं कृतं मंदभाग्यैर्वो यत्पापं च सुदारुणम् ॥

सर्वं पुण्यफलं लब्ध्वा द्वारकावासमुत्तमम्॥१२॥

द्वारकावासिनां निंदा महापापाधिका ध्रुवम् ॥

न निवर्तेत तत्पापं सा ज्ञेया परमेश्वरी ॥ १३ ॥

अतः कृष्णाज्ञया सर्वान्पापिनो दंडयाम्यहम् ॥

वैष्णवानां च निंदायाः फलं भुक्त्वा सुदारुणम् ॥ १४ ॥

ततस्तु द्वारकायां च पुण्यं जन्म भविष्यति ॥

कृष्णं प्रतोष्य संसिद्धिर्भविष्यति सुदुर्ल्लभा ॥ १५ ॥

तस्मात्तद्भुज्यतां पापं जातं वैष्णवनिंदनात् ॥

तत्रत्यानां प्रभुर्नैव यम ईष्टे महेश्वरः ॥ १६ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

तस्माद्द्वारवतीं गत्वा संसेव्यो देवनायकः ॥ १७ ॥

गोमतीतीरमाश्रित्य द्वारकायां प्रयच्छति ॥

यत्तु किंचिद्धनं विप्राः श्रूयतां तत्फलोदयम् ॥ १८ ॥

हेमभारसहस्रैस्तु रविवारे रविग्रहे ॥

कुरुक्षेत्रे यदाप्नोति गजाश्वरथदानतः ॥ १९ ॥

सहस्रगुणितं तस्मात्सत्यंसत्यं मयोदितम् ॥

हेममाषार्द्धमानेन द्वारकादानयोगतः ॥ 7.4.35.२० ॥

पत्राणां चैव पुष्पाणां नैवेद्यसिक्थसंख्यया ॥

कृष्णदेवस्य पूजायामनंतं भवति द्विजाः ॥ २१ ॥

अन्नदानं तु यः कुर्य्याद्द्वारकायां तु तत्फलम्॥

नैव शक्नोम्यहं वक्तुं ब्रह्मा शेषमहेश्वरौ ॥ २२॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽप्यथ वांऽत्यजः ॥

नारी वा द्वारकायां वै भक्त्या वासं करोति वै ॥ २३ ॥

कुलकोटिं समुद्धृत्य विष्णुलोके महीयते ॥

सत्यंसत्यं द्विजश्रेष्ठा नानृतं मम भाषितम्॥ २४॥

द्वारकावासिनं दृष्ट्वा स्पृष्ट्वा चैव विशेषतः ॥

महापापविनिर्मुक्ताः स्वर्गलोके वसंति ते ॥ २५ ॥

पांसुवो द्वारकाया वै वायुना समुदीरिताः ॥

पापिनां मुक्तिदाः प्रोक्ताः किं पुनर्द्वारका भुवि ॥ २६ ॥

॥ श्रीप्रह्लाद उवाच ॥

श्रूयतां द्विजशार्दूला महामोहविनाशनम्॥

द्वारकायाश्च माहात्म्यं गोमतीकृष्णसन्निधौ ॥ २७ ॥

कुशावर्त्तात्समारभ्य यावद्वै सागरावधि ॥

यस्यां तिथौ समायाति सिंहे देवपुरोहितः॥ २८ ॥

तस्यां हि गोमतीस्नानं द्विषड्गोदावरीफलम्॥

अवगाहिता प्रयत्नेन सिंहांते गौतमी सकृत् ॥ २९॥

गोदावर्य्यां भवेत्पुण्यं वसतो वर्षसंख्यया ॥

तत्फलं समवाप्नोति गोमतीसेवनाद्द्विजाः ॥7.4.35.३०॥

गोमत्यां श्रद्धया स्नानं पूर्णे सिंहस्थिते गुरौ ॥

सहस्रगुणितं तत्स्याद्द्वारवत्यां दिनेदिने ॥ ३१ ॥

गच्छगच्छ महाभाग द्वारकामिति यो वदेत् ॥

तस्यावलोकनादेव मुच्यते सर्वपातकैः ॥ ३२॥

द्वारकेति च यो ब्रूयाद्द्वारकाभिमुखो नरः ॥

कृपया कृष्णदेवस्य मुक्तिभागी भवेद्ध्रुवम् । ३३ ॥

द्वारकां गोमतीं पुण्यां रुक्मिणीं कृष्णमेव च॥

स्मरंति येऽन्वहं भक्त्या द्वारकाफलभागिनः ॥ ३४ ॥

सहस्रयोजनस्थानां येषां स्यादिति मानसम्॥

द्वारवत्यां गमिष्यामो द्रक्ष्यामो द्वारकेश्वरम् ॥ ३५ ॥

सर्वपापैः प्रमुच्यंते धन्यास्ते लोकपावनाः ॥

किं वाच्यं द्वारकायात्रां ये प्रकुर्वंति मानवाः ॥

किं पुनर्द्वारकानाथं कृष्णं पश्यंति ये नराः ॥ ३६ ॥

मित्रध्रुग्ब्रह्महा गोघ्नः परदारापहारकः ॥

मातृहा पितृहा चैव ब्रह्मस्वापहरस्तथा ॥ ३७ ॥

एते चान्ये च पापिष्ठा महापापयुताश्च ये ॥

सर्वपापैः प्रमुच्यंते कृष्णदेवस्य दर्शनात् ॥३८ ॥

किं वेदैः श्रद्धया हीनैर्व्याख्यानैरपि कृत्स्नशः ॥

हेमभारसहस्रैः किं कुरुक्षेत्रे रविग्रहे ॥ ३९ ॥

गजाश्वरथदानैः किं किं मंदिरप्रतिष्ठया ॥

तेषां पूजादिना सम्यगिष्टा पूर्तादिभिश्च किम् ॥ 7.4.35.४० ॥

राजसूयाश्वमेधाद्यैः सर्वयज्ञैश्च किं भवेत् ॥

सेवनैः क्षेत्रतीर्थानां तपोभिर्विविधैस्तु किम् ॥ ४१ ॥

किं मोक्षसाधनैः क्लेशैर्ध्यानयोगसमाधिभिः ॥

द्वारकेश्वरकृष्णस्य दर्शनं यस्य जायते॥ ४२॥

माहात्म्यं द्वारकायास्तु अथवा यः शृणोति च ॥

विशेषेण तु वैशाख्यां जयंत्याश्चैव जागरे॥ ४३॥

माघ्यां च फाल्गुने चैत्रे ज्येष्ठे चैव विशेषतः॥

अद्यापि द्वारका पुण्या कलावपि विशेषतः॥४४॥

यस्यां सत्रं प्रपां कृत्वा प्रासादं मंचमेव च॥

यतीनां शरणं कृत्वा तीरे मंडपमेव च॥४५॥

वापीकूपतडागानां जीर्णोद्धारमथापि वा॥

मूर्तिं विष्णोः प्रतिष्ठाप्य दत्त्वा वा भोगसाधनम् ॥ ४६॥

श्रूयतां तत्फलं विप्राः सर्वोत्कृष्टं वदाम्यहम् ॥

संप्राप्य वांछितान्कामान्कृष्णानुग्रहभाजनम्॥४७॥

तेजोमयेषु लोकेषु भुक्त्वा भोगाननुक्रमात् ॥

प्राप्नोति विष्णुलोकं वै नरो देवनमस्कृतम् ॥ ४८ ॥

स्थापयेद्द्वारकायां वै मूर्तिं दारुशिलामयीम्॥

त्रैलोक्यं स्थापितं तेन विष्णोः सायुज्यतामियात्॥४९॥

प्ररोहो नास्ति पापस्य पुण्यस्य वृद्धिरुत्तमा ॥

द्वारकायां कथं जातं वैलक्षण्यमिदं प्रभो ॥

क्षेत्रेभ्यः सर्वतीर्थेभ्य आश्चर्य्यं कथयंति ते ॥ 7.4.35.५० ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकानाममाहात्म्यवर्णनंनाम पञ्चविंशोऽध्यायः ॥ ३५ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३६

https://sa.wikisource.org/s/gxe
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ सूत उवाच ॥ ॥

प्रह्लादस्य वचः श्रुत्वा स्थितस्तत्र सभास्थले ॥

पप्रच्छात्युत्सुकमना बलिस्तत्क्षेत्रवैभवम् ॥१॥

प्रह्लादस्तद्वचः श्रुत्वा भक्तिभावपुरस्कृतम् ॥

अभिनन्द्य च तं प्रेम्णा प्रवक्तुमुपचक्रमे ॥२॥

॥ प्रह्लाद उवाच॥ ॥

एकैकस्मिन्पदे दत्ते पुरीं द्वारवतीं प्रति ॥

पुण्यं क्रतुसहस्राणां फलं भवति देहिनाम् ॥३॥

येऽपीच्छंति मनोवृत्त्या गमनं द्वारकां प्रति ॥

तेषां प्रलीयते पापं पूर्वजन्मायुतार्जितम् ॥४॥

अत्युग्राण्यपि पापानि तावत्तिष्ठंति विग्रहे ॥

यावन्न गच्छते जंतुः कलौ द्वारवतीं प्रति ॥५॥

लोभेनाऽप्युपरोधेन दंभेन कपटेन वा ॥

चक्रतीर्थे तु यो गच्छेन्न पुनर्विशते भुवि ॥६।

हीनवर्णोऽपि पापात्मा मृतः कृष्णुपुरीं प्रति ॥

कलि कालकृतैर्दोषैरत्युग्रैरपि मानवः ॥

भक्त्या कृष्णमुखं दृष्ट्वा न लिप्यति कदाचन ॥७॥

तावद्विराजते काशी ह्यवंती मथुरापुरी ॥

यावन्न पश्यते जंतुः पुरीं कृष्णेन पालिताम्॥ ८ ॥

येषां कृष्णालये प्राणा गता दानवनायक ॥

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ९ ॥

दुर्लभो द्वारकावासो दुर्लभं कृष्णदर्शनम् ॥

दुर्लभं गोमतीस्नानं रुक्मिणीदर्शनं कलौ ॥ 7.4.36.१० ॥

नित्यं कृष्णपुरीं रम्यां ये स्मरंति गृहे स्थिताः ॥

न तेषां पातकं किंचिद्देहमाश्रित्य तिष्ठति ॥ ११ ॥

केशवार्चा गृहे यस्य न तिष्ठति महीपते ॥

तस्यान्नं न च भोक्तव्यमभक्ष्येण समं स्मृतम् ॥ १२ ॥

नोष्णत्वं द्विज राजे वै न शीतत्वं हुताशने ॥

वैष्णवानां न पापत्वमेकादश्युपवासिनाम् ॥ १३ ॥

नास्ति नास्ति महाभागाः कलिकालसमं युगम् ॥

स्मरणात्कीर्त्तनाद्विष्णोः प्राप्यते परमव्ययम् ॥ १४ ॥

सत्यभामापतिर्यत्र यत्र पुण्या च गोमती ॥

नरा मुक्तिं प्रयास्यंति तत्र स्नात्वा कलौ युगे ॥ १५ ॥

माधवे शुक्लपक्षे तु त्रिस्पृशां द्वादशीं यदि ॥

लभते द्वारकायां तु नास्ति धन्यतरस्ततः ॥ १६ ॥

त्रिस्पृशां द्वादशीं प्राप्य गत्वा कृष्णपुरीं नरः ॥

यः करोति हरेर्भक्त्या सोऽश्वमेधफलं लभेत्॥ १७ ॥

नंदायां तु जयायां वै भद्रा चैव भवेद्यदि ॥

उपवासार्चने गीते दुर्ल्लभा कृष्णसन्निधौ ॥१८॥

उदयैकादशी स्वल्पा अंते चैव त्रयोदशी ॥

संपूर्णा द्वादशी मध्ये त्रिस्पृशा च हरेः प्रिया ॥ १९ ॥

एकेन चोपवासेन उपवासाऽयुतं फलम् ॥

जागरे शतसाहस्रं नृत्ये कोटिगुणं कलौ ॥ 7.4.36.२० ॥

तत्फलं लभते मर्त्यो द्वारकायां दिनेदिने ॥

गृहेषु वसतामेतत्किं पुनः कृष्णसंनिधौ ॥ ॥ २१ ॥

वाङ्मनःकायजैर्दोषैर्हता ये पापबुद्धयः ॥

द्वारवत्यां विमुच्यंते दृष्ट्वा कृष्णमुखं शुभम् ॥ २२ ॥

दैत्येश्वर नराः श्लाघ्या द्वारवत्यां गताश्च ये ॥ २३ ॥

दुर्ल्लभानीह तीर्थानि दुर्लभाः पर्वतोत्तमाः ॥

दुर्ल्लभा वैष्णवा लोके द्वारकावसतिः कलौ ॥ २४ ॥

गवां कोटिसहस्राणि रत्नको टिशतानि च ॥

दत्त्वा यत्फलमाप्नोति तत्फलं कृष्णसन्निधौ ॥ २५ ॥

यस्याः सीमां प्रविष्टस्य ब्रह्महत्यादिपातकम् ॥

नश्यते दर्शनादेव तां पुरीं को न सेवते ॥ २६ ॥

चक्रांकिता शिला यत्र गोमत्युदधिसंगमे ॥

यच्छति पूजिता मोक्षं तां पुरीं को न सेवते ॥ २७ ॥

सिंहस्थे च गुरौ विप्रा गोदावर्य्यां तु यत्फलम्॥

तत्फलं स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥ २८ ॥

द्वारकाऽवस्थितं तोयं षण्मासं पिबते नरः ॥

तस्य चक्रांकितो देहो भवते नात्र संशयः ॥ २९ ॥

मन्वन्तरसहस्राणि काशीवासेन यत्फलम् ॥

तत्फलं द्वारकायां च वसतः पंचभिर्द्दिनैः ॥ 7.4.36.३० ॥

तावन्मृतप्रजा नारी दुर्भगा दैत्यपुंगव ॥

यावन्न पश्यते भक्त्या कलौ कृष्णप्रियां पुरीम् ॥ ३१ ॥

रुक्मिणीं सत्यभामां च देवीं जांबवतीं तथा ॥

मित्रविंदां च कालिंदीं भद्रां नाग्नजितीं तथा ॥ ३२ ॥

संपूज्य लक्ष्मणां तत्र वैष्णवीः कृष्णवल्लभाः ॥

एताः संपूज्य विधिवच्छ्रेष्ठपुत्रश्च लभ्यते ॥ ३३ ॥

तावद्भवभयं पुंसां गृहभंगश्च मूर्खता ॥

यावन्न पश्यते भक्त्या कलौ कृष्णपुरीं नरः ॥ ३४ ॥

न सर्वत्र महापुण्यं संगमे सरितांपतेः ॥

जाह्नवीसंगमान्मुक्तिर्गोमतीनीरसंगमात् ॥

संपर्के गोमतीनीरपूतोऽहं कृष्णसन्निधौ ॥ ३५ ॥

गोमतीनीरसंपृक्तं ये मां पश्यंति मानवाः ॥

न तेषां पुनरावृत्तिरित्याह सरितांपतिः ॥ ३६ ॥

द्वारकां गच्छमानस्य विपत्तिश्च भवेद्यदि ॥

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ३७ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वारकादर्शनगोमतीसरित्स्नानविधिमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३७



॥ श्रीप्रह्लाद उवाच ॥ ॥

कृष्णकृष्णेति कृष्णेति श्वपचो जागरन्निशि ॥

जपेदपि कलौ नित्यं कृष्णरूपी भवेद्धि सः ॥ १ ॥

कृष्णकृष्णेति कृष्णेति कलौ वदत्यहर्निशम् ॥

नित्यं यज्ञायुतं पुण्यं तीर्थकोटिसमुद्भवम् ॥ २ ॥

संपूर्णैकादशी भूत्वा द्वादश्यां वर्द्धते यदि ॥

उन्मीलिनीति विख्याता तिथीनामुत्तमा तिथिः ॥३॥

वंजुलीवासरे ये वै रात्रौ कुर्वंति जागरम्॥

यज्ञायुतायुतं पुण्यं मुहूर्तार्द्धेन जायते॥४॥

संपूर्णा द्वादशी भूत्वा वर्द्धते चापरे दिने ॥

त्रयोदश्यां मुनिश्रेष्ठा वंजुली दुर्ल्लभा कलौ ॥ ५ ॥

उन्मीलिनीमनुप्राप्य ये प्रकुर्वंति जागरम् ॥

निमिषार्द्धेन तत्पुण्यं गवां कोटिफलप्रदम् ॥ ६॥

संपूर्णैकादशी भूत्वा प्रत्यऽहं वर्द्धते यदि ॥

दर्शश्च पौर्णमासी च पक्षवृद्धिस्तथोच्यते ॥७॥

पक्षवृद्धिकरीं प्राप्य ये प्रकुर्वंति जागरम् ॥

निमिषार्द्धार्द्धमात्रेण गवां कोटिफलप्रदम् ॥ ८ ॥

॥ श्रीप्रह्लाद उवाच ॥ ॥

चक्रतीर्थे नरः स्नात्वा मुच्यते सर्व किल्बिषैः ॥

स याति परमं स्थानं दाहप्रलयवर्जितम् ॥ ९ ॥

चक्रं प्रक्षालितं यत्र कृष्णेन स्वयमेव हि ॥

तेन वै चक्रतीर्थं हि पुण्यं च परमं हरेः ॥

भवंति तत्र पाषाणाश्चक्रांका मुक्तिदायकाः ॥ 7.4.37.१० ॥

तत्रैव यदि लभ्यंते चक्रैर्द्वादशभिः सह ॥

द्वादशात्मा स विज्ञेयो मोक्षदः परिकीर्तितः ॥ ॥ ११ ॥

एकचक्रेण पाषाणो द्वारवत्यां सुशोभनः ॥

सुदर्शनाभिधेयोसौ मोक्षैकफलदायकः ॥१२॥

लक्ष्मीनारायणौ द्वौ तौ भुक्तिमुक्तिफलप्रदौ ॥

त्रिभिश्चैवाच्युतं देवं सदेन्द्रपददायकम् ॥ १३ ॥

भूतिदो विघ्नहंता च चतुश्चक्रो जनार्द्दनः ॥

पञ्चभिर्वासुदेवस्तु जन्ममृत्युभयापहः ॥ १४ ॥

प्रद्युम्नः षड्भिरेवासौ लक्ष्मीं कांतिं ददाति च ॥

सप्तभिर्बलदेवस्तु गोत्रकीर्तिविवर्द्धनः ॥ १५ ॥

वांछितं चाष्टभिर्भक्त्या ददाति पुरुषोत्तमः ॥

सर्वं दद्यान्नवव्यूहो दुर्ल्लभो यः सुरोत्तमैः ॥ १६ ॥

राज्यप्रदो दशभिस्तु दशावतार एव च ॥

एकादशभिरैश्वर्य्यमनिरुद्धः प्रयच्छति ॥ १७ ॥

निर्वाणं द्वादशात्मा तु चक्रैर्द्वादशभिः स्मृतम् ॥

अत ऊर्ध्वमनंतोऽसौ सौख्यमोक्षप्रदायकः ॥ १८ ॥

ये केचित्तत्र पाषाणाः कृष्णचक्रेण मुद्रिताः॥

तेषां स्पर्शनमात्रेण मुच्यते सर्वकिल्बिषैः ॥ १९ ॥

ब्रह्महत्यादिकं पापं मनोवाक्कायकर्मजम् ॥

तत्सर्वं विलयं याति चक्रांकितप्रपूजनात् ॥7.4.37.२०॥

म्लेच्छदेशे शुभे वाऽपि चक्रांको यत्र तिष्ठति ॥

योजनानि दश द्वे च मम क्षेत्रं च सुन्दरि ॥ २१ ॥

मृत्युकाले च संप्राप्ते हृदये यस्तु धारयेत् ॥

चक्रांकं पापदलनं स याति परमां गतिम् ॥ २२ ॥

गोमतीसंगमे स्नात्वा भृगुतीर्थे तथैव च ॥

न मातुर्वसते कुक्षौ यद्यपि स्यात्स पातकी ॥ ॥ २३ ॥

तामसं राजसं वापि यत्कृतं विष्णुपूजनम् ॥

तत्सात्त्विकत्वमभ्येति निम्नगांभो यथार्णवे ॥ २४ ॥

इति श्रीस्कांदे महापुराण एकाशीति साहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकाक्षेत्रस्थसुदर्शनप्रमुखानन्तान्तचक्रचिह्नांकित पाषाणमाहात्म्यवर्णनपूर्वकतत्पूजनफलादिकथनंनाम सप्तत्रिंशत्तमोऽध्यायः ॥३७॥ ।

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३८

https://sa.wikisource.org/s/gxg



॥श्रीप्रह्लाद उवाच ॥ ॥

द्वारकायाश्च माहात्म्यं शृणु पौत्र मयोदितम् ॥

शृण्वतो गदतश्चापि मुक्तिः कृष्णाद्भवेद्ध्रुवम् ॥ १ ॥

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥

अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहति॥२॥

यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः ॥

विष्णुभक्तिं च कुरुते तं पुत्रं कवयो विदुः ॥ ३ ॥

हेमशृंगं रौप्यखुरं सवत्सं कांस्यदोहनम्॥

सवस्त्रं कपिलानां तु सहस्रं च दिनेदिने ॥ ४ ॥

दत्त्वा यत्फलमाप्नोति ब्राह्मणे वेदपारगे ॥

तत्फलं स्नानमात्रेण गोमत्यां मधुभिद्दिने ॥ ५ ॥

यस्त्वेकं भोजयेद्विप्रं द्वारकायां च संस्थितम् ॥

सुभिक्षे भो द्विजश्रेष्ठाः फलं लक्षगुणं भवेत्॥६॥

फलं लक्षगुणं प्रोक्तं दुर्भिक्षे कृष्णसन्निधौ॥

एवं धर्मानुसारेण दयाद्भिक्षां तु भिक्षुके ॥ ७ ॥

अपि नः स कुले कश्चिद्भविष्यति नरोत्तमः ॥

यो यतीनो कलौ प्राप्ते पितॄनुद्दिश्य दास्यति ॥ ८ ॥

द्वारकायां विशे षेण सत्कृत्य कृष्णसन्निधौ ॥

अन्नदानं यतीनां तु कौपीनाच्छादनानि च ॥ ९ ॥

नात्मनः क्रतुभिः स्विष्टैर्नास्ति तीर्थैः प्रयोजनम्॥

यत्र वा तत्र वा कार्य्यं यतीनां प्रीणनं सदा ॥ 7.4.38.१० ॥

श्वपचादयोऽपि ते धन्या ये गता द्वारकां पुरीम् ॥

प्राप्य भागवतान्ये वै पितॄनुद्दिश्य पुत्रकाः ॥ ॥ ११ ॥

भक्त्या संपूजयिष्यंति वस्त्रैर्दानैश्च भूरिभिः ॥ १२ ॥

गयापिंडेन नास्माकं तृप्तिर्भवति तादृशी ॥
यादृशी विष्णुभक्तानां सत्कारेणोप जायते ॥ १३ ॥
वैशाखे ये करिष्यंति द्वादशीं कृष्णसन्निधौ ॥
कृष्णं संपूजयन्तश्च रात्रौ कुर्वंति जागरम् ॥१४॥
माहात्म्यं पठनीयं तु द्वारकासंभवं शुभम् ॥
कृष्णस्य बालचरितं बालकृष्णादिदर्शनम् ॥ १५ ॥
क्रीडनं गोकुलस्यैव क्रीडा गोपीजनस्य च ॥
कृष्णावतारकर्माणि श्रोतव्यानि पुनःपुनः ॥ १६ ॥
रुक्मशृंगीं रौप्यखुरीं मुक्तालांगूलभूषिताम्॥
सवत्सां ब्राह्मणे दत्त्वा होमार्थं चाहिताग्नये ॥ १७ ॥
निमिषस्पर्शनांशेन फलं कृष्णस्य जागरे ॥
यत्किंचित्कुरुते पापं कोटिजन्मसु मानवः ॥
कृष्णस्य जागरे रात्रौ दहते नात्र संशयः ॥ १८ ॥
पठेद्भागवतं रात्रौ पुराणं दयितं हरेः ॥
यावत्सूर्य्यकृताऽऽलोको यावच्चन्द्रकृता निशा ॥ १९ ॥
यावत्ससागरा पृथ्वी यावच्च कुलपर्वताः ॥
तावत्कालं वसेत्स्वर्गे नान्यथा मम भाषितम् ॥ 7.4.38.२० ॥
आस्फोटयंति पितरः प्रहर्षंति पितामहाः ॥
एवं तं स्वसुतं दृष्ट्वा शृण्वानं कृष्णसंभवम् ॥ २१ ॥
द्वारकायाश्च माहात्म्यं यत्र नो जागरे पठेत् ॥
तन्म्लेच्छसदृशं स्थानमपवित्रं परित्यजेत् ॥ २२ ॥
शालिग्रामशिला नैव यत्र भागवता न हि ॥
त्यजेत्तीर्थं महापुण्यं पुण्यमायतनं त्यजेत् ॥ २३ ॥
त्यजेद्गृह्यं तथाऽरण्यं यत्र न द्वादशीव्रतम् ॥ २४ ॥
सुदेशोऽपि भवेन्निंद्यो यत्र नो वैष्णवा व्रतम्॥
कुदेशोऽपि भवेत्पुण्यो यत्र भागवताः कलौ ॥ २५ ॥
संकीर्णयोनयः पूता ये भक्ता मधुसूदने ॥
म्लेच्छतुल्याः कुलीनास्ते ये न भक्ता जनार्दने॥ २६ ॥

रथारूढं प्रकुर्वंति ये कृष्णं मधुमाधवे ॥

मुक्तिं प्रयांति ते सर्वे कुलकोटिसमन्विताः ॥ २७ ॥

देवकीनन्दनस्यार्थे रथं कारापयन्ति ये ॥

कल्पांतं विष्णुलोके ते वसन्ति पितृभिः सह ॥ २८ ॥

द्वारकायास्तु माहात्म्यं श्रावयेद्यः कलौ नृणाम्॥

भावमुत्पादयेद्यो वै लभेत्क्रतुशतंफलम् ॥ २९ ॥

यो नार्चयति पापिष्ठो देवमन्यत्र गच्छति ॥

कोटिजन्मार्जितं पुण्यं हरते रुक्मिणीपतिः ॥ 7.4.38.३० ॥

शंखोद्धारसमुद्भूतां नित्यं देहे बिभर्त्ति हि ॥

मृत्तिकां दैत्यराजेन्द्र शृणु वक्ष्यामि यत्फलम् ॥ ३१ ॥

यो ददाति यतीनां च वैष्णवानां प्रयच्छति ॥

स्वर्णभारशतं पुण्ड्रं नित्यं प्राप्नोति मानवः ॥ ३२ ॥

गृहे यस्य सदा तिष्ठेच्छंखोद्धारस्य मृत्तिका ॥

नित्य क्रियाकृतंपुण्यं लभेत्कोटिगुणं बले ॥ ३३ ॥

यस्य पुण्ड्रं ललाटे तु गोपीचंदनसंज्ञकम् ॥

न जहाति गृहं तस्य लक्ष्मीः कृष्णप्रिया द्विजाः ॥ ३४ ॥

न ग्रहो बाधते तस्य नोरगो न च राक्षसः ॥

पिशाचा न च कूष्मांडा न च प्रेता न जंभकाः ॥ ३५ ॥

नाग्निचौरभयं तस्य दरीणां चैव बन्धनम् ॥

विद्युदुल्काभयं चैव न चोत्पातसमुद्भवम् ॥ ३६ ॥

नारिष्टं नापशकुनं दुर्निमित्तादिकं च यत् ॥

सत्कृते विष्णुभक्ते च शालिग्रामशिलार्चने ॥ ३७ ॥

पीते पादोदके विप्रा नैवेद्यस्यापि भक्षणे ॥

तुलसीसन्निधौ विष्णोर्विलयावसरे कृते ॥ ३८ ॥

पुरा देवेन कथितं शृणु पात्रं वदाम्यहम् ॥

प्रिया भागवता येषां तेषां दासोऽस्म्यहं सदा ॥ ३९॥

विहाय मथुरां काशीमवन्तीं सर्वपापहाम् ॥

मायां कांचीमयोध्यां च संप्राप्ते च कलौ युगे ॥ ॥ 7.4.38.४० ॥

वसाम्यहं द्वारकायां सर्वसेनासमावृतः ॥

तीर्थव्रतैर्यज्ञदानै रुद्राद्यैर्मुनिचारणैः ॥ ४१ ॥

श्रद्धात्यागेन भक्त्या वा यस्तोषयितुमिच्छति ॥

गत्वा द्वारवतीं रम्यां द्रष्टव्योऽहं कलौ युगे ॥ ४२ ॥

त्रैलोक्ये यानि तीर्थानि मया शुद्धानि भूरिशः ॥।

विन्यस्तानि च गोमत्यां चक्रतीर्थेऽतिपावने ॥ ४३ ॥

दिनेनैकेन गोमत्यां चक्रतीर्थे कलौ युगे ॥

त्रैलोक्यसंभवैस्तीर्थैः स्नातो भवति मानवः ॥ ४४ ॥

कोटिपापविनिर्मुक्तो मत्समं वसते नरः ॥

मम लोके न संदेहः कुलकोटिसमन्वितः ॥ ४५ ॥

नापराधकृतैः पापैर्लिप्तः स्यादु त्कटैः कृतैः ॥

शतजन्मायुतानीह लक्ष्मीर्न च्यवते गृहात् ॥ ४६ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये गोमतीतीरगत द्वारकाचक्रतीर्थयोर्जागरादिमाहात्म्यवर्णनं-नामाष्टात्रिंशत्तमोऽध्यायः ॥ ३८ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ३९

https://sa.wikisource.org/s/gxh



॥ श्रीप्रह्लाद उवाच ॥ ॥

जया च विजया चैव जयंती पापनाशिनी ॥

उन्मीलिनी वंजुली च त्रिस्पृशा पक्षवर्द्धिनी ॥ १ ॥

पुण्यं सर्वपुराणानां ते लभंते दिनेदिने ॥

पक्वान्नं ये प्रकुर्वंति हविर्द्धान्यसमुद्भवम् ॥ २ ॥

जागरे पद्मनाभस्य घृतेनैव सुपाचितम् ॥

वर्तिद्वयसमायुक्तं दीपं घृतसमन्वितम् ॥ ३ ॥

यः कुर्य्याज्जागरे विष्णोः शालिग्रामशिलाग्रतः ॥

शालग्रामशिलाग्रे तु ये प्रकुर्वंति जागरम् ॥ ४ ॥

कुर्वंति नृत्यवाद्ये च लोकानां रंजनाय च ॥

संछादयंति कुसुमैः शालिग्रामशिलां च ये ॥ ५ ॥

चक्रांकितां विशेषेण प्रतिमां वैष्णवीं द्विजाः ॥

चंदनं च सकर्पूरं कृष्णागुरुसमन्वितम् ॥ ६ ॥

युक्तं मृगमदेनापि यः करोति विलेपनम् ॥

द्वादश्यां देवदेवस्य रात्रौ जागरणे सदा ॥ ७ ॥

तस्य पुण्यं प्रवक्ष्यामि संक्षेपेण च वोऽग्रतः ॥

तत्फलं कोटितीर्थे तु उज्जयिन्यां महालये ॥ ८ ॥

वाराणस्यां कुरुक्षेत्रे मथुरायां त्रिपुष्करे ॥

अयोध्यायां प्रयागे च तीर्थे सागरसंगमे ॥ ९ ॥

सर्वपुण्येषु तीर्थेषु देवतायतनेषु च ॥

कृतैर्यज्ञायुतैस्तत्र व्रतदानैश्च पुष्कलैः ॥ 7.4.39.१० ॥

वेदैरधीतैर्यत्पुण्यं पुराणैश्चावगाहितैः ॥

तपोभिश्चरितैः पुण्यं सम्यगाश्रम पालनैः ॥ ११ ॥

यत्फलं मुनिभिः प्रोक्तं वेदव्यासेन पुत्रक ॥

तत्फलं जागरे विष्णोः पक्षयोः शुक्लकृष्णयोः ॥ १२ ॥

हैमवत्यै पुरा प्रोक्तं कैलासे शूलपाणिना ॥

नारदाय पुरा प्रोक्तं ब्रह्मणा मत्समीपतः ॥ १३ ॥

अरुणेन वज्रहस्ताय कथितं पृच्छते पुरा ॥

द्वादशीजागरस्योक्तं फलं विप्रा मया च वः॥

तत्कुरुध्वं द्विजा यूयं जागरं विष्णुवासरे ॥ १४ ॥

॥ सूत उवाच ॥ ॥

इत्युक्त्वा ब्राह्मणान्प्राह बलिं पौत्रं स्वकं ततः ॥

त्वमपि श्रद्धया पौत्र कुरु जागरणं हरेः ॥ १५ ॥

द्वारका मनसा ध्याता पापं वर्षशतान्वितम् ॥

कीर्तनाच्छतजन्मोत्थं दहते नात्र संशयः ॥ १६ ॥

पापं जन्मसहस्रोत्थं पदमात्रेण गच्छताम् ॥

द्वारका हरते नूनं मुक्तिः कृष्णस्य दर्शनात् ॥ १७ ॥

न शक्नोति यदा गंतुं द्वारकां चैव मानवः ॥

माहात्म्यं पठनीयं तु द्वारकासंभवं गृहे ॥ १८ ॥

दातव्यं वैष्णवानां तु श्रोतव्यं भक्तिभावतः ॥

द्वादश्यां च विशेषेण पठनीयं तु जागरे ॥ १९ ॥

द्वारका संभवं पुण्यं स संप्राप्नोति मानवः ॥

प्रसादाद्वासुदेवस्य सत्यंसत्यं च भाषितम् ॥ 7.4.39.२० ॥

गृहे संतिष्ठते नित्यं मथुरा द्वारका तथा ॥

अवंती च तथा माया प्रयागं कुरुजांगलम् ॥ २१ ॥

त्रिपुष्करं नैमिषं च गंगाद्वारं च सौकरम् ॥

चंद्रेशं चैव केदारं तथा रुद्रमहालयम् ॥ २२ ॥

वस्त्रापथं महादेवं महाकालं तथैव च ॥

भूतेश्वरं भस्मगात्रं सोमनाथमुमापतिम्॥ २३ ॥

कोटिलिंगं त्रिनेत्रं च देवं भृगुवनेचरम् ॥

दीपेश्वरं महानादं देवं चैवाचलेश्वरम् ॥ २४ ॥

ब्रह्मादयः सुरगणा गृहे तिष्ठंति सर्वदा ॥

पितरो नागगंधर्वा मुनयः सिद्धचारणाः ॥ २५ ॥
तीर्थानि यानि कानि स्युरश्वमेधादयो मखाः ॥
कृष्णजन्माष्टमीं पौत्र यः करोति विशेषतः ॥ २६ ॥
यथा भागवतं शास्त्रं तथा भागवतो नरः ॥
उभयोरंतरं नास्ति हरहर्योस्तथैव च ॥ २७ ॥
नीलीक्षेत्रं तु यो याति मूलकं भक्षयेत्तु यः ॥
नैवास्ति नरकोद्धारं कल्पकोटिशतैरपि ॥ २८ ॥
नीलीकर्म तु यः कुर्य्याद्ब्राह्मणो लोभमोहितः ॥
नाप्नोति सुकृतं किंचित्कुर्य्याद्वा रसविक्रयम् ॥ २९ ॥
प्रसीदति न विश्वात्मा वैष्णवे चापमानिते ॥
अश्वत्थं छेदयेद्यो वै एकैकस्मिंश्च पर्वणि ॥ 7.4.39.३० ॥
मन्वंतराणि तावंति रौरवे वसतिर्भवेत् ॥
अरिष्टकाष्ठैर्दैत्येंद्र कार्य्यं यः कुरुते क्वचित् ॥
न पूजामर्घदानं च तस्य गृह्णाति भास्करः ॥ ३१ ॥
छेदापकस्य चार्के तु च्छेदकस्य च दैत्यज ॥
शतं जन्मानि दारिद्यं जायते च सरोगता ॥ ३२ ॥
रोपयेत्पालयेद्यो वै सूर्य्यवृक्षं नरोत्तमः ॥
सप्तकल्पं वसेत्सोऽत्र समीपे भास्करस्य हि ॥ ३३ ॥
रोपितैर्देववृक्षैस्तु यत्फलं लक्षकोटिभिः ॥
न्यग्रोधवृक्षेणैकेन रोपितेन फलं हि तत् ॥ ३४ ॥
धात्रीद्रुमेऽप्येवमेव फलं भवति रोपिते ॥
तुलसीरोपणे चैव अधिकं चापि सुव्रत ॥
अमरत्वं च ते यांति नात्र कार्य्या विचारणा ॥ ३५ ॥
द्वारकां कलिकाले तु प्रातरुत्थाय कीर्तयेत् ॥
स सर्वपापनिर्मुक्तः स्वर्गं याति न संशयः ॥ ३६ ॥
रोहिणीसहिता ये न द्वादशी समुपोषिता ॥
महापातकसंयुक्तः कल्पांते नाकमाप्नुयात् ॥ ३७ ॥
वासरः को विना सूर्य्यं विना सोमेन का निशा ॥

विना वृक्षेण को ग्रामो द्वादशी किं व्रतं विना ॥ ३८ ॥

गृहं च नरकं तस्य यमदण्डं द्वितीयकम् ॥

न यत्र पठते नित्यं विष्णोर्नामसहस्रकम् ॥ ३९ ॥

नरकं च भवेत्तस्य द्वितीयं यमशासनम् ॥

नैव भागवतं यत्र पुराणं गीयते कलौ ॥

अन्धकूपेषु क्षिप्यंते ज्वलितेषु हुताशने ॥ 7.4.39.४० ॥

द्विषंति ये भागवतं न कुर्वंति दिनं हरेः ॥

यमदूतैश्च नीयन्ते तथा भूमौ भवंति ते ॥ ४१ ॥

वाच्यमानं न शृण्वंति हरेश्चरितमुत्तमम् ॥

करपत्रैश्च पीड्यंते सुतीव्रैर्यम शासनात्॥ ४२ ॥

निन्दां कुर्वंति ये पापा वैष्णवानां महात्मनाम् ॥

तेषां निरयपातस्तु यावदाभूतसंप्लवम् ॥ ४३ ॥

गोकोटितीर्थादधिकं स्नानं तत्राधिकं भवेत् ॥

ये पश्यंति महापुण्या गोपीचंदनमृत्तिकाम्॥

गंगास्नानफलं तेषां जायते नात्र संशयः ॥ ४४ ॥

वैष्णवानां प्रयच्छंति गोपीचं दनमृत्तिकाम् ॥

येषां ललाटे तिलकः गोपीचंदनसंभवम्॥ ४५ ॥

गोपीचंदनपुंड्रेण द्वादश्यां जागरे कृते ॥

विष्णोर्नामसहस्रस्य पाठेन मुक्तिमाप्नुयात् ॥ ४६ ॥

ये नित्यं प्रातरुत्थाय वैष्णवानां तु कीर्तनम्॥

गोमतीस्मरणं कुर्युः कृष्णतुल्या न संशयः ॥ ४७ ॥

ये नित्यं प्रातरुत्थाय द्वारकेति वदंति च ॥

तीर्थकोटिभवं पुण्यं लभंते च दिनेदिने ॥ ४८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां सहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वादशीव्रतादिमाहात्म्यवर्णनंनामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ४०



॥ श्रीप्रह्लाद उवाच ॥ ॥

स्वनामांकित पत्रैस्तु श्रीपतिं योऽर्चयेत वै ॥

सप्तलोकाननुप्राप्य सप्तद्वीपाधिपो भवेत्॥ १ ॥

माकान्तवृक्षपत्रैस्तु योऽर्चयेत सदा हरिम् ॥

पुण्यं भवति तस्येह वाजिमेधायुतं कलौ ॥ २ ॥

लक्ष्मीं सरस्वतीं देवीं सावित्रीं चंडिकां तथा ॥

पूजयित्वा दिवं याति पत्रैः श्रीवृक्षसंभवैः ॥ ३ ॥

तुलस्या अधिकं प्रोक्तं दलं श्रीवृक्षसंभवम्॥

तस्मान्नित्यं प्रयत्नेन पूजनीयः सदाऽच्युतः ॥ ४ ॥

द्वादश्यां रविवारेण श्रीवृक्षमर्चयन्ति ये ॥

ब्रह्महत्यादिकैः पापैर्न लिप्यंते कृतैरपि ॥ ५ ॥

यथा करिपदेऽन्यानि प्रविशंति पदानि च ॥

तथा सर्वाणि पुण्यानि प्रविष्टानि हरेर्दिने ॥ ६ ॥

अध्रुवेणैव देहेन प्रतिक्ष णविनाशिना ॥

कथं नोपासते जंतुर्द्वादशीं जागरान्विताम् ॥ ७ ॥

अतीतान्पुरुषान्सप्त भविष्यांश्च चतुर्द्दश ॥

नरकात्तारयेत्सर्वाँल्लोकान्कृष्णेति कीर्तनात् ॥

न ते जीवंति लोकेऽस्मिन्यत्रतत्र स्थिता नराः ॥ ८ ॥

द्वारकायां च संप्राप्तास्त्रिषु लोकेषु वंदिताः॥

द्वारकायां प्रकुर्वंति यतीनां भोजनं स्थितिम् ॥

ग्रासेग्रासे मखशतं ते लभंते फलं नराः ॥९ ॥

यतीनां ये प्रयच्छंति कौपीनाच्छादनादिकम् ॥

वसतां द्वारकामध्ये यथाशक्त्या तु भोजनम् ॥

शृणु पुण्यं प्रवक्ष्यामि समासेन हि दैत्यज ॥ 7.4.40.१० ॥

कोटिभिर्वेदविद्वद्भिर्गयायां पितृवत्सलैः ॥
भोजितैर्यत्समाप्नोति तत्फलं दैत्यनायक ॥ ११ ॥
एकस्मिन्भोजिते पौत्र भिक्षुके फलमीदृशम्॥
दातव्यं भिक्षुके चान्नं कुर्य्याद्वै चात्मविक्रयम् ॥ १२ ॥
धन्यास्ते यतयः सर्वे ये वसंति कलौ युगे ॥
कृष्णमाश्रित्य दैत्येन्द्र द्वारकायां दिनेदिने ॥ १३ ॥
प्राणिनो ये मृताः केचिद्द्वारकां कृष्णसन्निधौ ॥
पापिनस्तत्पदं यांति भित्त्वा सूर्यस्य मंडलम् ॥ १४ ॥
द्वारकाचक्रतीर्थे ये निवसंति नरोत्तमाः ॥
तेषां निवारिताः सर्वे यमेन यमकिंकराः ॥ १५ ॥
स्नात्वा पश्यंति गोमत्यां कृष्णं कलिमलापहम् ॥
न तेषां विषये यूयं न चास्मद्विषये तु ते ॥ १६ ॥
अपि कीटः पतंगो वा वृक्षा वा ये तदाश्रिताः ॥
यांति ते कृष्णसदनं संसारे न पुनर्हि ते ॥ १७ ॥
किं पुनर्द्विजवर्य्याश्च क्षत्रियाश्च विशेषतः ॥
त्रिवर्णपूजासंयुक्ताः शूद्रास्तत्र निवासिनः ॥ १८ ॥
गीतां पठंति कृष्णाग्रे कार्तिकं सकलं द्विजाः ॥
एकभक्तेन नक्तेन तथैवायाचितेन च ॥ १९ ॥
त्रिरात्रेणापि कृच्छ्रेण तथा चान्द्रायणेन च ॥
यावकैस्तप्तकृच्छ्राद्यैः पक्षमासमुपोषणैः ॥ 7.4.40.२० ॥
क्षपयंति च ये मासं कार्तिकं व्रतचारिणः ॥
स्नात्वा वै गोमतीनीरे तथा वै रुक्मिणीह्रदे ॥ २१ ॥
शंखचक्रगदा हस्ताः कृष्णरूपा भवंति ते ॥
उपोष्यैकादशीं शुद्धां दशमीसंगवर्जिताम् ॥ २२ ॥
श्राद्धं कुर्वंति द्वादश्यां चक्रतीर्थे च निर्मले ॥
ब्राह्मणान्भोजयित्वा च मधुपायससर्पिषा ॥ २३ ॥
संतर्प्य विधिवद्भक्त्या शक्त्या दत्त्वा तु दक्षिणाम् ॥
गोभूहिरण्यवासांसि तांबूलं च फलानि च ॥ २४ ॥

उपानहौ च्छत्रसुमं जलपूर्णा घटास्तथा ॥

पक्वान्नसंयुताः शुभ्राः सफला दक्षिणान्विताः॥ २५ ॥

एवं यः कुरुते सम्यक्कृष्णमुद्दिश्य कार्तिके ॥

मार्कंडेय समा प्रीतिः पितृणां जायते ध्रुवम् ॥ २६ ॥

कृष्णस्य त्रिदशैः सार्द्धं तुष्टिर्भवति चाक्षया ॥ २७ ॥

ये कार्तिके पुण्यतमा मनुष्यास्तिष्ठंति मासं व्रतदानयुक्ताः ॥

रथांगतीर्थे कृतपूतगात्रास्ते यांति पुण्यं पदमव्ययं च ॥ २८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये कार्तिके चक्रतीर्थस्नानदानश्राद्धादिमाहात्म्यवर्णनंनाम चत्वारिंशत्तमोऽध्यायः॥ ४० ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ४१



॥ श्रीप्रह्लाद उवाच ॥ ॥

धन्यास्तु नरलोकास्ते गोमत्यां तु कृतोदकाः ॥

पूजयिष्यंति ये कृष्णं केतकीतुलसीदलैः ॥ १ ॥

न तेषां संभवोऽस्तीह घोरसंसा रगह्वरे ॥

तेषां मृत्युः पुनर्नास्ति ह्यमरत्वं हि ते गताः ॥ २ ॥

अन्यत्र वै यतीनां तु कोटीनां यत्फलं भवेत् ॥

द्वारकायां तु चैकेन भोजितेन ततोऽधिकम् ॥ ३ ॥

अतीतं वर्त्तमानं च भविष्यद्यच्च पातकम् ॥

निर्द्दहेन्नास्ति संदेहो द्वारका मनसा स्मृता ॥ ४ ॥

ज्ञात्वा कलियुगे घोरे हाहाभूतमचेतनम्॥

द्वारकां ये न मुञ्चन्ति कृतार्थास्ते नरोत्तमाः ॥ ५ ॥

मृतानां यत्र जंतूनां श्वेतद्वीपे स्थितिः सदा ॥ ६ ॥

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपाश्च ये ॥

एकविंशतिः पितृगणा द्वारकायां वसंति ते॥ ७ ॥

पुष्करादीनि तीर्थानि गंगाद्याः सरितस्तथा ॥

कुरुक्षेत्रादि क्षेत्राणि काश्यादीन्यूषराणि च ॥ ८ ॥

गयादिपितृतीर्थानि प्रभासाद्यानि यानि च ॥

स्थानानि यानि पुण्यानि ग्रामाश्च निवसंति वै ॥ ९ ॥

काश्यादिपुर्यो या नित्यं निवसंति कलौ युगे ॥

नित्यं कृष्णस्य सदने पापिनां मुक्तिदे सदा ॥ 7.4.41.१० ॥

वैशाखशुक्लद्वादश्यां प्रबोधिन्यां शेषतः ॥

वैशाख्यां दैत्यशार्दूल कल्पादिषु युगादिषु ॥ ११ ॥

चंद्रसूर्योपरागेषु मन्वादिषु न संशयः ॥

व्यतीपातेषु संक्रांतौ वैधृतौ दैत्यनायक ॥ १२ ॥

तिलोदकं च यद्दत्त तत्स्थले पितृभक्तितः ॥

तत्सर्वमक्षयं प्रोक्तं गोमत्यां स्नानपूर्वकम् ॥१३ ॥

येऽत्र श्राद्धं प्रकुर्वंति पिंडदानपुरःसरम् ॥

तेषामत्राक्षया तृप्तिः पितृणामुपजायते ॥ १४ ॥

इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थ द्वारकामाहात्म्ये गोमतीस्नान कृष्णपूजन यतिभोजन दान श्राद्धादिसत्फलवर्णनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ४२

https://sa.wikisource.org/s/gy6

< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ प्रह्लाद उवाच ॥ ॥

वृषोत्सर्गं करिष्यंति वैशाख्यां चैव कार्तिके ॥

द्वारकायां पिशाचत्वं मुक्त्वा यांति पितामहाः ॥ १ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥

एवंविधानि पापानि कृत्वा चैव गुरूण्यपि॥ २ ॥

स्नानमात्रेण गोमत्यां श्रीकृष्णस्य च दर्शनात् ॥

विलयं याति दैत्येन्द्र कल्पकोटिकृतान्यपि ॥ ३ ॥

रुक्मिणीं ये प्रपश्यंति भक्तियुक्ताः कलौ नराः ॥

पुरीं प्रदक्षिणां कृत्वा जप्त्वा नामसहस्रकम् ॥ ४ ॥

प्रदक्षिणीकृतं सर्वं ब्रह्मांडं नात्र संशयः ॥

महादानैस्तु चान्यत्र यत्फलं परिकीर्तितम्॥

द्वारकायां तु रुक्मिण्यां दृष्टायां जायते तदा ॥ ५ ॥

द्वादशीवासरे प्राप्ते माहात्म्यं द्वारकाभवम् ॥

पठते संनिधौ विष्णोः शृणु वक्ष्यामि तत्फलम् ॥ ६ ॥

सर्वेषु चैव लोकेषु कामचारी विराजते ॥

पद्मवर्णेन यानेन किंकिणीजालमालिना ॥ ७ ॥

दिव्यश्वेताश्वयुक्तेन कामगेन यथासुखम् ॥

आभूतसंप्लवं यावत्क्रीडतेऽप्सरसां गणैः ॥ ८ ॥

कृतकृत्यश्च भवति कल्पकोटिसमन्वितः ॥

यथा निर्मथनादग्निः सर्वकाष्ठेषु दृश्यते ॥

तथा च दृश्यते धर्मो द्वादशीसेवनान्नरे ॥९॥

अतः परं प्रवक्ष्यामि पितृभिः परिकीर्तितम् ॥

अपि स्यात्स कुलेऽस्माकं गोमत्यां श्रद्धया नरः ॥

स्नात्वा संपूज्य कृष्णं च श्राद्धं कुर्यात्सपिण्डकम् ॥ 7.4.42.१०॥

अपि स्यात्स कुलेऽस्माकं गोमत्युदधिसंगमे ॥

स्नात्वा पश्यति यः कृष्णमस्माकं तारणाय वै ॥ ११ ॥

अपिस्यात्स कुलऽस्माकं यः श्रुत्वा ब्राह्मणाननात् ॥

द्वारकामाहात्म्यमिदं पूजयिष्यति भक्तितः ॥ १२ ॥

भविष्यति कुलेऽस्माकं यो गच्छेद्द्वारकां पुरीम् ॥

संप्राप्य द्वादशीं शुद्धां यः करिष्यति जागरम् ॥ १३ ॥

भविष्यति कुलेऽस्माकं पुत्रो वा दुहिता तथा ॥

स्तुवन्नामसहस्रं तु कृष्णस्याग्रे पठिष्यति ॥ १४ ॥

अपि स्यात्स कुलेऽस्माकं भविष्यति धृतव्रतः ॥

गोपीचन्दनदानेन यस्तोषयति वैष्णवान्॥ ॥ १५ ॥

अपि स्यात्स कुलेऽस्माकं वैष्णवानां तु सन्निधौ ॥

द्वारकायाश्च माहात्म्यं पठिष्यति जितेन्द्रियः ॥ १६ ॥

भविष्यति कुलेऽस्माकं माहात्म्यं द्वारकाभवम् ॥

लिखित्वा कृष्णतुष्ट्यर्थं स्वगृहे धारयिष्यति ॥ १७ ॥

स्वर्णदानं च गोदानं भूमिदानं तथैव च ॥

यावज्जीवं भवेद्दत्तं येनेदं धारितं कलौ ॥ १८ ॥

तप्तकृच्छ्रं महाकृच्छ्रं मासोपोषणमेव च ॥

यावज्जीवं कृतं तेन येनेदं श्रावितं कलौ ॥ १९ ॥

प्रायश्चित्तानि चीर्णानि पापानां नाशनाय ? ॥

द्वारकायाश्च माहात्म्यं येन विस्तारितं कलौ ॥ 7.4.42.२० ॥

तावत्तिष्ठंति पुरुषे ब्रह्महत्यादिकानि च ॥

यावन्न लिखते जंतुर्माहात्म्यं द्वारकाभवम् ॥ २१ ॥

दानैः सर्वैश्च किं तस्य सर्वतीर्थावगाहनैः ॥

द्वारकायाश्च माहात्म्यं येनेदं लिखितं गृहे ॥ २२ ॥

सर्व दुःखप्रशमनं सर्वकार्य्यप्रसाधनम्॥

चतुर्वर्गप्रदं नित्यं हरिभक्तिविवर्द्धनम् ॥ २३ ॥

न चाधिर्भवते नूनं याम्यं तस्य भयं नहि ॥

माहात्म्यं पठते यत्र द्वारकायाः समुद्भवम्॥ २४ ॥

लिखितं तिष्ठते यस्य गृहे तत्तीर्थमेव च ॥
बलाच्छृणुष्व माहात्म्यं द्वारकायाः समुद्भवम् ॥ २५ ॥
विधि मन्त्रक्रियाहीनां पूजां गृह्णाति केशवः ॥
माहात्म्यं तिष्ठते नित्यं लिखितं यस्य वेश्मनि ॥
न तस्यागःसहस्रैस्तु कृतैर्लिप्यति मानवः ॥ २६ ॥
यः पठेच्छृणुते वापि माहात्म्यं द्वारकाभवम् ॥
न भवेद्भूतवैकल्यं धर्मवैकल्यमेव च ॥ २७ ॥
यः स्मरेत्प्रातरुत्थाय माहात्म्यं द्वारकाभवम् ॥
द्वादशीनां च सर्वासां यच्चोक्तं लभते फलम् ॥ २८ ॥
त्रिदशैः पूज्यते नित्यं वन्द्यते सिद्धचारणैः ॥
माहात्म्यं पठते यो वै द्वारकायाः समुद्भवम् ॥ २९ ॥
द्वारका वसते यत्र तत्र विष्णुः सनातनः ॥
तत्र तीर्थानि सर्वाणि सर्वे देवाः सवासवाः ॥
यज्ञा वेदाश्च ऋषयस्त्रैलोक्यं सचरा चरम् ॥ 7.4.42.३० ॥
शक्तो हि द्वारकां गंतुं मानवो न हि पुत्रक ॥
कृष्णदर्शनजं पुण्यं माहात्म्यं पठतो भवेत् ॥३१ ॥
सत्यं शौचं श्रुतं वित्तं सुशीलं च क्षमाऽऽर्जवम् ॥
सर्वं च निष्फलं तस्य माहात्म्यं न शृणोति यः ॥ ३२ ॥
षण्मासे च भवेत्पुत्रो लक्ष्मीश्चैव विवर्द्धते ॥
तस्य यः शृणुते भक्त्या माहात्म्यं द्वारकाभवम् ॥ ३३ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये द्वारकाक्षेत्रे वृषोत्सर्गादिक्रियाकरण द्वारकामाहात्म्यश्रवणादिफलवर्णनंनाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ४३



॥ प्रह्लाद उवाच ॥ ॥

सावित्रीं च भवानीं च दुर्गां चैव सरस्वतीम् ॥

योऽर्चयेत्तुलसीपत्रैः सर्वकामसमन्वितः ॥ १ ॥

गृहीत्वा तुलसीपत्रं भक्त्या विष्णुं समर्चयेत् ॥

अर्चितं तेन सकलं सदेवासुरमानुषम्॥ २ ॥

चतुर्द्दश्यां महेशानं पौर्णमास्यां पितामहम् ॥

येऽर्चयन्ति च सप्तम्यां तुलस्या च गणाधिपम् ॥३ ॥

शंखोदकं तीर्थवराद्वरिष्ठं पादोदकं तीर्थवराद्वरिष्ठम्॥

नैवेद्यशेषं क्रतुकोटितुल्यं निर्माल्यशेषं व्रतदानतुल्यम् ॥ ४ ॥

मुकुन्दाशनशेषं तु यो भुनक्ति दिनेदिने ॥

सिक्थेसिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ॥ ५ ॥

नैवेद्यशेषं तुलसीविमिश्रं विशेषतः पादजलेन विष्णोः ॥

योऽश्नाति नित्यं पुरुषो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ ६ ॥

यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ॥

तेनैव पिंडात्सुतिलैर्विमिश्रादाकल्पकोटिं पितरः सुतृप्ताः ॥ ७ ॥

स्नानार्चनक्रियाकाले घंटावाद्यं करोति यः ॥

पुरतो वासुदेवस्य गवां कोटिफलं लभेत् ॥ ८ ॥

सर्ववाद्यमयी घंटा केशवस्य सदा प्रिया ॥

वादनाल्लभते पुण्यं यज्ञकोटिफलं नरः ॥ ९ ॥

वादित्राणामभावे तु पूजाकाले च सर्वदा ॥

घंटावाद्यं नरैः कार्य्यं सर्ववाद्यमयी यतः ॥ 7.4.43.१० ॥

तुलसीकाष्ठसंभूतं चन्दनं यच्छते हरेः ॥

निर्द्दहेत्पातकं सर्वं पूर्वजन्मशतार्जितम् ॥ ११ ॥

ददाति पितृ पिंडेषु तुलसीकाष्ठचन्दनम् ॥

पितॄणां जायते तृप्तिर्गयाश्राद्धेन वै तथा ॥ १२ ॥

सर्वेषामेव देवानां तुलसीकाष्ठचन्दनम् ॥

पितॄणां च विशेषेण सदाऽभीष्टं हरेः कलौ ॥ १३ ॥

हरेर्भागवता भूत्वा तुलसीकाष्ठचन्दनम् ॥

नार्पयति सदा विष्णोर्न ते भागवताः कलौ ॥ १४ ॥

शरीरं दह्यते यस्य तुलसीकाष्ठवह्निना ॥

नीयमानो यमेनापि विष्णुलोकं स गच्छति ॥ १५ ॥

यद्येकं तुलसीकाष्ठं मध्ये काष्ठस्य यस्य हि ॥

दाहकाले भवेन्मुक्तः पापकोटिशतायुतैः ॥ १६ ॥

दह्यमानं नरं दृष्ट्वा तुलसीकाष्ठवह्निना ॥

जन्मकोटिसहस्रैस्तु तोषितस्तैर्जनार्दनः ॥ १७ ॥

दह्यमानं नरं सर्वे तुलसीकाष्ठवह्निना ॥

विमानस्थाः सुरगणाः क्षिपंति कुसुमांजलीन् ॥ १८ ॥

नृत्यंत्योऽप्सरसो हृष्टा गीतं गायन्ति सुस्वरम् ॥

ज्वलते यत्र दैत्येन्द्र तुलसीकाष्ठपावकः ॥ १९ ॥

कुरुते वीक्षणं विष्णुः सन्तुष्टः सह शंभुना ॥ 7.4.43.२० ॥

गृहीत्वा तं करे शौरिः पुरुषं स्वयमग्रतः॥

मार्जते तस्य पापानि पश्यतां त्रिदिवौकसाम् ॥

महोत्सवं च कृत्वा तु जयशब्दपुरःसरम् ॥ २१ ॥

॥ सूत उवाच ॥ ॥

प्रह्लादेनोदितं श्रुत्वा माहात्म्यं द्वारकाभवम् ॥

प्रहृष्टा ऋषयः सर्वे तथा दैत्येश्वरो बलिः ॥ २२ ॥

ततः सर्वेऽभिनन्द्यैनं प्रह्लादं दैत्यपुङ्गवम् ॥

उद्युक्ता द्वारकां गत्वा द्रष्टुं कृष्णमुखाम्बुजम् ॥ २३ ॥

ततस्ते बलिना सार्धं मुनयः संशितव्रताः ॥

आगत्य द्वारकां स्नात्वा गोमत्यां विधिपूर्वकम् ॥ २४ ॥

कृष्णं दृष्ट्वा समभ्यर्च्य कृत्वा यात्रां यथाविधि ॥

दत्त्वा दानानि बहुशः कृतकृत्यास्ततोऽभवन् ॥ २५ ॥

जग्मुः स्वीयानि स्थानानि बलिः पातालमाययौ ॥
प्रह्लादं च प्रणम्याशु मेने स्वस्य कृतार्थताम् ॥ २६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये द्वारकामाहात्म्यश्रवणादिफलश्रुतिवर्णनपुरःसरतुलसीपत्रकाष्ठमहिमवर्णनपूर्वकं प्रह्लादद्विजसंवाद समाप्त्यनंतरं बलिना सह द्विजकृतद्वारकायात्राविधिवर्णनंनाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

# स्कन्दपुराणम्/खण्डः ७ (प्रभासखण्डः)/द्वारकामाहात्म्यम्/अध्यायः ४४

https://sa.wikisource.org/s/gy8
< स्कन्दपुराणम् | खण्डः ७ (प्रभासखण्डः) | द्वारकामाहात्म्यम्

॥ सूत उवाच ॥ ॥

एतत्पुराणमखिलं पुरा स्कन्देन भाषितम् ॥

भृगवे ब्रह्मपुत्राय तस्माल्लेभे तथांऽगिराः ॥ १ ॥

ततश्च च्यवनः प्राप ऋचीकश्च ततो मुनिः ॥

एवं परंपरा प्राप्तं सर्वेषु भुवनेष्वपि ॥ २ ॥

स्कान्दं पुराणमेतच्च कुमारेण पुरोद्धृतम् ॥

यः शृणोति सतां मध्ये नरः पापाद्विमुच्यते ॥ ३ ॥

इदं पुराणमायुष्यं चतुर्वर्णसुखप्रदम् ॥

निर्मितं षण्मुखेनेह नियतं सुमहात्मना ॥ ४ ॥

एवमेतत्समाख्यातमाख्यानं भद्रमस्तु वः ॥ ५ ॥

मण्डितं सप्तभिः खण्डैः स्कान्दं यः शृणुयान्नरः ॥

न तस्य पुण्यसंख्यानं कर्तुं शक्येत केनचित् ॥ ६ ॥

य इदं धर्ममाहात्म्यं ब्राह्मणाय प्रयच्छति ॥

स्वर्गलोके वसेत्तावद्यावदक्षरसंख्यया ॥ ७ ॥

यथा हि वर्षतो धारा यथा वा दिवि तारकाः ॥

गंगायां सिकता यद्वत्तद्वत्संख्या न विद्यते ॥ ८ ॥

यो नरः शृणुयाद्भक्त्या दिनानि च कियन्ति वै ॥

सर्वार्थसिद्धो भवति य एतत्पठते नरः ॥ ९ ॥

पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥

लभते पतिकामा या पतिं कन्या मनोरमम् ॥ 7.4.44.१०॥

समागमं लभन्ते च बान्धवाश्च प्रवासिभिः ॥

स्कान्दं पुराणं श्रुत्वा तु पुमानाप्नोति वाञ्छितम् ॥ ११ ॥

शृण्वतः पठतश्चैव सर्वकामप्रदं नृणाम्॥१२॥

पुण्यं श्रुत्वा पुराणं वै दीर्घमायुश्च विन्दति॥

महीं विजयते राजा शत्रूंश्चाप्यधितिष्ठति॥१३॥
वेदविच्च भविद्विप्रः क्षत्रियो राज्यमाप्नुयात्॥
धनं धान्यं तथा वैश्यः शूद्रः सुखमवाप्नुयात्॥१४॥
अध्यायमेकं शृणुयाच्छलोकं श्लोकार्धमेव वा॥
यः श्लोकपादं शृणुयाद्विष्णुलोकं स गच्छति ॥ १५ ॥
श्रुत्वा पुराणमेतद्धि वाचकं यस्तु पूजयेत्॥
तेन ब्रह्मा च विष्णुश्च रुद्रश्चैव प्रपूजितः ॥ १६ ॥
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥ १७ ॥
अतः संपूजनीयस्तु व्यासः शास्त्रोपदेशकः ॥
गोभू हिरण्यवस्त्राद्यैर्भोजनैः सार्वकामिकैः ॥ १८ ॥
य एवं भक्तियुक्तस्तु श्रुत्वा शास्त्रमनुत्तमम् ॥
पूजयेदुपदेष्टारं स शैवं पदमाप्नुयात् ॥ १९ ॥
पुराणश्र वणादेव अनेकभवसंचितम् ॥
पापं प्रशममायाति सर्वतीर्थफलं लभेत् ॥ 7.4.44.२० ॥
अमृतेनोदरस्थेन म्रियन्ते सर्वदेवताः ॥
कण्ठस्थितविषेणापि यो जीवति स पातु वः ॥ २१ ॥
॥ व्यास उवाच ॥ ॥
इत्युक्त्वोपरते सूते शौनकादि महर्षयः ॥
संपूज्य विधिवत्सूतं प्रशस्याथाभ्यनन्दयन् ॥ ॥ २२ ॥
ऋषय ऊचुः ॥ ॥
कथितो भवता सर्गः प्रतिसर्गस्तथैव च ॥
वंशानुवंशचरितं पुराणानामनुक्रमः ॥ २३ ॥
मन्वन्तरप्रमाणं च ब्रह्माण्डस्य च विस्तरः ॥
ज्योतिश्चक्रस्वरूपं च यथावदनुवर्णितम् ॥ २४ ॥
धन्याः स्म कृतकृत्याः स्म वयं तव मुखाम्बुजात् ॥
स्कान्दं महापुराण हि श्रुत्वा सूतातिहर्षिताः ॥ २५ ॥
वयं महर्षयो विप्राः प्रदद्मोऽद्य तवाऽऽशिषः ॥

व्यासशिष्य महाप्राज्ञ चिरं जीव सुखी भव ॥ २६ ॥

इति दत्त्वाऽऽशिषस्तस्मै दत्त्वा वासोविभूषणम् ॥

विसृज्य लोमशं सूतं यज्ञकर्माण्यथाचरन् ॥ २७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां सप्तमे प्रभासखण्डे चतुर्थे द्वारकामाहात्म्ये स्कन्दमहापुराणश्रवणपठनपुस्तकप्रदानपौराणिकव्यासपूजनमाहात्म्यवर्णनपूर्वकं समस्तस्कान्दमहापुराणग्रन्थसमास्त्युपसंहारसूतसत्कारवृत्तान्तवर्णनंनाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

इति श्रीस्कान्दे महापुराणे सप्तमे प्रभासखण्डे चतुर्थं द्वारकामाहात्म्यं सम्पूर्णम् ॥ (७-४) ॥

॥ इति श्रीस्कान्दे महापुराणे सप्तमं प्रभासखण्डं सम्पूर्णम्॥ ७ ॥

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०१



अध्यायाः १ - १०

3
ॐ नमः शिवाय
नमः परमदेवाय त्रैगुण्यविजितात्मने ।
शाश्वते१ योगरूपाय संसाराभावहेतवे२ । । १ । ।
स्थितिसंरोधसर्गाणां३ हेतवेन्त (?) प्रसारिणे४ ।
षड्विंशाय प्रधानाय महादेवाय धीमते । । २ । ।
प्रजाषतेर्महाक्षेत्रे५ गङ्गाकालिन्दिसङ्गमे ।
प्रयागे परमे पुण्ये ब्रह्मणो लोकवर्त्मनि । । ३ । ।
मुनयः शंशितात्मानस्तपसा क्षीणकल्मषाः ।
तीर्थसंप्लवनार्थाय६ पौर्णमास्यां कृताह्निकाः । ।४। ।
पौराणिकमपश्यन्त७ सूतं सत्यपरायणम् ।
स्नात्वा तस्मिन्महातीर्थे प्रणामार्थमुपागतम् । । ५। ।
दृष्ट्वा ते सूतमायान्तमृषयो हृष्टमानसाः८ ।
आशास्या९ सनसंवेशं१० तद्योगं११ समकल्पयन्१२ । । ६ । ।
स प्रणम्य ततः१३ सर्वान् सूतस्तान्मुनिपुङ्गवान् ।
प्रदत्तमासनं भेजे सर्वधर्मसमन्वितः १४ । ।७ । ।
तमासीनमपृच्छन्ते १५ मुनयस्तपसैधिताः१६ ।
ब्रह्मसत्रे पुरा साधो१७ नैमिशारण्यवासिनाम्१८। ।८ । ।

१ शाश्वतो - ख., सर्वतो - घ. । २ ससारभार - घ, संसारोद्भाव - - ख. । ३ स्थितिसं बोध ... - घ । ४ कर्त्रे इर्त्रे पुरारिणे - च. । ५ पुरा हुतवहक्षेत्रे,. महक्षेत्रे - ख. । ६. सप्लावनार्थाय - घ । ७ - -. न्ते - ख, -रत - च । ८ ..न्तं सर्वेप्या कृष्टमानसाः - य । ९ आश्चर्या - ध. । १० सेन - ष. । ११ ग्यं - व. ( १२ येत् - य. । १३ च तान्- ब. । १४ धर्मागमा .. - व. । १५ अपृच्छन्त - घ. । १६ - स्तं समाहिताः -ये. ।? तपसेधिता - .ख । १७ पुरासीना - घ. । १८ वासिन. - घ ।

4
कथितं भारताख्यानं पुराणं च परं त्वया।
तेन नः प्रतिभासि त्वं साक्षात्सत्यवतीसुतः ।।६ ।।
सर्वागमपरार्थज्ञः सत्यधर्मपरायणः॥

द्विजपूजारतो नित्यं तेन पृच्छां त्वमर्हसि ॥8.1.१०॥
भारताख्यानसदृशं पुराणाद्यद्विशिष्यते॥
तत्त्वा पृच्छाम वै जन्म कार्त्तिकेयस्य धीमतः ॥११॥
इमे हि मुनयः सर्वे त्वदुपास्तिपरायणाः॥
स्कन्दसंभवशुश्रूषा संजातौत्सुक्यमानसाः ॥१२॥
एवमुक्तस्तदा सूतः संसिद्धैर्मुनिपुंगवैः॥
प्रोवाचेदं मुनीन्सर्वान्वचो भूतार्थवाचकम् ॥१३॥
शृणुध्वं मुनयः सर्वे कार्त्तिकेयस्य सम्भवम् ॥
ब्रह्मण्यत्वं समाहात्म्यं वीर्यं च त्रिदशाधिकम् ॥१४॥
मुमुक्षया परं स्थानं याते शुकमहात्मनि॥
सुतशोकाभिसंतप्तो व्यासस्त्र्यम्बकमैक्षत ॥१५ ॥
दृष्ट्वैव स महेशानं व्यासोऽभूद्विगतव्यथः॥
विचरन्स तदा लोकान्मुनि सत्यवतीसुतः ॥१६॥
मेरुशृङ्गेऽथ ददृशे ब्रह्मणः सुतमग्रजम्॥
सनत्कुमारं वरदं योगैश्वर्यसमन्वितम् ॥१७॥
विमाने रविसंकाशे तिष्ठन्तमनलप्रभम्॥
मुनिभिर्योगसंसिद्धैस्तपोयुक्तैर्महात्मभिः ॥१८॥
वेदवेदाङ्गतत्त्वज्ञैः सर्वधर्मागमान्वितैः॥
सकलावाप्तविद्यैस्तु चतुर्वक्त्रमिवावृतम् ॥१९ ॥
दृष्ट्वा तं सुमहात्मानं व्यासो मुनिमथास्थितम्॥
ववन्दे परया भक्त्या साक्षादिव पितामहम् ॥8.1.२०॥
ब्रह्मसूनुरथ व्यासं समायातं महौजसम्॥

5

परिष्वज्य परं प्रेम्णा प्रोवाच वचनं शुभम् ॥२१ ॥
दिष्ट्या त्वमसि धर्मज्ञ प्रसादात्पारमेश्वरात् ॥
अपेतशोकः सम्प्राप्तः पृच्छस्व प्रवदाम्यहम् ॥२२ ॥
श्रुत्वाथ वचनं सूनोर्ब्रह्मणो मुनिपुंगवः॥
इदमाह वचो विप्राश्चिरं यद्धृदये स्थितम् ॥२३ ॥
कुमारस्य कथं जन्म कार्त्तिकेयस्य धीमतः ॥
किंनिमित्तं कुतो वास्य इच्छाम्येतद्धि वेदितुम् ॥२४॥
कथं रुद्रसुतश्चासौ वह्निगङ्गासुतः कथम्॥
उमायास्तनयश्चैव स्वाहायाश्च कथं पुनः॥
सुपर्ण्याश्चाथ मातृणां कृत्तिकानां कथं च सः ॥२५ ॥
कश्चासौ पूर्वमत्पन्नः किंतपाः कश्च विक्रमः॥
भूतसंमोहनं ह्येतत्कथयस्व यथातथम् ॥२६ ॥
सूत उवाच

एवं स पृष्टस्तेजस्वी ब्रह्मणः पुत्रसत्तमः॥
उवाच सर्वं सर्वज्ञो व्यासायाक्लिष्टकारिणे ॥
तच्छृणुध्वं यथातत्त्वं कीर्त्यमानं मयानघाः ॥२७ ॥
इति स्कन्दपुराणे प्रथमोऽध्यायः

6
सनत्कुमार उवाच
प्रपद्ये देवमीशानं सर्वज्ञमपराजितम् ।
महादेवं महात्मानं विश्वस्य जगतः पतिम् ।।१ ।।
शक्तिरप्रतिघा यस्य इइ ऐश्वर्यञ्चैव सर्वशः ।
स्वामित्वञ्च विभुत्वञ्च  स्वकृतानि प्रचक्षते ।।२।।
तस्मै देवाय सोमाय प्रणम्य प्रयतः शुचिः ।
पुराणाख्यानजिज्ञासोर्वक्ष्ये स्कन्दोद्भवं शुभम् ।।३ । ।
देहावतारो देवस्य रुद्रस्य परमात्मनः ।
प्राजापत्याभिषेकश्च हरणं शिरसस्तथा ।।४। ।
दर्शनं षट्कुलीयानां चक्रस्य च विसर्जनम् ।
नैमिशस्योद्भवश्चैव सत्रस्य च समापनम् । ।५।।
ब्रह्मणश्चागमस्तत्र तपसश्चरणन्तथा ।
शर्वस्य दर्शनञ्चैव देव्याश्चैव समुद्भवः । ।६।।
सत्या विवादश्च तथा दक्षशापस्तथैव च ।
सेनायाश्च समुत्पत्तिर्यथा देव्याः स्वयंवरः ।।७।।
देवानां वरदानञ्च वसिष्ठस्य च धीमतः ।
पराशरस्य चोत्पत्तिर्व्यासस्य च महात्मनः ।।८ ।।
वसिष्ठकौशिकाभ्याञ्च वैरोद्भवसमापनम् ।
वाराणस्याश्च शून्यत्वं क्षेत्रमाहात्म्यवर्णनम् ।।९। ।
रुद्रस्य चात्र सान्निध्यं  नन्दिनश्चाप्यनुग्रहः ।
गणानां दर्शनञ्चैव कथनञ्चाप्यशेषतः ।।8.2.१ ० । ।
कालीव्याहरणञ्चैव तपश्चरणमेव च ।
सोमनन्दिसमुत्पत्तिर्वरदानं तथैव च । ।१ १ । ।

7
गौरीत्वं पुत्रलम्भश्च देव्या उत्पत्तिरेव च ।
कौशिक्या भूतमातृत्वं सिंहस्य रथता तथा ।।१२।।
गौर्याश्च निलयो विन्ध्ये विन्ध्यसूर्यसमागमः ।
अगस्त्यस्य च माहात्म्यं वधः सुन्दनिसुन्दयोः  ।।१३ ।।
निशुम्भशुम्भनिर्णाशो महिषस्य वधस्तया ।
अभिषेकश्च कौशिक्या - - - - - - - - ।।१४।।

- - - - - - - - वरदानमथापि च ।
अन्धकस्य तथोत्पत्तिः पृथिव्याश्चैव बन्धनम् ।।१५।।
हिरण्याक्षवधश्चैव हिरण्यकशिपोस्तथा ।
बलशंशमनं  चैव देव्याः समय एव च ।।१६।।
देवानां गमनं चैवं अग्नेर्दूतत्वमेव च ।
देवानां वरदानं च शुक्रस्य च विसर्जनम् ।।१७।।
दूतस्य  च तथोत्पत्तिर्देव्याश्चान्धकदर्शनम् ।
शैलादिदैन्यसम्मर्द्दो देव्याश्च शतरूपता ।।१८।।
आर्यावरप्रदानं च शैवादिस्तव एव च ।
देवस्यागमनं चैव वृत्तस्य कथनं तथा ।।१९।।
पतिव्रतायाश्चाख्यानं गुरुशुश्रषणस्य च ।
आख्यानं पञ्चचूडायास्तैजसश्चाप्यधृष्यता ।।8.2.२०।।
दूतस्यागमनं चैव संवादोथ विसर्जनम् ।
अन्धकासुरसंवादो मन्दरागमनं तथा ।।२१।।
गणानामागमश्चैव संख्यानश्रवणं तथा ।
विग्रहश्चान्धकस्याथ युद्धे (?)नं - महता तथा ।।२२।।
शरीरार्धप्रदानं च अशोकसुतसंग्रहः ।
भम्मसोमोद्भवश्चैव श्मशानवसतिस्तथा ।।२३ ।।

8

उत्पत्तिर्यक्षराजस्य कुबेरस्य च धीमतः।
निग्रहो भुजगेन्द्राणां शिखरस्य च पातनम् ।।२४।।
त्रैलोक्यस्य सशक्रस्य वशीकरणमेव च।।
देवसेनाप्रदानं च सेनापत्याभिषेचनम् ।। २५।।
नारदख्यागमश्चैव तारकप्रेषितस्य ह ।।
वधश्च तारकस्योग्रो यात्रा भद्रवटस्य च ।।२६।।
महिषस्य वधश्चैव क्रौञ्चस्य च निबर्हणम्।।
शक्तेरुद्धरणं चैव तारकस्य वधः शुभः ।।२७।।
देवासुरभयोत्पत्तिस्त्रैपुरं युद्धमेव च ।।
प्रह्लादविग्रहश्चैव कृतघ्नाख्यानमेव च।।
महाभाग्यं बाह्मणानां विस्तरेण प्रकीर्त्यते ।।२८।।
एतज्ज्ञात्वा यथावद्धि कुमारानुचरो भवेत्।।
बलवान्मतिसम्पन्नः पुत्रं चाप्नोति संमतम् ।।२९।।
इति स्कन्दपुराणे द्वितीयोऽध्यायः

सनत्कुमार उवाच

शृणुष्वेमां कथां दिव्यां सर्वपापप्रणाशनीम्।।
कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसंमिताम्।।
यां श्रुत्वा पापकर्मापि गच्छेच्च परमां गतिम् ।।१।।
न नास्तिकाश्रद्दधाने शठे चापि कथंचन।।
इमां कथामनुब्रूयात्तथा चासूयके नरे ।।२।।
इदं पुत्राय शिष्याय धार्मिकायानसूयवे।।
कथनीयं महाब्रह्मन्देवभक्ताय वा भवेत्।।३।।

9

कथनीयं५ सदा ब्रह्मन् देवभक्ताय वा भवेत् ।
कुमारभक्ताय तथा श्रद्दधानाय चैव हि । ।४।।
सदा वाच्यमिदं६ गुह्यं यतीनां भावितात्मनाम् ।
ततः प्रोवाच - - - प्रप-न्नेनान्तरात्मना । ।५। ।
पुरा ब्रह्मा प्रजा७ त्वष्टुरण्डेस्मिन्८ संप्रसूयत ।
सोज्ञानात् पितरं ब्रह्मा न वेद तमसावृतः । ।६ । ।
अहमेक९ इति ज्ञात्वा सर्व्वांल्लोकानवैक्षत१० ।
न चापश्यत तत्रान्यं११ तपोयोगबलान्वितः । ।७। ।
पुत्रपुत्रेति चा१२प्युक्तो१३ ब्रह्मा शर्वेण धीमता ।
प्रणतः१४ प्राञ्जलिर्भूत्वा तमेव शरणं गतः ।।८ । ।
स दत्त्वा ब्रह्मणे शम्भुः स्रष्टृत्वं१५ ज्ञानसंहितम् ।
विभुत्वं१६ चैव लोकानामन्तर्धात्१७ परमेश्वरः । ।९ । ।
तदेषोपनिषत् प्रोक्ता मया व्यास सनातनी१८ ।
यां श्रुत्वा योगिनो ध्यानात् प्रपद्यन्ते१९ महेश्वरम् । ।8.3.१ ० । ।
यो ब्रह्माणं विदधे पुत्रमग्रे ज्ञानञ्च यः प्रहिणोति स्म२० तस्मै ।
तमात्मस्थं येनु२२ पश्यन्ति धीरास्तेषां शान्तिः शाश्वती२३ नेतरेषाम्। ।१ १ । ।
स व्यास पितरं दृष्ट्वा दीप्त्या२३ परमया२४ युतम् ।
पुत्रकामः प्रजाहेतोस्तपस्तीव्रं चचार२५ ह । ।१२ । ।
तस्योग्रयोगतपसा२६ युक्तस्य२७ सुमहात्मनः ।
अचिरेणैव कालेन पिता संप्रतुतोष ह२८ । । १३ । ।
दर्शनं चागमत्तस्य वरदोस्मी त्युवाच च२९ ।
स ३० तुष्टावा ३१ नतो भूत्वा कृत्वा शिरसि चाञ्जलिम् । ।१४। ।

५ ... या - घ. । ६ वाक्य?.. - घ. । ७... ध्यक्षो - घ. । ८ ब्रह्माण्डे - घ.... मण्डे (?) । ९... व - ख । १०..वेक्षत क. ख. । ११ कश्चापि - घ. । १२ स प्रो, - घ. । १३... क्तौ - ख । १४ प्राञ्जलिः... प्रणतोभू. .. घ. । १५ सुहृत्वं - ख । १६ चापि- ध. । १७... र्द्ध - क. । १८... ना - क. । १९ ... न्ति - क. । २० स्मेति पदं घ.पुस्तके न विद्यते । २१ न - ख. । २२.. ता - क. । २३ स्वदीप्त्या - क. ख., प्रदीप्त्या - घ- । २४ परया - क.ख. घ । परमया - क. टी. । २५ चकार - घ. । २६ महता योगतपसा - ख. । २७ च ... - प. २८ पितरं प्रत्यतोषयत् - ख. । २९ ह - ख. । ३० तमुवाचा... - ख. । ३१... व - क ।

10

नमः परमदेवाय देवानामपि वेधसे ।
स्रष्ट्रे वै लोकतन्त्राय३२ ब्रह्मणः पतये नमः । ।१ ५ । ।
एकस्मै३३ शक्तियुक्ताय आसक्तिरहिताय३४ च ।
अनन्तायाप्रमेयाय इन्द्रियाविषयाय ३५ च । ।१ ६ । ।
व्यापिने व्याप्तपूर्वाय अधिष्ठात्रे प्रचोदिने ।
कृतप्रचोदनायैव तत्त्वविन्यासकारिणे ३६ । ।१७। ।
प्रधानचोदकायैव गुणानां ३७ शक्तिदाय च ।
दृष्टिदाय च सर्वेषां स्वयं वै दर्शनाय च । ।१८ । ।
विषयग्राहिणे चैव नियमस्य च कारिणे ।
मनसः करणानां३८ च कर्त्रे वै३९ निगमस्य४० च ।।१ ९ । ।
भूतानां गुणकर्त्रे च शक्तिदाय तथैव च ।
कर्त्रे ह्यण्डस्य मह्यञ्च४१ अचिन्त्यायाग्रजाय च । ।8.3.२ ० । ।
अप्रमेय पितर्नित्यं४२ प्रीतो४३ नो दिश४४ शक्वरीम् ।
अप्रमेयगुणैश्वर्यशक्तयेव्याहताय वै । ।२१ । ।
तस्यैवं स्तुवतो४५ व्यास देवदेवो महेश्वरः४६ ।
तुष्टोव्रवीत् स्वयं पुत्रं ब्रह्माणं प्रणतं तदा४७ । ।२२। ।
यस्मात्ते विदितं वत्स सूक्ष्ममेतन्महाद्युते ।
तस्माद् ब्रह्मेति लोकेषु नाम्ना ख्यातिं गमिष्यसि । ।२३ । ।
यस्माच्चाहं पितेत्युक्तस्त्वया बुद्धिमतां वर ।
तस्मात् पितामहत्वं ते लोके ख्यातिं गमिष्यति४८ । ।२४। ।
प्रजार्थं यच्च ते तप्तं तप उग्रं सुदुश्चरम् ।
तस्मात्प्रजापतित्वं ते ददामि४९ प्रयतात्मने । ।२५ । ।

३२... स्य (?) । ३३.?. एत... - कः । ३४.,. अशक्ति... - क. ख. । ३५... पाय- क. । ३६... धा-ख । ३७ गुणिनां-ख । ३८ का... - घ. । ३९ तत्रैव - ख । ४० निय... - क. ख. घ. । ४१ ... गु - ख. । ४२ .. यामितायैव - ख । ४३ प्रीति ख । ४४ सर्वग - ख घ. । ४५ स्तुतो - ख. । ४६ देवः स परमेश्वरः - क. स देवः ... पर. - घ. । ४७ तथा - ख । ४८... सि ख. । ४९ ... ति ख. घ ।

11

( ११) एवमुक्त्वा स देवेशो सृजन्मूर्त्तिमतीः५० स्त्रियः ५१ ।
यास्ताः५२ प्रकृतयस्त्वष्टौ विकारा ५३ इन्द्रियैः सह । । २६ । ।
भावाश्च सर्वे ते देवमुपतस्थुः स्वरूपिणः ।
तानुवाच ततो देवः पतिं युक्तः ५४ स्वतेजसा । ।२७ । ।
एतमद्याभिषेकेण सम्पादयत मा चिरम् ।
ताभिः स्वं स्वं समादाय भावं दिव्यमतर्कितम् । ।२८ । ।
अभिषिक्तो बभूवेह५५ प्रजापतिरतिद्युतिः ।
तत्रेमं५६ योगिनः ५७ सूक्ष्मं दृष्टवा दिव्येन चक्षुषा । ।२९ । ।

पुराणं ५८ योगतत्त्वज्ञा गायन्ति त्रिगुणान्वितम् ५९ ।
रूद्रः स्रष्टा हि सर्वेषां भूतानां तव च प्रभो६० । ।8.3.३ ० । ।
अस्माभिश्च भवान् सार्द्धं जगतः संप्रवर्त्तकः ।
स देवस्तोषितः सम्यक् परमैश्वर्ययोगधृक्६१ ।
ब्रह्माणमग्रजं ६२  पुत्रं प्राजापत्येभ्यषेचयत् । ।३ १ । ।
यः कृत्वा बहुविधमार्गयोगयुक्तं६३  तन्वाख्यं६४ जगदिदमादराद्युयोज ।
तं देवं६५ परममनन्तयोगयुक्तं मायाभिः त्रिभुवनबन्धुमप्रमादम् ६६ । ।३ २।।
सर्वेषां मनसि सदावतिष्ठमानं६७ पश्यन्तं ६८ शुभमशुभं च भूतनाथम् ।
तं देवं प्रणतगतिं६९ प्रणम्य भक्त्या नित्यं वै शरणमुपैमि७० सूक्ष्मसूक्ष्मम् । ।३ ३ ।।
इति स्कन्दपुराणे ब्रह्मणः प्राजापत्याभिषेचनो७१  नाम तृतीयोध्यायः ७२
५०... मूतिमत्योसृजत् - क. । ५१ स्त्र... - घ- । ५२ यस्मात् - ख. यास्तदा - घ- । ५३ विशेषा - ख. घ । ५४...तिर्युक्त  क.,... तिर्भुक्तः - घ । ५५ थभूत्वे... -क. । ५६ तत्रस्था - क., अत्रे मं - घ । ५७... नं - ख । ५८... ण.. घ. । ५९ ... त्मकं - घ. । ६०... भोः - ख.,.. भुः  - घ. । ६१... गैश्वर्यपरयोग - क. घ. । ६२ ब्रह्मणः  परमं- ख. । ६३ योगमार्गं - घ. । ६४ तत्त्वा - ख. घ. । ६५ देवानाम्य... - खः । ६६.. .मप्रसादम् - ख. । ६७... नो- ख. । ६८ लोकानां - क., जानानः - ख. । ६९ प्रमथपतिं.. - ख. । ७०... ति - क. ख.,... णि  - घ. ७१...षेकोनाम - ख. । ७२ चतुर्थोध्याय इति घ. ।

12

सनत्कुमार१ उवाच
प्राजापत्यं ततो लब्ध्वा प्रजाः स्रष्टुं प्रचक्रमे ।
प्रजास्ताः सृज्यमानाश्च न विवर्धन्ति२ तस्य ह । । १ । ।
स कुर्वाणस्तथा सृष्टिं शक्तिहीनः पितामहः ।
सृष्ट्यर्थं भूय एवाथ तपश्चर्तुं प्रचक्रमे । ।२ । ।
सृष्टिहेतोस्तप३ स्तस्य ज्ञात्वा त्रिभुवनेश्वरः ।
तेजसा जगदाविश्य आजगाम तदन्तिकम्४ । ।३ । ।
स्रष्टा तस्य जगन्नाथो दर्शयत्स्वतनौ जगत् ।
महायोगबलैश्वर्यो५ ज्ञानसिद्धगणावृतः । ।४। ।
स्वयमागत्य देवेशो महाभूतपतिर्हरः ।
व्याप्येव६ हि जगत् कृत्स्नं परमेण स्वतेजसा । । ५। ।
शम्भुः प्राह वरं वत्स याचस्वेति पितामहम् ।
तं ब्रह्मा लोकसृष्ट्यर्थं पुत्रत्वे७ मनसा वरीत्८ । ।६ । ।
स ज्ञात्वा तस्य संकल्पं ब्रह्मणः परमेश्वरः ।
मूढोयमिति सञ्चिन्त्य प्रोवाच वरदः स्वयम् । ।७ । ।
आगतं पितरं मा त्वं यस्मात् पुत्रं९ समीहसे ।
मन्मूर्त्तिस्तनयस्तस्माद् भविष्यति ममाज्ञया । ।८ । ।
स च ते पुत्रतां यात्वा१० मदीयो गणनायकः ।
रुद्रो विग्रहवान् भूत्वा११ मूढ१२ त्वां विनयिष्यति । ।९ । ।
सर्वविद्याधिपत्यं१३ च योगानां चैव सर्वशः ।

बलस्याधिपतित्वं१४ च अस्त्राणां च प्रयोक्तृता१५ । ।8.4.१ ० । ।

१ ऋषि ख. । २ प्र.... - ख । ३ स्तत - घ । ४ च त.. - घ । ५... यं - क. । ६ व्याप्यैव - घ. । ७.. .त्वं -क. ख घ । ८ वदीत् - क., ब्रवीत् - ख. घ. । ९ पुत्रत्व.. - घ? । १० ग.. घ. ११ दृष्ट्वा - घ. । १२... डं - घ १३ त्वं - क १४ वचनस्याधिपत्यत्वं - घ. । १५... गता - घ ।

13

मया दत्तानि तस्याशु उपस्थास्यन्ति सर्वशः ।
धनुः पिनाकः१६ शूलं च खड्गः१७ परशुरेव च । ।१ १ । ।
कमण्डलुस्तथा दण्ड अस्त्रं१८ पाशुपतं तथा ।
संवर्त्तकाशनिश्चैव चक्रं च प्रतिसर्गिकम्१९ । । १२ । ।
एवं सर्वद्धिसंपन्नः सुतस्ते स२० भविष्यति ।
एवमुक्त्वा गते तस्मिन्नन्तर्धानं महात्मनि । ।१ ३ । ।
ब्रह्मा चक्रे तदा चेष्टिं पुत्रकामः प्रजापतिः ।
स जुह्वञ्छ्रमसंयुक्तः प्रतिघातसमन्वितः । । १४।।
समिद्युक्तेन हस्तेन ललाटं प्रममार्ज ह ।
समित्संयोगजस्तस्य स्वेदबिन्दुर्ललाटजः । ।१५। ।
पपात ज्वलने तस्मिन् द्विगुणं२१ तस्य तेजसा ।
तद्धि माहेश्वरं तेजः सन्धितं२२ ब्रह्मणि२३ स्रुतम्२४। । १६ ।।
प्रेरितं देवदेवेन निपपात हविर्भुजि ।
क्षणे तस्मिन्महेशेन स्मृत्वा तं वरमुत्तमम् । १७। ।
प्रेषितो गणपो२५ रुद्रः सद्य२६ एवाभवत्२७ तदा ।
तच्च संस्वेदजं तेजः पूर्वं ज्वलनयोजितम् । ।१८ । ।
भूत्वा लोहितमाश्वेव२८ पुनर्नीलमभूत्तदा ।
नीललोहित इत्वेव तेनासावभवत्२९ प्रभुः । । १९। ।
त्र्यक्षो दशभुजः श्रीमान् ब्रह्माणं छादयन्निव ।
शर्वाद्यैर्न्नामभिर्ब्रह्मा तनूभिश्च जलादिभिः । ।8.4.२ ० ।।
स्तुत्वा३० तं सर्वगं देवं नीललोहितमव्ययम् ।
ज्ञात्वा सर्वसृजं३१ पश्चान्महाभूतप्रतिष्ठतम् । ।२१ । ।
असृजद्विविधास्त्वन्याः प्रजाः स जगति प्रभुः ।
सोपि योगं समास्थाय ऐश्वर्येण समन्वितः । ।२२ । ।

१६... कं - क. घ । १७... ङ्गं - क. घ । १८ मन्त्र - घ । १९ प्रतिमादिकं - घ । २० सं... - घ. । २१.. .णे -घ- । २२ सन्निभं - घ. । २३... णः - घ । २४ शुचिः - घ. । २५ गगनाद् - व. । २६ सत्य - ध. । २७ शतस्तदा - घ. । २८ वर्णञ्च - घ. । २९.. तन्नामावा-..? घ । ३० स्तुत्वान्तः घ । स्तौति स्मेति स्यात् । ३१...जत्वं च - घ. ।

14

लोकान्सर्वान्समाविश्य धारयामास सर्वदा ।
ब्रह्मणोपि ततः पुत्रा दक्षधर्मादयः शुभाः३२ । ।२ ३ । ।

असृज्यन्त प्रजास्सर्वा देवमानुषसंकुला: ।
अथ कालेन महता कल्पेतीते पुनः पुनः । । ।२४ । ।
प्रजा धारयतो योगादस्मिन्कल्प उपस्थिते
प्रतिष्ठितायां वार्तायां प्रवृत्ते सृष्टिसर्जने३३ । । ।२५। ।
प्रजासु च विवृद्धासु प्रयागे यजतश्च ह ।
ब्रह्मणः षट्कुलीयास्ते ऋषयः शंसितव्रताः३४ । ।।२६ ।।
मरीचयोत्रयश्चैव वसिष्ठाः क्रतवस्तथा ।
भृगवोङ्गिरसश्चैव तपसा दग्धकिल्बिषाः ।।२७।।
ऊचुर्ब्रह्माणमभ्येत्य सहिताः कर्मणोन्तरे ।
भगवन्नन्धकारेण महता स्मः समावृताः ।।२८।।
खिन्ना विवदमानाश्च न३५ च पश्याम यत्परम् । ।
एतन्नः संशयं देव चिरं हृदि समास्थितम् ।।२९।।
त्वं हि वेत्थ यथातत्त्वं कारणं परमं हि नः३६ ।
किं परं सर्वभूतानां बलीयाँ३७ श्चापि सर्वतः३८ ।।8.4.३ ० ।।
केन चाधिष्ठितं विश्वं को नित्यः कश्च शाश्वतः ।
कः स्रष्टा सर्वभूतानां प्रकृतेश्च प्रवर्तकः ।।३ १ ।।
कोस्मान् सर्वेषु कार्येषु३९ प्रयुनक्ति महामनाः४० ।
कस्य भूतानि वश्यानि कः सर्वविनियोजकः ।।३ २ ।।
कथं पश्येम तञ्चैव एतन्नः शंस सर्वशः ।
एवमुक्तस्ततो ब्रह्मा सर्वेषामेव सन्निधौ ।।३ ३ । ।
देवानां च ऋषीणां च गन्धर्वोरगरक्षसाम्४१ ।
यक्षाणामसुराणां च ये च भूत४२ प्रवर्त्तकाः । । ३४। ।

३२... यस्तथा - घ. । ३३ वृ.. - क. । ३४ संशित... - क. । ३५ तु - घ । ३६ वः - ध. । ३७... यः - घ. । ३८ शः - घ. । ३९ भूतेषु - घ. । ४०. त्मना - क,... त्मनः - ध. । ४१... रा -., क. । राक्षसैः - ध. । ४२ कुत्र -क. ।



- - -क्षाणां सपिशाचानां ये चान्ये तत्समीपगाः ।
उत्थाय प्राञ्जलिः प्राह रुद्रेति४३ त्रिःप्लुतं वचः ।।३ ५।।
स चापि तपसा शक्यो द्रष्टुं नान्येन केनचित्
सः४४ स्रष्टा सर्वभूतानां बलवांश्चापि४५ स स्मृतः ।।३६।।
तस्य वश्यानि भूतानि तेनेदं धार्यते जगत् ।
- - - र्व४६ - - - - - ते नमश्चक्रुर्महात्मने ।। ३७।।
ऋषय४७ ऊचुः
किं तन्महत्तपो देव येन दृश्येत स प्रभुः ।
तन्नो वदस्व देवेश वरदं चाभिधत्स्व नः ।।३८।।
पितामह उवाच

सत्रं महत्समासध्वं वाङ्मनोदोषवर्जिताः ।
देशं४८ च वः प्रवक्ष्यामि यस्मिन्देशे चरिष्यथ ।। ३९ ।।
सनत्कुमार उवाच
ततो मनोमयं चक्रं स सृष्ट्वा४९ तानुवाच ह ।
क्षिप्तमेतन्मया चक्रमनुव्रजत मा चिरम् । ।8.4.४० । ।
यत्रास्य नेमिः शीर्येत स देशस्तपसः शुभः ।
ततो मुमोच तच्चक्रं ते च तत्समनुव्रजन्  ।४१ । ।
तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत ।
नैमिशन्तत् स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् । ।४२।।
तत्पूजितन्देवमनुष्यसिद्धै रक्षोभिरुग्रैरुरगैश्च दिव्यैः ।
यक्षैः सगन्धर्वपिशाचसंघैः सर्वाप्सरोभिश्च दितेः सुतैश्च ।।४३ ।।
विप्रैश्च दान्तैः शमयोगयुक्तैस्तीर्थैश्च सर्वैरपि चावनीध्रैः५० ।
गन्धर्वविद्याधरचारणंश्च साध्यैश्च विश्वैः पितृभिः स्तुतञ्च ।।४४।।
इति स्कन्दपुराणे षट्कुलीयोत्पत्ति५१र्नाम चतुर्थोध्यायः ।।
४३ विद्रुतं - घ. । ४४ यः - घ. । १५ स्तेन - क. । तन्मयं जगत् - घ. । ४६ अतस्ते सर्वलोकेशो - घ. । ४७ षट्कुलीया - घ. । ४८ वरं - घ. । ४९ ह  कृ?) त्वा - घ. । ५० वारणस्थैः ध. । ५१ नैमिशोत्पति रिति पाम्ः साधीयान् ।

16
सनत्कुमार उवाच१
तन्नैमिशं समासाद्य ऋषयो दीप्ततेजसः ।
दिव्यं सत्रं समासन्त महद्वर्षसहस्रिकम् ।। १ । ।
एकाग्रमनसः सर्वे निर्ममा२ निरहंकृताः३ ।
ध्यायन्तो नित्यमीशेशं सदारतनयाग्नयः ।। २ ।
तन्निष्ठास्तत्पराः सर्वे तद्युक्तास्तदुपाश्रयाः४ ।
सर्वक्रियाः५ प्रकुर्वाणास्तमेव मनसा गताः ।। ३ ।।
तेषां तं६ भावमालक्ष्य मातरिश्वा महातपाः ।
सर्वप्राणि७ चरः श्रीमान्८ सर्वभूतप्रवर्तकः९ । ।४।।
ददौ स रूपी भगवान् दर्शनं सत्रिणां शुभः१० ।
तन्ते दृष्ट्वार्चयित्वा च मातरिश्वानमव्यम् ।।५।।
आसीनमासने पुण्ये ऋषयः संश्रितव्रताः११ ।
पप्रच्छु१२रुद्भवं कृत्स्नं१३ जगतः प्रलयन्तथा ।।६। ।
स्थितिञ्च कृत्स्नां१४ वंशांश्च युगमन्वन्तराणि च ।
वंशानुचरितं कृत्स्नं दिव्यमानं तथैव च । ।७ ।।
अष्टानां देवयोनीनामुत्पत्तिं प्रलयन्तथा ।
पितृसर्गं तथा शेषं ब्रह्मणो मानमेव च । ।८। ।
चन्द्रादित्यगतिं सर्वांताराग्रहगतिं तथा ।

स्थितिं सर्वेश्वराणां च द्वीपधर्ममशेषतः ।।९।।
वर्णाश्रमव्यवस्थानं१५ यज्ञानां च प्रवर्तनम् ।
एतत्सर्वमशेषेण कथयामास स प्रभुः१६ ।।8.5.१ ० ।।
१ सन उ - क. । २ निर्मला - घ. । ३ ह्यनहंकृताः - क- । ४ स्तदपा... - क., स्तत्परायणाः - घ. । ५... यां -घ. । ६ स - ध. । ७... धरो - घ. । ८ देवः घ । ९ लोक.. - घ. । १० ततः - घ. । ११ संशित... - घ. । १२ संभवं - घ । १३ पुण्यं - ध. । १४ कृत्स्नं - क. । १५ नां - क. । १६ सर्वशः - घ. ।

17
दिव्यवर्षसहस्रं च१७ तेषां तदभियात्तथा ।
अथ दिव्येन रूपेण सामवाग् दिङ्निरीक्षणा । ।१ १ । ।
यजुर्घ्राणाथर्वशिरा शब्दजिह्वा शुभा सतो ।
न्यायश्रोत्रा निरुक्तत्वगृक्पादपद१८ गामिनी । ।१ २ । ।
कालबाहूर्वर्षकरा दिवसाङ्गुलिधारिणी ।
कलादिभिः पर्वभिश्च मासैः कररुहैस्तथा । । १३ । ।
कल्पेन चोरसा१९ दिव्या शिक्षाविद्योन्नतस्तनी२० ।
छन्दोविजितमध्या च मीमांसानाभिरेव च । । १४। ।
पुराणविस्तीर्णकटिर्धर्मशास्त्रमनोरथा२१ ।
आश्रमोरुर्वर्णजानुर्यज्ञगुल्फा फलाङ्गुलिः२२ । । १ ५। ।
लोकवेदशरीरा च रोमभिश्छान्दसैः२३ शुभैः ।
श्रद्धा२४ शुभाचारवस्त्रा२५ योगधर्माभिभाषिणी । ।१ ६ । ।
वेदीमध्याद्विनिःसृत्य प्रवृत्ता परमाम्भसा ।
तस्यान्ते२६ वभृथे प्लुत्य वायुना सह संगताः । । १७। ।
तामपृच्छन्त कान्वेषा वायुं देवं महाधियम्२७ ।
उवाच स महातेजा ऋषीन्धर्मानुभावितान्२८ । । १८ ।।
शुद्धाः स्थ तपसा सर्वे महान्धर्मश्च बः कृतः ।
यस्मादियं नदी पुण्या ब्रह्मलोकादिहागता । ।१९। ।
इयं२९ सरस्वती नाम ब्रह्मलोकविभूषणा ।
प्रथमं मर्त्यलोकेस्मिन् युष्मत्सिद्ध्यर्थमागता ।
नास्याः पुण्यतमा लोके त्रिषु लोकेषु विद्यते । ।8.5.२० ।।
ऋषय ऊचुः
कथमेषा महापुण्या प्रवृत्ता ब्रह्मलोकगा३० ।
कारणं किञ्च तत्रासीदेतदिच्छाम वेदितुम् ।।२१ ।।
१७ तु - घ. । १८ ऋग्वेदपाद -धा. । १९ कल्पसाधारणा - क. । २० विद्योदित... - (?) ।... ना - क. । २१...रमा - ध. । २२. .लः? - क । २३?. .शी - घ. । २४ शुद्धा - घ. । २५?.. वर्ण्णा - ध. । २६ न्तु (न्त्व?) - घ । २७ मनोगमम् - घ । २८ तानृषीन्धर्म... घ. । २९ एषा - घ. । ३० लोकपा शुभा - ष. ।

18
वायुरुवाच

अत्र वो वर्त्तयिष्यामि इतिहासं पुरातनम् ।
ब्रह्मणश्चैव संवादं पुरा यज्ञस्य चैव हि३१ ।।२२।।
यज्ञैरिष्ट्वा पुरा देवो ब्रह्मा दीप्तेन तेजसा ।
असृजत्सर्वभूतानि स्थावराणि चराणि च ।।२३।।
स दृष्ट्वा दीप्तिमान्देवो दीप्त्या परमया युतः ।
अवेक्षमाणस्ताँल्लोकाँश्चतुर्भिर्मुखपङ्कजैः ।।२४। ।
देवादीन् मानुषादीं ३२ श्च दृष्ट्वा दृष्ट्वा महामनाः ।
अमन्यत न मेन्योस्ति समो लोके न चाधिकः ।।२५।।
योहमेताः प्रजाः सर्वाः सप्तलोकप्रतिष्ठिताः ।
देवमानुषतिर्यक्षु ग्रसामि विसृजामि च ।।२६।।
अहं स्रष्टा हि भूतानां नान्यः कश्चन विद्यते ।
नियन्ता लोककर्ता च न ममास्ति समः३३ क्वचित् ।।२७।।
तस्यैवं मन्यमानस्य यज्ञ आगान्महामनाः ।
उवाच चैनं दीप्तात्मा मैवं३४ मंस्था महामते ।।२८।।
अयं हि तव संमोहो विनाशाय भविष्यति ।
न युक्तमीदृशन्तेद्य सत्वस्थस्यात्मयोनिनः३५ ।।२९।।
स्रष्टा त्वञ्चैव नान्योस्ति तथापि न यशस्करम् ।
अहं धर्त्ता३६ हि भूतानां भुवनस्य तथैब च । ।8.5.३ ० ।।
करोमि न च संमोहं यथा त्वं देव कत्थसे३७ ।
तमुवाच तदा ब्रह्मा न त्वं धारयिता विभो ।।३ १ । ।
अहमेव हि भूतानां धर्त्ता३८ हर्ता३९ तथैव च ।
मया सृष्टानि भूतानि त्वमेवात्र विमुह्यसे ।।३२।।

३१ ह - क. । ३२ मनुष्या - क । ३३ समोस्ति न सम. - घ. । ३४ मैव - क. ग. घ. । ' ३५ जा (या) जिनः -घ. । ३६ कर्ता - क ग घ. । ३७ कथ्यसे - घ. ३८ कर्ता - घ. । ३९ भर्ता - ख. ।

19

अथागत्तत्र संविग्नो वेदः४० परमदीप्तिमान् ।
उवाच चैव तौ वेदो४१ नैत४२ देवमिति प्रभुः ।।३३ ।।
अहं श्रेष्ठो यत्कृतोस्मि४३ न वदाम्यनृतं क्वचित्४४।
शृणुध्वं मम यः कर्त्ता भूतानां युवयोश्च ह ।।३४।।
परमेशो महादेवो रुद्रः सर्वगतः प्रभुः ।
येनाहं तव दत्तश्च कृतस्त्वञ्च प्रजापतिः ।।३५।।
यज्ञोयं यत्प्रसूतिश्च४५ अहं४६ यत्रास्मि४७ संस्थितः४८ ।
सर्वं तस्मात्प्रसूतं वै नान्यः४९ कर्त्तास्ति नः५० क्वचित् ।।३६।।
तमेवंवादिनं देवो ब्रह्मा वेदन५१मभाषत ।
अहं श्रुतीनां५२ सर्वासां नेता५३ स्रष्टा तथैव च ।।३७।।
मत्प्रसादाद्धि वेदस्त्वं यज्ञश्चायं न संशयः ।

मूढौ५४ युवामधर्मो वा भवद्भ्यामन्यथा कृतः ।।३८।।
प्रायश्चित्तं चरध्वं वः किल्बिषान्मोक्ष्यथस्ततः ।
एवमुक्ते तदा तेन महाञ्छब्दो बभूव ह ।।३९।।
आदित्यमण्डलाकारमदृश्यत च मण्डलम् ।
महच्छब्देन५५ महता उपरिष्टाद्५६ वियत्स्थितम् ।।8.5.४०। ।
स चापि तस्माद्विभ्रष्टो भूतलं समुपाश्रितः५७ ।
हिमवत्कुञ्जमासाद्य नानाविहगनादितम् ।।४१।।
व्योमगश्च चिरं भूत्वा भूमिगः संबभूव ह ।
ततो ब्रह्मा दिशः सर्वा निरीक्ष्य मुखपङ्कजैः ।।४२। ।
चतुर्भिर्न वियत्स्थं तमपश्यत्स पितामहः ।
स मुखं पञ्चमं दीप्त५८मसृजन् मूर्ध्नि५९ संस्थितम् ।।४३।।

४० देवः - घ. । ४१ वदतो देवा - घ. । ४२ नेत - घ. । ४३ मत्कृतोस्मि - ग., महाभाग - घ. । ४४ नवदाम्यहमन्यथा - घ ४५. मत्प्रसूतिश्च - क. । ४६. अण्डं - क. ग. घ. । ४७.. - स्ति - घ - ४८... तं - ग. घ.। ४९ सद्यः - घ. । ५० न - घ. । ५१ चेद - घ. । ५२ मुनीनां सर्वेषां - घ । ५३ वेत्ता - घ । ५४. ढो - ग. ध.,। ५५ श.. - ध., श्ध, श्च? - क. । ५६ रूप... - क. ग. । ५७ सम.. - क. । ५८ दिव्य - ध. । ५९ मूर्ति क. ।



तेनापश्यद्वियत्स्थं तं सूर्यायुतसमप्रभम् ।
आदित्यमण्डलाकारं शब्दवद् घोरदर्शनम् ।।४४। ।
तत्सृष्ट्वा पञ्चमं तस्य शिरो वै क्रोधजं महत ।
संवर्तकाग्निसदृशं ग्रसिष्यत्तमवर्धत ।।४५। ।
वर्द्धमानं तदा तत्तु वडवामुखसन्निभम् ।
दीप्तिमच्छब्दवच्चैव देवोसौ दीप्तमण्डलः । ।४६ । ।
हस्ताङ्गुष्ठनखेनाशु वामेनावज्ञयैव हि ।
चकर्त्त तन्महद्धोरं ब्रह्मणः पञ्चमं शिरः ।।४७।।
दीप्तिकृत्तशिराः सोथ दुःखेनोस्रेण६० चार्दितः। ।
पपात मूढचेता६१ वै योगधर्मविवर्जितः । ।४८। ।
स विदंष्ट्रो महाहस्ती विशृङ्गो हरगोपतिः ।
विरश्मिरिव चादित्यः पतितो भूतले बभौ । ।४९। ।
ततः सुप्तोत्थित इव संज्ञां लब्ध्वा महातपाः ।
मण्डलस्थं महादेवमस्तौषीद्दीनया गिरा । । 8.5.५० । ।
ब्रह्मोवाच
नमः सहस्रनेत्राय शतनेत्राय वै नमः६२ ।
नमो विवृतवक्त्राय६३ शतवक्त्राय वै नमः ।।५१ ।।
नमः सहस्रवक्त्राय सर्ववक्त्राय वै नमः ।
नमः सहस्रपादाय सर्वपादाय वै नमः । ।५२।।
सहस्रपाणये चैव सर्वतःपाणये नमः ।

नमः सर्वस्य स्रष्ट्रे६४ च द्रष्ट्रे६५ सर्वस्य ते नमः । ।५ ३ । ।
नम आदित्यवर्णाय६६ शिरसश्छेदनाय च ।
सृष्टिप्रलयकर्त्रे च स्थितिकर्त्रे तथा नमः६७ ।।५४। ।

६० ग्रेण? - घ । ६१... धर्मो - घ. । ६२ चैवहि - घ । ६३ विवृत्त... - क. ग । ६४ द्रष्टृं? - क । ६५ द्रष्ट्राय - ग,। ६६ आदित्यवर्णाय नमः - क. ग. घ. । ६७... नध - घ. ।

21

नमः सहस्रलिङ्गाय सहस्रचरणाय च ।
संहारलिङ्गिने६८ चैव जललिङ्गाय वै नमः । ।५५।।
अन्तश्चराय सर्वाय प्रकृतेः पूरणाय च ।
व्यापिने सर्वसत्त्वानां पुरुषप्रेरकाय च ।।५६ । ।
इन्द्रियार्थविशिष्टाय६९ तथा नियमकारिणे ।
भूतभव्याय सर्वाय नित्यमध्यवदाय च (?) । । ५७। ।
त्वमेव स्रष्टा लोकानां मंत्रदाता तथा विभो ।
शरणागताय दान्ताय७० प्रसादं कर्तुमर्हसि ।।५८ । ।
तस्यैवं स्तुवतः सम्यग्भावेन परमेण ह ।
स तस्मै देवदेवेशो दिव्यं चक्षुर्ददौ तदा ।।५९। ।
चक्षुषा तेन स तदा ब्रह्मा लोकपितामहः ।
विमाने सूर्यसंकाशे तेजोराशिमपश्यत । ।8.5.६ ० । ।
तस्य मध्यात्७१ ततो वाचं महतीं सम७२ शृण्वत७३ ।
गंभीरां मधुरा७४ युक्ता७५मर्थ७६ संपन्नलक्षणाम् । ।६१ । ।
विशदां७७ पुत्रपुत्रेति पूर्वं देवेन चोदिताम् ।
अंबरात्पुत्र उत्पन्नो७८ यस्तुभ्यं नीललोहितः । ।६ २ । ।
यच्च पूर्वं मया प्रोक्त७९स्त्वं८० तदा सुतमार्गणे ।
मदीयो गणपो यस्ते मन्मूर्तिश्च भविष्यति । ।६३ । ।
स प्राप्य८१ परमं ज्ञानं मूढ त्वा८२ विनयिष्यति८३ ।
तस्येयं८४ फलनिष्पतिः शिरसश्छेदनं तव८५ । ।६४ । ।
मयैव कारिता तेन निर्वृतश्चाधुना भव ।
ऊर्ध्वगं ज्ञानरूपं तु शिरोदिव्यं समुत्थितम् । । ६५। ।

६८ सङ्घार... क, सहस्र.. - घ. । ६९... विशेषाय - घ । ७०... गजाय दन्ताय - ध. । ७१ मध्यं - घ. । ७२ स तु - घ । ७३ तः - घ । ७४ महता - घ । ७५ स - ग । ७६ थो - ग. । ७७ दिशती - ध । ७८ मुत्पन्नौ - घ. । ७९ प्रोक्तं - ध. । ८० ते - ग. । ८१ सं.. - घ. । ८२ त्वां - घ. । ८३ विनसि - ग., विशसि? । ८४ पश्येहं - घ.। ८५ तथा - ध. ।

22

अस्य८६ चैवोत्पथस्थस्य८७ यज्ञस्य तु८८ महामते ।
शिरश्छेत्स्यत्यसावेव कस्मिंश्चित् कारणान्तरे८९ ।
स्तवेनानेन तुष्टोस्मि किं ददानि९० च तेनघ । ।६६ । ।

वायुरुवाच९१

ततः स भगवान् हृष्टः९२ प्रणम्य शुभया गिरा ।
उवाच प्राञ्जलिर्भूत्वा लक्ष्यालक्ष्यं तमीश्वरम् ।। ६७ । ।
भगवन्नैव मे दुःखं दर्शनात्ते प्रबाधते ।
इच्छामि शिरसो ह्यस्य धारणं सर्वदा त्वया ।।६८ ।।
नाहं९३ स्मरेयमेतच्च शिरसश्छेदनं विभो ।
भूयश्चाधर्मकार्येभ्यस्त्वयैवेच्छे निवारणम् । ।६९।।
तथा च कृत्यमुद्दिश्य पश्येयं त्वा९४ यथासुखम् ।
विज्ञप्ति ब्रह्मणः श्रुत्वा प्रोवाच भुवनेश्वरः । ।8.5.७० ।।
स एव सुतसंज्ञस्ते९५ मन्मूर्त्तिर्नीललोहितः ।
शिरश्छेत्स्यति यज्ञस्य विभत्स्र्यति शिरश्च ते । ।७ १ । ।
इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ।
गते तस्मिन्महादेवे९६ ब्रह्मा लोकपितामहः ।
सयज्ञः सहवेदश्च९७ स्वं लोकं९८ प्रत्यपद्यत । ।७२ । ।

वायुरुवाच

य इमं९९ शृणुयान्मर्त्यो गुह्यं वेदार्थसंमितम् ।
स देहभेदमासाद्य सायुज्यं ब्रह्मणो व्रजेत् ।।७३ । ।
यश्चेमं पठते नित्यं ब्राह्मणानां समीपतः ।
स सर्वपापनिर्मुक्तो१०० रुद्रलोके महीयते । ।७४। ।

८६ तस्य - ग. । ८७. न्म.. - ग. । ८८ यज्ञास्यत्व न - घ. । ८९ द्रावणान्तरे - घ. । ९० .मि - घ. ९१ वायुरु- ग । ९२ भूयुः (नुष्टः) घ । ९३ नोघ - घ. । ९४ त्वां - घ. । ९५ मज्ञस्ते - घ । ९६ देवः स्वं लोकं प्रत्यपद्यत ग । ९७ देवश्च - घ. । ९८ स्वर्ल्लो - घ । ९९ एवं - घ १०० सर्वपापवि... - घ ।



नापुत्रशिष्ययोगिभ्य इदमाख्यानमैश्वरम् ।
आख्येयं१०१ चापि नाज्ञाय१०२ न शठाय न मानिने ।।७५ ।।
इदं महद्दिव्यमधर्मशासनं१०३ पठेत्१०४ सदा ब्राह्मणवैद्यसंसदि ।
कृतावकाशो१०५ भवतीह मानवः१०६ शरीरभेदे१०७ प्रविशेत् पितामहम् ।।७६। ।
इति स्कन्दपुराणे पञ्चमोध्यायः

सनत्कुमार उवाच

ततः स भगवान्देवः कपर्दी नीललोहितः ।
आज्ञया परमेशस्य जग्राह ब्रह्मणः शिरः ।।१ ।।
तद् गृहीत्वा शिरो दीप्तं रूपं विकृतमास्थितः ।
योगक्रीडां समास्थाय भैक्षाय प्रचचार ह ।।२।।
स देववेश्मनि तथा भिक्षार्थमगमद् द्विजाः ।
न चास्य कश्चित्तां भिक्षामनुरूपामदाद्विभोः ।।३।।

अथ संचक्रमे१ देवो वेश्म विष्णोर्महात्मनः ।
तस्या२ तिष्ठत स द्वारि भिक्षामुच्चारयन् शुभाम् ।।४।।
स दृष्ट्वा ततहस्तं३ तं विष्णुर्वै योगचक्षुषा ।
शिवलीलां४ समाज्ञाय रक्तधारामपातयत् ।।५।।
पपात सा च विस्तीर्णा योजनार्द्ध शतं तदा ।
तया पतन्त्या विप्रेन्द्रा बहून्यब्दानि धारया ।।६।।
पितामहकपालस्य नार्धमप्यभिपूरिम् ।
तमुवाच ततो देवः प्रहस्य वचनं शुभम् ।।७।।
सकृत्कन्याः प्रदीयन्ते सकृदग्निश्च जायते ।
सकृद्राजानो ब्रुवते६ सकृद् भिक्षा प्रदीयते ।।८।।

१०१ देयं - ग । १०२ नास्तिका... - ग । १०३ ना - घ. । १०४ पठन् - घ । १०५ क्रीडावकाशो -घ १०६ भवदीय- घ । १०७... पि - घ ।

१ संक्रमणा - मू । २ तस्य - मू । ३ तहतस्तता - मू. । ४ लीलात् - मू । ५.. मादाय (?) । ६ च इत्यधिकं मूले ।



तुष्टोस्मि तव दानेन युक्तेनानेन मानद ।
वरं वृणीष्व देवेश वरदोस्मि तवाद्य वै ।।९।।
विष्णुरुवाच
एष एव वरः श्लाघ्यो यदहं देवताधिपम् ।
पश्यामि शंकरं दीप्तं - - - - कपर्द्दिनम्७ ।।8.6.१ ० ।।
देवश्छायां ततो वीक्ष्य कपालस्थे तदा८ रसे९ ।
ससर्ज पुरुषं दिव्यं विष्णोः सदृशमूर्जितम् ।।१ १ ।।
तमाह१० चाक्षयश्चासि अजरोमर११ एव च ।
युद्धेषु चाप्रतिद्वन्द्वो सखा विष्णोरनन्तरः ।।१ २।।
देवकार्यकरः श्रीमान् महासेनपरं वच (? । ।
नारासु जन्म१२ यस्मात्ते वियुद्धे हो भवान्वच(?) ।
नरस्तस्माद्धि नाम्ना त्वं प्रियश्चास्य भविष्यसि ।। १३ ।।
वायुरुवाच
तं तदा१३ श्चास्य विक्षिप्य नरं विष्णोरनन्तरम् ।
अगमद् ब्रह्मसदनं तौ चाप्याविशतुर्गृहम् ।।१४।।
य इदं नरजन्मेह शृणुयाद्वा पठेत वा ।
स कीर्त्या१५ परया युक्तो विष्णुलोके महीयते ।। १ ५।।
इति स्कन्दपुराणे नरजन्मनामा षष्ठोध्यायः ।।

७ ने - भू. । ८... तसा - मू । ९ वसे - मू । १० हा एवक्षय - मू. । हैवाक्षय (?) । ११... रामर - मू. । १२ स्वयं - मू. । १३ तथा (?) । १४ र - मू । १५ कृत्यो - मू ।

वायुरुवाच
ब्रह्मलोकं समासाद्य भगवान् सर्वलोकपः ।
भक्ष भैक्षमिति प्रोच्य द्वारे समवतिष्ठत ।।१।।
तं दृष्ट्वा विकृतं ब्रह्मा कपालकरभूषणम् ।
ज्ञात्वा योगेन महता तुष्टाव भुवनेश्वरम् ।।२।।
तस्य तुष्टस्तदा देवो वरदोस्मीत्यभाषत ।
वृणीष्व वरमव्यग्रो यत्ते मनसि वर्तते ।।३।।
ब्रह्मोवाच
इच्छामि देवदेवेश त्वया चिह्नमिदं कृतम् ।
येन चिह्ने न लोकोयं चिह्नितः स्याज्जगत्पते ।।४।।
तस्य तद्वचनं श्रुत्वा भगवान् वदतां वरः ।
सर्वं प्रतिमयं (?) ब्रह्मन्नोमिति व्याजहार सः ।।५।।
तस्यैवं ध्यानमात्रेण वागियं दिव्यरूपिणी ।
निःसृताः वदनाद्देवी प्रह्वा समवतिष्ठत ।।६।।
तामुवाच ततो देवी वाचा संजीवयन्निव ।
यस्मात् त्वम४क्षरो भूत्वा मम वाचो विनिःसृता ।।७।।
सर्वविद्याधिदेवी त्वं तस्माद्देवि५ भविष्यसि ।
यस्माद् ब्रह्मरसं वेदं मुखं६ मम समाश्रिता ।।८।।
तस्मात् सरस्वतीत्येवं७ लोके ख्यातिं गमिष्यसि ।
इमं लोकं रसाम्भोभिर्भावयित्वा च सुप्रभे ।।९।।
सर्वलोकान् तारयिता पुनस्त्वं८ नात्र संशयः ।
यज्ञभागं च ते देवा दास्यंति सपितामहाः ।।8.7.१०।।
इत्येव ब्रह्मणश्चेदं कपालममितौजसः ।
इमं लोकमनुप्राप्य९ देशे प्रेष्ठेवतिष्ठत१० ।।११।।
१. ..क्ष मू. । सर्वोप्ययं घ पुस्तकमूलपाठो मन्तव्यः । २ ध्यात.. । ३... त्य ।?) । ४ त्वं य । ५.. .वी । ६ सुखं? । ७ देवी । ८ स्थ । ९.. प्यं । १०.. .ते ।

26

तत्र तच्च महद्दिव्यं कपालं देवताधिपः ।
स्थापयामास दीप्तार्चिः कुशानामग्रतः प्रभुः ।। १२ । ।
स्थापितं तदथो११ दृष्ट्वा गणाः सर्वे महात्मनः ।
व्यनदन् सुमहानादं नादयन्तो दिशो दश । । १३ ।।
१२ - - - - प्रख्ये१३ - - - - -विदीर्यते ।
तेन शब्देन घोरेण असुरो देवकण्टकः । । १४। ।
हालाहल इति ख्यातस्तं देशं सोभ्यगच्छत ।
अमृष्यमाणः क्रोधान्धो दुरात्मा यज्ञशासकः१४ । । १५ । ।
ब्रह्मदत्तवरश्चैव अवध्यः सर्वजन्तुभिः ।

महिषश्छन्नरूपाणा१५मसुराणां शतैर्वृतः । ।१ ६ । ।
तमापतन्तं सक्रोधं महिषं देवकण्टकम् ।
संप्रेक्ष्याह गणाध्यक्षो गणान्सर्वान् पिनाकिनः । । १७। ।
यो ह्ययं गणपा दुष्टस्त्रैलोक्ये१६ सुरकण्टकः ।
आयाति रुषितो१७ युष्मान्१८ तस्मादेनं निहिंसत१९ । ।१ ८ । ।
ततस्ते गणपाः सर्वे समायातं सुरद्विषम् ।
भित्त्वा शूलेन संक्रुद्धा विगतासुं प्रचक्रिरे । । १९ । ।
हते तस्मिन् तदा देवो दिशः सर्वानवैक्षत ।
ताभ्यः पिशाचवृत्तास्याः पिशाच्यश्च२० महाबलाः । ।8.7.२ ० । ।
अभ्यगच्छत तं देवं२१ ताभ्यस्तं विनिवेदयन् ।
स ताभिरुपयुक्तश्च - - - - - सर्वशः । ।२ १ । ।
तमेवाप्यथवावासं देवादिष्टं प्रपेदिरे ।
भक्षयन्ति स्म तं नित्यं सिद्धासिद्धा यतस्ततः । । २२ । ।
कपालमातरः प्रोक्तास्तस्माद्देवेन धीमता ।
कपालं स्थापितं यस्मात्तस्मिन्देशे पिनाकिना२२ । ।२ ३ । ।

११ तम... । १२ क्षु चंरते सरित्प्रख्यो । १३ निर्भियेन । १८... शाशक । १५... छ । १६ श्वर । १७ दूषिता । १८ यूयं । १९ हिष्यथ । ग्र्वोय मूलपुस्तकपाठो बोध्यः । २०... चाश्च । २१ देशं (?) । २२.. न ।

27

महाकपालं२३ तत्तस्मात् त्रिषु लोकेषु गद्यते२४ ।
स्थापितस्य कपालस्य यथा तदभवत्तदा२५ । ।२४। ।
ख्यातं शिवतडागं तत्सर्वपापप्रमोचनम् ।
आगत्याथ ततो ब्रह्मा देवतानां गणैर्वृतः । ।२५।।
कपर्दिनमुपामंत्र्य तं देशं सोन्व२६गृह्णत ।
अर्द्धयोजनविस्तीर्णं क्षेत्रमन्यत् समंततः ।
भविष्यति न संदेहः सिद्धक्षेत्रं महात्मनः ।।२६। ।
श्मेति२७ हि प्रोच्यते पापं क्षयं शानं२८ विदुर्बुधाः ।
ध्यानेन नियमै२९श्चैव श्मशानं तेन संज्ञितम्३० । ।२७। ।
गुह्य देवाधिदेवस्य३१ परं प्रिय३२मनुत्तमम् ।
एवं तत्र नरः पापं सर्वमेव प्रहास्यति ।।२८।।
त्रिरात्रोपोषितश्चैव अर्चयित्वा वृषध्वजम् ।
राजसूयाश्वमेधाभ्यां फलं कृत्स्नमवाप्स्यति३३ ।। २९।।
यश्च प्राणान् प्रियाँस्तत्र परित्यक्ष्यति मानवः ।
स गुह्यगणदेवानां समतां समवाप्स्यति । ।8.7.३ ० ।।
वायुरुवाच
ततः स तत्र संस्थाप्य देवस्यार्चाद्वयं३४ शुभम् ।
सुरेश्वरश्चकाराशु३५ रुद्रस्यायतनं शुभम् । ।३ १ ।।

तत्राभिगमनादेव कृत्वा पापस्य संक्षयम् ।
रुद्रलोकमवाप्नोति स प्राहैवं३६ पितामहः । । ३२।।
यत्र चापि शिरस्तस्य चिच्छेद भुवनेश्वरः ।
३७ - - - सोभवन्नाम्ना देशः पुण्यतमः शुभः ।।३ ३ ।।
२३.. .फ - पं । २४ पद्म? (ठ्य) ते । २५ तम... । २६ सोत्र । २७ श्चे ते । २८ सानं । २९ .. म । ३० संगि... । ३१ देवाति... । ३२ श्रित । ३३... ति । ३४ च्चर्या.. । ३५ .ञ्चकार... । ३६ प्राहेव । ३७ कस्मादसौ ।

28

ततो देवः३८ सह गणै रूपं विकृतमास्थितः ।
पश्यतां सर्वदेवानामन्तर्द्धानमगात् प्रभुः ।।३४।।
एतच्च३९ देवनाथेन कपालस्थानमव्ययम् ।
सर्वतीर्थाभिषेकस्य फलेन समयोजि यत्४० ।।३५। ।
तदद्यापि महद्दिव्यं सरस्तत्र४१ प्रदृश्यते४२ ।
महाकपालं४३ विप्रेन्द्राः४४ स्वर्गस्तत्राक्षयः स्मृतः ।।३६।।
इदं शुभं दिव्यमधर्मशासनं महाह्रदं सेन्द्रसुरासुरार्चितम् ।
महा४५ कपालप्रकृतोपवर्णनं४६ सुरेशलोकादिविगाहने हितम्४७ ।।३७।।
तपोधनैः सिद्धगणैश्च संस्तुतं दिविष्टतुल्यं४८ द्विजराजमण्डलम् ।
पठेन्नरो यः शृणुयाच्च सर्वदा त्रिविष्टपं गच्छति सोभिनन्दितः४९ ।।३८।।
इति स्कन्दपुराणे कपालसंस्थापनं५० नाम सप्तमोध्यायः
वायुरुवाच
एवं ह्येषा१ भगवती ब्रह्मलोकानुसारिणी ।
युष्माकं धर्मसिद्ध्यर्थं वेदीमध्याद् व्यवर्त्तत ।।१ ।।
सनत्कुमार उवाच
एवं तेषां समाप्तेथ२ सत्रे वर्षसहस्रिके ।
प्रवृत्तायां सरस्वत्यामगात्तत्र३ पितामहः ।।२।।
ब्रह्मोवाच४
भूयोनेनेह५ सत्रेण यजध्वं६ देवमीश्वरम् ।
यदा? वो भविता विघ्न७स्तदा निष्कल्मषं तपः ।।३ ।।
३८ देवैः । ३९ एते च । ४०... जयत् । ४१ सुर.. । ४२ प्रहस्य... । ४३... ली । ४४... न्द्रः । ४५ सहा (द) - ग महत् - घ । ४६ दर्शतं । ४७ . .ङ्गितम् - ग । पाठोयं प्राय सर्वोपि घपुस्तकमूले प्रतिधृतो बोध्यः । -८ विद्दिष्ट -ष. ।. ल्य ... - घ । ४९ रुद्रवशोभिनंदति - घ । ५०... नो - घ-
१ एवमेषा - घ. । २ तु - घ. । ३ म .... घ., आ - ख. । ४ पितामह उवाच - घ. । ५ हन्येह? - घ. । ६ भजध्वं - घ । ७ विघ्नं - घ ।

29

विघ्नं तञ्चैव८ संतीर्य९ तपस्तप्त्वा च भास्वरम् ।
योगं प्राप्य महद्युक्ता१० स्ततो११ द्रक्ष्यथ शङ्करम् ।।४।।
तथेत्युक्त्वा गते तस्मिन् सत्राण्याजह्रिरे१२ तदा ।

बहूनि विविधा१३ काराण्यभियुक्ता१४ महाव्रताः ।।५ ।।
निस्सोमां पृथिवीं कृत्वा कृत्स्ना१५मेतां ततो द्विजाः ।
राजानं सोममानाय्य१६ अभिषोतु१७मियेषिरे ।।६।।
अथ सोपि कृत१८स्तिर्यग१९दृश्येन दुरात्मना ।
स्वर्भानुना हतः सोमस्ततस्ते दुःखिता भवन् ।।७।।
ते गत्वा मुनयः सर्वे कलापग्रामवासिनम् ।
पुरूरवसमानीय राजानन्तेभ्यषेचयन् ।।८।।
ऊचुश्चैनं२० महाभागा हृतः सोमो हि नः प्रभो ।
केनापि तद्भवान्२१  क्षिप्रमिहानयतु मा चिरम्२२ ।।९।।
स एवमुक्तो मृगयन् यदा नासादयत्२३ प्रभुः ।
उवाच स तदा विप्रान् प्रणम्य भयपीडितः ।।8.8.१ ० ।।
परमं यत्न२४मास्थाय मया सोमोभिमार्गितः ।
न च तं वेद्मि केनासौ क्व वा नीत इति प्रभुः ।।११।।
तमेवं२५वादिनं क्रुद्धा ऋषयः शंसितव्रताः ।
ऊचुः सर्वे सुसंरब्धा इलापुत्रं महामतिम् ।।१२।।
भवान् राजा कृत२६स्तात यतो२७स्माभिर्भयार्दितैः ।
न च नस्तद्भयं मुक्तं २८ नापि शक्तोसि२९ वेदितुम् ।। १३।।
विषयेष्वभि३० सक्तात्मा योगात्तं३१ नानुपश्यसि३२ ।
तस्माद्विरोधमास्थाय द्विजेभ्यो वधमाप्स्यसि३३ ।।१४।।

८ तज्जैष? - ष. । ९ संतर्प्य - व. । १० तत्त्वयु.. - ध. । ११?.. त - ख । १२ जज्ञि... - घ । १३. ज्ञानि- घ । १४ अतिभु.. - घ । १५ कृत्वा कृत्स्ना - घ. । १६ मानमस्रो?- - घ । १७ प्रतिषेद - घ, अभिषेक्तु (?) । १८ वि..  घ । १९ कृताति - ख., हताशल्यं - घ । २०. .वं - घ । २१ भगवान् - घ । २२ योगवित् - घ । २३. - .? - व. । २४ यज्ञ - घ. । २५ त एवं - घ. । २६ कु... - घ । २७ कृ... - घ । २८ यु.. - घ । २९. ?  नो विभौ - ख । ३०.. .ति - घ. । ३१ त्मानम  - घ । ३२. .. ति - घ । ३३. - ति  घ ।

30

वयमेव हि राजानमानेष्याम३४ सुदुर्विदम् ।
तपसा स्वेन राजेन्द्र पश्य३५ नो बलमुत्तमम्३६ ।।१५।।
ततस्त ऋषयः सर्वे तपसा दग्धकिल्बिषाः ।
अस्तुवन्वाग्भिरिष्टाभिर्गायत्रीं वेदभाविनीम् ।।१६।।
स्तुवतां तु३७ ततस्तेषां गायत्री वेदभाविनी ।
रूपिणी दर्शनं प्रादादुवाचेदं च तान्द्विजान् ।।१७।।
तुष्टास्मि वत्साः किं वोद्य करोमि वरदास्मि वः ।
ब्रूत३८ तत्कृतमद्यैव३९ भविष्यति न संशयः ।।१८।।
ऋषय ऊचुः
सोमो नोपहृतो देवि केनापि सुदुरात्मना ।
तमानय४० नमस्तेस्तु एष नो४१  वर उत्तमः ।।१९।।

सनत्कुमार उवाच
सा तथोक्ता विनिश्चित्य दृष्ट्वा४२ दिव्येन चक्षुषा ।
श्येनीभूता जगामाशु श्वर्भानुमसुरं प्रति ।।8.8.२०।।
व्यग्राणामसुराणां सा च गृहीत्वा सोममागता ।
आगम्य तानृषीन्प्राह अयं सोमोभिषूयताम्४४ ।।२१।।
ते तमासाद्य ऋषयः प्राप्य यज्ञफलं महत् ।
अमन्यन्त तपोस्माकं निष्कल्मषमिति द्विजाः ।।२२।।
ततस्तत्र स्वयं ब्रह्मा सह देवोरगादिभिः ।
आगत्य तानृषीन् प्राह४५ तपः४६ कुरुत४७ मा चिरम् ।।२३ ।।
ते सह ब्रह्मणा गत्वा मैनाकं पर्वतोत्तमम् ।
सर्वैर्देवगणै४८स्सार्द्धं तपश्चेरुः समाहिताः । २४।।

३४ मानयिष्याम - ख, घ. । ३५ यथा - घ. । ३६ योग - घ. । ३७ सा व्रतान्ते (?) - ख. । ३८ ध्रुवं- घ- । ३९... मेवैव - ध. । ४० तस्मा । ( ?) - ख । ४१ ते - घ. । ४२.. .ष्ट्या - ख. । ४३ च - ध. । ४४ स्व (सो) यं राजा नियुज्य... - घ. । ४५ सर्वा - घ. । ४६ स्त... ख., घ. । ४७ कुर्वत - घ. । ४८ सर्वे दे. - ख. ।

31

तेषां कालेन महता तपसा भावितात्मनाम् ।
योगप्रवृत्तिरभवत्४९ सूक्ष्मयुक्ता५० स्ततस्तु ते५१ ।।२५।।
ते युक्ता ब्रह्मणा सार्धमृषयः सह देवतैः ।
महेश्वरे५२ मनः स्थाप्य निश्चलोपलवत् स्थिताः ।।२६।।
अथ तेषां महादेवः पिनाकी नीललोहितः ।
अभ्यगच्छत तं देशं विमानेनार्कतेजसा । ।२७। ।
तद्भावभावितान् ज्ञात्वा स५३ भावेन परेण ह ।
उवाच मेघनिर्हादः शतदुन्दुभिनिस्वनः ।।२८।।
भो भो सब्रह्मका देवाः सविष्णु५४ ऋषिचारणाः ।
दिव्यं चक्षुः प्रयच्छामि पश्यध्वं५५ मां यथेप्सितम्५६ ।।२९।।
सनत्कुमार उवाच
अपश्यन्त५७ ततः सर्वे सूर्यायुतसमप्रभम् ।
विमानं५८ मेरुसंकाशं५९ नानारत्नविभूषितम्६० ।।8.8.३ ० ।।
तस्य मध्येग्निरोचिष्कं६१ सुमहद्दीप्तिमा६२ स्थितम् ।
ज्वालामालापरिक्षिप्त६३मर्चिर्भिरुपशोभितम् ।।३१ ।।
दंष्ट्राकरालवदनं प्रदीप्तानललोचनम् ।
त्रेताग्नि६४ पिङ्गलजटं भुजगाबद्धमेखलम् ।।३२।।
मृष्टकुण्डलिनं चैव शूलाशक्तमहाकरम् ।
पिनाकिनं दण्डहस्तं मुद्गराशनिधारिणम्६५ ।।३३ ।।
असिपट्टिशहस्तं६६ च चक्रिणं चोर्ध्वमेहनम्६७ ।

अक्षसूत्रकरं६८ चैव दुष्प्रेक्ष्य६९मकृतात्मभिः ।।३४।।

४९ रागप्रवृत्तिरभवत् - घ. । ५०... मु.. - घ. । ५१ ततः स्फुटी - घ. । ५२ परमेशे - घ. । ५३ सद् - ख. । ५४ सू - घ., । ि - ख. । ५५... त्वं - घ. । ५६ यथासुखम् - घ. । ५७ तेपश्यँ स्ते - घ. । ५८... ने - ख. । ५९...शे - ख. । ६०... ते - ख. । ६१.. ग्निरोचिस्तं - घ, त्रिकूटञ्च - ख । ६२... मां - ख. ६३.. .क्लिष्ट - घ । ६४...मन्त्राग्नि... - घ. । ६५. पाणिनम् - ख. । ६६... सहर्ष - ख. । ६७.. .मेखलं - घ. । ६८... रथं - घ. । ६९... क्ष- घ. ।

32

चन्द्रादित्यग्रहैश्चैव कृतस्रगुपभूषणम्७० ।
तमपश्यन्त७१ ते सर्वे देवा दिव्येन चक्षुषा ।
यं दृष्ट्वा न भवेन्मृत्युर्मर्त्यस्यापि कदाचन७२ ।।३५।।
तपसा७३ विनियोगयोगिनः प्रणमन्तो भवमिन्दुनिर्मलम्७४ ।
वियतीश्वरदत्तचक्षुषः७५ सह देवैर्मुनयो मुदान्विताः७६ ।।३६।।
प्रसमीक्ष्य७७ महासुरेशकालं मनसा चापि विचार्य दुर्विसह्यम् ।
प्रणमन्त७८ गतात्मभावचिन्ताः७९ सह देवैर्जगदुद्भवं स्तुवन्तः८० । ।।३७।।
इति स्कन्दपुराणे रुद्रदर्शनो नामाष्टमोध्यायः
सनत्कुमार उवाच
ते दृष्ट्वा देवदेवेशं ब्रह्मेन्द्रप्रमुखाः१ सुराः ।
अस्तुवन् वाग्भिरिष्टाभिः प्रणम्य वृषवाहनम् ।।१ ।।
पितामह उवाच
नमः शिवाय सोमाय२ भक्तानां भयहारिणे ।
नमः शूलाग्रहस्ताय कमण्डलुधराय च ।।२।।
नमस्ते३ नीलकण्ठाय करालदशनाय४ च ।
त्रेताग्निदीप्तनेत्राय त्रिनेत्राय हराय च ।।३।।
नमः पिनाकिने चैव नमो५ स्त्वशनिधारिणे ।
व्यालयज्ञोपवीताय कुण्डलाभरणाय च ।।४।।
नमश्चक्रधरायैव व्याघ्रचर्मधराय च ।
कृष्णाजिनोत्तरीयाय सर्पमेखलिने तथा६ ।।५।।

७०.. .ग्रवि... - ख. । ७१.. .तः - ख. । ७२ कथंचन - ध. । ७३ ... सा - घ. । ७४.. .ला - ख. । ७५.. .षा - ख. । ७६... पि हर्षिताः - घ. । ७७ प्रतिवी... - घ. । ७८... न्ति ख., - घ. । ७९ यथात्मभावचित्ताः- घ । गतात्मभावचित्ताः- ख., तः - घ. । ८०... वस्तरन्तः - घ. ।

१ ब्रह्माणं... - ख., सर्वे सब्रह्मकाः - घ. । २ सौम्याय - घ. । ३ दान्ताय - घ. । ४... नयनाय - ष । ५ नम - घ । ६ नमः - घ ।

33

वरदात्रे च७ पुत्राय सरस्वतीसुवे८ तथा ।
सोमसूर्याक्षमालाय९ अक्षसूत्रकराय च ।।६।।
ज्वानामालासहस्राय१० ऊर्ध्वलिङ्गाय११ वै नमः ।

नमः पर्वतवासाय शिरोहर्त्रे च मे पुरा ।।७।।
हालाहलविनाशाय कपालवरधारिणे ।
विमानवरवाहाय जनकाय ममैव च१२ ।।८।।
वरदाय वरिष्ठाय श्मशानरतये नमः ।
नमो नरस्य कर्त्रे च स्थितिकर्त्रे१३ नमः सदा ।।९।।
उत्पत्तिप्रलयानां च कर्त्रे सर्वसहाय च ।
ऋषिदैवतनाथाय सर्वभूताधिपाय च ।
शिवः सौम्यश्च देवेश भव१४ नो भक्त१५ वत्सल१६ ।।8.9.१०।।
सनत्कुमार उवाच
ब्रह्मण्यथैवं स्तुवति देवदेवः१७ स लोकपः ।
उवाच तुष्टस्तान्देवानृषींश्च तपैधितान् ।११ ।
उ देवान् प । ।
तुष्टोस्म्यनेन वः सत्य१८  न्तपसा ऋषिदेवताः ।
वरं ब्रूत प्रदास्यामि सुनिश्चित्य च१९ उच्यताम् ।।१२।।
सनत्कुमार उवाच
अथ सर्वानभिप्रेक्ष्य संतुष्टाः२० तपसैधितान्२१ ।
दर्शनेनैव२२ विप्रेन्द्र२३ ब्रह्मा वचनमब्रवीत् ।।१३।।
ब्रह्मोवाच
यदि तुष्टोसि देवेश यदि देयो वरश्च नः ।
तस्माच्छिवश्च सौम्यश्च संदृश्यश्च२४ भवस्व नः ।।१४।।

७ वरदानाच्च - घ., परयाम... - ख. । ८.. .ते - घ । ९ सूर्यसोमाकं... - घ. । १०.. .ल .. - ख. घ. । ११ तत्व... - घ. । १२ ह - घ. । १३ ह... - ख । १४ भा... - ख. । १५ भक्ति... - घ., द्भक्ति... - ख. । १६... ल. -घ । १७ देवेभ? सर्व... - घ. । १८ सम्यक् - घ । १९ स - ख. । २०.. ष्टस्त.. - घ. । २१..  से.. ख. घ । २२. .न च? - घ । २३.. न्द्रा - घ. । २४ दृश्यश्चैव - ख. ।


सुख२५ संव्यवहार्यश्च नित्यं तुष्टमनास्तथा ।
सर्वकार्येषु च सदा हितः२६ पथ्यश्च शंकर ।।१५।।
सह देव्या२७ ससूनुश्च सह देव२८गणैरपि ।
एष नो दीयतां देव वरो वरसहस्रद ।।१६।।
सनत्कुमार उवाच
एवमुक्तः स भगवान् ब्रह्मणा२९ देवसत्तमः ।
स्वकं३० तेजो महद्३१ दिव्यं व्यसृजत्३२ सर्वयोगवित्३३ ।।१७।।
अर्धेन तेजसस्तस्य३४ मुखादुल्का ससर्ज ह ।
तामाह भव नारीति३५ भगवान् विश्वरूपधृक् ।।१८।।
साकाशं द्यां च भूमिञ्च महिम्ना व्याप्य धिष्ठिता३६ ।
उपतस्थे च देवेशं दीप्यमाना यथा तडित् ।।१९।।

तामाह प्रहसन् देवो देवीं कमललोचनाम् ।
ब्रह्माणं देवि वरद३७माराधय शुचिस्मिते ।।8.9.२० ।।
सा तथेति प्रतिज्ञाय तपस्तप्तुं प्रचक्रमे ।
रुद्रश्च तानृषीनाह शृणुध्वं मम तोषणे ।।२१।।
फलं फलवतां श्रेष्ठा यद् ब्रवीमि तपोधनाः ।
अमरा जरया त्यक्ता अरोगा जन्मवर्जिताः ।।२२।।
मद्भक्तास्तपसा युक्ता इहैव३८ च निवत्स्यथ३९ ।
अयं चैवाश्रमः श्रेष्ठः४० स्वर्णशृङ्गोचलोत्तमः ।।२३।।
पुण्यं पवित्रं स्थानं वै भविष्यति न संशयः ।
मैनाके पर्वते ह्यस्मिन्४१ स्वर्णाक्षोहं४२ यतः४३ स्थितः४४ ।।२४।।

२५.? .खं - ख. । २६ भितकल्प... - घ. । २७ सभृत्य.. - ध. । २८ भृत्य (?) । २९... णो - ख. घ. । ३०... कां- ख. । ३१ मयं - घ. । ३२ मभवत् - घ. । ३३ स च घ. । ३४ स्वस्य - ख. । ३५ त्वं - ख. । ३६ संस्थिता -घ. । ३७.. .दा - ख. । ३८ इह चैव घ. । ३९ हि वत्स्य ... - घ. । ४० ष्ठाः-- ख., ष्ठं - घ. । ४१ श्रेष्ठे - ख. । ४२ स्वर्णेहमभवं ग., स्वर्णे महति संचये - ख. । ४३ सदा - घ. । ४४ यतः - ग. ।



स्वर्णाक्षीं चासृजं देवीं४५ स्वर्णाक्षं तेन तत्स्मृतम्४६ ।
स्वर्णाक्ष४७ ऋषयो यूयं४८ षट्कुलीया४९ स्तपोधनाः । ।२५।।
निवत्स्यथ मयाज्ञप्ताः स्वर्णाक्षं५० वै ततश्च ह५१ ।
समन्ताद्योजनं क्षेत्रं पवित्रं५२ तन्न संशयः । ।२६ ।।
देवगन्धर्वचरितमप्सरोगणसेवितम्५३ ।
सिंहेभशरभाकीर्णं शार्दूलर्क्षमृगाकुलम्५४ । । २७। ।
अनेकविहगाकीर्णं लतावृक्षक्षुपाकुलम्५५ ।
ब्रह्मचारी नियमवान् जितक्रोधो जितात्मवान्५६ । । २८। ।
उपोष्य त्रिगुणां रात्रिं चरुं कृत्वा निवेद्य च ।
यत्र५७ तत्र मृतः सोपि५८ ब्रह्मलोके निवत्स्यति । । २९। ।
योप्येवमेवाकामान्मां पश्ये५९दत्र वृषध्वजम् ।
गोसहस्रफलं सोपि मत्प्रसादादवाप्स्यति ।। 8.9.३० । ।
नियमेन मृतश्चात्र मया सह चरिष्यति ।
यावत् स्थास्यन्ति लोकाश्च मैनाकश्चाप्ययं गिरिः । । ३१ । ।
तावत् सह मया देवा मत्प्रसादा६०च्चरिष्यथ ।
एवं६१ स तानृषीनुक्त्वा दृष्टवा सौम्येन६२ चक्षुषा ।
पश्यतामेव सर्वेषां तत्रैवान्तरधीयत । ।३ २ । ।
सनत्कुमार उवाच
य इमां६३ शृणुयान्मर्त्यो द्विजातीञ्छ्रावयीत६४ वा ।
सोपि तत्फलमासाद्य चरेन्मृत्युविवर्जितः । । ३३ । ।
जयति जलदवाहः सर्वभूतान्तकालः ।

शमदमनिरतानां६५ क्लेशहर्ता६६ यतीनाम् ।

४५ स्वर्णाक्षी च मया सृष्टा - घ. । ४६ स्वर्णाक्षो यो गिरिस्ततः - घ. । ४७ अस्मिँश्च - घ. ।. क्षं - ख., क्षे.. -ग. । ४८ युक्ताः - घ. । ४९.. .ना - ग. । ५० स्वर्णाक्षे - घ. । ५१ लर्वकामदे - घ. । ५२ भविष्यति - घ. । ५३ गीतनादितम् - ध. । ५४... समा... - घ. । ५५.. .समा... - घ. । ५६ जितेन्द्रियः - घ. । ५७ त... - ख । ५८ साक्षात् - घ. । ५९ त... - ख. घ. । ६० मत्प्रभावा... - ग. । ६१ चैव स ता - घ. । ६२ दिव्येन - घ. । ६३.. .दं- घ. । ६४. येत्तथा - घ. । ६५ निय... ख. ग. घ । ६६... हन्ता - घ.



जननमरणहर्ता६७ चेष्टतां धार्मिकाणाम्६८ ।
विविधकरणयुक्तः खेचरः पादचारी ।।३४। ।
मदनपुरविदारी नेत्रदन्तापहारी६९ ।
विगतभयविषादः सर्वभूतप्रणेता७० ।।
सततमभिदधानश्चेकितानात्मचितः ।
करचरणललामः सर्वदृग् देवदेवः ।। ३५ ।।
इति स्कन्दपुराणे७१ वरप्रदानिको नाम नवमोध्यायः

सनत्कुमार उवाच
सा देवी त्र्यम्बकप्रोक्ता तताप सुचिरं तपः ।
निराहारा कदाचिच्च एकपर्ण्णाशना पुनः ।।१ ।।
वाय्वाहारा पुनश्चापि अब्भक्षा१ भूय एव हि२ ।
तां तपश्चरणे युक्तां ब्रह्मा ज्ञात्वातिभास्वराम् ।।२।।
उवाच ब्रूहि तुष्टोस्मि देवि किं करवाणि ते ।
साब्रवीत् त्र्यम्बकं देवं३ पतिं प्राप्येन्दुवर्च्चसम् ।
विचरेयं सुखं देव सर्वांल्लोकान्नमस्तव ।।३।।
ब्रह्मोवाच
नहि येन शरीरेण क्रियते परमं तपः४।
तेनैव परमेशोसौ पतिः शम्भुरवाप्यते ।।४।।

६७... हंता घ. । ६८... ना - ख घ । ६९... वपाती - ख ग,.. वचारी - घ । ७० प्रचेताः - ख घ । ७१ सुवर्णाक्षोत्पत्ति .. - घ. ।

१. .भक्ष - घ. । २ च - घ । ३,. व - ख । ४ च परन्तपे - ख. ।



तस्माद्धि योगाद्भवती५ दक्षस्येह प्रजापतेः ।
जायस्व दुहिता भूत्वा पतिं रुद्रमवाप्स्यसि ।।५।।
ततः सा तद्वचः६ श्रुत्वा योगाद्देवी मनस्विनी ।
दक्षस्य दुहिता जज्ञे सतीनामा७तियोगिनी ।।६।।
तां दक्षस्त्र्यम्बकायैव ददौ भार्यामनिन्दिताम् ।
ब्रह्मणो वचनाद्यस्यां मानसा८नसृजत्सुतान् ।।७।।

आत्मतुल्यबलान्दीप्तान् जरामरणवर्जितान् ।
अनेकानि सहस्राणि रुद्राणाममितौजसाम् ।।८।।
तान्दृष्टा मृज्यमानाँश्च ब्रह्मा तं प्रत्यषेधयत् ।
मा स्राक्षीर्देवदेवेश प्रजा मृत्युविवर्जिताः ।।९।।
अन्याः१० सृजस्व भद्रन्ते प्रजा११ मृत्युसमन्विताः१२ ।
तेन चोक्तं स्थितोस्मीति१३ स्थाणुस्तेन ततः स्मृतः ।।8.10.१० ।।
१४देवदेव उवाच
न स्रक्ष्ये मृत्युसंयुक्ताः प्रजा ब्रह्मन् कथञ्चन ।
स्थितोस्मि वचनात्तेद्य वक्तव्यो नास्मि ते पुनः ।।११।।
ये त्विमे मानसाः१५ सृष्टा महात्मानो महाबलाः ।
चरिष्यन्ति मया सार्धं सर्वं एते हि याज्ञिकाः ।।१२ ।।
सनत्कुमार उवाच
अथ काले गते व्यास स दक्षः शापकारणात् ।
अन्यानाहूय जामातॄन्सदारानर्च्चयद् गृहे१६ ।।१३।।
सतीं सह त्र्यम्बकेण१७ नाजुहाव रुषान्वितः ।
सती ज्ञात्वा तु तत्सर्वं गत्वा पितरमब्रवीत् ।।१४।।
५.. .ति - घ । ६ तत्त्वत - ख. । ७ नामे - घ. । ८ म... - ख । ९ षेधत - घ. । १० - न्या - ख. । ११... जा- ख. । १२... ताम् - ख. । १३ स्मृतो... - ख. । १४ एतत्स्थाने अथ काले गते व्यास देवदेवोभ्यभाषत । इति घ पुस्तके । १५ मनसा - ख. । १६ महे - घ । १७ ता सती त्र्यम्बकेनाथ - घ. ।



अहं ज्येष्ठा वरिष्ठा च जामात्रा सह सुव्रत१८।
मां हित्वा नार्हसि१९ ह्येताः सह भर्तृभिरर्चितुम् ।।१५।।
क्रोधेनाथ समाविष्टः स क्रोधोपहतेन्द्रियः२० ।
निरीक्ष्य प्राब्रवीद्२१ दक्षश्चक्षुषा निर्दहन्निव ।।१६।।
मामेताः सति सस्नेहाः पूजयन्ति सभर्तृकाः ।
न त्वं तथा पूजयसे सह भर्त्रा महाव्रते ।।१७।।
गृहांश्च मे सपत्नीकाः प्रविशन्ति तपोधनाः ।
श्रेष्ठोर२२ स्तस्मात्सदा मन्ये ततस्तानर्चयाम्यहम् ।।१८।।
तस्माद् यां ते२३ करोम्यद्य शुभां२४ वा यदि वाशुभाम्२५ ।
पूजां गृहाण तां पुत्रि गच्छ वा यत्र रोचते ।।१९।।
सनत्कुमार उवाच
ततः सा क्रोधदीप्तास्या न जग्राहातिकोपिता ।
पूजामसम्मतां हीनामिदं चोवाच तं शुभा ।।8.10.२० । ।
यस्मादसम्मतामेनां पूजां त्वं कुरुषे मयि ।
श्लाघ्यां चैवाप्यदुष्टाञ्च श्रेष्ठां मां गर्हसे पितः ।।२१ ।।
तस्मादियं२६ स्वकं देहं त्यजाम्येषा२७ तवात्मजम्२८ ।

असत्कृतायाः किं मेद्य जोवितेनाशुभेन ह ।। २२।।
सनत्कुमार उवाच
ततः कृत्वा नमस्कारं मनसा त्र्यम्बकाय ह ।
उपाचेदं सुसंरब्धा वचनं वचनारणिः । ।२३।।
यत्राहमुपपद्येयं पुनर्देहे२९ स्वयेच्छया३० ।
देव तत्राप्यसं३१मूढा३२ संभूता धार्मिका सती । ।२४।।

१८ जामातरि शुभव्रता - घ । १९... से - ख. । २० अज्ञानो... घ. । २१ विषवी - ख, तां पुनर् - । २२ ज्येष्ठाँ -घ । २३ यते - घ । २४, भम् । २५... भम् - घ. । २६... दं - घ. । २७.. ष - घ । २८... जा - घ. । २९ देहं -घ । ३० सुखेच्छपा - घ. । ३१ प्येष - घ । ३२ संमूढा - घ ।



गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धीमतः ।
ततः सा धारणां कृत्वा देव्याग्नेयीं समाधिना ।।२५।।
ददाह वै स्वकं देहं स्वसमुत्थेन३३ वह्निना ।
तां ज्ञात्वा३४ त्र्यम्बको देवीं तथाभूतां महायशाः ।।२६।।
उवाच दक्षं संगम्य३५ इदं वचनकोविदः ।
यस्मात्ते निन्दित३६श्चाहं प्रशस्ताश्चेतरे पृथक् ।।२७।।
जामातरः सपत्नीकास्तस्माद्वैवस्वतेन्तरे ।
उत्पत्स्यन्ते पुनर्यज्ञे तव जामातरस्त्विमे ।।२८।।
त्वं चैव मम शापेन क्षत्रियो भविता नृप३७ ।
प्रचेतसां सुतश्चैव कन्यायां शाखिनां पुनः ।
धर्मविघ्नञ्च ते तत्र करिष्ये क्रूरकर्मणः३८ ।।२९।।
सनत्कुमार उवाच
तमुवाच तदा दक्षो दूयता हृदयेन वै ।
मया यदि सुता३९ स्वा४० वै प्रोक्ता त्यक्तापि वा पुनः ।।8.10.३०।।
किं तवात्र४१ कृतं देव अहं तस्याः प्रभुः सदा ।
यस्मात्त्वं मामभ्यशपस्तस्मात्त्वमपि शङ्कर ।
भुव्येव वत्स्यसे नित्यं नान्तरिक्षे कदाचन ।।३ १ ।।
भागं च तव यज्ञेषु दत्त्वा सर्वे द्विजातयः ।
अपस्प्रक्ष्यन्ति सर्वत्र महादेव महाद्युते ।।३२।।
सनत्कुमार उवाच
ततः स देवः प्रहसन् तमुवाच त्रिलोचनः ।
सर्वेषामेव लोकानां मूलं भूर्लोक४२ उच्यते ।।३३ ।।

३३ स (स्व) कीयेनैव - घ. । ३४ ज्ञात्वा तु - घ. । ३५ सम्यक् - घ. । ३६ नार्थित - घ. ३७ नृपः - - घ. । ३८... णा - घ. । ३९ मया चैव - घ. । मयेयं दुहिता - ग । ४० सा घ. । ४१... द्य - घ. । ४२ भूरिति - घ. ।

तमहं धारयाम्येको लोकानां हितकाम्यया ।
एतस्मिन् हि धृते४३ लोकाः सर्वे तिष्ठन्ति शाश्वताः ।।३४।।
तस्मात्तिष्ठाम्यहं नित्यमिहैव न तवेच्छया ।
भागान्दत्त्वा तथान्येभ्यो दित्सवो मे द्विजातयः ।।३५।।
अपः स्पृशन्ति शुद्ध्यर्थं भागं४४ यच्छन्ति मे ततः ।
शी यश्च धर्मस्यैवाभिवृद्धये ।।।३६।।।
दत्त्वा स्पृशन्ति भूयश्च धर्मस्यैवाभिवृद्ध्ये।।३६।।
यथा४५ हि देवनिर्माल्यं शुचयो धारयन्त्युत ।
अशुचिं४६ स्प्रष्टुकामाश्च त्यक्त्वापः संस्पृशन्ति च ।।३७।।
यथा ममैव४७ मन्येषां दित्सवो ब्राह्मणर्षभाः ।
भागानपः स्पृशन्ति स्म तत्र का परिदेवना ।।३८।।
त्वन्तु मच्छापनिर्दग्धो विपरीतो नराधमः ।
स्वस्यां सुतायां४८ मूढात्मा पुत्रमुत्पादयिष्यसि ।।३९।।
सनत्कुमार उवाच
एवं स भगवाञ्छस्वा दक्षं देवो जगत्पतिः ।
विरराम महातेजा जगाम च यथागतम्४९ ।।8.10.४०।।
सोमदिवाकरवह्निसमाक्षं ५० चन्द्रनिभाननपद्मदलाक्षम् ।
गोवृषवाहममेय५१ गुणौघं शाश्वतमिन्दुवह५२ प्रणताः स्मः ।।४१ ।।
य इमं दक्षशापाङ्क५४ देव्याश्चैवाशरीरताम् ।
शृणुयाद् वाथ विप्रान्५५ वा श्रावयीत५६ यतव्रतः ।
स सर्वपापनिर्मुक्तो रुद्रलोकमवाप्नुयात् ।।४२।।
इति स्कन्दपुराणे दक्षशापो नाम दशमोध्यायः

४३ निर्वृत्ते - घ. । ४४. .गान् - ग । ४५ त... - घ । ४६... चि - घ । ४७ देवानामेव - घ., देवतामेव - ख ग । ४८ अस्याः स्वभार्या - घ. । ४९.. .मतम् - घ. । ५० मेरु - कं, मेरु भास्कार - ख., मेरुर्हिमाचलमन्दकरक्षं - घ.।... समक्षं - घ । ५१ मशेष - घ. । ५२ सततमिहेन्दु.. - ? । ५३ इदं - घ. ५४... ङ्गः - घ. । ५५ विप्रेभ्यः -घ. । ५६... येत - क. ।

आगामी पृष्ठः( अध्यायाः ११ - २०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०२

https://sa.wikisource.org/s/fdf
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः १ - १०)

आगामी पृष्ठः (अध्यायाः २१ - ३०)

अध्यायाः ११ - २०

41

सनत्कुमार उवाच
कदाचित् स्वगृहं१ प्राप्तं कश्यपं द्विपदाम्वरम्२ ।
अपृच्छद्धिमवान् प्रश्नं लोके ख्यातिकरं नु३ किम् । । १ । ।
केनाक्षयाश्च लोकाः स्युः ख्यातिश्च परमा मुने४ ।
तथैव५ चार्चनीयत्वं सत्सु तत्६ कथयस्व मे । । २ । ।
कश्यप उवाच
अपत्येन महाभाग७ सर्वमेतदवाप्यते ।
मम ख्यातिरपत्येन ब्रह्मणश्चर्षिभिः सह । । ३ । ।
किन्न पश्यसि शैलेन्द्र यतो मां परिपृच्छसि ।
वर्त्तयिष्यामि८ तच्चापि यन्मे दृष्टं पुराचल९ । ।४ । ।
वाराणसीमहं गच्छन्नपश्यं संस्थितं दिवि ।
विमानं स्वनवद्दिव्यमनौपम्यमनिन्दितम् । । ५ । ।
तस्याधस्तादार्त्तनादं गर्भस्थाने१० शृणोम्यहम् ।
- - - - - - - - - - - - - - - - - |
तानहं ११ तपसा ज्ञात्वा तत्रैवान्तर्हितः स्थितः१२ । । ६ । ।
अथागात्तत्र शैलेन्द्र१३ विप्रो नियमवान् शुचिः ।
तीर्थाभिषेकपूतात्मा परे तपसि संस्थित. । ।७ । ।
अथ स व्रजमानस्तु व्याघ्रेणाभीषितो द्विजः ।
विवेश तं तदा देशं सा गर्ता१४ यत्र भूधर । ।८ । ।
गर्त्ताया १५ वीरणस्तम्बे लम्बमानांस्तदा मुनीन् ।
अपश्यदार्तो १६ दुःखार्त्तानपृच्छत्तांश्च स द्विजः१७ । । ९ । ।
के यूयं वीरणस्तम्बे लम्बमाना ह्यधोमुखाः ।
दुःखिताः केन मोक्षश्च युष्माकं भवितानघाः १८ । । 8.11.१० । ।

१ इच्छया - घ. । २ मुनिपुंगवम् - घ । ३ तु - घ । ४... त्मने - घ. । ५ सर्वथैवा - घ. । ६ ससुतं - ख, घ.,सत्सुतं ( तत्) - क । ७ महाबाहो - ख घ. । ८ चात्रैव - घ । ९ तन - घ. । १० गर्त्त... - ख. घ. । - ११ तथाहं- क., तमहं - घ । १२... तास्थितान् - ख । १३ सैन्येव - घ. । १४ सगर्तो - घ । १५ गर्त्तोयं - घ. । ।१६. ..र्त्तान् - ख. । १७... जाः - ख । १८. घ - क. ग. ।

पितर ऊचुः
वयन्तेकृतपुण्यस्य पितरः सपितामहाः ।
प्रपितामहाश्च क्लिश्यामस्तव१९ दुष्टेन कर्मणा ।।।११।।
नरकोयं महाभाग गर्त्तारूपं२० समास्थितः ।
त्वञ्चापि वीरणस्तम्बस्त्वयि लम्बामहे वयम् ।।१२।।
यावत्त्वं जीवसे विप्र तावदेव वयं स्थिताः ।
मृते त्वयि गमिष्यामो नरकं पापचेतसः ।।१३।।
यदि त्वं दारसंयोगं कृत्वापत्यं गुणोत्तरम् ।
उत्पादयसि तेनास्मान्मुच्येम वयमेकशः२१ ।।१४।।
नान्येन तपसा पुत्र न तीर्थानां फलेन च ।
तत् कुरुष्व महाबुद्धे तारयस्व पितॄन् भयात् ।।१५।।
स तथेति प्रतिज्ञाय आराध्य च वृषध्वजम् ।
पितॄन् गर्त्तात्समुद्धृत्य गणपान् प्रचकार ह ।।१६।।
स्वयञ्च२४ रुद्रदयितः सुकेशो नाम नामतः ।
संमतो बलवांश्चैव रुद्रस्य२३ च गणपोभवत् ।।१७।।
तस्मात् कृत्वा तपो घोरमपत्यं गुणवद् भृशम्२४ ।
उत्पादयस्व शैलेन्द्र ततः कीर्तिमवाप्स्यसि ।।१८।।
सनत्कुमार उवाच
स एवमुक्त२५ ऋषिणा शैलेन्द्रो नियमे स्थितः ।
तपश्चकार विपुलं येन ब्रह्मा तुतोष ह ।।१९।।
तमागत्य२६ ततो२७ ब्रह्मा वरदोस्मीत्यमाषत ।
ब्रूहि तुष्टोस्मि ते शैल२८ तपसानेन सुव्रत ।।8.11.२०।।

१९ त... - ख. । २० गर्त्तारूपा - ख. गर्तरूपो घ. । २१.. -मंहसः - घ. । २२ अयञ्च... - घ. । २३ वरस्य - घ. । २.. .त्तरम् - घ. । २५ एवमुक्तो हि - घ.,.. .क्तो - क. ख. घ.,.. क्ते - ग. । २६ ततो गत्वा - घ. । २७ तद - कः.घ. । २८ शैलेन्द्र - घ. ।



हिमवानुवाच
भगवन् पुत्रमिच्छामि गुणैः सर्वैरलंकृतम् ।
एतद्वरं२९ प्रयच्छस्व यदि तुष्टोसि नः प्रभो ।।२१।।
ब्रह्मो३०वाच
कन्या भवित्री३१ शैलेन्द्र सुता ते वरवर्णिनी ।
यस्याः प्रभावात् सर्वत्र कीर्त्तिमाप्स्यसि पुष्कलाम् ।।२२ । ।
अर्चितः सर्वदेवानां तीर्थकोटीसमावृतः३२ ।
पावनश्चैव पुण्यश्च३३ देवानामपि सर्वतः ।

ज्येष्ठा च सा३४ भवित्री३५ ते अन्ये चानु ततः३६ शुभे३७ ।।२३ ।।
सनत्कुमार उवाच
एवमुक्त्वा ततो ब्रह्मा तत्रैवान्तरधीयत ।
सोपि कालेन शैलेन्द्रो मेनायामुदपादयत्३८ ।।२४।।
अपर्णामेकपर्णां च तथा चाप्येकपाटलाम् ।
न्यग्रोधमेकपर्णा तु पाटलं३९ चैकपाटला ।।२५।।
आश्रिते द्वे ह्यपर्णा तु अनिकेता तपोचरत् ।
शतं वर्षसहस्राणां दुश्चरं देवदानवैः ।।२६।।
आहारमेकपर्णेन सैकपर्णा समाचरत् ।
पाटलेन तथैकेन व्यदधाच्चैकपाटला४० ।।२७।।
पूर्णे पूर्णे सहस्रे तु आहारं ते च चक्रतुः४१ ।
अपर्णा४२ तु निराहारा४३ तां माता४४ प्रत्यभाषत ।।२८।।
निषेधयन्तीत्युमेति मातृस्नेहेन दुःखिता ।
सा तथोक्ता तदा मात्रा देवी दुश्चरचारिणी ।
तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता । ।२९।।
२९ एवं वरं - क. ग. घ. । २० पितामह - क. । ३१.. ता - घ. । ३२ समन्वितः - घ. । ३३ पूत ... - घ. । ३४ सा च - घ । ३५ सवित्री - क । ३६ गते - घ. । ३७ शुभा - क., सुते - घ. । ३८ मुप... क. ख. । ३९... लां चैव - घ. । ४० विदधात्येक... क. ख. घ. । ४१.. .रश्च तया कृतः - घ. । ४२.. .र्णा - घ. । ४३.. .रां - क. । ४४ माता तां - क. ।


एतत् तत्त्रि४५ कुमारीकं४६ जगत् स्थावरजङ्गमम् ।
एतासां तपसा लोकान्४७ यावद् भूमिर्धरिष्यति । ।8.11.३ ० ।।
तपःशरीरास्ताः सर्वास्तिस्रो योगबलान्विताः ।
सर्वाश्चैव महायोगाः४८ सर्वाश्च४९ स्थिरयौवनाः५० ।।३ १ ।।
लोकानां मातर५१ श्चैव ब्रह्मचारिण्य एव च ।
अनुगृह्णन्ति लोकांश्च तपसा स्वेन सर्वदा ।।३ २ ।।
उमा तासां वरिष्ठा च श्रेष्ठा५२ च वरवर्णिनी ।
महायोगबनोपेता महादेवमुपस्थिता ।।३ ३ । ।
दत्तकश्चोशनास्तस्याः५३ पुत्रः स भृगुनन्दनः ।
असितस्यै५४ कवर्णा तु देवलं सुषुवे सुतम् । ।३४।।
या तु तासां कुमारीणां तृतीया ह्येकपाटला ।
पुत्रं शतशलाकस्य जैगीषव्यमुपस्थिता ।। ३५ ।।
तस्यापि शंखलिखितौ स्मृतौ पुत्रावयोनिजौ ।
उमा तु या५५ मया तुभ्यं कीर्तिता वरवर्णिनी ।।३ ६।।
अथ तस्यास्तपो५६ योगात् त्रैलोक्यमखिलं तदा ।
प्रधूपितं समालक्ष्य ब्रह्मा वचनमब्रवीत् ।। ३७। ।

ब्रह्मोवाच
देवि किं तपसा लोकान् तापयिष्यसि शोभने ।
त्वया सृष्टमिदं विश्वं मा कृत्वैतद्५७ विनाशय ।।३८ ।।
त्वं हि धारयसे लोकानिमान् सर्वान् स्वतेजसा ।
ब्रूहि किन्ते जगन्मातः प्रार्थितं संप्रसीद नः५८ । ।३ ९। ।
४५ त्वद्रि - घ. । ४६ णा - ख. । ४७ दुग्ध - क । ४८.. भागा - ख. । ४९ स्तथा च - क. । ५० तपोधनाः - ख.। ५१.. त। लोक - क. । ५२ ज्येष्ठा - घ. । ५३ दत्तश्चाशनसा तस्याः. - क घ., तस्य - ख. । ५४... ञ्चैक... -क. घ,.. ञ्चैक (?) । ५५ मा... - क, ५६ स्ताप - घ. । ५७ कृत्वा त क, कृतान्तवि.. - ख., हृता त्व.. - घ । ५८ ह्र - क; ।

45

देव्युवाच५९
यदर्थन्तपसो ह्यस्य चरणं मे पितामह ।
जानीषे तत्त्वतस्तन्मे ततः पृच्छसि किं पुनः ।।8.11.४० ।।
ब्रह्मोवाच६१
यदर्थं देवि तपसा श्राम्यसे लोकभावनि६२ ।
स त्वां६३ स्वयं समागम्य६४ इहैव वरयिष्यति । ।४१ ।।
सर्वदेवपतिः६५ श्रेष्ठः सर्वलोकेश्वरेश्वरः ।
वयं सदेवा यस्येशे वश्याः किङ्करवादिनः६६ ।।४२।।
सदेवदेवः परमेश्वरे६७श्वरः स्वयं६८ तवायास्यति६९ लोकपोन्तिकम् ।
उदाररूपो विकृतो७० भिरूपवान्७१ समानरूपो हि नरस्य७२ कस्यचित्७३ ।।४३ ।।
महेश्वरः पर्वतलोकवासी चराचरेशः प्रथमो७४ प्रमेयः ।
विनेन्दुनापीन्दु७४ समानवक्त्रो विभीषणं रूपमिहास्थितोग्र्यम्७६ ।।४४।।
इति स्कन्दपुराणे देव्या वरप्रदानं७७ नाम एकादशोध्यायः

ततः स भगवान्देवो ब्रह्मा तामाह सुस्वरम् ।
देवि येनैव सृष्टासि न विना यस्त्वया शुभे१ ।।१ । ।
स भर्ता तव देवेशो२ भविता मा तपः कृथा३।
ततः प्रदक्षिणं कृत्वा ब्रह्मा व्यास गिरेः सुताम् ।।२।।
५९ उमोवाच - घ । ६० तत्त्बमेतन्मे - ख । ६१ पितामह उ० - घ. । । ६२ भाविनि - क., भाविनी घ. । ६३ त्वा- ख. । ६४.. त्य - ख । ६५... ति - क. । ६६ वा (मा , निनः- ख, वाणि व.- घ. । ६७.. रः स्वयं - ख । ६८ हरो - घ । ६१ तवैयं मा.. - ख. । ७० ता - क । ७१ तिरूपः... - क, मिरूपः - घ । ७२ नहि यस्य - क.,. णि. - घ । ७३ कश्चित् - ? । ७४... मा - क. । ७५ ही... - क., ती. - ध । ७६.. ग्रं - क.,... ग्रत स्थित - ख । ७७ उमातपसि ब्रहावचनो - घ. ।
१ मनसा यस्त्वया व्रत- - ख । २ .शि - ख. । ३ स्तथा - ख ।

46

जगामादर्शनं तस्याः सा चापि विरराम ह ।

सा देवी युक्तमित्येवमुक्त्वा स्वस्याश्रमस्य ह ।।३।।
द्वारि जातमशोकं वै समुपाश्रित्य संस्थिता ।
अथागाच्चन्द्रतिलकस्त्रिदशार्तिहरो हरः ।।४।।
विकृतं रूपमास्थाय ह्रस्वो बाहुक एव च ।
विभुग्ननासिको भूत्वा कुब्जः केशान्तपिङ्गलः ।।५।।
उवाच विकृतास्यश्च देवि त्वां४ वरयाम्यहम् ।
अथोमा योगसंसिद्धा५ ज्ञात्वा शङ्करमागतम् ।।६।।
अन्तर्भावविशुद्धात्मा क्रियानुष्ठानलिप्सया ।
तमुवाचार्घपाद्याभ्यां६ मधुपर्केण चैव हि ।
संपूज्य सुमनोनेत्रा७ ब्राह्मणं ब्राह्मणप्रिया ।।७।।
देव्युवाच
भगवन्न स्वतन्त्रास्मि पिता मेस्त्यरणो तथा ।
तौ प्रभू मम दाने वै कन्याहं द्विजपुङ्गव ।।८।।
गत्वा याचस्व पितरं मम शैलेन्द्रमव्ययम् ।
स चेद्ददाति मां विप्र तुभ्यं तद्रुचितं मम ।।९।
सनत्कुमार उवाच
ततः स भगवान् देवस्तथैव विकृतः प्रभुः ।
उवाच शैलराजं तमुमा८ मे यच्छ शैलप९ ।।8.12.१ ० ।।
स तं विकृतरूपेण ज्ञात्वा रुद्रमथाव्ययम् ।
भीतः शापाच्च विमना इदं वचनब्रवीत् ।।११ ।।
भगवन्नावमन्यामि ब्राह्मणान् भूमि१० दैवतान्११ ।
मनीषितं तु यत् पूर्वं तच्छृणुष्व महातपः१२ ।।१२।।
४ त्वा - ख. । ५... द्ध्या - क. । ६... र्ध्यमानाय्य - ख. । ७ सुमना नत्वा - घ. । ८ न्तामुमां - क. टि. ।
९.. राट् - ख. । १० भुवि - घ. । ११ देवतान् - क. - तां - ख. । १२... प - ख. ।

47
स्वयंवरो मे दुहितुर्भविता विप्र पूजितः ।
वरयेद्यं स्वयं तत्र स भर्त्तास्या भवेदिति ।।१३।।
सनत्कुमार उवाच
तच्छ्रुत्वा शैलवचनं भगवान् गोवृषध्वजः ।
देव्याः समीपमागत्य इदमाह महामनाः ।।१४।।
देवि पित्रा तवाज्ञप्तः१३ स्वयंवर इति श्रुतम् ।
तत्र त्वं वरयित्री यं स ते भर्त्ता किलानघे ।।१५।।
तदापृच्छे गमिष्यामि दुर्ल्लभा त्वं वरानने ।
रूपवन्तं समुत्सृज्य वृणाथा मादृशं१४ कथम् ।।१६।।
सनत्कुमार उवाच
तेनोक्ता सा तदा तत्र भावतो यत्तदीरितम्१५ ।

भावञ्च रुद्रनिहितं प्रसादं१६ मनसस्तथा ।।१७।।
संप्राप्योवाच देवेशं मा तेभूद् बुद्धिरन्यथा ।
अहं त्वां वरयिष्यामि नान्यद्भूतं कथञ्चन ।।१८।।
अथवा तेस्ति सन्देहो मयि विप्र कथञ्चन ।
इहैव त्वां महाभाग वरयामि मनोरथे१७ ।।१९।।
सनत्कुमार उवाच
गृहीत्वा स्तबकं सा तु हस्ताभ्यां तत्र संस्थितम्१८ ।
स्कन्धे शम्भोः समाधाय१९ देवी प्राह वृतोसि मे ।।8.12.२० ।।
ततः स भगवान् देवस्तथा देव्या२० वृतस्तदा२१ ।
उवाच तमशोकं२२ वै वाचा संजीवयन्निव२३ ।।२१ ।।

१३ समा .. - घ. । १४.. .षे - ख. । १५ भव पन्त्या उदीरितम् - घ. । १६... दान् - घ । १७... थ १८... ता- क १९.. .दाय - क. घ. । २० वो देव्या तत्र- घ । २१ न्त... - घ. । २२ ता - घ. । २३ संचार... घ. ।



यस्मात्तव सुपुष्पेण स्तबकेन वृतो ह्यहम् ।
तस्मात्त्वं जरया त्यक्तः२४  अमरः संभविष्यसि ।।२२।।
कामरूपः कामपुष्पः कामगो दयितो मम ।
सर्वाभरणपुष्पाढ्यः सर्ववृक्षफलोपगः ।।२३।।
सर्वान्नभक्षदश्चैव अमृतस्रव एव च ।
सर्वगन्धश्च देव्यास्त्वं भविष्यसि दृढं प्रियः ।।२४।।
निर्भयः सर्वलोकेषु२५ चरिष्यसि सुनिर्वृतः ।
आश्रमं चैन२६मत्यर्थं२७ चित्रकूटेति विश्रुतम् ।।२५ ।।
योभियास्यति पुण्यार्थी सोश्वमेधमवाप्स्यति ।
यत्र तत्र मृतश्चापि ब्रह्मलोकं गमिष्यति ।।२६।।
यश्चात्र नियमैर्युक्तः प्राणान् सम्यक् परित्यजेत् ।
स देव्यास्तपसा युक्तो महागणपतिर्भवेत् ।।२७।।
सनत्कुमार उवाच
एवमुक्त्वा ततो२८ देव आपृच्छ्य हिमवत्सुताम् ।
अन्तर्दधे जगत्स्रष्टा सर्वभूतप ईश्वरः२९ ।।२२।।
सापि देवी गते तस्मिन् भगवत्यमितात्मनि ।
तत एवोन्मुखी स्थित्वा शिलायां संविवेश ह ।।२९।।
उन्मुखी सा गते तस्मिन्महेष्वासे प्रजापतौ ।
निशेव चन्द्ररहिता बभूव३० विमनास्तदा३१ ।।8.12.३०।।
अथ शुश्राव सा शब्दं बालस्यार्तस्य शैलजा ।
सरस्युदकसंपूर्णे समीपे स्वाः३२श्रमस्य ह ।।३१।।
स कृत्वा बालरूपं तु देवदेवः स्वयं शिवः ।

क्रीडाहेतोः सरोमध्ये ग्राहग्रस्तोभवत्तदा ।।३२। ।

२४ मुक्तो- घ. । २५ भूतेषु -घ. । २६ चैव-क, चम-घ. । २७ मा.. - घ. । २८ तदा-- घ। २९... तीश्वरः घ. । ३० सा बभौ - क. घ. । ३१. तः -क । ३२ चा- क ।

49

योगमायामथास्थाथ प्रपञ्चोद्भवकारणः ।
तद्रूपं सरसो मध्ये कृत्वेदं३३ समभाषत ।।३ ३ ।।
त्रातु मां कश्चिदेत्येह ग्राहेण हृतचेतसम् ।
धिक्कष्टं बाल एवाहमप्राप्तोथ मनोरथम्३४ ।। ३४। ।
यास्यामि निधनं वक्त्रे ग्राहस्यास्य दुरात्मनः ।
शोचामि न स्वकं देहं ग्राहग्रस्तोपि दुःखितः ।।३५।।
यथा शोचामि पितरं मातरञ्च तपस्विनीम्३५ ।
मां श्रुत्वा ग्राहवदने प्राप्तं निधनमुत्सुकौ ।।३ ६। ।
प्रियपुत्रावेकपुत्रौ प्राणान्नूनं विहास्यतः ।
अहो बत महत् कष्टं योहं बालोकृतव्रतः
अतस्वा तप एवायं यास्यामि निधनं हतः । ।३७। ।
सनत्कुमार उवाच
श्रुत्वा तु देवी तन्नादं विप्रस्यार्त्तस्य शोभना ।
उत्थाय प्रद्रुता तत्र यत्र तिष्ठत्यसौ द्विजः । ।३८ । ।
सापश्यदिन्दुवदना बालकञ्चारुरूपिणम् ।
ग्राहेण ग्रस्यमानं तं वेपमानमवस्थितम् ।।३ ९।।
सोपि ग्राहवरः श्रीमान् दृष्ट्वा देवीमुपागताम् ।
तं गृहीत्वा द्रुतं यातो३७ मध्यं सरस एव हि३८।।8.12.४० ।।
स कृष्यमाणस्तेजस्वी नादमार्त्तन्तदा३९करोत् ।
अथाह देवी दुःखार्त्ता बालं दृष्ट्वा महाव्रता ।।४१।।
ग्राहराज महासत्व४० बालकं ह्येकपुत्रकम् ।
विसृजैनं महादंष्ट्र क्षिप्रं भीमपराक्रम ।४२।
ग्राह उवाच
यो देवि दिवसे षष्ठे प्रथमे समुपैति माम् ।
स आहारो मम पुरा विहितो लोककर्तृभिः ।।४३ ।।

३३ कृत्वैव (वं) - घ. । ३४ मप्राप्तात्म.. - घ, मप्राप्याथ? । ३५... नो - क. । ३६ श्च ज्वाली. - घ. । ३७ स्रोतो -क. । ३८ ह - फ. । ३९ स्तथा? - घ. । ८०... त्मञ्च? - क ।

50

सोयं मम महाभागे षष्ठेहनि गिरीन्द्रजे ।
ब्रह्मणा प्रहितो४१ नूनं नैनं मोक्ष्ये४२ कथञ्चन ।।४४। ।
देव्युवाच

यन्मया हिमवच्छृङ्गे चरितं तप उत्तमम् ।
तेन बाल४३ मिमं मुञ्च ग्राहराज नमोस्तु ते ।।४५।।
ग्राह उवाच
मा व्ययं तपसो देवि कार्षीः शैलेन्द्रनन्दने४४ ।
नैनं मोचयितुं शक्तो देवराजोपि यः४५ स्वयम् ।।४६।।
मह्यमीशेन तुष्टेन शर्वेणोग्रेण शूलिना ।
अमरत्वमवध्यत्वमक्षयं बलमेव च ।।४७।।
स्वयं ग्रहणमोक्षश्च ज्ञानञ्चैवाव्ययं पुनः ।
दत्तं ततो ब्रवीमि त्वां४६ नायं मोक्षमवाप्स्यति ।।४८।।
अथवा ते कृपा देवि भृशं बाले शुभानने४७ ।
ब्रवीमि यत् कुरु तथा ततो मोक्षमवाप्स्यति ।।४९
देव्युवाच
ग्राहाधिप वदस्वाशु४८ यत् सतामविगर्हितम् ।
तत् कृतं नात्र सन्देहो मान्या मे ब्राह्मणा४९ दृढम् ।।8.12.५० ।।
ग्राह उवाच
यत् कृतं वै तपः किञ्चिद्भवत्या स्वल्पमन्ततः५० ।
तत् सर्वं मे प्रयच्छस्व ततो मोक्षमवाप्स्यति ।।५१ ।।
देव्युवाच
जन्मप्रभृति यत् पुण्यं महाग्राह कृतं मया५१ ।
तत्ते सर्व मया दत्तं बालं मुञ्च ममाग्रतः ।।५२।।
४१ विहितो - क- घ. । ४२ न मोक्ष्येहं - घ., . क्षे - क. । ४३ सत्त्व - घ. । ४४ चिकीर्षीर्व्यर्थमेव हि - घ. । ४५ स - क. । ४६ त्वा - क । ४७ हता... - घ । ४८ वदाम्या... - घ. । ४९ मनो मे ब्राह्मणे - घ. । ।7५ ०...ल्पमनन्तशः - घ. । ५१ मया कृतम् - घ. ।

51

सनत्कुमार उवाच
प्रजज्वाल ततो ग्राहस्तपसा तेन बृंहितः ।
आदित्य इव मध्याह्ने दुर्निरीक्ष्यस्तदाभवत् ।।।५३।।
उवाच चेदं हृष्टात्मा देवीं लोकस्य धारिणीम् ।
देवि किं कृतमेतत्ते अनिश्चित्य५२ महाव्रते ।।५४।।
तपसो ह्यर्जनं दुःखं तस्य त्यागो न शस्यते ।
गृहाण तप एतच्च५३ बालं चेमं शुचिस्मिते५४ ।।५५।।
तुष्टोस्मि ते विप्रभक्त्या वरं तस्माद्ददामि ते५५ ।
सा त्वेवमुक्ता ग्राहेण उवाचेदं महाव्रता । ।५६।।
सुविचिन्त्य५६ महाग्राह कृतं बालस्य मोक्षणम् ।
न विप्रेभ्यस्तपः श्रेष्ठं श्रेष्ठा मे ब्राह्मणा मताः ।।५७।।
दत्त्वा चाहं५७ न गृह्णामि ग्राहेन्द्र विदितं हि ते ।

न हि कश्चिन्नरो ग्राह प्रदत्तं पुनराहरेत् ।।५८।।
दत्तमेतन्मया तुभ्यं नाददामि५८ हि तत्पुनः ।
त्वय्येव रमतामेतद्५९ बालश्चायं विमुच्यताम् ।।५९।।
तथोक्तस्तां प्रशस्याथ६० मुक्त्वा६१ बालं नमस्य च ।
देवीमादित्यसद्भासं६२ तत्रैवान्तरधीयत ।।8.12.६० ।।
बालोपि सरसस्तीरे मुक्तो ग्राहेण वै तदा ।
स्वप्नलब्ध इवार्थो यस्तत्रैवान्तरधीयत ।।६१। ।
तपसोथ व्ययं मत्वा देवी हिमगिरीन्द्रजा ।
भूय एव तपः कर्तुमारेभे यत्नमास्थिता ।।६२।।
कर्तुकामां तपो भूयो ज्ञात्वा तां शंकरः स्वयम् ।
प्रोवाच वचनं व्यास६३ मा कृथास्तप इत्युत६४ ।।६३।।

५२ अनिवाह्य - घ.,.. .न्त्य - क । ५३ एवैनं - घ. । ५४.. .वृते घ. । ५५ विप्रभक्त्या वरं तस्माद् ददामि सुव्रते तव - घ. । ५६ सुनिश्चित्य - । ५७ हं नहि - घ. । ५८... नि - क., .. मीह - घ । ५९ त्वयैव वरमाहात्म्यं - घ.। ६० प्रसन्नो - घ. । ६१ त्यक्त्वा - घ । ६२... वज्वालं - घ । ६३ भूयो - घ. ।
६४ इत्युमे - घ. ।

52

मह्यमेतत्तपो६५ देवि त्वया६६ दत्तं महाव्रते ।
तेनैतदक्षयं६७ तुभ्यं भविष्यति सहस्रधा ।।६४।।
इति लब्ध्वा वरं देवी तपसोक्षय्यमुत्तमम् ।
स्वयंवरमुदीक्षन्ती तस्थौ प्रीतियुता सती६८ ।।६५।।
इदं पठेद्यो हि नरः सदैव बालानुभावाचरणं६९ हि शम्भोः ।
स देहभेदं समवाप्य पूतो भवेद् गणस्तस्य कुमारतुल्यः ।।६६।।
इति स्कन्दपुराणे द्वादशोध्यायः

सनत्कुमार उवाच
विस्तृते हिमवत्पृष्ठे विमानशतसंकुले ।
अभवत् स तु कालेन शैलपुत्र्याः स्वयंवरः ।।१।।
अथ पर्वतराजोसौ हिमवान् ध्यानकोविदः ।
दुहितुर्देवदेवेन ज्ञात्वा तदभिमन्त्रितम् ।।२।।
जानन्नपि महाशैलः समाचारक्रियेप्सया ।
स्वयंवरं ततो देव्याः सर्वलोकेष्वघोषयत् ।।३ ।।
देवदानवसिद्धानां सर्वलोकनिवासिनाम् ।
वृणुयात् परमेशानं समक्षं येन मे सुता ।।४।।
तदेव२ सुकृतं श्लाघ्यं ममाभ्युदयसम्मतम् ।
इति संचिन्त्य शैलेन्द्रः कृत्वा हृदि महेश्वरम् ।।५।।
आब्रह्मकेषु३ लोकेषु देव्याः शैलेन्द्रसत्तमः ।

कृत्वा रत्नाकुलं४ देशं स्वयंवरमचीकरत्५ ।।६।।

६५ त्वया - घ. । ६६ तपो - घ । ६७... वमक्षयं - क., वद - घ. ६८ प्रीतिमुदा युत -घ । ६९ व चव र च - ध.। १ भग.. - घ. । १.. बं - घ. । ३ अपेक्ष्य लोकान् - ध. । ८ कृत्वा वतरस्वयं - घ. । ५ मथाकरोत् - ध ।

53

?? अथैवमाघोषितमात्र एव स्वयंवरे व्यास महीध्रपुत्र्याः ।
देवादयः सर्वजगन्निवासाः समाययुर्दिव्यगृहीतवेषाः६ ।।७। ।
प्रफुल्लपद्मासनसन्निविष्टः सिद्धैर्वृतो योगिभिरप्रमेयैः७ ।
विज्ञापितस्तेन महीध्रराजा८ पितामहस्तत्र समाजगाम ।।८।।
अक्ष्णां सहस्रं सुरराट् स बिभ्रद् दिव्या९ङ्गहारस्रगुदात्तरूपः ।
ऐरावतं सर्वगजेन्द्रमुख्यं स्रवन्मदासारकृतप्रवाहम् ।।९।।
आरुह्य सर्वामरराट् स वज्रं बिभ्रत्समागात् पुरतः सुराणाम् ।
तेजः प्रतापा१० ऽधिकदिव्यरूपः११ प्रोद्भासयन् सर्वदिशो विवस्वान् ।।8.13.१०।।
हैमं विमानं स चलत्पताक१२ मारुह्य१३ आगात् त्वरितं जवेन ।
मणिप्रदीप्तोज्ज्वलकुण्डलश्च वह्न्यर्कतेजःप्रतिमे विमाने ।।११।।
समभ्यगात् कश्यपविप्रसूनुरादित्य आराद् १४ भगनामधारी ।
पीनाङ्गयष्टिः सुकृताङ्गःहारस्तेजोबलाज्ञासदृशप्रभावः ।।१२।।
दण्डं समादाय कृतान्त आगादारुह्य भीमं महिषं जवेन ।
महामहीध्रोच्छ्रय१५ पीनगात्रः स्वर्णादिरत्ना१६ चितचारुवेषः१७ ।।१३।।
समीरणः सर्वजगद्विभर्त्ता विमानमारुह्य समभ्यगाद्धि ।
सन्तापयन्सर्वसुरासुरेशाँस्तेजोधिक१८ स्तेजसि सन्निविश्य१९ ।।१४।।
वह्निः समभ्येत्य सुरेन्द्रमध्ये ज्वलन् प्रतस्थौ वरवेषधारी ।
नानामणिप्रज्वलिताङ्गयष्टिर्जगच्चरन्दिव्यविमानमग्र्यम् ।।१५।।
आरुह्य सर्वद्रविणाधिपेशः स राजराजस्त्वरितोभ्यगाच्च ।
आप्याययन् सर्वसुरासुरेशान् कान्त्या च वेषेण२० च चारुरूपः ।।१६।। ज्वलन्महारत्नविचित्ररूपं२१ विमानमारुह्य शशी समागात् ।
श्यामाङ्गयष्टिः सुविचित्रवेषः सर्व२२ स्रगाबद्धसुगन्धिमालः२३ ।।१७।।

६,. शाः - ख घ. । ७... यः - घ. । ८.. .ज्ञा - क. ख. घ । ९... न्दि - क, र - क र - घ. । १० प्रभावा -घ. । ११... पं - घ. । १२ सपताकदण्ड - घ. । १३ आरूढ - घ । १४... आगाद् - क. ख. । १५.?. ध्राश्र... - घ-। १६... त्नो... - घ । १७.. शः - ख । १८.. .प - घ. । १९... वेश्य - घ.,... वेशः - ख. । २०... थ रूपेण - घ । २१. (त्रि).. .तांगं - ख । २२... शीतः - ध । २३... सुगन्धिमाल्यः - घ सुगन्धमाली - ख. ।

54

तार्क्ष्यं समारुह्य महीध्रकल्पं गदाधरोसौ त्वरितं समेतः ।
तथाश्विनौ देवभिषग्वरौ तौ२४ एकं२५ विमानं त्वरयाभिरुह्य ।।१८।।
मनोहरावुज्ज्वलचारुवेषावाजग्मतुर्देवसदः२६ सुवीरौ ।

शेषः सहस्रं स्फुरदग्निवर्णं बिभ्रत् फटानां ज्वलनार्कतेजाः । ।१९।।
सार्धं स नागैरपरैर्महात्मा विमानमारुह्य समभ्यगाच्च ।
दितेः सुतानां च महासुराणां वह्न्यर्कशक्रानिल२७ तुल्यभासाम् ।।8.13.२०।।
वरानुरूपं प्रविधाय वेषं२८ वृन्दं समागात् पुरतः सुराणाम् ।
गन्धर्वराजः स च चारुरूपी दिव्याङ्गनो दिव्यविमानचारी ।।२१ ।।
गन्धर्वसंघैः सहितोप्सरोभिः शक्राज्ञया तत्र समाजगाम ।
अन्ये च देवास्त्रिदिवौकसेशाः पृथक् पृथक् चारुगृहीतवेषाः ।।२२।।
आजग्मुरारुह्य विमानपृष्ठं गन्धर्वयक्षोरगकिन्नराश्च२९ ।
शचीपतिस्तत्र सुरेन्द्रसंघे३० राजाधिकाराधिकलक्ष्यमूर्त्तिः ।।२३।।
राज्ञां बलैश्वर्यकृतप्रमोहो वृथाधिकं यत्नमुपाचकार३१ ।
हेतुस्त्रिलोकस्य जगत्प्रसूति३२ र्माता च तेषां ससुरासुराणाम् ।।२४।।
पत्नी च शंभोः पुरुषस्य धाम्नो३३ गीता पुराणैः३४ प्रकृतिः परार्था ।
दक्षस्य कोपाद् हिमवद्गृहं सा कार्यार्थमागात् परमेशपत्नी ।।२५।।
एवं यत३५स्तान्न विदुः सुरेशा मोहस्ततस्तान्पर आविवेश ।
वरार्थमाजग्मु३६ रतो विमूढा ईशेन यस्माद् वृडिताः३७ कृतास्ते ।।२६।।
ततः प्रनृत्ताभि३८ रथाप्सरोभिर्गन्धर्वसंघैश्च सुगीतशब्दैः ।
स्थितैश्च नानाविधरूपवेषै३९ देवासुरादित्रिदिवोकसंघैः४०।।२७।।
विमानपृष्ठे मणिहेमचित्रे स्थिता चलच्चामरबीजिताङ्गी ।
सर्वर्तुपुष्पां४१ सुसुगन्धमालां४२ प्रगृह्य देवी४३ प्रसभं प्रतस्थे४४।।२८।।

२४ तु. - क. घ. । २५... वं - क. । २६. सभा - घ । २७... शनि... - घ. । २० देहं - घ । २९.. क्षोरग - क । ३०... मध्ये - ख । ३१ चचार - ख. । ३२... ते - ख. । ३३ चाग्र्या - ध. । ३४... णे - क. घ. । ३५ स्वत - ख.। ३६ तत समाजग्मु - क । ३७ कुपिताः - घ. । ३८ प्रवृ... - क. । ३१ रो (गी)तैश्च नाना विदधे (विध) शरागै -घ । ४० त्रिदिवेश - घ. । ४१... ष्यं - घ. । ४२.. .ल्य - घ. । ४३ मा (बा ?) ला - ख. । ४४... स्थौ - क. ।

55

सनत्कुमार उवाच
मालां प्रगृह्य देव्यान्तु स्थितायां देवसंसदि ।
शक्राद्यैरागतैर्देवैः स्वयंवर उपागतैः४५ ।।२९।।
देव्या जिज्ञासया शम्भुर्भूत्वा पञ्चशिखः शिशुः ।
उत्सङ्गतलसंसुप्तो बभूव सहसा विभुः ।।8.13.३ ०।।
अकस्मादथ तं देवी शिशुं पञ्चशिखं स्थितम् ।
ज्ञात्वा योगसमाधानाज्जहृषे प्रीतिसंयुता ।।३ १।।
अथ सा शुद्धसंकल्पा कांक्षितप्राप्तसत्फला ।
निर्वृतेव तदा तस्थौ कृत्वा हृदि तमेव तु ।।३२ ।।
ततो दृष्टवा शिशुं देवा देव्या उत्सङ्गवर्त्तिनम् ।
कोयमत्रेति संमन्त्र्य चुक्रुधु४६ र्भृशमर्दिताः ।।३३।।
वज्रमाका४७ रयत्तस्य बाहुमुत्क्षिप्य वृत्रहा ।

स बाहुरुत्थित४८स्तस्य तथैव समतिष्ठन ।।३४।।
स्तम्भितः शिशुरूपेण देवदेवेन शम्भुना ।
वज्रं क्षेप्तुं नो४९ शशाक बाहुञ्चालयितुं न च ।।३५।।
भगो नाम ततो देव आदित्यः काश्यपो बली ।
उत्क्षिप्य मुशलं दीप्तं क्षेप्तुमैच्छद्विमोहितः ।।३६।।
तस्यापि भगवान् बाहुं तथैवास्तम्भयत्तदा ।
शिरः प्रकम्पयन् विष्णुः सकोपस्तमवैक्षत ।।३७।।
तस्यापि शिरसो देवः खालित्यं प्रचकार ह ।
पूषा दन्तान्दशन्दन्तैः शर्वमैक्षत मोहितः ।।३८।।
तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शम्भुना ।
यमस्य स्तम्भितो दण्डस्तेजो वह्नेः शशेः५० प्रभा ।।३९।।

४५ मु... - घ. । ४६ चुक्षुभु - घ. । ८७ धा... - घ. । ४८ रुन्न... - घ. । ४९ न - क. घ । ५० शशिन इति वक्तव्ये शशेरिति छन्दोभङ्गभयकृतप्रयोग आर्पत्वेन कथंचित्समाधेयः ।



बलं वायोस्तथान्येषां तस्मिन्सर्वदिवौकसाम् ।
बलन्तेजश्च योगञ्च तथैवास्तम्भयद्विभुः ।।8.13.४० ।।
अथ तेषु स्थितेष्वेवं मन्युमत्सु सुरेषु तु ।
ब्रह्मा परमसंविग्नो ध्यानमास्थाय सादरम् ।।४१।।
बुबुधे देवदेवेशमुमोत्सङ्गसमास्थितम् ।
स बुद्ध्वा५१ परमेशानं शीघ्रमुत्थाय सादरम् ।।४२।।
ववन्दे चरणौ शम्भोरस्तुवच्च पितामहः।
पौराणैः५२ सामसंगीतैः पुण्याख्यैर्गुह्यनामभिः ।।४३।।
अजस्त्वममरो देवः स्रष्टा हर्ता विभुः परः ।
प्रधान५३ पुरुषस्तत्त्वं ब्रह्म ध्येयं तदक्षरम्५४ ।।४४।।
अमृतं परमात्मा च ईश्वरः कारणं महत् ।
ब्रह्मकृत् प्रकृतेः स्रष्टा सर्वसृक् परमेश्वरः ।।४५।।
न त्वं वै देवदेवेश शक्यो ज्ञातुं दिवौकसैः ।
मुनिभिर्वापि योगज्ञैर्ज्ञातुं देव न शक्यते ।।४६।।
अप्रमेयो महादेव वर्तसे त्वं स्वलीलया ।
महासर्गे महाकल्पे त्वमेकस्तिष्ठसि प्रभो ।।४७।।
अहमेव न जानामि चेष्टां तव महेश्वर ।
कथं विदन्ति त्रिदशा गंभीरं गहनात्मकम् ।।४८
इयञ्च प्रकृतिर्देव५५ सदा ते सृष्टिकारणम् ।
पत्नीरूपं समास्थाय जगत्कारणमागता ।।४९।।
नमस्तुभ्यं सदेशान देव्याश्चैव सदा नमः ।
प्रसादात्तव देवेश नियोगाच्च मया प्रजाः ।।8.13.५० ।।

देवाद्यास्त इमे सृष्टा मूढास्त्वद्योगमोहिताः ।
कुरु प्रसादमेतेषां यथापूर्वं भवन्त्विमे ।।५१।।
तत एवं तदा ब्रह्मा विज्ञाप्य परमेश्वरम् ।
स्तम्भितान्सर्वदेवाँस्तानिदमाह महाद्युतिः ।।५२।।
५१ ज्ञात्वा - घ। ५२ कीर्तनैः क। ५३. . तं - क। ५४... यम् - क ५५. . .वी - घ

57
मूढाः स्थ देवताः सर्वे५६ नैनं बुद्ध्यथ५७ शंकरम् ।
देवदेवमिहायातं ममैवोत्पत्तिकारणम् ।।५२।।
अयं रुद्रो महादेवः शर्वो भीमः कपर्द्दवान्५८ ।
उग्र ईशान आत्मा च अजः शंकर एव च ।।५३ ।।
देवदेवः परं धाम ईशः पशुपतिः पतिः ।
जगत्स्रष्टा जगद्धर्ता जगत्संस्थितिकारणम् ५९ ।।५४।।
गच्छध्वं शरणं शीघ्रमेत६० मेवामरेश्वराः ।
सार्धं मयैव देवेशं परमात्मान६१ मव्ययम् ।।५५।।
ब्रह्मणो वचनं श्रुत्वा देवो नारायणः प्रभुः ।
प्रहस्य विबुधान् सर्वान् बोधयामास लोकपाः ।।५६।।
एवमेव न सन्देहो यथाह पद्मसंभवः ।
पूर्वसर्गे नु विबुधा मया सार्धं महेश्वरः ।।५७।।
बहुरूपेण रूपेण जगद् व्याप्य व्यवस्थितः ।
तस्मात् सर्वात्मना भूत्वा गच्छध्वं शरणं हरम् ।।५८।।
ततस्ते स्तम्भिताः सर्वे तथैव त्रिदिवौकसः ।
प्रणेमुर्मनसा शर्वं भावशुद्धेन चेतसा ।।५९।।
अथ तेषां प्रसन्नोभूद् देवदेवो महेश्वरः ।
यथापूर्वं चकाराशु देवतानां तनूस्तदा६२ ।।8.13.६०।।
तत एवं प्रवृत्ते तु सर्वदेवनिवारणे६३ ।
वपुश्चकार देवेशस्त्र्यक्षं परममद्भुतम् । ।६१।।
तेजसा यस्य६४ देवास्ते चक्षुरभ्यर्थयन्६५ विभुम् ।
तेभ्यः परमकं चक्षुः स्ववपुर्दृष्टिशक्तिमत्६६ ।।६२।।
प्रादात् परमदेवेशः अपश्यंस्ते तदा प्रभुम् ।
ते दृष्टवा परमेशानं तृतीयेक्षणधारिणम् ।।६३ ।।
६ सर्वाः - घ. । ५७.. .त - क. घ. । ५८.. र्द्दिमान् - क. । ५९... ण. - क- । ६०... व - क., त - घ. । ६१ ...नन्द - घ. । ६२.. .था - घ. । ६३ .. णम् - घ । ६४ त... - घ. । ६५ रप्रा... - क. घ. । ६६.. .मान् - क. ।

58
ब्रह्माद्या नेमिरे तूर्ण्णं सर्व एव सुरेश्वराः ।

तस्य देवी तदा हृष्टा समक्षं त्रिदिवौकसाम् । ।६४।।
पादयोः स्थापयामास स्रग्मालाममितद्युतेः ।
साधु साध्विति संप्रोच्य६७ देवतास्ते पुनर्विभुम् । ।६५। ।
सह देव्या६८ नमश्चक्रुः शिरोभिर्भूतलाश्रितैः ।
अथास्मिन्नन्तरे व्यास ब्रह्मा लोकपितामहः ।।६६।।
हिमवन्तं महाशैलमिदमाह महाद्युतिः ।
श्लाघ्यः पूज्यश्च वन्द्यश्च सर्वेषां नस्त्वमेव हि ।।६७। ।
शर्वेण सह संबन्धो यस्य ते भूदयं महान् ।
क्रियताञ्चाशु उद्वाहः किमर्थं स्थीयते६९ परम् ।।६८। ।
ततः प्रणम्य हिमवान् तं देवं प्रत्यभाषत ।
त्वमेव कारणं देव येन शर्वोदयन्मम७० । ।६९। ।
प्रसादः सहसोत्पन्नो हेतुश्चापि त्वमेव हि ।
उद्वाहन्तु यथायोग्यं७१ तद्विधत्स्व पितामह ।।8.13.७० । ।
तत एवं वचः श्रुत्वा गिरिराजः७२  पितामहः ।
उद्वाहः क्रियतां देव७३ इति देवमुवाच ह ।।७१ । ।
तमाह शङ्करो देवं यथेष्टमिति लोकपम् ।
तत्क्षणाच्च ततो व्यास ब्रह्मणा कल्पितं पुरम्७४ ।।७२ ।।
उद्वाहार्थं महेशस्य नानारत्नोपशोभितम् ।
रत्नानि मणयश्चित्रा हेम मौक्तिकमेव च । ।७३ ।।
मूर्त्तिमन्त उपागम्य७५ अलञ्चक्रुः पुरोत्तमम् ।
चित्रा मारकती भूमिः सौवर्णस्तम्भशोभिता । ।७४। ।
भामयस्फाटिकाभित्ति७६  र्मुक्ताहारप्रलम्बिता ।
तस्मिन् शिवपुरे७७ रम्ये उद्वाहार्थं विनिर्मिते । ।७५।।

६७ संपूज्य - घ. । ६८... वा - घ. । ६९ स्थितये - क. । ७०... यं - ग. क. घ. । ७१ विवाहं तव जामातृक्(तुः?) - घ. । ७२... ज्ञः - क. । ७३ क्रियतां देव उद्वाह - घ. । ७४ पुरा - घ. । ७५ मु... - क. घ. । ७६ भासस्फटिकभित्तीभि - क. । ७७ रति... - घ. ।

59

शुशुभे देवदेवस्य महेशस्य महात्मनः ।
सोमादित्यौ७८ समं तत्रा७९ भासयेतां८० महामहीम् । ।७६ ।।
सौरभेयं मनोरम्यं गन्धमादाय८१ मारुतः ।
प्रववौ सुखसंस्पर्श ईशे भक्तिं प्रदर्शयन्८२ ।।७७।।
समुद्रास्तत्र चत्वारः शक्राद्याश्च सुरोत्तमाः ।
देवनद्यो महानद्यः सिद्धा मुनय एव च ।।७८। ।
गन्धर्वाप्सरसः सर्वे नागा यक्षाः सराक्षसाः ।
गुह्यकाः खेचराश्चान्ये किन्नरा देवचारणाः८३ ।।७९।।।
तुम्बुरुर्नारदो हाहा हूहूश्चैव तु सामगाः८४ ।।

रत्नान्यादाय वाद्यांश्च तत्राजग्मुर्मुदा युताः८५ ।।8.13.८ ० ।।
ऋषयः कृत्स्नशस्तत्र वेदगीतान् तपोधनाः८६ ।
पुण्यान् वैवाहिकान् मन्त्रान् जेपुः संहृष्टमानसाः । ।८ १ ।।
जगतो८७ मातरः सर्वा देवकन्याश्च कृत्स्नशः८८ ।
गायन्ति हृषिताः सर्वा८९ उद्वाहे परमेष्ठिनः ।।८२।।
ऋतवः षट् समं तत्र नानागन्ध९० सुखावहाः ।
उद्वाहः शङ्करस्येति मूत्तिमन्त उपस्थिताः । ।८३ । ।
नीलजीमूतसंधातमन्द्रध्वानप्रहर्षितैः ।
केकायमानैः शिखिभिर्नृत्यमानैश्च सर्वशः । ।८४। ।
विलोलपिङ्गलस्पष्टविद्युल्लेखावभासिता ।
कुमुदापीतशुक्लाभिर्बलाकाभिश्च शोभिता ।।८५।।
प्रत्यग्रसंजातशिलीन्ध्रकन्दला लता द्रुमाभ्युद्गतचारुपल्लवा ।
शुभाम्बु९१धाराप्रणयप्रबोधितै९२ र्मदालसैर्भेकगणैश्च नादिता ।।८६। ।

७८..? त्यैः - क. । ७९ तत्र - क. घ. । ८०?. .यन्तो - क.,.?. यन्तौ - घ. । ८१... माघ्राय - क. घ. । ८२ प्रसाद... - क. । ८३ चारिणः - घ., वारणाः - क. । ८४ सभागताः - - घ. । ८५ स्तदा पुरं - क. । ८६ स्तपो... - घ. । ८७ संगता - घ । ८८ सर्वशः - घ. । ८९... र्वे - घ. । ९०... धाः - घ । ९१ सुधा... - घ. । ९२ प्रलयप्रबोधितैः... - घ. ।



प्रियेषु मानोन्नतमानसानां सुनिश्चितानामपि कामिनीनाम् ।
मयूरकेकाभिरुतैः क्षणेन मनोहरैर्मानविभङ्गकर्त्री । ।८७ । ।
तथा त्रिवर्णोज्ज्वलचारुमूर्तिना शशाङ्कलेखाकुटिलेन सर्वतः ।
पयोदसंघातसमीपवर्त्तिना महेन्द्रचापेन भृशं विराजिता ।।८८। ।
विचित्रपुष्पस्पर्शात् सुगन्धिभि९३ र्घनाम्बुसंपृक्ततया९४ सुशीतलैः ।
विकम्पयन्ती९५ पवनैर्मनोहरैः सुरा९६ ङ्गनानामलकावलीः शुभाः ।।८९।
गर्जत्पयोदस्थगितेन्दुबिम्बा नवाम्बुसेकोद्गतचारुदूर्वा९७ ।
निरीक्षिता सादरमुत्सुकाभिर्निःश्वासधूम्रं९८ पथिकाङ्गनाभिः । । 8.13.९० ।। हंसनूपुरशब्दाढ्या समुन्नतपयोधरा ।
चलद्विद्युल्लताकाञ्ची९९ स्पष्टपद्मविलोचना ।।९ १ । ।
असितजलदवृन्दध्वानवित्रस्तहंसा
विमलसलिलधारापाततताम्रोत्पलाग्रा ।
सुरभिकुसुमरेणुक्लृप्तसर्वाङ्गशोभा
गिरिदुहितृ१०० विवाहे प्रावृडागाद्विभूत्यै । ।९२ । ।
मेघकञ्चुकनिर्मुक्ता पद्मकोशोद्गतस्तनी ।
हंसनूपुरनिर्ह्लादा१०१ सर्वरम्यदिगन्तरा ।।९३ । ।
विस्तीर्णपुलिनश्रोणी कूजत्सारसमेखला ।
प्रफुल्ले१०२ न्दीवराभोगविलोचनमनोहरा । ।९४। ।

पक्वबिम्बाधरपुटा कुन्ददन्तप्रहासिनी ।
नवश्यामालताश्यामरोमराजि१०३ परिष्कृता । ।९५। ।
चन्द्रांशुहारवर्येण सौधोरःस्थलसर्पिणा ।
प्रह्लादयन्ती चेतांसि सर्वेषां त्रिदिवौकसाम् ।।९६ । ।
प्रमदालिकुलो१०४ द्गीतमधुरस्वन१०५ भाषिणी ।
चलत्कुमुदसंघातचारुकुण्डलशोभिनी१०६ । ।९७। ।
९३ च्छुगन्धि ... - क. । ९४ सपक.ं?. - क., भयात्... - घ । ९५ विकल्प... - घ. । ९६ पुरा - घ. । ९७ प... - घ । ९८... म्रा - घ । ९९ वि ( ज?) ह्रा - घ । १००.. तु - क. । १. १... द - क. । १०२ पुष्करे - घ. । १०३... जी - क घ । १०४ समदासीगणो. - घ. । १०५... र - घ. । १०६... ता - घ ।


रक्ताशोकाग्रशाखोत्थपल्लवाङ्गुलिधारिणी ।
तत्पुष्पसंचयमयैर्वासोभिः समलंकृता ।।९८ । ।
रक्तोत्पलाग्रचरणा जातीपुष्पनखावली ।
कदलीस्तम्भचारूरुः शशाङ्कवदना शुभा१०७ । ।९९।।
पद्मकिञ्जल्कसंपृक्त१०८ पवनप्रकरैः१०९ सुरान्११० ।
प्रेम्णा स्पृशन्ती कान्तेव शरदागान्मनोरमा ।।8.13.१ ०० । ।
निर्मुक्ता१११ सितमेघकञ्चुकपुटा पूर्णेन्दुबिम्बानना
नीलाम्भोजविलोचनाब्मुकुल११२ प्रोद्भिन्नचारुस्तनो ।
नानापुष्परजःसुगन्धिपवना११३ एं ए प्रह्लादनी चेतसाम्
तत्रागात्११४  कलहंसनूपुररवा देव्या विवाहे शरत्११५ । । १०१ । ।
अत्यर्थशीतलांभोभिः प्लावयन्तौ गिरेः शिलाः ।
ॠतू हेमन्तशिशिरा११६ वाजग्मतुरभिद्युती११७ ।। १०२ ।।
ताभ्यामृतुभ्यां प्राप्ताभ्यां हिमवान् स नगोत्तमः ।
प्रालेयचूर्णवर्षिभ्यां क्षिप्रं रौप्य इवाबभौ ।। १०३ ।।
तेन प्रालेयवर्षेण घनेन स हिमाचलः ।
शोभनेन११८ तदा रेजे क्षीरोद इव सागरः । । १ ०४। ।
हिमस्थानेषु हेमन्तो११९ प्र्य नाशयामास पादपान् ।
साधूपचारान् सहसाकृतार्थ इव दुर्जनः । । १० ५। ।
प्रालेयपटलच्छन्नैः शृङ्गैः स१२० शुशुभे नगः ।
छत्रैरिव महाभोगैः पाण्डरैः पृथिवीपतिः । ।१ ०६ । ।
पाण्डराणि विशालानि श्रीमन्ति सुभगानि च ।
अद्रिशृङ्गाणि तुङ्गानि१२१ सौधानीव चकाशिरे । । १ ०७। ।
तस्याचलेन्द्रस्य दरीष्वतीव विचित्रसारङ्१२२ कुत्राकुलासु ।
प्रालेयधाराः शशिपादगौरा गोक्षीरधारा इव सन्निपेतुः । ।१ ०८ । ।
१०७ तथा - क. । १०८ सयुक्ता - घ. । १०९ पद्मव्यग्रकरा- - घ । ११० शुभा - घ. । १११.. निमुक्तोज्कि? त - घ. । ११२ कुमुद - घ. । ११३... न - क. घ. । ११४ तद्योगात् - घ । ११५ स्वयम् - घ. । ११६ शिशिरहेमन्ता -क. घ । ११७ रति... - क घ. । ११८ अगाधने ( धेन?) - घ. । ११९ हिमवान् - ग क. घ. ।

१२० सं - घ. । १२१ तुङ्गानि चाद्रिशृंगाणि - घ. । १२२ शार्दूल - घ. ।

62

बहुकुसुमरजोभिरुत्कराङ्गा१२३ हिमकणसङ्गसु१२४ शीतलाः समीराः । ववुरमरगणेश्वराम्बराणि प्रतनुतमानि शनैर्विकम्पयन्तः । । १०९ । ।
विधूतरू१२५ क्षानीलवीतदोषः१२६ प्रोद्भिन्नचूताङ्कुरकर्णपूरः ।
वसन्तकालश्च तमद्रिपुत्रीसेवार्थमागाद्धिमवन्तमाशु१२७ । । 8.13.११० ।।
तस्मिन्नृतावद्रिसुताविवाहसिषेवया तं गिरिमभ्युपेते ।
प्रादुर्बभूवुः कुसुमावतंसाः समन्ततः पादपगुल्मषण्डाः ।।१ ११ ।।
ववुः सुगन्धाः सुभगाः सुशीता विचित्रपुष्पाग्र१२८ रजोत्कराङ्गाः ।
मनोभवोद्रेककराः१२९ सुराणां सुरङ्गनानाञ्च मुहुः समीराः ।।१ १ २। ।
स्वच्छाम्बुपूर्णाश्च तथा नलिन्यः पद्मोत्पलानां कुसुमैरुपेताः १३० ।
ईषत्समुद्भिन्नपयोधराग्रा नार्यो यथा रम्यतमा बभूवुः । ।१ १३ ।।
ऋतोः स्वभावाच्च मदोद्भवाच्च फुल्लासु शाखासु निलीनपक्षाः ।
श्रोत्राभिरामं त्रिदशाङ्गनानां पुंस्कोकिलाश्चाविकलं१३१ विनेदुः । ।१ १४।।
नात्युष्णशीतानि सरःपयांसि किञ्जल्कचूर्णैः कपिलीकृतानि १३२ ।
चक्राह्वयुग्मैरुपनादितानि पपुः प्रहृष्टाः सुरदन्तिमुख्याः । । ११५ । ।
प्रियंगुसंवृतवरः वृताँश्चापि प्रियतरः । (?)
तर्जयन्त इवान्योन्यं मञ्जरीभिश्चकाशिरे१३३ ।।१ १ ६।।
हिमशुक्लेषु शृङ्गेषु तिलकाः कुसुमोत्कराः१३४ ।
शुशु - -१३५ कार्यमुद्दिश्य वृद्धा इव समागताः । । १ १७। ।
फुल्लाशोकलतास्तत्र रेजिरे शालसंश्रिताः १३६ ।
कामिन्य इव कान्तानां कण्ठालम्बितमूर्तयः १३७ ।। ११८ । ।
समदालिकुलोद्गीतलताकुसुमसंचयाः ।
परस्परं हि मालत्यो भाषन्त्य इव रेजिरे ।। ११९ ।।

१२३ रावृताङ्गा - घ. । १२४. म - घ. । १२५ वृ.. - घ. । १२६ शीतदोषः - घ. । १२७... शु - क. । १२८ पुष्पौग्र- घ. । १२९ न्मेष.?. - घ. । १३० स्वकुलं... - घ. । १३१ ति.. - क. घ. । १३२ कलुषी... - घ. । १३३ र्बभाषिरे- घ- । १३४ कुमुदोत्कराः - क. । १३५ शिशुभिः - घ. । १३६ साल - क. । १३७ बाहवः - घ. ।

63

नीलानि नीलाम्बुरुहैः पयांसि गौराणि गौरैश्च मृणालदण्डैः ।
तथैव चित्राणि१३८ भृशं कृतानि मत्तद्विरेफार्धविदष्टपत्रैः१३९ । । 8.13.१२० । ।
हैमानि विस्तीर्णजलेषु केषुचिन्निरन्तरं मारकतानि केषुचित् ।
वैदूर्यनालानि सरस्सु केषुचित् प्रजज्ञिरे पद्मवनानि सर्वतः ।। १२१ ।।
वाप्यस्तत्राभवन् रम्याः कमलोत्पलभूषिताः ।
नानाविहङ्गसंघुष्टा१४० हेमसोपानपंक्तयः । ।१ २२ ।।

शृङ्गाणि तस्य तु गिरेः कर्णिकारैः सुपुष्पितैः ।
समुच्छ्रितान्यविरलै१४१र्हैमानीव बभुर्मुने । ।१ २३ ।।
ईषदुद्भिन्नकुसुमैः पाटलै१४२श्चापि पाटला१४३ ।
संबभूवुर्दिशः सर्वाः पवनाकम्पिमूर्त्तिभिः१४४ ।।१ २४। ।
कृष्णाञ्जनाद्रिशृङ्गाभा नीलाशोकमहीरुहाः ।
गिरौ ववृधिरे फुल्लाः स्पर्धयेव १४५ परस्परम् । ।१ २५ । ।
चञ्चरीकविघुष्टानि१४६ किंशुकानां वनानि च ।
पर्वतस्य नितम्बेषु सर्वेष्वेवाभिजज्ञिरे१४७ । । १२६ ।।
तमालगुल्मैस्तस्यासीच्छोभा हिमवतस्तदा ।
नीलजीमूतसंघातैर्निलीनैरिव सन्धिषु ।। १ २७। ।
निकामपुष्पैः१४८ सुविशालशाखैः समुच्छ्रितैश्चम्पकपादपैश्च ।
प्रमत्तपुंस्कोकिलसंप्रलापै१४९ र्हिमाचलोतीव तदा रराज । । १२८ । ।
श्रुत्वा शब्दा१५० नृतुमदकलान्१५१ सर्वतः कोकिलानाम्
चञ्चत्पक्षाः सुमधुररुतं नीलकण्ठा विनेदुः ।
तेषां शब्दैरुपचितबलः पुष्पचापेषुहस्तः
सज्जीभूतस्त्रिदशवनिता वेद्धुमङ्गेष्वनङ्गः । ।१ २९ ।।
पटुसूर्यातपश्चापि प्रायः सोष्णजलाशयः ।
देवीविवाहसेवार्थं१५२ ग्रीष्म आगाद्धिमाचलम् ।। 8.13.१३० । ।

१३८ रक्तानि रक्तैश्च - घ. । १३९ विदह्यमालैः - घ. । १४०.. मसंयुक्ता - घ., ष्ट -क १४१ समुत्सृ -घ । १४२.. .कुमुभाः पादपाः.. घ. । १४३ - धिपाटला - घ । १४४ मूर्त्तयः - घ. । १४५... या च - घ. । १४६ विपुष्टानि - घ.। १४७ तस्मिन्काले गिरीशस्य सर्वस्थानेथ.?. - घ. । १४८ निमील... - घ. । १४९ पुंस्कोकिलानां च तथा... - घ.। १५०दं श० - क. घ । १५१ कल - क.घ । १५२ समये - घ ।



स चापि तरुभिस्तत्र बहुभिः कुसुमोत्करैः ।
शोभयामास शृङ्गाणि प्रालेयाद्रेः समन्ततः ।।१३ १।।
तस्यापि च ऋतोस्तत्र वायवः सुमनोहराः ।
ववुः पाटलविस्तीर्णकदम्बार्जुनगन्धिनः ।।१३२।।
वाप्यः प्रफुल्लपद्मौघाः केसरारुणमूर्तयः ।
अभवन् तटसंघुष्टकलहंसकदम्बकाः ।।१ ३३।।
तथा कुरबकाश्चापि१५३ कुसुमापाण्डुमूर्तयः ।
सर्वेषु जज्ञुः१५४ शृङ्गेषु भ्रमरावलिसेविताः ।।१ ३४।।
बकुलाश्च नितम्बेषु विशालेषु महीभृतः ।
उत्ससर्जुर्मनोज्ञानि कुसुमानि समन्ततः ।। १ ३५।।
इति कुसुमविचित्रसर्ववेषा१५५ विविधविहङ्गमनादरम्यदेशाः ।
हिमगिरितनयाविवाहभूत्यै षडुपययुर्ऋतवो मुनिप्रवीर ।।१३६।।

तत एवं१५६ प्रवृत्ते तु सर्वभूतसमागमे ।
नानावाद्यसमाकीर्णे ब्रह्मा मम पिता स्वयम् ।।१३७।।
शैलपुत्रीमलंकृत्य योगा१५७ भरणसंपदा ।
पुरं प्रवेशयामास.. .य१५८ मादाय लोकवित् ।।१३८।।
ततस्तु पुनरेवेशं१५९ ब्रह्मा व्यज्ञापयद्विभुम् ।
हविर्जुहोमि वह्नौ तु उपाध्यायपदे स्थितः ।।१३९।।
ददासि मह्यं यद्याज्ञां कर्तव्योयं क्रियाविधिः ।
तमाह शङ्करो देवं देवदेवो जगत्पतिः । ।8.13.१४०।।
यत्त्वदिष्टं१६० सुरेशान तत्कुरुष्व यथेप्सितम्१६१ ।
कर्तास्मि वचनं सर्वं ब्रह्मँस्तव जगद्विभोः१६२ ।।१४१ ।।
१५३... न्ये- घ. । १५४ जज्ञे - क., नग... - घ. । १५५... वृक्षा - घ. । १५६ तत्रोत्सवे - घ. । १५७ योग्या(?) । १५८ श्रय (?) - घ. । १५९ देवेशं - क. । १६० यद्य... - क. । १६१ ४.. यथोचि... - घ. । १६२... भो- घ ।

65
ततः प्रणम्य हृष्टात्मा ब्रह्मा लोकपितामहः ।
हस्तं देवस्य देव्याश्च१६३ योगबन्धे युयोज ह ।। १४२। ।
ज्वलनश्च१६४ स्वयं तत्र१६५ कृताञ्जलिरुप१६६स्थितः१६७ श्रुतिगीतैर्महामन्त्रैर्मूर्तिमद्भिरुपस्थितैः । । १४३ ।।
यथोक्तविधिना हुत्वा सर्पिस्तदमृत च हि१६८ ।
त्रिश्च१६९ तं ज्वलनं देवं कारयित्वा प्रदक्षिणम् । । १४४।।
मुक्त्वा१७० हस्तसमायोगं सहितः१७१ सर्वदेवतैः१७२ ।
सुतैश्च मानसैः सर्वैः१७३ प्रहृष्टेनान्तरात्मना । । १४५ ।।
वृत्ते उद्वाहकार्ये१७४ तु प्रणनाम वृषध्वजम् ।
योगेनैव तयोर्व्यास तदोमापरमेशयोः । । १४६।।
उद्वाहः स परो वृत्तो यं देवा न विदुः क्वचित् ।
इति ते सर्वमाख्यातं स्वयंवरमिदं शुभम् ।
उद्वाहश्चैव देवस्य शृण्वतः परमाद्भुतम् । । १४७।।
-इति स्कन्दपुराणे उमापरिणयनं नाम त्रयोदशोध्यायः

सनत्कुमार उवाच
अथ वृत्ते विवाहे तु भवस्यामिततेजसः ।
प्रहर्षमतुलं गत्वा देवाः सह पितामहाः१ । । १ । ।
तुष्टुवुर्वाग्भिरिष्टाभिः प्रणमन्तो महेश्वरम् ।
नमः पर्वतलिङ्गाय पर्वतेशाय वै नमः । ।२ । ।
नमः पवनवेगाय विरूपायाजिताय च ।
नमः क्लेशविनाशाय दात्रे च शुभसम्पदाम् । । ३ । ।

१६३ वै देवदेवस्य - घ । १६४ श्च - क. । १६५ कृत्वा - क. । १६६ मुप... - क. । १६७... त - क. । १६८ हविः- घ. । १६९ त्रिषु - घ. । १७० स्तुत्वा - घ. । १७१ हसित घ. । १७२ सर्वदैवतैः- घ. । १०३ सिद्धैः - घ । १७४... ले - क. घन् ।
१ देवताः सपितामहाः - घ. ।

66
नमो नीलशिखण्डाय अम्बिकापतये नमः ।
नमः पवनरूपाय शतरूपाय वै नमः । ।४। ।
नमो भैरवरूपाय विरूपनयनाय२ च ।
नमः सहस्रनेत्राय सहस्रचरणाय च । ।५ ।।
नमो वेदरहस्याय वेदाङ्गाय३ नमो नमः ।
विष्टम्भनाय४ शक्रस्य५ बाहो६र्वेदाङ्कुराय च । ।६ । ।
चराचराधिपतये शमनाय नमो नमः ।
सलिलेशयलिङ्गाय युगान्तायतलिङ्गिने७ । ।७।।
नमः कपालमालाय कपालस्रग्विणे नमः ।
नमः कपालहस्ताय दंष्ट्रिणे गदिने८ नमः ।।८।।
नमस्त्रैलोक्यनाथाय९ सप्तलोकनताय१० च ।
नमः खट्वाङ्गहस्ताय प्रमथार्त्तिहराय च ।।९।।
नमो यज्ञशिरोहर्त्रे कृष्णकेशा११पहारिणे ।
भगनेत्रनिपाताय पूष्णो दन्तहराय च । । 8.14.१० । ।
नमः पिनाकशूलासिखड्गमुद्गरधारिणे ।
नमोस्तु कालकालाय तृतीयनयनाय१२ च ।। ११ ।।
अन्तकान्तकृते चैव नमः पर्वतवासिने ।
सुवर्णरेतसे चैव शंखकुण्डलधारिणे । । १ २। ।
वाड्वले(?) र्योगनाशाय योगिनां गुरवे नमः ।
शशाङ्कादित्यनेत्राय ललाटनयनाय च । । १३ ।।
नमः श्मशानरतये श्मशानवरदाय च ।
नमो दैवतनाथाय त्र्यम्बकाय नमो नमः । ।१४।।

२.. पाय हराय - घ. । ३ देवाज्ञा (देवज्ञा?) य - घ. । ४ विश्वम्भराय - घ. । ५ शक्राय - घ. । ६ राहो - घ. । ७ युगान्तस्तोभ... - घ. । ८ ङ्ग.. - १) । ९ वाहाय - क. । १० रथाय - क. । ११.. स्य केशः... - घ. । १२ नयनत्रितयाय (?) ।

67
अशनीशतहासाय ब्रह्मण्यायाजिताय च ।
गृहस्थसाधवे नित्यं जटिने ब्रह्मचारिणे ।। १ ५। ।
नमो मुण्डार्धगण्डाय१३ पशूनां पतये नमः ।
सलिले तप्यमानाय योगैश्वर्यप्रदाय च । । १ ६।।

नमः शान्ताय दान्ताय प्रलयोत्पत्तिकारिणे ।
नमोनुग्रहकर्त्रे च स्थितिकर्त्रे नमो नमः । । १७। ।
नमो रुद्राय वसवे आदित्यायाा१४श्विने नमः ।
नमः पित्रेथ साध्याय१५ विश्वेदेवाय वै नमः ।। १८ । ।
नमः शिवाय१६ शर्वाय१७ उग्राय वरदाय च ।
नमो भीमाय सेनान्ये पशूनां पतये नमः ।। १ ९।।
शुचये रेरिहाणाय सद्योजाताय वै नमः ।
महादेवाय चित्राय नमश्चित्ररथाय च । ।8.14.२० ।।
प्रधानायाा१८प्रमेयाय कार्याय करणाय च ।
पुरुषाय नमस्तेस्तु पुरुषेच्छाकराय च । ।२१ । ।
नमः पुरुषसंयोगप्रधानगुणधारिणे ।
प्रवर्तकाय प्रकृतेः पुरुषस्य च सर्वशः । ।२२।।
कृता१९कृतस्य सं(?)वेत्रे फलसंयोगदाय च ।
कालज्ञाय च सर्वत्र नमो नियमचारिणे२० ।।२३ ।।
नमो वैषम्यकर्त्रे च गुणानां वृत्तिदाय च ।
नमस्ते२१ देवदेवेश नमस्ते भूतभावन ।
शिवः सौम्यः सुखो द्रष्टुं भव सोमो हि नः प्रभो । ।२४। ।
सनत्कुमार उवाच
एवं स भगवान्देवो जगत्पतिरुमापतिः ।
स्तूयमानः सुरैः सर्वैरमरानिदमब्रवीत् । ।२५। ।

१३ मुक्तार्धमुण्डाय - घ । १४ य नमो नमः - घ । १५ सवित्रे च सावित्राय - घ। १६ सर्वाय क। १७ -... य - क.। १८... य - क. । १९ कृते - घ. । २० का... - घ. । २१ नमोस्तु - घ. ।


द्रष्टुं सुखश्च सौम्यश्च देवानामस्मि भो सुराः ।
परं ब्रूत यथेष्टं वो२२ दातास्मि वदता२३नघाः ।।२६।।
ततस्ते प्रणताः सर्वे ऊचुः सब्रह्मकाः सुराः ।
तथैव भगवन्नस्तु२४ वर एषोवतिष्ठताम् ।।२७।।
यदा कार्यं तदा नस्त्वं२५ दास्यसे वरमीप्सितम् ।
एवमस्त्विवति तानुक्त्वा विसृज्य च सुरान् हरः ।
लोकांश्च प्रमथैः सार्धं विवेश भवनं ततः२६ ।।२८।।
यस्तु हरोत्सवमद्भुतमेतं२७ गायति दैवतविप्रसमक्षम् ।
सोप्रतिरूपगणेशसमानो देहविपर्ययमेत्य सुखी स्यात् ।।२९।।
सनत्कुमार उवाच
पाराशर्य स्तवं हीमं२८ शृणुयाद्यः पठेत वा ।
स स्वर्गलोकगगो२९ भूत्वा पूज्यतेमरराडिव३० ।।8.14.३०।।

इति स्कन्दपुराणे उमाविवाहस्तवो नाम चतुर्दशोध्यायः

सनत्कुमार उवाच
प्रविष्टे भवनं देवे सूपविष्टे वरासने
सवह्निर्मन्मथः क्रूरो देवं वेद्धुमना१ भवत् ।।१। ।
तमनाचारसंयुक्तं दुरात्मानं कुलाधमम् ।
लोकान् सर्वान् तापयानं२ सर्वेष्वकरुणात्मकम् ।।२।।
ऋषीणां विघ्नकर्तारं नियमानां व्रतैः सह३ ।
चक्राह्वयस्य रूपेण रत्या सह समा४गतम् ।। ३ ।।

२२ च - क. घ. । २३ वरदो - घ. । २४ तदैव भगवन् शंभो - घ. । २५ श्र - ध. । २६ भगवास्ता - घ- । २७ तद् -क. । २८ ह्येतत् - घ., ह्येतं (?) ' । २९ सर्वलोकगो - घ. । ३० चामराधिपैः - घ. ।
१ सन्धिरार्षः । ह्यभूदिति वा पाठः कल्प्यः । २ तापमान - घ. । ३ तथैव च - घ, । ४ तया - घ.


अथाततायिनं व्यास वेद्धुकामं सुरेश्वरम् ।
नयनेन तृतीयेन सावज्ञं तमवैक्षत । ।४। ।
ततोस्य नेत्रजो वह्निर्ज्वालामालासहस्रवान् ।
संवृत्य५ रतिभर्तारमदहत् सपरिच्छदम् । । ५। ।
स दह्यमानः करुणमार्त्तोक्रोशत विस्वरम् ।
प्रसादयँश्च तं देवं पपात स महीतले । । ६। ।
आशु सोग्निपरीताङ्गो मन्मथो लोकतापनः६ ।
पपात भस्मसाच्चैव क्षणेन समपद्यत ।।७। ।
पत्नी तु करुणं तस्य विललाप सुदुःखिता ।
देवं देवीञ्च७ रुदती८ अयाचत् करुणायती ।।८। ।
तस्यास्तत्९ क्रन्दनं१० श्रुत्वा११ देवौ तौ करुणात्मकौ ।
ऊचतुस्तां समालोक्य समाश्वास्य च१२ दुःखिताम् । ।९। ।
दग्ध एष ध्रुवं भद्रे१३ नास्योत्प१४त्तिरिहेष्यते ।
अशरीरोपि ते काले कार्यं सर्वं१५ करिष्यति । ।8.15.१ ० ।।
यदा तु विष्णुर्भविता वसुदेवसुतः शुभे ।
तदा तस्य सुतो ह्येष१६ पतिस्ते भविता रते१७ ।। ११ ।।
सनत्कुमार उवाच
ततः सा तं वरं लब्ध्वा कामपत्नी शुभानना ।
जगामेष्टं१८ तदा देशं प्रीतियुक्ता गतक्लमा१९ ।। १ २।।
सनत्कुमार उवाच
एवं दग्ध्वा स कामं तु शङ्करो मूढचेतसम् ।
प्रोवाच हिमवत्पुत्रीं भक्त्या मुनिवरस्य ह ।। १३ ।।

५ संभूत्तं - घ. । ६ पातनः - क. । ७ देवी देव च - घ । ८ दुःखार्ता - क । ९ श्र - घ । १० करणं - घ. । ११ ज्ञात्वा - घ. । १२ सु - घ. । १३ तत्र - घ. । १४ नान्यो. - घ. । १५ सर्वकायं - घ. । १६ प्येष - घ., यः स्यात् - क । १७ स भविष्यति - क. । १८. ष्टतमं - घ । १९ शंभोराधनकाम्यया - घ. ।



वसिष्ठो नाम विप्रेन्द्रो मां कृत्वा हृदि तप्यते ।
तस्याहं वरदानाय प्रयास्यामि महाव्रते । । १४। ।
एवमुक्त्वा स देवीं तु भक्त६० प्रीत्या तदा विभुः ।
जगाम तपतो२१ भ्यासं वसिष्ठस्य मुनेर्विभुः ।।१ ५।।
ततो मुनिवरश्रेष्ठं वरिष्ठं तपतां वरम् ।
वसिष्ठमृषिशार्दूलं तप्यमानं परन्तपः ।।१ ६।।
पूर्णे वर्षसहस्रे तु ज्वलमानमिवानलम् ।
उवाच भगवान् गत्वा ब्रूहि किन्ते२२ ददान्यहम्२३ ।।१७। ।
ददामि दिव्यं चक्षुस्ते पश्य मां सगणं द्विज ।
दृष्टवा तु स तमीशानं२४ प्रणम्य शिरसा प्रभुम्२५ ।
शिरस्यञ्जलिमाधाय२६ तुष्टाव हृषिताननः । । १८ ।।
वसिष्ठ उवाच
नमः कनकलिङ्गाय२७ वेदलिङ्गाय२८ वै नमः ।
नमः सहस्रलिङ्गाय वह्निलिङ्गाय वै नमः । ।१ ९। ।
नमः पुराणलिङ्गाय श्रुतिलिङ्गाय वै नमः ।
नमः परमलिङ्गाय२९ ब्रह्मलिङ्गाय वै नमः ।।8.15.२० । ।
नमस्त्रैलोक्यलिङ्गाय दाहलिङ्गाय वै नमः ।
नमः पर्वतलिङ्गाय स्थितिलिङ्गाय वै नमः । ।२ १ ।।
नमो रहस्यलिङ्गाय सप्तद्वीपाध्वलिङ्गिने३० ।
नमः सर्वार्थलिङ्गाय सर्वलोकाङ्गलिङ्गिने३१ ।।२२ । ।
नमोस्त्वव्यक्त३२ लिङ्गाय बुद्धिलिङ्गाय वै नमः ।
नमोहङ्कारलिङ्गाय भूतलिङ्गाय वै नमः । ।२३ । ।
नम इन्द्रियलिङ्गाय नमस्तन्मात्रलिङ्गिने ।
नमः पुरुषलिङ्गाय भावलिङ्गाय वै नमः । ।२४। ।

२० भक्ति -क, भक्त्या घ। २१ तप्यतो - क. । २२ किन्न - घ. । २३ वदा - क., ददानि ते - घ. । २४ ततस्तमीशानं - क. । २५ विभुः - घ. । २६ मादा... - घ- । २७... पिङ्गाय - घ. । २८ स्थिति... - घ. । २९ पवन.. - क. । ३० सर्वनोकाङ्गः.. - घ. । ३१ सत्वलिङ्गाय वै नमः - ध. । ३२ नमः प्रकृतिः.. - घ. ।



नमः सत्वोर्ध्वलिङ्गाय३३ तमोलिङ्गाय वै नमः ।
नमो रजोर्ध्वलिङ्गाय सत्त्वलिङ्गाय वै नमः ।।२५।।

नमो गगनलिङ्गाय तेजोलिङ्गाय वै नमः ।
नमो वामूर्ध्वलिङ्गाय शब्दलिङ्गाय वै नमः ।।२६।।
नम ऋक्स्नुतलिङ्गाय यजुर्लिङ्गाय वै नमः ।
नमस्तेथर्वलिङ्गाय सामलिङ्गाय वै नमः । । २७।।
नमो यज्ञाङ्गलिङ्गाय यज्ञलिङ्गाय वै नमः ।
नमस्तेनन्तलिङ्गाय वेदानुगतलिङ्गिने३४ ।।२८।।
दिश नः३५ परमं योगमपत्यं मत्समं तथा३६ ।
ब्रह्म चैवाक्षयं देव शमञ्चैव परं विभो ।
अक्षयत्वं च वंशस्य धर्मे च मतिमक्षयाम् ।।२९।।
सनत्कुमार उवाच
एवं स भगवान् व्यास वसिष्ठेनामितात्मना ।
स्तूयमानस्तुतोषाथ तुष्टश्चेदं तमब्रवीत् ।।8.15.३० ।।
भगवानुवाच
तुष्टस्तेहं ददाम्येतत्३७ तव सर्वं मनोगतम् ।
योगं च परमं सूक्ष्ममक्षयं सर्वकामिकम् ।।३१ ।। ३८
पुत्रञ्च३९ त्वत्समं दिव्यं तपोयोगबलान्वितम् ।
ज्ञानानि४० च४१ ऋषिश्रेष्ठ प्रतिभास्यन्ति चैव ते४२ ।।३२। ।
दमः शमस्तथा कीर्तिस्तुष्टिरक्रोध एव च ।
नित्यं तव भविष्यन्ति अमरत्वं च४३  सर्वशः ।।३३ ।।
अवश्यत्व४४ मसह्यत्वमक्षयत्वञ्च सर्वदा ।
वंशस्य चाक्षतिर्विप्र धर्मे च मति४५रव्यया ।
ब्रूहि चान्यानपि वरान् ददामि४६ ऋषिसत्तम ।।३४।।

३३ सर्वार्थ.. - घ- । ३४ देवानुगत ... - क. । ३५ मे - घ. । ३६ यथा - घ. । ३७ ददान्ये... - क. घ. । ३८ सार्वकामिदं - घ. । ३९ पौत्रञ्च - क. । ४० ददानि - क. । ४१ ते - क. घ. । ४२ ह - घ. । ४३ हि - घ. । ४४... ध्यत्व - क. । ४५ रति - घ. । ४६ ददानि - क. घ. ।

72
वसिष्ठ उवाच
भगवन् विदितं४७ सर्वं भूतं यद्वर्तनं विभो ।
भविष्यं४८ येन जानीयां तन्मे देव विधीयताम् ।।३५। ।
देव उवाच
भविष्यं स्वेच्छया कुर्यामिति ज्ञातुं न शक्यते ।
तदपि मत्प्रसादेन ज्ञास्यसि निर्वृतो भव ।।३६।।
वसिष्ठ उवाच
भगवन् विदितं सर्व भविष्यं देवसत्तम ।
तस्यापि तत्तथा देव यथा वा मन्यसे प्रभो ।।३७। ।

देवदेव उवाच
भविष्यं नान्यथा कुर्यादिति मे निश्चिता मतिः ।
- - - - - - - - कथं कुर्यात्तदन्यथा ।।३८।।
तथा तन्नात्र सन्देहो विहितं यद्यथा मया ।
तस्मात्तेनुग्रहं कर्ता भूयः पुत्रस्तवाव्यय ।।३९। ।
सनत्कुमार उवाच
एवमुक्त्वा ततो देवः कपर्दी नीललोहितः४८ ।
पश्यतस्तस्य विप्रर्षेः क्षणादन्तरधीयत५० ।।8.15.४० ।।
इति स्कन्दपुराणे वसिष्ठवरप्रदानं नाम पञ्चदशोध्यायः

४७ निगदितं - घ. । ४८.. ष्यन् (?) - घ. । ४९ वृषभध्बज इति च - घ. । ५० क्षणेना... - घ. ।


वरान् स१ लब्ध्वा भगवान् वसिष्ठोस्मत्पितामहः२ ।
कं पुत्रं जनयामास आत्मनः सदृशद्युतिम् ।।१ । ।
सनत्कुमार उवाच
तेनासौ वरदानेन देवदेवस्य शूलिनः ।
अरुन्धत्यामजनयत्तपोयोगबलान्वितम् ।।२ ।।
ब्रह्मिष्ठं शक्तिनामानं पुत्रं पुत्रशताग्रजम् ।
तस्य बाल्यात्प्रभृत्येव वासिष्ठस्य महात्मनः ।।३।।
रभसोपगता४ भक्तिरभवद् गोवृषध्वजे ।
स कदाचिदपत्यार्थमाराधयदुमापतिम् ।।४।।
तस्य तुष्टो महादेवो वरदोस्मीत्यभाषत ।
अथ दृष्टवा तमीशानमिदमाहानताननः५ ।।५।।
केन स्तोष्यामि६ ते७ देव यस्त्वं८ सर्वजगत्पतिः ।
सर्वान् धारयसे लोकानात्मना समयाद्विभो ।।६।।
त्वमेव भोक्ता भोज्यञ्च कर्ता कार्यं तथा क्रिया ।
उत्पादकस्तथोत्पाद्य उत्पत्तिश्चैव सर्वशः ।।७।।
आत्मानं पुत्रनामानं मम तुल्यं गुणैर्विभो ।
इच्छामि दत्तन्देवेश एष मे दीयतां वरः ।।८। ।
सनत्कुमार उवाच
तमेवंवादिनं देवः प्रहस्य वदतां वरः ।
उवाच वचसा व्यास दिशः सर्वा विनादयन्९ ।।९।।

१ लब्ध्वा तु - घ. । २ ने पि-... - घ. । ३ वसिष्ठस्य - घ. । ४ मनसा तपसा - क. । ५... माहर... - घ- ।
६ तो... - क. । ७ त्वां - घ । ८ यत्त्वं - घ. । ९ व्यपादयन्(?) - क, ।

त्वयाहं याचितः शक्ते स च ते संभविष्यति ।
त्वत्समः सर्ववेदज्ञस्त्वदीयो मुनिपुङ्गव१० ।।8.16.१०।।
बीजात्मा च तथोद्भूतः स्वयमेवान्तरात्मना ।
बीजात्मना न भवति परिणामान्तरङ्गतः ।।११।।
एवं स आत्मनात्मा नः संभूतोपत्यसंज्ञितः ।
स्वेनात्मना न भविता परिणामान्तरं गतः ।।१२।।
सनत्कुमार उवाच
एवमुक्त्वा तु तं देवः प्रहस्य च निरीक्षतः११ ।
जगाम सहसा योगी अदृश्यत्वमतिद्युतिः ।।१३ ।।
तस्मिन् गते महादेवे शक्तिस्तव पितामहः ।
वचस्तत् परिनिश्चित्य एवमेवेत्यमन्यत१२ ।।१४।।
अथ कालेतिमहति समतीते शुभप्रदे१३ ।
तपसा भावितश्चापि महताग्निसमप्रभः ।।१५।।
अदृश्यन्त्यां महाप्रज्ञ आदधे१४ गर्भमुत्तमम् ।
तस्यामापन्नसत्वायां राजा कल्माषपादृषिम् ।
भक्षयामास संरब्धो रक्षसा हृतचेतनः ।।१६।।
इति स्कन्दपुराणे षोडशोध्यायः

व्यास उवाच
कस्मात् स राजा तमृषिं चखाद तपसान्वितम् ।
रक्षसा स किमर्थं च हृतचेता१ भवन्नृपः ।।१ ।।

१० पुङ्गवः - - क. । ११ क्ष्यतः (त?) - क. । १२ वर एवं ह्यभाषत - घ. । १३... व्रते - क. । १४ ञ्चादधे - घ. । १ कृतचेता - घ. ।


वसिष्ठयाज्यो२ राजासीन्नाम्ना मित्रसहः३ प्रभुः ।
सौदासस्तस्य पुत्रोभू४दिन्द्रचन्द्रसमद्युतिः ।।२। ।
समागम्याब्रवी५च्छक्तिश्चरिष्ये दीक्षितो व्रतम् ।
ततो मे निशि राजेन्द्र सदैव६ पिशिताशनम् । ।३ । ।
इहागतस्य यच्छ त्वं शुचि७ सर्वगुणान्वितम् ।
सुप्रभाहार८ संयुक्तमेकस्यैकान्त९ एव च ।।४।।
एवमस्त्विति तेनोक्ते जगाम स महामनाः ।
अथास्यान्तर्हितं रक्षो१० नृपतेरभवत्तदा । ।५।।
सूदान्ना११ ज्ञापयत् तेन१२ तस्यार्थे मुनिसत्तम१३ ।
गते च दिवसे तात संस्मृत्याथ यतात्मवान् ।
सूदमाहूय१४ प्रोवाच आर्तवत्१५ स नराधिपः । ।६।।

सौदास उवाच
मया मृतवसो प्रातर्गुरुपुत्रस्य धीमतः ।
पिशितं संप्रतिज्ञातं भोजनं निशि संस्कृतम् ।।७।।
तत्कुरुष्व यथाक्षिप्रं कालो नोपरमेद्यथा ।
स एवमुक्तः प्रोवाच सूदो१६ मृतवसुस्तदा ।।८।।
राजंस्त्वया त्वनाख्यातं प्रागेव नरपुङ्गव ।
सांप्रतं नास्ति पिशितं स्तोकमप्यभिकांक्षितम् ।।९ ।।
पिशितस्यैव१७ चाल्पस्य बहूनां चैव भूभुजाम् ।
अमृतस्य(?) प्रदानाच्च न किंचिदवशिष्यते । ।8.17.१ ०।।
राजोवाच
जाने सर्वोपयोगं च जाने चा१८ दुष्कृतं तव ।
जाने स्तोकं च पिशितं कार्यं चेदं१९ तथाविधम् ।
मृग्यतां२० पिशितं क्षिप्रं लुब्धकं यत्र मन्यसे ।। ११ ।।

२ राज्ये - घ. । ३... सख - घ । ४ तस्य पुत्रश्च सौदासो - घ. । ५ वदत् - घ. । ६ सदे.,. - घ. । ७.. चिः - घ. । ८.. .कार - घ. । ९ स्ये... - घ. । १० वश्यो - घ. । ११ मुद्वाना.. - ध. । १२ तत्र - घ. । १३ मक्षः - घ.। १४ इदमाहूय - घ. । १५ मार्त.. - घ. । १६ सृतो - घ. । १७... स्येव - ध. । १८ वा - घ. १९ यथाविधम् -घ. । २० भु (यु? यो?) ज्यतां - घ. ।

76
सनत्कुमार उवाच
पिशितं मृगयन् यत्नान्नाप्यविन्दत कर्हिचित् ।
यदा न लब्धवान् मांसं तदोवाच२१ नराधिपम्२२ ।
मृगयन् सार (?)खि२३ न्नोस्मि शाधि२४ किं करवाणि ते । । १ २।।
सनत्कुमार उवाच
स एवमुक्तः सूदेन तस्मिन् काले नराधिपः ।
नोवाच किंचित्तं सूदं विमनाः२५ स बभूव ह । ।१ ३ ।।
इदमन्तरमासाद्य विश्वामित्रसमीरितः ।
राक्षसो रुधिरो नाम संविवेश नराधिपम् ।। १४। ।
राक्षसेन तदाविष्टो रुधिरेण दुरात्मना ।
उवाच सूदं२६ शनकैः कर्णमूले महाद्युतिः । ।१ ५।।
गच्छ यत्किंचिदानीय मांसं मानुष्यकं ततः ।
गार्दभं वाप्यथौष्ट्रं वा शीघ्रं२७ संस्कर्तुमर्हसि । । १ ६। ।
किमसौ ज्ञास्यते रात्रौ त्वया भूयश्च संस्कृतम् ।
रसवद् गन्धवच्चैव२८ क्षिप्रमेव समानय । । १७।।
सनत्कुमार उवाच
एवमुक्तस्तु तेनाथ मानुषं मांसमाददे ।

राजापकारिणो व्यास सूदो२९ शिष्टस्य कस्यचित् । ।१८। ।
अथार्धरात्रसमये भास्कराकारवर्चसम् ।
राजानल३० समप्रख्यमपश्यन्मुनिसत्तमम् ।। १ ९। ।
स तमर्घ्येण पाद्येन आसनाग्र्यवरेण च ।
अर्नयित्वा३१ तु विधिवदन्नमस्योपपादयत्३२ ।।8.17.२ ० ।।

२१ तत्रौ घ । २२ प घ २३ थि घ २४ सा घ। २५ विमूढः ? । २६ शृंग घ २७ सर्वं घ २ ६७। ग - घ. । २ ७- सर्वं - घ. । २८ वशबंधयुव - घ. । ( रसगन्धयुतं चैव?) । २९ मृतो - ध. । ३० शतानन... - घ. । ३१ सोर्चवित्वा - घ । हे २ त्वन्नभस्यो... - घ. ।



स तदन्नं३३ समानीतं३४ समालभ्य महातपाः ।
चुकोप क्षोभितं चापि पार्थिवं प्रहसन्निव । ।२१ ।।
शक्तिरुवाच
पार्थिवाधम विप्राणां भोजनं राक्षसोचितम् ।
न दीयते विधिज्ञेन त्वं तु मामवमन्यसे ।।२२ ।।
यस्मात्त्वं राक्षसमिदं मह्यं दित्ससि भोजनम् ।
तस्मात्त्वं कर्मणानेन पुरुषादो भविष्यसि ।।२३।।
सनत्कुमार उवाच
स एवमुक्तस्तेजस्वी राजा संचिन्त्य तत्तदा ।
उवाच क्रोधरक्ताक्षो राक्षसाविष्ठचेतनः । ।२४।।
पुरुषादो भवेत्येवं मामवोचद् भवान् यतः ।
अतस्त्वां भक्षयिष्यामि भ्रातृभिः सहितं द्विज ।। २५।।
भक्षयित्वा विशुद्ध्यर्थं मुक्तशापस्ततः परम् ।
चरिष्यामि तपः शुद्धं संयम्येन्द्रियसंयुतम् (?) ।
पित्रा तवाभ्यनुज्ञातः स्वर्गे वत्स्ये यथेप्सितम् । ।२६ । ।
इति स्कन्दपुराणे एकाशीतिसाहस्र्यां संहितायामम्बिकाखंडे कल्माषपादशापः सप्तदशोऽध्यायः

सनत्कुमार उवाच
ततः स राजा स्वं राज्यमुत्सृज्य सह भार्यया ।
वनं विवेश तत्राभूत् पुरुषादो महाबलः ।।१ ।।
सोभक्षयत तत्राग्रे शक्तिमेव महामुनिम् ।
ततो भ्रातृशतं तस्य वसिष्ठस्यैव पश्यतः ।।२ । ।

३३.. र्थं - घ. । ३४... सीनं - घ. ।



ततः पुत्रवधं घोरं दृष्ट्वा ब्रह्मसुतः प्रभुः ।
नोत्ससर्ज ततः क्रोधं वसिष्ठः कौशिकं प्रति । ।३ ।।

पुत्रशोकेन महता भृशमेवान्वतप्यत१ ।
स बद्ध्वा महतीं कण्ठे शिलां ब्रह्मसुतः प्रभुः ।।४।।
नद्यामात्मानमसृजच्छतरात्रं वसत्तया(?) ।
- - - इति तां प्राहुर्मुनयः शंसितव्रताः२ । ।५। ।
पुनः पाशैर्दृढं बद्ध्वा अन्यस्यामसृजद् वशी ।
तस्यां विपाशः संवृत्तो विपाशा साभवत्ततः ।।६ ।।
ततो वापीं समामाद्य निराहारो जितेन्द्रियः ।
वायुभक्षस्तदा तस्थौ स्वदेहं परितापयन् । ।७।।
अथ शुश्राव गच्छन्तं ध्वनिमेकस्य सुस्वरम् ।
अधीयानस्य तत्रासौ३ ध्यानमेवान्वपद्यत । ।८।।
अथैनं चारुसर्वाङ्गी पीनोन्नतपयोधरा ।
उपतस्थेग्रतः पत्नी शक्तेर्दीनानने४क्षणा ।।९ ।।
तामुवाच कुतस्त्वं वै कस्यैवं श्रूयते ध्वनिः ।
सोवाच५ दीनया वाचा वदतां शुश्रुवं(?) तदा ।। 8.18.१० ।।
अदृश्यन्त्युवाच
यदैव सुतदुःखेन६ निर्गतोस्या७श्रमाद् गुरो८ ।
तदाप्रभृत्येव चाहं भगवन्तमनुव्रता ।। ११ । ।
अधीयानस्य चैवायं९ ध्वनिः पौत्रस्य ते विभो ।
उदरस्थस्य श्रुतो मे१० मा दुःखं११ दुःसहं१२ कृथाः ।। १ २।।

१ नु कीर्त्यते - घ. । २ संशि.. - घ. । ३,.. सु (शु?) - घ. । ४ नल ( '?) - घ. । प्र नोवाच - घ. । ६ सुखदुःखेन - घ. । ७ तस्या - घ. । ८... रोः - घ. । ९... हं - घ. । १० मे मृतो - घ. । ११ न्सुदुःखे? ( खेदं?) - घ. । १२ दूसमः - घ. ।

79

सनत्कुमार उवाच
------ -- - - - - - - - - -- -- --- --- --- -- - -- -- ।
इदानीमस्ति मे वत्से१३ जीविताशेति सो१४ ब्रवीत्१५ ।। १३ ।। ।।
- - - - - - - - - - - - - - - - - - ।। १४। ।
- - - - - - -- -- - - - -- - - -- -- - - - -- -।
- - - - - - - - - - - - - - - - - । । १५ । ।
- - - - - - - - - - - - - - - - - - ।
उवाच चैनं दुष्टात्मन् दहेयं त्वां सबान्धवम् । । १६ । ।
- - - -- - - - - - - - - -- - - - - - - -- - --- - -।
दग्धेन च१६ त्वया किं मे गच्छ मुक्तोसि दुर्मते । । १७। ।
सनत्कुमार उवाच
ततः स मुक्तो दीनात्मा राक्षसः क्रूरकर्मकृत् ।
प्रणम्य सहसा भीतो जगाम कौशिकान्तिकम्१७ ।। १ ८। ।

निशाचरे गते राजा प्रणम्य शिरसा मुनिम् ।
प्रसादयामास तदा स चोवाचेदमर्थवत् ।।१ ९।।
न दोषस्तव राजेन्द्र रक्षसाधिष्ठितस्य वै ।
कृतास्तेन कृताः (?) पुत्रा निमित्तं तत्र राक्षसः ।।8.18.२ ० ।।
प्रशाधि राज्यं राजेन्द्र पितृपैतामहं१८ प्रियम् ।
ब्रूहि किं वा प्रियं तेद्य करोमि नरपुंगव । ।२ १ । ।
राजोवाच
इच्छामि भगवन् पुत्रं त्वयो१९ त्पादितमच्युत ।
देव्यामस्यां महासत्वं तत्कुरुष्व मम प्रियम् । ।२ २ । ।

१३ त्स - घ. । १४ वा ( तां) - घ. । १५ इतः परमपि मूले कियानंशः खण्डित इव प्रतिभाति । १६ न - घ. । १७ न्ताकं - घ. । १८ ह... - घ. । १९ म... - घ,, ममो? ।



सनत्कुमार उवाच
एवमस्त्वित्यथोक्त्वासौ तस्य२० पत्न्यां महाव्रत२१ ।
पुत्रं च लोष्टकं२२ नाम जनयामास विश्रुतम् ।।२३ । ।
तं लोष्टकं ततो राज्ये स्व२३ पुत्रमभिषिच्य सः ।
जगाम वनमेवाथ सभार्यस्तपसि२४ स्थितः ।।२४।।
वसिष्ठस्यापि कालेन शक्तेः पुत्रः प्रतापवान् ।
अदृश्यन्त्यां भवत्पुत्रो नाम्ना स हि पराशरः ।।२५।।
वसिष्ठं तु तदा धीमान् तातमेवाभ्यमन्यत ।
तात तातेति च मुहुर्व्याजहार पिता गुरुः । ।२६ ।।
ततः कदाचिद् विज्ञाय भक्षितं रक्षसाशुचिम् ।
पितरं तपसा मंत्रै रजरक्षकृतौ (?) तदा । ।२७,।
ततः कोट्यः सपंचाशद्रक्षसां क्रूरकर्मणाम् ।
जुहावाग्नौ महातेजास्ततो ब्रह्माभ्यगाद् द्रुतम् ।।२८ ।।
सुतमभ्येत्य संपूज्य वसिष्ठसहितः प्रभुः ।
ऋषिभिर्दैवतैश्चैव इदमाह पराशरम् ।।२९। ।
ब्रह्मोवाच
देवतास्तर्पयन्ति स्म यज्ञैर्मन्त्रपुरःसरैः ।
अष्टमं स्थानमेतद्धि देवानां मा२५ त्व२६मीदृशम् ।।8.18.३ ० ।।
पराशर उवाच
सह देवैरहं सर्वान् लोकान् धक्ष्यामि पावकैः ।
दग्ध्वान्यान् प्रथयिष्यामि तत्रालोकान्न संशयः ।।३ १ । ।
सनत्कुमार उवाच
तस्यैवं गर्वितं वाक्यं श्रुत्वा देवः पितामहः ।

उवाच श्लक्ष्णया वाचा सान्त्वयन्२७ तमिदं वचः । ।३२ ।।

२०... स्यां - घ. । २१... त - घ. । २२ नोष्टकं... - घ. । २३... ज्यम... - घ.,.. .ज्ये स - पुत्रमभिषिच्य च (?)। २४... से - घ. । २५.., ना - घ । २६ त्य - घ । २७ शान्तरं त्व - घ., सान्तरं त(?) ।

81

पितामह उवाच
कृतमेतन्न सन्देहो यथा ब्रूषे महामुने ।
क्षन्तव्यं सर्वमेतत्तु अस्मत्प्रिय२८ चिकीर्षया । ।३ ३ ।।
यैस्ते पिता महाभाग भक्षितः सहसोदरः२९ ।
त एवाग्नौ३० तु होतव्या विश्वमित्रस्य पश्यतः । ।३४। ।
अन्येषां स्वस्ति सर्वत्र देवानां सह राक्षसैः ।
तस्य संकल्पसंतुष्टो मन्यं द्यतमुदाहरत्३१ ।।३ ५।।
वसिष्ठस्य महाभाग त्वं निवारय पौत्रकम् । (?)
देवाः प्राञ्जलयः सर्वे प्रणेमुस्ते महामुनिम् ।।३६।।
ऋषयश्चैव स क्रुद्धस्तपोयोगबलान्वितः ।
विहिद्य (?) तपसो योगाद्धोष्ये दीप्ते विभावसौ । ।३७। ।
सनत्कुमार उवाच
ततो देवाः सगन्धर्वाः पितामहपुरस्सराः ।
प्रभावं तस्य ते ज्ञात्वा पराशरमपूजयन् ।।३८। ।
हतेषु च ततस्तेषु रक्षस्सु सुदुरात्मसु ।
संजहार ततः सत्रं ब्रह्मणोनु३२ मते सदा ।। ३ ९।।
सनत्कुमार उवाच
य इदं श्राद्ध३३ काले वा दैवे कर्मणि वा द्विजान् ।
श्रावयीत शुचिर्भूत्वा न तं हिंसंति राक्षसाः । ।8.18.४० ।।
पराशरस्येदमदीनसंभवं विशुद्धवाक्कर्मविधानसंभवम् ।
निशम्य - - - - - - - - - रीयुः३४ कुलसिद्धिसंभवम् ।४१ । ।
इति स्कन्दपुराणे राक्षससत्रं नामाष्टादशोऽध्यायः ।

२८... त्प्रीति - घ. । २९ सहसा... - घ. । ३० थौ - घ. । ३१... रेत् - घ. । ३२ ब्राह्मणान्न - घ. । ३३ प्राह - घ.। ३४ रियु - घ. ।

82

सनत्कुमार उवाच
एवं तव पिता व्यास रक्षःसत्रं समाहरत् ।
समापयित्वा च पुनस्तपस्तपति सत्वरम्१ । ।१ ।।
तमागत्य वसिष्ठस्तु तपसा भास्करद्युतिम् ।
उवाच प्रीतिसंपन्नमिदमर्थवदव्ययः२ ।।२ । ।

वसिष्ठ उवाच
पितरः पुत्रकामा वै तपस्तत्स्वातिदुश्चरम् ।
पुत्रमुत्पादयंति स्म तपोज्ञानसमन्वितम् ।।३ ।।
यत्नतः संततिश्चैव ज्ञानवाँस्तपसान्वितः ।
करिष्यति गतिं दैवीमिति वेदविदो विदुः ।।४।।
सद्यस्तपोन्वितश्चैव ज्ञानवान् यशसान्वितः ।
पुत्रः पुत्रवतां श्रेष्ठो विहीनः (?) प्रजया विभो । ।५।।
तस्मात् पितृणामानृण्यं गच्छ व्रतवतां वर ।
सुतमुत्पादय क्षिप्रं सममेव च भावन । ।६।।
सनत्कुमार उवाच
स एवमुक्तस्तेजस्वी वसिष्ठेन महात्मना ।
मैनाकं पर्वतं प्राप्य तपस्तेपे सुदुस्तरम् ।।७।।
तस्य कालेन महता तपसा तारितस्य तु ।
उमापतिर्वरं प्रादात् स च वव्रे वरं सुतम्३ ।।८।।
स लब्ध्वा वरमागत्यान्वेषयत् पुत्रकारणात् ।
क्षेत्रं सुपरिशुद्धं च स्वपुत्रो यत्र सम्भवेत् ।।९।।
स भ्रमन् दाशराजस्य४ दुहितृत्वमुपागताम् ।
पितृकन्यां ततः कालीमपश्यद्दिव्यरूपिणीम ।। 8.19.१० ।।

१ सस्वरम् - घ. । २... मदव्यय - घ. । ३ शुभम् - घ. । ४ दासराजस्य - घ.


मत्स्यगर्भसमुत्पन्नां मत्स्यबीजोद्भवां पुरा ।
अद्रिकामप्सरःश्रेष्ठां ब्रह्मतेजोमयीं शुभाम् । ।१ १ । ।
तस्यां स जनयामास वरं दत्त्वा महातपाः ।
भवन्तं तपसां योनिं श्रौतस्मार्तप्रवर्तकम् ।।१ २। ।
तव पुत्रोभवच्चापि शुको वेदविदां वरः ।
तस्य पुत्राश्च चत्वारः कन्या चैका सुमध्यमा । । १ ३।।
व्यास उवाच
तादृग् वैरं परं ब्रह्मन् विश्वामित्रवसिष्ठयोः ।
कथं चापि गतं भूय एतदिच्छामि वेदितुम् ।।१४। ।
सनत्कुमार उवाच
पराशरे तु गर्भस्थे रिपुत्वं६ गाधिजे गते ।
सरस्वत्यां कुरुक्षेत्रे वसतोः स्वाश्रमे तयोः७ । ।१५।।
तत्र वैरमनुस्मृत्य विश्वामित्रेण धीमता ।
नियतस्य वसिष्ठस्य हतं पुत्रशतं रुषा । । १ ६।।
।

मुनिरप्याह तत्रासौ विश्वामित्रः प्रतापवान् ।।१७।।
सरस्वतीमथैकान्ते वसिष्ठं - - - - - ' ।
स्रोतसा महता क्षिप्रं स्नायमानमिहानय ।। १८ ।।
सैवमुक्ता९ तु तं गत्वा वसिष्ठं प्राह दुःखिता ।
यदुक्तवाँस्तु गाधेयः१० स चोवाच महानदीम् ।। १ ९।।
एवं कुरु महाभागे मां ११ नयस्व यथेप्सितम् ।
मा ते क्रूरः स गाधेयः शापं दद्यात् सुदुस्तरम् । ।8.19.२ ० ।।
सनत्कुमार उवाच
गाधेयस्य ततः सा तु जुह्वतोथ दिवाकरे ।
मध्यं प्राप्तेनयच्चैव१२ वसिष्ठं स्रोतसा शुभा । ।२१ ।।

५ यस्यां - घ । ६.. त्र - ध. । ७ द्वयो र्वस्थाप्रमे (.. रप्याश्रमे?) - घ. । ८ मे महारगे - घ. । ९.. क्त्वा - घ. । १०... यं - घ. । ११ मा - घ. [ १२ त्वेव - घ. ।


स तं दृष्ट्वा हृतं व्यास स्रोतसा मुनिसत्तमम् ।
उवाच छद्मना सोस्मद्वेगेनापहृत१४ स्त्वया ।।२२।।
तस्मात्त्वं कर्मणानेन सातृक्तोया भविष्यसि ।
विश्वामित्रेण सा शप्ता नदी लोकसुखप्रदा ।। २३ । ।
अवहद्रुधिरं घोरं१५ मासं मेदस्तथैव च ।
त्रिश्वामित्रस्ततो गत्वा देवानामधिपं तदा१६ । ।२४। ।
उवाच वज्र मे देही शरीरं चैव कौशिकः१७ ।
दुर्वृत्तं हि हनिष्यामि वसिष्ठं ब्राह्मणाधमम् ।।२५।।
पुत्राः शक्र मया तस्य निहताः पापचेतसः ।
तान् हत्वापि न मे शान्तिर्भवित्री चैव देवप । ।२६।।
. शक्र उवाच
ब्रह्मज्ञानौ वसिष्ठश्च तव चात्मनि सत्तम । ( -)
निर्वेशे सोममेतेषां नो मुक्तं भव वेदितुम् (?) ।।२७। ।
ततः समभिक्रुद्धोसौ गाधेयः शक्रमोजसा ।
योगात् प्रच्यावयामास१८ शरीरात् कालिनन्दन । ।२८।।
स तच्छरीरमाविश्य वृत्रशत्रोः प्रतापवान् ।
वज्रोद्यतकरो भूत्वा छिद्रान्वेष्यवतिष्ठत ।।२९।।
ज्वलंतं स त१९मग्निं तु (?) वज्रेण शतपर्वणा ।
चिच्छेद सप्तथा कृत्वा मुनीनामेव पश्यताम् ।।8.19.३ ० ।।
खण्डान्यथ समानीय क्षिप्रमेव मुनिः स्वयम् ।
संधाय स्वशरीरं२० वै सक्रोधो वाक्य२२ मब्रवीत् ।।३ १ । ।
तिष्ठ कौशिक मेदानीं मया दृष्टो गमिष्यसि ।
- - - - - - - - - - - - - - - - । ।३ २।। ।

दिवाकराद् वै (?) कबन्धाः पेतुः शतसहस्रशः ।।३ ३ ।।

१३ म घ । १४... कृत - घ. । १५ चौर - घ. । १६.. ?स्तथा - घ. । १७. क - ध. । १८ प्रछा... - घ. । १९ शत - घ. । २० स शरीरं - घ । २१ राज्य - घ. ।

85
अशून्यं२२ रुधिरं चैव गगनाच्च पपात ह ।
ववुश्चात्यशुभा२३ वाता विमानान्यरातन् दिवः२४ ।।३४।।
नेयुर्वेदाश्च विप्राणां नागाश्चाकाशगास्तथा ।
एवमादीँस्तदोत्पातान् विविधाँल्लोकनाशनान् । ।३५।।
दृष्टवा देवाः समुनयस्तमाहुर्गाधिनन्दनम् ।
वसिष्ठश्च महातेजास्त्वं च गाधेय धार्मिक । । ३ ६। ।
अमरौ जरया त्यक्तौ तपोयोगबलान्वितौ ।
युवयोर्हि क्षयं नास्ति क्षयं च न करिष्यथः ।।३७।।
देवानां सर्वलोकानां युध्यमानौ२५ परस्परम् ।
मत्तयोर्गजयोर्यद्वदरण्ये युध्यमानयोः ।। ३८ ।।
वीरुधां भूरुहां चैव संमर्द्देन क्षयो महान्२६ ।
तथा वैरेण युवयोः प्रवृत्तेन महात्मनोः२७ ।।।३ ९।।
लोकानामनयो व्यक्तं२८ भविष्यति न संशयः ।
तस्माद्विनाशं - - - लोकानामृषिभिः सह ।।8.19.४० ।।
युवयोरस्तु सख्यं च क्षयो वैरस्य चाथ वै ।
स एवमुक्तो गाधेयो मुनिभिर्दैवतैः सह ।।४१ ।।
एवमस्त्विवति तान्प्राह विस्मितस्तेजसा तदा ।
ततो वसिष्ठमप्येवमूचुः सर्वे दिवौकसः । ।४२।।
असा२९वपि तथैवेति तेन सख्यं चकार ह ।
ततःप्रभृति सर्वं वै जगत् स्थावरजङ्गमम् ।।४३ । ।
ससुखं प्रीतिसंयुक्तं मुमुदे३० विगतज्वरम्३१ ।
- - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - ।। १४।।

२२... न्यो - घ. । २३ प्यसुरा - घ. । २४.. द् गिर. - घ. । २५.. न. - घ. । २६ सप्तवैद्यनयोर्म... - घ, (?) व -घ. । २७ .. ना घ. । २८ व्र्यक्तं - घ. । २९ तासा... - घ. । ३० ययुर्देवि... - घ. । ३१ देवैर्गतज्वरम् - घ. ।

86
सनत्कुमार उवाच
अथ तीर्थप्रसंगेन मुनिभिः समुपागतैः ।
अनुग्रहः कृतस्तस्या येन स्वच्छजलाभवत् ।।४५। ।

महतस्तपसः शक्ताः (?) कालेन महता तदा ।
वसिष्ठस्य तु तां क्षान्तिं ज्ञात्वा स ऋषिपुङ्गवः ।।४६। ।
विश्वामित्रो महातेजा वसिष्ठे वैरमत्यजत् ।
एवं तौ वैरमन्योन्यं जहतुर्मुनिसत्तमौ ।।४७। ।
सनत्कुमार उवाच
य इदं शृणुयाद्विप्रो ब्राह्मणाञ्छ्रावयीत वा ।
सुदुस्तराणि दुर्गाणि तरत्य३२ श्रान्तपौरुषः । ।४८ ।।
त्रिपौरुषौदार्यविहारसत्वैः समुन्नतश्चोज्ज्वलचारुवेषः ।
भवेच्च सर्वामरराजतुल्यस्त्रिविष्टपे क्रीडति चेच्छया स्वयम् ।।४९। ।
एवं तदभवद् व्यास विश्वामित्रवसिष्ठयोः ।
वैरं समाप्तं लोकानां हितार्थं पुनरेव च ।।8.19.५० ।।
इति स्कन्दपुराणे वैरनिवर्तनं नाम ऊनविंशोध्यायः

व्यास उवाच
उमाहरौ तु देवेशो चक्रतुर्यत्तु संगतौ ।
तन्मे सर्वमशेषेण कथयस्व महामुने ।।१ ।।
सनत्कुमार उवाच
उमाहरौ तु संगम्य परस्परमनिन्दितौ ।
- - - - - -, - - - - - - - - - - - । ।२ ।।
शिलादस्यात्मजं विप्रं१ - - - शक्तिवारणम्२ ।
- - - - - - - - - - - - - - - - - । ।३ ।।

३२... त्या - घ ।
१ यं रण - घ. । २ शशांकस्यानुजोर्विप्रं यं रणशक्तिवारणं - घ. ।


स चाप्ययोनिजः पुत्र आराध्य च महेश्वरम् ।
रुद्रेण समतां लब्ध्वा महागणपतिर्बभौ ।।४।।
व्यास उवाच
कथं नन्दी समुत्पन्नः कथं चाराध्य शंकरम् ।
समत्वमन्वगाच्छम्भोः प्रतीहारत्वमेव च ।।५। ।
सनत्कुमार उवाच
अभूदृषिः सुधर्मात्मा शिलादो नाम वीर्यवान् ।
तस्याभूत् शीलवृत्तित्वं शिलादस्तेन सोभवत् । ।६ ।।
अपश्यन्लम्बमानास्तान् गतीर्यान् स पितॄन्  द्विजः ।
विच्छिन्नसंततिर्घोरं निरयं वै प्रपेदुषः४ ।।७।।
तैरुक्तोपत्यकामो वै तं देवं लोक(? )मव्ययम् ।

आराधय महादेवं सुतार्थं द्विजसत्तम ।।८ ।।
योयमुत्तारणे शक्तः स ते५ पुत्रं प्रदास्यति ।
तेषां वाक्यं ततः श्रुत्वा जगाम शरणं६ शिवम् ।।९। ।
तस्य वर्षसहस्रेण तप्यमानस्य शूलधृक् ।
शर्वः सोमो गणवृतो वरदोस्मीत्यभाषत ।।8.20.१ ० ।।
सोमं स दृष्ट्वा७ देवेशं प्रणतः पादयोर्विभोः९ ।
हर्षगद्गदया वाचा तुष्टाव विबुधेश्वरम् । ।११ । ।
शिलाद उवाच
नमः परमदेवाय महेशाय महात्मने ।
स्रष्ट्रे१० सर्वसुरेशानां ब्रह्मणः पतये नमः । । १ २। ।
नमः कामांगनाशाय योगसंभवहेतवे ।
नमः पर्वतवासाय ध्यानगम्याय ते नमः ।।१३ ।।
ऋषीणां पतये नित्यं देवानां पतये नमः ।
लोकानां पतये चैव योगिनां पतये नमः ।। १४। ।

३ स्ता - घ. । ४... तसः (तुष?) - घ. । ५ शत्रो (सत?) - घ. । ६ सवलं - घ. । ७ स दृष्ट्वा सोम... - घ. । ८... य - ध. । ९ र्बभौ - घ । १० श्रेष्ठे - घ. ।


प्रधानाय नमो नित्यं११ - - - - - सर्गिणे ।
वरदाय च भक्तानां नमः सर्वगताय च । ।१ ५। ।
तन्मात्रेन्द्रियभूतानां विकाराय१२ गुणैः सह ।
१३ - - - पतये चैव नमस्ते प्रभविष्णवे । ।१ ६। ।
जगतः पतये चैव जगत्स्रष्टे नमः सदा ।
प्रकृतेः पतये नित्यं पुरुषात्परगामिने । । १७।।
ईश्वराय नमो नित्यं योगगम्याय - - - १४ ।
संसारोत्पत्तिनाशाय सर्वकामप्रदाय च । । १८।।
शरण्याय नमो नित्यं नमो भस्मांगरूपिणे ।
नमस्ते योग्रहस्ताय (?) तेजसां पतये नमः ।।१ ९।।
सूर्यानिलहुताशाम्बुचन्द्राकाशधराय च ।
स्थिताय सर्वदा नित्यं नमस्त्रैलोक्यवेधसे । । 8.20.२० । ।
स्तोतस्यान्यांगतो देव विश्रामस्तव हंक्ष्यते । (?)
यस्माद्धेतुस्त्व१५मेवास्य जगतः स्थितिनाशयोः ।।२१ । ।
अशरण्यस्य देवेश त्वत्तश्च शरणार्थिनः ।
प्रसादं परमालक्ष्य वरदो भव विश्वधृक् । ।२२। ।
सनत्कुमार उवाच
यः स्तोत्रमेतदमलं पठति द्विजन्मा प्रातः शुचिर्नियमवान् पुरतो द्विजानाम् ।

तं ब्रह्मराक्षसपिशाचसभूतयक्षा हिंसन्ति नो द्विपदपन्नग - - पूताः ।।२३ ।।
ततः स भगवान् देवः स्तूयमानः सहोमया ।
उवाच वरदोस्मीति ब्रूहि यत्ते मनोगतम् ।।२४।।
तमेवंवादिनं देवं शिलादोभ्यर्चयत् तदा१६ ।
उवाच चेदं देवेशं स वाचा सज्जमानया ।।२५।।
भगवन् यदि तुष्टोसि यदि देयो वरश्च मे ।
इच्छाम्यात्मसमं पुत्रं मृत्युहीनमयोनिजम् ।।२६ । ।

११ तत्त्वमेसं - घ. । १२ विक... - घ. । १३ स्वाष्ट्र च - घ. । १४ वाहसे - घ. । १५ द्वित्तत्व - घ. । १६ सदा -घ. ।

89

एवमुक्त्वा ततो देवः प्रीयमाणस्त्रिलोचनः ।
एवमस्त्विवति तं प्रोच्य तत्रैवान्तरधीयत ।।२७।।
गते तस्मिन्महेष्वासे ऋषिः परमपूजितः ।
स्वमाश्रममुपागम्य ऋषिभ्योकथयत्ततः । ।२८। ।

- - - - - - - - - - - - - - - - - ।।२९ । ।
सर्वकामानलप्रख्यः कुमारः प्रत्यभाषत ।
स तं दृष्ट्वा तथोद्भूतं कुमारं दीप्ततेजसम् । । 8.20.३० ।।
राक्षसोयमिति ज्ञात्वा भया१७ न्नोपससार तम् ।
कुमारोपि तथोद्भूतः पितरं दीप्ततेजसम् । ।३ १ । ।
उपासर्पत दीनात्मा तात तातेति चाब्रवीत् ।
स तातेत्युच्यमानोपि यदा तन्नाभ्यनन्दत ।
अथ वायुस्तदाकाशे निनादं प्राह सुस्वरम् । ।३ २ । ।
वायुरुवाच
सालंकायन पुत्रस्ते योसौ देवेन शंभुना ।
अयोनिजः१८ पुरा दत्तः१९ स एष२० प्रतिनन्दय ।। ३३ ।।
यस्मान्नन्दिकरस्तेयं सदैव द्विजसत्तम ।
तस्मान्नन्दीति नाम्ना२१ यं भविष्यति सुतस्तव । ।३४। ।
सनत्कुमार उवाच
ततः स वायुवचनान्नन्दिनं परिसष्वजे ।
गृहीत्वा स्वा२२ श्रमं तेन चानयद् दृष्टिवर्द्धनम् (?) ।।३ ५।।
चूडानामव्रतादीनि कर्माण्यस्य चकार सः ।
कृत्वा चाध्यापयामास वेदान् साङ्गा२३ नशेषतः ।। ३ ६।।
आयुर्वेदं च गान्धर्वं धर्म२४ शास्त्रं सलक्षणम्२५ ।
हस्तिनां चरितं चैव नवनिध्योश्च२६ लम्भनम्२७ ।।३७।।

१७ भवा - घ । १८... ज - घ. । १९... तं - घ । २० एव - घ. । २१ नामा - घ. । २२ चा - घ. । २३ साध्या -घ । २४ काम?, अश्व? । २५ आयुर्वेदं (धनुर्वेदं) गान्धर्वं शास्त्रलक्षणम्? । २६ नरनार्योश्च लक्षणम्?, नवनाध्यो -घ. । २७ लम्बनम्... - घ. ।

90

शिल्पानि चैव सर्वाणि निमित्तज्ञानमेव च ।
भूतग्रामचिकित्सां च मातृणां चरितं च यत् ।।३८।।
भुजगानां च सर्वेषां यच्च किञ्चिद् विचेष्टितम् ।
यच्च शास्त्रसमूहाना२८मष्टौ व्याकरणानि च ।।३ ९।।
तथा चैव पुराणानि इतिहासमशेषतः ।
पंचस्थानानि यानि स्युर्ज्योतिर्गणविचारणे२९ ।।8.20.४० ।।
मातृभूतग्रहं३० तन्त्रं योगिनां३१ मतमुत्तमम् ।
अब्दैरधीतवान् सर्वं व्यास षट्पंचभिस्ततः ।।४१ ।।
दक्षः शुचिरदीनात्मा प्रियवागनसूयकः ।
सर्वलोकप्रियो नित्यं नानानयननन्दनः ।।४२। ।
तस्याथ३२ सप्तमे वर्षे ऋषिदेवौ तपोधनौ ।
आश्रमं समनुप्राप्तौ शिलादस्याहतौजसौ ।।४३ ।।
तावभ्यर्च्य यथान्यायं शिलादः सुमहातपाः ।
सुखासीनौ समानम्य३३ आसने परमार्चितौ ।।४४।।
मित्रावरुणनामानौ तपोयोगबलान्वितौ ।
अभिज्ञौ सर्वभूतानां त्रिलोके सचराचरे । ।४५। ।
ताभ्यां समर्थितः सोपि निससाद वरासने ।
- - - - - । ।४६। ।
उवाच गुणवान् सम्यक् कुलवंशविवर्धनः ।
तमाहूय च संतुष्टः पुत्रं नन्दिनमच्युतः ।।४७।।
तयोः पादेषु शिरसा पातयत्तमनिन्दितम् ।
तौ तु तस्याशिषं दिव्यौ प्रयुक्तावथ नित्यताम् ।
गुरुशुश्रूषणे भावं लोकांश्चैव तथाक्षयान् ।।४८।।
सनत्कुमार उवाच
शिलादस्तावथालंब्य आशिषं देवयोस्तदा ।
विसृज्य नन्दिनं भीतः सोपृच्छदृषिसत्तमौ ।।४९।।

२८ ...हेन - घ. । २९ चारयन् - घ. । ३० गृहं - घ. । ३१ न - घ., नी? । ३२ यस्यार्थं - घ. । ३३.नश्च - घ. ।

91

शिलाद उवाच

किमर्थं मम पुत्रस्य दीर्घमायुरुभावपि ।
प्रयुक्तवन्तौ धन्यस्य(?)३४ नाशिषं मुनिसत्तमौ ।।8.20.५० ।।
मित्रावरुणावूचतुः
तवैष तनयस्तात स्वल्पायुः सर्वसंमतः ।
इतोन्यद् वर्षमेकं वै जीवितं धारयिष्यति । ।५१ ।।
सनत्कुमार उवाच
ततः स शोकसंतप्तोपत्यव्यसनदुःखितः३५ ।
विसृज्य ऋषिशार्दूलावेकाकी विललाप च । ।५२। ।
तस्य शोकाद् विलपतः स्वरं श्रुत्वा सुतः३५ शुभम् ।
नन्द्या३७गात्तं तथापश्यत्पितरं दुःखितं भृशम् ।।
नन्द्युवाच
केन त्वं तात दुःखेन दूयमानः३८ प्ररोदिषि ।
दुःखं ते कुत उत्पन्नं ज्ञातुमिच्छाम्यहं पितः । ।५४।।
शिलाद उवाच
पुत्र त्वं किमु वर्षेण जीवितं संप्रहास्यसि ।
ऊचतुस्तावृषीत्येवं ततो मां - - -३९ विशत् । ।५५।।
नन्द्युवाच
सत्यं देवऋषी तात न तावनृतमूचतुः ।
तथापि तन्न४० मृत्युर्मे प्रभविष्यति मा शुचः ।।५६।।
शिलाद उवाच
किं तपः किं परिज्ञानं को योगः कः श्रमश्च ते ।
येन त्वं दारुणं मृत्युं वञ्चयिष्यसि४१ पुत्रक ।।५७। ।

३४ धन्यस्य - घ., दीनस्य? । ३५ व्यथदुः... - घ. । ३६ सुभ - घ. । ३७ नद्या - ध. । ३८ भू (अभिभू?) - घ.। ३९ कृव्रणा? - च. । ४० पितर्न - घ । ४१ मुञ्चयिष्यसि - घ. ।


नन्द्युवाच
न तात तपसा मृत्युं वंचयिष्ये न विद्यया ।
महादेवप्रसादेन मृत्युं जेष्यामि नान्यथा । ।५८। ।
द्रक्ष्यामि शंकरं देवं ततो मृत्युर्न मे भवेत् ।
नष्टे मृत्यौ त्वया४२ सार्धं चिरं वत्स्यामि निर्वृतः । ।५९।।
शिलाद उवाच
मया वर्षसहस्रेण तपस्तस्वा सुदुश्चरम् ।
महादेवः पुरा दृष्टो लब्धस्त्वं मे यतः सुतः ।
कथं द्रष्टा४३  महादेवमेतदिच्छामि वेदितुम् । ।8.20.६० ।।
नन्द्युवाच

न चापि तपसा देवो दृश्यते नापि विद्यया ।
- - - मनसा देवो दृश्यते परमेश्वरः । । ६१ ।।
अहमेतद्विजानामि येन४५ द्रक्ष्यामि शंकरम् ।
त्वया विसृष्टो गत्वाहमचिरेण त्रिलोचनम् ।।६२। ।
द्रष्टा तात न सन्देहो विसृजाशु ततस्तु माम् ।
अचिरेणैव कालेन मृत्युदुःखविवर्जितम्४५ ।।६३ । ।
द्रक्ष्यसे मां कृतार्थं च तस्मान्मां त्वं विसर्जय ।
तिष्ठन्तं वा शयानं वा धावन्तं पतितं तथा ।।६४।।
न प्रतीक्षेत४७ मां४८ मृत्युरिति बुद्ध्वा शमं व्रज ।
यदि मृत्युसहस्राणि यमकोटिशतानि च ।। ६५। ।
अभिद्रवन्ति संतप्ता दण्डपाशोद्यतायुधाः ।
व्यथां (?) तथापि ते कर्तुं४९ न समर्थाः कदाचन ।।६६ ।।
न ममैते करिष्यन्ति व्यथां लोम्ना तथैव हि ।
अवतीर्य जलं दिव्यं भावं५० शुद्धं समाश्रितः । ।६७। ।

४२ तया - घ. । ४३ दृष्ट्वा - घ. । ४४ गृहिनः? - घ । ४५ यस्मात् - घ. । ४६.. तः - घ. । ४७ ति घ. । ४८ वै - घ. । ४९ तात - घ. । ५० द्वारं - घ

93
अभ्यस्य५१ रौद्रमध्यायं ततो द्रक्ष्यामि शङ्करम् ।
जपत५२श्चाभियुक्तस्य रुद्रभावयुतस्य५ च ।
न मृत्युकालबहवः (?) करिष्यन्ति मम व्यथाम् । ।६८।।
सनत्कुमार उवाच
तमेवं५४ वादिनं मत्वा ब्रुवाणं शुद्धया धिया५५ ।
व्यसर्जयन्नदीनात्मा धृत्या५६ पुत्रं महातपाः ।।६९ ।।
अभिवन्द्य५७ पितुः पादौ शिरसा स महायशाः ।
प्रदक्षिणं समावृत्य संप्रतस्थे५८ विनिश्चितः ।।8.20.७० ।।
अभिवन्ध ऋषीन् सर्वान् स दिदृक्षु५९ रुदारधीः ।
मुनिर्देवमनाश्चैव प्रणतार्तिहरं शिवम् । ।७१ । ।
इति स्कन्दपुराणे नन्दितपःप्रवेशो नाम विंशतितमोध्यायः ६

आगामी पृष्ठः (अध्यायाः २१ - ३०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०३



अध्यायाः २१ - ३०

सनत्कुमार उवाच
निर्गतोथ ततो नन्दी जगाम सरितां वराम् १ ।
भुवनामिति विख्यातां सर्वलोकहितावहाम् ।। १।।
तां प्रविश्य ततो धीमानेकाग्रो द्युतिमाँस्थितः ।
स जजाप ततो रुद्रं मृत्योर्भीतः समाहितः । । २।।
जपता तेन तत्रैव तत्परेण तदाशिषा ।
कोटिरेका यदा जप्ता तदा देवस्तुतोष ह । ।३ ।।
सनत्कुमार उवाच
सोवतीर्य ततो भूयः प्रयतात्मा तथैव च ।
जजाप कोटिमन्यां तु रुद्रमेवानुचिन्तयन् ।।४।।

५१ अद्यस्य - घ । ५२ जगत - घ. । ५३ भावयित - घ. । ५४ तदेवं - घ. । ५५ क्रिया - घ. । ५६ कृत्वा - घ.,। धृत्वा? । ५७.. .नन्द्य - घ । ५८ स प्रभस्ते - घ. । ५९ समदृक्षु - घ ।
१ वरम् - ष. ।

94
द्वितीयायां ततः कोट्यां संवृतायां२ वृषध्वजः ।
अभ्याजगाम तं चैव वरदोस्मीत्यभाषत ।।५।।
स प्राह भगवन् कोटिं तृतीयामधिकामहम् ।
जप्तुमिच्छामि देवेश त्वत्प्रसादात्त्वहं विभो ।।६।।
एवमस्त्विवति भूयोपि भगवान् प्रत्युवाच ह ।
- - जगाम स्वं वेश्म देव्या सह महामतिः ।।७।।
ततस्तृतीयां रुद्राणां कोटिमन्यां जजाप ह ।
युगान्तादित्यसंकाशः ततः समभवद् द्विजः । ।८ ।।
तस्य कोटित्रये व्यास समाप्ते ज्वलनत्विषः ।
सोमः सह गणैर्देवस्तं३ देशमुपचक्रमे ।।९।।
स तं करेण संगृह्य तद्वृत्तसलिलाच्च ह ।
संसृज४न्नग्रहस्तेन नन्दिनं कालहाब्रवीत् ।।8.21.१ ०।।
देवदेव उवाच

शैलादे वरदोहं ते तपसानेन तोषितः ।
साधु जप्तं त्वया धीमन् ब्रूहि यत्ते५ मनोगतम् ।।११।।
शैलादिरुवाच
जपेयं कोटिमन्यां वै भूयोपि तव तेजसा ।
वरमेतं वृणे देव यदि तुष्टोसि मे विभो ।।१२।।
भगवानुवाच
शैलादे - - - - ६- तव तुष्टोस्मि साम्बिकः ।
यं त्वद्य वृणुषे कामं सर्वं तं प्रददामि ते ।।१३ ।।
ब्रह्मत्वमथ७ विष्णुत्वमिन्द्रत्वमथवान्यताम्८ ।
आदित्यो भव रुद्रौ वा ब्रूहि किं करवाणि ते ।।१४।।
सनत्कुमार उवाच
स एवमुक्तो देवेन शिरसा पादयोर्नतः ।
तुष्टाव पुरकामांगक्रतुपर्वतनाशनम ।।१५।।

२ संस्मृता - घ, समाप्ता? । ३ र्व्यासं देवस्तं वस - घ., स्तमुप? । ४ संमृज? । ५ या (जा?) तु - घ. । ६ कर्मणानेन?, कर्मणनेन शैलादे? । ७ मघ ( अ. ) - घ. । ८ नृतां - घ. ।

95
नमो देवाधिदेवाय९ महादेवाय वै नमः ।
नमः कामांगनाशाय नीलकंठाय वै नमः ।।१ ६। ।
नमस्तुषितनाशाय त्रैलोक्यदमनाय च ।
नमः कालाग्रदण्डाय उग्रदण्डाय वै नमः । । १ ७। ।
सर्वतः पाणिपादाय सर्वतोक्षिमुखाय१० च ।
सर्वतः प्रभवे चैव११ सर्वमावृत्य तिष्ठते१२ ।। १८। ।
नमस्ते रुक्मवर्णाय तथैवातीन्द्रियाय च ।
नमः कनकलिंगाय सर्वलिंगाय वै नमः ।। १ ९। ।
नमश्चन्द्रार्कवर्णाय योगेशायाजिताय च ।
पिनाकपाणये चैव शूलमुद्गरपाणये ।।8.21.२० ।।
निषङ्गिणे१३ खड्गिने च१४ परश्वधधराय च ।
रथिने चर्मिणे चैव महेशाय च वै नमः । । २१ । ।
नमस्त्रिशूलहस्ताय उग्रदण्डधराय च ।
नमो गणाधिपतये रुद्राणां पतये नमः । । २ २। ।
नमः सहस्रनेत्राय शतनेत्राय वै नमः ।
आदित्यानां १५ पतये वसूनां पतये नमः । ।२३ । ।
नमः पृथिव्याः पतये आकाशपतये नमः ।
नमः स्वर्लोकपतये उमायाः पतये नमः ।।२४। ।
नमो योगाधिगम्याय सर्वयोगप्रदाय च ।

ध्यानिनां ध्यायमानाय (?) ध्यानिभिः संस्तुताय च ।। २५।।
मृत्यवे कालदण्डाय यमाय च महात्मने ।
देवाधिपतये चैव दिव्यसंहननाय च ।।२६।।
यज्ञाय वसुदानाय स्वर्गदाय जयाय च ।
सवित्रे सर्वदेवानां धर्मायानेकरूपिणे । ।२७। ।
अमृताय वरेण्याय सर्वदेवस्तुताय च ।
ब्रह्मणश्च शिरोहर्त्रे१६ यज्ञस्य च महात्मनः । ।८। ।

९. तिदेवाय - घ. । १० सुखाय - घ. । ११ प्रसवित्रे च? १२ स्यानवे घ, स्थास्नवे।. १३ वङ्गिने - घ. । १४ चैव - घ. । १५ आदित्यानष्ट... घ, । आदित्यपतये चाष्ट? । १६ हंत्रे - घ. ।


त्रिपुरघ्नाय चोग्राय सर्वाशुभहराय च ।
उमादेहार्धरूपाय ललाटनयनाय च ।।२९।।
महिषान्धकभर्त्रे च द्रष्ट्रे१७ च परमेष्ठिने ।
ब्रह्मणे गुरवे चैव ब्रह्मणे जनकाय च । ।8.21.३ ० । ।
कुमारगुरवे चैव कुमारवरदाय च ।
हलिने मुशलघ्नाय महाहासाय वै नमः ।। ३१ ।।
मृत्युपाशाग्रहस्ताय तक्षकब्रह्मसूत्रिणे ।
सविद्युद्घनवाताय तथैव वृषयायिने । ।३ २ । ।
हिमवद्विन्ध्यवासाय मेरोः पृष्ठनिवासिने ।
कैलासवासिने चैव धनेश्वरसखाय च ।।३ ३ । ।
विष्णुदेहार्धदत्ताय तस्यैव वरदाय च ।
सर्वभूता१८ धियज्ञाय सर्वभूतानुकम्पिने ।।३४।।
अन्तर्भूतादिभूताय प्राणिनां जीवदाय च ।
नमस्ते मन्यमानाय अभिमानाय चैव हि ।।३ ५। ।
बुध्यमानाय१९ बोध्याय२० द्रष्ट्रे२१ वै चक्षुषे नमः ।
नमस्ते स्पर्शयित्रे च तथैव रसनाय च । ।३ ६ । ।
नमो घ्राणाय घ्रात्रे च श्रोत्रे श्रोत्राय चैव हि ।
हस्तिने चैव हस्ताय तथा पादाय पादिने ।।३७। ।
नमोस्त्वानन्दकर्त्रे च आनन्दाय च ते नमः ।
वाचेथ वाग्मिने चैव तन्मात्राय महात्मने ।।३८। ।
सूक्ष्माय चैव स्थूलाय सत्वाय रजसे नमः ।
नमश्च तपसे नित्यं क्षेत्रज्ञाया२२जिताय च । । ३ ९। ।
विष्णवे लोककर्त्रे च प्रजानां पतये नमः ।
नमः सप्तर्षये चैव तप्यमानाय तापिने ।।8.21.४० ।।

१७ दृष्टे - घ. । १८ सर्वभूताय - घ. । १९ ?तृद्वमानाय - घ. । २० बुद्ध्याय - घ. । २१ दुष्टो - घ. । २२ क्षेत्रज्ञाय - घ. ।

97

ब्रह्मण्याय२३ च - - -२ ४ तथा दुर्वाससे नमः ।
शिल्पिने शिल्पनाथाय विदुषे विश्वकर्मणे ।।४१ ।।
अत्रये भृगवे चैव वसिष्ठाय नमोस्तु ते ।
भूताय भूतनाथाय - - - २५ पतये नमः ।।४२ ।।
तिष्ठते द्रवते चैव गायते नृत्यतेपि च ।
अवश्यायाप्यवध्याय अजरायामराय च ।।४३।।
अक्षयायाप्ययायैव तथाप्रतिहताय च ।
अनावेश्याय सर्वेषां दृश्यादृश्य२६ स्वरूपिणे ।।४४।।
सूक्ष्मेभ्यश्चातिसूक्ष्माय सर्वेशाय महात्मने ।
नमस्ते भगवन् व्यक्ष नमस्ते भगवन् शिव ।।४५।।
नमस्ते सर्वलोकेश नमस्ते लोकभावन ।
न मे देवाधिपत्येन ब्रह्मत्वेनापि वा पुनः ।।४६।।
न विष्णुत्वेन देवेश न इन्द्रत्वेन भूतप ।
इच्छाम्यहं तवेशान गणत्वं नित्यमव्ययम् ।।४७। ।
नित्यं२७ त्वां सगणं साम्बं प्रसन्नं सपरिच्छदम् ।
द्रष्टुमिच्छामि देवेश एष मे दीयतां वरः ।।४८।।
दत्त्वा गतिं पुरा देव त्वं वैरावर्त्तनं पुनः (?) ।
शरणं त्वञ्च२८ मे नाथ नान्यं पश्यामि कर्हिचित् ।।४९।।
त्वया त्यक्तस्य चैवाशु विनाशो२९ नात्र संशयः ।
अन्यां गतिं न पश्यामि योस्यान्यं तेन्तकं३० शुभम् ।।8.21.५०।।
अनुरक्तं च भक्तं च त्वत्परं त्वदुपाश्रयम् ।
प्रतीच्छ मां सदा देव एष मे दीयतां वरः ।।५१ ।।
सनत्कुमार उवाच
य इदं प्रातरुत्थाय पठेदविमना३१ नरः ।
स देहभेदमासाद्य नन्दीश्वरसमो भवेत् ।।५२। ।

२३ ब्रह्मणा - घ. । २४ तक्राय (भक्ताय? तर्काय?) - घ. । २५... स्वांत - घ. । २६ दृश्यदृश्याय - घ. । २७ तेन -घ. । २८ त्वं च - घ. । २९.. शं - घ, वि । शान्? । ३० यास्याम्यन्तिकं - घ, । ३१ लं - घ. ।

98

यश्चेमं शृणुयान्नित्यं श्रावयेद्वा द्विजातिषु ।
सोश्वमेधफलं प्राप्य रुद्रलोके महीयते ।।५३ ।।
श्रुत्वा सकृदपि३२ ह्येतं स्तवं पापप्रणाशनम् ।

यत्र तत्र मृतो३३ व्यास न दुर्गतिमवाप्नुयात् ।।५४। ।
योधीत्य नित्यं स्तवमेतमग्र्यं३४ देवं सदाभ्यर्चयते यतात्मा ।
किं तस्य यज्ञैर्विविधैश्च दानैस्तीर्थैः सुतप्तैश्च तथा तपोभिः । ।५५ ।।
इति स्कन्दपुराणे एकविंशो३५ ऽध्यायः

सनत्कुमार उवाच
ततस्तु देवदेवेशो भक्त्या परमया युतम् ।
अश्रुपूर्णेक्षणं दीनं पादयोः शिरसा नतम् ।। १ ।।
कराभ्यां सुसुखाभ्यां तं१ संगृह्य२ परमार्त्तिहा ।
उत्थाप्य नयने सोम अश्रुपूर्णे३ ममार्ज ह४ ।।२ ।।
उवाच५ चैनं६ तुष्टात्मा वचसाप्याययन्निव ।
निरीक्ष्य गणपान् सर्वान् देव्या सह तदा७ प्रभुः ।।३ ।।
देवदेव उवाच
जाने भक्तिं तव मयि जाने चार्तिं तवा८नघ ।
तस्य सर्वस्य शैलादे उदर्कं सन्निशामय ।।४। ।
अमरो जरया त्यक्तो नित्यं दुःखविवर्जितः ।
अक्षयश्चाव्ययश्चैव९ सपिता ससुहृज्जनः१० ।।५ ।।
ममेष्टो गणपश्चैव मद्वीर्यो मत्पराक्रमः ।
इष्टो मम सदा चैव मम पार्श्वगतस्सदा । । ६।।

३२ शिवस्य दयितं - घ. । ३३ पठतो मानसे - घ. । ३४ दग्यं... - क । ३५ .. शति (त) मो - क. (घ) । १ तु -क. । २ संपूज्य - घ. । ३... र्णो - क. । ४ सः (तम्?) - क., ह्यमार्जत । ५ उत्थाय - क. । ६ चेदं - घ. । ७ तया - घ. । ८ तथा - क । ९ श्चैव मद्वीर्यो - घ. । १०. मत्तुल्यो मत्पराक्रमः - घ. ।


मद्रूपश्चैव भविता महायोगबलान्वितः ।
ऋद्धिमच्चैव ते द्वीपं क्षीरोदममृताकरम् ।।७। ।
संवासं च११ प्रयच्छामि तत्र रंस्यसि१२ सर्वदा ।
कुशेशयमयीं मालामवमुच्यात्मनस्ततः । ।८।।
आबबन्ध महातेजा नन्दिने दिव्यरूपिणीम् ।
स तया मालया नन्दी बभौ कण्ठावसक्तया । । ९।।
त्र्यक्षो दशभुजः श्रीमान् द्वितीय इव शङ्करः ।
ततो हस्ते१३ समादाय हस्तेन भगवान् हरः ।। 8.22.१० । ।
उवाच ब्रूहि किं१४ तेद्य ददानि१५ वरमुत्तमम् ।
आश्रमश्चायमत्यर्थं तपसा तव भावितः ।। ११ ।।
जप्येश्वर इति ख्यातो मम गुह्यो भविष्यति ।
समन्ताद् योजनं क्षेत्रं दिव्यं देवगणैर्वृतम् ।। १२ ।।
सिद्धचारणसंकीर्णमप्सरोगणसेवितम् ।

सिद्धिक्षेत्र१६ परं गुह्यं भविष्यति न संशयः ।। १३ । ।
कर्मणा मनसा वाचा यत्किञ्चित् कुरुते नरः ।
शुभं वाप्यशुभं वात्र१७ सर्वं भवितृ१८ तच्छुभम् । । १४।।
जप्यमानः स१९ तुल्यो२० वै रुद्राणां तु२१ भविष्यति ।
यत्र तत्र मृता मर्त्या यास्यन्ति त्वत्२२ सलोकताम् । ।१ ५। ।
ततो जटाप्लुतं वारि२३ गृहीत्वा हारनिर्मलम् ।
उक्त्वा२४ नदी भवस्वेति विससर्ज महातपाः ।।१ ६।।
सा ततो दिव्यतोया च२५ पुण्या मणिजला शुभा ।
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । ।१७।।
पद्मोत्पलवनोपेता२६ प्रावर्तत महानदी ।
स्त्रीरूपधारिणी चैव प्राञ्जलिः शिरसानता । ।१ ८। ।

११ सं - घ. । १२ वत्स्यसि - घ. । १३ तत एनं - ध. । १४ कं.? । १५.. .मि - ध. । १६ सिद्धक्षेत्रं - ध. ।
१७ वापि - घ. । १८ भवति - घ. । १९ तप्यमानस्य - घ. । २० तुल्यं - क. घ. । २१ तद् - क., च - घ. ।
२२ तव - क, देव - घ. । २३ जटाम्बू स्वकरे? । २४ शुद्धा - घ. । २५ तु - घ, । २६ दलोपेता - घ ।


पद्मोत्लदलाभाक्षी२७ तदा देवमुपस्थिता ।
तामुवाच ततो देवो२८ नदीं स्वय२९मुपस्थिताम् । । १९।।
यस्माज्जटोदकाद् देवि प्रवृत्ता त्वं शुभानने३० ।
तस्माज्जटोदा नाम्ना३१ त्वं भविष्यसि सरिद्वरा । ।8.22.२० । ।
त्वयि स्नानं तु यः कुर्याच्छुच्चिः प्रयतमानसः ।
सोश्वमेधफलं प्राप्य रुद्रलोके महीयते । । २१ । ।
सनत्कुमार उवाच
ततो देव्या - - - - नन्दीश्वरमतिप्रभम् ।
पुत्रस्तेयमिति प्रोच्य पादयोस्तं व्यनामयत् । । २२।।
सा तमाघ्राय३२ शिरसि पाणिभ्यां परिमार्जती ।
पुत्रप्रेम्णाभ्यषिञ्चत्तं स्रोतोभिः स्तनजै३३ -स्त्रिभिः ।२३।।
पयसा शंखगौरेण देवी देवं निरीक्षती ।
तानि स्रोतांसि३४ त्रीण्यस्याः स्रुतान्योधवती नदी । ।२४।।
नदीं त्रिस्रोतसीं३५ पुण्यां ततस्ता३६मवदद्धरः ।
त्रिस्रोतसां नदीं दृष्ट्वा वृष परमहर्षितः । ।२५। ।
ननर्द नादात्३८ तस्माच्च सरिदन्या ततोभवत् ।
यस्माद् वृषभनादेन प्रवृत्ता सा महानदी । ।२६।।
तस्माड् ढित्किरिकान्तां३९ वै उवाच वृषभध्वजः ।
जाम्बूनदमयं चित्रं स्वं देवः परमाद्भुतम् । ।२७। ।
मुकुटञ्चाबबन्धास्य कुण्डले चामृतोद्भवे ।
तं तथाभ्यर्चितं व्योम्नि दृष्ट्वा मेघः प्रभाकरः । ।२८ । ।

देवोपवाह्यः सिषिवे सनादः सतडिद्गुणः ।
तस्याभिषिक्तस्य४० तदा प्रवृत्ते स्रोतसी भृशम्४१ । ।२९। ।

२७ भासा?, महा - घ. । २८ देवी - क । २९ नंदीश्वर - घ । ३० भूतले - घ । ३१ देवी तस्मा- ज्जटा नाम्ना -घ. । ३२ प्य - क. । ३३ तनुजै - घ । ३४ स्रोतांसि - क । ३५ सां - घ. । ३६ तत्रस्था - घ. । ३७ मवहद्धरः -क., मगमद्वरः - घ,.. रा - क । ३८ नादं - घ, नादा (न्) - क । ३९ दिकारिकां तां - घ. । ४० भिषक्तस्य - घ.। ४१ स्रोतसां नदीम् - घ ।

101
यस्माच्च कुण्डलात् स्वर्णात्४२ नद्येका संप्रवर्तत४३ ।
स्वर्णोदकेति नाम्ना तां महादेवोभ्यभाषत । । 8.22.३० । ।
जम्बूनदमया४४ द्यस्माद् द्वितीया मुकुटा४५ च्छुभात्४६ ।
प्रावर्तत नदी पुण्या प्राह४७ जाम्बूनदीति४८ ताम्४९ ।।३ १ ।।
एतत्पञ्चनदं नाम् जप्येश्वरसमीपगम् ।
व्याख्यातं फलमेतासां५० जटोदया५१ महात्मना ।।३ २ । ।
तच्च५२ पञ्चनदं दिव्यं देवं जप्येश्वरं च तम् ।
त्रिरात्रोपोषितो गत्वा स्नात्वाभ्यर्च्य च५३ शूलिनम् । ।३ ३ ।।
ब्राह्मणाँस्तर्पयित्वा च यत्र तत्र मृतो नरः ।
नन्दीश्वरस्यानुचरः क्षीरोदनिलयो भवेत् ।।३४।।
यस्तु जप्येश्वरे प्राणान्५४ परित्यजति५५ दुस्त्यजान् ।
नियमेनान्यथा वापि स मे गणपतिर्भवेत् । ।३५।।
नन्दीश्वरसमो नित्यं शाश्वतो ह्य५६ क्षयोव्ययः ।
मम पार्श्वेप्यनुचरः प्रियः सन्मत एव च५७ । ।३ ६।।
जप्येश्वरं पंचनदं च तद्वै यो मानवोभ्येत्य जहाति देहम् ।
स मे सदा स्याद् गणपो वरिष्ठस्त्वष्ट्रा समः५८ कान्तवपुश्च५९ नित्यम्६० ।।३७। ।
इति स्कन्दपुराणे द्वाविंशोध्यायः६१

४२ यस्मात् सुवर्णान्निः सृत्य - क-, तकुण्डलादेको - घ. । ४३ यतः साक्षात्प्रवर्तित।। - घ । ४४ जाम्बूनदमयाद् घ? । ४५ न्मु.. - क, त त् मू.?.. - घ. । ४६ भा ( त्) - क । ४७ ऊचुः - क. । ४८ जम्बू... - क. । ४९ नदीं च ताम् - घ. । ५० मेतेषां - घ, मेतस्य? । ५१ जटोदयान् - क ., ?जटावन - घ. । ५२ तञ्च - घ. । ५३ भ्यर्चय - क. । ५४ जनुः - घ. । ५५ प्राणान् - घ । ५६... था - घ । ५७ तिष्ठते मत्पुरेदार पुरद्वारि?)यावदाभूतसंप्लवम् - घ. । ५८ त्वष्टा... - क । ५९ कान्ति.. - क. । ६० यो मां नरः स्नापयति पंचनद्यां जहाति देहं विधिवच्च तासु । इत्युत्तरार्धत्वेन दत्तः पाठो घपुस्तके । ६१.. .शतिमो - क. ।

102
सनत्कुमार उवाच
भगवान् देवदेवेशः सर्वभूतपतिर्हरः ।
देवीमुवाच वागीश उमां गिरिवरात्मजाम् ।। १ ।।
देवि१ नन्दीश्वरं देवमभिषेक्ष्यामि भूतपम् ।

गणानाश्वाहयिष्यामि किं वा त्वं३ मन्यसेव्ययेे४ । ।२।।
देव्युवाच
सप्तलोकाधिपत्यं च गणेशानां तथैव च ।
सर्वमर्हति देवेश नन्दी पुत्रो ममाग्रजः५ ।।३ ।।
सनत्कुमार उवाच
ततः स भगवान् देवः सुरशत्रुनिषूदनः ।
प्राङ्मुखः स गणेशानामाह्वानमकरोत्तदा६ ।।४। ।
ततस्सहस्रशस्तत्र गणाध्यक्षा मुदा युताः ।
संप्राप्ताः सर्वलोकेशास्तत्क्षणाच्च७ महामुने८ ।।५। ।
संप्राप्ताः सर्वलोकेशा ये रुद्राः स्वर्गवासिनः ।
अन्ये रुद्रवरा व्यास येषां संख्या न विद्यते । ।६। ।
ब्रह्माण्डावरणा ये च अहिर्बुध्न्यादयो९ मुने ।
कपालांशिविशोकाश्च शतनेत्राः शताननाः१० ।।७। ।
अनन्तरुद्रा ये चान्ये शतवक्त्राः शतोदराः ।
सर्वतः पाणिपादाश्च सर्वदिक्षु समाश्रिताः ।।८ । ।
अणिमादिगुणैर्युक्ता ब्रह्मसंभूतिहेतवः ।
संप्राप्ताः सर्वलोकेशास्ताञ्छृणुष्व११ महामुने । ।९।।
ततः करालवदनो१२ भृकुटीभूषिताननः१३ ।
शंखहाराम्बुगौरश्च दंष्ट्री स्रग्वी त्रिलोचनः ।। 8.23.१० । ।

१ देवी - क । २ नां - क । ३ त्र घ । ४ उमे - घ । ५ महा.. - क. । ६ ततः - घ. । ७ तच्छृणुष्व - क । ८ महात्मने - क. । ९ अजब्रध्न - घ. । १० सनातनाः - घ. । ११ ये शृ... - घ. । १२ दशनो - घ. । १३ भ्रुकुटीभीषणाननः - घ. ।


जटासहस्रोर्ध्व१४ शिखो१५ ज्वालाकेशो महाहनुः१६ ।
अग्न्यंगारकनेत्रश्च भुजगाबद्धमेखलः । । ११ ।।
विद्युज्जिह्वो महाकायस्तथा चैवोर्ध्वमेहनः ।
सर्पयज्ञोपवीती च परश्वधधरस्तथा । । १ २।।
भुजगाबद्धमौञ्जिश्च भुजगैरेव कङ्कणैः ।
निनादान् संसृजानश्च१७ अशनीपातसन्निभान् ।। १३ । ।
डिण्डि१८ रित्येव विख्यातो गणपः समदृश्यत ।
आत्मनः सदृशानाञ्च कोटिभिर्दशभिर्वृतः ।।१ ४। ।
गणपानां सुरेशानां योगिनां दीप्ततेजसाम् ।
ततोपरो महाकेशो महाकायोर्ध्वमेहनः ।। १ ५। ।
त्र्यक्षोनलशतप्रख्यः अशनीपातनर्दनः ।
नृत्यन् गायँश्च चित्राणि कुर्वन्नाट्या२० न्यनेकशः । । १६ । ।
ज्वलद्दंष्ट्रो महाहासो बृहत्स्कन्धः पिनाकधृक् ।

कोटिभिर्दशभिस्सार्धं द्विगुणाभिर्महात्मनाम् । । १७। ।
गणानां चित्ररूपाणां युगपत् संप्रदृश्यत ।
सिंहास्यगजकेशास्यै२१ द्वींपिशार्दूलकाननैः२२ ।
सोषाढिर्नाम२३ गणपो व्यास तत्र समागतः । । १८। ।
सनत्कुमार उवाच
अथान्यो व्यास संप्राप्तो युगान्तादित्यसप्रभः ।
शतयोजनबाहुश्च दिग्वासाश्चोर्ध्वमेहनः । । १ ९। ।
अतिदीर्घोतिमेढ्रश्च लम्बभ्रूः स्थूलनासिकः ।
वृत्तास्यश्च२४ महाक्षश्च भृकुटीसंहताननः । ।8.23.२० । ।
पंचयोजनविस्तीर्णो दीर्घो वै तावदेव च ।
दंष्ट्राश्चतस्रो वक्त्रेण बिभ्रच्छंखेन्दुपाण्डराः । ।२१ ।।

१४ स्रार्?ध - घ. । १५.. .शिरा क घ । १६ मना... - घ. । १७ अट्टहासानसृजँश्च - घ. । १८ दण्डि - घ. । १९ गणानां च - घ. । २०... न्या - क., दान - घ. । २१... नां शरभानां च - घ. । २२ रक्षसाम् - घ. । २३ ससोभीना... - घ. । २४... क्षश्च - घ. ।


पंचाग्निको२५ र्ध्वकर्णश्च पाशहस्तो मनोजवः२६ ।
वृतः कोटिशतेनैव सदृशाना२७मदृश्यत । । २२। ।
भार२८भूतीति विख्यातो महायोगबलान्वितः ।
गणपो देवदेवस्य समीपं सोभ्यगच्छत । ।२३ । ।
ततः कुन्देन्दुशंखाभं हिमराश्यम्बुसन्निभम् ।
मृणालस्फटिस्काभं च भस्मकक्षा२९वलम्बनम् ।।२४। ।
गृहीत्वा चाशनीहासं३० त्रिपादं चीरवाससम् ।
शतोदरं३१ त्रिशिरसं त्रिनेत्रं चोर्ध्वमूर्धजम् ।।२५। ।
ज्वालामालोग्र३२ केशञ्च व्याघ्रचर्माजिनाम्बरम्३३ ।
वायुवेगं महाहासं भुजगाबद्धमेखलम् । ।२६।।
महोरगकृतापीडं शंकु - ३४ र्ध्वमेहनम् ।
भस्मप्रहरणं चैव महादंष्ट्रं महाहनुम्३५ ।। २७। ।
महागणपतिं वीरं ज्वर इत्येव विश्रुतम् ।
कोटीशतवृतं तञ्च गणपं सोन्वपश्यत ।।२८। ।
ततोपरः सौम्यरूपो भस्मदिग्धाङ्ग एव च ।
त्रिशूलपाणिदिग्वासा महायोगबलान्वितः । ।२९।।
बहुवेषधरश्चैव ध्यानयोगपरायणः ।
सोमवर्ण इति ख्यातः कोटीशतवृतः प्रभुः । ।8.23.३ ० । ।
तादृशानां गणाध्यक्षो देवेनाहूत आगतः ।
सहस्रज्वालभस्मांगो महानेत्रोर्ध्वमेहनः । ।३ १ ।।
अथापरो महाकायः शूलपाणिर्महाबलः ।
युगान्तानलसंकाशः स्थिरः स्थिरयशोबलः । ।३ २ । ।

चन्द्रमौलिर्महाकेशश्चतुर्बाहुर्विलोहितः ।
एकपादैर्महाकायैस्त्र्यक्षैस्तैः शूलपाणिभिः । ।३ ३ ।।

२५ पंचाङ्गि.. - क, पंचजिह्नो - घ. । २६ यः - ध. । २७ सदृशां स - च. । २८ तावद् - घ. । २९ धर्मकर्मा घ. । ३० साशनिपाशं - घ. । ३१ समोदरं - घ. । ३२ माल्यग्र - घ. । ३३ चिना. ( चिता?) - घ. । ३४ कर्णो - क.,कान्तो - घ. । ३५.. ननम् - घ. ।



वृतः कोटीशतेनैव स्थाणुस्तत्राभ्थवर्तत ।
स महापार्षदो रुद्रः३६ सर्वासुरनिबर्हणः । ।३४।।
ततोपरः पट्टसेनो३७ ह्रस्वपादोदरः शुचिः ।
सहस्रबाहुचरणः सहस्राक्षः प्रतापवान् । ।३ ५।।
करालदशनश्चैव कृष्णसर्पाम्बरच्छदः ।
त्र्यक्ष३८ श्चन्द्रकृतापीडः कण्ठमालाविभूषितः ।।३ ६ ।।
उग्रसेन इति ख्यातः कोटीशतवृतः स च३९ ।
आगात्समीपं देवस्य आहूतः स्वयमीश्वरः । ।३७। ।
ततोपरः समावेदे देवं चन्द्रार्धधारिणम् ।
चतुर्वक्त्रो महातेजाश्चतुर्विंशेक्षणः प्रभुः । । ३८।।
सहस्रबाहुर्ज्वालास्यो महानेत्रोर्ध्वमेहन ।
करालदशन४० श्चैव शंकुकर्णो४१ महानखः ।।३९।।
असिपाणिर्महातेजाः शतपादश्शतोदरः ।
विद्युत्केशोतिहासश्च तथैवोभयतो गतिः ।।8.23.४० । ।
अजैकपादिति ख्यातो वृतः कोटिशतेन सः ।
काञ्चनोपलवृक्षाढ्यः समेघ इव पर्वतः । ।४१ ।।
सनत्कुमार उवाच
आगात्ततोपरो व्यास गणपः सुमहाबलः ।
सर्वतो वदनः४२ धीमान् सर्वतः पाणिपादभृत्४३ । ।४२ ।।
ह्रस्वबाहूरु४४ पादश्च अशनिं धारयञ्छुभम्४५ ।
शतैर्वृत४६श्च कोटीनामष्टाभिश्चात्मनः समैः ।।४३ ।।
निकुम्भ इति विख्यातः शतपादोदराननः ।
आगात्ततोपरश्चापि विद्युत्केशो महाबलः ।।४४। ।
चन्दमालाधरो घोरः प्रहसन्४७ प्रविचालयन्४८ ।
दण्डधारी महावक्त्रः शंखकुन्देन्दुसप्रभः ।।४५।।

३६ रौद्रः - घ. । ३७ पट्टिशेनो - घ. । ३८ स्त्र्यक्ष - क. । ३९ प्रभुः - घ । ४० वदन - घ. । ४१ कान्ताकर्णो - घ. । ४२ वरदः - घ । ४३. धृक् - क. । ४४ बाहुक - घ. । ४५... भाम् - घ. । ४६ वृत्यै - क. । ४७ सहस्रं - घ.। ४८ प्रतिचारयन् - घ. ।

106

गणकोटीशतवृतः परमम्परतापनः ।

ततोपरः सहस्रेण कोटीनां गणपो वृतः । ।४६। ।

सूर्यमालास्रजं बिभ्रदाजगाम महातपाः ।

स सूर्याप्यायनो नाम देवस्य परमप्रियः । ।४७। ।

धनुष्पाणिर्महातेजा विश्रुतः स४९ महाद्युतिः ।

तथान्यः५० सर्पमालश्च५१ चक्राभरण एव च । ।४८।।

चक्रायुधो महातेजा ह्रस्वपाद५२ कटीकरः५३ ।

स नाम्ना विश्रुतो लोके ग्रहाप्यायन इत्युत । ।४९।।

गणकोटिशतैः षड्भिर्वृतस्समनुधावत ।

शंकुकर्णोभ्ययाच्चैव गणकोट्या महाबलः ।।8.23.५० । ।

नन्दिकश्चापि दशभिः पिङ्गाक्षोष्टाभिरेव च ।

विनायकश्चतुःषष्ट्या कुष्माण्डो नाम विश्रुतः ।।५१ ।।

हिरण्यवर्णः षड्भिश्च एकपादस्तथैव च ।

धूम्रकेशो द्वादशभिः पताकी दशभिस्तथा ।।५२ ।।

सहस्रघंटोष्टादशभिस्तपः पंचभिरेव च ।

सहस्रशीर्षः षड्भिश्च भवः कोटिसमावृतः ।।५३ ।।

वरो दशभिरभ्यागात् कुम्भकर्णस्तथाष्टभिः ।

विष्वक्सेनः सहस्रेण अनदस्तु शतेन वै ।।५४।।

आवेशनो५४ तथाष्टाभिः सप्तभिश्च प्रवर्तनः५५ ।

महारवः सहस्रेण गणानां गणपो वृतः ।।५५। ।

चतुर्मुखो द्वादशभिस्तथा बाहुप्रहारकः५६ ।

महाकालः शतेनैव तथाग्निशिखरो गणः ।।५६।।

आदित्यमूर्धा कोट्या च तथा चैव धनावहः ।

सन्नाभ५७श्च शतेनैव कुक्कुटोष्टाभिरेव च । ।५७। ।

४९ सु - घ. । ५० अथान्यः - घ. । ५१ शपमानश्च - घ. । ५२ क्रमुपाद - घ ।। ५३ कटः - क, घ. । ५४ नः? । ५५ प्रतर्दनः? । ५६ वाहूपकारकः? - घ. । ५७. म - क. ।

107

कुन्दश्च पञ्चदशभिस्तथा संकोटकोपरः ।

अमोघभूतिः कोट्या५८ च तथा चैवाघभूतिकः५९ । ।५८ ।।

एकपादोपरः षष्ट्या तथा सप्तभिरारणः६० ।

महाबलश्च६१ नवभि६२रपस्मारश्च विश्रुतः ।।५९।।

नीलो नवत्या देवेशः पूर्णभद्रस्तथैव च ।

निर्ऋति६३ श्चैव सप्तत्या कोटीनामभ्यगात् सह ।।8.23.६० । ।

कोटीकोटीसहस्राणां शतैर्विंशतिर्भिवृताः ।

ईतय६४ स्तत्र चाजग्मुर्महायोगबलान्विताः ।।६ १ । ।

भूताः कोटिसहस्रेण प्रमथाः कोटिभिस्त्रिभिः ।
वीरभद्रश्चतुःषष्ट्या वृषभश्च महाबलः ।। ६२।।
मेघः सौदामिनीमालो६५ नवत्या संवृतो६६ भ्यगात् ।
प्रभाकरश्च विंशत्या विट्पति६७  श्च महाबलः ।।६३ । ।
गिरिको६८ मेघनादश्च उदरो मणिरेव च ।
काष्ठकर्णश्च दिव्यात्मा विश्वरूप६९श्च विश्रुतः । । ६४। ।
शतमन्युस्तथा चैव पञ्चाक्षश्चैव वीर्यवान् ।
तालकेतुश्च७० षंडश्च कपाली गजनाशनः७१ ।।६५। ।
संवर्तकस्तथा चैत्रस्त्रैलोक्यदहन७२ स्तथा ।
लोकान्तकश्च दीप्तात्मा हेमकुण्डल एव च । ।६ ६।।
मृत्युश्चैव यमश्चैव कालो विषहरस्तथा ।
शतमायो महामायः सर्वत्राशरण७३ स्तथा । ।६७।।
एकशृङ्गो च विख्यातस्तथा भृङ्गिरिटिश्च यः ।
एते चान्ये च गणपा गुह्या ये च महाबलाः ।।६८।।
तत्राजग्मुर्मुदा युक्ताः सर्वे चित्रास्त्रयोधिनः७४ ।
गायन्तश्च द्रवन्तश्च नृत्यन्तश्च महाबलाः । ।६९ । ।

५८ ट्यो? - घ. । ५९ रौअघभूतिकः - घ, चानघ? । ६०.?. णाः - क. । ६१.. रश्च - घ. । ६२. ति - क. । ६३ निवृत्ति - घ. । ६४ दूतय - घ. । ६५ मनीमानो - घ., माला - क. । ६६ संभृतो - घ । ६७ विद्युति - घ । ६८ विवेको - घ. । ६९ विल्वरूपं - क. । ७० अलकेतुश्च - घ. । ७१ कपालजगदासनः - घ. । ७२ सहन - घ. । ७३ पूर्वनाभरण? - घ. । ७४ दिव्यास्त्रयोधिनः - घ. .।


मुखाडम्बरवाद्यानि वादयन्तस्तथैव च ।
रथैर्नागैर्हयैश्चैव७५ ययुर्मर्कटवाहनाः७६ । ।8.23.७० ।।
व्याघ्रसिंहविडालैश्च सर्पैः पक्षिभिरेव च ।
श्वापदैश्च तथानेकै७७ रल्पैश्च विविधैः शुभैः । ।७१ । ।
विमानेषु तथारूढा मानुषेषु७८ तथापरे ।
पुष्पकेन विमानेन तथा मत्तद्विपेन च । ।७२ । ।
छंदं कृत्वा तथा शं - किन्नरोरगचारणैः७९ । (?)
उत्तमायुधयुक्तेन हंसयुक्तेन चापरे । ।७३ । ।
नानाविमानमारूढाः कोटिशस्तत्र चापरे ।
भेरीशृंग८० मृदंङ्गैश्च पणवानकगोमुखैः । ।७४। ।
वादित्रैर्विविधैश्चैव पटहैरेकपुष्करैः८१ ।
भेरीकर्कर८२ सन्नादैराडम्बरकडिण्डिमैः ।।७५ ' ।
मड्डूकै८३  र्वेणुवीणाभिर्विवृषैस्तुणवैरपि८४ ।
दर्दरै८५ स्तलघातैश्च८६ कच्छपै पणवैरपि ।।७६ ।।
वाद्यमानैर्महायोगा आजग्मुर्देवसंसदम् ।

हंसजालेन दिव्येन पद्मयोनिः पितामहः । ।७७ । ।
मुनिभिर्योगसंसिद्धैर्वृतः सर्वैः समन्ततः ।
ऋग्वेदो दक्षिणे भागे दिव्यकुंडलभूषित । ।७८। ।
पश्चिमे सामवेदश्च नाना (?) रूपधरः शुभः ।
अथर्वा चोत्तरे चैव वह्निनेत्रधरः प्रभुः । ।७९ । ।
यजुर्वेदस्तु पूर्वेण विद्युद्रूपधरस्तथा ।
इतिहासपुराणानि नानारूपधराणि च । ।8.23.८ ० ।।
अग्रतो दीपयानेन तेपि तत्र प्रजग्मिरे ।
शिवभक्तो महायोगी८७ गरुडस्थो जनार्दनः । ।८ १ । ।

७५ श्चैवा - क., श्चापि - घ. । ७६ वायुम.. - घ. । ७७ नथीनकै - घ । ७८ मनुष्येषु - क. । ७९... णाः - घ । ८० शंख - घ. । ८१ पुष्पकैः - घ । ८२ मुरज - घ । ८३ मंडूकैः - घ । ८४ विविधैः पटहै. - घ. । ८५ दर्श? घ. । ८६ नसन्श्चि? - क घ. । ८७ महाभोगी - घ ।


सर्वैः स्वीयैः परिवृतस्तत्रागात् पार्षदैः८७ सह ।
वृत आत्मसमैर्दिव्यैर्विष्णुरूपधरैः शुभैः । ।८२ । ।
दृष्ट्वा नारायणं प्राप्तं महादेवोब्रवीदिदम ।
वाचा गंभीरया शंभुस्तदेवं लोकभावनम् । ।८३ । ।
शृणु विष्णो वचो मह्यं तद्वक्ष्यामि जनार्दन ।
अभिषेकं प्रयच्छस्व नन्दिनि मम सुप्रिये ।।८४। ।
प्रहस्य शंकरं८९ देवो भूयो नारायणोब्रवीत् ।
यथा वदसि देवेश करिष्येहं वृषध्वज । ।८५। ।
देवानामपि देवस्त्वं पुमान् त्वं - - न संशयः ।
शक्र ऐरावतारूढ आजगाम तदन्तिकम् । ।८६। ।
वसुभिर्मातरश्चैव थमवरुणवित्तपैः ।
पृथग्विमानसंस्थैश्च छादयित्वा नभस्तलम् । ।८७।।
प्रलयान्ते च सृष्टौ तु यादवासन (?) संज्ञया ।
ब्रह्मादिरूपं यातेमा संप्राप्ता गणरूपिणः (?) ।।८८ ।।
ते विश्वकर्माणममित्रहासां९० विश्वेशमेकाक्षरमव्ययञ्च ।
सहस्रनेत्रप्रतिमातिभास्वराः९१ प्रणेमुरुच्चैरपि चाभिनेदुः । ।८९। ।
इति स्कन्दपुराणे गणपाह्वानो नाम त्रयोविंशोध्यायः

सनत्कुमार उवाच
ते गणेशा१ महासत्वाः सर्वदेवश्वरेश्वरम्२ ।
प्रणम्य देवदेवञ्च३ इदं वचनमब्रुवन् । । १ । ।
भगवन् देवतारिघ्न देवदेवाम्बिकापते ।
किमर्थं वयमाहूता आज्ञापय कृतं हि तत्४ । ।२। ।

८८ सरैः - घ. । ८९ संवरा - घ । ९० सिहा? - घ. । ९१ भास्करा. घ ।
१ गणेशाश्च - घ. । २ सर्वे देवासृरेश्वराः - घ. । ३ दे तदेवं च - घ. । ४ गहत्? - घ. ।


किं सागरान् शोषयाम यमं वा राहु किङ्करैः ।
हन्म मृत्युं च कालं च५ न भवत्यस्य कोप्यज ।।३।।
बद्ध्वेन्द्रं६ सह देवैश्च सविष्णुं सह वायुना ।
आनयाम सुसंक्रुद्धा दैत्यान् वा सह दानवैः ।।४।।
कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया ।
कस्य वा७द्योत्सवं देव सर्वकामसमृद्धिमत् ।।५। ।
तांस्तथावादिनः सर्वान्नमतो भक्तवत्सलः ।
उवाच देवः संपूज्य गणान्९ गणपतिर्भवः ।।६।।
देवदेव उवाच
शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः ।
श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशङ्किताः ।।७।।
नन्दीश्वरोयं पुत्रो नः सर्वेषामीश्वरेश्वराः१० ।
प्रियो११ग्रनायकश्चैव सेनानीर्वः समाहितः ।।८।।
तमिमं मम सन्देशाद्यूयं सर्वेभिसंमताः१२ ।
सेनान्यमभिसिञ्चध्वं१३ महायोगपतिं पतिम् ।।९।।
अद्यप्रभृति युष्माकमयं नन्दीश्वरः शुभः ।
प्रियो गौरवयुक्तश्च सेनानीरमरः प्रभुः । ।8.24.१०।।
सनत्कुमार उवाच
एवमुक्ते भगवता गणपाः सर्व एव ते ।
एवमस्त्विवति संमन्त्र्य संभारानाहरँस्ततः ।।१ १।।
तस्य रूपाश्रयं दिव्यं जाम्बूनदमयं शुभम् ।
आसनं मेरुसंकाशं मनोरममथाहरन् ।।१२।।
शातकुम्भमयञ्चापि चारुचामीकरप्रभम् ।
मुक्तादामावलम्बं च मणिरत्नावभासितम् ।।१३।।
५ मृत्युमुतामृत्युन्न- क. । ६ महेन्द्र - घ. । ७ चा... - घ । ८ कार्यं - क । ९ सर्वान् - घ । १०.. र - क. ।
११ यं - घ. । १२ तिसंमताः - घ. । १३ सेनापत्येमिसिञ्चध्वं - घ. ।


स्तम्भैश्च वैडूर्यमयैः किंकिणीजालसंवृतम् ।
चातूरक्तकसंयुक्तं१४ मण्डपं विश्वतो मुखम् ।।१४।।
कृत्वा चक्रुश्च तन्मध्ये तदासनवरं शुभम् ।
तस्याग्रतः पादपीठं नीलं वज्रावभासितम् ।। १५ ।।
चक्रुः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ ।

संपूर्णौ१५ परमाम्भोभिररविन्दावृताननौ ।।१ ६। ।
अग्रतोग्निं समाधाय१६ वृषभञ्चापि पार्श्वतः१७ ।
सवत्सां सुरभिञ्चापि तस्य पार्श्वेथ दक्षिणाम्१८ ।। १७।।
छत्रं शतशलाकं च जाम्बूनदमयं१९ शुभम्२० ।
शंखहाराम्बुगौरेण पृष्ठेनाभिविराजितम् ।।१८।।
व्यजनं चन्द्रशुभ्रञ्च हेमदण्डं सुचारुमत् (?) ।
मालां कुशेशयानां च भ्रमरावलिसेविताम् ।।१ ९।।
आनिन्युस्तत्र गणपा नन्द्यावर्त्तांश्च काञ्चनान् ।
पुनर्वसुञ्च पुष्यञ्च द्वौ मत्स्यौ वरुणालयौ ।।8.24.२ ० । ।
स्वस्तिकं वर्धमानं च श्रीवत्सं चैव काञ्चनम् ।
कीचका वेणवश्चैव कन्याश्चैवाभिपूजिताः । । २१ ।।
ऐरावतं सुप्रतीकं गजावेतौ च पूजितौ ।
ध्वजञ्च पूजितं दिव्यं शंखं चैवेन्दुवर्चसम् । ।२२ । ।
कलशानां२१ सहस्रञ्च काञ्चनानां सुवर्चसाम् ।
राजतानां सहस्रञ्च पार्थिवानां तथैव च ।। २३ । ।
ताम्राणामथ दिव्यानां सहस्रमनलत्विषाम् ।
वासोयुगं वृक्षजं च विरजः सूक्ष्ममेव च । ।२४।।
मुकुटं काञ्चनं चैव सुकृतं विश्वकर्मणा ।
कुण्डले चामले दिव्ये वज्रञ्चैव वरायुधम्२२ । । २५ ।।

१४ चानु .. - क, चातु - - क- टि, चारुदण्डैः सुसंयुक्तं - घ. । १५ सुपूर्णौ - घ. । १६ समादाय - क. । १७ ...वः - घ । १८ .णे घ । १९ जम्बूनदमयं - क. । २० ततं - घ. । २१ शलाकानां - क. । २२ ... वाकरायुधम् -क., परा - घ. ।

112

पट्टिशञ्च महद्दिव्यं शूलं चाशनिमेव च ।
जाम्बूनदमयं२३ सूत्रं केयूरद्वयमेव च । ।२६ । ।
हारञ्च मणिचित्राङ्गं रोचना रुचकं२४ तथा ।
नलभा२५ पारियात्रं२६ च वर्णं(?)२७ कङ्कण२८मेव च । ।२७ । ।
दर्भांश्च दिव्यान् समिध आज्यं धूपमथापि च ।
समन्तान्२९ निन्युरव्यग्रा गणपा देवसम्मताः । ।२८ ।।
ततो दिशः समुद्रा३०श्च वरुण - - - - - ३१ ।
नभोग्निर्वसवश्चैव३२  चन्द्रादित्यौ ग्रहैस्सह । ।२९।।
तारारूपाणि सर्वाणि नक्षत्राणि ध्रुवस्तथा३३ ।
रुद्रा रक्षांसि यक्षाश्च अश्विनौ दैत्यदानवाः । ।8.24.३ ० । ।
गन्धर्वाप्सरसश्चैव नारदः पर्वतस्तथा ।
पृथिवी च समुद्राश्च वर्षाणि गिरयस्तथा । ।३ १ । ।
वृक्षाश्च बीरुधश्चैव ओषध्य३४श्च महाबलाः ।

नद्यः सर्वाः समाजग्मुर्वसवश्चैव३५ सर्वशः । ।३ २ ।।
लोकस्य मातरश्चैव पृथिवी स्वर्ग एव च ।
भूतानि प्रकृतिश्चैव इन्द्रियाणि च सर्वशः ।।३ ३ ।।
तीर्थानि चैव सर्वाणि दानानि विविधानि च ।
ऋचो यजूंषि सामानि अथर्वाङ्गिरसा अपि३६ ।।३४। ।
यज्ञाश्च क्रतवश्चैव इष्टयो नियमा३७स्तथा ।
छन्दांसि चैव सर्वाणि३८ पिशाचा देवयोनयः । ।३ ५।।
ब्रह्मा च ऋषयश्चैव विष्णुः सानुचरस्तथा ।
प्राचीं प्रतीचीं ये रुद्रा दक्षिणामुत्तरं तथा । ।३ ६।।
अधश्चोर्ध्वं च ये रुद्राः साध्याः३९ पितर एव च ।
तेष्वागतेषु सर्वेषु भगवान् गोवृषध्वजः । ।३७।।

२३ पट्ट? - क. । २४ रोमानां कवचं - घ. । २५ जलतां - घ. । २६ परिहार्य - घ. । २७ कर्ष - घ. । २८ कङ्किण - क. । २९ समन्त्रा ( न) ( न्त्य?) - क. । ३० सपाला? । ३१ वरुणो धनदो यमः? । ३२ वृक्षाश्च वीरूधश्चैव - घ. । ३३ आदित्याः सर्वशस्तथा - घ. । ३८ वारिण्यौषध्यो घ. । ३५ परम - घ. । ३६ वपि - क. घ.। ३७ इष्टीः सनियमा क. । ३८ च यथार्हाणि - घ. । ३९ आजग्मुस्ते - घ. ।

113

सर्वं कार्यविधिं कर्तुमादिदेश पितामहम् ।
एकैकं कलशं तत्र सर्वौषधिसमन्वितम् । ।३८। ।
कृत्वाद्भिः पूरयित्वा च कुशेशययुगावृतम्४० ।
जयाञ्च विजयाञ्चैव सिंहीं व्याघ्रीं तथैव च । । ३ ९। ।
सुवर्चलां शंखपुष्पीं विष्णुक्रान्तां पुनर्नवाम् ।
कुमारीं चन्द्रकान्ताञ्च मृतसञ्जीवनीमपि । ।8.24.४० । ।
आदित्यवर्चसं चैव अमृतां श्रीनिकेतनाम् ।
तथा कुमुद्वतीं चैव प्राक्षिपँस्ते तथौषधीम्४१ । ।४१ । ।
पार्थिवेषु तदा व्यास सर्वेष्वेव गणेश्वराः ।
सौवर्णेषु तु सर्वेषु तीर्थानि विविधानि च ।।४२।।
दानानि चैव सर्वाणि भगवान् संन्यवेशयत् ।
राजतेषु च कुम्भेषु मन्त्राँश्छन्दांसि चैव ह ।।।३ । ।
क्रतुमत्यश्च४२ विविधा इष्टीः काम्यान् तथेतरान् ।
औदुम्बरेषु सर्वेषु सरितः सागरांस्तथा । ।४४। ।
तपांसि नियमाँश्चैव भगवानभिविन्यसन्४३ ।
एकैकं कलशं तत्र अभिपूर्या४४ भिमन्त्र्य च । ।४५ ।।
वेष्टयित्वा च सूत्रेण देवेभ्यः प्रददौ विभुः ।
स जग्राह तदा ब्रह्मा एकं कलशमात्मना ।।४६।।
विष्णवे च ददावेकमेकमिन्द्राय धीमते ।
गणपेभ्य४५स्तथा चान्यानृषिभ्यश्च पितामहः । ।४७। ।

ततः श्रेष्ठासने४६ तस्मिन्नुपवेश्य महामनाः ।
अर्चयित्वा तु तं४७ ब्रह्मा स्वयमेवाभ्यषिञ्चत । ।४८। ।
ततो विष्णुस्ततः४८ शक्र ऋषयश्च सहामरैः ।
गणाधिपाश्च ते सर्व४९ अभ्यषिञ्चन्त नन्दिनम् । ।४९ ।।

४० मुखावृतम् - क., युतो... - घ. । ४१ वनौषधीः - घ. । ४२ क्रतुं यज्ञांश्च - घ., ऋतुमत्याश्च - क. । ४३ नभ्यविन्यसत् - क., नेत्य - घ. । ४४ अभिपूज्या - घ. । ४५ गणसेना - क., गणेशेभ्य? । ४६ श्च ष्वा (स्वा)सने - क. । ४७ ततो - क, । ४८... स्तथा - घ. । ४९ सर्वे ते - क ।


वासोयुगं च तद्दिव्यं५० गन्धान्दिव्याँस्तथैव च ।
केयूरे५१ कुण्डले५२ चैव मुकुटं हारमेव च । ।8.24.५० ।।
पट्टिशं शूलवज्रं च अशनी५३  च ददौ स्वयम् ।
छत्रं जग्राह देवेन्द्रो५४ वायुर्व्यजनमेव च ।
ऋषयस्तुष्टुवुश्चैनं५५ पितामहपुरोगमाः । ।५१ ।।
विष्णुरुवाच (?)
नमः कुष्माण्डराजाय५६ वज्रोद्यतकराय च ।
शालंकायनपौत्राय५७ हलमार्गोत्थिताय च । ।५२।।
शिलादस्य च पुत्राय रुद्रजप्यपराय५८ च ।
रुद्रभक्ताय देवाय नमोन्तर्जलशायिने ।।५३ ।।
गणानां पतये चैव भूतानां पतये नमः ।
उमापुत्राय देवाय शिवलब्धवराय च ।।५४।।
रुद्रस्य प्रियपुत्राय पट्टिशायुधधारिणे५९ ।
नमो दंष्ट्राकरालाय ललाटनयनाय च ।।५५।।
प्रमथाय६० वरेण्याय६१ ईशानायार्पिताय६२ च ।
द्वाराध्यक्षाय शूराय रुद्राय वरदाय च ।।५६ । ।
नमः सर्वार्थसिद्धाय सुयशां६३ पतये नमः ।
नमः प्रवरमालाय६४ क्षीरोदनिलयाय च ।।५७।।
महागणाधिपतये महायोगेश्वराय च ।
दिण्डिमुण्डाय६५ चण्डाय एकाक्षररताय च ।।५८। ।
अक्षयाया६६ व्ययायैव६७ अजराया६८ मराय६९ च ।
पशूनां पतये चैव जेत्रे७० मृत्योस्तथैव च । । ५९। ।

५० तथा दिव्यं -घ । ५१  रं -घ । ५२- ल-घ। ५३ मसनी  -घ --नी -क। ५४ चैवास्य - क. । ५५.. व - क. । ५६ पतये - घ । ५७ गोत्राय - घ. । ५८ कराय - ध., तराय - क । ५९ ग्राय वै नमः - घ । ६० प्रथमाय - क.। ६१... नां (?) । ६२ मिताय - ध. । ६३ स्वयशां - घ, । ६४ मानाय - घ. । ६५ दान्तक्षताय - घ । ६६ अक्षराय - घ. । ६७ मृतायैव - क. । ६८ अजयाय - क. । ६९ व्ययाय - क. । ७० जैत्रे - क. ।

115

नमः पवनवेगाय सर्वज्ञायाजिताय च ।
अनेकशिरसे चैव अनेकचरणाय च । ।8.24.६ ० । ।
किरीटिने कुण्डलिने महापरिघबाहवे ।
सर्वान्७१ देवगणाँश्चैव पाहि देव७२ नमोस्तु ते ।।६ १ ।।
सनत्कुमार उवाच
एवं स्तुत्वा ततो देवस्तस्मै व्यास महात्मने ।
प्राञ्जलिः प्रयतो भूत्वा जयशब्दं चकार ह । ।६२। ।
ततो गणा जयेत्यूचुस्ततो देवास्ततो७३ सुराः ।
ततः सर्वाणि भूतानि ब्रह्मा शक्रस्तथैव च । ।६३ ।।
ततः शंखाँ७४श्च भेरी७५श्च पटहाडम्बराँस्तथा ।
वंशाँश्च पणवाँश्चैव कृकवान् गोविषाणकान्७६ ।।६४। ।
डिण्डिमान् वेणुकाँश्चैव मर्दलाँश्चैव सर्वशः ।
अवादयन्त गणपा हर्षयन्तो मुदा युताः ।। ६५ । ।
सनत्कुमार उवाच
नन्दीश्वरस्य७७ य इमं स्तवं देवाभिनिर्मितम् ।
पठेत सततं मर्त्यः७८  स गच्छेत् तत्सलोकताम्७९ । । ६६। ।
नमो नन्दीश्वरायेति कृत्वा यः स्वप्नमाचरेत् ।
तस्य कुष्माण्डराजेभ्यो न भयं विद्यते क्वचित् । । ६७। ।
यत्रायं स्थाप्यते नित्यं स्तवः परमपूजितः ।
न भयं तत्र भवति ग्रहेभ्यो व्यास सर्वदा । । ६ ८। ।
नन्दीश्वरं ये प्रणमन्ति८० मर्त्या नित्यं प्रसन्नेन्द्रियशुद्धसत्वाः ।
ते देवदेवस्य सहाद्रिपुत्र्या८१ इष्टा वरिष्ठाश्च गणा भवन्ति । ।६९ । ।
इति स्कन्दपुराणे नन्दीश्वरस्तवश्चतुर्विंशतितमोध्यायः

७१ देवान् मे गणाँ - क. । ७२ आदिदेव - घ. । ७३ ततः - घ. । ७४ शंखा - घ. । ७५ भिर्य-- घ. । ७६ विषाणिकाम् - क., कोविषाणिकं - घ. । ७७ राय - घ । ७८ लोकः - घ. । ७९ मम सलोकताम् क., तस्य - घ.। ८० प्रलपन्ति - घ., प्रजपन्ति? । ८१ महा... - क. घ. ।

116

सनत्कुमार उवाच
ततस्तत्रागतान्देवो१ देवताधिपतिर्भवः ।
मरुतः प्राह संपूज्य२ कन्यार्थं सद३ सत्पतिः । । १ ।।
मरुतो४ ये महावेगा महासत्वा महौजसः ।
आमन्त्र्य नाम्ना तानीशः सशक्रः५ सपितामहः६ । । २ । ।
युष्माकं सुयशां कन्यां सनसां७ दिव्यरूपिणीम् ।
दातुमर्हथ संपूज्य८ स्नुषा सा नौ भविष्यति९ । । ३ । ।

मरुत१० ऊचुः
त्वमस्माकं च तस्याश्च११ सर्वस्य जगतस्तथा ।
प्रभविष्णुस्त्रिलोकेश न१२ नो याचितुमर्हसि ।।४। ।
त्वयैव देया१३  ग्राह्या च त्वन्नो गतिरनुत्तमा ।
मा नः परानिवेशान याचनेन विभावय । ।५।।
पिता नः कश्यपः श्रीमान् मरीचिश्च पितामहः ।
पितामहपिता ब्रह्मा तस्यापि त्व पिता महान्१४ ।
स त्वं पितामहोस्माकं न परान् कर्त्तुमर्हसि । । ६। ।
ईश्वर उवाच
अस्माकं न परा यूयं सत्यं वः परिभाषितम् ।
किन्तु लोकहितार्थाय मुनिदेवैः प्रभाषितम् ।
अदत्ता न गृहीतव्या कन्या१५ धर्मः सनातनः ।।७। ।
सनत्कुमार उवाच
स एवमुक्तो१६ देवेशो मरुद्भिर्देवसत्तमैः ।
सुयशां मरुतां कन्यामानयामास१७ तत्क्षणात । ।८। ।

१ देवान् - क. । २ संकल्प्य - घ. । ३ शर्व - क । ४ मा -ता - घ., इतः पूर्व देवदेव उ इति क. पु. । ५...क्रान - ध. । ६... हान? - घ । ७ ? - घ । ८ तां पुत्रीं - घ. । ९ मह्यं बलाबलाः - घ. । १० मारुता - घ. । १ । रस्यःञ्च? - घ । १२... त्वं - घ- । १३ देव - घ. । १४ पितामह - क । १५ धन्या  घ. । १६ एवमुक्तोथ -घ । १७,.. मासयामास - घ. ।



स्वयं होतास्य१८ तत्रासीद् ब्रह्मा लोकपितामहः ।
कश्यपश्च१९ तथोद्गाता अत्रिः साम२० स्वयं जगौ । । ९। ।
अथर्वाङ्गिरसौ२१ देवौ२२ ब्रह्मत्वमपि चक्रतुः२३ ।
नारदः पर्वतश्चैव चित्रसेनश्च गायनः । । 8.25.१० । ।
विश्वावसु रुचि२४ श्चैव हाहा हूहूस्तथैव च ।
तथा शालिशिरा यश्च विश्रुतो गण्डमण्डकः । । ११ । ।
ईतिश्चैवेन्द्रवाहश्च२५ यज्ञवाहोथ दक्षिणः ।
एते चान्ये च गन्धर्वा जगुर्मधुरकण्ठिनः । । १ २। ।
उर्वशी चैव रम्भा च घृताची पूर्वचित्त्यपि२६ ।
तिलोत्तमा च विश्वाची अन्याश्चाप्सरसस्तथा२७ । । १३ । ।
अनृत्यन्त२८ महाभागा नृत्तं सुरमनोहरम् ।
- - - - - - - - - - - - - - - - - । । १४। ।।
।
- - - - - - - - - - - - - - - - । । १ ५। ।
सनत्कुमार उवाच
स एवमभवद् व्यास विवाहस्तस्य धीमतः ।

नन्दिनो गणमुख्यस्य अनौपम्यो ह्यनिन्दितः ।। १६ ।।
ततः स तु कृतोद्वाहो नन्दी गत्वा महामनाः ।
पादौ ववन्दे देवस्य देव्या ब्रह्मण एव च ।
शिलादस्य च लोकेशः श्रिया२९ परममया युतः ।। १७।।
देवदेव उवाच
वरं वृणीष्व पुत्र त्वं स्नुषा चेयं तव प्रिया ।
वरान३० ददामि३१ ते वत्स मनसा यानभीप्ससे३२ ।। १८।।

१८ च घ । १९ काश्यपश्च - क. । २० सूक्तं - घ । २१.. मो - क. । २२ देवो - क । २३ मभिचक्रतुः - घ । २४ तद्गुरुः सुरुचि - घ । २५ चैवेन्द्रचापश्च - घ । २६ वपुरित्यपि - घ. । २७. सः शुभा - ख. । २८... तन्त - क. । २९ प्रिया - ख., प्रीत्या - घ. । ३० वरं - क. ख. । ३१... नि - क, । ३२ अनया सह (म) मीप्सित - ख.,मीप्सितं - घ. ।


नन्द्युवाच
भगवन् यदि तुष्टोसि त्वयि भक्तिर्दृढास्तु मे ।
सदा च तुष्टो भव मे साम्बः सहगणेश्वरः३३ ।। १९।।
पितरञ्चैव मे देव उत्पादकमिमं प्रभो ।
अनुग्रहेण युक्तेन योक्तुमर्हसि कामद ।।8.25.२ ० ।।
देवदेव उवाच३४
सदाहं तव नन्दीश सुतुष्टः३५ सगणेश्वरः ।
पार्वत्या सहितो धीमन्निदञ्च शृणु मे वचः ।। २१ ।।
सदेष्टश्च वरिष्टश्च परमैश्वर्यसंयुतः३६ ।
महायोगी महेष्वासो महाबलपराक्रमः ।। २२।।
अजय्यश्चैव जेता च पूज्येज्यश्च सदा भव ।
अहं यत्र भवांस्तत्र यत्र त्वं तत्र चाप्यहम् ।।२३ ।।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ।
अयञ्च ते पिता पुत्र३७ परमैश्वर्यसंयुतः ।।२४।।
भविष्यति गणाध्यक्षो महागणपतिर्मम ।
विमानं३८ चास्य३९ वैभ्राजं कामगं सर्वकाञ्चनम् ।।२५।।
उपेतं भवनैर्दिव्यैः४० प्रयच्छामि जनावृतम्४१ ।
तेनायं४२ सर्वलोकेषु चरिष्यति यथेप्सितम् ।।२६ ।।
स्थानं श्रीपर्वते४३ चास्य भविष्यति सुपूजितम्४४ ।
भृगौ तस्मिँश्च यः प्राणाँस्त्यक्ष्यते वै सुधार्मिकः ।
स कामचारी वैभ्राजे गणपोस्य भविष्यति ।।२७।।
सनत्कुमार उवाच
ततो देवी महाभागा शैलादेर्वरयद्४५ वरम् ।
सोब्रवीत्त्वयि भक्तिर्मे सदैवानपगा भवेत् ।।२८ ।।

३३... रः - ख. ध. । ३४ ईश्वर उ - क । ३५ संतुष्टः - घ. । ३६ संयतः - घ । ३७ विप्रः - घ. । ३८ पर्वतं - क.ख. ध. । ३९ चापि - घ. । ४० दिव्यं - ख. । ४१ जलावृतम् - ध. । ४२ ततश्च - क. । ४३ श्रीपर्वतं - घ. । ४४ प्रपूजितम् - घ. । ४५ वरदा - क., रददा - ख., रदद - घ ।

119

ततो मरुत्सुता चैव उभाभ्यामभि४६ चोदिता ।
वरान्४७ वृणु यथेष्टं वै ताविदं प्रत्युवाच ह । ।२९। ।
युवयो४८रस्तु भक्तिर्मे तथा भर्त्तरि चैव हि ।
नित्यं चानपगा स्यान्मे धर्मे च मति४९रुत्तमा ।
एतमिच्छामि५० देवेशौ वरं वरसहस्रदौ । । 8.25.३० । ।
सनत्कुमार उवाच
ततस्ता एव५१ मेतत्ते भवितेति शुचिस्मिते ।
ऊचतुर्मुदितौ देवौ स्नुषान्तां वरवर्णिनीम् । । ३१ । ।
नारायणं समालोक्य ब्रह्माणं च तथा हरः ।
अद्यप्रभृति नन्दीशो युवाभ्यामादृतः सदा । ।३ २ । ।
प्रभुत्वेन हि देवानां प्रतीहारत्वमेष्यति ।
युवयोर्मयि या भक्तिस्तथा स्नेहोथ नन्दिनि । । ३३ । ।
- - - - - - - - - - - - - - - - - - - (?) ।
- - -- - - - - - - - - - - -   । । ३४। ।।
एवं भवतु देवेश नात्र कार्या विचारणा ।
गणाश्चास्य ततोभ्येत्य सर्वे देवप्रियेप्सया५२ । । ३ ५। ।
वरं ददुर्महासत्वाः स वव्रे काञ्चनप्रभः ।
युष्मासु मम भक्तिश्च ऐश्वर्यञ्चापि संमतम् ।
वंद्याश्च५३ यूयं सर्वे मे प्रियो युष्माकमेव च । ।३ ६।।
गणा५४ ऊचुः
भवान् यन्ता५५नुमन्ता च गतिरागति५६रेव च ।
अस्माकमीशः सर्वेषां देवानामपि चेश्वरः । ।३७।।
कुष्माण्डानां वरिष्ठश्च रुद्राणां त्वं महाबलः५७ ।
ईतीनां द्वारपालश्च प्रमथानां तथैव च । ।३ ८।।

४६. पि - क. घ. । ४७ वरं - घ. । ४८ आवयो - क. । ४९ रति - घ. । ५० दिच्छामि - क. ख. घ. । ५१ वेव -ख. । ५२... वः - क. टि. । ५३ वंध्या - घ., पश्या - क.,वन्द्या । ५४ गणपा - घ. । ५५ मन्ता - क. । ५६ र्वा गति - घ. । ५७ महामनाः - ख. ।

120

महाबलो महायोगी सेनानीस्त्वं हि नो मतः५८ ।
त्वं भूतो भूतनेता च नायकोथ५९ विनायकः । । ३९। ।

ग्रहाणामधिपश्चैव रुद्रदण्डधरस्तथा६० ।
त्वमग्रयोधी६१ शत्रुघ्नस्त्वं वीर६२स्त्वं दिवस्पतिः ।।8.25.४० । ।
महानुभावस्त्वञ्चैव क्षीरोदनिलयश्च ह ।
जप्येश्वरनिकेतश्च जप्येश्वरविभावितः ।।४१ । ।
भावनः६३ सर्वभूतानां वरदो वरदाचितः६४ ।
अस्माकं वरदश्चैव भव भूतेश्वर प्रभो । ।४२। ।
सनत्कुमार उवाच
स एवं गणपैः सर्वैः स्तुतो नन्दीश्वरः प्रभुः६५ ।
उवाच प्रणतः सर्वान् ब्रूत६६ किं करवाणि वः६७ । ।४३ । ।
त एवमुक्ता गणपाः सर्व एव महाबलाः ।
ऊचुस्तं दिव्यभावज्ञा देवदेवस्य सन्निधौ । ।४४। ।
त्वमस्माकं गणाध्यक्षः कृतो देवेन शंभुना ।
अस्माभिश्चाभिषिक्तस्त्वं नायको धर्मदायकः६८ ।।४५। ।
स त्वं शिवश्च सौम्यश्च गुणवानगुणेष्वपि ।
क्षमा६९ शौचदमोपेतो भव नः प्रियकृत् सदा । ।४६।।
सनत्कुमार उवाच
एवमुक्तस्तदा सर्वान् प्रणम्य बहुमानतः ।
शिरस्यञ्जलिमाधाय७० गणपानस्तुवत्तदा । ।४७। ।
नन्द्युवाच
नमो वः सर्वभूतेभ्यो नमो योगिभ्य७१ एव च ।
नमश्चाप्यनिकेतेभ्यो योगीशेभ्यो नमो नमः७२ ।।४८। ।

५८ नो ह्यनुत्तमः - ख. । ५९ स्वात्मा नोथ - क । ६० उग्रदण्डधरस्तथा - ख. । ६१ योगी - क. । ६२ धीर - क.। ६३ भवनः - क । ६४ वरदान्वितः - ख., वरदर्पितः - घ । ६५ रो विभुः - ख. । ६६ भूत - ख. । ६७ ते - क.घ. । ६८ धर्मनायकः - घ. । ६९ शम - घ. । ७० मादाय - घ. । ७१ योगेम्य कः - घ. । ७२ नमस्तथा- क ।

121
नमः कामचरेभ्यश्च नम उग्रेभ्य एव च ।
मृत्युभ्यश्च यमेभ्यश्च कालेभ्यश्च नमो नमः । ।४९ । ।
नमः काञ्चनमालेभ्यः सर्वधर्मभ्य७३ एव च ।
नमो वो वधःकृद्भ्यश्च७४ अवध्येभ्यस्तथैव च । । 8.25.५० । ।
नमः परमयोगिभ्यो७५ जटिभ्यश्च नमो नमः ।
नमो वो दृश्यरूपेभ्यो विकृतेभ्यस्तथैव च । ।५ १ । ।
नमो वल्कलत्रासोभ्यः७६ कृत्तिवासोभ्य७७ एव च ।
नमः श्वेताम्बरस्रग्भ्यश्चित्रस्रग्भ्यो नमो नमः । । ५२ । ।
धावद्भ्यश्च द्रवद्भ्यश्च संस्थितेभ्यो नमो नमः ।
नमो मुनिभ्यो७८ गायद्भ्यो जपद्भ्यश्च नमो नमः । ।५३ । ।

नमः शरभरूपेभ्यः शतरूपेभ्य७९ एव च ।
नमः पर्वतरूपेभ्यो८० व्याघ्ररूपेभ्य८१ एव च । । ५४। ।
नमो मार्जाररूपेभ्यः८२ काकोलूकेभ्य८३ एव च ।
नमो दैवतरूपेभ्यः८४ पवनेभ्यस्तथैव च । ।५ ५ । ।
नमोग्निभ्यस्तथाद्भ्यश्च८५ वरुणेभ्यस्तथैव च ।
नमो धनेशरूपेभ्यः सर्वरूपेभ्य८६ एव च । ।५६ । ।
नमश्चोदरवक्त्रेभ्यः? सर्ववक्त्रेभ्य एव च ।
नमो वामनरूपेभ्य कामरूपेभ्य८७ एव च । । ५७। ।
देवासुरमनुष्याणामाप्यायिभ्यो८८ नमो नमः ।
नमो वः सर्वदेवानां८९ नमो वः सर्वतः शुभाः । ।५८ । ।
ग्रहेभ्यश्च नमो वोस्तु मोक्षेभ्यश्च नमस्तथा ।
शुभेभ्यश्च नमो वोस्तु अशुभेभ्यस्तथैव च ।
मम सौम्या शिवाश्चैव भवन्तु गणनायकाः । ।५९। ।

७३. धमिभ्य - ख. । ७४ वधकेभ्य-- - ख । ७५ योगेभ्यो - क. । ७६.. सेभ्यः - क. ख. । ७७ कृत्तिवासेभ्य - क ख. । ७८ यक्षेभ्यो - ख । ७९ सर्वरूपेभ्य - घ. । ८०... वासेभ्यो - घ. । ८१.. सिंहेभ्य - क-,.. सघेभ्य - घ. । ८२.. रूपिभ्य - घ । ८३ काककोकेभ्य - ख., बकरूपिभ्य - घ. । ८४ देवतरूपेभ्यः - क. । ८५.. पेभ्यो - ख.,...दिग्भ्य - घ । ८६.?. रूपिभ्य - ख. । ८७ वामरूपेभ्य - ख. । ८८.? मुपायिभ्यो - घ. । ८६... भूतानां - ख. ।

122
इति स्तुता गणपतयो महाबलाः
शुभैर्वचोभिः सुरशत्रुनाशनाः ।
दिशन्तु मे सुखमतुलं सुखप्रदा
बलञ्च वीर्यं स्थिरताञ्च संयुगे । । 8.25.६० । ।
तपो९० क्षयं स्थानमथातुलां गतिं
यशस्तथा बहु धर्मनित्यताम्९१ ।
दिशन्तु सर्वं मनसेप्सितञ्च मे
सुरेश्वराः पुष्टिमनुत्तमां तथा । ।६१ ।।
सनत्कुमार उवाच
इमौ९२ नन्दिगणेन्द्राणां स्तवौ योध्येति नित्यशः ।
सोश्वमेधावभृथवान्९३ सर्वपापैः प्रमुच्यते ।।६२।।
सन्ध्यायामपरस्यान्तु९४ जपन् पापं दिवाकृतम् ।
पूर्वस्याँ९५ च जपँश्चापि९६ सर्वं रात्रिकृतं क्षिपेत्९७ ।। ६३ ।।
सनत्कुमार उवाच
ततस्ते गणपाः सर्वे संस्तुतास्तेन धीमता ।
विसृष्टाश्च९८ तदा९९ जग्मुः प्रणिपत्य वृषध्वजम्१०० ।।६४। ।
देवाश्च सर्वलोकाश्च ततो देवः१०१ स्वयं भवः१०२।

सृष्ट्वा१०३ नन्दीश्वरगृहं१०४ प्रदाय च महामनाः१०५ ।।६५।।
ईप्सितं सह देव्या वै जगाम स्थानमव्ययम् ।
य इदं१०६ नन्दिनो जन्म वरदानं तथैव च ।।६६।।
अभिषेकं विवाहश्च पठेद् वा श्रावयीत वा ।
ब्राह्मणः स मृतो याति नन्दीश्वरसलोकताम् । ।६ ७ ।।

९० मम ( ।)..? - ध. । ९१ वित्तसंचये - घ. । ९२ नमो - ख । ९३... वत् - क. ख.,... भृथं च - ध. । ९४ रात्र्यां तु - क । ९५ पूर्वसध्यां - क. । ९६ सन्त्यजेद्वापि - ख घ. । ९७ जपन्. ख, घ. । ९८ निसृष्टाश्च - क. । ९९ तथा - ख । १०० च संधितम् - घ. । १०१ देवाः - घ. । १०२ भुवः - घ., प्रभुः - ख. । १०३ स्तुत्वा - घ. । १०४ नन्दीश्वरं गृह्य - ख. । १०५... त्मना - क. ख. । १०६ इमं - क. ख. ।


यो नियतस्तु पठेत् प्रयतात्मा सर्वमिदं१०७ प्रणतो भवभक्त्या ।
सोपि गतः परलोकविचारी नन्दिसमोनुचरो हि - - -१०८ । ।६८ ।।
इति स्कन्दपुराणे नन्दिकेश्वरमहाभाग्यं नाम पंचविंशतितमोध्यायः

सनत्कुमार उवाच
एवं नन्दीश्वरो व्यास उत्पन्नोनुचरश्च ह ।
अभवद् देवदेवस्य सेनापत्येभिषेचितः ।। १ ।।
व्यास उवाच
देव्या सहाथ भगवानासीनस्तत्र कामदः ।
अकरोत् किं महादेव एतदिच्छामि वेदितुम् ।।२ ।।
सनत्कुमार उवाच
भगवान् हिमवच्छृङ्गे शर्वो देव्याः प्रियेप्सया ।
गणेशैर्विविधाकारैर्हासं सञ्जनयन्मुहुः ।।३ । ।
देवीं बालेन्दुतिलको रामयञ्च रराम च ।
महानुभावैः सर्वज्ञैः कामरूपधरैः शुभैः । ।४। ।
अथ देव्याससादैका१ मातरं परमेश्वरी ।
आसीनां काञ्चने शुभ्रे स्वाद२सने परमार्चिते ।।५। ।
साथ३ दृष्ट्वा सतीं देवीमागतां४ शुभरूपिणीम्५ ।
आसनेन महार्हेण सम्भावय६ दनिन्दिताम् ।।६ ।।
आसीनां तां च७ सोवाच मेना हिमवतः प्रिया ।
चिरस्यागमनं ह्यद्य८ तव९ पुत्रि शुभेक्षणे ।।७। ।
दरिद्रक्रीडनैस्तेद्य१० भर्ता११ क्रीडति१२ संगतः१३ ।
ये दरिद्रा भवन्ति स्म तथैव च निराश्रयाः ।
उमे त एवं क्रीडन्ति यथा तव पतिः शुभे ।।८।।

१०७... भं - क. ख. घ. । १०८ मम स्यात् - क. ख. घ. ।

१ देवी गता तत्र - घ. । २ वा - घ. । ३ अथ - क । ४ ततो दे वीमा? तता - घ. । ५ तु सुरूपिणीम् - ख., तत्र- घ. । ६ सम्पायय - क. ख., सम्घाद - घ. । ७ तु - घ. । ८ कृत्यं - घ. । ९ कृतं (?) । १० स्त्वं हि - ख.घ. । ११ भर्त्रा - क. (घ) । १२.. सि - क. ख. घ. । १३. . ता - क. ख. घ. ।



सनत्कुमार उवाच
सैवमुक्ता तु मात्राथ नातिहृष्टमना१४ भवत् ।
महत्या क्षमया युक्ता१५ न किञ्चित्तामुवाच ह ।।९।।
विसृष्टा सा तदा१६ मात्रा गत्वा देवमुवाच ह ।
भगवन्देवदेवेश नेह१७ वत्स्यामि भूधरे१८ ।
अन्यं वृणु ममावासं भुवनेश महाद्युते ।।8.26.१ ० ।।
देवदेव उवाच
सदा त्वमुच्यमाना वै मया वासार्थ१९ मीश्वरि२० ।
अन्यत्र२१ रोचितवती नावासं देवि२२ कर्हिचित् ।।११ ।।
इदानीं स्वयमेव त्वं वासमन्यत्र शोभने ।
कस्मान्मृगयसे देवि ब्रूहि तन्मे शुचिस्मिते ।।१२।।
देव्युवाच
गृहं गताहं देवेश पितुरद्य महात्मनः ।
दृष्टा२३ च मे तत्र माता विजने लोकभावनी२४ ।।१३।।
आसनादिभिरभ्यर्च्य सा मामेवमभाषत ।
उमे तव सदा भर्ता दरिद्रक्रीडनैः शुभे२५ ।। १४।।
क्रीडते न हि२६ देवानां क्रीडा भवति तादृशी ।
यत्किल त्वं महादेव गणैस्तै२७र्विविधैः शुभैः ।
रमसे तदनिष्टं हि मम मातुर्वृषध्वज ।। १५।।
सनत्कुमार उवाच
ततो देवः प्रहस्याह देवीं हासयितुं२८ प्रभुः ।
एवमेतन्न सन्देहः कस्मान्मन्युरभूत्तव। ।११।।
कृत्तिवासा ह्यवासा वा श्मशाननिलयश्च ह ।
अनिकेतो ह्यरण्येषु पर्वतानां गुहासु च ।।१७।।

१४ नैव द्रष्टुमना - घ. । १५ मुक्ता - क. । १६ तथा - ख । १७ नहि - क । १८ भूतले - ख. । १९ वासार्ध- क.। २०... री - क. । २१ ... न्न - घ. । २२ वासदेवीति - घ. । २३. ष्ट्या - क ख घ । २४... विनी - क., वन- घ. । २५ शुभैः - क. ख. घ. । २६ ननु - घ. । २७ गणेशै - क. । २८ हाय यितु? - क. ।



विचरामि गणैर्नग्नैर्वृतोम्भोजविलोचने ।
मा क्रुधो देवि मातुस्त्वं तथ्यं मातावदत्तव ।

नहि मातृसमो बन्धुर्जन्तूनामस्ति शोभने । । १८। ।
देव्युवाच
न मेस्ति बन्धुभिः किञ्चित्२९ कृत्यं३० सुरवरेश्वर ।
तथा कुरु महादेव यथान्यत्र वसामहे३१ । । १ ९। ।
सनत्कुमार उवाच
स एवमुक्तो देवेशो देव्या देवेश्वरः प्रभुः ।
पार्श्वस्थं गणपं प्राह निकुम्भं नाम विश्रुतम् ।।8.26.२ ० । ।
गणेश्वर निकुम्भ त्वं गत्वा वाराणसीं शुभाम् ।
शून्या३२ कुरु महाबाहो उपायेनैव मा बलात् ।।२१ ।।
तत्र राजा निवसति३३ दिवोदासः प्रतापवान् ।
धार्मिको मम भक्तश्च महायोगी महाबलः । । २२ । ।
सर्वं३४ तथा गतः कुर्या यथा३५ स्मै नापराध्यसे३६ ।
तस्यैव चापराधेन शून्यां३७ वाराणसीं३८ कुरु३९ ।। २३ । ।
सनत्कुमार उवाच
स एवमुक्तस्तेजस्वी निकुम्भो गणसत्तम४० ।
उवाच देवं४१ प्रणतः प्राञ्जलिर्हर्षिताननः४२ । । २४। ।
तथा करिष्ये देवेश यथा स हि नराधिपः ।
भविष्यत्यपराधीश४३ त्वं च तुष्टो भविष्यसि ।
शून्या वाराणसी चैव भविष्यति न संशयः ।।२५। ।
सनत्कुमार उवाच
एवमुक्त्वा निकुम्भोसौ प्रणम्य शिरसा हरम् ।
जगाम पुण्यां लोकेषु पुरीं वाराणसीं प्रभुः । । २६। ।

२९ कार्यं - घ । ३० किंचित् - घ । ३१... म्यहम् - घ । ३२ शून्यं - क., ख, श्रुत्वा - घ. । ३३ ते - ख. । ३४ त्वं - घ. । ३५. .. द्यथा - क. ख. घ. । ३६. धसे - घ. । ३७ शून्या - ख. । ३८. सीं - घ. । ३९ भवेत् - ख. । ४० सप्तम - तत्र । ४१ चेदं च - घ । ४२.?? ईषित नन - क । ४३ च - क. ।

126
तत्रासौ दर्शनं स्वप्ने नापिताय ददौ गणः ।
मंडूकाक्षाय४४ रूपं च स्वं तस्यादर्शयत्तदा ।।२७।।
निकुम्भउवाच
मण्डूकाक्ष निकुम्भोहं गणपः शोकनाशनः४५ ।
तवानुग्रहकृत् प्राप्तो यद् ब्रवीमि कुरुष्व तत् ।।२८।।
दिवोदासगृहद्वारि कुरुष्व त्वं ममालयम् ।
स्थापयस्व च तत्रार्चा मद्रूपसदृशीं शुभाम् ।।२९।।
वित्तं च ते प्रदास्यामि पुत्रान् सौभाग्यमेव च ।
प्रियत्वं चैव सर्वत्र गतिं चानुत्तमां पुनः ।।8.26.३ ०।।
सनत्कुमार उवाच

एवमुक्तो निकुम्भेन नापितो नृपतिं तदा ।
गत्वावदद् दिवोदासमिन्द्र४६ वैवस्वतोपमम् ।।३१ ।।
नापित उवाच
स्वामिन् तव गृहद्वारि करिष्ये गणपालयम् ।
स्थापयिष्ये गणेशञ्च तन्मेनुज्ञातुमर्हसि४७ ।।३२। ।
तथेति सोप्यनुज्ञात४८श्चक्रे तत्र४९ तदालयम्५० ।
प्रत्यस्थापयदर्चाञ्च यादृशं५१ दृष्टवानसौ ।।३३ । ।
तस्य पूजां च महतीं प्रावर्त्तयत५२ शोभनाम्५३ ।
गणेशस्य महासत्वः स च तां प्रत्यगृह्णत ।।३४। ।
सनत्कुमार उवाच
स तस्मै कर्मणा तेन वित्तं यद्यत्समीहितम् ।
पशूँश्चैव हि पुत्रांश्च सौभाग्यं चाददत् प्रभुः५४ ।।३५।।
तस्य तां वृद्धि५५ मतुलां नापितस्याभिवीक्ष्य तु ।
आरिराधयिषुर्लोकस्तस्य पूजां५६ चकार ह ।।३६।।

४४... रप्याय - क ख घ. । ४५ शकनाशनः - क. । ४६. मिन्द्रं ( दं) - क. । ४७ तन्मे ज्ञातुमिहार्हसि - घ. । ४८ त ( स?) मनुज्ञात - ख. । ४९ ते च - घ. । ५० तमालयम् - घ. । ५१... शी - क. घ. । ५२ प्रावर्तत - ख । ५३ सुशो... - ख. । ५४ हिरण्यञ्च पुत्रान् सौभाग्यमेव च - ख. । ५५ वृत्ति - ख. । ५६ पूजां तस्य - घ. ।

127

चक्रु र्यात्रास्तथा केचिदुपवासान् तथापरे ।
होमं जप्यं५७ तथैवान्ये पूजां चान्ये५८ वरार्थिनः । ।३७। ।
उपहाराँस्तथैवान्ये गीतं५९ नृत्तं तथापरे ।
तेभ्यस्तथाभ्युपेतेभ्यो निकुम्भः स महायशाः ।।३८। ।
ददौ सर्वानभिप्रायान् ये ये तेषामभीप्सिताः६० ।
एवं तं कामदं ज्ञात्वा दिवोदासो नृपस्तदा । । ३९।।
उवाच महिषीं व्यास कदाचित् पुत्रलिप्सया६१ ।
देवि सर्वानभिप्रायान् जनेभ्योयं प्रयच्छति । ।8.26.४० । ।
गणेश्वरं त्वमप्येनमपत्यार्थं प्रसादय ।
सैवद६२मुक्ता६३ तदा गत्वा गणेशं प्राप्य शोभना ।।४१ । ।
उवाच भगवन् देव अनपत्याहमीश्वर ।
उपवासं करिष्यामि तव देवाभिराधने६४ । ।४२। ।
तावन्न भोक्ष्ये यावन्मे वरो दत्तस्त्वया प्रभो ।
जाते च पुत्रे दास्यामि शतानां दशतीर्दश ।।४३ ।।
त्वामुद्दिश्य द्विजातिभ्यो गोधेनूनां गणेश्वर ।
तथा६५ घटसहस्रेण दध्नश्चैव घृतस्य च ।
क्षीरस्य पंचगव्यस्य करिष्ये स्नपनं च ते ।।४४।।

ब्राह्मणानां सहस्राणां शतं चापि सुपूजितम् ।
पुरस्ताद् भोजयिष्ये ते पुत्रे जाते न संशयः । ।४५।।
बहून् दास्यति राजा च६६ ग्रामान् दासी६७स्तथैव च ।
सदा सत्रञ्च पूजां च करिष्यति तव प्रभो । ।४६।।
सनत्कुमार उवाच
सा तमुक्त्वा तथा व्यास तस्थौ नियममास्थिता ।
सोपवासा तदा६८ पूजां महतीं तस्य कुर्वती ।।४७। ।

५७ जाप्यं - ख. । ५८ पूजाश्चान्ये - क. । ५९... त - क. ख. । ६०.. तान् - क. । ६१.. काम्यया - घ. । ६२ सैबं बुद्धा - घ. । ६३... क्त्वा - क ख । ६४ तवाराधनसुव्रता - ख. । ६५ तदा - क. । ६६ न ( े) - ख. । ६७ दास्य - क. ख. । ६८. तथा - घ. ।

128
तां तथा तिष्ठतीं देवः प्रोवाच स गणेश्वरः ।
उत्तिष्ठ नास्ति ते पुत्रो मा खेदं त्वं वृथा कृथाः ।।४८ ।।
एवं तेन गणेशेन निकुम्भेन महात्मना ।
असकृत् प्रोच्यमाना सा नियमाद् विरराम ह । ।४९ । ।
ततो नराधिपं देवी प्रोवाच विमना६९ तदा ।
आर्यपुत्र न मे पुत्रं गणपोसौ प्रयच्छति ।
ब्रवीति नास्ति ते पुत्रो मा वृथा नियमं कृथाः ।।8.26.५० ।।
सनत्कुमार उवाच
एवं महिष्या स प्रोक्तः स्वयमेव नराधिपः ।
सदा सनियम७० स्तस्थौ गणेशस्याग्रतो नृपः७१ । ।५ १ ।।
तमप्युवाच नृपतिं निकुम्भो नियमस्थितम् ।
मा स्था७२ वृथेह नृपते न ते पुत्रं ददाम्यहम् । ।५२।।
एवमुक्तः स राजेन्द्रो निकुम्भेन महाबलः ।
क्रोधरक्तेक्षणः प्राह तमुत्थाय गणेश्वरम् ।। ५३ । ।
राजोवाच
गणो वा त्वं पिशाचो वा भूतो वा राक्षसोपि वा ।
कृतघ्नस्त्वं न सन्देहो न त्वं पूजामिहार्हसि । ।५४। ।
मम चैव गृहद्वारि पौरैश्चैव समर्चितः७३ ।
विषये मम वासी च७४ न च७५ पुत्रं प्रयच्छसि । । ५५ । ।
पूजार्हो न भवाँस्तस्मान्मत्तो दण्डं त्वमर्हसि ।
नृशंसश्चावलिप्तश्च निष्ठुरो मत्सरान्वितः । ।५६। ।
सनत्कुमार उवाच
ततोस्य भेदयामास निलयं गजयूथपैः ।
स्थण्डिलं च बभञ्जाशु७६ ददाहार्चां७७ च सुप्रभाम्७८ । ।५७। ।

६९ विमला - घ. । ७० नियमवान् - घ. । ७१ स्थितः - ख. । ७२ त्वं - घ, वृथा नियमं कावी ( र्षीः) - ख. । ७३ समर्थितः - ख. । ७४ त्वं - घ. । ७५ मे - ख. । ७६ चकाराशु - क, घ. (चकर्ता?) ७७ गृहमर्चा - ख., तदा शौ (सो) र्चा - घ । ७८ त्वप्रभाम् - घ., सुप्रभम् - ख. ।

129

निकुम्भोपि कृतार्थः सन्नाकाशे संस्थितः प्रभुः ।
उवाच तं७९ दिवोदासं प्रदहन्निव८० तेजसा । ।५८ । ।
यथेष्टं संप्रयच्छन्ति देवा वरमभीप्सितम् ।
न दत्तो यद्यसौ कोपः कस्तत्र भवतोभवत्८१ । ।५९।।
यस्मान्ममालयो भग्नस्त्वया निरपकारिणः८२ ।
तस्माद् वर्षसहस्रं८३ ते पुरी शून्या भविष्यति ।।8.26.६ ० ।।
सनत्कुमार उवाच
स एवमुक्त्वा राजानं निकुम्भः परमात्मवान्८४ ।
देवेशाय निवेद्यैवं८५ तस्थौ पार्श्वगतः प्रभोः ।।६ १ । ।
राजापि तस्य वाक्येन तथ्येनार्थेन चैव हि ।
व्रीडा परां समासाद्य८६ गृहानभ्यगमत्८७ तदा ।।६ २ ।।
अथ सा तेन शापेन पुरी वाराणसी तदा ।
शून्या समभवत् क्षिप्रं विशुद्धा मृगसेविता ।।६३ ।।
तां तु शून्यां स विज्ञाय देव्या सह पिनाकधृक् ।
सगणो नन्दिना सार्धमाजगाम८८ महाद्युतिः । ।६४। ।
स तत्र८९ मानसं दिव्यं विमानं सूर्यवर्चसम् ।
अनौपम्यगुणं देवो मनसैव विनिर्ममे९० । ।६५ । ।
सनत्कुमार उवाच
न मे प्रभवति प्रज्ञा कृत्स्नशस्तन्निरूपणे ।
एतावच्छक्यते वक्तुमनौपम्यगुणं हि तत् । । ६ ६। ।
देवोद्यानानि रम्याणि९१ नन्दनाद्यानि यानि तु ।
तेभ्यः श्रेष्ठतमं९२ श्रीमदुद्यानमसृजत्९३ प्रभुः । ।६७।।

७९ च - घ । ८० प्रहसन्निव - घ. । ८१ भवेत् - घ । ८२ निरयकारिणः घ, मेनपराधिनः ख। ८३... सहस्रां - क. । ८४... नाम् - ख. । ८५.. व - घ. । ८६ समभवत् - ख.,.. मनुभवन् ? । ८७ व्यगमत् - घ., ... गमुत्तमम्- क, गमच्च तान् - क. टि. । ८८ सार्ध जगाम स - क. । ८९ तदा - घ. । ९०... वाभिनिर्ममे - क.,... निर्मिमे- क रव्र. । ९१... नि - क. । ९२ श्रेष्ठतरं - ख. । ९३ शीमानुद्यानमसृजत् - क ।

130

तस्मिन् विमाने गिरिराजपुत्री सर्वर्द्धियुक्ते वचसामगम्ये ।
रेमे नवेन्दीवरफुल्लनेत्रा देवी न सस्मार वचः स्वमातुः । । ६८ । ।
इति स्कन्दपुराणे वाराणसीशून्यकरणं नाम षड्विंशोध्यायः

सनत्कुमार उवाच
अथ तस्मिन् सुखासीनौ शैलजावृषभध्वजौ१ ।
आसने काञ्चने दिव्ये नानारत्नोपशोभिते । । १ । ।
अथाचलसुता देवी सुखासीना विभावरी ।
सर्वलोकपतिं प्राह गिरीन्द्रतनया पतिम् । ।२। ।
भगवन् देवतारिघ्न चन्द्रावयवभूषण ।
कथयैतन्मम विभो यत्त्वां पृच्छामि मानद । । ३ ।।
किं फलं तव देवेश लभन्ते भक्तवत्सल२ ।
भक्ता ये फलमुद्दिश्य३ कुर्वते४ तन्न? किञ्चन ।।४।।
सनत्कुमार उवाच
स एवमुमया प्रोक्तः शूलपाणिर्वृषध्वजः ।
अवोचत् सर्वमव्यग्रो देवदेवः शुभाशुभम् ।।५। ।
व्यास उवाच
किन्तत् स भगवान् देवः प्रीयमाणो महातपाः ।
प्रणयात् स तथा५ देव्या पृष्टो कथयदव्ययः ।।६।।
सनत्कुमार उवाच
मयाप्येतत् पुरा व्यास पृष्टो नन्दीश्वरः प्रभुः ।
यथोक्तवान् मयि ब्रह्मन् तथा तत्कथयामि ते । ।७ । ।

१ शैलात्मजावृषध्वजौ - क., शैलजासवृष - ख । २ भक्तिवत्सल - ख,.. वत्सला - घ.,... लाः - क. ख. । ३ फलमद्दिश्य - घ. । ४ कुर्वीत - घ । ५ तदा - ख. ।


गणेशान६ पतिं शूरं सूर्यायुतसमप्रभम्७ ।
अपृच्छमहमव्यग्रो८ नन्दीश्वरमतिद्युतिम्९ । ।८।।
ईशेन यत् पुरा देव्याः कथितं गणसत्तम१० ।
तन्मे ब्रूहि यथातत्त्वं परं कौतूहलं हि मे ।।९। ।
नन्द्युवाच११
श्रूयतामभिधास्यामि पृच्छतस्ते महामुने ।
देवदेवेन पार्वत्या यत् पुराभिहितं१२ हि तत् । । 8.27.१० । ।
देवदेव१३ उवाच
श्रूयतामभिधास्यामि यन्मां पृच्छसि सुव्रते ।
हिताय देवि भक्तानां पृष्टस्तत्१४ कथयामि ते१५ । । ११ । ।
प्रसादं यस्तु मे देवि शुभ्रं१६ कुर्यादनिन्दिते ।
विदधाम्यर्जुनं१७ तस्य गृहं शिवपुरेक्षयम् । । १२ ।।
विधानेन यथोक्तेन लिङ्गं मे स्थापयेच्च१८ यः ।
मया सहासौ चरति१९ नित्यमष्टगुणान्वितः । ।१ ३ । ।
काञ्चनं त्रुटिमात्रं वा यो दद्याद् बहु वा मम२० ।

तस्य हैमवते२१ शृङ्गे ददामि२२ गृहमुत्तमम् । । १४।।
यो मे गां वा२३ हिरण्यं वा दद्यादविमनाः प्रिये ।
लोकान् ददाम्यहं२४ तस्मै सर्वकामसमन्वितान् ।। १ ५। ।
वृषभं यः प्रयच्छेन्मे श्वेतं२५ नीलमथापि वा ।
स कुलानामुभयत२६स्तारयेदेकविंशतिम् । । १ ६। ।
गोचर्मद्वयसां वापि यो२७ मे दद्याद्वसुन्धराम् ।
स मे पुरं२८ समासाद्य गणेशैः सह मोदते । । १७।।

६ महाभाग - ख. । ७... प्रभः - ख । ८ महदव्यग्रो - क. । ९ महाद्युतिम् - ख । १० पुण्य नि... च - ख. । ११ नन्दीश्वर उ - खे. । १२ विहितं - घ., कथितं - ख. । १३ देव उ - ख. । १४... स्ते - क. घ. । १५.. म्यहं - घ.। १६ दिव्यं - घ. । १७ न्यक्षयं लोकं - क. । १८... तु - घ. । १९ चरते च मया सार्धं - ख । २०... दपि वा बहु- ख., बहुधा - घ । २१.. तः - क. । २२. .दानि- क. ख. । २३ तु - घ, गास्तु - क. ख., वास्तु? । २४.. न्यहं- क. ख., दास्याम्यहं - घ. । २५... त - ख. ध., प्रयच्छेत - ख. । २६ मंङ्गलानामुभयत - घ. । २७ द्वयमात्रं यं कश्चिद्यो - ख. । २८ सोमे - क., सोमेश्वरं - घ. ।

132

यो मे पुण्यफलं२९ दद्यादात्मना पूर्वमर्जितम्३० ।
सोनन्त३१ फलमाप्नोति मोदते३२ च त्रिविष्टपे । । १८ ।।
योनुयानं३३ चतुर्दश्यां कृष्णायां३४ कुरुते मम ।
रथेन वृषयुक्तेन मम लोके स मोदते । । १ ९।।
महिमानोपचारैश्च यो मां जप्यैश्च पूजयेत् ।
ददामि३५ ब्रह्मणो लोके३६ वासं तस्य सुपूजितम् ।। 8.27.२० । ।
मनसा चिन्तयेद् यश्च३७ पूजयेयमहं हरम् ।
अशक्तो नास्ति च३८ द्रव्यं यस्य नित्यं सुमध्यमे । ।२ १ । ।
स तया श्रद्धया पूतो विमुक्तः सर्वपातकैः ।
मम लोकमवाप्नोति भिन्ने३९ देहे न संशय. ।। २२ । ।
स्नातो४० यः पूर्वसंध्यायां सदा मामभिगच्छति४१ ।
स मित्रं यक्षराजस्य यक्षो भवति वीर्यवान् । ।२ ३ । ।
संमार्जनं पंचशतं सहस्रमुपलेपनम् ।
गन्धाश्च दशसाहस्रा अनन्तं४२ चार्चनं स्मृतम् । । २४ । ।
अभ्यङ्गोष्टशतं चैव स्नपनं त्रिशतं भवेत् ।
गन्धोदकं पंचशतं पञ्चगव्यं तथैव च । । २५ । ।
क्षीरं पञ्चगुणं देवि तस्माद् भूयश्च४३ कापिलम् ।
तस्माच्च सर्पिषा स्नानं भूयः पंचगुणं तथा । ।२ ६ । ।
क्षमामि देवि चास्याहमपराधान् बहूनपि ।
भस्माभिषेकमानन्त्यं४४ गुह्यं चैव मम प्रिये४५ ।।२७।।
अगुरुर्दशसाहस्रं षट्४६ साहस्रं तु चन्दनम् ।

चतुर्दशसहस्राणि धूपः कालागरोः स्मृतः । । २८। ।
अक्षया४७स्तण्डुलयवाः शालयो द्विशताः स्मृताः ।
आनन्त्यो गुग्गुलुश्चैव सहाज्येन४८ सुधूपितः४९ ।। २९। ।

२९ पुष्प - घ । ३० पुण्यमर्जितम् ख, पूर्णमा?.. - क घ. । ३१ स्त्व? - क । ख। ३२ पूज्यते ख, घ। ३३ योन्नपानं - घ । ३४ कृ रणाय? - क ख । ३५ ऽ मे? - क घ । ३६ लोकेषु - ख. । ३७ नित्यं - ख. । ३८ मे- ख. । ३९.. न्न. - क । ४० स्नात्वा - ख । ४१ नामुपगच्छति - ख. । ४२ आनन्त्यं - कृ. । ४३ दूर - घ. । ४४... स्म कुर्याद् - -क. । ४५ चैतन्ममेप्सितम् - क । ४६ स - क. ख घ । ४७ ता - घ. । ४८ सहान्येन - क.। ४९ सुपूजितः - क ।

133

द्वे सहस्रे पलानां तु महिषाक्षस्य यो दहेत् ।
देवि संवत्सरं५० पूर्णं समे नन्दिसमो भवेत् ।।8.27.३ ० ।।
दक्षिणायान्तु यो मूर्तौ पायसं सघृतं शुभे ।
निवेदयेद्वर्षमेकं स च नन्दिसमो भवेत् ।।३ १।।
चरवो दशसाहस्रा५१ यावकश्च चतुर्गुणः५२ ।
शेषाश्च चरवः सर्वे यावकार्धेन संमिताः५३ ।।३२।।
घृतपात्र५४मसंख्येयमिह प्रेत्य च शाश्वतम् ।
प्रीणाति च पितॄन् सर्वान विमाने चैव मोदते ।।३३।।
छत्रं पताकानिचयं शोभयित्वा५५ ददाति यः ।
सोपि संदीप्यते५६ भूयो रविवत्तेजसा दिवि ।।३४।।
उभौ पक्षौ त्रयोदश्या५७ मष्टम्यां चोपवासिकः५८ ।
उपतिष्ठेत मां भक्त्या सोपहारमनिन्दिते ।।३ ५।।
ददाम्यस्य५९ स्वकं६० लोकं तुष्टोहं देवि शाश्वतम् ।
रक्तपीतकवासोभिः पुष्पैश्च विविधैरपि ।
पूजितोहं सदा भक्त्या पुत्रत्वे कल्पयामि तम् ।।३६।।
एकरात्रं च यो मर्त्यो दीपं धारयति६१ स्थितः ।
सर्वयज्ञफलं तस्य ददाम६२ श्रियमेव च ।। ३७।।
मयैव मोहिताः सर्वे लोकाः सजडपण्डिताः६३ ।
न मां पश्यन्ति रागान्धास्तमसा बहुलीकृताः ।।३ ८।।
ध्यानिनो६४ योगयुक्ता६५ ये सत्यधर्मपरायणाः ।
एकाग्रमनसो दान्ता६६स्ते मां पश्यन्ति६७ नित्यदा६८ ।।३९।।
ये मे भक्ताः सदा चैव सांख्ययोगविशारदाः ।
सर्वं६९ पश्यन्ति मयि च मां च सर्वत्र योगतः७० । ।8.27.४०।।

५० द्विवत्सरस्तु - घ । ५१.. स्रं - क.,.. स्या - घ । ५२ ण - क। ५३ सयुगा (ता) - घ. । ५४.. .पाक - घ. । ५५ शोभां कृत्वा - घ. । ५६ संदीपयेत् - घ. । ५७ चतुर्दश्या - घ. । ५८... नः - घ. । ५९... न्यस्य - क. ख. । ६० स्वयं - क. । ६१ कारपीत?- ख. । ६२.. नि - क ख. । ६३. पिण्डिताः - क. ।

६४ छपायिनो?- क. । ६५ नित्ययुका?- क. घ. । ६६ भूत्वा - घ. । ६७ न्ति?- घ । ६८ मां बुधाः - ख । ६९ सर्वे - घ । ७० यो गतं - क ख. घ. ।



त्रींल्लोकान् समतिक्रम्य ब्रह्मलोकं तथैव च ।
गच्छन्ति मम ते लोकं७१ तमो भित्वा सुदुर्भिदम् ।।४१ ।।
न शक्योस्म्यतपोयुक्तैर्द्रष्टुं मुनिगणैरपि ।
ध्यानिनो नित्ययुक्ताश्च देवि पश्यन्ति मां बुधाः ।।४२।।
एतानि चैव सर्वाणि कृत्वा कर्माणि सुन्दरि ।
मनसा सुप्रशान्तेन मैनः? करुणचेतसा ।।४३ ।।
काञ्चनं भूमिगोदानं विप्रे च प्रतिपादयन् ।
रुद्रो मे प्रीयतु इति ह्यतुलं फलमश्नुते ।।४४।।
यानि लोकेषु तीर्थानि देवतायतनानि च ।
पादयोस्तानि सुश्रोणि सदा सन्निहितानि मे ।।४५।।
ब्राह्मणानां तथा चैव करे दक्षिणतः स्थिताः ।
यो मां सर्वगतं चैव सर्वं च७२ मयि पश्यति ।।४६।।
मय्यर्पितमना नित्यं तथा मद्भावभावितः ।
ममैव स७३ प्रभावेन सर्वपापैः प्रमुच्यते । ।४७।।
सर्वथा वर्तमानोपि देवि यो मां स्मरेत्सदा७४ ।
ऽज्ये
कल्मषेण न युज्येत नरः७५ कर्ता कदाचन ।।४८। ।
सर्वावस्थोपि पापात्मा ज्ञाननिऽद्रेन७६ चेतसा७७ ।
यो ऽभ्यर्चयति भां .नित्यं स ममात्मसमो भवेत् ।।४९।।
षडङ्गेन च योगेन यो मामभ्यर्चयेत्सदा७९ ।
प्रविशेत स९० मां क्षिप्रमत्र नास्ति विचारणा ।।8.27.५ ०।।
योप्यसज्जन८१रतो वियोनिजः पातकैरपि समन्वितस्सदा ।
सोपि मद्गतमना मदर्पणो याति देवि८२ गतिमप्रतर्किताम् ।।५१ ।।
इति स्कन्दपुराणे ईश्वरार्चनविधि८३ सप्तविंशतितमोध्यायः

७१ लोकान् - क । ७२ सर्वथा - घ । ७३ च - ख । ७४ सदा स्मरेत् - ख । ७५ नभः - क । ७६ दृष्टेन - ख । ७७ तेजसा - घ । ७८ सो - ख । ७९ मामर्चयते सदा - ख । ८० च्च - ख. । ८१. सर्जन- घ. । ८२ देव - ध.। ८३ पूजाविधानो नाम - घ. ।



सनत्कुमार उवाच
ततो व्यास पुनर्देवी पतिं व्रतपतिं शुभा ।
अपृच्छद् व्रतसंबद्धं१ फलं फलशतार्चिता२ ।। १ ।।
व्रतानां फलमल्पं वा महद् वा यत् त्रिलोकप ।

व्रतं भवति३ यादृग् वा तत्४ प्रब्रूहि महेश्वर ।।२।।
देवदेव उवाच
महाफलं यद् भवति यच्चाप्यल्पफलं शुभे५ ।
व्रतं यादृक् च यत् प्रोक्तं तच्छृणु६ त्वमनिन्दिते ।।३ ।।
चतुर्दश्यां तथाष्टम्या७मुभयोः पक्षयोः शुचिः ।
संवत्सरमभुञ्जानः शान्तो दान्तो जितेन्द्रियः ।।४।।
सत्रयाजिफलं८ यच्च सत्यवागृतुगामिनाम् ।
तच्चैव९ फलमाप्नोति यमञ्चैव न पश्यति ।।५।।
शय्यासनस्थः स्त्रीमध्ये रतिरक्तः सुखे रतः ।
स तप्यत्यानखाग्रेभ्यो१० नित्यं यो मां समाश्रितः११ ।।६।।
मद्भक्तस्तपसा युक्तो मामेव प्रतिपद्यते ।
लोकास्तस्याक्षया देवि यद्यपि स्यात् स१२ पापकृत् । ।७।।
पृथिवीभाजने भुंक्ते नित्यं पर्वसु यो नरः ।
स त्रिरात्रफलं१३ देवि अहोरात्रेण विन्दति ।।८।।
संवत्सरं तु यो भुंक्ते नित्यमेव ह्यतन्द्रितः१४ ।
निवेद्य पितृदेवेभ्यः पृथिव्या१५ मेकराड् भवेत् ।।९।।
नवमी१६ मष्टमीं१७ चैव पौर्णमासीं१८ त्रयोदशीम्१९ ।
यो भुंक्ते देवि नैतेषु२० सुपर्वसु२१ नरः समाम् ।।8.28.१ ०।।

१ अपत्यव्रतसंबद्धं - ख.,.. सम्बन्धं - ख. । २. समार्चिता - क., सदार्चिता - घ. । ३ स्तुवन्ति - घ. । ४ तच्च- ख. ५ भवेत् - ख. । ६ तच्छृणुष्व - क । ७ चतुर्दश्यामखाष्टम्या - क. । ८ सप्तरात्रिफलं यत्र - घ. । ९ तदैव -ख., तयैव घ. । १० क्रीडमानो नमास्यो - घ., नखाग्रेण - ख. । ११ मामनुव्रतः - ख. । १२ सु - ख. । १३ स त्रिफल? - क. । १४ जितेन्द्रियः - घ. । १५... ?वी - क. । १६ अष्टमी - क । १७. मीं - क. । १८... ?? - तत्र, -चतुर्दशी - घ. । १९,.. शी - क. । २० एतेषु - क. । २१ संयतस्तु - ख. ।


गाणपत्यं स लभते निस्सपत्नमनिन्दिते ।
भूतानां दयितश्चैव२२ दिव्यं रूपं बिभर्ति च । ।१ १।।
श्रीवत्सं यश्च२३ पिष्टेन दद्याद् हेमफलं२४ शुभम् ।
किरेत् कृष्णतिलांश्चात्र तण्डुलाक्षतमेव च । । १ २। ।
फलैश्च विविधाकारैर्यथालब्धै रसान्वितैः ।
स वै वर्षसहस्राणि द्विषष्टि दिवि मोदते । । १३ । ।
दिव्यरूपधरः श्रीमान् देवतैस्सह नित्यशः ।
हिरिवेरमयीं२५ यो मे दद्यात् प्रतिकृतिं स्वकाम् । । १४।।
सर्वगन्धरसैर्युक्तां निर्यासैश्च सुसंस्कृताम् ।
भक्ष्यभोज्यैश्च विविधैः कृष्णपक्षे चतुर्दशीम् । । १ ५।।
पूर्वदक्षिणयोश्चात्र२६ पश्चिमोत्तरयोस्तथा ।
पार्श्वेषु हरितालञ्च कृष्णागरुमनःशिलाम् । । १६ ।।

चन्दनं चैव दद्याद्वै यथासंख्येन पूजितम् ।
तस्य पुण्यफलं देवि शृणु यन्मत्तकाशिनि । । १७।।
सर्वव्याधिविनिर्मुक्तस्तथा२७ निष्कल्मषश्च ह ।
वर्षकोटिशतान्यष्टौ दिवि भुक्त्वा महत्सुखम् ।। १८। ।
इह लोके सुखी जातो मामेव प्रतिपद्यते ।
रत्नावलिं तु यो२८ दद्याद् ब्राह्मणः क्षत्रियोथ विट् । । १ ९। ।
शूद्रः स्त्री वा स मे२९ लोके मत्सौख्यं प्राप्नुते परम् ।
सिद्धार्थकाँश्चाघोरेण३० दैवे पित्र्येथ वा पुनः । । 8.28.२० ।।
त्रिंशद्वर्षसहस्राणि३१ तर्पयेत् स३२ पितॄनपि ।
ऋषींश्च सर्वदेवांश्च रूपञ्चाप्नोति पुष्कलम्३३ । । २१ । ।
मन्वन्तरञ्च गोलोके गोकन्याभिः स३४ पूज्यते ।
सर्वे देवास्तथा विष्णुर्ब्रह्मा ऋषय एव च । ।२२। ।

२२... ञ्चैव - घ । २३... च्च - क. घ. । २४ धर्मफलं - ख. । २५ हरिवेरमयी - क., शालिपिष्टमयीं - घ. । २६...पि - ख. । २७ मुक्तो यथा - घ. । २८ वक्तारं निर्णयो - घ. । २९ मां - क, समो - ख. । ३०.. काश्च अर्घेण - घ.। ३१ त्रिषड्विंशत्... - क. । ३२ स्व,.. - घ. । ३३... लां - क. ख. । ३४ त्र.. - ख. ।

137

कुर्वन्त्यघर्ये हि सान्निध्यं तेभ्यस्तद्धि विनिःसृतम् ।
गुह्यमेतत् परं देवि यो वेत्ति स३५ महातपाः ।।२३ ।।
तस्य प्रभावाज्जायेत धनवान् प्रियदर्शनः ।
प्रज्ञारूपगुणैर्युक्तः३६ संवत्सरशतायुषः३७ । ।२४। ।
क्षीरेण यो मां सततं स्नापयेत त्रिरुद्यतः३८ ।
अपराधसहस्रन्तु क्षमे३९ तस्याहमन्तशः४० ।।२५। ।
यश्च४१ तत्४२ स्नपनं पश्येत् स तत्पापैः४३ प्रमुच्यते ।
मानसस्य च जप्यस्य सहस्रस्य फलं लभेत्४४ ।।२६।।
संवत्सरं तु यः कुर्यात् क्षीरेण स्नपनं शुचिः४५ ।
गाणपत्यं स लभते बल्लभत्वं च नित्यशः ।।२७।।
सर्पिषा यो ममाभ्यङ्गं करोत्यविमना नरः ।
द्विसाहस्रस्य जाप्यस्य मानसस्य फलं लभेत् ।।२८। ।
अभिगम्यश्च -देवानां स भवेच्च४६ नरोत्तमः ।
निष्काणां च सुवर्णस्य सहस्रस्य फलं लभेत् ।।२९। ।
संमार्जनं च४७ यः कुर्यात् संवत्सरमनुव्रतः ।
वितरामि शुभं लोकं नित्यं तस्य ध्रुवं शिवम् ।।8.28.३ ० ।।
सर्वलोकक्षये तस्य न क्षयो भवतीश्वरि ।
लिङ्गपूजां४८ तु यः कुर्यान्मम देवि दृढव्रतः । ।३ १ ।।
शतं वर्षसहस्राणि दिव्यानि दिवि मोदते ।
चतुर्ण्णां पुष्पजातीनां गन्धमाघ्राति शङ्करः ।।३२ ।।

अर्कस्य करवीरस्य बिल्वस्य च बकस्य४९ च ।
सुवर्णनिष्कं पुष्पे तु५० सर्वस्मिन् देवि५१ कथ्यते ।। ३३। ।
सहस्रे त्वर्कपुष्पाणां५२ दत्ते यत कथ्यते५३ फलम् ।
एकस्मिन् करवीरस्य दत्ते पुष्पे हि तत् फलम् ।।३४।।

३५ सु... - ख. । ३६ युक्तं - क. घ. । ३७... युतम् - क. घ. । ३८ त्रि ? ख ३८ ? - घ. । ४०. गः - घ. । ४१ यच्च - क ख. । ४२ तं - क. ख. ग. । ४३ सर्वपापैः - - ख. घ. । ४४ भवेत् - क. । ४५ शुचि - ख. । ४६ भद्रं - क., भवेत - ख । ४७.. तु - ख. । ४८ लिङ्गपूरं - क., लिंगं पूर्व - घ. । ४९ बुकस्य - क । ५० पुष्पैस्तु- ल., पुष्पं तु - घ. । ५१... न्नेव - ख. घ. । ५२ सहस्रै स्त्वन्यपुष्पाणां - ख., सहस्रै त्वन्य... - क. । ५३ यत्कथितं - ख. ।



करवीरसहस्रस्य भवेद्दत्तस्य५४ यत् फलम् ।
तदेकस्य तु पद्मस्य दत्तस्य फलमुच्यते ।।३५।।
पद्मानां च५५ सहस्रस्य मम दत्तस्य यत् फलम् ।
तत्फलं लभते पत्रे दत्ते बिल्वस्य शोभने५६ । ।३६।।
बिल्वपत्रसहस्रं तु दत्ते मे यत् फलं स्मृतम् ।
बकपुष्पे५७ तदेकस्मिन् मम दत्ते लभेत्फलम् ।।३७।।
बकपुष्पसहस्रस्य मम दत्तस्य यत् फलम् ।
पुष्पे दत्ते तदेकस्मिन् लभेद्५८ धत्तूरकस्य५९ तु६०. ।।३८।।
निर्माल्यं यो हि मे नित्यं शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः ।।३९। ।
स्वैरी चैव तथा मुक्तो६१ नियमैश्च बहिष्कृतः ।
नरके स६२ पतेद् घोरे तिर्यग्योनौ च संभवेत्६३ ।।8.28.४० ।।
ब्रह्मचारी शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ।
तस्य पापमहं शीघ्रं नाशयामि महाव्रते६४ ।।४१ ।।
दीपमालां तु यः कुर्यात् कार्त्तिके मासि वै मम ।
अवसाने च दीपानां६५ ब्राह्मणाँस्तर्पयेच्छुचिः६६ ।।४२।।
गाणपत्यं स लभते दीप्यते च रविर्यथा ।
दद्यात् कृष्णतिलाँश्चैव सहः६७ सिद्धार्थकाँश्च ह ।।४३।।
यो मे देवि सदा मूर्ध्नि स मे नन्दिसमो भवेत् ।
ये हि सिद्धार्थकाः प्रोक्तास्तथा कृष्णतिलाश्च ये ।।४४।।
सर्वे ते त्वन्मया देवि गुह्यमेतन्मयेरितम् ।
? ।।४५ । ।
- - - - - ऽ - - - - न ऽ - न - - ऽ (?) ।
चित्रो नाम गणो मह्यं तेन सार्धं स मोदते ।। ४६ ।।

५४ दत्ते भवति - घ. । ५५ तु - ख. घ. । ५६ तु सुशोभने - ख. । ५७ बुकपुष्पे - क. ख. । ५० लभते - घ. । ५९ बन्धुक... - घ. । ६० वै? - घ. । ६१ युक्तो - क. । ६२ न - घ. । ६३ दीप्यते च रविर्यथा - घ. । ६४... मते- घ. । ६५ दीपं दत्त्वा व्रतान्ते तु - ख. । ६६... च्छुचोन् - ख. । ६७ सदा - क. ।

139

सर्वसंप्रलये चैव प्राप्ते त्रैलोक्यसंक्षये ।
त्यक्त्वा सर्वाणि दुःखानि मामेव प्रतिपद्यते ।।४७।।
न तुष्याम्यर्चितोर्चायां तथा देवि नगात्मजे ।
लिङ्गेर्चिते यथा६८ ऽत्यर्थं परितुष्यामि पार्वति ।।४८। ।
सर्वेन्द्रियप्रसक्तो वा युक्तो६९ वा सर्वपातकैः ।
स प्रयाति दिवं देवि लिङ्गं योर्चयतीह मे । ।४९। ।
त्यक्त्वा७० सर्वाणि पापानि निर्द्वन्द्वो दग्धकिल्बिषः ।
मदाशी७१ र्मन्नमस्कारो७२ मामेव प्रतिपद्यते ।।8.28.५०।।
सनत्कुमार उवाच
ततो भगवती भूयः पतिं सर्वजगत्पतिम् ।
अपृच्छत् पुष्प्यमाणा७३ स्या७४ केन त्वं देव७५ तुष्यसे७६ । ।५१ । ।
ततः प्रहस्यमानास्यः सर्वलोकेश्वरेश्वरः७७ ।
प्रोवाच भगवान् वाक्यं७८ लोकानां हितकाम्यया।।५२ । ।
देवदेव उवाच७९
शृणु देवि यथातत्त्वं८० येन यान्ति शुभां गतिम् ।
त्रैलोक्ये जन्तवः सव८१ मद्भक्ता ये शुभानने ।।५३ ।।
यत्तत्८२ परतरं गुह्यं तत् सर्वं मयि८३ तिष्ठति ।
यो हि तत्त्वेन तद् वेद संसारात्८४ स विमुच्यते८५ । ।५४।।
न च प्रकाशयेद् गुह्यं नाम८६ मे कीर्तयेन्नरः ।
सदा सर्वसहेत्येवं प्रातः८७ प्राञ्जलिरुत्थितः ।।५५। ।
तस्माच्च८८ कीर्तनात् पापं सर्वमेव विनिर्दहेत् ।
यशः कीर्तिं च संप्राप्य रुद्रलोके महीयते ।।५६।।
सर्वमाल्यानि यो दद्यान् मम मूर्तिषु८९ नित्यशः ।
मंत्रेण विधिवच्चैव तस्य पुण्यफलं महत्९० ।।५७। ।

६८ तथा- ख- । ६९ युतो घ । ७० कृत्वा घ । ७१ महाणी घ । ७२ मार्थ्यमत्प्राप्य घ, नमस्कारोपि यं कुर्यात् - ख., । योपि कुर्यान्नमस्कार? । ७३ पुष्यमाना - क., पुष्पमालास्या - ख., तुष्यमाना - घ. । ७४ सा -घ. । ७५ देवि - क. । ७६.. सि - ख. । ७७... देवेश्वरेश्वरः - - घ- । ७८ वचः प्रोवाच भगवान् - क. घ । ७९ देप्युवाच - ख. । ८०.. तथ्यं - घ । ८१ न तु सर्वेण - घ. । ८२ यद्यत् - घ. । ८३ त्वयि - क. ख. । ८४ स संसाराद् - घ. । ८५.. प्रमुच्यते - क. घ-, प्रवि.. - ख । ८६ नामतः - घ.,... स्ते - ख. । ८७ महेश्वरं प्रातः स्मरेत् - घ. । ८८ यस्माच्च - घ. । ८९ सर्वमूर्तिषु - क. घ. ९० शृणु - घ. ।

140

मन्त्रः९१

सर्वगाय सुरेशाय सर्वदेवमयाय च ।
नमो भगवते चैव गुह्यागुह्याय वै सदा९२ । । ५८ । ।
सोमाय९३ भूतनाथाय भावनाय भवाय च९४ ।
सर्वगुह्याय वै स्वाहा देवगुह्यमयाय९५ च । । ५९। ।
सर्वगुह्यमयो मंत्रः स्वाहा सोमाय चैव हि९६ ।
कटंकटाय वै९७ स्वाहा स्वाहा देवाय शुष्मिणे९८ । । 8.28.६० । ।
पुष्पाण्येतेन मन्त्रेण यो मे नित्यं निवेदयेत् ।
सहस्रं तेन९९ जाप्यस्य मानसस्य कृतं भवेत् । । ६१ । ।
अथा१००ञ्जलिममावास्यां सुसम्पूर्णां समाहितः ।
तिलानां चैव कृष्णानां सर्षपाणां च पार्वति । ।६२ । ।
अर्चयित्वा यथान्यायं यथालाभं प्रयच्छति ।
इदं१०१ च वचनं कुर्यात्१०२ सूर्येति व ममेति च१०३ ।।६३ । ।
सर्वपापविनिर्मुक्तः स्वर्गलोकं व्रजेन्नरः ।
अर्चयित्वा च मां देवि ब्राह्मणान्न च तर्पयेत् । ।६४।।
न तत्फलमवाप्नोति नाहं तुष्यामि तस्य वै ।
अर्चयित्वा द्विजान्मां च यो मे नामानि कीर्तयेत् ।। ६५।।
चतुर्दश्यामथाष्टम्यां पक्षयोरुभयोरपि ।
सोपि देवि प्रमुच्येत वियोनिं न स गच्छति । ।६६। ।
वामदेव सुदेवेति१०५ हर गुह्येति वा पुनः ।
उमापते नीलकण्ठ शान्त१०६ श्रीकण्ठ गोपते । । ६७। ।
शर्व१०७ भीम१०८ पशुपते१०९ शङ्करोग्र भवेति च ।
महादेवेति चाप्यन्यन्नाम गुह्यं प्रकीर्तयन्११० । । ६८। ।

९१ अय मन्त्र - खः । ९२ गुह्यात्मने नमोस्तुते - घ । ९३ नमस्ते - घ । ९४ भवात्मने - क. । ९५ वेदगुह्याय -ख. । ९६ स्वाहा - ख । ९७ यैव? - क. घ । ९.८ देवाय शुष्मिने स्वाहा - ख । ९९ सहस्राशेन - क. । १०० अन्या? - घ । १०१ इय - क । १०२ ब्रूयात् - घ. । १०३ सूर्येज्योति- मयेति च - घ. । १०४ प्रपश्ये त - क. घ । १०५ वानुदेवेति - घ । १०२ श्रान्त - ख. । १०७ शर्वो - क., पार्वतीश - ध. । १०२ भीमः - क. । १०९ पशुपतिं. - ख, पशुपते. - क. । ११०... येतु - क. ।

141

सर्वपापैः प्रमुच्येत दिवि देवैश्च पूज्यते ।
एतेषामेकमपि यः कथयेद्वा पठेत वा । ।६९। ।
स देहपद्धतिं१११ भित्त्वा११२ मामेव प्रतिपद्यते ।
एवं११३ सर्व११४ प्रणामे च११५ यन्मया परिकीर्तितम् ।।8.28.७० ।।
अमावास्यान्तु यो नित्यं सघृतं गुग्गुलं दहेत् ।
क्षीरेण चैव संमिश्रं गुह्यमेतन्मम प्रियम्११६ ।।७१ । ।
सोच्युतं११७ स्थानमाप्नोति मत्प्रसादान्न संशयः ।
इदं च परमं गुह्यं यो मे देवि निवेदयेत् । ।७२।।

अर्कपत्रयुतं पूर्णं घृतेन११८ मधुना सह११९ ।
निवेद्य विधिवद् भक्त्या सर्वपापैः प्रमुच्यते ।।७३ ।।
इमानि च महाभागे यो मे नामानि कीर्तयेत् ।
श्मशाननिलयो नग्नो भस्मशायी१२० यतव्रतः । ।७४। ।
वामदेवः प्रशान्तश्च स्तब्धशेप१२१ स्त्रिलोचनः ।
अ?सव्यप्रियः१२२ सव्यो बहुरूपोन्तकान्तकृत्१२३ ।।७५।।
पुराणः पुरुहूतश्च मृत्योर्मृत्युर्जितेन्द्रियः ।
अनिन्द्रियोतीन्द्रियश्च सर्वभूतहृदि स्थितः । ।७६। ।
संसारचक्री योगात्मा कापाली दिण्डिरेव च ।
महादेव१२४ महादेव महादेवेति चैव हि ।।७७। ।
जपेदेतन्नियमवान् शृणुयाद्वापि नित्यशः ।
स देहभेदमासाद्य योगात्मा गणपो भवेत् । ।७८। ।
सनत्कुमार उवाच
- - - - - ---- - - - - - - - - ।
- - - - - - - - - - - - - - - - - । ।७९।।

१११ बंध घ । ११२ भित्वाशु - घ । ११३ एकं ग, ११४ ? प्रमाण - घ । ११५ न - खे., ते. घ. । ११६ प्रिये - क. घ. । ११७ सोतमं - ख. । ११८ घृतस्य - क, घृत च - घ. । ११९ मधुनश्च. ह - क. । १२०. .स्नायी - घ.। १२१. शेत? - घ. । १२२ अप सव्यप्रिय? - ध. । १२३... न्तकोन्तकृत्- क. । १२४,. .वो - क. घ. ।



नाशुभाय१२५ न पापाय नानृतायाव्रताय च९२६ ।
श्रावयेद् भक्तिमान् पुण्यान्नापेताय१२७ कदाचन । ।8.28.८ ० । ।
धन्यं यशस्यमायुष्यं शान्तिवृद्धिकरं शुभम् ।
पूतं पवित्रं परमं मङ्गलानां च मङ्गलम् ।
श्रोतव्यं न च सर्वेण१२८ तथा देयं न कस्यचित् ।।८१ । ।
इति स्कन्दपुराणे ईश्वरपूजानाम१२९ अष्टाविंशतितमोध्यायः

व्यास१ उवाच
एवं कालेन२ संप्राप्य वाराणस्यां निकेतनम् ।
जगतः पितरौ देवौ चक्रतुः३ किमतः परम् । ।१ । ।
सनत्कुमार उवाच
ततः स भगवान् देवो देवीं हिमवतः सुताम् ।
उवाच देवि पश्याम४ उद्यानं यदि रोचते । ।२ ।।
देव्युवाच
एवं भवतु देवेश यथात्थ त्वं२ वृषध्वज ।
न हि मेन्यत्र गन्तव्यमुद्यानात् परतो हर । ।३ ।।

सनत्कुमार उवाच
सह देव्या ततो व्यास वाराणस्यां वृषध्वजः ।
दिव्योद्६ द्यानदिदृक्षार्थं विचचार७ समन्ततः ।४। ।
पूर्वस्मिन् स दिशो भागे देव्या देवः पिनाकधृक्। ।
उद्यानं दर्शयामास नानाकुसुमशोभितम् ।।५।।
चंपकाशोकपुन्नागप्रियंगूचूतसंकुलम्८ ।
बिल्वार्जुनकदम्बैश्च न्यग्रोधोदुम्बरैरपि । ।६। ।

१२५ नाशुचये - घ. । १२६... य कदाचन - क,. याशुभाय च - घ । १२७ नित्यं नाव्रताय - घ । १२८ सर्वदा देवि- घ, सर्वैश्च - ख । १२९ पूजाविधिर्नाम - घ. ।
१ सन उ. - क. । २ कामेन घ. । ३ कुरुत. - घ । ४.. व - क. टि., घ । ५ तत्त्वं - घ. । ६ देवो - क., घ । ७ विषश्राम - क. । ८. व्र ।) त... - घ. ।


गन्धवद्भिश्च कुसुमैर्जातीकेसरकेतकैः ।
रम्यैः सुरभिपुष्पैश्च षट्पदव्रातसेवितैः । ।७।।
संयुक्तं सर्वतः श्रीमद्वनं वैभ्राजसन्निभम् ।
स तदुद्यानमासाद्य देवीमाह जगत्पतिः ।।८।।
अस्मिन् देशे पुरा देवि तिष्ठतो मम शोभने ।
ऊर्ध्वं गोलोकसंस्थानाद् गवां वत्सैः स्वयंभुवैः । ।९ । ।
पीयमान९ पयोवेगात् फेनं मूर्ध्नि समापतत ।
ततो मयो१०र्ध्वतो दृष्टा११ गावस्ताः सोमपार्श्वतः१२ । । 8.29.१० ।।
ततस्ताः१३ प्रेक्षितास्तत्र मया१४ गावस्तदाभवन् ।
तेजसा दह्यमानास्तु नैकवर्ण्णा भृशार्दिताः । । ११ ।।
गावः पूर्वमिमा देवि आसन् कपिलवर्णजाः ।
नैकवर्णास्तदाभूवन् यदा संप्रेक्षिता मया । । १ २।।
तासां शरण्यतां यात्वा ताभि१५र्मामेव शैलेजे ।
आश्रितः सोम आगत्य स्रवन्तीभिः१६ समन्ततः । ।१ ३ ।।
अर्दिताभिस्तदा गोभिर्ब्रह्मा मामब्रवीत्ततः ।
प्रसादं कुरु देवेश सौरभ्य१७ स्तेजसा तव१८ ।। १४। ।
न नश्यन्ति१९ यथा सद्यस्तथा सर्वसुरार्चित ।
ततोहमास्थितो देवि स्थानेस्मिन् स्वयमेव तु । । १ ५। ।
गोप्रेक्ष इति विख्यातः२० संस्तुतः२१ सर्वदेवतैः२२ ।
गोप्रेक्षेश्वरमागत्य दृष्ट्वाभ्यर्च्य२३ च मानवः । । १६ । ।
न दुर्गति२४ मवाप्नोति कल्मषैश्च विमुच्यते ।
ततस्ता दह्यमानास्तु२५ प्रसन्ने२६ कपिला२७ मयि । ।१७। ।
ह्रदेस्मिन् धेनवो२८ भ्येत्य शान्तास्ता विबभु२९स्तदा ।
कपिलाह्रद इत्येवं तदाप्रभृति कथ्यते ।। १८।।

९ पीयनीताम्प... - क., पिबतीनां - घ । १० ममोर्ध्वं - क ।  ११ दृष्टास्तु ख, दृष्ट्वा  घ । १२ गाः - ख. घ. । १३... श्वा - क. । १४ देव्या - घ. । १५ एभि - ख. । १६ सह गोभि र्न तास्त्यजन् - क. । १७ सौरभ्या - क. । १८ भव - घ. । १९ न विनश्यद् - ख. । २० गोप्रेक्षक इति ख्यातः - ख. । २१ संस्मृतः - घ. । २२ सर्वदै. - घ.। २३ चार्च्य - क ख, चाभ्यर्च्य - घ. । २४ स स्वर्गति - घ. । २५ दुह्यमानास्तु - घ । २६ प्रसन्न ।) - घ. । २७ सुरभी - क. ख. । २८ धेनुर.. - क., पेतु - क ख. घ. । २९ विभवु - ख., शिशिवु - घ. ।



अत्रापि३० स्वयमेवाहं वृषध्वज इति श्रुतः३१ ।
सान्निध्यं कृतवान् देवि स चायं दृश्यतां स्थितः । ।१९।।
कपिलाह्रदतीर्थेस्मिन् स्नात्वा नान्यमना नरः३२ ।
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् । 8.29.२० ।।
सलोकतां मृतश्चापि अर्चयित्वा तु मामिह ।
लभते देहभेदे तु गणत्वं चातिदुर्लभम् । । २१।।
अस्मिन्नपि प्रदेशे तु ता गावो ब्रह्मणा स्वयम् ।
शान्त्यर्थं सर्वलोकानां सर्वा दुग्धाः पयोमृतम् ।।२२। ।
तासां क्षीरेण संजातं ह्रदमेतन्मनोहरम् ।
भद्रदोहमिति ख्यातं पुण्यं देवह्रदं शुभम्३३ । ।२३ ।।
सर्वैर्देवैरहं देवि अस्मिन्देशे प्रसादितः ।
गच्छोपशममीशेति उपशान्तशिवस्ततः ।। २४। ।
स्थितो भूत्वाहमत्रस्थः पुण्यमस्यापि दर्शनम् ।
दृष्ट्वैनं३४ प्रयतो मर्त्यः स्वर्गलोकमवाप्नुयात् । ।२५।।
अत्राहं ब्रह्मणानीय स्थापितः परमेष्ठिना ।
ब्रह्मणश्चापि संगृह्य विष्णुना स्थापितः पुनः ।। २६। ।
ब्रह्मणा स ततो विष्णुः प्रोक्तः संविग्नचेतसा ।
मयानीतमिदं लिङ्गं कस्मात् स्थापितवानसि ।।३७।।
तमुवाच पुनर्विष्णुर्ब्रह्माणं कुपिताननम् ।
रुद्रदेवे ममात्यन्तं परा भक्तिर्महत्तरा३५ ।।२८ ।।
मयैष स्थापितस्तेन नाम्ना३६ तव भविष्यति ।
हिरण्यगर्भ इत्येवं ततोत्राहं समास्थितः । ।२९। ।
दृष्ट्वैनमपि देवेशे३७ मम लोकं व्रजेन्नरः ।
पुनरेव३८ ततो ब्रह्मा मम लिङ्गमिदं३९ शुभे । ।8.29.३ ० । ।

३० तत्रापि - क. घ । ३१ प्रभुः  - घ ।। ३२ ग?म्यक् समाहितः - ख., संयतमानसः - घ. । ३३ वनं - क. ख.। ३४. व - ख. । ३५ पितामह - घ. । ३६ तव नाम्ना - ख. । ३७... शं - क. ख., शि? । ३८ श्चापि  - ख, रपि घ. । ३९ मिमं - क ।

स्थापयामास विधिवद् भक्त्या परमया युतः ।
स्वलीनेश्वर४० इत्येवमत्राहं स्वयमास्थितः४१ । ।३ १ । ।
स्वस्मिन् परतरे लीनः प्रधाने मम४२ कारणे ।
तस्मात् स्वलीन४३मित्येवं४४ गुह्यं४५ क्षेत्रं४६ मम४७ स्मृतम् ।।३२।।
प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ।
आनन्त्या सा गतिस्तस्य योगिनां चैव सा स्मृता४८ ।।३३ । ।
अस्मिन्नपि४९ मया देशे दैत्यो दैवतकण्टकः ।
व्याघ्ररूपं समास्थाय निहतो दर्पितो बली । ।३४।।
व्याघ्रेश्वरस्ततः ख्यातो५० नित्यमत्रा५१ हमास्थितः ।
न पुनर्दुर्गतिं५२ यायत्५३ दृष्ट्वा५४ चेमं५५ महेश्वरम्५६ ।।३ ५।।
उत्पलो विदलश्चैव यौ दैत्यौ ब्रह्मणा पुरा ।
स्त्रीवध्यौ दर्पितौ सृष्टौ त्वयैव निहतौ शुभे ।।३ ६। ।
सावज्ञं गेन्दुकेनात्र तस्येदं चिह्नमास्थितम् ।
आदावत्राहमागत्य आस्थितो गणपैः सह । ।३७। ।
ज्येष्ठं स्थानमिदं तस्मादेतन्मे पुण्यदर्शनम् ।
दृष्ट्वेदं५७ मम लिङ्गन्तु ज्येष्ठ५८ स्थान५९ समाश्रितम् । ।३८ ।।
न शोचति पुनर्मर्त्यः संसिद्धो६० मृत्युजन्मनी६१।
समन्ताद्देवतै६२ स्सर्वैर्लिङ्गानि थापितानि ह ।३९ ।।
दृष्टवा तु नियतं६३ मर्त्यो देहभेदे गणो भवेत् ।
मया त्विह६४ समागत्य स्वयमेव६५ यतः६६ स्थितम्६७ ।।8.29.४० । ।
न च मुक्तं६८ मया यस्मादविमुक्तमिदं ततः६९ ।
क्षेत्रं वाराणसी पुण्या७० मुक्तिदं७१ संभविष्यति । ।४१ ।।

४० स्वर्लीनेश्वर - क. ख, मुनेश्वर - घ. । ४१ मोहितः - घ. ४२ मयि? । ४३ स्वर्लोन - क. । ४४... मित्येव -क ख. । ४५ मुक्तं - क. । ४६ मम - ख. । ४७ इति - ख. । ४८ योगे सिध्देथ योगिना - ख । ४९ तस्मिन्नपि- क. । ५० व्यास - ख. । ५१ नित्यं यत्रा - ख. । ५२ स पुन. स्वर्गतिं - घ. । ५३ याति - क. । ५४ दृष्ट्वैनं -ख. । ५५ मम - क. । ५६ ममरेश्वरम् - ख- । ५७ दृष्ट्वैनं - क. ख. । ५८ ज्येष्ठं.. - ख । ५९ स्वानं? - ख । ६० संसिद्धिं - ख । ६१. .नो - - खः । ६२ दैवतै - क. ख. । ६३ नियतो - क. ख. । ६४ इदानीमह.. - क. । ६५ स्वयमस्मिन् - क । ६६ व्यव... - ख., न्यतः - क. । ६७ स्थितः - क. । ६८ न मुक्तं हि - ख. । ६९... क्त ततः स्मृतं - ख. । ७० पुण्यं -? । ७१ मोक्षदः - घ. ।



अविमुक्तेश्वरं७२ मां वै७३ योत्र द्रक्ष्यति७४ मानवः ।
गाणपत्या गतिस्तस्य यत्र तत्र मृतस्य ह ।।४२।।
प्रा(प्र?)णानिह तु संन्यस्य७५ यास्यते मुक्तिमुत्तमाम् ।
पित्रा ते गिरिराजेन पुरा हिमवता स्वयम् ।।४३।।
मम प्रियमिदं स्थानं ज्ञात्वा लिङ्गः प्रतिष्ठितम् ।
शैलेश्वरमितिख्यातं दृश्यतामिदमास्थितम् ।।४४।।
दृष्ट्वेदं मनुजो देवि न दुर्गतिमनुव्रजेत् ।

नदी वाराणसी चेयं पुण्या७६ पापप्रमोचनी ।।४५।।
क्षेत्रमेतदलंकृत्य जाह्नव्या सह संगता ।
स्थापितं संगमे चास्मिन् ब्रह्मणा लिङ्गमुत्तमम् ।।४६।।
संगमेश्वर इत्येवं'७७ ख्यातं जगति दृश्यताम् ।
संगमे देवनद्योस्तु यः स्नात्वा मनुजः शुचिः ।।४७।।
अर्चयेत् संगमेशानं तस्य जन्मभयं कुतः ।
इदमन्यद् बृहत् क्षेत्रं निवासं योगिनां परम् ।।४८।।
क्षेत्रमध्ये च यत्राहं स्वयं भूत्वा समास्थितः ।
मध्यमेश्वर इत्येवं ख्यातं७८ सर्वसुरासुरैः ।।४९।।
सिद्धा(द्ध?)नां स्थानमेतद्धि मदीयव्रतचारिणाम् ।
योगिनां मोक्षलिप्सूनां जन्ममृत्युजितात्मनाम् ।।8.29.५०।।
दृष्ट्वेदं मध्यमेशानं जन्म प्रति७९ न शोचति ।
स्थापितं लिङ्गमेतच्च शुक्रेण तव सूनुना ।।५१।।
नाम्ना शुक्रेश्वरमिति८० सर्वसिद्धामरार्चितम् ।
दृष्ट्वेदं मानवः सद्यो मुक्तः स्यात् सर्वकिल्बिषैः८१ ।।५२।।
मृतश्च न पुनर्जन्म संसारे तु लभेन्नरः ।
पुरा जम्बुकरूपेण असुरा८२ देवकण्टकाः८३ ।।५३।।

७२ थवा - घ । ७३ लिंगं - घ । ७४ मम दृष्ट्वैव घ. । ७५ संत्यज्य? । ७६ पुण्यं - क. ख. । ७७... मित्येवं -क,.. घ? - ख । ७८ ख्यातः - - क. । ७९ जन्ममृत्यू - ? । ८० शुक्रेश्वरं नाम - क. ख. । ८१.. .षात् - घ. । ८२ असुरो - घ. । ८३ देवकण्टकः - घ. ।

147

ते ब्रह्मणो८४ वरं लब्ध्वा८५ गोमायुवधशंकिताः८६ ।
निहता'८७ हिमवत्पुत्रि८८ जम्बु(स्बु?)केशस्ततो ह्यहम् ।।५४।।
अभवं जगति ख्यातः सुरासुरनमस्कृतः ।
दृष्ट्वैनमपि देवेशं सर्वकामानवाप्नुयात् । ।५५।।
ग्रहैः शुक्रपुरोगैश्च एतानि स्थापितानि हि ।।
पश्य लिङ्गानि पुण्यानि सर्वकामदुघानि मे'८९ ।।५६। ।
इत्थमेतानि९० पुण्यानि मन्निवासानि पार्वति ।
कथितानि तव क्षेत्रे९१ गुह्य चान्यदिदं शृणु । ।५७।।
क्रोशं क्रोशं चतुर्दिक्षु क्षेत्रमेतत्प्रकीर्तितम् ।
- - - - -९२ चार्वङ्गि मृत्युकालेमृतप्रदम् ।।५८ ।।
- - - - - - - स्थाने केदारे च व्यवस्थित?म् ।
गणत्वं लभ्यते९३ दृष्टवा क्षेत्रेस्मिन् मोक्षमाप्यते ।।५९।।
गाणपत्यपदात्तस्मात् यतः स्यान्मुक्तिरुत्तमा ।
ततो महालयात्तस्मात् केदारान्मध्यमादपि ।।8.29.६० ।।
स्मृतं पुण्यतमं क्षेत्रमविमुक्तमिदं शुभे९४ ।

केदारमध्यमे स्थाने स्थानं चैव महालयम् ।।६१ ।।
मम पुण्यानि भूर्लोके तेभ्यः श्रेष्ठतमं त्विदम् ।
यदा९६ मृष्टानि लोकानि ततः क्षेत्रमिदं शुभम् ।।६२।।
कदाचिन्न मया मुक्तमविमुक्तं ततोभवत् ।
अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः । । ६३ ।।
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ।
शैलेशं संगमेशं च स्वलीनं९७ मध्यमेश्वरम् । ।६४।।

८४ ब्रह्मणोथ - ख., ब्रह्मणस्तु - घ. । ८५ लब्धा - ख । ८६... वरशंकिताः । - घ, शंकितः । - घ. । ८७ न हिता- क., निहिता - ख. । ८८ - पुत्री - क., पुत्र्या - ख. । ८९ प्रदानि तु - ख. । ९० एवमेतानि - ख. । ९१ क्षेत्रं -घ. । ९२ योजनानां मृत्यु (?) - घ. । ९३ लभते - घ. । ९४ शुभम् - घ. । ९५ न्विदं? । ९६ यतः - घ. । ९७ स्वर्लीनं - क. । -


हिरण्यगर्भमीशानं गोप्रेक्षं९८ सवृषध्वजम् ।
उपशान्तशिवं चैव ज्येष्ठस्थाननिवासिनम् । । ६५।।
शुक्रेश्वरं च विख्यातं व्याघ्रेशं जम्बुकेश्वरम् ।
दृष्टवा न जायते९९ मर्त्यः संसारे दुःखसागरे ।।६ ६ ।।
सनत्कुमार उवाच
एवमुक्त्वा महादेवो दिशः सर्वा व्यलोकयत् ।।
विलोक्य संस्थिते पश्चाद् देवदेवे महेश्वरे ।।६७।।
अकस्मादभवत् सर्वं तत् क्षेत्रं ज्वलितं यथा ।
सविद्युत्स्तनिताघोष सूर्यायुतशतोदितम् ।।६८।।
तेजोभिरेकतः पूर्णं वह्निभास्करयोरिव ।
ततः पाशुपताः सिद्धा भस्माभ्यंगसितप्रभाः ।।६९।।
योगीश्वरा१०० महात्मानस्तथा वैतानिकव्रताः१०१ ।
अव्यक्तलिङ्गिनश्चैव शिवयोगोज्ज्वलप्रभाः१०२ ।।8.29.७० । ।
बहवः सहसोपेत्य१०३ नमश्चक्रुर्महेश्वरम् ।
पुनर्निरीक्ष्य देवेशं ध्यानयोगञ्च कृत्स्नश (?) ।।७१ । ।
तस्थुरात्मानमाधाय लीयमाना इवेश्वरे ।
स्थितानां१०४ स तथा१०५ तेषां देवदेव उमापतिः१०६ ।।७२। ।
सञ्चिन्त्य परमां मूर्तिं बभूव१०७ पुरुषः प्रभुः ।
षड्विंश ईश्वरोव्यक्तः सूर्यायुतसमप्रभः ।।७३।।
कृत्स्नं जगदिवैकस्थं कर्तुं मत्त१०८ इवास्थितः ।
तस्य तां परमां मूर्तिमास्थितस्य जगत्प्रभोः ।।७४। ।
न शशाक वपुर्द्रष्टुं हृष्टरोमा गिरीन्द्रजा ।
ततस्तं हृष्टमात्मानं बुद्ध्वा१०९ सा प्रकृतिस्थितम् ।।७५।।

९८... क्षेत्रं - (?) । ९९ न दृश्ट्वा जायते - क. । १०० योगेश्वरा - ख. । १०१ वेधा. - क । १०२ .. योग. -ख.,... व्रताः - क । १०३ शतशोभ्येत्य - क । १०४ स्थिराणाम् - ख. । १०५ तदा - क. घ, सर्वता (था) - ख. । १०६ मुमा... - ख., पतिम् - क. ख. । १०७ बभूवुः - ख. । १०८ मन्त्र (?) मन्तरिव (?) मन्तरव (?) । १०९ सृष्टवा - घ.

149

प्रकृतेर्मूर्त्तिमास्थाय योगेन परमात्मिकाम्११० ।
न शशाक वपुर्द्रष्टुं पुरुषस्य परात्मनः । ।७६।।
ततस्ते लयमाधाय योगिनः१११ पुरुषस्य तु ।
विविशुर्हृदयं सर्वे दग्धसंसारबीजिनः११२ । ।७७। ।
अनुगृह्य ततः सर्वान् तान् सिद्धान् यतिपुङ्गवान् ।
नीललोहितमूर्तिस्थं पुनश्चक्रे११३ वपुः शुभम् ।।७८। ।
तद् दृष्ट्वा११४ शैलजा प्राह हृष्टसर्वतनूरुहा११५ ।
स्तुन्वन्ती११६ चरणौ गत्वा क इमे११७ भगवन्निति । ।७९। ।
तामुवाच सुरश्रेष्ठस्तदा देवीं गिरीन्द्रजाम् ।
मदीयं व्रतमाश्रित्य भक्तिमद्भिर्द्विजोत्तमैः ।।8.29.८० । ।
यैर्यैर्योग इहाभ्यस्त११८ स्तेषामेकेन जन्मना ।
क्षेत्रस्यास्य प्रभावेण११९ भक्त्या च मम भावनात्१२० ।।८१ ।
अनुग्रहो मया ह्येवं क्रियते मुक्तिदः सदा ।
तस्मादिदं१२१ महत् क्षे(त्रे?)त्रं ब्रह्माद्यैः सेव्यते मम ।।८२।।
श्रुतिमद्भिश्च विप्रेन्द्रः संसिद्धैश्च तपस्विभिः ।
प्रतिमास१२२ मथाष्टम्यां प्रतिमासं१२३ चतुर्दशीम् ।।८३ । ।
उभयोः पक्षयोर्देवि वाराणस्यां ममास्पदे ।
शशिभानूपरागे च कार्तिक्यान्तु विशेषतः । ।८४।।
सर्वपर्वसु पुण्येषु विषुवेष्वयनेषु१२४ च ।
पृथिव्यां सर्वं तीर्थानि१२५ वाराणस्यां तु जाह्नवी (म्) ।।८५।।
उत्तरप्रवहां पुण्यां मम मौलिविनिर्गताम् ।
पितुस्ते गिरिराजाच्च१२६ सुतां१२७ हिमवतः शुभाम् ।।८६।।

११० परमात्मिका - क., परमार्थकं - घ. । १११ योगेन - ख. । ११२.. जीविनः - क. ख घ. । ११३ प्रीतश्चके - ख. । ११४ तं - ख., तन्दृष्ट्वा.. - क । ११५ सृष्टसर्वतनूरुहा - ख. । ११६ स्तुवती - घ. । ११७ एते - ख. । ११८ यैर्योगस्समुपास्यन्ते - ख. । ११९ भाविनः - क. । १२० भावनः - क. । १२१ तस्मादियं - क. । १२२.. सं तथा- घ. । १२३ पौर्णमासी - घ. । १२४ विषुवायनसधिषु - ख. । १२१ यानि तीर्थानि - घ. । १२६ गिरिराजस्य - क ख. घ, त्मर - ख. । १२७ सुता - ख. ।

150

भजन्ति१२८ सर्वतोभ्येत्य ताञ्छृणुष्व वरानने ।
सन्निहित्या कुरुक्षेत्रं सार्धं तीर्थशतैस्तथा ।।८७।.।
पुष्करं नैमिशं चैव प्रयागं च१२९ पृथूदकम् ।

सन्ध्या१३० सप्तरिचञ्चैव (?)१३१ सर्वा नद्यः सरांसि च । ।८८। ।
समुद्राः सप्त चैवात्र देवतीर्थानि कृत्स्नशः ।
भागीरथीं समेष्यन्ति सर्वपर्वसु१३२ काशिगाम् । ।८९।।
अविमुक्तेश्वरं१३३ मां च काशीस्थमचलात्मजे ।
पृथिव्यां यानि पुण्यानि१३४ मह्यमायतनानि च ।। 8.29.९० ।।
प्रविशन्ति सदा१३५ भ्येत्य पुण्यां१३६ पर्वसु पर्वसु१३७ ।
केदारे चैव यल्लिङ्गं यच्च लिङ्गं महालये । ।९१ । ।
मध्यमेश्वरसंस्थं१३८ च तथा पशुपतीश्वरम्१३९ ।
शंकुकर्णेश्वरं चैव गोकर्णेशौ तथा ह्युभौ१४० ।।९२। ।
द्रिमिचण्डेश्वरं चैव भद्रेश्वरमथेश्वरम् (?) ।
स्थानेश्वरमथैकाम्रं कालेश्वरमजेश्वरम्१४१ । ।९३ ।।
भैरवेश्वरमीशानं तथा कारोहणस्थितम्१४२ ।
यानि चान्यानि पुण्यानि स्थानानि मम भूतले । ।९४। ।
तानि सर्वाण्यशेषेण काशिपुर्यां विशन्ति माम् ।
सर्वपर्वसु पुण्येषु गुह्यं चैतदुदाहृतम् ।।९५ । ।
तेनेह लभ्यते जन्तोर्विपन्नस्यामृतं पदम्१४३ ।
स्नातस्य चैव गङ्गायां दृष्टेन च मया शुभे१४४ ।।९६।।
सर्वयज्ञफलैस्तुल्यमिष्टैः१४५ शतसहस्रशः ।
सद्य एव समाप्नोति१४६ किन्न्वतः परमुत्तमम्१४७ ।।९७।।

१२८ -.. न्ते - - ख. घ. । १२९ स - क । १३० साध्या - घ. । १३१ सप्तर्षयश्चैव - घ. । १३२ पर्वपर्वसु - घ. । १३३ पुरे - क., पुरं - घ. । १३४ तीर्थानि - घ. । १३५ तदा - घ., यदाने... - ख?. । १३६ पुण्यं क. । १३७ सर्वसु पर्वसु - घ. । १३८ पुरपस्थं - घ । १३९ पाशुपतीश्वरम् - क. । १४० च ता (वुभौ) - क. ख. । १४१ नलेश्वरम् - घ । १४२.. पास्थितम् - ख. । १४३... तास्पदम् - घ. । १४४ सकृदेव शुभानने - ख. । १४५ फलं चैव दक्षिणाभिः सहैव तु - ख. । १४६ मवाप्नोति - ख. । १४७ किन्त्वस्य परमं शुभम् - क. घ, परमस्ति वै -ख. ।



सर्वातयनमुख्यानां दिवि भूमौ गिरिष्वपि ।
नातः१४८ परतरं देवि१४९ बुध्यस्वास्तीति कृत्स्नशः१५० । ।९ ८।।
ब्रह्मार्कवैश्वानरशक्रचन्द्रैर्जलेश१५१ वित्ताधिपवायुभिश्च ।
गन्धर्वयक्षोरगसिद्धसंघैः सार्धं सदा सेवितमेतदग्र्यम् । ।९९।।
स्थानं ममेदं हिमशैलपुत्रि गुह्यं सदा क्षेत्रमिदं सुपुण्यम् ।
विशोकसं१५२ सिद्धिफलप्रदं हि प्रबुद्धतत्त्वा१५३ यतयो भजन्ति१५४ । । 8.29.१०० ।।
क्षेत्रेस्मिन्निवसन्ति ये सुकृतिनो भक्ताः सदा मां नराः१५५ ।
पश्यन्तोन्वहमादरेण शुचयः स्नाताः१५६ सदा मत्पराः ।
ते मर्त्या भयपापदुःखरहिताः१५७ संशुद्धकर्मक्रियाः ।
भित्त्वा संभवबन्धजालगहनं१५८ विन्दन्ति मोक्षं परम् ।।१ ०१ ।।

एवमेतत्१५९ सुरैःकीर्ण १६० नानाद्रुमलताकुलम्१६१ ।
जाह्नव्यालंकृतं पुण्यं क्षेत्रं गुह्यतमं मम ।। १०२ । ।
भागीरथीमिहासाद्य वाराणस्यां ममास्पदे ।
अश्वमेधशतं प्राप्य ब्रह्मलोकं स१६२ गच्छति१६३ ।। १०३ ।।
नातः पुण्यतमं देवि१६४ नातो गुह्यतमं क्वचित् ।
नातः शुभतरं किंचिन्नातः प्रियतरं मम ।।१ ०४। ।
क्षेत्रं ममेदं सुरसिद्धजुष्टं संप्राप्य मर्त्यः सुकृतप्रभावात् ।
ख्यातो भवेत् सर्वसुरासुराणां मृतश्च यायात् परमं पदं तत्१६५। । १० ५।।
इति स्कन्दपुराणे ऊनत्रिंशोध्यायः

१४८ न तत् - ख. । १४९ किंचित, - घ । १५० बुध्यस्व मा कृथान्यया - ख, मध्यं चा - घ. । १५१ जलेन्द्र... -क.घ. । १५२ विमोक्षणं - ख. घ. । १५३ तत्वप्रबुद्धा - क. । १५४ भवन्ति - क., वदन्ति - ख. । १५५ मानवाः -क. । १५६ स्नात्वा - ख. । १५७ भयद्? ख पापरहिताः - क. । १५८ मोहजालगहनं - घ । १५९ एतेद - घ. । १६०... त्सदा - क, त्सर - ख, सुविस्तीर्णं - घ. । १६१ वन... - क., वनशताकुलम् - घ. । १६२ च - क. ख.,...लोके च - घ. । १६३ म । तव. - क, महीयते - घ. । १६४ क्षेत्रं - घ. । १६५ च - घ. ।

152

सनत्कुमार उवाच
उद्यानानि ततो देवः स्थानानि च तथात्मनः१ ।
आख्याय हिमवत्पुत्र्या विचचार तदा पुनः । ।१।।
सोपश्यत२ तदा विप्रं तप्यमानं परं तपः ।
पुत्रं शतशलाकस्य जैगीषव्यं तपोधनम् ।।२। ।
स लिङ्गं देवदेवस्य प्रतिष्ठाप्यार्चयन् सदा ।
भस्मशायी भस्मदिग्धो नृत्तगीतैरतोषयत् ।।३ ।।
जप्येन वृषनादैश्च४ तपसा भावितः शुचिः ।
तमेवं वर्तमानं तु भक्त्या परमया६ युतम्७ ।।४।।
भगवान् सहसाभ्येत्य इदं वचनमब्रवीत् ।
जैगीषव्य महाबुद्धे पश्य मां दिव्यचक्षुषा ।।५।।
तुष्टोस्मि वरदश्चास्मि८ ब्रूहि यत्ते मनोगतम् ।
स एवमुक्तो देवेन सोमं दृष्ट्वा त्रिलोचनम् ।
प्रणम्य शिरसा पादाववदत्९ परया मुदा ।।६। ।
जैगीषव्य उवाच
नमः सर्वार्थसिद्धाय योगसिद्धाय वै नमः ।
नमः पिनाकहस्ताय हिमवन्निलयाय च ।।७।।
नमः पवनवेगाय ध्येयाय ध्यानिभिः१० सदा ।
नमः सोमाय हेम्ने च हेममालाधराय च ।।८।।
नमो गणाधिपतये नमः शान्तेन्द्रियाय च ।
योगसाहाय्यकर्त्रे च११ सहसोपशमाय च ।।९।।
नमो मृत्युहरायैव नमः शोकहराय च ।

नमः सिद्धिप्रदात्रे च सिद्ध१२ सिद्धिप्रदाय च ।।8.30.१० ।।

१ महात्मनः - घ. । २ सोन्वपश्यत् - घ. । ३ ...यत् - क. । ४.. .नादेन - ख. । ५ युक्त... - घ. । ६ च परया- प. । ७ च्चिंतं - क.,.. विन्तम् - घ. । ८.. .श्चैव - क. घ. । ९ ववन्दत् - ख. । १. ध्यायिभिः - क.,ध्यानतः- घ. । ११ सा - क । १२ सिद्धि... - क. ।



धारिणे सर्वलोकानां सर्वलोकेश्वराय च ।
नमो दशार्धवर्णाय संसारापनुदाय च । ।१ १ । ।
नमः संसारपाराय अपारपरमाय च ।
स्वयं मन्त्रे च मनसे दुर्विज्ञेयाय वै नमः । ।१ २ ।।
नमः कालकलाज्ञाय१३ सकलाया१४ कलाय च ।
नमस्तत्त्वाधिवासाय प्रेताधिपतये नमः१५ । । १३ ।।
नमः क्रोधविहीनाय क्रोधाधिपतये नमः ।
नमः श्रमाय श्रमिणे श्रमापनयनाय च । । १० ' ।
नमो ज्ञानरसज्ञाय ज्ञानिने ज्ञानहारिणे ।
सक्ताय१६ चैव तपसि१७ ऐश्वर्यनिरताय१८ च । । १ ५।।
नमो ज्ञाना१९नुबन्धायः२० अज्ञानविनिवर्तिने२१ ।
नमः सर्वानुभावाय भावानुगतचेतसे । ।१ ६ ।।
नमः शमदमाध्वाय मृत्युदूतापहारिणे ।
नमः शैलादिनाथाय शैलादिगणपाय च । ।१७।।
नमो योगरहस्याय२२ योगदाय नमो नमः ।
मह्यं सर्वात्मना कामान्२३ प्रयच्छ भगवन् प्रभो । । १८ । ।
सनत्कुमार उवाच
स एवं स्तूयमानश्च२४ भक्त्या परमयापि च ।
तुष्टस्तुतोष भूयोस्य२५ इदं चैनमुवाच ह । । १ ९। ।
देवदेव उवाच
अजरश्चामरश्चैव सर्वशोकविवर्जितः ।
महायोगी महावीर्यो योगैश्वर्यसमन्वितः ।।8.30.२ ० ।।
प्रभावाच्चास्य गुह्यस्य क्षेत्रस्य मम शाश्वतम् ।
योगेष्टगुणमैश्वर्यं प्राप्स्यसे परमं महत् । ।२१ ।।

१३.. लज्ञाय - क. ख. । १४... य - क. । १५ अज्ञानविनिवर्तिने - ख । १६ शक्ताय - क । १७... से - क. । १८.. .नियताय - ख. । १९ ज्ञाय - क, वबद्धाय - ख, यबुद्धाय - घ. । २० प्रेताधिपतये नमः - ख. । २१ विनिवारिणे - घ. । २२ योगाय रम्याय - घ । २३ काम - घ. । २४... स्य - क- ख. । २५ तुष्टस्तुतो हरो देवो -ख. ।

भविष्यसि२६ द्विजश्रेष्ठ योगाचार्यश्च विश्रुतः ।
यश्चेदं२७ त्वत्कृतं२८ लिङ्गं नियमेनार्चयिष्यति ।।२२। ।
योनयः (?) सप्त गत्वा तु योगेशत्व२९मवाप्स्यति ।
जैगीषव्य गुहाञ्चेमां प्राप्य यो योक्ष्यते द्विजः । ।२३ । ।
सप्तरात्रं स३० युक्तात्मा सर्वपापैः प्रमुच्यते ।
मासेन पूर्वां जातिं च पूर्वाधीतं च वेत्स्यति३१ ।।२४।।
एकरात्रं गतिं शुद्धां द्वाभ्यां तारयते पितॄन् ।
त्रिरात्रेण व्यतीताँश्च परान् सप्त च तारयेत् ।
अतो भूयश्च किं तेद्य३२  जैगीषव्य ददान्यहम्३३ ।।२५।।
जैगीषव्य उवाच
भगवन् देवदेवेश इच्छेयं मे३४ मनोगता३५ ।
अतोहं नान्यदिच्छामि योगाक्षय्यात् परं हि तम् ।।२६। ।
त्वयि भक्तिश्च नित्यं स्यात् सोमे सगणपेश्वरे ।
अनुत्सेकं तथा क्षान्तिं शमं३६ दममथापि च । ।२७। ।
न चाप्यभिभवं कुर्यान्न३७ च तेजोवमाननाम् ।
एतान्वरानहं देव३८ सदेच्छामि महाद्युते । ।२८। ।
देवदेव उवाच
एते तव भविष्यन्ति अजय्यत्वं च योगिभिः ।
इच्छतो दर्शनं चैव भविष्यति च ते मम । ।२९।।
सनत्कुमार उवाच
ततः स भगवान् देवः पाराशर्योमया सह ।
सनन्दी सगणश्चैव भक्तानुग्रहलिप्सया ।।8.30.३ ० ।।
तप्यतो यक्षराजस्य कृत्वा हृदि महेश्वरम् ।
वरदानाय देवेशो जगाम पुरतस्तदा । ।३ १ ।।

२६ त्वं सिद्धश्च - घ । २७ यश्चेमं - क. । २८ दुष्कृतं - घ. । २९ योगशः - क. । ३० स सप्तरात्रं - क. । ३१...ते - घ. । ३२ भ्यतेः - क. । ३३ ... म्यहं - वा. । ३४ यच्छ यन्मे - क., प्रयच्छस्व - घ. । ३५ मनोगतं - क.घ. । ३६ समं - क. । ३७ न - क. । ३८ एतत्सर्वमेकदैव - घ. ।

155
अथ दृष्ट्वा त्रिपादञ्च ह्रस्वबाहूरुपादकम् ।
तप्यमानं तपो घोरं सुतं विस्रवसस्तदा ।।३ २।।
दृष्ट्वोवाच ततो देवः कुबेरं दीप्ततेजसम् ।
तपसा भावितं व्यास त्वगस्थिपरिसंस्थितम् । ।३ ३ ।।
देवदेव उवाच
भो भो विस्रवसः पुत्र चक्षुर्दिव्यं ददामि३९ ते ।
सोमं पश्य महासत्व४० मां त्वं दिव्येन चक्षुषा । ।३४।।
ततस्स दृष्ट्वा देवेशं साम्बं नन्दिपुरस्सरम् ।

प्रणम्य कर्षितस्सम्यगुत्थातुं न शशाक ह । । ३५। ।
अबलं तं समालक्ष्य उत्थानेशक्त४१मीश्वरः ।
उवाचोत्तिष्ठ भद्रन्ते बलं पौराणमस्तु ते ।।३६।।
तत उत्थाय जानुभ्यां कुबेरो ह्यवतिष्ठत ।
पार्श्वगां चैव नेत्रेण देवीमालोकयन् स्थितः ।।३७।।
इयं सा पर्वतसुता सर्वलोकनमस्कृता ।
माता लोकत्रयस्यास्य महायोगबलान्विता ।।३८। ।
अहोस्यास्तपसो वीर्यमहो दीप्तिरहो बलम् ।
या प्रभोः सर्वलोकस्य पत्नीत्वं प्रजगाम ह ।।३ ९। ।
सनत्कुमार उवाच
तमेवंभूतमनसमीक्षमाणं४२ च पार्वतीम् ।
बुबोध देवी बुद्ध्वा च चुकोप परमेश्वरी । ।8.30.४० ।।
सा क्रुद्ध्वा तु कुबेरस्य वाममक्षि सुदीप्तिमत् ।
विशुष्कं कक्षमादीप्ता ददाहाग्नेः शिखा यथा ।।४१ ।।
पुनश्चास्य विनाशाय कुबेरस्य शुभानना ।
मतिं दध्रे तपोयोनिरथैनामवदद्धरः । ।४२।।

३९ ददानि - क. । ४० ...त्वं. घ. । ४१ शक्ति - क. । ४२.. .णस्य - क. ।

156

मा क्रुधो देवि यक्षस्य भक्तस्यास्य तपस्विनः ।
यशस्वी धार्मिकश्चायं भक्तस्त्वाञ्च विशेषतः ।।४३ ।।
कौतूहलतया ह्येष त्वान्निरीक्षितवान् शुभे ।
प्रसादं कुरु बालस्य धनदस्य महेश्वरि४३ ।।४४। ।
देव्युवाच
एषो सकृन्मां देवेश वीक्षतेविनयात् प्रभो ।
मिनोति न गुणान् देव कस्मान्मम पुरः स्थितः ।।४५।।
तेजसां योप्रमेयानां कुर्यान्मोहेन लंघनम् ।
सोल्पवीर्यो विनश्येत पतङ्गोग्निमिवागतः ।।४६।।
सनत्कुमार उवाच
तामेवं क्रोधताम्राक्षीं क्रुद्धां संप्रेक्ष्य शंकरीम् ।
उवाच मधुरं श्लक्ष्णं गिरीन्द्रतनयां वचः ।।४७। ।
ब्रवीमि त्वां महाभागे मा क्रुधो जगतोरणि४४ ।
त्वया सृष्टं जगत् सर्व प्रकृतिस्त्वं सुरेश्वरि ।।४८।।
पुत्रस्तेयं यतो देवि तस्मान्न क्रोद्धुमर्हसि४५ ।
मातरं चैव पुत्रस्य वीक्षमाणस्य शोभने ।।४९।।
न दोषोस्ति न चैवास्य त्वयि चेतो विमोहितम् ।

तस्मात् त्वमेव देव्यस्य प्रपन्नस्य४६ नतस्य च ।
प्रसादं कुरु देवेशे कुबेरस्य यथेप्सितम् ।।8.30.५०। ।
सनत्कुमार उवाच
सा तथा देवदेवेन प्रोक्ता गिरिवरात्मजा ।
प्रसादमकरोत्तस्य प्रसन्ना चेदमब्रवीत् ।।५१ । ।
देव्युवाच
कुबेर यत्ते दुरितं क्षान्तं तत्ते मयानघ ।
तुष्टास्मि मा कृथाश्चैवं पुनस्तेजस्विलंघनम् । ।५२।।

४३, . श्वरी - क. । ४४.. बले (रणे) - घ । ४५ क्रोधमर्हति - घ., ति - घ. । ४६ प्रसन्नस्य - क. ।


यत् त्विदन्ते मया दग्धमीक्षमाणस्य लोचनम् ।
एतत्तथैव४७ भवतु४८ पिङ्गलं दीप्तिमच्च ह । ।५ ३ ।।
अनेन चाङ्कितो लोके भविष्यसि न संशयः ।
एकाक्षिपिङ्गलो नाम्ना ख्यातस्सर्वत्रपूजितः । ।५४ ।।
चरितं यत्तपश्चेद४९ मक्षयं तच्च तेव्ययम् ।
सौभाग्यमुत्तमं चैव मत्प्रसादाद् भविष्यति । ।५५। ।
सनत्कुमार उवाच
एवमुक्त्वा ततो देवी विरराम शुभानना ।
भगवान् वरदोस्मीति कुवे(रे?)रमवदत्ततः ।। ५६ । ।
अथैव५० मुक्तो देवेन कुवेरो हृष्टमानसः ।
तुष्टाव देवं देवीं च शिरसा प्राञ्जलिर्नतः । ।५७ ।।
कुवेर उवाच
नमः पट्टिशहस्ताय किरीटवरधारिणे ।
नमो वलयधारिण्यै धारिण्यै दर्पणस्य च५१ । ।५ ८।।
नमः सर्वाङ्गकेशाय दीर्घकेश्यै५२ नमो नमः ।
नमो मेखलधारिण्यै५३ नमो मौञ्जीधराय च । ।५९ ।।
नमश्चित्रशिखडिन्यै५४ नमः पिङ्गजटाभृते ।
नमो ज्ञानाय तनवे५५ भूताधिपतये नमः । ।8.30.६ ० । ।
नमस्ताराभिधारिण्यै५६ सिंहोरस्काय वै नमः ।
नमो रत्नाग्र्यधारिण्यै५७ नमश्चन्द्रार्धमौलये५८ । ।६ १ । ।
नमः प्रकृतये चैव नमोस्तु पुरुषाय च ।
नमोस्तु बुद्धये चैव अहंकाराय वै नमः ।।६२ । ।
नमोस्तु रतये चैव सुखाय च नमो नमः ।
नमः कृत्यै५९ कर्मणे च आरम्भाय समाप्तये ।।६३ । ।

४७ वामन्तथैव - ख. । ४८ भवितृ - क । ४९ यत्तु पश्येद्यः - ख. । ५० तथैव - घ. । ५१ काञ्चनं ह  - ख. । ५२ सर्वज्ञकेशाय दीप्तकेश्यै - घ. । ५३ स्तु शलधारण्यै - ख । ५४ नमो नीलशिखण्डिन्यै - घ. । ५५ भूतये - क । ५६... एता(स्ता?)रातितारायै - क. । ५७ ग्रधारिण्यै - क । ५८.. मौलिने - ख. । ५९ कीर्त्यै - क. ।

158

नमो यज्ञाय मन्त्राय दक्षिणायै६० ऋचे नमः ।
नमः साम्नेथ यजुषे छन्दसे ष्टुतये नमः ।।६४।।
नमो ग्रये च वेद्यै च स्वाहायै हविषे नमः ।
नमो लक्ष्म्यै श्रिये चैव नमो धर्माय वेधसे ।।६५।।
इच्छायै रतये चैव नमः सम्पद्विरागिणे ।
नमः सिद्ध्यै तथा पुष्ट्यै तुष्ट्यै क्षान्त्यै नमो नमः ।।६६। ।
नमस्स्वधायै कव्याय हव्याय च नमो नमः ।
नमो वेद्याय विद्यायै नमः शर्वाय भक्तये ।।६७।।
लयायोत्पत्तये६१ चैव स्थित्यै संसारणाय६२ च ।
मोक्षाय मुक्तये चैव नमः कालाय मृत्यवे ।।६८। ।
नमस्ते भगवन् देव सह देव्या जगत्पते ।
दिश६३ नो भूतभव्येश यन्मे मनसि संस्थितम् । ।६९। ।
सनत्कुमार उवाच
य इमं पठते नित्यं स्तवं प्रातस्समुत्थितः ।
जपंश्च विप्रो वैश्यो वा शूद्रः क्षत्रिय एव वा६४ । ।8.30.७० । ।
तस्य तुष्टो धनेशस्तु६५ प्रयच्छति महद्धनम्६६ ।
सोमश्च भगवान् तुष्टो गतिमिष्टां प्रयच्छति ।।७१ । ।
सनत्कुमार उवाच
एवं हि६७ संस्तुतस्तेन कुबेरेण जगत्पतिः ।
उवाच वरदोस्मीति ब्रूहि विश्रवसस्सुत६८ ।।७२। ।
कुबेर उवाच
त्वत्तः प्रसादं सततं भक्तिं च त्वयि६९ शाश्वतीम् ।
भगवन् त्वाञ्च पश्येयं वर एषोस्तु मे विभो ।।७३ । ।

६० दीक्षणायै - क., दीक्षायै दीक्षिताय च - ख । ६१ प्रलयोत्पत्तये - क. ख. । ६२ संसारिणाय - क. । ६३ शंस -घ । ६४ ब्राह्मणः क्षत्रियो वापि विट् शूद्रो वापि संयतः - ख. । ६५... थ देवस्तु - ख. । ६६ महद्वरम् - ख. । ६७ तु. - ख. । ६८ स्ववचसा पुनः - घ. । ६९ त्वयि च - क. ।

159

सनत्कुमार उवाच७०
एवमस्त्विवति तत्सर्वं प्रदाय७१ भगवान् शिवः७२ ।
आत्मना सह सख्यं च ददावात्यन्तिकं तदा । ।७४। ।

देवदेव उवाच
गृहाण चैतां७३ शिबिकां नरयुक्तामसंगिनीम् ।
लोकान् यथेष्टाँल्लोकेश यामारुह्य चरिष्यसि७४ ।।७५। ।
इमां चैवाशनिं दिव्यामप्रतीघातलक्षणाम् ।
गृहाणायुधमेतत्ते भविष्यत्यरिदुस्सहम् । ।७६ ।।
अस्त्रञ्च ते प्रयच्छामि तव नाम्ना भविष्यति ।
कौबेरमिति विख्यातं मोहनं सर्वदेहिनाम् ।।७७।।
सनत्कुमार उवाच
ततस्स देवस्तुष्टात्मा मालां स्वीया७५ मनिन्दिताम् ।
आबबद्धास्य शिरसि भास्कराकारवर्चसम्७६ । ।७८। ।
कुशेशयानां फुल्लानां स्रग्दाम च७७ मनोरमम्७८ ।
आबबद्धास्य कण्ठे वै प्रीयमाण उमापतिः७९ । ।७९ । ।
प्रकामं८० दर्शनञ्चास्य दत्त्वा चैव धनेशताम् ।
जगाम भगवान् सोमस्ततोन्यं देशमीप्सितम् ।।8.30.८ ० । ।
सनत्कुमार उवाच
य इदं८१ तु कुबेरस्य वरदानमशेषतः ।
शृणुयाच्छ्रावयेद्वापि नित्यं विप्रान् समाहितः । ।८१ । ।
धनवान् रूपसंपन्नः पुत्रपौत्रसमन्वितः ।
कुलज्ञानबलोपेतो जायते स मृतो नरः । ।८ २। ।

७० देउदेव उ. - क. ख. घ. । ७१ प्रसादं - घ. । ७२ ञ्छिवः - क. । ७३ चेमां - ख । ७४ च यास्यसि - ख. । ७५ स्वय - क. । ७६... साम्- - क- । ७७... ञ्च - क. ख. । ७८ मनोहरं - ख. । ७९ मुमापतिः - ख. । ८०...म - क. । ८१ इमं - क. ख ।

160
सनत्कुमार उवाच
अथ देवी महाभागा सहिता शंभुना तदा ।
संचिन्त्य पंचचूडास्तु तपन्त्योप्सरसः शुभाः । ।८३ । ।
कृशाङ्ग्यो भक्तिमत्यश्च तपसा दग्धकिल्बिषाः ।
कारुण्याहृतचेतस्का८२ देवं वचनमब्रवीत् ।।८४। ।
एतासां तप्यमानानां८३ योषितां वरमुत्तमम् ।
ददामीप्सितमीशान८४ तन्मेनुज्ञातुमर्हसि ।
तस्या विज्ञप्तिमाकर्ण्य भगवा८५ निदमब्रवीत् ।।८५ । ।
देवदेव उवाच
एवं कुरु महाभागे भक्तानुग्रहमीप्सितम्८६ ।
वैदिक्योप्सरसो ह्येताः पंचचूडा इति स्मृताः ।।८६ ।।
त्वां कृत्वा हृदि तप्यन्ते वर आभ्यः८७ प्रदीयताम्
ततः सा देवदेवेन तथा समनुचोदिता ।

पंचचूडाः समागम्य वच एतदुवाच८८ ह ।।८७।।
तुष्टास्म्यप्सरसः साक्षात्८९ पश्यध्वं मां शुचिस्मिताः ।
ददामि९० वो वरानिष्टान् ये वो९१ हृदयसंस्थिताः ।।८८।।
सनत्कुमार उवाच
ता एवमुक्ताः पार्वत्या वैदिक्योप्सरसः शुभाः ।
देवीं दृष्ट्वा प्रणम्यैनां९२ शिरसा पादयोर्नताः ।।८९।।
अश्रुपूर्णेक्षणा दीनाः संस्तभ्यात्मानमात्मना ।
शिरस्यञ्जलिमाधाय९३ तुष्टुवुः सहिताः समम् । ।8.30.९० ।।
अप्सरस ऊचुः
नमः सिद्ध्यै नमस्तुष्ट्यै क्रियायै बुद्धये९४ नमः ।
नमः कीर्त्यै नमः सत्यै उल्क( ।) जायै तथेष्टये ।।९१ ।।

८२ कारुण्यकृतचेतस्का - ख. । ८३ जप्यमातांना - घ. । ८४ ददानीप्सितमीशान - क- ख. । ८५ भवानी - घ. । ८६.. कारिणि - ख. । ८७ एभ्यः - वा, । मिष्टं - ख. । ८८ वाक्यमेतदुवाच - ख. । ८९ सर्वाः... - घ. । ९०.. .ति- क. ख. घ. । ९१ यद्वो - क., यानि वो हृदि - ख. । ९२... व - क. ख. घ. । ९३... दाय - घ. । ९४ वृद्धये -घ. ।


नमः पृथिव्यै कल्याण्यै श्रियै९५ लक्ष्म्यै नमो नमः ।
नमः सुधायै स्वाहायै स्वधायै दितये नमः । । ९ २। ।
नमोस्तु तडिते९६ चैव सौदामन्यै९७ नमो नमः ।
सवित्र्यै चाथ गायत्र्यै वेदमात्रे नमो नमः । ।९ ३ ।।
नमः पर्वतकन्यायै मतये स्मृतये नमः ।
नमः पर्वतवासिन्यै रुद्राण्यै च नमो९८ नमः । ।९ ४। ।
नमः प्रकृतये चैव ज्योत्स्नायै ऋद्धये नमः ।
शोभायै दीप्तये चैव भास्करग्रहरश्मये । । ९५ । ।
गत्यायै गतये चैव इन्द्राण्यै९९ मुक्तये नमः ।
नियत्यै सरिते चैव गङ्गायै सूतये नमः । ।९ ५ । ।
हेतवे१०० प्रीतये चैव नमः करणवृत्तये१०१ ।
नमः सन्ततये चैव इरायै वृत्तये नमः । ।९ ७। ।
वारुण्यै च शरण्यायै शान्त्यै कान्त्यै१०२ नमो नमः ।
कौशिक्यै च नमस्तेस्तु कात्यायन्यै नमो नमः । । ९८ । ।
नमः सन्नतये चैव महिम्ने च नमो नमः ।
अणिमायै नमस्तेस्तु लघिमायै नमो नमः । । ९९ । ।
पूजायै१०३ ते नमश्चैव शितिबाह्वे१०४ च सृप्तये१०५ ।
संज्ञायै च नमस्तेस्तु गिरेथ१०६ स्मृतये नमः । । 8.30.१०० । ।
नमस्तेस्तु सरस्वत्यै जिह्वायै दृष्टये नमः ।
नमो महिषघातिन्यै तथा शुंभनिशुंभयोः ।। १०१ । ।

नमः सिंहरथिन्यै१०७ च शूलिन्यै च नमो नमः ।
नमो मुद्गरधारिण्यै१०८ कवचिन्यै नमो नमः । । १० २। ।
नमः कुण्डलधारिण्यै धारिण्यै जगतो नमः ।
नमो धनुर्धरायै च खडगिन्यै च१०९ नमो नमः । ।१ ०३ ।।

९५ श्रिये- क. । ९६ तद्धिते - क. । ९७ सौदामिन्यै - घ. । ९८ चैव ते - ख. । ९९... यै - ख । १००.. ये - ख -। १०१ कारणवृत्तये - ख. । १०२ काल्यै - ख. । १०३ प्रजायै - घ. । १०४ शितिकायै - घ. । १०५ वृष्टये - घ. । १०६ शिवायै - घ । १०७ सिंहरथे - ख. । १०८ नमस्तु क्षीधरारिण्यै - ख. । १०९ खङ्गहस्ते - ख. ।


नमः पिच्छध्वजिन्यै च धारिण्यै पट्टिशस्य च ।
नमोस्तु भूतमात्रे च स्कन्द११० मात्रे नमो नमः । ।१ ०४
विशाखशाखयोर्मात्रे१११ नैगमेशस्य चैव हि ।
जात्यै सर्वसुराणां११२ च देवतायै वनस्य११३ च ।।१ ०५। ।
आर्यायै च नमो नित्यं शिखण्डिन्यै११४ नमो नमः ।
नमो नीलशिखण्डिन्यै दीर्घवेण्यै नमो नमः ।।१ ०६।।
नमोस्तु तनुमध्यायै११५ देवतायै धनस्य११६ च ।
नमो धृत्यै नमश्चित्यै कीर्तये च११७ नमो नमः ।। १ ०७।।
स्त्रीणां सौभाग्यदायिन्यै धारिण्यै च नमो नमः ।
राकानुमतये चैव सिनीवाल्यै नमो नमः११८ । । १ ०८।।
नमः क्रियायै श्रद्धायै मेधायै च नमो नमः ।
नमोस्तु धारणायै च ऊहायै च नमो नमः ।।१ ० ९। ।
अपोहायै नमस्तेस्तु वषट्प्रकृतये नमः ।
नमः समाधये चैव स्पृहायै चित्तये११९ नमः । ।8.30.१ १ ०। ।
वेदनायै नमस्तेस्तु बृहदुक्थ्यै१२० नमो नमः ।
नमः प्रभायै१२१ शुद्धायै शुद्धये१२२ शुचये नमः ।। १११ । ।
नमस्त्र्यम्बकभार्यायै विद्यायै१२३ च नमो नमः।
दीक्षायै१२४ दक्षिणायै च ज्वालायै च नमो नमः ।।१ १२।।
इन्द्रियाणां प्रवृत्त्यै च निवृत्त्यै चैव कर्मणाम् ।
श्रुतये सर्ववेदानां१२५ भवान्यै१२६ च नमो नमः ।।१ १३ । ।
दुर्गायै दुर्गतारिण्यै१२७ धारिण्यै सर्वदेहिनाम् ।
नमस्ते सर्वदेवत्ये नमस्ते लोकभाविनि१२८ ।।१ १४।।
नमः शान्त्यै नमः कान्त्यै नमः पत्न्यै हरस्य च ।
नमोस्त्व१२९दित्यै दानव्यै वितानायै१३० नमो नमः ।।११५।।

११०.. स्य च - क. ख. । १११ श्चैव - क., मात्र च - ख. । ११२ रसानां - ख. । ११३ नमस्य - क. । ११४ शिखिन्यै च - घ. । ११५ तन्तुमध्यायै - ख. । ११६ वनस्य - घ. । ११७ कीर्त्यै चैव - ख. । ११८ तथैव च - क. । ११९ वित्तये - ख. । १२०... क्ष्यै - क.,.. .क्त्यै - ख. । १२१ विशुद्धायै - ख., वै - क. । १२२ शुद्धायै - ख-। १२३ नित्यायै - घ. । १२४ दक्षिणायै - क., दीक्षि... ख. । १२५ देवानां - ख. । १२६ भवायै - ख. । १२७ दुर्गतायै च - ख. । १२८ सर्वभाविनी - ख. । १२९... स्तु - घ. । १३०. तिजतायै? - ल., वितता - क. ।



नमः शिवायै कर्त्र्यै च प्रभावायै१३१ नमो। नमः ।
मृकण्ड्वै१३२ मार्द्दबाह्वै च तथा सुरभये नमः । । ११६ । ।
विनतायै तथा लक्ष्म्यै सुरसायै नमो नमः ।
नमस्ते शितिकण्ठिन्यै नमस्ते सर्वतः१३३ सदा ।
दिश नः सुमनाः सर्वं यत् किंचिद् हृदये स्थितम् । । ११७ । ।
सनत्कुमार उवाच
य इदं१३४ पठते नित्यं नरः स्त्री वा समाहितः ।
स रात्रिषु१३५ कृतं पापं त्यजेत् सर्वमशेषतः । । ११८ । ।
शयानो जपते यश्च प्रयतो व्यास नित्यशः ।
दिवाकृतं स जह्यात्तु मृतश्च सुगतिं व्रजेत्१३६ । । ११९ । ।
यश्चैत१३७ च्छृणुयान्नित्यं द्विजान् वा श्रावयेत् सदा१३८ ।
स देहभेदमासाद्य पञ्चचूडप्रियो भवेत् । । 8.30.१२० । ।
यश्चेदं१३९ प्रजपन् मर्त्यस्त्यजेत् प्राणान् सुदुस्त्यजान् ।
विमाने सूर्यसंकाशे अप्सरोगणसेविते । । १२१ । ।
सर्वपापविनिर्मुक्तो रमेद्वर्षायुतं शतम्१४० ।
यश्च भक्त्या परमया तिथौ नियमवान्नरः । । १२२ । ।
देवीभ्यर्च्य जपते सर्वपापैः प्रमुच्यते ।
जपनादेव तपसा१४१ देहे भिन्ने च भक्तिमान्१४२ ।
स भूत्वानुचरो देव्याः पुण्ये लोके महीयते । । १२३ । ।
सनत्कुमार उवाच
ताभिरेव स्तुता देवी स्थिता देवस्य सन्निधौ ।
उवाच हृष्य१४३ माणास्या पञ्चचूडा इदं१४४ वचः । । १२४ । ।
शृणुताप्सरसः सर्वास्तपसोस्य१४५ महत्फलम् ।
यच्चापि परया भक्त्या मां प्रपन्नाः स्थ शोभनाः । । १२५।।

१३१ प्रभवायै - ख. । १३२ मृत्कण्वै - ख. । १३३ सर्वदे - ख. । १३४ इमं - क. ख. । १३५ रात्रिजं - क. । १३६ त्सुगतिमाप्नुयात् - ख. । १३७ यश्चैनं - क. । १३८ श्रावयीत वा - ख. । १३९ यश्चैनं - क. ख. । इतः पर पत्रमेकं खण्डितम् । १४०. समम् - ख. । १४१ देहपतनात् - घ. । १४२ शक्तिमान् - घ. । १४३ हुषं .. .- ख. घ.। १४४ पंचचूडमिदं - ख.। तदा घ. । १४५... थ - घ. ।

अजराश्च विशोकाश्च नित्यं मुदितमानसाः ।
प्रियाश्च सर्वलोकस्य भविष्यथ ममाज्ञया । ।१ २६। ।
ब्रूत यच्चापि किंचिद्वो हृदि स्थितमशंकिताः ।
सर्वं दास्यामि तद्वोहं मा चिरायत दुर्व्यथाः १४६ ।। १ २७। ।
पञ्चचूडा ऊचुः
देवि पुंसां स्त्रियः १४७ सर्वाः कार्यार्थं१४८ विदितं च ते ।
अर्थिनस्ते च नस्तावत् यावत् कार्यं समाप्यते ।
समाप्ते चैव१४९ ते कार्ये परा इव भवन्ति नः ।।१ २८।।
तद् देवि यदि तुष्टासि यदि देयो वरश्च नः ।
सर्वस्त्रीणां महादेवि भवन्तु पुरुषा वशाः । । १ २९। ।
देव्युवाच
अद्यप्रभृति लोकेषु सर्वस्त्रीणां नराः सदा ।
वश्या भवन्तु सर्वत्र१५१ सर्वकार्यकराश्च ह१५२ ।। 8.30.१३० । ।
अदौ पश्चाच्च सर्वाभ्यो१५३ हिरण्यं पशवः स्त्रियः ।
सर्वभोगांश्च दास्यन्तु वशगाः सर्वथापि च । । १३१ ।
व्यलीकान्यपि कुर्वन्त्यो बहूनि विविधानि च ।
प्रिया एव भविष्यन्ति पापं न च भवेत् सदा ।।१ ३२ ।।
मातरं पितरं भ्रातॄन्१५४ सुहृदोथ सुतानपि ।
अर्कायाणि करिष्यन्ति स्त्रीणां वश्यत्वमागताः । । ३३ । ।
पश्यन्तोपि व्यलीकानि दोषान् वैकृत्यमेव च ।
नैव द्रवन्ति ते पुंसां(?)१५५ मद्वरान्मोहितेन्द्रियाः ।।१३४। ।
सनत्कुमार उवाच
ततः सा देवदेवस्य पत्नी हिमवतः सुता ।
माल्यदाम गृहीत्वा तु भ्रामयन्ती शुभानना । । १३ ५। ।

१४६ दुष्यथाः - ख । १४७ दिशं च ( वशाः?) - ख. । १४८.. थ - स. । १४९ तत् ख. घ. । १५० त्वं देवि - घं.। १५१ सर्वे वश्या भविष्यन्ति - घ. । १५२ सदा - घ. । १५३ सर्वेभ्यो - ख । १५४ भार्यां १५५ वश्याः (?) ।



भव नार्य इति प्राह हसन्ती प्रियमव्यया ।
भ्राम्यमाणस्य दाम्नोस्य यान्य१५६ शीर्यन्त१५७ भूतले ।।१३ ६।।
कुसुमान्यभवँस्तानि नार्यः कमललोचनाः ।
ता उवाच पुरा यूयं जराक्षयविवर्जिताः ।।१३७। ।
जगन्मोहकराः सर्वाः१५८ पुंसां हृदयबन्धनाः१५९ ।
दृष्टिस्पर्शविलासेषु आविश्य जगतीत्रयम्१६० । ।१३८।।
- - - - - पुरुषाँस्त्रीवशाँश्च करिष्यथ ।
नराः सर्वे च युष्मासु१६१ भविष्यन्ति सदा रताः ।।१ ३९।।

वृत्तिः शुभा१६२ भवित्री च सर्वासां मम तेजसा ।
पुंसां स्त्रीभोगसिद्ध्यर्थं स्त्रीणां रत्यर्थमेव च ।8.30.१४० । ।
क्रियाः शुभाङ्गसंस्कारा दिव्या ये१६३  मानुषाश्च ह ।
बहुरूपाश्च ता भूत्वा विविशुः सर्वदाङ्गनाः१६४ । । १४१ ।।
सनत्कुमार उवाच
एवं देवी तदा व्यास सृष्ट्वा ता१६५ वै विसृज्य च ।
उवाचाप्सरसो ब्रूत किं वो भूयः करोम्यहम्१६६ ।।१ ४ २। ।
तास्तुष्टमनसश्चापि ऊचुर्व्यास भवेम हि ।
देवानां मानुषाणां च अवश्याश्चैव१६७ रक्षसाम् ।
ता उवाच ततो देवो एवं लोके भविष्यथ१६८ । । १४३ ।।
ततः स सहितो देव्या सनन्दी परमेश्वरः ।
गणैः सर्वैश्च सहितो गृहान्स्वानाविशत् प्रभुः ।।१४४। ।

१५६  यानि - ख. । १५७... न्त - ख. । १५८ यूयं - ख. - । १५९... नात् - क. । १६० जगति स्त्रियः - घ. । १६१ युष्माकं - घ- । १६२ शूद्रा - घ । १६३ ये दिव्या - घ. । १६४ सर्वमंगलाः - घ । १६५ सृष्टास्ताः (?) १६६ किं भूयः करवाण्यहम् (?) । १६७ अवध्याश्चैव - ख. घ. । १६८ एवं भवत्विति प्रोक्ता (?) । देवी त्रिजगतो वली (रणौ) । उवाच सद गच्छाम चिरोत्सृप्टमिति प्रभो *इति पाठः घ पुस्तके ।*


भगनयननिपाती दैत्यदर्पापहारी
सुरकमलहिमौघः कामयज्ञाग्निहन्ता१६९ ।
जलदवृषभयायी सर्वदुःखान्तकारी
समरवृषभकेतुश्चन्द्रमौलिर्जगाम१७० ।।१४५।।
इति स्कन्दपुराणे वाराणस्यवलोकने जैगीषव्यधनदपंचचूडानां१७१ वरप्रदाननामा त्रिंशोध्यायः१७२

व्यास उवाच
भगवन् पिङ्गलः केन गणत्वं समुपागतः१ ।
अन्नदत्वञ्च२ संप्राप्तो वाराणस्यां महाद्युतिः ।। १ ।।
क्षेत्रपालः कथं जातः प्रियत्वं च कथं गतः ।
एतदिच्छामि कथितं श्रोतुं ब्रह्मसुत त्वया । ।२। ।
सनत्कुमार उवाच
शृणु व्यास यथा लेभे गणेशत्वं स पिंगलः ।
अन्नदत्वं च लोकानां स्थानं वाराणसीं च हि ।।३ ।।
पूर्णभद्रसुतः श्रीमानासीद् यक्षः प्रतापवान् ।
हरिकेश इति ख्यातो ब्रह्मण्यो धार्मिकश्च ह । ।४।।
तस्य जन्मप्रभृत्येव भवे५ भक्तिरनुत्तमा ।
तदाशीस्तन्नमस्कारस्तन्निष्ठस्तत्परायणः । ।५।।
आसीनश्च शयानश्च गच्छन्तिष्ठन्ननुव्रजन् ।

भुञ्जानोथ पिबन् वापि रुद्रमेवान्वचिन्तयत्७ । ।६। ।
तमेवं युक्तमनसं पूर्णभद्रः पिताब्रवीत् ।
न त्वा पुत्रमहं मन्ये दुर्जातो यस्त्वमन्यथा । ।७। ।

१६९ पहर्ता - ख. । १७० मौली जगाम - ख । १७१ आचूड ( २६८) - ख. । १७२ अत्र ऊनत्रिंशोभ्याय इति ख. घ.पुस्तकयोः पाठः । १ समुपावृतः - घ । २ अर्थदत्वञ्च - घ. । ३ यक्षराट् स - घ. । ४ ब्राह्मणो - ख, वरेण्यो - घ.। ५ सर्व (शर्वे?) - घ । ६... नश्च वदँश्चापि - घ. । ७... नुचिन्तयन् - घ ख ।



नहि८ यक्षकुलीनानाा९ मेतद् वृत्तं भवत्युत ।
गुह्यका बत यूयं वै स्वभावात्१० क्रूरचेतसः ।।८।।
क्रव्यादाश्चैव किं भक्षा हिंसाशीलाश्च पुत्रक ।
मैवं कार्षीर्न नो वृत्तिरेवं दृष्टा महात्मनाम् ।
स्वयंभुवा यथा सृष्टा सैव वृत्तिः प्रशस्यते ।।९।।
हरिकेश उवाच
सृष्टा११ चैवा१२ प्रशस्ता च गर्हिता साधुभिः सदा१३ ।
वृत्तिः स्वयंभुविहिता१४ त्यक्तव्या यदि नो१५ भवेत् ।।8.30(2).१ ० ।
आश्रमान्तरजं कर्म न कुर्युर्गृहिणस्ततः ।
हित्वा मनुष्यभावं च कर्मभिर्विविधैश्च ह१६ । । ११। ।
देवत्वं नो१७ विमार्गेयुर्मानुष्यं जातिमेव च ।
अथ चेद्विहितं तेषां कर्म तत्प्राप्तिसंसृतम् ।
ममापि१८ विहितं पश्य कर्म तन्नात्र१९ संशयः । ।१ २। ।
सनत्कुमार उवाच
स एवमुक्तः पुत्रेण२० पूर्णभद्रः प्रतापवान् ।
उवाच निष्क्रम क्षिप्रं गच्छ त्वं यत्र रोचते२१ ।। १३ । ।
ततः स निर्गत२२ स्त्यक्त्वा गृहसंबन्धिबान्धवान्२३ ।
वाराणसीम्२४ समासाद्य तपस्तेपे सुदुश्चरम् । ।१४।।
स्थाणुभूतो ह्यनिमिषः शुष्ककाष्ठोपलोपमः२५ ।
संनियम्येन्द्रियग्राममवातिष्ठत२५ निश्चलः । । १५।।
अथ तस्यैवमनिशं२७ तत्परस्य तदाशिषः ।
सहस्रमेकं वर्षाणां दिव्यमत्यतिवर्तत२८ ।।१ ६।।

८ न वै - घ. । ९ यक्षकुलस्यास्य - घ. । १० न तावत् - घ. । ११ दृष्टवा - घ. । १२ चैव - घ. । १३ च सुबुद्धिभिः - घ. । १४ स्वयंभुवा सृष्टा - घ. । १५ वा - ख । १६ सह - घ. । १७ नहि घ । १८ मया च - घ. । १९ कर्मैतन्नात्र - घ. । २० एवमुक्तः स्वपुत्रेण - घ. । २१ हितं चैव यदेच्छसि - घ. । २२ निंदित - ख. । २३ गृहं संबन्धिनं तथा - घ. । २४ स्यां - घ. । २५ शुष्कश्चैव विशेषतः - घ. । २६ मवात्किष्ठत - घ. । २७ तस्यत्विशक्तस्य - ध. । २८. मभ्यति... - क. ख. ।

वल्मीकेन समाक्रान्तो२९ भक्ष्यमाणः पिपीलिकैः ।
वज्रसूचीमुखैर्व्यास विध्यमानस्तथैव च । । १७ ।।
निर्मांसरुधिरत्वग् वै३० कुन्दशंखेन्दुसप्रभः ।
अस्थिशेषो३१ भवत् सर्वो देवश्चैवममन्यत३२ । । १८ ।।
एतस्मिन्नन्तरे देवी व्यज्ञापयत शंकरम् ।
उद्यानं पुनरेवेदं द्रष्टुमिच्छामि सर्वद३३ ।। १ ९। ।
क्षेत्रस्य चैव माहात्म्यं श्रोतुं कौतूहलं हि मे ।
यतश्च प्रियमेतत्ते यच्चास्य फलमुत्तमम् ।।8.30(2).२ ० ।।
इति विज्ञापितो देवः पार्वत्या भुवनेश्वरः ।
सर्वं पृष्टं यथान्यायमाख्यातुमुपचक्रमे । । २१ ।।
निर्जगाम च देवेशः पार्वत्या सह शंकरः ।
उद्यानं दर्शयामास देव्या देवः पिनाकधृक्३४ ।२ २ ।।
प्रफुल्लनानाविधगुल्मशोभितं३५ लताप्रतानावनतं३६ मनोरमम्३७ ।
विरूढपुष्पैः परितः३८ प्रियंगुभिः सुपुष्पितैः कण्टकितैश्च३९ केतकैः ।।२३ ।।
तमालगुल्मैर्निचितं४० सुगन्धिभिर्निकामपुष्पैर्बकुलैश्च सर्वशः ।
अशोकपुंनागवनैस्सुपुष्पितैर्द्विरेफमालाकुलपुष्पसंचयैः ।।२४। ।
क्वचित् प्रफुल्लाम्बुजरेणुरूषितै विहङ्गमैश्चारुकलप्रणादिभिः ।
विनादितं सारसहंसमद्गुभिः४१ प्रमत्तदात्यूहरुतैश्च वल्गुभिः । ।२५। ।
क्वचिच्च चक्राह्वरुतोपनादितं क्वचिच्च कादम्बकदम्बकैर्युतम्४२ ।
क्वचिच्च कारण्डवनादनादितं क्वचिच्च मत्तालिकुलाकुलीकृतम् ।।२६।।
मदाकुलाभिर्भ्रमराङ्गनाभिर्निषेवितं चारुसुगंधिपुष्पम्४३ ।
क्वचित् सपुष्पैः४४ सहकारवृक्षैर्लतोपगूढैस्तिलकैश्च गूढम्४५ । ।२७।।

२९ तदाक्रान्तो - ख. । ३० च... - ख. । ३१ अस्थ्ना वशेष - ख. । ३२ न मन्यते - ख. । ३३ शंकर - ख । ३४ इतः परं देवदेव उवाच इति घ पुस्तके । ३५ ता - क. । ३६ लताप्रतानैः सततं - ख. । ३७ मनोहरं- ख. । ३८ पतितैः - ख. । ३९... भिश्च - क. ख. । '८०.. .तैः - ख. । ४१ नादिभिः ( तैः ) - ख. । ४२... कायुतं - क. व । ४३ सुगन्धिपुष्पम् - घ. । ४४ च्च पुष्पैः - क ख. । ४५ सुपुष्पितैः - ख ।


प्रगीतविद्याधरसिद्धधारणं३६ प्रनृत्तनित्यानुगताप्सरोगणम्४७ ।
प्रहृष्टनानाविधपक्षिसेवितं प्रमत्तहारीतकुलोपनादितम् । ।२८।।
मृगेन्द्रनादाकुलसन्नमानसैः क्वचित्क्वचिद्द्वद्धकदम्बकं मृगैः४८ ।
प्रफुल्लनानाविधचारुपङ्कजै४९ स्सरस्तडागैरुपशोभितं क्वचित् ।।२९।।
निविडनिचुललीनानीलकण्ठाभिरामं५०
मदमुदितविहङ्गवातनादाभिरामम् ।
कुसुमिततरुशाखालीनमत्तद्विरेफं
नवकिशलयशोभाशोभित५१ प्रान्तशाखम् ।।8.30(2).३ ० ।।
क्वचिच्च दन्तिक्षतचारुवीरुत् क्वचिल्लतालिङ्गितचारुवृक्षम् ।

क्वचिद्विलासालसगामिनीभिर्निषेवितं किम्पुरुषाङ्गनाभिः ।।३ १ ।।
पारावतध्वनिविकूजितगारु शृंगैरभ्रंकषैः सितमनोहरचारुरूपैः ।
आकीर्णपुष्पनिकरप्रविविक्तहासैर्विभ्राजितं त्रिदशदेवकुलैरनेकैः ।।३ ।।
फुल्लोत्पलाम्बुजसहस्रवितानयुक्तैस्तोयाशयै५२स्समनुशोभितदेवमार्गम् ।
मार्गान्तरागलितपुष्पविचित्रभक्तै५३ स्सम्बद्धगुल्मविटपैर्विहगैरुपेतम् । ।३३ ।।
तुङ्गाग्रैर्नील५४ पुष्पस्तबकभरनतप्रान्तशाखैरशोकै-
र्मत्तालिव्रातगीतश्रुतिसुखजननैर्भासितं तन्मनोज्ञैः ।
रात्रौ चन्द्रप्रभासा५५ कुमुमिततिलकैरेकतां संप्रयातं
छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदर्भाङ्कुराग्रम् ।।३४।।
हंसानां पक्षवात५६ प्रचलितकमलस्वच्छविस्तीर्णतोयं
तोयानां तीरजातप्रविकचकदलीवाटनृत्तन्मयूरम्५७ ।
मायूरैः पक्षचन्द्रैः क्वचिदपि पतितं रञ्जितक्ष्माप्रदेशं५८
देशे देशे निलीनप्रमुदितविलसन्मत्तहारीतवृन्दम् ।।३५।।

४६ चारुगूढं - घ । ४७.. .गणैः - ख । ४८ कदम्बकैर्मृगै. - घ. । ४९.. पुष्पित घ. । ५०?.. नीलं नीलकण्ठाभिरामं - ख. घ.,. रावं - ख. । ५१.., शोभितं- - क ख । ५२.. श्रय - ख. । ५३.?. क्ति - क. ख. । ५४. लीन - ख. । ५५ चन्द्रस्य भासा - ख. । ५६ पक्षपात - क. ख. । ५७ वातनृत्यन्मयूरम्- ख. । ५८ रञ्चितक्ष्माप्रदेशम् - घ. ।

170

सारङ्गैः क्वचिदुपसेवितप्रदेशं
संछन्नं कुसुमचयैः क्वचिद्विचित्रैः५९ ।
हृष्टाभिः क्वचिदपि किन्नराङ्गनाभिः क्षीबाभिः सुमधुरगीतवृक्षषण्डम् ।।३ ६ । ।
संसृष्टैः६० क्वचिदुपरि प्रकीर्णपुष्पै६१ रावासैः परिवृतपादपं मुनीनाम् ।
आमूलात्फलनिचितैः क्वचिद्विशालै-रुत्तुङ्गैः पनसमहीरुहै६२रुपेतम् । ।३७।।
फुल्लातिमुक्तकलतागृहलीनसिद्धं६३
सिद्धाङ्गनाकनकनूपुररावरम्यम् ।
रम्य६४ प्रियंगुतरुमञ्जरिसक्तभृङ्गं
भृङ्गावलीशबलिताम्रकदम्बपुष्पम् ।।३८ । ।
पुष्पोत्करानिल६५ विघूर्णितपादापग्र६६
मग्रे सुरेभविनिपाटित६७वंशगुल्मम्६८।
गुल्मान्तरप्रसृतभीत६९ मृगीसमूह७० -
मूहावतां तनुभृतामपवर्गदातृ । ।३९ ।।
चन्द्रांशुजालधवलैस्तिलकैर्मनोज्ञैः
सिन्दूरकुंकुमकुसुम्भनिभैरशोकैः ।
चामीकरप्रतिसमैरथ कर्णिकारैः
पुष्पोत्करैरुपचितं सुविशालशाखैः ।।8.30(2).४० । ।
क्वचिदञ्जनचूर्णाभैः क्वचिद्विद्रुमसन्निभैः ।

क्वचित्काञ्चनसंकाशैः पुष्पैराचितभूतलम् । ।४१ ।।
पुन्नागेषु द्विजशतविरुतं रक्ताशोकस्तबकभरनतम् ।
रम्योपान्तं क्लमहरपवनं फुल्लाब्जेषु भ्रमरविलसितम् । ।४२।।

५९ विचित्रं - ख. । वृ ० समृप्टैः ख. । ६१ प्रलिप्तपुष्प - क ख. । ६२ पवनसमीरितै - ख । ६३ सिद्धैः - - ख. । ६४ रम्यं - ख., रम्या - क. । ६५ बिल.. - ख. । ६६ ग्र्यमग्र्ये - क. ख. । ६७. पातित - क. ख. । ६८.., युग्मं- ख. । ६९ भीम - ख. । ७०.. .समूहा.. - ख ।


सकलभुवनभर्ता लोकनाथस्तदानीं
तुहिनशिखरिपुत्र्या७१ सार्धमिष्टैर्गणेशैः ।
विविधतरुविशालं७२ मत्तहृष्टान्यपुष्ट-
मुपवनमतिरम्यं७३ दर्शयामास देव्याः । ।४३ । ।
देव्युवाच
उद्यानं दर्शितं देव शोभया परया युतम् ।
क्षेत्रस्य तु गुणान् सर्वान् पुनर्वक्तुमिहार्हसि ।।४४।।
अस्य७४ क्षेत्रस्य महात्म्यमविमुक्तस्य तत्तदा ।
श्रुत्वा हि७५ नहि मे तृप्तिरतो७६ भूयो वदस्व मे ।।४५।।
देवदेव उवाच
इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम ।
सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा ।।४६।।
अस्मिन् सिद्धाः सदा देवि७७ मदीयं७८ व्रतमास्थिताः७९ ।
नानालिङ्गधरा नित्यं मम लोकाभिकांक्षिणः । ।४७। ।
अभ्यस्यन्ति८० परं योगं युक्तात्मानो जितेन्द्रियाः ।
नानावृक्षलताकीर्णे८१ नानाविहगसेविते । ।४८। ।
कमलोत्पलपुष्पाढ्यैः सरोभिः समलंकृते ।
अप्सरोगणगन्धर्वैः सदा संसेविते शुभे ।।४९। ।
रोचते मे इहावासो८२ येन कार्येण तच्छृणु ।
मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः । ।8.30(2).५० ।।
यथा मोक्षमिहाप्नोति अन्यत्र न तथा क्वचित् ।
जपध्यानोद्यतानां च ज्ञानेष्वारक्तचेतसाम्८३ ।।५ १ । ।

७१ शिखरपुत्र्या - क. ख. । ७२. विशालै - ख. । ७३ मिति.. - क. । ७४ अन्य - घ. । ७५... पि - ख. घ । ७६ श्रद्धापि जायते दृष्टेरतो - घ. । ७७ महादेवि - घ. । ७८ मदीय - ख. । ७९.?. श्रिताः - क. । ८० अभ्य सन्ति -क. ख. । ८१... समाकीर्णे - ख. घ. । ८२ महदावासं - ख. । ८३ सदा... - घ., षु वास्तुचेतसाम् - घ. ।

तमोमोहहतानां८४ च वाराणस्यां गतिर्नृणाम् ।
अत्रोत्क्रमणकाले तुव स्वयमेव महेश्वरः । ।५२ ।
ददाति तारकं ब्रह्म येनासौ तन्मयो भवेत् ।
एवं८५ मम पुरं दिव्यं गुह्याद् गुह्यतरं महत् । । ५३ । ।
ब्रह्मादयो विजानन्ति ये च सिद्धा८६ मुमुक्षवः ।
अतः८७ प्रियमिदं८८ क्षेत्रं यस्माच्चेह८९ रतिर्मम । ।५४। ।
विमुक्तं न मया यस्माद् मोक्ष्यते वा कदा च न ।
मम९० क्षेत्रमिदं तस्मादविमुक्तमिदं९१ स्मृतम् । ।५५। ।
नैमिशेथ कुरुक्षेत्रे गङ्गाद्वारेथ पुष्करे ।
स्नानात्९२ संसेवनाच्चापि९३ न मोक्षः प्राप्यते यतः । ।५ ६। ।
इह संप्राप्यते येन तत एतद्९४ विशिष्यते ।
प्रयागे वा भवेन्९५ मोक्ष इह वा मत्परिग्रहात्९६ । । ५७। ।
प्रयागादपि तीर्थाग्र्यादिदमेव महत् स्मृतम् ।
जैगीषव्यः परा सिद्धिं यो गतः स महातपाः । । ५८ । ।
अस्य९७ क्षेत्रस्य माहात्म्याद्९८ भक्त्या च मम भावतः ।
जैगीषव्यगुहा प्रेष्ठा९९ योगिनां स्थानमिष्यते । । ५९ । ।
ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् ।
कैवल्यं परमं याति देवानामपि दुर्लभम् । । 8.30(2).६० । ।
अत्र सिद्धिं परां प्राप्तो मार्कण्डेयो महातपाः ।
बालखिल्यास्तथा सिद्धा अस्मिन् क्षेत्रे सुदुर्लभे । । ६१ । ।
आत्रेया भार्गवाः सिद्धा अस्मिन् क्षेत्रे सुदुर्लभे ।
अव्यक्तलिङ्गै१०० र्मुनिभिः सर्वसिद्धान्तवेदिभिः । ।६२। ।
इह संप्राप्यते मोक्षो१०१ दुर्लभोन्यत्र कर्हिचित् ।
तेभ्यश्चाहं प्रयच्छामि योगैश्वर्यमनुत्तमम् । । ६३ । ।

८४.. गतानां - घ । ८५ -पूतं - घ । ८६ -पक्षा घ- । ८७ इदं - घ । ८८ पुण्यतमं - घ. । ८९ क्षेत्रमसमाच्चेह? - ख. । ९० महा - घ । ९१ क्तं ततः - ख. । ९२ स्नतानि - ख. । ९३... द्वापि - घ. । ९४ एवं - ख । ९५ वा सवे - घ. । ९६ मत्सम्परिग्रहात्? - ख । ९७ तस्य - ख. । ९८ माहात्म्यं - ख. घ. । ९९ श्रेष्ठा - ख. । १००..लिङ्गनिर्मुक्तैः - घ । १०१ मोक्ष - ख. ।



आत्मनश्चैव१०२ सायुज्यमीप्सितं स्थानमेव च १०३ ।
कुवेरः स महासत्वस्तथा सर्वार्पितक्रियः ।। ६४। ।
क्षेत्रसंसेवनादेव धनेशत्वमवाप ह ।
- - - - - - - - - - - - - - - - - ।।६५ । ।
इहैवाराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम्१०४ ।
पराशरसुतो योगी ऋषिर्व्यासो महातपाः । ।६६। ।
मम भक्तो भविष्यश्च वेदसंस्थाप्रवर्तकः१०५ ।

रमते१०६ सोपि पद्माक्षि क्षेत्रेस्मिन्मुनिपुंगवः ।।६७। ।
ब्रह्मापि ऋषिभिः१०७ सार्धं विष्णुर्वायुर्दिवाकरः ।
देवराजस्तथा शक्रो अपि चान्ये दिवौकसः । ।६८।।
उपासते महात्मानः सर्वेशमिह सुव्रते ।
अनन्यमनसो भूत्वा मामेवोपासते सदा ।।६९।।
आलर्कश्च१०८ पुरीमेतां मत्प्रसादादवाप्स्यति ।
स चैनां पूर्ववत् कृत्वा चतुवर्णसमाकुलाम् । ।8.30(2).७० ।।
स्फीतां१०९  जनपदाकीर्णां भुक्त्वा च सुचिरं११० तदा ।
मयि सर्वार्पितप्राणो मामेव प्रतिपत्स्यते ।।७१ ।।
ततः प्रभृति चार्वंगि१११ येपि क्षेत्रनिवासिनः ।
गृहिणो लिंगिनो वापि मद्भक्ता मत्परायणाः । ।७२। ।
मत्प्रसादाद् गमिष्यन्ति मोक्षं परमदुर्गमम् ।
विषयासक्तचित्तोपि त्यक्तधर्मरतिर्नरः११२ । ।७३ । ।
इह क्षेत्रे मृतश्चापि११३ संसारं११४ न पुनर्विशेत् ।
ये पुनर्निर्ममा धीराः११५ सिद्धाः स्युर्विजितेन्द्रियाः । ।७४।।
व्रतिन स्थानिरावस्थाः (?) सर्वतो मयि भाविताः ।
देहभेदं समासाद्य११६ धीमन्तः सर्गवर्जिताः११७ । ।७५।।

१०२... श्चापि - घ. । १०३ वा - घ । इतः परं कियानंशः खण्डितः क. ख. पृस्तकयोः । १०४ यास्यनुत्यत्तमाम् -घ । १०५ देवसंस्थाप्रवर्तक - क । १०६ रम्यते - घ. । १०७ ह्यृषिभि - घ । १०८ आन ( अल?) कश्च - घ. । १०९ स्थितां - घ. । ११० स्व शुचिरं - घ । १११ सर्वांगि - घ. । ११२... र्वरः - घ. । ११३., स्यापि - घ. । ११४.. रे - घ । ११५ वीराः - घ । ११६ समासश्च - घ. । ११७ स्वर्गवर्जिताः - घ ।



प्रपत्स्यन्ते११८ परं मोक्षं प्रसन्ने मयि११९ सुव्रते ।
जन्मान्तरसहस्रेषु युञ्जन् योगमवाप्नुयात् ।
तदिहैव१२० परं मोक्षं मरणादधि१२१ गच्छति ।।७६ ।।
ब्रह्मघ्नगोघ्नगुरुतल्पगचौरवृत्ति-
र्न मो प है (?) - - - - नियतस्ववृत्तिः ।
संसारभूतदृढपाशविमुक्तशोको
वाराणसीं मम पुरीं समुपैति लोकः । ।७७।।
एतत् संक्षेपतो देवि क्षेत्रस्यास्य महत् फलम् ।
अविमुक्तस्य कथितं मया ते गुह्यमुत्तमम् ।।७८।।
अतः परतरं नास्ति सिद्धं गुह्यमधीश्वरि१२२ ।
एतद् बुध्यन्ति योगज्ञा ये च योग१२३ परा१२४ भुवि । ।७९। ।
एतदेव परं ज्ञानमेतदेव परं शिवम् ।
एतदेव परं ब्रह्म एतदेव परं पदम् ।।8.30(2).८ ० । ।

वाराणसी तु भुवनत्रयसारभूता
रम्या पुरी मम सदा गिरिराजपुत्रि ।
यत्रागता१२५ विविधदुष्कृतकारिणोपि
पापक्षयाद्विरजसः श्रुति(?) यांति मुक्तिम् । ।८१ । ।
य आगच्छेत् कथंचिच्च१२६ पुरीं वाराणसीं नरः१२७ ।
तमुपायं प्रकुर्वीत निर्गच्छेन्न पुनर्यथा । ।८२ । ।
यदीच्छेत् सफलं जन्म कोन्यं वेद्याफलं (?) तथा ।
काशीपुर्यां त्यजेद् देहं यदीच्छेत् परमं पदम् । ।८३ । ।

११८ एता एव - घ. । ११९ मम - घ । १२० तमिहैव - घ । १२१.. .दपि - घ- । १२२ गुह्यमतीश्वरि - घ. । १२३ योगी - घ. । १२४ पुरो - घ. । १२५ यात्रागता - घ । १२६ नरो गच्छेत् - घ. । १२७ पुनः - घ. ।

175
एतत्स्मृतं प्रियतमं(?) मम देवि विश्वं (?)
क्षेत्रं विचित्रतरुगुल्मनिकामपुष्पम् ।
अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति१२८
मोक्षाख्यमेवशिवतापि (?) न संशयोत्र ।।८४।।
इति स्कन्दपुराणे वाराणसीमाहात्म्यं नाम त्रिंशत्तमोध्यायः

आगामी पृष्ठः (अध्यायाः ३१ - ४०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०४

https://sa.wikisource.org/s/fdc
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः २१ - ३०)

आगामी पृष्ठः (अध्यायाः ४१ - ५०)

अध्यायाः ३१ - ४०

सनत्कुमार उवाच

एतस्मिन्नन्तरे देवो देवीमाह गिरीन्द्रजाम् ।

व्रजाम दातुं यक्षाय वरं भक्ताय भाविनि ।। १ ।।

भक्तो मम वरारोहे तपसा दग्धकिल्बिषः ।

अर्हो१ वरमसौ लब्धुमस्मत्तो२ भुवनेश्वरि । ।२ । ।

एवमुक्त्वा ततो देवः सह देव्या जगत्पतिः ।

जगाम यक्षो यत्रास्ते कृशो धमनिसंततः ।

दिव्यं चक्षुरदाच्चैव३ येनापश्यत् स शंकरम् । ।३ ।।

सनत्कुमार उवाच

अथ यक्षस्तदा व्यास शनैरुन्मील्य लोचने ।

अपश्यत् सगणं देवं वृषकेतुमुपाश्रितम्४ । ।४। ।

देवदेव उवाच

वरं ददामि५ ते पूर्वं त्रैलोक्ये नर्शनं तथा ।

सारत्वं च शरीरस्य पश्य मां विगतज्वरः ।। ५। ।

सनत्कुमार उवाच

ततः स लब्ध्वा तु वरं शरीरेणाक्षतेन च६ ।

पादयोः प्रणतस्तस्थौ कृत्वा शिरसि चाञ्जलिम् । । ६। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१२८ मापुरन्ते - घ. ।

१ अहो - घ. । २ लब्धमस्मत्तो - घ । ३ त्तस्मै - घ. । ४ वृषं श्वेतमपाश्रितम् - घ. । ५ ददानि - घ. । ६...

णेक्षितेन च - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

उवाच च तदेशेन७ वरदोस्मीति चोदितः ।

भगवन् भक्तिमव्यग्रां त्वय्यनन्यां८ विधत्स्व मे । ।७।।

अन्नदत्वं च लोकानां गाणपत्यं९ तथाक्षयम् ।

अविमुक्ते च ते स्थाने वसेयं१० सर्वदा यथा ।

एतमिच्छामि११ देवेश दत्तं वरमनुत्तमम् । ।८। ।

देवदेव उवाच

जरामरणसंत्यक्तः सर्वशोकविवर्जितः१२ ।

भविष्यसि गणाध्यक्षो वरदः सर्वपूजितः । ।९। ।

अजय्यश्चापि सर्वेषां योगैश्वर्यसमन्वितः ।

अन्नदश्चापि१३ लोकेभ्यः क्षेत्रपालो भविष्यसि । ।8.31.१ ० । ।

महाबलो महासत्वो ब्रह्मण्यो१४ थ मम प्रियः ।

त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च । । १ १। ।

उद्भ्रमः संभ्रमश्चैव गणौ ते परिचारकौ ।

तवाज्ञया करिष्येते लोकस्योद्भ्रमसंभ्रमौ । । १ २।।

सनत्कुमार उवाच

एवं स भगवान् व्यास यक्षं कृत्वा गणेश्वरम् ।

जगाम धाम देवेशः१५ सह तेन सुरेश्वरः१६ ।।१ ३ ।।

अथ दृष्ट्वा ततो देवीं देवदेवो वृषध्वजः ।

तप्यतो मन्दरस्याशु वरदानार्थमब्रवीत् । । १४। ।

देवदेव उवाच

देवि फुल्लारविन्दाक्षि गमिष्यामि सुमध्यमे ।

मन्दरं पर्वतश्रेष्ठमनुग्रहवरेप्सया । ।१ ५।।

सभार्यः ससुतश्चैव स हि मां ससुहृज्जनः ।

प्रपन्न१७ स्तापस१८ श्रेष्ठो मन्दरः पर्वतोत्तमः । । १६ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

७ तदा तेन - घ. । ८... त्वयि नाथे - घ । ९ सोनपत्यं - घ. । १० पश्येयं - घ. । ११.. .दिच्छामि - घ- । १२ लोकविवाजितः - घ. । १३ अर्थदश्चापि - घ. । १४ मम च - घ. । १५ वामदेवेश - क. घ. । १६ नरेश्वरः - घ.

। १७ प्रसन्न - क. । १८ तपसां - घ., तपतां? ।

- - - -- - -- - ---- - -- -- -- - -- - --

अद्य वर्षसहस्राणि पञ्च दिव्यानि पार्वति ।

तप्यते तपतां श्रेष्ठो मयि सर्वात्मभावतः१९ ।।१७। ।

देव्युवाच

नय मामपि देवेश मन्दरं चारुकन्दरम् ।

न रंस्येहं२० विना देव त्वया सर्वजगत्पते । । १ ८।।

ततो देवः प्रहस्यैनामुवाच परमेश्वरः ।

अविमुक्तं न मोक्तव्यं कथं त्वं यातुमिच्छसि२१ ।।१ ९।।

देव्युवाच

इह चैव निवत्स्यामि२२ गमिष्यामि च मन्दरम् ।

अविमुक्तमिदं स्थानं ततो देव भविष्यति२३ । ।8.31.२ ० ।।

देवदेव उवाच

एवमेतद् वरारोहे यथा वदसि पार्वति ।

ऐश्वर्यात्२४ सर्वगा२५ हि त्वं यथाहं२६ देवि सर्वशः । ।२ १ ।।

सनत्कुमार उवाच

ततः स भगवान् देवो वृषमारुह्य सर्वगम् ।

सोमः सनन्दी सगणो२७ मन्दरं प्रययौ हरः ।।२२ । ।

स गत्वा२८ भुवनेशानस्तप्यमानं परं तपः ।

अपश्यन्मन्दरं तत्र दृष्टवा चैन२९ मुवाच ह । ।२३ ।।

वरदोस्मि गिरीशान३० तुष्टस्ते तपसा३१ भृशम् ।

वरं वृणु यथेष्टन्त्वं सर्वं तत्३२ प्रददामि३३ ते । ।२४। ।

सनत्कुमार उवाच

स एवमुक्तश्शर्वेण दृष्ट्वा त्रिभुवनेश्वरम् ।

सोमं सनन्दिनं चैव प्रणम्य वृषवाहनम् ।। २५। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१८ तपसा श्रेष्ठो मयि सर्वात्मभावितः क। २० वत्स्येहं घ । २१ मर्हसि घ। २२ न वत्स्यामि घ। २३ अविमुक्तं ततो देव भविष्यति न संशयः - घ । २४ ऐश्वर्यं - घ. । २५ सर्वगं - घ । २६ त्वं - घ । २७

नन्दिस्सगणो - क. ख. । २८ गत्वा तु - घ. । २४१ चैव - क. । ३०... स्मीति गिरिश - घ. । ३१ तपसानेन ते - क., तस्येद्य (तुष्टोद्य?) - घ, । ३२ तत् सर्वं - घ. । ३३... नि - क. ख. घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

पुनः पुनर्हरं दृष्टवा देवीञ्चैव पुनः पुनः ।

पुनः पुनर्गणञ्चैव३४ नन्दिनञ्च३५ ननाम सः ।। २६ ।।

तं तथा व्याकुलं दृष्टवा हर्षजास्राविलेक्षणः३६ ।

वरेणच्छन्दयामास भूय एव हरो गिरिम् ।।२७ ।।

देवदेव उवाच

वरं वृणीष्व भद्रं ते वरदोहं तवाचल ।

यथेष्टं दातुमिच्छामि वरं वरय भूधर ।।२८ ।।

मन्दर उवाच

भगवन् यदि तुष्टोसि देवदेव जगत्पते ।

मयि ते वासिच्छामि सोमस्य सगणस्य च ।।२९।।

इच्छामि देवदेवेश पादस्पर्शेन ते सदा३७ ।

पवित्रीकृतमात्मानं सोमेन सगणेन च ।। 8.31.३० ।।

नान्यं वरमिहेच्छामि३८ त्वत्तो देव जगद्गुरो ।

एष एव वरो मह्यं दीयतां भुवनेश्वर ।। ३१ ।।

सनत्कुमार उवाच३९

एवमस्त्विवति तं४० प्राह मन्दरं वरदस्तदा४१ ।

सनन्दी सह देव्या च निवत्स्यामि सदा त्वयि ।।३ २ ।।

त्वं चापि भूभृतां श्रेष्ठो जरामरणवर्जितः ।

अभेद्यश्चैव वज्रेण मत्प्रसादाद् भविष्यसि ।।३ ३ ।।

रम्यश्च सर्वभूतानां हेमरत्नविभूषितः ।

अप्सरोगणसंकीर्णः सुरसिद्धनिषेवितः४२ ।।३४।।

सनत्कुमार उवाच

ततोसृजद् गृहं४३ तत्र जाम्बूनदमयं महत् ।

मनसातिगुणं व्यास४४ न तेनास्ति४५ समं क्वचित् ।।३५।।

- - - -- - -- - ---- - -- -- -- - -- - --

३४.. गणानां च - ख. | १५ गणेश्वरं - ख. | ३६.,. णं - क. ख. | ३७ तेजसा - घ. | ३८ नचान्यं वरच्छामि - ख. | ३९ देवदेव - घ. | ४० त ? - घ | १ चारुकन्दरम् - क. | ४२ सिद्धचारणसेवितः - ख. | ४३ सद्म चाप्यमृजत् - क, स्वयमेवासृजत्सद्म - ख | ४ गुणैर्युक्तं - ख. | ४५ न ते तेन - ख. |

- - - -- - -- - ---- - -- -- -- - -- - --

न तादृग् ब्रह्मणोप्यस्ति४६ किमुतान्यस्य कस्य४७चित् |

तेजसा वर्ष्मणा कान्त्या वृषनाम्नातिविश्रुतम्४८ ||३ ६ ||

व्यास उवाच

भगवन् ब्रह्मणः सूनो सर्वयोगेश्वरेश्वर |

न मे तृप्ति४९स्त्वयाख्याते५० देवदेवस्य५१ च चेष्टिते५२ || ३७||

स वृषो दयितश्चैव वाहनत्त्वं५३ महाबलः |

केनागमन्महाशब्दो महेशस्य महात्मनः ||३८||

कस्य पुत्रः कस्य नप्ता कथं जज्ञे ५४ तथैव च |

किं तपः किं फलं तस्य एतदिच्छामि वेदितुम् ||३९||

अभवज्जलदः पूर्वं वाहनं रुद्रवल्लभम् |

स५५ कथं तत्५६ परित्यज्य वृषभे मतिमादधे५७ | |8.31.४० | |

सनत्कुमार उवाच

पुरा वेदः५८ सुतो जज्ञे ब्रह्मणः प्रथमोद्भुतः५९ |

द्वितीयश्चैव यज्ञोभूत् तं च लोके६० न्ययुंजत६१ | |४१ ||

स लोकाप्यायनकरः प्रयुक्तो ब्रह्महणा स्वयम् |

प्रजा विवर्द्धयिषता६२ नावर्द्धयदशेषतः ||४२ ||

|

-- - | |४३ | |

यज्ञ उवाच

भगवन् लोकसिद्ध्यर्थं प्रयुक्तोहं६३ स्वयंभुवा |

न च मेस्ति तथा वीर्यमन्यमिच्छ६४ नमस्तव | | ४४| |

देवदेव उवाच

जीमूतो भव लोकानां तव सिद्धिर्भविष्यति |

ततोमृताभिरद्भिस्त्वं लोकान् संवर्धयिष्यति | |४५||

- - - -- - -- - ---- - -- -- -- - -- - --

४६ सर्वलोकेषु - ख. । ४७ रमणीयं भवेत् - ख । ४८ रम्यं दिव्यगुणादपि - ख. । ४९ मूर्ध्नि - ख. । ५० ख्यातं - ख. । ५१ सांप्रतं - ख. । ५२ चेष्टितम् - क. । ५३ धारणत्व - घ. । ५४ यज्ञे - घ. । ५५ तत्, ५६ स - घ. । ५७ वाहनं वृषभं भजत् - ख. । ५८ देव - घ. । ५९ परमाद्भुत् - घ. । ६० परमात्मा - घ. । ६१ लोकोभ्यपूजयत् - घ. । ६२ लोकवृ? ।.., ६३ यं - घ. । ६४ मुषु - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

यज्ञ उवाच

जीमूतत्वं यदि मम लोकसिद्धिकरं शुभम् ।

अस्मद्भवन्तं पृष्ठेन वहेयं विद्युतालय (?) । ।४६ । ।

--- - - - - - - - - - - - - - - - |

- - - - - - - - - - - - - - - - । ।४७। ।

आत्मानमथ स ज्ञात्वा नातितेजसमच्युतः ।

ततापं सुमहद् व्यास तपो यज्ञः सुदुश्चरम्६५ । ।४८। ।

अथ तुष्टस्तदा देवः शर्वो६६ यज्ञस्य सुव्रत६७ ।

उवाच वरदोस्मीति स वव्रे वरदं वरम्६८ । ।४९ । ।

यथाहं६९ यज्ञभावेन७० वहामि त्वां महाप्रभ७१ ।

तथैव जलदत्वेपि७२ वहेयं त्वाह७३ मव्ययम्(?) । । 8.31.५० । ।

सनत्कुमार उवाच

एवमस्त्विवति सं७४ प्रोच्य वाहनत्वे व्यकल्पयत्७५ ।

जीमूतं७६ व्यास भगवान् यज्ञमूर्तिमतिप्रभम् । । ५१ । ।

यदा तु यजतो व्यास दक्षस्य सुमहात्मनः ।

शिरश्छिन्नं शरेणाशु यज्ञस्यामिततेजसः ।

तदा शिरस्कं७७ तं यज्ञं वाहनत्वादपानुदत७८ । ।५२ ।

व्यास उवाच

कथं यज्ञं स दक्षस्य भगवानाहनच्छुभम्७९ ।

कारणं चात्र किं विप्र येन तं हतवान् प्रभुः । ।५३ । ।

सनत्कुमार उवाच

शापः पूर्वं समाख्यातः कारणं मुनिसत्तम ।

इदञ्च शृणु मे भूयो विस्तरेण पुरातनम् । ।५४। ।

- - - -- - -- - ---- - -- -- -- - -- - --

६५ सुदुस्तर - घ. । ६६ स (भ) वो - क, सर्वो - घ. । ६७ तत्सुतः - ख. तः - क. । ६८ वरमुत्तमं - ख, विपुलं - घ. । ६९ यदा - ख । ७०.. पि - घ, ति - क ख । ७१. ५ प्रभुम् - क. ख.,... भो - ख. । ७२ वरमिच्छामि - घ.. । ७३ वहेयमह... - क, भद्र... - घ. । ७४ स - ख, त - घ. । ७५ तं ह्यकल्पयत् - ख, ... नं चेति? - घ. । ७६ जीवितं - ख । ७७ शिषः क्षतं - घ । ७८ वदद्धृश - ख., नं दुपान्वदत् - घ. । ७९... हनत् सुतं - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

पुरा हि ब्रह्मणो वक्त्रात् क्षुवतोभिविनिःसृतः८० ।

बद्धगोध्वांगुलित्रश्च शरी तूणी शरासनी । ।५५ ।।

खङ्गी८१ किरीटमाली च कुण्डली८२ कवची८३ तथा ।

महोरस्को महोत्साहः पुरुषः काञ्चनप्रभः ।।५६।।

क्षुप इत्येव नाम्ना तं ब्रह्मा स्वयमभाषत ।

तमिन्द्रो वरयामास राजानं भुवि८४ लोकपम् ।।५७। ।

सोब्रवीद्यदि मे वज्रमायुधं स्वं८५ प्रयच्छसि ।

ततः स्यां भुवि राजाहं नान्यथा रोचते मम८६ । । ५८। ।

इन्द्र उवाच

चिन्तितं करमेतत्ते वज्रमेष्यति८७ नान्यथा ।

एवं भवतु भद्रं ते भव राजा प्रजाहितः । ।५९। ।

सनत्कुमार उवाच

स एवमुक्तस्तेजस्वी राजा भुवि बभूव ह ।

च्यावनिश्च८८ दधीचोस्य८९ सखा समभवत्तदा । ।8.31.६० ।।

स तेन सह संगत्य९० सुखासीनो वरासने ।

चक्रे कथा विचित्रार्थाः प्रीयमाणः पुनः पुनः ।।६१ ।।

अथाभवत्तयोर्व्यास रागो जातिकृतः पुनः९१ ।

क्षत्रं९२ श्रेष्ठं न वा श्रेष्ठं ब्रह्म श्रेष्ठं न वेति९३ च ।।६२ ।।

क्षुपोब्रवीत् क्षत्रमिति दधीचो ब्रह्म चेति९४ ह९५ ।

अथू तां९६ कारणे९७ चोभौ९८ न न्यवर्तत९९ कश्चन ।।६३ । ।

अथ तीक्ष्णतया चैव तपोधिकतया१०० तथा ।

ब्राह्मणत्वस्य चाग्र्यत्वात्तथा दैवकृतेन च । । ६४। ।

- - - -- - -- - ---- - -- -- -- - -- - --

८० भुवि निः सृतः - घ. । ८१ शृंगी - क । ८२ कवची - ख । ८३ कुं डली - ख. । ८४ भूमि - क । ८५ त्वं - क. । ८६ मम रोचते - घ. । ८७ वज्रमेष्यति क., वर यास्यति - घ. । ८८ च्यावनेश्च -? । ८९ दधीचस्य? । ९० संगम्य - ख. । ९१ प्रभः - ख । ९२ क्षेत्रं - क. ख । ९३ नचेति - घ. । ९४.. वेति - क. । ९५ च - ख. घ. । ९६ नाब्रूतां - ख । ९७ कारण - घ. । ९८ चोभे - क. ख ९१ प्रवर्तत - घ व्यक..? - क, व्यवर्तन ( त) - ख । १०० वयोधिकतया - क ।

- - - -- - -- - ---- - -- -- -- - -- - --

कुद्धो दधीचस्तं व्यास वामहस्तेन मूर्धनि ।

आजघान महातेजा वज्रेणातडयत्१०१ स च१०२ ।।६५।।

वज्रेण स द्विधा छिन्नः शक्रमाह्वयदव्ययः ।

सोवदत् त्वं१०३ महायोगः१०४ शक्तः१०५ सन्धातुमात्मना१०६ । ।६६ ।।

स्वं देहं१०७ स तथाभूतं१०८ दधीचो योगमायया ।

सन्धयामास१०९ शर्वञ्च शरणं समपद्यत । । ६७। ।

स सुरेश्वरमाराध्य प्राप्यावध्यत्वमुत्तमम्११० ।

वज्रास्थित्वमभेद्यत्वमजरत्वञ्च शङ्करात् ।।६८। ।

सर्वभूतानुकम्पित्वं महायोगित्वमेव च ।

पुनरागात् क्षुपं द्रष्टुं पुनः सख्यमभूत्१११ तयोः ।। ६९। ।

रागो जातिकृतो यश्च पूर्ववत् स११२ बभूव ह ।

वामपादेन चाप्येनं क्षुप स समताडयत्११३ ।।8.31.७० । ।

पुनश्च वज्रमादाय स चैनमहनत्तदा ।

न चार्तिं न व्यथां तस्य११४ तद्वज्रमकरोन्मुने ।।७१ । ।

अवध्यत्वमथो११५ ज्ञात्वा क्षुपस्तस्य महात्मनः ।

नारायणं समासाद्य वरार्थं समराधयत्११६ ।।७२।।

वरदोस्मीति तुष्टेन११७ विष्णुना स च११८ चोदितः ।

प्रोवाच प्रणतो विष्णुमिदं व्यास महामनाः११९ । ।७३ । ।

क्षुप उवाच

दधीचो नाम विप्रर्षिरवध्योक्षय एव च ।

सखा मम हृषीकेश स च मामाह नित्यदा१२० । ।७४। ।

बिभेम्यहं न देवस्य राक्षसस्यासुरस्य वा ।

पिशाचस्याथ यक्षस्य वयसो मानुषस्य वा१२१ । ।७५ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

१०१ वक्रेणा ताडयत् - क. । १०२ तदा - घ. । १०३... तं - घ. । १०४ महायोगं - घ. । १०५ शक्रः - घ. । १०६ महात्मनः - क. । १०७ स्वदेहं - ख., स - घ । १०८ त्यक्ता - क.. भूत्वा - ख., श्रुत्वा - घ. । १०९ सांत्वयामास - घ. । ११० तं वरेश्वरमाराध्य संप्राप्य वरमुत्तमम् - घ. । १११ संख्यमभूत् - घ. । १] २ सं - क. घ. । १ । ३ समभिताडयत - ख. । ११४ चास्य - ख. । ११५ मयं - ख. । ११६ वरार्थमतपत्तपः - ख., समवारयत् - घ. । ११७ तुष्टोस्मि - ख. । ११८ स तु - घ., सम... - ख. । ११९ महातपाः - घ. । १२०. नामहनत्सदा - घ. । १२१ च - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

बिभेमीति यथा ब्रूयात् तथा त्वं१२२ कर्तुमर्हसि१२३ ।

एवमुक्तो नरेशेन१२४ स विष्णुर्लोकभावनः ।।७६ । ।

तथास्त्विवति च तं प्रोच्य दधीचस्याश्रमं ययौ ।

स१२५ प्रविश्याश्रमं व्यास दधीचेनाभिपूजितः ।।७७।।

अभिवाद्याञ्जलिं कृत्वा दधीचमिदमब्रवीत् ।

भगवन् ब्रह्मणश्रेष्ठ पितामहसमद्युते ।।७८। ।

वरमेकं वृणेहं यं तं१२६ भवान्दातुमर्हति१२७ ।

प्रसादितोहं विप्रेन्द्र क्षुपेण शुभकर्मणा ।।७९।।

वरदोस्मीति चाप्युक्तो वरं वव्रे महामुने ।

प्रोक्तं त्वया बिभेमीति ब्रूहि तन्१२८ मदनुग्रहात् ।।8.31.८० ।।

अभयं सर्वभूतेभ्यो१२९ ब्राह्मणस्य न संशयः ।

अवध्यश्चापि सर्वेषां महायोगबलान्वितः । ।८ १ ।।

अभीतस्त्वं१३० तथाप्यद्य मदर्थं वद तत्१३१ प्रभो ।

दधीचश्चैव१३२ मुक्तोपि१३३ विष्णुना मधुरं तदा ।।८२ ।।

उवाच न बिभेमीति भूयो भूयो जनार्दनम् ।

नाहं वक्ष्ये बिभेमीति नोक्तं नाप्युच्यते मया । ।८३ । ।

सनत्कुमार उवाच

एवमुक्तश्चक्रपाणिश्च्यावनिं१३४ क्रोधमूर्च्छितः१३५ ।

उवाच चक्रमुद्यम्य भयमस्य विदर्शयन् ।।८४। ।

एवमेव हि कर्तव्या ये भूत्वा१३६ बलवत्तराः ।

अस्वामिन इव प्रेम्णा ब्रुवते१३७ दुर्बलं जनम्१३८ । ।८५ ।।

न चेद् द्रक्ष्यसि१३९ भीतोस्मीत्येतच्चक्र१४० ततस्तव ।

सुनसं शिर आदाय१४१ महीं सं प्रापयिष्यति ।।८६।।

- - - -- - -- - ---- - -- -- -- - -- - --

१२२ तत्तथा - घ. । १२३ मर्हति - घ. । १२४ नरेन्द्रेण - घ । १२५ सं - ख. । १२६ त्वत्तः - ख, तद् - क., स - ख. । १२७ मर्हसि - क ख । १२८ वाक्यन्त (वाच्यन्तद्?) - ख. । १२९ सर्वभूतानां: - ख. । १३०... श्च - क.,... तोपि - ख. । १३१ त्वं वद - ख. । १३२ स्त्वेव... - ख. । १३३ वै - क. । १३४ दधीचं - घ. । १३५ मूर्छितः - घ । १३६ भूता - घ. । १३७ विब्रूते - घ. । १३८ बलं - घ. । १३९ न च वक्ष्यामि - घ. । १४० एव चक्रं - ख । १४१ सनसं सुमुखं तस्य - ख., नृशंस शिवया ( शिरआ?) - घ. मुखमादाय - ख. । ४२ स - घ ।

- - - -- - -- - ---- - -- -- -- - -- - --

दधीचिरुवाच१४३

किं वृथा चक्रमुद्यम्य विष्णो त्वं१४४ क्लेशमिच्छसि१४५ ।

नाहं चक्रस्य ते गम्यः१४६ प्रसादात् त्र्यम्बकस्य तु ।।८७।।

किन्तु जिज्ञासया यामि लोकपालशरण्यताम् ।

तेषां निष्क्रियतां ज्ञात्वा ततो यास्यामि१४७ शंकरम् । ।८८।।

एवमुक्त्वा च्यावनिस्तु प्राद्रवद् वरुणं प्रति ।

शरणं तं प्रपन्नश्च सं१४८ प्रादादभयं१४९ प्रभुः । ।८९।।

तत्र विष्णोश्च देवस्य वरुणस्य च धीमतः ।

युद्धं समभवद् घोरं बहूनब्दान् विभीषणम् ।।8.31.९० ।।

निगृहीतेथ१५० वरुणे च्यावनिर्यममभ्ययात्१५१ ।

स चाप्यभयद१५२ स्तस्मै१५३ विष्णुना निर्जितो युधि ।।९१ ।।

ततोग्निमभ्ययाद्१५४ व्यास सोपि तेनाभिनिर्जितः ।

ततः स मुष्टिमादाय कुशानां च्यावनिस्तदा१५५ ।।९२।।

स्वमाश्रममुपागम्य तिष्ठतिष्ठेत्यभाषत ।

जिज्ञासार्थं लोकपालानहं शरण मेयिवान्१५६ ।। ९३ ।।
अबलास्ते च सर्वेपि मय्येव बलमुत्तमम् ।
अद्य गर्वञ्च दर्पञ्च बलं यच्च१५७ तवाद्भुतम्१५८ ।
तत्सर्वं नाशयिष्यामि तिष्ठेदानीं जनार्दन ।।९४।।
सनत्कुमार उवाच
ततो युद्धं समभवत् तुमुलं लोमहर्षणम् ।
नारायणस्य च व्यास च्यावनेश्च महात्मनः । ।९५।।
यान्यस्त्राणि शरा ये च नारायणकरच्युताः ।
योगेन तान् दधीचोसौ कुशमुष्टौ न्ययेशयत् । ।९६। ।
- - - -- - -- - ---- - -- -- -- - -- - --
१४३ च्यावन (नि) उ - क. । १४४ त्वं विष्णो - क. । १४५ क्लिश्यसेनघ - ख., श्चकं समर्चसि - घ. । १४६ मन्यः - घ. । १४७ ध्या... - क. घ., ध्यायामि - ख । १४८ प्रसादादभयं - क., १४९ प्रददावभत्यं - ख. । १५० तु - ख. । १५१... गाद् - ख १५२ चास्याभयाद् - क ख. । १५३ श्चास्य? । १५४?.. गाद् - ख. । १५५ श्शुभः - क.,... ने स्थितः - घ. । १५६ मीयिवान् - घ. । १५७ यत्ते - ख. । १५६ तदाद्भुतम् - ख. ।
- - - -- - -- - ---- - -- -- -- - -- - --
ततो विष्णोर्योगबलाद् गात्रेभ्यः संप्रजज्ञिरे ।
देवा युयुधिरे सर्वे१५९ विष्णुना सह दंशिताः ।।९७। ।
तानप्यशेषतः सर्वान् सायुधान् सह वाहनैः ।
कुशमुष्टौ स१६० संक्रुद्धो विष्णुवर्जं१६१ न्यवेशयत् । ।९८।।
ततस्सर्वामरैर्व्यास कुशमुष्टौ१६२ प्रवेशितैः ।
योगेन तेजसा चैव दधीचेन महात्मना ।। ९९।।
विष्णुं संविग्नरूपं१६३ तु कोपावेशात् प्रमोहितम् ।
तत्रागम्य स्वयं ब्रह्मा तदा वचनमब्रवीत् ।। 8.31.१०० । ।
किन्तवानेन गोविन्द तथा यत्नेन१६४ सदद्विजे१६५ ।
कृतेनाथ१६६ दधीचस्य शर्वाल्लब्धवरस्य तु । ।१ ०१ । ।
किन्न वेत्सि यथा ह्येष प्रसादात् पारमेश्वरात् ।
अवध्यत्वं सुयोगित्वं गुणैश्वर्यत्वमेव च । । १० २। ।
वज्रास्थिसारताञ्चैव लब्धवान् स्वयमीश्वरात् १६७ ।

न चैवं१६८ त्वद्विधा देव ब्राह्मणेषु विकुर्वते । ।१ ०३ । ।

तस्मादाशु१६९ निवर्तस्व क्षमयैनं१७० द्विजोत्तमम् ।

ततो ब्रह्मवचः१७१ श्रुत्वा स विष्णुर्लोकभावनः । ।१ ०४।।

योगेन तद्बलं ज्ञात्वा दधीचस्य महात्मनः१७२ ।

क्षामयामास१७३ विप्रेन्द्रं स्वं चावासमथाभ्यगात् ।। १० ५। ।

ब्रह्मापि तमृषिं सान्त्व्य१७४ पूजयित्वा त्रिलोकपः१७५ ।

जगामादर्शनं व्यास सह सर्वामरैस्तदा ।। १ ०६।।

दधीचोपि महातेजास्तपस्तेपे स्वकाश्रमे१७६ ।

महादेवप्रसादार्थमुग्रं वाय्वम्बुभोजनः१७७ ।। १ ०७। ।

अथास्य युक्तस्य तदा तपसा भास्करद्युतेः ।

तुतोष भगवान् त्र्यक्षस्तुष्टश्चैवाब्रवीदिदम् ।। १ ०८। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१५९ तत्र - घ. । १६० सु - क घ. । १६१ चक्र - घ. । १६२ मुष्टि... - क. । १६३ संविघ्नरूप - घ । १६४ क्लेशेन - ख. । १६५... द्विजः- क. । १६६ कृतेनास्य- ख । १६७... स्त्वयमीश्वरात्-ख. । १६८. ख - क. । १६९ तस्मादेव - ख. । १७० क्षामयैनं - क. । १७१ ब्रह्मणो वचनं - ख. । १७२ च शंकरात् - क । १७३ क्षमयामास - घ. । १७४ शान्त्वा - घ. । १७५ च लोकपः - घ. । १७६ स्वके... - ख. । १७७... भोजनम् - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

देवदेव उवाच

च्यावने तपसानेन तव तुष्टोस्मि सुव्रत ।

ब्रूहि यत्ते भिलषितं कृतमेव हि तन्मया । । १ ०९। ।

दधीचिरुवाच१७८

भगवन् यदि तुष्टोसि यदि देयो वरश्च मे ।

इच्छामि विष्णुना सार्धं सर्वान्देवाँस्त्वया जितान्१७९ ।।8.31.१ १० । ।

सनत्कुमार उवाच

ततः प्रहस्य वरदो दधीचमृषिसत्तमम् ।

एवमस्त्विवति तं प्राह प्रणतार्तिहरो हरः । । ११ १। ।

तस्मिन्दत्ते१८० तदा तेन त्र्यम्बकेण वरे शुभे ।

अमन्यत स्थितं१८१ वैरं क्षुपेण सह वै ऋषिः ।। ११२ ।।

ध्यायन्तं तं१८२ तथा दृष्ट्वा भगवान् गोवृषध्वजः ।

उवाच वरमन्यञ्च१८३ ब्रूहि विप्र ददामि ते१८४ ।।१ १३ ।।

दधीचिरुवाच

यस्मात् स्थितमिदं१८५ वैरं वरदानात् तव१८६ प्रभो ।

इह तस्मात्तव स्थानं नाम्नैतेन१८७ भवत्वज ।। १ १४।।

देवदेव उवाच

स्थानेश्वरमिति ख्यातं१८८ नाम्नैतत्१८९ स्थानमुत्तमम् ।

भवितृ१९० क्रोशपर्यन्तं नानापुष्पलताकुलम् ।।१ १ ५। ।

अत्र योभ्यर्चयेन्मां तु परं१९१ नियममास्थितः ।

त्रिरात्रोपोषितः सम्यक् स्नात्वा नद्यां तु मानवः ।। ११६ । ।

ब्राह्मणं१९२ भोजयित्वा च चरुं१९३ धर्मेण संयुतः१९४ ।

सर्वपापविनिर्मुक्तो१९५ मम लोकमवाप्नुयात्१९६ ।।१ १७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१७८ दधीच उ - घ. । १७९ सर्वे देवास्त्वया जिताः - घ. । १८० तस्मिन्नुक्ते - घ. । १८१ स्थिरं - क. ख. । १८२ ध्यानतस्तं - घ. । १८३... मन्यच्च - क. ख घ. । १८४... न्ददामि - क., ददानि - क. ख. घ. । १८५ स्थिरमिदं - घ. । १८६ भुवि - घ. । १८ ऽ नाम्ना तेन - घ. । १८८ देव स्यानेश्वरमिति - घ. । १८९ नाम्नैव - घ. । १९० भवेच्च - ख, भवतु - घ. । १९१ सदा - घ । १९२ ब्राह्मणान् - घ. । १९३ वरं - घ. । १९४ संयुतं - क. घ. । १९५ स सर्वपापनिर्मुक्तो - क. । १९६ रुद्रलोकमवाप्नुयात् - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

स्थाणुतीर्थं१९७ च भवितृ तथैतत्१९८ पापनाशनम् १९९ ।

अश्वमेधफलं ह्यत्र स्नातः प्राप्नोति पुष्कलम् । ।१ १८। ।

अयञ्चापि वटः श्रीमान् स्थितोहं यत्र सांप्रतम् ।

वरं दातुं मदाख्यानो नाम्ना स्थाणुवटो महान्२०० । । ११ ९।।

भविष्यति न सन्देहः फलञ्चाप्यस्य२०१ मे शृणु ।

योत्र तिष्ठेदहोरात्रं संयतो२०२ नियताशनः२०३ । । 8.31.१२० । ।

चीर्णं स्वयं भवेत्तेन स्थाणुव्रतमनुत्तमम् ।

सर्वपापविनिर्मुक्तो२०४ गणपस्स२०५ भवेन्मम । । १२१ । ।

अकम्पनो नाम महान्२०६ महायोगबलान्वितः ।

यश्च प्राणान्नियमवान् यमवानथवा२०७ पुनः ।।१ २२।।

परित्यजेत मनुजस्तस्य पुण्यफलं महत् ।

सर्वपापविनिर्मुक्तः२०८ सर्वबन्धविवर्जितः२०९।

गणेश्वरो२१० नन्दिसमः स मे भवति सर्वगः२११ ।। १२३ ।।

स्थानेश्वरे यस्त्विह चैकरात्रं२१२ स्थित्वा क्षपेत्२१३ सर्वमशेषतो हि ।

स सर्वपापप्रविमुक्तचेता२१४ गणेश्वरो मे भवितातिभीमः२१५ । ।१ २४। ।

इति स्कन्दपुराणे क्षुपदधीचविवादो नाम२१६ एकत्रिंशत्तमोध्यायः

सनत्कुमार उवाच

एतस्मिन्नेव काले तु व्यास दक्षः प्रजापतिः ।

अयजत् सोश्वमेधेन राजा प्राचेतसात्मजः१ । । १ ।।

तत्र देवनिकायानां भागधेयानि सर्वशः ।

हव्यवाहस्तदा तत्रा२वहन्मन्त्रैस्समीरितः३ ।।२ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

१९७ स्थानं... - घ. । १९८ तवैव - क. । १९९... नात् - घ. । २०० भवेत् - ख. । २०१ स्यापि - घ. । २०२ वाग्यतो - ध. । २०३ नियतासनः - घ. । २०४ स सर्वपापनिर्मुक्तो -?, २०५.. श्च -? २०६ गणो - ख. । २०७ यत्नवान् सर्वथा - घ. । २०८ सर्वपातकनिर्मुक्तः - क. । २०९.. .बन्धनवर्जितः - घ. । २१० महेश्वरो - घ. । २११ नित्यशः - घ. । २१२ यस्त्विदमेकरात्रं - घ. । २१३ पठेत् - घ. । २१४.. .देहो -ख. २१५ स तेन - ख. । २१६ दधीचमाहात्म्ये त्रिंशोध्यायः - घ ।

१ प्रचेतसात्मजः - घ. । २ तत्र - घ. । ३ .. स्समाहितः - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

वहन्तं४ तमपश्यच्च५ देवी गिरिवरात्मजा ।

अनुस्मरन्ती तद्वैरं शापकारणमेव च । । ३ । ।

उवाच चैनं गिरिजा बोधयन्ती पुरातनम् ।

श्लिष्टं मधुरया वाचा कारणेन समन्वितम् । ।४। ।

त्वं देवः सर्वदेवानां गतिश्च७ शरणं तथा८ ।

त्वया विना कथं यज्ञो९ वर्तते सर्वदेवप । । ५ ।।

देवानां भागधेयानि वहत्यग्निरयं भव१० ।

नायं तव महेशान किं कारणमतिद्युते ।।६।।

न साम्ना सिध्यते कार्यं११ विक्रमेण विना प्रभो ।

अयं मूढोवलिप्तश्च राजा प्राचेतसात्मजः ।।७।।

अनुस्मरन् पूर्ववैरं नैव दास्यत्यशासितः ।

दधीचस्य वरश्चापि त्वया दत्तस्तदा१२ प्रभो ।

तस्यायमागतः कालस्तदर्थेन१३ विधीयताम्१४ ।।८।।

सनत्कुमार उवाच

एवमुक्तस्तदा व्यास भगवान् वृषभध्वजः ।

उवाच प्रहसन् देवीं पिता तव शुचिस्मिते ।।९।।

पूर्वजन्मनि सुश्रोणि प्रजापतिसुतः शुभे ।

मम त्वं भावविज्ञानं कुर्वती१५ देवि भाषसे ।।8.32.१०।।

नहि दुःखं पितुर्लोके कश्चिदिच्छति भामिनि१६ ।

एवमुक्ता तदा व्यास१७ देवेन विमलात्मना ।। ११ ।।

ललाटे भृकुटीं१८ कृत्वा ततो देव्यायतेक्षणा ।

क्रोधात्१९ करेण नासाग्रं संममर्द शुचिस्मिता ।। १२ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

४ तं वहन्तं - घ. । ५ अपश्यती - घ. । ६ श्लक्ष्णं - घ. । ७ त्वं गतिः ख । ८ शरणार्थिनां - घ. । ९ जज्ञे - क । १० तव - घ । ११। साम्ना सर्वसुराध्यक्ष-- घ। नाम्ना - क, नाम्ना - क, न सत्वो - घ. । १२ स्वयं - ख. । १३ स्तदा तेन - घ., तदोर्ध्वेन - क । १४ -विधीयते - घ. । १५ कुर्वन्तो - ख. । १६ भाविनि - घ, । १७ देवी - घ. । १८ भ्रुकुटी - क। १९ क्रुद्धा - घ ।

- - - -- - -- - ---- - -- -- -- - -- - --

तस्यां संमृद्यमानायां नासिकायामतिप्रभा ।

जज्ञे स्त्री भृकुटीवक्त्रा चतुर्दंष्ट्रा त्रिलोचना

बद्धगोधांगुलित्रा च कवचा२० बद्धमेखला ।। १३ ।।

सखड्गा सधनुष्का च२१ सतूणीरा२२ पताकिनी ।

द्वादशास्या दशभुजा तनुमध्या तमोनिभा२३ ।।१४।।

घनस्तनी२४ पृथुकटी नागनासोरुरव्यया२५ ।

भद्रकालीति तां प्राह देवीं देवी२६ शुभानना२७ । ।१ ५।।

ततोब्रवीत् तदा देवमेषा सृष्टा मया प्रभो ।

त्वमप्यन्यं सृज गणमनुरूपं नमोस्तुते ।।१ ६।।

ततो देवस्तदा स्कन्धं स्वमवैक्षत भास्वरम्२८ ।

तस्माज्जज्ञे पुमान् दिव्यस्त्रैलोक्यं प्रदहन्निव२९ । । १७। ।

भृकुटीभूषितास्यश्च३० बद्धगोधांगुलित्रवान् ।

कवची बद्धतूणीरः३१ शरी खड्गी शरासनी ।। १८। ।

त्र्यक्षश्चतुर्भुजश्चैव३२ वज्रसंहननो युवा ।

स सृष्टः३३ प्रणतो भूत्वा हरिर्नाम्ना३४ गणेश्वरः ।। १ ९। ।

उवाच प्राञ्जलिर्भूत्वा देवदेवं सहोमया ।

आज्ञापय सुरेशान यत् कर्तव्यं मया विभो । ।8.32.२ ० ।।

ततस्स भगवानाह३५ हरिं तं गणनायकम् ।

प्राचेतससुतस्यास्य३६ यज्ञं गच्छ विनाशय ।।२ १ ।।

भद्रकाल्या सहाशु त्वमेतत् कृत्यं गणेश्वर३७ ।

ततः स३८ भगवान् देवो गणेशान्३९ कामरूपिणः४० । ।२२ । ।

स्वगात्रेभ्योसृजद् धीमान्४१ नाना४२ रूपधरान् गणान् ।

पस्पर्श बाहुं४३ सम्यक् च४४ तस्मा४५ ज्जाता महाबलाः४६ ।।२३ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

२०. सकवचा? । २१ च सवाहा - घ. । २२ सतूली च - घ । २३... तिमोहिनी - ख । २४ तुंगस्तनी - घ । २५ नागपासवरायुधा - घ. । २६ देव - घ. । २७. नाम् - घ. । २८ स्त्रमैक्षत सुभासुरम् - क., स्वभाश्वरं - ख., प्रभाश्वरं - घ. । २९ संहरन्निव - क. । ३० भ्रुकुटीभूषितास्यश्च - क ख. । ३१ च - घ. । ३२... श्च सुभुजश्चैव - क ख. । ३३ संतुष्टा - घ. । ३४ हरिर्नाम - घ. । ३५ भगवान्देवो - ख. । ३६ प्रचेतससुतस्यास्य - घ. .. स्येम - क । ३७. नवेश्वर - ख । ३८ ततोस्य - क. । ३९ गणेश - ख., गणेशः - घ. । ४०. णं - ख. । ४१ भीमान् - घ. । ४२ नाम्ना - घ. । ४३ बाहून् -घ. । ४४ तु - क. । ४५ तस्मि (न्) - क. ख. घ. । ४६ महात्मनः - क., ना - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

कोट्यस्ता नवतिश्चैव शतञ्चैव तदा प्रभोः४७।

स ताँश्चोवाच४८ भगवान् यज्ञं प्रमथतानघाः । ।२४। ।

सनत्कुमार उवाच

ततस्तौ तेन सैन्येन महताभिसमावृतौ ।

जग्मतुः सागरोन्नाद४९ मेघाशनिनिनादितैः५० ।।२५।।

देवोपि सह पार्वत्या रैभ्याश्रमसमीपतः५१ ।

स्थित्वापश्यद् गणेशानां कर्म तद् यज्ञनाशनम् ।।२६।।

सनत्कुमार उवाच

वृक्षाः कनखलेयास्तु गङ्गाद्वारसमीपगाः ।

सुवर्णशृंगश्च गिरिर्मेरुपर्वतसन्निभः ।।२७।।

तस्मिन् प्रदेशे दक्षस्य यज्ञोसावभवत्तदा५२ ।

गणेश्वरबलं चागाद् भीमं कालीपुरोगमम् ।।२८ ।।

ते संप्राप्य महाभागाः सर्वे दीप्तानलप्रभाः ।

ऊचुस्तं यजमानञ्च ऋत्विजोथ मुनीन् सुरान् ।।२९।।

वयं ह्यनुचराः सर्वे शर्वस्य परमात्मनः ।

इहाभिलिप्सवः प्राप्ता भागान् यच्छध्वमीप्सितान् ।।8.32.३ ० ।।

तपसा यज्ञभागार्हा बलेन५३ नियमेन वा५४ ।

ऐश्वर्येणाथ योगेन५५ येन तेन पुरो हि वः५६ ।।३ १।।

सर्वञ्चास्मास्वपि हि तद्५७ वयमप्यंशभागिनः५८ ।

अथ चेत् स्वामिनो देवास्तेन भागार्हतां गताः ।।३ २।।

स्वामित्वे च बलं हेतुस्तपो वा नात्र संशयः ।

अस्मास्वेवोभयं तच्च स्वामित्वं तेन नो वरम् ।।३ ३ ।।

अथ चेत् कस्यचिदियमाज्ञा मुनिसुरोत्तमाः ।

भागो भवद्भ्यो देयस्तु नास्मभ्यमिति कथ्यताम् ।।३४।।

- - - -- - -- - ---- - -- -- -- - -- - --

४७ प्रभो - क .घ । ४८ सर्वांश्चोवाच - क. । ४९ सागरैर्नादैः - घ. । ५० विनादितैः - क., तौ - क., नी (नौ?) - ख. । ५१ वैश्वानरसमप्रभः - घ. । ५२ यज्ञोयमभवत्तदा - क. । ५३ बलेना - घ. । ५४ च - घ. । ५५.. .भियोगेन - घ. । ५६ वयं सुराः - घ. । ५७ चास्मासु पिहितं - घ. । ५८ तद्वयं ह्यंशभागिनः - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

तं ब्रूत यो ज्ञापयति वेत्स्यामो हि वयं ततः ।

एवमुक्तास्तु हरिणा सर्वे देवपुरस्सराः ।।३५।।

ऊचुर्मन्त्राः प्रमाणं वो भागं प्रति गणेश्वराः५८ ।

मन्त्राप्यूचुः सुरान् यूयं तमोपहतचेतसः ।।३६।।

येन प्रथमभागार्हं६० नायजध्वं महेश्वरम् ।

मन्त्रैस्ते प्रोच्यमानापि नैव भागान् ददुर्यदा ।।३७।।

तदा यातास्ततो मन्त्रा ब्रह्मलोकं सनातनम् ।

ततः शक्रादयो देवाः सर्वे ऊचु६१र्गणेश्वरान् ।।३८।।

त्यक्त्वा (?) - - - - - ।

युष्मान्निहन्मो विक्रम्य सर्वानेवागतान् युधि ।।३९।।

तेषां सगर्वं६२ तद् वाक्यं श्रुत्वा हरिरमित्रजित् ।

उवाच प्रहसन् सर्वानिदं वचनसूर्जितम् ।।8.32.४०।।

मन्त्राः प्रमाणं न कृता युष्माभिर्बलगर्वितैः६३ ।

यस्मात् प्रसह्य तस्माद्वो नाशयाम्यद्य गर्जितान्६४ ।।४१।।

ऋत्विग्भिर्भागधेयैश्च सह यज्ञेन चोद्यतः६५ ।

येषां च लवत्ता६६ वस्तान् सर्वान्६७ नाशयाम्यहम् ।।४२।।

एवमुक्त्वा स तेजस्वी हरिभद्रः प्रतापवान् ।

भद्रकाली च संक्रुद्धा अभिदुद्रुवतुः६८ सुरान् ।।४३।।

गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ।

प्रस्थात्रा६९ सह होतार७०मश्वं७१ चैव गणेश्वराः । ।४४।।

गृहीत्वा कुपिताः सर्वे गङ्गास्रोतसि चिक्षिपुः ।

यजमानञ्च पाशेन बद्ध्वा निन्युर्यथासुखम् । ।४५।।

- - - -- - -- - ---- - -- -- -- - -- - --

५९ महेश्वराः - ख. । ६० प्रमथभगार्हं - ख । ६१ सर्वानूचु - क. । ६२ सवर्गं - क. । ६३... दर्पितैः? ६५ गर्वितान्? ६५ चोदितः - घ. । ६६ यद्बलं यत्तपो वापि - घ. । ६७ तत्सर्वं - घ. । ६८.. .वभिदुद्रुवातुः- क. । ६९ प्रस्तोत्रा - ख. । ७० होत्रा च - घ. । ७१ मखं - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

वेदीमन्ये७२ कुशानन्ये७३ स्रुचोन्ये चमसान् परे७४।

व्यनाशयँश्चिक्षिपुश्च शालाश्चान्येभ्यदीपयन्७५ । ।४६। ।

हरिभद्रोपि दीप्तात्मा शक्रस्योद्यच्छतः७६ करम् ।

व्यष्टंभयददीनात्मा तथान्येषां दिवौकसाम् । ।४७ ।।

भगस्य नेत्रे पूष्णश्च दशनान् रुषिताननः७७ ।

धनुष्कोट्या समाहत्य७८ मिषतां७९ संन्यपातयत्८० ।।४८ ।।

विष्णोश्चक्रं च तद् घोरं युगान्तादित्यवर्चसम्८१ ।

व्यष्टम्भयददीनात्मा करस्थं न चचाल ह ।।४९ ।।

तुषिताँश्च तथा८२ देवानुद्युक्तान् युद्धलालसान् ।

वायव्यास्त्रेण संहत्य पृथिव्यां तान्न्यपातयत् । ।8.32.५० । ।

अन्याँश्च देवान् देवोसौ सर्वान्८३ युद्धाय८४ संस्थितान् ।

मोहनेनास्त्रवर्येणे८५ समोहयदनिन्दितः ।।५१ ।।

राजानश्चापि ये केचित् तत्रायाता दिदृक्षवः८६ ।

तान्सर्वानस्त्रवीर्येण स्वगृहाननयद् बलात् ।।५२। ।

तद् प्रविध्वस्तकलशं भग्नयूपसतोरणम् ।

प्रदीपितमहाशालं दृष्टवा यज्ञोभिदुद्रुवे । ।५३ ।।

तं तदा मृगरूपेण धावन्तं गगनं प्रति ।

हरिः शरं स सन्धाय८७ विशिरस्कमथाकरोत् ।।५४। ।

शरं चापरमादाय८८ वीरभद्रः प्रतापवान् ।

पलायमानं तं यज्ञं ससार मृगरूपिणम् ।

नक्षत्रसमतां यातुं द्वाबद्धं वीतमभ्यगात् । ।५५ ।।

सनत्कुमार उवाच

एवं ते८९ निकृता९० व्यास गणैः काल्या तथैव च ।

हरिणा चैव देवेन सर्वे९१ शरणमागताः । ।५६।।

- - - -- - -- - ---- - -- -- -- - -- - --

७२... मध्ये - ख. । ७३... मन्ये - क. । ७४... नपि - क. । ७५... न्यदीपयन् - क. । ७६... स्यामुच्चतः- घ । ७७ कुपिताननः - घ. । ।३८ महासत्व - घ । ७९ मिथस्तां (न्) - घ. । ८० सन्यवारयत् - घ. । ८१ सन्निभम् - क. । ८२ ततो - घ. । ८३ स तान् - ख., यज्ञ - घ. । ८४ कौशल्य - घ., युद्धसमु- त्थितान, - ख. । ८५... वीर्येण क. ख. घ. । ८६ तत्र तत्र समागतान् - घ. । ८७ समाधाय - क. घ., समादाय - ख. । ८८ सशरं चाप - घ., शरंचापं स - ख । ८९ निर्गता - घ । ९० गणैभद्रा - क सर्वेवै त्रिदिवौकसः - घ. । ९१ तं

सर्वे - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

तान् प्रपन्नान् तदा सर्वान् देवान्९१ समुनिलोकपान् ।

हरिः काल्या सहैवाह गच्छध्वं सोममव्यम् ।

प्रसादयध्वं देवेशं ततो वो भविता शमः९२ । ।५७। ।

सनत्कुमार उवाच

त एवमुक्ता९३ हरिणा जग्मुर्देवं प्रमन्यवः ।

प्रसादयितुमव्यग्रा दुःखशोकसमन्विताः ।।५८।।

ततस्ते नातिदूरे तु९४ साम्बं९५ सगणमीश्वरम्९६ ।

अपश्यन्त९७ महात्मानः९८ सर्वे तद्गतमानसाः ।।५९। ।

ते तं दृष्ट्वा प्रणम्योच्चै९९ स्तुष्टुवुर्दीप्ततेजसम् ।

वाग्भिराहवनीयाभिः१०० कृत्वा ब्रह्माणमग्रतः ।। 8.32.६० । ।

देवा ऊचुः

नमस्ते सुरशत्रुघ्न सुरयज्ञप्रमर्दक१०१ ।

महायज्ञ महासत्व महाक्रतुशतस्तुत । ।६१।।

नमो यज्ञविनाशाय वेदसर्वस्वदाय१०२ च ।

शिपि१०३ विष्टकृते विष्णोर्नरसिंहाभिघातिने । । ६२। ।

मन्दराद्रिनिवासाय१०४ शुभसर्वस्वदाय च ।

महाविमानयानाय ॠतुविघ्नकराय च । ।६३ । ।

मन्त्रान्तः करणयैव१०५ मन्त्रव्रतकराय च ।

पूष्णो दन्तविनाशाय भगनेत्रहराय च । ।६४।।

विष्टम्भनाय शक्रस्य विष्णोश्चक्रस्य चैव हि ।

नमो यज्ञप्रणेत्रे च१०६ यज्ञोत्पत्तिकराय च ।। ६५। ।

वरदानाधिगम्याय१०७ ब्रह्मणो जनकाय च ।

व्याघ्रचर्मभृते तुभ्यं१०८ कृष्णचर्माम्बराय च । ।६६।।

- - - -- - -- - ---- - -- -- -- - -- - --

९१ सदेवान् - ख., सर्वांश्च - ख. । ९२ समः - घ., मम - क. । ९३ एवमुक्तास्तु घ. । ९४ तं दुरारोहं - घ. । ९५ सोमं - घ. । ९६ शरणमीश्वरम् - घ. । ९७... न्त - घ. । ९८... नं - घ. । ९९ प्रणम्योचुऽ - घ. । १००

रादरणीयाभिः - घ., रावाहनियाभिः - क., संस्कृतयुक्ताभिः - घ. । १०१... प्रवर्तक - क. घ. । १०२ देवसर्व- स्वदाय - घ. । १०३ शिखि... - ख, शिबि., - क. । १०४ मन्दरेन्द्रविनाशाय - क. घ. । १०५ मन्त्रान्त... - घ. मन्त्रार्क... - ख. । १०६ यज्ञप्रणेतुश्च - क. । १०७ . दिगम्याय - घ. । १०८ चैव - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

नमः स्रग्वरमालाय नरपित्रे तथैव च ।

उत्पादकाय विष्णोश्च जयाय विजयाय च । ।६७। ।

नमो मन्युविनाशाय वीरभद्रप्रजाय च ।

नमो हर्षाय कोपाय१०९ गणेश्वरसृजे नमः । । ६८ । ।

नमो देवानुतापाय मृगबाणार्पणाय११० च ।

नमस्ते भगवन् देव नमस्ते भगवञ्छिव ।।६९। ।

नमस्ते सर्वलोकेश नमस्ते लोकभावन१११ ।

त्वया सृष्टमिदं विश्वं११२ यज्ञो देवाश्च यज्ञहन् ।

प्रसीद मा क्रुधोस्माकं मा नः कृत्वा विनाशय । ।8.32.७० । ।

सनत्कुमार उवाच

य इमं पठते नित्यं प्रयतः११३ प्रातरुत्थितः ।

न तस्य विघ्नरूपाणि कदाचित् संभवन्त्युत । ।७१ । ।

सनत्कुमार उवाच

स एवमुक्तो देवेशस्तदा११४ तान् स्तुवतः स्थितान् ।

उवाच प्रहसन्११५ वाक्यं सर्वात्मा सर्वभावनः११६ । ।७२।।

देवदेव उवाच

नाहं क्रुद्धो भवन्तो मे नित्यमेवातिवल्लभाः११७ ।

क्रुद्धे हि मयि युष्माकं न स्याज्जीवं११८ क्षणान्तरे । ।७३ । ।

सनत्कुमार उवाच

एवमुक्त्वा तदा देवः सुराणां हितकाम्यया ।

प्रावेशयत् सुरान् सर्वान् ततस्तान् योगमायया११९ । ।७४। ।

स्वे शरीरे महादेवो विस्मापयितुमोजसा ।

ते प्रविष्टास्तदा देहमीश्वरस्य१२० महात्मनः ।।७५। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१०९ रूपाय - ख. । ११० मृगमाणार्पणाय - ख- । १११ सर्वभावन - घ. । ११२ सर्वं - घ. । ११३ नियतः - ख । ११४ सदा - घ । ११५ च महादेवः - घ. । ११६ सर्वान्देवान् समागतान् - क. । ११७ नित्यमेव हि वल्लभाः - ख. । ११८ भ्रंस्याज्जीवं - घ.,... व्यं - घ. । ११९ प्रवेशयमास तदा योगेनापि- बलीयसा - घ. । १२०... मुमेशस्य - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सप्तलोकसमायुक्तमपश्यन् जगदद्भुतम्१२१ ।

ते परिभ्रम्य१२२ ताँल्लोकान् कृत्स्नान् सर्वे भयान्विताः१२३ । ।७६ ।।

पञ्चाक्षं गणपं वीरं तत्रापश्यन् समागताः१२४ ।

तेन ते सुरशार्दूलाः१२५ सर्वे ह्यूर्ध्वमतन्द्रिताः१२६ ।।७७। ।

आक्षिप्तास्तन्मुहूर्तेन लोकमन्यमुपागताः ।

अपश्यंस्ते महाभागा नगरं सूर्यसन्निभम् । ।७८। ।

स्फाटिकेनातिमहता प्राकारेणाभिसंवृतम् ।

शृंगैश्च विविधैश्चित्रैर्मणिहेमोज्ज्वलैः शुभैः१२७ । ।७९ ।।

ततोपरमपश्यँस्ते तन्मध्ये सुरसत्तमाः ।

सप्तयोजनकोटीकं१२८ समन्तान्नगरं शुभम् । ।8.32.८० । ।

राजतेनावृतं दिव्यं प्राकारेणेन्दुवर्चसा ।

तस्य मध्ये परं चोर्ध्वं१२९ षट्कोट्या१३० विस्तृतं पुरम् ।।८१ ।।

जाम्बूनदमयेनैव प्राकारेण१३१ सुसंवृतम् ।

तस्य मध्ये१३२ ततश्चान्यत्१३३ पंचकोटी१३४ प्रमाणतः ।।८२ ।।

इन्द्रनीलोपलेनैव प्राकारेण समावृतम् ।

तस्य मध्ये ह्यपश्यंस्ते विबुधा१३५ मुनिसत्तम१३६ । ।८३ ।।

चतुर्योजनकोटीकं विस्तारायामतः समम्१३७ ।

वैदूर्योपलयुक्तेन१३८ प्राकारेणाभिसंवृतम् ।।८४।।

नगरं तस्य मध्ये च त्रिकोटीयोजनं१३९ शुभम् ।

सर्वरत्नविचित्रेण प्राकारेणाभिसंवृतम् । ।८५ । ।

तेषां मध्ये जनपदाः सर्वदुःखविवर्जिताः ।

शुक्लाभिजनसंपन्नाः सर्वे च स्थिरयौवनाः ।।८६।।

- - - -- - -- - ---- - -- -- -- - -- - --

१२१... मपश्यँश्च जगत्ततः - घ. । १२२ परिभ्राम्य - ख. । १२३ ममार्द्दिताः - ख. । १२४ समागतं - घ. । १२५ गणशार्दूलाः - ख. । १२६ वै सूर्यवर्चसः - घ । १२७ सुशोभितमनोहरं - घ. । १२८ कोट्या वै - घ. । १२९ चान्यं - घ. । १३०... कोटी - घ. । १३१ प्राकारेणैव - ख.,... णाति (भि)... - घ. । १३२ तस्योर्ध्वत? - घ. । १३३.. .श्चास्यां - घ. । १३४... कोट्या - घ. । १३५ विविधान् - घ. । १३६... मान् - घ. । १३७ शुभम् - घ. । १३८ वैडूर्योपलयुक्तेन - क. । १३९... कोटीयोजनं - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

क्षुत्पिसाविनिर्मुक्ता१४० रोगशोकविवजिताः१४१ ।

अमरा जरया१४२ त्यक्ता नित्यं मुदितमानसाः ।।८७।।

दीर्घिकाभिर्विचित्राभिर्वापीभिश्चाप्यलंकृताः१४३ ।

वक्षैर्नानाविधैश्चित्रैः सदा पुष्पफलोपगैः ।।८८।।

सर्वभक्षान्१४४ प्रसूयन्ते वृक्षास्तत्रापरे शुभाः ।

अपरे चाप्यलंकारान्१४५ सर्ववासांसि चापरे ।।८९।।

अपरे सर्वपुष्पाणि सर्वाण्येव फलानि च ।

सर्वभावाँस्तथा चान्ये मधु चामाक्षिकं१४६ शुभम् ।।8.32.९ ० ।।

अपरे क्षीरिणस्तत्र वृक्षा व्यास महाप्रभाः ।

क्षीरं क्षरन्ति ते नित्यं सर्वे१४७ गव्यं१४८ समन्विताः१४९ ।।९ १ ।।

सर्वा मणिमयी भूमिः शुभा काञ्चनवालुका१५० ।

उद्भिदान्युदकान्यत्र गिरि१५१ प्रस्रवणानि च ।। ।९२।।

न तेषु क्रोधो लोभो वा युद्धं द्वेषोथ मत्सरः ।

न मोहो१५२ नैव च स्तम्भो न दोषास्तत्र चापरे ।।९३ ।।

तस्य मध्ये पुरं चान्यद् द्विकोटीविस्तृतं शुभम् ।

पद्मरागमयेनैव प्राकारेण परिष्कृतम् ।।९४।।

ईदृशानि पुराणि स्म व्यतिक्रम्य सुरास्ततः ।

कोटीयोजनविस्तीर्णं समन्ताद् वह्निनावृतम् ।।९५।।

संवर्तकानलाकारं दुर्निरीक्ष्यं पुरं महत् ।

अद्वारं ददृशुर्दिव्यमनन्तं ते सुरोत्तमाः ।।९६।।

दृष्टवा जग्मुः परं१५३ चैव विस्मयं भयमेव च ।

तान् भीतवदनान् व्यास वेपमानान् सुरेश्वरान् ।

पञ्चाक्षो गणपः प्राह मा भीर्भवतु वः सुराः ।।९७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१४० विमुक्ता हि - क. घ. । १४१ रागलोभविवर्जिताः - घ । १४२ अजरा अमराः - ख, अजरा - घ. । १४३ चप्यालंकृतं - घ. । १४४ सर्वभक्षं। - क., क्षानि - ख । १४५ चाप्यलंकारं - क. ख. घ. । १४६ मधुरैर्माक्षिकैः - घ. । १४७ सर्वं... क. । १४८ दिव्यं - क ख । १४९... तं - क. घ. । १५०... चुल्लिका - क. । १५१ गिरे. - घ । १५२ मानो - ख घ- । १५३ पुर - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

इदन्तत् सुमहद् घोरं पुरं घोरानलावृतम् ।

द्रष्ट्व्यं वो महात्मानो यत्कृते चागतास्त्विह१५४ । ।९ ८।।

सनत्कुमार उवाच

एवमुक्त्वा स पंचाक्षः१५५ शूलेनानलवर्चसा ।

पश्यतां सुरसंघानां द्वारं चक्रे महाबलः१५६ । । ९९ । ।

ते प्रविष्टा महात्मानः पञ्चाक्षसहिताः सुराः ।

दिव्यं ददृशिरे पूर्णं१५७ सिंहानां तत् पुरं महत् । । 8.32.१०० ।।

मेरुमन्दरकल्पानां नखदंष्ट्रावतां तथा ।

घोराणामग्निवर्णानां क्रुद्धानामतितेजसाम् । । १०१ । ।

तेषामेकस्तदासिंहश्छित्त्वा बन्धनमूर्जितः१५८ ।

अन्वधावत संक्रुद्धः प्रलम्बितमहासटः । । १० २। ।

तस्य सिंहस्य नादेन भैरवेण दिवौकसः ।

विषण्णवदनाः सर्वे पञ्चाक्षं शरणं ययुः । । १०३ । ।

पञ्चाक्ष उवाच

न भेतव्यं सुरा देवं दर्शयाम्यधुना हि वः ।

सनत्कुमार उवाच

इत्युक्ता१५९ ददृशुः शर्वं१६० सहसा ते सहोमया१६१ ।

न चैव तत्पुरं व्यास न सिंहं१६२ नापि किञ्चन । । १ ०४।।

वेपमाना भयेनेशं शरणं पर्युपागताः ।

तान् शरण्यः१६३ स भगवानुवाच प्रहसँस्तदा ।। १० ५।।

आमंत्र्य सर्वान्१६४ देवेशो भयत्रस्तान्१६५ दिवौकसः ।

दृष्टा१६६ हि वो मम क्रोधाः सिंहरूपा भयानकाः ।। १०६ ।।

एकेन तेषां रौद्रेण यूयं सर्वेपि१६७ तर्जिताः१६८ ।

यदि सर्वानहं क्रोधाद्१६९ विसृजेयं कदाचन१७० ।। १ ०७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१५४ नागतास्त्विह - क. ख. । १५५ पंचास्यः - घ । १५६ महानदः - घ. । १५७ पूर्वं - ख. । १५८... तं - क. ख. । १५९... क्त्वा - क. ख. घ. । १६० सर्वे यूयं - क ख. घ । १६१ तैस्सहोमया - क. । १६२ सिंहो - घ, सिंहां ( न्) - ख. । १६३ भयार्तान्- - ख. घ । १६४ सर्वं - क. । १६५ भया ( त्) - क., भयार्तास्तान् - ख. घ. । १६६ दृष्ट्वा - क., दृष्ट - ख. । १६७ सर्वे यूयं - क. ख । १६८ विनिर्जिताः - क. । १६६ क्रोधान्? क्रोधे - घ. । १७० कथंचन - क ख. घ ।

- - - -- - -- - ---- - -- -- -- - -- - --

न भवेत न सन्देहः१७१ सर्वे यूयं क्षणान्तरे १७२

इयन्तु देवी युष्माकं कुपिता पर्वतात्मजा ।

एतां प्रसादयत व नाहं कुप्यामि वः१७३ सुराः । ।१ ०८।।

सनत्कुमार उवाच

एवमुक्तवति स्वामिन्युद्धता ताम्रलोचना१७४ ।

देवी देवीं मुखाद् घोरां ससृजे भयवर्द्धनीम् ।। १ ०९। ।

दंष्ट्राकरालवदनां१७५ बहुपादकरांगुलिम्१७६ ।

धनुपरशुखड्गोग्र१७७ चक्रशूलेषुधारिणीम्१७८ ।।8.32.१ १० । ।

ज्वलर्दकसहस्रांशुतेजसं१७९ विश्वरूपिणीम् ।

दशयोजनसाहस्र१८० स्तस्या देहः प्रमाणतः१८१ । ।१ ११ । ।

तयाभिभूतास्ते देवा वध्यमानाश्च१८२ सर्वशः ।

न शेकुः१८३ पुरतः स्थातुं व्याघ्राद् मृगगणा इव ।। १ १२।।

ततो व्यथितचित्तास्ते कालकर्णीभयात्१८४ सुराः१८५ ।

भस्मराशिं स्थितं पार्श्वे देवस्य१८६ विविशुर्भयात् ।। ११३ । ।

तान् दृष्टवा भस्मकूटं तु प्रविष्टान् शरणार्थिनः ।

सुरान् भस्मविलिप्ताङ्गान् देवी१८७ देवीं१८८ न्यषेधयत् ।। १ १४।।

देव्युवाच

कालकर्णि निवर्तस्व मा वधीः१८९ सुरसत्तमान् ।

एते पाशुपती१९० भूता भस्मना दिग्धमूर्तयः१९१ ।। ११ ५।।

एतत् पशुपतिप्रोक्तं व्रतं पाशुपतं पुरा ।

यद् भस्मना पवित्रेण स्नानं स्नानेभ्य उत्तमम् ।। ११ ६।।

एते भगवतोवश्य१९२ मनुग्राह्याः१९३ सुरोत्तमाः ।

भस्म येन प्रविष्टास्तु१९४ तस्मान्मैतान् विनाशय ।। १ १७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१७१ भवेयुरसन्देहः - क. ख. । १७२ क्षणेपिच - ख. । १७३ वा - क. । १७४ युद्धवातम्रलोचना - क. ख. । १७५... दशनां - ख. । १७६ गतिं - घ । १७७... ग्रां - क. । १७८ ... लासिधारिणीम् - क. । १७९.. .सां - ख. । १८० साहस्रां - ख. । १८१ देहं प्रकीर्तितम् - क. । १८२ वर्धमानाश्च - घ. । १८३ तत्यजुः - घ. । १८४ कालकर्णभयात् - क, न्या - ख,, कल्प - घ. । १८५ पुरा - घ. । १८६ देवास्ते - घ. । १८७ देवो - क., देवीं - ख । १८८ देवी - क. ख. । १८९ मा धाव - घ. । १९० पाशुपता- क. घ. । १९१ निर्दग्धमूर्तयः- घ. । १९२ वश्या - क. । १९३... गृह्या - ख. । १९४... स्ते - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

रौद्राः पशव एते हि प्रवेशाद् भस्मसोधुना१९५ ।

जाताश्च गणपाः सर्वे हन्तव्या न त्वयेश्वरि ।।१ १८।।

नैषां मृत्युः प्रभवति शङ्करार्पितचेतसाम् ।

मया ह्येतत्१९६ व्रतं शर्वं चरितं सार्वकामिकम्१९७ ।।१ १ ९।।

इत्युक्ता१९८ कालकर्णी तु देव्या१९९ भैरवरूपिणी ।

न्यवर्तत सुरेभ्यस्तु२०० कोपं तत्याज चोत्थितम्२०१ ।। 8.32.१२० ।।

कालकर्णी निवृत्तां तु दृष्ट्वा तेपि२०२ सुरास्ततः२०३ ।

शान्तञ्च भयमत्युग्रं तुष्टुवुर्हिमवत्सुताम् ।।१ २१ ।।

देवा ऊचुः

हरवरमहिषीं महादेवपत्नीं

प्रियां त्र्यम्बकस्याम्बिकां वाचमेका-

क्षरां२०४ लोकसंहारकर्त्रीमुमां दे-

वदेवस्य पात्रीं शुभां शंखकुन्दे-

न्दुहाराम्बुगौरोग्रदंष्ट्रां जयामा-

हवे दुर्निरीक्ष्यामचिन्त्योग्रदृष्टिं-

विशालेक्षणां पीतकोशेयवस्त्रां

महाशूलघण्टापताकाध्वजां दि-

व्यगन्धाज्यधूपप्रियां कालदण्डा-

सिचर्मोग्रहस्तां२०५ वपाशोणितान्त्र-

वसापूर्णभाण्डां दिशां दक्षिणां चा-

रुचामीकराबद्धपट्टां युगान्ता-

नलाभेक्षणामट्टहासान्सृजंतीं

यथाकामकर्त्रीं२०६मनङ्गायुधावि-

- - - -- - -- - ---- - -- -- -- - -- - --

१९५ साधुना - ख. | १९६ ममाप्येतत् - घ. | १९७ सर्वकामिकम् - घ. | १९८ इत्युक्त्वा - क. ख. घ. | १९९ देवी - घ. | २०० श्च - घ. | २०१ त्यक्त्वा जवोस्थितम् - क. | २०२ तु - क. | २०३ सदा - घ. | २०४ त्रिचरणाक्षरां - घ. | २०५... चर्माग्रहस्तां - ख. | २०६ .. हन्त्रीं - ख. |

- - - -- - -- - ---- - -- -- -- - -- - --

क्षतां शूरसेनां नदीं विश्रुतां म-

न्दरावासनित्यां दिविष्ठां२०७ प्रपद्या-

महे२०८ कानसी ( ष्टि)२०९ मसुरमहिषदा-

रणीं दारणीं दुन्दुभेः२१० सुन्दमारीं२११

निशुम्भस्य मृत्युं विभां सोमसूर्या-

ग्निभासां सृज२१२ त्कान्तिमिष्टप्रदां शो-

कदुःखार्तिहर्त्रीं२१३ विशेकामघोरां-

घनामन्तकस्या२१४ न्तकर्त्री मुनेर्जा-

मदग्न्यस्य चोर्ज्जां तथा राजराज्ञीं

मनोज्ञां करालां क्षपां दण्डनीतिं

स्थितिं सिद्धिमिष्टां शुभां कालरात्री-

मपर्णां समाधिं शरण्यां नगेन्द्रा-

धिवासप्रियां क्षीरोदनित्यां२१५ शुभां-

महाकिंकिणीकां प्रकीर्णोर्ध्वकेशीं

प्रदीप्ताग्निसन्ध्याभ्ररागत्विषं२१६ ब-

द्धगोधाङ्गुलित्रां त्रिनेत्रां जटाके-

शरक्ताम्बुजाबद्धमालां विशल्या-

मनङ्गारिनेत्रोल्कजां२१७ हेममाला-

निबद्धस्रजां२१८ दीर्घवेर्णी सुवेर्णी

यशःकीर्तियुक्तां२१९ मयूराङ्गजाब-

द्धचित्रध्वजां राजसां शान्तिकर्त्री

प्रपद्येहमेकां सदा भुजङ्गशतकृताङ्गदां

महादानवप्राणशौण्डां चिताभ-

स्मरूक्षाङ्गकेशीं महाजानुलम्बो-

- - - -- - -- - ---- - -- -- -- - -- - --

२०७ दितिं... - घ. । २०८ प्रपद्येमहे - घ. । २०९ कानसां - घ. । २१० दुन्दुभेर्मारणीं - घ. । २११ सु (शु) म्भमारी - ख. घ. । २१२ सृजां - ख. । २१३ दुःखशोकापहर्त्री - घ., दुःखशोकापहन्त्रीं - घ. । २१४ शम्बरा - ख. । २१५ .. धिस्थां। - घ. । २१६... त्विषां - क. । २१७ त्रिनेत्रोल्कजा - घ. । २१८ विनद्धस्रजां - ख । २१९,.. कीर्तिमुक्ता - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

दरां सर्पयज्ञोपवीतर्द्ध२२० वक्त्रो-

द्धृताक्षार्द्ध पादार्द्र हस्तावतंसां

महामेखलादामलम्बद्विचित्रस्रजां

महामेघतूर्योग्रवादित्रनृत्त-

प्रियां२२१ गीतहास्यप्रलापप्रमोद-

प्रियां जाप्यहोमोपवासादवासा-

प्रवासाधिवासातिरिक्तां महायो-

गविज्ञातसारा२२२ नुसारोग्रसारां

धृतिं ज्यानुघण्टा२२३ वबद्धोग्रशब्दां

महामेघवज्रप्रपातोदधिप्र-

ख्यतीव्रोग्रघोषां क्रियां दीक्षिताना-

ञ्च दीक्षां विरूपाक्षभार्यां हरस्या-

र्धदेहाधिवासां२२४ प्रप्रद्ये मुखोल्को-

द्भवां देवीमाद्यां२२५ परां पार्वतीं स-

र्वविद्याधिदेवीं गतिं यमनियमदमात्मभूतां

पितॄणां च कन्यां शुभां पर्वतेन्द्रा-

त्मजां दक्षयज्ञान्तकर्त्रीं२२६ भवस्या-

र्धदेहाश्रितादित्यदन्तावपातां२२७

सुरेन्द्राग्रहस्तप्रतिस्तम्भनीं वि-

ष्णुकेशापहर्त्रीं महासिंहयुक्ता-

तिवाहां२२८ महाभैरवां भीषितां स्क-

न्दचन्द्रारणीं मातरं हस्तिवक्त्र-

स्य चाग्र्यां विशाखस्य जन्मारणीं न-

न्दिनो नैगमेषस्य चोत्पादनीं स-

- - - -- - -- - ---- - -- -- -- - -- - --

२२० सर्पयज्ञोपवीतान्त्रवक्त्रो.. - घ. । २२१ नृत्यप्रियां - ख. । २२२ विज्ञानसारा - घ. । २२३ जानुघण्टा - क. । २२४ हरस्य देहार्धाधिवासां - घ. । २२५ देविमाद्यां - क. - ख. । २२६ दक्षयज्ञान्तकारीं - क. घ. । २२७ दिव्यदन्तावपातां - घ, मादित्य । २२८... तिवादां - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

र्वलोकस्य चाद्यारणीं पूज्यां मातरं यो-

गिनां योगिनीं ध्यायमानां धृतिं दे-

वविप्रैर्महा२२९ योगतर्कैरगम्यां

विशिष्टेष्टशिष्टाधिवासां च लक्ष्मीं

नरी (?) भूर्भुवःस्वर्जनस्सत्यवैरा-

जमाहात्म्यलोकारणीं२३० कारणीमिन्द्रियाणा-

महङ्कारतन्मात्रकर्त्रीं तमस्स-

त्वरागप्रवृत्तिं२३१ पराञ्च प्रवृत्तिं

महेशस्य शक्तिं तथा चेतनां स-

र्वविज्ञानचिन्त्यां प्रपद्याम देवी२३२

मुमां मातरं, दिश त्वं सुखं मातरस्मासु तुष्टा

महादेवपत्नीं शुभां यां वयं चि-

न्तयामैकया संविदा ध्यायमानाः२३३

सदा दारुणं चापि सर्वं कृतं य-

त्वया (?) तच्च नो नाशयाम्बाद्य तुष्टा

यथा वै तुषारं महासूर्यदेहो-

द्भवा२३४ तच्च नो जातिकोटीसहस्रे-

षु पूर्वं कृतं२३५ यत् करिष्याम यत्कु-

र्म तत्सर्वमेवञ्च२३६ दद्याश्च नः स-

र्वमर्थं सकामं तथारोग्यमूर्जां

श्रियं ज्ञानविज्ञानमेधास्तथा धा-

रणां तर्कमूहामपोहं धृतिं चा-

र्यभावं२३७ गतिञ्चैव दिव्यां तथा ध-

र्मनित्यत्वमेताँश्च ये चाप्यतोन्ये

गुणास्ताँश्च सर्वान् जुषस्वाद्य देवि

तुभ्यं नमः ।। १ २३-१४४।।

- - - -- - -- - ---- - -- -- -- - -- - --

२२९ देवदेवप्रियां - ख. । २३० जमहात्म्यलोकारणी - क. । २३१ नमः सत्वरागप्रवृतिं - क., मनः - ख. । २३२ प्रपद्ये सदाहं - ख. । २३३ मोक्षबुद्ध्या - ख. । २३४ महाशून्यदेहोद्भवां - ख. । २३५ सर्वं कृतं - क. । २३६ वरञ्च - ख. । २३७... मपोहां धृतिं धार्यतां - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

एवं सा संस्तुता देवी देवैर्हृष्टेन२३८ चेतसा२३९ ।

त्र्यम्बकानुग्रहाच्चैव देवाँस्तुष्टाब्रवीदिदम् ।। १४५।।

देव्युवाच

गच्छध्वं विज्वराः सर्वे तुष्टाहं वो न२४० संशयः ।

मैवं कार्ष्ट पुनर्देवा मा विनाशो हि वो भवेत् ।।१४६।।

सनत्कुमार उवाच

ततः स देवः प्रहसन् कपर्दी नीललोहितः ।

प्रकृतिस्थान् सुरान् सर्वांश्चकार सुरशत्रुहा ।। १४७।।

उवाच चैतान् देवेशो गच्छध्वं विगतज्वराः ।

यज्ञश्चैव यदा कृत्यं तदायं भविता हि वः ।। १४८ ।।

सशिरस्को दितेः पुत्रा मन्त्रेणानेन सन्धितः ।

ततः स्तोत्रं च मन्त्रं च सन्धानकरमव्ययम् ।

ददावाथर्वणं देवः प्रोवाचेदं च२४१ सुस्वरम्२४२ । । १४९। ।

देवदेव उवाच

नक्षत्रसमतां यातु यज्ञोयं सुरसत्तमाः ।

मृगानुसारी देवोपि हरिरस्य भवत्वयम् । ।8.32.१ ५० । ।

भद्रकाली हरिश्चैव२४३ गणाश्चेमे महाबलाः ।

सर्वे भद्रा२४४ भविष्यन्ति युष्माकममरास्सदा ।।१५ १ । ।

सनत्कुमार उवाच

एवमुक्ता भगवता देवास्ते ब्रह्मणा सह ।

शिरोभिः प्रणतास्सर्वे शर्वमूचुरिदं वचः । । १५२ ।।

एष तावत् क्रतु२४५ श्रेष्ठस्तवैव भवतु प्रभो ।

सर्वः सुरपते देव शतमभ्यर्च्यते२४६व्यय२४७ ।। १५३ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

२३८ दिव्येन - ख. । २३९ चक्षुषा - घ. । २४० वोहं - घ. । २४१ कोपेन च - ख. घ. । २४२ सत्वरं - घ. । २४३ हरश्चैव - घ. । २४४ रुद्रा - घ. । २४५ क्रतुः - क. । २४६ मन्यच्च ते - घ. । २४७. . व्ययः - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

भागानां सर्वयज्ञेषु तुभ्यं सर्वं ददामहे ।

एवमुक्तोथ देवेशः सुरैः सर्वैः सुरेश्वरः ।।१५४।।

चकार रूपं परमं सर्वदेवमयं शुभम् ।

स्वात्मानन्ते तदा देवा२४८ ह्यपश्यन्त महेश्वरे ।।१५५।।

शिरोबाहूरुपादेषु वस्तिहस्तोदरादिषु ।

अवस्थितान् महात्मानो२४९ मुनीँश्चैव तपोधनान् ।।१५६।।

स तद्रूपं तदा कृत्वा देवान् प्रोवाच शंकरः ।

सर्वे यूयं महात्मानो मच्छरीरसमुद्भवाः ।।१५७।।

युष्माकञ्च शरीराणि मन्मयानि प्रपश्यत ।

ततस्ते देवता२५० व्यास सर्वं रुद्रात्मकं जगत् ।।१५८।।

आत्मानं२५१ चाप्यपश्यन्त विस्मयापन्नचेतसः ।

एवं स२५२ तेषां देवेशो दर्शयित्वात्मनो बलम् । ।२५९।।

उवाच सुरशार्दूलान् दृष्टा२५३ ह्येता विभूतयः ।

यो यां२५४ पूजयते मूर्तिं भक्त्या परममया युतः ।।8.32.१ ६० ।।

तस्य तां मूर्तिमास्थाय पूजां गृह्णाम्यहं सुराः ।

न भागधेयैः कृत्यं मे भागधेयानि वस्मुराः ।

सर्वाण्येव ददाम्यद्य२५५ यात सर्वे गतज्वराः ।।१ ६१ ।।

देवा ऊचुः

गुह्यमेतत् परं देव त्वयास्माकं निदर्शितम्२५६ ।

एवं यो वेत्स्यते मर्त्यः स लोकान् प्राप्स्यतेव्ययान् ।।१६२।।

इदं च भगवन् स्थानं भद्रेश्वरमिति श्रुतम्२५७ ।

भविष्यति जगच्छ्रेष्ठं पुण्येभ्यः२५८ पुण्यवत्तमम्२५९ ।।१६३ ।।

समन्ताद् योजनं चैवं रुद्रक्षेत्रं सनातनम् ।

मृतोत्र गणपो देव वल्लभस्ते२६० भविष्यति । ।१६४।।

- - - -- - -- - ---- - -- -- -- - -- - --

२४८ स्वयमन्यं ददौ देवो - ख. । २४९ देवानवस्थितात्मानो - स. । २५० तेजसा - क- । २५१ आत्मन... - घ. । २५२ तेषां स - घ । २१३ दृष्ट्वा - क. घ. । २५४... मां - घ. । २५५.. न्यद्य - क. । २५६ विदर्शितम् - घ. । २५७ स्मृतम् - घ । २५८ स्थानेभ्यः - क. ।ऽ २५९ षुण्यकृत्तमम् - का ख., पुण्यमुत्तममं - घ. । २६० समूहन्ते - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

यश्चेदं२६१ कीर्तयेन्नित्यं कल्य उत्थाय२६२ यज्ञहन् ।

श्रावयेच्चापि विप्रेभ्यः २६३ सर्वपापैः प्रमुच्यते ।। १६ ५। ।

भद्रकर्णह्रदे चास्मिन् स्नात्वा योभ्यर्चयेद्धरम्२६४ ।

साधयित्वा चरुं चैव भोजयेद् ब्राह्मणान् शुचिः२६५ । । १ ६६।।

स सर्वपापनिर्मुक्तो२६६. यत्र तत्र मृतो नरः ।

मोदतेप्सरसां मध्ये दिवि देव इवापरः२६७ ।। १ ६७। ।

यत्र चोक्तं त्वया देव स्थितेन२६८ भगवन् प्रभो ।

हरभद्रेति पुण्योयं त्वत्प्रसादाद् भवत्वज । ।१ ६८।।

अश्वमेधस्य यत्पुण्यं२६९ सम्यगिष्टस्य यज्ञहन्२७० ।

तदत्र देव भवतु नरस्याभ्यर्चतः सदा२७१ । ।१ ६९। ।

परित्यक्ष्यति२७२ यश्चात्र कश्चित् प्राणान् नरोत्तमः ।

हरिभद्रस्य स गणो भविष्यति महाबलः । 8.32.१७० । ।

सनत्कुमार उवाच

एवमस्त्विति स प्रोच्य मन्दरं चारुकन्दरम् ।

जगाम भगवान् शर्वः सोमो गणशतैर्वृतः ।।१७१ ।।

देवापि राज्ञा२७३ सहितास्तस्मिँस्थाने यथासुखम् ।

तस्थुर्ब्रह्मा च विष्णुश्च जग्मतुर्देवपृष्ठतः ।। १७२ । ।

स गत्वा स्तोकमध्वानमुभाभ्यां सहितः प्रभुः ।

नातिदूरे ततः प्राह तिष्ठ विष्णो महाबल ।।१७३ ।।

स प्रणम्य ततः पादौ हरस्य पुरुषोत्तमः ।

तस्थावाम्रं समालम्ब्य२७४ स कुब्जस्समपद्यत ।। १७४। ।

यस्मादाम्रं समालम्ब्य तस्मिन् देशे स्थितो हरिः ।

निरीक्षमाणो देवेशं देशस्तस्मादभूदसौ । १७५ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

२६१... श्चेमं - क. ख. घ. । २६२... मुत्थाय - क । २६३ उपोष्य- ग । नरः सम्यक् - ख, स्वयं वा मानवः सम्यक् - घ. । २६४ हरमर्चते - ख. । २६५ ब्राह्मणं शुभ ख . ण - घ । २६६ सर्वपापादिनिर्मुक्तो - ख. घ. । २६७ इवामरः - क. घ. । २६८ तिष्ठता - घ । २६९ यज्ञस्य - क. । २७० यत्फलं - ख. । २७१.. .च्र्य सर्वदा - क, नः सदा - ख. । २७२ त्यजति - घ. । २७३ यज्ञ.. - ध । २७3 समालक्ष्य - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

कुव्जाम्रक इति ख्यातो विष्णोः क्षेत्रं समृद्धिमत् ।

पुण्यं निवर्तनाद्विष्णो२७५ गोसहस्रफलप्रदम् ।।१७६। ।

नातिदूरं ततो२७६ गत्वा भूयो देवः पितामहम् ।

निवर्त्तेत्यब्रवीद्२७७ व्यास गगनञ्च समाविशत् । ।१७७।।

तस्मिन् वियद्गते देवे ब्रह्मा प्राञ्जलिरुन्मुखः ।

प्रदक्षिणं समावृत्य प्रणम्य प्रययौ ततः । । १७८। ।

यस्मात्तत्र हरं तेन कुर्वता वै प्रदक्षिणम् ।

आवर्त्तः२७८ स्वशरीरस्य प्रकृतः२७९ पुण्यकर्मणा । । १७९। ।

तस्मात् स देशो विख्यातो ब्रह्मावर्त्तेति शोभनः ।

अश्वमेधफलं तत्र स्नातः प्राप्नोति मानवः ।। 8.32.१८० । ।

साधयित्वा चरुं चात्र भोजयित्वा तथा द्विजान् ।

प्राणान् परित्यज्य ततो२८० ब्रह्मलोकमवाप्नुयात् ।।१८१ ।।

ततोभ्येत्य सुरैस्सार्धं ब्रह्मा विष्णुपुरस्सरैः२८१ ।

भद्रेश्वरे पशुपतेर्महिमानमथाकरोत् ।। १८२।।

स लिङ्गः तत्र संस्थाप्य पूजां कृत्वातिभास्वराम् ।

भद्रकर्णह्रदे स्नात्वा सह देवैर्दिवं ययौ । । १८३ । ।

तं प्रयान्तं२८२ तदा दक्षो ब्रह्माणमिदमूचिवान् ।

कर्तव्यं किं मया देव मम तद् ब्रूहि पृच्छतः ।।१८४।।

पितामह उवाच

प्रसादय महेष्वासं२८३ शर्वमुग्रं कपर्दिनम् ।

ततो यज्ञसमाप्तिं च लोकांश्च प्राप्स्यसे क्षयान्२८४ । ।१८५।।

सनत्कुमार उवाच

स एवमुक्तो देवेन ब्रह्मणा व्यास तत्त्वतः ।

लिंगं कनखले कृत्वा रुद्रमभ्यर्चयत् तदा ।।१८६। ।

- - - -- - -- - ---- - -- -- -- - -- - --

२७५ निवर्तनान्यष्टौ - क, । २७६ नातिदूरे ततो - ख. । २७७ निवर्तस्वाब्रवीद् - घ. । २७८ आवृत्य - ख, आवर्त्ततां - घ. । २७९ प्रकृते. - घ., प्रकृतिः - ख. । २८० परित्यजेद्यस्तु - घ, तथा - क. । २८१... सुरेश्वरः - घ. । २८२ प्रयातं - क. घ. । २८३ महेशानं - ख । २८४... श्चावाप्भ्यसेव्ययान् - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

तस्य संवत्सरशते पूर्णे दिव्ये प्रजापतेः ।

महादेवोद्रिजां प्राह प्रहसन् गिरिमूर्धनि । । १ ८७। ।

प्राचेतसात्मजो देवि स्थितस्तपसि संयतः ।

पश्यैनं मद्गतेनेशे चेतसा समवस्थितम् ।। १८८ ।।

ततो दृष्ट्वा महादेवी वायुभक्षमवस्थितम्२८५ ।

लिङ्गेपरमया भक्त्या पूजयन्तं महेश्वरम् । ।१ ८९। ।

उवाच ह्रषिता देवी देवं सर्वसुरार्चितम् ।

कृताञ्जलिपुटा व्यास२८६ सर्वदेवपतिं पतिम् ।।8.32.१ ९० । ।

देव्युवाच

क्षुद्रोयं२८७ दुष्टचेताश्च स्तब्धो मानी२८८ च दुर्मतिः ।

विष्ट्या त्वया२८९ विनिकृत२९० स्त्वामेव शरणं गतः । । १९१।।

तदस्य२९१ दुष्टभावस्य२९२ प्रपन्नस्य२९३ महेश्वर ।

क्षन्तुमर्हसि भक्तस्य त्वामस्यार्थे प्रसादये२९४ ।। १ ९२।।

देवदेव उवाच

त्वमेव देवि यच्छास्मै वरानिष्टान् यथासुखम् ।

अनुज्ञाता मया सुभ्रु त्वमेवास्य वरं दिश । । १९३ । ।

सनत्कुमार उवाच

ततस्तौ देवदेवेशौ सङ्गतौ स्वगणैर्वृतौ ।

ऊचतुः पश्य दक्षावां तुष्टौ दिव्येन चक्षुषा ।। १९४। ।

प्राचेतस महाभाग वरदौ स्वो२९५ महातपः ।

- - - - - - - - - - - - - - - - - || १९५ ||

शापशान्त्यर्थमेत्२९६ ते वरं दद्मि तवेप्सितम् ।

यस्ते यज्ञो गणैर्ध्वस्तः फलं तस्य त्वमाप्नुहि ।।१ ९६। ।

- - - -- - -- - ---- - -- -- -- - -- - --

२८५ समास्थितम् - ख. । २८६ देवी - ख । २८७ क्षत्रोयं - घ । २८८ मौनी - घ. । २८९ चायं - घ. । २९० विनिहित - घ- । २९१ ततस्य - घ. । २९२ त्वं स्वभावस्य - घ. । २९३ प्रसन्नस्य - ख. । २९४ शरणं देहि देवेश नान्यव्रतरतस्य च - घ. । २९५ वरदो -ख., वरदोस्मि - क । २९६ तपः शान्त्यर्थमेतत् - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

कामरूपधरः श्रीमान् गणेशश्च भवस्व मे ।

अक्षयश्चामरश्चैव२९७ दुःखशोकविवर्जितः ।

भविष्यसि महाभाग मम चैव समीपगः ।।१९७।।

देव्युवाच

शृणुष्व२९८ भूयः किं चान्यत् प्रयच्छतु महेश्वरः ।

सुदुष्करमपि ह्येष वरं दद्यात् त्वयार्थितः२९९ ।।१९८।।

सनत्कुमार उवाच

एवमुक्तस्तदा दक्षो हिमवत्सुतया तया ।

प्राञ्जलिः प्रणतो३०० भूत्वा इदमाह महामतिः३०१ ।।१९९।।

दक्ष उवाच

यो देवस्त्रिभुवनजन्मनाशकर्ता यं मूढा न विदुरनुक्तमेकमेव३०२ ।

भक्तानामशुभहरं पिनाकपाणिं तं देवं शरणगता वयं सभार्म् ।।8.32.२० ०।।

योज्ञाना३०३दसुरतयातिमानमोहान्नास्माभिस्सह खलु पूजितोद्रिपुत्र्या ।

यश्शापं मम रुषितो ददौ सुरेशस्तं देवं शरणगता वयं सभार्यम् ।।२० १ ।।

यस्स्रष्टा सुरगणयक्षराक्षसानां३०४ सिद्धानां दितिसुतदानवेन्द्रनृणाम् ।

भूतानां पशुमृगपक्षिपत्तगानां तं देवं शरणगता वयं सभार्यम् ।।२०२। ।

यः कोधान्महदसृजद् गणेश्वरेशं३०५ सिंहेन्द्रं हरिममितप्रभावरूपम् ।

पत्नीं चाप्यमितगुणप्रभावयुक्तां तं देवं शरणगता वयं सभार्यम् ।।२०३।।

यो देवान्३०६ सहवरुणान् सवित्तगोपान् सब्रह्मान् सशतमखान्३०७ सविष्णुवायून् । इन्द्राग्न्यान् समुनिमहायुधान् विजिग्ये तं देवं शरणगता वयं सभार्यम् ।।२०४।। यत्किञ्चित्त्वयि३०८ कलुषं कृतं च दुष्टं ह्यज्ञानादपि च हि रागदोषमोहात् ।

तत्सर्वं मम३०९ सह३१० भार्ययाद्य शर्वो३११ विश्वात्मा क्षमतु महानुभावभावात्३१२ ।।२०५।।

सनत्कुमार उवाच

तत एवं स देवेशं स्तुत्वा सास्राविलेक्षणः ।

प्रसार्य बाहू सर्वेण शरीरेणापतद् भुवि । ।२०६।।

- - - - -- - -- - ---- - -- -- -- - -- - --

२९७.. श्चाव्ययश्चैव - ख. घ. । २९८ वृणुष्व - ख. । २९९ तवार्थितः - ख., सदाशिवः - घ. । ३०. प्रयतो -घ. । ३०१ महाद्युतिः - क, ख. । ३०२..? र्व्यक्तमेकमेव - घ. । ३०३ अज्ञाना - क. । ३०४ नागानां - ख. । ३०५... श - क. । ३०६ देवानां - ख. । ३०७ सशतक्रतून् - क., सकुलिशपतीन् - ख. । ३०८... न्मयि - क. । ३०९ सह क. ख. । ३१० मम - क ख. । ३११ सर्वो - क. । ३१२... युक्तः - ख. टि. ।

- - - - -- - -- - ---- - -- -- -- - -- - --

तं प्रपन्नं तदा देवो दक्षं सास्राविलेक्षणम् ।

देव्या सह३१३ महाभाग३१४ स्वयमुत्थापयद् बली ।।२ ०७।।

तस्याश्रूण्यपतन्भूमौ बिन्दुभूतानि तत्र वै ।

तानि संहत्य३१५ विप्रेन्द्र नदी तु समपद्यत ।। २ ०८। ।

तामुवाच ततो देवो३१६ नदीं वै पुण्यलक्षणाम् ।

अर्जुनादश्रुबिन्दोस्त्वं३१७ यस्माद् देवि३१८ विनिःसृता ।।२ ०९।।

तस्मात् ख्याता भवित्री त्वमर्जुना नामतः शुभा ।

पर्वपर्व समासाद्य वहिष्यसि३१९ महायशे३२० । । 8.32.२१० । ।

अश्वमेधफलं चापि त्वयि स्नातो ह्यवाप्स्यति ।

मृतश्च तव तीरेस्मिन् नियमेनेतरेण वा । ।२ ११ । ।

न पुनर्जन्म मानुष्ये दुर्गतिञ्चोपलप्स्यते ।

त्रिरात्रोपोषितो यश्च चरुं कृत्वा निवेद्य च ।। २१२ । ।

ब्राह्मणं भोजयेत् स्नातस्त्वयि सोपि गमिष्यति ।

गवां लोकं महातेजा न च तस्मात् पतिष्यति३२१ । ।२१ ३ । ।

सनत्कुमार उवाच

एवं स सृष्ट्वा सरितं कृत्वा चैवाप्यनुग्रहम् ।

तमाश्वास्य३२२ सुरेशस्तु३२३ दक्षं प्राह नृपं तदा । ।२१४।।

देवदेव उवाच

गतं तस्माद् भयं तेस्तु गणेशो मे भव प्रियः ।

ब्रूहि किन्ते पुनस्साधो ददानि३२४ वरमीप्सितम्३२५ । ।२ १५ । ।

सनत्कुमार उवाच

अथ दक्षस्तदोवाच प्रणम्य शुभया गिरा ।

भूयो भूयस्समाश्वस्य३२६ निरीक्ष्य च पुनः पुनः । ।२ १ ६। ।

- - - -- - -- - ---- - -- -- -- - -- - --

३१३ सह देव्या - घ. । ३१४ महाभागं - घ । ३१५ संप्रति - क ख. । ३१६ महादेवो - क. घ. । ३१७... च्चाश्रुबिन्दोस्त्व - ख. । ३१८ देव - क घ. । ३१९ भविष्यसि - घ. । ३२० महायशाः - घ. । ३२१ च्यविष्यति - ख. । ३२२ तदाश्वास्य - घ. । ३२३ सुरेशानो - घ- । ३२४ ददामि - घ. । ३२५. मुत्तमम् - ख. । ३२६ भूयः प्रणम्य निश्वस्य - ख,... श्वास्य - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

दक्ष उवाच

यदि तुष्टोसि मे देव भवत्वेतद् तवाव्यय३२७ ।

स्थानं पवित्रं पुण्यं च३२८ वर एषोस्तु मे शिव ।।२१७।।

देवदेव उवाच

एते च मुनिकन्ये द्वे तप आस्थाय दुष्करम् ।

कणैस्संवत्सरे पूर्ण्णे खलेन च यतोशनम् । ।२१८ ।।

कृतवत्यौ महाभागे त्वं च दक्ष यतः स्थितः ।

इदं कनखलं तस्मान्मम स्थानं भविष्यति ।। २१९ ।।

तीर्थञ्चैव महत्पुण्यं गङ्गासागरसन्निभम्३२९ ।

नात्र पापा न च शठा नास्तिका न च मानिनः । ।8.32.२२ ० ।।

लप्स्यन्ते वै सदा गन्तुं न च वस्तुं कथंचन ।

मृतोत्र न पुनर्जन्म लप्स्यते मम तेजसा । ।२२ १ । ।

अत्राभिगम्य स्नात्वा च चरुं कृत्वा तथैव च ।

सर्वपापविमुक्तात्मा३३० शक्रलोके महीयते ।।२२२।।

ततो गणपतिं तत्र हरिभद्रमयोजयत् ।

कालीञ्चास्मै ददौ प्रीत्या३३१ भार्यां सर्वगुणोदिताम् । ।२२३ ।।

वराँश्च .विपुलान् दिव्यान् द्वीपञ्चापि घृतोदकम् ।

बाहुजेभ्यश्च सुबहून् गणेभ्यः प्रददौ वरान् ।।२२४।।

सनत्कुमार उवाच

एवं स दक्षयज्ञो वै विध्वस्तो व्यास शम्भुना ।

यज्ञस्य च शिरश्छिन्नं यथैतत् कथितं तव । ।२२ ५।।

व्यास उवाच

सा देवीमुखजा घोरा दिव्या३३२ देव भयंकरी ।

क्व वा गता कथं वापि ह्येतदिच्छामि वेदितुम् ।।२२६।।

- - - -- - -- - ---- - -- -- -- - -- - --

३२७ तदाव्ययम् - घ. । ३२८ पुण्यं पवित्रं च - क घ । ३२९ संमितं - ख. । ३३० . विनिर्मुक्तः - ख. । ३३१ प्रीतो (त्यै) - ख । ३३२ दिव्या घोरा - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

स्तुता यदा३३३ भगवती प्रणतै३३४ स्सुरसत्तमैः ।

तदास्य साम्बिका प्राह ब्रूहि किङ्करवाण्यहम् । ।२२७।।

ततो ब्रह्मा महादेवीं प्रणम्य बहुमानतः ।

उवाच दुहितृत्वे मे३३५ भवत्वेषा सुरेश्वरि । ।२२८।।

सनत्कुमार उवाच

एवमस्त्वित्युमा प्रोच्य३३६ तां देवीं प्रददौ सुताम् ।

मृत्युस्त्वमिति३३७ सोप्युक्त्वा३३८ घोरे कर्मण्ययोजयत् ।।२२९।।

सर्वप्राणभृतां३३९ देवीम्३४० प्राणापहरणे शुभाम्३४१ ।

सापि तत्कार्यकरणे नियुक्ता ब्रह्मणा स्वयम् ।

ऊर्ध्वबाहुः३४२ सदेवेशा३४३ सदोद्युक्ता३४४ त्वया मया ।।8.32.२३ ० ।।

य इदं३४५ दक्षयज्ञस्य विध्वंसनमनुत्तमम् ।

भद्रेश्वरप्रतिष्ठाञ्च दक्षानुग्रहमेव च । ।२३ १ ।।

पठेद् वा३४६ शृणुयाद्वापि श्रावयीत द्विजानपि ।

स सर्वपापविर्मुक्तः३४७ स्वर्गलोके महीयते । ।२३२। ।

भगनयननिपातं३४८ दक्षयज्ञे दवाग्निं३४९

मदनपुरहुताशं चन्द्रलेखोज्ज्वलाङ्गम् ।

सुरगुरुमखकालं३५० सप्तलोकाधिपालं

शरणमुपगतोहं शङ्करं शर्महेतोः ।।२३ ३ । ।

इति स्कन्दपुराणे दक्षयज्ञप्रमथने द्वात्रिंशोध्यायः

- - - -- - -- - ---- - -- -- -- - -- - --

३३३ हि सा - ख. । ३३४ प्रणम्य - ख. । ३३५ मे दुहितृत्वे - ख । ३३६... ति प्रोवाच्य क,. ख. । ३३७... स्त्वमसि - ख. । ३३८ साप्युक्त्वा - क. ख. । ३३९ प्राणभृता - घ. । ३४० देवी - घ. । ३४१ शुभा - घ. । ३४२ उद्ववाह - क., उद्वाहस्तु - ख., उद्वाहः क्रियतां काल त्वयास्या दुहितुर्मम - घ. । ३४३ स देवेशो - ख. । ३४४ सद्योक्ता - ख. । ३४५ इमं - क. । ३४६ पठेत - क. । ३४७ सर्वपापविनिर्मुक्तः - ख. । ३४८ निपाती - क । ३४९ दक्षयज्ञान्तकर्ता - ख. । ३५० मुखकालं - क., सुखकालं - ख. । आदितः प्रभृति सर्वैकत्वेन श्लोकसंख्या १५०४ ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

यथा तु वृषभो देवमवहन्मुनिपुङ्गव ।

तत्तेहं१ संप्रवक्ष्यामि नमस्कृत्य२ वृषध्वजम् । । १ । ।

पूर्वमेव महासत्वो धर्मो३ यज्ञ४ सहायवान् ।

ततापं विपुलं न्यासतपः परमदुश्चरम् ।। २ ।।

हिमवन्तं गिरिं प्राप्य वाय्वाहारौ बभूवतुः ।

वर्षाणान्तु सहस्राणि दश द्वादश चैव तौ५ ।। ३। ।

मानुषाणि ततो भूयः शाकाहारौ बभूवतुः ।

ततोचिरात्६ तयोर्देवो७ गणैस्सह महाद्युतिः । ।४। ।

सवैस्समानरूपैस्तैर्दर्शनं प्रददौ हरः ।

ताँस्तौ महेश्वरान् दृष्टवा बहून् वै सदृशप्रभान् । ।५।।

परस्परममन्येतां कोन्वेषामीश्वरो भवेत् ।

तौ तदा वीक्ष्य संमन्त्र्य स्मृत्वा चैव पुनः पुनः ।।६ ।।

मध्ये महेश्वरं तेषां मेनाते तेजसां निधिम् ।

तौ तं मध्ये भवं८ देवं प्रणम्य बहुमानतः ।

शिरसोरञ्जली९ कृत्वा तुष्टुवाते१० मितौजसौ ।।७। ।

धर्मयज्ञौ ऊचतुः

नमस्त्रैलोक्यनाथाय दिग्वासायामृतात्मते ।

चतुष्पथनिवासाय चतुष्पथरताय च११ । ।८ । ।

चतुर्व्यूहाय देवाय त्रिनेत्राय१२ भवाय१३ च ।

चतुर्मुखाय शुद्धाय जालान्तर१४ विचारिणे१५ ।।९।।

इन्द्रानुग्रहकर्त्रे च१६ ब्रह्मानुग्रहकारिणे ।

ऊर्ध्वलिङ्गाय देवाय१७ मदनायामदाय च१८ ।।8.33.१ ० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१ ततोहं - ख. । २... त्वा - क. ख. । ३ धीमान - घ । ४ यज्ञः - क, यज्ञसरवा - घ. । ५ हि - क. घ., तु - ख. । ६ ततश्चि... - क., ततश्च भगवान् - घ । ७ देवीं - क. । ८ -भगवान् - ख. । ९. .. लिं - ख. । १० तुष्टा.. - ख. । ११. रथाय - क. । १२ त्रिनेत्रिणए - क. । १३ तताप - क । १४ जलान्तर - क. ख. । १५ शरीरिणे - ख. । १६ चन्द्राद्रानुग्रहकर्त्रे च - घ । १ । देवदेवाय - घ । १८ मदनाय मदाय - क , चैव हि - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

नमो हिरण्यवर्णाय सूर्याक्षाय तथैव च ।

नमः पवित्रकेशाय दीर्घजिह्वाय चैव हि ।। ११ ।।

नमस्ते नैकपादाय एकाक्षाय नमो नमः ।

नमःसहस्रघण्टाय सहस्राक्षाय वै नमः ।। १२ ।।

नमः पिनाकिने चैव ध्वजिने च नमो नमः ।

नमः सहस्रशीर्षाय संवर्त्ताय नमो नमः ।। १३ ।।

नमः स्तव्याय वै नित्यं शत्रुघ्नाय नमो नमः ।

नमो भवाय भव्याय भावनाय नमो नमः ।।१४।।

नमो वराय वै नित्यं वरदाय तथैव च ।

गोकर्णाय नमो नित्यमैश्वर्यपतये नमः ।।१ ५।।

नमोस्तु विष्वक्सेनाय प्रभासाय नमो नमः ६ ।

नमोस्तु तेन्नदायैव२० प्राणदाय२१ नमोस्तु ते ।। १ ६।।

नमः प्रवर्तकायैव२२ पद्ममालाय वै नमः ।

नमो महारथायैव२३ भैरवाय नमो नमः ।। १७।।

नमश्चतुर्मुखायैव महादेवाय वै नमः ।

नमोस्तु ब्रह्मणे चैव ध्रुवायैव चलाय च ।। १८ ।।

नमोस्तु नारीरूपाय सुभगाय नमो नमः ।

मध्यमाय२४ नमस्तेस्तु नमस्ते सर्वतस्तथा ।। १ ९।।

नमोनुमन्ता३६ मन्ता त्वं सर्वभूतप्रवर्तक२६ ।

आवयोरीप्सितान्२७ कामान् विधत्स्व भुवनेश्वर ।।8.33.२ ० ।।

सनत्कुमार उवाच

योनेन स्तौति वै नित्यं नियमेन समन्वितः ।

सर्वकामै२८ स्स२९ सम्पन्नो यथेष्टां गतिमाप्नुयात् ।।२१ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१९ नमस्तथा - क. । २० नदायैव - ख,... न्नदायै - च क । २१ प्रणदाय - ख. । २२ प्रमर्तकायैव - ख. । २३ महारवायैव - ख. । २४ पध्र्यमाय - क । २५ नमोस्तुमन्ता - ख. । रे ६ प्रवर्तकम् - क., प्रवर्तकः - ख. । २७.. - रीप्सितं - क. ख. । इतः परं - ' 'सर्वलोकपतिः श्रेष्ठ ददासि भक्तये सदा' ' इति पाठोधिकः.. ख. पुस्तके । २८ सर्वैःकामै' - ख. । २९... श्च - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

अथ देवस्तु तान् सर्वाननयत्प्रकृतिं गणान् ।

नन्दिनं चैव देवीञ्च स्वयं चात्मानमप्युत३० ।

उवाच चैतौ तुष्टोस्मि गृह्यतामीप्सितो३१ वरः३२ ।।२२।।

देवौ ऊचतुः

यदि तुष्टोसि देवेश यदि देयो वरश्च नौः३३

जात्यन्तरगतौ नित्यं वहेव३४ त्वां सुरेश्वर । ।२३।।

इदञ्च गुह्यं स्थानं नौ३५ तपसातीव भावितम् ।

तव चैव प्रसादेन भवेत् पुण्यं सुरेश्वर । ।२४।।

देवदेव उवाच

इदं मम परं३६ गुह्यं भवितृ स्थानमुत्तमम् ।

पञ्चेषुक्षेपमात्रं वै मृतोत्र गणपो भवेत् ।।२५।।

यस्मान्मध्ये भवोस्मीति युवयोरर्चितः स्थितः ।

तस्मान्नाम्ना तु विख्यातमिदं भवतु मध्यमम् ।।२६।।

युवां जात्यन्तरं प्राप्य पूजितौ बलवत्तरौ ।

वाहनत्वं ममासाद्य३७ लोकान् सन्धारयिष्यथः३८ । ।२७।।

सनत्कुमार उवाच

तत एवं तदा देवस्तावुक्त्वा देवसत्तमौ ।

जगाम गणपैस्सार्धं मन्दरं हेमकन्दरम्३९ । ।२८।।

गतेथ देवे सगणे कालेन बहुना ततः ।

मन्वन्तरेस्मिन्४० सुरभी रुद्रमाराधयच्छुभा । ।२९।।

तया वर्षसहस्रेण तपसा तोषितो भवः ।

जगाम दर्शनं व्यास वरदोस्मीति चाब्रवीत्४१ । ।8.33.३ ० । ।

- - - -- - -- - ---- - -- -- -- - -- - --

३०.. मच्युत - क., मच्युतः - ख । ३१... तं - क. । ३२ वरम् - क. । ३३ नः - ख. । ३४ वहेयं - क., वहेम - ख. । ३५ ते - ख. । ३६ वै परमं - घ. । ३७ समासाद्य - क. घ. । ३८ वै विचरिष्यथः - घ. । ३९ देवकन्दरम् - घ. । ० मन्वन्तरेण - घ. । ४१ र.. त्यथाब्रवीत् - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सा वव्रे पुत्रमतुलं सर्वप्राणभृतां वरम् ।

पुत्राँश्चान्यान्महासत्वान् यज्ञियान्४२ सुरसत्तमान् ।।३ १ ।।

तथा४३ दुहितृ४४ श्चान्याश्च जगद्धात्रीः४५ सुशोभनाः ।

ततः सर्वं ददौ देवो४६ ह्यदृश्यत्वं जगाम च ।।३ २ ।।

तस्मिन् गते महादेवे सुरभी दीप्ततेजसम् ।

सर्वभूताग्रजं पुत्रं४७ वृषभं समसूयत ।।३ ३ । ।

एकादश तथा रुद्रान् वृषभस्यानुजान् शुभान्४८ ।

सप्त कन्याश्च ता गा४९ वै५० जगद्धात्री५१ प्रसूयत । ।३४।।

वृषभः स तु संगत्य५२ नित्यं प्रातः५३ कृताह्निकः ।

पितरं मातरं चैव तथैव च पितामहम्५४ । ।३ ५। ।

अभिवाद्यायते५५ शुभ्रश्चतुर्दिग्गजसेवितम्५६ ।

वनं सिद्धगणावासं५७ यत्र सा ह्यमृतोद्भवा । । ३६।।

दूर्वामृतरसा५८ दिव्या छिन्न५९दग्धप्रसेहणी६० ।

स कद्राचिद्वने तस्मिँश्चरन् तृप्तस्तृडर्द्दितः६१ ।।३७।।

जगाम सागरं पातुं वृषराट् सुरभीसुतः ।

सोवगाह्य महा६२ ग्रासः सागरस्य तदा महत् । ।३८। ।

मध्यं व्यादाय वदनं सरुषं सतिमिंगिलम् ।

अपिबत् सागरजलं न च तृप्तिमुपागमत् ।।३९।।

तस्मिन् पिबति६३ दैत्येन्द्राः सन्नद्धाः६४ सासिमार्गणाः६५ ।

सधनुष्पाणयस्सर्वे६६ सहस्राणि चतुर्दश । ।8.33.४० ।।

निष्पेतुश्शक्रसंकाशा यम६७कालानलोपमाः ।

मयपुत्रा६८ महासत्वा वृषभं प्रति वेगिताः ।।४१ ।

- - - -- - -- - ---- - -- -- -- - -- - --

४२ याज्ञियान् - क. ख., याज्ञिकान् - क टि., श्रेष्ठाँश्च - घ. । ४३ तदा - क. । २४ दुहितर - क. ख. घ. । ४५ जगद्धात्र्यः - - क. ख. घ. । ४६ तत्सर्वप्रदो - घ । ४७ पुण्यं - घ. । ४८ एकादशैते रुद्राणां व्यास तस्यां प्रजां शुभाम् - ख., रुद्रानेकादशान्यां - घ । 8९ सुभगा - घ. । ५०..? वो - क. ख. । ५१... त्र्यः - क. ख. । ५२ संगम्य - घ. । ५३ प्रातर्नित्यं - घ. । ५४. महान् - क । ५५ अभिगम्य - घ., . द्य ययौ - क. ख., ययौ - घ. ।

५६- शुभ्रञ्चतुर्दिग्गजसेवितम् - घ. । ५७... कीर्णं - ख. । ५८ पूर्वामृतरसा - क. । ५९ भिन्न.. - घ. । ६० प्ररौहिणी - क. ख. घ. । ६१ चरन्तं तृषयार्दितः - ख. । ६२ महद् - ख. । ६३ पीयति - क. ख. । ६४ सुसन्नद्धाः - घ. । ६५ सिद्धिमार्गणाः घ. । ६६.. .सागरस्था महासत्वाः - घ. । ६७ महा - घ. । ६८ यमपुत्राः - क. ख. घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

तांस्तथा रुषितान्दैत्यान् सासिमुद्गरतोमरान्६९ ।

सहैव सागराम्भोभिरपिबत् स महाबलः । ।४२। ।

तान् पीतान्७० पीयमानाँश्च दृष्टवा ह्यर्णववासिनः७१ ।

वित्रेसुः सहसा सर्वे विनेदुश्चापि दुःखिताः । ।४३ ।।

ततस्समुद्रो भगवान् पीयमानः सुदुःखितः ।

वडवामुखमागत्य७२ संवर्तं शरणं ययौ ।।।४४। ।

स चानलः सुसंरब्धो दत्त्वा तस्य७३ महाबलः ।

अभयं वृषमागत्य प्रोवाचेदं कृताञ्जलिः । ।४५ ।।

संवर्त्त उवाच

सर्वभूतशरण्योयं दैत्यानाञ्चालयः शुभः ।

नैनं हीनं भवानद्भिः कर्तुमर्हति वीर्यवान् ।।४६।।

वृषभ उवाच

न मे मतिरभूदग्ने निःशेषं कर्तुमम्बुधिम् ।

भवान् त्वस्य७४ ये यतो मन्ता७५ न करिष्येहं ततोद्यवै ।।४७।।

यस्ते दर्पश्च गर्वश्च यद्बलं यच्च पौरुषम् ।

तन्मे दर्शय हव्येश पिबाम्येनं तवाग्रतः ।।४८।।

सनत्कुमार उवाच

एवमुक्त्वा वृषेन्द्रस्तु वडवामुखवासिनम् ।

संरम्भात्७६ सागरं पातुं निःशेषमुपचक्रमे ।।४९ ।।

अनल उवाच

न मे त्वं प्रतिमः शक्तौ७७ न च वैरं त्वया हि मे७८ ।

यत्र७९ कृत्येहमाबद्ध८०स्तत्करिष्ये तथा ह्यहम् ।।8.33.५ ०। ।

न त्वं पास्यसि८१ रक्षिष्ये सागरं मम सन्निधौ ।

अहं त्वां वारयिष्यामि सुरभीसुत कत्थन ।।५१ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

६९... वानरान् - घ. । ७० सर्वान्- ख। ७१ नाम्- क. । ७२... मासाद्य - ख. । ७३ तस्मै - क. ख. । ७४ तस्य - क.,.. श्चास्य - घ. । ७५ सक्ता - ख. । ७६ संरब्धः - क. ख. । ७७ शक्त - क., शक्र - ख. घ. । ७८ विद्यते हि ममाद्यवै - ख. । ७९ यत्तु - ख. । ८० कृत्यं समारब्ध - क., कर्तुँ समारब्धो - ख. । ८१ नहि यास्यसि - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच ततस्तं भगवान् वह्निरुपप्लुत्य८२ महाद्युतिः ।

गले जग्राह बलवान् न चचाल८३ ततः स च ।।५२।।

यत् पीतं छर्दयामास तत्तोयं दानवैर्विना ।

औदरेणाग्निना तस्य८४ ते दग्धाः८५ सर्व एव हि ।।५३ ।।

सनत्कुमार उवाच

ततः संवर्तको वह्निर्निगृहीतं ककुद्मिनम् ।

विसृज्योवाच गच्छेति न त्वां८६ हन्मि वृषेश्वर८७।। ५४।।

शक्तस्तवाहं दहने ह्यशक्तो मे भवान् वधे ।

तथाप्यहं८८ न गर्जामि गर्जितैः किं बलीयसाम्८९ ।।५५ ।।

सनत्कुमार उवाच

विसृज्य वृषभं वह्निराशु यातः स्वमालयम् ।

वृषभोपि जगामेव९० दुःखशोकाभिसंवृतः९१ ।। ५६।।

सोवमानेन९२ तेजस्वी महोक्षः९३ सुरभीसुतः ।

दुःखेन चाभिसन्नात्मा९४ जगामैवं विचिन्तयन् ।।५७।।

अबलोहं बली वह्निर्येनाहं निकृतस्तथा९५ ।

जीवितेशेन (?)९६ भूत्वा च नाहं प्राणैर्वियोजितः९७ ।। ५८।।

मोघं मम बल सर्वं तथा चैवाभिगर्जितम्९८ ।

शरज्जलधरस्येव९९ विहीनस्याद्भिरम्बरे ।।५९।।

अद्य प्राणानहं त्यक्ष्ये नियतो१०० व्रतमास्थितः ।

यथा न पुनरेवं मे मानभङ्गो भविष्यति ।।8.33.६० ।।

शत्रुणा१०१ निगृहीतस्य दुर्बलस्य दुरात्मनः१०२ ।

जीवितान्मरणं मन्ये विशिष्टं जीवितेन किम् ।।६१ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

८२... रूपसृत्य - क. ख. । ८३ नोच्चचाल - घ. । ८४ दग्धा - ख. । ८५ तस्य ते - ख. । ८६ ते - क. । ८७ वृषेश्वरः - ख.,... र - क. । ८८ ह्यहं - क । ८९ बलीयसा - क । ९० जगादैव - घ. । ९१ जगामैवन्दुःखशोकाभिसंवृतः - क । ९२ शोचमानेन - घ । ९३ महोक्षा - क. ख. । ९४ च विषण्णात्मा - क. । ९९ येनास्मि विकृतस्तथा - क. । ९६ शेष (?) । ९७.. तं - क. । ९८?.. तिगर्जितम् - ख. । ९९... स्यैव- क. ख. । १०० नियतं - ख.,... मं - घ. । १०१ शत्रूणां - क, शत्रुभिर्निगृहीतस्य - ख. । १०२ दुर्बलो बलवत्तरैः - ख., महात्मनः - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

स एवं चिन्तयन्नुक्षा वाचं शुश्राव खाच्छुभाम्१०३ ।

सौरभेय न भेतव्यं यद् ब्रवीमि कुरुष्व तत् ।।६२ ।।

रुद्रं सर्वसुरेशानं सर्वेभ्यो बलवत्तरम् ।

तं प्रपद्यस्व देवेशं ततो जेष्यसि पावकम् ।। ६३ ।।

स स्रष्टा सर्वभूतानां ब्रह्मादीनां न संशयः ।

स ते दुःखमिदं सर्वं व्यपनेष्यति भो वृष१०४ ।।६४।।

सनत्कुमार उवाच

एतच्छ्रुत्वा महातेजाः साध्यस्य१०५ सुमहात्मनः ।

हिमवन्तं गिरिं प्राप्य तताप विपुलं तपः ।। ६५।।

तस्य वर्षसहस्रेण तत्परस्य तदाशिषः१०६ ।

भगवान् सर्वभूतेशः साम्बः सगण ऊचिवान् । । ६६।।

देवदेव उवाच

सौरभेय महाभाग तुष्टोस्मि तव पुत्रक ।

इष्टान्१०७ ब्रूहि वरान्१०८ वत्स दास्ये तान् सुबहूनपि१०९ । ।६७।।

सनत्कुमार उवाच

ततस्स देवं संदृश्य साम्बं सगणमीश्वरम् ।

प्रणम्य शिरसा पादौ प्राञ्जलिस्सुसमाहितः । ।६८। ।

भूयो भूयो निरीक्ष्यैनं प्रणम्य च पुनः पुनः ।

उवाच तपसोक्षय्यमिच्छेयं वै जगत्पते । ।६९। ।

बलञ्चानुत्तमं देव योगैश्वर्यन्तथाक्षयम् ।
त्वदीयो वाहनश्चाहमग्निनैवं विमानितः । ।8.33.७० ।।
संवर्त्तकानलञ्चैव वडवामुखवासिनम् ।
द्रष्टुमिच्छामि देवेश निगृहीतं त्वयाव्यय११० ।।७१ । ।
- - - -- - -- - ---- - -- -- -- - -- - --
१०३ एतस्मिन्ननन्तरे प्राह साध्या सुमधुरं वचः - घ, यच्छुभं वचः - क. ख. । १०४ गोवृष - ख. । १०५ सोध्यस्य - ख. । १०६ शिवः - ख । १०७ इष्टं - घ । १०८ वरं - घ. । १०९... हं चानुकूलतः - घ., सुबहून्यपि - ख. । ११०... व्ययम् - घ. ।
- - - -- - -- - ---- - -- -- -- - -- - --
सनत्कुमार उवाच
एवमुक्तस्तु तान्दत्त्वा वरान् सत्यवतीसुत ।
वामं पार्श्वं१११ तथा मृज्य रुद्रमेकं ससर्ज ह । ।७२। ।
किरीटमालिनं त्र्यक्षं कुण्डलाङ्गदभूषणम्११२ ।
महोरस्कं कबचिनं धनुर्हस्तं महाबलम् ।
बद्धगोधाङ्गुलित्रं च खड्गदिव्यास्त्रधारिणम् ।।७३ । ।
तमाह रुद्रं११३ गच्छेति वडवामुखवासिनम् ।
संवर्त्तकानलं बद्ध्वा विस्फुरन्तमिहानय ।।७४।।
सनत्कुमार उवाच
वन्दित्वा चरणौ तस्य सोमस्य गणनायकः ।
जगाम सागरं वेगाद् ददर्श च हुताशनम् ।।७५।।
स युद्धं बलवत्११४ कृत्वा सुघोरं लोमहर्षणम् ।
संवर्त्तकानलं बद्ध्वा देवपार्श्व११५ मुपानयत्११६ ।।७६। ।
व्यास उवाच
कीदृक् तद्युद्धमभवत्११७ विट्पतेः पावकस्य च ।
एतदिच्छामि विज्ञातुं वद त्वं वदतां वर । ।७७। ।
सनत्कुमार उवाच
स गत्वा गणपः क्रुद्धः संवर्त्तकमथानलम् ।
उवाच क्रोधरक्ताक्षस्तदा वचनमर्थवत् । ।७८।।

गणप उवाच

स्वामी सर्वस्य जगतो देवश्चन्द्रार्धभूषणः ।

आज्ञापयति वह्ने त्वां११८ वृषमेनं११९प्रसादय१२० ।।७९। ।

प्रणातोस्मीति तं ब्रूहि वृषभं ससुहृज्जनः ।

निदेशे तिष्ठ चैवास्य यत् कर्तव्यं च तत्कुरु ।।8.33.८० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१११ वामपार्श्वं - ख. । ११२... भूषितं - ख. । ११३ रुद्रो - घ. ख (द्र?) । ११४ बलवान् - घ., महतः - ख, सुमहत् (?) । ११५ पार्श्वं 'देवस्य - ख. । ११६ तत्क्षणात् - ख.,... मिवानयत् - क.,... मथानयत् (?) । ११७ कीदृग युद्धं समभवत् - घ । ११८ त्वं - क. ख. । ११४३०.. मेवं - क. । ३२० प्रसाधय - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

एवमुक्तोनलः श्रुत्वा देवदेवस्य तद्वचः ।

उवाच नातिसंहृष्टस्त्विदं वचनमर्थवत् ।।८ १ । ।

अनल उवाच

नियोज्यो देवदेवस्य तस्यैवाहं सदानुगः१२१ ।

न च मां स नियुक्त्वेह योक्ष्यतेन्यत्र कर्हिचित् ।।८२ । ।

गच्छ मद्वचनाद् ब्रूहि भगवन्तं त्रिलोचनम्१२२ ।

यदि मां वक्ष्यति१२३ पुनः करिष्येहं ततस्तथा१२४ । ।८३ ।।

गणेश्वर उवाच

बालिशा वत ये प्राज्ञा बलज्ञानबहिष्कृताः ।

त एवमुक्ता१२५ गच्छन्ति यथा मां त्वं प्रभाषसे । ।८४। ।

सकृदाज्ञा बलवतां सकृत् प्रभवतामपि ।

दूतश्चापि स वै श्रेष्ठो यो भवेदर्थसाधकः१२६ । ।८५ ।।

सोहं बलवता तेन लोककर्त्रा पिनाकिना ।

दूतः सर्वार्थसिद्ध्यर्थं प्रहितो बलवानिह । ।८६।।

न चेद्वचो मे कर्तासि बद्ध्वा त्वाहन्ततोद्य वै ।

विस्फुरन्तं महा१२७ पाशैर्नेष्यामि द्युभृतोन्तिकम्१२८ ।।८७।।

सनत्कुमार उवाच

स एवमुक्तस्तेजस्वी क्रोधदीप्तानलेक्षणः१२९ ।

गणपं प्रति दुद्राव तिष्ठतिष्ठेति चाब्रवीत् ।।८८। ।

तमापतन्तं वेगेन पर्जन्यास्त्रेण सोस्त्रवित्१३० ।

ताडयामास बलवान् स१३१ प्रजज्वाल वेगवान्१३२ । ।८९। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१२१ सहानुगः - घ । १२२ तृलोचनम् - क. ख. । १२ - रक्षति - घ । १२४ शुभं तथा - घ । १२५ ... मुक्त्वा - ख. । १२६ भवेदर्धं (न्ध?) साधकः - क । १२७ मुहु. - ख. । १२८ न्र्नेष्ये स्त्वाहं हरान्तिक - ख., नेष्यमीन्दुभृतोन्तिकम् - घ । १२९. यतेक्षण - ख । १२० सोबली - क, सोप्रणः - ख । १३१ सः - क. । १३२ वेगशः - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

ज्वलन्तं२४४ तं तदाभ्यासमागतं क्रोधमूच्छितम् ।

अशन्यस्त्रेण महता स जघान स्तनान्तरे ।। 8.33.९० ।।

अभ्याहतस्ततोस्त्रेण वेगवानपि१३४ मूर्च्छितः ।

तस्थौ मुहूर्तं संविग्नो विधूमो दहनेश्वरः१३५ ।।९१ ।।

ततस्तं रुद्रपाशेन बबन्ध करयोस्तदा ।

विस्फुरन्तं महावह्निं१३६ गणपः क्रोधमूर्छितः । ।९ २। ।

तं बद्धं पाशवर्येण पतितं वीक्ष्य चैव हि ।

तस्य पुत्रसुहृद्वर्गा१३७ विविधायुधपाणयः । ।९३ । ।

दुद्रुवुर्गणपं क्रुद्धाः शतशोथ सहस्रशः ।

तानप्यसौ१३८ विनिर्जित्य गणपस्तं१३९ हुताशनम् । ।९४।।

उपनिन्ये हरायाशु पशुं मेध्यमिवाध्वरे ।

तमानीतं महादेवः संप्रेक्ष्यार्णवभोजनम् । । ६३५।।

उवाच वृषभं ब्रूहि किमस्य१४० क्रियतामिति ।

स तं कृपणमालक्ष्य महोक्षा१४१ दीनचेतसम् । ।९६ ।।

प्रणम्य शिरसा पादाविदमाह कृताञ्जलिः ।

भगवन् देवदेवेश१४२ सर्वलोकमहेश्वर१४३ ।।९७।।

दृष्टमेतत्तव विभो माहात्म्यं सदसस्पते१४४ ।

दृष्टोयं१४५ कृपणश्चापि१४६ ह्यबलश्च१४७ महाबल१४८ ।।९ ८। ।

विसृज्यतां सुरश्रेष्ठ हत एष न संशयः ।

पुत्रा ह्यस्य१४९ हताः सर्वे सुहृदश्चैव सर्वशः ।।९९।।

दीनस्यास्य न मे देव वध इष्टो विमुच्यताम् ।

एतद्वचो महेशो१५० वै वृषभस्याभिभाषितम् । ।8.33.१ ०० । ।

- - - -- - -- - ---- - -- -- -- - -- - --

१३३ प्रज्वलन्तं तदा - घ. । १३४ तेजवानपि - घ. । १३५ ज्वलनेश्वरः - ख । १३६ महानग्निं - ख. । १३७.. द् भ्राता - घ. । १३८ अनेकशो - घ. । १३९ गणस्तं स - ख । १४० किमद्य - ख । १४१ महोक्षो - ख. । १४२ देवतारिघ्न - घ. । १४३... महेश्वरं - क ख. । १४४ ते जगत्पते - ख. । १४५ दीनोयं - ख. घ । १४६. श्चैव - ख. । १४७ ह्यनलश्च - घ । १४८ महात्मनः - क. । १४९... स्तस्य - घ. । १५० महेष्वासो - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

श्रुत्वा तुष्टः प्रहस्यैनं दहनं व्यसृजत् तदा१५१ ।

रुद्रं तञ्च जराशोकजन्ममृत्युविर्जितम् ।। १०१ ।।

गणेश्वरपतिं कृत्वा द्वीपमस्मै ददत् प्रभुः ।

मनोरमणमित्येव१५२ नाम्ना ख्यातं महर्द्धिमत् ।। १ ०२।।

दिव्यं कामगमं व्यास भवनैरुपशोभितम् ।

जाम्बूनदमयैः शुभ्रैः सर्वकामसमन्वितैः ।।१ ०३ । ।

तस्मिन् काले तदा देवाः१५३ सर्वे ब्रह्मपुरस्सराः ।

देवदेवं समागम्य वाक्यमूचुर्यथार्थवत् ।। १ ०४। ।

भगवन् देवतारिघ्न वृषोयं देवसत्तम१५४ ।

त्वया ह्यध्यासितः१५५ पूर्वं नादेनापूरयद्बली ।।१ ० ५। ।

त्रैलोक्यमखिलं दर्पादस्वस्थं कृतवान् प्रभो ।

वेगेन च दिशः सर्वा विमानैः सह भूतप१५६ । ।१ ० ६। ।

भ्रामयन् त्रिदशान्१५७ नादाद् गगने१५८ संचचार ह१५९ ।

अधुना वरलब्धश्च अस्मान्१६० भूयस्तथैव च ।।१ ०७। ।

यथा न कुरुते देव उपायः स१६१ विधीयताम् ।

त्वन्नो गतिश्च देवेश शरणं चैव भूतप ।

सदा भयाभिभूतानां त्वं त्राता१६२ सर्वशः१६३ प्रभो । । १०८ ।।

देवदेव उवाच

यथा भयं न भवति यथा स्वस्थाश्च१६४ नित्यशः ।

लोका भवन्ति सर्वे वै१६५ तथाहं१६६ विदधामि वः१६७। । १०९ ।।

सनत्कुमार उवाच

ततस्स भगवान् व्यास देवदेवो महाद्युतिः ।

असृजद् वरदानाच्च१६८ गणेशं चारुकुण्डलम् । । 8.33.११० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१५१ तथा - ख. । १५२ मालाचमनमित्येव - घ, मरणमित्येव - क. । २५३ व्यास - घ । १५४ देवसत्तमः - ख । १५५ नासादितः - घ । १५६ भूतयः - ख. । १५७ द्विवश ( ।) - क. ख. । १५८ गमने - क. । १५९ यं चचारह - ख. । १६० कृत्स्नान् - घ. । १६१ स - घ. । १६२ रक्षिता - घ., भ्राता - क । १६३ सर्वतः - घ. । १६४ सुस्थाश्च - घ. । १६५... पि - (?) । १६६ हि - क । १६७ च - क., तथा करिष्ये वृषभं गच्छ त्वं च यथासुखम् - घ. । १६८ वरदानेन - घ.,... नञ्च - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

आकर्णाद् दारितास्यं च महाकायं१६९ महाबलम् ।

महापरिघबाहुं च वज्रसंहननं दृढम् । ।१ ११ । ।

महादंष्ट्रं महोरस्कं महाखड्गधनुर्धरम ।

दीप्ताङ्गारकनेत्रं च त्रिनेत्रं कवचोज्ज्वलम्१७० ।। ११२ । ।

बिभ्रत्तं चाक्षयेत्यर्थमिषुधी चर्मवाससम्१७१ ।

शरमेकेन हस्तेन धनुरेकेन बिभ्रतम्१७२ । ।१ १३ । ।

ग्रहनक्षत्रचित्रेण तडित्सूर्यावभासिता१७३ ।

उत्तरीयेण वियता भास्वन्तं मेरुकूटवत् । । १ १४। ।

प्रभाकरेति सुव्यक्तमामन्त्र्य भगवानिदम् ।

अब्रवीत्सर्वदेवानां समक्षं तं१७४ प्रभाकरम् । ।१ १५ । ।

प्रभाकर मयाज्ञप्त१७५ स्त्वं देवानां गुणाकर१७६ ।

परमैश्वर्यसंयुक्तो वृषवेगं निवारय ।

निवासार्थञ्च दिव्यन्तमिन्द्रद्वीपं ददामि ते । । ११ ६। ।

ज्योत्स्ना भवित्री पत्नी ते तथा चैवाजरामरः१७७ ।

भविष्यसि मयायज्ञप्तो१७८ महागणपतिर्मम । । ११ ७। ।

सनत्कुमार उवाच

ततस्तं देवतास्सर्वाः प्रणम्य ब्रह्मणा सह ।

जग्मुः स्वानि क्षयानि स्म देवोपि वृषवान् वभौ१७९ ।। ११ ८।।

मुखतोर्द्धं१८० वृषो धर्मो जघनं यज्ञ उच्यते ।

चक्षुषी चन्द्रसूयौ च१८१ ब्रह्मा मूर्धानमाश्रितः ।। ११ ९।।

जिह्वायां तस्य वरुणो वायुरन्तश्चरः स्वयम् ।

पादान् विष्णुर्भगश्चैव१८२ पूषा शक्रश्च संस्थिताः१८३ ।। 8.33.१२० ।।

जंघाः शेषास्तथा दित्या ऊरूश्चैव१८४ समाश्रिताः ।

रुद्राः कर्णौ च नासाञ्च ग्रीवोष्ठौ हनुमेव च ।।१ २१ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१६९ महाकालं - ख. । १७० वपुस्तस्य च पिङ्गलम् - घ. । १७१... ञ्चर्मवाससम् - क. ख. । १७२ चोद्वहन् - क. ख. घ. । १७३ तडित्सूर्यावभासिना - ख,.. त्सूर्यवता तथा - क. । १७४ स समक्षं - ख- । १७५ ज्ञात - क । १७६ गुणाकरः - ख. । १७७.. जरामरा - ख । १७८ मयाज्ञाप्तो - क.. यथाज्ञप्तं - ख. । १७९ वृषलाञ्छनः - ख । १८०. र्द्धं क. ख. । १८१ तु - ख. । १८२... र्भवश्चैव - ख. । १८३... तौ - क. । १८४... श्चैव - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

आयुधानि खुरा१८५ स्तस्य चक्रवज्रौ१८६ च शृङ्गयोः ।

अपाने च स्वयं मित्रः पुच्छं दानानि१८७ सर्वशः ।।१ २२।।

अस्थीनि पर्वताः सर्वे पुरीषं श्रीरभूच्छुभा ।

मूत्रं चास्याभवद् दिव्यममृतं व्यास पावनम् ।। १२३ ।।

रोमाणि ऋषयस्सर्वे नक्षत्राणि च सर्वशः ।

ग्रहास्तस्याभवन् व्यास सन्धयः शुभदर्शनाः ।।१ २४।।

इष्टयो वेदयज्ञाश्च मन्त्राः स्तोत्रा फलानि च ।

अभवंस्तस्य मांसानि रुधिरं सरिदर्णवाः ।। १ २५।।

सप्तलोकं मुखं ह्यासीत् तस्याप्रतिमतेजसः ।

हस्ता मरीचयश्चैव मज्जा औषध्य एव च१८८ ।। १ २६।।

मन्त्रभूताश्च पशवः सकृत् (? स्नायुश्च१८९ वीरुधः ।

वल्ल्योथ वृक्षगुल्माश्च तथैवान्ये१९० नगाः शुभाः ।।१ २७ ।।

नागा१९१ स्तस्याभवन् नाड्यो वसवः शुक्रसंचयः ।

आमपक्वाशयौ तस्य तौ देवावश्विनौ स्मृतौ१९२ । ।१ १८ । ।

मेघास्तस्याभवन् त्वक्च तडिन्माला - - - - ।

- - - - - - यक्षा गन्धर्वाप्सरसस्तथा । । १ २९।।

शिरा धमन्योथ मदो दर्पाश्चैवाभिजज्ञिरे ।

मानुषा मातरश्चैव भूतानि विविधानि च । ।8.33.१ ३० ।।

रोमकूपाणि तस्यासन् वृषभस्य महात्मनः१९३ ।

एवं स भगवान् देवः परमैश्वर्यसंयुतः ।

सौरभेयो महादेवः सर्वदेवमयोभवत्१९४ ।।१ ३१ ।।

य इदं१९५ सौरभेयस्य जन्म कर्म च तत्त्वतः ।

माहात्म्यमखिलं चैव शृणुयाद्वा पठेत वा ।। १३ २। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१८५ क्षुरा - ख., क्षुरप्र - घ । १८६ चक्रवज्रे - ख. घ. । १८७ नयश्च - ख., छन्दांसि - घ. । १८८... मेव च - क. । १८९ स्नानं च - क. घ. । १९० तथा चान्ये - घ. । १९१ गाव - घ. । १९२... वाश्विनीसुतौ - घ. । १९३ वृषस्य सुमहात्मनः - क. । १९४ महत् - क, । १९५ इमं - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

नित्यं शुचिरदीनात्मा सर्वपापैः प्रमुच्यते ।

मृतश्च कालेकाले वा रुद्रलोकमवाप्नुयात् । । १३३ ।।

नेदं शठाय दातव्यं श्राव्यं वापि कथंचन ।

न नास्तिकाय दुष्टाय तथा वा पापकर्मणे१९६ । । १ ३४। ।

इदं पुत्राय शिष्याय धार्मिकाय महात्मने ।

देयं श्राव्यञ्च शुचये गुह्यमेतत् सनातनम् ।। १३५ । ।

यो लोकवेदप्रभवेन१९७ तेन सर्वार्थसिद्धेन महाबलेन ।

यात्यम्बुदाम्भोनिधिगर्जितेन स वोस्तु नित्यं सुमना महेशः । । १३६ । ।

इति स्कन्दपुराणे वृषोत्पत्तिमाहात्म्यं नाम त्रयस्त्रिंशोध्यायः

सनत्कुमार उवाच

एवं स भगवान् व्यास मेघमुत्सृज्य१ देवपः ।

वृषवाहः समभवद्२ यथा ते कथितं मया । ।१ ।।

व्यास उवाच

कथं३ भगवती देवी कृष्णा गौरत्वमागता ।

कारणं तत्र किं चापि४ ह्येतदिच्छामि वेदितुम् । । २। ।

सनत्कुमार उवाच

आसीनौ मन्दरप्रस्थे उमाकामाङ्गनाशनौ ।

रेमाते५ प्रमथैस्सार्धं नानारूपधरैस्तदा ।। ३ । ।

अथ देवेन तत्रस्था क्रीडता सा कथान्तरे ।

कृष्णेत्युक्ता भगवती सा चुकोप मनस्विनी ।।४।।

कुपितां तां महादेवः परिष्वज्य महाद्युतिः६ ।

उवाचा सकृदव्यग्रः७ सांत्वयन् मधुरं वचः ।।५ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१९६ पापकर्मिणे - क. । १९७ देवप्रभवेन - क ।

१ जीमुत्वं सृज्य - घ. । २ स भगवान् - क. घ । ३ केय- - घ. । ४ वापि - घ. । ५ रेमतुः - क., रमतुः - ध. ।

६ महामतिः - घ' । ७,. .दव्यग्रं - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

देवदेव उवाच

देवि मा क्रोधमनघे कृथा८ विश्वसृगव्यये ।

हास्यं प्रकृतमेतन्मे कृष्णेति समुदाहृतम् । ।६ ।।

अद्य प्रभृति नानेन वचसाहं शुभानने ।

वक्ष्यामि त्वां त्यज क्रोधं - - - - ९ - - - - ।।७। ।

सनत्कुमार उवाच

तमेवंवदिनं देवं श्रुत्वा गिरिवरात्मजा ।

अगमत् परमां तुष्टिमिदं चोवाच सुस्वरम् । ।८ । ।

देव्युवाच

त्वं गुरुस्सर्वलोकस्य पूज्यो भर्त्ता ममैव च ।

- - - - - - - - - - - - - - - - ।।९। ।

- - - - - - - - - - - - - - - - ।

- - - - - - - - - - - - - - - । । 8.34.१० ।।

सनत्कुमार उवाच

इति तेनेष्टवचसा१० तुष्टो देव्याः पिनाकधृक् ।

वरेणच्छंदयामास तयैषोभ्यर्थितो वरः ।। ११ ।।

देव्युवाच

यदा यदा वदसि मां कृष्णेति वदतां वर ।

तदा तदा मे हृदयं विदीर्यत इव प्रभो ।। १ २।।

॥

विज्ञापयामि सर्वेश गौरवर्णमनुत्तमम्११ ।। १३ ।।

।

- - - - - - - - - - - - - - - - ।। १४। ।।

- - - - - - - - - - - - - - - - ।

जगद्धर्ता सुरेशान आत्मतुल्यपराक्रमः ।। १ ५। ।

- - - -- - -- - ---- - -- -- -- - -- - --

८ वृथा - क. । ९ तामुवाच पिनाकधृक् - क । इतः परं पत्रद्वयं खण्डितं क. पुस्तके । १० ते नष्टवचसा - घ. । ११ गौरवं तमनुत्तमम् - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

अग्रणीः सर्वदेवानां सर्वदैत्यनिषूदनः१२ ।

- - - - - - - - - - - - - - - - ।। १ ६। ।

यदि तुष्टोसि मे देव यदि देयो वरश्च मे ।

तपश्चरितुमिच्छामि तदनुज्ञातुमर्हसि ।। १७।।

सनत्कुमार उवाच

ततो भवः१३ प्रहस्यैनामुवाच तपसा हि किम् ।

तपसा कांक्षितं यत्तु तदद्यैव ददामि ते ।। १८ ।।

इत्युक्ता गिरिजा प्राह तप्ते तपसि पुष्कले ।

त्वमेव दाता भगवन् वरान् मह्यं यथेप्सितान् ।।१ ९।। ।

तदा१४ विज्ञापितेनैवं१५ सर्वकार्यार्थदर्शिना ।।8.34.२० ।। - - - - - - - ।

चरणौ च नमस्कृत्य शिवस्यामिततेजसः ।।२१ ।।

सा क्षणादागता देवी हिमवन्तं नगोत्तमम् ।

ददर्श ऋषिमुख्यानामाश्रमैरुपशोभितम् । ।२२। ।

सरो मानसमासाद्य तथा बिन्दुसरश्च तत् ।

दिव्यां पाण्डुशिलां चैव गङ्गा१६ प्रभवमेव च ।।२३ । ।

ततो महालयं प्राप्य देवदारुवनं तथा ।।२४। ।

अन्यानि च ततोग्र्याणि१७ वनान्यासाद्य सा सती१८ ।

तस्योत्तरेण शैलस्य गत्वा१९ चाति मनोहरम्२० । ।२५। ।

अपश्यच्छिखरं दिव्यमेकमेकान्तमाश्रितम्२१ ।

चामीकरमयं दिव्यं सर्वौषधिसमावृतम्२२ ।।२६।।

इन्द्रनीलमहानीलनीलोपलतलैः२३ शुभैः२४ ।

वृक्षैर्मणिमयैश्चित्रैः सर्वतः परिसंवृतम्२५ ।।२७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१२... देवविषूदन घ। १३ वरः घ । १४ तथा(?) । १५. व घ। १६ गदां घ। १७ तपोग्राणां घ, ततोग्राणां... ग. घ. । १८ शाश्वती - घ. । १९ गता - घ. । २० सातिमनोहरम् - घ. । २१... ता - घ । २२.. समन्वितं -ग. ध. । २३ नीलोत्पलतलैः - ख... .घ, तलं - ख. घ. । २४ शुभं - ख. घ. । २५ परिवारितम् - घ ।

- - - -- - -- - ---- - -- -- -- - -- - --

क्वचिदञ्जनपुञ्जाभं स्फटिकोपलमेव च२६ ।

क्वचिद्धेमोपलं दिव्यं काचिच्चित्रोपलं पुनः । ।२८। ।

क्वचिन्मनःशिलाशृङ्गं२७ हरितालोपमं क्वचित् ।

शालैस्तालैस्तमालैश्च२८ प्रियालाम्रातकैरपि । । २९। ।

अशोकैश्चम्पकैर्लोध्रैः कदम्बाम्रातिमुक्तकैः२९ ।

नागपुन्नागतिलकैः सुरभीचन्दनैरपि । ।8.34.३ ० । ।

धातकीकेतकीभिश्च तथैवोद्दालकैरपि ।

कदलीभिश्च चित्राभिः खर्जूरैः पनसैरपि । । ३१ । ।

बकुलैर्नालिकेरैश्च पद्मषण्डैश्च शोभितम् ।

कपित्थैः खदिरैश्चैव भव्यैः३० पारावतैरपि। ।३ २ ।।

मृद्वीकामण्डपैश्चैव तथांकोठैः समावृतम् ।

सदा३१ पुष्पफलोपेतैश्चारुचामीकरप्रभैः । ।३ ३ । ।

तथा प्रस्रवणैश्चैव३२ नदीभिश्चोपशोभितम् ।

पक्षिभिर्मधुरालापैः३३ समन्ताच्चाभिनादितम् । ।३४।।

मयूरचातकोपेतं हंसचक्राह्वसंकुलम् ।

सारसैः खञ्जरीटैश्च हारीतैश्चाभिनादितम् । । ३ ५। ।

जीवं जीवसमाकीर्णं३४ महिषर्क्षसमाकुलम् ।

सिंहशार्दूलचरितं३५ शरभेभसमाकुलम् । ।३ ६६। ।

मेरुमन्दरसंकाशं सर्वपुण्यफलप्रदम्३६ ।

रम्यं स्वर्गमिवागम्यं पापानां३७ क्रूरकर्मणाम्३८ ।।३७। ।

श्रिया स्वलंकृतं साक्षा३९ दुद्यानमिव सत्कृतम् ।

तत्र केचिन्मधुफला वृक्षाः सर्वर्तुकामदाः४० । । ३८। ।

- - - -- - -- - ---- - -- -- -- - -- - --

२६ स्फटिकोत्पलमेव च - ग. । २७. न्मणिच्छि (शि) लाशृङ्गं - ग, मनच्छि - ख । २८ शलतालत-मालैश्च - ख. ग । २९.. तमुक्तकैः - ख घ । ३० भवैः - घ., धवैः. (?) । ३१ मंजु - घ. । ३२ प्रसवनैश्चैव - ख. । ३३... भाषैः - - ख. । ३८ जीवंजीवकसंकीर्णं - घ. । ३५.?. चितं - ग. । ३६ सर्वपुष्पफलप्रदम् - ख. घ. । ३७ पापिना - ख । ३८ क्रूरकार्मिणाम् - ख. ग । ३९ श्रियालंकृतामा- वासं - घ.. स्वयं कृतावास (?), स्वलंकृतावासं - ख ग । ४० सर्वत्र कामदाः - ख घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः ।

अपरे सर्वपुष्पाणि फलानि च महीरुहाः ।।३ ९ । ।

पुष्प्यन्ते४१ च फलन्ते च काञ्चनाश्चापरे द्रुमाः ।

फलन्ति भक्ष्याण्यपरे४२ भोजनानि४३ च सर्वशः४४ ।।8.34.४ ० । ।

मानुष्याण्यथ दिव्यानि षड्रसानि महाद्रुमाः ।

वस्त्राण्यन्ये प्रसूयन्ते फलेष्वाभरणानि च४५ । ।४१ ।।

तथा बहुविधामन्ये शय्यां चा४६ भरणद्रुमाः (?) ।

अमाक्षिकं४७ मध्वपरे चामृतप्रतिमं नगाः ।।४२ ।।

भोगाँश्च विविधानन्ये तथैवाभरणानि च४८ ।

अन्ये४९ स्त्रीः संप्रसूयन्ते मनुष्याँश्च तथापरे ।।४३ ।।

सर्वा मणिमयी भूमिर्दिव्ये५० तस्मिञ्छिलोच्चये५१ ।

सुगन्धिः५२ पवनो वाति नात्यर्थं चोष्णशीतलः५३ ।।४४।।

यावदेव५४ महादेवी तं गिरिं५५ नाभिगच्छति५६ ।

प्रीत्यर्थं तावदेवासौ देव्या रुद्रेण निर्मितः । ।४५। ।

तस्यैव च प्रसादेन नासौ गम्यः शिलोच्चयः ।

सर्वदेवनिकायानां भूतानाञ्चैव सर्वशः ।।४६। ।

सनत्कुमार उवाच

तस्मिन् गिरिवरे देवी तपस्तेपे सुदुश्चरम् ।

वार्क्षे दधाना वसने रुचिरे५७ धर्मसाधने ।।४७। ।

कदाचित्सा फलाहारा कदाचित्पर्णभोजना ।

कदाचिदम्बुभक्षाभूत्कदाचिदनिलाशना । ।४८ ।।

कदाचिदेकपादेन सूर्यस्याभिमुखी स्थिता ।

निगृहीतेन्द्रियग्रामा सा बभूव वरानना ।।४९ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

४१ पुष्पन्ते - ख. घ. । ४२ भक्षाण्यपरे - ग. घ । ४३ ..भाजनानि - ख. घ । ४४ सर्वदा - ख. घ. । ४५ फलेष्टाभरणानि च - ग. । ४६ वा - घ । ८७ समाक्षीकं - ख । ४८ अत्राभरणानीति पुनरुक्तम् । ४९ अन्या - ख. । ५० दिव्या - ख. घ. । ५१ तस्मिन् शिलोच्चये - ख. घ. । ५२ सुगन्धः - ख. ग. घ. । ५३.. .शीतता - ग.! ५४... द्वेवं (?) । ५५ गिरिजा - घ, । ५६ नाभ्यगच्छति ग- घ. । ५७ रुचिरे वाससी - ग. ।

- - - -- - -- - ---- - -- -- -- - -- - --

महादेवनमस्कारा महादेवपरायणा ।

महादेवप्रिया देवी पुत्रार्थञ्च वरार्थिनी५८ । ।8.34.५ ० ।।

अजैकपादं रुद्रञ्च डिण्डिमुण्डेश्वरं५९ तथा ।

कापालिनं भारभूतिं६० माषाढिञ्चैव सानुगम् ।।५१ ।।

निकुम्भं गतमन्युं६१ च भूतमोहनमेव च ।

कालदण्डधरं चैव मृत्युदण्डधरं६२ तथा । ।५२।।

ब्रह्मदण्डधरं चैव घोरचक्रधरं६३ तथा ।

अन्तरिक्षचरान् घोरान् दिशासु विदिशासु च ।।५३ । ।

एतान् गुह्यान् गणाध्यक्षानदृश्यान् सर्वतोमुखान्६४ ।

प्रागेव तस्या रक्षार्थं महादेवो नियुक्तवान् । ।५४। ।

उपरिष्टादधस्ताच्च तं गिरिं ते गणेश्वराः ।

अदृश्याः सर्वतश्चैव६५ न ररक्षुरमितौजसः ।।५५।।

न तस्य गिरिशृंगस्य रक्ष्यमाणस्य तैस्तथा६६ ।

देवदानवगन्धर्वाः शेकुर्गन्तु६७मुपान्तिकम्६८। ।५६। ।

प्रागेव स्थापितवती यानि चारुशिलातले ।

भूषणानि नदी तेभ्यो६९ जज्ञे पुण्यजलाश्रया ।।५७। ।

तामलंकारधारेति विश्रुतां पापनाशिनीम्७० ।

पश्यन्त्यद्यापि७१ च जनाः सर्वकालजलां शुभाम् ।।५८। ।

यस्मिन्नेव दिने देवी सा तथा तिष्ठदद्रिजा७२ ।

तस्मिन्नेव दिने व्यास शार्दूलोपि जगाम७३ ताम् । ।५९।।

महकायमुखो भीमः पिङ्गलामललोचनः ।

नखदंष्ट्रायुधो भीमस्त्रासनः सर्वदेहिनाम् । ।8.34.६० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

५८ वस्तुहेतवे - घ, तपस्विनी (?) । ५९ दतिं चण्डेश्वरम् - घ. । ६० भावभूति - ध. । ६१ शतमन्युं - घ. । ६२ घोरचक्रधरं - घ. । ६३ घोरं - ख., घोरवज्रधरं - घ. । ६४... मुखं - ख. ग. । ६५.. ग (गा?) श्चैव - ख.,... श्चै नां - ख. । ६६... स्तदा - ख. । ६७ न शेकुर्गण (न्तु?) - घ. । ६८... मुमान्तिकम् - ख । ६९ तस्या - ख. । ७० पापनाशनीम् - ख. । ७१.. .पश्यन्ति च - ख, अद्यापि पश्यन्ति - घ. । ७२ दम्बिका - घ, । ७३.. .भिजगाम - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

गुहामुखाद् विनिःसृत्य व्यजृम्भत महाबलः ।

- - - - - - - - - - - - - - - - ।।६ १ । ।

ततः स देवीमालोक्य भक्षार्थमुपचक्रमे ।

तपसा स्तम्भितस्तस्या ह्येतदेवान्वचिन्तयत् ।।६ २ ।।

नार्येषा दृष्टपूर्वा मे शर्वपार्श्वे सुशोभना ।

यादृशं तपसश्चास्या वीर्यं मन्ये न मानुषी । ।६३ । ।

अथवा नित्यमेवासौ महेश्वरमनुव्रता ।

मन्दरे७४ सह देवेन रमते७५ हिमवत्सुता ।। ६४। ।

तपसा किं तदा चास्या यस्या भर्त्ता पिनाकधृक् ।

तद्रूपिणीयं काप्यन्या७६ तपोनियममास्थिता७७ ।।६५ ।।

महता तेजसा७८ युक्ता नेयं शक्या मया शुभा ।

हन्तुं भक्षार्थमद्येह ययाहं७९ स्तम्भितः स्थितः । ।६६। ।

तस्मादेनामुपासिष्ये यावत् कालस्य पर्ययः ।

स्वयमेतां मृतां पश्चाद् यथेष्टमबलामहम् ।।६७। ।

भक्षयिष्ये बुभुक्षार्त्तो मुनिः फलमिवाश्रमे ।

विचिन्त्यैवं स शार्दूलो देव्यादूरे समास्थितः । ।३८।।

स्तब्धदृक्८० कर्णलाङ्गूल उपविष्टो निरीक्ष्य ताम्८१ ।

सापि देव्यूर्ध्वदृष्टिन्तं दृष्ट्वा स्थितमसङ्गिनी ।

अनुग्रहकरीं बुद्धिं चक्रे तस्मिन् सदैव हि ।।६९। ।

व्यास उवाच

तपश्चरणसक्तायां देव्यां देवस्त्रिलोचनः ।

किमकार्षीत् सुरेशान एतदिच्छामि वेदितुम् ।।8.34.७० ।।

सनत्कुमार उवाच

- - - - - - - - - - प्रति भावितायाम् ।

पुत्रार्थमासक्तमनोरथायां देवोकरोद्यत्तदिदं शृणुष्व । ।७१ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

७४ मन्दरं - घ. । ७५ रमतीं - ध. । ७६ कानान्या - ग. । ७७ नियतमास्थिता - ख. । ७८ महादेवेन ते - ख. । ७९ तयाहं - घ., मया... - ग. । ८० शुद्धदृक् - घ. । ८१ निरीक्षतम् - ग., न्यमीक्षत - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

देव्यां तपसि सक्तायां८२ भगवान् गोवृषध्वजः ।

जागामानुग्रहं कर्तुमुपमन्योर्महात्मनः ।।७२। ।

।

स ऋषिर्मातुलगृहे कदाचित् क्षीरमुत्तमम् ।।७३ । ।

होमशेषमति स्वादु पीतवानग्निहोत्रिणः ।

तत् स्मृत्वा मातरं प्राह देहि८३ मातः पयो मम । ।७४। ।

तस्मै पिष्टं ददौ माता तोयेनालोड्य दुःखिता ।

क्षीरमित्युपनीतं तद् दृष्ट्वा पिष्टं तदा८४ मुनिः ।।७५।।

नैतत् क्षीरमिति प्राह मातरं सा८५ ततोब्रवीत्८६ ।

वत्स क्षीरं कुतोस्माकं कुतश्चान्नं८७ तपस्विनाम् । ।७६। ।

आराधय महादेवं स ते सर्वं प्रदास्यति ।

इत्युक्तः स तदा मात्रा दुःखशोकपरिप्लुतः । ।७७।।

जगाम शरणं देवं सर्वभावेन शङ्करम् ।

आदित्याभिमुखो भूत्वा पादेनैकेन संयतः८८ ।।७८। ।

मनसाचिन्तयन्नित्यं प्रणतार्तिहरं हरम् ।

सहस्रमेकं वर्षाणां तस्थौ दिव्यं फलाशनः । ।७९।।

द्वितीयं शीर्णपर्णाशी८९ तृतीयं चाम्बुभोजनः९० ।

महादेवपरो भूत्वा९१ चतुर्थं यो जितेन्द्रियः ।

तस्थौ सहस्रं वर्षाणामनिलाशन९२ एव च- - - -- - -- - ---- - -- -- -- - -- - -- ।।8.34.८० । ।

यदा चतुर्थं संपूर्ण९३ सहस्रं शरदां मुनेः९४ ।

तुष्टस्तदा ददौ शर्वः शक्ररूपेण दर्शनम् ।।८१ ।।

शक्र उवाच

उपमन्यो महाभाग तपस्ते बहु संचितम्८५ ।

तुष्टोस्मि ते वरं ब्रूहि यद्यदिच्छसि पुत्रक ।

- - - -- - -- - ---- - -- -- -- - -- - --

८२ युक्तायां घ। ८३ देवि घ । ८४ क्षीरबिन्दूपनीतञ्च दृष्ट्वोपरि तदा ख क। ८५ स ग। ८६ तदाब्रवीत् - ख. क. । ८७... श्चार्थं - घ. । ८८ संयुतः - ख. क. । ८९.. .पत्राशी - घ. । ९० वायुभोजनः - घ. । ९१. भ्यर्च्य - ख. क. । ९२ मणिनाशन - घ- । ९३ गतवान् - घ. । ९४ मुने - ख. घ. । ९५ सञ्चयं - ख., संस्कृतम् (?- घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

उपमन्युरुवाच

स्वागतं देवराजस्य त्रैलोक्याधिपतेरिह ।

अद्य निष्कल्मषं मन्ये तपश्चीर्णं मया महत् ।।८३ ।।

योहं त्रैलोक्यदेवेशमिन्द्रं पश्यामि दिक्पतिम् ।

इदं पाद्यमिदं चार्ध्य९६ मिदमासनविष्टरम् ।।८४।।

अयं च मधुपर्कस्ते गृह्यतां सदसस्पते ।

किं करोमि तदाख्याहि प्रार्थयस्व महाबल ।

कृतमेव९७ हि तद्विद्धि यदि स्यात् सुकरं मया । ।८५। ।

शक९८ उवाच

भक्तो मे पिता विप्र सखाभूत् परमः९९ पुरा ।

तेन स्नेहेन दृष्ट्वाहं भवन्तं तपसि स्थितम् ।

क्लिश्यमानमिहायातो ब्रूहि किन्ते ददान्यहम्१००।।८६। ।

उपमन्युरुवाच

देवराज्यमपि१०१ त्वत्तो नाहं कांक्षे सुरोत्तम ।

महादेवमहं भक्तस्तस्मादिच्छाम्यहं वरम् ।।८७।।

शक्र उवाच

महादेवं१०२ न पश्यन्ति सुरापि सदसस्पतिम् ।

न तं द्रक्ष्यसि विप्रेन्द्र ब्रूहि यत्ते मनोगतम् ।।८८ । ।

अहं पितुस्ते स्नेहेन इहायातो महाव्रत ।

धर्मतो हि सुतो मे त्वं ब्रूहि तस्माद् ददाम्यहम्१०३ ।।८९। ।

उपमन्युरुवाच

कृतं स्वजनकृत्यं ते पूजितोस्मि त्वया प्रभो ।

गच्छ नाहमृते रुद्राद् वरं याचेन्यसंभवम् । ।8.34.९० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

९६ चार्धं - ग. । ९७ मेवं - ख. घ. । ९८ इन्द्र - घ. । ९९ परमतः ख., परमं - घ. । १०० वरं ब्रूहि महाभाग यत्ते मनसि वांछितं - घ.,... म्यहं - ख । १०१ देवराजमपि - ग. । १०२ महेश्वर - घ. । १०३ वरं वरं - ग. घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सनत्कुमार उवाच

एवमुक्तः स तेजस्वी शक्ररूपी महेश्वरः ।

उवाच तप्स्यसे१०४ पश्चात् किं ते रुद्रः१०५ करिष्यति१०६ ।।९१ । ।

गच्छामि स्वस्ति ते चास्तु१०७ निर्विघ्नस्ते भवत्वयम् ।

रुद्रं प्रति समारम्भः स्मरेथास्त्वं हि मां१०८ विभो ।।९२।।

सनत्कुमार उवाच

गते तस्मिन् तदा हीन्द्रे रुद्रः स्वं रूपमास्थितः ।

तस्यादर्शयदव्यग्र इदं चोवाच सुस्वरम् ।।९३ ।।

रुद्र उवाच

उपमन्यो महाभाग पश्य मां विगतज्वरः ।

ब्रूहि निश्चित्य मनसा१०९ वरं यावद्ददामि११० ते ।।९४।।

सनत्कुमार उवाच

ततः स दृष्ट्वा देवेशं शिरसाभिप्रणम्य१११ च ।

उवाच प्रणतो वाक्यं११२ मनसा संप्रधारयन् ।।९५।।

भगवन् यदि तुष्टोसि सदा सुरगणार्चित११३ ।

यद् ब्रवीमि तदीशान११४ मह्यं यच्छ नमोस्तु ते ।।९६।।

द्रव्यं११५ किंचिदनाश्रित्य मानुषं दिव्यमेव वा११६ ।

क्षीरोदनं समश्नीयामयाचितमुपस्थितम्११७ ।।९७।।

देवदेव उवाच

अनाश्रित्येह नैवास्ति कस्यचिद् द्विजसत्तम ।

तृणमप्याश्रयं कृत्वा तस्माद्वद महामुने ।।९८।।

उपमन्युरुवाच

नैवाहमाश्रये किञ्चित् प्रसादाद् भगवँस्तव ।

तदर्थ११८ श्चायमारम्भस्तत् प्रयच्छ यथार्थितम्११९ ।।९९ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१०४ तप्यसे - ख. । १०५ तप्यतो रुद्रात् - ख. । १०६ प्रदास्यति - घ । १०७ चैवास्तु - घ. । १०८ मा - ख. । १०९ निश्चिन्तमनसा - ख । ११० ददानि - ख. । १११ प्रणिपत्य - .ख. । ११२ वाक्य - क., वाच्यं - ख । ११३ यदि देयो वरश्च मे - ख. । ११४ तमीशानं - ख. । ११५ त्वां च - घ. । ११६ च - घ. । ११७ - दयाचितमुपस्थितम् - क. ग. । ११८ यदर्थं - घ. । ११९ यथा स्थितं - क स्वप्रार्थितम् - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

दैवदेव१२० उवाच मुने किञ्चिदनाश्रित्य नास्ति क्षीरोदनं तव ।

इत्युक्त्वा तं महादेवस्तत्रैवान्तरधीयत ।।8.34.१ ०० ।।

अन्तर्धानं ततो गत्वा जिज्ञासार्थं पिनाकधृक् ।

ब्रह्मणो रूपमास्थाय१२१ भूय एनं १२२ ततोब्रवीत् ।।१ ०१ ।।

ब्रह्मोवाच

उपमन्यो महाप्राज्ञ१२३ सुचीर्णं ते तपः शुभम्१२४ ।

तुष्टोस्मि ते१२५ वरं ब्रूहि प्रयच्छामि१२६ यथेप्सितम्१२७ ।।१ ०२।।

उपमन्युरुवाच

भगवन् सर्वलोकेश नमस्ते सर्वसृक् प्रभो ।

सुचीर्णं मे तपो देव यत्त्वां१२८ पश्यामि लोकप ।। १०३ । ।

महेश्वरमहं भक्तस्तदाशीस्तत्परायणः ।

तस्माद्वरं वृणे देव त्वत्तो नाहमसंशयम् । ।१ ०४।।

ब्रह्मोवाच१२९

रुद्रस्ते नाददद्विप्र क्षोरौदनमदुर्लभम्१३० ।

स तेन्यत् कुत एवेह दास्यते वरमुत्तमम् । ।१ ०५। ।

प्राजापत्यं सुरत्वं वाप्यमरत्वमथापि वा ।

इन्द्रत्वमथ सोमत्वं विष्णुत्वं१३१ वा ददानि१३२ ते ।।१ ०६ ।।

लोकपालो भवानस्तु सर्वलोकाभिपूजितः ।

ब्रूहि किन्ते ददान्यद्य विसृजस्व१३३ महेश्वरम् ।

नासौ दाता तवेशानस्तृणमप्येकमल्पकम्१३४ ।।१ ०७। ।

उपमन्युरुवाच

न गृहीतं प्रभो१३५ तेन मम किञ्चिन्महात्मना ।

ईश्वरः सर्वभूतानां न१३६ स्वामी तस्य कश्चन ।। १ ०८। ।

- - - -- - -- - ---- - -- -- -- - -- - --

१२० सनत्कुमार - घ. । १२१ ब्रह्मरूपं समास्थाय- घ । १२२ एवं - क ख । १२३ महाप्रज्ञ - ख. । १२४ शुभ - ख. । १२५ ब्रूहिवरं - क. ख? । १२६ तत्प्रयच्छ - घ. । १२७ यथास्थितं - क., तवानघ - स. घ. । १२८ यस्त्वां - क. । १२९ पितामह उवाच - ध. । १३० क्षीरोदनमदुर्लभम् - ख. घ. । १३१ सविष्णुत्वं - ख. । १३२... मि - ख. । १३३ व्यसृजस्व - ख. । १३४... मल्पकमक्षतं - क., .,. प्येकमक्षतं - घ,,. प्येकमेव च - ख. । १३५ पुरा - घ. । १३६ नास्वामी - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

इच्छया कुरुते देवः सर्वकार्याणि कार्यिणाम् ।

ददाति यदि लाभो मे न ददाति तथापि च ।। १०९ ।।

बहुना किं प्रलप्तेन तेन दत्तमहं वृणे ।

नरकं वा पशुत्वं वा किं पुनर्यदतोन्यथा । ।8.34.१ १० ।।

त्वत्तो नेच्छामि विष्णुत्वं न शक्रत्वं१३७ पितामह ।

गच्छ१३८ सर्वसुरेशान मा वृथा क्लेशमाचर ।। १११ ।।

सनत्कुमार उवाच

स एवमुक्तो देवेशस्तेन ब्रह्मर्षिणा तदा१३९ ।

तस्य तत्र पुनर्वाक्यं वरार्थमवदत् प्रभुः ।।१ १२ ।।

उपमन्युरपीशाने मन आधाय१४० निश्चलम् ।

तूष्णीं बभूव देवोपि तत्रैवान्तरधीयत१४१ ।। ११३ ।।

तस्य तां भावनां ज्ञात्वा पिनाकीशस्त्रिलोचनः१४२ ।

स्वमेव रूपमास्थाय दर्शयामास तत्क्षणात् ।। १ १४।।

त्र्यक्षो जटी विशालाक्षः कुण्डली दीप्तलोचनः ।

ज्वालामालाधरः श्रीमान् भुजगाबद्धमेखलः ।। ११ ५।।

सर्पयज्ञोपवीती च व्याघ्रचर्माम्बरच्छदः ।

कृष्णाजिनोत्तरीयश्च कमण्डलुधरस्तथा ।। ११ ६।।

दण्डी शूली महाहासो१४३ गणपैर्बहुभिर्वृतः ।

उवाच पुत्र पुत्रेति तुष्टोस्मि तपसा तव । १ १७।।

अमरो जरया त्यक्तः सर्वदुःखविवर्जितः ।

कामरूपधरः श्रीमान् मत्प्रसादाद् भविष्यसि ।। ११९ ।।

द्वीपञ्चेमं१४४ गृहाण त्वं मया सृष्टं हि कामगम् ।

क्षीरौदन१४५ समुद्रेण सर्वतः परिवारितम् ।।१ १९ ।।

महायोगबलो भूत्वा सर्वज्ञः प्रियदर्शनः ।

भुंक्ष्व१४६ क्षीरौदनं वत्स बन्धुभिस्सहितः सदा१४७ ।। 8.34.१२० ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१३७ ब्रह्मत्वं वा घ। १३८ त्वंहि ख। १३९ तथा घ। १४० श्वाधाय क, संघाय ख, घ। १४१ तां क। १४२ स त्रिलोचनः क, घ। १४३ महाभागो घ। १४४ द्विपं चैव घ। १४५ क्षीरोदेन - ख । १४६ क्षीरोदनं - क ख. । १४७ तदा - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सप्तपूर्वाणि सर्वाणि कुलानि तव तापस१४८ ।

इदं चैव कुलं सर्वमनुगृहणामि सुव्रत१४९ । । १२१ । ।

सर्वे भवन्तु विप्रर्षे१५० य इमे तव बान्धवाः ।

मत्प्रसादान्महासत्वा नित्यं क्षीरौदनाशनाः१५१ ।। १ २२।।

सनत्कुमार उवाच

स तु तं वरमादाय प्रणम्य शिरसा भवम् ।

शिरस्यञ्जलिमाधाय१५२ अस्तौषीत् प्रयतात्मवान् । ।१ २३ । ।

उपमन्युरुवाच

नमः सर्वामरेशाय विश्वेशाय नमो नमः ।

नमः सर्वार्तिहर्त्रे१५३ च नमश्शोकहराय च ।।१ २४ ।।

नमः पवनवेगाय नमः पवनरूपिणे ।

नमः काञ्चनमालाय पद्ममालाय वै नमः । ।१ २५।।

नमः सुररिपुघ्नाय चण्डवेगाय वै नमः ।

नमः पितृसुरेशाय मखघ्नाय१५४ च वै नमः । । १ २६।।

स्त्रीरूपाय नमस्तुभ्यं सर्वरूपधराय च ।

नमः कन्दर्पनाशाय१५५ विश्वस्रष्ट्रे१५६ नमो नमः । ।१ २७।।

नमो विश्वाय पाशाय१५७ नमोचिन्त्याय चैव हि१५८।

त्वन्नो गतिश्च श्रेयश्च त्वमेव हृदयं सदा ।। १ २८।।

सनत्कुमार उवाच

ततस्तं मूर्ध्न्युपाघ्राय१५९ समाश्वास्य१६० विसृज्य च ।

जगाम भगवान् व्यास सुकेशं१६१ प्रति स१६२ प्रभुः ।।१ २९।।

- - - -- - -- - ---- - -- -- -- - -- - --

१४८ तपसा तव - ख । १४९ तापस - क । १५० विपेन्द्र - ख. । १५१ क्षीरोदवासिनः - क. ख. घ. । १५२ मादाय - -घ. । १५३... हन्त्रे - ग. । १५४ मुखघ्नाय - ख., महिष... - क. । १५५ स्कन्दविशाखाय - कः, स्यन्ददिशाखेच ख. । १५६ विष्वक् स्रष्टृं - क. ख घ । १५७ घस्राय - क । १५८ ह - ख. । १५९ मूर्ध्नि चाघ्राय - क घ. । १६० श्वस्य - ख । १६१ सुरेश - घ. । १६२ प्रतिमः - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

उपमन्युं ज्वलितानलप्रकाशं शतमन्युं१६३ तपसा१६४ जिगीषमाणम्१६५ ।

स चकार नतं१६६ हरोग्रमन्युं वरदानेन तदा व्यपेतमन्युम्१६७ ।।8.34.१ ३० । ।

इति स्कन्दपुराणे उपमन्युवरप्रदानं नाम चतुस्त्रिंशोध्यायः

सनत्कुमार उवाच

ततः स भगवान् देवः सुकेशं गणपं पुनः ।

चकार ब्राह्मणं व्यास तपः सत्यपरायणम् ।।१ ।।

व्यास उवाच

कथं स ब्राह्मणः पूर्वं गणेशत्वमुपागतः ।

केनास्य तपसा तुष्टो गणेशत्वं१ ददौ प्रभुः । ।२।।

सनत्कुमार उवाच

आसीद्वसिष्ठकुलजो ब्राह्मणस्सत्यवाक् शुचिः२ ।

तीर्थयात्रास्वभिरत३ उपवासपरायणः ।।३ । ।

स कदाचिद्विदेशस्थो वने पश्यन् पथि स्थितम् ।

व्याघ्रं व्यात्ताननं घोरं नखदंष्ट्रायुधं तदा४ ।।४।।

दृष्ट्वा तं स तदा विप्रस्त्यक्त्वा पन्थानमाशुगः ।

विवेश महतीं घोरामटवीं प्राणिवर्जिताम्५ ।।५।।

तत्रापश्यत् स पुरतो वीरणस्तम्बमाश्रितान्६ ।

पुरुषाँल्लम्बमानाँश्च क्रन्दमानान् सुदुःखितान्७ ।।६।।

तानवाक्शिरसो दृष्ट्वा लम्बमानांस्तदा द्विजान् ।

के यूयमिति पप्रच्छ ते चैन८ मिदमूचिरे । ।७।।

- - - -- - -- - ---- - -- -- -- - -- - --

१६३ गतमन्युं - क. । १६४ तमसा - ख. । १६५ विजिगीषमाणं - क. । १६६.. रावनतं - क. ख. घ. । १६७ मन्युमिति - क, मन्युरिति? ख ।

१ गणपत्व - ख. । २ छुचिः - क,... ञ्छुचिः - ख. । ३.. यात्रासु निरतः - घ. । ४ वरं - क. ख. । ५ शार्दूलं विपिने दृष्ट्वा मार्गमुत्क्रम्य मा ( चा) शुगः । विवेशान्यद्वनं घोरं सर्वप्राणिविवजितम् । इति ख. पुस्तकपाठः । ६ स्तम्भ - ख. घ. । ७,.. नाँश्च दुःखितान् - घ. । ८ तमेवं... - घ., ते चैव - क. ख, ।

- - - -- - -- - ---- - -- -- -- - -- - --

पितर ऊचुः

तव स्मः पितरस्सर्वे नरकेस्मिन्नधोमुखाः ।

वीरणे त्वयि लम्बामस्तव दोषेण दुर्मते ।।८।।

पुत्रानिच्छन्ति मनुजास्तारयिष्यन्ति नस्त्विमे९ ।

नरकादिति स त्वन्नः पातयिष्यसि दुःखितान् । ।९। ।

विप्र उवाच

मया तीर्थाभिगमनात् तपो यत्१० समुपार्जितम् ।

जन्मप्रभृति यच्चापि मया किञ्चित् कृतं शुभम् ।

तेन यूयमितो गर्त्तादुद्धरध्वं११ पितामहाः ।। 8.35.१० । ।

पितर१२ ऊचुः

न वयं तपसा१३ शक्या न यज्ञैर्नाप्यतोन्यथा१४ ।

गर्त्तादस्मात्समुद्धर्तुं यद् ब्रूमस्तत्कुरुष्व नः ।।१ १। ।

अपत्यं गुणसंयुक्तमुत्पादय तपोयुतम् ।

ततो वयमितो गर्त्तान्मुच्येम यदि मन्यसे ।।१ २।।

विप्र उवाच

ऊर्ध्वरेताहमित्येतन्मया व्रतमुपाकृतम्१५ ।

न दारानाहरिष्यामि तारयिष्ये च वै पितॄन् । । १३ । ।

ततस्स तान् तथोत्सृज्य१६ दुःखेन महता वृतः ।

जगाम रुद्रं शरणं पितरोन्तर्हितास्ततः । ।१४।।

पितृष्वन्तर्हितेष्वेवं वायुभक्षस्तदा द्विजः ।

काष्ठलोष्ठोपलीभूतो निरुच्छवासोवतिष्ठत१७ । । १५ ।।

सन्धाय१८ मानसं१९ रुद्रे२० निश्चलः२१ सुसमाहितः२२ ।

हृदयेन जपन् रुद्रानाकाशे समतिष्ठत । ।१ ६। ।

- - - -- - -- - ---- - -- -- -- - -- - --

९ नास्ति मे - घ. । १० यत्तपः - घ. । ११... सर्वानुद्धरध्वं - ख. । १२ पितामहा - घ. । १३ युष्मत्तपसा - ख. । १४ यज्ञेनाप्यतोन्यथा - क. ख., शक्त्या त्वया ज्ञात्वा - घ. । १५,., मुपावृतं (?), मुपाहृतं - क,... मनुत्तमं- घ. । १६ ततो (दो) त्सृज्य - क. ख. घ. । १७,.. तिष्ठति - ख. । १८ ध्याय मानस्ततो - ख, स ध्यायमानो रुद्रेति - घ. । १९ मनसो - क. । २० रुद्ध - ख. । २१ निश्चलं - ख. । २२... स्थितः - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

तस्य पूर्णे तदा मासि वातवर्षमभून्महत् ।

सर्वसत्वप्रमथनं दुस्सहं भीमशब्दवत् ।। १७। ।

तेन वर्षेण२३ महता नैव२४ तस्याभवत्तदा ।

दुःखं वाप्यथवा भङ्गः२५ सम्यगेवावतस्थिवान् । । १८। ।

अथ तं भगवान् देवो मासे वर्तति सप्तमे ।

विष्णुरूपधरो भूत्वा प्रोवाच द्विजसत्तमम् ।। १ ९।।

तुष्टोस्मि तव भद्रन्ते तपसानेन सुव्रत ।

वरं वरय विप्रर्षे यस्ते२६ मनसि वर्तते ।। 8.35.२० । ।

सुकेशस्तु ततो दृष्ट्वा नारायणमुपागतम् ।

अब्रवीच्छङ्करादिच्छे२७ वरं न भवतो ह्यहम् ।।२ १ ।।

विष्णुरुवाच२८

अलमेतेन विप्रर्षे निर्बन्धेन हरं प्रति ।

देवैरपि न शक्योसौ द्रष्टुं किमुत मानुषैः । ।२२।।

सुकेश उवाच

द्रष्टुं शक्यो न वा शक्यः किमेभिर्वो विचारितैः ।

कुग्रहः सुग्रहो वाहं तथापीशे मनो मम । ।२३ ।।

शंकरादेव चक्रेश शुभं वा यदि वाशुभम् ।

वरं कांक्षे न च त्वत्तो२९ न चान्यस्मात् कथञ्चन ।।२४। ।

भवन्तोपि हि तं देवं यस्मात् सर्वे समाहिताः ।

अर्चयध्वे३० स्तुवध्वे३१ च तस्माच्छ्रेष्ठः स उच्यते ।।२५।।

सनत्कुमार उवाच

तस्य तन्निश्चयं ज्ञात्वा संतुष्टो३२ भगवान् हरः ।

विष्णुरूपं परित्यज्य स्वं रूप प्रत्यपद्यत ।।२६। ।

उवाच चैनं विप्रेन्द्र३३ गणपो३४ मे भवाक्षयः ।

अमरो जरया त्यक्तः सर्वदुःविवर्जितः ।।२७।।

- - - -- - -- - ---- - -- -- -- - -- - --

२३ मासेन - घ. । २४ नैवं - ख. घ. । २५ भङ्गं - घ. भंगो - क. । २६ यत्ते - क. घ. । २७.. त्तं हरादिच्छे - घ. । २८ देवदेव घ. । २९.. ह शत्रुघ्न - घ. । ३० अर्चयध्वं - क. ख. घ-, अर्चयध्वं सुरेशं च - घ. । ३१ स्तुवध्वं - क. ख. । ३२ तुतोष - क. ख. घ. । ३३ विपेन्द्रं - - क घ. । ३४ गणपस्त्वं - ख ।

- - - -- - -- - ---- - -- -- -- - -- - --

ऐश्वर्येण च संयुक्तः प्रियो मम पुरस्सरः ।

इमं च३५ मत्कृतं दिव्यं त्रिकूटं नाम पर्वतम् । ।२८। ।

भवनैः काञ्चनैर्युक्तं कामगं ते वदाम्यहम् ।

येषां कृते च पुत्र त्वं मां तोषयितुमुद्यतः । ।२९।।

ते चेमे३३ पितरस्सर्वे सुपुत्रेण त्वयानघ ।

तारिता नरकाद् घोराद् गणेशं त्वा३७ मुपस्थिताः ।। 8.35.३० । ।

किंकरास्ते भविष्यन्ति नित्यं दुःखविवर्जिताः ।

गणेश्वरास्तवैवेमे३८ भविष्यन्ति वशानुगाः३९ ।। ३१ ।।

सुकेश इति नाम्ना च प्रथितस्त्वं भविष्यसि ।

सदा चाष्टगुणै४०श्वर्यसमायुक्तश्चरिष्यसि । ।३ २ ।।

सनत्कुमार उवाच

ततस्स दृष्ट्वाथ पितॄन्नरकात् ससुहृज्जनान्४१ ।

तीर्णान्४२ गणेश्वरत्वेन पुनः पूज्येन संयुतान्४३ । ।३ ३।।

महेश्वरं हृष्टमनाः शिरसा प्राञ्जलिर्गतः ।

उवाच हृष्यमाणास्यस्तदा४४ वचनकोविदः । ।३४।।

सुकेश उवाच

भगवन् गणपत्वं च लब्धमैश्वर्यमेव च ।

अमरत्वं तथाक्षय्यं तथैवाजरता वरा४५ । ।३ ५। ।

पितरस्तारिताश्चेमे४६ गणपाश्चैव मे कृताः ।

नगश्च कामगो४७ ह्येष लब्धो मे त्वत्प्रसादतः४८ । ।३ ६।।

इच्छामि त्वां४९ मह३देव सोमं सप्रवरेश्वरम्५० ।

सदा सुमुख५१ मत्यर्थं सुदृश्यं५२ चैव कामद५३ ।।३७।।

सनत्कुमार उवाच

स एवमुक्तो भगवान् सुकेशेन महात्मना ।

उवाचैव५४ मिदं सर्वं भविष्यति गणेश्वर ।।३ ८ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

३५ इदं च - क. ख. घ. । ३६ त इमे - घ. । ३७ गणेशत्व - ख. घ. । ३८ ... स्तमेवैते - ख. घ. । ३९

सदानुगाः - घ. । ४० नित्येष्ट (नित्यमष्ट?) गुणै - ख. । ४१ ससुहृज्जनः - ग. । ४२ तीर्णो - ग. । ४३ संयुतः - ख. ग. । ४४ हर्षमाणश्च तदा - ख. । ४५... य्यमजरत्वमवाप्य च - ख. । ४६.. .श्चैव - ख. । ४७ कामतो - ख. । ४८ त्वत्प्रसादजः - क. । ४९ त्व - क., त्वा - ख. । ५० सहगणेश्वर - घ. । ५१ सुसुख - ख.. स्वसुख - घ. । ५२ स्वद्दशं -घ., निकामं दर्शनं तव - ख. । ५३ कामदं - क. । ५४ ... न - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

इमं गिरिं समाश्रित्य सहैभिः प्रवरैर्वरैः५५ ।

गच्छ स्वेष्टां५६ गतिं वत्स देवान् विप्राँश्च पालय । । ३९। ।

विसृज्य तं ततो५७ देवः सुकेशं गणनायकम्५८ ।

जगामादर्शनं सोमः५९ सर्वेषामेव पश्यताम् ।।8.35.४० । ।

सुकेशोपि गिरौ तस्मिन्नगरे स्वर्गसन्निभे ।

नरकाणां६० स तत्त्वार्थं६१ पितॄन् पप्रच्छ यत्नतः ।।४१ । ।

व्यास उवाच

किमर्थं गणपो ब्रह्मन् तान् पितॄन् पर्यपृच्छत ।

कथञ्च पितरस्तत्र आचख्युस्तस्य धीमतः ।।४२ ।।

एतद्विस्तरशस्तात संक्षेपाद्वा यथातथम् ।

त्वत्तोहं श्रोतुमिच्छामि हितं सर्वसुखावहम् ।।४३ । ।

सूत उवाच

स एवमुक्तः सुरसृक्सुतः प्रभुः६२ र्विमानकर्ता६३ विगतप्रयोजनः ।

जगाद वाक्यं सुरलोक६४ वर्धनः६५ पुराकृतं (?) दुष्कृतसर्वनाशनम् ।।४४। ।

इति स्कन्दपुराणे सुकेशवरप्रदानं नाम पंचत्रिशोध्यायः

सनत्कुमार उवाच

त्रिकूटशिखरे तस्मिन्नगरे देवनिर्मिते ।

आसीनः१ काञ्चने दिव्ये विमाने स्त्रीसमाकुले२ । । १ ।।

पितॄन सर्वान्३ समाहूय संपूज्य विधिवत्तदा४ ।

सुखोपविष्टान् तान्५ दृष्ट्वा इदं वचनमब्रवीत् ।।२।।

- - - -- - -- - ---- - -- -- -- - -- - --

५५ सगणप्रवरै र्भृशम् - घ. । ५६ श्रेष्ठां - घ. । ५७ महादेव - क ख घ. । ५८ कुलनायकम् - घ. । ५९ देवः - घ. । ६० नारकाणां - (?) । ये १ मुक्त्यर्थं - घ । ६२ परमादरेण - घ. । ६३ विधानकर्ता - घ. । मग्रे - ख. ।

६४ मुनिदेव.. - घ. । ६५... बन्धुषु (वान्धव?) - ख.,... बल्लभः - घ ।

१ आसने - घ. । रे स्त्रीजनाकुत्रे - क. ख. । ३ स्वांश्च - घ. । '८ विधिवत्तया - घ. । ५ उपविष्टा- नासनस्थान् - घ., उपविष्टान् सुखं - क. ग. ।

- - - -- - -- - ---- - -- -- -- - -- - --

सुकेश उवाच

युष्माकं तेजसा सर्वमिदमैश्वर्यमीदृशम् ।

भवद्भिस्तत्कृतं देवा येनास्मि सुखभाक्कृतः ।।३ ।।

पितर ऊचुः

मैवं वदानृतं६ पुत्र माधर्मस्ते भवेदिह७ ।

नास्मत्प्रसादादैश्वर्यं तव पुत्र कदाचन । ।४। ।

वयन्तु निरये घोरे यात्यमानाः८ सुदारुणे ।

तपसा तव वीर्येण९ सुखमाप्म१० सुदुर्लभम् । ।५।।

त्वया वयं सुपुत्रेण तारिता निरयाद् यथा११।

तथा१२ नान्यं प्रपश्यामो१३ धन्यो हि१४ त्वं सुतो हि नः । ।६। ।

अद्य१५ वर्षसहस्राणि बहूनि निरये वयम् ।

पच्येम१६ घोरे दुर्वृत्ता बन्धुः स्यास्त्वं न नो यदि ।।७।।

बहवः प्राणिनः पुत्र यात्यन्ते१७ तत्र१८ संयताः१९ ।

अति२० घोरे .सुदुर्वृत्ता२१स्तपो येषां२२ न विद्यते ।।८।।

सुकेश उवाच

पितरो नोक्तपूर्वं२३ मे मृषा न च वदामि वै२४।

यथा प्रभावाद्युष्माक२५मैश्वर्यं मम तत्तदा । ।९। ।

शृणुध्वं वदतः२६ सम्यक् मावमध्वं२७ वचो मम ।

न चावमन्ये पितरो२८ देवताः२९ कोवमन्यते ।। 8.36.१० । ।

पितरः कर्म कुर्वन्ति सतां यत् संमतं भुवि ।

नित्यं चाशासते चैव३० प्रजा नः सन्तु पुष्कलाः ।। ११ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

६ वाचानृतं - ख. । ७ व्यनीनशत् - ख. । ८ पात्यमानाः - क । ९ तव देवस्य - क., देवदेवस्य - घ । १०... माप्ताः - घ,... मायुः (पुः? । - क. ख. । ११ वयं - ख. । १२ तस्मात् - ख. । १३ प्रपश्याम - क. ग., ...मि -

ख. । १४ धन्यानां - ख । १५ अन्य. - ख । १५ पच्यामि ( म) - ख. ।; १७ पात्यन्ते - घ. । १८ यत्र - ख । १९ संयुताः - घ. । २० अपि - घ । २१ घोरेषु दुर्वृत्ता - क. घ । २२. स्तपस्ते- ( षां)?.. क. घ.,.. स्तप्यन्ते - ख. । २३ नोक्तपूर्वोस्मि - क. । २४ मृषा वाद कदाचन - घ. । २५ प्रभावम- स्माकं - घ. । २६ वेदतः - ख. । २७ मावमंस्था - क. ख ग. घ. । २८ पितरं - घ. । २९ देवतां - घ. । ३० तेन - ख ग., ते च - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

धार्मिकाश्च कृतज्ञाश्च सत्कर्मरतयस्तथा ।

ये नो नरकगर्तस्थान्३१ तारयिष्यन्ति नित्यशः । ।१ २।।

तेषां तत्कार्यकरणात् स्वधर्माच्यवनेन च३२ ।

स धर्मोनुष्ठितः३३ सम्यक् प्रजा जनयते शुभाः ।।१ ३ ।।

धार्मिकाश्च वदान्या३४श्च कृतज्ञाः सत्पथे३५ स्थिताः ।

पितृभक्ताश्च सर्वत्र३६ पितॄणां तारणे रताः३७ । ११४।।

सोहं भवद्भि३८र्धर्मेण परेण च समाधिना ।

जनितस्तपसा युक्तो भवतामेव३९ सर्वशः४० ।। १५ । ।

देवमाराध्य नरकात् पितॄँस्तारितवान् पुनः४१ ।

एष प्रभावो युष्माकं तपः सुचरितं च ह । ।१ ६। ।

ममात्र४२ किं महाप्रज्ञा४३ अनृतं वात्र किं वचः४४ ।

इयंञ्च वैदिकी शुभ्रा श्रुतिर्वेदविदां वराः । । १७। ।

प्रमाणं यदि मन्यध्वं आत्मना४५ कृतमित्युत ।

अङ्गादङ्गात् संभवसि हृदयादधिजायसे ।। १८ ।।

आत्मा वै पुत्रनामासि स जीव शरदां४६ शतम्४७ ।

अङ्गेभ्योहं समुत्पन्नो युष्माकं हृदयाच्च ह ।। १९। ।

आत्मनाहं४८ तथात्मानं युष्माँस्तारिवाँस्ततः ।

तस्माद् भवन्तो मन्यन्तां४९ सर्व एव समाधिना । । 8.36.२० । ।

तस्माद्धि घोरान्तरकात्तारिताः स्वेन कर्मणा ।

न चान्यकर्मणा५० कश्चिदन्यस्तरति दुर्मतिः५१ ।

स्वकर्मणा५२ हि जन्तूनां फलपाको विधीयते ।।२ १ । ।

सनत्कुमार उवाच

ततस्त एवं पितरस्तेन प्रोक्ता महात्मना ।

हर्षेण साश्रुनयना इदमूचुस्तदा वचः ।। २२। ।

- - - -- - -- - ---- - -- -- -- - -- - --

३१ निरयघोरस्थान् - ख । ३२ स्वधर्मं कुरुते नरः - घ । ३३ धर्मानुष्ठितः - घ. । ३४ वदन्याश्च - क. ख. ग. । ३५ सत्पथि - क ख. ग. । ३६ सर्वत्र - ख. । ३७ सदा - ख । ३८ नैवं भवति - घ । ३९ युक्तैर्भ वतामेव - ख, चैव - घ. । ४० नान्यथा - ख । ४१... नहं - घ ४२ मयात्र - घ. । ४३ प्रतिज्ञा त - घ , प्राज्ञा - क. । ४४ न वदाम्यहं - ख । ४५... मात्मना - क. ख., सा - ग,.. गर्थिना - घ. । ४६ शरदः - ख घ.. । ४७ श्रुतं - क । ४८ तं ख । ४९ मन्यन्त, - ख. घ । ५,,,. त्कर्मणा क. ख. घ. । ५१ दुर्गतिं - क. घ । ५२ स्वकर्मणो - ख ।

- - - -- - -- - ---- - -- -- -- - -- - --

पितर ऊचुः

त्वदन्यः को वदेदेवं यो न स्यादीशसंमतः ।

युक्तमेतत्तव वचो धार्मिकस्य महात्मनः ।।२३ ।।

यो न स्यादीदृशः पुत्र५३ कथं तं सवदेवपः ।

इष्टैस्तु५४ योजयेत्५५ सम्यग् यथा त्वां गोवृषध्वजः ।।२४।।

त्वं धाता त्वं हि नो५६ बन्धुस्त्वं जनेता५७ महामते ।

पिता त्वमेव पुत्रा हि वयं तव न संशयः । ।२५। ।

अत्र ते वर्तयिष्यामः पुरावृत्तं महामते५८।

श्रुतौ स्मृतौ च यद् गीतं तन्नस्त्वं५९ मन्तुमर्हसि६० ।।२६।।

पितर ऊचुः

पुत्रा हि ब्रह्मणा सृष्टा देवा यजत मामिति ।

ते यजन्त६१ तदात्मानं६२ तेषां ब्रह्मा चुकोप ह ।।२७।।

उवाच चेनान्६३ संरब्धो नष्टसंज्ञा भविष्यथ ।

ते शप्ताः६४ ब्रह्मणा सर्वे समेत्य च६५ दिवौकसः ।।२८।।

दुःखशोकसमायुक्ता दीनास्तं६६ तुष्टुवुस्तदा६७ ।

प्रसन्नं तं समालक्ष्य त ऊचुः शिरसा नताः ।।२९।।

नष्टसंज्ञा वयं देव तान्नो६८ यच्छ पुनः प्रभो ।

तत् क्षमस्व च देवेश अज्ञानाद्यत् कृतं हि नः ।।8.36.३०।।

अथैवमुक्तो देवै६९स्तैर्ब्रह्मा लोकपितामहः ।

उवाच प्रणतान् देवान् सानुक्रोशमिदं वचः । ।३१ ।।

ब्रह्मोवाच

प्रायश्चित्तं महासत्वाश्चरध्वं नियमेन ह७० ।

व्यभिचारकृतं७१ सर्वं ततः पापं प्रहास्यथ ।।३२।।

- - - -- - -- - ---- - -- -- -- - -- - --

५३ पुत्रं क., पुत्रः - घ । ५४... स्त्व - क ख. । ५५ योजयत् - क ख. । ५६ हितो - क. । ५७ जनिता त्वं ।१) । ५८ महात्मने - घ । ५९ ततस्त्वं. - घ । ६० स्मर्तुमर्हसि - क, संस्मर्तुमर्हसि - घ. । ६१ जयन्त - क. ख. । ६२ स्तदात्मानं - क । ६३ चैनं - क. ख. । ६४ स्तं तदा देवं - क. घ. । ६५ सर्व एव - क घ. । ६६ ब्रह्माणं - क- घ । ६७??. स्सदा - क. ग । ६८ तन्नो - क. ख. घ. । ६९ देव - ख. । ७० कुरुध्वं भो युष्माञ्चीर्णे ददाम्यहं - ख. । ७१ कृते चावकृतं - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

देवा ऊचुः

सैव संज्ञा न नो देव विद्यते७२ सर्वसृक् प्रभो ।

यया ज्ञास्यामहे तानि प्रायश्चित्तानि लोकप । । ३३ । ।

ब्रह्मोवाच७३

स्वान् पुत्रान् परिपृच्छध्वं ततः श्रेयमवाप्स्यथ७४ ।

पुनः संज्ञां च धर्मज्ञा मा कुरुध्वमतोन्यथा ।। ३४।।

पितर ऊचुः

ततस्ते सुरशार्दूलाः पप्रच्छुः स्वान् सुताँस्तदा ।

प्रायश्चित्तानि धर्मांश्च वेदान् साङ्गान् सविस्तरान्७५ । ।३ ५। ।

ते च तेभ्यस्तदा पुत्रा आचुख्युः७६ प्रयताः शुभाः ।

याथातथ्येन तत्सर्वं परमेण समाधिना ।।३ ६। ।

अथ ते लब्धसंज्ञाश्च लब्धकामास्तथैव च ।

स्वान्पुत्रानभ्यभाषन्त प्रीयमाणा मुदा युताः ।। ३७।।

देवा ऊचुः

पुत्रा न यूयमस्माकं वयं पुत्रा हि वः सुताः७७ ।

यैर्ज्ञानं नष्टसंज्ञानां कृतमस्माकमव्ययम् । ।३८। ।

तैरेवमुक्ते तत्रागाद्७८ ब्रह्मा लोकपितामहः ।

उवाच चेदं तान्देवान् सर्वानेव महायशाः ।।३९। ।

ब्रह्मोवाच

वदन्ति नानृतं देवाः सत्यं देवेषु वर्तते८० ।

सुताश्चोक्ता हि वः सर्वे पितरो नानृतं हि तत् । ।8.36.४० ।।

तस्मात्८१ पितृत्वं युष्माकं८२ पुत्राणां नित्यमव्ययम् ।

भविष्यति न सन्देहो यूयं पुत्राश्च सर्वशः । ।४१ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

७२ प्रपश्येत् ( श्यत्) - ख. । ७३ पितामह - क. घ. । इतः परवर्ति पत्रमेकं खण्डितम् ( नष्टं) - क. पुस्तके । ७४ योप्यवाप्स्यथ - घ. । ७५ वेदाज्ञा (ङ्गाँ) श्च सुविस्तरान् - घ । ७६ आचक्षुः - ख. घ । ७७ पुत्राणां नित्यमव्ययं - ग. । ७८... त्तै स्तत्रागाद् - ग. । ७९ पितामह - घ. । ८० नानृतं - घ. । ८१ अस्मत् - घ. । ८२ पितृणां - घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

नह्य८३ शिष्याय कथ्यन्ते रहस्यानि कथंचन ।

एकार्थौ पुत्रशिष्यौ च तस्मात् पुत्राः स्थ सर्वशः ।।४२ । ।

तरन्ति पुत्रैः पितरः पुत्राँस्तान् तारयन्ति च ।

तारयित्वा पितृत्वञ्च८४ कर्मणा तेन यान्ति ते । ।४३ । ।

यूयञ्च तारिताः पुत्रैरज्ञानान्नरकात्तथा८५ ।

तस्मादिमे हि८६ पितरो यूयं पुत्राश्च सर्वशः । ।४४। ।

पाति यस्मात् पिता तस्माज् जनयत्यपि८७ वा पिता८८ ।

पुत्रेषु चैतदुभयं पितरस्तेन वो८९ मताः । ।४५ । ।

ततस्ते ब्रह्म - - - - - - - - - - - ।

- - - । ।४६ । ।

- - - - - - - - - - - - - - बलाः ।

पितरस्तान् वरैरिष्टैश्छन्दयामासुर०यथाः । ।४७। ।

पितरश्च ततो वव्रुरग्रे यजनमात्मनः ।

यो नोनिष्ट्वा यजेद्देवान्९० न स तत्फलमाप्नुयात्९१ । ।४८। ।

एनसा चाभिसंयुक्तो मह - - - - - - ।

- - - - - - - । ।४९ । ।

... - - ।

यथागतं ततो जग्मुर्ब्रह्मणा सह सर्वशः ।। 8.36.५० ।।

पितर ऊचुः

यथा९२ वयं त्वया पुत्र नरकान्नष्टचेतसः ।

तारिताश्चेतनावन्तः पुनश्च प्रवरीकृताः९३ ।।५१ ।।

पिता ततो भवान् पूज्यो योनुयासि महा - - ।

- - - - - - - - - - - - - - - - - ।।५ २ ।।

- - - - - - - - - - - - - सत्तमः ।

प्रणतः प्राञ्जलिर्भूत्वा पितॄन् वचनमब्रवीत् ।।५३ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

८३ नहि - ख. । ८४ पितॄन पुत्राः - घ. । ८५... रज्ञाने नरकात्तथा - ख ।। ८६... तेपीह - घ. । ८७ जनयँश्चापि - घ. । ८८ तान् - ग. । ८९ चो - ग., वा (?) । ९० यजन्देवान् - ख. । ९१ तत्फलमवाप्नुयात् - ख. । ९२ तथा - ख. । ९३ प्रचरीकृताः - ख. ग. ।

- - - -- - -- - ---- - -- -- -- - -- - --

एवमेतद्यथोक्तं वो नानृतं वो वचः शुभम् ।

परस्पर९४ पितृत्वं हि सर्वेषां समुदाहृतम् ।।५४।।

वरं भूय इमं९५ मह्यं प्रयच्छत गणेश्वराः ।

. . .... . .. .. ।

एतेन प्रश्नमिष्टं हि कथितं द्विजसत्तम (?) ।।५५।।

पितर ऊचुः

नास्ति किंचिदविदितं भवतः प्रवरेश्वर९६ ।

भवानस्मत्प्रमाणार्थं व्याख्यातत्त्वमिहेच्छसि ।। ५६ ।।

ब्रूहि यद्विदितं नोस्ति कथायिष्याम तद्धि ते९७ ।

श्रुतं वाप्यनुभूतं ९८ वा यथाशक्ति ९९ यथातथम्१००

. .... . . ... . । । । ५ ७। ।।

सुकेश उवाच

भवन्तो नरके घोरे परिक्लिष्टाः सुदारुणे ।

अतः श्रुतिज्ञाः सर्वेषां नरकाणामसंशयम् ।।५८।।

तेषां सतत्त्वं योगञ्च १०१ कालभेदं तथा क्रमम् ।

तत्सर्वं श्रोतुमिच्छामि परं कौतूहलं हि मे । ।५९ । ।

कियन्तो१०२ नरकास्ते च किं प्रमाणाः किमाश्रयाः१०३ ।

किं रूपा के च यात्यन्ते१०४ कथं चैव सुदुःखिताः ।।8.36.६ ० । ।

- - - - - - - - - - - - - - - - - - |

- - - - - - - - - - - - - - - - | |६१ ||

कथं च तप्यते जन्तुर्वाच्यते (?) च कथं तथा ।

कियता चैव कालेन नरकात् स विमुच्यते ।

मुक्तश्चोत्तिष्ठते केन कथं संसरते१०५ पुनः । ।६ २।।

- - - -- - -- - ---- - -- -- -- - -- - --

९४ परस्परं - घ. । ९५ वरन्तुदत्तं - ख. । ९६ प्रचरेश्वर - ग. । ९७ तद्विभो - घ । ९८ वा अनुभूतं - ख., यदनुभूतं वा - ग. । ९९ वृष्टं वापि - ख. । १०० यथाबलम् - घ. । १०१ त्वं - घ. । १०२ कीर्त्यन्ते - घ. । १०३ किमाश्रयात् - ख. । १०४ पात्यन्ते - घ. । १०५ सन्तरते - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

एतत्सर्वमशेषेण विस्तरेण यथातथम् ।

कथयध्वं महाप्रज्ञाः परं कौतूहलं हि मे१०६ ।।६३ ।।

तमुपेन्द्रपितामहेश्वरेशप्रवरेशं विदितार्थतत्त्वकोशम् ।

दुरितांकित - -मुक्तयोगं प्रतियोगं त्विदमाहुरग्रयोगम् ।।६४। ।

इति स्कन्दपुराणे सुकेश१०७ महाभाग्यं नाम षट्त्रिंशोध्यायः

सनत्कुमार उवाच

ततस्ते पितरस्तस्य प्रतिष्ठां१ स्वसुतं प्रति२ ।।

सुमर्माणमिति ख्यातं कथयामासुरव्ययाः ।।१ ।।

पितर ऊचुः

अयन्ते३ जनकः पुत्र४ सुशर्मा लोकविश्रुतः ।

कथायिष्यति तत्त्वेन यत्त्वया समुदाहृतम् । ।२ ।।

सनत्कुमार उवाच

ततः सुशर्मा विप्रर्षे तमामन्त्र्य५ महामनाः६ ।

उवाचेदं महासत्त्वं७ सुकेशं गणसत्तमम् । ।३ । ।

सुशर्मोवाच

सुकेश न वयं साक्षात् पतिता नरकार्णवे ।

त्वय्यालम्बितचित्तास्तु पतिष्यामस्त्वया विना । ।४। ।

किन्तु तद्यातनाभीताश्चिंतयामस्त्वहर्निशम् ।

कीदृशास्ते महाघोरा नरकाः श्रुतिदारुणाः ।।५।।

ततस्ते कथयिष्याम यथाप्रज्ञं यथाश्रुतम् ।

गणेश्वरेश८ शृणु मे९ नरका ये १० प्रकीर्तिताः ।।६।।

- - - -- - -- - ---- - -- -- -- - -- - --

१०६.. स्तत्सर्वं विस्तरेण तु - ष. । १०७ पितृपक्षे - घ. ।

१ पितरं - घ. । २ सुमहाप्रभं - घ. । ३ अयन्नो - घ. । ५८ पुत्रः - ग. । ५ तमोहंता - घ । ६ महाबलाः - घ. ।

७... त्व - घ. । ८ गणेश्वर त्वं - घ. । ९ ये - ख. । १० मे - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

दुरासदा महादुर्गाः सर्व११ प्राणिभयंकराः ।.

प्रथमो नरकस्तत्र विश्रुतो यमलाचलः१२ । ।७। ।

द्वितीयः शाल्मलो नाम तृतीयः कालसूत्रकः ।

कुम्भीपाकश्चतुर्थश्च असिपत्रवनोपरः१३ ।।८।।

तथा वैतरणी षष्ठः सप्तमश्चाप्ययोघनः१४ ।

अष्टमः पद्म इत्येव महापद्मस्तथापरः ।।९।।

रौरवो दशमश्चैव महारौरव एव च ।

द्वादशश्च तमो नाम तमस्तमतरस्तथा१५ । ।8.37.१ ० ।।

एते महान्तो नरका उच्छ्रायाश्च तथापरे ।

एकैकस्योच्छ्रया ह्यष्टौ नरकास्तेपि कीर्तिताः ।। ११ । ।

उच्छ्रयेषु सविश्रामा यातना भवतीश्वर१६ ।

इतरेषु त्वविश्रामो विशेषो ह्येष१७ कीर्तितः । । १ २।।

तेषां सततदुःखं तु नृणां पापेन कर्मणा१८ ।

भेदः क्षयाच्च१९ पापस्य क्रमस्तेषां प्रवक्ष्यते२० ।।१ ३ । ।

प्रमाणं तु गणेशेह न शक्यं२१ वक्तुमेकशः ।

विभुत्वात् कर्मणस्तस्य क्षयादन्तं प्रपश्यति२२ ।।१४।।

नरके पतितः२३ सर्वो नान्तं तस्य प्रपश्यति ।

क्षीणपापाः प्रपश्यन्ति यथा तच्छृणु मेव्यय ।। १ ५। ।

पतितो२४ नरके घोरे दुष्कृती स्वेन२५ कर्मणा ।

यात्यमानो२६ तिकरुणं२७ दिशमेकां प्रपद्यते । ।१ ६। ।

स गत्वा शीघ्रमध्वानं बहुयोजनविस्तृतम् ।

बहूनन्या२८ ननासाद्य तस्यान्तं२९ विनिवर्तते ।। १७। ।

- - - -- - -- - ---- - -- -- -- - -- - --

११ सर्वे - घ. । १२ यमलोचनः - घ. । १३... स्ततः परः - घ. । १४ यमः - घ. । १५ ततस्तमपरस्तमः - घ., स्तमोत्तमः - ग. । १६ त्वरः - ग. । १७ ह्यत्र - ख. । १८ तु पापकर्मणाम् - घ. । १९ भेदक्षयश्च - ख । २० प्रवर्तते - घ. । २१ न शक्यं - क. ग., वै शक्यते - घ. । २२ प्रयस्यति - ग. । २३... तितवः - क. ग. । २४ पातितो - ख, पतते - घ । २५ दुष्टतित्वेन - घ. । २६ पात्यमानो - घ., पात्यमानो पि - ख. । २७ करुणां - क. । २८... ध्या - क. ग. । २९ तस्मात - ग. ।

- - - -- - -- - ---- - -- -- -- - -- - --

विनिवृत्य ततो भूयो यात्यमानो विचेतनः ।

अन्या दिशं३० पुनर्गत्वा तथैव विनिवर्तते ।।१८।।

एवं सर्वा दिशो३१ गत्वा ह्यन्तमप्राप्य दुःखितः ।

यात्यते करुणं तत्र न कश्चिदिह विद्यते ।।१ ९।।

यातनान्ते त्वकरुणं३२ पापस्यान्ते ततः पुनः ।

प्रपश्यते३३ परिमितं परिच्छिन्नं च सर्वशः ।।8.37.२०।।

द्वारेण महता युक्तं ततस्तस्माद्विमुच्यते ।

एवं हि नरकास्सर्वे ह्यनन्ताश्चाक्षयाव्ययाः ।।२ १ ।।

न तेषां परिसंख्यानं योजनैस्संविधीयते ।

येन कालेन तु पुनर्जन्तुः पतति३४ दुःखितः । ।२२।।

यथा३५ चैतच्छृणु विभो कथ्यमानं मयानघ३६ ।

कृत्वा पापानि कर्माणि क्षयान्ते३७ दुष्टचेतनः३८ । ।२३ । ।

व्याध्याधियुक्तः क्लेशेन त्यजति स्वान्तनून् ततः ।

यमदूतैर्महापाशैर्बद्ध्वा दुःखसमीरितः । ।२४। ।

विषमेण पथा देव नीयते विकृताकृतिः३९ ।

अयोमयैः कण्टकैश्च विध्यमानस्ततस्ततः ।।२५।।

केशमज्जास्थिपंकैश्च४० दिह्यमान४१ स्समन्ततः ।

विषमेषु च गर्तेषु प्रपतन्भिद्यते पुनः४२ ।। २६ ।।

क्वचिच्चोपलवर्षेण महता सन्निकीर्यते ।

तत्र भिन्नशिरोजानुपादबाहूरूबन्धनः ।।२७।।

कृष्यते यमदूतैश्च पुनः कण्टकिभिर्द्रुमैः४३ ।

यात्यते४४ भिद्यते चैव वल्लीभिश्चा४५ वबद्ध्यते४६ ।।२८।।

एवं बहुविधाकारैर्दुःखदैः पथिभिः प्रभो ।

नीयमानो वशः४७ क्लेशान् प्राप्नोति यमसादनम्४८ । २९।।

- - - -- - -- - ---- - -- -- -- - -- - --

३० दिशां - क. ग. । ३१ सर्वदिशो - ग. । ३२ तु करुण - ख. । ३३ प्रपश्यन्ते - - क ख । ३४ काले पुनः जन्तुः पथिभिः पथि - ख. । ३५ तथा - घ, वै - ख. । ३६ पतन्ति घोरेस्मिन् तत् शृणुह्यपरं विभो - घ., तयानघ - ख. । ३७ भ्रमन्ते - घ. । ३८ चेतसः - ख.,... चेतसां - घ. । ३९... ति - क. ग- । ४० केशामेध्यास्थिपंकैश्च - क. घ. । ठ १ दह्यमानः - क ख. घ. । ४२ प्रतापा (प्रपाता) विचेतनः - घ । ४३... र्वृतः - घ. । ४४ पात्यते - ख, पाद्यते - घ. । ४५ बलिभिश्चा - घ. । ४६. पि बध्यते. - घ. । ४७ नीयमना स वै - घ., वशं - क. । ४८ मयसाधनं - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

स ततो यममप्राप्य दूरादेव यमाज्ञया।

चित्रगुप्तमुपागम्य श्राव्यते कर्म यत्कृतम्।।8.37.३०।।

सोमोग्निर्वरुणो वायुः सूर्यश्चेति तदा नरम्४९ ।

साक्षिणस्तत्र जन्तूनां५० ब्रुवते यत् कृताकृतम्५१ ।।३१।।

उक्तो विभावितश्चैव चित्रगुप्तेन चोषितः।

नरके पात्यते आर्त्त५२ ऊर्ध्वपादो ह्यधःशिराः५३ ।।३२।।

तोमरै५४ श्चातितीक्ष्णाग्रैश्शरैश्चाथ परश्वधैः।

भिन्दिपालैर्मुद्गरैश्च अतिभिर्दीर्घवेधनैः५५ ।।३३।।

परिघैः करपत्रैश्च वज्रैष्टंकैर्हलोपलैः५६।

कीलैश्च मुशलैश्चैव क्षारपिष्टेन चैव हि।।३४।।

प्रदीप्तैश्चायुधैर्घोरैरग्निवर्षेण चाप्युत ।

हन्यमानो दिवारात्रं विनदन्५७ करुणं बहु ।।३५।।

वर्षाणां तु सहस्रेण नरकं प्राप्नुते शुभम्।

स तत्र पतितो भूयो यात्य५८मानः सुदुःखितः ।।३६।।

वर्षकोटिमविश्रान्तं५९ निरयान्तं प्रपद्यते।

महानरकमुक्तश्च उच्छ्रयान्तरमाश्रितः।।३७।।

शीतेन वायुना स्पृष्टः सुखं६० तत्र स विन्दति।

स तं विश्राममासाद्य विस्मृतो यातनां तदा ।।३८।।

मुहूर्तमाहृते६१ स्वप्ने राक्षसेनापकृष्यते।

स तेन कृष्यमाणश्च भूयो दुःखशुचार्दितः६२ ।।३९।।

करुणं बहुधातीव६३ प्रविलप्यावतिष्ठते६४।

ततो भूयः समाकृष्य यातनायां स राक्षसः।।8.37.४०।।

यातयत्येव ६५ तं जन्तुं सविश्रामं६६ सचेतसम्६७ ।

तत्र वर्षसहस्रं वै यातितः पुनरेव सः।।४१।।

- - - -- - -- - ---- - -- -- -- - -- - --

४९ तदाननम् - घ. । ५०.. स्सर्वजन्तूनां - ध. । ५१ कर्म यत् - क. ग. । ५२ निपतत्यार्त - क. ग., निपतत्याशु - घ । ५३. ..,त्यधशिराः - ख., ह्यधोमुखः - घ । ५४ तैरेतै - घ. । ५५ ऋष्टिभिर्दीर्घ- वेधनैः घ. भेदनैः- - ख घ- । ५६. ज्वलोपलैः - क घ. । ५७ विलप ( न्) - घ. । ५८ याप्य... - घ. । ५९ प्रविश्रम्य - कः ग,, स विश्राम्य - घ. । ६० दुःखं - क । ६१ मुहूर्ते प्रगते - घ । ६२ दुःखेन चार्दितः क ख । ६३ चैव - क । ६४ विप्रलप्यावतिष्ठते - क. । ६५ पातयत्येव? । ६६ जन्तुमवि-श्रामं? । ६७ सचेतनम् - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

अन्यस्मिन्नुच्छ्रये घोरे यात्यते६८ तावदेव हि ।

एवं स उच्छ्रयान् प्राप्य अष्टौ पापेन कर्मणा ।।४२ ।।

संसारे६९ कृमिकीटादिजन्तुः संप्रतिपद्यते ।

ये तु गच्छन्ति तान् घोरान् नरकान्७० पुरुषाधमाः। ।४३ ।।

तानहं संप्रवक्ष्यामि तव पुत्र समासतः ।

प्रथमो यो मया प्रोक्तो नरको यमलाचलः । ।४४। ।

यात्यन्ते७१ तत्र पुरुषा महानिरयगामिनः ।

पर्वतौ द्वौ भहासत्वसिंहव्याघ्रसमाकुलौ ।।४५। ।

शरभेभसमाकीर्णौ७२ बहुसर्पसमाकुलौ७३ ।

पक्षिभिर्विविधाकारैः पुरुषैश्चोद्यतायुधैः ।।४६।।

वृक्षैरपर्ण्णैस्संयुक्तौ सूचीभिर्वज्रकण्टकैः ।

तयोरन्तरमेकं वै समं सूचीभिरावृतम् ।।४७।।

ऊर्ध्वाभिर्वज्रतुण्डाभिरभेद्याभिस्तथैव च ।

अन्यतः पुरुषैर्घोरैः शस्त्रपाणिभिरावृतौ७४ ।।४८।।

प्राकारेण च लौहेन७५ समन्तात् परिवारितौ ।

आकाशे चापि लौहेन तौ जालेन७६ समावृतौ ।।४९ ।।

यात्यन्ते तत्र पुरुषा ये वै स्त्रियमनिच्छतीम् ।

आक्रमन्ति परक्यां७७ वै कन्यादूषक एव च ।। 8.37.५० ।।

न्यासापहारकश्चैव तथा मांसापहारकः७८ ।

रसापहारकश्चैव यश्चापि परदूषकः ।।५१ ।।

इन्द्रियग्रामघाती च मिथ्यालिङ्गी तथैव च७९ ।

मृगश्वापदहन्ता च पृष्ठमांसाशिनश्च ये ।।५२ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

६८ पात्यते - घ. । ६९ ससार - क. घ.,.. र - ख. ग. । ७० तं घोरं नरकं - क. ख. घ. । ७१ पात्यन्ते - घ. । ७२... ण - ग. । ७३ समाकुलैः - ग. । ७४.. .रावृतैः - क । ७५ लोहेन - क. ख. ग. । ७६ तोजलेन - ख । ७७ पराक्यां - क., पाराक्य - ग., परकीया? ७८ मांसापहारकाः घ. । ७९ मिथ्यालापिन एव च - घ , मिथ्यालिङ्ग - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

वृथामांसाशिनो ये च हिंसां८० ये च प्रकुर्वते ।

एते नराधमाः पुत्र गच्छन्ति यमलाचलम्८१ ।।५ ३ ।।

यमलेषु८२ च जातेषु८३ यो न कुर्यान्नराधमः ।

प्रायश्चित्तमशुद्धात्मा स च तं प्रतिपद्यते ।।५४।।

स प्रसन्नो यथोक्तैस्तैः पुरुषैः समभिद्रुतः ।

आयुधैश्छिद्यमानश्च८४ पर्वतं तं प्रपद्यते८५ ।।५५।।

तत्र व्याघ्रैश्च८६ कुपितैः शरभैश्च८७ तरक्षुभिः ।

सर्पैर्विडालैः पतगैरयस्तुण्डैश्च भक्ष्यते ।।५६ ।।

तैर्भक्ष्यमाणो यदि च वृक्षं समधिरोहति ।

तत्र तैः कण्टकैस्तीक्ष्णैर्भिद्यते८८ पक्षिभिश्च ह । ।५७। ।

अथ चेत् कन्दरां तस्य गुहां वा यातुमिच्छति ।

तत्रापि ह्यग्निना दग्धो दुःखार्त्तो विनिवर्तते । ।५८। ।

अथ चेदन्तरं घोरं तयोः संप्रतिप्रद्यते ।

तत्र सूचीभिरुग्राभिः८९ पादयोर्भिद्यते नरः । ।५९ ।।

भिन्नञ्च तं समालक्ष्य९० ह्यशक्तमपसर्पणे ।

समागमम्याचलौ क्षिप्रं पीडयेतामतीव हि ।।8.37.६ ० । ।

पीड्यमानोचलाभ्यां स९१ यन्त्रेणेक्षुवदातुरः ।

करुणं क्रन्दमानस्तु यातनां तां समश्नुते । ।६ १ ।।

भक्षितस्याथ भिन्नस्य विलुप्तस्य च पक्षिभिः ।

दग्धस्य च नवं भूयः शरीरमभिजायते । । ६२ ।।

एवं स यात्यमानो९२ वै बहूनब्दान् सुःदुखितः ।

द्वारं लब्ध्वा विनिर्यात९३ उच्छ्रायेषु९४ निपात्यते । ।६३ । ।

- - - -- - -- - ---- - -- -- -- - -- - --

८० वृष - क. ग, विंश - रव्र । ८१ यमलोचनं - घ. । ८२ अपराधेषु - घ. । ८३ यातेषु - घ. । ८४... श्छिद्यमानाश्च - क. ग., छिद्यतेतमं - ख । ८५ स च तं प्रतिपद्यते - ख. । ८६ सिंहैश्च - ख. । ८७ शार्दूलैस्स - .ख. । ८८.?. र्भक्ष्यते - व. । ८९ सूचिभिरुग्राभिः - ग. । ९० ससालोक्य - घ । ११ च - क ख. । ९२ पात्यमानो - घ । ९३ विनिःसृत्य - क. ख. घ. । ९४ उच्छ्र्येषु - क. ।

- - - -- - -- - ---- - -- -- -- - -- - --

यमलाचलमेतमुग्रवेगं बहुधापापसमेत९५कर्मयोगम् ।

शृणुयाद्य अभीक्ष्णशोतिवेगं स न यात्येव९६ तमुग्रपापयोगम् । ।६४ ।।

इति स्कन्दपुराणे नरकवर्णने यमलाचलकथनं नाम सप्तत्रिंशोध्यायः

सुशर्मोवाच

अतः परं प्रवक्ष्यामि शाल्मलीनरकं पुनः ।

यात्यन्ते१ तत्र पुरुषाः सुभृशं२ पापकर्मिणः । ।१ । ।

शाल्मलीनां सहस्राणि बहूनि प्रवरेश्वर ।

उच्चास्सर्वाश्च ता घोरा बहुयोजनविस्तृताः ।।२ ।।

महाशाखा महापत्रा महाकण्टकसंयुताः३ ।

लौहेन महता चैव प्राकारेणाभिसंवृताः ।। ३ ।।

जालेन महता सर्वा४ उपरिष्ठान् समावृताः ।

पुरुषास्तत्र तिष्ठन्ति बहवो रुषिताननाः ।४४।।

वज्रदण्डोपलधरा५ असिमुद्गरधारिणः ।

अन्यैश्च विविधाकारैरायुधैर्वृतपाणयः६ ।। ५।।

यातयन्ति भृशं जन्तूनवशास्ते८ सुदारुणाः९ ।

छिद्यमानाश्च तत्रापि राक्षसैः क्रूरकर्मभिः ।।६।।

दिशः प्रपद्यते सर्वा वेदनार्तः सुदुःखितः ।

व्रजते यत्र यत्रासौ तत्र तत्राभिहन्यते ।।७।।

गर्तेषु पतितं चैव राक्षसाः प्राप्य सर्वशः ।

शस्त्रैश्च विविधाकारै१० र्निकृन्तन्त्यतिदारुणाः११ ।।८ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

९५ वहु पापस्य सहेत - ख. । ९६ याति - क ख. ग. ।

१ पतन्ति - घ. । २ स्वद्दशं - घ. । ३ महाकंटकिभिर्द्रुमाः - ख. । ४ सर्वमुपरिष्टात् - घ. । ५ टंको- पलधारा - ख ग. । ६ धृ (र्धू) तपाणयः - ख. घ. । ७ पातयन्ति - क ख. ग, घातयन्ति - घ । ८ मुखरास्ते - घ । ९ सदावशा. - घ. । १० अन्यैर्नानाविधाकारै - क. । ११ निकृत्यन्तेतिदारुणैः - ख ।

- - - -- - -- - ---- - -- -- -- - -- - --

श्रावयन्तः१२ पुरानेन१३ कृतं पापं दुरात्मना१४ ।

भर्त्सयन्तश्च१५ दुर्वृत्तं पतितं क्वचिदेव हि१६ ।। ९ ।।

तत उत्थाय भिन्नाङ्गः सोनुबद्धश्च राक्षसैः ।

सूचीकण्टकसंयुक्तं देशमन्यं प्रपद्यते ।।8.38.१ ० ।।

तत्र सूचीभिरुग्राभिः कण्टकैश्चायसैः पुनः ।

भिद्यमानो नदन्१७ दुःखान्निपतत्यतिदुःखितः ।। ११ ।।

तत्राप्येनं समासाद्य विविधायुधपाणयः ।

राक्षसाभिद्रवन्त्येव१८ वैरिणो१९ वैरिणं२० यथा ।। १ २।।

तस्मादुत्थाय२१ वेगेन वृक्षं यद्यभिरोहति ।

तत्र२२ तैः कण्टकैस्तीक्ष्णैर्भिद्यते छिद्यतेपि च२३ ।। १३ ।।

पत्रैश्च२४ विविधाकारैरयस्तुण्डैश्च पक्षिभिः ।

हृतकर्णाक्षिनासोष्ठः पतितो धरणीतले ।। १४।।

तत्र सूचीभिरुग्राभिः सर्वाङ्गेषु विभिद्यते ।

एवं बहुविधाकारा यातनास्तत्र दुःखिताः ।।१ ५।।

प्राप्नुवन्ति दुराचारा ये तान्निगदतः२५ शृणु ।

अग्निदो गरदाता च वियोनौ२६ यश्च गच्छति ।।१ ६।।

पुंसि यो वोच्छृजेच्छुक्रं२७ विषदो मांसविक्रयी ।

समुद्रयायी दुष्टात्मा यश्चैको मिष्टमश्नुते२८ ।। १७।।

अतिथिन्नार्चयेद्यश्च२९ यश्च मिथ्याव्रती भवेत्३०।

ब्रह्मोज्ळ(?)श्च३१ विवासाश्च योपः प्रविशते द्विजः३३ ।।१८।।

घण्टिको ग्रामयाजी च शूद्राध्यापक एव च३४ ।

तथा वार्धुषिको लुब्धो३५ ब्रह्मणश्चैव विक्रयी३६ ।।१९।।

- - - -- - -- - ---- - -- -- -- - -- - --

१२ श्रावयन्ते - ख. । १३ पुराणानि - घ । १४ महाबलाः - क. ग. घ. । १५.. न्त्येव - ख । १६ केचिदेव हि - क. । १७ रुदन् - घ. । १८... भिभवन्त्येवं - घ. । १९ वैरिणं - घ. । २० वैरिणो - घ. । २१ अस्मादुत्याय - ख. घ. । २२ अत्र - ख. । २३ वा - ख. । २४ यन्त्रैश्च क. ख । २५ तान्मे निगदतः - ग.,.. .मेतान्निगदितान् - घ. । २६ अयोनौ - क- घ. । २७ विन्यसे.. - क. घ., च्छृजते शुक्रं - क, गर्भं - घ. । २८ मृष्टमश्नुते - क. । २९ अतिथीन्नार्चयेद्यश्च - घ., यस्तु - ख. घ. । ३० मिथ्याचरति यो व्रती ऽ तं) - ख., मिथ्याप्रवी (ब्रुवो) - क. । ३१ ब्रह्महा - घ. । ३२ विवस्त्रश्च - ख. । ३३ नरः - ख । ३४ देवद्रव्याप्रहारकः - घ. । ३५.. कान्नाध्वा - घ. । ३६ विक्रेता चैव ब्रह्मणः -.. .विक्रेता ब्रह्मणस्तु- यः घ. ।

- - - -- - -- - ---- - -- -- -- - -- - --

एते गच्छन्ति दुर्वृत्ताः कूटशाल्मलिसंज्ञकम्३७ ।

कोटीद्वयेन तूत्तीर्णा३८ वर्षाणां वै पुनश्च३९ ते ।।8.38.२० ।।

उच्छ्रये४० पातिताः४१ स्तोकं कालं विश्राम्य वै पुनः ।

पात्यन्ते नरके तस्मिन् यावत् क्षीणं तदेनसम् ।

एषैव विधिरन्येषां नरकाणां मुने स्मृतः४२ । ।२ १ । ।

य इमं४३ भृशदुःखितोपलम्भं४४ सुकृतीनामतिदुर्गमाचलम् ।

शृणुयात् प्रयतः कुतूहलात्मा न स गच्छेन्निरयं हि शाल्मलम्४५ ।।२२।।

इति स्कन्दपुराणे नरकवर्णने कूटशाल्मलिकथनं नाम अष्टत्रिंशोध्यायः

सुशर्मोवाच

अतः परं प्रवक्ष्यामि१ नरकं कालसूत्रकम् ।

समन्तान्महतोच्चेन प्राकारेण सुसंवृतम् ।। १ ।।

लोहजालेन च तथा आकाशेप्यभिसंवृतः ।

यथैकश्च तथा सर्वे नरका अभिसंवृताः ।। २।।

सोच्छ्रयाश्चैव विज्ञेया न वक्ष्ये तानहं४ पुनः ।

लोकद्रुहो५ जनास्तत्र यात्यन्ते६ पुरुषाधमाः ।।३ ।।

ये हरन्ति स्त्रियं७ वापिविक्रेता८ यस्तथा९ गवाम् ।

धर्मस्य चात्मनश्चैव ब्राह्मणानां च निन्दकः ।।४।।

छद्मना यश्च शास्त्राणि१० गुरुभ्योपह्नवेत्११ पुनः ।

गुरुं निन्दति यश्चापि १२ वितर मातरं तथा ।।५।।

- - - -- - -- - ---- - -- -- -- - -- - --

३७.. संज्ञके - ख. । ३८... द्वयं तु संयात्य - ख, द्वयं तु तत्तीर्णा - घ । ३९ पुरं च - ख. । ४० उत्थाय - घ. । ४१ पतिताः - घ. । ४२... णामुपस्मृतः - घ । ४३ इदं - ख. । ४४.. .पलभ्यं - घ । ४५ सांप्रतं - घ., शाल्मलिम् - ख ।

१ अतः परस्तृतीयस्तु - क., तृतीयन्तु - ख. । २ नरकः कालसूत्रकः - क । ३ सुसंवृतः - क. । ४ तदहं - क. । ५ शोकद्रोहं - क. ख., शोकद्रोहकरा - घ. । ६ पात्यन्ते - घ. । ७ श्रिय - घ. । ८ वाजिविक्रेता - ख, चाश्वं - घ. । ९ विक्रेतारस्तथा - घ. । १० दत्त्वा चैव महद्द्रव्यं - घ. । ११ शिक्षा निह्नवेत् - ख. । १२ यो गुरुं निन्दते चापि - क., शास्त्रं गृह्य गुरुं निन्देत् - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

श्वशुरं भ्रातरं ज्येष्ठं१३ तथा चान्यान् गरीयसः ।

आक्रोशयति१४ यस्तान्वै तथा चाप्यवमन्यते ।।६ ।।

आश्रमाणां तथा भेत्ता रहस्यानां च सर्वशः ।

अदत्तं यः समादद्यात् स गच्छेद् द्विज तत्र वै१५ ।।७।।

ते तत्र पतिता घोरे नरके पापचेतसः ।

तिस्रः कोटीस्तु संपूर्णा वर्षाणान्तु नराधमाः ।

यात्यन्ते मृत्युवचनात्१६ क्रन्दमाना विचेतसः ।।८।।

कालसूत्रेण महता मित्वा मित्वा तु दुष्कतम् ।

छिन्दन्त्यङ्गानि जन्तूनां कुण्ठाग्रैरायुधैर्भृशम् । ।९।।

किंकरैस्तैरविश्रान्तं१७ दिवारात्रमतन्द्रितैः१८ ।

पूर्णे काले१९ ततो जंतुरुच्छ्रयान्२० प्रतिपद्यते । ।8.39.१ ०। ।

विश्राम्य स तदा जन्तुः पात्यते२१ नरके पुनः ।

यावदस्य कृतं पापं क्षीणं सर्वमशेषतः । ।१ १ ।।

य इमं बहुपापकर्तृसूत्रं शृणुयाद् दुष्करलोककर्मसूत्रम् ।

न स याति२२ तदुग्रदुःखसूत्रं नरकं तद् यमलोककालसूत्रम् । ।१ २।।

इति स्कन्दपुराणे नरकवर्णने कालसूत्रं नाम ऊनचत्वारिंशत्तमोध्यायः

सुशर्मोवाच

अतः परं प्रवक्ष्यामि कुम्भीपाकं महाभयम् ।

श्रोतृणामपि तत्कालं१ भयदं ह्यकृतात्मनाम् । ।१ । ।

आयस्यस्तत्र ब्रह्मणश्च अञ्जनाचलसन्निभाः ।

कुम्भ्यस्तैलेन२ संपूर्णा वह्निवर्णाः३ सुदुःसहाः । ।२ । ।

दुष्कृतीन्४ तासु तप्तासु५ बद्ध्वा बद्ध्वा महाबलाः६ ।

क्षिपन्ति७ राक्षसा घोराः८ क्रन्दमानाः सुभैरवम् ।।३ ।।

- - - -- - -- - ---- - -- -- -- - -- - --

१३ श्रेष्ठं - घ. । १४ आकोश... - क. । १५ कालसूत्रकम् - ख. । १६ मृत्युवदनात् - ख. । १७... रविश्रान्तै - ख. । १८ रात्रावतन्द्रिताः - ख,... तं - क. । १९ गते काले - घ. । २०... राश्रयं - घ. । २१ जन्तुर्जायते - घ. । २२ गच्छति - ख. ।

१ यं श्रुत्वा - ख. । २ कुम्भास्तैलस्य - क. । ३ वह्नितप्ताः - ख. । ४ दुष्कृतीनां - क. । ५ सुतप्ताश्च - क., ६ भयावहाः - क., महाबलैः - ख. । ७ क्षिप्यन्ते - ख. । ८ राक्षसैर्घोरैः - ख. ।

- - - -- - -- - ---- - -- -- -- - -- - --

वर्षकोटीश्चतस्रश्च९ पच्यन्ते तत्र जन्तवः ।

ये तानिमान्निबोध त्वमुच्यमानान्मया विभो ।।४।।

इष्टकापाककारी१० च कुम्भपाककरस्तथा११ ।

तौ विनाशयते यश्च अग्निदो यो१२ गृहेषु च ।। ५। ।

वने खलेथ गोष्ठे वा अन्नपानविनाशकः ।

भोजने विघ्नकारी च यज्ञहा यज्ञदाहकः । । ६। ।

कूटकर्मकरो यश्च कूटसाक्षी तथैव च ।

मिथ्याग्निचयनी चैव मिथ्याग्न्याहरणी तथा । ।७। ।

मिथ्यापाकप्रदाता च वेदानां यश्च दूषकः ।

हर्तोपकरणानां च शिल्पिनां यो नराधमः । ।८। ।

एवं ते यातितास्तत्र विश्रामं पुनरुच्छ्रये ।

संप्राप्य नरके भूयो निपतन्ति क्षयान्तिकम् ।।९। ।

य इमं बहुदुष्कृतान्तपाकं शृणुयाद्वा मनुजो हि कर्मपाकम् ।

न स गच्छति तं दुरात्म१३ पाक१४ नरकं साधनदुःखकुम्भिपाकम्१५ ।।8.40.१ ०।।

इति स्कन्दपुराणे नरकवर्णने कुम्भीपाको नाम चत्वारिंशोध्यायः

आगामी पृष्ठः (अध्यायाः ४१ - ५०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०५

https://sa.wikisource.org/s/fcb
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः ३१ - ४०) आगामी पृष्ठः (अध्यायाः ५१ - ६०)

अध्यायाः ४१ - ५०

सुशर्मोवाच
अतः परं प्रवक्ष्यामि असिपत्रवनं पुनः१ ।
नरकं पापकृद्दुःखं२ सर्वसत्वभयंकरम् ।। १ । ।
असिपत्र३ इति ख्याता वृक्षास्तत्र दुरासदाः ।
बहवः सुमहाशाखा घनाश्चोच्चाश्च४ ते भृशम् । ।२।।
तेषां पत्राणि घोराणि तीक्ष्णान्यसिनिभानि च ।
आयसेभ्यो विशिष्टानि न च तान्यायसानि हि५ ।।३ ।।

९ सहस्रं च - घ.,.. श्च चतुरः - ख. । १०.. पात्रकारी - क. । ११ कुम्भपाचक एव तौ ( च) - क. घ. । १२ अग्निदाता - ख. । १३ दुरन्त (?) । १४ तापं - क. ।
१५ कुम्भिससाख्यदुःखपाकं - क. ।
१ ततः - ख. । २ पापिनां दुःखं - ख. । ३ असिपत्रा - घ. । ४ मनोदुःखकराश्च - घ. । ५ तान्यायतानि च - ख.।



तैक्ष्ण्यात्तानि विशिष्टानि छेदने च महामते ।
तैः पत्रैराचिताश्चैव तथा कण्टकिनश्च६ ते ।।४। ।
जन्तवस्तत्र रक्षोभिः पापकर्मनिबन्धनाः७ ।
वध्यमानासिमुशलैस्तथैवान्यैर्महायुधैः८। ।५। ।
अग्निना दह्यमानाश्च वृक्षांस्तान् संप्रयान्ति९ ते ।
तानागतान् समीक्ष्यैव पर्णानि प्रपतन्त्युत१० । । ६ ।।
महागुरूणि तीक्ष्णानि विनिकृन्तन्ति११ ताँश्च ह ।
ते निकृत्तशिरोग्रीवा देशात्तस्मात् प्रयान्ति वै । ।७।।
ते गता१२ राक्षसैर्भूयो भूयो वृक्षैर्दुरासदैः ।
यात्यन्ते१३ वर्षकोटीस्तु तत्र पञ्च सुदुःखिताः ।।८। ।
ततो विमुक्तास्तेभ्यस्ते उच्छ्रयान् संविशन्ति हि ।
विश्रान्तास्तत्र ते सर्वे१४ उच्छ्रयान्नरके पुनः । ।९।।
पात्यन्ते विवशा मूढा यावत् पापं क्षयं गतम् ।
ये तु तं नरकं घोरं नरा गच्छन्ति पापिनः । । 8.41.१० ।।

तांस्तेहं संप्रवक्ष्यामि शृणुष्वावहितो द्विज ।
वृक्षं यः पुत्रकृतकं विनाशयति दुर्मतिः ।।१ १ ।।
आरामे वाथ ग्रामे वा विक्रीणाति च दुर्मतिः ।
निष्पादितं तथा वृक्षमाश्रमे पथि वा पुनः । ।१ २। ।
तडागे वा तथोद्याने देवतायतनेषु वा ।
गृहे प्रपायामथवा नद्यास्तीरे चतुष्पथे ।। १३ । ।
यत्र वा तत्र वा जातं१५ यो नाशयति दुर्मतिः ।
पादपान् गुल्मवल्लीर्वा क्षुपानथ तृणान्यपि ।। १४। ।
छायापुष्पफलार्थं हि१६ स्वकार्यकरणाय वा१७ ।
विनाशयति यो मूढः स च तं प्रतिपद्यते । ।१ ५।।

६ वै कटकेन - क. । ७ कर्मपाकनिबन्धनाः - ख । ८ पाद्यंते च महायसि-घ । ९ संश्रयन्ति -ख। १० स्म पतन्त्युत - क. । ११ विनिवृत्तानि - ख. । १२ गत्वा - घ. । १३ पात्यन्ते - च. । १४ सत्वा - घ। सर्वादुच्छ्रया... - क. । १५ तान् - घ. । १६ फलैर्युक्तं - क. । १७ च - घ. ।



यश्चापहरते१८ मूलं१९ पुष्पाणि च फलानि च ।
आत्मार्थं कामसंपत्तौ२० न देवपितृकारणात्२१ ।। १ ६।।
नदीं यश्चावरुध्नीयात् कूपान्यश्च प्रपूरयेत् ।
यश्च पर्णत्वचामर्थे२२ वृक्षं छिन्द्यान्नराधमः ।
विनाशयेद्वा तं वृक्षं स च तं प्रतिपद्यते ।। १७। ।
यश्च छायासमासन्नान्२३ जन्तून् वै संप्रबाधते ।
स्वस्थानं च समासन्नान् त्रासयेद्वारयेदपि । ।१८। ।
सर्वे ते तं प्रपद्यन्ते२४ सोच्छ्रयं नरकं महत् ।
उत्तीर्णाश्च ततो भूयः संसारं यान्ति तेशुभाः२५ ।। १ ९। ।
य इमं शृणुयादतन्द्रितात्मा नरकं पापकृतामशर्मभूतम् ।
न स तं समुपैति पुण्यकर्मा२६ विदितात्मा ह्यसिपत्रनामधेयम् ।।8.41.२ ० । ।
इति स्कन्दपुराणे नरकवर्णने असिपत्रवनं नाम एकचत्वारिंशोध्यायः

सुशर्मोवाच
अतः परं वैतरणीं नदीं पापप्रणाशनीम्१ ।
शृणुष्वावहितः२ पुत्र पापकर्मभयावहाम्३ ।।१ । ।
नदी वैतरणी पुत्र टङ्कच्छिन्नतटा शुभा ।
केशास्थिरुधिरापूर्णा महाक्षाररसा तथा४ । ।२। ।
उल्लुम्पकै५र्गर्दभकैर्मकरैः कच्छपैरपि ।
शिशुमारैश्च नक्रैश्च तन्तुकै राक्षसैरपि । । ३ । ।

महादष्ट्रैर्महाकायैः पिशिताशैः समाकुला६ ।
अिसपत्रैश्च तैर्वृक्षै७स्तीरजातैः८ समावृता ।।४।।

१८ यश्चापि हरते - ख यस्याप - घ. । १९ मूढः - क. ख. । २० कामसम्पन्नो - घ.,.. सन्मत्तो - क. । २१ द्विजकारणात् - घ. । २२... र्थेन - ख. । २३ छायां - क. । २४ तं प्रतिपद्यन्ते - ख. । २५ शुभ - घ. । २६.?? मुग्रकर्मा - घ. ।
१ सर्वपापप्रणाशनीम् - घ. । २ शृणुमेव हितः - क. । ३ भयावहं - ख. । ४.. .स्तथा - क. ख. । ५ उल्म्पकै -क., उच्चपक्षै - घ. । ६ समाकुलं - ख । ७ स्तथा वृक्षै - घ. । ८ तीरजैश्च - ख. ।



शैवलेन च दीर्घेण वितानेनेव संवृता९ ।
तस्यास्तीरे वनं घोरं शरभर्क्षसमाकुलम् । ।५। ।
व्याघ्रद्वीपिसमाकीर्णं सिंहेभखरसंकुलम्१० ।
तत्र दुष्कृतकर्माणस्तैर्व्याघ्रादिभिरर्दिताः । ।६।।
तां नदीं सुमहाघोरां पात्यन्ते११ दुःखितास्ततः१२ ।
तत्र ते पतिता वत्स तन्तुकैः१३ शैवलेन च ।।७।।
वितानेन च संनद्धा१४ भक्ष्यन्ते तै(?)दिभिः ।
क्षारोदकेन दह्यन्तो१५ ननादयन्तश्च दुःखिताः१६ ।।८।।
षड् वर्षकोटीः१७ यात्यन्ते१८ यावत् पापस्य संक्षयः ।
ततो मुक्तास्तूच्छ्रयेषु पात्यन्ते१९ वै पुनः पुनः । ।९।।
विश्रान्तास्तत्र ते सर्वे२० ये उच्छ्रयान्२१ नरके२२ पुनः ।
पात्यन्ते विवशा मूढा यावत् पापं२३ क्षयं गतम्२४ । ।8.42.१ ०। ।
उत्तीर्णः सोच्छ्रयानेतान् संसारं प्रतिप्रद्यते ।
तीर्णोन्तमेषु२५ च पुनर्नरकेषु पृथक् पृथक् ।
कोटिरेका तु कालस्य वर्द्धते ह्युत्तरोत्तरम् । ।१ १ । ।
उच्छ्रयाणान्तु सर्वेषामेकैकस्य पृथक् पृथक् ।
सहस्रं वर्द्धते पुत्र वर्षाणां वै समासतः ।।१ २।।
ये तु गच्छन्ति तं घोरं नरकं दुष्टचेतसः ।
शृणुष्व२६ तानिमान् सम्यगुच्यमानान्मयानघ । । १३ ।।
सरितं योभिशपते यश्चैनामवमन्यते ।
यश्च नग्नः प्रविशति स्त्रियं यश्चात्र गच्छति२७ । ।१४। ।
निष्ठीवेदथ मूत्रं वा पुरीषं वाप्यथोत्सृजेत् ।
अपश्च२८ हरते यस्तु क्षेत्रारामजनोपगाः ।। १ ५। ।

९... नाभिसंवृता - क घ, न च (?) । १०... नरसंकुलम् - क. ख. घ । ११ यात्यन्ते - घ. । १२... स्तथा - ख.। १३ उल्वकैः - घ- । १४ संबद्धा - क । १५ दह्यन्ते - ख. । १६ रावयन्तस्सु दुःखिताः - ख- । १७ वर्षकोटिं भृशं तद्वै - क. । १८ पाच्यन्ते - क., पात्यन्ते (?) । १९ यात्यन्ते - ख. । २०

सर्वा - क-, गत्वा - ख. । २१ उच्छ्रये- क. । २२ नरकं - क ख । २३ पापः - ख. । २४ गतः - ख. । २५ तीव्रोत्तमेषु - घ. । २६ शृणुष्वे (ष्वै) - क.ख. । २७... नुगच्छति - क. घ. । २८ आपश्च - क. ख. ।



अपां सेतुहरश्चैव तडागस्य च भेदकः ।
तथा पुष्करिणीनां च दूषको यश्च मानवः । । १६ ।।
दुष्टामदुष्टामथवा यश्च नारीं प्रदूषयेत् ।
पद्मिनीं यश्च२९ हरति नाशयेद्वापि३० दुर्मतिः ।। १७।।
सार्थस्य वाथ जन्तोर्वा यो जन्तुर्भयमावहेत्३१ ।
ते सर्वे नरकं घोरं प्रपद्यन्ते नराधमाः । ।१ ८।।
य इमामशुभप्रणाशनीं शृणुयान्नित्यमशुद्धबाधनीम्३२ ।
प्रयतः स न याति भावनीं३३ सरितं वैतरणीमसङ्गिनीम्३४ । ।१९।।
इति स्कन्दपुराणे नरकवर्णने वैतरणीनाम द्विचत्वारिंशोध्यायः

अतः परं प्रवक्ष्यामि नरकं पापनाशनम्१ ।
अयोघनमितिख्यातं२ सर्वप्राणिभयङ्करम्३ । । १ ।।
यत्र ते पुरुषा घोरा यमाभा यमकिङ्कराः ।
महाबला महासत्वाः सर्वेयोगेश्वरास्तथा । ।२ ।।
अयस्कारा यथा पिण्डमयसोग्निप्रतापितम् ।
संदंशेनाभिसंगृह्य४ स्थापयित्वायसे घने ।।३ । ।
अभिघ्नन्ति घनैरन्यैस्तथा तत्रापि जन्तवः ।
हन्यन्ते राक्षसैर्घोरैस्तर्जयद्भिः५ सुदारुणम् । ।४। ।
वर्षकोटीस्तथा६ सप्त यातिताः७ स्वेन कर्मणा ।
उच्छ्रयेषु८ तथा घोरां यातनां प्राप्नुवन्ति ते । ।५।।
एतद्९ ये यान्ति पुरुषाः सोच्छ्रयं नरकं महत् ।
तानहं संप्रवक्ष्यामि अनिर्देश्यान् नराधमान् । ।६। ।

२९ यस्तु - ख. । ३० नाशयेद्वाथ - ख. । ३१ पथि स्थां वा गृहे वापि सर्थानां वा भयंकरः - ख. । ३२.. .मधर्मवाधनीम् - ख.,... वाहिनीम् - घ. । ३३ भाविनीं - घ. । ३४ विमर्दिनीं - घ. ।
१ चातिदारुणं - घ. । २ अयोजनमितिख्यातं - क. ग.,... सन - घ. । ३ ... पापिभयङ्करम् - घ. । ४.. .पि संगृह्य - क. । ५ तर्जयन्ति - ख. घ. । ६ कोटिसमा - घ. । ७ पातिताः - क., जायन्ते - घ. । ८ जातेषु च - घ. । ९ एते - क., एवं - घ., एतं - ख. ।



पादेन१० हन्यात् पितरं मातरं पूज्यमेव वा ।

अन्यां११ काञ्चित्१२ स्त्रियं१३ वापि हस्तेनाथ कशादिभिः१४ ।।७। ।
तथा प्रवजितं१५ चैव अग्निं वाप्यथ लंघयेत् ।
बालमर्थकृते यश्च मृत्युना योजयेत्तथा । ।८।।
स्त्रियं वाथ पुमांसं वा क्लीबं वान्यन्नराधमः ।
भ्रातृन् यश्चाभि१६ सन्धत्ते१७ द्रव्ये कस्मिंश्चिदेव हि ।।९।।
पितरं वाथ दुर्बुद्धिर्मातरं भगिनीमपि ।
पतिर्यश्चैव भार्यां स्वां पुत्रांश्चैवाभिसंधयेत्१८ ।
भार्या पतिं वा पुत्रान्१९ वा तेषां सा२० गतिरुच्यते ।।8.43.१ ० । ।
कीलयेद्यश्च देवार्चा२१ स्तीर्थानि च दुरात्मवान् ।
विद्याः शास्त्राणि दिव्यानि तेषां सा गतिरुच्यते ।। ११ । ।
य इमं बहुपापयोगकारणं शृणुयान्नित्यमसौख्यसर्वदारणम् ।
प्रयतस्स२२ न याति तं भयानकं नरकं दुर्गमयोधनावतानकम् । ।१ २।। ७
इति स्कन्दपुराणे नरकवर्णने अयोघनं नाम त्रिचत्वारिंशोध्यायः

सुशर्मोवाच
अतः परं पद्ममहं प्रवक्ष्यामि सुदुर्गमम् ।
सुकृतीनामलभ्यं च दुष्कृतीनां भयावहम् ।।१ ।।
तत्राग्निस्तापनो नाम धम्यमान१ इव ज्वलन् ।
जन्तवस्तत्र ताप्यन्ते२ वह्निवर्णा३ भवन्ति च । ।२।।
पद्मपत्रनिभास्सर्वे धाम्यमानास्ततस्ततः ।
तस्य मध्ये महास्तम्भो४ लौहः५ समवतिष्ठते ।।३ ।।

१० पानेन - घ. । ११ अन्यं - क. घ. । १२ कञ्चित् - क., किंचित् - घ. । १३ प्रियं - घ. । १४ कशादिना - ग. । १५ प्रव्रजितां - ख. । १६ भ्रातृव्यं वा - ख., भ्रातृभ्यश्चा - ग. । १७.. .श्चापि न्धत्ते - क. ग.,... तिसंधत्ते -ख,... पिसवृते - घ । १८... तिसंधयेत् - क. । १९ स्वपुत्रान् - घ., स्वपुत्रं - ख. घ. । २० का - घ. । २१ देवान् कीलयते यश्च - ख. । २२ प्रणतः स - क. ग. घ. ।
१ धूपमान - घ. । २ पात्यन्ते - घ. । ३ वर्म - ख । ४ महान् स्तम्भो - घ. । ५ लोहः - क. ख. घ. ।



तं ते गत्वा प्रगूहन्ति६ सोप्यग्निरतिदारुणः ।
एवं तत्रानिशं घोरं यातिता७स्तूच्छ्रयेष्वपि ।।४।।
नरास्तं यान्ति निःसङ्गं८ ये तान्मे९ त्वं निशामय ।
गुरुभार्या च यो गच्छेद् गुरुस्वं वा१० हरेत यः ।।५।।
देवद्रव्यं भक्षयेद्यो११ नाशयेद्वा१२ प्यभीक्ष्णशः ।
ब्राह्मणस्वं हरेद्यश्च बलाद्धारयतेपि वा ।।६। ।

बालद्रव्यापहारी च हर्ता वा स्त्रीधनस्य च१३ ।
क्लीबाँश्च१४ त्यजते यश्च यो हन्याच्छरणागतम्१५ ।।७।।
धनं चास्याभिमन्येत१६ देवद्रव्यहरश्च१७ यः१८ ।
सर्वभक्ष यः स्याद् वै यश्च पानीयविक्रयी । ।८ ।।
सोमविक्रयिकश्चैव अग्नयुत्सादक१९ एव च ।
अग्निप्रहरणो२० यश्च विषप्रहरण२१श्च यः । ।९। ।
अशस्त्रं यश्च संग्रामे हन्याच्छस्त्रेण मानवः ।
याचमानं तथा२३ चैव उपविष्टमथापि वा२४ ।।8.44.१ ० । ।
पराङ्मुखं च संसक्तमन्येन२५ सह वादिनम् ।
एते सर्वे नरास्तत्र गच्छन्त्यकृतबुद्धयः ।।१ १ । ।
य इदं२६ शृणुयात् कृतान्तसद्म प्रयतो नित्यमनेकदुःखसद्म२७ ।
स न याति तमुग्रशोकपद्मं२८ नरकं मृत्युमिवाति२९ कालसद्म ।।१ २।।
इति स्कन्दपुराणे नरकवर्णने पद्मो नाम चतुश्चत्वारिंशोध्यायः

६ प्रगृह्णन्ति - क. ग., ते गत्वा प्रतिगृह्णन्ति - ख, तु गृह्णन्ति - घ । ७ पातिता - क. । ८ निःशंका - घ. । ९ पतन्ति - ग., ये पापस्तान् - घ । १० गुरुः श्वश्रु - घ., गुरोर्वित्तं - ख. । ११... च्च - क. ख. ग. । १२... च्चा -ख.,... न्ना - घ. । १३ स्त्रीधनस्य तथैव च - क. ख घ. । १४ क्रीडांश्च - घ. । १५ हन्याच्छरणमागतां - ख.,...मागतान् - घ । १६ धर्मिष्ठां चावमन्येत - ख., धनंवाप्य ... - घ- । १७ परद्रव्यहरश्च - घ.,.. हराश्च - घ. । १८ ये - क. । १९ अग्न्युत्सादी च - ख । २० अग्निं प्रहरते - ख-, प्रहराणश्चैब - घ. । २१ विप्रांश्च ते च - ख । २२ वा - पुनः - घ । २३ याचमानस्तथा - घ. । २४ च - क. टि । २५ न्यैश्च - ख. । २६ इमं - क. ख ग । २७?..सद्मं - क. ख. । २८ पद्म - ग. । २९.. रिवाति - क ख. ग,... रिवादि - ग. ।



सुशर्मोवाच
महापद्मस्ततश्चान्यो निरयो रोमहर्षणः ।
यत्र१ ते किङ्करा घोरा२ यमस्य यमसंनिभाः३ ।। १ । ।
जन्तूनामायुधैः कुण्ठै४ र्निघृणाः पापकर्मिणाम् ।
उत्कृत्योत्कृत्य मांसानि तेभ्यो यच्छन्ति वै पुनः ।।२। ।
ते भक्षयित्वा मांसानि स्वानि दुष्कृतकारिणः ।
पद्मपत्रनिभा जाता धाम्यन्ते५ ग्नौ दिवानिशम् । । ३ ।।
अनलेन च घोरेण द्रवीकृतमयः पुनः ।
मुखेपावृत्य यच्छन्ति दारुणा यमकिङ्कराः ।।४। ।
अयोमया६स्तथा नार्यो नराश्चाग्निसमप्रभाः ।
समाश्लिष्यन्ति सङ्गत्य द्रवमाणास्ततस्ततः ।।५।।
वृक्षाश्च बहव७स्तत्र८ सुपुष्याः फलपत्रिणः९ ।
तानाश्रयन्ति दुःखार्त्ता अग्निं वर्षन्ति तेपि च१० ।।६। ।

शिलाश्च बह्व्यस्तत्रान्यास्ताः११ श्लिष्यन्ति यदा च ते ।
तदा ताश्चाग्निवर्णाभा दहन्ते तान्भृशं१२ नरान् ।।७।।
एवमेष महापद्मो नरकः संप्रकीर्तितः ।
सुवर्णहारी यश्चैव मातृयायी१३ च यो नरः ।।८।।
माता पुत्रं च योभ्येति वेददूष्यवकीर्णिकः१४ ।
मत्सरी यश्च दुर्वृत्तः श्रमणानाञ्च१५ पूजकः ।।९।।
वृषलो यः१६ श्रुतिं ब्रूयाच्छृणुयादपि वा पुनः ।
गृहणीयाद्वापि दुर्बुद्धिर्ब्राह्मणान् वावमन्यते१७ ।। 8.45.१० ।।
ब्राह्मणेभ्यो रहस्यानि आश्रमान्तरजानि च ।
यस्मिन्नधिकृतो न स्याच्छृणुयाद्वा पठेत वा । । ११ ।।

१ तत्र - ख. । २ रौद्रा - ख. । ३ वेगिताः - घ. । ४.. र्दण्डै - घ. । ५ ध्मायन्ते (?) । ६ अयोमयी ( य्य?) -ख. । ७ तत्र बहवः - क. । ८ पुत्र - घ । ९ सुपुष्पफलपत्रिणः - क । १० अग्निना मुह्यते पुनः - घ. । ११. श्वा -घ । १२ सदृशं - घ. । १३ मातृगामी - घ । १४ दोषांवकर्णिकः... - क., .कीर्तिकः - क,... कीर्तक- - ख.,दोषानुकीर्तनः - घ. । १५ श्रवणानाञ्च - क. ख, गुरूणां चाप्यपूजकः - घ. । १६ वृषलाय - घ. । १७...नवमन्यते - घ., वापमन्यते - ख. ।

267

६७ दुष्टश्रमणनिर्ग्रन्था१८ तथैवाजीवकाश्च ये ।
भक्तस्तेभ्यो द्विजो यश्च१९ नरकं स प्रपद्यते । ।१ २।।
योगं२० परिवदेद्यश्च पितॄनथ पितामहान् ।
योगेश्वराँश्च दुर्वृत्तो२१ योगधर्ममथापि वा ।। १३ ।।
वेदवर्णाश्रमा२३ यज्ञा२४ स्तन्निन्दाभिरतः शठः ।
नास्तिको हेतुवादी च२५ सर्वस्तं प्रतिपद्यते ।
तथ्यमुक्तं२६ मया सर्वमेवमेतन्न संशयः । । १४।।
एवन्ते यातितास्तत्र स्वकर्मफलबन्धनाः२७ ।
ततः शेषेण संबद्धा जायन्ते कीटयोनिषु२८ ।। १ ५।।
शृणुयाद् य इमं विचिन्त्य२९ धीमान्३० मतिमान्नित्यमलोभमोहशोकः ।
स तु दैवविधिप्रचोदितात्मा३१ दिवमेवैति न याति तं कदाचिद्३२ ।।१ ६।।
इति स्कन्दपुराणे नरकवर्णने महापद्मो नाम पंचचत्वारिंशोध्यायः

अतः परं प्रवक्ष्यामि रौरवं नरकं पुनः ।
यत्र ते विवशा बद्धाः कर्मणा स्वेन जन्तवः।।१ ।।
यात्यन्ते१ दुःखशोकार्ता महानिरयगामिनः ।
रु इति प्रोच्यते शब्दस्तत्रासौ श्रूयते यतः ।।२। ।
पुनः पुनर्वा भीमो हि२ रौरवस्तेन कथ्यते३ ।

पूर्णस्तु सर्वः४ कारीष्याज् ज्ज्वलते सोतिदारुणः५ ।।३ ।।
मध्ये स्तम्भोस्य लौहो वै तप्तकाञ्चनसप्रभः ।
तत्र जंतुःर्भृशं मग्नः प्रविशन्६ दह्यतेवशः७ ।।४।।
आर्तनादान्८ प्रकुर्वाणो मूर्च्छितः पतितः पुनः ।
ततः क्लेशेने९ महता उद्धृत्यात्मानमात्मना ।।५।।

१८ श्रवणनिर्ग्रन्या - क. ख. घ. । १९ द्विजान् हित्वा - ख. । २० गुरून् - घ. । २१ निन्दन्ते - ख. । २२ योगधर्मास्तथापि च - ध. । २३ देवधर्माश्रमा - घ. । २४... श्रमज्ञाश्च - क. घ । २५ हेतुको नास्ति वादी च - क.घ. । २६ तथाप्युक्तं - घ । २७?.? नात् - ख. । २८ कीटकादिषु - क., कीचकादिषु - घ. । २९ विजित्य - घ. । ३० दोषान् - ख. । ३१ प्रवेदिमात्गा - क. ख., प्रेरितात्मा - घ. । ३२... दपीति - ख । १ पात्यन्ते - घ. । २ भूयो -?, भूयोपि - ख. । ३ कीर्त्यते - क । ४ सर्व... - क. । ५ ज्वलत्पाशो तिदारुण । - घ, ज्वलत्यसौ - ख.। ६ प्रविष्टो - घ. । ७ रुदते भृशं - ख. । ८ आर्तनादं - ख. । ९ शोकेन - ख. ।



भूयोन्यं देशमासाद्य तथैव प्रविशेच्च सः ।
ततस्तस्मादुपोत्पत्य१० स्तम्भमाश्रयते यदि११ ।।६। ।
तेनापि दह्यते भूयो विसृज्य प्रविशेत्पुनः१२ ।
एवं स यात्यते तत्र बहूनब्दान् सुदुःखितः ।।७।।
ततो विसृष्टो भूयश्च उच्छ्रयान्प्रतिपद्यते ।
तं हि गच्छन्ति पुरुषाः सुरापा धर्मदेशकाः । ।८।।
पितृहा मातृहा चैव भ्रातृहा गुरुहा तथा ।
- - - वादेभिरतास्तेषामेव च निन्दकाः । । ९। ।
गोघ्नोथ दमकश्चैव जन्तूनां भृशदारुणः ।
गलकर्ता१३ कूटमानी कर्मणानु१४ करोति यः । । 8.46.१० ।।
परिवित्तिः परिवेत्ता श्मशानरतिरेव१५ च ।
पुनर्भूसुतसंयोगी१६ यस्या चोपपतिर्गृहे।
एते सर्वेभिगच्छन्ति१७ नरकं रौरवं नराः । । ११ ।।
य इमं शृणुयाच्च रौरवं१८ नरकं पापकृतां सुरौरवम् ।
नियतं प्रयतो१९तिरौरवं न स गच्छेन्मनसापि रौरवम्२० । । १
इति स्कन्दपुराणे नरकवर्णने रौरवं नाम षट्चत्वारिंशोध्यायः

सुशर्मोवाच
महारौरवमन्यच्च शृणु मे दुष्टयातनम् ।
यत्र धाराश्च तोयं च तडागानि च पुत्रक ।।१ । ।
कारीषी कनकाभाश्च कुल्याश्चाग्निप्रपूरिताः ।
आयसा बहवः स्तम्भा वृक्षाश्च बहुकण्टकाः । ।२ । ।

१० द्रुतोत्पत्य -ख. । ११ यदा - घ । १२ विसृज्योपविशेत्पुनः - ख. । १३ छलकर्ता - घ., छलगर्तः - ख. । १४ कर्मणाञ्च क.,... तिकरोति-घ. । १५.. पतिरेव - घ. । १६... रथसंयोगी - घ । १ ऽ सर्वेपि गच्छन्ति - घ । १८.. .दरौरवं - क । १९ पठते च रौरवं  ख । २०.. तिरौरवम् - क. ।



राक्षसा विविधाकारास्तीक्ष्णशस्त्रास्त्रधारिणः ।
तत्र१ पापेन बहुना जन्तुः समभिपाशितः । ।३ ।।
निपतेद्विकृताकारः क्रन्दमानो मुहुर्मुहुः ।
स तत्र पतितः क्षिप्रं राक्षसैर्भिन्नमस्तकः ।।४।।
कारीष्यामग्निवर्णायां पच्यते भृशदारुणम् ।
ततस्स तेन दाहेन दुःखितः परमार्तिमान् ।।५। ।
दाहप्रशमनार्थाय तडागे विनिमज्जति२ ।
तत्र क्षारेण तप्तेन३ द्विगुणं वेदनार्दितः४ । ।६ ।।
वेगेनोत्थाय वृक्षं५ वा स्तम्भं वाप्यधिरोहति६ ।
तत्र तैः कण्टकैस्तीक्ष्णैरायसैश्चावतक्षितः७ । ।७।।
पतते ह्यग्निकुल्यायां८ करुणं बहुधा नदन् ।
एवं स यात्यमानस्तु तृषार्त्तो विलपन् बहु । ।८। ।
धारामाश्रयते पातुं९ सापि तस्यायसं१० तदा११ ।
अग्निवर्णं वहत्यम्भस्ततो मूर्च्छार्दितो म्रियेत् । ९।।
संपूर्णयातनश्चापि मुक्तस्तस्मान्महाभयात्१२
उच्छ्रयेषु तदा जन्तुर्यात्यते भृशदारुणम् ।। 8.47.१० ।।
तत्र गच्छति१३ राजघ्नो१४ राजभार्यावमानकः१५ ।
आशां दत्त्वा न दद्याद्यो यश्च तीर्थावदूषकः । ११ ।।
मोषकः सूचकश्चैव स्त्रीभृतो यश्च पापकृत् ।
अग्नौ गवि च१६ यो दानं१७ ब्राह्मणे चापि वारयेत्१८। ।१ २।।
विक्रीणीयात स्वभार्यां यो ह्यपत्यं वा नराधमः१९ ।
हरते चाग्निभाण्डानि योगिनां चैव किञ्चन ।।१३ ।।
चोरान् वा योनुगृह्णाति मनुष्यास्तस्य ये च ह ।
ब्राह्मणाधिकृतश्चैव धर्माधिकृत एव च । ।१४।।

१ अत्र - क. । २.. ति निमज्जति - क., भिर्निमञ्जति - ख., ते- - क. ख । ३ कष्टेन - क., कोष्टेन - घ. । ४ वेदनान्वितः. - घ. । ५... च्छ्रायवृक्षं - क । ६ थाश्रिरोहति - ख ? - व - घ. ।. ७ राहार इव भेदितः - घ. । ८ तुल्यायां - घ. । ९ जातु - घ, जन्तुः- ? । १० तत्रायसं - ख- । ११ तथा - घ. । १२.. द्धयावहात् - क,?द्धयावहः - घ । १३ गच्छन्ति - ख । १४ राजघ्ना - (?) । १५ मन्यकः - क., मन्यकाः - ख. । १६ गवां विप्रांस्तथाग्नीनां दीयमानं तु - ख. । १७ यज्ञानां - घ. । १८ यो हरेत् - घ । १९ संकीर्णप ( ।) रनार्यं वा तास्वपत्यान्यजीजनत् - ख ।

कपिला यस्य गौः स्याच्च अनग्नेर्ब्राह्मणस्य ह२० ।
मिथ्याग्निहोत्री यश्चैव नैत्यके परिवेषकः२१ । ।१ ५। ।
राजपुत्रवधं२२ चैव२३ दुभिक्षं यच्च चिन्तयेत्२४ ।
राष्ट्रलोपं दारलोपं धनलोपं च यो नरः ।।१ ६ । ।
देशविद्र ( ा) वणं चैव यः कुर्य्याड्डामराणि वा२५ ।
सर्वे ते नरकं यान्ति महारौरवसंज्ञकम् ।।१७।।
य इमं शृणुयादभीक्ष्णशो नियतं धर्ममतिश्च तिष्ठति ।
न स गच्छति तं भयावहं नरकं रौरवमुग्ररौरवम् । । १८ ।
इति स्कन्दपुराणे नरकवर्णने महारौरवं नाम सप्तचत्वारिंशोध्यायः

सुशर्मोवाच
तमो नामापरो घोरो नरकोति भयंकरः ।
तत्र सोभिपतन्नैव१ राक्षसैरभिहन्यते ।।१ ।।
असिमुद्गरशंक्वग्रै२ र्गदामुशलपट्टिशैः३ ।
भयदैः परिघैष्टङ्कैर्वज्रैर्ऋष्टिपरश्वधैः । ।२।।
अन्यैश्च विविधाकारैर्हतः क्रुद्धैः सुनिर्दयैः४।
मूर्छितस्तमसा ग्रस्तो नरकं तं प्रपद्यते५ । ।३ ।।
स देहेन विनष्टेन तमसा मूच्छिताकृतिः ।
दुःखसन्ततिसंनद्धो७ यातनामश्नुते भृशम् । ।४। ।
यस्मात् स तमसा ग्रस्त अनाश्वस्तोतिदारुणाम्८ ।
यातनामश्नुते जन्तुस्तमस्तस्मात् स उच्यते ।।५। ।
सर्वा बहुविधाकारा यातना याः प्रकीर्तिताः ।
तास्तत्र९ समवाप्नोति स्वेन पापेन१० दुर्मतिः ।। ६ ।।

२० अनग्निहोत्री ये चान्यत् कपिलाक्षीरपायकः - ख । २१ परिलोपकः - ख. । २२ हर... - क-, हत - ख. । २३...चैव - क. ख. घ । रे ५८ दुर्भिक्षस्य च कारकः - ख. । २५ देशस्य डामरं चैव सततं य इहेच्छति क. । १ सोपि पतन्नेव - घ. । २ शक्त्यग्रै - ख, शक्त्युग्रै - घ. । ३ पट्टश्यै - क. । ४ सुदुजम्यैः । घ. । ५ प्रतिपद्यते - ख । ६ तपसा - ख । ७ संबद्धो - क. ख । ८ अनाशस्तोतिदारुणाम् - क, अनाग्रस्तो... - घ. । ९. स्सर्वाः - क. । १० शापेन - घ ।


समाप्तयातनश्चापि सन्तीर्ण्णस्वेन कर्मणा ।
उच्छ्र्येषु पुनर्जन्तुर्यात्यते कर्मबन्धनः११ । ।७।।
ब्रह्महा भ्रूणहा चैव सुरापो ब्राह्मणश्च यः ।
गवां निपाने यश्चैव पिपासूनां नराधमः१२ ।।८। ।

विघ्नं करोति मोहान्ध१३ आहूय भर्त्सयेत्तु यः१४ ।
ब्राह्मणान् द्वेष्टि नित्यं१५ य अर्थिनं यश्च दूषयेत् ।।९। ।
शास्त्राणि हरते यश्च गोघ्नो यश्च नरः स्मृतः१६ ।
कापिलश्च वृथादृष्टिर्वेदधर्मार्थदूषकः१७ ।। 8.48.१० । ।
ब्राह्मणाक्रोशकश्चैव वेदधर्मार्थदूषकः ।
नास्तिकाश्च दुरात्मान इत्येते तं प्रयान्ति वै१८ । । ११ । ।
य इमं शृणुयात्तमोमयं तमसा नित्यमतन्द्रितेन्द्रिय१९।
न स याति तमोमयं सदा नरकं दारुणजन्तुशोकदम्२० ।। १२ ।।
इति स्कन्दपुराणे नरकवर्णने तमोनाम अष्टचत्वारिंशोध्यायः

सुशर्मोवाच
तमस्तमतरं घोरं नरकं शृण्वतः परम्१ ।
प्रकाशो यत्र नैवास्ति नैव दृष्टिः प्रवर्तते ।।१ । ।
पतन्नेव नरस्तत्र२ विसंज्ञः क्रियते तदा३ ।
राक्षसैर्विकृताकारैस्तमस्तेन स चोच्यते । ।२। ।
तत्रासौ पतितो मूढो वह्निना दह्यते भृशम् ।
ततोपि४ वेगादुत्थाय दृष्टिहीनो विचेतनः ।।३ ।।
छिद्यते भिद्यते चैव५ राक्षसैः क्रूरकर्मभिः ।
तस्मादपि तथैवार्त्तः सोन्यं६ देशं प्रपद्यते ।।४। ।

११... नैः - घ. । १२ निपातनस्थाने - ख.,... निपाते पिपासुं विनिवारयेत् - घ. । १३ विघ्नकरो विमोहश्च - घ. । १४ चकृशं - ख, भृशं - घ. । १५ ब्राह्मणे न ददात्यर्थं - घ,.. णं... त्यस्य - ख. । १६.. .स्तथा - ख. । १७ कपिलांश्च वृथा दुह्य आत्मार्थं यश्च कुर्वति - ख । १८ यान्ति ते तमसं नराः - ख. । १९... मसंयतेन्द्रियः - घ. । २० शोककारकम् - ख, शोकम् - क, मोदकम् - घ. ।
१ शृणुमे पुनः - क. । २ स पतन्नेव नरके - ख. । ३ क्रियन्तेप्रभुः - क. । ४ मृतोपि - ख., मृतो वेगादुत्थितश्च- क. । ५. .. चापि - क. । ६ सौम्य... - घ. ।


तत्रापि निगृहीतस्तैः पशुमारेण मार्यते७ ।
ततो भूयश्च कूपेषु क्षिप्तो दुर्गेष्वचेतनः । ।५।।
निमग्नश्चाग्निकारीष्यां निष्कूजन्८  सोभिजायते९ ।
एवं स यातना बह्वीस्त्वनुभूय सुदुःखितः ।।६।।
नरकान्तमनुप्राप्य उच्छ्रयेष्वभिपात्यते१० ।
गर्भपातनकारश्च राज्यकामश्च यो भवेत् ।।७।।
इहैवानर्हमानोसौ११ (?) भृत्यो राजवधे रतः१२ ।
अनाचार्यश्च यः१३ कर्म आचार्याणां१४ प्रपद्यते१५ । ।८।।
शास्त्रविद्यौषधीनां च गदानामगदैः सह ।
यो विनाशयिता१६ कश्चिद्यः प्रशंसति दानवान् ।।९। ।

उपदेशं च यो द्वेषादाचार्यो न प्रयच्छति ।
स याति नरकं घोरं दुस्तरं तं तमोमयम्१७ । ।8.49.१ ० । ।
कृतघ्नं तु समादाय नारकाः१८ सर्व एव ते ।
यमं प्रणम्य ब्रुवते१९ सह तैर्यमकिङ्करैः । । ११ । ।
भगवन्न वयं शक्ताः२० पापस्यास्य विनाशने२१।
उपायमन्यं पश्येह२२ प्रसादं कुरु नः प्रभो । । १२ ।।
स एवमुक्तो भगवान् यमः प्रेताधिपस्तदा२३ ।
सर्वधर्मार्थकुशलान् पृच्छति स्मर्षिसत्तमान्२४ । । १३ ।।
भगवन्तः कथं त्वस्य कृतघ्नस्य दुरात्मनः ।
निष्कृतिः सुमहाघोराद् भवेत् पापस्य कर्मणः ।। १४। ।
ततस्ते ऋषयस्सर्वे दृष्ट्वा दीर्घेण चक्षुषा ।
यमं धर्मभृतां श्रेष्ठमिदं वै ब्रुवते वचः ।।१ ५।।

७ बध्यते - घ. । ८ निष्कुञ्जन - क.  निष्कूटः - ख. । ९ सोभिहन्यते - ख. । १०... ष्वेव यात्यते - घ. । ११ इहैवानश्नमानोसौ - ख. । १२ राजा वधे - क. । १३ अनार्यस्य च - ख । १४.. .मार्याणां - ख. । १५ प्रतिपादितः- ख. । १६ विनाशयते - ख. । १७ स याति नरकान् घोरान् दुस्तरात् तान्तमोमयान् - क. । १८ नरकाः - क,नरका (त्) । - ख । १९ (सं) प्राप्य - ख. । २० मया शक्यं - ख. । २१ वि (मोचन) - ख. । २२ पश्यस्व - क.ख. । २३ तथा - ख. । २४ पृच्छते ऋषिसत्तमान् - क. ख ।



ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः । । १६ ।।
ततः स भगवान्देवो मार्तण्डतनयो वरः ।
नारकेभ्यो२५ ददात्याज्ञां सर्वे यूयमिमं नरम्२६ । । १७।।
शोधयिष्यथ गच्छध्वं नैका२७ ह्यस्य गतिः स्मृता२८ ।
ततस्ते तस्य वचनान्नारकाः पापकर्मिणम्२९ ।। १८। ।
सर्वेष्वेवानुपूर्व्येण३० यातयन्त्यतिदारुणाः३१ ।
भर्तृपिण्डापहर्ता च पितृपिण्डापहारकः । ।१ ९। ।
।
तस्माद् गृहीत्वा विद्याञ्च दक्षिणां यो न यच्छति३२ ।।8.49.२० । ।
पुष्टश्च यस्तं नान्वेति यश्च तं घातयेन्नरः ।
कृतस्य दोषं वदति सकामं३३ न करोति च । ।२ १ । ।
न स्मरेच्च कृतं यस्तु आश्रमान् यश्च दूषयेत् ।
न पुष्णाति तथा वाहानाश्रिताँश्चोपकारिणः३४ ।।२२। ।
भृत्यांश्च कर्मनिरताँस्तथैव हितकारिणः ।
भार्यां कर्मकराणां३५ च नर्माणि वदते च यः ।।२३ ।।
न दत्तं न हुतं किञ्चिदमुष्मिन्निति३६ यो वदेत् ।
सर्वांस्तानृषिभिः सार्धं कृतघ्नानब्रवीन्मनुः ।।२४।।

कृतघ्नश्च शठश्चैव नास्तिकोछिन्नसंशयः ।
एतान् सर्वेभिगच्छन्ति य एते कीर्तिता मया ।।२५। ।
जनेता३७ चोपनेता च यश्च विद्यां प्रयच्छति ।
भयत्रातान्नदाता च पंचैते पितरः स्मृताः । ।२ ६ । ।
यस्तेषान्दोषवक्ता च अभ्यसूयक एव च ।
तथा द्रोहप्रवृत्तश्च सन्त्यजेत्तान्नराधमान्३८ ।।२७।।

२५ नरकेभ्यो - क. ख. । २६ नदं - क । २७ नैवा.. - ख. । २८ सदा - ख । २९ पापकर्मिणां - क. घ. । ३० पूर्वेण - क. ख. घ. । ३१ दारुणं - क. । ३२ न प्रयच्छति - ख. । ३३ स्वकर्म - ख. । ३४.. श्चोपकारिणं - क. । ३५ कर्मकारिणां - क. ख. । ३६ अविथिं नास्ति - घ । ३७ उत्पादको - क. ख. घ., जनकश्चोपनेता १) - । ३८ तान्निन्दति नराधमः - घ. ।


मित्रध्रुग्३९ यश्च दुष्टात्मा तस्य रन्ध्रावकीर्तनः ।
कृतोपकारिणे पूर्वँ न करोति प्रियं च यः । ।२८ ।।
एते सर्वे नरा दुष्टाः सर्व एवाशुभे रताः ।
नरकान् संप्रपद्यन्ते४० बद्धाः पापेन कर्मणा । ।२९। ।
एते सर्वे मया प्रोक्ता महानिरयगामिनः ।
उच्छ्रयानेव४१ गच्छन्ति येन्ये पापकृतो जनाः ।।8.49.३ ० ।।
य इमं तामसं घोरं शृणुयाद्वा पठेत वा ।
अधर्मश्च४२ निवर्तेत स गच्छेद् ब्रह्मणः पदम् ।।३ १ ।।
इति स्कन्दपुराणे नरकवर्णने तमोतितमं नाम ऊनपंचाशत्तमोध्यायः

अतः परं प्रवक्ष्यामि संसारपरिवर्तनम् ।
यथा वै१ नरकात्तीर्णाः संसरन्ति समासतः२ । । १ ।।
प्रथमे नरके प्रोक्ता ये मया पापकर्मिणः ।
शेषेण कर्मणा ते तु जायन्ते३ कृमियोनिषु । ।२।।
कृमियोनौ परावृत्ताः सहस्राणां४ शतं समाः५ ।
ततः पुनर्मर्कटास्ते जायन्तेथ तरक्षवः । ।३ ।।
तत्र६ तावत् परावृत्ता जायन्ते गोषु ते यदा७ ।
तदा८ तत्र शतेनैव जन्मनां शेषतस्ततः । ।४। ।
मानुषेषूपजायन्ते तावदेव न संशयः९ ।
तत्र ते कुर्वते भूयो यदि किंचिन्न किल्बिषम् ।।५। ।
ततो विशुद्धां जातिं ते लभन्ते पुनरेव तु१० ।
न च११ भूयोपि ते घोरं संसारं प्राप्नुवन्ति वै ।।६। ।

३९.. द्रुह्य - क,... द्रोह - ख. । ४० प्रतिपद्यन्ते - ख । ४१... न्नैव - घ. । ४२ अधर्माच्च - ख. ।

१ ये वै नरकसंप्राप्ताः  - घ. । २ समन्ततः - घ. । ३ ते तु जायन्ते सततं - ख. । ४ सहस्राणि - ख. घ. । ५ यदा - ख. । ६ तेषु - ख । ७ तदा - ख. । ८ तथा - ख. । ९ कुत्सितानां च योनिषु - ख. । १० पुनरेव लभन्त्युत - क. ख. । ११ महद् - घ. ।

275

द्वितीये ये मया प्रोक्तास्ते मुक्ताः१२ शेषकर्मणा ।
कृमिकीटेषु जायन्ते सहस्राणां शतानि१३ षट्१४ ।।७।।
तथा शतसहस्रं च शतानां ते पुनर्गताः ।
मत्स्ययोनौ प्रसूयन्ते तावदेव न संशयः ।।८।।
ततो व्याघ्राश्च ऋक्षाश्च ततो गोत्वमवाप्यते ।
मानुषेषूपपद्यन्ते कुत्सिताः स्वेन कर्मणा । ।९। ।
तृतीये त्वथ ये प्रोक्ता मया दुष्कृतकारिणः ।
ते मुक्ताः कर्मणस्तस्माच्छेषेण समवेष्टिताः ।।8.50.१० ।।
कृमिकीटेषु जायन्ते सहस्राणां शतानि षट् ।
तथैव दश चान्यानि पक्षिणस्तावदेव च ।।१ १ ।।
ततः सिंहाश्च सर्पाश्च गावः पश्चाच्च मानुषाः ।
चतुर्थे त्वथ ये प्रोक्ता मया दुष्कृतकारिणः । ।१२।।
ते सर्वे शेषवन्तस्तु जायन्ते कृमियोनिषु ।
सहस्राणां शतान्यष्टौ तथा चान्यानि षोडश ।। १३ ।।
योनीनां हि तथा१५ भूयो जायन्ते ते१६ ततो मृगाः ।
मृगभावाद्विनिर्मुक्ता जायन्ते च पुनः खराः१७ ।।१४।।
ततोजा गवयाश्चापि गावो मानुषतां ततः ।
पंचमे ये मया प्रोक्तास्तेपि शेषेण कर्मणा ।।१ ५।।
कृमिकीटेषु जायन्ते जन्मनां कोटिमेव हि ।
हस्तियोनौ च तावद्धि उष्ट्रेष्वश्वेषु चैव हि । ।१६।।
ततो गोत्वं समासाद्य मानुष्यं प्राप्नुवन्ति ते ।
षष्ठाच्चैव१८ विनिर्मुक्तास्ततः शेषेण कर्मणा । ।१७। ।
जायन्ते कृमिकीटेषु जन्मनां१९ द्विगुणेन हि ।
कोटिमेकां ततो यूका ततो मत्स्योथ२० सूकरः२१ ।।१८ ।।

१२ नरके - ख. । १३ सहस्राणि  ख. । १४ वै - घ. । १५ ततो - घ. । १५ च - घ. । १७ खगाः  - घ. । १८ षष्टेन तु - ख. । १९ जन्मना - घ. । २० मत्स्याश्च - घ. २१ सूकराः - घ. ।

276

महिषत्वं ततः प्राप्य गोत्वाज्जायेत मानुषः२२ ।
मानुषत्वे कुत्सितश्च२३ व्याधितश्चैव जायते । ।१ ९।।
सप्तमाच्च विनिर्मुक्तः२४ कृमिकीटेषु जायते ।
कोटीत्रयं तावदेव वृक्षत्वमधिगच्छति२५ ।।8.50.२ ० । ।

ततो लता ततो गुल्मस्ततो हस्ती प्रजायते२६ ।
गोत्वं च समनुप्राप्य जायते मानुषस्ततः ।।२ १ । ।
अष्टमाच्च विनिर्मुक्तो बद्धः शेषेण कर्मणा ।
जायते कृमिकीटेषु द्वे कोट्यौ द्विगुणे च सः । ।२२।।
ततश्चोषधिभावेन२७ वीरुत्सु च कुशेषु च ।
ततो गोत्वाद्विनिर्मुक्तो२८ जायते कुत्सितो२९ नरः । ।२३ ।।
नवमादपि चोत्तीर्णो बद्धः शेषेण कर्मणा ।
जायते कृमिकीटेषु पञ्चकोटीस्ततः खगः । ।२४।।
ततो मत्स्यश्च तावद्वै तावदेव सरीसृपः ।
श्वा ततस्तावदेवाथ ततो भवति किन्नरः ।। २५। ।
किन्नरत्वाद्विनिर्मुक्तस्ततो गोषूपजायते३० ।
ततो गोयोनिनिर्मुक्तो मानुषेषूपजायते३१ ।।२६। ।
दशमादपि चोत्तीर्णः षट् कोटीर्जन्मनां३२ कृमिः ।
शेषेण कर्मणा जातस्ततो भवति वानरः । । २७।।
वानरस्तावदेवेह तावदेव च३३ कुक्कुटः ।
तावदेव च काकस्तु जीवंजीवक एव च । । २८।।
वृक्षदारकमार्जारपिपिलीका३४श्च जायते३५ ।
ततो गोषु प्रजातोसौ३६ मानुषेषूपजायते३७ । ।२९। ।

२२ ततो गोर्मानुष्षस्ततः - ख. । २३ कुत्सितं मन्नुषे जन्म - ख। २४ माद्य ( द) पि निमुर्क्त - ख. । २५ गम्य च - क. । २६ च जायते - क ख । २७ भावेषु - ख. । २८ गोभावनिर्मुक्तो - ख. । २९ कुत्सितो जायते - ख. । ३० जायन्ति गोषु ते - ख. । ३१ गवा योनौ विजायते - ख. । ३२ कोटीर्जन्मतः - ख. । ३३ तु - ख. । ३४ पिरिलीका - क, पिप्रिता - ख । ३५ जायते ततः - ख. । ३६ प्रजायेत - ख. । ३७... तु ततः परं - ख. ।

277

महारौरवनिर्मुक्तः सप्तकोटीः३८ सुदुःखितः ।
जन्मनां३९ कृमिकीटेषु जातो४० मत्स्यत्वमश्नुते४१ । ।8.50.३ ० । ।
ततः४२ श्वा गर्दभश्चैव भैनाशी४३ (?) शुक एव च ।
ततो भवति गौश्चापि ततः षण्ढश्च मानुषे४४ ।।३ १ । ।
तमोनरकनिर्मुक्तस्त्वष्टकोटीः सुदुःखितः ।
जन्मनां प्राप्नुते जन्तुर्विष्ठायां कृमियोनिषु । ।३ २ । ।
ततः श्वा जायते भूयश्चक्राह्वश्च पुनः पुनः४५ ।
ततो मण्डूकतां प्राप्य जायते मृगपक्षिषु४६ । ।३ ३ । ।
जायते किन्नरश्चापि४७ द्वीपी शरभ एव च ।
ततो गोत्वं समासाद्य मानुषत्वमवाप्नुते४८ । ।३४। ।
तमोनरकनिर्मुक्तः शेषेणैव हि कर्मणा ।
जायते कृमिकीटेषु नवकोटिः स जन्मनाम्४९ ।।३ ५।।

ततो भवति काकश्च भासश्चैव ततः परम्५० ।
वान्ताशी च ततः पक्षी उलूकश्च ततः पुनः५१ ।।३ ६। ।
पुनर्वृक्षश्च गुल्मश्च ततो भवति वै मृगः ।
ततो गौर्मनुजश्चापि गर्भस्थः स विपद्यते५२ । ।३७।।
पुनःपुनर्जायमानः सहस्राणां शतं समाः५३ ।
व्याधितः५४ कुत्सितश्चैव५५ जायते च पुनः५६ पुनः ।। ३८। ।
यस्तु सर्वानिमान् प्राप्य नरकानिह जायते ।
स योनिषु समस्तासु सर्वसंसारमश्नुते ।।३ ९। ।
यदि मानुषतां५७ याति कदाचित् कालपर्ययात् ।
तत्रापि कुत्सितां योनिं भूयो भूयः प्रपद्यते । ।8.50.४० । ।

३८... कोटी - ख. । ३९ जन्मानि - ख. । ४० ततो - ख । ४१.,. मेष्यति - ख. । ४२ तत्र - क. । ४३ तैलाकी -ख. । ४४ षण्ढः प्रजायते - क. षण्ढत्व,. - ख. । ४५ तत्र चक्राह्वो जायते - ख । ४६... योनिषु - ख. । ४७ तत.किन्नरतां चापि - ख. । ४८ मानुष्यमवाप्यते - ख. । ४९ जन्मना - ख. । ५० स जायते - क. । ५१ उलूको जायते ततः - ख. । ५२ तत्र गर्भे स वै मृतः - क । ५३ स तु - क. । १४ व्यधिना - ख । ५५ सततग्रस्तो -ख. । ५६ स नरः - क. । ५७ मनुष्यतां - क ख. ।


अनिष्टः५८ सर्वभूतानां दुःखितो व्याधितस्तथा५९ ।
विकृतं रूपमाप्नोति कर्मणा स्वेन दूषितः ।।४१ ।।
देवब्राह्मणविद्वेष्टा सर्वव्रतबहिष्कृतः ।
सर्वधर्मविनिर्मुक्तः साध्वाचारविवर्जितः । ।४२। ।
निर्नमस्कारदुश्शीलः किम्भक्षो६० ब्रह्मनिन्दकः ।
न तीर्थदेवायतनः स्वधास्वस्तिविवर्जितः ।
अकीर्तनीयो लोकानां जायते स्वेन कर्मणा ।।४३ । ।
सुशर्मोवाच
एतत्ते कथितं सर्वं समासात् पुत्र सर्वशः६१ ।
नरकाणां सतत्त्वं च क्रमभेदो यथामति६२ ।।४४। ।
सनत्कुमार उवाच
य इमं शृणुयाद् युक्तः६३ सदा पर्वसु पर्वसु ।
श्रावयेद्वा द्विजान् सम्यक् सर्वपापैः६४ प्रमुच्यते ।।४५।।
धन्यं यश६५ स्यमायुष्यं स्वर्ग्यं सर्वार्थसाधकम् ।
श्रव्यं६६ च पठितव्यं च सततं भूतिमिच्छता६७ ।।४६।।
इदं तु सर्वार्थसुखावहं ध्रुवं महानुभावं सुगतिप्रदं६८ शुभम् ।
सदैव विप्रेण समाहितात्मना अधीत्य धार्यं श्रुतिसम्मितं ध्रुवम् ।।४७।।
इति स्कन्दपुराणे संसारगतिवर्णनं६९ नाम पञ्चाशोध्यायः

आगामी पृष्ठः (अध्यायाः ५१ - ६०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०६

https://sa.wikisource.org/s/fc7
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः ४१ - ५०)

आगामी पृष्ठः (अध्यायाः ६१ - ७०)

अध्यायाः ५१ - ६०

सनत्कुमार उवाच
सुकेशस्तु ततो व्यास पितुः श्रुत्वा सुदीनवत्१ ।
दुःखितर श्चिन्तयामास जन्तुना तां गतिं तदा३ ।। १ । ।

५८ विद्विष्टः - ख. । ५९... स्तदा - ख. । ६.... भक्ष्यो - ख. । ६१ तव पुत्रक - क. । ६२ यथागति - क.,यथामति - ख. । ६३ भक्तः - घ. । ६४ सर्वयम्येः - ख. । ६५ धन्यैर्विंशस्य- मायुष्यं - ख. । ६६ श्राव्यं - क.ख. । ६७ स्वर्गमिच्छता - ख. । ६८ सुमतिप्रदं - घ. । ६९ नरककीर्तनं समाप्तं - घ. ।
१ दीनवाक् - क.. वान् - ख. घ. । २ दीनवत् - क. घ. । ३ गतिचिन्तकः - ख. ।

279
चिन्तयाभिपरीतात्मा दुःखेन च समाहतः४ ।
जन्तूनां मोक्षणोपायं मूढचेता न जज्ञिवान्५ । । २। ।
चिन्तापन्नः६ स तु यदा पितॄँ स्तान्नाभ्यभाषत८ ।
तदा ते पितरः सर्वे सुकेशमिदमूचिरे । ।३ ।।
पितर ऊचुः
अतीव किं चिन्तयसि कुतश्चिन्ता तवानघ ।
ईश्वरस्य सतः पुत्र९ नेदं तव विधीयते ।।४। ।
सुकेश उवाच
जन्तूनां कर्मजं क्लेशं श्रुत्वा युष्माभिरीरितम् ।
चिन्तयामि कथं तेषां मोक्षोपायो भवेदिति ।।५। ।
पितर ऊचुः
अनादृत्य क्षयं१० पुत्र मोक्षस्तेषां न विद्यते ।
कर्मणः स्वकृतस्येह स च भोगात् क्षयो मतः ।।६।।
भोगश्च नरकेवश्यं जन्तुना सं११ विधीयते ।
न च ते नारकाः१२ शक्या हर्तुं१३ कर्मक्षयं विना ।।७। ।
अशक्याः खलु ये ह्यर्था न तान् प्राज्ञस्समारभेत् ।
अर्णवस्य१४ प्रतरणं यथा त्वां मृत्युमृच्छति१५ ।।८।।
सनत्कुमार उवाच
एवमुक्तः स१६ तेजस्वी पितॄँ स्तान् हृच्छयावृतः१७ ।

उवाच प्रणतो भूत्वा मावमध्वं१८ सुतं हि माम् । ।९।।

४ सर्वेषां करुणात्मनां - ख., समाहितः - घ. । ५ मूढचेता - क., कथं स्यादिति निश्चयं - ख., चिंतयामास वै तदा - घ. । ६ चिन्तयानः - घ. । ७ तदा - ख. । ८ तान्यु (नु) वाच पितॄन् स तु (सुतः?) - ख., नाभ्यभाषत -क. ख.,.. .श्चागत्य भाषते - घ. । ९ महादेवप्रसादाद्धि - ख. । १०... मनादृत्य - घ.. पापक्षयं विना - ख. । ११ स - क. ख. । १२ नरकाः - क. घ. । १३ हन्तुं - घ. । १४ अर्णवस्येव - ख. । १५ तीरमप्राप्य नश्यति - ख. । १६... श्च - ख. । १७ कृपया वृतः - घ. । १८ मावमंस्था - क. ख. घ. ।



का शक्तिर्मम१९ तान् जन्तून् बलात् तारयितुं शुभान्२० ।
महादेवप्रसादस्तान्२१ तारयिष्यति२२ दुर्गतीन्२३ । ।8.51.१ ० ।।
यूयं यथैव२४ तीर्णाः स्थ नरकस्था विचेतसः२५ ।
तथा ते२६ जन्तवस्सर्वे तरिष्यन्ति२७ न संशयः । । ११ । ।
सनत्कुमार उवाच
ततस्तान् स तदा२८मन्त्र्य महात्मा गणनायकः ।
संप्रविश्य समुद्राम्भो ह्यन्तर्जलगतस्तदा२९ ।। १२ । ।
जजाप रुद्रान् शुद्धात्मा निश्चलः सुसमाहितः ।
जपतस्तस्य योगेन युक्तस्य च महात्मनः ।।१ ३ । ।
त्रैलोक्यमखिलं व्यास३० तपसाभूत् प्रतापितम्३१ ।
ततो देवास्तदा सर्वे पितामहमथाब्रुवन् ।। १४।।
किमिदं भगवन् सर्वे तप्याम विवशा वयम् ।
कस्येदं तपसो वीर्यं कस्य योगोयमीदृशः ।। १५ ।।
क एष सुरशार्दूल तपस्तप्यति३२ दारुणम्३३ ।
यावदेवं न दहति यावन्नैव न कुप्यते ।। १ ६।।
तावत् सर्वानभिप्रायान् तस्य संपादय प्रभो ।
स एवमुक्तो३४ देवैस्तैर्भगवान् देवसत्तमः३५ । ।१७। ।
उवाच मा भयं वोस्तु नायं कश्चिदसंमतः ।
स एष देवदेवस्य३६ महात्मा३७ गणनायकः । । १८।।
समुद्रान्तर्जलासीनो३८ रुद्रान् जपति योगवान् ।
न चास्य दुष्टोभिप्रायो लोकान्प्रति महाबलाः३९ । ।१ ९ ।।

१९ का गतिर्मम - ख. । २० पितः - घ. । २१... प्रसादात्तान् - क., प्रसादात्तां - घ. । २२ नाशयिष्यति - घ नाशयिष्यामि - क. घ. । २३ दुर्गतिम् - घ. । २४ तथैव - क. । २५ पितामहाः - ख. । २६ तथैव - घ. । २७ भविष्यान्ति - घ. । २८ पितरो - ख. । २९?. .स्तथा - क । ३० सर्वं - क. । ३१ प्रधूपित इ (मि) वाभवत् - ख.। ३२.?. स्तप - क., स्तपस्यति - ख. । ३३ सुदारुणम् - ख. । ३४ एवमुक्तः सः - घ । ३५ कमलासनः - ख । ३६ एष देवस्य रुद्रस्य - क घ । ३७ सुकेशो - ख. । ३८ जले सम्यक् - ख. । ३९ परिपूर्णोर्थः सर्वेषां करुणात्मकः - ख. ।

281

नारकानेव नरकादुद्धर्तुमभिमन्यते ।
तद्४० यूयं यदि४१ मन्यध्वे४२ गत्वा रुद्रं प्रणम्य च ।।8.51.२०।।
अर्थयामोस्य देवस्य क्रियतामीप्सितो वरः ।
एवमस्त्विवति ते सर्वे ब्रह्मणा सह संगताः ।।२१ ।।
गता मन्दरमव्यग्रा४३ नन्दिना संप्रवेशिताः ।
ते दृष्टवा देवमीशानं स्तुत्वेदमब्रुवन्४४ विभुम्४५ ।।२२।।
सुकेशो भगवन् तुभ्यं वल्लभो गणनायकः ।
कारुण्यं४६ प्राणिनां कृत्वा तपस्तप्यति दुश्चरम् । ।२३ ।।
तस्य कामं सकामं४७ त्वं कुरुष्व भुवनेश्वर ।
तेषां विज्ञप्तिमाकर्ण्य देवदेवस्ततो४८ भवः ।।२४।।
ब्रह्माद्यैः सहितोभ्यागात्४९ सुकेशस्य तदान्तिकम्५० ।
समुद्रस्तत्र ये चान्ये५१ मुनयः५२ शंसितव्रताः ।।२५।।
अर्ध्यमादाय शतशो५३ नेमुः शङ्करमागतम् ।
तमसौ गणपश्रेष्ठं देवदेव इदं वचः । ।२६।।
प्रोवाच मधुरं व्यास मनःश्रोत्रसुखावहम् ।
वत्सोत्तिष्ठ सुकेश त्वं प्रार्थयस्व यथेप्सितम् ।।२७।।
सर्वं तत्५४ संप्रदास्यामि त्वं हि५५ नन्दिसमो मम ।
ततः सुकेश उत्थाय स्तुत्वा च५६ वृषभध्वजम् ।।२८।।
प्रणिपत्य पुनर्वव्रे कामं पूर्वसमीहितम्५७ ।
नरकेषु नरा देव यात्यन्ते पापकारिणः५८ ।।२९।।
तेषामुपरि५९ चेतो मे दुःखेनार्दितमीश्वर६० ।
ते यथा प्रतिमुच्यन्ते सर्व एव जगत्प्रभोः६१ । ।8.51.३ ० ।।

४. ते - क. । ४१.. .मभि - ख. । ४२ मन्यध्वं - क. ख. घ. । ४३ मन्दिरमव्यग्रा - क. । ४४.. .त्वैवमब्रुवन् - घ । ४५ चिरम् - घ. । ४६ करुणां - ख. । ४७ सकाम - क., प्रकाम - ख. । ४८.. सदा - क. । ४९ ह्यागात् - ख. । ५० महात्मनाः (नः) - क. । ५१ समुद्रा - क, समुद्रो मुनिभिस्सार्धं - ख. । ५२ यत्र ये - ख । ५३ सततं -क. । ५४ तत्सर्वं - घ., सर्व हि त्वत् - ख । ५५ तु - ख. । ५६ तं - क । ५७ तन्निष्पत्ति न संशयः - क. । ५८ स्वेन कर्मणा - ख, पापकर्मिणः - घ. । ५९ तेषामर्थे - व. । ६० मे चिन्ता कृपया परमेश्वर - ख, मनो मेद्य - घ.। ६१ सुदुःखिताः - ख ।

282

तथा कुरु ममाद्यैव वर एष मयार्थितः६२ ।
ये चाधुना नरा देव यात्यन्ते नरकेषु वै ।।३ १ ।।
तेषान्तु प्रतिमोक्षार्थं याचेहं त्वां सुरेश्वर६३।
ततस्तदर्थितं६४ देवः प्रयच्छन्निदमब्रवीत् ।।३२।।
एवं भवतु ते वत्स मुक्ता६५ नारकिणो नराः ।
अनयापि च भक्त्या त्वं कारुण्येन च वल्लभः६६ । ।३ ३ ।।

सुतरां भव निर्व्यग्रः परमैश्वर्यसंयुतः ।
ततस्ते नारकाः सर्वे६७ विमानानि समाश्रिताः ।।३४।।
देवदेवं ततोभ्येत्य सुकेशञ्च प्रणेमिरे ।
तमुवाच पुनर्देवः सुकेशं गणनायकम् ।। ३५। ।
यो हि६८ तारयते जन्तूनापदः६९ काँश्चिदेव तु ।
तेषां धर्मपिता भूत्वा संसारं न स पश्यति७० ।।३ ६। ।
मनसापि हि यः प्राणी क्लेशाज्जन्तून्सदेच्छति७१ ।
विमोक्तुं७२ सोपि धर्मात्मा सर्वदुःखैः प्रमुच्यते ।।३७। ।
यश्चोपार्ज्य स्वयं धर्मं जन्तुभ्यः संप्रयच्छति ।
सुखार्थं सोपि सर्वेभ्यो७३ दुःखेभ्यः७४ संप्रमुच्यते७५ ।।३८। ।
स त्वं परेण योगेन ऐश्वर्येण च संयुतः ।
जन्तूनां तारणे युक्तस्त्वयान्यः कः समो७६ भुवि ।।३९। ।
सुकेश उवाच
भगवन् त्वत्प्रसादान्मे सर्वमेतद् भविष्यति ।
शक्तिर्मम कुतो देव त्वयैवैतत् कृतं विभो ।।8.51.४० ।।

६२ वृतः - घ. । ६३ याचयेयं - क. घ., याचयेयन्त्वत्सकाशतः - ख. । ६४ स्तुष्टस्तदार्थितं - ख. । ६५ युक्ता - क. । ६६ सत्वानां करुणाय च - ख. । ६७ सत्वा - घ., सत्वा मुक्ता यातनसंस्थिताः - ख. । ६८ मे ( यो) पि -क. । ६९ जन्तूनापदं - क. . दा - ख,.. पादं - घ. । ७० प्रयच्छति - ख घ. । ७१ समुद्धरेत् - घ. । ७२ विमुक्तः- घ. । ७३ धर्मात्मा - ख । ७४ सर्वदुःखै,.. - ख । ७५ संप्रयुज्यते - घ. । ७६ नरः - ख., भवेत् - घ. ।


द(न?) चान्यदस्ति कर्त्तव्यं७७ कृत्यं७८ यन्मे मनोगतम् ।
तवास्मि किङ्करो दासो नाश्चर्यं यन्ममेदृशम्७९ । ।४१ ।।
सनत्कुमार उवाच
ततः स भगवान् देवो विसृज्य गणनायकम् ।
अभ्यगात् मन्दरं८० व्यास वृतः सर्वामरैस्तदा ।।४२ ।।
देवा अपि विमानस्थान्८१ नारकान् वीक्ष्य सर्वशः ।
शान्तं च जगतो दुःखं दृष्ट्वा जग्मुर्यथागतम् ।।४३ ।।
य इमं नारकोत्तारं शृणुयाद्वा पठेत वा ।
स दुःखं समनुप्राप्य८२ नावसीदति कर्हिचित् । ।४४। ।
एतद्योगविधानसर्वसमयं८३ श्रुत्वा नरो नित्यशः
पापात्मापि सुनिर्घृणं प्रतिभयं नाभ्येति पापाश्रयम् ।
किन्त्वेतद् य इहाभ्युपेत्य सततं शौचान्वितः श्रावयेत्
देवब्रह्मणवैद्यसंसदि दृढं भक्तः८४ सदा शङ्करम्८५ ।।४५। ।
इति स्कन्दपुराणे नारकीयमोक्षणे८६ एकपंचाशोध्यायः

व्यास उवाच
के पुनस्तं न गच्छन्ति नरकं शुभकर्मिणः ।
पापेष्वपि रता ब्रह्मन्नेतदिच्छामि वेदितुम् । । १ ।।
तथा स्त्रीणां च का युक्ता गतिः परमिका शुभा ।
केन कर्मविपाकेन एतदिच्छामि वेदितुम् । ।२। ।

७७ कर्ता मां - ख. । ७८ कृतं - ख. । ७९ नाश्चर्याय ममेदृशम् - ख. । ८० मन्दिरं - घ. । ८१ विमानस्था - ख.घ. । ८२ महदप्राप्य - घ. । ८३... मभयं - ख. । ८४ भक्त्या - ख. । ८५ शङ्करेति - ख. । ८६ सुकेशमाहात्म्यं- घ. ।
१... भिरताः पापे - क. ख,... षु निरता - घ. । २.. श्चैव - क., देव - ख. ।.


सनत्कुमार उवाच
न गच्छन्ति नरा येन३ नरकं तं सुदुःखिताः४ ।
पापकर्मण्यपि रताः५स्तानिमान्६ शृणु मानद७ । ।३।।
नाग्निचिन्नरकं याति न त्रिसूत्री८ न गोव्रती९ ।
नाश्वमेधेन यो यष्टा१० गो सहस्रप्रदो न च११ । ।४। ।
न च स्वाध्यायनित्यो यो रुद्रजापी च यो द्विजः१२ ।
ब्राह्मणान्१३ तारयेद्यश्च१४ आपदो मरणान्तिकात् । ।५ । ।
ब्राह्मणं१५ व्याधितं दीनमनाथं दुःखपीडितम्१६ ।
शुश्रूषेद्यावदेतेन युक्तो धर्मेण मानवः१७ ।।६ । ।
ब्राह्मणं वासयेद्यस्तु गृहवासपरिच्छदैः ।
निःस्वं स्वाध्यायसंपन्नं नरकं न स पश्यति ।।७।।
तथा गाञ्चैव संमग्नां१८ पतितां शक्तिवर्जिताम् ।
संरक्षति च युक्तात्मा स च तं नैव गच्छति । ।८। ।
महेशं यश्च भावेन परमेण समाधिना ।
भक्त्या१९ समर्चयेन्नित्यं स च तं२० नैव गच्छति । ।९।।
इतरेषां तु संसारो भवत्येव न संशयः ।
ब्राह्मणास्तं न गच्छन्ति वेदवेदाङ्गपारगाः । । 8.52.१० । ।
षट्कर्मनिरता व्यास आत्मधर्मव्यवस्थिताः२१ ।
तपःशौचसमायुक्ता दयावन्तो दृढव्रताः२२ । ।१ १ ।।
प्रतिग्रहनिवृत्ताश्च ईशभक्ताश्च ये द्विजाः ।
क्षत्रिया ये च रक्षार्थं प्रजानां२३ नित्यमुद्यताः ।। १ २। ।
त्यजन्ति समरे प्राणान् न ते नरकगामिनः ।
वैश्या वार्तासमायुक्ता२४ न्यायधर्मव्यवस्थिताः । । १३ ।।

३ तु भूतानि - घ. । ४ सुदुःखित - घ । ५. भिरता - ख. विरता - घ । ६ निमान् घ.। ७ महामते घ.। ८ न सपुत्रो - ख, न सपुत्री. - घ. । ९ गोप्रदी - घ. । १० येन यष्टोश्वमेधेन - ख. । ११ गोपालनरतश्च यः - घ. । १२ नरः - क. । १३ ब्राह्मणं - क. घ. । १४ यस्तु - घ. । १५ तमेव - क., तमेवं वादिनं - घ १६ न कर्मण्यं तथैव च - क. घ । १७ मुक्तः स्यादिह मानवः- - ख. । १८ संभग्नां क. ख. । १९ भक्तः - क. घ. । २० तान् -घ । २१ शान्त (ा) दान्त (ा) जितेन्द्रियाः -ख. । २२ ह्यलोलु (पाः) - ख. । २३ प्रजाया - घ. । २४ स्ववृत्तिसंयुक्ता - घ. ।



येषां वृत्तिरविच्छिन्ना२५ देवब्राह्मणपूजकाः२६ ।
नरकं ते न पश्यन्ति स्वर्गगास्ते प्रकीर्तिताः२७ । । १४।।
भक्ता वर्णत्रयं२८ ये च शूद्रा दर्पविवर्जिताः ।
ब्राह्मणांश्च विशेषेण नित्यं ये समुपासते२९ ।।१ ५। ।
ते न३० पश्यन्ति नरकं३१ सुगतिञ्च३२ मृता ययुः ।
चतुर्ष्वपि च वर्णेषु मनुजा भावतः३३ शिवम् । ।१ ६।।
शर्वार्पितक्रियावस्था३४ भक्ता नित्यमनुव्रताः ।
न ते प्रयान्ति नरकं प्राप्नुवन्ति परां गतिम् ।। १७।।
प्रासादं चैव ये कृत्वा देवदेवमुपासते ।
अन्यानपि पितॄँस्ते तु नरकादुद्धरन्त्युत ।।१८।।
खनिताः पुष्करिण्यो यैस्तडागानि ह्रदानि च ।
रोपिता वृक्षषण्डाश्च३५ तेपि तान्३६ न प्रयान्ति३७ हि । । १९।।
परित्राणं द्विजातीनामन्येषां चैव दुःखिनाम् ।
नित्यं प्रकुर्वते ये च तेपि तान्३८ न व्रजन्ति हि ।।8.52.२० । ।
अक्रोधनाश्च ये नित्यं देवब्राह्मणपूजकाः ।
नित्यं दानरताश्चैव३९ न ते गच्छन्त्यधोगतिम् ।।२१ ।।
सत्याभिधानसंयुक्ता दुष्टारम्भविवर्जिताः४०।
स्वधर्माचारसंयुक्ताः४१ पश्यन्ति नरकं न ते ।।२२।।
लिङ्गार्चनरतस्तस्मात्४२ सर्वस्मात् परिमुच्यते ।
ध्यानी त सर्वदा यो वै गणाञ्जपति वा शुचिः । ।२३ । ।
योगी तु४३ सर्स(र्व?)पापानि कुर्वन्नपि न लिप्यते ।
स्त्रीणां तु परमो देवः पतिर्भवति सर्वदा ।।२४। ।

२५ सततं न व्यवच्छिन्ना - ख. । २६.. पूजने - क. घ । २७ गोप्ता गोब्राह्मणस्य च - ख. । २८ ... वर्णत्रये - ख.। २९ ये नित्यमुपसेवते - क. । ३० न ते - ख. । ३१ नरकान् - क., नरकानागतिञ्च - घ. । ३२.. .रवा - घ.,खनन्ति - ख. । एतदनन्तरं - त्रिसंध्यं सततं भक्त्या इति मे व्रत- मास्थिता, ब्राह्मणा ये न पश्यन्ति (?) नरकं न स गच्छति, इति पाठाधिकः ख. पुस्तके । ३३ पुण्यश्च - क. ख., पुण्यो ये (?) । ३४ तानि - क., शर्वार्पितानि च पुष्पाणि - घ. । ३५... नि - ख. । ३६. .नि - क., तत्र --ख. । ३७ न यान्ति - क. ख., न व्रजन्ति - घ. । ३८ तं - ख. । ३९ ये च - घ. । ४० दुष्टता - क., ये नरा धर्मशीलिनः - घ. । ४१ स्वधर्मकरणे शक्ता - क. घ. । ४२ नित्यं लिङ्गार्चनरतः - ख. । ४३ योगज्ञः - ख. ।

286

तस्मान्नान्यं४४ प्रपश्यन्ति याः काश्चि४५द्धर्मचिन्तिकाः४६ ।
कर्मणा मनसा वाचा यद् ददाति४७ जुहोति वा ।। २५। ।
परित्यज्य पतिं नारी न तस्य फलमश्नुते ।
पतिशुश्रूषणे रक्ता मनोवाक्कायकर्मभिः४८ ।।२६ ।
पतौ४९ मृतेपि मनसा नान्यमिच्छति या नरम्५० ।
करोति पुण्यं यच्चापि पत्युः सर्वं५१ प्रयच्छति ।
सा नारी नरकान् सर्वान् मनसापि न गच्छति५२ । ।२७।।
संसारं नैव सा घोरं५३ सर्वं संप्रतिपद्यते५४ ।
अन्यासां तु न संदेहो नरकं प्रति सुव्रत५५ ।।२८।।
सनत्कुमार उवाच
सुकेशं त्वनुगृह्यैवं देवोपि वृषवाहनः ।
- - - - - - - - काष्ठकूटाश्रमं गतः ।
अनुजग्राह तं विप्रं काष्ठकूटं तपोधनम् ।।२९।।
व्यास उवाच
किं तपस्तस्य भगवन् ब्राह्मणस्य महात्मनः ।
कियता चैव कालेन वरं लेभे महेश्वरात् ।।8.52.३ ० ।।
कस्य पुत्रः कस्य नप्ता किन्नामा स च सत्तमः ।
एतदिच्छामि कथितं भगवन् विस्तराच्छुभम्५६ ।।३ १।।
सनत्कुमार उवाच
गौतमस्यान्वये५७ विप्रो नाम्ना कृष्ण इति प्रभुः५८ ।
तस्य पुत्रोभवत् ख्यातो भूमन्युरिति नामतः ।।३ २ । ।
तस्य पत्न्यभवत् सुभ्रू रात्रेयी नामतो यशाः ।
स कदाचित् कृतोद्वाहो भूमन्युर्न्नाम गौतमः । ।३ ३ ।।

४४... वन्यत् - क. । ४५ ये केचिद् - क. ख. । ४६ चिन्तकाः - क. ख. घ. । ७ करोति. - घ. । ४८ त्रिविधेनापि कर्मणा - क. घ. । ४९ पत्यौ (?) । ५० न चान्यं सेवते पतिं - घ । ५१ कृत्वा पुण्यानि सर्वाणि फलं पत्युः... -ख. । ५२ न पश्यति - ख. । ५३ घोरान् - ख. । ५४ न प्रतिपद्यते - ख । ५५ प्रतिपद्यते - घ. । ५६?.? वृतं - घ.। ५७ गोतमस्यानुजो - घ. । ५८ प्रभो - घ. ।

287

नाविन्दत सुतं तस्यां जरया चाभिसंवृतः ।
स भार्यामाह दुःखार्त इदं वचनकोविदः ।।३४। ।
पुत्रेणेच्छन्ति लोकांश्च अनृणाश्च भवन्त्युत ।
जरां परिगत५९ श्चाहं न च मे दृश्यते सुतः ।। ३ ५।।
सा त्वं कञ्चित्६० सगोत्रं मे अनुज्ञाता मया शुभे ।
अभिपद्यस्व६१ पुत्रार्थं याचे त्वां६२ प्राञ्जलिर्न्नतः ।।३६ ।

सुयशोवाच६३
न मया श्रुतमेतत्ते तथा नोक्तं त्वयानघ ।
मादृशी कथमेतद्धि मनसाप्यभिचिन्तयेत् ।।३७।।
अत्रीणान्तु कुले जाता गौतमं कुलमागता ।
मद्विधा कथमेतद्धि कुर्यात् सद्भिर्विगर्हितम् ।।३८।।
तपसा धनमन्विच्छेज्जीवितानि सुखानि च ।
पुत्रान् कुलञ्च लोकांश्च तपः कुरु महामुने ।।३ ९।।
तपसा६४ हि सुतो६५ लब्धः शक्तिना स पराशरः ।
औौर्वश्च तपसा स्वेन च्यवनेन महामुनिः ।।8.52.४० ।।
वसिष्ठेन कपिञ्जल्यामिन्द्रप्रमतिरेव च ।
शिलादोजनयच्चैव तपसा नन्दिनं सुतम् ।।४१ । ।
तथा भवानपि तपः करोतु सुसमाधिना ।
लप्स्यसे त्वं सुतं श्रेष्ठं महायोगबलान्वितम् ।।४२।।
मां हि दृष्ट्वा पुरा प्राह अत्रिर्ब्रह्मसुतः स्वयम् ।
सत्पुत्रिणी६६ भवित्रीयं न मिथ्या तद् भविष्यति । ।४३ ।।
तपोस्ति मयि यत्किञ्चित् त्वत्प्रसादात् समर्जितम्६७ ।
तेन स्वेन च संयुक्तो रुद्रमाराधय प्रभो६८ । ।४४।।

५९ जरा - क., जरापरिणतः - ख. । ६० किञ्चित् - क. । ६१ मन्यस्व - क. । ६२ ये त्वं - क. । ६३ यशोवाच-क., आत्रेय्युवाच - ख । ६४ तपसो - क. । ६५ सुता - क. । ६६ सुपुत्रिणी - ख. । ६७ समार्जितम् - क. ख. । ६८ प्रभो - क ।



सनत्कुमार उवाच
एवमुक्तस्स६९ तेजस्वी ह्रिया७० परमया युतः ।
तयैवं७१ समनुज्ञातो रुद्रं शरणमीयिवान्७२ ।।४५।।
त्वरितं स७३ च समागम्य७४ नर्मदां हर्षसंयुतः ।
तस्यास्तीरे७५ समुद्दिश्य७६ तस्थौ वाय्वाशनः७७ समाः ।।४६।।
स तु नैवाभवद्विप्रः कृतार्थस्तेन कर्मणा ।
ततस्स दुःखितो७८ भूयः प्राणायामेन तस्थिवान् ।।४७।।
वर्षमेकं ततो देवस्तमुवाच तदा विभुः ।
किमेवं क्लिश्यसे विप्र न तवास्ति सुतः क्वचित् ।।४८।।
व्यर्थस्तेयं श्च(श्र?)मस्तावन्नास्ति पुत्रस्तवानघ ।
स एवमुक्तो निर्विण्णो७९ निराशः पुत्रजन्मनि८० । ।४९।।
चिन्तयामास मरणं न गन्तुं स्वं गृहं८१ प्रति
स काष्ठकूटं संभृत्य गृहीत्वाग्निं सुदुःखितः८२ ।।8.52.५० ।।
विलप्य बहुदुःखार्त्त आत्मानं दग्धुमैच्छत८३ ।
तस्य रुद्र८४ स्तमालक्ष्य८५ व्यवसायं सुदुष्करम् ।।५१ ।।

पुत्र पुत्रेति गम्भीरमदृश्य इदमब्रवीत्८६ ।
पुत्रस्ते भविता गच्छ मा चैवं८७ साहसं कृथाः ।।५२।।
काष्ठकूटेति नाम्ना च८८ भविष्यति स ते सुतः ।
अथ हृष्टमना विप्रो गत्वा पत्न्यां८९ महातपाः ।।५३।।
उत्पादयामास सुतं९० काष्ठकूटं महामुनिम् ।
संस्कृतस्य तु कालेन तस्य बुद्धिरभूत् ततः९१ ।।५४।।

६९... श्च - ख. । ७० क्रि (श्रिया)? - ख. । ७१ तथैव - क. ख. । ७२.. मेयिवान् - क. ख । ७३ तु - ख. । ७४ समागत्य - ख. । ७५ तस्यास्तटे - ख. । ७६ समुद्दिश्य - क. ख. । ७७ वाय्या- शनः - क. । ७८ ततस्सुदुःखितो? । ७९... विप्रर्षि - ख । ८० पुत्रमात्रः - ख. । ८१ स्वगृहं - घ.. स्वां (न् गृहान्?) - क. ख. । ८२... न्व दुःखितः - क ख घ. । ८३... मिच्छति - ध. । ८४ वज्रः - घ. । ८५... स्समालक्ष्य - ख. । ८६ चाभाष्यवचनं चेदमब्रवीत, - घ. । ८७ मा च त्वं - क घ., मैवं त्वं- ख. । ८८ वै - घ. । ८९ पत्नीं - घ. । ९० पुत्रं - घ. । ९१ परा - घ. ।


अशक्तोयं वृद्धभावान्मामध्यापयितुं९२ पिता ।
तस्माद् यास्यामि चामत्र्य९३ पितरं वेदकारणात् ।।५५।।
स गत्वा मातरं विप्रः पितरञ्च महायशाः ।
प्रणम्य शिरसा सम्यगिदं९४ वचनमब्रवीत् । ।५६। ।
सुतो युवाभ्यां जातोहं धर्महेतोर्न कामतः९५ ।
आवां९६ तारयिता चायं९७ तथैव च पितामहान् । ।५७। ।
सन्ततितिश्चाप्यविच्छिन्ना भविष्यति न संशयः ।
इष्टाँश्च लोकान् प्राप्स्याव सुपुत्रेणेति९८ सर्वथा ।।५८।।
पितृणाञ्चानृणो स्याव इत्यभीष्टोस्मि वां सुतः ।
सोहं धर्मेष्वकुशलः९९ श्रुतिस्मृतिबहिष्कृतः । ।५९।।
कर्त्ताज्ञानेन१०० तत्कर्म पितरो येन दुःखिताः ।
भवांश्च निरये मग्न१०१ श्चिरं वत्स्यति१०२ दुष्टवत् ।।8.52.६० । ।
भवान्नाध्यापने१०३ शक्तः स्थविरत्वाद्१०४ दिने दिने ।
पुत्रस्नेहाच्च कार्याच्च१०५ न सम्यग् धारयिष्यासि१०६ ।।६ १ ।।
इयं१०७ च जननी नित्यमेकपुत्रोयमित्युत१०८।
त्वया सम्यक् प्रशास्यन्तं नैव मामनुमंस्यते । ।६२।।
सोहमन्यं तपो नित्यं निरनुक्रोशमेव च ।
आचार्यं मतिसंपन्नं१०९ संश्रयामीति मे मतिः । ।६३ । ।
न चापि तद्११० व्यवस्यामि युवयोर्नास्ति कश्चन ।
कुर्याद्यः पादयोर्नित्यं शुश्रूषामिति चिन्तयन्१११ ।।६४।।
न च नाख्येयमेतद्११२ वां मया चिन्ता कृता११३ शुभम्११४ ।
अशुभं वापि यत्किंचिद्युवां मम गतिः परा । ।६५।।

९२ ममाध्यापयितुं - क. घ. । ९३ यास्येहमामन्त्र्य - घ. । ९४ पादौ इद - ख. । ९५ पा (प्रा) र्थित- श्चैव कामतः- घ. । ९६ युवां - घ. । ९७ चाहं - घ. । ९८ सुपुत्रेणैव - घ । ९९ धर्मेषु कुशलः - घ. १०० कर्तुं जाने न - घ.,स ज्ञानैर्विरहितः - ख । १०१ दुखं - ख. । १०२ वत्स्याम - ख. । १. ३ न ध्यापने - घ । १०४ स्थविरश्च - ख । १०५... दहार्यश्च - ख. । १०६ वारयिष्यसि - घ. । १०७ इद - क. ख. । १०८ नित्यं ममैकः पुत्र इत्युत - घ । १०९... र्यमभिसम्पन्नं - घ. । ११० तं - क. ख. । १११ चिन्तया - घ. । ११२ वचनाख्येयमेतद् - घ. । ११३ कथं - ख., कृतं - घ. । ११४ शुभा - क. ।



एवमुक्तौ तु पितरौ पुत्रेण सुमहात्मना ।
अश्रुपूर्णेक्षणौ११५ स्थित्वा११६ मुहूर्तमिदमूचतुः ।
आघ्रायालिङ्ग्य११७ संमृज्य११८ स्नेहात् प्रियसुतौ११९ तदा ।। ६६।।
भूमन्युरुवाच
शुश्रूषा द्विविधा पुत्र पितृणां धर्मसंमिता१२० ।
या कर्तव्या प्रयत्नेन सुतेन सुमहात्मना ।। ६७।।
ऐहिकी चाङ्गशुश्रूषा या परत्र च धर्मदा ।
यया तरन्ति पितरः कामाँश्चाप्नुवतेक्षयान् ।
तत्रैहिकं न नो१२१ हीष्टं१२२ यथा ह्यामुष्मिकं हितम्१२३ ।। ६८। ।
तस्मादामुष्मिकं कर्म यद् भवेत्तत् समाचर१२४ ।
गच्छाधीष्व श्रुतिञ्चैव स्मृतिञ्चैव सुकर्मणाम् ।। ६९। ।
सुयशोवाच१२५
यथा१२६ तेयं पिता पुत्र ब्रवीति विदितात्मवान्१२७ ।
तथा कुरु यथा देवो वरदस्ते१२८ भवेद्१२९ भवः । ।8.52.७० । ।
उदरेण१३० मया दुःखं१३१ धारितस्त्वं महामते१३२ ।
तथा च बहुभिः क्लेशैर्ल्लब्धः सर्वार्थसिद्धये ।।७१ ।।
पित्रा च तपसोग्रेण प्राणाँस्त्यक्त्वातिदुस्त्यजान् ।
महादेवाद् भवाँल्लव्धस्तस्य१३३ युक्तं समाचर । ।७२। ।
यथा तुष्टो त्वया पुत्र जीवौ जीवेन संगतौ१३४ ।
आवामुभावपि स्याव१३५ तथा सम्यक् समाचर१३६ ।।७३ । ।

११५ साश्रुपूर्णेक्षणौ - क ख । ११६ दीनौ - घ. । ११७ आघ्राय्यालिङ्ग्य - क., आध्याय्या. - ख. । ११८ संमार्ज्य- क. ख. । ११९... सुतं - ख । इतः परं - ``तथा कुरु यशो नित्यं येन नौ दुःखमाप्तवान् इति पाठोधिको घ पुस्तके । १२० धर्मसंहिता - क. ख । १२१ न मे - ख. । १२२... भीष्टं (?) । १२३ कृतं - ख- । १२४ समाचरेत -क. । १२५ मातो.. - घ. । १२६ अथ - घ. । १२७ विदितार्थवान् - घ. । १२८ वदते - न. । १२९ भवो - ख,यमुक्तवान् - क., करुणात्मवान् - घ. । १३० सुदारुणं - घ. । १३१ दुःखाद् - घ. । १३२ महामुने - घ. । १३३ तपस्तस्माद् - घ. । १३४ संयुतौ - क. । १३५ आवां नैव मरिष्याव - घ.,... स्यातां - क । १३६ त्वमाचरेः - ख.।



सनत्कुमार उवाच

ततस्ताभ्यामनुज्ञात आघ्रातश्चैव मूर्धनि ।
प्रदक्षिणमुपावृत्य जगाम स कृतात्मवान्१३७ । ।७४।।
स जगाम१३८ तदा ताभ्यां विसृष्टश्च्यवनं१३९ प्रति ।
ऋग्यजुर्भ्यामिवोत्सृष्टा स्वाहुतिर्वरुणं प्रति ।।७५।।
स तमासाद्य तुष्टेन तेनासौ सफलः१४० कृतः ।
भागधेयमिव प्राप्य देवैर्मन्त्रः पुरस्सरः१४१ ।।७६। ।
अथ पुत्रे गते तस्मिन् पिता दिष्टान्त१४२ मीयिवान्१४३ ।
काष्ठकूटस्ततोभ्येत्य कृतविद्यः सुधार्मिकः । ।७७। ।
अपश्यन्मातरं दीनां वितोयामिव१४४ पद्मिनीम्१४५ ।
सोमहीनामिव१४६ निशामाज्ञाहीनामिव श्रियम्१४७ ।
रुदतीमश्रुपूर्णाक्षीं१४८ विलपन्तीं सुदुःखिताम् ।।७८ ।।
काष्ठकूटस्तु तां दृष्टवा दुःखेन समभिप्लुताम्१४९ ।
जयंत१५० इव पौलोमीं शक्रे नष्टेब्रवीदिदम् । ।७९ । ।
काष्ठकूट उवाच
श्रुतं मयेदं प्रागेव कृतं चैवोर्ध्वदेहिकम्१५१ ।
मा शोके मन आधत्स्व एष धर्मः सनातनः । ।8.52.८० ।।
देवानाञ्च ऋषीणां च योगिनाञ्च महात्मनाम् ।
मर्त्यानां किं पुनर्मातर्मा१५२ शुच१५३ स्तं तपोधनम्१५४ । ।८१ । ।
अहं तेनात्मनात्मा वै१५५  सृष्टः१५६ स्वेनैव१५७ तेजसा ।
पश्य मां कृतकृत्यं त्वं गायत्रीवात्मनः सुतम् । ।८२ ।।

१३७ सुकृतात्मवान् - क. ख., स कृतार्थवान् - घ. । १३८ आजगाम - ख. । १३९ विशिष्टश्चार्चनं - घ. । १४० फलदः - ख. । १४१ मन्त्रपुरस्सरः - क. ख. घ. । १४२ कालेन - क. घ. । १४३ मेयिवान् - ख, संयुक्त - क,संमृत - घ. । १४४ निस्तोयामिव - घ., नामतो - ख. । १४५ पक्षिणीम् - घ । १४६ चन्द्रहीनामिव - ख. । १४७ यज्ञहीनमपाश्रमम् - घ, प्रियां - क., प्रिये - ख. । १४८ साश्रु- पूर्णाक्षीं - क. ख. घ. । १४९ प्लुतः - घ. । १५० यजंत - ख. । १५१ कृता चैवोदकक्रिया - क. ख । १५२ किमु तन् मातर्मा - - ख. । १५३ मा रुद - क., मा रोदी - घ. । १५४ तपोधने - क. । १५५ सृष्टः - ख, भावः - च. । १५६ स्वेन - ख. । १५७ तेनैव - ख. ।


वेदाः सर्वे मयाधीताः साङ्गोपाङ्गास्सविस्तराः ।
तथोपवेदास्सर्वे च१५८ अध्यात्मञ्चैव कृत्स्नशः ।।८३ ।।
यत्किंचित् पुरुषैर्ज्ञेयं तत्सर्वं ज्ञानमेव च ।
श्रोतव्यं च श्रुतं सर्वमुपास्ताश्चापि१५९ योगिनः ।।८४।।
अनेनापि१६० प्रकर्षेण हृष्यमाणा मुदान्विता ।
मां पालय महासत्वे गायत्रीव सदा क्रतुम् । ।८५। ।
सनत्कुमार उवाच
श्रुत्वा तस्य वच१६१ स्तस्तद्वै१६२ माता१६३ तथ्यं१६४ महात्मनः ।

भूयस्तरेण१६५ दुःखेन१६६ रुदती१६७ तमुवाच ह ।।८६ । ।
सुयशोवाच१६८
पुत्र नैतद्धि दुःखं मे मृतः स इति१६९ संमतः ।
सर्वेषां प्राणिनामेतद्विहितं मर्त्यधर्मिणाम् । ।८७।।
स चापि कृतकृत्यश्च महात्मा तपसान्वितः ।
न तस्य१७० शोच्यमस्माभिरिह किञ्चिद्धि१७१ विद्यते ।।८८। ।
आत्मानं पुत्र शोचामि याहं तेन विना कृता ।
तमेवानु मृता नास्मि तवागमनकांक्षिणी ।।८९।।
नार्था न भोगस्वजना न पुत्रा नैव१७२ बान्धवाः ।
योषितां१७३ तत्र तिष्ठन्ति पतिर्यत्रावतिष्ठते । ।8.52.९ ० । ।
पतिर्यदि१७४ ततः सर्वं१७५ नास्ति किञ्चित् पतिं विना१७६ ।
सर्वं हि दुःखदं तासां१७७ यासां नास्ति पतिः सुत१७८ । ।९१ । ।

१५८ तु - ख । १५९.. .श्चैव - ख. । १६० अनेन हि - क. ख. । १ ६१ तत - घ. । १६२ सर्वं - ख. । १६३ याथातथ्यं - घ. । १६४ तस्य - क. । १६५ स्तारेण - ख. । १६६ दुःखार्ता - ख. । १६७ रुदन्ती - ख. । १६८ यशो - क. ख. । १६९ इत्येव - ख., स श्रुतिसागरः - घ. । १७० तस्या घ । १७१ किञ्चिन्न - घ. । १७२ न ममाद्याखिला भोगाः स्वजनाः पुत्र नाखिलान्भोगान् स्वजनाः.. - घ. । १७३ योजिता - घ. । १७४ पतिर्यत्र - घ. । १७५ न तत् सर्वं - ख, गतिः सर्वा - घ. । १७६ पतिव्रता - घ । १७७... मेतासां - ख. । १७८ सुतः - क. ख. ।


इदं च१७९ मे पुनर्दुःखं यत्त्वां तेन१८० सहाद्य वै ।
नाभिनन्दामि संहृष्टा सुतं१८१ श्रीरवि विष्णुना ।।९२।।
बहुशः स हि मामाह१८२ काष्ठकूट इहैष्यति१८३ ।
कृतविद्यस्ततस्तस्य वरयिष्ये स्नुषां शुभाम्१८४ ।।९३ । ।
काश्यपस्योदलस्येयं सुता१८५ गुणवती भृशम्१८६ ।
तामहं वरयिष्यामि काष्ठकूटस्य सुव्रताम् ।। ९४।।
तदा१८७ द्रक्ष्यामि तं पुत्रं सपत्नीकं दृढव्रतम् ।
अग्नीँश्चैवाहरिष्यामि१८८ पत्नीवन्तं१८९ समीक्ष्य वै१९०। ।९५। ।
पत्न्याः१९१ कदाहं पुत्रस्य पाणिग्रहणतोषितः ।
शुभानि मनसा वाचा विधास्यामि बहून्यपि ।।९६।।
एवं मनोरथवतस्तस्य पुत्रवतस्तथा१९२ ।
प्रियपुत्रस्य१९३ नैवाभूदेतद् दहति मां सुत ।।९७। ।
मया त्वमुक्तपूर्वश्च१९४ गच्छन्वै तस्य१९५ सन्निधौ ।
जीवौ१९६ यथा त्वां१९७ पश्यावस्तच्च१९८ नैवाभवत्तथा१९९ । ।९८। ।
वज्रसारमयं मेद्य२०० हृदयं न हि२०१ दीर्यते
या त्वां पश्यामि पुत्रेह विना तेनासती२०२ पुनः ।।९९।।
सनत्कुमार उवाच

ततः सा कुररी यद्वद्विना पत्या महायशा ।
विलप्य बहुदुःखार्त्ता पपात धरणीतले ।। 8.52.१०० ।।
तां काष्ठकूटो दुःखार्तां पतितां गतजीविताम् ।
विसंज्ञामग्निना दग्ध्वा विललाप सुदुःखितः । ।१ ०१ । ।

१७९ ततश्च - क. । १८० त्वयानेन - ख. । १८१ सुखं - क. ख., कामं - घ. । १८२ तामाह - घ. । १८३ इहेष्यति- क. ख. । १८४ सुतां - ख. । १८५ शुभा - ख. । १८६... रिह - ख. । १८७ कदा - ख. । १८८ अग्निं चैवाहरिष्यामि - ख. । १८९ पत्नीरत्नं - क. ख । १९० वे - क., ह - ख. । १९१ पत्न्या - क. ख, । १९२... स्तस्य पुत्र तव पितुः... - घ. । १९३ प्रियश्च तस्य - घ. । १९४... स्सर्वञ्च - क. । १९५ स्वै... - ख.,.. न्नैतस्य - ख.। १९६ शिवौ - घ. । २९७.. .वां - घ. । १९८ स्तत्र - घ. । १९९ तदा - घ । २०० पुत्र - घ । २०१ यन्न - क.घ. । २०२ नेनासती - क। तेनासतां - घ. ।

294

हा तात मम दुर्बुद्धेरधर्मज्ञस्य चैव हि २०३ ।
- - - - - - - - - - - - - - - - - - । । १० २। ।
क्व गतोसि न मेद्य त्वं सभार्यः संप्रभाषसे ।
ननु त्वयाहं निर्दिष्टो२०४ गच्छाधीष्वेति हृष्टवत्२०५ । । १०३ । ।
सोहमद्यागतोधीत्य२०६ कस्मान्मां नाभिभाषसे ।
ननु२०७ ते तपसा लब्धः परेण च२०८ समाधिना । ।१ ०४। ।
पुत्रोहं देवदेवाद्वै रुद्रात् किं नाभिभाषसे ।
किं मयापकृतं२०९ तात सहभार्यस्य तेनघ२१० ।। १०५ । ।
यन्मां सहाम्बयागत्य२११ दृढं नैवाभिनन्दसि२१२ ।
हा हतोसि मयैकेन दुष्पुत्रेण दुरात्मना । १० ६। ।
अराजकमिदं मन्ये पितृघ्नं मां न हन्ति यत् ।
एवं स विलपन् व्यास ऋषिभिर्बहुभिस्तथा । । १ ०७।।
संस्थापितः समाश्वस्ते नाकरोदुदकक्रियाम् ।
इमां प्रतिज्ञां चक्रे च२१३ ऋषिमध्ये महातपाः । । १ ०८। ।
दुष्करां२१४ सर्वभूतानामुपस्पृश्य कृताञ्जलिः२१५ ।
अद्यप्रभृति नोच्छवासं करिष्यामि कथञ्चन । । १० ९। ।
वायवो मे शरीरस्था न चरिष्यन्ति२१६ कर्हिचित् ।
निमेषोन्मेषरहित एकपादोर्ध्वबाहुमान्२१७ । ।
काष्ठलोष्ठोपलीभूतो भविष्यामि न संशयः ।। 8.52.११० । ।
रुद्रं द्रक्ष्यामि२१८ यावच्च यावच्च पितरं तथा ।
सभार्यं सं२१९ प्रपश्यामि तावद् व्रतमिदं मम । । १११ ।।

२०३ ह - क. टि. । २०४ त्वयाहमुद्दिष्टो - क,... हमादिष्टो (?) । २०५.. वान् - क- । २०६... धीत्वा - क, ख. । २०७ अम्ब - घ. । २०८ परेणैव - घ. । २०९ न कृतं - घ. । २१० सभार्यस्य स (तो?) नघ - ख.,... तेन वै - घ.। २११... गक्वा - क. ख. । २१२... नन्दसे - ख. । २१३ स - ख. । २१४ पुष्करात् - ख. । २१५ कृतांजलिम् -क. । २१६ करिष्यन्ति - ख. । २१७... बाहुना - ख. । २१८ वक्ष्यामि - क. । २१९ च - क. ।

295

सनत्कुमार उवाच

ततः स ऋषिभिस्तैस्तु२२० दृश्यमानो महातपाः ।
महेश्वरं सदा ध्यायन् तत्रैव समतिष्ठत२२१ ।। ११ २। ।
तस्य देवः२२२ स्थितस्यैवं पितृभक्त्या२२३ तथापि च ।
तुष्टो दिनेष्टमे व्यास स्वयमेवाह शङ्करः । । ११३ । ।

देवदेव उवाच

काष्ठकूट प्रयच्छामि दिव्यं चक्षुस्तवानघ ।
पश्य मां त्वं सुविश्रब्धमदृश्यं योगिनामपि ।। १ १४। ।
ब्रूहि पुत्र वरं चापि यस्ते हृदि समाहितः ।
प्रदास्यामि न सन्देहः सुनिश्चित्याभिधत्स्व२२४ माम्२२५ ।।१ १ ५।।

सनत्कुमार उवाच

ततः स दृष्टवा देवेशमुद्यन्तमिव भास्करम् ।
पपात पादयोर्हृष्ट इदञ्चोवाच सुस्वरम्२२६ ।। ११ ६। ।

काष्ठकूट उवाच

भगवन् मृत्युना माता पिता च मम योजितौ ।
जीवेतां तावुभौ देव एतदिच्छाम्यहं वरम्२२७ ।। १ १७।।

देवदेव उवाच

तावुभौ२२८ नरकं घोरं प्रपन्नौ२२९ मृत्युनार्दितौ ।
न तौ शक्यौ पुनर्जीवौ२३० कर्तुमन्यद्वृणीष्व मे२३१ । ।१ १८ ।।

काष्ठकूट उवाच

नाहमन्यं वरं देव कथञ्चिदपि कामये ।
पित्रर्थोयं समारम्भस्तद्विधत्स्व नमस्तव । । ११९ । ।

२२० त (तो) महर्षिभिस्तैस्तु - ख. । २२१... तिष्ठति - ख । २२२ देवे - क, ह्यव - ख । २२३ पितृभक्त - ख. । २२४ सन्देहं - -क ऽ अचिरेणाभिधत्स्व तत् - घ., इतः पूर्वं एतस्मिन्तिरे तत्र देवो रुद्रः समभ्यगात *इति* पद्यार्धं दृश्यते घ. पुस्तके । २२५ तम् - क । २२६ सत्वरम् - घ. । २२७ एतदिच्छामि वेदितुं - घ. । २२८ तौ मृतौ - क. घ. । । २२९ प्रयातौ - ख. । २३० प्रणेतारौ -घ. । २३१ मया दुष्कृतकर्मणा - घ. ।

296

देवदेव उवाच

शरीरं चेन्मृतस्यास्ति तच्छक्यं२३२ जीवितेन हि ।
सयोजयितुमद्यैव२३३ दग्धस्यैतन्न विद्यते । । 8.52.१२० । ।
तयोर्नचास्ति वै देहो२३४ न चान्यत् करणं२३५ तथा ।
यादृक् च स पिता तुभ्यं भवाँस्तादृक् छरीरतः२३६ ।
शरीरमेतत्त्वं यच्छ ततो जीवौ२३७ भविष्यतः२३८ । । १२१ ।।

काष्ठकूट उवाच

ताभ्यां२३९ वै नास्त्यकर्तव्यं२४० कर्तव्यं चेन्मतं भवेत् (?) ।
शरीरं च विना दृष्टमुत्थानं वै ध्रुवस्य २४१ तु (?) ।। १ २२। ।
न चापि मे शरीरेण विना ताभ्यां२४२ रतिः प्रभो ।
तस्माद् गृहाण देवश शरीरं यदि मन्यसे ।।१ २३ ।।
तस्यैवेदं तहादेव अङ्गादङ्गः समुत्थितम् ।
तस्माद्यच्छस्व देवेश न मे कार्यमनेन हि ।। १ २४।।
सनत्कुमार उवाच
ततः स भगवान्देवः प्रहस्य२४३ ऋषिसत्तम२४४ ।
प्रीतात्मा प्रत्युवाचेदं युयुक्षुस्तं२४५ शुभेन हि ।।१ २५।।
देवदेव उवाच
परीक्षेयं कृता पुत्र तव धर्मवृतां वर२४६ ।
पितृभक्त्यानया सम्यक् तुष्टोस्मि शृणु मे वचः ।।१ २६।।
अक्षयश्चाव्ययश्चापि जरामृत्युविवर्जितः२४७ ।
ऐश्वर्येण च संयुक्तः प्रियो मे गणपो भवान्२४८ ।। १ २७। ।
काष्ठकूट इति ख्यातः सर्वयोगबलान्वितः ।
कामगेन विमानेन मत्कृतेन चरिष्यसि ।। १ २८। ।

२३२ न शक्यं ः घ.। २३३ मन्येन  ख घ. । २३४ देहो वै  घ.। २३५ कारणं क. ख.घ. । २३६ समीरितः - घ । २३ '७ जीवो - घ. । २३८ भविष्यति - घ । २३९ तुभ्यं - घ., नान्यं - क. । २४. नास्ति कर्तव्यं - घ । २४१ चाध्रुवस्य - घ. । २४२ विज्ञानाभ्यां - घ. । २४३ प्रहृष्ट - घ. । २४४ सत्तमे - घ. । २४५ मुमुक्षुस्तं - घ. । २४६ पुत्रवतां - घ. । २४७ अजरो मृत्युवर्जितः - क. । २४८ भव - घ. ।



इमे च ऋषयः सर्व आश्रमेस्मिन् तपस्विनः ।
तवैवानुचरा भूत्वा भविष्यन्ति गणेश्वराः । । १ २९। ।
अक्षयाश्चाव्ययाश्चैव२४९ महायोगबलान्विताः२५० ।
ऐश्वर्येण च तुल्यास्ते भविष्यन्ति न संशयः । । 8.52.१३० । ।
अयञ्च ते पिता पुत्र भूमन्युः सह भार्यया ।
तवैवानुचरो२५१ भूत्वा त्वत्समः समुपस्थितः । ।१ ३१ । ।
श्वेतञ्च पर्वतं दिव्यं विमानैरुपशोभितम् ।
कामगं सं२५२ प्रयच्छामि निवासं स्वर्गसन्निभम् । । १३ २।।
सनत्कुमार उवाच
ततः स भगवान्देव अनुगृह्य तमूर्ज्जितम् ।
जगाम मन्दरं भूयः सोपीष्टं देशमाव्रजत् । । १३३ । ।
यावद् देवी तपोयुक्ता पितुः२५३ शिखरमास्थिता २५४ ।
तावद् देव२५५ इदं सर्वं चकार कथितं हि यत्२५६ ।।१ ३ ४।।
य इदं२५७ देवदेवस्य चेष्टितं शृणुयान्नरः ।

श्रावयीत द्विजान् वापि२५८ न स दुर्गतिमाप्नुयात्२५९ ।।१ ३५।।
नित्यमेतदधीयानः२६० शुचिः प्रयतमानसः ।
देहभेदं समासाद्य रुद्रलोकं स गच्छति ।। १३ ६। ।
थ इमं बहुपापनाशनं परमं रुद्रसमीपयोजनम् ।
पठते च गुणप्रसाधनं स मृतो याति न दीनसंभवम् । । १ ३७।।
इति स्कन्दपुराणे काष्ठकूटमहाभाग्यं नाम द्विपञ्चाशोध्यायः

व्यास उवाच
देवी भगवती सा हि हिमवत्तनयाव्यया ।
कियन्तं कालमचरत्तपः परमदुश्चरम् । ।१ । ।

२४९ अक्षयश्चाव्ययश्चैव - क. ख. । २५०.. न्वितः - क । २५१ तथैवानुचरो - घ. । २५२ तं - क. । २५३ गिरे. -घ. । २५४... माश्रिता - क. । २५५ तावदेव - क. ख. घ. । २५६ च - घ. । २५७ इमं - क. ख. घ. । २५८ पापा- घ. । २५९ न दुर्गतिमवाप्नुयात् - ख., म सद्गतिमवाप्नुयात् - घ. । २६० मेतदधीयँश्च - क. ।


कथं लब्धवती चापि वरं वरशतारणिः १ ।
एतदिच्छामि कथितं सर्व वै द्विजसत्तम२ । ।२। ।
सनत्कुमार उवाच
शृणु काले व्यतीते हि तपो देव्याः सुदुश्चरम् ।
प्रयता३ प्राञ्जलिर्भूत्वा समाधाय मनस्तथा ।।३ ।।
दिवाकरेभिसन्धाय४ चक्षुषी५ मन एव च ।
तस्थौ वृक्षावबद्धेव दार्वर्च्चानिमिषेक्षणा६ ।।४।।
सुवर्चलेन७ सादित्यमीक्षती पर्यवर्तत८ ।
एकपादोर्ध्वबाहुश्च निरुच्छ्वासा बभूव ह९ । ।५। ।
दिव्यं वर्षसहस्रं सा निश्चलोपलवत् स्थिता ।
व्याघ्रद्वितीया रुद्राणी तपोयुक्ता१० शुभव्रता । । ६।।
न चास्या ग्लानिरभवन्न बलक्षय एव वा ।
पूर्ववच्च हि११ सा देवी तपसो वावतिष्ठत१२ । ।७।।
तस्यास्तपःप्रभावेण सर्वं सस्थाणुजंगमम्१३ ।
अभावोपहतं१४ यद्वज्जगदार्त्तमतिष्ठत१५ । ।८।।
नातिदीप्तोभवत् सूर्यश्चन्द्रमा न प्रकाशते१६ ।
ज्योतींषि तिमिराण्यासन् व्योम्नि सिद्धा न यान्ति च ।।९।।
मम्लुश्च देवमाल्यानि विमानानि च पेतिरे१७ ।
स्वर्गेपि न सुखं तेषामौत्सुक्यं चापि जायते१८ ।।8.53.१ ० ।।
धूमायन्ति दिशः सर्वास्त्रैलोक्यञ्चैव कृत्स्नशः ।
विद्याधृतां गतिर्भग्ना प्रज्वलन्त्यायुधानि च१९ । ।१ १ ।।
मृगा व्याघ्राश्च सिंहाश्च विडालोलूकमूषिकाः२० ।

पन्नगा२१ नकुलाश्चैव एकस्थाः सञ्चरन्त्युत । ।१ २ ।।

१ त्वन्यदुरासदं - घ.,.. रणी - ख । २ च विप्रसत्तम - घ । ३ प्रयतः - क. ख. । ४.. .तिसन्धाय - घ. । ५ चक्षुश्च - क. ख. । ६ सा तदानिमिषेक्षणा - घ । ७ शनैः शनैः - घ. । ८ पर्यवर्तते - क. । ९ च - क. । १० तेन युक्ता - ख । ११... च्चापि - घ. । १२ तपसैवावतिष्ठत - क, तपसे चावतिष्ठत - घ. । १३ स्थावरगंगमम् -घ. । १४ अभवोपहतं - ख । १५ तं व्यतिष्ठत - ख. घ. । १६ कान्तिहीन- श्च चन्द्रमाः - ख. । १७ निपेतिरे -ख, निपेदिरे - क. । १८ चोपजायते - ख. । १९ न ज्वलन्त्यायुधानि च - घ. । २०... पक्षिणः - ख. । २१ पक्षिणंः - क. घ. ।

299

ततो देवाः समागत्य ऊचुः सर्वे परस्परम् ।
विपर्ययोयं नाकस्मात्२२ त्रैलोक्यस्यास्य दृश्यते२३ ।।१ ३ ।।
कारणं महदत्रास्ति नेदं निष्कारणं भवेत् ।
तस्माद्वयमजानन्त एतं२४ सर्व२५ विपर्ययम्२६ ।।१४।।
किन्तिष्ठामः समुद्विग्ना गच्छाम२७ ब्रह्मणोन्तिकम् ।
इत्युक्त्वा ते सुराः सर्वे बृहस्पतिपुरोगमाः ।।१५।।
वैराजभवनं गत्वा ब्रह्माणं२८ संप्रणेमिरे२९ ।
पूजिता ब्रह्मणा सम्यगुपविष्टा यथार्हतः ।।१६।।
पृष्टास्तेनागमे हेतुमूचु३० र्हृच्छोकपीडिताः ।
भगवन् लोकतत्त्वं च३१ सर्वं प्रत्यक्षवद्३२ विभोः३३ ।।१७।।
लोकोयं विपरीतोद्य किमर्थं शंस नः प्रभो३४ ।
तेषां तद्वचनं श्रुत्वा भीतानां सर्वयोगवित् ।।१८।।
उवाच मधुरं श्लक्ष्णमिदं गम्भीरवद्वचः ।
एषा हैमवती देवी रुद्राणी लोकधारणी३५ ।
तपश्चरति युक्तात्मा योगमास्थाय निश्चलम् ।।१९।।
अद्य वर्षसहस्रं हि दिव्यं तस्याः समाधिना ।
वर्षाणां द्वे शते चैव तथान्यच्छरदां शतम् ।।8.53.२०।।
तपश्चरन्त्या३६ योगेन तस्यैषा३७ तपसः सुराः ।
प्रभावो येन लोकानां विपरीतत्वमागतम् ।।२१। ।
देवा ऊचुः
यदि तस्याः प्रभावेण महोत्पातभयं त्विदम् ।
अतो भूयो दहेल्लोकाँस्तस्मात्तां सन्निवारय ।।२२।।

२२ त्रैलोक्ये - ख., चास्य - घ । २३ अकस्मात्संप्रदृश्यते - ख. । २४ एतान, - ख., एतत् - घ. । २५ सर्वं - घ,,सर्वे - ख. । २६ विपर्ययान् - ख । २७ गच्छामो - क. ख. । २८ वैराजं - घ. । २९ संप्रपेदिरे - घ., च.. - ख. । ३० हेतुं तमूचुः - घ. । ३१ लोकतत्वज्ञ - घ. । ३२ सर्व दृगक्षवद् - ख. । ३३ विभो - क. ख. । ३४ किंच तत्कारणं ब्रूहि येन सर्वे विमोहिताः - घ. । ३५ लोकधारिणी - घ. । ३६ तपश्चरत्या - क. ख. । ३७ तस्यैव - ख.।

300

सा हि देवी तपोयुक्ता अतो भूयो विभावरी ।
लोकानिमान् सहास्माभिर्दहेदपि न संशयः । ।२३ ।।
तस्माललोकहितार्थाय अस्माकं वचनादपि ।
तथा कुरु यथा साध्वी३८ विनिवर्त्तेत३९ शोभना । ।२४।।
पितामह उवाच४०
एवं भवतु गच्छध्वं निर्वृता४१ भवता४२ नघाः ।
वरप्रदानेनेष्टेन४३ रुद्राणीं४४ स्थापयाम्यहम् ।।२५। ।
गतेष्वथ तु४५ देवेषु ब्रह्मा लोकपितामहः ।
विमानं काञ्चनं शुभ्रं४६ वेदिकाशतसंकुलम् ।।२६। ।
किङ्किणीजालसन्नद्धं मुक्तादामावभासितम् ।
इन्द्रनीलमयैः स्तम्भै४७ र्जालैर्जाम्बूनदैस्तथा४८ ।।२७।।
घंटाभिर्विश्वरूपाभिः४९ समन्तात् परिवारितम्५० ।
वज्रेन्द्रनील५१ वैदूर्यमहानीलादिभासितम् । । २८।।
स्तूपिकाभिश्च योग्याभिः स्फाटिकाङ्काभिरावृतम्५२।
सर्वलोहमयं५३ तद् वै स्वयं देवेन निर्मितम् ।।२९ । ।
पञ्च भूतमयं५४ तद्धि प्रकृतिस्थमथापि च ।
शब्दाभिजालसम्बद्धं घण्टेन्द्रियसुशब्दवत् । ।8.53.३ ० । ।
मुक्तादामाष्टकैर्युक्तं किङ्किणीषोडशावृतम् ।
विंशति५५ र्वेदिकाश्चात्र विमानं५६ तन्महाप्रभम् । । ३१ । ।
शतार्द्धलक्षणै५७ र्दिव्यैर्मणिमूभि५८ स्तथाचितम् ।
आसनैर्बहुभिर्युक्तं लोकस्थानैः५९ समन्ततः६० । । ३२ । ।

३८ हि - घ. । ३९ विनिवर्त्तति - क. ख घ. । ४० ब्रह्मा उ - ख । ४१ निवृत्ता - क ख, निर्वृत्ता - क । ४२... था -क । ३ वरदानेन हस्तेन - घ. । ४८ रुद्राणां - घ. । ५८५ गतेषु तेषु - घ । ४६ शुभं - घ । ४७र्जालैः - ख. । ४८ जम्बुनदमयैस्तथा - ख. । ४९ वेश्मरूपाभिः - घ., दिव्य... - घ. । ५. परिनादितम् - ख । ५१ वज्रनीलेन्द्र - क.ख घ । ५२ स्फटिकाङ्काभिरावृतम् - ख. । ५३ सर्वलोकमयं - ख. घ. । ५४ पञ्चचूडमयं - घ. । ५५ विशन्ति -ख. । ५६ किंमानं - क., विहायं - ख. । ५७ शातकुम्भमयै - घ । ५८ भूतै क., ख । ५९ स्थाने क । ६० सुसंमितम् - ख, ।

301

आरुरोह विमानं तद् ब्रह्मा स्वमुनिभि६१ स्सह ।
वेदैः६२ सह६३ तथा मन्त्रैः शास्त्रैः६४ सर्वै६५ स्तथैव च । ।३ ३ ।।
मध्ये तस्यासनं दिव्यं६६ स्वर्णपद्मोपगं६७ दृढम्६८ ।
सुखोपविष्टस्तत्रासौ६९ ब्रह्मा लोकपितामहः । । ३४। ।
तस्य पार्श्वे तु सावित्री गायत्री चैव सुप्रभा ।
ऋग्वेदो दक्षिणेनास्य यजुर्वेदश्च७० पश्चिमे ।।३ ५। ।
उत्तरे सामवेदस्तु अग्रतोथर्वणस्तथा ।

प्रायश्चित्तानि धर्माश्च नियमाश्च तपांसि च७१ । ।३ ६। ।
दानानि च विचित्राणि क्रतवः सेष्टयस्तथा७२ ।
सप्तव्याहृतयः७३ पुण्यास्तथा लोकाश्च सर्वशः । । ३७। ।
पर्वताश्चैव नद्यश्च तथा लोकस्य मातरः ।
लोकपालाः प्रजाध्यक्षा दक्षो धर्मस्तथैव च ।।३८ । ।
भृगुरत्रिर्वसिष्ठश्च७४ पुलस्त्यः पुलहः क्रतुः ।
मरीचिरङ्गिराश्चैव रुचिश्चैव महायशाः ।।३ ९।।
ऋभुः सनातनश्चैव विराजश्च महातपाः ।
पितरश्चैव देवाश्च ब्रह्मणो याः७५ प्रसूतयः । ।8.53.४० ।।
पृथिवी वायुराकाशमापो ज्योतिस्तथैव च७६ ।
एते चैव यथोद्दिष्टाः सागरा दिश एव च ।।४१ । ।
विद्याश्च धर्मकाराश्च अग्रतस्तेवतस्थिरे ।
ब्रह्मदण्डश्च दण्डश्च कलशः काञ्चनस्तथा । ।४२ ।।
कमण्डलुश्च तस्यासीत् पार्श्वयोरुभयोरपि ।
यज्ञोपवीतं श्रीमच्च ओङ्कारश्च तथाग्रतः । ।४३ ।।

६१ स मुनिभिः - क. ख. घ. । ६२ देवैः - ख. । ६३... रिह- घ, महाभागैः र - ख. । ६४ चापि - क. । ६५ सर्वैः शास्त्रै - घ. । ६६ हैम - ख. । ६७ पमं - घ. रि - ख. । ६८ प्रभुः - ख. । ६९उपोपविष्टस्तत्रासौ - क. ख. । ७०... दोस्य (दस्य) । - ख । ७१ तपांसि विविधानि च - क. घ. । ७२ सह इष्टिभिः - ख., तपस - घ., । ७३ सर्वव्याहृतयः - घ, तथा व्याहृतयः - क. ख. । ७४ भृगुर्वसिष्ठ अत्रिश्च क. । ७५ ये - क., ब्रह्मणोपि - घ., ये च सृष्टयः - ख. । ७६.. श्च पञ्चमः - ख. ।

302

अक्षसूत्रं७७ च योगश्च७८ जप्यं७९ चैवाग्रतः स्थिताः८० ।
स्वाहा स्वधा वषट् वौष८१ डग्निश्चैतानि पार्श्वतः८२ ।।४४। ।
यमाश्च नियमाश्चैव साधनानि८३ बहूनि च ।
धर्मस्यैतानि८४ सर्वाणि८५ पार्श्वस्थान्यभवँस्ततः८६ । ।४५। ।
दया कृपाथ८७ दानञ्च श्रद्धा चैव ह्रिया८८ सह ।
ऋषीणां पार्श्वगाः सर्वा दक्षिणा यज्ञपार्श्वगा८९ । ।४६। ।
ततो देवाश्च ये केचिद् ब्रह्मलोकनिवासिनः ।
सर्वे समधिरुह्याशु समन्तादवतस्थिरे । ।४७ ।।
एवं तेषु विमानं तत्९० समारूढेषु सर्वशः ।
सुखासीनेषु सर्वेषु ब्रह्मा समनुचोदयत् । ।४८। ।
तच्चोदितं योगविदग्रगामिना९१ महाविमानोत्तमसर्वगामिना९२ ।
ययौ प्रभावेण मनोनुगामिना यथा मनः सर्वसृजेव९३ हेतुना ।।४९। ।
इति स्कन्दपुराणे देवीवरप्रदाने ब्रह्मणः प्रयाणं नाम त्रिपञ्चाशत्तमोध्यायः.

सनत्कुमार उवाच

ततस्तेन विमानेन सर्वसृक् चतुराननः१ ।
जगाम मन्दरं२ धीमान् विचित्रोपलकन्दरम्३ ।। १ ।।
स तमासाद्य विस्तीर्णमनौपम्यमतिप्रभम् ।
दूराद् दृष्टिसुखं४ दृष्ट्वा सभास्था५निदमब्रवीत् । ।२।।
इदं रुद्रगृहं शुभ्र६मदृश्यं७ सुकृतामपि८ ।
देवानामपि पश्यध्वं भास्कराकारवर्चसम् । ।३ ।।

७७ ब्रह्मसूत्रं - घ. । ७८ योगञ्च - क. ख. । ७९ जाप्यं - ख. । ८० स्थितं - घ । ८१ वषट् चैव - ख., कारः - घ. । ८२ श्चैकपार्श्वतः - ख. । ८३ सध (व) नानि - ख. । ८४ धर्माण्येतानि - क. । ८५ मार्गाणि - घ. । ८६...नि समंततः - घ,... नाभवँस्ततः - क ख., तथा - ख. । ८७ क्षमा दीक्षा थ - घ. । ८८ क्रिया - ख. । ८९ पार्श्वं त. - घ । ९० तं - क ख. घ । ९१ योगविदा समाधिना - क । ९२ महाविमानं वृषसर्वगामिना - घ. । ९३ सर्वसृजेन - ख. घ. ।
१.. .सूक्ष्मचतुर्मुखः - घ. । २... मक्षरं - घ. । ३ शोभितोत्पलकन्दरम् - घ. । ४ मुख - घ. । ५ सद्यस्ता - घ. । ६ शुभ - घ. । ७ सदृष्यं - घ. । ८ न कृतात्मभिः - ख. ।


इदं प्रविश्य देवानां९ यज्ञश्री१० 'र्नापसर्पति ।
जयश्च नित्यं युद्धेषु धर्मश्च सुमहानपि । ।४। ।
एतत् सृष्टं स्वयं तेन११ मनसानुपमद्युति ।
न ह्यस्य सदृशं किञ्चिदण्डेस्मिन् विद्यते गृहम् । ।५।।
इदं प्रविश्य धर्मात्मा भूयो१२ दुःखं१३ न विन्दति१४ ।
न चापि जन्म प्राप्नोति१५ नित्यमैश्वर्यगो हि सः । ।६। ।
अनिर्देश्यमिदं योगाद् योगिनामपि नित्यशः ।
अन्यस्तु कुत एवेदं वर्णयीत महानपि ।।७। ।
एतदस्मद्विमानस्य वायुनाभ्याहतं रुषा ।
वर्धते गिरिणा सार्धं विन्ध्यस्य शिखरं यथा । ।८।।
एतदस्मद्विमानस्य मार्गमावृत्यधिष्ठितम् ।
ऊर्ध्वं तिर्यगधस्ताच्च देवदेवस्य तेजसा ।। ९।।
एतदन्धं१६ तमः कृत्वा मेधोसौ जीवनः स्वयम् (?) ।
वज्रोद्यतकरः स्रग्वी प्रत्युद्यात्यभिनादयन् । । 8.54.१० । ।
सनत्कुमार उवाच
ततः स भगवान्देवो ब्रह्मा लोकपितामहः ।
विष्टभ्य तत्१७ विमानाग्र्यमवतस्थे कृताञ्जलिः । । ११ ।।
तुष्टाव च१८ तदा देवं शर्वमुग्रं कपर्दिनम् ।
ते चैव ऋषयः सर्वे विमानस्था सुसंयताः । ।१ २ । ।
प्रकाशं चक्रिरे सर्वं जगत् स्थावरजंगमम् ।
ततस्स मेघः स्वं स्थानमगमद् वृष्टिसर्जनः । ।१ ३ ।।
दिशश्च विमलाः सर्वाः प्रकाशश्चाभवद् भृशम् ।

तं जपन्तं विदित्वा च भगवान् गोवृषध्वजः१९ ।। १४। ।

९ प्रविश्य तां देव - घ., देवाश्च - क. । १० यद्बीतो - घ,... -र्नो - ख. । ११ दुरारोहं - घ. । १२ दुःखं - ख. । १३ भूयो - ख., विन्देन्न - क । १४ न विद्या - ख., दुःभाक् - क. । १५ जायते भूयो - ख. । १६ एतदन्तं - ख.। १७ तं - क. ख. । १८ स - घ., तदेवं हि - ख. । १९ स वृषध्वजः - क. ।

304

नन्दिनं द्वारदेशस्थमिदमाह सुरेश्वरः२० ।
एष ब्रह्मा विमानेन मामिह द्रष्टुमागतः । । १ ५। ।
ब्रूहि येनागतोसीह कार्येण विदितोसि मे ।
कुरु तद् गच्छ शीघ्रं तु२१ कालस्तस्यायमागतः । । १ ६। ।
सनत्कुमार उवाच
स एवमुक्तो रुद्रेण नन्दी प्रमथनायकः२२ ।
द्वाःस्थ२३ एव२४ विमानस्थं ब्रह्माणमिदमब्रवीत्२५ ।।१७। ।
नन्द्युवाच
यूयं ज्ञाता भगवता येन कार्येण चागताः ।
कुरुध्वं किल२६ तच्छीघ्रं कालोयं२७ तस्य वर्तते । ।१८। ।
सनत्कुमार उवाच
ततः स कृत्वा मनसा नमस्कारं हि शम्भवे ।
प्रदक्षिणमुपावृत्य२८ मन्दरं प्रजगाम ह । ।१ ९। ।
स मन्दरगिरिं सर्वं परिहृत्य महामनाः ।
शाकद्वीपस्य मध्येन जम्बूद्वीपमुपागमत्२९ ।।8.54.२ ० । ।
स दृश्यमानो देवैश्च३० मुनिभिश्च यतव्रतैः ।
हिमवन्तं गिरिश्रेष्ठमुपागम्येदमब्रवीत्३१ । । ३१ ।।
एतद्धिमवतः शृङ्गमुच्छ्रितं कान्तिमत् स्थितम् ।
युगान्तादित्यसंकाशं दूरात् समभिलक्ष्यते ।।२२ । ।
अत्र३२ सा जगतो३३ धात्री धात्री३४ पुत्रमिवौरसम् ।
पालयन्ती जगत् सर्वं तपस्तप्यति३५ शैलजा । ।२३ । ।
अहो नु३६ शिखरं पुण्यं भाग्यवच्चापि सर्वथा ।
यदेनं३७ गिरिपुत्र्यर्थे३८ वरैर्योक्ष्यति कामहा । ।२४।।

२० महेश्वरः - ख. । २१ त्वं - ख. । २२ प्रथमनायकः - क. । २३ स्वयं - घ. । २४... मेव - क. ख. घ. । २५...स्थमिदं ब्रह्माणमब्रवीत् - क. घ. । २६ किं न - घ. । २७ किल तच्छीघ्रकालोयं तपसः - ख. । २८ मुपासृत्य -ख. । १९ मयागमत् - क । ३० देवेण - ख. । ३१ मुपगम्येदमब्रवीत् - ख । ३२ यत्र - घ. । ३३ जगतां - घ. । ३४ कालं - घ. । ३५ स्तप्स्यति - क. । ३६ महांतं - घ. । ३७ यदेतद् (?) । ३८ गिरिपुत्र्यर्थं - ख. ।

305

पश्यध्वं तपसो वीर्यं देव्याः सुचरितस्य वै ।

यदेतच्छिखरं दृष्ट्वा न पश्याम३९ पुनर्भवम्४० । ।२५।।
स एवं कथयन्नेव विमानेन४१ चतुर्मुखः ।
ऋषिभिः सहितः सर्वैः शिखरद्वारमागतः । । २६ । ।
तत्रैनं४२ रुद्रसचिवा उद्यतायुधपाणयः४३ ।
भर्त्सयन्तोभ्यवर्तन्त तिष्ठतिष्ठेतिवादिनः । । २७। ।
तान् ब्रह्मा श्लक्ष्णाया वाचा सान्त्वपूर्वमुवाच ह ।
प्रशंसमानस्तान्सर्वान्४४ प्राञ्जलिर्मुक्तमानसः ।।२८। ।
ब्रह्मोवाच
यूयं सर्वे महात्मनान ऐश्वर्येण समन्विताः ।
अक्षया४५ ह्यमराश्चैव तथाप्रतिहताश्च ह । । २ ९। ।
महायोगबलोपेता अजय्या युधि केनचित्। ।
को युष्मानतिवर्तेत४६ शक्रोपि४७ प्रवरेश्वराः४८ ।। 8.54.३० ।।
देवदेवाज्ञया योहमागतो४९ मन्दरादिह ।
देव्या वरप्रदानार्थमनुज्ञा क्रियतां मम५० । । ३१ । ।
गणेश्वरा ऊचुः५१
देव्या दाता स्वयं देवो वरानिष्टान् महामनाः ।
वरं हि५२ देवी त्वन्यस्मान्५३ मनसापि५४ न चिन्तयेत् ।।३ २।।
शक्तो देवोनुग्रहीतुं जगत्सर्वं महेश्वरः५५ ।
त्वामप्येषोनुगृह्णाति किमु देवीं५६ जगत्पतिः५७ ।। ३३ । ।
पितामह५८ उवाच
अशक्तो न महादेवो वरं दातुं महामनाः ।
य एवं चिन्तयेद् देवं न भवेत् स कथञ्चन ।।३४।।

३९ पश्यामः - घ. । ४० पार्वती पुनः - घ.,... र्भयं - क.,.. र्वयं - ख. । ४१ विमानेव (वै) - क. । ४२ तत्र ते -घ. । ४३ आयुधोद्यतपाणयः - क ख. घ., उक्षतायुध... (?) । ४४ प्रवेपमानस्तान् सर्वान् - क. । ४५ अक्षरा - ख । ४६. .नभिवर्तेत - ख । ४७ शक्तोपि - (?) । ४८. श्वरः - क. । ४९ सोहमायातो - ख- । ५० तामिति - ख । ५१ गणेश उवाच - क., गणेश्वर उवाच - ख. । ५२ न चैव - क. घ । ५३ युष्मत्तो - ख, त्वद्विधान् - घ. । ५८ तु -क, हि - घ. । ५५ सर्वमशेषतः - ख. । ५६ किमुतांवै - ख., किन्न - घ. । ५३ जगस्थितिम् - क । ५८ ब्रह्मो -ख ।


न देवी भगवत्पार्श्वादिच्छते किल पार्वती५९ ।
वरानिष्टाँस्ततो देवो मामिह प्रैषयच्छिवः६० । ।३ ५ ।।
सनत्कुमार उवाच
अथ ते६१ युक्तमनसो६२ युक्तं प्रत्यक्षमीश्वराः ।
महेश्वरमपश्यन्त कृतानुज्ञं च६४ लोकपम्६५ ।।३ ६। ।
नियुक्ताश्च६६ पुनः६७ सर्वे ब्रह्माणं लोककारणम् ।
ऊचुर्गणेश्वराँस्तत्र६८ विदितार्था६९ महामुने७० । ।३७। ।

प्रेषितो देवदेवेन ज्ञातोस्माभिः पितामह ।
त्वं विशस्वाधुना देव पार्वत्या वरदित्सया७१ ।।३८। ।
अवतीर्य विमानात्तु ततः शीघ्रं पितामहः ।
निलिल्ये७२ शिखरे तस्मिन्नानाधातुविचित्रिते । ।३ ९। ।
अथ सोपलधातुनिर्झरो७३ गिरिराजोतिमहाशिलोच्चयः७४ ।
विनिसृष्टदिवाकरामलो७५ ददिवे७६ दिव्य इवोदयाचलः७७ । ।8.54.४० ।।   .
इति स्कन्दपुराणे देव्या वरप्रदाने ब्रह्मागमनं नाम चतुष्पञ्चाशत्तमोध्यायः

सनत्कुमार उवाच
अथ तं सहसायातमपश्यत्साचलात्मजा ।
ऋषिभिस्तैर्महाभागैस्समन्तात्परिवारितम् । ।१ । ।
रश्मिभिस्तेजसां योनिं मध्याह्न इव भास्करम् ।
सा तमर्घेण१ पाद्येन मधुपर्केण चैव हि२ ।
पूजयामास रुद्राणी चतुर्वक्त्रमुपागतम् ।।२।।

५९ न देवीं भगवान् दद्यान्नेच्छते किं न पार्वती । - घ. । ६० प्रेशयच्छिवः - क. ख. । ६१ तं - क. ख. । ६२ युक्तमनसा - घ. । ६३ युक्ता - घ. । ६४ कृतानुज्ञाश्च - ख. घ. । ६५ लोकपः - ख. । ६६ बुद्ध्वा कार्यं - ख. । ६७ ततः - घ. । ६८.. स्सर्वे - क. ख घ. । ६९ विदितात्मा - घ. । ७० महात्मनि - घ. । ७१... लिप्सया - ख.। ७२ निलिख्य क. । ७३ सोत्पलधातुनिर्झरो - ख. । ७४ शिलोच्चये - क. । ७५... लः - ख.,.. .लं - क.,... लः -घ. । ७६ स गिरिं - क., स गिरिर्दिव्य - ख. घ. । ७७ इवोदयाकरः - क. ख. घ. ।
१... मर्घ्येण - क । २ ह - ख. ।


ब्रह्मोवाच
लोकस्य जननी भूत्वा धारयित्वा जगत्तथा ।
किमिदं तपसा भूयो लोकं दग्धुमिहेच्छसि । । ३ । ।
मा सृष्ट्वा जगदेतत्त्वं तपस्यन्ती विनाशय ।
बुद्ध्वैवं३ धारयस्वेमं लोकं देवि नमस्तव । ।४।।
त्वत्तो रुद्रेण लोकोयमहञ्चैव पुरानघे ।
सृष्टाः स्मो४ वरदे देवि मा नः कृत्वा विनाशय ।।५। ।
तपसा तव५ रुद्राणि जगत् स्थावरजङ्गमम् ।
तप्यते ग्रीष्ममध्याह्ने जलात्६ पद्ममिवोद्धृतम् । ।६ ।।
किं वा ते हृदये देवि यद्यपि७ स्यात् सुदुष्करम् ।
वरं वृणीहि सर्वाणि दातास्मि हिमवत्सुते । ।७। ।
देव्युवाच
वरदोसि यदीशान मम देव चतुर्मुख ।
अयं भक्तोनुरक्तश्च मम नित्यं प्रियः प्रभो । ।८।।

व्याघ्रोस्य८ तावद्यच्छस्व ततो दास्यसि मे वरम् ।
अद्य वर्षसहस्रं वै स्थितस्यास्य ममाग्रतः । । ९। ।
ध्यायतो निमिषस्यैव स्तब्धकर्णस्य लोकप ।
अस्मै धत्स्व वरं देव नास्मि तावद्वरार्थिनी । ।8.55.१ ० ।।
पितामह९ उवाच
एष तिर्यग् दुरात्मा च त्वां भक्षयितुमागतः ।
नास्य शुद्धं मनो देवि क्रूरोयं पापचेतनः१० ।
पश्यैनं दुष्टमनसं११ नास्य श्रेयो मनस्त्वयि१२ ।। ११ ।।

३... मं - क.,. व - घ. । ४ स्म - क. ख. घ. । ५ .. तीव - क. । ६ दिनात् - घ. । ७ यदपि? । ८ व्याघ्रस्य -क. ख. । ९ ब्रह्म - ख, देव - घ. । १० पापचेतसः - घ. । ११ दुष्टचेतासौ - ख. । १२ मनस्विनि - ख. ।

308

सनत्कुमार उवाच
अथ सा तद्वचः श्रुत्वा रुद्राणी लोकभावनी१३ ।
दिव्येन चक्षुषापश्यदज्ञानात् कृतसाहसम् ।।१२।।
अनन्यभक्तः१४ पूर्वञ्च१५ जातिदोषेण दूषितः१६ ।
विदितार्था ततो भूत्वा उवाच हिमवत्सुता । ।१३।।
भगवन् को१७ हि लोकेषु१८ तिर्यक्त्वे सति निश्चलः१९ ।
स्तब्धकर्णेक्षणो दिव्यमहोप्येकमभोजनः ।।१४।।
अवतिष्ठेत किं योयं सहस्रमवतिष्ठत ।
वर्षाणां सुमहातेजा नायं तिर्यक्षु संस्कृतः२० ।।१ ५।।
भवत्वयं दुष्टचेतास्त्वदुष्टो२१ वा महाबलः२२ ।
ममानुग्राह्य इत्येव२३ वरो ह्यस्य२४ प्रदीयताम् ।।१६।।
सनत्कुमार उवाच
ततः स भगवान् देवश्चतुर्वक्त्रः पितामहः ।
उवाच वचनं देवीमृषीणां शृण्वतां तदा ।।१७।।
आर्याणां दस्यवोपीह२५ संसर्गात् सिद्धिमाप्नुयुः ।
यथायं क्रूरकर्मापि२६ सिद्धिं प्राप्स्यत्यनुत्तमाम्२७ ।।१८।।
तस्मादार्याः सदा सेव्या नित्यं पापकृतापि२८ हि ।
सिद्धिमेति नरः क्षिप्रमपापानां समीपगः२९ । ।१ ९।।
अनुग्राह्यस्तवानिन्द्ये पापोयं दुष्टचेतनः ।
अतोस्मै३० ब्रूहि देवेशे वरो यस्तव रोचते ।।8.55.२० ।।
देव्युवाच
अमरो जरया त्यक्त अक्षयश्चाव्ययस्तथा ।
महायोगबलोपेतो महदैश्वर्यसंयुतः३१ ।
गणेश्वरो ममेष्टश्च भवत्वेष यदीच्छसि ।।२१।।

१३ भाविनी - घ. । १४ अत्यन्तभक्त - ख. । । ९ पूर्वम्मे - ख । १६ दूषित - ख. । १७ भगभक्षो - क । १८ लोकोयं - क. । १९ निश्चलं - क । २० संवृतः (संभृतः) - ख., स्वयं गतः - घ. । २१ अ दुष्टो - ख. घ. । २२ महामनाः - घ. । २३ इत्येवं - ख. । २४ ह्यस्मै - ख., ह्येष - घ । २५ दर्प (र्श) नादेव - ख. । २६ हि कुकर्मापि- ख, कुरुतेकर्म - घ. । २७ यास्यत्यनुत्तमाम् - ख. घ । २८ पापकृतोपि - क. घ. । २९ समीपत - घ. । ३० अतो मे - घ. । ३१ महदाश्चर्यमयुतः? - घ. ।

309

पितामह३२ उवाच

एवं भवतु भद्रं ते सर्वमेतद् भविष्यति ।

जानासि ब्रह्मबन्धूनां ब्रह्मदत्तस्य मंत्रिणम् । ।२२ । ।

त्वयि भक्तिः३३ पुराप्यस्य शापाद् व्याघ्रगतिं गतः ।

पञ्चालस्य च यक्षोयं प्रतीहारोभवत् पुरा । । २३ ।।

त्वया मया यदद्यास्य कृतेयं नन्दिरीदृशी ।

तस्माद् गमिष्यति ख्यातिं सोमनन्दीति नामतः । ।२४। ।

यश्चैनं३४ कीर्तयेद् दुर्गे कान्तारेषु भयेषु३५ च ।

शार्दूलसिंहद्वीपिभ्यो न भयं तस्य जानते । । २५। ।

वद३६ त्वमपि चेशानि३७ यस्ते प्रियमनोरथः ।

यावद्३८ ददामि३९ सर्वन्ते४० नियोगात् पारमेश्वरात्४१ । ।२६।।

देव्युवाच

इच्छामि भगवन् दिव्यं वर्णं कनकसप्रभम् ।

गौरीति४२ लोके ख्याता च भवेयं कमलोद्भव । ।२७। ।

पितामह४३ उवाच

एवमस्तु जगन्मातर्यदिच्छसि तपोधने४४ ।

अन्यं वरय भद्रन्ते४५ वरं४६ देवि ददामि४७ ते । ।२८। ।

महद्धीदं तपस्तप्तं भवत्या लोकभावनम् ।

नानुरूपो वरस्तस्य तस्मादन्योपि मृग्यताम् ।।२९। ।

देव्युवाच

इच्छामि भगवन्पुत्रं सर्वधर्मभृतां४८ वरम् ।

महाबलं महोत्साहं४९ सर्वलोकनमस्कृतम् । ।8.55.३ ० । ।

३२ ब्रह्मो - ख. । ३३ भक्तिं - घ । ३४ यश्चैवं - ख । ३५ वनेषु - घ. । ३६ वरं - घ. । ३७ याचस्व - घ. । ३८ तावद् - घ. । ३९ ददानि - क घ. । ४० देवेशि - घ. । ४१ परमेश्वरात् - घ. । ४२ सौरीति - ख. । ४३ ब्रह्मो - ख. । ४४ महामते - ख, महाधने - घ. । ४५ वरं प्रयच्छामि - ख । ४६ ब्रूहि - ख । ४७ यत्प्र ददानि - क ख । ४८ लोकधर्मभृतां - ख ४९ महात्मानं - घ. ।

310

पितामह उवाच

पुत्रस्ते भविता देवि महायोगबलान्वितः ।

अजेय५० स्सर्वभूतानामष्टैश्वर्यगुणान्वितः५१ । ।३ १ ।।
जेता हन्ता तथा देष्टा५२ अजरोवध्य एव च ।
अनादेश्यश्च५३ सततं सर्वेषां प्राणिनां वरः ।। ३ २। ।
सदा बालोथ सुभगो धर्मज्ञो धर्मवत्सलः ।
देवब्राह्मणगोप्ता च विद्वान् सर्वज्ञ एव च । । ३३ ।।
षण्मुखो द्वादशभुजः शक्तिपाणिस्तथैव च ।
ब्रह्मण्यश्च शारण्यश्च५४ देवद्विट्संघहा तथा ।। ३४। ।
अयोनिजो महातेजा५५ लोकानां सुखकृच्च हि५६ ।
शनैरेतदुवाचासौ ततश्च विरराम ह । ।३ ५। ।
सनत्कुमार उवाच
वरान् स५७ दत्त्वा देवेशः कृत्वा चापि५८ प्रदक्षिणाम्५९ ।
विमानं तं समारुह्य स्वं लोकमगमत्तदा६० ।३ ६।।
रुद्राण्यपि गते तस्मिन् सोमनन्दिपुरःसरा ।
स्थिताकाशं समास्थाय रोहिणीव बुधानुगा । ।३७ । ।
मन्त्रानुगेव गायत्री जयन्तेन शची यथा ।
तथा सा भाति रुद्राणी सोमनन्दिपुरःसरा । । ३८ । ।
य इमं पठते सदा विपश्चित् पुरुषः प्रातरतन्द्रितो हि कश्चित्६१ ।
कुरुते न भयं हि सोमनन्दिर्वरदस्तस्य हरश्च सोमनन्दी६२ ।। ३९ ।।
इति स्कन्दपुराणे सोमनन्दिदेव्योर्वरप्रदानं नाम पंचपंचाशत्तमोध्यायः

५० अजय्यः - ख । ५१ समन्वितः - क. । ५२ तथा चेष्टा - क. । ५३ अनावेश्यश्च - ख. । ५४ सदा देवि - घ. । ५५ महातेजो - क ख । ५६ त्सदा - (?) । ५७ दत्त्वा च - घ. । ५८ चाभि... - घ. क. । ५९ प्रदक्षिणं - क ख.घ. । ६० स्वर्लोकमगमत्तदा - घ. । ६१ कर्हिचित् - घ. । ६२ सोमनन्दिरिति - घ. ।

311
व्यास उवाच
भगवन् यत्त्वयाख्यातं पूर्वं नरकवर्णने१ ।
दुष्कृतं कर्म कृत्वा तु नरा नरकगामिनः२ । ।१ ।।
भवन्ति३ सुकृताः सर्वे४ स्वर्गसौख्यसमायुताः५ ।
ब्राह्मणा दुष्कृतं कृत्वा गत्वा दुर्गतिमापदम् ।।२। ।
कथं भूयः समायन्ति स्वर्ग७सौख्यफलं महत् ।
योनीर्वा कथमागम्य बह्वीः संकरजातिषु ।
भूयः सुकृतिनो भूत्वा प्राप्नुवन्ति शुभां गतिम् ।।३ । ।
सनत्कुमार उवाच
शृणु व्यास पुरावृत्तं८ दशार्णेषु तु यच्छ्रुतम्९ ।
सप्तानां१० द्विजशिप्याणामशुभं शुभमेव च । ।४। ।
आसीत् सुपर्वा विख्यातः कौशिको ब्राह्मणः शुचिः ।
धार्मिकश्च वदान्यश्च विद्वान् विप्रैः सपूजितः । ।५ । ।

तस्य शिष्या बभूवुर्हि सप्त दुर्मेधसश्च ते११ ।
गुरुशुश्रूषणेसक्ता१२ नामतस्तान्निबोध मे ।।६। ।
आत्रेयः कण्डरो१३ नाम उपमन्युश्च दामनः१४ ।
शाण्डिल्यश्चैव हालोभूद् गार्ग्यश्च१५ विदलस्तथा । ।७।।
शैशिरो गौतमश्चैव दण्डकीलश्च काश्यपः ।
विदर्भश्चैव हारीत इतीमे सप्त विश्रुताः । ।८ ।।
उपाध्यायोथ तान्विप्रान् प्रोवाचेदं महातपाः ।
अचिराद् गामितो गत्वा याज्यदत्तां सुरूपिणीम् । ।९।।
गत्वानयत होमार्थे१६ शीघ्रं माहिष्मतीं पुरीम् ।
त एवमुक्तास्तेनैव माहिष्मत्यास्त्वतन्द्रिताः । । 8.56.१० ।।

१ नरकवर्णनं - घ. । २ - - निर्भयाः - ख. । ३ तरन्ति - घ. । ४ स्वर्गे - क. ख । ५ सर्वसौख्यसमायुताः - क.ख. । ६ ब्राह्मणं - क. । ७ स्वर्गे - क. । ८ यथावृत्तं - घ. । ९ यच्छुभं - क. ख., द्विजन्मनां - घ. । १० मर्त्यानां - घ. । ११ स्तु - ख., स्तथा - घ. । १२ भक्ता - क., रक्ता - ख., शुश्रूषणरताः - घ. । १३ कुंडुरो - घ । १४ नामतः - क. ख. घ. । १५ ... द्दर्भश्च - घ. । १६ होमार्थं - ख. ।


गामादाय निवर्तन्तो१७ मृत्तिकावतिमन्तशः१८ ।
अनावृष्ट्या ततस्तेतु दुर्भिक्षे परिवर्तति१९ ।। ११ । ।
क्षुधापरिगताः सर्वे किंभक्षाः संबभूविरे ।
सप्तमेहनि२० संजाते२१ निराहाराः सुदुःखिताः ।। १२ ।।
अमन्त्रयन्त२२ गामेतां भक्षयाम किमास्यते ।
तेषां यः कण्डरो२३ नाम आत्रेयकुलसंभवः ।। १३ ।।
स तानुवाच मा धेनुं भक्षयाम गुरोरिमाम् ।
गुरोरर्थे हि नः श्लाघ्या२४ मृत्युरप्यविचक्षणाः । ।१४।।
मा गुरोः क्रोधनिर्दग्धा यास्याम निधनं वयम् ।
ते यदा तद्वचो नैव जगृहुः क्षुत्प्रपीडिताः ।। १५। ।
स तदोवाच भूयस्तानिदं वचनमर्थवत् ।
यदि वोवधृतं२५ विप्रा भक्षणेस्यास्तपोधनाः ।। १ ६।।
मा वृथा भक्षयामैनां पित्रर्थे२६ प्रोक्षयामहे ।
मा नो दोषद्वयेनेह लोपो२७ भवतु शोभनाः ।। १७।।
एवं ह्यल्पेन दोषेण२८ वयं योक्ष्येम२९ सर्वथा ।
त एवमुक्ताः सम्यक्तु वचस्तस्यावधार्य च३० । ।१८। ।
प्रोक्षयामासुरव्यग्रा पित्रर्थे तां३१ पयस्विनीम् ।
ततः संस्कृत्य विधिवद् निवेद्य च महामुने३३ । ।१ ९।।
हुताग्नयस्ततो भूत्वा प्रत्येकमुपभुज्य३४ च ।
वत्समेकं गले बद्ध्वा आनिन्युर्गुरवे३५ तदा । ।8.56.२ ० । ।

अथ दृष्ट्वा स३६ तं वत्सं धेनुं पप्रच्छ३७ तान्द्विजः ।
त ऊचुः पथि शार्दूलोवधीत्तामिति निर्घृणाः३८ ।।२१ ।।

१७ वर्तन्ते - घ. । १८ मृत्युकालवशं गता - - घ.,. तरः - - क. । १९ परिवर्तत - क. । २० मासि - ख. । २१ जाते च - क., एते च - ख. । २२ आमन्त्रयन्त - ख. घ । २३ काण्डरो - क. । २४ श्लाघ्यो - ख. । २५ वोवभृतं- क,, वा निश्चितं - घ । २६ पित्र्यर्थे - क, पित्र्यर्थं - ख., पितृणां - घ. । २७ लेपो - क., लोभाद्. घ । २८ श्रिया पुष्ट्या ततस्ते तु - घ, त्व (स्व) - क. । २९ योक्ष्य - ख., योक्ष्या - क., मोक्षा -घ. । ३० वचस्तस्य प्रधार्य च - घ. । ३१ तु - ख. । ३२ तपस्विनीम् - ख. । ३३ महात्मने - क. ख. । ३४ मुप. - घ. । ३५ बद्धमानिन्युर्गुरवे (?) । ३६., .धार्य च - ख. । ३७ यच्छ मे - ख. । ३८ तमूचूस्तस्य वै शिष्या न लब्धा गोरितस्ततः - घ. ।


अथ तेषां वचः श्रुत्वा शंकया च दुरात्मनाम् ।
दिव्येन चक्षुषापश्यद् भक्षितां तैर्महातपाः । । २२ । ।
सतः स रोषाद् रक्ताक्षो३९ निर्दहन्निव ताँस्तदा४० ।
उवाच वत्सं दृष्ट्वा च४१ कृपया भृशदुःखितः४२ ।।२ ३ । ।
युष्माभिर्भक्षिता सा हि तथ्यं४३ न कथितं च मे ।
कर्मणा तेन तस्माद्वो गतिः कष्टा४४ भविष्यति४५ । ।२४। ।
प्रसादितः स तैः शिष्यैर्ब्राह्मणः सुमहाद्युतिः४६ ।
कृपया स च तानाह भूयः सर्वानिदं वचः ।।२५।।
यदुक्तं४७ तन्मया तथ्यं४८ न४९ तन्मिथ्या५० भविष्यति ।
येषां तु कृतवन्तः५१ स्थस्तेध्यवस्यन्ति५२ यच्छुभम्५३ ।।२ ६।।
मत्समीपे च न स्थेयमिदानीं वः कथञ्चन ।
दृष्ट्वा वत्समिमं बालं मा वो धक्ष्यामि गच्छत५४ ।।२७।।
अथ ते सहिताः सर्वे नष्टसंज्ञा विचेतसः५५ ।
कालेन समयुज्यन्त चिन्तयन्तो गुरोर्वचः । ।२८। ।
दशार्णा नाम सा व्यास सरित् पुण्यजला शुभा५६ ।
तस्यास्तीरे वनं दिव्यं विश्रुतं तत् सुभास्वरम् ।।२९। ।
तत्र व्याधोभवच्छूरः क्षुपको५७ नाम वीर्यवान् ।
तस्य पुत्राभवँस्ते वै चितकायां महाबलाः ।।8.56.३ ० ।।
चितका संप्रसूता५८ तु पुत्राँस्तान् सप्त संमतान् ।
व्याधाः सर्वेभवंस्ते वै चैतका इति विश्रुताः ।। ३ १। ।
चरन्ति सधनुष्कास्ते निघ्नन्तो५९ मृगपक्षिणः ।
सिंहान् व्याघ्रान् गजाँश्चैव६० वराहादीँश्च सर्वशः६१ । ।३ २।।

३९ रोषताम्राक्षो - घ. । ४. तेजसा - ख. । ४१ तु - घ. । ४२ च सुदुःखितः - ख., दुःखपीडितः - क घ. । ४३ तया - घ. । ४४ नष्टा.. - घ. । ४५ संसारान् प्रतिपद्य (त्स्य) थ - ख । ४६ ब्राह्मणैस्स महाद्युतिः - क. ख घ । ४७ यद्युक्तं - घ. । ४८ चोक्तं - घ. । ४९ च - ख. । ५०... थ्यं - क । ५१. न्तो - क । ५२ योध्य... - क. ।

५३ योध्यवस्यत - ख. । ५४ व्याधत्वं समगच्छत - घ. । ५५ विसंज्ञा नष्टचेतसः - क. घ. । ५६ पुण्यजला सदा -क. । ५७ क्षुपजो - ख. । ५८. ते - घ. । ५९ घ्नन्तो वै - क. ख. । ६० गणाँश्चैव - घ. । ६१ वराहाँश्च सुदारुणः- घ. ।

314

तेषां नामानि यानि स्म व्याधत्वे६२ तानि मे शृणु ।
काण्डारोर्जुनको नाम दमनः सिंहकोभवत्६३ । ।३ ३ ।।
हालोभूद् व्याघ्रकश्चैव विदलः६४ शरभस्तथा ।
शैशिरो हिमवाँश्चैव हस्तिको दण्डकीलकः । ।३४।।
विदर्भो६५ वज्रकश्चैव नामान्येतानि तेषु हि६६ ।
एकश६७ स्तेटवीं घोरां चरन्ति६८ पिशिताशनाः६९ । ।३५।।
हिंस्राः सत्वान्तकाः सर्वे योनिं दुष्टामुपागताः ।
कदाचिद्विचरन्तस्ते मृगान् घ्नन्तस्तथैव च । ।३ ६ ।।
उपाध्यायाश्रमं प्राप्ताः कर्मणा७० सुकृतेन ह ।
तत्र७१ तेषां भयोद्विग्नाः सर्व एवाभवन् मृगाः । ।३७। ।
मृगान् भीतान् समालक्ष्य स विप्रः सुमहातपाः ।
न्यवैक्षत७२  दिशः सर्वा व्याधाँश्चापश्यदागतान् ।। ३८।।
स्वशिष्याँस्तान्७३ परिज्ञाय ध्यानाद् व्याधत्वमागतान्७४ ।
प्रोवाच करुणाविष्टस्तेषामेव शुभेप्सया७५ । ।३ ९।।
शुश्रूषितः पुरा विप्रैर्युष्माभिरहमादरात्७६ ।
कर्मणा तेन चेदानीं गोबध्याकृतशापतः । ।8.56.४० । ।
व्याधत्वमिह संप्राप्ताः कुत्सितं हिंस्रवृत्ति यत्७७ ।
सा च७८ गौः पितृकार्येण भक्षिता वो न हिंसया । ।४१ ।।
तस्माद् यूयमितो भ्रष्टा७९ जातिस्मरणसंयुताः ।
मृगाः कालञ्जरे भूत्वा८० चक्रवाकाः पुनः८१ सरे ।।४२ । ।
द्वीपे ततः पुनर्हंसा भूत्वा वै मानसे ह्रदे ।
भूयश्च मानुषा भूत्वा जातौ जातौ८२ सचेतनाः ।।४३ । ।
योगयुक्ता महात्मानो मत्प्रसादादतन्द्रिताः ।
सर्वकिल्बिषनिर्मुक्ता ब्रह्मलोकमवाप्स्यथ । ।४४।।

६२ व्याधानां -घ. । ६३ शिशिरो हिमवाँश्चैव विरूपो विश्वरेतनः । वीरो वीरतरुः स्वेदो नामान्येतानि तेषु च- घ. । ६४ विशदः - ख. । ६५ विभर्गो - क, विभग्नो - ख. । ६६ च - घ. । ६७ एकदा - क. घ. । ६८ चरन्तः - घ. । ६९ पिषितैषिणः - घ. । ७० कर्म स्म (स्व?) - घ. । ७१ तस्य - घ. । ७२ अवैक्षत - ख । ७३ स शिष्याँस्तान् -ख., स मुनि - घ. । ७४ ध्यानात्मा समुपस्थितान् - घ. । ७५ शुभं वचः - घ. । ७६... रिदमातरात् - घ. । ७७ हिंस्रवृत्तिमत् - ख. घ. । ७८ साधु - घ. । ७९ भूय इयमितो - ख, तस्मात् शापात् परिभ्रष्टा - घ. । ८० भूता -घ. । ८१ पुरा - घ. । ८२ याताः - घ. ।

315

एतच्छ्रुत्वा ततस्तेषां पूर्वा स्मृतिरजायत ।

उपाध्यायोयमस्माकमिति बुद्धौ८३ तदा८४ भवत् ।।४५।।
ततः कर्म जुगुप्सन्तः पूर्व८५जातिकृतं च यत्८६ ।
प्रदक्षिणमुपावृत्य दशार्णामभितो८७ ययुः ।।४६। ।
दशार्णातीरमासाद्य संमन्त्र्य च परस्परम् ।
जातिं पूर्वां८८ स्मरन्तस्ते मृत्युमेव प्रवव्रिरे ।।४७।।
निश्चितानां८९ ततस्तेषां काण्डरो९० योभवद् द्विजः ।
व्याधोर्जुनकनामा९१ स इदं वचनमब्रवीत् ।।४८।।
भवन्तो यन्मया९२ पूर्वमुक्तास्तन्न कृतं हि वः ।
इदानीं समनुप्राप्तं मावमन्यत मे वचः ।।४९।।
श्रेयो वोहं प्रवक्ष्यामि शृणुध्वं कुरुतैव च ।
जातिमेतां विमोक्ष्याम येन हास्याम न स्मृतिम् । ।8.56.५० ।।
पुत्रानिच्छन्ति पितरः पुष्ट्यर्थं तारणाय च ।
वयं च जनितास्तेन व्याधेन सुमहात्मना ।।५१ । ।
संवर्द्धिताश्च क्लेशेन मात्रा पित्रा तथैव च ।
अनापृच्छ्य९३ कथं तौ तु मृत्युमिच्छामहे वयम् ।।५२। ।
ते यूयं९४ यदि मन्यध्वं तावापृच्छ्य९५ विसर्जिताः९६ ।
योक्ष्याम श्रेयसात्मानमेतद्वो९७ हितमुत्तमम् । ।५३ । ।
न चेद्विसर्जयेतां तौ९८ तयोः९९ शुश्रूषणे रताः ।
ततस्तावद्धि तिष्ठामो यावत् कालेन तौ मृतौ । ।५४। ।
ततो वयं कृतात्मानो ह्यनृणाः१०० सर्वथापि च ।
गमिष्यामो गतिं१०१ पुण्यामेतन्नः श्रेय उत्तमम् ।।५५। ।
एवमस्त्विवति ते सर्वे गृहीत्वा तस्य तद्वचः ।
चिन्तयन्तः पुरो१०२ जन्म गृहानेवाभिजग्मिरे ।।५६। ।

८३ बुद्धि - घ । ८४... स्ततो - घ. । ८५ जुगुप्समानास्ते पूर्वं - ख । ८६ तत् - घ. । ८७ दशार्ण- मभितो - क घ. । ८८ पूर्वां जातिं - ख. । ८९ निश्चिन्तानां - क. । ९. काण्डारो - ख. । ९१ जनकनामा - घ. । ९२ ये मया -ख. । ९३ दृष्ट्वा - क., दृष्टा - ख. । ९४ तद्यूयं - ख., ते मृत्युं - घ. । ९५ मा पृष्ट्वा तौ - क. ख. घ. । ९६ विवर्जिताः - ख. । ९७ श्रेयसे मानमेतद्वो - ख. । ९८ तं - घ. । ९९ ताभ्यां - क. ख. घ. । १०० कृतात्मान अनृणाः - क. ख । १०१ मतिं - क. । १०२ पुरा - क. घ. ।



तानागतान् पिता दृष्ट्वा माता च चितका तदा ।
तुष्ट्या परमया१०३ युक्ता इदं तानूचतुर्वचः१०४ ।।५७। ।
पुत्रकाः सुचिरादद्य यूयमभ्यागता गृहम्१०५ ।
अद्यावां१०६ सुदृढं मूढौ१०७ किं चिरं कृतमित्युत१०८ ।।५८।।
चितकोवाच
क्षुधाविष्टः पिता वोद्य१०९ पुत्रस्नेहेन पुत्रकाः ।
नात्ति मांसमिदं११० पक्वं सुराञ्च न पिबत्ययम् । ।५९।।

सनत्कुमार उवाच

तेपि जातिं जुगुप्सन्तः सर्वे वै पापयोनयः ।

इदमूचुः क्षुपं चैव चितकाञ्च शुभं वचः ।। 8.56.६० । ।

भवन्तोश्नन्त्वविघ्नेन पुष्टये शान्तयेपि च ।

नाश्नीमो१११ वयमद्येह११२ श्वो भोक्ष्यामो११३ न संशयः ।।६१ । ।

ततस्तौ वृद्धभावेन न बुभुक्षासहौ तदा ।

आहारयेतामाहारं सुतुष्टौ च बभूवतुः ।। ६२। ।

तौ तु तुष्टौ समालक्ष्य सर्वेथ शिरसा नताः ।

ऊचुः प्रयत्नतो११४ वाक्यमैक११५मत्येन ते तदा । । ६३ । ।

पितरौ परिनिर्विण्णा वयमेतेन जन्मना ।

इच्छामस्तत् परित्यक्तुं११६ तन्नः संमन्तुमर्हथः११७ ।।६४।।

तेषां तद्वचनं श्रुत्वा पिता तानिदमब्रवीत्११८ ।

परिष्वज्य सुतान्११९ सर्वान् बाष्पपर्याकुलेक्षणः१२० । ।६५। ।

अहमासं पुरा पुत्रा ब्राह्मणः शंसित१२१व्रतः१२२ ।

दिवोदासस्य राजर्षेः सखा परमसंमतः । ।६६। ।

१०३ च परया - घ. । १०४ तावूचतुर्वचः - क. । १०५ गृहान् - क. । १०६ अद्य वः - ख. । १०७ किंचित् - ख.,भूमौ - घ. । १०८ चैवं कृत्यमित्युत - घ., चिरादागम्यतेत्युत - ख. । १०९ चाद्य - घ. । ११० मांसमिमं - क.ख. । १११ म - क, नाश्नीया - ख. । ११२. .मद्याहं - क. ख. । ११३ वयमद्य न भुंजाना भक्षात्मानो - घ.,.. म -क. ख. । ११४ प्रयततो - क, प्रमनसो - ख घ । ११५ मेकमत्येन - क. ख. । ११६. संपरित्यक्तुं - क.,.. स्तौ -ख., इदं तु सं... - घ । ११७ शंसितुमर्हथः - घ. । ११८ माता समब्रवीत् ख, । ११९ स तान् - घ । १२०...लेक्षणौ - ख । १२१ सं शितव्रतः - घ । १२२... व्रताः - क. ।



स कदाचिद्वने रम्ये धनुषा कुरुते भृशम् ।

......... ||| ६७। ।

योग्यात्तमहमाहेदं१२३ न त्वं१२४ वेत्सि धनुर्नृप ।

अजानन्१२५ किमिदं क्लेशं व्यर्थमेव१२६ करोषि च ।।६८। ।

प्रोवाच राजा विप्राणां मन्त्रज्ञानं विधीयते ।

आमन्त्रणे भोजने च वाचा च कुशला द्विजाः१२७ ।।६९।।

- . . . . . . .. . . - ।

स मया हसता१२८ प्रोक्त आनयस्व धनुर्मम ।।8.56.७० । ।

यावत् क्षिपामि लक्ष्याय१२९ शरं यत्र ब्रवीषि माम्१३० ।

स तथोक्तस्तदा१३१ मह्यं सशरं धनुरर्पयत् ।।७१। ।

तेनोक्तं लक्ष्यमुद्दिश्य१३२ शरः क्षिप्तो मया ततः ।

तत्राभवत् स्थितो विप्रो मृगचारी दृढव्रतः ।।७२ । ।

स तेन विद्धस्तेजस्वी ममार सहसैव च ।

सोहं१३३ तं मृतमालक्ष्य१३४ राज्ञा तेन विसर्जितः । ।७३ ।।

ब्रह्मवध्याभयाद् घोरात् पितरं परिपृष्टवान् ।
प्रोवाच न भयं तेस्ति ब्रह्मवध्या कुतस्तव ।।७४।।
जात्यन्तरशतं१३५ गत्वा दृष्टमेतत्१३६ स्वयंभुवा ।
ततोहं परया भक्त्या पितृशुश्रूषणे रतः ।।७५। ।
अनया भार्यया सार्धं१३७ स्थितो वै१३८ बहुलाः समाः ।
स कदाचित् पिता चापि मम कालेन संयुतः१३९ ।७६।।
अवतस्थे च तत्रैव अनयैव सहानघाः ।
अथ कालेन महता गवाहं विनिपातितः ।।७७। ।

१२३ यो स्यान्त... - ख, यो ध्यातु मृगकामे - घ. । १२४ तत्त्वं - ख. । १२५ न जानन् - घ., अज्ञानं-(नात्) ।- घ. । १२६ व्यर्थं कर्म - घ. । १२७ सदा - क. घ., तदा - ख । १२८ सहसा - ख. । १२९ लक्षाय - क. ख. घ । १३० हि - ख । १३१ तदोक्तस्तदा - क. ख. घ । १३२ लक्षमुद्दिश्य - क ख. । १३३ साह - ख. । १३४ मृगमालक्ष्य - क. ख घ । १२५ जात्यन्तारगतं - ख., ज्ञातं - घ. । १३६ हृष्टमेतत् - क., दृढमेतत् - ख । १३७ साकं - घ । १३८. हं - ख. । १३९ संवृतः - घ. ।.


अग्निस्थं चावरूढैषा रुदन्ती मां१४० शुभेक्षणा ।
सोहं गवा हतश्चेति मृगचारिवधेन च । । ।७८ ।।
व्याधजन्मनि विप्रत्वाद् भ्रष्टः१४१ पापेन जज्ञिवान् ।
जातोस्मि१४२ जन्मनां पुत्राः सहस्रं भृशदारुणम् ।।७९। ।
पितृभक्त्या च हि तया सम्यगाराधनेन च ।
नानशन्मे१४३ स्मृतिः पुत्रा ज्ञानं चापि प्रवर्तते१४४ । ।8.56.८०।।
जानामि ब्राह्मणान् भ्रष्टान्१४५ सर्वान् वै गोकृतेन वः१४६ ।
गुरोश्चैवानुशापेन भ्रष्टसज्ञाँस्तथैव च१४७ । ।८१ । ।
पश्चात्तदाज्ञया पुत्रान् सर्वान्वै मुक्तचेतसः ।
लब्धसंज्ञाँस्तथा चैव सर्वानद्य महाबलाः१४८ ।।८२।।
माता चेयं१४९ हि वो१५० वेत्ति साध्वी नित्यं पतिव्रता ।
यदहं वो ब्रवीम्यद्य तत्कुरुध्वं मम प्रियम१५१ । ।८३ ।।
अवाप्स्यथ१५२ ततः श्रेयः सर्वे यूयमतन्द्रिताः१५३ ।
अनामया विशोकाश्च१५४ न च संज्ञां प्रहास्यथ१५५ । ।८४। ।
पुत्रा जन्मेदमन्त्यं मे१५६ मनुष्येषु१५७ न संशयः ।
इतो मृतेन गन्तव्यं मया ब्रह्मसदः शुभम् । ।८५। ।
ते१५८ यूयं मां प्रतीक्षध्वं कंचित्काल१५९मतन्द्रिताः१६० ।
स्वर्गते मयि यच्छ्रेयस्तत्करिष्यथ मा शुचः । ।।८६।।
अवश्यञ्च सुतैर्माता पिता चैव सुदुःखितौ१६१ ।
शुश्रूषितव्यौ१६२ नान्योस्ति धर्मोस्माद्१६३ बलवत्तरः ।।८७। ।
सनत्कुमार उवाच
ततस्ते विस्मिता भूत्वा नष्टशोका विमत्सराः ।

तं१६४ कालं पर्युपासन्त यावत्तौ जहतुस्त्वसून्१६५।।८८।।

१४० रुदती - क. । १४१ विप्रत्वभ्रष्टः - ख. । १४२. .स्मिन् - ख. ख. । १४३ न नाशं मे - क. । १४४ मे संप्रवर्तते - ख., चाप्यप्रवर्तते - क., प्रवर्तत - क. । १४५ तुष्टान् - घ. । १४६ सर्वानाग (स) ।। कृतेन वः - घ. । १४७ भ्रष्टसंगाँस्तथैव च - घ. । १४८ महाबलान् - घ. । १८९ मात्रेयं (यी) - ख. । १५० नो - घ. । १५१ कुरुध्वमतन्द्रिताः - क । १५२ अवाप्स्यत - घ. । १५३.. मतन्त्रिताः - घ. । १५४ विकोशाश्च - ख । १५५ प्रहास्यते - घ । इतः पूर्वं क्षुप उ. इति क. - घ. । १५६ ममेदं- यज्जन्म - घ. । १५७ मनुष्यत्वे - ख. । १५८ तद् - ख । १५९ किंचित्काल. - क. ख. घ. । १६०... मतंत्रिताः - घ, । १६१ सुदुःखितैः - क., सुखेधितैः - ख. । १६२ शुश्रूषितव्यो - क. ख घ । १६३ धर्मोन्यो - ख । १६४ तत् - क. ख. । १६५... स्तनूम् - घ. ।



तयोरतीतयोः सम्यक्१६६ कृत्वा ते ह्यौर्ध्वदेहिकम्१६७ ।
दशार्णायां महानद्यां विधिनानशनेन१६८ ह ।।८९। ।
असाधयन्त आत्मानं व्याधाः सप्तापि ते तदा१६९ ।
कालञ्जरे गिरौ१७० भूयो मृगाः सप्तैव जज्ञिरे । ।8.56.९० ।।
स्मरन्तस्तत्र ते जातिं मरुत्प्रपतनेन ह ।
साधयित्वा तदात्मानं चक्रवाकेषु१७१ जज्ञिरे१७२ ।।९ १ । ।
मृगत्वे यानि नामानि तेषां तानि निबोध मे ।
दीर्घजीवी ह्यनाधृष्टो वायुवेगोभिकम्पनः१७३ ।।९२ ।।
श्रीपार्श्वः शंखपाच्चैव सोमलक्ष्यश्च१७४ सप्तमः ।
जातिं स्मरन्तस्ते पूर्वामन्योन्यमभिमान्य१७५ च । ।९३ । ।
सहिताः सहसा प्राणान् मरुत्प्रपतनाज्जहुः ।
ते सप्तसंख्या व्याधेषु मृगेषु च तथा पुनः । ।९४।।
जन्म प्राप्य पुनर्जाताः शरद्वीपे खगास्ततः ।
शरद्वीपमिति ख्यातं१७६ काम्पिल्येषु सरः शुभम् । ।९५।।
तत्रापि चक्रवाकास्ते सप्ताजायन्त सोदराः ।
मरुद्देवः१७७ शिखंडी च रथनेमिस्वरस्तथा१७८ ।
शिखी जीवोथ वृक्षश्च ध्वज इत्येव ते स्मृताः ।।९६ ।।
तेषां तत्रोपपन्नानां कदाचिदणुहः स्वयम् ।
काम्पिल्यको महातेजा राजा तं देशमागमत् । ।९७। ।
स तत्सरः समासाद्य स्त्रीभिः सहः१७९ मुदान्वितः ।
रेमे मन्दाकिनीं प्राप्य अप्सरोभिरिवामरः ।।९८। ।
तं क्रीडमानं संदृश्य मरुद्देवस्य तत्र वै ।
चक्रवाकस्य तस्यासीत्१८० स्पृहा तान् विषयान् प्रति१८१ ।।९९। ।

१६६ सद्यः - क. । १६७ ह्यूर्ध्वदैहिकम् - क, ह्यूर्ध्वदेहिकम् - ख. । १६८ नसनेन - घ., ना शकेन - क. ख. । १६९ सप्तव्याधास्तथापि ते - ख. । १७० कालाञ्जरगिरौ - ख । च ७१ चक्रवाकाश्च - ख. । १७२ जग्मिरे - घ. । १७३... तिकोपनः - ख । १७४... क्ष्योथ - क. । १७५ मतिमान्य - ख. । १७६ इति

ख्यातः - क. ख. । १७७ मनोदेव - घ. । १७८ रथनेमिस्वनस्तथा - घ, । १७९ सहस्त्रीभिः - ख. । १८. तत्रासीत् - ख. । १८१ विषयानपि(भि) - क., विषयं प्रति - ख. ।



यद्यस्याहं१८२ सुतः स्यां वै प्राप्नुयां राज्यमेव च१८३ ।
ततोहं विषयानेतान् प्राप्नुयां नात्र संशयः । ।8.56.१ ०० ।।
तस्य तच्चिन्तितं ज्ञात्वा द्वितीयश्चक्रसाह्वयः ।
शिखंडीति समाख्यातः स तमाह तदा हसन् । । १०१ । ।
भवता राजपुत्रत्वं राज्यं चैव विचिन्तितम् ।
तत्राहं ते१८४ पुरोधाः स्यां ममाप्येष मनोरथः ।। १० २। ।
ताभ्यां१८५ तच्चिन्तितं ज्ञात्वा रथनेमिस्वरस्ततः१८६ ।
अचिन्तयत तत्राहं सचिवः स्यां तव प्रभो१८७ । ।१ ०३ । ।
सनत्कुमार उवाच
तेषां तथा चिन्तयतां त्रयाणामितरे ततः१८८ ।
चक्राह्वयास्तदा क्रुद्धा इदं तानब्रुवन् वचः ।। १ ०४।।
अचिन्तनीयं युष्माभिश्चिन्तितं विषयार्थिभिः ।
तस्माद् यूयमितो१८९ मुक्ता अवाप्स्यथ मनोरथम् । ।१ ०५। ।
ताञ्छ्रुत्वा१९० दीनमनसः समालक्ष्य पुनश्च ते ।
येन तद्राजपुत्रत्वं चिन्तितं राज्यमेव च । ।१ ० ६।।
कृपया तमिदं वाक्यमब्रुवन्नष्टचेतसम् ।
बहुसान्त्वगुणोपेतं१९१ स्वयं दुःखितवद्यथा१९२ । । १ ०७।।
वयं तव प्रभावेण तीर्णाः कृच्छ्रमिदं प्रभो ।
भवान् मतिप्रदोस्माकं सेतुभूतो मतो हि नः ।।१ ०८। ।
भवान् यदि१९३ हि न ब्रूयात् पितॄणां गौर्निवेद्यताम् ।
शुश्रूषेमश्च न१९४ पितॄन् न स्म१९५ संज्ञा ततो भवेत् । ।१ ०९।।
तव प्रभावादेतन्नो१९६ यौगैश्वर्यप्रवर्तनम् ।
ततो वयं पुनः१९७ श्रेयस्तव ब्रूमः शृणुष्व नः१९८ ।।8.56.१ १० ।।

१८२ अद्यास्याहं - क. । १८३ प्राप्नुयाद्राज्यमेव च - क. ख. । २८४ त्वत् - घ. । १८५ तस्य - घ. । १८६...स्वनस्ततः - घ. । १८७ प्रभोः - ख । १८८... मितरेतरं - घ. । १८९ भूय इतो - ख. । १९० तान्दृष्टवा - घ । १९१ बहुशास्त्रगुणोपेतं - घ. । १९२ तथा - घ. । १९३ भवानपि - घ. । १९४ शुश्रूषध्वमपि - घ. । १९५ नष्ट (ा)संज्ञा -क । १९६ तस्मात्तव प्रभावान्नो - घ. । १९७ भूयोप्यथ वयं - घ. । १९८ स्तु शृण्वत ख , तत् घ ।



तावत्त्वं सक्तहृदयो१९९ भविष्यसि नराधिप ।
यावदस्मद्वचस्तत्थ्यं न श्रोष्यसि सहायवान् ।
योगज्ञानमवाप्यैव२०० प्राप्स्यसे च गतिं शुभाम२०१ । ।१ ११ ।।

सनत्कुमार उवाच

ततस्ते सहिताः सर्वे युक्तात्मानो२०२ महाखगाः ।
खगत्वं संपरित्यज्य२०३ योनिमन्यां२०४ प्रपेदिरे. ।।१ १२।।
सर्वे ततस्ते मुनिकोपदग्धा व्याधा मृगाश्चक्रसमाह्वयाश्च ।
जाताः पुनर्मानुषविग्रहेषु योगेश्वरास्ते त्रय एव राज्ये ।।१ १३ । ।
इति स्कन्दपुराणे सप्तव्याधोपाख्याने कौशिकशापे षट्पञ्चाशोध्याय

सनत्कुमार उवाच

चत्वारस्ते तु शास्तारः१ खगाः स्वच्छन्दतः पुनः ।
यायावरस्यः विप्रस्य सुता जाता२ महात्मनः । । १ ।।
तेषु जातेषु विप्रोसावक्लेशेन३ महातपाः ।
वृत्तिं समानयामास४ तेषां भाग्यपुरःसरः । । २। ।
चीर्णवेदव्रतास्ते तु वेदान्साङ्गानधीत्य च ।
योगमेव न्यषेवन्त६ तन्निष्ठास्तत्परायणाः ।।३ । ।
इतरेपि७ त्रयो व्यास कर्मणा स्वेन चोदिताः८ ।
प्रत्यपद्यन्त तज्जन्म यत् पुरा तै९ र्विचिन्तितम् .।।४।।
प्रथमो ह्यणुहाज्जज्ञे ब्रह्मदत्त इति स्मृतः ।
एकोणुहस्य पुत्रोभूद् द्वितीयस्तत्पुरोधसः । ।५।।

१९९-सत्वहृदयो ख, शक्रभवने - घ । २०० मथाप्येवं - घ..... मवाप्यैनं - क. ख. । २०१ शुभां गतिं - ख । २०२... मुक्तात्मानो - घ. । २०३ योगज्ञत्वं परित्यज्य - ख. । २०४ गतिमन्यां - ख. । शप्तारः -ख । २, जज्ञे - क.,जज्ञु.. - ख., जग्मु.. - घ. । ३... सौ क्लेशेन च - क., सा बहुमान- पुरःसरः - घ. । ४ संजनयामास - ख. । ५ दांता देवव्रतास्तेपि - घ. । ६ -.. नाभ्यसेवन्त -ख. । ७ अपरेपि - घ. । ८ तेजसा - ख. । ९ पुरा तैर्यत्, - घ ।

322

तृतीयः सचिवस्याथ त्रयस्ते जन्म तद्१० गताः ।
त्रयोग्नय इवासंस्ते लोकास्त्रय११ इवाथवा ।
अवर्द्धन्त महात्मान१२ स्त्रयस्ते सागरा इव । ।६।।
तेषामवाप्तविद्यानां योग्यानां च स्वकर्मणि१३ ।
पितरः स्वानि कर्माणि१४ प्रददुर्हृष्टमानसाः ।।७।।
अणुहः प्रददौ राज्यं ब्रह्मदत्ताय पुष्कलम् ।
कीर्तिमत्या च सहितस्ततो वनमगाच्च सः ।।८। ।
पुरोधा धृतरातस्तु१५ पुत्रं स्वे कर्मणि प्रभुः ।
स्थापयित्वा जगामाथ१६ पंचालं शंसितव्रतः । ।९।।
सचिवोपि सुधन्वा तु ब्रह्मधन्वानमच्युतम्१७ ।
पुत्रं स्वे कर्मणि स्थाप्य जगाम सह भार्यया ।। 8.57.१ ०। ।
गतेषु तेषु स्वाँल्लोकान्१८ ब्रह्मदत्तः प्रतापवान् ।

पञ्चालब्रह्मधन्वभ्यां१९ सह राज्यं चकार ह ।।१ १ ।।
प्रशासतस्तथा राज्यं यजतो भुञ्जतश्च ह२० ।
जग्मुः सुखेन बहुलाः समाः सुकृतिनस्तदा२१ ।।१२।।
अथ कालेन महता सभार्यः ससुहृज्जनः ।
तस्थौ स वेश्मनि२२ सुखं कुबेर इव पुष्पके२३ । ।१३ ।।
ततः सर्वरुतज्ञाता२४ पिपीलं कामकारणात्२५ ।
पिपीलिकायाञ्चाटूनि२६ कुर्वाणं सोन्वपश्यत२७ ।। १४। ।
स तु ज्ञानाद्२८ विनिश्चिन्त्य२९ कृमियोनावपीदृशम् ।
विवृतं३० शब्दवच्चैव हासमुत्सृजतानघ३१ । ।१ ५। ।

१० तां - घ । ११ लोकपाला घ., भूयस्ते - क. । १२ शिवात्मान - घ. । १३ स्वेन कर्मणा - घ. । १४ स्वामिकर्माणः - घ. । १९ धृतराष्ट्रस्तु - ख., श्रुतवागस्तु - घ. । १६ जगामाशु - ख । १७... प्रच्युतः - घ- । १८ स्वर्लोकान् - घ. । १९... न्याभ्यां - क. ख., सत्वाभ्यां - घ. । २० जयतस्तस्य तैः सह - घ. । २१ स्तथा - ख घ. । २२ स्ववेश्मनि - क. । २३ पुष्करे - घ. । २४ सर्वरुतं ज्ञात्वा - क. ख. घ । २५ पिपीलकमकारणात् - घ.,कामकारिणं - क. । २६... श्चाटूनि - क. ख., ... ञ्चाशक्तमानसं - घ. । २७ सोनुपश्यत - क. घ । २८ ज्ञात्वा -क. ख. घ. । २९ विनिश्चित्य - ख, घ.. । ३०.. निमित्तं - ख. । ३१... नघ - क. ।


ततस्य हसितं दृष्ट्वा पत्नी नीलोत्पलेक्षणा३२ ।
चुकोप किमिदं मेद्य विकृतं लक्षितं त्वया ।। १६ ।।
तां स राजा स३३माविग्नः३४ प्रियां प्राणैर्गरीयसीम् ।
प्रसादय३५न्न चैवास्य प्रसीदत३६ शुभानना ।।१७।।
सा यदा बहु तथ्यञ्च३७ उच्यमाना न तुष्यति ।
तदा तस्याः प्रसादार्थे ३८ स विष्णुं संप्रसादयत् । ।१८।।
देवं३९ सालवनं४० गत्वा पञ्चालेन सहैव सः ।
ब्रह्मधन्वपुरोवाहो रथेन महता महान्४१ । ।१ ९। ।
तत्रासौ सप्तमे त्वह्नि४२ विष्णुनाभिविसर्जितः ।
जगाम नरशार्दूलः काम्पिल्यं४३ स्वं पुरोत्तमम्४४ ।।8.57.२० ।।
एतस्मिन्नेव काले तु चत्वारो ब्राह्मणाः शुभाः ।
योगेन महता युक्ता इदमूचुः परस्परम् ।।२१ । ।
वयं कृतार्थाः किं कार्यमिह तिष्ठाम मानुषे ।
गच्छाम४५ ब्रह्मयोनिं स्वां मुच्यामोस्मान्महाभयात्४६ ।।२२।।
अवसीदन्ति ते चैव४७ त्रयोस्माकं४८ सहव्रताः ।
बोधयामेह४९ ताँश्चैव यथा नेयुः पराभवम्५० ।।२३ ।।
ततस्ते पितरं सर्वे प्रणम्योचुर्द्विजातयः ।
वयं योगेश्वरास्तात सिद्धा वै५१ स्वेन कर्मणा । ।२४।।
आपृच्छामो गमिष्यामः स्वां योनिं ब्रह्मनिर्मिताम् ।

त्यक्त्वेमान्५२ मानुषान् देहान्न५३ विसर्जय नमस्तव ।।२५।।

३२ निलोत्पलेक्षणं - घ. । ३३ राजान - ख. । ३४ समाश्वास्य - घ., समाविग्नां- ख. । ३५ अङभवि आर्ष? । ३६ प्रसीदति - घ. । ३७ बहुधा तेन - घ. । ३८ प्रसादार्थं - घ. । ३९ देव - क. । ४० सप्तनंदं - घ. । ४१ तदा - घ.। ४२ चाह्नि - घ. ख. । ४३ कम्पिल्यं - क. ख. । ४४ स्वपुरोत्तमम् - क. । ४५ गच्छामो गतिमिष्टां स्वां - घ. । ४६... पि मुच्यामो महाभयात् - घ. । ४७ चैवात्र - घ. । ४८ येस्माकं च - घ. । 8९ अवबोधेम - क. ख.,आराधयाम - घ. । ५० पराभवः - घ. । ५१ सिद्धाश्च - घ, । ५२ त्यक्त्वेमं - ख. । ५३ मानुष देहं - ख. ।

324

पित्रोवाच

पुत्रानिच्छन्ति पितरस्तारयिष्यन्ति नो भयात् ।
भयं तच्चैहिकं पुत्राः परत्र च दुरासदम् । ।२६।।
ते यूयमृणसंयुक्ता५४ अमुक्त्वा स्वं५५ निबन्धनम् ।
कथं गच्छथ५६ भद्रं वो नाधर्मं परिपश्यथ५७ । ।२०।।

सुता ऊचुः

वयं योगेश्वरास्तात लोकाँस्तुभ्यमनामयान्५८ ।
प्रयच्छामो५९ न संदेहो यत्र६० गत्वा न शोचसि६१ ।।२८।।
अस्माभिस्त्वं कथं पुत्रैर्ब्रह्मत्वं नाप्नुयाः पितः ।
इहापि लोके द्रव्यं ते विधास्यामस्तथा६२ शृणु ।।२९।।
इदं६३ त्वं६४ पत्रमादाय६५ ब्रह्मदत्तस्य दर्शय ।
स वाचयन्नेव६६ नृपो वृत्तिं ते संविधास्यति ।।8.57.३ ० । ।

सनत्कुमार उवाच

प्रभावज्ञस्ततस्तेषां६७ पिता स मुनिपुङ्गव६८ ।
मेने तद्वै६९ तथा सर्वमनुमेने च तत्पुनः । ।३ १ ।।
अथासनानि बद्ध्वा ते युक्ता जग्मुस्तपोधनाः७० ।
ज्योतिर्भूतानपश्यच्च पिता तेषामतिद्युतिः । ।३२।।
स तु लेखं समादाय पुत्रान्स्वानभिचिन्तयन्७१ ।
काम्पिल्यमगमत्तूर्णं दिदृक्षुर्नृपसत्तमम् ।। ३३ ।।
स च राजा सालवना७२ दागतः प्राविशत्७३ पुरम् ।
ब्राह्मणो दूरत७४ श्चास्य तं लेखं समदर्शयत ।।३४।।

५४ यूयं मृगसंमुक्ता?- घ. । ५५ अनुक्रोश - घ. । ५६ गच्छत - घ. । ५७ पविपश्यत - क खः- परिपच्यत- घ । ५८ -.. स्त्वद्य निरामयान् - घ. । ५९ प्रयच्छाम - क. ख. । ६० येषु - क., घ । ६१ न शोचति - घ । ६२ तथा - ख । ६३ इम - क ख. । ६४ त - घ. । ६५ पुत्रमादाय - क- ख मंत्रमादाय - घ । ६६ धारयन्नेव - घ । ६७ प्रभावान्निर्गतस्तेषां - घ. । ६८ मुनिपुङ्गवः - क., ख. । ६९ तच्च - घ । ७० युक्तात्मानस्तपोधना. - घ. । ७१ परिचिन्तयन् - घ । ७२ राजा सालवनात् तस्मात् घ- । ७३ प्रविशन् - क. । ७४ ब्राह्मणैर्दूरत - क. ।

325

निमित्तानि च संलक्ष्य शुभानि स नराधिपः ।
लेखमानयतेत्युक्त्वा धारयामास तं रथम् ।।३ ५। ।
स पुरद्वारसंस्थस्तु रथेन महता तदा ।
ब्रह्मधन्व७५ धृतच्छत्रः७६ पञ्चाला७७ वीजिताननः ।।३ ६ ।।
गृहीत्वा लेखमव्यग्रमवाचयत७८ तं तदा ।
श्लोकद्वयं७९ चाप्यभवत्तस्मिँल्लेखे शुभप्रदम् ।।३७।।
ये ते गुरुकृताच्छापाद् गोवधेनावपीडिताः ।
पितृभक्त्या कृतज्ञाना८० जाताः सर्वे शुभोदयाः ।।३८। ।
सप्तव्याधा दशार्णेषु८१ मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे८२ हंसाः सरसि मानसे ।।३ ९। ।
तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ । ।8.57.४० । ।
सनत्कुमार उवाच
श्लोकद्वयं८४ तथा८५ श्रुत्वा त्रयस्ते विषपीतवत् ।
मोहं तदा तु८६ संप्राप्य लब्धसंज्ञा विशन्पुरम् ।।४१।।
ते प्रविश्य पुरञ्चैव वेश्म८७ चैवाप्यतन्द्रिताः ।
इति चेति च संचिन्त्य८८ वनाय दधिरे मनः । ।४२। ।
सा च८९ पत्नी महाभागा अभिगम्य९० नराधिपम् ।
इदमाह मुदा युक्ता राजानं ससुहृज्जनम् । ।४३।।
भवान् योगेश्वरो भूत्वा सक्तो भोगेषु सर्वशः ।
प्रबोधार्थं ततोहन्ते क्रोधमाहारयन्तदा ।।४४।।

७५ पुरोधसा - ष । ७६ धृतं छत्रं - क. । ७७ पाञ्चाली - ख. । ७८ अवाचयत् - क. । ७९ श्लोकत्रयमित्यन्यत्र । ८० हृतज्ञाना - क. । ८१ तु - क. । ८२ सरद्वीपे । ८३ तेभ्यः - क. ख. । ८४ श्लोकत्रयमित्यन्यत्र । ८५ तदा- -ख; । ८६ नु - ख. । ८७ वेश्यं - ख । ८८... नुता - क. वेनाय - ख. । ८९ सापि - क. । ९०. अधिगम्य ख; ।

326

जानामि त्वां रुतज्ञञ्च९१ जानामि त्वां खगन्तथा ।
अतोहं जानती राजन् प्रतिबोधार्थमुद्यता ।।४५।।
तस्माद्विप्रमिमञ्चैव तेषां पितरमव्ययम् ।
धनेन योजयस्वाद्य पुत्रं९२ राज्येभिषिच्य च९३ । ।४६। ।
श्वो गच्छाव९४ वनं राजन९५ मा कालं प्रतिपालय ।
राजा तत्कृत्यमखिलं९६ कृत्वा पत्न्या सहव्रतः९७ । ।४७। ।
जगाम वनमुद्दिश्य योगेन च दिवं ययौ ।
पंचालोपि गते तस्मिन् तपः कृत्वा सुदुश्चरम्९८ ।।४८ । ।
चकार पारणं९९ चैव यक्षत्वं१०० चाप्यवाप१०१ ह ।

ब्रह्मधन्वा च कालेन१०२ सुमहात्मा१०३ दृढव्रतः ।।४९। ।
हिमवत्तनयां देवीं तपसा समपश्यत१०४ ।
वरदां तां तदा दृष्टवा१०५ ब्रह्मधन्वाब्रवीच्छुभाम् ।।8.57.५० ।।
इच्छामि कामरूपित्वं१०६ त्वद्भक्तिं चैव१०७ नित्यदा ।
कृच्छ्रं महच्च प्राप्तस्य१०८ त्वयैवोद्धरणं ततः ।।५१ ।।
एवमस्त्विति सा चोक्त्वा जगामेष्टां गतिं तदा ।
बह्मधन्वापि मत्तोभून्मदनेन दुरात्मवान्१०९ ।।५२। ।
स भूत्वा धार्मिकः पूर्वमधर्मेणाभिपीडितः११० ।
अभिमेने१११ स कन्याश्च११२ ऋषीपत्नीश्च सर्वशः ।।५३ । ।
भर्तृरूपेण गत्वा च कामेन स विमोहितः ।
न च कश्चिद्विजानाति११३ तथा११४ वर्तन्तमन्तशः । ।५४। ।
अथ हाल११५ इति ख्यातो मृगचारी महातपाः ।
तस्य पत्नी सुधर्माभून्नाम्ना रूपवती११६ दृढम् ।।५५।।

९१ मृगी तं च - घ. । ९२ पुत्रो - ख. । ९३... भिषेच्यतां - ख.,. .ते - घ. । ९४ गच्छावो -क., गच्छाम - ख घ ।. ९५ राज्या (त्) - क. । ९६ तत्सर्वमखिलं - घ. । ९७ दृढव्रतः - घ. । ९८ सुदुस्तरम् - घ.. । ९९ परमं - ख.,पावनं - घ. । १०० पञ्चत्वं - घ. । १०१ चैवमाप - घ. । १०२ कामेन - घ. । १०३ स महात्मा - घ. । १०४ तामपश्यत - घ । १०५ ब्रह्मन - घ. । १०६ कामरूपत्व - घ. । १०७ त्वद्भक्तत्वं च - ख । १०८ कृच्छ्रे महति संप्राप्ते - घ. । १०९ दुरात्मना - घ. । ११० तिपीडितः -ख । १११ अभिमाने - ख., अभिरेमे - घ. । ११२ शकल्याश्च - घ., कामाच्च - ख. । ११३ न कश्चित्तं- विजानाति - घ. । ११४ वृत्तं - घ. । ११५ काल - घ. । ११६ धर्मवती - क, ।



कथयन्ति हि तां देवाः सिद्धाश्च सह चारणैः ।
असमा रूपतोन्याभि११७स्त्रिषु११८ लोकेषु भामिनी११९ ।। ५६। ।
न च तस्य सभार्यस्य१२० अन्तरं स बुबोध ह ।
कस्मिन्१२१ काले भवेत्तस्या१२२ विरहः१२३ पतिना सह ।।५७।
स ब्रह्मधन्वा तां श्रुत्वा तथा रूपवतीं सतीम् ।
पत्यास्या विरहाकांक्षी व्याघ्ररूपं चकार ह ।।५८ ।।
कृत्वा च सुमहद्रूपं विकृतं भैरवं तदा ।
अत्रसयत् मृगान् व्यास दर्शनेन सुबालिशः१२४ ।।५९। ।
तद्१२५ व्याघ्रभयसंत्रस्तमृगयूथं तदा विभो ।
मनोनिलजवव्यग्र१२६मदृश्यं संप्रपद्यत ।।8.57.६० । ।
मृगैः सह च हालोपि१२७ जीवितैषी तदा गतः ।
सुधर्मा१२८ ब्राह्मणी सापि१२९ भयाद् व्याघ्रस्य भामिनी१३० ।।६ १ । ।
स्त्रीस्वभावाच्च पतिता१३१ नान्वगच्छन्मृगव्रजम् ।
एकाकिनीञ्च तां दृष्टवा ब्रह्मधन्वा दुरात्मवान् ।।६२।।
व्याघ्ररूपं समुत्सृज्य तामिदं प्रत्यभाषत ।

मृदुना सान्त्वयुक्तेन१३२ वचसा भयपीडिताम् ।।३ ३ ।।
मा भीर्भवतु ते भद्रे१३३ पतिस्तेहं सुमध्यमे ।
मृगराजो गतोसौ च समाश्वस मम प्रिये ।। ६४।।
तं समाश्वस्य सापश्यत् पतिरूपं महायशा ।
हृदा चाचिन्तयद्१३४ दृष्टो मयासौ तैर्मृगैः सह ।।६५ ।।
जीवितैषी पलायन् वै१३५ कुतोयं पुनरागतः ।
देवेन्द्रो मा दुराचारः सदा धर्ष१३६त्यतन्द्रितः ।।६६।।

११७ रूपेणासमतां - ख., अभिरेमे स तां चापि - घ. । ११८ स्त्रीषु - घ. । ११९ भाविनी - ख. घ. । १२० न स तस्याः शुभापांग्या - ख घ. । १२१ तस्मिन् - क., यस्मिन् - ख. घ. । १२२... भवत्तस्या - घ. । १२३ विवाहः -घ । १२४ दिवानिशं - घ । १२५ तं - घ. । १२६ मनोनिलवदव्यग्र - क. ख., मनोनी.. - घ. । १२७ सहचरः सोपि - घ. । १२८ सुधन्वा - घ. । १२९ चापि - घ. । १३० कामिनी - ख. । १३१ पतिना- घ. । १३२ शन्तियुक्तेन घ. । १३३ भद्रं मे (ते) - क ख । १३४... पचिन्तयद् - ख. । १३५ पलायँश्च - ख. । १३६ धर्त्तु - क.खः. । धर्ष? ।


सोयं कामयितुं प्राप्तः किन्न स्यादन्तरैषिवान् ।
तस्माद् द्रक्ष्याम्यहं सम्यग् दुष्टं दिव्येन चक्षुषा।।६७।।
सनत्कुमार उवाच
एतस्मिन्ननन्तरे सोथ ब्रह्मधन्वा करेग्रहीत् ।
तामिदं चोचिवान् हृष्टः१३७ किं त्वं चिन्तयसे हृदा ।।६८। ।
न मामालिङ्गसेद्य त्वं१३८ मृत्योरास्याद्विनिर्गतम्१३९ ।
ननु तेहं प्रियो भर्ता मा क्रुधो वरवर्णिनि ।।६९।।
ततस्तां स तदा दौष्ट्यात् कपोले समजिघ्रत ।
परिष्वज्य च दुष्टात्मा गात्रैर्गात्राण्यपीडयत् ।।8.57.७०।।
नीवीं व्यस्रं सयच्चैव१४० अधरं चापिबद् बलात् ।
बुबुधे सा च तं दुष्टं कर्मणा तेन शोभना ।।७१ ।।
सुधर्मोवाच
न त्वं मम पतिर्मूढ शक्रस्त्वं नात्र संशयः ।
न भूयो१४१ मदनस्यास्मि१४२ विषयोहं१४३ सुदुर्मते।।७२।।
स तयाप्येवमुक्तस्तु अवधूतश्च सर्वशः ।
पपात धरणीपृष्ठे स्वं च रूपं प्रपद्यत ।।७३। ।
ततः सा क्रोधताम्राक्षी धक्ष्यमाणेव चक्षुषा ।
निरीक्ष्य वदनं सुभ्रूरिदं वचनमब्रवीत् ।।७४। ।
ऋषिपत्न्यस्त्वया बह्व्यो व्यंसिताः दुष्टचेतसा११४ ।
न मादृशी त्वया काचिदन्या ह्यसादिता१४५ पुरा ।।७५।।
इदानीं कर्मणस्तस्य पूर्वमाचरितस्य ते१४६ ।
फलं प्राप्तमिदं पश्य मत्सकाशाद् दुरासदम्१४७. ।।।७६।।

१३७ दृष्टवा - ख., धृष्ट? । १३८ सोहमालिंग हेभद्रे - ख. । १३९ विनिर्गतः - - ख. । १४० विस्रंयच्चैव - क. ख.,विस्रंसयँश्चैव - ख. । १४१ न भये -ख, उभयो. क. । १४२. .स्ति -.क. व. । १४३ बिक्षयोर्ध्वं - ख, विषमेर्ध्वं - क. । ' १४४ दुष्टचेतसः - क, । १४५.. .प्यासादिता - ख. । १४६ च - ख. । १४७ दुरासद - क. ख. ।

329

यदेव रूपं कृत्वा त्वं१४८ मृगानत्रासयो१४९ बलात् ।
विचरिष्यसि तेनैव रूपेण बहुलाः समाः । ।७७। ।
अशक्तश्चापि हन्तुं त्वं भविता मानुषं१५० क्वचित् ।
षष्ठे च काले संप्राप्ते मृगं भक्ष्यमवाप्स्यसि ।।७८। ।
सनत्कुमार उवाच
अभिव्याहृत्य तं क्रूरं शुभाचारा मनस्विनी ।
जगाम तान्मृगाँस्त्वेव ततः पतिमपश्यत । ।७९। ।
सोपि दुःखेन सन्तप्तो मन्वानस्तां हतेति१५१ च ।
विलपन्नेव१५२ तां दृष्टवा परिष्वज्येदमब्रवीत् ।।8.57.८० ।।
दिष्ट्या त्वमसि संप्राप्ता मृत्योरास्याद्विनिःसृता ।
कच्चिन्न तेन दृष्टासि मृगराजेन शोभने । ।८१ । ।
सुधर्मोवाच
नासौ मृगेन्द्रो दुर्बुद्धिः कोप्यसौ कामरूपवान् ।
मदर्थं१५३ समनुप्राप्तो मया१५४ दग्धः पतङ्गवत् ।।८२। ।
स शापान्मम दुष्टात्मा१५५ शार्दूलप्रकृतिं गतः ।
राजेव शक्तिशापेन सौदासो राक्षसीं तनुम् । ।८३ । ।
सनत्कुमार उवाच
तस्यास्तद्वचनं श्रुत्वा हालो धर्मार्थतत्त्ववित् ।
दिव्येन चक्षुषापश्यद् ब्रह्मधन्वानमव्ययम्१५६ । ।८४।।
तामुवाच सतीं भार्यामिदं स करुणात्मकः ।
कृतं दुष्टं त्वयात्रेयि सद्भिः कर्म विगर्हितम्१५७ ।।८५।।
महतस्तपसस्तेद्य क्षयोयं सुमहान् कृतः ।
न दुष्यन्ति स्त्रियः साध्वि नद्यो यद्वद् विगाहनैः१५८ ।।८६।।

१४८ सो (दौ?) - क., तु - ख. । १४९... नत्रासयद् - क ख । १५० मानुषान् - क. । १५१ मत्वातस्तां हतेति च -क., प्रियां पत्नीमचिन्तयत् - ख. । १५२ विललाप च - क. । १५३ मदनं - क । ५५४ समनुप्राप्तस्ततो - क. । १५५ शापाद् दुष्टकर्मासौ - ख. । १५६.. मप्युत - ख. । १५७ सर्वं - क । कर्मसङ्गिन् विगर्हितम्? । १५८ द्विजन्तुभिः - क., द्विजान्तवैः - ख. ।

330

न चैव शक्यं१५९ धर्मेण संगुप्तां त्वां प्रमर्दितुम्१६० ।
यथा विषेण संछन्नमन्नं भोक्तुं हि मानवैः । ।८७। ।

अत्र ते वर्त्तयिष्यामि पुरावृत्तं महातपे ।
यत् पतिव्रतया पूर्वं कृतं दीप्तेन तेजसा ।।८८। ।
आसीद् भलन्दनो१६१ नाम ऋषिः परमधार्मिकः ।
विद्वाँश्चैव१६२ दयावाँश्च पृथिवीवद् व्यवस्थितः१६३ । ।८९ ।।
ऋग्नाम्नी१६४ तस्य भार्याभूद् वासिष्ठी पुण्यलक्षणा ।
रूपेणाप्रतिमा साध्वी न तस्याः स्त्रीः१६५ समा क्वचित् ।।8.57.९० । ।
पतिव्रता महाभागा सर्वधर्मविदुत्तमा ।
तस्याः पतिमृते नान्यद्दैवतं भुवि विद्यते ।। ९१ । ।
अपश्यत कदाचिद्वै देवास्तौ कमलेक्षणाम् ।
तस्या रूपगुणोन्मत्ता१६६ लेभुर्न१६७ धृतिमेकशः । ।९२। ।
न शक्यते च सा प्राप्तुं न दूतीभिर्न कर्मणा१६८ ।
न दानेन१६९ न संमानै१७० र्न बलेन न सेवया ।।९३ ।।
वह्निस्तामग्न्यगारस्थां१७१ प्रविष्टामग्रहीच्छुभाम्१७२ ।
न चापि१७३ साहमस्मीति१७४ न च नास्मीत्यथा१७५ब्रवीत् ।।९४।।
न क्रोधो नापि दर्पोस्या न मानो१७६ न च मत्सरः१७७ ।
तस्याः प्रियमभून्नान्यत् पतिमेवान्वचिन्तयत्१७८ । । ९५ ।।
विभावसुरपि१७९ व्यक्तमियं मामिच्छतीति ह ।
अभ्युपेत्य न१८० दुष्टेति१८१ भावेन सुरसत्तमः१८२ ।।९६। ।
अथ हित्वा स्वकं देहमदेहः१८३ समपद्यत ।
एवं वै भास्करो वायुर्वरुणश्चन्द्र एव च ।।९७। ।

१५९ शक्तो - क ख. । १६० प्रधर्षितुं - घ । १६१ भलन्दलो - क, भगन्दलो - ख. । १६२ सिद्धश्चैव - ख. । १६३ पृथिव्यामध्यवास्थितः - ख. । १६४ ऋन्नाम? - क, ऋग्नामा - ख. । १६५. सीत् - ख. । १६६ रूपगु-णैर्मत्त-। - ख. । १६७ लेभिरे नैकशो धृतिमिति लेभिरे नैव ते धृतिमिति वा पाठः साधीयान् स्यात्। १६८... भूतैर्न कर्मणा - क. घ. । १६९ दान्येन - क । १७० - -चान्येन - क। १७१... मग्रतीरस्थां - ख. । स्थः? । १७२ मतनीच्छुभाम् ख। १७३ चाहं ख। १७४ मस्तीति क., मास्मेति (?), १७५ तथा - ख । १७६ न च मानो क,ख। १७७ न मत्सरः - क ख. । १७८... भ्यचिन्तयत् - घ. । १७९.. मपि - ख । १८०..न्न - कः, नु - ख. । १८१ न - ख । १८२ मं - ख. । १८३ देहं विदेहः - घ. ।



सर्वे विदेहाः संवृत्तास्ततस्तां संप्रसादयन् ।
सापि तान्नावदत् किञ्चित् पुरुषानघशंकया१८४ । ।९८ । ।
भर्तुश्चाकथयत् सर्वं स तानिदमुवाच१८५ ह ।
इयं पत्नी महाभागा मम सर्वाङ्गसुन्दरी । ।९९। ।
नेयं कुप्यति युष्माकं जाने१८६ ह्यस्या व्रतं शुभम् ।
मत्तोपि वो भयं नास्ति नाहं कुप्ये कथञ्चन ।। 8.57.१०० ।।
मत्प्रसादाद्विदेहापि देहवन्तो भविष्यथ ।
ततस्ते देहवन्तो वै तुष्टुवुस्तं भलन्दनम्१८७ । । १०१ । ।

ऊचुर्वरं वृणीष्वाद्य तुष्टाः स्मस्तव१८८ सर्वथा ।
सोवाच रजसा१८९ नार्यः१९० शुद्ध्यन्तु१९१ मदनुग्रहात् ।। १०२ ।।
कर्मणा च विमुच्यन्तां१९२ व्यवहार्या भवन्तु च ।
सर्वशौचा भवेयुश्च अदुष्टाः सर्वकर्मसु१९३ ।। १०३ । ।
हाल१९४ उवाच
ततस्ते तं नमस्कृत्य सभार्यं१९५ ब्रह्मवादिनम् ।
जग्मुर्देवाः प्रशंसन्तः सर्वे१९६ वह्निपुरोगमाः । । १ ०४। ।
एवं त्वमपि धर्मज्ञे१९७ नित्यं पतिमनुव्रता ।
कस्त्वां समर्थो देवोपि स्प्रष्टु१९८मन्ये१९९ कुतो जनाः२०० ।।१ ०५। ।
तीर्थभूताः स्त्रियश्चापि न दुष्यन्ति कथञ्चन ।
मद्रूपं कृतवान् यस्मात्तस्माच्छापं न चार्हति२०१ । ।१ ० ६। ।
तस्मात्करिष्ये तस्याहमदृष्टस्यापि२०२ शोभने२०३ ।
अनुग्रहं धर्मयुक्तं येन श्रेयो ह्यवाप्स्यति२०४ ।। १ ०७। ।

१८४ न्यर्त्ति... - क.,.. त्मनः - ख, परिशंकया - घ. । १८५ तामिदमुवाच - क. । १८६ सत्वं - घ. । १८७ भलन्दलं - क., भगन्दलं - ख । १८८ तव - क । १८९ वचनं - घ. । १९० स्त्रीणां - ख. । १९१ शुद्धिः स्यानृ... -ख. । १९२ मनोवाक्कर्मभिर्मुक्ता - ख. । १९३ पवित्राः सर्वतः शुद्धाः स्त्रिय एव हि कर्मसु - ख. । १९४ सन. - क.। १९५ संभाष्य - घ. । १९६ इन्द्रपुरोगमाः - घ । १९७ धर्मज्ञा - क. । १९८ द्रष्टुं - घ. । १९९... मन्यत् - क.ख., मन्यः - घ । २०० जनः - क. घ । २०१ च नार्हति - क. घ. । २०२... मदुष्टस्यापि - घ.,.. न्दुष्टस्यापि करिष्यति - ख । २०३ हि शोभते - ख. । २०४ यमाप्स्यसि - ख. ।



व्याघ्रस्यापि प्रिये तस्य स्मृतिर्नित्यं भविष्यति ।
सर्वकार्येषु२०५ धर्मेषु२०६ धर्मेण च चरिष्यति२०७ ।।१ ०८।।
यतोस्य२०८ कामरूपित्वं येन मत्तः सदा ह्यभूत् ।
तत एव पुनः श्रेयः प्राप्स्यते मदनुग्रहात् ।। १०९।।
सनत्कुमार उवाच
स एष व्यास२०९ दुष्टात्मा विश्वामित्राश्रमे रतः ।
अग्रारण्ये२१० सदा ह्यासीद्देव्या गणापतिः कृतः ।।8.57.१ १ ०।।
य इदं२११ तस्य माहात्म्यं धारयेच्छ्रावयीत वा ।
सततं ब्राह्मणं२१२ व्यास योगैश्वर्यमवाप्नुयात् ।।१ १ १।।
योगेश्वरत्वं कांक्षद्भिरेतदध्येयमन्तशः ।
जन्मान्तरं समासाद्य प्राप्नुवन्ति न संशयः ।।११२।।
शृणुयाच्च इमं सततं प्रयतः शुचिरेकमना मनुजः२१३ ।
प्रियवत्स हि शक्रसमानवपुः सुकृतेन कृतेन पुमान्२१४ ।।१ १ ३।।
इति स्कन्दपुराणे सप्तपंचाशोध्यायः

व्यास उवाच

वरान् गृहीत्वा रुद्राणी१ तस्मिञ्छिखरिसत्तमे२ ।
अकरोत् किमिति ब्रूहि सर्वं देव्या विचेष्टितम् ।।१।।
सनत्कुमार उवाच
स्वयम्भुवि गते देवी तपसो विरराम ह ।
सा तुष्टा वरलाभेन४ चिन्तयन्ती तदा वरम् ।।२।।
न्यवैक्षत५ दिशः सर्वाः प्रसन्नवदनेक्षणा ।
कस्यैतत्६ कथयामीति देवं हित्वेति चाब्रवीत् ।।३ ।।

२०५ सर्वाः कार्येषु - क. । २०६ ष्वधः?, धर्म्येषु? । २०७ करिष्यति च - घ., करिष्यति - क, तत्तथा - घ. । २०८ जातोस्य - घ. । २०९ एष एव स - घ. । २१० अग्न्यारण्ये - घ । २११ इमं - क ख. घ । २१२ ब्राह्मणान् - घ। २१३.. प्रिय. - क. । २१८ मनुजस्स जहाति अधर्मकृतं ससुरेन्द्र- पुरं व्रजते - क. घ ख ।
१ शर्वाणी - घ. । २ शिखर - क. । ३ देव्या सर्व - घ. । ४ वरदानेन - क ख घ । ५ न्यवेक्षत - ख, न्यरीक्षत- क, निरीक्ष्य च - घ. । ६ कस्यैनं ( नत् ?) - क. ।

333
शास्त्रज्ञं कञ्चिदुद्दिश्य७ यथार्थं८ शास्त्रचिन्तकः९ ।
पुत्रलभ्भकृतं१० हर्षं चिन्तयन्त्या मुहुर्मुहुः । ।४।।
अपतज्जलमत्यर्थं११ शीतलं सु१२ सुगन्धि च ।
बह्वभूत् सरसि स्वच्छं तस्यास्तत्तेजसा जलम् । । ५ । ।
शिष्ये बुद्धिगुणेनेव१३ गुरुणा ज्ञानमाहितम् ।
विगाहमाना सा देवी तत्सरो विमलोदकम् । । ६ । ।
रेजे वियन्मध्यगता दीप्तेव सवितुः प्रभा ।
विगाहमाना व्यजहत् कृष्णां कोशीं तदानघा । ।७। ।
सा विरेजे तया मुक्ता कलेवेन्दोर्घनात्यये ।
तस्याः१४ कोश्याः१५ समभवत् कौशिकी लोकविश्रुता ।
विश्वं सिसृक्षतो धातुर्देहादिव पुरा निशा । ।८। ।
विम्बाधरा तीक्ष्णसुचारुदंष्ट्रा प्रसन्नताराधिपचारुवक्त्रा ।
सुजातनीलांचितदीर्घकेशी किञ्चित्समभ्युन्नतरोमराजी ।।९। ।
सुसंस्थिताभ्यां चरणाम्बुजाभ्यां प्रदक्षिणावर्तनिमग्ननाभिः ।
विगूढजान्वस्थिशिरा सुगुल्फा विनाकृतेवाम्बुरुहेण१६ लक्ष्मीः । । 8.58.१० ।।
प्रसन्नरूपा प्रथमोद्गतस्तनी प्रफुल्लनीलाम्बुजचारुलोचना१७ ।
सुसंस्कृतैर्वज्रमणिप्रवेकिभिर्विभूषिता चाभरणै१८ स्सुमध्यमा ।। ११ ।।
साङ्गदा बद्धकेयूरा१९ कटकोद्भासितत्विषा२० ।
बिभर्त्ति सा भुजानष्टौ सायुधानपराजिता ।। १२ । ।
बद्धगोधाङ्गुलित्राणा कवचं बिभ्रती शुभम्२१ ।
दुर्भेद्यं२२ सहजं भास्वत् सेन्द्रैरपि सुरासुरैः ।।१ ३ ।।
निबद्धतूणीरयुगा२३ प्रगृहीतशरासना ।
वसाना पद्मकिञ्जल्करुचिरे वाससी तदा । ।१४। ।

७ किंचिदुद्दिश्य - घ. । ८ यथार्हं - घ. । ९... चिन्तकम् - घ । १० पुत्रलाभकृतं घ । ११.. च्च जलं सद्यः- घ. । १२ च (?) । १३ शिष्यैर्बहुगुणेनैव - क. । १४ तस्यां - क । १५ कोश्यां - क। । १६... वाम्बुरूहेव - क । १७ प्रसन्ननीलाम्बुजचारुनेत्रः- - घ. । १८ विभूषितेवाभरणैः - ख., विभूषितैर्वा - क,?.. तैराभरणैः - घ । १९ वज्रकेयूरा - घ. । २० करकोद्भासितत्विषा - क ख. । २१ शुभा - घ. । २२ दुर्भेदं - घ । २३... युग्मा - घ ।

334

जानुभ्यामवनिं गत्वा शिरस्याधाय चाञ्जलिम् ।
व्यज्ञापयत सा देवी ब्रूहि किङ्करवाणि ते ।। १ ५। ।
मूर्ध्न्युपाघ्राय तां देवीं परिष्वज्य च पीडितम्२४ ।
भवानी प्राह संहृष्टा२५ मूर्त्तिस्थानं२६ ममाव्यये ।।१ ६। ।
जरामरणहीना त्वं शोकदुःखविवर्जिता ।
भविष्यसि महायोगा संयुगेष्वपराजिता ।। १७। ।
कौशिकीति च नाम्ना त्वं लोके ख्यातिं२७ गमिष्यसि ।
अन्यैश्चनामभिः श्लाघ्यैर्गुणकर्माभिसंश्रयैः ।।१८।।
तव भक्ताः२८ स्मरिष्यन्ति येति२९ दुर्गेषु संस्थिताः ।
दुर्गाणि ते तरिष्यन्ति त्वत्प्रसादाद्वरानने । ।१९। ।
वरा वरेण्या वरदा दुर्गा३० सर्वार्थसाधनी ।
इत्थं त्वां नामभिर्दिव्यैः स्तोष्यन्ति मुनयः सदा । ।8.58.२० ।।
जापैः प्रणतिभि३१र्होमैरुपहारैः पृथग्विधैः ।
प्राणिनः पूजयिष्यन्ति भवतीं भुवि सर्वदा ।।२१ ।।
सिंहयुक्तं ततो३२ देवी३३ रथमादित्यवर्चसम् ।
ससर्ज सपताकं च किंकिणीजालमण्डितम् ।
विन्ध्यं गिरिवरं चास्या निवासाय समादिशत् ।।२२। ।
सनत्कुमार उवाच
सैव३४ मुक्ता तदा देवी प्रणम्य भुवनेश्वरीम् ।
आरुरोह रथं दिव्यं कार्तस्वरमयं शुभम् । । २३ ।।
व्योमगेन रथेनाथ नानारत्नांशुमालिना ।
जगामाशु ततो विन्ध्यं नानाद्रुमलतान्वितम् । ।२४। ।

२४ निपीडितम् - ख., निपीडितां - घ. । २५ संयुक्ता - क ख, घ । २६ मूर्त्तिस्थासि - घ. । २७ ख्यांति- लोके - घ. । २८ भक्त्या - क. । २९ येपि - ख । ३० वरेण्या वरदा दुर्गा वरा - ख. । ३१ जप्यैः प्रणामैः - घ. । ३२ महद् - क, महा - घ. । ३३ दिव्यं - क ख. घ. । ३४ एवमुक्ता - क. ख. घ. ।

335

विहङ्गविरुतै३५र्विन्ध्यः स्वागतेनेव३६ कौशिकीम् ।
अपूजयदमेयां तां तत्र प्राप्तां तदानघाम्३७ । ।२५।।
वारिभिर्विमलैः शोक्तंनिर्झरोदरनिःसृतैः३८ ।

स पुष्पनिकरैः पुण्यैरर्घञ्चास्यै ददन्निव । । २६। ।
अथ मृगपतिनागं त्रस्तपर्यन्तनागं
चकितहरिणयूथक्षुण्णदर्भाङ्कुराग्रम् ।
वरमहिषविषाणच्छिन्नगुल्मावतानं
गिरिवरमति रम्यं कौशिकी साभ्यपश्यत् । ।२७।।
व्यरोचयत सा३९ देवी वासाय शिखरं गिरेः४० ।
उत्फुल्लं४१ पादपालीनविहङ्गगणनादितम्४२ । ।२८। ।
निर्झरोदकसंपर्कहरितोपलशाद्वलम् ।
नानाद्रुमलतापुष्पसुरभीकृतमारुतम् ।। २९ ।।
तुहिननिकरशीतैर्निर्झराम्बुप्रवाहै-
र्निचितपृथुनितम्बोत्तुङ्गपर्यन्तसानुम् ।
गिरिवरशिखरं तत्साध्युवासाथ देवी
कुसुमिततरुशाखाश्लिष्टमत्तद्विरेफम् । ।8.58.३ ० । ।
य इदं४३ पठते नित्यं शृणुयाद्वा समाहितः ।
कौशिक्याः संभवं सम्यक् स याति परमां गतिम् ।।३ १ ।।
इति स्कन्दपुराणे कौशिकीसम्भवो नाम अष्टपञ्चाशत्तमोध्यायः

सनत्कुमार उवाच
ततस्तां कौशिकीं तत्र प्रस्थाप्य हिमवत्सुता ।
विरेमे तपसस्तीव्रात् सस्नौ च विधिवत्तदा ।।१ । ।

३५ विकलै (विहङ्गमकलै?) - घ. । ३६.. नेह - क. । ३७ उमाम् - घ । ३८ निर्झरोदकनिःसृतैः - क. ख. ।
३९. .त्तदा - घ. । ४० गिरौ - क. । ४१ तत् फुल्ल घ. । ४२... वादितम् - क, ख. । ४३ इमं - क. ख. ।


वसाना वाससी शुक्ले१ दिव्य२ स्रगनुलेपना ।
पार्श्वस्थं पर्वतं वीक्ष्य प्रोवाच वरदास्मि ते । । २।।
एवमुक्तवतीं४ देवीं५ शिखरी६ मूर्त्तिमान्७ तदा ।
प्रणिपत्य वरं वव्रे मयि सान्निध्यमस्तु८ ते ।।३ । ।
नाम चैव मम ख्यातिं तव नामा९ भिलक्षितम् ।
यातु लोकेषु सर्वेषु त्वत्प्रसादान्महेश्वरि । ।४।।
अग्निश्च वरदां वव्रे मागाः कोपं मयीश्वरि ।
सदा पुष्पफलत्वं च वृक्षास्तां तत्र वव्रिरे ।।५। ।
सुप्रसन्ना भवास्माकं त्वयि भक्तिश्च नोस्त्विवति ।
ततस्तां वव्रिरे देवीं सर्वाश्च परिचारिकाः१० । ।६ ।।
उपास्यमाना बह्वीभिर्देवताभिर्गिरीन्द्रजा ।
अभिभूयान्यतेजांसि भानवीव११ बभौ१२ प्रभा । ।७।।

हृदयेपि स्थिता पत्युः पत्यौ१३ हृदयसंस्थिते ।
सा वै गिरीन्द्रतनया वियुक्ता१४ स्मीत्यमन्यत ।।८। ।
अथ सा तेजसां धाम१५ पतिं सर्वजगत्पतिम् ।
वरदा वरदं द्रष्टुं गमनायोपचक्रमे । ।९।।
नमस्कृता तद्वनदेवताभिः१६ प्रदक्षिणीकृत्य समिद्धमग्निम् ।
ऋषीँस्ततो वन्द्यतमाभिवन्द्य जनञ्च तेषां प्रतिपूज्य पूज्यम् ।।8.59.१ ० । ।
उत्पपात ततो व्योम सा सार्द्धं सोमनन्दिना ।
सिंहेन च१७ जगद्धात्री गणैः परिजनेन च । । ११ । ।

१ शुभ्रे - घ । २ दिव्यगन्धानुलेपना - घ. । ३.. स्थमचलं - घ.,... स्थमथ संवीक्ष्य - क. । ४.. मुक्तवती - ख.घ. । ५ देवी - क. ख घ. । ६ शिखरो - घ., शिखरं - ख. । ७ मूर्तिमत् - क. ख. घ.,... माँस्तदा - घ. । ८ सान्नैध्यमस्तु - क. । ९ नाम्ना - घ । १० परिचारकाः - क. । ११ भवानी - क., भवानी च - घ. । १२ विबभौ- क., ददौ - घ. । १३ पतौ - क । १४ विमुक्ता - क. । १५ धामं - क. । १६ सा वरदेवताभिः - घ. । १७ सिंहेनैव - क.,.. .नैव - घ. ।


वियति जलदवृन्दान् विक्षिपन्ती स्वधाम्ना
हिमजलकणशीतैर्वीज्यमाना मरुद्भिः ।
गिरिवरतनया सा पत्युरेव स्मरन्ती
मदनदहनमूर्तेराशु पार्श्वं जगाम ।। १२ । ।
इति स्कन्दपुराणे ऊनषष्टितमोध्यायः

सूत१ उवाच
अथासौ ब्रह्मणः पुत्रं व्यासः प्राह कृताञ्जलिः ।
किमर्थं कौशिकी विन्ध्यं देव्या संप्रेषिता तदा । । १ । ।
एवमुक्तस्तदा धीमान् व्यासेन ब्रह्मणः सुतः ।
यथावृत्तं पुरा सर्वमाख्यातुमुपचक्रमे ।।२ । ।
आरिराधयिषुर्देवीं विन्ध्यस्तेपे पुरा तपः ।
ततस्तुष्टाब्रवीन्विन्ध्यं पार्वती वरदास्मि ते । ।३ । ।
मयि वासोस्तु ते नित्यमेवमादित्यरोधनः ।
वव्रे गिरीन्द्रतनयां प्राह सा च तथास्त्विवति ।।४।।
स्वतनुं सा द्विधाभूता२मग्नेर्दीप्तां शिखामिव ।
दाहाय दानवेन्द्राणां प्राहिणोत् कौशिकीमतः३ । ।५ । ।
अथ तं ब्रह्मणः सूनुमुवाच मुनिसत्तमः ।
गिरिर्विन्ध्यो महाप्रज्ञ४ कथमादित्यरोधनः । । ६। ।
सनत्कुमारः प्रोवाच पृष्टो व्यासेन धीमता ।
शृणु यस्मादभूद्विन्ध्यो गिरिरादित्यरोधनः । ।७ ।।
पुरा विन्ध्योब्रवीत् सूर्यं कस्मात्त्वं न करोषि माम्५। ।

प्रदक्षिणं यथा मेरुं का तेवज्ञा मयि प्रभो६ । ।८।।

१ व्यास उ. - क, सनत्कुमार उ. - घ. । २ द्विधीभूता - क ख. । ३ कौशिकी ततः - घ. । ४ महाप्रज्ञः - क. । ५ किमवज्ञां करोषि मां - घ. । ६ प्रभो - क. ।



स उवाच तदा विन्ध्यं नैवं कर्तुं हि शक्यते ।
प्रत्याख्यातः स सूर्येण विन्ध्यो गिरिरवर्धत ।
रुद्धा तस्य स्थितो मार्ग७ तस्मादादित्यरोधनः । ।९ ।।
नष्टालोके ततो लोके देवाः संविग्नचेतसः ।
अगस्त्यमुपसंगम्य वाक्यमूचुः समाहिताः । । 8.60.१० । ।
सवितुर्मार्गमावृत्य गिरिर्विन्ध्यो व्यवस्थितः ।
तं वारय महाप्राज्ञ गतिर्नः सर्वदा भवान् । । ११ ।।
ततो८गस्त्यो गिरिं गत्वा प्रोवाचेत्थं महातपाः ।
यास्यामि दक्षिणामाशां पन्थानं देहि पर्वत ।। १ २।।
यावत्प्रतिनिवर्त्तेयं९ तावच्च१० स्थातुमर्हसि ।
ततः प्रभृति चैवेह नाभूदागमनं मुनेः ।।१ ३।।
अथ पप्रच्छ तं व्यासः पितामहसुतं प्रभुम् ११ ।
कौशिकी प्रहिता विन्ध्यं दानावानां विनाशने ।।१४।।
के ते१२ कस्य किमर्थं वा कौशिक्या दानवा हताः ।
एतत् सर्वं समासेन मुने१३ मे वक्तुमर्हसि ।।१ ५।।
पितामहसुतो धीमान् व्यासेनैवं१४ प्रचोदितः ।
प्रश्नमेतं१५ समासेन व्याख्यातुमुपचक्रमे ।। १६ । ।
देवासुरे पुरातीते संयुगे परमाद्भुते ।
सुन्दो निसुन्दश्च सुतौ निशुम्भस्य बभूवतुः । । १७। ।
हतान् निशम्य तौ बन्धून्सुरैः सर्वान्महाहवे ।
देवान्प्रति सुसंक्रुद्धौ गर्जन्तौ गोवृषाविव ।। १८ ।।
सिंहाविव महासत्त्वौ हृतदंष्ट्रानखायुधौ१६ ।
श्वसन्तौ सविषावुग्रौ भग्नदंष्ट्राविवोरगौ ।। १९।।
अशक्तौ तौ सुरैर्योद्धुं हतपक्षौ महासुरौ ।
सुपर्णाविव संक्रुद्धौ छिन्नपक्षौ महाबलौ ।।8.60.२ ० ।।

७ मार्गे - घ. । ८ तस्या - क., अगस्त्यः सुमहातेजास्तत्र गत्वाब्रवीद्वचः - घ । ९ यावच्च न निवर्तेयं (?) । १० त्वं - घ. । ११ प्रभुः - क. । १२ कृते - घ. । १३ मुने - घ., प्रश्नं - क. ख. । १४ व्यासेनैव - क. । १५ प्रश्नमेनं- घ. । १६ कृतदंष्ट्रानाखायुधौ - घ. ।



- - - णः१७ सुतौ चैतौ१८ गोकर्णं प्रति जग्मतुः ।

आरिराधयिषू देवं ब्रह्माणममितौजसौ । ।२ १ ।।
अथोवाच ततो व्यासो गोकर्णं कथयस्व मे ।
कस्मिन्देशे किमर्थं वा केन वोत्पादितं१९ पुरा ।।२२।।
प्रोवाच ब्राह्मणः सूनुर्व्यासेनैवं प्रचोदितः ।
शृणु वत्स समासेन पुण्यं गोकर्णसंभवम् ।।२३ । ।
हते त्रिशिरसि त्वष्टा पुत्रे ज्यायसि वज्रिणा ।
बृत्रं२० नाम ततः२१ पुत्रमसृजत्तपसां निधिः२२ । ।२४। ।
प्रलम्बबाहुं वृत्तास्यं पीनविस्तीर्णवक्षसन् ।
सुश्लिष्टजानुं सहनुं जलदध्वाननिस्वनम् ।।२५। ।
स्वक्षं सुपार्श्वं सुकटिं दीर्घरक्तान्तलोचनम् ।
समरे सर्वदेवानां जेतारमपराजितम् । ।२६ ।।
स निर्जित्यामरान् सर्वान् जग्रासेन्द्रं महाद्युतिः ।
ततो महर्षिभिः सृष्टा जृम्भिका तं समाविशत् ।।२७।।
तस्याथ जृम्भमाणस्य निर्जगाम शतक्रतुः ।
वदनादाशु२३ संक्षिप्य स्वां तनुं योगमायया । ।२८ ।।
तस्य योगबलं दृष्ट्वा वीर्यं शौर्यं च संयुगे ।
ततो भीताः सुराः सर्वे ब्रह्माणं शरणं ययुः । ।२९। ।
तान्दृष्ट्वा स तदा भीतानमरान् सुरविद्विषः ।
प्रोवाचाशु२४ प्रजेशानः पद्मयोनिः पितामहः ।।8.60.३ ० । ।
पराजितान् वो जानामि वृत्रेण रणमूर्धनि ।
उपायं तं न पश्यामि येनासौ जीयते युधि । ।३ १ः ।
यास्याम२५ सहिताः सर्वे देवं द्रष्टुमुमापतिम् ।
विश्वेश्वरं विधातारं वरदं भक्तवत्सलम् ।।३ २।।

१७ न पश्यंतौ (तपस्यन्तौ?) - घ । १८ चेतौ - क., चोभौ - घ. । १९... त्पादितः - क. । २० वृन्दं - क. । २१ पुनः - ख । २२ निधिम् - क. ख. । २३ वरदानात्तु - घ. । २४ प्रोवाचासौ - घ. । २५ यास्यामः - ख. ।


स नः प्रणामैर्भक्त्या च स्तुत्या चाराधितः प्रभुः ।
महादेवो महायोगी२६ शम्भुः शान्तिं विधास्यति ।।३३।।
अथोत्तस्थुः सुराः सर्वे देवदेवं दिदृक्षवः ।
अपश्यन्तो विचेरुश्च महीं सोदधिपर्वताम् ।।३४।।
अथ विष्णुर्महायोगी देवीं हिमवतः सुताम् ।
अपश्यत् पांशुदिग्धाङ्गीमासीनां बालरूपिणीम् । ।३५।।
लेखामिव नवामिन्दोः प्रातः सूर्यप्रभामिव ।
हविषा हूयमानस्य तन्वीमग्नेः शिखामिव ।।३६।।
विज्ञाय स तदा योगान्महायोगां सुरेश्वरीम् ।

ईश्वरो जगतो विष्णु२७र्जिष्णुस्तुष्टाव पार्वतीम् ।।३७।।
विष्णुरुवाच
त्वं स्रष्ट्री२८ सर्वभूतानां संहर्त्री त्वं सुरेश्वरि ।
त्वमस्य जगतो धात्री नित्या प्रकृतिरव्यया । ।३८।।
त्वं प्रभा शर्वरी ज्योत्स्ना कीर्तिस्तुष्टिरुमा धृतिः ।
बुद्धिमेधा स्मृतिः प्रज्ञा सन्ध्या कान्तिः स्तुतिर्मतिः ।।३९।।
त्वमीशा देवि देवानां गणमाता गणाम्बिका ।
भद्रकाली महागौरी कौशिकी विन्ध्यवासिनी ।।8.60.४० । ।
दुर्गा ख्यातिर्महाविद्या गायत्री त्वं सरस्वती२९ ।
स्वाहा स्वधा महामाया लक्ष्मीर्योगेश्वरेश्वरी ।।४१ ।।
उल्का सती गिरेः पुत्री मैत्रेयी ब्रह्मचारिणी ।
तापसी३० रेवती षष्ठी वरावरसहस्रदा३१ । ।४२ । ।
कुन्दकार्मुकसारङ्गकोकिलाशोकपल्लवैः ।
तुल्यासि३२ दन्तभ्रू नेत्रस्वरपाणिभिरीश्वरि३३ । ।४३ ।।
प्रमत्तोत्फुल्लपूर्णन्तान् नागोत्पलनिशाकरान् ।
विशिनक्षि सदा देवि गतिलोचनकान्तिभिः ।।४४। ।

२६ महायोगः - क. ख । २७ धाता - घ. । २८ सृष्टिः- - क. । २९ सुरेश्वरी - क । ३० तामसी? । ३१ चराचरसहस्रदा - घ. । ३२ तुल्यास्य - क. । ३३... रीश्वरी - क. ।


शिरोभिर्महिषोद्भ्रान्तरक्तपर्यन्तलोचनैः ।
नृभिः क्षितितलन्यस्तकरजानुमिरिज्यसे३४ ।।४५।।
मत्तान्यपुष्टाकलवल्गुभाषिता द्विरेफमालासितचारुमूर्धजा ।
प्रफुल्लपुष्पस्तबकोद्गतस्तनी विराजसे कल्पलतेव पुष्पिता ।।४६।।
देवि देवीभिरनिशं भक्त्याभिवन्द्यसे दिवि ।
इज्यसे३५ मुनिभिः शश्वद् गिरिजे गिरिमूर्धसु ।।४७।।
अर्च्यसे द्विगन्धर्वैर्गन्धपुष्पोत्करैः सदा ।
सदागतिपथं प्राप्ता३६ प्राप्त्या च स्तूयसेनघे ।।४८।।
भासि सिंहं समारूढा चलत्पिङ्गलकेसरम् ।
दीप्ता प्रभेव सावित्री मेरुमूर्धानमास्थिता ।।४९।।
जिघांसती रणे दैत्याञ्छरौघैर्भास्यजिह्मगैः ।
रवेर्मूर्तिस्तमांसीव विकिरन्तो गभस्तिभिः ।।8.60.५०।।
परशुं शितमुदगृह्य देवदानवसंयुगे३७ ।
भ्राजसे देवि संक्रुद्धा पाटयन्तीव३८ रोदसी ।।५१।।
अथ सा शैशवं हित्वा तनुमन्यां समाददे३९ ।
एकीकृतामिवाकाशे संहतिं सर्वतेजसाम् । ।५२।।

दीप्तामपि सुखालोकां शान्तामपि सविभ्रमाम्४० ।
बालामपि जगद्धात्रीं तन्वीमपि सुसंहताम्४१ ।।५३।।
उवाचेदं च सा प्रीता४२ वरदास्मि तव प्रभो ।
एवमुक्तस्तया४३ सोथ प्रोवाचाम्भोदनिस्वनः४४ ।।५४।।
शरण्ये देवि भक्तानां शरणागतवत्सले ।
भवानि भव मे नित्यं सुप्रसन्ना महेश्वरि ।।५५।।
कथयस्व च४५ देवेशं शाश्वतं स्थाणुमव्ययम् ।
विश्वात्मानं महादेवं सर्वयोगेश्वरेश्वरम् ।।५६।।

३४... रीज्यसे - क. । ३५ ईज्यसे -घ । ३६ सदागतिपथप्राप्ता - क । ३७ संयुते- क. । ३८ पातयन्तीव - ख. । ३९ समादधे - घ. ।। ४० तपन्तीमप्यविभ्रमाम् - क घ. । ४१ सुसंयतां क. । ४२ सुप्रीता - क, ख, । ४३...स्तदा घ. । ४४ निस्स्वनः - क. । ४५ त्वं च - घ. ।

342

तथास्त्विति प्रतिज्ञाय कथयामास शंकरम् ।
मृगयूथस्य मध्यस्थं क्रीडन्तं४६ मृगरूपिणम् ।।५७। ।
एकशृङ्गं महाग्रीवमेकाक्षममितौजसम् ।
एकपादं सुसंश्लिष्टमापाण्डुकपिलोदरम् । ।५८। ।
अथ विष्णुर्द्रुतं गत्वा शृङ्गे जग्राह तं४७ प्रभुम् ।
तस्मिन्नेव ततो ब्रह्मा जग्राहेन्द्रश्च वीर्यवान् ।।५९। ।
त्रिधा तदभवच्छृङ्गं चलितं४८ दीप्ततेजसम्४९ ।
त्रयाणां सुरमुख्यानां पृथक् पाणिषु संस्थितम् । ।8.60.६० । ।
अथादृश्यस्तदा शर्वस्तानुवाच सुरोत्तमान् ।
यदर्थमागता यूयं तद् ब्रूत सुरसत्तमाः ।।६१ ।।
अथोवाच तदा५० ब्रह्मा परमेशं वृषध्वजम् ।
राज्यं पुनरवाप्नोतु हत्वा वृत्रं५१ पुरन्दरः । । ६२ ।।
ततस्तानमरान् तत्र वृषकेतुः समागतान् ।
स्वरेण वारिदध्वानगम्भीरेणाब्रवीत्ततः । ।६३ ।।
वैष्णवं परमं तेजः फेनमाचक्ष्यते सुराः५२ ।
शिरश्छेत्स्यति वृत्रस्य तदादाय शतक्रतुः । ।६४। ।
हृषीकेशोथ तत्खण्डमनयत् स्वं निकेतनम् ।
न्यवेशयत५३ तत्रैव५४ वारिजोदरसंभवः५५ ।। ६५।।
नीयमानं तृतीयं५६ च खण्डमाखण्डलेन तु ।
रक्षसामधिपः श्रीमान् जग्राहाथ दशाननः ।।६६।।
चकार सन्ध्यामुदधौ दक्षिणे न्यस्य तत्तदा ।
न विचालयितुं शक्तः सन्ध्यामास्थाय रावणः५७। ।६७।।
तत्पुण्यं देवदेवस्य व्यास क्षेत्रं महाद्युते ।
गोकर्णमिति नामास्य चकार कमलासनः ।। ६८। ।

४६ क्रीडया - क. । ४७ स - ख. । ४८ चलिते - क. ख. । ४९ दीप्ततेजासां - क., दीप्ततेजसि - ख. । ५० ततो -ख. । ५१ वृत्रं हत्वा - घ. । ५२ केन वै निर्मितः पुरा - घ । ५३ निवेशयत - घ. । ५४. त्वद्वारि - घ. । ५५ वारिधेरुदरे ततः - घ. । ५६ द्वितीयं - घ. । ५७ सत्वमन्विष्य वारुणः - घ. ।

343

तत्र गत्वा नरो भक्त्या प्रणिपत्य महेश्वरम् ।
अश्वमेधमवाप्नोति सर्वपापैः प्रमुच्यते । ।६९।।
गोकर्णमुत्तरं५८ व्यास स्थापितं पद्मयोनिना५९ ।
उदन्वतः स्थितं तीरे स्वयमेव तु दक्षिणे ।।8.60.७०।।
यः शृणोति नरो नित्यं पुण्यगोकर्णसंभवम् ।
सर्वपापविधूतात्मा स यातिपरमां गतिम्६० ।।७१ ।।
अथ तौ दानवौ व्यास गोकर्णमभिजग्मतुः ।
तत्र चेरतुरत्युग्रं तपोम्बुपवनाशनौ ।।७२।।
कस्यचित्त्वथ कालस्य विदित्वोग्रं तयोस्तपः ।
आजगाम तयोः पार्श्वं ब्रह्मा सुरनमस्कृतः ।।७३।।
अथ तौ विश्वधातारं चतुर्वक्त्रं पितामहम् ।
अपश्यतां महाबाहू ब्रह्माणं पुरतः स्थितम् ।।७४।।
शुक्लाम्बरधरं दीप्तं शुक्लस्रगनुलेपनम्६१ ।
एकीकृतमसंप्रेक्ष्यं तेजो दिनकृतामिवम्६२ ।।७५।।
प्रीतोस्मि युवयोः पुत्रावथोवाच पितामहः ।
अनेन तपसोग्रेण वरं ब्रूत६३ मभीप्सितम् ।।७६।।
अमरत्वं तु वव्राते तौ प्रणम्य पितामहम् ।
ब्रह्माथाह६४ विना देवानमृतत्वं न विद्यते ।।७७।।
अवश्यमेष्यो६५ युवयोर्मृत्युरेकेन केनचित् ।
अथामरत्वं वव्राते परस्परवधं विना ।।७८।।
एवमस्त्विति ताभ्यां तं वरं दत्त्वा पितामहः ।
हंसयुक्तेन यानेन६६ जगाम स्वं निकेतनम् ।।७९।।
असुरावपि तौ तस्मात्तपसोग्राद्विरेमतुः ।
आजग्मतुर्निकेतं स्वं वरं लब्ध्वा पितामहात् ।।8.60.८०।।

५८... मुत्तमं - ख. । ५९ ब्रह्मयोनिना - घ. । ६० *स* याति परमं स्थानं यत्र गत्वा न शोचते' ' - घ. । ६१ शुक्रगन्धानुलेपनम् - घ. । ६२ रवि ( रुचि) राकार... - ख. । ६३ ब्रूता - क. । ६४... हाथ - क. ख., ... प्याह - घ. । ६५ अवश्यमेव - घ. । ६६ हंसयुक्तविमानेन - घ. ।

344

वरदानं६७ ततो ज्ञात्वा दैत्याः पातालवासिनः ।
आजग्मुर्दानवाश्चैव तयोः पार्श्वं मुदान्विताः ।।८१ ।।

केशी मुरो६८ मयः शम्भुः६९ कार्तस्वरमहारवौ ।
इन्द्रशत्रुः कतिर्धुन्धुस्त्विल्वलो नमुचिर्द्रुमः ।।८२ । ।
वातापी दुन्दुभिर्मेघः प्रभुरन्ये च दानवाः ।
सर्वे कवचिनः शूरा गदापरिघपाणयः । ।८३ । ।
ऊचुश्च शोकमग्नानामस्माकं शत्रुतापनौ ।
युवां प्लवाविवायातौ शोकसागरतारणौ ।।८४।।
पुरेप्रतिभये रम्ये कान्तां नाम ततः सभाम् ।
आजग्मुस्तुष्टमनसो दानवेन्द्राः७० समागताः७१ । ।८५। ।
तस्यां प्रशस्ते७२ विस्तीर्णे शातकौम्भे वरासने ।
आससाद महाबाहुः सुन्दो दानवसत्तमः । ।८ ६।।
निसुन्दोन्यत्ततो भेजे हेमरत्नमयं शुभम् ।
आससाद ततो धीमान् कार्तस्वरमयं७३ मयः७४।।८७।।
अन्ये च दानवा भेजुरासनानि तदा७५ मुने ।
हेमरत्नविचित्राणि भास्वन्ति च महान्ति च । ।८८ ।।
विरेजे सा सभा तत्र दानवेन्द्रैः समागतैः ।
सबलाकैस्तडित्वद्भिः प्रलये द्यौरिवाम्बुदैः७६ । ।८९ ।।
अथोन्नाम्य शिरो रत्नमरीचिपरिवेषवत् ।
सुन्दो वचनमाहेत्थमम्मोदरुचिरस्वनः७७ । ।8.60.९० ।।
दानवेन्द्राः करिष्यामि सर्वेषामश्रुमार्जनम् ।
विजित्य दैवतैः सार्द्धमिन्द्रमाहवमूर्धनि ।।९१ । ।
प्रयाम७८ दंशिताः सर्वे सज्जीभवत७९ दानवाः ।
त्रैलोक्यविजयं कर्तुमुद्यतायुधपाणयः । ।९२ ।।

६७ वरलाभं (?) । ६८ केशिरुग्रो - घ । ६९ शंखः - घ. । ७० दानवेन्द्र - घ. । ७१ समागतां - घ. । ७२ त्रयस्ते- क. ख. । ७३ कार्तस्वरमये - क, । ७४ शुभम् - घ. । ७५ ततो - ख. । ७६ द्यौरिवाम्बरे - ख. । ७७.. निस्वनं पुनः - घ । ७८ प्रयामो - घ. ७९ सज्जा भवत - घ. ।

345

तस्य तद्वचनं श्रुत्वा प्रभुः प्राहासुरेश्वरम्८० ।
यज्ञैर्व्रतैस्तपोभिश्च८१ नियमैश्चासुरद्विषः८२ ।।९३।।
आप्याययन्ति संरब्धाः शश्वद्वर्णाश्रमा भुवि ।
तानेव प्रथमं हत्वा ततो जेष्याम देवताः ।।९४।।
तस्य तद्वचनं श्रुत्वा प्राहुर्दानवसत्तमाः ।
आयतिं प्रथमं हत्वा विजेष्यामस्ततोमरान् ।।९५।।
अथोवाच तदा८३ धुन्धुर्मेघदुन्दुभिनिस्वनः ।
राजानुगामी लोकोयमपापो बध्यते कथम् ।।९६।।
अस्मत्तो दैवतै राज्यं लोकं हत्वा पुरा हतम् ।
विक्रमेणैव निर्जित्य दैत्यराज्यं सुरैर्हृतम् ।।९७।।

तथा८४ तेभ्यो वयमपि प्रोत्थितध्वजसंकुले८५ ।
आनेष्यामो रणे जित्वा श्रियमाविग्नलोचनाम् ।।९८।।
अपकारे सति समे स्वभावेन मनस्विनाम् ।
तेजो विजृम्भते दीप्तं शक्तिमत्स्वेव सर्वदा ।।९९।।
अथ धुन्धोर्वचः श्रुत्वा मुरो मुरजनिस्वनः ।
उच्चैरुत्क्षिप्य मूर्धानं प्रोवाच प्रहसन्निव ।। 8.60.१० ०।।
पुराभवन्८६ महात्मानो८७ दानवेन्द्रा महाबलाः ।
हिरण्यकशिपुर्वृत्रः प्रह्लादो नमुचिर्बलिः । ।१ ०१ ।।
कोटिशो दानवाश्चान्ये महासत्वा महाबलाः ।
यैः कृता प्रसभं लक्ष्मीः स्ववक्षःस्थलवासिनी ।।१ ०२।।
अल्पावशेषैरधुना८८ युष्माभिरसुरोत्तमाः ।
कथमानीयते राज्यं सुरान्निर्जित्य संयुगे । ।१ ०३। ।
इष्टार्थसाधकेनाशु देशकालाविरोधिना ।
उपायेन परीप्सध्वं राज्यमन्येन केनचित् ।। १ ०४।।
एतच्छ्रुत्वा तदा वाक्यमंशुमाली८९ महासुरः ।
प्रोवाच मधुरं श्लक्ष्णमर्थानुगमिदं वचः । ।१ ०५।।

८० प्राहासुरेश्वरः - घ. । ८१ यज्ञव्रततपोभिश्च - क. घ. । ८२ यमैश्चासुरविद्विषः - घ. । ८३ ततो - क. घ. । ८८ अथ - घ. । ८५ प्रोच्छ्रितध्वजसंकुले - घ. । ८६. भूवन् - क. ख. । ८७ महोत्साहो - घ. । ८८ स्वल्पावशेषैरधुना- घ. । ८९.. .मंशुमान्स - घ. ।



सापराधा बलीयांसो बद्धवैराश्च दानवैः ।
जयिनः श्रीमदोन्मत्ताः साम देवेष्वनर्थकम् । ।१ ० ६।।
सुरेषु मानसी सिद्धिर्विभुता भुवनत्रये ।
अणिमाद्यैर्गुणैर्योगस्तेषु दानमपार्थकम् । । १ ०७। ।
एकार्था नार्थिनः९० सर्वे संहताश्चासुरद्विषः ।
न ते भेदयितुं शक्या दानैस्ते दानवोत्तमाः९१ । ।१ ०८। ।
मन्त्रप्रभावशक्तिभ्या९२ मुत्साहेन परेण च ।
संपन्नाः सर्वथा देवा न युद्धं तैः सहेष्यते । । १ ०९।।
युक्तो दानवमुख्यानां हीन९३ सन्धिः सुरैस्सह ।
स्थानवृद्धिं परीप्सूनां क्षीणानामधुना भृशम् । ।8.60.१ १० ।।
अथाह तेजसा स्वेन तेजांसि सुरविद्विषाम् ।
अभिभूय सदस्युच्चैरंशुमानंशुमानिव । ।१ ११ । ।
प्रणामपूर्वः क्रियते हीनसन्धिः कुराजभिः ।
न चक्रुर्दानवाः पूर्वं कुर्वते न च सांप्रतम् । । १ १२।।
शिरांसि दानवेन्द्राणां कथं यास्यन्ति नम्रताम् ।
सुमेरोरिव शृङ्गाणि भानुमन्त्युच्छ्रितानि च ।।११३ । ।

आदास्यामोथ वा राज्यं देवान्निर्जित्य संयुगे ।
प्राप्स्यामो वा९४ गतिं पुण्यां निहताः समरेमरैः९५ ।।१ १४।।
इत्थमंशुमतः श्रुत्वा वाक्यं वाक्यार्थकोविदः ।
गम्भीरमर्थवत् प्राह महिषो वदतां वरः । ।१ १ ५। ।
विदितं वः समस्तानां९६ पूर्वजा९७ भवतां यथा ।
हता दानवशार्दूला विक्रमैकरसाः सुरैः ।। ११ ६। ।
तदलं दानवश्रेष्ठा वृत्त्या वोग्निपतङ्गयोः९८ ।
सन्धाय दैवतैस्सार्धं वृत्तिं कुर्मः स्वकर्मभिः ।।१ १७।।

९० धन्विनः - घ. । ९१ दानवैर्दानवोत्तमाः - घ. । ९२ शक्त्या च - घ. । ९३ हीनः - घ. । ९४.. .द्य - घ. । ९५ शरैः - घ । ९६ सहस्थानां - घ. । ९७ पूर्वाणां - घ. । ९८... वत् - घ. ।



ज्यायोभिर्दानवा देवै रन्ध्रव्यसनवर्जितैः९९ ।
विग्रहेण कथं सिद्धिमिच्छथ स्रस्तशक्तयः । । १ १८।।
गुणातिशययुक्तानां यानमभ्युच्चये सति ।
मन्त्रोत्साहप्रभावाणामवाप्तौ१०० देशकालयोः ।। ११ ९। ।
अथ संभूय यानेन मन्यध्वे१०१ सिद्धिमात्मनः ।
दंशिताः समरे यत्ताः१०२ समेता यक्षराक्षसैः । । 8.60.१२० ।।
रक्षांसि हुतशेषाणि ज्वलने शक्तिसूनुना ।
श्रितानि दैवतान्येव भीतान्यबलवन्ति च ।।१ २१ । ।
आयत्ता सर्वदा यक्षाः कुबेरेसुरसत्तमाः ।
स चापि सुरमुख्यानां कुरुते कार्यमुद्यतः ।। १ २२।।
अन्यत्र दैत्यशत्रुभ्यो भुवनेषु बलीयसः ।
अभावादसुरश्रेष्ठा द्वैधीभावो न विद्यते ।। १२३ । ।
महिषे सदसि स्वस्थमित्युक्तवति दानवे ।
विस्पष्टमर्थवद्वाक्यं द्रुमः प्राह महासुरः । । १ २४। ।
समरे निर्जितैः१०३ पूर्वमस्माभिरबलैस्सह ।
जयिनः शक्तिसंपन्नाः संधास्यन्ते कथं सुराः । ।१२५। ।
संविधायाशु१०४ दुर्गाणि पर्वतानुदकानि च१०५ ।
विजये सततं युक्ता विगृह्यासनमास्महे ।।२२६।।
नाशयन्तः सदा यज्ञान् व्रतानि नियमांस्तथा ।
वर्णाश्रमांश्च१०६ लोकेस्मिन् जिघांसन्तः समन्ततः । । १ २७। ।
ततो लोकविनाशेन विच्छिन्ने१०७ सत्क्रियापथे ।
विदित्वापचितान् देवानभियास्याम दंशिताः । ।१ २८। ।
अथ ते तस्य वचनं सर्व एवानुमेनिरे ।
आसन्नमृत्यवोपथ्यमन्नं१०८ प्राणभृतो१०९ यथा ।। १ २९। ।

उत्तस्थुर्लोकनाशाय मतिं कृत्वामरद्विषः ।
उदन्वन्त इवोद्वेलाः प्रलये मारुताकुलाः ।। 8.60.१३० । ।

९९... रन्तर्व्यसनवर्जितैः - घ. । १००... मधाम्ना - ख. । १०१ मन्यध्वं - क. ख. । १०२ मत्ताः - घ. । १०३ निर्जिताः - क. । १०४ सन्निधायाशु - घ. । १०५ पार्वतान्युदकानि च - क, पार्वतान्यौदकानि च - घ. । १०६ वनाश्रमाश्च - घ. । १०७ विनष्टे - घ. । १०८ पथ्यमर्थं - घ. । १०९ प्राणहरं - घ. ।



जलद इव सुनीलः पीनवृत्तोन्नताङ्गो११०
हिमकरकरशुभ्रां हारयष्टिं दधानः ।
उदपतदथ सुन्दस्त्वासनात् स्वात्तदानीं
जलधिरिव विघूर्णन् फेनमाली युगान्ते । ।१ ३१ । ।
तदनु तदनुजोम्बुवाहनीलः परिघभुजः पृथुरक्तदीर्घनेत्रः ।
अजहदविमनाः स्वमासनान्तं प्रतिभयकृद् द्विषतां तदा निसुन्दः । । १३ २।।
इति स्कन्दपुराणे दैत्योद्योगो नाम षष्टितमोध्यायः

आगामी पृष्ठः (अध्यायाः ६१ - ७०)

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/०७

https://sa.wikisource.org/s/fbx
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः ७१-८०) आगामी पृष्ठः (अध्यायाः ८१- ९०)

सनत्कुमार उवाच
अथ दानवमुख्यानां लोकनाशाय निर्ययौ ।
मत्तवारणसम्बाधं१ रथाश्ववलितं बलम्२ ।। १ ।।
तत्तदा३ दानवानीकं विससार दिशो दिशः४।
प्रलये मारुतोद्धूतमौदन्वतमिवोदकम् ।। २ । ।
निजघ्नुर्ब्राह्मणान् केचित् केचिन्निष्पिपिषुर्विशः५ ।
तुस्तुभुः क्षत्रियानन्ये शूद्रानन्ये बभक्षिरे६ । । ३ । ।
जग्लसु७र्ल्लिलिहुर्न्नेदुर्बभञ्जुश्च समन्ततः ।
यज्ञेष्वन्नं हविर्नादान्८ यूपाँश्चामरविद्विषः । ।४। ।'
स्वधीतवेदाध्ययनाभिनादितान् मुनिप्रवेकाचितगुल्मपादपान् ।
प्रभूतचीराजिनदर्भसंचयान् निकामपर्यन्तहिमाम्बुनिर्झरान् । । ५।। उपान्तनीवारगवेधुकाचितान्९ प्रसुप्तविश्वस्तमृगर्क्षवानरान् ।
हबिर्भुजो१० धूमवितानसंकुलान् विसृत्य चान्ये प्रविजघ्नुराश्रमान्११ ।।६।।
केचिन्मुनीनामसुरा जीर्णोरगसमत्विषः१२ ।
जटाः संगृह्य लुलुचुः क्षालितास्तीर्थवारिणा । ।७ । ।

११०.... त्तमाङ्गो ( ? ।
१ मत्तैरावणसम्बाध - घ । २.. कलितं बलम् - घ । ३ तत्तथा - घ. । ४ दश - घ । ५ च्चिचक्षिपुश्च दिशो दश - घ- । ६ बभञ्जिरे (?) । ७ जग्रसु - घ । ८ बहिर्दानान् - क । ९ उपात्तनीवारगवेधुकाचितान् - ख । १० हविर्भुजां(? । ११ परिजघ्नुराश्रमान् - ख । १२.. मिव द्विप (ा ). - ख ।

349
पातयित्वासुराः१३ केचिच्चरणैः पिपिषुः क्षितौ ।
ऋषीनात्मविनाशाय हुताशान् ज्वलितानिव१४ ।।८।।
शिरांसि मुनिपत्नीनां करैः केचित् तलैस्तथा१५ ।
पूतानि१६ वारिभिः पुण्यैः पस्पृशुर्दानवाधमाः ।।९। ।
अथ ते जगृहुर्यात्रां१७ ज्ञात्वाभ्युदयमात्मनः ।
विक्षिप्तं१८ लोकनाशाय बलमाहूय सर्वशः ।।8.61.१ ० । ।
प्रशस्तेहनि नक्षत्रे मुहूर्ते च जयान्विते१९ ।
सन्नाहभेरीराहत्य क्रियाश्चक्रुर्जयावहाः ।। ११ ।।
सन्नाह्यान् बलिनो सत्तानानाय्य वरवारणान् ।
सम्यगभ्यर्च्य वर्माणि बबन्धुर्विधिनासुराः ।। १ २।।

यन्त्राणि धौतैर्नाराचैः पूर्णान्यासनपार्श्वयोः ।
बबन्धुः शक्तिपूर्णाँश्च वेणून् तिर्यगवस्थितान् ।।१ ३ ।।
तोमरान् कणपान्२० शंकून् शूलचक्रपरश्वधान् ।
आबबन्धुर्नियुक्ताश्च मध्यमासनपार्श्वयोः । । १४।।
सज्जानि परमास्त्राणि बालधीँश्च सुसंस्कृतान् ।
संपूर्णान् गन्धवासोभिर्निशिताग्रैः शिलीमुखैः ।।१ ५।।
सन्नाह्यानकुशाँल्लौहान् बालेन्दुसदृशद्युतीन् ।
ग्रैवेयेषु सिताँश्चक्रुर्मध्ये मस्तकपिण्डयोः । ।१ ६ ।।
क्षुरप्रमालां२१ संयस्तां शातकुम्भमयीं शुभाम् ।
आबबन्धुश्च कुम्भेषु गजानां गजसादिनः२२ ।।१७।।
वैजयन्तीपताकाश्च विचित्राः स्वभिलक्षिताः ।
उच्छ्रयामासुरायत्ता दन्त्यनीकस्य दानवाः ।।१८।।
घण्टा वारणमुख्यानामाससज्जु२३ र्महास्वनाः ।
चामराणि सुदीर्घाणि हंसांशुरुचिराणि२४ च । ।१ ९। ।

१३ पाटयित्यासुराः - घ । १४ हुतानाञ्जिलतानिव - ख. । १५ चलैस्तथा - क. ख. । १६ युतानि - घ. । १७...र्गोत्रां - क, र्यज्ञं - घ. । १८ विक्षिप्ता - ख. । १९ विजयान्विते - घ. । २०... यान् - क. । २१ क्षुरप्रमाणाः-घ. । २२.. सादिभिः - घ. । २३,. मानसंजु-क,. माससर्ज ( र्जु) -घ. । २४ हंसांगरूचिराणि घ. ।

350

एकैकस्य चतस्रश्च करेण्वश्चारुदर्शनाः ।
स्थापिताः पुरतो दैत्यैः परवारणवारणाः । ।8.61.२ ० ।।
यूनो युवभिरारूढान् शिक्षितानस्त्रकोविदैः२५ ।
चक्रुरग्रेसरानश्वान् वर्मिणो लोहजालिनः ।।२१ ।।
वर्मिणो बद्धकवचाञ्छितनिस्त्रिंशधारिणः ।
तेषां पुरस्सरान् पत्तीननुयाताँश्च धन्विभिः ।। २२। ।
दैत्ययोधास्ततश्चान्ये२६ वर्मिणो लोहजालिनः ।
आरूढा बद्धनिस्त्रिंशाः स्नातपीताँस्तुरङ्गःमान्२७ । ।२३ ।।
केचिद्विनीतैर्युवभिः स्नपितैः२८  कृतमङ्गलैः ।
रथान् संयोजयामासुरश्वैरग्रजवैस्तदा२९ । ।२४।।
आयुधान् सपताकाँश्च किंकिणीजालनादितान् ।
अधितस्थुस्तदा केचिद् रथान् हाटकसंस्कृतान् ।।२५ । ।
एवं तत् कल्पितं श्रुत्वा सैन्यं सैन्यनमस्कृतः ।
सुन्दो दानवशार्दूलो निर्ययौ कृतमङ्गलः । । २६ । ।
स्वीषं सुकूबरं३० स्वक्षं शातकुम्भमयं वरम् ।
नानामणिमयैश्चित्रैर्भक्तिपुष्पमृगद्विजैः३१ । । २७। ।
युक्तं परमसंहृष्टैर्मनोवेगैस्तुरङ्गमैः ।
आरुह्याथ रथं दिव्यं पताकाध्वजशोभितम् ।।२८।।

कवची बद्धनिस्त्रिंशो विधूतसितचामरः३२ ।
अभितः स्तूयमानश्च सूतमागधबन्दिभिः ।।२९ ।।
निसुन्दोपि३३ मदश्यामकपोलालीनषट्पदम्३४ ।
आरुह्य निर्जगामाशु सांग्रामिकमनेकपम्३५ ।। 8.61.३० । ।
अन्ये च दानवास्तत्र रथैरश्वैर्मतङ्गजैः ।
निर्ययुः परमप्रीता३६ युद्धशौण्डाः सुदंशिताः ।।३ १ । ।

२५ वासितामस्त्रकोविदैः - ख. । २६ स्तथा चान्ये - घ । २७ स्नातपीतास्तुरङ्गमाः - क. । २८ स्नापितैः - क.ख. । २९... स्तथा - घ. । ३० सुकुरवं - क. । ३१ भक्तापुष्पसुगंधिजैः - घ । ३२ बद्धनिस्त्रिंश उद्धूतशितचामरः -घ. । ३३ उपसुन्दो - ख. । ३४ नीरदश्यामकपालानीलषट्पदम् - घ. । ३६ संग्रामिकमनीकपम् - क., महाद्विपं -ख । ३६ परमप्रीत्या - क घ. ।

351

बलस्याग्रेसरं कृत्वा तारकाक्षं३७ महासुरम् ।
सहितं बहुभिः शूरै रथनागाश्वपत्तिभिः । । ३ २।।
पृष्ठतः संविधायाशु बलोन्मत्तं महासुरम् ।
बलेन चतुरङ्गेण३८ महिषं पार्ष्णिरक्षिणम्३९ । ।३ ३ । ।
पार्श्वयोरुभयोर्न्यस्य४० मेघस्वनमहास्वनौ ।
सैन्येन महता दृप्तौ४१ दानवावरिसूदनौ ।।३४। ।
मध्ये सुन्दो निसुन्दश्च मयः शम्भुः खरो मुरः ।
सन्नद्धा बलिनः शूरा परसैन्यविदारणाः४२ । ।३ ५। ।
प्रतस्थिरे सुसंयत्ता दिवं दानवसत्तमाः ।
प्रलये मारुतोद्धूता घनाः संवर्त्तका इव । ।३ ६। ।
तेषामागमनं ज्ञात्वा सह स्वर्लोकवासिभिः ।
अपसृत्य जगामाशु जनस्थानं शतक्रतुः । । ३७। ।
मेरो शिखरमारुह्य सर्वेथ सहितास्तदा ।
सेना निवेशयामासुर्नन्दने ते सुरद्विषः४३ ।। ३८।।
अथ सैन्यस्य दैत्येन्द्रा४४ रक्षामाधाय सर्वशः४५ ।
प्रविभक्तानसंबाधानावासान्४६ जगृहुस्ततः ।।३ ९ ।।
दत्तानुज्ञास्ततः सर्वे दानवा दानवोत्तमैः ।
सन्नाह्यमपनिन्युस्ते सर्वोपकरणं तदा ।।8.61.४० ।।
आरूढा गजकन्यासु४७ वर्माणि मुमुचुः शनैः ।
आयुधान्यपनीयाशु४८ सैनिका मत्तदन्तिनाम् ।।४१ ।।
सन्नाहानपनिन्युश्च४९ मुमुचुः कवचानि च ।
तनुत्राणि च चित्राणि५० तदा दानवसैनिकाः । ।४२।।

३७ तारकाख्यं - घ. । ३८ बलेन च तुरङ्गेण - क. ख. । ३९ पारिरक्षिणम् - क., परिरक्षिणम् - ख. घ. । ४०...स्तस्य - ख. । ४१ गुप्तौ - क. घ. । ४२.. निवारणा - क ख. । ४३ निर्जरद्विजः - (षः) - घ. । ४४ दैत्यास्ते -घ. । ४५ सर्वतः - क. घ. । ४६... वासं - क. ख., वासास्ते - घ. । ४७... जगकन्यासु - क. । ४८.. .न्युपनीतानि - ख. । ४९ परिनिन्युश्च - घ. । ५० विचित्राणि - ख. घ ।

352

अपेत कक्षान्५१ मातङ्गान्५२ स्नातपीतान् गतक्लमान्५३ ।
बबन्धुः कल्पवृक्षेषु५४ केचिद्दानवसैनिकाः । ।४३ ।।
केचित् कल्पद्रुमान्नागा मदसंलीनषटपदाः५५ ।
बभंजुर्बलिनस्त्रस्तमत्तोद्भ्रान्तविहङ्गमान् ।।४४।।
चुक्रशुर्बलिनः केचिन्मदश्यामान्५६ मतङ्गजाः ।
कपोलान् कल्पवृक्षेषु पुष्पालीनालिपंक्तिषु ।।४५।।
नागा जगाहिरे केचिन्मत्ता मन्दाकिनीं नदीम् ।
हैमवारिजकिञ्जल्कपिञ्जरोपान्तरोधसम् ।।४६।।
विमुक्तसाङ्ग्रामिकवर्मजालान्५७ प्रसन्नचित्तान् परिघृष्टकायान् ।
निपीततोयानपनीतखेदान् बबन्धुरश्वान्पृथगश्वबन्धाः ।।४७।।
अथ सूक्ष्माणि वासांसि चित्राश्च परमाःस्रजः५८ ।
आनिन्युः कल्पवृक्षेभ्यः फलानि मधुराणि च५९ ।।४८।।
हैमानि केचित् पद्मानि तद्रजोरुणमूर्तयः६०।
बभञ्जुर्दानवा हृष्टा गता मन्दाकिनीं नदीम् । ।४९।।
आनिन्युः सैनिकाः केचिन्मन्दारकुसुमोत्करान् ।
फलान्याजह्निरे केचित् स्वादूनि च बहूनि च ।।8.61.५० ।।
तत्रोष्य रजनीमेकां भेरीराहत्य दानवाः ।
तेनैव विधिना यत्ताः प्रजग्मुरमरावतीम् ।।५१ ।।
ततस्तूर्यनिनादेन गजानां बृंहितेन च ।
सिंहनादैश्च दैत्यानां चचालेवामरावती ।।५२।।
अथ शून्यां समुद्वीक्ष्य पुरीं दानवसत्तमाः ।
इत्थमूचुः सुसंहृष्टा६१ नदन्तो भैरवस्वनम्६२ ।।५३ । ।

५१ अपेतभक्ष्यान् - क. । ५२ अपेतकक्षास्तान्नागान् - घ. । ५३ स्नपितान्विगतक्लमान् - घ. । ५४ वृक्षकल्पेषु -क. । ५५... षट्पदान् - ख । ५६ मदश्यानान् - (?) । ५७... सङ्ग्रामिकवर्मजालान् - क. । ५८ विचिक्नुयिरय... -क. ख. । ५९ मुमुचासुराः-- - क. ख. । ६० भद्राणि रणमूर्धनि - घ. । ६१ संप्रहृष्टा - घ. । ६२ भैरवं रवं (?) ।

353

जयति विबुधशत्रुः सुन्ददैत्येन्द्रसिंहः
कठिनरुचिरबाहुः पीनविस्तीर्णवक्षाः ।
शतमखपुरजेता चारुपृथ्वायताक्षः
सजलघननिनादो मत्तनागेन्द्रगामी ।।५४।।

तदनु जयति चारुप्रान्तरक्तायताक्षो
मृगपतिगतिलीलः संयुगेष्वप्रधृष्यः ।
त्रिदशवरविजेता दानवेन्द्रो निसुन्दः
प्रहतमुरजनादः पीनदीर्घोरुबाहुः । ।५५।।
इति स्कन्दपुराणे अमरावतीप्रवेशो नाम एकषष्टितमोध्यायः

सनत्कुमार उवाच
अथ निर्जित्य दैत्येन्द्रौ दिवं१ विक्रमशालिनौ ।
जग्मतुः सहितौ दैत्यैर्विन्ध्यं तुङ्गशिलोच्चयम् ।।१ ।।
संपूज्य विधिवद्दैत्यान् प्रस्थाप्य भ्रातरौ तदा ।
रेमाते विन्ध्यपादेषु फुल्लपादपसानुषु ।।२।।
दैत्याभ्यामथ विज्ञाय ब्रह्मा सुरपराभवम् ।
विचिन्त्यैकमनाः सम्यग् वधोपायं तयोस्तदा ।।३ ।।
तिलं तिलं समादाय रत्नेभ्यश्चारुदर्शनाम् ।
ससर्ज कमनीयाङ्गीमङ्गनां वल्गुनिस्वनाम् ।।४।।
तिलोत्तमेति तस्याश्च नाम चक्रे पितामहः ।
दिव्यानामपि सा स्त्रीणामुपमेव३ तदा बभौ ।।५।।
अतिसंपूर्णवक्त्रां४ तामतींदीवरलोचनाम् ।
अतिहंसस्वनालापामतिमत्तेभगामिनीम् ।।६।।
लक्ष्मीर्निरीक्ष्य सव्रीडा पङ्कजेनावृणोन्मुखम् ।
वपुर्भिश्चैव चार्वङ्ग्यास्त्रेपुरुद्यानदेवताः ।।७।।

१ देवान् - घ. । २... मनङ्गां - क. । ३... मतिरूपा : - च. । ४ सिन्दूरवक्त्रां - घ. । ५. स्स्वैश्च - क ख. ।

354
तामुत्पाद्य ततो धाता६ पाकशासनमब्रवीत् ।
शम्भुना मदनः पूर्वं निर्दग्धो लोचनाग्निना७ । ।८।।
तस्य प्रोद्भूतये८ याम सर्वे९ पार्श्वं पिनाकिनः ।
तमाराध्य ततः१० कुर्म्मो यथा स्यान्मदनः पुनः । ।९।।
अथ ते ब्रह्मणा सार्धं तया चासुरविद्विषः ।
जग्मुर्विन्ध्यगिरेः शृङ्गं यत्रास्ते भगवान् हरः ।।8.62.१० ।।
तत्र शर्वमपश्यन्तो दध्युस्ते सुरसत्तमाः ।
गृणन्तः प्रणवं सर्वे शिवसन्यस्तचेतसः ।। ११ ।।
अथ लिङ्गं समुत्तस्थौ तेषां मध्ये दिवौकसाम् ।
सुसंहतं११ सुसंश्लिष्टं समूहस्तेजसामिव । ।१२। ।
उच्चचार तदा तस्मादुच्चैर्वाग्१२ विशदाक्षरा ।
निर्दग्धोयं मया पापस्तपस्विजनकण्टकः ।। १३ । ।

युष्मदर्थे विमोक्ष्यामि कार्यं वोयं१३ करिष्यति ।
करोतु परितश्चेयं मां प्रदक्षिणमङ्गना ।। १४।।
एवमुक्ता महेशेन सा चकार प्रदक्षिणाम्१४ ।
सन्निधायाञ्जलिं मूर्ध्नि रक्तेन्दीवरकोमलम्१५ ।।१५।।
नेमे१६ मूर्तिं तदा पूर्वां निस्ससार ततो मुखम्१७ ।
त्र्यक्षं प्रसन्नबिम्बोष्ठममितद्युति कान्तिमत् । । १ ६। ।
अथ तेजो विनिःसृत्य१८ वदनेन्दोः पिनाकिनः ।
तां विवेशाङ्गनामाशु१९ शरद्भास्करभास्वरम् । ।१७।।
अथ सा दक्षिणां मूर्तिं प्रणेमे चारुदर्शना ।
निर्जगाम तदा दीप्तं मुखं सुरगुरोस्ततः । ।१ ८।।
वारिभारालसाम्भोदरुचिमद्२० भीमनिस्वनम् ।
करालदशशनोद्भासि दीप्तरक्तान्तलोचनम् ।। १९ ।।

६ तां समुत्पाद्य धाता तु - घ. । ७ नेत्रवह्निना - घ । ८ प्रोद्धृतये - घ । ९ यामस्सर्वे - क. घ. । १० तथा - क.ख । ११ सुसंघातं - क ख, । १२ दुर्बोध... - ख । १३ यः - क. ख. । १४ प्रदक्षिणं - क घ. । १५... लोचनं -घ. । १६ रेमे - घ. । १७ तदा - क. ख । १८.. .भिनिःसृत्य - घ. । १९ आविवेशाङ्गनामाशु - घ. । २०...धारालसाम्मोदरुचिरं - घ. ।

355

अत्यादित्यं ततस्तेजो मुखान्निःसृत्य दक्षिणात् ।
दृश्यमानं सुरैस्सर्वैर्विवेश प्रमदोत्तमाम् । । 8.62.२० । ।
प्रणेमे सा ततस्तस्य पश्चिमां मूर्त्तिमञ्जसा ।।
निश्चक्राम ततस्तस्या२१ मुखं त्र्यक्षमनुत्तमम् ।। २१ ।।
ततस्तेजो विनिःसृत्य मुखेन्दोर्मदनद्विषः२२ ।
दीप्यमानं विवेशाशु तामेव प्रमदोत्तमाम् । ।२२ । ।
उत्तरां मूतिमागत्य प्रणेमे सा कृताञ्जलिः ।
तस्या२३ मुखं सुसंपूर्णं सुप्रसन्नं विनिर्ययौ ।।२ ३ । ।
तस्मात्तेजो विनिःसृत्य सूर्यदीप्तानलप्रभम्३४।
विवेश प्रमदामाशु तामेव वरवर्णिनीम् ।।२४। ।
मुखानि देवदेवस्य सुराणामर्थसिद्धये ।
चत्वारि निर्ययुर्दिक्षु न तस्या रूपविस्मयात् । ।२५।।
आत्मसंस्थं पुरा तेजो दग्ध्वा यन्मदनं कृतम् ।
अनुजग्राह देवेशस्तेन तां प्रमदोत्तमाम् ।।३ ६।।
अब्रवीच्च सुरान् सर्वाँस्तत्रेदं वचनं शिवः ।
यस्मादियं मां युष्मांश्च मण्डलेन प्रदक्षिणम् । ।२७। ।
चक्रे सर्वान् सुरश्रेष्ठाः स्थानं तस्मादिदं मम ।
भविष्यति गिरौ विन्ध्ये मण्डलेश्वरसंज्ञितम् । । २८ ।।
मंडलेश्वरमेतच्च यः करोति प्रदाक्षिणम् ।

प्रदक्षिणीकृता तेन सप्तद्वीपा मही भवेत्२५ ।
सान्निध्यं सर्वदा ह्यस्मिन् करिष्यामि वरप्रदः२६ ।।२९। ।
मण्डलेश्वरमीशानं दृष्टवा तु प्रयतो नरः ।
अश्वमेधफलं प्राप्य मम लोकमवाप्स्यति । ।8.62.३ ० । ।
नैकसिद्धसमाकीर्णं किन्नरोरगसेवितम् ।
युष्माभिः सर्वदा युक्तं भविष्यति मम प्रियम् ।। ३१ ।।

२१ ततस्तस्मान्मुखं - घ. । २२... र्वदनत्विषः - क. । २३ तस्मान् - घ. । २४ सूर्यानलप्रभामिव - घ. । २५ इति पद्यं दृश्यते घ. पुस्तके, न तु *मण्लेश्वरमीशानमिति* । २६ वरप्रदम् - क. ।



एषा तिलोत्तमा चैव यदर्थं सुरसत्तमाः ।
सृष्टा युष्माभिरव्यग्रा तद्वः कार्यं करिष्यति । ।३ २ । ।
एतामवेक्ष्य तौ दैत्यौ मोहितौ मदनार्दितौ ।
अन्योन्यं यास्यतो नाशमेषा चैव भविष्यति । ।३ ३ ।।
अजरा चामरा२७ चैव सर्वाप्सरवरा शुभा ।
पूज्या चेह सदा स्थाने वन्द्या चैव भविष्यति ।।३४। ।
सनत्कुमार उवाच
एवमुक्ते२८ महेशेन सुराः सुप्रीतचेतसः ।
तां स्त्रियं प्रेषयामासु२९र्वधार्थं दैत्ययोस्तदा ।। ३५।।
सहायान् प्रददौ चास्यै ब्रह्मा कमलवाहनः ।
क्रोधं दर्पमृतूत्सर्वान्३० मात्सर्यं मदमेव चः३१ । ।३ ६।।
कालं मृत्युं च मोहञ्च विषादञ्चामितद्युतिः ।
अथ संप्रेषयित्वा तु देवतास्तां तिलोत्तमाम् ।।३७। ।
आत्मानं पिण्डयामासुर्देवास्ते सर्व एव हि ।
कः कः कतम आयात इहाद्येति सुरर्षभाः । । ३८।।
ततो मध्ये स्थितं नत्वा भूयस्ते परमेश्वरम् ।
पिण्ड्यमानेषु देवेषु यस्मान्मध्ये समास्थितः । ।३ ९। ।
पिण्डारेश्वर इत्येव तत्रासावभवत्ततः३२ ।
पिण्डारेश्वरमीशानं दृष्ट्वा भक्त्या तु३३ मानवः । ।8.62.४० ।।
सर्वाशुभविनिर्मुक्तो३४ देहभेदे गणो भवेत् ।
पृथिव्यां यानि लिङ्गानि३५ चतुर्मुखायतनानि च३६ । ।४१ । ।

२७ ह्यमरा - घ । २८ एवमुक्ता - घ । २९ शंसयामासु - घ. । ३० क्रोधदर्पादिकान् सर्वान् - घ. । ३१ रागं मदनमेव च - क. ख । ३२ तदा - घ. । ३३ च - घ. । ३४ शुभाशुभविनिर्मुक्तो - घ. । ३५ सर्वाणि - क. ख । ३६ चतुर्मुखानि मे सुराः - घ ।

तानि सर्वाणि दृश्यानि इदं दृष्ट्वा भवन्ति हि ।
ततस्ता देवताः सर्वाः कृत्वा कार्यमतन्द्रिताः ।।४२।।
प्रणस्य(म्य) परमेशानं स्वानि सद्मानि भेजिरे ।
सापि चारुमुखापाङ्गी पीनोन्नतपयोधरा३७ ।।४३ ।।
आक्षिपन्तीव३८ चेतांसि सुराणां विभ्रमैस्तदा३९ ।
प्रतस्थे दक्षिणामाशामासाते यत्र दानवौ ।।४४।।
विन्ध्यपादेषु रम्येषु विहगोद्गीतसानुषु ।
भ्रमन्तावथ दैत्येन्द्रौ स्थितां ददृशतुस्तु ताम्४० ।।४५।।
अशोकशाखामुत्फुल्लामालम्ब्योन्मत्तषट्पदाम् ।
वसानामंशुकं चित्रमाबद्ध४१ मणिमेखलाम् ।।४६। ।
गायन्तीं मधुरं रक्तं समं कलमनाकुलम्४२ ।
तारमन्द्रातितारैश्च स्वरैः सम्यगलंकृतम् । ।४७।।
साक्षादिव तपःसिद्धिं श्रियं मूर्त्तिमतीमिव ।
प्राप्तामिव रतिं साक्षात् कान्तिं चान्द्रमसीमिव ।।४८। ।
ममैवेयं४३ ममैवेय४४ मिति तौ दानवोत्तमौ४५ ।
अभिसृत्य तु तौ४६ देवीं पाण्योर्जगृहतुः समम्४७ ।।४९।।
अथ दर्पमदक्रोधमात्सर्याविष्टचेतसौ ।
तौ चुक्रुधतुरत्यर्थमन्योन्यस्यासुरोत्तमौ ।। 8.62.५० । ।
तयोर्गदेन्तकः४८ कालो मृत्युश्चाविविशुर्द्रुतम् ।
प्रगृह्याथ गदे क्रुद्धावन्योन्यमभिजघ्नतुः । । ५१ ।।
अथैकैकेन४९ तौ तत्र प्रहारेणाभिताडितौ ।
विषण्णौ भिन्नसर्वाङ्गौ५० शिवशापविमोहितौ५१ ।।५२ ।।

३७ पीनोत्थितपयोधरा - क. ख । ३८ आपिक्षन्ती च - क. घ. । ३९ विद्रुमैस्तदा - घ । ४०... स्ततः - घ. । ४१.. मालम्ब्य (म्ब) - क,... मानस्या - घ । ४२ समदकगुण्या - घ. । ४३ ममैवैषा - घ. । ४४ ममैवेति - घ. । ४५ दानवौ रूपमोहितौ - घ, तौ तदा दानवोत्तमौ - घ. । ४६ च तां - घ., शुभां - क । ४७ स्वयं - क. । ४८ तयोर्द (र्दे) हेन्तकः - घ । ४९ यथ त्वैकेन - ख. । ५० विषण्णास्थितसर्वाङ्गौ क., विसंज्ञौ - घ. । ५१ शिरसा परिमौहितौ - घ. ।

358

विसंज्ञौ पतितौ भूमौ छिन्नमूलाविव द्रुमौ ।
अथ निर्ययतुस्तत्र५२ कामोपहतचेतसौ ।।५३।।
आत्मानौ सह शुक्रेण तयोर्दानवमुख्ययोः ।
तौ तदा५३ निर्गतौ तत्र तयोर्जीवौ दुरात्मनोः ।।५४।।
बलिनौ चारुसर्वाङ्गौ बालावाशु बभूवतुः ।
एकस्तत्राब्रवीद्बालः शुंभोहं द्विषतामिति ।।५५।।
निशुंभोप्यहमन्यस्तु बालस्तत्रावदत्तदा ।
अथ विन्ध्यः५४ समासाद्य बालौ तावमितद्युती ।।५६।।

आदिदेशात्मनः पत्नीं पाहि त्वं बालकाविति ।
ववृधातेथ तौ तत्र दानवेन्द्रसुतावुभौ ।।५७।।
कृष्णपक्षक्षये यद्वद् युगपच्छशिसागरौ५५ ।
बुद्ध्वा तौ च तदा जन्म५६ दानवाभ्यामरिन्दमौ ।।५८।।
तपश्चेरतुरत्युग्रं५७ पर्णाम्बुपवनाशनौ ।
तपसाराधितस्ताभ्यां तत्रागत्याब्रवीत्प्रभुः ।।५९।।
तुष्टास्मि युवयोः पुत्रौ वरं किं'५८ वा ददान्यहम्५९ ।
वव्राते तौ वरं वीरावजय्या६० वध्यतां सदा ।।8.62.६०।।
प्रार्थनां तां तयोः श्रुत्वा प्रत्युवाच पितामहः ।
अवश्यं पुत्रयोरेष्यं मरणं येनकेनचित् ।।६१।।
सुरेभ्योन्यत्र दैत्येन्द्रावमरत्वं न विद्यते ।
इत्युक्तवन्तं ब्रह्माणं वव्राते दानवौ वरम् ।।६२।।
उभावपि६१ सुनिश्चित्य संप्रहृष्टतनूरुहौ ।
जगन्मातुश्च६२ या कन्या विना तस्याः पितामह ।।६३। ।
मा६३ भूतामावयोर्देव सदा मृत्युपराजयौ ।
एवमस्त्विवति तौ प्रोच्य दैत्येन्द्रतनयावुभौ ।।६४।।

५२ निर्ववतुस्तत्र - घ. । ५३ ततस्तौ - घ । ५४ विन्ध्यं - ख घ । ५५. च्छणिभास्करौ - क. ख., ...त्सिन्धुसागरौ - घ. । ५६ जग्मुर् - घ । ५७ तपश्चरतुरत्युग्रं - घ. । ५८ कं (?) । ५९ ददाम्यहं - क. ख. । ६०...वजेया - ख । ६१ हतावपि - घ- । ६२ जगन्मातेव - घ,... न्माते च - क., जगत्पते - ख. । ६३ न - ख. ।

359

विश्वस्य जगतः स्रष्टा तत्रैवान्तरधीयत ।
अथ तौ तपसस्तीव्राद्विरम्य कृतमङ्गलौ।।६५। ।
मौलिनौ६४ बद्धकवचौ६५ हाराङ्गदविभूषितौ ।
हरिचन्दनदिग्धाङ्गौ पीतकौशेयवाससौ ।।६६।।
विन्ध्यप्रस्थेषु रम्येषु चेरतु६६र्दानवोत्तमौ ।
पितामहाद् वरप्राप्तिं श्रुत्वा शुंभनिशुंभयोः ।।६७।।
आजग्मुर्दानवा हृष्टाः पातालतलवासिनः ।
शंभुर्मयो घनः केशिर्नरको नमुचिर्द्रुमः । ।६८ ।।
अन्ये च कोटिशो दृप्ता हतशेषाः सुरद्विषः ।
विन्ध्यप्रस्थे निषेदुस्ते समेताः सर्वदानवाः । ।६९।।
नानाद्रुमलतागुल्मविकीर्णकुसुमोत्करे६७ ।
धन्विनो बद्धनिस्त्रिंशाश्चित्राभरणभूषिताः ।।8.62.७० ।।
सेन्द्रचापास्तडित्वन्तो नभसीव बलाहकाः ।
अथोवाच मयस्तत्र दानवो दानवोत्तमौ ।।७१ ।।
पितृभ्यां युवयोर्भुक्तं त्रैलोक्यमखिलं पुरा ।

युवाभ्यामधुना दैत्यो कस्मान्नादीयते पुनः । ।७२।।
समेतानमरान्६८ सर्वान्निर्जित्य रणमूर्धनि ।
ये सहाया हि वां पित्रो६९ र्बभूवुः सुरविद्विषः ।।७३ ।।
त एवामी बलोन्मत्ताः सहाया युवयोर्युधि ।
इत्युक्तवति दैत्येन्द्रे मये शुम्भो महासुरः । ।७४। ।
निशुम्भस्य मुखं प्रेक्ष्य वाक्यमित्थं तदाब्रवीत् ।
भूर्लोकमखिलं दैत्या युष्माभिः सह सांप्रतम् । ।७५। ।
संविभज्य सुरान्सर्वाञ्जेष्यामो रणमूर्धनि ।
जम्बूद्वीपं स्वयं सोथ जग्राहासुरसत्तमः ।।७६ । ।

६४ भौमिनौ - ध. । ६५ बद्धकेयूरौ - घ. । ६६ चरतु.. - घ. । ६७.. कीर्णे विस्तीर्णकुसुमोत्करे - ख. । ६८ ...व्रमरान् - घ. । ६९ पुत्रौ - ख. घ. ।

360
शाकद्वीपं निशुम्भाय ददौ भ्रात्रे कनीयसे ।
शाल्मलिद्वीपगोमेदौ७० दानवेभ्यो ददौ प्रभुः । ।७७।।
क्रौञ्चद्वीपकुशद्वीपौ दैत्येभ्यः प्रददौ च सः ।
दैत्येन्द्रः पुष्करद्वीपं भार्गवाय न्यवेदयत् ।।७८। ।
एवं प्रतिविभज्याशु७१ भूर्लोकमखिलं तदा ।
इज्याञ्जलिनमस्कारान् यज्ञान् सर्वा७२श्च सत्क्रियाः७३ ।।७९।।
आच्छिद्य दैवतेभ्यस्ते जगृहुर्दैत्यदानवाः ।
बभूवाथ ततो यज्ञः कश्यपस्य७४ महात्मनः ।।8.62.८० । ।
आगत्य तं७५ तदा यज्ञं ममृदुः७६ सुरशत्रवः ।
आधिपत्यं हि नः कृत्स्ने७७ भूर्लोके कश्यपाधुना । ।८ १ । ।
सर्वावस्थासु यज्ञे७८स्मिन्नस्मान् त्वं यष्टुमर्हसि ।
एवमुक्तस्ततो दैत्यैर्मारीचः कश्यपस्तदा । ।८२। ।
गम्भीरमर्थवद्वाक्यमुवाचेत्थं स्मयन्निव ।
त्रैलोक्यमात्मनः७९ कृत्वा जित्वा सर्वामरान् रणे ।।८३ । ।
यज्ञभागाँस्ततो दैत्याः सर्वानादातुमर्हथ ।
एवमुक्तास्तदा तेन दैत्यदानवसत्तमाः । ।८४।।
बलं सर्वं समादाय८० कृत्वा साङ्ग्रामिकीः८१ क्रियाः ।
प्रशस्तेषु कृताचारा मुहूर्त्त८२ र्क्षदिनेषु ते ।।८५। ।
रथैर्नागैस्तुरङ्गैश्च निर्ययुर्दैत्यदानवाः ।
पृष्ठतः पुरतः सम्यक् पार्श्वयोरुभयोरपि । ।८६। ।
विधाय रक्षो संयत्ता ययुर्देवान् जिगीषवः ।
तेषामागमनं ज्ञात्वा द्विषतां पाकशासनः । ।८७।।
संहतानां८३ सुसंयत्तो८४ युद्ध्वा नाकं जिगीषताम्८५ ।

विधिं विधाय स्वपुरे८६ समस्तं दौर्गकर्मिकम् । ।८८।।

७० शाल्मलिप्लक्षद्वीपौ च (?),... गोमेया (?) - ख. । । ७१ प्रतिविभज्याथ - घ. । ७२ सर्वा - क. । ७३ सत्क्रियां - क. । ७४ काश्यपस्य - क । ७५ तु - घ. । ७६ संगृह्य - घ- । ७७ कृत्स्नं - ख. घ. । ७८ तस्मात्त्वं दानवान् - घ । ७९ मन्विलं? - घ । ८० समानाय्य - घ. । ८१ संग्रामिकीः - क. । ८२ मूहूर्ते - ख. । .८ ३ संघातानां - ख. । ८४ दानवानां - घ । ८५ योधानां विजिगीषताम् - घ. । ८६ समरे - घ. ।



पुण्येषु८७ तिथिनक्षत्र८८ -मुहूर्त८९ करणेषु सः९० ।
मुनीन् विधिवदभ्यर्च्य नमस्कृत्वा पिनाकिने । ।८९।।
सार्धं सुरगणैः सर्वैर्निर्ययौ कृतमङ्गलः ।
हिमवच्छिखराकारं चतुर्दन्तमनेकपम् ।।8.62.९० ।।
आरुह्यैरावतं शश्वन्मदतोयौघवर्षिणम् ।
महताहैमदण्डेन९१ रत्नांशुपरिवेषिणा । ।९१ ।।
उच्छ्रितेनातपत्रेण ध्रियमाणेन भास्वता९२ ।
वीज्यमानः शरच्चन्द्रकिरणोत्करनिर्मलैः ।।९२।।
चामरै रत्नदण्डांशुसमूहखचितोदरैः ।
आशीर्भिर्जयशब्दैश्च मुनिभिः परिवर्द्धितः ।९३ ।।
अभितः स्तूयमानश्च सूतमागधबन्दिभिः ।
अथावकाशे विस्तीर्णे९३ समे पादपवर्जिते ।।९४।।
रचयामास देवानां पद्मव्यूहं९४ बृहस्पतिः ।
मरुद्भिः सहितं कृत्वा कणिकायां शतक्रतुम्र९५।।९५।।
पत्रेषु च वसून् रुद्रानादित्याँश्च न्यवेशयत् ।
केशरेषु यमं९६ कालं कुबेरवरुणावपि । ।९६ ।।
अनन्तं सहितं नागैर्नाले९७ गुरुरकल्पयत् ।
देवानन्यान् समेताँश्च रक्षोगन्धर्वसेनया ।।९७।।
पुनः सरः९८ स पद्मस्य परितः९९ पर्यकल्पयत् ।
अथ दानवतूर्याणां शब्दं श्रुत्वा दिवौकसः । ।९८।।
आजघ्नुर्मुदिता भेरीर्नेदुर्नादाँश्च संघशः ।
विमिश्रान्१०० तूर्यशब्देन श्रुत्वा नादान्१०१ दिवौकसाम् ।।९९।।
संयत्ताः१०२ सुतरां चक्रुः प्रयत्नं दानवेश्वराः ।
अथ ते दानवा दृष्ट्वा पद्मव्यूहं दिवौकसाम् ।।8.62.१ ० ०।।

८७ पुण्ये च - ख. । ८८ तिथिनक्षत्रे - ख । ८१ मूहूर्ते - ख. । ९० च सः - (?) । ९१ हेमदण्डेन - ख. घ. । ९२ मूर्धनि - च. । ९३ - अथाकाशे सुविस्तीर्णे - घ । ९४ प्रतिव्यूह - घ. । ९५ शतक्रतुः - क. घ. । ९६ मयं - क । ९७ नलि  क., नाले समुपकल्पयत् - घ. । ९८ पुरः सरान् - क. घ., पुरस्तात्स - ख. । ९९ सरितः - क. । १०० विमिश्र - घ. । २०१ नादं घ. । १०२ संयतौ - घ ।

पप्रच्छुर्भार्गवं तत्र तद्भेदममितौजसः ।
स पृष्टो दानवश्रेष्ठैर्व्यूहभेदमनाकुलः१०३ । । १०१ । ।
विचिन्त्य भार्गवो धीमानीत्थमाहासुराँस्तदा ।
विकीर्णाः१०४ परितः१०५ सर्वे तुषारनिकरा इव१०६ । । १०२ । ।
पद्मव्यूहं सुरेन्द्राणां हत१०७ सम्यक् सुरद्विषः ।
एवमुक्तास्ततो१०८ दैत्या भार्गवेण महात्मना । । १०३ ।।
सिंहनादं१०९ विनद्याशु परितस्तेभिसंपतन्११० ।
ततो युद्धं समभवद् देवदानवसैन्ययोः । । १ ०४। ।
आयुधैर्विविधैस्तीक्ष्णैः परस्परमभिध्नतोः ।
सादिनः सादिभिः सार्धं नागा नागै रथा रथैः ।। १० ५। ।
पत्तयः पत्तिभिर्दृप्तैर्दृप्ता युयुधिरे१११ युधि ।
केचिद्विभिन्ना नाराचैश्छिन्नाः केचित् परश्वधैः ।। १० ६। ।
निपेतुर्व्यसवो११२ यौधाः सेनयोरुभयोरपि ।
छिन्धि भिन्धि सहेदानीं तिष्ठ मूढ क्व गच्छसि । । १०७ ।।
इति वाचः सुमुत्तस्थुर्युधि योधैरुदीरिताः११३ ।
वसारुधिरसंसिक्तं११४ तनुत्रावरणाचितम् । । १० ८। ।
हतनागाश्वकललं११५ तद्बभूव रणाजिरम् ।
अथ तैर्दानवैस्तत्र११६ पीड्यमाना दिवौकसः । । १०९ । ।
सव्रणा हतभूयिष्ठाः शक्रमेवाभिशिश्रियुः११७ ।
अनन्तं नागमुख्याश्च कुबेरं यक्षराक्षसाः । । 8.62.११० । ।
भिन्ने व्यूहेय देवानां प्रहृष्टा दैत्यदानवाः ।
सिंहनादान् विनद्योच्चै११८ स्तूर्याण्याहत्य भूयशः । । १११ । ।
अभ्यद्रवन्तः संयत्ताः समरे पाकशासनम् ।
अथोत्थाप्य गजं शक्रो वज्रेण शतपर्वणा । । ११२ । ।

१०३ मेनाकुलम् - ख । १०४ वीस्तीर्णाः -ख। १०५ पततः क। १०६ तुषारेण हिमागमे ख। १०७ हतं - घ., हता- ख., हताः - क । १०८ स्तदा - ख. । १०९ सिंहनादान् - घ. । ११०.. भ्यपेत्य च - घ. । १११ संयुयु? ख । ११२ र्बहवो - घ. । प १३... रुदाहृताः - घ. । ११४ संसक्तं - क., स?- - - । । ११५ ? । ११६ ते दानवैस्तत्र- क. ख. । ११७ .संश्रयुः - क., संश्रिताः - ख. घ. । ११८ वदन्त्युच्चै - घ


चूर्णयामास संक्रुद्धो वेत्यदानववाहिनीम् ।
ददाह दानवामाकं परितः११९ पाकशासनः । । ११ ३ । ।
निदाघसमये दीप्तः शुष्ककक्षमिवानलः१२० ।
अथ शुम्भः समभेत्य समरे शक्रमब्रवीत् । ।१ १४।।
दृष्टोस्यद्य१२१ मया शक्र न१२२ जीवन् प्रतियास्यसि१२३ ।
अथागत्य तदा ब्रह्मा प्राहेत्थं सुरसत्तमान् । ।१ १५। ।
न योद्धव्यं सुरा दैत्यैरवध्या वः सुरद्विषः ।

न योद्धव्यं न योद्धव्यं सुरा दैत्यैर्महाबलैः । । ११ ६।।
पूर्वलब्धवरा ह्येते अवध्याश्च सुरद्विषः ।
अन्तर्दधुस्ततस्तस्य वाक्यं श्रुत्वा दिवौकसः ।
विहाय समरं सर्वे क्षिप्रं सबलवाहनाः । । ११७ ।।
अथ दैत्याः सुसंहृष्टास्तूर्याण्याहत्य भूयशः१२४ ।
नेदुरुच्चैर्वचश्चेदमूचुः समरशालिनः१२५ । । १ १८।।
तुरगखुरपुटान्तक्षुण्णरेण्वन्धकारे१२६
द्विरदरथनिनादत्रस्तपादातवृन्दे१२७ ।
विगतभयविषादः संयुगे शुंभसिंहो
जयति सुरविजेता वारिवाहोरुनादः । । १ १९। ।
तदनु जयति दीर्घपीनथुबाहुः पृथुरुचिरोन्नतसंहतोरुवक्षाः ।
मृगपतिगमनोम्बुवाहनादः समरवरे१२८ विजयी निशुंभसिंहः१२९ । ।8.62.१ २० ।।
इति स्कन्दपुराणे देवासुरसंग्रामे शुंभनिशुंभविजयो नाम१३० द्विषष्टितमोध्यायः

११९ पतितः - घ. । १२० शुष्ककाष्ठमिवानलः - घ । १२१ तुष्टोस्म्यद्य - घ । १२२ स - ख. । १२३ त्वं क्व यास्यसि - ख । १२४ सर्वशः - घ । १२५ समरपालिनः - क । १२६ क्षिप्तरेण्वन्धकारे - क. । १२७.. .पादातिवृन्दे- क. । १२ न सुरसमरे (?) ।
१२९ तदनु जयति दीर्घः पीनबाहूरुपादः पृथुरुचिरसुवक्षाश्चोन्नतांसः सुनेत्रः ।
मृगपतिसमगामी तोयदध्वाननादी सुरसमरविजेता दैत्यनाथो निशुम्भः । । इतिः ख. पुस्तकपाठ.
दनकुलभयहंता दैत्यनाथोसुरेन्द्रस्तदनु जयति धीमान् पीत (न ?) बाहूरुवक्षाः ।
मृगपतिगतिलीलो दीर्घनेत्रो विशालः पृथुऽरुचिरललाटो दैत्यनाथो निशुंभः । । इति घ. पुस्तकपाठः । ।
१३० असुरविजयो नाम - घ. ।

364
अथ निर्जित्य समरे देवान् देवद्विषस्तदा१ ।
आजग्मुः सहिता विन्ध्यं शिखरालीनतोयदम्२ । । १ । ।
प्रस्थाप्य विधिवत् सर्वान् तौ तदा३ दैत्यदानवान् ।
रेमाते सहितौ विन्ध्ये किन्नरोद्गीतकन्दरे । २ । ।
आरक्षिकस्तयोस्तत्र मूको नाम महासुरः ।
अपश्यच्छिखरे देवीं४ ज्वलन्तीमिव५ तेजसा । ।३ । ।
पुण्यलक्षणसंपूर्णां पुण्याभरणभूषिताम्६ ।
आगतां तत्र तां सिद्धिं पुण्यानां कर्मणामिव । ।४।।
अथ मूकस्तदा देवीं विस्मयोत्फुल्ललोचनः ।
दृष्ट्वा जगाम मनसा शुंभं दानवसत्तमम् ।।५ । ।
यथेयं चारुसर्वाङ्गी प्रधाना सर्वयोषिताम् ।
तथा पुंसां प्रधानोसौ७ शुम्भो दैत्येन्द्रचन्द्रमाः । । ६। ।
विस्तीर्णवक्षसस्तस्य८ विशालजघनस्थला ।
अनुरूपा भवेत् पत्नी दीर्घाक्षस्यासितेक्षणा । ।७। ।

इति संचिन्त्य मनसा तामुवाच९ सुमध्यमाम् ।
का त्वं त्रस्त१० समुद्भ्रान्तसृगशाव११ विलोचने१२ । ।८। ।
कः पिता तेनवद्याङ्गि का वा१३ माता तवानघे ।
किमर्थं वा वसस्यत्र१४ गिरौ दानवसेविते ।।९। ।
एवमुक्ताश्च मूकेन महायोगा सुरेश्वरी ।
विज्ञाय मनसा कालं प्राप्तं शुंभनिशुंभयोः ।। 8.63.१० । ।
स्मितपूर्वमिदं प्राह वाक्यं वाक्यविशारदा ।
मानुषीं मां विजानीहि गिरावस्मिन् कृतालयाम् । । ११ ।।
आत्रेयः स्वर्गतो विद्वान् पिता चक्रचरो१५ मम ।
विहाय मां पुरो बालां माताप्यनुगता पतिम् ।। १२ । ।

१.. स्सदा - घ । २ शिशिरे नीलतोयदम् - ख., शिखरं नीलतोयदम् - घ. । ३ पुनः संस्थाप्य विधिवत् सर्वांस्ते-घ. । ४ रम्ये - क । ५ स्वेन । - ख घ। । ६ दिव्याभरणभूषिताम् - ख । ७ प्रधानोयं - घ. । ८ वपुषस्तस्य -घ. । ९ तां वाचमिदमाह - घ. । १० त्वमत्र - घ. । ११ शावक - घ । १२ लोचना - घ. १३ का च - घ, माता वा कस्तव - ख. । १४ - किमर्थमागतास्यत्र - ख. । १५ चक्रधरो - घ ।


आज्ञप्तास्मि तदा मात्रा प्रदायास्त्राणि दानव ।
वस विन्ध्ये गिरौ रम्ये योगं१६ च कुरु सर्वदा । ।१ ३ । ।
साहं वचनमार्यायाः१७ पालयन्ती नगोत्तमे ।
वसामि सिंहशार्दूल मातङ्गमृगसेविते ।।१४। ।
इति देव्या वचः श्रुत्वा मूकः१८ संहृष्टमानसः ।
जगाम दानवश्रेष्ठं शुम्भं द्रष्टुं कृतत्वरः । । १ ५। ।
अथ शुंभं समासाद्य हर्षेणोत्फुल्ललोचनः ।
आचचक्ष इवाकारैरपूर्वं रत्नदर्शनम् । । १ ६।।
तं दृष्टवा विस्मयोत्फुल्लं रक्तायतविलोचनः१९ ।
मूकमाह तदा शुंभः कस्मात्तुष्टोसि दानव । । १७।।
एवमुक्तः स शुंभेन मूको वचनमब्रवीत् ।
अपूर्वमद्य दृष्टं मे स्त्रीरत्नं शिखरे गिरेः२० । ।१८।।
न तादृशी मनुष्येषु न देवेष्वपि२१ सुन्दरी ।
न रक्षस्सु२२ न यक्षेषु न गन्धर्वपुरेषु वा । । १ ९।।
न नागेषु न सिद्धेषु न दैत्यपतिवेश्मसु ।
दृष्टपूर्वा मया राजन् यादृशी सा२३ वरांगना । ।8.63.२ ०। ।
का त्वं कस्य किमर्थं वा वससीह गिराविति२४ । पृ
ष्टाब्रवीन्मया वाक्यमात्रेयदुहिता ह्यहम् । ।२ १ । ।
वसामि चात्र२५ विन्ध्यस्य शिखरे मातुराज्ञया ।
इति भर्त्तुः समाख्याय विरराम स दानवः२६ । । २२।।
अथ शुंभस्य हृदये मूकस्य वचसा सह ।

कामोवकाशमकरोद्विनाशाय सुरद्विषाम् ।।२ ३ । ।
ततः प्रोवाच दैत्येन्द्रः कामाकुलितमानसः२७ ।
गच्छ मूक मदर्थे तां२८ प्रलोभय सुमध्यमाम् । ।२४।।

१९ योग्यं - घ, योज्या - क, द्यां ख। १७ माद्ययाः घ। १८ ऋतः (दूतः?) - ख । १९ विस्मयोत्फुल्लरक्तान्तायतलोचनम - घ । : २० गिरौ - क, ख । २१ देवेष्वस्ति - क. । २२ राक्षसेषु - घ. । २३ यादृशा तादृशा - क ख. । २४ गिरावपि - क ख. । २५ चित्रे - घ. । २६ विरेमे मूकदानवः - क. ख. घ । २७ समाकुलितमानसः - घ. । २८ त्वं - ख, न - क. ।

366
एवमुक्तः स शुंभेन द्रुतमुत्थाय दानवः ।
प्रययौ यत्र सा देवी प्रागनेनाभिलक्षिता ।।२५।।
तं दृष्टवा दानवं देवी कृताञ्जलिमुपस्थितम् ।
किमर्थमागतोसीति मूकं पृष्टवती तदा । ।२६।।
एवं पृष्टोथ कौशिक्या प्राहेत्थं मूकदानवः ।
आर्ये दूतोस्मि शुम्भस्य त्वत्समीपमुपागतः ।।२७।।
अथ देवी स्मितं कृत्वा प्रसन्नमभिवीक्ष्य तम् ।
इत्थमाहागतं दूतं२९ किं स आहा३० सुरेश्वरः ।।२८।।
इति पृष्टस्तदा देव्या प्राह मूकः कृताञ्जलिः ।
आर्ये दैत्येश्वरः शुंभः पत्नीत्वेन वृणोति ते ।।२९।।
तस्य दानवसिंहस्य जेतुः शक्रस्य संयुगे ।
भवाग्र्या सर्वपत्नीनां पत्नी मृगविलोचने ।।8.63.३ ० ।।
एवमुक्ता तदा तेन विहस्याहामरेश्वरी३१ ।
स्वबाहूनवलोक्येत्थं युद्धशुल्का३२ मवेहि माम् ।।३१। ।
मां विनिर्जित्य दैत्योसौ पत्नीं वै कर्तुमर्हति ।
मया वा निहतो३३ यातु काकगोमायुभक्ष्यताम्३४ ।।३२।।
एवमुक्तवतीं देवीमाह मूको हसन्निव ।
पत्या दानवदैत्यानां किं ते युद्धेन भामिनि । ।३३।।
क्रुद्धस्य यस्य३५ समरे न शशाक निरीक्षितुम् ।
मुखमैरावतस्कन्धगतोपि बलवृत्रहा ।।३४।।
श्रुत्वा तद् वचनं तस्य प्राह देवी स्मयन्निव३६ (?) ।
तृणानि मम दैत्येन्द्राः सर्वेपि रणमूर्धनि ।।३५। ।
निवेदयस्व शुंभस्य गच्छ त्वं दानवाधम ।
दौत्येनासि यतः प्राप्तो मयातो३७ न विहन्यसे ।।३६।।

२९ किम्मा... - ख. । ३० किमाहासौ - क, दानवोसौ - ख. । ३१ महेश्वरा - क.,... मरेश्वरा - ख. । ३२ स्वान् बाहूनवलोक्याहमवैहि - क. । ३३ विनिहतो - ख. । ३८ भोज्यताम् - क. ख । ३५ तस्य - क. ख, । ३६ स्मयादिव (?) । ३७ त्वं - क ।

367

अथ प्रणम्य तां मूको ययौ पार्श्वं सुरद्विषः ।
अनुज्ञातश्च तेनासावाख्यातुमुपचक्रमे ।।३७।।
सा मया प्रार्थिता कन्या त्वदर्थे३८ दानवोत्तम ।
उवाच युद्धशुल्कास्मि जित्वा मां नेतुमर्हसि ।।३८।।
भूयश्चोक्तवती राजन् गर्वमालम्ब्य साङ्गना ।
तृणानि मम संग्रामे दैत्या इति सविस्मया । ।३९।।
तत्तदा वचनं तस्या मूकेनोक्तं निशाम्य सः ।
क्रोधाद्दर्पाच्च कामाच्च ममृषे नासुरोत्तमः३९ ।।8.63.४०।।
अथोत्थाय सभां रम्यामगच्छद्दानवाधिपः ।
स्फाटिकस्तम्भनिर्व्यूहां४० विचित्रमणितोरणाम्४१ ।।४१ ।।
तस्यां४२ सिंहासने हैमे स्वास्तीर्णे महति स्थिरे ।
निषसाद महाबाहुः सुखायां४३ वरुणो यथा ।।४२।।
अनु तस्य निशुंभोपि निषसाद वरासने ।
रत्नाङ्गदांशुनिवहच्छुरितोरःस्थलस्तदा ।।४३।।
तयोरनु महासत्वा विविशुर्दैत्यदानवाः ।
दरीं हिमवतो रम्यां वारिश्यामा४४ इवाम्बुदाः ।।४४।।
अथ तेषूपविष्टेषु दैत्यदानवराजसु ।
प्रोवाच वचनं शुम्भो घनस्तनितनिस्वनः ।।४५।।
आरक्षिको गिरो विन्ध्ये मदीयो मूकदानवः ।
विन्ध्यस्य शिखरे कन्यां दृष्टवान् चारुरूपिणीम् ।।४६।।
युद्धशुल्काहमित्याह न मदर्थेनेन४६ सार्थिता४७ ।
तृणानि मम दैत्येन्द्रा भूयश्चोक्तवती किल ।।४७।।
जित्वा तां प्रसभं कन्यां समरे गर्वशालिनीम् ।
विचेष्टमाना४८ मवशामद्यैवानेतुमुत्सहे ।।४८।।

३८ त्वदर्थं - ख. । ३९ क्रोधो दर्पश्च कामश्च समं सर्वे (र्वं) समुत्थितम् - ख. । ४० निर्व्यूहे - क, निर्यूहे ख. । ४१... मणितोरणे - क.,... णं - ख. । ४२ तस्मिन् - ख. । ४३ भूषितो - ख. । ४४ करिश्यामा - क, सविद्युतः -ख । ४५ युद्धशौल्किकमित्याह - ख । ४६ मदर्थेनेह - ख. । ४७ श्राविता - क., सा वृता - ख. । ४८ विवेष्टमाना क, विवेष्ट्यमाना - ख. ।

368

अथ तस्य वचः श्रुत्वा शंभुर्नाम महासुरः ।
प्रहस्योच्चैर्महाबाहुरिदमाहासुरेश्वरम् । ।४९।।
वामप्रकृतयः सर्वाः स्वभावेन वराङ्गनाः ।
परिसान्त्व्या सकृद् राजन्४९ तां त्वमादातुमर्हसि ।।8.63.५०।।
श्रुत्वाथ वचनं शम्भोर्मयो दानवसत्तमः ।

प्रोवाचाभिनवोत्फुल्लनीलनीरजलोचनः ।।५१।।
आकारः कः पुनस्तस्याः का वा चेष्टा सुराधिप५० ।
पार्श्वस्थानि च कान्यस्याः सदोपकरणानि वा । ।५२।।
इत्युक्तवति दैत्येन्द्रे मये मत्तेभविक्रमे ।
अथ दैत्यपतिर्मूकं पार्श्वस्थं समचोदयत् । ।१३ । ।
यं प्रश्नं पृष्टवाँस्तत्र मयो मतिमतां वरः ।
मूकस्तु तं तदा सर्वमाख्यातुमुपचक्रमे ।।५४।।
सदा सुसंस्थिता व्यक्षा करालदशनानना ।
अष्टबाहुर्घनश्यामा सुनासा वल्गुनिस्वना५२ । ।५५।।
सार्श्वस्थानि सदा तस्याः सर्वप्रहरणानि५३ च ।
तनुत्राणि च मुख्यानि चित्राण्याभरणानि च ।।५६।।
अत्यादित्यं वपुस्तस्याः कान्तिश्चातिनिशाकरा५४ ।
इत्याख्याय तदा मूको विरेमे दैत्यसंसदि ।।५७।।
अथ दीर्घं विनिःश्वस्य तदा मय महासुरः ।
प्रोवाच सदसि५५ स्वन्तं वचो वचनकोविदः । ।५८।।
नूनमुत्पादिता देवैः कृत्या युधि पराजितैः ।
विन्ध्यं महीध्रमायाता विनाशाय सुरद्विषाम् ।।५९।।
तदलं ते तया राजन् सन्ति कन्याः सुमध्यमाः ।
दीर्घाक्ष्यश्चारुसर्वाङ्ग्यो दैत्यदानववेश्मसु ।।8.63.६० ।।

४९ गर्व - क. । ५० वद मूक महामते - घ- । ५१ सुरया - ख. । ५२ वल्गुभाषिणी - ख. । ५३ सर्वप्रकरणानि -क., सदोपरकराणि - घ. । ४ निशाकर - क ख. । ५५ वचसि - क. ख. ।


सम्यगाहृत्य ता राजन्ननुरूपाः कलस्वनाः ।
यथेष्टं क्रीड सततं प्रासादोदरसंस्थितः५६ ।।६१ ।।
एवमुक्ते तदा वाक्ये मयेनासुरसंसदि ।
प्राह वाक्यं तदा शुम्भो विहस्येत्थं महासुरः ।।६२।।
यदि सा दैवतैः५७ सृष्टा कृत्या५८ दानवशासने ।
अहत्वा दानवानाशु तदा सा न विरंस्यते५९ ।।६३।।
यावदेव न६० कृत्यास्मानभियुंक्ते कृतोद्यमा ।
तावदेव प्रसह्याशु तां वशे कर्तुमर्हथ ।।६४।।
ततोनुमेनिरे सर्वे दैत्यदानवसत्तमाः ।
वचनं दैत्यराजस्य कालेनाभिप्रचोदिताः ।।६५।।
अथ सदसि समस्तान् दैत्यसिंहाँस्तदानीं
त्रिदशपतिविजेता वाक्यमेतद् विहृत्य६१ ।
उदपतदवलम्बिस्वच्छशुभ्रोरुहारो

नवजलभरनम्रः प्रावृषीवाम्बुवाहः६२ ।।६६।।
इति स्कन्दपुराणे (महदर?) संवादे त्रिषष्टितमोध्यायः

सनत्कुमार उवाच
आहत्य भेरीः सन्नह्य१ दितिजा दानवाश्च ते ।
तदा सन्नाहयामासूर रथनागतुरङ्गमान् ।।१।।
गृहीततोयानानीय ततो दैत्या मतङ्गजान्३ ।
मदस्फातिकरान् दत्त्वा धूपाँश्च कवलानि च ।।२।।
तथा कक्षाश्च४ सन्नाह्या ग्रैवेयाँश्च सुसंस्कृतान् ।
अंकुशान् सर्वलोहाँश्च हेमरत्नपरिष्कृतान् ।।३।।

५६... संस्थिताः - क.,.. संस्थितं - क. । ५७ देवतैस्तदा - क ख । ५८ कन्या- क. । ५९ सापि विरंस्यति - ख.। ६० न्न - क. । ६१. .विजेतुर्वाक्यमेतद् विधृत्य - क. । ६२ उदपतनविलम्ब्य स्वच्छशुभ्रोरुहारन्नवजलधरनम्रा प्रावृषेवाम्बुवाहः - क., उदपतदथ शुंभः स्वच्छशुभ्रोरुहारो नवजलधरमत्तः - घ, प्रावृषीवाम्बुधारा - ख. । १ सन्नाह्याः - क. । २ सन्नाहमायासू - क. ख. । ३ दैत्येयान्मत्तदिग्गजां (न्) - क. । ४ कक्ष्याश्च - क. ।


करेणुषु समारूढाः समन्ताद् गजसादिनः ।
आबबन्धुर्विचित्राणि वर्माणि विधिवत्तदा । ।४।।
तिर्यगूर्ध्वमुखान् सस्यग्५ बबन्धुस्तोमरेषुधीन् ।
आयुधानि च सर्वाणि बबन्धुरुभयोरपि । ।५। ।
पार्श्वयोरासनानां तु त्रयाणामपि भागशः ।
वैजयन्तीपताकाश्च समुच्छिश्रियिरे ततः । ।६।।
तुरङ्गान् स्नातपीताँश्च वर्मिणो बद्धबालधीन् ।
आरूढा बद्धनिस्त्रिंशा७ दानवा लोहजालिनः । ।७।।
आरूढा रथिनः केचिद् रथान् युक्ततुरङ्गमान् ।
सायुधान्सपताकाँश्च प्रयस्तान् स्वक्षकूबरान् । ।८। ।
अथ शुंभो निशुंभश्च भ्रातरौ दानवेश्वरौ८ ।
आरुह्य बद्धकवचौ बलोन्मत्तौ महासुरौ । ।९ । ।
सांग्रामिकौ सुसंयत्तौ रथौ वल्गत्तुरङ्गमौ९ ।
सायुधौ सपताकौ च कार्त्तस्वरमयौ पृथक् । । 8.64.१० । ।
निर्जग्मतुर्महोरस्कौ प्रयुक्तजयमङ्गलौ ।
मागधैर्वन्दिभिः सूतैः स्तूयमानौ पुरःसरैः । । ११ । ।
ततो यातुं समारब्धास्तूर्याण्याहत्य संघशः ।
यत्रास्ते कौशिकी देवी तं शैलमभितोसुराः ।। १ २।।
अथ दानवसिंहानां ध्वजाः पेतुर्यियासताम् ।
अशिवञ्च शिवा नेदुर्दीप्तायां दिशि संस्थिताः ।। १३ । ।

पपात नभसो रेणुः कपोतोदरधूसरः ।
उपरिष्टाच्च सेनाया बभ्रमुर्गृध्रवायसाः ।। १४।।
प्रतीपञ्च ववौ तेषां रजोगर्भः समीरणः ।
ररास परुषं व्योम चचाल च वसुन्धरा । ।१ ५।।

५ मथो सम्यग् - ख. । ६ आरूढां (न) - क । ७... शा (न) - क. । ८ देवकण्टकौ - क. । ९ वल्गुतुरङ्गमौ - क. ख. ।


पराजयनिमित्तानि बुध्यमानाः सुरद्विषः ।
अभिजग्मुः कृतान्तेन कृष्यमाणा इवावशाः ।।१६।।
आदिदेशाथ दैत्येन्द्रो मूकमारक्षिकं तदा ।
गृहाण शुल्कमिति तां ब्रूहि गत्वा सुमध्यमाम् । । १७।।
स गत्वा वचनात्तस्य प्रणम्योवाच कौशिकीम् ।
शुल्कं किल गृहाणार्ये दीयमानं सुरद्विषा ।। १८। ।
एवमस्त्विति सा प्रोच्य तं विसृज्य च दानवम् ।
व्यवर्धत महायोगा योगमास्थाय कौशिकी ।।१९।।
अथ तस्याः समुत्पेदु१० र्गात्रेभ्यः प्रमदोत्तमाः ।
बद्धगोधांगुलित्राणाः सायुधा भीमदर्शनाः । ।8.64.२० । ।
वायसी वायसास्यानां स्त्रीणां कोट्या११ समावृता१२ ।
उपका१३ कोकिला१४ स्याभिस्तावतीभिर्महाबला । ।२१ ।।
प्रचण्डा सिंहवक्त्राभिर्देवीभिरभिसंवृता ।
उग्रा१५ व्याघ्रमुखाभिश्च परितः परिरक्षिता ।।२२ ।।
जया च गजवक्त्राभिर्जयन्ती१६ च महाबला ।
देवीभिः शिखिवक्त्राभिरमेया१७ भिर्वृतानघा ।।२३ । ।
जयमाना१८श्चवक्त्राभिर्हंसास्याभिः प्रभावृता१९ ।
प्रभावती च चक्राह्ववदनाभिर्महाबला ।।२४। ।
शिवा गोमायुवक्त्राभिरशिवा विद्विषां रणे ।
सरमा श्वमुखीभिश्च२० वृता परमदुर्जया ।।२५।।
विजया श्येनवक्त्राभिः सर्वतः परिरक्षिता ।
कंकास्याभिर्वृता मृत्युर्हन्त्रीभिः समरे रिपून् ।।२६।।
नियतिर्मद्गुवक्त्राभि२१ दुर्जयाभिः परैर्युधि ।
अशनिः२२ कुक्कुटास्याभिर्बह्वीभिरभिनादिता२३ । । २७। ।

१. समुत्पेतु... - ख. । ११ कोट्यः - ख । १२ समाश्रिताः - ख. । १३ उलूका (?) । १४ कौशिका... - ख. । १५ उषा - क. । १६... र्महाबलः - ख. । १७ रामया - क. । १८ जयमाला - ख । १९,?. स्समावृता - क । २० सुमुखीभिश्च - ख. । २१ नियती मद्गुवक्त्राभि - क. । २२ शकुनिः - ख. । २३. .रभिपालिता - क. ।

372

रेवती वृषदंशा च पूतना कटपूतना ।
आलम्बा२४ किन्नरी षष्ठी शकुनिर्मुखमण्डिका२५ । ।२८। ।
अलक्ष्मीरधृतिर्लक्ष्मीः पोतकी वानरी स्पृहा२६ ।
एताश्चान्याश्च कौशिक्याः संबभूवुर्महाबलाः । ।२९। ।
नानावेषधराभिश्च बह्वीभिः परितो वृता ।
बिभ्रतीभिर्विचित्राणि कवचान्यायुधानि च ।।8.64.३ ० । ।
ससर्ज कौशिकी तूर्णं२७ हैमान्सांग्रामिकान् रथान् ।
युक्तानश्वैर्मनोवेगैः सायुधानुच्छ्रितध्वजान् । ।३ १ ।।
वाजिनः सोपकरणान् मदोन्मत्तान्२८ मतङ्गजान् ।
आयुधानि तनुत्राणि तूर्याणि विविधानि च । ।३ २। ।
उवाच च महायोगा ता देवीः२९ पुरतः स्थिताः३० ।
देव्यः शुंभो निशुंभश्च भ्रातरौ देवकण्टकौ ।।३ ३ । ।
नेतुं मां३१ किल संग्रामे विजित्य रणमूर्धनि ।
आगतौ तौ बलोन्मत्तौ सहितौ दैत्यदानवैः३२ । । ३४। ।
तावहं३३ विनिहंस्यामि शेषान् हत सुरद्विषः ।
अजराश्चामराश्चैव भविष्यथ महाबलाः ।।३ ५। ।
इति ताभ्यो वरं दत्वा समादिश्य च तास्तदा३४ ।
देवीर्देवी महाभागा युद्धाय कृतनिश्चया३५ । ।३ ६।।
अथ सा स्वरथं महारथं३६ मनसाचिन्तयदच्युता तदा ।
तमुपस्थितमाशु चिन्तितं प्रददौ यं गिरिराजनन्दना ।।३७। ।
ज्वलदग्निसमानवर्च्चसं परितो रत्नमयूखमालिनम् ।
पुरतः समवेक्ष्य कौशिकी सुकृतं हेममयं नभश्चरम् । ।३८। ।
विविधायुधवर्मसंयुतं प्रचलत्पिङ्गसटाकलापिभिः ।
समरे जयिभिर्द्विषद्बलं३७ युक्तं केसरिभिर्महाबलैः ।।३ ९। ।

२४ अलक्ष्मीः - ख. । २५ मुखमण्डिता - क. । २६ स्मृता - ख. । २७ सिंहं (शीघ्रं?) - क. । २८ मनोन्मत्तान् - क. ख. । २९ देवी - क ख । - ३० स्थितां - क. ख. । ३१ मे - क. । ३२ शशिसूर्य (ा) इवा बभौ - ख. । ३३ तानहं - क । ३४ ततः पुनः - ख. । ३५ कृतनिश्चयाः - क. । ३६ साश्वरथं महारथा - ख. । ३७... द्विषां बलं -ख. ।

373

नृत्यन्मयूरेण विकीर्णभासा समुच्छ्रितेनातितरां दृढेन ।
हैमेन रत्नद्युतिभास्वरेण ध्वजप्रवेकेण विराजमानम् । ।8.64.४० । ।
जग्राह विजया छत्रं सिंही सूता तदाभवत् ।
जयन्ती च जया चास्या दधतुश्चामराण्यथ । ।४१ । ।
ततः सा बद्धकवचा विविधायुधधारिणी ।
आरुरोह रथं दिव्यं स्तुताशीर्जयमङ्गला३८ । ।४२ । ।

संपूर्णचन्द्रद्युतिनाथ मूर्ध्नि समुच्छ्रितेनातपवारणेन ।
संवीज्यमाना च विचित्रदण्डैः सुचामरैरिन्दुमरीचिगौरैः । ।४३ । ।
ततस्तास्तूर्यमाहत्य नेदुर्नादान् पृथग्विधान् ।
देव्या देव्यः सुसंयुक्ता३९ बभूवुश्च पुरस्सराः । ।४४। ।
तेन नादेन दैत्यानां हृदयानि चकम्पिरे ।
विससर्ज शकृन्मूत्रं हस्त्यश्वञ्चासुरे बले । ।८५। ।
चकम्प इव भूर्लोकश्चुक्षुभुः सागरा इव ।
विचेलुरिवशैलेन्द्राः पूरितं व४० नभस्तलम् । ।४६।।
तदा तद्देवतानीकं पताकाध्वजशोभितम् ।
विरेजे विनदत्तूर्यं सितनिस्त्रिंशसंकुलम्४१ । ।४७।।
बलाकापंक्तिशबलं सेन्द्रचापं महास्वनम् ।
नभस्ये मासि सतडिद् वृन्दं जलमुचामिव । ।४८।।
ततो जगाम संयच्छद्४२ दैत्येन्द्राभिमुखं तदा ।
जवेन देवतानीकं संक्षिप्येव दिशो दश४३ । ।४९ । ।
अथ ददृशुरनीकमागतं सुररिपवो विविधोच्छ्रितध्वजम् ।
प्रतिभयजननं महास्वनं प्रलय इवाम्बुदवृन्दमुन्नतम् ।। 8.64.५० । ।
इति स्कन्दपुराणे शुम्भनिशुम्भयुद्धे सैन्यवर्णनं नाम चतुःषष्टितमोध्यायः

३८ कृतार्था जयमङ्गला - ख । ९ सुसंयत्ताः - ख । ४० प्रस्फोटेत - ख., पूरिरतेनेव - क. । ४१ शितनिस्त्रिंशसंकुलम् - ख. । ४२ संयत्तं - ख । ४३ ददर्श ह - ख, दशो दिशः - क. ।



सनत्कुमार उवाच
अथ ता देवताः क्रुद्धा दैत्यानग्रेसराँस्तदा ।
निजघ्नु१र्विविधैः शस्त्रैस्ते च ता विभिदु२ र्युधि । । १ । ।
दैत्या नानायुधोपेता देवीर्जघ्नु३ स्तदा रणे ।
अबला५ बलिनो वीराः समरेमरविद्विषः ।।२ ।।
तुरङ्गिणस्तुरङ्गस्थाः पदातींश्च७ पदातयः ।
रथिनो रथसंस्थाश्च गजस्था८ गजसादिनः९ ।।३ । ।
रथा१० नागास्तुरङ्गाश्च११ रथान्१२ नागान् तुरङ्गमान् ।
पदातीः१३ सादिनः शूराः सादिनीश्च१४ पदातयः ।।४। ।
देव्योपि युधि संक्रुद्धाः पत्तिसादिरथ१५ द्विपान् ।
निर्जघ्नु१६र्दानवेन्द्राणां प्रासशक्ति परश्वधैः१७ ।।५।।
पादैश्च पिपिषुः शूरान्निपात्य भुवि दानवान् ।
विभिदुर्मुष्टिभिः काश्चिच्छिरांसि सुरविद्विषाम् ।।६।।
विदार्योरःस्थलं काश्चित् समरे दर्पशालिनाम् ।
पपुश्च रुधिरं देव्यः प्राणैस्सह सुरद्विषाम् ।।७। ।

छिन्नाँश्च खण्डशः केचिद्१८ हेतीनुत्थाय१९ वेगिताः ।
निर्जघ्नु२० र्देवताः क्रुद्धा मुष्टिभिर्वज्रसंहतैः ।।८। ।
केचिन्मदाम्बुनिष्यन्दश्यामगण्डस्थला गजाः ।
पिपिषुः परमक्रुद्धाः समरे देवतारथान्२१ ।।९ ।।
कपोलभित्तिसंलीनमत्तषट्पदपंक्तयः ।
हतारोहा गजाः केचिन्निर्जघ्नुर्दैत्यदेवताः ।। 8.65.१ ०।।
वर्मिणः केचिदुद्भ्रान्तशितनिस्त्रिंशपाणयः ।
चिच्छिदुर्देवतानीकं देवता दानवानपि । ।१ १ ।।

१ निर्जघ्नु - क. । २ ताम्बिभिदु.. - क., मिमृदुः - ख. । ३ देवीं जघ्नु - क. । ४ भयाद् - ख. । ५ जवना - घ.। ६ धीराः - क. । ७ पदातीश्च - ख । ८ गजाश्च - ख. । ९... ङ्गजसादिनः - क- । १० रत्रा - क. । ११ तुरङ्गाश्च - क । १२ रथौ - क. ख । १३ पादातीः - क. । १४ सादिनश्च - ख. । १५ रथान् द्विपान् - क. । १६ निजघ्नु - क. । १७ प्राशशक्तिपरश्वधैः - क. । १८ काश्चिद् - ख. । १९ नुच्छ्राय - ख. । २० निजघ्नु - ख. । २१ देवदानवान् - ख ।


मत्ताः प्रतिच्छन्न२२मुखाँश्च२३ केचिद् गन्धेन विज्ञाय गजान्२४ गजेन्द्राः ।
घ्रात्वा तु गन्धं सहसाभिजघ्नुराधोरणैरप्यभिसंगृहीताः२ ५ ।। १ २। ।
विस्फार्यमाणानि महाधनूंषि महाबलैर्दानक्योधमुख्यैः ।
तारं विरेसुः२६ समराजिरेषु क्रौञ्चा इव व्योम्नि शरन्निशासु२७ । ।१ ३ ।।
तूर्यस्वनैर्ज्यातलसन्निपातैर्नागाश्चनादै रथनेमिघोषैः ।
संपूर्णकुञ्जोदर२८ कन्दरोसौ२९ विन्ध्यश्चचालेव तदा समग्रः३० ।।१४। ।
देव्यः समुत्सार्य रणे रिपूणामुच्चैर्विनेदुः प्रसभं बलानि ।
नेदुश्च नादान् परिहृष्टचित्ताः प्रोत्सार्य देवीर्युधि दैत्ययोधाः ।। १५ । ।
बलानि किञ्चित्क्षतजोक्षितानि प्रचक्रिरे तत्र गतागतानि ।
महावनानीव समीरणेन समीरितान्युद्गतपल्लवानि ।। १ ६। ।
छिन्नानि वक्त्राणि पुरस्सराणां विचित्रहैमाभरणोज्ज्वलानि ।
देवीभिराजौ पतितानि रेजुर्निकृत्तनालानि यथाम्बुजानि ।। १७।।
प्रत्याहता विद्रुतभीतनागा सा देवताभिर्निहताश्वयोधा ।
दैत्येन्द्रसिंहैः प्रतिसन्निवृत्तैर्दोलायमानेव चमूर्बभूव । ।१८। ।
हता निपेतुः समरे नदन्तो देवद्विषामञ्जनशैलकल्पाः ।
देवोभिराबद्धविचित्रघण्टा मर्मातिगैर्वाणवरैर्गजेन्द्राः । ।१ ९ ।।
बलानि तेषामभिसृत्य वेगादभ्याहतान्याश्वपसेरुराजौ ।
महोदधिं प्राप्य विवृद्धिकाले प्रत्याहतानीव सरिज्जलानि ।।8.65.२० ।।
देव्यश्च दैत्याश्च महासमाजे विरेजिरेन्योन्यविसक्तवाणाः३१ ।
संसक्तभासोपगमे घनानामभ्रे समूहा इव तारकाणाम् ।।२१ । ।
उद्घुष्य नामान्यथ३२ दानवेन्द्रा निर्जग्मुराशु३३ स्वबलाद्रथस्थाः ।
क्रुद्धाः सुयत्ता रथिनां वरिष्ठा विस्फार्य३४ चित्राणि शरासनानि ।।२२।।

देव्योपि संयत्ततरा रथस्थाः क्रुद्धा जवेनाथ तदाभिसस्रुः ।
मेघस्वनं प्रत्युदियाय षष्ठी कार्तस्वरं मृत्युरुदीर्णकोपा३५ । । २३।।

२२ प्रतिच्छिन्न ख। २३ मुखाश्च क. ख. । २४ गजं क । २५ रस्तुतिसंगृहीताः २६ विनेदुः - ख. । २७ क्रौञ्चा इव व्योम शरन्निशान्ते - क., व्योमसरा (?). शरद्व्योमशरन्निशान्ते - ख । २८ कुमभोदर - ख. । २९ कन्दरेषु - क. । ३० समग्रं - क. । ३१ विषक्तबाणः - क., विभक्तबाणाः - ख । ३२... माणान्यथ - क. । ३३ राजौ - ख. । ३४ विस्तार्य - ख. । ३५ वेगं - ख, वेगा (?) ।



द्रुमेण लक्ष्मीरथ३६ संयुगस्था३६ मयेन कान्तिः सरमा मुरेण ।
घनेन चण्डा नियतिः खरेण प्रभावती धुन्धुमयात् सरोषा३८ ।।२४। ।
दैत्या युयुत्सोत्सुकमानसास्ते३९ देवीः समायास्सभुजैस्सशस्त्रैः४० ।
अभ्याययुः शीघ्रममृष्यमाणाः ख्यातावलेपाः स्वरथैस्सुयत्ताः ।। २५ । ।
ज्योतिःप्रकाशान्तपनीयपुंखानाकर्णपूर्णायतचापमुक्तान् ।
संप्रेषयामासुरदीनसत्वा बाणप्रवेकान्युधि देवतानाम् । । २६। ।
देव्योथ तेषां निशितान्सुपुंखान्मर्मच्छिदो दूरगमान्सुपत्रान् ।
आगच्छतां दानवयूथपानां बाणाननन्तान्ससृजुस्तथैव । ।२७ ।।
ते बाणमुख्या विविधा विरेजुरन्योन्यमुक्ता व्यतिषज्यमानाः ।
ते पूर्णमास्यां विघने दिनान्ते भासः४१ समूढा इव४२ चान्द्रसौराः४३ ।। २८। ।
छिन्ना निपेतुर्युधि देवताभिर्भुजाः सशस्त्रा दितिजाधिपानाम् ।
निरस्तभोगा निबिडा बृहन्तो निगीर्णजिह्वा इव पन्नगेन्द्राः । ।२९। ।
मेघस्वनस्याथ रणे तदानीं क्रुद्धा शरौघान्विससर्ज षष्ठी ।
आगच्छतस्तानभितः पृषत्कैश्चिच्छेद दैत्यः शतशोन्तरिक्षे । । 8.65.३० । ।
बाणानथोद्वीक्ष्य तदा निकृत्तान् लघीयसोन्यान्विससर्ज तूर्णम् ।
दैत्योपि तानापततः पृषत्कान्व्रातैः शराणां बहुशश्चकर्त । । ३१ ।।
निकृत्य४४ बाणान्दितिजः पुनस्तान्४५ चिक्षेप षष्ठ्या दश रुक्मपुंखान्४६ ।
तानाशु षष्ठी प्रतिवार्य दैत्यं विव्याध षष्ठ्या तपनीयपुंखैः ।।३ २।।
स तैर्विभिन्नो रुधिराक्तमूर्तिः प्रविह्वलः४७ च किंचिदवाग् बभूव ।
अपाकरोत्तं समरात् स्वसूतो४८ रथेन जाम्बूनदचित्रितेन ।।३ ३ । ।
कार्तस्वनः४९ काञ्चनचित्रपुंखान्५० ससर्ज देव्याः५१ समरे पृषत्कान् ।
चिच्छेद तान् मृत्युरुदारपुंखैरनागता५२ नेव शराञ्छरौघैः ।।३४।।

३६.. र्युधि - ख । ३७ संयुजस्थे - ख. । ३८ मियाय रोषाद् - ख. । ३९ ययुः सोत्सुकमानसास्ते - क. । ४०...त्स भुजैः सहस्रै - - क. । ४१ भासां - क. । ४२ समूहा - क । ८३ चन्द्रसौराः - क. ख. । ४४ विकृत्य - क. । ४५ पुरस्तात् - क ख । ४६ रूक्षपुंखान् - क । ४७ सुविह्वलः - ख. । ४८ स सूतो - ख. । ४९ कार्तस्वरः - ख । ५० कार्मुकाश्चित्राणः? - ख. । ५१ दैत्याः (त्यः) - ख. । ५२... रनाशयं - ख.,... र्नभोगता (?) ।

छित्त्वा शराँस्तस्य शरैर्विचित्रैर्विव्याध तं वक्षसि पञ्चषष्ठ्या५३ ।
भिन्नः स तैराशु तथा विरेजे व्योम्न्यर्कपादैरिव५४ वारिवाहः ।।३५।।
अश्वांश्च तस्याशु जघान मृत्युः पृथक् पृषत्कै५५ स्तपनीयपुंखैः ।
आप्लुत्य दैत्योथ रथाद्धताश्वात्प्रगृह्य चर्मासिवरञ्च धौतम् । ।३ ६। ।
क्रुद्धो नितान्तायतरक्तनेत्रो वेगेन देवीमभितः ससार ।
तच्चर्म तस्यापततः५६ शरौघैश्चकर्त्त मृत्युः शतशश्शिताग्रैः ।।३७। ।
स कृत्तचर्मावरणो५७ सुरेन्द्रो निस्त्रिंशमुद्यम्य निशातधारम्५८ ।
अभ्यद्रवन्मृत्युमभूत्तदानीं खे रोहिणीं मेघ इवाभिविद्युत् ।। ३८।।
तमापतन्तं युधि कालकल्पं मृत्युः शरैरुग्रभुजङ्गकल्पैः५९ ।
जघान मर्मस्वभिलक्षितेषु व्ययोजयच्चासुभिरेनमाशु । । ३ ९।।
लक्ष्मीर्द्रुमं बाणवरैरजय्या६० समाकिरद्वारणराजलीलम्६१ ।
कर्णान्तमुक्तै६२ र्निशितैरजिह्मै रणाजिरे चारुसुवर्णपुंखैः ।।8.65.४० ।।
अजिह्मगास्ते विविधाः सुपत्रिता द्रुमस्य गात्रेषु निपेतुराहवे ।
स तैर्विचित्रैः शुशुभे विषक्तैर्महाद्रुमः पक्षिगणरिवाश्रितैः ।।४१ । ।
लक्ष्मीं ततः किंपुरुषाधिपोसौ विव्याध बाणैर्दशभिः सुपुंखैः ।
वक्त्रे स पूर्णेन्दुसमानवक्त्रां बाह्वोः पृथक् चाष्टशतेन६३ धीरः६४ । ।४२ ।।
अचिन्तयन्तीषु६५ वरान्वरास्या मुखेस्य तीक्ष्णान्निचखान बाणान् ।
अन्यानसख्याँश्च६६ पृथक् शरीरे सुपत्रितान् हाटकमृष्टपुंखान्६७ ।।४३ ।।
लक्ष्म्यास्ततो दैत्यपतिः शितेन भल्लेन चिच्छेद रथे ध्वजाग्रम्६८ ।
अश्वांश्च तस्याश्चतुरश्चतुर्भिः सूतं च विव्याध शरेण तूर्णम् । ।४४। ।
नाराचमादाय ततोस्य लक्ष्मीर्जघान सूतं युधि देवशत्रोः ।
विव्याध वाहाँश्च पृथक्पृषत्कैध्वजञ्च चिच्छेद रथस्य६९ तूर्णम् ।।४५।।

५३.. शष्ठ्याः - ख. । ५४ यथार्कपदैर्दिवि (?) । ५५ पृथक्तै - क ख. । ५६ तमन्तकस्यापततः - ख. । ५७ सत्कृत्य- क, कृत्तचर्मावदनो - ख. । ५८ निशीतधारैः - क., निशीतधारां - ख. । ५९.. तुल्यैः - क. । ६०... रजय्यं - ख.। ६१ वारणराजलीला - क. । ६२... कृष्टैः (?) । ६३ पृषत्काष्टशतेन - क. । ६४ वीरः - ख. । ६५ अचिन्तमानेषु -क. । ६६ अनेकसंख्यांश्च - क. । ६७... पृष्टपुंखान् - ख. । ६८ रथध्वजाग्रे - ख. । ६९ रथेतथाष्टौ - क. ।

378

यन्त्रा विना तस्य रथं तदानीं ते सायकैरप्रतिमैः प्रतप्ताः७० ।
संग्रामभूमेरपनिन्युरश्वाः७१ प्राणानिव स्वान्७२ परिरक्षमाणाः ।।४६। ।
कान्तिर्मयं बाणशतैरवाकिरन्मयश्च कान्तिं निशितैः शरौघैः ।
नीहारपातैरिव सान्धकारं तदा७३ तयोरन्तरमास तत्र । ।४७। ।
आदानसन्धानविकर्षणेषु स्थानक्रमप्रग्रहतेजनेषु७४ ।
शिक्षागुणैस्तावपरस्परेण विशेषयामासतुराजिमध्ये ।।४८। ।
कान्तिर्मयास्तान्निचकर्त बाणान्मयश्च कान्त्या विशिखान्विमृष्टान् ।
छिद्रं समासेदतुरप्रधृष्यौ किञ्चिन्न तौ यत्र७५ परस्परस्य ।।४९।।

अश्वेषु सूते सरथे७६ ध्वजे च सर्वेषु गात्रावयवेषु चास्य७७ ।
अजिह्मगान् हाटकमृष्टपुंखान्७८ मयस्य कान्तिर्निचखान बाणान् ।।8.65.५० ।।
मयश्च कान्तिं सरथा'७९ ससूतां८० सचारुचित्रध्वजवाजिमुख्याम् ।
संछादयामास शितैः पृषत्कैर्वनस्थलीं मेघ इवाम्बुवर्षैः । ।५१ । ।
क्रुद्धाथ कान्तिः समरे मयस्य नाराचमुख्येन सुपत्रितेन ।
सूतं जघानाशु रिपोस्तदानीमष्टाभिरष्टौ८१ तुरगाँश्च बाणैः ।।५२।।
हताश्वसूतो विरथो८२ मयोथ निस्त्रिंशमादाय निशातधारम्८३ ।
ज्ञात्वैव कान्त्या समरे प्रभावं विहाय युद्धं वियदुत्पपात । ।५३ । ।
विव्याध तीक्ष्णैः सरमा रणाजिरे बाणैर्मुरं दानवदैत्ययूथपम् ।
दैत्योपि बाणैः सरमामजिह्मगैरभ्याहनद् गृध्रमयूरपत्रिभिः ।। ५४।।
क्रुद्धाथ देवी निशितेन तस्य चिच्छेद भल्लेन धनुर्विचित्रम् ।
अन्यद्धनुः सोथ तदा८४ गृहीत्वा विव्याध देव्याश्चतुरस्तुरङ्गान् .। ।५५। ।
ते विह्वलाः शोणितमुद्वमन्तो दैत्येन्द्रबाणाभिहतास्तुरङ्गाः ।
भूमौ निपेतुः समरे श्वसन्तः प्राणाञ्जहुश्चाशु समं समस्ताः । ।५६ ।।
क्रुद्धाथ देवी सरमासुरस्य निस्त्रिंशमुद्यम्य सुपीतधारम् ।
उत्पत्य खं तस्य तदा जघान यन्तारमश्वाँश्च महाप्रमाणान् ।।५७।।

७० सुतप्ताः - ख । ७१... राशु - क. ख. । ७२... वाश्वाः - क. ख. । ७३ सान्धकारै - ख. । ७४ स्थान-ग्रहप्रग्रहतेजनेषु - घ. । ७५ तत्र - ख- । ७६ सूतेषु रथे. - ख. । ७७. . वात्र - क. । ७८ पृष्टपुंखान् - ख. । ७९ सरथं - क. ख. । ८० ससूतं - क. ख. । ८१ रथं तथाष्टौ - घ. । ८२ हताश्वसूताद्विरथो - क., ससूतं सरथं - ख.। ८३ निपीतधारम् - क. । ८४ शीघ्रतरं - ख. ।



मुरोथ वेगेन तदान्तरिक्षमुत्पत्य कोपान्निहताश्वसूतः ।
विव्याध देवीं दशभिःसुतीक्ष्णैः८५ शरैरुरस्युग्रभुजङ्गकल्पैः । ।५८। ।
अचिन्तयित्वा सरमा शराँस्तान्८६ धनुर्विचिच्छेद तदा मुरस्य ।
स कृत्तधन्वा वियतीन्द्रशत्रुरन्तर्दधे संयुगमाशु हित्वा ।।५९। ।
विव्याध चण्डा घनमापतन्तं शरैः शिताग्रैर्युधि रुक्मपुंखैः ।
विद्धः स तैर्दैत्यपतिर्बभासे करैरिवेन्दोरसितः पयोदः ।।8.65.६ ०। ।
अभ्यद्रवत्तानविचिन्त्य वाणाँश्चण्डां घनः सायकजालवर्षी ।
आगच्छतस्तस्य शरैस्सुपत्रैर्विव्याध चण्डा रथवाजिमुख्यान् ।।६१ ।।
चिच्छेद दैत्योपि समुच्छ्रिताग्रं ध्वजं तुरङ्गाँश्च जघान देव्याः ।
हित्वा रथौ ताववतीर्य भूमौ८७ गृहीतचर्मासिवरौ प्रयत्तौ ।।६२ ।।
विचेरतुर्मण्डलमाजिमध्ये भूमिं तदाग्राङ्गुलिभिः स्पृशन्तौ ।
ताँस्ताँश्च मार्गान्८८ लघुपादचारौ छिद्रं न चान्योन्यमवापतुस्तौ ।।६३ ।।
अभिप्लुतोच्चप्लुतसिंहपातान्८९ निवृत्तकाक्रीडितकोर्ध्वबाहून् ।
खगापयाताभिहतापयातान्९० निषण्णकाविद्धशिरोभिघातान्९१ ।।६४। ।
उत्प्लुत्य वेगेन तदाथ तस्य शिरोधरामाशु चकर्त चण्डा ।

स कृत्तमूर्धा निपपात तस्यां संग्रामभूमावुरसाशु दैत्यः । ।६५।।
स शोणितादिग्धवपुस्तदानीं घनः परासुः पतितो धरण्याम्९२ ।
रराज सन्ध्याच्छुरितोरुमूर्त्तिर्वियद्गतो नील इवाम्बुवाहः९३ ।।६६ । ।
विव्याध तीक्ष्णैर्नियतिः सुपत्रैः खरं शरैर्वक्षसि हेमपुंखैः ।
आयोधने संमुखमापतन्तं भल्लेन चास्य ध्वजमुच्चकर्त९४ । ।६७।।
विद्धः स तैरभ्यपतन्सरोषो देवीं जिघांसुः समरेरिहन्ता ।
गुर्वी गदां चाशु तदा गृहीत्वा चिक्षेप देव्या रुधिरात्तमूर्त्तिः ।।६८ । ।
सा दानवाग्र्येण गदा९५ प्रमुक्ता९६ विचित्रहेमोज्ज्वलचारुघण्टा ।
संचूर्णयामास रथं नियत्याः९७ सूतं ध्वजं चाशु९८ समुच्छ्रिताग्रम् ।।६९।।

८५ शिताग्रैः - क. । ८६ सरोषा - ख. । ८७ भूमिं - क. ख. । ८८ मात्रां - क. । ८९... यातान् - क. । ९० - पथानाभिहतापयातान् - क. ९१ शताभिघातान् - ख. ९२ धरित्र्यां - ख. । ९३ नीच इवम्बुवाहः - क. । ९४...माचकर्त - ख. । ९५ तदा - क. । ९६ प्रयुक्ता - ख. । ९७ नियन्त्री (म्) - क., नियन्ता - ख. । ९८ चारु - क.।

380

उत्पत्य तूर्णं नियतिः स्ववाहात्९९ क्रोधेन संरक्तविलोलनेत्रा ।
अभ्येत्य तं दानवयोधमुख्यं खड्गेन मध्येस्य शिरः पफाल ।।8.65.७० ।।
स दानवो विस्फुटितोत्तमाङ्गः क्षितौ विरेजे स्रुतरक्तधारः ।
वज्रेण भिन्नः शिखराग्रदेशे गिरिर्यथा धातुरसप्रवाही ।।७१ । ।
प्रभावती धुन्धुमजिह्मयातैः शिलीमुखैरभ्यहनत्सुपत्रैः ।
उरस्युदारा१०० दशभिः शिताग्रैर्घनाघनव्रातसमानवर्णैः१०१ ।।७२। ।
जघान सा षोडश देवतारेस्तुरङ्गमान् षोडशभिः पृषत्कैः ।
निहत्य चैकेन रथेस्य१०२ सूतमेकेन चास्य ध्वजमुच्चकर्त ।।७३।।
धुन्धुर्गदां भारसहस्रगुर्वी चिक्षेप१०३ कार्तस्वरचारुघण्टाम् ।
तामापतन्तीं शतशश्चकर्त्त प्रभावती दैत्यपतिप्रमुक्ताम्१०४ । ।७४। ।
आदाय दैत्यः परिघं१०५ महान्तमाप्लुत्य१०६ वाहादभितः ससार ।
देवीमसा१०७वञ्जनशैलनीलो रणाजिरे काल इवात्तदण्डः । ।७५। ।
अभ्यापतन्तं युधि दानवेन्द्रं देवी शरैरभ्यहनत् सुपत्रैः ।
देव्या१०८ समस्तानविचिन्त्य बाणानभ्येत्य तामाहवमूर्ध्नि रोषात् ।।७६।।
उद्भ्राम्य वैवस्वतदण्डकल्पं लौहं प्रयस्तं१०९ परिघोरुबाहुः ।
न्यपातयत्तं परिघं रथेस्या गिरेर्नितम्बे कुलिशं यथेन्द्रः ।।७७। ।
अचूर्णयत्तं रथमाशु देव्याः साश्वं ससूतध्वजहेमचक्रम् ।
कालायसोसौ परिघोसुरास्तो वेगेन तत्रापससार देवी११० ।।७८।।
दृष्टा स तां तत्र तदापयातां तमेव लौहं परिघं गृहीत्वा ।
अभ्यद्रवद् दानवयोधमुख्यो दिवीव चित्रामसितः१११ पयोदः । ।७९। ।
उत्पत्य सा दिव्यवरास्त्रमुक्तैः क्षुरप्रमुख्यैः परिघञ्चकर्त ।

उद्यम्य मुष्टिं निबिडं ततोस्या भूयोथ११२ दैत्यो वियदुत्पपात ।।8.65.८० । ।

९९ स्वबाहोः - क. । १०० उरःसुधारा - ख. । १०१ घनेन प्रातःसु समानवर्णैः - ख- । १०२ रथस्य - क, रथे स -ख. । १०३ चिच्छेद - ख. । १०८ प्रयुक्ता - ख. । १०५ दैत्यम्परिघं - क- । १०६. मासव्रु - क. । १०७ समा - क.ख. । १०८ देव्याः - क. । १०९ प्रयन्ता (तः?) - क. । ११० देवीं - क. । १११... वसितः - ख. । ११२ भुजेथ -ख ।

381

तं मर्मगैर्मर्मसु बाणमुख्यैः संताडयद्दानवमाशु देवी ।
भिन्नः स तैर्मर्मगमैः सुपुंखैरन्तर्दधे दानवयोधमुख्यः ।।८१ ।।
अथ समरमपास्य योधमुख्यै-
र्विहतपराक्रमपौरुषैरपेतैः११३ ।
सुरपतिरिपवो विनद्य नादान्
द्विरदवरानधितस्थुरात्तशस्त्राः ।।८२। ।
इति स्कन्दपुराणे शुंभनिशुंभसंग्रामे देवीयुद्ध नाम पञ्चषष्टितमोध्यायः

सनत्कुमार उवाच
देव्योपि तेषां विदितप्रयत्ना गजोत्तमानारुरुहुः सयत्नाः ।
शुचीन्मदाम्बुस्रवतः२ सुदन्तान् प्रशस्तगात्राम्बरहस्तपक्षान्३ (?) ।।१ ।।
सुपुष्करानुन्नतवृत्तकुम्भान्४ सुबालधीनञ्चितचारुकर्णान् ।
सुदन्तवेष्टान् कलविङ्कनेत्रान्सुवक्षसः स्वासनपृष्ठवंशान् ।।२।।
साङ्ग्रामिकानग्रजवान्५ वयःस्थान्सुशिक्षितानुन्नतपूर्वकायान् ।
आबद्धवर्मायुधचित्रघण्टान्६ समुच्छ्रितोरुध्वजवैजयन्तीन् ।।३ ।।
तासां पताकाध्वजशोभितानि विचित्रनानायुधभूषणानि ।
मातङ्गवृन्दानि तदा बभूवुर्वने वनानीव समागतानि । ।४। ।
दैत्यापि ते वारणमूर्ध्नि षण्णा७ विस्फारयन्तो विबभुर्धनूंषि ।
सेन्द्रायुधाः साशनिशब्दगर्भाः शैलेषु मेघा इव सन्निलीनाः ।।५।।
सैन्यानि तान्याहनने गजानामाधोरणैराश्वभिचोदितानि ।
अन्योन्यमापेतुरभीरितानि८ वातेन वृन्दानि यथा घनानाम्९ । ।६ ।।
वेगेन नागानभिसृत्य नागा मदान्मदश्याममुखान्विषाणैः ।
लोहाभिनद्धैर्बिसकाण्डगौरैः शम्बूकदेशेष्वभिजघ्नुराजौ१० ।।७। ।

११३... रुपेतैः - क. ख. ।
१ समन्तात् - क., प्रमत्तान् - ख. । २ शुचिर्मदा वर्ष्मवतः - क., आविर्मदावद्धवैतः - ख. । ३ प्रशस्त-गात्राम्बरतः सुहस्तान् - ख. । ४ वृक्षकुम्भान५ - क. । ५... नुग्रजवान् - क. । ६ चर्मायुधचित्रघण्टान् - क. । ७ घण्टा - ख. । ८ समीरितानि - क ९ घनाघनानाम् - ख । १०... रभिजघ्नुराजौ - क. ख. ।

382

प्रसार्य हस्तानभितश्च केचिद्दानानुगन्धं द्विरदाभिसेरुः ।

आधोरणैरङ्कुशपाशवाग्भि११ रविध्यमानापि मदाभिदृप्ताः१२ ।।८।।
छिन्नानि पेतुर्निशितैः क्षुरप्रैः समुच्छ्रितान्यातपवारणानि ।
चित्राः पताका विविधा ध्वजाश्च परस्परेणाहनने गजेभ्यः१३ ।।१३ ।।
योधा निपेतुः परिनिष्टनन्तो विद्धाः शरैर्मर्मसु देवताभिः ।
सफेनमास्यै१४ रुधिरं वमन्तो धनूंषि सज्जानि१५ करैर्दधानाः । ।8.66.१ ० । ।
नागा निपेतुः१६ परितोभिपद्य१७ मर्मातिगै१८र्बाणवरैर्विभिन्नाः ।
देवीभिराजौ दितिजाधिपानां वाताभिनुन्ना इव गण्डशैलाः ।।१ १ ।।
मातङ्गमुख्यान्पतितान् परासून्१९ रणाजिरे नीलगिरीन्द्रकल्पान् ।
गन्धेन नागाः समदाः२० परीत्य विनम्य केचिद्२१ वदनैर्विनेदुः२२ । ।१२।।
छिन्नानि वक्त्राणि सकुण्डलानि भुजास्सशस्त्राश्च२३ सुचन्दनाक्ताः ।
पेतुर्गजेभ्योसुरयूथपानां देवीभिराजौ निशितैः क्षुरप्रै२४ ।। १३ । ।
चुकूजुरुच्चैः परितो धनूंषि विनेदुराहत्य सुरारिमुख्याः ।
विपुस्फुरुर्ज्याः परिकृष्य मुक्ताः शराभिविद्धाश्च२५ गजा निषेदुः । । १४।।
नागैः पतद्भिर्विशिखाभिविद्धैः समुच्छ्रितोरुध्वजचारुपृष्ठैः ।
आस्तीर्यते भूरनिलप्रनुन्नैः सतालवृक्षैरिव शैलपादैः ।। १५।।
नागा गजानाहननेभिजघ्नु२६र्दैत्याश्च देवीर्दितिजाँश्च देव्यः ।
दैत्यान् गजेन्द्रा द्विरदांश्च दैत्याः क्रुद्धाः२७ सरोषानभिसृत्य तत्र ।। १६।।
शस्त्राभितप्तैः पतितैस्समन्तान्मातङ्गवृन्दैर्गिरिसानुकल्पैः ।
सञ्चारयोग्या न बभूव भूमिरायोघने दैवतदानवानाम ।।१७ ।।
अभ्यदितानि स्वबलानि दृष्ट्वा देवीभिराजौ निहतद्विपानि ।
शुम्भो निशुम्भश्च समाजभूमिमाजग्मतुर्दैत्यपती रथस्थौ ।। १८। ।
अग्रेसरैः पत्तितुरङ्गनागैर्व्रातैश्च देवद्विषतामुपेतौ ।
विस्फारयन्तौ धनुषी विचित्रे युद्धाय यत्तौ परिघोरुबाहू । । १ ९।।

११ ... राविध्यमानापि - क ,.. .रासि... - ख. । १२. भिमदाविदृप्ताः - क. ख.,... पि मदावदृप्ताः - ख. । १३ गजाश्च - क. । १४.. न्सै - क. । १५ सज्यानि - ख. । १६ निषेदुः - क. । १७.. .पद्मा - क. ख. । १९ पद्मातिगै- क. । १९ गतासून् - क. । २० समदान् - क. । २१ किंचिद् - क. ख. । २२.. .द्विरेदुः - क. । २३ स - क. ख.। २४ निशितक्षुरप्रैः - क. । २५ शरातिविद्धाश्च - क. । २६ जग्मु - क. । २७ क्रुधा - क. ।



ज्ञात्वा तयोरागमनं तदानीं देवी चलत्पिङ्गलकेशराढ्यान् ।
सञ्चोदयामास रथस्य सिंहान् विस्फारयन्ती समरे धनूंषि ।।8.66.२ ०।।
ज्यानिं जवस्याथ तुरङ्गमाणां मदप्रमोषञ्च महाद्विपानाम् ।
चेतोविमोहं सुरविद्विषां च चापस्वनेनैव२८ चकार देवी ।।२१ ।।
आजौ समास्थाय परं प्रयत्नं शराः सुराणां रिपुभिः समस्ताः ।
अप्राप्य देवीं पतिताः पृथिव्यां पराजयं प्राहुरिवासुराणाम्२९ । ।२२। ।
गभस्तिभिः स्थावरजङ्गमानि व्याप्नोति यद्वत् सविता दिनेषु ।
तद्वच्छरौघैर्दितिजाधिपानां रणाजिरे व्याप बलानि देवी ।।२३ । ।

निपेतुराशु व्यसवस्तुरङ्गमा विचस्खलुर्मत्तगजाः क्षरन्मदाः ।
चकम्पिरे योधवराः सुरद्विषां समं३० समस्ताः समरे शराहताः ।।२४।।
अर्च्चिर्भिरिद्धैर्ज्वलितो यथानलः कक्षाणि शुष्काणि दहत्यवारितः ।
दीप्तैः शरोघैः३१ समरेमरद्विषां सैन्यानि तद्वत् प्रददाह कौशिकी ।।२५।।
छायां३२ यथा स्थावरजंगमानां मध्यन्दिनेल्पां३३ कुरुते विवस्वान् ।
देवी तथा तां ध्वजिनीं रिपूणामल्पावशिष्टां समरे चकार ।।२६।।
आहूय देवीमथ दानवाधिपौ विस्फार्य चापे महती भिसेरतुः ।
तीक्ष्णैः सुपत्रैर्विशिखैश्च कौशिकीं संछादयामासतुराहवाजिरे ।।२७। ।
चापेषु यत्तौ३४ हरिषु ध्वजेषु महाभुजौ क्रोधपरीतचित्तौ ।
दैत्येश्वरौ संयति देवताया निचख्नतुर्वाणवरान्सुपत्रान् । ।२८।।
दैतेश्वरास्तानथ सायकौघानचिन्तयित्वा रिपुदर्पहन्त्री३५ ।
विव्याध दैत्यौ३६ युधि रुक्मपुंखै३७स्सुपर्वभिर्वाणवरैस्तुपत्रैः ।।२९।।
दैत्यावपीषूनविचिन्त्य३८ शूरौ गदे प्रगृह्योज्ज्वलचारुघण्टे ।
उद्भ्राम्य३९ यत्नातिशयेन देव्या रणाजिरे चिक्षिपतुर्बृहत्यौ ।।8.66.३ ० । ।

२८ चापस्वनेनेव - क. । २९ बाहुरिवासुराणाम् - ख. । ३० समाः - ख. । ३१ शरैः सा - ख. । ३२ छाया - क.ख. । ३३ मध्ये दिनेल्पां - ख. । ३४ यस्त्यान् - क., यन्त्रां - ख. । ३५... हर्त्री - क. । ३६ बाणान् - ख. । ३७ रूक्षपुंखैः - क. । ३८ दैत्यावपीष्टन्न विचिन्त्य - घ., तौ न विचिन्त्य - ख. । ३९ उद्गम्य - क. ।



ते व्योम्नि बाणैश्शतशो निकृत्य सुपर्वभिर्हाटकचारुपुंखैः ।
विच्छेद देवी कवचे विचित्रे तयोः क्षुरप्रैरपरैः शिताग्रैः ।।३ १ ।।
जघान चाश्वानथ सारथी च४० ध्वजौ च चित्रौ रथयोश्चकर्त्त ।
चखान चान्यानपि सत्पृषत्कान् सुरद्विषो मर्मसु हेमपुंखान् ।।३२।।
शुंभो निशुंभश्च रथावपास्य४१ दैत्येश्वरौ बाणवराभितप्तौ ।
आदाय निस्त्रिंशवरौ तदानीमुत्पेततुर्व्योम शितासिनीलम् ।।३३।।
अथ नभसि विमेघे धौतनिश्त्रिंशनीले
द्रुततरमभिसृत्य ग्रीवयोः संप्रगृह्य ।
दितितनयपती तौ४२ निष्पिपेषाशु देवी
विगतभयविषादैः स्तूयमाना मुनीन्द्रैः ।।३४। ।
असृगथ वदनाभ्यामुद्वमन्तौ सफेनं
सपदि विहतवीर्यौ४३ पिष्टसर्वाङ्गसन्धी ।
असुभिरपगतैस्तौ रक्तपर्यन्तनेत्रौ४४
क्षितितलमभितस्तौ पेततुर्दैत्यसिंहौ ।।३५। ।
इति स्कन्दपुराणे शुंभनिशुंभनिपातन नाम षट्षष्टितमोध्यायः

सनत्कुमार उवाच

आजग्मुः कौशिकीं द्रष्टुमथ विन्ध्यं दिवौकसः ।
आदित्या वसवो रुद्रा मरुत्वान् मरुतोश्विनौ ।।१ ।।
धर्मा१ङ्गिरोशनो२ दक्षवसिष्ठभृगुकश्यपाः३ ।
पुलस्त्यपुलहागस्त्यसनकात्रिसनन्दनाः४ ।।२।।
अप्सरोयक्षगन्र्वाः५ सिद्धा नागा महोरगाः ।
उपवेदाश्च यज्ञाश्च वेदा६ विद्या सरस्वती ।।३।।

४०. रथसारथींश्च - क. । ४१ रथावपात्य - ख. । ८२ दितितनयपतिभ्यां - ख. । ४३ विहितवीर्यौ - क. । ४४ पर्यस्तनेत्रौ - क. ।
१ धर्मो - ख. । २ उशना - क. ख. । ३.. काश्यपाः - क. । ४. स्सनन्दनाः - क. । ५ गन्धर्व... - क. । ६ देव(बेव?) - ख. ।

385
समुद्राः सरितः शैलास्तीर्थानि विविधानि च ।
मातरो लोकपालाश्च नक्षत्राणि ध्रुवो ग्रहाः ।।४। ।
अथोचुर्देवता देवीं७ द्युतिमत्यो महाद्युतिम् ।
प्रहृष्टा हृष्टमनसा८मासीनामसुरद्विषः९ ।।५। ।
दानवेन्द्रौ महासत्वौ त्वया त्रैलोक्यकण्टकौ ।
निघ्नत्या देवि लोकानां दुःखशल्यमपाकृतम् ।।६।।
ऋषयः पावनं देवि हविर्जुह्वति साम्प्रतम् ।
छन्दांस्यधीयते चोच्चैराचरन्ति व्रतानि च ।।७।।
यज्ञोयमधुना विप्रैरिज्यते१० बहुदक्षिणः ।
उटजेषु च विश्वस्ता मुनयः शेरते सुखम् । ।८। ।
आसते११ निर्भया देवि१२ सन्तः सन्मार्गमाश्रिताः ।
आविर्भूतः पुनर्लोके विच्छिन्नः सत्क्रियापथः१३ ।।९।।
लोकपालाः शिरांस्युच्चैस्त्वत्प्रसादाच्च बिभ्रति ।
पृक्तः पुष्परजोभिश्च सुखो वाति समीरणः ।।8.67.१ ० ।।
जलानि देवि सरितः स्वच्छानि शिशिराणि च ।
त्वत्प्रसादान्महायोगे१४ वहन्ति विगतक्लमाः । ।१ १ । ।
इदानीञ्च पुनर्जाता गिरयो गिरिजात्मजे ।
विज्वराः शिशिरस्वादुनिर्ज्झरोदकवाहिनः । ।१ २।।
फणान्१५ स्वस्तिकचक्राङ्कानुच्चैर्दधति भोगिनः ।
उदन्वन्तश्च१६ विश्वासादिदानीं सुखमासते ।। १३ । ।
भ्रमन्त्यप्सरसो देवि त्वत्प्रसादाच्च सांप्रतम् ।
सच्चेतोविमले व्योम्नि१७ विलासालसलोचनाः । । १४।।
सिद्धाङ्गनाश्च सेवन्ते विश्वस्ता देवि सांप्रतम् ।
शिखरेषु महीध्राणामुत्फुल्लान् चन्दनद्रुमान् । । १ ५।।

७.. र्देवदेवेन्दु - ख. । ८ हृष्टमनस (?) । ९.?. मसुरद्विषाः - क.,... षं - ख. । १० रीज्यते - ख. ११ आसाते -क. । १२ देवी - क. । १३ स क्रियापथः - ख. । १४ महासत्वा - ख. । १५ फणाः - क. ख. । १६ उदन्वतश्च -क. ख. । १७ विमलव्योम्नि - क. ।

386

स्वभावान्मधुपानाच्च रक्तोत्पलविलोचनाः१८ ।
विचरन्त्यधुना यक्षा गन्धमादनसानुषु ।। १६। ।
सुखं बिभर्त्ति वसुधामिदानीं विगतक्लमः१९ ।
शेषः फणैः स्व२० रत्नांशुवितानपरिवेषिभिः ।। १७।।
माता त्वमसि लोकानां भीतानामभयप्रदा ।
वृणु२१ देवि वरानिष्टानभिषिच्यस्व चाच्युते । ।१८।।
एवमुक्ता सुरैर्देवी प्राह किञ्चित् स्मयन्निव ।
इच्छामि पितरं द्रष्टुमसमग्रेन्दुमौलिनम्२२ ।। १ ९। ।
सुप्रसन्नं प्रसन्नाञ्च जननीं शैलनन्दनाम् ।
पितृभ्यां चाध्वनुज्ञाता२३ मभिषेक्ष्यथ मां ततः । ।8.67.२० ।।
एवमुक्ताः सुरा दध्युरव्यग्रमनसस्तदा२४ ।
सपत्नीकं महादेवममितद्युतिपौरुषम् ।।२१।।
अथ ते ददृशुर्देवा देवदेवमुमापतिम् ।
तेजसामिव सर्वेषां संघातं पुरतः स्थितम् ।।२२ ।।
जटानां प्रान्तबभ्रूणां शिरसा भारमुन्नतम् ।
बिभ्राणं२५ ज्वलितं२६ वह्निं दीप्तानामर्चिषामिव२७ ।।२३ ।।
कर्पूरभङ्गगौरेण स्नातं पुण्येन भस्मना ।
प्रान्तहेमलताजालं रौप्यं गिरिमिवोच्छ्रितम्२८ ।।।२४।।
तेजसा स्वेन तेजांसि तिरयन्तं२९ दिवौकसाम् ।
मध्यन्दिने प्रदीपानामर्चींषीव दिवाकरम्३० ।।२५।।
सुधाम्बुस्यन्दिनीं३१ तन्वीमेकतः३२ परिवेषिणीम्३३ ।
दधानं३४ मौलिना किञ्चित्कुटिलामैन्दवीं कलाम् ।।२६। ।

१८ रक्तशैवललोचनाः - क, रक्तशैलविलोचनाः - ख. । १९ विगतक्लमैः - क । २० स्वै - (?) । २१ शृणु - ख. । २२... महमग्येन्दुमौलिनम् - घ. । २३ चाभ्यनुज्ञाता - (?) । २४... मनसा तदा - क ख. । २५ विभ्रमाणं - ख. । २६ ज्वलितो - क. ख. । २७ वह्निर्दीप्तानामर्चिषामिव - क. ख. । २८... त्थितम् - ख. । २९ तिरस्कुर्वन् - क. ख.। ३. दिवाकरः - क. ख. । ३१ सुधाम्भः स्थन्दिनीं - ख.,... स्यन्दिनीं - क. ख. । ३२... रेकतः - क., एकतः -ख. । ३३ परिवेषिणी - क. ख. । ३४ दधानां - क. ।

387

विजिह्मामुज्ज्वलां३५ गुर्वीं धूसरां भस्मरेणुना ।
सैंहीं वसानमालम्बा३६ मीषद्भङ्गवतीं३७ त्वचम् । ।२७। ।
छुरितोपान्तकायेन३८ फणरत्नमरीचिभिः३९ ।
महता भोगपतिना वक्षःस्थलविसर्पिणा ।।२८ ।।

भवानीं४० चास्य पार्श्वस्थां दीप्यमानां स्वतेजसा ।
वसानामंशुकं रक्तं कल्पपादपसंभवम् ।।२९।।
मन्दारमालामुत्फुल्लां मत्तालिकुलसेविताम् ।
दधानामुत्तमाङ्गेन स्वरेणूत्करपिञ्जराम् ।।8.67.३ ० ।।
स्वःशिल्पिघटितैः४१श्चित्रै रत्नांशुपरिवेषिभिः४२ ।
शातकुंभमयैः श्लाघ्यैर्भूषितां भूषणोत्तमैः । ।३ १ ।।
बिभ्रतीं रुचिरां शुद्धां शरच्चन्द्रांशुनिर्मलाम् ।
शिरोधरेणामहतीमेकावलिमनुत्तमाम् ।।३२।।
अथोत्थाय सुरास्सर्वे कौशिकीं चानतानना ।
तयोश्चरणपद्मेषु निपेतुस्तुष्टमानसाः । ।३३ । ।
अथोद्वीक्ष्य महादेवः कौशिकीमिदमब्रवीत् ।
अजेया सर्वभूतानां महायोगा महाद्युतिः ।।३४।।
विचरिष्यसि लोकाँस्त्वं सर्वत्राप्रतिघातिनी ।
इमाश्च देवताः सर्वास्त्वत्प्रसादादनिन्दिते ।।३५। ।
भक्त्या बल्युपहारैश्च पूजयिष्यन्ति४३ मानवाः ।
वरदा चापि भक्तानां भविष्यसि सदानघे । ।३ ६। ।
अभिषिच्यस्व च क्षिप्रं सुरैरसुरसूदनि ।
कृत्स्नं रक्ष च भूर्लोकं४४ पूज्यमाना सदाव्यये ।।३७। ।
शर्वाणी च परिष्वज्य मूर्ध्नि चाघ्राय कौशिकीम् ।
प्राह प्रीता महाभागा४५ मत्प्रभावाद्४६ भविष्यसि ।।३८।।

३५ विजिह्मनगरां - क., विजिह्मं तु - ख. । ३६ वसानमालम्बी - क. । ३७ रजोवतीं - ख. । ३८ छुरितोपात्तकायेन- क. । ३९ नखरत्नमरीचिभिः - क. । ४. भवानीं - क. । ४१ सुशिल्पिघटितै - क, स्वशिल्पिघटितै - ख. । ४२ परिवेष्टितैः - क. । ४३ पूजन्ति त्वां तु - ख. । ४४ भूलोकं - ख. । ४५ प्राप्तः पिता महाभार्या - ख. । ४६ मत्प्रसादाद् - ख ।

388
अर्चयन्ति यथा मां च सुरा यक्षा महोरगाः ।
गन्धर्वा मुनयः सिद्धास्तथा त्वामप्यनिन्दिते । ।३ ९। ।
अर्चयिष्यन्ति सर्वत्र भक्ताः स्तोस्यन्ति चाव्यये ।
एवं तस्यै वरं४७ दत्त्वा गिरिजावृषभध्वजौ ।।8.67.४० ।।
नमस्कृतौ४८ तदा देवैरन्तर्दधतु४९रव्ययौ ।
अथेन्द्रो विश्वकर्माणमादिदेश तदा प्रभुः । ।४१ । ।
सुधर्मेव सभा दिव्या क्रियतामिह साम्प्रतम् ।
ऋतूँश्च सर्वाँ स्तत्रेत्थमादिदेश शतक्रतुः ।।४२।।
नानापुष्पोत्करैः क्षिप्रं भूमिः सम्यग् विभूष्यताम् ।
क्षुपगुल्मलतावृक्ष५० पुष्परेणुसुगन्धयः ।।४३ । ।
आक्षिपन्तो मनांस्यत्र सुखा वान्तु समीरणाः ।

सिञ्चन्तु वारिभिः पुण्यैर्विन्ध्यप्रस्थं पयोमुचः । ।४४।।
तारं नदन्तु शिखिनः प्रहृष्टाः सर्वतोदिशम्५१ ।
नृत्यन्तु परितश्चित्रान्दर्शयन्तः५२ पृथग्विधान् ।।४५।।
रसान्भावान्विलासाँश्च सर्वेप्यप्सरसां५३ गणाः ।
प्रतिसार्या सुवीणाश्च गन्धर्वा मधुरस्वरम्५४ । ।४६ ।।
लयतालसमं गेयं५५ गायन्तु च समन्ततः५६ ।
आहन्यन्तां समन्ताच्च देवदुन्दुभयो भृशम् । ।४७।।
पाणिभिः कठिनैस्तूर्णं५७ चित्ररूपा महास्वनाः ।
मन्दानिलसमुद्धूता लीनालिकुलपंक्तयः । ।४८।।
पतन्त्वस्मिन्प्रदेशे च दिव्याः कुसुमवृष्टयः ।
उच्छ्रियन्तां समन्ताच्च५८ पताकाश्चित्रमूर्तयः५९ ।।४९। ।

४७ वरान् (?) । ४८ नमस्कृत्वा - ख. । ४९ देवीरन्तर्धे च -.. ख. । ५० लतावृक्षाः - ख. । ५१ दिशः - ख. । ५२ दर्शयन्तः - क ख., दर्शयन्तु - क. । ५३ चाप्सरसां - क. ख. । ५४.. .स्वनाः - क, स्वराः - ख. । ५५ जयतालसमं - क., ऋष्यताल समा - ख. । ५६ समं तत इति वा छेदः । ५७... स्तूर्यं - क. ख. । ५८ पताकाश्च- ख. । ५९ समन्ताच्चित्रमूर्तयः - ख ।

389

ध्वजाश्च विविधाकारा हेमदण्डाः सुसंस्कृताः ।
अथाशु निर्ममे६० तत्र विश्वकर्मा महाद्युतिः६१ । ।8.67.५० । ।
नानारत्नोज्ज्वलस्तम्भां विचित्रमणिवेदिकाम्६२ ।
वज्रस्फटिकनिर्यूहां जाम्बूनदमयीं शुभाम् ।।५१ । ।
इन्द्रनीलोरुसोपानां६३ मुक्तादामावलम्बिनीम६४ ।
सध्वजां सपताकां च६५ घण्टास्वन६६ निनादिताम्६७ ।।५२। ।
तपोनियमयज्ञानां साक्षात् सिद्धिमिवोद्गताम्६८ ।
भिन्नकालानि पुष्पाणि ददृशुर्देवतास्तदा ।।५३ ।।
समं सुपुण्यगन्धीनि६९ विचित्राणि बहूनि च ।
पुष्पकिञ्जल्कगर्भाश्च सुखस्पर्शाः सुगन्धयः ।।५४। ।
नादयन्तो मुहुर्घण्टा ववुस्तत्र समीरणाः ।
प्रजगुः७० सुरगन्धर्वा ननृतुश्चाप्सरोगणाः । ।५५।।
ऋषयस्तुष्टुवुर्गीर्भिः पुण्याभिः कौशिकीं तदा ।
सर्वरत्नौषधैर्गन्धैः पूर्णाः पुण्यैश्च७१ वारिभिः ।। ५६।।
आनीतास्तत्र कलशा हेमरत्नमयाः शुभाः ।
पद्मरागमयैः सिंहैश्चतुर्भिर्वज्रकेशरैः७२ । ।५७।।
उच्छ्वसद्भिरिव श्रीमदुह्यमानं हिरण्मयम्७३ ।
सर्वरत्नप्रभाजालखचितोपान्तमण्डलम् । ।५८।।
कल्पयामास देव्याश्च विश्वकर्मा वरासनम् ।
स्तुतिभिर्जयशब्दैश्च स्तूयमाना समन्ततः ।।५९।।

ऋषिभिर्देवताभिश्च देवदेवसुता ततः ।
तस्मिन् सिंहासने दिव्ये निषसादाथ कौशिकी । ।8.67.६० ।।

६० निर्मिमे - क ख । ६१ महाद्युति - क । ६२ विचित्रां मणिवेदिकीम् - ख. । ६३ पलासेकां - ख. । ६४ मुक्तादामार्थलम्बिनीम् - क । ६५ सपताकाश्च - क. ख. । ६६ स्वर - क. । ६७ विनादिताम् - ख. । ६८...वागताम् - क,... रिवोद्गतां - ख. । ६९ पुण्यगन्धानि - क. । ७० प्रगीताः - क. ख. । ७१ पूर्णैश्च - क, पूर्णाश्च -ख । ७२... ध्र्वजकेशरैः - ख. । ७३.. हिरण्य - ख. ।


कृतस्वस्त्ययना विप्रैः सुहुते७४ जातवेदसि७५ ।
वसाना वाससी शुक्ले कल्पद्रुमसमुद्भवे ।।६१।।
मुक्तादामावबद्धाङ्गी शुक्लस्रगनुलेपना ।
ततः सप्तर्षयो विष्णुर्धर्मो यज्ञः प्रजापतिः ।।६२।।
आदित्याः कश्यपो७६ रुद्रा लोकपाला हुताशनाः ।
शैलेन्द्राः पृथिवी गङ्गा७७ चन्द्रमा मरुतोऽश्विनौ ।।६३ । ।
समुद्रा वसवो लक्ष्मीः सन्ध्या कीर्तिः सरस्वती ।
नागेन्द्रा विहगेशाश्च विविधाश्च सरिद्वराः ।।६४।।
आदाय कलशान् सर्बानभ्यषिञ्चन्त७८ कौशिकीम् ।
पूर्णेन्दुबिम्बप्रतिमं रत्नदण्डं महाद्युतिम् ।।६५।।
जग्राह विततं छत्रं स्वयमेव शतक्रतुः ।
चामरैर्हेमदण्डैश्च दीर्घैश्चन्द्रांशुनिर्मलैः ।।६६।।
बीजयामासु७९ रायस्तैर्लोकपालास्तदाव्ययाम् ।
उवाच च ततः श्रीमान् कौशिकीं पाकशासनः ।।६७।।
पाहि कृत्स्नां भुवं देवि भगिनी त्वं ममाव्यये ।
भक्ताननुगृहाणेशे जहि चामरकण्टकान् ।
विचरस्व समस्तांश्च लोकान् सिद्धगणार्चिता । ।६८।।
इति वचनमथोक्त्वा कौशिकीं देवराज-
स्त्रिदशगणसमेतः शुभ्रलोलोरुहारः८० ।
उदपतदथ विन्ध्याद्विक्षिपन्व्योम्नि नीलान्
सलिलभरविनम्रानम्बुवाहान्समन्तात् । ।६९।।
य इमं शृणुयान्नित्यं पठेद्वा सत्समागमे८१ ।
इह लोके सुखं प्राप्य स याति परमां गतिम् ।।8.67.७० ।।
इति स्कन्दपुराणे कौशिक्यभिषेको नाम सप्तषष्टितमोऽध्यायः

७४ हुत्वा वै - ख. । ७५ जातवेदसं - ख । ७६ आदित्यकाश्यपो - क. । ७७ रुद्रा - क. । ७८ सर्वेप्यभ्यसिञ्चन्त(?) । ७१ बीज्यमाना.. - क. । ८० शुभ्रलम्बोरुहारः - ख., वज्रहस्तोरुवाहः - घ. । ८१ मत्समागमे - घ. ।

391

सनत्कुमार उवाच

अथ ता देवता देवी कौशिकी देहसंभवाः ।
न्यवेशयन्महाभागा देशेषु नगरेषु च ।।१ ।।
बहुपुत्रां प्रलम्बो च लङ्कायां सन्न्यवेशयत् ।
लम्बौष्ठीं१ वृषदंशां च किन्नरीं चैव सिंहले ।।२।।
गोकर्णे रेवतीं देवीं पाण्ड्येषु मुखमण्डिकाम् ।
आभीरेष्वशिवां चैव शान्तिं च वरणातटे ।।३ । ।
वत्सगुल्मे प्रभां देवीं लक्ष्मीं कोलगिरावपि२ ।
उपकां पारसीकेषु वायसीं यवनेषु च ।।४।।
प्रचण्डां च तुषारेषु३ कोशलेषु च लम्बिकाम् ।
जयां च विजयां चैव स्वपुरे संन्यवेशयत् । ।५। ।
प्रभावतीं कलिङ्गेषु जयन्तीं नागसाह्वये ।
काश्मीरेषु४ च सा५ षष्ठीं सरमां मलयेषु च ।।६।।
पूतनां च सुपीरेषु मृत्युं पृष्टपुरे६ तथा७ ।
कोटीवर्षे८ बाहुमांसां९ पौण्ड्रेषु कटपूतनाम् ।।७।।
अस्पृष्टां मध्यदेशे तु१० किन्नरीं बर्बरेषु च ।
वाराणस्यां निरायास्यां११ चित्रघण्टां च कौशिकीम्१२ ।।८।।
महाकालीं महाकाले वानरीं शबरेषु१३ च ।
शेषाश्च देवताः सर्वा ग्रामेषु नगरेषु च । ।९।।
कर्वटेषु महीध्रेषु कौशिकी संन्यवेशयत् ।
कस्यचित्त्वथ कालस्य स्वर्णाक्षे हि महातपाः१४ ।। 8.68.१ ०। ।
यत्र विष्णुर्वरं लेभे१५ देवमाराध्य शङ्करम् ।
चक्रं सुदर्शनं नाम द्विषतामन्तकोपमम् ।। ११ ।।

१ लम्बोष्ठीं - ख. । २ कौञ्चगिरावपि - घ. । ३ खारेषु - क. । ४ कश्मीरेषु - क. । ५ स्थिता - ख. । ६ पिष्टपुरे- ख. । ७ तदा - क. । ८..? से - क. । ९ बहुमांसां - क. ख. । १० शु ( षु?) - ख. । ११ निरायासां - क. । १२ कौशिकी । (?) । १३ शबलेषु - ख. । १४ स्वर्णाकृति - ख, कृष्णाकृतिर्महातपाः - घ. । १५ वँराँल्लेभे - क.ख. ।

392

ऋषिरास्ते महाभागः शरद्वान्नाम१६ गौतमः ।
तस्य यज्ञं१७ जगामाथ देवी तेन निमन्त्रिता । । १ २।।
तस्यास्तत्रागमं ज्ञात्वा सूनुः शुम्भस्य१८ वीर्यवान् ।
आजगामाशु तं देशं महिषो नाम दानवः । । १३ ।।
सुसंहतः पृथूरस्को महाग्रीवः सुबालधिः ।
वक्त्र(क्र?)शृङ्गः पृथुखुरो१९ विशालोच्छ्रितमस्तकः । । १४।।
बद्धवैराशयः क्रू रो२० महासत्वोतिदुर्जयः ।

वज्रनिष्पेषपरुषं नर्दमानो महास्वनः । ।१ ५। ।
अञ्जनाद्रिसमप्रख्यो युयुत्सुर्बलदर्पितः ।
देव्याः पन्थानमावार्य२१ दानवेन्द्रसुतः स्थितः । । १६ ।।
विज्ञाय तस्यागमनं योगेशा२२ विन्ध्यवासिनी ।
जगाम त्वरिता तत्र यत्रासौ दानवाधमः२३ । । १७। ।
अथ दृष्ट्वा स तां देवीं क्रोधाद्रक्ततरेक्षणः ।
अभ्याजगाम वेगेन यत्नमास्थाय दानवः ।। १८।।
उद्वालधिस्तीक्ष्णविषाणकोटिः सुपीनवक्षाः कठिनोर्ध्वकर्णः ।
अभ्यापतद् गुग्गुलताम्रनेत्रो जवेन देवीमसिताद्रिकल्पः ।। १ ९।।
तं कौशिकी वीक्ष्य तदापतन्तं दैत्येन्द्रपुत्रं महिषं सरोषम् ।
चुक्रोध ताम्रायतचारुनेत्रा स्थिता धरण्यामसुरेन्द्रहन्त्री ।। ।।8.68.२० । ।
अभ्येत्य तां दानवराजसूनुर्बलेन मत्तः परमेण देवीम् ।
अभ्याहनद्वक्षसि लोलहारे शृंगेण शक्रायुधकर्कशेन । ।२ १ ।।
विषह्य तं तस्य तदा प्रहारं जग्राह शृङ्गे महिषं करेण ।
उद्भ्राम्य चोच्चैः परितः सरोषा न्यपातयद् भूमितले श्वसन्तम् । ।२२।।
उद्गृह्य सा बालधिमिन्द्रशत्रोः कृत्वा च पादं शिरसि प्रसह्य२४ ।
त्रिशूलमादाय बिभेद पृष्ठे व्ययोजयच्चासुभिराशु दैत्यम् ।।२३ । ।

१६ सरस्वान्नाम - घ. । १७ संज्ञां - क. । १८ जम्भस्येति पुराणान्तरसंमतः पाठः । १९ पृथुशिरो - ख । २.क्रुद्धो - क. । २१.. मावृत्य - ख. । २२ योगेन - ख. । २३ दानवोधमः - ख. । २४ प्रगृह्य - ख., प्रसह्यं - क. ।

393
कुलिशकठिनशृङ्गं नीलजीमूतकल्पं
महिषमथ निहत्य प्रौढदर्पन्तदानीम् ।
विविधकुसुमवृष्ट्या२५ सर्वतः कीर्यमाणा
धरणिधरमगच्छत् कौशिकी सन्निवासम् । ।२४।।
इति स्कन्दपुराणे महिषासुरवधो नामाष्टषष्टितमोध्यायः

व्यास उवाच
भगवन् सर्वलोकज्ञ पितामहसमद्युते१ ।
तपः कृत्वा तदा देवी पुष्कलं हिमवत्सुता ।। १ । ।
वरं२ यथेप्सितं३ लब्ध्वा ब्रह्मणो गौरवर्णताम् ।
किमन्यदकरोद्विप्र तपसोन्ते महामुने । ।२ । ।
सोमनन्दी च शार्दूलः किमवाप वरं४ शुभम् ।
एतन्मे पृच्छतो ब्रूहि भक्ताय प्रणताय च५ । ।३ । ।
सनत्कुमार उवाच
नमस्कृत्य महादेवं परमं ब्रह्म शाश्वतम् ।

यं पठन्ति सदा सांख्याः७ पुरुषं पंचविंशकम् ।।४।।
योगिनश्चैव षड्विंशं ब्रह्माद्याश्च दिवौकसः ।
प्रणम्य परया भक्त्या शिरसा तं त्रिलोचनम् । ।५। ।
गौर्या समागमो व्यास शङ्करस्य यथाभवत् ।
तत् प्रवक्ष्यामि ते८ सर्वं शृणु योगविदां वर । । ६ ।।
तस्मिन् हिमवतः शृङ्गे तपः कृत्वा सुदुष्करम् ।
गौराङ्गी सा तदा भूत्वा शुद्धहेमसमप्रभा ।।७। ।
दर्शने शङ्करस्याथ शर्वाणी मतिमादधे ।
मन्दरं गिरिमागम्य सहिता सोमनन्दिना । ।८। ।

२५ कुसुमवर्षैः (?) ।
१ महाद्युते - क. । २ वरान् - ख. । ३ यथेप्सितान् - ख. । ४ रमं - क., परं - (?) । ५ प्रणताय प्रियाय च - ख. । ६ नमस्कृत्वा - क. ख. । '७ सांख्यं - ख. । ८ प्रवक्षाम्यहं - ख. ।


अपश्यद्भवने भर्तुर्द्वारमूले समास्थितम् ।
नन्दिनं गणपं देवी दीप्तपट्टिशधारिणम् ।।९।।
ततो नन्दीश्वरं दृष्ट्वा भक्तं प्रेम्णा गिरीन्द्रजा ।
एहि वत्स चिराद् दृष्टस्त्वमित्युक्तवती तदा ।।8.69.१ ०।।
नन्दी संप्रेक्ष्य तां चापि गौराङ्गीं हेमसप्रभाम् ।
हर्षेण महता युक्तः पादयोरपतद् भृशम् ।।१ १।।
प्रणम्य स तदा धीमानस्तुवत् पर्वतात्मजाम् ।
नमः सिद्ध्यै महादेव्यै रतये गतये९ नमः ।।१२।।
त्वं क्रिया कारणं त्वं च प्रकृतिर्मुक्तिरेव च१० ।
कान्तिर्द्युतिस्तथा तुष्टिश्शान्तिः स्वस्त्ययनं११ परम् ।।१३ ।।
दक्षिणा नियतिर्मृत्युः सन्ध्या विद्युदहः क्षपा ।
पृथिवी कौशिकी श्रीश्च शर्वाणी शर्ववल्लभा ।।१४।।
गणमाता दितिश्चैव पवित्रा विन्ध्यवासिनी ।
कृष्णा कात्यायनी गौरी भूतमाता तथेश्वरी ।।१५।।
भव देवि प्रसन्ना मे भक्तस्य प्रणतस्य च ।
अथ देवी तदा दृष्ट्वा नन्दिनं पादयोर्नतम् ।।१६।।
प्रोवाच वरदास्मीति स च वव्रे वरं शुभम् ।
प्रसन्नां१२ नित्यमेव त्वामिच्छामि१३ वरमुत्तमम् ।।१७।।
एवमस्त्विति सा प्रोच्य१४ प्रविवेशायतेक्षणा ।
अग्रतोस्या ययौ नन्दी सोमनन्दी च पृष्ठतः ।।१८।।
चन्द्रलेखोभयोर्मध्ये१५ ग्रहयोरिव सा बभौ ।
दूरादेव समालोक्य देवदेवो मुदान्वितः ।।१९।।
आजगाम महातेजाः संभ्रमोत्फुल्ललोचनः ।

पपात पादयोर्देवी देवदेवस्य धीमतः ।।8.69.२०।।

९ त (ग) तये रतये - ख. । १०.. र्युक्तिरेव च - ख. । ११.. स्तुष्टृयतयनं - क. । १२ प्रसन्ना - क. ख. । १३ त्वमेतो (षो?) स्तु - ख । १४ प्रोवाच - ख । । ५ चन्द्रलेखा तयोर्मध्ये - ख. ।

395

अथ देवस्तदायातां देवीं गिरिवरात्मजाम् ।
समुवाच१६ सुरश्रेष्ठः समालोक्य मुहुर्मुहुः ।।२१ ।।
दिष्ट्यासि१७ प्रीतवदना१८ दिष्ट्या च सफलं तपः१९ ।
दिष्ट्या२० चेदं२१ वरं वर्णं गौरं कनकसप्रभम् । ।२२। ।
प्रियन्नः२२ सर्वथा देवि परमं यत्त्वमागता ।
प्रतिज्ञां पूरयित्वेह शार्दूलोयं कुतश्च ते ।।२३ ।।
एवमुक्ता तदा देवी भर्त्रा प्रणयपेशलम् ।
कथयामास देवाय सर्वञ्चरितमात्मनः ।।२४। ।
देव्युवाच
प्रागहं यत्त्वया देव कृष्णवर्णेति भाषिता ।
तदा मन्युपरीताङ्गी गौरवर्णसमीप्सया । ।२५। ।
हिमवच्छिखरं गत्वा तपोहं महदास्थिता ।
चिन्तयन्ती सदैव त्वामेकपादेन संस्थिता ।।२६।।
यस्मिन्निव दिने तत्र तपोहं समुपाश्रिता ।
तस्मिन्नेवैष शार्दूलः सोमनन्दी ममाग्रतः । ।२७।।
व्यतिष्ठत महादेव भक्त्या परमया युतः ।
दिव्यं वर्षसहस्रं तत्तपोयुक्ताहमास्थिता ।।२८।।
तावन्तं कालमेषोपि ममातिष्ठत् समीपतः ।
स्तब्धलाङ्गूलनेत्रास्यो निराहारो विलोकयन् ।।२९।।
आगतस्तपसश्चान्ते ब्रह्मा मम वरप्रदः ।
तमहं पूर्वमस्यार्थे वरं संप्रार्थय२४५  विभो२५। ।8.69.३ ०।।
तेनायममरो देव जराशोकविवर्जितः ।
ममैवानुचरः पार्श्वे कृतो योगी च शङ्कर ।
वर्णं चेदमदरव तवादेशात२ ९ पितामहः । ।३ १ ।।

१६ तामुवाच - क. ख. । १७ दृष्ट्वा (ष्टा) सि - ख. । १८ प्रीतिवदगा - क । १९ फलमुत्तमा (मुत्तमं?) - क. । २० दृष्ट्या - ख. । २१ देवं - ख. । २२ प्रसन्नः - ख. । २३ मह्यं - ख. । २४ वरमप्राथंय - क. ख. । २५ विभोः -क. ख. । च -२ तवादेवा (तदा देवी) - ख. ।

396

देवदेव उवाच

परितुष्टोस्मि ते देवि वरं वृणु यथेप्सितम् ।
मृगेन्द्रोयं गणश्रेष्ठः२७ सोमनन्दी महाबलः ।।३ २ ।।
यादृशो मम नन्दीशस्तादृशस्ते२८ भविष्यति ।
यदन्यद् ब्रूहि तत्सर्वं करिष्यामि तव प्रिये२९ । ।३ ३ । ।
देव्युवाच
यस्मिन्देशे महादेव तपश्चरितमुत्तमम्३० ।
तं भूयोपि त्वया सार्द्धं द्रष्टुमिच्छामि शङ्कर । ।३४। ।
सनत्कुमार उवाच
एवमुक्तस्य पार्वत्या प्रोवाच परमेश्वरः ।
रोचते चारुसर्वाङ्गि गन्तुं तत्र ममाव्यये ।।३ ५।।
रम्यं तद्धिमवच्छृङ्ग तप्तं यत्र तपस्त्वया ।
नन्दिनं स तदाहूय गणपाँश्च सहस्रशः ।। ३ ६। ।
जगाम सहितो देव्या हिमवन्तं महागिरिम् ।
देवैर्विद्याधरैस्सिद्धैर्गन्धर्वैर्मुनिसत्तमैः । ।३७। ।
वन्ध्यमानोसकृद्देवः स्तूयमानश्च सर्वशः३१ ।
नन्दिनः३२ पृष्ठमारूढः३३ प्रक्रीडितगणेश्वरः३४ ।।३८।।
हिमवद्गिरिमागम्य तं प्रदेशमुपागमत ।
स तं३५ शिखरमासाद्य रम्य३६ धातुविभूषितम् । ।३ ९ ।।
तुतोष परमप्रीतो रेमे च सगणेश्वरः ।
आगतं तमथो दृष्ट्वा मूर्तिमानचलस्तदा ।
उपतस्थे महादेवं प्रणिपत्य कृताञ्जलिः । ।8.69.४० । ।
कृत्वा तदर्धकुण्डन्तु३७ तस्मिञ्छिखरसत्तमे ।
वरदानेन शैलेन्द्रमन्वगृहणात्३८ पिनाकधृक् । ।४१ ।।

२७ गणाः श्रेष्ठाः - ख । २८ च तादृशस्ते ख । २९ प्रियं (?) । ३० तपश्चरणमुत्तमम् क। ३१ सर्वतः - क । ३२ नादितं - क., नन्दिनं - ख । ३३ वृषमारूढः - क. ख. । ३४ प्रक्रीडति गणेश्वरः - ख. । ३५ सितं - क. । ३६ रम्य - क. । ३७ वरदकुष्ठ(?)न्तु - ख । ३८ मनुगृहणात् - क, ,.. मनुगृह्य - ख. ।



अमरो जरया त्यक्तः सर्वदुःखविवर्जितः ।
अभेद्यश्चैव वज्रेण मत्प्रसादाद् भविष्यसि ।।४२।।
पुण्यस्त्वमचलश्रेष्ठ भविता पापमोचनः ।
गौरीशिखर इत्येव लोके ख्यातिं गमिष्यसि । ।४३।।
दूरादेव नगश्रेष्ठ दृष्ट्वा त्वामुच्छ्रितं३९ जनाः ।
सवपापैर्विमोक्ष्यन्ते४० यास्यन्ति च परां४१ गतिम् ।।४४।।
त्रिरात्रमुषितो यस्त्वामभिरुह्य शुचिव्रतः ।
दृष्ट्वा गौरीमथाभ्यच्र्य ब्राह्मणं४२ तर्पयिष्यति ।।४५।।
नारी वाथ नरो वापि लोकं गौर्याः स यास्यति ।

यश्चेह त्यक्ष्यते प्राणान्नियमेन समाहितः ।।४६। ।
स गाणपत्यं संप्राप्य मया सार्धं चरिष्यति ।
गौर्याश्चात्रैव सान्निध्यं सर्वदा ते भविष्यति ।।४७ ।।
सनत्कुमार उवाच
इत्युक्त्वा तं४३ नगश्रेष्ठं देवदेवस्त्रिलोचनः ।
पार्वत्या सहितस्तत्र परिचक्राम सर्वतः ।।४८।।
अथापश्यच्छिलां व्यास सौवर्णां मणिभूषिताम् ।
कथयामास तां देव्यै शिलां पश्येति स प्रभुः४४ ।।४९।।
तमाह देवी देवेशमिह तप्तं मया तपः ।
प्रियमेवं४५ मम स्थानं सोमनन्दिन एव च ।।8.69.५०।।
अथ तामनुजग्राह शिलां प्रीत्या भवस्तदा ।
शुचिरस्यां निराहारं त्रिरात्रं४६ यः४७ करिष्यति ।।५१। ।
भवेत्तप्तं तपस्तेन लोकञ्च तव यास्यति ।
एकपादेन यो मर्त्यस्तिष्ठेदेकमहः शुचिः४८ ।।५२।।
तपनाभिमुखो भूत्वा त्वद्भक्तस्त्वत्परायणः ।
सोपि यास्यति ते लोकं गणपश्च भविष्यति । ।५३ ।।

३९ तामुच्छ्रितं - क ख । ४० विमोक्ष्यन्ति - क ख । ४१ परमां क । ४२ ब्रह्माणं क। ४३ तमित्युक्त्वा - क.ख- । ४४ सत्प्रभः - क. । ४५ मेतन् - ख. । ४६ निराहारः - क. टि., निराहारत्रिरात्रं - ख. । ४७ यत् - क. । ४८ च्छचिः - क. ।



प्राणान् परित्यजेद्यश्च शिलायामिह दुस्त्यजान् ।
सोपि तप्ततपा भूत्वा ब्रह्मलोकं गमिष्यति । ।५४। ।
इमञ्च पर्वतोद्देशमास्पदं सोमनन्दिनः ।
योभिगच्छेदहोरात्रं४९ सोपि नन्दिसमो भवेत् ।।५५।।
अथापृच्छत् पुनर्देवः पार्वतीं विचरन प्रभुः ।
कथमेतानि कुण्डानि बभूवुरिह शैलजै । ।५६। ।
एवं पृष्टा पुनर्देवी वाक्यमेतज्जगाद ह ।
यदाहमागता देव तपस्तप्तुमिह प्रभो५० । ।५७। ।
स्तनयोः५१ प्रसुते५२ धारे महत्यौ मे तदासकृत् ।
एते५३ ताभ्यां कृते कुण्डे सिततोये महाप्लवे५४ । ।५८।।
तपस्तप्तुमलङ्करानहं त्यक्तवती यदा ।
तदा तेभ्यः स्रुता देव जलधारापतद् द्रुतम् ।। ५९।।
तथा५५ चेदमपां कुण्डं५६ द्वितीयं मे कृतं शुभम् ।
ब्रह्मणश्च यदा लब्धं गौरवर्णत्वमुत्तमम्म५७ । ।8.69.६ ० । ।
शरीरान्मे तदा देव कृष्णा५८ कोशी५९ विनिष्क्रमत्६० ।
तस्यां६१ कोश्यां६२ समुत्पन्नमेतत् कुण्डं तृतीयकम् ।।६१ ।।

अस्मिन् प्रदेशे देवेश त्वामभ्यर्च्य यथाविधि ।
हविर्भिर्मन्त्रयुक्ताभिरग्निकार्यं कृतं मया ।। ६२।।
इमानि पादपस्थानि वल्कलानि समासते ।
इदं कृष्णाजिनं शुभ्रं स्थापितं तत्६३ पुरा मया । ।६३।।
अथ श्रुत्वा महादेवः पार्वत्या वचनं प्रभुः ।
प्रत्युवाच तदा देवीं प्रीत्या परमया युतः । ।६४।।
स्तनतोयेन यत्६४ पूर्णे६५ तव कुण्डे शशिप्रभे ।
स्तनकुण्डेति तेनैते६६ यास्येते ख्यातिमुत्तमाम् ।।६५।।

४९ सोभिगच्छेदहोरात्र - ख, योधितिष्ठेदहोरात्रं (?) । ५० प्रभुः - क । ५१ तयोस्तु - ख । ५२ प्रस्तुते (?) । ५३ नमे (इमे)। - ख । ५४ महाह्रदे - ख. । ५५ तदा - क. । ५६ हीदं महत्कुण्डं । ५७ गौरवर्ण- मनुत्तमं ) । ५८ कृष्ण - क ख. । ५९ कौशी - क. । ६० व्यनीष्क्रमत् - क, निरक्रमत्? । ६१ तस्या (?। ६२ कोश्याः (?) ६३ यत् (?) ६४ ये - क. ख. । ६५ पूर्णं - क. । ६६ तेनैव - ख. ।


उपवासी नरो योत्र स्नात्वाभ्यर्च्य च देवताः ।
तर्पयित्वा पितॄन्सर्वान् ब्राह्मणान्भोजयिष्यति ।।६६।।
तद् भवेदक्षयं तस्य गणश्चैव भविष्यति ।
अलंकारात् स्रुता६७ धारा येयं तव वरानने । ।६७।।
एषालंकारधारेति नाम्ना ख्यातिं गमिष्यति ।
अस्यां स्नात्वा नरो यस्तु पितॄन्संतर्पयिष्यति ।।६८।।
अक्षयं तद् भवेच्छ्राद्धमश्वमेधञ्च विन्दति ।
नीलतोयमिदं यत्ते महत् कुण्डं शुभोदकम् ।।६९।।
नीलकुण्डमिति ख्यातिमेतत् सर्वत्र यास्यति ।
योस्मिन्नियमवान् स्नात्वा तर्पयेत्पितृदेवताः ।।8.69.७० ।।
तस्याक्षयं भवेत् सर्वं पापेभ्यस्स६८ प्रमुच्यते ।
मृतश्च स नरो देवि यत्र तत्र यथा तथा ।।७१।।
कौशिक्या विन्ध्यवासिन्या महागणपतिर्भवेत् ।
अग्निकार्यमिह स्नात्वा यः कुर्याद् ब्राह्मणः शुचिः ।।७२।।
अग्निहोत्रं हुतं तेन भवेद् द्वादशवार्षिकम् ।
एवमुक्त्वा महादेवः प्रोत्थाय मुनिसत्तम ।।७३।।
गृहीत्वा पादपस्थानि वल्कलानि तदा प्रभुः ।
नदी भवेति संप्रोच्य चिक्षेप प्रहसन्निव ।।७४। ।
तान्यभूवंस्तदा व्यास नदी स्वच्छजला शुभा६९ ।
तटजैर्विविधैर्वृक्षैर्हंसचक्राह्वशोभिता७० ।।७५।।
तामुवाच सुरश्रेष्ठः पुण्यतोयां महानदीम्७१ ।
चीरेभ्यो निस्सृता७२ यस्मात् त्वमत्र सरितां वरा ।।७६।।
लोके पुण्यतमा तस्मान्निश्चीरेति भविष्यसि७३ ।

त्वयि स्नात्वा नरः क्षिप्रं सर्वपापैर्विमुच्यते७४ ।।७७।।

६७ अलंकारसुता - ख. । ६८ पापेभ्यश्च - क. ख. । ६९ नदीष्वनुजलाशया - ख. । ७० सेविता(?)। ७१ सुपुण्यतोयवन्नदीं - ख. । ७२ चीरेभ्यः प्रसृता - क. ख. । ७३ भविष्यति - क. ख. । ७४ ...विमोक्ष्यते -क. ।

400

पितॄन्सन्तर्पयेद्यस्तु श्राद्धं तस्याक्षयं भवेत् ।
कपिलाञ्चात्र यो दद्याद् ब्राह्मणाय समाहितः । ।७८। ।
गोसहस्रफलं तस्य भविष्यति वरानने ।
अग्रमारुह्य यस्मात्त्वमत्र तप्तवती तपः ।।७९।।
अग्रारण्यमिति ख्यातिमेतद्यास्यति सर्वतः७५ ।
महाफलं७६ महापुण्यं७७ सर्वसिद्धिप्रदं शुभम् । ।8.69.८० । ।
पञ्चयोजनसंस्थानं७८ गौरीशिखरमुत्तमम् ।
इहोपोष्य७९ शुचिः स्नात्वा८० भक्त्या परमया युतः ।।८१ ।।
देहभेदं समासाद्य विमानस्थो विराजते ।
कृष्णाजिनं महापुण्यं सर्वपापहरं तव ।।८२ । ।
इदं द्रक्ष्यति यो विप्रः८१ स्वर्गस्तस्य न दुर्लभः ।
यत्फलं नैमिशारण्ये पुष्करेषु च यत्फलम् । ।८३ ।।
तदेव लभते देवि दृष्टवा कृष्णाजिनं द्विजः ।
वत्स्यामि चैव सततं त्वया सार्धमिह प्रिये ।८४।।
आवामिह स्थितौ देवि योर्चयिष्यति मानवः ।
आवयोर्गणपो भूत्वा जगत् सर्वं चरिष्यति८२ ।।८५ । ।
एवं नगेन्द्रं स तदानुगृह्य मुनीन्द्र सार्धं गिरिराजपुत्र्या ।
देवैस्ससिद्धैरनुगम्यमानः शर्वः पुनर्मन्दरमाजगाम ।।८६ ।।
इति स्कन्दपुराणे देवीसमागमे कोशीशिलास्तनकुण्डाजिनगौरी८३ शिखरवरप्रदानं८४ नाम ऊनसप्तति८५ तमोध्यायः

व्यास उवाच
स गत्वा मन्दरं भूयो गिरिपुत्र्या सह प्रभुः ।
यच्चकार महादेवस्तन्मे ब्रूहि महामुने । । १ । ।

७५ सर्वशः - क. । ७६ महत्फलं - क. ख. । ७७ महत् पुण्यं - क. ख. । ७८ संख्यातं - क. ख. । ७९ इहापोष्य- क, इहोपाष्य - ख. । ८०.. .स्त्वान्तु - क । ८१ विप्र. - ख. । ८२ स विचरिष्यति - क. । ८३ गौर्याः - ख. । ८४ समाप्तं- ख. । ८५ अष्टषष्टि - क. ।

401

सनत्कुमार उवाच
मन्दरं गिरिमागत्य१ पार्वत्या सहितो हरः ।

रेमे हिरण्मये दिव्ये सर्वरत्नविभूषिते ।।२ ।।
चारुसोपानसंकीर्णे चित्रपट्टशिलातले ।
तस्मिन् पुरवरे श्रेष्ठे मनसा निर्मिते तदा । ।३ ।।
गणेश्वरैर्महायोगैर्नन्दीश्वरपुरोगमैः ।
सिद्धैर्मुनिवरैश्चैव सेव्यमानो जगत्पतिः ।।४।।
उवास सहितो देव्या वन्द्यमान२स्तथैव च ।
तस्यैवं दीव्यतो व्यास देवदेवस्य धीमतः ।।५।।
सहस्राक्षः शशाङ्कश्च वायुश्चैव तदा गताः ।
समागम्य पुरद्वारं दृष्ट्वा ते नन्दिनं स्थितम् ।। ६।।
ऊचुः प्राञ्जलयो भूत्वा शङ्करं सं४ दिदृक्षवः५ ।
यथा पश्याम देवेशं नन्दिन् तत्कर्तुमर्हसि । ।७। ।
अथ नन्दी समागत्य द्वारमूले समास्थितः ।
शम्भोर्निवेदयामास त्रीन्देवान् तु समागतान् ।।८। ।
विशन्त्विति समाज्ञप्ते देवदेवेन नन्दिनि७ ।
विविशुस्ते त्रयो देवाः शङ्करस्यान्तिकं तदा ।।९।।
प्रणम्य सहितास्तस्थुः पश्यन्तो वरदं विभुम्८ ।
अथ तान्प्राह लोकेशः शिरोभिः प्रणतान् स्थितान् । ।8.70.१०।।
का वः९ कर्तव्यता देवाः किमर्थं यूयमागताः ।
ब्रूत दास्यामि तत्सर्वं यद्यन्मृगयथामराः१० ।। ११ ।।
अथ देवः सहस्राक्षो वचः प्रोवाच शङ्करम् ।
हिरण्यकशिपुं हन्तुमसुरेन्द्रं महाबलम् ।। १२।।
यच्चकार वपुर्विष्णुर्नारसिंहं भयानकम् ।
तं हत्वापि स दैत्येन्द्रं विष्णुः परबलार्दनः ।।१ ३। ।

१ ...मागम्य, ख. । २ न (न्द) मान - क. । ३ समागत्य - क. । ४ शङ्करस्य - क. ख । ५ दिदृक्षया(? )।
६ समागम्य - क. । ७ नन्दिनः - क. । ८ वदनं (विभो?) - ख. । ९ च - ख. । १० मृगयतामराः - क ख ।

402

तद्रूपं नैव११ सन्त्यज्य स्वं वेषमकरोद्१२ विभो ।
तेन रूपेण देवेश क्रूरेणापि हितेप्सुना ।।१४।।
न वयं निर्वृता भूत्वा त्रासात्तिष्ठाम शंकर ।
स यथा सिंहरूपं तत्परित्यजति माधवः ।। १ ५। ।
प्रसादं नस्तथा कर्तुमर्हसि त्वं सुरोत्तम ।
अथ प्रोवाच तं शक्रं देवदेवः पिनाकधृक् ।।१ ६।।
सिंहरूपं यथा शक्र विष्णुस्त्यक्ष्यति भीषणम् ।
करिष्यामि तथा शक्र व्येतु ते मानसो ज्वरः ।।१७।।
अथ वायुस्तदा१३ देवं व्यज्ञापयत शंकरम् ।
अशरीरो यथा न स्यां तथा मे कर्तुमर्हसि । ।१८।।

श्रुत्वा पवनविज्ञप्तिं देवस्तस्मै त्रिलोचनः१४ ।
शरीरं सुमहत् प्रादाद्येनासौ मूर्तिमानभूत् । ।१ ९। ।
विज्ञापितं शशाङ्केन ततो व्यास महात्मना ।
दक्षेणाहं पुरा शप्तो यक्ष्मदेहो भविष्यसि ।।8.70.२०। ।
स यथा यक्ष्महीनः स्यां प्रसादं मे तथा कुरु ।
विज्ञप्तिं१५ शशिनः श्रुत्वा देवस्तस्मै वचः१६ प्रभुः ।।२१ ।।
इदं१७ प्राह महातेजाः शशिने प्रणताय तु ।
तपः कृत्वा प्रभासे त्वं यक्ष्यहीनो भविष्यसि ।।२२। ।
इति लब्ध्वा वरं सर्वे त्रयोपि सुरसत्तमाः ।
वायुसोमसहस्राक्षाः स्वानि वेश्मानि भेजिरे । ।२३ ।।
व्यास उवाच
भगवन्स कथं तेन नरसिंहेन सूदितः ।
हिरण्यकशिपुर्दैत्यः किंप्रभावश्च सोभवत् ।
किं वीर्यं१८ किं तपश्चास्य शंसैतत् पृच्छतो मम ।।२४।।

११ तद्रूपमेतत् - ख. । १२ स्ववेषमकरोद् - ख., स्वं वेषं नाकरोद् (?) । १३ स्तथा - ख. । १४ श्रुत्वा विज्ञप्तिमेतस्य तस्मै देवस्त्रिलोचनः - ख. । १५ विज्ञप्तं - क. ख. । १६ वरं - क. ख. । १७ इमं - क. ख. । १८ किं वयाः - क. ख., किं वीर्यं (?) ।

403
सनत्कुमार उवाच
दितिर्नामाभवत् पत्नी कश्यपस्य१९ प्रजापतेः ।
दक्षस्य दुहिता व्यास२० सा जज्ञे तनयद्वयम् । ।२५।।
हिरण्यकशिपुं ज्येष्ठं हिरण्याक्षं कनीयसम् ।
अभिषिक्तः स दैत्यानां राजाभूद् ब्रह्मणा पुरा ।।२६ ।।
दानवानामथेन्द्रत्वे विप्रचित्तिर्महाबलः ।
सहस्राक्षश्च देवानामेतदिन्द्रत्रयं बभौ ।।२७। ।
अथ तेषां तदा व्यास त्रैलोक्यं संप्रशासताम् ।
हिरण्यकशिपुर्दैत्यः शक्रराज्यजिहीर्षया ।।२८। ।
त्रैलोक्यमात्मसात् कर्तुं मतिं तपसि सन्दधे ।
स गत्वा दक्षिणामाशां श्रीपर्वतसमास्थितः ।।२९।।
तपस्तीव्रं महत्तेपे दैत्यराजो महाबलः ।
स्वरक्तेन जुहावाग्नौ संमिश्राः समिधश्चरून्२१ ।।8.70.३ ० ।।
ऊर्ध्वबाहुनिरालम्बो दिवा सूर्यार्पितेक्षणः ।
एकपादोनिमेषश्च सोतिष्ठत् कृतनिश्चयः ।।३ १ ।।
द्वे सहस्रे तदाब्दानां दिव्यानां स्थितवान्बली ।
महता तपसा तस्य त्रैलोक्यं संप्रचुक्षुभे२२ ।।३२। ।
अथाभ्येत्य सुरश्रेष्ठो ब्रह्मा कमलवाहनः ।

इष्टं२३ वृणु वरं राजन्निति प्रोवाच सादरम् ।।३३ ।।
तं दृष्टत्वा दैत्यराजस्तु ब्रह्माणं वरदं प्रभुम् ।
वरं प्रार्थितवान् व्यास शृणु यादृशमीप्सितम ।।३४। ।
भगवन्यदि तुष्टोसि वर एषोस्तु२४ मे विभो ।
अमरः स्यामवध्यश्च जराहीनो महाबलः ।।३५।।
न शस्त्रेण२५ नचास्त्रेण न रात्रौ न दिवा तथा२६ ।
नैवार्द्रेण न शुष्केण न पुंसा२७ न च योषिता२८ । ।३६।।

१९ काश्यपस्य - क. । २० तात - घ. । २१ .श्चरु - क, ..श्चरं (श्चिर?) - ख. । २२ संप्रवक्षते - ख. । २३ इदं -क. । २४एषोस्ति - ख. । २५ न मन्त्रेण - क. ख. । २६ ...थवा (?) । २७ पुंसा - क. । २८ योषितां - क. ।

404
अब्रवीत्२९ सोन्तरं व्रह्मा३० स चैनं समभाषत ।
अतश्च योन्यथा मृत्यु३१र्भविष्यति स मे प्रभो ।।३७।।
एवमस्त्विवति तं प्रोच्य ब्रह्मा सुरवरोत्तमः ।
जगामात्मपुरं३२ क्षिप्रं शान्तः प्रीतः पितामहः ।।३८।।
सोपि सर्वासुरश्रेष्ठो हिरण्यकशिपुस्तदा ।
जित्वा शक्रं स्वयं राज्यं चकार दितिनन्दनः ।।३९।।
त्रैलोक्यमात्मसात् कृत्वा जित्वा सर्वान्दिवौकसः ।
आत्मनैवाभवच्छक्रः स्वयं वायुः स्वयं यमः ।
धनेशो वरुणो वह्निस्सर्व एवाभवत् स्वयम् ।।8.70.४०।।
प्रणमध्वं यजध्वं मां ब्रह्माहं सपुरन्दरः ।
इति प्राह ऋषीन्सर्वान्सिद्धान्विप्रांश्च सोसुरः ।।४१।।
व्यास उवाच
श्रीपर्वत इति प्रोक्तो यस्त्वया३३ मुनिसत्तम ।
कथं श्रीपर्वतोसौ वै३४ किं पुण्यं तत्र किं फलम् ।।४२।।
सनत्कुमार उवाच
हन्त३५ ते कथयिष्यामि यन्मां पृच्छसि सुव्रत ।
हिरण्यकशिपुर्दैत्यो यत्र तेपे महत्तपः ।।४३।।
गिरौ तस्मिन्महापुण्ये देवदेवो बृषध्वजः ।
उमया सहितो देव्या रेमे नित्यं महाद्युतिः ।।४।।
तिष्ठतस्तत्र३६ देवस्य देवी गिरिवरात्मजा ।
तपःसिद्धान् महायोगान्३७ ज्वलनादित्यवर्च्चसः ।।४५।।
कृत्वा प्रदक्षिणां३८ शम्भोस्सप्रणामं महामुने ।
गच्छतस्तान्मुहुर्दृष्ट्वा पप्रच्छ भुवनेश्वरम् ।।४६।।

२२ सोब्रवीत् - ख. । ३. ब्रह्मन - ख. । ३१ अधश्चोर्ध्वं न मे मृत्यु - घ । ३२ ...मात्मपरं (पदं) ?- ख. । ३३ यत्वया क. ख. । ३४ सोवै (पर्वतोसौ वै?) - क- ख. । ३५ अहं - क. ख. । ३६ ..स्तस्य - क. । ३. महायोगी(गा?) - क. ख । ३८ प्रदक्षिणं - क. ख, ।



क एते देव संसिद्धा योगीशास्त्वां प्रणेमिरे ।
ततो देवः प्रहस्यैनामुवाच परमेश्वरः । ।४७।।
योगसिद्धा महात्मानो योगे पाशुपते स्थिताः ।
य इहाराध्य मां देवि जहुः प्राणान्नरोत्तमाः ।।४८। ।
त एते सिद्धदेहार्थाः३९ स्वछन्दगतिचारिणः ।
मोक्षसिद्धेः परां४० निष्ठां गन्तारः परमं पदम् । ।४९।।
अथ सञ्चिन्त्य सुचिरं विस्मयायतलोचना ।
देवं प्रोवाच शर्वाणी वचः परमपूजितम् ।।8.70.५० ।।
यथाहमपि देवेश प्राप्नुयां सिद्धिमीदृशीम्४१ ।
करिष्यामि तथा यत्नमेषा चास्मि गता विभो । । ५१ ।।
ततः कृत्वा श्रियो रूपं देवी परमशोभना४२ ।
महत्तत्र तपस्तेपे सहस्रं परिवत्सरान् । ।५२।।
देवश्चास्या वरं प्रादात्तैः समानं४३ महाद्युतिः ।
कृत्स्नस्याध्यात्मतन्त्रस्य४४ मया प्रोक्तस्य भामिनि । ।५३ ।।
महायोगेश्वरी सिद्धा परार्थज्ञा भविष्यसि ।
अयञ्च पर्वतः श्रीमान्नाम्ना तव भविष्यति४५ । ।५४।।
श्रीपर्वत इति ख्यातश्चित्ररूपविभूषितः ।
समन्ताद्योजनशतं महापुण्यो भविष्यति । ।५५। ।
इहागम्य च यो देवि त्वां मां च गिरिनन्दने४७ ।
शुचिः स्नात्वा४८र्चयेन्मर्त्यः स लोकं मम यास्यति४९ ।।५६।।
यस्त्विह५० त्यक्ष्यते प्राणाञ्छ्रीगिरावचलोत्तमे ।
त्रिनेत्रः कामगो भूत्वा गाणपत्यमवाप्नुयात्५१ । ।५७। ।
इहागत्य च ये शैलं करिष्यन्ति प्रदक्षिणम् ।
शर्वायतनसंयुक्तं५२ भविष्यन्ति च५३ ते गणाः ।।५८।।

३९ एते सिद्धाश्च देहार्थाः - ख., ... र्वा (र्षा) - क. । ४० मोक्षसिद्धिपरां - क., सिद्धिं - ख. । ४१ ..मीदृशं - क., ...मीश्वरीं - ख । ४२ परमशोभनं - ख. । ४३ समं स - क । ४४ मन्त्रस्य - क । ४९ भविष्यसि क. ख । ४६ द्रुमविभूषितः - ख. । ४७ नन्दिनि (?) । ४८ स्नातो - ख. । ४९ मम लोकं च यास्यति - ख. । ५० यश्चेह - ख.। ५१ स गाणपत्यमाप्नुयात् - क. । ५२ सर्वायतन- संयुक्तं - ख. । ५३ हि - क ।


अतिशयरमणीये सिद्धसंघैरुपेते

सुरभिकुसुमचित्रे श्रीगिरौ ये पुमांसः ।
व्यपगतमलदोषा मां प्रपश्यन्ति शुद्धा
वियति विहगयुक्तैस्ते विमानैः प्रयान्ति ।।५ ९ ।।
इति स्कन्दपुराणे श्रीगिरिवरप्रदानं७४ नाम सप्ततितमो७५ ऽध्यायः

सनत्कुमार उवाच
शासतस्तस्य दैत्यस्य हिरण्यकशिपोस्तदा ।
अगात्१ कालो महान् व्यास त्रैलोक्यं सचराचरम् ।।१ ।।
दर्पेण महताविष्टः२ श्रीमदोद्वृत्तचेतनः३ ।
अवमेने सुरान्सर्वान् न च धर्ममवैक्षत४ ।।२। ।
स देवान् सहितान् सर्वाञ्छक्रादयान् क्रोधमूर्च्छितः ।
चालितानपि५ राज्ये स्वे कृच्छ्रमापादयद् भृशम् ।।३ । ।
सन्ताप्यमानास्ते सर्वे ब्रह्माणं शरणं ययुः ।
भगवन् भूतभव्येश पितामह महाद्युते ।।४। ।
हिरण्यकशिपुर्दैत्यस्त्वत्तो लब्धवरोनघ ।
त्रैलोक्यं कृत्स्नमाक्रम्य राज्यं नो हृतवान्दिवः७ । ।५ ।।
अनिशं चावमानन्नः८ प्रयुंक्ते वैरयातनम् ।
तेन विद्राविितास्सर्वे शरणं वयमागताः ।।६। ।
प्रसादं कुरु देवेश स न स्यान्नो यथा रिपुः ।
त्यक्तधर्मा जगच्छत्रुर्हिरण्यकशिपुर्बली । ।७।।
एवं प्रोक्तस्तदा देवैर्देवः कमलवाहनः ।
प्रोवाचेदं महाप्रज्ञ देवानां प्रियकृद्वचः ।।८। ।

५४ वरप्रदाने अध्याय. ६०(७०) - ख. । ५५ ऊनसप्ततितमो - क. ख. ।
१ आगात्। - क. । २ ...ष्ट - क । ३ ...चेतसः - क. । ४ ..मवेक्षते - ख. । ५ चलितानपि - ख. । ६ सन्त्रास्यमानास्ते - क. । ७ दिवि - क. ख. । ८.. मवमानं नः - ख., चार्थमान - क ।


क्षीणं तद् दैत्यराजस्य तपस्तस्य दुरात्मनः ।
कृच्छ्रं गमितवान् यो वो राज्यञ्च हृतवान् रिपुः । ।९ । ।
तेनाहं प्रार्थितः पूर्वं सर्वावध्यत्वमुत्तमम् ।
अन्तरं भाषितश्चासौ मया संज्ञाविमोहितः । । 8.71.१० । ।
यदैवान्तरमाहाथ९ दैत्यराजो विचेतनः ।
तदैव१० मनसा तोषमहमागां महाबलाः । ।१ १ ।।

ते यूयमद्य गच्छध्वं विष्णोर्भवनमुत्तमम् ।
तं ब्रूत सहितास्सर्वे तस्य नाशार्थमच्युतम्११ ।।१ २।।
नरसिंहवपुः१२ कृत्वा सकृदाहत्य हंस्यति ।
हिरण्यकशिपुं दैत्यं ततो निर्वृतिमेष्यथ ।। १३ ।।
एवमस्त्विवति ते सर्वे प्रणिपत्य पितामहम् ।
आजग्मुः सहिता देवा विष्णोर्भवनमादृताः ।।१४।।
अथ दृष्ट्वा महातेजा विष्णुर्देवानुपस्थितान् ।
उवाच श्लक्ष्णया वाचा वचश्चोक्तिमनोहरम्१३ ।।१ ५ ।।
स्वागतं भवतामस्तु किमर्थं यूयमागताः ।
पूज्या भवन्तस्सर्वे मे सुहृदोतिगरीयसः ।।१ ६।।
यद्वो१४ मनोगतं किञ्चिन्मया कार्यं दिवौकसः ।
क्षिप्रं तद् ब्रूत संक्षिप्तं कर्ताहमविचारितम् ।।१७।।
विष्णुनैवं तदा प्रोक्ता देवाः शक्रपुरोगमाः ।
ऊचुः प्रहृष्टवदनाः संस्तुवन्तो जनार्दनम् ।।१८।।
हिरण्यकशिपोर्देव दैत्यराजो१५ महाबलात् ।
भयं नः सुमहज्जातं राज्यं चापहृतं दिवः१६ ।।१९।।
अवमानः प्रयुक्तश्च तेनास्मभ्यं सुरोत्तम ।
भुनक्ति स जगत् कृत्स्नं ब्रह्मद्विट् कश्यपात्मजः ।।8.71.२ ० ।।

९ यदेवान्तरमाहाथ - ख. । १० तदेव - ख. । ११ ...मुच्यतां - क., ...मुद्यतं - ख. । १२ नारसिंहं वपुः (?) । १३ ...श्चेतोमनोहरम् - क, .श्चोक्तौ मनोहरम् - ख. । १४ यद्वा - क. । १५ दैत्यराज्ञो - क. । १६ दिवि ५. क. ख. ।



स यथा वध्यते दैत्यस्त्वया सर्वारिसूदन ।
तथा कुरु हृषीकेश वरोयं नः प्रदीयताम् ।।२१ ।।
ततो विष्णुश्चिरं ध्यात्वा वधोपायं प्रचिन्त्य च ।
प्राह देवान् सुरश्रेष्ठो वचसाप्याययन्निव ।।२२।।
एवमस्तु सुरश्रेष्ठाः सर्वं कर्तास्मि वो वचः
महाबलस्य दैत्येन्द्रो यतो युष्मान्वदाम्यहम् ।।२३ ।।
आविशन्तु१७ भवन्तोपि शरीरं मम सुव्रताः ।
सर्वदेवमयो भूत्वा दृप्तं हंस्यामि वो रिपुम्१८ ।।२४।।

ततो देवास्तदा सर्वे विविशुर्वैष्णवीं तनुम् ।
स चापि बलवान् भूत्वा रूपं कृत्वा भयानकम् । ।२५। ।
नारसिंहं महातेजा नखदंष्ट्राविभूषणम्१९ ।
जगाम विलसन् विष्णुर्हिरष्यकशिपोः पुरम् ।।२६।।
उद्यानं स बहिस्तस्य२० सर्वर्तुकुसुमैर्वृतम्२१ ।
नृसिंहो दैत्यसिंहस्य दृष्ट्वा तस्थौ सुविस्मितः ।।२७।।
चम्पकाशोकजातीभिः कदम्बैर्बकुलैरपि२२ ।
तथा सुरभिपुष्पैश्च समन्तादुपशोभितम् । ।२८।।
सरोभिः पद्मसंछन्नैर्हंसचक्राह्वशोभितैः२३ ।
वृक्षैः कामफलैश्चैव वैभ्राजसदृशं वनम्२४ ।।२९।।
तद्बभञ्ज नृसिंहस्तु खेलगामी मदोत्कटः ।
सरांसि क्षोभयामास करीव स मदोल्बणः२५ ।।8.71.३ ० ।।
स रेजे वनमध्यस्थः परिसर्पन्नितस्ततः ।
मेरोरचलराजस्य स्थितं शृङ्गमिवोच्छ्रितम्२६ ।।३ १ ।।
अथाभ्येत्य२७ नृसिंहं तं वनपाला रुषान्विताः ।
बलिनो वारयामासुस्ताँश्चैवाभ्यहनद्२८ बली ।।३२।।

१७ आविशध्वं - क. । १८ रिपून् - क, ऋपून् - ख. । १९ विभीषणम् - क. । २० .. स्तत्र - ख. । २१ सर्वर्तुकुसुमायुतं - क. । २२ कदम्बबकुलैरपि - क. ख. । २३ सेवितैः (?) । २४ घनं - (?) । २५ समदोललन् - ख. । २६ मिवोत्थितं - ख. । २७ अथागत्य - ख. । २८ चैव व्यहनद् - क. ख.. ।

409

हतशेषास्ततस्तत्र२९ प्रविलीनास्तु३० येसुराः३१ ।
ते गत्वा कथयामासुर्हिरण्यकशिपोस्तदा । । ३३ । ।
तेषां तद्वचनं श्रुत्वा दैत्यराजो महाबलः ।
प्रह्लादञ्चानुह्लादञ्च नमुचिं बाष्कलिं बलिम् । ।३४।
विप्रचित्तिप्रधानाँश्च सर्वानाहूय दानवान् ।
प्रोवाच त्वरितं गत्वा बद्ध्वा सिंहं ममान्तिकम् । ।३ ५।।
समानयत दैत्येन्द्रा न हन्तव्यः कथञ्चन ।
क्रीडनं३२ सिंहपोतोसौ देव्या मम भविष्यति ।। ३६ । ।
इति श्रुत्वासुरास्सर्वे विप्रचित्तिपुरोगमाः ।
उद्यानं सहिता गत्वा नृसिंहं ददृशुः स्थितम् ।।३७।।

दूरस्थाश्चिक्षिपुः पाशाँस्ताँन्स३३ चिच्छेद माधवः ।
अथ विद्रावयामास दानवान् केशरी भृशम् ।।३ ८।।
ततो हतसहायास्ते दैत्या विमनसो ययुः ।
पार्श्वं दानवराजस्य सर्वञ्चाकथयँस्तदा ।।३ ९ ।
अथ क्रुद्धः स्वयं राजा हिरण्यकशिपुर्बली ।
रथमास्थाय सन्नद्धा नृसिंहं प्राद्रवद्रुषा । ।8.71.४० । ।
स रथः सिंहराजेन सायुधः पर्वतोपमः ।
संभ्राम्य पातितस्तूर्णं चूर्णमागान्महीतले ।।४१ । ।
ततो भग्नरथो दैत्यः क्रोधात्संरक्तलोचनः ।
वृक्षमुत्पाट्य वेगेन नृसिंहाय व्यसर्जयत् । ।४२। ।
अथासौ पतितो गात्रे सिंहराजस्य पादपः ।
मृत्खण्ड३४ इव पाषाणे क्षिप्तश्चूर्ण३५ जगाम ह .।।४३ ।।
गृहीत्वा स तदा सिंहो हिरण्यशिपुं सकृत् ।
तलेनाहत्य३६ तं प्राणैर्व्ययोजयत सत्वरम् ।।४४।।
सिंहनादं महत् कृत्वा नखैर्वज्रमयैर्विभुः ।
उरो बिभेद दैत्यस्य महाशैलोपमं हरिः । ।४५।।

२९ ...स्तु ये तत्र - क. । ३० प्रवलीनास्तु - क., प्रप... - ख. । ३१ ...स्तु तेसुराः - क., भये - ख । ३२ क्रीडनः - ख. । ३३ ..स्ताँश्च - क. ख. । ३४ मृदगण्ड - क., मृद्भाण्ड - ख. । ३५ ..ञ्चूर्णं ख ३६ बलेनाहृत्य - क.

410

हते तस्मिन्महादैत्ये विष्णुना शक्तिनन्दन ।
दानवा न हताः३७ ये तु विविशुस्ते रसातलम् । ।४६।।
दिवो राज्यं३८ पुनः शक्रो लेभे निष्कण्टकं महत् ।
दिवौकसश्च सर्वे ते स्वानि राज्यानि भेजिरे ।।४७। ।
अथागत्य ततो देवः शूलपाणिर्वृषध्वजः ।
सुरैर्विज्ञापितो व्यास यत्ते कथितवानहम् ।।४८ ।।
विष्णोस्त्याजयितुं रूपं सैंहमद्भुतकर्मणः ।
शरभस्स तदा भूत्वा हिमवच्छिखरोपमः ।।४९।।
चतुर्भिः पृष्ठजैः पादैस्तीक्ष्णदंष्ट्रो३९ महाबलः ।
नरसिंहसमीपं तु गत्वागर्जत् समाहितः ।।8.71.५० । ।

अथ सिंहस्तदा दृष्ट्वा शरभं समुपस्थितम् ।
क्रोधेन महताविष्टस्तलेनैनमताडयत्४० । ।५१ ।।
स हतस्तेन सिंहेन शरभो नैव चुक्षुभे ।
ततः शरभमाहत्य वज्रदेहं महाबलम४१ । ।५२।।
आत्मनैवागमत् कृच्छ्रं स्पर्शात्तस्य महात्मनः ।
ततो विष्णुश्चिरं ध्यात्वा ज्ञात्वा शङ्करमागतम् ।।५३ ।।
प्रणम्य शिरसा तं वै४२ स्तोतुमेवं४३ प्रचक्रमे ।
नमः शर्वाय रुद्राय सेनान्ये शर्मदाय४४ च ।।५४।।
नमः परमदेवाय ब्रह्मणे परमाय च ।
कालाय यमरूपाय कालदण्डाय वै नमः ।।५५।।
नमः लान्तकर्त्रे च कालेकालहराय च४५ ।
नमः पिनाकहस्ताय रौद्रबाणधराय च ।।५६।।
चण्डाय वामदेवाय सर्वयोगेश्वराय च ।
नमो विद्याधिपतये ब्रह्मणः पतये नमः ।।५७।।

३७ निहता - ख. । ३८ देवराज्यं - क. ख. । ३१ ... रष्ट्रदंष्ट्रो - क. । ४० ...वमताडयत् - क. ख. । ४१ महाबलः - ख. । ४२ तस्मै - क. ख. । ४३ मेनं - क. ख. । ४४ सर्वदाय - ख. । ४५ कालाकालहराय च - ख. ।

411

नमोसुरवरघ्नाय कालचक्राय ते४६ नमः ।
संवर्त्तकाग्निचक्राय४७ प्रलयान्तकराय च ।।५८। ।
नरनारायणेशाय नरनारायणात्मने ।
ममैव वरदात्रे च सर्वकामप्रदाय च ।।५९।।
शरभाय सुरूपाय व्याघ्रचर्मसुवाससे ।
नन्दीश्वरगणेशाय गणानां पतये नमः ।।8.71.६० ।।
इन्द्रियाणामथेशाय मनसस्पतये नमः४८ ।
नमः प्रधानपतये सुराणां पतये नमः ।।६१।।
नमोस्तु भावपतये तत्त्वानां पतये नमः ।
चराचराणां४९ पतये भूतानां पतये नमः ।।६२।।
त्रैलोक्यपतये चैव लोकानां पतये नमः ।
योगदाय नमो मह्यं तथैवैश्वर्यदाय च । ।६३ । ।

अवध्यत्वप्रदात्रे च तथैवाजप्यदाय५० च ।
भगवंस्त्वत्प्रतिष्ठोस्मि त्वन्निष्ठस्त्वत्परायणः ।
शरणं त्वां प्रपन्नोहं प्रसीद मम सर्वदा ।।६४। ।
य इमं शृणुयान्नित्यं शुचिः प्रयतमानसः ।
स रुद्रलोकमासाद्य देवस्य गणपो भवेत् । ।६५।।
धन्यं यशस्यमायुष्यं स्वर्ग्यं पापप्रणाशनम् ।
श्रावणं श्रवणं चास्य तथानुस्मरणं सदा । ।६६।।
सनत्कुमार उवाच
स एवं स्तूयमानस्तु विष्णुना भुवनेश्वरः ।
हृषीकेशमुवाचेदं वचः परमपूजितम् ।।६७।।
तुभ्यं विष्णो मया दत्तः पुण्यो ह्येष वरः शुभः ।
अयोनौ सज्जमानस्य स्वयोनौ प्रतिपादनम् । ।६८। ।

४६ वै - क. ख. । ४७ संवर्त्तकाग्निवक्त्राय - घ. । ४८ मनसां पतये नमः - क. ख. । ४९ चराचरस्य - ख ।
५० ...याव्ययाय च - ख. ।


स त्वं विष्णुर्महातेजा मत्तो लब्धवरस्सदा ।
वेलायां त्वां५१ समुद्रस्तु तिर्यग्योनिमसूत यः (?) ।। ६९। ।
कृतं कार्यं त्वया सर्वं हिरण्यकशिपुर्हतः ।
एहि गच्छ शुभां योनिमात्मनः परमाद्भुताम् । ।8.71.७० । ।
ततस्तमाक्रमत् पादैः सिंहं शरभसत्तमः ।
अयोजयच्च देहेन पुनर्दिव्येन केशवम् । ।७१ । ।
विष्णवेथ वरं दत्त्वा दैत्यघ्नं स वृषध्वजः ।
प्रकृतिस्थो भवेत्युक्त्वा तत्रैवान्तरधीयत ।।७२।।
दत्वा तस्मै वरमनुपमं विष्णवे लोकधाता
दैत्यघ्नत्वं सुरपुरवधूलोचनैः पीयमानः ।
नीलाम्भोदद्युतिनिभमुरः५२ प्रोद्वहच्छूलपाणि-
र्धाम स्वीयं५३ परममुनिभिर्वन्द्यमानो जगाम । ।७३ ।।
इति स्कन्दपुराणे हिरण्यकशिपूपाख्याने शरभकृतनरसिंहोद्धाराख्यानं नाम एकसप्ततितमो५४ध्यायः

व्यास उवाच

भगवन् सर्वयोगज्ञ श्रुतमाख्यानमुत्तमम् ।
परतः श्रोतुमिच्छामि यद् वृत्तं मुनिसत्तम । ।१ ।।
अपनीय तदा विष्णोः सिंहरूपं वृषध्वजः ।
किमन्यदकरोद्धीमानेतदिच्छामि वेदितुम् । ।२ । ।
सनत्कुमार उवाच
स्वयोनिं विष्णुमानीय देवदेवो भवस्तदा ।
मन्दरे सहितो देव्या विचचार महाद्युतिः ।।३ । ।
रम्यान् स काननोद्देशान् गिरेः प्रस्रवणानि च ।
अलञ्चकार देवेशः परिसर्पन् समन्ततः ।।४।।

५१ त्वं - क. ५२ वपुः - घ. । ५३ स्वाक्यं - क., स्वाद्यं - घ. ५४ सप्ततितमो - क. ।


वनप्रेक्षारतं१ देवं ज्ञात्वा शङ्करमव्ययम् ।
शरत्तत्र वसन्तश्च द्वावृतू समुपस्थितौ ।।५। ।
ततो महीरुहाः सर्वे सरांसि च समन्ततः ।
नानाविधानि पुष्पाणि मुमुचुस्सहसा समम् ।।६।।
कमलोत्पलसंछन्नाः षट्पदव्रातसेविताः ।
हंससारससंवासा२ वाप्यस्तत्र मनोहराः ।।७।।
गन्धाढ्या जातयः क्षिप्रं बभूवुः सह चम्पकैः ।
अशोका३ गन्धपुष्पाश्च४ तथा चैवातिमुक्तकाः५ ।।८।।
उपतस्थुः समं देवं सर्वगन्धसुखानिलाः ।
सर्वर्तुकुसुमाकीर्णं दृष्टवा तद्वनमुत्तमम् । ।९।।
पुष्पाण्यादाय देवेशः स्वयमेव जगत्पतिः ।
अलञ्चकार हृष्टात्मा देवीं हिमगिरेः सुताम् ।।8.72.१ ० ।।
नन्दीश्वरञ्च पार्श्वस्थमात्मानञ्च सुरेश्वरः ।
ततः प्रणम्य देवेशं पार्वती प्रणयादिदम् । । ११ ।।
वचः प्रोवाच जननी कृत्स्नस्य जगतोव्यया ।
यथा मे देहजः पुत्रो भविता गोवृषध्वज ।।१ २।।
त्वद्वीर्यस्त्वत्प्रभावश्च सर्वदेवनमस्कृतः ।
तथा कुरु महादेव यदि ते प्रियता मयि । ।१ ३।।
एवमुक्तस्तदा देव्या देवदेवस्त्रिलोचनः ।

प्रोवाचेदं महातेजा देव्याः प्रियचिकीर्षया । ।१४।।
एवं भवतु देवेशे विज्ञप्तिं सफलामिमाम् ।
करिष्यामि तवेशानि पुत्रस्ते स भवेद्यथा । ।१५।।
श्रेष्ठः सर्वसुरेशानां महायोगबलान्वितः ।
कृत्स्नं जगदिदं यस्य वशे स्थास्यति भामिनि । । १ ६।।

१ वनं प्रेक्ष्य रतिं - क., नवप्रेक्षारतिं - ख. । २ हंससारससंवाहा (धा?) - ख । ३ अशोको - क. ख । ४ गन्धपुष्पश्च - क. ख. । ५ .मुक्तकः - क. ख. ।


गच्छन्त्या तत् तपः कर्त्तुं वरः पूर्वमपि त्वया ।
प्रार्थितो ह्येष पुत्रार्थं तेनावश्यं ददामि६ ते । । १७।।
एवमुक्त्वा तु तौ देवौ गिरिजाभुवनेश्वरौ ।
नन्दीशेन तदा सार्धं विचरन्तौ जगद्गुरू ।।१८।।
सर्वोद्यानानि पश्यन्तौ विन्ध्यमाजग्मतुर्गिरिम् ।
अथागम्य तु विन्ध्यस्य सौवर्णं शिखरोत्तमम् । । १ ९। ।
दरीकन्दरसंकीर्णं नानानिर्झरसंयुतम् ।
सतडिन्मेघसंघात७ घनीकृतशिलोच्चयम् । ।8.72.२० ।।
नानावृक्षशिलोपेतं नानाकुसुमसंयुतम् ।
नानाखगरवामोदं हेमरत्नोज्ज्वलं शुभम् ।।२१ ।।
मानसं तस्य मध्ये तु पुरं सृष्ट्वा८ महर्द्धिमत् ।
मणिहेममयं दिव्यं देवासुरविमोहनम् ।।२ २ । ।
परमैश्वर्यसंयुक्तौ युतौ विविशतुः पुरम् ।
नन्दिनञ्च ततो देवी समाज्ञापयदव्यया । २३ । ।
वत्स नन्दिन् तथा द्वारे तिष्ठेस्त्वं गणपेश्वर ।
विशेन्नेह वथा कश्चित् सूक्ष्मो वायुरपि स्थितः । ।२४। ।
कृत्वा शिरसि तामाज्ञां नन्दीशो गणपाधिपः ।
अभवद्९ द्वारमूलस्थः१० कृत्वा तेजोतिदुस्सहम् । ।२५।।
योगयुक्तौ तदा देवौ परां मूर्त्तिं समास्थितौ ।
कृत्स्नस्य जगतो योनी पार्वतीभुवनेश्वरौ ।।२ ६ । ।
तस्थतुः सुचिरं कालं तनयार्थं महाद्युती ।
स न शक्यो मया वक्तुं ब्रह्मणा वा महामुने ।।२७। ।

सुयोगो योभवद्११ देव्या देवदेवस्य शूलिनः ।
ब्रह्मणो मद्विधानाञ्च श्रेष्ठोसौ परमेश्वरः ।। २८।।
अवश्यं त्वागमे वाच्यं यथावृत्तं यथाश्रुतम् ।
अतो वक्ष्यामि ते व्यास प्रियः शिष्यश्च मे भवान् ।। २९।।

६ ददानि क.। ७ संघातं क.। ८ दृष्ट्वा ९ भगवद् क.। १० स्थं क.।


योगसन्धानमास्थाय तयोरेवं महामुने ।
अतीतं स्थितयोर्दिव्यं सहस्रं शरदामभूत् ।।8.72.३ ० ।।
ततोभवन्निमित्तानि घोराणि त्रासनानि च ।
चचाल पृथिवी कृत्स्ना सशैलवनकानना ।।३ १ ।।
नद्यः शोषं तदा जग्मुश्चुक्षुभे सरितां पतिः ।
तपनो निष्प्रभश्चासीद् ववावुष्णः१२ समीरणः ।।३ २ ।।
पेतुरुल्का महाघोरा दिशश्चासन्सुदारुणाः१३ ।
एवमुत्पातवित्रस्ता शुभहेतोर्वसुन्धरा ।।३ ३ ।।
जगाम शरणं विष्णुं गत्वा चार्त्तिं न्यवेदयत्१४ ।
उत्पाता दारुणा देव बभूवुर्बहवो भृशम् ।।३४।।
तेनातीव समुद्विग्ना त्वामद्य शरणं गता ।
अथ विष्णुः सुरान्सर्वानिदमश्रावयत् प्रभुः ।।३५।।
ततो दिवौकसः सर्वे बृहस्पतिपुरोगमाः ।
एकत्र संगता भूत्वा चक्रुर्बहुविधाः कथाः ।।३ ६।।
महाबुद्धिरथाहेदं वाक्यमङ्गिरसः सुतः ।
श्रीकण्ठो भगवानेष देवदेवस्त्रिलोचनः ।।३७।।
युक्तोभूद्धिमवत्पुत्र्या तनयार्थं महाद्युतिः ।
दिव्यं वर्षसहस्रन्तु योगेन परमेष्ठिनः ।।३८।।
अगाद्युक्तस्य१५ पार्वत्या बभूवुर्दारुणास्ततः ।
उत्पाता जगतस्त्रासाश्चिन्त्यते किमिहापरम् ।।३९।।
गच्छाम सहिताः सर्वे स्तोतुं भक्त्या वृषध्वजम् ।
यथा च देहजः पुत्रो भवेद्१६ देव्याः सुरेश्वराः ।।8.72.४० ।।
विज्ञापयाम देवेशं तथा शीघ्रमिहामराः ।
ततो वैवस्वतः प्राह वचः क्रोधाभिनिःसृतम्१७ ।।४१।।

१२ ववावुष्णं - क. । १३ दिशश्चासंस्तदा (?) । १४ निवेदयत् - क. । १५ आगादद्युक्तस्य - क. । १६ पुत्रोभवद् - क. । १७ क्रोध - क., क्रोधविमिश्रितं (?) ।



किमर्थं भृशमुद्विग्ना भवन्तस्सर्व एव हि ।
यद्यसौ देवदेवस्य तनयोस्मासु भक्तिमान् । ।४२ ।।
उत्पत्स्यति न च द्रोग्धा ततः क्षंस्याम तं सुराः ।
अथ चेत्कर्कशोस्मासु द्रोग्धा वा स१८ भविष्यति ।।४३ । ।
तत एनमहं बद्ध्वा कालपाशेन बालकम् ।
.आनेष्ये१९ स्ववशं२० क्रूरं मृत्युना सहितोमराः ।।४४।।
न चेत्पुरन्दरो वज्रं तस्य क्षेप्स्यति मूर्धनि ।
द्विधा येन कृतो मूढः प्राणांस्त्यक्ष्यति दुस्त्यजान् ।।४५। ।
ब्रुवतस्तस्य बह्वेवं क्रोधसंरक्तलोचनः ।
विष्णुः प्रोवाच धर्मात्मा वचांसि परमार्थवित् ।।४६।।
अहो त्वया सुविश्रब्धं प्रोच्यते भास्करात्मज ।
परमार्थमविज्ञाय क्रोधस्य वशवर्तिना । ।४७। ।
तनयः किल यः शम्भोर्गिरिजायां भविष्यति ।
स मूढ इव यः कश्चिद् भविता वशगस्तव । ।४८ ।।
किमसौ मानवोन्यो वा जन्म२१ मृत्युसमन्वितः ।
उत्पत्स्यति रवेः पुत्र येन२२ स्याद्वशगस्तव । ।४९।।
कालेनापरिपूर्णेन मानवस्यापि भानुज ।
न त्वं नाशयिता२३ नाम किमु पुत्रस्य शूलिनः ।।8.72.५० । ।
तेजो भगवतः शम्भोर्यद् भविष्यत्यनुत्तमम् ।
स कथं वध्यतां यायात्२४ तव शक्रस्य वो विभो२५ । ।५१ ।।
ब्रवीमि वो हितं देवाः क्रियते यदि मद्वचः ।
प्रयाम सहितास्सर्वे तं प्रसादयितुं हरम् ।।५२ ।।
यो नः स्वयंवरे दत्तो वरस्तिष्ठति शङ्करे ।
तमेव वरयिष्यामो२६ वरमग्र्यं पिनाकिनम्२७ । ।५३ ।।

१संभविष्यति (?) । १९ नयिष्ये - क. । २० स्वं वशं - क. ख. । २१ जनो - ख. । २२ तेन - क. ख । २३ वाशयिता - क., वशमिता (?) । २४ यातु (याता?) - क. टि. । २५ विभोः - ख. । २६ मृगशि ... (?) - क. ।

२७ पिनाकिनः - क. ।

417

यथा न२८ देहजो देव्यास्तनयः संभविष्यति ।
नास्माकमहितं शम्भुः पुत्रमुत्पादयिष्यति । ।५४। ।
वयमेव सुतास्सर्वे शङ्करस्याग्रजा२९ विभोः ।
न शक्यस्तपसा द्रष्टुं न ज्ञानेन३० सुरेश्वराः३१ ।।५५।।
भक्त्या परमया द्रष्टुं शक्यः स्यात्स वृषध्वजः ।
आगच्छध्वं गमिष्यामो यत्र तिष्ठति शङ्करः । ।५६। ।
परां भक्तिं समास्थाय यथा पश्येय शङ्करम् ।
हुतभुक् चैव नो देवस्तत्सकाशं३२ प्रवेक्ष्यति ।।५७।।
सर्वेषामेव विज्ञप्त्या३३ सुराणां सुरसत्तमाः३४ ।
इति श्रुत्वा वचस्तस्य विष्णोरमिततेजसः ।।५८।।
बृहस्पतिपुरोगास्ते हृष्टात्मानो दिवौकसः ।
साधुसाध्विति सन्तुष्टा वचांस्यूचुः सुरोत्तमाः ।।५९।।
ततो विष्णुसहायांस्ते गत्वा तच्छृंगमुत्तमम्३५ ।
ऊचुर्हुताशनं देवं वचः स्तुतिपुरस्सरम् । ।8.72.६ ० । ।
त्वमग्ने सर्वदेवानां हितकृत्सर्वतोव्ययः ।
प्रविश्य त्राहि नः सर्वाञ्छङ्कराय निवेदय । ।६१ ।।
तथा कुर्यास्सुरश्रेष्ठ३६ येन निर्गम्य शङ्करः ।
अस्मान्निरीक्षते देवः प्रह्वान् भक्तिमतः स्थितान् ।।६२ । ।
इत्युक्तस्स सुरैस्सर्वैः प्रत्युवाच हुताशनः ।
अकर्तव्यं हि मे देवा न युष्मान्प्रति विद्यते । ।६३ । ।
पार्वत्या सह संयुक्तं देवदेवेश्वरं३७ परम् ।
न मे शक्तिर्हरं द्रष्टुं भवन्तश्चाकुला भृशम् ।।६४।।
युष्मद्वाक्यमलङ्घ्यञ्च कृच्छ्रमेतदतीव मे ।
प्रवेक्ष्ये दूतवद्देवाः३८ करिष्ये साहसं महत् ।
इत्युक्त्वा स जगामाशु भवनं३९ तत्कपर्दिनः । । ६५। ।

२८ ते - क । २९ शंकरस्यात्मजा - क । २० ज्ञायेत - ख. । ३१ सुरेश्वर. - ख. । ३२ स्तम्भ. क. । ३३ विज्ञाप्यः - ख. । ३४ सुरसत्तमः - ख. । ३५,.. मुच्छ्रितं - क. । ३६ कुर्यात्सुरश्रेष्ठ - क. ख. । ३७ देवं देवेश्वरं - क. । ३८ सुतवद् देवाः - क. । ३९.. भवनं - क. ।

तत्रापश्यत् स्थितं द्वारे नन्दिनं परमौजसम् ।
द्वारमाक्रम्य तिष्ठन्तं दीप्तपट्टिशधारिणम् ।।६६। ।
तं दृष्ट्वा स तदा वह्निः समालोक्य समन्ततः ।
नास्ति कश्चिदिहोपायः सूक्ष्मजन्तोरपि स्थिते ।।६७। ।
प्रवेष्टुमिति सञ्चिन्त्य तमेव शरणं ययौ ।
नन्दिनं हुतभुग् देवस्तुष्टाव च कृताञ्जलिः ।। ६८।।
नमो गणाधिपतये नमश्चण्डाय शूलिने ।
नमस्सेनाधिपतये नमः शर्वात्मने४० सदा ।।६९।।
हालाहलाय रुद्राय नीलरुद्राय वै नमः ।
नमो िि?तिरुद्राय तथैवार्द्रपटाय च ।।8.72.७० । ।
नमस्ते स्वप्नरुद्राय भस्मरुद्राय ते नमः ।
नमः श्मशानरुद्राय कोटीरुद्राय ते नमः । ।७१ ।।
नमः पिङ्गलरुद्राय रुद्राधिपतये नमः ।
नमः प्रमथरुद्राय४१ भूतरुद्राय ते नमः ।।७२।।
विरूपाक्षाय रुद्राय श्वेतरुद्राय ते नमः ।
नमस्ते सततं देव नमस्ते सततं शिव । ।७३ ।।
नमस्ते सततं सौम्य नमस्ते भक्तवत्सल४२ ।
मम भक्तस्य देव त्वं देवानां हितमिच्छतः । ।७४।।
वरदो भव नन्दीश मा नः क्रोधं कृथाः प्रभो ।
ततो नन्दीश्वरः प्राह स्तुवन्तमनलं स्थितम् ।।७५।।
प्रीतस्तवानया वह्ने भक्त्याहं सुरसत्तम ।
ब्रूहि किन्ते प्रियेन्देव करवाणि४३ हुताशन । ।७६।।
अथ प्रोवाच वह्निस्तं वरदं नन्दिनं स्थितम् ।
यदि तुष्टोसि मे देव देयो यदि वरश्च मे ।।७७।।

४० सर्वात्मने - क. । ४१ प्रथमरुद्राय - क. । ४२ भक्तिवत्सल - क. । ४३ करोम्यद्य - क. ख. ।



देवकार्येण देवेश प्रवेष्टुं४४ दीयतां मम ।
भवनं देवदेवस्य वर एषोस्तु मे विभो । ७८।।

तं नन्दी प्रत्युवाचेदं कृच्छ्रं देयो वरो ह्ययम् ।
न तं शक्ष्यसि४५ देवेशं द्रष्टुं त्वं योगमास्थितम् ।।७९।।
सह देव्या महेशानं स्रष्टारं जगतोव्ययम् ।
तथाप्येष४६ मया तुभ्यं देय एव वरोनल । ।8.72.८० । ।
गच्छ सूक्ष्मतरो भूत्वा दुरालक्ष्यो हुताशन ।
प्रविश्य निष्क्रम क्षिप्रमविज्ञातागमक्रियः ।।८१ । ।
स नन्दिनाभ्यनुज्ञातो जातवेदा४७ मुदा युतः ।
ज्योतिः सूक्ष्मतरो भूत्वा भास्करस्यांशुना सह ।।८२।।
प्रविश्य भवनं शम्भोर्मणिस्तम्भमथाविशत् ।
वाह्नेय४८मणिमध्यस्थं स्तम्भं तं भासयन्४९ मुहुः ।।८३ ।।
सोपश्यत्तत्र देवेशं देवीञ्च भुवनेश्वरीम् ।
तुष्टाव मनसा५० देवौ ततोसौ हव्यवाहनः ।।८४। ।
तथा संस्तूयमानश्च प्रीतिं देव्याश्च दर्शयन् ।
वीक्ष्य स्तभ्भं हरो देवीं वाक्यमेतदभाषत ।।८५। ।
एष स्तम्भमणिर्देवि भ्राजमान इव प्रिये ।
संस्तौति मां त्वया सार्धं ददान्यस्मै वरं शुभम् ।।८६।।
देव्युवाच
एवं कुरु महादेव भक्तस्यास्य सुरेश्वर ।
स्तुवतस्त्वा मया सार्धं प्रयच्छ वरमुत्तमम् । ।८७।।
देवदेव उवाच
प्रीतोहं मणिमध्यस्थ भक्त्या ते विनयेन च ।
ब्रूहि कार्यं यथेष्टं त्वं तत्सर्वं ते भविष्यति५१ । ।८८।।

४४ प्रवेशो (?) । ४५ शक्तोसि - ख. । ४६ यथाप्येष - क. । ४७ जातवेदो - क. । ४८ वह्नेय - -ख । ४९ भावयत् - क. । ५० वचसा - ख. । ५१ वर एष भविष्यति - ख. ।



अग्निरुवाच
देवास्त्वां द्रष्टुमिच्छन्ति बहिःस्था भुवनेश्वर ।
भगवँस्ते यथा सर्वे पश्येयुस्त्वां तथा कुरु ।।८९। ।
देवदेव उवाच
एवमस्तु सुरश्रेष्ठ निर्गत्य त्रिदिवौकसाम् ।

ददामि५२ दर्शनं वह्ने भवतः प्रियकाम्यया । ।8.72.९० । ।
तथेति समनुज्ञातो वह्निस्तस्माद्५३ विनिर्गतः ।
देवेभ्यः कार्यमावेद्य तस्थौ योगं समास्थितः ।।९१। ।
अथ निष्क्रम्य भगवान् देवदेवः पिनाकधृक् ।
जगाम त्वरितं तत्र यत्र देवाः समासते । ।९२।।
अथ दृष्टवा महादेवं देवास्सर्वे वृषध्वजम् ।
प्रणेमुर्मूर्धभिर्हष्टास्तुष्टुवुश्च मुदा युताः । ।९३ ।।
नमस्सहस्रनेत्राय सहस्रचरणाय च ।
महतां पतये नित्यं देवानां पतये नमः । ।९४।।
नमः श्मशानरतये व्याघ्रचर्मसुवाससे ।
ब्रह्मणश्च शिरोहर्त्रे५४ विष्णोर्वै५५ वरदाय च ।।९५। ।
नमो दक्षमखघ्नाय नमस्ते त्र्यम्बकाय च ।
नमो भूताधिपतये प्रधानमथनाय च । ।९६।।
पिनाकपाणये नित्यं सर्वयोगात्मयोगिने ।
नमो नीलशिखण्डाय सपत्नीकाय वै नमः । ।९७।।
नमः कामेष्वसक्ताय कामसक्ताय वै नमः ।
नमस्सर्वाय५६ शर्वाय५७ दण्डिने५८ जटिने नमः ।
नमः सर्वात्मभूताय दिश नो यन्मनोगतम् ।।९८। ।
एवं संस्तूयमानोथ सर्वैरेव सुरोत्तमैः ।
प्रत्युवाच महादेवस्तान्सुरान्प्रणतान् स्थितान् । ।९९। ।

५२ ददानि ख.। ५३ स्तम्भाद् ख.। ५४ नमो ब्रह्मशिरोहर्त्रे (?) ५५ विष्णवे क. ख. ५६ नमश्शर्वाय - ख. ।
५७ सर्वाय - ख । ५८ मुण्डने - ख. ।


परितुष्टोस्मि भो५९ देवा ब्रूत किं६० प्रददानि वः६१ ।
पुनः प्रणम्य ते देवाः प्राहुर्वचनमुत्तमम् । । 8.72.१०० ।।
यो नस्स्वयंवरे देव वरो दत्तस्त्वया विभो ।
तं प्रार्थयाम सहितास्तन्नो दातुं त्वमर्हसि । ।१ ०१ ।।
देव्या य एष पुत्रार्थं योगस्ते भुवनेश्वर ।
कृतोब्दानि बहूनि स्म तं६२ संहर नमस्तव । ।१ ० २।।
अशुभानि निमित्तानि दृश्यन्ते सुमहाद्युते ।

पृथिवी दुःस्थिता देव वयञ्च भृशमाकुलाः ।।१० ३ ।।
तेनैष न यथा देव्या देहे सञ्जायते सुतः ।
जायेत च यथा देव तथा नः कर्तुमर्हसि ।।१ ०४।।
तेषां तद्वचनं श्रुत्वा देवदेवोब्रवीद्वचः ।
महानेष वरः सर्वैः प्रार्थितः सुरपुङ्गवैः६३ ।। १० ५।।
तथापि च प्रयच्छामि युष्मत्प्रियचिकीर्षया ।
महान्तं किन्त्विदं कालं तेजस्सन्धारितं६४ मया ।।१ ०६ ।।
अस्य६५ प्रपश्यत६६ स्थानममोघं ह्येतदुत्तमम् ।
अथैवमुक्ता देवेन ते देवा मुनिसत्तम ।।१ ०७।।
बभूवुस्सहितास्तूष्णीं सुरा ब्रह्मपुरोगमाः ।
तेषां मध्ये तदा वह्निः६७ प्रोवाच भुवनेश्वरम् ।। १ ०८।।
जुहुध्येतत्परन्तेजो मयि देव त्रिलोकप ।
जुहावाग्नौ ततस्तेजस्तदा स्वीयं६८ परं भवः ।।१ ०९।।
हुत्वा तस्मिन्ततः कृत्स्नं६९ तुष्टोभूत्परमेश्वरः ।
वरं वृणु हुताश त्वमिति प्रोवाच शङ्करः ।।8.72.१ १० ।।
ततो वह्निः प्रणम्येशं वरानभ्यर्थयद्७० विभुम्७१ ।
इच्छेयमेतं७२ पुत्रन्ते मम नाम्ना प्रकीर्तितम् ।। १११ ।।

५९ वो - क ख. । ६० तं ब्रूत - ख ।। ६१ च - क । ६२ तत् - क ख. । ६३ सुपङ्गवाः - ख. । ६४ ...स्स्वन्धारितं (?) । ६५ अथ - क । ६६ प्रयच्छत - ख. । ६७ तेषामग्निस्तदा मध्ये - .क. । ६८ ..स्तदात्मीयं - क. । ६९ कृत्स्न ततस्तस्मिन - ख । ७० प्रार्थयद् - क ख. । ७१ विभु - क. । ७२ मेनं - ख ।


शापस्याहमगम्यः स्यां पश्येयं त्वाञ्च नित्यशः ।
धारयेयं सुखेनैतदुत्सृजेयञ्च शङ्कर ।। १ १२।।
सर्वभक्षोप्यलेपः७३ स्यां पापन्न च७४ भवेन्मम ।
मयि देवाश्च यज्ञाश्च प्रतिष्ठां यान्तु शूलधृक् ।। ११३।।
अहं भूतेश्वरश्च स्यामहं पशुपतिश्च ह ।
अहं तव तनुः स्याञ्च त्वन्मूर्त्तिस्त्वदुपाश्रयः७५ ।।११४।।
वरमिच्छामि देवेश दीयमानमिमं७६ त्वया ।

एवमस्त्विति तत्सर्वं वह्नये प्रददौ विभुः ।।१ १५। ।
विसृज्य च ततो देवान् देवदेवो वृषध्वजः ।
पुनर्विवेश भवनं देवी चैन७७मभाषत ।। ११ ६। ।
क्व गत्वा त्वमिहायातः क्षिप्रं त्रिभुवनेश्वर ।
किन्तद् गुरुतरं कार्यं येन निर्गतवानसि ।। १ १७। ।
ततः प्रोवाच देवेशः पार्वतीं रुषिताननाम् ।
गतोस्मि त्वरितो देवि देवैर्विज्ञापितः प्रिये ।।१ १८।।
बहिःस्थैः पद्मपत्राक्षि भक्तिमद्भिस्सुदुःखितैः ।
अथोवाच ततो देवी देवं सर्वजगत्पतिम् ।। १ १९।।
कथं त्वमागतान्देव बहिःस्थान् त्रिदिवौकसः ।
ज्ञातवानसि सन्त्रस्तान् केनाख्यातञ्च ते विभो ।।8.72.१२० । ।
देवदेव उवाच
प्रविश्य हुतभुग् देवि मणिस्तम्भं समास्थितः ।
न्यवेदयत्स्तुवन्मह्यं सर्वान्देवान्७८ बहिःस्थितान् ।।१२१।।
तवैवानुज्ञया७९ देवि तस्मै८० दत्तो वरो मया ।
ततो भगवती क्रुद्धा८१ नन्दिनं प्राह८२ पार्वती । । १ २२।।

७३ सर्वभक्षोपलेप्यः - क. । ७८ स्यामापन्न च - ख- । ७५ ...स्त्वदपाश्रयः - क. ख. । ७६ दीयमानमीदं - ख. । ७७ ञ्चैव - क. ख. । ७८ सर्वदेवान् - ख. । ७९ तवैषाज्ञा मया - ख. । ८० यस्मै - क, यस्ते - ख. । ८१ ...भवत्सुसंक्रुद्धा - क. । ८२ प्रति - क. ।

423

कथं प्रविष्ट८३स्ते वह्निर्द्वारस्थस्येह दुर्मते८४ ।
ततस्सास्य भृशं क्रुद्धा श्रवण८५ न्यस्तमुत्पलम् ।।१२३ ।।
गृहीत्वा वज्रसंकाशं नन्दीशाय व्यसर्जयत् ।
द्वादशादित्यसंकाशं प्रज्वलत्तत्तदोत्पलम्८६ । ।१ २४।।
वधार्थं नन्दिनो८७ घोरं प्रससार स्फुटन्निव ।
हतो नन्दीश्वर इति प्रोच्योत्थाय च शङ्करः८८ । ।१२५।।
भद्रं भवोत्पलक्षिप्रमित्युक्त्वा गृह्णदुत्पलम् ।
अथोमापि ततो देवी प्रत्यापत्तिञ्जगाम ह ।।१२६।।
अहो बत महत्कष्टं कृतं क्रोधवशान्मया ।
कथञ्चिन्न हतो८९ नन्दी महागणपनायकः ।।१२७।।

तद् गृहीत्वा ततो हस्ताद् देवस्य श्रवणोत्पलम् ।
चिक्षेप त्वरितं देवी भद्रं भवतु ते सरः । ।१ २८।।
एवमुक्त्वा ततः क्षिप्तं९० देव्या तच्छ्रवणोत्पलम् ।
विन्ध्यपृष्ठे सरस्तत्र बहुपद्मोत्पलं बभौ ।। १२९।।
हंससारससंकीर्णं चक्रवाकोपशोभितम् ।
नाम्ना भद्रोत्पलमिति हेमशृङ्गसमीपतः९१ ।।8.72.१३० ।।
तत्र स्नात्वा नरः९२ क्षिप्रं सर्वपापैः प्रमुच्यते ।
तत्राक्षयं सदा दानं पितृतर्पणमेव च ।।१३ १ ।।
मृतश्चात्र नरो याति नन्दीश्वरसलोकताम् ।
ततो देवं९३ पुनर्देवी वाक्यमाह गिरेः सुता ।।१३२।।
किमूचुस्त्वां सुरा देव कीदृशं चार्चयन् वरम् ।
कथयामास देवेशस्ततो देव्यै बृषध्वजः ।।१३३।।
देवैर्विज्ञापितो देवि निर्गतोहं वरानने ।
देव्या य एष पुत्रार्थं योगस्ते भुवनेश्वर ।।१ ३४।।

८३ प्रतिष्टवान् - क. । ८४ स्य सुदुर्मतेः - ख । ८५ श्रवणे - ख. । ८६ ज्वलन्तन्तन्तदोत्पलम् - क. ख । ८७ नन्दिने - क. । ८८ प्रोवाच्योत्थाय शङ्करः - क., प्रोत्थाय च स शङ्करः - -ख. । ८९ कदाचिन्नि हतो? - ख. । ९० क्षिप्रं - क. । ९१ हैमशृङ्गसमीपतः - ख । ९२ स्नातो - ख. । ९३ देव - ख। - -


अशुभान्यत्र दृश्यन्ते दारुणानि सहस्रशः ।
सन्त्रस्ता पृथिवी कृत्स्ना वयञ्च भृशमाकुलाः । ।१ ३५ ।।
तेनैष न यथा देव्या गर्भे सञ्जायते सुतः ।
भवेच्च तनयः श्लाघ्यो वर एष प्रदीयताम् ।। १३ ६। ।
ततोग्नौ तदद्भुतं तेजो मया पुत्रार्थमीश्वरि ।
सुतस्ते भविता श्रीमान् षट्शिरा द्वादशेक्षणः । । १ ३७।।
तस्य तद्वचनं श्रुत्वा शशाप गिरिजामरान् ।
यस्मान्मम सुतो देहे नेप्सितं तैर्दुरात्मभिः ।
स्वासु पत्नीषु तस्मात्ते न प्राप्स्यन्ति सुराः सुतम् ।।१ ३८। ।
पृथिवी चापि संमूढा मच्छापोपहतेन्द्रिया ।
बहून्पतीन्समासाद्य न पुत्रं प्राप्स्यते क्वचित् । ।१ ३९ । ।
सनत्कुमार उवाच९४

विरराम ततो देवी शप्त्वा देवान्सवासवान् ।
कैटभा नाम नाम्ना च पुण्या नैकवरप्रदा । ।8.72.१४० ।।
विन्ध्यस्य शिखरे हैमे तत्राभूद् गरिजा शुभा ।
पुण्यमायतनं तद्धि शिलाञ्च रमणाह्वयाम् । ।१४१ । ।
योभिगच्छेन्नरो व्यास मृतस्स गणपो भवेत् ।
अथाजग्मुः सुरास्सर्वे सार्धं तत्र हविर्भुजा । । १४२। ।
विवर्णाः कश्मलोपेताः सगर्भा लज्जयान्विताः ।
तान्द्वाःस्थानागतान्नन्दी शङ्कराय न्यवेदयत् । ।१४३ ।।
प्रविश्य समनुज्ञाता देवमूचुर्दिवौकसः ।
तेजो न शक्नुमः सोढुमिदं त्रिभुवनेश्वर ।। १४४।।
त्राहि नः सुरलोकेश यथा स्याम गतज्वराः ।
अन्धकश्चासुरोत्यर्थं तप्यते दुश्चरं तपः ।
भयञ्च नस्ततो देव दृश्यते सुमहद्विभो ।।१४५ ।।

९४ वाक्यमेतद् 'विररामे' त्यादिपरवर्तिपद्यार्धानन्तरं पठितं क पुस्तके ।

425

देवदेव उवाच
मा भीर्भवतु वो देवा हनिष्याम्यहमन्धकम्९५ ।
युष्मदर्थे पराक्रान्तं हिरण्याक्षसुतं वरम् ।।१४६। ।
यूयञ्च मेरुमध्यस्थं वनं यात सुविस्तृतम् ।
नाम्ना शरवणं९६ नाम पुण्यं द्वादशयोजनम् । । १४७।।
युष्माकं तत्र संभिद्य९७ कुक्षीन्दैवतपुङ्गवाः ।
मदीयं तत्परं तेजो निर्गमिष्यति दीप्तिमत् । । १४८।।
सुवर्णत्वं९८ च यास्यन्ति कुक्षयो वः सुरोत्तमाः ।
ततस्ते तद्वचः श्रुत्वा प्रणम्य शिरसा भवम् ।।१४९ । ।
श्रीमन्तं मेरुमाजग्मुः शरधानं च तच्छुभम् ।
यत्र तेषां तदा भित्त्वा कुक्षीन्तेजो निरक्रमीत्९९ ।।8.72.१ ५० ।।
युगान्तानलसंकाशं दुर्निरीक्ष्यं सुरासुरैः१०० ।
मेरुश्चैवाभवत् क्षिप्रं श्रीमानति मनोहरः ।।१ ५१ ।।
सर्वं हिरण्मयं चक्रे तेजो माहेश्वरं परम् ।
वाति गन्धवहो१०१ दिव्यस्सर्वर्तुकुसुमावहः । । १ ५२। ।

तेषाञ्च कुक्षिभेदास्ते सुवर्णत्वं परं ययुः ।
स्वर्गे दुन्दुभयो दिव्या नेदुः स्वयमनाहताः ।।१५३।।
पुष्पाणां वृष्टयः पेतुस्सुगन्धीनामनेकशः१०२।
नमस्कारैश्च भूतानामदृश्यानामभूत्स्वनः ।।१५४।।
एवमादीनि पश्यन्तः शृण्वन्तश्च सुरोत्तमाः ।
गत्वा पिनाकिने हृष्टास्सर्वमावेद्य सुव्रत१०३ ।
प्रेषिताः स्थाणुना जग्मुः स्वाँल्लोकान् हृषिताननाः ।।१५५।।

९५ हंस्ये तमहमन्धकम् - क. । ९६ शरवन - क. । ९७ संमित्त्वा - क. । ९८ सपर्णत्वं - क. । ९९ तेजोभिश्च व्यतिक्रमं (न) - क । १०० सुरैरपि - क ख. । १०१ गन्धर्वरो - क. । १०२ सुगन्धाना-मनेकशः - क. । १०३ सुव्रताः - क ।


श्रुत्वा देवैरभिहितमिदं प्रीतियुक्तैर्वचोग्र्यं
प्रीता देवी हृदयमहिता पुत्रजन्मप्रवृत्तिम् ।
ज्ञात्वा तस्थौ विबुधवरदा योगमाता विधात्री
तुष्टिञ्चागाद्धृदि सुरशिरःस्पृष्टपादारविन्दा ।।१५६।।
इति स्कन्दपुराणे स्कन्दजन्मप्रवृत्तिर्नाम द्विसप्ततितमो१०४ध्यायः
व्यास उवाच
अन्धकः कस्य पुत्रोसौ किं वीर्यः किं पराक्रमः ।
कथञ्च निहतः संख्ये सर्वमेतद्वदस्व मे ।। १ ।।
सनत्कुमार उवाच
शृणु व्यास महाबुद्धे सर्वमेतद्यथाभवत् ।
अन्धकस्य पुरावृत्तं सर्वं वक्ष्यामि ते द्विज ।।२ ।।
कश्यपस्य सुतौ दित्यां दैत्यौ तौ संबभूवतुः ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षस्ततोनुजः ।।३।।
ज्येष्ठस्तत्राभवद्राजा हिरण्यकशिपुस्तदा ।
तस्मिन्विनिहते वीरे नरसिंहेन धीमता ।।४।।
हिरण्याक्षोभवद्राजा सर्वदैत्यनमस्कृतः ।
अपुत्रः स तपस्तेपे पुत्रहेतोरिति श्रुतिः ।।५।।
स शंकुकर्णं संप्राप्य सिन्धुसागरसङ्गमे ।
तपस्तेपे दितेः पुत्रो देवं द्रष्टुं पिनाकिनम् ।।६।।

व्यास उवाच
कथं तदभवद्दिव्यं पवित्रं लोकविश्रुतम् ।
शंकुकर्णं महेशस्य क्षेत्रं सर्वार्थसाधकम् ।
यत्फलं पुण्यसंपच्च तन्मे व्याख्यातुमर्हसि । ।७।।

१०४ एकसप्ततितमो क.।

427
सनत्कुमार उवाच
पुरा हि भगवान्देवः कपर्दी नीललोहितः१ ।
सिन्धुसागरमागम्य लोकानुग्रहहेतवे ।।८।।
तपःकर्तुं समारेभे यदचिन्त्यं सुरासुरैः२ ।
दशस्वपि ततो दिक्षु रक्षणार्थं जगत्पतिः । ।९ । ।
स्थापयामास गणपान् निकुम्भादीन्सहस्रशः ।
शकुकर्णं महादंष्ट्रं स्थूलाक्षं स्थूलनासिकम् ।। 8.73.१० । ।
ह्रस्वपादकरं चैव दारितास्यं विभीषणम् ।
शार्दूलचर्मसंछन्नं द्वीपिचर्मोत्तरच्छदम् । ।१ १ । ।
शंकुकर्णमिति ख्यातं गणेशं सुमहाबलम् ।
समाहूय समीपन्तु भगवानिदमब्रवीत् ।। १ २।।
स्वैस्त्वं गणेश्वरैस्सार्धं न विशेयुर्यथा सुराः।
तथा पाहि वनं वत्स यावदेतद् व्रतं मम । ।१ ३ ।।
एवं स कृत्वा रक्षां तु महादेवो वृषध्वजः ।
तपस्तेपे महत्तत्र घोरं परमदुश्चरम् ।। १४। ।
अथाजग्मुस्सुरास्तत्र सर्वे शक्रपुरोगमाः ।
निरुद्धाः शकुकर्णेन न चेलुः पदमग्रतः । । १५ । ।
देवा ऊचुः
भो गणेशा वयं देवं शर्वमुग्रं कपर्दिनम् ।
द्रष्टुं कार्येण संप्राप्तास्तन्नो दर्शयतानघाः४ ।
आकुलास्तमपश्यन्तो नश्याम५ प्रमथेश्वराः६ । ।१ ६ । ।
शंकुकर्ण उवाच
न युष्माभिः सुराः शक्यो देवो द्रष्टुं कथञ्चन ।
तपः कुरुत भद्र वस्ततो द्रक्ष्यथ शङ्करम् ।। १७।।

१ नीललोचनः - ख. । २ सुरैरपि - क. । ३ कृत्वा स - ख. । ४ दर्शय ( दंशय?) मानघाः - क. । ५ न स्याम (? ), पश्याम - ख. । ६ प्रमथेश्वरं - क, । ७ शक्यं - क. ।



देवा ऊचुः

मा लोकानां विनाशः स्याद् गणेश्वर महाद्युते ।

इति प्रयच्छ नो द्वारं प्रसादं कुरु नः प्रभो८ । । १८।।

शंकुकर्ण उवाच

लोका नश्यन्तु यूयं वा न प्रवेशः प्रदीयते ।

विनष्टान्९ पुनरेवेशः स्रक्ष्यते भुवनेश्वरः । । १ ९। ।

स्रष्टा स एव भूतानां स विनाशयिता तथा ।

तं विना कः सुराः शक्तो लोकान्नाशयितुं विभुम् । ।8.73.२० ।।

यच्छाम न वयं द्वारमाज्ञा नः पारमेश्वरी ।

त एवमुक्ताः१० संचिन्त्य जग्मुर्ब्रह्मसदः सुराः ।।२१ । ।

ततो निवेदयामासुर्ब्रह्मणस्ते सुरोत्तमाः ।

अथ ब्रह्मा सुरानाह मया सह पुनः सुराः । ।२२ । ।

गच्छध्वं गणपान् यावत् प्रत्यापत्तिं नयामि वः११ ।

ततस्ते ब्रह्मणा सार्धं विष्णुना च दिवौकसः ।।२३ ।।

तमेव पुनराजग्मुस्तिष्ठते यत्र शङ्करः ।

अथ तान्पुनरेवासौ१२ रुरोध गणपेश्वरः । ।२४। ।

शंकुकर्णो गणाध्यक्षस्तेजसा प्रज्वलन्निव ।

अथ ब्रह्मा तमाहेदं सान्त्वमर्थयुतं वचः ।। २५।।

गणेश्वर न देवानां दौष्ट्यं किञ्चिद्धि विद्यते ।

तव प्रसादात्पश्यन्तु देवा देवं१३ वृषध्वजम् । ।२६। ।

शिरसा प्रणातास्तुभ्यं देवाश्चेन्द्रपुरोगमाः१४ ।

अहं च विष्णुना सार्धं प्रयाचेम गणेश्वर१५ ।।२७।।

तस्य तद्वचनं श्रुत्वा ब्रह्मणः स गणेश्वरः ।

क्रुद्धः पट्टिशमुद्यम्य वचः प्रोवाच निष्ठुरम् । ।२८।।

८ तत्प्रसाद कुरु प्रभो - ख. । ९ विनष्टे - क. । १० एवमुक्तस्तु - क । ११ च - क. । १२ पुनरेवाशु - क. ख. । १३ देवदेवं - क ख । १८. सेन्द्रपुरोगमाः - क ख. । १५ गणपेश्वरः - ख. ।

429

न मे गुरुतरो देवाः प्रणामो भवतां न्वयम् ।
आज्ञा गरीयसी शम्भोर्न प्रवेशोस्ति कश्चन ।।२९ ।।
प्रतिषिद्धान्१६ कथं ब्रह्मन्नियुक्ता रक्षणाय च ।
ईशाज्ञां समतिक्रम्य प्रयच्छाम प्रवेशनम् ।।8.73.३ ० ।।
तस्य तद्वचनं श्रुत्वा गणेशस्य महात्मनः ।
एकान्तं प्रययौ ब्रह्मा लज्जया परयान्वितः ।।३ १ ।।
देवाः सर्वे ततो१७ दृष्ट्वा व्रीडायुक्तं पितामहम् ।
क्रुद्धा मन्युपरीताङ्गा वाक्यमूचुर्गणेश्वरम् ।। ३२ ।।
गणाधिप न ते लज्जा गुरुमाक्रोशसे कथम् ।
नैवं१८ त्वां विब्रुवन्तं हि शंस्यते वृषभध्वजः ।।३ ३ ।।
अवमानं पुनर्मैवं१९ त्वमस्माकं कृथा गण ।
माद्य ते वयमुद्युक्ता नाशयिष्याम जीवितम् ।।३४।।
तेषां तद्वचनं श्रुत्वा शंकुकर्णो रुषान्वितः ।
वचः२० प्रोवाच संक्रुद्धस्तिर्यग् वीक्ष्य दिवौकसः ।।३ ५ ।।
गुरवः किं भवन्तो मे२१ येन शङ्केमराधिपाः ।
प्रसाद्य शङ्करं यूयं गता देवत्वमुत्तमम् ।।३ ६ ।।
गणभूताः सुरेशस्य यूयमप्यमरोत्तमाः ।
वयमप्यतियोगीशा गणपास्तस्य शूलिनः ।। ३७।।
समाना यूयमस्माकं हीना वा त्रिदिवौकसः ।
यस्माद्वयं सुरेशानं पश्यामोनुचराम च ।।३८।।
सर्वैरेव सुरैस्तस्माद्वयं पूज्याः सदाधिकाः ।
पश्यामो निर्भया यूयं प्रवेशं कुरुतामराः ।।३९।।
यावदद्य गणेशानां बलं द्रक्ष्यथ दारुणम् ।
यद्वो बलं च योगश्च२२ यत्तपो यश्च वः श्रमः ।।8.73.४० ।।

१६ प्रतिषिद्धं (?), .. द्धा - क । १७ ततो देवास्तथा - ख. । १८ नैव - क. । १९ अपमानं पुनश्चैव - ख. । २० तदा - ख । २१ भवन्त्येते - ख. २२ योगश्च - क. ख. ।

430

तत्सर्वं दर्शयध्वं वै ततो द्रक्ष्यथ२३ मे बलम् ।

तस्य तद्वचनं श्रुत्वा सर्वे देवाः सुगर्विताः । ।४१ ।।
प्रगृहीतायुधाः क्षिप्रं शंकुकर्णं विदुद्रुवुः ।
तेषामापततां व्यास सुराणां शूरमानिनाम् ।।४२।।
बलं जग्राह योगेन शंकुकर्णो महाबलः ।
निगृहीतबलास्ते तु सर्व एव सुरोत्तमाः ।।४३ ।।
नाशक्नुवन् पदं दातुं तस्थुः स्तम्भा इवाचलाः ।
निगृहीतेषु देवेषु विष्णुः प्रहरतां वरः ।।४४। ।
अभिदुद्राव वेगेन शंकुकर्णं गणेश्वरम् ।
स योगेन तदा विष्णोर्देहमस्तम्भयद्बली ।।४५।।
स योगं पुनरास्थाय विष्णुरैश्वर्यसंयुतः ।
युयुधे शंकुकर्णेन स चैनं प्रत्ययुध्यत । ।४६ । ।
तयोस्तु योगेश्वरयो२४ र्युक्तयोर्मुनिसत्तम ।
बभूव सुमहद् युद्धं२५ योगेनैव परस्परम् ।।४७।।
विनिगृह्य स तं विष्णुं गणेशः शर्ववल्लभः ।
पितरं मम योगेन युयोध परमाद्भुतः२६ । ।४८। ।
स२७ सूक्ष्मं योगमास्थाय ब्रह्मा२८ भूतान्यथाविशत् ।
यद्यद्विशत्यसौ भूतं ब्रह्मा लोकपितामहः ।।४९ । ।
तत्र तत्र स्थितं२९ ह्यग्रे शकुकर्णमवैक्षत ।
स भूतानि समुत्सृज्य तन्मात्राण्याविशत् प्रभुः । ।8.73.५० । ।
इन्द्रियाण्यथ तत्त्वानि भावाँश्चैव पितामहः ।
तत्र तत्र स योगात्मा योगं परममास्थितम् ।।५१ । ।
अपश्यत् स्थूलशिरसं शकुकर्णं महाबलम् ।
अथास्मिन्नन्तरे व्यास देवदेवस्य शूलिनः । ।५२। ।

२३ ज्ञास्थथ - ख. । २४ योगीश्वरयो - क. ख. । २५ दुद्रुवुश्च मुहुस्तत्त्वं - ख- । २६ परमाद्भुतं - ख । २७ सु - क. ख. । २८ महा - ख. । २९ तत्रास्थितं - ख. ।

431

दिव्यं वर्षसहस्रं तु प्रययौ द्वादशात्मकम् ।
समाप्तं चाभवद् व्यास व्रतं तस्य महात्मनः । ।५३।।
स समाप्ते३० व्रते तस्मिन् युगान्ताग्निसमद्युतिः३१ ।
अवैक्षत दिशः सर्वा जीवयन्निव३२ शङ्करः ।।५४।।

सोपश्यन्निगृहीताँस्तान्३३ सर्वानेव दिवौकसः ।
साम्नैव स तदा देवः शकुकर्णं न्यवारयत्३४ ।।५५।।
सम्यगाज्ञा कृता वत्स त्वया मे गणपेश्वर ।
मुञ्च देवानिमान्सर्वान् मावमंस्था गणेश्वर । ।५६ ।।
एवं देवेन संप्रोक्तः३५ शंकुकर्णो गणाधिपः ।
विमुच्य देवताः सर्वास्तस्थो३६ देवसमीपतः ।।५७।।
सुरा अपि तदा सर्वे व्रीडया परया युताः३७ ।
प्रणेमुर्देवदेवेशं भक्त्या परमया विभुम्३८ ।।५८। ।
तांस्तदा३९ व्रीडितान्देवः प्रहस्य विदितात्मवान् ।
उवाच ब्रह्मणा सार्धं विष्णुमाभाष्य सुस्वरम्४० ।।५९। ।
गणेश्वरोयं देवेशा मच्छासनपरस्सदा ।
यदनेन कृतं किञ्चिद् व्येतु तद्वः सुरोत्तमाः ।
कर्तव्यं यच्च तद् ब्रूत यदर्थं यूयमागताः ।।8.73.६० ।।
ब्रह्मोवाच
शंकुकर्णो ह्ययं श्रीमान गणेशो येन नो बलम् ।
हतं योगेन देवेश वरोस्मै संप्रदीयताम् ।
अस्मभ्यं परतो दद्यास्सदा४१ दर्शनमात्मनः ।।६१ ।।
देवदेव उवाच
अस्यैवेदं भवेन्नाम्ना पवित्रं लोकविश्रुतम् ।
शंकुकर्णमिति ख्यातं तथा स्थूलेश्वरं४२ शुभम् ।।६२।।

३० समाप्ते च - ख. । ३१ समप्रभः - ख । ३२ क्षीवयन्निव - ख. । ३३ ..तास्त्रान् - ख. । ३४ निवारयत् - क. । ३५ स प्रोक्तः - क । ३६ देवतान् सर्वान्तस्थौ - क ख. । ३७ परयान्विता? - ख। ३८ परमयान्विताः - ख. । ३९ ताँस्तथा - (?) । ४० सर्वशः - ख. । ४१ ... त्सदा - क., शर्वः - ख । ४२ शूलेश्वरम् - क. ।


समन्ताद्योजनमितं४३ सर्वतीर्थसमन्वितम् ।
सर्वयज्ञफलैर्जुष्टं सर्वदानफलैर्युतम् । ।६३ । ।
योत्रागत्य४४ चरुं कृत्वा मां यत्नेनार्चयिष्यति ।
अहोरात्रोपवासेन मम लोकं स४५ यास्यति । ।६४। ।
यत्किञ्चिन्नियमं कृत्वा योत्र संवत्सरं वसेत् ।
स योगं परमं प्राप्य शंकुकर्णसमो भवेत् । ।६५।।

यश्च प्राणानिह क्षेत्रे त्यजेन्नियममास्थितः ।
स देहभेदमासाद्य महागणपतिर्भवेत् । ।६६। ।
पितॄणामक्षयं श्राद्धमिह दत्तं भविष्यति ।
इयं चैश्वर्यसंपन्नास्तपोयोगबलान्विताः । ।६७ ।।
नित्यं द्रक्ष्यथ मां देवाः प्रयात विगतज्वराः ।
ततो देवो वरं दत्त्वा देवेभ्यः प्रभुरीश्वरः ।।६८। ।
प्रकामं दर्शनं नित्यं तत्रैवान्तरधीयत ।
गते तस्मिन्महादेवे ब्रह्मा सुरवरैर्वृतः ।। ६९। ।
तत्र लिङ्गं प्रतिष्ठाप्य चक्रे तीर्थान्यनेकशः ।
दशाश्वमेधिकं तीर्थं४६ पुण्यं४७ पञ्चाश्वमेधिकम् ।।8.73.७० । ।
सुराणां चैव तीर्थानि कृत्वा स्वभवनं ययौ ।
एतत्ते कथितं व्यास सिन्धुसागरसङ्गमे । ।७१ ।।
परं भगवतः स्थानं पवित्रं लोकविश्रुतम् ।
सिद्धचारणसंकीर्णमप्सरोगणसेवितम् ।।७२ ।।
बहुपुष्पफलोपेतं सदा विहगनादितम् ।
तस्मिन् गत्वा वने व्यास हिरण्याक्षः प्रतापवान् । ।७३ ।।
पुत्रहेतोस्तपस्तेपे ध्यायमानस्त्रिलोचनम् ।
अथ देवस्तदा गत्वा सगणो वृषभध्वजः४८ । ।७४। ।

४३ योजनमिदं - क. ख. । ४४ योभ्यागत्य - क., योभ्यासया - ख । ४५ च - ख. । ४६ पुण्यं - क. । ४७ तीर्थं - क. ख. । ४८ सगणेशो वृषध्वजः - ख. ।

433
रम्यं हिमगिरेः शृंगं मैनाकमिति४९ विश्रुतम् ।
तस्थौ परमयोगीशः परं ब्रह्म सनातनम् ।।७५।।
तस्यागत्य तदा देवी संस्थिता पृष्ठतः शनैः ।
कराभ्यां पद्मतुल्याभ्यां नेत्रे शम्भोर्न्यमीलयत् ।।७६ ।।
जानीते नेति संचिन्त्य क्रीडार्थं हिमवत्सुता ।
अथ तस्मिन् क्षणे व्यास जगदन्धमजायत ।।७७।।
अप्रदृश्यं हि तमसा तथाभूतं पुरा यथा ।
अथ देवस्तदा बुद्ध्वा तृतीयं नेत्रमव्ययम् । ।७८। ।
ललाटेसृजदूर्ध्वस्थं युगान्ताग्निसमप्रभम् ।

तेजसा तस्य नेत्रस्य स गिरिर्भस्मसादभूत्५० । ।७९ ।।
पार्वती पितरं दृष्ट्वा तथा दग्धं पिनाकिना ।
अपनीय करौ तस्थौ५१ विषण्णा पतिपार्श्वतः । ।8.73.८० ।।
अथ देवस्तदा दृष्ट्वा विषण्णवदनामुमाम् ।
सौम्येन चक्षुषापश्यच्छैलं तं५२ पुनरेव तु । ।८ १ ।।
स तथा५३ दृष्टमात्रस्तु पुनः पौराणिकोभवत् ।
प्रकृतिस्थं पुनर्दृष्ट्वा देवी पितरमव्ययम् ।
प्रणम्योवाच भर्तारं हृषितास्या५४ गिरीन्द्रजा । ।८२ ।।
शैल एष त्वया देव किमर्थं भस्मसात् कृतः ।
किमर्थं प्रकृतिस्थश्च पुनरेव कृतः प्रभो ।।८३ ।।
तस्यास्तद्वचनं श्रुत्वा प्रोवाच परमेश्वरः ।
लोचने मे त्वया देवि यस्मिन्काले निमीलिते । ।८४।।
अन्धास्समभवँल्लोकास्तदा सर्वे तमोवृताः ।
प्रकाशार्थं ततो देवि नेत्रमेतन्मया कृतम्५५ ।।८५। ।
ललाटे सुमहद्येन दग्धोयमचलोत्तमः ।
त्वाञ्च दीनां पितृवधादुपलक्ष्य ततः शुभे । ।८६ ।।

४९ इति (?) । ५० भस्मसाद्भवत् - क. ख. । ५१ तस्मिन - ख. । ५२ शैलमपश्यत् - ख । ५३ अथवा ( अथासौ?) - ख. । ५४ सा - ख । ५५ नेत्रमुन्मीलयावृतं - ख. ।


प्रियार्थं तव सुश्रोणि प्रकृतिस्थः पुनः कृतः ।
अस्मिंश्च तमसा ग्रस्ते लोके तीव्रेण सर्वतः ।।८७। ।
उत्पन्नोन्धः प्रभावेण मम देवि तथैव च ।
तप्यमानाय दास्यामि हिरण्याक्षाय तं सुतम् ।।८८ ।।
एवमुक्त्वा स भगवान् प्रगृह्यान्धं गणैर्वृतः ।
सिन्धुसागरमागम्य हिरण्याक्षमुवाच ह ।।८९।।
पश्य मां त्वं दितेः पुत्र चक्षुर्दिव्यं ददामि५६ ते ।
शर्वोहमागतो दैत्य वरं ब्रूहि यथेप्सितम् । ।8.73.९० । ।
स प्रोत्थाय५७ हिरण्याक्षः प्रणम्य शिरसा भवम् ।
वरं संप्रार्थयद्५८ देवं पुत्रं दत्त्वेति सत्वरम् ।।९१ ।।
तमुवाच सुरश्रेष्ठः शिरसा५९ पादयोर्नतम् ।

अयन्ते सुरशार्दूल पुत्रः६० पुत्रशताग्रजः६१ ।।९२।।
मावज्ञामन्ध६२ इत्यस्य कुर्यास्त्वमसुराधिप ।
भविता ते महानेष तपोवीर्थबलान्वितः ।।९३ ।।
न कस्यचित्वयं६३ वध्यो मत्तोन्यस्य भविष्यति ।
ततः स भगवान्देवस्तस्मै दत्त्वा सुतं शुभम् ।।९४।।
जगाम शिखरं रम्यं मैनाकं पुनरेव तु६४ ।
आदायान्धं सुतं सोपि हिरण्याक्षो महासुरः ।।९५।।
स्वमश्मकपुरं६५ यात्वा भार्यामाह मनस्विनीम्६६ ।
अयं तुभ्यं सुतो देवि दत्तो भगवता स्वयम् ।।९६।।
संवर्द्धयैनं योगेन मा प्रमादं कृथाः क्वचित् ।
तस्याः स्नेहेन तं दृष्टवा स्तनाभ्यां प्रस्नुतं६७ पयः ।।९७।।
संवर्ध्यमानः६८ कालेन सोन्धकः समवर्द्धत ।
यदा६९ तु यौवनं प्राप्तस्तदैवं७० समचिन्तयत् ।।९८।।

५६ ददानि - क ख । ५७ चोत्थाय - ख । ५८ वरमप्रार्थयद् - क. ख. । ५९ चिरया(मा?) । - ख. । ६० पुत्रं - क ख. । ६१ पुत्रशताग्रज - क,.. जः - ख. । ६२ अन्ध - क. । ६३ दयं - ख. । ६४ च - ख. । ६५ स्वकीयं पुन (र) - ख., स्वयमन्तःपुरं - (?) । ६६ यशस्विनीम् - क. । ६७ प्रस्नुतं - क ख. । ६८ संवर्द्धमानः - ख. । ६९ यथा - व । ७० ...स्तुदैव - क. ख. ।

435

धिग् जीवितं ममान्धस्य मृत्युरेव वरो मम ।
योहमन्धो न पश्यामि गृह७१ संबन्धिबान्धवान् ।।९९।।
धन्यास्ते पुरुषा लोके ये स्वयं यान्त्यविक्लवाः ।
दृष्ट्वा दृष्टवा मुखं बन्धूनाभाष्य हि७२ यथासुखम् ।।8.73.१ ०० ।।
कार्यं भवेच्च लोष्टेन तृणेनाथ शवेन७३ वा ।
न मयानुगृहीतेन धिङ्मामशुभकारिणम् ।।१ ०१ ।।
सुतस्नेहादयं दैत्यः सदा मां रक्षते पिता ।
हन्तव्यं न विहन्त्येष कोषक्षयकरं हि माम् ।।१ ०२ ।।
नायं स्नेहेन संमूढो जानातीमां मम व्यथाम् ।
अहमेव करिष्यामि यत्कार्यं बुद्धिमत्तमैः७४ ।। १०३ ।।
तपो महत्समास्थाय चक्षुष्मान् भविता ह्यहम् ।
स एवं परिनिश्चिन्त्य७५ बहुधान्धः सुबुद्धिमान् ।।१ ०४।।

आमन्त्र्य सहितं७६ मात्रा पितरं तं प्रणम्य च ।
जगाम तपसे७७ धीमान् संकल्प्य कृतनिश्चयः । । १ ०५।।
पित्रा शोकपरिप्लुतेक्षणमुखेनायासखिन्नात्मना
मात्रा चासकृदश्रुपातमुखया संवीक्ष्यमाणश्चिरम् ।
तत्तीव्राधृतिखेददृष्टिविरह७८ प्रक्ष्वेडितोन्धः श्वसन्७९
ध्यायन्देवमुमापतिं स८० तपसे यातो गृहादन्धकः ।। १०६ ।।
इति स्कन्दपुराणे अन्धकोपाख्याने तपःप्रयाणं८१ नाम त्रिसप्ततितमो८२ध्यायः

सनत्कुमार उवाच
अथ गत्वा स विप्रेन्द्र हिरण्याक्षसुतस्तदा ।
गङ्गाद्वारं शुभद्वारं तपोवनमनुत्तमम् ।।१ ।।

७१ गृहे - क. । ७२ मुखं हि बन्धूनां भाषन्ते - ख, मुखंस्वबन्धूनामाभाषन्ते (?), सुखं हि बन्धूनां - क । ७३ शरेण (?) । ७४ -..सत्तमैः - क. ख. । ७५ परिनिश्चित्य - (?) । ७६ सहितो - ख.। ७७ तपसो - क. ख. । ७८ दृष्टिखेदविरहं - क. । ७९ प्रक्षोधितोन्तः श्वसनः - ख., प्रख्यापितान्तः, स्मयन् - घ. । ८० ध्यायन्पादमुमापतेः - क. टि., ..मुमापतेस्स - क. । ८१ अन्धकतपः प्रयाणे - ख. । ८२ द्विसप्ततितमो - क. ।

436
दिव्यं कनखलं नाम यत्र हैरण्वती नदी ।
वृक्षाः कनखला यत्र सर्व एव हि काञ्चनाः ।।२।।
यत्र दक्षः पुरा यज्ञमयजद् दैवतैस्सह१ ।
महादेवेन यत्रास्य यज्ञो विनिहतः पुरा । । ३ । ।
तत्रासौ देवमभ्यर्च्य स्नातः प्रयतमानसः ।
नमस्कृत्वा दैवतेभ्य इदं वचनमब्रवीत् । ।४। ।
अन्धक उवाच
येस्मिन् तपोवने देवा भूतानि विविधानि च ।
सर्वांस्ताञ्छरणं यामि तपःसिद्धिं दिशन्तु मे२ ।।५।।
अद्यप्रभृति कर्त्तास्मि तप३ उग्रं सुदुश्चरम् ।
वरान् येनाप्नुयामिष्टान्मृत्युं वा प्राणनाशनम । ।६।।
सनत्कुमार उवाच
स एवमुक्त्वा तु ततः पाराशर्य महाबलः ।

संवत्सरं वायुभक्षो बभूव क्लमवर्जितः ।।७। ।
तथा त्रिषवण४ स्नायी जुहवानोग्नीँस्तथैव च५ ।
देवार्चनरतश्चैव जपहोमपरस्तथा६ ।।८। ।
वर्षे वर्षे तु७ संपूर्णे स्वाङ्गादुत्कृत्य कार्षिकम्८ ।
पिशितस्य तदा भागं जुहावाग्नौ महासुरः९ ।।९। ।
एवं तस्यागमद्दिव्यं सहस्रं मुनिसत्तम ।
जुहवतः स्वानि मांसानि वर्षाणां प्रत्यहं तदा । । 8.74.१० ।।
सोसुरः शंखहाराम्बुसुधाकुन्देन्दुपाण्डरः ।
बभूवास्थिसिराशेषः केवलं१० तपसि स्थितः । ।१ १ । ।
स तेन तपसा युक्तो भास्करं निष्प्रभं तदा ११ ।
सोमं च ग्रहताराभिस्सह चक्रे मितात्मवान् ।। १ २। ।

१ देवतैस्सह क. ख. । २ माम् - ख. । ३. .स्मिन्तप - क- । ४ त्रिषवणं - क. । ५ जुहवानोग्निं तथैव च - क. ख । ६ जप्यहोमपरस्तथा - क ख. । ७ वर्षेथ - ख. । ८ कायिकम् - क. । ९ महासुतः - ख. । १० केवले - ख. । ११ तथा - ख. ।


स एव भास्करो यद्वत् प्रकाशयति तेजसा ।
अशोषयत् पल्वलानि नदीकूपसरांसि च ।। १३ ।।
पवनं स्तम्भयामास सोन्धकस्तपसा तदा१२ ।
व्योम्नि सिद्धा न गच्छन्ति विमानानि च पेतिरे१३ । ।१४।।
तस्य तत्तपसो रूपं दृष्टवा विघ्नशतान्युत ।
अकरोत् सहसा शक्रो विक्रियां न च सोन्वगात् ।।१५।।
ततो ब्रह्मा तमभ्येत्य१४ प्रोवाचान्धकदानवम् ।
महासुर तपो घोरं त्वया तप्तं महाबल ।
तुष्टोस्मि ते१५ महाबाहो चक्षुष्मान्भव सुव्रत । ।१६।।
शरीरं प्रकृतिं यातु यथापूर्वञ्च तेसुर ।
ब्रूहि चान्यं वरं भूयो यस्ते मनसि संस्थितः ।। १७।।
सनत्कुमार उवाच
स चक्षुष्माँस्तदा१६ भूत्वा शरीरेणाक्षतेन च ।
उवाच प्रणतः साक्षाद्१७ ब्रह्माणं लोकभावनम् । । १८।।
अन्धक उवाच

भगवन् यदि तुष्टोसि यदि मे चरितं तपः ।
अप्रतिद्वन्द्वतां१८ संख्ये दैवतेभ्यः पितामह ।।१ ९। ।
महाबलत्वं मायाश्च१९ तथा चामरतामपि ।
एतदिच्छामि देवेश यदि त्वं वरदो मम । ।8.74.२० ।।
सनत्कुमार उवाच
तस्य तद् वचनं श्रुत्वा प्रहस्य भगवान् विभुः ।
हिरण्याक्षसुतं प्राह पुनरेव वचः शुभम् ।।२१ ।।
अमरत्वं न दैत्यस्य ददामि२० दितिनन्दन ।
सान्तरं तु भवेत्तत्ते स्वयमेवोत्तरं वद ।।२ २ । ।

१२ स्तपसस्तथा - ख. । १३ पेदिरे - ख. । १४ ब्रह्माणमभ्येत्य - ख. । १५ तुष्टोस्मिन्ते - क. । १६ चक्षुष्माँस्तु तदा - ख. । १७ सार्धं (सोन्धः?) - ख. । १८ अप्रतिद्वन्द्वता - ख. । ११ च - ख । २० ददानि - क., ददाति ख. ।


अन्धक उवाच
या स्त्री स्याल्लोकमाता वै प्रणमेयं न तां यदि ।
तदा स्यान्मम मृत्युस्तु मृत्युहीनोन्यथा२१ ह्यहम् ।।२३ ।।
ब्रह्मोवाच
एवमेतद् भवतु ते त्वया प्रोक्तं यदद्य वै२२ ।
अन्धको भव नाम्ना त्वं लोके ख्यातिं च यास्यसि ।।२४। ।
सनत्कुमार उवाच
एवमुक्त्वा स भगवानन्धकं देवकण्टकम्२३ ।
जगाम स्वं तदावासं विररामान्धकश्च सः । ।२५ । ।
स गङ्गाम्भोभिराप्लुत्य देवमिष्ट्वा यथाविधि ।
अग्निं हुत्वा ततो धीमाननुमान्य तपोवनम् ।
सहायैत्सह दैत्येन्द्रो जगाम२४ पितुरन्तिकम् ।।२६।।
स हृष्टचेतास्तपसा२५ महाबलो विवृद्धकामः सुरशत्रुतोषणः ।
पितुस्सकाशं पुनरेव दीप्तिमानगच्छदुद्धूतबलाहकोपमः ।।२७।।
इति स्कन्दपुराणे अन्धकवरलाभो नाम२६ चतुःसप्ततितमोऽ२७ध्यायः

सनत्कुमार उवाच

सोष्टाभिर्दानवैस्सार्धं गत्वा तत्पुरमन्तिके ।
निवेदयामास पितुः कृतार्थोन्धक आगतः ।। १ ।।
प्रियाख्यातुस्ततो१ व्यास हिरण्याक्षोसुरेश्वरः२ ।
ददौ रत्नान्यनेकानि तथा कामानभीप्सितान् ।।२। ।
स्वयं राजा तदा३ सर्वैः सुहृद्भिः सहवाहनैः ।
सह स्त्रीभिर्ययौ तूर्णं सोमस्तारागणैरिव ।। ३ । ।

२१ यथा - क. । २२ यदन्धक - ख. । २३ लोककण्टकम् - ख । २४ दैत्येन्द्रैर्जगाम - ख. । २५ प्रहृष्टचेतास्तपया - ख., ...सं - ख. । २६ प्रदानो नाम - ख., प्रदान नाम - घ. । २७ त्रिसप्तति- तमो - क. ।
१ प्रियाख्यातुं ततो - ख । २ महासुरः - ख. । ३ ततः - ख. ।



स गत्वा नातिदूरेथ वने साशोकचम्पके ।
आससाद सुतं श्रीमान्४ सोमो बुधमिवापरम् । ।४। ।
कृतार्थं स सुतं५ दृष्ट्वा तुष्टोभूद्दानवेश्वरः ।
स्नेहात्स तं६ परिष्वज्य मूर्ध्न्युपाघ्राय चासकृत् ।।५ । ।
कथं केन च कालेन के च लब्धा वरास्त्वया७ ।
पृष्टः स कथयामास यथावृत्तमशेषतः । ।६। ।
तस्य तद्वरदानञ्च तथा माहात्म्यमेव च ।
श्रुत्वा तेसुरशार्दूलाः८ प्रणेदुः सागरा इव ।।७। ।
सनत्कुमार उवाच
ततस्तं रथमारोप्य९ हिरण्याक्षोन्धकं सुतम् ।
सुहृद्भिस्तैः सहैवाशु प्रविवेश स्वकं पुरम् ।।८।।
स पुत्रसहितो भाति दैत्यः संपूर्णमानसः ।
चरन् राशिमिवादित्यो यथा सह शनैश्चरः । ।९। ।
सनत्कुमार उवाच
ततः प्रविश्य दैत्येन्द्रः सुहृद्वर्गमुवाच सः१० ।
अध्वर्युरिव११ सान्नाय्ये१२ यथान्यानृत्विजः स्थितान्१३ ।। 8.75.१० ।।
हिरण्याक्ष उवाच
शृणुध्वं यदिदानीं मे कृत्यं हृदि चिरस्थितम् ।

कर्तव्यं सह सर्वैस्तु युष्माभिर्भीमविक्रमैः ।।१ १ ।।
मया मनीषितं पूर्व कृतकृत्य इहागते ।
अन्धके नगरेस्मिन्वै कर्ताहं कौमुदीमिति ।।१२।।
मखघ्नस्य च देवस्य देवरात्रिं महाप्रभाम्१४ ।
करिष्यामीति तत्सर्वं क्रियतामविशंकया ।। १ ३।।

४ धीमान् - ख. । ५ तु तं - क ख । ६. त्सुतं (?) ७ इति (?) । ८... सुरपशार्दूलाः(?)- ख. । ९ रथमारोह्य - ख. । १० ह - क. । ११ अध्वयुःसह - ख । १२ सायाह्ने - क, सामाह्नेः ख. । १३ शुभान् - क. ख. । १४ प्रभोः - ख. ।



घुष्यतां नगरे ह्यस्मिंश्चत्वरेषु सभासु च ।
कौमुदीदिवसानष्टौ१५ सप्त चैव ममाज्ञया ।। १४।।
तावदेव च देवस्य सन्तु मे देवरात्रयः ।
सुहृदो ये च दैत्येन्द्रा दानवाश्च महाबलाः ।।१ ५।।
सर्वासु दिक्षु तेपीह समायान्तु रमन्तु च ।
अस्मत्पक्षे च ये विप्राः शुक्रप्रभृतयः शुभाः ।। १ ६।।
नागा रक्षांसि यक्षाश्च गन्धर्वा मनुजास्तथा ।
तेपि सर्वे समायान्तु रमन्तु च मया१६ सह ।।१७।।
सनत्कुमार उवाच
त एवमुक्ता दैत्येन्द्रा हिरण्याक्षेण धीमता ।
तथा चक्रुस्तदा सर्वं१७ यथोक्तममरद्विषा ।। १८।।
दूतान् संप्रैषयन्१८ क्षिप्रं दैत्यानां दानवैस्सह ।
तथान्येषां च पक्षाणामात्मनः शक्तिनन्दन ।। १ ९।।
निमन्त्रयति वो राजा हिरण्याक्षो महाबलः ।
सुहृद्वर्गैस्तु१९ सहिता गच्छध्वं तं दिदृक्षवः ।।8.75.२ ० ।।
घण्टिक२०श्चाहतैर्वस्त्रैर्वेष्टितः सुविभूषितः ।
आरूढः पाण्डरं मत्तं गजं समवघोषयत् ।।२ १ ।।
राजा जयति दैत्येन्द्रो हिरण्याक्षः प्रतापवान् ।
हता दैत्यद्विषः सर्वे दानवानाञ्च शत्रवः ।। २२ ।।
जयाय दितिपुत्राणामादित्यानां भयाय२१ च ।
प्रातःप्रभृति राजा व आज्ञापयति कौमुदीम् ।।२३।।

देव२२रात्रिं च२३ देवस्य रुद्रस्य सुरनाशनीम्२४ ।
सुसंमृष्टोपलिप्ताभी रथ्याभिः क्रियतां पुरम्२५ ।।२४।।

१५ दिवसे चाष्टौ - ख. । १६ हा - क । १७ सर्वे - ख. । १८ दूतानप्रेषयन् - क. ख । १९ .. श्च - ख । २० घण्ठिक ख । २१ जयाय -क । २२ दीप (?) । २२ ... रात्रीश्च - ख. । २४ सुरनाशनीः - ख । २५ परां - क. ।

441
वासोभिरहतैः सर्वे भवन्तु२६ पुरवासिनः ।
स्रग्विणः सशिरःस्नाता दत्तभुक्ता२७ यथाक्रमम् ।। २५। ।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्तकाः ।
उच्छ्रियन्तां पताकाश्च गृहवीथ्यापणेषु च । । २६ । ।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु च२८ ।
पुष्पप्रकरजुष्टानि२९ धूपैर्नानाविधैरपि । ।२७। ।
स्रग्दामवन्ति सर्वाणि वनमालाकुलानि च ।
ब्राह्मणाश्चैव३० भोज्यन्तां क्रियन्तां वाचानि३१ च । ।२८।।
ब्रह्मघोषाश्च सर्वत्र पुण्याहोदीरणानि च ।
दीपरात्रौ च सर्वत्र राजमार्गे गृहेषु च३२ । । २९।।
अनन्तराः३३ क्रियन्तां वै प्रचुरस्नेहवर्त्तयः ।
तरुणाः सह योषिद्भिस्समन्तात्पर्यटन्तु३४ च ।।8.75.३ ० । ।
रममाणा हसन्तश्च गायन्तो नृत्तसेविनः ।
भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां दैत्ययोषितः । ।३ १ ।।
महादेवस्य पूजां च३५ गन्धपुष्पादिकीं शुभाम् ।
उपहाराँश्च विविधान् स्नपनानि३६ महान्ति च । ।३ २। ।
वलयः पुष्कला३७ श्चैव भक्ष्यभोज्यैरलंकृताः ।
दीपांश्च विविधाकारान् पानानि च रसाँस्तथा३८ ।।३३ ।।
फलानि च विचित्राणि मांसपक्वमनूपकम् ।
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ।।३४। ।
बद्ध्यन्तां पशवश्चात्र भोज्यन्तां द्विजसत्तमाः ।
यो न कुर्यादिदं सर्वं पुरवासी जनः३९ क्वचित् ।
पातयेत्तस्य शारीरं राजा दण्डं४० महायशाः४१ । ।३ ५ ।।

२६ सर्वैर्भवन्तु - क. । २७ दत्तपक्ता - क., दन्तपंक्त्या - ख, दत्तपक्षा (भक्षा?) - घ । २८ वः - क. । २९

पुष्पप्रकारैर्जुष्टानि - ख । ३०. श्चापि - ख. । ३१ वाचकानि - ख. । ३२ गृहेगृहे - ख. । ३३ अनुत्तराः - क. । ३४ रमत्ताः पर्यटन्तु - ख. । ३५ पूजाश्च - क ख । ३६ स्नापनानि - ख । ३७ पुष्कलाः - ख. । ३८ सरसानि च - ख. । ३९ नर. - क. ख. । ४० राजदण्डं - ख । ४१ महायसः - ख.



सनत्कुमार उवाच

एवं स४२ घोषयित्वा तु घाण्टिको हस्तिपृष्ठतः४३ ।
जगाम स्वगृहं भूयः कौमुदी चाभ्यवर्तत४४ ।। ३ ६। ।
यथोक्तं तत्तदा सर्वमकुर्वत पुरे जनाः ।
राजापि संयतः स्नातः शुचिः प्रयतमानसः ।। ३७।।
दिवसे दिवसे व्यास स्नपयामास४५ यत्नवान् ।
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ।। ३८ ।।
क्षीरेण सर्पिषा दध्ना रसैश्च बहुभिः शुभैः ।
पुष्पैः फलैश्च बीजैश्च रत्नैश्चाद्भिः समन्वितैः४६ । ।३९।।
भस्मना गन्धयुक्तेन उदकेन सुगन्धिना ।
एकैकस्य स्वयं राजा घटानां४७ दशभिः शतैः ।।8.75.४० ।।
दिवसे दिवसे व्यास त्र्यम्बकं सोभ्यसेचयत् ।
गन्धैः पुष्पैश्च धूपैश्च जप्यैर्बलिभिरेव च ।।४१ । ।
पूजयित्वा ततो राजा विप्रानन्यानभोजयत्४८ ।
स कृत्वा पशुभिर्मेध्यै रत्नैर्मणिभिरेव च ।।४२ ।।
बलिशय्यासनाद्यैश्च स्तूयमानो गृहान्ययौ ।
तथैवान्येपि दैत्येद्राः सोन्धकश्च महाबलः । ।४३ ।।
चक्रुः सर्वे मुनिश्रेष्ठ यथा राजा तथैव ते४९ ।
अन्धकं५० स गृहीत्वा तु५१ हिरण्याक्षः प्रतापवान् । ।४४।।
पद्भ्यामपातयद् व्यास रुद्रस्येदमुदाहरन् ।
एष देवः५२ सदा पुत्र तवास्तु सुमुखः प्रभुः ।।४५।।
अस्मिन् भक्तिस्त्वया कार्या भाविता परमेश्वरे ।
एष वन्द्यश्च पूज्यश्च अतो नास्ति परो गुरुः ।
पूजयेथाः सदैवैनं भक्तितः परमेश्वरम् ।।४६।।

४२ सं - ख. । ४३ हस्तिपृष्ठगः - ख. घ । ४४ चास्य - क., चाप्यवर्तत - घ. । ४५ स्नापयामास - क । ४६ रत्नैश्चापि समन्ततः - ख । ४७ घंटानां - क. । ४८. नन्याँश्च भोजयत् - क. । ४९ च - ख. । ५० अन्ध -

क. । ५१ सुगृहीतं तु - ख. । ५२ देव - क ख. ।



सनत्कुमार उवाच

स एवमुक्त्वा प्रणिपत्य शंकरं महासुरः सोसुरदानवेश्वरः ।

जगाम धीमान् पुनरेव निर्वृतो५३ निवेशनं देवपतिर्यथा स्वकम् । ।४७।।

इति स्कन्दपुराणे कौमुदीमहोत्सवो नाम५४ पंचसप्ततितमो५५ध्यायः

सनत्कुमार उवाच

अथ तस्यां सह स्त्रीभिः कौमुद्यां दैत्यदानवाः ।

रेमिरे रक्तमनसो देवाः स्वर्गगता इव ।। १ ।।

तत्र काचिच्छुभापाङ्गी पद्मं दिव्यं मुखोपरि ।

मुखारविन्दत्राणार्थं ददौ सोमभयादिव ।।२।।

अपरा चरणेनैत्य१ प्रियं मत्ताभ्यताडयत् ।

शीतांशुरिव पादेन विकचं शरदम्बुजम्२ ।।३ ।।

अपरा राजमार्गाणामनभिज्ञाः कुलस्त्रियः ।

स्फाटिकोपचितां भूमिं दृष्टवा मुञ्चन्ति पादुकाम् ।।४।।

उत्कृष्य वसनं चान्या३ विप्रेन्द्र जलशङ्कया ।

राजमार्गेषु गच्छन्ति दृष्ट्वा मणिचितां भुवम् । ५।।

काचित् प्रियेण सन्त्यक्ता रक्तेनान्येन निर्गता ।

गृहाच्चन्द्रांशुभिः स्पृष्टा पपात मदनालसा ।।६।।

पतितैव४ च सा सोममुवाचेदं कुलाङ्गना ।

भूयो मां त्वं करैस्तीक्ष्णैर्दहसे नलिनीमिव ।।७।।

सूर्येण किल दग्धानि जीवयस्यौषधानि(?) ह ।

मदनेन कथं दग्धां न जीवयसि मां दृढम् ।।८।।

५३ निर्वृतिं - ख. । ५४ पुरप्रवेशो नाम - घ- । ५५ चतुःसप्ततितमो - क. ।

१ नेत्य - क. ख. । २ शरदविकचाम्बुजं - ख. ३ मान्या - क. । ४ पतिता - ख ।



काश्चिद्५ रमण्यो दोलासु दोलयन्त्यो परस्त्रियः ।

जलचन्द्र इवाभान्ति वीचिचञ्चलमूर्त्तयः । । ९ । ।

केचिद् गायन्ति सहिताः स्त्रीभिर्दैत्या महाबलाः ।
गन्धर्वा नन्दनवने अप्सरोभिर्यथा सह ।। 8.76.१० ।।
राजमार्गः क्वचिद् भाति स्त्रीभिर्बह्वीभिरावृतः ।
यथा नभसि चित्रोसौ दिव्यो देवपथः शुभः ।।१ १ ।।
क्वचिन्नूपुरकाञ्चीना कोकिलानाञ्च६ निस्वनः ।
बभौ श्रोत्रसुखः श्रोतुः७ कलामदनदीपनः ।।१ २।।
क्वचिद्रमणरक्तानां स्त्रीणां व्यास प्रियैः सह ।
हृदयव्याकुलकरः श्रूयते मधुरः स्वरः८ ।।१३ ।।
एवं समभवद् व्यास बहुचित्रः स उत्सवः९ ।
दानवानां तदा प्रीतिसौख्यविश्रम्भवर्द्धनः ।।१४।।
तस्मिन्नुपरये भूयः पूर्ववत्संप्रतिष्ठिते ।
प्रकृतिस्ते जने व्यास दानवास्ते समागताः ।।१ ५।।
विविशुर्भीमसंह्रादाः सभां दिव्यां मनोरमाम् ।
जाम्बूनदमयस्तम्भां वज्रवैदूर्यवेदिकाम् ।।१६ ।।
मुक्तादामावलम्बाढ्यां१० स्रग्दामोत्तमभूषिताम् ।
वज्रवैदूर्यनीलेन्द्रमहानीलाम्रपल्लवैः ।।१७।।
लोहितैः स्फाटिकैश्चैव तथा मरकतैरपि ।
दिव्यजालोपसन्नद्धां११ किङ्किणीचित्रशोभिताम्१२ ।। १८।।
बहुपुष्पफलैश्चैव सर्वकामप्रदैर्द्रुमैः ।
उपेतां दीर्घिकाभिश्च बहुशय्यासनां शुभाम् ।।१ ९।।
अक्लमा बहुनिष्यन्दां१३ सर्वदुःखविवर्जिताम् ।
सर्वकामसमृद्धां च बहुस्त्रीपुरुषाकुलाम् ।। 8.76.२० ।।

५ काचिद् - क. । ६ नूपुराणां च-- ख। ७ श्रोतुं - क ख । ८ स्वनः - ख. । ९. स्तदोत्सवः क। १० विलम्बान्तां - ख । ११ दीव्यज्जालोपसन्नद्धां (?), दिव्यलाजो. - ख, दिव्यचित्री (?) १२. -जालशोभिताम् - (?) । १३ निस्पन्नां - घ,

445

विविशुस्तां सभां दिव्यां दैत्या दर्पसमावृताः ।
प्रह्लादश्चानुह्लादश्च सिनिर्वाष्कल एव१४ च ।।२१ ।।
विरोचनो बलिश्चैव बलिपुत्राश्च विश्रुताः ।
सहस्राणि दश द्वे च येषां श्रेष्ठो महाबलः ।।२२ ।।

बाणो नाम महामायो राजा बाहुसहस्रधृक् ।
बाणस्य पुत्रा ये चान्ये सहस्राणि दशैव ते ।।२३ । ।
मुरो धमुषुमण्डश्च (?) विप्रचित्तिश्च दानवः ।
कालो हयशिराश्चैव सम्बरः कालसम्बरः । ।२४।।
विश्रुतश्चेन्द्रदमनः कालनेमी च दानवः ।
तथा सुन्दनिसुन्दौ च विपाकः पाक एव च ।।२५।।
राहुश्च शतकेतुश्च ध्वजस्तारः सतारकः ।
महिषो दुन्दुभिश्चैव कालकश्च महाबलः । ।२६।।
अन्धकश्च तथाटिश्च बकः शरभ एव च ।
स्वर्भानुर्वृषपर्वा च मधुः कैटभ एव च ।।२७। ।
महाकायः शतानन्दः शतदुन्दुभिरेव च ।
कार्त्तस्वनश्च हस्ती च बलो नरक एव च ।।२८ ।।
ध्वाङ्क्षो मूकेल्वलौ चापि वातापी सासृपुञ्जिकः? ।
कण्डलश्चैव मीढश्च दुर्लोमा चैव विश्रुतः ।।२९। ।
धुन्धुश्च शतमायश्च शतावर्तोथ दुस्सहः ।
चन्द्रसूर्यौ नरश्चैव देवान्तकनरान्तकौ ।।8.76.३ ० ।।
ब्रह्महा यज्ञहा चैव इल्वलः (?) पिल्वकस्तथा ।
मयश्च दानवश्रेष्ठो मयपुत्राश्च विश्रुताः । ।३ १ । ।
तेषामष्टौ सहस्राणि सर्वे च कृतनिश्चयाः ।
वृत्रश्च दानवश्रेष्ठो नमुचिर्भजहस्तथा ।।३ २ ।।
शतोदरश्च व्यंसश्च ताथायश्च (?) ह्रदोदरः ।
केशी तथा प्रलम्बश्च कबन्धो धेनुकश्च ह । ।३ ३ ।।

१४ बाष्कलिरेव क।


हालो गार्ग्यशिराश्चैव कुशः शम्भुस्तथैव च ।
तथा गगनमूर्धा च सालुकः शाल्व एव च । ।३४। ।
मेघनादश्च विख्यातो महानादस्तथैव च
खरोथ खररोमा च सूचीलोमा च दानवः ।। ३५। ।
परिघोपरिघश्चैव दण्डः काश्यप एव च ।
दुन्दुभिश्च महाकायः सैंहिकेयश्च यो गणः । ।३ ६ ।।

तथा हालाहलश्चैव अन्धकारक एव च ।
पौलोमाः षष्टिसाहस्राः कालकेयाश्च१५ विश्रुताः ।
कालकञ्जाः सहस्राणि अष्टौ ते देवकण्टकाः ।।३७।।
निवातकवचानाञ्च तिस्रः कोट्यो महाबलाः ।
ता एता गणिताः सर्वाः कोट्यः षष्टिः सुरद्विषाम् ।।३८। ।
तत्पक्षान् वर्जयित्वा तु मनुष्यान्पन्नगानपि ।
राक्षसाँश्च१६ पिशाचाँश्च१७ यक्षान्१८ पक्षिण एव च ।
तेषामपि तदा व्यास कोट्यो विंशतिसंमिताः१९ ।।३९। ।
ते तां सभां समाविश्य सर्वे दर्पात् सुरद्विषः ।
सविद्युदुल्का भान्ति स्म प्रावृड्जलधरा इव । ।8.76.४० । ।
ते स्वनन्त२० इवाम्भोदा सधूमा इव पर्वताः ।
महिषा इव नर्दन्तः केतवोनागता इव । ।४१ । ।
उत्पाता इव निर्मुक्ताः सविषा इव पन्नगाः ।
गजा इव च संमत्ताः पवना इव वेगिताः ।।४२। ।
सुराणां विप्रकारार्थं तस्थुरापूर्य तां सभाम् ।
अथ गत्वा सभापालो राजानमिदमब्रवीत् । ।४३ । ।
सुखासीनं तदा व्यास सिंहासनगतं युवा ।
प्रणम्य शिरसा पूर्वं जानुभ्यामवनिं गतः ।।४४।।

१५ कालकेशाश्च क । १६ राक्षसाश्च - क. । १७ पिशाचाश्च - क. । १८ यक्षाः - क. । १९ संगताः - क. ।
२० स्रवन्त क।


बद्धाञ्जलिपुटः सम्यग् वाचा श्लक्ष्णपदाक्षरम् ।
स्वामी२१ जयतु सर्वेषामसुराणां जयावहः । ।४५।।
प्रह्लादाद्याः२२ सभां सर्वे विप्रचित्तिपुरोगमाः ।
प्राप्ता विदितमस्त्वेव यदन्यत् कर्तुमर्हसि२३ ।।४६।।
सनत्कुमार उवाच
ततः सुरद्विषः श्रुत्वा सर्वान्प्राप्तान् सभां तदा ।
उत्तस्थौ सहसा राजा शक्रकेतुरिवोत्सवे ।।४७।।
स किरीटी महादंष्ट्रो मुंजकेशो महाहनुः ।
आकर्णाद्दारितास्यश्च महाच्छत्रशिरास्तथा ।।४८।।

आजानुबाहुर्वृत्ताक्षः पिङ्गाक्षश्चोर्ध्वरोमवान् ।
वज्रसंहननश्चैव महायोगी महाबल ।।४९।।
किरोटेनाति संभाति सवित्रेवोदयस्तथा ।
हारवर्याङ्कितोरस्कः सबलाक इवाम्बुदः ।
सपुत्रः प्रययौ व्यास हिमवानिव मूर्त्तिमान् ।।8.76.५०।।
स तां तदा दानवराजसत्तमो विचित्ररत्नांशुपरीतकुण्डलः ।
सभां विवेशासुरदैत्यपुंगवैः समावृतां द्यामुदितैर्ग्रहैरिव ।।५१ ।।
इति स्कन्दपुराणे हिरण्याक्षस्य सभाप्रवेशो नाम षट्सप्ततितमो२४ध्यायः

सनत्कुमार उवाच
स गत्वा तां सभां व्यास अपश्यद् दैत्यदानवान्१ ।
प्रावृट्कालेम्बुदान्मत्तान् यथेन्द्रः समुपस्थितान् ।।१।।
तस्य प्रविष्टस्य२ तदा सर्व एव सुरद्विषः ।
जयेति चक्रुरुत्थाय वेदा इव पितामहम् । ।२ ।।

२१ स्वामिन् - क. टि. २२ प्रह्लादाभ्यां - क. । २३ .मर्हति (?) । २४ पंचसप्ततितमो - क. । १ इतः परं हिरण्याक्षकर्तृकवराहदर्शनावधिकः त्रयस्त्रिंशदध्यायात्मको ग्रन्थो नष्टः क पुस्तके इति । २ तस्योपविष्टस्य - घ. ।

448
मोत्तिष्ठतेति३ तान्सर्वानवोचदसुराधिपः ।
मायापंचकमासाद्य४ भोगी वायुधरानिव५ । ।३ ।।
स तेषामग्रगो६ भाति हिरण्याक्षो महासुरः ।
मध्ये कलभवृन्दानां यथा मत्तो महागजः । ।४।।
ततो जाम्बूनदे दिव्ये उपविष्टो वरासने ।
- - - - - - - - - - - - - - - - । । ५ । ।
भाति सिंहासनासीनः स राजा सुरविद्विषाम् ।
मेरुशृंगमिवासाद्य७ सबलाको महाम्बुदः । ।६। ।
बभूवुरुपविष्टाश्च तूष्णीमेवासुरास्तदा ।
सिसृक्षवो जलं काले नीलाम्भोदा इवोन्नताः ।।७। ।
सनत्कुमार उवाच
स तेषामिङ्गितं ज्ञात्वा कालं च सुरतापनः ।

हिरण्याक्षः स्वयं राजा तानुवाच सुरद्विषः ।।८।।
यूयं सर्वे महामाया शृणुध्वं संयताः समम् ।
कालप्राप्तञ्च पथ्यञ्च शिष्या इव गुरोर्वचः । ।९ ।।
मम भ्राता प्रियो ह्यासीज्ज्येष्ठः पूज्यो यथा पिता ।
हिरण्यकशिपू राजा महात्मा सत्यसंगरः ।।8.77.१ ० । ।
धार्मिकश्च वदान्यश्च यज्वा दाता तपोन्वितः ।
आहिताग्निश्चतुर्वेदः सर्वभूतसुखावहः । । ११ ।।
राज्यार्थे स हतो देवैर्विकृत्या८ मूढमानसैः ।
तस्य दुःखेन तप्यामि शुष्यामि च महासुराः । । १२ । ।
सलिलादुद्धृतं ग्रीष्मे पद्मं कुसुमितं यथा ।
तेषां कर्तुमहं दण्डं शक्तोस्म्यसुरविद्विषाम् । । १३ । ।

३ योतिष्ठ (न्न) पि - ख. । ४ समासाद्य (?) । ५ णिव - घ. । ६.. .मग्र्यशो - ख, मध्यगो - घ । ७ ...ख्याय (?) । ८ ...निकृत्या (?) ।

449
भवतां९ तत्र बालानां रक्षार्थं नोद्यतो ह्यहम्१० ।
सोहं दण्डं स्वयं कर्तुमेकाक्यसुरविद्विषाम् ।
गमिष्यामि न सन्देहो मा भीर्भवतु वोसुराः ।।१४।।
सनत्कुमार उवाच
तस्य तद्वचन श्रुत्वा दानवास्ते मुदान्विताः११ ।
परस्परमुदैक्षन्त व्रीडया परयान्विताः । । १ ५। ।
विप्रचित्तिस्तदनुजो भ्रातरं तं महाबलः ।
उवाच प्रणतः सम्यगर्थवन्मधुरं वचः ।।१ ६।।
न सन्देहो महासत्व त्वयैकेनासुरद्विषः ।
? --- --- - - - - - - - - - ।।१७।।
यदि युद्धे न तिष्ठन्ति मायां काञ्चिद्विनाश्रिताः ।
अबलास्ते न सन्देहो निकृत्या बलिनस्तु ते । १८ ।।
प्रसादयित्वा शिरसा यद् ब्रवीमि निबोध तत् ।
बालैरपि१२ हिरण्याक्ष सूपपत्त्या प्रसाधितम्१३ ।।१ ९।।
तद् ग्राह्यमिति - - - १४ शास्त्रविद्भिः समीरितम् ।
हिरण्यकशिपू राजा भ्राता नो ज्येष्ठ उत्तमः । ।8.77.२ ० । ।

सोपि शक्तोहमित्येव एकाकी दैवतैर्हतः ।
महाबलोपि च हरिरशक्तैर्हन्यते बलात् ।।२१ । ।
आक्रन्दन्तं विना राजन्नतो विज्ञापयामि ते ।
भवतस्तु वयं बाला न तेषामसुरेश्वर ।। २२ । ।
शक्ता वयं सुयुद्धेन तान्हन्तुं कुलपांसनान् ।
तपोयोगबलोपेता मायाभिश्च समन्विताः । । २३ । ।
अनुस्मरन्तो वैरञ्च वयं हंस्याम दैवतान् ।
यथा तव न निद्रास्ति हिरण्यकशिपोर्वधात् ।। २४।।

९ भवता - ख. । १० नोद्यताम्यहं - ख । ११ तिमुदान्विताः - ख. । १२ बलेरवि - ख. । १३.. मुपपत्त्या प्रसादितम् - ख. । १४ वेदोति ( विद्वद्भिः?) - ख ।


तथास्माकं महाराज मा नो बालान्यथा चर ।
यत्र नो योक्ष्यसे राजन् समे वा विषमेपि वा ।।२५।।
तरिष्यामो वयं तद् वै बालमत्स्या इवार्णवम् ।
प्रह्लादोयं सहभ्राता ससुतः ससुहृज्जनः ।।२६ । ।
एक एवाह्वयेत्सर्वान्यथा सिंहो महाद्विपान् ।
बलिरेष च दैत्येन्द्र एक एव सवासवान्१५ । । २७। ।
सुरान् सयम१६ वित्तेशाञ्छक्तः सर्वान्प्रबाधितुम् ।
अयं बाणश्च१७ तत्पुत्रो राजा बाहुसहस्रधृक् ।।२८।।
एक एव सुरान्सर्वान् विनाशयितुमुद्यतः ।
इमो सुन्दनिसुन्दौ च भ्रातरौ बाहुशालिनौ१८ । ।२९।।
उभावेकाकिनौ युद्धे देवान् हन्तुं समुद्यतौ ।
अयं मयश्च विक्रान्तः सारकस्तार एव च१९ ।।8.77.३ ० ।।
अन्ये च दानवाः शूराः शक्ता देवान् प्रबाधितुम् ।
एतेप्यतिबलाः सर्वे बलवन्तो वयं सदा ।। ३१ । ।
वधिष्यामः सुरान् सर्वान् व्याधा इव मृगान् वने ।
शूरोयमन्धकः श्रीमान् ब्रह्मदत्तवरस्तदा२० ।।३ २। ।
प्रसह्य सर्वांस्तान् युद्धे नेष्यते वै यमालयम् ।
एवमेनं समाश्रित्य पालितानेन चैव हि ।।३ ३ ।।
करिष्यामो महद्युद्धं देवतानां भयंकरम् ।

पूर्वं देवा वयं सर्वे पश्चात्ते देवताभवन् ।।३४।।
कथं बिभीम तेषां वै सिंहानां शरभा इव ।
तस्य तद्वचनं श्रुत्वा अन्धकस्सोसुरेश्वरः । ।३ ५।।
उवाच वचनं तत्र हर्षयन् दानवेश्वरान् ।
महाबला वयं राजन् बलहीनाः सुरास्तु ते ।।३ ६। ।

१५ शरीरवान् - क. ख. । १६ समय - ख. । १७ मानश्च - ख. । १८ बाहसादिनो - ख. । १९...स्तारक (?), प्रभुस्तारक एव च - घ - । २० स्तथा (?) ।

451
पश्य त्वं दैवतान्सर्वान् हतान् यमपुरोगमान् ।
अद्य तं राजहन्तारं दुरात्मानं कुलाधमम् ।। ३७।।
अद्य माता दितिस्तेषां दुःख - - - - - - ।
. .. . . . . . . .. . .. .. .. . . ... .. .।
मयैकेन हतं पश्य आदित्यानां कनीयसम् । ।३८। ।
तिष्ठध्वं दानवाः सर्वे पर्याप्तोहं दुरात्मनाम् ।
अस्माकं राजहन्तॄणां मृत्युरस्मि समागतः ।।३ ९।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा हिरण्याक्षः प्रतापवान् ।
उवाच दानवान् व्यास जयेप्सुः सुरविद्विषाम् । ।8.77.४० ।।
अद्य पुष्यं च नक्षत्रमस्माकं बलकारणम् ।
अद्यैव दंशिताः सर्वे द्रुतं निर्यात दानवाः ।।४१ ।।
अथ ते दानवाः शीघ्रं वाहनानि मुदा युताः ।
प्रावारयन्त२१ संग्रामे योग्यानि रिपुबाधने । ।४२। ।
शीघ्रं कुरुध्वं सज्जानि गच्छामो दैवतान्प्रति ।
तेषां सुतुमुलः२२ शब्दो बाहनानां२३ बभूव ह । ।४३ ।।
मन्दवातप्रेरितस्य क्षीरोदस्य स्वनो यथा२४ ।
ममाश्वस्तव सिंहोयं ममायं गजयूथपः । ।४४।।
रथोयं कस्य संपन्नो युद्धोपकरणैर्भृशम् ।
एहि निर्याहि वेगेन मुहूर्तं प्रतिपालय ।।४५।।
निर्यान्तु सर्वे दैत्येन्द्रा यास्यामः पृष्ठतो वयम् ।
आरोह स्वं रथं वीर किं रथेन ममाद्य वै ।

पदातिरेव संग्रामे हंस्याम्यद्य सुरद्विषः । ।४६ । ।
एवं तेषाममूच्छब्दः सुमनोज्ञः सुरद्विषाम् ।
वंशवीणास्वनोन्मिश्रः२५ प्रलाप इव योषिताम् ।।४७। ।

२१ प्रोक्षावयन्तु (?) - घ. । २२ सतुमुलः - ख. । २३ साहनानां - ख. । २४ महान, - घ, । २५, खगोन्मिश्रः (स्वरो?) - ख., -...रवोन्मिश्रः - घ. ।

452
अथ शुक्रस्तदाभेत्य भृगोः पुत्रो महातपाः ।
हिरण्याक्षमुवाचेदं हर्षयन्दानवेश्वरम् । ।४८। ।
मया शान्तिः२६ कृता तेद्य रक्षा च२७ सह दानवैः ।
जहि सर्वान्सुरान् युद्धे न तवास्ति पराजयः ।।४९।।
अहं त्वा स्वेन तपसा सहभृत्यं२८ सबान्धवम् ।
धारयिष्यामि युध्यन्तं लोकान्यज्ञ इवापरः ।। 8.77.५० । ।
सनत्कुमार उवाच
ततः प्रदक्षिणं कृत्वा शुक्रं मूर्ध्ना प्रणम्य च ।
भार्गवं२९ पुरतः कृत्वा निर्जगाम स मन्दिरात् ।।५१ ।।
ततो भेर्यश्च शंखाश्च पणवानकगोमुखाः ।
साडस्तमा(?) दिण्डिमाश्च भाण्डाश्च पटहैः सह । ।५२ ।।
झंर्झर्यो दर्दुराश्चैव सुनवा३० मर्दलास्तथा ।
कटंकटाः पेपुकाश्च तथा चैवैकपुष्कलाः । । ५३ ।।
पञ्चाक्षाः सरिधीकाश्च मुकुन्दा३१ मुरजास्तथा ।
लभका जलमत्ताश्च अवाद्यन्त सहस्रशः । ।५४। ।
गायनै३२श्चैव गायद्भिः स्तुवद्भिः सूतमागधैः ।
दिव्याभिः कुलवृद्धाभिः स्त्रीभिश्च कृतमङ्गला ।। ५५। ।
द्वार्य३३ पश्यन् रथं क्लृप्तं यया देवमयं हरः ।
शतनल्वप्रमाणाङ्कं३४ दिव्यं जाम्बूनदं दृढम् । ।५६ ।।
असंगतुरगैः श्वेतै३५स्त्रिसाहस्रैर्मनोजवैः ।
अमरैः कामगैर्दिव्यैः श्रमदुःखविवर्जितैः ।।५७। ।
यन्ता रथस्य तस्यसिल्मकरो नाम विश्रुतः ।
पुत्रो गरुत्मतो व्यास खगः कामगमःशुभः ।। ५८। ।

२६ महाशान्तिः - घ । २७ मे दाना दष्टजागत्य दृशा - ख. । २८ सह भृत्यैः - ख. । २९ तमेव - (?) । ३० सुघोषा - घ. । ३१ मुक्यन्दा - ख. । ३२ गायना - ख. । २३ धार्य (?) - ख । ३४ शतकल्प- प्रमाणाङ्क - ख. । ३५ संयुक्तं तुरगैर्दिव्यै (?) - घ ।

453

तमसौ राजशब्देन३६ आशीर्भिश्चाभिपूजितः।
आरुरोह रथं राजा एकचक्रं यथा रविः ।।।५९।।
कवची बद्धतूणीरः शरी खड्गी शरासनी ।
बद्धगोधांगुलित्रश्च कण्ठत्राणकृतस्तथा । ।8.77.६ ०।।
ध्वजेन महता चैव छत्रेण च विभूषितः ।
बह्वीभिर्वैजयन्तीभिः सबलाक इवाम्बुदः ।।६१।।
तस्य छत्रं तदा भाति किरीटोपरि संस्थितम् ।
आविष्कृतपयोदाभः पौर्णमास्यां यथा शशी ।।६२। ।
खट्वाङ्गस्तस्य चाभाति ध्वजो दिवमिवाक्रमन् ।
त्रैलोक्यस्योपघातार्थं३७ केतुर्दीप्त इवोदितः ।।६३ ।।
तादृगेव रथो ह्यासीत् सुतस्य सुमहात्मनः ।
अन्धकस्य तदा व्यास महाजलदनिस्वनः ।।।६४।।
अथ याहीति तेनोक्तौ३८ रथयन्ता सुरद्विषः ।
त्रिसाहस्रान्३९ हयाग्र्याँस्तु रथे४० प्रस्यचूचुदत्? ।।६५।।
प्रचोदितास्तमूढुस्ते४१ जवना वातरंहसः ।
हयाः कामगमाः सप्त रवेरिव महारथम् ।।६६।।
तस्याग्रतस्तदा शुक्रो रथेनाम्बुदनादिना ।
उद्गच्छत इव व्योम्नि तस्याभूद् यथा बुधः ।।६७। ।
दक्षिणे तस्य पार्श्वे च अभूदन्धकदानवः ।
दक्षिणायनमासाद्य यथा लोकस्य भास्करः ।।६८। ।
द्वितीयं पार्श्वमाश्रित्य विप्रचित्तिरभूत् स्थितः ।
भारतस्येव वर्षस्य हिमवान् पर्वतोत्तमः ।।६९ ।।
पृष्ठतश्चाग्रतश्चैव यथाप्रीति ययुस्तदा ।
अपरे दानवाः शूराः शशाङ्कस्य यथा ग्रहाः । ।8.77.७० ।।

३६ जयशब्देन - घ. । ३७ त्रैलोक्यस्योपघाताय - घ । ३८ .. .नोक्तो (?) । ३९ द्विसाहस्रान् - ख. । ४० सारथिः - घ । ४१.. स्तमूचुस्ते - ख ।

तत्सैन्यं प्रचलद् भाति व्रजतां मुनिसत्तम ।
सविद्युत्स्तनयित्नूनामभ्भोदानामिवात्यये । ।७१ ।।
हयह्वेषितशब्दञ्च मत्तद्विरद बृंहितम् ।
वल्गितास्फोटितोत्क्रुष्टं सिंहनादोद्धतं ययौ ।।७२। ।
तद्धि तूर्यरवसिंहनादितैरश्वहेषितगजोग्रबृंहितैः ।
बाहुशब्दकुचितावनादितैर्याति दानवबलं भयावहम् ।।७३ ।।
इति स्कन्दपुराणे हिरण्याक्षनिर्याणं नाम सप्तसप्तिततमो४२ध्यायः

कृष्णद्वैपायन उवाच
भगवन् दितिपुत्रेषु प्रयातेष्वमरावतीम् ।
अमराः किमकुर्वन् त एतदिच्छामि देदितुम् ।।१ । ।
कथमन्तर्हितं१ तेषां को मन्त्रश्चेष्टितं च किम् ।
उत्तरं किञ्च देवास्ते प्रत्यपद्यन्त यत्नतः ।।२।।
धार्मिकाश्च वदान्याश्च विद्वांसश्छिन्नसंशयाः ।
इष्टाः सर्वस्य लोकस्य किमकुर्वत देवताः । । ३ । ।
सनत्कुमार उवाच
शृणु व्यास यथा देवा उत्तरं प्रतिपेदिरे ।
असुराणाञ्च यद्युक्तं प्रत्यकुर्वत दंशिताः ।।४।।
उद्युक्तेष्वेव दैत्येषु देवानां भयसूचकाः ।
संजज्ञिरेमरावत्या३मुत्पाता दारुणा भृशम् । ।५।
पिशिताशाः खगास्तत्र भ्रमन्त्युपरि सर्वतः ।
मम्लुर्माल्यानि देवानां गन्धश्चैवाशुभं ववौ४। ।६। ।

४२ अध्यायः १३३ ख., क.पुस्तकानुसारं ७६ तमेन भाव्यम् ।
१ कथमन्तर्द्धितं - ख. । २ प्रत्यकुर्वन्त ख. । ३ संजज्ञुरमरावत्या - ख. । ४ बभौ - ख. ।


हयादयो न हेषन्ते विमनाश्च गजोभवत् ।
अनभ्रं५ भयदं सर्वमपतद्रुधिरं बहु । ।७। ।
आयुधानि च दीप्यन्ते सधूमं शक्तिनन्दन ।

कबन्धाश्च तथादित्ये६ युद्धं चात्र प्रदृश्यते ।।८।।
द्वयोः पुरुषयोर्व्यास हाहाकारश्च सर्वशः ।
देवानामरतिञ्चैव७ चित्तं चापि समश्नुते८ ।।९।।
स्फुरन्ति वामनेत्राणि जृम्भिका चोपजायते ।
वयांसि च विकूजन्ति९ भयदान्यपरे यथा ।
अग्निश्च दीप्यते तत्र सशब्दो रूक्ष एव च ।। 8.78.१० ।।
एताँश्चान्यांश्च विविधानुत्पातान्भयसूचकान् ।
दृष्ट्वा प्राह गुरुं शक्रो बृहस्पतिमिदं वचः ।।११ ।।
भगवन् किमिदं घोरं भयं नः समुपस्थितम् ।
यदिमे सूचयन्त्युग्रा उत्पाता नः सुदारुणाः ।।१ २ ।।
नेमे निष्कारणं मन्ये न चाप्यल्पं हि तद्धि नः ।
यदिमे सूचयन्त्युग्राः कल्पान्त इव दारुणाः । । १३ ।।
तस्य तद्वचनं श्रुत्वा देवाचार्यो बृहस्पतिः ।
निरीक्ष्य बुद्ध्या संचिन्त्य प्रोवाचेदं ततो वचः । ।१४।।
यद् भवानाह तत्तथ्यं नेमे निष्कारणं तथा ।
निमित्तमत्र सुमहद् भविष्यति न संशयः ।। १५।।
निमित्तमादिदैत्येन्द्रो हिरण्यकशिपुः पुरा ।
स' हतो नरसिंहेन प्राप्तं राज्यं च नः पुनः ।।१ ६।।
अद्य वर्षसहस्राणि द्वादशैव सुनिर्वृतैः१० ।
युष्माभिरखिला लोका भुज्यन्ते सुमहात्मभिः ।।१७।।
दैत्याधिपा निरुत्साहा दानवैः सह शेरते ।
पाताले दनुपुत्राश्च दुःखशोकसमाहताः । ।१८।।

५ अनभ्रे - ख, अदभ्र (?) । ६ यथादित्यो - ख। ७ मरतिश्चैव - घ. । ८ समुत्सुकं - घ. । ९ धूमो गायन्ति - ख., खगादयो विकूजन्ति - घ. । १० सुनिर्वृताः - ख. ।

456

हिरण्याक्षस्तु दैत्येन्द्रो हिरण्यकशिपोर्वरः११ ।
स नूनं भ्रातुरन्विच्छन् हतस्य प्रतिकारिताम् । ।१ ९। ।
सर्वैरभ्येति दैत्येन्द्रैर्दानवैश्च समावृतः ।
सपुत्रपौत्रो दैत्येन्द्रो महाबलपराक्रमः ।।8.78.२० ।।
अन्धकश्चास्य पुत्रोपि ब्रह्मणा ह्यमरः कृतः ।

न स शक्यो युवा हन्तुं१२ ततो वो भयमुत्थितम् ।।२१ ।।
तद्भवन्तः१३ सुसन्नद्धाः सर्वे युद्धाय दंशिताः ।
प्रतीक्षध्वं महासत्वा यावदौत्पातिकं स्थितम् ।।२२ ।।
तस्य तद्वचनं श्रुत्वा शक्रः सर्वान् तदा सुरान् ।
उवाच सज्जीभवत युद्धाय कृतनिश्चयाः ।।२३ ।।
भयं महदिदं प्राप्तं मा तिष्ठत निरुद्यमाः ।
मा नः संप्राप्य दैत्यैंद्रा हन्युर्मत्तानिवामराः ।।२४।।
अथ वायुस्तदाभ्येत्य शक्रं सर्वासुरान्तकम् ।
उवाच प्राञ्जलिर्भूत्वा देवानामेव संसदि । ।२५।।
एष दैत्यो हिरण्याक्षः सर्वासुरसमावृतः ।
आयाति देवता हन्तुं भ्रातुर्वधमनुस्मरन् ।।२६। ।
तद्भवान् दंशितः सम्यक् सहास्माभिर्महाबलः ।
जयायोत्तिष्ठ१४ देवेन्द्र विनाशाय सुरद्विषाम्१५ ।।२७।।
सनत्कुमार उवाच
ततः स भगवान् व्यास महात्मा देवराट् स्वयम् ।
अभेद्यं कवचं दिव्यं जाम्बूनदविभूषितम् ।।२८।।
दत्तं मन्त्रेण विधिवत् पुत्रेणाङ्गिरसः स्वयम् ।
आबबद्धात्मना१६ शक्रो मेघदुन्दुभिनिस्वनः । ।२९। ।
स तेन कवचेन स्म भाति शक्रः प्रतापवान् ।
सविद्युदुल्कैरम्भोदैर्बद्धो मेरुरिवाचलः । ।8.78.३ ० । ।

११ हिरण्यकशिपोर्वंशः? -ख., परः(?) १२ युद्ध्य हन्तुं - घ. । १३ समुद्भवन्तः - ख. । १४ जयाय तिष्ठ - ख. । १५ सुरद्विषाः (षः) - ख. । १६ आबबद्धात्मने - ख., -आबबन्धात्मना - घ. ।


ततो गोधांगुलित्राणि१७ तलत्रं चैव भासुरम् ।
आबबद्ध स्वयं मन्त्रैस्तस्य देवो बृहस्पतिः । । ३१ । ।
इषुधीनक्षयाँश्चैव खड्गः चैवामृतोद्भवम् ।
आबबद्धास्य मन्त्रेण यदजर्यं शरादिभिः । ।३ २ । ।
ततोस्मै सशरं चापं पञ्चवज्रं सुदारुणम्१८ ।
मन्त्राभिमन्त्रितं सम्यक् प्रददौ जयवर्द्धनम् ।। ३ ३। ।
मंगलानि ततस्तस्य दर्शयामास वीर्यवान् ।

घटञ्च पूर्णमस्त्रञ्च१९ ऐरावतमथापि च । । ३४।।
कल्पितं बहुभिर्दिव्यै२०राचार्यैः कल्पवासिभिः ।
अर्चितं धूपितं चैव धूपितं क्रोधदर्पणैः । ।३ ५। ।
ततस्तं स तदा देव आरुरोह मतङ्गजम् ।
भद्रलक्षणसंपन्नं चतुर्दन्तं क्षरन्मदम् । ।३ ६ । ।
आरूढः स तदा भाति ऐरावतगजं विभुः ।
उदयाचलमौलिस्थ उद्यन्निव दिवाकरः ।।३७ । ।
पाण्डरेणातपत्रेण सुरराट् संबभौ तदा ।
श्वेतपर्वतराजोसौ शशिनेव महामुने ।।३८ । ।
चामराबीजितं भाति तस्य वक्त्रमतिप्रभम् ।
हंससंबीजितं फुल्लं२१ शरदीव महोत्पलम् । ।३९। ।
तस्य पार्श्वे जयन्तश्च पुत्रः शक्रस्य धार्मिकः ।
कार्तिकेय इवाभाति रुद्रस्य दयितः सुतः ।।8.78.४० । ।
ततो यमश्च पुण्ड्रेण२२ महिषेण महाबलः ।
कालदण्डं पुरस्कृत्य कोटीभिर्दशभिर्वृतः । ।४१ ।।
निर्जगाम कुबेरश्च राक्षसैर्बहुभिर्वृतः ।
यक्षैः पुण्यजनैश्चापि तथान्यैर्देवतैरपि ।।४२। ।

१७ गोधाङ्गुलित्राणं - घ. । १८ वज्रं चासुरदारणं - घ । १९ पूर्णमश्वञ्च (?) । २० .. र्दैव्यै (वै?) - ख-, र्मन्त्रैः - घ. । २१ हंसाबीजितमुत्कुल्लं - घ., हसा सा? - ख. । २२ पुण्डौ - ख., पुत्रेण - घ. ।

458

तेषां द्वादश कोट्यस्ताः सहस्राणि च विंशतिः ।
शतानि च तथाशीतिस्तथैवाष्टाधिका पुनः ।।४३ ।।
वरुणो निर्ययौ देवः पुत्राणां दशभिः शतैः ।
यादोभिस्ते वृताः सर्वे कोट्यस्ताश्चैकविंशतिः२३ ।।४४।।
अनलश्च ततो देवः कोटीभिर्दशभिर्वृतः ।
निर्ययौ सह पुत्रेण ससुहृद्वर्गबान्धवः ।।४५।।
ततो वायुर्महातेजाः सर्वव्यापी महाजवः२४ ।
अक्षौहिणीभिर्दशभिर्निर्जगाम महाबलः ।।४६।।
आदित्या निर्ययुः सर्वे द्वादशाक्षौहिणीवृताः२५ ।
एकैकशश्च ते२६ व्यास सर्वे दिव्यास्त्रयोधिनः ।।४७।।

तथा रुद्राश्च निर्जग्मुर्महामायामहाबलाः ।
एकैकशस्तदा सर्वे षोडशाक्षौहिणीवृताः ।।४८।।
वसवो दशभिश्चैव अष्टाभिश्चाश्विनावुभौ ।
तथैवांगिरसो देवाः सर्वे तेक्षौहिणीवृताः ।।४९।।
यामा दामाश्च साध्याश्च लेखा ये च महाबलाः ।
तेपि कोटीशतैः सर्वे दशभिः सह संगताः ।।8.78.५०।।
अभूवन् विंशतिः२७ कोट्यो गन्धर्वाणां२८ महात्मनाम् ।
पन्नगानां चतुःषष्टिः खगानां चैव विंशतिः ।।५१ ।।
पिशाचानां च कोट्यस्ताः पंचाशत्तत्र संगताः ।
राज्ञां स - - - - - - - - नां महात्मनाम् ।।५२।।
एतद्देवबलं दे हं सर्वमभूत्तत्राभिसंगतम् ।
दृष्ट्वा तद् बह्वपर्यन्तं देवानां बलमुत्तमम् ।।५३ ।।
उवाच जीवजीवानां राजा परमधर्मवित् ।
भगवन् क्रियतां व्यूहो यस्मात्तेषां दुरात्मनाम् ।।५४।।

२३ एकविंशतिः - घ., इतः परं *ततो देवबलं पश्यन सन्नद्धान् युद्धकांक्षिणः । कोटिभिदशभिश्चैव रथनाग- हयैर्वृतः* इति पद्यमुपलभ्यते घ. पुस्तके । २४ महाबलः - ख. । २५ युताक्षौहिणिकर्षिणः -ख । २६ एकैकश्च शते - ख. । २७ गन्धर्वाणामभूत् - ख. । २८ विंशत्येव - ख. । २९ एते देवबलं... - ख. ।

459
अधृष्यश्चाप्रमेयश्च यन्न३० वेत्ति च भार्गवः ।
तस्य तद्वचनं श्रुत्वा बृहद्बुद्धिर्बृहस्पतिः ।।५५ ।।
उवाच देवताध्यक्षं शक्रं दैवतसन्निधौ ।
न तदस्ति महेष्वास मयि यद् भार्गवो महान् ।।५६।।
न वेत्ति यस्य वा३१ भेदं न कुर्यात् पाकशासन ।
उशनाः स तु यद्वेत्ति महायोगी महायशाः ।।५७।।
न चैव तदहं वेद्मि मत्तो वरतरो हि सः ।
स तु तीक्ष्णतया चैव मानाच्चैव शचीपते ।।५८।।
प्रमादं कुरुते तेषु न च सर्वत्र लभ्यते ।
अहं च विज्ञभावेन मार्दवेन परेण च ।।५९।।
अप्रमत्तश्च सर्वत्र तव सैन्यैश्च रक्षितः ।
बुद्ध्या तमतिरिच्यामि विबुधेश्वर नित्यशः ।।8.78.६० ।।

तस्मात्तेहं करिष्यामि व्यूहं श्येनमतिप्रभम् ।
येन तान्दानवान् संख्ये कञ्चित् कालं विजेष्यथ । ।६१ ।।
ततः स भगवान् जीवश्चक्रे व्यूहमतिप्रभम् ।
श्येनं नाम महायोगी देवानां हितमादधत् ।।६२।।
ग्रीवायां तस्य संचक्रे वित्तेशं वरुणं तथा ।
अनलं चैव वायुञ्च जयन्तं चैव शक्रजम् । ।६३ ।।
शिरश्चूडां३२ यमं तस्य३३ मृत्युं कालं च तावुभौ ।
वक्त्रं तस्याकरोज्जीव३४ श्चन्द्रसूर्यौ च चक्षुषी ।।६४।।
एकं पक्षं चकारास्य रुद्रान्सर्वान्स वै द्विजः ।
द्वितीयं पक्षमादित्यान्मध्यं तस्य पुरन्दरम् ।।६५।।
पादौ च वसवस्तस्य अश्विनौ च महातलौ ।
गन्धर्वाः पन्नगाश्चैव नखान् तस्य समाश्रिताः । ।६६।।

३०. यथा - घ. । ३१ वो - ख. । ३२ शिरश्चूडा - ख. । ३३ यमस्तस्य - ख. । ३४ वक्त्रमस्याकरोज्जीव - ख. ।

460

पक्षिणश्च महासत्वाः पिशाचाश्च महाबलाः ।
पुच्छं३५ तस्याकरोत् सर्पान्३६ देवानन्याँस्तदोदरम्३७ ।।६७।।
राजानस्तस्य पादस्थास्तले३८ भूतान् न्यवेशयत ।
महाबलान्महोत्साहान्सर्वान् देवान् सभासदः । ।६८।।
सनत्कुमार उवाच
स कृत्वा तं खगव्यूहं मन्त्रेणैवाभिमन्त्र्य च ।
उवाच देवराजं तं बृहस्पतिरिदं वचः । ।६९ ।।
कल्पितोयं मया व्यूहः कृत्वा राक्षसपार्थिवम् (?) ।
अतः परं विधानस्य कर्म नास्मासु विद्यते । ।8.78.७० । ।
जय शत्रून् रणे शक्र देवतैरभिरक्षितः ।
मया चार्थवणैर्मन्त्रैस्तपसां च बलेन च ।।७१ ।।
कुरु कर्म यथाशक्ति ह्यमरो ह्यसि पार्थिव३९ ।
देवाश्चाप्यमराः सर्वे युध्यन्तु सुरपार्थिव । ।७२ । ।
भाग्यान्नो जय लाभाय नान्यत्र सुरपुंगव४० ।
जहि शत्रून् महाबाहो माभीर्भवतु ते रणे । ।७३ ।।

ततः शंखाश्च भेर्यश्च पटहा डिण्डिमास्तथा ।
आडम्बराश्च नम्भा(?)श्च कृकवा गोविषाणकाः ।।७४। ।
मर्दलाः पेपुकाश्चित्रा नेदु४१ स्तूर्याणि सर्वशः ।
तेन शब्देन योधानां युद्धहर्षो महानभूत् ।
सिंहनादा४२ नकुर्वन् ते४३ वादितास्फोटितानि च । ।७५।।
देवास्ततः४४ शंखमृदङ्गवाद्यैरमोघसर्वायुधदीप्तहस्ताः ।
निर्जग्मु४५रिन्द्रादिसुरप्रधाना जयैषिणः शत्रुवधेप्सवश्च ।।७६। ।
इति स्कन्दपुराणे व्यूहरचनो नामष्टसप्ततितमो४६ ध्यायः

३५ पृष्ठं - घ. । ३६ सर्वान् - ख । ३७ .. म्तदोदरान् - ख । ३८.. .न्तले - ख । ३९ पार्थिवः - ख । ४० - पुंगवे - घ, संगवे (?) । ४१ मेघ - ख. । ८२ सिंहनादा - ख । ४३ नकुर्वन्त - ख. घ. । ४४ ...देवता - ख. । ४१ निर्जघु (घ्नु?) - ख ४२ सन्नहतिकाध्यायः? - घ, १३४ इति ख. पुस्तके ।

461
सनत्कुमार उवाच
व्यूढे सुराणां सैन्येथ स्थिते युद्धाय दंशिते ।
दानवानां बलं घोरं समदृश्यत भीषणम् । ।१ । ।
तद्१ दानवबलं दृष्ट्वा देवाः सर्वे सवासवाः ।
सिंहनादानकुर्वँस्ते२ वादित्ररवमिश्रितान् ।।२।।
स नादः सुमहान् व्यास सागरस्येव मथ्यतः ।
आपूरयज्जगत्३ सर्वं युगान्ताम्बुदनिस्वनः ।। ३। ।
ततो दानवशार्दूलाः सर्वे दृष्ट्वा सुरोत्तमान् ।
व्यूह्य सैन्यं स्थितान्४ सम्यग् वीक्षाञ्चक्रुः५ परस्परम् ।।४।।
तान् वीक्षमाणान्६ सन्दृश्य स्थितो दानवयूथपान ।
उवाच भार्गवं व्यास हिरण्यनयनः स्वयम् ।।५। ।
एते व्यूहमिमं कृत्वा देवास्तिष्ठन्त्यभीतवत् ।
मन्यन्ते७ दानवान् युद्धे वयं जेष्याम सर्वशः ।।६।।
स भवान्युक्तमस्यैव८ देवव्यूहस्य भेदकम् ।
कुरु मायाप्रतिव्यूहमस्माकमपि मा चिरम् ।।७।।
सनत्कुमार उवाच
एवमस्त्विवति स प्रोच्य९ ह्यर्धचन्द्रञ्चकार सः१० ।
खगस्य तस्य यच्छेत्तुं शिरः कायादियेष च११ ।।८ ।।

चकार तस्य शृंगे तु प्रह्लादान्धकदानवौ ।
धारान्१२ निवातकवचान्पौलोमान्कालकासुतान् ।।९।।
विरोचनं बलिं चैव विप्रचित्तिं सहानुजैः ।
प्रह्लादभ्रातरं चैव ससुहृद्वर्गबान्धवान्१३ । ।8.79.१ ० ।।
पृष्ठं चक्रे महायोगी मध्यं राजानमेव१४ च ।
उवाच चैनं१५ विश्रब्धो भार्गवः शत्रुतापनः ।।१ १ । ।

१ ते - ख । २.. नकुर्वन्त - ख. घ- । ३ अपूरयञ्जगत् - घ. । ४ व्यूहस्कन्धास्थितान् । ५ चक्रे - ख. । ६ वीक्षमाणो (णः?) - ख । ७ मन्यन्तो (?) । । ८ श्येन (?) । ९ स प्रोच्य - ख । १० ...मकुर्वत - ख ११ कायादिवेषवः - ख. । १२ धारो - ख. । १३ बान्धवं (?) । १४ तथैव - ख. । - १५ चेदं - ख. ।

462

हिरण्याक्षमिदं युक्तं काले पथ्यञ्च सर्वशः१६ ।
दैवतभव्यूहभेत्तायं महाव्यूहो हि वः कृतः ।।१ २। ।
युक्तं कुरुत भद्रं वो मया नु१७ परिपालिताः ।
परस्परं च रक्षन्तः सर्वे चित्रास्त्रयोधिनः ।
महामायाः सुराः सर्वे यथा नैवाभिमन्यत१८ ।।१ ३ ।।
सनत्कुमार उवाच
ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ।
आडम्बरा डिण्डिमाश्च पटहाश्च महास्वनाः ।।१४। ।
नानाविधानि चान्यानि१९ प्रावाद्यन्त सहस्रशः ।
देवानां दानवानाञ्च मदसत्वप्रदानि वै ।।१ ५।।
ततः प्रमथ्नते२०त्युक्ता२१ दानवा दानवेश्वरैः ।
ममर्दुर्देवतानीकं प्रहताः सर्वशस्तथा ।।१ ६ । ।
देवास्तेपि च संयत्तास्तपोयोगबलान्विताः ।
दानवान् विविधैः शस्त्रैरभिजघ्नुः कृतागसः ।। १७।।
असीनां पात्यमानानां शिरसां हस्तिनामपि ।
आसीच्छब्दो महाघोरो वंशानामिव पाट्यताम् ।। १८ ।।
विकृष्यतां च धनुषां बाणानां च विमुच्यताम् ।
आसीत्तत्र महाञ्छब्दो गिरीणामिव भिद्यताम् ।। १९।।
गच्छद्भिर्भिन्दिपालैश्च शक्तिभिस्तोमरैस्तथा ।
आकाशमभवत् सर्वं खद्योतैरिव संवृतम् ।।8.79.२ ० ।।

शिरोभिश्चरणैश्चैव बाहुभिश्च निपातितैः ।
क्षणेन युद्धभूमिः सा विषमा समपद्यत ।।२१ ।।
दन्तिभिः पर्वताकारै२२ र्हयवर्यैरथोत्तमैः२३ ।
कबन्धैश्चाभिनृत्यद्भिर्दुर्निरीक्ष्यमभूद्रणे२४ । ।२२। ।

१६ मद्यशः? - ख. । १७ (वः) पद्यं तु (पर्यन्त?) - ख- । १८ नैवातिमन्यत - ख. । १९ म... - ख । २०. प्रमर्दते (?) । २१ ...त्युक्त्वा - ख. । २२ गिरिसंकाशैः (?) । २३ हयैर्युद्धैरिवोत्तमैः - घ. । १४... रन्तरीक्षमभूत्क्षणात् - घ. ।

463
आतपत्रैश्च हारैश्च कवचैस्तलचै (?) रपि ।
निष्कसूत्रैः सुमुकुटैः केयूरैः कुण्डलैरपि२५ । ।२३ ।।
कण्ठत्राणैर्विचित्रैश्च२६ दुकूलैर्मणिभिश्च ह ।
कुथाभिश्च विचित्राभिर्भुजैः साभरणैरपि । ।२४।।
मुशलैः शूलदण्डैश्च घण्टाभिश्चांकुशैरपि ।
विभाति भूतलं तत्र ज्योतिर्भिर्द्यौरिवावृतम् ।।२५। ।
क्रुद्धः केशेषु संगृह्य विरथोपि महारथः ।
रथिनं रथमाप्लुत्य निजघान बलाद्बली ।।२६।।
तत्र चान्यो गजे२७ चाशुरभिहत्य महाभुजः ।
रथं चिक्षेप च वृतैः (?) कुशमुष्टिमिवाध्वरे२८ ।।२७।।
क्षिप्तो गजात् समुत्पत्य - नसं - - - य - ।
शरैराशीविषाकारैरनयद्यमसादनम् ।।२८।।
हतमप्येष तुरगः सादिनं पतितं क्षितौ ।
उपास्ते पादतः सुप्तं गुरुं शिष्यो यथात्मवान् ।।२९।।
ससूते निहते योधे रथमेते हयोत्तमाः ।
वहन्ति पुरुषाः क्षीवा ज्ञानवन्त इवागमान् ।।8.79.३ ०।।
अयमन्यः सुबद्धोपि दैत्येन सुरपुंगवः ।
बाहुभ्यां वेष्टयित्वा तं प्रययौ देवतान्तिकम्२९ (?) ।।३ १ ।।
अयमाधावतः पश्य गजस्य भुजमाच्छिनत् ।
स तेनैव गजेनोर्व्यां पपात३० विनिषूदितः । ।३२।।
अयमन्येन संयुक्त अन्येनागत्य घातितः ।
स चाप्यन्येन देवेन सोप्यन्येन पुनर्हतः ।।३ ३ ।।

एते पदातयश्चान्ये३१ बहवः संहता भृशम् ।
रथिनं मोहयित्वा तु जघ्नुरेनमभीतवत् । ।३४।।

२५ कुड्मलैरपि - ख. । २६ कण्ठत्राणविचित्रैश्च - ख. । २७ तत्रान्ये च गजे - - । २८ कुशमुष्टिं यथाध्वरे - ख. । २९ चैव चान्तिकम् - ख. । ३० निपात्य (?) । ३१ पादत्रये चान्ये - ख. ।


एवमाकाशगाः सिद्धा ऋषयश्चारणास्तथा ।
शाधथन्ति३२ रमन्ते च स्मयन्ति३३ च जपन्ति३४ च । ।३५ । ।
हरन्त्यप्सरसश्चैव योधाँस्तत्र रणे हतान् ।
पिशाचाश्चापि मोदन्ते३५ नृत्यन्ति च निकुम्भिलाः ।। ३ ६। ।
तत् प्रवादितगान्धर्वं छिन्नभिन्नविदारितम् ।
युद्धगान्धर्वमभवद् भीरूणां भयवर्द्धनम् ।।३७।।
अन्योन्यघातक्षतसर्वदेहाः सुरासुरा वैरमनुस्मरन्तः ।
जघ्नुस्तदा राक्षसतुल्यरूपाः स्वाराज्यहेतो३६र्जयमीप्समानाः३७ ।।३ ८।।
इति स्कन्दपुराणे देवासुरसंग्राम३८ नामैकोनाशीतितमोध्यायः

सनत्कुमार उवाच
तस्मिन् महति युद्धे१ तु वर्तमाने महाभये ।
दानवान् वै तदा२ देवा३ समन्तात् पर्यवारयन् ।। १ ।।
मृत्युः कालो यमश्चैव कृतान्तः कलहस्तथा ।
निकृतिर्व्याधयश्चैब वैरं क्रोधश्च वीर्यवान् । ।२। ।
नरकाश्चैव ते सर्वे यमदूताश्च सर्वशः ।
प्रेताश्च पितरश्चैव चत्वारो ये४ गणास्त्विति५ ।। ३ ।।
वामनश्चैव यो देवाः किंकराश्च महाबलाः ।
एते सर्वे तदाविश्य संजघ्नुर्दानवं बलम् । ।४। ।
यमदूतैर्विभिन्नांगा भग्नवक्षत्रिकोरसः ।
निष्टनन्ति क्षितौ दैत्या निरयेष्विव पापिनः । ।५। ।
असिचर्मविनिष्पिष्टा मृत्युपाशोवपाशिताः ।
कृतान्तवशगास्सर्वे संभज्यन्ति दितेः सुताः ।।६।।

३२ योधयन्ति - घ. । ३३ गायन्ति - घ. । ३४ जयन्ति - घ । ३५ मोदन्ति - ख. । ३६ स्वराज्यहेतो - ख. ।

३७ ...नेति - ख. । ३८ ...मो - ख. ।

१ हतनियुद्धे - य. । २ दानवाँस्ताँस्तदा - घ., देवा वै - ख. । ३ देवान. - ख. । ४ स्वत्वा ये च । घ. । ५ गणेष्विति - घ. ।

465

ते हन्यमाना दैत्येन्द्रा मृत्युना च यमेन च ।
त्रातारमलभन्तो वै तत्र तत्रैव बभ्रमुः । ।७।।
तथा तांस्तत्र तत्रैव भ्रमन्तो जघ्नुरार्दिताः ।
ततो हाहाकृतः शब्दो६ दानवानां बलेभवत् । ।८ ।।
साधुसाध्विति देवानां यभं पूजयतामभूत् ।
अथ प्रह्लादतनयो विरोचन इति श्रुतः । ।९। ।
स गजेन ततोभ्येत्य देवानां बलमार्दयत्७ ।
सह तेन महामायो गजेन समधावत । । 8.80.१० ।।
यमं प्रदक्षिणं कृत्वा द्रोणमेघ इवापरः ।
स शरैर्बहुभिस्तीक्ष्णैरकुण्ठाग्रैरयोमयैः८ । । ११ ।।
वरुणञ्च धनेशञ्च वायुञ्चैवाभ्यवर्षत ।
स संछाद्य तदा भासं भास्करस्य शितैः शरैः ।
अवाकिरत्तदा देवान् संवर्त्तक इवाम्बुदः । १२।।
ते शरार्चितसर्वाङ्गा वध्यमानाः पुनः पुनः ।
क्षणेन समपद्यन्त देवाः सर्वे विचेतसः । । १३ । ।
यान्तमायान्तमप्राप्तं प्राप्तं दूरस्थमेव च ।
यं यतो वीक्षते दैत्यस्तं ततोभिजघान सः । । १४। ।
नित्यायतधनुर्दैत्यः परिवेषीव९ भास्करः ।
दुर्निरीक्ष्यः१० समभवद् युगान्ताग्निरिवोत्थितः । ।१ ५।।
अथैवमस्यतो व्यास वरुणः कार्मुकं तदा ।
चिच्छेद सुमहद्धीमाँस्तर्जयन्दानवेश्वरम् ।। १ ६। ।
वायुस्तीक्ष्णशरैस्तस्य कवचं सर्वतोहरत् ।
धनेशोशनिघातेन गजमस्य न्यसूदयत् । । १७। ।
तं तथा निकृतं दृष्टवा बलिर्बाणश्च तावुभौ ।
प्रह्लादो भ्रातृभिः सार्धं लोकपालानुपाद्रवन् ।।१८।।

६ कृतं सर्वे- ख. । ७ वलमदर्शयत् - ख- । ८ ... यन्मयैः ? - ख. । ९ पारिवेषीव - ख. । १० दुर्निरीक्षः ख.।

तेषामापतताामेव लोकपाला महाबलाः ।
शरैराशीविषाकारैश्चक्ररक्षानपोथयन्११ ।। १ ९। ।
वायुर्बाणस्य विशिखैः कार्मुकाणि विकर्षतः ।
चिच्छेद युगपद् व्यास तदद्भुतमिवाभवत् ।।8.80.२ ० ।।
विच्छिन्नधन्वा स१२ क्रुद्धस्तोमराणि तदासृजत् ।
चिक्षेप तानि वेगेन वायुरन्यां दिशं पुनः । ।२ १ । ।
हयाँश्च पुनरेवास्य शरैः सन्नतपर्वभिः ।
ससूतान् परमायस्तो१३ ह्यनयद्यमसादनम् ।। २२ ।।
स रथाद्बलिजः क्रोधादवप्लुत्य महाबलः ।
गदां गृहीत्वा वेगेन श्वसनं समुपाद्रवत् । ।२३ । ।
तस्यापतत एवाशु सगदस्यानिलस्तथा१४ ।
शरैराशीविषाकारैर्गदां तां समकृन्तत ।।२४।।
स निकृत्तगदश्चापि बाणः प्रहरतां वरः ।
प्रगृह्य तु गदामन्यां चिक्षेप च जहास च ।। २५।।
तामापतन्तीं वेगेन गदां बाणस्य१५ खेचरीम् ।
आक्षिप्य वायुर्व्यधमदन्यां दिशमदीनवत् । ।२ ६ ।।
विरथं तमथालक्ष्य१६ वायुना च भृशार्द्दितम्१७ ।
पुत्रं बलिर्द्रुतं व्यास स्वरथे१८ समपादयत् । ।२७।।
तावेकरथसंयत्तौ१९ बभतु२०र्दानवेश्वरौ ।
सूर्याचन्द्रमसौ यद्वत् पूर्णमास्यां२१ समागतौ ।।२८। ।
अथ तेषाञ्च तेषाञ्च तद्युद्धमभवत्तदा२२ ।
. . . .. . . . .. . . . - - - - - - ।
तान्निरुद्धानथाज्ञाय लोकपालैर्महाबलैः । ।२९। ।

११ न्यपोथयन् - ख. । १२ सं - ख. । १३ परयापस्तो - ख. । १४ भगवाननिलस्तथा - ख. । १५ मानस्य - घ. । १६ विमुखं तमनालक्ष्य - थ. । १७ शरार्दितम् - ख. । १८ सरथे - घ., स्वरथे (?), रथेन - ख. । १९ अथैकरथसंपन्नौ - घ. । २० बभूवु - ख., बिभिदु - घ. । २१ पौर्णमास्यां - घ. । २२ तद्युद्धमभवद् घोरवत्तदा - घ. ।

निवातकवचाः सर्वे कालकेयाश्च दंशिताः ।
पौलोमाः सैंहिकेयाश्च शम्बरः कालशम्बरः । ।8.80.३ ० । ।
अन्धकश्च महादैत्यो हिरण्याक्षश्च विश्रुतः ।
सर्वे व्यूहममुञ्चन्तो दानवा युद्धलालसाः ।। ३१ । ।
चक्रुर्वेगं२३ महावेगाः समेघा इव सानवः ।
तानापतत एवाथ यमो दण्डेन वीर्यवान् ।।३ २। ।
अवारयत२४ ते तस्थुश्चित्रपट्ट२५ इवार्पिताः ।
तान् यमस्य भयाद् दैत्यान्२६ दृष्ट्वा सर्वानवस्थितान् ।।३ ३। ।
अन्धको यममभ्येत्य तिष्ठतिष्ठेति चाब्रवीत् ।
महता स रथेनैत्य२७ धनुर्विस्फाल्य२८ चासकृत् ।।३४।।
यमं ललाटे दशभिर्बाणैर्विव्याध वीर्यवान् ।
पञ्चभिर्महिषं चास्य षड्भिः कालं तथाग्रतः ।।३ ५ ।।
मृत्युञ्च दशभिश्चैव कृतान्तं चैव सप्तभिः ।
भ्रामयन् स पुनश्चापमिन्द्रायुधसमप्रभम् ।।३ ६। ।
ननादाम्बुदवच्चैव पुनर्विव्याध दैवतम् ।
हिरण्याक्षसुतो ज्येष्ठो ह्यन्धकोहं महाबलः । । ३७। ।
ब्रह्मणा च वरो दत्तो मह्यमित्यवघोषयन् ।
तस्यैवं वदतस्तूर्णं सूर्यपुत्रः प्रतापवान् । ।३८ ।।
रथं चिच्छेद२९ संक्रुद्धो दण्डेन विनिपातयन्३० ।
सकार्मुके रथे तत्र मथिते ह्यन्धकस्तदा३१ । ।३ ९। ।
गदामुद्यम्य वेगेन प्रेताधिपमथाद्रवत् ।
तस्य तां दण्डघातेन गदां सोप्यवचूर्णयत् । ।8.80.४० ।।
शिरस्येनं पुनः क्रुद्धो दण्डेन समताडयत् ।
''''------- । ।४१ ।।

२३ ... वेंगान् - ख । २ अवारयन्त - ख. । २५ .पट्टा - ख. । २६ दैत्या - ख. । २७ रथेनेत्य - ख. । २८ विस्फार्य (?) । २९ धनुश्चिच्छेद (?) । ३० रथे दण्डं न्यपातयत् (?) रथं दण्डेन पातयत् (?) । ३१ ...स्तथा - ख. ।

468

जितेन्द्रियो मुनिर्यद्वत् स्पृष्टो विषयगोचरैः (?) ।
अथाप्रतिहतं दण्डमन्धकेन पराहतम् ।।४२ । ।

पुरः३२ प्रतिहतं दृष्टवा जहसुर्दानवेश्वराः ।
सिंहनादान् सवादित्रान् बाहुशब्दाँश्च सुस्वरान् । ।४३ । ।
चक्रुः साध्वन्धकेत्येवं चुक्रुशुश्च मुहुर्मुहुः ।
अन्धकोपि तदाभ्येत्य नर्दमानो यथार्णवः । ।४४। ।
तलेनाहत्य३ महिषाद्यमं भूमौ न्यपातयत् ।
ततो हाहाकृतं देवैर्गृह्णगृह्णेति दानवैः ।।४५।।
व्यूहभंगश्च देवानामभवच्छक्तिनन्दन ।
अथ मृत्युश्च कालश्च कृतान्तश्चेति ते त्रयः ।।४६। ।
अन्धकं बहुभिः३४ पाशैर्बबन्धुः क्रोधमूर्च्छिताः ।
पाशाँश्चैव स दैत्येन्द्रो विच्छिद्य सुमहाबलः ।
बाहुपाशेन बलवान्कृतान्तमवबध्नत । ।४७। ।
स बद्धो बाहुपाशेन कृतान्तः क्रोधमूर्छितः ।
उत्क्षिप्यान्धकमुद्धूतो निनाय बलवान् बलात् ।।४८। ।
तं नीयमानं संप्रेक्ष्य हिरण्याक्षः सुतं स्वकम् ।
जघान सायकैस्तीक्ष्णैः कृतान्तं सुभृशं दृढम् । ।४९। ।
तस्य गात्राणि सर्वाणि सन्धीँश्चैव महाबलः ।
विव्याध निशितैर्बाणैः स विष्टब्धो व्यतिष्ठत । ।8.80.५० ।।
तं बाणैर्विवृतं३५ दृष्ट्वा देवाः सर्वे सवासवाः ।
रक्षन्तः समपद्यन्त भीमोद्यतकरायुधाः ।। ५१ ।।
अथ किखर३६ मृदंगवेणुवीणापणवसुघोषकडिण्डिमानकानाम् ।
असुरसुरबले महान् तदानीं समभवदुग्रतरः३७ स तूर्यनादः३८ । ।५२ ।।
इति स्कन्दपुराणे युद्धे अशीतितमोध्यायः

३२ पुनः - ख. । ३३ तालानाहत्य - ख. । ३४ बाहुभिः (?) ३। । ३५ वाणविवृतं - ख., बाणैर्विधृतं (?) । ३६ मुरज - घ. । ३७.. .दग्रवर. - ख. । ३८ सतूर्यनादमिति - ख. ।

469

सनत्कुमार उवाच

हिरण्याक्षस्तदायान्तं दृष्ट्वा देवेन्द्रमग्रतः१ ।

उवाच रथयन्तारमिन्द्रं प्रति नयस्व माम् ।।१।।

स तेन चोदितस्तस्य चोदयानस्तदा हयान् ।

अनयत्तं सुरेन्द्राय हुतं भागं यथानलः ।।२।।

स गजस्कन्धगं देवं सहस्राक्षं सुरेश्वरम् ।

शरपाते तदा स्थित्वा प्रोवाचासुरपुंगवः ।।३।।

शक्र यत्ते बलं किञ्चित् तद्विदर्शय मा चिरम् ।

पूर्वदेवा वयं चैव त्रैलोक्यं चाखिलं हि नः ।।४।।

ज्येष्ठक्रमागतं कृत्वा न्यायेन च सुरोत्तम ।

ते यूयं न्यायमुत्सृज्य हत्वा मे भ्रातरं पुनः । ।५।।

विश्रम्भेण शठा भूत्वा पश्चाद् देवत्वमागताः ।

इमे वयं पूर्वदेवा न वा यूयञ्च देवताः ।।६।।

युध्यतां वोद्य सर्वेषां जीवितानि हराम्यहम् ।

सहानुगैस्त्वामिहाद्य हत्वा कृत्वा बलिं तथा ।।७।।

भविष्याम्यनृणो भ्रातुर्यस्त्वया मायया हतः ।

स एवमुक्त्वा बलवद्धनुराकृष्य वीर्यवान् ।

ललाटे पञ्चभिर्व्यास विव्याध निशितैः शरैः ।।८।।

स विद्धस्तेन देवानां ललाटे पञ्चभिः शरैः ।

राजा बभौ यथा मेरुः सूर्यपादैः समावृतः ।।९।।

अथ तस्य तदा शक्रः पुनश्चङ्क्रमतो२ धनुः ।

चिच्छेद वज्रमादाय पुनश्चैनमताडयत् ।।8.81.१ ० ।।

स तेन सुप्रहारेण दिशो दीप्ता ह्यपश्यतः ।

अन्यच्च धनुरादाय पुनरेव व्यकर्षत । ।१ १ ।।

१ ..मभ्यगात् - ख. । २ -..श्चक्रमतो - ख.।

470

तदप्यस्याच्छिनद्राजा३ तथान्यद् भूय एव च ।

अथ शक्तिं समादाय चिक्षेप रुषितस्तदा । ।१ २। ।
तामापतन्तीं दीप्तास्यामुग्रां मृत्योरिव स्वसाम्४ ।
वज्रेण राजा५ चिच्छेद तदद्भुतमिवाभवत् ।।१ ३ ।।
गदामन्यां समुद्यम्य हिरण्याक्षस्तदा शुभाम् ।
अभिदुद्राव वेगेन क्रुद्धः सिंह इव द्विपम् ।।१४। ।
तस्यापतत एवाशु गदां हेमपरिष्कृताम् ।
चिच्छेद बहुधा राजा धर्मार्थाविव६ नास्तिकः ।।१५। ।
अथैनं विप्रचित्तिश्च शिनिर्बाष्कलिरेव च ।
मयश्च सम्बरश्चैव असिलोमा च दानवः । ।१ ६।।
तारश्च कारकश्चैव तथेन्द्रदमनः स च ।
कालनेमिश्च७ षण्डश्च विपाकः पाक एव च ।।१७। ।
इल्वलो नमुचिश्चैव वातापी कालमुंजिकः८ ।
एते सर्वे महामाया देवेन्द्रमभिदुद्रुवुः९ । । १८।।
तानापतत एवाथ रुद्रादित्याः प्रमन्यवः ।
रुरुधुर्विजने१० यद्वद् गजान् सिंहाः समूर्जिताः ।। १९। ।
तेषां तेषां च संग्रामः सुघोरः समपद्यत ।
अरण्येन्योन्यसंपातान्मत्तानां दन्तिनामिव ।।8.81.२ ० ।।
तत्रांशो११ नाम आदित्यो रथेनाम्बुदनादिना ।
आयम्य कार्मुकं व्यास दानवान् समुपाद्रवत् । ।२१ । ।
स विप्रचित्तिं दशभिः शिनिं पञ्चभिरेव च ।
त्रिभिश्च वाष्कलिं संख्ये मयं१२ पञ्चभिरेव च ।।२२। ।
संवरं चैव विंशत्या असिलोमानमेव च ।
तारं च तारकं चैव इल्वलं नमुचिं तथा । ।२३ ।।

३ तमप्यस्याच्छिनद्राजा - ख- । ४ स्नुषां - ख. । ५ मृजु - ख. । ६ धर्माथानिव - ख. । ७ कालनेमी च - ख. । ८ कालभुंजितः - ख. । ९ .. दुद्रुवे - ख. । १०. -विजये - ख. । ११ तत्रांसो - ख. । १२ यमं - ख. ।

471

वातापिं१३ चेन्द्रदमनं विपाकं पाकमेव च ।
कालनेमिं च षण्डं च तथा चामीसृमुञ्जिकम्१४ ।।२४। ।
एतान्सर्वान् स विव्याध दशभिर्दशभिः शरैः ।
विकर्षतां च संग्रामे आदित्यो लघुहस्तवान् ।

धनूंषि युगपद्देवश्चिच्छेद च ननाद च । ।२५। ।
तत एषां पुनर्वाहान् सूतान् दिव्यान् जयध्वजान् ।
प्रहसन्निव विप्रेन्द्र सायकैर्बहुधाकरोत् । ।२६। ।
ते हताश्वा महेष्वासा हतसूताश्च सर्वशः ।
वेगेन खङ्गिनः सर्वे अंशमेवाभिदुद्रुवुः१५ ।।२७। ।
तान्मूर्त्तीनिव शैलेन्द्रान् गर्जतो जलदानिव ।
असंभ्रान्तस्तदादित्यो जानुष्वेवावपूरयत् ।।२८। ।
शरपूरितगुल्फास्ते जानुष्वेव च दानवाः ।
अंशमुत्सृज्य१६ वेगेन जग्मुरन्यां दिशं तदा ।।२९।।
ततो देवास्तदा चक्रुर्महान्तं तूर्यनिस्वनम् ।
सिंहनादाश्च विपुलान् बाहुशब्दाँश्च पुष्कलान् । ।8.81.३ ० । ।
अंशोप्यायम्य भगवान् धनुरिन्द्रायुधोपमम् ।
दानवानां सदैत्यानामकरोत् कदनं महत् ।।३ १ ।।
शिरांसि दानवेन्द्राणामंशः प्रहरतां वरः ।
अपातयत्१७ फलानीव पक्वानि श्वसनो यथा१८ । ।३२ ।।
धावन्ति केचिदंशेन१९ अशिरस्काः शरैः कृताः ।
गत्वा वेगेन संग्रामात् पतन्त्यूर्व्यां गतासवः ।।३३ ।।
अपरे बाहुभिश्छिन्नैरूरुभिश्च महाबलाः ।
पतिता निष्टनन्त्युग्रं२० निरयस्था यथा नराः ।।३४।।
शरपूरितसर्वाङ्गाः शरसंबद्धबन्धनाः ।
भ्रमन्ति तत्र तत्रैव संसार इव देहिनः२१ ।।३५ ।।

---

१३ वातापी - ख. । १४ मुण्डिकं - ख । १५ अंशुमेवाभिदुद्रुवुः - ख. । १६ अंशुमुत्सृज्य - ख. । १७ अपालयत् - ख., अफालयत् (?) । १८ पक्वानीव घनावली - घ., श्वसतो म्यथा? -- ख । १९ दन्तेन - ख. । २० ...न्त्युग्रा - ख. । २१ रागिणः (?) ।..


न स तत्रास्ति दैत्यो वा दानवो वा महाबलः ।
यं२२ शरा न विशन्त्युग्रा अंशस्य२३ सुमहात्मनः ।।३ ६। ।
बन्धुजीववनं यद्वद् वनमाभाति२४ पुष्पितम् ।
अशोककिंशुकानां वा तथा दैत्यबलं बभौ । ।३७।।
अयमंशोयमंशेति नेत्ययं चायमित्युत ।
सर्वमंशमयं दैत्या ह्यपश्यन्त भयार्दिताः । ।३८। ।
सोपि नित्यायतधनुः परिवेषीव भास्करः ।
यं यतः पश्यते दैत्यं तं तं विव्याध पत्रिभिः । ।३ ९। ।
नाददानस्तदा ह्यंशः सन्दधानस्तथापि वा ।
न विकर्षन्धनुश्चैव लक्ष्यते दैत्यदानवैः । ।8.81.४० । ।
मण्डलीकृतमेवास्य दृश्यन्ते कार्मुकं महत् ।
आदित्य इव मध्याह्ने दृश्यते स तदा युधि ।।४१ ।।

स दिव्यचापो२५ लघुहस्तवान् बली सदा महामण्डलभूतकार्मुकः ।
ददाह शत्रून् पवनेरितो रणे विभावसुः शुष्कमिवेन्धनं महद्२६ ।।४२।।
इति स्कन्दपुराणे युद्धे एकाशीतितमोध्यायः२७

सनत्कुमार उवाच
तांस्तथांशेन दैत्येन्द्रान् काल्यमानानितस्ततः ।
दृष्ट्वा बलो महामायो यन्तारमिदमब्रवीत् । ।१ । ।
नयस्व मां यतोंशोयं दुरात्मा दहते बलम् ।
यावदेनं शितैर्बाणैर्नयामि यमसादनम् ।।२। ।
तस्यापतत एवांशस्तदा प्रहरतां वरः ।
ध्वजं चिच्छेद१ बाणेन हयाँश्चैकैकशस्तदा । ।३ ।।

२२ -यः - क..। २३ ... नंशस्य - ख. । २४ धनमाभाति - ख. । २५ दीप्तहस्तो - घ. । २६ महानिति -ख. । २७ अध्यायः १३९ - ख. ।
१ ध्वजाश्चिच्छेद - ख. ।


भल्लेन च शिरः कायाद्यन्तुराशु न्यपातयत् ।
तञ्चैव पञ्चभिर्बाणैर्ललाटे समविध्यत । ।४। ।
तस्य दैत्यस्य ते भान्ति ललाटे पञ्च सायकाः ।
घनोदरविनिष्क्रान्ता भास्करस्येव रश्मयः । ।५। ।
दैत्योपि हि तदा धन्वी२ वियदुत्पत्य रोषितः ।
सायकैर्बहुभिर्व्यास सोंशं समकिरद्बली । ।६। ।
सुवृष्टिमिव३ जीमूतः - - - - इवाशनिम् ।
करान् दिवाकरो४ यद्वत् तुषारं चन्द्रमा यथा५ ।।७। ।
तथा स दानवो दर्पाद्बलः प्रहरतां वरः ।
अंशमेवाकिरत्तीक्ष्णैः सायकैर्मर्मभेदिभिः । ।८। ।
ध्वजं चैवास्य चिच्छेद बहुधा दानवेश्वरः ।
हयान् वेगहतान् कृत्वा सारथिं चाप्यसारथिम् । ।९ । ।
कार्मुकं बहुभिर्बाणैर्व्यधम - - - - - ।
यथांशं स चकारोग्रस्थान्यानपि दैवतान्६ ।।8.82.१ ० । ।
निरुद्यमान् महामायश्चकार विरराम च ।
क्वचिद् गीष्पतिसंकाशः७ क्वचिद् भास्करसंनिभः ।। ११ ।।
क्वचित्सोमाग्निकल्पश्च क्वचित्ताराग्रहैस्समः८ ।
क्वचित्पर्वतसंकाशः क्वचिद् गृध्रवपुर्धरः ।। १२ । ।
क्वचिच्चाकाशमाविश्य अदृश्यः सोसृजच्छरान् ।
शरोपचितगात्रं तच्छिन्नं भिन्नं विदारितम् । । १३ । ।
विष्टब्धं मूकवत्सर्वं देवानां बलमाबभौ ।
नष्टवादित्रनिनदं हयहेषितवर्जितम्९ ।। १४। ।
गजबृंहितविभ्रष्टं श्रान्त१० योधोग्रनादितम् ।
निष्पन्दं तद्बलं भाति चित्रप्रत्यर्पितं यथा ।। १५ ।।

२ म(स्र) ग्वी - ख.। ३ सवृष्टिरिव - ख । ४ दित्यकरो - ख । ५ इव - ख ६ देवतान् ख । ७ ...च्छ्रीपतिसंकाशः (?) । ८. ग्रहैस्सह - ख. । ९ गर्जितम् - ख. । १० शान्त - (?) ।


ऊर्ध्वं निरीक्षते तत्र यः कश्चिद्विबुधो बले ।
बलस्तस्य शरैर्वक्त्रमकरोद्वि - वद्बली ।। १६। ।
- - - -- -- -- -- -- -- - ।
चेष्टाविराहिता११ श्चासन् यथा मोक्षपथि१२ स्थिताः । । १७।।
तांस्तथा सीदतः सर्वान् दृष्ट्वा बलमहार्णवे ।
वायुर्जयन्तः पूषा च भगश्च सुमहाबलाः । । १८।।
नदन्तस्ताञ्छराँस्तस्य बलस्य समवारयन् ।
वायुस्तस्य महाभाग शरान्मेघादिवोदितान्१३ ।।१ ९।।
मुञ्चतो१४ मुच्यमानाँश्च मुक्ताँश्चैवाहरद्बली ।

भॅगोस्य कार्मुकं दिव्यमच्छिॅनत्प्रहसन्निव । ।8.82.२० । ।
देहत्राणं तथा पूषा जयन्तश्चेषुधी तथा ।
- - - - - - - - - - - - - - - - ।।२१।।
समार्दयन् शरैस्तीक्ष्णैर्देवा रविसमप्रभाः ।
सोर्द्यमानस्तदा देवैर्बली दनावपुंगवः । ।२२ ।।
वृक्षैः काननजैर्व्यास युयुधे भीमविक्रमः ।
तान्द्रुमाँस्ते तदाक्षिप्तान् बलेन बहुधा शुभान् ।।२३ ।।
क्रचुःशरैर्देवतेन्द्रास्ततः स गिरिमाव्रिजत् ।
गृहीत्वा स महच्छृङ्गं समृगव्यालकिन्नरम् ।।२४।।
चिक्षेप सुमहानाद१५ प्रकुर्वाणोतिदारुणम् ।
तथा पतन् स१६ वेगेन पवनो बलवान् बलात् ।।२५।।
जहार शृङ्गं तच्चापि पपातासुरमूर्धनि ।
दानवानां तदा कोटिमेकां वीर्यवतां युधि ।।२६ ।।
जघान बलमुक्तं तद् गिरिशृङ्गं महास्वनम् ।
तान् हतान् दानवास्तेन शृंगेण दितिनन्दनान् ।।२७। ।

११ चेष्टाविरहितं - घ. । १२ मोक्षपथे (?) । १३ ...निवोदितान् - ख. । १४ मुच्यतो - ख. । १५ सुमहत् नादं - ख. । १६ पतन्तं - ख. ।


( ४७५) दृष्ट्वा देवांश्च तानुग्रानभज्यन्त१७ सहस्रशः१८ ।
रथैरश्वैर्गजैश्चैव तथा चैव पदातयः ।।२८। ।
उत्सृज्य वाहनान्यन्ये१९ जीविताभ्यर्थिनस्तदा२० ।
प्रमुञ्चन्तो महानादान् पलायन्त२१ सहस्रशः । ।२९। ।
द्रबतस्तान् तदाभ्येत्य हिरण्याक्षः स दानवः (?) ।
विप्रचित्तिश्च दनुजः प्रह्लादश्च महाबलः । ।8.82.३ ०।।
मय - -२२ न्धको दैत्यस्तारकः शक्रतापनः ।
ऊचिरे दानवान् सर्वान् दैत्यांश्च भयविह्वलान् ।।३ १ ।।
भो भो दानवशार्दूला दैत्याश्च सुरशत्रवः ।
किं पलायथ२३ तिष्ठध्वं मा भयं वोस्तु दानवाः ।।३२। ।
क्व गता दानवा यूयं सुखं लप्स्यथ वा न वा ।
एते बलमजानन्तो२४ देवाः पूर्वं महाबलाः । ।३३ । ।
न प्रमर्दन्ति पाताले स्थितान्नाप्यसुरोत्तमाः२५ ।
निःशेषान् प्रमथिष्यन्ति पातालेपि कुलाधमाः ।।३४।।
मा यात विनिवर्तध्वं रिरक्षिषत२६ सर्वशः ।
सुयुद्धेनात्मनो दैत्या मा भयं वोत्र जीविते ।।३ ५।।
क्व गतं दनुजत्वं वः क्व गता दैत्यता च वः२७ ।
क्व च वैरं सुरैः सार्धं क्व राज्यहरणं गतम् ।।३ ६। ।।।
यद् धैर्यं२८ यश्च वो दर्पः कुलं जन्म२९ च यद्धि वः३० ।
यच्च वो३० गर्जितं पूर्वं तस्य कालोयमागतः । ।३७।।
तदा ब्रुवत यद३२ दैत्या न बाला३३ वयमित्युत ।
वयमेकैकशो योग्या देवानां नाशनेपि३४ च ।।३८।।
तस्य कालोयमद्येह प्राप्तः किं विपलायथ३५ ।
तत् सर्वं गर्जितं वोद्य जानाम्यहमतः परम् । ।३९।।

१७ दृष्ट्वान्ये दानवाः सर्वे व्यभजन्त (?) । १८ सुरशत्रवः - घ. । १९ वाहनानन्ये - ख. । २० जीबितेनार्थिन- स्तदा - ख. । २१ प्रविलीनास्तदा दैत्या दानवाश्च - घ. । २२ यममुक्तो - ख. । २३ पलायत - ख । २४ एतैर्बलमजानन्तो - ख. । २५ स्थित्वा नाप्यसुरोत्तमाः - ख । २६ ररक्षारुत - ख. । २७ गतो दैत्यश्च वः - ख. । २८ यद्वैरं - ख. । २९ कुलजन्म - ख. । ३० महर्द्धिमत् - घ. । ३१ ते - ख. । ३२ यत्तद्ब्रुवते तदा - ख., यत्तु ब्रूत तदा - घ. । ३३ बलिनो - घ. । ३४ नाशनेति - ख. । ३५ .. षिञ्चि पलायत - ख. ।


शरदम्बुदवद् दैत्या व्यर्थं मा यात भीरिह३६
निवर्तध्वमधर्मज्ञा युध्यध्वं कृतनिश्चयाः ।।8.82.४० । ।
वीक्षध्वं मे सपुत्रस्य महत् कर्म कुलाधमाः ।

कश्यपस्य सुतः श्रीमान् हिरण्याक्षोस्मि दानवाः ।।४१ । ।
अन्धकश्च सुतोयं मे ब्रह्मदत्तवरः शुभः ।
हिरण्यकशिपोर्वीर्यं यदभूदसुरोत्तमाः ।।४२ । ।
द्विगुणं तन्ममाप्यस्ति वीक्षध्वं तदशंकिताः ।
अद्य चैतान् मया सर्वान् हतान् पश्यत दानवाः ।।४३ ।।
संग्रामे यदि तिष्ठन्ति सर्वे देवा ममाग्रतः ।
अद्य त्रैलोक्यमव्यग्रं हतेष्वसुरशत्रुषु । ।४४। ।
विज्वरा भोक्ष्यथ३७ सुखं मयेन्द्रेणासुरोत्तमाः ।
मा वोस्तु भयमद्येह यथा तिष्ठन्ति साधवः३८ ।
सपुत्रं मां युधि यथा वीक्षमाणास्तु तिष्ठत ।।४५ ।
सनत्कुमार उवाच
त एवमुक्ता विप्रेन्द्र गजास्तोत्रार्दिता इव ।
विनिवृत्ताः पुनः सर्वे लज्जयातिसमावृताः३९ । ।४६। ।
ते छत्रसंछादितवक्त्रपद्मा लज्जासमाविष्टविरागवक्त्राः४० ।
न तस्य राज्ञो मुखतोवतस्थुस्तिमेरिवार्त्ताः सलिलेल्पमीनाः ।।४७।।
इति स्कन्दपुराणे युद्धे असुराक्रोशनो नाम द्वद्यशीतितमोध्यायः

सनत्कुमार उवाच
अथ ते दानवा व्यास निवृत्ता रणमूर्धनि ।
दुष्करं तं तदा चक्रुर्वेगं नद्य इवार्णवे । । १ । ।

३६ भीविहः - ख., भीतवत् - घ ।३७ भोज्य?, - ख. । ३८ सापवः - ख. । ३९ स(श)यावृताः (?) । ४० विचारवक्त्राः - घ. ।


प्रह्लादश्चानुह्लादश्च शिनि१ र्बाष्कल एव२ च ।
विरोचनो बलिर्बाणो बलोन्यो देवकण्टकः३ ।।२।।
विप्रचित्तिश्च षण्डश्च ह्रदश्च स शतोदरः ।
यमोसुरश्च व्यंसश्च शतावर्त्तो हृतोदरः ।।३ ।।
केशी च नमुचिश्चैव तथेन्द्रदमनोसुरः ।
मयो मुर४स्तारकाक्षो विद्युन्माली प्रभाकरः । ।४।।
तारश्च तारकश्चैव बकश्चाटिश्च विश्रुतः ।
मूकश्चैव कुभश्चैव कार्तस्वनमहारवौ ।।५।।
वातापी चेल्वलश्चैव तथैवेल्वकबल्वलौ ।
केतुश्च शतकेतुश्च राहुः स्वर्भानुरेव च ।।६।।
शम्बरो नमुचिश्चैव कालशम्बर एव च ।
दुन्दुभिर्महिषश्चैव शतदुन्दुभिरेव च । ।७।।
कालनेमी विपाकश्च पाको दुर्योधनस्तथा ।
हस्ती सुन्दनिसुन्दौ च शरभः काल एव च ।।८।।
वृषपर्वा५ शताक्रन्दः६ शतावर्त्तोथ धेनुकः ।
प्रलम्बश्च बकश्चैव७ गजो हालाहलस्तथा ।।९।।
सैंहिकेयाश्च विख्याताः पौलोमाः कालकासुताः ।
निवातकवचाश्चैव बालेयाश्च तथा गणाः । ।8.83.१ ०।।
बाणस्य च सुताः सर्वे कालखंजाश्च विश्रुताः ।
वृत्रो वृत्तश्च सगणस्तथान्ये सुमहाबलाः ।।१ १ ।।
तस्य सैन्यस्य विप्रेन्द्र नर्दतः संबभौ तदा ।
वेगः स सिन्धुराजस्य वेलां प्रति यथा महान् ।।१२।।
वादित्ररवसंमिश्रैः सिंहनादैः सुपुष्कलैः ।
रथनेमिहयानां च गजानां बृंहितैः सह ।। १३ । ।
स शब्दस्तुमुलो व्यास त्रैलोक्यमवपूरयत् ।
देवाह्यपि८ सुसंयत्ताः सर्वोद्योगेन संस्थिताः । ।१४।।

१ निशि - ख, शिवि - घ. । २. .र्बाष्कलिरेव - घ. । ३ वातोथ कंपनः - घ. । ४ ...सुर - ख. । ५ विशपर्वा - ख. । ६ शतानन्दः - ख. । ७ ध्वकश्चैव - ख । ८ देवापि हि - ख. ।

478
प्रत्यगृह्णन्त तान्९ दैत्यान् क्रोधताम्रायतेक्षणाः१० ।

-- - - - - - - - - - || १५ | |
असिभिः पात्यमानैश्च शतघ्नीभिश्च सर्वतः ।
उल्काभिरिव तद् व्योम चिचित्रमभवत्तदा । ।१ ६। ।
शरासिभिन्नकृत्तानि११ पतन्त्युर्व्यां शिरांसि हि१२ ।
तालेभ्य१३ इव पक्वानि फलानि मुनिसत्तम ।। १७। ।
मुकुटैर्हारकेयूरैः श्रोणीसूत्रैश्च सप्रभैः ।
निष्कैर्दुकूलैः कटकैरंगुलीयैः सकुण्डलैः । ।१८।।
उरच्छदैः कङ्कतीभिः१४ करपालैश्च दन्तिनाम् ।
व्यजनैर्बालवृन्तैश्च१५ छत्रैर्मणिभिरेव च । ।१ ९।।
पट्टैश्च काञ्चनैर्दिव्यैः कवचैश्च महाप्रभैः ।
शिरोभिश्चरणैश्चैव करै१६र्वक्त्रैर्महाप्रभैः ।।8.83.२ ० ।।
प्रतोदैश्च कुथाभिश्च योक्त्रैश्च कनकोज्ज्वलैः ।
तत्र युद्धनिशा भाति१७ ताराभिर्द्यौरिवापरा ।।२१।।
तिष्ठ तिष्ठ क्व मे यासि नास्ति मोक्षस्तवाद्य वै ।
स्थितोहं प्रहरस्वेति न मे भीस्तिष्ठ मेग्रतः ।।२२। ।
किं गर्जसि वृथा व्योम्नि शरदीव बलाहकाः ।
कर्मणा दर्शय क्षिप्रं गर्जितं तेद्य निष्फलम् । ।२३ । ।
नैवं प्रह्रियते मूढ मा१८ वीक्षस्व दृढो भव ।
तिष्ठ तिष्ठ क्व गन्तासि मम हत्वा प्रियं सुतम् । ।२४।।
स्थितोस्म्येष नयिष्यामि१९ त्वामद्य यमसादनम्२० ।
अद्य ते - रतां सर्वां देवाधम सुदुस्सहाम् ।।२५।।
नाशयिष्यन्ति मद्बाणास्तिष्ठ तिष्ठ ममाग्रतः ।
दानवाधम देवोस्मि नास्मि२१ भीतोहमाहवे२२ ।।२६। ।
९ प्रगृह्णस्तांश्च - ख. । १० क्रोधताम्रायतेक्षणा(न?ः?) - ख. ।

११ .. .भिर्निकृत्तानि (?) । १२ तु - ख- । १३ तलेभ्य - ख. । १४ कङ्कटीभिः - ख. । १५ ..स्तालवृन्तैश्च - (?) । १६ कलौ - ख । १७ युद्धदिशा - ख, युद्धायनिर्भाति? - घ. ।' १८ मो - ख. । १९ करिष्यामि - ख. । २० त्वामप्यद्य - ख., यमातिथिम् (?) । २१ नास्ति - ख. । २२,भीतहमाहवे - ख. ।

479
एवं वदन्तो युयुधुर्यथा मत्ता महागजाः ।
परस्परवधासक्ता योधास्तत्र सहस्रशः ।।२७।।
अन्योन्यमेवमाभाष्य प्रैषयन्यमसादनम् ।
सिद्धाश्च चारणाश्चैव व्योम्नि सर्वे व्यवस्थिताः ।।२८।।
साधयन्ति२३ रमन्ते च नदन्ति२४ च यथाम्बुदाः ।
ममायं दानवः२५ संख्ये हतो भर्ता विनिर्मितः ।।२९।।
अयं देवस्तव पतिर्मा पारक्ये मनः कृथाः ।
किमेवं लोभयुक्तासि श्रेष्ठं श्रेष्ठं परीक्षसे । ।8.83.३ ० ।।
स्वयंग्राहो न चेहास्ति२६ लेख्यं वाचय मा त्वर२७ ।
असन्तुष्टं मनः किन्ते२८ संतुष्टा भव सुन्दरि ।।३ १ ।।
भागोयं ते सुरैर्दत्तस्तं गृहीत्वा व्रजालयम्२९ ।
एवमप्सरसश्चात्र वदन्ति च हसन्ति च ।।३ २।।
समरे३० निहते३१ योधे३२ कुर्वन्ति कलहं तथा ।
मेखलावलयोन्मिश्रं तासां तत् कलभाषितम् ।।३ ३ । ।
श्रुत्वा श्रुत्वा च ते योधा युयुधुर्भयवर्जिताः ।
वल्गिता स्फोटितै३३श्चैव दिशः सर्वा व्यनादयन् ।।३४।।
तत् तप्रवादितगजोपबृंहितवल्गिताकुपितसिंहनादितम् ।
देवदानवभयप्रवर्त्तनं३४ जीवितान्तकरमाबभौ३५ रणम् ।।३ ५ ।।
इति स्कन्दपुराणे युद्धे त्र्यशीतितमो३६ध्यायः

सनत्कुमार उवाच
स युद्धयज्ञस्तत्राग्र्यो१ राज्यार्थमभवत्तदा ।
तत्र यज्वा२ स्वयं देवः३ सहस्राक्षः प्रतापवान् ।।१।।

२३ सीधयन्ती - ख. । २४ नदन्तो (न्ते) - ख । २५ दानवाः - ख. । २६ नदीहास्ति - ख. । २७ मा त्वरी - ख. । २८ कस्ते - ख. । २९ प्रजान्नये - ख. । ३० अपरे (?) । ३३१ हित्यं?, । ३२ योधं - ख. । ३३ स्फोटिता - ख. । ३४ प्रवर्द्धनं (?) । ३५ जीवितान्तकरणं बभौ -ख. । ३६-३९ ख । १ स्तत्रोग्रो (?) । २ यष्टा - घ. । ३ देवं - ख. ।


सह देवैः सुराध्यक्षः कुशास्तस्य शरा मताः ।
आयुधानि विचित्राणि स्रुवा४ यैर्हूयते हविः । ।२ । ।
हविः प्राणाः समाख्याता५ अग्निर्मृत्युर्महाप्रभा६ ।
मन्त्राश्चास्त्राणि दिव्यानि पुरोडाशाः शिरांस्यपि । । ३ । ।
सोमस्तत्र जयोभून्नु७ रुद्राश्चाध्वर्यवोभवन्८ ।
आदित्या बह्वृचश्चासन् होत्रं च९ वसुभिः कृतम् । ।४।।
ब्रह्मा समभवच्चात्र स्वयं देवो बृहस्पतिः ।
शामित्रं चाश्विनौ तौ तु यज्ञ एवं व्यवर्त्तत१० । ।५।।
पशुस्तत्राभवद्दैत्यो हिरण्याक्षः सहानुगः११ ।
एवं बभौ तदा यज्ञो दैत्यानां शिशिराधिपः(?) ।। ६।।
हिरण्याक्षोभवद्यज्वा दैत्यदानवनायकः ।
विप्रचित्तिरभूद् होता प्रस्थातारश्च१२ दानवाः ।।७।।
उद्गाता चैव प्रह्लादः शुक्रो ब्रह्मा च सुव्रतः ।
पशुरिन्द्रः सहस्राक्ष एवं सोयजदव्ययः । ।८। ।
तस्मिँस्तदा महायज्ञे वर्तमाने महाभये ।
इन्द्रः समासदद्दैत्यं हिरण्याक्षं महाबलम् ।।९ ।।
वायुरभ्याययौ तूर्णं विप्रचित्तिं महाबलः ।
सक्तोभूत् संवरेणांशो बलेन१३ भग एव च ।।8.84.१ ०। ।
विरोचनेन पूषा च मित्रो बलिमथासजत् ।
बाणेन वरुणः सार्धमन्धकेन यमस्सह । ।१ १ । ।
जयन्तेनेल्वलः सार्धं मयेन१५ सह चन्द्रमाः ।
अहिर्बुध्न्येन राहुश्च कापाली शतकेतुना । ।१ २ ।।
अजैकपात् कालनेमिं ज्वरः कार्तस्वर्नेन च ।
प्रह्लादेनार्यमा सार्धमनुह्लादेन वै धरः । । १३ ।।

४ स्रुवो - ख. । ५ .श्चान्धक (आख्या?) - घ. । ६ प्रभुः - घ.. ...प्रभः (?) । ७ जयोभूच्च - घ. । ८ पर्वणाभवन् - घ. । ९ ...न्नोत्रं - ख., उद्गात्रा - घ. । १० न्यवर्तत - ख., प्रवर्तत - घ.। ११ सहानुगैः - घ. । १२ प्रस्तोतारश्च (?) । १३ संवरेणाशुर्बलेन - ख. । १४ ...मथासृजत् - ख., मयुध्यत - घ. । १५ यमेन - ख. ।


ध्रुवो ह्रदेन१६ संसक्तो ह्यन्ये चान्यैर्महाबलाः ।
हिरण्याक्षस्तदेन्द्रस्य१७ दृढमायम्य कार्मुकम् ।।१४। ।
विव्याध गजमेकेन कुम्भदेशे महाबलः ।
देवेन्द्रं पञ्चभिर्बाणैर्जत्रुदेशे समाहनत्१८ ।
षड्भिर्ललाटे विव्याध गजं भूयश्च सप्तभिः । ।१ ५। ।
स गजस्तैः शरैर्भिन्नः क्षरन् रुधिरमाबभौ ।
गैरिकाम्बुपरिस्रावी श्वेतः पर्वतराडिव ।। १ ६।।
तस्य क्रुद्धस्तदा शक्रो वज्रेण शतपर्वणा ।
प्रहारमददद् व्यास गण्डदेशे ननाद च । । १७। ।
स वज्रघातं दैत्येन्द्रः पुष्पघातमिवोर्जितम् ।
अचिन्तयानः सगजं शक्रमेवार्दयद्बली । । १ ८।।
गजोपि तेन निर्भिन्नः क्षरद्रुधिर आबभौ१९ ।
हविषेवानलः क्रोधात् प्रजज्वाल जगर्ज च । ।१ ९।।
स वेगं महदास्थाय अंकुशेन च चोदितः ।
हिरण्याक्षरथं तूर्णं जग्राह रथकूबरे ।। 8.84.२० ।।

गृहीत्वा स तमुत्क्षिप्य२० चिक्षेप गजसत्तमः ।
मेरुशृंगमिवोत्क्षिप्य समेघं श्वेतकुण्डली ।।२१।।
गत्वा मुहूर्त्तं वेगेन पतन् रथवरो२१ बभौ२२ ।
स्वर्भानुना हतः पूर्वं सरथो भास्करो यथा ।।२२।।
तत्र सम्यक् स्थितं भूमौ हिरण्याक्षरथं पुनः ।
आजगाम गजस्तूर्णं२३ जिघृक्षुर्मुनिसत्तम ।।२३।।
प्रसारितकरो दन्ती स्तब्धदृक्कर्णबालधिः ।
अभ्यधावत वेगेन गरुत्मानिव पन्नगम् ।।२४।।
तमापतन्तं वेगेन समीक्ष्यासुरसत्तमः ।
बभार२४ स तदा व्योम्नि गरुत्मानिव पन्नगम् ।।२५।।

१६ ह्लादेन (?) । १७... स्तथेन्द्रस्य - ख., स्सुरेन्द्रस्य - घ । १८ समाहतः - ख. । १९... माबभौ - ख। २० न (त) दोत्क्षिप्या - ख. । २१ द्रथवरो - ख । २२ मतौ - ख. । २३ रथं तूर्णं - ख । २४ दगार (?) - ख, वघार - घ. ।


तं तु मण्डलमावृत्तं गजोप्यनु तथैव हि ।
स्तब्धदृक्कर्णलांगूलः प्रसारितकरोभ्रमत् ।।२६।।
हाहाकृतमभूत् सर्वं साधुसाध्विति चोभयोः ।
बलयोर्देवदैत्यानां मूकवच्चाभवत्पुनः ।। २७।।
साधु दैत्येति चान्येषां हिरण्याक्षेति चैव हि२५ ।
स गजस्कन्धगो भाति भ्रमन् सुरगणेश्वरः ।।२८।।
सपक्ष इव२६ शैलेन्द्रे महिषोग्रं समास्थितः२७ ।
हिरण्याक्षश्च दैत्येन्द्रो भ्रमित्वा त्रिर्महासुरः ।।२९।।
गजं द्रुतमिवोत्सार्य रथे तस्थौ महाबलः ।
युध्यमानस्तु दैत्येन्द्रो दृढमायम्य कार्मुकम् ।।8.84.३०।।
देवराजं शरैस्तीक्ष्णैः समन्तात् पर्यवारयत् ।
स तैः शरैस्तदा व्यास मर्मसंधिषु ताडितः ।।३१।।
वज्रेण शतधा तस्य कवचं प्रव्यशातयत् ।
हयानां चैव योक्त्राणि सर्वाण्येव त्वकृन्तत ।।३२।।
रश्मीँश्च सूतहस्तस्थान् प्रतोदं चैव काञ्चनम् ।
चिच्छेद वहुधा शक्रः प्रहसन्निव वीर्यवान् ।।३३।।
छिन्नयोक्त्रास्ततोस्याश्वाः स्वछन्दाः संप्रतस्थिरे२८ ।
हिरण्याक्षोप्यवप्लुत्य गदया समताडयत्२९ ।।३४।।
गजं सुरपतिं चैव खड्गेन स महासुरः ।
स गजस्तेन घातेन त्यक्त्वा तं रथसत्तमम् ।।३५।।
शकृन्मूत्रं सृजन् व्यास प्राद्रवद् बलवांस्तदा ।
मर्दयानो नदँश्चैव भ्रामयन् सुरसत्तमम्३० ।।३६।।
असिनाभ्याहतश्चापि देवराजो महाबलः ।
नार्त्तिमानभवत् संख्ये न - - - - - - -३१ ।।३७।।

२५ ह - ख. । २६ सपक्षमिव - ख. । २७ महिषोग्निसमास्थितः - ख. । २८ समतस्थिरे - ख. । २९ मास ... - ख. । ३० बभ्रामाशु रसँस्तदा (?) । ३१ न चाप्य.. .क्षमाबभौ - ख., च क्षतमना - घ. ।


स दानवेन्द्रप्रहतेन दन्तिना महाबलः प्रस्रुतदानगन्धिना ।
अमृष्यमाणः प्रययौ प्रमाथिना हिरण्यनेत्रेण युधि प्रमाथितः ।।३८।।
इति स्कन्दपुराणे युद्धे चतुरशीतितमोध्यायः ।

सनत्कुमार उवाच
विप्रचित्तिर्महामायो वायुं बहुभिराशुगैः ।
अवाकिरद्दनुसुतो वृष्ट्येव हि जलप्रदः ।।१।।
संछादयन् तदा व्यास मण्डलीकृतकार्मुकः ।
इषूँश्चिक्षेप तीक्ष्णाग्राञ्छलभान् सागरो यथा ।।२।।
धारा बलाहकाद्यद्व१ ज्ज्योत्स्नाश्चन्द्रमसो यथा ।
रश्मयो भास्कराद्यद्वद्२ हिमं हिमगिरेरिव ।।३।।

तथा३ ते शरसंघाता४ धनुषो मण्डलीकृतात् ।
विप्रचित्तेर्विनिष्पेतु - - - - - - - -५ ।।४। ।
भास्करं छादयानाँस्ताञ्छरानापततो बली ।
भगवाननिलो वेगादसुरेषु न्यपातयत् ।।५।।
तैः शरैस्तस्य दैत्यस्य दानवा बहवो७ हताः ।
छिन्नाश्च निष्टनन्त्युर्व्यां निरयस्था यथा नराः । ।६ ।।
तांस्तथा निहतान्८ दृष्ट्वा विप्रचित्तिर्महासुरः ।
अवप्लुत्य रथाद् वायोर्बाहुयुद्धमयुध्यत ।।७।।
तस्य युद्धप्रसक्तस्य वायोर्बलमवर्धत ।
अमन्यन्त सुराश्चैव निगृहीतं दनोः सुतम् ।।८।।
अथोत्पत्य तदा वेगाद् गदया पवनं दृढम् ।
अताडयत् हिरण्याक्षो गण्डदेशे महाबलः । ।९। ।

१ बलाहकानां च - घ. । २.. श्चै (च्चै?) व - ख. । ३ कुथा - ख. । ४ शरणंयात्रा - ख. । ५ ...र्वीक्षामृन्मथभेदतः (?) - ख. । ६ बला(त्) - ख. । ७ बहुशो - ख. । ८ विहतान् - ख. । ९ वायुं बाहुयुद्धेन योधयत् (?) ।


स तेन सुप्रहारेण हिरण्याक्षस्य - - - ।
---न्यन्न१० किञ्चिच्च तत११ एव स दानवम्१२ ।।8.85.१०।।
परित्यज्य ययौ तूर्णमन्यदेशं१३ महाबलः ।
अंशसंवरयोश्चापि सुमहन्मुनिसत्तम ।।११।।
युद्धं समभवद् घोरं द्रष्टॄणां१४ तुष्टिवर्धनम् ।
अंशोस्यापततस्तूर्णं संवरस्य महाबलः ।।१२।।
दर्शयँल्लाघवं सम्यग् ध्वजं चिच्छेद कांचनम् ।
धनुश्च पंचधा कृत्वा हयान्निन्ये यमक्षयम् ।। १३ ।।
ततोस्य सारथेः कायाच्छिरो भूमावपातयत् ।
भूय एनं चतुःषष्ट्या सायकानामविध्यत ।।१४।।
स मायां तामसीं घोरां समाविश्याशु दानवः ।
उपलैश्चापि वज्रैश्च गदाभिः परिघैरपि ।।१५।।
कंकटैः करवालैश्च भिन्दिपालैरयोघनैः ।
जघान सरथं देवमंशं१५ व्यास रणाजिरे ।१६।।
स संदृश्य१६ समन्ताच्च पात्यमानं१७ महाभयम् ।
अंशो मूढो रणं त्यक्त्वा प्रययावन्यतो भयात् ॥१७॥
भगो बलं१८ समासाद्य रथेनाम्बुदनादिना ।
तिष्ठतिष्ठेति तं दैत्यमुक्त्वा विव्याध पत्रिणा ।।१८।।
स सायकं समादाय बलोसुरमहारथः ।
भगं१९ हस्ततले तूर्णं निर्बिभेद ररास च ।।१९।।
तत एनं समासाद्य मायया प्रहसन्निव ।
आाहत्योरसि पादेन स्वरथं पुनराव्रजत् ।।8.85.२०।।
तस्य तल्लाघवं शौर्यममूढत्वं सवीर्यताम्२० ।
दृष्ट्वा देवासुराः सर्वे साधुसाध्वित्यपूजयन् ॥२१॥

१० त्यन्त - ख. ।। ११ तप - ख. ।। १२ दानवः - ख. ।। १३ मध्यदशं - ख. ।। १४ दंष्ट्रिन् (? ) - ख. । माशु - ख. ।। १६ समदृश्यन् - ख. ।। १७ पातयान् - ख. ।। १= बलि - ख. ।। १९ भगो - ख. ।
२०च वीर्यवान् - ख. ।


भगोपि लज्जयाविष्टः पदा तेनाहतस्तदा ।
मुशलेन हयाँस्तस्य रथञ्चैव ससारथिम् ।२२।।
नामशेषाँस्तदा कृत्वा विननाद यथाम्बुदः ।
स्यन्दनं तु बलस्त्यक्त्वा चूर्णितं सहयं तदा ।।२३।।
भगस्य कार्मुक दिव्यं भूमिस्थश्चाच्छिनद्२१ बली ।
तत एनं पृषत्केन ललाटे समताडयत् ।।२४।।
हस्तयोश्च पुनर्व्यास शरैर्विव्याध सप्तभिः ।
गृहणतः कार्मुकं चास्य पृष्ठदेशे२२ बलोच्छिनत्२३ ।२५।।

पुनश्चान्यत् पुनश्चान्यत् स जग्राह ततो भगः२४।।
मुशलं कालमूलं तत् सर्वघात्यनलप्रभम् ।।२६।।
हतोसीति तमुक्त्वैव चिक्षेप बलनाशनम् ।
तमापतन्तं मुशलं बलो दानवपुंगवः ।।२७।।
शरैर्विष्टम्भयामास नन्दी मृत्युं यथात्मनः ।
अथ२५ प्रतिहतं मत्वा मुशलं सोसुरः पुनः ।।२८।।
धनुष्कोटया भगं मूर्ध्नि बलवान् समताडयत् ।
रथश्च सह सूतेन गृहीत्वा कूबरे पुनः ।। २९॥
चिक्षेप दक्षिणस्यां स२६ वायुर्गिरिमिवार्णवे ।
पूषा विरोचनं देवः शरैर्बहुभिराशुगैः ।।8.85.३०।।
विव्याध समरे क्रुद्धः स च तं प्रत्यविध्यत ।
सप्तभिर्निशितैर्बाणै (?)रिषुभिर्मर्मभेदिभिः ।।३१।।
क्रुद्धः पूषा तथाकृष्य बलवान् कार्मुकं महत् ।
_ _ _ _ _ _ _ _ _ _ _ _ _ _ ॥॥३२॥
जीवितान्तकरं घोरं युगान्तादित्यवर्चसम् ।
मुमोच रिपुमुद्दिश्य हतस्त्वमिति चोचिवान् ।३३।।

२१. शिचिच्छदु(दे) - ख. ॥ २२ पुच्छिदेशे - ख. ॥ २३ बलाच्छिनत् - ख. ।। २४ धनुर्भगः - खः ।
२५ अथा • ख, । २६ दक्षिणामाशां - ख. ।


तमापतन्तं बहुधा नदन्तं२७ दिशश्च सर्वा अवभासयन्तम् ।
उल्काः स्फुलिंगाश्च समुद्गिरन्तं ययौ रिपून् वेगवदुत्पतन्तम् (?) ।३४।।
स चाप्यवप्लुत्य महासुरेन्द्रो दृष्ट्वा तमादित्यसमानभासम् ।
मत्वाविषह्यं स्वरथं विहाय वियत् समाविश्य ततोवतस्थे ।।३५।।
तत्तस्य सूतञ्च२८ हयोपपन्नं महारथं सर्वगमस्त्रवर्यम् ।
कृत्वाशु भस्मेव यथा हुताशो२९ जगाम खं दिव्यमदृश्यरूपम्३० ।३६।।
इति स्कन्दपुराणे युद्धे पञ्चाशीतितमोध्यायः

सनत्कुमार उवाच
ततो दग्धरथः खस्थो दानवः स विरोचनः ।
वेगेनासिं विनिष्कृष्य स पूष्णो निशिताञ्छरान् ।।१।।
चिच्छेदापततः सर्वान् कार्मुकं चैव वीर्यवान् ।
तथा चैनं पुनर्मूर्ध्नि खड्गेन समताडयत् ।।२।।
स तेन सुप्रहारेण क्षरद्रुधिरमस्तकः ।
रथोपस्थे पपाताशु वृत्तोत्सव इव ध्वजः ।।३।।
पतितं तं१ स दैत्येन्द्रः प्रगृह्याशु महाबलः ।
चिक्षेप देवराजानं नर्दमानः पयोदवत् ।।४।।
बलिं विव्याध मित्रश्च२ जत्रुदेशे शरैस्त्रिभिः ।
बलिरेकेन३ भल्लेन४ तस्य चिच्छेद कार्मुकम् ॥५॥
अथैनं पुनरन्येन हृदये समताडयत् ।
स मूढो मृतकल्पश्च रथोपस्थे ससाद ह ॥६॥
तं५ सारथिर्मृत्युभयाद् विषण्णं समुपस्थितम् ।
अपोवाह तदा व्यास ततो दैत्या विचुक्रुशुः ॥७॥

२७ नुदन्तं - ख. ॥ २८ सूताश्च - ख. ।। २९ हुताशनो - ख । ३० विग्रहः - ख. । १ पतितस्थं - ख. ।। २ शक्रश्च - ख. ।। ३ बलिने (नै) केन - ख. ।। ४ बाणेन (?) । ५ तत् - ख. । ६ सारथिं मृत्युभयाद् - ख. ।


बाणं विव्याध वरुणः पृषत्कानां७ शतेन ह ।
स कार्मुकशतानि स्म पञ्च बाणः प्रतापवान् ।।८।।
आकृष्य युगपत् क्रुद्धः शरांश्चिक्षेप तावतः ।
तानापततं एवाथ वरुणो लघुहस्तवान् ।।९।।
एकैकं पञ्चधा कृत्वा बाणं विव्याध पञ्चभिः ।

ततोस्य कार्मुकान् सर्वान् वरुणः प्रहसन् बली ।।8.86.१०।।
चिच्छेद सायकैस्तीक्ष्णैस्तदद्भुतमिवाभवत् ।
अथ छिन्नधनुर्दैत्यस्तस्य चिक्षेप वै गदाम् ।।११।।
छिन्नां दृष्ट्वा च तां भूयो गदाः पश्चासृजद्१० बली ।
स एकस्यां तदा सक्त११स्ता गदा१२ नाभ्यवैक्षत१३ ॥१२॥
अविक्षता१४श्च ताः सर्वाः पेतुस्तस्य ततोपरि ।
काचिन्मुकुटमामर्द्य निपपात१५ महीतले ॥१३॥
काचिच्च कार्मुकं घोरं हस्तदेशान्१६ न्यपातयत्१७ ।। ७ ।।
काचिद् ध्वजं१८ दृढं दिव्यं चिक्षेप धरणीतले ॥१४॥
काचिद्रथं तदाहत्य पांसुग्रासं चकार१९ ह ।
उरस्यूरूदरे कटया२०मपरा२१स्तस्य२२ ता गदाः ॥१५॥
पतंत्यः२३ सुमहाघोरा आर्तिं चक्रु२४र्महाभयाः ।
एवं स तेन विरथः२५ कृतः कृच्छ्रेण धीमता ।।१६।।
वरुणस्तं समुत्सृज्य जगामान्यद्रणाजिरम् ।
यमोन्धकं समासाद्य तिष्ठतिष्ठेति चोदितः ॥॥।१७।।
अथ२६ तस्य ततो दण्डं रथं प्रति समुत्सृजत्२७ ।। ७ ।।
स रथं तस्य संचूर्णं कृत्वा शतसहस्रशः।।१८।।

७ क्षुद्रकानां - ख. ।। ८ विच्छेदैकैकशो (?) ।। ९... मिवोद्गतम् ? ।। १०पश्चाशतं (?) पञ्चशतं (?) सृजत्()। ११ शक्ता - घ. ॥ १२ स्वां सदा - ख. ।। १३ नकुलीक्षते - ख., न समीक्षते (न)समैक्षत (?)। १४अवे (क्षिता?)- ख. ।। १५ काञ्चि (काश्चि?)न्मुकुटमारुह्य निपद्यति (तन्ति?)- ख. ।। १६ विनिक्षिप्य(?) - ख. । १७ न्यपातयन् (?) - ख. ।। १८ भंक्त्वा ? ।। १९ ... ग्रासांश्चकार - ख. ।। २० उदरोरसि कटयां च - घ. । २१ समरे - ख. ॥ २२ तस्य - ख. ।। २३ पतत्यः - घ. ।। २४ चक्रे - ख. ।। २५ विधृते - ख. । । २६ अन्ध - ख. । २७ स यत्सृजत् - ख. ।


यमहस्तं पुनर्गत्वा तथैव समतिष्ठत ।
अन्धकोपि रथं त्यक्त्वा गदापाणिर्महाबलः ।।१९।।
यमं समभिदुद्राव क्रोधाद्वह्निमिवोत्सृजन्२८ । ।
स तस्य धावतो वेगात् पितृराजो यमः स्वयम् ।।8.86.२०।।
दण्डेनैव गदामुग्रां भस्मसायुज्यमानयत् ।
स प्रहस्य तदा चैनमुवाच प्रसभं यमः ।।२१।।
भवतो धाम यदभूत्तते विनिहतं मया ।
सांप्रतं त्वामपि पुनन्नेष्याम्यद्य२९ स्वमालयम् ।२२।।
अहं हि सर्वलोकस्य मरणे हेतुरीश्वरः ।
मया वैरं समासाद्य क्वान्ते३० जीवं विमोक्ष्यसे३१ ॥
अद्य त्वा निहनिष्यामि सुदृढं क्रियतां जगत् (?) ।।२३।।
अथवाद्य गतो३२ बन्धं३२ पूर्वं चान्धक मत्पुरम् ।
अग्रे द्रष्टासि तत्रैव सर्वानेतान् सुरद्विषः ।।२४।।
सनत्कुमार उवाच
अथैववादिनं युद्धं ह्यभीतोन्धकदानवः ।
उवाच तं यमं क्रुद्धं क्रोधाद् दीप्तानलेक्षणः ।।२५।।
हिरण्याक्षसुतो दृप्त अन्धकोस्मि सुरान्तकः ।
महायोगबलोपेतो नास्मि प्राकृतदानवः ।।२६।।
अंगाद्येन समुत्कृत्य भागान् मांसस्य कार्षिकान् ।
संवत्सरशतान्यष्टौ पञ्च चैव हुतोनलः ।।२७।।
तुष्टो ब्रह्मा ददौ यस्य सदैवामरतां शुभाम् ।
सोहं नाम्ना महासत्वो मृत्यूत्सेधो३५ न संशयः ।।२८।।
न त्वं मम कृतो मृत्युः सिंहस्येव वने शशः ।
अहं तु भविता मृत्युस्तव नास्त्यत्र संशयः ।।२९।।

२८ वह्निमिवोत्सृजत् (?) । २९ ...न्नयिष्याम्यद्य - ख. ।। ३० क्रान्ते - ख. ।। ३१ विमोक्षसे - ख. । ३२ गते - ख. ।। ३३ बन्द्यं (?) । ३४ अंगान्येव - ब. ।। ३५ मृत्युत्सव - ख., मृत्युस्तव (?) ।


अद्य त्वाहं दुरात्मानं३६ सर्वलोकभयंकरम् ।

हत्वा श्रेयो विधास्यामि ३७ त्रैलोक्यस्येति मे मतिः ॥8.86.३०।।
देवानाञ्च भवान्नित्यं हन्तव्यो विप्रिये स्थितः ।
तेषामपि प्रियो ह्यद्य भविष्यति हते त्वयि ।३१।।
न त्वयासादितं पूर्वं हरता जीवितानि हि ।
किञ्चिद् भूतं महद्भूतं तेन त्वं निर्भयः सदा ।।३२।।
देवास्तव भयाद् भीता अशक्तस्त्वद्वधे ततः ।
अमृतादीनि लिप्सन्ति पूजयन्ति सदा च ते ।।३३।।
अद्य त्वयि हते क्रूरे निर्द्वन्द्वास्तेपि सामरात् ।
अमृते न तथा३८ प्रीतिं करिष्यन्ति न संशयः ।।३४।।
अद्य गर्वश्च दर्पश्च योगमाहात्म्यमेव च ।
प्राणैः सहैव देहान्ते नाशयिष्यामि सर्वशः ।।३५।।
सनत्कुमार उवाच
स एवमसुरेन्द्रेण तर्जितो भास्करात्मजः ।
दण्डेनासुरशार्दूलमुत्तमांगेभ्यताडयत् ३९ ।। ३६ ।।
कालश्च तं करेणैव४० हृदये समताडयत् ।
मृत्युश्चाशनिना क्षिप्रं शिरस्येवाभ्यताडयत् ।।३७।।
कण्ठे च नियतिस्तस्य पाशं चिक्षेप दारुणम् ।
कृतान्तः परिघेनैव गण्डदेशे समाहनत् ॥३८॥
स तैरमोघैर्यामैश्च प्रहतोन्धकदानवः ।
पुष्पवृष्टया यथा कश्चिन्नार्तिमानभवत्तथा४१ ।।३९।।
न पाशास्तस्य लीयन्ते दण्डो वा परिघोपि वा ।
अन्यानि चास्य तीव्राणि न दुःखाय भवन्त्युत ॥8.86.४०॥
ततस्सर्वैस्तदोत्क्रुष्टं दानवैः सर्वतोदिशम् ।
अवाद्यन्त च तूर्याणि मुमुदे चान्धको भृशम् ।४१।।

३६ सुरात्मानं - ख. । ३७ ...भिधास्य1मि - ख ।। ३८ यथा - ख । ३९ ह्यसातयत् - ४० किंकरेणैब - ख. ॥ ४१ तदा - ख. ।


स तेषां तुष्टिशब्देन मदवीर्यसमीरितः ।।
विनद्याम्बुदवद् व्यास यममेवाभिदुद्रुवे ॥४२॥
स गत्वा तस्य वेगेन हन्यमानोपि किंकरैः ।
आाजघान महावेगो मुष्टिनोरसि तं यमम् ।।४३।।
पुनश्च४२ महिषं तस्य४३ शिरस्यभिहनत्पदा ।
तावुभौ विह्वलौ तत्र भ्रमित्वा किञ्चिदन्तरम् ।४४।।
हित्वान्धकं ततस्तूर्णं४४ ययतुर्मुनिसत्तम ।
जयन्तश्चेल्वलं प्राप्य विव्याध दशभिः शरैः ।।४५ ।।
तस्येल्वलश्चकर्ताशु ध्वजं रत्नविभूषितम् ।
हयानां चैव योक्त्राणि प्रतोदं चैव काञ्चनम् ।४६।।
विना योक्त्रैर्हयास्तस्य रथं त्यक्त्वा समुद्धताः ।
लाना४५ विजग्मुर्हेषन्तो जयन्तो विरथोभवत् ।।४७।।
स रथं संपरित्यज्य भूस्थः शक्रात्मजः प्रभुः ।
इल्वलस्य हयान्सूतं ध्वजञ्चैव न्यपातयत् ४६ । ।४८।।
अथोभौ४७ विरथौ भूत्वा ह्यन्योन्यविजयैषिणौ४८ ।।
अविध्येतां तदा यस्य४९ कार्मुके सायकैः शितैः ।४९।।
परस्परविनिर्मुक्तानुभौ५० संवार्य सायकान् ।
अस्त्रैरस्त्राणि संवार्य नेदतुः सागराविव ।।8.86.५०।।
अथ शक्रसुतः श्रीमाँल्लब्ध्वा तस्य तदान्तरम् ।
धनुश्चिच्छेद भल्लेन ननाद च पुनः पुनः ।।५१।।
स विकृत्तधनुर्दैत्यः खड्गं दीप्तानलप्रभम् ।
भ्रामयित्वा विचिक्षेप तमप्यस्याच्छिनत्तदा५१ ॥५२॥
गृहीत्वान्यस्य पतितां गदां हेमविभूषिताम् ।
भ्रामयित्वा तु चिक्षेप सापदुद्राव वेगवत् ॥५३॥

४२ पुण्ड्रश्च ख. । ४३ महिषस्तस्य - ख ।। ४४ भित्वान्धकस्ततस्तूर्णं - ख. ।। ४५ नाना - ख. । ४६ व्यपातयत् - ख. ।। ४७ अथ तौ - ख. ।। ४८ विजिगीषिणौ (?) ।। ४९ पश्य - ख. ।। ५० ...वुभौ - ख. । ५१ ततस्तस्याच्छिनत्तदा ख।

491
स यावत्तां गदां घोरां शरैः सन्नतपर्वभिः ।
विचिच्छेद दितेः पुत्रस्तावदस्याच्छिनद्धनुः ।।५४।।
अथ यावत्स निस्त्रिंशं जग्राहादितिनन्दनः ।
तावदेनं पदा दैत्यो वामेनोरस्यताडयत् ।।५५।।
तमेव तस्य५२ जग्राह पादं स५३ च महाबलः ।
जयन्तो भ्रामयच्चैनं नर्दमानो यथाम्बुदः ।।५६।।
ततो हाहाकृतमभूदसुराणां बले महत् ।
यात त्रायत दैत्येन्द्रमिल्वलं५४ शीघ्रमित्युत ।।५७।।
देवानां सिहनादाश्च शंखशब्दाश्च पुष्कलाः ।
तूर्याणि चाप्यवाद्यन्त साधुसाध्विति चाभवत् ॥५८॥
जयन्तोपि यथा चक्रं विधाता बलवाँस्तदा ।
भ्रामयामास देत्येन्द्रं युगान्ताम्बुदवन्नदन् ।।५९।।
अथ स्वयं हिरण्याक्षः सोन्धको बलिरेव च ।
बाणोथ विप्रचित्तिश्च शंबरोथ विरोचनः ।। 8.86.६० ।।
कालकेयाश्च ते दैत्याः पौलोमाः सिंहिकासुताः ।
निवातकवचाश्चैनं समन्तात् पर्यवारयन् ।।६१।।
स तैः शरैर्गदाभिश्च परिघैर्दीघवेधनैः५५ ।।
अन्यै५६श्च बहुभिश्चित्रैरायुधैः५ ७ प्रहतो भृशम् ।।६२।।
स हन्यमानस्तै देवो जयन्तः शक्रनन्दनः ।
हिरण्याक्षपथे५८ क्षिप्त्वा प्राद्रवद् येन देवताः५९ ॥६३॥
इति स्कन्दपुराणे युद्धे षडशीतितमोध्यायः

५२ तमेवाभ्येत्य - घ. ॥ ५३ तु (?) स - ख. ॥ ५४ ... मन्धकं - ख. ॥ ५५ ... भेदनैः - घ. । ५६ अस्त्रश्च - ख. ।। ५७ ...राहन - ख.,...राहव(?) ।। ५८ पदे(?), ...क्षोपरि - घ. ।। ५९ देवता यतः (?) ।

492
सनत्कुमार उवाच ।
मयश्चन्द्रमसं देवमार्दयत्१ क्रोधमूर्च्छितः ।
शरैराशीविषाकारैर्नर्दमानो यथाम्बुदः२ ।।१।।
तस्यास्यतस्ततो बाणान्३ चन्द्रमाः प्रहसन्निव ।
एकैकं सप्तधा कृत्वा मयं विव्याध पञ्चभिः ।।२।।
तत एनं पृषत्केन ललाटे समविध्यत ।
जहास च पुनर्देवस्तस्य लज्जां समादधत् ।।३।।
स तस्य हसतः शीघ्रं ललाटे कंकपत्रिणा ।
विव्याध भृशमायस्तो यथा विघ्नो यतव्रतम्४ ।।४।।
ततोस्य देव उद्दिश्य५ ध्वजं चिच्छेद नादयन्६ ।
चक्ररक्षाँश्च७ निस्त्रिंशै८रनयद् यमसादनम् ।।५।।
तस्य तच्चापलं वीक्ष्य९ मयो दानवसत्तमः ।
मायां दिव्यां१० समास्थाय राहुः समभवत्तदा ।।६।।
स राहुभूतो दैत्येन्द्रो देवेशं११ शशलक्षणम् ।
अभ्यद्रवद् यथा राहू रथेनाम्बुदनादिना ।।७।।
स तां मायां तदा ज्ञात्वा देवो ह्यमृतसंभवः१२ ।।
अपर्ववद्१३ वियत्स्थं वै१४ तं शरैस्त्रिभिरार्दयत्१५ ।।८।।
सोपि दैत्यो महामायस्ताञ्छरान्माययैव तु ।
वारयन्नभिदुद्राव१६ शीतरश्मिं महासुरः ।।९।।
ततोस्य स्यन्दनं दिव्यं नागयन्तृ१७ महाप्रभम् ।
गृहीत्वा कूबरे दैत्यश्चिक्षेप च ररास च ॥8.87.१०॥
अहिर्बुध्नः समासाद्य राहुश्चन्द्रमसो ग्रहम् ।
विशिखैः पंचभिर्विद्धा ध्वजमस्य न्यपातयत् ।।११।।

१ मर्दयत् - व. ।। २ नर्दमान इवावाग्वृदः - ख ।। ३ व णैः -ख. ।। ४ यथा व्रतम् - ख. ।। ५ ...मुद्दिश्यय - ख. । ६ दानवः - घ । ७ पादरक्षांश्च - घ । ८ निशितै - घं. । ९ अग्ररक्षान्पुनश्चिन्त्यान् – घ १० माया विद्यां – ख। । ११ - वेदेन ख., तं देवं - घ. ॥ १२ कृत्वा व्यतिष्ठदसुरेश्वरः - घ. । ।।१३ अपूर्ववद् - ख.,. अपूरयद् - घ. । १४ द्वितीयरथं - ख. ।। १५

स्तिमिरापहं - घ., राशयत् - ख । १६ वारयानोभिदुद्राव- ख. ।। १७ नाभयच्च घ ।

493
तस्योत्पत्य रथाद्राहुर्गदया भीमरूपया ।
धनुर्ध्वजं हयाँश्चैव समचूर्णयदव्ययः ।।१२।।
अशनिं शतघंटां स दीप्तां मृत्योरिव स्नुषाम्
जग्राह भृशमायस्तः१८ पाशं मृत्योरिवान्तकः१९ ।।१३।।
भ्रामयित्वा स तामुग्रां यमदण्डनिभां बलात् ।
चिक्षेप राहुमुद्दिश्य विद्युतं मेघराडिव ॥१४॥
सा ज्वलन्ती महोल्केव मेघाशनिरिवोज्ज्वला ।
पपात राहोः शिरसि यथा वज्रं शिलोच्चये ।।१५।।
अथ तेन प्रहारेण नार्त्तिमानभवत् स वै ।
स प्रहस्य भृशं राहुर्वेगं चक्रे महाबलः ।।१६।।
अहिर्बुध्नं प्रति क्रुद्धो नागानामिव पक्षिराट् ।
आपतन्तं स वीक्ष्यैव भगवान्देवसत्तमः ।।१७।।
जगाम तस्य पन्थानं मुक्त्वान्येन यथोरगः ।
शतकेतुश्च तं वीरो रथेनाम्बुदनादिना ।।१८।।
अभ्यद्रवद्रणे क्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ।
आाधावतोस्य कापाली हृदयं कंकपत्रिभिः ।।१९।।
बिभेद कुलिशः क्षिप्तो गिरिश्रृंगमिवोच्छ्रितम् ।
स भिन्नहृदयस्तेन रुद्रेण ग्रहसत्तमः ।।8.87.२०।।
पपात स्वरथे मूढः शक्रध्वज इवोच्छ्रितः ।
ततो हाहाकृतं दैत्यैर्गृहणगृहणेति चाप्युत ॥२१॥
साधु साध्विति देवाश्च विनेदुर्जलदा इव ।
अथान्धको हिरण्याक्षो विप्रचित्तिर्विरोचनः ।।२२।।
शम्बरश्चेल्वलश्चैव बाणो बलिरथापि च ।
कालकेयास्सपौलोमा निवातकवचाश्च ये ।२३।

१८ भृशमायस्थः - ख. ! १९ मृत्युरिवान्तकः - ख. ।

494
अन्ये च बहवो दैत्यास्तं२० रुद्रं पर्यवारयन् ।
ते शरैश्च गदाभिश्च मुशलैः प्राशतोमरैः२१ ।२४।।
न्यवारयन्त तं देवं तर्जयन्तः२२ पुनः पुनः ।
स हन्यमानस्तैर्देवो बहुभिर्मुनिसत्तम ।
अपासर्तत वेगेन समीपात् सुरविद्‌विषाम् ।२५।।
अजैकपात् कालनेमिं गदिनं गदयासहम्२३ ।
समाह्वयत दैत्येन्द्रं२४ मधुं विष्णुरिवोर्जितम् ।२६।।
तौ सुयुद्धौ२५ गदाहस्तौ२६ मंडलानि महाबलौ ।
अन्योन्यविजये सक्तौ ग्रहाविव विचेरतुः ।।२७।।
कालनेमिस्तु संक्रुद्धो गदां हेमपरिष्कृताम् ।
शतघंटाट्टहासां च मृत्योर्जिह्वामिवाद्भुताम्२७ ॥२८॥
भ्रामयित्वासकृद् दैत्यो नर्दमानो यथा वृषः ।
मुमोच रुद्रमुद्दिश्य स्कन्दः शक्तिमिवाचले ।२९।।
शक्रमुक्तामिवायान्तीमशनिं २८ पर्वतोपरि ।
विद्युतं वा महाशक्तां (?) स रुद्रो भीमविक्रमः ।।8.87.३०।।
वञ्चयामास वेगेन श्वेतो मृत्युमिवागताम् ।
तिष्ठतिष्ठेति चाप्युक्त्वा रुद्रः प्रहरतां वरः ।।३१।।
भ्रामयित्वा गदां घोरां दैत्यस्योपर्यपातयत् ।
स तया गदया दैत्यो दीप्तया भीमरूपया ।३२॥
हतो मूर्ध्नि दिशः सर्वा हारिद्राः समपश्यत ।
अथ दैत्यस्तदा सम्यग् भ्रामयन् स२९ गदां पुनः ।।३३।।
मण्डलानि विचित्राणि दर्शयित्वा महाबलः ।
अजैकपादं गदया स्कन्धदेशे व्यताडयत् ॥३४॥
स चाप्यवहतस्तेन यथा वज्रेण भूधरः ।

विवेश भूमिं३० दुःखार्त्तस्तदद्भुतमिवाभवत् ।।३५।।

२० रुद्रास्तं - ख. । २१ पाशतोमरैः - ख , प्राग . . ( ? ) ।। २२ तर्जयन्तं - घ. ।। २३ गदयासहां - ख., महान् - घ. ।। २४ दैत्येन्द्रो - ख. ।। २५ तौ च क्रुद्धौ - ख. ।। २६ शस्ता... - ख. ।। ... २७ मिवोद्गताम् - घ. । २८ शक्रमुक्तमिवायान्तमशनिं - ख. ॥ २९ भ्रामयानो - ख । ३० भूमौ (?) ।

495
उत्थाय च स वेगेन रुद्रः क्रुद्धो महाबलः ।
अवसव्यं चरन् दैत्यसव्यतो मण्डलेचरः ।३६।।
भ्रामयित्वा गदां भूयो दैत्यस्योपर्यपातयत् ।
स दैत्यस्तेन घातेन भ्रमित्वा त्रिर्महाबलः३१॥३७॥
संस्तभ्य गदया भूयो रुद्रं कुक्षावताडयत् ३२।। ९ ।।
स तया गदया नुन्नो यथा वाय्वीरितो नगः ॥३८॥
पपात भूमौ वेगेन शतश्रृंगो३३ यथा पुरा ।
पतितं तु ततो३४भ्येत्य पदे जग्राह३५ सुव्रतम्३६ ॥३९॥
भ्रामयित्वा च चिक्षेप स चामृत्युरवस्थितः (?)
कार्तस्वनं ज्वरश्चोग्रो रुद्रः प्रहरतां वरः ।।8.87.४०।।
जघान निशितैर्भल्लैर्दशभिः स्तनयोः समम्३७ ।। ७ ।।
कार्तस्वनश्च३८ बाणेन कार्मुकं तस्य दीप्तिमत् ।
चिच्छेद बहुधा चैनं पुनर्विव्याध पत्रिभिः३९ ।।४१।।
. . . . .. . . रुद्रोपि दण्डं सर्वार्थसाधकम् ।
भ्रामयित्वाशु४० चिक्षेप कार्तस्वनरथं प्रति ।॥४२॥
तं युगान्तानलप्रख्यं शतसूर्यानलप्रभम् ।
जघान४१ शरजालेन मेघो वृष्टया यथाचलम् ॥४३॥
हन्यमानश्च तैर्दण्डो हविषेद्ध इवानलः ।
भूयस्तरं प्रजज्वाल वेगवच्चाप्यधावत ।।४४।।
तमप्रतिहतं दण्डं ज्ञात्वा कार्तस्वनस्स तु४२ ॥
रथमुत्सृज्य वेगेन आाकाशस्थोभवद्बली ।४५।।
दण्डश्च रथमभ्येत्य सहयं सह यन्तृणा ।
सध्वजं सपताकश्च भस्म कृत्वा ययौ पुनः ।॥४६॥

३१ भ्रामयित्वा महाबलः - घ. ॥ ३२ अजैकपाद गदया स्कन्धदेशे व्यताडयत् - घ. ।। ३३ शतशृंगं - घ. । ३४ च तदा - घ. ।। ३५ पादैर्जग्राह - 'ा . ग्ादौ {? ) ।। ३६ सोव्रजत् - ख. ।। ३७ दशभिश्च स्तनान्तरे - घ. । ३८ कार्तस्वनस्य - ख. ।। ३९ स त्रिभिः - ख. ।। ४० भ्रामयित्वास्य - ख. ।। ४१ जग्राह् (स) - ख. । ४२ कार्तस्वरस्य तु - घ. ।

496
यावद् दण्डो न पतति४३ रथेनैति४४ च तं प्रति ।
तावत् कार्त्तस्वनो रुद्रं शरैरभ्यद्रवद्४५ बली ।४७।।
छित्त्वा ध्वजं धनुश्चास्य तथा योक्त्राणि वाजिनाम् ।
विरथं तं ज्वरं४६ कृत्वा४७ असिना मूर्ध्न्यताडयत्४८ ।।४८।।
असिघातपरीतात्मा स रुद्रः शत्रुसंसदम् ।
त्यक्त्वान्यतो ययौ तूर्णं पदातिर्मुनिसत्तम ।४९।।
सोसिघातविपरीतचेतनो रक्तचन्दनविलेपनप्रभ:४९ ॥
तं विहाय रिपुमग्र्यविक्रमं५० दुद्रुवे सुरबलं यतस्ततः ।।8.87.५०।।
इति स्कन्दपुराणे युद्धे सप्ताशीतितमोध्यायः

सनत्कुमार उवाच
अर्यमा बहुभिर्बाणैः प्रह्लादं दैत्यपुंगवम् ।
आजघान रथं घोरं ध्वजश्चास्य व्यशातयत् ।।१।।
प्रह्लादोप्यर्यमन्तं१ वै रथं त्यक्त्वैव वीर्यवान् ।
प्रदुद्राव यथा राहुः समये तिमिरापहम् ॥२॥
आाधावन्तं च वेगेन विहस्तं रिपुमर्यमा ।
जघान२ बहुभिर्बाणैर्वृष्ट्या मेघो यथाचलम् ।।३।।
शरानगणयन्नेव हिरण्यकशिपोः सुतः ।
क्रोधान्मानाच्च दर्पाच्च वेगेन समधावत ॥५४॥

गृहीत्वा कूबरे तस्य रथं हेमपरिष्कृतम् ।
चित्रेप सह सूतेन ततो हर्षान्निनादं च ।।५।।
अनुह्रादो धरं प्राप्य तेन विद्धः स्तनान्तरे ।
असिं निष्कृष्य वेगेन धरस्य रथमासदत् ।।६।।
ध्वजं तस्य हयाँश्चैव सारथिं धनुरेव च ।
छित्त्वा स्कन्धे धरं चैव पुनः स्वरथमभ्यगात्३ ।।७।।

४३ निपतति - ख. ।। ४४ नेति - ख. । ४५ शनैरभ्यद्रवद् - ख. | ४६ तदा (?) | ४७ दृष्ट्वा - घ. । ४= मूर्ध्नि ताडयत् - ख. ।। ४९ प्रभु: - ख. ।। ५० रिपुमुग्रविक्रमं - घ. । १ ...र्प्यमाणं - घ. ।। २ ववर्ष - घ. ।। ३ स रथमन्वयात् - घ. ।

497
कर्मणा तेन दैत्यस्य धरोभूद् भृशमर्दित:४ ।
एवमन्यैश्च दैत्येन्द्रैरन्ये देवा महाबलाः ।।८।।
निर्जितास्तर्जिताश्चैव युद्धाय च पुनः स्थिताः ।
ततः संकुलमेवाभूद्देवानां दानवैस्सह ।।९।।
परस्परजिगीषूणां५ युद्धं भीरुभयावहम् ।
ततो भेर्यश्च शंखाश्च पटहासेक्यपुष्कलाः ।।8.88.१०।।
झर्झर्यः पेपुकाश्चैव डिण्डिमा गोविषाणकाः ।
अवाद्यन्त बले६ व्यास उभयेषां सहस्रशः ।।११।।
ततोसृगोघप्रवहा७ पताकध्वजपादपा ।
गजाश्वग्राहबहुला रथप्रवरकच्छपा ॥१२॥
केशशैवालबहुला धनुर्ज्याकृततन्तुका ।
निष्टनच्छस्त्रमण्डूका८ दुकूलच्छत्रफेनिला९ ॥१३॥
उष्णीषवरहंसा१० च करपादशिरोपला११ ॥
हारकेयूरसिकता मुकुटोत्फुल्लपंकजा ॥१४॥
मेदोस्रकफपंका१२ च प्राणजीवितनाशनी ।
प्रावर्तत नदी१३ घोरा हस्त्यश्वरथवाहिनी ।।१५।।
तस्यां स्नायन्ति रक्षांसि पिबन्ति१४ च रमन्ति च ।
नृत्यन्ति१५ चापि विविधा भीरूणां भयदास्तथा१६ ॥१६॥
गृध्रा गोमायवश्चैव श्वानो मार्जारवायसाः१७ ।।
चक्षूंषि करपादान्त्रं भक्षयन्तीभिरेमिरे ।।१७।।
ममायं हस्तिनः पादो ममायं मेदपट्टकः१८ ।
ममायं च करः शुक्रो बाहुश्च१९ रुधिरस्यदः ।।१८।।
ममायं तव नायं च गृहणे पश्येति चैव हि ।
कलहं चक्रिरे तत्र क्रूराः पिशितभोजनाः ।।१९।।

४ ध्रुवो भयसमीरितः - घ., भग्नसमीरितः - घ. ॥ ५ जिघांसूनां (?) । ६ रणे -घ. ।। ७... प्रभवा - ख. । ८ निष्टन्तोग्रास्त्रमण्डूका - ख. ।। ९ .. फेनिता - ख. ।। १० .. कलहंसा - घ. ।। ११ । शिरोरुहा - ख. । १२...मनुष्यपंका - ख. ।। १३ महा - ख. ।। १४ पिशाचा (?) । १५ नृत्यन्ते - ख. ।। १६ स्तदा - घ. ॥ १७ झर्झरवायसाः - ख. ।। १८ ममायमेव इत्युत - ख. ।। १९ हृदश्च - घ. ।

498
त्यक्त्वान्ये च हताँस्तत्र स्वदेहान् सुमहारथाः ।
विमानैः स्त्रीजनाकीर्णैः प्रययुब्रह्मणः सदः२० ।।8.88.२०।।
अपरे पापकर्माणो हन्यमाना रुषान्धितैः ।
पतन्ति नरके घोरे क्रन्दमाना मुहुर्मुहुः ।।२१।।
केचिदार्त्तास्वरं कृत्वा - - - - - षार्दिताः२१ ॥
म्रियन्ते पुरुषा युद्धे शतशोथ सहस्रशः ।।२२।।
दशन्तश्च तृणान्यन्ये भ्रातः पुत्रेति चापरे ।
क्रन्दमाना जना२२ भीताः प्राणान् कृच्छ्रेण तत्यजुः ॥२३।।
संदष्टौष्ठपुटाः केचिद् देवासुरमहारथाः ।
शरसन्नतमर्माणः पतन्त्युर्व्यां द्रुमा इव ।।२४।।
अशिवानि शिवा नेदुरट्टहासाँश्व राक्षसाः ।
आार्त्तनादाँश्च पुरुषास्तथैव गजवाजिनः ।२५।।
सिंहनादाश्च शूराणां बाहूशब्दाश्च पुष्कलाः ।

धनुषां कृष्यमाणानां शब्दा वाद्यरवास्तथा२३ ॥२६॥
अथेन्द्रश्च धनेशश्च यमः कालश्च वीर्यवान् ।
वरुणो मरुतश्चैव विश्वेदेवाश्च सर्वशः ॥२७॥
मित्रश्चैव जयन्तश्च भगः पूषार्यमा तथा ।
कापाली चापि यो रुद्रो वसवश्व महाबलाः ॥२८॥
नासत्यश्चैव दस्रश्च पृश्नयश्च सुरोत्तमाः ।
एते चान्ये च देवानां प्रवरा बाहुशालिनः ।२९।।
दानवानां बले वेगं बलवन्तो२४ भिचक्रिरे ।
सागरा इव गर्जन्तो युगान्ते अनला इव ।।8.88.३०।।
प्रभञ्जना इवाकाले महान्त इव चाचलाः ।
वृषभा इव नर्दन्तो बृहन्त इव कुञ्जराः ।।३१।।

२० पदम् - घ. ।। २१ जातमानस्य ऊर्जिता: - घ. ।। २२ नरा - ख. ।। २३ स्तदा .. - ख. ।। २४ वेगान्, वेगवन्तो - ख. ।

499
ग्रसन्तश्च यथा ग्राहाश्छिन्दन्तो मकरा इव ।
वर्षमाणा इव घनाः सिंहा इव च नर्दिन:२५ ।।
दानवानां बलं सर्वे वेगेनैवाभ्यवारयन् ।।३२।।
तद्देववेगप्रहताभिवेगं२६ बलं सयत्नं२७ दनुदानवानाम् ।
भवत्यनाधारमतिप्रसक्तं२८ तृणं यथा वह्निमुखावसक्तम् ।३३ ।।
इति स्कन्दपुराणे युद्धेष्टाशीतितमोध्यायः
सनत्कुमार उवाच
तेषां तद्वेगनुन्नानां१ भग्नानां क्लिश्यतां पुन:२ ॥
त्राणार्थमतिदीप्ताक्षो३ हिरण्याक्षोग्रहीत्पदम्४ ।।१।।
अन्धकश्च महामायो भ्रातरश्चास्य५ तत्समाः ।
शतं रथसहस्राणां सर्वेषामपलायिनाम् ।।२।।
प्रह्लादश्च सहभ्राता हिरण्यकशिपोः सुतः ।
विप्रचितिः सहभ्राता सैंहिकेयैश्च तैस्सह ॥३॥
गृह्ण गृह्णेति नर्दन्तो देवान् प्रत्युद्ययुस्तदा ।
तेषां तेषां च संग्रामः सुघोरः समपद्यत ।।४।।
ग्राहाणामिव६ काण्डे७ च गजानामिव वा वने८ ।
इन्द्रस्त्वष्टा च पूषा च हिरण्याक्षमवारयन् ।।५।।
संगत्य सायकैस्तीक्ष्णैः सर्वमर्मस्वताडयन् ।
तेषां धनूंषि चित्राणि अस्यतां तु दिवौकसाम् ।।६।।
मायाबलेन दैत्येन्द्रो व्यष्टम्भयत दीप्तिमान् ।
तानि विष्टम्भितानि स्म तदा दैत्येन मायया ।७।।
नानमन्ति यथा पूर्वं ततस्ते ह्याकुलाभवन् ।
सोपि दैत्यो महामायो नदित्वा मेघनिस्वनम् ।।८।।

२५ च नादिन: - ख. ।। २६ ...तिवेगं (?) ।। २७ सयत्ता - ख. ।। २८ ...त्यनाचारमतिसंसक्त - घ. । १ तद्वशगानां तु - घ. ।। २ प्रभग्नाननुशिष्यतां - ख. ।। ३ ...मिह सांप्राप्तो - घ. ।। ४ ...भ्ययात्सुतम. - घ. । ५ ...श्चैव (?) । ६ ग्रहाणामिव - ख. ॥ ७ काले (?) । ८ चांजने (चाजने?) - ख. ॥

500
बबन्ध तेषां गात्राणि समन्तादस्त्रमायया ।
तान् बद्धाँश्च समीक्ष्यैवमकर्मण्यान्महाबलान्९ ।।९।।
यन्तारो वाहनैः क्षिप्रं जह्रु१०स्तस्माद्रणाजिरात् ।
अथ कालो यमश्चैव धनेशो मित्र एव च ।।8.89.१०।।
वरुणो वसव:११ सर्वे अश्विनौ च महाबलौ ।
प्रगृहीतायुधाः क्रुद्धा१२ स्तिष्ठतिष्ठेतिवादिनः ।।११।।
अभ्यद्रवन्त वेगेन हिरण्याक्षं महासुरम्१३ ।
तेषामापततां संख्ये स दैत्यः क्रोधमूर्छितः ।।१२।।
सर्वेषां सायकैस्तीक्ष्णैर्बिभेद कवचान् युधि ।
ते भिन्नकवचाः सर्वे क्रोधात् प्रज्वलिताननाः ।।१३।।
ससर्जु१४रस्त्रमुख्यानि तदाप्रतिहतान्युत१५ ।।

यमो दण्डं ससर्जास्य तथा कालश्च१६ - - -१७ ॥१४॥
धनेशश्चाशनिं घोरं वरुणः पाशमेव च ।
भगश्च मुशलं घोरमन्ये चान्याँस्तथामराः१८ ॥१५॥
तान् स दैत्यो हसन्नेव सायकैर्मर्मभेदिभिः ।
व्यष्टम्भयददीनात्मा१९ शक्रहस्तं यथा भवः ॥१६॥
साधुवादाँस्ततो हृष्टा दानवानां महारथाः ।
सम चक्रुश्च संपूज्य हिरण्याक्षं महासुरम्२० ॥१७॥
अपरे२१ नैतदाश्चर्यं दितिपुत्रस्य संयुगे ।
कश्यपेन२२ प्रसूतस्य राज्ञोस्माकं च स्वामिनः (?) ॥१८॥
अपरे सिंहनादाँश्व बाहुशब्दाँश्च पुष्कलान् ।
चक्रुर्हृष्टाश्च वाद्यानि तथा सर्वाण्यवादयन् ॥१९॥
एवं हि संप्रहृष्टानां दानवानां महाहवे ।
पाराशर्य गिरो बह्व्यः श्रूयन्ते स्तुति -- - ॥ 8.89.२० ॥

९ महाबलाः - ख । १० ... ह्व - ख , जह्व (?) । ११ वासवः - ख. । १२ सर्वे - घ. । १३ महाबलं - घ ॥ १४ ससर्ज - ख., ससृजु - घ. ॥ १५ युधाः - घ. ॥ १६...स्य - ख. ॥ १७ कालस्य चिंतवस्तथा - घ. ॥ १८ शरान् - ख. ॥ १९ ..दमेयात्मा - घ. ॥ २० हिरण्याक्षाय सर्वतः - घ ॥ २१ स परे - ख । २२ काश्यपेन - ख. ॥ २३ ते - ख. ।

तेषां प्रहर्षं ज्ञात्वेत्थं देवभंगं च तं तदा ।
सर्वप्राणिचरो वायुरसुरानभिदुद्रुवे ॥२१॥
सहस्रनल्वमात्रेण स रथेन प्रभंजनः ।
समन्ताद् ध्वजयुक्तेन पताकाशतमालिना२४ ।२२॥
जवेन यन्तृणां२५ यत्नान्निगृहीतेन शब्दवान् ।
प्रपूरयन् दिशः सर्वाः सहसा प्रत्यदृश्यत ॥२३॥
स पञ्चभिः शरैस्तीक्ष्णैर्दैत्यराजमथाव्यथः२६ ॥
आहृत्य योजने तस्माद्देशात् क्षिप्रमवासृजत् ॥२४॥
अन्धकश्च ततः षष्ट्या विप्रचित्तिश्च सप्तभिः२७ ॥
मयं पञ्चाशता विद्ध्वा सप्तभिः सप्तभिः पुनः ॥२५॥
दैत्याश्च दानवश्चैव सर्वान् विव्याध तत्क्षणात् ।
पुनः पुलोमपुत्राँश्च निवातकवचानपि ॥२६॥
ते तेन बहुभिर्विद्धाः शरैरसुरपुंगवाः ।
दिक्षु सर्वासु विक्षिप्ता योजनान्तरिताः स्थिताः ॥२७॥
यान्याँश्च ते विमुञ्चन्ति गदामुशलपट्टिशान् ।
तान्सर्वान् भगवान् वायुर्दानवोपर्यपातयत् ॥२८॥
ते हता हन्यमानाश्च स्वमुक्तै२८रायुधैर्भृशम् ।
आार्त्तनादान् प्रकुर्वाणाः प्राद्रवन्त दिशो दिशः२९ ॥२९॥
सोपि वायुर्महावेगो बभंज रथसत्तमान् ।
पांशुवर्षेण च पुनश्चक्षूंष्येषामपूरयत् ॥8.89.३०॥
ततस्ते३० भयसन्त्रस्ता नोत्ससर्जुस्तदा शरान् ।
शस्त्राणि च तथान्यानि युंजशश्चावतस्थिरे ।॥३१॥
तस्य तत्कर्म संवीक्ष्य हिरण्याक्षः प्रतापवान् ।
उवाच दानवान् सर्वान् गर्हयन्३१ दितिनन्दनः ॥३२॥
धिग्वो दैत्या बलं सर्वं३२ धिग्दर्पा धिक्पराक्रमाः ।
विसृज्य रणमव्यग्रा३३ यात स्त्रीकर्म सेवत३४ ॥३३॥

२४ पताकशतमालिना - ख. ॥ २५ यन्त्रिणा - ख. ॥ २६... राजमयाव्ययम - घ., ...राजानमव्यथः - ख. । २७ सप्ततिः - ख. ॥ २८ सुमुखै - घ ॥ २९ दश (? ) ॥ ३० तथास्य - ख. ॥ ३१ हृर्षयत् - घ. । ३२ सर्वे - ख. ॥ ३३ बलमव्यग्रा - घ. ॥ ३४ सेविनः - घ. ।

502
ये यूयं रणमध्यस्था जीविते सति बालिशाः ।
एकेन वायुना भग्ना धिग्वस्तन्मन्त्रितं३५ पुरा ॥३४॥
अथवा यन्मया प्रोक्तं यूयं बाला रति३६क्लमाः३७ ॥ ७ ॥
तत्तथा नास्ति सन्देहो बालैरिव हि वः कृतम्३८ । ।३५॥
तिष्ठध्वं बालवत् सर्वे रक्षन्तो जीवितं स्वकम् ।

अहमेको विजेष्यामि वायुमेनं प्रपश्यत ।।३६।।
ततः स पर्वतो भूत्वा दितिपुत्रः प्रतापवान् ।
समन्ताद् वायुवेगं तं३९ समवारयदव्ययः४० ।।३७।।
-- - त्वानिलं ज्ञात्वा पर्वतेन निवारितम् ।
अन्धको बाहुपाशेन अवप्लुत्याबबन्ध तम्४१ ॥३८॥
स४२ बद्धो बाहुपाशेन तदा वायुः४३ प्रतापवान् ।
संप्रगृह्यान्धकं शीघ्रमुत्पपात विहायमा ॥३९॥
तस्योत्पतितमात्रस्य प्रगृह्यान्धकदानवम् ।
राहुर्गदां महारौद्रां क्षिप्रं मूर्ध्नि न्यपातयत्४४ ।
अभ्येत्य पादयोश्चैव विप्रचितिर्महाबलः ॥8.89.४०॥
जग्राह सुमहाग्राहो मत्स्यानिव४५ महार्णवे ।
स तेन सुप्रहारेण विह्वलः प्राणिगोचरः ।।४१।।
स्कन्धे केशाभिसंयुक्तो भ्रामितो विप्रचित्तिना ।
स भ्राम्यमाणो विबभौ स्रस्तहारस्रगम्बरः ।४२।।
अलातमिव सन्दीप्तं निशायां मुनिसत्तम ।
भ्राम्यमाणं समालक्ष्य पुनर्देवाः सवासवाः ।४३।।
वेगश्चक्रुर्महावेगा गृह्णगृह्णेति वादिनः ।
विप्रचित्तिस्तु तान् दैत्यः संरब्धानुद्यतायुधान् ।४४।।
आलक्ष्य सुबहून् संख्ये गर्जमानः४६ पयोदवत् ।
अभीक्ष्णं भीमसंह्लादं वायुं दानवयूथपः ।४५।।

३५ धिगस्तु मन्त्रितं - घ. ।। ३६ इति - घ. ।। ३७ क्रमाः - ख., क्रमात् - घ. ।। ३८ बहिःकृतम् - घ , वर्तितं ? ।। ३९ वेगेन - ख. ।। ४० ...दव्यथः (?) ।। ४१ ... तः - ख. ।। ४२ सं - ख. । ४३ जातदाय (?) - ख. ।। ४४ मूर्ध्न्यवपातयत् - घ. ।। ४५ मत्सानिव - ख. ।। ४६ गर्जमानाः (नं) - ख. ।

503

चिक्षेप शक्रमुद्दिश्य गिरौ वज्रं यथैव सः ।
स चापि तेन विक्षिप्तो लब्धसंज्ञो महाबलः ।४६॥
विधाय वेगं देवेन्द्रमुपतस्थे कृताञ्जलिः ।
ततो वायुश्च देवाश्च सर्व एव सहानुगाः४७ ।॥४७॥
अभ्यद्रवन्त दैत्येन्द्रान् प्रगृहीतवरायुधाः ।
तेषां तेषाञ्च संग्रामः सुघोरः समपद्यत ।।४८।।
सिंहानामिव दृप्तानां४८ विजने४९ शरभैः सह ।
तत्र केचिद्विनिहताः सुप्रहारेण मूर्च्छिताः ।४९।।
साधुसाध्विति भाषन्तः प्राणानूर्ध्वं वितत्यजुः५० ।
अपरे दनुदेत्येन्द्रा मुदा युक्ता५१ महाबलाः ।।8.89.५०।।
परेणाभ्याहतं शूरं समरक्षन्५२ सुपुत्रवत्५३ । ।
केचिद्धत्वापि सुबहून् देवदानवसत्तमाः ।।५१।।
अविक्षताः शितैः शस्त्रैरात्मानं गर्हयन्त्युत ।
अशस्त्रं केचिदभ्येत्य देवदैत्या महाबलाः ॥५२॥
धर्मयुद्धमभीप्सन्तस्त्यक्त्वा शस्त्राण्ययोधयन् ।
बह्वस्तत्र दैत्येन्द्रा युयुधुर्भीमविक्रमाः ।।५३।।
देवाश्च५४ नाहता ये वै नाभिघ्नन्ति कदाचन ।
पदातयस्तत्र सर्वे योधयन्ति पदातिभिः५५ ॥५४॥
सादिनः सादिभिः सार्धं रथिनो रथिभिः सह ।
गजिनो गजिभिश्चेव तथा युद्धमवर्तत ॥५५॥
एवं तेषां हि संग्रामो देवानां दानवैस्सह ।
आवर्तत शतान्यष्टौ वर्षाणि सुमहाभयः५६ ॥५६॥
अथ दैत्यो महामायो गजेनाम्बुदवर्च्चसा ।
तोमरं सुमहद् बिभ्रद्युगान्तानलवर्च्चसम् ॥५७॥
कोकिलाञ्जनमेघाभो विद्रुतो यो विरोचनः ।
सोभ्यद्रवत्तदा देवानातिसव्यानिवोत्थितान् (?) ।॥५८॥

४७ वा - ख. ।। ४८ तृप्तानां - घ. ।। ४९ विजथे - घ. ।। ५० प्राणान्मूर्धनि तत्यजुः (? ) ।। ५१ यदा मुक्ता - ख., मदयुक्ता - घ. ।। ५२ संरक्षन्त - ख ।। ५३ स्वपुत्रवत. - घ. ।। ५४ देवाँश्च ? ।। ५५ पदातिनः - घ. । ५६ तु महाभयः - ख. । -

504
स गजेन प्रभिन्नेन मुखाडम्बरघोषिणा ।
अभिदुद्राव देवेन्द्रं तिष्ठतिष्ठेति चाब्रवीत् ॥५९॥
तस्यापतत एवाथ भगवान् पाकशासनः ।
जत्रुदेशे शरं घोरं निचखान ररास च ॥8.89.६०॥
अनुभूय प्रहारं तं स दैत्यो भीमविक्रमः ।
तस्यास्य तोमरेणाथ बिभेद करमुन्नतम्५७ ।।६१।।
अथास्य तोमरोद्भिन्नाद्धस्ताद्धस्ताद्धेमविभूषितम्५८।। ६२।।
पपात तद्धनुर्दिव्यं महाशनिसमप्रभम्५९ ।।६२।।
ततोस्य भूयो दैत्येन्द्रो व्याकुलस्य तदा गजम् ।
तोमरेण बिभेदाशु कुम्भदेशे महाबलः ।।६३।।
स भिन्नस्तेन दैत्येन वने मत्त इव द्विपः ।
अनंकुशः शनैर्घृ - स्वं बलं ह्यनिवारितः (?) ।।६४।।
. .. .. . .. .. . . . . .. ।
ते तथा वध्यमानास्तु आदित्या दैत्यदानवैः ।
भयार्दिता दिशः सर्वाः६० पलायन्ते स्म६१ सर्वशः ।।६५।।
ततः शंखाश्च भेर्यश्व वाद्यानि विविधान्यपि ।
. .. .. . .. .. . . . . .. ।
सिहनादाँश्च संचक्रु६२ दैत्यदानवसंमताः (?) ।।६६।।
तच्छिन्नभिन्नप्रविदारितान्तरं६३ गजेन दैत्यैश्च पुनर्विलोडितम्६४ ।
बलं महद्दैवतपालितं बभौ यथार्णवो मन्दरमन्थविक्षतः ।॥६७॥
इति स्कन्दपुराणे युद्धे एकोननवतितमोध्यायः

५७ ...मुद्धतं - ख , ...मुद्धतं - घ , ... मुद्यतं (?) ।। ५८ विभूषितात् - (?) ।। ५९ यथाशनिसमुल्बणं - घ. । ६० सर्वे - ख. ॥ ६१ विपलायन्ति - ख. ॥ ६२ संक्रुद्धै - ख. ॥ ६३ प्रविदारणातुर - ख. । ६४ पुनर्विलोलितं - ख. ।

505
सनत्कुमार उवाच
तद्देवसैन्यं संदृश्य दैत्यदानवयूथपैः१ ।
वध्यमानं भृशं व्यास व्याधैरिव मृगान् वने ।।१।।
तिमिरारिर्महातेजाः सोमः प्रहरतां वरः ।
तिग्मवर्ष्मा सुशीतार्च्चिः स्वयं पवनसारथिः ।।२।।
तौ बद्धकवचौ सम्यक् शरासनधरावुभौ ।
बद्धगोधांगुलित्रौ च तथा बद्धेषुधी च तौ ।३॥
सखड्गौ च सघण्टौ च२ सपताकौ गजाविव ।
उभौ वीरौ महावीयौ योद्धुं दैत्यान् व्यवस्थितौ ।।४।।
सोमस्तु दशभिस्तीक्ष्णैः सायकैर्मर्मभेदिभिः ।
विव्याध हृदये दैत्यं हिरण्याक्षं महासुरम् ।।५।।
स भिन्नहृदयो दैत्यः सोमेन दृढमुद्धतः ।
मोहं समाविशद् व्यास क्रौञ्चः शक्त्येव पर्वतः ।।६।।
तं तथाभिसमीक्ष्यैव रथं यन्ता४ सहासुरम्५ ।
अपोवाह महामायं धनेशं निधयो यथा ।।७।।
ततो हाहाकृतं दैत्यैर्दैवतैः साधुसाध्विति ।
गृहणगृहणेति दैत्यैश्च मा गृहणेति च दैवतैः ।।८।।
ततो भेर्यश्च शंखाश्च पणवा गोविषाणकाः ।
अवाद्यन्त सुराणां वै हर्षरागप्रवर्तनाः६ ।।९।।
अथान्धकश्च७ तारश्च तारको नमुचिस्तथा ।
विप्रचित्तिः शंबरश्च महामायश्च दानवः ।।8.90.१०।।
धुन्धुः कार्तस्वनश्चैव राहुश्चैव महाबलः ।
शतकेतुः शतावर्तः पुलोमा विल्वलस्तथा ।।११।।
वातापी कालनेमिश्च शतावर्तः८ (?) शतोदरः ।
महापाश्वोंदरश्चैव९ मुसुण्डः१० सुण्ढ११ एव च ॥१२॥

१ ...यूथपाः - ख. ।। २ शितवर्म्मा - घ , तिग्मवर्मा (धर्मा? ) - ख. ।। ३ सुसन्नद्धौ - घ. ।। ४ रथयन्ता - ख । ५ महासुरम.

- (? ) ।। ६... प्रवर्धनाः - (? ) ।। ७ तथान्धकश्च - ख , तदा (?) ।। ८ शरभ॑श्च (?) । ९ ह्रदश्चैव - घ । १० मुहूर्तो - घ ।। ११ मुण्ड - ख. ।

506
दुर्लोमा वक्रबन्धश्च विरोमा१२ रोध१३ एव च ।
मारीचश्च सुबाहुश्च श्वेतकुण्डलिरेव१४ च ॥१३॥
वृषपर्वातिकायश्च शरभः सिंह एव च ।
नरान्तको देवहनस्तथा यज्ञहनश्च यः ।।१४।।
दैत्यौ सुन्दनिसुन्दौ च शक्रतापन एव च ।
प्रह्लादश्चानुह्लादश्च शिनिर्बाष्कल एव च ।। १५॥
विरोचनो बलिर्बाणो वाताश्वश्च महाबलः१५ ।
मयोथ तारकाक्षश्च विद्युन्माली प्रभाकरः ।।१६।।
दुन्दुभि१६र्महिषश्चैव अरिष्टो रिष्ट एव च ।
केशी च धेनुकश्चैव अजको व्यंस एव च ।।१७।।
तथा गगनमूर्धा च असिलोमा च दानवः ।
सूचीलोमा तुहुण्डश्च हुण्डश्च परतापनः ।।१८।।
हस्ती दुर्योधनश्चैव विपाकः पाक एव च ।
बलो मुरोथ नरको मूकेन्द्रदमनावपि१७ ।१९।।
अश्वग्रीवः सम्बरश्च तथान्यः१८ कालसंवरः ।
शाल्वः१९ शतभुजश्चैव द्रुमो व्याघ्रश्च दानवः ।।8.90.२०।।
मधुश्च कैटभश्चैव महासगर२० एव च ।
छायाग्रहश्च२१ विख्यातः२२ सैंहिकेयाश्च विश्रुताः ॥२१॥
हालाहलाश्च ते सर्वे बलिपुत्राश्च विश्रुताः ।
तथा मयसुताः सर्वे निवातकवचाश्च ये ।।२२।।
पौलोमाः कालकेयाश्च विप्रचितिसुताश्च ये ।
एते चान्ये च बहुशो२३ दैत्यदानवसंमताः ॥२३॥
सर्वे चन्द्रमसं देवं प्रति वेगं प्रचक्रिरे ।
महिषा इव -- - हस्तिनः शरभं यथा ।।२४।।

१२ विरामो - ख., विराधो - घ. ।। १३ राध - घ. ।। १४ श्वेतकुण्डल एव - घ. ।। १५ सु महाबलः - ख. । १६ धुन्दुभि - ख. । १७ नरकावपि - घ. ।। १८ तता (था) यः - ख. ।। १९ शालः?, अन्धः - घ. । २० महामगर - ख., महाकवच - घ. ।। २१ मायाग्रहश्च - घ. ।। २२ विख्याताः - ख. ॥ २३ बहवो - घ. ।

507
विघ्ना यतप्रतं यद्वत् कामा मोक्षाश्रितं यथा ।
इन्द्रियार्था यथा योगमनर्था दुःखितं यथा२४ ॥२५॥
नागा इव गरुत्मन्तं भ्रमरा इव पादपम् ।
तथा ते दानवाः सर्वे प्रगृहीतवरायुधाः ।।२६।।
दुद्रुवुः शिशिरं देवं महाजलदनिस्वनाः ।
तेषामापततां व्यास तिमिरारिर्हसन्निव ।।२७।।
उद्यतान्यायुधानि स्म शरैश्चिच्छेद सर्वशः ।
ततः२५ स तान् पुनर्देवः सर्वानेव रुषान्वितः ।।२८।।
हृदयेषु शरैस्तीक्ष्णैर्बिभेद च ररास च ।
तुषारेण च शीतेन ताराधिपतिरव्ययः ।।२९।।
आजघानासुरान् सर्वान् क्रोधसंरक्तलोचनः ।
ते शरैश्च विनिर्भिन्नाः शीतेन च भृशार्दिताः ।॥8.90.३० ।।
स्थितास्तत्रैव दैत्येन्द्राश्चित्रपट्टार्पिता इव ।
चन्द्रोपि देवः समरे मण्डलीकृतकार्मुकः ।।३१।।
बिभेद सर्वान् दैत्येन्द्रान् नर्दमानः पयोदवत् ।
यः कश्चिद्दानवो वापि दैत्यो वा मुनिसत्तम ।३२।।
सर्वे एव शरान् तस्य दधिरे शशिनस्तदा२६ ॥
यत्किञ्चिच्चालयत्यङ्गं तत्र दैत्यः कदाचन ।।३३।।
तत्तत् तीक्ष्णैः शरैर्देवो बिभेद च ररास च ।
ब्रुवतो दैत्ययोधस्य यत्र क्वचन संयुगे ।।३४।।
निचखान शरानष्टौ मुखे तस्यापि चन्द्रमाः ।

निष्पन्दास्ते स्थिताः सर्वे मूकवच्चासुरोत्तमाः ।
शरनिर्भिन्नसर्वाङ्गाश्चित्रपट्टार्पिता इव ।३५।।
यथा स भगवान् देवश्चन्द्रमा दानवार्दनः ।
तथैव भगवान् वह्निरार्दयद् दानवान् युधि ॥३६॥

२४ इव दु:खितं - ख. ।। २५ एनं (नान) - ख., एतान शनैर - घ. ।। २६ ..स्तथा - ख. ।


तद्रथाश्वगजयोधसंकुलं प्रक्षरद्रुधिरबिन्दुविह्वलम् ।
सीदते गजकुलोपमं बलं पंकलग्नमिव सर्वमुल्बणम् ॥३७॥
इति स्कन्दपुराणे युद्ध नवतितमोध्यायः

सनत्कुमार उवाच
तस्मिन्बले तथा१ तेन सोमेनाप्रतिमौजसा ।
हन्यमाने महामायः समाश्वस्य तदासुरः ।।१।।
हिरण्याक्षो दितेः पुत्र इदमाह रुषान्वितः ।
गरुत्मतः सुतं वीरं रथयन्तारमाहवे२ ।।२।।
खगेश्वर न ते लज्जा भवतीह रणार्णवे ।
यन्मां४ रथेन संग्रामात्५ त्वं हरस्यन्यतोद्य६ वै ।।३।।
किं वक्ष्यन्त्यसुराः सर्वे दैत्याश्चैव महाबलाः ।
राजास्माकं जितः संख्ये शत्रुभिः शत्रुतापनः ।।४।।
जीवितैषी परित्यज्य बालानस्मान् दुरात्मवान्७ ।
रणादपगतः क्वापि धिङ् मामशुभकारिणम् ।।५।।
कश्यपस्य सुतो भूत्वा भ्राता दैत्यस्य संमतः९ ॥
हिरण्यकशिपोर्दैत्यो१० महायोगबलान्वितः११ ।। १ ।।६।।
अग्रतः१२ सर्वदैत्यानां दानवानां तथैव च ।
राजा स्वामी च शूरश्च१३ निर्जितः शत्रुभिः कथम् ।।७।।
अथवा देवपक्षस्य त्वं पुत्रो वै गरुत्मतः ।
तमेव पक्षं भजसे न मां त्वं परिरक्षसे ।८।
नाहं तव न शक्तोद्य शिरः कायात् सकुण्डलम् ।
खड्गेनानेन तीक्ष्णेन छेत्तुं खगकुलाधम ।।९।।

१ तदा - घ ।। २ ...मब्रवीत - ख. ।। ३ रणान्तरे - घ. ॥ ४ त्वं या (मां?) - ख. ॥ ५ संग्रामे - ख. । ६ वह्5थन्यतोद्य - घ. ।। ७ दुरात्मनाम - ख., दुरात्मनः (? ) ।। ८ .. दुपगतः - ख , .. दद्य - घ. ।। ९ ... सन्तम - घ. । १० हिरण्यकशिपुर्दैत्यो - ख । ११ महामायो बलान्वितः - ख. ।। १२ अग्रणी (?) । १३ वृद्धश्च - ख. ।

मित्रं त्वं मम मन्दस्य पुरा बालसखेति च१४ ।।
अतः कृत्वाभिरक्षामि१५ गच्छ मुक्तोसि दोषवान् ।।8.91.१०।।
तस्य तद्वचनं श्रुत्वा रथयन्ता खगेश्वरः ।।
उवाच श्लक्ष्णया वाचा हिरण्याक्षं महासुरम् ॥११॥
मा क्रुधो दानवश्रेष्ठ१६ नास्मि दैत्य तवाहितः ।
तदोपवाहितः१७ क्षिप्रं रणाद् रक्षार्थमेव हि ।।१२।।
सूताः शास्त्रविदश्चैव ब्रुवते दानवेश्वर ।
दम्पती रथियन्तारौ परस्परमनुव्रतौ ।।१३।।
रथिना शस्त्रघातेभ्यो रक्ष्यो यन्ता यथा प्रिया ।
तेन चैव रथो रक्ष्यो यथा भर्त्ता जयावहः ।।१४।।
स भवान् रिपुणा भिन्नो ह्यवबद्धश्च संयुगे ।
अशक्तः स्यादितीत्येवं मया क्षिप्रमपोहितः१८ ।।१५।।
आाश्वस्य बलमाधाय१९ पुनर्युद्धेन दंशितः ।
रिपूञ्जेष्यसि संग्रामे त्वेवं त्वमपवाहित:२० ।।१६।।
ये हि कालेपयान्ति स्म काले चायान्ति दंशिताः ।
तेषान्नासुलभो२१ दैत्य जयो युद्धे महात्मनाम् ॥१७॥
न चाहमहितः सत्यं हितकृत् तव नित्यदा ।
मा शङ्कां कुरु दैत्येन्द्र शपे सत्येन सर्वतः ।।१८।।
न चाप्यविदितं तेद्य२२ कृतो यत् शपथः२३ पुरा ।
तथैवामृतपश्चाहं न मृत्युर्मम विद्यते२४ ।।१९।।
अहं गरुत्मतः पुत्रो देवान् हित्वासुरान् श्रितः ।
तवैव दैत्य स्नेहेन मा शङ्कां त्वं कृथा मयि ।।8.91.२०।।
एतद्बलं चन्द्रमसा वह्निना चोपपीडितम्२५ ।
त्राहि क्षिप्रं महाबाहो२६ न शोकं कर्तुमर्हसि ॥२१॥

१४ बालः सखेति च - घ. ।। १५ कृतभिरक्षस्त्वं (? ) ।। १६ नात्र लज्जा दानवेश - घ. ।। १७ तन्नोपवाहितः - ख.। १८ क्षिप्र प्रवाहितः - ख. ।। १९ ... मादाय - ख. ।। २० ...त्येवं - ख., त्वमेवमपवाहितः (?) । २१ तेषान्न सुलभो - ख. ।। २२ न चैव त (त्व) द्धीतो वाक्यै - ख. ।। २३ मे कृतं शपथं - घ., कृतोहमप (म)रः --ख. २४ यतोहमममृतं प्राप्य (श्य) चामरत्वमवाप्तवान - घ ।। २५ चोपपीडिताः - ख. ।। २६ महामोहौ - ख. ।।

मायामथ समास्थाय धनुषा वा बलेन वा ।
जहि शत्रून्महाराज२७ मा२८ रुषन्तु दितेः सुताः ।।२२।।
सनत्कुमार उवाच
ततः स तं२९ परिष्वज्य पक्षिराजं महासुरः ।
अभिदुद्राव वेगेन रथेनाम्बुदनादिना ।२३।।
तस्यापतत एवाथ सवह्निश्चन्द्रमास्तथा ।
शरैराशीविषाकारैर्ध्वजं चिच्छिदतुर्युधि ॥२४॥
ततो ललाटे विद्ध्वैनं तौ देवौ शशिपावकौ ।
युगान्ताम्बुदवद् व्यास नादमुच्चैः प्रचक्रतुः ।।२५।।
तयोस्तल्लाघवं दृष्ट्वा हिरण्याक्षः प्रतापवान् ।
आग्नेयेनास्त्रमुख्येन शिशिरं३० तद् व्यशातयत् ।।२६।।
तुषारवर्षणं दग्ध्वा ततोसौ मायया पुनः ।
संमोहयित्वा वेगेन राहुर्भूत्वाभिदुद्रुवे३१ ॥२७॥
स राहुणा तदा तेन ग्रस्यमानः खगेश्वरः ।
रणं त्यक्त्वान्यतो यातस्ततो देत्यो ननाद ह ।।२८।।
दानवा ह्यपि ते३२ सर्वे नष्टे तस्मिन् हिमाशये ।
समाश्वस्य पुनश्चक्रुर्युद्धं सुरगणैः सह ।
तेम्बुदाशनिसन्नादाः समुद्रसमनादिताः ।२९।।
दैत्यदानवमहारथाः प्रवरसादिन आश्वसन्तः ।
- - तनेव युद्धकांक्षिणो दंष्ट्रिण इव महागजा वनसमाश्रिताः ।।8.91.३०।।
इति स्कन्दपुराणे युद्ध एकनवतितमोध्यायः

२७ शत्रुम्महाराज – ख। २८ – तु – ख। २९ – सन्तं – ख। ३० – तिमिरं – ख।
३१ विदुद्रुवे - ख. । ३२ – पिहिते – ख

511
सनत्कुमार उवाच
नक्षत्राधिपतिं दृष्ट्वा भगवान् हव्यवाहनः ।
विद्रुतं दानवभयात् पदातिर्योद्धुमुद्यतः१ ॥१॥
स शरैर्दानवरथं ससूतं सहवाजिनम्२ ।
सध्वजं सपताकञ्च भस्मसायुज्यमानयत्३ ।।२।।
ततोस्य कार्मुकं दिव्यं शरेणानतपर्वणा ।

विज्यं चकार संक्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ।।३।।
अथान्धकश्च राहुश्च प्रह्लादो मय एव च ।
अन्ये च दानवश्रेष्ठाः कृशानुं पर्यवारयन् ।।४।।
सोवप्लुत्य तदा तेषां धनूंषि च च रथाँस्तथा ।
ध्वजानि च विचित्राणि ददाह च ररास च ।॥५॥
कवचानि विचित्राणि शिरांसि च वसूत्तमः ।
ददाह विकृताकारो नादयन् सर्वतोदिशः ।।६।।
हाहेति नदतां तत्र भगवान् ह्यव्यवाहनः ।
जिह्वा दह्र४ बभौ व्यास गुहायां दीपवत् स्थितः ।।७।।
केषाञ्चित् प्रदहत् तानि दानवानां मुखानि सः ।
पङ्कजानीव५ फुल्लानि तिमिरारिर्महाप्रभः ॥८॥
केषाञ्चित्तु गजेन्द्राणां करान् काञ्चनभूषितान् ।
ददाह भगवान् वह्निर्दावाग्निर्भुजगानिव ।।९।।
शरान् शराशनाञ्चैव तथा खड्गपरिच्छदान् ।
ददाह भगवान् वह्निर्हस्त्यश्वमपि सर्वशः ।।8.92.१०।।
ते हन्यमाना दैत्येन्द्रा विशस्त्रा दुःखिता भृशम् ।
भ्रमन्ति वितनुत्राश्च तत्र तत्रैव - --७ ॥११॥
तेषां वह्निप्रदीप्तानां दह्यतां सुरविद्विषाम् ।
हिरण्याक्षः स्वयं राजा पर्जन्यः समपद्यत ।।१२।।

१ ...र्यमथागतः (योद्धुमागत:?) - ख., समधावत - घ. ।। २ ...सहवाजिनः - ख. ।। ३ पादयत् - ख. । ४ दन्तं – ख. ॥ ५ .. निव - ख. ।। ६ ध्वजपरिच्छदान् (?) । ७ सर्वकृत. ? - ख., सर्पवत् (?) ।

512

स मेघभूतो दैत्येन्द्रस्तमग्निं वृष्टिभिस्तदा ।
प्रशामयत८ वेगेन संवर्त्तक इवाम्बुदः ।।१३।।
तं प्रशान्तं तदालक्ष्य विधुरं हृव्यवाह्नम् ।
विप्रचित्तिः शरैस्तीक्ष्णैर्ललाटे समवाकिरत् ।।१४।।
ततोस्य नदतो भूयो मयो दानवसत्तमः ।
मुखे शरान् महाघोरान्निचखान महासुरः ॥१५॥
तस्य तेन तदा व्यास मुखे भिन्नस्य दारुणः ।
उत्तस्थौ वायुवद् धूमः शरीरादञ्जनोपमः ।।१६।।

तेन धूमेन९ खञ्चैव दिवं भूश्चैव सर्वशः ।
पूरिता महता१० व्यास न प्राज्ञायत११ किंचन ॥१७॥
तेन शब्देन संज्ञाभिर्नामविश्रावणैरपि ।
करस्पर्शैस्तदा१२ न्योन्यमनयद्यमसादनम् ।।१८।।
न देवो ज्ञायते तत्र न दैत्यो दानवोपि वा ।
अजानन्तस्ततस्तत्र संस्थामेतां१३ प्रचक्रिरे ।। १९ ।।
आटिं दैत्याः प्रकुर्वन्त बक इत्येव देवताः ।
बकं वदन्ति ये तत्र दैत्यास्तान् व्यहँस्तदा ।।8.92.२०।।
आाटिं ब्रुवाणश्च सुरा इत्येवं तद् व्यवर्तत१४ ।
एवंभूतमभूद्युद्धं१५ वर्षाणां तु१६ सहस्रकम्१७ ।। ७ ।।
महद्भयं वै१८ दैत्यानामन्धकारे सुरैस्सह ।।२१।।
तदन्धकारे सुमहाभयंकरं तदाभवद्युद्धमतीव दारुणम् ।
जगद्विनाशाय जगद्धितैषिणां सुरासुराणां रुधिरौघनिस्रवम्१९ ॥२२॥
इति स्कन्दपुराणे युद्धे द्विनवतितमोध्यायः

८ प्रशमेयत - ख., प्राशामयत् (?) । ९ धूपेन - ख । १० महतो - ख. ॥ ११ प्रज्ञायत - ख. । १२....स्तथा (?) ।। १३ संज्ञामेतां (?), संग्रामं तं - घ. ।। १४ ...ध्यवर्तत (?) ।। १५ एतद्भूतमयुध्यन्तु - ख । १६ वै - ख. ।। १७ महद्भय - ख. घ., तदभूत्संज्ञया युद्धं मूर्खाणां वै महद् भयम् - घ. ।। १८ सहस्रमेकं - ख. । १९ विस्रुतं - घ. । -

513

सनत्कुमार उवाच
अथासौ तेन कालेन केतुरग्नेः१ समुत्थितः ।
वायुनाभिहतश्चैव अगच्छद् विलयं भृशम् ।।१ ।।
ततः समभवद् व्योम विमलं सर्वमेव हि ।
अपश्यन्त सुरास्सर्वे दैत्याश्चैव परस्परम् ।।२ ।।
ततः शंखाश्च भेर्यश्च पटहाडम्बरास्तथा ।
सुघोषका डिण्डिमाश्च भग्ना भेर्यश्च सर्वशः ।।३।।
बलद्वयेप्यवाद्यन्त शतशोथ सहस्रशः ।
अथ शक्रश्च देवेन्द्रो यमो वैश्रवणस्तथा ।।४।।
पूषा भगश्च द्वावेतौ अर्यमा मित्र एव च ।
जयन्तो मरुतश्चैव रुद्रादित्याश्च सर्वशः ।।५ ।।

वेगेन सुमहावेगा ममृदुर्दानवं बलम् ।
तत्र चामीकराभासं प्रगृह्य बलवद्धनुः ।।६।।
यमो दण्डेन दैत्येन्द्राननयद्यमसादनम् ।
स पञ्चभिः शरैर्विद्ध्वा हिरण्याक्षं महाबलम् ।।७।।
अश्वाँश्चैकैकशः सर्वान् जहास च ननाद च ।
तस्य सर्वे तदायस्ता दैत्यदानवसत्तमाः । ।८।।
शरानाशीविषाकारान् व्यसृजन् विकृताशनान् ।
तान् स चिच्छेद समरे त्रिधैकैकं लघुक्रियः ।।९ ।।
पुनश्च विशिखै५र्घोरैरर्दयत् प्रहसन्निव ।
ततोन्धकस्य यन्तारं रथञ्च सहवाजिभिः । ।8.93.१ ०।।
किंकरेण६ महावीर्यो यमो निन्ये स्वकं पुरम्७ ।
ततोन्धको गदापाणिर्युगान्ताम्बुदवन्नदन् ।।१ १ ।।
अभ्यधावद्यमं तूर्णम तिष्ठतिष्ठेति चाब्रवीत् ।
तस्य वज्रेण देवेन्द्रो गदां हेमपरिष्कृताम् ।।१ २।।

१ रुग्रैः (रुग्रः) - घ. । २ ह - ख. । ३ दैत्येन्द्रो - ख । ४ व्यसृञ्जन् - ख. । ५ निशितै - ख. । ६ किंकारेण (?)- ख. । ७ पुनः - ख ।



बिभेद शतधा८ व्यास सापतद् भुव्यवस्थिता ।
तं विशस्त्रं विकवचं कृत्वा ते देवसत्तमाः ।।१ ३ ।।
युगपच्छस्त्रवर्षेण ताडयामासुराहवे ।
यमो दण्डेन तं मूर्ध्नि शक्रो वज्रेण चाहनत् ।।१४।।
वित्तदोशनिना चैव पाशेन वरुणस्तथा ।
अन्ये चान्यैस्तथा देवा ह्यमोघैरायुधोत्तमैः ।।१ ५।।
अभ्यधावन्नसंरब्धा हतस्त्वमिति वादिनः ।
न चैव तस्य दैत्यस्य दुःखं तत्राभवत्तदा ।। १६। ।
सोपि दैत्यस्ततोत्पत्य९ पुण्डस्यास्थाय१० पृष्ठतः ।
यमं मुष्टिप्रहारेण पुण्डाद् भूमावपातयत् ।। १७।।
तथेन्द्रस्य गजं भूयो पुच्छे संगृह्य वेगवान् ।

भ्रामयित्वाक्षिपद् दूरे नष्टस्त्वमिति चाब्रवीत् ।।१८।।
ततो धनेशस्य पुनः शिविकां कामगामिनीम् ।
आक्षिप्य११ बहुधा दैत्यो व्यधमत् क्रोधमूर्छितः । ।१ ९।।
ततो गजैर्गजान् निघ्नत्१२ पदातीँश्च पदातिभिः ।
रथं रथेन च रणे हयाँश्च हयसादिभिः । ।8.93.२० ।।
पुनर्गजे१३ महेन्द्रस्य हन्यमानोपि१४ संयुगे ।
समुत्प्लुत्य१५ तदा शक्रं गजस्कन्धान्न्यपातयत् ।।२१ ।।
तस्य तत् कर्म संवीक्ष्य दानवेन्द्रस्य संयुगे ।
सर्वे देवा दिशः सर्वाः प्रनष्टा जीवितार्थिनः ।।२२ ।।
पूर्वेण भगवानिन्द्रः सहादित्यः१६ सलोकपः ।
दक्षिणेन तथा रुद्रा वसवश्चाश्विनावपि ।।२३ ।।
प्रतीचीं यक्षरक्षांसि पिशाचाः पन्नगैः सह ।
उत्तरेण तथान्ये च प्रपद्यन्त१७ यथा मृगाः ।।२४।।

८ स तथा - ख. । ९ स.. तदोत्पत्य - घ. । १० पुण्डमास्थाय - घ. । ११ आदाय - घ. । १२ निघ्नन् - ख । १३ पुनर्गजं - ख. । १४ हन्यमानञ्च - घ. । १५ अवप्लुत्य - ख । १६ सहादित्यैः - ख । १७ पलायन्त(?)।

515

तेषु भग्नेषु दैत्येन्द्राः पृष्ठतो विकृतायुधाः ।
अभ्यधावन्त गर्जन्तो भयं तेषां व्यदर्शयन् ।।२५। ।
ततो मुहूर्तं ते गत्वा हिरण्याक्षेण वारिताः ।
निवृत्ताः समतिष्ठन्त सर्वेमर्षवशं१८ गताः । । २६।।
अथोवाच ततः क्रुद्धान् हिरण्याक्षो हसन्निव ।
दैत्यदानवनाथाँस्तानिदं वचनकोविदः ।।२७।।
किमेभिरबलैरद्य१९ युष्माकं दैत्यदानवाः ।
अवबद्धैश्च रुद्धैश्च मृतसंज्ञै२०र्दुरात्मभिः ।।२८ ।।
हतास्ते नात्र सन्देहो येषां राज्यमिदं धृतम्२१ ।
नैषां जीवितमद्यास्ति मा त्वरध्वं सुबालिशाः ।।२९ ।
अबलानपि संरब्धान्निराशान् जीवितैषिणः ।
अवद्ध्येति बलाच्चैव दुर्जयाश्च न संशयः(?) ।।8.93.३ ० ।।
सङ्गमोक्षन्निदानीञ्च ल - - - - - सव ( ?) ।
- - - - - - - - इत्युवाच सदोशनाः (?) ।।३ १।।

यदेतद्राज्यमित्याहुः प्राणा ह्येते महात्मनाम, ।
स तेषां हरति प्राणान् यस्तेषां राज्यमाहरेत् ।।३२।।
तेषामद्य हृ - - - - - - - तसमैः सुरैः ।
आपूरयाम२२ स्थानानि देवानां दानवेश्वराः ।।३३ । ।
सनत्कुमार उवाच
ततस्ते सहिरण्याक्षाः प्राविशन्नमरावतीम् ।
रत्नानि जगृहुर्व्यास विजयं चावघोषयन् । ।३४। ।
आरक्षमामनुस्तत्र चक्षुर२३राप्तैश्च तेसुराः ।
आश्वासयन्त पौरांश्च तथा प्रकृतयश्च ह ।।३ ५।।
 - - मिति तथार्घेण तथैवोपायनैर्वरैः ।
आशीर्भिश्चासुरश्रेष्ठं हिरण्याक्षं प्रणेमिरे । ।३६। ।

१८ मन्युवशं - ख. । १९... रत्र - ख. । २० भृतसंज्ञै - ख. । २१ हृतम् (?) । २२ मा - ख. । २३ चख्यु (?) ।


तान् समाश्वास्य२४ दैत्येन्द्रो ह्यध्यस्य च वरासनम् ।
कार्याणि कृत्वा सर्वेषामगच्छद् वरुणालयम् ।।३७।।
ते सिंहनादैर्विविधैश्च वाद्यैः प्रवल्गनास्फोटितकूजितैश्च ।
महासुरा२५ दानवराजसिंहं जग्मुस्समन्तात् परिवार्य सर्वे ।।३८। ।
इति स्कन्दपुराणे वरुणालयगमने त्रिणवतितमोध्यायः

सनत्कुमार उवाच
तमापतन्तं वेगेन गरुत्मन्तमिवाहवे ।
दृष्टवा वरुणपुत्रास्ते पित्रा सह विदुद्रुवुः ।। १ । ।
दैत्याश्चापि हि ते सर्वे प्राप्य तद्वरुणालयम् ।
व्यूढस्कन्धा व्यतिष्ठन्त व्यसृजंस्तत्पुरं प्रति ।।२। ।
दूतं वातापिनं चैव राज्ञा प्रेषितमूर्जितम् ।
स गत्वा तां पुरीं रम्यां प्रविश्य च महासुरः ।। ३ । ।
पौरैः सुपूजितो व्यास प्राहेदं तान् सुगर्वितः ।
राजा सर्वस्य लोकस्य दैत्यदानवनन्दनः ।।४। ।
कश्यपस्य सुतः श्रीमान् हिरण्याक्षः प्रतापवान् ।
जित्वा सर्वान् सुरान् संख्ये आज्ञापयति वस्सदा ।।५। ।

यूयं शृणुत सर्वे मे आज्ञां कुरुत चैव१ हि ।
आनयध्वं च रत्नानि परित्यजत देवताः । ।६। ।
देवपक्षोत्र यः कश्चित् पुरे प्रतिवसत्युत२ ।
अभयं तस्य३ यच्छामि यातु देवानभीतवत्४ । ।७। ।
नारदाद्याश्च ऋषयस्तं समासाद्य दैत्यकम्५ ।
ऊचुस्तमसुरं व्यास सान्त्वयुक्तमिदं तदा । ।८। ।

२४ सम श्चस्य - ख. । २५ महासुरं - ख. । .

१ कुरु तथैव - ख. । २ प्रतिवसन्त्युत - ख । ३ अयन्तस्य प्रयच्छामि - ख. । ४... न्नभीतवत् - ख, इतः परं पत्रमेकं खण्डितं खपुस्तके । ५ इतः पूर्वं खपुस्तके इव घ पुस्तकेपि कियानंशः खण्डितः ।

517

राजा भोजो विराट् सम्राट् भूपतिः क्षत्रियो नृपः ।
य एभिः स्तूयते शब्दैः कस्तन्नाचर्चयते६ बुधः७ ।।९।।
स त्वं राजा च भोजश्च विराट् सम्राट् तथैव च ।
भूपतिः क्षत्रियश्चैव नृपः सर्वसहस्तथा ।।8.94.१ ०।।
निर्जिताः सुमहावीर्यास्त्वया देवाः सवासवाः ।
कस्त्वया सदृशो लोके बाह्यैकं८ रुद्रमीश्वरम् ।।११ ।।
त्वं पाता सर्वलोकानां हर्त्ता स्रष्टा तथैव च ।
कस्तवाज्ञां महाराज प्रतिहन्याद् दुरात्मवान् ।।१२।।
वयं९ च सर्वे दैत्येन्द्र वरमिच्छाम१० दानव ।
वरदस्त्वं हि भूतानामस्माकं वरदो भव ।।१३।।
सनत्कुमार उवाच
तेषां तद्वचनं श्रुत्वा वरदोस्मीति सोब्रवीत् ।
ऊचुस्ते दैत्यराजानं तदा वचनकोविदाः ।।१४। ।
ऋषय ऊचुः
यदेतदुक्तं भवता नरकव्याधिमृत्युषु ।
न तथा तद् भवेद् दैत्य एष नो दीयतां वरः ।।१५।।
दैत्य उवाच
मम प्रतिज्ञा विप्रेन्द्राः पूर्वमेव तपोधनाः ।

लोकानां सुखमेधेयं राजा लोकस्य यद्यहम् ।।१६।।
न तथा तत् करिष्यामि यद्यहं मुनिसत्तमाः११ ।
मिथ्याप्रतिज्ञः स्यां चाहमसत्यश्च दुरात्मवान् । ।१७।।
तस्मादन्यद्१२ भवन्तो मां वर याचन्तु१३ सुप्रियम् ।
कर्तास्मि तं तथा सर्वं याचेहं१४ शिरसा ह वः । ।१ ८। ।

६ ...श्रयते - घ. । ७ बुधैः - घ. । ८ त्यक्त्वैकं (?) । ९ यमं - घ. । १० वरमिच्छामि - घ. । ११ ऋषिसत्तमाः - घ. । १२ ...दन्यं - (?) । १३ याचत - घ. । १४.. .चेयं - घ. ।

518
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा ऋषयः सर्व एव ते ।
हिरण्याक्षमिदं व्यास पुनरेवाब्रुवन्१५ विभुम् ।।१९।।
ऋषय ऊचुः
लोकधर्मप्रवृत्त्यर्थं ब्रह्मणा दैत्यपुंगव ।
कृतमेतत् पुरा सर्वं धर्मश्चापि प्रवर्तितः ।।8.94.२०।।
समीक्ष्य चैतल्लोकस्य धर्मश्चापि१६ प्रवर्तितः ।
नाभूतस्तद् भवेद् दैत्य इति नो वरदो भव ।।२१।।
प्रतिज्ञा प्रभवेत् सा यल्लोकानां१७ दुःखवर्जनम् ।
तच्च तस्मान्न नश्येत ब्रह्मणः१८ कृतिरव्यया ।।२२।।
यावत्त्वं दैत्य लोकस्य राजा ह्यसि१९ प्रभुश्च ह ।
एवं त्वयानृणत्वं२० च ब्रह्मणो२१द्य कृतं२२ भवेत् ।।२३।।
तेषां स वचनं श्रुत्वा ऋषीन् निश्चित्य दैत्यराट् ।
ये२३ द्रोहाःशक्रपक्षाश्च ममाज्ञाभङ्गकारिणः । २४।।
तेषामेव भवेन्मृत्युर्नरकेषु च यातनाः ।
एतदाह तदा राजा ते चाप्यूचुर्नराधिपम् । ।२५।।
एवमस्त्विवति तां२४श्चोक्त्वा यातनामोक्षमादिशत् ।
स मुक्त्वा नारकान्२५ सर्वान् ददौ स्थानस्य रक्षणम् ।।२६।।
पितृराजानमनघ विप्रचित्तिं महाबलम् ।
ततोवघुष्य स जयं पूजयित्वा तु तान्द्विजान् ।
जगाम धनदावासं हिरण्याक्षो महाबलः ।।२७।।
ते तां धनेशस्य पुरीं महाबला विनादयंतोंन्धकपालितास्तदा ।

हिरण्यनेत्रं परिवार्य२६ दानवास्तदाभिजग्मुर्जलदा इवाचलम् ।।२८।।
इति स्कन्दपुराणे हिरण्याक्षदिग्विजये यमलोकाभिगमनो नाम चतुर्णवतितमोध्यायः

१५ ..ब्रवीद् - घ. । १६ धर्मस्यापि - घ । १७ ग्रायं लोकानां - घ. । १८ तस्यैतद् ब्रह्मणः - घ. । १९ ह्यासीत्- घ । २० स वामृणत्वं - घ । २१ ब्रह्मणा - घ. । २२ कृति - ध. । २३ यो - घ. । २४ त्वां - घ. । २५ वरदान् - घ. । २६ प्रविदार्य - घ. ।

519
सनत्कुमार उवाच
तथा१ लङ्कां२ समासाद्य धनेशस्य पुरीं शुभाम् ।
अदूरे तस्थुरुद्धूताः सन्नद्धकवचायुधाः ।।१।।
अवस्थिताँस्तथा दृष्ट्वा दानवान्३ बलदर्पितान् ।
लङ्कानिवासिनः४ सर्वे निधिपालास्तथैव च ।।२।।
निधयः शंखपद्माद्या ऋषयश्च तपोधनाः ।
अर्घं रत्नानि५ चादाय दानवाय न्यवेदयन्६ ।।३।।
ऊचुश्च तव दैत्येन्द्र वयं वश्या न संशयः ।
किङ्कराश्च प्रशाध्यस्मान् यथावद्दानवेश्वर७ ।।४।।
हिरण्याक्ष उवाच
मा भीर्भवतु वो यक्षा मम यूयं न संशयः ।
अयं राजा हि वः श्रेष्ठो हिरण्यकशिपोः सुतः ।।५।।
प्रह्लादो देवसंघानां सर्वेषां विप्रबाधनः ।
ततस्तं तत्र संस्थाप्य धनेशं दैत्यपुङ्गवम् ।। ६।।
अन्येषां देवसंघानां स्थानान्यापूरयत्पुनः ।
संस्थाप्य सर्वस्थानेषु स्थानिनो दानवेश्वरान् ।।७।। अन्धकन्त्वमरावत्या८मिन्द्रत्वेनाभ्यषेचयत् ।
भूर्ल्लोकञ्चाखिलं दैत्यः स्वयमेवान्वशासत९ ।।८।।
भूयश्च धनुरादाय सशरं सूर्यसन्निभः१० ।
दैत्येन्द्रो मेदिनीं प्राह ममात्मानं विदर्शय११ ।।९।।
सा भीता तस्य दैत्यस्य वेपमाना कृताञ्जलिः१२ ।
जयेत्युक्त्वाग्रतस्तस्थौ विष्णोर्लक्ष्मीरिवापरा ।।8.95.१ ० ।।
तां मृगीमिव शार्दूलो भुजङ्गीमिव पक्षिराट् ।
शार्दूलीं सिंह इव च सिंहीं शरभराडिव ।।११ ।।

१ ततो (?) । २ लंकां - घ । ३ धनदो - ख । ४ अलकावासिनः - घ. । ५ अर्घरत्नानि - ख. । ६ निवेदयन् - ख. । ७ देवो धनेश्वरः - घ., नरेश्वरः ख । ८... स्त्वमरावत्यां - ख. । ९,.. न्वशासते ख. । १० सूर्यसन्निभं - ख. । ११ मम त्वं वै निदर्शय - घ., ' वदेशत - ख. । १२ कृताञ्जली - ख. ।



हंसीं काक इव क्षुद्रो मयूरी मद्गुराडिव१३ ।
तथा तां स दितेः पुत्रो जग्राह रुषिताननः ।
उवाच चैव१४ संरब्धस्तां देवीं भयविह्वलाम् । । १ २।।
तवाहं वसुधे भर्त्ता ब्रह्मणा प्रकृतः शुभे ।
मान्यं१५ पतिं त्वमिच्छेथा रक्षिष्येहं ततो हि ते । ।१ ३ । ।
सनत्कुमार उवाच
ततो रसातलं१६ गत्वा स्वपुरस्य समीपतः ।
बबद्ध नागपाशैस्तां दुष्टामिव यथाङ्गनाम् ।।१४।।
ततोचलेन दैत्येन्द्रः शंखेन सुमहाबलः ।
आर्त्तां रुरोध१७ दुष्टश्च१८ कन्दरामिव वीर्यवान्१९ ।।१५।।
ततोस्या रक्षणे नित्यमुद्युक्तान् रक्षिणो दधौ२०।
किङ्करान्नाम दैत्येन्द्रान् सहस्राणि चतुर्दश ।। १६ ।।
स तथा तद्विधायैव दैत्येन्द्रस्तुष्टिमान् बभौ ।
कृषीबल इव क्षेत्रं सुनिष्पन्नं समीक्ष्य च । । १७।।
कृतकृत्योहमित्येव बुद्धिं चक्रे स पार्थिवः ।
संयुज्य स्वसुतं ज्येष्ठं दारैः साधुरिवात्मवान् । ।१८। ।
अन्तरं न च तस्यान्यः२१ कश्चित्प्राप्नोति सुव्रत२२ ।
स्वसहायस्य२३ विप्रस्य यथा दम्भेन वर्ततः । ।१९। ।
यजध्वं२४ दानवास्सर्वे विप्रान्पूजयतेति च ।
देवञ्च शूलिनं सर्वे नमस्यत२५ पुनः पुनः ।।8.95.२० ।।
धर्ममेव निषेवध्वमिति सोज्ञापयत्तदा ।
न तस्या२६ धार्मिकः कश्चिद् दैत्यो वा दानवोपि वा ।।२१।।

१३ डङ्गुराडिव - ख. । १४ दैवे - ख । १५ नान्यं - घ. । १६ अथ पृथ्वीं ततो - घ. । १७ ददज - ख. । १८ दुष्टस्य - ख । १९ राजाक्रम्य विनष्टां तां भर्ता स्वामीव योषितम् - घ । २. ददौ - ख. घ. । २१ तस्यान्यत् -

ख. । २२ सुव्रतः - ख- घ. । २३ असहायस्य - घ. । २४ जयध्वं - ख. । २५ नमस्य च - ख. । २६ तस्य - ख. ।



राज्येभवद् दुराचार२७स्तस्मिन्२८ राज्यं प्रशासति ।
स्वयमेव स वायुश्च चन्द्रशाः सूर्य एव च२९ । । २२ । ।
अभवद् व्यास लोकेषु तपोबलसमन्वितः ।
ओषध्यः स्ववमुद्भूतास्तस्मिन् राजनि शासति ३० । । २३ । ।
विना कृष्टिं३१ सं भवन्ति सर्वलोकस्य साधिकाः३२ ।
स एव तास्समादाय३३ क्षरं३४ नयति दैत्यराट् । । २४। ।
स एवामर्दयच्चापि निनाय च पुनर्गृहान्।
स एव दण्डिकोभूच्च दण्डश्चैव३५ स एव हि । । २५ । ।
स एव योगात्३६ सर्वत्र चौराद्३७ रक्षति नित्यदा ।
न तस्य व्याधितः कश्चिन्म्रियते वापि कश्चन । । २६ । ।
परदारप्रसक्तो वा पिशुनो वापि कर्हिचि तु ।
हिंसका न च तस्यासन्न चाप्यधार्मिकाः क्वचित् । । २७। ।
पल्वलानि तडागानि सरित्प्रस्रवणानि च ।
विना वृष्ट्या३८ भवन्त्येते सर्वत्रैव च सुस्थितम् । । २८ । ।
न सन्ति तस्य रक्षांसि न पिशाचाश्च हिंस्रिणः ।
ईतयश्च न सन्त्यस्य न द्वन्द्वानि च कानिचित् । । २९ । ।
न जुह्वते तदा वह्निं विप्रास्तस्मिँस्तु राजनि ।
नाधीयते यजन्ते वा एकवर्णमभूत्तदा । । 8.95.३० । ।
भृगवो येभवन् विप्रा दानवानां मुदावहाः ।
अधीयते३९ यजन्ते च एवं त व्यास सर्वशः । । ३१ । ।
हृष्टपुष्टमभूत्४० सर्वं४१ व्याधिदुःखविवर्जितम्४२ ।
वर्णाश्रम४३ परित्यक्तं सर्वलोकसमं४४ जगत् । । ३२ । ।

२७ दुराचार ख। २८ इति - ख । २९ हि - ख । ३० राज्यं प्रशासति (?) । ३१ वृष्टि - ख, कृष्टं - घ । ३२ वै

कृषिः - घ, साधिका ख । ३३ ताम्समादाय - घ, समास्थाय (धाय) (?) । ३४ स्वयं - घ । ३५ दण्डाच्चैव - ख । ३६ यं गान् - ख । ३७ चौरान् - ख । ३८ वृष्टिं - घ । ३९ -अध्याय (?) - ख. । ८० पुष्टधस्तैश्च ते - ख ४१ सर्व - ख. । ४२. विवर्जिताः - ख. । ४३ कर्म्माश्रम (धर्मा...) - ख, वर्णाश्रय - घ । ४४ कर्मणोपस ( श) मं - घ. ।



तन्नृत्यगीतोत्सवनित्ययुक्तं सुखप्रसुप्तं रतिकार्ययुक्तम् ।
जगद् बभौ राजनि दैत्यदेवे४५ हिरण्यनेत्रे दितिनन्दनेति४६ ।।३३ ।।
इति स्कन्दपुराणे हिरण्याक्षराज्यवर्णनो नाम पञ्चनवतितमोध्यायः

व्यास उवाच
तथा राजनि दैत्येन्द्रे त्रैलोक्याधिपतौ शुभे ।
धरण्याञ्चैव बद्धायां सुखितासु प्रजासु च ।।१।।
स्थानेभ्यश्च्याविता देवा ह्यप्रतिष्ठा महाबलाः ।
किमकुर्वत१ दुःखार्त्ता एतन्मे२ शंस सर्वशः ।।२।।
सनत्कुमार उवाच
शृणुष्व धर्म (?) देवानामवस्था या बभूव ह ।
यदकुर्वत३ दुःखार्त्तास्तत्र सर्वे यथाक्रमम् ।।३।।
हव्यवाहोग्निरभवद्देवानां भागवर्द्धनः ।
तं निरस्य तदा दैत्यो वह्निमन्यं चकार ह ।।४।।
तस्मिन्कर्मणि विप्रेन्द्र मन्त्रास्तदनुगाभवन् ।
दैत्यदानवभागानां वक्तारः शुभसाधकाः । ।५।।
ततो यज्ञः स्वयं दैत्यानुपतस्थे महात्मनः ।
यज्ञे गते च दैत्येन्द्रान्देवाः सर्वे मृता इव ।।६।।
अभवन्नष्टसंज्ञाश्च मन्दवीर्यपराक्रमाः ।
निःश्रीकाश्च निरुद्योगा निराक्रन्दा समुत्सुकाः ।।७।।
मन्त्रदग्धा यथा सर्पा वज्रपिष्टा यथाचलाः ।
गरुत्मताभिसन्दष्टाः पन्नगा इव निर्विषाः ।।८।।

४५ दैत्यनायके - घ. । ४६ दानवेन्द्रः - घ ।
१ किमकुर्वन्त - ख. । २ एतन्नः - ख. । ३ यदकुर्वन्त - ख. । ४ इवाचलाः - ख. ।

विहीनाद्भिर्५र्यथा वृक्षा बान्धवैर्वापि योषितः ।
तथा ते दैवता६ व्यास हृतराज्या हृतश्रियः । ।९। ।
चिन्तयन्ति हृदा चैव शुष्यन्ति७ विलपन्ति च ।
अथ देवः स्वयम्भूस्तान् ज्ञात्वा देवाँस्तथाविधान् । । 8.96.१० । ।
विमानेनार्कवर्णेन प्रोवाचेदं पितामहः ।
भो देवा नष्टसंज्ञा स्थ किमर्थं दुःखिता भृशम् ।
तपोयोगबलं वोद्य ददामि सुरपुङ्गवाः ।।११ ।।
यूयं लोकस्य कर्तारो हर्तारश्चैव सर्वशः ।
न युक्तं भवतामेतत् क्लीबवत् स्थातुमद्य वै । ।१२। ।
स्वीयं योगं मदीयञ्च८ त्यक्त्वा दुःखं महाबलाः ।
प्रतिपद्यत मा शोके स्वयं देवाः प्रवर्तत ।।१३ ।।
न तमो भास्कराद्युक्तं न सोमादुष्णता यथा ।
नाग्नेर्यथा तुषारश्च९ नामृतं भुजगादपि ।।१४। ।
नासाधोः साधुभावश्च न कुलीनादशोभनम् ।
नाधर्मो१० नियमेभ्यश्च न वेदेभ्यश्च दुर्मतिः ।। १ ५।।
तथा न युक्तं युष्माकमिदं देवा११ महात्मनाम् ।
आपत्सु न१२ विषीदन्ति ये केचित्तेजसा१३ स्थिताः । ।१६।।
ते१४ यूयमापदं प्राप्य न शोकं कर्तुमर्हथ ।
मा भवन्तोवसीदन्तु राज्यं भूयो भविष्यति ।। १७।।
महायोगबलोपेतो हिरण्याक्षोद्य देवताः ।
अशक्यो हन्तुमल्पेन तेजसा दितिनन्दनः । ।१८।।
प्रतीक्षन्तु१५ भवन्तोस्य तपसः क्षयमव्ययाः ।
क्षीणे तपसि दैत्येन्द्रं युद्धे१६ विष्णुर्वधिष्यति१७ ।।१ ९। ।

५ विशाखाभि - घ. । ६ देवता - ख । ७ मुह्यन्ति - घ । ८ स्वयं - घ.,... स्तथा यो धर्मं - ख. । ९ नाग्ने स्तुथारश्च यथा - ख. । १० नाधर्मा - ख. । ११.. मिमं देवा - ख., देवानां च - घ. । १२ च - ख. । १३.. तेजसि - घ. । १४ ये - ख. । १५ प्रतीक्षन्तां (?) । १६ युधि - घ. । १७ र्हनिष्यति - ख. ।

सनत्कुमार उवाच
त एवं ब्रह्मणा प्रोक्ता लब्धयोगाः१८ सुरेश्वराः ।
प्रणम्य सर्वभूतानां स्रष्टारमिदमब्रुवन्१९ । ।8.96.२० । ।
हृतानि नो महायोगस्थानानि दितिनन्दनैः ।
क्व तिष्ठाम वयं ब्रूहि दिश नः स्थानमव्ययम् ।।२१ ।।
ब्रह्मोवाच
हृतानि सर्वस्थानानि युष्माकं विदितञ्च२० मे ।
शृणुध्वं यत्र वस्तव्यं२१ युष्माभिर्योगमायया ।।२२।।
यूयं सर्वे शरीरेषु२२ योगाद् विशत२३ सत्तमाः ।
प्रजानां सर्वतो देवास्ततो वृत्तिमवाप्स्यथ ।।२३।।
तेषा२४मशितपीतैश्च संस्कारैश्च पृथग्विधैः ।
पृथिवी नागबद्धापि२५ युष्मानाप्याययिष्यति ।।२४।।
सनत्कुमार उवाच
त एवमुक्ता२६ देवेन देवाः सर्वे२७ सवासवाः ।
तथा चक्रुर्यथोवाच ब्रह्मा लोकपितामहः ।।२५।।
तेवर्तयन्त सततं तत्रस्थाः सुरसत्तमाः ।
चतुर्युगमुपासन्तो२८ लोकधातुर्मते स्थिताः । ।२६।।
अथ योगाद् हिरण्याक्षः प्रजासु समवास्थितान्२९ ।
सुरानपश्यद्योगात्मा चुक्रोध३० च स३१ तान्प्रति ।।२७।।
यस्मिन्यस्मिन्नपश्यच्च सुरं स समवस्थितम्३२ ।
अवधीत्तं तमभ्येत्य तदा दानवसत्तमः ।। २८।।

१८ प्रोक्तं - ख, लब्ध्वा योगं (?) । १९ मब्रवीत् ख । २० विदितस्य - ख. । २१ वक्तव्यं - ख । २२ सर्वशरीरे - ख., मे - घ. । २३ वसत - ख । २४ तासा (?) । २५ चावकल्पैश्च - घ. । २६ तदेवमुक्त्वा - ख. । २७ सर्वे देवाः - ख. । २८ मुपासन्त - ख. । २९ समुपस्थितान् - घ । ३० चुकोप - ख. । ३१ स च - ख. । ३२ सममवस्थितम् - ख ।

525

अहं प्रजाः सदोद्युक्तो रक्षामि सततं भयात् ।
ममैव ता दुराचारा विद्विषो वर्धयन्त्युत ।। २९ ।।

कृतघ्नाः स्वामिघातिन्यो दुष्पूरा दुष्टचेतसः३३ ।
मम शत्रूनिमा दुष्टा३४नन्नपानादिभिस्सदा ।। 8.96.३० ।।
आप्याययन्ति दुर्वृत्ता दण्डार्हा मे ततस्तु ताः३५ ।

---

- --- - - - - - |
यत्र तत्र गताः सर्वाः३६ प्रजाः सर्वत्र सोवधीत् ।। ३१ ।।
पल्वलानि तडागानि नदीः प्रस्रवणानि च ।
सर्वाण्येव तदा योगादशोषयत३७ दानवः ।। ३२ ।।
ओषध्योकृष्टपच्याश्च या ह्यासँस्तस्य सुव्रत ।
व्यनाशयत् स ताश्चापि वृक्षवल्लीरपोथयत्३८ ।।३ ३ ।।
तन्नष्टवृक्षक्षुपवल्लिपल्लवं तृणौषधीप्रस्रवणोदकाशयम्३९ । सरि४०त्तडागावटशुष्कपल्वलं जगद् बभौ कच्छपपृष्ठसन्निभम् प्रणष्टवर्णाश्रमधर्मसंयमं विनष्टघोषव्रजपक्षिमानुषम्४१ ।
द्विपाश्वपत्यादिगणैर्विनादितं४२ युगान्तकालाग्निमुदग्रवज्जगत्४३
इति स्कन्दपुराणे ब्रह्मणो वाक्यं नाम षण्णवतितमोध्यायः

सनत्कुमार उवाच
तथाभूतं जगद् दृष्ट्वा देवास्ते दुःखपीडिताः ।
वैराजं लोकमासाद्य भूयोपश्यन् पितामहम् ।। १ ।।
ते१ सर्वे समुपागम्य प्रणम्य च पुनः पुनः ।
ऊचुस्ते२ कर्म दैत्यस्य सर्वमेव३ सुदुःखिताः ।।२।।

३३ दुष्टचेतसा - ख । ३४ न्दृष्ट्वा - ख । ३५ ततस्ततः - ख, ततस्त्विति (?) । ३६ सर्वे ख ३७ योगादपोथयत - घ । ३८ रशोषयत् - ख । ३९ पल्लवं तथौषधप्रस्रवणादकाशयम् ४० शुष्यत् - (?) । ४१ धर्मसंयमस् - घ। ४२ श्च ह्यृक्षादिगणैर्विनादितं (?) - ख. । ४३ निसुर.. १ तं (?) । २... स्ततः - (?) । ३ सर्व एव. - ख ।


निवेद्य च पुनर्देवमूचुस्ते लोककारणम् ।
भगवन् हृतराज्याश्च दुर्बलाश्च तथा विभो ।।३ ।।
असमर्था वयं तस्य स्थातुं दैत्यस्य संयुगे ।
न च स्थानं५ प्रपश्यामो यत्र तिष्ठाम विज्वराः ।।४।।
सनत्कुमार उवाच
तेषां तद्वचनं श्रुत्वा भीतानां त्रिदिवौकसाम् ।
उवाच भगवान् ब्रह्मा सर्वानेव दिवौकसः ।।५।।
न भेतव्यं सुरास्तस्य योगिनः सुमहात्मनः ।
समाप्तं तपसः सर्वं फलं दैत्यस्य तस्य तत् ।।६।।
कालस्तस्याभिसंप्राप्तो जीवितान्तकरः सुराः ।
तस्मात् सर्वे मया सार्धं यात विष्णुं प्रयाचत ।।७।।
भवन्तो निर्बला ह्यद्य७ अशक्तास्तस्य बाधने ।
विष्णुः शक्तः स तं दैत्यं जीविताच्च्यावयिष्यति ।।८।।
पूर्वं हि जाते तस्मिँस्तु वागुवाचाशरीरिणी ।
नायं वध्यो मनुष्यस्य न देवस्य कथञ्चन ।।९।।
नापि तिर्यक्षु जातस्य८ न भूमौ न च तेजसि ।
नाकाशे नापि लोकेषु महात्मायं भविष्यति ।।8.97.१ ० ।।
स एष देवा दैत्येशो महात्मा धार्मिकस्तदा९ ।
अवध्यः सर्वभूतानां१० वध्यो दुःखाद् भविष्यति ।। ११ ।।
वाराहं रूपमास्थाय न दैवं नापि मानुषम्११ ।
न च तिर्यक्षु तज्जातं नरवाराहमस्ति वै ।। १२ ।।
पाताले च प्रविश्यैव नासौ१२ भूर्नापि खं हि तत् ।
न तेजो नापि लोकोसौ सर्वतो मुक्तमेव१३ तत् ।। १३ ।।

४ संयुगे स्थातुमग्रतः - घ. । ५ संस्थानं - ख. । ६ य प्रपश्याद्य - ख. । ७ सर्वे - घ. । ८ न पितृयक्षराजस्य - घ. । ९ स्तथा (?) । १० अपत्यमिव भूतानां - ख. । ११ न देवत्वं न भानुगम् - ख., न तु मानुषम् - घ. । १२ नादो (?) । १३ युक्तमेव - घ ।

527
सनत्कुमार उवाच
ततस्ते हृषिताः सर्वे प्रणम्य च पितामहम् ।
ऊचुर्गच्छाम देवेश कालोतिक्रमते हि नः१४ । ।१४।।
ततस्ते सर्व एवैत्य श्वेतं पर्वतसत्तमम्१५ ।
विष्णुं सहिष्णुं जिष्णुञ्च दानवायुतमर्दनम् । ।१ ५।।
अस्तुवन् वाग्भिरिष्टाभिः प्रणम्य बहुमानतः ।
नमः सर्वरिपुघ्नाय दानवान्तकराय च ।।१ ६। ।
नमो जिताय देवाय वैकुण्ठाय महात्मने ।
नमो निर्धूतरजमे नमः सत्याय चैव हि१६ ।।१७।।
नमः साध्याय देवाय नमो धाम्ने सुवेधसे१७ ।
नमो यमाय देवाय जयाय च नमो नमः । । १८ । ।
नमश्चादितिपुत्राय नरनारायणाय च ।
नमस्सुमतये चैव नमश्चैवास्तु विष्णवे । ।१ ९।।
नमो वामनरूपाय कृष्णद्वैपायनाय च ।
नमो रामाय रामाय दत्तात्रेयाय वै नमः । ।8.97.२ ० ।।
नमस्ते नरसिंहाय१८ धात्रे चैव१९ नमो नमः ।
नमः साध्याय वेदाय चक्रिणे वै नमो नमः । ।२१ ।।
नमः शकुनिहन्त्रे२० च नमो दामोदराय च ।
सलिले तप्यमानाय नागशय्याप्रियाय च । । २२ । ।
नमः कपिलरूपाय महते पुरुषाय च ।
नमो जीमूतरूपाय महादेवप्रियाय च । ।२ ३ । ।
नमो रुद्रार्धरूपाय२१ तथोमारूपिणे नमः२२ ।
चक्रमुद्गरहस्ताय महेश्वरगणाय च । ।२४। ।

१४ कालोतिक्रामते - ख,. तिक्रमतीह नः - घ । १५ श्वेतपर्वतसत्तमम् - ख. । १६ ह - ख । १७ च वेधसे - घ, सुमेधसे (?) । १८ नारसिंहाय - घ. । १९ ऋतवे च - घ. । २० शत्रुनिहन्त्रे - घ. । २१ रतार्धरूपाय - ध. । २२ तथा दामोदराय च - घ ।

528
शिपिविष्टाय च सदा नमः श्रीवत्सधारिणे ।
धुन्धुमाराय शूराय मधुकैटभघातिने ।।२५। ।
चतुर्भुजाय कृष्णाय रत्नकौस्तुभधारिणे ।
त्रिविक्रमवियत्स्थाय पीतवासः सुवाससे । ।२६।।
नमः पुरुषघाताय गदाखड्गोग्रधारिणे ।
योगिने यजमानाय भृगुपत्नीप्रमाथिने । ।२७।।
वृषरूपाय सततमादित्यानां वराय च ।
चेकितानाय दान्ताय शौरिणे वृष्णिबन्धवे२३ ।।२८।।
मुराश्वग्रीवनाशाय२४ तथैवासुरसूदिने ।
नमस्ते शार्ङ्ग धनुषे सौभशाल्वविघातिने ।।२९।।
नमस्ते पद्मनाभाय ब्रह्मदेहप्रवेशिने२५ ।
नमो जयाय शर्वाय रुद्रदत्तवराय च ।।8.97.३ ०।।
नमः सर्वेश्वरायैव नष्टधर्मप्रवर्तिने ।
पुरुषाय वरेण्याय नमस्ते शतबाहवे ।।३ १। ।
तव प्रसादात् कृच्छ्रं वै२६ तराम पुरुषोत्तम ।
हृतराज्या वयं सर्वे न त्वं वेत्सि महाभुज ।
हिरण्याक्षेण वैकुण्ठ तं नाशय महाभुज । ।३ २।।
सनत्कुमार उवाच
य इदं वैष्णवं स्तोत्रं भक्त्या परमया युतः ।
कीर्तयेत्सततं मर्त्यः सर्वपापैः प्रमुच्यते ।।३३।।
मृतश्च सर्वलोकेषु वर्षकोटिचतुर्दश ।
पूजितः सर्वदेवैश्च मोदते नात्र संशयः ।।३४।।
कीर्तयत्येव य इमं प्राणिभ्यो विप्रमुच्यते ।
स मृत्युलोकमप्राप्य चरते दुःखवर्जितः ।।३५। ।

२३ गोवृष्णिबान्धवे - घ. । २४ पुराश्वग्रीवनाशाय. - ख. । २५... थ देशिने - ख., इतः परं पत्रमेकं? खण्डितम् ख पुस्तके । २६ व - घ. ।

529
सनत्कुमार उवाच
 - - - - - - - - - - ।
उवाच सुरशार्दूलानिदं संपूजयन्सदा । । ३६ । ।
इतः स दैत्यो दुर्बुद्धिर्देवान् द्वेष्टि सहायवान् ।
क्रियतां मर्त्यरूपं मे वाराहं मां विधार्यताम् । । ३७ । ।
महात्मा स च दैत्येन्द्रो बलवान् धार्मिकश्च ह ।
न च शक्यो मयैकेन हन्तुं सत्यं ब्रवीमि वः२७ । । ३८ । ।
सर्वदेवमयं रूपं वाराहं२८ नन्दिवर्धनम् ।
तत्समास्थाय हन्तास्मि दैत्येन्द्रं तं महाबलम् । ।३ ९। ।
तेन रूपेण सर्वेषामस्माकं देवसत्तमाः ।
ब्रह्मा ब्रह्मत्वमापन्नः प्रस्थाता यम इत्यपि । ।8.97.४० । ।
उद्गाता तत्र वरुणो हिरण्याक्षस्ततः पशुः ।
शमिताहं सुरश्रेष्ठा यशस्तस्य महाबलः । ।४१ । ।
अद्य पश्यन्तु भूतानि मम तस्यैव चोभयोः ।
-- - - - - - - - - - - - - - - । ।४२ । ।
अरण्ये वासिताहेतोर्मत्तयोर्गजयोरिव ।
तस्य तद्वचनं श्रुत्वा गर्जितं च महात्मनः । ।४३ । ।
हर्षोत्फुल्लेक्षणाः सर्वे निरीक्षन्तः परस्परम् ।
मेनिरे हत इत्येव दैत्येन्द्रं सुमहाबलम् । ।४४ । ।
तेषां तदुत्फुल्लकुशेशयप्रभं वक्रेक्षणं२९ चारुतरावभासकम् ।
हतः स दैत्यो नरसिंहरूपिणा यथा पुरा तस्य गुरुर्महाबलः ।।४५। ।
इति स्कन्दपुराणे हिरण्याक्षवधोपायो नाम सप्तनवतितमोध्यायः

२७ ते - ख. । २८ वराह - घ. । २९ चक्रेक्षण - घ ।

530
सनत्कुमार उवाच
अथ ते सुरशार्दूलास्तस्य रूपं प्रचक्रिरे ।
 . .. . .. . . . ।
सप्तलोकमयं तस्य शरीरं चक्रुरीश्वराः ।।१ ।।
अस्थीनि पर्वताः सर्वे नद्यो१ नाड्यश्च तस्य तु ।
रुधिरं चाब्धयः२ सप्त कफपित्तानिला गुणाः३ ।।२।।
पुरीषं चाप्योषधयो धर्मो रेतः४ कृतोस्य तु ।
मूत्रं तस्याभवन्मेघा वायवः सप्त कोष्ठगाः ।। ३ ।।
शिरस्तस्याभवन् साध्या रुद्रो मूर्धानमास्थितः (?) ।
ललाटे तस्य धर्मोभूत् नासिका वायुरात्मवान् ।।४।।
सूर्याचन्द्रमसौ नेत्रे श्रोत्रे तस्य दिशोभवन् ।
भ्रुवोस्तस्याभवन् प्राणा अहोरात्रं च पक्ष्मणी५ । ।५।।
आस्यं तस्याग्निरभवत्६ वडवा मुखसंस्थिता ।
ओष्ठेभूदन्तरिक्षं च दन्ताश्च भुजगाभवन् ।।६। ।
चत्वार्यस्त्राणि दंष्ट्राश्च कृतानि सुमहान्ति वै ।
अस्त्रं पाशुपतं पूर्वं द्वितीयं चक्रमेव च । ।७।।
ब्रह्मदण्डं७ तृतीयञ्च चतुर्थं ब्रह्मणः शिरः ।
ग्रीवा तस्याभवत्सोमो रुद्रः स्कन्धे च संस्थितः ।।८।।
गण्डे चापि तथादित्या हस्तौ८ रुद्रैश्च निर्मितौ ।
अंगुल्यस्तस्य कीर्तिश्च लक्ष्मीः सिद्धिस्तथैव च । ।९।।
 - - - - प्रवृत्तिश्च९ नखाश्चास्त्राणि सर्वशः ।
यमदण्डः कालदण्डो मृत्युदण्डस्तथैव च । ।8.98.१ ० ।।
रुद्रदण्डश्च चत्वारो बाहुपादाः१० कृताः प्रभोः११ ।
साध्या देवो उरस्तस्य हृदयं सोम इत्यपि ।। ११ । ।

१ वशा - घ. । २ चान्तराः - घ. । ३ गुणं - घ. । ४ चेतः - घ. । ५ पक्षिणी - घ. । ६ तदग्निरभवत - घ. । ७ ब्रह्मदत्तं - घ. । ८ हनू (?) । ९ प्रवृत्तिश्च निवृत्तिश्च (?) । १० वाहपादाः - घ. । ११ प्रभुः - ख,... वतु - घ. ।

531
उदरं तस्य भूतानि महान्ति ऋषिसत्तम१२ ।
नाभिस्तस्याभवन्माता अदितिर्ब्रह्मसत्तम ।।१२।।
शिश्नं प्रजापतिस्तस्य मित्रोपानेभवत् स्थितः ।
वसवस्तस्य पार्श्वेषु तथा धर्मश्च पृष्ठतः ।।१३ ।।
मृत्युः कालो यमश्चैव हस्तपादतलाश्रिताः१३ ।
अश्विनौ तस्य लाङ्गूलं पितरः सन्धिषु स्थिताः ।।१४।।
नियतिः कालपाशश्च१४ कृतान्तकलहावपि ।
व्याधयश्चापि ये केचिद् दृष्टिं तस्य समाश्रिताः ।। १५।।
यक्षाश्च राक्षसाश्चैव गन्धर्वाः पन्नगैः सहः ।
सर्वे त्वचं समाश्रित्य संहताः१६ समवस्थिताः । । १६ ।।
तथा सर्वाणि छन्दांसि वेदा इष्टय एव च ।
रोमकूपेषु सर्वाणि तानि तस्थुः पृथक् पृथक् ।।१७। ।
दानानि नियमाश्चैव यमाः सर्वाश्च मातरः ।
स्थानाभिमानिनो देवाः पशवः पक्षिणश्च ह । । १८।।
सर्वे रोमाणि तस्यासन् वराहस्य महात्मनः ।
अङ्गुल्यस्तस्य पादाभ्यां विश्वेदेवाभवँस्तथा१७ ।।१९।।
भृगवोङ्गिरसश्चैव देवास्तस्याभवंस्तदा ।
रोमान्तरेषु ऋषयः सर्वेष्वङ्गेषु संस्थिताः । ।8.98.२० ।।
एवं समभवद् व्यास वराहो नन्दिवर्धनः ।
स भाति तेन रूपेण द्यां भुवञ्चापि संस्पृशन् । ।२१।।
पुरा स्वयंभूर्भगवानुद्धरिष्यन् महीमिमाम् ।
स रेजे तेन रूपेण दीप्तिमान् मधुसूदनः । ।२२। ।
निशायां संप्रदीप्तो हि हिमवानिव पर्वतः ।
ततस्तमृषयस्सर्वे तपसा महता तदा ।।२३ ।।

१२ ऋषिसत्तमाः - घ., ऋषिसत्तमः - - ख. । १३ गन्धर्वाः पन्नगैः सह - घ. । १४ कालसङ्गश्च - ख. । १५ यमाः सर्वाश्च मातरः - ख. । १६ तत्र सर्वे... त्वंबुदाः - घ. । १७... स्तदा - ख. ।

532
स्वेन स्वेनाभिसंप्राप्य तेजस्तस्याभ्यदीपयन् ।
स विष्णुस्तेजसा तेषामृषीणां परमौजसाम् । ।२४। ।
संप्रजज्वाल कालान्ते युगान्ताग्निरिवापरः ।
नादं कृत्वा च सुमहच्चालयानो महीतलम्१८ । ।२५।।
उवाच तान् ऋषीन्सर्वान् हन्मि दैत्यं सुरद्विषम् ।
हत्वा तं दैत्यराजं वै सिंहं शरभराडिव ।।२६।।
मोचयिष्ये महीं विग्नां१९ प्रविश्याद्य रसातलम् ।
स्वस्थाने स्थापयित्वा च दत्वा राज्यं दिवौकसाम्
जपध्वं विजयायाद्य शिवाय च तपोधनाः ।।२७। ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
उवाच बलमाधत्स्व दैत्योसौ सुमहाबलः ।।२८।।
आस्थाय यत्नं सुमहदप्रमत्तः सुरेश्वर ।
जहि तं दैत्यराजं वै कृच्छ्रमेतन्मतं मम ।।२९।।
न तस्य सदृशो दैत्यो हिरण्यकशिपुः पुरा२० ।
महाबलोयं दैत्येन्द्रस्तपोयोगसमन्वितः ।।।8.98.३०।।
ततो देवस्तदा व्यास भगवान् गोवृषध्वजः ।
सुरैः सब्रह्मकैस्तत्र ऋषिभिश्च तपोधनैः ।।३ १।।
उक्तः प्रणम्य देवेशो विष्णुमाप्यायय प्रभो ।
तेजसा स्वेन सर्वेश यथा हन्यात् सुरद्विषम् ।।३२।।
२१भगवानुवाच
तस्मिन् काले सुरेशाभाः२२ सर्वे२३ तेजोमयं२४ हरिम् ।

प्रवेक्ष्यन्ति२५ त॑तो दैत्यं क्षिप्रमेव निहंस्यति ।।३३ । ।

१. महीमिमां ख । १९ विप्रां - ख. । २० सुराः - ख. । २१ श्री - घ । २२ सुरेशाना - ख. । २३ सर्वं - ख, सर्वं - घ । २४ महद् - घ । २५ प्रवेक्ष्यति - ख ।

533
सनत्कुमार उवाच
ततो ब्रह्मा स्वयं तस्य रक्षां चक्रे महात्मनः ।
यथावत्तां निबोधाद्य वदतो मे शुचिव्रत । ।३४। ।
ब्रह्मोवाच
रक्षन्तु त्वां विधाता च धाता च ऋषिसत्तम२६ ।
रुद्रः स्रष्टा च सर्वेषां कर्माणि तव युध्यतः । ।३ ५ ।।
कपाली तालकेतुश्च गन्धाधिपतिरेव च ।
रसस्याधिपतिश्चैव सूक्ष्मरूपश्च रक्षतु । ।३ ६।।
स्पर्शवेत्ता च यः सूक्ष्मो नादवाँश्च२७ महामनाः ।
इन्द्रियाधिपतिश्चैव नीललोहित एव च । ।३७।।
रक्षतु त्वां महायोगी बीजाधिपतिरेव च ।
बीजाधिष्ठानमालश्च चेतनापतिरेव च ।।३८।।
प्रवृत्तेश्च निवृत्तेश्च कालवेत्ता च यः प्रभुः ।
धर्माधर्मगतिश्चैव कर्तृणां फलदः प्रभुः । ।३९। ।
गुणानां वृत्तिदो यश्च अनपेक्षश्च कर्मसु ।
नियमस्य च यः कर्ता कर्मवेत्ता च कर्मणाम्२८ ।।8.98.४० । ।
विना च करणैर्यश्च२९ करणार्थं प्रवर्तते ।
सर्वज्ञः सर्वगो यश्च३० अधिष्ठाता च यः स्वयम् ।।४१ ।।
येन नाधिष्ठितं किञ्चित् कथञ्चिन्नापि३१ विद्यते ।
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँश्चैव सर्वतोगतिरव्ययः । ।४२ । ।
ऐश्वर्यमक्षयं यस्य३२ सहस्राकृतयस्तथा३३ ।
यः स्रष्टा सर्वभूतानां तत्वानाञ्च महायशाः । ।४३। ।
संसारस्यास्य यः कर्ता३४ तथैव च३५ निवर्तकः ।
यं सांख्या नाभिजानन्ति योगिनो विदितागमाः ।।४४। ।

२६ ऋषिभिस्ततः - घ., ऋषिभिः स्तुतः - ख. । २७ देवताँश्च - ख. । २८ यः प्रभुः - घ. । २९ यस्य - ख. । ३० सर्वगोपश्च - ख. । ३१ कथञ्चिदपि - ख. । ३२ तस्य ख. । ३३ स.. कृतन्तथा - ख. । ३४ संसारस्यापकर्ता च - घ. । ३५ तथा चैव - ख. ।

534
तुष्टयो ज्ञातयो नित्यं मायया मोहयन् प्रजाः ।
ओतप्रोतानि चैतस्मिन्३६ तत्त्वानि सुमहात्मनि३७ । ।४५।।
पुरुषादीनि सर्वाणि यो व्याप्तश्च न केनचित् ।
यमज्ञात्वा न मोक्षोस्ति येन बद्धमिदं जगत् ।।४६।।
येनाहं सर्वलोकानां कृतः पूर्वं प्रजापतिः ।
त्वं यज्ञश्चैव विष्णुश्च येन सृष्टाः३८ पुरातन ।।४७।।
स ते बलञ्च सुमहदूर्ज्जं तेजश्च यच्छतु ।
अकामलब्धां सर्वत्र स्मृतिं चास्त्रे महामनाः ।।४८ । ।
रक्षां च सर्वगो देवो युध्यतस्ते प्रयच्छतु ।
कृतरक्षो मया सम्यग्गच्छ दैत्यं विनाशय ।।४९। ।
सनत्कुमार उवाच
ततस्तं स्तुतिभिर्विप्रास्तस्य रोमान्तरस्थिताः ।
अस्तुवन् वाग्भिरिष्टाभिर्देवाश्च बहुमानतः ।।8.98.५० ।।
सर्वाणि च जयेत्यूचुर्भूतानि विविधानि च ।
अनाहतास्ततो व्योम्नि देवदुन्दुभयः शुभाः ।।५१ ।।
विनेदुस्तत्र दिव्याश्च वराहो यत्र सोभवत् ।
सुरभीणाञ्च पुष्पाणां वराहोपरि सर्वतः ।
वृष्टयः पेतुरत्यर्थं देवानां हर्षवर्धनाः ।।५२।।
ततः सिद्धिरिति प्रोच्य३९ कृत्वा रुद्राय वै नमः ।

जपञ्जयावहं रुद्रं स ययौ४० वरुणालयम् । ।५३ । ।
स सेव्यमानो मुनिभिस्तपोधनैस्तथा शकुन्तैर्बहुभिर्जयावहैः ।
मृगैश्च दिव्यैर्बहुभिः प्रदक्षिणैर्जयाय देवः प्रययौ महार्णवम् ।।५४।।
इति स्कन्दपुराणे वराहस्य वरुणालयगमनं नामाष्टनवतितमोध्यायः

३६ ये तस्मिन् - ख. । ३७ सुमहात्मना - ख. । ३८ सृष्टौ (?) । ३९ प्रोक्त्वा - ख. । ४० प्रययौ - ख. ।

535
सनत्कुमार उवाच
स संप्रयातो धर्मात्मा नर्दमानो यथा घनः ।
सर्वलोकमयो देवो वराहो नन्दिवर्धनः ।। १ ।।
अपश्यत् सागरञ्चैव संप्राप्यातिबलस्तदा ।
नर्दमानं यथा मेघं लीयमानं मृगेन्द्रवत् । ।२। ।
नर्तकीमिव नृत्यन्तं वल्गन्तं चैव योधवत् ।
मण्डलैर्बहुभिश्चित्रैश्चरन्तं वसुधां तथा । । ३ । ।
नियुद्धकुशलं यद्वद् गदायुद्धविशारदम् ।
तदा तद्बहुधा चित्रमपश्यन्नन्दिवर्धनः ।।४। ।
स तमर्घेण देवेशं सर्वलोकमयं विभुम् ।
पूजयामास देवाँश्च ऋषयो ये च संगताः ।।५ ।।
स जयाय प्रगृह्यैन१मनुमान्य महोदधिम् ।
निवर्त्य सर्वभूतानि२ प्रविवेश महार्णवम् । ।६। ।
विगाहमानः संक्रीडमर्णवं विबभौ विभुः ।
सरः सुमहदासाद्य यथा मत्तो महागजः ।।७। ।
संप्रविश्य सुदूरञ्च सोदृश्यः समपद्यत ।
भूमिलेखावृतः३ सूर्यो यथा संपूर्णमण्डलः ।।८।।
ततोन्तर्जलमाविश्य क्षोभयाणो महार्णवम् ।
जलचन्द्रकवद् व्यास अदृश्यत स लोकपैः । ।९। ।
तिमिन्तिमिङ्गिलञ्चैव तिमिङ्गलगिलानपि ।
तथैव४ तद्गिलानन्यान् गर्दभान् हस्तिनो ह्यपि ।।8.99.१ ० ।।
मकराँश्चैव शंखाँश्च तथैवाश्वमुखानपि ।
तथा वै पक्षिसंकाशान् मानुषानपि चापरान् ।।१ १ । ।
रथचक्रप्रकाराँश्च सिंहव्याघ्रमुखानपि ।
शरभर्क्षविडालास्यान् मत्स्यान्बहुविधाँस्तथा ।। १२।।

१ प्रगृह्ये... - ख. । २ निर्वृत्त्यै सर्वभूतानां - घ. । ३ धूमिलेखावृतः - घ. । ४ तथा वं - ख. ।

536
भ्रामयन्सुमहातेजा जगाम सुमहाबलः ।
कुतूहलात्तमाविश्य५ केचिदाघ्राय चैव हि ।।१ ३ ।।
दर्शन्ति मत्स्या दीप्तास्याः शतशोथ सहस्रशः ।
स प्रदक्षिणमावृत्य दिव्यं हयशिरः शुभम् । ।१४ ।।
क्षणान्मैनाकमध्येन गत्वा भोगवतीमपि ।
वरुणस्य पुरीं गत्वा पयोनाथस्य धीमतः । ।१ ५।।
पर्जन्यं दिग्गजं प्राप्य कृत्वा चापि प्रदक्षिणम् ।
सुरभीपुरमासाद्य गा दृष्ट्वा६ चैव सुप्रभाः७ ।। १ ६। ।
याः क्षरन्ति सदा व्यास सुधाममृतमेव च ।
क्षीरोदं तत्सरो दिव्यं फेनपा यत्र ते द्विजाः । । १७।।
तस्मिन् सरसि तत् पीत्वा यशोमृतसमप्रभम् ।
पूजितः फेनपैः सम्यक् तां रात्रिं तत्र सोवसत् । ।१ ८ ।।
उषित्वा तत्र सोगच्छत् कङ्कस्य पुरमव्ययम् ।
वासुकेश्च पुरं प्राप्य तक्षकस्य च धीमतः ।।१ ९। ।
तत्र८ शेषस्य देवेशो विन्दतामरतामिति९ ।
रम्यां मनोज्ञां दिव्याञ्च स्वर्गादपि च तां वराम् । ।8.99.२० ।।
श्रुत्वानन्तश्च तं राजा१० अर्घेण समपूजयत्११ ।
प्रणम्य बहुमानाच्च उपामन्त्रयदव्ययः । ।२१ ।।

तं पूजयानँ मधुहा प्रीत्या परमया युतः ।
उवाच लोककार्यस्य न विघ्नं कर्तुमर्हसि । ।२२।।
महत्कार्यमिदं देव कर्तव्यं त्रिदिवौकसाम् ।
भूयो वयं त्वया सार्धं करिष्याम यदीच्छसि ।
मा च कालोयमुद्युक्तो दैत्यस्य न भवेदिति ।।२३ ।।

५ कुतूहलात्समाविश्य - ख. । ६ गांदृष्ट्वा - ख. । ७ सुप्रभां - ख. । ८ ततः - घ. । ९ विदिता - ख., विदतां रमनीमिति - घ. ।
१० ज्ञात्वा - घ. । १ । च स पूजयत् - ख. ।

537
सनत्कुमार उवाच
ततो विसृज्य तं नागं रसातलमुपागमत् ।
तत्र सागरपो१५ दैत्यः सुप्रभोन्तर्जलेचरः ।।२४।।
अपश्यतं तदायान्तं हिरण्याक्षपुरं प्रति ।
गात्रेषु देवान्सूक्ष्माँश्च वराहस्यान्ववैक्षत ।।२५।।
तस्मिन्तच्चास्य रूपेण भयान्नैनमुपागमत् ।
तेजसा चापि विष्टब्धो दुरात्मा तस्य सोसुरः ।।२६।।
आवेदयिष्यन्तस्मै हि हिरण्याक्षाय सत्वरम्१६ ।
चक्रे वेगं प्रतिपुरं वराहस्य तदाग्रतः ।।२७।।
स यातुकामो१७ दितिजाधिराजं वराहरूपं तमनन्तमन्तकम् ।
जगाम१८ दैत्याय स जीवितान्तं यथानिलः प्रद्युतदानमाल्यवान् ।।२८।।
इति स्कन्दपुराणे वराहस्य सागरप्रवेशो१९ नामैकोनशततमोध्यायः

सनत्कुमार उवाच
तस्मिन्भये समापन्ने विनाशभयसूचकाः ।
हिरण्याक्षपुरे घोरा उत्पाता ह्यभवन् तदा ।।१ ।।
अट्टालका विशीर्यन्ते देवताश्चाहसन्निव ।
शिवा नदन्ति दैत्यानां गृहेषु च सभासु च ।।२। ।
अकस्माच्चाभवत्तत्र पौराणां भैरवो रवः ।
पादपाश्च विना वातं पतन्त्युन्मूलिता भुवि ।
भास्करश्च१ कबन्धाभो२ युद्धञ्चाप्यत्र दृश्यते ।।३ । ।
सनत्कुमार उवाच
एतान्यन्यानि च तदा निमित्तानि महान्ति च ।
संलक्ष्य राजा दैत्यानामसुरानिदमब्रवीत ।।४।।

१५ सागरको - ख. । १६ सो त्वरन् - ख. । १७ हन्तुकामो - घ. । १८ जगाद (?) । १९ वराहगमनाध्यायः - घ. ।
१ भास्कराश्च - ख. । २ कबन्धान्धो - ख. ।

538
निमित्तान्यभि३ लक्ष्यन्ते महान्त्यसुरपुङ्गवाः ।
नैव तान्यनिमित्तानि दृश्यते च भयं महत् ।।५।।
हृतराज्याश्च देवेशा न ते स्थास्यन्ति निष्क्रियाः ।
नूनन्ते किञ्चिदाश्रित्य कुर्वन्ति समरं प्रति ।।६।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा प्रह्लादोसुरसत्तमः ।
प्रणम्य पितरं सम्यगिदं वचनमब्रवीत् ।।७।।
प्रह्लाद उवाच
सुतोहं तव दैत्येन्द्र पिता त्वं मम धर्मतः ।
न तवास्मद्विधैर्बुद्धिराधेया दैत्यसत्तम ।।८।।
तथापि तु वयं प्रीत्या इच्छन्तो राज्यमक्षयम् ।
वक्ष्यामो बालभावेन तन्न५ संस्मर्तुमर्हसि ।।९।।
अद्य रात्रौ मया स्वप्ने दृष्टोसौ नररूपवान् ।
वराहरूपं संगत्य भवन्तं निगृहीतवान् ।
न तथा तद्यथा स्याद्धि तथा त्वं सम्यगाचर ।।8.100.१०।।
हिरण्याक्ष उवाच

एवमेतन्न सन्देहो भवान्यद्धर्मतस्तदा६ ।
दृष्टवाँस्तद्यथातत्त्वमेवमेतन्न संशयः ।।११।।
अहमद्य गतः स्वप्ने त्र्यम्बकस्य निवेशने ।
ततः स८ मामिदं प्राह भगवान् गोवृषध्वजः ।।१२।।
एतावद् भवतो दैत्य राज्यमिन्द्रत्वमेव च ।
यच्छेमां९ त्वं प्रियां१० पुत्र सहयक्षाय सुप्रभाम् ।।१३।।
क्षिप्रमेतां प्रयच्छाद्य मुकुटं हारमेव च ।
केयूराङ्गदकं चैव खड्गं रुचकमेव च ।।१४।।

३ निमित्तान्यपि - ख । ४ तानि - ख । ५ तन्नः - ख. । ६ भगवान्धर्मतस्सदा - ख. । ७ ततः - ख. । ८ नतम्म (म्स?) - ख. । ९ यच्छैनां - ख । १० प्रियं - ख ।

539
कटके शासनञ्चैव दुकूलञ्च तथोतरीम् ।
अनिच्छतो मे११ संगृह्य शक्रस्य प्रददौ तदा ।।१५। ।
ततो मां भगवानाह मत्समीपे त्वया सदा ।
कल्यं१२ प्रभृति वस्तव्यं किन्ते१३ राज्येन दैत्यप ।।१ ६।।
यदेतद्धि मया दृष्टं न तन्मिथ्या१४ भविष्यति ।
सर्वथा नास्ति१५ दैत्यानां मयैकेन भवं त्विह१६ ।।१७।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा दैत्याः सर्वे तदाब्रुवन् ।
मिथ्यैतत् स्वप्नगतयो मिथ्या राजन् प्रकीर्तिताः । । १८ ।।
अन्धकः सहितोस्माभिर्योत्स्यते दैवतैः१७ सह ।
योवध्यः सर्वभूतानां बलवानजितश्च ह । ।१९।।
तमाश्रित्य वयं सर्वे योत्स्यामो विज्वराः सुखम् ।
मा युध्यतु भवान्सार्धं सुरैः१८ सुरबलार्दन ।।8.100.२० ।।
त्वयि प्राणाः स्थितास्सर्वे दैत्यानां दानवैस्सह ।
त्वयि जीवति जीवामस्त्वञ्चेन्नासि१९ कुतो२० वयम२१ ।
त्यक्त्वा वाद्य पुरं२२ सर्वे प्रविशाम महोदधिम् ।।२१।।
सनत्कुमार उवाच
तेषां तद्वचनं श्रुत्वा हिरण्याक्षो महासुरः ।
प्रहस्य तानिदं२३ सम्यगुवाच वदतां वरः ।।२२।।
स्रष्टा यः सर्वभूतानां दाता हर्ता तथैव च ।
विहितं तेन यत् पूर्वं तत्कुर्यात् कोन्यथा पुनः ।।२३।।
यदि मृत्युरवश्यं मे विहितस्तेन दानवाः ।
अयुध्यमानमासीनमेत्यासौ मा वधिष्यति ।।२४।।

११ ते - ख । १२ काल्यं - ख. । १३ दिव्ये - ख. । १४ नैतन्मिथ्या - ख. १५ स्वस्ति घ.। १६ भवत्विह - घ., भवन्तिह - ख. । १७ देवतैः - ख. । १८ शरैः - ख. । १९ त्वन्नास्ति ख., त्वन्नासीद् - घ. । २० गता - घ. । २१ भयं - ख । २२ वान्यपुरं - ख. (?) । २३ तामिदं ख.।

540
वीक्षध्वं तन्मम स्थानं सर्व एवासुरोत्तमाः ।
यत्र तिष्ठन्तमभ्येत्य न मा मृत्युर्नयिष्यति२४ ।।२५।।
अथवा नैव मृत्युर्मे विहितस्तेन दानवाः ।
युध्यमानं यथा पूर्वं नैव मां स नयिष्यति२५ ।।२६।।
मादृशः कथमेवैतत् कुर्यात् सद्भिर्विगर्हितम् ।
बाले मृत्युं समावेश्य२६ ततश्चात्मान्तरेक्षणम् ।।२७।।
रणे रिपूणां कदनं कृत्वैकश्चाप्यनेकशः ।
पृष्ठं दद्यात् पुनस्तेषां मादृशो दानवेश्वराः ।।२८।।
विप्रचित्तिरुवाच
देवा ह्यनेकशः सर्वे जिता नष्टाश्च सर्वशः ।
पुनश्चायान्ति न यथा२७ तथा सर्वे यतामहे ।।२९।।

हिरण्याक्ष उवाच
अमरं देवता ज्ञात्वा स्वमात्मानं सुदुर्लभम्२८ ।
जीवन्तः सुचिरेणापि भूयो लप्स्यामहे वयम् ।।8.100.३ ० ।।
राज्यमेव विजानन्तो विपलायन्ति२९ नित्यशः ।
अस्माकममरत्वन्तु नैवास्त्यसुरसत्तमाः ।।३१ ।।
नष्टानामप्यतोस्माकं जीविताशा न विद्यते ।
तस्यामसत्यां पश्याम यत् प्राप्तं तद्धि नो वरम् ।।३२।।
मा कृथा नाशने बुद्धिं युद्धे बुद्धिः स्थिता मम ।
सुयुद्धेन३० रणे प्राणा यान्तु मा क्लीबवद्धि नः ।।३३।।
सनत्कुमार उवाच
तेषामेवन्तु वदतां सभायां सुरविद्विषाम् ।
वेगश्वासा३१भिसंरब्धो दानवः प्रत्यदृश्यत ।।३४।।

२४ मृत्युर्मा नहि नेष्यति (?) । २५ स हि नेष्यति (?) । २६ समाविश्य - ख. । २७ तथा - ख. । २८ सुदुर्लभाम् - ख. । २९ पलायन्ते च (?) । ३० तु - ख. । ३१ श्वासवेगा (?) ।

541
सम्यक् सन्त्रासित इव मृगराजेन निर्जने ।
करीव सिंहपादेन गरुडेनेव पन्नगः । । ३ ५। ।
तदा स बद्धमुष्टिश्च दिशः सर्वा विलोकयन् ।
वेगेन निःश्वसन् गत्वा द्वारि द्वाःस्थमभाषत । ।३ ६।।
दानव उवाच
आवेदय सभापाल राज्ञे प्राप्तोनलः स्वयम् ।
सागरारक्षिकः क्षिप्रमकालं शीघ्रमुच्यते ।।३७।।
ततः प्रहस्य तं द्वाःस्थः सभापालोभिभाष्य तम्३२ ।
उवाच मा भीर्भवतु कुतो भीस्ते३३ महासुर ।।३८।।
नेह सिंहोस्ति चोरो वा नान्यः श्वापद इत्यपि ।
न गावः पशवोन्ये वा भयं त्यज समाश्वस । ।३ ९।।
स तथा तेन संप्रोक्तो३४ शान्तश्चासुरसत्तमः३५ ।
क्रुद्धः शब्दं तदा चक्रे महान्तं नादयन् दिशः ।।8.100.४० ।।
. . . .. . .. . . . .. .. . . .. . . .. . . .. . ।
तेभिगम्य तदा व्यास राजानं दानवेश्वरम् ।
ऊचुरेष किमप्यद्य दृष्टं कथयतेसुरः । ।१ । ।
स राजन्३६ सम्यगाश्वास्य३७ दैत्यमेनं महायशः३८।
दानवानां हितार्थाय पृच्छस्व दितिनन्दन । ।४२। ।
तेषां स राजा विप्रेन्द्र दानवानां महाबलः ।
श्रुत्वा तं दानवं व्यास इदं वचनमब्रवीत् । ।४३ ।।
भयं न शक्नुते दैत्य मत्समीपेभिवर्तितुम् ।
ब्रूहि सर्वं यथादृष्टं समाश्वस्य तथातथम् ।।४४।।
सनत्कुमार उवाच
ततस्स दानवो व्यास राजानं विगतज्वरः ।
प्रणम्य प्राञ्जलिर्वाक्यमिदं सम्यगुवाच ह ।।४५। ।

३२ द्वा स्थं सभापालेति भाषितम - ख. । ३३ भय - ख. । ३४ संप्रोक्तः - ख. । ३५... पुंगबः - घ. । ३६ राजा - ख., तं राजा - ष । ३७ सम्यगाश्वस्य - ख., सम्यगाहूय - घ. । ३८ महायशाः - ख. । ३९. तिवर्तने - ख ।

542
नित्यं जयतु नो राजा दानवानां सुखावहः ।
नश्यन्तु४० विद्विषः सर्वे येस्माकमहितावहाः । ।४६।।
अहं तवाज्ञया सर्वं विचरामि दिने दिने ।
सागरान्तं महाराज पुरुषैस्सह संगतः४१ । ।४७।।
सोद्य पश्याम्यहं तत्र वराहं४२ दैत्यपुङ्गव ।
मेरुशृङ्गप्रतीकाशं ज्वलन्तमिव पावकम् ।।४८।।
तस्य गात्रेषु दृश्यन्ते४३ सूक्ष्मरूपधराः स्थिताः ।
सर्वे सुरा महाराज ऋषयश्च तपोधनाः । ।४९।।

महाबलस्त्वं राजेन्द्र देवानां भयदः सदा ।
त्वत्तोपि सुमहान् भीमस्तादृङ् नैवेह विद्यते । ।8.100.५० ।।
न दृष्टो न श्रुतो वापि वपुषा४४ दैत्यपुङ्गव ।
अहं तेनाहतो दृष्ट्या न्यपतं भूतले भृशम् ।।५१ ।।
स्रस्तहाराम्बरो भीतः कुलिशेनेव४५ ताडितः ।
ये ममानुचराश्चासन् दानवा भीमविक्रमाः । ।५२। ।
ते सर्वे तस्य वेगेन पतिता गतजीविताः ।
स एषोभ्येति राजेन्द्र तवैव नगरं प्रति । ।५३ ।।
चालयन् वसुधां सर्वां क्षोभयन् सागरांस्तथा ।
जलेचराँश्च दैत्येन्द्र जीवितैर्विप्रयोजयन्४६ ।।५४।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा प्रह्लादोसुरसत्तमः ।
उवाच दैत्यराजानमिदं वचनमर्थवत्४७ ।।५५ ।।
प्रह्लाद उवाच
यादृशं तद्वराहस्य तस्य रूपं मया श्रुतम् ।
सर्वदेवमयं राजन् वराहोप्राकृतो मतः । ।५६ ।।

४० नाशन्तु - ख. । ४१ सिंहसंगतः - ख. । ४२ वाराहं - ख. । ४३ दृश्यन्ति - ख. । ४४ मधुषा - ख., मयासौ (?) । ४५ कुलिशेनैव - ख. । ४६... विप्रयोजयत् - ख. । ४७ कोविदः (?), चोदितः - घ. ।


तस्मात्त्वया विधातव्यं यथा नो न स मोहयेत् ।
विनिश्चित्य च दैत्येन्द्र मा चिरं तद्विधीयताम् ।।५७।।
सुव्यक्तं ब्रह्मणा तस्य चक्रलाङ्गलधारिणः ।
सर्वदेवमयं रूपं वाराहमिदमीहितम् ।।५८।।
भवानवध्यस्सर्वेषां देवानां दानवेश्वर४८ ।
अशक्तैस्तैरियं माया सृष्टा वै न तदन्यथा ।।५९।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा हिरण्याक्षः प्रतापवान् ।
उवाच दैत्यान्दनुजानिदं वचनमर्थवत्४९ ।।8.100.६०।।
हिरण्याक्ष उवाच
यद्येष५० भ्रातृहन्ता मे इहायाति दुरात्मवान् ।
पूर्णः स्याद्य सुचिराद्यो मे हृदि मनोरथः ।।६१।।
अद्याहं तं दुरात्मानं भ्रातृहन्तारमाहवे ।
छित्वा छित्वा करिष्यामि बलिं पशुपतेः शुभम्५१ ।।६२।।
अद्य तस्य विचित्राक्षं शिरः कायात् सकुण्डलम् ।
उत्कृत्य दैत्या दास्यामि रुद्राय परमात्मने ।।६३ ।।
मया नासादितः पूर्वं तस्मिन्युद्धे स केशवः ।
अद्याहं तं समासाद्य नेष्यामि यमसादनम् ।।६४।।
अथ तस्मिन्हते सर्वे निराशा भयविह्वलाः ।
ममैवा५२ कार्यतां गत्वा देवा यास्यन्ति दासताम् ।।६५ ।।
सनत्कुमार उवाच
ततः स दानवाञ्छूरान् दैत्याँश्च सुमहाबलान् ।
उवाच नाम्ना विख्यातान् किङ्करान्नाम दानवान् ।।६६।।

४८ दानवेश्वराः ख.। ४९ प्रह्लादाद्याँस्तथा सर्वानिदं वचनमब्रवीत् इति तु घ पु.पाठः। ५० यद्यस्य - ख., यद्यसौ - घ. । ५१ शुभां - ख. । ५२ ममैव - ख. ।


दश तानि सहस्राणि गच्छध्वं तं महाबलाः ।
जानीत कोयमित्येवं ततो यास्याम्यहं स्वयम् । ।६७।।
ते तथोक्ता महामाया हृष्टाः सर्वे विनिर्गताः५३ ।
बद्धगोधांगुलित्राणाः सन्नद्धास्तु पदातयः ।।६८। ।
ते हेमचित्राम्बरहारसूत्रा५४ महाबला दानवदैत्यपुत्राः ।
विनादयन्तो बहुधातिकोपिता यथैव नागाः सविषा विनिर्ययुः ।।६९।।।

इति स्कन्दपुराणे किङ्करादेशनं५५ नाम शततमोऽध्यायः

५३... भिनिर्गताः - ख. । ५४ हेमचित्रा - ख. । ५५ असुरागमो - घ. ।

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/११

https://sa.wikisource.org/s/fc4
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्व पृष्ठः (अध्यायाः ९१ - १००) | आगामी पृष्ठः (अध्यायाः १११ - १२०)

सनत्कुमार उवाच
तेभिनिर्गत्य वेगेन दंशिता दैत्यदानवाः ।
वराहं प्रति संजग्मुर्मृगाः सिंहमिवातुराः१ ।।१।।
ते वराहदृशा तेन नीयमानासुरेश्वराः ।
आभान्ति व्यास सन्नद्धाः प्रोक्षिताः पशवो यथा ।।२।।
तान्निहत्य कृतान्तेन मृत्युना चावपाशितान् ।
निनाय स तदा दैत्यान् पशूनिव यथा नरः ।।३ ।।
गत्वा ते योजनान्यष्टौ उत्तीर्णं सागराम्भसः ।
वराहं ददृशुः सर्वे सिंहं क्षुद्रमृगा इव ।।४।।
ते मुहूर्तं निरीक्ष्यैव परिबभ्रुस्समन्ततः ।
विस्फारयन्तश्चापानि संक्रुद्धा दैत्यदानवाः ।।५।।
तानापतत४ एवाथ निरीक्ष्य स समन्ततः ।
वराहेन्द्रस्तदा दैत्यान् प्राहेदं सुमहाबलः ।।६।।

५३... भिनिर्गताः - ख. । ५४ हेमचित्रा - ख. । ५५ असुरागमो - घ. ।

१ सिंहानिवातुराः - ख. । २... भ्याससंबद्धाः - ख. । ३ बभ्रमुश्च समन्ततः (?) । ४ तानापतन्त - ख. ।

545
वराह उवाच
किं मा यूयं दितेः पुत्रा अभिद्रवथ५ सर्वशः ।
दूषयामि न वः किञ्चिदसुहृन्न च वो ह्यहम् ।।७।।
अथैवंवादिनं दैत्या वराहं तं सुविस्मिताः ।
पप्रच्छुः परिवार्यैव सर्वे दितिसुतास्तदा ।।८ ।
कस्त्वं वराहरूपीह तीर्त्वा सागरमूर्जिम् ।
इहागतः किमर्थं वा क्व वा गन्तव्यमित्युत ।।९।।

तेषान्तद्वचनं श्रुत्वा वराहोसौ महामनाः ।
उवाच दानवान्सर्वान् तदा जलदनिस्वनः ।।8.101.१ ० ।।
वराहोहं यथा दैत्यास्तादृग्रूपं च पश्यत८ ।
प्रचारार्थमिमं९ देशमागतोस्मि१० न संशयः ।।१ १।।
हृतभार्योहमन्येन विमना दैत्यपुङ्गवाः ।
पर्यटँस्तस्य दुष्टस्य चिन्तयामि परिग्रहम् ।।१ २।।
दानवा ऊचुः
नायं प्रचारो युष्माकं दैत्यानामयमालयः ।
अनादृत्य कथं दैत्यानिमं देशमुपागतः ।।१३।।
वयं त्वाद्य वधिष्यामः सर्वे मृगकुलाधम ।
हत्वा च त्वां हि नेष्यामः११ सर्वे दैत्येश्वरं प्रति ।।१४।।
ततस्ते दानवास्सर्वे तमायुधवरैर्भृशम् ।
निजघ्नुः पर्वतं यद्वत् मेघा वृष्ट्या समुद्धताः१२ ।।१५।।
बलवान्सोपि देवात्मा१३ वराहः सुमहाबलः ।
वध्यमानोपि तान्दैत्यानिदं वचनमब्रवीत् ।।१६।।
नह्यत्र भवतां किञ्चिदल्पमप्यसुरोत्तमाः ।
अपराधं चकाराहं न करिष्ये करोमि वा ।।१७।।

५ अभिद्रवत - ख. । ६ वाराह - ख । ७ तस्य तद्वचनं - घ । ८ पश्यथ (?) । ९ मिदं - ख. । १० ... म ( ा ) यातोस्मि - घ । ११ ते नयिष्याम. - ख. । १२ समुन्नताः - ख. । १३ अनाह (द्द?) त्व बलं सोपि - घ ।

546

किमर्थं मा शितैः शस्त्रैर्घ्नत (?) सर्वे यथा परम् ।
न हि वो१४ वैरमस्तीह न च कार्यं मया हि वः ।।१८।।
अथ मांसेन कृत्यं वस्ततो मां१५ घ्नत दानवाः ।
यथा प्राणं शितैः शस्त्रैर्युष्मत्तो न च मे भयम् ।।१९।।
एतौ करौ प्रसार्याहं संस्थितो दितिनन्दनाः ।
यदा भवन्तः स्थास्यन्ति तदा हन्तास्मि वस्सकृत् ।।8.101.२०।।
अद्य वेत्स्यथ१६ दैतेया मृगाणामिह१७ यद्बलम् ।
मत्ता यूयं सुरान् जित्वा तं मदं नाशयामि वः ।।२१ ।।
सनत्कुमार उवाच
ततः स भगवान् व्यास शक्रध्वजनिभौ करौ१८ ।

प्रसार्य तस्थावुधंचौ१९ भगवानिव शंकरः२० ।।२२।।
तेपि तद्वचनं श्रुत्वा दानवाः क्रोधमूर्छिताः ।
निजघ्नुर्भृशमायस्ता नानाशस्त्रास्त्रपाणयः ।।२३ ।।
मेघैरिव महावायुर्गरुत्मान् भुजगैरिव ।
मृगैरिव यथा व्याघ्रः शशैरिव यथा हरिः ।।२४।।
हविषेवानलो दीप्तो गजो गोमायुभिर्यथा ।
तथा स भगवान् व्यास वराहो नन्दिवर्द्धनः । ।२५।।
तैरर्द्यमानोगणयन्२१ तस्थावचलसन्निभः ।
स यदा तैः शरैश्चैव गदामुशलपट्टिशैः२२ ।।२६।।
भिन्दिपालैर्भुशुण्डीभिः करवालैरयोमुखैः ।
एतैश्चान्यैश्च बहुभिर्वध्यमानो मृगेश्वरः ।
अदृश्यो विबभौ सर्वे तदा ते हर्षिता भृशम् ।।२७।।
सनत्कुमार उवाच
तेषां निनदतां व्यास वराहो नन्दिवर्धनः ।
शस्त्रकूटाद विनिष्क्रम्य शिरांसि समपोथयत् । । २८ । ।
---
१४ हितो - ख. । १५ मा - ख. । १६ वेत्स्यत - ख. । १७ मृगाणामिव - ख. । १८ शुभौ - ख, च तौ - घ. ।
१९... वुद्यन्वै - घ, वूर्ध्वं वै (?) । २०... भास्करः - घ. । २१ अर्द्यमानो न गणयन् - घ. । २२ पट्टशैः - ख ।

547
कराभ्यां चरणाभ्याञ्च दंष्ट्राभिश्च व्यदारयत्२३ ।
तन्मुक्तैरायुधैश्चैव चिच्छेदान्यान् ररास च२४ ।।२४ ।
ते सर्वे करचरणैर्विमुक्तशस्त्रैर्दंष्ट्राभिर्मखमुखदारितास्तथैव२५ ।
संक्षीणा बहुभिरिवोपभुज्यमाना द्रव्याणामिव२६ निचयाः सदा महान्तः
इति स्कन्दपुराणे किङ्करयुद्धे एकोत्तरशततमोध्यायः

सनत्कुमार उवाच
अथ तान्निहतान् सर्वान् वराहेणाभिवीक्ष्य तु ।
एकः कृच्छ्राद्विनिर्मुक्तो ह्यश्मकं१ पुरमाविशत् ।। १ ।।
स गत्वा तत्सभाद्वारमिदं२ वचनमब्रवीत् ।
मुक्तकेशो रजोध्वस्तो रुधिरेणाभि३संप्लुतः । ।२।।
निवेदयत भो दैत्या४ दानवेन्द्राय धीमते ।

द्वाःस्थो न्यवेदयद्राज्ञे प्रेरितः सोद्यतायुधः५ ।।३ ।।
ये ते गता मृगेन्द्रं तं द्रष्टुं ह्यसुरसत्तमाः ।
ते हतास्तेन विक्रम्य सर्व एव दितेः सुताः ।।४।।
मा गाः प्रमादं दैत्येन्द्र मावमँस्था मृगेश्वरम् ।
मा च कालं प्रतीक्षध्वं७ मृगं तं मा विजानत८ ।
महानसौ न सन्देहो जेतुं शक्यो न दानवैः ।।५। ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा हिरण्याक्षो महासुरः ।
स्वयमेवाभिसंक्रुद्ध उत्पपात तदासनात्९ ।।६ ।।
सेन्द्रकेतुरिवोत्तस्थौ पयोद इव चोन्नदन् ।
भृकुटीदूषितमुखः सधूमोग्निरिव ज्वलन्१० ।।७।।
...

२३ विदारयत् - ख., विदारयन् (?) । २४ महासुरान् - घ. । २५. .. मुखरादिभिस्तथैव ख २६... मति - ख. ।

१ विनिर्मुक्तः कथंचित् - घ. । २ तत्सभाद्वारि इदं - ख. । ३ रुधिरेणापि - ख. । ४ निवेदयति तान्दैत्यो - ख. ५ पद्यार्धमिदं प्रक्षिप्तमिव घ पुस्तके पठितम् । ६ मा प्रमादमगा - ख, । ७ प्रतीक्षष्व (?) ८ मा विजानीहि तं मृगं (?), मा विजानत.. - ख. । ९ सदासनात् - ख, । १०. माग्निरिवोज्वलन् - ख


अथोत्थितं११ ततो१२ दैत्या१३ विप्रचित्तिश्च दानवः ।
प्रणम्योचुस्तदा दैत्यमिदं१४ श्लक्ष्णपदाक्षरम् । ।८।।
त्वं राजा सर्वदैत्यानां भूतानां च जयावहः ।
तिष्ठत्स्वस्मासु नोद्यन्तुं१५ स्वयमेव त्वमर्हसि ।।९।।
वयं तं सह देवैश्च ये च तस्याभिरक्षिणः ।
हत्वा मांसं महाराज छित्त्वा तस्यानयामहे । ।8.102.१ ० ।।
आदित्यानां सरुद्राणां वसूनामश्विनोरपि१६ ।
भृगूणां पितृभिः सार्धं तथैवाङ्गिरसामपि ।। ११ ।।
विश्वेदेवाश्च ये केचित्साध्या देवास्तथैव च ।
यक्षाणां राक्षसानाञ्च पिशाचानां सहोरगैः१७ । ।१ २ ।।
गन्धर्वपक्षिणाञ्चैव मनुष्याणाञ्च दानव ।

उद्युक्तानां समृत्यूनां लोकपालैस्सहैव च ।। १३ ।।
शक्ता निवारणे दैत्या वधे चैव दुरात्मनाम् ।
निग्रहे च यथाकालं स्वयं मा त्वमितो गमः१८ ।। १४।।
हतमस्माभिरुद्युक्तैः पश्याद्य दितिनन्दन ।
आज्ञापयति नो यत्र राजा स्वामी प्रजेश्वरः ।। १ ५।।
तद्वयं शिरसा सर्वे करिष्याम न संशयः ।
यदशक्ता वयं कार्यं सर्वेप्यसुरपुंगव ।
कर्तुं तस्य भवान् कर्ता मा नः पश्य परानिव ।। १ ६।।
मृगार्थे दनुदैत्यानां स्वयं राजा महाबलः ।
निर्गतो नास्ति दैत्यानां वक्ष्यन्ति१९ बलमित्युत ।। १७।।
सनत्कुमार उवाच
ततः स राजा दैत्यानां सर्वानेव समादिशत् ।
काले जलधरानिन्द्रो यथा भिन्नाञ्जनत्विषः ।।१ ८।।

११ तथोत्थितं (?) । १२ तदा - ख । १३ दैत्यो - ख. । १४ दैत्या इदं - ख. । १५ नोद्योक्तुं (?) । १६.. .मश्विनावपि - ख । १७ पिशाचाः समहोरगैः - ख, महो... (?) । १८ गतः - ख । १९ वक्ष्यन्ते - ख. ।


आज्ञां तस्य गृहीत्वैव तेपि दैत्या मुदान्विताः ।
सन्नह्यन्त महाकाया वाहनानि च भेजिरे ।। १९।।
प्रह्लादश्चानुह्लादश्च शिनिर्बाष्कल एव च२० ।
जम्भः कुजम्भो वातापी इल्वलोथ विरोचनः ।।8.102.२ ० ।।
बलिर्बाणश्च वातश्च शंभुः कश्यप एव च ।
शम्बरश्च महाकायः कालशम्बर एव च ।।२१ ।।
प्रदीप्तश्चासिलोमा च शिलिताश्चैव दानवाः ।
शरभः शलभश्चैव धुन्धुर्मूकश्च दानवः ।।२२।।
शतोदरश्च विख्यातस्तथैवान्यो ह्रदोदरः ।
तारश्च तारकश्चैव मयो कालश्च विश्रुतः ।।२३ ।।
अजको नमुचिश्चैव व्यंसः कार्तस्वनः शुभः२१ ।
इल्वको२२ विल्वकश्चैव२३ विपाकः पाक एव च।।२४।।
हस्ती दुर्योधनश्चैव विप्रचित्तिश्च दानवः ।
हयग्रीवो मुरश्चैव नरकः कुण्ड एव च ।।२५।।

शकुनिर्वृषपर्वा च शतकेतुर्महारवः ।
सरकश्चैव राहुश्च स्वर्भानुः काल एव च ।।२६।।
विराधश्च कबन्धश्च दुन्दुभिः शतदुन्दुभिः ।
शाल्वो द्रुमश्च द्वावेतौ मयूरग्रीव एव च ।।२७।।
कालनेमी मेघनादो महावीर्यस्स चान्धकः२४ ।
महिषानन्दशमकावाटिश्च बक एव च ।।२८। ।
ततो दानवशार्दूला महामाया महाबलाः ।
सर्वे सर्वास्त्रविदुषो२५ लब्धलक्षाश्च संयुगे ।।२९। ।
रथैर्हयैर्गजैश्चैव तथैवान्ये पदातयः ।
जग्मुर्वराहं तं व्यास हन्तुं देवा इवासुरम् ।। 8.102.३० ।।
स चापि हि महातेजा वराहो नन्दिवर्धनः ।
स्तुयमानस्तथात्मस्थैर्मुनिभिर्भगवान् बली । । ३१ । ।

२० ...र्बाष्कलिरेव च - घ. । २१ सुभः (?) । २२ इल्वलो - ख. । २३ विल्वलश्चैव - ख. । २४ वान्धकः - ष. । २५ समास्त्रविदुषो - ख. ।



हत्वा तान् किङ्करान्सर्वानश्मकं२६ पुरमागमत् ।
गर्जमानो यथा मेघो युगान्ते२७ वृष्टिसर्जनः । ।३ २ ।।
स गत्वा तत्तदा व्यास पुरं लोकमयः प्रभुः ।
अपसव्यं परावृत्य दक्षिणं द्वारमागमत् । ।३३ । ।
दक्षिणद्वारिभिस्तत्र दानवैर्बहुभिर्भृशम्२८ ।
कृतो हलाहलाशब्दो नगरं येन कोपितम् ।।३४। ।
यो हि भित्वा शतघ्नीश्च कवाटं कूटमुद्गरान् ।
कालचक्राणि यन्त्राणि सोवाचूर्णयदव्ययः२९ ।।३५।।
अथाजग्मुर्भृशाविष्टास्ते दानवमहारथाः ।
शस्त्रवर्षेण चोग्रेण छादयन्तो मृगेश्वरम् । ।३ ६। ।
अथ तैस्तोमरैश्चक्रै३०र्भिन्दीपालैश्च ताडितः ।
द्वारं त्यक्त्वा विनिर्गम्य३१ समां भूमिमुपाश्रितः३२ । ।३७। ।
तेपि तं भग्नमित्येव३३ विजानन्तोसुरास्तदा ।
पृष्ठतोनुययुर्व्यास तक्षयन्तो वरायुधैः । ।३८।।

स तक्ष्यमाणः शरवृष्टितोमरैर्महागदाभिर्मुशलैरयोमुखैः ।
तदाभिनिःसृत्य दितेः सुतानसावयोधयद्देवगणैरधिष्ठितः ।।३९। ।
इति स्कन्दपुराणे असुरसन्देशनं नाम द्व्युत्तरशततमोध्यायः

सनत्कुमार उवाच
अथ व्यास समां भूमिं संप्राप्तान्दानवर्षभान् ।
उवाच सर्वान्१ गम्भीरं२ मृगान्सिंह इवाजने३ । । १ ।।
भवन्तो दानवाः सर्वे दैत्याश्च सुमहाबलाः ।
मया मृगेण समरे युध्यतां तु पुनर्भृशम् । । २। ।

२६. नस्माकं - ख । २७ युगान्त - ख । २८ वृंतम - ख. । २९ सोवचूर्णयदव्यथः - । ३० अशाक्ति (त्तै )स्तोमरशतै - ख., सशक्तितोमरैश्चक्रे - घ । ३१. भिनिर्गम्य - ख । ३२ समां भूमिं निर्गत्य समुपस्थितः - घ. । ३३ भग्न इत्येव (?) ।

१ सर्वानुवाच - घ. । २ गम्भीरां (न्) - ख । ३ इवाजिरे - घ ।



न लज्जा समरेभ्येत्य४ युष्माकं दानवेश्वराः ।
अथवा न बलं वोस्ति मिथ्या देवा हि वो जिताः५ ।।३।।
बहवो बलवन्तश्च मृगश्चाहं वनेचरः६ ।
न मन्ये धर्मयुद्धे वो मतिर्दानवसत्तमाः ।।४।।
न ममास्ति धनुः किञ्चिन्न शस्त्रं च तथाविधम् ।
सशस्त्रैर्बहुभिर्येन युद्धेयमसुरेश्वराः७ ।।५ । ।
ते यूयं यदि मन्यध्वं शस्त्राणि त्यजताधुना ।
मया चैकैकशः सर्वे युध्यध्वं न्यायमास्थिताः ।।६।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा सोन्धको दानवेश्वरः८ ।
उवाच सर्वान्दैत्येन्द्रान् युगान्ताम्बुदवन्नदन् ।।७। ।
एवमेतद्यथाहायं मृगोसुरमहारथाः ।
सन्त्यजामाद्य९ शस्त्राणि योधामैकैकशस्तथा । ।८ ।।

प्रह्लाद उवाच
अबुद्धिरेषा दैत्येन्द्रा यथाहायं मृगाधमः ।
समानानां समैस्सार्धमेतद्युद्धं प्रशस्यते ।।९।।
न मृगाणाञ्च शस्त्राणि न बाहुबलमित्युत ।
वध्यन्ते च सदा शस्त्रैरेष धर्मः सतां मतः । ।8.103.१ ० । ।
ते वयं कथमुत्मृज्य स्वधर्मं दानवेश्वराः ।
मृगधर्मं समास्थाय युध्येम पशवो यथा । ।१ १ ।।
मृगाधमोयं दुर्वृत्त१० अवध्यो नास्मदादिभिः ।
- - - मा११ विचारो वो मृगे भवतु सर्वशः ।।१२।।
मायामास्थाय दुष्टात्मा कोप्ययं सुरपांसनः ।
अस्मान् वञ्चयितुं दैत्याः कांक्षते सुदुरात्मवान् ।।१ ३ । ।

४ त्यज्य - ख. । ५ जिता इति - घ । ६ वनेश्वराः - ख. । ७ तमसुरेश्वराः - ख. । ८ दानवेश्वराः - ख. । ९ सन्त्यजामोद्य - ख । १० युद्धवृत्तिः - ख । ११.. ततेनम्मा (?) - ख ।



क्व च श्रुतं वा दृष्टं वा मृगाणामसुरेश्वराः ।
मनुष्यवद्बाहुयुद्धं पुरुषैस्सह संयुगे ।।१४।।
एष विष्णुर्दुराचारो दुरात्मा दैत्यकण्टकः ।
अशक्तः स्वेन वीर्येण मायामास्थाय संस्थितः ।।१५।।
सनत्कुमार उवाच
ततस्तं बलवान् क्रुद्धो धनुषा सोसुरेश्वरः ।
शरैरवाकिरद् व्यास बहुभिर्विररास च ।।१ ६।।
अन्धको विप्रचित्तिश्च सर्वे ते दैत्यदानवाः ।
अवाकिरन् शरैस्तीक्ष्णैः शतशोथ सहस्रशः ।।१७।।
अथ दैवः सुसंरब्धै१२र्विद्धस्तै१३ र्दानवैर्भृशम् ।
शुशुभे भास्करकरैः संविद्धो हिमवानिव ।। १८।।
स वेगं बलवत् कृत्वा विधुन्वानः शरान् शितान्१४ ।
सलीलं प्रययौ देवः प्रह्लादं प्रति दानवम्१५ । । १९। ।
स गत्वा तस्य सहसा सारथिं रथमेव च ।

दंष्ट्राभिश्च कराभ्याञ्च नामशेषं चकार ह । ।8.103.२० ।।
ततो रथादवप्लुत्य हन्यमानोपि दानवैः ।
रथध्वजेन१६ तं दैत्यं मूर्ध्नि देवोभिजघ्निवान् ।।२ १ ।।
प्रह्लादोपि ततोत्पत्य१७ गदया भीमरूपया ।
आजघानोरसि क्रुद्धं विघ्नो धर्मे यथा स्थितम् ।।२२। ।
स तेनाभिहतो देवो मुक्त्वा तस्य रथं तदा ।
तमेव देशमायातः पूर्वं यत्राभवत् स्थितः । ।२३ । ।
ततोन्धको विप्रचित्तिः शम्बरः कालशम्बरः ।
शरैराशीविषाकारैर्बिभिदुर्नन्दिवर्धनम् । ।२४।।

१२ वराहो ह्यतिसंरब्धै - घ. । १३ सुसंरब्धे विद्धस्तै - ख. । १४ स्थितान् (?) । १५ दानवं प्रति (?) । १६ ध्वजदण्डेन (?), रथदण्डेन (?) । १७ ततो दैत्य ( ो ) - घ. ।

553

स विद्धस्तैस्तदा व्यास शरैः सन्नतपर्वभिः ।
भिद्यमानश्च बहुधा मण्डलानि चचार ह । ।२५।।
कदाचित् सिंहवच्चापि प्लवते नर्दतेपि च ।
शार्दूलवत् कदाचिच्च भूमावात्मानमाहवे । ।२६।।
वितत्य स महावीर्यस्तिष्ठते सायकान्१८ सहन् ।
पादेन तत उत्थाय अवकीर्य वृषो यथा ।।२७।।
पक्षिवत्स तदाकाशे मण्डलानि मृगेश्वरः ।
भ्रमित्वा निश्चलस्तस्थौ वराहः पर्वतो यथा ।।२८।।
एवं बहुविधान् मार्गान् विचरित्वा महाबलः ।
वेगेनैव कराभ्यां स रथौ जग्राह नादयन् ।।२९। ।
विप्रचित्तेश्च बलवानन्धकस्य च सुप्रभः१९ ।
भ्रामयित्वा मुहूर्तं तौ सहाश्वैः२० सहसारथी२१ ।।8.103.३०।।
भूमावुत्क्षिप्य२२ चिक्षेप बभञ्ज च पुनः पदा ।
रथास्थितौ२३ च तौ दैत्यौ पुनर्मूर्धन्यताडयत्२४ ।।३१ ।।
तौ हतावतिसंक्रुद्धौ गदे चोद्यम्य वेगितौ ।
वराहं मूर्ध्नि युगपत्समाहत्य विनेदतुः ।।३२।।
ताभ्यां स बलवान् क्रुद्धो हस्ताभ्यां रक्तलोचनः ।
गदे जग्राह यत्ताभ्यां बलादेव मृगेश्वरः ।।३३।।

ततोचरन्मण्डलानि विविधानि जनार्दनः ।
गदाविशारदः सम्यग् विचित्राणि बहून्यपि ।।३४।।
आक्षिप्तमथ विक्षिप्तमवाक्षिप्तञ्च मण्डलम् ।
उत्क्षिप्तमथ विक्षिप्तं विसृष्टं धावितं तथा ।।३५।।
परावृत्तं निवृत्तं च अर्धचन्द्रमथापि च ।
विष्टब्धं चोद्यतञ्चैव हंसोद्भ्रमितमेव२५ च ।।३६।।

१८ निस्सायकान् - ख । १९ सुप्रभौ - घ. । २० सहाश्वौ(?) । २१ सहसा (ना )यको - ख. । २२ उत्क्षिप्य भूमौ (?) । । २३ रथे स्थितौ - घ । २४ पुनर्मूर्ध्नोरताडयत् (?) । २५ हंसोद्म्रण ए (मे?) व - ख. ।



गदाविशारदः सम्यग् भ्रमित्वा मण्डलानि सः ।
गदामुपरि चिक्षेप सोन्धकस्य२६ विनादयन् ।।३७।।
अपरां विप्रचित्तेश्च बलवान्नन्दिवर्धनः ।
ते गदे तौ महावेगे२७ दानवौ सुदुरासदौ ।।३८।।
वञ्चयित्वा रणे भूयो वराहं प्रति दानवौ ।
आधावितौ यथा देशमुत्पातौ वेगिताविव ।।३९।।
तयोरापततोरेव वराहोसौ महाबलः ।
मुष्टिनान्धकमाहत्य विप्रचित्तिं पदावधीत् ।।8.103.४० ।।
अन्धकस्तस्य मुष्टिं तं विप्रचित्तिः पदञ्च ह ।
क्रुद्धौ जगृहतुर्दैत्यौ हतस्त्वमिति वादिनौ ।।४१।।
नादयानौ यथा काले कृष्णाविव बलाहकौ ।
स गृहीतस्तदा ताभ्यां महात्मा सुरसत्तमः ।।४२।।
उत्पपात वियद् वेगात् पक्षिराडिव काश्यपः ।
वियत्स्थो२८ विबभौ दैत्यावुद्वहन् स मृगेश्वरः ।।४३।।
गरुत्मानिव पक्षीशो भक्षार्थं गजकच्छपौ ।
विनद्य स तदाकाशे विधूय च करौ बली ।।४४।।
पादञ्चैवाभिचिक्षेप तौ दैत्यौ भुजगाविव ।
तौ क्षिप्तौ प्रेक्ष्य२९ तु व्यास दानवौ युद्धदुर्मदौ ।।४५।।
अभियातौ महीं घोरावशनी खाच्च्युताविव ।

असावपि च देवेशो वराहो नन्दिवर्धनः ।
रथान्वै सर्वदैत्यानां चूर्णयामास वीर्यवान् ।।४६।।
गृहीत्वा कूबरे कञ्चित् सोच्चिक्षेप महार्णवे३० ।
कञ्चित्पदा समाहत्य पांसुसायुज्यमानयत् ।।४७।।
कञ्चिद्रथं रथेनैव पदातिञ्च पदातिना ।
गजं गजेन चाहत्य स निन्ये यमसादनम् ।।४८।।

२६ सोन्धकाय - ख. । २७ महावेगो(?) । २८ वियत्स्थो - ख. । २९ प्रेक्ष - ख. । ३० महार्णवं - ख., महारथ (?) ।

555
सनत्कुमार उवाच
तेपि३१ विद्राविताः सर्वे लज्जां परमिकां गताः ।
दैत्यदानवशार्दूला विनिवृत्ता यथाबलाः ।।४९।।
एकेन३२ सर्वे विजितासुरेन्द्राः परस्परं वीक्ष्य मुखानि शूराः ।
व्रीडान्वितास्ते पुनरेव देवं वराह - - - - - - - ति । ।8.103.५० ।।
इति स्कन्दपुराणे वराहयुद्धे त्र्युत्तरशततमोध्यायः

सनत्कुमार उवाच
अथ ते तं मृगं व्यास दानवा भीमगर्जनाः ।
आयुधैः समभिक्रुद्धाः संततक्षुस्तदा१ भृशम् । । १ । ।
ते मृगा इव शार्दूलं सिंहपोतं गजा इव ।
आजघ्नुर्दानवाः क्रुद्धा वराहं शस्त्रवृष्टिभिः । ।२।।
स चापि मृगशार्दूल उपविश्य महोदधिम् ।
अपोपिबत् समाविश्य वह्निवद्वडवामुखम् ।।३ । ।
तथेरितानि तैर्दैत्यैरायुधानि सहस्रशः ।
व्यादाय सुमहद्वक्त्रं जग्रास च ररास च ।।४। ।
ग्रसित्वा तानि सर्वाणि शस्त्राणि स२ महाबलः ।
दानवान्प्रति संचक्रे वेगं सिन्धुरिवापरः । ।५।।
गजान्प्रति यथा सिंहः सिंहान् शरभराडिव ।
गरुत्मान् भुजगान् यद्वच्छार्दूलश्च मृगानिव ।।६। ।
मेघवृन्दं यथा वायुः कपोतानिव पक्षिराट् ।

तथा स भगवान् व्यास दानवान्प्रति लोकपः ।।७।।

वेगं चक्रे यथा क्षिप्रमिन्द्रियं प्रति वै मनः ।

आसाद्य च स तान्दैत्यान् महाजलदनिःस्वनः । ।८ । ।

---

३१ वै - (?) । ३२ मृगेण (?) । १ ततक्षुस्तं तदा - ख. । २ सु - ख.।

556
सर्वान् विद्रावयामास रुद्रः पशुगणानिव ।
कांश्चित् पद्भ्यां सुसंक्रुद्धो हस्ताभ्यामपरानिति ।।९।।
दंष्ट्राभिश्चापरांस्तत्र३ स प्रैषीद्४यमसादनम् ।
तुण्डेन५ शम्बरं भूमौ कालशम्बरमेव च । । 8.104.१० ।।
नरकं पादघातेन हयग्रीवं च मुष्टिना ।
उरसा नमुचिं चापि महामायं च सत्वरः६ । । ११ ।।
आहत्याहत्य संक्रुद्धः पातयामास देवपः ।
तांस्तथा द्रावयानञ्च गर्जमानञ्च सिंहवत् ।। १२। ।
विप्रचितिर्वराहं तं मुष्टिनोरस्यताडयत् ।
विप्रचित्तिं जघानोग्रं पार्श्वदेशे स मुष्टिना ।।१३ ।।
स आहतो वराहेण वराहं क्रोधमूर्छितः ।
पुनर्जघान खङ्गेन वक्षस्येनं विनादयन् ।। १४।।
अमृष्यमाणस्तं घातं वराहः सुमहाबलः ।
मुष्टिना मूर्ध्नि तं दैत्यं वज्राभेन व्यताडयत् ।। १ ५।।
स दैत्यस्तेन घातेन भ्रमित्वा चक्रवत्तदा ।
पपात भूमौ वेगेन वाताहत इव द्रुमः ।।१६। ।
पतितं तं तदाभ्येत्य विप्रचित्तिं प्रजेश्वरः८ ।
जग्राह पद्भ्यां९ देवेशो द्रावमाणं दितेः सुतम् ।।१७।।
भ्रामयित्वा ततश्चैनं१० नदित्वा११ चासकृद्बली ।
पुरं प्रति विचिक्षेप महात्मा नन्दिवर्धनः ।।१८। ।
स क्षिप्तस्तेन१२ विबभौ दानबाधिपतिर्बली ।
सबलाकतडिज्ज्वाल परिच्छिन्न इवाम्बुदः । ।१ ९।। स्रस्तहाराम्बरधर१३श्च्युतमाल्यविभूषणः ।
पपातोपरि वेगेन हिरण्याक्षस्य वेश्मनि ।।8.104.२० । ।

३ अपरान् दंष्ट्रया तत्र - ख । ४ ह्यप्रैषीद् - स्व । ५ तर्धन. - ख । ६ शम्बर - ख । ७ लक्ष्य घ। ८ मृगेश्वरः - घ. । ९ पदे जग्राह - घ. । १० ततश्चैव - ख.। । ११.. थ मर्दित्वा गर्भित्वा - घ । १२ स तेन क्षिप्तो - ख. घ. । १३ स्रस्तहराम्बरधरः - घ., स्रस्तहेमाम्बरधर - ख ।

557
सौधमट्टालकं१४ तस्य विमानमिव संस्थितम् ।
चूर्णयानोपतद् व्यास पर्वतेन्द्रमिवाशनिः । । २१ ।।
महता तस्य शब्देन हिरण्याक्षः स्वयं तदा१५ ।
वेगेनागत्य ददृशे दानवेन्द्रं दितेः सुतः१६ । ।२२। ।
सोपि दानवशार्दूलो वराहेणावपीडितः१७ ।
तेन चैव विघातेन१८ मुहूर्तमभवज्जडः ।।२३ ।।
तं समाश्वासयद्राजा तदा शीतेन वारिणा ।
तालवृन्तैश्च बहुभिर्मणिभिश्च दितेः सुतः २४। ।
समाश्वस्योत्थितञ्चैव१९ उपविष्टं वरासने ।
राजा पप्रच्छ तं दैत्यं परं विस्मयमागतः ।।२५।।
हिरण्याक्ष उवाच
केनाद्य हिमवान् दैत्य पृथिवी वा ससागरा ।
महाबलेन सहसा२० तुलिता विश्वकर्मणा ।।२ ६।।
केनाद्य मन्दरः स्रस्तो२१ मृत्युः केन पराजितः ।
केन त्वं दानवेशान क्षिप्तः को बलवान्भुवि ।।२७।।

पृथिव्यास्तुलनं यादृग् मन्दरस्य च चॉलनम् ।
मृत्योश्च मरण२२ तादृक् तवेदं क्षपणं२३ महत्२४ ।।२८।।
रुद्रेन्द्रमृत्युप्रतिमो लोकपालभयङ्करः ।
केन त्वं तुलितः संख्ये बलवानबलो२५ यथा ।।२९।।
कस्येदं बलमक्षय्यं केन बाह्वोर्बलं महत् ।
ख्यापितं त्रिषु लोकेषु दानवेश्वर कथ्यताम् ।।8.104.३ ०।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा दानवः स महाबलः ।
तमाह दीर्घं निःश्वस्य निरीक्ष्य च पुनः पुनः ।।३१ ।।

१४ सोच्चमट्टालक - घ- । १५ तया - ख. । १६ सुत - ख. । १७... ताडितः - ख. । १८ विपातेन - ख. । १९ समाश्वासोत्थितञ्चैव - ब. । २० महाबलैर्महादैत्य - ख. । २१ ग्रस्तो - घ. । २२ बन्धनं - ष. । २३ क्षिपणं - ख. । २४ मतम् - घ. । २५... नचलो - घ. ।


विप्रचित्तिरुवाच
अमानुषमिदं राजन्नतिदेवं तथापि च ।
अतिदैत्यञ्च दैत्येन्द्र न दृष्टं न श्रुतं२६ क्वचित् ।।३२।।
वराहस्य बलं यादृग् न च तादृक् क्वचित् क्वचित् ।
न हि तुल्यं प्रपश्यामि तस्य राजन्महात्मनः ।।३३।।
अस्त्रैः शस्त्रैश्च बहुभिस्तक्ष्यमाणस्य२७ संयुगे ।
नार्त्तिर्न दुःखं दैत्येन्द्र न च संज्ञा प्रहीयते ।। ३४।।
भवेत्तस्याभि२८ दष्टस्य मशकेनाप्यनिर्वृतिः ।
न दैत्यदानवै राजन् निघ्नस्य२९ भयमित्युत ।।३५।।
यथा क्षुद्रमृगान् सिंहो मण्डूकानिव वोरगः३० ।
तथा स कलयामास३१ सर्वान् दैत्येन्द्रदानवान् । ।३६।।
न तं मृगमहं मन्ये न देवं नापि चासुरम् ।
कोप्यसौ दितिपुत्राणामनयः३२ समुपस्थितः ।।३७।।
तेनास्मि मुष्टिना मूर्ध्नि ताडितो भूतलं गतः ।
गृहीत्वा सहसोत्क्षिप्तः३३ पतितस्त्वद्गृहोपरि ।।३८।।
दानवानां सदैत्यानामितरेषाञ्च दानव३४ ।
न जाने समवस्थानं मन्ये ते सर्वशो हताः ।।३९।।
अवध्यस्स महातेजा बलवान् दुर्बला वयम् ।
श्रुत्वैतद् दितिपुत्राणां हितं यत्तत्समाचर ।।8.104.४० ।।
तस्याङ्गे मुनयः सर्वे दृश्यन्ते सह दैवतैः३५ ।
कृत्या सेति मतं मेद्य तव हेतोर्विनिर्मिता३६ ।।४१।।
मनश्च तव दैत्येन्द्र युद्धाय कृतनिश्चयम् ।
विनिवर्तय तच्चैव दैत्यानां हितमाचर । ।४२।।
बलवान् सोबला दैत्या वयं मर्त्याः स चामरः ।
अजय्योसौ जिता दैत्या मा नो युद्धेन योजय ।। ४३ ।।

---

२६ श्रुतं न ख.। २७ श्च - ख २८ तस्यापि - ख । २९ राजन्हतस्य - (?) । ३० चोरगः - घ. । ३१ कालयामास (?) । ३२... पुत्राणां प्रलयः (?) । ३३ सहसाक्षिप्तः - ख । ३४ हतशेषाश्च दानवाः - घ. । ३५ देवतै । - ख. । ३६.. .पनिर्मिता - ख. ।


हित्वाश्मकं३७ पुरं सर्वे समुद्रस्तम्भमाश्रिताः ।
तिष्ठाम राजन् मा युद्ध तेन साकं पुनः कृथाः३८ ।।४४। ।
मावमंस्था मृगं दैत्य मृगोसाविति सर्वशः ।
नरसिंहोप्यभूत्पूर्वं मृगस्तद्विनिबृं हितः । ।४५। ।
- ------ .. - - - - - - - - ।
यावत्त्वं ध्रियसे दैत्य दानवानां सुखावहः ।
तावत्सर्वे सुरा जीवा भविष्यन्ति न संशयः । ।४६ । ।
मा रुशन्तु३९ दितेः पुत्रा दनोश्चैव सुबालिशाः ।
अपयाम पुरादस्मादसुरेश्वर सर्वशः । ।४७। ।
सनत्कुमार उवाच

तस्य तद्वचनं श्रुत्वा हिरण्याक्षः प्रतापवान् ।
उवाच दानवेशानं भीतं४० तस्मान्४१ महात्मनः । ।४८।।
असंशयं महात्मासौ मृगो दानवसत्तम ।
येन मन्दरकल्पस्त्वं तुलितः सुमहाबलः । ।४९ ।।
अद्य वर्षसहस्राणि दिव्यान्यसुरपुंगव ।
चत्वारि भुञ्जतो राज्यं गतानि सुमहान्ति मे । ।8.104.५० । ।
पञ्चपञ्चा (?) तु संप्राप्तन्तावद्देवाश्च नाशिताः (?) ।
सबला४२ बहुभिर्घोरैः संग्रामैरबला इव । । ५१ । ।
सोहं तथा बलोपेतो भुक्त्वा राज्य४३मकण्टकम् ।
भीतः प्रविश्य सलिलं कथं स्थास्ये भुजङ्गवत् ।।५ २ । ।
मृगरूपी स विष्णुश्च वाराहं४४ रूपमास्थितः ।
यदि स्यात्तच्च कृत्यं मे दानवेश्वर मा भयम् (?) । ।५ ३ । ।
ममापि बलमक्षय्यं तस्माच्च बलवानहम् ।
यो मे भयात् परित्यज्य स्वं रूपं मृगतां गतः । ।५४। ।

३७ हित्वास्माकं - ख. । ३८ कृशाः - ख. । ३९ नुशन्तु (नश्यन्तु?) - ख. । ४० भीमं - ख. । ४१... स्तस्य - ख. । ४२ सबाला - ख. । ४३ सर्व - ख. । ४४ वराहं - ख. ।



यो हन्याद्धस्तिनं संख्ये सिंहं शरभमेव च ।
तस्य कास्था भवेद्दैत्य मृगे ह्यस्मिन्महाबल ।।५५।।
मद्भयात् स वराहश्च सर्वदेवैरधिष्ठितः ।
मामाह्वयति४५ दैत्येन्द्र जय एव ततो हि मे ।।५६।।
भवानेव हि मे दैत्य तेन दूतः - - - - ४६ ।
त्वरता मृत्युलोकन्तु गत्वा दानवपुंगव ।।५७। ।
यदहं भ्रातृहन्तारं दानवानां भयङ्करम् ।
अहत्वा न निवर्तिष्ये शपे सत्येन दानव ।।५८।।
सनत्कुमार उवाच
सूतं ततः समादिश्य रथं सज्जमचीकरत् ।
समाश्वासयितुं पत्नीः४७ स विवेश४८ पुनर्गृहान् ।।५९।।
स तत्र ताभिः कृतमङ्गलस्तदा दितेः सुतांस्तांश्च निरीक्ष्य सर्वशः ।
गृहाण५० सर्वं रणयोग्यमुज्ज्वलं महाबलः५१ शत्रुनिवारणक्षमम् ।।8.104.६० ।।
इति स्कन्दपुराणे विप्रचित्तिपातने चतुरुत्तरशततमोध्यायः

सनत्कुमार उवाच
स धन्वी कवची भूत्वा बद्धगोधांगुलित्रवान् ।
बद्धपृष्ठेषुधी१ चैव शरी खड्गी महाबलः ।।१।।
हरिश्मश्रुश्चतुर्दंष्ट्रः शंकुकर्णो महाहनुः ।
आजानुबाहुर्दीर्घाक्षो न्यग्रोधपरिमण्डलः ।।२।।
हस्तयोः पद्मशंखौ च चक्रमत्स्यौ च पादयोः ।
दधानो जालहस्तश्च जालपादोल्पमेहनः ।।३।।
बालादित्यनिभाक्षश्च अञ्जनाचलसन्निभः ।
स निर्ययौ तदा व्यास भृकुटीभूषिताननः ।।४।।

४५ ममाह्वयति - ख, समा... (?) । ४६ प्रवेरितः - ख. । ४७ पत्यः (पत्न्यः) - ख. । ४८ प्रविवेश - ख. । ४९ सुतास्ताश्च - घ. । ५० जग्राह - घ. । ५१ महाबलं - ख. ।

१ पृष्ठबद्धेषुधी (?) ।


द्वार्यपश्यच्च सूतेन रथं समुपकल्पितम् ।
सहस्रनल्वमात्रञ्च२ हयैर्दिव्यैस्समन्वितम् । ।५ ।।
सहस्रैर्दशभिर्व्यास सर्वोपकरणान्वितम् ।

खट्वाङ्गेन च संयुक्तं ध्वजेनादित्यवर्चसा । । ६ । ।
आरुरोह जयेत्युक्तो३ दानवैर्बहुभिस्तदा ।
दिवाकरो रथं यद्वद् भगवान् तैजसां पतिः । ।७। ।
विबभौ स तदारूढो रथं तं दितिनन्दनः४ ।
सौवर्णे भाजने यद्वदिन्द्रनीलं समर्पितम् । ।८ । ।
किरीटस्त्वाबभौ५ तस्य शिरस्थः६ सुमहाद्युतिः७ ।
यथाञ्जनगिरेः शृङ्गे दावाग्निः समवस्थितः८ । । ९। ।
सञ्चोदयच्च यन्तारं स दैत्यो गमनं प्रति ।
तस्य पार्श्वेभवद् व्यास विप्रचित्तिरवस्थितः । ।8.105.१ ० । ।
केतोरिव यथा व्योम्नि प्रतिकेतुरवस्थितः९ ।
शंखभेरीमृदङ्गैश्च मुरजैर्वेणुभिस्तथा । । ११ । ।
वाद्यमानैर्ययौ राजा हिरण्याक्षोश्मकात्पुरात् ।
अग्रतः पृष्ठतश्चैव पार्श्वयोरुभयोरपि । । १२ । ।
जग्मुः सर्वेसुरा व्यास भास्करस्य यथा ग्रहाः ।
निर्गच्छमानश्च पुरात् शकुन्तान् भयशंसिनः । । १३ ।।
अपश्यद् व्यास दैत्येन्द्रो न च तानकरोदधृदि१० ।
आच्छिनत् तस्य पन्थानं भुजङ्गः कृष्णदेहवान् । । १४। ।
गृध्रश्च रक्तवक्त्रोस्य निलिल्ये ध्वजमूर्धनि ।
गृध्रश्चक्रायते चास्य रथस्योपरि११ गच्छतः । । १ ५। ।
ध्वजश्चाभज्यत महान् रथस्य सुमहाप्रभः ।
वामं चाङ्गं स्फुरत्यस्य१२ शरीरस्य मुहुर्मुहुः । । १ ६। ।

२... याच्छन्नं - ख । ३ जयेत्युक्ता ख, जयेत्युक्त्वा - घ. । ४ इतः परं तस्यपार्श्वेभवद. . यथा ग्रहाः ' इत्यादि घ पु । ५ न्त्वाबभौ - घ. । ६ शिरःस्थः - घ । ७ सुमहाद्युति - घ । ८ समुपस्थितः - घ. । ९ पद्यार्धमेतत् *जग्मुः सर्वे* इत्यतः परं दत्तं ख. पुस्तके । १० हृति - ख । ११ यथो! रि च - ख । १२ वामाङ्गं चास्फु- रत्तस्य (?) ।

562

हेषन्ते न हया दीना हस्तिनो विमदाभवन् ।
एतान्यन्यानि च बहूनि१३ दैत्यो मुनिसत्तम । ।१७।।
सोवैक्षत१४ निमित्तानि भयदान्यात्मनोसकृत्१५ ।
नातिदूरे स निर्गत्य१६ नगरस्य१७ मृगेश्वरम्१८ ।।१ ८।।
अपश्यद् दानवः१९ संख्ये युध्यमानमभीतवत् ।
सोपि दैत्यवरः श्रीमान् क्रोधसंरक्तलोचनः२० ।।१ ९। ।
विस्फारयन्महाचापं रथेनाभ्यपतद्वली२१।
वराहोपि महाबाहुर्विद्राव्य दितिनन्दनान् ।
सुवर्णाक्षं प्रति रुषा वेगेनैवाभ्यधावत । ।8.105.२० । ।
तस्यापतत एवाशु दानवः सुमहाबलः२२ ।
सर्वसन्धिषु तीक्ष्णाग्रान्निचखान२३ बहूञ्छरान्२४ । ।२१ । ।
सायकैस्तैर्विनिर्भिन्नः सर्वसन्धिषु सुव्रत२५ ।
न चचाल मृगेन्द्रोसौ विष्टब्धः समतिष्ठत२६ ।।२२।।
तं स्तम्भितं तदा व्यास दृष्ट्वा देवा२७ महाबलम् ।
विशल्यकरणैर्मन्त्रैर्विशल्यमभिचक्रिरे । ।२३ । ।
स विशल्यस्तदा देवैः कृतो मृगपतिर्महान् ।
पुनर्वेगं महत् कृत्वा जगाम दितिजं प्रति ।।२४। ।
स वध्यमानो बहुभिश्शरैर्मृगपतिर्महान् ।
दैत्येन्द्ररथमासाद्य इयेष रथमव्ययः२८ । ।२५ ।।
ग्रहीतुं नादयन् व्यास बहुधा विश्वरूपधृक् ।
यन्ता च मण्डलं कृत्वा भ्रामयामास तं रथम् ।।२६।।
प्रसारितकरं दैत्यो मृगं तं सुमहाबलम् ।
बबन्धास्त्रेण नागानां स बद्धो न्यपतद् भुवि ।।२७।।

१३ एतांश्चान्यांश्च सुबहून् स - ख. । १४ अवैक्षत - ख. । १५ नात्मनोसकृत् - ख. । १६ स्यन्दने- नाभिनिर्गत्य - घ । १७ नगरात् स - घ. । १८ महेश्वरं - क. । १९ दानवो - क ख. । २० क्रोधात् संरक्तलोचनः - क । २१. भ्यद्रवद्वली - ख. घ, एतावतिको ग्रन्थः क पुस्तके नष्टः, ख पुस्तकादुद्धृतोत्र । २२ क्रोधमूर्च्छितः - घ. । २३ चखान - क. । २४ सुबहून् शरान् - क. ख. । २५ सुव्रतः - क. । २६ समपद्यत - घ. । २७ देव - घ. । २८... मव्ययं - क. ।

563
पतितं तञ्च दैत्येन्द्रा विविधायुधपाणयः ।
विजघ्नुर्भृशमायस्ता बहुधा क्रोधमूर्छिताः ।।२८ ।।
तं बद्धं वध्यमानञ्च पतितं नन्दिवर्धनम् ।
गरुत्मान् भुजगेन्द्रेभ्यः क्षिप्रमेव व्यमोचयत् ।।२९।।
मुक्तश्च स तदोत्पत्य२९ द्रावयाणो दितेः सुतान् ।
हिरण्याक्षरथं तूर्णमभ्यधावन्महायशाः ।। 8.105.३० । ।
तं धावन्तं पुनर्दैत्यः शरेणानतपर्वणा ।
विव्याध हृदये व्यास नर्दमानो३० यथाम्बुदः ।।३ १ । ।
मृगेश्वरश्च भिन्नोसौ३१ हृदये मोहमास्थितः ।
पपात भूमौ निर्वृत्ते शक्रध्वज इवोत्सवे ।।३ २।।
ततो हाहा कृतं३२ सर्वैः समेतैर्देवपुंगवैः३३ ।
ऋषयस्तुष्टुवुश्चैनं भास्करश्चाप्रभोभवत् । ।३ ३ । ।
अथ सोप्यायितस्तत्र ऋषिभिर्ब्रह्मवित्तमैः ।
प्रतिलभ्य३४ तदा संज्ञामिदं वचनमब्रवीत् ।।३४।।
आप्याययध्वं मां क्षिप्रं मूढोहं सर्वशः सुराः ।
नाल्पवीर्येण शक्योयं दैत्यो योधयितुं रणे ।। ३५ ।।
ततस्ते दैवता३५स्सर्वे ऋषयश्च तपोधनाः ।
तपसा३६ स्वेन तं देवं सर्व एवाभ्यपूरयन्३७ ।।३ ६। ।
तस्य त्वाप्यायमोनस्य३८ ऋषिभिर्देवतैश्च३९ ह ।
बभौ रूपं युगान्ताग्निकालमृत्युसमप्रभम् । ।३७। ।
स दीप्यमानो विबभौ महात्मा४० देवैश्च सर्वैरृषिभिः स्तुतश्च ।
दीप्तस्तदा४१ भास्करसप्तकल्पो४२ लोकान्दहिष्यन्निव देवदेवः ।।३८।।
इति स्कन्दपुराणे वराहाप्यायने पञ्चोत्तरशतो४३ध्यायः

२९ ततोत्पत्य - ख. । ३० नदमानो - ख. । ३१ मृगेश्वरगतिर्योसौ - ख. । ३२ हाहा कृतः - क. । ३३ समूहे - क., मम दैत्येय (न्द्र) पुंगवैः - ख. । ३४ प्रतिपद्य - घ. । ३५ दैवता - क, ख. । ३६ सोंशेन - क. । ३७ भ्यपूजयन् - क- । ३८ त्वाप्याय्यमानस्य - क । ३९... र्देवतैश्च - क । ४० वराहो - घ । ४१ दीप्तो यथा - घ । ४२ भास्कर सप्तिकल्पो (?) - घ. । ४३ चतुरुत्तर० - घ., अध्यायः १६० ख.

564

सनत्कुमार उवाच
स तथाप्यायितो व्यास१ बलवान्भास्करद्युतिः ।
चित्रं बहु च शीघ्रं च मण्डलानि परिभ्रमत्२ । ।१ । ।
प्लुतानि३ सिंहवत् कृत्वा अवलोकयते४ सकृत् ।
पृष्ठतश्चाग्रतश्चापि५ पुनर्गजवदाचरत्५ । ।२। ।
पुनर्व्यात्ताननो भूत्वा शस्त्राणि ग्रसते रिपोः ।
पुनर्वृक्षैः शिलाभिश्च७ दानवान् स न्यसूदयत् । ।३ । ।
पुनराकाशगो भूत्वा पक्षिराडिव सोभ्रमत् ।
पुनर्जहास संक्रुद्धो ह्यशनीपातसन्निभम् ।।४।।
पुनश्च सूक्ष्ममात्मानं कृत्वा तस्थावथाग्रतः ।
एवन्तं वल्गमानञ्च नर्दमानञ्च दानवः ।।५।।
उवाच भृकुटीवक्त्रो हिरण्याक्षोभिनादयन्९
भो क्षुद्रमृग दुर्बुद्धे न त्वं मोक्षमवाप्स्यसि ।। ६। ।
हत्वा त्वाहं१० प्रदास्यामि रुद्राय बलिमोजसा ।
त्वया हतश्छद्मना मे भ्राता ज्येष्ठो दुरात्मना ।
तस्याद्य कर्मणः प्राप्तं फलं दुष्टात्मनस्तव ।।७। ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा हिरण्याक्षस्य संयुगे ।
उवाच भगवान्विष्णुः क्रोधयानो दितेः सुतम्११ ।।८ । ।
हतोसौ नरसिंहेन मया दैत्यः प्रतापवान् ।
विक्रम्य संयुगे तद्वद१२ भवतोपि वधो ध्रुवः१३ । ।९। ।

यदि त्वं गच्छसे खं वा पातालं वाप्यतः१४ परम् ।
पर्वतं वोदधिं वापि न तथापि विमोक्ष्यसे ।। 8.106.१० ।।

१ देवो - ख घ. । २ परिभ्रमन् - क । ३ प्लुतादि - क । ४ अवलोकयतो - क. ख. अवलोकयता - घ. । ५.. श्चैव व - ख. । ६... चरन् - क. । ७ पुनर्वृक्षाशलाभिश्च - ख. । ८ रवन्तं - क. । ९ निनादयन् - ख । १० च हं - क । ११ सुतान् - क. । १२ यद्वत् - ख. । १३ ध्रुवं वधः - ख. । १४ वाप्यतो - क ख. ।

565
यत्ते बलं तपो यच्च या च१५ माया तवासुर ।
तत्सर्वं निर्धमाम्यद्य तव देहात् सजीवितम् ।।१ १ ।।
हिरण्याक्ष उवाच
त्वं मया शरविष्टब्धो देवैर्मन्त्रैर्विमोक्षितः ।
बद्धं चास्त्रेण भूयस्त्वां पक्षिराजो व्यमोचयत्१६ ।।१ २।।
भूयो मृतस्त्वं१७ दुर्बुद्धे देवैरुज्जीवितो१८ भवः१९ ।
भूयस्त्वाहं२० वधिष्यामि सिंहो मृगमिवाजने ।।१३ ।।
तव का शक्तिरद्येह महेश्वरमृते२१ वरम् ।
मां स्प्रष्टुमपि हस्तेन नरस्येव हुताशनम् ।।१४।।
त्वं लोकमयमास्थाय शरीरं तैरधिष्ठितम् ।
सर्वैराप्यायितश्चैव संयुगे मामुपागतः ।। १ ५।।
अहन्तु स्वेन तपसा बलेन च समन्वितः ।
न च मां त्वं तथाप्यद्य शक्तः सिंहं यथा मृगः ।।१६।।
योद्धुं वाप्यभिसर्तुं२२ वा सह देवैर्दुरात्मवान् ।
न त्वावयोरेतदेव ह्यन्तरं सुमहत्तरम् ।।१७।।
यः स्यात्२३ कुलीनो विद्वान्वा सतां मार्गे च संस्थितः ।
सोनेनैव जितं मत्वा आत्मानं संयुगं त्यजेत् ।।१८।।
निर्घृणस्त्यक्तलज्जश्च छिद्रघाती दुरात्मवान् ।
त्वदन्यः को भवेत्तिर्यङ२४ नैतद्दैत्यस्य२५ विद्यते ।।१९।।
न त्वं मम कृतो मृत्युरहन्तु तव संयुगे ।
एते सिद्धाः प्रपश्यन्तु चारणाश्च सहस्रशः ।
आवयोरन्तरं संख्ये बहुधा युध्यमानयोः ।।8.106.२० ।।

१५ यच्च - क यश्च - ख । १६ ह्यमोचयत् - क ख । १७ मृतश्च - ख । १८ हि (ह्युजीवितो) - क । १९ भ्रमन् - क ख । २० श्चाह - क । २१ सहस्व न मृतो - ख । २२... हन्तु - ख । २३ यस्मात् - ख । २४ तिर्यो - क, निन्द्यो (?) । २५ दैत्येषु - ख ।

566
सनत्कुमार उवाच
एवमुक्त्वा हिरण्याक्षः शरैराशीविषोपमैः ।
जघ्ने वराहं संक्रुद्धो वज्राशनिसमत्विषम्२६ ।।२१ ।।
सोथ तेनार्द्यमानोपि वराहः सुमहाबलः ।
गत्वा वेगेन संक्रुद्धो रथं जग्राह नादयन् ।।२२। ।
गृहीत्वा कूबरे चापि आक्षिप्योत्क्षिप्य२७ वेगवत् ।
साश्वं ससारथिं२८ देवश्चिक्षेप च ररास च ।।२३ ।।
तस्य त्वाक्षेपविक्षेपैश्छिन्नयोक्त्राश्च ते हयाः ।
उद्भ्रान्ता रथमुख्यश्च विसन्धिः समपद्यत ।।२४।।
हिरण्याक्षो रथं त्यक्त्वा पदातिर्धनुषा तदा ।
मृगेन्द्रं मोहनास्त्रेण बलवानभ्यताडयत् ।।२५।।
मोहः समाविशच्चैव तं देवं नन्दिवर्धनम् ।
देवैर्मन्त्रप्रभावेण नष्टमोहः कृतः पुनः३० ।।२६।।
एष शस्त्रै३१ र्बहुविधैर्दैत्येन्द्रो३२ हि रुषान्वितः ।
आजघान न चाप्येनं रुजा स समयोजयत् ।।२७।।
अथैनं स३३ महातेजा वराहः प्रहसन्निव ।
वृक्षमुत्पाट्य वेगेन दैत्यं मूर्ध्नि३४ व्यताडयत्३५ ।।२८।।
तस्य तेन प्रहारेण दैत्यस्याभिहतस्य ह ।
धनुः पपात वेगेन हस्तावापश्च३६ पञ्चकः३७ ।।२९।।
ततो हाहा कृतं दैत्यैर्दानवैश्च सुदुःखितैः ।

शस्त्रैश्च बहुभिः क्रुद्धा वराहं समताडयन् ।।8.106.३ ० ।।
स हन्यमानस्तैर्दैत्यैर्व्यदाय सुमहाबलः ।
मुखं३८ सर्वाणि शस्त्राणि जग्रास३९ च ररास च ।।३ १।।
तत्तथा४० विकृतं दृष्ट्वा हिरण्याक्षः प्रतापवान् ।
शूलं जग्राह संक्रुद्धः कृत्वा रुद्राय वै नमः ।।३ २।।

२६.. सनिसमत्विषम् - क । २७ आक्षिप्तोत्क्षिप्त - ख । २८ ससादिनं - घ । २९. श्वर्तुहयाः - ख. । ३० पुन कृतः - क ख । ३१ मन्त्रै - क ख । ३२ दैत्येन्द्रं - क ख । ३३ सु (?) । ३४ दैत्यमूर्ध्नि - ख । ३५ न्यपातयत् - ख । ३६ . ञ्च - ख । ३७ ह - ख । ३८ मुखे - क । ३९ जग्राह - क. । ४० तन्तथा - ख ।


तद्युगान्तानलप्रख्यं महाशूलमतिप्रभम् ।
चिक्षेप दैत्यः संक्रुद्धो वराहाय महास्वनम् ।।३ ३ । ।
तमापतन्तं बहुधा नदन्तं ज्वालाः स्फुलिङ्गाश्च समुद्गिरन्तम् ।
दृष्ट्वा सुराः सिद्धगणाश्च सर्वे हाहेति चक्रुर्भयमूढचित्ताः । ।३४।।
इति स्कन्दपुराणे त्रिशूलाक्षेपणे षडुत्तरशततमोध्यायः

सनत्कुमार उवाच
तमापतन्तं१ वेगेन२ न शूलं३ दृष्टवान्मृगः ।
दैत्यसन्धे४ समासक्तः सर्वप्राणिभयङ्करम्५ ।।१ ।।
अलक्षितेन तेनासौ शूलेनादितिनन्दनः ।
विभिन्नो हृदये व्यास मृतकल्पः पपात ह७ ।।२।।
ततो हाहा कृतं भूतैरदृश्यैर्मुनिसत्तम ।
उद्वेलाः सागराश्चासन् भास्करश्चाप्रभोभवत् ।।३।।
उल्काः पेतुश्च सर्वत्र म्लानमाल्याः सुराभवन् ।
ग्रहाणामभवद्युद्धं विमानानि च पेतिरे ।।४।।
जजपुर्मुनयः सर्वे वराहे पतिते तदा ।
महादेवं नमस्कृत्य ब्रह्मा सस्मार तं९ तदा ।।५।।
ततो वितिमिरं सर्वमभवत् पूर्ववच्छुभम् ।
महादेवं नमस्कृत्य१० वराहश्चोदतिष्ठत ।।६।।
तेजो माहेश्वरं दिव्यं विवेश मधुसूदनम् ।
सोप्यायिततनुस्तेन शूलं निष्कृष्य माधवः ।।७।।
सहसानलसंकाशो११ बभूव स महाबलः ।
ततस्तेनैव शूलेन तं दैत्यं देवनन्दनः१२ ।।८।।

१ तदापतन्तं - घ । २ तं स्वेन - क । ३ तं शूलं - क, त्रिशूलं - ख । ४ दैत्यः - क, दैत्यैः सर्वैः - घ दैत्यसंघैः (?) । ५... भयङ्करः - क. । ६ विच्छिन्नो - ख, । ७ च - क. । ८ जजल्पुर्मुनयः - घ । ९ ब्रह्माणंस्मरण - ख., संस्कारयत् - घ. । १० प्रकृतिस्थं जगत्च्चाभूद् - ख. । ११ सहस्रानलसंकाशो- क. । १२ दितिनन्दनम् - घ. ।



जघान हृदये क्रुद्धः क्रौञ्चं शक्त्या यथा गुहः ।
स भिन्नहृदयस्तेन वराहेण महासुरः । ।९। ।
नार्तिमानभवद् व्यास कृच्छ्रे विद्वानिव स्थितः ।
मध्ये भिन्नं स तच्छूलं निष्कृष्य च विसृज्य च ।। 8.107.१० । ।
खड्गं निष्कृष्य वेगेन वराहं मूर्ध्न्यताडयत् ।
स तेन सुप्रहारेण१३ वराहो नन्दिवर्धनः । ।१ १ । ।
नार्तिमानभवद् व्यास बभूव रुधिराप्लुतः ।
नानाधातुविचित्रोसौ हिमवानिव पर्वतः । ।१ २।।
बभौ वराहो देवात्मा सर्वासुरविमर्दनः ।
पुनराहन्तुकामस्य तस्य दैत्यस्य सुव्रत । । १३ । ।
अपहस्तप्रहारेण खड्गं हस्तादपातयत् ।
अकुर्वातां ततो युद्धं नियुद्धकुशलावुभौ । ।१४।।
तौ गजाविव संक्रुद्धौ महिषाविव दर्पितौ ।
सिंहाविव च नर्दन्तौ संक्रुद्धौ वृषभाविव ।।१ ५। ।

शरभाविव चायस्तौ१४ शार्दूलाविव निर्घृणौ ।
परस्परमयुध्येतां परस्परजयैषिणौ । ।१ ६ । ।
अंकुशैर्हस्तयोक्त्रैश्च क्षेपणैरपसर्पणैः ।
मण्डलैश्च पुनश्चित्रैः कर्षणैरपकर्षणैः ।। १७।।
तलैश्च मुष्टिभिश्चैव भुजैस्स१५ चरणैरपि ।
नखैश्च दशनैश्चैव तथान्यैश्च महाबलौ । । १८ । ।
तयोरेवमभूद्युद्धमुभयोर्देवदैत्ययोः ।
अहानि दश चाष्टौ च तथान्यानि चतुर्दश । ।१९। ।
अन्यत्सहस्रमेवासीद्वर्षाणां तच्च मानुषम् ।
एष कालोभवत्तत्र ततो दैत्योबलोभवत् ।।8.107.२०।।
तं हीयमानमालक्ष्य दैत्याधिपतिमूर्जितम्१६ ।
आकाशे वागुवाचेदमशरीराति सुस्वना ।।२१ ।।

---

१३ तेनासिप्रहारेण (?) । १४ चायत्तो - क. । १५ भुजैश्च (?) । १६... मूर्जितः - क., ता (?)



शृणु देव वराहेदं श्रुत्वा चैव समाचर ।
अशक्योयं त्वया ह्येवं हन्तुं दैत्यो महाबलः । ।२२।।
अबलोयं कृतः क्रूरो ध्रुवं माहेश्वरेण हि ।
तेजसा पश्य चैवैनमेष कालोस्य वर्तते ।।२३ ।।
मुक्त्वैनं दैत्यराजानं चक्रेण विनिसूदय ।
माहेश्वरेण वैकुण्ठ ततो मृत्युमवाप्स्यति ।।२४। ।
सनत्कुमार उवाच
ततस्तमभिसंश्रुत्य भगवान्नन्दिवर्धनः ।
मुमोच दैत्यराजानं पादेनाहत्य वक्षसि ।।२५।।
स मुक्तस्तेन देवेन विबभौ दैत्यपुंगवः ।
भुक्तमुक्तो यथा सूर्यः सैंहिकेयेन राहुणा ।।२६।।
भगवानपि दीप्यन्तं श्रिया दैत्यं समीक्ष्य तम् ।
सस्मार तत्तदा१७ चक्रं नमस्कृत्य१८ पिनाकिनम्१९ ।।२७।।
ततः सर्वा दिशो व्यास वह्निकुण्डानिभा बभुः ।
शब्दश्च सुमहानासीद्युगान्ताम्बुदसन्निभः२० । ।२८। ।
सिद्धाः पेतुश्च मेदिन्यां देवाँश्च भयमाविशत् ।
स्वस्त्यस्तु सर्वभूतानामित्यूचुर्मुनयस्तदा२१ । ।२९।।
सागराश्च व्यशुष्यन्त२२ विनेशुर२३र्नागपक्षिणः ।
दैत्याश्च दानवाश्चैव सर्वे ते विविशुर्विलम्२४ । ।8.107.३ ० ।।
भयत्रस्तानि भूतानि उल्काः पेतुर्नभस्तलात् ।
आगच्छति युगान्ताग्निकल्पे चक्रे२५ सुभास्वरे ।।३ १।।
क्षुरान्तं तन्महाचक्रं मज्जज्जलचरान्तकम्२६ ।
दुर्निरीक्ष्यं सर्वघाति अभेद्यं प्रतिघाति२७ च ।।३२।।

१७ तन्तदा - क. ख. । १८ नमस्कृत्वा - ख. । १५ पिनाकिने - ख. । २०.. वन्नदन् - ख. । २१... स्सदा - ख. । २२ सागर श्चोपशुष्यन्ति - क. । २३ विवे ( वि?) शु - ख. । २४ विविशुः परम् - ख । २५ कालचक्रे - क. । २६ गर्जज्जलधरोपम (?) । २७ अभेद्यमविघाति - ख ।



तथाप्रतिहतं दिव्यं मोहनं सर्वदेहिनाम् ।
करमागाद्वराहस्य शताशनिसमस्वनम् । ।३ ३ । ।
तदापतन्तं२८ संवीक्ष्य सर्वभूतानि सर्वतः ।
पेतुर्भूमौ महाघोरमपश्यन्न च किञ्चन ।।३४। ।

सोपि देवस्तदा कृत्वा रूपं सुमहदव्ययम् ।
त्रैलोक्यव्यापि चिक्षेप दानवं प्रति नादयन् । ।३ ५। ।
तद्युगान्तानलप्रख्यं क्षुरान्तं२९ स्फोटयन्नभः ।
जगाम दानवं क्षिप्रं दिशः सर्वा दहन्निव ।।३ ६ ।।
तत् स दानवशार्दूल३० उपयान्तं महारवम् ।
जघानास्त्रैर्बहुविधैरव्यथः३१ शक्तिनन्दन ।। ३७।।
तच्च तानि महाचक्रमस्त्राण्यनलसन्निभम् ।
चकार भस्मसाद् व्यास जगाम च विनादयन् ।।३८।।
अथ मायां समसृजत्३२ तैजसीं पार्थिवीमपि३३ ।
वायवीं३४ वारुणीञ्चैव तामसीमिन्द्रियात्मिकाम्३५ ।।३९।।
तथैवोत्पातकीं मायां मोहनीं स्तम्भनीमपि३६ ।
निवर्तनीं जम्भनीं च चकारान्याश्च संयुगे ।।8.107.४० । ।
ताः सर्वास्त३७त्तदा चक्रं नाशयद्३८ भीमनादवत् ।
गत्वा३९ तस्य शिरः कायादुन्ममाथ यथाचलम् ।।४१ ।।
तत्तेन कृत्तं सुमहच्छिरोग्र्यं४० व्यात्ताननाग्निप्रतिमोग्रनेत्रम्४१ ।
दंष्ट्रालमत्यद्भुतभीमनादं४२ पपात मेरोरिव शृङ्गमुच्चम्४३ ।।४२ । ।
रथाङ्गनिष्पीतवपुर्विरागं न भाति तद्वक्त्रमतीव दीनम् ।
निशाप्रहाणे४४ विनिवृत्तरश्मि विम्बं४५ यथा चन्द्रमसो विशोभम् । ।४३ । ।

२८ तमापतन्त - क ख । २९ क्षुरन्तं - क । ३० तं स तं नवशार्दूल - क. । ३१.. ..रव्यथैः - ख. । ३२ समावर्जत् - क.,.. .मसार्ज्यन्त - ख. । ३३ पार्थिवानपि - क ख. । ३४ वायव्यां - ख क. । ३५ .. यात्मकां - ख । ३६ स्तम्भिनीमपि - ख. । ३७ तां सर्वां तां - क. ख. । ३८ सुमहद् - क. ख., ताः सर्वाणि गृहीत्वा तु - घ । ३९ भित्त्वा - घ. । ४०.. .च्छिरोग्रं - ख. । ४१ व्यात्तानमग्निप्रतिमोग्रनेत्रम् - क. । ४२ दंष्ट्राकरालाद्भुतभीमनादं - घ. । ४३ शृङ्गमुच्छ्रम् - ख । ४४.. प्रहाणो - क, प्रहाणौ - ख. । ४५. .बिम्ब - क ।

571

तद्दन्तपंक्तिच्छदमादशानं मुहुश्च दन्तानपि४६ संदशानम् ।
पपात दैत्यस्य शिरो निकृत्तं यथा गिरेः शृङ्गमतिप्रवृद्धम् ।।४४। ।
इति स्कन्दपुराणे हिरण्याक्षवधे सप्तोत्तरशततोध्यायः ।

सनत्कुमार उवाच
तस्मिन्विनिहते दैत्ये सुराः सर्वेभितुष्टुवुः ।
ऋषयश्च तपोयुक्ता पुष्पवृष्ट्यश्च पेतिरे१ ।।१।।
देवदुन्दुभयो नेदुरदृश्याः सुमहास्वनाः ।
भूतानां चाभवच्छर्म प्रकृतिस्थं जगद्बभौ ।।२।।
जगामादृश्यतां चक्रं ततः२ स्वस्थाभवन् सुराः ।
ऋषयश्चैव लोकाश्च दैत्यं तं३ ददृशुर्हतम् । ।३।।
असुरा अपि ते सर्वे पुरद्वाराणि सर्वशः ।
पिधाय यत्नात्५ सन्नद्धाः प्राकरेष्ववतस्थिरे ।।४।।
ते भीता मुक्तकेशाश्च रजोध्वस्ता भयार्दिताः ।
जीवितं सं६ परीप्सन्तः स्थिताः प्राकारगा७स्तदा ।।५।।
भगवानपि दीप्तार्चिर्हविषेद्ध८ इवानलः ।
भीषयानोसुरान्सर्वान् पृथिवीमन्वचिन्वत ।।६ ।।
स बहिः सर्वतोन्विष्य९ उत्पाट्य च महीरुहान् ।
प्रणष्टामिव गां गोपः समन्तादन्वचिन्वत ।।७।।
पर्वतान्स तदोत्पाट्य१० दैत्योद्यानान्यचूर्णयत्११ ।
आरामान् स तडागानि बभञ्ज च ररास च । ।८।।
ततो दक्षिणतो गत्वा मुहूर्त्तं देवसत्तमः ।
शंखं पर्वतमासाद्य ननर्द जलदो यथा ।।९।।

४६ दन्तान्यपि - क. ख. ।
१ पेदिरे - ख. । २ बभुः - क । ३ दैत्यञ्च - क ख. । ४... पि हितैस्सर्वे - क., अपि - घ. । ५ यत्ताः - घ. । ६ स्वं - घ. । ७ प्रकारान्तरगा - घ. । ८ हविषाक्त - ख. । ९ सर्वतोत्क्षिप्य वेगेन - घ. । १० ततोत्पाट्य - ख. । ११ देवोद्यानान्यचूर्णयत् - क. ।

असुरा ह्यपि ते१२ भीताः प्राकारान्तरसंस्थिताः ।
अवैक्षन्त मृगेन्द्रं तं धावन्तं सर्वतोदिशः । ।8.108.१ ० ।।
सोपि देवस्तदा शंखमुत्पाट्य नगमुत्तमम् ।
अपश्यत् पृथिवीं बद्धां रक्ष्यमाणां च दानवैः ।। ११ ।।
सागराम्भसि विक्षिप्य शंखं तं पर्वतोत्तमम् ।
अवधीद्दानवान् सर्वान् मेदिन्या येभिरक्षिणः । ।१ २।।
ततो विद्राव्य नागेन्द्रान् प्रगृह्य पृथिवीं बलात् ।
जगाम दैत्यान् सन्धृष्य१३ रत्नान्यदाय सर्वशः । ।१३ ।।
स तां दंष्ट्रांकुरे१४ लग्नां वहन् भाति मृगेश्वरः ।
विषाणलग्नां लम्बन्तीं मृणालीं गजराडिव । ।१४।।
स तां सागरमध्येन वहन्भाति मृगेश्वरः ।
वराहरूपी कालान्ते ब्रह्मेव वसुधां पुरा१५ । ।१५।।
स सागरन्तमुत्तीर्य१६ भगवान्नन्दिवर्धनः ।
स्वस्थाने स्थापयामास महीं तां पुनरेव हि । ।१६।।
ततः शक्राय लोकाँस्त्रीनदात् स मधुसूदनः ।
उवाच राजा त्वन्नोद्य मित्रञ्चाहं१७ तवानघ ।। १७।।
येन्येपि तेरयः केचिद्भविष्यन्त्यसुरेश्वराः ।
तेषामपि वधं घोरं करिष्यामि न संशयः ।। १ ८। ।
ततस्तमृषयः सर्वे देवताश्च सवासवाः ।
ऊचुः स्वां मूर्तिमास्थाय यथा पूर्वं तथा भव । । १ ९। ।
वराह उवाच
इयं मूर्तिर्मया देवाः प्राप्ता परमवर्च्चसा१९ ।
न चानया रतिः काचित् प्राप्ता मे सदृशी१९ भुवि । । 8.108.२० ।।

१२ पि हि ते क. ख.। १३ सन्दृश्य क. । १४ दष्ट्रान्तरे ख.। १५ परः ख। । १६ सागरान्त- मुखीयं। ( १) । १७. .श्चाहं - क । १८ परमवर्चसः - ख । १९ सदृसा - ख. ।


सोहं कञ्चिद्२० विहृत्येह कालं मूर्त्यानया सुखम् ।
भविष्यामि पुनर्देवः२१ सत्यमेतद् ब्रवीमि वः ।।२१ । ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा सर्वे देवाः सवासवाः ।
प्रदक्षिणमुपावृत्य जग्मुः स्थानानि सर्वशः ।२२।।।
गतेषु देवसंघेषु भगवान्नन्दिवर्धनः ।
विजहार सुखं तत्र हत्वा दानवपुंगवम् ।।२३।।
तस्य तत्रोपतिष्ठन्त२२मृग्यो भूत्वा सहस्रशः ।
वैदिक्योप्सरसः शुभ्रास्ताभिस्सह रराम सः२३ ।।२४।।
स ताभिर्विचरन्देवो महात्मा नन्दिवर्धनः ।
रेमे मत्तो महानागो यथारण्ये करेणुभिः ।।२५।।
स सिंह इव सिंहीभिः शार्दूल इव चोन्नदनन् ।
रराम सागरानूपे२४ ऐरावत इवापरः ।।२६।।
रममाणस्य सिद्धाश्च ऋषयश्च तपोधनाः ।
पुष्पाणां रुचिरा वृष्टीः पातयन्ति वियत्स्थिताः । ।२७।।
तुष्टवुश्चापरे नित्यं चक्रुश्चैनं प्रदक्षिणम् ।
देवदुन्दुभयो नित्यं सर्व२५ एवान्ववादयन् ।२८
नृत्यन्त्यप्सरसश्चास्य२६ वराहस्याग्रतस्तदा ।
वादयन्ति च गन्धर्वा गायन्ति च महात्मनः ।।२९।।
रमयन्तो२७ वराहन्तं देवाश्चेन्द्रपुरोगमाः ।
यक्षाः पुण्यजनना ये च तथा देवजनाश्च ये ।।8.108.३ ० ।।
यातुधानाश्च ये केचिद् ब्रह्मधानाश्च सर्वशः ।
मनुष्याः पशवश्चैव ऋषयश्चैव सर्वशः । ।२१ ।।
राजन्याः क्षत्रियाः सर्वे निकायाश्चैव सर्वशः ।
तत्राजग्मुर्निरीक्षन्तो वराहस्योत्सवं२८ शुभम् ।।३२।।
--

२० कश्चिद् - ख. । २१ पुनर्देवाः - क । २२?.. पविष्टन्तं - ख । २३ च - ख । २४ सागराम्भस्सु - ख । २५ गन्ध. क. । २६... श्चापि - ख । २७ रामयन्तो - ख । २८ वराहस्योत्तम - ख. ।



बह्वाश्चर्यसमाकीर्णं बह्वालक्ष्य सदैव च ।
एवं तस्याभवद् व्यास वराहस्य महात्मनः ।
उत्सवः सुमहान् दिव्यः प्रत्यहं नन्दिवर्धनः । ।३ ३ । ।
तस्योत्सोवोसौ ऋषिसंघजुष्टः सदा सुरैः सिद्धजनैश्च जुष्टः ।
गन्धर्वयक्षोरगराक्षसैश्च विद्याधरैश्चैव सहाप्सरोभिः । । ३४।।।
इति स्कन्दपुराणे वराहोत्सवे२९ अष्टोत्तरशतोध्यायः३०

सनत्कुमार उवाच
तस्य कालेन महता रमतः शक्तिनन्दन ।
भार्यायां चित्रलेखायां वृकोनामा१भवत्सुतः ।।१ । ।
स वृको बलवान्नित्यं विचरन् पृथिवीमिमाम् ।
नर्दमानोवधील्लोके भूतानि शतशो महान् ।।२ । ।
अथाससाद शैलेन्द्र हिमवन्तं महागिरिम् ।
गौरीकूटसमीपे च कार्तिकेयालयं शुभम । । ३ । ।
तमजानँस्तदाभ्येत्य बलेनाविनयेन२ च ।
नादयानो३ द्रुमाञ्छुभ्रान् रत्नहेमविभूषितान् ।।४। ।
सर्वर्तुपुष्पफलदान्४ सर्वकामप्रदानपि ।
शिलामणिमयाः शुभ्राः शातकुम्भमयास्तथा५ । ।५ ।।
हरितालमयाश्चान्यास्तथा मानःशिलोपालान्६ ।
उत्पाट्योत्पाट्य वेगेन बभञ्ज रूषितो यथा । ।६। ।
स गर्जमानः सततं गजो मत्त७ इवापरः ।
बभञ्ज तद्वनं शुभ्रं कार्तिकेस्य धीमतः ।।७। ।
तस्य गर्जितशब्देन वनभङ्गस्वनेन च ।
स्कन्दस्य गणपः शूरो निर्जगाम स मन्दिरात्८ ।।८। ।

२९ नन्दिवराहवर्णनो नाम - क । ३० तमोध्यायः अध्यायः १६२ ( १७२?) - ख, १८७ घ. ।
१ नाम - क । २ विजनेन - ख । ३ नोदयानो - ख. । ४ सर्वर्तुकफलान्पुष्पान् - ख. ५... श्शुभाः - क. । ६ मानःशिलोचलाः ५ - क. । ७ गजोन्मत्त - क. । ० निशामयन् - ख. ।


कोकवक्त्र इति ख्यातो दृढं स्कन्दस्य वल्लभः ।
महात्मा बलसंपन्नो गत्वा वृकमवैक्षत ।।९।।
स तं दृष्ट्वा महाकायं तरुणं प्रियदर्शनम ।
जीमूतमिव नर्दन्तं किञ्चित्प्रकुपिताननम् । ।8.109.१ ० ।।
उवाच वचनं हृष्टः९ कोकवक्त्रो हसन्निव ।
कस्य त्वमिह संप्राप्तो बालो देवगृहं शुभम् । १ १।।
न जानीषे किमेतत्त्वं१० स्कन्दस्य सुमहात्मनः ।
वेश्म देवैस्सगन्धर्वैः सयक्षोरगकिन्नरैः११ ।।१ २।।
कृतं दयितभत्यर्थं गणैश्चापि सुपूजितम् ।
कुमारो मन्दरं यातः सर्वैस्सह गणेश्वरैः ।।१३ ।।
रक्षार्थं मामिह स्थाप्य१३ वारयामि१४ ततो१५ हि ते ।
तुष्टोस्मि तव रूपेण बलेन वपुषा१६ तथा ।।१४।।
उपारमस्व तेन१७ त्वा ब्रवीमि सुमहाबल ।
अहं करिष्ये यद् भग्नं तथैव पुनरेव हि ।।१५।।
वक्ष्ये देवं च तं सम्यक् त्वदर्थं१८ शूकरेश्वर ।
यथा न कुप्यते तुभ्यं प्रसादं ते१९ करोति च ।।१ ६।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा वृकः संरक्तलोचनः ।
उवाच कोकवदनमिदं मृगपतिस्तदा२० ।।१७।।

न बिभेमि कुमारस्य तव वा पापचेतसः ।
बले मम कुमारोसौ न तुल्यः सगणेश्वरः ।।१८।।
यद्वो बलञ्च दर्पश्च२१ तत् कुरुध्वमशंकिताः ।
नामावशेषमेतद्वः कर्ताहं वनमन्ततः । ।१९।।

९ दृष्टः - क. । १० किमेतच्च - क ख. । ११. पन्नगैः - क ख. । १२ गणेशैश्चापि पूजितम् - ख. । १३ प्राप्तो - ख. । १४ वरयामि - क. । १५ तते - क. । १६ पुरुषा ( त्) - क. ख. । १७ उमावमसुतेन - घ । १८ तवार्थे - ख. । १९ प्रवरं त्वां - क ख. । २०. स्तथा - ख । २१ दर्पञ्च - क. ख. ।


सनत्कुमार उवाच
ततः स वृक्षमुत्पाट्य हैमं वैदूर्यपल्लवम् ।
कोकवक्त्राय चिक्षेप ननाद च यथा वृषः । ।8.109.२ ० । ।
ततः प्रहस्य कोकास्यस्तमेवोद्गृह्य पादपम् ।
वृकं तं तेन संक्रुद्धः शिरस्यभिजघान ह ।।२१ ।।
स तेन सुप्रहारेण भ्रमित्वा मण्डलं मृगः२२ ।
पपात भूमौ निःसंज्ञो यथा शक्रध्वजो महान् ।।२२।।
ततस्तं पतितं दृष्ट्वा कोकास्यः प्रहसँस्तदा ।
बबन्ध पाशैर्बहुभिर्वेश्म चैव प्रवेशयत् । ।२३ ।।
तं वद्धं पतितं दृष्ट्वा सहायास्तस्य ते मृगाः ।
प्रद्रुता सहसा सर्वे भयार्ता जीवितैषिणः । ।२४। ।
अथागात्तेन कालेन गणपैर्बहुभिर्वृतः ।
कार्तिकेयो मयूरेण कूजमानेन सानुगः ।।२५। ।
तस्य तत् कथयामास कोकवक्त्रो गणेश्वरः ।
वृकं च दर्शयामास पाशैर्बद्धं महाबलम् । ।२६। ।
कोकवक्त्र उवाच
भगवन् वराहरूपस्य सुतः श्रीमान् वृकः किल ।
हिरण्याक्षो हतो येन दानवो देवकण्टकः ।।२७। ।
बभञ्जायं सुदुष्टात्मा२३ सहितोन्यैर्वनं तव ।
ततः पाशैर्मया बद्धः क्रियतामस्य यत् परम् । ।२८।।
स्कन्द उवाच
नायं शक्यो मयाद्येह मोक्तुं मृगकुलाधमः ।
मुक्ते वक्तव्यता लोके भविष्यति न संशय ।।२९। ।
देवो मां वक्ष्यते२४ व्यक्तं स्कन्दो भीतो न संशयः ।
यो मुमोच सुतं तस्य वराहस्य कृतागसम् । ।8.109.३ ० ।।

२२ वृकः - ख. । २३ सुदृष्टात्मा - ख. । २४ लक्ष्यते- - ख ।


उक्तो गतश्चाहमद्य स्थाणुना परमात्मना ।
मा क्षमेथा वराहस्य तनु त्वा२५ सौ२६ ह्वयेद्यदि२७ । ।३ १ ।।
इयञ्च मम तेनाद्य शक्तिर्दत्तातिभास्वरा ।
संवर्त्तिकेति२८ विख्याता सर्वास्त्रबलनाशनी ।।३ २ ।।
सोयं२९ दुरात्मा दुर्वृत्तः सर्वलोकप्रबाधकः ।
गृह्यतां वध्यतां चैव क्षिप्रमाविष्कृतं बलात् (?) । । ३३ । ।
सनत्कुमार उवाच
तत एनं बहिस्सर्वे स्कन्दस्य गणनायकाः ।
बद्ध्वा बहुविधैः पाशैर्यातयन्त सहस्रशः३० ।।३४।।
स यात्यमानो दुःखार्त्तो विललाप यथा नरः ।
निरयस्थो दुराचारः कर्मभिः स्वैः सुपाशितः३१ ।।३ ५।।
तं यात्यमानं सन्दृश्य नारदः सुमहातपाः ।
गत्वा न्यवेदयत्तस्य३२ वराहस्यामितात्मनः । ।३६ ।।
एष पुत्रो वृकस्तुभ्यं बद्धः पाशैरनेकशः ।
यात्यते कार्तिकेयस्य किङ्करैर्दुष्कृती यथा ।। ३७। ।
न नाम तव देवस्य लोकार्थायोद्यतस्य च३३ ।

करोति सन्नतिं स्कन्दो बालभावाच्च रोषतः३४ । ।३८। ।
अथवा स्वमलं३५ स्कन्दो मन्यते बलवत्तरम् ।
त्वत्तोत्मनस्ततः पुत्रं तव पाशैर्बबन्ध ह ।।३९। ।
तद्यावदेव तं नासौ प्रमापयति देवप ।
तावदेव भवान् गत्वा विमोचयतु मा चिरम् ।।8.109.४० । ।
सनत्कुमार उवाच
नारदस्य वचः श्रुत्वा वराहो नन्दिवर्धनः ।
जीमूत इव कालान्ते ननाद रूषितानन‌ः ।।४१ ।।

२५ तनुक्त्वा? - ख. । २६ सो - क. ख- । २७.. .द्युधि - क ख,. द्यदि (?) । २८ संवर्त्तकेति ख. २९ योय - ख. । ३०... न्तस्सहस्रशः - ख । ३१ सुपातितः - ख । ३२ निवेदयामास ख। ३३ ह - ख. । ३४.. .न्मिरामतः - ख. । ३५ स्वबलं - क.


तस्य क्रोधात्तदा वह्निर्नेत्राभ्यामति दीप्तिमान् ।
निश्चक्राम जगत् सर्वं संहरन्निव तेजसा ।।४२। ।
उत्थाय चासनाद्देवः सहसैवोन्निरीक्षणः३२ ।
प्रतस्थे शिखरं दिव्यं गौर्या मृगपतिः स्वयम् । ।४३ ।।
स कम्पयन्मही सर्वां स्तूयमानो महात्मभिः ।
उत्पातानुत्थितान्३७ पश्यन् जगामा३८ विनिवारितः ।।४४। ।
गच्छतस्तस्य देवस्य पन्थानं भुजगोच्छिनत् ।
दंष्ट्रा च वृक्षमापत्य३९ पपात धरणीतले । ।४५। ।
रुधिरं चास्रवद्वक्त्राद्धृदयञ्च प्रवेपत ।
भयञ्चास्याभवत्तत्र वेगो येनाभिहन्यते४० । ।४६। ।
वायवः प्रतिलोमाश्च उरसा चापतद् भुवि ।
स्नेह४१श्चास्य प्रियां स्मृत्वा तदात्यर्थमजायत ।।४७। ।
एताँश्चान्यान् सुबहुश४२ उत्पातान् भयसूचकान् ।
अनादृत्य मृगेन्द्रोसौ जगामैव महाबलः ।।४८।।
तं प्रस्थितमभिप्रेक्ष्य निमित्तानि च सुव्रत ।
पूजां सज्जामकुर्वन्ते४३ देवलोके दिवौकसः ।।४९। ।
स सिद्धसंघैरनुगम्यमानो यक्षैश्च गन्धर्वमहोरगैश्च ।
रक्षोगणैश्चारणकिन्नरैश्च जगाम गौरीशिखरं महात्मा । ।8.109.५० ।।
इति स्कन्दपुराणे वृकबन्धो नाम नवोत्तरशतोध्यायः

सनत्कुमार उवाच
विनिर्गम्य कुमारोपि रम्यात् स्वभवनात्तदा ।
रराम गणपैः१ सार्धं क्रीडनैर्बहुभिः शुभैः । । १ । ।
आनयामास तञ्चापि वराहस्य सुतं प्रभुः ।
वृकं विमुच्य पाशेभ्य२ उत्ससर्ज हसन् विभुः३।। २। ।

वोग्निरीक्षणः - ख., वाग्निरीक्षणः - क । ३७... न्भयदान् - ख. । ३८ जगाम - क. । मापात्य - क. । ४० भिमन्यते - क. ख. । ४१. स्वेह (स्वेद?) - ख. । ४२... श्चान्याँश्च बहुशः - ख. । मकुर्वन्त - क. ख ।

१ रेमे गणेश्वरैः. । २ पाशैश्च - क. ख. । ३ प्रभुः - ख.


)' ४

उत्सृष्टं धावमानञ्च पुनर्जग्राह वेगितम् ।
पुनरेवोत्सृजच्चैनं४ जग्राह च पुनः पुनः ।
एवं रराम५ तेनासौ वराहोभ्यागमच्च६ तम् । ।३ ।।
शिलां गृहीत्वा महतीं संक्रुद्धोन्तकसन्निभः ।
चिक्षेप कार्त्तिकेयाय७ नादयन् जलदो यथा ।।४। ।
तामापतन्तीं बहुधा नदन्तीं विहायसा मृत्युसमानरूपाम् ।
जग्राह वेगेन महातिवेगां८ कोकामुखः प्रज्वलितामिवोल्काम् ।।५। ।
ततश्चक्रं सहस्रारं युगान्ताग्निसमप्रभम् ।

विनायकस्याव्यग्राय गणाय व्यसृजत् प्रभुः । ।६ । ।
तदन्तकप्रतीकाशं९ चक्रं सर्वसुरारिहम्१० ।
विवेश (?) सगणस्तूर्णं११ ततस्तद् विन्यवर्तत । ।७। ।
तन्निवृत्तं पुनश्चक्रमकृत्वा कार्यमुज्ज्वलम् ।
न जग्राह तदा विष्णुरवमेने च तत्तदा । ।८। ।
तत्तदानचितं तेन चक्रं दानवघातिना ।
विष्णुना प्रययौ क्षिप्रं स्वमेव भवनं प्रति ।।९।।
तस्मिंञ्चक्रे तदा याते भगवान्नन्दिवर्धनः ।
वृक्षमुत्पाट्य वेगेन कुमारमभिजघ्निवान् । । 8.110.१० ।।
अगण्य तं प्रहारन्तु भगवाननलात्मजः ।
शक्तिं संवर्त्तिकां१२ क्रोधाच्चिक्षेप च ननाद च । । ११ ।।
सा दहन्तीव१३ तेजांसि नदन्ती बहुधा तदा ।
हन्तुं वराहं प्रययौ शक्तिर्दिव्य इवाशुगः । । १२।।
तामापमन्तीं वेगेन भगवान्न्नन्दिवर्धनः ।
जघानास्त्रैर्बहुविधैर्नादयन् सिंहराडिव ।। १३ ।।
तानि सा भस्मसात् कृत्वा शक्तिः संवर्त्तिका शुभा ।
विवेश हृदयं तस्य कामिनीव दृढं प्रिया१४ । । १४।।

४ पुनरेवोत्सृजच्चैव - ख. । ५ रेमे स (?) । ६.. भासयच्च - क,.भ्यागतश्च - ख. । ७ कार्तिकेयञ्च- ख. । ८ सहातिवेगां - क. । ९ तमन्तकप्रतीकाशं - क. । १० सर्वसुरारिघम् - क । ११.? न्तूर्णं - ख. । १२ संवर्त्तकां - क, संवर्षिकां - ख. । १३ दहन्निह - ख. । १४ दृढप्रिया - क. ख. ।

580
स तया भिन्नहृदयो योगेन परमेण ह ।
योगीव देहं तं त्यक्त्वा१५ देहेनान्येन तस्थिवान् ।।१ ५।।
सोन्यद्देहं१६ समास्थाय पौराणं सुरसत्तमः ।
देवैः सर्वैः परिवृतो जगाम भवमन्दिरम् । ।१ ६। ।
तत्रापश्यन्महादेवं जटामुकुटधारिणम् ।
चन्द्रलेखांशुजालौघनिरस्ततिमिरोत्करम् ।।१७।।
भद्रपीठे१७ समासीनं काञ्चने मणिभूषणे१८ ।
भ्राजमानं श्रियात्यर्थं पार्वत्या पार्श्वसंस्थया ।।१८।।
गणैश्च विविधाकारैर्बहुभिःकामरूपिभिः ।
नृत्तगीतप्रियैर्नित्यं समन्तात् परिवारितम् ।।१९।।
तं दृष्ट्वा शंकरं विष्णुः प्रसन्नेनान्तरात्मना ।
तुष्टाव विविधैः स्तोत्रैरिदञ्चोवाच सुस्वरम् । ।8.110.२०।।
वाराहं१९ रूपमास्थाय त्वत्तेजोबृंहितेन मे ।
रणे विक्रम्य भगवन् हिरण्याक्षो निषूदितः ।।२१।।
त्वं देव कारणं नित्यं संभूतेः प्रलयस्य च ।
त्वया सर्वमिदं व्याप्तं जगदव्यक्तमूर्त्तिना ।।२२।।
त्वत्प्रसादेन देवेश ब्रह्माहं शक्र एव च ।
पूज्याः स्म लोके सततं तथैवान्ये दिवौकसः । ।२३।।
त्वयि प्रीते महादेव सर्वे प्रीता वयं प्रभो ।
त्वयि क्रुद्धे विनाशो२० नो भविता नात्र संशयः ।।२४।।
स्तुवन्तमेवं भगवान् विष्णुं चन्द्रार्धशेखरः ।
सहस्रसूर्यतेजस्कः प्रीतः प्रोवाच शंकरः ।।२५।।
भक्त्या तुष्टोस्मि२१ ते विष्णो देवकार्योद्यमेन च ।
वरं वरय भद्रन्ते यस्ते मनसि वर्तते ।।२६।।

१५ संत्यज्य - क., संत्यक्त्वा - ख. । १५ सोन्यदेहं - ख । १७ चन्द्रपीठे - क. । १८ काञ्चनैर्मणि- भूषणैः - ख, । १९ वराह - ख । २० च नाशो - ख । २१ कृतोस्मि - क. ।

581
विष्णुरुवाच
यदि तुष्टोसि नो देव यदि देयो वरश्च नः ।
यत्तत् पापहरं२२ दिव्यं व्रतमादेष्टुमर्हसि ।।२७।।

यदाश्रित्य वयं सर्वे सशक्रास्सार्वेकामिकम्२३ ।
युद्धे जेष्याम दैतेयान् दुःखशोकविवर्जिताः ।।२८।।
देवदेव उवाच
हन्त वः कथयिष्यामि गुह्यमेतत् सनातनम् ।
व्रतं पाशुपतं दिव्यं येन कामानवाप्स्यथ । ।२९।।
इत्युक्त्वा देवदेवेशो देवानां हितकाम्यया ।
ययौ दिवमथामन्त्र्य देवीं गिरिवरात्मजाम् ।।8.110.३० । ।
अथ हिमगिरितुल्यचारुमूर्त्तिं वृषभवरं२४ भगवाँस्तदाधिरूढः२५ ।
सुरगणसहितः प्रभुस्सुमेरुं व्रतमुपदेष्टुमना जगाम शर्वः ।।३१।।
इति स्कन्दपुराणे हिरण्याक्षवधे वराहरूपसंहारे देवदेवस्य देवलोकगमनं नाम दशोत्तरशतोध्यायः२६

२२ ततः पाशुपतं - ख २३ स्सर्वकामिकम् क.। २४ चारुमूर्तिर्वृषभवरं ख.। २५ भिरूढः क.। २६ १६४ ख।

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१२

https://sa.wikisource.org/s/fc3
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्व पृष्ठः (अध्यायाः १०१ - ११० ) | आगामी पृष्ठः (अध्यायाः १२१ - १३०)

व्यास उवाच१
गते दिवं महादेवे व्रतमादेष्टुमुत्तमम् ।
एकाकिनी महादेवी किञ्चक्रे तदनन्तरम् । । १ । ।
सनत्कुमार उवाच
गते दिवं महादेवे देवीं गिरिवरात्मजाम् ।
उपतस्थुर्महाभागा देव्यो लोकस्य मातरः । ।२। ।
भरतस्य सुताग्नेस्तु मालिनीत्यभिविश्रुता ।
शुचावती च देवस्य पर्जन्यस्य सुताव्यया । । ३ ।।

१ सन उ - क. । २ तस्मिन - क ।



सावित्री वेदमाता च गायत्री दुर्गया सह ।
श्रीः कीर्तिश्चैव लक्ष्मीश्च धृतिः प्रज्ञा तथैव च ।।४। ।
ख्यातिर्दितिर्दनुश्चैव अदितिः सिंहिका खशा४ ।
राका कुहूः सिनीवाली तथैवानुमतिः५ शुभा ।। ।।५। ।
गङ्गा सरस्वती चैव तथान्याः सरितः शुभाः ।
ऋषीणां चैव याः पत्न्यो देवानां यक्षरक्षसाम् ।
उरगाणां खगानाञ्च गन्धर्वाणां तथैव च । । ६।।
एतास्सर्वास्तथागम्य नमस्कृत्य च पार्वतीम् ।
पप्रच्छुः सर्वधर्मज्ञा धर्मं धर्मार्थसंश्रिताः । ।७।।
केन धर्मेण देवेशे तपसा वा शुभानने ।
सुमहत् प्राप्य पुण्यं किञ्चाक्षय्यं प्रकीर्तितम् । ।८ ।।

देव्युवाच

युष्माकन्तु हितार्थाय लोकानाञ्चैव सुव्रताः ।
कथयिष्याम्यहं धर्मं यथावदनुपूर्वशः । ।९। ।
अन्नदानात् परं दानं नैव किञ्चिद्धि८ विद्यते ।
अन्नाद् भवन्ति भूतानि९ तस्मात्तदधिकं स्मृतम् ।। 8.111.१० ।।
अन्नं यस्तु सुसंस्कृत्य प्रयच्छेत द्विजातये ।
स सर्वकामानाप्नोति१० पूज्यते च त्रिविष्टपे ।। ११ ।।
मयूरहंसयुक्तेन११ सर्वकामसमृद्धिना१२ ।
विमानेनार्कभासेन१३ अन्नदो याति वै दिवम्१४ । । १२ ।।
यदि मानुष्यमायाति१५ कदाचित् स नरोत्तमः ।
धनधान्यसमाकीर्णः कुलीनः स्याच्च१६ रूपवान् ।। १३ । ।
यथाशक्ति तु यो दद्याद् दिवसे दिवसे नरः ।
स तेन कर्मणाप्नोति प्रजापतिसलोकताम् । । १४।।

३ देवमाता - क । ४ स्वषा - ख. । ५.. नुमती - क ख । ३ ऋषीणां पत्नयो याश्च - क. ख. । ७ नमस्कृत्वा - क. ख. । ८.. श्च ( च्च) - क । ९ सत्वानि - ख । १० सर्वकामानवाप्नोति - क. । ११ मयूरहंसयुक्तं च - क । १२.,. समृद्धिमत् - क. । १३ विमानं सूर्यसंकाशं - क. । १४ लभते शुभम् - क. १५ मानुष्यांतां याति - ख. । १६ समाकीर्णे कुले जायति - ख ।

583

कदाचिदपि यो दद्यादन्नं विप्राय संस्कृतम् ।
तस्यापि तच्छतगुणं सहस्रगुणमेव च ।। १ ५। ।
उपतिष्ठति लोकेषु इहापि च सुखी भवेत् ।
अवधूतमवज्ञातमसत्कृतमथापि१७ च । ।१ ६ ।।
अन्नं प्रदद्याद्यो देव्यो१८ यादृशं तादृशं शुभाः१९ ।
तस्यापि नरके घोरे यात्यमानस्य राक्षसैः ।। १७। ।
उपतिष्ठेत बहुधा तृप्तिर्येनास्य जायते२० ।
यदि मानुष्यमायाति कदाचित् स नरः पुनः । । १८। ।
म्लेच्छेषु भोगी भवति रमते च यथामरः ।
अन्नेमेवं विशिष्टं हि तस्मान्न परमं२१ भुवि । । १९ । ।
अन्नं प्रजापतिः प्रोक्तं स च संवत्सरो मतः ।

संवत्सरश्च यज्ञोसौ यज्ञे सर्वं प्रतिष्ठितम् । ।8.111.२० । ।
तस्माद् भवन्ति भूतानि स्थावराणि चराणि च ।
तस्मादन्नं विशिष्ठन्तु सर्वेभ्य इति वै श्रुतिः ।। २१ ।।
अन्नदानात्परं दानं नैव किञ्चिद्धि विद्यते ।
अन्नाद् भवन्ति भूतानि तस्मात्तद्वै२२ प्रशस्यते । ।२२ ।।
सुगन्धाः शीतलाश्चापो रसैर्दिव्यैः समन्विताः ।
यः प्रयच्छति विप्रेभ्यस्तस्य दानफलं शृणु । ।२३ । ।
विमानं सूर्यसंकाशमप्सरोगणनादितम् ।
सोधिरूह्य दिवं याति वरुणस्य सलोकताम् ।।२४।।
तत्रासावयुतान्यष्टावुषित्वा देववत् सुखी ।
कुले महत्यसंकीर्णो२३ जायते धनधान्यवान् । ।२५।।
आपान्तु पूर्णं यो भाण्डं ब्राह्मणाय प्रयच्छति ।
रसास्तस्योपतिष्ठन्ति पूज्यते च दिवं गतः ।।२६। ।

१७ मसंस्कृतमथापि - ख. । १८ देवि - क. ख. । १९ शुभे - क. ख । २० लभते पुण्यमव्ययं - ख. । २१ न तस्मात् परमं - ख. । २२.. .च्चैतत् - घ. । २३. संकीर्णे - ख. ।


भाजनानि च यो दद्यात् सुपूर्णानि शुभाननाः२४ ।
भाजनं स्यात् स भोगानां तारयेच्च२५ पितॄन् भयात् । ।२७। ।
तडागं यस्तु कुर्वीत अपां देव्यः२६ समृद्धिमत् ।
अपः२७ पिबन्ति वै यत्र सर्वे जन्तव एव च ।।२८। ।
तारयित्वा च स पितॄँस्तथैव च पितामहान् ।
प्रपितामहाँश्च लोकेषु कमिकेषु२८ विहङ्गमः ।।२९।।
चरते देववद्देव्यो वर्षायुतशतानि षट् ।
पुनश्च मानुषे लोके सर्वरोगविवर्जितः ।।8.111.३० ।।
भोगी भवति भोगानां राजमात्रश्च जायते ।
दाता यज्या च बलवान् सुप्रभः प्रियदर्शनः ।। ३१ । ।
अवटं यो नरः कुर्यादपां पूर्णं शुचिस्मिताः२९ ।
दद्याच्च ब्राह्मणेभ्यस्तं भोजयित्वा यथार्थवत् । ।३ २। ।
अष्टाभिश्च विचित्राभिः३० पताकाभिरलंकृतम् ।

ध्वजेन वैजयन्त्या च पुष्पैश्च समलंकृतम् । ।३ ३ ।।
स तारयित्वा तु पितॄन् विमानेन नरोत्तमः ।
यात्यप्सरोपगीतेन३१ वरुणस्य सलोकताम् ।।३४।।
हिरण्यं हेम भूमिं वा तिलान् रत्नानि वापि यः ।
प्रदद्यात् सर्वभूतेभ्यस्तस्य पुण्यफलं शृणु ।।३५। ।
स विमानेन महता सर्वलोकसमन्वितः ।
इन्द्रस्य लोकं३२ संप्राप्य मोदते विबुधो यथा । ।३ ६।।
ततश्च्युतश्च धर्मात्मा सर्वकामसमृद्धिमान् ।
कुले महति लोकेसौ३३ जायते सुभगश्च ह । । ३७।।
यस्तु वृक्षं प्रकुरुते छायापुष्पफलोपगम् ।
पथि देव्यो३४ नरः सोम्ये३५ स तारयति वै पितॄन् । । ३८।।

२४ शुभानने - क. ख. ।... २५ स्तारणाच्च - क । २६ देवि - क. ख. । २७ गावः - क. । २८ कामकेषु - क । २९ समश्नुते - क,? स्मिते - ख । ३० रविचित्राभिः - क. । ३१ यात्यप्सरस- गीतेन - ख. । ३२ इन्द्रलोकं स - ख. । ३३ लोकेशो - ख. । ३४ देवि - क. ख. । ३५ सोम्याः? ।



तथैव दत्त्वा विप्रेभ्यो निष्क्रीय च पुनर्नरः३५ ।
स यत् फलमवाप्नोति तच्छृणुध्वं३६ महाप्रभाः३७ । । ३९ । ।
यावद् वृक्षस्य पुष्पाणि उपयुञ्जन्ति३८ देहिनः ।
फलानि चैव भक्ष्यन्ते जन्तुभिः फलितस्य तु । ।8.111.४० ।।
तावद्वर्षसहस्राणि तारयित्वा पितॄनपि ।
सोमलोकं समासाद्य सोमृतं३९ फलमाप्नुयात् । ।४१ ।।
फलानि यः प्रयच्छेत ब्राह्मणेभ्यस्समाहितः
फलानां स तु भागी स्याद्बहूनां सुभगश्च ह । ।४२ ।।
काष्ठानि यः प्रयच्छेत हेमन्ते नरसत्तमः ।
ब्राह्मणेभ्यस्तदा देव्यः४० सोग्निलोकं समश्नुते । ।४३ । ।
भाजनं यः प्रयच्छेत हैमं रत्नविभूषितम् ।
सोप्सरःशतसंकीर्णे विमाने दिवि मोदते । ।४ ४। ।
राजतं यः प्रयच्छेत विप्रेभ्यो भाजनं शुभाः४१ ।

स गान्धर्वपदं प्राप्य उर्वश्या सह मोदते । ।५५ । ।
ताम्रं यो भाजनं दद्याद् ब्राह्मणेभ्यो विशेषतः ।
स भवेद् यक्षराजस्य यक्षो बलसमन्वितः । ।४६ । ।
गृहं यस्तु प्रयच्छेत सर्वकामसमृद्धिमत् ।
स लोकं ब्रह्मणः प्राप्य सर्वकामैर्निषेव्यते । ।४७। ।
सर्वकोटीः४२ स तत्रोष्य चतस्रस्तेन कर्मणा ।
गृहमेधी यदा दाता भोगवाँश्चैव जायते । ।४८। ।
ओषधीर्यः प्रयच्छेत धान्यानि विविधानि च ।
स सर्वकामसंमृष्टं४३ सोमलोकं समश्नुते । ।४९ । ।
तत्र वर्षसहस्राणि सप्त स्थित्वा पुनर्नरः ।
इह सर्व धनोपेतो४४ भोगावानभिजायते । ।8.111.५० । ।

३५ पुनः पुन - ख. । ३६ तच्छ्रणुष्व - क. ख । ३७ महाप्रभे - क. ख. । ३८ उपयुज्यन्ति - क. । ३९ सोमृतः - क ख. । ४० देवि - क. ख । ४१ शुभे - क. ख. । ४२ वर्षकोट्यः - क ख । ४३ संमृद्धं - क., संपूर्णं - ख. । ८८ सर्वनरोपेतो - ख ।


यस्तु क्षेत्रं प्रयच्छेत निष्पन्नं फलवत्पुनः ।
स तु क्षेत्रपतिर्भूत्वा४५ प्राजापत्यं समश्नुते ।।५१ ।।
यस्तु भूमिं प्रयच्छेत ब्रह्मणाय महात्मने ।
स सर्वलोकेषु४६ सुखी विमानेन सुवर्चसा । ।५२। ।
बहून्यब्दसहस्राणि चरते कामरूपवान् ।
यद्धि मानुष्यमायाति स नरः कालपर्ययात् । ।५३ ।।
तत्र कामदुहा४७ तस्य मही भवति सर्वशः ।
यस्तु वस्त्रं प्रयच्छेत ब्राह्मणाय महायशाः ।। ५४। ।
स लोकं प्राप्य वैराजं वर्षकोटिं सुखं वसेत् ।
आसनं यः प्रयच्छेत संवीतं४८ ब्राह्मणाय वै ।।५५। ।
स राज्यस्थानमाप्नोति स्वर्गं चाप्नोति विज्वरः ।
यस्तु शय्यां प्रयच्छेत स्वास्तीर्णां४९ नरसत्तमः ।।५६। ।
स तु भार्याः प्रिया देव्यो बह्वीर्भक्ताः समश्नुते ।
यस्तु कन्यां प्रयच्छेत ब्राह्मणाय स्वलंकृताम् ।।५७।।।
स गत्वा पितृलोकं वै वर्षायुतशतं वसेत् ।

इह चापि पुनर्जातः सर्वकामसमन्वितः। ।५८।।
भार्याः प्राप्नोति भक्ताश्च प्रजावाँश्चोपजायते।
अश्वं यस्तु प्रयच्छेत हेमचित्रं सुलक्षणम्५० । ।५९ । ।
स तेन कर्मणा देव्यो५१ गान्धर्वं लोकमश्नुते।
रथमश्वं गजं दासीं कन्यां गृहमथापि च। ।8.111.६० ।।
भूमिञ्च यः प्रयच्छेत स राजा भुवि जायते।
???? - - - - - - - - - - - - ।। ६१ ।।
विधिना मन्त्रयुक्तेन५२ तस्य धर्मफलं महत्५३ ।
सर्वकामदुघा५० सास्य धेनुर्भूत्वोपतिष्ठति५५ ।।६२। ऽ

४५ क्षेत्रोनुंमां - क, क्षेत्रं पुमां भूत्वा - ख. । ४६ लर्वलोके स च - क. । ४७ कामवहा - क., कामदुघा (?) । ४८ सवीता - क. । ४९ स्वास्तीर्णं - क । ५० सलक्षणम् - क. । ५१ देवि - क. ख. । ५२ यत्र युक्तेव - क । ५३ शृणु - क. । ५४ सर्वकामदुहा - क. ख. । ५५ धेनुभूत्वावतिष्ठति - क. ।



जलधेनुं च यो दद्यात् तस्य दानफलं महत्।
प्रापां शुभां५६ तडागं५७ वा कूपं वापि सुपुष्कलम्। ।६३ । ।
कृत्वा कुम्भान् सुसंपूर्णान् गन्धमाल्यैरलंकृतान्।
पुष्पैश्च विवधाकारैरभ्यर्च्य द्विजसत्तमान्। ।६४।।
भक्ष्यभोज्यैः सुसृप्ताँस्तान्५८ तिलपात्राणि दापयेत्।
दक्षिणां पुष्कलां दाद्यत् तेभ्यस्तां५९ स्पर्शयेत्ततः ।।६५।।
आपः शिवाश्च सौम्याश्च तर्पयन्तु पितॄन्मम।
कामगाः कामदातारो भवन्तु पितरः सदा६०। ।६६।।
एवं दत्त्वा तु तां धेनुं पुनः क्रीत्वा६१ च वै तदा।
वाहयेत्तत्६२ प्रपां देव्यो६३ ब्रह्मलोकसमर्पणीम् ।। ६७। ।
तिलपात्राणि दत्त्वा६४ च तथा वस्त्रयुगं नवम्।
सुवर्णस्य च सान्निध्यं६५ फलानि विविधानि च ।।६८। ।
ततो दद्याच्छुचिः स्नातो ब्राह्मणेभ्यो यथाविधि।
- - - - - - - - - - - - - - - - । ।६९ । ।
घृतं गावः प्रसूयन्ते घृतं भूम्यां प्रतिष्ठितम्।

घृतमग्निश्च देवाश्च घृतं मे संप्रदीयताम् । ।8.111.७० । ।
एवं विधानतो दत्त्वा ब्रह्मलोकमवाप्नुयात् ।
यो नरो गां प्रयच्छेत सवत्सां कांस्यदोहनीम्६६ । ।७१ । ।
हेमशृङ्गीं रूप्यखुरां६७ दुकूलक्षौमवासिताम् । ।
शय्यास्तरणसंपन्नां बहुपुष्पफलैर्युताम् ।।७२ । ।
ब्राह्मणांस्तर्पयित्वा तु गन्धमाल्यैरलंकृताम् ।
दानकाले ततस्तस्याः सुरा गात्राणि६८ संश्रिताः ।७३ । ।
ब्रह्मा तस्याः स्थितो मूर्ध्नि शक्रोपानं६९ समाश्रितः ।
चन्द्रादित्यौ च नेत्रस्थौ घ्राणे७० वायुः प्रतिष्ठितः७१ ।।७४। ।

५६ सभां - क. । ५७ तडागान् - क ख. । ५८ सुतृप्तानां - क ख. । ५९ तेभ्यस्ताः क.। ६० भवत्विति च पैदयत् - ख. । ६१ कृत्वा - क. । ६२ वहायेति - क. । ६३ देवि - क. ख ६४ यो दद्यात् - क. । ६५ सान्नैध्यं - ख. । ६६ कांसदोहनीम् - क., कामदोहनीम् - ख.,.. ६ दोहिनीम् क। ६७ रूक्मखुरां - क. । ६८ शास्त्राणि - क. । ६९ शक्रः पादं - घ. । ७० प्राणे - घ ७१ प्रभञ्जनः - क. ।


मुखं तस्याः श्रितो वह्निर्जिह्वा सोमः स्वयं प्रभुः ।
कर्णयोस्तु दिशः सर्वाः शिरा७२ रुद्राः समाश्रिताः ।।७५। ।
पादयोर्लोकपालाश्च७३ सर्वेस्थीनि च पर्वताः ।
समुद्रास्सप्त जठरे ग्रीवायां तपनाः श्रिताः । ।७६ । ।
सास्नां गङ्गा सरिच्छ्रेष्ठा पार्श्वयोर्वसवः७४ शुभाः ।
प्रजापतिरुपस्थश्च मूत्रं७५ तीर्थानि सर्वशः ।।७७। ।
पुरीषं श्रीरभूत्तस्या नागाश्चास्त्राणि सर्वशः ।
साध्या विश्वेथ लोकाश्च पुच्छमाश्रित्य संस्थिताः ।।७८।।
मन्त्रा यज्ञाश्च दानानि यमाश्च७६ ऋषिभिस्सह७७ ।
नक्षत्राणि ग्रहाश्चैव तारारूपाणि यानि च । ।७९। ।
गायत्री चैव त्रिष्टुप् च जगती पंक्तिरेव च ।
अनुष्टुबृग्यजुश्चैव७८ सामान्याथर्वणं७९ तथा । ।8.111.८ ० । ।
लोकस्य मातरश्चैव मेघा वर्षमथापि८० च ।
धर्मो नारायणश्चैव भूतानि सरितस्तथा । ।८ १ । ।
रोमकूपानि संश्रित्य तस्या देवा व्यवस्थिताः ।
यक्षाश्च राक्षसाश्चैव पिशाचाः पक्षिभिः सह । ।८२ । ।

यज्ञाश्च दक्षिणाश्चैव तथा चाप्सरसः शुभाः ।
गन्धर्वाश्च महात्मानो ये चान्येप्येवमादयः । ।८३
तस्या विषाणयोर्व्यास सर्व एव समाश्रिताः ।
फलानि यज्ञदानानां गतयश्च८१ पृथग्विधाः । ।८४। ।
वत्सं समाश्रिताः सर्वे सर्वं८२ देवमयं शुभम् ।
देवैरध्यासितां तां तु सर्वलोकनमस्कृताम्८३ ।।८५।।

७२ शिरो - क. । ७३ स्यात् क, लोकापालाः स्यु - घ । ७४ पार्श्वे तु वसवः - क । ७५ मूर्तं - क. । ७६ नियमा - घ, यमानि - क । ७७ नियमैः सह (?) । ७८. प्च यजुश्चैव व - क. । ७९ सामगाथिवर्णं - घ । ८० ऋतुवर्षमथापि - घ. । ८१ ऋ (क्र) तवश्च - घ । ८२ सर्वे - क, सर्वदेवमयं (?) । ८३ सर्वैर्हस्तद्वयेन तु - क. ।

589
विप्रेभ्यो८४ मन्त्रवद्धस्ते प्रदद्यात् सुसमाहितः ।
कुशान्८५ सुवर्णं बीजानि८६ तिलान् सिद्धार्थकाँस्तथा८७ ।।८६।।
प्रदद्याद् गां ततोद्भिस्तु८८ मन्त्रेणानेन सुव्रत८९ ।
सर्वदेवमयीं दोग्ध्रीं सर्वलोकमयीं तथा ।।८७। ।
सर्वलोकनिमित्ताय सर्वलोकहिताय च९० ।
प्रयच्छामि महासत्वामक्षयाय शुभामिति । ।८८।।
एवं स दत्त्वा तां गां तु यत्र यत्र प्रजायते ।
तत्र तत्र गता सा तं९१ जन्तुं तारयते भयात्९२ । ।८९। ।
सर्व९३ कामदुहा९४ चैव सर्वलोकप्रदा तथा ।
सर्वज्ञानप्रदा चैव सर्वयज्ञफला तथा । ।8.111.९० ।।
सर्वाँल्लोकान् तया९५ गत्वा रमते च यथामरः ।
इह जातश्च तामेव कामगां संप्रपद्यते । ।९ १ । ।
स तया९६ मानुषो जातो गोसहस्री महाबलः ।
रूपवान् धनवांश्चैव बहुपुत्रश्च जायते । । ९२ । ।
प्रसूयमानां यो गां तु दद्यादुभयतोमुखीम् ।
यथोक्तेन विधानेन स जातिस्मरतां लभेत् । ।९३ ।।
यस्तु गां संप्रयच्छेत ब्राह्मणेभ्यो यथातथम् ।
तमप्यसौ भयार्थेभ्यस्त्रायते नरकादपि । ।९४। ।
कृष्णाजिनं च यो९७ दद्याद् व्रतिने ब्रह्मचारिणे ।

पृथिवीफलमाप्नोति योगश्चास्य प्रवर्तते । ।९५ । ।
योगिभ्यो ब्रह्मचारिभ्यो ब्राह्मणेभ्यो यतात्मवान् ।
यः प्रयच्छेदावसथं सोश्वमेधफलं लभेत् ।।९६। ।
आप्तोर्यामं पौण्डरीकं गोसहस्रञ्च विन्दति ।
स्मृञ्च परमा लब्ध्वा योगमाप्नोति सुव्रताः । । ९७। ।

८४ विप्राय (?) । ८५ दशां - घ । ८६ सुवर्णबीजानि - क. । ८७ सिद्धान्तकाँस्तथा - घ. । ८८ गास्ततोद्धिस्तु - क. । ८९ सुव्रताः (?) । ९० सर्वदेवनमस्कृता - क ख. । ९१ सान्ते - ख, शान्तं - क । ९२.. क्षपात् - क. । ९३ तथा क । ९४ कामदुघा - घ । ९५ तथा - घ. । ९६ तदा - ष । ९७ ततो - घ. ।


कमण्डलुं तु यो दद्याद् ब्राह्मणाय नरोत्तमः ।.
स तेन कर्मणा देव्यो धर्मनित्यत्वमाप्नुते९८ । ।९८। ।
व्याधितं यस्तु विप्रर्षे९९ दीनं मूढमचेतसम् ।
उद्धरेत यथाशक्त्या स मुच्येद् ब्रह्महत्यया । ।९९।।
यः सुवर्णं प्रयच्छेत दरिद्राय द्विजातये ।
दशानामश्वमेधानां फलं प्राप्नोति देवताः । ।8.111.१ ०० ।।
यश्चैवेमानि सर्वाणि दानान्युक्तानि कृत्स्नशः ।
ददाति युगपद्देव्यः स पृथ्व्यामेकराड् भवेत्१०० ।। १०१ । ।
इदं यः शृणुयान्नित्यं दद्याच्चैव स्वशक्तितः ।
पठेत च महाभागाः सोपि गच्छेत् त्रिविष्टपम् । । १०२ ।।
इति स्कन्दपुराणे एकादशोत्तरशतोध्यायः१०१

देव्युवाच१
देव्याः शृणुत भूयोपि यथा दानं विना शुभाः ।
अयमेवोपवासेन यथा धर्मोभिलभ्यते । । १ । ।
एकभक्तेन यो देव्यो मासं मार्गशिरं क्षपेत् ।
स तेन कर्मणा देव्यो गोमान् भवति नित्यशः । ।२। ।
पौषमासेन३ पुत्राँश्च बहूनाप्नोति धार्मिकान् ।
माघमासे च कुर्वाणो भूयः प्राप्नोति वै प्रियाः४ । । ३ ।।
एकभक्तन्तु कुर्वाणः फाल्गुने मासि नित्यशः ।
स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः ।।४। ।

यः क्षपेदेकभक्तेन चैत्रमासं नरोत्तमः ।
धनधान्यसमृद्धे स५ कुले जायेत रूपवान् । ।५। ।

९८ धर्मन्नित्यत्वमाप्नुते - ९९ विप्रर्षि (?) - क । १०० पृथिव्या सैकराड् - क ख, मुच्यते भयात् - घ । १०१ दानध्यायः ११० - घ. ।
१ सनत्कु - क, प र्वत्युवाच (?) । २ धर्मोपि लभ्यते - क । ३ पौष्यमासेन - क. । ४ प्रिया (न्) - क । ५... समृद्धेषु - क. ।

591
वैशाखं यः क्षपेन्मासमेकभक्तेन मानवः ।
याति स श्रेष्ठतां लोके पूजितो धनवानपि ।। ६ ।।
ज्येष्ठमूलं तु यो मासमेकभक्तं समाचरेत् ।
भ्रातृणां भवति ज्येष्ठो भोगं प्राप्नोति पुष्कलम् । ।७।। ।
आषाढं चापि यो मासमेकभक्तं समाचरेत्७ ।
स राज्ञो मान्यतां प्राप्य कामानाप्नोति पुष्कलान् । ।८। ।
श्रावणे चापि यो मासे तथा चैवाचरेन्नरः ।
सेनापत्यं स संप्राप्य बलवानभिजायते । ।९।।
यस्तु भाद्रपदं मासमेकभक्तं समाचरेत् ।
स तेन कर्मणा देव्यो धनवानभिजायते । । 8.112.१० ।।
योपि चाश्वयुजं मासमेकभक्तेन तिष्ठति ।
वाणिज्यं फलते तस्य कृषिः पशुगणास्तथा ।। ११ । ।
कार्तिकं त्वपि यो मासमेकभक्तेन तिष्ठति ।
सोश्वमेधफलं प्राप्य वह्निलोके महीयते ।।१ २ । ।
यः क्षपेदेकभक्तेन यावज्जीवं नरोत्तमः ।
विमानेनार्कवर्णेन शक्रलोकं स गच्छति८ । । १३ । ।
संवत्सरं तु यः पूर्णमेकभक्तेन तिष्ठति ।
स पार्थिवसमो भूत्वा महीं पाति महेन्द्रवत् ।। १४। ।
अहोरात्रं तूपवासं कुर्यादेकं नरोत्तमः ।
दशानां स सुवर्णानां फलं प्राप्नोति शोभितम् । ।१ ५ । ।
मासे मासे त्वहोरत्रं यः करोति नरोत्तमः ।
स तेन कर्मणा शुद्धो विद्वान् भवति धार्मिकः । । १ ६। ।
चतुर्दशीमष्टमीं च पक्षयोरुभयोरपि९ ।

अहोरात्रं क्षपेद्यस्तु सम्वत्सरमशेषतः ।।१७।।
स तेन कर्मणा युक्तः सर्वपापविवर्जितः ।
न याति नरकं देव्यो यमञ्च न स पश्यति ।। १८।।

६ चैव - ख. । ७.. मेकभक्तेन वै क्षपेत् - ख. । ८ स गच्छेच्छक्रलोकताम् - क. । ९ उभयोः पक्षयोरपि - क. ।


मासे मासे च यः कुर्यात् त्रिरात्रक्षपणं बुधः ।
कौबेरं लोकमासाद्य स विन्देत् परमं सुखम् ।।१९।।
चतुर्थेहनि यो भुंक्ते प्रयतात्मा शुचिर्नरः ।
गान्धर्वं स पदं प्राप्य मोदते शक्रवद्दिवि ।।8.112.२० ।।
पञ्चमेहनि यो भुंक्ते प्रतिमासमतन्द्रितः ।
वायुलोकं१० समासाद्य स्वर्गलोकं स गच्छति ।।२१ ।।
यो भुंक्ते दिवसे षष्ठे नित्यं नियममास्थितः ।
वारुणं लोकमासाद्य सोपि विन्देत् महत्पदम् ।।२२।।
सप्तमेहनि यो भुंक्ते जितद्वन्द्वो दृढव्रतः ।
आदित्यलोकमासाद्य सोपि विन्देत् महत्पदम् ।।२३ ।।
अष्टमे चैव११ यो भुंक्ते दिवसे मानवः शुचिः ।
वैष्णवं लोकमासाद्य स भवेत् परमद्युतिः ।।२४।।
नवमेहनि यो भुंक्ते नरो नियममास्थितः ।
स वसूनां प्रियो भूत्वा चरते वसुभिः सह ।।२५।।
दशमेहनि भुक्त्वा तु दशाहस्य फलं लभेत् ।
अश्विभ्यां च समो भूत्वा सूर्यवज्ज्वलते सदा ।।२६।।
मानुष्यञ्च पुनः प्राप्य दशभार्या लभेत सः ।
सुबर्णमक्षयं चैव न चाकाले१२ म्रियेत सः ।।२७।।
एकादशे तु यो भुंक्ते दिवसे मानवः शुचिः ।
एकदश्याः फलं प्राप्य स रुद्रगणतां लभेत् ।।२८।।
स्थित्वा तत्र शतान्यष्टावतिसौख्यसमन्वितः१३ ।
ब्राह्मणत्वमनुप्राप्य यज्वा स इह जायते ।।२९।।
द्वादशे दिवसे यस्तु१४ देव्यो भुंक्ते सदा नरः ।

द्वादशाहं स संप्राप्य१५ शक्रलोकमवाप्नुयात् ।।8.112.३ ० ।।

१० वायुलोके - क. । ११ अष्टमेहनि - क. । १२... काङ्क्षं - क. । १३ . वन्ति (न्ते) सौख्यसमन्वितः - ख. । १४ चैव दिवसे - ख. । १५ समासाद्य - घ. ।

593

तत्रोष्य स सुखं भूय इह जातो नरोत्तमः ।
राजा वा राजमात्रो वा धन्वा१६ वा सुमहान् भवेत्१७ । । ३१ । ।
त्रयोदशे तु यो नित्यमश्नाति दिवसे नरः ।
वसेत्१८ स भार्गवस्थानं प्राप्य दिव्यसुखान्वितः । ।३ २ । ।
अथ चेन्मानुषो भूयस्स नरो जायते 'शुभाः१९ ।
धनधान्यसमाकीर्णे जायते सत्कुले२० शुभः ।।३ ३ ।।
चतुर्दश तु यो नित्यं दिवसानि क्षपेन्नरः ।
तौषितं लोकमासाद्य भवेद् गणपतिर्वरः । । ३४। ।
अर्धमासं क्षपेद्यस्तु नित्यमेव ह्यतन्द्रितः ।
देवराजेन तुल्योसौ भूत्वा स्वर्गेवतिष्ठति । । ३ ५। ।
इह राजा महाभूमौ भूय एवाभिजायते ।
यस्तु मासं क्षपेद्धीरो जितक्रोधो जितेन्द्रियः ।। ३ ६। ।
विमानेन स दिव्येन अप्सरोभिस्समावृतः ।
पूज्यमानो यथा देवः स्तूयमानश्च सर्वशः । । ३७ । ।
ज्वलन्नादित्यसंकाशो२१ नित्यं सुखमुपाश्नुते२२ ।
सर्वलोकेषु वसते बहून्यब्दायुतानि२३ तु । । ३ ८।
ततो ब्रह्मसदं प्राप्य ब्रह्मणा स सुपूजितः२४ ।
ब्रह्मलोके निवसते यथा ब्रह्मा नरोत्तमः । । ३९ । ।
अथ चेत्पुनरायाति ब्राह्मणो भवतीश्वरः ।
योगञ्च तत्र लभते योगैश्वर्यं२५ समश्नुते२६ । ।8.112.४० । ।
योगीशस्स ततो भूत्वा शम्भोर्गणपतिर्भवेत् ।
सर्वेषां चोपवासानां विधिं परमपुण्यदम् । ।४१ । ।
देव्यः शृणुध्वं मत्तोन्यं यथावदनुपूर्वशः ।
स्नातः शुचिरथाचान्तो हुताग्निः सुसमाहितः२७ ।।४२ । ।

१६ धनी - (?) । १७ स महान् भवेत - ख । १८ विशेत् - क । १९ शुभः - ख । २० स कुले - क. । २१

ज्वलनादित्यसंकाशो - क । २२ सुखं नित्यं समश्नुते - ख । २३ बहूनब्दायुतान् - क. ख । २४ सुपूज्यते - क. । २५ य (ये) नैश्वर्यं - क । २६ समन्वितः - ख. । २७ सुममीहितः - क. ।



दीक्षयित्वा तथा२८त्मानमुपवासं चरेद् बुधः ।
स्नायात्२९त्रिषवणं चैव जुहुयादग्निमेव च ।।४३।।
वाग्यतो क्रोधनो दान्तो धार्मिकः सत्यवाग् घृणी ।
जपन्सदैव गायत्रीं पवित्राणि च नित्यशः ।।४४।।
रुद्रानथ गणान् वापि रात्रौ च स्थण्डिलेशयः ।
कुशानास्तीर्य विधिवत् स्त्रीशूद्रैः परिवर्जितः ।।४५।।
समश्नीयात्३० ततो देव्यो वीतशोको३१ विमत्सरः ।
यावन्त्यहानि तिष्ठेत तावद्विप्राँस्तु भोजयेत् ।।४६। ।
ततः पूर्णे तु काले वै ब्राह्मणानां शतं वरम् ।
सहस्रमथवा शक्त्या पूजयित्वा तु सर्वशः ।।४७।।
हविष्यं भोजनं दत्त्वा गाश्च३२ वासांसि च क्रमात् ।
सुवर्णं तिलपात्रं च एकैकस्य प्रदापयेत् ।
ततस्तत्फलमाप्नोति यदन्यैर्दुर्लभं व्रतैः ।।४८।।
वृषभं यस्तु नीलाङ्गमुत्सृजेत नरोत्तमः ।
अन्यं वापि महाभागाः३३ स पितॄँस्तारयेन्नरः ।।४९।।
यावन्ति तस्य रोमाणि वृषभस्य महात्मनः ।
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते ।।8.112.५०।।
तिलपात्राणि यो दद्याद्विप्रेभ्यः शुद्धमानसः ।
अमावास्यां समासाद्य कृष्णानां (?) सुसमाहितः ।।५१।।
स पितॄँस्तर्पयित्वा तु अक्षयं नरपुंगवः ।
पितृलोकं समाप्नोति चिरञ्च सुखमश्नुते ।।५२।।
उपवासविधिस्त्वेष कथितो मे शुभाननाः३४ ।
चान्द्रायणविधिं भूयः शृणुध्वं सुसमाहिताः ।।५३।।
यस्तु चान्द्रायणं कुर्याद्यथोक्तं सुसमाहितः ।
स सोमलोकमासाद्य सोमेन समतां व्रजेत् ।।५४।।

२८ ततो - क ख. । २९ स्नायेत - क., स्नातः - ख. । ३० सपत्नी.. - ख. । ३१ विशोको प्रो.. ख. । ३२ गावो - क । ३३ महाभागान् - क., महाभाग - ख. । ३४ सुशोभनाः - क. ।

प्राजापत्यं तु३५ यः कुर्यादेकशो बहुशोपि वा ।
प्रजापतिसमो भूत्वा तस्य लोके महीयते । ।५५। ।
यस्तु सान्तपनं कृच्छ्रं करोति नरसत्तमः ।
आत्मानमुद्धरेत् कृच्छ्रात् सोग्निलोकं च गच्छति३६ । ।५६। ।
महासान्तपनं यश्च करोति सुमहामनाः ।
सर्वज्ञतामवाप्नोति ब्रह्मलोकं च विन्दति । ।५७।।
तुलापुरुषकं यश्च कुरुते द्विजसत्तमः ।
स मुक्तस्सर्वपापैस्तु गच्छेत३७ दिवमूर्जितः३८ ।।५८।।
अतिकृच्छ्रेण तु नरः शर्वस्य३९ भवनं व्रजेत् ।
कृच्छ्रातिकृच्छ्रेण तथा गाणपत्यमवाप्नुयात् । ।५९। ।
यस्तु सर्वाणि कृच्छ्राणि कुरुते नरसत्तमः४० ।
स यं प्रार्थयते कामं तमेव समुपाश्नुते ।। 8.112.६० । ।
यस्य कस्यचिदेतेषां४१ कर्ता स्यात्४२ सुसमाहितः ।
स तेन शुद्धो४३ भवति देवत्वञ्चापि विन्दति ।।६ १ । ।
पयोभक्षस्तु यो नित्यं नरः संवत्सरं वसेत् ।
यावकं चोपयुञ्जानो गोमूत्रेणाभिसंस्कृतम् । ।६२ । ।
पिण्याकफल(?) भक्षो४४ वा अक्षारलवणोपि वा ।
सोश्वमेधफलं प्राप्य ब्रह्मलोकं समश्नुते । । ६३ ।।
सर्वपापविनिर्मुक्तो विमुक्तस्सर्वबन्धनैः ।
विमानेनार्कवर्णेन ब्रह्मवच्चरते च सः४५ । । ६४। ।
यस्त्वेतान्येव४६ सर्वाणि व्यस्तानि नरसत्तमः ।
यावदुच्छ्वासमाशेते महात्मा नष्टकिल्विषः ।।६५। ।
स लोकान्वा महासत्वो यथेष्टान् मोक्षमेव वा ।
ऐश्वर्यं वा महत् प्राप्य दीप्यमानोवतिष्ठते४७ । ।६६। ।

३५ च - ख. । ३६ समश्नुते - ख. । - ख. । ३७ गच्छते - ख. । ३८ दिवि पूजितः - क., दिविमूर्जितः - ख । ३९ सर्वस्य - क. । ४० स नरोत्तमः - क. । ४१. देतेव - क., देवेह - ख. । ४२ कृच्छ्रस्य - क ख. । ४३ सिद्धो - क. । ४४ भक्तो - ख. । ४५... व स (श)ः - क । ४६ यश्चैतान्येव - क । ४७ दीव्यमानो- वतिष्ठते - ख. ।

एतान्येव च सर्वाणि दानानि च तपांसि च ।
विना मन्त्रेण सततं शूद्राणामपि सर्वशः । । ६७। ।
विधीयते न सन्देहो एवमाह प्रजापतिः ।
अमन्त्रास्ते स्मृताः सर्वे शूद्रा विगतकल्मषाः । । ६८। ।
स्त्रीणां तु दैवतं४८ भर्त्ता न ततोन्यद्विधीयते ।
स गतिः परमं धाम स धर्मः परमः स्मृतः । । ६९।।
तेन या त्वभ्यनुज्ञाता इमं४९ धर्मं समाचरेत् ।
सा फलं तस्य धर्मस्य प्राप्नोति सुसमाहिता । ।8.112.७० ।।
या तु तेनाननुज्ञाता धर्मं किञ्चित् समाचरेत्५० ।
न तत्फलं सा लभते लभते च सती फलम् ५१ ।। ७१ ।।
या तु भर्त्राभ्यनुज्ञाता५२ कृत्वा धर्मं सुपुष्कलम् ।
दद्यात्तु पत्युर्या५३ नारी तस्यानन्तं भवेत्५४ फलम् । ।७२। ।
यच्च प्रार्थयते किञ्चिदिह लोके परत्र वा ।
तत्सर्वं प्राप्नुते५५ देव्यः सुभगा चापि जायते५६ । ।७३ । ।
वश्यश्चास्या भवेद् भर्त्ता प्रिया तस्य च सा तदा ।
पुत्रप्रजा च भति न च दुःखं समश्नुते । ।७४। ।
एष धर्मो मयाख्यातो युष्माकं लोकमातरः ।
अतो भूयश्च किं त्वन्यच्छ्रोतुमिच्छथ शोभनाः । ।७५ । ।
अयं हि धर्मः सुमहानतिप्रभः सुदुष्करश्चाप्यकृत्मभिर्वराः ।
न चैनमन्यस्य५७ शठस्य कस्यचिदधर्मिणो वा कथयीत धर्मवित्५८ । ।७ ६ । ।
सनत्कुमार उवाच
ततस्ताः सहिताः सर्वा देव्यो लोकस्य मातरः ।
पूजयित्वा महादेवीमूचुः संहृष्टचेतसः । । ७७ । ।

४८ देवता - क । ४९ इदं - क ख । ५० कुर्याच्छुचिस्मिते - ख, कञ्चित् समगचरेत् (?) । ५१ चासतीतफलं - क । ५२ ह्यनुज्ञाता - क । ५३ पतये ( पत्ये या?) - क ख । ५४ तस्यानन्त्यं हि तत, - क । ५५ प्राप्यते - क. । ५६ चाभिजायते - ख । ५७ न चैवमन्यस्य - घ । ५८ इतः परम् इति श्रीस्कन्दपुराणे उमासावित्रीसंवादे एकादशोत्तरशततमोध्यायः, इत्यनन्तर स्त्री धर्मविषयक शतरूपा ब्रह्मसंवादरूपः सावित्रिकर्तृको?पदेशात्मकः प्रायः - पंचचत्वारिंशच्छलोकात्मको ग्रन्थोधिक उपलभ्यते घ पुस्तके, स च प्रक्षिप्त इत्यस्माभिरत्रोपेक्षित इति ।

अहो धर्मस्त्वयाख्यातः सर्वामरनमस्कृते ।
यस्य संसेवनात् क्षिप्रं प्राप्यते सुमहत् फलम् । ।७८।।
इतो वीक्षामहे देवि गिरेरस्य वनं शुभम् ।
पुष्पजातिसमाकीर्णं बहुपक्षिगणावृतम् । ।७९। ।
तत उत्थाय सा देवी सहिता देवमातृभिः ।
मन्दरस्य गिरेर्दिव्यं द्रष्टुं तद्वनमुत्तमम् ।।8.112.८० । ।
विचचार महायोगा चक्षुर्दत्वा सुखापहम५९ ।
मानश्शिलानि शृङ्गाणि सौवर्णानि च वीक्षती । ।८१ । ।
रम्याणि सिततोयानि गिरेः प्रस्रवणानि च ।
सरांस्युत्पलपूर्णानि वापीश्च सुमनोहराः ।
तुतोष गिरिजा दृष्ट्वा पार्श्वसंस्थं च नन्दिनम । ।८२ ।।
तदा६० शुभावती नाम मेरुकन्या सुमध्यमा ।
उवाच हिमवत्पुत्रीं दर्शयंती शुभं वनम् । ।८३ । ।
इदं पर्वतकन्ये त्वं पश्य केलिकलाशुभम् ।
वनं सर्वर्तुसंपन्नं यथाधित्वं सुभाषितम् (?) । ।८४। ।
अयं प्रसूते सुमहान् सपर्वस्यास्य शोभने (?) ।
विदुषामथ कृच्छ्रेषु यथायुक्तं सुभाषितम् (?) । ।८५।।
तथा स्वर्णोपलो भाति गिरेः शिखर उत्तमः ।
यथा लक्षणवद्विद्वान् प्रगीय इव सामगः । ।८६। ।
अयं च मणिमान्नित्यं शैलाग्रः६१ प्रतिभास्वरः ।
भाति उद्यन्निवादित्य उभयस्तो महायुगे (?) । ।८७।।
अयं वैदूर्यशिखर इन्द्रनीलतलोपलः ।
भाति शर्वाणि६२ विभ्राणः६३ स्थलेश्वरहरोपरि (?) ।।८८।।
अयं मत्तो गजो मत्तः करेणुभिरिवावृतः ।
कृत्वाभ्यंजनयः सुभ्रु पल्लवः शिरसा नतः । ।८९।

५९ देहसुखावहम् - क. । ६० ततः - घ. । ६१ शिलेग्र घ । ६२ सर्वाणि घ। ६३ शुभ्राणि घ।



अहो सुरूपं६४ पश्येमं वनराजियुतं६५ शुभे ।

यौवराज्येभिषिक्तं वै जयंतमिव चामरैः । ।8.112.९० । ।
पादपं चैव६६ शर्वाणि पश्यैनं करपल्लवैः ।
मातुः समीपे नृत्यन्तं पुत्रं प्रियमिवौरसम् । ।९१ । ।
मन्ये प्रियावासमिमं देवताया वनस्य ह ।
अतीव दृश्यते शोभा नेदृशी दृष्टवत्यहम् ।।९२।।
सनत्कुमार उवाच
तस्यास्तद्वचनं श्रुत्वा शुभावत्या गिरेः सुता ।
निरैक्षिष्ट६७ तरुं बालं६८ हिमवत्तनयाव्यया ।।९३।।
तथा सा६९ देवदेवी तं७० विचरन्ती महागिरौ७१ ।
अपश्यद्बालसूर्याभं बालाशोकं सुपुष्पितम् ।।९४।।
आताम्रपल्लवशतैः कृत्वाञ्जलिमवस्थितम्७२ ।
तं दृष्टवा गिरिजा देवी परां प्रीतिमगान्मुने । ।९५।।
मनसाचिन्तयच्चैव पुत्रोयं पादपो मम ।
एष मे तनयः श्लाघ्यो भविता नन्दिवर्धनः ।।९६।।
भगवत्यागते ह्येनमनुज्ञाता स्वयंभुवा ।
ग्रहीष्यामि प्रियं पुत्रं वालाशोकस्य पादपम्७३ । ।९७ ।।
मम चायमपुत्राया७४ भविता पादपोत्तमः ।
पुत्रः पुत्रवतां७५ श्रेष्ठाः पुत्रशोकविनाशनः ।।९८।।
सनत्कुमार उवाच
सैवं विनिश्चित्य तदा पादपं प्रति शोभना ।
अन्यं देशं पक्रिम्य उमा तत्राभ्यपश्यत ।।९९ ।।
अथास्मिन्नन्तरेभूवन्नुत्पातास्तत्र भीषणाः७६ ।
वायुवेगो महानासीद् गिरिवृक्षनिपातनः ।।8.112.१० ० ।।

६४ अहोस्य रूप - घ. । ६५ वनराज्ययुतं (?) । ६६ पादपैरेव - घ. । ६७ निरीक्ष्य... - घ. । ६८ तं तरुं सम्यग् - घ- । ६९ ततस्सा - क. । ७० तु - क. । ७१ महागिरिं - क. । ७२ कृताञ्जलिमवस्थितम् (?) । ७३ बालाशोकं सुपादपम् - क. । ७४ ममैवायमपुत्राया - घ. । ७५ पुत्रवती - घ. । ७६ तत्र उत्पातोतीव भीषणः - क. ।

599
शिखरं पर्वतेन्द्रस्य अपतद्७७ व्यसनं विना ।
पादपाश्च विना वातमुन्मूलाः संबभूविरे । ।१ ०१ ।।

उल्काः पतन्ति चाकाशाद्वाति७८ वायुरशोभनः ।

अक्षि सव्यं स्फुरच्चापि देव्यास्तत् कालिनन्दन । ।१ ० २।।

तान् वीक्ष्य७९ विस्मिता देवी शैलादिमिदमब्रवीत् ।

सखीश्च८० सर्वकालेया इदं वचनकोविदाः । ।१ ०३ । ।

देव्युवाच

प्रमत्तो भाति शैलोयं८१ वृक्षैस्तैः सर्वतो युतः ।

भयं महदिदं मन्ये नैतदाकस्मिकं स्मृतम् ।। १ ०४।।

न चानिमित्तमुत्पाता८२ भवन्त्येते दुरासदाः ।

तथा कुरु यथा मे८३ नो भयं यच्छन्त्यशोभनाः । ।१ ० ५। ।

ततो नन्दी प्रणम्याह देवदेवीं कृताञ्जलिः ।

कुतो भयं भवानि त्वां या त्वं माता दिवौकसाम् ।।१ ० ६। ।

सनत्कुमार उवाच

तस्यैवं वदतो व्यास देवीं विश्वस्य मातरम् ।

अन्धकोपि तदा दैत्यः८४ पातालान्मन्दरं ययौ ।।१ ०७।।

प्रह्लादप्रमुखैर्दैत्यैर्दानवैश्च सहस्रशः ।

वृतः श्रीमान् महादैत्यः शक्रो देवगणैरिव ।।१ ०८।।

स दैत्यानां मतेनैव वरिष्ठानां महासुरः ।

आगतो मन्दरं द्रष्टुं यथेन्द्रो नन्दनं वनम् ।। १० ९।।

प्रह्लादश्चानुह्लादश्च शिनिर्बाष्कलिरेव च ।

तुण्डस्तुहुण्डो८५ वातापी बलिर्बाणो विरोचनः ।।8.112.१ १० । ।

इल्वलो नमुचिर्व्यंसो विप्रचित्तिर्महासुरः ।

सुन्दो निसुन्दो नरको धेनुकोरिष्ट एव च ।। १११ । ।

७७ अपश्यद् - घ. । ७८... द्ववौ - घ. । ७९ दृष्ट्वा - घ. । ८० सख्यश्च - घ. । ८१ शैलश्च - घ. । ८२ नह्यनिमित्तमुत्पाता - घ. । ८३ यथेमे (?) । ८४ तथा - घ, नाम दैत्येन्द्रः - घ. । ८५ कुंडो भुकुंडो - घ. ।



मुरः८६ कार्त्तस्वनश्चैव हस्ती दुर्योधनो मयः ।

तारकस्तारकाक्षश्च विद्युन्माली प्रभाकरः । ।१ १ २। ।

हालाहलश्च कुम्भश्च संवरः कालसंवरः ।

धुन्धुस्तथेन्द्रदमनो हयग्रीवः शतोदरः । ।१ १३ । ।

मेघनादः सिंहनादो दुन्दुभिः शतदुन्दुभिः ।

कालनेमिर्बको दंडो विपाकः पाक एव च । । १ १४। ।
वृषपर्वा शतावर्तः पुलोमा शरभस्तथा ।
बलो गगनमूर्धा च सूचीरोमा महायशाः । । १ १५। ।
असिलोमा प्रलम्बश्च शंभुर्देवान्तकस्तथा ।
महिषो भीमसेनश्च वायुर्वादित्र८७ एव च । ।
अन्धकानुचराप्येते८८ मंदरं समुपागताः । ।१ १ ६। ।
ते शस्त्रवंतो जितदेवसंघा महानुभावा धर्मपथच्युताश्च ।
सर्वे च शूरा ह्यनिवर्तिनश्च सहान्धका मन्दरगा बभूवुः । । १ १७। ।
सनत्कुमार उवाच
तद् गजानामिव कुलं मत्तानां कालिनन्दन ।
वर्षतामिव मेघानां सविषाणां सरीसृपाम् । । १ १८। ।
दर्पितानां वराहाणां महाकुलमिवोल्वणम् ।
मन्दरे दानवकुलं तथा तत् प्रचचार ह । । ११ ९। ।
सोन्धको विचरँस्तत्र८९ सखीभिः सहितां तदा९० ।
अपश्यद् देवदेवी९१ तु वृकः सिंहवधूमिव९२ ।। 8.112.१२० ।।
---
८६ सुरः - घ. । ८७ वायुरादित्य (?) । ८८ व्यास - घ. । ८९ सोन्धकः सुमहावीर्यः - क. । ९० सहपार्वतीम् - घ. । ९१ दानवः क्रूरः - घ. । ९२ श्वपाको ब्राह्मणीमिव - घ., इतःपरंः-
स पश्यन्नेव कालेय हिरण्याक्षसुतस्तदा ।
स्वपिसंत (अनिमेष) इवायोगाददृश्यत दुरात्मवान् ।। १ । ।

601
दृष्ट्वा भगवतीं देवीं स दैत्यो मूढचेतनः९३ ।
प्रणामं नाकरोद् व्यास अन्ववैक्षत९४ केवलम् । । १२१ । ।
तं दृष्ट्वानिमिषं दैत्यं पश्यन्तमचलात्मजाम् ।
प्रह्लादस्तु महाबुद्धिरिदमाह वचोर्थवत्९५ । । १२२ । ।
- -- - --- -- - -- -- - -- - -- - - --- - - -- - - --- - - - - - -- -
नियत्याथ कृतान्तेन मृत्युना मदनेन च ।
कोपेनाथ दुरात्मासौ काले प्राप्ते सुरेतरः ।।२।।
अध्यासितस्तदा तैस्तु सर्वलोकवशंकरैः ।
लोकधात्रीं प्रति सोय(?) मिदं वचनमब्रवीत् । ।३।।
अन्धक उवाच

केयं सुमध्यमा ह्यत्र रूपेणाप्रतिमा शुभा ।
नेदृशी दृष्टपूर्वा मे कदाचिदपि दानवाः । ।४। ।
दिवि वा भुवि वागत्य पश्यतैनां सुमध्यमाम् ।
यदि नाम इयं भार्या कस्येयं पतिरीश्वरः । ।५ । ।
को वाहं किं च जीवामि सत्यमेतद्वचो मम ।
यस्येयं युवती भार्या चारुचित्रायतेक्षणा । ।६। ।
स्वर्गवासेन किं तस्य सुभगस्य महात्मनः ।
मिथ्याराज्यमिदं गुह्यं यस्येयं मे न कामिनी।। ७।।
बहूनि च सहस्राणि मम संति शुभानि च ।
तानि सर्वाणि दासीत्वे अस्यास्तुल्यानि दानवाः । ।८।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा हिरण्यकशिपोः सुतः ।
उवाचान्धकमाश्लिष्य बहुचित्रं च कालिज ।।९।।
इति वाधिको घ. पुस्तके ।

९२ मूढचेतसः - ख. । ९४ अन्ववेक्षत - क. ख. । ९५ इत उत्तरं प्रह्लाद उवाच' इति घ. पु. पाठः ।

602

इयं लोकस्य जननी९६ हिमवत्तनयाव्यया९७ ।
उमेति जगति ख्याता८ तपोयोगबलान्विता ।।१२३।।
यस्य९९ पुत्रोभवद् ब्रह्मा प्रजापत्यं च यो ददौ१०० ।
वरेण यश्च पुत्रस्य पुत्रतां ब्रह्मणो गतः ।। १२४।।
अस्माकं देवतानाञ्च यो ददाति वराञ्छुभान्१०१ ।
आरध्यः सर्वलोकानां देवानां च महायशाः ।।१२५।।
यः स्थितः सर्वमाविश्य भूतग्राममशेषतः ।
यस्यात्मना सर्वमिदं धार्यते१०२ जगदव्ययम् ।। १२६।।
यः स्वेच्छया सर्वमिदं१०३ निमेषार्धेन संक्षिपेत् ।
पत्नीयं तस्य देवस्य परमेशस्य धीमतः ।
शक्ता हीयं जगत्सर्वं क्षणेन दितिजाधिप ।।१२७।।
दग्धुं वाप्यथवा हर्तुं१०४ क्षेप्तुं नरक एव वा१०५ ।
कथमस्याः प्रणामं त्वं नाकरोर्दैत्य मोहितः ।।१२८।।
सनत्कुमार उवाच

अथैवं ब्रुवतस्तस्य धर्मयुक्तं सुरद्विषः ।
देवीभिः सहिता देवी क्षणेनान्तर्हिता मुने ।।१२९।। ----------- -- - -- -- - - - -- ।
अदृश्याः समपद्यन्त ताः स्त्रियो लोकमातरः ।।8.112.१ ३ ०।।
अथ ते तासु नष्टासु मन्दरस्य शुभं वनम् ।
पादचारेण संप्राप्ता बहुदृश्यसमावृतम् । ।१ ३१।।
बलाभिः कलनीषंडैः सातिमुक्तप्रियंगुभिः ।
चंपकैर्बकुलैर्लोध्रैरशोकैर्नागसाह्वयैः । ।१३२।।
पुन्नागैस्तिलकैश्चैव देवदारुवनैरपि ।
सरलैर्नारिकेलैश्च पद्मषंडैश्च शोभितम् ।।१३३।।

९६ जगतो जननी ह्येषा - क. । ९७ दृहिताव्यया - क. ख. । ९८ लोकविख्याता - घ. । ९९ यस्याः - क ख । १०० सर्वलोकपितामहः - क. ख. । १०१ यो वराँस्तोषितो ददौ - घ., शुभाः - क. । १०२ धारितं - ख । १०३ इच्छया सर्वमाविश्य - घ । १०४ हन्तुं - क. । १०५ च - ख. ।


गह्वरैश्च नितम्बैश्च गुहाभिर्निर्झरैरपि ।
न तस्माद्रमणीयं हि पृथिव्यां विद्यते क्वचित् ।। १ ३४।।
अथ ते दैत्यपास्सर्वे व्यचरन्त१०६ महागिरौ ।
बहुनिर्झरसंकीर्णे नानापादपसंकुले । । १३ ५।।
तत्र ते विचरन्तस्तु एकस्मिन्निर्झरे स्थितान् ।
सिद्धानपश्यन् सप्तर्षीन् योगयुक्तान्१०७ महामुनीन् । । १३ ६।।
उपविष्टान् शिलापट्टे मिथः कथयतः कथाः१०८ ।
धर्मयुक्ताश्च चित्रार्था मार्मिकाः१०९ सुसुखावहाः ।। १ ३७। ।
तान्दृष्ट्वा सोन्धकोपृच्छत् प्रह्लादमसुरोत्तमम्११० ।
क इमे ऋषयो ह्यत्र१११ किमर्थञ्चेह संगताः । । १ ३८। ।
तमुवाच११२ तदा धीमानसुरो११३ देवकण्टकम्११४ ।
हिरण्यकशिपोः पुत्रो बुद्ध्वा मध्यं समास्थितः ।।१३ ९।।
प्रह्लाद उवाच
एतेन्धक११५ महात्मान ऋषय११६स्सप्त संगताः ।
भृगुरत्रिर्मरीचिश्च विश्वामित्रोङ्गिरास्तथा ।।8.112.१४० ।।
भरद्वाजो वसिष्ठश्च योगसिद्धास्तपोधनाः११७ ।
इहागता महात्मानस्तपसा दग्धकिल्बिषाः ।।१४१ ।।

नैषान्निष्कारणं११८ मन्ये मन्दरागमनं प्रभो ।
इतो११९ वयमिहैकान्ते स्थित्वा सर्वेसुरेश्वराः१२०।
जानीम किमिमे कार्यमिह कुर्वन्ति साधकाः । ।१४२ । ।
एते वै निभृता भूतास्तूर्ष्णीं१२१ कृत्वा यथाबलाः ।
मतं गृह्णीम् सर्वेषां तूर्ष्णीं तिष्ठत दैत्यपाः ।। १४३ ।।

१०६ विचरन्तो - क ख । १०७ अपश्यन्सप्तर्षिसिद्धान् - क ख., सप्तर्षीन् तपसा शुद्धान् अपश्यन्त - घ । १०८. .कथंयस्ते महामुनीन् - घ. । १०९ कथाश्चित्रा धार्मिकाः -घ. । ११० ते सुरास्तत्र अपृच्छन्त परस्परम् घ । १११ यत्र - क, व्यास - घ. । ११२ तानुवाच - घ- । ११३... नसुरान् - घ । ११४ देवकण्टकान् - घ । ११५ चात्र - घ. । ११६ मुनय - घ. । ११७ सप्तैते ऋषयः शुभाः - घ. । ११८ नैषांनिरीक्षणम् - घ, । ११९ ततो - घ. । १२०.. .स्थिताः सर्वसुरेश्वराः - घ । १२१ भूत्वा तूष्णी (?) ।


सनत्कुमार उवाच
ततस्ते समयं कृत्वा स्थिता असुरपुंगवाः१२२ ।
योस्माकं तु वदेत् किञ्चिद् वध्यो नः स भवेदिति । ।१४४। ।
तत्र तेषु१२३ स्थितेष्वेवमसुरेषु दुरात्मसु ।
ऋषयस्ते तपोयुक्ता वाक्यान्यूचुः१२४ परस्परम् । । १४५। ।
न शुद्धोयं गिरेर्देशोद्य१२५ गच्छामोन्यतो१२६ द्विजाः ।
इहागमो हि दैत्यानां दृश्यते सुदुरात्मनाम् । । १४६। ।
भवान्यपि गतान्यत्र असुराणां भयार्दिता ।
असुरास्ते दुरात्मानो येषामेष क्षयो ध्रुवः । । १४७।।
गतास्ते निधनं सर्वे धर्मं ये नाशयन्नुत१२७ ।
राज्यार्थं यदि तैः क्रूरैर्न धर्मो१२८ नाशितो भवेत् ।। १४८।।
नैवं ते निधनं सर्वे प्राप्ताः स्युरमरद्विषः१२९ ।
स्वराज्यपरिसंतुष्टा१३० भवेयुर्यदि संस्थिताः ।
तेपि सर्वेषु लोकेषु बभुः पूज्याः सुरा इव । । १४९ । ।
सनत्कुमार उवाच
अंगिरास्तानुवाचेदं न तेषां कामिनं त्विह ।
राज्यहेतोः प्रवृत्तानामधर्मः ससुपस्थितः । । 8.112.१५० । ।
उपार्जयति राज्यं वै धर्म एव हि कामिनः१३१ ।
सोधर्मं नैव कुर्वीत स्थैर्यं राज्यं न१३२ किंचन । । १५१ । ।

अत्रिरुवाच
अधर्मे राज्यमिच्छन्ति जयन्ति युधि सर्वदा ।
नो१३३ प्रियाश्चैव लोकस्य भवन्ति हितजीविनः । ।१ ५२।।

१२२ प्रणम्यासुरपुंगवाः - घ । १२३ तं तस्तेपु - क ख. । १२४ वाक्यमूचुः - ख, इदमूचु - घ. । १२५ अयं देशोह्यशुद्धोद्य - घ. । १२६ गच्छामोत्र वै - क ख, गच्छामो वयमन्यतः - घ. । १२७ नाशयन्त्युत - क,.. न्तु ते - ख. । १२८.. रधर्मो - क । १२९... रसुरद्विपः - ख । १३० स्वरा- ज्यापरिसन्तुष्टा - क । १३१ कामिकः - घ । १३२ च - घ. । १३३ न (?) ।

605
धार्मिकास्त्वचिरेणैव हत्वा शत्रूनविक्लवाः ।
राज्येषु संप्रतिष्ठन्ते तस्माद्धर्मं समाश्रयेत् ।। १५३ । ।
ये तु राज्यं बलेनैव धर्मं त्यक्त्वाशुभेरताः१३४ ।
इच्छन्तोपि१३५ न तद्राज्यं प्राप्नुवन्ति कदाचन । । १ ५४। ।
अथ यत् प्राप्यते राज्यं तैस्तु क्रूरेण कर्मणा ।
न चिरं तद् भवेत्तेषां विद्विष्टाश्च भवन्त्यत ।।१५६।।
भृगुरुवाच
धर्म एष पुरा प्राप्तो१३६ ह्यसुराणां भयावहः१३७ ।
ब्रह्मणा सृष्टिकामेन न च ते वर्तयन्त्युत । । १५७। ।
स्वभावेन च ते सर्वे दारुणा वै निसर्गतः ।
दारुणाभिगमाच्चैव १३८ तत्कर्म समुपाश्रिताः ।। १ ५८।।
सनत्कुमार उवाच
असुरान्प्रति तेषां तु एवं१३९ कथयतां तदा ।
आगाद्१४० धाता विधाता च कृतान्तश्चेति ते त्रयः१४१ । ।१ ५९।।
तांस्ते संपूज्य१४२ विधिवत् परस्परमनुव्रताः१४३ ।
उपविष्टाः शिलास्वेव मनुयोपि च ते त्रयः ।।8.112.१ ६० । ।
उपविष्टाँश्चर्षयस्ताननमञ्च बहुमानतः ।
ऊचुः क्वेदं१४४ भवन्तोद्य प्रस्थिता लोकधारिणः१४५ । । १६१ ।।
धातोवाच१४६
ब्रह्मलोकाद्ध्युपावृत्य१४७ वयमद्य गता१४८ द्विजाः ।
ब्रह्मणा स्म समाज्ञप्ताः कश्यपस्य१४९ ततोन्तिकम् । ।१ ६२। ।

१३४ शुभेतराः ? । १३५ इच्छन्ति ते (?] । १३६ प्रोक्तो (?) । १३७ जयावहः ( दयावह) ( ?) । १३८. मश्चै ( श्चै ?) व - घ । १३९ सर्वेषामेवं - क ख । १४० आगुर् ( ?) । १४१ श्च महाबल - क ख । १४२ संगृह्य - घ । १४३ म् ति प्रभाः - घ. । १४४ कस्माद् - घ । १४५ लोकचिन्तकाः - - घ. । १४६ धातौ ( धातारौ ?) ऊ व रुः - क । १४७... दुपावृत्य - ख.,.. दपावृत्य - घ, दुपावृत्ता - घ । १४८ वयमभ्यागता - घ. । १४९ काश्यपस्य - क ।



भूयोपि मुनयः प्रोचुः किमुक्तः कश्यपो द्विजः ।
अथा१५०ब्रवीन्मुनीन्१५१ धाता कश्यपं तु यदुक्तवान्१५२ ।।२६३ ।।
यत्त्वया ज्ञापितो ब्रह्मन् ब्रह्मा लोकपितामहः ।
असुरा अपि मे पुत्रा देवाश्चापि प्रियाः प्रभो । । १ ६४।।
तेषां नैव यथान्योन्यं वैरं स्याल्लोकभावन ।
तथा कुर्वमरश्रेष्ठ१५३ भवेयं निर्वृतस्ततः । । १ ६५।।
तत्राहं१५४ ब्रह्मणाज्ञप्तो ब्रवीमि त्वां महामुने ।
देवासुरं यथावृत्त१५५मन्योन्यं सख्यमेव च । । १ ६६। ।
अमृतोत्पादनं चैव राज्यं संस्थाञ्च१५६ कृत्स्नशः ।
त्वयोक्तं१५७ भगवान्१५८ सर्वं भविष्यमृषिसत्तम ।। १ ३७।।
कथयामास लोकेशो१५९ देवासुरविचेष्टितम् ।
निवेद्य तस्य तत्सर्वं ब्रह्मणा प्रेषिता वयम् ।
इहागता भगवतीं द्रष्टुं हिमगिरेः सुताम् ।।१ ६८ । ।
सनत्कुमार उवाच
तानेव वादिनो१६० भूय ऋषयस्ते तपोधनाः ।
पप्रच्छुर्नियतात्मानः सर्व एव तदा मुने । १ ६९। ।
देवासुराणां यद् वृत्तं भविष्यं कथितं शुभाः१६१ ।
तद्वयं१६२ श्रोतुमिच्छामो यदि वोनुग्रहे मतिः । । 8.112.१७० ।।
किञ्च विज्ञापिता देवी युष्माभिः सुरसत्तमाः ।
कथयध्वं च तत्सर्व यद्यनुग्राह्यता हि नः । । १७१ ।।
तेषां तद्वचनं श्रुत्वा त्रयस्ते देवसत्तमाः ।
त्वमाचक्ष्व कृतान्तेति वाक्यमूचुर्महाबलाः । ।१७२।।

१५० ततो - घ. । १५१ मुनिं - क. । १५२ त प्रजापतिम् - क ख । १५३ कुरु नरश्रेष्ठ - क. ख., कुरु गुरु श्रेष्ठ -

घ. । १५४ पुत्राहं - घ । १५५ देवासुराणां यद् वृत्त - घ । १५६ राज्यसंथाञ्च - ख. । १५७ तस्यैवं - क. ख. । १५८ पृच्छतः - क. ख. । १५९ भूतार्थं - क. ख. । १६० तमेवं (वादिनं?) - घ. । १६१ सुराः - घ, सुताः(?) । १६२ यद्वयं - क. ।



ततः स तेषां बहुचित्रकारणं१६३ यथा भविष्यं कथयाञ्चकार ।
सुरासुराणां जगतश्च कारणं पुरा विधात्रा विहितं यथार्थवद् । ।१७३ । ।

इति स्कन्दपुराणे मन्दरारोहणो नाम द्वादशोत्तरशततमोध्यायः

व्यास उवाच
यत्तेषां कथितं तेन कृतान्तेन महात्मना ।
ऋषीणां मन्दरे पूर्वं तत्सर्वं कथयस्व मे ।।१ ।।
सनत्कुमार उवाच
भविष्यत्यसुराणां तु हिरण्यकशिपोः सुतः ।
इन्द्रो महाबलो विद्वान् प्रह्लादोसुरपुङ्गवः ।।२।।
सोमृतं सह देवैस्तु कृत्वा सुरगणाधिपः ।
जित्वा युद्धेमृतं देवान्नीतवान्दैत्यपुङ्गवः ।
विष्णुना निर्जितो युद्धे पुत्रं राज्येभिषेक्ष्यति । ।३।।
व्यास उवाच
कथं तदमृतं देवैरसुरैश्च महाबलैः ।
मथितं ब्रह्मणः पुत्र एतदिच्छामि वेदितुम् ।।४।।
सनत्कुमार उवाच
ब्रह्मणाभ्येत्य शक्रत्वे प्रह्लादोसुरपुङ्गवः ।
अभिषिक्तस्तदा व्यास असुरान् प्रजुगोपह ।।५।।
अथ देवैस्तदा१ संख्यमसुराणां बभूव ह ।
अमन्त्रयन्त देवाश्च भगवन्तं पितामहम् ।।६।।
देवा ऊचुः
भगवन्नसुरैर्देवा हन्यन्ते युधि मर्त्यवत् ।
न म्रियन्ते यथा देवा३स्तथाज्ञापय सुव्रत ।।७।।

१६३ बहुचित्तहारणं - क

१ मां - क. । २. स्ते - ख, ३ नामराःस्युर्यथा दैत्या - क. ख. ।



स एवमुक्तस्तानाह ब्रह्मा देवान्सवासवान् ।
क्षीरोदादमृतं शीघ्रमुत्पादयत गच्छत ।।८। ।
मन्वन्तरेषु सर्वेषु४ ये ये देवा भवन्ति ते५ ।
क्षीरोदादमृतं सर्व६ जनयन्त्य७ सुरैस्सह । ।९।।
तदश्नन्ति च देवेशास्तेन तृप्तिश्च जायते ।
उत्तिष्ठन्ति मृताश्चैव पीत्वा च न म्रियन्ति८ ते ।।8.113.१ ०।।
देवा ऊचुः
कथं तदमृतं देवा भुवि मन्वन्तरेश्वराः ।
उत्पादयन्ति तत्सर्वमुपायं कथयस्व नः ।।१ १।।
ब्रह्मोवाच
वारुण्यां सोमपुर्यां तु क्षीरोदं तत्सरः शुभम् ।
समुद्रा यत्र ते सप्त सदा सन्निहिताः शुभाः । ।१२ ।।
इरा९ माला सिनीवाली कुहू राका इरावती ।
सावित्री चैव गायत्री सुरभी कद्रुरेव च । ।१३ ।।
अदितिश्च दितिश्चैव देविका विश्वसंभवा ।
गावः सर्वसहा१० यत्र सर्वकामदुघाः११ शुभाः ।।१४।।
क्षरन्ति वत्सलाः क्षीरं षड्रसं ह्यमृतोपमम् ।
ऋषयः फेनपा यत्र तपोदमशमात्मकाः१२ ।।१ ५।।
ओषध्यस्तत्र याः काश्चिल्लोकेस्मिन्देवसत्तमाः ।
ग्राम्यारण्याश्च१३ दिव्याश्च मानुषाश्च सहस्रशः ।।१६।।
वृक्षान्वल्लीर्वीरुधश्च गुल्मानन्यांश्च तादृशान्१४ ।
प्रक्षिप्य भेषजञ्चैव१५ सोमं राजानमेव च ।।१७।।

४ पूर्वेषु - घ. । ५ वै - क., च - ख. । ६ सर्वं - क- । ७ जनयन्ति - क. । ८ मृयन्ति - क. ख. । ९ इरू - ख. । १० सर्वा. - ख. । ११ कामद्रुहाः - क. ख. । १२ समात्मकाः - क. । १३... रण्याथ - क. । १४ वीरुधः र - क. । १५ भिषजञ्चैव - क. ख. ।

श्रियं लक्ष्मीं तथा ख्यातिं१६ यशस्तुष्टिं तथैव च।
कीर्तिं श्रद्धां१७ धारणां च१८ ऊहापोहे तथैव च ।। १८।।
बलं धर्ममथोर्ज्जश्च१९ तृप्तिं देवीं सरस्वतीम्।
तीर्थानि चैव सर्वाणि दानानि विविधानि च ।। १ ९।।
वृषं रथं ध्वजं२० चैव गजमश्व२१ तथैव च।
अष्टौ च मंगलान्यत्र तथा छन्दांसि चाक्षिपन्२२ । ।8.113.२ ०।
वेदान् विद्याश्च२३ याः काश्चिद्याश्चैता लोकमातरः।
मन्त्रान्यज्ञान् सुवर्णं च२४ मन्त्रोपकरणानि च ।।२ १ ।।
यत्किञ्चिच्छोभनं चैव तृप्तिमद्रसवच्च२५ ह।
प्रक्षिप्य तत्र तत्सर्वं ततो मन्थानमावहन्२६ । । २२ । ।
मन्दरं पर्वतश्रेष्ठमकूपारञ्च कच्छपम्।
तस्य पृष्ठे च मन्थानं मन्दरं पर्वतेश्वरम्२७ ।।२३ । ।
कृत्वा विष्णुगृहीतं ते२८ वासुकिं प्रग्रहं तथा।
यतो मुखं ततो दैत्या यतः पुच्छं ततः सुराः । । २४।।
कर्षन्तस्तं तु मन्थानं मथ्नन्ति बहुलास्समाः२९ ।
ततो वर्षसहस्रेण तस्मादुत्थास्यते हयः । ।२५।।
गावश्चैव सहाभागा गजो मत्तश्च वै शुभः।
वृषभो भीमनादश्च कन्याः कीचकवेणवः । ।२६। ।
अष्टमङ्गलकञ्चैव भिषग् धन्वन्तरिस्तथा।
श्रीर्लक्ष्मीरेवमाद्याश्च वारुणी च मदोत्कटा । ।२७।।
ओषध्यश्च तथा दिव्या ग्राम्यारण्याः समानुषाः।
वृक्षादयश्च ते सर्वे ततः सोमश्च पार्थिवः । ।२८ ।।
अमृतं नत् समाहृत्य विषं तच्च दुरासदम्।
यज्ञादीँश्चैव तत् सर्वान् यत्किञ्चित्तत्र संभृतम्३१ । ।२९।।

१६ क्षान्तिं - क । १७ तेजो (?) । १८ धृतिं चैव - ख । १९ ऊर्जञ्च - ख,.. जञ्च (श्च?) - क. । २० वृषध्वजरथं - घ। २१ जंगमञ्च - ख. । २२ चासृजन् - क ख. । २३ देवविद्याश्च - घ. । २४- सुवर्णाश्च - कः । २५ दीप्तिमद्रसवच्च - ख. । २६ मन्दरमावहन् - क. । २७ पर्वतं मन्दरेश्वरम् - क. । २८ तं - क. । २ ९ ममन्थुरतुलं समाः - घ। ३० तान् - ख। ३१ संस्थितं - क. ख.।

एवं मन्वन्तरेष्वत्र देवैः सासुरमानुषैः ।
मथ्यते त्वमृतं देवास्तच्च संजायते तथा ।।8.113.३०।।
तस्माद्यूयमितो गत्वा दानवैस्सह देवताः ।
मन्थध्वममृतं३२ क्षिप्रं ततः प्राप्स्यथ३३ तद्धितम् । ।।३१।।
सनत्कुमार उवाच
त एवमुक्ता देवेशा ब्रह्मणा लोककर्तृणा ।
इमं लोकमुपावृत्य३४ तथाकुर्वन्त३५ सर्वशः ।।३२।।
तस्मिंस्तु मथ्यमाने वै विषमग्रे समुत्थितम् ।
देवासुरत्रासकरं तत्पपौ३६ शङ्करस्तदा ।।३३ ।।
ततस्तस्मात् पुनरपि ह्युदतिष्ठन्३७ पयोनिधेः ।
रत्नानि बहुचित्राणि तान्यगृह्णन्त३८ देवताः ।।३४।।
असुरा जगृहुर्नैनान्यशपँ३९ स्ताँस्ततोसुरान् ।
मङ्गलान्यवमन्यन्त४० तेन ते निधनं गताः ।।३५।।
रत्नान्यूचुः ।
यस्माद्यूयं दुरात्मानो नास्मान्नन्दथ दारुणाः ।
तस्मात् समीहितं यद्वस्तत्तथा न भविष्यति ।।३६।।
वारुणीं नाप्यगृह्णन्ता४१सुरा मदबलावहाम्४२ ।
यस्मात्ततोसुरास्ते वै दुरात्मानश्च सर्वशः ।।३७।।
तत उच्चैःश्रवा नाम४३ वाजी४४ परमशोभनः ।
हस्ती चैव चतुर्दन्तो भिषक् च सुमहायशाः ।।३८।।
घृताची पूर्वचित्तिश्च देवी रम्भा मनोरमा ।
अमृतं च ततः सोमो गृहीत्वोत्थितवान्४५ सुराः४६ ।।३९।।

३२ मथध्वममृतं - क. ख. । ३३ प्राप्स्यत - क. । ३४.. मनुवाप्य - ख. । ३५ कुर्वन्ति - ख. । ३६ तम्पपौ - क. ख । ३७ ह्युतिष्ठत् - क. ख । ३८ तान्यगृह्णन्ति - क.,.. न्तु - ख. । ३९... नुशपं - क. ख. ४०.. न्यवपन्यन्ते - क. । ४१ वारुणीञ्चाप्यगृहंणन्त - ख. । ४२.. .न्महान् - क. । ४३ नाम्ना - ख. । ४४ हयः - घ. । ४५ यः प्रगृह्योत्थितवान् - क. । ४६ सुरः - ख. ।


सनत्कुमार उवाच
तत उत्सृज्य ते रत्नान्यसुरा४७ दर्पिता भृशम् ।
सोमहस्ताद्४८ बलेनैव अमृतं जगृहुस्तदा४९ ।।8.113.४० ।।

तान्देवाः सहिताभ्येत्य ऊचुः सान्त्वेन मोहितान्५० ।
न युक्तं कर्तुमेवं बः सहिता उपयुञ्ज्महे ।।४१ ।।
सख्यं हि नोस्तु सुदृढं मा नो बलमदान्विताः५१ ।
क्लेशमेनं वृथा येह५२ कुरुध्वं दानवेश्वराः । ।४२। ।
तांस्तथावादिनः सर्वान् प्रह्लादो दानवेश्वरः ।
इदमाह महामायो धर्मं कृत्वा तु पृष्ठतः ।।४३ ।।।।
प्रह्लाद उवाच
यदा रत्नान्य५३ गृहणीध्वं सागरादुत्थितानि वै ।
तदा न यूयमस्माभिः किञ्चिदुक्ताः सुरेश्वराः ।।४४।।
इदमेवं५४ वयं सर्वे रत्नं गृह्णीम देवताः ।
नैतद् विना हि युद्धेन दास्यामो वयमद्य वै ।।४५।।
इदमस्मद्गतं देवा अमृतं सर्वमङ्गलम् ।
युद्धेन यदि वः कार्यं गृह्णीध्वं यदि शक्यते । ।४६। ।
सनत्कुमार उवाच
त एवमुक्तास्तैः क्रूरैर्देवा भीता इवाभवन् ।
विवर्णवदना दीना न किञ्चित्ताँस्तदोचिरे५५ । ।४७।। व्रीडितास्तेन५६ महासत्वा विनिवृत्ताः सुरेश्वराः ।
निरुत्साहा बभूवुर्हि हता५७ स्मेति च चिन्तयन्५८ ।।४८।। तांस्तथा चिन्तयानाँस्तु सहस्राक्षः पुरन्दरः ।
उवाच किं विषादेन युद्धेनैनान्निहन्महे५९ । ।४९ ।।

४७ रत्नानामसुरा - क., ते नागमसुरा - घ. । ४८ सोमं हस्ताद् - क । ४९ अजहुस्तथा - क. । ५० मोहिताः - ख । ५१ मदबलान्विताः - (?) । ५२ क्लेशमेवंविधंचेह - घ., तथा - क., विधं - घ । ५३ रत्नानि - क. ख. । ५४ इदमेव - ख., इदमेकं - ख । ५५.. ताँस्तदाब्रुवन् - (?) । ५६ वृडितास्ते - क. ख. । ५७ हाहताः (?) । ५८ चाब्रुवन् (?), चेत्यचिन्तयन् (?) । ५९. न्निहन्यते - ख. ।


विष्णुरुवाच
अबुद्धिरेषा शक्रस्य युद्धं प्रति सुरेश्वराः ।
नहि युद्धे सुराः शक्याः सर्वे हन्तुं महाबलाः ।।8.113.५० ।।
तस्मात्ते न पिबन्ति स्म यावदेवामृतं शुभम् ।
तावदेव हरिष्यामि मायामास्थाय तच्छलात्६० ।।५१ ।।
सन्नह्यध्वं सुरास्सर्वे६१ व्यूहं कृत्वावतिष्ठत६२ ।
गृहीत्वा यावदमृतमिहायामि दिवौकसः ।।५२। ।

सनत्कुमार उवाच
ततः सं६३ मोहनीं६४ मायामास्थाय विबुधेश्वरः ।
यज्ञश्रीरूपमास्थाय जगाम दितिजान्प्रति । ५३ ।।
स गत्वासुरराजं तमिदमाह महाबलः ।
यज्ञश्रीरूपसंपन्नः पद्महस्तोमलेक्षणः६५ ।।५४।।
विष्णुरुवाच
अबलान् दैवतान्६६ ज्ञात्वा६७ बलिनस्सुदुरासदान् ।
यज्ञश्रीरस्मि संप्राप्ता दानवान् बलदर्पितान् ।।५५ । ।
प्रतिगृह्णन्तु मां सर्वे दानवाः सुरविद्विषः ।
गतास्ते निधनं देवा यूयं देवा न संशयः ।।५६। ।
ततोसुरास्तदोत्थाय प्रह्लादश्चैव दानवः ।
प्रदक्षिणमुपावृत्य हस्तेस्य६८ कलशं ददुः६९ । ।५७। ।
स प्राह दानवान् देवः स्त्रीरूपा७०कृष्टमानसान्७१ ।
नेदं मयि भवन्तोद्य क्षेप्तुमर्हन्ति सर्वशः । ।५८।।
मायामास्थाय विबुधा माहार्षुस्ते७२ कदाचन ।
ते हि सर्वे दुराचारा मायानिकृतिमाश्रिताः । ।५९।।

६० तं बलात् - क. त्व. तद्बलात् (?) ६१ भवन्तो वै - क. ख । ६२ च तिष्ठत - क ख. । ६३ स - ख- । ६४ मोहनी - क. । ६५ पद्महस्तोपलक्षणः - ख.,. .त्पलेक्षणः - घ । ६६ देवतान् क. ख. । ६७ त्यक्त्वा - घ. । ६८ हस्तयोः - घ. । ६९ दधुः - घ. । ७० श्रीरुपो - घ, स्त्रीरूपी - क. । ७१ हृष्टमानसः - क. घ । ७२ मामार्षुस्ते - घ ।


प्रह्लाद उवाच
जाने मायाविदस्ते वै निकृत्या बलिनश्च ह७३ ।
माययैव वयं तान्वै निहंस्यामः सुदंशितान्७४ ।।8.113.६० । ।
निकृत्या निकृतिज्ञास्तु हन्तव्या दुष्टचेतसः ।
मायाविदश्च मायाभिरिति धर्म७५ प्रभाषितम्७६ ।।६१ ।।
त्वन्तु नो गतिरद्येह तथा चैव परायणम ।
त्वया दत्तमिदं सर्वे उपोयक्ष्याम७७ शोभने ।।६२।।
त्वञ्चेन्न७८ यच्छसेस्माकं तद्धि ते परमं हितम् ।
वयं च त्वां७९ तथा सर्वे नावमंस्यामहे सदा ।।६३।।

ततः स तं तदा धीमान् प्रहस्य शुभदर्शनः ।
उवाच यत् त्वया गीतं सत्यं तच्च करोमि ते ।।६४। ।
सनत्कुमार उवाच
ततो निरीक्षतां८१ तेषां८२ विष्णुः कृत्वा स्वकं वपुः ।
प्रगृह्यामृतमुत्पत्य देवेभ्यः प्रददौ विभुः ।।।६५।।
इति स्कन्दपुराणे अमृताहरणे त्रयोदशोत्तरशततमोध्यायः

व्यास१ उवाच
कथं तदुत्थितं घोरं विषं सूर्यायुतप्रभम्२ ।
कथं पीतं भगवता शङ्करेणामितौजसा ।।१ ।।
कथञ्च देवदेवस्य कण्ठे कुन्देन्दुसप्रभे ।
नीलो वर्णः समुत्पन्न एतदिच्छामि३ वेदितुम् ।।२। ।
सनत्कुमार उवाच
कस्मिन्देशे महापुण्ये एतदाख्यानमुत्तमम ।
वृत्तं ब्रह्मपुरोगाय कस्मिन् काले महाद्युते ।।३।।

७३ निकृता निपुणाश्च ये - घ. । ७४.. स्तु दंशितान् - घ. । ७५ धर्मे - क, धर्मः (?) । ७६ प्रभाषितः (?), प्रभाषत - क., प्रभाषते (?) । ७७ उपभोक्षाम (?) । । ७८ तं ( तद्) - क । ७९ वयमेतत् - ख, वयं ततः - क । ८० निरीक्ष्यत तान् - क । ८१ सर्वान् - क. । ८२ अमृतमथन अध्यायः १६६ इति ख । पूर्वाध्यायोपि १६६ ।

१ कृष्णद्वैपायन - ख. । २ सूर्यानलप्रभमम् - घ. । ३ एतदिच्छाम - क । ४ अत्र सन उवाचेत्यनन्तरं दीर्घ-सत्रयाजिषट्कुलीयप्रश्नवायूत्तररूप पूर्वापरसंबन्धाधायकः कियानंश. खण्डितः प्रतिभाति ।


एतदाख्याहि नः सम्यग् यथावृत्तं तपोधन ।
नीलकण्ठः कथं देवः शर्वस्त्रिभुवनेश्वरः । ।४।।
सूत उवाच
यथा श्रुतं मया पूर्वं वायुना जगदायुना ।
कथ्यमानं द्विजश्रेष्ठाः सत्रे वर्षसहस्रिके ।।५।।
नीलता केन कण्ठस्य देवदेवस्य शूलिनः ।
तदहं कीर्तयिष्यामि शृणुध्वं संश्रितव्रताः । ।६।।

उत्तरे शैलराजस्य सरांसि सरितो ह्रदाः ।
- - - - - कीर्णेषु देशेषु पर्वतेषु च ।।७।।
गिरिशृङ्गेषु तुङ्गेषु गह्वरोपवनेषु च ।
- - भक्षा महात्मानो मुनयः शंसितव्रताः ।।८।।
संस्तुवन्ति महादेवं यजन्तोत्र यथाविधि ।
ऋग्यजुःसामवेदैश्च नृत्यगीतार्चनादिभिः ।।९।।
. . .. . . . . . .. . . . . .. . .. . .. . ... .. . ।
प्रवृत्ते ज्योतिषां चक्रे मध्यं प्राप्ते दिवाकरे । ।8.114.१ ०। ।
दैवता७ नियतात्मानः सर्वे तिष्ठन्ति तां कलाम् ।
नियमानि समाप्यान्ते९ तस्मिन् काले दिवौकसाम् ।।१ १।।
तेषां मध्ये गतो१० वायुः प्राणिनां जीवितोद्भवः११ ।
नमस्ते नीलकण्ठाय इत्युवाच१२ सदागतिः१३ ।।१२।।
तच्छ्रुत्वा भावितात्मानो मुनयः संशितव्रताः१४ ।
बालखिल्या१५ इति ख्याताः पतङ्गसहचारिणः ।।१३।।
अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
ते स्म पृच्छन्ति वै१६ वायुं वायुपर्णाम्बुभोजनाः ।।१४।।

५ तमहं - ख. । ६ संशितव्रताः - ख. । ७ देवता - क. ख. । ८ उपतिष्ठन्ति (?) । ९ समाप्यैते - क. । १० मध्य गतो (?) । ११. द्भवं - ख । १२... (यो) मित्युवाच - क. । १३ समागतः - ख. । १४ शसितव्रताः (?) । १५ बालिखिल्या - क. ख. । १६ तं - घ. ।


बालखिल्या ऊचुः
नीलकण्ठेति यत् प्रोक्तं त्वया पवनसत्तम ।
तद्वयं१७ श्रोतुमिच्छाम त्वत्प्रसादात् प्रभञ्जन ।।१५।।
नीलता केन कण्ठस्य१८ प्रकारेणाम्बिकापतेः१९ ।
श्रोतुमिच्छामहे सम्यक् त्वद्वक्त्रात्तु२० विशेषतः ।।१६।।
एतत्पुण्यं यदस्माभिस्तद्धि नः२१ परमं हितम् ।
वाचो याः संप्रवर्तन्ते२२ सर्वास्तास्तु त्वयेरिताः२३ ।।१७।।
वर्णस्थानगते वायौ वाग्विधिः२४ संप्रवर्तते ।
ज्ञानं विज्ञानमुत्साह२५स्त्वत्तो वायो प्रवर्तते ।।१८। ।
- - - - - न२६ योगेन२७ सर्वे वर्णाः प्रवर्तिताः ।

यतो२८ वाचो निवर्तन्ते२९ देहबद्धाश्च३० दुर्लभाः ।।१९ ।।
तत्रापि तेस्ति सद्भावः३१ सर्वगस्त्वं सदानिल ।
नान्यः सर्वगतो देवस्त्वदृतेस्ति समीरण३२ । ।8.114.२० ।।
स चैव जीवलोकोयं धारितः पवन त्वया ।
एष वै जीवलोकस्ते प्रत्यक्षो३३ जीवितोद्भव३४ ।।२१।।
वेत्थ वाचस्पतिं देवं३५ मनोनायकमीश्वरम् ।
ब्रूहि त्वं३६ केन देशेस्य३७ किं कृता रूपविक्रिया३८ ।।२२।।
श्रुत्वा वाक्यं ततस्तेषामृषीणां भावितात्मनाम् ।
प्रत्युवाच महातेजा वायुर्लोकनमस्कृतः ।।२३।।
वायुरुवाच
पुरा कृतयुगे३९ विप्रा४० वेदनिर्णयतत्परः४१ ।
वसिष्ठो नाम धर्मात्मा मानसो वै प्रजापतिः४२ ।।२४।।

१७ यदयं - ख. १८ कण्ठेस्य (?) । १९ प्रहारेणाम्बिकापतेः - क. । २० तव वक्त्राद् - ख. । २१ नो - घ. । २२ यतो वाचःप्रवर्तन्ते - घ., सुप्रवर्तन्ते - क. । २३... स्त्वत्पुरोदिताः - ख. । २४ र्वायो- र्वाग्विधिः - ख. । २५ ज्ञानपूर्वमधो... - ख. । २६ त्वयाद्ध्व - घ., निष्पत . - ख, निष्ठीव - घ. । २७ मानेन - ख. घ. । २८ यत्र - क । २९ प्रवर्तन्ते - ख, विवर्तन्ते (?) । ३०... वत्त्वाच्च - ख. । ३१ सद्भावो - क. ख. । ३२ शरीरिणः - घ. । ३३ प्रत्यक्ष्यं - क. ख. । ३४ जीवितोद्भवं - क. । ३५ देव - ख । ३६ तत् - ख । ३७ देशस्य - क. ख. । ३८ त्वापविक्रिया - क. । ३९ कृते युगे - क. । ४० विप्रो - क. । ४१ तत्पराः - ख. । ४२ प्रजापतेः (?) ।

616

पप्रच्छ कार्तिकेयं वै मयूरवरवाहनम् ।
क्रौञ्चदेहान्तकरणं४३ देव्या हृदयनन्दनम्४४ । ।२५ । ।
महिषासुरनारीणां४५ नयनाञ्जनतस्करम् ।
महासेनं महात्मानं४६ मेघस्तनितनिस्वनम् । । २६ । ।
उमामनोहर्षकरं४७ बालकं छद्मरूपिणम्४८ ।
बहुमङ्गलसंयुक्तां४९ कथां पापप्रणाशनीम् ।
वसिष्ठः प्रार्थयामास तस्मिन् काले महातपाः ।।२७। ।
वसिष्ठ उवाच
शुचिं प्रपद्ये वरदं ब्रह्मण्यममितौजसम् ।
भक्तानुकम्पिनं नित्यं सर्वज्ञं प्रियदर्शनम् । ।२८ । ।
- - - - - - - - - - - - - - - म् ।

नमस्ते - - - ष्यन्द अग्निगर्भ नमोस्तु ते । । २९ । ।
नमस्ते शरजन्माय नमस्ते कृत्तिकासुत ।
नमो द्वादशनेत्राय षण्मुखाय नमोस्तु ते । । 8.114.३० । ।
नमस्ते शक्तिहस्ताय दिव्यस्र - - - - - ।
- - - - - - - - - - - - - - - - । । ३१ । ।
नमो हिरण्यरेताय नमस्ते भृतशम्भवे ।
नमः कुक्कुटहस्ताय तथा छागप्रियाय च । । ३२ । ।
नमस्ते रक्तवासाय नमो नीलशिखण्डिने ।
नमोत्यन्तकुमाराय सर्वदैवतपूजिते५० । । ३३ । ।
नमः क्रौञ्चविनाशाय महिषासुरघातिने५१ ।
नमस्तेर्णव - - - मूर्त्तये - - - - - ।। ३४। ।
नमस्ते बालरूपाय उन्मत्तललिताय च ।
यदेतद् दृश्यते स्थाणोः५२ शुभं शुभ्राञ्जनोपमम् ।। ३ ५। ।

४३... जीवितनाशेशं - क. । ४४ पार्वतीहृदि नन्दनम् - ख., ४५ तारकासुरनारीणाम् (?) । ४६ महात्मानं महासेनं - घ. । ४७ मनः प्रहर्षणं - क., वनप्रहर्षेण - घ. । ४८ बुद्धरूपिणम् - घ. । ४९ ब्रूहि - क. । ५० सर्वदेवतपूजिते - ख. । ५१ तारकासुरघातिने (?) । ५२ न्चर्य - क., शुर्या - ख. ।

617
तत् किमर्थं समुत्पन्नं कण्ठे कुन्देन्दुसन्निभे ।
एतदाप्ताय दान्ताय भक्ताय तव५२ पृच्छते । ।३ ६ ।।
ब्रूहि मङ्गलसंयुक्तां कथां पुण्यसमाश्रिताम् ।
एवं स्तुतो५३ च वसिष्ठेन मुनिना५४ भावितात्मना । ।३७।।
श्रुत्वा वाक्यं ततस्तस्य वसिष्ठस्य महात्मनः ।
प्रत्युवाच महातेजा दैत्यारिः पावकोद्भवः । । ३८। ।
यदुक्तं भवता५५ प्रश्नं यन्मां पृच्छसि वै द्विज ।
श्रूयतां वदतां श्रेष्ठ कथ्यमानमिदं मया । ।३ ९ । ।
उमोत्सङ्गोपविष्टेन यथा पूर्वं मया श्रुतः५६ ।
पार्वत्याश्चैव५७ संवादः शंकरस्य५८ महात्मनः । ।8.114.४० ।।
तमहं५९ संप्रवक्ष्यामि यथातथ्यं६० महामुने६१ ।
कैलासशिखरे रम्ये नानाधातुविचित्रिते६२ । ।४१ ।।
तरुणादित्यसंकाशे तप्तकाञ्चनसन्निभे ।

वज्रस्फटिकसोपाने चित्रपट्टशिलातले । ।४२ । ।

जाम्बूनदमये दिव्ये नानारत्नविभूषिते ।

नानाद्रुमलताकीर्णे नानापुष्पफलोदके ।।४३ ।।

हंसकारण्डवाकीर्णे चक्रवाकोपशोभिते ।

षट्पदोद्गीतकमले धारासंपातनादिते ।।४४ । ।

मत्तक्रौञ्चमयूराणां६३ नादैर्विक्रुष्टकन्दरे६४ ।

अप्सरोगणसंकीर्णे किन्नरैश्चोपशोभिते । ।४५। ।

जीवञ्जीवकदात्यूहविरुतैश्च६५ प्रणादिते ।

कोकिलारावमधुरे सिद्धचारणसेविते । ।४६ । ।

सौरभेयनिनादाढ्ये मेघस्तनितनिस्वने ।

विनायकभयोद्विग्नैः कुञ्जरैर्मुक्तकन्दरे । ।४७। ।

५२ ब्रूहि - क. । ५३ स्तुत्वा - ख. । ५४ मुनीनां - ख । ५५ भविता - ख. । ५६ श्रुत - ख । ५७ चैव - (?) । ५८ शर्वस्य च - ख । ५९ तदहं - ख । ६० प्रियार्थन्तु - ख । ६१ महात्मनि - ख । ६२ विभूषिते - क. । ६३ तत्र क्रौञ्चमयूराणां - ख. । ६४ विस्पष्टनो (ना?) दिते - ख. । ६५ जातीनां विरुतैश्च - क. ख. ।



वंशवादित्रनिर्घोषे श्रोत्रेन्द्रियमनोहरे ।

दोलाललितविक्षेपैः६६ र्वनितासिद्धसेविते६७ ।।४८।।

ध्वजैर्ल्लम्बितदोलानां६८ घण्टानां विरुताकुले ।

बल्लकीघोषबहुले नृत्तव्यापारसंकुले ।।४९। ।

मुखैर्दर्द्दरवाद्यैश्च६९ वल्गितास्फोटिते तथा ।

क्रीडाचेष्टाविनोदानां रवैराक्रन्द(?) कन्दरे । ।8.114.५० ।।

हासैः सन्त्रासजननैर्विकरालैस्तथा मुखैः ।

देहबन्धैर्विचित्रैश्च प्रक्रीडितगणेश्वरे७० । ।५ १ । ।

व्याघ्रसिंहमुखै७१ र्घोरैस्सर्पाखुवदनैरपि ।

मृगमेषमुखैश्चान्यैर्गजवाजिमुखैस्तथा ।।५२ । ।

विडालवदनैश्चोग्रैः क्रोष्टुकाकारमूर्त्तिभिः७२ ।

ह्रस्वैर्दीर्घैः कृशैः स्थूलैर्लम्बोदरमहोदरैः ।।५३ ।।

ह्रस्वजंघैः प्रलम्बोष्ठैस्तालजंघैस्तथापरैः७३ ।

गोकर्णैरिककर्णैश्च महाकर्णैरकर्णकैः । ।५४।।

एकपादैर्महापादैर्बहुपादैरपादकैः ।

एकमूर्धभिरत्युग्रैर्बहुमूर्धभिरुल्बणैः ।।५५ ।।
अमूर्धभिश्च गणपैर्महामूर्धभिरेव च ।
एकनेत्रैर्महानेत्रैर्बहुनेत्रैश्च सर्वशः । ।५६। ।
कबन्धाकृतिभिश्चान्यैरनेत्रैर्गणनायकैः ।
एकनासैर्महानासैर्बहुनासैरनासिकैः । ।५७। ।
एकवक्त्रैर्महावक्त्रैर्बहुवक्त्रैरवक्त्रकैः ।
एकदंष्ट्रैर्महादंष्ट्रैर्बहुदष्ट्रैरदंष्ट्रकैः । ।५८।।
एकहस्तैर्महाहस्तैर्बहुहस्तैरहस्तकैः ।
विश्वरूपैर्विरूपैश्च सुरूपै रूपवर्जितैः ।
एवंविधैर्महायोगैर्भूतैर्भूतपतिर्वृतः । ।५९।।

६६ दोलाललितविक्षेपैः (?) । ६७ सिंहसेविते - क । ६८ ध्वजोल्लम्बितदोलानां (?) । ६९ मुखदर्दर-वाद्यैश्च - क । ७०. गणेश्वरैः - क. । ७१ सिंहव्याघ्रमुखै (?) । ७२ क्रोष्टुकाकारिमूर्तिभिः ख, । ७३. स्तयापरे - क.


विशुद्धरत्नाङ्गविभूषिताङ्गदा७४ शिलातले हेममये मनोरमे ।
सुखोपविष्टं मदनाङ्गनाशनं चुचोद७५ वाक्यं गिरिराज्यनन्दना७६ ।।8.114.६ ० ।।
देव्युवाच
भगवन् भूतभव्येश गोवृषाङ्कितशासन ।
तव कण्ठे महादेव भ्राजतेम्बुदसन्निभम७७ । । ६१ । ।
नात्युल्वणं शुभं शुभ्रं७८ नीलाञ्जनचयोपमम् ।
किमिदं देव दीप्तं ते७९ कण्ठे कामाङ्गनाशन ।
को हेतुः कारणं किं वा येनेदं नीलमीश्वर ।
एतत्सर्वं यथान्यायं श्रोतुमिच्छामि तत्त्वतः८० । ।६२ ।।
श्रुत्वा वाक्यं ततो देव्याः पार्वत्याः पार्वतीप्रियः ।
कथां मङ्गलसंयुक्तां कथयामास शङ्करः । ।६३ । ।
महेश्वर उवाच
मथ्यमानेमृते पूर्वं क्षीरोदे सुरदानवैः ।
अग्रे समुत्थितं घोरं विषं कालानलप्रभम् ।। ६४।।
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्चसम् ।
त्रैलोक्योत्सादसूर्याभं विस्फुरत्तत्८१ समन्ततः ।।६५।।

तं दृष्ट्वा८२ सुरसंघाश्च दैत्याश्चैव वरानने ।
विषण्णवदनाः सर्वे गतास्ते ब्रह्मणोन्तिकम् ।।६६।।
दृष्ट्वा सुरगणान् भीतान्ब्रह्मोवाच महाद्युतिः ।
मया८३ष्टगुणमैश्वर्यं भवतां संप्रकल्पितम् ।।६७।।
त्रैलोक्यस्येश्वरा यूयं सर्वे च विगतज्वराः ।
विमानचारिणः८४ सर्वे सर्वे स्वच्छन्दचारिणः ।। ६८।।
प्रजाभिः सत्कृताः सम्यङ् नित्यं बहुमता मम ।
किमर्थे वा८५ महाप्रज्ञा भृशमुद्विग्नचेतसः ।।६९।।

७४ रत्नांशुविभूषिताङ्गदा - ख. घ., विभूषिताङ्गै ( ङ्गे) - क टि.,.. ङ्गी - घ । ७५ जगाद - घ., उवाच - ख. । ७६गिरिराज पुत्री - ख. । ७७... म्बुजसन्निभम् (?) । ७८ शुभ्रे (?) । ७९ दीप्यंते - क, दीप्यते - ख । ८० वक्तुमर्हस्यशेषतः - ख. । ८१ विस्फुरन्तं - क. । ८२ तन्दृष्ट्वा - क. । ८३ यथा - ख. । ८४ विमानगामिनः - ख. । ८५ वो - ख. ।



केन व्यावर्तितैश्वर्या येन मां समुपस्थिताः ।
प्रजासर्गे न सोत्रास्ति८६ योज्ञान्मम निवर्तयेत् ।।8.114.७० ।।
अध्यात्मे चाधिभूते च अधिदैवे च नित्यशः ।
प्रजाकर्मविपाके च शक्ता यूयं प्रवर्तितुम् । ।७१ ।।
किं कार्यं कारणं किं वा८७ कुतो वा भयमागतम् ।
येन८८ यूयं समुद्विग्ना मृगा सिंहार्दिता इव । ।७२। ।
एतत्सर्वं यथान्यायं शीघ्रमाख्यातुमर्हथ ।
श्रुत्वा वाक्यं ततस्तस्य८९ ब्रह्मणः सुमहात्मनः९० ।।७३ । ।
ऊचुस्त ऋषिभिः सार्धं सुरदैत्येन्द्रदानवाः९१ ।
सुरासुरगणैर्ब्रह्मन्९२ मथ्यमाने९३ महोदधौ९४ ।।७४। ।
भुजङ्गभृङ्गसंकाशं नीलजीमूतसन्निभम् ।
प्रादुर्भूतं विषं घोरं संवर्त्ताग्निसमप्रभम् । ।७५।।
कालमृत्युरिवोद्भूतं युगान्ताग्निसमप्रभम् ।
त्रैलोक्योत्सादसूर्याभं विस्फुरत्तत्९६ समन्ततः । ।७६। ।
तेजसामिव संघातं सुमहत् समुपस्थितम् ।
विषण्णवदनाः सर्वे दृष्टोद्भूतं महाविषम् । ।७७। ।
विषेणोत्तिष्ठता तेन९७ कालानलसमत्विषा९८ ।

निर्दग्धो रक्तगौराङ्गः कृतः कृष्णो जनार्दनः । ।७८।।
तं दृष्टवा रक्तगौराङ्गं कृतं कृष्णं जनार्दनम् ।
सर्वे भीता९९ वयं ब्रह्मँ१००स्त्वामेव शरणं गताः ।।७९। ।
सुराणामसुराणाञ्च श्रुत्वा वाक्यं भयावहम् ।
प्रत्युवाच महातेजा ब्रह्मा लोकपितामहः१०१ । ।8.114.८० ।।

८६ मोदन्ति - ख । ८७ किन्नु - ख । ८८ केन - ख । ८९ नु ते तस्य - क. । ९० परमात्मनः - क । ९१ सुरा दैत्येन्द्रदानवाः - क । ९२ सुरासुरैर्मथ्यमाने - क । ९३ पयोत्सङ्गात् - क. । ९४ महातपाः - क, महोदधेः (?) । ९५ ... सप्रभं - क । ९६ विस्फुरन्तं - क. । ९७ विषेणोत्तिष्ठमानेन - क,? त्थितमात्रेण (?) । ९८. समार्चिषा क । ९९ ततस्सर्वे - क. । १०० भीता - क । १०१ लोकनमस्कृतः - ख. ।

621

शृण्वन्तु देवताः सर्वे ऋषयश्च१०२ तपोधनाः ।
यत्तदग्रे१०३ समुद्भूतं मथ्यमाने महोदधौ१०४ । ।८ १ । ।
विषं कालानलप्रख्यं कालकूटमिति श्रुतम्१०५ ।
तस्य१०६ प्रोद्भूतमात्रस्य विराजन्ते न१०७ देवताः ।।८२। ।
तस्य१०८ विष्णुरहं वापि सर्वे वा सुरपुङ्गवाः ।
शक्नुवन्ति न वै१०९ सोढुं वेगमन्यत्र शङ्करात् । ।८३ ।।
इत्युक्त्वा पद्मगर्भाभः पद्मयोनिरयोनिजः ।
मामेवं स्तोतुमारेभे११० ब्रह्मा वेदविदां वरः । ।८४।।
ब्रह्मोवाच
नमस्तुभ्यं विरूपाक्ष नमस्ते नैकचक्षुषे१११ ।
नमःपिनाकहस्ताय वज्रहस्ताय वै नमः । ।८५। ।
नमस्त्रिशूलहस्ताय दण्डपाशासिपाणये ।
नमस्त्रैलोक्यनाथाय भूतानां पतये नमः । ।८६ । ।
नमः सुरारिहन्त्रे च११२ सोमसूर्याग्निचक्षुषे ।
ब्रह्मणे चैव रुद्राय विष्णवे चैव ते नमः । ।८७। ।
सांख्याय चैव योगाय भूतग्रामाय वै नमः ।
मन्मथाङ्गविनाशाय कालकालाय११३ वै नमः ।।८८। ।
रुद्राय वसुरेताय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ।।८९। ।
कपर्दिने करालाय११४ शङ्कराय हराय च ।

विरूपाय सुरूपाय शिवाय वरदाय च ।।8.114.९० ।।
त्रिपुरघ्ने मखघ्नाय मातॄणां पतये नमः ।
बुद्धाय चैव शुद्धाय मुक्ताय११५ केवलाय च । ।९१ । ।

१०२ मु तयश्च - ख । १०३ यत्र चाग्रे - ख । १०४ पयोनिधौ - क । १०५ कालकूटेति विश्रुतम् - क । १०६ येन - ख । १०७ प्रोद्भूमात्रेण न विराजति - ख । १०८ न च - क । १०९ न शक्नुवन्ति च - क. । ११० इदं स्तोत्रं समारब्धो - क , गत्वेशं स्तोतुमारब्धो - घ. । १११ नेक चक्षुषे - ख । ११२.. नाशाय - क. । ११३ कालाकालाय - ख. । ११४ कधीराय - क. । ११५ मुक्तायै - क ख ।

622

लोकत्रयविधात्रे च शक्राय वरदाय च११६ ।
अग्रायाथ तथोग्राय विप्रायानन्तचक्षुषे११७ ।।९२।।
रजसे चैव सत्वाय तमसेव्यक्तयोनये ।
नित्याय चैवानित्याय नित्यानित्याय वै नमः ।।९३।।
व्यक्ताय चैवाव्यक्ताय व्यक्ताव्यक्ताय वै नमः ।
चिन्त्याय चैवाचिन्त्याय चिन्त्याचिन्त्याय वै नमः ।।९४।।
सूक्ष्माय चैवासूक्ष्माय सूक्ष्मासूक्ष्माय वै नमः ।
भक्तानामार्तिनाशाय प्रियनरायणाय च ।।९५।।
उमाप्रियाय शर्वाय नन्दिवक्त्राङ्कनाय च ।
पक्षमासार्धमासाय११८ ऋतुसंवत्सराय च ।।९६।।
बहुरूपाय मुण्डाय दण्डिनेथ वरूथिने११९ ।
रथिने१२० धन्विने नित्यं१२१ जटिने ब्रह्मचारिणे ।।९७।।
ऋग्यजुःसामरूपाय१२२ पुरुषायेश्वराय च१२३ ।
नमस्ते भगवन् २ ' व्यक्ष नमस्ते भगवञ्छिव ।।९८।।
नमस्ते देवदेवेश नमस्ते भूतभावन ।
इत्येवमादिचरितैः स्तुतं स्तुत्यं१२५ नमोस्तुते१२६ ।।९९।।
प्रणम्य मूर्ध्ना प्रणतोस्मि रुद्रं जगद्गुरुं देववरं त्रिनेत्रम् ।
सूक्ष्मोसि योगातिशयाधिगम्यं तेजोनिधे१२७ व्यक्तमुपैमि रुद्रम् ।।8.114.१००।।
ज्ञात्वा तु भक्तिं मम देवदेव प्रसीद गङ्गाम्बुनिषिक्तकेश ।
त्वां सौरभेयाम्बुदचित्रयानं१२८ शिवं प्रयत्नात् शरणं गतोस्मि१२९ ।।१०१।।
एवं तेन तदा१३० पूर्वं ब्रह्मणा लोककर्तृणा ।
स्तुतोहं विविधैः स्तोत्रैर्वेदवेदाङ्गसंभवैः । ।१०२।।

११६ इन्द्रियाणां वराय च - ख. । ११७ नेकचक्षुषे - क । ११८ वर्षाय (?) । ११९ ... न्धवरूथिने - घ. । १२० ध्वजिने (?) । । १२१ चैव - क । १२२ सामग्र्यजुरथर्वाय (?),... माथर्वाय - क. । १२३ पुरुधामे- श्वराय च (?) । १२४ भगवान् - क ख । १२५ स्तुतिस्तुत्यं - क. ख., तुभ्यं - क. । १२६ नमो नमः - (क?) । १२७ योगातिशयाभिगम्यं तेजोनिधिं - ख. । १२८... चिन्तयानं - ख, । १२९ शरणा- गतोस्मि - ख. । १३० भगवता - ख. ।

623

ततः प्रीतो ह्यहं तस्य१३१ ब्रह्मणोथ महात्मनः१३२ ।
नतस्तं१३३ मुख्यया वृत्त्या पितामहमथाब्रुवम् । ।१ ०३ ।।
भगवन् भूतभव्येश भूताधिप१३४ महातपः१३५ ।
किं१३६ कार्यं ते मया ब्रह्मन्१३७ कर्तव्यं वद१३८ सुव्रत ।
श्रुत्वा वाक्यं ततो ब्रह्मा प्रत्युवाचाम्बुजेक्षणे ।। १ ०४। ।
ब्रह्मोवाच
भूतभव्यभवन्नाथ श्रूयतां कारणेश्वर१३९ ।
सुरासुरगणैर्देव मथ्यमाने महोदधौ१४० ।। १०५ । ।
मयूरभृङ्गसकाशं१४१ नीलजीमूतसन्निभम् ।
प्रादुर्भूतं विषं घोरं संवर्त्ताग्निसमप्रभम् । । १०६ ।।
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्च्चसम् ।
त्रैलोक्योत्सादसूर्याभं विस्फुरत् तत्१४२ समन्ततः । । १०७ ।
विषेणोत्तिष्ठता तेन१४३ कालानलसमत्विषा ।
निर्दग्धो रक्तगौराङ्गः कृतः कृष्णो जनार्दनः ।। १०८ ।।
तं दृष्ट्वा रक्तगौराङ्गं कृतं कृष्णं जनार्दनम् ।
ततः सर्वे वयं१४४ भीतास्त्वामेव शरणं गताः१४५ ।।१ ० ९।।
तत्१४६ पिबस्व महादेव लोकानां हितकाम्यया ।
भवानग्रस्य भोक्ता वै भवान्देववरः१४७ प्रभुः ।।8.114.१ १० ।।
भवांस्तस्य१४८ महावेगं समर्थः सन्नियच्छितुम् ।
नान्यः कश्चित् पुमाञ्छक्तो जगत्यस्मिँश्चराचरे१४९ ।।१ ११ । ।
पातुमेको महादेव समर्थस्त्वं महाद्युते१५० ।
तस्यैवोग्रप्रभावस्य कालानलसमत्विषः(?) । । ११२ ।।

१३१ प्रीतोस्मि तस्याहं - ख- । १३२ ब्रह्मणः परमात्मनः - क. । १३३ ततस्तं - क., तमहं - ख. । १३४

लोकनाथ - ख. । १३५ भूताधिक - क., जगत्पते - ख. । १३६ यत् - क. । १३७ महाब्रह्मन् - ख. । १४८ तव - क. । १३९ कारणं परम् (? । । १४० सुरासुरैर्मथ्यमाने क्षीरोदे भगवञ्छिव - क । १४१ अभवन्मेघसंकाशं - क. । १४२ विस्फुरन्तं - क. । १४३ विषेणोत्तिप्ठमानेन - क. ख, त्थितमात्रेण (?) । १४४ भयं (भयाद?) - क । १४५ भृशं वृषभवाहन - ख. । १४६ तं - क. । १४७ भवाँश्च वरदः - घ । १४८ भगवान् स्तां (तं) - क. । १४९ पुमाञ्छक्तस्त्रिषु लोकेषु विद्यते - ख. । १५. महाद्युतिः - ख ।



वेगं सोढुं१५१ महादेव समर्थोन्यो१५२ न विद्यते ।
तस्यैवं ब्रुवतो देवि१५३ ब्रह्मणः परमेष्ठिनः ।।११ ३।।
बाढमित्येव तद्वाक्यं प्रतिगृह्य वरानने ।
तदहं१५४ पातुमारब्धो विषमन्तकसन्निभम् ।।१ १४।।
लोकत्रयहितार्थाय सुरदैत्येन्द्रसन्निधौ१५५ ।
पिबतो मे महाघोरं विषं सुरगणार्चिते१५६ ।
कण्ठे समभवत् क्षिप्रं कृष्णं कृष्णाम्बुजे१५७क्षणे ।। ११५ ।।
तद् दृष्ट्वोत्पलपत्राभं१५८ कण्ठे सक्तं महाविषम्१५९ ।
तक्षकं नागराजानं लेलिहानमिवोरगम् ।।१ १ ६।।
अथोवाच महातेजा ब्रह्मा लोकपितामहः ।
शोभसे त्वं महादेव कण्ठेनानेन सुव्रत ।।१ १७।।
इति तस्य वचः श्रुत्वा मया गिरिवरात्मजे ।
पश्यतां सुरसंघानां दैत्यानाञ्च वरानने ।। १ १८।।
यक्षगन्धर्वसिद्धानां१६० पिशाचोरगरक्षसाम् ।
धृतं कण्ठे विषं घोरं ततः श्रीकण्ठता मम ।।१ १९।।
तत्कालकूटं विषमुग्रतेजः१६१ कण्ठे धृतं पर्वतराजकन्ये१६२ ।
पश्यन् समस्तः१६३ सुरदैत्यसंघो१६४ हृष्टः१६५ परं विस्मयमाजगाम१६६ ।।8.114.१२० ।।
ततः सुरगणाः सर्वे सयक्षोरगराक्षसाः ।
ऊचुः प्राञ्जलयो देवि१६७ मत्तमातङ्गगामिनि ।।१२१ ।।
अहो बलं वीर्यपराक्रमस्ते अहो वपुर्योगबलं तवेदम्१६८।
अहो विभूतिस्तव देवदेव गङ्गाजल१६९ प्लावितचन्द्रमौले१७० ।।१२२।।
त्वमेव विष्णुश्चतुराननस्त्वं त्वमेव सूर्यो रजनीकरस्त्वम् ।
त्वमेव कालो नियतिस्त्वमेव त्वमेव मृत्युर्धनदस्त्वमेव१७१ ।।१२३।।

१५१ समर्थोन्यो - ख । १५२ वेगं सोढुं - ख. । १५३ ब्रुवतस्तु वरारोहे - ख । १५४ ततोहं - क ख. । १५५

लोकत्रयहितार्थायासुरदैत्येद्रवन्दिते - क. । १५६ सुरगणार्चितं ( न्तिकं?) - क. । १५७ सुरगणार्चितं ( ते?) - क । १५८ तन्नीलोत्पलपत्राभ - क । १५९ शक्तमिवान्तकं - क. । १६० नागानां - ख. । १६१... मुग्रतेजं - क. ख. । १६२ पुत्रि - क? । १६३ संपश्यमानाः - क. ख. । १६४... संघाः - क. ख. । १६५ हृष्टाः - क. ख. । १६६... मीयुरन्ये (?) । १६७ भूत्वा - ख, तेषां - क. । १६८ तदेव - ख. । १६९ देव सङ्गोजटा? - क. । १७० जलाप्लावितकेशदेश - ख. । १७१ मृत्युर्दहनस्त्वमेव - ख ।

625

त्वमेव सूक्ष्मः१७२ पुरुषोव्ययस्त्वं त्वमेव सूक्ष्माच्च परं च सूक्ष्मम् ।

व्यक्तं त्वमेव प्रकृतिस्त्वमेव त्वमेव सत्वं च१७३ भवोद्भवं च । ।१२४।।

त्वमेव भूमिः सलिलं त्वमेव त्वमेव वह्निः पवनस्त्वमेव ।

त्वमेव खं भूतभविष्यभव्यं त्वमेव भूतं भवभव्ययुक्तम् ।।१ २५। ।

त्वमेव यज्ञो नियमस्त्वमेव त्वमेव सर्वं प्रकरोषि धर्मम् ।

त्वमेव सर्वस्य चराचरस्य पृथग् विभक्ता प्रलये च गोप्ता१७४ ।।१ २६।। इत्येवमुक्त्वा१७५ वचनं सुरेन्द्राः प्रणम्य मां सिद्धगणाश्च हृष्टाः१७६ ।

व्यपेतशोकाः प्रविभक्तसोमा गता विमनैरनिलोग्रवेगाः१७७ ।।१२७।।

इत्येतत् परमं गुह्यं पुण्यात्पुण्यतरं महत् ।

स्वयं१७८ स्वयंभुवा प्रोक्तं स्तोत्रं१७९ पापप्रणाशनम् । ।१ २८।।

यस्तु धारयते नित्यं मत्परो नियमे स्थितः१८० ।

ब्रह्मोद्गीतं शिवं ह्येतत्१८१ सर्वरोगनिबर्हणम् ।। १२९।।

गतिं तस्य प्रवक्ष्यामि परत्रेह च' देहिनः१८२ ।

विषं तस्य वरारोहे स्थावरं जंगमं तथा१८३ । । 8.114.१३०।।

संप्राप्य गात्रं१८४ सुश्रोणि क्षिप्रं सप्रतिहन्यते१८५ ।

शममेत्य१८६ शुभं घोरं दुःस्वप्नं चापकर्षति ।।१ ३१ ।।

स्त्रीषु वल्लभतां याति सभायां पार्थिवस्य च ।

विवादे जयमाप्नोति युद्धे चैव न संशयः ।।१ ३ २।।

गच्छतोध्वनि च क्षेमं१८७ सत्वं चैवोपजायते१८८ ।

शरीरभेदे वक्ष्यामि गतिं तस्य वरानने ।।१ ३३ ।।

हरिश्मश्रुर्नीलकण्ठः शशाङ्काङ्कितमूर्धजः ।

त्र्यक्षोभेद्यस्त्रिशूली च वृषकेतुर्महाबलः ।।१३४।।

१७२ ब्रह्म - ख । १७३ नन्त्वञ्च - ख. । १७४ भोक्ता - ख. । १७५. मुक्ता - क. ख. । १७६ प्रगृह्य सोमं प्रणिपत्य माञ्च - ख. । १७७ रनिलोग्रवेगैः - क. ख., इत 'उत्तरं स्वमालयं मेरुमुपेत्य सर्वे / *इत्यधिकं ख*

*पुस्तके । १७८ तदा - क. । १ ऽ ९ स्तव - ख. । १८० ब्रह्मोद्गीतमिदं शुभं - ख. । १८१ ह्ये (ही?) दं - क. । १८२ वरप्रद - ख. । १८३ वापि जगम - ख. । १८४ गात्र प्राप्य तु - ख. । १८५ विप्रतिहन्यते - ख । १८६ शमय - क. । १८७ गच्छते क्षेममध्वानं - ख. । १२८ शरीरे नास्ति वै भयं - ख. ।*



नन्दितुल्यवपुश्चैव नन्दितुल्यपराक्रमः ।
विचरत्यखिलं१८९ सिद्धः सप्तलोकं१९० ममाज्ञया ।।१ ३५। ।
न हन्यते१९१ गतिस्तस्य वायोरिव नभस्तले१९२ ।
मम पार्श्वचरो भूत्वा१९३ तिष्ठत्याभूतसंप्लवम्१९४ ।।१ ३६।।
येपि चैतद्वरारोहे सदा शृण्वन्ति मानवाः ।
तेषां चैव प्रवक्ष्यामि फलं फलसहस्रदे । । १ ३७।।
ब्राह्मणो वेदमाप्नोति क्षत्रियो विन्दते महीम् ।
वैश्यस्तु लभते लाभं शूद्रः प्राप्नोति सद्गतिम् ।।१३८।।
व्याधितो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
गुर्विणी जनयेत् पुत्रं कन्या विन्दति सत्पतिम् ।।१३९।।
नष्टञ्च लभते द्रव्यमिह लोके परत्र च ।
गवां शतसहस्रस्य सम्यग् दत्तस्य यत्फलम् । ।8.114.१४० । ।
तत्फलं समवाप्नोति श्रुत्वा मर्त्यः कथामिमाम् ।
अक्षरं वाथ पादं वा श्लोकं श्लोकार्धमेव वा ।।१४१ ।।
अथवा सर्वमध्यायं देवब्राह्मणसंसदि ।
यः पठेन्मानवो नित्यं मद्गतेनान्तरात्मना ।। १४२।।
श्रद्दधानः सदोद्युक्तो रुद्रलोके महीयते ।
पठस्व देवि भद्रन्ते पाठयस्व च बान्धवान् ।। १४३ ।।
अतः परतरं स्तोत्रं न भूतं न भविष्यति ।
नापि यक्षाः पिशाचा वा न भूता न विनायकाः १४४।।
कुर्युर्विघ्नं गृहे तत्र यत्रायं तिष्ठते स्तवः ।
यथाविमुक्तं क्षेत्रेषु क्षेत्रं श्रेष्ठं प्रकल्पितम् ।। १४५। ।
तथा स्तवो वरिष्ठोयं स्तवानां ब्रह्मनिर्मितः ।
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः ।। १४६।।
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठति ।
मनसा चिन्तितं यच्च यच्च वाचाप्युदाहृतम् । । १४७।।

१८९ त्यखिलान् - क. । १९० सप्तलोकान् - ख. । १९१ हन्यति - क. ख. । १९२ अनिलस्याम्बरे यथा - ख. । १९३ धरोभूमि - ख. । १९४ प्रत्याभूतः समृद्ध (ध्य) ति - ख. ।



सर्वं संपद्यते तस्य स्तवस्यास्यानुकीर्तनात् ।
श्रुत्वैतत् परमं गुह्यं येपि स्युः पापयोनयः ।।१४८।।
स्त्रियः शूद्राश्च तेपीह रुद्रलोकं व्रजन्त्युत ।
यदा मानुष्यतामेति कदाचित् कालपर्ययात् ।।१४९।।
वेदवेदाङ्गतत्त्वज्ञो विमले जायते कुले ।
देवभक्तश्च भवति धर्मञ्च कुरुते तदा ।।8.114.१५०।।
इतिहासमिदं पुण्यं सर्वकिल्विषनाशनम् ।
ऊक्तं मयात्र तुष्टेन स्वयमेवाम्बुजेक्षणे ।।१५१।।
इति स्कन्दपुराणे अमृतमथने नीलकण्ठोपाख्याने ब्रह्मदेवकृतं महादेवस्तोत्रं नाम चतुर्दशोत्तरशततमोध्यायः
व्यास उवाच
अमृतेपहृते तस्मिन् विष्णुना छद्मरूपिणा ।
दैत्याश्च दानवाश्चैव किं चक्रु स्तदन्तरम्१ ।।१।।
सनत्कुमार उवाच
ते क्रोधाद्वञ्चिताः सर्वे विष्णुना दानवेश्वराः ।
सन्नह्य युद्धाय तदा गर्हन्तो२ विष्णुमूचिरे ।।२।।
धिग्बल धिक् च ते शौर्यं पाप धिक् ते पराक्रमम्३ ।
विश्रम्भघाती४ नित्यं त्व५न्नीचकर्मा६ दुरात्मवान् । ।३ ।।
त्वया निकृत्या निहतो हिरण्यकशिपुः पुरा ।
हिरण्याक्षश्च दैत्येन्द्रोमृतं चेदमपाहृतम्७ ।।४।।
न तवास्ति बलं युद्धे निकृत्या हि बली भवान् ।
युद्धे स्थितो भवानस्तु न नो८ मोक्षमवाप्स्यति९ ।।५।।

१ चक्रे तदनन्तरम् - क. । २ गर्हयन - क. ख. । ३ पराक्रमः - ख. । ४ विश्रम्भघातिन - ख. । ५ च - क. ख. । ६ नीचकर्म - ख. । ७ ह्यमृतं चेदमे (मा) हृतं - क. ख. । ८ ततो - क. । ९... नवाप्स्यसि - ख. ।



सनत्कुमार उवाच

ततः स दैत्याराट् क्रुद्ध उद्गिरन्१० पावकार्चिषः११ ।
रथेनाम्बुदनादेन विष्णुमेवाभिदुद्रुवे । ।६ ।।
विप्रचितिश्च१२ दैत्येन्द्रो गजेन गजिनं तदा ।
समाह्वयत् सहस्राक्षं गजिन वज्रपाणिनम्(?) । ।७ । ।
विरोचनस्तु संक्रुद्धो धनेशं राक्षसाधिपम् ।
गजेनैवाभिदुद्राव जलदो भास्करं यथा । ।८। ।
बलिर्वैरोचनिश्चापि यमं पितृगणाधिपम् ।
रथेनैवाभिदुद्राव विघ्नो विघ्नमिवापरम्१३ । । ९।।
अनुह्राश्च दैत्येन्द्रो हिरण्यकशिपोः सुतः ।
वरुणं प्रति दुद्राव नदीवेगो यथार्णवम् । ।8.115.१ ० ।।
मयस्तु१४ दानवश्रेष्ठस्तारस्तारक एव च ।
आदित्यैस्सह संसक्ता१५ गजा इव महागजैः । । ११ । ।
शरभः शतकेतुश्च बलो मूकश्च दानवः ।
रुद्रानेवाभ्यभावन्त१६ सिंहाः सिंहानिवाजने ।। १२। ।
शम्भुः कार्तस्वनश्चैव महामायश्च शम्बरः ।
वसुभिः सह संसक्ता व्यसनानीव साधुभिः । ।१ ३ । ।
नरकोथ हयग्रीवस्तथेन्द्रदमनोसुरः ।
अश्विभ्यां सह संसक्ता१७ ग्रहाभ्यामिव तारकाः ।। १४। ।
अन्ये चान्यैस्सुरैस्सार्धं महामाया महाबलाः ।
आहूयाहूय युध्यन्ते१८ सर्वे क्रोधेन दानवाः । ।१ ५ । ।
विप्रचित्तिर्महामायः सहस्राक्षं त्रिभिः शरैः ।
अर्दयामास नादेन नादयानो दिशो दश१९ ।। १ ६। ।

१० उत्किरत्. (?), उद्गिरत् - क., दानवाः - ख. । ११ पावकार्चिषाः - (?। १२. स्तु; ख । १३ मिवापरः - ख. । १४ यमस्तु - क. ख. । १५ संयुक्ता - क. । १६.. नेवाभिधावन्तः - क. । १७ संसक्तो ( क्तौ? - क. । १८ युद्ध्यन्ति - ख. । १०. दिशः - क ख. ।



तस्येन्द्रः कार्मुकं चित्रमस्यतो लघुहस्तवान् ।
वज्रेण शतधारेण शतधा व्यभजद्२० बली ।। १७। ।
ततोस्य गजमाघोरे२१ कार्मुकं गृह्णतोपरम् ।
गजेन पोथयामास स पपात यथा गिरिः । ।१८ । ।

तमाप्लुतं२२ गजाच्चैव दानवं देवराड् बली ।
वज्रेणाताडयत् क्रौञ्चं शक्त्या गुह इवाहवे ।। १ ९।।
स तेन वज्रघातेन दानवो मूढचेतनः२३ ।
अपतद् भूतले क्षिप्रं वातरुग्ण इव द्रुमः२४ ।।8.115.२ ० ।।
ततो हाहाकृतमभूद्दानवानां बले तदा ।
साधुसाध्विति देवानां सिंहनादाश्च बृंहिताः ।।२ १ ।।
प्रतिलभ्य ततः संज्ञां स शक्त्या२५ भीमरूपया ।
मातङ्गः तस्य संमत्त२६मनयद्यमसादनम् ।।२२ ।।
ततोस्य पृष्ठरक्षाँश्च कवचञ्च महाप्रभम् ।
शातयामास२७ देवाग्र्यस्स२८ हित्वा संयुगं ययौ ।।२३ ।।
बलिर्यमस्य पुण्ड्रं२९ च कृतान्तं कलहं तथा ।
कालञ्च नियतिञ्चैव किङ्करान् पाशमेव च ।।२४।।
एकैकं पश्यतस्तीक्ष्णैः पञ्चभिः पञ्चभिः शरैः ।
यमञ्चैव चतुष्षष्ट्या हृदये समविध्यत ।। २५।।
तस्य चानदतः क्षिप्रं यमः क्रुद्धो हसँस्तदा ।
दण्डेन रथमाहत्य भस्मसायुज्यमानयत्३० ।। २ ६।।
हते रथे ससूते तु साश्वे३१ सह पदानुगैः ।
तिष्ठतिष्ठेति सन्नद्य३२ यमं बलिरधावत ।। २७।।
तस्यापतत एवाशु३३ यमो दण्डमवासृजत् ।
मूर्ध्नि तेन प्रहारेण ततः सोगान्महीतलम् ।।२८ ।।

२० न्यभजत् - क. । २१ माराधे - क., मारोहे - ख. । २२ तमाप्नुतं - क. ख. । २३ मूढचेतसः - ख । २४ इवार्णवः - क. । २५ संज्ञामशन्या - ख. । २६ संमतं तस्य - क. ख. । २७ सातयामास - क. । २८ देवोग्र्यस्स - ख.,. स्त - क. ख. । २९ पुण्यं - क., पुण्ड्राँ - ख. । ३० सायोज्यमानयत् - क ख, । ३१ साश्वै - क. ख । ३२ सन्नाद्या - क., संछाद्य - ख. । ३३ एवः थ - क. ख ।

630

ततो हाहाकृतमभूद्दानवानां बले तदा ।
गृहण गृहणेति चाप्यूचुः कष्टं कष्टं तथापरे ।।२९।।
अनुह्लादस्तु वरुणं नाराचेन महाबलः ।
आहत्य हृदये क्रुद्धो रथोपस्थे न्यपातयत् ।।8.115.३ ० ।।
स उत्थाय क्षणाद्देवो विकृष्य बलवद्धनुः ।

सायकाँस्तस्य संधार्य३४ धनुश्चिच्छेद वीर्यवान् ।।३ १ ।।
अश्वाञ्जघान सूतस्य शिरः कायादपातयत् ।
तस्य प्रस्कन्दतश्चापि हताश्वाद्रथसत्तमात् ।।३२ ।।
बिभेद हृदयं शीघ्रं स पपात यथा मृतः ।
मय३५स्तारस्तारकश्च आदित्यान् दृढमार्दयन् ।।३ ३ ।।
तेपि तान् विरथाञ्चक्रुः सर्वाञ्छरशतैस्त्रिभिः३६ ।
शरभः शतकेतुश्च बलो मूकश्च दानवः ।।३४। ।
रुद्रानस्त्रैर्बहुविधैर्नादयन्तोर्दयन्युधि ।
तेषामस्त्राणि तानि स्म प्रतिवार्य महाबलाः । ।३ ५।।
शलभा इव केदारान् मुहूर्तेन व्यनाशयन्३७ ।
ते काल्यमानास्तै रुद्रै३८र्बहुभिर्विरथास्तदा ।।३६।।
रणं त्यक्त्वा महामाया विपलायन्त३९ सर्वशः ।
शम्भुः कार्तस्वनश्चैव महामायश्च शम्बरः । ।३७।।
वसूनभ्यद्रवन् युद्धे गजाः प्रतिगजानिव ।
तेषान्तु वसवः सर्वे स्वापनास्त्रं४० ससर्जिरे ।।३८।।
रथेष्ववस्थिता येन बभुः सुप्ता यथा मृगाः ।
तान् सुप्तान् रथयन्तारो रणात्तस्मादपाहरन् । ।३९।।
हरतां चैव सूतानामुत्तमाङ्गान्यपातयन् ।
ते हतेष्वथ सूतेषु उद्भ्रान्तैर्वाजिभिस्तदा । ।8.115.४० । ।

३४ संवार्य - क. । ३५ यम - क ख. । ३६ गतस्त्रिभिः - ख., गभस्तिभिः - क. । ३७ व्यशातयन् - ख. । ३८ आहन्यमानास्तै - ख.,?.. स्त्रै - क. । ३९ व्यपलायन्त - क. । ४० श्वा (स्वा) पनार्थं - क ।

631

सुप्ता एव रणे सर्वे भ्राम्यन्ते दितिसूनवः ।
नरकोथ हयग्रीवस्तथेन्द्रदमनोपि च । ।४१ ।।
अश्विनौ द्वौ४१ सुसंयत्ता युयुधुस्ते सुरेश्वराः ।
तानापतत४२ एवाथ तौ देवौ४३ भिषजां वरौ ।।४२।।
दण्डेनास्त्रेण विरथान् सर्वानेव प्रचक्रतुः ।
पुनश्चापततः सर्वान् गदिनः क्रोधमूर्छितान् । ।४३ ।।
वायव्यास्त्रेण सहसा संचिक्षिपतुराहवे ।
अन्ये चान्याँस्तदा देवा दितिपुत्रान् व्यपोथयन्४४ । ।४४। ।

अभज्यन्त यथा सिंहैर्मृगारण्येभिसंहताः४५ ।
प्रह्लादश्चापि दैत्येन्द्रो विष्णुना सह संगतः । ।४५।।
महत् कृत्वा तदा युद्धं विरथः समपद्यत ।
स चक्रेण हताश्वस्तु हतसूतपदानुगः ।।४६ ।।
गदां गृहीत्वा प्रस्कन्द्य जनार्दनमुपाद्रवत् ।
तस्योद्यतकरस्याथ धावतश्च महामुने । ।४७।।
चिच्छेद तां गदामाशु चक्रेणैव जनार्दनः ।
अथ ते दानवाः शूर४६स्तैर्देवैर्भग्नविक्रमाः । ।४८। ।
अभज्यन्त यथा सिंहैर्वने मृगगणा भयात् ।
तान्भग्नान्४७ भज्यमानाँश्च दृष्टवा त्यक्त्वा रणं ययुः । ।४९।।
प्रह्लादोपि रणं त्यक्त्वा तानेवानुजगाम ह ।
तेषु भग्नेष्वथेन्द्रस्य जयशब्दं सुपूजितम् ।।8.115.५० ।।
समं चक्रुस्तदा देवाः सनारायणलोकपाः ।
सिंहनादांश्च विविधान् वादित्राणि न्यवादयन् ।।५१ । ।
इति स्कन्दपुराणे अमृतमथनेयुद्धे पञ्चदशोत्तरशततमोध्यायः४८

४१ च - क । ४२ नाता - क. । ४३ देवे (?) । ४४ न्यपोथयन् - ख. । ४५ पद्यार्धमेतदत्र प्रमादादापतितं प्रतिभाति । ४६ शूरा - ख. । ४७ ते तान्. (?। ४८ अध्यायः १६८ - ख., नात्राध्यायसमाप्तिर्ध- पुस्तके ।

632

सनत्कुमार उवाच
एवं तदभवद् व्यास अमृतस्यावमन्थनम् ।
युद्धञ्च सुमहाघोरं१ प्रह्लादेन सहैव तु ।। १ । ।
स तु कालेन महता कृत्वा युद्धशतान्युत ।
पुत्रे विरोचने राज्यं प्रददावसुरेश्वरः । ।२। ।
विरोचनः पुनर्व्यास राज्यस्यार्थे महाबलः ।
आटीबके हतो युद्धे देवेन्द्रेण महौजसा२ । । ३ ।।
व्यास उवाच
आटीबकः स संग्रामः कथमासीन्महाभयः ।
श्रोतुमिच्छामि भगवन्३ परं कौतूहलं हि मे ।।४। ।
सनत्कुमार उवाच
बभूव पुनरेवेह देवानामसुरैः सह ।

सख्यं४ ते ददृशुश्चैव५ दूराद्वै६ विस्मिताननाः । ।५।।
घोरामिलावृते तस्मिन् वर्षे विकृतरूपिणीम् ।
उग्रामाथर्वणीं कृत्या७मसुराणां भयंकरीम् ।।६। ।
तां दृष्टवा तेब्रुवन् केयमाटिरित्येव देवताः ।
असुरा बक इत्येव विवादश्चाप्यजायत । ।७। ।
सापि कृत्या तदा घोरा देवेभ्यो दर्शनं ददौ ।
आटिरित्येव तेषां च असुराणां बकोभवत्८ । ।८।।
तेषां पणोभवत्तत्र राज्यं प्रति महामुने ।
यो नो जितः स नो दासो जेता स्वामी भवत्विति ।।९। ।
ततस्सा ह्याटिरूपेण सर्वेभ्यो दर्शनं ददौ ।
ततस्ते विजिता देवाः प्रोचुर्नो स्म१० जिता११ इति ।।8.116.१ ० ।।

१ सुमहद् घोरं- क. ख. २ हतौजसा - ख., अत्राध्यायसमाप्तिर्घपुस्तके । ३ भगवान् - क . ख। ४ संख्यं - क. ख. । ५ ददृशिरे चैव - क. ख. । ६ दूरात्ते - क. ख. । ७ ज्ञात्वा - क. । ८ तु (वै) बकः - ख. । ९... न्देवान् - क. ख. । १० न स्म (?) । ११... ज्जिता - क. ।


बक१२ एवैष सुव्यक्तं जिता यूयं न संशयः ।
नायमाटिर्बकोयं वै न बकश्चाटिरेव हि१३ । । ११ ।।
एवं विवदतां युद्धमभवद्राज्यकारणात् ।
तेषां दानवमुख्यानां देवैस्सह भयावहम् । । १२ । ।
वर्षाणां वै सहस्रं तु हतो यत्र विरोचनः ।
हते विरोचने ब्रह्मा बलिं तेषां महासुरम् । । १३ । ।
अभ्यषेचयदिन्द्रत्वे१४ स च राजा बभूव ह ।
ततस्स लोकांस्त्रीन् व्यास बलेनाक्रामदव्ययः१५ ।। १४। ।
त्रैलोक्यस्येश्वरश्चैव स जज्ञे ह्यसुरेश्वरः ।
जित्वा युद्धेन१६ देवेन्द्रं स्थानादच्यावयत् प्रभुः । । १५ । ।
इन्द्रत्वमकरोच्चैव यमत्वञ्च महाबलः ।
स एव वरुणश्चाभूद्धनेशोग्निस्तथैव च । । १ ६। ।
आदित्यश्चैव सोमश्च पर्जन्यो वृष्टिसर्जनः ।
सर्वं जगति कर्तव्यं स एव कुरुते सदा१७ । । १७। ।
एवं शासति वै राज्यं१८ देवानामसुखं तदा१९ ।

भ्रष्टैश्वर्या महात्मानो भ्रमन्ति शकुना इव ।।१८।।
तेषां ब्रह्मा ददौ बुद्धिं दुःखितानां महात्मनाम् ।
आश्वास्य बहुधा व्यास कारुण्याद् देवसत्तमः ।।१९।।
ब्रह्मोवाच
देवा न शक्यो२० युष्माभिर्बलिरेष प्रवाधितुम् ।
महात्मा धार्मिकश्चायममरश्च न संशयः ।।8.116.२०।।
ब्रह्मण्यश्च बलीयाँश्च तथा लब्धवरश्च ह ।
तं गत्वा विप्ररूपेण विष्णुरेष प्रयाचतु२१ ।।२१।।

१२ एक - ख. । १३ च - ख. । १४... दिन्द्रन्तु - क.,... दिन्द्रस्तु - ख. । १५ बलेकामयदव्ययः - ख. । वशे कास्यद (?), बलेनाक्रम्य दानवः (?) । १६ जिह्वा (ह्म) युद्धेन - । १७.. .न्यदा - क । १८ राज्ये - ख. । १९ तथा - ख. । २० शक्यं - क. ख. । २१ प्रयाचतां - ख ।


वामनं रूपमास्थाय भूमेर्वै विक्रमत्रयम् ।
दास्यते स गृहीत्वा तत् क्रमतामेष सर्वशः ।।२२।।
भूमिं क्रमसमां सर्वं करिष्यति न संशयः ।
क्रमं द्वितीयं धातास्य२२ अन्तरिक्षे ततः२३ स्वयम् ।।२३।।
अहं चैव प्रदास्यामि तृतीयं क्रममित्युत ।
एवं वो राज्यलाभोयं२४ दृश्यते नान्यथा सुराः ।।२४।।
यस्मिन्काले प्रक्रमते विष्णुरेष त्रिविष्टपम्२५ ।
तस्मिन्काले च रक्षध्वं सर्वयत्नेन दानवान् ।।२५।।
सनत्कुमार उवाच
त एवमुक्ता देवेशा निश्चित्य बहुधा शुभम् ।
विष्णुमूचुर्महासत्वाः क्रियतां ब्रह्मणो वचः ।।२६।।
दीक्षितश्चासुरश्रेष्ठो हयमेधेन सोद्य वै ।
कल्यं२६ चावभृथं२७ तस्य गत्वा याचस्व तं प्रभो ।।२७।।
सनत्कुमार उवाच
एवमस्त्विवति तेनोक्ता देवा युद्धाय दंशिताः ।
अतिष्ठन्त तदा सर्वे शक्रं कृत्वा पुरस्सरम् ।।२८।।
नारदोथ तदा गत्वा पूजितस्तेन भक्तितः ।
सुखोपविष्टः प्राहेदं वचनं वदतां वरः ।।२९।।

धर्मेण तव तुष्टोहमृषयश्च तपोधनाः ।
अनासुरमिद वृत्तं तव दानवसत्तम । ।8.116.३ ०।।
सर्वे२८ हि दानवाः२९ क्रूराः३० ब्रह्मघ्ना३१ लोककण्टकाः३२ ।
त्वं तु ब्राह्मणभक्तश्च लोकानां हितकृत्तथा ।।३१।।
तस्मात्तव शुभं चिन्त्यं सदैवासुरपुङ्गव३३ ।
यथा च ते शुभं किञ्चित् स्याद् राजन्नित्यमेव३४ हि३५ ।।३२।।

२२ दातास्य - ख. । २३ तव - क. ख. । २४ राज्यलम्भोयं - ख । २५ तृविष्टपम - क त्रिवि ख । २६ काल्यां - क., काल्यं - ख. । २७ चावभृतं - ख. । २८ सर्वो - क. । २९ दानवः - क । ३० क्रूरो - क. । ३१ ब्रह्मघ्नो - क. । ३२ लोककण्टकः - क. । ३३ सदेवासुरपुङ्गवाः - क । ३८ राज्यनित्यमेव - क ख । ३५ च - क ।

635
एष देवैः प्रणिहितो विष्णुर्विप्रत्वमास्थितः ।
त्रीँस्त्वा राज्यार्थमुद्युक्तः३६ प्रार्थयिष्यति विक्रमान् । ।३ ३ ।।
तन्न तस्य त्वया देयं३७ राज्यं३८ पश्चान्न ते३९ भवेत् ।
अतः परं भवान् राजन् प्रमाणमसुरेश्वर । । ३४।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा बलिर्वैरोचनिस्तदा ।
उवाच प्रणतो व्यास नारदं दानवेश्वरः ।। ३५।।
शत्रवस्ते मम दृढं तेषां चाहं महामुने ।
यदि ते मां प्रयाचन्ते४० कृतार्थोस्मि ततो ननु ।।३ ६।।
स्वधर्मं४१ सं४२परित्यज्य यदि चेन्मधुसूदनः ।
मां प्रयाचति दीनात्मा सफलं जीवितं मम ।।३७। ।
व्रतं चेदं मम ब्रह्मन् सदैव हि महामुने ।
याचितो४३ न ददामीति न ४४ वदेयमिति प्रभो ।।३८। ।
उर्ध्वं प्राणा ह्युत्क्रामन्ति याचतो४५ विप्रसत्तम ।
ब्रुवतो न ददामीति नरकायोत्क्रमन्त्यथ । ।३९।।
देहीति रुदितस्याख्या४६ नास्तीति प्रतिरोदना ।
मा मां४७ नारद पश्यन्तु रुदन्तमितरे जनाः । ।8.116.४० । ।
एषा४८ भवति सर्वस्य पुरुषस्य महामुने४९ ।
याचतो मम दातायमिच्छा तद्ध्यक्षयं५० फलम् ।।४१ ।।
सोहं यदि न दास्यामि शत्रुभ्यो याचितं५१ महत् ।

नरकं रौरवं नाम प्रतिपत्स्याम्यसंशयम् ।।४२।।
यो हि वै याचमानाय न ददाति नराधमः ।
स तं हिनस्ति याचन्तमाशाच्छेदान्न संशयः । ।४३ ।।

३६ स वै त्रीन् सुरकार्यार्थं घ। ३७ ते तस्य न त्वया देया घ.। ३८ राजन् (?) । पथ्या न ते क। ४० प्रयाचन्ति - क ख. । ४१ अर्धर्मं - क, सर्धर्मं (?) । ४२ स्वं - ख. । ४३ याचितं - क. । ४४ च - ख. । ४५ याचिते - ख । ४६ रुदितस्याह्वा - ख. । ४७ मा - ख. । ४८ येषां - ख. । ४९ महात्मनः - ख । ५० तद् व्यत्ययं - ख. । ५१ याचितो - ख. ।



भबान्मम पिता व्यक्तं५२ पुत्रः स्नेहकृतो५३ ह्यहम्५४ ।
नाहं न दास्ये विप्रेन्द्र निर्वृतिस्ते५५ भवत्वियम्६ ।।४४।।
सनत्कुमार उवाच
ततस्स तं तदामन्त्र्य तेन चैव सुपूजितः ।
दिवमक्रामदव्यग्र५७श्चिन्तयानः कथं भवेत् । ।४५।।
गतेथ तस्मिन्दिवसे रजन्यां स५८ महायशाः ।
विष्णुर्वामनरूपेण विप्रो भूत्वा तमर्थयत्५९ । ।४६ ।।
स चापि राजा विप्रेन्द्र६० रत्न३नि च वसूनि च ।
ग्रामान्दासीश्च महिषीर्गवाश्वान् रथहस्तिनः । ।४७।।
वाहनानि च चित्राणि सुवर्णं शयनानि च ।
शय्यास्तरणवस्त्राणि भूषणानि गृहाणि च ।।४८।।
यं यमर्थयते६१ विप्रो यावद्यश्च६२ यथा यथा६३ ।
तथा तथा स दैत्येन्द्रो ददात्येवाविचारयन् । ।४९।।
तं तथा वर्तमानं तु वामनः सुमहायशाः ।
प्राह मह्यं प्रयच्छस्व यदहं प्रब्रवीमि ते । ।8.116.५० ।।
स तमर्घेण६४ पाद्येन आसनादिभिरेव च ।
संपूज्यैवाब्रवीद्६५ ब्रूहि यत्तवेष्टं द्विजोत्तम । ।५१ ।।
वामन उवाच
यदि प्रयच्छसे राजन् याचमानाय कामतः ।
ततो ब्रवीम्यन्यथा तु न वक्ष्याम्यसुरेश्वर । ।५२।।
बलिरुवाच
ज्ञात्वार्थं प्रतिजानीयां देयं ब्राह्मण तद्यदि ।

दातुं च शक्यं तत् स्यात्तु६६ ततोहं६७ दातुमुत्सहे ।।५३।।

५२ नित्यं - ख. । ५३ पुत्रस्नेहः कृतः - क । ५४. द्य वै - घ, ५५ निवृतिस्ते - घ । ५६ भवत्वयं - ख. । ५७ दिवमाक्रमदव्यग्र - ख । ५८ च - ख । ५९ तमार्थयत् (?) । ६० विप्रेभ्यो क., विप्रेन्द्रो - ख. । ६१ यद्यवर्थयते (?) । ६२ यावन्तं च (?) । ६३ तथा - क । ६ तमर्घ्येण - क । ६५ संपूज्य चाब्रवीद् - ख । ६६ ते तस्मात् - घ. । ६७ ततस्त (तद्) - घ. ।

637

वामन उवाच प्रतिज्ञा भवतो नित्यमियं६८ ह्यसुरसत्तम ।
यद्यत्प्रयाचते विप्रो दद्यां तत्तदहं त्विति६९ ।।५४।।
दीक्षितश्चाश्वमेधेन त्वं७० ददास्यसुराधिप७१ ।
यद्यत् प्रयाचते विप्रस्तत्तद्दत्से७२ न संशयः ।।५५।।
सनत्कुमार उवाच
स एवमुक्तो निश्चित्य पुनरेवाह७३ तं नृपः ।
प्रहस्य सुमहावीर्यं इदं वचनकोविदः ।।५६।।
बलिरुवाच
भवान् विष्णुर्विप्ररूपी७४ छद्मना मां प्रयाचसे ।
क्षत्रधर्मं समुत्सृज्य कार्पण्यं७५ च प्रभाषसे ।।५७।।
दीनानामपि७६ सर्वेषामहं दद्यां७७ प्रयाचितः ।
राज्यं विना हि देवाय७८ तुभ्यं दास्ये यथेप्सितम् ।।५८।।
वामन उवाच
सत्यमेतदहं विष्णुर्हृतराज्या वयं त्वया ।
न राज्येद्य स्पृहास्माकं निःस्पृहा हि ततो वयम् ।
गृहं त्वां संप्रयाचाम७९ यत्र वत्स्यामि८० निर्वृतः८१ ।।५९।।
बलिरुवाच
किंप्रमाणं गृहं तद्वै प्रयाचसि सुरेश्वर ।
कीदृशं क्व च तद्८२ दास्ये ब्रूहि वामन सर्वशः ।।8.116.६०।।
वामन उवाच
सर्वभूमिगुणैर्युक्तं यत्र तत्र महागृहम्८३ ।
मम क्रमैस्त्रिभिर्युक्तं८४ दत्स्व८५ राजन् गृहार्थिने ।।६१ ।।

६८. मिदं - क । ६९ प्रति - क । ७० ष्वं (स्व?) । - क । ७१ वदाम्यसुराधिप - ख । ७२ तत्तद्दत्स्व - घ,

तद्वदस्व - क । ७३ पुनराह च - घ. । ७४.. विरूपी च - क., भगवन्विष्णुरूपी ख. । ७५ कार्कश्यं - क । ७६ दानानामपि? । ७७ दद्यात् - क. ख. । ७८ दीनाय - घ. । ७९ प्रयाचामो - ख । ८० वत्स्याम - ख. । ८१ निर्वृताः - ख. । ८ . त - क । ८३ तत्रैवेप्ट गृहं मम - घ. । ८४.. स्तुल्यं - घ.। ८९ धत्स्व - क. ।



सनत्कुमार उवाच

अथ शुक्रस्तदा व्यास८६ बलिं प्राह महातपाः ।
न दातव्यं महाराज विष्णुरेव महाबलः ।।।६२ ।।
अयं स हन्ता८७ सर्वेषां दानवानां दुरासदः८८ ।
छद्मनैव८९मिहायातो९० विष्णुरेनं९१ विसर्जय । ।६३ ।।
अनादृत्य वचस्तस्य प्रोवाच दितिनन्दनः ।
दास्ये तुभ्यं गृहं विष्णो यादृशं त्वं प्रयाचसे । ।६४।।

सनत्कुमार उवाच

तस्य तद्वचनं श्रुत्वा प्रोवाच मधुसूदनः ।
बलिं राजानमनघं सर्वेषामेव सन्निधौ । ।६५। ।

वामन उवाच

साध्यो देवोहमनघ धर्मपुत्रो दितेः सुत९२ ।
ततः प्रतिग्रहे दोषो न ममास्ति महाबल । ।६६।।
यदि देयं गृहं मध्यं पश्चात् तापो न ते यदि ।
हस्ते मम जलं राजन् पातयस्वासुरेश्वर । ।६७ ।।

सनत्कुमार उवाच

ततस्स बाढमित्युक्त्वा भृङ्गारेण महाबलः ।
प्रदातुमुपचक्राम वामनाय गृहं महत् । । ६८। ।
अथ ते९३ दानवाः क्रूराः प्रतिषेधनलालसाः९४ ।
आजग्मुर्भृशमायत्ता९५ बलिं प्रति महामुने ।।६९।।
प्रह्लादो भ्रातृभिः सार्धं मयो जम्भोर्द्धलोचनः९६ ।
विप्रचित्तिश्च विक्रान्त अन्ये च सुमहाबलाः । ।8.116.७० । ।
ऊचुस्ते तं तदा गत्वा९७ कृत्वा प्रह्लादमग्रतः ।
बलिं वैरोचनिं व्यास चिन्तयन्तः पराभवम् ।।७१ । ।

८६... स्तदाभ्येत्य (?) । ८७ निहन्ता - घ. । ८८ महाबल. - घ. । ८१ छलेनैव - क. । ९०.. मिहायातं - क. ख. । ९१ मेनं (?) ९२ सुतः - क. । ९३ ततस्ते - ख. । ९४ प्रतिशोधनलालसाः - ख. । ९५ .मायस्ता - ख. ।

९६ जृम्भणोवै नु .. - घ.,... द्य लोचनः - ख. । ९७ ज्ञात्वा - घ. ।



प्रह्लाद उवाच

किमिदं पुत्र दुर्बुद्धे त्वया व्यवसितं महत् ।

नाशनं दितिपुत्राणां नैतत् कार्यं महाबल ।।७२। ।

विष्णुरेव महामायो दुरात्मा दैत्यघातकः ।

लोकत्रयमपि ह्येष क्रमिष्यति न संशयः ।।७२ ।।

त्वमस्माकं गतिः पुत्र त्वं वीर्यं त्वं पराक्रमः ।

त्वयि जीवितमायत्तं मा नः क्षिप्रं विनाशय९८ ।।७४।।

हिरण्यकशिपू राजा हिरण्याक्षश्च दानवः ।

तव राज्ञः कलां पुत्र नार्धतः षोडशीमपि९९ ।।७५।।

मैतस्य विबुधस्य१०० त्वं गृहं दत्स्व ब्रवीम्यहम् ।

एतद्धि श्रेयः सर्वेषां तव चैव महाबल ।।७६। ।

सनत्कुमार उवाच

तस्य तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।

बलिः प्रणम्य१०१ धर्मात्मा इदमाह महायशाः । ।७७।।

बलिरुवाच

जानेहं१०२ विबुधोयं वै विष्णुः सर्वासुरान्तकः ।

प्रतिज्ञैव ममेयं हि दातव्यं याचितेन मे ।।७८।।

अहं दानपतिः ख्यातस्त्रिषु लोकेषु विश्रुतः ।

कथं तदन्यथा कुर्याञ्जीविते सति दानवाः ।।७९।।

अधर्म्यमयशस्यञ्च अस्वर्ग्यं भयदं महत् ।

कथं नामानृतं कुर्यामिति१०३ मे व्रतमाहितम् ।

प्रतिश्रुत्य कथं भूयोसुरास्ते धर्मकारणात् (?) ।।8.116.८०।।

प्रह्लाद उवाच

दानवानां सदैत्यानां पुत्र धर्मः स्वयं कृतः ।

अधर्मेण हि वर्धन्ते सदैव दितिदानवाः ।८१।।

९८ नैतत्कार्यं महाबल - घ. । ९१ नार्धन्ते - क., नार्हतः (? ), सर्वे नार्हन्ति षोडशीम् - घ. । १००. देव सत्यं - घ. । १०१ बलिम्प्रणम्य - क. । १०२ जानेयं - क. । १०३ कुर्यादिति - ख., कुर्यामिति (?) ।

माया चैवानृतं चैव दम्भः सर्ववधस्तथा ।
यज्ञानां परिमोषश्च धर्म एष१०४ हि नः शुभः । ।८२। ।
स त्वं प्रतिश्रुत्य विभो मा ददस्व१०५ दुरात्मने ।
तथा हि नो भवेद् वृद्धिरन्यथेह भयं महत् ।।८ ३ । ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा बलिर्निश्चिन्त्य१०६ बुद्धिमान् ।
उवाचासुरशार्दूल इदं वचनकोविदः ।।८४। ।
बलिरुवाच
य एष धर्मो धर्मेण भवद्भिः संप्रचोदितः ।
न ह्यस्य फलमानन्त्य क्रूरस्यासुरसत्तम ।।८५।।
हिरण्यकशिपू राजा नात्यन्तं सुखमाप्तवान् ।
हिरण्याक्षस्तथा१०८ चैव अन्धकश्चैव तत्सुतः ।।८६। ।
भवान् पितामहोस्माकं तथा क्रूरेण कर्मणा ।
तस्मान्नेदं प्रशंसन्ति ये केचिद्विदुषो (?) जनाः । ।८७।।
ऋषयः पश्य सत्येन धर्मेण दिवि संस्थिताः ।
देवा जयन्ति चात्यर्थं ग्रहा दिव्यन्ति चैव हि । ।८८ ।।
न कश्चिद् दृश्यते१०९ व्योम्नि तथा क्रूरेण कर्मणा ।
प्रसादयन् क्षामये त्वां ब्रवीमि दितिजेश्वर (?) ।।८९।।
प्रह्लाद उवाच
दुष्टं वाप्यथवा क्रूरं शोभनं वापि दानव ।
स्वकर्म न विमोक्तव्यं पारम्पर्यागतं महत् ।।8.116.९ ० । ।
- - - पितृभिश्चैव तथा चैव११० पितामहैः ।
आचीर्णं पुत्र नैतत्ते१११ विमोक्तव्यं महामुने ।।९१ ।।
बलिरुवाच
पितृभिर्हि यथा चीर्ण कर्तव्यं यदशङ्कितैः ।
गर्हितं यत्११२ सतां चापि पितामह शृणुष्व मे ।।९२।।

१०४ एषो - ख । १०५ ददक्ष्व - ख. । १०६ निश्चित्य (?) । १०७... ह्यस्या - ख. । १०८... स्तदा - ख.। १०९ दीव्यते (?) । ११० तव - ख. । १११ चैतत्ते - ख. । ११२ च - ख. ।

641

आसीदृषिरदीनात्मा वामदेव इति श्रुतः११६ ।
तस्य दृष्टवोर्वशी मोहाद्रेतः स्कन्दो बभूव ह ।। ९३ । ।
तद् भूमावविद्धं वै चखाद वडवा किल ।
तस्या११४ गर्भः समभवत् सद्यः सोश्वतरी भवत् । ।९४। ।
तामृषिः स सुतस्नेहात् पुपोष बहुला समाः ।
अथागात्तत्र राजर्षिरष्टको नाम वीर्यवान् ।।९५। ।
स तामपश्यद्राजेन्द्र११५ ऋषेराश्रममध्यगाम्११६ ।
अचिन्तयद्बुदा चैव इदं परमहर्षितः । ।९६।।
मम पत्न्यास्तु११७ सदृशी इयं लक्षणसम्पदा११८ ।
यदि दद्यादिमां११९ विप्रः स्यादग्रं मम संगतम् । । ९७।।
न चायं दास्यते विप्रो मह्यमेनां सुदुर्लभाम् ।
उपायं तु करिष्यामि येन दास्यति सुप्रभाम् । ।९८। ।
सनत्कुमार उवाच (?)
ततस्स राजा तं गत्वा वामदेवमुवाच ह ।
प्रणम्य बहुमानेन निकृत्या शक्तिनन्दन । ।९९। ।
राजोवाच
अश्वतर्यानया कार्यं मम किञ्चिन्महामुने ।
संवत्सरं सुसंपूर्णं प्रयच्छस्व प्रयाचितः ।। 8.116.१०० ।।
परिप्राप्ते पुनः कृत्ये तुभ्यं वै द्विजसत्तम ।
पुनः प्रदास्ये विप्रेन्द्र यदि देया प्रदीयताम् ।। १०१ । ।
ततः स ऋषिशार्दूलस्तस्मै प्रादादनिन्दिताम् ।
तां गृहीत्वा ययौ राजा लब्धेति हृषितस्तदा । । १०२ ।।
अथ संवत्सरे पूर्णे तमाह ऋषिसत्तमः ।
तमुवाच ततो विप्रः१२० प्रयच्छाश्वतरीं शुभाम् ।। १०३ ।।

११३ श्रुतिः - ख. । ११४ तस्य - ख. । ११५.. राजेन्द्रो - ख । ११६.. मभ्यगात् - ख. । ११७ ममैव बहुयोग्येदं (यं?) - घ. । ११८ शुभलक्षणसम्पदा - घ. । ११९- --दद्यादयं - ख. । १२० विप्रो - ख. ।


न ददौ स हि१२१ दुर्बुद्धिर्ऋषिः क्रोधाज्जघान तम् ।
तस्य पुत्रस्ततो राजा बभूव नरपुङ्गवः । ।१ ०४। ।
तमप्याह ततो विप्रो न ददौ स च तां तदा ।

ततो ममार सोप्येवं१२२ विप्रक्रोधाद् दुरात्मवान् । । १० ५। ।
तस्य पुत्रोभवच्चैव राजा दितिजसत्तमः ।
तमुवाच ततो विप्रः प्रयच्छाश्वतरीमिति । ।१ ०६ । ।
अथ सोपि तथा कृत्वा याचितः सुदुरात्मवान् ।
उवाच नाहं दास्यामि पितृहन्त्रे दुरात्मने । । १ ०७।।
ततस्तमप्यसौ क्रुद्धो विप्रः प्राणैर्व्ययोजयत्१२३ ।
ततो बालः सुतस्तस्य राजाभवदतिद्युतिः ।। १० ८।।
तमप्यसौ तथा१२४ विप्रः प्रोवाच क्रोधमूर्छितः ।
नाशयिष्ये कुलं तद् वै अष्टकस्य दुरात्मनः ।।१ ०९।।
तस्य तद्वचनं श्रुत्वा बालः संपूज्य तं द्विजम् ।
उवाच सचिवान् पृष्ट्वा१२५ पश्चाद्दास्यामि वाडवाम्१२६ ।।8.116.१ १० ।
सचिवान् स तदानाय्य अपृच्छद् दानवेश्वर ।
इयमश्वतरी ब्रूत दातव्या नेति वा शुभा ।। १११ । ।
सचिवा ऊचुः
पितामहस्य ते पित्रा इयमश्वतरी पुरा ।
वर्षमेकं प्रयाच्येह१२७ समानीता१२८ नरेश्वर१२९ । ।१ १ २।।
पूर्णे वर्षे तु१३० विप्रस्य याचतोपि महामुने ।
न दत्ता स च१३१ कोपेन विप्रस्यास्य ममार१३२ ह । ।१ १३ ।।
ततः पितामहस्तुभ्यमासीद्राजा प्रजेश्वर१३३ ।
तथैव सोप्यदत्वैनां विप्रक्रोधान्ममार ह१३४ । । १ १४।।
भवाँस्तु यदि पूर्वेषां वृत्तं समनुवर्तते ।
न देया विप्ररूपस्य मृत्योरस्य दुरात्मनः । । ११ ५।।

१२१ ह - ख । १२२ सौम्ये - ख. । १२३ प्राणैर्वियोजयत् - ख. । १२४ तदा - ख. । १२५ दृष्ट्वा - क ख । १२६ दानवाः - ख, वा न वा (?) । १२७ प्रयाचित्वा - क. ख. । १२८ इहानीता - क. ख. । १२९ सुरेश्वर - क । १३० वर्षेस्य - ख. । १३१ तस्य - ख. । १३२ महा.. - क. । १३३ महेश्वर - क, महेश्वरः - क, ख । १३४ ... त्समाहरत् - क. ।

643
तेषान्तद्वचनं श्रुत्वा सचिवानां१३५ प्रमन्युमान् ।
निर्भत्स्य तान१३६धर्मज्ञानिदमाह महातपाः ।।१ १६।।
पूर्वे ते मौर्ख्यमास्थाय कृतवन्तोतिदारुणम् ।

अधर्म्यमयशस्यञ्च सद्भिश्चैव विगर्हितम् ।।१ १७।।
अहन्न तेषां पन्थानमनुवर्ते कथञ्चन ।
अद्य तानकृतप्रज्ञान् पितॄनथ पितामहान् ।।११८।।
गर्तस्थान् तारयिष्यामि कुलं च सुमहत्तथा ।
इत्युक्त्वा१३७ निधने तेषां जातः पुत्रो महामतिः ।।११९।।
विप्रस्याश्वतरीदाने मतिं चक्रे सुनिश्चिताम ।
ततस्तमृषिमभ्यर्च्य गन्धमाल्यादिभिर्नृपः ।।8.116.१२० ।
ताञ्चैवाश्वतरीं प्रादादात्मीयां स नराधिपः ।
वसु चैव हि दत्त्वास्मै ऋषिं तं१३८ स प्रसादयत् ।।१२१।।
ततः स ऋषिशार्दूलः प्रहृष्टेनान्तरात्मना ।
उत्थाप्य राजशार्दूलमिदमाह तदा विभुः ।।१ २२।।
त्वया तीर्णाः सुपुत्रेण पितरः सपितामहाः ।
नरकस्था महाबाहो ब्राह्मणस्वेन वेष्टिताः ।।१२३।।
न कृत्यं मम रत्नैश्च नाश्वतर्या नराधिप ।
तुष्टस्तुभ्यं प्रयच्छामि सर्वमेतन्नराधिप ।।१ २४।।
यद्यष्टको ममैवं वै कृतवान् स्याद् दुरात्मवान् ।
तत्पुत्रो वा महाबाहो पिता वा तव दुर्मतिः । ।१२५।।
विनाशं न गतास्ते स्युरहन्तुष्टश्च सर्वशः ।
तदापृच्छे गमिष्यामि तवैषा द्रव्यमेव च ।।१ २६।।
ततस्स ऋषिशार्दूलो जगाम वनमेव हि ।
राजाप्यश्वतरीं लब्ध्वा तया रेमे यथासुखम् । ।१२७।।
एवं हि न१३९ प्रशंसन्ति पूर्वेषां धर्मवर्जितम् ।
कर्म सर्वे द्विजा राजन्१४० ये चान्ये धर्मवादिनः ।
तस्माद्दास्याम्यहं राज्यं वामनाय महात्मने ।।१२८।।

१३५ सचिवाँस्तान् - क. ख. । १३६ निवर्तयित्वा - ख, निभर्त्सयित्वा - क । १३७ अहन्तु - क. ख । १३८ ऋषिस्तं - क. । १३९ नः - क. । १४० राजा - क ।

644

सनत्कुमार उवाच
ततस्सोसुरशार्दूलो वामनस्य तदा करे ।
पातयामास विधिवज्जलं परमपूजितम्१४१ । । १ २९। ।

तस्य पातितमात्रे तु जले विष्णोर्महात्मनः ।
दैत्येन्द्रस्योपरि तदा पुष्पवृष्टिः पपात ह । । 8.116.१३० । ।
साधुसाध्विति भूतानामदृश्यानाञ्च निस्वनः ।
देवदुन्दुभयश्चात्र स्वयं नेदुरनाहताः । ।१ ३ १। ।
मरुतश्च शुभान् गन्धानादाय प्रववुः शुभाः ।
हताः स्थ१४२ दानवास्सर्वे१४३ इति चात्राभवत् स्वनः । । १३२
तत्कर्म तस्यातिसुदुष्करं१४४ तदा समीक्ष्य सर्वे ऋषयस्तपोधनाः ।
प्रशंसमाना दितिनन्दनेश्वरं प्रणेमुरारान्मधुसूदनं तदा । । १३३ । ।
इति स्कन्दपुराणे वामने षोडशोत्तरशतोध्यायः१४५

सनत्कुमार उवाच -
ततस्स भगवान् विष्णुरुवाचासुरपुङ्गवम् ।
क्रमामि विक्रमैः पश्य दानवेश्वर सुप्रभ१ । । १ । ।
यदि चेत् पूर्यते दत्तं न चेद्दातव्य२ इत्युत३ ।
भवता भूमिभागोन्यः सत्यवाग् भव दानव । ।२ । ।
बलिरुवाच
क्रमस्व वामनश्रेष्ठ क्रमाँस्त्रीनद्य सर्वशः ।
न चेत् पूर्येत४ दाताहं सत्यमेतद् ब्रवीमि ते । ।३ । ।
सनत्कुमार उवाच
ततस्स देवदेवेशं महादेवमुमापतिम् ।
प्रणेमे परया भक्त्या क्रमिष्यन विष्णुरव्ययः । ।४। ।

१४१ पूजितः - क । १४२ -हतास्तु - क । १४३ स्सर्वा - ख । १४४ तस्याप्यतिदुष्करं - ख । १४५ अध्यायाः १६९ - ख. ।
१ सुप्रभः - क. ख , संप्रति - घ । २ भवेद्दातव्य - ख. । ३.. भित्युत - क. ख. । ४ चेत्पूर्यति - क ख. ।

645
ततो देवाः सुसंयत्ताः सन्नद्धा युद्धलालसाः ।
आकाशेन महासत्वास्तत्राजग्मुर्महाबलाः । ।५। ।
ततस्स पुष्करद्वीपे विष्णुः परमदीप्तिमत् ।
रूपं कृत्वा भुवं द्याञ्च - - वै क्रममाचरत् । । ६। ।
स पादमुदये कृत्वा द्वितीयं सरितां पतौ ।

पुष्करस्यैवोत्तरतस्तेन लोकमिमं गतः५ । ।७। ।
क्रमित्वा विक्रमं चैकपादमुत्क्षिपतस्तदा ।
अजको नाम दैत्येन्द्रः पादं तं समगृह्णत । ।८। ।
स तं सहैवासुरेण उत्क्षिपन्मधुसूदनः६ ।
क्षिप्तोसावसुरो७ व्यास अद्यापि न निवर्तते । ।९। ।
ततो द्वितीयं रुद्रस्य योगं परममास्थितः ।
अन्तरिक्षे भुवर्लोक९ एक एव क्रमोभवत् । । 8.117.१० । ।
ततोन्तरिक्षाद् भूयोपि ब्रह्मणो१० योगमास्थितः ।
स्वर्लोकमखिलं व्यास११ क्रममेकं चकार ह१२ ।। ११ । ।
तं तु लोकं समासाद्य निःसृतं देवसत्तमः१३ ।
जनलोकं समासाद्य१४ न समाप्तञ्च तत्ततः१५ । । १२ । ।
तस्य चो१६त्क्रक्रमतस्तत्र१७ दैत्याः शस्त्रास्त्रपाणयः ।
अभ्यक्रमन्त१८ वेगेन देवास्तान्सन्न्यवारयन् ।। १३ ।।
दश पुत्रसहस्राणि तनयानां बलेस्तदा१९ ।
युध्यमाना हतास्तेन विविधायुधपाणयः । । १४। ।
बाणो वातश्च द्वावेतौ२० बलिपुत्रौ महाबलौ२१ ।
तस्माद् भ्रष्टौ तदा व्यास संग्रामाद्ययतुर्मुने२२ ।। १ ५।।
अथ ब्रह्मा तदाभ्येत्य समयं प्रचकार ह ।
विमुच्य पाशान्देवेश इमं२३ लोक२४ पितामहः ।। १६। ।

५ गतं - ख. । ६.. णोदक्षिपन्मधुसूदनः - (?) । ७ क्षिप्तो वा - क, क्षिप्तः स चासुरो - घ- । ८ न संज्ञातः क्व वा गतः - घ । ९ च भूर्लोकः पूर्णं - घ. । १० ब्राह्मणो - क. । ११ सर्व - क., सर्वे - ख. । १२ क्रममेवं - क., क्रमे तच्च चकार ह - घ. । १३ पूर्णो नैव तृतीयकः - घ । १४ छलं चक्रे ततस्तस्य - घ. । १५ तत्त्वतः - ख. । १६ तस्योर्ध्वं - क ख । १७ चाक्रामतस्तत्र - क. । १० अभिक्रमन्त - क, अति - ख. । १९ स्तथा - क । २० द्वावेव ? । २१ महाबलः - क । २२ संग्रामायोद्यतुर्मुने - क. । २३ इद - क. । २४ लोकं - क ।

646

बले त्वयाखिलं राज्यं देवानां प्रतिपादितम् ।
सत्ये त्वं समये स्थित्वा मा राज्यं कामये पुनः२५ ।।१७।।
यावन्मन्वन्तरमिदमेष ते समयः शुभः ।
परिपाल्यः सदा वत्स गच्छ चैव यथासुखम् । । १८।।
इदं यज्ञफलं सम्यगवाप्स्यसि न संशयः ।

योगञ्च मत्प्रसादेन भूय एव ह्यवाप्स्यसि ।।१ ९।।
सैव२६मुक्तस्तमापृच्छ्य२७ पातालं संविवेश ह ।
देवा अपि ततः प्राप्य स्वं राज्यं२८ मुमुदुर्भृशम् ।।8.117.२०।।
व्यास उवाच
कीदृक् स भगवान् विष्णुस्त्यक्त्वा स्वं धर्ममूर्जितम् ।
प्रत्याहरत त्रैलोक्यं न चैवास्यानयोभवत् । ।२१ ।।
सनत्कुमार उवाच
क्रमतस्तस्य देवस्य बिष्णोर्दीप्तानलप्रभम् ।
बभौ रूपमतीवोग्रं दुर्निरीक्ष्यं सुरैरपि ।।२२।।
अथ देवाः सहेन्द्रेण विष्णुं परमदैवतम्२९ ।
तुष्टुवुः प्रशशंसुश्च कृतकृत्या महाबलम् । ।२३ ।।
प्रीत्या परमया युक्ताः सर्वे दिव्यास्त्रधारिणः ।
दानवैरर्द्यमानानामस्माकं विबुधेश्वरः । ।२४। ।
त्राता राज्यप्रदश्चैव त्वमभूस्सुरसत्तम३०।
त्वया स्म सुखिनः३१ सर्वे कर्मिणः सुकृतैर्यथा ।।२५।।
तव देव प्रभावेण३२ राज्यं भोक्ष्याम विज्वराः ।
तपनस्य(?) प्रभावेण यथा पूर्वं सुरेतराः ।।२६। ।
त्वं हि नः परमं धाम तथैव च परा गतिः३३ ।
परं पवित्रं त्वं चैव ऋते देवमुमापतिम् ।।२७।।

१५ कामयेत् पुनः - क ख । २६ स एव - क. । २७ मुक्त्वा आपृष्ट्वा - क, स्तं पृष्ट्वा - ख. । १८ स्वराज्यं - क. । २९ देवतम् - क. ख. । ३० त्सुरसत्तम - क. ख । ३ १.. त्सुखिनः - क. । ३२ न - क ख. । ३३ त्वं हि नः परमाङ्गतिः - ख. ।

647
सनत्कुमार उवाच तस्यैवं स्तूयमानस्य त्रिदशैः शार्ङ्गधन्वनः ।
अभूत्३४ तुष्टिस्तदात्यर्थं बहुमानस्तथात्मनि३५ ।।२८।।
ततोभिमानतस्तस्य३६ स योगः परमो मुने ।
अभ्रश्यत यथा वह्निः सलिलेन समुक्षितः ।।२९।।
ततस्तदन्तरं लब्ध्वा पाप्मा सा ह्यासुरी मुने ।
प्रहृष्टा संप्रहृष्यैन३७माविवेश जनार्दनम् ।।8.117.३ ० ।।
स तया पाप्मया व्यास आविष्टो विष्णुरव्ययः ।

न बभौ दीप्तिमाँस्तत्र सन्तः प्राप्येव दारुणम् ।।३ १।।
इति स्कन्दपुराणे वामने त्रैलोक्यक्रमणे सप्तदशोत्तरशततमोध्यायः

सनत्कुमार उवाच
तथा स पाप्मया व्यास आसुर्या संगतस्तदा ।
तदेव रूपं संप्राप्तो वामनं देवसत्तमः ।।१।।
तं तथा वर्तमानं तु देवास्सर्वे सवासवाः ।
अब्रुवन् किमिदं देव तव वैकृतमीदृशम्२ ।।२।।
तेषां तद्वचनं श्रुत्वा ऋषयः शंसितव्रताः ।
मरीचिर्भृगुरत्रिश्च अङ्गिरा क्रतुरेव च ।।३ ।
वसिष्ठश्च पुलस्त्यश्च पुलहो रुचिरेव च ।
विश्वामित्रो वामदेवो भरद्वाजस्तथौशिजः ।।४।।
गौतमश्च शरद्वाँश्च कश्यप३श्चोद्दल४स्तथा ।
वत्सारो नैध्रुवश्चैव च्यवनश्चात्मवानपि ।।५।।
दधीचश्च५ ऋचीकश्च जमदग्निश्च विश्रुतः ।
जामदग्न्यस्तथा रामो ह्यगस्तिश्च महातपाः ।।६।।

३४ बभौ - क. ख. । ३५.. नो तथात्मनि - क, माने तथात्मनि - ख. । ३६ ततोतिमानतस्तस्य - ख. । ३७ संप्रहष्यैव - क ।
१ संप्राप्य - क. ख. । २ वै कृत्यमीदृशम् - क. टि. । ३ काश्ययपः - क. । ४. श्चोदल्ल - क. । ५ दधीकश्च - क. ।


बृहस्पतिश्च शुक्रश्च शक्तिश्च सपराशरः ।
कुणिश्च कुणिबाहश्च६ तथा सारस्वतश्च यः ।।७। ।
एते चान्ये च ऋषयो नारदश्च सपर्वतः ।
ऊचुर्देवांस्तदा व्यास७ ब्रह्मणा संप्रचोदिताः ।।८ । ।
ऋषय ऊचुः
वयं देवाद्य संप्राप्ता ब्रह्मलोकात् सुरेश्वराः ।
आज्ञप्ता ब्रह्मणा क्षिप्रं देवस्यास्य कृतेन ह ।।९।।
यदनेन परित्यज्य स्वधर्मं देवबन्धुना ।
प्रतिग्रहः कृतो राज्यं वैकुण्ठेन महात्मना । । 8.118.१० । ।

ततः पाप्मासुराणां या सर्वप्राणिभयंकरी ।
सासुरान् संपरित्यज्य केशवं संविवेश ह । । ११ । ।
तथाभिभूतो८ देवोयमशक्तः शत्रुबाधने ।
न चास्य तेजः सर्वे वै९ पश्यध्वं पूर्ववच्छुभम् ।। १२ ।।
स एष यदि मन्यध्वं तीर्थेषु सुसमाहितः ।
स्नात्वाश्वमेधेन पुनर्यजतां दैवतैस्सह१० । । १३ । ।
ततः पिनाकिनं दृष्टवा तेन पूतश्च सर्वशः ।
भविता पाप्मया मुक्त एवमाह पितामहः । ।१४।।
सनत्कुमार उवाच
ततस्ते सहितास्सर्वे देवा मुनिजनैस्सह ।
तीर्थयात्रामकुर्वन् तं११ गृहीत्वा विष्णुमव्ययम् ।। १ ५। ।
ते तु पुष्करिणीं१२ रम्यां सुषुम्णेति सुविश्रुताम्१३ ।
नलिनीवनसंछन्नां१४ प्रहृष्टाण्डजनादिताम् । । १ ६। ।
बहुवृक्षवनोपेतां फुल्लपङ्कजशोभिताम् ।
बहूपवनवृक्षाढ्यां सूक्ष्मकाञ्चनबालुकाम् । । १७। ।

६ कुणिराहुश्च - क. । ७. . भ्येत्य (?) । ८ विभूतो - क- । ९ सर्वेषां - क., षा (शा) - ख । १० देवतैः सहः - क. ख । ११ मकुर्वन्त - क. । १२ पुष्किरणी - क । १३ सुषुम्नामिति विश्रुताम् - क. । १४... षण्डसंछन्ना (?) ।


वज्रवैदूर्यनीलाङ्कामिन्द्रनीललतोपलाम् ।
विविधाण्डजशब्दाढ्यां सिद्धचारणसेविताम् ।।१८।।
किन्नरोद्गीतमधुरामप्सरोभिश्च सेविताम् ।
मत्तभ्रमरगीताढ्यां१५ श्रीनिकेतननिकेतनाम्१६ ।। १ ९।।
यस्यां१७ स्नात्वा नरो मर्त्यः१८ स्वशरीरेण सुव्रत ।
विमानेनार्कभासेन गच्छन्ति१९ ह्यमरालयम् ।।8.118.२ ० ।।
तामासाद्य तदा देवाः सुषुम्नामृषिभिस्सह ।
पद्मानि जगृहुश्चैव मृणालानि बिसानि२० च ।।२१ ।।
अथ तत्र महापद्मं विकचं सुमनोहरम् ।
सहस्रपत्रसंछन्न२१ मगस्त्योद्धृत्य गृह्य तत्२२ । ।२२ ।
तस्यास्तीरे निचिक्षेप२३ ततः सस्नौ२४ यथासुखम् ।

जग्राह तच्च देवेन्द्र अदृष्टः केनचिद्विभुः ।।२३ ।।
अथागस्त्यः समुत्तीर्णो न तत्पद्ममपश्यत ।
सर्वांश्च तानुपामन्त्र्य इदमाह महामनाः२५ ।।२४।।
अगस्त्य उवाच२६
मम पद्म महद्देवाः केनादत्तं सुपुष्पितम् ।
सनत्कुमार उवाच
ततस्त ऋषयस्सर्वे देवाश्चापि२७ ऋषेस्तदा ।
प्रत्ययान् विविधाँश्चक्रु२८रेकैकश्येन२९ सुव्रत ।।२५।।
इन्द्र उवाच
स यज्ञैर्यजतामिष्टैर्बहुभिश्चाप्तदक्षिणैः ।
वसेत् स्वर्गे च नियतं यस्ते हरति पङ्कजम् ।।२६।।

१५ भ्रमरोन्मत्तगीताढ्यां - क ख. । १६ श्रीनिकेतनिभां शुभा - ख. । १७ योस्यां - क. । १८ मर्त्याः - क. । १९ गच्छते - क. । २० वनानि - ख. । २१ संहृष्टः - ख, संगृह्य - क । २२ गृहीतवान् -क. । २३ तीरेथ चिक्षेप - ख. । २४ तस्थौ - घ. । २५ महात्मना - क. ख । २६ अगस्तिरुवाच - क ख । २७ देवताश्च - ख । २८.. -ञ्चक्रु - क. । २९... स्य - क,... स्येन - ख. ।

650
सनत्कुमार उवाच
ततस्ते मेनिरे सर्वे देवेन्द्रेण महात्मना ।
गृहीतं पङ्कजं व्यास इन्द्रश्चैनमुवाच३० ह ।।२७।।
इन्द्र उवाच
ऋषीणां धर्मतत्त्वानि शृणुयाय वयं कथम् ।
उपायोयं कृतस्तस्माद् गृहाणेदं३१ जलोद्भवम् ।।२८ ।।
सनत्कुमार उवाच
ततस्ते तत्र संपूज्य अग्नीन् देवान् पितॄनपि ।
ब्राह्मणांस्तर्पयित्वा च विष्णोः कृत्वा तथाशिषः ।।२९।।
जग्मुरन्यानि तीर्थानि सुपुण्यानि शुभानि च ।
बहूनि व्यास मुनयो देवाश्च सुसमाहिताः ।।8.118.३ ० ।।
अथापश्यन्त ते वृक्षमेकं शुष्कं महातरुम् ।
कोटरे च शुकं तस्य शुष्यन्तं व्याकुलेन्द्रियम् ।।३ १ ।।
ते दृष्टवा तमपृच्छन्त महेन्द्रेण दिवौकसः ।

दिव्येन चक्षुषा दृष्ट्वा शुकं तुष्ट्वा यशस्विनः ।।३ २।।

इन्द्र उवाच

खगेश्वर मृते ह्यस्मिन् कस्मात्तिष्ठसि पादपे ।

अपुष्पफलपत्रे त्वं३२ शुष्के निरुपजीविते३३ ।।३ ३ ।।

शुक उवाच

एष वृक्षः पुरा ह्यासीत् सुमहान् कल्पवृक्षवत् ।

फलैरमृतकल्पैश्च चिरश्चाप्युपजीवितः३४ । ।३४।।

दशामिमां पुनः प्राप्तः३५ कालेन च३६ वनस्पतिः ।

जह्यादेनं कथं प्राज्ञः कृतज्ञो मादृशः पुनः । ।३५। ।

३० इन्द्रश्चैवमुवाच - क., इन्द्रश्चेद - ख । ३१ गृहाणेमं - क. ख. । ३२ तु - क. । ३३ निरुपजीव्यते - क. । ३४. '. जीवितम् - ख. । ३५ प्राप्य - ख. । ३६ कालेनैव - ख ।



कृतघ्नः स्यामहं देव३७ भृतमेनं परित्यजन् ।

ये लोका ह्यस्य वृक्षस्य ते मे सन्तु शचीपते । ।३६।।

इन्द्र उवाच

प्रज्ञावानसि मेधावी महात्मा नयतत्त्ववित्३८ ।

कथं मूढमिवात्मानं करोषि खगपार्थिव ।।३७।।

वनस्पतिरयं साधो धर्म एषोस्य नित्यदा ।

अबुद्धिपूर्वं पक्षीन्द्र स्वभावा३९च्चात्र कारितः ।।३८।।

नास्येयं बुद्धिरभवद्वयांसि मयि नित्यशः ।

वसन्तु मम खादन्तु फलानि च यथासुखम् ।।३९ ।।

अचेतनो यथा ह्यग्निरापो वायुश्च तत्त्वतः ।

भूतानामुपकाराय स्वभावान्नान्यथा हि ते ।।8.118.४०।।

तद्वत् त्वं खग वृक्षस्य बुद्ध्वा कर्म स्वभावजम्४० ।

परित्यज्येममन्यत्र४१ गच्छ यत्र सुखं भवेत् ।।४१।।

शुक उवाच

न मूढोस्मि सुरेशान मावमंस्था वचो मम ।

शृणुष्व च यथाप्रज्ञा मम देवेश्वर प्रभो ।।४२।।

अचेतनो यथा ह्यग्निरापो वायुश्च तत्त्वतः ।

न तथा सुरशार्दूल वृक्षगुल्मलतादयः । ।४३ ।।

विहितो ह्येष संसारः सर्वेषामेव कर्मिणाम् ।
तस्मादचेतनत्वन्ते न वृक्षेषु सुरेश्वर ।।४४।।
यथा च बुद्धिर्वृक्षाणां कथं कुर्याम सर्वशः ।
उपकारास्तु भूतानामिति मे तन्निशामय ।।४५।।
स्वयम्भुरेतानवदत् सृष्ट्वा मुख्यान्महायशाः४२ ।
प्रजानामुपकाराय वर्तध्वमिति सर्वशः ।।४६।।
ततस्ते फलपुष्पत्वक्प्रबालादिभिरन्तशः ।
उपकाराय वर्तन्ते सर्वभूतेषु लोकप ।।४७।।

३७ महद्देव - क. । ३८ नयुतत्ववित् - क. । ३९... न्नात्र - क । ४० स्वयं कृतम् - क. ख. । ४१ परित्यजेममन्यत्र - क. । ४२ महायशं - क. ।


वायुरग्निस्तथापश्च किन्तवाविदितं प्रभो ।
बुद्धिपूर्वं प्रवर्तन्ते यथावद्धि नगाः शुभाः । ।४८ ।।
इन्द्र उवाच
कथं तवेदं विज्ञानं को धर्मः कश्च ते श्रमः ।
एतद्वेदितुमिच्छामः४३ कथयस्व खगेश्वर । ।४९। ।
शुक उवाच
जन्मप्रभृति देवेश न मित्रद्रुहणे मम ।
बुद्धिः समभवन्नित्यं मृत्यावपि समागते । ।8.118.५० । । ।
मातापितृपरश्चाहं स्वदारनिरतस्तथा ।
नावमन्ये च४४ भूतानि ऋतुकाले व्रजामि च । ।५१ ।।
न भक्षयामि धान्यानि परेषां देवताधिप ।
तेन मे ज्ञानममलं प्रवृत्तं सुरसत्तम । ।५२ । ।
इन्द्र उवाच
तुष्टोस्मि तव सद्बुद्ध्या अनया खगसत्तम ।
वरं वृणु प्रदास्यामि यद् भवान्मन्यते शुभम् ।।५३ । ।
शुक उवाच
जीवतामेष४५ देवेन्द्र त्वत्प्रसादाद् वनस्पतिः ।
अतो नान्यमहं४६ देव वृणुयां वरमुत्तमम् । ।५४।।
इन्द्र उवाच

कर्मणा स्वेन जन्तूनां गतयः संप्रकीर्तिताः ।
स्वेनैव कर्मणा पातः४७ किन्तवानेन बुद्धिमन्४८ ।।५५।।
इदं विमानमारुह्य मया दत्तं खगोत्तम ।
मम लोकं व्रज क्षिप्रं स्तूयमानो यथा नर ।।५६।।

४३ मिच्छाम - क, इच्छा मे (?) ख. ? ४४ नावमन्यामि - क, नावमन्यानि -ख। ४५ जीवितामेष -क. ख। ४६ नान्यदहं - ख. । ४७ यातः - क ख., जातः (?) । ४८ बुद्धिमान् - ख. ।

653
शुक उवाच न लोकानहमिच्छामि न विमानं न४९ वै सुखम् ।
प्रयाचितं५० प्रयच्छस्व जीवतामेष५१ वै नगः ।।५७।।
सनत्कुमार उवाच
सद्भावं५२ तस्य तं ज्ञात्वा५३ सर्वं च सुरसत्तमः ।
चकार स५४ यथापूर्वं वृक्षं सर्वगुणान्वितम् ।।५८।।
शुकश्च कर्मणा तेन दृढभक्तितयापि५५ च ।
दीनेष्वभ्युपपत्त्या च ब्रह्मलोकं जगाम ह ।।५९।।
इति स्कन्दपुराणे वामनतीर्थयात्रायाम्५६ अष्टादशोत्तरशततमोध्यायः

सनत्कुमार उवाच
ततस्ते दैवता१ स्सर्वे कृमिलां२ नाम वै पुरीम् ।
उपागता ह्यवैक्षन्त४ तत्र चेदं महामुने ।। १ ।।
ब्राह्मणी गौतमी नाम रुद्राणीव यथापरा७ ।
धार्मिकी च वदान्या च तपसा दग्धकिल्विषा ।।२।।
तस्यास्तपसि सक्ताया ब्रह्मलोकं गते पतौ ।
कृष्णसर्पेण महता सुतो दष्टो ममार ह ।। ३ ।।
तं देशमागमत्तत्र८ व्याधोर्जुनक इत्युत ।
स आगतस्तदापश्यद्विषेण समभिप्लुतम् ।।४।।
स गत्वा गौतमीं प्राह सुतोयं ते तपोधने ।
दष्टोहिना ममाराशु किन्नैनमवबुध्यसे ।।५।।

४९ विमानं न च - क. ख. । ५० प्रयाचितः - ख । ५१ जीवितामेष - क ख । ५२ सद्भाव्यं - ख । ५३ श्रुत्वा - ख । ५४ च - क ख । ५५ दृढभक्तयापि - ख । ५६ शुकप्रश्ने - ख. ।

१ देवता - क. ख. । २ किमिलां - क । ३ तो (न) - क । ४ ह्यवेक्षन्त - क, ह्यपेक्षन्त ख । ५ ब्राह्मणीं - क ख । ६ गौतमीं । - क ख । ७ मपरामिव - क ख. । ८ शब्दे तमागमत्तत्र - क । ९ ज्ञात्वा - क ।



सा तथोक्ता समागम्य पुत्रं दृष्ट्वा गतायुषम् ।
रुरोद बहुधा व्यास मृतापत्या महाव्रता । ।६ ।।
तस्या विलपमानाया व्याधः सोर्जुनकस्तदा ।
बिलं खनित्वा निष्कृष्य तमहिं समबन्धत । ।७।।
स बद्वस्तेन दुष्टात्मा कृष्णसर्पः सुदुःखितः ।
उवाच तं तदा१० व्याधं योसावर्जुनकः स्मृतः ।।८।।
किं मया तव बद्धेन नाधर्मं परिपश्यसि ।
न चैव भक्ष्या मर्त्यानां वयं किं मां११ न मुञ्चसि१२ ।।९।।
अर्जुन उवाच
त्वामाद्य खण्डशः कृत्वा भक्षं१३ दास्यामि वह्निर्णे ।
त्वयायं भक्षितो१४ यस्मादृषिपुत्रो ममार ह१५ ।।8.119.१ ०।।
सर्प उवाच
कालेन१६ चोदितोहं तं१७ दष्टवानृषिपुत्रकम् ।
न मां दोषेणार्जुनक१८ क्षेप्तुमर्हसि१९ तत्त्वतः ।।११।।
अर्जुन उवाच
चोदितो यदि कालेन दष्टवानसि पन्नग ।
निमित्तं त्वं हि मरणे तस्माद्धंस्यामि ते भृशम् ।।१२।।
सनत्कुमार उवाच
ततस्सा गौतमी व्यास कालं२० मृत्युमथाकरोत्२१ ।
दुःखेन परमेणार्ता२२ कालो भीतस्ततोभ्यगात्२३ ।।१३।।
काल उवाच
अहं हि सर्वसत्वानां कालो नास्त्यत्र संशयः ।
चोदितो मृत्युनैवाहं हतवानृषिपुत्रकम् ।।१४।।

१० तथा - क । ११ भयं - क. । तव भक्षोहं ततः किं मां - घ । । २ मुच्यसे - क । १३ भक्ष्यं - ख । १४ संभक्षितो क । १५ महाबलः - ख । १६ नो - ख । १७. तुं - क. ख. । १८ नार्जुनक - क. ख. । १९ क्षान्तुमर्हसि - ख । २० काले - क. । २१ मकुर्वत - क ख. । २२ परमेणार्तं - क. । २३... भ्यधात् (?) ।

655

अर्जुन उवाच

त्वया वा मृत्युना वायं चोदितो दष्टवान्यदि ।
वधे निमित्तमेषोस्य तस्मादेनं निहन्म्यहम् ।।१५।।

सनत्कुमार उवाच

अथ मृत्युस्तदाभेत्य तं देशं सुमहामनाः ।
गौतम्यास्तपसो भीत इदं प्रोवाच सुस्वरम् ।।१६।।
अहमप्येष संबद्धं नियत्या सुसमाहितः२४ ।
मारयामि न मे दोषं कर्तुमर्हसि सुव्रते । ।१७।।

अर्जुन उवाच

नियतिर्वास्तु मृत्युर्वा कालो वाप्यस्तु कारणम् ।
कृष्णसर्पो निमित्तं तु तस्माद्वध्यो न संशयः ।।१८।।

सनत्कुमार उवाच

अथागान्नियतिस्तत्र उवाचेदं च सा तदा ।
गौतमीं दुःखितां व्यास भीता प्राह तदा वचः ।।१९।।
कृतान्तवशगा साध्वि जन्तून्नित्यमतन्द्रिता ।
पाशैर्बद्ध्वा वशं मृत्योर्नयामि२५ वरवर्णिनि ।।8.119.२०।।

कृतान्त उवाच

अहं हि किङ्करः साध्वि यमस्य सुमहात्मनः ।
तेन प्रचोदितो जन्तून्नयामि यमसादनम् ।।२१ ।।

अर्जुन उवाच

यमोपि वा२६ कृतान्तो वा एते वाप्यस्य कारणम् ।
नैवमेवं दुराचारो विमोक्ष्येत२७ कदाचन ।।२२।।

सनत्कुमार उवाच

ततो यमस्तदा व्यास स्वयमेव महामनाः२८ ।
तत्रागात्तामिदं चैव गौतमीं सोभ्युवाच ह ।।२३।।

२४ सुसमाहिता - क. । २५ र्नयामि ।; ६ वापि - ख । २७ विमोक्ष्यति - क ख. । २८ महात्मना - क. ख ।

656

नाहं नैते महासत्वास्त पुत्रस्य कारणम् ।

मरणे तस्य वीक्षस्व शृणु चापि२९ वचो मम । ।२४।।
जन्तूनां देहसंयोगो धर्माधर्मकृतः शुभे३० ।
वियोगश्चापि देहेन ताभ्यामेव क्षयात्पुनः । ।२५।।
देहिनां धर्म एवैक आयुषो हेतुरुच्यते ।
तत्क्षये मरणं प्रोक्तं कालो मृत्युश्च स स्मृतः । ।२६। ।
कृते वर्षसहस्रैस्तु चतुर्भिः काल उच्यते ।
त्रेतायान्तु त्रिसाहस्रो द्वापरे द्विसहस्रिकः । ।२७।।
कलौ तु शतमेवाहुः कालं जन्तोर्महाव्रते ।
अकालेन्यत्ततः प्रोक्तं तच्चापि३१ मरणं शृणु । ।२८।।
इन्द्रियेष्वस्य ये देवा वसन्ति द्विपदां वरे ।
तेस्य सर्वे हरन्त्येकं भागं दैवतसत्तमाः३२ । ।२ ९ । ।
चक्षुषा पश्यतो दुष्टं दुष्टं च ब्रुवतस्तथा ।
शृण्वतो मन्वतश्चैव३३ बुध्यतश्चापि पश्यतः३४ । । 8.119.३० ।।
तथा स्पर्शयतश्चैव जिघ्रतो भुञ्जतोपि वा ।
आदानाद् गमानाच्चैव आनन्दोत्सर्गतस्तथा ।।३ १ । ।
भागं भूतानि चान्यं तु हरन्ति पुनरेव हि३५
सुदुष्टं वर्ततस्तेषु३६ भागञ्च व्याधयोपरम् ।। ३२ । ।
अपरं पितरो भागं देवाश्चान्यमतोपरम्३७ ।
अपरं चर्षयो वह्निश्चन्द्रादित्यौ ग्रहास्तथा ।।३ ३ ।।
तस्यैवं देहिनः साध्वि यावदेवाहृतं भवेत् ।
तावदेव स जीवेत अकालः स च वक्ष्यते ।। ३४।।
यथा च म्रियते३८ जन्तुरकाले तपसैधिते३९ ।
तथा शृणु ममाद्येह गदतो वरवर्णिनि । ।३५।।

२९ चैव - ख. । ३० शुभैः - क. । ३१ अकालोन्यस्ततः प्रोक्तस्तत्रापि - (?) । ३२ देवतसत्तमाः - क ख. । ३३ मन्यतश्चैव - क. ख. । ३४ .. भिपश्यतः (?] । ३५ ह - क. ख । ३६., स्ते ते - ख. । ३७.. दतोपरम् - क. ख । ३८ मृयते - क । ३९ तपसेधिते - क. ख. ।

657
यावन्न हीयते४० तस्य जन्तोरायुर्महाव्रते४१ ।
तावत्स जीवितं प्राप्य तस्यान्ते म्रियते पुनः । ।३ ६। ।
तस्य येनापराधेन आयुर्देवा हरन्ति तत्४२ ।

तेनाधर्मो महान्तस्य उत्पन्नो जीवितान्तकः ।।३७।।
प्रादुर्भूतस्तदा साध्वि व्याधिर्मर्माणि कृन्तति ।
स कृत्तमर्मा ह्यवशो४३ देहं त्यक्त्वा महाव्रते ।।३८।।
अन्यद्देहं समासाद्य गतिमन्यां प्रपद्यते ।
येस्य४४ व्याधिं न कुरुते सोधर्मोनुग्रहात्४५ पुनः ।।३ ९ ।।
देवानां देहवासानां तमप्यन्येन४६ हन्ति वै ।
विषशस्त्रप्रपतनैर्जन्तुभिश्च पृथग्विधैः ।
अन्यैश्च बहुभिर्घोरैर्नात्र दोषः४७ प्रपश्यतः४८।।8.119.४० ।।
सनत्कुमार उवाच
ततस्सा तपसा दृष्टवा४९ गौतमी सुमहाव्रता ।
तमर्जुनकमाहेदं वचनं दुःखवर्जिता ।।४१ ।।
गौतम्युवाच
मुञ्चार्जुनक५० नायं मे पन्नगो वधमर्हति ।
आविष्टोयमधर्मेण दैवतैश्चादशत् सुतम् ।।४२ ।।
ईश्वरास्ते महात्मानो जन्तूनाविश्य चेतनान्५१
अचेतनाँश्च५२ सर्वेत्र५३ प्रयुञ्जन्ति यथातथम् ।।४३ ।।
मृत एष स्वधर्मेण नास्ति दोषस्तपस्विनाम्५४ ।
गच्छध्वं दैवताः५५ सर्वे स्वान् गृहान् किमिहास्यते ।।४ ८।।
सनत्कुमार उवाच
ततस्ता देवताः सर्वाः प्रेषिता ब्रह्मयोषिता ।
सममूचुस्तदा व्यास गौतमीं तामिदं वचः ।।४५ ।।

४०.. तच्च महते? - क । ४१ महाप्रभे - ख. । ४२ ते - क. स्व. । ४३ सुयशो (शे) - क. ख. । ४४ योस्य (?) । ४५ स धर्मानुग्रहात्-क. । ४६ तपमन्येन-क. ख. । ४७ दोषं- ख । ४८ प्रपश्यत - क., प्रपश्यते- ख. । ४९ वचनं श्रुत्वा - घ. । ५० मयार्जुनक - ख. । ५१ चेतनाः - क., चेतनं - ख. । ५२ अचेतनाश्च - क. । ५३ तु - क. । ५४ ... स्तपश्विनः - ख. । ५५ देवताः - क. ।


देवा ऊचुः
तुष्टाः स्म तव धर्मज्ञे तपसा दग्धकिल्बिषे ।
जीवतामेष ते पुत्रः स्वधर्मे चावतिष्ठतु ।।४६।।
सर्प एष स्वयं साध्वि अधर्मो मूर्तिमान् स्थितः ।

व्याधरूपी च धर्मोयं पश्यैतौ सुमहाव्रते ।।४७।।
परीक्षा ते कृता ह्येषा५६ देवैरेतैर्महाव्रते ।
तवाक्षया भविष्यन्ति लोकाः सर्वे न संशयः ।।४८।।
सनत्कुमार उवाच
ततस्ते सहसा तत्र देवा इन्द्रपुरोगमाः५७ ।
अवैक्षन्त यथावृत्तं तच्च सर्वं न्यवेदयम् ।।४९।।
स्नात्वा चान्यदगच्छन्ते५८ पुनस्तीर्थं समाहिताः ।
सर्व एव महाभागास्तथान्यानि पुनः पुनः ।।8.119.५० ।।
क्रमेण विहरन्तस्ते कृत्यामभ्यागमत्पुनः ।
यत्र कृत्या हता पूर्वं देवेन्द्रेण महौजसा ।।५१।।
व्यास उवाच
केन सोत्पादिता कृत्या किमर्थं कस्य वा विभो ।
कथं च निहता भूय एतदिच्छामि वेदितुम् । ।५२।।
सनत्कुमार उवाच
तृणबिन्दुरिति ख्यात आसीद्राजा महाबलः ।
स प्रोवाच मुनीन् सप्त इदं वचनकोविदः ।।५३ ।।
याजयध्वं हि मां विप्रा दास्ये वित्तं हि वो बहु ।
तेब्रुवन्न वयं साधो याजयाम नरेश्वर ।।५४।।
स दीक्षितो५९ यदान्येन अनावृष्ट्या६० महामनाः६१ ।
ते वै६२ बुभुक्षयाविष्टा यज्ञं प्राप्ता यदृच्छया ।।५५।।

५६ ह्यद्य - क । ५७ स्सेन्द्रपुरोगमाः क. ख । ५८ मगच्छन्ते -क. ख मगच्छन्त-क। ५९ वीक्षितो ख. । ६० अनावृष्ट्यां - ख. । ६१ महात्मना - क., महात्मनां - ख. । ६२ तवा - क., ते वै (?) ।

659

अथ तानब्रवीद्राजा ब्रूत किं प्रददानि वः ।
ऊचुस्ते क्रुद्धवदनाः सुतं नो दत्स्व६३ पार्थिव । ।५६।।
तेभ्यः सत्कृत्य पुत्रञ्च धनञ्चैव स पार्थिवः ।
प्रणम्य बहुमानेन पाराशर्योपपादयत् ।।५७। ।
तथा तस्यानतस्यैवं६४ द्रव्यं हित्वा तपोधनाः ।
सुतं गृहीत्वागच्छन्ते६५ सौकुमार्यात् स बालकः६६ । ।५८।।
क्षुत्तृषाभ्यर्दितस्तत्रः६७ अध्वना च ममार ह ।

दावाग्नौ ते च तं न्यस्य निरीक्षन्तोवतस्थिरे । । ५ ९।।

तेषां तत्रेक्षतां व्यास आजगाम नराधिपः ।

उवाच तानृषीँश्चेदं६८ प्रहसन् दिव्यकुण्डलः६९ ।।8.119.६० । ।

तृणबिन्दुरुवाच

यूयं प्रतिग्रहं मत्तो नागृह्णत७० तपोधनाः ।

याजयध्वं न चैवास्मान् मुनयस्तपसैधिताः७१ ।।६१ ।।

इह दोषं न पश्यध्वं मरणेस्य शिशोर्द्विजाः ।

अधर्म्ये७२ चायशस्ये च अहो धर्मे हि वो७३ मतिः ।। ६२ ।।

सनत्कुमार उवाच

ततस्ते तमनादृत्य अनुक्त्वा किञ्चिदेव च ।

जग्मुरन्यां दिशं७४ व्यास वने७५ क्षुत्परिपीडिताः । ।६३ । ।

तृणबिन्दुश्च तपसा तत्र वृक्षान् बहूँस्तदा ।

असृजत् तत्क्षणाद् व्यास तेषां सुखहितेप्सया । ।६४। ।

ते च तद्वनमासाद्य बहून् वृक्षान् फलान्वितान् ।

अपश्यन्त तदा व्यास परां तुष्टिं च ते ययुः ।।६५। ।

गृहीत्वा बिभिदुश्चैव ददृशुश्चैव तेष्वथ ।

सुवर्णमन्नं भक्षाँश्च७६ तथा रौप्यञ्च सुप्रभम् । ।६६ ।।

६३ धत्सु - क., धत्स्व (?), यच्छ - ख. । ६४ तस्यानतस्यैव - क. ख. । ६५ त्वागच्छन्त - क. ख । ६६ बालकं - ख. । ६७ तृट्क्षुधाभ्यर्दितस्तत्र - क. ख । ६८ श्चैव - ख. । ६९ दीप्तकुण्डलः (?) । ७० न गृह्णत - क. । ७१... स्तपसेधिताः - क. ख. । ७२ अधर्मे - क. । ७३ हिता - क. । ७४ दिशां - ख. । ७५ वनं - क. । ७६ भक्ष्याँश्च - क ।



तृणुबिन्दुकृतं तच्च तेमन्यन्त तपोन्विताः ।

ततस्ते तद्वनं७७ त्यक्त्वा ऋष्यः सप्त सुव्रताः ।

अन्यां दिशं प्रपद्यन्त तृणबिन्दुश्चुकोप च । ।६७।।

उवाच तानृषीन् गत्वा प्रणतः प्राञ्जलिश्च सः ।

मन्युनातिपरीतात्मा संविग्नोथ नराधिपः । । ६८ । ।

तृणबिन्दुरुवाच

नैवास्मि पतितो विप्रा दुष्टकर्मा न चैव ह ।

न चैव वर्जितो विप्रैर्न चायज्वा न पापकृत् ।।६९।।

नराधिपानां वंशेस्मि जातः७८ शुद्धे तपोधनाः ।
सम्यक् प्रजाः पालयामि किं मां न बहु मन्यत । ।8.119.७० ।।
तस्य तद्वचनं श्रुत्वा ऋषयस्ते महाव्रताः ।
ऊचुर्न ते वयं राजन्७९ प्रतिगृहणीम८० सर्वथा ।।७१ ।।
शोभनोसि गुणैर्युक्तः प्रजापालः प्रजापतिः ।
सन्तुष्टाः स्मो८१ न ते द्रव्यं प्रतिगृह्णीम भूपते । ।७२।
सनत्कुमार उवाच
त एवमुक्त्वा राजानं सर्व एव ययुर्मुने ।
सोपि राजा महामन्युस्तदा दीप्तं हुताशनम् ।।७३ । ।
जुहाव कृत्यां तस्माच्च चकार सुमहाबलाम् ।
यातुधानीमिति ख्यातामुवाचेदं च तां तदा ।।७४। ।
गत्वा सप्त मुनीन् कृत्ये भक्षयस्व महाबले ।
उपधार्य हि नामानि वसिष्ठादीँस्तपोधनान् । ।७५ ।।
सा गत्वा तु शुभान्नाम दिव्यां पुष्करिणीं शुभाम् ।
तस्यास्तीरं समासाद्य तस्थौ तान् वै प्रतीक्षती । ।७६। ।
ऋषयस्तेपि संविग्नाः क्षुत्तृष्णाव्याकुलेन्द्रियाः ।
अन्यान्देशान् विमार्गन्तः८२ शुभां वापीं ययुस्ततः । ।७७।

७७ तु वनं - क. । ७८ ञ्जात - क. । ७९ राजा - क । ५० प्रतिगृह्णाम - क. । ८१ स्म - क. । ८२ विमार्गित्वा - क. ।



सनत्कुमार उवाच
तेषां तद्गमने व्यास दृष्ट्वा दोषं पुरन्दरः ।
परिव्राजकवेषेण श्वद्वितीयो८३भ्यगच्छत । ।७८। ।
तं दृष्ट्वा तेब्रुवन् सर्वे परस्परमनुल्वणम्८४ ।
हसन्तं तं महाबाहुं त्रिदण्डव्यग्रपाणिनम् । ।७९ । ।
ऋषय ऊचुः
नूनमेष दिवारात्रौ नित्यमेव ह्यतन्द्रितः ।
चखाद यत एषोत्र ततोयं पीवरोभवत् । ।8.119.८ ० । ।
अथवोत्तानहस्तोयं नित्यमेव प्रयाचकः ।
तपःस्वाध्यायविक्रेता तेनायं पीवरोभवत । ।८१ । ।

तमेवं बहुधा कल्प्य ऋषयस्ते तपोधनाः ।
पप्रच्छुरमितात्मानं कस्त्वमित्येव वादिनः । ।८२ । ।
इन्द्र उवाच
अहं परिव्राड् विप्रेन्द्रा आगच्छामि दशेरकात् ।
प्रयास्यामि शुभां वापीं नाम्नाहं तु शुनस्सखा८५ ।।८३ ।।
श्वानो८६ मम सदा हीष्टाः शुनां चैव सदा ह्यहम् ।
तस्माच्छुनः सखा नाम्ना ख्यातोहं द्विजसत्तमाः । ।८४।।
सनत्कुमार उवाच
ततस्ते सह तेनैव शुभां पुष्करिणीं ययुः ।
ददृशुस्तां च कृत्यां ते तया चैव निवारिताः । ।८५। ।
यदि वा रोचते विप्रा अस्यामभ्यवगाहितुम् ।
नामानि कथयित्वेह चरध्वं सुखमव्ययाः । ।८६।।
सनत्कुमार उवाच
ततस्ते तां तदा कन्यामूचुरेवं भवत्विति ।
श्वसखा चेदमाहैनानृषीन् सर्वानरिदन्दमः । ।८७।।

८३ स्वा (श्वा) द्वतीयो - क. । ८४. मथोल्वणम् - (?) । ८५ शुनस्सखः - क. । ८६ शुनो - क. ।


विप्रा इयं यातुधानी नेयं प्रकृतमानुषी८७ ।
भवितव्यं हि कार्येण यथेयं वदते हि वः । ।८८। ।
ते यूयं यदि मन्यध्वं श्रेयः परमकं हितम् ।
तथा नामानि विब्रूत यथेयं नोपधारयेत् । ।८९।।
सनत्कुमार उवाच
एवं भवत्विति प्रोच्य ते व्यास मुनयः शुभाः ।
नामानि तस्याः श्राव्यैव८८ यथेष्टं ते जगाहिरे ।।8.119.९०। ।
नैरुक्तानि८९ स्वनामानि दुर्बोधानि च तेब्रुवन् ।
न मेने यानि कृत्या सा ततस्ते जलमाविशन् ।।९१।।
सनत्कुमार उवाच
तेषामलक्षयित्वा सा९० नामानि तु शिखोद्भवा ।
श्वसखं प्राह ब्रूहि त्वं ततो यास्यसि वा न वा । ।९२।।
श्वसख उवाच

शुनामस्मि९१ सखा क्रूरे श्वभिश्च सह संगतः ।
श्वसखं तेन मां विद्धि यातुधानि निशाचरि ।।९३ ।।
यातुधान्युवाच
सकृदेव पुनर्ब्रूहि नाम त्वं मानुषाधम ।
ततो यास्यसि विप्राणां समीपं विदितो मम ।।९४। ।
श्वसख उवाच
शुनामस्मि सखा देवः९२ सख्यं मेनपगं९३ श्वभिः ।
श्वसखा तेन हन्मि त्वा यातुधानि निशामय ।।९५।।
सनत्कुमार उवाच
स एवमुक्त्वा तां क्रूरां त्रिदण्डेन सुरेश्वरः ।
मूर्ध्न्याजघान तेनाशु भस्मसादभवच्च९४ सा । ।९६।।

८७ प्रकृतिमानुषी - क. ख. । प्राकृत (?) । ८८ श्राव्येयं - क. । ८९ नेरुक्तानि - क. । ९० तेषां न च लक्षयित्वा - क. । ९१ शुनामस्मिन् - क. ९२ देवि - घ. । ९३.. मनपगं - क, । ९४ शुभे... -क. ।

663
तृणबिन्दुसुतश्चासौ कृत्यया हतमात्रया ।
शक्रेण जीवितस्तूर्णं९५ पितरं समुपागमत् ।।९७। ।
सनत्कुमार उवाच
एवं तां स निहत्येन्द्रः श्वसखा शक्तिनन्दन ।
मृणालविसपद्मानि ऋषीणामहरत्पुनः । ।९८। ।
ततस्ते सम्यगुत्तीर्णा अपश्यन्तो रुषान्विताः ।
चक्रिरे शपथान् विप्राः परस्परमनुव्रताः । ।९९।।
ततस्ते सर्व एवैत्य९६ श्वसखं मुनिसत्तमाः९७ ।
अब्रुवन् त्वयि शंका नो९८ ब्रूहि येन विमुच्यसे९९ । । 8.119.१०० । ।
श्वसख उवाच
यो वो१०० हरति मूलानि पुष्पाणि च फलानि च ।
स सुखी मिष्टमश्नातु१०१ ससुहृत् सपरिग्रहः । ।१ ०१ ।।
सनत्कुमार उवाच
ततस्ते ऋषयो व्यास ऊचुः सर्वे पुरन्दरम् ।
त्वया गृहीतं द्रव्यं नस्तत् प्रयच्छस्व१०२ नः पुनः ।। १०२ ।।
तेषां स भगवान् व्यास मूलानि च फलानि च ।

सर्वाण्येवाददत् प्रीत इदं चोवाच तानृषीन् ।। १०३ ।।

इन्द्र उवाच

इयं कृत्या हता विप्रा युष्मदर्थे पुरा कृता ।

मया हितार्थं युष्माकं त्रिदण्डेन तपोधनाः ।

क्रुद्धेन राज्ञा युष्माकं कृतैषा तृणबिन्दुना ।। १ ०४।।

सनत्कुमार उवाच

तामागम्य१०३ ततो१०४ देवा ऋषयश्च तपोधनाः ।

विष्णुं तं स्नपयाञ्चक्रुस्तीर्थे ऋषिगणार्च्चिते१०५ ।। १ ०५।।

९५ शक्रेणोज्जीवित (?) । ९६ एवेत्य - क । ९७ ऋषिसत्तमाः - क. । ९८ नौ - ख । ९९ विमुच्यते - ख. । १०० वा - क. । १०१ मृष्टमश्नातु - क. ख. । १०२ न्नो प्रयच्छश्च हि - क. ख. । १०३ तमागम्य - क. ख. । १०४ तदा - क. । १०५ ऋषिगणान्विते - क. ।



ततस्ते हिमवच्छैलं समागम्य मुदान्विताः ।

अयाजययन्१०६ तदा विष्णुमश्वमेधेन सुव्रताः ।

तस्मिन् यजति देवेशस्त्र्यम्बकः१०७ सगणेश्वरः ।

यज्ञं प्रति मुदा युक्त आजगाम विहायसा ।। १ ०७।।

व्यास उवाच

अहो बत त्वयेदं मे कथितं ब्रह्मणः सुत ।

यातुधान्या उपाख्यानं परं गुह्यं सुदुर्विदम् ।।१ ०८।।

इदं१०८ हि गुह्यं परमं महार्थवत्१०९ सदा यशस्यं परमं च पावनम् ।

त्वया११० महायोग यथावदीरितं पुरामृतं पूर्णशशिप्रभं यथा ।। १० ९।।

इति स्कन्दपुराणे वामनतीर्थयात्रायां यातुधान्युपाख्याने ऊनविंशोत्तर-शततमोध्यायः१११

व्यास उवाच

अतः परं स भगवान् यथागात्परमेश्वरः ।

यज्ञेन यजमानं तं समीक्ष्य१ कथयस्व नः ।। १ ।।

सनत्कुमार उवाच

स तु शूलधरो देवो भगवान् गोवृषध्वजः ।

कृष्णाष्टम्यामुवाचेदं देवीं हिमवतः सुताम् ।।२।।

देव्यद्य सुभगे लोके कृष्णपक्षाष्टमी२ शुभा ।

रजन्यामद्य यास्याव श्मशानान्यभिवीक्षितुम् । ।३ ।।
देव्युवाच
यथा ते रोचते देव तथा भवतु लोकप ।
तवेष्टं यन्महादेव ममापि द्विगुणं हि तत्३ ।।४। ।

१०६ याजयन्त - क., याजयन्तं - रव्र. । १०७ देवेशे त्र्यम्बकः - क. । १०८ इमं - क. ख. । १०९ महार्थं - क. ख. । ११० मया - वा. । १११ आध्यायः १७२ - ख. ।
१ संवीक्ष्य - घ. । २ कृष्णी पक्षाष्टमी - ख. । ३ हितम् - क. ।


अथ तस्मिन्दिने व्यास उज्जयिन्यां४ महामुने ।
ब्राह्मणस्य सुतो बालः शुचिर्विद्वान्ममार ह५ । ।५। ।
तं तेभिसंस्कृत्य तदा अलंकृत्य यथा८ विधि ।
क्रोशन्तश्च रुदन्तश्च श्मशानायैव निन्यिरे । ।६ । ।
ते श्मशानं तदा नीत्वा७ बालं तं रक्तपादकम् ।
स्नेहाद् दुःखपरीताश्च८ रुरुदुर्बहुधा भृशम् । ।७। ।
तथा तान् रुदतो वीक्ष्य क्रद्धो गृध्रः क्षुधान्वितः ।
प्राज्ञवत् स तु संदिश्य९ तानुवाच द्विजाँस्तदा ।।८ ।
विप्राः शृणुत मे वाक्यं मानुषा१० यद्वदामि वः ।
बुद्धिहीनाः स्थ सुव्यक्तं निशामयत मद्वचः११ । ।९ । ।
मृत एष१२ हि कालेन किं शोचथ१३ यथाबुधाः ।
रुदितो नैष जीवेत१४ स्वार्थं कुरुत विज्वराः । ।8.120.१ ० । ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रत्वा तदा त्यक्त्वा सुतं ययुः ।
मुहुर्मुहुर्निरीक्षन्त अथ तान्१५ जम्बुकोब्रवीत् । । ११ । ।
अहो धिङ् मानुषाः सर्वे वीक्षध्वं बुद्धिवर्जिताः ।
निःस्नेहाश्चा१६कृतज्ञाश्च त्यक्त्वैनं याथ१७ वै कथम् ।।१ २। ।
दुःखेन लभ्यते पुत्रस्तथा चैव प्रसूयते ।
दुःखेन च पुनः क्रूरा वर्द्धते१८ व्याध्युपद्रुतः । । १३ ।।
विस्मृतानि हि वस्तानि चाटूनि सुबहूनि वै ।
अकरोद्यान्ययं बाल अहो निःस्नेहता हि वः१९ । । १४।।
सनत्कुमार उवाच

ततस्ते जम्बुकवचः श्रुत्वा व्यास समागताः ।
परिवार्य रुदन्तश्च तस्थुः पितृवने तदा ।। १५ ।।

४ उज्जयन्यां - क. । ५. न्मनोरह- (हरः?) - क. । ६ तदा - क. । ७ गत्वा - क. ख । ८ स्ते - ख । ९ संदृश्य - क., संविश्य - ख, सचिंत्य - घ. । १० यत्नेन - घ. । ११ किमर्थं रुद्यते भृशं - घ. । १२ एव - क. । १३ शोचत - ख. । १४ भविता न सजीवोयं - घ. । १५ अथैतान् - ख., तथैतान् - क । १६ श्च - क. । १७ यात - क. ख. । १८ वध्यते - क. । १९ निःस्पृहतामिव - क.,.. नि च - ख. ।


अथागान्निशि देवेशः कपर्दी प्रियया सह ।
गणैः सर्वैर्वृतो देवः सह नन्दीश्वरेण च ।।१ ६।।
स तानीशः समभ्येत्य सर्वभूतसुखावहः ।
वरदोस्मीति तांस्तत्र रुदतः प्रत्युवाच ह ।। १७।।
सनत्कुमार उवाच
ततस्ते दीनया वाचा वाष्पपर्याकुलेक्षणाः ।
ऊचुर्जीवः सुतो नोयं भवेद्देवाज्ञया तव ।।१८।।
तेषां स भगवांस्तत्र जीवयित्वा सुतं शिशुम्२० ।
गणेशत्वं ददौ दिव्यं वासं तत्रैव चाक्षयम् ।।१९।।
सनत्कुमार उवाच
एवं स तां निशां प्राप्य२१ श्मशानानि यथाविधि ।
गत्वा२२ जगाम वैदूर्यं कूटं हिमवतः शुभम् ।।8.120.२०।।
स दीप्ततेजा विभुरव्ययात्मा पिनाकधृक् पर्वतकूटवासी ।
उवाच तान् यज्ञवरेण दीक्षितान् वरं वृणीध्वं त्रिदिवैकसंश्रयाः२३ ।।२१।।
इति स्कन्दपुराणे विंशोत्तरशततमोध्यायः

२० शिशुं सुतम् - ख । २१ शतानि संप्राप्य - क, स तानि संप्राप्य - (?) । २२ तत्त्वं - ख., ततो (?) । २३ त्रिदिवौकसंश्रयाः - क. ख.,... संश्रयादिति - ख. ।

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१३

https://sa.wikisource.org/s/fbv
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः १११ - १२०) | आगामी पृष्ठः ( अध्यायाः १३१ - १४०)

सनत्कुमार उवाच
तेथ१ दृष्टवा महादेवं सप्तलोकैकबान्धवम् ।
ऊचुः प्राञ्जलयः सर्वे जानुभ्यां शिरसा नताः२ ।।१ ।।
भगवँल्लोककामेन हरिणा देवसत्तम ।
कृतः प्रतिग्रहः पूर्वं येन पाप्मा तमर्च्छत३ ।।२।।
तदस्य जगतो नाथ भक्तस्य प्रणतस्य च ।
अस्माभिर्याच्यमानस्त्वं कुरु श्रेयः४ सुरेश्वरः ।।३।।
समाप्यतामयं यज्ञः पाप्मना मुच्यतां हरिः ।
स्वामूर्जां प्रतिपद्यन्तां५ देवाः सर्वे सवासवाः ।।४।।

२० शिशुं सुतम् - ख । २१ शतानि संप्राप्य - क, स तानि संप्राप्य - (?) । २२ तत्त्वं - ख., ततो (?) । २३ त्रिदिवौकसंश्रयाः - क. ख.,... संश्रयादिति - ख. ।
१ ते तं - घ. । २ च शिरोनताः - क. ख. । ३ पाप्मानमर्च्छत - क. ख. । ४ श्रेष्ठाः - ख. । ५ प्रतिपद्यन्तु - क. ख. ।

667
सनत्कुमार उवाच
तेषां तद्वचनं श्रुत्वा भगवान् हृषिताननः ।
समाप्य यज्ञं शूलेन गिरिं तं समवारयत् ।।५। ।
तस्माद् भेदात्ततो ह्यापः सुधाशंखेन्दुपाण्डराः ।
निःसृतास्तत्र ते६ विष्णुं स्नपयाञ्चक्रिरे तदा । ।६।।
तस्याथ स्नातमात्रस्य शरीरादभिनिःसृता ।
पाप्मासुरी महाघोरा विकृता विकृतानना । ।७। ।
देवानभिद्रुता हन्तुं निरुद्धा देवबन्धुना ।
-. ........ . .. . . . - - ।

उवाच तां न हन्तव्या देवाः सर्वे सवासवाः । ।८ । ।
इहैव च तव स्थानं भविष्यति सुपूजितम् ।
पुण्या च७ सर्वतीर्थेभ्यः सर्वपातकनाशनी ।।९। ।
सप्त पूर्वान् परांश्चैव तारयिष्यसि९ नित्यशः ।
संध्येति जगति ख्याता सर्वतीर्थवरा शुभा ।। 8.121.१० । ।
वारिधारा शुभा दिव्या सर्वयज्ञफलप्रदा ।
त्वामुपास्य१० कुलान् सप्त११ तारयिष्यन्ति मानवाः । । ११ । ।
सनत्कुमार उवाच
ततस्ते दैवताः१२ सर्वे रुद्रस्य वचनात्तदा१३ ।
अर्चयित्वा यथान्यायं देवदेवमुमापतिम् ।। १२ ।।
देवस्यायतनं कृत्वा जग्मुस्त्रिदिवमेव च१४ ।
गतेषु देवसंघेषु शिवकूटे१५ तदा हरिः । । १३ । ।
अश्वमेधं तदा यष्ट्वा देवमाराधयत् स्थितः ।
तस्याथ वर्षैः षड्भिस्तु सहस्रेण च तन्यतः ।
मासैः षड्भिश्च देवेशस्तुतोष वृषभध्वजः । । १४। ।
सोमः सनन्दिः सगण इदं प्रोवाच तं पुनः ।
हृष्यमाणः सुतुष्टात्मा१६ ब्रूहि किं प्रददानि ते । । १ ५। ।

६ तं - क. ख. घ. । ७ पुण्यं च - ख । ८ नाशना - क. । ९ तारयिष्यति - ख । १० तामुपास्य - क. । ११ सप्तकुलं (?), कुलान्युपास्य त्वां सप्त (?) । १२ देवताः - क ख. । १३ वचनन्तदा - क. । १४ ह - ख. । १५ शिवकूटं - क. ख. - । १६ सुहृष्टात्मा - क ।


विष्णुरुवाच
भगवन् पाप्मना१७ वापि तपसा वापि लोकप ।
लोपो न मे यथा स्याद्वै तन्ममाचक्ष्व कालहन् । । १ ६।।
सनत्कुमार उवाच
ततः प्रहस्य देवेशः प्रीयमाणः प्रजापतिः ।
उवाच विष्णुमामन्त्र्य गुह्यं चर महाव्रतम् । । १७।।
स चाथ१८ कृतरक्षस्तं१९ सर्वधर्मावहं शुभम् ।
योगं यन्त्रं व्रतं चैव परमैश्वर्यसाधनम२० ।। १८ ।।
यत्तत्पाशुपतं दिव्यं विधानं सार्वकामिकम् ।

तच्चीर्त्वा द्वादश समाः परमैश्वर्यमाप्तवान् । । १९ । ।
तस्य देवः स्वयं शूली तुष्टः प्रेक्ष्य तथाविधम् ।
शरीरार्धं ददौ तस्मै२१ तदभूद्विष्णुशङ्करम् । ।8.121.२० ।।
य इमं शृणुयान्मर्त्यः सदा पर्वसु पर्वसु ।
अर्चयेच्छिवविष्णुं च स गच्छेत् परमां गतिम्२२ ।। २१ । ।
एवं स विष्णुर्जित्वा तु वामनः सुमहाबलः२४ ।
त्रैलोक्यं सर्वदेवेभ्यः सर्वं२५ प्रति समर्पयत्२६ ।।२२ । ।
सनत्कुमार उवाच
ततो देवैः समाक्रान्ते त्रैलोक्ये मुनिपुङ्गव ।
येसुरा हतशेषास्तु ते समाश्रित्य दानवौ । । २३ ।।
तारकं च मयं चैव चक्रुर्युद्धं सहामरैः२७ ।
मयश्च तारकश्चैव पुत्रपौत्रसमावृतौ । । २४। ।
विप्रचित्तिश्च दनुजो२८ ये च तस्य सुताः स्मृताः ।
निवातकवचाः सर्वे पौलोमाः कालकासुताः ।
सैंहिकेयाश्च विक्रान्ता बालेयश्च२९ तथा३० गणः । ।२५ । ।

१७ कर्मणा - क. । १८ पञ्चार्थं - क । १९ रक्षन्तं - क. । २०. साधकम् - ख. । २१ ददावस्मै - क. । २२ ञ वाध्यायसमाप्तिपुष्पिका घ पुस्तके । २३ एवञ्जित्वा - ख । २४ वामनञ्च महाबलः - क ख, महाबल - ख, एव विष्णुः स जित्वा तु वामनत्वे महाबल - घ । २५ सर्वान् - क. । २६ प्रतिसमर्पण - ख । २७ महामुनैः (ने?) - ख. । २८ स्तदनुजो - घ. । २९ जाने यश्च - ख । ३० यथा - क, ।

669

एते चान्ये च बहवो दानवा बलदर्पिताः ।
सन्नद्धाः समभिक्रुद्धा आह्वयन्त तदा सुरान् । ।२६। ।
संप्रेक्ष्य तानाह्वयतो३१ देवा अपि सुदंशिताः ।
तैस्सहैत्य तदा चक्रुः समरं समरैषिणः३२ । ।२७।।
तेषां तदभवद् युद्ध तुमुलं लोमहर्षणम् ।
वर्षाणान्तु३३ शतान्यष्टौ सहस्राणि च षोडश । । २८। ।
दिव्यानि न च संग्रामे३४ एकपक्षे३५ जयोभवत् ।
अथ देवास्तदा३६ युद्धे सैंहिकेयैर्दुरासदैः । ।२९।।
पराजिता महासत्वाः सिंहैः पशुगणा इव ।
तेषां तद्बलमालक्ष्य सहस्राक्षः पुरन्दरः । ।8.121.३ ० । ।

जगाम देवदेवेशं शरणं रुद्रमव्ययम् ।
स गत्वा स्वर्णचूडस्य३७ गिरेः शृङ्गे कृतालयम् । ।३ १ । ।
देव्या सह महादेवमपश्यद् गणसंवृतम् ।
दीप्यमानं यथा वह्निं दुर्दृश्य३८मकृतात्मभिः । ।३ २। ।
तमसौ नन्दिना पूर्वमाख्यातो३९ देवसत्तमः४० ।
दृष्टवा प्रणम्य शिरसा इदं वचनमूचिवान् ।।३ ३ ।।
देव वर्षशतान्यष्टौ सहस्त्राणि च षोडश ।
दिव्यानि समतीतानि संग्रामस्य दिवौकसाम् ।।३४। ।
तारकश्च मयश्चैव दानवौ युद्धदुर्मदौ ।
तावाश्रित्यासुराः४१ सर्वे देवान् घ्नन्ति यथा पशून्४२ ।।३५।।
तेषां तु वध्यमानानां देवानां देवसत्तम ।
जीवितं संप्रयच्छस्व यथा वा देव युज्यते । । ३६ ।।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा भगवान् गोवृषध्वजः ।
चिन्तयित्वा ततस्तत्र रामरामेत्यथाब्रवीत् । । ३७। ।

३० तानाह्वयत संप्रेक्ष्य - क. । ३२ दिव्यमाने च संग्रामे नैकपक्ष - घ. । ३३ वर्षाणाञ्च - ख. । ३४ ततो दैत्या - घ. । ३५ एकपक्षो - क. । ३६ स्सदा - ख । ३७ गत्वा सुवर्णचूडस्य - क । ३८ दुर्दर्श (?) । ३९.. माख्यातं (?) । ४० देवसत्तमं ( ?) । ४१ तावाश्रित्वासुरा. - क. । ४२. पशुम् - क, ।

670

भगवानुवाच
राम राम महाबाहो चीर्णं ते सुमहत्तपः ।
गच्छ देवान् सुयुद्धेन कुरु सर्वान् गतज्वरान्४३ ।।३८। ।
सनत्कुमार उवाच
एवमुक्तस्तदा रामो जामदग्न्यः प्रतापवान् ।
उवाच दीनया वाचा प्रणम्य बहुमानतः । ।३ ९।।
राम उवाच४४
भगवन्नल्पवीर्योस्मि तपसा कर्षितो भृशम् ।
अनस्त्रविच्च देवेश न शक्ष्ये संयुगं४५ विभो । ।8.121.४० ।।
देववव? उवाच
गच्छ शक्ष्यसि विप्राद्य योद्धुं त्वं त्वद्य मा शुचः ।

अहं त्वाप्याययिष्यामि मा व्यथां४६ कुरु भार्गव । ।४१ । ।

सनत्कुमार उवाच

ततः स भगवानिन्द्रं प्राह देवपतिं हरः ।

एष हंस्यति ते शत्रून् रथमस्मै प्रयच्छ च४७ । ।४२। ।

सनत्कुमार उवाच

ततः प्रणम्य शक्रोपि राममादाय चैव ह ।

जगाम तं तदोद्देशं४८ संग्रामो यत्र सोभवत् । ।४३ । ।

ततः स रथमुख्येन संपाद्य तु पुरन्दरः ।

राममाह स्वयं शक्रः सैंहिकेयानुपाह्वय । ।४४।।

स तेन रथमुख्येन रामः प्रहरतां वरः ।

कवची बद्धतूणीरः शरी खड्गी शरासनी । ।४५। ।

बद्धगोधांगुलित्रश्च बद्धध्वजपताकवान्४८ ।

अभिदुद्राव वेगेन सैंहिकेयान् दुरासदान् ।।४६ । ।

४३ कुरुष्वोद्धारितज्वरान - ख. । ४४ स न. उ - क. । ४५ नक्ष्ये संयुगतां - क. । ४६ मान्यथां - क. । ४७ प्रधत्स्व च - ख., प्रयच्छत - क. । ४८ ततो देशं - ख. । ४९ बहुध्वजपताकवान् - ख. ।



तेषां तस्य च संग्रामः सुघोरस्समपद्यत ।

शार्दूलानां यथारण्ये सिंहेन सह भीषणः । ।४७। ।

तत्राद्भुतमपश्यन्त५० सिद्धगन्धर्वचारणाः ।

येदेकोपि तदा रङ्गे दृश्यतेनेकरूपवान्५१ । ।४८। ।

नाददानः शराँश्चित्रान् सन्दधानस्तथैव च ।

धनुर्विकर्षमाणो५२ वा दृश्यते भार्गवस्तदा । ।४९ । ।

मण्डलीकृतमेवास्य कार्मुकं सुमहत्तदा ।

दृश्यते शत्रुभिश्चैव दुर्निरीक्ष्यश्च सोभवत् ।।8.121.५० ।।

तेषां स भार्गवः क्रुद्धः परावृत्य महाबलः ।

चिक्षेपैकैकशो व्यास मुखे तीक्ष्णाञ्छरान् दश ।।५१ । ।

तत्राद्भुतमपश्यन्त लाघवं तस्य धीमतः ।

साधु साध्विति भूतानां तत्र शब्दो महानभूत् । ।५२ ।।

सनत्कुमार उवाच

तैः शरैर्भिन्नवदनाः सैंहिकेया महाबलाः ।

सगन्धा५३ निपतन्त्युर्व्यां ताला वाय्वाहता इव । ।५ ३ । ।
स तदा५४ दशसाहस्रस्तेषां वै देवविद्विषाम्५५ ।
भार्गवेण गणो दग्धः कालेनेव५६ यथा जगत्५७ । ।५४। ।
ततो देवाः सऋषयो गन्धर्वाश्च सचारणाः ।
साधु साध्विति तं प्रोच्य५८ तुष्टुवुर्हृषिताननाः ।।५५। ।
सनत्कुमार उवाच
तस्य तत्कर्म संवीक्ष्य भगवान् पाकशासनः ।
बहुमानेन संपूज्य भार्गवं सह दैवतैः५९ ।।५६।।
इदमाह महातेजाः परिष्वज्य६० पुनः पुनः ।
तवैतत्कर्म नान्यस्य६१ सदृशं दिवि विद्यते । ।५७। ।

५० तत्रार्पितमपश्यन्त - क. । ५१ केन रूपवान् - ख. । ५२ धनुर्विदार्यमाणो - ख. । ५३ स गत्वा (र्वा) - क ख. । ५४ तथा - ख. । ५५ देवतारिणाम् - क. ख. । ५६ कालेनैव - क. ख. । ५७ गजम् - क. । ५८ संप्रोच्य - क. । ५९... देवतैः - क. । ६० परिपूज्य - क. । ६१ वान्यस्य - क ।


यदि ते सिंहिकापुत्राः सहसैव हतास्त्वया ।
तव वै तन् महत्कर्म६२ त्रिपुरे त्र्यम्बकस्य वा ।
न त्वयास्ति समो लोके सत्यमेतद् ब्रवीम्यहम् । ।५८ । ।
एते न तुल्या देवेन मानुषेण न केनचित् ।
अवध्याः सर्वभूतानां त्वयैकेन निषूदिताः६३ । । ५९। ।
तस्मात्तव वयं तुष्टाः प्रयच्छामो ह्यवध्यताम् ।
अक्षयं च बलं युद्धे यशञ्च परमं भुवि । । 8.121.६० । ।
त्र्यम्बकश्च वरैर्दिव्यै६४ रिष्टैस्त्वां प्रतिपत्स्यते ।
यथाकामञ्च युद्धेषु समूहं त्वं विजेष्यसि६५ । ।६ १ । ।
सनत्कुमार उवाच
स एवमुक्तस्तैर्व्यास देवैस्तुष्टैर्महातपाः ।
जगाम त्र्यम्बकं देवं हृष्टतुष्टमना यतिः । । ६२ । ।
देवा अपि सुसंयत्तास्तारकं युद्धदुर्मदम् ।
अवाकिरन्त वेगेन मयेन सहितं तदा । । ६३ । ।
ते दैत्यवेगप्रतिरुद्धवेगा महाबलाः सिन्धुसमानवेगाः ।
जघ्नुर्भृशं दैत्यगणान्निपत्य सिंहा यथारण्यचरा मतङ्गान्६६ । । ६४। ।

इति स्कन्दपुराणे जामदग्न्यवरप्रदानो नाम एकविंशोत्तरशततमोध्यायः

सनत्कुमार उवाच
सैहिकेयवधं दृष्ट्वा सुराणां च जयं तथा ।
सहसा दैत्यसैन्यानि प्रभग्नानि समन्ततः । । १ । ।
. . . . .. . .. .. . . . . .. . .. . .. . ।
- - - - - - - - - - - - - - - - ।
अन्येन प्रच्युतस्तारो१ मयो वीरो विरोचनः । । २ । ।

६२ तवै वैतद्भवेत्कर्म... - ख., बद्धवै.. - ख । ६३ निसूदिताः - ख. । ६४ शरैर्दिव्यै - क. । ६५ विजहि ( यि?) ष्यसि - क., विजयिष्यसि - ख. । ६६ न्मतङ्गान् - क. ।
१ प्रश्रुतस्तारो - क. ।

673
विप्रचित्तिश्च षण्डश्च प्रह्लादश्च महासुरः ।
कालनेमिस्ततः क्रुद्धः केशवं प्रति संयुगे ।। ३ । ।
सरथं महदास्थाय शतनल्वोर्ध्वकेतुमत् ।
अभिदुद्राव वेगेन केशवं प्रति दानवः । ।४। ।
तस्यापतत एवाथ चक्रमप्रतिघं महत् ।
ससर्ज केशवो व्यास स तद् व्यष्टम्भयत्तदा । ।५ । ।
तद् विष्टब्धं तदालक्ष्य सर्वे देवाः प्रमन्यवः ।
पराजिता२ बभूवुर्हि३ विशस्त्राः कालनेमिना । ।६। ।
. . . . ... . .. .. . .. . .. .. .. .. .. . . .. ।
स तान्विद्राव्य दैत्येन्द्रो विमुखान् प्रचकार ह ।
कृत्वा चकार च तदा लोकपालत्वमव्ययः । ।७। ।
भुवं द्याञ्च तदा व्याप्य वर्तमानो महाबलः ।
स्वयम्भू४रिव लोकाँस्त्रीनचरल्लोकमायया ।।८। ।
सनत्कुमार उवाच
तं तथावस्थितं दृष्ट्वा दैत्यं देवाः सवासवाः ।
भयत्रस्तास्तदा जग्मुः शरणं हरिमव्ययम् । ।९ । ।
शरण्यः स च देवेशो हरिस्त्रैलोक्यबान्धवः ।
तेषां प्रादाद् भयत्राणं दानवस्य वधेप्सया । । 8.122.१० ।।

स तदा द्यां भुवञ्चैव व्याप्य रूपेण सर्वशः ।
चक्रं तदब्जं सस्मार यत्तद् रुद्रेण निर्मितम् । । ११ ।।
ततस्तेन तदा व्यास दानवस्य शिरो महत् ।
जहार पक्वं तालाग्रात्५ फलं वायुरिवोद्धतः । । १ २। ।
तस्मिन् विनिहते दैत्ये तारकश्च मयश्च ह ।
विनिवृत्तौ महायोधौ पातालं प्रतिवेगितौ६ । । १३ ।।
सनत्कुमार उवाच
एवं व्यासाभवद्युद्धमुग्रं तत्तारकामयम् ।
कालनेमिर्हतो७ यत्र विश्रुतश्च विरोचनः । । १४। ।

२ पलायिता (?) । ३ बभूव ते (स्ते) - ख । ४ स्वयम्भूरिव - क. ख । ५ तालाग्र्यात् - क, ख, । ६ वेशितौ - क. । ७ जलनेमिर्हतो - ख. ।


सैंहिकेयाश्च विक्रान्तास्तुहुण्डश्च महासुरः ।
सुरोचनः८ शतावर्तो हालो गार्ग्यशिरास्तथा ।। १५।।
विपाकः सह पाकेन चण्डः कार्तस्वनः कुभः ।
एते चान्ये च दैत्येन्द्रा निहतास्तारकामये ।
ध्वजे पुनर्हतः क्रूरो विप्रचित्तिः सहानुजः ।। १६।।
व्यास उवाच
कथं तदभवद्युद्धं९ देवानामसुरैः सह ।
कथञ्च ध्वज इत्येवं१० तस्य नाम बभूव ह । ।१७।।
जामदग्न्यश्च तत्कर्म कृत्वा भृगुकुलोद्वहः ।
दुष्करं सर्वभूतानामागत११स्त्र्यम्बकान्तिकम् ।
किमुक्तो देवदेवेन एतदिच्छामि वेदितुम् । ।१८ ।।
सनत्कुमार उवाच
जमदग्नेस्तदा१२ सूनुरमरैः प्रेषितः स्वयम् ।
जगाम गुह्यं देवस्य पुरिश्चन्द्रं निवेशनम् ।।१९।।
व्यास उवाच
कथं तदभवद्दिव्यं पुरिश्चन्द्रं निवेशनम् ।
स्थानं गुह्यं महेशस्य कथयस्व दृढव्रत ।।8.122.२० । ।
सनत्कुमार उवाच

अत्र१३ ते संप्रवक्ष्यामि पुरावृत्तं महामते ।
यच्छ्रुत्वा पापकर्मापि गच्छेत परमां गतिम् । ।२१ । ।
पुराभूतां महात्मानौ नरनारायणावृषी ।
ताभ्यां कार्येण देवानां ब्रह्मवध्या कृता किल ।।२२।।
तयाभिभूतौ तौ देवौ पाप्मयातिमहाबलौ ।
अभूतान्नष्टसंज्ञौ तौ तिर्यग्योनिगतौ भृशम् । ।२३ । ।
अथ संवत्सरे दिव्ये समतीतेमितात्मवान् ।
आगाद् ब्रह्मा स्वयं तत्र दैवतैर्ऋषिभिः१४ सह । ।२४।।

८ प्ररोचनः - ख., मुरोबलः (?) । ९ समभवद्युद्धं - क. ख. । १० इत्येव - क. ख. । ११... मामन्त्र्य - क. । १२ जमदग्निस्तदा - क .। १३ हन्त (?) । १४ देवतैर्ऋषिभिः - क. ख. ।

675

स तं संबोधयामास सनरं देवपस्तदा ।
तथापि हि न तौ बुद्धौ कर्मणा संवृतौ भृशम् । ।२५। ।
तान् ब्रह्मा स तदा प्राह सर्वानेव दिवौकसः ।
यूयं नारायणस्यार्थे चरध्वं धर्ममुत्तमम्१५ ।।२६।।
ततो विमोक्ष्यते देवः१६ सनरो ब्रह्मवध्यया ।
तमेवंवादिनं देवाः प्रणम्य शिरसा तदा ।
ऊचुः प्राञ्जलयः सर्वे किन्तपः कर्म शाधि नः । ।२७। ।
ब्रह्मोवाच
जपध्वं प्रयताः सर्वे वायुभक्षा जितेन्द्रियाः ।
रुद्राणां हृदयं सम्यक् ततो योगमवाप्स्यथ । ।२८ ।।
सनत्कुमार उवाच
त एवमस्त्विति प्रोच्य जजपुः सलिलेशयाः ।
ऋषिभिस्सह देवेशा वर्षायुतशतानि षट् ।।२९। ।
अथ कालेन महता तेषां युक्तात्मनां तदा ।
योगः१७ प्रादुरभूत्१८ सूक्ष्मो१९ यतोग्निरभवच्छुभः । ।8.122.३ ० । ।
तेनाग्निना ब्रह्मवध्या नरनारायणौ तदा ।
सा२० दग्धा संपरित्यज्य उदकं प्रविवेश ह । ।३ १ ।।
नास्तयापः२१ समाविष्टा रसवत्यो न जज्ञिरे ।
अगन्धाश्च विवर्णाश्च प्रभावत्यो न चैव ह ।

पृथिवी चाल्पवीर्याभूत्तेजस्तिग्मं च नाभवत् । ।३ २ ।।
सनत्कुमार उवाच
ततस्ते तन्तथा२२ दृष्ट्वा युयुजुर्भूय एव च ।
हृदयं जजपुश्चैव रुद्राणां युक्तमानसाः । ।३ ३ । ।
अथागाद् भगवान्देवः शूलपाणिर्वृषध्वजः ।
उवाच देवान् तुष्टोस्मि ब्रूत यद्वोभिकांक्षितम्२३ । ।३४। ।

१५ तप उत्तमम् (?), व्रतमुत्तमं (?) । १६ देवाः - क. ख. । १७ योगं - क. ख । १८ प्रादुर्बभौ - क. ख. । १९ सूक्ष्मं - क. ख. । २० स - क. । २१ तास्तदापः - ख. । २२ तत्तथा - (?) । २३ वाञ्छितं - ख. ।


सनत्कुमार उवाच
ततस्ता देवताः सम्यग् रुद्रं दृष्ट्वाभिरेमिरे२४ ।
तुष्टुवुश्चानता भूत्वा यज्ञजीमूतवाहनम् ।।३ ५। ।
देवा ऊचुः
नमः परमदेवाय युगान्तानलवर्च्चसे ।
सलिने तप्यमानाय रुद्राणां हृदयाय च । । ३६ । ।
महापरशुहस्ताय हिरण्यायतनाय२५ च ।
वसूनां पतये चैव देवानां पतये नमः ।।३७। ।
शुचये रेरिहाणाय सद्योजाताय मन्यवे ।
ग्रहाणां पतये चैव ग्रहाणां हृदयाय च ।।३८ ।।
महाग्रहानुयाताय ग्रहराजाय वै नमः ।
नमः शमदमोग्राय उग्रदण्डधराय च । ।३ ९। ।
यमाय यमनाथाय यमदण्डधराय च ।
नमः परमदेवाय पराणां परमाय च । ।8.122.४० । ।
महतां पतये चैव कमण्डलुधराय च ।
वामदेवाय ज्येष्ठाय पशूनां पतये नमः । ।४१ । ।
प्रधानपतये चैव प्रधानस्य प्रवर्तिने ।
नमः सहस्रवक्त्राय गदिने शूलिने नमः । ।४२ । ।
नमः पवनरूपाय बहुरूपाय वेधसे२६ ।
नमः क्रतुविहन्त्रे२७ च कामानलविघातिने । ।४३ । ।
नमश्छन्दोङ्गरूपाय विरूपनयनाय च ।

इन्द्रियग्रामघाताय नमो वेदान्तगाय२८ च । ।४४।।
नमोस्त्वशनिघाताय मनसामुन्मनाय च ।
वेदवेदाङ्गमालाय नमस्ते पद्ममालिने । ।४५ । ।

२४ धिनेमिरे - क. । २५ हिरण्यतनयाय - क, हिरण्यनयनाय (?) । २६ वेधये - ख । २७ क्रतु- ( त्व) हन्त्रे - ख. । २८ वेदान्तकाय - क. , वेदान्तताय - ख ।

677

नमः शैलप्रदाहाय२९ शैलजातोद्भवाय च ।
महते विश्वरूपाय महद्भिर्महिताय च । ।४६ । ।
सहस्रशतनेत्राय ललाटनयनाय च ।
महायोगप्रणेत्रे च तथा तत्पुरुषाय च ।।४७। ।
नमो वेदरहस्याय देववेदस्तुताय३० च ।
योगिने ध्यायमानाय अशनीपातहासिने । ।४८।।
हृच्छयाय नमस्तेस्तु नमः सर्वगताय च ।
कुमारवरनाथाय कुमारजनकाय च ।।४९। ।
दण्डहस्ताय चरते अन्तकायाजिताय च ।
शुभाय शुभरूपाय शुभसर्वप्रवर्तिने । ।8.122.५० । ।
शिवाय शिवनाथाय सदा सर्वशिवाय च ।
धनुर्वेदरहस्याय धनुर्वेदप्रवर्तिने ।५१ । ।
सर्वपापापहन्त्रे३१ च सर्वपाप्मविघातिने३२ ।
शिवः सौम्यश्च देवेश दिश नो यन्मनोगतम् । ।५२। ।
यदपव्याहृतं किञ्चिदस्माभिर्भगवन्३३ विभो ।
तत्सर्वं३४ भक्तवात्सल्यादस्माकं क्षन्तुमर्हसि । ।५३ । ।
पाप्मयाभिपरीतात्मा देवबन्धुरयं विभो३५ ।
नरेण सह देवेश३६ स भवेच्चन्द्रनिर्मलः ।।५४। ।
सनत्कुमार उवाच
य इमं त्र्यम्बकस्तोत्रं भक्तिमान् सततं नरः ।
पठति प्रयतो३७ व्यास पाप्मया३८ स विमुच्यते । ।५५।।
सर्वपापैश्च मुच्येत नष्टञ्च लभते पुनः ।
न च दुर्गतिमाप्नोति यदि स्याद्वै सुपापकृत् । ।५६। ।
सनत्कुमार उवाच

एवं स भगवान् देवैः स्तुतस्तुष्टश्च लोकपः ।
उवाच देवान्देवेशः३९ सर्वान् सत्यवतीसुत । ।५७।।

२९.. प्रवाहाय - क. ख । ३० देवदेवस्तुताय - क. ३१ सर्वपापप्रहर्त्रे - ख । २ सर्वपाप्माविघातिने - ख. । ३३ भगवान् - क, । ३४ तत्सर्वां - क. । ३५ विभुः - क. ख । ३६ सर्वदेवेश - ख । ३७ प्रयतः पठते - क ख. । ३८ पाप्मायाः - ख. । ३९ देवदेवेशः - ख. ।


देवदेव उवाच
भो देवाः परितुष्टोस्मि वरं वृणुत कांक्षितम्
दास्येहं तन्महाप्रज्ञा मा तूष्णीं ब्रूत सर्वशः । ।५८। ।
देवा ऊचुः
हरिरेष महादेव पाप्मया हतमानसः४० ।
तामस्य४१ निर्णुद क्षिप्रं नीहारमिव भास्करः ।।५९ । ।
एष लोकहितार्थाय देवानाञ्च४२ महाबलः ।
कुरुते कर्म देवेश पाप्मानं ह्यस्य नाशय ।। 8.122.६० ।।
वयं च समतां तुभ्यं४३ गणतां गणमध्यगाः ।
लभेम सर्वदैवेश४४ यदि त्वं मन्यसे विभो । ।६१ । ।
सनत्कुमार उवाच
तेषामेवं तु वदतां देवानामृषिसत्तम४५ ।
उवाच भगवाञ्छर्वः प्रहसन् प्रीतमानसः ।। ६२। ।
विष्णुरेष सुराः सद्यो मोक्ष्यते पाप्मयानया४६ ।
पाप्मा चेयं महाभागा४७ ऊषरे संभविष्यति ।। ६३ । ।
निर्यासश्चैव वृक्षाणामपां फेनस्तथैव च ।
महोरगाणां गन्धश्च स्त्रीणां निन्दा तथैव च । । ६४।।
दीक्षितस्य च४८ विप्रस्य अशुभस्यावकीर्तनम् ।
ब्राह्मणानां परीवादो गवामपरिकीर्तनम्४९ । ।६ ५ ।।
अग्नेरज्वलनञ्चैव नदीनां बन्ध एव च ।
य एतानि नरः कुर्याद्रागमोहसमन्वितः
स एतां प्राप्नुयाल्लोके स्वयंभूरपि५० लोकपः । ।६६ ।।
यदा तु वसुदेवस्य सुतो विष्णुर्भविष्यति ।
तदा स रूपिणीमेनां नर एषोपभोक्ष्यते । ।६७। ।

४० हृतमानसः - क. ख. । ४१ तामस्मै - क. ख. । ४२ देवार्थञ्च - ख. । ४३ तुल्यं - ख । ४४ देवेश - क. ख. । ४५ सत्तमाः - ख. । ४६ तया - क. । 7७ महाभाग - क. । ४८ दीक्षितस्तस्य - क. । ४९ गवाञ्च परिकीर्तितम - ख. । ५० स्वयम्भुरपि - क. ख,,.. रसि - क ।



तत्रोपभुज्य वरदो हरेर्जातां स्वसान्तदा ।
विमुक्तः पाप्मया भूय५१ इमं लोकं चरिष्यति । ।६८।।
यथा त्वस्य स्वसापीयं नैव५२ बाधां५३ करिष्यति ।
तथा चरत्वयं घोरं तपः परमदुश्चरम् ।।६९। ।
यूयं च ऋषिभिः सार्धमिहैव सुसमाहिताः ।
पुरश्चरणमव्यग्राः कुरुध्वं मदनुज्ञया । ।8.122.७० ।।
सनत्कुमार उवाच
त एवमुक्ता देवेन देवास्सर्वे तदा हरिम् ।
ऊचुः कुरु तपो घोरं ततः श्रेयो ह्यवाप्स्यसि । ।७१ । ।
ततः स चन्द्रं शैलेन्द्रमारुह्य सुसमाहितः ।
तपश्चचार सुमहदिन्द्रियग्रामतापनम् । ।७२। ।
देवा अपि महात्मान५४ ऋषिभिस्सह सुव्रतैः ।
हिरण्यवर्णं शैलेन्द्रे५५ तपस्तेपुस्समाहिताः ।।७३ ।।
अथ तेषां समाप्ते तु व्रते तस्मिन् पिनाकधृक् ।
आदिदेश व्रतं दीप्तं यत्तत् पाशुपतं महत् । ।७४।।
उवाच स तु तुष्टात्मा आभाष्य सु?रपुंगवान् ।
मेघदुन्दुभिनिर्घोषं धीरम्भीरशब्दवत् । ।७५। ।
देवदेव उवाच
पुरश्चरणमेतद्धि सुचीर्णं लोकपाः स्वयम् ।
इदं५६ पाशुपतं चीर्त्वा निर्वृता यात५७ निर्भयाः ।।७६।।
एतत् परं पवित्रञ्च सांख्ययोगाधिकं व्रतम् ।
नास्मात्परतरं किञ्चित् सूक्ष्मं वा विद्यते क्वचित् ।।७७।।
भस्मना दिग्धसर्वाङ्गो५८ दिग्वासाः शुचिरेव च ।
शरीरस्थैर्यजन् रुद्रं५९ सर्वपापैः प्रमुच्यते । ।७८। ।

५१ भूयो - क. ख । ५२ नैवा. - क. ख. । ५३ बाधं - ख. । ५४ महात्मानो - क ख. । ५५ हिरण्यवण- शैलेन्द्रे

- ख. । ५६ इम - क. ख. । ५७ यश - ख. । ५८ सर्वदिग्धाङ्गो - क. ख. । ५९ रुद्रं यजत् - शरीरस्थैः (?) ।



आर्द्रं स्नानात् परं भस्म आर्द्रे जन्तुवधो ध्रुवम्६० ।
आर्द्रन्तु प्रकृतिं विद्यात् प्रकृतिं चापि बन्धनम् । ।७९ । ।
प्रकृतेस्तु प्रहाणार्थं६१ भस्मना स्नानमिष्यते ।
दिग्वासस्त्वं च शौचञ्च येन जायेन्न६२ कर्हिचित् । ।8.122.८० ।।
यन्त्राणां६३ परमं यन्त्र६४मन्यद्यस्मान्न विद्यते ।
षडङ्ग सर्वकामीयं सर्वलोकनमस्कृतम् ।। ८१ । ।
शुचि सर्वपवित्रं६५ च सर्वपापापहं शुभम् ।
तपसो वर्धनं चैव ते चरन्तु६६ समाहिताः६७ ।
यन्त्रं त्वपापं६८ विज्ञेयं प्रकृतिस्सा च संस्मृता६९ । ।८२ । ।
बन्धश्च त्रिविधः प्रोक्तः सन्यासफलमेव च ।
तस्मात् सर्वप्रहाणार्थं यन्त्रमेतत् समाचरेत् ।।०३ ।
असम्मतः सदा लोके येन जीर्येन्न७० कर्हिचित् ।
योगञ्च परमं प्राप्य योगानां यत्परं७१ महत् । ।८४।।
यस्मात्७२ परतरं नास्ति षडङ्गं सर्वकामिकम् ।
येन मुक्तः पतेद् भूयो न योगी७३ मरणादिषु ।।८५।।
तं योगं समनुप्राप्य सिद्धो दिव्येन कर्मणा ।
न लिप्यते७४ महायोगी कर्मभिस्तु कृताकृतैः ।।८६। ।
सनत्कुमार उवाच
एवं ते देवदेवेन समाज्ञप्ता दिवौकसः ।
समाप्य तद्व्रतं घोरं शंकरस्य गणा बभुः । ।८७।।
ते गणत्वमनुप्राप्य तस्य देवस्य शूलिनः ।
अन्वगृहणन्त तं देशं तपसा भाविता भृशम् । ।८८ । ।
देवा ऊचुः
यस्मादिह सुचीर्णं नः पुरश्चरणमन्तशः७५ ।
तस्मादिदं७६ महेशस्य गुह्यमायतनं स्मृतम् । ।८९।।

६० ध्रुवः - व. । ६१ प्रहारार्थं - ख. । ६२ जायेत - ख. । ६३ मन्त्राणां - घ. । ६४ परमं मन्त्र - ख. । ६५. .. स्सर्वपवित्र - क. ख. । ६६ चरन्तः - क. ख. । ६७ समाहितः - क. । ६८ तु पापं - घ. । ६९ संस्थिता - घ. । ७० जीर्येत - ख । ७१ परमं - ख. । ७२ तस्मात् - ख. । ७३ नियोगी - ख. । ७४ लिप्येत - ख. । ७५

पुनश्चरणमन्तशः - क. । ७६.. दिमं - क. ख. ।

681

पुरिश्चन्द्रमिति ख्यातं त्रिषु लोकेषु दीप्तिमत् ।
पञ्चयोजनविस्तीर्णं तावदेवायतं शुभम् ।।8.122.९० ।।
सिद्धचारणसंकीर्णमप्सरोगणनादितम् ।
बहुपक्षिनिनादञ्च नदीप्रस्रवणाकुलम् ।
भविष्यति महापुण्यं तपोधनतपोवनम्७७ । ।९१ ।।
योत्रागत्य चरुं कृत्वा भोजयित्वा च७८ ब्राह्मणम् ।
अर्चयेद्देवदेवेशं रुद्रलोके स मोदते७९ ।।९२।।
यश्चात्र नियमं कृत्वा भस्मस्नायी यतव्रतः ।
मुहूर्तमपि तिष्ठेत स गच्छेद् गणमध्यताम् ।।९३। ।
अक्षयश्चामरश्चैव जरारोगविवर्जितः८० ।
रुद्रस्य गणपो भूत्वा योगैश्वर्यमवाप्स्यति ।।९४।।
कामचारी८१ सुपापात्मा योप्यत्र दिवसं वसेत् ।
सोश्वमेधफलं प्राप्य सर्वपापैः प्रमुच्यते ।।९५।।
सकामोपि दुराचारो योत्र प्राणान् परित्यजेत् ।
सोपि देवसदः८२ प्राप्य देवैः सह चरिष्यति ।।९६।।
सनत्कुमार उवाच
ततस्ते दैवताः८३ सर्वे प्राप्य तत्परमं तपः ।
इज्यास्नानं तदा चक्रुरीशस्य परमात्मनः ।।९७।।
अथ ते कृतकृत्याश्च महायोगबलान्विताः ।
हरिं प्रति मनश्चक्रुर्गन्तुं सर्वे दिवौकसः ।।९८।।
तं ज्वलन्तमिवादित्यमागच्छन्तो८४ महाबलाः ।
हरिश्चन्द्रगिरौ८५ व्यास हरिं ददृशुरव्ययम् ।।९९।।
सोपि कालेन महता धूतपाप्मा८६ महातपाः ।
तदैव८७ लब्ध्वा देवानां समतां मुदितात्मवान् ।।8.122.१ ०० ।।

७७ तपोधनं - ख । ७८ तु - ख । ७९ मोदति - क. ख. । ८० मृत्युरोगविवर्जितः - क. ख. । ८१ कामकारी - क. । ८२ देवसम. - क., सदा - ख. । ८३ देवताः - क. ख । ८४ गच्छन्तं (?) । ८५ हरेः - क., हरिश्चचन्द्रे गिरौ - ख. । ८६ धौतपाप्मा - ख. । ८७ तमेव क ख ।

- - ८८ प्रति तदा वेगादुत्थाय८९ ऋषिसत्तम९० ।
शिखरात् सन्निपत्याशु तेषां मध्येवतिष्ठत९१ ।। १०१ ।।
ततस्ते मुदिताः सम्यग्घरिणा सह संगताः ।
शिखरं तद् गिरेस्तस्य फलेन९२ समयोजयन् । ।१ ०२ ।।
यस्माद्धरिरयं९३ ह्यत्र चन्द्रवन्निर्मलो बभौ ।
तपसा महता चैव तस्मादेषोचलेश्वरः ।।१ ०३ ।।
हरिश्चन्द्र इति ख्यातो भविष्यति न संशयः ।
यस्मादप्रकृतेनैव प्रपातोत्र कृतः पुनः ।
तस्माद् भृगुरयं लोके पुण्यो भवतु सर्वशः । ।१ ०४।।
अत्र९४ योभ्येत्य देवेशा भृगुप्रपतनं नरः ।
साधयेत स गच्छेत हरेर्लोकमतिप्रभम् । ।१ ०५। ।
महापातकसंयुक्तो व्याधिना समुपद्रुतः ।
योत्र साधयते प्राणान् सोपि मुच्येन्महाभयात् ।। १ ०६।।
यद्वा प्रार्थयते९५ नित्यं प्रपाते चात्र९६ किंचन ।
तत्प्राप्नुयान्नरः सर्वमचिरात्तच्च९७ वै स्मृतम् ।।१ ०७।।
सनत्कुमार उवाच
हरिश्चन्द्रमिमं९८ यस्तु पुरिश्चन्द्रन्तु९९ धर्मवित् ।
पठेत शृणुयाद्वापि स पाप्मानं विशस्यति । ।१ ०८।।
इदं तु यः शुचिरनसूयवान्१०० सदा नरः पठेद् द्विजगणदेवसंसदि ।
स निर्मलो रविरिव तेजसा ज्वलन् त्रिविष्टपे वसति यथामरोवरः१०१ ।।१ ० ९।।
इति स्कन्दपुराणे हरिश्चन्द्रगिरिवर्णनो नाम द्वाविंशोत्तरशततमोध्यायः१०२

८८ त दात् (?) - ख । ८९ दुत्थितो - क. ख. । ९० मुनिसत्तम - घ., ऋषिसत्तमः - क. ख. । ९१ व्यवस्थितः - ख. । ९२ वरेण - घ. । ९३ तस्माद्धरिरयं - क. । ९४ यत्र - क. । ९५ प्रार्थयन्तु - ख. । ९६ नात्र - क । ९७ सर्वानचिरात्तच्च - क. ख. । ९८ इदं - क. ख. । ९९ पुरिश्चन्द्रञ्च - ख. । १००.. रनुसूयवान् - क, शुचितनु.. - ख, । १०१. परः (?) । १०२ १७५ - ख. ।


सनत्कुमार उवाच
तं पुरिश्चन्द्रमासाद्य१ स रामः शक्तिनन्द ।
अपश्यत् परमेशानमसुरैः क्लिष्टमानसः । । १ । ।

स दृष्ट्वा तु२ महादेवं साम्बं सगणमव्ययम् ।
प्रणतः प्राञ्जलिर्भूत्वा तस्थौ प्रह्वस्तदाग्रतः३ । ।२।।
सनत्कुमार उवाच
सोपि देवस्तदा४ प्रीतो जामदग्न्यं महामनाः ।
उवाच वचसां योनिरिदं गम्भीरशब्दवत् । । ३ । ।
किंशुकैरिव संछन्नं चन्दनेनोक्षितं यथा ।
तथा तं क्षतजेनैव सर्वतश्च समुक्षितम् ।
स्रवन्तं५ गैरिकं धातुमचलेन्द्रमिवापरम् । ।४।।
देवदेव उवाच
जामदग्न्य महत् कर्म कृतं सुरहितेप्सया ।
त्वया पुत्राद्य संग्रामे सैंहिकेयान् विनिघ्नता ।।५।।
तवानेन महाबाहो कर्मणा परितोषितः ।
प्रयच्छामि वरान् सप्त६ तान्वदस्व यथेच्छसि । ।६। ।
राम उवाच
भगवन् यदि तुष्टोसि मम देहि८ स्वयं प्रभो ।
सर्वज्ञानसमुत्पत्तिं९ सर्ववेदप्रवर्तिताम्१० । ।७। ।
अवध्यः स्यामहं युद्धे धनुर्वेदञ्च यच्छ मे ।
परशुं सर्वहन्तारमसङ्गं रथमेव च । ।८। ।
अस्त्रग्रामञ्च विपुलममरत्वं तथाक्षयम्११ ।
वरान्मह्यमिमान्देव प्रयच्छस्व नमस्तव ।।९। ।

१ पुरिश्चन्द्रं समासाद्य - ख, हरि.. - घ । २ च - क. । ३... स्तथाग्रतः - ख. । ४. स्तथा - क. । ५ स्रवन्ति- क. । ६ वरानष्टौ - घ - ७.. प्स्यसि. ख। ८ देव - क. ख. । ९ सर्वज्ञज्ञानमुत्पत्ति क. । १० देवप्रवर्तिनं - क., वेदप्रवक्तिवान् (प्रवकृतां?) - ख, । ११ .. क्षतं - ख. ।


सनत्कुमार उवाच
तस्यैवं वदतौ व्यास प्रहस्य भगवान् हरः ।
उवाच सर्वमेतत्ते भविष्यति ममाज्ञया । । 8.123.१० । ।
धनुर्वेदव्रतञ्चैव वर्षमेकं चरिष्यसि१२ ।
तस्मादिहैव वस्तव्यं१३ त्वया भृगुकुलोद्वह । । ११ । ।
ततस्तस्मै स भगवान् स्वयमेव त्रिलोचनः ।

आदिदेश व्रतं घोरं चचार स च संयतः ।। १ २।।
समाप्ते तु व्रते देवः स्वयमागम्य यज्ञहा ।
धनुर्वेदं ददौ तस्मै समन्त्रं सहसङ्ग्रहम्१४ ।।१ ३ ।।
सशुल्वं सपरिस्तोमं सोद्यमं सानुकर्षणम् ।
अस्त्रग्रामं च विपुलं प्रत्यस्त्रसहितं तथा१५ ।। १४।।
प्रादात्तस्मै तदेशान१६ इदं चोवाच सुस्वरम्१७ ।
अयं त्वया धनुर्वेदः सहास्त्रैः सुमहाबल१८ ।। १५ ।।
क्षत्रियेभ्यो न दातव्य इति मच्छासनं स्मर ।
यदि चेद्दास्यसे मोहात् क्षत्रियेभ्यः कदाचन ।
लघुत्वं यास्यसे तेषां युद्धे चापि जयो१९ न ते२० ।। १ ६।।
सनत्कुमार उवाच
ततः स परशुं दत्वा रथं कामगमेव च ।
मनसा चिन्तिते२१ युक्तमुपतिष्ठन्त२२मक्षयम् ।। १७।।
यन्तृणा२३ यक्षराजेन अमरेणाभिसंभृतम्२४ ।
जगामादर्शनं तस्य सहसैव२५ पिनाकधृक् ।।१८।।
सोपि लब्ध्वा वरान् व्यास२६ जगाम पितुरन्तिकम् ।
न चापश्यत तं तत्र कार्तवीर्यसुतैर्हतम् ।। १ ९।।

१२ इतः पूर्वं 'तस्मादिहैव वस्तव्य'मित्यादि परवर्तिपद्यार्धं दत्तं ख पुस्तके । १३ स्थातव्य - ख. । १८ सपरिग्रहं (?) । १५ तदा - क. ख. । १६ तदैवेण - ख । १७ सुस्वनम् - ख । १८ सुमहाबल क । १९ युद्धेषु विजयो - ख. । २० तत् - ख. । पे १ चिन्तितं - ख. । २२ मुपतिष्ठन्ति - क. । १३ यन्त्रिणा - क, मन्त्रिणा - ख. । २४ संवृत्तम् - क. ख. । २५ समासेन - क. । २६ तस्य - ख. ।


अकृत्वा तस्य कर्तव्यं सोपि रामः प्रतापवान् ।
निःक्षत्रां पृथिवीं चक्रे सप्तकृत्वञ्च२७ सत्रिकम्२८ ।।8.123.२ ० ।।
रुधिरेण स तेषाञ्च ह्रदान् सप्त चकार ह ।
समन्तपञ्चके व्यास पितॄँस्तेनाभ्यतर्पयत् ।। २१ ।।
ततश्च कृत्वा निःक्षत्रां पृथिवीं भृगुसत्तमः।
महादेवप्रसादात्तु त्रैलोक्यस्येश्वरो बभौ ।।२२।।
तं श्रीस्तुष्टिर्धृतिश्चैव सिद्धिः कीर्तिर्यशस्तथा ।
श्रद्धा मेधा तथा क्षान्तिरनसूया२९ प्रसंयमः ।। २३ ।।

ऊहा ह्यपोहा तर्कश्च दमश्च शम३० एव च ।
रूपिण्यो भार्गवं सर्वा मातरस्समुपस्थिताः । ।२४।।
तान्सर्वान् स तदा प्राह विशध्वं मामशङ्किताः ।
श्रीरियं तु दुराचारा दूर एवावतिष्ठताम् ।। २५।।
सनत्कुमार उवाच
तं तथावादिनं साध्वी उवाच श्रीर्महाबलम् ।
किमर्थ मां महाबाहो नाभिनन्दसि३१ दुर्लभाम् ।।२६। ।
राम उवाच
चपला मदनीया च अध्रुवा चासि३२ शोभने ।
अतस्त्वां नाभिनन्दामि मम त्वं३३ दूरतो भव ।।२७।।
त्वयाविष्टो नरः३४ सर्वो यदि स्यात् स्वयमीश्वरः३५ ।
ऐश्वर्यमदसंमूढ३६ अकार्येष्वेव वर्तते३७ । ।२८।।
सनत्कुमार उवाच
स राजा भार्गवः श्रीमान् यज्ञैरीजे महामनाः ।
अधोगमच्च पृथिवी तस्य यज्ञे पुरा द्विज३८ । । २९। ।

२७ कृत्वा च - क. । २८ सप्तकाम् - क., सप्तवान् - ख. । २९... रनुसूया - क ख. । ३०. स्समय - क ख. । ३१ नातिनन्दति - क. । ३२ चापि - क । ३३ मत्तस्त्व (?) । ३४ विष्णोर्नरः - क. । ३५ स्वयमी- दृशः - ख. । ३६ समूढो - क ख । ३७ रज्यते - ख, वर्तसे - १. । ३८ विभो - ख. ।

686
व्यास उवाच
किमर्थं पृथिवी तस्य यज्ञे पातालमाविशत् ।
कारणं तत्र किं मन्ये एतदिच्छामि वेदितुम् । । 8.123.३० ।।
सनत्कुमार उवाच
स गत्वा३९ पृथिवीपालः कश्यपं४० मुनिसत्तमम्४१ ।
उवाच मम होता त्वं भव सत्ववतां वर४२ ।।३ १ ।।
तं तथावादिनं व्यास तदोवाच नराधिपम् ।
कश्यपः कुपितस्तत्र निन्दमानो भृगूत्तमम् ।।३ २।।
पतितस्त्वं दुराचारो भिन्नशीलः सुपापकृत् ।
कथं त्वा याजयिष्यामि भ्रूणवध्या४३भिकारिणम् । ।३ ३।।
सनत्कुमार उवाच

ततः स तेन वाक्येन उवाच ऋषिसत्तमम् ।
विषये मम मा तिष्ठ त्वमद्य४४ मुनिसत्तम ।। ३४।।
स्वाम्यहं जगतो विप्र४५ नाहं यत्र ततो व्रज ।
ततस्स तस्य तं देशं परित्यज्या४६ व्रजत्तदा । ।३५। ।
नाससाद च तं देशं यत्रासौ न भवेत् प्रभुः ।
अनासादयमानश्च अटवीमाश्रितस्तदा ।
अन्तर्धानगतो भूत्वा चचार बहुलाः समाः । ।३ ६।।
अथापश्यत् समासीनं४७ कपोतं वृक्षसंस्थितम् ।
अनङ्गेनाभिसंबद्धं कपोत्या हार्यतां४८ गतम् ।। ३७।।
कपोत उवाच
यदाप्रभृति सुश्रोणि मया दृष्टासि शोभने ।
तदाप्रभृति शुष्यामि रतिं नाप्नोमि शोभने ।।३८। ।

३९ कृत्वा - ख । ४० काश्यपं - क । ४१ मुनिसत्तम - क सत्तम (?) । ४२ वरं - क । ४३ भ्रूणवन्ध्या - क. । ४८ मा तिप्ठेस्त्वमद्य - क ख । ४५ विप्रो - क., विप्रा - ख. । ४६ परित्यक्त्वा - क ख । ४७ उमासीनः - क. ख. । ४८ कार्यतां - क. ।


कपोत्युवाच
मैवं ब्रूया दुराचार अधर्म्यं हि कदाचन ।
कपोत उवाच
न चेद्दास्यसि मेत्र त्वं बलात्त्वाहं सुमध्यमे ।
स्वीकरिष्यामि यच्छस्व४९ नतोस्मि तव पादयोः ।। ३९।।
कपोत्युवाच
किन्न तेस्ति भयं क्रूर जामदग्न्यान्महाबलात् ।
येन त्वं धर्षसे५०ऽद्येह पतिहीनां पतिव्रताम् । ।8.123.४० ।।
सनत्कुमार उवाच
एवमुक्तः स तु तया कपोतः शक्तिनन्दन ।
उवाच रामः कोयं वै मम तुल्यो न केनचित्५१ । ।४१ ।।
तस्यैवं वदतस्तत्र रामनामाङ्कितस्तदा ।
बाणः शिरो जहाराशु कश्यपस्तदपश्यत५२ ।।४२।।
स तं दृष्ट्वा तथावृत्तं भीतस्तस्मान्महाबलात्५३ ।

याजयामास राजानं जामदग्न्यं महामनाः५४ ।।४३ ।।
कश्यप उवाच
याजयाम्यहमद्यैव राजन् भार्गवसत्तम ।
यदि चेदीप्सितां मे त्वं ददासि शुभदक्षिणाम्५५ ।।४४।।
राम उवाच
यद् ब्रवीषि न सन्देहो दाताहं५६ तन्महातपः ।
मां याजय५७ यथान्यायं तवास्म्यद्य५८ वशे स्थितः ।।४५ ।।
सनत्कुमार उवाच
ततस्तस्याभवद् व्यास सुमहान् भूरिदक्षिणः ।
यज्ञोश्वमेधो देवानां यत्र तृप्तिरजायत ।।४६।।

४९ यच्छत - क. । ५० धर्त्त (र्ष?) से - क । ५१ मम तुल्यः स किं भवेत् घ ... तमपश्यत-क, ख. । ५३ तथा भीतस्तस्माद्रामाद् यज्ञदक्षिणाम् । ५४ यज्ञात्मना -क. ख. । ५५ शुभलक्षणां -क. ख. । ५६ तदा (ददे?) हं - क. । ५७ याजयस्व - घ. । ५८.. .स्माद्य - क. ख. ।


तस्याथ दक्षिणाकाले जामदग्न्यः प्रतापवान् ।
उवाच कस्यपं५९ ब्रूहि दक्षिणां कां ददानि ते । ।४७।।
स प्राह पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
दक्षिणां दत्स्व६० मह्यं त्वं यच्च तेस्ति गृहे वसु । ।४८ । ।
स तस्मै तत्तथा कृत्वा विशुद्धेनान्तरात्मना ।
चीराण्यादाय तं प्राह कश्यपं किं करोम्यहम् ।।४९। ।
कश्यप उवाच
इमं६१ देशं परित्यज्य देशमन्यं प्रयाहि भो६२ ।
मम देशे न वस्तव्यं त्वयाद्य भृगुनन्दन । ।8.123.५० । ।
सनत्कुमार उवाच
स एवमस्त्विति६३ प्रोच्य कृत्वा चाभि६४ प्रदक्षिणाम्६५ ।
जगाम सरितां योनिं समुद्रं वरुणालयम् । ।५१ । ।
तं६६ गत्वा सागरं भीममुवाच भृगुनन्दनः ।
मम देशं प्रयच्छस्व निवासाय महोदधे । । ५२ । ।
समुद्र उवाच
योजयस्व यथान्यायं भवान् माद्य वशे स्थितः ।

वेलासमीपे त्वं स्थित्वा विकृष्य बलवद्धनुः ।
मुञ्चस्व सायकं राम परीप्सन् देशमुत्तमम् । । ५३ । ।
यावत्स सायकः क्षिप्तस्तव प्राणसमीरितः ।
यास्यते तावदेवाहं६७ प्रदास्यामि तवालयम् । । ५४। ।
सनत्कुमार उवाच
ततः स भृगुशार्दूलः कृत्वादरमतन्द्रितः६८ ।
युयोज६९ सायकं व्यास विकृष्य बलवद्धनुः । ।५५। ।
कृत्वा मनसि संकल्पं योजनानां शतं तदा ।
गमिष्यति ममायं वै अथैनमभिमन्त्रयत्७० । । ५६ । ।

५९ काश्यपं - क. । ६० धत्स्व - क., दद - ख. । ६१ मम - क. ख. घ. । ४ वः - क., वै - घ., त्वम् - ख. । ६३ एवमस्त्विवति तं - क. घ. । ६४ चापि - क. ख. । ६५ प्रदक्षिणं - क. । ६६ स - घ. । ६७ तावदेवान्तं - ख. । ६८ दमरतन्द्रितः - क., देवमतं त्रिभिः - घ. । ६९ मुमोच - क. ख. । ७०... मभ्यमन्त्रयत् (?) ।

689

सागरेण तदा शम्भुः स्तुतस्तदुपशान्तये ।
सुराणां हितकामार्थं सागराशोषणाय च । ।५७। ।
तं७१ क्षिप्तं जामदग्न्येन रुरोधाप्रतिमं शरम् ।
स रुद्धो योजनान्येत्य७२ न्यपतद् द्वादशैव तु । ।५८।।
तावच्च७३ देशमुदधिर्विससर्ज हसन्निव ।
आवसच्च७४ महातेजा जामदग्न्योपि तं तथा७५ । । ५९। ।
तं देशं भृगुतनयः सुरेन्द्रकल्पो हृष्टात्मा मृगगणपक्षिसंघजुष्टम्७६ ।
सिंहेन्द्रद्विपशरभर्क्षघोरनादं श्रीमन्तं पुरमिव देवता चकार ।। 8.123.६० ।।
इति स्कन्दपुराणे राममाहात्म्ये त्रयोविंशोत्तरशततमोध्यायः७७
सनत्कुमार उवाच
जामदग्न्येन सा दत्ता तथा पृथ्वी महात्मने ।
गिरिशृङ्गं इवापातादधस्तात् सा तदाव्रजत् । । १ । ।
तामुवाच मुनिःक्रुद्धस्तिष्ठतिष्ठ वसुन्धरे ।
किमर्थं मां परित्यज्य अधस्ताद् व्रजसे शुभे ।। २। ।
पृथिव्युवाच
जामदग्न्यं१ विना रामं प्रियं पतिमतिद्युतिम ।
न शक्नोमि मुने स्थातुं तद्गुणाहृतचेतना । ।३ । ।

यदि मा यच्छसेद्य त्वं२ रामाय मुनिपुङ्गव३ ।
यास्याम्यहमधो४ नाथ न तिष्ठेयमतोन्यथा५ ।।४।।
सनत्कुमार उवाच
तस्यास्तद्वचनं श्रुत्वा कश्यप६स्तप्यतां वरः ।
उवाच वसुधां क्रुद्धो दहन्निव तदौजसा८ । ।५। ।

७१ तत् - क । ७२ योजनान् गत्वा - क. ख, योजन गत्वा - घ. । ७२ तावन्तं (?) । ७४ अवसच्च - घ. ।
७५ तदा - घ । ७६ संजुघुष्टं - क ७७ १७६ - ख. ।
१ जामदग्निं - क । २ वा यच्छ मह्यं त्व - क., प्रयच्छ.. - ख. । ३ प्रयच्छ मां तु रामाय रक्षार्थं मुनि- पुंगव - घ. । ४ वधो - क. । ५ तिष्ठाम्यद्य तेन्यथा - क. ख. । ६ काश्यप - क. । ७.. स्तपतां वर. - घ. । ८ तदोजसा - क, ततो,.. - ख. ।


कश्यप उवाच
गच्छ त्वं सुदुराचारे अधः पुनरवाग्गतिम् ।
वसुधाहं भविष्यामि पश्य मे तपसो बलम् ।।६।।
ततस्स भगवान् व्यास योगं परममास्थितः ।
पृथिवीत्वमनुप्राप्तो धारयामास मानुषान् ।।७।।
बहून्यब्दसहस्राणि यदसौ पृथिवी बभौ ।
तदा पृथ्वी विषण्णा तं प्रसादयत कश्यपम ।।८।।
पृथिव्युवाच
भगवन् तपसा तुभ्यं योगेन च बलेन च ।
न कश्चिदपि तुल्योस्ति दिवि वा भुवि वा विभो ।।९।।
प्रसादये त्वां शिरसा दृष्टन्ते बलमुत्तमम् ।
यन्मयापकृतं किञ्चित्तत् क्षमस्व महामुने ।।8.124.१ ०।।
अहमेव हि लोकेषु पृथिवी स्यां तवाज्ञया ।
दीनाया मम विप्रेन्द्र प्रसादं कर्तुमर्हसि ।।१ १ ।।
सनत्कुमार उवाच
तां तथोपस्थितां दृष्ट्वा भगवानृषिसतमः ।
उवाच प्रहसन् देवीं पृथिवीं प्रणतां तदा ।।१ २।।
तवैव ह्यपचारेण मयेदं कृतमीदृशम् ।
त्वमिदानीं मया दत्तं पृथिवीत्वं समाचर ।।१ ३ ।।

मम त्वं दुहितृत्वं च गत्वा कश्यपवंशजा९ ।
काश्यपी विदिता लोके भविष्यसि वसुन्धरे ।।१४।।
सनत्कुमार उवाच
एवं सा पृथिवी व्यास अधोगत्वा पुनः स्थिता ।
पृथिवीत्वं समासाद्य बभूव विगतज्वरा ।।१ ५।।

९ वंशजं - क, वंशजां - ख. ।

691
य इमं पृथिवीभावं कश्यपस्य महामुनेः ।
पृथिव्यागमनञ्चैव पुनर्भावं तथैव च । । १६ ।।
शृणुयात्पठते वापि शुचिर्भूत्वा सदैव हि ।
स लभेताक्षयाँल्लोकान्१० पृथिवीफलमेव च११ । ।१७।।
तां सर्वलोकप्रभवामनेकशो मुने१२ प्रणम्येह सदा नरोत्तमः ।
प्रकीर्त्तयेद्यो वसुधां वसुप्रदां स लोकमाप्नोति ऋषेरथाक्षयम् । । १८।।
इति स्कन्दपुराणे कश्यपस्य पृथिवीभावो नाम चतुर्विंशोत्तरशततमोध्यायः१३

सनत्कुमार उवाच
अतः परं प्रवक्ष्यामि ध्वजसंग्राममूर्जितम् ।
देवानामसुराणाञ्च प्राणयोगविनाशनम् । । १ । ।
आसीद् दनुसुतः१ श्रीमान् विप्रचित्तिर्महाबलः ।
तपस्तेपे स२ युक्तात्मा भस्त्रापद इति श्रुतिः३ । ।२ ।।
स राध्य४ तत्र देवेशं भगवन्तं त्रिलोचनम् ।
वरं वव्रेमरत्वञ्च तस्मै प्रादात् स देवपः । । ३ ।।
ध्वजं मायामयं दिव्यं सर्वगं काञ्चनं५ शुभम् ।
उवाच चैनं तुष्टात्मा भगवान्दानवेश्वरम् ।।४।।
अयं तव दनोः पुत्र विश्वरूपो ध्वजोत्तमः ।
एनमाश्रित्य युद्धेषु त्वमजय्यो भविष्यसि । ।५। ।
अमरश्च महाबाहो शब्दं चेन्न करिष्यसि ।
अतोन्यथा तु ते भाग्यै६र्भविता७ विजयो८ रणे ।। ६।।।
स एवमुक्तो देवेन९ ध्वजेन महता युधि ।

दनुजैः सह विप्रेन्द्र देवान्सर्वान्समाह्वयत्१० । ।७। ।

१०... दक्षयाँल्लोकान् - क. ख. घ. । ११ राज्यमेव वा - घ. । १२ नमः - क ख. घ. । १३ १७६ - ख. । १ धुन्धुसुतः - घ । २ सु - क. ख. । ३ श्रुतः - घ., श्रुतं (?) । ४ संराध्य - क.. सोराध्य (?) । ५ काञ्चनं सर्वगं - घ., नामयं - क. । ६ साम्यै - क. । ७ भविष्यति - क. । ८ जयो - क., न जयो - घ. । ९ कालेन - ख, । १०... नुपाह्वयत् - ख. घ. ।



तद्युद्धमभवद् घोरं तुमुलं लोमहर्षणम् ।
वर्षाणान्तु शतान्यष्टौ दश११ चैव सुदारुणम् । ।८ ।।
तत्राद्भुतमपश्यन्ते१२ दनुपुत्रस्य धीमतः ।
ध्वजेन विश्वरूपेण यदेको न्यवधीद् बहून्१३ । ।९।।
युध्यतश्चास्य संग्रामे ध्वजमाश्रित्य मायया ।
न१४ देवाः प्रहरन्त्यस्य पश्यमानास्तु१५ मोहिताः ।। 8.125.१० ।।
नापश्यन्ते१६ दनुसुतान्नापि दैत्याँस्तथा रणे१७ ।
ध्वजमेवाभिपश्यन्ति सर्वे मूढा दिवौकसः । । ११ । ।
मुमुचुर्यान्यमोघानि आयुधानि दिवौकसः ।
तानि छन्नान्यभूवन् हि ध्वजच्छायानिलेन वै । । १२। ।
अग्रतः पृष्ठतश्चैव पार्श्वयोरूर्ध्वमेव च ।
ध्वजमेवा१८भिपश्यन्ति न दैत्यान्नापि दानवान् । ।१ ३ । ।
तत्र ते सायकास्तीक्ष्णा ज्वलन्तः पावकार्चिषः१९ ।
निःसृत्य तु ध्वजाद् व्यास दारयन्ति सुरोत्तमान् ।। १४।।
गदाश्च परिघाश्चैव भिन्दिपालास्सतोमराः ।
निःसृतानि तथान्यानि दृश्यन्तेस्त्राणि वै ध्वजात् । । १५ । ।
ते देवास्तेन दैत्येन ध्वजमाश्रित्य सर्वशः ।
भग्ना विचेतसः संख्ये कृता नष्टपराक्रमाः ।। १ ६। ।
तान् भग्नान् भज्यमानाँश्च सर्वान्दृष्ट्वा सुरोत्तमान्२० ।
जगर्ज जलदो यद्वद् ध्वजमाश्रित्य दानवः ।। १७। ।
तस्य तच्छिद्रमालक्ष्य भगवान् पाकशासनः ।
ध्वजमालक्ष्य चिक्षेप वज्रं परममन्युमान् । । १ ८। ।
ज्वलदादित्यसंकाशं२१ तद् वज्रं भीमशब्दवत् ।
सध्वज दानवेशानमकरोद्यमगोचरम् । । १ ९। ।

११ शतं - घ. । १२... मपश्यामो. क, मपश्यन्तो - घ , श्यंस्ते (?) । १३ भृशम् - क. । १४ स - घ. । १५... स्त - घ. । १६ न पश्यन्ते - क. । १७.. न्सुदारुणान् - घ । १८ न ध्वजे वा - क ख, । १९ पावकार्चिषा - क. ख. । २० सुरसत्तमाः - वा । २१ ज्वलनादित्यसंकाशं - क. ख ।



ध्वजे लक्ष्यं समाविश्य देवेन्द्रेण महात्मना ।
हतास्ते नानवास्सर्वे सहस्राणि चतुर्दश ।।8.125.२ ० । ।
ते तेन शब्देन महानुभावा हतास्समालक्ष्य सुरेन्द्रकल्पाः ।
ध्वजे निवेश्यैन्द्रसमानचिह्ना वज्रेण देवेन्द्रबलेन सर्वे । ।२ ० ।।
इति स्कन्दपुराणे ध्वजयुद्धे पञ्चविंशोत्तरशततमोध्यायः२२

व्यास उवाच१
भस्त्रापदमिति प्रोक्तं त्वया ब्रह्मसुताव्यय ।
कथं तदभवत् स्थानमेतदिच्छामि वेदितुम् ।। १ । ।
सनत्कुमार उवाच
इक्ष्वाकुकुलसंभूतो बाहुर्नाम प्रजेश्वरः ।
हैहयैस्तालजंघैश्च तस्य राज्यमशेषतः ।
हृतं विप्रेन्द्र विक्रम्य सभार्यः स वनं२ ययौ । । २ ।।
स ऋचीकाश्रमं गत्वा ऋचीकेनानुपालितः ।
उवास वनमध्ये तु४ गर्भिण्या भार्यया सह । ।३ । ।
तस्याः प्रसवकाले तु५ भार्यायाः शक्तिनन्दन ।
सपत्न्या रागमोहेन गरोस्यै संप्रदापितः । ।४। ।
सा तेन वेदनां प्राप्य तप्यमाना६ रुजान्विता ।
शीतं तोयमिति प्रोच्य मूर्च्छिता न्यपतद्७ भुवि । ।५। ।
तां तथा पतितां दृष्ट्वा स राजा मन्युतापितः८ ।
कुम्भमादाय वृद्धोपि तोयार्थं सरितं ययौ । ।६।।
स पूरयित्वा कुम्भं तं स्कन्धेनादाय दुःखितः ।
वृद्धभावाच्छ्रमाच्चैव पापात च ममार च । ।७।।

२२ १७६ - ख., अत्र नाध्यायसमाप्तिर्दृश्यते घ पुस्तके ।
१ सन. उ - क. । २ शरणं - घ. । ३ उवाच - क. । ४ वनमध्येत्र - क । ५ च - ख. । ६ दह्यमाना - ख. । ७,

ह्यपतद् - क. ख. । ८.. पासितः - ख. । ९ पूरयित्वा स - क ।



मृतो मृत इतीत्येवमृषिभिः समुदाहृते ।
सा देवी मूर्च्छितोत्तस्थौ१० पतिशोकसमाहता । ।८ ।।
सा गरस्य च तापेन पतिमृत्युकृतेन च ।
समाहता तदा व्यास कुररीव व्यनादयत् । ।९ । ।
बाहोस्तु ऋषयस्सर्वे वसिष्ठाद्याः समागताः ।
कृत्वा तु चयनं सम्यक् संस्कारमभिरोचयन्११ । ।8.126.१ ० । ।
तमग्निं प्रविशन्ती सा१२ शैव्या गर्भेण दूषिता ।
वारिता ऋषिभिर्व्यास और्वेण१३ च महात्मना ।। १ १। ।
तस्यास्तत्र दिने व्यास सायाह्ने मन्युनाशनः ।
गरेण सह गर्भोसौ निःसृतोनलसप्रभः१४ । । १ २। ।
तस्मै१५ सगर इत्येव नाम चक्रे ऋषिस्तदा ।
संस्कारञ्चाकरोत्तस्य सर्वमेव कृपान्वितः ।।१ ३ ।।
धनुर्वेदं ददौ चैव वेदान् साङ्गाँस्तथैव च ।
अस्त्रग्रामञ्च विपुलं रथञ्चासङ्गमव्ययम् । । १४।।
स तेन रथमुख्येन युधि शत्रूञ्जघान ह ।
और्वास्त्रं१६ चैव सन्धाय तेषां धर्ममनाशयत् ।। १ ५। ।
स हत्वा तांस्तथा व्यास प्राप्य राज्यमथापि च ।
वैनतेयस्वसां प्राप्य शैव्याञ्चैव सुमध्यमाम् । ।१ ६। ।
अनपत्यो महाबाहुस्त्र्यम्बकं देवसत्तमम् ।
आराधयन् महातेजाः पुत्रहेतोर्नराधिपः । । १७। ।
तस्मै प्रादात् स भगवान् पुत्रवंशकरं प्रभुः१७।
षष्टिं चैव सहस्राणि सुतानां सुमहात्मनाम् । । १८। ।
सनत्कुमार उवाच
लब्ध्वा स तु वरं राजा भार्याद्वयमुवाच ह ।
वैनतेयस्वसां चैव शैव्याञ्चैव महामनाः१८ । । १९ । ।

१० मूर्छिता तस्थौ - क. ख. घ. । ११... मभ्यरोचयन् (?) । १२ सा प्रविशती - क. । १३ ऊर्वेण - क., पूर्वेण - ख. । १४... सन्निभः - ख. । १५ तस्यै - क. । १६ ऊर्वास्त्रं - क. । १७ शुभं - क. । १८ महात्मना - क. ख. ।

695

सगर उवाच

मह्यं देवेन दत्तश्च पुत्रो वंशकरः शुभः ।

षष्टिं चैव सहस्राणि पुत्राणां सुमहात्मनाम् ।।8.126.२० ।।

तत्र का वृणुते देव्यौ वरं देवी शुभं हितम् ।

ब्रूत१९ नाहं विभागं वः२० करोमि विदितात्मनाम् ।।२१।।

वैनतेयस्वसोवाच

षष्टिः पुत्रसहस्राणि२१ मम सन्तु नराधिप ।

शैव्याब्रवीत् सुतो मह्यमेको वंशकरोस्तु वै ।।२२।।

सनत्कुमार उवाच

असमञ्जसुतं२२ शैव्या ततः सा संप्रसूयत ।

वैनतेयस्वसास्तुम्बं२३ महान्तं संप्रसूयत ।।२३ ।।

तस्मात्तुम्बात्ततस्तानि सहस्राणि दशैव तु ।

गुणितानि व्यास२४ षड्भिः२५ संभवन्त महाबलाः ।।२४।।

असमञ्जः परित्यक्तः सगरेण सुतस्ततः ।

अधार्मिक२६ इति ज्ञात्वा अनाचारे व्यवस्थितः२७ ।।२५।।

अंशुमाँस्तस्य पुत्रस्तु बाल एवाति धार्मिकः२८ ।

तस्मिन्२९ प्रीतिं तदा चक्रे सगरो राजसत्तमः ।।२६।।

असमञ्जे परित्यक्ते हयमेधेन दीक्षितः ।

षष्टिं तानि सहस्राणि हयस्यारक्षणे दधौ३० ।।२७।।

तेषां हयं चारयतामुद्युक्तानां महात्मनाम् ।

अन्तर्धानगतः शक्र आक्षिपत्तं हयोत्तमम् ।।२८।।

ते लोकान् सर्वशो गत्वा अपश्यन्तो३१ हयोत्तमम् ।

पितरं दीक्षितं प्राप्य तं हयं संन्यवेदयन३२ ।।२९।।

१९ ब्रूयो - क. ख । २० विभागञ्च - ख., वां (?) । २१ षष्टिपुत्रसहस्राणि - क. ख. । २२ असमञ्जसुतं - क, .. .ञ्जस (?) । २३ स्तम्बं - ख., तुम्बं (?) । २४ तथा - क., त्रिधा - ख. । २५ व्यास - क. ख. । २६ आधर्मिक - क. । २७ अनाचारव्यवस्थितः - क. ख. । २८.. भिधार्मिकः - - क. । २९ तस्मात् - क. । ३० ददौ - क. ख. । ३१ अपश्यन्त - क. ख. । ३२ हयं नष्टं न्यवेदयन् (?) ।

696

स संक्रुद्धस्तदा राजा निर्दहन्निव तान्सुतान् ।
उवाच क्रोधताम्राक्षो नश्यध्वं क्षिप्रमद्य वै । ।8.126.३ ० । ।
नागन्तव्यं विना वोद्य३३ हयं क्रूरा विमार्गत३४ ।
सुतैः किं मम युष्माभिर्यात सर्वे यमक्षयम् ।। ३१ । ।
सनत्कुमार उवाच
त एवमुक्ता३५ विप्रेन्द्र त्रैलोक्यमखिलं तदा ।
विमृग्य३६ खानयामासुरिमां सर्वां वसुन्धराम् । ।३ २। ।
दिग्गजाँस्ते ततो दृष्टवा ऋषीँश्च नियतव्रतान् ।
धारयन्तोवनिं३७ सर्वान् दृष्ट्वा चाभिप्रणम्य च । । ३३ ।।
कपिलं ते मुनिं सुप्तमवैक्षन्त३८ जलाशये ।
अदूरेस्य हयं चैव क्रुद्धास्ते३९ मेनिरे तदा । ।३४।।
प्रेरिता भावितार्थेन४० काले पक्वा मुमूर्षवः४१ ।
पितृशापादथोचुस्ते कपिलं मुनिसत्तमम् ।। ३ ५।।
एष नो हयमुख्यस्य हर्ता सुप्तो दुरात्मवान् ।
एनमद्य वयं सर्वे नयाम पितुरन्तिकम् । । ३ ६। ।
सनत्कुमार उवाच
ततस्ते कालपाशेन बद्धास्सर्वे महाबलाः ।
नियतेर्वशगाश्चैव४२ पद्भिस्तं समताडयन् । ।३७। ।
स तैरभ्यर्दितः क्रुद्धः शरदामयुतं तदा ।
निरुद्धं सहसा वायुमुत्ससर्ज यथाहिराट् । । ३८। ।
तस्य वक्त्राद्विनिःसृत्य स वायुर्ज्वलनात्मकः४३ ।
ददाह सागरान् सर्वान् न्यायधर्मबहिष्कृतान् । ।३ ९ ।

३३ चाश्चैः - घ. । ३४ विमार्गतः - क. ख. । ३५ एवमुक्त्वा - क. ख. । ३६ विमृग्य - क. ख., विमृष्य ( श्य) घ. । ३७ दारयन्तोवनिं - घ. । ३८.. मवेक्षन्त - क. । ३९ क्रूरास्ते - ख. । ४० भाविनार्थेन (?) । ४१ मुमूर्षुवत् - ख., - र्थेन कालमूर्तिना - घ. ४२ नियतीवशगाश्चैव - क. ख. । ४३ जलदा,.. - घ. ।

697

तेषु दग्धेषु सर्वेषु ऋषयो नारदादयः ।
सगराय यथावृत्तमाचख्यु४४ रतिदुष्करम् । ।8.126.४० । ।
ततस्स राजा दुःखार्तः संस्तभ्यात्मानमात्मना ।
अंशुमन्तं प्रियं पौत्रमादिदेश महामनाः४५ । ।४१ । ।

सगर उवाच

इमं रथं समारुह्य गच्छ तं४६ हयमुत्तमम् ।

इहानय महाबाहो कालो नो नात्यगाद्यथा । ।४२ ।।

समाचरेथास्तद्वाक्य यथासावृषिसत्तमः ।

क्रोधं न कुरुतेस्मासु४७ त्वयि नः सन्ततिर्ध्रुवा । ।४३ । ।

सनत्कुमार उवाच

स एवमुक्तो रथमास्थितो नृपो महानुभावः सुरसिद्धपूजितः ।

जगाम वेगेन४८ सुरेन्द्रविक्रमः स यत्र योगी सगरान्तको४९ बभौ ।।४४। ।

इति स्कन्दपुराणे सगरोत्पत्तिर्नाम षड्विंशोत्तरशततमोध्यायः५०

सनत्कुमार उवाच

स गत्वा तं तदोद्देशं१ महागजनिषेवितम् ।

अपश्यद् भस्मभूतांस्तान्मुनिञ्च ज्वलनप्रभम् । । १ । ।

ततस्तं स तदा वाग्भिः स्तवयुक्ताभिरन्तिके ।

प्रणम्याक्षामयत्२ सर्वं पूर्वैर्यद् दुष्कृतं कृतम् । । २।।

कपिल उवाच

राजन्निहाहमेकान्ते युक्तस्तिष्ठामि विज्वरः ।

तैरर्दितोस्मि सहसा वायुं वक्त्रादवासृजम् । ।३ । ।

४४... माचक्ष्यु (क्षु?) - ख । ४५ महात्मना - क ख. । ४६ त्व - घ. । ४७ कुर्यादस्मासु (?) । ४८ विप्रेन्द्र - घ. । ८९ मुनिरिति (?), भवेत (भवत्?) - घ. । ५० शत षड्विंशत्यधिक समाप्त - घ., आध्याय १७६ - ख. ।

१ सगतस्तु ततो देशं - घ. । २ प्रणम्यमक्षयं - घ, म्य क्षमवत् (?) - क. ।



दशवर्षशतानि स्म संरुद्धः३ सोनिलो मया ।

विमुक्तः सहसा सर्वाँस्तान् ददाह पितॄँस्तव४ ।।४।।

न बुद्धिपूर्वं ते दग्धा मया राजन् रुषापि वा ।

हतास्ते कालपक्वेन फलेनैव यथा खगाः ।।५। ।

अश्वोयं मम पार्श्वस्थः केनापि विदितात्मना ।

हृतस्तेषां विनाशाय मा क्रुधो५ नीयतां हयः । ।६ ।।

सनत्कुमार उवाच

तस्य त्वनुमते व्यास६ अंशुमान् स नराधिपः ।
पानीयमुपचक्राम तेषां दातुं महामनाः ।।७। ।
वैनतेयस्तमाहेदं स्वस्रीयाणां ममोदकम् ।
न दातव्यं महाबाहो नैतत्तेषां७ गमिष्यति । ।८।।
अंशुमानुवाच
कथं मे८ पितरस्ते वै लोकान् दिव्यानवाप्नुयुः ।
एतदिच्छामि कथितं१० त्वया कश्यपन्दन११ ।।९।।
वैनतेय उवाच
देवलोके सरित् पुण्या गङ्गानामाशुभापहा ।
तदम्भोमि१२ स्तवास्थीनि बन्धूनामिह सर्वशः । । 8.127.१० ।।
संस्पृष्टानि१३ यदा राजन् तदैते१४ मोक्षमाप्नुयुः१५ ।
अशुभाद्राजशार्दूल अन्यथा किं जलेन ते ।।१ १ ।।
सनत्कुमार उवाच
ततः सोश्वं समादाय निवृत्तो व्यास भूपतिः ।
पितामहाय प्रददौ तमश्वं सुकृतात्मवान् ।।१२। ।
सोपि राजा तदा प्राप्य हयमेधं महामनाः ।
समुद्रनाशने बुद्धिं चक्रे सुतवधार्दितः । । १३ । ।

३ निरुद्धः - घ । ४ स?दा - क. । ५ क्रुद्धो - वः ख. । ६. तेर्व्यास - क. । ७ नैवं तेषां - क. ८ अधर्मे - क. । ९ श्रोतुमिच्छमि - ख. । १० कथितुं - क. । ११ काश्यपनन्दन - क. । १२ तस्याम्भोभि - क. ख. । १३ संसृष्टानि - ख. । १४ तदा ते - क., तदेते - ख. । १५ मोक्षमवाप्नुयुः - क. ।


अथ तं सरितां भर्त्ता प्रणम्याभिप्रसाद्य च ।
जगाम पुत्रतां तस्य इदं चोवाच तं तदा । ।१४।।
राजंस्त्वद्वंशजेनाहं कर्तव्यः किल सुप्रभः१६ ।
यथापूरं महाबाहो पूर्णो गङ्गाम्भसा नृप ।।१५।।
मा क्रुध१७स्तव पुत्रोहं यशस्कृदमितप्रभ१८।
रत्नानि च प्रदास्यामि शममेहि१९ मम प्रभो ।।१६।।
शान्तः क्रोधस्ततस्तस्य समुद्रं प्रति भूपतेः ।
विष्णुश्चास्मै तदा तुष्टः२० प्रददावीप्सितान् वरान् ।।१७।।
हयमेधशतं साग्रं स्वर्गे वासं तथाक्षयम् ।

वंशस्य चाक्षयं नित्यं यशश्चाग्र्यं तथाक्षयम् ।।१८।।
वयस्यत्वं तथा चैव परां धर्मे२१ च संस्थितिम्२२ ।
एतान्वरान् स लब्ध्वा तु भुक्त्वा राज्यमकण्टकम् ।।१९।।
जगाम वनमेवाथ तपस्तप्त्वा ततो दिवम् ।
ततोंशुमान् बभौ राजा धार्मिकः सत्यसंगरः ।।8.127.२० ।।
पुत्रं राज्येभिषिच्यैव गङ्गावतरणाशया ।
तपस्तप्त्वा दिवं यातो महाबलपराक्रमः ।।२१ ।।
ततो दिलीपः पुत्रोस्य महात्मा देवराडिव ।
कृत्वा राज्यं ययौ व्यास वनमेव महाबलः ।।२२।।
तत्र गङ्गार्थमुद्युक्तस्तपस्तप्त्वा दिवं२३ गतः ।
अनवाप्यैव तं२४ काममस्य पुत्रोभवत् पुनः ।।२३।।
राजा भगीरथो नाम जम्बूद्वीपपतिः शुभः ।
धार्मिकः सत्यवाक् शूरो२५ धर्मो विग्रहवानिव । ।२४।।
तस्य जन्मप्रभृत्येव२६ हृदये मुनिसत्तम ।
स्थितं गङ्गावतरणं कथं कुर्यामिति प्रभो२७ ।।२५ ।।

१६ सलिलैर्युतः - घ. । १७ क्रुद्ध - क. ख । १८. प्रभः - क. ख. । १९ सममेहि - क. । २० विष्णुस्तुतोष विज्ञाय - घ । २१ परन्धर्मँ - ख. । २२ संस्थितम् - क. । २३ वनं - क. ख. । २४ तां - क. । २५ सत्यवाञ्छूरो - क. ख. । २६ जन्मप्रभृत्यैव - ख. । २७ प्रभोः - ख. ।


अथ कालेन महता कृत्वा सर्वक्रियां नृपः ।
तपस्तताप सुमहद्येनातुष्यज्जगत्प्रभुः२८ । ।२६। ।
ब्रह्मा स्वयमथाभ्येत्य तमुवाच यतव्रतम् ।
ब्रूहि किन्ते प्रयच्छानि२९ वरान् वृणु नरधिप । ।२७। ।
सनत्कुमार उवाच
ततस्स राजा३० तं दृष्ट्वा३१ प्रणम्य हृषिताननः ।
उवाच धर्मस्याक्षय्यं स्वर्गे वासं तथाक्षयम् ।।२८ ।।
वंशस्य चाक्षयं३२ सम्यक् पुत्राणां च शतं वरम् ।
शूराणां धार्मिकाणाञ्च समरेष्वनिवर्तिताम्३३ ।।२९।।
जयञ्च युद्धे सततं लोके कीर्त्तिं तथाक्षयाम् ।
गङ्गायास्सरितश्चापि अवतारमनुत्तमम् । ।8.127.३ ० । ।

भागीरथीति च यथा लोके ख्याततमा भवेत् ।
एतदिच्छामि देवेश यदि त्वं मन्यसे विभो ।।३ १ । ।
सनत्कुमार उवाच
एवमुक्तस्य भगवान् सर्वमेतदशेषतः ।
प्रादात्तस्मै स्वयं स्रष्टा३४ इदं चोवाच तं नृपम् ।। ३ २।।
गङ्गा त्वं राजशार्दूल स्वर्गान्नेष्यसि भूतलम् ।
तां पतन्तीं दिवः३५ कश्चिच्छक्तो धारयितुं नहि ।
ऋते लोकगुरोर्देवात् त्र्यम्बकाच्छूलपाणिनः३६ । ।३ ३ ।।
तस्मात्त्वं देवदेवेशमाराधय यतव्रतः३७ ।
स धारयिष्यते व्यक्तं वरदानेन ते विभुः ।।३४।।
सनत्कुमार उवाच
एवमुक्तस्तु राजेन्द्रो वायुभक्षोनिमेषणः ।
निरूच्छ्वासोभवत्३८ तत्र हिमवच्छिखरे शुभे । । ३ ५। ।

२८ जगद्गुरो (रुः) - ख. । २९ प्रयच्छामि - क. ख । ३० दृष्ट्वा - क. ख । ३१ राजा - क. ख । ३२ चाक्षतिं - ख. । ३३ ष्वनिवर्त गाम् - क- । ३४ सृष्ट्वा - क. । ३५ दिवि - क. । ३६?. च्छूलधारिणः (?) । ३७ यतव्रतम् - ख. यतव्रताम् - क । २८ बभौ - क. ख ।

701

तस्य वर्षसहस्रेण तत्परस्य तदाशिषः ।
तुतोष भगवान्देवः कपर्दी नीललोहितः । । ३ ६। ।
वरदोस्मीति चाप्युक्त्वा इत्युवाच पुनः प्रभुः ।
दिव्यं चक्षुः प्रयच्छामि पश्य मां राजसत्तम । । ३७। ।
स तं दृष्ट्वा महेष्वासं त्रिदृष्टिं देवमीश्वरम्३९ ।
उवाच सरितं देव धारयस्व वरं वृणे । ।३ ८। ।
गङ्गां त्रिपथगां दिव्यां यदि मे तुष्यसेव्यय ।
मम कामो महादेव मृतान् पूर्वपितामहान् ।।३ ९।।
स्वर्गं नयेयं निरयात्तारयित्वाथ तान्४० शुभान् ।
तेषामर्थे महादेव प्रयासोयं मया कृतः ।
प्रसादात्तव ते स्वर्गं गच्छेयुर्गङ्गयाप्लुताः ।।8.127.४० । ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा भगवान् गोवृषध्वजः ।

उवाच राजशार्दूलं सुतुष्टेनान्तनात्मना । ।४१ । ।
देवदेव उवाच
भगीरथ तथा तत्ते भविष्यति न संशयः ।
मत्प्रसादाच्च गङ्गा ते दुहिता सा भविष्यति । ।४२। ।
धारयिष्ये त्वदर्थे४१ च तां पतन्तीं त्रिविष्टपात्४२ ।
विस्मापनाय लोकानां हितार्थञ्च नृपोत्तम ।।४३ । ।
सनत्कुमार उवाच
तस्य तद्वचनं श्रुत्वा गङ्गा सा सरितां वरा ।
उवाच को धारयिता मम वेगं सुरोत्तमः । ।४४ । ।
अहं तं सहसैवाद्य गृहीत्वाशु सुदुःसहा ।
गमिष्यामि न सन्देह पातालं सुदुरासदम् । ।४५।।

३९ तां वरम् क. ख. । ४०... क्षयं क. । ४१ तदर्थे क । ४२ त्रिपिष्टपात् क।

702

स्वयंभूर्यद्यसौ४३ ब्रह्मा शक्रो वापि४४ सुरेश्वरः ।
विष्णुर्वाप्यदितेः पुत्रो नयाम्येव न संशयः । ।४६ । ।
अद्य पश्यन्तु मे लोका४५ महद्वेगं दुरासदम् ।
पतन्त्या भुवि दुर्धर्षमेवं सा सरिदब्रवीत् । ।४७। ।
सनत्कुमार उवाच
तस्यास्तद्वचनं श्रुत्वा सावलेपं४६ च शंकरः ।
चकार निग्रहीतुं तां संकल्पं सरितां वराम् ।।४८।।
तस्य संकल्पमात्रेण देवान् वै ज्वर आविशत् ।
मम्लुर्माल्यानि सर्वेषामुत्पाताश्चैव जज्ञिरे ।।४९। ।
विपर्ययोभूल्लोकानां४७ विमानानि च पेतिरे ।
असुराश्च बलोन्मत्ता दृश्यन्तेतिमहाबलाः ।
आह्वयन्तो४८ दितेः पुत्रान् ज्वलनादित्यवर्चसः । ।8.127.५० ।।
सनत्कुमार उवाच
वैकृतं तदथालक्ष्य देवा ऊचुः शतक्रतुम् ।
विपर्ययोयं नाकस्माच्छीघ्रं विज्ञायतां प्रभो ।।५१ । ।
समोहश्चाभवत्तस्य देवस्य ऋषिभिः सह ।
तस्मिन् काले समागम्य ब्रह्मा तानवबोधयत् । ।५२।।

ब्रह्मोवाच
मा विषण्णावतिष्ठध्वं यूयं सर्वे दिवौकसः ।
यद् ब्रबीमि निबोधध्वं कालो मा वो४९तिगादयम् । ।५३ ।।
एष देवो महेष्वासः कपर्दी मेघवाहनः ।
गङ्गां नाशयितुं बुद्धिमकरोद्धीमविक्रमः । ।५४। ।
तेनैवं मनसा देवाश्चिन्तिते लोकनाशने ।
विपर्ययो यथा न स्यात् तथा कुरुत मा चिरम् ।। ५५। ।

४३ स्वयंभुर्यदसौ - क. । ४४ प्यनु (त्र?) क. । ४५ लोको - क. । ४६ अवलेपं - क. ख. । ४७ विपर्ययश्च लोकानां - क. ख. । ४८ आह्वयन्ते - ख । ४९ माद्य .. - क. ख ।

703
मया सह इतो गत्वा ऋषिभिः सह संगताः ।
आपद्भावेन देवेशं शरणं यात५० शङ्करम् ।।५६।।
सनत्कुमार उवाच
ते सहैव तदा देवा ब्रह्मणा पद्मयोनिना ।
जग्मुर्हिमवतः कूटं सर्वरत्नविभूषितम् ।।५७। ।
नाम्ना हिरण्मयं नाम यत्र हैरण्वती नदी ।
अपश्यन्त च तं देवास्तपोभक्त्या सुरेश्वरम् ।।५८।।
सनत्कुमार उवाच
ते तं क्रुद्धमिवालक्ष्य युगान्तानलसप्रभम् ।
दुर्निरीक्ष्यं तदा व्यास देवीं शरणमागताः५१ ।।५९। ।
देवा ऊचुः
सदेवतानां लोकानां जनन्यसि विभावरि ।
अतोसि भस्त्रा रुद्राणि यच्छ नोभयदं पदम् ।।8.127.६०।।
शरणागता वयं मातः पुत्रास्तव वयं शुभे ।
रक्ष नो देवदेवेशे एतदिच्छामहे वयम् । ।६१ ।।
सनत्कुमार उवाच
तेषां तद्वचनं श्रुत्वा भीतानां शरणैषिणाम् ।
देवानामभयं देवी ददौ वरमनुत्तमम् ।। ६२।।
ततस्तं देवदेवेशं भगवन्तं पिनाकिनम् ।
प्रणम्य शिरसोवाच भीतवत्साचलात्मजा ।।६३।।

सनत्कुमार उवाच
तां भीतां प्रणतां देवः पादयोर्गतमूर्धजाम्५२ ।
उत्थापयामास तदा पाणिनाब्जदलत्विषा५३ ।।६४।।
उवाच च तदा साध्वीं भीतासि हिमवत्सुते ।
किमर्थं किञ्च ते सुभ्रु५४ भयं ब्रूहि शुभानने ।।६५ ।।

५१... मागताम् - क. । ५२ र्गजत - क. । ५३... ब्जतलत्विषा - क. ।


सनत्कुमार उवाच
उवाच तं तदा व्यास भीतवत् हिमवत्सुता ।
दृढं भीतास्मि ते देव रूपं दृष्ट्वातिभास्वरम् ।।६६ ।।
संवर्त्तकानलप्रख्यं दुर्निरीक्ष्यं सुरैरपि ।
लोका विषण्णा देवेश देवाश्च ऋषिभिस्सह ।।६७।।
उपासते५५ भीतभीताः सर्व एते सुरेश्वराः ।
भीताहं ते महादेव मत्तोधिकमिमे सुराः । ।६८।।
मां चैव शरणं प्राप्तास्तेषां त्वमभयं दिश ।
त्वं कर्ता सर्वलोकानां देवानामृषिभिस्सह ।
मा विनाशय तान् कृत्वा याचे त्वां शिरसा नता ।।६९।।
सनत्कुमार उवाच
तस्यास्तद्वचनं श्रुत्वा देवान्दृष्ट्वा च यज्ञहा ।
उवाच न भयं वोस्ति मत्तस्त्रिदशसत्तमाः ।।8.127.७० ।।
इयन्तु स्त्रीस्वभावेन५६ हिमवत्तनये सरित् ।
मयि दुष्टं मनः कृत्वा पतिष्यति ममोपरि ।।७१ ।।
तामहं सन्निरोत्स्यामि पतन्तीं सरितं दिवः ।
यूयमप्यालयान् स्वान्स्वान् विश्रब्धा५७ व्रजतानघाः ।।७२। ।
सनत्कुमार उवाच
ततस्ते तद्वचः५८ श्रुत्वा प्रणता विबुधोत्तमाः ।
ऊचुः प्राञ्जलयो भूत्वा वाचा ते लज्जमानया ।।७३।।
देवा ऊचुः
एषा लोकहितार्थाय त्वया सृष्टा सरिद्वरा ।
चपलाः सरितश्चैव स्त्रीस्वभावश्च५९ तादृशः ।।७४।।

सैषा तेन स्वभावेन अस्माकं चाभिसंश्रयात्६० ।
गर्वं महान्तमास्थाय६१ कत्थते ह्यकुतोभया ।।७५।।

५५ उपासन्ते - क. ख. । ५६ स्त्रीसभावेन - क. । ५७ विश्रब्धं - ख. । ५८ ततस्तद्वचनं - ख. । ५९ स्त्रीस्वभावाच्च - क. । ६० चापि संश्रयात् - ख. । ६१ सुमहदास्थाय - क. ख. ।

705
गर्वोयं च यतस्तस्या६२ येन सा६३ कत्थते६४ नदी ।
तन्नः शृणुष्व देवेश मा क्रुधो६५ भीमविक्रम६६ ।।७६।।
कार्यार्थं प्रार्थ्यमानो हि सर्वो भवति गर्वितः ।
लोके तनुरपि स्वामिन् किमुतेयं सरिद्वरा ।।७७।।
सैषा सरिन्महादेव धारणायेप्सिता त्वया ।
सर्वश्रेष्ठेन देवेन गर्विता कत्थते६७ ततः६८ ।।७८।।
त्वया दैवतनाथेन धारितेयं सरिद्वरा ।
पुण्या भवित्री लोकेस्मिन् सर्वकिल्विषनाशनी।।७९।।
यः कश्चित् पातिनीमेनां६९ सरितं देवताधिप ।
शक्तो धारयितुं देवो न तु श्रेयो७० भवेत्ततः ।।8.127.८०।।
तस्मात्त्वं याचितो देवै राज्ञा चानेन कालहन् ।
धारयस्व७१ नदीमेनां७२ शिवो७३ भूत्वा सुरोत्तम७४ ।।८१।।
सनत्कुमार उवाच
एवं स भगवान् देवै७५स्तथ्यं बह्वविरोधि च७६ ।
उक्तः सब्रह्मकैर्देवः सनारायणलोकपैः७७ ।।८२।।
राज्ञो वरप्रदानं च तदवेक्ष्य पुनः पुनः७८ ।
उवाच देवान्देवेश७९ इदं गम्भीरशब्दवत् ।।८३ ।।
एतं८० राजानमुद्दिश्य क्षुधापर्याकुलेन्द्रियम् ।
भवतां चैव मान्यानां वचनाद्देवसत्तमाः ।।८४।।
न नाशयिष्ये सरितमिदं तु शृणुतानघाः ।
यद् ब्रवीमि महासत्वा गर्वस्यास्य विनाशनम् ।।८५।।
पर्वतेन्द्रोस्य गर्वस्य विघातो भविता महान् ।
अनु८१ जह्नुश्च धर्मात्मा गर्वं नाशयिता पुनः ।।८६।।

६२ चैव यत्तस्या - घ. । ६३ वा (?) । ६४ कत्थ्यसे - ख., गर्विता - घ. । ६५ क्रुद्धो - क. ख. । ६६.. विक्रमः -

क. ख । ६७ कत्थ्यते - ख. । ६८ तव - क, यतः (?) । ६९ पतिनीमेनां - क., पतितामेनां - स्व. । ७० श्रेय - क., श्रेष्ठा - ख. । ७१ तां धारय - घ. । ७२ नदीमेकां - ख. । ७३ विवो - क । ७४ सरित्तमाम् - घ., सरित्तमः - क. । ७५ देव - घ. । ७६ पक्ष्यविरोधि - क. , च मुनिबोधितः - घ. । ७७ देवैः - घ., नारायणसलोकपैः - क । ७८ ...न्तु यदुक्तवान् - घ. । ८९ देवदेवश - घ. । ८० एवं - ख. । ८१ अथ - ख ।



मच्छापोपहता चेयं दुराचारा महानदी ।
पतिं मानुषमासाद्य पुत्रान् सप्त निहंस्यति ।।८७।।

सनत्कुमार उवाच

एवमुक्त्वा ततः शर्वो देवान् दैवतसत्तमः८२ ।
उवाच ब्रूत किं वोन्यद् ददान्यद्य यथेप्सितम्८३ ।।८८।।

देवा ऊचुः

भगवन् स्थानमिच्छामो८४ देवस्य८५ सुमहर्द्धिमत् ।
समन्तपञ्चकं क्षेत्रं सदाविरहितं त्वया ।।८९।।
भस्त्रेत्युक्ता८६ यदस्माभिहिमवत्तनयाव्यया ।
पदं चाभयमिच्छन्ति तस्माद्८७ भस्त्रापदं स्मृतम् ।।8.127.९०।।
योत्रागच्छेन्नियमवानर्चयेद् वृषभध्वजम् ।
सोश्वमेधफलं प्राप्य रुद्रलोकमवाप्नुयात् ।।९१।।
अहोरात्रोपवासेन चरुं यश्च निवेदयेत् ।
स नन्दीश्वरतुल्यस्ते भविता देवसत्तम ।।९२।।
प्राणान् यश्चात्र देवेश त्यजेत् सनियमो नरः ।
अथवानियमाद्देव यदृच्छामरणेन तु ।।९३ ।।
सोपि भूत्वा गणैस्तुल्यः८८ स्थास्यत्याभूत८९ संप्लवम् ।
युक्तो दिव्येन वपुषा तवानुचरतां गतः ।।९४।।
नमो९० भस्त्रेश्वरायेति यश्च कृत्वा सदा शुचिः९१ ।
उत्तिष्ठेद्वा स्वपेद्वापि शक्रलोके स मोदते ।।९५।।
इदं९२ महद् दिव्यमनन्तलाभं पठेत् सदा यो द्विजदेवसंसदि९३ ।
महानुभावो गणपो महाजवो भवेत् स दिव्यस्तव देव संश्रयात् ।।९६।।
इति स्कन्दपुराणे गङ्गावतारे९४ सप्तविंशोत्तरशततमोध्यायः

८२ देवतसत्तमः - क. । ८३ दाता - क.,.. न्यद्य दातान्यन्मवसे - ख, .. ददामि वरमीप्सितम् - घ. । ८४ मिच्छाम - क. ख. । ८५ देवश्च - क. । ८६. त्युक्त्वा - क. ख. । ८७ चाभयमिच्छद्भिस्तस्माद् - घ. । ८८

तुल्यो गणैर्भूत्वा - क. ख, घ. । ८९... त्याहूत - क. । ९० भूयो - क. । ९१ शुचिं - ख. । ९२ इमं - क । ९३ द्विजवैद्यसंसदि - क. । ९४ गङ्गावतारे - ख. । ९५ अध्यायः १७७ - ख., अ. १२७ - घ. ।

707

सनत्कुमार उवाच

तस्मिन् सब्रह्मका देवाः स्थाणोः स्थाने मनोरमे ।
लिङ्गं संस्थाप्य तीर्थानि सर्वे चक्रुः पृथक् पृथक् ।।१।।
. .. . . .. . . .. . . .. . .. . . .. . .. . . .. . . .. ।
- - - दित्यतीर्थञ्च विख्यातं चाश्वमेधिकम् । ।२।।
रुद्रतीर्थं स्थाणुतीर्थं ब्रह्मणस्तीर्थमेव च ।
इन्द्रतीर्थं वसूनाञ्च अश्विनो१रपरं स्मृतम् ।।३।।
यमस्य चापरं तीर्थं वायोस्तीर्थमथापरम् ।
विष्णोश्चाप्यपरं तीर्थं विख्यातं सुरपूजितम् ।।४।।
स्नात एतेषु विप्रर्षे चरुं कृत्वा निवेद्य च ।
एषु स्थानेषु दिव्येषु चरते ह्यकुतोभयः ।।५।।
अद्यापि तत्र ब्रह्मर्षे श्रूयते मधुरः स्वनः ।
मेखलावलयोन्मिश्रो२ वंशवीणारवोत्कटः ।।६। ।
गायन्तीनां वराङ्गीनां नृत्यन्तीनां तथैव च ।
नित्यमप्सरसां व्यास स्तुवन्तीनां त्रिलोचनम् ।।७।।

सनत्कुमार उवाच

ततस्ते सहिता देवा३ ब्रह्मणा देवसत्तमम्४ ।
ऊचुः पश्येम५ भगवन्नस्या धारणमुत्तमम्६ ।।८।।

देवदेव उवाच

यथेष्टं श्वः प्रभाते मां पश्यध्वं विबुधेश्वराः ।
धारयन्तं त्रिपथगां नदीं स्वगुणगर्विताम् ।।९।।
ते तथोक्ताः७ प्रणम्येशं जग्मुर्गङ्गान्तिकं तदा ।
उवाच तां ततो ब्रह्मा देवीं लोकसुखावहाम् ।। 8.128.१० ।।

१ अश्विनौ - ख । २ मलयोर्मिश्रो - ख. । ३ सह देवेन - क. ख. । ४ देवसत्तमाः - क, ख । ५ कल्ये समभवत् - क.,. दन्त्ये (न्ये) - ख. । ६ तव योगो (योगं) महेश्वर - क ख., न्नद्या (?) । ७ तथोक्त्वा (?) । ८ तदा - क. ।

मा गर्व त्वं९ कृथा गङ्गे मा विनाशमवाप्नुहि१० ।

ऋजुभावं समास्थाय पतेथास्त्वं सरिद्वरे ।। ११ ।।

स्तुवती त्र्यम्बकं सोमं भक्त्या परमया युता ।

तवाकूतं विदित्वासौ विनाशायोद्यतः११ प्रभुः ।। १२ ।।

कृच्छ्रेण तोषितः शम्भुस्तवैव१२ हितकाम्यया ।

मापराधं कृथा भूयो लोकानां हितकाम्यया ।। १३ ।।

नाशात्तव सरिच्छ्रेष्ठे ध्रुवं लोकक्षयो भवेत् ।

एवं ते तां१३ समाधाय देवाः सब्रह्मकास्तदा ।। १४।।

द्वितीयेहनि लोकेशाः समाजग्मुर्दिदृक्षवः ।

हिमवच्छिखरं दिव्यं नाम्ना वज्रोपलं१४ महत् ।।१ ५।।

ब्रह्मा विष्णुरथानन्तो नरा१५ ऋषय एव च ।

आदित्या वसवो रुद्रा अश्विनौ समरुद्गणाः ।।१ ६।।

साध्या देवास्सपितरो यक्षराक्षसपन्नगाः१६ ।

पिशाचाश्चासुराश्चैव शृङ्गिणः पृश्नयस्तथा ।। १८ ।।

ऋषिरत्रिर्वसिष्ठश्च मरीचिः पुलहस्तथा ।

पुलस्त्यश्चाङ्गिराश्चैव भृगुः कश्यप एव च ।। १ ९।।

औशिजो१८ वामदेवश्च गौतमश्च महतपाः ।

च्यवनोथ भरद्वाज इन्द्रप्रमतिरेव च ।।8.128.२ ० ।।

रैभ्यश्च जमदग्निश्च कुणिबाहुश्च१९ वीर्यवान् ।

अथर्वा श्वेतकेतुश्च दत्तात्रेयश्च विश्रुतः ।। २१ ।।

रुचिर्धर्मश्च दक्षश्च सावर्णी मुनयश्च ये२० ।

अग्निश्च वेदबाहुश्च शङ्खपान्नामतश्च यः ।।२२।।

अम्बरीवाँश्च विख्यातः केतुमानपि चापरः ।

एते चान्ये च बहव२१ ऋषयो देवतास्तथा ।। २३ ।।

९ तं - ख. । १०.. मवाप्स्यसि - ख. । ११ विनाशायोद्यते - ख. । १२ स्तथैव - ख । १३ तेषां - ख । १४ वज्रोपमं - ख., भस्त्रापदं ( ?) । १५ नरो - ख. । १६ यथा राक्षसन्नगाः - ख. । १७ शृङ्गित.. - ख. । शृङ्गिणो दंष्ट्रिणस्तथा - घ । १८ कौशिको - घ । १ ९ दानबाहुश्च - घ.,... वाहश्च (?) । २० सावर्णाः साधवश्च - घ. । २१ बहवो - ख ।

विमानानि च सर्वाणि गन्धर्वाप्सरसां गणाः२२ ।
जम्भका ऋतवश्चैव निकायाश्चैव सर्वशः । ।२४। ।
तत्राजग्मुर्मुदा युक्ताः सर्वे परमवर्चसः ।
तेषां गगनसंस्थानां देवानां प्रेक्षतां तदा । ।२५ । ।
मेरुमन्दरसंकाशे२३ तस्मिञ्छिखरसत्तमे२४ ।
उमासहायो देवेशः सहसैवान्वदृश्यत । ।२६। ।
तडिज्ज्वलनपिङ्गेन जटाभारेण राजता ।
ऊर्ध्वस्थितेन महता भगीरथमुवाच सः२५ । ।२७।।
देवदेव उवाच
भगीरथ क्व सा गङ्गा पितॄणां तव तारणी२६ ।
समाह्वय२७ महाबाहो धारयिष्ये न संशयः । ।२८। ।
सनत्कुमार उवाच
ततः स राजशार्दूलः स्मृत्वा तद् ब्रह्मणो वचः ।
सस्मार सरितं व्यास शिरसा प्राञ्जलिर्नतः ।। २९। ।
सा तेन मनसाहूता स्वर्लोकनिलया नदी ।
क्षणेनाभ्याययौ देवी भुवर्लोकं२८ शुभावहा२९ ।।8.128.३ ० । ।
तं लोकं सा३० समासाद्य मनोनिलजवा नदी ।
अलंचक्रे महावेगा सर्वं शुभशतारणिः३१ । ।३ १ ।।
ततः सा तिर्यगागम्य आकाशस्था महानदी ।
आकाशगङ्गा संजज्ञे नाम्ना ओघवतीति वै ।।३ २ ।।
आकाशगङ्गा सा भूयो महावेगा महानदी ।
शिवमस्तु ममेत्येवं३२ पापातार्धपथात्तु सा३३ ।
शिवगङ्गा ततः प्रोक्ता नाम्ना शिवतरा३४ हि सा ।।३३ ।।

२२ तथा - घ. । २३ सकाशाः - ख । २५ शिखरि सत्तमे (?) । २५ ह (?) । २६ तारणात् (र्णीं) - ख । २७ तामाह्वय - घ. । २८ भुवं लोकं - ख । २९ सुखावहा - ख. । ३० च - ख । ३१ थ नोरणिः - ख. । ३२ शिवं मेस्तु शिवो देव - घ. । ३३ धर्म्यस्तु सा - ख., पातालगमनो यथा - घ. । ३४ शिवकरा - घ. ।

710

कुर्वती विपुलं शब्दं नदी वज्राशनिस्वनम्३५ ।
यतो देवैः समं दृष्टा३६ देवगङ्गा ततः स्मृता । ।३४।।
तां दृष्ट्वा मुनयः सर्वे देवलोकाश्च सर्वशः ।

जेपुस्ते३७ सहसा शान्तिं संप्रहृष्टतनूरुहा । ।३ ५।।
तेषां सा जपतां व्यास नदी लोकसुखावहा ।
स्तुवंती भीतभीतेव त्रिधा भूत्वापतद् भुवि३८ । ।३ ६।।
तां पतन्तीं महादेवस्त्रिभिर्वेगैर्महाजवाम् ।
जटाभारेण जग्राह देवानामेव सन्निधौ३९ ।।३७।।
तं४० जटाभारमासाद्य सा त्रिस्रोता निरुल्वणा४१ ।
न तस्यान्तं४२ समासेदे निरुद्धा योगमायया४३ । । ३८। ।
यस्मात्सा भीतभीता तु स्तुवंती४४ पतिता तदा ।
तस्मात्सा भीतगङ्गेति स्तोत्रगङ्गेति चोच्यते ।।३ ९ ।।
त्रिभिर्वेगैश्च पतिता यस्मात्सा सरिदुत्तमा ।
त्रिस्रोतेति ततः सा वै प्रोच्यते ब्रह्मवादिभिः४५ ।।8.128.४० ।।
सनत्कुमार उवाच
सा तु तस्मिन्निपतिता धृता देवेन मायया ।
जटारन्ध्रं४६ विचिन्वाना उवास बहुलाः समाः । ।४१ । ।
पूर्णं सहस्रं वर्षाणां४७ संस्थितां तां४८ जटागृहे ।
देवास्तां ददृशु४९स्सर्वे कोटरान्तर्गतामिव । ।४२ । ।
ततस्ते सहसा देवाः प्रणिपत्य वृषध्वजम् ।
ऊचुर्विमनसो व्यास सरितं मा विनाशय५० । ।४३ ।।

३५ ... शनिप्रभम् - घ. । ३६ दृष्ट्वा - घ । ३७ जग्मुस्ते (?) । ३८ स्तुवता भीतभीतेति त्रिधाभूतापतद्दिवः - घ. । ३९ पश्यतां - घ. । ४० ता - ख. । ४१ तिस्रोस्रोता - ख., त्रिभिः स्रोतोभिरुल्वणैः - घ. । ४२ च सा तं (न्तं?) - घ । ४३ लोकबन्धुना - घ. । ४४ स्तुवता (ती?, - ख । ४५ ब्रह्मचारिभिः - ख. । ४६ तत्र रन्ध्रं (?) । ४७.. वर्षसहस्रं तु - घ. । ४८ तां म (तां) - ख. । ४९ देवा ना (न?) ददृशुः - ख., ते देवाः - घ । ५० व्यनाशय - क. ख, यः - ख ।

711

सनत्कुमार उवाच तेषां तद्वचनं श्रुत्वा दृष्टवा राजानमेव च ।
विदुधाव जटाभारं५१ देवदेवो दयामय ।।४४।।
विधुन्वतो जटाभारं पेतुर्वै तत्र बिन्दवः ।
ते मुक्ताफलसंकाशाः पूर्णचन्द्रांशुनिर्मलाः५२ ।।४५। ।
चक्रुर्बिन्दुसरो दिव्यं सागराकारवर्चसम्५३ ।
तस्माच्छ्रोतांसि५४ सप्तैव निःसृतानि महान्ति च ।।४६।।

नलिनी ह्लादिनी५५ चैव प्लावनी५६ चैव पूर्वगा ।
सीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै प्रतीचिगाः५७ ।।४७।।
मध्यमं५८ त्वन्वगात्स्रोतो राजा येन भगीरथः ।
भागीरथीति सा गङ्गा प्रोच्यते ब्रह्मवादिभिः ।।४८।।
दारयन्ती५९ जगामाथ हिमवन्तं सरिद्वरा ।
निरुद्धा हिमवत्पादे रत्नशृंगे शिलोच्चये ।।४९।।
तां निरुद्धां ततो वीक्ष्य विषण्णवदनस्तदा६० ।
राजा भगीरथो व्यास ब्रह्माणं मनसास्मरत् ।।8.128.५० ।।
ततस्स भगवान् ब्रह्मा सुप्रतीकं महागजम् ।
उवाच दन्तवज्राभ्यां६१ दारयैनं शिलोच्चयम् । ।५१ ।।
स यत्र गिरिराड् भिन्नः सुप्रतीकेन हस्तिना ।
गङ्गाद्वारं तु तत्६२ प्रोक्तं सुपुण्यं चैव तत् स्मृतम्६३ । ।५२।।
गजश्चाभिमुखो यावन्नातिष्ठत महायशाः ।
स्रोतसा तावदध्वानमूढो द्वादशयोजनम् ।।५३ ।।
सनत्कुमार उवाच
एतत् पुण्यतमं व्यास गङ्गावतरणं स्मृतम् ।
स्थानं भस्त्रापदं नाम मया यत् परिकीर्तितम् ।।५४। ।

५१ वित्रु (दु) धाव - क., विधुन्वतो जटाभारं - घ, । ५२ शीतलाः - ख. । ५३ वर्चसा - क. ख. । ५४ तस्य स्रोतांसि - ख. । ५५ ह्लादनी - क., ह्रदिनी - ख । ५६ मालिनी - घ. । ५७ प्रतीच्यगाः - क. ख. । ५८ मध्यगं - क., तटगा - घ. । ५९ जग्मुषी सा (?), जिगमीषुर् (?) । ६०.. स्तथा - ख. । ६१ वज्रहस्ताभ्यां - घ. । ६२ यत् - ख. । ६३ दैवतं स्तुतम् - घ. ।


य इदं६४ शृणुयान्मर्त्यः सदा पर्वसु पर्वसु ।
स देवलोकं संप्राप्य देवैः सह चरिष्यति । ।५५। ।
इदं महत्पापविमोचनं६५ शुभं विमानयानाप्सरसां विलम्भनम्६६ ।
शृणोति यो नित्यमदीनमानसः स याति लोकान्विदितान्दिवौकसाम् ।।५६ ।।
इति स्कन्दपुराणे गङ्गावतरणे अष्टाविंशोत्तरशततमोध्यायः

सनत्कुमार उवाच
अतः परं प्रवक्ष्यामि हालाहलमशेषतः ।

संग्रामं दितिपुत्राणां देवानां च भयावहम् ।। १ ।।
हालाहल इति ख्यातो गणो विक्रान्तपौरुषः ।
असुराणां बभौ व्यास दारुणो ब्रह्मकण्टकः । ।२। ।
गतेषु१ दनुपुत्रेषु स गणः२ क्रोधमूर्च्छितः ।
बलं कृत्वा मुखं३ सर्वान्४ देवान्युद्धे समाह्वयत् । । ३ ।।
तेषां तेषाञ्च संग्रामः सुघोरः समवर्तत ।
असुराणां जयश्चैव सदैव समपद्यत ।।४० । ।
ततस्ते विबुधाः सर्वे विदर्पा हतविक्रमाः ।
हृतराज्याभ्यगच्छन्त ब्रह्माणं लोककारणम् ।।५।।
ते तमूचूश्च संहत्य हृतराज्याः स्म सांप्रतम ।
कथं राज्यं पुनर्देव लभेम तव तेजसा । ।६।।
तेषां श्रुत्वा वचस्तद्वै देवः सलिलसम्भवः ।
उवाच देवान् देवेशं प्रसादयत मा चिरम् ।।७।।
स वो दाता महावीर्यो बलं देवस्त्रिलोचनः ।
येन तान् समरे सर्वान् विक्रमेण विजेष्यथ५ । ।८। ।

६४ इमं - क. । ६५ विनाशनं - ख । ६६ विले (लो) भनं - क. ।
१ हतेषु (?) । २ बलः - ख. । ३ मुखे (?) । ४ सर्वे - ख. । ५ विजेष्यत - क., विजेष्यते - ख. ।

713
सनत्कुमार उवाच
त एवमुक्ता देवेशं तपसाराध्य शङ्करम् ।
ऊचुः प्राञ्जलयो देवा बलं नो देहि यज्ञहन् । ।९। ।
तेषां तु जपतामेवं६ तपसा तोषितो हरः ।
ददौ मन्त्रमनाधृष्यं७ सर्वमन्त्रोत्तमं८ तदा । । 8.129.१० ।।
तं ते संप्राप्य विप्रर्षे कृतरक्षा दिवौकसः ।
अमूढा मूढवत् सर्वे असुरेष्वचरन् ततः९ । । ११ । ।
असुरास्तु१० तदा मूढान् दृष्ट्वा सर्वान्दिवौकसः ।
अमन्यन्त दुराचारा मूढा इति यथातथम् । । १२ । ।
हृतरज्या इमे देवाः सर्वे मूढेन चेतसा ।
उन्मत्ता विभ्रमन्त्येवं पश्यतैतान्११ सुरेतराः । । १३ ।।
आक्रोशन्तोपरे ताँस्तु अभिजघ्नुश्च दारुणम् ।

बबन्धुश्च यथाकामं मुमुचुश्च तथापरे।।१४।।
एवं तेषां तदा व्यास वर्ततां शुभकर्मणाम्।
सुमहानभवद् धर्मः असुराणां व्यनीनशत्।।१५।।
तेषां तेनापचारेण असुराणां दुरात्मनान्।
धर्मनाशाद् बलं क्षीणं बुबुधुर्देवतागणाः१२।।१६।।
सनत्कुमार उवाच
ततस्ते ब्रह्मणा१३भ्युक्ताः१४ सर्वे दिव्यास्त्रधारिणः।
आहूयासुरशार्दूलान् युद्धे सर्वान्न्यसूदयन्।।१७।।
बलो यत्र हतः संख्ये१५ वज्रेण शतपर्वणा।
देवेन्द्रेणाभिविक्रम्य बलहा स यतः१६ स्मृतः।।१८।।
सनत्कुमार उवाच
अन्धकारकमन्यच्च१७ युद्धमासीत् सुभैरवम्।
दशवर्षसहस्राणि शतानि च पुनर्दश।।१९।।

६ जपतामेव - क। ७ यन्त्रमनाधृष्यं - घ। ८. यन्त्रोत्तमं - घ.। ९ तदा - क., तपः - ख.। १० असुराँस्तु क., असुरास्तान् (?)। ११ पश्यैनं (नान्?) - क.। १२ ववृधुर्देवतागणाः - घ.। १३ ब्राह्मणा - क. ब्रह्मणो (?)। १४ द्युक्ताः - क.। १५ शंखे - क ख.। १६ ततः - घ.। १७ अ-धकारं तथान्यश्च - घ।


आसीद् दनुसुतः श्रीमान् देवतान्तक इत्युत।
स मायां संपरीप्सन्१८ वै रुद्रमाराधयत् पुरा।।8.129.२०।।
तस्मै वर्षसहस्रेण वरकाल उपस्थिते।
ब्रह्मा ददौ वरं व्यास दनोः पुत्राय धीमते।।२१।।
स वव्रे तामसीं मायां सर्वभूतप्रबाधनीम्।
अभेद्या१९मनिवार्याञ्च यां तु२० वेत्ति न२१ कश्चन।।२२।।
तस्मै प्रादात् स तां मायामिदं चोवाच तं तदा।
भविष्यति हि२२ मायेयं यथोक्ता२३ ते महाबल।
करिष्यसि२४ न चेच्छब्दं२५ यथाकामं दनोः सुत।।२३।।
सनत्कुमार उवाच
अथ लब्धवरो व्यास मायाच्छन्तोसुरस्ततः।
बहुभिर्दानवैः सार्धं सर्वाँल्लोकानबाधत।।२४।।
देवा अपि भयात्तस्य नावतिष्ठन् तदग्रतः।

देवाः सर्वे भयोद्विग्नास्तस्थुर्नैव तदग्रतः ।
स्थानानि ते परित्यज्य यत्र तत्रावतस्थिरे ।।२५। ।
आहूताः क्रूरशब्देन दानवैर्बलदर्पितैः ।
तथापि नावतिष्ठन्त तेषामग्रे दिवौकसः । । २६। ।
ऋषयस्तानिदं प्राप्य ऊचुः सर्वे प्रमन्यवः ।
रक्षां कुरुत लोकानां मावलीनावतिष्ठत । ।२७। ।
वयं च तपसा२६ देवा धारयिष्याम संयताः ।
मा भयं वोस्तु युध्यध्वं कुरुध्वं विज्वरं जगत् । । २८ । ।
त एवमुक्तास्तैर्व्यास ऋषिभिर्लोककारणात् ।
भयान्नैवावतिष्ठन्त तस्य दस्योस्तदाग्रतः ।।२९। ।

१८ परिसन्धाय - घ । १९ अवेद्या - ख । २० तान्न - क. घ. । २१ हि - घ. । २२ च - घ । २३ यथोक्त - क. ।
२४ करिष्यति - ख. । २५ भवेच्छब्द - ख., . च्छन्दं - क. । २६ वस्तपसा - ख. ।


यदा नैवावतिष्ठन्ते तथाप्युक्ता दिवौकसः ।
उपायमपरं प्राहुस्तदा ते मुनिसत्तमाः । ।8.129.३ ० । ।
आहूयाप्सरसः सर्वा विसृज्यन्तां सुरोत्तमाः ।
कामेनाविष्टमनसामसुराणामुपान्तिकम् । ।३ १ । ।
ताँस्तास्वासक्तहृदयान् पीतमैरेयविह्वलान् ।
विक्रम्य हंस्यथ२७ सुरा बलाद्युद्धे२८ बलीयसः । ।३ २। ।
ततस्ताः प्रहिता देवैर्वञ्चनार्थं सुरद्विषाम् ।
क्वणन्नूपुरनिर्ह्रादकूजितोत्कर्णसारसाः२९ । । ३३ । ।
पीनोत्तुङ्गस्तनाभोगहारविक्षिप्तयष्टयः३० ।
वित्रस्तबालहरिणीसदृशायतलोचनाः । ।३४। ।
चलत्कुण्डलसंघृष्टपाण्डरागण्डमण्डलाः ।
शिखिकण्ठच्छविहर३१ श्लक्ष्णवासोधराः पराः । ।३५।।
प्रत्यग्रविद्रुमच्छेदताम्रोष्ठाधरपंक्तयः३२ ।
वस्त्रान्तकुसुमापीडसंसक्तकरपल्लवाः३३ । ।३ ६ ।।
नैकरत्नप्रभाकीर्ण्णकेयूराबद्धबाहवः ।
मयूरबर्हसंकाशचारुकुञ्चितमूर्धजाः । । ३७।।
कल्पद्रुमसमुद्भूतकुसुमस्रग्विभूषणाः ।

शुकाङ्गहरिताकारकञ्चुकोत्तंसितस्तनाः । ।३८। ।
मत्तमातङ्गविक्रान्तलीलाविभ्रमरेचकाः ।
मत्तकोकिलदात्यूह कलनिस्वनभाषिताः ।।३ ९। ।
महतामप्युपात्तानां तपसां विघ्नहेतवः ।
दर्शयामासुरात्मानं विद्विषां वधहेतवः । ।8.129.४० । ।
अथ तेप्सरसो दृष्टवा दैतेयाः काममोहिताः ।
तासामर्थे वराङ्गीनामभिजघ्नुः परस्परम् ।।४१ । ।
गदा३४ परिघचक्रासिशूलमुद्गरशक्तिभिः ।
धनुःकुलिशतीक्ष्णाग्र भिन्दिपालपरश्वधैः । ।४२। ।

२७ हंस्यत - क. । २८... न्युद्धे - क. ख । २९ त्कीर्णसारसाः - ख. । ३० दृष्टयः (?) । ३१ हरि (हरि) - क., हरित् - घ. । ३२ पल्लवाः - (?) । ३३ संरक्तपल्लवाः - क. । ३४ तदा - क. ।

716

ममेयञ्चारुसर्वाङ्गी न तवेयं सुमध्यमा ।
अथवा युद्धशुल्कास्तु मुञ्चैनां प्रहरस्व माम् ।।४३ । ।
इत्युक्त्वा विविधा वाचो दैतेयाः कालचोदिताः ।
अन्योन्यवधमासाद्य प्रजग्मुस्ते यमक्षयम् । ।४४। ।
हतशिष्टास्तु ये तत्र दानवाः शान्तपौरुषाः ।
विबुधैरुग्रतेजोभिस्तेपि सर्वे रणे हताः । ।४५ । ।
य इदं३५ पठते विशुद्धबुद्धिर्निधनं३६ संसदि३७ दानवेश्वराणाम् ।
मनुजो युवतीरिहैव लोके स लभेदप्सरसां समानरूपाः ।।४६ । ।
इति स्कन्दपुराणे अन्धकारयुद्धे ऊनत्रिंशोत्तरशततमोध्यायः३८

व्यास उवाच
अन्धकः स कथं दैत्यो हरेण विनिपातितः ।
यस्य त्रैलोक्यमखिलं भयात् सर्वं वशे स्थितम् । । १ । ।
सनत्कुमार उवाच
अन्धको नाम दैत्येन्द्र आदौ१ त्रैलोक्यकण्टकः ।
ब्रह्मणस्तु वरान् प्राप्य सोवध्यो देवमानुषैः । ।२। ।
न तस्य युद्धे क्रुद्धस्य विष्णुः शक्रो यमोथवा ।
शक्तो ह्यभिमुखे स्थातुं किमुतान्ये दिवौकसः । ।३ । ।

स कदाचिद् बलोद्वृत्तः पर्यटन् पृथिवीमिमाम् ।
अपश्यन्मन्दरप्रस्थे देवीं हिमवतः सुताम् । ।४। ।
स तामालोक्य दैत्येन्द्रः कामोपहतचेतनः ।
अहमेव प्रभुरिति देव्यां२ दौष्ट्यमचिन्तयत । । ५ । ।
चिन्तयित्वा तु तां प्राह दानवाननुयायिनः ।
आनयध्वमिमां शीघ्रं मत्समीपं नगात्मजाम । ।६। ।

३५ इमं - क ख. । ३६ शुद्धिर्निधनं - ख । ३७ संप्रति (?) । ३८ १७९ - ख., ११९ - घ. । १ आसीत् - ख. । २ दैत्यो - क । ३ तान् (?) ।

717

तच्छ्रुत्वा तस्य वचनं मन्मथाविष्टचेतसः ।
प्रह्लादो वदतां श्रेष्ठ इदं वचनमब्रवीत् । ।७।।
दानवेन्द्र हितं वाक्यं यदायत्यां विशुध्यते ।
अवश्यं तन्मया वाच्यं बन्धुस्नेहाद्विशेषतः ।।८।।
एषा हिमवतः पुत्री पत्नी शर्वस्य धीमतः ।
नास्यां दौष्ट्य४ त्वया चिन्त्यं मा नो५ धक्ष्यति६ तेजसा ।।९।।
जगतो मातरं देवीं पूज्या दुष्प्रेक्ष्यतेजसम्७ ।
उमां दानवशार्दूल नाधिक्षेप्तुमिहार्हसि ।।8.130.१ ०।।
किं कण्ठे महतीं बद्ध्वा शिलां मूढेन चेतसा ।
गम्भीरावर्तिनीं भीमां८ नदीं त्वं तर्तुमिच्छसि९ ।।११ ।।
भूत्वा पतङ्गः किं मोहाच्छिखां दीप्तां विभावसोः ।
दानवानामधिपते नाशाय स्प्रष्टुमिच्छसि ।। १२। ।
मा विनाशं नयेः१० सर्वान् समूलान्दानवेश्वर ।
निवर्त्यतां मनो देव्या नैतद्युक्त विपश्चिताम् ।।१३ ।।
त्वं विपश्चित् कुलीनश्च कुलीनानां च गोत्रजः ।
यज्वा च धर्मनित्यश्च नैतद्युक्त तव प्रभो ।।१४।।
तव सन्ति स्त्रियो बह्व्यः सर्वाश्च स्थिरयौवनाः ।
प्रकृत्यैव सुरूपाङ्ग्यो देव्याश्चेतो निवर्त्यताम्११ ।।१५।।
योस्माकं तपसा तुष्टो यच्छते कांक्षितान् वरान् ।
तस्य त्वं देवदेवस्य देव्याः पापं चिकीर्षसि ।।१ ६।।
येन दक्षः क्रतुः कालः कामश्च गमितः क्षयम् ।

तस्य त्वं देवदेवस्य देहार्धं हर्तुमिच्छसि ।।१७।'
लिङ्गेषु योर्च्यते देवः सुरासुरमहोरगैः ।
तस्य देवी जगद्धात्रीं कथं त्वमवमन्यसे ।।१८।।

४ दुष्टं - क ख. । ५ मारो - क. । ६ धक्ष्यसि - ख., धक्ष्येत?) । ७ तेजसः - ख., चेतसः - क. । ८ अप्सुव सत्सु (वर्षत्सु?) महती - क । ९ तरितुमिच्छसि - क । १० मा विनाशाय नः - ख., नय ः क. । ११ निवर्ततामु - ख, ।

718
स चैको नाभिमन्तव्य१२ स्त्वया देवः पिनाकधृक् ।
इच्छन्१३ कुर्याद्धि रूपाणां सहस्राणि शतानि च । । १९ ।।
प्रमथानां सहस्राणि योगिनां भीमकर्मणाम् ।
तस्याग्रतो व्रजन्त्येते यथैव तव दानवाः । । 8.130.२० । ।
यो हरेद् भास्कराद्दीप्तिं चन्द्रात्कान्तिं क्षितेः क्षमाम् ।
वासुकेर्यो हरेद् दंष्ट्रां स हरेत्तस्य पार्वतीम् । ।२१ । ।
तस्योत्तमाङ्गं सकलं शतधा शकलीभवेत् ।
यः शर्वभार्यां तामार्यामवमन्येत बालिशः । ।२ २ । ।
पितामहेन यच्चोक्तस्तदा त्वं पद्मयोनिना ।
वरदानावसाने तु वचस्तत्१४ स्मर्तुमर्हसि । ।२ ३ । ।
यैषा१५ श्रीस्ते दितिसुत मया दत्ता सुदुर्लभा ।
दुर्नयेन तवैवेयं यास्यत्यन्यत्र दानव१६ । । २४। ।
कटुकान्यपि पथ्यानि बन्धूनां१७ वचनानि ये ।
न शृण्वन्त्यनयोपेतास्ते यान्ति निधनं नराः । ।२५। ।
समेष्याम वयं देवं प्रियार्थे तव शङ्करम् ।
समेत्यानुसमेष्यामः सर्वे वैवस्वतक्षये । ।२ ६। ।
इत्युक्तः स तदा तेन बन्धुना शोभनं वचः ।
नैतदेवमिति प्राह प्रहसन् कालचोदितः । । २७ । ।
तस्मिन्नपरिहार्ये१८ तु कार्याकार्ये प्रिये मम ।
यदि युद्धे क्षयो मे स्यात् क्षयोपि विजयो मम ।।२८।।
मनसैव हि भूतानां विदधानः शुभाशुभम् ।
तथा वाप्यन्यथा१९ वापि काल एव२० करिष्यति । ।२९ । ।
प्रत्याख्याय ततो२१ रागात् प्रह्लादं दानवेश्वरः ।

देवीं स्प्रष्टुं२२ दधे चेतः२३ पतङ्गोग्निशिखामिव । ।8.130.३ ० ।।

१२ नाति ( नाव?) मन्तव्यः - क. । १३ इत्थ - क. । १४. स्त्वं - क ख । १५ येषां (यैषां?) - क. । १६ दानवान् - क. । १७ बहूनां - ख. । १८ तस्मिन्ननपिमहार्ये - क. । १९ चाप्यन्यथा - क. । २० एष - क. । २१ तथा? । २२ द्रष्टुं - ख । २३ (ध). . च्चेतः - क. ख ।

719

अथ बुद्ध्वा भगवती दुष्टभावं२४ दुरात्मनः ।
गणानाज्ञापयामास२५ युद्धाय सुमहाबलान् ।।३ १ ।।
अथ ते ज्ञापिता देव्या विविधायुधपाणयः ।
दानवाभिमुखीभूताः सोमनन्दिपुरस्सराः । ।३ २। ।
ते कृत्वा सुमहद्युद्धं दानवानुचरैः सह ।
विक्षिप्ता दानवेन्द्रेण वायुना जलदा इव । ।३ ३ । ।
एतस्मिन्ननन्तरे देवी दृष्ट्वोदीर्ण्णं तमन्धकम् ।
स्वयमेवाभिदुद्राव गृहीत्वा सशरं धनुः । । ३४।।
अन्धकं२६ पचविंशत्या सा जघान स्तनान्तरे ।
शराणां निशिताग्राणां स मुमोह पपात च ।। ३ ५। ।
स मुहूर्त्तात्तदा संज्ञां लब्ध्वा मानाच्च दानवः ।
उत्तस्थौ वेगवाञ्छीघ्रमुग्रोद्यतशरासनः२७ । ।३ ६।।
ततः स उत्थाय पुनर्देवीं प्रति महासुरः ।
मुमोच शरवर्षाणि वर्षाणीव बलाहकः । ।३७। ।
ततस्त्रिशूलमुद्यम्य२८ देवीं२९ दीप्ताग्नितेजसम्३० ।
अन्धकं हन्तुमारब्धां३१ शनैर्देवो न्यषेधयत् । ।३८।।
दानवेन्द्रो ममैवायं शास्यो मा त्वं श्रमं कृथाः ।
अहमेवास्य शूलेन भेत्स्यामि हृदयं रणे ।। ३ ९।।
एवमुक्ता३२ तु सा देवी देवदेवेन पार्वती ।
विरराम ततो युद्धाददृश्या संबभूव च । । 8.130.४० । ।
ततो देवः स्वयं प्राह नन्दिनं गणनायकम् ।
युध्यध्वं दानवैस्सार्धं गणानाहूय सर्वशः । ।४१ ।।
आहूय नन्दी३३ तान्सर्वान् गणाञ्छर्वाज्ञया तदा ।
उवाच भूयो३४ देवेशं शृणु येभ्यागता गणाः ।।४२ ।।

२४ दुष्टं भावं - ख. । २५ गणानां ज्ञापयामास - क । २६ अन्धकः - क. । २७ मुद्यतोग्रशरासनः (?) २८ ततश्शूलं समुद्यम्य - घ. । २९ देवी (?) । ३० दीप्तार्कतेजससमम् - घ. । ३१ समारब्धा (?) ३२ एवमुक्त्वा - क ख. । ३३ ततो नन्दी तु - घ । ३४ तत उवाच - घ. ।

720

विशिष्टेष्टास्त्वया३५ सृष्टाः स्वयं सृष्टौ सनातनाः३६ ।
प्रजाभावेन३७ नानात्वं येषां३८ तत्वं सुदुर्वचम्३९ । ।४३ ।।
वृषध्वजा वृषरथाश्चन्द्रावयवभूषणाः ।
त इमे समनुप्राप्ता रुद्रा रुद्र तव प्रियाः । ।४४। ।
कोटीशतसहस्राणां शतमेषां महात्मनाम् ।
तावन्ति च सहस्राणि शतानि च तथा विभो । ।४५। ।
षष्टिश्चैव४० सहस्राणि येषां तुल्यो न विद्यते ।
देवानां नीलकण्ठानां नीलकण्ठमहात्मनाम् । ।४६। ।
एते शूरा बलेषूग्रा४१ उग्रोदग्रपराक्रमाः४२ ।
युध्यमानाः करिष्यन्ति तव प्रमुदितं मनः । ।४७। ।
एतेषामेव रुद्राणामनुरूपाः प्रभावतः ।
तन्मात्रा द्वारपाला वै विक्रान्ताः क्रान्तमन्यवः । ।४८। ।
इतीमे कपिसिंहास्याः कपिसिंहबला रणे ।
दानवैस्सह योत्स्यन्ति वारणा इव वारणैः । ।४९ ।।
रुद्राश्च रुद्रपुत्राश्च रुद्राणां ये च पार्षदाः ।
रुद्राधिप न किञ्चिद्धि येषां४३ साध्यं४४ न विद्यते । ।8.130.५ ० । ।
एकैकस्यास्य रुद्रस्य पुत्राः पुत्रवतां४५ वर४६ ।
पञ्च पञ्च महावीर्याः काकपक्षधराश्च ते ।।५ १ । ।
भुजतः सहसोत्पन्नास्तव ये क्रोध सम्भवाः४७ ।
वीरभद्रं पुरस्कृत्य त इमे४८ समुपस्थिताः ।। ५२। ।
एषां षष्टिः स्मृताः कोट्यः सहस्राणि च षोडश ।
गणपानां गणाध्यक्ष त्वत्प्रियाणामिहागताः ।।५ ३ । ।
एवं देव प्रियार्थं ते दक्षयज्ञः समृद्धिमान् ।
यैर्ध्वस्तः पुरहन् देव पश्य तान् पुनरागतान् ।।५४। ।

३५.. ष्टेष्ट त्वया - क । ३६ सनातना - क., सनातनः (न ) - ख. । ३७ प्रजाभावन - क. । ३८ तव - ख. । ३९ धनुर्धराः - ख । ४० षष्टिञ्चैव - क. । ४१ एतेषुबलषूदग्रा - ख. । उग्रा उग्र- पराक्रमाः - ख. । ४३ एषां (?) ।

४४ शोध्यं - क । ४५ पुत्रशतां - क. । ४६ वराः - ख. । ७४ सन्निभाः - क. ख. । ४८ य इमे - क., इतीमे - ख. ।



आपद्भावप्रपन्नास्तु४९ येन ध्यातास्त्वयानघ ।
कोटीशतसहस्राख्यास्तेप्यमी समुपस्थिताः । । ५६ । ।
महानला५० यथा वृक्षान् प्रदीप्तान् वायुना सह ।
एतेभिनिर्दहिष्यन्ति दानवाँस्त्वत्प्रिये रताः । । ५७ । ।
गुहावास गुह्यस्यापि क्रीडमानस्य ये सुरैः ।
प्रियार्थं गणपा दत्ता नानामृगशताननाः५१ । ।५८। ।
ज्वलनाचलवत्तेषां त्रिंशत्कोट्यो महेश्वर ।
गणपानामनुप्राप्ताः प्रियं कर्तुं तवानघ । ।५९। ।
इमे रक्तम्बरधरा रक्तस्रगनुलेपनाः ।
ओष्ठजाद्रुधिराज्जाता रक्ता नाम गणेश्वराः । । 8.130.६० ।।
अङ्गारकस्यानुचरा महाबलपराक्रमाः ।
षष्टिकोटिसहस्राणि त इमे समुपस्थिताः । ।६ १ । ।
मन्तव्यं न बलं चापि एतन्मात्रं त्वयानघ ।
एते ह्यष्टगुणैश्वर्यं तव देव प्रसादजम् । । ६२ । ।
संविभ्राणा५२ महेशान करिष्यन्ति बहूनपि ।
लोकानेते समुद्युक्तान् सदेवासुरमानुषान् । । ६३ । ।
संयुगे युगमूलान्तं दहेयुः सुरदानवान् ।
य एते कुन्दसंकाशाः स्वर्णोत्पलविभूषिताः । । ६४। ।
दंशिता गणेपेशान सर्वे युद्धकुतूहलाः ।
ब्रह्मण्या५३स्त इमे शूराश्चन्द्रावयवभूषणाः । । ६५। ।
रुद्रा रुद्रपते प्राप्ताः पश्येमान् युद्धलालसान् ।
बालार्कसमवर्णाभाः सशस्त्राश्च चतुर्भुजाः ।। ६६। ।
द्वारपाला ह्यमी देव कपीन्द्रसदृशाननाः ।
रक्ताम्बरा रक्तमाल्या रक्तचन्दनरूषिताः ।।६७। ।

४१ आमद्भावप्रपन्नास्तु - क । ५० महानलो - ख. । ५१ शुभननाः - ख. । ५२ विभूच्चाणा - क. । विकुर्वाणा - ख. । ५३ ब्रह्मणा - क. ।

722

ब्रह्मण्या वरदाः शूराः कौमारब्रह्मचारिणः ।

मत्तबर्हिसमारूढाः सर्वे वै शक्तिपाणयः ।।६८।।

एते विक्रान्तविक्रान्ताः स्कन्दा नाम कुमारकाः ।

उच्चैःश्रवःप्रतिसमानश्वान् ये हेममालिनः ।। ६८।।

विरेजुरास्थिता देव५४ पीतकौशेयवाससः ।

बालार्कसमवर्णाभा बालोत्पलदलेक्षणाः ।।8.130.७० ।।

विशाखा नाम ते पुत्रा रुद्राणां शक्तिपाणयः ।

यानेतानीक्षसे देव सितवस्त्रान् सिताननान् ।।७१ ।।

विद्योतमानान् वपुषा५५ बहूँश्चन्द्रानिवोदितान् ।

काकपक्षधरान्मुण्डाँस्ताम्रचूडेष्ववस्थितान् ।।७२।।

एते विख्यातवीर्यास्ते शाखा नाम कुमारकाः ।

य इमे छागमेषस्थाः किंशुकाशोकवर्चसः ।।७३ ।।

शूराश्चौदार्यवन्तश्च५६ शिशुतामरसाननाः ।

नैगमेषस्य पुत्रस्य तव तुल्यपरिच्छदाः ।।७४।।

नैगमेषा इति ख्याता ह्येते देव कुमारकाः ।

य इमे कालमेघाभाः कालमेघनिभस्वनाः ।।७५।।

केशजास्तव ते देव प्रमथाः५७ समुपस्थिताः ।

इमे च रक्ता बहवो गणाः परबलार्दनाः ।।७६ ।।

वरूथिनो वर्मिणश्च रथिनश्चित्रयोधिनः ।

नानाप्रहरणाः सर्वे सर्वे युद्धविशारदाः५८ ।।७७।।

कृतिनो युद्धशौण्डाश्च सर्व एव च दंशिताः ।

सितासितानां मेघानां गिरीणां च समत्विषः ।

सनक्रमीनमकरा ये समुद्रा इवोद्धताः ।।७८।।

सिंहव्याघ्रवराहास्याः परिघाशनिपाणयः ।

तवैवानुग्रहादेते प्रमथास्त्वामुपस्थिताः ।।७९ ।।

५४ देवाः - क. । ५५ विद्योतमानवपुषा (?) । ५६ औदार्यवन्तश्च - क. । ५७ प्रथमाः - क. । ५८ सर्वयुद्धविशारदाः (?) ।

723

एते वै पार्षदाः शूराः स्कन्दस्य परमात्मनः

त्रिदशैः क्रीडनं दत्ताः सर्वशस्त्वामुपस्थिताः ।।8.130.८०।।
दृप्तप्रमुदितं स्फीतं प्रमथानीकमीश्वर५९ ।
दानवानीकभेदार्थे समर्थमिति मे मतिः ।।८१।।
प्रविहायान्यकार्याणि६० परमादरमास्थितम् ।
देवारीणामनर्थाय विध्वंसयदनन्तरम् (?) ।।८२।।
करिगिरितरुतोरणप्रभास्तरुणदिवाकरतुल्यतेजसः ।
गणपतिपतयस्तव ह्यमी रिपुबलमीश्वर जेतुमुद्यताः६१ ।८३।।
अचरचरपते ततोन्धकः प्रतिसमतां लभते रणे स्थितः ।
गणपतिशतयूथसंवृतो विसृज विभोवनतान् गणेश्वरान् ।।८४।।
इति स्कन्दपुराणे अन्धकयुद्धोपक्रमे त्रिंशदुत्तरशततमोध्यायः

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१४

https://sa.wikisource.org/s/fc2
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः(अध्यायाः १२१ - १३०) | आगामी पृष्ठः (अध्यायाः १४१ - १५०)

सनत्कुमार उवाच
अथापश्यत्तदायातान् भगवान् गणनायकान् ।
स्वैरनीकैस्सुबहुशः सन्नद्धान् युद्धलालसान् ।।१ ।।
दिण्डिञ्च भारभूतिञ्च सोमशर्माणमेव च ।
करिकं मेघनादं च उदरेमणिमेव च । ।२ । ।
आसत्तिं धूतपापं च चन्द्रमौलिनमेव च ।
आदित्यमालं विक्रान्तं सुकेशं च महाबलम् । ।३ ।।
तालकेतुं ज्वरञ्चैव दण्डपाणिनमूर्जितम् ।
एतांश्चान्यांश्च विख्यातान् गुह्याँश्च गणनायकान् ।।४।।
महागणपतिञ्चैव खोठामुद्गरमेव च ।
संपूज्य भगवान् सर्वान् प्रसाद्य१ च पुनः पुनः । ।५।।

---

५९... मीश्वरं - क. ख. । ६० विप्रहायान्यकार्याणि - क. । ६१ मुद्यतान् - क. ।
१ प्रसह्य (?) क., संभाष्य - घ. ।


उवाच मेघनिर्ह्लादः शतदुन्दुभिनिस्वनः ।
दानवैः सह यूयं मे योद्धुमर्हथ सत्तमाः । । ६ । ।
यूयमेव गणाध्यक्षाः पर्याप्तास्तान्प्रबाधने ।
तस्माद्यूयं महासत्वाः सगणाः सपदानुगाः ।
गच्छध्वं संविनाशाय पूजितोस्मि महाबलाः । ।७। ।
त एवमुक्ता देवेन प्रणम्य शिरसा हरम् ।
विप्रजग्मुर्महात्मानो देवोपि संप्रतिष्ठत२ । । ८ ।।
ततः समभवच्छब्द उदधेरिव भिद्यतः ।
अन्धकासुरसैन्यस्य मन्दरं समुपेयुषः । । ९। ।
निशम्य दानवारावं श्रोत्रायासकरं भृशम् ।
प्रमथा३ रुरुधुर्घोरं४ युगान्ते जलदा इव । । 8.131.१० । ।
तावन्योन्यबलोद्धूतावभूतां५ सैन्यसागरौ ।
प्रलयान्त इवोद्धूतौ भिद्यमानौ महार्णवौ ।। ११ ।।
देवदेव उवाच
जुहुध्यरिविनाशाय६ ब्रह्मन्नस्मज्जयाय च ।
त्वं चापि नन्दिन् रक्षस्व सर्वैरेतैर्गणैर्वृतः । । १ २। ।
आकाशस्थाश्च ये ह्येते नदन्त्यम्बुमुचो यथा ।
आकाशगानेव रिपूनेते बाधन्तु७ दानवान् । । १३ । ।

सनत्कुमार उवाच
इत्युक्तौ तौ प्रारभेतां८ कर्तुं भगवतो वचः९ ।
बृहस्पतिर्जुहावाग्निं नन्दी चापि ररक्ष१० तम्११ । । १४। ।
व्यायच्छद्भिर्महद्भिश्च प्रमथैर्मन्दरो गिरिः ।
विप्रस्थित इवाभाति स्रस्तकुञ्जरकेसरिः । । १ ५। ।
ततोन्धकबल दृप्तं दृष्ट्वा सिंहबलं यथा ।
आरोहमाणं तत्तूर्णं चालयत्तमिवाचलम्१२ । । १ ६। ।

---

२ समतिष्ठत - क. । ३ प्रथमा - ख, । ८ रुरुवुर्घारं ( ?) । ५ भवतु - क., बभतुः - ख । ६ जुह्रत ।- रिविनाशाय - क., जुह्रतो... - ख. । ७ धावन्तु - ग्व्र. । ८ प्रारभेते - क.,. तं - ख. । ९ इत्युक्तोसौ चकाराशु तत्तत्कर्म विचार्य च - घ. । १० ररक्षि - ख । ११ ताम् - क., सः - घ । १२ चालयन्त- मिवाचलम् - क. ख. ।

725
ततो हलहलाशब्दः प्रमथानामजायत ।
दैत्यान् वारयतां युद्धं तरुपाषाणसायकैः । ।१७।।
दानवा वार्यमाणास्तु प्रमथैर्जितकाशिभिः ।
विदार्य प्रमथानीकं शीघ्रमारुरुहुस्तदा । । १८।।
प्रमथा ह्यपि निस्सङ्गं१३ योद्धव्यमिति निश्चिताः ।
चिच्छिदुर्बिभिदुश्चैव पफलुश्च सुरेतरान्१४ । । १ ९। ।
गृह्णीष्व१५ मुञ्च तिष्ठेति स्थितस्त्वं किं करिष्यसि ।
एवं वाचः समुत्तस्थुः प्रमथासुरसैन्ययोः । ।8.131.२ ० । ।
समूलाग्रैस्तरुवरैः१६ पर्वतैश्च सपादपैः ।
अन्योन्यं चूर्णयन्ति स्म निर्घृणाः प्रमथासुराः ।।२१ ।।
ततो दाक्षायणीपुत्रैर्दक्षाध्वरविनाशनाः ।
पराङ्मुखा न शकिताः कर्तुं भक्त्यपराङ्मुखाः१७
सनत्कुमार उवाच
अरोहणेचलाग्रस्य१८ अशक्तान् निर्जितान् रिपून् ।
देवोपलभ्य प्रमथानवारयदशेषतः । । २३ । ।
देवदेव उवाच
आरोहन्तु दनोः पुत्रा१९ मन्दरं चारुकन्दरम ।
क्रीडार्थं मम युध्यध्वमेभिस्सह गणाधिपाः । । २४। । ददृशुरनेकचारुकुञ्जस्थितमृगराजविमुक्तभीमनादम् ।
प्रसृतगजकुलाभिघातरुग्ण२० क्षितिरुहपुष्पसमाचितप्रदेशम् भुजगपतिशिरोमणिप्रदीपप्रतिहतचारुशिलागृहान्धकारम् ।
शिशिरविमलनिर्झराम्बुवेगस्फुटितमहोपलजालदृष्टरन्ध्रम् । ।२६।।
क्वचिदभिनवताम्रपल्लवाग्रप्रतिहतबालदिवाकराशुजालम् ।
क्वचिदमरविलासिनीमुखेन्दुप्रविरचितस्फुटचारुपत्रलेखम्२१ । । २७। ।

---

१३ सन्नद्धः - - ख. । १४ परेतराट् - क. । १५ गृह्णीष्व - क. ख. । १६ समूलाग्रैस्तरुवरैः - क. । १७ भक्त पराङ्मुखाः क । १८ वनाग्रस्य - घ । १९ आरोहत यदाकामं - घ । २० भुग्न (?) । २१ चित्रलेखम् - ख. ।

726
क्वचिदनिलविधूतचारुपुष्पस्तबकविचित्रितकाननप्रदेशम् ।
स्फटिकमणिशिला२२ तलोपविष्टस्थितकपियूथविलोकितात्मदेहम् ।।२८।।
सुरयुवतिनिकेतबर्हिकेकाश्रवणसुखप्रतिबुद्धसिद्धसार्थम् ।
कमलदलरजःसुगन्धितोयस्थितकलहंसकलप्रलापरम्यम् । ।२९। ।
दिनकरकरतप्तसूर्यकान्त२३ प्रविगलिताग्निविलीनहेमधातुम् ।
क्वचिदभि२४ पतितांशुचन्द्रकान्त२५ प्रविसृतशैलनदीविकीर्णतोयम् । ।8.131.३ ० ।।
वरहरिकरवज्रसन्निपातस्फुटितमहागजकुम्भ२६ मौक्तिकौघैः२७ ।
सितकुसुमचयैरिव प्रकीर्णैः क्वचिदुपशोभितविस्तृतोपकण्ठम् । । ३१ । ।
प्रमुदितगणभैरवाट्टहासप्रसृतमहारवपूरितान्तरालम् ।
तरुगहनलतागृहान्तलीनप्रमुदितसिद्धवधूप्रनृत्तरम्यम् । । ३ २। ।
बहुकटकविचारिमत्तनागं२८ बहुमृगशाव२९ निपीतनिर्झराम्बुम्३० ।
बहुविषमतटप्रपातकुञ्जं३१ बहुविधगुल्मलतावतानवृक्षम् ।।३४।।
मरकतमणिपद्मरागशृङ्गद्युतिशबलीकृतपादपाद्यम् ।

अलिकुलकलकोकिलाविनादप्रचुरविनादितचारुकाननान्तम् ।।३४।।
यस्मिन्३२ सदा प्रमुदिता जितमृत्युशोका
गोरोचनाञ्जनशिलालनिधानसिद्धाः ।
सिद्धाः सदा प्रमुदिता वनितासहाया३३
स्तिष्ठन्ति चन्द्रकिरणोपमचारुहाराः ।। ३५।।
विद्याधराः३४ प्रियतमाविनिबद्धरागाः
पीनेषु तुङ्गतटवत्सु पयोधरेषु ।
धातूत्करैर्हरितरक्तपिशङ्गवर्णै-
र्यत्रालिखन्ति३५ विविधान् कुसुमावतंसान् ।। ३ ६।।
यस्मिन सदा सुरतखेदितगात्रयष्टयः
कान्ताग्रहस्तविनिवेशितहस्तपद्माः ।
सेवन्ति निर्झरजलप्रणयातिशीत३६
मभ्यागतं३७ पवनमप्सरसोतिहृष्टाः३८ ।। ३७ ।।

---

२२ शिखा - क । २३. तापसूर्यकान्त - क. ख । २४. दर - क ख. । २५ चन्द्रकान्ति - क. । २६ गण्ड (?) । २७ मुक्तिकौघम् - ख., मौक्तिकौघा - ख. । २८ विचारितमत्तनागं - ख । २९ सार्थ - ख. । ३० निर्झरोदम् - (?) । ३१ कूजद् - ख. । ३२ तस्मिन् - क । ३३ विनितासहायाः - क. । ३४ विद्याधरा - क. ख. । ३५ किरन्ति - क. । ३६ गीत - ख । ३७ मन्यागतं - ख. । ३८... धिहृष्टाः - ख. ।

727
नूपुररावविबोधितहंसं हसतनूरुहघट्टितपद्मम् ।
पद्मरजोरुणितामलतोयं तोयपरिष्कृतकाञ्चनशृङ्गम ।। ३८।।
शृङ्गसमुत्थितचन्दनवृक्षं३९ वृक्षसमास्थितकोकिलवृन्दम् ।
वृन्दविमुक्तगजेन्द्रनिनादं नादभयाकुलितर्क्षतरक्षुम्४० ।।३९।।
ऋक्षतरक्षुनिलीननिकुञ्जं कुञ्जगुहामुखनिर्गतसिंहम् ।
सिंहविदारितनैकपकुम्भं कुम्भविनिर्गतमौक्तिकरत्नम् ।।8.131.४०।।
रत्नमयूखविभासितपृष्ठं पृष्ठसमास्थितशङ्करपादम४१ ।
पादसमुत्थितपादपषण्डं४२ षण्डलताकुसुमोत्करमार्गम् ।।४१ ।।
मार्गमार्गमणितोरणचित्रं चित्रचित्रमणितोरणपट्टम् ।
पट्टपट्टविनिवेशितपुष्पं पुष्पपुष्पपरिचुम्बितभृङ्गम् ।।४२ ।।
नानाधातुविचित्रनितम्बं नानापुष्पलतागृहरम्यम् ।
नानामत्तविहङ्गमघुष्टं नानाशृङ्गसमास्थितसिद्धम्४३ ।।४३ ।।
तन्मन्दरं विविधचारणसिद्धसंघै४४ रम्यं स्वयं त्रिनयनेन कृताधिवासम् ।
दैत्यास्तदा भगवतानुमतप्रवेशाः सर्वे समारुरुहुरात्म(?) जयैषिणस्ते४५ ।।४४।।
ततो विसृष्टाः प्रमथैरारोहन्त दितेः सुताः ।
मन्वानाः प्रमथा भीता निवृत्ता इति सत्वरम् ।।४५।।
मन्दरस्य ततः पृष्ठे नानाद्रुमसमाकुले ।
बद्धस्कन्धाः४६ स्थिता दैत्या आदित्यसदृशप्रभाः ।।४६।।
स मन्दरो भीमशिलोपलद्रुमो विवृद्धशार्दूलतरक्षुवारणः ।
महासुरैर्दर्पितवाजिवारणैर्विकीर्यते मेघ इवानिलै४७र्भृशम्४८ ।।४७।।
क्षिपन्ति शुभ्राभ्रनिभाः शिलाः क्वचित् तरून्समुत्पाट्य नदन्ति मेघवत् ।
निवार्यमाणाः प्रमथान्४९ समार्दयन् वनेषु सिंहा मृगयूथपानिव ।।४८।।
ततस्तु तद् गजरथवाजिदानवैः समावृतं क्षुभितमहोदधिप्रभम् ।
विराजते दितिसुतबाहुपालितं वनं यथा मृगपतिबाहुपालितम् ।।४९।।
इति स्कन्दपुराणे अन्धकयुद्धोपक्रमे मन्दरवर्णनं नाम एकत्रिंशदुत्तरशततमोध्यायः

---

३९ - समुच्छ्रितचन्दनवृक्षं (?) । ४०. .कुलमृक्षतरक्षुम् - क । ४१ समर्पितशङ्करपादम् - ख. । ४२ समुच्छ्रित- -पादपषण्डं (?) । ४३ समाश्रितसिद्धम् (?) । ४४ सिद्धसंघ - ख. । ४५ शत्रुजयैषिणस्ते - क. ख. । ४६ बद्धस्कन्धा - क. ख. । ४७ इवानलै - क. ख. । ४८. वृतम् - क. । ४९ प्रमथाः - क. ख. ।

728
सनत्कुमार उवाच
मन्दरप्रस्थमासाद्य सोन्धको दानवाधिपः ।

प्राञ्जलिः शुक्रमाहेदं शक्रार्कसदृशद्युतिम्१ ।। १ ।।
अन्धक उवाच
प्राप्ताः स्म भगवञ्छैलं२ मन्दरं चारुकन्दरम् ।
प्रमथैर्भीमसंकाशैः सन्निरुद्धशिलातलम् ।। २ ।।
खेचरा मायिनश्चैव योगिनश्च महाबलाः ।
प्रसभं दानवैर्जेतुं३ न शक्या गणनायकाः ।।३ ।।
प्रायेण बलवन्तोपि ह्युपायेनैव साधवः ।
कार्येष्वादौ प्रवर्तन्ते पश्चात्तु विपरीतवत्४ ।।४।।
तदुपायं५ समास्थाय विशेषेण समाहिताः ।
प्रमथान् संप्रबाधाम यथा वा रुचितं तव६ ।।५।।
स त्वमस्मज्जयप्रेप्सुर्दानवानां जयाय च ।
कुरु देव गिरिव्यूहं परव्यूहविदारणम्७ ।। ६।।
के चेमे सूर्यकोटीनां प्रभावर्णवपुर्धराः ।
प्रमथानीकमध्येषु स्थिताः पश्यन्ति मां मुहुः ।।७।।
सनत्कुमार उवाच
ततोन्धकवचः श्रुत्वा क्रुद्धो दैत्यपुरोहितः ।
उवाच दैत्याधिपतिं गोपतिं दर्शयन्निव ।।८।।
शुक्र उवाच
य एष मधुपिङ्गाक्षस्त्र्यम्बकश्चन्द्रभूषणः ।
व्याघ्रचर्माम्बरधरो देव एष पिनाकधृक् ।।९।।
यस्त्वेष कपिसिंहास्यो नीलवस्त्रश्चतुर्भुजः ।
तरुणार्कसमो भाति नन्द्येष गणनायकः ।। 8.132.१० ।।
तनुरुच्चोग्निसंकाशो य एषोग्निरिवोज्ज्वलः ।
ब्राह्मणाधिपतिर्ह्येष८ बृहद्बुद्धिर्बृहस्पतिः ।।१ १ ।।

---

१ सहस्रार्कसमद्युतिम् - घ । २ ते प्राप्ताः स्म वयं शैलं - घ. । ३ प्रसभैर्दानवैर्जेतुं - क. । ४ ततो विजय- माप्नुयुः घ. । ५ तमुपायं - क. ख. । ६ वचः - ख. । ७ विधारणम् (?) । ८... पतिर्येष - क. ख. ।


य एष नातिदूरस्थो वृषकेतोस्त्रिशूलधृक् ।
एषोन्धक महाकायो महागणपतिर्वरः ।। १२ ।।
यैष९ आस्थाय कूजन्तं भाति चित्रकलापिनम् ।
मयूरं बालसूर्याभः शक्तिपाणिर्महाबलः ।। १३ ।।
ब्रह्मण्यो ब्रह्मनिरतो ब्रह्मचारी यतव्रतः ।
स्कन्द एष१० हि देवानामग्रणीर्दानवा रणे११ ।। १४।।
य एष ताम्रचूडस्थस्ताम्रचूडशिलाप्रभः१२ ।
शक्तिमुल्लोलयन्१३ भाति१४ तोयदस्तडितं यथा ।। १५ ।।
काकपक्षधरो ह्येष पूर्णचन्द्रनिभाननः ।
विशाखो नाम कौमारः१५ कौमारब्रह्मचर्यवान् ।। १ ६।।
तरुणस्तरुणप्रज्ञस्तरुः शाखायुतो यथा ।
स्वाहायास्तनयो ह्येष शाखो नाम१६ महाद्युतिः ।। १७।।
एतस्य यो ह्यसौ पार्श्वे१७ सव्यमावृत्य१८ तिष्ठति ।
दर्शयानः प्रदेशिन्या माञ्च त्वाञ्च पुनःपुनः ।। १ ८।।
मेषमास्थाय बलवान् बाल१९ एव२० व्यवस्थितः ।
नैगमेष इति ख्यात एषोन्धक हरात्मजः२१ ।। । १९ ।।
चतुर्भिरेष पुत्रैस्तु दृश्यतेसुरहा वृतः ।
देवैश्चतुर्भिः संपृक्तो यथैव हि पितामहः । 8.132.२० ।।
देवमीशं महेष्वासं नन्दिसूनुपुरस्सरम्२२ ।
व्यतियुध्या२३ सुरश्रेष्ठ मन्मन्त्रपरिपालितः२४ ।।२ १ ।।
प्रमथैर्निहतान् दैत्यान् शतशोथ सहस्रशः ।
अहमुत्थापयिष्यामि शस्यानि जलदो यथा ।।२२ ।।

---

९ य एषा - -क, य एषो. - ख । १० एषो - क. ख । ११ दानवानृणे - क ख., दानवाधिप। - घ. । १२ चूर्णशिलाप्रभः - क., चूडानखि... - घ. । १३ मुल्लालयन् - क.,... मुल्लापयन् - घ. मुत्तोलयन् (?) । १४ याति - घ. । १५ गणपः - घ. । १६ विशाखोपि - घ. । १७ पार्श्वे - क । १८ समाश्रित्य च - घ. । १९ बल - ख. । २० एवं (?) । २१ महात्मजः - क । २२ पुरन्दरम् - क । २३ विधियुक्त - क. । २४... समन्त्रपरिपालितः - क. ख. ।



सनत्कुमार उवाच

तं२५ भार्गव इति प्रोच्य दानवान्२६ दानवाधिपम् ।
गिरिव्यूहेन तत्सैन्यं प्राक्रमद् व्यूहितुं ततः ।।२३।।
मूलेन्धकरथं कृत्वा सान्धकं साश्वसारथिम् ।
पादातैः२७र्बहुसाहस्रैः पादान् तस्य चकार ह ।।२४।।
तेषु पादसहस्रेषु गिरिव्यूहस्य दानवैः ।
वृक्षशैलशिलासंघान् कारयमास भार्गवः ।।२५।।
कोटिभिर्दशभिस्तस्य दानवानां महात्मनाम् ।
नितम्बाँस्ताम्रनयनान् प्रचकार ग्रहेश्वरः ।।२६।।
धातुनिष्यन्दचित्रेषु२८ नितम्बेष्वपि दानवान् ।
तृणवत् क्षुपवच्चापि स्थापयामास भार्गवः ।।२७।।
त्रिंशता कोटिभिश्चापि त्रिदशाधिपविद्विषाम्२९ ।
गिरिव्यूहस्य शृङ्गाणि चकारार्कसमप्रभः३० ।।२८।।
तेषु शृङ्गेषु तुङ्गेषु दानवान्सायुधानथ ।
अमी प्रपाता इत्येवमाचख्यौ३१ भृगुनन्दनः ।।२९।।
ते प्रपातस्थिता दैत्या नीलाम्बुधरवर्चसः ।
शस्त्रतोयानि मुदिताः क्षरन्त इव संस्थिताः ।।8.132.३० ।।
बलस्था ये जवोपेता दैत्या दैवतकण्टकाः३२ ।
श्येनवत्ते भ्रमित्वा तु निलीनाः३३ स्युर्गिरिव्रजे३४ ।।३१।।
निवातकवचान् सर्वान् विविधायुधधारिणः३५ ।
अकरोद् भार्गवो देवो गिरिव्यूहस्य सानुवत्३६ ।।३२। ।
प्रह्लादमथ संह्लादमनुह्लादं शिनिं तथा ।
जम्भं कुजम्भं तारञ्च मयं नमुचिमेव च ।।३३।।

---

२५ स - क. । २६ तदिदं - घ. । २७ पादपै - क ख. । २८ विष्यन्दचित्रेषु - क. ख. । २९ विद्विषोः - क. । ३० चक्रार्कस्य समप्रभः - ख. । ३१ माचि. क ख. । ३२ देवतकण्टकाः - क. । ३३ न्यलीयन्त - ख. । ३४ गिरिवद् व्रजे - क. । ३५ पाणयः - क. ख. । ३६ सानवः - क., रक्षकान् - घ ।



विरोचनं बलिं बाणं वातं कार्तस्वनं कुशम्३७ ।
शम्भुं च भावयत्यं३८ च इल्वकं विल्वकं३९ तथा ।। ३४।।
वितं वृत्तं तुहुण्डं च हुण्डं दण्डं च दानवम् ।
अञ्जनं रुषणं राहुं स्वर्भानुमजकं गजम् । ।३५।।
हस्तिदुर्योधनौ चैव पाकं धुन्धुञ्च दानवम् ।
एतांश्चान्यांश्च बलिनो दैत्यान्दैवतकण्टकान्४० । ।३६।।
व्यूहं रक्षत युध्यध्वमित्युवाचासुराधिपः ।
हिमवानिव शैलेन्द्रो विन्ध्यो वाद्भुतगह्वरः ।।३७।।
स गिरिव्यूह आभाति शस्त्रकण्टकितद्रुमः ।
अन्धकारमिवैकस्थं मेघानामिव संचयम् । । ३८। ।
दृष्ट्वा दृष्ट्वा गिरिव्यूहं प्रमथा विस्मयं ययुः ।
पर्वतव्यूहमालोक्य पर्वतव्यूहसंस्थिताः ४१ ।। ३ ९।।
नेदुस्तेसुरशार्दूला मेघा लोकात्यये यथा ।
ऊचुश्च न हि शक्योयं भेत्तुं देवैस्सवासवैः ।।8.132.४० ।।
प्रमथाः किं करिष्यन्ति स्वल्पवीर्यपराक्रमाः ।
जीवयिष्यति नः शुक्रो मृतानपि न संशयः ।
युध्यध्वं दानवश्रेष्ठा निश्शङ्कैरन्तरात्मभिः । ।४१ । ।

सनत्कुमार उवाच

गिरिव्यूहं ततो दृष्ट्वा भार्गवोत्तमनिर्मितम् ।
देवः कपर्दी प्राहेदं बृहद्बुद्धिं बृहस्पतिम् ।।४२।।

वाचस्पते गिरिव्यूहं पश्य शुक्रेण निर्मितम् ।
शृङ्गवन्तं दरीवन्तं हिमवन्तं यथा गिरिम् । ।४३ । ।
लोकान् सजलपातालान् सविष्णून्४२ सपितामहान् ।
ग्रसेदेष गिरिव्यूह४३ उपेक्षा क्रियते यदि४४ ।।४४। ।

३७ कुभम् - ख., बलं - घ. । ३८ शुंभं च पवनं यक्षं - घ., भावयच्यं - ख, सावपत्यं - क । ३९ पिल्वकं - क., पिण्वक - घ. । ४० दैतेयान्दनुजांस्तथा - क. । ४१ संधितम् - क । ४२ सविष्णुं - क. । ४ । गिरिव्यूहो - क. ख. । ४४ उत्क्षेपः - ख., यदि चायमुपेक्ष्यते - घ, यद्युपेक्षेत सांप्रतम् (?) ।


नैनं देवा न गन्धर्वा न नागा न नगास्तथा ।
शक्नुयुर्भेत्तुमुद्युक्ता विनैतान् गणनायकान् । ।४५ । ।
गिरिव्यूहस्य विप्रेन्द्र नान्यं४५ पश्यामि भेदनम् ।
वज्रव्यूहमृते धीमन् सर्वव्यूहभिदं महत् । ।४६। ।
स त्वं ब्रह्मविदां श्रेष्ठ गिरिव्यूहविदारणम् ।
वज्रव्यूदहं कुरुष्वाद्य प्रमथायुतसंवृतम् । ।४७ । ।
शम्भुना चैवमुक्तस्तु ब्राह्मणेन्द्रो४६ बृहस्पतिः ।
वज्रव्यूहेन तं४७ व्यूह प्रत्यव्यूहत्तदा४८ नवम् । ।४८ । ।
बाहुजान् बहुसाहस्रान् भक्ताँश्चैव४९ गणाधिपान् ।
वज्रव्यूहस्य मध्ये वै स्थापयामास बुद्धिमान् । ।४९। ।
स्कन्दस्य पार्षदैः शूरैः सुरासुरनिघातिभिः ।
सहस्र पर्वणां तस्य वज्रव्यूहस्य निर्ममौ५० ।। 8.132.५० । ।
कोटिं कोटिप्रवीराणां प्रमथानां प्रहारिणाम् ।
वज्रधारासु सर्वासु स्थापयामास स द्विजः । ।५१ । ।
कुमारञ्च विशाखञ्च शाखं छागमुखं तथा ।
चकार सोऽङ्गिरा देवो वज्रव्यूहस्य कुड्मलम् । ।५२ ।।
कुड्मलाग्रे चतुर्बाहुः कपीन्द्रवदनोरिहा ।
स्थितो वज्रोद्यतकरो नन्दी दिनकरप्रभः । । ५३ । ।
कुण्डोदरं नन्दिषेणं५१ घण्टाकर्णं महोदरम् ।
पश्चार्धे तस्य वज्रस्य कुड्मलं सन्न्यवेशयत्५२ । । ५४। ।
सोमनन्दी तु तस्याग्रे व्याघ्रवक्त्रो गणेश्वरः ।
सार्कचन्द्रायुतप्रख्यः५३ स्थितो वै पट्टिशायुधः५४ ।।५ ५ ।।
रुद्राणां५५ द्वारपालाश्च रुद्रा रुद्रसुताश्च ये ।
इतश्चेतश्च विन्यस्ता वज्रव्यूहाभिरक्षिणः । ।५६ । ।

४५ नान्यत् (?) । ४६ प्राणेन्द्रो च - क । ४७ तद् (?) । ४८ प्रति व्यूहतदा - ( ?) । ४९ रक्तश्चेता - घ, रक्ताँ (?) । ५० निर्मिमौ - क, निर्ममे - घ. । ५१ नन्दिसेन - ख । ५२ सन्निवेशयत् - क, स न्यवेशयत् - ख । ५३ सार्कचन्द्रायुधप्रख्य - क ख । ५४ पट्टशायुधः - क. ख. । ५ ५रुद्राश्च - घ. ।


वज्रव्यूहस्य मध्ये तु रथवर्ये प्रतिष्ठितः ।
तस्थावीशो भव:५६ शर्वः कपर्दी नीललोहितः ।।५७।।
तस्य केतुर्महाञ्छ्वेतो विभातीन्द्रध्वजोपमः५७ ।
मन्दरश्चन्द्रबिम्बेन जुष्टश्रृङ्ग इवाचलः ।।५८।।
शतधारो नैकपर्वा चारुशोभितकुड्मलः ।
वज्रव्यूहो गिरिव्यूहं भेत्तु काम इवाभवत् ।।५९।।
तं दृष्ट्वा निर्मितं व्यूहं देवगन्धर्वगुह्यकाः ।।
साधुसाध्विति वै नेदुर्विस्मयोत्फुल्ललोचनाः ।।8.132.६०।।
अथ गणपबलेषु सिंहनादाः
पणवमृदङ्गमशंखनादमिश्राः५८।। 5 ।।
दितितनयभयप्रदाः प्रवृत्ताः
क्षुभितसमुद्रपयोदनादकल्पाः ।।६१ ।।
इति स्कन्दपुराणे अन्धकमथने व्यूहरचनानाम द्वात्रिंशदुत्तरशततमोध्यायः५९ ॥
सनत्कुमार उवाच

तौ दृष्ट्वा निर्मितौ व्यूहौ प्रमथासुरयोः सुराः ।
विमानकोटिभिः शीघ्रं रुरुधुः सर्वतो नभः ।।१।।
सर्वं तेजोभिराकीर्णं तदम्बरतलं बभौ ।
मेरुकूटवनं रम्यं दह्यमानमिवाग्निना ।।२।।
देवदुन्दुभिशब्दाढ्यं दिव्य१स्त्रीशतसंकुलम् ।
तद्देवमण्डलं भाति यथैवादित्यमण्डलम् ।।३।।
दिव्यपुष्पसमाकीर्णं दिव्यगन्धाधिवासितम् ।
प्रेक्षकैः शतशः पूर्णं खतलं दिव्यमाबभौ ।।४।।

---

५६ तस्थावशोभनः - ख.। ५७ बभौ शत्रध्वजोपमः - क., बभाविन्द्र ... (? ) । ५८ सशङ्खनादमिश्राः - क, ख.। ५९ द्वयत्रिंशो - क. ।
१ दीव्या - क, ।


वादित्राण्यभ्यहन्यन्त जगुश्च सुरगायनाः ।
रम्भाद्या ननृतुश्चापि शुभापाङ्गाः सुराङ्गनाः ।।५।।
अथ वज्रगिरिव्यूहौ परस्परजयैषिणौ ।
समीयतु२ र्महानादै३र्वातोद्धूतौ४ यथार्णवौ ।।६।।
मा त्वरध्वमिति५ प्रोक्ताः६ शुक्रेण सु७महात्मना ।
योधा निवार्यमाणापि चक्रुर्युद्धमसंहतम्८ ।।७।।
ततः शंखाश्च भेर्यश्च पणवा गोविषाणिकाः ।
आडम्बरा डिण्डिमाश्च मण्डूकाः९ पणवा ह्यपि ॥८॥
भेर्यो दुन्दुभयश्चापि मृदङ्गाः किंखरानकाः ।
उभयत्र बले गाढं प्रावाद्यन्त १० सहस्रशः ।९।।
ततः सुरगणैर्नादाः सह गन्धर्वचारणैः ।
कृतास्तूर्यरवं श्रुत्वा प्रमथासुरसैन्ययोः ।।8.133.१०।।
बलयोस्तूर्यशब्देन देवसिंहरवेण११ च ।
मन्दरे रुरुवुर्घोरं सिंहशार्दूलकुन्जराः ।।११।।
तूर्यारसितब्देन तेन तेमितविक्रमाः१२ ।। २ ।।
अभिन्दन्तः स्वकं व्यूहं युयुधुः प्रमथासुराः ।।१२।।
प्रथमे सन्निपाते तु१३ तेषां युद्धे कृतात्मनाम्१४ ।
अभवद् दारुणो रावो हस्तिनामिव गर्जताम्१५ ।।१३।।
देवासुराः करस्थैस्तु आयुधैस्ते१६ सहस्रशः ।
विशेषयन्ति युद्धे स्म१७ परस्परजिघांसवः ।।१४।।
तच्छूलवज्रोपलवृक्षबाण१८ दृढप्रहारातिशयातिहर्षम् ।
विवर्धते पारिषदासुराणां युद्धं युगं तिष्यमिवातिघोरम्१९ ।।१५।।
इति स्कन्दपुराणे गणयुद्धे त्रयस्त्रिंशदुत्तरशततमोध्यायः२० ।

---

पु -घ. ।
२ सीमीयतु - क. । ३ महानादौ - क. ॥ ४ वातोद्वृत्तौ - ख. ॥ ५ तरध्वमिति - क. ।। ६ प्रोच्य (?) । ८ महोत्सवम - क., युद्धोत्सवं महत. - क. ॥ ९ पनुवा (?) - क. ।। १० प्रवाद्यन्त - क. ख. । ११ शंखरवेण -घ. । १२ fस्तिमितविक्रमाः - घ. ।। १३ प्रमथ (प्रथमः) सन्निपातस्तु - क. ।। १४ युद्धोद्ध - (द्य) – ख। १५ गर्जितम् - ख. ।। १६ स्वायुधैस्ते - ख., ...श्च - घ. ।। १७ युद्धे ... - क. ख., १८ बाणं - ख., बाणैर् (?) । १९ युगान्तव्यतिपातघोरम् (?) । २० १८३ - ख. ।


सनत्कुमार उवाच।
संकुले१ वर्तमाने तु प्रमथासुरसैन्ययोः ।
श्रूयन्ते कार्मुकरवाः सिंहनादाश्च दारुणाः ।।१।।
व्याविद्धाङ्गुलयो देवश्चारणोरगगुह्यकाः ।।
नेदुरुद्धूतवस्त्रान्ता युद्धोद्धवकृतस्वनाः ।।२।।
शूरारसितशब्देन तेनोदीरितविक्रमाः ।
चक्रुः कर्माण्यसह्यानि दर्पिताः प्रमथासुराः ।।३।।
असिभिर्व्यायितैश्छिन्नाः पट्टिशैर् भिन्नवक्षसः ।
शरसंकृत्तमर्माणः४ पतन्ति प्रमथासुराः ।।४।।
शिरसा पात्यमानानां बहूनां५ चोरुभिः सह ।

राशयस्तत्र दृश्यन्ते प्रमथासुरसंयुगे ।।५।।
भग्नचक्रा विध्वजाश्च विवरूथा विकूबराः ।
दृश्यन्ते शतशो व्यश्वा हतसारथयो६ रथाः ॥६॥
सपताकाः सकेयूराः सवर्मायुधकेतवः ।
निष्कृष्टदन्तमुशलाः७ पतन्ति गजपुङ्गवाः ।।७।।
शरप्रहाररुग्णाङ्गाश्चामरापीडकोज्ज्वलाः ।
ससादिनो निपात्यन्ते८ हयाः सूर्यहयोपमाः ।।८।।
उद्भ्रान्तैस्तुरगैस्त्रस्तैर्दानवैः सरथैरपि ।
तद्बलं१० प्रबभौ मत्तं भ्रान्तग्राहार्णवोपमम्११ ।।९।।
वासोभिरातपत्रैश्च मुकुटैर्मणिकुण्डलैः ।
हारार्धहारैः केयूरैरङ्गुलीयैः स्रगुत्तमैः ।।8.134.१०।।
कराननैः प्रकृतैश्च१२ चरणैश्च निपातितैः ।
युद्धभूमिर्वृता भाति द्यौर्नक्षत्रैरिवोदितैः ।।११।।
रुधिरास्राववसना नानाभरणभूषणाः ।
रक्तवस्त्रावृतैर्गात्रैर्मही मृत्युरिवाबभौ ।।१२।।

---

१ संयुगे (?) । २ व्यायतश्छिन्नाः - क. ।। ३ पट्टशै - क. ख. ॥ ४ ...वर्माणः - क. ॥ ५ बहूनां - क. ख. ।
६ सारथिनो - क. ।। ७ निकृष्टदन्तमुशलाः - क. । ८ सहसा विनिपात्यन्ते - क., सहसादिनो... - ख. ।,
९ माया - क. १०ख. । तत्कालं - क. ।। ११ । पमाः - क. ।। १२ प्रवृतैश्च - क. ।



अथ वाजिगजौघानां शोणितोदकवाहिनी ।
नदी प्रववृते१३ घोरा यमसादनवाहिनी ।।१३।।
मृगहस्तिखराश्वोष्ट्रमहाग्राहसमाकुला ।
मांसमेदोयकृत्पंका धनुर्ध्वजशतद्रुमा ।१४॥
छिन्नशीर्षोपलशता हस्तपश्चाननोरगा ।
केशशैवालसंछन्ना धनुर्ज्याशततन्तुका ।।१५।।
पाण्डराम्बरहर्षा वै मुकुटाटिकुलाकुला ।
भेरीकच्छपसंकीर्णा१४ वराभरणदर्दुरा ।१६।।
शरमीनसमाकीर्णा१५ खड्गनक्रदुरासदा१६ ।
रथचक्रमहानक्रा गद१७ यादोविलोडिता ।१७।।
विशीर्णहारसिकता१८ कफसंजातफेनिनी१९ ।
रक्तोत्पलानां मालेव कौङ्कुमी स्रगिवोज्झिता ॥१८॥
जिह्वेवोरगराजस्य यमस्याज्ञा इवाद्भुता ।
भयदा भीरुयोधानां शूराणां हर्षवर्धिनी२० ।
प्रवृत्ता२१ रुधिराम्भोभिः स्वर्गलोकवहा नदी ।।१९।।
संरब्धदैत्येन्द्रविवृद्धधूमं२२ नन्दीश्वराग्निज्वलितान्तरालम् ।
बभौ बलं सागरतुल्यनादं विनाशि यद्वज्जगदन्तकाले ।।8.134.२०।।
इति स्कन्दपुराणे गणयुद्धे चतुस्त्रिंशदुत्तरशततमोध्यायः२३ ।
सनत्कुमार उवाच
विवर्धमाने संग्रामे तस्मिन् पारिषदासुरे ।
गिरिव्यूहप्रपातस्थाः१ क्रुद्धा दानवसत्तमाः ।।१।।
ते क्रोधा२च्छूलशक्त्यृष्टि गदावर्षमतन्द्रिताः ।
ववर्षुः प्रमथानीके४ वर्षे जलधरा इव ।।२।।

---

१३ प्रवर्तते - क. ।। १४ संपूर्णा - क. ख. ।। १५ शवमीनसमाकीर्णा - घ. ।। १६ ... नक्रा दुरासदा - क. । १७ सदा - क., गज - घ. ।। १८ सिक्ताङ्गा - ध ।। १९ .. फेनिला - घ. । २० हर्षवर्धनी - क., हर्षवर्धना - ख. ।। २१ प्रकृता - ख. ।। २२ संहृष्टदैत्येन्द्रविवृद्धधूमं - ख. ।। २३ १८४ - ख. ।
१ गिरिव्यूहप्रवातस्थाः - क. ॥ २ क्रुद्धाः - ख. ।। ३ शक्त्य - क. ख. ॥ ४ प्रमथानीकं - क. ।



शस्त्रवर्षण पनतात्ताड्यमाना ह्यनेकशः ।
अचिन्तयित्वा तत्सर्वं युद्धायैव मनो दधुः ।।३।।
मेघाः सस्यानि हि यथा द्विरदाः पादपानिव ।
पृषतानिव शार्दूलाः शरभा इव वारणान् ।।४।।

वज्रा इव यथा शैलान् कालदूता नरानिव ।
विध्नानिव च शान्त्यर्था नथानविनया इव ५ । ५ ।।
भावानिव यथा भावा दोषा दोषान्यथापि च ।
तथा निवातकवचान् 6 शूलशक्त्यृष्टिवृष्टिभिः७।५ ।।
निजघ्नुः प्रमथाः८ शूराः शतशोथ सहस्रशः ।।६।।
शूलनिर्दारितोरस्का मुशलैर्भिन्नमस्तकाः ।
वज्रावघातम्लानाङ्गा९ दानवा: पतिता भुवि ।।७।।
तेषां निनादाः श्रूयन्ते नदतामतिदारुणा: ।
संवर्त्तकानां मेघानां नदतामिव१० सर्वतः ।। ८ ।।
इषुभिर्बहुधा विद्धा भग्नत्रिकककशेरवः११ ।। ९ ।।
चेष्टन्ते१२ ह्यसुरा भूमौ भग्नपृष्ठा इवोरगाः ।।९।।
ततोतिकदनं वीक्ष्य शूरास्तत्र महासुराः ।
निवृत्ताः शतशस्तत्र क्रोधसंरक्तलोचनाः ।।8.135.१०।।
तैर्भृशं१३ प्रमथास्तेपि विद्धा व्यास त्रपान्विताः ।
संमीलिताक्षा वृषभा वर्षं निपतितं यथा ।।११।।
सहन्ते तत्तथा वर्षं१४ प्रमथा दानवेरितम् ।
ते चापि युद्धं तुमुलं कृत्वान्ते१५ पीडितास्तदा ।१२॥
भग्नाः पराङ्मुखा जाता१६ श्छिन्नभिन्नांगसन्धयः ।
तस्मिन् भग्नेथ सैन्ये तु प्रामथे १७ प्रमथोत्तमाः ।।१३।।
दश चक्रुर्महावेगं दशनागशतोपमाः ।
शंकुकर्णश्च बलवान् घण्टाकर्णश्च वीर्यवान् ।१४॥

---

५ .. श्चाविनयानिव - घ. ।। ६ कवचाः - क. ।। ७ शक्त्यष्टिवृष्टिभिः - क. ख., .. रिष्टयः - क. । ८ प्रमथान् - क. । ९ वज्रावपातम्लानाङ्गाः - क. ख. | १० नर्दतामिव(? ). ददाति च - क. ! ११ ... करोरवः (? ) ।। १२ वेष्टयन्ते - ख ।। १ ३ तैरितः - घ. ।। १४ तच्छस्त्रवर्षं (? ) ।। १५ ते - घ. ; १६ भीता - घ. ॥ १७ प्रमथे - क. ख ।


महाकालश्च कालाभो नन्दिषेणश्च विश्रुतः ।
पिङ्गलो लोहिताक्षश्च सोमनन्दी च वीर्यवान् ।।१५।।
विनायकश्च -- - नन्दी च - - - - - ॥
छागः कुण्डोदरः१८ स्कन्दो मयूरवरमास्थितः ।।१६।।
एते सह समुन्नेदुः१९ पयोदा इव साम्भसः ।
विविशुश्चासुरं सैन्यं समुद्रं मकरा इव ॥१७॥
शंकुकर्णहता दैत्या घण्टाकर्णविदारिताः ।
नन्दिषेणशराभ्यस्ता महाकालप्रकालिताः ।।१८।।
कुण्डोदरगदावेगैश्चूर्णितास्त्रविभूषणाः ।
पिङ्गलालोडिता नेशुः२० स्कन्दशक्तिविदारिताः२१ ।।१९।।
मुष्टिप्रहारभिन्नास्यैर२२ स्तलताडितमस्तकैः ।
अपाहस्तप्रहारैश्च२३ क्षिप्यमाणेरितस्ततः ।।8.135.२०।।
विशस्त्रवस्त्रकवचैर्मुक्तमुर्द्धजबन्धनेः ।
प्रभग्नैर्दानवैस्तूर्णं व्यूहभेदो बभूव ह ।।२१।।
भिद्यमानो गिरिव्यूहो विबभौ घोरदर्शनः ।
इन्द्रवज्राहतः पूर्वं यथा विन्ध्यो महागिरिः ।२२॥
भिन्नव्यूहाँस्ततो२४ दैत्यान्२५ प्रमथा जितकाशिनः ।
द्रुद्रुवुः शतशो वृक्षान् पक्वाञ्छकुनयो२६ यथा ।।२३।।
ततः पुनरभूद्युद्धं२७ कोलाहलसमाकुलम् ।
प्रमथानाञ्च शूराणामसुराणाञ्च दारुणम् ।२४।।
सन्निपाते२८ पुनस्तेषां गजानामिव दारुणे ।
नेदुर्देवाः सगन्धर्वाः सिद्धाश्च दिवि हर्षिताः ।२५।।
नानाविधास्तूर्यरवास्ततो दानवपार्षदैः२९ ।।
अश्रूयन्त कृता घोरा मेघानां नदतामिव ॥२६॥

---

१८ छागस्तुण्ड कु .. - क , स्तुकुर्कुट - ख. ।। १९ सहस्रशः समुन्नेदुः - क., वै सहसा नेदुः - घ. ।। २० नेदुः - घ. । २१ तथा (? ), निपातिताः - ख. ।। २२ प्रहन (तिभिन्नाश्यै ) - क ।। २३ अपहस्तप्रहारैश्च (?) । २४ भिन्नव्यूहस्ततो - क. ।। २५ दैत्याः - क. ।। २६ ...स्त्यक्त्वा शकुनयो - घ. ।। २७ व्यावर्त्य लज्जया चक्रुः - घ. । २८ सन्निपातः - क. ॥ २९ ... दो -

क., दानवपर्श्वगैः - ख.


गजैश्च नीलाचलसन्निकाशै रथैश्च गन्धर्वविमानकल्पैः॥
हयैश्च वायुप्रतिमानवेगैश्चरन्ति दैत्याः समरे ह्यभीताः ।२७।।
ते शूलशक्त्यृष्टिभुशुण्डिबाणैः शैलोपलैश्चक्रसशूलवज्रैः ।
अन्योन्यमुत्सादयितुं प्रवृत्ता गणेश्वरा दानवपुंगवाश्च ।२८।।
इति स्कन्दपुराणे गणयुद्धं पंचत्रिंशोत्तरशततमोध्यायः३०

सनत्कुमार उवाच
विरोचनस्तु दैत्येद्रो१ विरोचन इवोदितः ।
विवेश प्रमथानीकं मेघानीकमिवांशुमान् ।१।
मन्दराग्रप्रतीकाशमीषादन्तं क्षरन्मदम् ।
चतुर्दन्तं समास्थाय दन्तिनं दन्तभूषितम् ।।२।।
स नागस्कन्धगस्तत्र भ्राजतेसुरपुंगवः ।
उदयाग्रं समास्थाय सहस्रांशुज्वलन्निव ।।३।।
तोमरैः सशरैश्चापि दिवाकरकरप्रभैः ।
प्रमथानपतस्तार शतशोथ सहस्रशः ।।४।।
वैनतेयो यथा नागान् सिंहो गोवृषभान् यथा ।
द्रावयामास प्रमथान् तथा शूरो विरोचनः ।।५।।
यान्तमायान्तमप्राप्तं प्राप्तं दूरस्थमेव च ।
प्रमथं पश्यते यं यं तं तं दारयतेऽसुरः ।।६।।
मृगाः सिहं यथा दृष्ट्वा गरुडश्च यथोरगाः ।
विरोचनं तथा४ दृष्ट्वा प्रमथा दुद्रुवुर्भयात् ॥७॥
गणेश्वरबलं दृष्ट्वा गणेश्वरवरो द्रुतम् ।
विनायकः सन्निवृत्तः प्रमथानीकनायकः ।।८।।

---

३० १८४ - ख. !
१ देत्येयो - क. । २...वतस्तारः - ख. ।। ३ वारयते - ख. ।। ४ यथा - ख. ।


प्रसारयन् करं घोरं पूर्वमैरावतो यथा ।
विरोचनं५ सोभ्यधावच्छार्दूलो हरिणं यथा ।।९।।
तमापतन्तं संवीक्ष्य तीक्ष्णदन्तं गजाननम् ।
कुम्भान्तरे तोमरेण६ दारयामास दानवः ।।8.136.१०।।
तं तोमरं कराग्रेण निष्कृष्य स विनायकः ।
हस्ता क्षिप्तेन७ तेनैव विरोचनमदारयत् ।।११।।
स तोमरेण निभिन्नः करघातातुरश्च ह ।
चचाल विह्वलो रक्तं चक्षार च विरोचनः ।।१२।।
घूर्णमानं तदालक्ष्य दानवेन्द्रं विरोचनम् ।
दन्ताभ्यां चन्द्रशुभ्राभ्यां निर्बिभेद विनायकः ।१३।।
वैनायकं तत् समीक्ष्य कर्म देवाः शशक्रा मुमुचुः प्रणादान् ।
तस्योतमाङ्गोपरि पुष्पमाला पपात देवस्य यथा त्रिमार्गा9 ।।१४।।
तया तु नानाविधपुष्पवत्या विभाति देवः स तदा स्रजा रणे ।
नक्षत्रमालावलिचारुशोभः१० समुन्नतो मेरुरिवापरः स्थितः ।।१५।।
उद्भिन्नरक्तं तु विदार्यमाणं विरोचनं वीक्ष्य विनायकेन ।
जम्भोम्बुदाभीतुरमारसित्वा११ दुद्राव मा भैरिति१२ भाषमाणः१३ ।।१६।।
तमापतन्तं बहुधा नदन्तं जम्भं वियन्मेघमिवाप्रमेयम् ।
रुरोध नन्दी समताडयच्च वज्रेण वज्री कुपितो यथाद्रिम् ।।१७।।
स वज्रघाताच्छिथिलः क्रियासु व्यसुर्यथा१४ दानवदेवपुत्रः ।
पपात भूमौ मुहुरुत्थितश्च घृतावसिक्तः सदसीव वह्निः ।।१८।।
जम्भेवसन्नेरिबले प्रसन्ने षड्१५ दानवाः षण्मुखपूर्वजं तम् ।

कुठारशूलासिपरश्वधैस्तु म्लेच्छा यथा क्रुद्धमुखास्ततक्षुः ।१९।।
विनायकस्तैरवतक्षितस्तु प्रह्लादिदेहात्१६ प्रविकृष्य दन्तौ१७ ।
मुमोच तं वै रुधिरावसिक्तं राहुर्विवस्वन्तमिवार्धभुक्तम्१८ ।।8.136.२०।।

५ वैरोचनं - क. ।। ६ तो रणन - वि. ।। ७ करेण हत्य (?), हस्तेनाक्षिप्य (?) । ८ तस्योत्तमाङ्गे बहि - क. व., .. माङ्ग प र ? [ा ल (?) । ९ त्रि पागति? - ख । १० ... चारुशोभाः - क. । १ ! त् rर (?). .. मारशिप (?) । । २ भी रति - क. ! १३ भाष्य पाणः - क. ।। १४ ... व्यसुर्यथा - क. ख. । १५ ते - . (क. fिट. ) ।। १६ अह्रो ददे ई { - क., प्राह्लादिदेहात् (?) । १७ दन्ते - ख. ।
१८ ...विभास्वन्तमिवार्धभुक्तम् - क. ख. ।


स तेन मुक्तोतिरुजावृतश्रीर्विरोचनो नातिबभौ मनोज्ञः ।
मेघाभिरुद्धो१९ नवमेघकाले संपूर्णबिम्बो२० नभसीव चन्द्रः ॥२१॥
विनायकाभान्स विनायकस्तु षड् दानवान् षण्मुखसन्निकाशः२१ ।
विशालदन्ताशनिसंप्रहारैर्व्यथैद्रावयत् सिंह इव द्विपेन्द्रान् ।।२२।।
करीन्द्रवक्त्रः करमुच्छ्रयित्वा करी सुराणामिव जातदर्पः ।।
प्राकालयद्२२ दानवपुङ्गवाँस्तान् यथा गजान् दर्पितसिहपोतः ।२३।
सिंहेक्षितानामिव गोपतीनां२३ कालेक्षितानामिव मानवानाम् ।
विनायकेनेक्षित कालितानां२४ भयं तदासीन्मिषतां२५ बलानाम् ।२४।।
यतो यत: प्रेक्षति वै स देवो हस्तीव हस्तं स्वकमुच्छ्रयित्वा२६ ।।
ततस्ततो दैत्यबलं प्रभग्नं चण्डानिलेनेव वनं सपुष्पम् ।२५।।
दृष्ट्वा बलं तद् बलिनाभिभूतं बलेः सुतोसौ बलिनां वरिष्ठः ।
विनायकं हन्तुमनाः ससार मत्तं रणे मत्त इव द्विपेन्द्रः ।२६।।
तमापतन्तं तपनाभिवेशं क्रुद्धं रणे कालमिवातवापम् ।
ससार रोद्धुं समरे च योद्धुं कुण्डोदर: सिह इवान्यसिंहम् ।२७।।
तौ सिंहपोताविव जातदर्पौ प्रकीर्णहस्ताविव हस्तिपोतौ ।
समागतौ युद्धरसाभिमत्तौ कुण्डोदरो वै २७ बलिनन्दनश्च ।२८।।
शतानि पंचैव स कार्मुकाणां विकृष्य वज्राशनिनिस्वनानाम् ।
कुण्डोदरायेषुवरान्२३ ससर्ग गर्जन् स बाणस्तु यथा पयोदः ।२९।।
तानागतां३०स्तीक्ष्णमुखांस्तदानीं बाणस्य बाणान् कुपिताहिकल्पान् ।
कुण्डोदरः शैलरुहेण३१ सर्वान् मनोरथान् विघ्न इवाजघान ।8.136.३०।।
तान्निष्फलान् प्रेक्ष्य३२ शरान् सुरारिः सुरेतरारिप्रहतान् क्षितिस्थान् ।
शक्त्या स कुण्डोदरमाजघान शक्तया गुहः क्रौञ्चमिवाचलेन्द्रम् ।३१।।
वक्षः प्रदेशात्तु गणेश्वरस्य बाणस्य शक्तिः क्षतजं पपौ सा ।
शक्रोपनीतं रुचिरं सुगन्धि३३ यथामृतं वज्रधरस्य भार्या ।३२।।

१९ ... भ्ररुद्धो - क. ख. ।। २० संपूर्णबिम्बे क। २१ सन्निकायः - ख. । २२ प्रकालयद् - क ख , प्रकालयन् - ख. ।। २३ (ह) स्तिनीनां (?) । २४ कालिकान्तं - ख. ।। २५ विद्विषतां (?) । २६ प्रविशार्य सर्वशः - घ ।। २७ ... सौ - घ ।। २८ कार्मुकानां - क. ख. ।। २९ कुण्डौदरायेषुवरान् - क. । ३० नानागणां - क. ।। ३१ शैलवरेण - थ. ॥ ३२ वीक्ष्य - ख. ।। ३३ सुगन्ध - क ख. ।


शक्तिप्रहाराभिहतस्तु यक्ष:३४ कुण्डोदरोदर्दरमन्दराभ:३५ ।।
पपात संज्ञां विपुलां प्रहाय दावाग्निना दग्ध इवोच्चवृक्षः ॥३३॥
कुण्डोदरं तन्निहतं समीक्ष्य विनायकोसौ च्युतपद्ममालः ।
दुद्राव बाणं प्रति हन्तुकामः करीव भृङ्गारकरोच्छ्रयेण३६ ।।३४।।
तमानने वज्रनिभाननैः शरैर्विनायकं ह्याततमेव बाणः ।
बिभेद भित्वा च ततो ररास३७ ग्रीष्मव्यपाये नभसीव मेघः ।॥३५॥
तृणाग्रपातानिव सेषुपातानचिन्तयित्वैव गजेन्द्रवक्त्रः ।
ईषेष३८ नेत्रं३९ सवरूथचक्रं बभञ्ज बाणस्य रथं ससूतम्४० ।३६।।
बाणस्य वाहान् तु तमारुजन्तं४१ विनायकं भूमिगतं यथेभम् ।
सिंहीसुतः सिंह इवाभिपत्य स बाहुपाशेन बबन्ध राहुः ।३७॥
स राहुणा बहुयुगावबद्धो४२ विनायक: सर्पसहस्रमालैः ।
प्रस्पर्दन्त४३ भ्रामितपुष्कराग्रो गजस्तरन् देवनदीं यथैव ।३८।।
तं राहुबाहुप्रतिबद्धचेष्टं विनायकं वीक्ष्य तदा दिविस्थाः ।

देवाः सशक्राः सह यक्षसिद्धैर्हाहेति हाहेत्यसकृद्विनेदुः ।।३९।।
कुण्डोदरो यक्षवरस्तु सोथ आश्वस्य सस्यं हि यथाम्बुसिक्तम् ।
कुठारमादाय जघान राहुं जत्र्वन्तरे संहतमुष्टिना च ॥8.136.४०॥
कुठारघातात् स तु मुष्टिना च दृढाहतो यक्षवरेण राहुः ।
विनायकं भीमबलो मुमोच शुभेतरं कर्म यथा कुलीनः ।४१।।
तं वै परावृत्य करीव मत्तो गजाननः काननषण्डवासी४४ ।
पद्भिश्च दन्तैश्च जघान राहुं प्रकीर्णहस्तेन च भीमहस्तः ।४२।।
विनायकेनाभिहतस्तु राहुर्दर्पञ्च गर्वञ्च बलञ्च हित्वा ।
निस्तोयमेघप्रतिमोमरारिः स्थितो यथा सिंहहतो गजेन्द्रः ।४३।।
राहौ तु४५ कुण्डोदरमुष्टिघातै४६र्विनायकेनैव च पीडयमाने ।
कुजम्भसंह्लादमयाः सतारा हुण्डस्तुहुण्डश्च तदा तमीयुः४७ ।४४।।

---

३४ . स्रा तेन - घ. । । ५ मन्दरदर्शनाभः - घ. ।। ३६ श्रृङ्गाग्रकरोच्छ्रयेण (? ) ।। ३७ ररास तत्र - घ. । ३८ इयेष - क. ख. ।। ३९ नेतुं - ख. ।। ४० सयन्तृ - क. ख. ।। ४१ द्रुतमारुजन्तं - ख. । ४२ बुद्धो - क., न (?) । ४३ प्रस्पदन्ते - क. ख. ॥ ४४ ...वासः - ख. ॥ ४५ राहुस्तु - क. । ४६ मुष्टिपातै - क ।। ४७ तु - क. ख. ।


मयस्तु कुण्डोदरमाजघान शूलेन तारो मुशलेन कुक्षौ ।
बलस्तु लम्बाम्बुदसन्निकाशं तं ४८ मुष्टिना वज्रनिभेन चापि ।।४५।। हिरण्यनेत्रावरजात्मजश्च विनायकं भीमबलं तलेन ।
तस्यात्मजश्चापि जघान रोषात् स चापि गत्वा बलवाँस्तुहुण्डः ।४६।।
विनायकस्तं तु तदा गृहीत्वा करेण विक्रम्य तुहुण्डमाजौ ।
आाक्षिप्य चोत्क्षिप्य ४९ च भीमवेगश्चिक्षेप दूरं यमदूतकल्पम्५० ।४७। ।
प्रह्लादमाहत्य ततः स देवो मयश्च मत्ताञ्जनतुल्यवक्षाः ।
उत्पाट्य तं घोररवं ननाद शुभ्राम्बुपूर्णो नभसीव मेघः ।।४८।।
कुण्डोदरश्चापि बलं सतारं कुजम्भमाहत्य५१ च यक्षवर्यः ।
उभौ रणस्थौ५२ गजयूथपालौ५३ व्याधूतमालौ५४ भृशजातकोपौ ॥४९॥
ससर्जतुस्तौ५५ शरवृष्टिमुग्रां यथाम्बुवृष्टिं जलदौ सनादौ ।
ततः पुनश्चायुधसर्जगनि५६ पयोदविस्फूजितगजितानि५७ ॥
बलानि तान्यासुरपार्षदानां संसक्तभावं परमं गतानि ।8.136.५०।।
इति स्कन्दपुराणे गणयुद्धे षट्त्रिंशदुत्तरशततमोध्यायः
सनत्कुमार उवाच
ततो व्यतिकरो भूयः पार्षदासुरसैन्ययोः ।
संबभूवोदधिक्षोभान्मकराणामिवाद्भुतः ।।१।।
पट्टिशासिधनुष्मन्तो१ विद्युत्वन्त इवाम्बुदाः ।
विबभुर्दानवास्तत्र प्रमथाश्च युयुत्सवः ।।२।।
सहस्व प्रहरस्वेति नश्य नष्टस्त्वमित्यपि ।
तेषामेवं प्रवदतामश्रूयन्त गिरो मुहुः ।।३।।

---

४८ सन्निकाशस्तं - ख. ।। ४९ सोत्क्षिप्य - क. ख. ।। ५० यमदूतकल्पः - ख. ।। ५१ कुभञ्जमाहत्य - क. । ५२ रणस्ते (स्थो - ख. ॥ ५३ गजयूथपालो - ख. ॥ ५४ व्याधूतमालो - ख. ॥ ५५ तुष्टो - ख. । ५६ पुनस्त्वायुधसर्जनानि - ख. ।। ५७ नादितानि - घ. ।
१ पट्टशासिधनुष्मन्तो - क. ख. ।


शूलैस्त्रिशूलैश्चक्रैश्च हुण्डैर्लगुडकम्पनैः२ ।
भिन्दिपालैः करसमैः प्रसृतैर्निखरैरपि ।।४।।
टंकैः कटंकटैः प्रासैः पाशैः३ परशुपट्टिशैः ।
द्रुमोपलशिलाघातैर्गिरीणां शिखरैरपि ॥५॥
एतैः प्रहरणैस्ते वै सूदयन्ति परस्परम् ।
घण्टाकर्णोहमसुर जम्भोहं प्रमथेश्वर ॥६।
सोमनन्द्यहमिन्द्रारे कुजम्भोहं गणाधिप ।
बिल्वकोहमहं४ यक्ष पिङ्गलो नाम दानव ।७।।
प्रह्लादोहमहं नन्दी शंकुकर्णो बलो५ ह्यहम् ।
त्वं कः कुण्डोदरोहं वै वृत्रोहं६ कुण्डकोदर ७ ।।८।।

नन्दिषेणोस्म्यहं शंभुर्महाकाल८ मयो ह्यहम् ।
विशाखोहं बलिरहमहं बाणो गुहो ह्यहम् ।९।।
प्रह्लादोहमहं९ शाखो१० नैगमेषोहमन्धकः११ ।
इत्येवं दानवानां च प्रमथानां च भैरवा:१२ । 8.137.१० ।।
दर्पोद्रिकादधिक्षेपाः१३ श्रूयन्ते युध्यतां रणे ।
गजानामिव मत्तानां मेघानामिव चागमे ।११।
भिद्यतामिव१४ शैलानां समुद्राणां क्षयेष्विव ।
प्रलयान्तेषु महतां वायूनां जवतामिव ।।१२।।
तेषामासीन्महाञ्छब्दः परस्परनिजघ्नुषाम्१५ ।।
ब्रह्मदण्डप्रतीकाशैर्यमदण्डनिभैरपि ।
आायुधैस्सूदयन्ति स्म तेन्योन्यकुपिता१६ भृशम् ।।१३।।
वज्राणामिव शैलेषु वंशानामिव१७ दह्यताम् ।
अभूच्चटचटाशब्दः शस्त्राणां पात्यतां१८ तदा ॥१४॥

---

२ हलैर्लकुल... - ख. ।। ३ कण्णैः - ख. ॥ ४ पिल्वलोहमहं - ख. । ५ बले - क. । ६ वृतोहं - ख. ॥ ७ कुण्डको दरः - क.ख., ८ महाकायो - ? , य (?) । ९ संह्रादोहमहं (?) । १० शम्भो - ख. ।। ११ ... मप्युत - घ. ।। १२ दारुणाः - क. (? ), बभौ रव: - घ. ।। १३ अधिक्षेपा: (?) । १४ विध्यतामिव - ख. ।। १५ शस्त्राणां पात्यतां तदा - ख., विजघ्नतां - घ. ।। १६ क्षुभिता: - घ. । १७ वेणूनामिव - क. (?) । १८ पततां - घ. ।


गणेश्वरविमुक्ताभिः शक्तिभिः सुदृढाहताः१९ ।
निपेतुरारसन्तस्ते२० सोल्का इव यथा घना:२१ ।।१५।।
द्रुमप्रहारभग्नाङ्गा गदाचूणितसन्धयः ।
दानवा निपतन्त्युर्व्यां वाजिनश्च्युतजीविताः ।।१६।।
छिन्नध्वजपताकेषा भग्नाक्षयुगकूबराः ।
विध्वस्तास्तत्र दृश्यन्ते विमानप्रतिमा रथाः ।।१७।।
मातङ्गैश्च तुरङ्गैश्च स्यन्दनैश्चावचूर्णितैः ।
विन्ध्याक्रान्तेव सा भूमिर्दुर्गमा समपद्यत ।।१८।।
तत्र देवा: स गन्धर्वाः सयक्षोरगकिन्नराः ।
उत्क्रुष्टवरशब्दाढयं चक्रुः सुबहुशोम्बरम् ।।१९।।
दिव्यानां सुविचित्राणाममृतोपमगन्धिनाम् ।
वर्षं पपात पुष्पाणां युध्यन्ते यत्र२३ ते रणे २४ ॥8.137.२०॥
तथा तु ते गजघननादगर्जनाः२५ शरासिशक्त्यृष्टि२६ गदाविसर्जनाः ।
परस्परं युयुधुरतीव संहता२७ दितेः सुताः प्रमथगणाश्च दर्पिताः ।।२१।।
इति स्कन्दपुराणे गणयुद्ध सप्तत्रिंशोत्तरशततमोध्यायः
सनत्कुमार उवाच
ताम्यमानेषु१ दैत्येषु दैत्ययूथपयूथपाः२ ।
चक्रुर्वेगं महावेगा युगान्तेष्विव सागराः ।।१।।
प्रह्लादश्चानुह्लादश्च संह्लादः शिनिबाष्कलौ ।
प्रह्लादस्य च ये पुत्राश्चत्वारो भीमविक्रमाः ।।२।।
बलिर्बाणश्च वातश्च शम्भुः कार्तस्वन: कुभः ।
करभो४ नमुचिस्तारस्तारकश्चेन्द्रतापनः५ ।।३।।

---

१९ प्रासतोमरैः - घ. ।। २० रारसन्तो वै - क. ख. । २१ घनाघनान् - (ना:?) - घ. ॥ २२ खरशब्दाढयं - क. ॥ २३ तत्र - क. ।। २४ तोरणे - ख. ।। २५ गर्जिताः - क. ॥ २६ शरर्ष्टिशक्त्यसि - (? ) ।। २७ संकटे (टा) - क. ख. । १ नाम्यनानेषु - क., नाश्य... - घ. ।। २ अन्ये दैत्या महारथाः - घ. ।। ३ शुभः - क. ।। ४ शरभो (?) । ५ ...स्सेन्द्रतापनः - क्र, ख. ।


अञ्जनो रूषणो व्यंसो गविष्ठः पृथिवीञ्जय:५ ।।
इल्वकः पिल्वकश्चैव धुन्धुर्मूकश्च दानवः ।।४।।
खरो९ मुरोथ१० नरकः केशी धेनुक एव च ।
लम्बः प्रलम्बो ह्यजरो११ भावयव्योममार्दवा:१२ ।।५।।
वृषपर्वा शतावर्तो गवाक्षो गोमुखस्तथा ।
सरो१३ निसुन्दः सुन्दश्च महाबलपराक्रमाः ।।६।।
पाको विपाकः सन्तापो१४ हस्ती दुर्योधनस्तथा ।

मोहनो मथनश्चापि सचक्रश्चक्र एव च ।।७।।
कालकावदनः कालः कालनेमी१५ कलिद्रुम:१६ ।।
ह्यशीर्षश्चेन्द्रशिरा१७स्त्रिशिराः शंकुरेव च ।।८।।
तथा गगनमूर्धा च अविरोमा महामन:१८ ।
असिलोमा तुहुण्डश्च हुण्डो वृत्रश्च दानवः ।।९।।
दशग्रीवश्च बालिश्च मेघनीलः१९ प्रभाकरः ।
यश्चादित्यरथाच्चक्रं जहार बलदर्पितः ।।8.138.१०।।
स विप्रचित्तिः सबलः सन्यवर्तत दंशितः(?)२० ।
एते चान्ये च दितिजाः समदास्ते गजा इव ।।११।।
चक्रुरुत्साहमुत्सर्तुं२१ प्रमथ्य प्रमथान्२२ रणे ।
आामिषार्थे२३ यथा सिंहा वासितार्थे२४ यथा गजाः ।।१२।।
दानवा विविशुस्तद्वत् प्रमथान् संजिघांसवः ।
तेषामापततो वेगो भीमोभूद्देवविद्विषाम्२५ ।
सनक्रमकरो घोरो वेगः सिन्धुपतेरिव ।।१३।।
ते वै शस्त्रोपलशिलापादपाशनिपाणयः ।
प्रमथैरुद्धतै रुद्धा नदीवेगा इवार्णवैः२६ । १४ ।।

---

६ गविष्ठः - ख., गविजः - क. ।। ७ पृथिवीजयः - क. ।। ८ इल्वलः - खः । ९ सुरो - ख., १० वै - क. । ११ ह्यजकी - घ. ।। १२ ...श्च प्रमर्दनः - घ., मार्दवः - क. । गर्वेवरोथ - घ. । १ ३ खरो - घ. । थेन्द्रशिरा - व्क , हयशिरो - ख. । १४ सन्तापी - घ. ।। १५ कालनेमिः - घ ।। १६ द्रुमाः - घ. । १७ हय:शिरो – ख १८ महामनाः (?) । १९ नीलमेघः - घ. ।। २० दंशिताः - घ. । २१...मत्यर्थं - ख. ।। २२ प्रमथाः - क., प्रमथो - ख , प्रमथ - घ , प्रथमं - (?) ।। २३ आमिषार्थ - क. ख. । २४ वासितार्थं - क. ख. ।। २५ देवतारिणाम् - क. ख, देवताद्विषाम (?) । २६ इवार्णवे (?) ।


गणेश्वराधिपो नन्दी महाकायश्च२७ वीर्यवान् ।
घण्टाकर्णः शंकुकर्णः कुण्डोदरमहोदरौ ।१५।।
नन्दिषेणः सोमनन्दी करिकश्च गणेश्वरः ।
विघ्नो विनायकश्चैव स च सर्वविनायकः२८ । ।॥१६ ।।
पिङ्गलो लोहितश्चैव मयूरः कुक्कुटोपि च ।। ६ ।।
पञ्चाक्षो वीरभद्रश्च विट्पतिः पावकार्दनः ।।१७।।
अदित्याप्यायनश्चैव सोमाप्यायन एव च ।
समुद्राप्यायश्चान्यः पावकाप्यायनस्तथा ।।१८।।
वरबर्हिध्वजश्चैव विशाखः शाख एव च ।
नैगमेषश्च बलवान् रुद्रवीर्यपराक्रमा:३० ।।१९।।
बाहुलेयोद्भवा३१ ये च प्रमथा भीमरूपिणः ।
तेभ्र्ययुर्दानवान् युद्धे वृषभा वृषभानिव ।।8.138.२०।।
तेषां तेषांञ्च संग्रामस्तुमुलः समपद्यत ।
अजने३२ गन्धहस्तीनां (?) शरभैरिव दारुणः ।।२१।।
महागजैरिव गजाः पर्वतैरिव पर्वताः ।
सागराः सागरैर्यद्वत् पावकैरिव पावकाः ।।२२।।
तथा३३ सुरा जातदर्पाः क्रोधवैश्वानरावृताः ।
धृताः पारिषदैः३४ शूरैर्विघ्ना धर्मपरैरिव ।।२३।।
टङ्कैर्विदार्यमाणानि गिर्यग्राणि समन्ततः ।
गृध्रचक्रायमाणानि३५ पतन्त्युर्व्यां सहस्रशः ।।२४।।
चक्राणि चक्रै च्छिद्यन्ते शूलैः शूला विदारिताः ।। ६ ।।
इषुभिश्चेषवो विद्धाः पतन्ति भुजगा इव ।। २५ ।।
वदनैश्चन्द्रपद्माभैः करैश्च परिघोपमैः ।
आास्तृता मेदिनी भाति व्याघचर्माम्बरैरिव ।।२६।।

---

२७ महाकालश्च - ख. ॥ २८ दर्प्पविनायक: - क. ।। २९ ह्यपि - क. ३० पराक्रम: - क. । ३१ बाहुलोमोद्भवा - क., बहुलासोदरा - घ. ।। ३२ अयने - क., अजले - घ. ॥ ३३ तेषां - ख. । ३४ विवृताः पार्षदै - घ. ।। ३५ चक्रोपमानानि - घ. ।। ३६ विरेजिताः - ख ।


मेदो मज्जास्थिपङ्काङ्कं३७ केशकश्मलसंकुलम्३८ ।

बभूवायोधनं घोरं श्मशानवनसन्निभम् ।।२७।।
हया गजा रथाश्चापि दानवानां गणेश्वरैः ।
संचूर्णिताः प्रदृश्यन्ते तत्र तत्र महीतले ।२८।।
परीक्षणीय३९स्समितौ त्वमद्य सुरेतराणां सुरराजशत्रो४० ॥२९॥
नन्दिन्यथैवं ब्रुवतीन्द्रकल्पे४१ शक्रेन्दुवायु४२ प्रतितुल्यवीर्यः४३ । ।
बद्ध्वा त्रिशाखां भृकुटीं ललाटे स नन्दिनं प्राह तदा४४ कुजम्भः ॥8.138.३०॥
वानरानन किं वाग्भिर्मां भीषयितुमिच्छसि ।
हिरण्यकशिपोः पौत्रो४५ नाहं प्राकृतदानवः ।।३१।।
यमात्सदण्डाद्वरुणा त्सपाशादिन्द्रात्सवज्रात्सगदाद्धनेशात्४६ ।
नाहं४७ रणस्थो भयमाहरामि भयन्न दैत्येषु पलायितं वा ।।२३।।
अद्येह ते४८ पिङ्गललोलनेत्रं मुखं त्वपात्र४९ विकृता५० मनोज्ञम् ।
मद्बाणलूनं पततामवन्यां तालाद्यथा तालफलं सुपक्वम् ॥३३।।
इत्येवमुक्त्वा शरजालवृष्ट्या नन्दीश्वरं दानवराजमेघः५१ ।
सिंहो यथातीव विमुच्य नादं प्राच्छादयन्५२ मेघ इवाचलेन्द्रम् ।३४।।
तरुं यथा पक्वफलं शकुन्ता वल्मीकमुच्चं भुजगा इवोग्राः ।
तथा शरा दानवराजमुक्ता नन्दीश्वरं दीप्तमुखा५३ विशन्ति ॥३५॥
वज्रेण वज्री स तु ता५४ञ्छरौघान् शैलः पयोधानिव५५ सन्निवार्य ।
कुजम्भमुद्दिश्य मुमोच वज्रं ननाद चोच्चेर्नभसीव मेघः ।।३६।। तद्विस्फुलिङ्गोद्गतघोररूपं समाहताराववमुक्तरावम् ।
वज्रं प्रधावत्यसुरं निहन्तुं गिरिं यथा देवतराजवज्रम् ।३७।।
तद्वत्सदन्तैः सुविपाटवस्तैः५६ समीपगैर्दिग्धविकर्णिभिश्च५७ ।
जघान वज्रं शतधा५८ कुजम्भः संवर्त्तकाग्निं समयेव५९ मेघः ।।३८।।

---

३७ मेदोमांसास्रगापूर्णं - घ. ।। ३८ शाद्वलसंकुलम - घ. ।। ३९ निरीक्षणीय - क. ।। ४० तिष्ठ त्वरेणासुरराजशत्रो - घ ।। ४१ ... कल्पः - क. ।। ४२ शक्रेन्द्रवायु - क. ।। ४३ वेगान् - ख., पुत्र - घ. । ४४ तथा - क ।। ४५ पुत्रो - क. ख । ४६ धनेशT: - क ।। ४७ ... न्नाहं - क. ! ४८ अद्याह (वे) - ख । ४९ नवात्रा - घ. ! ५० विकृतं - घ ।। ५१ ... राजमेघं - क. । ५२ प्रच्छादयन् - क. ख. । ५३ दीपमुखं - ख. ।। ५४ वज्रीशहता - घ. ॥ ५५ पयोदानिव - ख. ॥ ५६ सविपाटवस्तैः - ख । ५७ .. दिर्ग(वीर्घ?)... - क. ।। ५८ स तदा - घ ।। ५९ स यथैव - घ. ।



तद्बाणवेगप्रहतातिवेगं शैलादिनिर्मुक्तममोघवेगम् ।
वज्रं कुजम्भाभिहतं निवृत्तं दत्तं६० यथोन्मादविकारदत्तम् ।३९।।
विष्टम्भितं वज्रवरं निशाम्य निशाम्य नादश्च कुजम्भमुक्तम् ।
ससार नन्दी कुपितो रिपुं तं राहुर्यथा वे खतले तमोन्घ्रम् ।8.138.४०।।
बलात्स संगृह्य रथं करेण ईषावराग्रे६१ प्रमथेशपालः ।
आक्षिप्य चिक्षेप ससूतवाहं क्षिप्त्वा च भूयस्स ररास घोरम् ।४१।।
संभ्रान्तवक्रः सविसन्धिताश्वः६२ प्रभ्रष्टसूतासिशिरोग्रनेमिः६३ ।।
कुजम्भवाहः खतलात् पपात गिरिर्यथा वज्रनिकृत्तपक्षः ।४२।।
तस्माद्रथान्नन्दिगजप्रनुन्ना६४दपेत्य६५ प्रह्लादिरदीनसत्वः ।
शक्तिं समादाय६६ न दीनसत्वस्तस्थौ सविद्युत्सरवो यथाब्दः ।४३।।
तां सर्पजिह्वामिव लेलिहानो मृत्युं क्षुधार्तामिव भोक्तुकामाम् ।
शिखां महाग्नेरिव दीप्यमानां स नन्दिने सं६७ प्रमुमोच जम्भः६८ ।।४४।।
सा शक्तिरिन्द्रारिभुजप्रमुक्ता उग्रातिदीप्ताङ्गिरसीव कृत्या ।
अभ्याहता नन्दिमुखानलेन दग्धा पतङ्गीव यथानलेन ।४५॥
शक्तिं स दग्ध्वा वदनानलेन कपीन्द्रवक्त्रस्तपनप्रभावः ।
वज्रेण तं सत्वरमाजघान वज्रेण मेरुं भगवानिवेन्द्रः ।४६।।
स वज्रघातादवचूर्णितस्थिः संशीर्णदन्तेक्षणभग्नजानुः ।
कुब्जः कुजम्भो निपपात भूमौ शक्रेण वज्राभिहतो यथाद्रिः ।४७।।
तस्मिन् हते देवगणा विनेदुः सेदुः६९ सुराणामरयश्च दैन्यात्७०
।
भूताधिपं भूतपतिश्च देवं७१ प्रपूजयामास शाशाङ्कचिह्नम्७२ ।४८ ।।
इति स्कन्दपुराणे गणयुद्ध जम्मवधे अष्टत्रिशदुत्तरशततमोध्यायः

---

६० दानं - क. ।। ६ १ ईशा - क. ख. ।। ६२ प्रविसन्धिताश्वः (? ) ।। ६३ प्रन (ण) ष्टसूतांसि - ख. । ६४ प्रतुन्ना - ख ।। ६५ ... दुत्पत्य (?) - ख. ।। ६६ ह्य (? ) - ख. ।। ६७ तां - घ. । ६८ शक्ति - घ. । ६९ सुखात् - घ. ।। ७० दैत्याः - क. ।। ७१ देवा: (वः) - ख. ।। ७२ चिह्न (? )

सनत्कुमार उवाच
कुजम्भं निहतं दृष्ट्वा नन्दिना देवनन्दिना१ ।
निनादं२ चक्रिरे३ देवाश्चारणाश्च महोरगाः ।।१।।
तेन देवनिनादेन कुजम्भनिधनेन च ।
जम्भो दानवशार्दूलः क्रोधमाहारयन्महत् ।।२।।
तस्य क्रुद्धस्य गात्रेभ्यो निष्पेतुः पावकार्चिषः ।
मेरोर्वज्राहतस्येव विस्फुलिङ्गाः समन्ततः ।।३।।
सोल्काम्बुदनिभाभासो जम्भः४ क्रोधसमावृतः५ ।
दुद्राव नन्दिनं हन्तुं कुञ्जरं सिंहराडिव ।।४।।
सोर्धभारसहस्रस्य कृतं सैक्यायसं६ महत् ।
उद्वहन् परिघं घोरं दैत्यो दुद्राव नन्दिनम् ।।५।।
तिष्ठेदानीं दुराचार मया दृष्टः क्व यास्यसि ।
एष त्वं वज्रसंकाशः परिघश्चूर्णयिष्यति ।।६।।
इत्युक्त्वा घोरया वाचा जंभो नन्दिनमग्रतः ।
परिघं तस्य चिक्षेप दण्डं यम इवापरः ।७।।
स तस्य करनिर्मुक्तो७ निर्मुक्तोरगसन्निभः ।
परिघो नन्दिनं याति हन्तुं कालानलोपमः ।। ८ ।।
तं वासुकिभुजङ्गाभं ब्रह्मदण्डनिभं महत् ।
वज्रेणाभ्यहनन्नन्दी देवराजो यथा बलम्९ ।।९।।
वज्रप्रहारं तृणवद्विचिन्त्य परिघः स तु ।
शक्राग्निरिव१० दुर्दृश्यः प्रधावन्नन्दिनं११ प्रति ।।8.139.१०।।
कृतो निनादः सुमहान् प्रमथेश्च सहस्रशः ।
श्रुत्वा निनादं देवानां परिघं वीक्ष्य चागतम् ।।११।।
शंकुकर्णोभिदुद्राव१२ परिघं प्रति वेगितः ।
स तं कर्कोटकप्रख्यं दुर्निवार्यं महास्त्रवत् ।१२।।

१ देववन्दिना ।२ अकुर्वन - ख. ।। ३ निनदं - ख., अकरोद - क. ।
४ भंजः - क, ५ क्रोधाग्निनावृतः - ख. घ. ।। ६ शैक्यायस - क. ।। ७ नियुक्तो - क. ।। ८ कालानलोपमं - क. ९ यथाचल - क. । १० वज्राग्निरिव - घ. ।। ११ प्रधावन् नन्दिनं - क. ख. ।। १२ ...भिजग्राह् - घ, ।


शंकुकर्णेन परिघं गृह्णीतं वीक्ष्य तद्बलात् ।।१३।।
विनेदुर्मुदिता देवाः१३ शंकुकर्णश्च तुष्टुवुः ।
शंकुकर्णोपि परिघं गृहीत्वा बलवान् पुनः ।।१४।।
ररास जम्भमुद्दिश्य ससार च रणप्रियः१४ ।।
ततो दानवशार्दूलः ससार रणलालसः ।।१५।।
ततो गणेश्वरबले दानवानां बले तथा१५ ॥
जज्ञे वादित्रनिनदः सिंह्नादविमिश्रितः ।।१६।।
अथ गगनतले बभूव शब्दः क्षुभितसमुद्रपयोदनादकल्पः१६ ।
दनुतनयगणाधिपेशयुद्धं तदुपनिशाम्य दिवौकसां तदानीम् ।१७।। प्रमथगणवरास्सनागरुद्रा१७ ह्यसुरवराश्च सहान्धकारणस्थाः । व्युपरतकलहा१८स्तदावतस्थुर्गणपतिदानवयुद्धमीक्षमाणाः । (१८।।
इति स्कन्दपुराणे गणयुद्ध ऊनचत्वारिंशदुत्तरशततमोध्यायः
सनत्कुमार उवाच
शंकुकर्णं तु धावन्तं जम्भं प्रति महाबलः१ ।
वृत्रोभ्यधावत्तं हन्तुं पंचानन इव२ द्विपम् ।।१।।
उत्सृज्य शंकुकर्णोपि जम्भं गणपपुंगवः ।
वृत्रमेवाभिदुद्राव विघातो वै दमं३ यथा ॥२॥
परिघेणाहनच्चैनं शंकुकर्णो गणेश्वरः।
महागिरिं यथा शक्रो वज्रेण शतपर्वणा ।।३।।
वृत्रोपि चाथ दैत्येन्द्रः परिघेणायसेन४ वै ।
बभ्राम ताडितोत्यर्थं वायुनुन्न इव द्रुमः ।।४।।

१३ दुरितान्देवा: - क. ।। १४ रणे प्रिय: - क.. रणप्रियः - ख. ।। १५ तदा -- ख. ।। १६ पयोदसमुद्रनादकल्प: - क.ख. घ. ।। १७ ...श्च नfगरुद्रा - क. ख. ।। १८ व्यपगतकलहा - क. ।। १९ १८८ - ख. पु. ॥
१ महाबल - ख. ।
२ नरसिंहो यथा - क. ख. ॥ ३ द्रुमं - क. ॥ ४... नायसेन - क.ख. ।

(७५२ )
स तेन सुप्रहारेण रुधिरस्रावचित्रितः ।
स्वर्णधातुरसोद्गारी नीलाचल इवाबभौ ।।५।।
वृत्रे घूर्णति दैत्येन्द्र परिघाभिहते भृशम् ।
विनेदु५र्देवगन्धर्वाः पूजयन्तो गणेश्वरम् ।।६।।
ततश्चिरात् समाश्वस्य वृत्रो दानवपुङ्गवः ।
गिरे: श्रृङ्गं समुत्पाटय शङ्कुकर्णमधावत ।
स तस्य तत्सवृक्षर्क्षं सधातूपलपन्नगम् ।
गणेश्वरायाचलाग्रं चिक्षेप च ररास च ।। ८ ।।
तद्वृत्रभुजनिर्मुक्तं गिर्यग्रशिखरं महत् ।
बिभेद नन्दी वज्रेण केशरीव मतङ्गजम् ।।९।।
अथ तौ गणदैत्येन्द्रौ भुजैर्भुजगकोपनौ ।
समेतौ घोरसंह्रादौ नियुद्धकुशलावुभौ ।।8.140.१०।।
निष्टनन्ताविवादित्यौ दीप्यमानाविवानलौ९ ।।
गर्जमानाविव घनौ बृहन्ताविव कुञ्जरौ ।।११।।
मत्ताविव च शार्दूलौ निःश्वसन्ताविवोरगौ ।
नर्दमानौ यथा सिंहौ वल्गमानौ वृषाविव१० ॥१२॥
चलन्ताविव शैलेन्द्रौ घूर्णमानाविवार्णवौ११ ।
पूरयन्तौ यथा मेघौ स्पर्धन्तौ मकराविव ।।१३।।
इत्येवं शंकुकर्णश्च वृत्रश्चासुरपुंगवः ।
प्रयुद्धौ युद्धकुशलौ परस्परजिघांसया ।१४।।
मुष्टिभिर्वज्रकल्पैश्च तलैश्चाशनिसन्निभैः ।
पादप्रहारैर्घोरैश्च१२ ऊर्ध्वमुत्क्षेपणैस्तथा ।।१५।।
आक्षेपैरथ विक्षेपैः कर्षणैरपकर्षणैः ।
पौरुषाख्यापनै१३रुग्रै१४र्नामसंश्रावणैरपि ।।१६।।

---

५ युयुधु - घ. ॥ ६ गिरेरग्रं - ख. ।। ७ भुजविनिर्मुक्त - क., हस्त... - क. टि. ।। ८ भुजौ भुजगकोपनौ - क., भुजगोपमौ - घ. ॥ ९ .. चलौ - क. ख. ।। १० वेपमानाविव ध्वजौ - घ. ।। ११ नर्दन्ताविवगोवृषौ - घ. ।। १२ बाहुप्रहारैर्घोरैश्च - घ. ।। १३ पौरूषख्यापनै - ख., ख्यापनै - क. ।। १४ ... रुग्रै - ख. ।

७५३
करजाग्रप्रतुदनै१५र्गलग्रहणनिग्रहैः ।
सिंहनादैः सवादित्रैर्वृक्षशैलशिलोपलैः ।।१७।।
शंकुकर्णो गणाध्यक्षः स च वृत्रो१६ दनोस्सुतः ।
जघ्नतुस्तावथान्योन्यमन्योन्यस्यान्तरैषिणौ१७ ।। १८।।
शंकुकर्णेन वृत्रस्तु१८ दृढमूल इव द्रुमः ।
हस्तावबन्धनोत्क्षिप्तः१९ सहसा पातितः क्षितौ ।। १९।।
ततो२०गणेश्वरबले दानवानां तथा बले२१ ।
साधुशब्दो बभूवोच्चैर्वृत्रे२२ तु विनिपातिते ।। 8.140.२० ।।
मुष्टिना तमथाहत्य वृत्रं भुवि निपात्य२३ च ।
शंकुकर्णो ह्यपक्रान्तो देहाज्जीव इवाशुगः ।। २१ ।।
वृत्रस्तु२४ सुमहावीर्यो मुष्टिताडनविह्वलः२५ ।
इन्द्रकेतुरिवोत्तस्थौ दुद्राव च गणेश्वरम् ।। २२ ।
तमापतन्तं वृक्षेण शंकुकर्णो गणेश्वरः ।
शालेन२६ ताडयामास इत एहीति चाब्रवीत् ।।२ ३ ।।
क्रुद्धेन शंकुकर्णेन वृत्रो वै शालताडितः ।
उपेत्य पादे जग्राह शंकुकर्णं बली बलात् ।। २४।।
शंकुकर्णं गृहीत्वा तु वृत्रो नाग इवाण्डजम्२७ ।
भ्रामयामास विवशं लोकं मोह इवोद्यतः ।। २५।।
शंकुकर्णस्य वृत्रेण भ्राम्यमाणस्य सर्वशः ।

शरीरात्समदीर्यन्त भूषणानि सहस्रशः । । २६ । ।
तं भ्राम्यमाणं प्रसमीक्ष्य देवा वृत्रेण सर्वे च तदा गणेशाः ।
हाहेति कृत्वा धृतशस्त्रबाणाः प्रदुद्रुवुस्तस्य विमोक्षणार्थम् ।।२७।।
आगच्छातस्तान् प्रसमीक्ष्य वृत्रः सर्वान् गणेशान् शितशस्त्रहस्तान्२८ ।
मुमोच तं संसदि२९शंकुकर्णं नागं गरुत्मानिव पक्षिराजः ।।२८।।

---

१५ करञ्जनाग्रनुदनैः - क । १६ वृत्तो - ख । १७... मन्योन्यस्य वधैषिणौ - घ. । १८ वृत्तस्तु - ख. । १९ बन्धेनोत्क्षिप्त (?) । २० गते - क. । २१ बले तथा - क. । २२ वृत्ते - ख. । २३ तु विनिपात्य - क. । २४ वृत्तस्तु - ख. । २५ मुष्टिघातेन विह्वलः - घ. । २६ सालेन - ख. । २७ इवाण्डकान् - क., शुभं - घ इवाशुकम् (?) । २८ सितशस्त्रहस्तान् - क. । २९ सयति (?) ।



वृत्रमुक्तस्तु३० गणपः शंकुकर्णो महाबलः ।
योद्धुकामः पुनर्वृत्रं निवृत्तो३१ हस्तिराडिव । ।२ ९। ।
ततः पुनः सिंहरवाः समन्तात्३२ तस्मिन्बले दुन्दुभिनिस्वनाश्च ।
हे शंकुकर्णेति च साधुवादो मनोहरस्तस्य रणे बभूव । । 8.140.३० । ।

इति स्कन्दपुराणे गणयुद्धे चत्वारिंशोत्तरशततमोध्यायः

---

३० वृत्तमुक्तस्तु - ( ?) । ३१ निर्वृत्तो - क. 7 प्रवृत्तो - घ. । ३२ सशंखाः - क ख., १८९ ः ख
१ महागज - ख. । २ आहत - क., आहत्य - ख । ३ शुभम् - ख. । ४ उच्छृत्य क। ५ दुद्राव विट्पतिं (?) । ६ महाकालो (?) । ७ पश्यमानो - क. ।

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१५



सनत्कुमार उवाच
शंकुकर्णं भ्रामयित्वा वृत्रस्त्यक्त्वा च भूतले ।
ममर्द प्रमथानीकं वनं मत्तो यथा गजः१ ।।१ ।।
स नन्दिनं नन्दिषेणं सोमनन्दिनमेव च ।
आहत्य द्रावयित्वा च ननर्द जलदो यथा ।।२।।
तस्याथ नर्दमानस्य विट्पती रुद्रसत्तमः ।
मुमोच वज्राग्निसमं रिपुक्षयकरं शरम् ।।३।।
स विट्पतिविनिर्मुक्तः शरो रविकरप्रभः ।
विवेश वृत्रं निर्दार्य सिद्धोम्बुदमिवाम्बरे ।।४। ।
उच्छ्रित्य स्वकरं सोथ करं हस्तीव दानवः ।
विट्पतिं दुद्रुवे५ संख्ये पयोदमिव मारुतः ।।५। ।
तं शूलेन महाकायो नन्दी वज्रेण दानवम् ।
सोमनन्दी कुठारेण नन्दिषेणस्तलेन च ।।६ ।।
बाणानाञ्च सहस्रेण विट्पतिर्वृत्रमाहवे ।
बिभेद परमक्रुद्धः पुनश्चान्यैस्त्रिसप्तभिः ।।७।।
सोर्दितो गणयूथेशैर्दानवः पर्वतोपमः ।
पात्यमानो ररासोच्चैस्सदैवत इव द्रुमः ।।८।।

३० वृत्तमुक्तस्तु - ( ?) । ३१ निर्वृत्तो - क. 7 प्रवृत्तो - घ. । ३२ सशंखाः - क ख., १८९ ः ख
१ महागज - ख. । २ आहत - क., आहत्य - ख । ३ शुभम् - ख. । ४ उच्छृत्य क। ५ दुद्राव विट्पतिं (?) ।
६ महाकालो (?) । ७ पश्यमानो - क. ।

755
अथमयबलमूकतारजम्भा८ नमुचिगणे९ल्वलबाणबाणपुत्राः ।
विविधशरवरायुधा१०वतस्थुर्गणपतिवीरतमं११ निवारयन्तः । ।९।।

रुचिरकनकचारुहारशोभाश्चलवलायाभरणा१२ महेन्द्रकल्पाः ।
दितिवरतनयातिहृष्टरूपाः प्रमथबलेषु चरन्ति कालरूपाः१३ ।। 8.141.१० ।।
मुशलहलशरावदारितास्या गिरिशिखराशनिवज्रचूर्णिताङ्गाः।
- - - - - - - - - - - - - - - - - - - - - - ।।
गिरय इव च वज्रताडिता गणपतयः क्षितिमापुरातुराः ।। ११।।
व्रणजपृषतविप्रुषोक्षिताश्च्युतसितहारविभूषणस्रजः१४ ।
भयचकितमुखाः प्रदुद्रुवुस्ते प्रमथगणा रिपुभिर्भृशार्दिताः ।।१ २।।
दिवि सितविरजा यथोच्छ्रिता१५ नवजलदा नवतोयवृष्टयः ।
विससृजुरुरुवेगदारुणा दितितनयाः शरवृष्टिमर्दनीम् ।। १३ ।।
अथ करिगिरिमेघसन्निभा ज्वलनदिवाकरतुल्यतेजसः ।
विमलशितविसृष्टबाणजालाः१६ प्रमथगणान् प्रहरन्ति१७ दैत्यमुख्याः ।।१४।।
अथ परिघशरासिपट्टशैः१८ करवरयन्त्रशतप्रनिःसृतैः१९ ।
त्रिदशरिपुभयप्रदा रणे समरमुपेत्य विचक्रमुर्गणाः२० ।। १ ५।।
गिरिशिखरनिभाश्च दन्तिवर्या द्रुतगमना बहवश्च वाजिमुख्याः ।
सुरसदननिभा रथाश्च भीमाः समरमुखे निपतन्ति भग्नदग्धाः ।।१ ६।।
इषुवदनदृढावतक्षिता व्रणजसमुक्षितसूक्ष्मवाससः ।
प्रसृतनयनसत्वजीविता दनुतनयाः शतशोवपोथिताः२१ ।।१७ ।।
च्युतसितवरहारकुण्डलैर्मुकुटकिरीटमणिस्रगम्बरैः ।
समरमुखमही विराजते रुचिरवराभरणैरिवोर्वशी ।। १ ८।।
क्षुभित इव यथा महार्णवो जलसमये च यथा नभो महत् ।
असुरगणबलं२२ तथाभवत् प्रजवितवारणवाजिदानवम् ।। १९ ।।
- - -- - - -- - -
८ मयबलिमूकतारजम्भा (?) । ९ बले (?) । १० शतवरायुधा (?) । ११ वीरतमान् - घ. । १२ बहुलाभरणा - ख । १३ कालभूताः - क. ख । १४ विभूषितस्रजः - क. । १५ यथेच्छिताः - क., यथोदिताः - घ. । १६ शतविसृष्टबाणजालाः - ख. । १७ प्रतिहन्ति - क. । १८ पट्टशैः - क. ख. । १९ यन्त्रगतप्रनिःसृतैः - क. । २० र्बाण १ - क., शूरा. - घ. । २१ विपोथिताः - घ. । २२ बलगणं - क. ।
- - -- - - -- - -

756

यमवरुणधनेशवासवा भगवसुसूर्यशशाङ्कमारुताः ।
हृषितनयनवक्त्रपङ्कजा रुरुधुः२३ रमित्रगणार्दनोद्धताः२४ ।।8.141.२ ० ।।
प्रविचरितगजेन्द्रतोयदं तुरगविधावितवायुसञ्चरम्२५ ।

अशनिशरशतह्लदाविलं न तु विरराम रणान्तदुर्दिनम् । ।२ १।।
कमलदलनिकाशलोचनैः कमलदिवाकरचन्द्रसन्निभैः ।
दनुतनयवराननैर्महीं प्रतिविबभौ कमलैरिवावृता । ।२२ । ।
विमथितगणदानवेश्वरं रुधिरवपामदसेकरूषितम् ।
समरमतिसुरौद्रदारुणं गरुडपिशाचबलावलोकितम्२६ । । २३ । ।
इति स्कन्दपुराणे गणयुद्धे एकचत्वाशिंदुतरशततमोध्यायः२७

सनत्कुमार उवाच
तस्मिन् वर्तति संग्रामे प्रमथासुरसैन्ययोः ।
धनुषां श्रूयते शब्दः प्रावृडम्बुधरोपमः१ । । १ । ।
गर्जताञ्च गजेन्द्राणां ह्रेषताञ्चैव वाजिनाम् ।
युद्धगान्धर्वरक्तानां नादाश्चामरराक्षसाम् । । २ । ।
श्रोत्रायासकरा२ घोरा वज्राशनिरवा इव ।
श्रूषन्ते३ हि विवर्धन्ते ह्यर्था४ ह्याधर्मणामिव५(?) ।।३।।
ततः कार्तस्वनो नाम दानवो मेघनिस्वनः ।
जघान प्रमथान् युद्धे कालो मर्त्यानिवागतः । ।४। ।
स रथी कार्मुकी बाणी कवची कुण्डली तथा ।
प्रमथानीकमदहच्छुष्कं तृणमिवानलः । । ५ । ।
- - -- - - -- - -
२३ रुरुधु क.। २४ र्दतोद्धुताः ः क, ख., र्दितोद्धुताः घ.।। २५ विधारिनवायुचञ्चर - ख. । २६ बलावलोकमिति - क २७ १९० ख. पु.।

१ प्रावृड्मेघरवोपमः - घ. । २ श्रोत्रयो कटुका - घ । ३ स्वयन्ते (?) । ४ नर्था (? । ५ ह्यधर्मिणामिव- (?)? ह्यथवंणा इव (?), ह्यधमर्णिनामिव (?) ।
- - -- - - -- - -


कार्तस्वनधनुर्मुक्ताः कार्तस्वरमहाशराः ५ ।
प्रमथान्दार्य निस्सङ्गं दारयन्ति रणावनिम्७ । ।६ । ।
शलभा इव केदाराननया इव मानवान् ।
खगा इव तरून् पक्वान गरुडः पन्नगानिव । ।७। ।
तथा ते पृथवो बाणाः कार्तस्वनधनुश्च्युताः ।

प्रमथान् व्याकुलीचक्रुर्वासवृक्षानिवाण्डजाः । ।८। ।

. .. . . .. . .. . . .. . .. .. . .. .. . ||

शरव्राता गणानीके निपतन्ति गिराविव८ ।।९ । ।

प्रशान्तवाद्यनिनदं शरघातातिवेजितम् ।

गणेश्वरबलं जज्ञे बन्धुजीववनं यथा । । 8.142.१० । ।

घनानिव९ यथा वायुर्वैनतेय इवोरगान् ।

पृषतानिव१० शार्दूलस्तमौघानिव भास्करः । । ११ । ।

तथा कार्तस्वनः क्रुद्धः शरवज्रैः११ सुदारुणैः ।

निर्ददाह गणाध्यक्षान् लोकान् संवर्तको यथा । । १२ ।।

गणेश्वरबलं दृष्ट्वा दग्धं जग्धं रुजातुरम ।

विट्पतिः कुपितो देवः कार्तस्वनमथाब्रवीत् । । १३ । ।

शरपातेथ संस्थित्या रुद्रो रुद्रपराक्रमः ।

दानवेन्द्रं प्रकुपितो निषङ्गादुद्धरञ्छरम्१२ । । १४।।

कार्तस्वन बलं वीर्यं प्रतापश्च तवोत्तमः ।

किमेतानबलान् हंसि१३ दानवेन्द्र गणेश्वरान् । । १ ५। ।

आगच्छ यदि ते शक्तिर्यदि वा विद्यते बलम् ।

मया कुरुष्व संमर्दं मानदं(ः?)१४ पश्य मे बलम् । । १६ । ।

कुण्डलालंकृतं तेद्य दंष्ट्रांकुरविभूषणम्१५ ।

पातयामि शिरो दैत्य तालाद् वातः१६ फलं यथा । । १७। ।

- - -- - - -- - -

६ कार्तस्वनमहाशराः - ख । ७ रणावरं (जिर?) - ख. । ८ पतन्ति गिरयो यथा - ख । २ घनानीव - घ. । ३० पृषतानीव - घ. । ११ शरव(च?)क्रैः - घ., शरवर्षैः (?) । १२ नैषङ्गानुद्वहन् शरान् - घ., ... दुद्धहन - क. । १३ हन्तुं - ख. । १४ मा नर्दीः (?) । १५ दीप्तांगुरवभीषणम् - घ. । १६ वायुः - ख. ।

- - -- - - -- - -



यद्यपि त्वाद्य रक्षन्ति१७ दानवाः सान्धका१८ रणे ।

तथापि ते हरिष्यामि प्राणानसुरपांसन । । १८ । ।

इत्येवं नर्दमानस्य विट्पतेर्दानवो नदन्१९ ।

ससर्ज बाणं मुक्त्वा(?) च जगर्ज जलदो यथा ।। १ ९। ।

ज्वलमानः स तु शरो घृतसिक्त इवानलः ।

घर्मार्कसदृशो२० भासा प्राधावद्२१ विट्पतिं प्रति ।। 8.142.२० ।।

निष्प्रभोर्कोभवत्तत्र तस्य भासा पतत्रिणः ।
कार्तस्वननिनादेन२२ पतन्ति विहगाः२३ क्षितौ ।।२१ ।।
सोपि भासायुतो वाणः संवर्तक इवानलः ।
विट्पतेः कंकणे२४ मग्नो निरये दुष्कृती यथा ।।२२ ।।
ततस्तमेव निष्कृष्य दानवप्रहितं शरम् ।
कार्तस्वनाय चिक्षेप विटपतिर्विननाद च ।। २३ ।।
स विट्पतिविनिर्मुक्तः शरो दानवनाशकृत् ।
दानवस्य शिरो यन्तुर्जहारेषुपथान् दश२५ ।।२४।।
हते यन्तरि तस्याश्वाश्चपलाः शबलाः२६ रणे ।
उद्भ्रान्ता रथमादाय श्येना इव यथामिषम् ।।२५।।
कार्तस्वनरथं यात२७ किमासत निगृह्णत ।
इत्येवं दानवेन्द्राणां बभूव निनदो महान् ।।२६ ।।
विस्तीर्णे मन्दरप्रस्थे भ्रमन् भाति रथोत्तमः ।
सादित्य इव सप्ताश्वो मेरौ रथवरो२८ भ्रमन् ।।२७।।
अवप्लुत्य२९ ततस्तस्माद् द्रुताश्वाद्३० रथसत्तमात्३१।
कार्तस्वनो धनुष्पाणिरभिदुद्राव विट्पतिम् ।। २८।।
बलयोस्तु ततो नादः साधुसाध्विति संबभौ ।
कार्तस्वने योद्धु कामे भूयो विट्पतिना सह ।। २९।।

- - -- - - -- - -

१७ गच्छन्ति - घ. । १८ सानुगा - घ. । १९ दानवोन्नदन - ख । २० यमार्कसदृशो - क., क्रं - घ. । २१ प्रधावद् - क. ख. । २२ कार्तस्वरनिनादेन - घ. । २३ ह खगाः - ख. । २४ कंगणे - क ख. । २५,.. वान्दिशन् - ख । २६ सबलाः - क. । २७ गणान्देवान् - क. । २८ रथावरे - क. रवो - ख. । २९ प्रुत्य - क. । ३० हताश्वाद् - व. । ३१ रथसत्तम - क.,... सत्तम - ख ।

- - -- - - -- - -

759

स विट्पतिं३२ वज्रनिभैर्बहुभिर्निशितैः शरैः ।
दानवोवाकिरन्मेघो यथा धारोत्करैर्गिरिम् ।। 8.142.३० ।।
स कार्तस्वनबाणौघैर्घनौघैरिव३३ सागरः ।
विट्पतिः पूर्यमाणोपि व्यथां नैव तदागमत् ।।३ १ ।।
आकर्णात् कार्मुकं सोथ विकृष्य बलवान् बलात् ।
चिच्छेद दैत्येन्द्रशरान् द्विधैकैकं त्रिधा तथा ।।३ २ ।।

तानिषून् शातयित्वा३४ तु पत्रिभिः प्राणभोजनैः ।
कार्तस्वनं सहस्रेण बिभेद च ननाद च । ।३ ३ ।।
पृष्ठतो दृश्यमानास्यैः शरैस्तैर्दानवो बभौ ।
यथाचलो नागवरैर्विवरार्धविनिर्गतैः३५ ।। ।३४।।
अथास्य कार्मुकं खड्गं शरावापञ्च३६ पञ्चकम३७ ।
चिच्छेद रुद्रः संक्रुद्ध३८ स्तं च सोभ्यर्दयद्बली ।।३५।।
अथ बाणमिन्द्रकुलिशेन समं कुपितं श्वसन्तमिव नागपतिम् ।
विससर्ज विट्पतिरुदारबलोदितिनन्दनार्दनमजिह्मगतिम् ।।३६।।
शरराट् स रुद्रवरसंप्रहितः समराङ्गणे३९ विसृतधूमलवः४० ।
असुराननं युधि जहार बलात् कमलं यथा मुनिरुदारमतिः४१ ।।३७।।
अथ दैवतै४२र्मुनिवरैश्च कृतः प्रमथैश्च भीमनिनदैर्निनदः४३ ।
तदरेर्मुखं हृतमुदीक्ष्य४४ तदा वडवामुखाग्निदमनेन रणे ।।३८।।
स तु विट्पतिः प्रमथसैन्यपनिस्त्वभिसृत्य भूतपतिना सुचिरम् ।
अभिपूजितः समरकर्मपटुस्त्रिदशारिसिंहदमनो४५ दमनः ।।३९।।
इति स्कन्दपुराणे गणयुद्धे द्विचत्वारिंशदुत्तरशततमोध्यायः४६

- - -- - - -- - -

३२ विट्पतिं स - ख. । ३३ र्घनोघैरिव - क. । ३४ सातयित्वा - क., छेदयित्वा - ख. । ३५ विनिःसृतैः - ख. ३६ शराँश्चापं च - क. । ३७ पञ्चधा - घ. । ३८ विट्पतिस्तस्य - घ. । ३९ समरानलो - क. समवालन - घ. । ४० निशितधूम इव - घ. । ४१ मनि - क., मणिरुदारमतिः - घ. । ४२ देवतै - क ४३. र्नदः - क., श्च नदः - ख. । ४४ हृषितमुदीक्ष्य - ख । ४५ संहदमनो - क., दहनो - ख ४६ १९१ - ख. ।

- - -- - - -- - -





सनत्कुमार उवाच
कार्तस्वनमरिं हत्वा कार्तस्वरमहेषुणा१ ।
ददाह विट्पतिर्दैत्याननलः शलभानिव२ । ।१ । ।
स व्यायत३ धनुर्देवश्चारुकाञ्चनकुण्डलः ।
जगर्जेषू४न्दानवेषु सृजन्५ सूर्यः करानिव६ । । २ । ।
ते काञ्चनमयैः पुखैगरुडाङ्गरुहच्छदैः ।

दैवसृष्टा७ इवानर्था दानवेष्वपतञ्छराः८ । । ३ ।।
छिन्नाननाः९ श्छिन्नकराश्छिन्नपादोदरोरवः ।
दानवाः शतशः पेतुः क्षितौ क्षितिधरा यथा१० । ।४।।
पृष्ठेष्वभिहताः केचित् केचित् पार्श्वेषु दारिताः ।
नयनेष्वपरे विद्धा भ्रमन्त्यन्धा इवापरे११ ।।५ । ।
मृगानिव च शार्दूलो गरुडः पन्नगानिव ।
कृतघ्नः सुकृतानीव तमांसीव दिवाकरः ।।६ । ।
तथा१२ तानसुरान्देवो विट्पतिः पावकार्दनः ।
अनाशयत तीक्ष्णाग्रैः शरैर्वज्रानलाननैः ।।७ । ।
विरथाः पातितगजाः शरातुरतुरङ्गमाः ।
धावन्ते दानवास्त्रस्ता विट्पतेः शरवेजिताः । ।८ ।।
अथ दृष्ट्वासुरबलं मुक्तशस्त्रयशोम्बरम् ।
भग्नं विट्पतिना युद्धे गजेनेव यथा वनम् । ।९। ।
ये ये बलोत्कटास्तत्र प्रख्याताश्च सुरेतराः१३ ।
अभिद्रुता१४ विट्पतिना सिंहेनेवेतरे मृगाः१५ ।। 8.143.१० ।।
प्रह्लादश्चानुह्लादश्च संह्लादः शिनिबाष्कलौ१६ ।
जम्भो विरोचनो बाणो बलिश्चैव स१७ दानवः ।।१ १ । ।

- - -- - - -- - -

१ कार्तस्वनमहेषुणा - क. । २. न्शलभानिव पावकः - घ. । ३ सो - क. ख., सोप्यनिन्ध - घ. । ४ ससर्जेष्ठं (षू?) - घ. । ५ व्रजन् - घ । ६ सूर्यकरानिव - क ख. । ७ देवसृष्टा - क. । ८ दानवेषु पतन्सुराः - घ. । ९ भिन्नानना - क. । १० इव (?) । ११ न्यपतन्दानवा रणे - क., भ्रमन्त्यर्धा इवाहवे - घ. । १२ अथ - ख. । १३?.. श्चासुरोत्तमाः - घ. । १४ ते विद्रुता - घ. । १५ सिंहनेव यथा मृगः (?), श्चैव (?) । । १६ संह्लादशिनिभास्कराः - ख. ।... शिनिबाष्कलाः - घ. । १७ चः - ख. ।

- - -- - - -- - -

761

अजको१८ नमुचिर्व्यंसः इल्वको विल्वकस्तथा१९ ।
विप्रचित्तिस्तुहुण्डश्च हुण्डो वक्रश्च दानवः ।। १२ । ।
मयस्तारस्तारकाक्षो२० विद्युन्माली प्रभञ्जनः ।
अरिष्टश्चैव२१ रिष्टश्च अञ्जनो२२ रूशभः२३ कुभः ।।१ ३ । ।
कालश्च कालनेमिश्च कालकावदनस्तथा२४ ।
संपातिरिल्वलश्चापि बलो२५ नरक एव च । । १४' ।

मधुकैटभयोः पुत्रौ धुन्धुर्मूकश्च दानवः ।
हस्तिर्विपाक पाकश्च विकर्णः शम्भुरेव च । । १५ । ।
उद्यतैर्बहुभिः शस्त्रैरुल्कापातसमप्रभैः ।
विट्पतिं दुद्रुवुः क्रुद्धाः सिंहा इव विनेदुषः । । १६ । ।
ते तं शूलोपलै२६ र्हुण्डैः सायकैश्चाशनिस्वनैः२७ ।
निजध्नुर्भीमनिनदाः पयोदा इव पर्वतम् ।।। १७। ।
तोयवृष्टिं यथा मेघा विसृजन्त्यनिलेरिताः२८ ।
ससृजुर्दानवा२९ देवे३० शरवृष्टिं३१ तथैव ते३२ । । १८ । ।
तां शस्त्रवृष्टिमामित्रीममित्रगणमर्दनः ।
अच्छिनद्विट्पतिस्तूर्ण संप्रीतिं कलहो यथा । । १ ९। ।
ततस्ते दनुदैतेया वियत्स्था३३ विटपतिं प्रति ।
नर्दमाना३४ इवाम्भोदा गिरिवर्षं३५ सृजन्त्युत । ।8.143.२ ० । ।
अन्ये च मन्दराग्रस्था मन्दारस्रगिवास्थिताः३६ ।
मुमुचुः सालसरलान्३७ देवदारूँश्च विट्पतौ । ।२ १ ।।
सोम्बरस्थैःक्षितिस्थैश्च दानवैर्दढमर्दितः३८ ।
विट्पतिर्विमुखो जज्ञे तोयसिक्त इवानलः । । २२ । ।
विट्पतिं विमुखं दृष्टवा दानवैः पर्वतैश्चितम्३९ ।
नमर्षेयु४० भीमबलाः प्रख्याता ये गणेश्वराः । ।२ ३ । ।

- - -- - - - -- - -

१८ अर्जको - ख. । १९ पिल्वकतथा - ख । २० यमस्तारस्तारकाक्षो - ख. । २१ श्च वरिष्ठश्च - क. । २२ कुंजरो - घ । २३ औशनः - ख. । २४... नन्दनस्तथा - घ. । २५ बली - क. । २६ शूलोपलहलै - ख शूलोपलगणै - घ. । २७ पाशनिस्वनैः - घ. । २८. लोज्झिताः - क., लेङ्खिताः (?) । २९ विसृजुर्दानवा - क.। ३० देवो - क । ३१ शरवर्षं - घ. । ३२ च - ख. । ३३ रणस्था - घ । ३४ नदमाना - घ. । ३५ अग्निवर्षं - घ. । ३६ मन्दरस्रगिवास्थिताः - क. थ. । ३७ कालसरलान्? - ख. । ३८ र्भृशमर्दिनः घ. । ३९,. श्चिरम् - ख. । ४० ममर्षु (?) ।

- - -- - - - -- - -

762

सोमनन्दी च नन्दी च नन्दिषेणश्च पार्षदः ।
प्रभामयो वीरभद्रः सूर्याप्यायन४१ एव च । ।२४।।
पञ्चाक्षः कोपपालश्च४२ त्रिनेत्रः पिङ्गलेक्षणः ।
राक्षसः पिङ्गलश्चैव श्मशाननिनलयोन्नदः४३ ।। २५।।

घण्टाकर्णः शंकुकर्णः स च कुण्डोदरो बली ।
ऐरावतमुखश्चैव अन्नपालः कपालधृक् ।
प्रलम्बपीवरकरः स्वयमेव विनायकः ।। २६। ।
एते चान्ये च गणपाः शतशः शब्दिता गणैः४४ ।
विविशुर्दानवान्दग्धुं द्रुमाञ्छुष्कानिवानलाः ।। २७।।
ते विट्पतिं संपरिवार्य४५ सर्वे गजेन्द्रपोता इव गर्जमानाः ।
त्रिशूलचक्रेषुभुशुण्डिहस्ता गणेश्वरा युद्धधियः प्रतीयुः४६ ।।२८।।
तेषां च तेषां च ततो बभूव संसक्तयुद्धं४७ समरोद्धतानाम् ।
मदोद्धतानां सहवासितानां महागजानामिव काननेषु ।।२९।।
तं४८ दानवानां सगणेश्वराणां मुख्याहवं वीक्ष्य दिवौकसास्ते ।
चेरुर्नभो दिव्यविमानयानैः ससिंहनादाः सतलाभिघाताः ।।8.143.३ ०।।
इति स्कन्दपुराणे गणयुद्धे त्रिचत्वारिंशदुत्तरशततमोध्यायः४९

सनत्कुमार उवाच
तेतिसंरम्भसंयुक्ता१ दर्पिताः प्रमथासुराः ।
संसक्तयुद्धं युयुधुः परस्परकृतागसः । । १ । ।
शक्त्युल्लालितहस्तेन२ कुमारेणावनिञ्जयः ।
कालनेमिः कालकल्पो विशाखं समयोधयत् । ।२ ।।
- - -- - - - -- - -
४१ सोमाप्यायन - ख । ४२ कोपपालश्च - घ. । ४३ नदन् - घ., नयः - ख. । ४४. ला( णाः) - घ.। ४५ संप्रतिवार्य - क. । ४६ प्रतस्थुः - ख । ४७ संयुक्तयुद्धं - ख. । ४८ तद् - क. । ४९ १४४ - घ.. १९२ - ख ।
१ संरक्तसंयुना? - क. । २ -शक्त्युल्लोलितहस्तेन - रव्र ।
- - -- - - - -- - -

763
यश्चादित्यरथाच्चक्रं जहार बलदर्पितः ।
स विप्रचित्तिः शाखेन संसक्तो३ युद्धलालसः । ३ ।।
नैगमेषो हयग्रीवं सुग्रीवं दानवाधिपम् ।
योधयामास सोग्नेयो मधुं मधुनिहा यथा । ।४। ।
प्रायुध्यन्४ नन्दिना जम्भस्तुहुण्डः सोमनन्दिना ।
हुण्डो विनायकं शूरमयोधयत दानवः ।।५।।
महाकायस्तु५ कालेन घनेन नमुचिस्सह ।

पिङ्गलाभ्यां गणेशाभ्यामिल्वकः पिल्वकस्स च ।।६ । ।
शंकुकर्णेन ह्लादस्तु६ ह्यनुह्लादेन विट्पतिः ।
आदित्याप्यायनो रुद्रः संह्लादेन समागतः ।।७। ।
कुण्डोदरश्च यक्षेन्द्रो घण्टाकर्णश्च पार्षदः ।
बलेल्वलाभ्यां संसक्तौ सिंहाभ्यामिव कुञ्जरौ । ।८। ।
पञ्चाक्षेण बलिस्सार्धं रुद्रेणादित्यवर्चसा ।
बलेर्जनयिता सक्तो वीरभद्रेण दानवः ।।९ ।।
सुमुखेन मयस्सार्ध तारो दुर्मुखमासरत्७ ।
मयूरो वज्ररोमाणं कुक्कुटो मुरमागमत् ।।8.144.१ ० । ।
शेषा ह्यपि गणाध्यक्षाः शेषैर्दैत्यैस्समागताः ।
परस्परेण संसक्ता गजाः सिंहैरिवाहवे ।। ११ । ।
दह्यतामिव वेणूनां विजने कृष्णवर्त्मना ।
अभूत्८ तटतटाशब्दः शस्त्राणां विनिपात्यताम् । ।१ २ ।।
मा द्रवीर्द्रव तिष्ठेति पश्य पश्येतिवादिनः ।
अन्योन्यमभिजघ्नुस्ते संसक्ता गणदानवाः । । १३ । ।
वपामेदोभिदिग्धाङ्गाश्छिन्नाननकरोरवः ।
दानवाः प्रमथाश्चैव ह्यधावन् शस्त्रमक्षिताः ।। १४। ।

- - -- - - -- - -

३ संयुक्तो - ख । ४ प्रयुद्धो - क. ख, प्रयुध्यन् (?) । ५ महाकालस्तु - क. । ६ सह्लादः - क- । ७.., मासदत् - क. । ८ बभौ - क. ख. । ९ चटचटाशब्दः (?) ।

- - -- - - -- - -



आननैरुरुभिः१० पादैः करदन्तेक्षणैरपि ।
हारैर्विकीर्णैः केयूरैः स्रगम्बरविभूषणैः । । १ ५।।
गजेन्द्रास्तपरिस्तोमैः१२ कम्बलैरायुधैरपि ।
रराज स रणोद्देशो नभस्ताराग्रहैरिव । । १६ । ।
नखदन्ताग्रजनितै१३श्चित्रैः क्षतजबिन्दुभिः ।
रक्तचन्दनदिग्धाङ्गी भूमिः स्त्रीरिव निर्बभौ । । १७। ।
विनायकस्य स शरं तुहुण्डः सूर्यतेजसम् ।
प्रेषयित्वा जहासोच्चैः कोपं तस्य विवर्द्धयन् । । १८। ।
तस्यापि हसतो१४ वक्त्रं बृहत्कुण्डलमण्डितम् ।

असिना तीक्ष्णधारेण चिच्छेद स विनायकः । । १ ९। ।
तुहुण्डं निहतं दृष्ट्वा हुण्डो भ्रातृवधातुरः ।
शक्तिं चिक्षेप नागास्ये१५ शक्रोशनिमिवाचले ।। 8.144.२० । ।
विनायकस्य१६ सा शक्तिर्मणौ मणिशताचिता१७ ।
पतितासृक् पपौ क्रोडाज्१८ ज्वलदग्निशिखोपमा१९ ।।२१ ।।
विनायकस्य सा क्रोडे लग्ना शक्तिविनिर्बभौ ।
इन्द्रनीलं मणिं प्राप्य रेखा२० चामीकरी यथा । । २२ ।।
स हुण्डशक्तिं करपुष्करेण निकृष्य देवो रविरस्मिकल्पाम् ।
तयैव हुण्डं सहसा जघान तस्यानुजः क्रौञ्चमिवावनीध्रम् ।। २३ । ।
प्रमापितौ२१ वीक्ष्य तुहुण्डहुण्डौ विनायकेनारिविनायकेन ।
बलं समस्तं गणनायकानामुन्मत्तगःङ्गाप्रतिमं२२ बभूव । । २४। ।
इति स्कन्दपुराणे गणयुद्धे चतुश्चत्वारिंशदुत्तरशततमोध्यायः

- - -- - - -- - -

१०... र्जानुभिः - ख. । ११ र्विशीर्णैः - ख. । १२ गजेन्द्रास्त्रपरिस्तोमैः - ख । १३ पतितै (?) - ख. । १४ तस्यावहसतो (?) । १५ नागस्य - क ख. । १६ विनायकाय - क ख. । १७ मणिचितागता - क. । १८ कूजन् - ख । १९ शिखा यथा - ख । २० लेखा - क । २१ प्रमाथितौ - ख. । २२ प्रमत्तगङ्गाप्रतिमं - ख ।

- - -- - - -- - -

765

सनत्कुमार उवाच
विनायकेन हुण्डे च तुहुण्डे च प्रमापिते१ ।
गणेश्वरासुराणां तद्युद्धं२ संकुलमाबभौ । । १ ।।
ते नदित्वा यथा मेघा जलमत्ता जलागमे ।
संसाधयन्ते३ युध्यन्त४स्त्वरयैव परस्परम् । । २ । ।
असृक्स्रवैस्सुरक्ताङ्गास्सन्दष्टदशनच्छदाः ।
अन्योन्यमभिसंजघ्नुः शूलशक्त्यृष्टिपट्टिशैः ।।३ । ।
शक्तीनां क्षिप्यमाणानामसीनाञ्च निपात्यताम् ।
श्राव्यतां नामधेयानां धनुषां कूजतामपि । ।४। ।
श्रोत्रायासकराञ्छब्दान् निशम्य बलिनां वरः ।
जम्भो भ्रातृवधामर्षी प्रविष्टः प्रामथं बलम् । ।५।
व्याघ्रपूर्वं त्रिशूलेन६ जम्भो भित्त्वा गणेश्वरम् ।
ननर्द महिषं हत्त्वा वने वनपतिर्यथा । ।६ । ।

नर्दमानस्य तस्याथ प्रथमो मगपूर्वकः८ ।
शिरोभिहत्य शक्त्या तु शेषान्दैत्यान् प्रदुद्रुवे । ।७
गणपापि ततः ख्याताः ख्यातवीर्ययशःश्रुताः ।
प्रतीयुरसुरान् युद्धे शरभाः कुञ्जरानिव । ।८। ।
ततोसुरगणेशानां सन्निपातोभवन्महान् ।
संघट्ट इव वज्राणां सह काञ्चनपर्वतैः । ।९ ।
विरोचनश्चान्धकश्च ववर्षतुरमर्षणौ ।
शरवृष्टीस्सुसंरब्धौ जलवृष्टीरिवाम्बुदौ । । 8.145.१० । ।
स्वयंप्रभेण तौ दैत्यौ शरवर्षविसर्जनौ ।
विमुखौ संयुगमुखे कृतौ शरवरार्दितौ९ । । ११ । ।
स्वयंप्रभो दानवसैन्यसागरं१० शरैरनेकैर्धनुयन्त्रनिःसृतैः ।
सशोषयद् दीप्तमरीचिमण्डलो यथा विवस्वान् जगतः क्षयेर्णवम् । । १२ । ।
- - -- - - -- - -
१ निपातिते - ख । २ तु युद्ध - ख । ३ संसाधयन्तो (?) । ४ युध्यन्तो (?) । ५?? मिव - क ख. । ६ व्याघ्रपूर्णसहस्रेण - घ. । ७ सगणो - घ । ८ मृतपूर्वकः - क, । ९ वर्षवरार्दितौ - ख. । १० सागरौ - क । १३ संशोषयन् - क ।
- - -- - - -- - -

766

ततोन्धको दानवलोकसारथिः स्वसारथिं१२ प्राह विवृत्तलोचनः१३ ।
शुक्रं१४ प्रति प्रापय सारथे मां स१५ नः सदा हुःखहरो गुरुश्च१६ ।। १३ ।।
स तं रथं दानवयूथपास्थितं तथेति च प्रोच्य सदश्वसंयुतम् ।
सं१७ प्रापयामास पयोदनिस्वनं स यत्र शुक्रो ग्रहसत्तमो द्विज । ।१४।।
इति स्कन्दपुराणे गणयुद्धे पञ्चचत्वारिंशदुत्तरशततमोध्यायः१८

सनत्कुमार उवाच
अपसृत्य ततो युद्धादन्धकोसुरसत्तमः ।
शुक्रान्तिकमुपागम्य इदमाह नताननः । । १ । ।
भगवँस्त्वां समाश्रित्य वयं देवान् सहानुगान् ।
गणयामस्तृणैस्तुल्यान् सदा सत्यं ब्रवीम्यहम् । । २ । ।
कुञ्जरा इव सिंहानां गरुडानामिवाहयः ।
अस्माकं बिभ्यति सदा देवा युष्मत्प्रसादतः । । ३ । ।

दुर्गं देवगणव्यूहं भवता प्रतिपालिताः ।
विविशुर्निर्भया दैत्या ह्रदमुष्णार्दिता१ इव । ।४। ।
वयं त्वच्छरणा भूत्वा पाषाणा इव निश्चलाः२ ।
स्थित्वा वधाम३ निःशंका४ ब्राह्मणेन्द्रेन्द्रमाहवे । । ५। ।
आपद्भावेन च वयं पादौ तव सुखप्रदौ ।
सदाराः ससुताश्चैव शुश्रूषामो५ दिवानिशम् । । ६। ।
अभिरक्षस्व सततं स नस्त्वच्छरणागतान्६ ।
भयेषु सततं देवान् नारायण इवापरः । ।७। ।
पश्य हुण्डं तुहुण्डं च कुजम्भं जम्भमेव च ।
पाकं कार्तस्वनं चैव विपाकं च महासुरम् । ।८। ।
- - -- - - -- - -
१२ ससारथिं - ख । १३ सुमन्दलोचनः - ख. । १४ शुक्लं - ख । १५ सो - क. ख., सोयं (?) । १६ गुरुश्च नः (?) । १७ तं - क । १८ १९४ - ख ।
१ ह्रदन्तृष्णार्दिता - ख. । २ निर्भयाः - ख. । ३ बाधाम - क., चराम - घ. । ४ निःसंस्त्रा - क. । ५ शुश्रूषाम - क. ख. । ६ .. स्त्वं शरणागतान् - घ. ।
- - -- - - -- - -

767

तं चेन्द्रदमनं शूरं शूरामरनिपातनम् ।
प्रमथैर्भीमविक्रान्तैः क्रान्तमृत्युव्यथादिभिः७ ।।९।।
सूदितान्पतितानेतान् हरिणैरिव चन्दनान्८ ।
या पीत्वा कणधूमं वै सहस्रं शरदां पुरा९ ।
विद्या हराद्वरा१० प्राप्ता तस्याः कालोयमागतः ।।8.146.१ ०।।
अथ विद्याफलं तत्ते जीवयानस्य११ दानवान्१२ ।
पश्यन्तु प्रमथाः सर्वे लोकाश्चोत्फुल्ललोचनाः ।।११।।
त्वया सञ्जीवितान् दृष्ट्वा दानवा दानवान् युधि१३ ।
सर्वे मृत्युभयं१४ हित्वा१५ योत्स्यन्ते१६ प्रमथैः सह ।।१२ ।।
- - - -- -- -- - -- - ।
विद्या किल त्वया सा वै दानवानां हितार्थिना१७ ।।१३।।
आराध्य देवं संप्राप्ता तां दर्शय१८ नमस्तव ।
इत्यन्धकवचः श्रुत्वा स्थिरधीर्भार्गवो मुनिः ।।१४।।
ईषत्स्मितं तदा कृत्वा दानवाधिपमब्रवीत् ।

दानवाधिप तत्सत्यं यत्त्वया प्रेरितं वचः ।।१५।।
विद्योपार्जनमेतद्धि दानवानां मया कृतम् ।
पीत्वा वर्षसहस्र वै कणधूमं सुदुस्सहम् ।।१६।।
एषा प्राप्ता मया विद्या बान्धवानां सुखावहा ।
एतया विद्यया सोहमेतान् दैत्यान् परैर्हतान्१९ ।।१७।।
उत्थापयिष्ये सस्यानि म्लानान्यम्बुधरो यथा ।
निर्व्रणान्नीरुजान्२० स्वस्थान् सुप्त्वेव पुनरुत्थितान् ।।१८।।
अस्मिन् मुहूर्ते द्रष्टासि२१ दानवान्दानवाधिप ।
उत्थितान्दानवान् दृष्ट्वा हतान् युद्धे गणेश्वरैः ।।१९।।
- - -- - - -- - -
७ मूर्ध्याद्युपाधिभिः - घ । ८ चन्दनम् - क. ख. । ९ कालधूमं सुदुःसहं - घ । १० विद्यारधीत्व (त्ये) या - घ. । ११ तस्य - क. । १२ दानवान् - घ. । १३ दानवाधिप - घ. । १४ राज्यं - घ., कष्टं महाभयं (?) - क. ख । १४ कृत्वा - घ. । १६ मुच्यंत - घ., युध्यन्ते (?) । १७ हितार्थिनी - क । १८ तद्दर्शय - ख. । १९ सुरैर्दत्तान् - ख । २०. .न्निरुजम् - क. । २१ अस्मिन् युद्धे हते द्रष्टा - घ. ।
- - -- - - -- - -

768
विस्मयाच्च भयाच्चैव द्रविष्यन्ति गणेश्वराः ।
इत्येवमुक्त्वा स तदा भार्गवो दानवेश्वरम् ।।8.146.२०।।
एकैकं दैत्यमुद्दिश्य विद्यामावर्तयत् कविः ।
आवर्तमानया तत्र विद्यया ब्राह्मणेन ह ।।२१ ।।
उत्तस्थुर्दानवाः सुप्ताः शयनादिव निद्रया ।
वेदार्था इव चाभ्यस्ताः समयेनेव चाम्बुदाः । ।२२ ।।
कालेन प्रलयं२२ प्राप्तौ२३ यथा वा धूमकेतवः ।
तथा शुक्रेण ते दैत्याः प्रमथैः सन्निषूदिताः ।।२३।।
उत्थाप्यमाना विबभुर्यथा स्वस्थाः पुरातनाः ।
शुक्रेणोज्जीवितान् दृष्ट्वा दानवान् तान् गणेश्वराः ।।२४।।
आश्चर्यमेतद्देवेशा इति तेन्योन्यमब्रुवन् ।
उज्जीविताँस्तु तान्दृष्ट्वा तुहुण्डाद्यान् महासुरान् ।
विनेदुः पूर्वदेवास्ते जलमत्ता इवाम्बुदाः ।।२५।।
तानुत्थितान्वीक्ष्य सहस्रशोन्ये कुठारवज्राशनिशूलहस्ताः ।
प्रदुद्रुवुः शङ्करकिङ्कराणां बलं समुद्धूतमहार्णवाभम्२४।।२६। ।

समागमस्तत्र पुनर्बभूव गणासुराणामतिभीमनादः२५ ।
युगात्यये मारुतवेजितानां यथा समुद्योग इवार्णवानाम् ।।२७।।
इति स्कन्दपुराणे गणयुद्धे दैत्योज्जीवने षट्चत्वारिंशदुत्तरशततमोध्यायः२६

सनत्कुमार उवाच
उत्थापितेषु दैत्येषु भार्गवेणोग्रकर्मणा ।
नेदुर्देवाः सगन्धर्वा दानवाश्च सहान्धकाः१ । । १ । ।
ततः शंखरवोन्मिश्रा माड्डुकानकनिस्वनाः२ ।
बभूवुः सिंहनादाश्च रथ३ हस्तिरवैस्सह । । २ । ।
- - -- - - -- - -
२२ प्रलये - क. । २३ प्राप्ते - ख. । २४ महार्णवाभाः (?) । २५ भीमरूपः - ख. । २६ १९५ - ख. ।
१ महोरगाः - घ. । २ मण्डूकानकनिस्वनाः - ख. । ३ यूथ - घ. ।
- - -- - - -- - -


हुण्डस्तुहुण्डो जम्भश्च कुजम्भश्च महासुरः ।
शैलशूलशिलाघातैर्युयुधुर्देवतारयः । ।३ । ।
पाकेन्द्रदमनौ तौ च स च कार्तस्वनो बलिः ।
ममर्दुः४ प्रमथानीकं वैरं प्रतिचिकीर्षया । ।४ । ।
तेषां वेगं सन्निवार्य प्रमथा अपि दर्पिताः ।
शिलातरुकराः सर्वे दानवानभिदुद्रुवुः । । ५ । ।
गणेश्वराः सुराणां तु५ तस्मिन्युद्धेति भैरवे ।
श्रूयन्ते धनुषां शब्दा रथशब्दाश्च भैरवाः । ।६ । ।
प्रमथानां जये सक्ताः६ दानवानां तथापरे ।
चक्रुः कोलाहलं घोरं पक्षवादांस्तथाम्बरे ।।७। ।
गर्जतां धावतां चैव बलानां समभूत् स्वनः ।
गर्जतां धावतां चैव समुद्राणामिवात्यये । ।८ । ।
युद्धातिशयमत्ताश्च सिद्धगन्धर्वचारणाः ।
नेदुश्चैवोत्ससर्जुश्च नानाकुसुमसञ्चयान् । । ९। ।
नानाविधानि पुष्पाणि पतमानानि रेजिरे ।
सिद्धचारणमुक्तानि नक्षत्राणि यथात्यये८ ।। 8.147.१० । ।
देवगन्धर्वतूर्याणि प्रसस्वनुरनेकशः ।

युद्धसंसक्तभावानां विरेमुश्च पुनः पुनः ।। ११ ।।
विनायकेन स्मृत्वा तु जम्भो युधि पराभवम् ।
तं सक्रोधोभिदुद्राव गजं गज इवापरः ।। १२ ।
तमापतन्तं दृष्ट्वा तु दानवं जम्भमाहवे ।
सिंहो गजमिव क्रुद्धो रुरुधे स विनायकः ।। १३ ।।
ऐरावतकरप्रख्यं करं करिनिभाननः ।
उत्क्षिप्य दानवं युद्धे तताड स विनायकः ।। १४।।
- - -- - -- - -
४ प्रमर्द्दुः - ख, ममर्द - घ. । ५ गणैश्च ?णां सर्वत्र - घ. । ६ प्रमथाञ्जयसंसक्ता - ख. । ७ सम्वमू (भौ?) - क. । ८ घनात्यये - घ. ।
- - -- - -- - -


कुम्भयोरन्तरे तं तु जम्भो दानवकुञ्जरः ।
बिभेद शरमुख्येन यथा सिद्धोर्कमण्डलम् ।। १५ ।।
कुम्भयोरन्तरे९ तस्य निममज्ज स वै शरः ।
शृङ्गयोरचलेन्द्रस्य तडित्वानिव चाम्बुदः१० ।। १६ ।।
स शरारोषितमना११ विधूय१२ सशिरःकरम्१३ ।
कराग्रेण१४ महादैत्यमानम्याहत्य सोनदत् ।। १७।।
प्रस्पन्दमानो जम्भस्तु विनायककराहतः ।
विनायकं शरैरुग्रैरवतस्तार रोषितः१५ ।। १८।।
शलभा इव केदारं भ्रमरा इव पादपम् ।
जम्भेषवस्तदा देवं विविशुस्ते१६ विनायकम् ।।१ ९ ।।
रुधिरं क्षरमाणास्ते त्रिवित्त्रै(? )र्दारितानना:१७ ।
शरा विनायके रेजुः सर्पा मेरुमिवाश्रिताः१८ ।।8.147.२० ।।
स जम्भबाणैरतिभिन्नगात्रः१९ कुम्भास्रुतावाप्लुतरक्तनेत्रः२० ।
धुन्वन् कराग्रं च शिरश्च देवो दुद्राव जम्भं तृषितो२१ यथाम्भः२२ ।।२१ ।।
स तं कराग्रेण दृढं दृढेन मुहुः समाहत्य मुहुर्विनद्य ।
रथं गृहीत्वा बलवाँस्तदाजौ चिक्षेप२३ साश्वध्वजशस्त्रचक्रम्२४ ।। २२।।
सोद्धूत२५ भग्नातिपताककेतुश्च्युतासिशक्त्यृष्टिसहस्रबाणः ।
रथः पपातासुरनन्दनस्य मनोरथस्तीव्र इवाधनस्य ।।२३ ।।
पतीष्यमांणं तु२६ रथं विहाय प्रह्लादिरिन्द्राम्बुधरप्रभावः ।

स्थितोम्बरे शक्तिधरो रराज स्थितोम्बरे शक्तिधरो यथैव ।।२४।।
स तां सघण्टां कनकावदातां कृशानुलेखामिव दीप्यमानाम् ।
विनायकायासुरराजपुत्रश्चिक्षेप शक्तिं समुदीर्णशक्तिः ।।२५।।
- - -- - - -- - -
९ कुचयोरन्तरे - ख. । १० तडित्वन्त इवाम्बुदाः - क । ११ रोपितमना - क. । १२ गणपो घ.। १३ सशरं करम् - घ. । १४ राराग्रेण - घ. । १५... रतक्ष्तदतिरोषितः - घ । १६ स्त घ.। १७ यद्यथनिमृतानकाः - घ । १८ समीपेरुधिराश्रिताः - घ. । १९... दतिभिन्नगात्रो - क. । २० कुम्भसृता वाप्लुतस्क्तनेत्रः? क. । २१ तृषिता - घ । २२ यथास्तः - घ. । २३ जंभ - घ । २४ चक्रशस्त्रं (स्त्रस्त) - ख. घ. । २५ सोधू. - ख. । २६ स (?) ।
- - -- - - -- - -

771
सा खात्पतन्ती भुजगाङ्गनेव शस्त्राङ्गना प्रज्वलमानवक्त्रा ।
शराहता विट्पतिना पपात शक्तिर्यथाग्र्या पुरुषे हताशे ।।२६।।
आश्चर्यभूते प्रमथासुराणां तस्मिन् तथा वर्तति युद्धयज्ञे ।
अमर्षितो भार्गवकर्म दृष्ट्वा शिलादपुत्रोभ्यगमन्महेशम् ।।२७।।
जयेति सोक्त्वा२७ जययोनिमुग्रमुवाच नन्दी कनकावदातम्२८ ।
गणेश्वराणां रणकर्म देव देवैः सहेन्द्रैरपि२९ दुष्करं यत् ।।२८।।
तद् भार्गवेणाद्य कृतं वृथा न संजीवयानेन हि दानवेन्द्रान् ।
एते हि ते दानवयूथपाला३० यमालयादद्य पुनर्निवृत्ताः ।।२९।।
विद्रावयन्तः प्रमथाँश्चरन्ति नागानिवाजौ शरभाः सदर्पाः ।
यदि ह्यसौ दैत्यवरान्निरस्तानुज्ज्जीवयत्येव पुनः सदैव३१ ।। 8.147.३० ।।
जयः कुतो वै भविता महेश गणेश्वराणां कुत एव शान्तिः ।
वक्रस्थितश्चैष३२ न चैष वध्यो३३ अयुध्यमानो३४ वृषवाह शुक्रः ।।३१।।
नैवाभिनाशोस्ति३५ तव प्रसादाद् हतं च तं त्वं कुरुषे प्रसादम्३६ ।
भवेत्तवेशान३७ मतं स वध्यो यथा जयस्ते समरेनिशं स्यात् ।
तथा कुरुष्वोत्तमबुद्धिबुद्ध३८ न ते महेशान समोस्ति बुद्ध्या ।।३ २।।
सनत्कुमार उवाच
इत्येवमुक्तः प्रमथेश्वरेण नन्दीश्वरेणेश्वरदेवदेवः ।
उवाच देवः प्रहसस्तदानीं स नन्दिनम्३९ सर्वगणेशनायकम् ।।३३ ।।
नन्दिन् प्रयाहि त्वरितोतिमात्रं द्विजेन्द्रबन्धुं४० दितिनन्दनानाम् ।
मध्यात्समुत्पाट्य तमानयस्व यथोपहारं धनवान्४१ मनुष्यः ।।३४।।

स एवमुक्तो वृषभध्वजेन वृषध्वजो वै वृषसिंहनादः४२ ।
जगाम तूर्णं४३ प्रविगाह्य सेनां यत्राभवद् भार्गववंशदीपः ।।३५।।

- - -- - - -- - -

२७ चोक्त्वा - घ. । २८... वदातः - क.?) । २९ सहस्रैरपि - क. ख । ३० दानवायुद्धपाला - क. ख. । ३१ सुरेषु (श) देव - क. ख. । ३२ वक्त्रः स्थितश्चैव - घ. । ३३ महानुभावः - घ. । ३३ अयुध्यमानो - घ । ३५ नैषां हि ले ( ।) पोस्ति - क. । ३६ हतां च तं त्वं तु कुरु प्रसादम् - क. । ३७ न चेत्तवेशान - क । ३८ युद्धं - ख. । ३९ उवाच देव- प्रहसं नन्दिनं गणनायकं - क. । ४० वर्णं - क. । ४१ बलवान् घ । ४२ नन्दीश्वरोयं भृशसिंहनादः - घ. । ४३ हन्तुं - घ. ।

- - -- - - -- - -



तं रक्ष्यमाणं दितिनन्दनैस्तैः पाशासिवृक्षोपलशूलहस्तैः ।
विक्षोभ्य दैत्यान् वृषराड् जहार शुक्रं स नन्दी शरभो यथेभम् ।।३ ६ । ।
स्रस्ताम्बरं तं च्युतभूषणं च विमुक्तकेशं रिपुणा गृहीतम् ।
विमोक्षयिष्यन्त इवाभ्यधावन्४४ सुरारयः सिंहरवान् सृजन्तः । । ३७। ।
ते वज्रशूलेषुपरश्वधानां सचक्रदण्डोपलकम्पनानाम् (?) ।
नन्दीश्वरस्योपरि दानवेन्द्रा वर्षं ववर्षुर्जलदा इवोग्राः । । ३८ । ।
स भार्गवं प्राप्य गणाधिपाग्र्यो वक्त्राग्निना शस्त्रशतानि दग्ध्वा ।
आयात् स शुक्रन्तु करे गृहीत्वा नन्दीश्वरो दानवयूथपालम्४५ ।।३ ९। ।
तेषां च तेषां च ततो बभूव प्रमुक्तशस्त्रास्त्रसुभीमपातः ।
जहीति४६ गृह्णेति च वादिनां वै महाहवो देवमनःप्रतोषः । ।8.147.४० । ।
तेनान्तरेणैत्य भवस्य पार्श्वं नन्दीश्वरः क्रोधविवर्णनेत्रः ।
अयं स शुक्रो भगवन्निनतीशे४७ निवेदयामास भवाय शीघ्रम् । ।४१ ।।
जग्राह शुक्रं स च४८ देवदेवो यथोपहारं शुचिना प्रदत्तम ।
वक्रस्थितं शुक्रमरिं जगार४९ न किञ्चिदुक्त्वा स हि भूतगोप्ता ।।४२।।
ततः पुनर्दानवदैत्यसैन्यं५० गणेश्वरास्तस्य तदा विजघ्नुः ।।४३ । ।
इति स्कन्दपुराणे गणयुद्धे भार्गवहरणे सप्तचत्वारिंशदुत्तरशततमोध्यायः

सनत्कुमार उवाच
शुक्रेथ शुक्रपतिनागीर्णेन्नेव भुजङ्गिना१ ।
बभूवुर्दानवाः सर्वे दरिद्रा इव निष्क्रियाः । । १ । ।
विशरीरा यथा जीवा गरुडा विरया२ इव ।

विहस्ता इव मातङ्गा विशृङ्गा इव गोवृषाः ।। २। ।

निर्विषा इव नागेन्द्रा निर्विद्या३ इव च द्विजाः ।

सागरा इव निस्तोया विवेगा इव मारुताः४ । । ३ । ।

- - -- - - -- - -

४४ इवाभिधावन् - क ख. । ४५ यूथपाधिपम् - - क, यूथपदानवानां - घ. । ४६ याहीति ख ४७ भगवन्नितीद - क । ४८ च स - क. । ४९ - वक्रस्थितः - क., चिक्षेप वक्त्रे तु ५० देवसैन्यं - क ।

१ र्न्नध (र्ण्णय?) भुजाग्निना - क., शीर्णे गठरवह्निना - घ । २ विरथा - वः । ३ अविधा क,। ४ शाकुना - ख ।

- - -- - - -- - -

773

पयोदा इव निश्शब्दा विशिखा इव चाग्नयः ।

गतोत्सवा व दिवसा५ विपुष्पा इव पादपाः ।।४।।

हरिणा इव संत्रस्ता विपक्षा इव पक्षिणः ।

ग्रहा इव प्रशान्ताभा ग्राहा इव जलोद्धृताः । ।५। ।

नन्दिनापहृते शुक्रे गीर्णे चापि कपर्दिना ।

दानवा जज्ञिरे शूरा दीनमानपराक्रमाः६ । ।६ ।।

वैमनस्यं परं प्राप्तो७ दानवानां रणेन्धकः ।

उवाच मेघनिनदः संयुगस्थः स दानवः । ।७।।

विक्रम्य नन्दिना शुक्रं नयता८ नयिनां वरम्९ ।

हृतानि नोद्य सर्वेषां जीवितानि न संशयः । ।८ । ।

प्रमथैर्निहतान्दैत्यान् कः पुनर्जीवयिष्यति ।

भार्गवं तमृते शुक्रं१० कोन्यो नो११ धारयिष्यति । । ९। ।

धैर्यञ्च विक्रमस्तेजः सत्वं वीर्यं बलं धृतिः ।

शत्रुभिर्नो हृतं सर्वं देवे१२ शुक्रेपवाहिते । । 8.148.१०

भार्गवेपहृते१३ देवे१४ ममापि व्यथितं मनः ।

न त्वहं संयुगं जह्यां१५ प्रमथैस्समभिद्रुतः । । ११ । ।

संस्तम्भयत माभैष्ट युध्यध्वमरिभिः सह ।

सूदयिष्याम्यहं सर्वान् प्रमथान् सह नन्दिना । । १२ । ।

अद्यैतान्१६ विवशान् कृत्वा१७ हत्वा च त्रिदशानपि ।

भार्गवं मोक्षयिष्यामि पञ्जरस्थं यथा हरिम्१८ । । १३ । ।

स चापि योगी योगेन यदि नाम स्वयं प्रभुः ।

शरीरान्१९ निष्क्रमेत्तस्य अस्माकं शेषपालितः ।। १४।।

इत्यन्धकवचः श्रुत्वा दानवा मेघनर्दनाः ।

प्रमथानर्दयामासुर्मर्तव्यकृतनिश्चयाः ।। १५ ।।

- -- - -- - -- - -- - -- - - - - --

६ हीननानपराक्रमाः (?) । ७ दृष्ट्वा - ख. । ८ नयिना - क., जयिना? - ख. । ९ वरः - क. । १० शुक्रं क । ११ मे - ख । १२ देवैः - ख. । १३ प्रहृते - ख । १४ देवा ( वै?) - ख, । १५ जह्य - क ख. । १६ अदैत्यान् - क., प्रमथान् - ख. । १७ हत्वा - क. । १८ सिंहं पञ्जरगं यथा - ख. । १९ उदरात् (?) ।

- -- - -- - -- - -- -- - -- - -- -

774

तत्र षाणासिवज्रौघैः कटङ्ककटशिलोपलैः ।

अन्योन्यमवकृन्तन्तस्ते चक्रुः२० कदनं महत् ।।१ ६ ।।

कार्मुकाणां विकृष्टानां विसृष्टानां च पत्रिणाम् ।

निपात्यतामसीनां च शब्दोभूद् भृशदारुणः२१ ।। १७।।

भग्नध्वजपताकानि क्षीणप्रहरणानि च ।

रुधिरास्रावचित्राणि२२ व्रणाकुसुमितानि च ।।१ ८।।

पिपासितानि श्रान्तानि२३ हतवाजिगजानि च ।

समुद्राम्बरकल्पानि बलान्यासन् समन्ततः ।। १ ९।।

अथ भूयो गजेन्द्रेण चतुर्दन्तेन गर्जता ।

अञ्जनाचलकल्पेन अञ्जनद्विपवर्चसा ।।8.148.२ ० ।।

सतूणीरपताकेन अंकुशारोषितेन च२४ ।

जम्भो दानवशार्दूल अभिदुद्राव नन्दिनम् ।।२ १ ।।

गजस्कन्धगतो दैत्यो बभौ जम्भः सतोमरः ।

कृष्णापर्वतशृंगस्थस्सबलाक इवाम्बुदः ।। २२ ।।

स्तब्धलाडत्गूलदृक्कर्णः प्रसारितमहाकरः ।

चदितो दानवेन्द्रेण समधावन्महागजः ।। २३ ।।

युगान्तेर्णववातस्य अनौपम्यो यथा जवः ।

अनौपम्यस्तथा तस्य जवो नागस्य धावतः।।२४।।

तुरङ्गा ये च मातङ्गा प्रमथा ये च दानवाः ।

तस्य मार्गादपक्रान्ता मृत्योरिव यथा नराः ।। २५।।

तं मत्तनागं धावन्तं नदन्तमिव नीरदम् ।

वारयामास बलवान् विक्रम्य स विनायकः ।।२६।।

स तं देववरो दन्ती२५ करिणं२६ पर्वतोपमम्२७ ।
प्रकीर्णेन कराग्रेण प्रमुखेभिजघान२८ ह । ।२७। ।

- - -- -- - -- - - -

२०. मवकृन्तन्तः प्रचक्रुः - क. । २१ दारुणाम् - क । २२ रुधिरस्रवचित्राणि - ख । २३ भिभूतानि - ख. । २४ रोपितेन च(?) । २५ नन्दी - ख, । २६ किरिणं - क. । २७ पर्वतत्विषं - क. । २८ प्रभुखोमिजघान (?) ।

- - -- - - -- - - -

775

विनायकेनाभिहतो नायकः सर्वहस्तिनाम् ।
स रुजा घोरया नुन्नो मुहूर्तमभवज्जडः । ।२८ ।।
अथाश्वस्य च२९ विश्रम्य३० संवर्त्यात्मकरं३१ करी ।
विनायकमुरोदेशे३२ ताडयामास नर्दयन्३३ ।।२९। ।
स विन्ध्यकूटकल्पेन तेन नागेन ताडितः ।
पदात्पदं न चलितो महासत्वो विनायकः । ।8.148.३ ० ।।
नासया स गृहीत्वा तं नासायां३४ दानवद्विपम् ।
आक्षिप्य पातयामास गिरिवर्ष्मा३५ विनायकः ।।३ १ । ।
स सिंह इव सिंहेन वनमध्ये निपातितः ।
ररास विस्फुरन्नागो मेघो वाय्वाहतो यथा । ।३ २।।
तं नागं पातययानं तु नागवक्त्रमसृक्स्रवम्३६ ।
बिभेद तोमरेणाशु करेणार्क इवाम्बुदम् ।।३ ३ । ।
मोचयन्तं तु चरणौ ग्रीवायां दानवोत्तमम ।
तेनैव तोमरेणाथ आजघान विनायकः ।।३४। ।
स सुप्रहाराभिहतो गजवक्त्रेण दानवः ।
चक्षार रुधिरं जम्भो निर्ज्जराम्भो गिरिर्यथा ।।३ ५।।
पुनश्चास्य वधाकांक्षी असिं जग्राह वीर्यवान् ।
तस्योद्यतासेर्नदतश्चिच्छित्सोर्जम्भकन्धराम्३७ ।।३ ६ ।।
असिं कुजम्भश्चिच्छेद गरुडः पन्नगं यथा ।
तञ्चापि सुविकृष्टेन शरेणासृग्भुजा तदा ।।३७। ।
कुजम्भो ह्यहनद्बाहौ वज्रेणेन्द्र३८ इवाचलम् ।
स दृढाभिहतस्तेन घूर्णितस्सालवृक्षवत्३९ ।। ३८।।
कुजम्भमभिदुद्राव केसरी कुञ्जरं यथा ।
समुच्छ्रितकरो देवस्तं दानवमभिद्रवन् ।।३९।।

- - -- -- - - - - - -- -

२९ स (?)। ३० विक्रम्य - ख. । ३१ संवर्ध्यात्मकरं - ख. । ३२... मुरोद्देशे - क. ख. । ३३ निर्दयं - क. । ३४ नासया - क । ३५ व (ध) र्म्मा - ख. । ३६... वस्रजम् - -ख. । ३७ चिच्छेद जम्भकस्तदा - ख. । ३८ वजेन्द्रेण - क. । ३९... स्तालवृक्षवत् - ख. ।

- -- - - -- -- -- - --

776

ऐरावत इवाभाति बलोद्वृत्तो विनायकः ।
व्यंसस्तं४० धावमानं तु कुजम्भवधकांक्षिणम् । ।8.148.४० । ।
ववार स गतोंसेन४१ पातयामास तं४२ क्षितौ ।
व्यंसमंसेन४३ हत्वा तु नागवक्त्रो महाबलः । ।४१ । ।
कुजम्भस्यान्तिकं प्राप४४ सिंहस्य शरभो यथा ।
कुजम्भस्तस्य भित्वा तु शरेण करमुद्यतम् । ।४२।।
गदयाभ्यहनन्४५ मूर्ध्नि मुद्गरेण च वक्षसि ।
त्रिभिः प्रहारैः स बभौ शोणिताक्तो विनायकः ।
नागायुतसहस्रौजास्त्रिप्रभिन्न इव द्विपः । ।४३ ।।
धरायां४६ नासयादाय कुजम्भं तु विनायकः ।
प्रचिक्षेप महावीर्यो यथा भूतबलिं नरः ।।४४। ।
कुजम्भे मन्दरप्रख्ये४७ विनायकभुजेरिते ।
चुक्रुधुर्दानवाः सर्वे तेर्दयंश्च विनायकम् । ।४५।।
सोर्दितो दानवशतै४८ र्नानयुधवितक्षितः ।
चचार देवो दैत्येषु पृषतेषु यथा हरिः । ।४६ । ।
स दन्तैश्चरणैश्चापि शुण्डयाततयापि च ।
ममर्द दानवान् क्रुद्धः कुञ्जरो नड्वलानिव ।।४७। ।
ततो गणेशा ह्यपि४९ वीक्ष्य दानवैर्विनायकं शस्त्रशतैः परिक्षतम् ।
गृहीतशस्त्रा गजसिंहविक्रमा विमुक्तरावाः शतशोभिदुद्रुवुः ।।४८।।
ततः पुनः शस्त्रसहस्रवेजितं५० शरासिशक्त्यृष्टिनिपातदुःसहम् ।
गणासुराणामसुनाशनं५१ महद् बभूव युद्धं हतवाजिकुञ्जरम् ।।४९। ।
इति स्कन्दपुराणे गणयुद्धे अष्टचत्वारिंशदुत्तरशततमोध्यायः५२

- - - - - -- - - - --

४० स्त्वं - क. । ४१ सङ्गतांसेन - ख., समनङ्गेन - क. । ४२ च - ख । ४३ अंशमंसेन ख. । ४४ प्राप्य -

क., प्राप्तः - क । ४५ गदयास्य हनन् - क, न्यहनन् - ख. । ४६ धारयां ( यत्) - क. । ४७ मन्दरप्रस्थे - ख. । ८८ गतै - कः. । ४९... पि हि - क ख. । ५० तेजितं - ख. । ५१ मसुना- शननप्रदं - क. ख. । ५२ १९७ - ख. ।

- -- - - -- - -- --

777

व्यास उवाच१

निगीर्णो ब्राह्मणः सोथ चन्द्रावयवधारिणा ।

किं चक्रे कोष्ठगस्तस्य देवदेवस्य भार्गवः । । १ । ।

कथं च तपतां श्रेष्ठो योगी योगेन स द्विजः ।

न निःसृतो योगबलाद् देवदेहान्महातपाः । । २ । ।

अन्धकश्चासुरश्रेष्ठः स तदा भार्गवं विना ।

चकार कथमावापं२ गणेशैः समभिद्रुतः । । ३ । ।

एतन्मे सर्वमखिलं खिलवेदविदां३ वर ।

कथयस्व न मे तृप्तिः शृण्वानस्येशचेष्टितम् । ।४। ।

सूत उवाच

अथैवं४ पृच्छतस्तस्य व्यासस्य मुनिसत्तमः ।

सनत्कुमारोकथयच्छुक्रस्याथ विचेष्टितम् ।।५।।

सनत्कुमार उवाच

निगीर्णे भार्गवे तेन भूतोमादेवबन्धुना ।

अन्धको निष्प्रभो जज्ञे घनरुद्धो यथा रविः । । ६। ।

दृष्टवा स्वसैन्यं प्रमथैर्भज्यमानं पुनः पुनः ।

दुद्राव रथमास्थाय स्वयमेवान्धको गणान्६ । ।७। ।

शरवज्रप्रहारैस्तैर्वज्राघातैर्द्धरा (?) इव ।

प्रमथाः पेतिरेवन्यां निस्तोया इव तोयदाः । ।८ । ।

क्रोडेषूरुकपोलेषु पृष्ठबाहूदरेषु च ।

रुरुवु७र्बाणनिर्भिन्नाः प्रमथाः कुञ्जरा यथा । । ९। ।

यान्तमायान्तमप्राप्तं प्राप्तं दूरस्थमेव च ।

अपश्यद्यं यतस्तं तं निर्बिभेद शरैर्भृशम् । । 8.149.१० । ।

बिभेद शतमेकेन शतेन च शतं पुनः ।

सहस्रं च सहस्रेण कोटिं कोट्या तथैव च । । ११ । ।

- -- -- - - - -- - - -

१ सन उ. - क. । २ कथमावाध - ख. । ३ बिलवेदाविदां - ख । ४ अथैनं - क. । ५ सुरसत्तमः - ख. । ६ गणम् - क । ७ रुरुधु - क. ख. ।

- -- -- - - -- - - -



ध्वजाः८ पताकाश्छत्राणि९ वैजयन्त्योङ्कुशाः कुथाः ।

चामराणि किरीटानि कुण्डलान्यम्बराणि च ।।१२।।

प्रमथानां बले यच्च कम्पते धावतेपि वा ।

तत्सर्वं चिच्छिदे तूर्णं१० शरैरन्धकदानवः ।। १३ ।।

विस्फुलिङ्गान् यथैवाग्निर्धारासारान् यथाम्बुदः११ ।

सिन्धुराजो यथोद्गारान्१२ करानिव दिवाकरः ।।१४।।

नादान् सिंहा इवारण्ये सीकरानिव कुञ्जराः ।

मुमोच बाणाँस्तीक्ष्णाग्रान् परसैन्यविमर्दनान्१३ ।।१५।।

अन्धके युध्यमाने तु निश्चयेनासुरोत्तमे१४ ।

असुरा अप्ययुध्यन्त१५ निश्चयेनान्धकादनु ।।१ ६। ।

निवातकवचा ये ते अन्योन्यसदृशा भृशम् ।

चक्रुस्ते बहवो युद्धं रुद्रैश्च बहुभिः सह । ।१७।।

कालेयाः षष्टिसाहस्राः कालकल्पा महासुराः१६ ।

बाहुजैः षष्टिसाहस्रैः प्रमथैर्युयुधुः सह । । १८।।

प्रह्लादश्चानुह्लादश्च संह्लादः शिनिबाष्कलौ ।

विरोचनो बलिर्बाणः कुजम्भोथावनिञ्जयः । ।१ ९।।

अञ्जकः१७ कालनेमिश्च नमुचिर्व्यंस एव च ।

एकादशैते प्रख्याता एकादशरविप्रभाः । ।8.149.२ ० ।।

एकादशैव प्रमथानर्दयन् कलहैषिणः ।

प्रभामयं वीरभद्रं विट्पतिं पिङ्गलं तथा । । २१ ।।

वेगपं पवनादं च सोमार्काप्यायनावपि ।

संवर्तकानलञ्चैव१८ पावकाप्यायनावपि (?) ।। २२ । ।

यक्षोन्नदश्च बलवान् विद्युत्केशश्च राक्षसः१९ ।

प्रह्लादप्रमुखैरेतैर्दानवैर्देवपुङ्गवाः ।।२३ । ।

- - - -- - --

८ ध्वजान् - क. । ९.. च्छत्राणि - क. । १० चिच्छेद सर्वं तत्तर्णू' (?) । ११. निवाम्बुदः - क. । १२ सिन्धुराज इवोद्गारान् - क. । १३ विमर्दनीम् - क. । १४ दानवोत्तमे - ख. । १५ असुरा अपि युध्यन्ति - क

। १६ महाबलाः - ख. १७ अन्धकः - क., अज (जं) कः (?) । १८ श्चैव - -क. । १९ दानवः - ख. ।

- - -- - - -- - -



विहस्तशस्त्रकवचावृताः शस्त्रशताचिताः ।

द्वारपालाश्च रुद्रणां रुद्राणां ये च सूनवः । ।२४। ।

स्कन्दपारिषदा२० ये च ये च शक्तिगणेश्वराः२१ ।

ते दनोस्तनयै२२स्सार्धं दनोः पुत्रान्वयाश्च२३ ये ।

चक्रुः कृतान्तसदृशाः कलहं कलहप्रियाः ।।२५।।

तस्मिन् तथा वर्तित संप्रहारे विशीर्णहराभरणस्रगस्त्रैः२४ ।

व्याविद्धवस्त्रा२५ विकसत्सुनेत्रा नेदुः सुराः सिद्धगणाश्च खस्थाः । । २६।।

इति स्कन्दपुराणे गणयुद्धे ऊनपंचाशदुत्तरशततमोध्यायः२६

व्यास उवाच

मायावीर्यं च वीर्यं च अन्धकस्यामरद्विषः ।

सृष्टं भगवता सम्यग् देवरूपनिमित्तजम् ।। १ ।।

निगीर्णो यस्य देवेन शरीरे भार्गवो मुनिः ।

कथं तु कृतवांस्तत्र देवदेवशरीरगः । ।२। ।

कथं च तपसो वीर्याद् योगवीर्याच्च स द्विजः ।

श्वेताभ्रादिव वै चन्द्रो निःसृतो१ भृगुनन्दनः ।१३ । ।

एतत् कौतूहलं जातं ममाद्य मुनिसत्तम ।

कथयेशानचरितं भार्गवस्य च धीमतः ।।४। ।

सूत उवाच

स एवमुक्तो व्यासेन पद्मगर्भसुतः प्रभुः ।

सनत्कुमारोकथयच्छिवाच्छुक्रस्य निर्गमम् । ।५। ।

देहे तस्य तदा शम्भोः शुक्रो विनिहतद्युतिः२ ।

छिद्रान्वेषी भ्रमन्नेव अनिकेतो यथानिलः ।।६।।

- - -- - - -- - -

२० पदा - क. । २१ स - क., भक्तिगणेश्वराः - ख. । २२.. स्तनया - क. । २३ पुत्राश्रयाश्च - ख । २४ हाराभरणा - क.,... स्रगस्त्राः - ख. । २५ व्याविध्यवस्त्रा - क । २६ १९८ - ख ।

१ निभृतो - क. । २ विनिहितद्युतिः - क. ।

- - -- - - -- - -

स लोकानग्निवर्णाभान् रुद्रकोटिशतैर्वृतान ।
रुद्रकन्याविचरितान् रुद्रदेहेभ्यपश्यत । ।७ । ।
कुन्देन्दुशंखवर्णानां दंष्ट्रिणां नखिनामपि ।
दीर्घलाङ्गूलजुष्टानां सदर्पाणां क्षमावताम्३ । ।८ ।।
ज्वलनप्रभकेशानां नन्धावर्तकधारिणाम् ।
किंशुकप्रभजिह्वानां कैलासगिरिवर्ष्मणाम् । । ९। ।
अग्निबन्धनबद्धानां४ सिंहानां भीमरूपिणाम् ।
सहस्रं ददृशे देहे देवदेवस्य भार्गवः । । 8.150.१० । ।
सुरांश्च सेन्द्रान् सादित्यान्५ साप्सरोगणमानवान्६ ।
गणेशासुरयुद्धं च सोपश्यद्धरदेहगः७ । । ११ ।।
वर्षाणां तु शतं कुक्षौ भ्रममाणो भवस्य सः८ ।
न तस्य ददृशे छिद्रं शुचेरिव यथा कलिः । ।१ २ । ।
योगमप्यस्य सैश्वर्यमणिमादिगुणान्वितम्९ ।
प्रजहार महादेवो मनोवाग्यतचेतसः१० । । १३ । ।
अथ शब्दो महानासीत् प्रमथासुरसैन्ययोः ।
तं श्रुत्वा शब्दमाविग्नो भार्गवः प्रतिबोधितः ।।१४। ।
सोन्तर्गत उमाभर्तुर्ब्राह्मणस्तपसैधितः११ ।
तुष्टावेष्टैः स्तवैर्देवं सोमं सोमविभूषणम् । । १ ५। ।
आपद्भावं प्रपन्नस्य तस्य देवेन शूलिना ।
लिङ्गेन निष्क्रमस्वेति प्रसादाभ्युदयः१२ कृतः । ।१ ६।।
सूक्ष्मरूपस्ततो भूत्वा स शुक्रो मुनिसत्तमः ।
शुक्रवन्निःसृतो लिङ्गाद् देवदेवस्य धीमतः । । १७।।
शुक्रवन्निःसृतो यस्माच्छिश्नाद् भार्गवनन्दनः ।
तस्माच्छुक्र इति ख्यातिं गतो गतिमतां वरः । । १८ । ।

- - -- - - -- - -

३ ? ४ ? ५ आदित्यान् - ६. अप्सरोगणमानवान् - क. ७ अपश्यद्धरदेहजः - क. । ८ च - क । ९ गगान्वित. - खे । १० वाग्यतचेतसः - क, । ११ स्तपसेधितः - क ख. । १२ प्रा ( प्र) सादः प रम - ख. ।

- - -- - - -- - -



वन्दमानश्च१३ तेनोक्तः पयोदपतिकेतुना ।

शुक्रवन्निःसृतो मेद्य यस्मात्त्वं भृगुनन्दन । । १ ९। ।
कर्मणा तेन शुक्रोसि मम पुत्रश्च गम्यताम् ।
इत्येवमुक्तो देवेन शुक्रोर्कसदृशद्युतिः । ।8.150.२ ० । ।
विवेश दानवानीकं मेघानीकं शशी यथा१४ ।
तं दृष्टवा चन्द्रसंकाशं चन्द्रोदयनिभोदयम् । । २१ । ।
चन्द्रोदये यथा नृणां प्रीतिरासीत् सुरद्विषाम् ।
ते दृष्टवा दनुदैतेयाः शुक्रं चन्द्रसमप्रभम् । । २२ ।।
सर्वे सिंहरवाँश्चक्रुः१५ संप्रहृष्टा युयुत्सवः ।
निहता दानवा ये तु प्रमथैर्जितकाशिभिः । । २३ । ।
तानागतान्मृत्युमुखान्मेनिरे भार्गवागमात्१६ ।
ववन्दुस्तं१७ ननन्दुश्च प्रसेदुश्च१८ महासुराः । ।२४।।
शुक्रोदयमुदं लेभे स दानवमहार्णवः ।
यथा चन्द्रोदये नित्यं सागरो राक्षसैर्युतः ।। २५।।
अथ शाखो विशाखश्च छागवक्त्रश्चतुर्मुखः ।
नन्दी च सोमनन्दी च नन्दिषेणश्च वीर्यवान् । । २६ । ।
घण्टाकर्णः शंकुकर्णः कुण्डोदरमहोदरौ ।
विट्पतिर्वीरभद्रश्च स च देवः प्रभामयः । ।२७। ।
संवर्तकानलोर्वौ१९ च यशोदीप्तो२० विभाकरः ।
वेगपश्च२१ शिखण्डी च ताम्रचूडश्च कुक्कुटः२२ । । २८ । ।
अन्नदः पिङ्गलो यक्षः पिङ्गलश्च वटुः२३ पटुः ।
विद्युत्केशः सुकेशश्च राक्षसौ चापराजितौ । । २९ । ।
एते चान्ये च गणपा लोकपालसमत्विषः ।
विविशुर्दानवानीकं शुक्रोदयसमुद्धतम् ।, 8.150.३० । ।

- - -- - - -- - -

१३ वन्द्यमानश्च - क. । १८ शशिर्यथा - क ख. । १५ चक्रुस्सर्वे सिंहनादान्., ना (न) दाँ.. - ख. । १६ शुक्रोद्गमात् - क. ख. । १७ ववन्दुश्च - क. ख । १८ प्रक्ष्येदुश्च - ख । १९ संवर्त्तकानलोकौ - ख., नलोवौ - ग । २० दीप्तौ - क. ग. । २१ वेणपश्च - क., छगपश्च - क. । २२ कुर्कुटः - ख. । २३ पटुः - क. ।

- - -- - - -- - -

782

अथ वादित्रशब्दास्तु सिंहनाहरवैः सह ।
बभूवुः सेनयोरुग्राः सर्वभूतप्रकम्पनाः । । ३१ ।।

ततः प्रहरर्णेर्घोरैस्तुण्डनिर्वापितैस्तलैः२४ ।
परस्परं समासाद्य निर्जघ्नुस्ते२५ परस्परम् । ।३ २ । ।
नन्दीश्वरं पुरस्कृत्य कार्त्तिकेयञ्च षण्मुखम् ।
मृद्रन्ति२६ प्रमथा दैत्यान् सर्पाँस्ताक्ष्यं इवाहवे । ।३ ३ ।।
असिपातावलूनाग्रा मुशलाहतमस्तकाः ।
दानवाः शेरते भूमौ वज्रभिन्ना इवाचलाः ।।३४।।
शरनिर्भिन्ननिर्भग्नाः२७ संभग्नोरुप्रबाहवः
रिरिङ्गुस्समरे२८ दैत्याः सर्पास्ताक्ष्यार्दिता इव ।।३५। ।
भग्नत्रिकोरुजघना२९ घनबाणावपीडिताः३० ।
दैत्या विनिष्टनन्त्यार्त्तास्तोयपूर्णा इवाम्बुदाः । ।३ ६।।
तस्मिन् गणपदैत्यानां मथने भृशदारुणे ।
बभूव पूर्णा३१ दैत्यानां३२ धरा द्यौरिव नीरदैः । । ३७।।
किरीटैर्मुकुटैर्हारैर्वलयाभरणाङ्गदैः ।
पारिहार्यैस्स३३ केयूरैः श्रोणीसूत्रैस्सकुण्डलैः३४ । ।३८।।
शिरस्त्रैर्मणिभिः शुभ्रैर्ग्रैवेयैरपि सुप्रभैः ।
स्रग्दामैश्चारुकुसुमैर्नेत्रै रत्नाग्रबाहुभिः३५ । । ३९ ।।
अस्त्रैः शस्त्रैश्च वस्त्रैश्च छत्रै३६ श्चेन्दुसमप्रभैः ।
रक्तकुंकुमचित्राङ्गी३७ नानाभरणभूषणा३८ । ।8.150.४० ।।
धनाढ्या स्त्रीरिवाभाति तत्र तत्र रणावनिः ।
सिंहानामिव दृप्तानां हस्तिनामपि वा यथा । ।४१ ।।
उत्साहोभूद् गणेशानां दानवान् संमप्रर्दताम् ।
ते हन्यमानाशरणा३९ भयार्त्ताः शरणार्थिनः । ।४२। ।

- - -- - - -- - -

२४ निर्घाचितैस्तलैः - ख. । २५ निजघ्नु - क.. । २६ ममर्दुः (?) । २७ निर्म्मग्नाः - ख. । २८ ररङगुःसमरे - क. । २९ त्रिसा (का) स्थिजघना - ख. । ३० बाणग्रपीडिताः (?) । ३१ देव - ख. । ३२... दित्यानां - क., दिव्यानां - ग. । ३३ परिहार्यैश्च - ख । ३४.. स्सबन्धनैः - ख । ३५ रत्नाग्रबा- हुभिः - क । ३६ तीक्ष्णैः - ख. । ३७ रणकुङ्कुमचित्राङ्गी - क. ख. ग. । ३८ भूषिता - ख. । ३९ आहन्यभानाशरणाः - ख, ।

- - -- - - -- - -

783

प्रमथैरनुबद्धाश्च दानवाः सागरं श्रिताः ।
दृष्ट्वा तद्रेचितं४० सैन्यं दानवैः प्रमथार्दितैः । ।४३ ।।

प्रविष्टेषु च दैत्येषु सागरं मकरालयम् ।
भार्गवः सुमहातेजा यथाग्निरिव मूर्छितः । ।४४। ।
स समुद्रालयान् दैत्याञ्छशाप कुपितो भृशम् ।
यस्मात्सहायानुत्सृज्य मां चापि पितृवद्धितम् । ।४५। ।
प्राणत्राणार्थमबलाः प्रविष्टाः स्थ४१ पयोनिधिम् ।
तस्मात्तत्रैव निर्ह्रीका४२ मम शापपरिक्षताः ।।४६।।
मीनभावमनुप्राप्ता४३ जाताजाता भविष्यथ ।
यावल्लोका भविष्यन्ति पर्वताश्च ससागराः ।।४७। ।
तावद्यूयं जले मत्स्या भविष्यथ जलेचराः ।
नरमांसाशनाः पापा नरभक्ष्या भविष्यथ ।।४८। ।
क्षपयिष्यथ मच्छापं वर्षकोटीशतान्युत ।
इति शापहतान् शेषान्४४ कृत्वार्णवजलौकसः४५ ।
विरराम महातेजाः शुक्रश्चन्द्रसमद्युतिः ।।४९। ।
सनत्कुमार उवाच
ततस्ते वार्धितोयेषु गुरुशापहतासुराः ।
सायुधाः सतनुत्राश्च दृश्यन्ते दंशिताश्च ह । ।8.150.५० ।।
अन्धकं तु ततः शुक्रः४६ शुक्रारिभयविह्वलम्४७ ।
उवाच पाणिना स्पृश्य जीवयन्निव तं गिरा । ५१ । ।
माभैस्त्वं४८ दानवश्रेष्ठ प्रतियुध्यस्व४९ शत्रुषु ।
अहं त्वां धारयिष्यामि आहार इव जीवितम् ।।५२ । ।
इत्येवमुक्तः शुक्रेण सोन्धको दानवेश्वरः ।
एवमेतदिति प्रोच्य रुरोध प्रमथान् रणे । ।५३ । ।
- - -- - - - -- - -
४० तद्रचितं - ख. । ४१. स्तु - क. ग. । ४२ निस्ती (श्री) का - ख. । ४३ ग्रासभावमनुप्राप्ता - क. ग. । ४४ चैतान् - ख.. तेषां - ग. । ४ र जलौकसान् - क. ग. । ४६ शुकाः - क । ४७ शुक्रारिं - क । ४८ भीस्त्वं - क. । ४९.. बुद्धस्य - क., युद्धस्व ख. - ग. ।
- - -- - - - -- - -


ततः प्रविष्टेष्वसुरेषु सागरं निहन्यमानेषु च शङ्करानुगैः ।
दधार सर्वान्प्रमथान् तदान्धको५० नदीनदान् भूरिजलो यथार्णवः । ।५४। ।
स नन्दिनं द्वादशभिः पराभिनत् तदान्धकः पञ्चभिरेव चाग्निजम् ।

विशाखशाखौ दशभिः शतेन च स नैगमेषं प्रतुतोद दानवः । ।५ ५ ।
स वीरभद्रं च तथा च विट्पतिं प्रभामयं यक्षवरं च पिङ्गलम् ।
विबभेद बाणैस्तपनीयभूषणैर्यथाङ्कुशाग्रैरिव हस्तिपो गजम्५१ । ।५ ६; ।
न सोस्ति तस्मिन् पुरतो न पृष्ठतो हयो गजो वा प्रमथोथवेतरः ।
शरान्न यो धारयतेन्धकेरितान् प्रदीप्तकालानलसूर्यसन्निभान् । ।५७ ।।
विवृश्चिताश्चन्दनवद् गणेश्वरा भुजोदरे वक्षसि५२ मूर्ध्नि चासकृत् ।
निरुद्यमास्तस्थुरमित्रनन्दना यथा गजाः पञ्जरबन्धबन्धनाः५३ । ।५८।।
ततोसुरैः सिंहरवास्तदा कृताः सशंखभेरीशतदुन्दुभोत्कटाः५४ ।
पुनश्च युद्धं प्रबभौ भयानकं गणेश्वराणां सह दानवेश्वरैः ।।५९। ।
इति स्कन्दपुराणे गणयुद्धे सुरशापे पञ्चाशदुत्तरशततमोध्यायः

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१६



सनत्कुमार उवाच
वर्तमानेन्धके युद्धे विद्रवत्सु गणेषु च ।
त्रिदशाधिपतिं शक्रमित्युवाच पितामहः ।। १ ।।
विमुखान्पश्य भद्रन्ते प्रमथानमराधिप ।
काल्यमानान् रणे घोरैर्दानवैरन्धकेन१ ।।२ ।।
निहतान्निहतानेष प्रथमैर्दानवान् युधि ।
शुक्र उज्जीवयन्नास्ते सस्यानि२ जलदो३ यथा ।।३ ।।
असौ विकृष्टचापश्च सेन्द्रायुधघनोपमः ।
सृजतीषुमयं वर्षमन्धकः क्षपयन् रिपून् ।।४।।
- - -- - - -- - -
१ घोरे दानवैरन्धकेन (?) । २ सस्यं हि - ख., सस्यं ह्य - क. । ३ तोयदो - ख., म्बुमुचो - क. ।
- - -- - - -- - -



प्रमथाभ्यर्दनं ह्येतदहितं ह्ययशस्करम् ।
क्षममाणा ह्यतिष्ठध्वं कस्मादेतत् पराजयम् ।। ५।।
जित्वा ह्येष गणन्सर्वानन्धको दानवेश्वरः४ ।
अस्माकमपि५ मूलानि निर्मूलानि करिष्यति ।। ६।।
तद्यावदेष नो बाणैः प्रमथान्नयति क्षयम् ।
तावदेव वयं पार्ष्णिं गृह्णाम कृत्तिवाससः ।।७।।
एवं तव च कार्यार्थः सेत्स्यते देवताधिप ।
रुद्रस्य च कृतं ह्येवं भविष्यति महत् प्रियम् ।।८।।
स्वयम्भुवचनं श्रुत्वा बलवृत्रनिबर्हणः ।
युक्तमेतदिति प्रोच्य सुरान् सुरपतिर्जगौ ।। ९।।
गृहीतवर्मशस्त्रास्त्राः शीघ्रं शीघ्रपराक्रमाः ।

साहाय्यं करवामाद्य६ गणानां युध्यतां रणे ।। 8.151.१० ।।
ततो नारायणानन्तौ७ नरेन्द्रौ चन्द्र८ एव च ।
स्वयम्भुरनलो वायुः सूर्यो धनद एव च ।। ११ ।।
पूषार्यमा भगो मित्रो यमश्च रविनन्दनः ।
अंश९स्त्वष्टा जयश्चैव जयन्तश्चैव शक्रजः ।। १ २।।
मरुतो वसवः साध्यास्तथाश्विगरुडोरगाः ।
तुषिताश्चैव लेखाश्च विश्वेदेवाश्च गुह्यकाः ।। १३ ।।
गन्धर्वाश्चैव यक्षाश्च१० ये चान्ये देवपक्षिणः ।
ते सर्वे वातरन् युद्धे११ हन्तुकामास्तथान्धकम्।।१४।।
अथ दुन्दुभिशब्दाश्च सिंहनादाश्च भैरवाः ।
बभूवुर्देवसैन्येषु प्रमथानां प्रियंकराः ।। १ ५।।
देवैः पतद्भिस्तत्सैन्यं दानवानां विलोडितम् ।
प्रभूतमीनं क्षीणाम्बु राजहंसैर्यथा सरः ।।१ ६।।

- - - -- - - - - - - - -- - - - - - - -

४ दानवैस्सह - क. ख. । ५ युष्माकमपि - ख. । ६ कुर्म देवस्य - क. ख । ७ नारायणोनन्तो (?) । ८ नरेन्द्रचन्द्र (?) । ९ अंशु - ख. । १० योद्धुकामाश्च - ख. । ११ .. वतरन् युद्धे - क. ख. ।

- - - -- - - - - - - - -- - - - - - - -

786

ततो हलहलाशब्दः संजज्ञेतीवभैरवः ।
देवताध्युषिते सैन्ये दानवानां समाकुले ।। १७।।
सामुद्रमम्भस्तिमिभिर्घनैरिव यथा नभः ।
कफपित्तैर्यथा देहो गरुडैर्भोगिनो यथा ।।१ ८।।
तथा तदन्धकबलं बलेन त्रिदिवौकसाम् ।
मुहूर्तेन कृतं सर्वं विहस्तकवचध्वजम्१२ ।। १ ९।।
एकतः सेन्द्रकै१३ र्देवैरेकतश्च गणेश्वरैः ।
हन्यते दानवानीकमजा१४ वृकशतैरिव ।।8.151.२ ० ।।
वज्रोद्यतकरो देवो देवानां देवपुङ्गवः ।
ओङ्कार इव वेदानां१५ तेषामासीत् पुरस्सरः ।।२ १ ।।
वज्रास्त्रपावकेनेन्द्रो ददाह समरे रिपून् ।
दुरितानि तु सर्वाणि प्रायश्चित्तानलो यथा ।।२२।।
देवैश्च प्रमथैश्चैव हन्यमाने बलेन्धकः ।
उवाच क्रोधरागान्धो दानवान्दानवाधिपः ।।२ ३ ।।

उत्पाद्य वैरं रुद्रेण सर्वलोकाभिरक्षिणा ।

न शक्यं प्रमथान् जेतुमनिर्विण्णैः सहामरान्१६ ।।२४।।

मरणाच्च न१७ भेतव्यं युध्यध्वं दैत्यदानवाः।

भार्गवस्तिष्ठति ह्येष यो नः संजीवयिष्यति ।।२५।।

तत् प्राणेष्वदयन्तो वै यूयं देवगणेश्वरान् ।

यथाबलं यथोत्साहं वारयध्वमशङ्किताः । ।२६। ।

मायाभिरेतान् बह्वीभिर्गूढाभिर्गूढरूपिणः ।

निवारयत युद्धेन सर्वान् देवान् समागतान् ।।२७। ।

इत्युक्ता१८ - - - - - - - - - - - - - ।

- - - चक्रुर्घोराणि कल्पान्ते नीरदा इव । ।२८।।

- - - -- - - - - - - - -- - - - -- - - - -

१२ विध्वस्तकवचध्वजम् (?) । १३ सैन्यकै - ख । १८ शतानीकमाजं (?) । १५ देवानां - क. ख.. । १६ सहामराः सहामरारे ( ?) - क. । १७ मरणान्न च - ख । १८ इत्युक्त्वा - क. ख. ।

- - - -- - - - - - - - -- - - - -- - - - -

787

धनुःशब्दान् प्रकुर्वाणाः सिंहनादरवांस्तथा१९ ।

दुद्रुवुर्दानवा देवानन्धकेन प्रचोदिताः ।।२९।।

विकृष्य तु महाचापं२० सागराम्बुदनर्दनः १ ।

रुद्रमुद्दिश्य वेगेन ससारान्धकदानवः ।।8.151.३ ० ।।

तं दानवेन्द्रं दुर्वारं धावमान - - - - ।

वारयामास शैलादिर्धर्मचित्तमिवाशुभम् ।

- - - - - - - - - - - - - - - - ।।३१।।

स' नन्दिनं त्रिभिर्बाणैर्ज्वलनादित्यसन्निभैः ।

निबिभेदान्धकः क्रोधाद् बाहुमध्ये निपीडयन् ।।३२।।

गाढं विदारितस्तेन दानवेन गणेश्वरः ।

सं२२ जुघूर्ण तदा नन्दी वायुनुन्नो यथा द्रुमः ।।३३।।

घूर्णमानो बभौ नन्दी मृष्टकुण्लभूषणः ।

चलत्पल्लवपुष्पाढ्यो यथाशोकतरुस्तथा ।।३४।।

ततश्चिरात्समाश्वस्य सुयशाः सुयशापतिः ।

वज्रमूर्जितमुत्क्षिप्य सोन्धकाय ससर्ज ह ।।३५।।

तत्पावकरविप्रख्यं वज्रमागतमूर्जितम् ।

व्यष्टम्भयत बाणौघैरन्धकः प्रजहास च । ।३६।।

हसतस्तस्य२३ नेत्राभ्यां सुभ्रूभ्यामश्रुबिन्दवः ।
न्यस्रवन्त यथार्कस्य किरणा दीप्तमण्डलात् ।।३७।।
भूतराज२५स्तस्तोत्पाट्य द्रुमं व्याकुलपल्लवम् ।
हतोसि हेन्धकेत्युक्त्वा ससर्ज च जगर्ज च ।।३८।।
तं धावमानमाकाशे तरुमारुतवीजिताः२६ ।
अनुव्रजन्ति भ्रमरा मित्रं व्यसनगं यथा ।।३९।।

- - - -- - - - - - - - -- - - - - - -

१९.. स्तदा - क. । २० महच्चापं - क । २१.. नर्दनं - क. ख.,.. वन्नदन् (?) । २२ स - क. । २३ हतस्य तस्य - ख. । २४ शुभ्राभ्यामश्रुबिन्दवः - क., शुभाभ्या.. - ख. । २५ भूतराज्य - क. । २६ मरुतजीवितम् - ख,, जीविताः - क. ।

- - - -- - - - - - - - -- - - - - - -



तमप्यस्यान्धको बाणैश्चारुकाञ्चनभूषणैः ।
चकर्त धर्ता२७ लोकानां दितिगर्भं यथाहिहा । ।8.151.४० ।।
वृक्षे कृते ततो नन्दी समृगव्यालपन्नगम् ।
मन्दराग्रं समुत्पाट्य दुद्रावान्धकमाहवे । ।४१ । ।
गिरिकूटं तु तं नन्दी गिरिकूटवनालयः ।
अपातयद्रथे तस्य विन्ध्ये वज्रमिवाहिहा । ।४२ । ।
स रथस्तेन शृङ्गेण नन्दिना दृढमाहतः ।
सचक्रकूबरहयः पांसुसायुज्यमागमत्२८ । ।४३ । ।
ततोन्धकरथं दृष्ट्वा सचक्राक्षं विचूर्णितम् ।
नेदुर्देवाः सगन्धर्वाः प्रमथाश्च सगुह्यकाः । ।४४। ।
ततोन्धकस्त्रिशूलेन नदित्वा कालमेघवत् ।
नन्दिनं ताडयामास गजेन्द्र इव पादपम् । ४५। ।
त्रिशूलिदयितस्तेन त्रिशूलेनाभिताडितः ।
नन्दी विह्वलसर्वाङ्गश्चकम्पेन्तर्जलेन्दुवत् ।।४६। ।
नन्दीश्वरे घूर्णमाने प्रहारेण भृशार्दिते ।
असुराणां बले जज्ञे सिंहनादरवो मुहुः । ।४७ । ।
सिंहनादेन शत्रूणां तेन नन्दी प्रबोधितः ।
परश्वधेनाभ्यहनदन्धकं भूतबान्धवः । ।४८। ।
परश्वधहतो रक्तं चक्षरान्धकदानवः ।
गजदन्ताहतो रक्तं स्वरसं चन्दनो यथा । ।४९ ।।

अन्धकं विरथं दृष्ट्वा ररक्षुरमरद्विषः ।
आशास्ववस्थिता२९ देवा यथा लोकमिमं तथा३० ।।8.151.५० ।।
अथ बाणो बलेः पुत्रो बाणपुष्पसमप्रभः
अन्धकं रथयानेन संपादयत दानवः३१ ।। ५१ ।।

- - - -- - - - - - - - -- - - - - - - -

२७ भर्ता (?)। २८ पांशुपा?योज्यमानयत् क.। २९ वस्था ख। ३० यदा क। ३१ दानवः सुमपादयत् (?) ।

- - - -- - - - - - - - -- - - - - - - -

789

स तं रथं दानवेन्द्र आरुरोह तदान्धकः ।
यथोदयं३२ तु भगवान् दिनकृत् पूर्णमण्डलः३३ ।।५२ ।।
ततः पुनर्युज्यत देवदानवैः३४ प्रकर्तुकामैः कलहं सुदारुणम् ।
त्रिशूलवज्राशनिःसायकै रणे प्रधूपितोग्निर्ज्वलितस्तरां बभौ३५ ।।५३ ।।
इति स्कन्दपुराणे न्धकनन्दियुद्धे एकपञ्चाशदुत्तरशततमोध्यायः३६

सनत्कुमार उवाच
विष्णु१ मर्द्यमानं तु दानवान् दानवार्दनम् ।
जम्भोम्बुद इवारावं कृत्वा दुद्राव दानवः ।।१ ।।
तमापतन्तं दृष्ट्वा तु जम्भमम्बुदनिस्वनम् ।
न स संविविजे देवः सिंहो दृष्ट्वेव कुञ्जरम् ।।२ ।।
कुजम्भश्चैव जम्भश्च यवीयान दानवाचलः ।
अनन्तमन्तं शत्रूणामाववार ररास च ।।३ ।।
वृत्रोञ्जनगिरिप्रख्यः संवर्त्त कनिकाशदृक्२ ।
जिघृक्षुरभ्यगादिन्द्रं नदमानः३ पयोदवत् ।।४।।
तं धावन्तं नदन्तं च दानवं शतलोचनः ।
कुहरे गिरीसंकाश४ माजघान पुरन्दरः ।।५।।
भावयत्यो (?) गदायोधी शतायुं वायुमाहवे ।
योद्धु कामोभ्ययात्तूर्णं जगर्ज च जहास च ।। ६ ।।
तुहुण्डहुण्डावश्विभ्यामयुध्येतां महासुरौ ।
प्रह्लादेन भगस्सार्धमंशेन च विरोचनः ।।७।।
अर्यमाणं यमञ्चैवा७युद्धेतां विल्वकेल्वलौ८ ।
विप्रचित्तिमुखा ये च बलिष्वग्रा९ महासुराः ।।८ ।।

- - - -- - - - - - - - -- - - - - - - -

३२ यथोदग्रं - क । ३३ पूर्णमण्डलं - क. । ३४... र्गणपतिदेवदानवैः - - क. । ३५ प्रधूपितज्वालितर बभौ रणम् - क. । ३६ आ २०० ख।

१ विष्णुं - क । २ पिनाकधृक् ख । ३ नर्दमानः ख। ४ गिरिसंकाशे क। ५ ररास ख ६ अर्यमन्तं - क, आर्य ख। ७ यमञ्चैव क. ख.। ८ युध्येतामित? केल्वलौ क । ग्राम - ख. ।
- - - -- - - - - - - - - -- - -- - - - -


गणेश्वराँस्ते देवाँश्च अयुध्यन्त सहस्रशः ।
अन्धकस्तु समागम्य नन्दिनं१० दानवर्षभः । ।९। ।
ततक्षे वत्सरदनैः११ शरैः कार्मुकनिःसृतैः ।
सोन्धकेन दृढं विद्धः शरैर्मर्मविदारणैः । । 8.152.१० ।।
चुकोप नन्दी क्रुद्धश्च ससारान्धकमहाहवे ।
सवज्रमुद्यम्य करं दिवाकरकरप्रभम् । ।१ १ । ।
ररास नन्दी संरब्धः पयोद इव संक्षये ।
वज्रेण शतधारेण सोन्धकस्य गणेश्वरः । । १२ ।।
चूर्णयामास तुरगान्नियन्तारं रथं तथा ।
ततोन्धकं कर्णमूले कुण्डलालकशोभिते । । १३ ।।
आजघान घनारावो वरदश्चारुकुण्डलः१२ ।
तेनाप्यपावृत्य हस्तो हस्तिहस्तनिभस्ततः । । १४।।
पातितो नन्दिनः क्रोडे कुञ्जरेणेव संयुगे ।
अपहस्ताहतस्तेन१३ दानवेन गणेश्वरः ।। १ ५। ।
अपासर्पत् पदान्यष्टौ तान्येवापतितः पुनः ।
साधु साध्विति वै दैत्यास्ततो ह्यन्धकमब्रुवन् । । १ ६।।
स तेन सुप्रहारेण दानवं प्रति रोषितः ।
क्रोधमाहारयन्तीव्रमभिदुद्राव चैव हि१४ । । १७। ।
तस्य गत्वा धनुश्चित्रं कवचं च महाप्रभम् ।
वज्रेण शतधारेण खण्डशः प्रचकार ह ।। १८।।
बाहुपाशेन चैवैनं बद्ध्वा भूतपतिः स्वयम् ।
इयेष भूमौ निष्पेष्टुमन्धकश्चावमोचयत् ।। १९। ।
स मोचयित्वा ह्यात्मानं मायामास्थाय मोहनीम् ।
अभिदुद्राव शैलादिं तिष्ठतिष्ठेति चोचिवान्१५ । ।8.152.२ ० ।।

- - - -- - - - - - - - -- - - - - -

१० नन्दिना - क. ख. । ११ वस्त्रवदनै - क. । १२ कुण्डलं - क । १३ अपाहस्ताहतस्तेन - क., अपहस्ताद्धतस्तेन - ख. । १४ ह - ख. । १५ चाब्रवीत् - ख. ।

- - - -- - - - - - - - -- - - - - -



तमापतन्तं वेगेन गणेश्वरमहत्तराः ।

सर्वे संक्रुद्धमनसो विविधायुधपाणयः । ।२ १ । ।

नन्दिषेणः सोमनन्दी शंकुकर्णो महोदरः ।

घण्टाकर्णो वीरभद्रः स च देवः प्रभामयः ।।२२ । ।

भर्त्तारमभिरक्षन्तस्तेषां पारिषदाग्रगाः१६ ।

अन्धकं योधयन्ति स्म सिंहाः१७ शक्रगजं१८ यथा ।।२३ ।।

तं नन्दिषेणः शूलेन सोमनन्दी च मुष्टिना ।

शरेण वीरभद्रश्च घण्टाकर्णोसिनापि च । ।२४। ।

शङ्कुकर्णो चलाग्रेण पादपेन प्रभामयः ।

अन्धकं चिच्छिदुर्देवा द्रमिडा१९ इव चन्दनम् । ।२५। ।

नन्दीश्वरस्तु गणपो गणपैर्विमुखीकृतम् ।

आजघानोत्तमाङ्गे तु अन्धकं दानवाधिपम् ।।२६। ।

दृष्ट्वासुरपतिं देवैर्गणपैः समभिद्रुतम् ।

असुराणां बले जज्ञे धाव गृह्णेति निस्वनः । ।२७। ।

ततोसुराः समाजग्मुः प्रह्लादप्रमुखा द्रुतम् ।

तान्युद्धायागतानेको विष्णुः सर्वानदीधरत् ।।२८। ।

चक्रहस्तं तु दृष्ट्वैवं विक्रान्तं रणमूर्धनि ।

चकार सुमहद्वेगमन्धकः क्रोधमूर्च्छितः । ।२९। ।

व्यायच्छमानं निश्चेष्टं प्रधावन्तं प्रगर्जितम् ।

यं यतः२० पश्यतेसौ वै२१ तन्तं विव्याध सायकैः ।। 8.152.३० ।।

पृथवः पीतनिशिता गरुडाङ्गरुहन्धराः२२ ।

अन्धकस्य शरा घोराश्च्यवन्ते२३ धनुषोक्षयाः ।।३ १ । ।

मुखेषु दन्तवेष्टेषु उदरेषु करेषु च ।

अन्धकेन गजा विद्धास्त्यजन्त्यतिमदा मदम् । ।३ २। ।

- - - -- - - - - - - - -- - - - - -

१६ एते - क., एतेषां पार्षदाग्रगाः - ख । १७ सिंहः - क, सिंहाः - ख. । १८ गजान् - क., गजं - ख । १९ द्राविडा (?) । २० यन्तु (?) । २१ सोरि(म्) - क. । २२... स्वराः - क. । २३. श्चव्यन्ते - क. ।

- - - -- - - - - - - -- - - - -- - - - -

792

अन्ये श्रयन्ति देवेशमन्ये चेन्द्रं सुराधिपम् ।

देवं नारायणं चान्ये नन्दिनं चापरे गणाः । । ३३ ।।

अन्ये शाखं विशाखं च कुमारमपि चापरे ।

व्यपाश्रित्य स्थिता देवाः शकुन्ता इव पादपान् ।। ३४। ।

यथाशनिभयान्मर्त्या यथा सिंहभयान्मृगाः ।

यथा च गरुडान्नित्यं भुजगा भुजगाशिनः । । ३ ५। ।

तथान्धकस्य युद्धस्था देवा दैवतवैरिणः

वित्रेसुः शरजालार्त्ता२४ मूढा इव२५ च बभ्रमुः२६ ।।३ ६ । ।

बन्धुजीववनं यद्वद् भ्राजते पुष्पसन्नतम्२७ ।

तथा व्रणजसिक्ताङ्गं तद् बभौ२८ पार्षदं बलम् । । ३७। ।

कम्पन्ते पादपा यद्वत् काननेष्वनिलेरिताः ।

तथान्धकभयाद्देवाः सन्त्रस्ता रणमूर्धनि । ।३८। ।

ततो नारायणोनन्त२९ ऊर्जितः शक्र एव च ।

अश्विनौ वसवश्चाष्टावादित्या द्वादशैव तु३० । । ३ ९। ।

नन्दी विशाखः शाखश्च वीरभद्रः प्रभामयः ।

विट्पतिः शंकुकर्णश्च सोमनन्दी विनायकः ।।8.152.४० । ।

एते बले हन्यमाने अन्धकेन बलोर्मिभिः ।

दुद्रु वुस्सायुधा देवास्तं दानवगणाधिपम् ३१ । ।४१ । ।

गन्धर्वभवनाकारं तं तस्य रथसत्तमम् ।

परिवार्य बभंजुस्ते३२ जगर्जुश्च पयोदवत् ।।४२ ।।

भज्यमानः सुरैरासीदन्धकस्य महारथः ।

अधर्मे प्रकृतो३३ यद्वद् विघ्नैरिव मनोरथः । ।४३ । ।

चक्रायुधं स चक्रेण शक्रं वज्रेण दानवः ।

अनन्तमिषुणैकेन शूलेन च विनायकम् । ।४४।।

- - - -- - - - - - - -- - - - -- - - - -

२४ शरजालाङ्का - ख । २५ वै इव - क. । २६ विभ्रमुः - क., इव विबभ्रमुः - क. । २७ सन्ततं - ख. । २८ स बभौ - क । २९ नारायणोनन्तो - क. । ३० च - ख. । ३१ गणाधिपाः - क. । ३२.. श्च - क. ख. । ३३ अधर्मेषु कृतो - क. ।

- - - -- - - - - - - -- - - - -- - - - -

793

मुष्टिना नन्दिनं चैव पट्टिशेन३४ प्रभामयम् ।
भल्लेन चैव पूषाणं गदया यममेव च । ।४५। ।
आहत्य वैरिणस्तूर्णं३५ सर्वानेव रणेन्धकः ।
उत्पत्य चानदद् व्योम्नि जलमत्त इवाम्बुदः । ।४६ । ।
स कूटयोधी कूटानि गिरीणां गिरिसन्निभः ।
सवृक्षक्षुपसर्पाणि ससर्ज च जगर्ज च । ।४७ । ।
गिर्यग्रवर्षं३६ तद्३७ घोरं सवृक्षर्क्षमहोरगम् ।
पपात देवसैन्येषु शोतमम्बुरुहेष्विव३८ । ।४८ । ।
अविराममविश्रामं३९ निरुच्छवासं४० भयाकुलम् ।
'''''-'--------- । ।४९ । ।
छिन्ननासाक्षिदन्तौष्ठा४१ भग्नपादकटीकराः ।
उत्त्रस्तोद्भ्रान्तचकिता दृश्यन्ते प्रमथामराः । ।8.152.५० । ।
सौधाग्रशृङ्गोपलशस्त्रवर्षी४२ मुहुः सृजन्भात्यसुरोम्बरस्थः ।
ता मे ------------------- ।।५१ । ।
------------------- शब्दम् ।
अब्जं महद्धूमलावृतञ्च खद्योततुल्यं च महाग्निचूर्णम् । ।५२ । ।
सोप्यायितोद्वृत्तसमुद्रनादो४३ नभोगतो दैवतसंघवैरी४४ ।
मुहुः सृजत्येव महाम्बुवर्षं यथान्तकालेम्बुमुगुग्रवर्षम् । ।५३ । ।
इति स्कन्दपुराणे अन्धकयुद्धे द्विपञ्चाशदुत्तरशततमोध्यायः४५
सनत्कुमार उवाच
ततोन्धको वियत्स्थितो महाम्बुदौघसन्निभः ।
विरज्य वर्षमौपलं१ यथैव वर्षमम्बुदः । । १ । ।
- - - -- - - - - - - - -- - - - - -- - - - -
३४ पट्टशेन - क. ख. । ३५ वैरिणं तूर्णं - ख. । ३६ गिर्यग्रपर्वत - क. । ३७ त - ख. । ३८ शीताम्त्वरुरुहेष्विव - ख. - ख । ३९ अविरामञ्च विश्रामं - ख. । ४० चिरश्वासं - ख. । ४ । भिन्ननासाक्षिदन्तौष्ठा (?) । ४४ सौहार्यशृङ्गोपलशस्त्रवर्षी - क., सस्त्रवर्षं (?) । ४३ सोप्पायतोदवृत्तसमुद्रनादो - ख. । ४४ देवतसंधवैरी - क. ख. । ४५ २०१ - ख. ।
१ मौशलं - क. ।
- - - -- - - - - - - - -- - - - - -- - - - -

794

पुनः प्रगृह्य कार्मुकं महेन्द्रकार्मुकोपमम् ।
मुमोच बाणदुर्दिनं बभूव चातिदुर्दिनम् ।। २। ।

ततः सुपर्णपुंखिनां सुपर्णपत्रपत्रिणाम् ।
सुपर्णतुल्यपातिनां सुपर्णतुङ्गतुण्डिनाम्३ ।।३ ।।
शतं शरीरभेदिनां शरीरसारभोजिनाम् ।
ससर्ज दानवाधिपो जगर्ज चापि दर्पितः ।।४।।
धनुः प्रपूरितेरिता रणप्रचारितैवृताः ।
स्वमार्गयानदेशिका जवे मनोनिलोपमाः । । ५ । ।
महेषवोन्धकस्य ते पतन्ति देवतोपरि ।
यथा दिवाकरेरिताः करा महाचलेष्विव ।। ६। ।
शराहताश्च कुन्जराः शराहताश्च वाजिनः ।
शराहताश्च देवता गणेश्वराश्च सर्वतः ।।७। ।
विनिर्गतान्त्रशेणिता४ विकीर्णहारभूषणाः ।
विमुक्तकेशबन्धनाः पतन्ति गाढवेदनाः । ।८ ।।
स्थितं चलन्तमुत्थितं प्रधावितं प्रवल्गितम् ।
हयं गजं सुरं यथा प्रपश्यते हि यं यतः । ।९। ।
तमन्धकस्तदा रिपुं शरैस्तमोरिविग्रहैः ।
बलान्निपात्य नर्द्दते जलागमे यथाम्बुदः ।।8.153.१ ० ।।
व्रणार्तमुक्तनिस्वनं५ समुद्भ्रमत्तुरङ्गमम् ।
बलं नदीनवद्बभौ६ प्रशान्ततूर्यनिस्वनम् । । ११ ।।
विभिन्नछिन्नदारितं प्रदग्धजग्धनिर्धुतम् ।
यथा मदान्धकुन्जर७ प्रणष्टपादपं वनम् ।। १ २। ।
मुखेषु केचिदाहता निरीक्षणेषु चापरे ।
उरोदरेषु८ चापरे९ तथा हताश्च पृष्ठतः ।।१ ३ ।।

- - - -- - - - - - - - -- - - - -- - - -

२ सुवर्णपुंखिनां - क. । ३- तुण्डतुण्डिनाम् (?) .तुल्यतुण्डिनाम् (?) । ४ न्तषोशिता - ख. । ५ निस्वनिस्वनम् - ख. । ६ नदीनवद् बभौ - क. । ७ महामतङ्गज (?) । ८ उरूदरेपु - क, उरूत - ख. । ९ चार्पिताः - क. ।

- - - -- - - - - - - - -- - - - -- - - -

795

शतघ्नयो यथाचिताः शरैस्तथा मरुद्गणाः ।
गणाश्च भीमविक्रमा नभूमिमापुराहताः ।। १४।।
सुरासुरैः प्रवर्तिता ततो व्रणाम्बुवाहिनी ।
गजेन्द्रनक्रसंकुला रथाङ्गचारुकच्छपा । । १ ५। ।

निकृत्तहस्तपन्नगा धनुर्ध्वजोत्तमद्रुमा ।
किरीटकूटदर्दुरा धनुर्गुणाभितन्तुका१० ।। १६ ।।
विकीर्णहारशर्करा सिताम्बरातिफेनिनी ।
सुरासुरैः प्रवर्तिता सुरासुरातिदुस्तरा ।।१७ ।।
ततोञ्जनास्तुदत्विषस्तडित्प्रहासहासिनः११ ।
पिशाचयक्षराक्षसाः पिपासयातिकर्षिताः ।। १८।।
सुरा यथा वरामृतं पपुस्तथैव शोणितम् ।
ततः पुनः समाकुलं बभूव युद्धमद्भुतम्१२ ।
तदान्धके१३ शराहते१४ महेषुणाथ नन्दिने ।। १ ९।।
इति स्कन्दपुराणे युद्धभूमिवर्णने त्रिपञ्चाशदुत्तरशततमोध्यायः१५

सनत्कुमार उवाच
हन्यमाने बले तस्मिन् देवैः सप्रमथेश्वरैः ।
चुक्रुधुर्दानवा१ घोराश्चतुर्विंशतिदर्पिताः ।। १ ।।
प्रह्लादश्चानुह्लादश्च संह्लादः शिनिबाष्कलौ ।
जम्भो विरोचनो वृत्रो बलिर्बाणोवनिञ्जयः ।।२।।
तथा तुहुण्डो हुण्डश्च शम्भुः कार्तस्वनः कुभः२ ।
शम्बरो विप्रचित्तिश्च इल्वकः३ पिल्वकस्तथा ।। ३ ।।
मयस्तारस्तारकाक्षो विद्युन्माली प्रमोहनः ।
एतेमर्षवशं प्राप्ताश्चतुर्विंशतिदानवाः ।।४।।

- - - -- - - - - - - -- - - - - - - -

१० धनुर्गुणादितन्तुका - क.,.. .ति - (?) । ११ हासिताः - ख. । १२..? सुर्महाद्भुतम्-ख । १३ तदान्धकः - क. । १४ शराहतो त(?) । १५ २०२ - ख. ।

१ चुक्रशुर्दानवा - ख. । २ कुशः - क, । ३ इल्वलः - ख. ।

- - - -- - - - - - - -- - - - - - - -



दुद्रुवुः सायुधं देवं४ नन्दिनं समवस्थितम्५ ।
तेञ्जनाचलसंकाशाः काञ्चनाचलसन्निभम् ।।५ ।।
नन्दिनं ताडयामासुः शूलशक्त्यृष्टिपट्टिशैः ।
तथा तैररिभिः शस्त्रैस्ताडितो वारितश्च वै ।।६ ।।
नाक्षुभ्यत तदा नन्दी नार्त्तिमापन्न च व्यथाम् ।
ततो विकृष्य भगवानाततं कार्मुकं महत् ।।७।।

त्रिभिस्त्रिभिर्बिभेदाशु सर्वान्दानवसत्तमान ।

ते बाणमार्गनिस्रावै६ दानवाः शोणितक्षराः ।८।।

क्षरन्त इव शैलेन्द्रास्तपनीयरसान् बभुः ।

ततो रोषोद्धतो नन्दी शुक्रेणोज्जीवितं पुनः । ।९।।

कार्त्तस्वनं शरैर्घोरैरनयद्यमसादनम् ।

जीवितस्रंसनं प्राप्य स दानवमहाचलः७ । । 8.154.१० । ।

शीर्णोपलः पपाताशु वज्राहत इवाचलः ।

पतमाने क्षितौ८ तस्मिन्ननन्दिबाणाहते हते । ।१ १ । ।

बलिरुत्पाट्य शैलाग्रं चिक्षेपोद्दिश्य नन्दिनम् ।

तत् सधातुमृगव्यालं सर्क्षवृक्षं गिरेस्तटम्९ । । १२ । ।

निर्भ्रान्तोपलवृक्षालमभ्यधावद् गणेश्वरम् ।

शृङ्गस्य बलिमुक्तस्य तस्य व्यालादयो जवात् ।।१ ३ ।।

अपक्रान्तानयार्तस्य पुरुषस्येव बान्धवाः ।

तदापतत् तद् गिर्यग्रं१० नन्दी बाणेन वीर्यवान् ।

मेघानिव महावायुर्बिभेद च ननाद च । ।१४।।

तद्विदार्य गिरेः शृङ्गं गिरिशृङ्गनिकेतनः ।

बलिं बिभेद बाणेन बलिर्विघ्नमिवोत्थितम्११ । ।१५।।

- - - -- - - - - - - - -- - - -- - - - -

४ देवा - ख. । ५ समुपस्थितम् (?) । ६ मार्तनिस्रावै - ख. । ७ बल्ल - क. दानवः स महाबलः (?) । ८ गिरौ (?),.. ह्यरौ - क. । ९... स्तदा - ख. । १० तदापतन्तं - क. । ११... च्छ्रितं - ख ।

- - - -- - - - - - - - -- - - -- - - - -

797

सोभ्याहतो गणेशेन प्राह्लादितनयोवशः१२।

पपात सहसा भूमौ वाताहत इव द्रुमः१३ । ।१ ६। ।

ततो बलौ निपतिते नन्दीषुवरताडिते१४ ।

जहुः समरमारात्तं१५ दानवाः शरपीडिताः ।। १७।।

प्रसृताम्बुदसंकाशाँ१६स्ततोम्बुदनिभाकृतिः१७ ।

अन्धकः खात् क्षितिं प्राप्य दानवानिदमब्रवीत् । । १८।।

अद्य दाक्षायणीपुत्रा निबोधध्वं वचो मम ।

मया चोक्तानि पथ्यानि कुरुध्वं यदि मन्यत ।। १ ९।।

कुलेषु जाता वीराश्च सर्वास्त्रकृतनिश्चयाः ।

द्रवध्वे१८ वै किमुद्दिश्य पटुनाराचवेजिताः । ।8.154.२ ० । ।

जल्पितानि क्व वस्तानि कथितानि च संसदि ।
क्व वस्तद्वैरबाहुल्यं१९ दैवतैस्सह२० सांप्रतम् ।।२ १ । ।
एकेन नन्दिना भग्नाः शतशोथ सहस्रशः ।
ह्रीः कथं वै न भवति जल्पतां२१ वो गृहाजिरे ।। २२ ।।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वै२२ ।
भवेन्न नो२३ यत्र मृत्युः सोवकाशो न विद्यते । ।२३ । ।
प्राश्निकाः२४ पार्श्वतः स्थित्वा निर्वैरा वीतमत्सराः ।
द्वैरथं नन्दिना सार्धमेतत् पश्यत साम्प्रतम् ।।२४। ।
इत्यन्धकवचः श्रुत्वा सर्वे ते दानवा रणे ।
पुनर्निवृत्ता युद्धाय प्रगृहीतवरायुधाः । । २ ५।।
ततोन्यं रथमास्थाय नल्वमात्रं पताकिनम् ।
अन्धकः सोभ्ययान्नन्दिं सार्धं दानवपुङ्गवैः ।। २६ । ।
शिताग्ररुक्मविकृताः पृथवः प्रियदर्शनाः ।
अन्धकस्य धनुःसृष्टा२६ निष्पतन्ति महेषवः । ।२७। ।

- - - -- - - - - - - - - -- - - - - -

१२ प्रह्लादतनयोवशः - क ख । १३ द्विपः?. ख । १४ नन्द्येषुवरताडिते ख. । समररागात्तं ः ख. । १६ संकाश - क. । १७ इवाकृतिः - क. । १८ द्रवध्वं - ७३. । १९ गतं वैरबाहुल्य - ख. । २० देवतैःसह - क. ख. । २१ जल्पितां - क. । २२ वः - क । २३ वो - ख । २४ प्राश्नीका - ख प्राणाः कः - क. । २५ सार्धं' मम - (?) । २६ धनुषोन्धक (केन) सृज्यन्तो (न्ते) - क, ख. ।

- - - -- - - - - - - - - -- - - - - -

798

शलभैरिव केदारा भ्रमरैरिव पादपाः ।
तोयदैरिव नागेन्द्राः सागरा मकरैरिव ।।२८। ।
महेषुभिर्विनिर्मुक्तैर्नागादित्यसमप्रभैः ।
अन्धकेन कृता देवाः शतघ्नय (?) इवोत्तमाः । । २९ । ।
वायवोप्रतिघा यद्वद् यथा मृत्युर्यथा जरा ।
यथा चाप्रतिघाः सूक्ता नियतं ब्राह्मणाशिषः ।।8.154.३ ० ।।
तथा ते निशिता ह्युग्रा ब्रह्मदण्डा इवोद्यताः ।
अनिवार्या ह्यमोघाश्च तेन्धकस्य महेषवः ।। ३१ । ।
यतो यतोसुरास्सर्वे सोन्धकश्च रणे रिपुः ।
ततस्ततः स्म दीर्यन्ते प्रमथा विबुधैस्सह । । ३२ । ।
सोपि नित्यायतधनुः परिवेषीव भास्करः ।

असृजद्बाणनिकरान्२७ किरणान् भास्करो यथा। ।३ ३ ।।

तस्य बाणरुजः२८ प्राप्य नदीतीर इव द्रुमाः ।

सीदन्ति गणपास्सर्वे देवाश्च सहवासवाः । ।३४। ।

स विष्णुमेकेन शरेण विद्ध्वा द्वाभ्यामनन्तं त्रिभिरेव शक्रम् ।

यमञ्च सोमञ्च जलाधिपञ्च वसूँश्च निर्दार्य२९ ररास घोरम् ।। ३५।।

अश्विद्वयञ्चापि शरद्वयेन विद्ध्वा भगांशार्यमचन्द्रपूष्णः३० (?) ।

ततोथ नन्दीश्वरमुग्रकर्मा गणेश्वराँश्चापि शरैस्ततक्ष । ।३ ६। ।

तथा दहत्यन्धक आततायी थथा पतङ्गान् भगवान् हुताशः३१ ।

निवारितास्ते शरदारिताश्च तदान्धकेनामरयोधमुख्याः३२ । ।३७। ।

न स्पन्दितुं३३ शेकुरुदीक्षितुं वा रणेन्धकं खे मनुजा इवार्कम् ।

यशांसि दीप्तानि ततः प्रहाय देवाः सनारायणदेवपालाः ।

शरार्दितास्तेन्धकदावेन प्रदुद्रुवुर्दानववेधखिन्नाः । । ३८।।

- - - -- - - - - - - - -- - - - - - -

२७ किरणान् - क. ख. । २८ रजः - क. ख. । २९ निर्वार्य - ख. । ३०.. श्चार्यमचन्द्रपूष्णः - क । ३१ हुताशनः - क. । ३२... वारिताश्चवदन्धकेनामरयोधमुख्याः - ख. । ३३ निस्पन्दितुं - ख. ।

- - - -- - - - - - - - -- - - - - - -

799

विष्णुः पितामहश्चैव अनन्तोथ शतक्रतुः ।

अन्धकेन रणे भग्नाः शरैरग्निशिखोपमैः । ।३ ९।।

आदित्या वसवः साध्या अश्विनौ च सुरोत्तमौ ।

अन्धकेन रणे भग्ना वज्राघातैः पतत्त्रिवत्३४ ।।8.154.४० । ।

तुषिताश्चैव विश्वाश्च देवाश्चैव स्वधाभुजः ।

अन्धकेन शरैर्भग्ना मारुतेन यथा द्रुमाः ।।४१ ।।

चन्द्रमा भगवान् वह्निर्वित्तपालश्च राक्षसः ।

अन्धकेन रणे३५ भग्नाः३६ शरैराशीविषोपमैः ।।४२। ।

गन्धर्वा गुह्यकाः सर्पा३७ गरुडाश्च महोरगाः३८ ।

अन्धकेन रणे भग्ना विह्वानलसमैः शरैः । ।४३ । ।

विट्पतिः शंकुकर्णश्च सोमनन्दी प्रभामयः ।

पिङ्गलो नन्दिषेणश्च घण्टाकर्णो महोदरः । ।४४।।

विद्युत्केशः सुकेशश्च३९ स च देवो विनायकः ।

अन्ये च प्रमथाः शूरा वीरभद्रपुरोगमाः ।।४५।।

अन्धकेन रणे भग्नाः शतशोथ सहस्रशः ।

त्रैलोक्यं प्रसभं सर्वमुद्युक्तं सचराचरम् ।।४६।।
अन्धकेन रणे भग्नं सनारायणदेवपम् ।
तस्मिन्सुरबले देवं विमुच्यैकं गणाधिपम् ।।४७।।
महामणिशिरोमौलिं न कश्चिदवतस्थिवान् ।
ततोसुरबले घोरस्सर्वप्राणिकृतो४० महान् ।
सिंहनादरवो जज्ञे सवादित्ररवोद्भुतः । ।४८ । ।
इति स्कन्दपुराणेन्धकविजये चतुष्पञ्चाशदुत्तरशततमोध्यायः ४१ ।

- - - -- - - - - - - - -- - - - -- - - - -

३४ पतत्रिणः - क ख. । ३५ रणेन्धकेन वै - क. । ३६ निहताः - ख. । ३७ सर्वे - ख. । ३८ महाबलाः - ख. । ३९ सुनासश्च - क. । ४० प्राणाः - क. ख., भृतो - ख. । ४१ २०३ - ख. ।

- - - -- - - - - - - - -- - - - -- - - - -

800

सनत्कुमार उवाच
एतस्मिन्नन्तरे देवाः सर्वे शक्रपुरोगमाः ।
ब्रह्मणा सहिता जग्मुः शरण्यं शूलपाणिनम् । ।१।।
ते प्रणम्य महादेवमिदमूचुर्भयार्दिताः ।
विजिताः सर्व एव स्मः १ किमन्धकमुपेक्षसे ।।२।।
देवदेवस्ततः प्राह देवान् ब्रह्मपुरोगमान् ।
मया दत्तवरो यस्मात् तस्माद् यूयं विनिर्जिताः ।
क्रीडार्थमेव च मया संगरे स उपेक्षितः२ ।
अधुना भवतामर्थे शामयिष्येहमन्धकम्३ ।।४।।
ततो देवः स्मितं कृत्वा पार्श्वस्थं शूलमैक्षत ।
देवाभिप्रायतत्त्वज्ञः शूलो जज्वाल तत्क्षणात् ।।५।।
अभिसृत्य द्रुतञ्चैवमन्धकं जितकाशिनम् ।
युद्धे विक्रम्य सहसा निर्बिभेद स्तनान्तरे । ।६।।
ततोन्धकं तदा भित्त्वा स शूलस्तं महाबलम् ।
दानवेन्द्रं महाकायमानिन्ये शङ्करान्तिकम् ।।७।।
तस्य भिन्नस्य शूलेन येक्षरन् रक्तबिन्दवः ।
पतिताः४ पुरुषा भूत्वा तेप्ययुध्यन्त दुस्सहाः ।।८।।
तस्यैव तुल्यरूपास्ते तस्य तुल्यपराक्रमाः ।
नानाशस्त्रप्रहरणास्तेप्ययुध्यन् गणेश्वरैः ।।९।।
- - - - - - - - - - - ो द्यतपाणयः ।

जघ्नुः केचिद् गणानेव द्रवतस्ते महाबलाः ।।8.155.१० ।।
न तेषां युध्यमानानां कश्चित्तस्थौ गणेश्वरः ।
संग्रामे दानवेन्द्राणां भयात् सर्वे प्रदुद्रुवुः ।।११
तान्दृष्ट्वा विद्रुतान् सर्वान् गणान् सह सुरेश्वरैः ।
महादेवोसृजत् - - - - - - - - - - ।।१ २।।
- - - -- - - - - - - -- - - - -- - - - -
१ एवास्म - क घ. । २ समुपेक्षितः - ख । ३ तमभ्धकम् (?) । ४ उत्थिताः (?) ।
- - - -- - - - - - - -- - - - -- - - - -
801
- - - - - - - - - - - - करन्तदा ।
- वा विज्ञापयामासु५राज्ञां नो दातुमर्हसि । । १३ । ।
देवदेवस्तदा प्राह सर्वाः प्रहरणोद्यताः ।
असृग्बिन्दुसमुद्भूतान् भक्षयध्वं महासुरान् । । १४।।
एवमुक्तास्तु तास्सर्वा योगेश्वर्यो महाबलाः ।
हत्वा हत्वासुरान् युद्धे चखादुश्च म । १५। ।
देवोपि ज्वलितं शूलमब्रवीदन्धकान्तकृत् ।
अन्धकं पच६ सूर्याग्नौ सहस्र शरदां७ शतम् । ।१ ६। ।
अन्धकोपि हि शूलाग्रे पच्यमानोर्कतेजसा ।
पूर्णे सहस्रे वर्षाणां सात्विकं भावमभ्यगात् । । १७। ।
सात्विकं भावमापन्नो विनिर्धूतरजस्तमः ।
लोकानां कारणं देवं बुबुधे गोवृषध्वजम् । । १८।।
तं बुद्ध्वा च ततो भक्त्या निर्मलेनान्तरात्मना ।
स्नाय्वस्थिशेषस्तुष्टाव देवं चंद्रार्धमौलिनम् । १ ९। ।
अन्धक उवाच
कृत्स्नस्य योस्य जगतः सचराचरस्य कर्ता कृतस्य च तथा सुखदुःखदाता ।
संहारहेतुरपि यः पुनरन्तकाले, तं शङ्करं शरणदं शरणं व्रजामि । ।8.155.२ ० । ।
यं योगिनो विगतमोहतमोरजस्का भक्त्यैकतानमनसो८ विनिवृत्तकामाः ।
ध्यायन्ति निश्चितधियामितदिव्यभावं, तं शङ्करं शरणदं शरणं व्रजामि ।।२१ ।।
यश्चन्द्रखण्डममलं विकसन्मयूखं बध्वासयं (?) प्रियतया शिरसा बिभर्ति ।
यश्चार्धदेहमददाद् गिरिराजपुत्र्यै, तं शङ्करं शरणदं शरणं व्रजामि ।।२ २ ।।
यः सिद्धचारणनिषेवितचारुतोयां गङ्गां महोर्मिरभसां गगनात्पतन्तीम् ।
मूर्ध्ना दधे स्रजमिवाप्रतिलोलपुष्यां, तं शङ्करं शरणदं शरणं व्रजामि । ।२३ ।।

कैलासशृङ्गशिखरं प्रविकम्प्यमानं कैलाशशृङ्गसदृशेन दशाननेन ।
यः पादपद्मपरिपीडनया दधार, तं शङ्करं शरणदं शरणं व्रजामि ।। २४। ।

- - - -- - - - - - - - -- - - - - - -

५ विज्ञापयामास - ख । ६ पञ्च - ख. । ७ शरदं - ख । ८ भक्त्येकतानमनसो (?) ।

- - - -- - - - - - - - -- - - - - - -



येनासकृद्दितिसुताश्च दनोः सुताश्च९ विद्याधरोरगगणाश्च वरैस्समग्राः ।
संयोजिता मुनिवराः फलमूलभक्षा,स्तं शङ्करं शरणदं१० शरणं व्रजामि ।।२५।।
दक्षाध्वरं च नयनञ्च तथा भगस्य पूष्णस्तदा दशनपंक्तिमशातयच्च११ ।
व्यष्टम्भयत् कुलिशयुक्तमहेन्द्रबाहुं, तं शङ्करं शरणदं शरणं व्रजामि । ।२ ६।।
- कृ - - त्रिविधबन्धविमोक्षभावा ज्ञानान्वयश्रुतगुणैरपि नैव युक्ताः ।
यं संश्रिताः सुखभुजः पुरुषा भवन्ति, तं शङ्करं शरणदं शरणं व्रजामि । ।२७।।
अग्रे मृतस्य रविकोटिसमानतेजः१२ सन्त्रासनं विबुधसत्तमदानवानाम्१३ ।
यः कालकूटमपिबत् समुदीर्णवेगं, तं शङ्करं शरणदं शरणं व्रजामि ।।२८ ।।
ब्रह्मेन्द्रविष्णुमरुतां च सषण्मुखानां योदाद् वरान् सुबहुशो भगवान्महेशः ।
नन्दिञ्च मृत्युवदनात्प्रभुरुज्जहार,१४ तं शङ्करं शरणदं शरणं व्रजामि ।।२९।।
कामश्च कार्मुकधरो भुवि पञ्चबाणो हास्यात्कृतो भगवता स तदा विदेहः ।
एकेषुणा त्रिपुरमेव पुरा जघान, तं शङ्करं शरणदं शरणं व्रजामि । ।8.155.३ ० ।।
आराधितः सुतपसा हिमवन्निकुञ्जे धूमव्रतेन मनसापि परैरगम्ये ।
सञ्जीवनीमदित यः परमार्थगम्य१५ स्तस्मै नमः शिवकराय शिवाय नित्यम् ।।३ १ । ।
नानाविधैर्गजविडालसमानवक्त्रैर्दक्षाध्वरप्रमथनैर्वलिभिर्गणैन्द्रैः१६ ।
योभ्यर्च्यतेमरगणः सहलोकपालै,स्तं शङ्करं शरणदं शरणं व्रजामि । ।३२।।
क्रीडार्थमेव भगवान् भुवनानि सप्त नानानदीविहगपादपमण्डितानि ।
सब्रह्मकानि ससृजे सुकृतेहितानि, तं शङ्करं शरणदं शरणं व्रजामि । ।३ ३ । ।
यस्याखिलं जगदिदं वशवर्ति नित्यं योष्टाभिरेव तनुभिर्भुवनानि भुंक्ते ।
यः कारणं सुमहतामपि कारणानां, तं शङ्करं शरणदं शरणं व्रजामि ।।३४। ।
- - - - - - - - - - - - - - - आसज्य मां क्षितिधरेन्द्रसुतानुयात ।
- - - - - - - म विभूषणाङ्गं तं शङ्करं शरणदं१७ शरणं व्रजामि । ।३ ५।।
श्वेतं मुनिं यमनियोगपरायणैस्तैर्भीमैर्महोग्रपुरुषैः प्रतिनीयमानम् ।
बद्ध्वा - - - - - - - - - - - - तं शङ्करं शरणदं शरणं व्रजामि ।। ३६ ।।

- - - -- - - - - - - - -- - - - - - -

९ दनोश्च पुत्रा - ख । १० शरणजं - ख । ११ श्च - ख., मशातयद्य (?) । १२ समानतेजं - ख. । १३

विबुधदानवसत्तमानां (?) । १४.. त्पुनराजहार - ख. । १५ परमार्थगभ्यं - ख. । १६.. र्गजेन्द्रैः - ख. । १७ शरणजं - ख. ।

- - - -- - - - - - - - -- - -- - - - -



??।

- -- - - - - - - - - - - - - - - - - - - - - - - - - - ।।३७।।

।

- - - - - - - - परिचिन्त्यमानं तं शङ्करं शरणदं शरणं व्रजामि ।।३८।।

- - - - - - - - - - - विमूढा, जानन्ति नास्य जगतो भवबन्धरूपाः ।

ऐश्वर्यदोषविषये - - - भिबद्धा, निर्यातमाद्यनुभवन्ति यथाहमेव ।।३९।।

- - - - प्रसादाद्धि - - - - - स्तदा ।

शुभकर्मा - - - - शिवलोकमकल्पयः१८ (?) ।।8.155.४०।।

सनत्कुमार उवाच

तस्यैवं स्तुवतो देवः शूलपाणिर्वृषध्वजः ।

पूर्णे वर्षसहस्रे तु प्रीतः प्रोवाच शङ्करः ।।४१।।

पुत्र तुष्टोस्मि भद्रं ते जातस्त्वं निर्मलोधुना ।

दिव्यं ददामि ते चक्षुः पश्य मां दानवेश्वर ।।४२।।

- - - - - यत्किञ्चित् कांक्षितं फलमुत्तमम् ।

तत्सर्वमेव दास्यामि ब्रूहि दानवसत्तम ।।४३।।

ब्राह्मं वैष्णवमैन्द्रं वा पदं विबुधदुर्लभम् ।

अथवा सर्वलोकानां भव राजा यथा पुरा ।।४४।।

अन्धक उवाच

ब्राह्मं वैष्णवमैन्द्रञ्च पदमावृत्तिलक्षणम् ।

विदितं मम तत्सर्वं मनसापि - - ।।४५।।

यदि तुष्टोसि देवेश गाणपत्यं विधत्स्व मे ।

अविशेष्यं विशुद्धञ्च तदक्षय्यं च सर्वदा ।।४६।।

देवदेव उवाच

।।

- - - - - - - - सर्वलोकनमस्कृतः ।।४७।।

- - - -- - - - - - - - -- - -- - - - -

१८.. मयम् - ख ।

- - - -- - - - - - - - -- - -- - - - -

कामरूपी महायोगी सहासत्वो महाबलः ।
अणिमादिगुणैर्युक्तः प्रियः पुरुषसत्तमः । ।४८ । ।
सनत्कुमार उवाच
ततो - - - वरं दत्त्वा सुदुर्लभम् ।
महादेवः. भूत्वा तत्रैवान्तरधीयत । ।४९ । ।
।
। । 8.155.५० । ।
वरेण्यं वरदं देवं ब्रह्मण्यममितौजसम् ।
आगत्य चैव - - - - - - - - - - - । । ५१ । ।
।।
- - - - - - - - - - - - - - - - । । ५२ ।।
- - शूलं - - परमं विक्रमैः स्तम्भयित्वा ।
- - - - - ' - - - - - - - - - - । । ५३ । ।
- - - - - - - - - - - - - - - - - - - - - - - - - - - - - ।
-.. ' ' ' ' ' - - - - - - - - । । ५४। । ।
' ' ' ' - - - - - - - - - - - - - - - वाङ्मनोभिः । । ५५। ।
येन्ये कुशास्त्रमलपङ्कविमग्नदेहा मोक्षेप्यतस्तव विभो चरणा - - - ।
ते वो - - - - .. - - - स्तुवन्ति मूढा मृगा इव वने मृगतृष्णिकाभिः । ।५६। ।
- - ङ्कुशङ्किततटे स्मृति - - - - - - - - - - - - - - - - - - ।
- - - - - - - - - - - प्यटेन पूषा१९ करोति विमलं किरणौघजालैः । । ५७।।
पक्षे तपश्चरति येन कलावशेषश्चन्द्रोपि ते हरतवोत्तमपादमूले ।
नक्तं तु शूलहसितै रजमीमुखानि सम्पूर्णमण्डलवपुर्धवलीकरोति ।। ५८। ।
- - - -- - - - - - - -- - - - -- - - - -
१९ करोकरो - ख. ।
- - - -- - - - - - - -- - - - -- - - - -

- ' - - - - - - - - - - - - - - - - - वसवो मरुतोश्विनौ च ।
भृग्वादयश्च ऋषयस्तत्र देव सिद्धाः२० सिद्धिं गताश्चरणपद्मवरप्रसादात् । । 8.155.६० । ।
कैलास - - - - - - - - द्रवाय देवाय - - लयलाङ्कितमेखलाय२१ ।
बद्ध्वासनं परममुन्नतचारुमूर्तिं योगेश्वरं दिभुमहद् भुवनस्य भूत्यै । ।६१ । ।
- - - - - सासि पूर्व२२मदृष्टपूर्वा सा सा स्पृहां प्रकुरषे महतीं जनस्य ।

तस्माज्जटेन्दुरिवजा(?) र्धशरीरयोगाद् गङ्गां च२३ देव भजसे त्वमपूर्ववत्ताम् ।।६२।।
- - - - - - - - शीर्ण - - - संस्थैः सम्यग्वरेश्वररुषा सदसोग्रकण्ठ (?) ।
ते देव लोकविजयं तव देव यावद् दुष्टस्य वक्त्रकमलानि निवेदितानि । ।६३ । ।
कैलासमेरुमलयोदरमन्दरेषु विद्याधरैर्मुनिमहोरगकिन्नरैश्च ।
अभ्यचर्यसे कुल - टायन - - - - - - - - - - - - मधुरैर्वचोभिः । । ६४। ।
- - - - - - ये - भक्त्या सर्व - - - - - - मजरं - - - मात्मवेद्यम् ।
पश्यन्ति सत्वमचलास्तव योगदृष्ट्या त्वामेव ते शिव विशन्त्यनिवर्तनाय ।।६५। ।
विद्यावयो - स्य समेत्य शक्तास्तेजःसृजाशुगमित - - - - - - - - - ।
- - - - - - - - - - - - - - - - - - - - - - - - - - -२ ४ ।। ६६। । ।।
- - ---..१--...- - - - - - - - - - - - - । । ६७। ।
- - -.२- -- - - --- - - - - - - - ।
- - - - - - - - - - - - - - - - - - - र पा व - य - ।।६८। ।
दक्षाध्वरस्सुरवरैः कृतसर्वरक्षो भृग्वादिभिर्मुनिवरैरुपगीतवेदः ।
क्रोधोद्भवेन तव देव हतस्सलीलमेकेन शूलवरचक्रभृता गणेन । । ६९। ।
लिङ्गस्य यो हर हरिः प्र - - ह्यधस्तादूर्ध्वन्त्वहं - - - - - - - ब्रुबाणः ।
- - - - - रवन्दतवादिमध्ये कोन्यः प्रवीण इह वक्ष्यति२५ तेल्पबुद्धिः । ।8.155.७० । ।
शर्वोसि सर्वगतससर्वफलप्रदोसि योगोसि योगधर योगविदां वरोसि ।
मातापितासि जगतः प्रभुरव्ययोसि शान्तः शिवोसि परमोसि शिवङ्करोसि । ।७१ । ।

- - - -- - - - - - - - -- - - -- - - -

२० सिद्धिं - ख । २१ लाञ्छित (?) । : २२... य - ख । २३ य- ख. । २४ एतस्य पादटिप्पण्यां 'चामीकरोत्कर- समूहसमानवर्ण, इत्यादिका पंक्तिर्दृश्यते । सा च वृष्टःक्षरतया दुष्पठेति तथैवोपेक्षिता । २५ वक्ष्यसि - ख. ।

- - - -- - - - - - - - -- - - -- - - -



स्तवमिमममलार्थ२६ ब्रह्मणा गीतमग्र्यं
द्विजसदसि पठेद्यः कल्यमुत्थाय शश्वत् ।
इह सुखमनुभूय प्रेत्य चाग्रे च तस्य
धनकनकसमृद्धे जायते जन्म वंशे ।।७२।।
इति स्कन्दपुराणे गणयुद्धेन्धकमथने ब्रह्मकृतस्तवकथने च पंचपचाशदुत्तरशततमोध्यायः२७

सनत्कुमार उवाच
एवं स्तुतस्स भगवान् ब्रह्मणायुग्मलोचनः ।

उवाच देवांस्तान् सर्वान् ब्रह्मणा सहिताँस्तदा ।।१ ।।
प्रीतोस्मि विबुधा यात नाशितो देवकण्टकः ।
किमन्यत् करवाण्यद्य प्रियं वो वरतानघाः ।।२। ।
इत्युक्ता देवदेवेन देवाः सर्वे बभाषिरे२
स्तुवन्तः प्रह्वमूर्धानो देवेशं हृष्टमानसाः । ।३ ।।
त्वमेव देव सर्वेषामस्माकं शरणं परम् ।
त्वं पिता सर्वलोकानां त्वयायं नाशितोन्धकः ।।४। ।
इत्युक्त्वा विबुधास्सर्वे प्रणिपत्य च शङ्करम् ।
ब्रह्मणा सहिता जग्मुर्यथास्थानं मुदा युताः ।।५।।
ततो गणानपीशानो युद्ध - - कृतश्रमान् ।
अर्चयित्वा यथावद्धि विससर्ज महामनाः४ । ।६।।
सनत्कुमार उवाच
एवं तमन्धकं जित्वा कृत्वा च गणनायकम् ।
विसृज्य च सुरान् देवो विजहार सुरार्तिहा ।।७।।
इमं यो ह्यन्धकवधं पठेत द्विजसंसदि ।
ब्राह्मणो लभते - - - यो रक्षां न संशयः ।।८। ।
- - - -- - - - - - - - -- - - - - -- - - - -
२६ स्तवमिदमगलार्थं - ख. । २७ २०४ - ख. ।
१ किमन्य द्वाकरोम्यद्य - ख. । २ बभासिरे - ख. । ३ पिदुः - ख. । ४ महात्मनाम् - ख. ।
- - - -- - - - - - - - -- - - - - -- - - - -
807
शरीर - - - योगं - रूपं धर्मं विन्दति ।
यच्च- त्वा गाणपत्येन युज्यते देहपर्यये ।
इति स्कन्दपुराणे गणयुद्धे दैवतवरकीर्तने षट्पञ्चाशदुत्तरशततमोध्यायः५

व्यास उवाच
अनुगृह्यान्धकं देवो विसृज्य सगणान् सुरान् ।
चराचरेशो यच्चक्रे तन्ममाचक्ष्व तत्त्वतः । ।१ । ।
सनत्कुमार उवाच
दिवं देवेषु यातेषु गणपे चान्धके कृते ।
देवेशोन्धकनन्दिभ्यां सहदेव्या - - - - । ।२। ।
चिरस्य चन्द्रमौलिस्तु प्रमथाधिपतिर्गृहान् ।

प्रविश्य रञ्जयामास - - म्मेरुगृहानिव । ।३ ।।
सीमां सोमानुवदनां सोमार्धतिलको हरः ।
।
सखीनां दृश्यते मध्ये ताराणामिव रोहिणी ।।४।।
दृष्टवा देव्यपि देवेशमुपायातं१ वृषध्वजम् ।
उत्तस्थावासनात्तूर्णं सखीभिः२ सहिता तदा । ।५। ।
शिरस्यञ्जलि३माधाय पद्मकुड्मलसन्निभम् ।
ववन्दे चरणौ तस्य प्रीयमाणेन चेतसा ।।६। ।
देवोपि तां समुत्थाप्य तयैव सहितः प्रभुः ।
निषसादासने रत्नमयूखपरिपिञ्जरे । ।७।।
अन्धकञ्च जितं युद्धे देव्याः प्रियचिकीर्षया ।
शङ्करः कथयामास पुनश्च प्रवरीकृतम् । ।८ ।।
अन्धकोयं तव सुतो ममैव नयनोद्भवः ।
आसुरं त्याजितो भावं त्वामवज्ञातवान्४ हि यः । ।९ । ।
- - - -- - - - - - - - -- - - -- - - - -
५ २०५ - ख. ।
१... मुपयातं - ख. । २ सखिभिः... । ३... मादायः - ख. । ४ तामवज्ञातवान् - ख. ।
- - - -- - - - - - - - -- - - -- - - - -

इत्युक्तवति देवेशे शङ्करेन्धकदानवः ।
प्रणतः प्राञ्जलिर्भूत्वा व्यज्ञापयत५ पार्वतीम् । । 8.157.१० । ।
देव्यन्धकोहं देवेन प्रकृतानुग्रहः शुभे ।
तव प्रेष्यत्वमायातः पश्य मां सौम्यचक्षुषा । ।१ १ ।।
अम्ब तन्मे व्यतिक्रान्तं यन्मे दानवजं तव (?) ।
देवेनानुगृहीतोहं तव हासश्च६ किङ्करः । । १२ ।।
क्षान्तं दान्तञ्च भक्तञ्च त्वदाश्रयपरायणम् ।
विद्धि मामम्ब शुद्धेन भावेन समवस्थितम् । । १३ । ।
इत्येवमुक्त्वा गिरिजां गिरिकूटनिभोन्धकः ।
वाग्भिराहवनीयाभिरस्तुवत् प्राञ्जलिर्नतः । । १४।।
विभावरी७ वारिचरी शर्वरी शर्ववल्लभा ।
धृतिर्मतिस्तथा कीर्तिर्दीप्तिः प्राप्तिः प्रमोहिनी । ।१ ५ । ।
मेधा सुधा तथा साध्वी स्वधा स्वाहा महाद्युतिः ।

पुष्टिरिष्टिस्तथा तुष्टिर्गृष्टिर्दृष्टिस्त्रुटिस्तडित् ।। १ ६। ।
स्मृतिः प्रीतिः स्पृहा हानिर्वाणी ग्लानिर्दया क्रिया ।
लक्ष्मीः श्रीः सन्नतिः श्रद्धा माया मायाधरार्चिता । ।१७।।
अदितिर्दितिस्तथा कद्रूः सिंहिका सुरसा८ दनुः९ ।
राका कुहूः सिनीवाली चर्षणी१० सुखदायिनी११ । । १८ ।।
दीक्षा दक्षावरा रक्षा शिक्षा कक्षनिकेतना ।
सुगन्धा१२ सुभगा भव्या भूतभव्यभवत्करी१३ । । १ ९। ।
धरणी धारणी धन्या वीरणी वै गुहारणी ।
ला गोला तथा चैव मङ्गलाविधा - तथा ।।8.157.२० ।।
- रोवृता सता - श्च - - सक्षत्रनन्दिनी (?) ।
नक्षत्रचित्रा द्यौः पृथ्वी क्रिया स्मृतिरलोलुपा । ।२ १ ।।

- - - -- - - - - - - - -- - - - - - -

५ विज्ञापयत - ख. । ६ ह्यासञ्च (?), दास (?) । ७ विभावरि - ख. । ८ सरमा - ख. । ९ कुः - ख. । १० वर्षणी - क. । ११ शुभदायिनी - क. । १२ सुसज्जा - ख. । १३ भवङ्करी (?) ।

- - - -- - - - - - - - -- - - - - - -

809

शुद्धा२५ शुद्धिः सुधीः कीर्तिः कृत्तिवासोधरप्रिया ।
धनुर्ज्या जयिनी पूज्या ईज्या व्रज्या जयप्रदा । ।२२ ।।
वरावरेण्या वरदा वरनारी१५ वचोरणि१६ ।
भूतिर्भूताधिजननी१७ सुकृतिः१८ सुमना रतिः । ।२ ३ ।।
भारती भासमायुक्ता युक्तरक्तवचोधरी ।
आज्ञा प्रज्ञा तथा संज्ञा उल्का नासासमुद्भवा ।
वेदमाता१९थ गायत्री दुर्गा सावित्र्यथापि च । । २४।।
धर्म्मिणी धर्मजननी तेजनी तेजसां वरा ।
रजनी रञ्जनी धीरा योनिर्वनजलोचना ।।२५ ।।
श्रदर्थिनी२० दनुनदी श्रुतार्था२१ श्रुतवत्तरा ।
बलयालातकधरा२२ मेखला मेखलाधरा । ।२६।।
प्रीयतां मे जगद्धात्री श्यामा श्यामाम्बरा२३ ह्युमा ।
इत्येवमन्धकेनेशा स्तुता स्तुतिशतस्तुता । ।२७।।
अन्धकस्य तुतोषाति तुष्टा चेदमुवाच तम् ।
प्रीतास्मि पुत्र यत् प्राप्तं गाणपत्यं त्वया शुभम् ।
प्रियोधुना वरस्तूर्णं व्रियतां२४ प्रवरोत्तम ।। २८ ।।

सनत्कुमार उवाच

भवानीं२५ वरदां दृष्टवा सोन्धको गणपोत्तमः ।

प्रणतः प्राञ्जलिः प्राह हिमवत्तनयामुमाम् । ।२९।।

यञ्च त्वं मे२६ वरं देवि ददासीशानबल्लभे ।

मम तेन समस्तेन त्वयि भक्तिः स्थिरा भवेत् ।।8.157.३ ० ।।

तस्य तद्वचनं श्रुत्वा भगवत्यपराजिता ।

उवाचान्धकमासाद्य२७ प्रीयमाणा पुनस्तदा ।।।३ १।।

ज्ञानेनानेन तुष्टास्मि तव पुत्र शुभेन वै ।

यन्मत्तोर्थितवानद्य त्वं भक्तिं प्रवरेश्वर२८ । । ३२ ।।

- - - -- - - - - - - - -- - - -- - - - -

१४ श्रद्धा- (?) । १५ नरनारी - क. । १६ रणी - क ख. । १७ भूताभूताभिजननी - ख । १८ सुगतिः - ख. । १९ वेदमाया - ख । २० सु (स) दर्थिनी - क. । २१ श्रुतार्थं - क. । २२.. लकधारा - ख. । २३ श्यामावरा - क., श्यामाचरा - ख । २४ वृयतां - क. । २५ भावनीं - क. । २६ तन्मे - क. । २७ सद्यः (?) । २८ प्रवरेश्वरः - क. ।

- - - -- - - - - - - - -- - - -- - - - -



मच्छन्दादेव चाप्येतद् गाणपत्यं तवानघ ।

दत्तं देवाधिदेवेन तेन चास्मि सुतोषिता ।।३ ३। ।

तस्माच्चादित्यपाकात्ते२९ सुयुद्धेन च पुत्रक ।

पापव्ययो महानासीत् तेनासि प्रवरीकृतः३ ।।३४।।

अमरो जरया त्यक्तो बली बलवतामपि ।

तपस्वी ह्यक्षयो जेता नन्दिवत्त्वं भविष्यसि ।।३५।।

मम देवस्य चापीष्टः किङ्करो मम चाप्यथ ।

भव३१ त्वमनघः श्रीमान् गणेश्वरगणेश्वरः । ।३६।।

ये च त्वां३२ कीर्तयिष्यन्ति दिवा रात्रावथापि३३ वा ।

तेषां कीर्त्तिर्यशः स्वर्गो धर्मश्चैव भविष्यति ।।३७।।

स त्वेवमुक्तः३४ पार्वत्या अन्धकोर्चितमानितः ।

अनुज्ञातश्च पार्वत्या मुमुदे हरपार्श्वगः ।।३८।।

इत्येवमन्धकं देवस्तमोरिकृतभूषणः ।

अनुगृह्य गिरौ तस्मिन् विजहार यथासुखम्३५ । ।३९।।

इति स्कन्दपुराणे अन्धकवरप्रदानं नाम सप्तपञ्चाशदुत्तरशततमोध्यायः३६

व्यास उवाच

अन्धकं गणपं कृत्वा देव्या सह महेश्वरः ।

किं चक्रेतः१ परं ब्रूहि नुद कौतूहलं मम ।।१।।

सनत्कुमार उवाच

जित्वान्धकं ततो व्यास कृत्वा च गणनायकम् ।

गिरीन्द्रसुतया सार्धं विजहार सुरार्त्तिहा । ।२।।

- - - -- - - - - - - - -- - - -- - - - -

२९.. .च्चादित्यपाकान्ते ? - क. । ३० प्रचरीकृतः - क. । ३१ मम - ख. । ३२ त्वा - ख. । ३३ रात्रौ तथापि - ख. । ३४ एवमुक्तः - ख. । ३५ रराम च - ख. । ३६ २०६ - ख. । १ नः - ख. ।

- - - -- - - - - - - - -- - - -- - - - -



अथ भूतेशजननी षडाननतनूकरी ।

अपृच्छत् पुत्रसम्बद्धं प्रश्नं प्रश्नविदां वरा । ।३ ।।

किमर्थं गीयते देव गाथेयं सद्भिरुत्तमा ।

वरं भूमिरुहाः३ पञ्च४ न च कोष्ठरुहा दश ।।४।।

षोडशेहाङ्गमङ्गानि भित्त्वा पुत्रोभिजायते ।

तस्मात्पुत्रात् कथं श्रेष्ठः कोष्ठजाद् भुविजः५ सुतः । ।५।।

इत्येवं वृच्छतीं पृच्छां शिक्षां दीक्षां क्रियां मतिम्७ ।

उमामनुपमां देव इदं वचनमब्रवीत् । ।६। ।

सूक्ष्मार्थं एष रम्भोरु यं पृच्छसि वरानने ।

अहं ते तं८ प्रवक्ष्यामि शैलेन्द्रतनयेव्यये । ।७। ।

कोष्ठजात्तनयाद्यस्माद् भूमिजस्तनयो वरः ।

शाल्मलौ वैतरण्यां च असिपत्रवनेषु च । ।८।।

कुम्भीपाके रौरवे च महारौरव एव च ।

एवमाद्येषु चान्येषु कुकृतैरनुवेष्टितान्१० ।

शास्यतो मृत्युवचनाद्राक्षसैः क्रूरकर्मभिः । ।९। ।

पितॄँस्तथाशुभै११र्घोरैर्वेष्टितान् राक्षासार्दितान् ।

सत्पुत्रस्त्रायते देवि नेतरः पापनिश्चयः । । 8.158.१० । ।

नरस्य न च१२ सत्पुत्राः सर्व एव भवन्त्युत ।

एक एवात्र भवति यः पितॄँस्त्रायते भयात् । ।१ १ । ।

तत्र ये दुष्टचारित्राः पुत्रसंख्यां१३ न ते गताः ।

शठो यद्वद्बलीवर्दः षण्ढो वापि नराधिपः१४ ।।१ २ । ।

तत्रापि चोद्यते१५ दुःखं दुःखं च नरकं विदुः ।
यत्१६ पितॄँस्त्रायते तस्मात्१७ सुतः पुत्रस्ततः स्मृतः । । १३ ।।
- - - -- - - - - - - - -- - - -- - - - -
२... रा - ख. । ३ भूमिरुहा - क., हां - क. । ४ तञ्च - क. । ५ भूमिजः (?) । ६ शिक्षाक्रियां - ख. । ७ पतिम् - ख., मर्तीं - क । ८ तत् - ख. । ९. व्यये - ख. । १०... ताः - क. । ११ सुरै - ख - १२ नरकस्य न - ख । १३ संज्ञां (?) । १४ नराधमः (?) । १५. प्यति चोस्युच्यते (?) - ख. । १६ यः - क. ख. । १७ यस्मात् - ख ।
- - - -- - - - - - - - -- - - -- - - - -
812
नान्यः सम्बद्धको देवि पितुः पुत्रस्य चोभयोः ।
पाति पुत्रं पिता तस्मात् पुत्रो यत् त्रायते भयात् ।। १४।।
इन्द्रियाणां तु प्राबल्यात् तत् पुत्रेष्वपि१८ पार्वति ।
पापकान्यपि कुर्वन्ति१९ ते सत्पुत्रा भवन्त्युत ।। १५। ।
इमे हि तरवो देवि दक्षशापाद् हतेन्द्रियाः ।
पापकानि न कुर्वन्ति संवृतैः करणैश्च ह । । १६ । ।
एतस्मात् कारणाद् देवि कोष्ठजानां शतादपि ।
एको भूमिरुहः पुत्रः शस्यते न तु कोष्ठजः । । १७।।
छेदं भेदं तथा त्रासं पाटनञ्च निशाचरैः ।
कुर्वद्भिस्तरवः पुत्राः पितॄणां - - - - । - - । । १८।।
उमोवाच
छेदं भेदं त्रासनं च राक्षसैर्निरयोपगैः ।
कथं पितॄणां तरवो वारयन्ति यमक्षये । । १ ९। ।
देवदेव उवाच
शृणुष्व छेदं भेदं च पितॄणां यमसादने ।
यथा वै२० पारयन्त्येते२१ तरवो नागनन्दिनि ।। 8.158.२० । ।
एते निरुद्यमा देवि विहीनाः करणैरुत ।
यज्ञेर्थितास्ते देवानां तरवो - - - - - - । । २१ । ।
- - - - - - - - ।
दक्षशापेन भगवन् वयं ह्युपहतेन्द्रियाः ।।२२ ।।
तमोबाहुल्यतां प्राप्ता निष्क्रिया निष्परिक्रमाः ।
असुखाः करणैर्हीना महता तमसावृताः । ।२३ । ।
एतां दशामनुप्रप्ता धर्मयुक्तान् कुरुष्व नः ।
इत्येषां वचनं श्रुत्वा देवः सलिलसम्भवः । ।२४। ।

- - - -- - - - - - - -- - - -- - - - -

१८ तत् - क ९०-. द् येषु त्रिष्वपि - थ । १९ कुर्वन्तः - (?) । २० ययैवं (व) क- । २१ तारयन्त्येते - क, ।

- - - -- - - - - - - -- - - -- - - - -



यज्ञवृक्षार्थमाहेदं वृक्षान् वृक्षपतिर्वचः ।

स्थावराः स्वागतं वोस्तु तुष्यामि शरणैषिणाम ।

नाशयाम्येष वो वत्सा दक्षशापकृतं तमः । । २५ ।।

शाला बिल्वाः पलाशाश्च वरुणाः२२ किंशुकास्तथा ।

रोहीतकाश्च ये चान्ये यज्ञांगप्रभवा द्रुमाः । । २६ ।।

ते सूपयुक्ता यज्ञेषु त्वक्पत्रफलशाखिनः ।

मूर्त्तीः सुभास्वराः प्राप्य मम लोके निवत्स्यथ२३ ।। २७।।

एषां यज्ञियवृक्षाणां२४ यूयमप्यनुगामिनः ।

यज्ञोपयुक्ता गच्छध्वं तेषामेव सलोकताम् । ।२८। ।

स्थाणुलिङ्गोपयुक्ताश्च२५ जनैर्भक्तिपुरस्सरैः ।

धर्मेण शुद्धदेहाश्च गतिमिष्टामवाप्स्यथ२६ । । २९ । ।

उपयोगं च गच्छन्तो यज्ञायतनवस्तुषु२७ ।

दक्षशापतमोमुक्ता मम लोके चरिष्यथ । । 8.158.३० ।।

पुत्रहीनो नरो यश्च२८ पुत्रकान्वः२९ करिष्यति ।

तं भयात्३० त्रायतां चैव धर्मो वो भविता महान् ।।३ १ ।।

तरव ऊचुः

कथं वयं पुत्रकृतास्तान्३१ पितॄन्निरयोपगान् ।

*' ' ' - ' - - - - - - - - - / / ३ २/ /*

सोमविक्रयिणो ये च ये च विश्वस्तघातिनः ।

ये च प्राणिवधे युक्ताः पृष्ठमांसाशिनश्च ये । ।३ ३ । ।

राज्ञामाक्रोशका ये च ये च पिण्डापहारकाः ।

एते३२ स्वकर्मभिर्घोरैर्वेष्टिता लोमहर्षणैः ।।३४।।

पच्यन्ते निरये घोरे क्रोशन्तो भैरवान् रवान् ।

अहो भृशं३३ यातनाभिरशिवाभिरभिद्रुताः । ।३ ५ ।।

- - - -- - - - - - - -- - - -- - - - -

२२ तरुणाः - ख । २३ निवत्स्यत - क, निवृक्ष्यथः - ख. । २८ याज्ञिय - ख., याज्ञिकवृक्षाणां - क. । २५ शृणु लिङ्गेप्रयुक्ताश्च - क. । २६ गमि .. - क । २७ वास्तुषु (?) । २८ यच्च - ख. । २९ पुत्रकार्थं - क ख. । ३० तद्भयात् - क ख. । च १ पुत्रकृतान् स्तान् - क., तान्स्वान् - ख.,... तस्तान् (?) । ३२ ये ते (?) । ३३

नृशम्स - क ख ।

- - - -- - - - - - - -- - - - -- - - - -

814

शास्यन्ते मृत्युवचनाद्राक्षसैर्भीमविक्रमैः ।

तानेव तुद्यमानाँश्च कुट्यमानाँश्च राक्षसैः ।

पितॄन्निरयसंमग्नानुद्धरिष्यामहे कथम् । ।२ ६। ।

ब्रह्मोवाच

ताँस्तथा३४ तुद्यमानांश्च कुट्यमानाँश्च राक्षसैः ।। ।

पितॄन्निरय संमग्नान् यूयमभ्युद्धरिष्यथ।।३७।।

निरयस्थान् यथा चैतान् पितॄन् निस्तारयिष्यथ३५ ।

तन्मे सुमनसो भूत्वा निशामयत पादपाः ।। ३८। ।

पुत्रप्रकृतका यूयं यस्य यस्य भविष्यथ ।

तस्य तस्य स्मृताः३६ शीघ्रं तं देशं यास्यथानघाः३७ ।।३९।।

- - - निरयप्राप्तान् पितॄन् क्लेशैरुपद्रुतान् ।

सुखाय धास्यथ यथा स्थावरास्तन्निबोधत३८ । ।8.158.४० । ।

मन्त्रवद् विधितश्चैव३९ यो वः संस्कारमन्तशः ।

गर्भाधानादिभिः कृत्वा पुत्रत्वे कल्पयेन्नरः । । ।४१ । ।

ये चापि४० पूर्वजातान् यो विधिना४१ निष्परिग्रहान् ।

पुत्रप्रकृतकान् कुर्य्युस्ताँश्च निस्तारयिष्यथ । ।४ २ । ।

सर्वकामाँश्च दास्यध्वं सुखञ्चैव तथोत्तमम् ।

कर्मक्षयं च सर्वेषां लोकाँश्चैव तथाक्षयान्४२ ।।४३ । ।

सनत्कुमार उवाच

ततः शैलसुता भूयोपृच्छत्तद्विधिमुत्तमम्४३ ।

तां पृच्छतीं महादेव इदं वचनमब्रवीत् । ।४४। ।

देवि नागेन्द्रनासोरु नागेन्द्रगतिगामिनि ।

शृणुष्व येन विधिना गृह्यतेवनिजः सुतः ।।४५। ।

- - - -- - - - - - - -- - - - -- - - - -

३४ तानेवं (?) । ३५ स्ताँस्तारयिष्यथ - ख. । ३६ मृताः - ख. । ३७. तानघाः - क. । ३८ स्तान्नि- बोधत - क. ख. । ३९ विधितच्चैव - ख. । ४० वापि - ख. । ४१ विविधां - क. । ४२... क्षयम् - क. । ४३ अपृच्छद्विधिमुत्तमम् - क ख. । ४४ च निज. - क ।

- - - -- - - - - - - -- - - - -- - - - -

815

श्वो भूतेहं४५ भुविरुहं ग्रहीष्यामीति४६ पार्वति ।
सोपवासा भवेन्नारी शुचिशीला शुचिव्रता । ।४६। ।
ततः शतसहस्रांशावस्तशृङ्गं गते रवौ ।
उदिते विमले चापि चन्द्रे चन्द्रनिभानने । ।४७। ।
आपद्भावेन सुभगे परेण परमात्मिके ।
विप्रानामन्त्रयेद्रात्रौ पावनान् वेदवादिनः । ।४८। ।
श्रुतीनामाकरा ह्येते रत्नानामिव सागराः ।
विप्रा विप्राधिपमुखि पूजनीयाः सहस्रशः ।।४९। ।
यत्र मन्त्रविदो विप्रा न प्राश्नन्त्युत्तमं हविः ।
न तत्र देवा४७ देवेशे हविर्भुञ्जन्ति कर्हिचित् ।।8.158.५० । ।
न स्कन्दते न व्यथते नैनमाक्रमते४८ तमः ।
वरिष्ठमेतद्दानानां यद् ब्राह्मणमुखे हुतम् । ।५१ ।।
ब्रह्मणत्वे४९ (?) महासत्वे अणधातुस्तु भक्षणे ।
ब्रह्म भक्षयते यस्माद् ब्राह्मणस्तेन स स्मृतः । ।५ २। ।
जायन्ते ये पुनर्जाता ह्युपनीता महात्मभिः ।
ततो देवि द्विजाख्येयं तेषु नित्यं निपात्यते ।।५३ । ।
वियदित्युच्यते व्योम प्रकारः५० प्रापणे स्मृतः ।
दिवं संप्रापयन्त्येते देवि५१ विप्रास्ततः स्मृता । ।५४।।
सत्य५२ सारमया ह्येते५३ विप्राः सृष्टाः स्वयंभुवा ।
सिद्धिर्न तेष्वतुष्टेषु५४ शक्या प्राप्तुं सुरैरपि । ।५५।।
अहं नारायणोनन्तो ब्रह्मा शक्रोनिलः शिखी५५ ।
तद्दानं नाभिनन्दामो विप्रा यत्र५६ न पूजिताः । ।५ ६। ।
येषां प्रसादात् सुलभा आयुर्धर्मो बलं सुखम् ।
श्रीर्यशः स्वर्गवासश्च तान्५७ विप्रानर्चयेद् बुधः । ।५७। ।

- - - -- - - - - - - -- - - - -- - - - -

४५ श्वो हि भूते - क. । ४६ गृहीष्यामीति - क., व्रहि.. - ख । ४७ देव - ख. । ४८ नैतमा- क्रमन्ते - क. ख. । ४९ ब्राह्मणत्वे - क. ख, महाहव्ये (?) । ५० पकारः - क. । ५१ दिवि - क ख. । ५२ साव्य ( ष्ठ्य) - ख. । ५३ सागर याह्येति - वा. । ५४ सिद्धिर्न तेष्वतुप्टेषु - ख. । ५५.. स्विति (?) । ५६ येन (?) - क । ५७ तद् - क. । क. ।

- - - -- - - - - - - -- - - - -- - - - -

816

विप्रानामन्त्रयित्वाथ५८ शुचिवस्त्रा शुचिस्मिता ।

शयीत सनमस्कारा सदर्भा५९ भूमिमाश्रिता ।।५८।।
गमयित्वा ततो रात्रिं सवितर्युत्थितेपि६० च ।
भक्ष्यभोज्यं समादाय व्रजेत् यत्र भवेत्तरुः ।।५९।।
ततस्तं सपताकं च सातपत्रं सभूषणम् ।
तरुकं प्रमदा६१ कृत्वा तरुच्छायानुगामिनी ।।8.158.६०।।
यथोपपन्नमन्नं तु भोजयित्वा द्विजोत्तमान् ।
पुण्याहं कारयित्वाथ ऋत्विजा ह्यथवात्मना६२ ।।६१।।
तृप्तानां ब्राह्मणानां च तत्त्वेनाकूत६३मात्मनः ।
निवेद्य परमुद्दिश्य सद्भावेन परेण ह ।।६२।।
अपुत्रा भगवन्तोहं६४ पुत्रप्रकृतकं६५ तरुम् ।
ग्रहीष्ये तदनुज्ञां वै कर्तु६६ मर्हथ मेनघाः ।।६३।।
ततस्तैरभ्यनुज्ञातं तं तरुं तरुणं प्रिये ।
भूमिदेवसमक्षं वै गृह्णीयात्तनयं प्रिये ।।६४।।
अनेन विधिना देवि गृहीतस्तरुकः सुतः ।
पितॄणां निरयस्थानां मधु सोमञ्च वर्षति ।।६५।।
गृहीतो विधिनानेन सुभ्रु भूमिरुहात्मजः ।
शुभे६७ सुखाय भवति विपरीतेन दुःखदः ।।६६।।
सत्पुत्राणां६८ शताच्चापि देवि चन्द्रनिभानने ।
एको भूमिरुहः६९ श्रेष्ठः पुत्रत्वे कल्पितः सुतः ।।६७।।
इत्येतत्ते मया शिष्टं७० श्रिष्टम्लिष्ट७१ वचोरणि ।
यथा भूमिरुहः पुत्रो विशिष्टः कोष्ठजात् सुतात् ।।६८।।
ततः पुनर्देवदेवी७२ प्रणिपत्य महेश्वरम् ।
प्रणयात् कौतुकाच्चैव इदं वचनमब्रवीत् ।।६९।।

- - - -- - - - - - - - -- - - - - -- - - - -

५८ तु - ख । ५९ सदर्पा - ख. । ६० सवितर्युदितेपि (?) । ६१ प्रयता (?) । ६२ विप्रान्भोज्या- र्थनात्मना - घ । ६३ तत्तेनाक्षत - घ । ६४ हङ्हिभगवत् तेहं - क. ख. । ६५ पुत्रत्वेकृतकं - क. । ६६ वै दातु (?) । ६७ सुभगे - क ख. घ. । ६८ सपुत्राणां - ख. । ६९ एकोपि भूमिजः - ख. । ७० श्लिष्टं - ख । ७१ मृष्ट - ख. । ७२ ततो देवी पुनर्देवं - घ. ।

- - - -- - - - - - - - -- - - - - -- - - - -

817

प्रोषिते त्वयि देवेश भ्रमन्त्या मन्दरे मया७३ ।
अशोकतरुको दृष्टः कोमलः सुमनोरमः ।।8.158.७०।।

आसीच्च मे तदा भाव एष मे तरुपोतकः ।
भविष्यति सुतो रुद्रे निर्विघ्नं७४ पुनरागते ।।७१।।
आभ्यां च मे महादेव कुचाभ्यां द्विजपावन७५ ।
क्षीरमागात् सुधासारं पुत्रस्नेहात् सुखप्रदम्७६ । ।७२।।
तमहं देव गृहणीयां पुत्रप्रकृतकं तरुम् ।
यदि मे कुरुषेनुज्ञां तवाहं वशवर्तिनी ।।७३।।
देवैः पुत्रफले क्षिप्ते स हि मे तरुपोतकः ।
तुष्टिप्रदो ह्यपुत्रायाः पुत्रको भवितानघ७७ । ।७४।।
इत्येवं भाषमाणान्तु भवानीं७८ भगवान्७९ भवः ।
सद्भावान्निःसृतं८० वाक्यमवदत् परतापनः ।।७५।।।
देवि फुल्लारविन्दाक्षि कथं नाम न ते सुतः ।
भविष्यति तपस्विन्या ऐश्वर्यपरमे८१ मया८२ ।।७६ ।।
शक्ता जनयितुं पुत्रान् तपसा त्वमनिन्दिते ।
अहं च ते प्रदास्यामि पुत्रान् परमशोभनान् । ।७७।।
अथवायमनुग्राह्यस्तवाशोकतरुः प्रिये ।
अनुज्ञाता मया देवि कुर्वशोकतरुं सुतम् ।।७८।।
अनुकूलं पतिं ज्ञात्वा तं तामरसलोचना ।
प्रणिपत्याव्यया८३ तुष्टा८४ इदमाह महेश्वरम् ।।७९।।
देव जानाम्यहं धर्मं यथा स्त्रीणां न विद्यते ।
दैवतं पतिमुत्सृज्य पूजनीयं हि यद् भवेत् ।।8.158.८०।।
अनामन्त्र्य हि भर्त्तारं यद्ददाति यदर्चति ।
न फलं विन्दते तस्य नारी इत्येव नः श्रुतम् ।।८१ ।।

- - - -- - - - - - - - -- - - - -- - - - -

७३ यथा - क. । ७४ निर्विघ्ने - म. । ७५ पावनः - क. । ७६ सुखप्रदः - क. । ७७.. नघः - ख. । ७८ भावनीं - क. । ७९ भवतां - ख. । ८.... न्निसृतं - क. ख. । ८१ मैश्वर्यपरमे - ख । ८२ यया - क, त्वया - ख., स्वयं (?) । ८३. भ्यया - ख । ८४.. तुष्टा - ख ।

- - - -- - - - - - - - -- - - - -- - - - -

818

या तु भर्तारमामन्पय नारी धर्म समाचरेत् ।
तस्या देवाश्च तुष्यन्ति धर्मश्च सुमहान् विभो । ।८२। ।
अवमन्य तु या नारी भर्तारं दैवतं गुरुम् ।
स्वबुद्ध्या कुरुते पुण्यं निरयं सा प्रपद्यते । ।८३ । ।

अतीतमपि या नारी भर्तारं परिपृच्छति ।
अनुमान्य यथावद्धि जीवन्तमिव शोभना । ।८४। ।
अनुज्ञाता हि सा तेन प्रीयमाणेन चेतसा ।
धर्मकृत्येषु देवेश फलं प्राप्नोति पुष्कलम् । ।८ ५। ।
तपोपवासो दानं च आर्जवं सत्यमेव च ।
पतिशुश्रूषणस्यैते कलां नार्धन्ति८५ षोडशीम् । ।८६। ।
या ह्यन्यनरलोलापि८६ सद्भावाच्छयनासने ।
शुश्रूषां कुरुते भर्तुः सा सत्येव८७ विभाव्यते ।।८७।।
इत्येवं गिरितनया गिरीशमुक्त्वा गिर्यग्रे गिरितरुपुष्पपुञ्जचित्रे ।
तेनाग्र्या सह विचचार चारुरूपा भानोर्भा इव सह८८ भानुना भवानी ।।८८।।
इति तौ सुरपूजितावपरस्परपूजितौ ।
सहितौ प्रविचेरतुः प्रवरेश्वरवन्दितौ । ।८९। ।
इति स्कन्दपुराणे भूमिजपुत्रवर्णने अष्टपंचाशदुत्तरशततमोध्यायः ८९

सनत्कुमार उवाच
पार्वत्या निश्चयं ज्ञात्वा भगवान् त्र्यम्बकस्तदा १ ।
सुमालिं२ पिङ्गल यक्षं प्राह वाक्यविदां वरः । । १ । ।
भक्तिमन्तं३ महायोगं पुरा लब्धवरं गणम् ।
पार्श्वस्थं नन्दिनं४ तत्र५ भगवान् शङ्करः स्वयम्६ ।।२। ।
- - - -- - - - - - - - -- - - - - - - -
८५ नार्हन्ति (?) । ८६ ह्यन्यतरलोलापि - क., ह्यतर?.. - ख.,.. लोकापि - घ. । ८७ तस्यैव - ख । ८८ स्सह इव - क ख. । ८९ २०७ - ख., १४८ - घ. ।
१. स्तथा - ख. । रे सुमालं - क. । ३ भक्तिवन्तं - क. । ४ दयितं - घ. । ५ न्तत्र - क. । ६ भगवान-ब्रवीदिदम्? - क ।
- - - -- - - - - - - - -- - - - - - - -
819
पर्वतेन्द्रसुताशोकं तरुं पुत्रं ग्रहीष्यति ।
त्वय्यायत्तं च तत्सर्वं तस्मात् कुरु ममाज्ञया ।।।३।।
यत्राशोकतरुस्तत्र यथान्नमुपलक्षितम्७ ।
भवेत् सुप्रचुरं वीर तथा कुरु८ गणेश्वर ।।४।।?
प्रदेशश्च गिरेस्तस्य यथा रम्यो भविष्यति ।
तथा विधत्स्व यक्षेन्द्र यत्राशोकतरुः स्थितः ।।५।।

इत्युक्तः परमेशेन पिङ्गलः पिङ्गलेक्षणः ।
उवाच सोमया सार्धं त्रिदशानां पतिं पतिम् ।।६।।
गणाधिप यथाज्ञप्तं तत् करिष्यामि यज्ञहन् ।
यथा सोमः स नन्दी च प्रसन्नो मे भविष्यति९ ।।७।।
इत्युक्त्वा सोभ्यनुज्ञातो यक्षो लोकान्तदस्तदा ।
तस्याशोकतरोः पार्श्वे विदधावन्नमुत्तमम् ।।८।।
सुमालावथ निष्क्रान्ते सिंहक्रोधस्त्रिलोचनः ।
नन्दिनं तेजसां राशिर्दिण्डि१० चण्डेश्वरोब्रवीत्११ ।।९।।
ब्रह्मण्यान्१२ ब्रह्मणान्१३ नन्दिन् देवी यज्ञेन यक्ष्यति१४ ।
श्वः प्रभाते महाबुद्धे तत्र विप्रैः प्रयोजनम् ।।8.159.१० ।।
स त्वं मत्प्रहितो देव१५ यत्र यत्र१६ वदाम्यहम् ।
तत्र तत्र गतो विप्रान् निमन्त्रय पदत्रये ।।११।।
औदकायां विरूपास्य१७ ब्राह्मणा ब्रह्मसंभवाः१८ ।
उपासते ये वरुणं१९ पातालतलसंश्रयाः ।।१ २।।
ये सुरेव्यासुऽराद्याश्च२० रसावयवमुत्तम२१ ।
पिबन्ति फेनपा नाम तान्निमन्त्रय मा चिरम् ।।१३ ।।
संयमन्यां तथा चैव२२ ये यमं पर्युपासते ।
ब्राह्मणा ब्रह्मणा तुल्या२३स्तान्निमन्त्रय भूतप ।।१४।।

- - - -- - - - - - - - - -- - - - - -

७ यर्थार्थमुपलक्षितम् - घ. । ८ तथार्घन्तु - घ. । ९ भविष्यसि - घ. ।. १० दन्ति - घ. । ११ दण्डेश्वरोब्रवीत् - घ । १२ ब्राह्मण्या - क. टि । १३. न्ब्राह्मणान् - क. । १४ यं भोजयिष्यति - घ. । १५ प्रहितः शीघ्रं - घ. । १६ तत्र - क. । १७ वरुणस्य - घ. । १८ संगताः - क. , सत्तमाः - घ. । १९ वरुणं ये ह्युपासन्ति - क । २० सुरभ्याः सुराद्यञ्च (?) । २१ रसायनवरं शुभम् - घ. । २२ देव - ख. । २३ ब्रह्मणस्स्तुल्था - क. ।

- - - -- - - - - - - - - -- - - - - -

820

तथोदयगिरेः शृङ्गे सत्यो नाम महाह्रदः ।
राजहंसानुचरितः कान्तितामरसावृतः ।।१५।।
वसन्ति यत्र ते सत्याः२४ सत्यानाम तपोधनाः ।
सत्येन येषामादित्यो दिनं नयति नित्यशः ।।१ ६।।
तेषां निष्कल्मषस्तस्मिन् ह्रदे स्नातो दिवाकरः ।
प्रत्यहं कुरुते देवः प्रयाणं२५ शुभकर्मकृत् ।।१७।।
तेषां प्रणम्य शिरसा ह्यात्मानं सन्निवेद्य च ।

सद्भावं दर्शयन्नग्रे नन्दीश्वर निमन्त्रय ।।१८।।
ये चादित्यरथं शश्वत् परिवार्य व्रजन्त्युत ।
अथर्वाङ्गिरसस्तांश्च२६ निमन्त्रय गण द्विजान् ।।१ ९।।
ये च चक्रचराः सिद्धा ये कपोतोञ्छवृत्तयः ।
उपासते ये च शक्रं२७ तानामन्त्रय वै द्विजान् ।।8.159.२० ।।
ततो ब्रह्मसदो२८ गत्वा ब्रह्मण्यान्२९ ब्रह्मणः प्रियान् ।
ब्रह्माणं च सपत्नीकं ब्राह्मणांश्च निमन्त्रय ।।२१।।
क्षीरोदवेलानिलयास्तपोवननिवासिनः ।
ब्रह्मणो भवनादेत्य बालखिल्यान्३० निमन्त्रय ।।२२।।
ये मां सदाराः ससुताः साग्निहोत्रपरिच्छदाः ।
भक्ता येषामहं नित्यं प्रसादसुमुखोग्रणीः३१ ।।२३।।
तान् बालखिल्यान् वागीश व्यालानिव दुरासदान् ।
आमन्त्रय यतो भूत्वा सुयशाः३२ सुयशापते ।।२४।।
सञ्चरँश्च त्रिभुवनं वायुरव्याहतो३३ यथा ।
यान्यतः पश्यसे विप्रान् सर्वानेव निमन्त्रय ।।२५।।
ये चापि प्रमथाः केचिद् गोचरे ते सुरारिहन् ।
ते च सर्वे समायान्तु विप्राणां परिवेशकाः३४ ।।२६।।

- - - -- - - - - - - - -- - - - -- - - -

२५ तस्याः - ख । २५ प्रण मं - क. । २६ साधवोङ्गिरसस्ताँश्च - घ । २७ ये च शक्रमुपासन्ते - क. । चक्र - (?) । २८ ब्रह्मसदं - क. । २९ ब्र ( ब्रा) ह्मणाः - क. । ३० बालिखिल्यान् - क ख. । ३१ गणे - ख । ३२ सुयशः (?) । ३३ वायुरभ्याहतो - ख. । ३४ परिवेषकाः - क. ख, ।

- - - -- - - - - - - - -- - - - -- - - -

821

कपर्दिनैवमुक्तस्तु नन्दी सूर्यसमप्रभः ।
शूलं ज्वलन्तमुद्यम्य प्रययौ वरुणालयम् । ।२७। ।
सागरं सोम्बराकारं साम्बरोम्बगोचरः३५ ।
आससाद प्रवल्गन्तं रङ्गस्थमिव वारणम् । ।२८। ।
स तं तिमिशताकीर्णमर्णवं३६ प्रमथाग्रणीः ।
प्रविवेश प्रदीप्तोर्कः३७ पयोदनिचयं यथा३८ । । २९।।
सुतले३९ स तु पाताले गां गजेन्द्रेन्द्रविक्रमः४० ।
अपश्यत् क्षरतीं क्षीरं दिव्यं तदमृताकरम् । 8.159.३० ।।
सुरभीमभिवाद्यैव शङ्करानुचरोरिहा ।

विवेश नन्दी वरुणो यत्रास्ते सगणोर्चितः४१ । ।३ १ ।।

स दिव्यवस्त्राभरणं४२ पुत्रपौत्रगणान्वितम्४३ ।

अपश्यदम्बुगोप्तामादित्ययुतसन्निभम् ३२ । ।

वरुणं द्वारपालेन पूर्वमेव निवेदितः ।

प्रविवेश तदा नन्दी वरुणस्य निवेशनम् । ।३ ३ ।।

स चाप्यपात्तदा (?) राजा दूरादेव प्रहृष्टवत् ।

दृष्ट्वा नन्दिनमुत्तस्थौ पूजयन्मन्मथार्दनम् । ।३४। ।

तस्यार्घं गाञ्च पाद्यञ्च निवेद्य वरुणः स्वयम् ।

आसीनं तमपां गोप्ता पप्रच्छ वदतां वरः । । ३५ । ।

भगवन् किं चिरस्याद्य त्वया वयमपेक्षिताः४४ ।

दर्शनं देवदेवस्य मन्यामस्तव४५ दर्शनात् । । ३ ६। ।

विवक्षोरिव ते वक्त्रमिन्द्रगोपायतेनघ ।

वद सर्वानभिप्रायान् कर्ता तेहं न संशयः । ।३७।।

वरुणेनैवमुक्तस्तु तत्परेण शिलादजः ।

ततः स वरुणं प्राह दानवैरपराजितम् ।।३८ । ।

- - - -- - - - - - - - -- - - -- - - - -

३५ स्ता - क., सोम्बराम्बरगोचरः - घ । ३६ मार्णव - क. ख. । ३७ प्रदीर्णोकः - क., प्रदीपार्चिः - घ । ३८... धिमय - ख., पयोधिमिव भास्करः - घ. । ३९ सुतलं - घ. । ४० गत्वा नागेन्द्रविक्रमः - घ., गजेन्द्रेन्दुविक्रमः- क । ४१ सगणोर्चितः - क., सगणार्चितः ( ?), स्वगणार्चितः (?), सगणोर्चितम् - क । ४२ शस्त्राभरणं - क. ख. । ४३,.. वृताम् - ख. । ४४ मवेक्षिताः (?), मुपे.?. (7) । ५ तव - ख. ।

- - - -- - - - - - - - -- - - -- - - - -

822

अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।

क्रीडार्थमुमया सार्धं निमन्त्रयति ते हरः ।।३ ९। ।

तद्देव पुत्राभिवृतः सदारः सह फेनपैः ।

श्वो याहि मन्दरगिरिं प्रीतिं वर्द्धय शूलिनः । ।8.159.४० ।।

इत्युक्त्वा सोभ्युनुज्ञातो वरुणेन गणेश्वरः ।

निष्क्रान्तो वरुणावासाच्छ्वेताभ्रादिव भास्करः । ।४१ ।।

स पूज्यमानः सिद्धैश्च४६ चारणैश्च सुरैरपि ।

प्रापोदयगिरिं४७ नन्दी हरेषुस्त्रिपुरं४८ यथा । ।४२।।

सोथ तस्य गिरेः४९ शृङ्गे रञ्जिते तापनैः करैः ।

निलिल्ये गरुडः पक्षी प्रभञ्जनपथे यथा । ।४३ । ।

ह्रदं तत्रार्णवाकारं काञ्चनाम्बुजशोभितम् ।
शीर्णोत्पलतरङ्गाढ्य५०मपश्यत्सोप्सरोवृतम् । ।४४। ।
ह्रदस्य तस्य रोधस्सु साशोकेषु सहस्रशः ।
अपश्यत ऋषीन् सत्यानादित्यायुतसन्निभान् । ।४५। ।
स तान् तपोधनान् दृष्ट्वा तपनाभान् तपोधनान्५१ ।
नन्दी प्रह्वाञ्जलिपुटो ह्यासाद्यावन्दत द्विजान्५२ ।।४६। ।
ते सर्वे नियमान् हित्वा नियमस्थास्तपोधनाः ।
नन्दिनं समयुज्यन्त५३ वासद्रुममिवाण्डजाः५४ । ।४७। ।
तैः सूर्यकिरणापीतैः पीतचीराम्बरैरपि ।
संवृतः स बभौ५५ नन्दी जम्बुद्वीप इवाचलैः । ।४८। ।
स पूज्यमानो गणपः सत्यः सत्यैस्तपोधनैः ।
अतीव प्रबभौ व्यास तीर्थेष्विव५६ महेश्वरः । ।४९। ।
ते नन्दिनं५७ सुखासीनं सत्यं सत्यास्तपोधनाः ।
ऊचुर्हर्षाकुलैर्वाक्यै५८र्विस्मिताननलोचनाः५९ । ।8.159.५० ।।

- - - -- - - - - - - - -- - - - -- - - - -

४६ वरुणं - क । ४७ प्राप्तोदयगिरि - क. ख । ४८ त्रिपुरं - क ख. । ४९ सोदयस्य गिरेः - क. । घातय - ख. । ५० शार्णोपलतरङ्गाक्ष्यं तल - क ख । ९ । ५१ तपोधन (?) । ५२ वन्दिनो द्विजान् - क, वन्द्य तान् द्विजान् - ख. । ५३ सममर्पन्त - घ. । ५४ इवाण्डजाः - क. ख. । ५५ प्रबभौ - क. । ५६ तिथिस्वि र (व - ख. क. । ५७ तन्नन्दिनं - क. ख । ५८ हर्षकरैर्वाक्यं - ख., हर्षफलै - क । र्बाह्यै - क. । ५९ . र्विस्तृताननुलोचनाः - क. ख ।

- - - -- - - - - - - - -- - - - -- - - - -



नन्दीश्वर चिरस्याद्य ह्युदयो६० ह्युदयप्रभः६१ ।
समाक्रान्तस्त्वया तात धर्मेण निरयो यथा ।।५१ ।।
किमिहानघ देवेशस्त्रिनेत्रस्त्रिपुरार्दनः ।
विहर्तुमागतो देवो दृष्टोस्माभिस्ततो६२ भवान् । ।५२। ।
सत्यं सुचरितं शुद्धं तपोस्माभिर्गणेश्वर६३ ।
सहोमं६४ यत् त्वया सार्धं द्रक्ष्याम इह शङ्करम्६५ ।।५३ ।।
एवं कपीन्द्रवदनो वन्दमानाँस्तपोधनान् ।
स सत्यान्६६ सत्यवचन इदमाह६७ शिलादजः ।।५४। ।
- - -६८ मन्दरं शैलं न कथञ्चित्त्यजेदजः ।
अहन्तु कार्यवानागां युष्माकमिममाश्रमम्६९ ।।५५।।

अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।
निमन्त्रयति वस्तत्र सवान्छर्वो द्विजोत्तमान् ।।५६। ।
मानयन्तो भवं सर्वे साम्बमम्बापतिं द्रुतम् ।
श्वो गच्छत तपोनित्या मन्दरं धरणीधरम् ।।५७।।
तत्र शर्वममराधिपप्रभुं तारकाधिपविभूषणं शिवम् ।
द्रक्ष्यथेशमसुरप्रमर्दनं देवतार्तिनिखिलं हरं७१ हरम् । ।५८। ।
इति स्कन्दपुराणे तरुपुत्रकग्रहणे७२ ब्राह्मणामन्त्रणे ऊनषष्ट्युत्तरशततमोध्यायः

सनत्कुमार उवाच
आमन्त्र्य तानृषीन् सर्वान् सत्यवीर्ययशःश्रुतान् ।
नन्दी विसर्जितस्तैस्तु ययौ सूर्यरथं प्रति ।।१ ।।
स तं सप्तोत्तमहयं शकुन्तवरसारथिम् ।
हराज्ञया रविं देवमुपासर्पत भूतपः ।।२ ।।
- - - -- - - - - - - - -- - - - -- - - - -
६० चिरस्यास्य उदयो - क- । ६१ त्प्रभः - ख., प्रहः - क. । ६२... र्यतो - ग. । ३ तपोस्माकं गणेश्वर (?) । ६४ ससोमं - क. । ६५ सह - क. ख. । ६६ सुसत्यान् - क. । ६७ मिदमाह - क. । ६८ दयितं (?) । ६९ मिदमाश्रमम् - क ख. । ७० द्रक्ष्यते - क. ख । ७१.. मर्तिनिखिलं - घ. । ७२ हिवाहे - ख. ।
- - - -- - - - - - - - -- - - - -- - - - -
824
सूर्यरश्मिसहस्रेषु तापसान् स मरीचिपान् ।
अपश्यत् स१ सुखासीनान् छायास्विव विहङ्गमान् ।।३ ।।
ततः सूर्यरथं शीघ्रमुपेत्यारुणसारथिम ।
सोंशुमालिनमत्रिञ्च अथर्वाङ्गिरसावपि२ ।।४।।
देवानृषीन् भुजङ्गाँश्च अश्वाँश्चामन्त्रयच्छुभः३ ।
आदित्याश्चादिभिर्नन्दी रुद्रपिप्रीषुभिस्तदा । ५।।
तथेत्युक्तोपचक्राम सूर्यवाहा४दथ द्रुतम् ।
देवानृषीन् भुजङ्गाँश्च तत आमन्त्र्य भूतपः । ।६।।
स वायुरिव शीघ्रस्तु गरुडो वा यथाण्डजः ।
धनेशभवनं नन्दी कैलासं समुपागतः५ । ।७।।
स तं पाण्डरमेधाभं कुन्देन्दुरजतप्रभम् ।
पर्वतं धनदावासं पश्यमानः प्रहष्यत६ ।।८। ।
स भूतेशो धनेशस्य गिरोशवचनङ्करः ।

आससाद नगस्याग्रे७ भवनं काञ्चनं शुभम् । ।९। ।

कैलासाग्रे सन्निविष्टं८ कैलासाग्रसमत्विषम् ।

हर्म्यप्रासादसंपन्नं सम्पन्नमिव भासितम्९ ।। 8.160.१० । ।

पताकाभिर्ध्वजैश्चापि किङ्किणीजालमालिभिः१० ।

हासैश्च पुरघोषाणां सन्नादितमहर्निशम् । ।१ १ । ।

भेर्या परमघोराणां वादित्रशतनादितम् ।

इज्याध्ययनसंपन्नास्तिष्ठन्त्यत्र११ सभासदः । ।१ २।।

भाभिर्जुष्टां सभां तस्य ततो रुद्रसभासदः१२ ।

आससाद स यत्रास्ते मुनेर्विश्रवसः१३ सुतः ।। १३ । ।

तमृद्ध्या परया युक्तं सेव्यमानं श्रिया तथा१४ ।

अपश्यद् धनदं नन्दी दिव्यस्त्रीगणसेवितम ।।१४।।

- - - -- - - - - - - - -- - - - - - -

१ सु - क. । २.? सामपि - ख. । ३... च्छुभं - ख. । ४... द्रथाद् - ख. । ५ समुयागतं - क. । ६ पश्यमनोपहृष्यत -क. । ७ न चास्याग्रे - ख. । ८ सन्निविष्टः - ख, । ९ भाषितम् - ख. । १० किङ्कजीजालमःलिभिः - ख., हासिभि (?) । ११ स्तिठँन्स्त्यत्र - ख, तिष्ठन अतिष्ठन् (?) । १२ सभासतः - ख. । १३... र्विश्वसः - ख. । १४ तया (?) ।

- - - -- - - - - - - - -- - - - - - -



शुक्तिकणं शुक्तिकर्णैर्यक्षेन्द्रैरभिसzवृतम्१५ ।

उपगीयमानz गन्धर्वै१६रेकपिङ्गायतेक्षणम्१७ ।।१५।।

महेश्वरसखत्वेन१८ वरदानमदेन च ।

माद्यन्तं१९ स्वर्णया२० नद्धमालयामललोलया२१ ।।१६।।

धनदश्चापि तं दृष्ट्वा शङ्करानुचरं वरम् ।

पूजयञ्छङ्करं सोम२२ मुत्पपातासनाद् द्रुतम् ।।१८।।

स्वर्णादुत्पतमानस्तु आसनाद् धनदो बभौ ।

साशोकादिव२३ पुष्पाढ्यादुदग्रात् पर्वताद्रविः ।।१८।।

तमुत्पतन्तमुत्पेतुर्यक्षा यक्षपतिं२४ द्रुतम् ।

ग्रहा यथा दीप्यमाना दिनहानौ ग्रहाधिपम् ।।१९।।

नन्दिने२५ स तदार्घञ्च२६ पाद्यञ्चावेद्य वित्तदः२७ ।

सपुत्रदारः सामात्यः२८ प्रणेमे मनसा हरम् ।।8.160.२०।।

ततः कथा बहुविधाः कृत्वोद्दिश्य महेश्वरम् ।

पप्रच्छ धनदो नन्दिं चिरस्यागमनं कृतम् ।।२१।। नन्द्युवाच

अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।
निमन्त्रयति तत्र त्वां द्रविणेश महेश्वरः ।।२२।।
श्वः सपुत्रः सदारश्च सानुगः साप्सरोगणः ।
मन्दरं याहि वित्तेश देवेशः प्रीयते२९ त्वया ।।२३ ।।
एवमामन्त्र्य धनदं धनदेन विसर्जितः ।
ययौ संयमनीं३० नन्दी यमस्य यमसन्निभः ।।२४।।
स यमं धर्मवक्तारं हर्तारं प्राणिनां प्रभुम् ।
साग्निं सधर्मं सव्याधिमपश्यद् गणनायकः ।।२५।।

- - - -- - - - - - - - -- - -- - - - -

१५ सेवितम् - घ. । १६ गन्धर्वैरुपगीय (त?) न्तं - क. ख. । १७ ... रेकपिङ्गायतेक्षणः - क- ग. । १८ सखित्वेन - क ग. । १९ मान्यन्तं - ग., आप्यन्त - ख., साज्यन्तं - घ. । २० स्वर्णया - क. ख., स्वर्णनक्षत्रमालया - घ., नद्धं - क. ग. । २१ माल. - क. ग. मनतोयथा - घ. । २२ पूजां कर्तुं नन्दिनस्तु - घ. । २३ अशोकादिव - घ । २४ रक्षपतिं - ख. ।। २५ नन्दिनं - क. ग. । २६ तदार्घ्यस्य - क.,. र्घस्य - ग । २७ षः ( पः) - घ. । २८ सामान्यः - ग. । २९ प्रियते - ख. । ३० संयमनं - क. ख. ।

- - - -- - - - - - - - -- - -- - - - -

826

आयांतं३१ नन्दिनं दृष्ट्वा यमो भूतशतावृतः३२ ।
पादाभ्यां नन्दिनः३३ सोथ निपपात तुतोष च ।।२६ । ।
रुद्रस्येव३४ यमस्तस्य पूजां कृत्वा ह्यनुत्तमाम् ।
पप्रच्छ नन्दिनं यत्नाच्चिरस्यागमनं कृतम् । । २७।।
नन्द्युवाच
अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।
तत्र त्वां३५ सानुगं देवो निमन्त्रयति शङ्करः ।।२८ । ।
ये चैव विषये३६ ह्यस्मिन् निवसन्ति द्विजातयः ।
ताँश्चामन्त्रयते देवः संमान्य बहुमानतः । । २९।।
कल्यं३७ स भगवान् कल्यः३८ कालः कालप्रियं गिरिम्३९
मानयन् प्रभुमीशानं गन्तुमर्हसि मन्दरम् । । 8.160.३० । ।
तथेत्युक्तो यमेनाथ तैश्चाग्निसदृशैर्द्विजैः४० ।
सूर्यात्मजगृहान्नन्दी शक्रलोकं ततो गतः४१ ।। ३१ । ।
सुकृतीनां तमावासं४२ वासवं लोकमद्भुतम्४३ ।
विवेश त्वरितं नन्दी४४ दितिगर्भं यथाहिहा । ।३ २।।
स सुधर्मा सुधर्मायां सुधर्ममरैर्वृतम् ।

गान्धर्वमुपशृण्वानं नन्दी शक्रमपश्यत ।।३ ३ । ।

शक्रश्च नन्दिनं देवं४५ देवदेवस्य किङ्करम् ।

हर्षान्नेत्रसहस्रस्थं कृत्वा सम्यगपश्यत ।। ३४।।

स पूजां रुद्रसदृशीमवाप्य त्रिदशेश्वरात् ।

उपाविशदमेयात्मा शक्राभ्यासे वरासने४६ । । ३५ । ।

तमासीनमुपासीनः४७ शतक्रतुररिन्दमः ।

पिबन्नेत्रसहस्रेण न तृप्तिं सोभ्यगच्छत४८ ।। ३६ । ।

- - - -- - - - - - - - -- - - - - - -

३१ आयात - क ग । ३२ भूतशतावृतः - घ । ३३ नन्दिनं - घ. । ३४ रुद्रस्यैव - क ख. ग. । ३५ ततस्त्वां - य. । ३६ ऋषयो - घ । ३७ काल्यं - क ख. ग. । ३८ काल्यः - ख । ३९ गिरिप्रियः -घ. । ४० सतैश्चाग्निसदृशैर्द्विजैः - क । ४१... गमत्-ख । ४२ तदावासं - क. ख. ग । ४३ वासवस्यामरावतीम् - घ. । ४४ नन्दी त्वरितं - क. ख. । ४५ देवो - ख । ४६ शक्रोद्यानवरासने - घ. । ४७ तमुपास्त - घ, उपसीनं - घ, त - क. । ४८ योभ्यगच्छत - ग. ।

- - - -- - - - - - - - -- - - - - - -

827

ततो वृत्रबलारिस्तं नन्दिनं दिनकृत्प्रभम्४९ ।

पर्यपृच्छत हर्षेण किं चिरादागतो भवान् । । ३७। ।

इत्युक्तः स तु देवेन देवः स्वर्गनिवासिना ।

मन्दारवासितोव्यग्रः५० प्रोवाच कुलिशाधरः५१ ।।३८। ।

अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति५२ ।

तत्र त्वां सामरं देवो निमन्त्रयति भूतपः५३ ।३ ९।।

द्विजपूर्वं५४ द्विजा ये च तवालयनिवासिनः ।

सपुत्रदाराँस्ताँश्चापि निमन्त्रयति शङ्करः ।।8.160.४० ।।

श्वस्सपुत्रः सदारस्त्वं देवदेवस्य शासनात् ।

मन्दरं गच्छ देवेश गिरीशमभिनन्दय५५ । ।४१ । ।

त्वयि याते सुरश्रेष्ठ अशोकतरुकोत्सवे५६ ।

प्रीतिं यास्यति देवेशः५७ परां सुरनरार्त्तिहा ।।४२। ।

शितशूलधरं पिनाकिनं गिरिराजेन्द्रसुतापतिं प्रभुम् ।

प्रणिपत्य महेशमूर्जितं पुनरेवैष्यसि नाकसंसदम् । ।४३ ।।

इति स्कन्दपुराणे विप्रामन्त्रणे षष्ट्युत्तरशततमोध्यायः

- - - - -- - - - - - - - -- - - - - - -

४९ प्रभु - रव्र. | ५० मन्दरावासमव्यग्र - ग., मन्दरावासिनव्यग्रः - घ | ५१ धर? | ५२ ग्रहिष्यति - क ख. | ५३ भूमिपः (प) - क. ग. (ख) | | ५४ द्विजापूर्वं - ग. | ५५ मनन्दयन् - ग. | ५६ त्सवम् - क. ग | ५७ देवेश - क. |

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१७

https://sa.wikisource.org/s/fbu
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्ववर्ती पृष्ठः (अध्यायाः १५१ - १६०) | आगामी पृष्ठः (अध्यायाः १७१ - १८०)

सनत्कुमार उवाच
शक्रेण तु कृतानुज्ञो नन्दी प्रमथनायकः ।
ब्रह्मणो भवनं गन्तुं मतिं दध्रे महाद्युतिः१ ।। १ ।।
स मुहूर्त्तान्महावेगो महावेग२ इवानिलः३ ।
वैराजं भवनं प्राप्तश्चतुर्वक्त्रस्य पार्षदः ।।२।।
हतक्लमां स तु सभां सभां मेरुगिरेरिव ।
विवेश नन्दी तेजस्वी दिवाकरकरो यथा । ।३ ।।
- - - -- - - - - - - - -- - - -- - - - -
४९ प्रभु - रव्र. । ५० मन्दरावासमव्यग्र - ग., मन्दरावासिनव्यग्रः - घ । ५१ धर? । ५२ ग्रहिष्यति - क ख. । ५३ भूमिपः (प) - क. ग. (ख) । । ५४ द्विजापूर्वं - ग. । ५५ मनन्दयन् - ग. । ५६ त्सवम् - क. ग । ५७ देवेश - क. ।
१ महामतिः - ख. । २ मुहुर्तं स महावेगो - ग, । ६ इवानलः - क. ।
- - - -- - - - - - - - -

828

तां कथामिव चित्रार्थां चित्रार्थैर्बहुभिर्युताम् ।
ददर्श४ स सभां नन्दी बह्वाश्चर्यसमाकुलाम्५ । ।४। ।
तस्यां सभायामालीनं यतिभिस्सह सोद्भुतम् ।
अपश्यदब्जजं नन्दी देवैः पञ्चभिरावृतम् । ।५। ।
वेदार्थं भाषमाणं तं६ यतीनां परिपृच्छताम् ।
ताँश्च भाष्यविदः सर्वान् श्रुत्वा साध्विति वादिनः । ।६। ।
नन्दी पितामहं सम्यक् पूजयामास सत्वरम् ।
ततः पितामहः प्राह नन्दिनं गणनायकम् । ।७। ।
किं चिरादागतोसीति स च तं प्रत्यभाषत ।
अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।।८ । ।
भगवँस्तत्र७ देवस्त्वां निमन्त्रयति शङ्करः ।

इमांश्च तपसाग्न्याभान्८ सवेदान् वेदवादिनः । ।९।।
निमन्त्रयति देवेशो यज्ञकोटीनिमन्त्रितः९ ।
यतिभिस्सह सर्वस्त्वं मन्दरं चित्रकन्दरम् । । 8.161.१० । ।
व्रज मानद देवानामेवमाज्ञापयत्यजः ।
इत्येवं वचसां कर्ता वचः श्रुत्वा स नन्दिनः । ।१ १ । ।
जप्यप्रियमुवाचेदं हृष्टरूपः१० पितामहः ।
नन्दीश्वर व्रजस्व त्वमविघ्नेन शिवेन च । ।१ २। ।
अहमप्यागमिष्यामि एभिस्सह शिवान्तिकम् ।
मोक्ष्यते चाप्यशोकोसौ दक्षशापकृतं तमः ।। १३ ।।
पुत्री हिमवतो देवी यं ग्रहीष्यति पुत्रकम् ।
इत्युक्तः प्रतिमान्येश११मीशस्य१२ दयितोग्रणीः । ।१४।।
ब्रह्मणो भवनात्तूर्णं क्षीरोदमुदधिं ययौ ।
मालामिव समुद्रस्य स तु वेलाममालिनीम् । । १ ५। ।

- - - -- - - - - - - - -

४ ददृशे - क. । ५ अश्चर्य बहुसंकुलाम् - क ख. । ६ स विभाषन्तं - क. ख. । ७ भगवांस्तत्र - क. । ८ तपनाभासान् - ध. । ९ कोटिनिमन्त्रितः - ख ग. । १० दृष्टरूपः - क. । ११ इत्युक्तस्तु प्रणम्याथ - घ. । १२.. .मीशेश - क. ख. ।

- - - -- - - - - - - - -

829

गणेश्वरसदोमुख्य आससाद दुरुत्सहाम् ।
स वेलानिलयान् विप्रान् वालखिल्याँ१३ स्तपोधनान् ।।१ ६। ।
नानानियमसंयुक्तानपश्यद्१४ गणनायकः
वन्दमानं१५ तमालोक्य गणेशं सुयशापतिम् ।।१७' ।
आशीभिरनुकूलाभिर्ननन्दुस्ते१६ तपोधनाः ।
तपोधनानां हृष्टानां नन्दी मध्यगतो बभौ । । १८।।
ग्रहाणां सौम्यरूपाणां यथा१७ मध्यगतोडुपः१८ ।
अथ पाद्यार्घ्यदानेन फलदानेन वैव हि । ।१९। ।
संपूज्य नन्दिनं देवं बालखिल्यास्तमब्रुवन् ।
कुतश्चिरस्यागमनमिह ते प्रमथाधिप ।
कच्चिद् द्रक्ष्याम देवेशं साम्बमम्बापतिं भवम् ।।8.161.२ ० ।।
ततो नन्दी द्विजश्रेष्ठान्१९ श्रेष्ठो वै प्रमथाधिपः ।

सालाङ्कारमिदं वाक्यमब्रवीद् द्विजसंसदि । ।२ १ ।।
मन्दरे साम्बिको देवो नेहागच्छति शङ्करः ।
इह चागमनं२० यन्मे तच्छृणुध्वं तपोधनाः ।।२२ ।।
अशोकतरुकं पुत्रं गिरिपुत्री ग्रहीष्यति ।
तत्र वो गोपतिर्देवो निमन्त्रयति शङ्करः ।। २३ ।।
श्वः सर्वे दारसहिताः सशिष्यतनयाग्नयः ।
मन्दरं यात विप्राग्र्या मामम्बां२१ चानुगृहणत२२ ।।२४।।
इत्येवं नन्दिना प्रोक्ता बालखिल्या२३ महर्षयः२४ ।
देवे भक्ति२५ प्रकर्षेण२६ गणेशमिदमब्रुवन् ।। २५।।
भो नन्दिन्नागमिष्यामः श्वः प्रभाते वयं प्रभो ।
पर्वतं याह्यविघ्नेन मन्दरं चारुकन्दरम् । ।२६। ।

- - - -- - - - - - - - - -

१३ बालिखिल्याँ - क ख. । १४ लीलानियमसंयुक्तानपश्यद्।१५ वन्द्यमान-क। १६ स्तं-घ ख। १७ स्थितो - क. ख. । १८ इवोडुपः ( ?) - घ । । १९ नन्दिर्द्विजश्रेष्ठान् - ख. । २० त्वागमनं - घ. । २१। माम्बां - क ख । २२ च नुगृहणथ - क ख., गृह्य च - घ । २३ बालिखिल्या - क. ख. । २४ महाबलाः ख. । २५ देवभक्ति क । २६ प्रहर्षेण - क ख. । २७ देवेश - घ. ।

- - - -- - - - - - - - - -

830

स बालखिल्यैः प्रणतोभिपूजितो
निमन्त्र्य२७ सर्वान् त्रिपदे द्विजोत्तमान् ।
पुनर्निवृतोभिजगाम मन्दरं
स यत्र देव्या सहितोवतिष्ठते । ।२७। ।
अथ भुवनपतिं पतिं सुराणां
गिरितनयामुखपङ्कजद्विरेफम् ।
धनदवरदमेत्य भूतनाथं
गणपतिनाथ इदं तदावभाषे । ।२८ । ।
दिवि च भुवि च ये चरन्ति विप्राः
शमदमसंयमशौचसत्वयुक्ताः२८ ।
त्रिपुरदमन कालनाश सर्वे
तव वचनाद्विनिमन्त्रिता मया ते२९ । । २९।।
इति स्कन्दपुराणे तरुपुत्रग्रहणे विप्रामन्त्रणं नाम एकषष्ट्युत्तरशततमोध्यायः

सनत्कुमार उवाच
आमन्त्रितेषु विप्रेषु नारायणपदत्रये१ ।
नन्दिन्यथ निवृत्ते च गणयूथपयूथपे । । १ । ।
भगवान् क्रतुकामघ्नः पूष्णो दन्तनिपातनः ।
माली मौली बली कालः काले वचनमव्रवीत् । । २। ।
अम्बिके जगतः२ सर्वे ब्राह्मणा ब्राह्मणः२ समाः ।
आमन्त्रिता वरारोहे कुरु यत्ते मनोगतम् । । ३ । ।
स यत्राशोकतरुकः पुत्रकस्ते भविष्यति ।
तत्र सज्जीकरोप्यन्न४मन्नदः पिङ्गलः५ प्रिये । ।४।।
- - - -- - - - - - - - - -
२८... भिमन्त्र्य - क । २९ दमयममंयनशौचसत्वयुक्ताः - क, दमशम - ख. घ. । ३० मयेति - ख. । १ त्रिलोकपुरवासिषु - घ । २... ध्यागता - घ. । ३ ब्रह्मणा (?) । ४ करोत्वन्नं - क, करोद् देवि - घ । २.., त्व - क., पिञ्जलः - क. ।
- - - -- - - - - - - - - -

831
श्वः प्रभाते यथा देवि नन्दिना सह नन्दिनि ।
यामोशोकतरोः६ पार्श्वं तथा कुरु गिरीन्द्रजे ।।५।।
साकाशजलपातालं७ जगज्जननि तत्र हि८ ।
पिण्डीकृतं त्वद्धितार्थे९ भविष्यति गिरेः सुते ।। ६।।
अनेन चामन्त्रयता नन्दिना वै द्विजोत्तमान् ।
क्रान्तं त्रिविक्रमाक्रान्तं१० नारायणपदत्रयम् ।।७।।
सोहमस्य वरारोहे वरेण्ये११ वरदायिनि ।
वरं दास्यामि वरदे यदि ते रुचितं प्रिये ।।८। ।
अथ देवी दिवोनाथं डिण्डिमुण्डेश्वरं१२ हरम् ।
अवदद्वरदं कान्तं कान्तं चन्द्रार्धभूषणम्१३ । ।९।।
अयन्नन्दीश्वरो देव आवयोः परमो हितः ।
वरकोटीसहस्राणि त्वत्तोर्हति न संशयः । ।8.162.१ ० ।।
वरदो ह्यसि लोकानां लोकानामपि चेश्वरः ।
यदि तुष्टोसि शैलादेर्दिशस्व प्रवरं वरम् । । ११ । ।
कृत्तिवासास्ततो देवो मूर्ध्न्युपाघ्राय नन्दिनम् ।

उवाच प्रमथेशानं१५ व्रियतामीप्सितो१६ वरः । ।१ २ ।।
ततः कपीन्द्रवदनः सुरेशसद्दशद्युतिः ।
प्रणम्य शिरसा प्राह नन्दी शङ्करवल्लभः१७ ।।१ ३। ।
प्रभावात्तव देवेश वरदास्म्यजरामरः१८ ।
भोगवान् पूजितः पूज्यैर्देवदानवकिन्नरैः ।।१४। ।
किं मे वरेण योहं ते वरकोटिप्रपूजितौ१९ ।
पश्यामि चरणौ शर्व साम्बस्य प्रमथार्चितौ ।। १५।।

- - - -- - - - - - - - -

६ माया... - क, यामी ( म्य शोकतरोः - ख., याह्यशोकतरो - घ. । ७ सकालजलपातालं - घ. । ८ जगत्सर्वं निमन्त्रितं - घ,... मन्त्र(त्र - क. । ९ त्वद्धितार्थं - ख. ग । १० त्रिविक्रमम् - घ., ...माक्रान्त - क. ग. । १५ वरदो - घ । १२ चण्डाण्डेश्वर - घ । १३ कान्तचन्द्रार्धभूषणम् - क. ग. । १४ सर्वेषां - घ । १५ प्रमथेशान - क. । १६ वृयतामीप्सितो - क. ग. । १७ नन्दीशो हरवल्लभः - घ. । १८ वरदास्म्यजरामरः - क. ग. । १९ प्रपूजितैः - क. ।

- - - -- - - - - - - - -



वरेण तु ममानेन गोपते यदि तुष्यसि२० ।
नित्या भवतु मे भक्तिस्त्वयि साम्बे महेश्वर२१ ।। १ ६।
शिष्टानां मद्विशिष्टानां गणानां गणपाधिपः२२ ।
त्वया कृतो देववर किमतोन्यत् करिष्यसि । । १७। ।
इत्येवं नन्दिनं देवो भाषमाणं तदा नतम्२३ ।
प्रीत्यापश्यद्२४ विरूपाक्षः शशाङ्ककृतशेखरः ।। १८ ।।
ततोत्पलनिकाशेन करेण भगवान् हरः ।
प्रमृज्य प्राह हर्षेण हर्षयन् नन्दिनं भृशम् । । १ ९। ।
भक्तिमानसि मे२५ नन्दिन् सदारं सगणाश्रयम् ।
तां च भक्तिं पुरस्कृत्य पार्श्वस्थोसि मया कृतः ।। 8.162.२० ।।
सत्याद्धर्मात्तपोदानाद् गोभ्यो वेदेभ्य एव च ।
एभ्यो मे त्वं प्रियतरः सर्वेभ्यो गणपेश्वर । । २१ । ।
प्रभाते२६ यश्च ते नाम कीर्तयिष्यति लोकप२७ ।
सोश्वमेधस्य च फलं सम्यगिष्टस्य लप्स्यते२८ ।।२२। ।
यश्च त्वां द्वेष्टि विद्विष्टः२९ स मे धर्मरतोपि हि ।
यस्य त्वं दयितोसौ३० मे दयितस्तु भवेत् सदा । ।२३ । ।

नमो नन्दीश्वरायेति प्रोच्य यः स्वप्स्यते नरः ।
तस्य कुष्माण्डराजेभ्यो३१ न भविष्यति वै भयम् ।। २४। ।
इत्येवं ब्रुवतस्तस्य नन्दीश्वरगुणस्तवम् ।
ब्रह्मणस्तनुरत्युग्रा३२ सन्ध्या समभिवर्तत । । २५ ।।
संध्याकालन्तु३३ कालज्ञः कालः कालनिहा३४ हरः ।
उपोढं वीक्ष्य नृत्तस्य देवः कालममन्यत३५ । । २६। ।

- - - -- - - - - - - - -

२०. तुष्यति - क., तुष्यसे - घ । २१ साम्ब महेश्वर - ग., गणेश्वर - क. । २२ गणपाधिप - क. । २३ नुतं - ख. । २४ पृत्यापश्यद् - क. । २५ मां (?) । २६ प्रयतः - ख । २७ लोकपः - क. । २८ लक्ष्यते - ख. । २९ वै द्वेष्टि - क । ३० दयितः सो - क. ग. । ३१ कुष्माण्डराजभ्यो - क. । ३२. रव्यग्रा - ख, ग. । ३३ संन्ध्याकालन्तु - क. ग. । ३४ कालावहो - घ. । ३५ यं रक्तं वीक्ष्य संसारं कालं मत्वेत्यजोव्ययः - घ. ।

- - - -- - - - - - - - -



उपस्पृश्य ततः सोद्भिरपां स्रष्टा त्रिलोकपः ।
अन्वास्त४६ भगवानि सन्ध्यां लोकसंस्थां नु पालयन्४७ ।।२७
प्रसारितकरो देवो न्यस्तजानुकमण्डलः३८ ।
प्रसरितकरो व्योम्नि दिवाकर इवाभवत् । ।२८। ।
जप्त्वा तु परमं जप्यं त्रिवेदरससंभवम ।
भवः प्रनृत्य३९च्चतुर४०श्चतुरं चतुराननं४१ । ।२९। ।
भर्त्तारं वीक्ष्य नृत्यन्तं४२ विषक्तकरपल्लवम् ।
सहधर्मचरी देवी भर्त्तारं सान्वनृत्यत४३ । ।8.162.३ ० । ।
दम्पती वीक्ष्य नृत्यन्तौ साट्टहासं गणाग्रणीः ।
प्रानृत्यत४४ ततो नन्दी देवयोः प्रीतिमावहन् । ।३ १ । ।
देवमम्बाञ्च नृत्यन्तौ नन्दिनञ्च समीक्ष्य तु ।
प्रमथा नीलमेघाभाः४५ प्रनृत्तास्तूर्यनिस्वनैः ।।३ २। ।
ततो भेर्यो झर्झराश्च४६ किखिरानकमण्डुकाः४७ ।
आडम्बरा डिण्डिमाश्च शंखाश्चैव प्रसस्वनुः । । ३३ ।।
मुहुर्मुहुः साधयते नृत्तं चतुरमम्बिका ।
नन्दी विसृजते४८ हासं प्रमथा नेदुरुल्बणाः । । ३४। ।
तत्तूर्यवरशब्दाढ्यं४९ शिवाशनिरवाकुलम् ।
सन्ध्यामुखं बभौ रौद्रं वडवामुखसन्निभम् । ।३५।।

ननृतुर्जहसुश्चान्ये५० जजपुश्च तथापरे ।
जगुश्चान्येतिमधुरं गन्धर्वा इव पार्षदाः । ।३ ६ । ।
ततोम्बरतलापीडे पूर्णविम्बेतिनिर्मले ।
मृगाङ्के ह्युदिते चन्द्रे चन्द्रावयवभूषणः५१ ।।३७।।

- - - -- - - - - - - - - -

३६ अन्वास्ते - क. । ३७ लोकसंस्थान्तु पालयन् - घ . . . . भिपालना (नी म् (नात्) -कः। ३८ जानुन्यस्त(?), कमण्डलुः - क ख. । ३९ प्रहृष्ट - क. । ४० चतुर - ख. । ४१ ... ञ्चतुराननः - क. ख., प्रनृत्यच् चतुरः (?) । ४२ नृत्तन्तं - क. ग. । ४३... सत - ख. । ४४ प्रनृत्यत - घ. । ४५ निलमेघाभः - क. । ४६ मर्मराश्च - ख. । ४७ किखरानक - क. ख., मेण्डुका - ग. । ४८ विससृजे - ख. । ४९ खरशब्दाढ्य - क. ख. ग. घ । ५० नर्नतुर्जहसुश्चान्ये - क. ख. ग. । ५१... भूषणे - क. ।

- - - -- - - - - - - - - -

834

समाप्य नियमं देवः साम्बनन्दीशपार्षदः५२ ।
विररामोत्सवात्तस्मात् पार्वतीं चेदमब्रवीत् ।।३ ८।।
उषित्वा शर्वरीमेतां शर्वर्यमितविक्रमे ।
अशोकतरुकं पुत्रं ततः श्वस्त्वं ग्रहीष्यसि । ।३ ९। ।
धारेयी सा सदर्भायां धरायां५३ धारणीधरा५४ ।
सुष्वाप देववचनादेकां५५ रात्रिं यतव्रता । ।8.162.४० । ।
ततः शतसहस्रांशावुदितेर्केर्कभावनः ।
उमामाह प्रयामेति५६ यत्राशोकः सुतः५७ स ते५८ ।।४१ ।।
ततो भगवती धन्या धनदा धनदार्चिता ।
भवमाह प्रयामेति सिञ्जमानविभूषणा५९ ।।४२। ।
पादचारेण भगवान् पादपं पादपालयः ।
तमशोकतरु प्राप सनन्दी साम्बिको हरः ।।४३ । ।
स तत्र पिङ्गलं यक्षं६० पिङ्गलानलसन्निभम् ।
साधयानं ददर्शान्नमन्नदं प्रमथैः सह ।।४४।।
अथात्र भक्ष्यभोज्यस्य चोष्यलेह्यस्य च प्रभुः ।
सोपश्यत् पर्वतप्रख्यान् राशीन् राशिविदां वरः । ।४५।।
स साधितं६१ ततो दृष्ट्वा यक्षेणान्नं पिनाकधृक् ।
प्रहर्षमतुलं६२ लेभे साम्बिकः सह नन्दिना ।।४६। ।
ततः पितामहो देवः सह देवाप्सरोरगैः६३ ।

तत्रागान्मुदितो भूत्वा६४ यत्र साम्बोम्बिकापतिः ।।४७।।
ते प्रणम्य महादेवं६५ देवास्तेनाभिपूजिताः ।
परिवार्य तदाशोकमिदमूचुर्हराग्रतः६६ । ।४८। ।
- - -- - - - - - - - - -
५२ सपार्षद - ख । ५३ धारया - क । ५४ धरणीधरा - ख. । ५५ देवा (तां) - क. । ५६ व्रजाम्येति - घ. । ५७ यत्राशोकसुतः - क., यत्राशोकतरुः - ख. । ५८ सुतः - ख., शुभे - ग. । ५९ सिञ्जन्मणि वभूषणा (?) । । ६० पिङ्गलाध्यश - क. । ६१ संसाधितम् (?) । ६२ सहर्षमतुलं - ख. । ६३ देवसुरोरगै - क ख.। ६४ बुद्ध्वा - घ. । ६५ प्रणेमुर्महादेव - ख. । ६६ महासुराः - घ. ।
- - -- - - - - - - - - -

835
अद्यप्रभृति वृक्षोयं सर्वतः६७ सुखसंयुतः ।
दक्षशापतमोन्मुक्तो भविष्यति दिवौकसः६८ । ।४९। ।
अमरो जरया त्यक्तः सर्वदुःखविवर्जितः ।
सर्वाभरणपुष्पाढ्यः सर्वगन्धरसान्वितः ।।8.162.५० ।।
सर्वकामप्रदश्चैव इच्छापुष्पफलस्तथा६९ ।
भविष्यति न सन्देहो देव्याश्च सुदृढं प्रियः ।५१ ।।
सनत्कुमार उवाच
ततो गिरीन्द्रतनयां गिरीशः प्रणतार्तिहा ।
पश्यान्नपर्वतानेतानिति प्रोवाच कामदः७० । ।५२ । ।
सा वीक्ष्य भक्ष्यभोज्यस्य उच्छ्रयान् पर्वतोपमान् ।
दृढं तुतोष देवेशा पिङ्गलस्य गुहारणिः । ।५३ । ।
सुमालिनं यक्षवरं पिङ्गलं पर्वतात्मजा ।
युयोज वरदानेन तामाह च महेश्वरः । ।५४। ।
देवि सर्वमिदं सज्जं भक्ष्यं भोज्यं७१ तवोत्तमम् ।
यत्ते मनीषितं कार्यं तत्कुरुष्व किमास्यते । ।५५। ।
ततः सातिप्रमुदिता दिव्याम्बरनिवासिनी ।
मनोजवमनुज्ञाप्य शङ्करं भुवनेश्वरम् । ।५६ । ।
दैत्यशोकप्रदा देवी तमशोकं७२ विभावरी ।
अलञ्चकार सस्नेहा अलङ्कारैः पृथग्विधैः । ।५७ । ।
आतपत्रं च तस्याग्रे मुक्तादामावभासितम्७३ ।
उच्छ्रयामास गिरिजा मयूराङ्गरुहैः सह । ।५८। ।

नानावर्णेन चाप्यस्य चन्दनेन सुगन्धिना ।
आमूलादकरोद्देवी वरपङ्काङ्कितां७४ तनुम् । ।५९।।

- - - -- - - - - - - - -

६७ सर्वगः - घ. । ६८ विनिश्चयम् (?) । ६९ स्वेच्छापुप्पफलस्तथा - ग । ७० कामहा - घ. । ७१ भक्ष्यभोज्यं - क. ख. । ७२ तदशोकं - क, तपशोकं. - ख. । ७३ विभूषितं - क. । ७४ करपङ्काङ्किता - क., करपट्टाङ्कितां - ख. ।

- - - -- - - - - - - - -



जाम्बूनदमयश्चापि पट्टैर्मणिविराजितैः ।
सर्वतो भूषयामास अशोकतरुकं प्रियम् । ।8.162.६० । ।
तस्य शाखाप्रशाखासु मुक्तादामानि७५ पार्वती ।
आबबन्ध७६ स तैर्भाति नक्षत्रैरिव चन्द्रमाः ।।६१ ।।
अथ वासोयुगैः श्वेतैस्तमशोकं गुहारणिः ।
वासयामास लोकानां जननी पुत्रलालसा । ।६२।।
श्रीवेष्टकं नमेरुञ्च गुग्गुलं घृतमेव च ।
समवेतं ततो धूपं ददौ देववरप्रदा । ।६३ । ।
ततः शंखनिनादेन देवतूर्यरवेण च ।
बलिं बलवतो भार्या चकार चरती तपः ।।६४।।
तथार्चयन्त्यास्तं७७ वृक्षं चन्द्रहारामृतप्रभम् ।
स्तनाभ्यामस्रवत् क्षीरं७८ पुत्रस्नेहाभिसंगमात्७९ ।।६५। ।
उमया८० सोर्चितो वृक्षः अशोको वनदीपकः८१ ।
अतीव शुशुभे तत्र वसन्त इव रूपवान् ।। ६६।।
नन्दिनाथ समानीतान् ब्राह्मणान् ब्रह्मणः समान् ।
वाचयामास पुण्याहं दत्त्वा तेषां यथेप्सितम्८२ ।।६७। ।
ततः पुण्याहघोषान्ते आशीर्वादस्य चोभयोः ।
अनुमान्य पतिं देवी ऋषीँस्तानब्रवीत्तु सा८३ ।।६८। ।
अपुत्रा भगवन्तोहमशोकतरुकं८४ सुतम् ।
इममद्य८५ ग्रहीष्यामि समनुज्ञातुमर्हथ८६ ।।६९। ।
इत्येवं ब्रुवतीं देवीं पार्वतीं पुत्रलालसाम् ।
सममूचुर्द्विजाः सर्वे इष्टतो गृह्यतामिति । ।8.162.७० ।।
ततः शंखरवो८७ दिव्यः सर्वतूर्यरवान्वितः८८ ।

प्रबभौ पूरयन् सर्वं नारायणपदत्रयम् ।।७१ ।।

- - - -- - - - - - - - - -

७५ मुक्तामाला (ल्या) नि - ख. । ७६ आबबद्ध - ख. । ७७.. र्चयत्यास्तं - क. । ७८. मभवत् क्षीरं (?), क्षीरमभचत् - क. । ७९ संगतम् (?) । ८० उमायाः - क. । ८१ अशोकवनदीपकम् - क. ख. । ८२ गोधनमेव च - घ... ताम् - क.,. तान् - ख. । ८३ ब्राह्मणान्ब्रवीत् (?), बिप्राँस्तानब्रवीत् - क., ऋषीन्वमब्रवीत् - घ. । ८४ अपुत्राह हि भगवन्नशोकतरुक - क.,... हं द्विजाः स्वामी - घ. । ८५ इदमद्य - क इयमद्य - ख । ८६ मामनुज्ञातुमर्हथ (?) । ८७ वरो - घ. । ८८ आडंबरवरान्वितः - घ ।

- - - -- - - - - - - - - -

837

वेदानुच्चारयन्८९ विप्रा नृत्यन्त्यप्सरसां गणाः ।
नेदुश्च प्रमथास्सर्वे सगन्धर्वमहोरगाः । ।७२ ।।
ऋतवः षट् च संहृष्टाः स्वैः स्वैः कुसुमसंचयैः ।
अलञ्चक्रुरशोकञ्च तच्च दैवतमण्डलम् । ।७३ ।।
तत्प्रवादितगान्धर्वं प्रनृत्ताप्सरसां गणम् ।
पश्यन्ति हृषिता देवा अशोकतरुकोत्सवम९० ।।७४।।
वादयन् कच्छपीं वीणां वीणावादयतां वरः९१ ।
नारदो नृत्यते हर्षाद् वातनुन्न इवानलः९२ ।।७५।।
तपोधनैश्च धनिनो देवैश्च धनदार्चिता ।
पूज्यमाना बभौ तत्र रवेरिव यथा प्रभा । ।७६। ।
समाप्य नियमं साथ गृहीत्वाशोकपुत्रकम्९३ ।
गिरीन्द्रतनया९४ भाति धरा इव जलोक्षिता ।।७७।।
अथ नन्दीश्वरादिष्टाः प्रमथास्ते सहस्रशः ।
अददन् स्वासनान्याशु विप्राणां विप्रवत्सलाः ।।७८।।
स्वर्णानां राजतानां च स्फटिकानां९५ प्रभावताम् ।
प्रमथैः कीर्यमाणाना९६ मासनानामभूत् स्वनः । ।७९।।
मेरोः शिखरवर्षाणां महती कुशजैरिव (?
तथासनान्युद्वहतां प्रमथानां बभौ रवः९७ । ।8.162.८० । ।
वर्षान्नमृष्टाकामानां (?) मेघानां स्तनतामिव ।
स्कन्धस्थैश्च करस्थैश्च उत्तमांगस्थितैरपि९८ । ।८ १ । ।
आसनैः प्रमथा रेजुः सार्काग्नय इवाचलाः ।
आनयन्त्यपरे तूर्णमपरे धारयन्त्युत । ।८२ । ।

प्रमथास्ते९९ हृष्टरूपा ह्यासनानि महासनाः ।
एकैकयोजनशतं विस्तृतायोजनान्तरम् ।।८३ । ।
- - - -- - - - - - - - -
८९ सामान्युच्चारयन् - घ । ९ ० शक्रब्रह्म पुरोगमाः पुरोगमा - - घ । ९१ वीणा वादयितां - क. ख । ९२ गन्ध- नुन्न इवाचलः - घ. । ९३ कं स (सु) त - घ. । ९४ ववर्ष हर्षिता - घ । स्फाटिकानां - घ. । ऽ १ क्रीयमाणानां - घ., सीर्य (?) । ९७ प्रमथानामभूद् (?) । ९८ शतैरपि - घ. । ९९ प्रकृतास्ते - घ. ।
- - - -- - - - - - - - -


असंसक्तासना पंक्तिर्निर्मिता विश्वकर्मणा ।
मन्दरस्य शुभे१०० पृष्ठे विप्रपंक्त्यो विनिःसृताः । ।८४।।
तपनैर्निर्गतैः सर्वैः समामेघास्वसेचतान्? । ।८५ । ।
स्नाते पथ इव दृष्ट्वा रेजुरासनभूषणाः ।?
सहस्रपंक्तयस्तास्तु मंदरे विस्तृते१०१ गिरौ । ।८६ ।।
द्विजातीननुलिप्ताँस्तु यक्षजम्बालमिश्रकान् ।?
सशेखरान् सस्रग्दामाननुहूय समोद्यतान्? । ।८७। ।
मंदारैस्तु१०२ ससंतानैः पारिभद्रैस्तथैव च ।
अनिलैः सांगनादाश्च (?) रेजुर्देवा इव द्विजाः ।।८८ ।।
सुश्लक्ष्णैश्च सुगन्धैश्च गन्धचूर्णैः सपिञ्जरैः ।
अवकीर्णास्ततो देवैर्भूमिदेवाः समंततः । ।८९। ।
दिव्यचन्दनपङ्काङ्का दिव्यचूर्णावचूर्णिताः ।
ब्राह्मणा रेजुरेकस्था एकस्था इव पावकाः । । 8.162.९० ।।
दिव्यं धूपं चारयित्वा मामाज्ञा (?) सर्वशश्च ह ।
ततः स्फटिकसंकाशं पद्मरेणुरिवार्जिताः (१) ।।९१ । ।
हस्तशौचं मुहूर्तेन दत्तं शंकरकिंकरैः ।
बद्धकक्षास्ततः शूरा बद्धकक्षा इव द्विपाः ।
परिवेष्टुमुपक्रान्ताः प्रमथा ब्राह्मणर्षभान् । ।९ २। ।
भाजनान्यथ स्वर्णानि राजतस्फाटिकानि च ।
मुहूर्तेन द्विजातीनां ददुर्देवा१०३ विनीतवत् । ।९३ ।।
हृत्वा हृत्वा बभूरेखं दंडे वारि समंडलम् (?) ।
भक्ष्यभोज्यान्नपानानि१०४ ददुः सम्यक् समन्ततः । । ९४। ।

अर्थवद्यो हरिपुरासराटपुरकान्यपि१०५ ।
नेत्रस्थं हृदयस्थं च मुखस्थं हस्तसूचितम् । ।९५। ।
- - -- - - - - - - - - -
१०० शुभाः - व. । १०१ विसृते - घ- । १०२ मंदरैस्तु - घ. । १०३ दधुर्देवा (?) । १०४ भोक्ष्य- भोज्यानि पानानि - घ. । १०५... त्यपि - घ ।
- - -- - - - - - - - - -

839
ब्राह्मणानां विदुश्चैव ददुश्च प्रमथाधिपाः ।
भृङ्गारैः काञ्चनैः केचित्१०६ पानीयं गुणवर्धनम्१०७। ।९६ ।।
दिशंतोपि चरंत्येते पानीयमितिवादिनः ।
अपरे चन्द्ररश्म्याभैश्चामरैः सत्सुगन्धिभिः ।।९७। ।
आबीजुर्ब्राह्मणान्१०८ हृष्टाः प्रमथाः तपसोनिलः (?) ।
दिव्या देवस्त्रियश्चैव लोकत्रयनिवासिनः । ।९८ । ।
एकैकं ब्राह्मणांस्तत्र सेवन्ते वासवं यथा ।
अप्सरोवारसंघाश्च सर्वालंकारभूषिताः ।।९९।।
ननृतुर्देवचेतांसि मुष्णन्त्यः सर्वतोदिशम् ।
विश्वावसुर्नारदश्च तुम्बुरुः पर्वतस्तथा । ।8.162.१ ०० ।।
कुस्तुम्बुरुः शालिशिराः पर्जन्यो गण्डमण्डकः ।
चित्राङ्गदश्चित्रसेनश्चित्रश्चित्ररथस्तथा ।। १०१ । ।
एते दैवतगन्धर्वा रक्तातोद्या हरप्रियाः ।
दिव्यतानेषु गायन्ति गेयं मन्मथदीपनम् । ।१ ० २। ।
नमेरुर्गुग्गुलून्मिश्रो घृतधारावसेचितः१०९ ।
धूपः सञ्चार्यते तत्र प्रतीहारीभिरुत्तमः११० ।। १०३ ।।
यदर्थमेष भ्रमति नारायणपदत्रये ।
पूज्यमानः सुरैः सेन्द्रैः श्लोको धूपत्रयाङ्कनः१११ । । १ ०४। ।
गुग्गुलोश्च नमेरोश्च आज्यधूपस्य चैव ह ।
तृप्तिं न देवा गच्छन्ति प्रियाणामिव दर्शनात् । । १ ०५।।
त्रयाणामेव धूपानां जहुर्न पवना गतिम्११२ ।
गुग्गुलोश्च नमेरोश्च आज्यधूपस्य चैव ह । । १० ६।।
तं दृष्टवा चन्द्रमौलिस्तु११३ तरुकोत्सवमीश्वरः ।
पार्वतीहर्षदो हर्षं पुपोषानुत्तमं मुहुः११४ । ।१ ०७।।

- - - -- - - - - - - - - -

१०६ कश्चित् - घ. । १०७ वर्द्धत. - घ । १०८ अविदुर्ब्राह्मणान् - घ. । १०९... वसेचितं - क. । ११० प्रतीहारिभिरुत्तमः (?) । १११ ङ्करः - क., कङ्कणः - ख. । ११२ न जहद् गन्धमागतं - घ. । ११३ ततः स कृतातुलाल ( ?) - घ. । ११४ बहु - घ. ।

- - - -- - - - - - - - - -

840

हृष्यमाणे पशुपतौ मुहुर्व्रतपतौ हरे ।

चराचरं पशुपतौ त्रैलोक्यं११५ हर्षणायते११६ । । १०८ । ।

प्रनृत्ताप्सरसोवारं११७ दिव्यधूपाधिवासितम् ।

ऋतुभिः११८ कुसुमैः कीर्णं तत्सदो गगनायते । । १० ९। ।

ततः शाल्योदनं तूर्णं - - - - - - - - ११९ ।

तेन तेमृतकल्पेन सर्व एव द्विजोत्तमाः ।

भक्ष्यभोज्यान्नपानेन ततृपुर्लोकपूजिताः१२० । ।8.162.१ १० ।।

ततः श्रुतिसुखः पुण्यो राक्षसासुरवेजनः ।

पुण्याहशब्दः प्रकृतो विप्रैस्त्रैलोक्यपूरणः । । १११ ।।

ततः साम्बमशोकं तं सहरं सह नन्दिना ।

कुसुमाक्षतसंयुक्तमाशीर्भिरभिनन्ध्य च । ।१ १ २। ।

महान्तः सुस्वनाः सर्वे ब्रह्मसूत्रजटाधराः ।

प्रणमन्तो विरूपाक्षं ययुर्विप्रा यथागतम् ।। ११३ । ।

सुराश्च पूजिता दानैर्वाक्प्रदानैश्च शूलिना ।

यथागतं१२१ गताः सर्वे परिवार्य शतक्रतुम्१२२ । । १ १४।।

गणाश्च गणपालेन१२३ पूजिताः सगणाधिपाः ।

यथावासं ययुः सर्वे हर्षादुद्धूतवाससः । । ११ ५। ।

अहो देव्या हि सौभाग्यमहोस्या१२४ वल्लभो हरः ।

अहो देवस्य देव्यर्थं संभ्रमो लक्षितो हि नः । ।१ १६ ।।

या नैवं१२५ दयिता भर्त्तुर्यथेशस्य गिरेः सुता१२६ ।

कथं सा सुभगा नाम स्त्रीत्वं चापि बिभर्त्ति किम् । । ११७ ।।

- - - -- - - - - - - - - -

११५ पशुपातेस्त्रैलोक्यं - ख. । ११६ हर्षं जायते - क. ग । ११७ वारी - घ. । ११८ धातुभिः - घ. । ११९ इतः परं कतिपयोंशः खण्डितः । १२० ततृपुर्लोकपूजिताः - क. ख. ग. । १२१ पितामहं - क. ग. । १२२ शतक्रतु - क.,... तु - ग. । १२३ गणपाः सर्वे - कः ग. । १२४.. तिसौभाग्यमहोस्या - क., भि... - ख. । १२५ नैव -

ग. । १२६ सुतां - क. ग. ।

- - - -- - - - - - - - -

841

गिरिपुत्र्या कृतं मन्ये तपः परमभास्वरम् ।
तपसाभिजितो१२७ यस्या वरदो१२८ वृषभध्वजः । । ११ ८। ।
अहो स्त्रीणां बलं सूक्ष्मं देवैरपि सुदुर्जयम् ।
येन रुद्रसमा ईशाः स्त्रीणां वश्यत्वमागताः । । ११९ ।।
अन्ये तानब्रुवँस्तत्र महात्मानो गणाधिपाः ।
देव एवैष रूपेण भार्या भूत्वावतिष्ठते१२९ । । 8.162.१२० । ।
मावमन्यत देवीं तां योगात् किं नावबुध्यथ ।
इत्येवं जल्पमानास्ते अन्योन्येन१३० गणोत्तमाः१३१ ।
जग्मुः स्वभवनान्येव दीप्यमाना यथाग्नयः । । १२१ । ।
देवोपि नन्दिना सार्धं सोम्बया१३२ चाभिरूपया ।
अशोकतरुकस्याध उपविष्टोम्बिकार्चितः१३३ । । १२२ । ।
ततः प्रणम्य१३४ वरदं१३५ सोमा१३६ सोमविभूषणम् ।
उवाच वचसां योनिर्भूतसंघपतिं पतिम् । । १२३ । ।
सुनिर्वृतास्मि संवृत्ता त्रिपुरान्धकसूदन१३७ ।
यन्मयाशोकतरुकः पुत्रः१३८ प्रकृतकः कृतः । ।१ २४। ।
समस्तव्यस्तमखिलं त्रैलोक्यं लोकभावन ।
समागतं त्वत्प्रभावात् मम पुत्रतरूत्सवे१३९ । १ २५। ।
नूनं मे सुकृतं देव तपः परमभास्वरम् ।
लब्धोसि यन्मया देव सर्वभूतपतिः पतिः ।। १२६ । ।
देवैर्यच्चापि१४० मुषितमिष्टपुत्रफलं पुरा१४१ ।
तन्मे सर्वं१४२ व्यपगतं प्राप्याशोकतरुं सुतम् । ।१ २७। ।
मत्तो१४३ धन्यतरा देव१४४ नास्त्यन्या त्रिदिवे१४५ ङ्गना१४६ ।
पतिर्व्रतपतिर्वीर१४७ यस्या मे त्वं महेश्वर१४८ । । १ २८। ।

- - - -- - - - - - - - -

१२७ निर्जितो - घ. । १२८ वशगो - घ. । १२९ भूतावतिष्ठते - क ग, भार्याभूतो.. (?) । १३० अन्योन्यं तु - घ. । १३१ दिवौकसः - घ. । १३२ साम्बया - क., सोमया - घ. । १३३.. म्बिकाश्रितः - घ. । १३४ ततो-भिपूज्य - घ. । १३५ वरदां - घ. । १३६ सोमं - क. घ. । १३७ त्रिपुरान्तक - घ. । १३८ पुत्र - क. । १३९ तरुपुत्रमहोत्सवे (?) । १४० देवैर्यच्चात्र - घ. । १४१... मिष्टं पुत्रफलं - घ. । १४२ सव्यं (त्यं) - क. । १४३

मया - घ. । १४४ देवि - क. । १४५ त्रिदिवो - ख., त्रिदिवा - घ. । १४६ त्रिदिवाङ्गना - ख. ।ऽ १४७ पतिता पतिवीरस्य - घ. । १४८ महेश्वरः - क. ख. ।

- - - -- - - - - - - - - -



भवं भवानी प्रीत्यैवमुक्त्वा मुक्तावलीधरा ।
पपात पद्भ्यां देवस्य नेत्रास्रापूरितेक्षणा । । १२९। ।
तामुत्थाप्य गिरीशस्तु परिष्वज्य च पीडितम्१४९ ।
निवेश्य - - - रुमूरूभ्यां१५० सस्नेहमिदमब्रवीत्१५१ । । 8.162.१३० ।।
देवी सती च साध्वी च सहधर्मचरी च मे ।
ब्रह्मण्या च शरण्या च त्वं मे नित्यं प्रिया प्रिये ।। १३१ । ।
अकार्यमपि कार्यं हि अतो१५२ देवि मया तव ।
किं पुनर्यद्यशोन्मिश्रमीदृशं१५३ धर्मसंयुतम् । । १३ २। ।
तर्पिता ब्राह्मणा देवि देवाश्च सगणास्त्वया ।
गृहीतः पुत्रकश्चायं त्वयाशोकतरुः प्रिये ।। १३३ ।।
एहि देवि गृहान् याम संपूर्णस्ते मनोरथः ।
भूयः सुतं१५४ तं द्रक्ष्यामः स्तबकैः समलंकृतम् ।। १ ३४। ।
इत्युक्ता पतिना साध्वी हर्षपूर्णमुखेक्षणा ।
प्राहेदं वचनं तत्र हरितं हरिणेक्षणा१५५ । । १३ ५। ।
हरिणाक्ष स्थितमिह१५६ अमुं१५७ पुत्र सुपुत्रकम् ।
गोपायस्व हरे यत्नाद् गजाश्वाच्चाण्डजाण्डपात् । ।१ ३ ६। ।
यदि वापि भवेदेष स्तबकैः समलंकृतः ।
अशोकपुत्रको मह्यं तदा मां द्रष्टुमर्हसि ।। १ ३७। ।
इति संदिश्य हरितमुद्भ्रान्तहरिणेक्षणा ।
सापाङ्गचक्षुर्विक्षेपं कृत्वोमा पतिना सह ।
विवेश सदनं देवी प्रभेवादित्यमण्डलम् । । १ ३८। ।
इति पशुपतिना सहैव देवी सुतमुपगृह्य तरुं ह्यशोकपोतम्१५८ ।
प्रमुदितगणमध्यगा विवेश स्वभवनमेव तदा प्रहृष्टचित्ता । । १ ३९।।
इति स्कन्दपुराणे अशोकतरुपुत्रग्रहणे द्विषष्ट्युत्तरशततमोध्यायः

- - - -- - - - - - - - - -

१४९ परिष्वज्यावपीडितम् - (?) , पीडितां - घ । १५० मूरुभ्यां (?) । - क., वरशूराभ्यां - घ. । १५१ सस्नेहामिदमब्रवीत् - ख. । । ५२ कर्तव्यतो ( ?) । १५३ र्यशसा मिश्रमीदृशं - घ.,.. ञ्चेदृशं - ख. । १५४ शु

प - घ. । । १५५ हरिणेक्षणं - घ. । १५६ स्थितिरिह - घ । १५७... मुमं - घ. । १५८ ह्यशोकवृक्षम् - क ख. । १५९ २११ - ख., इतः परं नियमानुष्टानमहिमाख्यानात्मकाः कतिपयेध्यायाः अधिका घ .पुस्तके ।

- - - -- - - - - - - - - -

843

व्यास उवाच

शार्वं तेजः समादाय वह्निः किं कृतवांस्तदा ।

कथं स्कन्दस्समुत्पन्नः कस्मिँस्थाने महाद्युतिः ।।१।।

सेनापत्ये कथञ्चासावभिषिक्तः सुरोत्तमैः ।

किमर्थमभिषिक्तश्च१ कस्मिन्देशेपि वा प्रभो ।।२।।

तारकश्च कथं तेन निहतो रणमूर्धनि ।

एतदिच्छाम्यहं वेत्तु त्वत्प्रसादान्महामुने ।।३ ।।

इति विज्ञापितो धीमान् व्यासेनाक्लिष्टकर्मणा ।

प्रोवाच वदतां श्रेष्ठः पितामहसुतस्तदा ।।४।।

सनत्कुमार उवाच

अथ त्रैलोचनं तेजः सुतसंकल्पसंभवम् ।

न धारयितुमुत्सेहे दीप्तिमानपि पावकः ।।५।।

दाहात्मकोपि भूतानां दह्यमानस्स तेजसा ।

गङ्गामभ्यर्थयामास धारणे तस्य तेजसः ।।६।।

सा तेनाभ्यर्थिता देवी हुताशेन त्रिलोकगा ।

एवमस्त्विवति साशङ्कमुवाच मधुरस्वरा ।।७।।

तत्तेजो देवदेवस्य तेजस्वी हव्यवाहनः ।

तदा संक्रामयाञ्चक्रे गङ्गायां योगमायया ।।८।।

ज्ञात्वापि दुर्धरं तत्सा प्रतिपेदे वरानना ।

अर्थिप्रणयनिर्भङ्गदोषभीता२ सरिद्वरा ।।९।।

अथ सा क्षिप्रमभवन्मन्थरालसगामिनी ।

प्रभावात्तेजसस्तस्य श्यामोन्मुखपयोधरा३ ।। 8.163.१० ।।

भिन्नाञ्जनरुचा तन्व्या४ रोमराज्या रराज सा५ ।

घनराज्या घनापाये लेखेवानुष्णदीधितेः ।।१ १।।

- - - -- - - - - - - - - -

१ कमर्थमभिषिक्तश्च - क. । २ प्रणयि निर्भङ्गदोषभीता - क ख. । ३ श्यामामुखपयोधरा - क. । ४ तन्वी (?) । ५ च - क. ।

- - - -- - - - - - - - - -



जगाम च तदा ग्लानिं किञ्चिदाविप्लुतेक्षणा ।
नोपलेभे तदा देवी रतिं शय्यासनेषु च । ।१ २ ।।
अमृतस्यन्दिभिः शीतैः६ स्पृष्टापि शशिनः करैः ।
मम्लौ७ सा तेजसा तेन दह्यमाना तदानघा८ ।। १३ । ।
 - - - - - - - - शरस्तम्बाभिराजिते ।
सोत्ससर्ज तदा तेजो हरस्योग्रं शुभेहनि९ । । १४। ।
शरमध्यात् समभवद् बालो१० बालपराक्रमः ।
षड्वक्त्रो द्वादशभुजः सूर्यकोटिसमद्युतिः । । १ ५।।
समिध्य विधिना तत्र पावकं पावकत्विषः ।
विश्वामित्रस्तदा चक्रे जातकर्म सुजन्मनः ।। १ ६।।
कृत्तिकास्तं११ तदा दृष्ट्वा प्रस्नुतोरुपयोधराः१२ ।
आजग्मुरन्तिकं तस्य - - - - - - - - ।। १७। ।
उपतस्थुश्च तं वेदास्सोपवेदास्ससंग्रहाः ।
कला विद्याश्च निखिला लक्ष्मीर्मेधा सरस्वती । ।१ ८।।
कान्तिर्धर्मो दया क्षान्तिर्धृतिर्धैर्यं पराक्रमः ।
योगस्तेजो बल प्रज्ञा स्थितिगाम्भीर्यसत्क्रियाः ।। १९ ।।
अथातो धनुरादाय दिव्यमद्भुतविक्रमः१३ ।
सन्धाय लीलया बाणं स मुमोच गिरौ - - । ।8.163.२ ० । ।
प्रोद्भिन्नं सहसा तेन भूभृतः शिखरोत्तमम् ।
पपाताशु परित्रस्तभीतोद्भ्रान्तविहङ्गमम् ।।२१ । ।
तद् दृष्ट्वा महदाश्चर्यं सत्वानां तन्निवासिनाम् ।
विस्मयश्च भयञ्चैव युगपत् संबभूवतुः । । २२ । ।
अथ प्रेक्ष्य भयं तस्मादात्मनो बलसूदनः ।
मातृः संप्रेषयामास विनाशायामितद्युतेः ।। २३ ।।

- - - -- - - - - - - - - -

६ अमृनस्यन्दनिःशीतैः - क । ७ मम्ले - ख । ८ तदानघाः - क. । ९ इतः परं पत्रमेकं खण्डितं क. पुस्तके । १० बलो - ख. । ११ कृत्तिकास्ते - ग । १२ प्रग्वं (पुत्रं) चारुपयोधराः - ख । १३ घ पुस्तके भिन्नक्रममेतदाख्यानम् ।

- - - -- - - - - - - - - -

845

आगत्य मातरस्तत्र दृष्ट्वा तं तेजसां निधिम् ।

तमेव शरणं जग्मुस्तत्तेजोहृतचेतसः । ।२४।।

आजगाम ततः क्रुद्धः सह व्रातैर्दिवौकसाम् ।

ऐरावतगजस्कन्धमारूढः पाकशासनः । ।२५।।

आगच्छतः सुरान्दृष्ट्वा ननादोच्चैर्महाद्युतिः ।

अभ्यद्रवच्च संक्रुद्धः सिंहो मत्तान् गजानिव१४ । ।२६। ।

बभूवुस्तेन नादेन मुहुर्मूढा दिवौकसः ।

अभूदैरावणस्यापि मदध्वंसः१५ कपोलयोः । ।२७। ।

अर्चींषि च१६ प्रदीप्तानि विससर्ज सहस्रशः ।

त्रिलोचनसुतस्तेषां सुराणां सुरदर्पहा । । २८। ।

अर्च्चिर्भिर्हतकान्तीनि मुखान्यसुरविद्विषाम् ।

बभूवुर्हिमदग्धानि सरोजानि सरःस्विव१७ । । २९।।

अथ वज्रं समादाय ज्वलितं ज्वलनद्युतेः ।

रोषादाताम्रनेत्रान्तो विससर्ज शतक्रतुः । ।8.163.३ ० । ।

तेन वज्रप्रहारेण स द्विमूर्त्तिस्तदाभवत् ।

द्वाभ्यामपि च मूर्त्तिभ्यामभ्यधावत् पुरन्दरम् । ।३ १ । ।

अथ दर्पं विहायाशु प्रणेमे पाकशासनः ।

तेजसां निधये तस्मै प्राह चैवं१८ विनिर्जितः१९ । ।३ २ । ।

गृहाण राज्यमप्येयत्२० प्रार्थनीयं मनस्विनाम् ।

त्वमेव युक्तो२१ लोकानां पालने पावकात्मज ।। ३३ । ।

सत्स्वप्यन्येषु२२ तेजस्सु तमसां२३ विनिहन्तृषु२४ ।

अग्नावेव हविः पुण्यं हूयते - - - - - । ।३४। । - - - -- - - - - -- - ।

प्राह प्रभवतां श्रेष्ठो विहस्य विबुधाधिपम् । । ३५ । ।

- - - -- - - - - - - - -

१४ मत्तगजानेव - घ. । १५ समदध्व (त्व) - ख. । १६ स ( ?) । १७ सरेष्विव - ख. ग. । १८ चेत्यं - ग., चैनं (?), चेदं (?) । १९ विनिर्मित - ग, दिवि स्थित ( ?) - ख. । २०... मद्यैव - ग । २१ मुक्तो - ख शक्तो - ग । २२ सत्स्वप्येसु ( षु) च - ख । २३ तपसा - ख । २४ विनिवर्तिषु - ख. ।

- - - -- - - - - - - - -

846

शाधि शक्र त्वमेवेदं राज्यं चिरमभीप्सितम् ।
अनेन बहुदोषेण नाहमर्थी पुरन्दर । । ३६ । ।
निशाम्य तद्वचः श्रीमान् स्कन्दस्याक्लिष्टचेतसः ।
अर्थवद्वचनं श्लक्ष्णं पुनराह शचीपतिः । । ३ ७। ।
।
- - - - - - - - - - .. - - - - - । । ३ ८। ।
दर्शय नो विचित्राणि कार्यजातान्यनेकधा ।
संगतानि विभिन्नानि - - - - - - - - ।
त्रैलोक्यराज्यग्रहणं स्वनुबद्धमनव्ययम् ।। ३९ । ।
एवमुक्तवति प्राह सम्भवत्यनलद्युतिः२५ ।
स्निग्धगम्भीरया वाचा स्मितपूर्वमिदं वचः । ।8.163.४० । ।
न विचालयितुं चेतः२६ शक्र२७ शक्ता२८ हठान्मम२९ ।
न वारि सरितां पत्युरलातैः संप्रतप्यते । ।४१ । ।
राज्यं राजीवपत्राक्ष न जातु मनसाप्यहम् ।
दोषाणां नित्यमावासं३० कामये३१ पाकशासन । ।४२ । ।
तस्य तद्वचनं श्रुत्वा पुनर्वक्तुमियेष सः ।
सुधानिष्यन्दिभिः स्कन्दं स्नपयन्निव लोचनैः । ।४३ । ।
आकरे३२ तेजसां श्लाघ्ये नैतच्चित्रं त्वयि प्रभो ।
शक्ता एवं३३ न सज्जन्ते भोगेषु सुमहत्स्वपि । ।४४। ।
सेनापत्येभिषिच्यस्व सुराणामर्थसिद्धये ।
वपुः (?) संमानयामीह३४ नाहमाज्ञापये विभो३५ । ।४५। ।
अथ तद्वचनं श्रुत्वा पुरुहूतं महाभुजः ।
द्वादशाक्षः सहस्राक्षमिदमाहोरुविक्रमः । ।४६ । ।
मम प्रभवति श्रीमान् लोकानां प्रभुरव्ययः ।
अनन्यभूरमेयात्मा वृषकेतुः पुरन्दर । ।४७। ।

- - - -- - - - - - - - -

२५ शम्भवत्यनिलद्युतिः - ख. । २६ चैव - क. । २७ शक्रः - ग. । २८ शप्ताः (क्तः) - ग. । २९ शठा मम - ख. ग. । ३० निलयं नित्यं - ग. । ३१ कामोयं - ख. । ३२ आधारे - ख. । ३३ एव - ख. । ३४. माहं - ख,... म्यहं - ग., नाज्ञापकमहं - ख । ३५ प्रभो - ख. ।

- - - -- - - - - - - - -

तमाराध्य प्रभुं भक्त्या गृहाणाज्ञां शतक्रतो ।
तामहं प्रतिपत्स्यामि३६ यामसौ दास्यति प्रभुः ।।४८।।
तस्याभिप्रायमाज्ञाय देवदेवो वृषध्वजः ।
आजगाम सपत्नीको दिदृक्षुस्तनयं तदा ।।४९।।
स्वाहया सहितो वह्निर्गङ्गा च सरितां वरा ।
कृत्तिकाश्च सुसंहृष्टाः श्वेतं शिखरिणां वरम् ।।8.163.५०।।
युगपत्ते तदा तत्र श्वेतस्य शिखरोत्तमे ।
चिन्तयामासुरायान्तः कन्नु स्कन्दोभियास्यति ।।५१ ।।
अथ तेषामभिप्रायं ज्ञात्वा मतिमतां वरः ।
षोढा समभवत् स्कन्दो योगीशो बलवत्तदा ।।५२।।
स्कन्दोभ्यगान्महादेवं विशाखो हिमवत्सुताम् ।
नैगमेषो ययौ गङ्गां वह्निं शाखो महाद्युतिः ।।५३।।
स्वाहां जगाम संहृष्टः काकपक्षधरो गुहः ।
कृत्तिकाः३७ षण्मुखः श्रीमान् वेगादभिससार च ।।५४।।
मनोरथान् स सर्वेषां देवदेवात्मजः प्रभुः ।
युगपद्योगिनामीशः पूरयामास मूर्तिभिः ।।५५।।
अथ तस्मै ददौ शम्भुरस्त्रग्रामं चतुर्विधम् ।
सुधाकणपरिस्राविं चूडारत्नं च पार्वती ।।५६।।
स्वमनोनिर्मलां गङ्गा विशुद्धाममृतोद्भवाम् ।
एकावलिं ददौ तस्मै गुहायोत्फुल्ललोचना ।।५७।।
द्विषत्प्राणहरां गुर्वीममोघां हव्यवाहनः ।
अर्चिष्मतीं ददौ चास्मै शक्तिं शक्ताय सूनवे ।।५८।।
पताकां महतीं रक्तां ज्वलत्पावकसप्रभाम् ।
किङ्किणीनादितां दिव्यां प्रादात् स्वाहा महात्मने ।।५९।।
सुपुण्यगन्धामुत्फुल्लां स्वरजःपरिपिञ्जराम् ।
कृत्तिकाश्च ददुस्तस्मै३८ मालामञ्चितकेसराम् ।।8.163.६०।।
- - - -- - - - - - - - -
३६ प्रतिवक्ष्यामि - . ३७ कृत्तिकां - क. ख । ३८ ददौ तस्मै - क ।
- - - -- - - - - - - - -



अथाजग्मुः सुराः सर्वे पितामहपुरःसराः ।

श्वेताद्रेः शिखरं रम्यं वृषकेतुं दिदृक्षवः । । ६१ ।।
तानागतान् समं सर्वान् तदा तत्र दिवौकसः ।
दृष्ट्वा संभावयामास महादेवः प्रसन्नया । ।६२ । ।
प्रणम्य देवदेवेशं३९ लब्ध्वानुज्ञां४० दिवौकसः ।
शिलासु शशिगौरीषु निषेदुरमितौजसः । ।६३ । ।
प्रोत्तुङ्गशिखरः श्वेतो द्युतिमानपि भूधरः ।
तेजसां सन्निपातेन बभूव द्युतिमत्तरः । ।६४। ।
अथ प्रचोदितः सर्वैर्विबुधैर्विबुधाधिपः ।
व्यज्ञापयन्महादेवं प्रणम्य वदतां वरः । । ६५। ।
तारकाख्येन नो लक्ष्मीरामृष्टा४१ प्रसभं प्रभो ।
वज्रं वक्षःस्थले तस्य कठिने कुण्ठतां४२ ययौ ।। ६६ ।।
चक्रं हरेः सहस्रारं ज्वलितं ज्वलितौजसः ।
आसाद्य मृदुतां भेजे कण्ठं तस्यामरद्विषः ।। ६७। ।
दण्डो वैवस्वतस्यापि प्रदीप्तानलभास्वरः४३ ।
अलातमिव तोयौघे निर्वाणो दानवोरसि । । ६८ ।।
समरे रिपुदुर्वारो महापाशः प्रचेतसः ।
तस्य कण्ठे समभवन्मन्त्रेणेव वशीकृतः४४ ।। ६९। ।
उत्पाट्य४५ प्रसभं तेन नन्दने कल्पपादपाः४६ ।
निवेशिता यथाकामं स्वगृहोद्यानभूमिषु ।।8.163.७० ।।
समीपे तस्य साशङ्कस्तालवृन्तायतेनिलः ।
स्वपुष्पनिकरैर्भीता ऋतवस्तमुपासते । ।७१ । ।
हविर्भुजि हुतं हव्यमाच्छिनत्ति बलादसौ ।
मिषतां सर्वदेवानां देवदेव दितेः सुतः । ।७२ । ।

- - - -- - - - - - - - -

३९ देवदेवाय - क. ख. ग. । ४० लब्धानुज्ञा - क., लब्धानुज्ञा - ग. । ४१... रामिष्टा - क.,.. राशिष्टा - ग. । ४२ कुण्ठितां - ख., कुण्ठितं (?) । ४३ भासुरः - वा. । ४४ वशीकृते - ख. । ४५ उत्पाट्याप्रसभं क. । ४६ पादपान् - क. ।

- - - -- - - - - - - - -

849

अभिषिच्य सुराः स्कन्दं सेनापत्ये महाद्युतिम् ।
जेतुमिच्छन्ति दैत्येन्द्र प्रसादात्तव शङ्कर । ।७३ ।।

एवं विज्ञापितस्तत्र वज्रिणा वृषभध्वजः ।
दादावनुज्ञां स्कन्दाय४७ सेनापत्याभिषेचने । ।७४।।
अथ विबुधसमूहैर्वन्दितो वन्दनीयो
मदनतनुविहन्ता बालचन्द्रार्धमौलिः ।
तनयमभिसमीक्ष्य स्नेहसzफुल्लनेत्रः
शशिकिरणसिताद्रेराशु सोन्तर्बभूव ।।७५।।
इति स्कन्दपुराणे स्कन्दाभिषेकानुज्ञाने त्रिषष्ट्युत्तरशततमोध्यायः४८

सनत्कुमार उवाच
अथ ते स्कन्दमादाय सुरा ब्रह्मपुरस्सराः ।
समन्तपञ्चकं पुण्यमाजग्मुरमितौजसः । ।१ ।।
तस्मिँस्तीरे सरस्वत्याः प्रागुदक्प्रवणे समे ।
विस्तीर्णे श्वभ्रपाषाण१ कण्टकोषरवर्जिते ।। २।।
स्कन्दस्य२ परितः सर्वे तदा संहृष्टचेतसः ।
निषेदुस्ते सुरश्रेष्ठा३ ज्वलितानलवर्चसः । । ३ । ।
तत् पुण्यममरैः पृक्तं स्थानं पुण्यतरं४ पुनः ।
अभूद् गाङ्गैरिवाम्भोभिः समेतं५ यामुनं पयः । ।४।।
आजगामाथ तं देशं क्षितिर्मूर्त्तिमती तदा ।
स्कन्दाभिषेके सञ्जाते हर्षसंफुल्ललोचना ।।५ । ।
अथासौ क्षिप्रमभवद् देशः कनकबालुकः ।
विचित्रः परितश्चित्रैः स्फुरद्रत्नगभस्तिभिः ।।६ ।
- - - -- - - - - - - - -
४७ स्कन्दस्य (?) । ४८ २११ - ख. पु. ।

१ स्वर्णपाषाण - ख. । २ स्कन्दञ्च (?) । ३ विषेदुरमरश्रेष्ठा - ख. । ४ पुण्यतमं - क. । ५ संपृक्तं (?) ।
- - - -- - - - - - - - -


अध्यासत महात्मानो यं देशमपमत्सराः ।
निरस्तदुरितः सोभूत्तत्र७ तेषां विभूतिभिः ।।७। ।
अथ सिंहासनं दिव्यं शातकुम्भं सुसंस्कृतम् ।
गृहीत्वा गिरिभिः सार्धमाजगाम हिमलयः१० ।।८।।

रत्नैरोषधिभिर्गन्धैः पूर्णान् पुण्यैश्च वारिभिः ।
आदाय कलाशान् हैमान् फुल्लाम्बुरुहमालिनः ।।९।।
उदन्वन्तः सुसम्भ्रान्ताः प्रचलन्मणिकुण्डलाः ।
आजग्मुस्त्वरितास्तत्र हारविभ्राजितोरसः ।।8.164.१ ०।।
गङ्गा रत्नमयाँश्चारून् कलशान्११ स्फुरितत्विषः ।
हैमाम्बुजकृतोत्तंसान् पूर्णान् परमवारिणा ।।१ १ ।।
गृहीत्वा सह सर्वाभिस्सरिद्भिस्सरिताम्बरा ।
आजगाम तदा हर्षात् प्रस्खलन्ती समेष्वपि ।।१ २।।
अभिषेचनिकान् कुम्भान् ग्राहयित्वा सुसंस्कृतान् ।
नानारत्नप्रभोद्योतप्रतिरक्तार्कदीधितीन् ।।१३ ।।
देवीभिः सह बह्वीभिराजगाम दिवौकसाम् ।
आक्रामन्तीव तेजांसि तेजसा स्वेन पार्वती ।।१४।।
अद्भिः परमपुण्याभिः पूर्णान् रत्नांशुमालिनः ।
कलशान् स्फाटिकान् शुभ्रान्१२ ग्राहयित्वा सुसंस्कृतान् ।।१५।।
मुकुटं च महच्छ्लाघ्यं दीप्तिमच्चारुविग्रहम् ।
नानारत्नविवित्रांशुसमूहस्फुरितोदरम् । ।१६।।
हारञ्च निर्मलं१३ शुद्धं शशाङ्ककिरणत्विषम् ।
कान्तं मुक्तावितानञ्च१४ चेतोहारि सुनिर्मलम्१५ । ।१७।।
अभ्यागमत्तदा तत्र प्रहृष्टो यादसां पतिः ।
दानवाधिपमातङ्गविषाणोल्लिखिताङ्गदः ।।१८।।

- - - -- - - - - - - - -

६ अध्यासन्त - क. ख. । ७ शश्वत्तत्र - ख., सश्च - क । । ८ विभूतयः - क. ख । ९ शातकुम्भसुसंस्कृतम् - क. । १० हिमाचलः - ख. । ११.. श्चारुकलशान् - ख. । १२ स्फाटिकमयान् - क. ख । १३ निस्ततं - क, कान्तमुक्तावितानञ्च - ख. । १४ चेतसां हारनिर्मलम् - क. ख, हारि.? (?) । १५ निर्मलम् - क ख. ।

- - - -- - - - - - - - -

851

रत्नाङ्गदानि चारूणि द्युतिमन्ति धनेश्वरः ।
समादायाभ्यगात् सारं सर्वासामिव सम्पदाम् । ।१ ९।।
निशाकरांशुगौराणि१६ दीर्घाणि रुचिमन्ति च ।
आदाय रत्नदण्डानि चामराणि नहाद्युतिः१७ ।। 8.164.२० ।।
वैवस्वतोपि सं१८पूर्णशरच्चन्द्रांशुनिर्मलम् ।

प्रोद्वहन् वक्षसा हारमाजगाम तदन्तिकम् । ।२१ ।।
आतपत्रापदेशेन ददौ तस्मै महात्मने ।
फलं सुराधिपत्यस्य समग्रमिव वासवः । ।२२। ।
भूषयन्तस्तरूँस्तत्र खपुष्पानेकरोद्गमैः ।
ऋतवस्तं तदा देशमाजग्मुस्तुष्टचेतसः ।।२३ । ।
अरुन्धती शची स्वाहा सिनीवाली गिरीन्द्रजा ।
अदितिर्देवमाता च निशा सानुमतिः१९ कुहूः ।।२४। ।
ह्रीः श्रीः पुष्टिर्दिशो२० द्यौश्च सुताः सर्वाः प्रजापतेः ।
राका च धिषणा चैव सुरभिर्देवयोषितः । ।२५। ।
ओषध्यो मूत्तिमत्यश्च कौशिको वनदेवता ।
अहः काष्ठा मुहूर्ताश्च मासाः संवत्सरः कलाः । । २६।।
ऐरावणः सुप्रतीको वामनः कुमुदोञ्जनः ।
पुष्पदन्तो महापद्मः२१ सार्वभौमश्च दिग्गजाः ।
आभिषेचनिकं सर्वमुपनिन्युर्महात्मनः२२ ।। २७।।
ज्वलितवह्निसमानरुचो जटाः परिनियम्य हिमाचलवासिनः ।
तमभिजग्मुरुदीर्णतपोबला मुनिवरा मुदिता दहनात्मजम् ।।२८ ।।
विबुधसद्मरता ज्वलितौजसस्त्रिदशवन्दितपादसरोरुहाः२३ ।
ऋषिगणास्त्वरिताभिययुर्गुहं२४ नियमितोर्जितनित्यतपःक्रियाः२५ । ।२९।।
- - - -- - - - - - - - - -
१६ निशाकरोंशुगौराणि - ख. । १७ महाद्युते (तेः) - क । १८ यत् - क. । १९ सानुमती - क. । २० ह्रीः पुष्टिर्विदिशो - ख. । २१ पुष्पदन्तः पुण्डरीकः (?) । २२ अभिषेचनिकीः सर्वे अपो निन्युर्महात्मनः - ख. । २३. पादविवन्दिसरोरुहाः - क । २४ गृहं - क. । २५ नियमिता नियतेन्द्रिय.., - ख. ।
- - - -- - - - - - - - - -


समुदिता मुदितोत्सुकमानसाः कमलयोनिसुताश्च महौजसः ।
तमभिजग्मुरुदारयशोभृतस्त्रिनयनात्मजमग्र्यबलोदयम् । ।8.164.३ ० । ।
अभिययुस्त्वरिता भुजगेश्वराः स्वफणिरत्नमरीचिवितानिनः२६ ।
विषभृतोप्यतिसौम्यवपुर्धरा दहनसूनुमलंघ्यपराक्रमम् ।। ३१ । ।
उपययुर्गरुडाश्च विमत्सरा भुजगराजसुरूढबलोदयाः ।
द्रुततरं तरुणार्कसमद्युतिं पवनवेगविजिह्मितपादपाः । । ३२ । ।
ननृतुरायतलोलविलोचना विविधभावविलासरसान्विताः ।

परमयौवनरूपगुणान्विताः२७ प्रमुदिताः परितोप्सरसोलसाः ।।३ ३ ।।
विविधपुष्परजोरुणमूर्त्तयः सुरभिगन्धवहा विववुस्तदा ।
विरजसोतितरां मृदुवृत्तयो२८ विबुधचित्तसुखाश्च समीरणाः । ।३४।।
आभिषेचनिकं कृत्स्नं विधिं तस्य बृहस्पतिः ।
समिद्ध्य ज्वलनं सम्यक् चचार शरजन्मनः । ।३५ ।।
आशीर्भिराशिषां धाम समाश्लिष्य शिवात्मजम् ।
स्तुत्यं स्तुतिभिरग्र्याभिस्तुष्टुवुर्मुनयस्तदा ।।३६।।
मङ्गलानि जगुस्तस्य गन्धर्वा नारदश्च यः ।
प्रतिसार्य तदा वीणां तारं रक्तमनाकुलम् ।। ३७।।
अथ तं दक्षिणे पाणौ गृहीत्वा कृतमङ्गलम् ।
गुरुः सिंहासने तस्मिन् प्राङ्मुखं संन्यवेशयत्२९ । ।३८। ।
अनाहतास्तदा व्योम्नि नेदुरुच्चैर्दिवौकसाम् ।
भृशं दुन्दुभयश्चित्राः सम्यक् चेतोपहारिणः । ।३ ९ ।।
मत्तद्विरेफसंगीताः स्वकिञ्जल्कारुणत्विषः ।
पुण्यगन्धा विचित्राश्च निपेतुः पुष्पवृष्टयः । ।8.164.४० ।।
चतुर्भिर्वदनैः स्कन्दं स्तुवन् गीर्भिः प्रजापतिः ।
आददे कलशं पूर्वं पूर्णं पुण्येन वारिणा । ।४१ ।।

- - - -- - - - - - - - -

२६ विकाशिनः - च । २७ गुणाचिताः - ख. । २८ मृविवित्तदा (?) - क । २९ स न्यवेशयत् - क. ख. ग. ।

- - - -- - - - - - - - -



समाधायाम्बरं पीतं ततो विष्णुः समाददे ।
कलशं कौस्तुभमणेः परामृष्टं३० गभस्तिभिः । ।४२।।
ततः केयूररत्नांशुखचितं पाकशासनः ।
उत्तरीयं नियम्याशु जग्राह कलशं तदा ।।४३ ।।
निबध्य शशिलेखाङ्का जटा ज्वलनपिङ्गलाः३१ ।
जगृहुः कलशान् रुद्रा भुजङ्गकृतकङ्कणाः । ।४४। ।
बिभ्रतोपि परां दीप्तिं सुखसंस्पर्शमूर्तयः ।
आदित्या३२ जगृहुः पूर्णान् कलशान् पुण्यवारिभिः ।।४५।।
वसवोपि सुरेन्द्रारिगजदन्तक्षतोरसः ।
आददुः कलशाँस्तत्र पूर्णान् पुण्येन वारिणा ।।४६। ।

अश्विनावपि पुण्याभिः पूर्णावद्भिः सुसंस्कृतौ ।
आददाते तदा कुम्भौ हैमौ रत्नांशुमालिनौ ।।४७। ।
कुम्भानाददिरे तत्र ज्वलना ज्वलितत्विषः ।
हैमाम्बुरुहसंछन्नान् चित्रान् रत्नगभस्तिभिः । ।४८। ।
नागगन्धर्वराजानो लोकपाला मरुद्गणाः ।
ऋषयो बालखिल्याश्च३३ पितरः पतगेश्वराः । ।४९। ।
धर्मो धाता विधाता च कालो मृत्युर्वसुन्धरा३४ ।
सन्ध्या कान्तिर्धृतिर्मेधा कीर्तिर्लक्ष्मीः सरस्वती । ।8.164.५० ।।
समुद्रास्सरितो वेदास्तीर्थानि गिरयो ग्रहाः ।
कुम्भानाददिरे तत्र पूर्णान् परमवारिणा ।।५१ । ।
अथ ते हृष्टमनसः प्रहृष्टं पावकात्मजम् ।
अभ्यषिञ्चन् तदा सर्वे सेनापत्ये महौजसम् ।।५२। ।
जयशब्दं ततश्चक्रुः समं सर्वे दिवौकसः३५ ।
जयिनः शर्वपुत्रस्य३६ ऋषयश्च समागताः ।।५३ ।।
- - - -- - - - - - - - - -
३० पृष्टं - क । ३१ ज (ज्व) लज्वलन पिंङ्गलाः - क ख । ३२ सूर्याश्च - क ख. । ३३ बालि- खिल्याश्च - क. ख. ग. । ३४ वसुन्धराः क. ख. ग. । ३५ सम सर्वदिवौकसः - क., सममेव दिवौकसः - ग. । ३६ सर्वभूतस्य - ख. ।
- - - -- - - - - - - - - -

854

जग्राह मघवा तस्य३७ श्वेतमातपवारणम् ।
सर्वरत्नप्रभाव्रातवितानपरिवेषवत् । ।५४। ।
दुधुवुश्चामरैर्दीर्घैः शरच्चन्द्रांशुनिर्मलैः३८ ।
परितो रत्नदण्डैश्च लोकपाला महाद्युतिम् । ।५५।।
अमृतादुत्थितं दिव्यमुपनीतं प्रचेतसा ।
मौलिमारोपयाञ्चक्रे३९ सुतस्य हिमवत्सुता । ।५६। ।
हेमावदाते४० विस्तीर्णे शशाङ्ककिरणद्युतिम् ।
तस्य वक्षःस्थले हारं बबन्ध सरितां वरा । ।५७। ।
हारेणालंकृतं वक्षः किन्नु हारो गुहोरसा ।
इति तत्र वितर्कोभूत्तदा विबुधसंसदि । ।५८। ।
आबबन्ध महाबाहोरङ्गदानि स्वलंकृता४१ ।

भुजेषु पारणालानस्तम्भपीनेष्वरुन्धर्ता४२ । ।५९।।
दीप्तिमान् पावकसुतस्तदाभूद्दीप्तिमत्तरः ।
सर्पिषा हूयमानेन ज्वलितोग्निरिवाध्वरे । ।8.164.६ ० ।।
ददौ तस्मै चतुर्वक्त्रः प्रभुः प्रीतो महात्मने ।
महापारिषदान् शूरान् बलिनः कामरूपिणः ।।६१ । ।
घण्टाकर्णं सुरक्ताक्षं नन्दिषेणं च दुर्जयम् ।
चतुर्थं बलिनां श्रेष्ठं ख्यातं कुमुदमालिनम् । ।६२ । ।
ददौ स्थाणुर्महावीर्यं४३ महापारिषदं क्रतुम् ।
संप्रवृत्ते तदा घोरे संग्रामे तारकामये ।।६३ ।।
क्रुद्धो जघान दैत्यानां योयुतानि४४ चतुर्दश ।
विबुधाश्च ददुस्तस्मै सेनां नैर्ऋतसंकुलाम् । । ६४।।
दैत्ययक्षक्षयकरीमजेयां४५ विश्वरूपिणीम् ।
ददौ वैवस्वतस्तस्मै महापारिषदावुभौ ।।६५।।

- - - -- - - - - - - - - -

३७... न्तस्य - क. ख. । ।। ३८ सरश्चन्द्रसुनिर्मलैः - क. । ३९... मारोपमामास - ख । ४० हैमावदाते - ग. । ४१ स्वलंकृतां - क. ग । ४२... नालस्तम्भपीनेस्वरुन्धती - क, काल ... - ख । ४३ महावीर्यो - ख. । ४४ प्रयुतानि - क. ख. । ४५ मजेयं - क. ग ।

- - - -- - - - - - - - - -

855

उन्माथञ्च४६ प्रमाथञ्च महावीर्यपराक्रमौ ।
सुभ्राजं भास्वरञ्चैव ददौ सूर्योनुयायिनौ । ।६६। ।
कार्त्तिकेयाय संहृष्टो रणे परमदुर्जयौ ।
कैलासशिखराकारौ श्वेतस्रगनुलेपनौ ।।६७। ।
चन्द्रमापि ददौ तस्मै मणिं सुमणिमेव च ।
ज्वालाजिह्वं तथा ज्योतिमात्मजाय विभावसुः । ।६८ ।।
ददौ परमसंप्रीतः शत्रुसैन्यनिबर्हणौ ।
परिघं पटहं४७ भीमं दहातिदहनौ तथा ।।६९। ।
अंशोप्यनुचरान् पञ्च ददौ स्कन्दाय धीमते ।
उत्क्रोशं सत्वरञ्चैव वज्रदण्डधरावुभौ ।।8.164.७० ।।
सुताय देवदेवस्य ददौ प्रीतः शतक्रतुः ।
चक्रं विक्रमकञ्चैव संक्रमञ्चातिदुर्जयम् । ।७१ । ।

ददौ ज्वलनपुत्राय विष्णुः प्रीतो महायशाः ।
वर्द्धनं नन्दनञ्चैव सर्वविद्यान्तगावुभौ४८ । ।७२। ।
स्कन्दाय ददतुः४९ प्रीतावश्विनौ५० च महाबलौ ।
कुन्दरं कुमुदं चोग्रं कुमुदञ्च महाबलम् । ।७३ ।।
डम्बराडम्बरौ५१ चौभौ ददौ धाताग्निसूनवे ।
वक्रानुवक्रौ बलिनौ मेषास्यौ५२ दुर्जयौ रणे । ।७४। ।
ददौ त्वष्टा महामायौ स्कन्दायानुचरावुभौ ।
सुव्रतं सत्यसन्धञ्च ददौ मित्रो महात्मने ।।७५।।
सुप्रभञ्च महामायं शुभकर्माणमेव च ।
प्रादाद्विधाता स्कन्दाय शत्रुपक्षनिषूदनौ ।।७६।।
पालिन्तकं महावीर्यं कालकञ्च महाबलम् ।
ददौ पारिषदौ५३ पूषा स्कन्दायामिततेजसे । ।७७।।

- - - -- - - - - - - - - -

४६ प्रमथञ्च - ग. । ४७ वटकं (हं) - क, पट्टहं - ख । ४८ विद्योतमाबुभौ - क. । ४९ प्रददुः - ख. । ५० अश्विनौ - क । ५१ डम्बरोदुम्बरौ - ख. । ५२ मेघास्यौ - क ख. । ५३ च पार्षदौ - क. ।

- - - -- - - - - - - - - -

856

बलञ्चातिबलञ्चैव महाकायौ महाबलौ ।
प्रददौ कार्त्तिकेयाय वायुः प्रीतो महात्मने ।।७८ ।।
घसञ्च प्रघसञ्चैव तिमिवक्त्रौ महोदरौ५४ ।
ददौ ज्वलनपुत्राय वरुणः पाशधारिणौ ।।७९। ।
सुवर्चसं महावीर्यं तथा चाप्यतिवर्चसम् ।
हिमवान् प्रददौ तस्मै स्कन्दायातिबलावुभौ । ।8.164.८० । ।
काञ्चनञ्च महामायं तथा जीमूतमालिनम् ।
ददावनुचरौ मेरुरुभौ५५ ज्वलनसूनवे । ।८ १ । ।
स्थिरञ्चातिस्थिरञ्चैव तथा परिषदावुभौ ।
पुनर्ददौ महामेरुः स्कन्दायामिततेजसे । ।८२ ।।
उच्छृङ्गं च विशृङ्गं५६ च शिलापाषाणयोधिनौ ।
प्रादाद्विन्ध्यो महासत्वौ स्कन्दाय ज्वलितौजसे ।।८३ ।।
संग्रहं विग्रहं चैव समुद्रश्च गदाधरौ ।
प्रददौ कार्त्तिकेयाय महापारिषदौ तदा । ।८४। ।

उन्मादं५७ पुष्पदन्तं च शङ्कुकर्णञ्च दुर्जयम् ।
महावीर्यान्महासत्वान् प्रादात् पुत्राय पार्वती ।।८५।।
जयं महाजयं चैव ददुर्नागा महात्मने ।
ददौ च५८ परमप्रीतः स्कन्दाय वृषवाहनः ।।८६।।
बहून्पारिषदाञ्छूरान् समरे दुर्जयान्परैः ।
गजकर्णं निकुम्भञ्च पद्मं कुमुदमेव च ।।८७।।
सनन्दं द्वादशभुजं तथा कृष्णोपकृष्णकौ५९ ।
कृतग्रीवं कपिस्कन्धं काञ्चनाक्षं जलन्धमम् ।।८८ ।।
अक्षिसन्तर्दनं कुण्ठं६० पार्श्वग्रीवं महोदरम् ।
एकाक्षं द्वादशभुजमेकपादं६१ महाजटम् ।।८९।।

- - - -- - - - - - - - -

५४ समुद्रश्च गदाधरौ - ख. । ५५ उभौ - क. ख । ५६ उच्छ्रतं पातिशृङ्गं (?) - क. । ५७ उन्नादं (?) । ५८ स - ख । ५९ कृष्णापकृष्णकौ - क. । ६० क्रुष्ठ - ख. । ६१ द्वादशभजं वक्त्रपादं - ख ।

- - - -- - - - - - - - -

857

सहस्रबाहुं विकचं व्याघ्रास्यं क्षितिकम्पनम् ।
पृष्ठवक्त्रं सुनामानं पार्श्वाननमहाननौ ।। 8.164.९० ।।
परिस्रुतं कोकनदं प्रियमाल्यानुलेपनम् ।
अजोदरं६२ गजस्कन्धं स्कन्धाक्षं शतलोचनम् ।।९१ ।।
ज्वालाजिह्वं करालं च६३ शितकेशं ततोदरम्६४ ।
अष्टजिह्वं चतुर्दंष्ट्रं मेघनादं पृथूदरम् ।।९२ ।।
विद्युदक्षं धनुर्वक्त्रं६५ जरठं६६ मारुताशनम ।
उदराक्षं झषाक्षं६७ च वज्रनाभं च सुप्रभम्६८ ।।९३।।
समुद्रवेगं गोकर्णं शैलकम्पनमेव च ।
पत्रमेषं प्रबाहुं६९ च तथा नन्दोपनन्दकौ ।।९४।।
धूम्रं श्वेतं कलिङ्गं च सिद्धार्थं वरदं तथा ।
प्रियकं७० गर्दभास्यं च गोनर्दं७१ भूततापनम् ।।९५ ।।
आनन्दं च प्रमोदं च स्वस्तिकं ध्रुवकं तथा ।
क्षेपवापं७२ सुजातं च सिद्धयात्रं महावरम् ।।९ ६ ।।
गोव्रजं कनकापीडं महापार्श्वं महोदरम् ।
गायनं हसनं चैव बाणखड्गधरं७३ प्रभुम् ।।९७।।

वैतालिं चातितालिं च तथा शठिकवातिकौ ।
मांसजं पङ्कदिग्धं च समुद्रोन्माथमव्ययम् ।।९८।।
रणोत्कटं प्रभासं च श्वेतमूर्धानमच्युतम् ।
कालकण्ठशरीरञ्च७४ कुष्माण्डं शत्रुतापनम् ।। ९९ ।।
गोमायुवक्त्रं श्येनास्यं भूतलोन्माथनं तथा ।
यज्ञवाहं प्रवाहं च काकास्यं काकलोचनम् ।।8.164.१ ०० । ।
मञ्जुलं वक्रनासं च महानासं गजोदरम् ।
तुहनं च तुहानं७५ च चित्रदेवमजं७६ खरम् । । १०१ । ।

- - - -- - - - - - - - - -

६२ अञ्जोदरं - क. । ६३ करालास्यं - ख । ६४ नतोदरम् - ख । ६५ धनुष्कण्ठ (?) - क । ६६ जठरं - क. ख. । ६७ मयाक्षं - ख । ६८ वसुप्रभम् - ख. । ६९ प्रवाह - क. । ७० प्रियाक्षं (?) । ७१ गोनर्दं - ख. । ७२ क्षेमवापं - ख । ७३ पाण्योः खड्गधरं - ख. । ७४ बालकण्ठशरीरञ्च - ख. । ७५ तुदानं - ख. । ७६ चित्रदेहमजं (?) ।

- - - -- - - - - - - - - -



मधुरं सुप्रसादं च किरीटं भकुटोत्कटम्७७ ।
वसनं मधुवर्णञ्च७८ कलशं कलशोदरम् ।। १०२ ।।
रेवन्तं७९ मन्मथकरं सूचीवक्त्रं गजाननम् ।
श्वेतवक्त्रं सुवक्त्रं च चारुवक्त्रं च पाण्डरम् । । १०३ ।।
कण्ठबाहुं सुबाहुं च बकं कोकिलकं तथा ।
अचलं कनकाक्षं च बलानामग्रनायकम् ।। १ ०४। ।
सञ्चारं च कोकमुखं गृध्रास्यं जम्बुकं तथा ।
लोमशञ्च जरास्यं च उष्ट्रग्रीवं कमण्डलुम्८० । ।१ ०५।।
दण्डकं दीर्घवक्त्रं च हंसवक्त्रं महाबलम् ।
टुण्डुकं८१ शतपादं च शताक्षं चापपृष्ठक्रम् । । १० ६।।
शिक्षकं चापवक्त्रं च शाखवक्त्रं८२ च कुण्डकम् ।
महायोगान्महासत्वान् सततं ब्रह्मचारिणः ।। १ ०७।।
अप्रधृष्यान्महावीर्यान् समरे रिपुसूदनान् ।
नानाशस्त्रप्रहरणान् नानारूपान् महौजसः । । १०८ । ।
नानावक्त्रैः परिवृतान् गणैश्च गणनायकान् ।
गजेन्द्रचर्मवसनान् व्याघ्रकृष्णाजिनाम्बरान् । । १० ९।।

रक्तकेशान् हरिश्मश्रून् मुण्डान् दिग्वाससोपरान् ।
जटिनः पिङ्गनेत्राँश्च भुजङ्गकृतमेखलान् ।। 8.164.११० ।।
पन्नगाङ्गदिनः शूराञ्छवसद्भोगीन्द्रकुण्लान् ।
पावनैः परिदिग्धाङ्गान्८३ भस्मभिश्चन्द्रपाण्डरैः ।। ११ १।।
नृत्यतो वल्गमानाँश्च हासोत्फुल्लविलोचनान् ।
गणैः परिवृतानन्यैर्बहुभिर्गणनायकान् ।। ११२ ।।
कूर्मकुक्कुटवक्त्रैश्च शशगोधावृकाननैः ।
खरोष्ट्राश्वमुखैर्भीमैर्वराहमहिषाननैः ।। ११३ ।।
- - - -- - - - - - - - - -
७७ किरीटम (मु) कुटोत्कटम् - ख. । ७८ मधुपर्णञ्च - ख । ७५ एवन्तं - ख. । ८० कमण्डलं (?) । ८१ कन्डुकं - ख. । ८२ शाखावक्त्रं - क. । ८३ परिदुग्धाङ्गान् - ख. ।
- - - -- - - - - - - - - -


मनुष्यमेढवक्त्रैश्च८४ श्वशृगालमृगाननैः ।
भीमैर्मकरवक्त्रैश्च शिशुमाररुषाननैः ।
मार्जारवृकवक्त्रैश्च८५ दीर्घवक्त्रैरवक्त्रकैः ।।१ १४।।
लकुलोलूकचक्राह्वशतपत्रनिभाननैः ।
आखुबभ्रु विडालानां तुल्यास्यै रिपुदुर्जयैः ।। ११ ५।।
छागमेषमुखैश्चान्यैः शुककारण्डवाननैः ।
ऋक्षशार्दूलवक्त्रैश्च द्विपिसिंहाननैस्तथा८६ ।। ११ ६।।
भीमैर्द्विरदवक्त्रैश्च८७ तरक्षुवदनैस्तथा८८ ।
गरुडक्रोष्टुकास्यैश्च काककोकिलवक्त्रकैः ।। १ १७।।
गोवानरमुखैश्चान्यैः८९ श्येनगृध्रमुखैस्तथा ।
महाजठरपादाङ्गैस्तारकाक्षैर्महाबलैः ।।१ १८ ।।
पारावतमुखैश्चान्यैः कृकवाकुमुखैस्तथा ।
लावतित्तिरिवक्त्रैश्च कृकलासमुखैरपि ।। ११ ९।।
पीतकौशेयवासोभिश्चीरवल्कलधारिभिः ।
फणीन्द्रानद्धगात्रैश्च चित्रगोनसकङ्कणैः९० ।।8.164.१ २० ।।
स्थूलोदरैः कृशाङ्गैश्च स्थूलाङ्गैश्च कृशोदरैः ।
ह्रस्वग्रीवैर्महाकर्णैर्नानाव्यालविभूषणैः ।। १२१ ।।
गजेन्द्रचर्मवासोभिः शूरैः समरदुर्जयैः ।

स्कन्धवक्त्रैरवक्त्रैश्च पृष्ठास्यैः सर्वतोमुखैः । ।१ २२। ।

नानाकृतिभुजैर्वीरैर्नानाभुजगभीषणैः९१ ।

नानावेषै९२ महायोगैर्नानास्थाननिवासिभिः । । १२३ । ।

नानावस्त्रधरैश्चान्यै९३ र्नानामाल्यानुलेपनैः ।

नानाचर्माम्बरैरन्यैर्नानाभरणधारिभिः ।।१ २४।।

उष्णीषिभिर्मुकुटिभिः कम्बुग्रीवैः सुसंस्थितैः ।

किरीटिभिः पञ्चशिखैर्जटामुकुटधारिभिः ।।१ २५।।

- - - -- - - - - - - - - -

८८ मेषवक्त्रैश्च - ख, मृष - क. । ८५ शुकवक्त्रैश्च - क. । ८६ तरक्षुवदनैस्तथा - क । ८७ द्वीपिसिंहाननैश्चैव - क. । ८८ भीमैर्दिरदवक्त्रकै. - क. । ८९ गोधानरमुखैश्चान्यैः (?) । ९० गोनासकङ्कणैः (?) । ९१ भूषणैः (?) । ९२ नानावेगै - ख? । ९३ नानावक्त्रधरैश्चान्यै - क. ।

- - - -- - - - - - - - - -



त्रिशिखैर्द्विशिखैश्चापि९४ तथा सप्तशिखैरपि ।

शिखण्डिभिर्दीर्घजटैर्मुण्डैः कपिलमूर्धजैः ।। १ २६।।

चित्राक्षकैश्चित्रमुखैश्चित्रस्रगनुलेपनैः ।

चित्राम्बरधरैः वीरैः सततं प्रियविग्रहैः९५ । । १२७। ।

कृष्णनिर्मांसवक्त्रैश्च९६ दीर्घपृष्ठैः कृशोदरैः ।

स्थूलपृष्ठैर्महाग्रीवैर्लम्बोदरमहोदरैः९७ ।।१ २८।।

महाभुजैर्महावक्त्रैर्ह्रस्वग्रीवैः कृशाननैः ।

कुब्जैभ्र दीर्घजंघैश्च हस्तिकर्णशिरोधरैः । ।१ २९। ।

दीर्घोष्ठर्दीर्घजिह्वैश्च९८ दीर्घाक्षैर्दीर्घनासिकैः ।

महादंष्ट्रैः सुदंष्ट्रैश्च चित्रदंष्ट्रैर्महाबलैः । । 8.164.१३० । ।

सुविभक्तशरोरैश्च दीप्तिमद्भिः स्वलंकृतैः ।

पिङ्गलाक्षैर्महाकर्णैः शंकुकर्णैरकर्णकैः ।। १३१ ।।

दीर्घदंष्टैः पृथूरस्कैः स्थूलोष्ठै९९र्हरिमूर्धजैः ।

नानापादोष्ठदंष्ट्रैश्च नानाहस्तशिरोधरैः । । १३ २।।

नानाचर्मभिराच्छन्नैर्नानावासोभिरावृतैः ।

हृष्टैः परिपतद्भिश्च नृत्यद्भिश्च महारवैः । ।१ ३३ ।।

लम्बकर्णैर्महोरस्कैर्नीलकण्ठै१०० स्त्रिलोचनैः ।

शुकोदरनिभैः कैश्चित् कैश्चिदञ्जनसन्निभैः । ।१ ३४।।

श्वेताङ्गैर्लोहितग्रीवैः पिङ्गाक्षैर्भीमदर्शनैः ।
कल्माषपाणिपादैश्च जातीहिङ्गुलकप्रभैः१०१ ।। १३ ५।।
चामीकरापीडनिभैः१०२ श्वेतैर्लोहितराजिभिः१०३ ।
राजावर्त्तसवर्णैश्च१०४ मयूरसदृशप्रभैः ।।१ ३ ६।।
पाशोद्यतकरैः१०५ कैश्चिद् व्यात्तवक्त्रै१०६ र्महारवैः ।
पिङ्गाक्षैर्नीलकण्ठैश्च महापरिघबाहुभिः ।। १३७।।

- - -- - - - - - - - - -

९४ श्चैव - क. ख । ९५ विग्रहप्रियैः (?) । ९६ निर्माल्यवस्त्रैश्च (?) । ९७ प्रलम्बोदरमेहनैः (?) । ९८ दीर्घजंघैश्च - ख. । ९९ स्थूलाक्षै - ख. । १००. नीलकर्णै. - क., नीलकण्ठैः - ख. । १०१ जातिहिङ्गु-लकप्रभैः - ख. । १०२. पीतनिभैः - ख. । १०३ श्वेतलोहितराजिभिः (?) । १०४ लाजावर्तसवर्णैश्च (?) । १०५ पादोद्यतकरैः - ख. । १०६ व्याघ्रवक्त्रै - क ।

- - -- - - - - - - - - -



शतघ्नीशक्तिहस्तैश्च गदामुशलपाणिभिः ।
शूलासिपाणिभिः कैश्चिन्महाकायैर्महाबलैः १३८ ।।
भुशुण्डीप्रासहस्तैश्च वीरैः परशुपाणिभिः ।
पाशमुद्गरहस्तैश्च चक्रतोमरपाणिमिः ।। १३९ ।
चित्रायुधधरैर्वीरैरावृण्वद्भिर्दिशो दिशम् ।
घण्टाजालविनद्धाङ्गैः किंकिणीजालधारिभिः ।। 8.164.१४० ।।
वृता गणैर्गणाध्यक्षा महासत्वैर्महाबलैः ।
उपतस्थुर्महात्मानं कार्त्तिकेयं यशस्विनम् ।। १४१ ।।
मातृश्च प्रददौ तस्मै कौशिकीदेहसंभवाः ।
महाबला१०७ महासत्वाः समरेष्वपराजिताः ।। १४२ ।।
प्रभावतीं विशालाक्षीं पलितां१०८ वृषनासिकाम् ।
श्रीमतीं बहुलां सिंहीं विजयां बहुपुत्रिकाम् ।।१४३ ।।
गोपालीं सुप्रभां षष्ठीं बृहदम्बालिकां१०९ कृशाम् ।
जयावतीं मालतिकां ध्रुवरत्नां११० प्रभाकरीम् ।। १४४।।
सुप्रभां वसुदां१११ चैव विशोकां नन्दिनीं तथा ।
वज्रचूडां महचूडां वज्रनेमिं११२ महाप्रभाम् ।। १४५।।
अञ्जनीञ्च भरत्सेनां कमलाक्षीं शशिप्रभाम् ।
शत्रुञ्जयां महानासां क्रोधनां शलभीं खषीम् ।। १४६।।

माधवीं शुकवक्त्राञ्च कीर्तिनेमिमनिन्दिताम्११३ ।
गीतप्रियां महामायां वायसीममृतां सतीम् ।। १४७।।
सरस्वतीं भोगवतीं सुभ्रूञ्च कनकावतीम् ।
सुतां लक्ष्मीं वीर्यवतीं विद्युज्जिह्वां महाबलाम् ।। १४८।।
पद्मावतीं सुनक्षत्रां कन्दरां बहुयोजनाम्११४ ।
सन्तानिकां शिवां चैव कमलां मलदामपि ।। १४९।
- - -- - - - - - - - - -
१०७ महबलम् - क. । १०८ पालितां - क ख । १०९ बृहदत्पालिशा - क । ११० ध्रुवनन्दां - ख. । १११ वसुधां - ख. । ११२ वक्रनेमिं? - ख- । ११३. मनन्दताम् - ख । ११४ बहुभोजनाम् (?) ।
- - -- - - - - - - - - -


सुदामां बहुदामां च सुप्रभां च यशस्विनीम् ।
नृत्तप्रियां वरारोहां सितोलूखलमेखलाम्११५ ।। 8.164.१५० ।।
शतघण्टां शतानन्दां शतनेत्रां यशस्विनीम् ।
वपुष्मतीं च शीलाञ्च भद्रकालीञ्च भैरवाम् ।।१ ५१ ।।
संहारिकां निष्कुटिकां भूतां११६ चत्वरवासिनीम् ।
सुमङ्गलां स्वस्तिमतीं वृद्धिकामां जनप्रियाम् ।। १५२।।
धनदां सुप्रदां११७ चैव भवदां सुखदामपि ।
ऐलीं११८ भेलीं समेलीं११९ च वेतालीं जननीं निशाम् ।।१५३ ।।
कण्डूं पिङ्गलिकां चैव देवमित्रां यशस्विनीम् ।
लम्बुषीं१२० सनकां चैव चित्रसेनामथाचलाम् ।। १ ५४।।
कुकूनिकां१२१ शंखिनिकां१२२ तथा झर्झरिकामपि१२३ ।
कुण्डालिकां कोलविलां१२४ कण्डराञ्च शतोदरीम् ।।१ ५५।।
उत्क्वाथनीं जुरेलाञ्च१२५ महावेलां च१२६ कङ्कणाम् ।
मनोजवां कण्टकिनीं विघसां पूतनां तथा ।। १ ५६।।
वैशयां१२७ चर्चिकां१२८ वामां क्रोधनां मुखमण्डिकाम् ।
मण्डोदरीं च टुण्डाञ्च कोटरां मेघवासिनीम् ।। १ ५७।।
सुभगां लम्बिनीं लम्बां वामधूलीं१२९ विकत्थनाम् ।
ऊर्ध्ववेणीधरां चैव ललाटनयनां तथा ।।१ ५८ ।।
पृथुबर्हां महाकायां मधुकुम्भां तडित्प्रभाम् ।
मन्थानिकामुन्मनिकां जरायुं जर्जराननाम् ।। १ ५९।।

ख्यातां दहदहां चैव तथा धमधमामपि ।
खटंखटां१३० महावीर्यां वृषणां मणितुण्डिकाम् ।। 8.164.१६० ।।
बद्धवेणीं१३१ धराधारां पिङ्गाक्षीं लम्बकर्णिकाम् ।
आमोदां च प्रमोदां च तथा लम्बपयोधराम् ।। १६१ ।।
- - - -- - - - - - - - -
११५ श्वेतोलूखलमेखलाम् - ख । ११६ भ्रा? - ख । ११७ सु १धां - स । ११८ वेलीं - ख. । ११९ समेलिं - क? । १२० लम्बुसीं - क. ख. । १२१ कुक्कूणिकां - ख. । १२२ शंखनिकां - ख. । १२३ जम्भनिकामपि - ख! १२४ कोलविकां - ख. । १२५ जरेल्लाञ्च - क । १२६ महावेशां च - ख. । १२७ वैशायां - क, १२८ च द्रुहां - ख. । १२९ शतधूलिं (?) - क । १३० खट्वखटां - ख. । १३१ बहु (ऊर्ध्व?) वेणीं - ख ।
- - - -- - - - - - - - -

863
शशोलूकमुखीं कृष्णां खरजंघां महारवाम् ।
शिशुमारमुखीं श्वेतां लोहिताक्षीं विभीषणाम् ।।१६२।।
जटालिकां कामचरीं१३२ दीर्घजिह्वां च लोलुपाम् ।
कनेलिकां१३३ वासनिकां मुकुटाञ्च महाबलाम् ।। १६३ ।।
लोहिताक्षीं१३४ महाकायां हरिपिण्डीञ्च दुर्जयाम् ।
पशुदां वित्तदां वीरामङ्गदाञ्च महबलाम् ।। १६४।।
पयोदां गोप्रदां शंखां सुनिषण्णां तरस्विनीम् ।
प्रतिष्ठां सुप्रतिष्ठां च रोचमानां सुरोचनाम् ।।१ ६५।।
गोकर्णीमश्वकर्णीञ्च सशिरां१३५ खरिकां तथा ।
कचक्रचां मेघरवां मेघमालां विरोचनाम् ।। १६६ ।।
एता१३६श्चान्याश्च१३७ बहुला मातरो१३८ मारुतस्यदाः ।
एकाक्षरां१३९ सुगन्धां१४० च कृष्णकर्णीं च दारुणाम् ।।१ ६७।।
क्षुरकर्णीं चतुष्कर्णीं कर्णप्रावरणां तथा ।
चतुष्पथनिकेतां च गोकर्णीं महिषाननाम् ।।१ ६८ ।।
खरकर्णीं महाकर्णीं भेरीस्वनमहास्वने ।
शंखकुंभश्रवां१४१ चैव संग्रामेष्वपराजिताम् ।।१ ६९।।
गणां१४२ च सुगणां चैव तथा वार्ती१४३ च कामगाम् ।
चतुष्पथरवां१४४ चैव भूतिनीं वन्यगोचराम्१४५ ।।8.164.१७० ।।
कार्त्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ।
दीर्घदन्त्योतिनख्यश्च१४६ दीर्घवक्त्रातिभीषणाः१४७ ।।१७१ ।।

चतुरा१४८ मधुराश्चैव यौवनस्थाः स्वलंकृताः ।
माहात्म्येन च संयुक्ताः कामरूपा महाबलाः ।।१७२।।
निर्मांसगात्र्यः श्वेताश्च जाम्बूनदसमप्रभाः ।
कृष्णा जीमूतवर्णाश्च धूम्रकेश्यो महाभयाः ।।१७३ ।।

- - - -- - - - - - - - - -

१३२ कामचरां - क. । १३३ क्रमेलिकां (?) । १३४ रोहीताक्षीं (?) । १३५ ससिरां - ख. । १३६ एतां - क. । १३७. श्चान्याश्च - क. । १३८ मारुतो - ख. १३९ एकाक्षदां - ख. । १४० युगन्धां - ख. । १४१ कुम्भस्रवां - क ख. । १४२.. गणां - क. । १४३ वापीं - ख. । १४४ चतुष्पथरतां - ख. । १४५ वा(धा)न्यगोचराम् - क. । १४६ तिनख्यश्च - क. । १६७ श्च दारुणाः -ख. । १४८ चर श्च - ख ।

- - - -- - - - - - - - - -



असुराणां महादंष्ट्रा दीर्घदंष्ट्राः सिताम्बराः ।
ऊर्ध्वकर्णोधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः १४९ ।।१७४।।
लम्बोदर्यो विलम्बोष्ठ्यो लम्वकर्णपयोधराः ।
ताम्राक्ष्यस्ताम्रवक्त्राश्च हर्यक्ष्यो१५० हरिमूर्धजाः ।।१७५।।
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ।
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ।।१७६ ।।
नानाभरणधारिण्यो नानास्रगनुलेपनाः ।
नानावस्त्राणि बिभ्रत्यो नानायुधधरास्तथा१५१ ।। १७७।।
एताश्चान्याश्च संहृष्टा१५२ ददौ स्कन्दाय कौशिकी ।
वैजयन्तीं ददौ तस्मै मालामञ्चितकेसराम् ।। १७८।।
विष्णुर्विविधगन्धाढ्यामुत्फुल्लां चारुदर्शनाम्१५३ ।
वाससी विरजस्के च तरुणार्कसमप्रभे ।। १७९।।
संप्रीता प्रीतमनसे१५४ ददौ स्कन्दाय पार्वती ।
कमण्डलुं सुधावारिसंपूर्णममृतोद्भवम् ।।8.164.१ ८० ।।
ददौ प्रीता कुमाराय गङ्गा गम्भीरचेतसे ।
गरुत्मान् दयितं पुत्रं चित्रबर्हं शिखण्डिनम् ।।१८१ ।।
ददौ स्कन्दाय संप्रीतो बलिनं कामरूपिणम् ।
ताम्रचूडमदाद्वीरमरुणश्चरणायुधम् ।। १८२ ।।
भववीर्यजवोपेतं स्कन्दाय प्रियदर्शनम् ।
महाभारसहं छागं कामगं कामरूपिणम् ।

प्रददौ वरुणस्तस्मै स्कन्दाय बलवत्तरम् ।।१८ ३ ।।
ब्रह्मण्याय ददौ ब्रह्मा मेध्यं कृष्णाजिनाम्बरम् ।
प्रमदाहावविभ्रान्तं१५५ लोचनोदरसन्निभम् ।।१८४।।
तेजसां निधये तस्मै ददौ दण्डं बृहस्पतिः ।
स्कन्दाय परमप्रीतश्चारुचामीकरस्रजम् ।। १ ८५।।

- - -- - - - - - - - - -

१४९ लम्बुमेखलाः - ख. । १५० हर्यक्षा - क. १५१. स्तदा - क. । १५२ बिभ्रत्यो - क । १५३ ...लोचनाम् - क. । १५४ प्रीतमनसा - क. । १५५ विभ्रान्तं - क. ।

- - -- - - - - - - - - -



सेनापतिं तमभिषिच्य हुताशपुत्रं
सम्यक् प्रहृष्टमनसो विबुधाः समेताः ।
दैत्येश्वरस्य निधनाय महाप्रभावा
यात्रां सुरारिजयिनी१५६ सहिताः प्रचक्रुः१५७ ।। १८ ६।।
इति स्कन्दपुराणे सेनापत्याभिषेके चतुःषष्ट्युत्तरशततमोध्यायः

सनत्कुमार उवाच
स्कन्दं पुरोधाय सुराः समस्ताः सन्नाहयामासुरनीकमाशु ।
आहत्य भेरीः शतशो महद्भिर्दण्डैर्दृढं हाटकरत्नचित्रैः ।। १ ।।
दिग्वारणान् भूधरकूटकल्पान् मन्दाकिनीवारिभिराप्लुताङ्गान् ।
आनाय्य गन्धैर्विविधैश्च माल्यैरभ्यर्चयाञ्चक्रुरनीकमुख्याः ।।२।।
चित्राणि वर्माणि ततो बबन्धुर्बद्ध्वा१ प्रयत्नातिशयेन कक्षे२ ।
तेषां सुयत्नाद्३ गजवाजिमुख्यान हैमानि यन्त्राणि तयायुधानाम् ।। ३ ।।
चित्राः समुच्छिश्रियिरे४ पताका ध्वजाश्च चामीकरचारुदण्डाः ।
क्षुरप्रमाला विविधा बबन्धुः पक्षेषु५ घण्टाश्च समाससर्ज्जुः६ ।।४।।
रथञ्च कार्तस्वरचारुचक्रं७ सांग्रामिकं रत्नमरीचिचित्रम् ।
संयोजयामासुरुदारवेषैः प्रहृष्टचित्तैः खगमैस्तुरङ्गै द्वे ।।५।।
पर्यच्छमम्भोरुहगर्भगौरं बबन्ध शक्रः कवचं महार्हम् ।
वक्षस्यभेद्ये हरिचन्दनाक्ते वज्रप्रभाप्रज्वलितप्रकाशम् ।। ६ ।।
बबन्धुरुच्चैर्विनियम्य पिङ्गा जटा भुजङ्गैर्बृहतीः श्वसद्भिः ।
चित्राणि हृष्टाः कवचानि रुद्रा वक्षस्सु दैत्यद्विपविक्षतेषु ।।७।।

चित्रं दधानः९ कवचं महाद्युतिर्निबद्धनिस्त्रिंशतलाङ्गुलित्रवान्१० ।
बिभ्रद्धनुः सज्जमपीद्धपौरुषो जहौ शशाङ्कः सहजां न सौम्यताम् । ।८। ।

- - - -- - - - - - - - - -

१५६ दमनीं - क. टि. । १५७ प्रजग्मुः - क. ख. ।

१ बुध्वा - क ख. । २ कक्ष्ये - क. ख. ३ सयत्रा (?) । ४ समुच्चिच्छ्रियिरे - क । ५ वक्रेषु - क. । ६ समाससर्जुः - क ख. । ७ कार्तस्वनचारुचक्रं - क. ख. । ८ प्रयच्छ - क. ख. । ९ बधान - ख । १० लताङ्गुलित्रवान् - ख. ।

- - - -- - - - - - - - - -



यत्नाद् बन्द्बधुः कवचानि सूर्याः किञ्चित्प्रदीप्तानि तदा स्वदीप्त्या११ ।
लौहान्यभेद्यानि१२ शरैः परास्तैश्चारूणि चामीकरचित्रितानि ।।९। ।
निबद्धभास्वत्कवचः सुधन्वा१३ सुपीननिस्त्रिंशनिबद्धपार्श्वः ।
गृहीतदण्डो विनिबद्धमौलिर्भयानकोभूत् सुतरां यमोपि । । 8.165.१० ।।
रुचा परीतः परयातिमात्रं स्फुरन्मुहुः प्रोन्नतपूर्वकायः ।
पराभवं विद्विषतां समाजे प्रचेतसः ख्यापयतीव पाशः । । ११ ।।
दृष्टिं धनेशोपि हुताशपिङ्गां दधद् गदायां परिघोरुबाहुः ।
ईशप्रसादेन निजेन१४ वेति सुरद्विषामाहनने विनाशम् ।।१ २। ।
सैन्येथ देवद्विषतां निपेतुरुल्काः स्फुरद्वह्निकणा बृहत्यः ।
विना घनैर्व्योम ररास भीमं सवृक्षशैला विचचाल चोर्वी । । १३ । ।
रजो नभस्तः परितः पपात वातेरितं रासभपृष्ठधूम्रम्१५ ।
ध्वजा निपेतुर्दृढहेमदण्ढा रक्ताम्बुवृष्टिं ससृजुः पयोदाः ।।१४। ।
मुहुर्मुहुर्दैन्यपरितचिताः कदुष्णमस्रं१६ मुमुचुस्तुरङ्गाः ।
कपोलभित्तीः१७ प्रजहौ गजानां मदश्च पारावतकण्ठनीलः । । १५ । ।
स्थानेषु दीप्तेषु विनेदुरुच्चैर्दीप्तस्वराः पक्षिमृगाश्वसंघाः१८ ।
प्रसादमालाः१९ परितो विमृद्नन् ववौ२० विवृद्धः२१ परुषो नभस्वान् ।। १ ६।।
सेना प्रहृष्टा महती सुराणामभ्याययौ दैत्यपतिं रराणा२२ ।
दैत्योपि देवागमनं विदित्वा सन्नाहयामास२३ तदा स्वसैन्यम् । ।१७। ।
सैन्यानि तानि२४ त्रिदशासुराणामन्योन्यमासेदुरुदायुधानि ।
क्षुब्धान्यतीव प्रलये महाब्धेः२५ पूर्वापराणीव तदा जलानि ।। १८। ।
निशाम्य दैत्या रणतूर्यनिस्वनं प्ररूढगर्वा बलिनो जयोत्सुकाः ।
अतिप्रहर्षादसमाप्तमङ्गला गृहीतशस्त्राः समराय निर्ययुः ।। १ ९।।

रथाश्वपादातसमुद्धतं२६ रजो रणाजिरे वानरकण्ठधूसरम् ।
स्वनश्च तेषामतिदारुणो महान् नभस्तदा व्याप दिशश्च सर्वतः । ।8.165.२० । ।

- - - -- - - - - - - - - -

११ स्वदीप्ती - क. । १२ लोहान्यभेद्यानि - क. ख । १३ सुधर्मा - क. । १४ जिनेन - क. । १५. धोस्र - क, ..धौस्रं - ख. । १६ सास्रं - क. । १७ कपोलभित्ती - क., भित्तौ - ख. । १८ पक्षिमृगाश्च सघाः - क. ख. । १९ माला - क ख- । २० बभौ - क. ख. । २१ विबद्धः - ख । २२ रणाय - ख., सुराणा - क. । २३ समाह्वयामास - क. । २४ सैन्ये हि तानि - क. ख. । २५ महोदधेः - क. ख. । २५६ पादातिसमुद्धतं - क. ।

- - - -- - - - - - - - - -



समुद्यतैर्दानवदेवतायुधैर्ध्वजैः पताकातपवारणैस्तथा ।
बभौ सविद्युच्छशिशक्रकार्मुकं२७ सहंसपंक्तीव तदा नभस्तलम् । ।२१ ।।
शस्त्राणि गात्रेषु तनुत्रवत्सु निपात्यमानानि परस्परस्य ।
दैत्यामरैराहनने प्रचक्रुः शब्दं स्फुरद्वह्निकिणैः समेतम् । ।२२ । ।
दृष्ट्वासुरान् सत्वबलोपपन्नान् सुरास्सहायाननपेक्ष्य२८ केचित् ।
सन्नेहिरे मत्तगजानिवेभा मदाम्बुभिः श्यामकपोलदेशाः ।।२३ ।।
बलानि वेगादभिसृत्य दूरमग्रेसराणि२९ त्रिदशासुराणाम्३० ।
स्वजीविताशामपहाय जघ्नुरन्योन्यमाविष्कृतपौरुषाणि ।।२४। ।
निकामवैराशयमानसानां जिघांसता तत्र परस्परेण ।
स संप्रहारस्तुमुलस्तदासीत् सुरासुराणामनवो महाजौ३१ ।। २५। ।
सेदुर्गजास्तोमरशक्तिभिन्नास्तुरङ्गमा बाणहता निपेतुः ।
सफेनमास्यै रुधिरं वमन्तो दृढप्रहारान्मुमुहुश्च योधाः ।।२६।।
छिन्नानि पेतुर्निशितैः क्षुरप्रैः सकुण्डलान्याननपङ्कजानि ।
अन्योन्यमाविष्कृतदर्परोषैर्महाहवे दानवदेवमुख्यैः३२ । ।२७। ।
ता मातरस्ते च गणा विचेरुर्विपोथयन्तः समरेरिसंघान्३३ ।
मुष्टिप्रहारैस्तलपार्ष्णिघातैर्विकर्षणावेष्टनपीडनैश्च ।
- - - - - - - - - - - - - - - - - - - - - ।।२८।।
मातङ्गमुख्यान् द्विरदैः प्रभिन्नैस्तुरङ्गमान् वाजिभिरुत्तमाँश्च ।
रथान् रथैः३४ पत्तिगणान् पदातैर्गणा निजघ्नुर्युधि दानवानाम् ।।२९।।
उत्पत्य वेगादिषुभिर्गणेन्द्रा३५ गजाधिरूढान् दितिजेन्द्रयोधान् ।
मुष्टिप्रहारैः कुलिशोग्रपातैर्विभिन्नमस्तिष्कविनिर्गताक्षान् ।। 8.165.३० ।।
परश्वधैश्चिच्छिदुरात्तरोषाः३६ खड्गैश्चकर्तुर्बिभिदुश्च शूलैः ।

महाद्विपालाननितान्तपीनैः३७ प्रपोथयाञ्चक्रुररीन्३८ भुजैश्च ।।३ १ ।।

- - - -- - - - - - - - -

२७ सविद्युच्छविशक्रकार्मुकं (?) । २८ सहायानपेक्ष्य - क ।२९ .मग्रेश्वराणां - क. । ३० ददृशे सुराणाम् - ख.। ३१ .मनवं महाजौ - क, मभवत्तदाजौ - ख. । ३२ महाहवैर्द्दानवदैत्यमुख्यैः - क. । ३३ .सिंहान् - ख । ३४ रथाद्रथैः - क. । ३५ वेगान्निषुभिर्गजेन्द्रा - क, .. दिषु तद् गजेन्द्रा - ख, । ३६.. रात्तदोषाः - क. । ३७ निभात्तपीनैः - ख. । ३८ प्रपोढयाञ्चक्रुररीन् - ख ।

- - - -- - - - - - - - -



देव्योपि तान्३९ दैत्यगणान् निजघ्नुर्महासमाजे समुपात्तशस्त्रान् ।
उत्पत्य वाजिप्रवराधिरूढान् रथस्थितान् वारणधूर्गतांश्च ।।३२।।
प्रचुक्षुभे तद्बलमासुरं तदा गणेन्द्रनिष्पिष्टबलाग्रनायकम् ।
गुरुत्मतः पक्षसमीरणाहतं४० महाह्रदं यद्वदगाधमम्बुधेः४१ ।।३ ३ ।।
अथाभिवीक्ष्य प्रसभं गणाधिपैर्निहन्यमानानि बलानि तारकः ।
रुषा तदा ताम्रतरायतेक्षणः४२ समभ्यगान्मौलिबलाभिपालितः ।।३४।।
विस्फार्य शक्राशनितुल्यनिस्वनं रत्नप्रभाप्रज्वलितं स कार्मुकम् ।
संछादयन् बाणतलैर्नभस्तलं मर्मातिगैः कङ्कमयूरपत्रिभिः ।। ३ ५।।
तस्यागमं दैत्यपतेर्विदित्वा तदाननादानलसूनुरुच्चैः ।
स्वपाणिसस्थामभिवीक्ष्य शक्तिं विचित्रचामीकरचारुघण्टाम् ।।३६।।
नभो विगाह्य४४ प्रदिशो दिशश्च स कार्त्तिकेयस्य तदा निनादः ।
मनांसि देवद्विषतां प्रसह्य विमोहयामास महासमाजे ।।३७।।
अथापतन्तं समभीक्ष्य४५ तारकं बलेन गुप्तं महता महाहवे ।
मुमोच शक्तिं ज्वलितानलप्रभां विनाशनायामरविद्विषां गुहः ।।३८।।
सा तेन मुक्ता ज्वलनात्मजेन ज्वालाभिरावृत्य नभो दिशश्च ।
अनेकधा व्योम्न्यभवत् सुघोरा४६ मायेव दैत्यान् परिमोहयन्ती ।। ३९।।
पपात वक्षःसु च सहतेषु४७ सुरद्विषां चित्रतनुत्रभृत्सु ।
समं समस्तैस्त्वनिवार्यवेगा४८ विदार्य चोरांसि विवेश तूर्णम् । ।8.165.४० ।।
देवद्विषस्तेभिहतास्समस्ताः४९ पर्यस्तपृथ्वायतरक्तनेत्राः ।
सन्दष्टजिह्वाधरविह्वलाङ्गाः प्राणाञ्जहुः शोणितमुद्वमन्तः ।।४१ ।।
तमांसि यद्वत् सविता भिनत्ति समं मयूखैरतिरस्कृतानि ।
बिभेद तद्वद् द्विषतां बलानि रणाजिरे शक्तिभिरग्निसूनुः ।।४२।।
निहत्य देवद्विषतः समस्तान् रणाजिरे प्रोन्नतदर्पवीर्यान् ।

प्रभेव सूर्यं परितप्य लोकान् पुनस्तदा स्कन्दमियाय शक्तिः । ।४३ ।।

- - - -- - - - - - - - -

३९ दैव्योततं - क. ४० पक्षिसमीरणाहत - क. । ४१ दगाधमम्बुधि - क । ४२ यतेक्षणो - क. ख. ४३ मुदानान दानलसूनुरुच्चैः (?) । ४४.. वगाह्य (?) । ४५ समवीक्ष्य क. । ४६ सुघोरं - क. । ४७ वक्षःसुरसंघ(ह) तेषु - क., सुसंह (?) । ४८ स्तेष्वपि - ख, रनिवार्यवेगा (?) । ४९ भिहिता- स्समस्ताः - क ।

- - - -- - - - - - - - -



दितितनयसमूहैः सार्धमाविप्रतापैः (?)
समरशिरसि हत्वा तारक दैत्यराजम् ।
त्रिदशसमितिमुख्यैः स्तूयमानः प्रहृष्टैः
प्रतिगमदमितौजाः५० शूलपाणेः समीपम् । ।४४।।
इति स्कन्दपुराणे तारकवधे पञ्चषष्ट्युत्तरशततमोध्यायः५१

व्यास उवाच
भगवन् सर्वधर्मज्ञ महायोगबलान्वित ।
श्रुतमेतन्मया कृत्स्नं स्कन्दस्य चरितं महत् ।।१ । ।
त्वत्तः परमयोगेश गुह्यं भगवतः परम् ।
ततः१ परं स देवेशस्त्रिपुरारिर्वृषध्वजः । । २ । ।
संप्रेष्य सहितं देवैर्महासेनापतिं गुहम् ।
संन्यस्य२ देवताः स्कन्दे किमन्यदकरोत् प्रभुः । ।३ । ।
क्व जगाम च देवेशः किमुवाचाचलात्मजा३ ।
कानि चैनमुमा४ प्राह शंसैतत् पृच्छतो मम । ।४। ।
सूत उवाच
व्यासेनैवं तदा पृष्ट आख्यातुमुपचक्रमे ।
सर्वागमपरार्थज्ञो५ ब्रह्मसूनुर्महातपाः । ।५। ।
सनत्कुमार उवाच
संन्यस्य षण्मुखे देवान् देवदेवो भवस्तदा ।
जगाम सहितो देव्या मन्दरं हेमकन्दरम् ।। ६ ।।
त तस्थावासने६ तत्र हैमे महति सुप्रभे ।
नानारत्नसमाकीर्णे हेमशृङ्ग इवोच्छ्रिते ।।७।।

तस्य पार्श्वे स्थिता देवी रराज हिमवत्सुता ।
व्यभ्रे वियति पूर्णेन्दो रोहिणीव समीपगा । ।८।।

- - - -- - - - - - - - - -

५० प्रतिययुर्.. - क. । ५१ २०० (२१६) - ख. पु ।
१ अतः - क. । २ स न्यस्य - क. ख । ३. .लात्मजा - क. । ४ चैवमुमा - क. । ५ सर्वागमपरो- र्थज्ञो - क. ।
६ सदा वै (स तदा ) वसते - क, सेमस्थानुसते (?) - ख. ।

- - - -- - - - - - - - - -



सोवाच परमेशानं प्रणम्य गिरिजा तदा ।
सहधर्मचरी यस्मात् प्रिया चाहमतीव ते । ।९। ।
पूर्वप्रणयलब्धा च तेन पृच्छाम्यशङ्किता ।
पावनानि पवित्राणि नामानि तव कामद । । 8.166.१० । ।
सार्थानि श्रोतुमिच्छामि कथितानि त्वया विभो ।
एवं पृष्टस्तदा गौर्या प्राह सर्वं सुराधिपः ।। ११ ।।
सर्वयज्ञफलैस्तुल्यं नाम्नामर्थप्रबोधनम् ।
मम देवि परं गुह्यं ब्रह्माद्या यद्विजानते । । १ २। ।
तत् प्रवक्ष्यामि ते देवि येन देवत्वमाप्यते ।
रुजः सर्वगतो८ यस्माद् द्रावयामि जगत्यहम् । ।१ ३ ।।
रोदनं हन्मि यस्माच्च रुद्रस्तस्मादहं प्रिये ।
संहरामि जगत् कृत्स्नमन्तकाले यतो ह्यहम् । ।१४।।
मृत्युहर्त्ता यतश्चापि हरस्तेन९ प्रकीर्त्तितः ।
पुरं शरीरमाख्यातं सर्वेषां प्राणिनामिह । । १ ५।।
सर्वप्राणिगतं यस्मात् तत्पुरं शयनं मम ।
तस्मात् पुरुष इत्येव मम नाम महर्द्धिमत् । । १ ६। ।
कदाचिन्नैव जातोहं न च मे जन्म यत्१० क्वचित् ।
अजस्ततोहमीशानि सर्वदैव११ प्रकीर्त्तितः । ।१७। ।
अभावं मयि गत्वा तु जगत् स्थावरजङ्गमम् ।
पुनर्भवति मत्तश्च भवस्तेन निरूपितः१२ । ।१ ८ ।।
महतामपि देवानामहमेव महान् यतः ।
न च मत्तो महानन्यो महादेवस्ततो ह्यहम् । । १९।।
पालयामि पशून् यस्मात् सृजामि च यदृच्छया ।

तेषाञ्च पतिरेवाहं तस्मात् पशुपतिः स्मृतः । । 8.166.२० । ।
ईश एवाहमन्येषां१३ न च मामीशते परे१४ ।
नयामि चेशतां भक्तानीशानस्तेन कीर्त्तितः ।।२ १ । ।
- - - -- - - - - - - - -
७ पूर्वं प्रणयलब्धा - क ख । ८ सर्वगत - ख. । ९ श्चापि हरस्तेन - क. । १० यः - क. । ११ सर्वदेवैः - क ख । १२ विरूपितः - क. ख. । १३ ईशमेवाहमन्येषां - क ख. । १४ परः - क. ख. ।
- - - -- - - - - - - - -


दिशो हि मम१५ वासांसि सर्वदिक्षु वसाम्यहम् ।
वासश्चाहं दिशां यस्माद् दिग्वासास्तेन संस्मृतः ।।२२।।
भूतानां शङ्करो१६ यस्मात् तेनाहं शङ्करः स्मृतः ।
लोकानां शिबकृद् यस्माच्छिवस्तस्मादहं स्मृतः ।।२३ । ।
नीलं येन ममाङ्गस्य१७ संरक्तं लोहितत्विषम्१८ ।
नीललोहित इत्येव तेनाहं परिकीर्तितः ।।२४।।
शूली शूलेन संप्रोक्तो लकुलेन१९ च लाकुली२० ।
रुद्रेति कीर्तिते देवि अग्निष्टोमफलं स्मृतम् । ।२ ५ । ।
हरेत्यभिहिते चापि गोसवस्य फलं लभेत् ।
भवेति कीर्तिते सद्यः सर्वपापैर्विमुच्यते ।।२६ ।।
पुरुषेति परं सौख्यमजेति च सलोकताम् ।
ईशानेति महैश्वर्यं महादेवेति चाक्षयम् । ।२७ ।।
दिग्वासेति परं मोक्षं शङ्करेति सुखं महत् ।
शिवेति शिवमत्यर्थं शूलीति परमं बलम् । ।२८।।
लाकुलीति२१ परांल्लोकान् कीर्तर्येल्लभते नरः ।
सर्वयज्ञफलानीह कीर्त्तयन्नीललोहितम् ।।२९। ।
लभते देवि मद्भक्तो मयि चावासमव्ययम् ।
एवं तत् कथितं व्यास नाम्नामर्थप्रबोधनम् । ।8.166.३ ० ।।
शूलिना२२ देवदेवेन२३ देव्याः प्रियहितेच्छया ।
किमन्यत् पृच्छसि ब्रह्मन् वद यावद् ब्रवीमि ते । ।३ १ । ।
व्यास उवाच
श्वेतजीवप्रदो रुद्र इति पूर्वं त्वया मुने ।
प्रोक्तं परमधर्मज्ञ तन्मे ब्रूहि समासतः ।। ३ २।।

प्रददौ कथमीशानस्तज्जीवं मुनये विभो२४।
किमर्थं क्व च योगेश कश्चासौ श्वेत उच्यते ।।३ ३ ।।

- - - -- - - - - - - - - -

१५ मम हि - क. । १६ शमकृद् - क. ख. । १७. स्या - क. । १८ लोविताद् विषं - क. । १९ लगुडेन - ख., नकुलेन (?) । २. लागुडीति - ख., नाकुलीति (?) । २१ लागुडीती - ख., नाकुलीति (?) । । २२ शूलिनो - ख. । २३ देवदेवस्य - ख. । २४ विभुः - ख. ।

- - - -- - - - - - - - - -



सनत्कुमार उवाच
शृणु वत्स यथा दत्तं पुनर्जन्म पिनाकिना ।
यमेन ह्रियमाणाय२५ श्वेताय विगतायुषे । ।३४। ।
आसीद् दर्भध्वजो नाम बृहस्पतिसमो मुनिः ।
सर्वविद्याविनीतात्मा यस्य पुत्रः कुशध्वजः ।। ३५। ।
बभूव सुमहातेजा विश्वामित्र इवापरः ।
प्रियस्तस्याभवत्पुत्रः श्वेतो नाम महाद्युतिः ।।३ ६। ।
तस्य जन्मप्रभृत्येव२६ कुशध्वजसुतस्य वै ।
छायेवानपगा भक्तिर्बभूव वृषभध्वजे । । ३७। ।
तिष्ठतो गच्छतश्चापि स्वपतस्तप्यतस्तथा२७ ।
सर्वभावेन देवेशं ध्यायन् तस्थौ महामुनिः । । ३८ ।।
अथ कालेन विप्रेन्द्र विपृथुर्नाम दानवः
वव्रे दुहितरं गत्वा श्वेतस्य पितरं बली ।।३९।।
न च तस्मै सुतां प्रादात् तामसौ सुरविद्विषे ।
स तेन निहतो रात्रौ बलाद् दर्भध्वजोपि च२८ ।।8.166.४० ।।
जामाता कांक्षितश्चासीत् तेन चक्रगदाधरः ।
विष्णुः परमधर्मात्मा दुहित्रा चास्य सुव्रत२९ । ।४१ । ।
तस्य तं दुहिता ज्ञात्वा हतं पितरमात्मनः ।
जगाम तपसे३० साध्वी परहेतोर्महाव्रता । । ८२ ।।
श्वेतोपि तत्ततो ज्ञात्वा वैराग्यं परमास्थितः ।
नर्मदातीरमासाद्य एकचित्तो जितेन्द्रियः ।।४३ । ।
रूद्रमेवार्पितावस्थ३१ स्तन्निष्ठस्तत्परायणः ।
तप्यमानस्तपो घोरं तस्थौ युक्तस्तपोधनः ।।४४

अथागात् सुमहान् कालस्तप्यतस्तस्य धीमतः ।
आयुर्यद्विहितं धात्रा तत्तस्य क्षयमभ्यगात् । ।४५। ।
- - -- - - - - - - - - -
२५ ह्रियते व्यास - क. ख. । २६ प्रभृत्यैव - क । २७ तिष्ठन् गच्छन्स्वपंश्चापि तप्यंश्चापि यथा तथा (?) ।
२८ मिथ - ख. । २९ सुव्रतः - क. ख. । ३० तपसा - ख. । ३१ रुद्रे सर्वोपितावस्थ - ख. ।
- - -- - - - - - - - - -

873
क्षीणायुषमथो ज्ञात्वा श्वेतं मृत्युविचेष्टितम् ।
सुतो विवस्वतो हृष्टः कालमृत्युपुरोगमान् ।।४६।।
किङ्करान् प्रेषयामास तमानेतुं द्विजोत्तमम् ।
तमथा३२ भ्येत्य ते दूताः स्थिताः श्वेतजिघांसया ४७। ।
तान् दृष्ट्वा स तदा श्वेतो यमदूतानवस्थितान ।
हाहेति मरणाद्भीतस्त्रासाद् दुःखपरिप्लुतः । ।४८। ।
अन्वचिन्तयदव्यग्रः परित्राणाय शङ्करम् ।
अथ चिन्तितमात्रस्तु गिरीन्द्रशिखरस्थितः३३ । ।४९ । ।
भक्तानुग्रहकृद्देवः श्वेतं वेद यमार्दितम् ।
तं तथा दुःखितं ज्ञात्वा भक्तं मृत्युवशं गतम् । ।8.166.५० । ।
शङ्करः प्रहसन् देवीमिदमाह सुरेश्वरः ।
श्वेतो नाम मुनिर्देवि मद्भक्तस्तपसैधितः३४ ।।५१ ।।
क्षीणायुरभवन्मूढो मृत्युपाशविमोहितः ।
व्यवस्थैषा पुरा सृष्टा ब्रह्मणा लोककर्तृणा । । ५२ । ।
प्राणिनामायुषो हानिः कालसंस्थानसंक्षये ।
ब्रह्मापि हि सृजँल्लोकान् मूढो भवति शैलजे । ।५३ । ।
मृत्युदुःखान्विताँल्लोकान् यस्मात्सृजति मोहितः ।
सोपि भक्तो ममात्यन्तं ब्रह्मा लोकपितामहः । । ५४।।
तस्य भक्तिविशेषाच्च गौरवाच्च गिरीन्द्रजे ।
अनुज्ञाता मयाप्येषा सृष्टिर्मृत्युसमन्विता ।।५५। ।
तथा तु स मुनिर्देवि मयि सर्वार्पितक्रियः ।
एकभक्तितया३५ तस्य दृढं प्रीतोस्मि पार्वति ।।५६। ।
त्राता३६ तस्य भविष्यामि जीवयिष्यामि तं मुनिम् ।
ततो भर्तुर्वचः३७ श्रुत्वा गिरिजा वाक्यमब्रवीत् । ।५७।।

एवं३८ कुरु महादेव भक्तानुग्रहमीप्सितम् ।
शरणं को भवेदन्यस्तस्य भक्तिमतो मुनेः३९ ।।५८।।

- - -- - - - - - - - - -

३२ तमथो - क । ३३ शिरसि स्थितः - ख. । ३४ तपसेधितः - क. ख. । ३५ एकभक्ततया - ख. । ३६ ततो - क. । ३७ भर्तृवचः - ख. । ३८ एतत् - क. । ३९ मुने - क. ।

- - -- - - - - - - - - -



एवमुक्तः स पार्वत्या देवदेवो कृषध्वजः ।
नन्दीश्वरपुरोगाँस्तान् गणेशान् गणपाधिपः । ।५९।।
शंकुकर्णञ्च गणपं तथान्यांश्च सहस्रशः ।
मुनेः श्वेतस्य रक्षार्थं प्रेषयामास शूलधृक् । ।8.166.६ ० ।।
महाबलास्ते गणनायकेन्द्रा आज्ञां गृहीत्वा परमेशवक्त्रात ।
तूर्ण ययुः श्वेतमुनेरुपान्तं४० दूतान् दिधक्षन्त इवान्तकस्य । ।६१ । ।
ते गत्वा४१ श्वेतमैक्षन्त यमदूतैरथादिर्तम् ।
मृगमेकमिवारण्ये व्याधैर्बहुभिरावृतम् । । ६२ । ।
ग्रीवायां कालपाशेन हस्तपादे४२ च यन्त्रितम् ।
मृत्युना स्वयमाकृष्टं४३ स्रवद्रुधिरचक्षुषा । ।६३ । ।
विकृतास्यैर्महादंष्ट्रैस्संरक्तश्मश्रुमूर्धजैः४४ ।
विद्युत्सदृशनेत्रैश्च लोहदण्डोग्रपाणिभिः ।
यमदूतैर्महाघोरैः क्षिप्यमाणं समन्ततः । ।६४। ।
दृष्ट्वा तथा तं मुनिमार्त्तमुच्चैः क्रोशन्तमीशेत्यसकृद् गणेन्द्रः ।
मुमोच पाशान्मुनिमाशु तस्मात् पाशात्पशूनामिव बन्धमीशः ।। ६५। ।
गच्छध्वं यमकिङ्करा मुनिमितस्त्यक्त्वा शरीरैर्दृढैः४५
र्भक्तो ह्येष सुरासुरेश्वरमजं शम्भुं जगत्कारणम् ।
यः स्रष्टा पवनाग्निशक्रमरुतां ब्रह्मादिभिर्वन्दित-
स्त्राता सोस्य वृषेन्द्रकेतुरजितो नैनं यमो द्रक्ष्यति । ।६६।।
ते दृष्ट्वा गणपान् दूताः कालमृत्युपुरस्सराः ।
भयान्मुक्त्वा मुनिं श्वेतमब्रुवन् दूरतः स्थिताः ।।६७।।
पूर्णः कालो मुनेरस्य क्षीणमायुर्गणेश्वराः ।
किमनेन विमुञ्चध्वं नयामैनं यमान्तिकम् । ।६८। ।
अथ नन्दीश्वरः प्राह क्रुद्धस्तान् प्रदहन्निव ।

अक्षता गच्छत क्षिप्रं कृपणा यमकिङ्कराः । ।६९। ।

- - - -- - - - - - - - - -

४० रूपान्तिकं - क, समीपम् (?) । ४१ गताः - क. । ४२ हस्तपादौ च - क., हस्तपादैश्च - ख. । ४३ ः ? माक्रुष्टं - क. । ४४ मूर्धजं - ख. । ४५ शरीरं दृढम् - क. ख. ।

- - - -- - - - - - - - - -

875

यावच्चैते४६ न कुप्यन्ति प्रमथेन्द्राः सुरोषणाः ।
मा वः सिंहा इवारण्ये वारणान्मदमोहितान्४७ ।
सकृदेव समाहत्य करिष्यन्ति गतायुषः । ।8.166.७० । ।
अथैवमुक्ता गणनायकेन नन्दीश्वरेणामितविक्रमेण ।
भीता ययुस्ते पितृराजदूता गत्वा च चक्रुः कथयां यमस्य ।।७१ ।।
तेषामुपश्रुत्य तदा वचांसि तीव्राणि नन्दीश्वरभाषितानि ।
आदित्यसूनुः प्रचुकोप मोहात् स्वयं प्रयातुं च मतिं चकार ।।७२। ।
अथाभ्ययात् क्रोधविरक्तनेत्रः सर्वैर्वृतो मृत्युपुरस्सरैस्तैः ।
विनिःश्वसन्नाग इव प्रचण्डो जगद्दिधक्षन्निव कृत्स्नमेकः । ।७२।।
दृष्टा मुनिं श्वेतमपेतमोहं वृतं गणेन्द्रैर्हरतुल्यरूपैः ।
मुञ्चध्वमेनं तरसेत्यवोचन्४८ नन्दीश्वराद्यान् ग्रहराजसूनुः । ।७४।।
कस्त्वं यम४९ श्वेतमुनिं विनेतुं भवस्य धन्यः५० प्रमथेशभक्तम् ।
संरक्ष्यमाणं स्वयमेव मूढं५१ गच्छाकृतात्मन्निति नन्द्युवाच । ।७५।।
अथ श्रुत्वा वचस्तस्य नन्दिनः परुषं महत् ।
यमः प्रोवाच संक्रुद्ध इदं सर्वगणाधिपम् ।।७६।।
गणेन्द्रा गतजीवोयं विप्रस्तिष्ठति मूढवत् ।
किमनेन विमुञ्चध्वं मा वृथा खेदमाप्स्यथ । ।७७। ।
रक्षितोपि चिरं ह्येष मामेव समुपैष्यति ।
कालेन परिपूर्णेन क्षीणायुरिह कश्चन ।।७८। ।
तपोधर्मसमायुक्तो विद्वानपि न जीवति ।
यदनेन कृतं कर्म धर्म्यं गर्हितमेव वा । ।७९। ।
सन्त्यज्य तदिमं५३ देहं प्राप्नोतु५४ गणपाधिपाः ।
ममायत्तमिदं५५ सर्वं भूतग्रामपरीक्षणम्५६ । ।8.166.८० । ।
पुण्यपापीयसोर्नित्थं कर्मणोः प्रविचारणम्५७ ।
तेनार्पयत मे क्षिप्रं श्वेतमेनं गतायुषम् । ।८१ । ।

- - - -- - - - - - - - - -

४६ यावदेते - ख. । ४७ वारणन्दर्पमोहितम् - ख. । ४८ तरसैत्यवोचन् - क. ख । ४९ यमः - क. । ५० धन्यं - क. ख. । ५१ मूढ - ख ५२ ..पेष्यते - क., .. पास्यति - ख । ५३ तमिमं - ख. । ५४ प्रासातु - ख. । ५५ मदायत्तमिदं (?) । ५६ भूतग्रामपीक्षणम् - ख., ... समीक्षणम् (?) । ५७ विप्रचारणम् - क. ।

- - - -- - - - - - - - - -

876

अथवैनं गृहीत्वेह सर्व एव गणेश्वराः ।

प्रयाम शूऽलिनोभ्यासं नियतं स विमोक्ष्यति । ।८२ । ।

पितृराजवचः श्रुत्वा नन्दीश्वरपुरोगमाः ।

एवमस्त्विवति तं प्राहुर्यमं क्रोधवशं गतम् । ८३ । ।

ततस्ते सहिताः सर्वे श्वेतश्च मुनिसत्तमः ।

जगन्नाथं हरं द्रष्टुमाजग्मुविन्ध्यपर्वतम् । ।८४।।

न्यवेदयद्यथावृत्तं नन्दी सर्वगणाधिपः५८ ।

प्रणम्य परया भक्त्या भवायामिततेजसे । ।८ ५ । ।

श्रुत्वा तु भगवान् वाक्यं नन्दिना संप्रभाषितम् ।

प्राह वैवस्वतं साक्षात् स्निग्धगम्भीरया गिरा । ।८६। ।

श्वेतस्यास्य परा भक्तिर्मयि प्रेतगणाधिप ।

अतः५९ क्षीणायुषोप्यस्य मृत्युर्न प्रभविष्यति । ।८७। ।

महता तपसा भक्त्या मयि भावितचेतसः६० ।

मत्प्रसादाज्जितो मृत्युः श्वेतेनानेन तापन । ।८८। ।

ममादेशात्त्वयाप्यस्य नैव कार्यः पराभवः ।

किन्न वेत्सि रवेः पुत्र मद्भक्ता नरपुङ्गवाः । ।८९। ।

न पश्यन्ति तवावासं६१ देहभेदेप्युपस्थिते ।

अस्य भक्तिविशेषेण परेण परितोषितः । ।8.166.९० ।।

अनेनैव शरीरेण अमरत्वं ददाम्यहम् ।

इति मत्वा विसन्देह६२स्त्वरा गच्छ स्वमालयम् । ।९ १ ।

इति देववचः श्रुत्वा प्रणम्य तपनात्मजः ।

परमार्थमविज्ञाय प्रोवाचेदं पिनाकिनम् । ।९ २ ।।

त्वयैव भगवन्नेषा स्थितिः सृष्टा पुरातनी ।

कर्मण्यस्मिन्नियुक्तोहं जन्ममृत्युविचारणे । । ९३ । ।

अधिकार६३ निवृत्तौ६४ हि शक्रस्यापि वृषध्वज ।

त्वयैव पवनः सृष्टो ह्यहं६५ चैव सुरेश्वर । ।९४। ।

- - - -- - - - - - - - - -

५८ गणाधिपम् - क । ५९ अथ - क. । ६० भावितचेतसि - क., चेतसा (?) । ६१ यमावासं क.। ६२ मत्वापि सन्देह क। ६३ अधिकरो ( ?) । ६४ निर्वृत्तौ - क-, नियुक्तौ ख, निवृतौ(?), निवृत्तो (?)। ६५ अहं क.।

- - - -- - - - - - - - - -

877

न केनचिदयं६६ पन्थाः कालमृत्युक्षयात्मकः६७ ।

व्यभिचीर्णो महादेव कालातिक्रमधारणात्६८ । । ९५ । ।

एवमेतां परां सृष्टिं विचिन्त्य विबुधेश्वर ।

मोक्तुमर्हसि विप्राग्र्यं काले पूर्णे६९ गतायुषम् । । ९६ । ।

एवं स्थितिरभिन्ना७० स्यादहं च न विमानितः ।

मृत्युश्चान्तःशरीरस्थः७१ श्वेतस्तद्वरमाप्स्यति । । ९७ । ।

इत्युक्तं७२ प्रेतराजेन श्रुत्वा वाक्यं वृषध्वजः ।

दिप्ताङ्गार७३ इवैकस्मात्७४ संहार इव पावकः । । ९८ । ।

जगत्क्षोभ इवाकस्मादुत्प्रेक्ष्यः७५ समपद्यत ।

नन्दीशस्य ततः स्कन्धमुपाश्रित्य पिनाकधृक् । । ९९ । ।

इदं प्राह वचो व्यास तं दृष्ट्वा यममास्थितम् ।

अहो दिनकृतः सूनोरस्य शाठ्यप्रभाषितम्७६ । । 8.166.१०० । ।

कार्कश्यं वचसः पश्य प्रत्युत्तरसमीरितम् ।

परित्रातो मया श्वेतो यम गच्छेति भाषितः७७ । । १०१ । ।

मुञ्च श्वेतमिति प्राह मामेव गतचेतनः ।

किन्त्वयं मूढ एव स्यादुत पौरुषगर्वितः । । १०२ । ।

गच्छेति को मयाज्ञप्ते७८ स्थातुमत्र भवत्यलम् ।

प्रत्युत्तरं पुनः प्राह मामेव पुरतः स्थितः७९ । । १०३ । ।

एवं स भगवानुक्त्वा जगत्प्रभवकारणः ।

तिर्यग् दृष्टि समाधाय सरोषं यममैक्षत । । १०४ । ।

स तेन चक्षुषा दग्धो निपपात महीतले ।

महावृक्ष इवारण्ये महावायुसमीरितः ।

भस्मसात्त्वं८० ययौ तूर्णं प्रजहास ततो भवः । । १०५ । ।

- - - -- - - - - - - - - -

६६.. दियं - क ख. । ६७ क्षयात्मिका - क । ६८ वारणात् (?) । ६९ पूर्णं - ख । ७०. रभिज्ञा - क. ख.। ७१ श्चान्तशरीरस्यः - क., श्चान्यशरीरस्थ - ख, स्थ - क ख. । ७२ इत्युक्तः - ख. । ७३ दीप्तांश?व - क. ख. । ७४ इवाकस्मात् (?) । ७५ दुष्प्रेक्ष्य (?) । ७६ सान्त्वप्रभाषितम् (?) । ७७ भाषितं - ख । ७८ ज्ञप्तः (?) । ७९ स्थितं - क ख. । ८० भम्मसाच्च - क ।

- - - -- - - - - - - - -



श्वेतं ततस्तं प्रणतं मुनिं तु सगद्गदं मृत्युभयाद्विषण्णम् ।
पस्पर्श मूर्ध्नि त्रिपुरासुरारिर्वचो न भेतव्यमिति ब्रुवाणः ।।१ ० ६। ।
प्रादाद्वरं शूलधरश्च८१ तस्मै मृत्युर्न ते विप्र भविष्यतीति ।
ददौ च नित्यं गणपत्वमेव प्रोवाच चैनं परितुष्ट ईशः । । १ ०७।।
क्रुद्धश्च यस्मादहमर्कसूनोरस्मिन् गिरौ पुण्यतमस्ततोयम् ।
वत्स्यामि चेहाचलराजमूर्ध्नि क्रोधेश्वरस्तेन भविष्यतीह । । १ ०८। ।
विन्ध्यप्रदेशेमरसिद्धजुष्टे क्रोधेश्वरे पुण्यगिरौ पुमांसः ।
त्यक्ष्यन्ति ये देहमपेतमोहास्तेषां गतिः श्वेतसमा स्मृता मे ।।१ ०९।।
द्रक्ष्यन्ति श्वेतेश्वरमत्र ये च ते चापि दिव्या गणपा ममैव ।
तवैव८२ नाम्ना च नदी सुपुण्या८३ श्वेतस्य गङ्गेति भविष्यतीयम्८४ ।।8.166.१ १ ०।।
सन्तर्पणान्नैकविधं८५ पितॄणां स्वर्लोकदं स्थानमतीव यस्याम्८६ ।
इत्युक्तमात्रे जगदीश्वरेण श्वेतो मुनिर्दिव्यवपुर्बभूव । ।१ ११ ।।
नन्दीशचण्डेशसमानधर्मा प्रणम्य देवं पुरतः स्थितोभूत् ।
दृष्ट्वाथ सूनुं विगतासुमर्कः शोकाभितप्तस्त्वरितो जवेन ।। ११२ ।।
ब्रह्मादिभिः शक्रपुरस्सरैस्तैः८७ सार्द्धं जगत्कारणमाजगाम ।
विज्ञापयामासुरथामरास्ते आदित्यसूनु८८ प्रतिजीवहेतोः ।। ११३ । ।
मूढो यतोयं जगदीश्वरेश कृच्छ्रं तत८९स्तीव्रमिदं प्रयातः ।
प्रसीद देवेश कुरु प्रसादं जीवत्वयं प्रेतगणाधिराजः । १ १४। ।
यथापुरा चैष भवत्विदानीमार्त्तिं हि९० नश्छिन्धि सुरासुरेश ।
विज्ञप्तिमेवं त्रिदिवालयानां ब्रह्मादिशक्रार्कपुरस्सराणाम् ।।१ १ ५। ।
श्रुत्वा यमं तं करुणायमान उत्तिष्ठ पुत्रेति विभुर्बभाषे ।
दिव्यं ततः पूर्ववदद्रिकल्पं विभ्रत् स देहं ग्रहराजसूनुः ।। ११६ ।।
प्रोत्थाय तूर्णं भगवन्तमाशु ननाम पद्भ्यां सहसा गृहीत्वा ।
ब्रह्मादयस्ते च सुरेन्द्रसंघा दृष्ट्वा९१ ततस्तान् प्रणतानवोचत् । ।११७।।

- - - -- - - - - - - - -

८१ शूलभृतश्च - क. । ८२ तथैव - ख. । ८३ नदीषु पुण्या - ख. । ८४ भविष्यतीह - क. । ८५ सन्तर्पणं नैकविधं - क., .. णेनैकविधिं - ख । ८६ यत्स्यात् (?) । ८७ शक्रादिभिर्ब्रह्मपुरस्सरैस्तैः (?), पुरस्सरैश्च - ख. । ८८.. .सूनुं - क. । ८९ जगत् - क. । ९० ह - क । ९१ दृष्टा - क.।

- - - -- - - - - - - - - -

879

ब्रह्मार्कविष्णुज्वलनादिनाथः कर्ता सुराणां सुरनाथ एकः ।
सुरेश्वरः सोमजटार्धमौलिर्देवाः प्रयात स्वनिकेतनानि । । ११८ ।।
विज्ञप्तिरेषा सफला कृता वो मैवं९२ कृथास्त्वं पुनरात्ममोहम्९३ ।
प्रेतेश्वरं चेति वचोभ्युवाच जग्मुस्ततो देवगणाः प्रणम्य । । ११९ ।।
प्रगृह्य सौरिं पितृराजमाशु श्वेतोपि तस्थौ मरणाद्विहीनः ।
नन्दी यथा निर्वृतदुःखभाव९४स्तथैव विप्रः परमेशभक्तः९५ ।। 8.166.१२० ।।
इति कथितमिदं ते श्वेतमृत्युप्रणाशं
हिमगिरितनयाया भर्तुरीशस्य शम्भोः ।
फलमवितथभक्ति९६ प्राप्तिसंपद्विशेषं
जगति शरणमेकं तं शरण्यं नमस्ये । ।१ २१ । ।
इति स्कन्दपुराणे श्वेतवरप्रदाने षट्षष्ट्युत्तरशततमोध्यायः९७

व्यास उवाच
यत् प्रोक्तं भवता गुह्यं माहात्म्यमिदमुत्तमम् ।
नान्यस्यैतद् भवेन्मुक्त्वा जगदार्त्तिहरं हरम् ।।१ ।।
पुण्यान्यायतनानीह देदेवस्य शूलिनः
यानि दृष्ट्वा न शोचन्ति जन्ममृत्यू महामुने१ । ।२।।
तानि मे ब्रूहि धर्मज्ञ यद्यनुग्राह्यता मयि ।
एवं कृतार्थमात्मानं मुच्ये यन्मुनिसत्तम । ।३ । ।
व्यासस्य वचनं श्रुत्वा ब्रह्मपुत्रोब्रवीदिदम् ।
साधु व्यास महाबुद्धे भक्तिमानसि शङ्करे । ।४। ।

- - - -- - - - - - - - - -

९२ यै... - क., मे... - ख- । ९३ ...मोहात् - ख. । ९४ निर्हृतदुःखभाव (?) । ९५ ...भक्त्या - ख. । ९६ पुण्य (?) । ९७ २१४ - ख ।

१ जन्ममृत्युभयान्नराः - क. ।

- - - -- - - - - - - - - -

स्थानानि शूलिनो यस्त्वं पुण्यानि श्रोतुमिच्छसि ।
कृतार्थस्त्वं महायोग मुक्तः संसारबन्धनैः । ।५। ।
शृणु वक्ष्यामि ते वत्स गुह्यमेतत् परं हि मे ।
स्थानानुवर्णनं२ शम्भोर्मृत्युजन्मभयापहम् ।। ६। ।
आदित्यबन्धनं नाम कूटं विन्ध्यगिरेः शुभम् ।
स्थापितं तत्र लिङ्गं तु तपनेन महाप्रभम् ।।७ ।।
तद् दृष्ट्वा मनुजो व्यास जन्मप्रति न शोचति ।
हेमसोमोद्भवं नाम कूटं हिमगिरेः शुभम् । ।८। ।
पुण्यमायतनं तत्र च्यवनेनाभिनिर्मितम् ।
ये तदायतनं शम्भोरभिगच्छन्ति मानवाः । ।९। ।
न च्यवन्ति पुनः स्वर्गात् प्रलयेपि समागते ।
उदये तु गिरौ पुण्ये सिद्धसंघैर्निषेविते । । 8.167.१० । ।
सत्यो नाम ह्रदः पुण्यो हेमपद्मसमावृतः ।
यत्र ते मुनयः सत्याः सत्यानलरविप्रभाः । । ११ । ।
धारयन्ति महात्मान आशीर्भिस्सरथं४ रविम् ।
पुण्यमायतनं तत्र स्थापितं तैः पिनाकिनः५ । । १ २। ।
अमरैरर्चितं व्यास सिद्धविद्याधरैर्वृतम् ।
यैस्तदायतनं दृष्टं भवभक्तैर्वियद्गमैः६ ।। १३ ।।
ते भवस्य प्रिया भूत्वा भवन्ति प्रमथेश्वराः ।
उशीरवीजः शैलेन्द्र७स्तत्राश्रमपदं महत् । । १४। ।
आगस्त्यस्य तृणाङ्गस्य देवदानवपूजितम् ।
महानीलमयं लिङ्गं तस्मिन् व्यास महोच्छ्रयम् ।। १ ५।।
तस्मिन्नायतने रुद्रं तृणाङ्गः स महानृषिः ।
दक्षिणामूर्त्तिमास्थाय८ स्तौति नित्यं कपर्दिनम् ।
दिवौकसस्तमभ्यर्च्य भवन्ति गणपाधिपाः ।। १६ ।।

- - - -- - - - - - - - -

२ स्थानानां वर्णनं - ख. । ३ तं - क. ख । ४ माशोर्मिस्सरथ - ख. । ५ पिनाकिनं - क ख । ६ विपद्गतैः - ख. । ७ उशीरवीजशैलेन्द्र - ख. । ८ दक्षिणां मूर्तिमास्थाय - क. ख. ।

- - - -- - - - - - - - -

उत्तरेण निरालोके रविचन्द्रविवर्जिते ।
मेरुशृङ्गे महोत्सेधं सौवर्णं स्थापितं महत् । ।१७। ।
लिङ्गं भगवतो व्यास यत्रास्ते शूलधृक् स्वयम् ।
उत्तानपादपुत्रेण भवभक्तिपरात्मना । ।१८। ।
नित्यमभ्यर्चितं लिङ्गं ध्रुवेणास्ते९ महामुने ।
देवानामप्यगम्यं तद् ध्रुवं मुक्त्वा परं वरम् । । १ ९।।
जैगीषव्येण मुनिना अस्ते पर्वतराजनि ।
स्थापितं सुमहल्लिङ्गं देवदेवस्य शूलिनः ।। 8.167.२० ।।
तद्१० दृष्ट्वा मानवो व्यास रुद्रलोकमवाप्नुयात् ।
मोक्षविद्यास्वभिज्ञाश्च सांख्ययोगविशारदाः ।।२१ ।।
भवन्ति मनुजा दृष्ट्वा तल्लिङ्गं परमाद्भुतम् ।
नन्दने देवराजेन स्थापितं लिङ्गमुत्तमम् । ।२२।।
तपनीयमयं शुभ्रं देवता यदुपासते ।
तद् दृष्ट्वा देवता लिङ्गं११ प्राप्नुवन्ति परं पदम् । ।२ ३ । ।
क्षीरोदे सागरे दिव्यं१२ बालखिल्यैः१३ स्वयं कृतम् ।
महदायतनं पुण्यं सिद्धकिन्नरसेवितम् । ।२४। ।
तस्मिँश्चन्द्रप्रभं लिङ्गं स्फाटिकं मणिरञ्जितम् ।
बालखिल्यास्तमभ्यर्च्य जग्मुरीशसलोकताम्१४ ।। २ ५।।
सौवर्णं यक्षराजेन स्थापितं गन्धमादने ।
लिङ्गं भगवतो दिव्यं यत् कुबेरेशनामकम्१५ । ।२६ ।।
मन्दारकुसुमैर्दिव्यैर्हेमपद्मैश्च भक्तितः ।
तमभ्यर्च्य महेशानं कुबेरो निर्वृतोभवत् । ।२७। ।
यैस्तदायतनं दृष्टं कुबेरस्य सुरासुरैः ।
सर्वयज्ञफलं तेभ्यो ददाति वृषभध्वजः । ।२८ । ।
एभ्यः पुण्यतमानीह यानि गम्यानि मानुषैः ।
शृणु तानि महाबुद्धे स्थानानि शशिमौलिनः । ।२९। ।

- - - -- - - - - - - - -

९ ध्रुवमस्तौ - ख. । १० तं - क. ख । ११ देवतास्ते तु - क ख. । १२ दिव्ये - क. ख. । १३ बालिखिल्यैः - क. ख. । १४ ...रीशस्य लोकताम् - क. । १५ कुबेरो ननाम ह( म्) - क. ख. ।

- - - -- - - - - - - - -

सर्वपर्वतराजस्य शृङ्गे हिमवतः शुभे ।

महालयमिति ख्यातं स्थानमाद्यं स्वयम्भुवः । ।8.167.३ ० ।।

यत्र सर्वामरा व्यास चतुर्वक्त्रपुरस्सराः ।

संसिद्धा मुनयश्चैव ये च योगीश्वरा भुवि । ।३ १ । ।

समभ्यर्च्य हरं१६ भक्त्या तदवाप्ताः परं पदम् ।

यत्र साक्षान्महादेवो न्यस्तवान् पदमात्मनः ।। ३ २।।

यं प्रणम्य नराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ।

अभिगम्य तमीशानं महालयनिवासिनम् ।। ३३ ।।

देहभेदं समासाद्य यत्र तत्र यथा तथा ।

न पुनर्जायते मर्त्यो यातः१७ सिद्धिमनुत्तमाम् । ।३४।।

न तं पश्यन्त्यधर्मज्ञा१८ येपि पापकृतो१९ नराः ।

महागणपतिस्तत्र द्वारसंस्थो महाबलः ।। ३ ५।।

स तेषां गमनं हन्ति ये नराः पापकारिणः ।

योगिनो यत्र देवाश्च सिद्धाश्च परमर्षयः२० । ।३ ६। ।

तं२१ प्रणम्य ययुः सिद्धिं पुण्यं पशुपतेः पदम् ।

तस्य संकल्पनादेव द्रक्ष्यामीति महालयम् ।। ३७। ।

कर्मभिर्मुच्यते जन्तुर्महापातकसंज्ञितैः२२ ।

महालयं महत्क्षेत्रं मोक्षसिद्धिप्रदं शुभम्२३ ।।३८। ।

कुलान्युभयतः२४ सप्त दृष्टत्वा त्रायति मानवः ।

ततः पुण्यतमं व्यास केदारं नाम नामतः ।।३९। ।

परं धाम वृषाङ्कस्य तस्यैवोत्तरतः शुभम्२५ ।

स्वयं किल हरो देवस्तस्मिन्नचलसत्तमे । ।8.167.४० । ।

जटाभाराज्जलं पुण्यं मुमोच - - - - - ५ ।

- - - दभवत्तत्र हरमौलिविनिःसृतम् ।।४१ ।।

- - - -- - - - - - - - -

१६ महद् - ख. । १७ जन्तुर्यातः - ख । १८ धर्मिज्ञा - क. । १९ महापापकृतो - ख. । २० परमर्षभ - क- । २१ तत् - ख. । २२ संज्ञितम् - क. । २३ विभो - ख. । २४ कुलानुभयतः - क. ख. । २५ शुचिम् - ख. । २६ इतः पर पत्रमेकं खण्डितं ख. पुस्तके ।

- - - -- - - - - - - - -

नरास्तदमृतप्रख्यं ये पिबन्ति जलं शुभम् ।
ते भवन्ति गणा व्यास कुष्माण्डा रुद्रवल्लभा । ।४२ ।।
महारूपा महात्मनो नन्दिनोप्यधिकप्रभाः ।
केदारवासिनं दृष्टवा देवदेवं जगत्पतिम । ।४३ । ।
- - - - - - -- -- - ।
ब्रह्मा शक्रस्तथा विष्णुः सोमो यक्षगणाधिपः ।।४४। ।
अर्चयन्ति स्थितं तत्र भक्तितः परमेश्वरम् ।
केदारसलिलं पीतं यैर्नरैः सुमहात्मभिः ।।४५। ।
कथं शोचन्ति ते व्यास प्राप्तं किन्नु न तैः सुखम् ।
केदारे हिमवन्महीध्रशिखरे यत्तत्पयः प्रस्रुतं
मूर्ध्नः सोममहेन्द्रविष्णुमरुतां स्रष्टुर्विभोः शूलिनः ।
पातुं यन्न लभन्त्यधर्मरुचयः शैवं विनानुग्रहं
तत्पीत्वा भवबन्धनप्रतिभयान्मुक्ता भवेयुः प्रजाः । ।४६।।
मध्यमेश्वरमत्रैव स्थानमाद्यमुमापतेः ।
गत्वा२७ तमपि देवेशं गाणपत्यमवाप्नुयात् । ।४७।।
तत्रापि स्वयमेवेशः सदा सन्निहितो मुने ।
अभिगम्य तमीशानं न शोचेन्मरणं प्रतिं ।।४८। ।
त्रयाणामपि लोकानां प्रदेशे हिमवद्गिरेः ।
एष श्रेष्ठतमो व्यास सर्वसिद्धिप्रदः शुभः ।।४९।।
अस्याभिगमनादेव सर्वयज्ञफलं स्मृतम् ।
विपन्नस्य प्रमादाद्वा गाणपत्या गतिर्वरा । ।8.167.५० ।।
नातः पुण्यतमं किञ्चित् सर्वलोकेषु विद्यते ।
त्रैलोक्ये चक्रवर्त्तित्वमस्मिन् वा मरणं गिरौ । ।५१ ।।
चक्रवर्त्तिपदात्तस्मादिह मृत्युर्विशिष्यते२८ ।
याति सायुज्यतां शम्भोः परमैश्वर्यसंयुतः२९ ।।५२ । ।
- - - -- - - - - - - - -
२७ दृष्ट्वा (?) । २८ ...र्विशेष्यते - क. । २९ संयुतं - क ।
- - - -- - - - - - - - -


गिराविह मृतो जन्तुः किन्ततः परमं पदम् ।
महद्धिमवतस्त्वन्यत् कूटं सिद्धनिषेवितम् ।।५३ ।।

यत्र देवी तपस्तेपे गौरवर्णसमीप्सया ।
गौरीशिखरमित्येव त्रिषु लोकेषु विश्रुतम् ।।५४। ।
कुचकुण्ड इति ख्याते तीर्थे यत्रोमया कृते ।
तद् गौरीशिखरं पुण्यं येभिगच्छन्ति मानवाः । ।४५।।
अश्वमेधफलं प्राप्य ते यान्ति परमां गतिम् ।
ऋषभं शृङ्गमपरं वज्रस्फटिकसन्निभम् । ।४६।।
यत्र नन्दी तपस्तेपे वरञ्चावाप शङ्करात् ।
ऋषभं प्राप्य तत्कूटं स्थानं पुण्यमुमापतेः । ।५७। ।
दृष्ट्वा पापविनिर्मुक्तो रुद्रलोकमवाप्नुते ।
अन्यद्धिमगिरेः कूटं हेमकूटसमप्रभम् ।।५८। ।
यत्र भस्त्रेश्वरं नाम रुद्रस्यायतनं शुभम् ।
रुद्रस्तस्मिन् गिरौ देवो भस्त्रेश्वर इति स्मृतः । ५९। ।
तं नमस्य महादेवं किन्नरोरगचारणाः ।
मृत्युभीताश्च पुरुषा जन्मदुःखैस्तथार्दिताः । । 8.167.६० ।।
तदायतनमासाद्य कामानापुर्यथेप्सितान्३० ।
तं दृष्ट्वा मनुजो व्यास राजसूयफलं लभेत् ।।६१ । ।
गङ्गाद्वारे शुभद्वारे महापुण्ये महात्मना ।
दक्षेण स्थापितं लिङ्गं भक्तिहेतोः कपर्दिनः ।।६२। ।
वृक्षाः कनखला नाम यत्रासन् कनकात्मकाः ।
मानुषाणामशीलत्वात् संवृक्णा३१ दारवो३२ बभुः ।।६३ ।।
विश्वात्मा यत्र विश्वेशः शम्भुरम्बिकया सह ।
बहुरूपेश्वरो नाम्ना नैकप्राणिवरप्रदः । ।६४। ।
मानवा यन्न पश्यन्ति जन्म चेष(?) मुमुक्षवः ।
वाजिमेधं दशगुणं यं दृष्टवा प्राप्नुते नरः । ।६५। ।

- - - -- - - - - - - - - -

३० कामानाप्नुर्यथेप्सितानु - क. । ३१ संवृत्ता - क. । ३२ दारवा - क. ख, ।

- - - -- - - - - - - - - -



यं देवविद्याधरसिद्धसंघा गन्धर्वयक्षोरगदानवाश्च ।
दृष्ट्वेश्वरं नीलपयोदकण्ठं संसारपङ्के न पुनः पतन्ति । ६६।।
जप्येश्वरमिति ख्यातमन्यदायतनं विभोः३३ ।

यत्र जप्यं पुरा कृत्वा लिङ्गं स्थापितवान् द्विजः ।।६७।।

जप्येश्वरं तदासाद्य३४ प्राणाँस्त्यक्ष्यन्ति ये नराः ।

ते जन्ममरणान्मुक्ता वत्स्यन्ति शिवसद्मनि ।। ६८।।

अन्यदायतनं व्यास शशिबिम्बार्धमौलिनः ।

महाभैरव इत्येव ख्यातं३५ जगति यन्मुने ।। ६९।।

यत्र शूलधरो देवः स्वयमेव वृषध्वजः ।

चकार भैरवं रूपं नन्द्युमागणभीषणम् ।।8.167.७० ।।

यद् दृष्टवा३६ हिमवत्पुत्री बभूव भयविह्वला ।

क्रीडाहेतोर्भवो यत्र त्रासयित्वा रिरीन्द्रजाम् ।।७१ ।।

सौम्यरूपोभवद् भूयः सान्त्वयामास शैलजाम् ।

महाभैरव इत्येव तदायतनमुच्यते ।।७२ ।।

भैरवेश्वरमागम्य यः पश्येत पिनाकिनम् ।

मरणं जन्म च३७ व्यास नासौ पुनरवाप्नुयात् ।।७३ ।।

यदेवाश्रमिणां पुण्यं तथेशव्रतचारिणाम् ।

तत्फलं भैरवं दृष्ट्वा प्राप्नोति नरपुङ्गवः३८ ।।७४।।

कुम्भकारेश्वरं३९ चैव तथैवोत्कुटुकेश्वरम्४० ।

छगलण्डेश्वरं४१ चैव महाभैरवजं स्थलम्४२ ।।७५।।

दृष्टैरेभिस्त्रिभिः स्थानैस्त्रिलोकाधिपतिर्भवेत् ।

रुद्रकोटीति४३ चाप्यन्यच्छिवायतनमुच्यते ।।७६।।

रुद्रकोटीत्रयं जप्त्वा तत्र नन्दी वरोत्तमान् ।

अवाप शङ्करात् व्यास गणेशत्वं तथोत्तमम् ।।७७।।

- - - -- - - - - - - - -

३३ विभो - क । ३४ तमासाद्य - क । ३५ ख्यातिं - क । ३६ यन्दृष्ट्वा - क. ३७ वा - क । ३८ भगपुङ्गवः (?) - क । ३९ कुम्भकारेश्वरे - ख. । ४० ..कुटुकेश्वर. - क, ... कुटुकेश्वरे (?) । ४१ छगलण्डश्वरे - क,.. रं - ख. । ४२ फलम् - क, । ४३.. भि - क. ।

- - - -- - - - - - - - -

886

यैस्तदायतनं दृष्टं ते यान्ति परमां गतिम् ।

देवदारुवने चापि भवस्यायतनं वरम् ।।७८।।

देवदारुवनैश्छन्नं सरलैश्च सुगन्धिभिः ।

सदा संसेवितं तद्धि गन्धर्वोरगकिन्नरैः ।।७९ ।।

यत्र वैखानसा विप्राः शिवभक्तिपरायणाः ।
भास्करानलसंकाशा निवसन्ति तपोधनाः । ।8.167.८० ।।
भिक्षाहेतोर्वनं तत्तु४४ प्राविशत् किल शूलधृक् ।
स दृष्टस्तत्र४५ देवेशो मुनिभिः स्तब्धमेहनः ।।८१ ।।
ईर्ष्यया मुनिभिर्लिङ्गं तस्य देवस्य तन्महत् ।
विमूढैः पातितं व्यास देवदारुवनाश्रमे ।।८२। ।
तस्मिन् निपतिते४६ लिङ्गे लिङ्गहीनमभूज्जगत् ।
स्थावरं जङ्गमं चैव बभौ सर्वं नपुंसकम् । ।८ ३ ।।
ब्रह्मादयस्ततो देवास्ते च सिद्धा मुमुक्षवः ।
ज्ञात्वा शङ्करजं सर्वं तदपायं सुदारुणम् ।। ८४। ।
संस्तुत्य विविधैः स्तोत्रैः शङ्करं पर्यतोषयन् ।
ततस्तदभवल्लिङ्गं यथापूर्वं पिनाकिनः । ।८५।।
जगतश्च ततः४७ पुंस्त्वं तत्क्षणात् समपद्यत ।
तत्र तैः स्थापितं लिङ्गं परमेशस्य भक्तितः । ।८६।।
तद् दृष्टवा४८ वाजिमेधानां दशानां प्राप्नुते फलम् ।
एवं४९ दारुवनं५० पुण्यमीशस्यास्ते महामुने५१ ।।८७।।
अभिगम्य नराः क्षिप्रं मुच्यन्ते सर्वपातकैः ।
दधीचेन महद्दिव्यं पुण्यमायतनं कृतम् । ।८८।।
स्थानेश्वरमिति ख्यातं त्रिषु लोकेषु५२ विश्रुतम् ।
नरः स्थानेश्वरं प्राप्य यस्त्यजेदात्मनस्तनुम् ।।८९।।
- - - -- - - - - - - - -
४४ तत्र - क. । ४५ अदृष्टस्तत्र - क, संदृष्टस्तत्र(?) । ४६ हि पतिते (?) । ४७ पुनः - ख । ४८ तन्दृष्ट्वा - क ख, । ४९ देव - ख. । ५० दारुवणं - क । ५१ स - क, .. मीशस्य सुमहामुने - ख., महात्मनः - ख. । ५२ लोकेषु त्रिषु - ख. ।
- - - -- - - - - - - - -



योगैश्वर्यमनुप्राप्य स्वर्गलोके स मोदते५३ ।
तक्षकेन भुजङ्गेन दृढभक्तेन५४ शङ्करे५५ । ।8.167.९० ।।
तक्षकेश्वरमित्येवं स्थापितं जाह्नवीतटे ।
देवदेवस्य रुद्रस्य यत्र सान्निध्यमुत्तमम् ।।९१ । ।
तन्दृष्टत्वा पुरुषो देवमश्वमेधफलं लभेत् ।

अगस्त्येन कृतं चान्यत् पुण्यमायतनं महत् । ।९२ ।।
आम्नातेश्वरमित्येव ख्यातं जगति सुव्रत ।
दृष्ट्वा परमया भक्त्या पुरुषस्तं शुचिव्रतः । ।९३।।
देहभेदमनुप्राप्य शर्वलोकमवाप्नुयात् ।
गिरौ कालञ्जरे लिङ्गं दृष्ट्वा स्थानमुमापतेः । । ९४। ।
अश्वमेधफलं प्राप्य रुद्रलोकमवाप्नुयात् ।
पुष्पभद्रमिति ख्यातं विन्ध्यप्रस्थे द्रुमावृतम् । ।९५।।
भवस्यायतनं पुण्यं देवगन्धर्वसेवितम् ।
यत्तद्रावणपुत्रेण मेघनादेन रक्षसा ।
स्थापितं तोषयानेन सर्वभूतपतिं भवम् । ।९६। ।
यत्र मन्दोदरीपुत्रः स्थाणुना शशिमौलिना ।
मायारथप्रदानेन कृतः प्राप्तमनोरथः । ।९७।।
तद,५६ दृष्टवा तत्र गत्वा५७ च प्रणम्य च जगत्पतिम्५८ ।
पुरुषाः स्वर्गमायान्ति दिव्ययोगसमन्विताः ।।९८। ।
अन्ध्रेष्वायतनं चान्यच्छर्वस्य परमात्मनः ।
नाम्ना चित्ररथं नाम योगसिद्धिवरप्रदम् । ।९९। ।
त्रिपुरस्य वधे यत्र रथो देवस्य धीमतः ।
अमरैश्चित्रितो५९ व्यास सोमादित्ययमादिभिः ।। 8.167.१०० ।।
सम्यगिष्टे तु६० यत् प्रोक्तमश्वमेधे फलं६१ बुधैः ।
तच्चित्ररथमासाद्य फलं प्राप्नोति६२ मानवः ।।१ ०१ । ।

- - - -- - - - - - - - -

५३ मोदति - ख. । ५४ दृढ भक्तेन - क. । ५५ शङ्कर - क. ख. । ५६ तं - क. । ५७ चाभिगत्वा - ख. । ५८ जगतः पतिम् - ख. । ५९ ...श्चिन्तितो - ख. । ६० सम्यगिष्टेषु - ख. । ६१. अश्वमेधफलं - क. । ६२ लभति - क. ।

- - - -- - - - - - - - -

888

अन्यदुक्तरथं नाम भवस्यायतनं शुभम् ।
सुरकिन्नरगन्धर्वैः सदा संसेवितं शुभम् । । १०२ । ।
तत्र श्रीपर्वतो६३ नाम पर्वतः श्रीनिकेतनः ।
सिद्धामरशताकीर्ण्णं सिद्धिक्षेत्रं६४ तदुत्तमम् ।। १०३ ।।
शूलिनो यत्र लिङ्गानां पुण्यानां वरदायिनाम् ।

सहस्रं स्थापितं व्यास शिलादेन महात्मना । ।१ ०४।।
ये पश्यन्ति तमीशानं श्रीपर्वतनिवासिनम् । ।
जन्ममृत्युभयं तेषां नास्ति पुंसां कदाचन ।। १० ५। ।
अनेनैव शरीरेण तस्मिन् क्षेत्रे भवात्मके ।
योगाभ्यासपरा विप्राः सिद्धिं यान्ति यथेप्सिताम् ।। १०६ । ।
मनसाप्यभिगच्छन्ति ये नराः श्रीगिरिं मुने ।
न ते यान्ति यमावासं मृत्यावपि समागते ।। १०७ ।।
ततश्चोत्तरगोकर्णं हरलिङ्गाङ्किताश्रमम्६६ ।
तप्तं यत्र तपस्तीव्रं राक्षसैः पिशिताशनैः । ।१ ०८। ।
रावणाद्यैर्महाभागैर्लब्धश्च६७ वर ईप्सितः६८ ।
पुरा यत्र तपः कृत्वा प्रसाद्य च पिनाकिनम् ।। १ ०९। ।
त्रैलोक्ये चक्रवर्तित्वं रावणस्समवाप्तवान् ।
अश्वमेधं दशगुणं तद्६९ दृष्ट्वा लभते नरः । । 8.167.११० । ।
मृतश्च रुद्रसायुज्यं गच्छत्यत्र न ७० संशयः ।
ततो दक्षिणगोकर्णं स्थानं पुण्यं पिनाकिनः ।।१ ११ ।।
स्पृक्कया जातया यत्र७१ लङ्कामलयसानुषु ।
अर्च्यते भगवान्देवः सर्वामरवरेश्वरः । । ११२ । ।
एको७२ राक्षसशार्दूलो यत्राद्यापि विभीषणः ।
समभ्यर्च्यामरेशानं भुंक्ते राज्यमशङ्कितः७३ ।। ११३ ।।

- - - -- - - - - - - - -

६३ श्रीपर्वतं - क. । ६४ सिद्धक्षेत्रं - ख. । ६५ भवात्मिके - क. । ६६. श्रयम् - ख. । ६७ महाभाग लब्धश्च (?) । ६८ ईप्सितम् - क. । ६९ तं - क. ख । ७० गच्छते नात्र - क. ख. । ७१ तत्र - क.। ७२ एक - क. । ७३ .मशङ्कितम् - क. ।

- - - -- - - - - - - - -

889

मानवा येभिगच्छन्ति गोकर्णायतनाश्रमम् ।
दशानामश्वमेधानां प्राप्नुवन्ति फलं शुभम् । ।१ १४। ।
हरिश्चन्द्र इति ख्यातो गिरिर्नैकविनिर्झरः ।
जामदग्न्येन रामेण यस्मिन्नायतनं७४ कृतम् ।।१ १५ ।।
यत्र देवाश्च सिद्धाश्च यक्षगुह्यककिन्नराः ।
व्रतिनो योगिनश्चैव नेमिरे७५ वृषभध्वजम् । ।१ १६ । ।

हरिश्चन्द्रगिरे शृङ्गमाकूटं यैर्निरीक्षितम् ।
न ते वसन्ति मर्त्येषु देवा भूत्वा पुनर्मुने ।। १ १७।।
उत्तरे नर्मदातीरे योजनैकपथान्तरे७६ ।
कारोहणमिति स्थानं त्रिनेत्रायतनं महत् ।। ११ ८।।
यत्र काकां७७ तपस्यन्तीमारुरोह प्रजापतिः ।
आरुरोह यतः काकां७८ तस्मिन् देशे प्रजापतिः ।। ११ ९।।
तस्मात् कारोहणो७९ नाम्ना८० स देशः परिकीर्तितः ।
तस्मिन् देशेवतीर्णश्च भगवान् वृषभध्वजः ।। 8.167.१२० ।।
पुण्योसौ सर्वदेशेभ्यो देशो येन निबोध तम्८१ ।
क्षीणे कृतयुगे व्यास त्रेतायुगमुखोदये ।। १२१ ।।
तस्मिन् पादं मुमोचैकं धर्मोधर्मनिपीडितः ।
द्वितीयं द्वापरे प्राप्त तृतीयं च कलौ युगे ।।१ २२।।
चतुर्थेनावतस्थे च यतः स भगवान् प्रभुः ।
एवं स धर्मसंवासाद्८२ देशः पुण्यतमः स्मृतः ।। १२३ ।।
भारभूतिस्त्वसौ भूत्वा तस्मिन्देशे पिनाकधृक् ।
भारान्८३ बद्ध्वा द्विजातीनां नर्मदायां विचिक्षिपे ।। १ २४।।
कारुण्येन महादेवो मर्त्यजन्ममुमुक्षया ।
त्रेतायां दिण्डिमुण्डश्च शिरांसि विनिकृत्तवान् ।। १ २५।।

- - - -- - - - - - - - - -

७४ न्नारायणं - ख. । ७५ मेनिरे - ख. । ७६ द्वियोजनपथान्तरे - ख. । ७७ कः का - क । ७८ कान्तां - क ।
७१ कारोहणं - ख. । ८० नाम - क. ख. । ८१ तत् - (?) । ८२ धर्मसंवासो - ख.।

- - - -- - - - - - - - - -

890

द्वापरे चाषढिर्भूत्वा८४ नृत्तेनानुगृहीतवान् ।
एवं प्रतियुगं व्यास तस्मिन्देशे शिवः स्वयम् ।।१ २६।।
अवतीर्णश्चानुगृह्य८५ ब्राह्मणान् शुद्धमानसान् ।
तेषामायतनानि स्म सर्वेषामेव८६ सुव्रत ।। १ २७।।
येन दृष्टानि देवस्य ईशान८७लोकमाप्नुयात् ।
वर्तमाने कलौ चापि ज्ञात्वा दुःखार्दितं जगत्८८ ।। १ २८।।
चतुरः८९ पुरुषान् सृष्ट्वा९० स्वस्मान्मुखचतुष्टयात् ।
प्रोवाच परमेशानो लोकानुग्रहलिप्सया९१ ।। १ २९।।

यूयं यात महीं सर्वे द्विजा भूत्वा तपस्विनः ।
मामेवैष्यथ योगोशा नीत्वा विप्रान् परं पदम् ।। 8.167.१३० ।।
ते तथोक्त्वा ततो९२ व्यास संबभूवुः पृथक् पृथक् ।
मानुषेषु९३ तदा विप्रा मोक्षधर्मपरायणाः । ।१ ३१ ।।
उज्जयिन्यां९४ गुरुज्येष्ठः कौशिको नाम नामतः ।
द्वितीयो गार्ग्य इत्येव९५ जंबूमार्गे सतापनः (?) ।।१ ३२। ।
तृतीयश्चाभवन्मित्रो मथुरायां महामनाः९६ ।
ब्रह्मचारी चतुर्थस्तु कुरुष्वेव सुगोत्रजः । । १३३ ।।
भगवानपि देवेशो ह्यमरेश्वरसंयुतः९७ ।
अत्रिवंशप्रसूतस्य नाम्ना वै सोमशर्मणः ।। १ ३४।।

रूपं कृत्वा सिताङ्गं तु जगामात्रेर्गृहं९८ शुभम् ।
स तं ब्रह्मविदं विप्रमात्रेयं सकुलं विभुः । । १ ३५। ।
योगसिद्धिप्रदानेन अनुजग्राह शङ्करः ।
अनुगृह्य तदा व्यास सकुलं द्विजसत्तमम्९९ ।। १३ ६।।
जगामोज्जयिनीं देवः श्मशानं च विवेश ह ।
स तत्र भस्मनात्मानमवगुण्ठ्य१०० वृषध्वजः । ।१ ३७। ।

- - - -- - - - - - - - -

८४ भूत्वाषाढिर्द्वापरे च (?) । ८५ मनुगृह्य - क । ८६ तानि चायतनानीह सर्वाण्येव (?) । ८७ ऐशानं(?) । ८८ जनं (?) । ८९ चत्वारः - क. ख. । ९० दृष्टवा - ख. । ९१ कांक्षया (?) । ९२ तथोक्तास्तथा - क. ख. । ९३ तु - क. । ९४ उज्जयन्यां, उज्जयनी - क । ९५ इत्येवं - ख । ९६ महात्मना - क. ख. । ९७ देवेशममरेश्वरसंयुतः - क. ख. । ९८ जगामत्रिगृहं - ख । ९९ द्विजसत्तमः - क. । १०० भष्मासात्मा-नमवगुण्ठ्य - क ख. ।

- - - -- - - - - - - - -

891

उल्मुकं वामहस्तेन गृहीत्वा समुपाविशत् ।
तत्र प्रथममादाय शिष्यं कौशिकमीश्वरः । ।१ ३८। ।
जम्बूमार्गे द्वितीयं च मथुरायां ततोपरम् ।
कान्यकुब्जे ततश्चान्यमनुगृह्य जगत्पतिः ।। १३९।।
स्वसिद्धान्तं ददौ योगमुवाचेदं च लाकुली१०१ ।
रहस्यं परमं हीदं१०२ पञ्चार्थं इति संज्ञितम्१०३ । । 8.167.१४० । ।

विप्रान्मोचयितुं दत्तो युष्मभ्यं मर्त्यबन्धनात् ।
अनया दीक्षया विप्रान् प्रापयध्वं परं पदम् । । १४१ ।।
नदीतीरेषु मेध्येषु पुण्येष्वायतनेषु च ।
शून्यागारेष्वरण्येषु वासो वः सङ्गवर्जितः । । १४२। ।
वचो भगवतः श्रुत्वा शिष्याः पशुपतेः स्वयम् ।
यथाज्ञप्तमकुर्वन्त१०४ सर्वे ते भवतेजसः । । १४३ ।।
धर्मपादाङ्किते देशे अवतीर्णो यतो भवः ।
स देशः परमस्तस्मान्महापुण्यतमः स्मृतः ।।१४४।।
आश्रमो योगिनां यत्र प्रवृत्तः पापनाशनः ।
अष्टायतनमित्येवं स्थानमत्र१०५ महात्मनः ।।१४५। ।
यद्१०६ दृष्टवा मनुजा व्यास प्राप्नुवन्ति परं पदम् ।
कारोहणं शिवस्थानं येभिगच्छन्ति मानवाः ।। १४६। ।
गर्भशय्याभयं तेषां न भवेन्मुनिसत्तम ।
महीनर्मदयोर्मध्यं सह्यस्य च यदन्तरम् । ।१४७।।
एतत्पशुपतेः क्षेत्रं पुराणमृषिभिः स्तुतम्१०७ ।
तदागत्य नरो व्यास यद्यपि स्यात् सुपापकृत् ।
सर्वपापविनिर्मुक्तो१०८ यथेष्टां१०९ प्राप्नुयाद् गतिम् ।। १४८। ।

- - - -- - - - - - - - - -

१०१ लागडिः - ख. । १०२ लीनं - ख. । १०३ संज्ञितः - ख । १०४ यथाज्ञाप्तमकुर्वन्त - क. ख. । १०५ स्थानं तत्र - ख. । १०६ यं - क. । १०७ ऋषिभिष्टुतं - ख. । १०८ विमुक्तात्मा - ख., विमुक्तोसौ - ख.। १०९ यथेष्टं - क. ।

- - - -- - - - - - - - - -



कारोहणं स्थानमतीव पुण्यं शैवानि११० यत्रायतनानि धीमन्१११ ।
गत्वा नरास्तानि महाफलानि संसारगेहं न पुनर्विशन्ति ।। १४९।।
पुण्यमायतनं चान्यत् सप्तलोकाभिवन्दितम्११२ ।
वाराणस्या११३ मुनिश्रेष्ठ यत्र सन्निहितो हरः । । 8.167.१५० ।।
तत्र भागीरथी पुण्या उत्तरां भजते दिशम् ।
सिद्धिक्षेत्रं११४ बृहत्क्षेत्रं लोकेषु त्रिषु विश्रुतम् ।।१ ५१। ।
अविमुक्तं स्मृतं नाम्ना न विमुक्तं हरेण तु ।
अविमुक्तेश्वरं दृष्ट्वा देवं तत्र ह्युमापतिम्११५ ।।१५२।।

गाणपत्या गतिः प्रोक्ता मृत्युकाले महामुने ।
यत्रास्ते गणपो द्वारि विद्युत्केशो महाबलः ।।१५३ ।।
दण्डपाणिर्महातेजाः समादेशात् स्वयंभुवः ।
तमदृष्टवा न पश्यन्ति देवदेवेश्वरं हरम् ।।१ ५४। ।
योगिनोपि महात्मानः पुण्यं तस्यापि दर्शनम् ।
दण्डपाणिं शुचिर्दृष्ट्वा११६ हरदत्तवरं११७ गणम् ।।१५५।।
इह लोके सुखं प्राप्य यान्ति११८ तस्य सलोकताम् ।
यत्र सिद्धा महात्मानो योगैश्वर्यबलान्विताः । । १ ५६।।
छन्नाः प्रदक्षिणं कृत्वा प्रणमन्ति स्वयंभुवम् ।
शक्रः पितामहो विष्णुर्धनेशो वरुणो यमः । । १ ५७।।
हुतभुक् पवनः सोमः स्वयं चैव दिवाकरः ।
तथा सप्तर्षयः सिद्धा गन्धर्वाः पन्नगास्तथा । ।१५८। ।
अविमुक्तेश्वरं देवमर्चयन्ति यतव्रताः ।
ततः पुण्यतमं नास्ति सिद्धिक्षेत्रमिति श्रुतिः ।। १ ५९। ।
यत्र जन्तोर्विपन्नस्य मुक्तिः संसारबन्धनात् ।
प्रसादाज्जायते शम्भोर्गुह्यमेतत परं स्मृतम् । । 8.167.१६० । ।
गङ्गा११९ दक्षिणतस्तस्मिन्नुत्तरेण वराणसी१२० ।
ततयो१२१र्मध्यतः१२२ क्षेत्रमविमुक्तं पिनाकिनः । ।१ ६ १। ।

- - - -- - - - - - - - -

११० शैलानि - क., शैलाय - ख । १११ धीमान् - क. ख. । ११२.. नन्दितम् - ख । ११३ वारणसी(?) । ११४ सिद्धक्षेत्रं - ख. । ११५ तत्र देवमुमापतिम् - ख. । ११६ न्दृष्ट्वा - क. ख । ११७ हरदण्डधरं - ख. । ११८ याति - ख । ११९ गङ्गा (?) । १२० वराणमी (?) । १२१ तयोः (?), तद्वयोः (?) । १२२ र्मम तत् - क ।

- - - -- - - - - - - - -

893

लिङ्गे यत् स्थापिते शम्भोः प्राप्यते१२३ फलमन्यतः ।
तत् सहस्रगुणं प्रोक्तमविमुक्ते निवेशिते । । १६२ । ।
स्थापयेद्विधिना योषा१२४ पुमान्वा विधिपूर्वकम् ।
सहस्रं स्थापितं तेन लिङ्गानां भवति प्रभोः । । १६३ । ।
त्र्यक्षः स गणपो भूत्वा रुद्रसायुज्यतां व्रजेत् ।
अतः कृत्वा मुनिश्रेष्ठ ब्रह्मादित्यपुरस्सरैः ।
लिङ्गानि स्थापितानि स्म सर्वैस्तत्र सुरोत्तमैः । ।१ ६४। ।

तस्मिन् भगवतः क्षेत्रे काशिपुर्यामनेकशः ।
दृश्यन्तेद्यापि१२५ लिङ्गानि स्थापितानि महात्मभिः । ।१ ६ ५। ।
स्मरणादविमुक्तस्य पृथिव्यन्तेपि१२६ संस्थितः ।
कल्मषैर्मुच्यते जन्तुर्मृतश्च लभते सुखम्१२७ ।।१ ६ ६।।
ब्राह्मणास्तत्र मुञ्चन्ति वेदतत्त्वार्थवेदिनः ।
सिद्धाः पाशुपता ये च१२८ भवबन्धमुमुक्षवः । । १ ६७। ।
प्राप्य वाराणसीं पुण्यां सिद्धिक्षेत्रमनुत्तमम्१२९ ।
पुनर्निष्क्रान्तुमन्यत्र कस्य जन्तोर्मतिर्भवेत् । । १६८ ।।
वेदेषु गीयते व्यास तत् क्षेत्रं शशिमौलिनः ।
देहिनस्त्यजतः प्राणान् मोक्षसिद्धिगतिप्रदम् ।। त६९। ।
येविमुक्ते वसन्ति स्म नरा रुद्रपरायणाः ।
रुद्रस्य भवने व्यास ते वसन्ति न संशयः । । 8.167.१७० । ।
तिष्ठन् गच्छन् स्वपन् भुञ्जन्१३० कर्म कुर्वन् हसन्नपि ।
योविमुक्तं स्मरेद्देही तस्य जन्मभयं कुतः । ।१७१ । ।
नाविमुक्तात् परं क्षेत्रं नाविमुक्तात्परं पदम ।
नाविमुक्तात्परं पुण्यं नाविमुक्तात्परा गतिः१३१ । । १७२ ।।
या गतिर्ध्यायतो१३२ नित्यं परे ब्रह्मणि लीयत१३३ ।
सैव संत्यजतः प्राणानविमुक्ते स्मृता१३४ गतिः । ।१७३ । ।

- - - -- - - - - - - - - -

१२३ प्राप्स्यते - ख. । १२४ यो वा - क ख. । १२५ दृश्यन्त्यापि - क ख । १२६ पृथिव्यान्तेपि - ख. । १२७ शिवम् (?) । १५८ तु - ख. । १२९ सिद्धक्षेत्रमनुत्तमम् - ख. । १३० जाग्रन् - ख । १३१ परां गतिम् - ख. । १३२ या गतिर्ध्यानतो - ख. । १३३ लीयते - क. ख. । १३४ ऽमृता - क ख. ।

- - - -- - - - - - - - - -



पुण्यमुमापतेः सुरवृषैर्जुष्टं सदा सिद्धये
बह्माद्यैरविमुक्तमेतदिति यत् संसेवितं शान्तये ।
ये सेवन्ति तदीशभक्तिपरमा१३५ मर्त्याः शमप्राप्तये
मुक्तास्ते भवसंभवप्रतिभयाद्१३६ गच्छन्ति मोक्षं परम् ।।१७४। ।
प्रयागे च तपःक्षेत्रे देवस्यायतनं महत् ।
तद्१३७ दृष्ट्वा मनुजः सम्यगिष्टां गतिमवाप्नुयात् । ।१७५।।
नैमिशे देवदेवस्य१३८ रुद्रस्यायतनं महत् ।

दृष्ट्वा पापविनिर्मुक्तः१३९ स्वर्गलोकमवाप्नुयात् । । १७६।।

धर्मक्षेत्रे कुरुक्षेत्रे स्थानं योगेश्वरं महत्

तेन दृष्टेन विप्रेन्द्र गाणपत्यमवाप्नुयात् ।।१७७।।

रुद्रलोकं मृतश्चासौ प्राप्नुयात् सर्वकामिकम् ।

गयायामन्यदीशस्य स्थानं भगवतः शुभम् । ।१७८।।

गध्रकूटेश्वरं नाम्ना सर्वपापविमोचनम ।

न तं दृष्ट्वा विमुह्यन्ति मृत्युकाले नरोत्तमाः । । १७९।।

तत्र भस्म समालभ्य सर्वपापैः प्रमुच्यते ।

द्वादशाब्दवतस्यापि द्विजः फलमवाप्नुयात् ।। 8.167.१८० ।।

अन्यदायतनं पुण्यं मगधामु१४० पिनाकिनः ।

नगरे पाटलीपुत्रे नाम्ना प्रहसितेश्वरम् । । १८१ । ।

वाजिमेधमवाप्नोति१४१ अभिगम्य तमीश्वरम् ।

मगधासु स्मृतान्यष्टौ स्थानानि शशिमौलिनः।। १८२ । ।

शिष्यैः परिवृतो यानि बभ्राम नकुलीश्वरः१४२ ।

यानि१४३ दृष्टवा भवेत्सद्यः पुमान् पापविवर्जितः ।।१८३ ।।

यवनेषु स्मृतं स्थानं पुण्यमन्यदुमापतेः ।

त्रिपिष्टपमवाप्नोति१४४ तन्दृष्ट्वा मानवः प्रभुम् ।।१८४। ।

- - - -- - - - - - - - -

१३५ भक्तिपरया - क । १३६ भवसागरप्रतिभयाद् (?) । १३७ तत् - क. ख । १३८ देवदेवेशं - क. ख. । १३९ पापैर्विनिर्मुक्तः - ख. । १४० मगधेषु (?) । १४१. .सहस्राणि - ख. । १४२ लगुडीश्वरः - ख. । १४३ तानि - ख. । १४४ त्रिविष्टपमवाप्नोति - ख. ।

- - - -- - - - - - - - -

895

अङ्गदेशे परं पुण्यं स्थानं प्रोक्तं पिनाकिनः ।

हेमचूडेश्वरं नाम्ना तं दृष्ट्वा न विमुह्यति१४५ ।। १८५।।

भागीरथ्यास्ततो१४६ व्यास सागरस्य च संगमे ।

ब्रह्मणा स्थापितं लिङ्गं पुण्यं तत्र१४७ पिनाकिनः ।। १८६ ।।

तस्याभिगमनादेव सर्वपापैः प्रमुच्यते ।

दशानामश्वमेधानां तं दृष्ट्वा प्राप्नुते फलम् ।। १ ८७।।

प्रभासे शूलिनं दृष्ट्वा देहभेदे गणो भवेत् ।

पुष्करे शङ्करं दृष्ट्वा न शोचेन्मृत्युजन्मनी१४८ ।।१ ८८।।

महेन्द्रे च नगश्रेष्ठे रुद्रस्यायतनं शुभम् ।
अभिगम्य नरो विद्वानश्वमेधफलं लभेत् ।।१८९।।
महाकालेश्वरं देवमुज्जयिन्यां१४९ महाव्रतः ।
अभिगम्याप्नुयाद्विद्वान् गणत्वं त्रिपुरद्विषः ।। 8.167.१९० ।।
द्रिमिचण्डेश्वरं देवं दृष्ट्वा त्रायति मानवः ।
कुलान्युभयतः१५० सप्त सर्वयज्ञानि१५१ चाप्नुते ।।१९१ ।।
शंकुकर्णेश्वरं दृष्ट्वा न शोचेन्मरणं नरः ।
तथा हिमगिरेः शृङ्गे सिद्धकिन्नरसेविते ।।१ ९२ ।।
डिङ्गेश्वरमिति ख्यातं रुद्रस्यायतनं महत् ।
अभिगम्य च दृष्ट्वा च तं देवं जगतः प्रभुम् । ।१ ९३ ।।
शिवभक्तिपरो व्यास सर्वकामानवाप्नुयात्१५२ ।
मृतस्य च गतिः प्रोक्ता गाणपत्यं महात्मनः । ।१९४। ।
सुवर्णाक्षे परं स्थानं देवदेवस्य संस्मृतम् ।
तद् दृष्टवा१५३ मनुजो व्यास१५४ राजसूयफलं लभेत् ।। १९५।।
सप्तगोदावरे स्थानं दृष्ट्वा पुण्यं कपर्दिनः१५५ ।
अश्वमेधफलं प्राप्य स्वर्गलोके वसेन्नरः ।। १ ९६। ।

- - - -- - - - - - - - -

१४५ - न्न विमुच्यति - ख. । १४६ न्ततो ख. । १४७ तस्य पुण्यं - ख. । १४८ मृत्युजन्मनि - क. ख. । १४९ ...मुज्जयन्यां - क. ख. । १५० कुलानुभयतः - क. ख., कुलानुभयजान् - क. ख.। १५१ सर्वयज्ञान्स - ( ?) । १५२ सर्वकाममवाप्नुयात् - ख. । १५३ तं दृष्ट्वा - क. । १५४ भक्त्या - क. । १५१ कपार्दिनं - क. ख. ।

- - - -- - - - - - - - -



स्थानं पुण्यतमं चान्यच्छ्रेष्टं जगति कीर्तितम् ।
नाम्ना भद्रेश्वरं ख्यातं देवगन्धर्वसेवितम् । । १९७। ।
तं वीक्ष्य मानवो व्यास सर्वयज्ञफलं लभेत् ।
जन्मप्रभृति यत्किञ्चित् कृतं कर्माशुभं१५६ महत् ।। १ ९८। ।
तत्क्षणान्नश्यते सर्वं दृष्ट्वा भद्रेश्वरं१५७ हरम् ।
यत्र तत्र मृतश्चापि गाणपत्यं लभेन्नरः । । १९९।।
धन्यास्ते मानवा व्यास रुद्रभक्ता महौजसः ।
ये प्रपश्यन्ति भद्रेशं जन्ममृत्युभयापहम्१५८ ।।8.167.२ ०० । ।

एकाम्रे च विभोः स्थानं दृष्ट्वा स्वर्गमवाप्नुयात् ।
विरजायां हरं दृष्ट्वा वाजिमेधमवाप्नुयात् ।।२०१ ।।
नेपालेषु च देवेशं दृष्ट्वा पशुपतिं प्रभुम् ।
दशाश्वमेधानाप्नोति१५९ रुद्रलोकं च गच्छति ।।२०२ ।।
देहभेदं च संप्राप्य पशुत्वाद्विप्रमुच्यते१६० ।
अन्यद्धिमगिरौ स्थानं नैकतुङ्गाधिपेश्वरम् ।।२०३ ।।
दृष्ट्वा तन्न पुनर्मर्त्यो१६१ जायते मुनिसत्तम ।
भक्तानां प्रणतानाञ्च सर्वकामप्रदं स्मृतम् ।।२०४।।
एवमेतानि पुण्यानि रुद्रस्यायतनानि ते ।
कथितानि मया व्यास यैर्गतिः प्राप्यते शुभा ।।२०५।।
य एतानि पठेद्विप्रः प्रयतात्मा दिने दिने ।
तस्य सायुज्यतां देवो ददाति वृषभध्वजः ।।२०६।।
मङ्गल्यं परमं पुण्यं मेध्यं सर्वभयापहम् ।
स्थानानां कीर्तनं शम्भोर्नित्यं कुर्याच्छुचिर्नरः ।।२०७।।

- - -- - - - - - - - - -

१५६ कर्म शुभं - ख. । १५७ भद्रेश्वरे (?) । १५८ भयावहम् - क. । १५९ दशाश्वमेधान्प्राप्नोति - क. टि. । १६० पशुपत्वाद्विमुच्यते - क. । १६१ तन्दृष्ट्वा न पुनर्मर्त्यो - ख. ।

- - -- - - - - - - - - -



इति गिरिवरपुत्रीविष्णुगङ्गाधरस्य१६२
जगति वसतिरेषा सर्वकामप्रदा ते ।
मुनिवरसुतशिष्टा१६३ पापसंशुद्धिकर्त्री१६४
वद किमपरमन्यद् व्यास तुभ्यं वदानि१६५ ।।२०८।।
इति स्कन्दपुराणे शिवायतनवर्णने१६६ सप्तषष्ट्युत्तरशततमोध्यायः१६७

सूत उवाच
श्रुत्वा कथामायतनानुबद्धां२ चन्द्रार्धबिम्बा३ स्थितमौलिनस्तु ।
व्यासो मुनिस्तं वचनं बभाषे ब्रह्मात्मजं ब्रह्मविदं मुनीन्द्रम् ।। १ ।।
धर्म्या४ सुपुण्या भगवन् त्वयैषा गुह्या कथा मे विधिवत् प्रदिष्टा ।

स्थानानि शम्भोर्दयितानि कोन्य एवं परिज्ञातुमृषिः५ समर्थः ।। २ ।।
इच्छामि वेत्तुं त्रिपुरं प्रदग्धमेकेषुणा दिव्यपिनाकधर्त्रा ।
यथा पुरा भक्तवरप्रदेन६ तन्मे मुने ब्रूहि यथाप्रवृत्तम् ।। ३।।
पृष्टस्तथैवं मुनिना मुनीन्द्रः प्रश्नं यथावत् कथयञ्चकार ।
दग्धं यथा तत् त्रिपुरं तथा त्वं शृणुष्व पुत्रेति वचो ब्रुवाणः७ । ।४।।
तस्मिन् हते दैत्यवृषेन्द्रसिंहे पुरा हिरण्याक्षसुते प्रवीरे ।
भग्नेषु दैत्येषु सदानवेषु मयो बभूवाधृतिदुःखतप्तः । ।५। ।
स विश्वकृद्दानवराजलक्ष्म्या रत्येव हीनो मकरध्वजोभूत् ।
आदाय दैत्यं स हि तारकाक्षं विद्युत्प्रभं चेन्द्रसमप्रभावम् ।।६ । ।
तपश्चचारोग्रमहीनकर्मा८ दैत्यौ च तावन्धकतुल्यवीर्यौ९ ।
ते शीतकाले हिमपर्वतस्था ग्रीष्मे च पञ्चज्वलनाभितप्ताः । ।७। ।
व्यभ्रे पयःप्लावितभूमिभागे चेरुस्तपः प्रावृषि च प्रयत्ताः१० ।
तेषामगाद्दिव्यसमासहस्रं तथा सुतीव्रे तपसि स्थितानाम् ।।८ । ।

- - - -- - - - - - - - - -

१६२. स्य च - क. । १६३. शिष्या - क. । १६४ ... शुद्धकर्त्री - क. । १६५ वदामि - ख । १६६ तीर्थवर्णने (?) - ख. । १६७ अ. २१५ - ख ।

१ व्यास - क. । २ बद्धा - क. ख. । ३ बिम्ब - क. । ४ धर्मा - ख., ब्रह्मन् - क. । ५ ज्ञातुमृषे - (?) । ६ भक्तिवरप्रदेन - क. ख. । ७ भ्युवाच - ख. । ८ तपश्चकारोग्रमहीनकर्मा - क. । ९ कल्पौ - क. ख । १० प्रयत्नात् - ख. ।

- - - -- - - - - - - - - -



चर्मास्थिशेषा ज्वलनप्रभावास्तपो११ विशेषाद् दितिपुत्रसिंहाः ।
आदित्यतेजःप्रतिमानवीरा१२ बभूवुरादित्यवपुःप्रकाशाः । ।९।।
पितामहस्तानभिगम्य सर्वान् प्रियं१३ बहूक्त्वा वचनं बभाषे ।
तप्तं तपो वो विगतप्रमोहा वरं त्विदानीं वृणुतेति हृष्टाः१४ । । 8.168.१० ।।
तं प्राञ्जलिर्भूमिनिविष्टजानुर्मयः सुरेशं प्रणतोभ्युवाच ।
अवध्यतामप्रतिमं बलञ्च ज्ञानं च दिव्यं परमं सुखं च ।।१ १ ।।
मृत्युर्यथा नो१५ न भवेच्च देव वरं प्रयच्छैनमभीप्सितं१६ नः ।
करोम्यहं यच्च सुरेश दुर्गं त्रिभिः पुरैर्दिव्यविमानकल्पैः । ।१२।।
तन्मे भवेत् सर्वसुरैरगम्यं स्वच्छन्दसंस्थानगतिप्रचारम् ।
इत्येवमुक्तो१७ दनुजाधिपेन ब्रह्मा वचस्तं मयमाबभाषे ।। १३ ।।

दातुं न शक्यो वर एष१८ तुभ्यं तस्मात् परं१९ सान्तरमेव चान्यम्२० ।
त्वं पुत्र याचस्व ततः प्रदास्ये चिन्ता च ते मा दनुजान्यथाभूत् ।।१४। ।
ततो मयः प्राह वचो विमूढो वरो यथा मार्गित एव नोस्तु ।
ब्रवीमि यच्चान्यदहं२१ सुरेश तन्मेर्हसि त्वं प्रददातु मद्य ।। १५। ।
पूर्णे सहस्रे त्रिपुरं२३ समानां समेष्यते ह्यर्धनिमेषमात्रम्२४।
तस्मिन्क्षणे यस्त्रिषु२५ संगतेषु पुरेषु दिव्येषु सुरप्रवीर । ।१६।।
एकेषुणा तत्२६ त्रिपुरं दहेत स नो विनाशी त्रिपुरस्य२७ भूयात् ।
श्रुत्वा ततस्तद्वचनं मयस्य ब्रह्मा वरं तं हृषितान्तरात्मा ।
प्रादादभीष्टं दनुजाधिपाय२८ दत्वा च तूर्णं स्वपुरे जगाम ।।१७।।
ततो मयस्तत्त्रिपुरं ससर्ज जगद्विधातेव पुरादिकल्पे ।
अयोमयं तत्प्रथमं चकार ततोपरं राजतमद्रिकल्पम् ।। १८ ।।
तृतीयमन्यत्पुरमाशु हैमं ससर्ज मेरोरिव शृङ्गमुच्चम्२९ ।
सृष्टं ततस्तत्त्रिपुरं मयेन स्वर्गस्य रूपं प्रजहार दिव्यम् । । १९।।

- - - -- - - - - - - - -

११ ततो - क., .. स्तपो, - ख.,.. .तपो (?) । १२ प्रतिमान्यवीरा - क. ख. । १३ प्रियान् - क. । १४ हृष्टः - क. ख । १५ यथातो - ख ' १६ प्रयच्छेत - क, प्रयच्छेत - ख, प्रयच्छैतदभीप्सितं (?) । १७ मुक्तेः - क, क्ते - ख. । १८ शक्यामरता हि (?) । १९ वरं - क । २० मेतत् - ख, चान्यत् - क । २१ महं - ख । २२ प्रदातु ? र । २३ सहस्रेतु पुरं - क ख. । २४ चार्धनिमेषमात्रम् - ख. । २५ यः सह - घ. । २६ तं - क. । २७ विनाशस्त्रिपुरस्य - क. । २८ -.धिपस्य (?) । २९ ...मुच्चै (?) ।

- - - -- - - - - - - - -

899

द्वारैर्मनोज्ञैर्वडभीगवाक्षैर्बीथ्यङ्गणैर्हेममयैः३० सुयुक्तम् ।
चन्द्रांशुसंसृष्टतलैश्च हर्म्यैः शीतानिलाह्लादसुखप्रवेशैः३१ । ।8.168.२० । ।
मुक्ताप्रवालैर्मणिखण्डचित्रै३२ रालम्बितैश्चित्रतडित्प्रकाशैः ।
ध्वजैर्विचित्रैः पवनावधूतैश्चलत्पताकाभिरतीव रेजे । । २१ । ।
प्रासादपंक्तिस्थितरत्नखण्डै३३ र्महामणीन्दुद्युतिसन्निकाशैः३४ ।
सतोरणाभ्युच्छ्रितहर्म्यपृष्ठैरलकृतं तत् त्रिपुरं रराज । । २२ । ।
सर्वर्तुपुष्पैः फलितैर्मनोज्ञैर्वृतं समन्तात्तरुभिर्महोच्चैः ।
रम्यस्तथोद्यानशतैरुपेतं प्रभ्रान्तषट्पादमयूरहंसैः । । २३ । ।
वापीभिराक्रान्तविहङ्गमाभिः प्रफुल्लनीलोत्पलसंवृताभिः३५ ।
दैत्यालयं तच्छुशुभे तथैव प्रनृत्तकेकाविहगैस्सरोभिः३६ ।। २४। ।

तथा नखोद्भिन्नपयोधराभिराकर्णरक्तान्तविलोचनाभिः ।
सव्रीडमीषच्चपलेक्षिताभिर्योषिद्भिराकीर्णमतीव रेजे ।। २५। ।
लौहं पुरं यत्तदधश्चकार तत्तारकाक्षाय मयः प्रदत्वा३७ ।
पुर द्वितीयं रजतामयं यद्विद्युत्प्रभायासुरराजभर्त्रे । ।२६। ।
हैमं तृतीयं स्वयमेव दिव्यं जग्राह राजा मय आत्मनोर्थे ।
अधिष्ठितं तत्त्रिपुरं तदाभूत्समं त्रिभिस्तैर्दनुराजसिंहैः ।।२७।।
ते सर्वतः स्वः३८ प्रभवान्३९ विजित्य४० प्रियासहायाः सहमित्रभृत्यैः ।
सुखानि तस्मिन् विविधान्यवापु४१ स्त्रैलोक्यचिन्तामविचिन्तयन्तः४२ । । २८। ।
ते दर्पमोहप्रतिबद्धरागा न्यूनानमन्यन्त बलेन देवान् ।
मत्वा च तेषां प्रसभं निपत्य४३ नानाविधाश्चक्रुरतीव पीडाः ।।२९। ।
वनानि वैभ्राजपुरस्सराणि संछिन्नवीरुत्कुसुमानि चक्रुः ।
वापीः प्रचक्रुः कमलैर्विहीना जह्रुश्च रम्भादिपुरस्सरास्ताः ।।8.168.३ ० । ।
सन्त्रस्तगात्रीः४४ सुरयोषितस्तैरन्याश्च४५ चक्रुर्महतीः प्रपीडाः ।
तेषामतीतः सुमहानथैवं प्रकुर्वतां देवविनाशनानि४६ । ।३ १ ।।

- - - -- - - - - - - - -

३० वींथ्यगंनैर्हेममयैः - ख. । ३१.. प्रदेशैः - ख । ३२ दण्डचित्रै - ख । ३३ स्थिररत्नखण्डै - ख. । ३४ मणीन्द्रद्युतिसन्निकाशैः (?) । ३५ प्रस्फुल्लनीलोत्पलसंवृताभिः - क । ३६ विहगाप्सरोभिः - ख.। ३७ प्रदाय(?) । । ३८ सर्वसम्पत् - ख. । ३९ स्वप्रभवान् - क. । ४० वा विजित्य - क., वाभिलभ्या - ख. । ४१ ...न्यथाभू - ख. । ४२ सौख्यामाविचिन्तयतः - ख. । ४३ त्वा - ख, । ४४... गात्र्यः - क. । ४६ स्ता अन्याश्च (?) । ४६ विनाशकानि - क. ।

- - - -- - - - - - - - -



कालो४७ मयं प्रत्यथ जातकोपाः४८ संगत्य सर्वे त्रिदिवौकसेशाः ।
वृत्तं यथा सर्वमशेषतस्तन्न्यवेदयन्नाशु पितामहाय ।।३ २। ।
तानाह देवः कमलासनस्थः सर्वान्सुरेशान्परिसान्त्वयित्वा ।
महाबलास्ते त्रिपुरासुरेन्द्रा हन्तुं न४९ शक्या हि५० बलाद्भवद्भिः । ।३ ३ । ।
तस्मादयं विष्णुरहञ्च युष्मान् प्रगृह्य शम्भुं शरणं प्रयाम ।
गतिः सदा नः शशिभृत् सुरेशाः स तान्५१ बलाद्ध्वंस्यति शूलपाणिः । ।३४।।
तथेति तेपि प्रणिपत्य देवा ब्रह्मार्कशक्रानिलपावकाद्याः ।
कैलासमागम्य सुरेश्वरेशं दृष्टवा हरं तुष्टवुरादृतार्थाः । ।३५। ।
नमस्त्रिलोकेश्वरवन्दिताय प्रियाधरायामितविक्रमाय ।

नमोस्तु चन्द्रार्धजटाकलापकान्ति५२ प्रभोद्योतितशेखराय ।।३६।।
त्रैलोक्यदेवाय नमोस्तु नित्यं पिनाकचापाय नमस्तथैव ।
नमः प्रदीप्तासिपरश्वधाय त्रिशूलहस्ताय नमोस्तु नित्यम् ।।३७।।
नमो नमो नन्दिवरप्रदाय जगच्छरण्याय सुरेश्वराय ।
नमः सदा भक्तवरप्रदाय नमोस्तु यक्षेशवरप्रदाय ।।३८ ।।
स्थिताय नित्यं हिमवद्गिरीन्द्रे कैलासवासाय नमस्सदैव ।
नमो विमुक्ते शनिकेतनाय स्थिताय सर्वत्र च ते नमोस्तु ।। ३९।।
भस्माङ्गलिप्ताय कपर्दिने च नमोस्तु नित्यं वृषभस्थिताय ।
दिग्वाससे श्वेतवरप्रदाय सर्वर्द्धियुक्ताय जगद्विधात्रे ।।8.168.४० ।।
हर्यर्कशक्राग्निपितामहानां स्रष्ट्रे नमो देव - - -राय ।
सूक्ष्माय नित्यं परमेश्वराय नित्यं नमः सर्वगताय धात्रे ।।४१ ।।
नमः परायातिपरे पुमांसे५३ पुराय षड्विंशकसंज्ञिताय ।
नमोस्तु शर्वाय धनुर्धराय सर्वाय५४ सर्वप्रभवाय नित्यम् ।।४२।।
सोमानिलार्कज्वलनाम्बु५५भूमिव्योमात्मकायादिसृजे नमोस्तु ।
पूष्णो५६ नमो दन्तविनाशनाय५७ कामाङ्गनाशाय नमोस्तु नित्यम् ।।४३ ।।

- - - -- - - - - - - - -

४७ ततो - क. ख. । ४८ ते प्रति जातकोपाः - ख. । ४९ हि - क. ख. । ५० न - क. ख. । ५१ तं - ख. । ५२ कान्त - ख । ५३ पराय पुंसे (?) । ५४ सर्वस्य - क. ख. । ५५ सोमानलार्कज्व- लनाम्बु - क. ख. । ५६ पूष्णे - क । ५७ दन्तविनाशकाय - क. ।

- - - -- - - - - - - - -

901

नमः प्रधानाय पराय पुंसे योगाधिगम्याय सदा नमोस्तु ।
रौद्राय सौम्याय वपुष्मते च नमो नमः सर्वजगत्सृजे च ।।४४।।
विद्यासृजे धर्मसृजे नमोस्तु स्रष्ट्रे नमो यज्ञसुरासुराणाम्५८ ।
नमस्तृतीयेक्षणधारिणे च नमो नमो नीलशिखण्डिने च ।।४५।।
नमोस्तु नित्यं पुरुषोत्तमाय श्मशानवासाय नमः सदैव ।
नमोस्तु दैत्यान्धकनाशनाय नमः सदा मोहविनाशनाय ।।४६ ।।
तमोविनाशाय५९ नमोस्तु नित्यमज्ञाननाशाय नमोस्तु नित्यम६० ।
नमः सदा मोक्षवरप्रदाय नमः सदायामृतसंस्थिताय६१ ।।४७।।
भर्त्रे नमो भूमिधरेन्द्रपुत्र्याः पित्रे कुमारस्य नमोस्तु नित्यम् ।
नमोस्तु वित्तेशवरप्रदाय नमः सदा शुक्रवरप्रदाय ।।४८।।

ब्रह्मात्मने ब्रह्मसृजे नमोस्तु नमो नमो देवसृजे६२ विधात्रे ।
नमोस्तु दक्षामरयज्ञहन्त्रे६३ नमोस्तु चण्डेशवरप्रदाय । ।४९। ।
योगेश्वरायामरसंस्तुताय नमोस्तु रुद्राय पराय धाम्ने ।
हराथ शर्वाय शिवाय गोप्त्रे नमोस्तु भीमाय च शम्भवे च । ।8.168.५० ।।
गुणैर्विहीनाय गुणोत्कटाय गुणेष्वतीताय गुणास्थिताय ।
गीताय सांख्ये पुरुषाय नित्यं नमोस्तु योगोपनिषत्स्थिताय । ।५१ । ।
महापुराणाय परात्पराय स्थूलाय सूक्ष्माय नमस्सदैव ।
प्रसाद्यमानः कुरु नः प्रसादं तुष्टः परेशान वरं प्रयच्छ ।
शम्भुस्तथैवं स्तुवतां सुराणां ब्रह्मेन्द्रविष्ण्वर्कपुरःसराणाम् । ।५२।।
प्रीतस्तया६४ स्तोत्रविशेषभक्त्या जगाद वाक्यं परमाद्भुतार्थम ।
तुष्टोस्मि देवा शृणुताद्य शीघ्रं समीहितं वो यदि किञ्चिदस्ति ।
दातास्मि सर्वं तदशेषतोद्य किञ्चिन्न युष्मभ्यमदेयमस्ति ।।५३ । ।
इति स्कन्दपुराणे त्रिपुरवधोपक्रमे६५ देवतावरप्रदानं६६ नाम अष्टषष्ट्युत्तरशततमोध्यायः६७

- - - -- - - - - - - - -

५८ धर्म .. - ख., सर्वसुरासुराणाम् (?) । ५९ मनोनिवासाय - क. ख । ६० च ते नमोस्तु - ख । ६१ सदैवामृतसंस्थिताय (?) । ६२ वेदसृजे (?) । ६३... पात्रे - ख । ६४ प्रीतस्त्वया - क । ६५ त्रिपुरवधे - ख. । ६६ वरप्रदानो - ख. । ६७ २१६ - ख ।

- - - -- - - - - - - - -

902

देवा ऊचुः
ब्रह्मदत्तवरैर्देव मयाद्यैर्दानवैस्त्रिभिः ।
दुर्गं तत्त्रिपुरं कृत्वा बाध्यामो बलदर्पितैः । ।१ । ।
हृता अप्सरसः१ सर्वा ध्वंसितानि वनानि च ।
सर्वान्देवान्निहन्मोद्य श्वो हन्मेति च तेब्रुवन् ।।२।।
न तेषां निग्रहे शक्तो ब्रह्माप्येष पितामहः ।
विष्णुर्वापि महादेव तेन नः सुमहद् भयम् । ।३ ।।
तद् यथा त्रिपुरं नश्येत् ते च स्युर्निहता यथा ।
तथा कुरु सुरश्रेष्ठ वरोयन्नः प्रदीयताम् ।।४।।
इति विज्ञापितः शम्भुस्सर्वैस्तैर्हि सुरोत्तमैः ।
इदमाह महातेजाः सुरानाश्वासयन्निव । । ५। ।
शतमंशं सुरेशा वै गृहीत्वा मम तेजसः ।

रुद्रतेजोमया भूत्वा दानवान् विनिहंस्यथ । । ६ ।।

ततस्ते पुनरेवेशं प्राहुर्वाक्यमिदं सुराः ।

शक्ताः सहस्रमप्यंशमुद्वोढुं न वयं तव ।।७। ।

का नः३ शक्तिः सुरेशान तेजो माहेश्वरं परम् ।

द्रष्टुं धारयितुं वापि प्रसादं कुरु नः४ प्रभो । ।८। ।

न कथञ्चिद्वयं शक्तास्तान्हन्तुं दानवान् बलात् ।

भगवन् स्वयमेव त्वं त्रिपुरं जहि शङ्कर ।।९ । ।

तेभ्यः किल वरो दत्तो ब्रह्मणानेन५ शूलधृक् ।

दिव्ये वर्षसहस्रे तु समेष्यति पुरत्रयम् । । 8.169.१० । ।

निमेषार्धं क्षणे तस्मिन्नेतद्वस्त्रिपुरं बली ।

सकृदेकमिषुं क्षिप्त्वा यः प्रधक्ष्यति दानवान् । । ११ । ।

भविष्यति स वो मृत्युर्नान्यथा मरणं हि वः ।

तच्च कर्तुं न शक्ताः स्मः प्रसादं तेन नः कुरु । ।१ २ ।।

- - - -- - - - - - - - -

१ ह्रिता अप्सरसः - क. । २ स्तथा - क. । ३ तु - क- ख, ४ कुरुत - क. ख । ५ तेन - क. ।

- - - -- - - - - - - - -

903

ततः स भगवान्देवः प्रणतान् वृषभध्वजः ।

पुनराश्वासयन् प्राह समुद्विग्नान् दिवौकसः । । १३ । ।

यद्येवं सुरशार्दूलास्त्रिपुरं दुर्गमं महत् ।

इषुमेकं सकृत् क्षिप्त्वा प्रधक्ष्ये निमिषे क्षणे । ।१४।।

ब्रह्मविष्णुप्रियार्थं हि शक्रस्यानुग्रहाय च ।

त्रिपुरं रथमास्थाय हंस्यामि स्वयमेव तत् । ।१ ५।।

क्रियतां स रथः सज्जो यमारुह्य६ दिवौकसः ।

धक्ष्यामि त्रिपुरं दुर्गमाक्रान्तं दानवैस्त्रिभिः ।। १ ६। ।

यादृशश्च हि मां वोढुं शक्तः स्यात् सुरपुङ्गवाः ।

बलवान् हिमवत्कल्पः७ कर्तव्यस्तादृशो रथः । । १७।।

ततो देवाः प्रणम्येशं प्रहृष्टमनसोभवन् ।

रथं च सहिताः सर्वे कल्पयामासुरुत्तमम् ।। १८। ।

ततः स भगवान् ब्रह्मा तथा विष्णुहुताशनौ ।

सर्वदेवमयं दिव्यं चक्रुस्तं रथमुत्तमम्८ । । १ ९।।

धातारं भास्करं शक्रं पवनं धनदं यमम् ।
वसून् रूद्राँस्तथादित्यान् गन्धर्वानश्विनावपि । ।8.169.२० ।।
गरुडान् पर्वतान्नागान् गुह्यकान्समहोदधीन् ।
ऋषीँतु सिद्धाँस्तथा यक्षान् ग्रहाँ - - - - - ।२१ ।।
 - - - - सितं कालं तथा चैव वनस्पतीन् ।
दिवसानि मुहूर्तानि क्षणान् काष्ठालवाँस्तथा ।।२ २। ।
अयने च ऋतून्मासान् पक्षान् संवत्सराँस्तथा९ ।
स्थावरं जङ्गमं यच्च नक्षत्राणि तथैव च ।।२३ ।।
अष्टौ देवनिकायाँस्तान् रथे तस्मिन्नकल्पयन् ।
काँश्चिच्चक्रद्वये चक्रुः प्रताप - - - - - । ।२४। ।
- - - श्चिद्रथेचान्यान् युयुजुः सुरपुङ्गवान् ।
कृत्वाश्वाँश्चतुरो वेदान् रथे तस्मिन्न्ययोजयन् ।।२५।।
- - -- - - - - - - - - -
६ यत्रारुह्य - क. । ७ हिमवत्तुल्यः - ख. । ८ रथत्तमम् - क. । ९ कालान् - क., संवत्सराणि च - क, ख. ।
- - -- - - - - - - - - -


सम्वत्सरमयं चक्रं धनुर्गिरिमयं तथा ।
ज्याञ्चैव१० धनुषश्चक्रुर्देव देवीं जगत्स्थितिम् । । २ ६। ।
ते तमेवंविधं११ देवा रथमग्र्यमचीकरन् ।
सर्वदेवमयं कृत्वा गिरिकल्पं रथोत्तमम् । ।२७। ।
विष्णुः पितामहोग्निश्च प्रणम्य परमेश्वरम् ।
रथः१२ सज्ज इति१३ प्राहुर्विनाशाय सुरद्विषाम् । ।२८ ।
ततः स भगवाञ्छम्भुः स्तूयमानः सुरैस्त्रिभिः ।
अवैक्षत१४ रथं दिव्यं सर्वदेवमयं कृतम् । ।२९ । ।
सुकृतं साध्विति प्रोच्य धनुर्जग्राह तन्महत् ।
तत्प्रगृह्य धनुर्दीप्तं सर्वतेजोमयं परम् । । 8.169.३० ।।
अधश्चोर्ध्वञ्च संप्रेक्ष्य तुतोष भुवनेश्वरः ।
पितामहं ततो वीक्ष्य प्रोवाच वचसां पतिः१५।। ३१ । ।
रथ एष धनुश्चैतत्१६ त्वया ब्रह्मन् सुकल्पितम्१७ ।
दग्धव्यं त्रिपुरं येन तमिषुं शीघ्रमानय । । ३२ । ।
ततः प्रोवाच तं ब्रह्मा प्रणम्य वृषभध्वजम् ।

रथ एष कृतो देव धनुरेतच्च ते मया ।।३ ३ ।।
तमिषुं भगवानेव तद्योग्यं कर्तुमर्हति ।
ततः पार्श्वस्थितौ दृष्ट्वा शम्भुविष्णुहुताशनौ ।। ३४।।
दृष्टिपातेन तौ देवौ समाह्वयदरिन्दमः ।
तौ द्वावञ्जलिमाधाय१८ सुरेशानमुपस्थितौ ।।३ ५।।
स्वयमेव ततश्चक्रे शम्भुर्विष्णुं शरोत्तमम् ।
ओषधीनां पतिं सोमं पुंखे तस्य न्ययोजयत् ।। ३ ६।।
शल्यं च पावकं चक्रे ब्रह्माणं स१९ ततोब्रवीत् ।
सारथिः को रथे ब्रह्मँस्त्वयेह परिकल्पितः ।। ३७।।
तमुवाच ततो ब्रह्मा प्राञ्जलिर्जगतः पतिम् ।
मह्यं ददासि यद्याज्ञा२०महमेव हि सारथिः ।। ३८।।

- - - -- - - - - - - - - -

१० ज्याश्चैव - क. । ११ विधा - क । १२ रथ - क. । १३ सज्जमिति - क । १४ अवेक्षत - ख १५ पतिम् - क. ख. । १६ धनुश्चैव - ख । १3 सुकल्पितौ - ख. । १८ द्वौ तावञ्जलिमाधाय - क. ख. । १९ च - क. ख. । २० यद्याज्ञां स्वय - क. ।

- - - -- - - - - - - - - -



प्राप्स्ये२१ किमपरं देव सारथ्यादधिकं तव ।
सर्व शोभनमित्युक्त्वा ततो देवः पिनाकधृक् ।।३९।।
हस्ते प्रगृह्य देवेशमारुरोह रथोत्तमम् ।
रुद्रपारिषदा२२ ये च नन्दीश्वरपुरोगमाः ।।8.169.४० ।।
शंकुकर्णपुरोगाश्च ये च चण्डेश्वरादयः ।
गणेश्वरा महायोगास्त्र्यक्षाः पट्टिशपाणयः ।।४१ ।।
नानाशस्त्रप्रहरणा नानायुद्धविशारदाः२३ ।
नानाभरणवस्त्राश्च२४ नानाविद्याविशारदाः ।।४२।।
वादयन्तः समं वाद्यान्२५ भेरीशंखस्वनान्२६ बहून् ।
आजग्मुर्गणमुख्यास्ते सहस्राणि चतुर्द्दश ।।४३ ।।
नानाविधानां पुष्पाणामुपरिष्टात् सहस्रशः ।
निपेतुर्वृष्टयो मूर्ध्नि रथस्थस्य पिनाकिनः ।।४४।।
स्वयमेव च वाद्यानि विनेदुः सर्वतोदिशम् ।
रथे युक्ताश्च२७ ते सर्वे२८ देवदेवस्य शूलिनः ।।४५।।

अशक्ता भारमुद्वोढुं मुमुहुर्देवता२९ भृशम् ।
ततस्तान्देवदेवेशो ज्ञात्वा मूढान् दिवौकसः । ।४६।।
सहनीयं३० वपुश्चक्रे सुरास्ते३१ मुमुहुस्ततः ।
अथास्मिन्नन्तरे व्यास नारदो भगवान्मुनिः ।।४७।।
जगाम त्रिपुरं शीघ्रं विश्वकर्मदिदृक्षया ।
अथागतमृषिं दृष्ट्वा विश्वकर्मा मयस्तदा ।।४८।।
संपूज्य परया भक्त्या ननाम मुनिसत्तमम् ।
स दत्त्वा ह्याशिषस्तस्मै वेत्रासन उपाविशत्३२ । ।४९। ।
उपविश्यासने तस्मिन्मयमाह महामुनिः ।
प्रसाद्य दैवतैस्सर्वैरेष३३ देवो वृषध्वजः ।।8.169.५० ।।
- - - -- - - - - - - - -
२१ प्राप्ये - क. । २२ रुद्राःपारिषदा - ख । २३ नानायुधविशारदाः - क. । २४ चरणवक्त्राश्च - क. । २५ वाद्यं - क. । २८५ शंखभेरीस्वनान् - ख । २७ रथयुक्ताश्च - क., रथं युक्तं च - ख । २८ सर्वे ते - क. । २९. र्देवता - क. ख. ' ३० वहनीयं (?) । ३१ सुराश्च - क. ख. । ३२ मुपाविशत् - क. । ३३ देवतैस्सर्वैरेष - क. ख ।
- - - -- - - - - - - - -


आनीतस्त्रिपुरं हन्तुमत्र यत्साधु तत्कुरु ।
रथं३४ देवमयं३५ दिव्यं३६ समारुह्य जगत्पतिः ।।५१ ।।
ब्रह्माणं सारथिं कृत्वा स्वयमायाति शङ्करः ।
नारदस्य वचः श्रुत्वा स तदा दानवाधिपः ।।५२।।
तारकाक्षं समाहूय विद्युन्मालिनमेव च ।
तथान्यानसुरान् भ्रातॄन् बाणनेमिपुरस्सरान् ।।५३। ।
नारदेन यदाख्यातं३७ सर्वमश्रावयत्तदा ।
तच्छ्रुत्वा दैत्यराजस्तु तारकाक्षोब्रवीदिदम् । ।५४ ।।
न तवास्ति समः कश्चित् त्रैलोक्ये सुरपुङ्गव३८ ।
योधयेन्निर्भयो यस्त्वां चिन्तां त्वं मय मा कृथाः ।।५५। ।
किमत्र चिन्त्यते राजन् सर्ववध्या३९ यदा वयम् ।
कस्य तत्त्रिपुरं हन्तुं शक्तिर्विद्येत दानव ।। ५६।।
संगत्य दैवतास्सर्वे यदि योद्धुमिहागताः ।
पश्य तान्निहतानद्य४० मयैवैकेन दैत्यप । ।५७। ।
दुर्बलः कुरुते भेदं दानं सान्त्वमथापि वा ।

प्रणामं ज्यायसः शत्रोर्वयन्तु बलिनः सदा ।।५८।।
दुर्बलस्य रिपोर्दण्डो बलिना विजिगीषता ।
कर्तव्यो विक्रमैणेति प्राह शुक्रस्तदा गुरुः । ।५९। ।
तद्वयं बलिनो दैत्या हीनाश्च४१ त्रिदिवौकसः ।
हत्वा दण्डेन तान् सर्वान् स्थास्यामो निर्वृताः सुखम् ।।8.169.६० ।।
तारकाक्षवचः श्रुत्वा विद्युन्माली वचोब्रवीत् ।
ममाप्येतदतीवेष्टं४३ राज्ञोस्य वचनं शुभम् । ।६ १ । ।
न शक्ता योद्धुमस्माभिर्देवता बलवर्जिताः ।
ते चेद्योत्स्यन्ति संमूढाः प्रयास्यन्ति ततः क्षयम् । ।६२।।

- - - -- - - - - - - - - -

३४ रथे - क ख. । ३५ देवमये - क. ख. । ३६ दिव्ये - क. ख । ३७ यथाख्यातं - क. । ३८.. पुङ्गवः - क. । ३९ सर्वावध्या - क. ख. । ४० पश्ये(श्यै)तान्निहतानद्य - क. ख. । ४१ -..स्ते - ख. । ४२ तत् - क. । ४३ प्येतदतीवेष्टं - क., वमतीष्टं - ख. ।

- - - -- - - - - - - - - -

907

अन्योन्यन्तु वयं युद्धादुपायं तेषु युञ्ज्महे ।
युद्धे नैव सदा दैत्याः प्राप्नुवन्ति४४ जयं परम् । ।६३ ।।
अद्य हत्वा सुरान्सर्वान् कुरु राज्यं त्रिविष्टपे ।
त्रैलोक्यं निर्वृतो भुंक्ष्व त्वमिन्द्रो भव विश्वकृत् । ।६४। ।
सप्तलोकेश्वरं त्वद्य पश्यामस्त्वां४५ पुरन्दरम् ।
हिरण्यकशिपुं स्मृत्वा हिरण्याक्षं च दैत्यप४६ । ।६५। ।
भोक्तारौ जगतो राज्यं त्वं प्रयाहि तयोर्गतिम् ।
ततः श्रुत्वा मयो व्यास विद्युन्मालिविभाषितम् । ।६६।।
नैतदेवमिति प्राह कम्पयन्नसकृच्छिरः४७ ।
यस्तुल्यः स्वबले शत्रुर्हीनो वा दैत्यपुङ्गवाः ।।६७।।
बले वा यो भवेज्ज्यायानेकजातिवपुर्धराः४८ ।
बुधास्तस्मिन् प्रयुञ्जन्ति तदुपायचतुष्टयम् । ।६८ ।।
समा दिवौकसोस्माकं बलेनासुरपुङ्गवाः ।
तैर्देवैः सार्धमस्माकं युक्तं सामादियोजनम् ।। ६९।।
य४९ एष भगवानीशः सर्वभूतेश्वरेश्वरः ।
अस्माकं देवतानाञ्च स्रष्टा हर्ता च स प्रभुः ।।8.169.७० । ।

स हन्तुं स्वयमायाति उपायस्तस्य कीदृशः५० ।
प्रणामः संश्रयश्चैव गुणोपायौ५१ कपर्दिनः ।।७१ । ।
द्वाविमौ५२ साधने तस्य प्रयोज्याविति५३ मे मतिः ।
यदि कार्कश्यमास्थाय योधयामः पिनाकिनम् । ।७२। ।
तस्य जिह्मेक्षितेनैव निहताः स्म ततोसुराः५४ ।
ब्रह्माद्याः शरणं शम्भुमर्दिता५५ यान्ति शान्तये ।।७३ । ।
योभियुक्तः स्वयं तेन शरणं तस्य को भवेत् ।
यस्य सर्वमिदं दैत्या ब्रह्मादि प्रथितं जगत् । ।७४। ।

- - - -- - - - - - - - -

४४ प्राप्नुवन्तो - क. ख. । ४५ पश्यामस्त्वा - ख. । ४६ दैत्यपम् - क. । ४७ च्छिरम् - क. । ४८ नैकजातिवपुर्धराः - क । ४९ स - ख. । ५० स्वयमायात - क., -. मायातुमुपायस्तस्य - ख. । ५१ द्वावुपायौ (?) । ५२ द्वे इमे (?) । ५३ प्रयोज्ये इति (?), प्रयोज्यमिति - क, । ५४ तयासुराः - क । ५५ ... मार्दिता - क. ख ।

- - - -- - - - - - - - -



अभिध्यानात् क्षणेनैव प्रणश्येत भवेदपि ।
यो हेतुरपवर्गस्य कारणं जगतश्च यः ।।७५। ।
कीदृशं तेन युद्धं नो देवदेवेन शम्भुना ।
किन्न वेत्थ शिशुप्रज्ञा५६ लोष्टुगिर्यो५७र्यदन्तरम् । ।७६ । ।
भवन्तो लोष्टवो भूत्वा गिरिकल्पमुमापतिम् ।
ईप्सध्वे५८ मोहिता युद्धे कालपाशेन यन्त्रिताः । ।७७। ।
अहं भक्तो महादेवं जाने५९ तस्य बलान्तरम् ।
स प्रणाममुपस्थास्ये न योत्स्ये शम्भुना सह । ।७८ ।।
यदि यूयमपि प्राज्ञा मम शुश्रूषवो यदि ।
मा कृढ्वं६० शम्भुना युद्धं गच्छध्वं शरणं शिवम् । ।७९।।
तमेवं वादिनं श्रुत्वा विश्वकर्माणमूर्जितम् ।
नारदो भगवान् प्राह दानवान्तकरं वचः । ।8.169.८० ।।
विश्वकर्मन् यत्त्वयेद६१ मुक्त विस्तरशोर्थवत् ।
सर्वं युक्तमिदं किन्तु कालोयं नास्य वर्तते६२ । ।८ १ । ।
भवतां तत्तपः क्षीणमैश्वर्यं भुक्तमेव च ।
क्लीबतामपि६३ कुर्वन्तो यूयं नक्ष्यथ६४ दानवाः ।।८२।।

वृतः सर्वामरैः शम्भुर्वधार्थं६५ भवतामिह ।
प्रणतानप्यसौ युष्माँस्तत्प्रियार्थं निहंस्यति ।।८३ ।।
कथं दनुसुता भूत्वा राजानो बलदर्पिताः ।
भीता मृत्युं जिगीषध्वं कृपणा इव दानवाः ।।८४।।
प्राप्स्यथाधिकमैश्वर्यं त्यक्ष्यथासून्६६ रणे यदि ।
विना युद्धं विपन्नानामशुभा वो गतिर्भवेत् ।।८५।।
अपि चेद्यदि हन्येध्वं६७ देवदेवेन शूलिना ।
प्रमथेन्द्रास्ततो६८ यूयं भविष्यथ६९ न संशयः ।।८६।।

- - - -- - - - - - - - - -

५६ प्राज्ञा - क ख । ५७ लेष्टुगिर्यो - ख. । ५८ ईप्सध्व - क. ख. । ५९ जानन् - ख. ६० कृथा ( ध्वं) - ख । ६१ यत्त्वया विश्वकर्मेदं - क ख । ६२ सांप्रतम् (?) - ख. ६३ क्लीबोनामपि - क., क्लीबाना .. - ख. । ६४ नशत् - क ख । ६५ व्यास वधार्थ - क. । ६६ त्यक्षयासून् - क. ख. । ६७ हन्यध्वं - क. ख. । ६८ मृतो (ता) - ख. । ६९ भवितासे - क. ख. ।

- - - -- - - - - - - - - -

909

गुणं सन्धिगतं नास्ति युष्माकं देवतैस्सह७० ।
विग्रहे वो मतिर्युक्ता सा च व्यक्ता वयं च वः (?) ।।८७।।
शौर्येण भवतां प्रीतः कदाचिद् वृषभध्वजः ।
भवेद्वरप्रदो दैत्याः श्रेयान्७१ वस्तेन विक्रमः ।।८८ ।।
करिष्यामि च वो रक्षां शस्त्राघातनिषेधनीम् ।
उत्तिष्ठत दनोः पुत्रा विजयाय युयुत्सया ।।८९।।
नारदस्य वचः श्रुत्वा तारकाक्षो महाबलः ।
विद्युन्माली च दैत्येन्द्रा बाणाद्याश्च महासुराः ।।8.169.९० ।।
कालपाशार्दिता मूढाः क्षीणपुण्या गतायुषः७२ ।
साध्वेतच्छोभनं प्रोक्तं नारदेनेति तेब्रुवन् ।।९१ ।।
मयोपि तद्वचो बुद्ध्वा७६ ज्ञात्वा नाशमुपस्थितम् ।
शोभनं नारदेनोक्तमिति वाक्यमुवाच ह ।।९२।।
नारदोपि ततो हृष्टो रक्षां७४ बद्ध्वा तु मायया ।
युयुत्सूनसुरान् कृत्वा ययौ शर्वरथं प्रति ।।९३ ।।
ततस्ते दानवाः सर्वे युद्धाय कृतनिश्चयाः ।
नानाप्रहरणोपेता बभूवुर्युद्धलिप्सवः ।।९४।।

तरकाक्षो बलो बाणो विद्युन्माली च दानवः ।
सन्नह्य सहिताः सर्वे राजानस्तस्थुरग्रतः । ।९५। ।
अवाद्यन्त ततः शंखास्तूर्याणि च सहस्रशः ।
दानवानां बले घोरे कातराणां भयप्रदे७५ । ।९ ६ ।।
सरथोयमिहायाति असावन्यः प्रदृश्यते ।
कथमागत इत्येवं वचांस्यूचुः परस्परम् । ।९७। ।

- - - -- - - - - - - - -

७० देवतै सह क- ख ७१ श्रेयो - क ख. । ७२ गतयुषा - क । ७३ बुद्ध्या - ख ७४ -. दृष्टां - ख.।

- - - -- - - - - - - - -



विगतभयविषादास्त्रैपुरा दैत्यसंघाः
प्रकुपितवदनास्ते युद्धसज्जा बभूवुः ।
प्रहरणवरहस्तास्तं रथं वीक्षमाणाः७६
पशव इव मखाग्नेरन्वगच्छन् समीपम् । ।९८ ।।
इति स्कन्दपुराणे त्रिपुरवधेसुरवर्णने ऊनसप्तत्युत्तरशततमोध्यायः७७ ।

सनत्कुमार उवाच
अथाभ्यगात् पश्चिमसागरस्य मूर्ध्नि स्थितन्तत्त्रिपुरं१ रथोसौ ।
नानापताकोज्ज्वलचित्रमौलिर्हैमोपलो२ मेरुरिवाद्रिराजः । ।१ ।।
ते वीक्ष्य दुर्गं त्रिपुरं गणेशा नन्दीशचण्डीशमुखाः३ सुयत्ताः ।
नादं प्रचक्रुः सहिताः प्रवीरा युयुत्सवो दानवराजसिंहैः ।। २ ।।
चण्डेश्वरश्चण्डवपुर्महात्मा ज्वलत्प्रदीप्तोग्रकुठारपाणिः ।
व्यादाय वक्त्रं पुरतः स्थितोभूद् देवस्य शम्भोः प्रमथेन्द्रवीरः ।।३ । ।
दीप्तं त्रिशूलं परिगृह्य नन्दी त्र्यक्षः प्रतस्थे४ हरतुल्यवर्ष्मा५ ।
पार्श्वे स्थितोभूत् स च शंकुकर्णः प्रगृह्य दीप्तं मुशलं गजेन्द्रः । ।४।।
भृङ्गिर्हरात्मा स च वीरभद्रस्तथा गणेन्द्राः शतशः प्रवीराः ।
वज्रत्रिशूलासिभुशुण्डिहस्ता युयुत्सवस्तस्थुरुपेतहर्षाः । ।५। ।
समागतं तं रथमीक्ष्य६ दैत्या युद्धाय निर्जग्मुरुपेतमोहाः ।
ते तारकाक्षप्रमुखाः सुवीरा सन्नह्य नानायुधदीप्तहस्ताः । ।६। ।
सार्धं गणेन्द्रैः समरं प्रचक्रुर्दनोः सुताः कोपवशं प्रयाताः ।
देवोपि चन्द्रार्धनिकेतमौलिः७ शरं न चिक्षेप पुरं प्रदग्धुम् ।।७।।

तस्थौ तथैवाऽसकृदात्मना च पश्यन् रणं तद्गणदैत्यपानाम् ।
ततः स नन्दी गणपैः प्रवीरैरचीकरद्युद्धमदीनसत्वैः । ।८। ।

- - - -- - - - - - - - - -

७६ वीक्ष्यमाणाः - क. ख. । ७७ २१७ - ख ।

१ स्थितो (त) स्तत्रिपुरं - क. । २ मौली हेमोपलो - ख. । ३ नन्दीगिरिशप्रमुखा. - ख । ४ प्रतस्थौ - ख. । ५ वर्मा (धर्मा?) - क. । ६ वीक्ष्य रथं - क. । ७ .. मौली - क. । ८ तस्थोजसा वै - क. । ९ -..कृत - क. ।

- - - -- - - - - - - - - -



विव्याध भृङ्गिं दशभिः पृषत्कैर्विद्युत्प्रभः कोपविरक्तनेत्रः ।
भृङ्गिं समासाद्य शिलीमुखास्ते नाशक्नुवँस्तस्य रुजं प्रकर्तुम् ।। ९। ।
विद्युत्प्रभं भृङ्गिरिटिस्ततोसौ शूलेन दीप्तेन जघान पृष्ठे ।
स तेन शूलेन हतो जुघूर्ण त्यक्त्वा च भृङ्गिं प्रययौ भयार्तः ।। 8.170.१० ।।
भग्नस्तथासौ दितिजाधिपेशो भृङ्गिं समुत्सृज्य गणेन्द्रमुख्यम्१० ।
विव्याध तीक्ष्णैर्निशितैः पृषत्कैर्विनायकं११ सप्तभिरंसदेशे ।। ११ । ।
पुनस्त्रिषष्ट्या दशभिश्च भूयो विद्युत्प्रभस्तं गजराजवक्त्रम् ।
जघान मर्मस्वभिलब्धलक्ष्य१२ स्ततश्चुकोपास्य विनायकेन्द्रः ।। १२ ।।
स पुष्कराग्रेण गजेन्द्रसिंहो ग्रीवां तदा दैत्यपतेर्विवेष्ट्य ।
उत्पाटयामास शिरः शरीरात पद्मं ह्रदान्नाग इव प्रमत्तः । ।१ ३ ।।
दैत्यस्य कृत्तं शुशुभे शिरस्तद्विन्ध्याचलेन्द्रप्रतिमाच्छरीरात् ।
सहंसचक्राह्वरुतोपगीताद् ह्रदान्नवोत्खातमिवाशु पद्मम् । । १४।।
ततोपरौ दैत्यपती सुयत्तौ नेमिर्बलश्चान्धकतुल्यकल्पौ१३ ।
क्रुद्धावुपागम्य हि शंकुकर्णं शिलीमुखैर्विव्यधतुर्गणेन्द्रम् ।।१५। ।
तौ शंकुकर्णः प्रसभं निपत्य छिन्नध्वजाश्वौ विरथौ चकार ।
अन्यौ समारुह्य रथौ पुनुस्तौ भूयस्समागम्य गणप्रवीरम् । । १६ ।।
तं जघ्नतुर्नैकविधः पृषत्कैर्वज्राभिघातप्रतिमैस्सुतीक्ष्णैः ।
क्रुद्धस्तदा स प्रसभं गणेन्द्रस्तौ१४ दैत्यराजौ सुचिरं निरीक्ष्य ।।१७।।
दीप्तेन हत्वा मुशलेन वीरौ संप्रेषयामास पुरं यमस्य ।
अन्ये च दैत्यास्त्रिपुराधिवासाः क्रुद्धा विनिष्क्रम्य गणेन्द्रसिंहैः ।। १८।।
नाराचचक्रासिकुठारहस्ता घोरं महद्युद्धमतीव चक्रुः ।
दैत्याधिपास्ते हरतुल्यकल्पैर्गणेश्वरैः प्राप्तशिवप्रसादैः । । १९। ।
हता बभूवुर्हि गतासवस्तु१५ मृगा यथा केसरिभिर्वनान्ते ।

प्रभ्रष्टनानायुधवस्त्र१६हाराश्छिन्नैर्भुजैश्शोणितमुद्वहन्तः१७ ।।8.170.२० ।।
वज्राहता १८ - - - - - - - पेतुः समुद्रे गिरिशृङ्गकल्पाः ।
श्रुत्वाथदैत्यौ बलनेमिसंज्ञौ तौ शकुकर्णेन हतौ प्रसह्य ।।२१ ।।

- - - -- - - - - - - - - -

१० गजेन्द्रमुख्यम् - क. । ११ विनायकैः - क. । १२. लक्ष - क. ख. । १३ .. वीर्यौ - ख. । १४ निपत्य तौ (?) - क. । १५ गताशयोस्तु - क., गतासवांस्तु - ख. । १६ चक्र - क. । १७ .. मुद्वमत्तः - ख. । १८ वृष्ट्याहता - ख. ।

- - - -- - - - - - - - - -

912

पुराद्विनिष्क्रम्य स तारकाक्षः क्रुद्धो गणेन्द्रं स्वयमभ्यधावत् ।
तं शंकुकर्णो दितिजाधिपेशं१९ मुञ्चन्तमुग्रं शरवर्षमाशु ।।२२ ।।
भल्लेन दैत्यं गिरिसन्निकाशं२० जघान मूर्ध्नि प्रसभं गणेशः ।
निपत्य किञ्चिन्निहतः स तेन भल्लेन दैत्याधिपतिर्मुमोह ।।२३ ।।
प्रोत्थाय तूर्णं स हि तारकाक्षश्चिक्षेप तस्मै गणपाय चक्रम् ।
क्रुद्धस्ततोसावभवद् गणेन्द्रस्तं तारकाक्षं स हि शंकुकर्णः ।।२४।।
निपात्य२१ मुष्ट्या प्रजघान मूर्ध्नि समाहतः सोपि जगाम कृच्छ्रम् ।
जुघूर्ण बभ्राम मुमोह तस्थौ पपात तत्याज वरायुधञ्च ।।२५।।
मुमोच२२ रोषं विरराव तीव्रं ममार पश्चादसुविप्रमुक्तः२३ ।
दृष्टवा विपन्नं दितिजाधिपेन्द्रं प्रगृह्य दैत्या भवनं मयस्य ।।२६।।
गत्वा निवेद्यासुरराजभर्त्रे नादान् प्रचक्रुर्विविधैर्विलापैः ।
ततो मयस्तान्२४ रुदतो२५ सुरेशानाश्वासयन्२६ प्राह वचोसुरेशः२७ ।।२७।।
सृष्टं मया वोमृतमेतदास्ते तेनैनमुत्थापयताशु दैत्याः ।
ततो गृहीत्वामृतमुत्तमं तद् दैत्याधिपं दैत्यवृषाः प्रहृष्टाः ।।२८।।
चक्रुः सजीवं हि यथा पुराणं मयं प्रणेमुश्च मुहुः शिरोभिः ।
स तारकाक्षस्तत आशु भूयो युयुत्सया युद्धपथं जगाम ।।२९।।
आयान्तमालक्ष्य पितामहस्तं२८ पूर्वं मृतं जीवितमाशु भूयः ।
प्रोवाच वाक्यं स सुरासुरेशं निवेदयन् वामकरेण दैत्यम् ।।8.170.३० ।।
हतोप्ययं शङ्कर तारकाक्षः कृतो मयेनाशु सजीव एव ।
तस्यास्ति२९ देवामृतमुत्तमं हि तेनासुरान् जीवयतेसुरेन्द्रः ।।३ १ ।।
दोषो महानेष सुरेन्द्रहेतो३०र्मतान्मृतान् जीवयते यदाजौ३१ ।
ततोमृतं तन्मयसंस्थमाशु प्रध्यानमात्रेण३३ जहार शम्भुः ।।३ २ ।।

पितामहस्तं पुनरेव हृष्टः पिनाकिनं प्राह वचः प्रणम्य ।
दृष्टं मया युद्धमिदं गणानां दैत्याधिपैः सार्धमहीनसत्वैः३३ । ।३ ३ ।।

- - - -- - - - - - - - -

१९ दितिजाधिपेशो - क, श - ख । २० सन्निकाश - -न-. । २१ निपत्य - ख. । २२ मुभोह - क. । २३ विप्रमुक्तं - क. ख., विप्रयुक्तः (?) । २८ स सुप्तान - ख. । २५ प्रयतः - ख. । २६ नाम्ना मयं - ख. । २७ -..न्द्र. - ख. । २८ पितामहन्तं - क. । २०, तत्रास्ति - ख. । ३० वृषेन्द्रकेतो (?) । ३१ सदासौ - क., यदासौ - ख. । ३२ संकल्पमात्रेण (?) । ३३. मदीनसत्वैः - ख. ।

- - - -- - - - - - - - -

913

दिव्यं सहस्रं विगतं समानां क्षयं न चैतत् त्रिपुरं जगाम ।
क्षिपस्व दीप्तं तमिषुं सुरेश प्रयान्तु नाशं सुरविद्विषस्ते । । ३४। ।
पूर्णे सहस्रे त्रिपुरं समेत्य पुनर्विपर्यस्तमभूत् सुरेश ।
क्षिप्तस्त्वयेषुर्न च देवदेव योगेन किं वा तव देवनाथ । । ३ ५। ।
संकल्पमात्रादिदमेति नाशं दैत्याधिवासं त्रिपुरं तवेश ।
यदि त्वहं मानयितव्य ईश३४ विमुञ्च शीघ्रं३५ त्रिपुरे३६ शरं तम् । ।३ ६।।
विज्ञप्त३७ एवं चतुराननेन प्रतीपमालीढमनङ्गहन्ता ।
कृत्वा धनुस्तद्बलवद्विकृष्य युयोज दीप्तं तमिषुं पिनाके३८ ।।३७। ।
संकल्पमात्रेण तदा स तानि पुराणि देवस्सहितानि त्रीणि ।
चक्रे जगत्सृष्टिविनाशकर्ता जगच्च निष्पन्दमभूत्तदाशु । । ३८ । ।
विष्ण्वात्मकं पावकसोमपुंखं त्रैलोक्यसंहार इव प्रदीप्तम् ।
चिक्षेप देवस्तमिषुं तदोग्रं क्षिप्त्वा च कष्टं धिगितीति चाह । ।३ ९। ।
नन्दी समागम्य ततो महेशं प्रोवाच वाक्यं किमिति प्रणम्य ।
नन्दीश्वरं तं भगवानुवाच मयस्य भक्तस्य शुभं चिकीर्षुः । ।8.170.४० । ।
नन्दीश भक्तो मम विश्वकर्मा दहेत् पुरं तस्य यथा न वह्निः ।
तथानलं सोमहरी च देवौ ममाज्ञया गच्छ निवारयस्व ।।४१ । ।
नन्दी प्रगृह्याथ सुरेश्वराज्ञां तूर्णं ययौ विश्वकृतः पुरं तत् ।
- - - - - - तुल्यवेगो ज्योतिष्मतः पूर्वतरं जगाम । ।४२ । ।
दृष्ट्वा मयं तत्र स दानवेशं३९ मूर्ध्ना नताङ्गं वृषभध्वजस्य ।
मृत्योर्भयार्त्तं शरणार्थिनं च नन्दी समाश्वासयदीशभक्तम् ।।४३ ।।
भयं कृथा मा मय रक्षितस्त्वं भक्त्या भवेनेति वचोभ्युवाच ।
नन्दीश्वरं दानवराट् स दृष्ट्वा श्रुत्वा प्रियं तच्छिवसंप्रसादम् । ।४४।।

यथैव रुद्राय ननाम मूर्ध्ना चक्रे प्रणामं स तथैव तस्य ।
अथाग्निरागात्४० त्रिपुरं दिधक्षन् प्रदीपयित्वा सकलं समन्तात् । ।४५। ।

- - -- - - - - - - - - -

३४ मानयितव्यमीश - ख. । ३५ .मस्त्रं - क, मात्रं - ख । ३६ त्रिपुरं - क ख. । ३७ विज्ञाप्त - क. । ३८ पिनाकि ( की) - ख. । ३९ दानवेश - क दानवेन्द्र - ख. । ४० यथाग्निरागात - ख. ।

- - -- - - - - - - - - -



संवर्त्तवह्निप्रतिमो युगान्ते जगत् प्रसंहर्त्तुमिव प्रदीप्तः४१ ।
तमागतं विश्वकृतो निवासं विष्ण्विन्दुयुक्तं ज्वलनं स नन्दी ।
दग्धव्यमेतन्न हुताशनेति वचोभ्युवाचाशु विभोर्नियोगात् । ।४६ । ।
ततः स४२ वह्निस्तमुवाच देवं कस्मान्न दग्धव्यमिदं४३ मयेति ।
नन्दी हुताशं स ततोभ्युवाच मयोत्र तिष्ठत्यमरेशभक्तः । ।४७।।
तं वह्निराहासुरराजमाशु तूर्णं विनिर्गच्छ४४ मयेति वाक्यम् ।
हैमं गृहीत्वा स महेशलिङ्गं पुराद्विनिष्क्रम्य मयोसुरेन्द्रः । ।४८। ।
पातालमाशु प्रविवेश हृष्टः कुर्वन्नमस्कारमुमाप्रियस्य ।
नन्दीश्वरः सोपि सुरेशपार्श्वमागम्य चाख्याय४५ च संस्थितोभूत् ।। ४९।।
ततः प्रदीप्तं त्रिपुरं बभूव विश्लिष्टयन्त्रार्गलनष्टवेश्म ।
नैकासुरामुक्तमहोग्रनादं४६ वित्रस्तदैत्येन्द्रवधूजनाढ्यम् । ।8.170.५० ।।
वातायने हर्म्यविमानसंस्थाश्चन्द्राननाः पीनपयोधराढ्याः ।
पर्यङ्कसुप्ता मदविह्वलाक्ष्यो मार्गं प्रियाणां मुहुरीक्षमाणाः४७ । ।५१ । ।
विलोचनैस्ताम्रनिभाङ्गरागैः४८ श्यामावदाता जघनैर्विशालैः ।
दैत्याङ्गनाः स्वं४९ ददृशुः प्रदीप्तमालिङ्ग्यमानाः शरपावकेन । ।५२। ।
प्रासादसंस्थाः प्रययुर्भयार्त्तास्त्रासेन किन्नर्य इवाचलस्थाः ।
प्रियानथोद्वीक्ष्य५० समागताँस्तान् मोहं समालिङ्ग्य भृशं विजग्मुः ।।५३ ।।
प्रिया गृहीत्वा दितिजास्ततस्ते प्रनष्टकामास्तरसा५१भिजग्मुः ।
निष्क्रान्तमात्राश्शिवशक्तिमूढाः५२ पेतुः समुद्रे बलविप्रयुक्ताः ।।५४।।
दैत्यान् समुद्रे पतिताँस्ततस्तान् मत्स्या महान्तो गिरिसन्निकाशाः ।
तीव्राश्च नक्रा मकराश्च घोराः संजग्रसुर्नष्टबलान् विमूढान् । ।५५। ।
जलेचरेन्द्रास्त्वपरे महान्तस्संछिन्नहाराः पतिताः स्त्रियस्ताः ।
हीनाः प्रियैर्भक्षयितुं प्रवृत्ताः करालदंष्ट्रा विवृताननाश्च । । ५ ६।।
ता भक्ष्यमाणाः पतितास्तरुण्य प्रियान्सरोषं बहुशो निरीक्ष्य ।

रुजा महत्या परिखिद्यमानाः संचुक्रुशुर्दीनतरं युवत्यः । ।५७। ।

- - -- - - - - - - - -

४१ प्रदीप्तं - क । ४२ ततस्तु - ख । ४३ हन्तव्यमिदं - क. ख. । ४४ विनिर्गम्य - ख. । ४५ संरव्याय - ख. । ४६ नैतासुरोन्मुक्तमहोग्रनाद ख । ४७ मुहुरीक्ष्यमाणाः- क. ख. । ४८ .. निताङ्गरागैः - क.,.. .निभान्तरागैः - ख.। ४९ सं - क. ख । ५० प्रियानथावीक्ष्य - ख. । ५१ प्रनष्टकोपास्तरसा - क. । ५२ च्छिवशक्तिमूढाः - क.।

- - -- - - - - - - - -

915

तासां तदा दैत्यविलासिनीनां रेजे भृशं क्रोधनिरीक्षितं तत् ।
रतावसाने परिखेदितानां प्रियैरिवान्यामभिगन्तुकामैः । ।५८।।
सर्वे ततो दैत्यवृषाः५३ सभार्याः प्रदह्यमानास्त्रिपुरानलेन ।
मग्नाः५४ समुद्रे मकरैर्विभिन्ना गतासवो मृत्युवशं प्रजग्मुः । ।५ ९ ।।
शरश्च सोग्नीन्दुजनार्दनात्मा५५ प्रदह्य कृत्स्नं त्रिपुरं पुरं तत् ।
क्षिप्त्वा समुद्रे स्म शमं५६ प्रयातं५७ शशाम शम्भोश्च करं जगाम ।।8.170.६० । ।
दैत्यैर्हतैस्तैस्त्रिपुरे च दग्धे५८ देवान् रथस्थान् पुनरेव देवः ।
पूर्वं यथा दिव्यशरीरयुक्तान्५९ चकार सृष्टिप्रलयादिहेतुः ।।६१ । ।
ब्रह्मादयस्ते त्रिदिवौकसेशा नेमुर्वचश्चेदमथोचुरीशम् ।
कृतं त्वयेदं भगवन्नशक्यं शुभं महद्रौद्रतरं च कर्म । ।६२। ।
दैत्या हतास्तत्त्रिपुरं प्रदग्धं शान्तिः कृता नः स्म६० सुरासुरेश ।
नमोस्तु सर्वत्र सदा स्थिताय स्रष्ट्रे सुराणां परमेश६१ तुभ्यम् ।
नित्यं नविज्ञातगमक्रियाय नमो नमः सर्वगताय तुभ्यम् ।।६३ । ।
तानाह देवः स६२ तदा सुरेन्द्रान् ब्रह्मार्कविष्ण्विन्द्रधनेश्वराद्यान् ।
सदैव यूयं प्रतिपालनीया रक्ष्याश्च देवाः सुतवन्मयैव । ।६४।।
पूर्णाभिलाषा हतविद्विषश्च प्रयात हृष्टाः स्वनिवेशनानि ।
देवास्ततो देववरं प्रणम्य जग्मुः स्वकीयानि निवेशनानि । । ६५ । ।
देवोपि सिद्धैरभिवन्द्यमानः कैलासशृङ्गं सहितो गणेन्द्रैः ।
चण्डेशनन्दीश्वरवीरभद्रैर्जगाम कर्ता जगतस्त्रिनेत्रः । । ६ ६। ।
इति कथितमसह्यं देवदेवस्य कर्म
त्रिपुरदहनसंज्ञं व्यास तुभ्यं मयैतत् ।
मनुज इदमधीते यः शुचिः शर्वभक्तः
स भवति गतपापः स्वर्गभाग् देवजन्मा ।। ६७। ।

इति स्कन्दपुराणे त्रिपुरवधे सप्तत्यधिकशततमोध्यायः६३

- - - -- - - - - - - - - -

५३ दैत्यवराः - ख । ५४ ... भग्ना - क. । ५५ सोग्नीन्द्रजनार्दनात्मा - क. । ५६ शमं (?) । ५७ प्रयातः (?) । ५२ प्रदग्धे - क. । ५९ शरीरधारीन् - क. । ६० ..स्स - क. । ६१ प्रमथेश - ख. । ६२ स्म - क. । ६३ समाप्तं त्रिपुरवधमिति - ख. ।

- - - -- - - - - - - - - -

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१८

https://sa.wikisource.org/s/fbt
< स्कन्दपुराणम् | खण्डः ८ (अम्बिकाखण्डः)

पूर्व पृष्ठः (अध्यायाः १६१ - १७०) | आगामी पृष्ठः (अध्यायाः १८१ - १८४)

916

व्यास उवाच

श्रुतं मयैतद् भगवन् दहनं त्रिपुरस्य तु ।
विचित्रार्थं यथावृत्तं क एवमभिधास्यति ।। १ ।।
कस्मात् क्रुद्धो नगेन्द्रं तं क्रौञ्चं दारितवान् गुहः ।
पक्षान् सर्वगिरीन्द्राणां१ कस्माच्चिच्छेद वासवः ।।२ ।

सनत्कुमार उवाच

शृणु व्यास महाबुद्धे यन्मां त्वं परिपृच्छसि२ ।
कुमारेण यथा भिन्नो मैनाकिः३ क्रौञ्चपर्वतः ।।३ ।।
गिरिराजमथाभ्येत्य मेरुं सर्वसुरालयम् ।
अपश्यद्वासवः स्कन्दं संघातं तेजसामिव ।।४।।
शरस्तम्बवने दृष्ट्वा कुमारमनलप्रभम्४ ।
सुरराज्यमदाविष्टः शक्रः पप्रच्छ षण्मुखम् ।।५।।
कस्त्वं दिव्यवपुर्बाल मेरुपर्वतमाश्रितः ।
न मां पूजयसे दृष्ट्वा देवराजमिहागतम् ।।६।।
तमेवं वादिनं शक्रं प्राह शूलधरात्मजः ।
ब्रह्माद्या मां विजानन्ति सिद्धा वेदविदश्च ये ।।७।।
तपसा लब्धराज्येन न चिरादस्तमेष्यता५ ।
किं त्वया जानता शक्र कार्यं किं पूजितेन वा ।।८ ।।
अथोवाच पुनः शक्रस्तं देवद्६मनलात्मजम्७ ।
मत्तः परतरो८ नास्ति मुक्त्वा शर्वपितामहौ ।।९।।
कथमेवमवोचस्त्वं९ विबुधाधिपमागतम् ।
यदि मत्तस्त्वमात्मानं महान्तं मन्यसेनघ ।। 8.171.१० ।।
मैनाकतनयो ह्येष क्रौञ्चसिद्धनिषेवितः१० ।
सुविस्तीर्णो महाशैलो नैकनिर्झरनिस्रवः ।। ११ ।।

एह्येहि११ त्वं मया सार्धं कुरु शीघ्र प्रदक्षिणम् ।
य एनमावयोरेकः पूर्वमेव क्रमिष्यति । । १२ । ।
- - - - - - - - -- - -
१ सर्वगिरीणां च - ख. । २ पृष्टवानसि - क । ३ मैनाकः - ख. । ४ कुमारं ह्यनलप्रभम् - ख. । ५.. तो - क. ख. ६ शक्रस्तदेव - क. । ७.. मनलात्मजः - क. । ८ परतरं - ख. । ९ कथं मिथ्य(ा)- मवोचस्त्वं - ख. । १० सिद्धर्षिसेवितः - ख. । ११ एह्येवं - ख ।
- - - - - - - - -- - -

917
प्रभावात्तेजसा चैव स महान्नौ भविष्यति ।
बाढमित्येवमुक्त्वाथ कुमारः१२ षण्मुखस्तदा । । प ३ । ।
शक्रेण सह संगत्य मयूरवरमास्थितः ।
महेन्द्रस्याग्रतो गच्छन् चक्रे क्रौञ्चं प्रदक्षिणम्१३ । । १४। ।
अथ बुद्ध्वा महेन्द्रस्तु न्यूनमात्मानमानलात् ।
कुमारमभिसन्धित्सुर्मनसैव प्रदक्षिणम् । । १ ५। ।
कृत्वा सुनिर्वृतस्तस्थौ उपविष्टः४ शिलातले ।
जवेनाथ कुमारस्तं क्रौञ्चं कृत्वा प्रदक्षिणम् । ।१ ६। ।
प्रोवाचेन्द्रं१५ तदा दृष्ट्वा जेताहमिति सत्वरः१६ ।
अहमेव हि जेतेति शक्रस्तमवदद् गुहम् । । १७। ।
असकृद् ब्रुवतोरेवं तयोः शक्रकुमारयोः ।
क्रौञ्चोभ्येत्य वचः प्राह किमेतदिति भूचरः । । १ ८। ।
ततः शक्र उवाचेदं कुमारं वचनं तदा ।
एष एवावयोः क्रौञ्चो जयसाक्षी१७ महाबलः । । १ ९। ।
नानृतं वक्ष्यति ह्येष पौत्रो हिमगिरेर्वरः१८ ।
पृच्छ्यतां शक्र को दोष इत्याह ज्वलनात्मजः । ।8.171.२ ० । ।
तं शक्रः सादरं प्राह केन त्वमचलाग्रतः ।
कृतप्रदक्षिणो१९ ब्रूहि प्रमाणं हि त्वमावयोः । । २१ । ।
ततः क्रौञ्चो विमूढात्मा संचिन्त्य सुचिरं नगः ।
अयं शचीपतिश्चक्रे मामिहाग्रे प्रदक्षिणम् ।। २ २। ।
- -२० र्यं प्रहसन्२१ देवानित्युवाच नगाधिपः ।
अथैवं ब्रुवतस्तस्य सत्यहीनं तदा गिरेः । ।२ ३ । ।
पपात शिखरं तूर्णं कुलिशेन यथा हतम्२२ ।

तत्रासन् यानि भूतानि सुराद्यानि गिरीश्वरे ।
तानि संत्यज्य शीघ्र तं प्रययुः सर्वतो दिशम् । ।२४।।

- - - - - - - -- - - -

१२ मयूरे - ख. । १३ क्रौञ्चप्रदक्षिणम, प्रदक्षिणाम् (?) । १४ तस्थावुपविष्टः (?) ' १५ प्रोवाचेदं - क ख. ।
१६ सद्वचः - ख. । १७ जये साक्षी - ख । १८... र्वच - ख । १९ कृत प्रदक्षिणं - क. ख । २० आहाष्ट्रं - क. ।
२१ संशय - क- । २२ हतः - क ख ।

- - - - - - - -- - - -

918

जहृषे वासवश्चापि मनसा पूजयन् गिरिम् ।
ततश्चुक्रोध रुद्रात्मा गिरेः क्रौञ्चस्य षण्मुखः । ।२५। ।
 - - - - गुहं द्रष्टुं२३ संक्रुद्धं वासवस्तदा ।
एकस्थे तेजसी पूर्णे वह्निभास्करयोरिव । । (?) २६ ।।
अथ शक्तिं समुत्क्षिप्य यमानलसमप्रभाम् ।
चिक्षेप भगवान् स्कन्दः क्रुद्धः क्रौञ्चजिघांसया ।।२७।।
सा पपात गिरेर्मूर्ध्नि शक्तिः क्रौञ्चस्य सत्वरम् ।
क्षीणायुषो यथा पुंसो मृत्युपाश - - - - ।।२८।।
स तया भिन्नमर्मा तु शक्त्या क्रौञ्चो नगोत्तमः२४ ।
सर्वतश्छिन्नसर्वाङ्गः स्रवद्रुधिरनिर्झरः ।।२९ । ।
मूर्त्तिमानपतद् भूमौ संज्ञाप्राणविवर्जितः ।
पतिं विनिहतं दृष्ट्वा पत्न्यस्तस्य सुदुःखिताः । ।8.171.३ ० ।।
विलपन्त्यस्तदा दीनं२५ पेतुः क्रौञ्चाचलोपरि ।
मेरुर्हिमाचलो विन्ध्यः कैलासो गन्धमादनः ।।३ १ । ।
पारियात्रश्च सह्यश्च निषधोदयवामनाः२६ ।
क्रौञ्चस्य जनकश्चापि मैनाकः पर्वतोत्तमः ।।३ २ ।।
सर्वे पर्वतराजान२७ आजग्मुः शोकपीडिताः ।
परिवार्य गिरिं क्रौञ्चं रुरुदुर्दुःखिता भृशम् । । ३३ ।।
भ्रातृपुत्र हतं ज्ञात्वा देवदेवी गिरीन्द्रजा ।
शर्वेण सहिता क्रौञ्चमाजगाम महाव्रता । । ३४। ।
कुमारेण हतं दृष्ट्वा क्रौञ्चं बान्धवमात्मनः ।
पीडिताभूत्तदा देवी दृष्ट्वा पितरमर्दितम्२८ । ।३५।।
हिमवन्तं महाशैलं वधात् पौत्रस्य दुःखितम् ।

शुशोच गिरिजा दृष्ट्वा मुहुर्वीक्ष्य सुरेश्वरम् ।। ३६ ।।
भगवन्तमथायातं देव्या सह पिनाकिनम् ।
शोकेनापि सुसन्तप्ता नमश्चक्रुर्महाबलाः२९ । ।३७। ।

- - - - - - - - -- - -

२३ तं क्रुद्धं - क. । २४ क्रौञ्चनगोत्तमः - क. । २५ दीनाः (?) । २६ निषधोदयवामनः - क. । २७ सर्वपर्वतराजान - क. । २८ ... मर्दितुम् क. । २९ मनश्चक्रुर्महमाबलाः - क ।

- - - - - - - - -- - -

919

अथ प्रणम्य देवेशं हिमवानचलोत्तमः ।
व्यज्ञापयत दीनात्मा दुःखशोकपरिप्लुतः ।। ३८ ।।
शक्रेणानेन भगवन्नात्मानं३० बहुमन्यता ।
निधनं नायितः पौत्रो ममायं क्रौञ्चपर्वतः ।।३ ९। ।
स्पर्धा कास्य कुमारेण तव देव सुतेन हि ।
नान्तरं वेद यो३१ दर्पात् कुमारस्यात्मनश्च ह । ।8.171.४० ।।
स्पर्धां कृत्वा कुमारेण हते पौत्रे ममाधुना ।
निर्वृतो गतदर्पोयं सुखं तिष्ठतु वासवः । ।४१ । ।
हते पौत्रे महादेव निमग्नः शोकसागरे ।
न जीवितुमहं शक्तो यास्ये पौत्रगतिं त्वहम् । ।४२ ।।
एवं विलपतस्तस्य मेरुविन्ध्यपुरोगमाः ।
विनेदुर्दुःखसंतप्ता बान्धवाभावपीडिताः ।।४३ ।।
पितरं दुःखितं दृष्ट्वा तथान्यान् बान्धवान् गिरीन् ।
अभवच्छोकसन्तप्ता गिरिजापि जगद्धरा ।।४४।।
अथ तान् दुःखितान् दृष्ट्वा सर्वान् गोवृषवाहनः ।
मा कार्ष्ट शोकमित्युक्त्वा तनयं प्राह षण्मुखम् ।।४५। ।
महान्तस्त्वद्विधाः पुत्र सापराधेपि बान्धवे ।
नाशुभं कुर्वते कस्मात् क्रौञ्चं निहतवानसि ।।४६।।
भ्रातृसूनुर्भवन्मातुरेष क्रौञ्चो महागिरिः ।
कथं भ्रातरमेनं स्वं३२ हतवानसि षण्मुख ।।४७।।
सदृशं कर्म नैतत्ते३३ मन्मयस्य सुतस्य ते३४ ।
ब्रूहि वा साम्प्रतं कर्म किमत्र बहु मन्यसे ।।४८। ।
तमेवं वादिनं देवं३५ षण्मुखः पितरं तदा ।

इदं प्रोवाच सव्रीडं वचनं परमाद्भुतम् । ।४९।।
शक्रस्यापनयाद्देव क्रौञ्च एष हतो मया ।
असन्मन्त्रितवान् यस्माद् विज्ञप्तिमपरां शृणु ।।8.171.५० । ।

- - - - - - - - -- - -

३० भगवान् आत्मान - क. । ३१ वेदयन् - क. । ३२ भ्रातरमेवं त्वं (?) । ३३ नैनत्ते - क. । ३४ सुतस्तव -क ।

- - - - - - - - -- - -

920

त्वत्प्रसादादहं क्रौञ्चं जीवयामि नगोत्तमम् ।
दुष्करं नहि मे चिञ्चित् तव देव सुतस्य हि ।५१ । ।
उत्तिष्ठेति ततः क्रौञ्चं भ्रातरं प्राह षण्मुखः ।
स बिभ्रत् पूर्ववद्देहं क्रौञ्चो नगपतिः क्षणात् ।।५२।।
उत्तस्थौ नीरुजो३६ व्यास आश्चर्यं तदभूत्तदा ।
जीवितेनाचलेनैवं षण्मुखो वह्निसप्रभः । । ५३ ।।
स्मरन् रुद्रादधिक्षेपं कोपसंरक्तलोचनः ।
समक्षं सर्वदेवानां शक्रस्य च महाबलः । ।५४। ।
वायुविष्णुयमानां च ब्रह्मणश्च महात्मनः ।
देवदेवं३७ प्रणम्येशं पितरं ह्युमया सह । । ५५।।
बभाषे वचनं देवः कुमारवररूपधृक् ।
शक्रेणानेन देवेन्द्रा मत्समक्षं प्रभाषितम् । । ५६। ।
महांस्त्वत्तोहमित्येव तत्र मां मन्युराविशत् ।
तन्मयैषा महाशक्तिर्निखाता वसुधातले ।।५७ । ।
उद्धर्तुं योमरः शक्तो मुक्त्वा देवं पिनाकिनम् ।
उत्पाटयतु स ह्येतां३८ महान्मत्तस्ततो हि सः । ।५८। ।
एवमुक्त्वा ततो देवो बालार्कसदृशप्रभः ।
तूष्णीं बभूव हृष्टात्मा तस्थौ च पितृपार्श्वतः ।५९। ।
अथेन्द्रो देवतामध्ये राज्यदर्पान्वितोमरः३९ ।
उत्पाटयितुमुत्सेहे तां शक्तिं वसुधां गताम् । ।8.171.६० ।।
न च चालयितुं शक्तो यत्नादपि सुराधिपः ।
अथ लज्जान्वितोत्यर्थं तस्माद्देशादपाक्रमत् । ।६१ ।।
ततोन्ये दैवतश्रेष्ठा४० ये यमानिलपुरस्सराः ।

मतिं चक्रुः समुद्धर्तुं यत्नं शक्त्याश्च दंशिताः (?) ।। ६२ ।।
न च चालयितुं शेकुस्तां शक्तिममरोत्तमाः ।
ततो विष्णुरमेयात्मा देवान् दृष्ट्वा हतौजसः । ।६३ ।।

- - - - - - - - - -- - -

३६ निरुजो - क. । ३७ देवी - क. । ३८ सो ह्येता - क. । ३९ राजदर्पान्वितोमरः - क. । ४० देवतेष्ठाः - क. ।

- - - - - - - - - -- - -

921

शक्तिमुद्धर्तुमुत्सेहे समक्षं त्रिदिवौकसाम् ।
तेनासौ चाल्यमानापि यस्माच्छक्तिर्धरातले । । ६४। ।
न चचाल महावीर्या स्कन्दतेजोबलान्विता ।
ततो विष्णुरमेयात्मा ज्ञात्वा तत्त्वार्थमादृतः४१ । । ६५ ।।
कुमारं पूजयन् भक्त्या शक्त्युत्क्षेपान्न्यवर्तत ।
अथ सर्वेमरा व्यास विष्णुश्च सुरसत्तमः । ।६६ । ।
संस्तुत्य षड्मुख देवमिदमाहुर्महौजसः ।
- - - - - देवानां महादेवसुतःप्रभुः । । ६७। ।
नाथः पालयिता स्रष्टा आर्तिघ्नः प्रवरो महान् ।
त्वया नाथेन देवेश वयं सर्वे सुनिर्वृताः । । ६८। ।
तिष्ठामः सहिताः सर्वे त्वमस्मान्४२ पाहि सर्वतः ।
शक्रव्यतिक्रमं चैव बालिश्यान्मोहकारितम् । ।६९। ।
प्रणयाद्याचितोस्माभिः क्षन्तुमर्हसि सर्वदा ।
एवं स भगवान् सर्वैः कुमारः संस्तुतोमरैः । ।8.171.७० ।।
क्रोधं तत्याज शक्रे तु तुतोष च दिवौकसाम् ।
ततस्ते गिरयः सर्वे देवी च हिमवत्सुता । ।७ १ । ।
देवराजस्तथा शक्रो हृष्टा गुहमपूजयन् ।
भगवानपि संतुष्टस्तनयाय वरान् ददौ । ।७२ । ।
ययौ चापि गिरेः शृङ्गं दिव्यं हिमवतः शुभम् ।
सार्धं गुहेन देव्या च मातृणां गणनायकः ।।७३ । ।
क्रौञ्चेन सहिताश्चापि मेरुविन्ध्यादयोचलाः ।
शक्रश्च सुरराट् देवः स्वानि सद्मानि भेजिरे । ।७४। ।
एवमेतद्यथा४३ क्रौञ्चः क्रौञ्चसारसवासिनः ।
गुहेन दारितः शक्त्या पश्चाच्चैव४४ कृतोमरः ३१७५। ।

दृश्यते चापि४५ तत् क्रौञ्चे क्षतं शक्त्याचलोत्तमे ।
नैकदैवतसंवासं यदभूद्विस्तृतं४६ महत् ।।७६ ।।
- - - - - - - - -- - - -
४१. मादितः (?) । ४२ तथास्मान् - क । ४३ एतस्मिन्नन्तरे - घ । ४४ पश्चादुभाभ्यां च - घ. । ४५ दृश्यतेद्यापि (?) । ४६ तदभूद्विस्तृतं - क. ।
- - - - - - - - -- - - -

922
एतत्ते कथितं सर्वं क्रौञ्चदारणमद्भुतम् ।
य इमं शृणुयान्मर्त्यः सर्वपापैः स मुच्यते४७ । ।७७। ।
व्यास उवाच
भगवन्४८ परमेशानो मातृणां नायकः कथम् ।
का एता मातरश्चापि शंसैतत् पृच्छतो मम । ।७८।।
कथं मातृगणा जाताः किन्निमित्तमथापि च ।
किंवीर्या किंप्रभावाश्च संभूतास्ते गणाः प्रभो ।।७९।।
कश्चासामाश्रयो येन वर्तन्ते तद्गणाः शुभाः ।
केन मृष्टाः स्वयं वापि एतदिच्छामि वेदितुम् । ।8.171.८० । ।
सनत्कुमार उवाच
अत्र४९ ते वर्त्तयिष्यामि मातृणामुद्भवं शुभम्५० ।
पुरा हि भगवान् ब्रह्मा सृष्ट्वेमा विविधाः प्रजाः । ।८१ । ।
अवेक्षमाणः कालेय चचार विबुधेश्वरः ।
स कदाचित् प्रजाध्यक्षः संध्याकाल उपागते । ।८२।।
देशं रम्यं समासाद्य तीरे पूर्वमहोदधेः ।
रम्ये चकार संध्यां हि वर्षकोटिमतन्द्रितः । ।८३ ।।
कृतसंध्यस्ततो देवः कमलासनसंस्थितः ।
चिन्तयामास रम्योयं देशो दृष्टिमनोहरः ।।८४। ।
करोम्यत्र५१ पुरं रम्यं सर्वकामसमन्वितम् ।
इति संचिन्त्य स व्यास भगवान् सर्वसृक् प्रभुः । ।८ ५।।
तस्मिन् रम्ये प्रदेशे तु चक्रे पुरमनुत्तमम् ।
लोहितासितसौवर्णैः प्रस्तरैश्चामितप्रभम् ।।८६।।
अट्टाट्टहासकैश्चैव खातकैश्च समन्वितम् ।
शृङ्गाटकचतुष्केण चतुष्पादमिव स्थितम् । ।८७।।

- - - - - - - - - - - - -

४७ प्रमुच्यते -क, अत्रान्तरेध्यायसमाप्तिपुष्पिकावाक्यं दृश्यते घ पुस्तके । ४८ भगवान् - क ख. । ४९ हन्त(?) । ५० इतिहासं पुरातनं - घ. । ५१ आक्राम्यात्र - घ, ।

- - - - - - - - - - - - -

923

वप्रखातकसंयुक्तैर्गृहैश्चापि५२ महाधनैः५३ ।

मध्ये मन्दाकिनी वापी सरिद्दिव्या मनोहरा ।।८८ । ।

नलिनीवनसंछन्ना प्रहृष्टखगनादिता५४ ।

तत् सृष्ट्वा तु पुरं ब्रह्मा सौवर्णं मणिभूषितम् । ।८९ ।

प्रोवाच वचनं व्यास परमाद्भुतमर्थवत् ।

रम्ये पुरवरे येस्मिन् वत्स्यन्ति सुकृताशिनः । ।8.171.९० । ।

अवध्यास्ते जराहीनास्तेजोबलसमन्विताः ।

भविष्यन्ति महाभागा मत्प्रसादान्न संशयः ।।९१ ।।

ततः स भगवान्देव उवाच पुनरेव ह ।

अस्मिन सदैव कामानामिष्टानां सुरसत्तमः । ।९ २। ।

देवो वर्षति कोटिं वै तेनास्मिन्५५ सुखिनो जनाः ।

एवं स भगवानुक्त्वा ब्रह्मा लोकपितामहः ।

अगच्छत् स्वसभां दिव्यां नैकसिद्धनिषेविताम् ।।९३ । ।

तस्मिन् गते ततो व्यास असुरैर्दैत्यभाषितैः (?) ।

अधिष्ठितं पुरं तद्वै सर्वैर्ब्राह्मणकंटकैः । ।९४। ।

येषां पतिरसुक्रोधः सर्वशस्त्रभृतां वरः ।

ब्रह्महा यज्ञहा विप्र देवान्तकसुरान्तकः५६ ।।९५।।

सिंहनादो भीमनादो मद इत्येवमादयः ।

अथ दैत्याः समागम्य हैमकुण्डपुरस्सराः ।

तस्मिन्पुरवरे स्थित्वा पीडां५७ चक्रुरनेकशः५८ । ।९६। ।

द्वेष्टारो जगतस्ते हि जघ्नुर्विप्रान् सहस्रशः ।

यज्ञहोमादिकाश्छिन्नाः क्रियास्तैरसुराधमैः ।।९७ ।।

तानेवंकारिणो ज्ञात्वा सर्व एव दिवौकसः ।

ब्रह्मलोकमथाभ्येत्य सर्वमश्रावयन् विभोः ।९८। ।

वचो दिवौकसां श्रुत्वा ज्ञात्वा दैत्यविचेष्टितम् ।

नैतच्छक्यं मयेत्युक्त्वा ब्रह्मा सार्धं सुरोत्तमैः ।।९९। ।

- - - - - - - - -- - -

५२ ग्रहैश्चापि - घ. । ५३ ..वरै - घ. । ५४ प्रकृष्टखगनन्दिता - ख. । ५५ तेनास्मि - घ. । ५६ सुरान्तकौ (?) । ५७ क्रीडा (?) । ५८ ... श्चक्रुरनेकशः - क. ।

- - - - - - - - -- - -



आजगाम भवं द्रष्टुं रम्यं हिमगिरेर्वनम्५९ ।
यत्र गौरी तपस्तेपे भर्तुं देहार्धधारिणी । । 8.171.१०० । ।
प्रविष्टास्तत्र ते देवा ब्रह्माद्याः सर्व एव हि ।
स्त्रिय एवाभवन् तूर्णं पार्वत्यास्तपसो बलात् । ।१ ०१ ।।
ततस्तान् देवदेवेशः स्त्रीभूतान् हि सुरोत्तमान् ।
किमर्थमागता यूयमिति पप्रच्छ शूलधृक् । ।१ ०२ । ।
ततस्ते सहिताः सर्वे पूर्वं दैत्यविमर्दनम् ।
निवेद्य शम्भवे पश्चात् कृच्छ्रं स्त्रीभावमात्मनः । । १०३ ।।
यथैवं पुरुषाः पूर्व भवाम इति तेब्रुवन् ।
तानुवाचाथ देवेशः सुरान् स्त्रीभावमागतान । । १ ०४।।
यात यूयं सुराः सर्वे स्त्रियो भूत्वासुरान्तिकम् ।
स्त्रीणामेव हि ते वध्या दानवा बलदर्पिताः । । १० ५।।
तनूर्मूर्त्तिमतीः कृत्वा परतो मातरः शुभाः ।
यै६० य एव यथा पूर्वं भविष्यथ सुरोत्तमाः । । १०६ ।।
अथ भूयः प्रणम्येशं देवता इदमब्रुवन् ।
आत्मनोपि तनुं देव कुरु मूर्त्तिमतीं स्त्रियम् । । १ ०७। ।
यया सार्धं बलाद् दैत्यान् हंस्यामः परमेश्वर ।
ततो देवोसृजद्देवीं रूद्राणीं मातरं शुभाम् ।।१ ०८। ।
विकृतं रूपमास्थाय द्वितीयामपि मातरम् ।
नाम्ना तु बहुमांसान्तां जगत्संहाररूपिणीम् ।। १० ९। ।
नियोगाद् देवदेवस्य ततो विष्णुरपि प्रभुः ।
मातरावसृजद् द्वे तु वाराहीं वैष्णवीमपि ।
अभूत् पितामहाद् ब्राह्मी शर्वाणी शङ्करादपि । । 8.171.११० । ।
कौमारी षड्मुखाच्चापि विष्णोरपि च वैष्णवी ।
वाराही माधवाद् देवी माहेन्द्री च पुरन्दरात् । । १११ । ।

- - - - - - - - -- - -

५९ वेरम् - क. । ६० य - क. ।

- - - - - - - -- - - -

925

सर्वतेजोमयो देवी मातॄणां प्रवरा शुभा ।

बहुमांसा महाविद्या बभूव वृषभध्वजात् । । ११२ । ।

सर्वासां६१ देवतानां च देहेभ्यो मातरः शुभाः ।

स्वरूपबलधारिण्यो निर्जग्मुर्दैत्यनाशनाः । । १ रो ३ । ।

वायव्या६२ वारुणी याम्या कौबेरी च महाबलाः ।

महाकाली तथाग्नेयी अन्याश्चैव सहस्रशः । । ११४ । ।

ता गत्वा तत्पुरं रम्यं दैत्यान् भीमपराक्रमान् ।

जघ्नुर्बहुविधं देव्यो घोरनादैर्विभीषणैः । । ११ ५। ।

दैत्यहीनं च तच्चक्रुः पुराग्र्यं हेमभूषितम् ।

अथ दैत्यैर्हतैस्सवैर्देवदेव उमापतिः६३ । । ११६ । ।

आजगाम प्रदेशं तं मातॄणां वरदित्सया ।

तान् दृष्टवा निहतान्सर्वान् दैत्यानमरविद्विषः६४ । । १ १७। ।

परितुष्टस्तदा तासां वरान्प्रादाद् वृषध्वजः ।

जगतो मातरो यूयं मातृभूता भविष्यथः । । ११८ । ।

युष्माकं ये भविष्यन्ति भक्ताः पुरुषपुंगवाः ।

स्त्रियौ वापि महाभागा न तान् हिंसन्ति हिंसकाः । । ११ ९। ।

मृता मम गणाश्चापि भविष्यन्त्यजरामराः ।

भवतीनामिदं स्थानं कोटीवर्षमिति श्रुतम् । । 8.171.१२० । ।

भविष्यति जगत्ख्यातं सर्वपापप्रमोचनम् ।

अहं हेतुर्हि युष्माकं यस्मात् सृष्टा मयैव च । । १२१ । ।

हेतुकेश्वरनाम्नाहं६५ स्थास्याम्यत्र वरप्रदः ।

युष्माभिः सह वत्स्यामि नायकत्वं व्यवस्थितः । । १२२ । ।

यस्तु युष्मान्मया सार्धं विधिवत् पूजयिष्यति ।

सर्वपापविमुक्तात्मा स परां गतिमाप्स्यति । । १२३ । ।

दानवा निहता यस्माच्छूलेन बहुमांसया ।

शूलकुण्डमिदं नाम्ना ख्यातं तीर्थं भविष्यति । । १ २४। ।

- - - - - - - -- - - -

६१-. सर्वेषां क ख ।। ६२ वाथवा (?) । ६३ देवदेवमुमापतिम् - क । ६४ ... विद्विषान् - क. ।

- - - - - - - - - -- - -



इह शूलोदकं पीत्वा बहुमांसां प्रणम्य च ।
अधृष्यः सर्वहिंस्राणां भविष्यति नरोत्तमः ।। १ २५।।
प्रतिकूलेति विख्याता रम्या मन्दाकिनी नदी ।
रुधिरौघवती सेह भवतीनां भविष्यति । । १ २६।।
अहं ब्रह्मा च विष्णुश्च ऋषयश्च तपोधनाः ।
मातृतन्त्राणि दिव्यानि मातृयज्ञविधिं परम् । । १ २७।।
पुण्यानि प्रकरिष्यामो यजनं यैरवाप्स्यथ ।
ब्राह्मं (?) स्वायंभुवं चैव कौमारं यामलं तथा १ २८।।
सारस्वतं स गान्धारमैशानं नन्दियामलम् ।
तन्त्राण्येतानि युष्माकं तथान्यानि सहस्रशः । । १२९ । ।
भविष्यन्ति नरा यैस्तु युष्मान् यक्ष्यन्ति भक्तितः ।
नराणां यजमानानां वरान् यूयं प्रदास्यथ । ।8.171.१ ३० ।।
दिव्यसिद्धिप्रदा देव्यो दिव्ययोगा भविष्यथ ।
याश्च नार्यः सदा युष्मान् यक्ष्यन्ते सरहस्यतः । । १३१ । ।
योगेश्वर्यो भविष्यन्ति रामा दिव्यपराक्रमाः ।
छगलः कुम्भकर्णश्च मदीयौ गणनायकौ । । १३ २। ।
युष्माकं द्वारपालत्वे स्थास्यतस्तौ ममाज्ञया ।
कोटीवर्षमिदं स्थानं मातॄणां प्रियमुत्तमम् ।। १३३ । ।
श्मशानं प्रवरं दिव्यं भविष्यति सुखप्रदम् ।
वरानेवं हि ताँल्लब्ध्वा मातरो लोकमातरः ।। १ ३४। ।
भक्त्या प्रणम्य देवेशं मुमुदुर्भृशमर्द्दिताः ।
ततःप्रभृति ताः सर्वाः सहिताः शशिमौलिना । । १३ ५। ।
कोटीवर्षे६६ वसन्ति स्म सर्वलोकाभयप्रदाः६७ ।
एवं स भगवान् देवो मातॄणां गणनायकः ।
अभवच्छङ्करो व्यास यन्मां त्वं पृष्टवानसि । । १३ ६। ।

- - - - - - - - - -- - -

६६ कौटीवर्षं - क. ख. । ६७ सर्वलोकभयप्रदाः - क ।

- - - - - - - - - -- - -

927

उत्पत्तिमेतां जगतीश्वरीणां६८ ब्रह्मेन्द्रशक्रानिलवन्दितानाम् ।
पठेन्मनुष्यः शृणुयाच्च नित्यं यः स्वर्गलोकं स मृतो लभेत ।। १ ३७। ।
इति स्कन्दपुराणे एकसप्तत्यधिकशततमोध्यायः

सनत्कुमार उवाच
शक्रेण गिरयः पूर्वं छिन्नपक्षा यथा कृताः ।
तत् प्रवक्ष्यामि ते व्यास शृणु सर्वमशेषतः । ।१ । ।
पुरा सिंहवपुः कृत्वा विष्णुना परमौजसा ।
दैत्यदानवनाथे तु हिरण्यकशिपौ हते । ।२ ।।
प्रह्लादस्तत्सुतो दैत्यो विष्णुं प्रति चुकोप ह ।
हते पितरि स श्रीमान् महादैत्यपतीश्वरः ।।३ ।।
बहून्यब्दसहस्राणि चकारोग्रं महातपः ।
अथ देवश्चतुर्वक्त्रस्तुष्टस्तमसुराधिपम् । ।४। ।
प्रोवाच स्वयमागत्य वरदोस्मीति सादरम् ।
प्रणम्योवाच वरदमिदं ब्रह्माणमागतम्१ । ।५ । ।
प्रह्लादो मन्युतप्ताङ्गः पितुर्वधमनुस्मरन् ।
भगवन् यदि तुष्टोसि वरदश्च समागतः । ।६।।
राजानं हतवान् विष्णुः पितरं मम मायया ।
संग्रामे तमहं विष्णुं यथा हन्यां तथा कुरु । ।७।।
तमुवाच ततो ब्रह्मा प्रह्लादमसुरोत्तमम् ।
अजय्यः समरे विष्णुरवध्यश्च सुरासुरैः ।।८।।
प्रसादाद्देवदेवस्य जगत्स्रष्टुरुमापतेः ।
नैष शक्यो मया दातुं वरस्तुभ्यं महासुर । ।९ ।।

- - - - - - - - -- - -

६८ जगतीश्वराणां क ।

१ प्रणम्य तमुवाचेदं वरदं ब्रह्ममागमतम् - क. ।

- - - - - - - - -- - -

928

अन्यं वृणु२ यथेष्टं त्वं वरं यावद्ददामि३ ते ।
चिन्तयित्वा ततो भूयो महाबुद्धिर्महासुरः । । 8.172.१० । ।

प्रोवाच४ वचनं देवं कमलासनसंस्थितम् ।
अजय्यो यद्यवध्यश्च स विष्णुर्देवसत्तमः५ । । ११ । ।
तस्य विष्णोस्ततो देव शक्रस्यान्यस्य वा रिपोः ।
अवध्योहमजय्यश्च संभवेयं तवाज्ञया । । १२ ।।
एवस्त्विति तं ब्रह्मा प्रोच्य दानवसत्तम ।
दिव्यपद्मासनो देवस्तत्रैवान्तरधीयत । । १३ । ।
प्रह्लादोपि वरं७ लब्ध्वा ब्रह्मणः परमाद्भुतम् ।
पश्चिमस्योदधेस्तीरे तस्थौ चिन्ताकुलेन्द्रियः । ।१४।।
कथं हन्यामहं विष्णुं शक्रं चैव शतक्रतुम् ।
एवं चिन्तयतस्तस्य प्रह्लादस्य सुरद्विषः ।। १ ५।।
सर्वशैलाधिपः श्रीमाँश्चक्रमन् हिमवान् गिरिः ।
द्वाभ्यामुत्पत्य पक्षाभ्यामाजगाम वियच्चरः ।। १ ६। ।
पुरा हि गिरयो व्यास आसन् पक्षसमन्विताः ।
दिव्या वियद्गमाः सर्वे सर्वलोकचरास्तथा । । १७।।
तमागतमथो दृष्ट्वा प्रह्लादो हिमवद्गिरिम् ।
प्राहेदं वचनं प्रीतः कृत्वा स्वागतमादितः ।। १८ ।।
कश्यपस्य९ वयं पौत्रा दैत्या गिरिवराधिप ।
भवन्तोपि१० सुतास्तस्य देवा अपि महागिरे११ ।।१ ९। ।
अस्माकं भवतां चैव एकस्मात् संभवो गिरे१२ ।
देवता भ्रातरो१३ भूत्वा अस्माकं देवताश्च१४ हि । ।8.172.२० ।।
अवमन्यासुरानस्मान् राज्यं कुर्वन्ति दर्पिताः ।
वयं यूयं च संगत्य जित्वा देवानशेषतः ।
त्रैलोक्यं सर्वमाक्रम्य राज्यं कुर्मो१५ महागिरे ।।२१ । ।

- - - - - - - - -- - -

२ अन्यद् वृणु - क. । ३ वरं दैत्य ददामि - ख, ददानि - क. । ४ उवाच - ख । ५ देवसत्तम - ख. । ६ दानवसत्तमः - क.,. म - ख. । ७ वरान् - ख. । ८ प्रीतो दत्त्वा - क. । ९ कास्यपस्य - क । १० भवतोपि - क ख. । ११ महामुने - क. । १२ मुने - क. । १३ भ्रातरो देवता - क. ख. । १४ देवताञ्च - क. ख. । १५ कुर्म - ख. ।

- - - - - - - - -- - -

929

देवानां१६ यजनं येषु हूयन्ते येषु चाग्नयः ।

प्रीयन्ते देवता येषु देशाँस्तानचलेश्वर । ।२ २।।
सहितः सर्वशैलैस्त्वमाक्रम्य त्वरितं जहि ।
इज्याहीनान् ततो देवान् सुखं हंस्याम निर्वृताः ।। २३ । ।
इत्युक्तो दैत्यराजेन हिमवानचलोत्तमः ।
नैतद्युक्तमिति प्राह साशङ्को दानवाधिपम् । ।२४। ।
पुनरेव ततः प्राह हिमवन्तं महासुरः ।
मत्तो युक्तं परं१७ त्वं चेद्यदि वेत्सि नगाधिप ।। २५ ।।
एष त्वां सहितं शैलेर्नेष्यामि निधनं समम् ।
अप्रमत्तस्तदा तिष्ठ१८ यावत्त्वां हन्मि पर्वत । ।२६ । ।
दैत्यराजं ततः क्रुद्धं दृष्ट्वा पर्वतसत्तमः ।
करोम्येवमिति प्राह ततो दैत्यस्तुतोष सः१९ । । २७।।
अथ शैलैस्तदा सार्धं हिमवानचलोत्तमः ।
प्रह्लादस्य वचः श्रुत्वा२० चक्रे देशोपमर्दनम् । ।२८। ।
पितृदेवात्मिकाः सर्वा यज्ञहोमादिकाः क्रियाः२१ ।
वर्तन्ते येषु देशेषु गिरयस्तान् समाक्रमन । ।२९ ।।
अथोत्सन्नेषु देशेषु नारदो मुनिसत्तमः ।
शक्रायाश्रावयत्२२ सर्वं पर्वतानां व्यतिक्रमम् ।।8.172.३ ० । ।
तच्छ्रुत्वा क्रोधसन्तप्तो देवराजः शतक्रतुः ।
समागम्याचलान् प्राह किमेतदिति मन्युमान् ३१ ।
अथोचुर्गिरयो व्यास क्रुद्धं देवगणाधिपम् ।
प्रह्लादस्य भयाद्देव महादैत्यपतेर्वयम् । । ३२ । ।
इमं व्यतिक्रमं प्राप्ता न२३ दोषो नः कथञ्चन ।
अथ चेन्मन्यसे दोषमस्माकममराधिप । ।३ ३ ।।

- - - - - - - - -- - -

१६ देवतां - क. । १७ वरं - क., युक्तवरं - ख. । १८ ततस्तिष्ठ - ख. । १९ ह - ख. । २० सर्वं - ख. । २१ यज्ञहोमादिकक्रियाः - क. । २२ शक्रमश्रावयत् - क. । २३ ह - ख. ।

- - - - - - - - -- - -



प्रह्लादान्तिक्रमागच्छ प्रयाम सहिता द्रुतम् ।
तेनेदं कारितं सर्वं यज्ञदेशोपमर्दनम्२४ ।
दैत्यराजेन बलिना युष्मदप्रियलिप्सया । ।३ ४। ।

नापराधोयमस्माकं२५ तथा त्वं विद्धि देवप ।
तानेव ब्रुवतः शक्रः सुतरां मन्युमान् गिरीन् । । ३५। ।
पक्षहीनान् तदा चक्रे क्षिप्त्वा वज्रं पुनःपुनः ।
हीनपक्षास्ततस्ते तु सर्व एवाचलेश्वराः । । ३६ । ।
पेतुर्महीतले व्यास छिन्नपक्षाः खगा इव ।
अथ दैत्यपतिः श्रुत्वा प्रह्लादोसुरपुङ्गवः । ।३७।।
पक्षच्छेदं नगेन्द्राणां भृशं चुक्रोध पीडितः२६ ।
किङ्करोमीति संचिन्त्य चिरं दैत्यगणाधिपः । ।३८। ।
वदर्याश्रममागत्य ददर्श२७ विष्णुमास्थितम् ।
तस्यासीत् सुमहद्युद्धं विष्णुना सार्धमद्भुतम् ।।३ ९।।
न शशाक च तं२८ विष्णुर्जेतुं प्रह्लादमोजसा ।
तयोर्युद्धमभूद् घोरं दिव्यमब्दशतं पुरा ।।8.172.४० ।।
आत्मानं वेद हीनं च विष्णुः प्रह्लाददानवात् ।
सोभियुक्तस्तदा युद्धे विष्णुः परमधर्मवित् ।।४१ ।।
अशक्तो दानवं जेतुं मन्युमानभवत् प्रभुः ।
अथ ध्यात्वा महादेवं प्रणम्य च पुनः पुनः । ।४२। ।
सस्मार पर - - - - - - - - - - - ।
- - - - - - - - - - - - पिनाकिनः । ।४३ । ।
अवध्यत्वमजय्यत्वं सर्वलोकनिवासिभिः ।
प्रसादं तमनुस्मृत्य शैवं विष्णुः सुरोत्तमः । ।४४।।
महासत्वबलो भूत्वा दैत्यमभ्यद्रवद् बली ।
हीयमानमथात्मानं हिण्यकशिपोः सुतः । ।४५। ।

- - - - - - - - - -- - -

२४ देशयज्ञोपमर्दनम् - क. ख । २५ यथास्माकं - क ख । २६ पि(प)ण्डितः - क. । २७ ददृशे - ख. ।

- - - - - - - - - -- - -

931

ज्ञात्वा च बलिनं विष्णुं युद्धदेशादपाक्रमत् ।
अजितं विष्णुनात्मानं शिवतेजोविमोहितः । ।४६ । ।
प्रह्लादो जितमात्मानं२९ बुबुधे दानवेश्वरः ।
ब्रह्मणोपि वरं लब्ध्वा अजयय्यत्वमथात्मनः । ।४७।।
जितमेव तदात्मानममन्यत महासुरः ।

प्रह्लादासुरसंग्रामं घोरं देवभयंकरम् । ।४८। ।
अभूदब्दशतं दिव्यं विष्णुना सार्धमद्भुतम् ।
न श्रुतेन न वीर्येण न शौर्येण न तेजसा । ।४९।।
न बुद्ध्या न च धर्मेण प्रह्लादसदृशोसुरः ।
हिरण्यकशिपुर्नासीद्राजा तत्सदृशो महान् । ।8.172.५० । ।
नान्धको न हिरण्याक्षः प्रह्लादसदृशो बले ।
भृगुशापात् किलायातो दैत्यत्वं विष्णुरेव सः ।।५१ । ।
शौर्येण स्पृहयन्ति स्म श्रुतेन विनयेन च ।
दिवौकसोपि संसिद्धाः प्रह्लादस्य महात्मनः । ।५२। ।
नाभवंस्तस्य राज्ये तु दुःखशोकान्विताः प्रजाः ।
एवं स दानवश्रेष्ठः कृत्वा युद्धं तु विष्णुना । ।५३ ।।
पश्चात्तापोपतप्ताङ्गो विषयेभ्यो गतस्पृहः ।
वरदानमनित्यं तज् ज्ञात्वा च तपसः फलम् ।।५४। ।
निःस्पृहः सर्वकार्येषु विषयेप्साविवर्जितः ।
सर्वसन्न्यस्तकर्मा तु३० ध्यानाभ्यासपरायणः । ।५६ ।।
प्रवव्राज महादैत्यः शमेप्सुर्मोक्षसिद्धये ।
पुनरावर्तकं जन्म बुद्ध्वा चानित्यता पराम् ।।५७। ।
कष्टं राज्यमिति ज्ञात्वा प्रह्लादः परमार्थवित् ।
अभिषिच्य सुतं राज्ये दितिजानां३१ विरोचनम् ।।५ ८ ।।
दैत्यदानवराजानं कृत्वा तमसुरेश्वरम् ।
मोक्षसिद्धिं परामिच्छन् प्रव्रज्याकृतनिश्चयः । ।५९। ।

- - - - - - - - - -- - -

२९ जितमित्येव - क. । ३० सन्न्यस्तसर्वकमा तु (?) । ३१ दितिजातां (तं?) - क. ।

- - - - - - - - - -- - -



वरं तत्त्वमथान्वेष्टुं गुणातीतमजं शिवम् ।
साक्षाद् भगवतः शिष्यं३२ कपिलस्यासुरिं मुनिम् ।।8.172.६० ।।
शिष्यत्वेनोपसंगम्य मोक्षविद्यामवाप्तवान्३३ ।
प्रकृतीनां परं तत्त्वं विकाराणां परं तथा ।। ६१ ।।
क्षेत्रज्ञं पुरुषं ज्ञात्वा भोक्तारं भोक्तृवर्जितम् ।
मोक्षविद्यापरार्थज्ञः सांख्यसिद्धान्तपारगः । ।६२ ।।

सिद्धः पञ्चशिखो नाम्ना सोभवन्मुनिसत्तम३४ ।
स योगं३५ परमं लब्ध्वा सांख्याचार्यो महामुनिः ।
दुःखत्रयविनिर्मुक्तः प्राप्तवान् पदमव्ययम् । ।६३ ।।
श्रीमानेवं त्रिभुवनरिपुर्दैत्यराजो महात्मा
कृत्वा वैरं विबुधगुरुणा विष्णुना दीर्घकालम् ।
सिद्धः पश्चाज्जगदभयदः प्राप्तयोगश्च भूत्वा
मुक्तः पश्चात्३६ स पदममृतं३७ ब्रह्म चाद्यं ह्यवाप । ।६४।।
क्षेत्रज्ञबोद्धा गुणविप्रयुक्तो३८ दुःखैर्विहीनो भवपाशबन्धैः ।
तामिस्रमोहप्रतिबन्धमुक्तो३९ योगोश्वरोसौ दितिजाधिपोभूत् ।।६५। ।
एवं ताँश्छिन्नपक्षाँस्तु गिरीन् सर्वान् पुरन्दरः ।
प्रचकार मुनिश्रेष्ठ प्राक् पृष्टो यदहं त्वया ।।६ ६।।
इति स्कन्दपुराणे प्रह्लादचरिते पर्वतपक्षच्छेदोनामा द्विसप्तत्यधिकशततमोध्यायः४०

व्यास उवाच
नगेन्द्रो जीविते क्रौञ्चे तोषिते च सुरैर्गुहे ।
यातो१ हिमवतः शृङ्गं पार्वत्या सहितो हरः । ।१ ।।
किमन्यदकरोद्देवः किं चैनं प्राह पार्वती ।
एतत् कथय विप्रेन्द्र न तृप्तिः शृण्वतो हि मे । । २ ।।
- - - - - - - - -- - -
३२ सिद्धं - ख । ३ मवाप्नुयात् - क. । ३४ मुनिसत्तमः - क. । ३५ संयोग. - क । ३६ शान्तं - क. । ३७ परममृदुता (?) - ख. । ३८ विप्रमुक्तो - क- । ३९ प्रतिबद्धमुक्तो - ख। । ४० २२० - ख. । १ तया - क., यात्वा - ष ।
- - - - - - - - -- - -

933
सूत उवाच एवमुक्तो मुनीन्द्रेण ब्रह्मणस्तनयोव्ययः ।
ऋषिः परमयोगीशः कथयामास तत्त्वतः । । ३ । ।
प्रयाते हिमवच्छृङ्गं देवदेवे सहोमया ।
बभाषे गिरिजा देवं प्रणम्य परमेश्वरम् । ।४। ।
उञ्छवृत्तेर्हिरण्यस्य२ नैमिशारण्यवासिनः ।
शौचेन तपसा भक्त्या युक्तस्य च शमेन हि । ।५। ।
स्वयमेव प्रयाताहं द्विजं पूजां प्रतीच्छितुम् ।

माहात्म्यं तस्य तद् दृष्ट्वा ब्राह्मणस्य तपस्विनः । ।६ ।।
गताहं विस्मयं देव द्विजाः श्रेष्ठतमा इति ।
देवेभ्योपि गरीयांसो ब्रह्मणा इति मे मतिः ।
त्वत्तोथ३ श्रोतुमिच्छामि द्विजमाहात्म्यमुत्तमम् ।।७।।
देवदेव उवाच
एवमेतज्जगद्धात्रि सुरासुरनमस्कृते ।
श्रेष्ठास्तपस्विनो विप्रा देवेभ्योपि गरीयसः४ । ।८। ।
मदीया याः प्रजाः५ सृष्टाः६ प्रथमाः प्रभवो ह्यहम् ।
रुद्रा द्विजातयः पूर्वं मया सृष्टा महौजसः । ।९। ।
मदीयां मृष्टिमालोक्य ब्रह्मणापि सिसृक्षुणा ।
ब्राह्मणा मूर्धतः सृष्टाः पूर्वमेव महाप्रभाः । । 8.173.१० । ।
अग्रभूतो७ ह्यहं तेषां द्विजश्रेष्ठस्तदाभवम् ।
ततस्ते८ मत्सखाः९ सर्वे बभूवुर्विप्रसत्तमाः । । ११ ।।
उत्तमैषापरा१० सृष्टिर्ब्राह्मणाः११ परमेष्ठिनः ।
धर्मादिकं चतुर्वर्णं सर्वं तेषु प्रतिष्ठितम् ।। १२ । ।
यज्जुह्वति१२ हविर्विप्रास्तेन तृप्यन्ति देवताः ।
जगत् प्रतिष्ठितं सर्वं ब्राह्मणानां१३ हि तेजसा । । १३ । ।

- - - - - - - - - -- - -

२ उञ्छवृत्तिर्हिरण्यस्य - ख टि. ३ तत्त्व?- - ख. । ४ गरीयांसः (?) । ५ पुरा - क. । ६ सृष्ट्वा - क. । ७ अग्रीभूतो? - क. । ८ ततते - ख । ९ मत्समाः (मन्मयाः) - ख, १० पुरा - ख. । ११ ब्राह्मणं - क । १२ जुह्वन्ति - क. ख. । १३ ब्राह्मण्येन (?) ।

- - - - - - - - - -- - -

934

मृत्युजन्मापहं यत्तन्मम पाशुपतं व्रतन् ।
न वर्णाः साधयन्त्यन्ये मुक्त्वा ब्राह्मणसत्तमान् ।।१४। ।
लक्षणं संप्रवक्ष्यामि द्विजातीनामिदं शृणु ।
शौचार्जवविधानं च प्रभावं कर्म चैव ह । ।१ ५। ।
ब्राह्मणस्तु भवेज्जात्या१४ संस्काराद् द्विज उच्यते ।
विद्यया विप्रतां याति ब्राह्मण्यं त्रिविधं स्मृतम् । । १६।।
यश्च जात्या भवेद् विप्रो यश्च१५ स्याद् वेदपारगः ।
तयोस्त्राणे वधे चापि१६ पुण्यपापे१७ समे१८ स्मृते१९ ।। १७। ।

जात्या च यो भवेद्विप्रः सर्वागमविशारदः२० ।
तपशौचसमायुक्तस्त्र्यवदातः स उच्यते ।।१८।।
तादृशं भोजयेच्छ्राद्धे दैवे कर्मणि वापि२१ यः ।
अक्षयं तद् भवेत् तस्य व्यवदातस्य तर्पणात् ।।१९।।
वेदविद्यो भवेद्विप्रो नित्यं होमपरायणः ।
सोपि श्रेष्ठः स्मृतो देवि पूजितस्तारयेत् कुलम् ।।8.173.२० ।।
सर्वथा जातिमात्रेण योपि स्याद् ब्राह्मणः क्वचित् ।
सोपि लोकगुरुर्देवि पूजितः स्वर्गदो भवेत ।।२१।।
अग्निहोत्रं तपो यज्ञः शौचमार्जवमेव च ।
सत्यं वेदप्रसङ्गश्च द्विजकर्म परं स्मृतम् ।।२२ ।।
नानृतं ब्राह्मणो ब्रूते न हन्ति प्राणिनं द्विजः ।
न सेवां कुरुते विप्रो न द्विजः पापकृद्भवेत् ।। २३ ।।
ब्राह्मणश्च तपस्वी च न जन्म पुनराप्नुते ।
विद्वद्ब्राह्मणतां लब्ध्वा किन्न लब्धं हि देहिना२२ ।।२४।।
मूर्त्तयो याः स्मृता ह्यष्टावर्कसोमादयो मम ।
सर्वास्ता निवसन्ति स्म ब्राह्मणे तपसैधिते२३ ।।२५।।

\- - - - - - - - -- - -

१४ भवेज्जन्मात् - क. । १५ यच्च - क. । १६ वापि - ख. । १७ पुण्यपापौ - क ख । १८ समौ - क- ख. । १९ स्मृतौ - क. ख. । २० विदे(व च) विशारदः - ख । २१ चापि - ख । २२ देहिनाम् - ख. । २३ तपमधिते - क. ख. ।

\- - - - - - - - -- - -

935

द्विजतेजो ह्यवष्टभ्य अमृतं गाव एव च ।
प्रभवन्ति सदा देवि विप्राः श्रेष्ठतमास्ततः ।।२६।।
नासाध्यं२४ विद्यते तेषां द्विजानां परमौजसाम् ।
रुषितास्ते२५ प्रसन्ना वा प्रयच्छन्ति शुभाशुभम् ।।२७।।
द्विजास्तपस्विनो ये तु वेदविद्याविशारदाः ।
मुक्तिदास्तु२६ भवेयुस्ते देवानामपि देवताः ।।२८।।
अहं पितामहश्चैव तेषां योनिद्वयं२७ स्मृतम् ।
मत्तः पूर्वं प्रसूतास्ते ततो देवि पितामहात् ।।२९।।
आवां हेतू द्विजातीनां प्रकृतित्वात् त्वमेव च ।

प्रकृतिस्त्वं समाख्याता पुरुषः परमो ह्यहम् ।।8.173.३ ० । ।

ब्रह्मविष्णू स्मृतौ यौ तौ रजःसत्वगुणात्मकौ ।

आवाभ्यां तौ प्रजायेते सृष्टिकाले प्रजापती । ।३१ ।।

अहं२८ ह्यग्निस्तमो विष्णुः सत्वं ब्रह्मणि संस्थितम् ।

रजस्त्वं व्यापितं विद्धि गुणभूतेषु कर्मसु ।।३ २।।

मोहात्मको स्मृतावेतौ तमो रागस्तथैव च ।

सत्वं नाशयते तौ हि स चाग्नेः२९ संप्रजायते । ।३ ३ ।।

वह्नितेजाः स्मृता ह्येते महात्मानो द्विजातयः ।

सर्वतः प्रभवन्त्येते नास्ति तेषां निवारणम् ।। ३४। ।

आर्जवं समतां चैव विद्धि तेजो द्विजातिषु ।

तपोविद्यासमायुक्तादार्जवस्तु विशिष्यते ।।३ ५। ।

अशाठ्यं३० हन्ति पापानि समता मोहबन्धनम् ।

उभेप्येते निहन्ति स्म आर्जवं सेवितं द्विजैः ।। ३ ६।।

पुरा भागीरथीतीरे द्विजः परमधर्मवित् ।

नाम्ना दानरुचिर्नाम उञ्छवृत्तिर्बभूव ह ।।३७। ।

सर्वविद्याविनीतात्मा सर्वभूताभयप्रदः ।

सह पत्न्या च मद्भक्तो वह्निहोमपरायणः ।।३८।।

- - - - - - - - - -- - -

२४ नासाद्यं - ख. । २५ तुषितास्ते - क. । २६ वृत्तिदास्तु - क. । २७ योनीद्वयं - क ख. । २८ अह - क. । २९ तच्चाग्नेः (?) । ३० असाध्यां - ख. ।

- - - - - - - - - -- - -



अतिथिं भोजयित्वा च३१ पूर्वं देवि यथागतम् ।

षष्ठे काले ततोश्नाति तस्येदं व्रतमुत्तमम् । ।३ ९ । ।

अथैवं वर्तमानस्य भूयान् कालो जगाम ह ।

अतिथावागते३२ तस्य न विकल्पः प्रजायते । ।8.173.४० ।।

तपशौचसमायुक्त३३ आर्जवैकरतो द्विजः ।

बभूवात्यर्थमर्चिष्मानर्काग्नी इव३४ तेजसा । ।४१ ।।

तस्यैवं तपसो३५ वह्निः प्रीतस्तुष्टिमगात् पराम् ।

शुभदित्सुरभूच्चास्य समीहितफलप्रदः । ।४२ । ।

कदाचिदथ कालेन षष्ठे काले समागते ।

हिममेघोल्बणे शीते दुर्दिने पर्यटन् द्विजः । ।४३ ।।
नापश्यदतिथिं कञ्चिद्३६ बुभुक्षाक्लमखेदितः ।
यदा नासदितस्तेन दिनान्तेप्यतिथिः क्वचित् । ।४४।।
अप्राश्यैव तदा किञ्चिदुपवासपरायणः ।
बभूव द्विजमुख्योसौ नात्मखेदमचिन्तयत्३७ । ।४५।।
पत्न्यप्यस्य महाभागा पतिभक्तिव्रते रता ।
यथैवास्याः३८ पतिश्चक्रे तथा साप्यकरोत्तदा ।।४६। ।
शीतक्षुदुपतप्ताङ्गो नैकद्वन्द्वसमावृतः ।
क्लेशेन महतातीव खिन्नोभूद्देवि स द्विजः । ।४७।।
द्वितीयेथ समायाते षष्ठे काले स ह द्विजः३९ ।
शीतदुर्द्दिनजाद्दोषान्नैवातिथिमवैक्षत४० । ।४८ । ।
अथाग्निस्तस्य४१ तज्ज्ञात्वा४२ निश्चयं परमं महत् ।
श्वपाकसदृशं रूपं विकृतं कुत्सितं च हि४३ ।।४९।।
कृत्वा पादपमूलस्थः४४ प्रददौ तस्य दर्शनम् ।
क्षुधार्तोथ स विप्रेन्द्रः पर्यटन्नतिथीप्सया । ।8.173.५० । ।

- - - - - - - - -- - -

३१ तु - ख । ३२ अतिथेरागमे(?) । ३३ तपसः शौचसंयुक्त - क. ख.। ३४. .नर्काग्न्योरवि(ग्न्योरिव? - ख. । ३५ तप(प्य)तो (?) । ३६ किञ्चिद् - क. । ३७ मन्नखेदमचिन्तयत् - ख. । ३८ यथैव च - ख. । ३९ समागते - क, महाद्विजः - ख. । ४० मवेक्षत - क । ४१ तथाग्निस्तस्य - क. ख । ८२ तं ज्ञात्वा - क. । ४३ बहिः (?) । ४४पादमूलस्थो - क. ख. ।

- - - - - - - - -- - -

937

अपश्यद् वृक्षमूलस्थं घोरं विकृतरूपिणम् ।
श्वपाकं शीतसंखिन्नं नैकव्रणशताङ्कितम्४५ ।।५१ ।।
दुर्द्दशं४६ वृद्धमार्त्तञ्च प्रस्रवत्कृमिशोणितम् ।
विक्रोशन्तं च तातेति सोपश्यद् द्विजसत्तमः ।।५२ । ।
कृपणं तमथो दृष्ट्वा श्वपाकं द्विजसत्तमः ।
समाश्वसिहि भद्रेति प्रोवाच मधुरं वचः । ।५३ । ।
शीतापनयनार्थञ्च वह्निमस्यानयद् द्विजः ।
अथ तं४७ वह्निसंसर्गात् समाश्वस्तमुवाच सः४८ । ।५४।।
एहि भुंक्ष्वातिथिर्मे त्वं४९ भव भद्रेति सादरम् ।

तमुवाच ततो५० दीनं५१ श्वपाकस्तपसां निधिम् ।।५५।।
श्वपाकोहं द्विजश्रेष्ठ मह्यमन्नमिहैव हि ।
कुत्सिताय प्रयच्छस्व यथैव मृगपक्षिणाम् ।। ५६ ।।
नाहं संस्कृतमाहर्तुं योग्योन्नमिति चाब्रवीत् ।
तमेवं वादिनं ध्यानाज्ज्ञात्वा५२ वह्निमुपस्थितम् ।।५७।।
प्रोवाच द्विजशार्दूल इदं वचनकोविदः ।
नाहं जातिं गर्हयामि पूजयामि .न चानघ ।।५८।।
आत्मा सर्वगतो ह्येष सर्वप्राणिषु संस्थितः ।
आत्मानं तमहं भक्त्या पूजयामि परं शिवम् ।।५९।।
सर्वत्र संस्थितं मत्वा पुरुषं परमेश्वरम् ।
तिर्यक्षु नहि मे कुत्सा त्वद्विधेषु विशेषतः ।। 8.173.६० ।।
सर्वमेव स एवेति तपःशौचपरायणः ।
पूजयाम्यहमव्यग्रस्तत्र निस्संशयो भव ।।६१ ।।
कृमिकीटाखुसर्पेषु५३ श्वपाग्देवद्विजातिषु ।
यदा सर्वगतो ह्यात्मा तदा कुत्सा कथञ्च नः५४ ।। ६२ ।।
- - - - - - - - -- - -
४५ व्रणशतार्दितम् - ख. । ४६ दुर्दर्शे - ख. । ४७ श्वपाकं (?) । ४८ ह - ख । ४९. मंह्य - ख. । ५० तदा - क. । ५१ दीनः - क । ५२ ध्यात्वा ज्ञात्वा - ख. । ५३ क्रिमिकीटाखुसर्पेषु - ख. । ५४ कथञ्चन (?) ।
- - - - - - - - -- - -

938

न हि मे कुत्सितो भद्र एहि मे त्वमकुत्सितः५५ ।
भुंक्ष्व संस्कृतमन्नन्तु प्रापयास्माननुग्रहम् ।। ६३ ।।
एवमुक्तो द्विजेन्द्रेण श्वपाकः प्रीतिमाँस्तदा ।
गृहं जगाम विप्रस्य तस्यानुग्रहलिप्सया ।। ६४।।
अथ दानरुचिस्तस्य अतिथेरिव पूजितम् ।
आतिथ्यं विधिवच्चक्रे भावशुद्धेन चेतसा ।।६५ ।।
मूर्तिमान् सोभवत् प्रीतो भोजितो हव्यवाहनः ।
प्रददावीप्सितं चास्मै योगैश्वर्यमनुत्तमम् ।।६ ६ ।।
स योगं परमं प्राप्य उञ्छवृत्तिर्द्विजोत्तमः ।
विमुक्तः सह पत्न्या तु प्राप्तवानमृतं पदम् ।। ६७।।
यथैव कपिलः सिद्धस्तत्त्ववित् परमो मुनिः ।

एवमार्जवसंपन्नो ब्राह्मणः कृतलक्षणः ।
न किञ्चिन्नाप्नुयाद्देवि शुभाच्छुभतरं पदम् । ।६८ ।।
एतत्ते कथितं नगेन्द्रतनये माहात्म्यमग्र्यं परं
विप्राणाममरत्विषां सुबहुशः पुण्यायुषः५६ प्रापकम्५७ ।
शृण्वन्नित्यमिदं पठँश्च विधिवद्विद्वाञ्छुचिर्मानवः
पुण्यं सौख्यमथायुरीप्सितफलं तेजो बलं चाप्नुयात् । ।६९।।
माहात्म्यमेतत् कथितं यथावत्
महामहीध्रेन्द्रसुते द्विजानाम् ।
सृष्टेः प्रभवान्मम ते द्विजेन्द्रा
माहात्म्यमित्थं परमं ह्यवापुः । ।8.173.७० । ।
सनत्कुमार उवाच
द्विजमाहात्म्यमुल्लिख्य पार्वतीपरमेशयोः ।
बभूवेत्थं सुसंवादः पुण्यः पापविनाशनः ।।७१ । ।
- - - - - - - - पाराशर्य तपोधन ।
श्रोतव्यं मन्यसे मत्तस्तत् पृच्छस्व समाहितः ।।७२। ।
इति स्कन्दपुराणे द्विजमाहात्म्यवर्णनं नाम त्रिसप्तत्युत्तरशततमोध्यायः५८
- - - - - - - -- - -
५५ त्वा कुत्सितो मया - ख. ५६ पूर्णायुषः (?) । ५७ पूर्णायुषो ह्या(वा)पकम् - ख. । ५८ २२१ - ख. ।
- - - - - - - -- - -

939

व्यास उवाच भगवन् यत्त्वया प्रोक्तं दक्षयज्ञवधे तदा ।
प्राप्य पाशुपतं योगं ब्रह्माद्यास्त्रिदिवौकसः१ ।। १ ।।
लेभिरे परमं तत्त्वं ज्ञानेन हि महामुने ।
तन्मे कथय भक्ताय शिष्याय परिपृच्छते । ।२ ।।
कीदृशं तत्परं योगं ज्ञानं पाशुपतं शुभम् ।
यज्ज्ञात्वा२ ब्राह्मणाः सिद्धाः प्राप्नुयुर्मोक्षमुत्तमम् ।
इति३ पृष्टस्तु शिष्येण प्रोवाच मुनिसत्तमः ।।३ । ।
सनत्कुमार उवाच
साधु व्यास महाबुद्धे मुमुक्षुरसि पुत्रक ।
यन्मां पृच्छसि तज्ज्ञानं योगं माहेश्वरं परम् ।।४। ।
सर्वासां योगविद्यानां यत्तत्त्वं परिकीर्त्यते ।

सांख्ययोगागमोपेताः सर्वाध्यात्मविशारदाः ।। ५। ।

योगैश्वर्यमपि प्राप्य तत्त्वं नैवोपलेभिरे ।

यदबुद्ध्वा महाभाग ज्ञानं शङ्करभाषितम् ।। ६। ।

तद्यथा कथितं तेषां त्र्यम्बकेण४ दिवौकसाम् ।

तत्तेहं संप्रवक्ष्यामि संक्षेपात्तत्त्वनिश्चयम् । ।७। ।

विस्तरेण न तच्छक्यं वक्तुं वर्षशतैरपि ।

तस्याहं स्थि?तपक्षन्तु संसारोत्पत्तिनाशनम् । ।८।।

मुक्तिसिद्धिप्रदं वक्ष्ये संक्षेपान्मतमुत्तमम् ।

नमस्कृत्य महेशानं पुरुषं भूतभावनम् ।। ९।।

प्रकृतेः परमं गुह्यं पुद्गलं परमेष्ठिनम् ।

यं सांख्याः पुरुषं प्राहुः पञ्चविंशमजं विभुम् । । 8.174.१० । ।

योगाश्चापि हि षड्विंशं व्यापिनं त्रिगुणात्मकम् (?) ।

योसृजत् सृष्टिकाले तु देवौ सर्वजगत्सृजौ ।।१ १ । ।

- - - - - - - - -- - - -

१ ब्रह्माद्यास्ते दिवौकसः (?) । २ यं ज्ञात्वा - क. ख. । ३ अथ - क. ख. । ४ त्र्यम्बकेण (?) । ५ नमस्कृत्वा - क. ख. । ६ प्रभुः (भुं) - क. ।

- - - - - - - - -- - - -



प्रजापती महात्मानौ ध्यात्वा विष्णुपितामहौ ।

तं प्रणम्य महादेवं त्र्यक्षं वरदमीश्वरम् । । १२ । ।

प्रवक्ष्यामि मतं तस्य योगसिद्धान्तनिश्चयम् ।

लक्षणं विद्धि योगस्य प्रोच्यमानमिदं मया । । १३ । ।

छिद्यन्ते७ पशुपाशानि यस्याभ्यासान्महामुने ।

प्रत्ययस्य बहिर्लोपो मनस्यात्मनि संस्थिते । । १ ४। ।

अभिसन्धिः परे चैव ईश्वरस्यात्मनश्च ह ।

एष योग इति व्यास कीर्तितः शम्भुना पुरा । । १ ५।।

भवजन्मापहः सूक्ष्मः प्रपन्नानां दिवौकसाम् ।

शरीरे तिष्ठतः पुंसो यदात्मनि मनः स्थितम् । । १६ । ।

अवितर्कं बहिश्चैव सूक्ष्ममभ्यासयोजितम् ।

कृतानां प्रत्ययैः सूक्ष्मैः सुखदुःखादिसंज्ञिनाम्८ ।। १७। ।

अशेषलोप इत्यक्त साधकस्य तु युञ्जतः ।

परो महेश्वरो देवः सोभिसन्धिस्तु योजकः । ।१ ८ । ।
अभिसन्धिस्तदा९ यस्मादीश्वरस्यात्मनश्च ह ।
सुखादानमथैकेन भावना - - योजनात् । । १९। ।
प्र - - - - - - - - - - तिष्ठतस्सतः ।
साधकस्य भवेन्नित्यं ह्यद्रिः (?) सिद्धमिदं फलम् । । 8.174.२० । ।
अथाधिकरणं तत्र क्रमशः परिकीर्त्यते (?)
प्रत्याहारमतो१० विद्या प्राणायामस्तथैव च ।
ध्यानञ्च धारणा चैव११ योगाभ्यास उदाहृतः१२ ।।२१ । ।
तिस्रो मृत्युमतिक्रम्य क्रिया हि चतुरात्मिकाः ।
वर्त्तन्ते न च वै - - मृत्युः प्रभवते मुने । । २२ ।।
वश्या हि धातवस्तस्माद् भवन्त्यस्य न संशयः ।
ततोसौ पवमृत्युश्च साधको भवति - - ।। २३ । ।

- - - - - - - - - -- - -

७ छिद्यन्ति - क. ख । ८ सं व्रतम् - ख । ९ अभिसन्धिस्तु - क, अभिसन्धिस्सा(?), इतः परं पत्रमेकं खण्डितं क पुस्तके । १०.. .स्ततो (।) । ११ धारणाच्चैव - ख । १२ उदाहृतं - ख. ।

- - - - - - - - - -- - -

941

इमास्तर्क्कक्रिया व्यास मस्तके हृदि चैव हि ।
अन्तरिक्षे च सर्वास्तु कीर्तिता हि न संशयः । । २४। ।
स्थानत्रयनिबद्धास्तु चतुर्लक्षणसंस्थिताः ।
क्रियाः प्रमादिना नैताः शक्याः साधयितुं क्वचित् । । २ ५।।
तिस्र एताः सदा मृत्युं प्रवृत्ता मोहलक्षणाः ।
वियोगो न भवेत्तासु क्रियास्वेकैक - - - । । २६ । ।
अज्ञानं कम्पते१३ तासु बहिरन्तश्चरास्वपि ।
क्रियासु१४ साधको युक्तस्तथा मध्यगतासु च । । २७। । भूतेन्द्रियमनःकालदिङ्निवृत्तिः प्रभावतः ।
दशैवाशास्त्रयः काला१५ भूतानीन्द्रियविस्तरः ।। २८ । ।
मनःप्रचारसंयुक्तो विषयाभावलक्षणः ।
प्रत्याहार इति प्रोक्तः पुरा भगवता स्वयम् । । २९ । ।
दिगन्तरगमाभावात् मनस्यविचलस्थितौ ।
प्रत्याहारसमुत्पतिर्योगोत्पत्तौ सकृद् भवेत् । । 8.174.३० । ।
त्रिकालविषयं ज्ञानमैश्वर्योदग्रमेव च ।

चले मनसि नाभूतां भवेतां संस्थिते१६ समम् । । ३१ ।।

मनः सर्वमिदं यस्मात् साधनं योगकर्मणः ।

एकतो मनसः स्थाने तस्माद् यत्नं समाचरेत् । ।३ २ । ।

प्राणनिग्रहणे१७ ध्यानं प्राणायाममिति स्मृतम ।

प्राण एव हि वायूनां सारथ्ये वर्तते सदा । ।। ३३ । ।

प्राणनिग्रहणे योगी नित्यमभ्यासमाचरेत् ।

उत्तरोत्तरसंसिद्ध्या वायु - - - गोचरे । । ३४। ।

ज्योतिः प्रवर्तनं विद्यान्नित्यमभ्यासयोजितम् ।

द्विरपाने सकृत्प्राणे समाने च । ' - - - । । ३५ । ।

- - - र - -) - - ५ - - । - - - ।

- - - - । - - - ' - - - ' - - - । । ३६ । ।

- - - - - - - - -- - - -

१३ अज्ञो न कम्पते (?), प्राज्ञो - (?) । । १४ क्रियातु - ख. । । १५ कालो - ख. । १६ संस्थिता - ख. ।

- - - - - - - - -- - - -



।।

कुम्भ एष तृतीयस्तु योगवह्निप्रदीपकः । ।३७। ।

एभिर्ध्यानगतिः सूक्ष्मा वायुसंरोधकारिता ।

प्रवर्तते यया योगी परमं वेष्टि पुद्गलम् । । ३ ८।।

सकृदेव समाहारादसकृत्परिमोक्षणात् ।

कुम्भकं चैतदुद्दिष्टं१८ प्राणायामादिधारणात् । । ३ ९। ।

प्राणो वायुरसावात्मा शरीरे जीव - - - ।

विद्याद् रूपद्वयं तस्य स्थूलं सूक्ष्मं च सर्वतः ।।8.174.४०।।

अव्यक्तं सूक्ष्मरूपं तु स्थूलमाकारलक्षणम ।

स्थूलादारभ्य सूक्ष्मं तु ध्यानाभ्यासान्निरूपयेत् १९ ।।४१ । ।

सूक्ष्मसंरोपणाज्ज्योतिः प्रकाशो जायते मुने ।

ध्यायतः स्थूललक्ष्यं२० तु सर्वदिक्षु सृतं मनः ।

यदा दीप्तिमदुत्पद्येत् तदाशु स्थापयेत् पुनः ।।४२ । ।

गिरौ वृक्षे मरुत्पृष्ठे श्वभ्रे प्रासादपंक्तिषु ।

समुद्रे वसुधायां वा मनःसंयोगमाचरेत् । ।४३ ।।

स्थापितं तन्मनस्तत्र पुनः संहारमाव्रजेत् ।

अचैतन्यं दिशेन्मोहाद् वायुर्दृष्टमतोन्यथा२१ । ।४४। ।

संहृत्य च ततो व्यापि भूयो ध्यानगतिं चरेत् ।
ध्यायतो नित्यमभ्यासान्मनो वायु - - - - । ।४५। ।
प्रवृत्तज्ञानयोगस्य२२ विषयासंगसंक्षये ।
प्रातिभानि२३ हि विघ्नानि सत्वादिगुणजानि तु ।
विघ्नभूतानि योगस्य प्रोद्भवन्ति हि युञ्जतः । ।४६।।
तानि विद्वान् प्रयत्नेन विषयेच्छाविवर्जितः ।
जित्वा निर्वाणमार्गस्थो भवेत् त्रैगुण्यवर्जितः ।।४७। ।
आकाशगमनं दिव्यमप्सरोगणसंगजम् ।
अभिषेकश्च देवेभ्यश्चित्रकाव्यप्रवर्तनम् । ।४८ । ।

- - - - - - - - -- - -

१८ कुम्भकमेतदुद्दिष्टं - ख., इतः पूर्व पत्रमेकं खण्डितं क. पुस्तके । १९ - सन्निरूपयेत् - ख. २० लक्षं - ख । २१ दृष्टमतोन्यथा - ख. । २२ ध्यानयोगस्य (?) । २३ प्रतिभा(न्) ति - ख,

- - - - - - - - -- - -

943

ऐश्वर्यसुखसंसक्तिर्हेमरत्नागमं बहु ।
सत्वादेतानि विघ्नानि प्रातिभानि तु लक्षयेत् ।।४९।।
उत्पत्तिमदयुक्तानि२४ भिन्नाचारक्रमाणि तु ।
रजोविघ्नानि संविद्यात् प्रातिभानि न संशयः । ।8.174.५० ।। क्षयशूलज्वरोन्मादकुष्टसर्पग्रहाणि तु ।
यातनोद्गमपूर्वाणि तामसानि विनिर्दिशेत् ।।५१। ।
गुणत्रयसमुत्थानि प्रातिभानि सदा मुनिः ।
युञ्जन् संलक्षयेच्छीघ्रं चिकित्सेदाशु चैव हि ।।५२ ।।
प्राणाद्यानभिसन्धाय२५ मनः संहृत्य चैव हि ।
प्राणायामेन कुम्भेन हन्याद्विघ्नानि सर्वतः । ।५३ ।।
रजः सत्वं तमश्चैव प्रधानस्य२६ गुणास्त्रयः ।
तस्यैव हि महेशस्य प्रजासंसर्गहेतवः ।। ५४।।
योगमोहाद् भवन्त्येते साभिमानस्य युञ्जतः ।
निरीहो निर्वृतो योगी सचेता घटते यदा । ।५५। ।
प्रातिभानि तदा यान्ति विघ्नानि हि समं क्षयम् ।
प्रादुर्भावस्ततस्तेषां गुणानां मोहकारणम् (?) ।।५६ ।।
तमो रौद्रं विजानीयात् सत्वं ब्रह्मणि संस्थितम् ।
रजस्तु बैष्णवं विद्यात्तेषां हन्ता२७ महेश्वरः । ।५७। ।

महादेवं परं ज्ञात्वा योगाभ्यासरतो द्विजः ।
गुणत्रयविनिर्मुक्तः शङ्करे लयमाप्नुयात् ।।५८ ।।
यमैः सनियमैः पूर्वं शोधयेदात्मनस्तनुम् ।
ततः शास्त्रप्रणीतेन धर्माधर्मविवर्जितः२८ ।।५९।।
क्रमेण सोपदेशेन ध्यानाभ्यासं समाचरेत् ।
शब्दादीन् विषयान् जित्वा श्रोत्रादीन्द्रियगोचरान्२९ ।।8.174.६० । ।

- - - - - - - - -- - -

२४ उन्मत्तमदयुक्तानि - क. । २५ नाभिसंबन्धान् - ख. । २६ प्राधान्यस्य - क., प्राधान्येन(?) । २७ हर्ता - ख. । २८ -धर्मविवर्जितात् - क. । २९ त्वगादिन्द्रियगोचरान् - क. ख. ।

- - - - - - - - -- - -

944

समो दैवततिर्यक्षु३० निर्ममः सर्ववस्तुषु ।
सर्वारम्भविनिर्मुक्तः पुण्यपापविवर्जितः । ।६ १ । ।
निर्द्वन्द्वो३१ निर्जने३२ ईशे योगाभ्यासं समाचरेत् ।
साभिमानं सनियमं त्यक्त्वा३३ सांख्यविनिश्चयम् ।। ६२ । ।
परे माहेश्वरे योगे नित्यमम्यासमाचरेत् ।
अष्टौ प्रकृतयो नित्या विकाराश्चैव षोडश । ।६३ ।।
पुरुषः पञ्चविंशश्च सांख्यसिद्धान्तगोचरः ।
एतदेव परं गुह्यं३४ द्र्ये सांख्यानां तत्त्वनिश्चये ।
प्रकृतेरन्तरं ज्ञात्वा पुरुषस्य च मुच्यते३५ । ।६४। ।
इति स्कन्दपुराणे पाशुपतयोगवर्णनं नाम ध्यानविधौ प्रथमोयं चतुःसप्तत्युत्तरशततमोध्यायः

सनत्कुमार उवाच
योगं सांख्यञ्च सर्वत्र द्विविधं ज्ञानमुच्यते ।
तत्र सांख्यरताः केचित् केचिद् योगपथाश्रिताः १ ।। १ ।।
अव्यक्तं प्रकृतिश्चैव तथाहङ्कार एव३ च ।
अष्टौ प्रकृतयो ह्येतास्तन्मात्रः पञ्चभिः सह । । २ । ।
पञ्च बुद्धीन्द्रियाण्याहुः पञ्च कर्मेन्द्रियाणि च ।
मनः पञ्च च भूतानि विकाराः षोडश स्मृताः ।।३ ।।
पुरुषः पञ्चविंशश्च सर्वारम्भविवर्जितः ।
नित्यः सर्वगतः सूक्ष्मश्चेतावान्४ त्रिगुणेज्झितः । ।४। ।

संशुद्धो विमलो भोक्ता अकर्ता साक्षिवत् स्थितः ।
विदित्वा न विशन्त्येनं भूयः संसारपञ्जरम् ।। ५।।
पञ्चविंशति तत्त्वानि सांख्यैरेतानि योगिभिः ।
प्रोक्तानि यद्५ विदित्वा हि मुच्यते किल जन्मनः६ । ।६ । ।
- - - - - - - - -- - -
३० देवतातिर्यक्षु - क. ख. । ३१ निर्द्वन्द्वे - क. ख. । ३२ विजने - ख. । ३३ ज्ञात्वा (?) । ३४ ब्रह्म - क.। ३५ मुच्यतीति - क. ।
१ योगपथे रताः (?),. ग्रताः - क । २ च महांश्चैव () । वे. ..मेव - ख. । ४ श्चैतावान् - क, श्चैत्यवान् (?), ..श्चेतन (?) । ५ यान् - क., ये या - ख. । ६ जन्तवः - क. ।
- - - - - - - - -- - -

945
( ९४५) सूक्ष्मा प्रकृतिरव्यक्ता भोज्या७ सर्वरता चला ।
नित्या चाचेतना चैव विज्ञेया सर्वकामिकी ।।७।।
तमः सत्वं रजश्चेति८ विषयस्थं गुणत्रयम् ।
येषामव्यभिचाराद्धि९ सर्वमेतदवस्थितम् ।।८ ।।
प्रकाशजननं सत्वं रजः सङ्गप्रवर्तनम् ।
तमो विमोहनञ्चैव गुणविस्तर उच्यते१० । ।९ । ।
भिन्नकार्यप्रचाराणामेतेषां गुणसंज्ञिनाम्११ ।
हेतुना पुरुषार्थेन साधिका वृत्तिरुच्यते१२ । ।8.175.१ ० । ।
दैवमष्टविभेदन्तु१३ तिर्यक् सप्तविधं स्मृतम् ।
अविकल्प्यं च मानुष्यं सर्वतेतद्१४ गुणात्मकम् । ।१ १ । ।
मूढं निश्चेतनं भूतं स्थूलं सूक्ष्ममथापि वा१५ ।
अमूर्तं मूर्तिमद्वापि१६ त्रिगुणं सर्वमुच्यते१७ । । १२ । ।
मोक्षविघ्नकरा ह्येते कीर्तिता योगिनो गुणाः ।
सक्तस्यैव१८ हि बन्धः स्यादसक्तो मुक्त उच्यते ।
विभागात् प्रकृतिस्थस्य स्थिता नित्यं गुणत्रयम् (?) ।। १३ । ।
विभागेन विकारस्था यथाधर्मं समाश्रिताः ।
भूतसर्गस्त्रिधाभूतः१९ सांख्यज्ञैः परिपठ्यते । । १४ ।
संसिद्धः२० प्राकृतश्चैव२१ तथा वैकृत उच्यते२२ ।
तत्र धर्मेण संसिद्धा योगे माहेश्वरे स्थिताः ।। १ ५। ।
नेच्छन्ति संभवं व्यास धर्मो (?) पञ्चात्मतः स्मृतः ।

ते पुनर्द्रव्यसंबन्धात् सांख्यदृष्टान्तपण्डिताः।।१६।।
इच्छन्ति२३ कार्यमाश्रित्य कारणाश्रयिणो न हि।
प्रधानात् पुरुषाद् बुद्धिरभूत् सत्वाधिकासकृत्।।१७।।

- - - - - - - - - -- - -

७ भोग्या (?)। ८ रजश्चैव - ख.। ९ येषामाद्यविचाराद्धि - ख.। १० मुच्यते - क. ख.। ११ सज्ञिना गुणः - क,। १२ वृत्तिरीरिता - ख. ' १३ विभिन्नन्तु - क ख। १४ सममेतद् - ख। १५ च - ख। १६ भूर्तिमच्चापि - ख.। १७ सर्व त्रिगुणमुच्यते (?)। १ न सक्तस्यैष - क.। १९ स्त्रिधाभूता - ख.। २० संसिद्धं - ख.। २१ प्राकृन्तञ्चैव - ख. २२ मुच्यते - ख.। २३ इच्छन्ते - ख.।

- - - - - - - - - -- - -

946

गुणानां परिणामेन प्राकृतानां जलादिवत्२४।
ब्यवसायस्तथा रूपं निश्चयश्चेति भाष्यते।।१८।।
बुद्धिरेव ह्यहङ्कारः प्रत्ययान्तरसंभवात्२५।
मनः केचित् तमिच्छन्ति२६ क्रियाजं गुणसंग्रहम्।।१९।।
अहमेव हि कर्तेति२७ अहङ्कार उदाहृतः।
मनसः कल्पनं वापि२८ स्मृतमिन्द्रियगोचरम्।
बुद्धिभूतादहङ्कारात् सत्वोत्पन्नात् प्रकाशिनः।। 8.175.२०।।
बुद्धीन्द्रियाणि जातानि पञ्च सत्त्वोदयानि तु।
बोध्यते बुध्यते वापि मुमुक्षुस्त्विन्द्रियैर्यतः२९।।२१।।
ततो बुद्धीन्द्रियाणीति कीर्त्यन्ते तत्त्वचिन्तकैः।
- - - - - - - - - - - - - - - -।।२२।।
अतः कर्मेन्द्रियाण्याहुर्गुणाज्जातानि राजसात्।
तामसादप्यहङ्कारात् तन्मात्राण्यभवन् पुनः।।२ ३।।
केचित् सर्वगतान्याहु - - - - - - - -।
- - - - विधं तच्च धर्माधर्मसमुद्भवम्।। २४।।
याति सर्वत्र सिद्धार्थं भूतव्यापि विमोहनम्।
शक्तं सर्वाश्रयं सूक्ष्ममनिवारितदिक्पथम्।।२५।।
लिङ्गः तच्च समाख्यातं देहिनां यच्च कारणम्।
यश्च सर्गस्त्रिधा प्रोक्तः स एव नवधा पुनः।।२६।।
प्राकृतस्य विकारस्य देहभेदाः सहस्रशः।
तत्त्वसर्गः स्मृतः पूर्वः३० पिण्डसर्गस्ततोपरः।।२७।।

प्रत्ययानां ततः सर्गस्तृतीयः समुदाहृतः ।
असक्ति३१ र्विलयस्तुष्टिः सिद्धिश्चेति चतुस्थि - ।।२८।।
भेदाः प्रत्ययसर्गे तु वैषम्यादपरे स्मृताः ।
पञ्चाशत् परितो भेदा ये च तेषां गुणा दश । । २९ ।।
- - - - - - - -- - - -
२४ जलाद्रिवत् - ख. । २५ प्रयात्यन्तरसंभवात् - ख., .. संभवाम् - ख. । २६ समिच्छन्ति - ख. । २७ तर्केति - ख. । २८ व्यापि - ख. । २९ .. र्युतः - ख. । ३० पूर्वं - ख. । ३१ अशक्ति - ख. ।
- - - - - - - -- - - -

947
षष्टिरेते पदार्था हि गीयन्ते कपिलादिभिः ।
सा तुष्टिर्नवधा भिन्ना सिद्धिश्चैवाष्टधा पुनः ।।8.175.३ ० । ।
स्मृतः पञ्चविधश्चापि तेषामेव विपर्ययः ।
अष्टभेदा३२स्त्रिभिन्ना३३ स्याद् दशभिः कार्यबन्धनैः ।।३ १ ।।
एते षष्टिपदार्थास्तु संख्याज्ञानमिति३४ श्रुतिः ।
न्यूनामेकाधिकामेके३५ षष्टिमन्ये३६ तु जानते ।।३२।।
ममैव हि पुरा वत्स गुणजे पदपञ्चके ।
अन्तरं तत्त्वमन्वेष्टुं प्रकृतेः पुरुषस्य च । ।३ ३ ।।
सांख्यतन्त्रं महद् बुद्ध्वा ज्ञात्वा तत् प्रकृतेः परम् ।
पचविंशमजं तत्त्वं भोक्तारमभिमानिनम् ।।३४।।
सन्देहापगमो नाभूदबुद्ध्वा परमेश्वरम् ।
यदाहं देवदेवेन स्वयमेव जगत्सृजा । ।३ ५। ।
स्वयोगं शम्भुना वत्स ग्राहितो गतसंशयः ।
तदा षड्विंशकं तत्त्वं ज्ञात्वा सर्वगमीश्वरम् ।। ३ ६।।
विमुक्तो योगसंसिद्धौ जातोहं मोहवर्जितः ।
भोक्ता चेत् प्रकृतेरस्ति भुंक्ते च पुरुषः स्वयम् ।
- - - - - - - - - - - - नपि द्विज ।।३७।।
यस्तयोः परतो नित्यम्३७ षड्विंशस्त्वीश्वरो विभुः ।
तं ज्ञात्वा परमं तत्त्वं मुच्यते जन्मबन्धनात् ।।३८।।
सांख्यं कृत्स्नमपि ज्ञात्वा गुणान्तरविचारणात् ।
पञ्चविंशकसंबोधान्नैव मुक्तिः प्रजायते ।
स बद्धो३८ भोक्तृपाशैस्तु गुणैः प्रकृतिसंभवः । ।३ ९।।

अभिमानात्मको भोक्ता पुरुषत्वादमोचकः ।
तं विदित्वापि नैव स्यान्मुक्तिः प्रत्ययवर्जिता । ।8.175.४० ।।
एष उक्तस्समासेन सांख्यसिद्धान्तविस्तरः ।
योगतत्त्वं प्रवक्ष्यामि दुःखजन्मविनाशनम् ।।४१ ।।
- - - - - - - - - -- - -
३२ भेद (?) । ३३ त्रिभिन्नः (?) ३४ सांख्या (सांख्य?) ज्ञानमिति - ख. । ३५ ... नेकाधिके - ख. । ३६ रन्ये - ख. । ३७ नित्यं - ख, इतः पूर्व पत्रमेकं खण्डितम् क पुस्तके । ३८ संबन्धो - क. ।
- - - - - - - - - -- - -


संभवं देहिनश्चैव वैराग्यं येन चोद्भवेत् ।
धर्माधर्मपरित्यागं३९ सत्यानृतविवर्जितम्४० । ।४२। ।
योगाभ्यासं४१ परासङ्गं४२ सूक्ष्मज्ञानमनिन्दितम् ।
सर्वसंसक्तिनिर्मुक्त४३ मीश्वरप्राप्तिकारणम्४४ । ।४३ । ।
सिद्धिनिर्द्वन्द्वसंयोगमशुभोदयनाशनम् ।
परोपलब्धिविज्ञानं तत्त्वार्थपदनिश्चयम् ।।४४। ।
भवजन्मापहं योगं विषयेन्द्रियवर्जितम् ।
मतं पशुपतेः कृत्स्नममृतास्पदलम्भनम् । ।४५ । ।
इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ द्वितीयोयं पञ्चसप्तत्युत्तरशततमोध्यायः४५

सनत्कुमार उवाच
उत्पद्यते१ यथा जन्तुर्वैराग्यं व्रजते यथा ।
यथा प्रबुध्यते चैव तत्ते व्यास वदाम्यहम् ।। १ । ।
आकाशः२ पवनस्तेजो भूमिरापस्तथैव च ।
एषामेकत्र संघाताच्छरीरं नाम जायते ।। २। ।
रसाः सोमात्मकाः सर्वे तथाहारश्चतुर्विधः३ ।
देहिनान्तु रसोत्पत्तिराहारस्य निषेवणात्४ । ।३ । ।
रसाद्रक्तसमुत्पत्तिः शोणितात् पिशितं स्मृतम् ।
मेद उत्पद्यते मांसात्तस्मादस्थीनि चाभवन् ।।४। ।
मज्जा चास्थिभवा ज्ञेया ततः शुक्रसमुद्भवः ।
रक्तशुक्रसमायोगाद् गर्भः५ संभवति स्त्रियाः । ।५ । ।
ऋतुयोगसमाधानाद् दैवकर्मवशादपि ।

स्त्रियाः पुंसश्च रत्यन्ते द्वावप्येकत्वमागतौ ।। ६ ।।

- - - - - - - - - -- - -

३९ परित्याग - क, परित्याग, (?) । ४० विवर्जिता - ख, विवर्जितः - क । ४१ योगाभ्यासः - (?) । ४२ परासङ्गः - ख-, परासंगः (?) । ४३ संसक्तनिर्मुक्त - ङ । ४४ कारणात् - क. । ४५ २२३ - ख. ।

१ उत्पद्यति - कु. । २ आकाशं - ख । ३ तथाहारञ्चतुर्विधम् - क. । ४ निसेवनात् - क. । ५ गर्भं - क. ।

- - - - - - - - - -- - -



तावेकत्वमथापन्नौ प्रेरितौ पवनेन च ।
कललं त्वेकरात्रेण पञ्चरात्रेण चार्बुदम् । ।७। ।
पिशितं सप्तरात्रेण मासाच्चाङ्कुरसंभवः ५ ।
ततःप्रभृति गर्भस्य विभागो भवति द्विज । ।८।।
शिरः पाणिमुखस्कन्धग्रीवापृष्ठादिसंयुतः७ ।
पञ्चानामथ मासानामक्षिकर्णादिसम्भवः । ।९।।
सर्वसंपूर्णगात्रस्तु स्रोतोभिर्नवभिर्युतः ।
व्यक्तीभवति तद्गर्भो मासैरष्टभिरेव तु ।। 8.176.१० । ।
संप्राप्ते नवमे मासि सर्वद्रव्यसमन्वितः ।
पञ्चभूतात्मकं तत्तु चेतोवदवतिष्ठति । । ११ ।।
गर्भक्लेदेन सिक्ताङ्गः८ सर्वदुःखसमन्वितः९ ।
जातिं स्मरेद्वसँस्तत्र१० जन्तुः सर्वसमुद्भवाम् । । १२ । ।
मृतः पुनरहं जातो जातश्चैव पुनर्मृतः ।
इदानीं जातमात्रस्तु योगमेवाभ्यसाम्यहम् । । १३ ।।
न पुनर्येन११ संसारं प्रवेक्ष्याम्यशुभोदयम् ।
एवं चिन्तयतस्तस्य नवमे मासि संगते । । १४।।
स्वकर्मविनिबद्धस्य जातमात्रस्य देहिनः ।
दहेमाविशते१२ वायुः स्मृतिमाक्षिप्य तामसः । । १ ५।।
येन मूढो निरानन्दो नैवाध्यात्मरतिर्भवेत् ।
अग्नीषोमात्मकं सर्वं भूतग्रामं चतुर्विधम् । । १ ६। ।
संयोगादेवमुत्पन्नमुत्पत्स्यति च सुव्रत ।
तत्र ये साधुसंपर्काच्छुभकर्मोदयादपि । ।१७। ।
आगमान्वेषणे सक्ताः पापानुष्ठानवर्जिताः ।

मत्वा संसारजं क्लेशं१३ जन्ममृत्युभयार्दितम्१४ ।।१ ८ ।।

- - - - - - - - -- - - -

६ मासादङ्कुरसंभवः - क । ७ ग्रीवपृष्ठादिसंयुत - ?, संयुतम् - क. ख. । ८ सिक्ताङ्गं - क. । ९ समावृतः - क. ख. । १० स्मरति - ख, स्मरन् विसँस्तत्र (?) क, (वि)शेस्तत्र क., संत्रस्तः - (?) । ११ पुनःप्रत्य - ख. । १२ मोहमाविशते (?) - ख । १३ संसारसक्लेश - ख. । १४.. ..भयादितः (?) ।

- - - - - - - - - - - - -

950

कामक्रोधरतिद्रोहलोभमोहसमावृतम् ।
वैराग्यं जन्मतः१५ कृत्वा सर्वारम्भपरिक्षयात् ।। १ ९। ।
अन्विषन्ति१६ शुभार्थं हि गुह्यमध्यात्मदर्शनम् ।
ते योगं परमं प्राप्य ब्रह्म विन्दन्ति तत् परम् । ।8.176.२ ०।।
तस्य ते संप्रवक्ष्यामि ब्रह्मसंबोधकारणम् ।
सर्वेषां योगिनां गुह्यं सर्वयोगनिदर्शनम्१७ । ।२१ । ।
ततो माहेश्वरं१८ योगमाख्यास्ये तत्परन्तव१९ ।
तेजोग्निः कामजो वह्निः क्रोधाग्निर्वीक्षणानलः । ।२२। ।
जठराग्निश्च भूतात्मा पञ्चैते देहवह्नयः ।
प्राणापानः समानश्च२० उदानो व्यान एव च । ।२३ ।।
पञ्चैते वायवो नित्या देहिनो देहसंभवाः२१ ।
आकाशप्रभवा ह्येते शरीरं चैषु तिष्ठति२२ । ।२४। ।
मांसरक्तसमाकीर्णं स्नायुमेदोस्थिसंचयम् ।
त्वचावनद्धं२३ दुर्गन्धं शकृन्मूत्रसमावृतम् ।।२५।।
तडिदभ्रागमानित्यं मृत्पात्रापातसन्निभम् ।
सर्वानर्थसमायुक्तं२४ नचिरान्नाशगामि च२५ ।।२६। ।
एकरूपं नवद्वारं त्रिस्थूणं पञ्चदेवतम् ।
विषयेन्द्रियसंकीर्णं नैकव्याधिसमार्दितम्२ ६ ।। २७।।
प्राणादिभिरवष्टब्धं शरीरं यन्त्रवत् स्थितम् ।
विमुक्तमसकृत्२७ तैस्तु वायुभिर्जीवसंहतैः ।। २८। ।
आमपात्रमिवापाताच्छीर्यते कालपर्ययात्२८ ।
पञ्चभूतानि भूतानि देहान्निष्क्रम्य सर्वशः । ।२९। ।
आविशन्ति तथात्मानमात्मा च विशते द्रुतम् ।
भूतेषु पवनः श्रेष्ठो जीवस्तद्विनिबन्धनः ।। 8.176.३ ०। ।

- - - - - - - - - -- - -

१५ जन्मनः (?) - क., जन्मना - ख. । १६ अन्वेषन्ति - ख, अन्विष्यन्ति (?) । १७ सर्वयोगिनि-दर्शनम - क. । १८ विभोर्माहेश्वरं - ख । १९ तत्परन्तपः - क । २० प्राणोपानः समानस्तु - क. ख. । २१ देहसंभवान् - क । २२ तिष्ठते - क. । २३ त्वचावबद्ध - ख. । २४ सर्वानित्यसमायुक्तं - क. ख. । २५ नाशगामिनम् - क. ख । २६ शतार्दितम् - क । २७ वियुक्तमसकृत् (?) । २८ कालपर्यये - ख. ।

- - - - - - - - - -- - -

951

वाय्वग्नी सहितौ जीवो२९ न जीवः प्राणिनां पृथक् ।
मूर्तिरन्या न जीवस्य मृत्यौ३० दृश्यति३१ देहिनः ।।३१ ।।
पञ्चरूपात्परो देवः सूक्ष्मात् सूक्ष्मतरो मतः ।
नासौ पश्यति न घ्राति न शृणोति न जल्पति । ।३२।।
न जानाति न च स्पर्शेज्जीवः३२ प्राणसमावृतः३३ ।
प्राणो नाम महावायुर्जीवं धारयते द्विज ।।३ ३।।
भासते श्वसते चैव सर्वेष्वपि३५ हि देहिषु ।
स प्राणो धारयत्यग्निं स च जीव इति स्मृतः । ।३४।।
वायुसन्धारणो ह्यग्निः क्रियासु परिवर्तते ।
यो वह्निमानसौ३६ देहे स जीव इति शब्यते ।।३ ५।।
अन्तर्गतो हि भूतानां कर्मारम्भनिबन्धनः३७ ।
एवमेतच्छरीरन्तु पञ्चभूतगुणात्मकम् । ।३६।।
तद्विकारे प्रनष्टे३८ तु मृत इत्यभिधीयते ।
भूतेन्द्रियमनोजीवविषया रागबन्धने (?) ।।३७। ।
हृदये कर्णिकायां तु मध्यस्थस्तेजसां निधिः ।
आत्मा सर्वगतो नित्यं वर्जितो विषयादिभिः । ।३८।।
तिष्ठते स विभुस्तत्र यं विदित्वा विमुच्यते ।
स येन योगसंसिद्ध्या ध्यानकर्मक्रियाविदा ।।३९।।
नाडीकर्मसमाधानात् सतताभ्यासयोगतः ।
भाभिः३९ प्रकाशितो दृष्टो विकारैर्विप्रमोचितः ।।8.176.४० ।।
दृष्टो भवति विप्रेन्द्र मुक्तिश्चैव ततः स्मृता ।
षड्विंशकपरिज्ञानाल्लयमाधाय तत्र हि ।।४१ ।।
सर्वप्राणिगतं सूक्ष्ममात्मदेहे च संस्थितम् ।
यं प्रपश्यन्ति संसिद्धा योगिनो गतबन्धनाः ।।४२ ।।

- - - - - - - - - -- - -

२९ जीतो - क. ख. । ३० सृष्टौ (?) । ३१ दृश्येत (?) । ३२ न स्पृशेच्च जीवः (?) । ३३.. स्पर्शं जीवः प्राणसमावृतः - क. । ३४ भाषते - क. । ३५ सर्वेष्वेव - क. । ३६ वह्निर्मानसो - क- ख । ३७ निबन्धनम् - ख. । ३८ तद्विकारप्रनष्टे - ख । ३९ नाभिः - क. ।

- - - - - - - - - -- - -

952

योभ्युपायः परस्तस्य विज्ञानादीश्वरस्य तु ।
योगाभ्यासं परं तं ते प्रवक्ष्यामि द्विजोत्तम । ।४३ । ।
इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ तृतीयः षट्सप्तत्युर४० शततमोध्यायः

सनत्कुमार उवाच
अन्तरात्मा च १चेतोवान्मनः२ संकल्पजं स्मृतम् ।
महाभूतप्रचाराच्च३ क्षोभाग्निर्जीव४ उच्यते । । १।।
न शरीरं विना चेतस्तच्चेन्५ नास्ति कुतश्च तत् ।
चेतोपि न विना जीवं स चापि न विना मनः । ।२। ।
प्राणो जीव इति प्रोक्तः स्पर्शादन्यत् प्रवर्तते ।
मनः सर्वं निबध्नाति कर्मारम्भमिति७ श्रुतिः ।। ३ ।।
सर्व एते हि संगत्य८ धारयन्ति शरीरिणम् ।
यस्य९ चेतोधिकन्तेषां१० स चेतोवान् प्रकीर्तितः । ।४। ।
चेतसा तु विजानाति शुभाशुभनिबन्धनम् ।
तन्मनश्चेतसि स्थाप्य नित्याध्यात्मरतिर्भवेत् ।।५। ।
शब्दादिविषयातीत इन्द्रियाणि निगृह्य तु ।
ध्यानारम्भपरो११ देही स१२ स्यात् कर्मविवर्जितः । ।६। ।
इन्द्रियाणि न बध्नन्ति मनो देहसमास्थितम् ।
जीवो बन्धात्मको ज्ञेयः शुभाशुभनिबन्धनात् ।।७। ।
रजसस्तमसश्चैव गुणयोरशुभात्मनोः ।
उद्रेकाज्जायते दुःखं सौख्यं सत्वात् प्रजायते । ।८।।
सौख्यस्य परिणामाद्धि दुःखोत्पत्तिः शरीरिणाम् ।
जायते च सुखं विप्र भूयो दुःखविपर्ययात् ।।९।।

- - - - - - - - - -- - -

४० षटषष्ट्युत्तर - क. ।

१ तु - क. । २ मनः - क. । ३ प्रचाराश्च - क. । ४ ... ग्नीजीव - ख. । ५ चेतस्तत्ते - ख. । ६ कुतश्चन - ख. । ७ कर्मभिस्तमिति - ख । ८ एवेति संतत्य - ख. । ९ तस्य - ख. । १० तेषां - क. ख.। ११ मनो - ख. । १२ देहीश - ख. ।

- - - - - - - - -- - -

953

एवमन्योन्यसंबद्धं गुणत्रयविकारजम् ।
सुखदुःखात्मकं मोहं भूतान्याविश्य तिष्ठति । ।8.177.१० ।।
मनश्चेतःसमाधानाद्विषयोद्विजनादपि१३ ।
तस्य नाशः समाख्यातः सङ्गस्य च विवर्जनात् ।।१ १। ।
इच्छानिग्रहणे सक्ताः१४ क्रोधादिपरिवर्जिताः ।
निर्ममा निरहङ्कारा बध्यन्ते नैव कर्मभिः । । १ २। ।
आत्मा सर्वगतो ह्येषः१५ सूक्ष्मः संभोगवर्जितः ।
योगिनस्तं प्रपश्यन्ति ध्यानाद्वायुविवर्जनात्१६ ।। १३ । ।
तावद् भ्रमति संसारे चतुर्योनिषु जन्तुषु ।
यावन्नात्मानमन्वेष्टि स च विन्नो न जन्म च (?) ।।१४।।
यद्यपि ध्यानसंसर्गादबुद्ध्वा ब्रह्म नश्यति ।
तथापि ब्रह्मसायुज्यान्न१७ तु जन्म पुनर्लभेत् । ।१५। ।
अथैश्वर्यं परं ध्यानाद्योगजं प्राप्नुते मुनिः ।
विदित्वा परमात्मानं ततो न पुनराव्रजेत् । । १६ ।।
असुखान्यपि१८ कर्माणि महापापकृतान्यपि ।
कृत्वा ध्यानरतो जन्तुस्तरसा नयति क्षयम् । ।१७। ।
प्राप्य कर्मक्षयं कृत्स्नं ध्यानयुक्त्या१९ महामुने ।
तिष्ठते निर्भयो योगी परमैश्वर्यसंयुतः । । १८। ।
कामरोषौ तथा सङ्गो२० द्वेषो रागविनिश्चयः२१ ।
एते क्षुद्रतरा२२ भावा मुक्त एभिर्विमुच्यते । ।१ ९ । ।
गर्वो दम्भो२३ ह्यहङ्कारस्तर्को मानोथ मत्सरः ।
पारुष्यं क्रूरता चैव भावाः क्षत्रनिबन्धनाः२४ । । 8.177.२० । ।
यस्यैते मोहना न स्युर्विन्दन्त्यात्मानमीश्वरम् ।
मोहभावान्तरातीतः समदुःखसुखस्सदा ।। २१ । ।

- - - - - - - - -- - -

१३ विजनादपि - क. ख., द्वेजनादपि (?) । १४ शक्तिः - क- । १५ योगैः - क. ख- । ५६ वायुर्विवर्जयेत् - क.

। १७ ब्रह्मसायुज्यान्न (?) । १८ अभावान्यपि - ख. । १९ ध्यानशक्त्या - क- ख. । २० तथा सङ्गौ - ख. । २१ द्वेषरागविनिश्चयः - क. ख. । २२ शूद्रतरा - क ख. । २३ गर्भस्तम्भो - ख. । २४ क्षात्रनिसबन्धनाः - क. ख. ।

- - - - - - - - - -- - -

954

निर्ममत्वादिभिर्युक्तो योगीति परिपठ्यते ।

यज्ञकर्म समुत्सृज्य वैष्णवं मोहबन्धनम् ।।२२ । ।

अध्यात्मपरमो नित्यं मुमुक्षुर्ब्राह्मणो भवेत् ।

त्रिवर्गं संपरित्यज्य योपवर्गे रतिं लभेत्२५ । । २३ ।।

दिवौकसामसौ२६ पूज्यो विप्र इत्यभिधीयते ।

ध्यानेन क्षीयते कर्म पापं वा यदि वा शुभम् । । २४। ।

क्षीणकर्मा ततो योगी तत्परं ब्रह्म विन्दति ।

प्राप्तयोगो मुनिर्ध्यानी यद्यत् कर्तुमभीप्सते२७ । ।२५।।

तत्तद् भवति तस्याशु मनसा चिन्तितेन वा ।

योगिनं पुरुषं दृष्ट्वा पापैर्मुच्यन्ति तत्क्षणात् ।

योपि संभाषते तेन२८ सोपि सद्गतिमाप्नुते२९ ।।२६ ।।

योगमेव परं३० ज्ञात्वा सर्वाशुभविमोचनम् ।

सचेतसो द्विजा विप्र बभूवुर्हि मुमुक्षवः । ।२७।।

ध्यानं ध्येयं परं चैव धातारं चैव ये विदुः ।

तापनात् तपनात् ताप्यान्मुक्तास्ते दुःखबन्धनात् । ।२८। ।

सर्वारम्भपरित्यागान्ममत्वादिविवर्जनात् ।

सांख्ययोगागमावेकौ भेदस्तत्वविमोचने३१ । ।२९ ।

निर्गुणः सांख्यमुख्यानां पुरुषः परिपठ्यते ।

दीपनिर्वाणवत्तेषां देहभेदे गतिः स्मृता । । 8.177.३० ।।

ईश्वरः सर्वनिर्मुक्तः क्षेत्रज्ञो योगिनां मतः ।

परमैश्वर्यसंयुक्तास्तं विशन्ति हि योगिनः ।।३ १ । ।

धारणाभिः समं ताभिः३२ प्राणायामैस्तथैव च ।

आत्मानं योजयेद्यस्तु स यागं लभते परम् । ।३ २। ।

अहिंसादिसमायुक्तो३३ योगी विगतमत्सरः ।

ध्यानमभ्यसते यस्तु स जयेन्मृत्युजन्मनी । । ३३ । ।

- - - - - - - - - -- - -

२५ योपवर्गरतो भवेत् (?), योपवर्गरतिर्लभेत् - ख. । २६ दिवौकसामपि - क. ख. । २७ मभीप्सति - क. ख.। २८ योभिसभाषते - ख., संभावितस्तेन - क. ख. । २९. माप्नुयात् - ख. । ३० योगेश्वरपदं - क. । ३१ विमोचनैः - क. । ३२ समन्त्राभिः - क. ख., समस्ताभिः (?) । ३३ अहिंसाभिः समायुक्तो - क. ।

- - - - - - - - -- - -

955

निर्गुणो निरहङ्कारो जितद्वन्द्वोनवग्रहः ।

भिक्षोपात्तरसाहारो३४ मुमुक्षुरिति शब्द्यते । ।३४।।

सर्वारम्भसमावस्थः सर्वाश्रयविवर्जितः ।

कर्ममार्गादतिक्रान्तो ध्यानीति परिकीर्त्यते ।।३ ५। ।

यस्य नोद्विजते चेतो दुःखापत्तौ३५ महामुने ।

न हृष्यति३६ सुखे चैव ध्यानीति स विशब्दितः । ।३६। ।

मोक्षसिद्धिप्रदः पन्थास्त्रिविधः परिकीर्तितः ।

पूर्वः३७ संकेतनः प्रोक्तः पश्चात् संकथनः स्मृतः ।।३७। ।

संसक्तश्च तृतीयस्तु तेषां भेदमिमं३८ शृणु ।

प्रतिरूपं विभोः कृत्वा दशभिर्नियमैर्युतः । ।३८ ।।

उपास्ते यो मुनिर्ध्यायन् स संकेतन उच्यते ।

वेदादृतसुखासङ्गः३९ सत्वकर्मा त्वबान्धवान्४० ।।३९।।

परित्यज्येश्वरं ध्यायेत्४१ तत्संकथनमुच्यते ।

सर्वारम्भपरित्यागात् कपिलादिनिषेवितः । ।8.177.४० । ।

स्मृतः संकथनः पन्था योगाग्निपरिदीपकः ।

निर्विकल्पस्तु यत्सर्वं ब्रह्म एवेति पश्यति । ।४१ ।।

भिन्नसर्वक्रियाचारो ध्यानी संसक्त उच्यते ।

त्रिविधस्यापि मार्गस्य नियमानियमानि च ।।४२।।

तान्येव परिकीर्त्यन्ते चर्याभेदा स्त्वनेकधा४२ ।

त्रयोपि हेतवो मुक्तेरिमे ध्यानपथा मुने । ।४३ ।।

सम्यगेतान्मुनिर्ज्ञात्वा निर्ममोन्यतमं श्रितः ।

तदाप्नोति परं ध्यानं येन विन्दति तत्परम् ।।४४। ।

सर्वान्ध्यानविधीँस्त्वेतानुच्यमानानिमान्मया ।

शृणु व्यास महाबुद्धे योगैश्वर्यफलप्रदान् । ।४५।।

इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ चतुर्थः सप्तसप्तत्युत्तर४३ शततमोध्यायः४४

- - - - - - - - -- - -

३४ भिक्षावाप्तरसाहारो - क. । ३५ दुखायत्तो - क. । ३६ भविष्यति - क. । ३७ पूर्वं - क. ३८ भेदमिदं - ख. । ३९ वेदामृ?तसुखासङ्गः - क.,. ..सङ्ग - क. ख. । ४० .. र्मत्सबान्धवान् - क. । ४१ ध्याति - क, ख. । ४२ चर्याभेदस्त्वनेकधा क, । ४३ सप्तषष्ट्युत्तर - क. । ४४ २२५ - ख. ।

- - - - - - - - - -- - -



सनत्कुमार उवाच

द्विविधं ब्रह्म निर्दिष्टं क्षरमक्षरमेव१ च ।

विदित्वोभयमेतद्धि मुच्यते सर्वबन्धनैः । । १ । ।

पञ्चविंशतिमं तत्त्वं क्षरं२ तत् प्रकृतेः परम् ।

अक्षरं च३ परं ब्रह्म षड्विंशकमिति४ स्मृतम् । ।२ ।।

मन एकगतं कृत्वा धारणाभिः पुनः पुनः ।

वायुनिग्रहणं कुर्यात् प्रत्याहारपुरस्सरम् ।। ३ । ।

मुहूर्तार्धं क्षणं वापि प्रत्याहारं समाचरेत् ।

तलात् त्रिंशच्छतं चोर्ध्वं प्राणायामनिबन्धनम् । ।४।।

अभ्यस्तमासनं५ यत् स्यात् स्वस्तिकादि प्रकीर्त्तितम् ।

तद् बद्ध्वा विजने देशे ध्यानाभ्यासं समाचरेत् ।।५।।

क्षुधार्त्तो वातिभुक्तो वा रुजा दुःखान्वितोपि वा ।

न ध्यायीत पुनर्विद्वान् य इच्छेद् ध्यानमात्मनः । ।६ । ।

योगहस्तं ततः कृत्वा वामस्योपरि दक्षिणम् ।

अधोमुखो भवेत् किञ्चित् पश्यन्नासाग्रमात्मनः । ।७।।

अस्पृशन् दशनैर्दन्तानोङ्कारं ब्रह्म संस्मरन् ।

ध्यायीत निर्ममो६ विद्वान प्राणायामपुरःसरम् । ।८।।

आत्मानमात्मना योज्य सर्वाङ्गानि तु संहरेत् ।

निरीहः पिहिताक्षश्च७ निक्षिप्य हृदि धारणाम् । ।९। ।

पाषाण इव निष्पन्दो मुनिर्ध्यानं समाचरेत् ।

एकत्रास्पन्दसन्धानं मनसो८ धारणा स्मृता ।। 8.178.१० ।।

एवं प्रतिदिनं तस्य ध्यायतो योगिनो मुने ।

विकारा गुणजाः सर्वे नश्यन्ते विघ्नहेतवः । । ११ ।

अन्वेष्टि च परं९ ब्रह्म स्वशरीरं समास्थितम् ।

कृत्वैक्यं१० प्राणमनसामिन्द्रियाणां विनिग्रहात् । । १२ ।।

- - - - - - - - - -- - -

१ अक्षर क्षरमेव - क., ह्यक्षरंक्षरमेव - ख. २ अक्षर - क., त्वमक्षरं तत्क्षरं? - ख. । ३ अक्षरश्च - क. ख. । ४ इति - क. ख. । ५ स्वभ्यस्तमासनं - ख. । ६ नित्यमों क. । ७ पितिथाक्षश्च - क. क., पतिताक्षश्च - ख.। ८ मानसो - क. । ९ परमं - ख । १० कृत्वैको - क. ख. ।

- - - - - - - - - - - -



सर्वभावपरित्यागान्मोक्षमाप्नोत्यसंशयम् ।

प्रत्याहाररतं कृत्वा सर्वमिन्द्रियगोचरम् । । १३ । ।

ततो युञ्जति निर्द्वन्द्वो मनस्सन्धानमाचरन् ।

सर्वं मनसि संस्थाप्य परं तत्त्वं निरूपयेत् । । १४। ।

अथैश्वर्यगतां सिद्धिं ध्यायन्नष्टविधां यदा ।

पश्यते योगसंसिद्ध्या तदा योगी प्रकीर्त्यते । । १५ । ।

ब्रह्मसोमादिकान्११ देवान् यदा युक्तः प्रपश्यति ।

योगिभिः कथ्यते ह्येषा सिद्धिर्योगविकारजा ।। १६ ।।

मनसा योगिनां सिद्धिः साख्यास्तत्त्वविनिश्चयात्१२ ।

न विशेषोस्ति योगानां१३ मुक्त्वा माहेश्वरं१४ विधिम् । । १७।।

योगिनो ध्यानसंसिद्धिं सांख्यास्तत्त्वविनिश्चयम् ।

अविभिन्नावुभावेतौ ध्यानतत्त्वार्थनिश्चयौ१५ । । १८ । ।

सर्वबन्धपरिभ्रष्टः सङ्गदोषविवर्जितः ।

रागमोहादिसंत्यक्तो मुक्त इत्यभिधीयते । । १९ । ।

शब्दादीन् विषयान् युक्तो न ध्यायन्वेत्ति वै यदा ।

असकृद् योगसंसिद्ध्या तदा पश्यति तत्परम् । ।8.178.२० । ।

मृत्युजन्मभयोद्विग्नः सङ्गदोषविवर्जितः ।

अरण्ये मौनमाधाय ध्यायेदोङ्कारमक्षरम् ।। २१ । ।

वेदादौ यः स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः

तस्य प्रकृतिलीनस्य१६ यः परः स महान् स्मृतः ।।२२ ।।

त्रिसंस्थानं त्रिमात्रं च त्रिब्रह्म त्र्यक्षरं तथा१७ ।

मात्राहीनं समात्रं च यो विद्यात् स विमुच्यते ।। २३ । ।

नाग्निस्तत्र न वायुश्च न सोमो न दिवाकरः ।

प्रभवन्ति महेशाने ईश्वरे त्रिविकल्पिते । ।२४।।

- - - - - - - - - - - -

११ ब्रह्मसोमादयो - क. ख. ' । पे सख्याना गुणवर्जिता - ख. । १३ योगिनां न विशेषोस्ति (?), योगिनां -

क. ख. । १४ माहेश्वरी - क. ख. । १५ निश्चितौ - क. ख. । १६ प्रकृतिहीनस्य - खः । १७ तदा क

- - - - - - - - -- - -

958

ओङ्कारः१८ परमं तत्त्वमात्मा ब्रह्म च कीर्त्यते ।
क्षेत्रज्ञैरात्मसंबोधाद्योगिभिः सूक्ष्मदर्शनात् । ।२५।।
एवमेव सदा ध्यायन् मन आत्मनि योजयेत् ।
ईश्वरं प्राप्नुते योगी यमवाप्य विमुच्यते । ।२६। ।
इन्द्रियाणि तु सर्वाणि शब्दरूपादिनिग्रहात्१९ ।
विदित्वा कर्मजान् हन्ति योगी दोषानशेषतः२० । ।२७। ।
ध्यानशक्त्या ततः शुद्धः सर्वजिन्मोक्षमाप्नुते ।
युञ्जन् प्रतिदिनं व्यास षड्मासाद् योगमाप्नुते ।।२८।।
पश्यते च परं ब्रह्म येन मुच्येत बन्धनात् ।
तमात्मानं परं ज्ञात्वा योगशक्त्या महामुनिः ।
परमैश्वर्यसंयुक्त अमृतं२१ पदमाप्नुयात्२२ । ।२९ । ।
इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ पञ्चमः२३ अष्टसप्तत्युत्तर- शततमोध्यायः

सनत्कुमार उवाच
अन्तःकरणसंसिद्धो यो महान् कथितो मया ।
पञ्च कर्मेन्द्रियाण्यत्र पञ्च बुद्धीन्द्रियाणि च । । १ ।।
पञ्चभूतं मनश्चात्र विकाराः षोडश स्मृताः ।
महान् बुद्धिरहङ्कारस्तन्मात्राणि च१ पञ्च हि । ।२। ।
इमाः प्रकृतयो व्यास देहमष्टौ समाश्रिताः ।
तत्त्वानि तु२ चतुर्विंशत्येतान्युक्तानि३ योगिभिः ।
देहमेभिरवष्टब्धं त्रैलोक्यव्यापिभिः स्थितम् ।।३ । ।
नाभिमध्ये तु नाडीनां शतमेकं प्रतिष्ठितम् ।
सर्वाङ्गेषु तु यास्त्वन्या जलान्नरसवाहिकाः४ ।।४। ।

- - - - - - - - -- - -

१८ ओङ्कारं - ख. । १९ शब्दस्पर्शादोनिग्रहात् - (?) । २० यो गदोवानशेषतः - क. ख. । २१. ..ममृतं - ख.। २२ तदवाप्नुयात् - ख. । २३ ध्यानविधौ (?) । २४ अष्टषष्ट्युत्तर - क. ।

१ तु - क. । २ च - ख । ३. .देतान्युक्तानि - क. ख. । ६ रसवाहिनः - क., रसवाहिनी - ख. ।

- - - - - - - - -- - -

959

तासां त्रिंशत् सहस्राणि व्यानस्रोतसि५ संस्थिताः ।

उदानस्यापरा नाड्यो६ ब्रह्ममूर्ध्नि प्रतिष्ठिताः । ।५। ।

चक्रनाभी समाश्रित्य७ भूतसंघातमास्थितम् ।

तन्मध्ये तु गुणस्पृष्टः८ कर्मात्मा भूतमोहनः ।।६। ।

नक्षत्रोद्योतसंकाशो ज्योत्स्ना पुञ्जनिभः प्रभः९ ।

विघातजननोन्येषां सूर्यायुतनिभः१० स्थितः ।।७। ।

संभूतोग्निरिवोत्पाती गिरिनीहारसन्निभः ।

गुणस्थो भूतयोनिस्तु पुरुषः पञ्चविंशकः ।।८।।

तस्यापि परतः शुद्धो महानग्निरिवोत्थितः ।

अर्चिष्मान् सर्वतो दीप्तो निर्विकल्पो निरञ्जनः ।।९।।

निर्धूमाङ्गारसकाशो नविज्ञातागमक्रियः ।

षड्विंशः पुरुषः सूक्ष्म ईश्वरः परमो विभुः ।। 8.179.१० ।।

स एष११ कथितो व्यास परेषां परतः स्थितः ।

महादेवमिमं ज्ञात्वा मुच्यते तत्क्षणान्मुनिः ।।१ १ । ।

गुणत्रयविकारस्थः कथितःपञ्चविंशकः ।

भूयः संसरते तस्मादज्ञानेनैव मोहितः । । १ २। ।

देवमानुषतिर्यक्षु भ्राम्यते रागमोहितः ।

षड्विंशकसमाधानात् सिद्धिस्तस्य विकारतः ।। १३ । ।

क्रियाकार्यविनिर्मुक्तः सर्वज्ञः सर्वसृक्१२ प्रभुः ।

परमैश्वर्यसंपूर्णः कृतकृत्यो महेश्वरः ।।१४।।

अजः स्वयम्भूः१३ षड्विंशः कूटस्थो ह्यचलो ध्रुवः ।

ततस्तत्त्वानि जायन्ते पुरुषश्च गुणैः सह ।। १५। ।

तस्मिन्नेव च लीयन्ते षड्विंशे तु महेश्वरे ।

विदित्वैनं महेशानं मुक्तिसिद्धिरवाप्यते ।।१ ६ ।।

- - - - - - - -- - - -

५ ध्यानस्रोतसि - ख. । ६ नाडी - क. ख. । ७ चक्रता?भीन्समाश्रित्य - क । ८ च गुणस्पृष्टः - ख । ९ पुञ्जनिभप्रभः - (?) । १० सूर्यातपनिभः - क. ख. । ११ एष स - ख. । १२ सर्वकृत् - क. । १३ स्वयम्भुः - क. । १४ विदित्वैकं - ख. ।

- - - - - - - -- - - -

960

एतज्ज्ञात्वा न लिप्येत कर्मभिर्मोहबन्धनैः ।
यथाग्निर्निर्दहेदन्ते भूतग्राममशेषतः ।। १७ ।।
षडविंशकपदार्थज्ञस्तथा कर्माणि निर्दहेत् ।
सर्वव्यापि यथाकाशं सूक्ष्मं नैव तु लिप्यते ।।१ ८।।
षड्विंशकरतो योगी तथा पापैर्न लिप्यते ।
षड्विंशात् परतो नास्ति तस्मात् तत्परमो१५ भवेत् ।। १ ९।।
एकत्वं सह तेनैव त्यक्त्वा देहमवाप्नुते१६ ।
ब्रह्मविष्ण्वादिकं सर्व भूतग्राममशेषतः ।।8.179.२ ० ।।
ईश्वराज्जायते व्यास तस्मिन्नेव प्रलीयते ।
नास्ति तस्मात् परो ह्यन्य१७स्तं विद्यात् सर्वतः स्थितम् ।।२१ ।।
यमध्यात्मविदः सिद्धाः परमात्मेत्युपासते१८ ।
स एष सर्वगो देवः षड्विंशः परमेश्वरः ।।२२ ।।
प्राणोपानः१९ समानश्च उदानो व्यान एव च ।
ये पञ्चवायवो देहे तेषां निग्रहणं यतेत्२० ।। २३ ।।
अपानञ्च समानञ्च कृत्वैकगतमादृतः२१ ।
व्यानेन सहितं प्राणमुदाने सन्निवेशयेत् ।।२४।।
नासाग्रे तु सकृत् प्राणं२२ प्रापयेद् योगशक्तितः ।
भद्रां दृष्टिं समास्थाय२३ षड्विंशं चिन्तयेत्ततः ।।२५।।
मात्राः पञ्चदश प्रोक्ताः प्रथमं सन्धिबन्धनम् ।
मात्रा विंशति विज्ञेयाः२४ पञ्चमःसन्धिविग्रहः ।।२६।।
निश्शब्दे विजने देशे निरीहो विजितेन्द्रियः२५ ।
स्वस्तिकं पद्मकं भद्रमथवा सिंहकच्छपौ२६ ।। २७।।
एकमासनमास्थाय षड्विंशं समनुस्मरन् ।
सर्वाङ्गानि समाहृत्य निष्पन्दो ध्यानमाचरेत् ।।२८।।

- - - - - - - - - -- - -

१५ परतमो - ख. । १६ त्यक्त्वा देहं स तैनैव सहैकत्वमवाप्नुते (?) । १७. त्स्तं - क. । १८ पर इत्युपसेवते - क. ख. । १९ प्राणापानौ - ख. । २० यतः - क । २१ मादितः (?) । २२ प्राणां (न्) - क. । २३ समादाय - ख. । २४ विंशतिका ज्ञेयाः - (?) । २५ विचलेन्द्रियः - ख. । २६ भद्रं सिंहं कच्छपमेव वा (?) ।

- - - - - - - - - -- - -



शनैः संचारयेद्वायुं नाडीभिः स्रोतसि स्थितम् ।
तावत्तिष्ठेत युक्तात्मा ध्पानयोगाद् गतस्पृहः ।।२९।।

सोममण्डलसंकाशं यावत् पश्येद्धृदि स्थितम् ।
ज्योतिर्देहाश्रितं दृष्ट्वा योगैश्वर्यं२७ प्रवर्तते । । 8.179.३० ।।
तत एवं सदाभ्यासाद् योगसिद्धिप्रवर्तनात् ।
त्रिकालविषयं ज्ञानं प्रत्यक्षं योगिनो भवेद् । ।३ १ । ।
व्याधयो नाविशन्त्येनं न च दुःखान्वितो भवेत् ।
स्वदेहस्य च सौगन्ध्यं वपुर्दिव्यं च जायते । ।३ २ ।।
अमोघञ्च वचस्तस्य शापानुग्रहकारितम् ।
प्रत्यवायो न चैवास्य भवेत् कर्मनिबन्धनः । । ३३ ।।
सर्वविद्याविदां व्यास यतीनां व्रतचारिणाम्२८ ।
तपस्विनां च विप्राणां योगी श्रेष्ठ उदाहृतः ।। ३४। ।
नान्यथा मुच्यते जन्तुः संसारात् तमसः२९ परात्३० ।
षड्विंशकपरिज्ञानं मुक्त्वा योगनिबन्धनम् । ।३ ५ ।।
षडङ्गेन तु योगेन तथा पञ्चविधेन च ।
जित्वा ह्यष्टप्रकारन्तु३१ आसनानां निबन्धनम् ।।३ ६।।
मात्रोत्कर्षेण जित्वा च प्राणायामं चतुर्विधम् ।
तन्मात्राणीन्द्रियैर्जित्वा विषयैरिन्द्रियाणि च । ।३७।। अहङ्कारभयायासक्रोधलोभविवर्जितः ।
विमत्सरोथ निःसङ्गो निःस्नेहो निःस्पृहस्तथा । । ३८। ।
योगास्पदं समाधाय३२ पूर्वोक्तं गुणवर्जितम्३३ ।
ध्यायीत हृदि तं देवं विश्वं विश्वेश्वरं विभुम् ।।३ ९। ।
अनादिनिधनं शान्तं त्रैगुण्यपरिवर्जितम् ।
तालौ जिह्वां समाधाय दन्तैर्दन्तान् न च स्पृशन्३४ । ।8.179.४० ।।
- - - - - - - - -- - -
२७ योगी स्वैरं (?) । २८ ब्रह्मचारिणाम् - ख.। २९ तपसः - क. । ३० पुरान् - क. । ३१ पञ्चप्रकारन्तु - ख.।
३२ समादाय - ध. । ३३ गुणवर्जितः - ख. । ३४ न चास्पृशन् - क., निवास्पृशन् - ख. ।
- - - - - - - - -- - -

इन्द्रियाणि मनश्चैव परमात्मनि योजयेत्३५ ।
कृत्वा मनसि तत्सर्वं प्राणापानौ निरुद्ध्य च । ।४१ । ।
ओङ्कारं त्वसकृद् ध्यायन् संहृत्याङ्गानि कूर्मवत् ।
शरीरं सर्वमापूर्य विक्षिपेत् सर्वमात्मनि३६ । ।४२।।
तत्संहृत्य मुनिर्भूयो व्यापि भूतं प्रविस्तृतम् ।
नाडीवायुप्रचारेण भूयोभूयस्तथारभेत्३७ । ।४३ । ।

स पूर्वापररात्रे तु सात्विकं३८ चेत३९ उच्यते ।
मध्याह्ने चापराह्ने च कृष्णं४० ध्यायीत तामसम् । ।४४।।
सन्ध्ययोरुभयोर्नित्यं राजसं ध्यानमाचरेत् ।
तैजसं सर्वतश्चापि ध्यानादेव जयेद् गुणान्४१ ।।४५ ।।
सदैवं ध्ययतो व्यास तदैश्वर्यं प्रवर्तते ।
येन षड्विंशकं बुद्ध्वा हृदयस्थं महेश्वरम् ।।४६।।
स्वेच्छया स्वतनुं त्यक्त्वा तस्मिन्नेव प्रलीयते ।
परमात्मा परं ब्रह्म कारणं पुरुषो महान् ।।४७। ।
ईश्वरो निर्गुणो भोक्ता षड्विंशः समुदाहतः ।
यच्चा४२ सत् सदसच्चैव भूतिभूतो विभुः परः ।।४८।।
जागर्त्ति स्वपते भुंक्ते सन्तिष्ठति ददाति च ।
स स्रष्टा स च संहर्ता गुणातीतो महेश्वरः । ।४९।।
इत्येतत् कथितं सर्वं सर्वयोगनिदर्शनम् ।
योगं पाशुपतं तुभ्य४३ माद्यं४४ मोक्षगतिप्रदम् । ।8.179.५० ।।
सर्वप्रसङ्गरहितं हरवक्त्रविनिःसृतम् ।
सूक्ष्मं तत्परमं ज्ञानं प्रवक्ष्यामि तवानघ ।
यस्य सम्यक् परिज्ञानाद् विज्ञेयं नापरं भवेत् । ।५१ । ।
इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ षष्ठः ऊनाशीत्युत्तर४५ शततमोध्यायः४६

- - - - - - - - - -- - -

३५ योजयन् (?) । ३६ सर्वतो मनः - ख. । ३७ भवेत् ख., चरेत् (?) ' ३८ सार्थिकं - क । ३९ श्वेत (? ) । ४० कृत्स्नं - ख । ४१ गुणं - ख. । ४२ यच्च (?) । ४३ गुह्यं (?) । ४४. मद्य (?), मया (?) । ४५ ऊनसप्तत्युत्तर - क । ४६ १६९ - क., २२७ - ख. ।

- - - - - - - - - -- - -

963

सनत्कुमार उवाच
ब्रह्माद्या देवता व्यास दक्षयज्ञवधे पुरा ।
शङ्करं शरणं१ जग्मुर्वीरभद्रभयार्दिताः । ।१ । ।
गणेन्द्रेणाभियुक्तास्तु२ भस्मकूटानि भेजिरे ।
यदा भस्म प्रविष्टास्ते३ तेजः शाङ्करमुत्तमम्४ ।।२। ।
अभवंस्ते तदा रौद्राः५ पशवो दीक्षिता इव ।
भस्माभसितगात्राणां६ शङ्करव्रतचारिणाम् । ।३ ।।

स्वं योगं प्रददौ तेषां तदा देव उमापतिः ।
सर्वासां७ मोक्षविद्यानां यत्तत्त्वमतिरिच्यते ।।४।।
हिरण्यगर्भप्रमुखैर्योगिमुख्यैः प्रवर्तितः८ ।
यो योगः सकलो व्यास कृच्छ्रोपायप्रसाधनः ।।५।।
जन्मान्तरसहस्रैस्तु तमभ्यस्य महामुने ।
प्राप्नुवन्ति परं९ ज्योतिर्योगैश्वर्यमथापि वा ।
योयं भगवता साक्षाद् योगो माहेश्वरः परः । ।६। ।
तत्त्वतः कथितस्तेषां प्रपन्नानां१० दिवौकसाम् ।
अस्य सम्यक् परिज्ञानादनेनैव तु जन्मना । ।७। ।
व्रतं पाशुपतं प्राप्य षड्मासाज् ज्ञानमाप्नुते ।
योगैश्वर्यं महद्११ व्यास यदवाप्य विमुच्यते ।।८। ।
सर्वधर्मं बहिः कृत्वा निष्कलस्य प्रभावतः ।
दीक्षां पाशुपतीं प्राप्य तं१२ विशन्ति महेश्वरम् । ।९।।
सर्वज्ञानसमायुक्तं तपोधर्मबहिष्कृतम्१३ ।
भस्मसाधनमात्रं तु शिवेन कथितं व्रतम् ।।8.180.१ ० ।।
पापिष्ठा धर्मवन्तो वा भक्ताः केवलमीश्वरम् ।
सेवनाद्यस्य मुच्यन्ते तन्निबोध महाव्रतम् ।। ११ । ।
- - - - - - - - -- - -

१ शरणं शङ्करं - ख- । २ संयुक्ता - ख- । ३ प्रदीप्तास्ते - ख. । ४ शङ्करमुत्तमम् - क. ख. । ५ महारौद्राः - क । ६ भषित (रुषितः )गात्राणां - ख. । ७ सर्वेषां - क. ।८ प्रवर्तितम् - क । ९ यदि - ख. । १० प्रसन्नानां - क. । ११ गतो - ख. । १२ मा - क. ख. । १३ तयोधर्मविहिष्कृतम् - क. ।
- - - - - - - - -- - -


अधर्मं न विना धर्मो न च धर्मं विनाशुभम् ।
एतौ परस्परं बद्धौ त्यक्त्वा तस्मादिमावुभौ ।।१ २ । ।
धर्माधर्मपरित्यक्तश्चरेत् पाशुपतं व्रतम् ।
ततो योगमिमं प्राप्य महदैश्वर्यमाप्नुते ।। १३ ।।
भस्मग्रहणमात्रात्तु१४ ते सर्वबन्धप्रमोचनम् ।
मुच्यते स्पृष्टमात्रस्तु१५ ब्रह्मपूतेन१६ भस्मना ।। १४। ।
दहेत् सोमकृतं वह्निरीश्वरं चानलं१७ विदुः ।

कृताकृत दहत्यग्निर्भूयः१८ सोमसमागतः१९ । । १ ५। ।
भस्मना मोचिताः सर्वे ब्रह्माद्या अभिमानिनः ।
भस्मनस्तेजसो२० वीर्यं भस्म पावनमीश्वरम् ।।१ ६।।
आत्मानमुद्धरेद्२१ व्यास२२ यः स्नानं भस्मना चरेत्२३ ।
भस्मना शिवयोगेन मुच्यते पाशबन्धनात्२४ ।।१७।।
प्रभवन्ति सुराः सोमात् पितरो वह्निसंभवाः२५ ।
वह्निसोमात्मकं२६ तस्माज्जगत्सर्वं प्रतिष्ठितम् । ।१८। ।
ईश्वरोग्निश्च सोमश्च भस्म तत्तेज उच्यते ।
तेजसा तस्य संस्पृष्टो मुच्यते जन्मना२७ द्विज२८ ।।१ ९ ।।
सांख्यं विद्यास्तपश्चैव त्यक्त्वा धर्मांश्च वैदिकान् ।
केवलं भस्मसंस्नानात् पूतो गच्छति तत्पदम् ।।8.180.२ ० ।।
विषयानपि संसेव्य बह्वधर्मरतोपि सन्२९ ।
पश्चाद् भक्तिपरः शम्भोर्भस्मनैव३० हि शुद्ध्यति ।।२ १ ।।
आत्मानं यः३१ पशुं कृत्वा महादेवं हुताशनम् ।
दीक्षितो ब्रह्मभस्मभ्यां शिवयाजी मुनिर्भवेत३२ ।।२२।।

- - - - - - - - - -- - -

१४ तन्मात्रात् - क, तन्मात्रं - ख., तन्मात्रं तु (?)। १५ सृष्टमात्रस्तु - ख । १६ ब्रह्मभूतेन (?) । १७ चालनं क । १८ दहेदग्निर्भूयः - ख । १९ समागतम् - क । २० भस्मसस्तेजसो - क. ख । २१ शङ्करे - ख. । २२ न्यस्य - ख. । ३ भस्मसाचरेत् - क ख । २४ पापबन्धनात् क। २५ संभवान् (त्) - क । २६ वह्नीसोमात्मकं - क ख । २७ जन्मनो ? । २८ द्विजं - क, द्विजः - ख. । २९ सः - ख. । ३० भस्मसैव - क ख. । ३१ स - ख. । ३२ शिवयाजिमुनिर्भवेत् - क., शिवयोगी ? ।

- - - - - - - - - -- - -

965

शीघ्रमेव परं योगं प्राप्य मुच्येत३३ बन्धनात् ।
एवं व्रतमनुप्राप्य भूत्वा पाशुपतो मुनिः । । २३ ।।
इदं३४ माहेश्वरं ज्ञानं३५ गुह्यं परममभ्यसेत् ।
ज्ञेयं ज्ञानं तथा ज्ञाता त्रयं देहे यथा स्थितम् ।। २४।।
आत्मा यश्च यथा चासौ स्थानत्रयसमास्थितः ।
नाडीषु च यथा ह्यात्मा आत्मन्येवानुतिष्ठति ।।२५।।
सर्वतः सर्वभूतेषु निगूढस्तिष्ठते यथा ।
पयसीव घृतं व्यास यं विदित्वा विमुच्यते । ।२६।।

न स वेत्तुं३६ विना ज्ञानं शक्य आत्मा कथञ्चन ।
रूपशब्दरसातीतं कस्तं वेत्ति महेश्वरम् ।।२७।।
तथा ह्यहं महाभाग प्रसादात्३७ त्र्यम्बकस्य तु ।
आत्मज्ञानषरोपायं कथयामि तवानघ ।। २८।।
सर्वमेव तमः पूर्वमिदमासीज्जगत् किल ।
न देवा नानिलो न द्यौर्न सूर्यश्चन्द्रमा न च३८ ।। २९।।
न किञ्चित् सर्वथा भूतं३९ दृश्यते जगति स्थितम ।
शुद्धं विमलमाभाति अक्षरं परमैश्वरम् ।।8.180.३ ० ।।
सर्वभावगुणातीतं निर्विकल्पं निरञ्जनम् ।
बहिरन्तश्चरं दीप्तमविनाशि वरं ध्रुवम् ।
यथा तदक्षरं ब्रह्म प्रोच्यमानं तथा शृणु ।। ३१ ।।
ओमित्येकाक्षरं पूर्वं क्षरं तस्माद्विनिर्गतम् ।
व्यक्षरश्च त्रिमात्रश्च ओङ्कारो ब्रह्म शब्द्यते ।।३ २ ।।
अकारे तत्र विष्णुस्तु उकारे तु पितामहः ।
मकारे भगवानीशो मात्रायां प्रकृतिः स्मृता ।।३ ३ ।।
ब्रह्मविष्णू४० स्मृतौ यौ तौ४१ देवावीश्वरनिर्गतौ ।
प्रकृतिस्त्रीत्वमास्थाय४२ नित्यन्तावीशपार्श्वगौ४३ ।।३४।।
- - - - - - - - -- - -
३३ मुच्यति - क. ख- । ३४ इम - क. ख । ३५ योग (?) । ३६ नावसेतु - ख । ३७ महाया (यो)गप्रसादात् - ख. । ३८ न सूर्यो न च चन्द्रमाः (?) । ३९ सर्वभूतानां - ख. । ४० ब्रह्माविष्णु - क. ख. । ४१ तु - क ख. । ४२ प्रकृतिः स्त्रीत्वमास्थाय ( ?) । ४३ तिष्ठन्तावीशपार्श्वगौ - क. ।
- - - - - - - - -- - -

966

पत्नीरूपेण सा शम्भुं भजते प्रकृतिस्सदा ।
क्षरन्तु प्रकृतिः४४ ख्याताक्षरस्तु४५ स्वयमीश्वरः ।।३ ५।।
ईश्वरान्निर्गता सा हि प्रकृतिर्गुणबन्धना ।
तस्याः स्रष्टा महादेवो यतो विष्णुपितामहौ ।। ३ ६।।
प्रजापती समुत्पन्नौ गुणत्रयनिबन्धनौ ।
तावाक्रम्य महेशस्तु प्रकृतिस्थौ गुणात्मकौ ।।३७।।
मकारस्थो विभुर्भूत्वा भुंक्ते संचरते च हि ।
गुह्यमेतत् परं ज्ञात्वा मयोक्तं तत्त्वमक्षरम्४६ ।।३८।।

येनैव४७ ध्यानिना४८ व्यास ईश्वरोसौ विकल्पितः ।
स तमाविश्य मुक्तात्मा कृतार्थो जायते मुनिः४९ । ।३९। ।
नैनं जानन्त्यमार्गस्थास्तर्कहेतुपरायणाः ।
भोक्तारं प्रकृतेरीशं परं षड्विंशसंज्ञितम् ।।8.180.४० । ।
ओङ्कारः५० प्रकृतिर्नित्यं तन्मध्ये चेश्वरः स्थितः५१ ।
पयोमध्ये यथा व्यास सर्पिरन्तर्गतं स्थितम् ।।४१ ।।
ओङ्कारं ध्यायता येन५२ अतीत्य प्रकृतिं मुने ।
ईश्वरोसौ महान् विन्नः स मुक्तः पशुबन्धनैः ।।४२।।
ईश्वरी प्रकृतिः ख्याता गुणबन्धाद्विमोहनी ।
ब्रह्मत्वाद् बृंहणी ह्ये षा विष्णुत्वाद्विभवाश्रिता । ।४३।।
प्रसादादीश्वरस्यैषा प्रकृतिस्त्रिगुणात्मिका५३ ।
साभिमाना भवस्रष्ट्री५४ भोक्ता तस्या महेश्वरः ।।४४। ।
अष्टबाहुस्त्रिपादा च पञ्चदेहमुखी तथो ।
द्विनेत्रा पंचकर्मस्था सप्तवाजिरथोपगा ।।४५।
जगन्माता स्मृता ह्येषा गुणत्रयविकारजा ।
उभे शुभाशुभे तस्यान्५५ विद्याविद्ये तथा ह्युभे । ।४६। ।
- - - - - - - - -- - - -

४४ अक्षरप्रकृतिः - ख. । ४५ क्षरस्तु - ख. । ४६ तत्त्वतोक्षरः - क । ४७ येनैवं - ख । ४८ ध्यानिनो- ख. । ४९ मुने (?) । ५० ओङ्कारं - ख. । ५१ चेश्वरं स्थितं - क. । ५२ ध्यायतो नित्यं - ख. । १३ स्त्री गुणात्मिका - क, । ५४. .भवत् स्रष्टी - क., .. .भवत्स्रष्टा - ख. । ५५ तस्यां - ख. ।
- - - - - - - - -- - - -

967
उद्भवोथ प्रणाशश्च क्रियानुष्ठानमेव च ।
निमित्तं चाभवद्योनिर्भावाः५६ संक्षेपतस्त्वमी ।।४७ ।।
ईश्वराज्जात ओङ्कारः५७ स च तस्मिन् प्रतिष्ठितः ।
ओङ्कारात् सर्वमुत्पन्नमाब्रह्मभवनं५८ जगत् ।।४८ ।।
अतः कृत्वा महाभाग योगिनः कपिलादयः ।
ओङ्कारं परमं५९ ब्रह्म निर्विकल्पमुपासते । ।४९। ।
स एव सर्वगो ह्यात्मा कारणं च स एव तु ।
एवं प्रकृतिभूतौ तावोङ्कारप्रभवौ स्थितौ६० । ।8.180.५ ० । ।

ईशभोज्यौ गुणात्मानौ ज्ञात्वा विष्णुपितामहौ ।
तत्सृष्टौ वेदयज्ञाख्यौ मुक्त्वा धर्मनिबन्धनौ ।।५१।।
महामोहौ तमोनिष्ठौ६१ विषयासङ्गसंयुतौ ।
सत्वपूर्वौ रजोमध्यौ सुखदुःखान्वितौ सदा ।।५२।।
संसारभ्रमणौ मूढौ सर्वानित्यसमायुतौ ।
ईश्वरेप्सुर्भवेद्विद्वान् ध्यायोगपरायणः ।।५३।।
तस्मात् प्रकृतिरुत्पन्ना तस्मिन्नेव प्रणश्यति ।
येनासावीश्वरो विन्नो योगेनात्मनि संस्थितः ।
प्रकृतिस्तं न बध्नाति मुच्यते च भवार्णवात् ।।५४।।
इति स्कन्दपुराणे पाशुपतयोगवर्णने ध्यानविधौ सप्तमः अशीत्युत्तरशततमोध्यायः

सनत्कुमार उवाच
आत्मा सूक्ष्मो मनोबुद्धिरहङ्कारो गुणास्तथा ।
भूतानीन्द्रियसंघातस्तन्मात्राणि दशानिलाः१ ।।१ ।।
विभक्ताः क्रमशो देहे विभागेन यथाश्रयम् ।
स्वप्नजाग्रत्सुषुप्तेषु२ स्थानेषु त्रिषु सुव्रत ।।२।।
- - - - - - - - -- - -
५६ चारुव द्योनिर्भावाः - क, चाभवेद्योनिर्भावाः - ख. । ५७ जायतोङ्कारः - क. । ५८ भुवनं (?) । ५९ ओङ्कारपरमं - क. ख. । ६० प्रभवास्थितौ - क. ख. । ६१ महामोहतमोनिष्ठौ (?) । १ स्तन्मात्रण्यनिलात्मकः - ख. । २ जाग्रत्स्वप्नसुषुप्तेषु (?) ।
सुषुप्तेषु ()
- - - - - - - - -- - -

# स्कन्दपुराणम्/खण्डः ८ (अम्बिकाखण्डः)/१९



सनत्कुमार उवाच
आत्मा सूक्ष्मो मनोबुद्धिरहङ्कारो गुणास्तथा ।
भूतानीन्द्रियसंघातस्तन्मात्राणि दशानिलाः१ ।।१ ।।
विभक्ताः क्रमशो देहे विभागेन यथाश्रयम् ।
स्वप्नजाग्रत्सुषुप्तेषु२ स्थानेषु त्रिषु सुव्रत ।।२ । ।
- - - - - - - -- - - -
१ स्तन्मात्रण्यनिलात्मकः - ख. । २ जाग्रत्स्वप्नसुषुप्तेषु (?) ।
सुषुप्तेषु ()
- - - - - - - -- - - -

968
हृदये कर्णिकायान्तु यत् पद्मं सर्वतोमुखम् ।
वेष्टितं तन्तुभिः३ सूक्ष्मैस्तदूर्ध्वं सर्वदेहिनाम् । । ३ ।।
आत्मा तत्र सजीवस्तु समनस्कः४ प्रतिष्ठितः ।
तत्५ सुषुप्तमिति प्राहुः संसिद्धाः शिवयोगिनः ।।४। ।
ज्वालिनी६ स्तिमिता धूम्रा विद्युन्मेघा विशालिनी ।
मालिनी शङ्करी चैव सुमैत्री बोधनी तथा७ ।।५।।
एता दश८ महानाड्यो जीवे तस्मिन् प्रतिष्ठिताः ।
शयानं प्रतिबुद्धं वा यास्ता बिभ्रति देहिनम् । । ६ । ।
शब्दादिविषयेभ्यस्तु आत्मा सर्वगतश्च यः ।
अग्निवायुसमायुक्तो जीव इत्युच्यते पुनः ।।७।।
अहङ्कारो मतो बुद्धिर्भावाश्चेतश्च देहजाः ।
सह जीवेन तिष्ठन्ति धारयन्तः शरीरिणम् ।।८। ।
त एव सहिताः सर्वे जीवश्चैव तु पञ्चमः ।
कर्णिका तन्तुभिर्व्योम्नि संस्थिता सर्वतोमुखाः ।।९।।
स्थितो मनसि सूक्ष्मस्तु शीतांशुर्नाम तन्तुकः ।

चेतः स एव संप्रोक्तः स एव पुरुषः स्मृतः । । 8.181.१० । ।
अहंकारोथ जीवस्तु तन्तुर्भास्करसंभवः१० ।
मनः सोमः सुखं ब्रह्मा ज्ञानं११ धर्मो१२ रतिस्तथा । ।१ १ ।।
रसमात्मा महौषध्यः सत्वजो भावविस्तरः ।
अहंकारो हुताशश्च मृत्युर्दुःखमथामयम्१३ । ।१ २। ।
कामरोषौ जरा तृष्णा अधर्मश्चेति तामसाः ।
विष्णुर्बुद्धिस्तथा कार्यं कारणं१४ भूमिरेव च । । १३ । ।
ज्ञानं वैराग्यमाकाशं राजसो१५ भावविस्तरः१६ ।
जीवमध्ये स्थिता सूक्ष्मा विधूमा पावकी शिखा । ।१४।।

- - - -- - - - - - - - - -

३ दशभिः - क. ख. । ४ सुमनस्कः - क. । ५ तं - ख. । ६ ज्वलिनी - क. । ७ स्नुषा - ख. । ८ एकादश - ख. । ९ - स्सर्वतोमुखा - ख., - मुखाः (?),. .. मुखी (?) । १० संज्ञकः (?) । ११ ब्रह्मज्ञानं - क. । १२. .ज्ञानैश्चर्यो (र्ये?) - क. । १३ मृत्युर्दुःखमनामयम् - क. ख. । १४ कार्यकारणे - क.। १५ राजसं - क. ख. । १६ विस्तरम् - क. ख. ।

- - - -- - - - - - - - - -



अमृतं सर्वभूतानां गतिश्चैव हि सा परा ।
मध्ये तस्याः स्थितं सौम्यममृतं शशिमण्डलम् । । १ ५।।
मध्ये तस्याग्निसंकाशो जीव ईशः१७ प्रदृश्यते ।
सरसा लोहिता मुख्या प्रीता रसवती तथा ।।१ ६।।
विधूमा चामृता चैव निकुण्ठा बहुविस्तरा ।
एताः सूक्ष्मतरा नाड्यः संभिद्य दशपावकम् ।
तर्पयन्ति सदा सोमं भूताधारं पयोमृतम् । । १७। ।
स ताभिस्तर्पितः सोमः१८ सर्वान्नरसवीर्यतः ।
संछादयति वृद्धस्तां१९ जीवमध्यगतां शिखाम् ।। १८ ।।
तदेवामृतमाख्यातमीश्वरास्पदमुत्तम् ।
रसो यदा हि सोमस्य शिखया कर्षितोधिकम्२० । । १ ९।।
जागर्त्येष तदा जन्तुः सर्वयोनिसमुद्भवः ।
यामृतेत्यपरा नाडी सा तु स्वप्ने२१ प्रतिष्ठिता ।। 8.181.२० ।।
यदासौ सोममापीति? सुप्त इत्युच्यते तदा२२ ।
उभावेतौ मुनिर्जित्वा स्वप्नजागरणाश्रयौ । । २१ । ।

अजाग्रन्नस्वपँश्चैव ध्यानयोगेन चिन्तयेत्२३ ।
ममत्वाद्याश्च ये भावा मनसश्चैव याः२४ घृणा । ।२ २ । ।
न बुद्धेर्यच्च वैराग्यं तेन बुध्यन्ति योगिनः ।
मन्यते२५ यन्मनः२६ किञ्चिद् बुद्धिर्यच्च विकल्पयेत् । ।२३ ।।
यद्वा कुर्यादहङ्कारस्तज्ज्ञानात् सर्वमुत्सृजेत् ।
निष्क्रियस्य कुतः कर्म तद्विना बन्धनं कुतः । । २४। ।
कर्मबन्धविहीनस्तु संशुद्धो बद्ध्यते२७ कथम् ।
य इमान् विषयान् केचिन्न विद्युः सोमसंभवान्२८ । ।२५। ।
भोक्ता वह्निः२९ स्मृतस्तेषां तज्ज्ञाता केन बद्ध्यते३० ।
इति ज्ञात्वा त्यजेच्चिन्तां भवेद्योगपरः सदा । ।२६। ।

- - - -- - - - - - - - -

१७ ईषिन् ( ईषत्?) - क. । १८ सोमो - ख । १९ वृद्धां तां - ख. । २०.. धिक. - क । २१ सुषुप्ते - ख. । २२ सदा - ख. । २३ ध्यानयोग विचिन्तयेत् - क. । २४ ये - ख. । २५ मन्यन्ते - क. ख २६ यन्मयः - क. । २७ मुच्यते - क. ख. । २२ विद्यात्सोमसंभवान् - क. ख. । २९ भोक्तृवह्निः - ख. । ३० बद्ध्यति - क. ख. ।

- - - -- - - - - - - - -

970

वह्नेर्यदौष्ण्यं तत्पापं तेजोधर्म उदाहृतः ।
प्रकृतिर्या स जीवस्तु या शिखा स महेश्वरः । ।२७।।
यो दहेत्३१ तेजसा वह्निं३२ न च तेन विदह्यते३३ ।
अतीता प्रकृतिस्तेन वित्त३४स्तेन महेश्वरः । ।२८।।
कर्मबन्धो ह्ययं लोको निष्कर्मा बद्ध्यते कथम ।
निर्ममा योगविदुषः शंकरव्रतमास्थिताः । ।२९।।
गच्छन्ति स्वतनुं त्यक्त्वा हित्वा३५ मायां परं पदम् ।
इदमन्यत् परं ज्ञानमस्मात् सूक्ष्मतरं पुनः । ।8.181.३ ० ।।
प्रवक्ष्यामि तव व्यास भक्तस्त्वमसि शङ्करे ।
योगिनोन्ये न जानन्ति यद् गुह्यं परमाद्भुतम्३६ ।। ३१ । ।
मुक्त्वा पाशुपतान् सिद्धान् यन्न भूतेषु विद्यते ।
मनो बुद्धिरहङ्कार इन्द्रियाणि गुणत्रयम् ।। ३२ । ।
न स्पृशन्ति तदात्मानं३७ विकारास्तस्य ते बहिः ।
सर्वत्र दृश्यते सोथ न च सर्वैः प्रदृश्यते ।
स एवं दृस्यते ध्यानान्नान्योपायात् कथञ्चन३८ ।।३ ३ । ।

सर्वभावगुणातीतं सुचिन्त्यं३९ परमेश्वरम् ।
ज्ञानेन ये प्रपश्यन्ति योगिनस्ते परे स्मृताः । ।३४। ।
छायैषा दृश्यते या तु चक्षुर्विषयमाश्रिता ।
स जीवः कीर्तितो व्यास स्थितिहेतुः शरीरिणाम् । ।३ ५। ।
तत्रास्ते स परो ह्यात्मा सूक्ष्मो मध्यगतोव्ययः
महानागः स्मृतो नाम्ना वायुराकाशगोचरः ।।३ ६।।
आकाशे कर्णिकायां च नाड्यां जीवे च संस्थितः ।
गान्धारी विजया चैव सञ्ज्ञया तलवर्तिनी ।। ३७। ।
नाग एतासु नाडीषु वायुः संपरिवर्तते ।
सा जया४० विजया या च द्वे ते प्राणवहे स्मृते ।।३८ । ।

- - - -- - - - - - - - - -

३१ देह - क. । ३२ वह्निर्न - ख. । ३३ विदह्यति - क. ३४ विद्धः - ख., विन्नः - क. । ३५ भित्वा - ख । ३६ परमद्भुतम् - ख. । ३७ तमात्मान (?) । ३८ तानुपायान् - क.,.. .पायान्न तु - ख. । ३९ स्वभावगुणातीतम- चिन्त्यं - ख. । ४० सञ्जया (?) ।

- - - -- - - - - - - - - -

971

अपाने तलगान्धार्यौ नाड्यौ नागेन संयुते ।
योगादपानमनसोर्नागेन समुदीरिताः४१ । ।३ ९ ।।
स प्राणो बहिरन्तश्च तर्पयन् हव्यवाहनम् ।
वृद्धं४२ संधारयेद् देहमायुषा च बलेन च । ।8.181.४० ।।
नाडी त्वन्या सुषुम्णेति४३ सोमवह्निमनःस्थिता ।
सास्मिन् सधातुके देहे कूर्मारे४४ चानिले स्थिता ।।४१ । ।
गुल्फे४५ करतले४६ सक्ता४७ निकुञ्चा सप्रसारिणी४८ ।
समानव्यानसंयुक्ता रक्तमांसे हि तर्पयेत्४९ ।।४२। ।
उदानो योपरो वायुर्यञ्ज कूर्मार५० उच्यते ।
नाड्यां नाभिनिबद्धायां तुलायां तौ प्रतिष्ठितौ । ।४३ ।।
अध एकश्चरेन्नाड्या वायुरन्यस्तदूर्ध्वगः ।
अधःस्थः पादसंबद्ध ऊर्ध्वगः शिरसि स्थितः । ।४४।।
यो वायुर्देवदत्ताख्यः कृतको५१ योपरोनिलः ।
वह्निसोमनिबद्धौ तौ प्राणहेतू महाबलौ५२ ।।४५।।
एको विवर्द्धयत्यग्निमन्यः सोमञ्च तर्पयेत्५३ ।

देवदत्तमहानागकृतकूर्मधनञ्जयाः५४ । ।४६ ।।
प्राणास्ते पञ्च विख्याता वह्नयो- - याजिनः ।
हुतमेषु यदिष्टं वा सोमं तदुपतिष्ठति५५ ।।४७।।
सोमं विशन्ति यज्वानो न तेषां मुक्तिलक्षणम् ।
दीप्तिरग्नेः स्मृता या तु ओषधिभ्यश्च यद्रसम् ।।४८।।
तर्पणं यच्च सोमस्य कर्णिकायां तदास्थितम् ।
नेत्रेषु दृश्यते योयं ज्योतिः छायाप्रकाशकः ।।४९।।
स जीवः सर्वसत्वानामात्मा तत्र समास्थितः ।
ज्योतिषोन्तर्गतः सूक्ष्मस्तद्धर्मं५६ परमं स्मृतम् । ।8.181.५० ।।

- - - -- - - - - - - - - -

४१ समुदीरितां - ख., समुदीरिते (?) । ४२ वृद्धः - ख । ४३ सुषुम्नेति - क., सुसुप्तेति - ख. । ४४ कुर्मारे - ख., कुमारे - क. । ४५ गुल्फा - क. । ४६ खुरतले - क., करतला - ख. । ४७ शक्ते- ख । ४८ सुप्रसारिणी - क. । ४९ ह्यतर्पयेत् - क ख. । ५० कुर्मार - क. । ५१ कृकको( लो) (?) । ५२ समानिलौ - ख. । ५३. .मतर्पयत् - क ख. । ५४ कृककूर्मधनञ्जयाः - ख, । ५५ तदुपतिष्ठते - ख. । ५६ तद्धर्मा - क., तद्धर्म - ख. ।

- - - -- - - - - - - - - -



तच्चामृतं समाख्यातं ज्ञानलभ्यं तदुच्यते ।
तस्मात् परतरा५७ नास्ति ज्ञानविज्ञानयोर्गतिः५८ । ।५१ । ।
ज्ञात्वैवं सन्त्यजेन्मोहं गुणत्रयविकारजम् ।
अभिन्नस्यात्मनस्तस्य षड्विंशस्येश्वरस्य५९ । ।५२ । ।
भेदं भगवतः कुर्यात् कोन्यो योगविशारदः ।
निरञ्जनं निर्विकल्पं प्रभुं तं न विकल्पयेत् ।।५ ३ । ।
विमोहास्त्यक्तसंसर्गाः क्रियाकार्यविवर्जिताः ।
तं विशन्ति महेशानमीश्वरव्रतचारिणः । ।५४।।
इतीदं योगमाख्यातं व्यास माहेश्वरं तव ।
सम्यगीश्वरसन्धानं६० यदन्यत्र न विद्यते । ।५५।।
सन्देहो यत्र ते विप्र प्रष्टव्यं यच्च मन्यसे ।
तद् ब्रह्मन् परिपृच्छाशु नावक्तव्यं तवास्ति मे ।।५६ ।।
इति स्कन्दपुराणे पाशुपतयोगवर्णने योगविधावष्टमोयमेकाशीत्युत्तर६१ शततमोध्यायः६२

व्यास उवाच

भगवन् सर्वयोगीश सर्वामरनमस्कृत१ ।

अहो ज्ञानं त्वयाख्यातमज्ञानविनिवर्तनम् । ।१ ।।

अद्याहं गतसन्देहो महादेवं परं प्रति ।

शङ्करात् प्रकृतिर्जाता ब्रह्मविष्णू तदात्मकौ । ।२। ।

ज्ञात्वा षडविंशमीशानं मुच्यते बन्धनादिति ।

सर्वयोगपथात्२ पूर्वमुक्त्वा सकलसंहिताम् ।।३ ।।

निष्कलं सकलं३ ज्ञानं कोन्य एवं प्रभाषते ।

श्रवणादस्य विप्रेन्द्र देहं मुक्तमबोधिषम्४ ।।४। ।

- - - -- - - - - - - - - -

५७ परतर - ख । ५८ ज्ञानिज्ञानमन?. - ख. । ५१ षड्विंशस्य परस्य - क. । ६०... सन्धाना[त्) । - ख. ।

६१ एकसप्तत्युत्तर - क । ६२ १७१ - क, २२९ - ख. ।

१ नमस्कृतः - क. । २ मथा ख, ३ शाङ्करं - ख । ४ यत् - क. ।

- - - -- - - - - - - - - -



त्वत्प्रसादादहं तात प्राप्तज्ञानो गताशुभः ।

विसन्देहो५ भवं६ शान्तः प्रष्टव्यं किञ्चिदस्ति मे । ।५।।

तत्त्वां७ विज्ञापयामीदं निष्ठामाख्यातुमर्हसि ।

एवं विज्ञानसंपन्नः प्राप्तयोगो मुनिर्मुने । ।६। ।

विनाक्लेशं तनुं त्यक्त्वा योगी योगबलान्वितः ।

कथमाप्नोति तद् ब्रह्म निष्कलं परमेश्वरम् । ७। ।

ईश्वराधानसंप्राप्तेरुपायं८ मोक्षलम्भनम् ।

कथयस्व मुनिश्रेष्ठ प्रष्टव्यं नान्यदस्ति मे । ।८। ।

एवमुक्तः स शिष्येण व्यासेन सुमहात्मना ।

कथयामास विप्रेन्द्रः शिवसिद्धान्तनिश्चयम् । ।९। ।

सनत्कुमार उवाच

शृणु व्यास परं ज्ञानमीश्वराधानकारणम्९ ।

स्वेच्छया१० येन मुच्यन्ते११ योगिनो ज्ञानतत्पराः । । 8.182.१० । ।

त्रिधोत्क्रान्तिमिमां१२ ज्ञात्वा मुहुरभ्यस्य चैव हि ।

स्वदेहं रिपुवत् त्वक्त्वा१३ षड्विंशे लयमाप्नुयात् ।।१ १ ।।

या नाड्यो वाय्ववष्टब्धाः१४ संवरन्ति१५ शरीरिणम्१६ ।

शतं तासां शतानां तु कर्णिकामध्यमाश्रितम्१७ । । १२।।
तमाश्रित्या१८ स्थिता नाड्यो१९ नाभ्यां पादेष्वधोगताः ।
शिरोबद्धाः स्मृता भूयस्ता एव करमास्थिताः२० । ।१३ ।।
करमाश्रित्य ता भूयः कर्णिकां पुनराश्रिताः ।
द्विसप्ततिसहस्राणि नाडोनामपरा२१ मुने ।। १४।।
तासामेकैकशो भेदाः२२ सूक्ष्मसूक्ष्मतराः२३ स्मृताः२४ ।
तासु सञ्चरते प्राणः कर्णिकाव्योमसंभवः ।। १ ५। ।

- - - -- - - - - - - - - -

५ निःसन्देहो - ख. । ६ भवान् - क. ख. । ७ तन्त्वा - ख । ८ ईश्वरध्यानसंप्राप्तेरुपायं - ख. । ९ ध्वानकारणम् - ख. । १० स्वेप्सया - ख. । ११ मुच्यन्ति - क ख. । १२.. .मिमं - क । १३ कृत्वा - ख. । १४ वेष्टिताष्टब्धा? - क । 7। ९ संचरन्ति - ख. । १६ शरीरिण - क. । १७ समाश्रिताः - क. । १८ तमाश्रिता - ख. । १९ नाडी - क. ख. । २०. श्रिय?. - क । २१ मपरं - क ख. । २२ भेदे - क. । २३ सूक्ष्मातरा . क । २४ स्थिता - क ।

- - - -- - - - - - - - - -

974

तत्रात्मा सूक्ष्मसंलक्ष्यः प्रागुक्तस्तिष्ठति द्विज ।
या प्रभा दुर्दृशा तस्य तां भजेद् योगविन्मुनिः ।। १ ६। ।
तत्तेजः सर्वनाडीषु विभक्तं सर्वदेहिनाम् ।
तेन नाड्यो बहिः स्पर्शान्मनः कुर्वन्ति विस्तृतम् । । १७।।
तत्तेजश्चक्षुषा हृत्वा सर्वनाडीसमाश्रितम् ।
मन एकगतं कुर्यात् तच्चात्मनि नियोजयेत् । । १८।।
वायुर्धनञ्जयो नाम्ना यो हृदि स्फुरते सदा ।
त्रीणि तस्य मुखान्याहुः शिरो नाभि२५ र्हृदेव च । ।१ ९। ।
येन्ये प्राणा नवाख्याता वायवः कीर्तिता मया ।
धनञ्जयस्य सर्वे ते वशगास्तन्निबन्धनाः । ।8.182.२ ० ।।
तद्वशादुत्क्रमन्त्येते तस्मिँतिष्ठन्ति संस्थिताः ।
नाभीबन्धनमासाद्य३६ नाडीनां वक्त्रमास्थितम् । । २१ । ।
द्वितीयं कर्णिकायान्तु तृतीयं तालुसंस्थितम्२७ ।
क्षुरिका परशुः शूलं त्रिविधोत्क्रान्तिरुच्यते । ।२२ ।।
शूलं हृदि क्षुरं नाभ्यां तालौ परशुरास्थितः ।
तालुके हृदि वा२८ बद्ध त्रयं२९ नाभ्यां प्रतिष्ठितम् ।।२३ ।।

तालौ वियोजितं सर्वं प्राणमेव विमुञ्चति ।
आक्षिप्तं त्रितयं नाभ्यां कर्णिकायां वियोजितम्३० । । २४। ।
स्थितम् (?) आत्मनि संयोज्य विक्षिपेदूर्ध्वतो मनः ।
प्रयोगादस्य विप्रेन्द्र मुच्यते तत्क्षणान्मुनिः । ।२५। ।
स्वच्छन्दतनुसंत्याग एष ते परिकीर्तितः ।
धर्माधर्मनिबद्धैस्तु कर्मभिः प्रागनुष्ठितैः ।।२६ ।।
यथा३१ जीवो न बद्ध्येत३२ योगिनस्तदिदं३३ शृणु ।
बाह्यःशरीरजश्चैव मृत्युर्द्विविध उच्यते । । २७ ।।

- - - -- - - - - - - - -

२५ नामा(सा) - क. । २६ नाडीबन्धनमासाद्य - ख । १७ तालुसंस्थिता - ख २८ वा हृदि - क. । २९ बन्धत्रयं - ख. । ३० वियोजयेत् - क । ३१ तथा - ख । ३२ बुद्ध्येत - ख. । ३३ ...स्तदिमं - क, स्तमिमं - ख. ।

- - - -- - - - - - - - -

975

विषशस्त्राग्नियोगैस्तु सर्पदंष्ट्रिमरुज्जलैः ।
बाह्यो मृत्युरिति ख्यातः शारीरं तु निबोध मे । ।२८ ।।
रोगजः कालजो वापि मृत्युराभ्यन्तरो३४ भवेत् ।
कालजो जरया प्रोक्तो रोगजो व्यधिसंक्षयात्? । ।२९। ।
दुर्लभो मृत्युरन्योयं३५ योगसंधानजो मुने ।
योगोपायकृतो यश्च यश्च कालक्षयागतः ।।8.182.३ ० । ।
तयोर्भेदविकारे तु शृणु व्यास समासतः ।
कालक्षयाद् भवत्येको द्वितीयो मनसेप्सितः । ।३ १ । ।
योयमाघोषजः शब्दः श्रूयते श्रोत्रसन्धितः३६ ।
स पूर्वं लीयते कूर्मे तेन वह्निस्त्यजेत् प्रभाम् ।।३ २।।
निष्प्रभः स ततो वह्निः शब्दयोगाद्वियुज्यते ।
शब्दस्पर्शगुणातीतो रूपयोगं विमुञ्चति ।।३ ३ ।।
एवमग्नौ प्रणष्टे तु सर्व एवानिलास्ततः ।
एकतो योगमिच्छन्तो३७ मर्माणि विनिकृन्तते । ।३४।।
कूर्मारो३८ देवदत्तश्च कृकरो नाग एव च ।
उदानेनाशु संयुज्य कर्णिकायां विशन्ति३९ हि ।।३ ५। ।
तत४० ऊर्ध्वो भवेच्छ्वासो मनोजीवविनिर्गमः ।

ततो ज्योतिर्यदक्षिभ्यां४१ तत्सोमं विशति द्रुतम्४२ ।।३ ६।।
इन्द्रियाणि मनो यान्ति मनः प्राणविनिर्गमम् ।
तेषु सर्वेषु लीनेषु प्राणान् वायुर्निपीडयेत् । ।३७।।
पीड्यमानास्ततः सर्वे४३ ते भवन्त्येकतोनिलाः४४ ।
स्वं स्वं त्यक्त्वा ततः स्थानं यच्च४५ कर्म यदात्मकम् ।।३८।।
एकस्था वायवः सर्वे पूरयन्ति धनञ्जयम् ।
शेषस्तत्र हि कूर्मारो जीवं त्यक्त्वा स तिष्ठति ।। ३९ ।।

- - - -- - - - - - - - - -

३४ मृत्युरभ्यन्तरो - ख. । ३५ रभ्यासाद् - क. । ३६ सन्धिते (तैः) - ख. । ३७ लोकमिच्छन्तो - ख. । ३८ कुर्मारो - क ख. । ३९. ..माविशन्ति - ख. । ४० अतः - ख, । ४१ ज्योतिर्यदक्षिभ्यां - क. । ४२ द्रुते - ख. । ४३ भवन्त्येकगतो - क., भवन्त्यन्तगतो - ख. । ४४ ता - ख. । ४५ धर्म - ख. ।

- - - -- - - - - - - - - -

976

मनोबुद्धिरहङ्कारश्चेतो जीवस्तथैव च ।
निष्क्रमन्ति ततो देहात्त्वरितं वायुनेरिताः ।।8.182.४० । ।
प्रागुपात्तस्ततोस्यान्यो देहः सूक्ष्मो विजायते ।
स तत्र सन्धितो४६ जीवो भूयो मूढश्च तिष्ठति४७ । ।४१ ।।
एवं कालकृता ह्येषा सर्वभूतगणस्थितिः४८ ।
विना योगं न जीयेत सूक्ष्मं माहेश्वरं पदम् । ।५२ । ।
उपविष्टः प्रसुप्तो वा उत्क्रान्त्यभ्यस्तसंयमः४९ ।
स्वेच्छया मुच्यते व्यास ज्ञात्वा तन्तुः५० महेश्वरम् । ।४३ ।
क्षुरिकां परशुं वाथ शूलं वा धारयेन्मुनिः ।
ततः सर्वस्य लीयन्ते५१ विकाराः करणैः सह ।।४४। ।
वीक्षते चेश्वरं ब्रह्म षड्विंशं स्वतनुस्थितम् ।
मनस्तीव्रं जडं जन्तोः प्रयच्छति विपद्यतः५२ । ।४५ ।।
स रुजा मोहमापन्नो ज्ञानवस्तु न विन्दति ।
अनेन कर्मणा विप्र सर्वरुक्परिवर्जितः ।।४६ ।।
सुखमारोहति ब्रह्म हर्म्यपृष्ठं५३ तलादिव ।
पदार्थं पञ्च विज्ञाय दुःखान्तपरिनिष्ठितः । ।४७। ।
पञ्चभिर्ब्रह्मभिः पूतो भस्मसा५४ दीक्षितो द्विजः ।
शङ्करैकमना योगी ज्ञानमेतदवाप्नुते । ।४८ । ।

माहेश्वरमिमं योगं निष्कलं मुक्तिकारणम्५५ ।
यत्नादपि न विन्दन्ति व्रतमप्राप्य शांकरम्५६ ।।४९ । ।
स त्वं व्यास महाबुद्धे५७ चरन्५८ पाशुपतं व्रतम् ।
महादेवपरो भूत्वा ज्ञानमेतदवाप्नुहि । ।8.182.५० । ।
नैवमेतत्५९ परं ब्रह्म अन्ये विन्दन्ति योगिनः ।
महादेवं प्रपन्ना६० ये तान्मुक्त्वा शिवयोगिनः ।।५१ । ।

- - -- - - - - - - - - -

४६ तत्रापस्थितो (?) । ४७ मूढस्मृति? - क. ' ४८. गणास्थिति - ख. । ४९ उत्क्रान्ताभ्यस्तसंयमः -ख.। ५० तत्त्वं - ख. । ५१ लीयन्ति - ख. । ५२ विपद्यते - ख. । ५३ हर्म्यमृष्ठे - क. ख. । ५४ भस्मना (?) । ५५ मूर्तिकारणं - क, मूर्तकारणम् - ख । ५६ शंकरम् - क. ख. । ५७ महाप्रज्ञ - ख. । ५८ चर - ख. । ५९ दैवमेतत् - ख. । ६० महादेव प्रपन्ना - क ।

- - -- - - - - - - - - -

977

एष६१ मोक्षविधिः कृत्स्नः६२ सर्वप्रत्ययवजितः६३ ।
निष्कलः६४ कथितो व्यास परो यस्मान्न विद्यते६५ ।। ५२। ।
एवं पाशुपता विप्रा निष्कलं तं महेश्वरम् ।
योगादाविश्य मुच्यन्ते६६ पुनर्जन्मविवर्जिताः ।।५३ ।।
सकलस्यास्पदं दिव्यं ब्रह्मलोकात् परे६७ स्थितम ।
महादेवस्य वक्ष्यामि तद्भक्ता यत्र यान्ति ते६८ । ।५४।।
इति स्कन्दपुराणे पाशुपतयोगवर्णने योगविधौ नवमः द्व्यशीत्युत्तर६९ शततमोध्यायः७०

सनत्कुमार उवाच
सत्यस्य महतश्चैव जनस्य तपसस्तथा ।
भव्यभूतभवानां च सप्तानामूर्ध्वतः स्थितः१ । । १ ।।
लोको भगवतः शम्भोर्यत्रास्ते सकलः शिवः ।
नासौ तर्कविनिर्देश्यो लोकास्तस्मिन् प्रतिष्ठिताः ।।२ । ।
ऊर्ध्वं तिर्यगधस्ताच्च लोकास्तद्विनिबन्धनाः ।
ब्रह्माण्डं सकलं तस्मिञ्छिवलोके प्रतिष्ठितम् ।।३ । ।
नासौ नश्यति संहारे ध्रुवः स्थाणुः सुरालयः३ ।
यत्राहं सनकाद्याश्च ब्रह्मा चैव पितामहः४ ।।४।।
बालखिल्यपुरोगाश्च५ सिद्धाश्च कपिलादयः ।

शिवयोगपरिप्राप्त्या६ सत्वादिगुणवर्जिताः ।।५।।
तिष्ठामो निर्वृता व्यास सेवमानास्तमीश्वरम् ।
परमाणुरसावीशो भावगम्यो मनीषिणाम् ।।६।।
परमैश्वर्यसंयुक्तस्तत्रास्ते विग्रहेश्वरः ।
क्षमा सत्यं धृतिश्चैव तपो वैराग्यमेव च ।।७।।

- - - -- - - - - - - - -

६१ एषा - क. ख. । ६२ कृत्स्ना - क. ख. । ६३.. वर्जिता - क. ख. । ६४ निष्कला -क ख। ६५ परं यस्या न विद्यते - क. ख. । ६६ मुच्यन्ति - क. । ६७ परा - ख. । ६८ यान्तीति - क. । ६९ द्विसप्तत्युत्तर - क. । ७० अध्यायाङ्को न विद्यतेत्र ख पुस्तके ।

१ स्थितम् - ख. । २ विनिबन्धनात् - क. । ३ स्थाण्वीश्वरालयः (?) । ४ पिता मम - ख. । ५ बालिखिल्यपुरोगाश्च - क. ख. । ६ परिप्राप्ताः - ख. ।

- - - -- - - - - - - - -

978

स्रष्टृत्वं७ ज्ञानवैराग्यादात्मबोधो८ महेशता ।
नित्यमेतानि तिष्ठन्ति तस्मिन्देवे महेश्वरे ।।८।।
योगवह्निरसावात्मा ब्रह्मसृक्परमेश्वरः ।
साकल्यान्मूर्त्तिमास्थाय९ करोति जगतः स्थितिम् ।।९।।
अष्टमं ध्रुवमध्येय(? )मक्षरं१० मुक्तिकारणम् ।
मायाधाम तदीशस्य जगत्संहारहेतुमत् ।।8.183.१ ०।।
ऊर्ध्वतो ब्रह्मलोकस्य योजनानां महात्मनः ।
विंशतीनान्तु कोटीनां पुरं स्थाणोः समास्थितम् ।।१ १।।
एतावानूर्ध्वसञ्चारो गत्यन्तश्च ततः स्मृतः ।
असंख्याताः पुरे तस्मिन्नित्याः सूक्ष्मास्तथाव्ययाः ।।१२।।
ज्ञानाधिकारधर्मिण्यः शैवीप्रकृतयः स्थिताः ।
याभ्यो जज्ञे११ महेशानौ ब्रह्मविष्णू प्रजापती ।।१३।।
ताभ्यां प्रकृतिभूताभ्यां स्रष्टृत्वं परमं ददौ ।
अक्षयो विमलः सूक्ष्मो निष्कलः सकलोपि च ।।१४।।
स्थिरे मूर्ते१२ परे दिव्ये परमाणुपदे स्थितः ।
मनसः प्राक्तमस्यादौ१३ तत्तेजःसंप्रकाशनम् ।। १५।।
यदासीद्धैममण्डन्तु१४ लौकिकं त्वापवर्गिकम् ।

महत्तत्१५ सर्वतो नित्यमीश्वरात्तदभूत्तदा । ।१६।।
तस्माद्बीजस्य निर्भेदः क्षेत्रज्ञः स विभुः स्मृतः ।
प्रकृतिर्वैष्णवी प्रोक्ता सा च तस्माद्विनिर्गता ।।१७ ।।
सुरासुरादिसृष्ट्यर्थं ब्रह्मत्वं१६ पुनरास्थिता ।
अण्डस्य भेदतः१७ पद्मब्रह्मणः१८ शंकरात्मनः ।
ब्रह्मलोकपुरस्ताच्च पुरं तेजोमयं महत् ।।१८। ।
यत् स्थानं विग्रहेशस्य ईश्वरस्य परात्मनः ।
नाम्ना शिवपुरं व्यास गतिरीश्वरयोगिनाम् ।। १९।।

- - - -- - - - - - - - -

७ सृष्टितं क., संस्कृतं ख। ८ . . .त्म बोधौ ख.। ९ साकल्यान्मुक्तिमास्थाय - क. । १० दक्षरं(?) । ११ अन्तर्भावितण्यर्थोत्र जज्ञे शब्दः, जनयामासेत्यर्थः । १२ पूते - ख. । १३ प्राप्तत - क., प्राप्तमस्यादौ - ख., प्राक्तनस्यादौ (?) । १४ द्वैममण्डस्तु - क. । १५ महान्तं - क. ख., महान्तत् (?) । १६ ब्रह्मत्वे - क. । १७ भिद्यतः (?) । १८ पद्मं ब्रह्मणः (?) ।

- - - -- - - - - - - - -

979

शतं शतसहस्राणां योजनानां तदुच्यते ।
महीमण्डलसंस्थानं तन्मध्ये विस्तृतं१९ स्मृतम् ।।8.183.२० ।।
स्फुरदादित्यरूपेण वह्नेरधिकतेजसा ।
महता हैमजातेन२० प्राकारेण सुवेष्टितम् । ।२१ । ।
चतुर्भिर्हेमजैर्द्वारैर्मणिमुक्ताविभूषितैः२१ ।
शोभितं तत्पुरं२२ रम्यं शुशुभे सिद्धसेवितम् ।। २२। ।
जरामृत्युश्रमव्याधिकोपमोहमदादयः२३ ।
न क्रमन्त्यशुभास्तस्मिन् भावाः शिवपुरे मुने । ।२३ ।।
शतं शतसहस्राणां योजनानां यथादिशम् ।
तत् पुरं वृषभाङ्कस्य सर्वव्यापि समृद्धिमत् । । २४।।
दिव्या मारकती२४ भूमिः स्पर्शमात्रसुखावहा२५ ।
वैदूर्यमणिकल्पानि२६ बालार्कसदृशानि च ।।२५। ।
क्वचिद्रक्तानि पद्मानि क्वचिच्छ्वेतानि रेजिरे ।
महाह्रदप्रमाणानि नालैर्वैदूर्यसन्निभैः ।। २६।।
गन्धवन्ति महार्हाणि विन्यस्तानि महीतले ।
इन्द्रनीलनिकाशानि महामणिनिभानि च ।।२७।।

कचित् कृष्णार्धरक्तानि दिव्यगन्धवहानि च ।
- - - - - - तत्र उत्पलानि समन्ततः ।।२८।।
प्रवहन्ति महानद्यो यास्तस्मिन्नमृतोदकम् ।
पुरे भगवतः शम्भोः पाराशर्य निबोध ताः२७ ।।२९। ।
वरदा च वरेण्या च वरेशा वरवर्णिनी ।
वाराही२८ वारिभद्रा च वरा चैव महापगाः ।। 8.183.३० ।।
नानाकुसुमसंमिश्रं ता वहन्ति जलामृतम् ।
न देवा न मुनीन्द्राश्च नासुराः पितरो न च । ।३ १ ।।
- - - -- - - - - - - - - -
१९ विस्त्रितं - क. । २० जातहेमेन - क., जातरूपेण (?) । । २१ मुक्तामणिविभूषितैः (?) । २२ तत्परं (?) । २३ महादयः - क. । २४ मरकती - क. । २५ स्पर्शमात्रत् सुखावहा (?) । २६ तुल्यानि(?) । २७ निबोधत - क. । २८ वराही - क. ।
- - - -- - - - - - - - - -


न चैवान्ये समर्थाः२९ स्युर्ज्ञातुं तत्पुरमद्भुतम् ।
अन्तर्मनसि बुद्धा३० ये सर्वतो भक्तिभाविताः ।
शिवैकमनसो व्यास तस्मिन्मोदन्ति ते नराः३१ ।।३२। ।
तस्य मध्ये पुरेन्द्रस्य सूर्यज्वलनवर्चसः ।
मेरुशृङ्गप्रतीकाशो दिग्भद्रस्तपनप्रभः ।।३ ३ । ।
प्रासादो लक्षपादस्तु कामगः कनकामयः ।
अनिरीक्ष्यैर्महारत्नैः३२ समन्तात् परिशोभितम् ।। ३४।।
वैदूर्यैर्व्योमसंकाशैः स्फाटिकैश्चन्द्रसप्रभैः३३ ।
प्रवालैरर्कसंकाशैरिन्द्रनीलमयैः परैः३४ । । ३५ ।।
शशिरश्मिप्रकाशाभिः क्वचिदर्कांशुरूपिभिः ।
शोभितं तत्पताकाभिर्विरराज सुखानिलम् । ।३ ६। ।
सर्वर्तुकुसुमैश्चित्रैरिच्छारत्नफलैरपि ।
शुशुभे तत्पुरं कीर्णं पादपैर्गिरिसन्निभैः । ।३७। ।
महीध्राणां यथा मेरुस्सर्वेषां प्रवरो महान् ।
तथैव तत्पुरं रेजे सर्वलोकोपरि स्थितम् । ।३८। ।
तत्र विश्वेश्वरः साक्षान्महाभूतपतिर्हरः ।
सदास्ते सहितः पत्न्या षड्विंशः परमेश्वरः ।। ३९।।

लक्ष्मीर्मेधा धृतिश्चैव ह्रीः श्रीः किर्त्तिः सरस्वती ।
उमया सहितास्तत्र मोदन्ते लोकमातरः । ।8.183.४० ।।
शिवभावर्पितात्मानो ये नरा रुद्रतत्पराः ।
यत्र तत्र मृता वत्स तेषां तत्रास्पदं स्मृतम३५ ।।४१ । ।
ये च माहेश्वरा व्यास तिष्ठन्ते शङ्करालये ।
मुनयः शङ्करं भक्तास्तान् शृणुष्व समाहितः ।।४२।।
अहं सनन्दनश्चैव सनकः ससनातनः ।
ऋभुर्ब्रह्मा सुरज्येष्ठो नरनारायणावपि । ।४३ । ।
- - - -- - - - - - - - -
२९ महेशस्य - क. । ३० शुद्धा (?) । ३१ नेतरा (रे)? । ३२ अनिरीक्षैर्महारत्नैः - क, । ३३ श्चेन्दुसप्रभैः क. ख. । ३४ पुरैः - क. । ३५ इत परं खण्डितं क पुस्तके ।
- - - -- - - - - - - - -


- - - - - - शिष्यः सिद्धः पञ्चशिखस्तथा ।
मुनिर्हयशिरा यश्च यज्ञवल्कादयस्तथा३६ ।।४४।।
त्र्यक्षाः शङ्करवर्ष्माणः परमैश्वर्यसंयुताः ।
तिष्ठन्तीश्वरमूलस्था गुणातीता मुमुक्षवः । ।४५। ।
उत्पन्ने जगतो नाशे महाप्रलयसंज्ञके ।
ईश्वरं ते समाविश्य प्राप्नुवन्त्यपवर्गिकम् ।।४६ ।।
यैश्च दृष्टानि विप्रेन्द्र शिवलिङ्गानि तानि तु३७ ।
केदारो मध्यमश्चैव गिरीशश्च३८ महालये । ।४७। ।
चतुःशृङ्गेश्वरो देवः श्रीगिरौ च महेश्वरः ।
कारोहणो च देवेशो गङ्गाद्वारे च शङ्करः ।
भद्रेशश्च महादेवः शंकुकर्णेश्वरस्तथा । ।४८।।
महाकालेश्वरश्चैव गोकर्णे च तथा ह्युभौ ।
अविमुक्तेश्वरश्चैव यानि चान्यानि भूतले ।।४९।।
तेपि यान्ति मृता व्यास तत्पुरं३९ गिरिजापतेः ।
योगः४० पाशुपतो यश्च मया ते परिकीर्त्तितः । । 8.183.५० ।।
व्रतं पाशुपतं प्राप्य सोपि तत्र४१ प्रवर्तते ।
भक्तिर्येषां भवे नित्यं कृतार्थास्ते नरोत्तमाः । ।५१ । ।
मृताः शिवपुरे व्यास त्र्यक्षाः पट्टिशपाणयः४२ ।

नन्दीशस्कन्दसंकाशा४३ योगैश्वर्यबलान्विताः ।।५२।।
रुद्रा भवन्ति४४ ते व्यास सदा शंकरपार्श्वगाः ।
एष ते कथितः सर्वो योगो माहेश्वरः परः । ।५३ । ।
सकलं निष्कलं चैव ज्ञात्वैवं परमीश्वरम् ।
सर्वबन्धविनिर्मुक्तः परं४५ मोक्षमवाप्स्यसि । ।५४।।
- - - -- - - - - - - - - -
३६ यज्ञावाल्कादयस्तथा - ख. । ३७ निभानि तु(?) । ३८ गिरीशस्य - ख । ३९ तत्पर - ख । ४० योगं - ख. । ४१ तेषु - ख. । ४२ पट्टशपाणयः - ख' । ४३ नन्दीशाः स्कन्दसंकाशा - ख. । ४४ च्यवन्ति - ख, ।
- - - -- - - - - - - - - -

982
भविष्यसि च योगात्मा४६ ज्ञानस्यास्य प्रभावतः ।
जगात्स्थितिकरो योगी स्मार्त्तधर्मप्रवर्तकः ।।५५। ।
ज्ञानशक्त्या स्मृ - - - ब्रह्माण्डोद्भकारणे४७ ।
स्थितिधर्मनिबोधार्थं पुराणानि४८ करिष्यसि ।।५६।।
यज्ञधर्मप्रचारार्थ वेदं स्वायम्भुवस्मृतम् ।
विज्ञानात् त्वमनुस्मृत्य चतुर्धा विकरिष्यसि । ।५७।।
मन्वन्तरमिदं४९ कृत्स्नं वैवस्वतमनिन्दितम् ।
लोकस्थितिकरा५० धर्मा वेदस्मृतिपुरोगमाः ।।५८। ।
त्वत्कृताः प्रचरिष्यन्ति तीर्थकृत् त्वं भविष्यसि ।
भस्मव्रतं च संप्राप्य पशुपाशविमोचनम् । ।५९।।
शांकरज्ञानसंपन्न५१ ईश्वरे लयमाप्स्यसि५२ ।
एवमुक्तः स विप्रेन्द्रो हृष्टसर्वतनूरुहः ।।8.183.६ ० । ।
उपसद्य मुनीन्द्रं तं भस्मसंस्कारमाप्तवान् ।
तत्क्षणाच्चास्य योगोसौ प्रादुर्भूतो महामुनेः । ।६१ । ।
अभिवाद्य गुरुं व्यासो ब्रह्मसूनुं महौजसम् ।
शर्वायतनवीक्षार्थं विचचार महीतले । ।६२ । ।
वायुरुवाच ५३
एवं सनत्कुमारस्तु पृष्टो व्यासेन धीमता ।
मुनीन्द्रः कथयामास पुराणं स्कन्दसंभवम् ।। ६३ । ।
सर्वागमसमायुक्तं मन्वन्तरजगत्स्थितिम् ।
शिवयोगोद्भवं ध्यानं सर्वज्ञानार्णवं महत् ।।६४। ।

तस्माद्यूयमपि ज्ञात्वा५४ व्रतं पाशुपतं द्विजाः ।
अभ्यस्य शांकरं५५ योगमीश्वरे लयमाप्नुत ।।६५ । ।

- - - -- - - - - - - - -

४६ योगात् मां - ख. । ४७ ब्रह्माण्डे भवकारणे - ख. । ४८ पुराणा (ण) ञ्च - ख । ४९ ..मिमं - ख. । ५० लोकस्थितिकरं - ख. । ५१ शङ्करज्ञासंपन्न - ख. । ५२ लयमेष्यसि (?) । ५३ सूत उवाच (?) । ५४ प्राप्य - ख. । ५५ शङ्करं - ख ।

- - - -- - - - - - - - -

983

इममागममन्विष्य व्यासोसौ मुनिपुङ्गवः ।
वेदार्थस्मृतिसंबद्धा५६ विद्याश्चके महामुनिः । ।६६ ।।
अतो विनिर्गता धर्मा योगविद्यास्तथैव च ।
पुराणं प्रथमं प्राहुराद्यं नन्दीश्वरो५७ द्विजाः (?) ।।६७। ।
 - - - - - - ख्यातो य इमं वेत्ति तत्त्वतः ।
त्रिवर्गः प्राप्यते तेन मुक्तिरेतेन जायते । । ६८ । ।
आयुः प्रवर्द्धतेनेन सर्वमेतेन लभ्यते ।
कृत्स्नस्य जगतो विप्रा आदिकर्ता यथा हरः । ।६९।।
तथा सर्वपुराणानां पुराणोयं परः स्मृतः५८ ।
अधीतो यैरयं५९ विप्रैस्तत्प - - - - - - । ।8.183.७० । ।
।
- - - - - - ( ष्य )सायुज्यं शृणुयाद्विभोः । ।७१ ।।
सेवनाद्योगसंसिद्धिं मोक्षं च परमं लभेत् ।
आद्यं पुण्यमुमापते६०र्द्विजवृषाः स्तोत्रानुवादं परं
देव्याश्चापि महाप्रभावकथनं सर्वागमैरंन्वितम् ।
स्कन्दस्योद्भवविक्रमै६१ - - - - - - - -
- - - - - - - - - - - - - प्नुयुः । ।७२। ।
नागेन्द्रैरसुरेन्द्रयक्षविबुधैः सिद्धैर्द्विजेन्द्रैरपि
शम्भावर्पितसर्वभावहृदयैर्यैयैरयं६२ सेवितः६३ ।
सर्वे ते ज्वलदर्कवह्निवपुषस्त्र्यक्षाः शशाङ्कत्विषः
देवास्यानुचरा बभुर्गणवरा - - - - - - - ।।७३ ।।

- - - -- - - - - - - - -

५६ वेदार्थस्मृतिसम्बन्धा - ख. । ५७ नन्दीश्वरं (?) । ५८ पुराणमिदमुत्तमम् (?) । ५९ ... रियं - ख, . .रिदं (?) । ६० पुराणः.. - ख. । ६१... विक्रमे - ख । ६२.. रिदं (?) । ६३ सेवितं (?) ।

- - - -- - - - - - - - - -